VACHASPATYA

J.D.M. Beglar.

D-2222 Vol 3



विस्तारायामगुणितं नवैः षोडशभिः स्मृतम्। स्वगृहाणां विभागेन प्रमाणमिह लक्षयेत्। व्यासाच्च षोडशोभागः सर्वेषां भित्तयः स्मृताः। पक्वेष्टकाकृतानां च न दारूणां कदाचन। नृपसेनापतिगृहेष्वष्टाशीति शतैर्युताम्। अङ्गुलानि द्वारमानं प्रवदन्ति मनीषिणः। विप्रादीनां विंशतिस्तु अङ्गुलानि च सप्त च। द्वारस्य मानं तत्प्रोक्तं द्विगुणोच्छ्राय उच्यते। उच्छ्रायहस्तसंख्यायाः परिमाणाङ्गुलानि च। शाखाद्वयेऽपि बाहल्यं कार्यं सार्द्धांशसंयुतम्। उच्छ्रायात् सप्तगुणितादशीतिः पृथुता मता। भागः पुनर्नवगुणाशीत्यंशस्तम्भमानकम्। दशांशहीनं तस्याग्रं स्तम्भानां परिमाणकम्। वेदाश्रो रुचकः१ स्तम्भो वज्रो२ऽष्टाश्रियुतो मतः। द्विवज्रः३ षोडशाश्रस्तद्द्विगुणाश्रः प्रलीनकः४। समन्तवृत्तो वृत्ताख्यः५ स्तम्भः प्रोक्तो द्विजोत्तमैः। विभज्य नवधा स्तम्भं कुर्यादुद्वहनं घटम्। पद्मं तु सोत्तरोष्ठञ्च कुर्याद्भागेन भागतः। स्तम्भसमं बाहल्यं भारतुलानामुपर्युपर्यासाम्। भवति तुलोपतुलानामूनं पादेन पादेन। अप्रतिषिद्धालिन्दं समन्ततो वास्तु सर्वतोभद्रम्। नृपविबुधसमूहानां कार्यं द्वारैश्चतुर्भिरपि"।

अथ द्विशालानि गृहाणि दक्षिणे दुर्मुखं कृत्वा पूर्वे च खरसंज्ञकम्। तद्धाताख्यं१ भवेद्गेहं वातरोगप्रदं स्मृतम्। दक्षिणे दुर्मुखं गेहं पश्चिमे धान्यसंज्ञकम्। यमसूर्यं२ द्विशालं तन्मृत्युदं नाशदं स्मृतम्। पूर्वे तु खरनामानमुत्तरे धान्यसंज्ञकम्। दण्डाख्यं३ तद्द्विशालं स्याद्दण्डं कुर्यात् पुनः पुनः। दुर्मुखं दक्षिणे कुर्यादुत्तरे जयसंज्ञकम्। वीथ्याख्यं४ तद्द्विशालन्तु बन्धुनाशं धनक्षयम्। खरञ्च पूर्वदिग्भागे पश्चिमे धान्यसंज्ञकम्। गृहं चुल्ली५ द्विशालं तद्धनधान्यविनाशनम्। आक्रन्दं दक्षिणे भागे पश्चिमे धनदं तथा। द्विशालं चेत्सुसंज्ञं६ तत्पुष्टिवृद्धिधनप्रदम्। विपक्षं दक्षिणे भागे पश्चिमे क्रूरसंज्ञकम्। शोभनाख्यं७ द्विशालं तद्धनधान्यकरं परम्। विजयं दक्षिणे भागे विजयं चैव पश्चिमे। द्विशालं चैव कुम्भाख्यं८ पि[illegible]दिसंयुतम्। धान्यञ्च पूर्वदिग्भागे धान्यं चेदुभयं [illegible]। नन्दाख्यं९ तद्द्विशालञ्च धनदं शोभनं स्मृतम्। विजयं सर्वदिग्भागे द्विशालाख्यं तदेव१०हि। अङ्काद्यं११ नाम तद्गेहं शुभदं द्वारतो भवेत्। विपुलं सर्वदिग्भागे द्विशालं तत्प्रजायते। तानि ख्यातसंज्ञानि१२ धनधान्यप्रदानि च। धनदं सर्वदिग्भागे सुमुखं वा मनोरमम्। कान्तनाम१३ तु तद्गेहं सर्वांशे शोभनं स्मृतम्। द्विशालानां सद्मनां च भेदाश्च त्रयोदश। फलपाकार्थमेतेषां मया प्रोक्तं सुविस्तरात्। पूर्वयाम्यमथ याम्यपश्चिमं पश्चिमोत्तरमुदीचिपूर्वकम्। प्राक्प्रतीचीमथ दक्षिणोत्तरं वास्तु षड्विधमिदं द्विशालकम्"। अथ त्रिशालानि "उत्तरद्वारहीनं यत् त्रिशालं धनधान्यदम्। हिरण्यनाभनामानं१ राज्ञां सौख्यविवर्द्धनम्। प्राक्द्वारशालाहीनन्तु सुक्षेत्रं२ नाम तद्गृहम्। वृद्धिदं पुत्रपौत्राणां धनधान्यसमृद्धिदम्। याम्यशालाविहीनं तत् त्रिशालं चुल्लीसंज्ञकम्३। विनाशनं धनस्यापि पुत्रपौत्रादिनाशनम्। प्रत्यक्शालाविहीनन्तु पक्षघ्नं४ नाम तद्गृहम्। पुत्राणां दोषदं चैव परञ्च पुरवासिनाम्। चत्वारोऽमी मया प्रोक्ता भेदाश्चैव चतुर्विधाः। तस्माद्विचार्य कुर्वीत गृहकर्माणि कोविदैः"। अथ चतुःशालानि "याम्यशालां न्यसेदादौ द्वितीयां पश्चिमे ततः। तृतीया चोत्तरे स्थाप्या चतुर्थी पूर्वपश्चिमा। गृहाणां क्रमयोगेन चतुःषष्टिः समासतः। अनेकयोगभेदाच्च शतं त्रिंशोत्तरं स्मृतम्। अलिन्दानां व्यवच्छेदो नास्ति यत्र समन्ततः तद्वास्तु सर्वतोभद्रं१ चतुर्द्वारसमन्वितम्। एकधामे चतुःशाले दुर्भिक्षे राजविप्लवे। स्वामिना नीयमानायां प्रतिशुक्रो न दुष्यति। नृपाणां विबुधानाञ्च गृहं सौख्यप्रदायकम्। प्रदक्षिणं ततः सर्वैः शालाभित्तेरलिन्दकैः। विनापरेण द्वारेण नन्द्यावर्त्तमिदं२ स्मृतम्। श्रेष्ठं सुतारोग्यकरं सर्वेषां शुद्धजन्मनाम्। द्वारालिन्दोऽन्तगतस्त्वेको नेत्रयोर्दक्षिणाङ्गतः। विज्ञाय दक्षिणद्वारं वर्द्धमानमिति३ स्मृतम्। शुभदं सर्ववर्णानां वृद्धिदं पुत्रपौत्रदम्। पश्चिमोत्तरतोऽलिन्दं प्रागन्तौ वैतदुच्छ्रितौ। अन्यस्तन्मध्यविष्टतः प्राग्द्वारं स्वस्तिकं४ शुभम्। प्राक्पश्चिमावलिन्दौ यावन्तौ तद्भवौ परौ सौम्यद्वारं विना यत्स्याद्रुचकाख्यं५ तु तत् स्मृतम्"। ग्रन्थस्य ग्रन्थान्तरे टीकेत्यभियुक्तोक्तेः अत्रास्पष्टार्थानामर्थः वृ०स० वाक्येन मत्स्यपुराणवाक्येन च स्पष्टीक्रियते यथा वृ०स०"उत्तममष्टाभ्यधिकं हस्तशतं नृपगृहं पृथुत्वेन। अष्टाष्टोनान्येवं पञ्च सपादानि दैर्घ्येण। षड्भिः षड्भिर्हीना सेनापतिसद्मनां चतुःषष्टिः। पञ्चैवं विस्तारात् षड्भागसमन्विता दैर्घ्ये। षष्टिश्चतुर्विहीना वेश्मानि भवन्ति पञ्च सचिवस्य। स्वाष्टांशयुता दैर्घ्ये तदर्द्धतो राज्ञ-

R Sa4K / Tar

CENTRAL ARCHAEOLOGICAL LIBRARY NEW DELHI.
Acc. No. ........................
Date........................
Call No........................



न्हिषीणाम् । षड्भिः षड्भिश्चैवं युवराजस्यापवर्जिताऽशीतिः । त्र्यंशान्विता च दैर्घ्यं पञ्च तदर्धैस्तदनुजानाम् । नृपसचिवान्तरतुल्यं सामन्तप्रवरराजपुरुषाणाम् । नृपयुवराजविशेषः कञ्चुकिवेशाङ्गनाज्ञानाम् । अध्यक्षाधिकृतानां सर्वेषामेव कोशरतितुल्यम् । युवराजमन्त्रिविवरं कर्मान्ताध्यक्षदूतानाम् । चत्वारिंशद्धीना चतुश्चतुर्भिस्तु पञ्च यावदिति । षड्भागयुता दैर्घ्यं दैवज्ञपुरोधसोर्भिषजः । वास्तुनि यो विस्तारः स एव चोच्छ्रायनिश्चयः शुभदः । शालैकेषु गृहेष्वपि विस्ताराद्द्विगुणितं दैर्घ्यम् । चातुर्वर्ण्यव्यासे द्वात्रिंशत् स्याच्चतुश्चतुर्हीना । आ षोडशादिति परं न्यूनतरमतीव हीनानाम् । सदशांशं विप्राणां क्षत्रस्याष्टांशकंयुतं दैर्घ्यम् । षड्भागयुतं वैश्यस्य भवति शूद्रस्य पादयुतम् । नृपसेनापतिगृहयोरन्तरमानेन कोशरतिभवने । सेनापतिचातुर्वर्ण्यविवरतो राजपुरुषाणाम् । अथ पारशवादीनां स्वमानसंयोगदलसमं भवनम् । हीनाधिकं स्वमानादशुभकरं वास्तु सर्वेषाम् । पश्वाश्रमिणाञ्च मितं धान्यायुधवह्निरतिगृहाणां च । नेच्छन्ति शास्त्रकारा हस्तशतादुच्छ्रितं परतः । सेनापति नृपतीनां सप्ततिसहिते द्विधाकृते व्यासे । शाला चतुर्दशहृते पञ्चत्रिंशद्धृतेऽलिन्दः । हस्तद्वात्रिंशादिषु चतुश्चतुस्त्रिकत्रिकाः शालाः । सप्तदशत्रितयतिथित्रयोदशकृताङ्गुलाभ्यधिकाः । त्रित्रिद्विद्विद्विसमाः चयः क्रमादङ्गुलानि चैतेषाम् । व्येका विंशतिरष्टौ विंशतिरष्टादश त्रितयम् । शालात्रिभागतुल्या कर्त्तव्या वीथिका बहिर्भवनात् । यद्यग्रतो भवति सा सोष्णीषं१ नाम तद्वास्तु । छायाश्रयमिति२ पश्चात् सावष्टम्भं३ तु पार्श्वसंस्थितया । सुस्थितमिति४ च समन्तात् शास्त्रज्ञैः पूजिताः सर्वाः । विस्तारषोडशांशः सचतुर्हस्तो भवेद्गृहोच्छ्रायः । द्वादशभागेनोनो भूमौ भूमौ समस्तानाम् । व्यासात् षोडशभागः सर्वेषां सद्मनां भवति भित्तिः । पक्वेष्टकाकृतानां दारुकृतानां तु स विकल्पः । एकादशभागयुतः सप्ततिर्न्दपवलेशयोर्व्यासः । उच्छ्रायोऽङ्गुलतुल्यो द्वारस्यार्द्धेन विष्कम्भः । विप्रादीनां व्यासात् पञ्चांशोऽष्टादशाङ्गुलसमेतः । साष्टांशो विष्कम्भो द्वारस्य द्विगुण उच्छ्रायः । उच्छ्रायहस्तसङ्ख्यापरिमाणान्यङ्गुलानि बाहुल्यम् । शाखाद्वयेऽपि कार्यं सार्द्धं तत्प्राउडुम्बरयोः । उच्छ्रायात् सप्तगुणादशीतिभागः पृथुत्वमेतेषाम् । नवगुणितेऽशीत्यंशः स्तम्भस्य दशांशहीनोऽग्रे । समचतुरस्रो रुचको१ वज्रो२ऽष्टाश्रिर्द्विवज्रको३ द्विगुणः । द्वात्रिंशता तु मध्ये प्रलीनको४ वृत्त इति वृत्तः५ । स्तम्भं विभज्य नवधा वहनं१ भागो घटो२ऽस्य भागोऽन्यः । पद्मं३ तथोत्तरोष्ठं४ कुर्याद्भागेन भागेन । स्तम्भसमं बाहुल्यं भारतुलानामुपर्युपर्यासाम् । भवति तुलोपतुलानामूनं पादेन पादेन । अप्रतिषिद्धालिन्दं समन्ततो वास्तु सर्वतोभद्रम्१ । नृपविबुधसमूहानां कार्यं द्वारैश्चतुर्भिरपि । नन्द्यावर्त्त२मलिन्दैः शालाकुड्यात् प्रदक्षिणान्तगतैः । द्वारं पश्चिममस्मात् विहाय शेषाणि कार्याणि । द्वारालिन्दोऽन्तगतः प्रदक्षिणोऽन्यः शुभस्ततश्चान्यः । तद्वच्च वर्द्धमाने३ द्वारं तु न दक्षिणं कार्यम् । अपरोऽन्तगतोऽलिन्दः प्रागन्तगतौ तदुत्थितौ चान्यौ । तदवधिविधृतश्चान्यः प्राग्द्वारं स्वस्तिके४ऽशुभदम् । प्राक्पश्चिमावलिन्दावन्तगतौ तदवधिस्थितौ शेषौ । रुचके५ द्वारं न शुभदमुत्तरतोऽन्यानि शस्तानि । श्रेष्ठं नन्द्यावर्तं सर्वेषां वर्द्धमानसञ्ज्ञं च । स्वस्तिकरुचके मध्ये शेषं शुभदं नृपादीनाम् । उत्तरशालाहीनं हिरण्यनाभं त्रिशालकं धन्यम् । प्राक्शालया वियुक्तं सुक्षेत्रं वृद्धिदं वास्तु । याम्याहीनं चुल्ली त्रिशालकं वित्तनाशकरमेतत् । पक्षघ्नमपरया वर्जितम् सुतध्वंसवैरकरम् । सिद्धार्थमपरयाम्ये यमसूर्यं पश्चिमोत्तरे शाले । दण्डाख्यमुदक्पूर्वे वाताख्यं प्राग्युता याम्या । पूर्वापरे तु शाले गृहचुल्ली दक्षिणोत्तरे काचम् । सिद्धार्थेऽर्थाप्तिर्यमसूर्ये गृहपतेर्मृत्युः । दण्डवधो दण्डाख्ये कलहोद्वेगः सदैव वाताख्ये । वित्तविनाशश्चुल्ल्यां ज्ञातिविरोधः स्मृतः काचे" ।

तत एकाशीतिपदं चतुःषष्टिपदञ्च द्विधा वास्तुनरविभागमुक्तोक्तम् "सम्पाता वंशानां मध्यानि समानानि यानि च पदानाम् । मर्माणि तानि विद्यान्न परिपीडयेत् प्राज्ञः । तान्यशुचिभाण्डकीलस्तम्भाद्यैः पीडितानि शल्यैश्च । गृहभर्तुस्तत्तुल्ये पीडामङ्गे प्रयच्छन्ति । कण्डूयते यदङ्गं गृहपतिना यत्र वाऽमरे ... अशुभं भवेन्निमित्तं विकृतेर्वाग्नेः सशल्यं तत् । धनहानिदारुभये पशुपीडारुगभयानि चास्थिकृते । (लोहमये शस्त्रभयं कपालकेशेषु मृत्युः स्यात् । अङ्गारे स्तेनभयं भस्मनि च विनिर्दिशेत्सदाग्निभयम् । शल्यं हि ...

संस्थं सुवर्णरजतादृतेऽप्यशुभम्। मर्मण्यमर्म यो वा रूपाद्यर्थागमं तुषसमूहः) (क्षेपकम्) अपि नागदन्तको मर्मसंस्थितो दोषकृद्भवति। रोगाद्वायुं पिहितो हुताशनं शोषस्तलमपि वितथात्। मुख्याद्भृशं जयन्ताच्च भृशमदितेश्च सुग्रीवात्। तत्सम्पाता नव ये तान्यति मर्माणि सम्प्रदिष्टानि। यश्च पदस्याष्टांशस्तत्प्रोक्तं मर्मपरिमाणम्। पदहस्तसंख्यया सम्मितानि ंशोऽङ्गुलानि विस्तीर्णः। वंशव्यासोऽप्यर्द्धः शिराप्रमाणं विनिर्दिष्टम्। इष्टमिच्छन् ब्रह्माणं यत्नाद्रक्षेद्गृही गृहान्तःस्थम्। उच्छिष्टाद्युपघाताद्गृहपतिरुपतप्यते तस्मिन्। दक्षिणभुजेन हीने वास्तुनरेऽर्थक्षयोऽङ्गनादोषाः। वामेऽर्थधान्यहानिः शिरसि गुणैर्हीयते सर्वैः। स्त्रीदोषाः सुतमरणं प्रेष्यत्वं चापि चरणवैकल्ये। अविकलपुरुषे वसतां मानार्थयुतानि सौख्यानि। गृहनगरग्रामेषु च सर्वत्रैवं प्रतिष्ठिता देवाः। तेषु च यथानुरूपं वर्णा विप्रादयो वास्याः। वासगृहाणि च विद्यात् विप्रादीनामुदग्दिगाद्यानि। विशतां च तथा भवनं भवन्ति तान्येव दक्षिणतः। नवगुणसूत्रविभक्तान्यष्टगुणेनाथवा चतुःषष्टेः। द्वाराणि यानि तेषामनलादीनां फलोपनयः। अनलभयं स्त्रीजन्मप्रभूतधनता नरेन्द्रवाल्लभ्यम्। क्रोधपरताऽनृतत्वं क्रौर्यं च पूर्वेण। अल्पसुतत्वं प्रैष्यं नीचत्वं भक्ष्यपानसुतवृद्धिः। रौद्रं कृतघ्नमधनं सुतवीर्यघ्नं च याम्येन। सुतपीडा रिपुवृद्धिर्न धनसुताप्तिः सुतार्थबलसम्पत्। धनसम्पन्नृपतिभयं धनक्षयो रोग इत्यपरे। बधबन्धौ रिपुवृद्धिर्धनसुतलाभः समस्तगुणसम्पत्। पुत्रधनाप्तिर्वैरं सुतेन दोषाः स्त्रिया नैःस्वम्। मार्गतरुकोणकूपस्तम्भभ्रमविद्धमशुभदं द्वारम्। उच्छ्रायाद्द्विगुणमितां त्यक्त्वा भूमिं न दोषाय। रथ्याविद्धं द्वारं नाशाय कुमारदोषदं तरुणा। पङ्कद्वारे शोको व्ययोऽम्बुनि स्राविणि प्रोक्तः। कूपेनापस्मारो भवति विनाशश्च देवताविद्धे। स्तम्भेन स्त्रीदोषाः कुलनाशो ब्रह्मणोऽभिमुखे। उन्मादः स्वयमुद्घाटितेऽथ पिहिते स्वयं कुलविनाशः। मानाधिके नृपभयं दस्युभयं व्यसनदं नीचम्। द्वारं द्वारस्योपरि यत्तन्न शिवाय सङ्कटं यच्च। व्यात्तं क्षुद्भयदं कुब्जं कुलनाशनं भवति। पीडाकरमतिपीडितमन्तर्विनतं भवेदभावाय। बाह्यविनते प्रवासो दिग्भ्रान्ते दस्युभिः पीडा। मूलद्वारं नान्यैर्द्वारैरतिसन्दधीत रू-

पक्षाः। वटफलपत्रप्रसवादिभिश्च तन्मङ्गलैश्चिनुयात्। ऐशान्यादिषु कोणेषु संस्थिता बाह्यतो गृहस्यैताः। चरकी विदारिनामाथ पूतना राक्षसी चेति। पुरभवनग्रामाणां ये कोणास्तेषु निवसतां दोषाः। श्वपचादयोऽन्त्यजात्यास्तेष्वेव विवृद्धिमायान्ति। याम्यादिष्वशुभफला जातास्तरवः प्रदक्षिणेनैते। उदगादिषु प्रशस्ताः प्लक्षवटोदुम्बराश्वत्थाः। आसन्नाः कण्टकिनो रिपुभयदाः क्षीरिणोऽर्थनाशाय। फलिनः प्रजाक्षयकरा दारूण्यपि वर्जयेदेषाम्। न छिन्द्याद्यदि तरूंस्तान् तदन्तरे पूजितान्वपेदन्यान्। पुन्नागाशोकारिष्टवकुलपनसान् शमीशालौ। शस्तौषधिद्रुमलतामधुरा सुगन्धा स्निग्धा समा न सुषिरा च मही नराणाम्। अप्यध्वनि श्रमविनोदमुपागतानां धत्ते श्रियं किमुत शाश्वतमन्दिरेषु। सचिवालयेऽर्थनाशो धूर्तगृहे सुतवधः समीपस्थे। उद्वेगो देवकुले चतुष्पथे भवति चाऽकीर्तिः। चैत्ये भयं ग्रहकृतं वल्मीकश्वभ्रसङ्कुले विपदः। गर्त्तायां तु पिपासा कूर्माकारे धनविनाशः। उदगादिप्लवमिष्टं विप्रादीनां प्रदक्षिणेनैव। विप्रः सर्वत्र वसेदनुवर्णमथेष्टमन्येषाम्। गृहमध्ये हस्तमितं खात्वा परिपूरितं पुनः श्वभ्रम्। यद्यूनमनिष्टं तत् समे समं धन्यमधिकं यत्। श्वभ्रमथ वाम्बुपूर्णं पदशतमित्वागतस्य यदि नोनम्। तद्धन्यं यच्च भवेत् पलान्यपामाढकं चतुःषष्टिः। आमे वा मृत्पात्रे श्वभ्रस्थे दीपवर्त्तिरभ्यनिलम्। ज्वलति दिशि यस्य शस्ता सा भूमिस्तस्य वर्णस्य। श्वभ्रोषितं न कुसुमं यस्मिन् प्रम्लायतेऽनुवर्णसमम्। तत्तस्य भवति शुभदं यस्य च यस्मिन्मनो रमते। सितरक्तपीतकृष्णा विप्रादीनां प्रशस्यते भूमिः। गन्धश्च भवति यस्या घृतरुधिरान्नाद्यमद्यसमः। कुशयुक्ता शरबहुला दूर्वाकाशावृता क्रमेण मही। अनुवर्णं वृद्धिकरी मधुरकषायाम्लकटुका च। कृष्टां प्ररूढबीजां गोऽध्युषितां ब्राह्मणैः प्रशस्तां च। गत्वा महीं गृहपतिः काले सांवत्सरोद्दिष्टे। भक्ष्यैर्नानाकारैर्दध्यक्षतसुरभिकुसुमधूपैश्च। दैवतपूजां कृत्वा स्थपतीनभ्यर्च्य विप्रांश्च। विप्रः स्पृष्ट्वा शीर्षं, वक्षश्च क्षत्रियो विशश्चोरू। शूद्रः पादौ स्पृष्ट्वा कुर्याद्रेखां गृहारम्भे। अङ्गुष्ठकेन कुर्यान्मध्याङ्गुल्याथवा प्रदेशिन्या। कनकमणिरजतमुक्तादधिफलकुसुमाक्षतैश्च शुभम्। शस्त्रेण शस्त्रमृत्युर्बन्धो लोहेन भस्मनाग्निभयम्। तस्करभयं

व्रणेन च काष्ठोल्लिखिता च राजभयम्। वक्रा पादालिखिता शस्त्रभयकृच्छ्रदा विरूपा च। चर्माङ्गारास्थिकृता दन्तेन च कर्तुरशिवाय। वैरमपसव्यलिखिता प्रदक्षिणं सम्पदो विनिर्देश्याः। वाचः परुषा निष्ठीवितं क्षुतं चाशुभं कथितम्। अर्धनिचितं कृतं वा प्रविशन् स्थपतिर्गृहे निमित्तानि। अवलोकयेद्गृहपतिः क्व संस्थितः स्पृशति किं चाङ्गम्। रविदीप्तो यदि शकुनिस्तस्मिन् काले विरौति परुषरवः। संस्पृष्टाङ्गसमानं तस्मिन्देशेऽस्थि निर्देश्यम्। शकुनसमयेऽथवान्ये हस्त्यश्वश्वादयोऽनुवाशन्ते। तत्प्रभवमस्थि तस्मिंस्तदङ्गसम्भूतमेवेति। सूत्रे प्रसार्यमाणे गर्दभरावोऽस्थिशल्यमाचष्टे। श्वशृगाललङ्घिते वा सूत्रे शल्यं विनिर्देश्यम्। दिशि शान्तायां शकुनिर्मधुरविरावी यदा तदा वाच्यः। अर्थस्तस्मिन् स्थाने गृहेश्वराधिष्ठितेऽङ्गे वा। सूत्रच्छेदे मृत्युः कीले चावाङ्मुखे महान् रोगः। गृहनाथस्थपतीनां स्मृतिलोपे मृत्युरादेश्यः। स्कन्धाच्च्युते शिरोरुक् कुलोपसर्गोऽपवर्जिते कुम्भे। भग्नेऽपि च कर्मिवधश्च्युते कराद्गृहपतेर्मृत्युः। दक्षिणपूर्वे कोणे कृत्वा पूजां शिलां न्यसेत्प्रथमम्। शेषाः प्रदक्षिणेन स्तम्भाश्चैवं समुत्थाप्याः। छत्रस्रगम्बरयुतः कृतधूपविलेपनः समुत्थाप्यः। स्तम्भस्तथैव कार्यो द्वारोच्छ्रायः प्रयत्नेन। विहगादिभिरवलीनैराकम्पितपतितदुःस्थितैश्च फलम्। शक्रध्वजफलसदृशं तस्मिंश्च शुभं विनिर्दिष्टम्। प्रागुत्तरोन्नते धनसुतक्षयः सुतवधश्च दुर्गन्धे। वक्रे बन्धुविनाशो न सन्ति गर्भाश्च दिग्मूढे। इच्छेद्यदि गृहवृद्धिं ततः समन्ताद्विवर्धयेत्तुल्यम्। एकोद्देशे दोषः प्रागथवाप्युत्तरे कुर्यात्। प्राग्भवति मित्रवैरं मृत्युर्दक्षिणेन यदि वृद्धिः। अर्थविनाशः पश्चादुदग्विवृद्धौ मनस्तापः। ऐशान्यां देवगृहं महानसं चापि कार्यमाग्नेय्याम्। नैरृत्यां भाण्डोपस्करोऽथ धान्यानि मारुत्याम्। प्रागादिस्थे सलिले सुतहानिः शिखिभयं रिपुभयं च। स्त्रीकलहः स्त्रीदौष्ट्यं नैःस्वं वित्तात्मजविवृद्धिः। खगनिलयभग्नसंशुष्कदग्धदेवालयश्मशानस्थान्। क्षीरतरुधवविभीतकनिम्बारणिवर्जितांश्छिन्द्यात्। रात्रौ कृतबलिपूजं प्रदक्षिणं छेदयेद्दिवा वृक्षम्। धन्यमुदक्प्राक्पतनं न ग्राह्योऽन्यथा पतितः। छेदो यद्यविकारो ततः शुभं दारु तद्गृहोपयिकम्। पीते तु तरुमण्डले निर्दिशेत् तरोर्मध्यगां गोधाम्। मञ्जिष्ठाभे भेकं नीले सर्पं तथारुणे सरटः। मुद्गाभेऽश्मा कपिले तु मूषकोऽम्भश्च खड्गाभे। धान्यगोगुरुहुताशसुराणां न स्वपेदुपरि नाप्यनुवंशम्। नोत्तरापरशिरा न च नग्नो नैव चार्द्रचरणः श्रियमिच्छन्। भूरिपुष्पनिकरं सतोरणं तोयपूर्णकलसोपशोभितम्। धूपगन्धबलिपूजितामरं ब्राह्मणध्वनियुतं विशेद्गृहम्" मत्स्यपुराणे वास्तुप्रकरणे चोक्तं यथा "पूर्वं भूमिं परीक्षेत पश्चाद्वास्तुं प्रकल्पयेत्। श्वेता रक्ता तथा पीता कृष्णा चैवानुपूर्वशः। विप्रादेः शस्यते भूमिरतः कार्यं परीक्षणम्। विप्राणां मधुरास्वादा कटुका क्षत्रियस्य तु। तिक्ता कषाया च तथा वैश्यशूद्रेषु शस्यते। अरत्निमात्रे वै गर्त्ते स्वनुलिप्ते च सर्वशः। घृतमामशरावस्थं कृत्वा वर्त्तिचतुष्टयम्। ज्वालयेद्भूपरीक्षार्थं तत्पूर्णं सर्वदिङ्मुखम्। दीप्तौ पूर्वादिगृह्णीयाद्वर्णानामनुपूर्वशः। वास्तुः सामूहिकोनाम दीप्यते सर्वतस्तु यः। शुभदः सर्ववर्णानां प्रासादेषु गृहेषु च। अरत्निमात्राधोगर्त्ते परीक्ष्य खातपूरणे। अधिके श्रियमाप्नोति न्यूने हानिं समे समम्। फालकृष्टेऽथवा देशे सर्ववीजानि वापयेत्। त्रिपञ्चसप्तरात्रेण यत्र रोहन्ति तान्यपि। ज्येष्ठा समा कनिष्ठा भूर्वर्जनीयेतरा सदा। पञ्चगव्यौषधिजलैः परीक्षित्वा च सेचयेत्। एकाशीतिपदं कृत्वा रेखाभिः कनकेन च। पश्चात्पिष्टेन चालिप्य सूत्रेणावेष्ट्य सर्वतः। दश पूर्वायता रेखा दश चैवोत्तरायताः। सर्ववास्तुविभागेषु विज्ञेया नवका नव। एकाशीतिपदं कृत्वा वास्तुवित्सर्ववास्तुषु। पदस्थान् पूजयेद्देवांस्त्रिंशत्पञ्चदशैव तु ४५। द्वात्रिंशद्बाह्यतः पूज्याः पूज्याश्चान्तस्त्रयोदश। नामतस्तान् प्रवक्ष्यामि स्थानानि च निबोधत। ईशानकोणादिषु तान् पूजयेद्धविषा नरः। शिखी चैवाथ पर्जन्यो जयन्तः कुलिशायुधः। सूर्यः सत्यो भृशश्चैव आकाशो वायुरेव च। पूषा च वितथश्चैव बृहत्क्षतयमावुभौ। गन्धर्वो भृङ्गराजश्च मृगः पितृगणस्तथा। दौवारिकोऽथ सुग्रीवः पुष्पदन्तो जलाधिपः। असुरः शोषपापौ च रोगोऽहिर्मुख्य एव च। भल्लाटः सोमसर्पौ च अदितिश्च दितिस्तथा। बहिर्द्वात्रिंशदेते तु तदन्तस्तु ततः शृणु। ईशानादिचतुष्कोणसंस्थितान् पूजयेद्बुधः। आपश्चैवाथ सावित्रो जयो रुद्रस्तथैव च, मध्ये नवपदे ब्रह्मा तस्याष्टौ च समीपगान्।

स्थाप्यानेकान्तरान् विद्यात् पूर्वाद्यान्नामतः शृणु । अर्यमा सविता चैव विवस्वान् विबुधाधिपः । मित्रोऽथ राजयक्ष्मा च तथा पृथ्वीधरः स्मृतः । अष्टमश्चापवत्सस्तु परितो ब्रह्मणः स्मृताः । आपश्चैवापवत्सश्च पर्जन्योऽग्निर्दितिस्तथा । पदिकानान्तु वर्गोऽयमेवं कोणेष्वशेषतः । तन्मध्ये तु बहिर्विंशत् द्विपदास्ते तु सर्वशः । अर्यमा च विवस्वांश्च मित्रः पृथ्वीधरस्तथा । ब्रह्मणः परितोदिक्षु त्रिपदास्ते तु सर्वशः । वंशानिदानीं वक्ष्यामि ऋजूनपि पृथक् पृथक् । वायुं यावत्तथा रोगात् पितृभ्यः शिखिनं पुनः । मुख्यात् भृशं तथा शोषाद्वितथं यावदेव तु । सुग्रीवाददितिं यावत् मृगात् पर्जन्यमेव च । एते वंशाः समाख्याताः क्वचिच्च जयमेव तु । एतेषां यस्तु सम्पातः पदं मध्यं समं तथा । मर्म चैतत्समाख्यातं त्रिशूलं कोणगञ्च यत् । स्तम्भन्यासेषु वर्ज्यानि तुलाविधिषु सर्वदा । कीलोच्छिष्टोपघातादि वर्जयेद् यत्नतो जनः । सर्वत्र वास्तुनिर्दिष्टो पितृवैश्वानरायतः । मूर्द्धन्यग्निः समादिष्टो मुखे चापः समाश्रितः । पृथ्वीधरोऽर्यमा चैव स्तनयोस्तावधिष्ठितौ । वक्षःस्थले चापवत्सः पूजनीयः सदा बुधैः । नेत्रयोर्दितिपर्जन्यौ श्रोत्रेऽदितिजयन्तकौ । सर्पेन्द्रावंससंस्थौ तु पूजनीयौ प्रयत्नतः । सूर्यसत्यादयस्तद्वत् बाह्वोः पञ्च च पञ्च च । रुद्रश्च राजयक्ष्मा च वामहस्ते समास्थितौ । सावित्रः सविता तद्वद्धस्तं दक्षिणमास्थितौ । विवस्वानथ मित्रश्च जठरे संव्यवस्थितौ । पूषा च पापयक्ष्मा च हस्तयोर्मणिबन्धने । तथैवासुरशोषौ च वामपार्श्वं समाश्रितौ । पार्श्वे तु दक्षिणे तद्वत् वितथः सगृहक्षतः । ऊर्व्वोर्यमाम्बुपौ ज्ञेयौ जान्वोर्गन्धर्वपुष्पकौ । जङ्घयोर्भृश सुग्रीवौ स्फिकस्थौ दौवारिको मृगः । जयशक्रौ तथा मेढ्रे पादयोः पितरस्तथा । मध्ये नवपदे ब्रह्मा हृदये स तु पूज्यते । चतुःषष्टिपदो वास्तुः प्रासादे ब्रह्मणा स्मृतः । ब्रह्मा चतुष्पदस्तत्र कोणेष्वर्धपदास्तथा । बहिःकोणेषु वास्तौ तु सार्धास्त्रोभयसंस्थिताः । विंशतिर्द्विपदाश्चैव चतुःषष्टिपदे स्मृताः । गृहारम्भेषु कण्डूतिः स्वाम्यङ्गे यत्र जायते । शल्यं त्वपनयेत्तत्र प्रासादे भवने तथा । सशल्यं भयदं यस्मादशल्यं शुभदायकम् । हीनाधिकाङ्गतां वास्तोः सर्वथा तु विवर्जयेत् । नगरग्रामदेशेषु सर्वत्रैवं विवर्जयेत् । चतुःशालं त्रिशालञ्च द्विशालं चैकशालकम् । नामतस्तान् प्रवक्ष्यामि स्वरूपेण द्विजोत्तम ! । चतुःशालं प्रवक्ष्यामि स्वरूपन्नामतस्तथा । चतुःशालञ्चतुर्द्वारैरलिन्दैः सर्वतोमुखम् । नाम्ना तत् सर्वतोभद्रं१ शुभं देवन्टपालयम् । पश्चिमद्वारहीनञ्च नन्द्यावर्तं२ प्रचक्षते । दक्षिणद्वारहीनन्तु वर्द्धमानं३ प्रचक्षते । पूर्वद्वारविहीनं तत् स्वस्तिकं४ नाम विश्रुतम् । रुचकं५ चोत्तरद्वारविहीनं तत् प्रचक्षते । सौम्यशालाविहीनं यत्त्रिशालं धान्यकं६ च तत् । क्षेमवृद्धिकरं नृणां बहुपुत्रफलप्रदम् । शालया पूर्वया हीनं सुक्षेत्रमिति७ विश्रुतम् । धन्यं यशस्यमायुष्यं शोकमोहविनाशनम् । शालया याम्यया हीनं यत्त्रिशालं तु शालया । कुलक्षयकरं८ नृणां सर्वव्याधिविनाशनम् । हीनं पश्चिमया यत्तु पक्षघ्नं९ नाम तत् पुनः । मित्रबन्धून् सुतान् हन्ति तथा सर्वभयावहम् । याम्यापराभ्यां शालाभ्यां धन्यं१० धान्यफलप्रदम् । क्षेमवृद्धिकरं नृणां तथा पुत्रफलप्रदम् । यमसूर्यञ्च११ विज्ञेयं पश्चिमोत्तरशालिकम् । राजाग्निभयदं नृणां कुलक्षयकरं च तत् । उदक्पूर्वे तु शाले हि दण्डाख्यं११ यत्र तद्भवेत् । अकालमृत्युभयदं परचक्रभयावहम् । धनाख्यं१३ पूर्वयाम्याभ्यां शालाभ्यां यद्द्विशालकम् । तच्छस्त्रभयदं नृणां पराभवभयावहम् । चुल्ली१४पूर्वापराभ्यां तु सा भवेन्मृत्युसूचिनी । वैधव्यदायकं स्त्रीणामनेकभयकारकम् । कार्यमुत्तरयाम्याभ्यां शालाभ्यां भयदं नृणाम् । सिद्धार्थसंज्ञं१५ वर्ज्यानि द्विशालानि सदा बुधैः । अथातः संप्रवक्ष्यामि भवनं पृथिवीपतेः । पञ्चप्रकारं तत्प्रोक्तमुत्तमादिविभेदतः । अष्टोत्तरं हस्तशतं विस्तारश्चोत्तमो मतः । चतुर्ष्वन्येषु विस्तारो हीयते चाष्टभिः करैः । चतुर्थांशाधिकं दैर्घ्यं पञ्चस्वपि निगद्यते । युवराजस्य वक्ष्यामि तथा भवनपञ्चकम् । षड्भिः षड्भिस्तथाशीतिर्हीयते तत्र विस्तरात् । त्र्यंशेन चाधिकं दैर्घ्यं पञ्चस्वपि निगद्यते । सेनापतेः प्रवक्ष्यामि तथा भवनपञ्चकम् । चतुःषष्टिस्तु विस्तारात् षड्भिः षड्भिस्तु हीयते । पञ्चस्वेतेषु दैर्घ्यञ्च षड्भागेनाधिकं भवेत् । मन्त्रिणामथ वक्ष्यामि तथा भवनपञ्चकम् । चतुश्चतुर्भिर्हीना स्यात् करषष्टिः प्रविस्तरे । अष्टांशेनाधिकं दैर्घ्यं पञ्चस्वपि निगद्यते । सामन्तामात्यलोकानां वक्ष्ये भवनपञ्चकम् । चत्वारिंशत्तथाष्टौ च चतुर्भिर्हीयते क्रमात् । चतुर्थांशाधिकं दैर्घ्यं पञ्चस्वेतेषु शस्यते । शिल्पिकञ्चुकिनाञ्चैव

वेश्यानां गृहपञ्चकम्। अष्टाविंशत् कराणान्तु त्रिहीनं विस्तरे क्रमात्। द्विगुणं दैर्घ्यमेवोक्तं मध्यमेष्वेवमेव तत्। दूतीकर्मविकृतानां वक्ष्ये भवनपञ्चकम्। चतुर्थांशाधिकं दैर्घ्यं विस्तारो द्वादशैव तु। अर्धार्द्धकरहानिःस्याद्विस्तारात्पञ्चशः क्रमात्। दैवज्ञगुरुवैद्यानां सभास्तारपुरोधसाम्। तेषामपि प्रवक्ष्यामि तथा भवनपञ्चकम्। चत्वारिंशत्तु विस्ताराच्चतुर्भिर्हीयते क्रमात्। पञ्चस्वेतेषु दैर्घ्यञ्च षड्भागेनाधिकं भवेत्। चातुर्वर्ण्यस्य वक्ष्यामि सामान्यं गृहपञ्चकम्। द्वात्रिंशतिः कराणान्तु चतुर्भिर्हीयते क्रमात्। आ षोड़शादिति परं न्यूनमन्त्याव सायिनाम्। दशांशेनाष्टभागेन त्रिभागेणाथ पादिकम्। अधिकं दैर्घ्यमित्याहुर्ब्राह्मणादेः प्रशस्यते। सेनापतेर्नृपस्यापि गृहयोरन्तरेण तु। नृपवासगृहं कार्य्यं भाण्डागारन्तथैव च। सेनापतेर्गृहस्यापि चातुर्वर्ण्यस्य चान्तरे। वासाय च गृहं कार्य्यं राजपूज्येषु सर्वदा अन्तरप्रभवानाञ्च स्वपितुर्गृहमिष्यते। तथा हस्तशतार्द्धं गदितं वनवासिनाम्। सेनापतेर्नृपस्यापि सप्तत्या सहिते कृते। चतुर्दशहृते व्यासे शालाव्यासः प्रकीर्तितः। पञ्चत्रिंशान्विते तस्मिन्नलिन्दः समुदाहृतः। तथा षट्त्रिंशद्धस्ता तु सप्ताङ्गुलसमन्विता। विप्रस्य महती शाला न दैर्घ्यं परतोभवेत्। दशाङ्गुलाधिका तद्वत् क्षत्रियस्य निगद्यते। पञ्चत्रिंशत्करा वैश्ये अङ्गुलानि त्रयोदश। तावत्करैव शूद्रस्य युता पञ्चदशाङ्गुलैः। शालायास्तु त्रिभागेण यस्याग्रे वीथिका भवेत्। सोष्णीषं नाम तद्वास्तु, पश्चात् सायाश्रयं भवेत्। पार्श्वयोर्वीथिका यत्र सावष्टम्भन्तदुच्यते। समन्ताद्वीथिका यत्र सुस्थितं तदिहोच्यते। शुभदं सर्वमेतत्स्याच्चातुर्वर्ण्ये चतुर्विधम्। विस्तारात् षोड़शोभागस्तथा हस्तचतुष्टयम्। प्रथमो भूमिकोच्छ्राय उपरिष्टात् प्रहीयते। द्वादशांशेन सर्वासु भूमिकासु तथोच्छ्रयः। पक्वेष्टकाभवा भित्तिः षोड़शांशेन विस्तरात्। दारवैरपि कल्प्या स्यात्तथा मृण्मयभित्तिका। गर्भमानेन मानन्तु सर्ववास्तुषु शस्यते। गृहव्यासस्य पञ्चाशदष्टादशभिरङ्गुलैः। संयुतोद्वारविष्कम्भो द्विगुणश्चोच्छ्रयो भवेत्। द्वारशाखासु बाहुल्यमुच्छ्रायः-करसम्मितैः। अङ्गुलैः सर्ववास्तूनां पृथुत्वं शस्यते बुधैः। उदुम्बरोत्तरायामस्तदर्धार्धं प्रविस्तरात्'' २५२अ०।

“अथातः संप्रवक्ष्यामि स्तम्भमानविनिर्णयम्। कृत्वा स्वभवनोच्छ्रायं सदा सप्तगुणं बुधैः। अशीत्यंशः पृथुत्व स्यादग्रे साष्टगुणैः सह। रुचकश्चतुरस्रः स्यादष्टास्रो वज्र उच्यते। द्विवज्रः षोडशास्रस्तु द्वात्रिंशास्रः प्रलीनकः। मध्यप्रदेशे यस्तम्भो वृत्तोवृत्त इति स्मृतः। एते पञ्च महास्तम्भाः प्रशस्ताः सर्ववास्तुषु। पद्मवल्लीलताकुम्भपत्रदर्पणरूपिताः। स्तम्भस्य नवमांशेन पद्मकुम्भान्तराणि तु। स्तम्भतुल्या तुला प्रोक्ता हीना चोपतुला ततः। त्रिभागेणेह सर्वत्र चतुर्भागेण वा पुनः। हीनं हीनं चतुर्थांशात् तथा सर्वासु भूमिषु। वासगेहेषु सर्वेषां प्रवेशो दक्षिणेन तु। द्वाराणि तु प्रवक्ष्यामि प्रशस्तानीह यानि तु। पूर्वेणेन्द्रं जयन्तञ्च द्वारं सर्वत्र शस्यते। याम्यञ्च वितथञ्चैव दक्षिणेन विदुर्बुधाः। पश्चिमे पुष्पदन्तं च वारुणञ्च प्रशस्यते। उत्तरेण तु भल्लाटं सौम्यं तु शुभदं भवेत्। तथा वास्तुषु सर्वत्र वेधं द्वारस्य वर्जयेत्। द्वारे तु रथ्यया विद्धे भवेत् सर्वकुलक्षयः। तरुणा द्वेषवाहुल्यं शोकः पङ्केन जायते। अपस्मारो भवेन्नूनं कूपवेधेन सर्वदा। व्यथा प्रस्रवणेन स्यात्कीलेनाग्निभयं भवेत्। विनाशो देवताविद्धे स्तम्भेन स्त्रीकृतो भवेत्। गृहभर्तुर्विनाशः स्यात् गृहेण च व्यधे कृते। अमेध्यावस्करैर्विद्धे गृहिणी बन्धकी भवेत्। तथा शस्त्रभयं विद्यादन्त्यजस्य गृहेण तु। उच्छ्रायाद्द्विगुणां भूमिं त्यक्त्वा वेधो न जायते। स्वयमुत्पाटिते द्वारे उन्मादोगृहवासिनाम्। स्वयं वा पिहिते विद्यात् कुलनाशं विचक्षणः। मानाधिके राजभयं न्यूने तस्करतो भवेत्। द्वारोपरि च यद्द्वारं तदन्तकमुखं स्मृतम्। अध्वनोमध्यदेशे तु अधिको यस्य विस्तरः। वज्रन्तु सङ्कटं मध्ये सद्योभर्तृविनाशनम्। तथान्यपीड़ितं द्वारं बहुदोषकरं भवेत्। मूलद्वारात्तथान्यत्तु नाधिकं शोभनं भवेत्। कुम्भश्रीपर्णिवल्लीभिर्मूलद्वारन्तु शोभयेत्। पूजयेच्चापि तन्नित्यं वलिना चाक्षतोदकैः। भवनस्य वटः पूर्वे दिग्भागे सर्वकामिकः। उदुम्बरस्तथा याम्ये वारुण्यां पिप्पलः शुभः। प्लक्षश्चोत्तरतोधन्यो विपरीतास्त्वसिद्धये। कण्टकी क्षीरवृक्षश्च असनः फलिनो द्रुमः। भार्य्याहान्यै प्रजाहान्यै भवेतां क्रमशस्तदा। न च्छिद्यात्यदि तानन्यानन्तरे स्थापयेच्छुभान्। पुन्नागाशोकवकुलशमीतिलकचम्पकान्। दाड़िमीपिप्पलद्राक्षा स्तथा कुसुममण्डपान्। जम्बीरपूगपनसद्रुमकेतकीभिर्जातीसरोजशतपत्रिकमल्लिकाभिः। यन्नारिकेरकदलीदलपाटलाभिर्युक्तं तदत्र भवनं श्रियमातनोति'' २५४अ०। द्वारवेधे वराहवाक्यं पी०धा०व्याख्यातं यथा

"मार्गतरुकोणकूपस्तम्भभ्रमविद्धमशुभदं द्वारम्। उच्छ्राया-द्विगुणितां भूमिं त्यक्त्वा न दोषायेति" इ॰स॰भ्रमोजलनिर्गमप्रदेशः प्रणालिकेत्यर्थः। विद्धं सम्मुखावस्थितम्। अत्रोच्छ्रायो द्वारस्य गृह्यते। तथा च वर्गः "द्वारोच्छ्रायाद्विगुणितां भूमिं त्यक्त्वा वहिःस्थिताः। न दोषाय भवन्त्येव" इति। रथ्याविद्धं द्वारं नाशाय कुमारदोषदं तरुणा; पङ्कद्वारे शोको व्ययोऽम्बुनि स्राविणि प्रोक्तः। कूपेनापस्मारो भवति विनाशश्च देवताविद्धे। क्रमेण स्त्रीदोषः कुलनाशो ब्रह्मणोऽभिमुखे भवति" इ॰स॰ पङ्कविद्धं द्वारं पङ्कद्वारं यस्य द्वारस्याग्रतः निरन्तरं पङ्कस्तिष्ठति। देवता सुरप्रतिमा। नाशः स्वामिन एव। ब्रह्मवेध एकाशीतिपदचक्रस्थितब्रह्मवेधो गृह्यते। यदाह विश्वकर्मा "गृहमध्ये कृतं द्वारं द्रव्यधान्यविनाशनमिति" विशेषमाह भरद्वाजः "शिरो मर्माणि वंशश्च नालं मध्यं च सर्वशः। विहाय वास्तुमध्यं च द्वाराणि विनिवेशयेदिति" वास्तुमध्यं ब्रह्मस्थानम्। "तत्र द्वारं चेन्निधनप्रदमिति" वशिष्ठोक्तेश्च अस्यापवादमाह विश्वकर्मा "देवागारे विहारे च प्रपायां मण्डपेषु च। प्रतोल्यां च मखे वास्तुमध्ये द्वारं निवेशयेदिति" वास्तुमध्यं ब्रह्मस्थानं देवालयादिस्थानेषु कृतस्य गृहान्तर्गतद्वारस्य ब्रह्मणो न वेध इति निष्कृष्टोऽर्थः"।

गृहकर्मणि वर्ज्यकाष्ठमाह ज्यो॰ त॰ "क्षीरिवृक्षोद्भवं दारु गृहेषु न निवेशयेत्। कृताधिवासं विहगैरनिलानलपीडितम्। गजैर्विभग्नञ्च तथा विद्युन्निर्घातपीडितम्। चैत्यदेवालयोत्पन्नं वज्रभग्नं श्मशानजम्। देवाद्यधिष्ठितं दारु नीपनिम्बविभीतकान्। कण्टकिनोऽसारतरून् वर्जयेत् गृहकर्मणि। वटाश्वत्थौ च निर्गुण्डीं कोविदारांस्तथैव च। प्लक्षकं शाल्मलीञ्चैव पलाशञ्च विवर्ज्जयेत्"।

गृहजातरक्तपुष्पवृक्षादिफलमुक्तं तत्रैव "रक्तपुष्पाद्भयं प्राहुः क्षीरिणा च पशोर्भयम्। कण्टकयरिभयं कुर्यात् गृहभेदञ्च शाल्मलिः" वास्तुमध्यादिग्भेदात् कूपफलमुक्तम् मु॰चि॰ "कूपे वास्तोर्मध्यदेशेऽर्थनाशस्त्वैशान्यादौ पुष्टिरैश्वर्यवृद्धिः। सूनोर्नाशः स्त्रीविनाशो मृतिश्च सम्पत्पीडाशत्रुतः स्याच्च सौख्यम्" मू॰ "वास्तोर्गृहस्य मध्यदेशे मध्यभागे कूपे जलकूपे कृते सति स्वामिनोऽर्थनाशः स्यात्। अथैशान्यादिषु पुष्टिरित्यादिफलम्। यथा ऐशान्यां कूपे पुष्टिः। पूर्वस्यां कूपे ऐश्वर्यवृद्धिः। आग्नेय्यां कूपे पुत्रनाशः। दक्षिणस्यां कूपे स्त्रीविनाशः। नैरृत्यां कूपे गृहकर्त्तुर्मृतिः। पश्चिमायां कूपे सम्पत्। वायव्यां कूपे शत्रुतः सकाशात्पीडा। उत्तरस्यां कूपे सुखम्। गृहस्वामिन एव" पी॰धा॰। एवं गृहसन्निवेशप्रकारेऽवधारितेऽधुना गृहारम्भकालः प्रदर्श्यते। तत्रादौ सौरमासभेदेन वास्तुनरसुखादिप्रदर्शनेन पूर्वादिमुखगृहारम्भकालमाह विश्व॰ वा॰शा॰ "वास्तुनागं जगत्प्राणं पूर्वस्यां प्रथमाश्रितम्। कुक्षिप्रदेशे निखनेद्वास्तुनागस्य मन्त्रितः। त्रिषु त्रिषु च मासेषु नभस्यादिषु च क्रमात्। यद्दिङ्मुखो वास्तुनरस्तन्मुखं सदनं शुभम्। अन्यद्दिङ्मुखगेहं तु दुःखशोकभयप्रदम्। वृषार्कादित्रिकमेवां सिंहादि गणयेद्गृहे। देवालये च मीनादि तडागे मकरादिकम्। पूर्वादिषु शिरः कृत्वा नागः शेते त्रिभिस्त्रिभिः। भाद्रादौवामपार्श्वेन तस्य क्रोडे गृहं शुभम्" व्यक्तमाह ज्यो॰त॰ "वास्तुप्रमाणेन तु शालकेण वामेन शेते खलु नित्यकालम्। त्रिभिस्तु मासैः परिवृत्य भूमौ तं वास्तुनागं प्रवदन्ति वृद्धाः। भाद्रादिके वासवदिक् शिराः स्यात् मार्गादिकेषु त्रिषु याम्यमूर्द्धा। प्रत्यक् शिराः स्यात् खलु फाल्गुनादौ ज्येष्ठादि कौवेरशिराः सनागः। मूर्ध्नि खाते भवेन्मृत्युः पृष्ठे स्यात् पुत्रभार्ययोः। जघनेऽर्थक्षयं विद्यात् सर्वसम्पत्तथोदरे" गृहारम्भाद्युपयोगिराहुमुखादिकमाह वा॰शा॰ "ईशानतः कालसर्पः संहारेण प्रसर्पति। विदिक्षु शेषवास्तोश्च मुखं त्यक्त्वा चतुर्थकम्। खनेच्च सौरमानेन व्यत्यये चाशुभं भवेत्। चतुस्त्रिद्विकशालानामेष दोषो न विद्यते। एकं नागेन्द्रसंशुद्ध्या मन्दिरारम्भणं शुभम्। अधोमुखे च नक्षत्रे शुभेऽह्नि शुभवासरे। चन्द्रतारानुकूले च भवनारम्भणं शुभम्। त्रिषु त्रिषु च मासेषु मार्गशीर्षादिषु क्रमात्। पूर्व्वदक्षिणतोयेशपौलस्त्याशां क्रमाद्गुः (राहुः) स्तम्भे वनविनाशः स्यात् द्वारे वह्निभयं भवेत्। गमने कार्यहानिः स्यात् गृहारम्भे कुलक्षयः। रक्षःकुबेराग्निजलेशयाम्यावायव्यकाष्ठासु च सूर्यवासात्। वसेद्सावष्टसु दिग्भचक्रे मुखे विवर्ज्यौ गमने गृहे च। शिरःखाते विनाशः स्यान्मातापित्रोश्च पृष्ठके। स्त्रीपुत्रनाशः पुच्छे तु गोत्रपुत्रविनाशनम्। कुक्षौ सर्व्वसमृद्धिः

स्याद्धनधान्यसुतागमः । सिंहादिषु त्रिमासेषु चाग्नेय्यां कुक्षिमाश्रितः । वृश्चिकादिषु ईशान्यां कुम्भादिषु च वायुदिक् । वृषादित्रिषु नैर्ऋत्यां सुखपुच्छं न शोभनम् । गृहारम्भविहितमासादि विश्व० वा०शा०उक्तं यथा "चैत्रे व्याधिमवाप्नोति यो नवं कारयेद्गृहम् । वैशाखे धनरत्नानि ज्यैष्ठे मृत्युं तथैव च । आषाढे भृत्यरत्नानि पशुवर्गमवाप्नुयात् । श्रावणे मित्रलाभं च हानिं भाद्रपदे तथा । युद्धं चैवाश्विने मासि कार्त्तिके धनधान्यकम् । धनवृद्धिं मार्गशीर्षे पौषे तस्करतोभयम् । माघे चाग्निभयं विद्याल्लक्ष्मीवृद्धिश्च फाल्गुने । गृहसंस्थापनं सूर्ये मेषस्थे शुभदं भवेत् । वृषस्थे धनवृद्धिः स्यान्मिथुने मरणं भवेत् । कर्कटे शुभदं प्रोक्तं सिंहे भृत्यविवर्द्धनम् । कन्या रोगं तुला सौख्यं वृश्चिके धनधान्यकम् । कार्मुके च महाहानिर्मकरे स्याद्धनागमः । कुम्भेऽर्के रत्नलाभः स्यान्मीने मृत्युभयावहम् । चापमीननृयुक्कन्या मासा दोषा वहाः स्मृताः । ज्यैष्ठोर्जमाघसिंहाख्याः सौरमाने तु शोभनाः । माघे तपस्ये तपसि माधवे नभसि त्विषे । ऊर्जे च गृहनिर्माणं पुत्रपौत्रधनप्रदम् । निषिद्धेष्वपि कालेषु सानुकूले शुभे दिने । तृणदारुगृहारम्भे मासदोषो न विद्यते । पाषाणेष्टकगेहानि निन्द्यमासे न कारयेत् । निन्द्यमासेऽपि चन्द्रस्य मासेन शुभदं गृहम्"

तत्र सौरचान्द्रमासविशेषस्य ग्राह्यतां मासभेदेन पूर्वादिमुखगृहकरणञ्चाह मु०चि०
"कुम्भेऽर्के फाल्गुने प्रागपरमुखगृहं श्रावणे सिंहकर्क्योः पौषे नक्रे च याम्योत्तरमुखसदनं गोऽजगेऽर्के च राधे । मार्गे जूकालिगे सत् ध्रुवमृदुवरुणस्वातिवस्वर्कपुष्यैः स्मृतोगेहं त्रिदियां हरिभत्रिविभयोस्तत्र शस्तः प्रवेशः । कैश्चिन्मेषरवौ मधौ, वृषभगे ज्यैष्ठे, शुचौ कर्कटे, भाद्रे सिंहगते, घटेऽश्वयुजि चोर्जेऽलौ मृगे पौषके । माघे नक्रघटे शुभं निगदितं गेहं तथोर्जे न सत्कन्यायां च तथा धनुष्यपि न सत् कृष्णादिमासाद्भवेत्" मु०। "कुम्भे कुम्भस्थिते सूर्ये फाल्गुने च मासि प्रागपरमुखं गृहं प्राङ्मुखं पश्चिममुखं च गृहं सत् शुभफलदं स्यादित्यर्थः। श्रावणे मासि सिंहकर्कसंस्थार्के प्रागपरमुखं गृहं सत् । पौषे मासे नक्रे मकरसंस्थार्के च प्रागपरमुखं गृहं सत् । अथ गोऽजगे वृषमेषगे सूर्ये राधे वैशाखे मासे च तथा मार्गे मार्गशीर्षे मासि जूकालिगे तुलावृश्चिकगते सूर्ये सति याम्योत्तरमुखं सदनम् दक्षिणमुखं उत्तरमुखं च सदनं सत् यदाह नारदः "गृहसंस्थापनं सूर्ये मेषस्थे शुभदं भवेत् । वृषस्थे धनवृद्धिः स्यान्मिथुने मरणं ध्रुवम् । कर्कटे शुभदं प्रोक्तं सिंहे भृत्यविवर्धनम् । कन्या रोगं तुला सौख्यं वृश्चिके धनवर्द्धनम् । कार्मुके तु महाहानिर्मकरे स्याद्धनागमः । कुम्भे तु रत्नलाभः स्यान्मीने सद्म भयावहमिति" चान्द्रमासफलान्याह श्रीपतिः "शोकोधान्यं मृतिपशुहृतिद्रव्यवृद्धिर्विनाशोयुद्धं भृत्यक्षतिरथ धनं श्रीश्च वह्नेर्भयञ्च । लक्ष्मीप्राप्तिर्भवति भवनारम्भकर्तुः क्रमेण चैत्रादूचे मुनिरिति फलं वास्तुशास्त्रोपदिष्टम्" इति अन्यच्च "आषाढचैत्राश्वयुजोर्जमाघज्यैष्ठेषु च प्रौष्ठपदेषु नूनम् । निकेतनानां घटनं नृपाणां योगेश्वराचार्यमते न शस्तम्" इति । मते न इति पदच्छेदः । अत्र सौराणां चान्द्रमासानां महान् शुभाशुभफलदभेदेन विरोधः । अत्र चिकीर्षितगृहद्वारानुकूलरविसंक्रमसमीचीनविहितमासेष्वेव वैशाखादिषु गृहारम्भः कार्य इति विरोधाभावः इति पितृचरणाः । तत्र द्वारनियममाह श्रीपतिः "कर्किनक्रहरिकुम्भगतेऽर्के पूर्वपश्चिममुखानि गृहाणि । तौलिमेषवृषवृश्चिकयाते दक्षिणोत्तरमुखानि च कुर्यात् । अन्यथा यदि करोति दुर्मतिर्व्याधिशोकधननाशमश्नुते । मीनचापमिथुनाङ्गनागते कारयेन्न गृहमेव भास्करे" इति । कर्कार्कसहिते श्रावणे मासि तादृशमेव गृहम् उक्ताद्धेतोः । एवं मकरार्कसहिते पौषे मासे अनेनैव हेतुना दक्षिणोत्तरमुखं गृहं मेषवृषार्कसहिते वैशाखे स्यात् । तुलावृश्चिकार्कसहिते मार्गशीर्षमासे तथैव गृहं स्यादित्यर्थः । अथात्र सौराणां चान्द्राणां च मासानां निषेधस्तृणादिनिर्मेयगृहाद्यारम्भे नैव भवति । यदुक्तं व्यवहारसमुच्चये 'निषिद्धेष्वपि कालेषु सानुकूले शुभे दिने । तृणदारुगृहारम्भे मासदोषो न विद्यते" इति । जगन्मोहनेऽपि 'पाषाणेष्टादिगेहादि निन्द्यमासे न कारयेत् । तृणदारुगृहारम्भे मासदोषो न विद्यते' अत्र केचिदनियतदिग्गृहारम्भे सर्वदा कालदोषो न प्रवर्तत इत्याहुः तन्न वचनाभावात्! किं च "दिङ्मूढे कुलनाशः स्यादित्यनियतदिग्गृहस्य विचारकोटिसन्निवेशाभावात् । अथ गृह

निर्माणनक्षत्राण्याह । ध्रुवेति । ध्रुवाणि मृदूनि च प्रसिद्धानि वरुणः शतभं स्वाती प्रसिद्धा वसुः धनिष्ठा अर्कोहस्ता पुष्यश्च एषु भेषु गृहनिर्माणं सत् शुभफलदम् । यदाह गर्गः "त्र्युत्तरेऽपि च रोहिण्यां पुष्ये मैत्रे१७ करद्वये १३।१४। धनिष्ठाद्वितये पौष्णे २७ गृहारम्भः प्रशस्यते" अत्र वाक्ये मृगानभिधानेऽपि तदुक्तिर्महेश्वरवाक्यालोचनेन "प्रारम्भो भवनस्य वारुण२४मृदु१४।१७।५।२७ स्वात्यर्क१२ पुष्यध्रुवै४।१२।२१।२६। र्वस्वृक्षेण२३ युतैरिति" अथ सूतिकागृहनिर्माणे विशेषमाह सूतीगेहमिति । अदित्यां पुनर्वसौ सूतिकागृहनिर्माणं शस्तम् । तत्रेति तत्र सूतिकागृहे हरिभविधिभयोः श्रवणाभिजितोर्नक्षत्रयोः प्रवेशः शस्तः । उक्तं च श्रीपतिना "पुनर्वसौ च सूतिकागृहस्य निर्मितिः शुभा । विरञ्चिविष्णुभान्तरे प्रवेशनं हितं भवेत्" इति । तदेतद्ब्राह्मणव्यतिरिक्तवर्णविषयकम् यदाह लल्लः "पुनर्वसौ न्टपादीनां कर्त्तव्यं सूतिकागृहम् । श्रवणाभिजितोर्मध्ये प्रवेशं तत्र कारयेदिति" आवश्यकत्वे तु श्रवणाभिजितोर्मुहूर्त्तस्तदुदयो वा ग्राह्यः इत्यर्थः । ब्राह्मणस्य तु प्रागुक्तनक्षत्रेष्वेव सूतिकागृहनिर्माणप्रवेशौ । तत्र सूतिकागृहं नैरृत्यां कार्यं यदाह वृद्धवशिष्ठः "ऐन्द्र्यां तु विक्रयस्थानमाग्नेय्यां पचनालयः । वारुण्यां भोजनगृहं नैरृत्यां सूतिकागृहम् । याम्यायां शयनस्थानं वायव्यां पशुमन्दिरम् । कौवेर्यां तु धनस्थानमैशान्यां देवतालयः" इति । सूतिभास्करे गर्गः "वारेऽनुकूले राशौ तु दिने दोषविवर्जिते । सानुकूलदिशि प्रोक्तं सूतिकाभवनं बुधैरिति" कालनियम उक्तो रत्नकोषे "आसन्नप्रसवे मासि कुर्याच्चैव विशेषतः । तद्वत् प्रसवकाले स्यादिति शास्त्रेषु निश्चयः" इति । वराहेणात्रानेकनक्षत्राणामभिधानं कृतं यथा "हस्तादित्यशशाङ्कतिष्यपवनप्राज्येशमित्रोत्तराचित्राश्विश्रवणेषु वृश्चिकघटौ हित्वा विरिक्ते तिथौ । शुक्राचार्यशनैश्चरक्ष्माभिनां वारेऽनुकूले विधौ सद्भिर्वेश्मनि सूतिकागृहविधिः क्षेमङ्करः कीर्त्यते" इति । वेश्मनि चतुर्थस्थाने सद्भिः शुभग्रहैः । सूतिकागृहप्रवेशे कालविशेषमाह ज्योतिर्वसिष्ठः "अथातः संप्रवक्ष्यामि सूतिकागारवेशनम् । मासि तु नवमे प्राप्ते पूर्वपक्षे शुभे दिने । प्रसूतिसम्भवे काले सद्य एव प्रवेशयेदिति" पूर्वपक्षे शुक्लपक्षे । प्रवेशे नक्षत्राण्याह गर्गः "रोहिण्यैन्द्रवपौष्णेषु स्वातीवारुणयोरपि । पुष्ये पुनर्वसौ हस्तधनिष्ठात्र्युत्तरासु च । "मैत्रत्वाष्ट्रे तथाश्विन्यां सूतिकागारवेशनम्" । "सर्वे शुभग्रहाः केन्द्रे पापाश्च त्रिषडायगाः । शुभांशे शुभसन्दृष्टे सूतिकागारवेशनमिति" । प्रागभिहितानां सौरचान्द्रमासानां प्रकारान्तरेणैकवाक्यतां शार्दूलविक्रीडितेनाह । कैश्चिदिति पूर्वदिग्द्वारवशेनैकवाक्यता उक्ता इदानीमेतादृशमुच्यते मेषसंस्थे रवौ मधौ चैत्रमासि गेहं प्रारब्धं शुभं स्यात् । तथा वृषस्थे सूर्ये ज्यैष्ठे मासि, कर्कस्थेऽर्के शुचावाषाढे, सिंहगतेऽर्के भाद्रपदे मासि, घटे तुलास्थे रवौ आश्वयुजि आश्विनमासि । अलौ वृश्चिकगेऽर्के ऊर्जे कार्त्तिके मासि । मृगे मकरस्थेऽर्के पौषे मासि, नक्रघटे मकरकुम्भस्थेऽर्के माघे मासि प्रारब्धं गृहं शुभं स्यात् इत्यर्थः इति कैश्चिद्गदितम् । अस्यायमाशयः । मीनचापेत्यादिना द्विस्वभावराशयो निषिद्धाः शोको धान्यमित्यादिना च कियन्तश्चान्द्रा अपि मासा निषिद्धाः । अतोऽन्ये सौराश्चान्द्रा वा विहितास्तेषामयमेव एकवाक्यताप्रकारः । मेषस्थे रवौ चैत्रेऽपि गृहं शुभम् । यस्तु चैत्रो निषिद्धः स मीनार्कविषयः । वृषभस्थे रवौ ज्यैष्ठेऽपि शुभम् । वैशाखस्तु विहित एवास्ति ज्यैष्ठो निषिद्धः स मिथुनार्कविषयः । कर्कटस्थे सूर्ये आषाढेऽपि शुभं आषाढनिषेधस्तु मिथुनार्कविषयः । सिंहगते सूर्ये भाद्रपदेऽपि शुभम् । श्रावणस्तत्र स्वात्म विहितत्वादेव शुभः । यस्तु भाद्रपदनिषेधः स कन्यार्कविषयः । तुलागते सूर्ये आश्विनेऽपि शुभम् । यस्त्वस्य निषेधः । स कन्यार्कपरः । वृश्चिकस्थे सूर्ये कार्त्तिकेऽपि शुभं स्यात् निषेधविषयं स्वयमेव वक्ष्यति । मार्गशीर्षो विहित एव । मकरस्थे सूर्ये पौषे शुभं धनुरर्कसान्निध्ये सोऽप्यशुभः । मकरकुम्भस्थे सूर्ये माघेऽपि शुभं निषेधस्तु धनुरर्कविषयः । अत एव "पौषफाल्गुनवैशाखमाघश्रावणकार्तिकाः । मासाः स्युर्गृहनिर्माणे पुत्रारोग्यशुभप्रदाः" इति नारदवाक्यम् "मासे तपस्ये तपसि माधवे नभसि त्विषे । ऊर्जे च गृहनिर्माणं पुत्रपौत्रधनप्रदम्" इति वसिष्ठवाक्यं च आश्विनकार्त्तिकमाघमासानां शुभत्वप्रतिपादकं तुलावृश्चिकमकरकुम्भार्कविषयं मीनार्कराहित्यप्राशस्त्यपरं च वचनान्तराभिहितो निषेधः प्रागुक्तविषय एव । फाल्गुनस्य शुभत्वं

कुम्भार्कविषयं मीनार्कसाहित्ये तु निषिद्धम्। ननु कार्त्तिकमाघमासौ श्रीपतिना निषिद्धौ तयोः को विषय इत्यत आह अर्थेति ऊर्जः कार्त्तिको मासः कन्यायां कन्यागते रवौ न सन् न शुभः। च पुनः तपा माघमासो धनुषि धनुरर्के न सन् अपिः पादपूरणे। नन्वेतदयुक्तं प्रतिभाति यतश्चान्द्रमासेषु चैत्रादिमाससंज्ञाः सन्ति तत्र कार्त्तिके मासि कन्यासंक्रान्तिः। माघे मासि धनुरर्कश्च कदापि न सम्भवेत्। यतः कार्त्तिकस्य माघमासस्य च शुक्लप्रतिपदादित्रिंशत्तिथयः यावत् तावत् संज्ञेत्यत आह कृष्णादिमासादिति। अस्ति द्विविधो मासः शुक्लादिः कृष्णादिश्चेति। तत्र शुक्लप्रतिपदमारभ्यामावास्यापर्य्यन्तः शुक्लादिः। कृष्णपक्षप्रतिपदमारभ्य पूर्णिमान्तः कृष्णप्रतिपदादिः। यथा। चैत्रशुक्लपक्षे मतद्वयेऽपि स एव चैत्रपूर्णिमास्यनन्तरं कृष्णपक्षः चैत्रमास एव एवं चान्द्रमासो भवति। स एव कृष्णपक्षो यदि वैशाखकृष्णपक्षत्वेन व्यवह्रियते। भाविशुक्लपक्षो वैशाखशुक्लः सर्ववादिसिद्धः। तदा कृष्णादिमासः सम्भवति उभयथा हि शास्त्रे व्यवहारः “अश्वयुक्कृष्णपक्षे तु श्राद्धं कुर्य्यात् दिने दिने इति” पी॰धा॰ तत्र विहितनिषिद्धतिथिनक्षत्रादिनिरूपणम् वा॰शा॰ “अथातः संप्रवक्ष्यामि गृहकालविनिर्णयम्। यथाकालं शुभं ज्ञात्वा तदा भवनमारभेत्। रुदुभेषु वस्वाति पुष्यधनिष्ठाद्वितये रवौ (१२)। मूले पुनर्वसौ सौम्यवारे प्रारम्भणं शुभम्। आदित्यभौमवर्ज्ज्यास्तु वाराः सर्वे शुभावहाः। द्वितीया च तृतीया च पञ्चमी षष्ठिका तथा। सप्तमी दशमी चैव द्वादश्येकादशी तथा। त्रयोदशी पञ्चदशी तिथयः स्युः शुभावहाः। दारिद्र्यं प्रतिपत् कुर्य्यात् चतुर्थी धनहारिणी। अष्टम्युच्चाटनं चैव नवमी शस्त्रघातिनी। दर्शे राजभयं चैव भूते दारविनाशनम्। धनिष्ठापञ्चके नैव कुर्यात् स्तम्भसमुच्छ्रयम्। सूत्रधारशिलान्यासं प्राकारादि समारभेत्। आमित्रं द्विविधं चैव वेधोपग्रहकर्त्तरी। एकार्गलं तथा लत्ता युतक्रकचसंज्ञकाः। पातश्च द्विविधो वर्ज्ज्यो व्यतीपातश्च वैधृतिः। कुलिकं कण्टकं कालं यमघण्टस्तथैव च। कुयोगास्तिथिवारोत्थास्तिथिभोत्था भवारजाः। विवाहादिषु ये वर्ज्ज्यास्ते वर्ज्ज्या वास्तुकर्मणि”

वास्तुचक्रं तत्रैव “वास्तुचक्रं प्रवक्ष्यामि यच्च व्यासेन भाषितम्। यस्मिन् ऋक्षे स्थितो भानुस्तदादि त्रीणि मस्तके। चतुष्कमग्रपादे स्यात् पुनश्चत्वारि पश्चिमे। पृष्ठे च त्रीणि ऋक्षाणि कुक्षौ चत्वारि वामतः। चत्वारि दक्षिणे कुक्षौ पुच्छे भत्रयमेव च। मुखे भत्रयमेवं स्युरष्टाविंशतितारकाः। शिरस्तारास्विदाहाय गृहोद्वासोऽग्रपादयोः। स्थैर्यं स्यात् पश्चिमे पादे पृष्ठे चैव धनागमः। कुक्षौ स्याद्दक्षिणे लाभः पुच्छे च स्वामिनाशनम्। वामकुक्षौ च दारिद्र्यं मुखे पीडा निरन्तरम्”। तत्र वर्ज्यकालमाह विश्व॰वा॰शा॰। कृष्णपक्षे तिथौ रिक्ते गण्डान्ते रविसंक्रमे। रविभौमदिने विष्टौ व्यतीपाते च वैधृतौ। मासदग्धं वारदग्धं तिथिदग्धं च वर्जयेत्। अनुक्तेष्वपि धिष्ण्येषु न कर्त्तव्यं कदाचन। क्रकचं चन्द्रदग्धं च योगानां वज्रसंज्ञकम्। उत्पातैर्दूषितर्क्षं त्रिस्पृशं दग्धसंज्ञकम्। वज्रव्याघातशूलेषु व्यतीपातातिगण्डयोः। विष्कम्भगण्डपरिघं वर्जयित्वा च कारयेत्”। विहितमुहूर्तमाह तत्रैव “स्वातौ मैत्रेऽथ माहेन्द्रे गान्धर्वे भगरोहिणे। तथा वैराजसावित्रे मुहूर्ते गृहमारभेत्। चन्द्रादि सबलं ज्ञात्वा शुभं लग्नं निरीक्ष्य च। स्तम्भोच्छ्रायादि कर्तव्यमन्यत्र परिवर्जयेत्”।

तिथिभेदेन पूर्वादिदिङ्मुखगृहारम्भनिषेधमाह मु॰चि॰। ‘पूर्णेन्दुतः प्राग्वदनं नवम्यादिषूत्तरास्यन्त्वथ पश्चिमास्यम्। दर्शादितः शुक्लदले नवम्यादौ दक्षिणास्यं न शुभं वदन्ति” मू॰“पूर्णेन्दुतः पूर्णिमातः कृष्णाष्टमीपर्य्यन्तं प्राङ्मुखं गृहं शुभं न वदन्ति। कृष्णनवमीतश्चतुर्दशीपर्य्यन्तं क्रियमाणं गृहमुत्तरास्यं न शुभम्। अथ दर्शादितः शुक्लाष्टमीपर्य्यन्तं पश्चिमास्यं गृहं न शुभम्। शुक्लनवमीतश्चतुर्दशीपर्य्यन्तं दक्षिणास्यं गृहं न शुभं वदन्ति। तासु तिथिषु तत्तद्दिङ्मुखं गृहं न कर्त्तव्यम् इति वाक्यार्थः फलितः। यदुक्तं व्यवहारसमुच्चये “‘पूर्णिमातोऽष्टमीं यावत् पूर्वास्यं वर्जयेद्गृहम्। उत्तरास्यं न कुर्वीत नवम्यादिचतुर्दशीम्। अमावास्याष्टमीं यावत्पश्चिमास्यं विवर्जयेत्। नवम्यादौ दक्षिणास्यं यावत् शुक्लचतुर्दशीमिति”। दिग्भेदसुखनक्षत्राण्याह “कृत्तिकाद्याः सप्त पूर्वे मघाद्याः सप्त दक्षिणे। मैत्राद्याः पश्चिमे सप्त धनिष्ठाद्यास्तथोत्तरे। अग्रे चन्द्रे स्वामिभयं कर्मकर्त्ता च पृष्ठके। दक्षिणे च धनं दद्याद्वामे स्त्रीसुखसम्पदः। गृहोपलक्ष्यकार्येषु यत्र ऋक्षेषु चन्द्रमाः। सप्ताकासप्तके देयं कृत्तिकादिकमेव

च। क्षतं चन्द्रस्य वास्तोश्च अग्रे पृष्ठे न शस्यते। लग्नादस्माद्विचार्योऽत्र चन्द्रः सद्यःफलप्रदः। गृहे चन्द्रे सम्मुखस्थे पृष्ठस्थे न शुभं गृहम्। वामदक्षिणतः चन्द्रः प्रशस्तो वास्तुकर्मणि”

तत्र विहितनिषिद्धलग्नादिकमाह तत्रैव चरलग्नं चरांशञ्च सर्वथा परिवर्जयेत्। जन्मभाञ्चोपचयभे लग्ने वर्गे तथैव च। प्रारम्भणं प्रकुर्वीत नैधनं परिवर्जयेत्। पापैस्त्रिषष्ठायगतैः सौम्यैः केन्द्रत्रिकोणगे। निर्माणं कारयेद्धीमानष्टमस्थैः खलैर्मृतिः। मनुष्यलग्ने सौम्यानां दृग्योगे योगतस्तथा। कुर्य्यं विहायान्यलग्ने सौम्यग्रहयुतेक्षिते। जलाशयादिवास्तूनां प्रारम्भः शुभदः स्मृतः” अत्र शुभयोगास्तत्रैव “गुरुर्लग्ने रविः षष्ठे द्यूने७ सौम्ये सुखे४ सिते। तृतीयस्थेऽर्कपुत्रेऽत्र तद्गृहं तु शतायुषम्। भृगुर्लग्नेऽम्बरे१०सौम्ये लाभस्थाने११ च भास्करे। गुरुः केन्द्रगतो यत्र शतवर्षाणि तिष्ठति। हिबुके४ज्येऽम्बरे१० चन्द्रे लाभे११ च कुजभास्करौ। आरम्भः क्रियते यस्य अशीत्यायुः क्रमात् भवेत्। लग्ने भृगौ पुत्रगेज्ये५ षष्ठे भौमे त्रिगे रवौ। यस्य गृहस्य प्रारम्भः स च तिष्ठेच्छतं समाः। लग्नस्थौ गुरुशुक्रौ चेत् रिपुहृराशिगते कुजे। सूर्ये लाभगते११ यस्य द्विशतावद्दानि तिष्ठति। स्वोच्चस्थो वा भृगुर्लग्ने स्वोच्चे जीवे सुख४स्थिते। स्वोच्चे लाभगते११ मन्दे सहस्राणि समाः स्थितिः। स्वोच्चे स्वभवने सौम्ये लग्नस्थे वापि केन्द्रगैः। प्रारम्भः क्रियते यस्य शतद्वयं स तिष्ठति। इज्योत्तरात्रयाहीन्दुविष्णु वाटजलोडुषु। ८।१२।२१।२६।१।५।२२।४।२०। गुरुणा सहितेष्वेषु क्षतं गेहं श्रिया युतम्। द्विदैवत्वाष्ट्रवारीश स्त्राद्रिति वस्तुडुषु। १६।१४।२४।६।७।२३। शुक्रेण सहितेष्वेषु क्षतं धान्यप्रदं गृहम्। हस्तार्यमत्वाष्ट्रदस्रचतुराखेन्द्रभेषु च १३।१२।१४।२।४।१८। बुधेन सहितेष्वेषु धनपुत्रसुखप्रदम्”। कुयोगास्तत्रैव “शत्रुच्चेत्रगतैः खेटैर्नीचस्थैर्वा पराजितैः। प्रारब्धं यस्य भवनं लक्ष्मीस्तस्य विनश्यति। एकोऽपि परभागस्थो दशमे सप्तमेऽपि वा। वर्षाधिपे बलैर्हीने तद्गृहं परहस्तगम्। पापान्तरगते लग्ने चन्द्रे सौम्ययुतेक्षिते। अष्टमस्थेऽर्कपुत्रे च अशीत्यब्दाद्विहन्यते। मन्दे लग्नगते चैव कुजे सप्तमसंस्थिते। शुभै रवीक्षिते वापि शतवर्षाद्विहन्यते। लग्नगे शशिनि क्षीणे मृत्युस्थाने च भूसुते। प्रारम्भः क्रियते यस्य शीघ्रं तच्च विनश्यति। दशापतौ बलैर्हीने वर्षनाथे तथैव च। पीडितर्क्षगते सूर्ये न विदध्यात्कदाचन। पितृमूलेज्यभाग्यार्कपौष्णभेषु च १०।१९।८।११।१३।२७ यत् क्षतम्। कुजेन सहितेष्वेषु गृहं सन्दह्यतेऽग्निना। मूलञ्च रेवती चैव कृत्तिकाषाढमेव च। पूर्वफाल्गुनी हस्तो च मघा चैव तु सप्तकम्। एषु भौमेन युक्तेषु वारे तस्यैव वेधस्य यत्। अग्निना दह्यते क्षतं प्रत्यनाशः प्रजायते। अग्निक्षभर्क्षगते सूर्ये चन्द्रे वा तत्र संस्थिते। निर्मितं मन्दिरं नूनमग्निना परिदह्यते। ज्येष्ठानुराधके चैव भरणीस्वातिपूर्वभे। धनिष्ठास्वपि ऋक्षेषु शनिस्थितेऽह्निनस्य च। क्षपणो नामतः प्रोक्तो धनधान्यादिके गृहे। पुत्रे जातेऽथवा तस्मिन् दह्यते यक्षराक्षसैः। प्रासादेष्वेवमेव स्याद्वापीकूपेषु चैव हि। तस्माद्विचार्य कुर्वीत गृहारम्भं शुभे शुभम्। नाशन्दिशन्ति मकरालिकुलीरलग्ने, मेषे घटे धनुषि कर्मसु दीर्घसूत्रम्। कन्याभषे मिथुनगे ध्रुवमर्थलाभं ज्योतिर्विदः कलशसिंहवृषेषु सिद्धिम्। शशाङ्के तु क्षतं वास्तु कर्त्तुर्वित्तविनाशदम्। महानिशास्वपि तथा सन्ध्ययोर्नैव कारयेत्”। भावस्थग्रहफलानि तत्रैव “लग्नेऽर्के विघ्नपातः स्यात्कोशहानिश्च शीतगौ। मृत्युं विश्वम्भरापुत्रे दारिद्र्यं रविनन्दने। जीवे धर्मार्थकामाः स्युः पुत्रोत्पत्तिश्च भार्गवे। चन्द्रजे कुशला शक्तिर्यावदायुः प्रवर्त्तते। द्वितयस्थे रवौ हानिश्चन्द्रे शत्रुभयं भवेत्। भूमिजे बन्धनं प्रोक्तं नानाविघ्नानि भानुजे। बुधे द्रविणसम्पत्तिर्गुरौ धर्माभिवर्द्धनम्। यथाकामविनोदेन भृगौ कामं व्रजेत् फलम्। तृतीयस्थेषु पापेषु सौम्येष्वेषु विशेषतः। सिद्धिः स्यादचिरादेव यथाभिलषितं प्रति। चतुर्थस्थानगे जीवे पूजा सम्पद्यते नृपात्। चन्द्रजे चार्थलाभः स्याद्भूमिलाभश्च भार्गवे। वियोगः सुहृदां भानौ मन्त्रभेदो महीसुते। बुद्धिनाशो निशानाथे सर्वनाशोऽर्कनन्दने। पञ्चमे तु सुराचार्ये चित्तो बहुधनागमः। शुक्रे पुत्रसुखावाप्तिरर्थलाभस्तथेन्दुजे। सुतदुःखं सहस्रांशौ शशाङ्के कलहः स्मृतः। भौमे कार्यविरोधः स्यात्सौरौ बन्धुविमर्द्दनम्। षष्ठस्थानगते सूर्ये रोगनाशं विनिर्द्दिशेत्। चन्द्रे पुष्टिः कुजे प्राप्तिः सौरौ शत्रुबलक्षयः। गुरौ मन्त्रोदयः प्रोक्तो भृगौ विद्यागमो भवेत्। सर्वज्ञानार्थकौशल्यं नक्षत्रपतिनन्दने। सप्तमस्थानगे जीवे

बुधे दैत्यपुरोहिते । गजवाजिधरित्रीणां क्रमाल्लाभं विनिर्द्दिशेत् । भास्करे कीर्त्तिभङ्गः स्यात् कुजे विपदमादिशेत् । हिमगौ क्लेश आयासः सौरौ सर्व्वधनक्षयः । पतङ्गे पङ्कुताष्टस्थे भौमे सौरौ च रुग्भयम् । चन्द्रे रोगविवृद्धिः स्यात् कुजे शोकागमो भवेत् । बुधे मानधनप्राप्तिर्जीवे च विजयो भवेत् । शुक्रे स्वजनभेदः स्यान्मन्यस्यापि देहिनः । वागीशे नवमस्थाने विद्याभोगाभिनन्दनम् । बुधे विविधभोगाप्तिर्भार्गवे विजयो भवेत् । चन्द्रे धातुक्षयः प्रोक्तो धर्म्महानिश्च भास्करे । कुजे चात्र भयं विद्याद्द्रविजे धर्म्मदूषणम् । दशमस्थानगे शुक्रे शयनाशनसिद्धयः । सुराचार्य्ये महत्सौख्यं विजयः स्त्रीधनं बुधे । मार्त्तण्डे च सुहृद्वृद्धिस्तथा शोकविवर्द्धनम् । भौमे रत्नागमः प्रोक्तः शनौ कीर्त्तिविलोपनम् । लाभस्थानेषु सर्व्वेषु लाभस्थानं विनिर्द्दिशेत् । व्ययस्थानेषु सर्व्वेषु विनिर्द्दिष्टो व्ययः सदा । स्वोच्चे पूर्णफलः प्रोक्तः पादोनः स्वर्क्षगो ग्रहः । स्वत्रिकोणेऽर्द्धफलदः पादं मित्रपदाश्रितः । समर्क्षे रिपुराशौ च समकष्टफलो ग्रहः । नीचस्थो विफलो ह्यस्तगोऽसत्फलदः शुभः" ।

गृहारम्भे रव्यादिगोचरादिशुद्धिफलादि वा०शा०

"गोचराष्टकवर्गाभ्यां वासवेश्म विचिन्तयेत् । दशा चान्तर्दशादिश्च विचार्य्यात्र कर्म्मणि । गुरुशुक्रबले विप्रात् सूर्य्यभूमिजयोस्तथा । शशिसौम्यबले सौरिबले वर्णानुपूर्व्वशः । गृहारम्भं प्रकुर्व्वीत वर्णनाथबले सति । सर्व्वेषामपि वर्णानां सूर्य्यचन्द्रबलं स्मृतम् । विषमस्थे रवौ स्वामी पीड्यते गृहिणी विधौ । शुक्रेण पीड्यते लक्ष्मीर्जीवेन सुखसम्पदः । बुधेन पुत्रपौत्राश्च भौमेन भ्रातृबान्धवाः । सौरिणा दासवर्गाश्च पीड्यन्ते नात्र संशयः । विशेषेण तु सूर्य्यस्य बलं प्रोक्तं गृहे बुधैः । सर्व्वेषामेव वर्णानां रविशुद्धिर्विधीयते । दशापतौ हीनबले वर्णनाथे तथैव च । पीडितर्क्षगते सूर्य्ये न विदध्यात् कदाचन । प्रथमकोष्ठगे रोगं द्वितीये चार्थनाशनम् । तृतीये धनलाभं च चतुर्थे भयदो रविः । पञ्चमे पुत्रलाभं च शत्रुनाशाय शत्रुगे । स्त्रीकष्टं सप्तमे सूर्य्ये मृत्युश्चाष्टमगेहगे । नवमे धर्म्मनाशाय दशमे कर्म्मसंयुतिः । एकादशे भवेल्लक्ष्मीर्द्वादशे च धनक्षयः । पुत्रे५ द्वितीये द्यूने७ च धूर्ये मध्यबलो रविः । द्वितीयपुत्राङ्क५।८गतश्चिद्दशाहात्परः शुभः । अस्तगा नीचराशिस्थाः परराशौ पराजिताः । वृद्धस्था बालभावस्था वक्रगाश्चातिचारिणः । रिपुदृष्टिवशं याता उल्कापातेन दूषिताः । न फलन्ति ग्रहा गेहप्रारम्भे तान् प्रपूजयेत्" ।

गृहारम्भे खातारम्भोपयोगिनक्षत्राण्याह माण्डव्यः ।

"अधोमुखैर्भैर्विदधीत खातं शिलास्तथा चोर्द्ध्वमुखैश्च पट्टम् । तिर्य्यङ्मुखैर्द्वारकपाटदानं गृहप्रवेशो मृदुभिर्ध्रुवैश्च" अधोमुखादिनक्षत्राण्याह पी०धा०गरुडपु०

"भरणी कृत्तिकाऽश्लेषा मघामूलविशाखिकाः । तिस्रः पूर्व्वास्तथा चैव अधोवक्त्राः प्रकीर्त्तिताः । वापीकूपतडागादिखननं च तृणादिकम् । देवतागारखननं निधानखननं तथा । गणितं ज्योतिषारम्भं खनी बिलप्रवेशनम् । कुर्य्यादधोगतान्येव कार्य्याणि वृषभध्वज ! । रोहिण्यार्द्रा तथा पुष्यो धनिष्ठा चोत्तरात्रयम् । वारुणं श्रवणं चैव नव चोर्द्ध्वमुखाः स्मृताः । एषु राज्याभिषेकं च पट्टबन्धं च कारयेत् । ऊर्द्ध्वमुखान्युच्छ्रितानि सर्व्वाण्येषु च कारयेत् । रेवती चाश्विनी चित्रा स्वाती हस्तः पुनर्व्वसुः । अनुराधा मृगः ज्येष्ठा एताः पार्श्वमुखाः स्मृताः । गजोष्ट्राश्वबलीवर्द्ददमनं महिषस्य च । बीजानां वपनं कुर्य्याद्गमनागमनादिकम् । चक्रयन्त्ररथादीनां नावादीनां प्रवाहनम् । पार्श्वेषु यानि कर्म्माणि कुर्य्यादेतेषु तानि च"

नक्षत्रभेदे द्वारनिर्म्माणाय सफलं द्वारचक्रमाह मु०चि०

"सूर्य्यर्क्षाद्युगभैः शिरस्यथ फलं लक्ष्मीस्ततः कोणभैर्नागैरुद्वसनं ततो गजमितैः शाखासु सौख्यं भवेत् । देहल्यां गुणभैर्मृतिर्गृहपतेर्मध्यस्थितैर्वेदभैः सौख्यं चक्रमिदं विलोक्य सुधिया द्वारं विधेयं शुभम्" मू०

"द्वारस्य चत्वारः पाषाणा आवश्यकाः । द्वौ ऊर्द्ध्वाधोभावेनावस्थितौ समावल्पपरिमाणौ । तत्र उत्तरङ्ग इत्यूर्द्ध्वस्थितस्य संज्ञा । अधोऽवस्थितस्य तु देहलीति सर्व्वसाधारणं नाम । द्वौ पार्श्वयोः स्थितौ महापरिमाणौ शाखासंज्ञौ (बाहु) इति भाषया द्वयोरपि संज्ञा एवं दीर्घचतुरस्रद्वारं भवति । पाषाणासम्भवे तु काष्ठादेरपि निवेशः । तत्र द्वारे चिकीर्षिते सूर्य्याधिष्ठितनक्षत्राद्युगभैश्चतुर्भिर्नक्षत्रैः शिरस्यवस्थितैः सद्भिः लक्ष्मीप्राप्तिरूपं फलं स्यात् । ततस्तदग्रिमैर्नागैः कोणभैर्द्वयोरवस्थित्या चतुःकोणेष्ववस्थितैरष्टसंख्यकैर्नक्षत्रैरुद्वसनं तत् द्वारगृहं सर्व्वदा जनवासरहितं स्यात् । ततस्तदग्रिमै

र्जन्मितेरष्टाभिर्भैः शाखासु तत्रावस्थितैर्गृहस्वामिनः सौख्यरूपं फलं स्यात्। ततस्तदग्रिमेषु चतुर्भिस्त्रिभिर्नक्षत्रैर्हत्वाग्रस्थितैर्गृहपतेर्मृतिः स्यात्। ततस्तदग्रिमैर्वेदभैश्चतुर्भिर्भैर्मध्यस्वरूपेऽवकाशे स्थितैः सौख्यं स्यात्। फलितार्थमाह। चक्रमिति। इदं द्वारचक्रं विलोक्य सुधिया शुभं शुभफलदं द्वारं विधेयं कर्त्तव्यम्। तदुक्तं ज्योतिर्निबन्धे "द्वारचक्रं प्रवक्ष्यामि भाषितं विश्वकर्मणा। सूर्य्यभाच्चतुष्कं तु द्वारस्योपरि विन्यसेत्। द्वे द्वे कोणे च दातव्ये शाखायुग्मे द्वयं द्वयम्। अधश्च त्रीणि देयानि वेदा मध्ये प्रतिष्ठिताः। राज्यं स्यादूर्द्ध्वनक्षत्रे कोणेषूद्वसनं भवेत्। शाखायां लभते लक्ष्मीमधश्चैव मृतिं लभेत्। मध्यमेषु लभेत्सौख्यं चिन्तनीयं सदा बुधैरिति" अथ द्वारस्थापनम् "द्वारस्थापनमत्रागद्युच्यन्तेऽश्विनी चोत्तरा। हस्तापुष्यश्रुतिमृगाः स्थिरैरेताः प्रकीर्त्तिताः। स्वातौ पुष्ये च रोहिण्यां द्वारशाखावरोपणमिति" ज्योतिर्निबन्धेऽभिहितत्वात्तेऽपि ग्राह्याः। तिथयोऽपि तत्रैवाभिहिताः "पञ्चमी धनदा चैव मुनिनन्दवसौ शुभम्। प्रतिपत्सु न कर्त्तव्यं कृते दुःखमवाप्नुयात्। द्वितीयायां द्रव्यहानिः पशुपुत्रविनाशनम्। तृतीया रोगदा ज्ञेया चतुर्थी भङ्गकारिणी। कुलक्षयं तथा षष्ठी दशमी धननाशिनी। विरोधकृद्दशा पूर्णा न स्याच्छाखावरोपणमिति" एवं सति विरुद्धतिथिं विहाय विहिततिथिषु विहितभेषु च तत्रापि चक्रशुद्धेषु भेषु द्वारं विहितं शुभफलदं स्यादिति निष्कृष्टोऽर्थः" पी॰धा॰

तत्प्रवेशकालमाह मु॰चि॰ "सौम्यायने ज्येष्ठतपोऽन्त्यमाधवे यात्रानिवृत्तौ नृपतेर्नवे गृहे। स्याद्वेशनं द्वाःस्थवधूमृगेड्भिर्जन्मर्क्षलग्नोपचयोदये स्थिरे" (१) मू॰ "जीर्णे गृहेऽग्न्यादिभयान्नवेऽपि मार्गोर्ज्जयोः श्रावणिकेऽपि सत्स्यात्। वेशोऽम्बुपेज्यानिलवासवेषु नावश्यमस्तादिविचारणात्र। (२) मृद्वध्रुवक्षिप्रचरेषु मूलभे वास्त्वर्चनं भूतबलिं च कारयेत्। त्रिकोणकेन्द्रायधनत्रिगैः शुभैर्लग्ने त्रिषष्ठायगतैश्च पापकैः। (३) शुद्धाम्बुरन्ध्रे विजनुर्भमृत्यौ व्यर्कारिक्ताचरदर्शचैत्रे। अग्रेऽम्बुपूर्णं कलसं द्विजांश्च कृत्वा विशेद्वेश्म भकूटशुद्धम्। (४) वामो रविर्मृत्युसुतार्थलाभतोऽर्के पञ्चमे प्राग्वदनादिमन्दिरे। पूर्णातिथौ प्राग्वदने गृहे शुभो नन्दादिके याम्यजलोत्तरानने। (५) वक्त्रे भूरविभात् प्रवेशसमये कुम्भेऽग्निदाहः कृताः४ प्राच्यामुद्वसनं कृताः४ नवमता लाभः कृताः४ पश्चिमे। श्रीर्वेदाः कलिरुत्तरे युगमिता गर्भे विनाशो गुदे रामाः३ स्थैर्य्यमतः स्थिरत्वमनलाः३ कण्ठे भवेत्सर्वदा" (६) मू॰

"तत्रापूर्वप्रवेशसपूर्वप्रवेशयोः कालशुद्ध्यादिकमिन्द्रवंशाच्छन्दसाह सौम्यायने इति। एतेषु सौम्यायन इत्यादिकेषु पदार्थेषु सत्सु नृपतेर्यात्रानिवृत्तौ अथवा नवे नूतनोत्थापिते गृहे प्रवेशनं स्यात्। सौम्यायने उत्तरायणे। अत्र शुक्रगुर्वस्तादिको दोषो वाप्यारामतडागेत्यादिनोक्त इति न पुनरुक्तः। एवं गीर्वाणाम्बुप्रतिष्ठेत्यादिना दक्षिणायननिषेधोऽपि। अतःपरिशेषात्सौम्यायनग्रहणे सिद्धे तदुक्तिर्मन्दबुद्धीनां शीघ्रप्रतिपत्त्यर्था। उक्तं च वसिष्ठेन "अथ प्रवेशो नवसद्मनश्च सौम्यायने जीवसिते बलाढ्ये" इति बलाढ्ये उदिते। नारदेनापि "अथ सौम्यायने कार्य्यं नववेश्मप्रवेशनम्। राज्ञां यात्रानिवृत्तौ वेति" केवलायां भूमौ क्रीतायां प्राप्तायां वा स्वतःसिद्धायां गोत्थापितं गृहं नूतनमित्युच्यते। ज्येष्ठेति ज्येष्ठमाघफाल्गुनवैशाखमासेष्वेव सत्यप्युत्तरायणे प्रवेशनं शुभम्। यदाह नारदः "माघफाल्गुनवैशाखज्यैष्ठमासेषु शोभनः। प्रवेशो मध्यमो ज्ञेयः सौम्यकार्त्तिकमासयोरिति" सौम्यो मार्गशीर्षः। मध्यमोक्तिरावश्यकविषया। चान्द्रमासफलान्याह वसिष्ठः "माघेऽर्थलाभः प्रथमप्रवेशे पुत्रार्थलाभः खलु फाल्गुने च। चैत्रेऽर्थहानिर्धनधान्यलाभो वैशाखमासे, पशुपुत्रलाभः। ज्यैष्ठे, च मासेषु परेषु नूनं हानिप्रदः शत्रुभयप्रदश्च"। "शुक्ले च पक्षे सुतरां विवृद्धिः कृष्णे च यावद्दशमी च तावत्" इत्याद्युक्तेरेव पञ्चकला पक्षविशुद्धिरोक्ता तिथिविचारशुद्धिश्चाप्येवं बध्यते। वसिष्ठेन तु गृहप्रवेशे चैत्रमासमनूद्य दूषितं यथा "मृगादिषट्कांशिषु संस्थितेऽर्के नवप्रवेशः शुभदः सदैव। कुम्भं विनान्येष्वपि केचिदूचुर्न चैत्रमिष्टं खलु संप्रवेशे। इति अस्यार्थः नूतनगृहप्रवेशो मकरादिषड्राशि संस्थिते सूर्य्ये शुभफलदो भवति तत्रापि माघादिषु कुम्भरहितेषु चतुर्षु मासेषु शुभतरः ननु "अथ प्रवेशो नवसद्मनश्च सौम्यायने" इति सर्वं प्राक् सौम्यायन इत्युक्तत्वात् किमिति च तत् पुनरुक्तमित्यत आह। कुम्भं विनेति। सत्यप्युत्तरायणे कुम्भसंक्रान्तौ नूतनगृहप्रवेशो न भवतीत्येतदर्थं पुनरुक्तमित्यर्थः। मन्दिरं

19733

पूर्वापरविरुद्धम् । तथाहि "माघेऽर्थलाभः प्रथमः प्रवेशः" इत्यादिना माघफाल्गुनयोश्चान्द्रमासयोः शुभफलाभिधानात्तत्रैव च कुम्भसंक्रान्तिसम्भवाद्द्वयोरन्यतरस्याशुभत्वं प्रतिपाद्यते । उभयमासनिर्मुक्तः कुम्भस्तु नास्त्येवेति चेत् । उच्यते । सन्ति हि द्विविधाश्चान्द्रामासा शुक्लादयः कृष्णादयश्चेति । तत्र फाल्गुनपूर्णिमोत्तरमासस्य कृष्णादिमासगणनया चैत्रत्वात्तस्य च विरुद्धफलत्वात्तद्विषयकोऽयं कुम्भसंक्रान्तिनिषेधः । चान्द्रमासस्य शुक्लादिकृष्णाद्यभिधायकानि वाक्यानि गृहारम्भप्रकरणेऽस्माभिरुक्तानि अयमपि निषेधो मासस्य कृष्णादित्वे ज्ञापकः । अथ कर्कादिसंक्रान्तिषु मतान्तरमाहान्येष्वपीति केचिदाचार्य्याः कन्येऽपि कर्कि-द्वादिस्थिते सूर्येऽपि नवगृहप्रवेशः कार्य्य इत्यूचुः । तदेतद्द्वन्द्वसौपूर्विकगृहप्रवेशविषयम् । तदुक्तं स्वयमेव "नवप्रवेशे त्वथ कालशुद्धिर्न द्वन्द्वसौपूर्विकयोः कदाचिदिति" । नूतनतृणागारप्रवेशविषयं वा । तदुक्तं ज्योतिःप्रकाशे "गृहारम्भोदितैर्मासैर्धिष्ण्यैर्वारैर्विशेद्गृहम् । विदेशौद्यायने कुर्य्यात् तृणागारं तु सर्वदेति" अतएव "कुलीरकन्यकाकुम्भे दिनेशे न विशेद्गृहम् । ग्रामं वा नगरं वापि पत्तनं वा पुराधिपेति" गुरुवाक्यमप्येवमेव व्याख्येयम् । ननु पौषचैत्रादिषु विरुद्धफलेषु चान्द्रमासेषु विहितसंक्रान्तिचेत्तदा नूतनगृहप्रवेशः कार्य्यो वा नवेत्यत आह न सौरमिति खलु निश्चये न सौरं मासं वत् प्रवेशे नेष्टं न शुभफलदम् । विरुद्धशुभफलयोश्चान्द्रसौरमासयोः साहित्ये विहितचान्द्रमासैरेव गृहप्रवेशः कार्य्य इत्यत्र अतिप्रसङ्गेन । द्वाःस्थेति । द्वाःस्थमस्थानि स्वद्वारस्थे उक्तानि । मृदूनि ध्रुवाणि चोडूनि प्रसिद्धानि । द्वाःस्थानि च तानि मृदुध्रुवोडूनि चेति कर्मधारयः । तादृशैः प्रवेशनं हितं स्यात् । अयमर्थः यस्मिन् गृहे प्रवेशः कर्त्तुमिष्यते तस्य द्वारं यद्दिगभिमुखं तद्दिङ्नक्षत्रैर्विहितैः प्रवेशः कार्य्यः । यदाह वशिष्ठः "यद्दिग्द्वारं मन्दिरं तद्दिगृक्षैः स्यात् संप्रवेशो न सर्व्वैरिति" उक्तमर्थमाह स एव "चित्रोत्तराधातृशशाङ्कमित्रवस्वन्त्यवारीश्वरभेषु १४।१२।२१।२६।४ ५।१७।२३।२७।२४ नूनम् । आयुर्धनारोग्यसुपुत्रपौत्रसन्तीर्निदः स्याच्चिविधः प्रवेशः" इति । नारदोऽपि "वसिष्ठ्यान्त्येषु २३।८।२७ वरुणत्वाष्ट्रमित्रस्थिरोडुषु २४।१४।१७।४।१२।२१।२६ । शुभःप्रवेशो देवेज्यशुक्रयोर्दृश्यमानयोरिति" । अत्र पुष्यधनिष्ठाशततारकाग्रहणं जीर्णगृहप्रवेशविषयम् । उक्तञ्च ज्योतिःप्रकाशे "प्रवेशो नूतने हर्म्ये ध्रुवैर्मैत्रैः शुभावहः । पुष्यस्वातीयुतैस्तैश्च जीर्णे स्याद्वासवद्वये" इति । एतदुपन्यस्तद्वयमग्रिमपद्ये वक्ष्यति । अस्मैवाशयं मनसि निधायाह श्रीपतिः "शुभः प्रवेशो मृदुभिर्ध्रुवाख्यैः क्षिप्रैश्चरैः स्यात् पुनरेव यात्रा । उग्रैश्च घोराख्यभैः कुमारो राज्ञां विशाखासु विनाशमेति" "कृत्तिकासु भवनं कृशानुना दह्यते प्रविशतां न संशयः । तनुहस्तं च सदनं हि तत्कुलद्वारभेषु शुभकृत् प्रवेशनमिति" वशिष्ठोऽपि "कर्कादितेयानिलदस्रविष्णु १२।७।१५।२।२२ऋक्षे प्रविष्टं नवमन्दिरं यत् । अबदत्त्वात्तत्परहस्तयातं शेषेषु (विहितभिन्नेषु) धिष्ण्येषु च मृत्युदं स्यादिति" प्रवेशलग्नमाह लग्नर्क्षेति । लग्नर्क्षं लग्नराशिः लग्नलग्नं च प्रसिद्धम् । ताभ्यामुपचये तृतीयषष्ठैकादशदशमस्थेऽन्येषु तथा स्थिरास्थिरराशिषु लग्नगतेषु सत्सु नवगृहप्रवेशनं शुभम् । यदाह वशिष्ठः "कर्त्तुर्विलग्नादथ जन्मराशेर्लग्नस्थितो राशिरिति प्रदिष्टः । मिश्रोऽपि दारिद्र्यभयङ्करश्च सुहृत् सुतघ्नो रिपुनाशदश्च । कलत्रहन्ता निधनप्रदश्च रोगप्रदः सिद्धिकरोऽर्थदश्च । प्राप्तश्च वैराग्यदः क्रमेण यदैव नूनं त्रिविधः प्रवेशः" इति । अतो विधुद्वपर्व्वमाह गृहप्रवेशे राजमार्त्तण्डः "कर्त्तुर्भोपचयगाश्च विलग्ने राशयः शुभफलाय भवन्तीति" नारदोऽपि "कर्त्तुर्जन्मलग्ने वा ताभ्यामुपचयेऽपि वा । प्रवेशलग्ने स्याद्वृद्धिरन्यथे शोकनिःस्वनः" इति । पुनर्वशिष्ठः "सौम्ये स्थिरे भे शुभदृष्टयुक्ते लग्नेऽथ वा द्व्यङ्गगृहे विलग्ने" इति । सौम्ये सौम्यग्रहयुक्ते । द्व्यङ्गगृहे द्विस्वभावराशौ । अत्र विवाहप्रकरणोक्ता एकविंशतिविधा दोषा वर्ज्या इत्यपि ज्ञेयम् । एकविंशतिदोषानुपक्रम्य वशिष्ठेनोक्तम् "कर्त्तुर्नाशो गृहारम्भे प्रवेशे पतिनाशनम्" इति (१)। अथ जीर्णगृहादिविषयके प्रवेशे विशेषमिन्द्रवज्राच्छन्दसाह जीर्णे पुरातनेऽन्यनिर्मिते गृहेऽथवा स्थितएव स्वगेहेऽग्न्यादिभयात् अग्निकृतं भयं दाहः । आदिशब्देन वज्रवृष्टिपातभयं राजकोपो वा । इत्याद्युपद्रवैः पतिते गृहे पुनरपि सम्यक्कृते उत्थापिते गृहेऽपि प्राक्पद्योक्ताः सर्वेऽपि मासाद्याः नवगृहप्रवेशे ज्ञेयाः । किञ्च । मार्गो

पञ्चेष्टकेऽप्यष्टमशुद्धियुक्ते । कार्यः प्रवेशो न चरांशलग्ने शुभेक्षिते वाप्यथ संयुते वा । रिक्तामभां दग्धतिथिं दिनेशभूस्नुषड्वर्गमिनेन्दुदृष्टम् । क्रूरग्रहाधिष्ठितविद्धभं च विवर्जनीयं त्रिविधप्रवेशे” इति । वारफलमप्याह स एव “दहाते प्रविशतां च मन्दिरं वह्निना नियतमेव वह्निभे । अभ्रभूमिसुतवासरे तथा शीतरश्मिदिवसे हि वृद्धिदम् । चन्द्रजार्यसितवासरेषु च श्रीकरं सुखमहार्थलाभदम् । सूर्यसूनुदिवसे स्थिरप्रदं किन्तु चौरभयमत्र विद्यते” इति । एषां निष्कृष्टमर्थमाह श्रीपतिः “रिक्ता तिथिर्भूसुतभानुवारौ निन्द्याश्च योगाः परिवर्जनीयाः । मेषः कुलीरो मकरस्तुला च त्याज्याः प्रवेशे हि तथा तदंशाः” इति । निषिद्धलग्नफलान्यभिहितानि राजमार्तण्डे “भूपो यात्वा मेषलग्ने प्रवेशे नाशं गच्छेत् कर्कटस्योदये वा । व्याधिं तौलिन्याश्रिते लग्नवर्त्तिन्याकोकेरे चाशु याङ्कान्यनाशम्” । आकोकेरे मकरे । “लग्नेऽन्यत्रांशकेऽप्येषामेतद्दुष्टफलप्रदाः । शुभान्यन्यानि लग्नानि प्रवेशे मुनयो विदुरिति” अन्यानि स्थिराणि द्विस्वभावानि च । उक्तं च वसिष्ठेन “पञ्चाङ्गसंशुद्धदिने निशेशताराबले चाष्टकवर्गयुक्ते । सौम्ये स्थिरे भे शुभदृष्टियुक्ते लग्नेऽथ वा द्व्यङ्गगृहे विलग्ने” इति । विशेषो राजमार्त्तण्डे “निन्दिता अपि शुभांशसमेतास्तौलिमेषमकराः सकुलीराः । कर्म्मभोपचयगाश्च विलग्ने राशयः शुभफलाय भवन्तीति” । एतल्लग्नान्तराशुद्धौ बहुकालासहिष्णुत्वे वा द्रष्टव्यम् । शुभांशाः वृषमिथुनकन्याधनुर्मीनानामंशा इत्यर्थः कर्कतुलांशयोः स्वरूपतो निषिद्धत्वात् । विशेषान्तरमाह वसिष्ठः “यः क्षीणचन्द्रोऽन्त्यषडष्टसंस्थः पापेक्षितः पापयुतोऽथ वा स्यात् । कर्त्तुः स्त्रियं हन्ति स वत्सरेण त्रिवर्षतः सौम्यनिरीक्षितश्चेदिति” अथ राज्ञां यात्रानिवृत्तिप्रवेशेऽयं विशेषो ध्येयः यत्र मासे यात्रा कृता तस्मान्नवमे मासि यात्रादिनान्नवमे दिने वा प्रवेशोनिषिद्धः यदाह गुरुः । “निर्गमान्नवमे मासि प्रवेशो नैव शोभनः । नवमे दिवसे चैव प्रवेशं नैव कारयेदिति” । वामं रविमिति । गृहप्रवेशसमये रविं सूर्यं वामं तद्दिगभिमुखात् प्रवेश्यगृहाद्वामभागस्थं कृत्वा वेश्म गृहं विशेत् । तथा पुरोऽग्रे स्वसम्मुखं पूर्णघटं जलपूर्णं कलससुपलक्षणत्वात् पूगीफलादिपूर्णं वटं वा कृत्वा । चकारस्याऽनुक्तसमुच्चयार्थत्वाद्ब्राह्मणांश्च सजलकलसानपि ब्राह्मणान्याग्रे कृत्वा वेश्म विशेत् । अत्र शुक्रः पृष्ठगः कार्य इत्यनुक्तोऽपि विशेषो ध्येयः यदाह वशिष्ठः “कृत्वा शुक्रं पृष्ठतो वामतोऽर्कं विप्रान् पञ्चाननग्रतः पूर्णकुम्भम् । हर्म्यं रम्यन्तोरणस्रग्वितानैः स्त्रीभिः स्रग्वी गीतमाल्यैर्विशेत्तदिति” गुरुस्तु वामगोऽग्रगोवा शुक्रो निषिद्धः, किन्तु पृष्ठगतो दक्षिणगतो वा शुभ इत्याह “पृष्ठगं दक्षिणं वापि भृगुं कृत्वा विशेत्सदा । पुरोगं वामगं वापि शुक्रं कृत्वा विशेन्नेति” अत्र शुक्रस्य दिक्चतुष्टयस्थत्वज्ञानं चन्द्रवदेव ज्ञेयं विशेषानुक्तेः । तच्च गृहारम्भप्रकरणेऽस्माभिरुक्तम् अयं च सर्ववर्णानां त्रिविधेऽपि प्रवेशे विधिः राज्ञां तु यात्रानिवृत्तौ विशेषमप्याह श्रीपतिः “कृत्वा विप्रान् सजलकलशांश्चाग्रतो वामतोऽर्कं स्नातः स्रग्वी विमलवसनो मङ्गलैर्वेदघोषैः । व्यस्तैर्यात्राकथितशकुनैर्द्वारमार्गेश्च राजा हर्म्यं पुष्पप्रकररुचिरन्तोरणाढ्यं विशेच्चेति” कीदृशं वेश्म सकूटशुद्धं सकूटं षडष्टकादि तेन शुद्धम् । उपलक्षणत्वात् विवाहप्रकरणोक्तं “वर्णोवश्यं तथा तारा” इत्येवमादिकं च । तेनापि शुद्धं ध्येयम् यदाह वशिष्ठः “राशिकूटादिकं सर्वं दम्पत्योरिव चिन्तयेदिति” ।४ । अथ वामगतार्कज्ञानं तिथिभेदेन पूर्वाद्यभिमुखगृहप्रवेशं चेन्द्रवंशाच्छन्दसाह वाम इति । अष्टमपञ्चमद्वितीयैकादशस्थानेभ्यः पञ्चसु स्थानेषु स्थिते रवौ सति प्राग्वदनादिमन्दिरे प्रवेष्टव्ये गृहप्रवेशकर्त्तुर्वामो रविर्ज्ञेयः तद्यथा । यस्मिन् लग्ने प्रवेशः कर्त्तुमिष्यते तस्मादष्टमं यत् स्थानं तस्मात् पञ्चसु स्थानेषु अर्के स्थिते पूर्वाभिमुखगृहप्रवेशकर्त्तुर्वामः सूर्यः स्यात् । तथा लग्नाद्यत् पञ्चमस्थानं ततः पञ्चसु स्थानेषु अर्के स्थिते दक्षिणाभिमुखगृहप्रवेशकर्त्तुर्वामः सूर्यः । एवं लग्नाद्यद्द्वितीयं स्थानं ततः पञ्चसु स्थानेषु सूर्ये पश्चिमाभिमुखगृहप्रवेशकर्त्तुर्वामः सूर्यः । तथैव लग्नाद्यदेकादशस्थानं ततः पञ्चसु स्थानेषु सूर्ये स्थिते उत्तराभिमुखगृहप्रवेशकर्त्तुर्वामः सूर्य इत्यर्थः । उक्तञ्च “रन्ध्रात्सुताङ्गनादायात्पञ्चस्वर्के स्थिते क्रमात् । पूर्वाशादिमुखं गेहं विशेद्वामो भवेद्यतः” इति । विश्वकर्माऽपि “लग्नात्प्रागादितोदिक्षु द्वौ द्वौ राशी नियोजयेत् । एकमेकं न्यसेत्कोणे सूर्यं वामं विचिन्तयेत् । प्राच्यां लग्नात् द्वौ राशी स्थाप्यौ कोणे चैकः । तथा

पूर्णातिथाविति। प्राग्वदने पूर्वाभिमुखे गृहे पूर्णातिथौ पञ्चम्यां दशम्यां पूर्णिमायां वा प्रवेशः शुभः। नन्दादिके तिथिगणे याम्यजलोत्तरानने गृहप्रवेशः शुभः। यथा दक्षिणाभिमुखे गृहे नन्दायां प्रतिपदि षष्ठ्यामेकादश्यां वा प्रवेशः शुभः। जलं पश्चिमदिक् तद्दिगभिमुखे भद्रायां द्वितीयायां सप्तम्यां द्वादश्यां वा प्रवेशःशुभः। उत्तराभिमुखे गृहे जयायां तृतीयायामष्टम्यां त्रयोदश्यां वा प्रवेशःशुभ इत्यर्थः। यदाह गुरुः "नन्दायां दक्षिणद्वारं भद्रायां पश्चिमामुखम्। जयायामुत्तरद्वारं पूर्णायां पूर्वतोविशेदिति" मूले नन्दादिके इति पदोपादानाद्रिक्तायहणं यद्यप्यायाति तथापि विदिक्षु द्वारनिषेधाद्दिशां चतुष्टयेन चतुर्णान्द्वाराणां सम्भवात्तस्याः स्वरूपतो निषेधाच्च रिक्ताग्रहणासम्भवोध्येयः। सोऽपि सम्मतिवाक्ये स्पष्ट एव। ५। तत्र गृहप्रवेशे वास्तुकलसचक्रं शार्दूलविक्रीडितेनाह। वक्त्रे इति। कलसस्याऽष्टधा विभागाः परिकल्प्याः मुखं कण्ठो गर्भो मूलं चेति चत्वारो विभागाः पूर्वादिदिक्परत्वेन चत्वारो विभागा एवमष्टौ स्युः। तथाविभागपरत्वेन सूर्यभान्नक्षत्रन्यासे फलमुच्यते। वक्त्रे इति। गृहप्रवेशसमये इति सर्वत्रापि सम्बध्यते कुम्भे कलसाकृतौ वास्तुनि रविभात्सूर्याक्रान्तनक्षत्रादिति ल्यप्लोपे पञ्चमी। रव्यृक्षमारभ्य नक्षत्रन्यास इत्यर्थः। तत्र कलसस्य वक्त्रे मुखे भूरेकं सूर्याक्रान्तनक्षत्रमेव स्थाप्यन्तत्फलं गृहस्याऽग्निदाहः। ततः सूर्यभात् कृतास्तदग्रिमाणि चत्वारि भानि प्राच्यां स्थाप्यानि, फलमुद्वसनं जनवासशून्यं गृहं स्यात्। ततः कृता यमगतास्तदग्रिमाणि चत्वारि भानि दक्षिणस्यां यमदिशि स्थाप्यानि, फलं गृहपतेर्लाभो द्रव्यप्राप्तिः। ततः कृताः तदग्रिमाणि चत्वारि भानि पश्चिमे पश्चिमायां स्थाप्यानि, फलं गृहपतेः श्रीप्राप्तिः। ततो वेदाः तदग्रिमाणि चत्वारि भानि उत्तरे उत्तरस्यां स्थाप्यानि। फलं कलिर्लोकैः सह गृहसम्बन्धी निरर्थकः कलहः स्यात्। ततोयुगमितास्तदग्रिमाणि चत्वारि भानि गर्भे कलसमध्ये स्थाप्यानि, फलं विनाशः। कस्येत्याकाङ्क्षायां गर्भोपादानाद्भाविनां गर्भाणां विनाश इत्यर्थः। ततोरामास्तदग्रिमाणि त्रीणि भानि गुदे बुध्ने स्थाप्यानि। फलं स्थैर्यं गृहपतेर्बहुकालं तत्र गृहे निवासः। ततोऽनलास्तदग्रिमाणि त्रीणि भानि कण्ठे स्थाप्यानि, फलं स्थिरत्वं सर्वदा गृहपतेर्भवेत्। एवमभिजिद्रहितानि स्युः। तदुक्तं विश्वकर्मणा "वटाकारं लिखेच्चक्रं रविधिष्ण्यक्रमेण च। मुखैकं दिक्षु चत्वारि त्रीणीणि गुदकण्ठयोः। एवं चक्रं समालेख्यं प्रवेशार्थं सदा बुधैः" अत्र चत्वारि इति वीप्सा द्रष्टव्या। दिक्षु इत्यनेन गर्भोऽप्युपलक्ष्यते। तथा तत्फलनिर्देशस्तत्रैव "अग्नेर्नाशो मुखे प्रोक्त, उद्वासः पूर्वतो भवेत्। दक्षिणे चार्थलाभाय, पश्चिमे श्रीप्रदो भवेत्। उत्तरे कलहश्चैव, गर्भे गर्भविनाशनम्। स्थिरता च गुदे, कण्ठे कलसस्य प्रकीर्त्तितेति" ज्योतिःप्रकाशेऽपि "भवेदपञ्चकं त्रिस्त्रिः। १।४।४।४।४।४।३।३ प्रवेशे कलसेऽर्कभात्। क्षतिर्गतधनं श्रीः स्याद्वैरं शुक् स्थिरता सुखमिति" वेदपञ्चकं वेदाश्चत्वारस्तेषां पञ्चवारं चत्वारि भानिलेख्यानीत्यर्थः। क्षतिरित्यादीन्यष्टौ यथासङ्ख्यं फलानि। अत्र कलसचक्रे शुभफलदस्थाने याते सत्येव विहितनक्षत्राणां परिग्रहो युक्तस्तत्रापि यद्दिङ्मुखगृहप्रवेशो विधित्सितः तद्दिङ्मुखविहितनक्षत्रपरिग्रहः। यथा पूर्वदिङ्मुखगृहप्रवेशे विधित्सिते रोहिणीमृगे ग्राह्ये। दक्षिणाभिमुखगृहप्रवेशे। उत्तरफाल्गुनीचित्रे। एवं पश्चिमाभिमुखे अनुराधोत्तराषाढे। एवम् उत्तराभिमुखे उत्तरभाद्रपदारेवत्यौ ग्राह्ये इति निष्कृष्टोऽर्थः। अतएवोक्तं वशिष्ठेन "यद्दिग्द्वारं मन्दिरं तद्दिगृक्षैरुक्तैः स्यात्प्रवेशो न सर्वैरिति"। तद्दिगृक्षैरिति उक्तैरिति चानयोः सामानाधिकरण्येनान्वयः। भिन्नवाक्यत्वे तु विवक्षिते चकारः कर्त्तव्यः। "सम्भवत्येकवाक्यत्वे वाक्यभेदो हि दूषणमिति" न्यायाच्च। अतएव "अर्कादितेयानिलदस्रविष्णुऋक्षे प्रविष्टं नव मन्दिरं यत्। अब्दत्रयात्तत् परहस्तयातं शेषेषु धिष्ण्येषु च मृत्युदं स्यादिति" "निषेधोऽप्युपपन्नो भवति" पी॰धा॰

**गृहकच्छप** पु॰गृहे कच्छप इव। पेषणशिलायाम् शब्दर॰।

**गृहकन्या** स्त्री गृहे कन्येव। घृतकुमार्याम् राजनि॰

**गृहकपोत** पुंस्त्री गृहे स्थितः कपोतः। कपोतभेदे स्त्रियां जातित्वात् ङीष्। "शिख्यायितं गृहकपोतशतैर्यथा स्यात्" सा॰ द॰ "आवर्त्तिभिर्गृहकपोतशिरोधराभैः" माघः। कपोतशब्दे दृश्यम्।

**गृहकर्त्तृ** त्रि॰गृहं करोति कृ—तृच् ६त॰। १गृहकारके (घरामि) २धूसरेऽतिसूक्ष्मे चटकभेदे पुंस्त्री राजनि॰। स्त्रियामुभयत्र ङीप्।

गृहकारक पु० गृहं करोति कृ–ण्वुल् ६तत्। गृहनिर्माणकारके वर्णसङ्करभेदे। "प्रतिमाघटकादेव कन्यायां नापितस्य च। सूत्रकारस्य सम्भूतिः सोपान गृहकारकः" पराशरः २गृहकर्त्तरि (घरामि) त्रि०। "मृद्दण्डचक्रसंयोगात् कुम्भकारो यथा घटम्। करोति तृणमृत्काष्ठैर्गृहं वा गृहकारकः" याज्ञ०।

गृहकारिन् त्रि० गृहं करोति कृ–णिनि। (घरामि) १गृहकारके स्त्रियां ङीप् (कुमिरका) २कीटभेदे। सा च जातिः उपस्करहरणपापजाता। यथाह "वको भवति हृत्वाग्निं गृहकारी ह्युपस्करम्" मनुः।

गृहकुक्कुट पुंस्त्री गृहे बद्धः कुक्कुटः। कुक्कुटभेदे "श्वेताय दद्याद्गृहकुक्कुटाय चतुर्थभक्ताय बुभुक्षिताय" सुश्रु०।

गृहकूलक पु० गृहस्य कूले समीपे भवः कन्। चिञ्चिडाख्ये शाके शब्दार्थचि०।

गृहगोधा स्त्री गृहस्य गोधेव। (टिक्टिकी) ज्येष्ठ्याम् राजनि०। स्वार्थे क। तत्रार्थे अमरः "श्वेता गृहगोधिकाञ्जनरे" इ०स०५४अ०। पुरूपाङ्ग्रमाणतोयत्रापिका श्वेता गृहगोधिकेत्यर्थः। पिङ्गलवर्णायास्तस्या वामे स्थिताया गमने शुभत्वं यथाह इ०स० ८६अ० "शिवा श्यामा रला छुच्छुः पिङ्गला गृहगोधिका। सूकरी परपुष्टा च पुन्नामानश्च वामतः "गृहगोधिकेति संज्ञा विज्ञेया कुड्यमत्स्यस्य। दिङ्मण्डलेऽभ्यन्तरबाह्यभागे फलानि विद्यात् गृहगोधिकायाः" ८८अ० [(टिकटिकी) हेम०।

गृहगोलिका स्त्री गृहे गोधिका पृषो०। ज्येष्ठ्याम्

गृहचुल्ली स्त्री "पूर्वापरे तु शाले गृहचुल्ली दक्षिणोत्तरे काचम्" इ०स० ५३ उक्ते द्विशाले गृहभेदे

गृहज पु०गृहे दास्यां जायते जन–ड। दासभेदे "ध्वजाहृतो भक्तदासो गृहजः क्रीतदत्त्रिमौ। पैतृको दण्डदासश्च सप्तैते दासयोनयः" मनुः। "दासास्तु गृहजादयः" नारदः १७२५ पृ० दृश्यम्। [क्राञ्जिके त्रिका०।

गृहणी स्त्री गृहे नीयते नी–कर्मणि क्विप् संज्ञायां णत्वम्।

गृहतटी स्त्री गृहस्य तटीव। वीथिकायाम् (पिँडा दाओया) इति ख्याते पदार्थे हारा०।

गृहदेवता स्त्री गृहे वास्तौ स्थिता देवता। वास्तुपुरुषदेहस्थेषु अग्न्यादिषु ब्रह्मान्तेषु ४५ संख्यकदेवताभेदेषु गृहशब्दे दृश्यम् "गृहाय गृहदेवताभ्यो वास्तुदेवताभ्यः" आश्व०गृ०१।२।४ सू०

गृहदेवी स्त्री गृहे तत्कुड्ये विलिख्य पूज्या देवी। जरानाम राक्षस्याम् तत्कथा भा० स० १७ अ० "जरा नामास्मि भद्रं ते राक्षसी कामरूपिणी। तव वेश्मनि राजेन्द्र! पूजिता न्यवसं सुखम्। गृहे गृहे मनुष्याणां नित्यं तिष्ठामि राक्षसी। गृहदेवीति नाम्ना वै पुरा सृष्टा स्वयम्भुवा। दानवानां विनाशाय स्थापिता दिव्यरूपिणी। यो मां भक्त्या लिखेत् कुड्ये सपुत्रां यौवनान्विताम्। गृहे तस्य भवेद् वृद्धिरन्यथा क्षानिमाप्नुयात्। त्वद्गृहे तिष्ठमाना तु पूजिताऽहं सदा विभो!। लिखिता चैव कुड्येऽहं पुत्रैर्बहुभिरावृता। गन्धपुष्पैस्तथा धूपैर्भक्ष्यैर्भोज्यैः सुपूजिता। साऽहं प्रत्युपकारार्थं चिन्तयाम्यनिशन्तव। तवेमे पुत्रशकले दृष्टवत्यस्मि धार्मिक!। संश्लेषिते मया दैवात् कुमारः समपद्यत। तव भाग्यान्महाराज! हेतुमात्रमहं त्विह। मेरुं वा खादितुं शक्ता किं पुनस्तव बालकम्। गृहसंपूजनात्तुष्ट्या मया प्रत्यर्पितस्तव" [रत्नमा०।

गृहद्रुम पु०गृहमिव द्रुमः। मेषशृङ्गीवृक्षे (गाडरशिङा)

गृहधूप पु० गृहस्य धूप इव। धूपभेदे "मयूरपिच्छं निम्बस्य पत्राणि बृहतीफलम्। मरिचं हिङ्गु मांसी च बीजं कार्पाससम्भवम्। छागरोमाहिनिर्मोकौ विष्ठा वैडालिकी तथा। गजदन्तश्च तच्चूर्णं किञ्चिद्घृतविमिश्रितम्। गृहेषु धूपनं दत्तं सर्वान् बालग्रहान् जयेत्। पिशाचान् राक्षसान् हत्वा सर्वज्वरहरं भवेत्" शब्दार्थचि०। गेहधूपोऽप्यत्र।

गृहधूम पु०गृहगतो धूमः। (झुल) ख्याते पदार्थे। "मैन्धवं करवीरञ्च गृहधूमं विषं तथा" "ततो हरिद्रा गृहधूमरोध्रपतङ्गचूर्णैः समनःशिलालैः" सुश्रु०।

गृहनमन न० गृहं नमयति नम–णिच्–ल्यु पूर्वपदात् संज्ञायां णत्वप्राप्तौ क्षुभ्ना० न णत्वम्। वायौ।

गृहनाशन पुंस्त्री गृहं नाशयति प्रवेशेन नश–णिच्–ल्यु। वनकपोते (घुघु) राजनि० कपोतशब्दे तस्य गृहनाशकता दृश्या स्त्रियां जातित्वात् ङीष्। [ङीष्।

गृहनीड पुंस्त्री गृहे नीडमस्य। चटके हारा० स्त्रियां

गृहप पु० गृहं पाति पा–क। गृहपतौ

गृहपति पु० ६तत्। गृहस्वामिनि, १गृहस्थे, द्वितीयाश्रमिणि २मन्त्रिणि, ३धर्मे च मेदि० ४सत्रयागकर्त्तरि यजमाने "बह्वृषु गृहपतये" कात्या० श्रौ०८।२।३ "गृहपतिर्यजमानमयुक्तत्वात्" १२।१।८। "याजमानं यत् कर्म तत् गृहपतिः करोति कर्मान्तरे तस्यायुक्तत्वात्

इतरेषां चाध्वर्य्यवादिषु योगात्" कर्कः "ऋत्विक्षथ सदस्येषु स वै गृहपतिस्तदा। उपविष्टेषूपविष्टः शौनकोऽथाब्रवीदिदम्" भा० आ० ४अ०। "वनौकसां गृहपतिनामनुत्तमम्" भा० शा० २४२ अ०। आर्षत्वात् न दीर्घः। ५यजमानमात्रे "गृहपतिना संयुक्ते ञ्यः" पा० "गृहपतिर्यजमानस्तेन संयुक्तः गार्हपत्योऽग्निः" सि० कौ०। गृहपतेरपत्यादि अश्वप० अण्। गार्हपत गृहपतिसम्बन्धिनि त्रि० स्त्रियां ङीप्। ६अग्निभेदे "अग्निर्गृहपतिर्नाम नित्यं यज्ञेषु पूज्यते" भा० २२१ अ०। गृहस्य पतिः। ७गृहस्वामिमात्रे स्त्रियां सपूर्वत्वात् वा नान्तादेशे गृहपत्नी गृहपतिरिति रूपद्वयमितिभेदः। "गृहान् गच्छ गृहपत्नी" ऋ० १०।८५। गृहपत्नी स्वगृहस्वामिनी" भा०

**गृहपाल** त्रि० गृहं पालयति पालि—अण्। गृहरक्षके "तमस्थं शूद्रमासीनं गृहपालमथाब्रवीत्" भा०व०२२७ अ०। २कुक्कुरे शब्दार्थचि०

**गृहपोतक** गृहं पोत इव यस्य कप्। वास्तुस्थाने शब्दरत्ना०

**गृहप्रवेश** पु० ७त०। गृहे विधानेन प्रवेशे गृहशब्दे तद्दिष्टतिर्दृश्या [शब्दार्थचि०।

**गृहबभ्रु** पुंस्त्री गृहस्थितो बभ्रुः। गृहस्थिते नकुले।

**गृहबलि** पु० गृहे देयो बलिः। वैश्वदेवकर्मणि "ततो गृहबलिं कुर्यात्" मनुः।

**गृहबलिप्रिय** ६त०। वकपक्षिणि शब्दार्थचि०।

**गृहबलिभुज्** पुंस्त्री गृहे दत्तं बलिं भुङ्क्ते भुज—क्विप्। १काके २चटके च हेम०।

**गृहभर्त्तृ** त्रि०६त०। गृहस्वामिनि "गृहभर्त्तुस्तनुस्थेऽवदे पीडामङ्गे प्रयच्छन्ति" वृ०स० ५३अ०। स्त्रियां ङीप्।

**गृहभूमि** स्त्री गृहयोग्या भूमिः। वास्तुभूमौ हलायु०

**गृहमणि** पु० गृहे मणिरिव। प्रदीपे हारा०।

**गृहमाचिका** स्त्री मच—ण्वुल् ६त० (चामचिका) अजिनपत्रयाम् त्रिका०। [जातित्वात् ङीष्।

**गृहमृग** पुंस्त्री गृहे मृग इव। कुक्कुरे हेम० स्त्रियां

**गृहमेध** पु० गृहेण दारैः मेधते संगच्छते मेध—अच् ३त०। कृतदारपरिगृहे १गृहस्थे। मेध—हिंसायां भावे घञ् ७त०। २पञ्चसूनात्मकहिंसायाम मेधो हिंसाहेतुको यज्ञः पञ्चसूनात्मको यस्य। ३पञ्चयज्ञकर्त्तरि गृहस्थे। गृहे कर्त्तव्य यज्ञो यस्य। ४मरुद्भेदे "गृहमेधास आगत मरुतो माप भूतन" ऋ०७।५६। १०

**गृहमेधिन्** पु० गृहेण दारैर्मेधते संगच्छते मेध—सङ्गमे णिनि। १गृहस्थे "पञ्च कॢप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम्। अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्। होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्। पञ्चैतान् यो महायज्ञान् न हापयति शक्तितः" मनुः। "प्रजायै गृहमेधिनाम्" रघुः। गृहे कर्त्तव्यो मेधो यज्ञोऽस्यस्य इनि। २मरुद्भेदे "मरुद्भ्यो गृहमेधिभ्यः सायं चरुः पयसि" कात्या० श्रौ० ५।६।६। गृहमेधः पञ्चसूनानिमित्तहिंसा अस्त्यस्य इनि। ३गृहस्थे "गृहमेधी व्रीहियवाभ्यां शरद्वसन्तयोर्यजेत। श्यामाकैर्वन्यैर्वर्षासु आपत्कल्पे अन्येन, पुरातनैर्वेति" आ० श्रौ०सूत्रे। "मेधृ मेधाहिंसः। यो मेधृ सङ्गमे चेत्यत्र चकारेण पूर्वगणस्थमेधाहिंसयोरनुवृत्तिः तेन मेधृ हिंसार्थः तथा च गृहनिमित्तेन जातायाः 'पञ्चसूना गृहस्थस्य चुल्ली पेषण्युपस्करः। कण्डनी चोदकुम्भश्च बध्यते यास्तु वाहयन्" इति मनूक्तायाः पञ्चसूनारूपहिंसायाः कारी गृहमेधी गृहस्थ"इत्यर्थः रघु०। ४तत्पत्न्यां स्त्री ङीप्। पतिकृतयज्ञसम्बन्धात्तस्यास्तथात्वम्।

**गृहमेधीय** त्रि० गृहमेधस्येदं छ। १गृहस्थकर्त्तव्ये कर्मभेदे "सान्तपनीयवेद्यां गृहमेधीयं विदधत्"कात्या० श्रौ० ५।६।६ व्या० हरिस्वामी। गृहमेधी मरुद्भेदे देवताऽस्य छ। २गृहमेधिनामकमरुद्देवताके हविरादौ त्रि०। "सहस्विनं दस्य भागमेतं गृहमेधीयं मरुतो जुषध्वम्" ऋ० ७।५७।१४

**गृहमेध्य** त्रि० गृहमेधो देवताऽस्य वा यत्। गृहमेधदेवताके हविरादौ। अर्श०अच् तत्कृत्ययुक्तेऽपि त्रि० "गृहमेध्या भवेन्नित्यं भूषणानि च पूजयेत्" शु०त० कृत्यकल्पः। "गृहमेध्या गृहकृत्यपरा" रघु०।

**गृहयन्त्र** क्ली० गृहे यन्त्रं वस्त्रधारणदारुविशेषः। गृहस्थितवस्त्राद्याधारे (आलना) प्रसिद्धे काष्ठनिर्मिते पदार्थे "गृहयन्त्रपताकाश्रीरपौरादरनिर्मिता" कुमा०

**गृहयाय्य** त्रि० चु० गृह—"स्पृहिगृहि भ्य आय्यः" उ०सू०आय्य। गृहस्वामिनि इति सिद्धान्तकौमुदी। शब्दकल्पद्रुमे गृहयाय्यशब्दकल्पनमतीव प्रामादिकम् आय्यप्रत्ययस्य णमध्यत्वाभावात्

**गृहयालु** त्रि० चु०गृह—आलु। ग्रहीतरि।

**गृहवाटिका** स्त्री गृहसमीपे वाटिकेव आरामः] गृहसमीपस्थोपवने हारा०।

**गृहवित्त** त्रि॰ गृहं वित्तं यस्य। गृहस्वामिनि द्वारा॰ स्त्रियां टाप्।

**गृहसंवेशक** पु॰ गृहं गृहनिर्माणं संविशति उपजीवति सम्+विश–ण्वुल्। वास्तुविद्योपजीविनि। "गृहसंवेशको दूतो वृक्षारोपक एव च" मनुः।

**गृहस्थ** पु॰ गृहे दारेषु तिष्ठति अभिरमते स्था–क। गृहिणि गृहस्थाश्रमिणि द्वितीयाश्रमस्थे "गृहस्थस्तु यदा पश्येत् वलीपलितमात्मनः" मनुः।

**गृहस्थधर्म** पु॰ ६त॰। गृहस्थकर्त्तव्ये धर्मभेदे स च धर्मः मन्वादिभिर्दर्शितः। तत्रादौ मनुनोक्तो यथा "गुरुणानुमतः स्नात्वा समावृत्तो यथाविधि। उद्वहेत द्विजो भार्य्यां सवर्णां लक्षणान्विताम्। असपिण्डा च या मातुरसगोत्रा च या पितुः। सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने। महान्त्यपि समृद्धानि गोऽजाविधनधान्यतः। स्त्रीसम्बन्धे दशैतानि कुलानि परिवर्ज्जयेत्। हीनक्रियं निष्पुरुषं निश्छन्दो रोमशार्शसम्। क्षय्यामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च। नोद्वहेत् कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम्। नालोमिकां नातिलोमां न वाचाटां न पिङ्गलाम्। नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्वतनामिकाम्। न पक्ष्यहिप्रेष्यनाम्नीं न च भीषणनामिकाम्। अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम्। तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत् स्त्रियम्। यस्यास्तु न भवेद् भ्राता न विज्ञायेत वा पिता। नोपयच्छेत तां प्राज्ञः पुत्त्रिकाधर्मशङ्कया। सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्म्मणि। कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः। शूद्रैव भार्य्या शूद्रस्य सा च स्वा च विशः स्मृते। ते च स्वा चैव राज्ञश्च ताश्च स्वा चाग्रजन्मनः। न ब्राह्मणक्षत्रिययोरापद्यपि हि तिष्ठतोः। कस्मिंश्चिदपि वृत्तान्ते शूद्रा भार्य्योपदिश्यते। हीनजातिस्त्रियं मोहादुद्वहन्तो द्विजातयः। कुलान्येव नयन्त्याशु ससन्तानानि शूद्रताम्। शूद्रावेदी पतत्यत्रेरुतथ्यतनयस्य च। शौनकस्य सुतोत्पत्त्या तदपत्यतया भृगोः। शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम्। जनयित्वा सुतं तस्यां ब्राह्मण्यादेव हीयते। दैवपित्र्यातिथेयानि तत्प्रधानानि यस्य तु। नाश्नन्ति पितृदेवास्तन्न च स्वर्गं स गच्छति। वृषलीफेनपीतस्य निःश्वासोपहतस्य च। तस्याञ्चैव प्रसूतस्य निष्कृतिर्न विधीयते। चतुर्णामपि वर्णानां प्रेत्य चेह हिताहितान्। अष्टाविमान् समासेन स्त्रीविवाहान्निबोधत। ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः। गान्धर्व्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः। यो यस्य धर्म्म्यो वर्णस्य गुणदोषौ तु यस्य यौ। तद्वः सर्वं प्रवक्ष्यामि प्रसवे च गुणागुणान्। षडानुपूर्व्व्या विप्रस्य क्षत्त्रस्य चतुरोऽवरान्। विट्शूद्रयोस्तु तानेव विद्याद्धर्म्म्यान्न राक्षसान्। चतुरो ब्राह्मणस्याद्यान् प्रशस्तान् कवयो विदुः। राक्षसं क्षत्त्रियस्यैकमासुरं वैश्यशूद्रयोः। पञ्चानान्तु त्रयो धर्म्म्या द्वावधर्म्म्यौ स्मृताविह। पैशाचश्चासुरश्चैव न कर्त्तव्यौ कदाचन। पृथक् पृथग्वा मिश्रौ वा विवाहौ पूर्व्वचोदितौ। गान्धर्व्वो राक्षसश्चैव धर्म्म्यौ क्षत्त्रस्य तौ स्मृतौ। आच्छाद्य चार्च्चयित्वा च श्रुतशीलवते स्वयम्। आहूय दानं कन्याया ब्राह्मो १धर्मः प्रकीर्त्तितः। यज्ञे तु वितते सम्यगृत्विजे कर्म्म कुर्व्वते। अलङ्कृत्य सुतादानं दैवं २धर्म्मं प्रचक्षते। एकं गोमिथुनं द्वे वा वरादादाय धर्म्मतः। कन्याप्रदानं विधिवदार्षो ३धर्म्मः स उच्यते। सहोभौ चरतां धर्म्ममिति वाचानुभाष्य च। कन्याप्रदानमभ्यर्च्य प्राजापत्यो ४ विधिः स्मृतः। ज्ञातिभ्यो द्रविणं दत्त्वा कन्यायै चैव शक्तितः। कन्याप्रदानं स्वाच्छन्द्यादासुरो ५धर्म उच्यते। इच्छयान्योऽन्यसंयोगः कन्यायाश्च वरस्य च। गान्धर्वः ६ स तु विज्ञेयो मैथुन्यः कामसम्भवः। हत्वा छित्त्वा च भित्त्वा च क्रोशन्तीं रुदतीं गृहात्। प्रसह्य कन्याहरणं राक्षसो७ विधिरुच्यते। सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति। स पापिष्ठो विवाहानां पैशाच८श्चाष्टमोऽधमः। अद्भिरेव द्विजाग्र्याणां कन्यादानं विशिष्यते। इतरेषान्तु वर्णानामितरेतरकाम्यया। यो यस्यैषां विवाहानां मनुना कीर्त्तितो गुणः। सर्वं शृणुत तं विप्राः सम्यक् कीर्त्तयतो मम। दश पूर्वान् परान् वंश्यानात्मानञ्चैकविंशकम्। ब्राह्मीपुत्रः सुकृतकृन्मोचयत्येनसः पितॄन्। दैवोढाजः सुतस्त्रींस्त्रीन् षट् षट् कायोढजः सुतः। ब्राह्म्यादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः। ब्रह्मवर्चस्विनः पुत्रा जायन्ते शिष्टसम्मताः। रूपसत्त्वगुणोपेता धनवन्तो यशस्विनः। पर्य्याप्तभोगा धर्मिष्ठा जीवन्ति च शतं समाः। इतरेषु तु शिष्टेषु नृशंसानृतवादिनः। जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषः सुताः। अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा। निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान् विवर्ज्जयेत्।

पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते । असवर्णास्वयं ज्ञेयो विधिरुद्वाहकर्म्मणि । शरः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्यया । वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने । ऋतुकालाभिगामी स्यात् स्वदारनिरतः सदा । पर्व्ववर्ज्जं व्रजेच्चैनां तद्व्रतो रतिकाम्यया । ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोड़श स्मृताः । चतुर्भिरितरैः सार्द्धमहोभिः सद्विगर्हितैः । तासामाद्याश्चतस्रस्तु निन्दितैकादशी च या । त्रयोदशी च शेषास्तु प्रशस्ता दश रात्रयः । युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु । तस्माद्युग्मासु पुत्त्रार्थी संविशेदार्त्तवे स्त्रियम् । पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः । समेऽपुमान् पुंस्त्रियौ वा क्षीणेऽल्पे च विपर्य्ययः । निन्द्यास्वष्टासु चान्यासु स्त्रियो रात्रिषु वर्जयन् । ब्रह्मचार्य्येव भवति यत्र तत्राश्रमे वसन् । न कन्यायाः पिता विद्वान् गृह्णीयाच्छुल्कमण्वपि । गृह्णन् शुल्कं हि लोभेन स्यान्नरोऽपत्यविक्रयी । स्त्रीधनानि तु ये मोहादुपजीवन्ति बान्धवाः । नारीयानानि वस्त्रं वा ते पापा यान्त्यधोगतिम् । आर्षे गोमिथुनं शुल्कं केचिदाहुर्म्मृषैव तत् । अल्पोऽप्येवं महान् वापि विक्रयस्तावदेव सः । यासां नाददते शुल्कं ज्ञातयो न स विक्रयः । अर्हणं तत् कुमारीणामानृशंस्यञ्च केवलम् । पितृभिर्भ्रातृभिश्चैताः पतिभिर्द्देवरैस्तथा । पूज्याः भूषयितव्याश्च बहुकल्याणमीप्सुभिः । यत्र नार्य्यस्तु पूज्यन्ते रमन्ते तत्र देवताः । यत्रैतास्तु न पूज्यन्ते सर्व्वास्तत्राफलाः क्रियाः । शोचन्ति जामयो यत्र विनश्यत्याशु तत् कुलम् । न शोचन्ति तु यत्रैता वर्द्धते तद्धि सर्व्वदा । जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः । तानि कृत्याहतानीव विनश्यन्ति समन्ततः । तस्मादेताः सदा पूज्या भूषणाच्छादनाशनैः । भूतिकामैर्नरैर्नित्यं सत्कारेषूत्सवेषु च । सन्तुष्टो भार्य्यया भर्त्ता भर्त्रा भार्य्या तथैव च । यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवम् । यदि हि स्त्री न रोचेत पुमांसं न प्रमोदयेत् । अप्रमोदात् पुनः पुंसः प्रजनं न प्रवर्त्तते । स्त्रियान्तु रोचमानायां सर्व्वं तद्रोचते कुलम् । तस्यान्त्वरोचमानायां सर्व्वमेव न रोचते । कुविवाहैः क्रियालोपैर्व्वेदानध्ययनेन च । कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च । शिल्पेन व्यवहारेण शूद्रापत्यैश्च केवलैः । गोभिरश्वैश्च यानैश्च कृष्या राजोपसेवया । अयाज्ययाजनैश्चैव नास्तिक्येन च कर्म्मणा । कुलान्याशु विनश्यन्ति यानि हीनानि मन्त्रतः । मन्त्रतस्तु समृद्धानि कुलान्यल्पधनान्यपि । कुलसङ्ख्याञ्च गच्छन्ति कर्षन्ति च महद्यशः । वैवाहिकेऽग्नौ कुर्व्वीत गृह्यं कर्म्म यथाविधि । पञ्चयज्ञविधानञ्च पक्तिञ्चान्वाहिकीं गृही । पञ्च सूना गृहस्थस्य चुल्ली पेषण्युपस्करः । कण्डनी चोदकुम्भश्च बध्यते यास्तु वाहयन् । तासां क्रमेण सर्व्वासां निष्कृत्यर्थं महर्षिभिः । पञ्च क्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम् । अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् । होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् । पञ्चैतान् यो महायज्ञान् न हापयति शक्तितः । स गृहेऽपि वसन्नित्यं सूनादोषैर्न लिप्यते । देवतातिथिभृत्यानां पितॄणामात्मनश्च यः । न निर्व्वपति पञ्चानामुच्छ्वसन्न स जीवति । अहुतञ्च हुतञ्चैव तथा प्रहुतमेव च । ब्राह्म्यं हुतं प्राशितञ्च पञ्च यज्ञान् प्रचक्षते । जपोऽहुतो हुतो होमः प्रहुतो भौतिको बलिः । ब्राह्म्यं हुतं द्विजाग्र्यार्च्चा प्राशितं पितृतर्पणम् । स्वाध्याये नित्ययुक्तः स्याद्दैवे चैवेह कर्म्मणि । दैवकर्म्मणि युक्तो हि बिभर्त्तीदं चराचरम् । अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः । यथा वायुं समाश्रित्य वर्त्तन्ते सर्व्वजन्तवः । तथा गृहस्थमाश्रित्य वर्त्तन्ते सर्व्व आश्रमाः । यस्मात्त्रयोऽप्याश्रमिणो ज्ञानेनान्नेन चान्वहम् । गृहस्थेनैव धार्य्यन्ते तस्माज्ज्येष्ठाश्रमो गृही । स सन्धार्य्यः प्रयत्नेन स्वर्गमक्षयमिच्छता । सुखञ्चेहेच्छता नित्यं योऽधार्य्यो दुर्ब्बलेन्द्रियैः । ऋषयः पितरो देवा भूतान्यतिथयस्तथा । आशासते कुटुम्बिभ्यस्तेभ्यः कार्य्यं विजानता । स्वाध्यायेनार्च्चयेतर्षीन् होमैर्देवान् यथाविधि । पितॄन् श्राद्धैश्च नॄनन्नैर्भूतानि बलिकर्म्मणा । कुर्य्यादहरहः श्राद्धमन्नाद्येनोदकेन वा । पयोमूलफलैर्वापि पितृभ्यः प्रीतिमावहन् । एकमप्याशयेद्विप्रं पित्रर्थे पाञ्चयज्ञिके । न चैवात्राशयेत् किञ्चिद्वैश्वदेवं प्रति द्विजम् । वैश्वदेवस्य सिद्धस्य गृह्येऽग्नौ विधिपूर्व्वकम् । आभ्यः कुर्य्याद्देवताभ्यो ब्राह्मणो होममन्वहम् । अग्नेः सोमस्य चैवादौ तयोश्चैव समस्तयोः । विश्वेभ्यश्चैव देवेभ्यो धन्वन्तरय एव च । कुह्वै चैवानुमत्यै च प्रजापतय एव च । सह द्यावापृथिव्योश्च तथा स्विष्टकृतेऽन्ततः । एवं सम्यक् हविर्हुत्वा सर्व्वदिक्षु प्रदक्षिणम् । इन्द्रान्तकाप्पतीन्दुभ्यः सानुगेभ्यो

बलिं हरेत् । मरुद्भ्य इति तु द्वारि क्षिपेदप्स्वद्भ्य इत्यपि । वनस्पतिभ्य इत्येवं मुषलोलूखले हरेत् । उच्छीर्षके श्रियै कुर्य्याद्भद्रकाल्यै च पादतः । ब्रह्मवास्तोष्पतिभ्यान्तु वास्तुमध्ये बलिं हरेत् । विश्वेभ्यश्चैव देवेभ्यो बलिमाकाश उत्क्षिपेत् । दिवाचरेभ्यो भूतेभ्यो नक्तञ्चारिभ्य एव च । पृष्ठवास्तुनि कुर्वीत बलिं सर्व्वात्मभूतये । पितृभ्यो बलिशेषन्तु सर्व्वं दक्षिणतो हरेत् । शुनाञ्च पतितानाञ्च श्वपचां पापरोगिणाम् । वायसानां कृमीणाञ्च शनकैर्निर्व्वपेद्भुवि । एवं यः सर्व्वभूतानि ब्राह्मणो नित्यमर्च्चति । स गच्छति परं स्थानं तेजोमूर्त्तिं पथर्ज्जुना । कृत्वैतद्बलिकर्म्मैवमतिथिं पूर्व्वमाशयेत् । भिक्षाञ्च भिक्षवे दद्याद्विधिवद्ब्रह्मचारिणे । यत् पुण्यफलमाप्नोति गां दत्त्वा विधिवद्गुरोः । तत् पुण्यफलमाप्नोति भिक्षां दत्त्वा द्विजो गृही । भिक्षामप्युदपात्रं वा सत्कृत्य विधिपूर्व्वकम् । वेदतत्त्वार्थविदुषे ब्राह्मणायोपपादयेत् । नश्यन्ति हव्यकव्यानि नराणामविजानताम् । भस्मीभूतेषु विप्रेषु मोहाद्दत्तानि दातृभिः । विद्यातपःसमृद्धेषु हुतं विप्रमुखाग्निषु । निस्तारयति दुर्गाच्च महतश्चैव किल्विषात् । सम्प्राप्ताय त्वतिथये प्रदद्यादासनोदके । अन्नञ्चैव यथाशक्ति सत्कृत्य विधिपूर्व्वकम् । शिलानप्युञ्छतो नित्यं पञ्चाग्नीनपि जुह्वतः । सर्व्वं सुकृतमादत्ते ब्राह्मणोऽनर्च्चितो वसन् । तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता । एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन । एकरात्रन्तु निवसन्नतिथिर्ब्राह्मणः स्मृतः । अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते । नैकग्रामीणमतिथिं विप्रं साङ्गतिकं तथा । उपस्थितं गृहे विद्याद्भार्य्या यत्राग्नयोऽपि वा । उपासते ये गृहस्थाः परपाकमबुद्धयः । तेन ते प्रेत्य पशुतां व्रजन्त्यन्नादिदायिनाम् । अप्रणोद्योऽतिथिः सायं सूर्य्योढो गृहमेधिना । काले प्राप्तस्त्वकाले वा नास्यानश्नन् गृहे वसेत् । न वै स्वयं तदश्नीयादतिथिं यन्न भोजयेत् । धन्यं यशस्यमायुष्यं स्वर्ग्यञ्चातिथिपूजनम् । आसनावसथौ शय्यामनुव्रज्यामुपासनम् । उत्तमेषूत्तमं कुर्य्याद्धीने हीनं समे समम् । वैश्वदेवे तु निर्वृत्ते यद्यन्योऽतिथिराव्रजेत् । तस्याप्यन्नं यथाशक्ति प्रदद्यान्न बलिं हरेत् । न भोजनार्थं स्वे विप्रः कुलगोत्रे निवेदयेत् । भोजनार्थं हि ते शंसन् वान्ताशीत्युच्यते बुधैः । न ब्राह्मणस्य त्वतिथिर्गृहे राजन्य उच्यते । वैश्यशूद्रौ सखा चैव ज्ञातयो गुरुरेव च । यदि त्वतिथिधर्म्मेण क्षत्त्रियो गृहमाव्रजेत् । भुक्तवत्सु च विप्रेषु कामन्तमपि भोजयेत् । वैश्यशूद्रावपि प्राप्तौ कुटुम्बेऽतिथिधर्म्मिणौ । भोजयेत् सह भृत्यैस्तावानृशंस्यं प्रयोजयन् । इतरानपि सख्यादीन् सम्प्रीत्या गृहमागतान् । सत्कृत्यान्नं यथाशक्ति भोजयेत् सह भार्य्यया । सुवासिनीः कुमारांश्च रोगिणो गर्भिणीस्तथा । अतिथिभ्योऽग्र एवैतान् भोजयेदविचारयन् । अदत्त्वा तु य एतेभ्यः पूर्व्वं भुङ्क्तेऽविचक्षणः । स भुञ्जानो न जानाति श्वगृध्रैर्जग्धिमात्मनः । भुक्तवत्स्वथ विप्रेषु स्वेषु भृत्येषु चैव हि । भुञ्जीयातां ततः पश्चादवशिष्टन्तु दम्पती । देवानृषीन्मनुष्यांश्च पितॄन् गृह्याश्च देवताः । पूजयित्वा ततः पश्चाद्गृहस्थः शेषभुग्भवेत् । अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात् । यज्ञशिष्टाशनं ह्येतत् सतामन्नं विधीयते । राजर्त्विक्स्नातकगुरून् प्रियश्वशुरमातुलान् । अर्हयेन्मधुपर्केण परिसंवत्सरात् पुनः । राजा च श्रोत्रियश्चैव यज्ञकर्म्मण्युपस्थितौ । मधुपर्केण संपूज्यौ न त्वयज्ञ इति स्थितिः । सायन्त्वन्नस्य सिद्धस्य पत्न्यमन्त्रं बलिं हरेत् । वैश्वदेवं हि नामैतत् सायं प्रातर्विधीयते । पितृयज्ञन्तु निर्व्वर्त्त्य विप्रश्चन्द्रक्षयेऽग्निमान् । पिण्डान्वाहार्य्यकं श्राद्धं कुर्य्यान्मासानुमासिकम् । पितॄणां मासिकं श्राद्धमन्वाहार्य्यं विदुर्बुधाः । तच्चामिषेण कर्त्तव्यं प्रशस्तेन प्रयत्नतः । तत्र ये भोजनीयाः स्युर्ये च वर्ज्या द्विजोत्तमाः । यावन्तश्चैव यैश्चान्नैस्तान् प्रवक्ष्याम्यशेषतः । द्वौ दैवे पितृकार्य्ये त्रीनेकैकमुभयत्र वा । भोजयेत् सुसमृद्धोऽपि न प्रसज्जेत विस्तरे । सत्क्रिया देशकालौ च शौचं ब्राह्मणसम्पदः । पञ्चैतान् विस्तरो हन्ति तस्मान्नेहेत विस्तरम् । प्रथिता प्रेतकृत्यैषा पित्र्यं नाम विधुक्षये । तस्मिन् युक्तस्यैति नित्यं प्रेतकृत्यैव लौकिकी । श्रोत्रियायैव देयानि हव्यकव्यानि दातृभिः । अर्हत्तमाय विप्राय तस्मै दत्तं महाफलम् । एकैकमपि विद्वांसं दैवे पित्र्ये च भोजयेत् । पुष्कलं फलमाप्नोति नामन्त्रज्ञान् बहूनपि । दूरादेव परीक्षेत ब्राह्मणं वेदपारगम् । तीर्थं तद्धव्यकव्यानां प्रदाने सोऽतिथिः स्मृतः । सहस्रं हि सहस्राणामनृचां यत्र भुञ्जते । एकस्तान् मन्त्रवित् प्रीतः सर्व्वानर्हति धर्म्मतः । ज्ञानोत्कृष्टाय देयानि कव्यानि च हवींषि च । न हि हस्ता-

वसूगर्दिग्धौ रुधिरेणैव शुद्धव्रतः । यावतो ग्रसते ग्रासान् हव्यकव्येष्वमन्त्रवित् । तावतो ग्रसते प्रेत्य दीप्तशूलर्ष्ट्ययोगुडान् । ज्ञाननिष्ठा द्विजाः केचित् तपोनिष्ठास्तथापरे । ज्ञाननिष्ठासु कव्यानि प्रतिष्ठाप्यानि यत्नतः । हव्यानि तु यथान्यायं सर्वेष्वेव चतुर्ष्वपि । अश्रोत्रियः पिता यस्य पुत्रः स्याद्वेदपारगः । अश्रोत्रियो वा पुत्रः स्यात् पिता स्याद्वेदपारगः । ज्यायांसमनयोर्विद्यात् यस्य स्याच्छ्रोत्रियः पिता । मन्त्रसम्पूजनार्थन्तु सत्कारमितरोऽर्हति । न श्राद्धे भोजयेन्मित्रं धनैः कार्य्योऽस्य संग्रहः । नारिं न मित्रं यं विद्यात् तं श्राद्धे भोजयेद्द्विजम् । यस्य मित्रप्रधानानि श्राद्धानि च हवींषि च । तस्य प्रेत्य फलं नास्ति श्राद्धेषु च हविःषु च । यः सङ्गतानि कुरुते मोहाच्छ्राद्धेन मानवः । स स्वर्गाच्च्यवते लोकाच्छ्राद्धमित्रो द्विजाधमः । सम्भोजनी साऽभिहिता पैशाची दक्षिणा द्विजैः । इहैवास्ते तु सा लोके गौरन्धेवैकवेश्मनि । यथेरिणे बीजमुप्त्वा न वप्ता लभते फलम् । तथाऽनृचे हविर्दत्त्वा न दाता लभते फलम् । दातॄन् प्रतिग्रहीतॄंश्च कुरुते फलभागिनः । विदुषे दक्षिणा दत्ता विधिवत् प्रेत्य चेह च । कामं श्राद्धेऽर्च्चयेन्मित्रं नाभिरूपमपि त्वरिम् । द्विषता हि हविर्भुक्तं भवति प्रेत्य निष्फलम् । यत्नेन भोजयेच्छ्राद्धे बह्वृचं वेदपारगम् । शाखान्तगमथाध्वर्य्युं छन्दोगन्तु समाप्तिकम् । एषामन्यतमो यस्य भुञ्जीत श्राद्धमर्च्चितः । पितॄणां तस्य तृप्तिः स्याच्छाश्वती साप्तपौरुषी । एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः । अनुकल्पस्त्वयं ज्ञेयः सदा सद्भिरनुष्ठितः । मातामहं मातुलञ्च स्वस्रीयं श्वशुरं गुरुम् । दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यौ च भोजयेत् । न ब्राह्मणं परीक्षेत दैवे कर्मणि धर्मवित् । पित्र्ये कर्मणि तु प्राप्ते परीक्षेत प्रयत्नतः । ये स्तेनपतितक्लीवा ये च नास्तिकवृत्तयः । तान् हव्यकव्ययोर्विप्राननर्हान्मनुरब्रवीत् । जटिलञ्चानधीयानं दुर्बलं कितवन्तथा । याजयन्ति च ये पूगांस्तांश्च श्राद्धे न भोजयेत् । चिकित्सकान् देवलकान् मांसविक्रयिणस्तथा । विपणेन च जीवन्तो वर्ज्याः स्युर्हव्यकव्ययोः । प्रेष्यो ग्रामस्य राज्ञश्च कुनखी श्यावदन्तकः । प्रतिरोद्धा गुरोश्चैव त्यक्ताग्निर्वार्द्धुषिस्तथा । यक्ष्मी च पशुपालश्च परिवेत्ता निराकृतिः । ब्रह्मद्विट् परिवित्तिश्च गणाभ्यन्तर एव च । कुशीलवोऽवकीर्णी च वृषलीपतिरेव च । पौनर्भवश्च काणश्च यस्य चोपपतिर्गृहे । भृतकाध्यापको यश्च भृतकाध्यापितस्तथा । शूद्रशिष्यो गुरुश्चैव वाग्दुष्टः कुण्डगोलकौ । अकारणपरित्यक्ता मातापित्रोर्गुरोस्तथा । ब्राह्मैर्यौनैश्च सम्बन्धैः संयोगं पतितैर्गतः । अगारदाही गरदः कुण्डाशी सोमविक्रयी । समुद्रयायी वन्दी च तैलिकः कूटकारकः । पित्रा विवदमानश्च कितवो मद्यपस्तथा । पापरोग्यभिशस्तश्च दाम्भिको रसविक्रयी । धनुःशराणां कर्त्ता च यश्चाग्रेदिधिषूपतिः । मित्रध्रुक् द्यूतवृत्तिश्च पुत्राचार्य्यस्तथैव च । भ्रामरी गण्डमाली च श्वित्र्यथो पिशुनस्तथा । उन्मत्तोऽन्धश्च वर्ज्याः स्युर्वेदनिन्दक एव च । हस्तिगोऽश्वोष्ट्रदमको नक्षत्रैर्यश्च जीवति । पक्षिणां पोषको यश्च युद्धाचार्य्यस्तथैव च । स्रोतसां भेदको यश्च तेषाञ्चावरणे रतः । गृहसंवेशको दूतो वृक्षारोपक एव च । श्वक्रीड़ी श्येनजीवी च कन्यादूषक एव च । हिंस्रो वृषलवृत्तिश्च गणानाञ्चैव याजकः । आचारहीनः क्लीवश्च नित्यं याचनकस्तथा । कृषिजीवी श्लीपदी च सद्भिर्निन्दित एव च । औरभ्रिको माहिषिकः परपूर्वापतिस्तथा । प्रेतनिर्हारकश्चैव वर्जनीयाः प्रयत्नतः । एतान् विगर्हिताचारानपाङ्क्तेयान् द्विजाधमान् । द्विजातिप्रवरो विद्वानुभयत्र विवर्जयेत् । ब्राह्मणस्त्वनधीयानस्तृणाग्निरिव शाम्यति । तस्मै हव्यं न दातव्यं न हि भस्मनि हूयते । अपाङ्क्तदाने यो दातुर्भवत्यूर्द्ध्वं फलोदयः । दैवे हविषि पित्र्ये वा तं प्रवक्ष्याम्यशेषतः । अव्रतैर्यद्द्विजैर्भुक्तं परिवेत्त्रादिभिस्तथा । अपाङ्क्तेयैर्यदन्यैश्च तद्वै रक्षांसि भुञ्जते । दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते । परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः । परिवित्तिः परीवेत्ता यया च परिविद्यते । सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः । भ्रातुर्मृतस्य भार्य्यायां योऽनुरज्येत कामतः । धर्मेणापि नियुक्तायां स ज्ञेयो दिधिषूपतिः । परदारेषु जायेते द्वौ सुतौ कुण्डगोलकौ । पत्यौ जीवति कुण्डः स्यान्मृते भर्त्तरि गोलकः । तौ तु जातौ परक्षेत्रे प्राणिनौ प्रेत्य चेह च । दत्तानि हव्यकव्यानि नाशयेते प्रदायिनाम् । अपाङ्क्त्यान् यावतः पाङ्क्त्यान् भुञ्जानाननुपश्यति । तावतां न फलं तत्र दाता प्राप्नोति वालिशः । वीक्ष्यान्धो नवतेः, काणः षष्टेः, श्वित्री शतस्य तु । पापरोगी सहस्रस्य दातुर्नाशयते फलम् । यावतः संस्पृशेदङ्गैर्ब्राह्मणान्

शूद्रयाजकः । तावतां न भवेद्दातुः फलं दानस्य पौर्त्तिकम् । वेदविच्चापि विप्रोऽस्य लोभात् कृत्वा प्रतिग्रहम् । विनाशं व्रजति क्षिप्रमामपात्रमिवाम्भसि । सोमविक्रयिणे विष्ठा भिषजे पूयशोणितम् । नष्टं देवलके दत्तम् अप्रतिष्ठन्तु वार्द्धुषौ । यत्तु वाणिजके दत्तं नेह नामुत्र तद्भवेत् । भस्मनीव हुतं हव्यं तथा पौनर्भवे द्विजे । इतरेषु त्वपाङ्क्तेयेषु यथोद्दिष्टेष्वसाधुषु । मेदोऽसृङ्मांसमज्जास्थि वदन्त्यन्नं मनीषिणः । अपाङ्क्त्योपहता पङ्क्तिः पाव्यते यैर्द्विजोत्तमैः । तान्निबोधत कार्त्स्न्येन द्विजाग्र्यान् पङ्क्तिपावनान् । अग्र्याः सर्व्वेषु वेदेषु सर्व्वप्रवचनेषु च । श्रोत्रियान्वयजाश्चैव विज्ञेयाः पङ्क्तिपावनाः । त्रिणाचिकेतः पञ्चाग्निस्त्रिसुपर्णः षडङ्गवित् । ब्राह्मदेयात्मसन्तानो ज्येष्ठसामग एव च । वेदार्थवित् प्रवक्ता च ब्रह्मचारी सहस्रदः । शतायुश्चैव विज्ञेया ब्राह्मणाः पङ्क्तिपावनाः । पूर्व्वेद्युरपरेद्युर्व्वा श्राद्धकर्म्मण्युपस्थिते । निमन्त्रयेत त्र्यवरान् सम्यग्विप्रान् यथोदितान् । निमन्त्रितो द्विजः पित्र्ये नियतात्मा भवेत् सदा । न च च्छन्दांस्यधीयीत यस्य श्राद्धञ्च तद्भवेत् । निमन्त्रितान् हि पितर उपतिष्ठन्ति तान् द्विजान् । वायुवच्चानुगच्छन्ति तथासीनानुपासते । केतितस्तु यथान्यायं हव्यकव्ये द्विजोत्तमः । कथञ्चिदप्यतिक्रामन् पापः शूकरतां व्रजेत् । आमन्त्रितस्तु यः श्राद्धे वृषल्या सह मोदते । दातुर्यद्दुष्कृतं किञ्चित्तत् सर्व्वं प्रतिपद्यते । अक्रोधनाः शौचपराः सततं ब्रह्मचारिणः । न्यस्तशस्त्रा महाभागाः पितरः पूर्व्वदेवताः । यस्मादुत्पत्तिरेतेषां सर्व्वेषामप्यशेषतः । ये च यैरुपचर्य्याः स्युर्नियमैस्तान्निबोधत । मनोर्हैरण्यगर्भस्य ये मरीच्यादयः सुताः । तेषामृषीणां सर्व्वेषां पुत्त्राः पितृगणाः स्मृताः । विराट्सुताः सोमसदः साध्यानां पितरः स्मृताः । अग्निष्वात्ताश्च देवानां मारीच्या लोकविश्रुताः । दैत्यदानवयक्षाणां गन्धर्व्वोरगरक्षसाम् । सुपर्णकिन्नराणाञ्च स्मृता बर्हिषदोऽत्रिजाः । सोमपा नाम विप्राणां क्षत्त्रियाणां हविर्भुजः । वैश्यानामाज्यपा नाम शूद्राणान्तु सुकालिनः । सोमपास्तु कवेः पुत्त्रा हविष्मन्तोऽङ्गिरःसुताः । पुलस्त्यस्याज्यपाः पुत्त्रा वशिष्ठस्य सुकालिनः । अग्निदग्धानग्निदग्धान् काव्यान् बर्हिषदस्तथा । अग्निष्वात्तांश्च सौमांश्च विप्राणामेव निर्द्दिशेत् । य एते तु गणा मुख्याः पितॄणां परिकीर्त्तिताः । तेषामपीह विज्ञेयं पुत्त्रपौत्त्रमनन्तकम् । ऋषिभ्यः पितरो जाताः पितृभ्यो देवदानवाः । देवेभ्यस्तु जगत् सर्व्वं चरं स्थाण्वनुपूर्व्वशः । राजतैर्भाजनैरेषामथ वा राजतान्वितैः । वार्य्यपि श्रद्धया दत्तमक्षयायोपकल्पते । देवकार्य्याद्द्विजातीनां पितृकार्य्यं विशिष्यते । दैवं हि पितृकार्य्यस्य पूर्व्वमाप्यायनं स्मृतम् । तेषामारक्षभूतन्तु पूर्व्वं दैवं नियोजयेत् । रक्षांसि हि विलुम्पन्ति श्राद्धमारक्षवर्जितम् । दैवाद्यन्तं तदीहेत पित्राद्यन्तं न तद्भवेत् । पित्राद्यन्तं त्वीहमानः क्षिप्रं नश्यति सान्वयः । शुचिं देशं विविक्तञ्च गोमयेनोपलेपयेत् । दक्षिणाप्रवणञ्चैव प्रयत्नेनोपपादयेत् । अवकाशेषु चोक्षेषु नदीतीरेषु चैव हि । विविक्तेषु च तुष्यन्ति दत्तेन पितरः सदा । आसनेषूपक्लृप्तेषु बर्हिष्मत्सु पृथक् पृथक् । उपस्पृष्टोदकान् सम्यग्विप्रांस्तानुपवेशयेत् । उपवेश्य तु तान् विप्रानासनेष्वजुगुप्सितान् । गन्धमाल्यैः सुरभिभिरर्च्चयेद्देवपूर्व्वकम् । तेषामुदकमानीय सपवित्रांस्तिलानपि । अग्नौ कुर्य्यादनुज्ञातो ब्राह्मणो ब्राह्मणैः सह । अग्नेः सोमयमाभ्याञ्च कृत्वाप्यायनमादितः । हविर्दानेन विधिवत् पश्चात् सन्तर्पयेत् पितॄन् । अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत् । यो ह्यग्निः स द्विजो विप्रैर्मन्त्रदर्शिभिरुच्यते । अक्रोधनान् सुप्रसादान् वदन्त्येतान् पुरातनान् । लोकस्याप्यायने युक्तान् श्राद्धदेवान् द्विजोत्तमान् । अपसव्यमग्नौ कृत्वा सर्व्वमावृत् परिक्रमन् । अपसव्येन हस्तेन निर्व्वपेदुदकं भुवि । त्रींस्तु तस्माद्धविःशेषात् पिण्डान् कृत्वा समाहितः । औदकेनैव विधिना निर्व्वपेद्दक्षिणामुखः । न्युप्य पिण्डांस्ततस्तांस्तु प्रयतो विधिपूर्व्वकम् । तेषु दर्भेषु तं हस्तं निमृज्याल्लेपभागिनाम् । आचम्योदक् परावृत्य त्रिरायम्य शनैरसून् । षड् ऋतूंश्च नमस्कुर्य्यात् पितॄनेव च मन्त्रवित् । उदकं निनयेच्छेषं शनैः पिण्डान्तिके पुनः । अवजिघ्रेच्च तान् पिण्डान् यथा न्युप्तान् समाहितः । पिण्डेभ्यस्त्वल्पिकां मात्रां समादायानुपूर्व्वशः । तानेव विप्रानासीनान् विधिवत् पूर्व्वमाशयेत् । ध्रियमाणे तु पितरि पूर्व्वेषामेव निर्व्वपेत् । विप्रवद्वापि तं श्राद्धे स्वकं पितरमाशयेत् । पिता यस्य तु वृत्तः स्याज्जीवेद्वापि पितामहः । पितुः स नाम संकीर्त्त्य कीर्त्तयेत् प्रपितामहम् । पितामहो वा तच्छ्राद्धं भुञ्जीतेत्यब्रवीन्मनुः । कामं वा समनुज्ञातः स्वयमेव समा

चरेत् । तेषां दत्त्वा तु हस्तेषु सपवित्रं तिलोदकम् । तत्पिण्डाग्रं प्रयच्छेत स्वधैषामस्त्विति ब्रुवन् । पाणिभ्यान्तूपसंगृह्य स्वयमन्नस्य वर्द्धितम् । विप्रान्तिके पितॄन् ध्यायन् शनकैरुपनिक्षिपेत् । उभयोर्हस्तयोर्मुक्तं यदन्नमुपनीयते । तद्विप्रलुम्पन्त्यसुराः सहसा दुष्टचेतसः । गुणांश्च सूपशाकाद्यान् पयो दधि घृतं मधु । विन्यसेत् प्रयतः सम्यक् भूमावेव समाहितः । भक्ष्यं भोज्यञ्च विविधं मूलानि च फलानि च । हृद्यानि चैव मांसानि पानानि सुरभीणि च । उपनीय तु तत् सर्वं शनकैः सुसमाहितः । परिवेषयेत प्रयतो गुणान् सर्वान् प्रचोदयन् । नास्रमापातयेज्जातु न कुप्येन्नानृतं वदेत् । न पादेन स्पृशेदन्नं नचैतदवधूनयेत् । अस्रं गमयति प्रेतान् कोपोऽरीननृतं शुनः । पादस्पर्शस्तु रक्षांसि दुष्कृतीनवधूननम् । यद्यद्रोचेत विप्रेभ्यस्तत्तद्दद्यादमत्सरः । ब्रह्मोद्याश्च कथाः कुर्य्यात् पितॄणामेतदीप्सितम् । स्वाध्यायं श्रावयेत् पित्र्ये धर्मशास्त्राणि चैव हि । आख्यानानीतिहासांश्च पुराणानि खिलानि च । हर्षयेद्ब्राह्मणांस्तुष्टो भोजयेच्च शनैः शनैः । अन्नाद्येनासकृच्चैतान् गुणैश्च परिचोदयेत् । व्रतस्थमपि दौहित्रं श्राद्धे यत्नेन भोजयेत् । कुतपञ्चासने दद्यात् तिलैश्च विकिरेन्महीम् । त्रीणि श्राद्धे पवित्राणि दौहित्रं कुतपस्तिलाः । त्रीणि चात्र प्रशंसन्ति शौचमक्रोधमत्वराम् । अत्युष्णं सर्व्वमन्नं स्याद्भुञ्जीरंस्ते च वाग्यताः । न च द्विजातयो ब्रूयुर्दात्रा पृष्टा हविर्गुणान् । यावदुष्णं भवत्यन्नं यावदश्नाति वाग्यतः । पितरस्तावदश्नन्ति यावन्नोक्ता हविर्गुणाः । यद्वेष्टितशिरा भुङ्क्ते यद्भुङ्क्ते दक्षिणामुखः । सोपानत्कश्च यद्भुङ्क्ते तद्वै रक्षांसि भुञ्जते । चाण्डालश्च वराहश्च कुक्कुटः श्वा तथैव च । रजस्वला च षण्ढश्च नेक्षेरन्नश्नतो द्विजान् । होमे प्रदाने भोज्ये च यदेभिरभिवीक्षिते । दैवे कर्मणि पित्र्ये वा तद्गच्छत्ययथातथम् । घ्राणेन शूकरो हन्ति पक्षवातेन कुक्कुटः । श्वा तु दृष्टिनिपातेन स्पर्शेनावरवर्णजः । खञ्जो वा यदि वा काणो दातुः प्रेष्योऽपि वा भवेत् । हीनातिरिक्तगात्रो वा तमप्यपनयेत्ततः । ब्राह्मणं भिक्षुकं वापि भोजनार्थमुपस्थितम् । ब्राह्मणैरभ्यनुज्ञातः शक्तितः प्रतिपूजयेत् । सार्व्ववर्णिकमन्नाद्यं सन्नीयाप्लाव्य वारिणा । समुत्सृजेद्भुक्तवतामग्रतो विकिरन् भुवि । असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम् । उच्छिष्टं भागधेयं स्याद्दर्भेषु विकिरश्च यः । उच्छेषणं भूमिगतमजिह्मस्याशठस्य च । दासवर्गस्य तत् पित्र्ये भागधेयं प्रचक्षते । आसपिण्डक्रियाकर्म्म द्विजातेः संस्थितस्य तु । अदैवं भोजयेच्छ्राद्धं पिण्डमेकन्तु निर्वपेत् । सहपिण्डक्रियायान्तु कृतायामस्य धर्म्मतः । अनयैवावृता कार्य्यं पिण्डनिर्वपणं सुतैः । श्राद्धं भुक्त्वा य उच्छिष्टं वृषलाय प्रयच्छति । स मूढो नरकं याति कालसूत्रमवाक्शिराः । श्राद्धभुग्वृषलीतल्पं तदहर्योऽधिगच्छति । तस्याः पुरीषे तन्मासं पितरस्तस्य शेरते । पृष्ट्वा स्वदितमित्येवं तृप्तानाचामयेत्ततः । आचान्तांश्चानुजानीयादभि भो ! रम्यतामिति । स्वधास्त्वित्येव तं ब्रूयुर्ब्राह्मणास्तदनन्तरम् । स्वधाकारः परा ह्याशीः सर्व्वेषु पितृकर्मसु । ततो भुक्तवतां तेषामन्नशेषं निवेदयेत् । यथा ब्रूयुस्तथा कुर्य्यादनुज्ञातस्ततो द्विजैः । पित्र्ये स्वदितमित्येव वाच्यं गोष्ठे तु सुशृतम् । सम्पन्नमित्यभ्युदये दैवे रुचितमित्यपि । अपराह्णस्तथा दर्भा वास्तुसम्पादनं तिलाः । सृष्टिर्मृष्टिर्द्विजाश्चाग्र्याः श्राद्धकर्म्मसु सम्पदः । दर्भाः पवित्रं पूर्व्वाह्णो हविष्याणि च सर्व्वशः । पवित्रं यच्च पूर्व्वोक्तं विज्ञेया हव्यसम्पदः । मुन्यन्नानि पयः सोमो मांसं यच्चानुपस्कृतम् । अक्षारलवणञ्चैव प्रकृत्या हविरुच्यते । विसृज्य ब्राह्मणांस्तांस्तु नियतो वाग्यतः शुचिः । दक्षिणां दिशमाकाङ्क्षन् याचेतेमान् वरान् पितॄन् । दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च । श्रद्धा च नो मा व्यगमद्बहु देयञ्च नोऽस्त्विति । एवं निर्व्वपणं कृत्वा पिण्डांस्तांस्तदनन्तरम् । गां विप्रमजमग्निं वा प्राशयेदप्सु वा क्षिपेत् । पिण्डनिर्व्वपणं केचित् पुरस्तादेव कुर्व्वते । वयोभिः खादयन्त्यन्ये प्रक्षिपन्त्यनलेऽप्सु वा । पतिव्रता धर्म्मपत्नी पितृपूजनतत्परा । मध्यमन्तु ततः पिण्डमद्यात् सम्यक् सुतार्थिनी । आयुष्मन्तं सुतं सूते यशोमेधासमन्वितम् । धनवन्तं प्रजावन्तं सात्त्विकं धार्म्मिकं तथा । प्रक्षाल्य हस्तावाचम्य ज्ञातिप्रायं प्रकल्पयेत् । ज्ञातिभ्यः सत्कृतं दत्त्वा बान्धवानपि भोजयेत् । उच्छेषणन्तु तत्तिष्ठेद्यावद्विप्रा विसर्जिताः । ततो गृहबलिं कुर्य्यादिति धर्म्मो व्यवस्थितः । हविर्यच्चिररात्राय यच्चानन्त्याय कल्पते । पितृभ्यो विधिवद्दत्तं तत् प्रवक्ष्याम्यशेषतः । तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा । दत्तेन मासं

प्रीयन्ते विधिवत् पितरो नृणाम्। द्वौ मासौ मत्स्यमांसेन त्रीन्मासान् हारिणेन तु। औरभ्रेणाथ चतुरः शाकुनेनाथ पञ्च वै। षण्मासान् छागमांसेन पार्षतेन च सप्त वै। अष्टावेणस्य मांसेन रौरवेण नवैव तु। दश मासांस्तु तृप्यन्ति वराहमहिषामिषैः। शशकूर्मयोस्तु मांसेन मासानेकादशैव तु। संवत्सरन्तु गव्येन पयसा पायसेन च। वार्घ्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी। कालशाकं महाशल्काः खड्गलोहामिषं मधु। आनन्त्यायैव कल्पन्ते मुन्यन्नानि च सर्व्वशः। यत्किञ्चिन्मधुना मिश्रं प्रदद्यात्तु त्रयोदशीम्। तदप्यक्षयमेव स्याद्वर्षासु च मघासु च। अपि नः स कुले जायाद्यो नो दद्यात्त्रयोदशीम्। पायसं मधुसर्पिर्भ्यां प्राक्छाये कुञ्जरस्य च। यद्यद्ददाति विधिवत् सम्यक् श्रद्धासमन्वितः। तत्तत् पितॄणां भवति परत्रानन्तमक्षयम्। कृष्णपक्षे दशम्यादौ वर्ज्जयित्वा चतुर्द्दशीम्। श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतराः। युक्षु कुर्व्वन् दिनर्क्षेषु सर्व्वान् कामान् समश्नुते। अयुक्षु तु पितॄन् सर्व्वान् प्रजां प्राप्नोति पुष्कलाम्। यथा चैवापरः पक्षः पूर्व्वपक्षाद्विशिष्यते। तथा श्राद्धस्य पूर्व्वाह्णादपराह्णो विशिष्यते। प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा। पित्र्यमानिधनात् कार्य्यं विधिवद्दर्भपाणिना। रात्रौ श्राद्धं न कुर्व्वीत राक्षसी कीर्त्तिता हि सा। सन्ध्ययोरुभयोश्चैव सूर्य्ये चैवाचिरोदिते। अनेन विधिना श्राद्धं त्रिरब्दस्येह निर्व्वपेत्। हेमन्तग्रीष्मवर्षासु पाञ्चयज्ञिकमन्वहम्। न पैतृयज्ञियो होमो लौकिकेऽग्नौ विधीयते। न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः। यदेव तर्पयत्यद्भिः पितॄन् स्नात्वा द्विजोत्तमः। तेनैव कृत्स्नमाप्नोति पितृयज्ञक्रियाफलम्। वसून् वदन्ति वै पितॄन् रुद्रांश्चैव पितामहान्। प्रपितामहांस्त्वादित्यान् श्रुतिरेषा सनातनी। विघसाशी भवेन्नित्यं नित्यं वामृतभोजनः। विघसो भुक्तशेषन्तु यज्ञशेषं तथाऽमृतम्। एतद्वोऽभिहितं सर्व्वं विधानं पाञ्चयज्ञिकम्। द्विजातिमुख्यवृत्तीनां विधानं श्रूयतामिति" ३अ०। "चतुर्थमायुषो भागमुषित्वाद्यं गुरौ द्विजः। द्वितीयमायुषो भागं कृतदारो गृहे वसेत्। अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः। या वृत्तिस्तां समास्थाय विप्रो जीवेदनापदि। यात्रामात्रप्रसिद्ध्यर्थं स्वैः कर्म्मभिरगर्हितैः। अक्लेशेन शरीरस्य कुर्व्वीत धनसञ्चयम्। ऋतामृताभ्यां जीवेत्तु मृतेन प्रमृतेन वा। सत्यानृताभ्यां वापि न श्ववृत्त्या कदाचन। ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम्। मृतन्तु याचितं भैक्षं प्रमृतं कर्षणं स्मृतम्। सत्यानृतन्तु वाणिज्यं तेन चैवापि जीव्यते। सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्ज्जयेत्। कुसूलधान्यको वा स्यात् कुम्भीधान्यक एव वा। त्र्यहैहिको वापि भवेदश्वस्तनिक एव वा। चतुर्णामपि चैतेषां द्विजानां गृहमेधिनाम्। ज्यायान् परः परो ज्ञेयो धर्मतो लोकजित्तमः। षट्कर्म्मैको भवत्येषां त्रिभिरन्यः प्रवर्त्तते। द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीवति। वर्त्तयंश्च शिलोञ्छाभ्यामग्निहोत्रपरायणः। इष्टीः पार्व्वायणान्तीयाः केवला निर्व्वपेत् सदा। न लोकवृत्तं वर्त्तेत वृत्तिहेतोः कथञ्चन। अजिह्मामशठां शुद्धां जीवेद्ब्राह्मणजीविकाम्। सन्तोषं परमास्थाय सुखार्थी संयतो भवेत्। सन्तोषमूलं हि सुखं दुःखमूलं विपर्य्ययः। अतोऽन्यतमया वृत्त्या जीवंस्तु स्नातको द्विजः। स्वर्ग्यायुष्ययशस्यानि व्रतानीमानि धारयेत्। वेदोदितं स्वकं कर्म नित्यं कुर्य्यादतन्द्रितः। तद्धि कुर्व्वन् यथाशक्ति प्राप्नोति परमां गतिम्। नेहेतार्थान् प्रसङ्गेन न विरुद्धेन कर्म्मणा। न विद्यमानेष्वर्थेषु नार्त्त्यामपि यतस्ततः। इन्द्रियार्थेषु सर्व्वेषु न प्रसज्जेत कामतः। अतिप्रसक्तिञ्चैतेषां मनसा सन्निवर्त्तयेत्। सर्व्वान् परित्यजेदर्थान् स्वाध्यायस्य विरोधिनः। यथा तथाध्यापयंस्तु सा ह्यस्य कृतकृत्यता। वयसः कर्म्मणोऽर्थस्य श्रुतस्याभिजनस्य च। वेशवाग्बुद्धिसारूप्यमाचरन् विचरेदिह। बुद्धिवृद्धिकराण्याशु धन्यानि च हितानि च। नित्यं शास्त्राण्यवेक्षेत निगमांश्चैव वैदिकान्। यथा यथा हि पुरुषः शास्त्रं समधिगच्छति। तथातथा विजानाति विज्ञानञ्चास्य रोचते। ऋषियज्ञं देवयज्ञं भूतयज्ञञ्च सर्व्वदा। नृयज्ञं पितृयज्ञञ्च यथाशक्ति न हापयेत्। एतानेके महायज्ञान् यज्ञशास्त्रविदो जनाः। अनीहमानाः सततमिन्द्रियेष्वेव जुह्वति। वाच्येके जुह्वति प्राणं प्राणे वाचञ्च सर्व्वदा। वाचि प्राणे च पश्यन्तो यज्ञनिर्वृत्तिमक्षयाम्। ज्ञानेनैवापरे विप्रा यजन्त्येतैर्मखैः सदा। ज्ञानमूलां क्रियामेषां पश्यन्तो ज्ञानचक्षुषा। अग्निहोत्रञ्च जुहुयादाद्यन्ते द्युनिशोः सदा। दर्शेन चार्द्धमासान्ते पौर्णमासेन चैव हि। शस्यान्ते नवशस्येष्ट्या तथर्त्वन्ते द्विजोऽध्वरैः।

पशुना त्वयनस्यादौ समान्ते सौमिकैर्मखैः। नानिष्ट्वा नवशस्येष्ट्या पशुना चाग्निमान् द्विजः। नवान्नमद्यान्मांसं वा दीर्घमायुर्जिजीविषुः। नवेनानर्च्चिता ह्यस्य पशुहव्येन चाग्नयः। प्राणानेवात्तुमिच्छन्ति नवान्नामिषगर्द्धिनः। आसनाशनशय्याभिरद्भिर्मूलफलेन वा। नास्य कश्चिद्वसेद्गेहे शक्तितोऽनर्च्चितोऽतिथिः। पाषण्डिनो विकर्मस्थान् वैडालव्रतिकान् शठान्। हैतुकान् वकवृत्तींश्च वाङ्मात्रेणापि नार्च्चयेत्। वेदविद्याव्रतस्नातान् श्रोत्रियान् गृहमेधिनः। पूजयेद्धव्यकव्येन विपरीतांश्च वर्जयेत्। शक्तितोऽपचमानेभ्यो दातव्यं गृहमेधिना। संविभागश्च भूतेभ्यः कर्त्तव्योऽनुपरोधतः।" इत्येवं स्नातकगृहस्थधर्माः उक्ताः शेषं स्नातकशब्दे वक्ष्यते।

काशी॰ख॰ ३६ अ॰ गृहस्थधर्मा उक्ता यथा

"न क्लेशेन विना द्रव्यमर्थहीने कुतः क्रिया। क्रियाहीने कुतो धर्मो धर्महीने कुतः सुखम्। सुखं हि सर्वदा काङ्क्ष्यं तच्च धर्मसमुद्भवम्। तस्माद्धर्मोऽत्र कर्त्तव्यश्चातुर्वर्ण्येन यत्नतः। न्यायागतेन द्रव्येण कर्त्तव्यं पारलौकिकम्। दानञ्च विधिना देयं काले पात्रे च भावतः। विधिहीनन्तथाऽपात्रे यो ददाति प्रतिग्रहम्। न केवलं हि तद्याति शेषन्तस्य च नश्यति। व्यसनार्थे कुटुम्बार्थे यहणार्थे च दीयते। तदक्षयं भवेदत्र परत्र च न संशयः। मातापितृविहीनं यो मौञ्जीपाणिग्रहादिभिः। संस्कारयेन्निजैरर्थैस्तस्य श्रेयस्त्वनन्तकम्। अग्निहोत्रैर्न तच्छ्रेयो नाग्निष्टोमादिभिर्मखैः। यच्छ्रेयः प्राप्यते ह्यर्थैर्द्विजे कस्मिन् प्रतिष्ठिते। पितृगेहे तु या कन्या रजः पश्येदसंस्कृता। भ्रूणहा तत्पिता ज्ञेयो वृषली सापि कन्यका। यस्तां परिणयेन्मोहात् स भवेद्वृषलीपतिः। तेन सम्भाषणं त्याज्यमपाङ्क्तेयेन सर्वदा। विज्ञाय दोषमुभयोः कन्यायाश्च वरस्य च। सम्बन्धं वाचयेत् पश्चादन्यथा दोषभाक् पिता। स्त्रियः पवित्राः सततं नैता दुष्यन्ति केनचित्। मासि मासि रजोह्यासां दुष्कृतान्यपकर्षति। पूर्वं स्त्रिभिः सुरैर्भुक्ताः सोमगन्धर्ववह्निभिः। भुञ्जते मानुषाः पश्चान्नैता दुष्यन्ति केनचित्। स्त्रीणां शौचं ददौ सोमः पावकः सर्वमेध्यताम्। कल्याणवाणीङ्गन्धर्वस्तेन मेध्याः सदा स्त्रियः। कन्यां भुङ्क्ते रजःकालेऽग्निः शशी लोमदर्शने। स्तनोद्भेदे च गन्धर्वस्तत्प्रागेव प्रदीयते। दृश्यरोमा त्वपत्यघ्नी कुलघ्नी भूनयौवना। पितृगृह्याविस्रुतरजास्ततस्ताः परिवर्ज्जयेत्। कन्यादानफलप्रेप्सुस्तस्माद्द्यादनग्निकाम्। अन्यथा न फलं दातुः प्रतिग्राही पतेदधः। कन्यामभुक्तां सोमाद्यैर्ददद्दानफलं लभेत्। देवभुक्तां ददद्दाता न स्वर्गमधिगच्छति। शयनासनयानानि कुतपं स्त्रीमुखं कुशम्। यज्ञपात्राणि सर्वाणि न दुष्यन्ति बुधाः क्वचित्। वत्सः प्रस्नवने मेध्यः, शकुनिः फलपातने। नार्य्यो रतिप्रयोगेषु श्वा मृगग्रहणे शुचिः। अजाश्वयोर्मुखं मेध्यं गावो मेध्याश्च पृष्ठतः। पादतो ब्राह्मणा मेध्याः स्त्रियो मेध्यास्तु सर्वतः। बलात्कारोपभुक्ता वा चौरहस्तगतापि वा। न त्याज्या दूषिता नारी नास्यास्त्यागो विधीयते। अम्लेन ताम्रशुद्धिः स्याच्छुद्धिः कांस्यस्य भस्मना। संशुद्धा रजसा नार्य्यो तटिनी वेगतः शुचिः। मनसापि हि या नेह चिन्तयेत् पुरुषान्तरम्। सोमया सह सौख्यानि भुङ्क्ते चात्रापि कीर्त्तिभाक्। पिता पितामहो भ्राता सकुल्यो जननी तथा। कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः। अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ। स्वयं त्वभावे दातृणां कन्या कुर्यात् स्वयं वरम्। हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम्। परिभूतामधः शय्यां वासयेद्व्यभिचारिणीम्। व्यभिचारादृतौ शुद्धिर्गर्भे त्यागो विधीयते। गर्भभर्त्तृवधादौ च महत्यपि च कल्मषे। शूद्रैव भार्य्या शूद्रस्य सा च स्वा च विशः स्मृते। ते च स्वा चैव राज्ञस्तु ताश्च स्वा चाग्रजन्मनः। आरोप्य शूद्रां शयने विप्रो गच्छेदधोगतिम्। उत्पाद्य पुत्रं शूद्रायां ब्राह्मण्यादेव हीयते। दैवपित्र्यातिथेयानि तत्प्रधानानि यस्य तु। देवाद्यास्तानि नाश्नन्ति स च स्वर्गं न गच्छति। जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः। कृत्याभिर्निहतानीव नश्यन्त्युस्तान्यसंशयम्। तदभ्यर्च्याः सुवासिन्यो भूषणाच्छादनाशनैः। भूतिकामैर्नरैर्नित्यं सङ्कटेषूत्सवेषु च। यत्र नार्यः प्रमुदिता भूषणाच्छादनाशनैः। रमन्ते देवतास्तत्र सुसत्र सफलाः क्रियाः। यत्र तुष्यति भर्त्ता स्त्री स्त्रिया भर्त्ता च तुष्यति। तत्र वेश्मनि कल्याणं सम्पद्येत पदे पदे। जपोऽहुतो हुतो होमः प्रहुतो भौतिको बलिः। प्राशितं पितृसंतर्पिहुतं ब्राह्म्यं द्विजार्चनम्। पञ्चयज्ञानिमान् कुर्वन् ब्राह्मणो नावसीदति। एतेषामननुष्ठानात् पञ्चत्वमवाप्नुयात्। ब्राह्मणं कुशलं पृच्छे-

द्वाङ्गजातमनामयम् । वैश्यं क्षेमं समागम्य शूद्रं सन्तोषमेव च । जातमात्रः शिशुस्तावद्यावदष्टौ समाः स्मृताः । भक्ष्याभक्ष्येषु नो दुष्येद्यावन्नैवोपनीयते । भरणं पोष्यवर्गस्य दृष्टादृष्टफलोदयम् । प्रत्यवायोऽह्यभरणे भर्त्तव्यस्तत् प्रयत्नतः । माता पिता गुरुः पत्नी त्वपत्यानि समाश्रिताः । अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्गा अमी नव । स जीवति पुमान् योऽत्र बहुभिश्चोपजीव्यते । जीवन्मृतोऽथ विज्ञेयः पुरुषः स्वोदरम्भरिः । दीनानाथविशिष्टेभ्यो दातव्यं भूतिमिच्छता । अदत्तदाना जायन्ते परभाग्योपजीविनः । विभागशीलसंयुक्तोदयावांश्च क्षमारतः । देवतातिथिभक्तस्तु गृहस्थो धार्मिकः स्मृतः । शर्वरीमध्ययामौ द्वौ हुतशेषञ्च यद्धविः । तत्र स्वपंस्तदन्नं च ब्राह्मणो नावसीदति । नवैतानि गृहस्थेन कार्याण्यभ्यागते सदा । सुधामयानि यत् सौम्यं वाक्यञ्चक्षुर्मनोमुखम् । अभ्युत्थानमिहायाते सस्नेहपूर्वभाषणम् । उपासनमनुव्रज्या गृहस्थोन्नतिहेतवे । तथैवद्रव्ययुक्तानि कार्याण्येतानि वै नव । आसनं पादशौचञ्च यथाशक्त्याशनं स्थितिः । शय्या तृणं जलाभ्यङ्गदीपा गार्हस्थ्यसिद्धिदाः । तथा नव विकर्माणि त्याज्यानि गृहमेधिना । पैशुन्यं परदाराश्च द्रोहः क्रोधानृताप्रियम् । द्वेषो दम्भश्च माया च स्वर्गमार्गार्गलानि हि । नवावश्यककर्माणि कार्याणि प्रतिवासरम् । स्नानं सन्ध्या जपो होमः स्वाध्यायो देवतार्चनम् । वैश्वदेवन्तथातिथ्यं नवमं पितृतर्पणम् । नव गोप्यानि यत्नेन मुने ! तानि निशामय । जन्मर्क्षं मैथुनं मन्त्रो गृहच्छिद्रञ्च पञ्चमम् । आयुर्धनापमानं स्त्री न प्रकाश्यानि सर्वथा । नवैतानि प्रकाश्यानि रहः पापमकुत्सितम् । प्रायोग्यमृणशुद्धिश्च स्वान्वयः क्रयविक्रयौ । कन्यादानं गुणोत्कर्षौ नान्यत् केनापि कुत्रचित् । पात्रमित्राविनीतेषु दीनानाथोपकारिषु । मातापितृगुरुष्वेतन्नवकं दत्तमव्ययम् । निष्फलं नवकं दृष्टं चाटचारणतस्करे । कुवैद्ये कितवे धूर्त्ते शठे मल्ले च बन्दिनि । आपत्स्वपि न देयानि नव वस्तूनि सर्वदा । अन्वये सति सर्वस्वं दाराश्च शरणागतः । न्यासाधी कुलवृत्तिश्च निक्षेपं स्त्रीधनं सुतम् । यो ददाति स मूढात्मा प्रायश्चित्तैर्विशुध्यति । एतन्नवानां नवकं ज्ञात्वा श्रियमवाप्नुयात् । अन्यच्च नवकं वच्मि सर्वेषां स्वर्गमार्गदम् । सत्यं शौचमहिंसा च क्षान्तिर्दानं दया दमः । अस्तेयमिन्द्रियाक्षोभः सर्वेषां धर्मसाधनम् । अभ्यस्य नवतिस्त्वेनां स्वर्गमार्गप्रदीपिकाम् । सतामभिमतां पुण्यां गृहस्थो नावसीदति । जिह्वा भार्य्या सुतो भ्राता भृत्यदाससमाश्रिताः । यस्यैते विनयाढ्याश्च तस्य सर्वत्र गौरवम् । पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम् । स्वप्नोऽन्यगेहवासश्च नारीणां दूषणानि षट् । समार्घं प्राप्यशुल्कन्तु महार्घं यः प्रयच्छति । स हि वार्द्धुषिको नाम तस्यान्नं नैव भुञ्जयेत् । अपि माहिषिकं दृष्ट्वा मध्ये तु हव्यलोपतिम् । अन्ते वार्द्धुषिकस्यैव निराशाः पितरो गताः । माहिषीत्युच्यते नारी या च स्याद्व्यभिचारिणी । तां प्रदुष्टां कामयते यः स माहिषिकः स्मृतः । स्वकं या परित्यज्य परस्थे हृष्यते । वृषली सा हि विज्ञेया न शूद्रा वृषली भवेत् । यावदुष्णं भवत्यन्नं यावन्मौनेन भुज्यते । तावदश्नन्ति पितरो यावन्नोक्ता हविर्गुणाः । विद्याविनयसम्पन्ने श्रोत्रिये गृहमागते । क्रीडन्त्योषधयः सर्वा यास्यामः परमां गतिम् । नष्टशौचव्रताचारे विप्रे वेदविवर्जिते । रोदित्यन्नं दीयमानं किं मया दुष्कृतं कृतम् । यस्य कोष्ठगतञ्चान्नं वेदाभ्यासेन जीर्य्यति । स तारयति दातारं दश पूर्वान् दशापरान् । न स्त्रीणां वपनं कार्यं न च ताः समनुव्रजेत् । न च रात्रौ वसेद्गोष्ठे न कुर्य्याद्वैदिकीं श्रुतिम् । सर्वान् केशान् समुद्धृत्य च्छेदयेदङ्गुलिद्वयम् । एवमेव तु नारीणां शिरसो मुण्डनं भवेत् । राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः । अकारयित्वा वपनं प्रायश्चित्तं तु निर्दिशेत् । केशानां रक्षणार्थाय द्विगुणं व्रतमाचरेत् । द्विगुणा दक्षिणा देया ब्राह्मणे वेदपारगे । यो गृहीत्वा विवाहाग्निं गृहस्थ इव मन्यते । अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः । दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते । परीवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः । परिवेत्तिः परीवेत्ता या चैव परिविद्यते । सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः । क्लीवे देशान्तरस्थे च मूके प्रव्रजिते जडे । कुब्जे खर्वे च पतिते न दोषः परिवेदने । वेदाक्षराणि यावन्ति नियुञ्ज्यादर्थकारणात् । तावतीर्भ्रूणहत्या वेदविक्रयकृल्लभेत् । यस्तु प्रव्रजितो भूत्वा सेवते मैथुनं पुनः । षष्टिं वर्षसहस्राणि विष्ठायां जायते कृमिः । शूद्रान्नं शूद्रसम्पर्कः शूद्रेण च सहासनम् । शूद्राद्वि-

द्यागमः कश्चित् ज्वलन्तमपि पातयेत्। शूद्रादाहृत्य निर्वापं ये पचन्त्यबुधा द्विजाः। ते यान्ति नरकं घोरं ब्रह्मतेजोविवर्जिताः। हस्तदत्ताश्च ये स्नेहाव्यञ्जनं लवणानि च। दातारं नोपतिष्ठन्ति भोक्ता भुङ्क्ते तु किल्बिषम्। आयसेनैव पात्रेण यदन्नमुपनीयते। भोक्ता तद्विट्समं भुङ्क्ते दाता च नरकं व्रजेत्। अङ्गुल्या दन्तकाष्ठञ्च प्रत्यक्षलवणञ्च यत्। मृत्तिकाभक्षणं यच्च समं गोमांसभक्षणैः। पानीयं पायसं भैक्ष्यं घृतं लवणमेव च। हस्तदत्तं न गृह्णीयात् तुल्यं गोमांसभक्षणैः। अयतो निवसेन्मूर्खो दूरस्थश्च गुणान्वितः। गुणान्विताय दातव्यं नास्ति मूर्खे व्यतिक्रमः। ब्राह्मणातिक्रमो नास्ति विप्रे वेदविवर्जिते। ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते। सन्निकृष्टमधीयानं ब्राह्मणं यो व्यतिक्रमेत्। भोजने चैव दाने स दहत्यासप्तमं कुलम्। गोरक्षकान् वाणिजकान् तथा कारुकुशीलवान्। प्रेष्यान् वार्द्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत्। देवद्रव्यविभागेन ब्रह्मस्वहरणेन च। कुलान्याशु विनश्यन्ति ब्राह्मणातिक्रमेण च। मा देहीति च यो ब्रूयाद्देवाग्निब्राह्मणेषु च। तिर्य्यग्योनिशतं गत्वा चाण्डालेष्वभिजायते। वाण्या यच्च प्रतिज्ञातं कर्म्मणा नोपपादितम्। ऋणन्तद्धर्म्मसंयुक्तमिह लोके परत्र च। विघसाशी भवेन्नित्यं नित्यञ्चामृतभोजनः। यज्ञशेषोऽमृतं भुक्तशेषन्तद्विघसं विदुः। सव्यादंशात् परिभ्रष्टे नाभिदेशव्यवस्थिते। वस्त्रे स एकवासास्तु दैवे पित्र्ये च वर्जयेत्। यदेव तर्पयत्यद्भिः पितॄन् स्नात्वा द्विजोत्तमः। तेनैव सर्व्वमाप्नोति पितृयज्ञक्रियाफलम्। हस्तं प्रक्षाल्य गण्डूषं यः पिबेद्भोजनान्तरे। दैवं पित्र्यं तथात्मानं त्रयं स उपघातयेत्। गणान्नं गणिकान्नञ्च यदन्नं ग्रामयाजके। स्त्रीणां प्रथमगर्भेषु भुक्त्वा चान्द्रायणञ्चरेत्। पक्षे वा यदि वा मासे यस्य गेहेऽस्ति न द्विजः। भुक्त्वा दुरात्मनस्तस्य चरेच्चान्द्रायणं व्रतम्। सतीनान्दीक्षितानाञ्च यतीनां व्रतचारिणाम्। एतेषां सूतकञ्चास्ति ऋात्विज्यं कर्म्म कुर्व्वताम्। अजीर्णेऽभ्युदिते वान्ते श्मश्रुकर्म्मणि मैथुने। दुःस्वप्ने दुर्जनस्पर्शे स्नानमेव विधीयते। चैत्यवृक्षं चितिं यूपं शिवनिर्म्माल्यभोजनम्। वेदविक्रयिणं स्पृष्ट्वा सचेलो जलमाविशेत्। अग्न्यगारे गवां गोष्ठे देवब्राह्मणसन्निधौ। स्वाध्याये भोजने पाने पादुके वै विवर्जयेत्। खलक्षेत्रगतं धान्यं कूपवापीषु यत् जलम्। अभोज्यादपि तद्भोज्यं यच्च गोष्ठगतं पयः। यद्वेष्टितशिरा भुङ्क्ते यद्भुङ्क्ते दक्षिणामुखः। सोपानत्कश्च यो भुङ्क्ते तद्वै रक्षांसि भुञ्जते। यातुधानाः पिशाचाश्च राक्षसाः क्रूरकर्म्मिणः। हरन्ति रसमन्नस्य मण्डलेन विवर्जितम्। ब्रह्माद्याश्च सुराः सर्व्वे वशिष्ठाद्या महर्षयः। मण्डलं चोपजीवन्ति ततः कुर्व्वीत मण्डलम्। ब्राह्मणे चतुरस्रं स्यात् त्र्यस्रं वै बाहुजन्मनः। वर्त्तुलन्तु विशः प्रोक्तं शूद्रस्याभ्युक्षणं स्मृतम्। नोत्सङ्गे भाजनं कृत्वा नो पाणौ नैव कर्पटे। नासने न च शय्यायां भुञ्जीत न मलार्द्दितः। धर्म्मशास्त्ररथारूढा वेदखड्गधरा द्विजाः। क्रीडार्थमपि यद्ब्रूयुः स धर्म्मः परमः स्मृतः। रात्रौ दधियुतं द्रव्यं धर्म्मकामो न भक्षयेत्। अन्नतो धर्म्महानिः स्यात् व्याधिभिश्चोपपीड्यते। फाणितं गोरसं तोयं लवणं मधु काञ्जिकम्। हस्तेन ब्राह्मणो दत्त्वा कृच्छ्रं चान्द्रायणं चरेत्। गन्धाभरणमाल्यानि यः प्रयच्छति धर्म्मवित्। स दुर्गन्धिः सदाऽतुष्टो यत्र यत्रोपजायते। नीलीरक्तञ्च यद्वस्त्रं दूरतस्तद्विवर्ज्जयेत्। स्त्रीणां क्रीडार्थसंयोगे शयनीये न दुष्यति। पालनाद्विक्रयाच्चैव तद्वृत्तेरुपजीवनात्। अपवित्रो भवेद्विप्रस्त्रिभिः कृच्छ्रैर्विशुद्ध्यति। स्नानं दानं जपो होमः स्वाध्यायः पितृतर्पणम्। वृथा तस्य महायज्ञा नीलीवासो बिभर्त्ति यः। नीलीरक्तं यदा वस्त्रं द्विजः स्वाङ्गेषु धारयेत्। तन्तुसंघातसंख्याते नरके स वसेद्ध्रुवम्। अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति। अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम्। वैश्यस्य चान्नमेवान्नं शूद्रान्नं रुधिरं स्मृतम्। वैश्वदेवेन होमेन देवताभ्यर्च्चनैर्जपैः। अमृतं तेन विप्रान्नं ऋग्यजुःसामसंस्कृतम्। व्यवहारानुरूपेण न्यायेन च यदर्जितम्। क्षत्रियस्य पयस्तेन प्रजापालनतो भवेत्। कृषिगोरक्षवाणिज्यादन्नमुत्पाद्य यच्छति। सीतायज्ञविधानेन वैश्यान्नं तेन सम्मतम्। अज्ञानतिमिरान्धस्य मद्यपानरतस्य च। रुधिरं तेन शूद्रान्नं वेदमन्त्रविवर्जितम्। न वृथा शपथं कुर्यात् स्वल्पेऽप्यर्थे नरो बुधः। वृथा हि शपथं कुर्व्वन् प्रेत्येह च विनश्यति। कामिनीषु विवाहेषु गवां भुक्ते धनक्षये। ब्राह्मणाभ्युपपत्तौ च शपथे नास्ति पातकम्। सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः। गोवीजकाञ्चनैर्वैश्यं शूद्रं सर्व्वैस्तु पा-

तकैः। अग्निं वाऽहारयेदेनमप्सु चैनं निमज्जयेत्। स्पर्शयेत् पुत्रदाराणां शिरांस्येनञ्च वा पृथक्।" अग्निकमाचारशब्दे ६२२ पृष्ठादौ द्रष्टव्यम्।

स च धर्मो व्याससंहितायाम् ३अ० उक्तो यथा

"नित्यं नैमित्तिकं काम्यमिति कर्म त्रिधा मतम्। त्रिविधं तच्च वक्ष्यामि गृहस्थस्यावधार्यताम्। यामिन्याः पश्चिमे यामे त्यक्तनिद्रो हरिं स्मरेत्। आलोक्य मङ्गलद्रव्यं कर्मावश्यकमाचरेत्। कृतशौचो निषेव्याग्निं दन्तान् प्रक्षाल्य वारिणा। स्नात्वोपास्य द्विजः सन्ध्यां देवादींश्चैव तर्पयेत्। वेदवेदाङ्गशास्त्राणि इतिहासानि चाभ्यसेत्। अध्यापयेच्च सच्छिष्यान् सद्विप्रांश्च द्विजोत्तमः। अलब्धं प्रापयेल्लब्ध्वा क्षणमात्रं समापयेत्। समर्थो हि समर्थेन नाविज्ञातः क्वचिद्वसेत्। सरित्सरःसु वापीषु गर्तप्रस्रवणादिषु। स्नायीत यावदुद्धृत्य पञ्च पिण्डानि वारिणा। तीर्थाभावेऽप्यशक्त्या वा स्नायात्तोयैः समाहृतैः। गृहाङ्गनगतस्तत्र यावदम्बरपीडनम्। स्नानमन्त्रैस्ततः कुर्यात् पावनैश्चापि मार्जयेत्। मन्त्रैः प्राणांस्त्रिरायम्य सौरैश्चार्कं विलोकयेत्। तिष्ठन्, स्थित्वा तु गायत्रीं ततः स्वाध्यायमारभेत्। ऋचाञ्च यजुषां साम्नामथर्वाङ्गिरसामपि। इतिहासपुराणानां वेदोपनिषदां द्विजः। शक्त्या सम्यक् पठेन्नित्यमल्पमप्यासमापनात्। स यज्ञदानतपसामखिलं फलमाप्नुयात्। तस्मादहरहर्वेदं द्विजोऽधीयीत वाग्यतः। धर्मशास्त्रेतिहासादि सर्वेषां शक्तितः पठेत्। कृतस्वाध्यायः प्रथमं तर्पयेच्चाथ देवताः। जान्वा च दक्षिणं दर्भैः प्रागग्रैः सयवैस्तिलैः। एकैकाञ्जलिदानेन प्रकृतिस्थोपवीतकः। समजानुद्वयो ब्रह्मसूत्रधार उदङ्मुखः। तिर्य्यग्दर्भैश्च वामाग्रैर्यवैस्तिलविमिश्रितैः। अम्भोभिरुत्तरक्षिप्तैः कनिष्ठामूलनिर्गतैः। द्वाभ्यां द्वाभ्यामञ्जलिभ्यां मनुष्यांस्तर्पयेत्ततः। दक्षिणाभिमुखः सव्यजान्वा च द्विगुणैः कुशैः। तिलैर्जलैश्च देशिन्या मूलदर्भाद्विनिःसृतैः। दक्षिणांसोपवीतः स्यात् क्रमेणाञ्जलिभिस्त्रिभिः। सन्तर्पयेद्दिव्यपितॄंस्तत्परं च पितॄन् स्वकान्। मातृमातामहांस्तद्वत्त्रीनेवं हि त्रिभिस्त्रिभिः। मातामहानां येऽप्यन्ये गोत्रिणो दाहवर्जिताः। तानेकाञ्जलिदानेन तर्पयेच्च पृथक् पृथक्। असंस्कृतप्रमीता ये प्रेतसंस्कारवर्जिताः। वस्त्रनिष्पीडनाम्भोभिस्तेषामाप्यायनम्भवेत्। अतर्पितेषु पितृषु वस्त्रं निष्पीडयेच्च यः। निराशाः पितरस्तस्य भवन्ति सुरमानुषाः। पयोदर्भस्वधाकारगोत्रनामतिलैर्भवेत्। सुदत्तं तत्पुनस्तेषामेकेनापि वृथा विना। अन्यचित्तेन यद्दत्तं यद्दत्तं विधिवर्जितम्। अनासनस्थितेनापि तज्जलं रुधिरायते। एवं सन्तर्पिताः कामैस्तर्पकांस्तर्पयन्ति च। ब्रह्मविष्णुशिवादित्यमित्रवरुणनामभिः। पूजयेल्लक्षितैर्मन्त्रैर्वैदमन्त्रोक्तदेवताः। उपस्थाय रवेः काष्ठां पूजयित्वा च देवताः। ब्रह्माग्नीन्द्रौषधीजीवविष्णुनामहृतांहसाम्। अपां यत्तेति सत्कारं नमस्कारैः स्वनामभिः। कृत्वा मुखं समालभ्य स्नानमेवं समाचरेत्। ततः प्रविश्य भवनमावसथ्ये हुताशने। पाकयज्ञांश्च चतुरो विदध्याद्विधिवद्द्विजः। अनाहिताग्नेः सभ्याग्निरादायाग्नं हुतं हुतम्। शाकलेन विधानेन जुहुयाल्लौकिकेऽनले। व्यस्ताभिर्व्याहृतिभिश्च समस्ताभिस्ततः परम्। षड्भिर्देवकृतस्येति मन्त्रवद्भिर्यथाक्रमम्। प्राजापत्यं स्विष्टकृतं हुत्वैवं द्वादशाहुतीः। ओङ्कारपूर्वैः स्वाहान्तैस्त्यागः स्विष्टविधानतः। भुवि दर्भान् समास्तीर्य बलिकर्म समाचरेत्। विश्वेभ्यो देवेभ्य इति सर्वभूतेभ्य एव च। भूतानां पतये चेति नमस्कारेण शास्त्रवित्। दद्याद्बलित्रयञ्चाग्ने पितृभ्यश्च स्वधा नमः। पात्रनिर्णेजनं वारि वायव्यां दिशि निःक्षिपेत्। उद्धृत्य षोडशग्रासमात्रमन्नं हुतोक्षितम्। इदमन्नं मनुष्येभ्यो हन्तेत्युक्त्वा समुत्सृजेत्। गोत्रनामस्वधाकारैः पितृभ्यश्चापि शक्तितः। षड्भ्योऽन्नमन्वहं दद्यात् पितृयज्ञविधानतः। वेदादीनां पठेत् किञ्चिदल्पं ब्रह्ममखाप्तये। ततोऽन्यदन्नमादाय निर्गत्य भवनाद्बहिः। काकेभ्यः श्वपचेभ्यश्च प्रक्षिपेद्ग्रासमेव च। उपविश्य गृहद्वारि तिष्ठेद्यावन्मुहूर्त्तकम्। अप्रमत्तोऽतिथिं लिप्सुर्भावशुद्धः प्रतीक्षकः। आगतं दूरतः श्रान्तं भोक्तुकाममकिञ्चनम्। दृष्ट्वा सम्मुखमभ्येत्य सत्कृत्य प्रश्रयार्च्चनैः। पादधावनसम्मानाभ्यञ्जनादिभिरर्चितः। त्रिदिवं प्रापयेत्सद्यो यज्ञस्याभ्यधिकोऽतिथिः। कालागतोऽतिथिर्दृष्टवेदपारो गृहागतः। द्वावेतौ पूजितौ स्वर्गं नयतोऽधस्त्वपूजितौ। विशाद्यस्नातकश्चाग्न्याचार्यसुहृदृत्विजः। अर्घ्या भवन्ति धर्मेण प्रतिवर्षं गृहागताः। गृहागताय सत्कृत्य श्रोत्रियाय यथाविधि। भक्त्योपकल्पयेदेकं महाभागं विसर्जयेत्। विसर्जयेदनुव्रज्य सुतृप्तान्श्रोत्रियातिथीन्। मित्रमातुलसम्बन्धि-

बान्धवान् समुपागतान्। भोजयेद्गृहिणोभिक्षां सत्कृतां भिक्षुकोऽर्हति। स्वादन्नमन्नवत्स्वादु दद्याद्गन्धरसान्वितम्। गर्भिण्यातुरभृत्येषु बालवृद्धातुरादिषु। बुभुक्षितेषु भुञ्जानो गृहस्थोऽश्नाति किल्बिषम्। नाद्यादन्नं चैव पारक्यं कदाचिदनिमन्त्रितः। निमन्त्रितोऽपि निन्द्येन प्रत्याख्यानं द्विजोऽर्हति। शूद्राभिशस्तवार्धुष्यवाग्दुष्टक्रूरतस्कराः। क्रुद्धापविद्धक्लीबवधबन्धनजीविनः। शैलूषशौण्डिकोन्मत्तव्रात्यव्रतच्युताः। नग्ननास्तिकनिर्लज्जपिशुनव्यसनान्विताः। कदर्यस्त्रीजितानार्यपरवादकृता नराः। अनीशाः कीर्तिमन्तोऽपि राजदेवस्वहारकाः। शयनासनसंसर्गवृत्तकर्मादिदूषिताः। अश्रद्दधानाः पतिता भ्रष्टाचारादयश्च ये। अभोज्यान्नाः स्युरन्नादो यस्य यः स्यात् स तत्समः। नापितान्वयमित्रार्द्धसीरिणो दासगोपकाः। शूद्राणामप्यमीषान्तु भुक्त्वान्नं नैव दुष्यति। धर्मेणान्योन्यभोज्यान्ना द्विजास्तु विदितान्वयाः। स्ववृत्तोपार्जितं मेध्यमाकरस्थं यथाविधम्। अश्वलीढमगोघ्रातमस्पृष्टं शूद्रवायसैः। अनुच्छिष्टमदुष्टमपर्युषितमेव च। अम्लानमश्रमकाद्यमाद्यं नित्यं सुसंस्कृतम्। कृशराऽपूपसंयावपायसं शष्कुलीति च। नाश्नीयाद्ब्राह्मणोमांसमनियुक्तः कथञ्चन। क्रतौ श्राद्धे नियुक्तो वा अनश्नन् पतति द्विजः। मृगयोपार्जितं मांसमभ्यर्च्य पितृदेवताः। क्षत्रियो, द्वोनयोर्वा तत् क्रीत्वा वैश्योऽपि धर्मतः। द्विजोऽजग्ध्वा वृथामांसं हत्वाप्यविधिना पशून्। निरयेष्वक्षयं वासमाप्नोत्याचन्द्रतारकम्। सर्वान् कामान् समासाद्य फलमश्वमखस्य च। मुनिधान्यमवाप्नोति गृहस्थो मांसवर्जनात्। द्विजैर्भोज्यानि गव्यानि माहिषाणि पयांसि च। पलाण्डुलशुनं तद्वन्नारङ्गमूलकमेव च। गृञ्जनारुणवृक्षाख्यगजतुगर्भफलानि च। अकालकुसुमादीनि द्विजोजग्ध्वैन्दवं चरेत्। वाग्दूषितमविज्ञातमन्यपीडितकार्यपि। भूतेभ्योऽन्नमदत्त्वा च तदन्नं व्यहितोदहेत्। हैमराजतकांस्येषु पात्रेष्वद्यात् सदा गृही। तदभावे साधुगन्धलोध्रद्रुमलतासु च। पलाशपद्मपत्रेषु गृहस्थोभोक्तुमर्हति। अभ्युक्ष्यान्नं नमस्कारैर्भुवि दद्याद्बलित्रयम्। भूपतये भुवः पतये भूतानां पतये तथा। अपः प्राश्य ततः पश्चात् पञ्चप्राणाहुतिक्रमात्। स्वाहाकारेण जुहुयाच्छेषमद्याद्यथासुखम्। अनन्यचित्तोभुञ्जीत वाग्यतोऽन्नमकुत्सयन्। आ तृप्तेरन्नमश्नीयादक्षुण्णं पात्रमुत्सृजेत्। उच्छिष्टमन्नमुद्धृत्य ग्रासमेकं भुवि क्षिपेत्। आचान्तः साधुसङ्गेन सद्विद्यापठनेन च। वृत्तवृत्तकथाभिश्च शेषाहमतिवाहयेत्। सायं सन्ध्यामुपासीत हुत्वाग्निं भृत्यसंयुतः। आपोशानक्रियापूर्वमश्नीयादन्वहं द्विजः। सायमप्यतिथिः पूज्यो होमकालागतोऽनिशम्। श्रद्धया शक्तितोनित्यं श्रुतं हन्यादपूजितः। नातितृप्त उपस्पृश्य प्रक्षाल्य चरणौ शुचिः। अप्रत्यगुत्तरशिराः शयीत शयने शुभे। शक्तिमानुदिते काले स्नानं सन्ध्यां न हापयेत्। ब्राह्मे मुहूर्त्ते चोत्थाय चिन्तयेद्धितमात्मनः। शक्तिमान् मतिमान् नित्यं वृत्तमेतत् समाचरेत्”।

बृहत्पराशरे तु तत्कृत्यं विस्तरतोविधानतश्चोक्तं विस्तरभयात् नोद्धृतम्।

दिवसीयमुहूर्त्तभेदे गृहस्थकर्त्तव्यधर्म्मभेदमाह दक्षः।

“प्रातरुत्थाय कर्त्तव्यं यद्द्विजेन दिने दिने। तत् सर्वं संप्रवक्ष्यामि द्विजानामुपकारकम्। उदयास्तमयं यावन्न विप्रः क्षणिकोभवेत्। नित्यनैमित्तिकैर्युक्तः काम्यैश्चान्यैरगर्हितैः। यः स्वकर्म परित्यज्य यदन्यत् कुरुते द्विजः। अज्ञानाद्यदि वा मोहात् स तेन पतितो भवेत्। दिवसस्याद्यभागे तु कृत्यं तस्योपदिश्यते। द्वितीये च तृतीये च चतुर्थे पञ्चमे तथा। षष्ठे च सप्तमे चैव अष्टमे च पृथक् पृथक्। विभागेष्वेषु यत्कर्म तत्प्रवक्ष्याम्यशेषतः। उषःकाले तु संप्राप्ते शौचं कृत्वा यथार्थवत्। ततः स्नानं प्रकुर्वीत दन्तधावनपूर्वकम्। अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः। स्रवत्येव दिवा रात्रौ प्रातःस्नानं विशोधनम्। क्लिद्यन्ति हि प्रसुप्तस्य इन्द्रियाणि स्रवन्ति च। अङ्गानि समतां यान्ति उत्तमान्यधमैः सह। नानास्वेदसमाकीर्णः शयनादुत्थितः पुमान्। अस्नात्वा नाचरेत् कर्म जपहोमादि किञ्चन। प्रातरुत्थाय यो विप्रः प्रातः स्नायी भवेत् सदा। समस्तजन्मजं पापं त्रिभिर्वर्षैर्व्यपोहति। उषस्युषसि यत् स्नानं सन्ध्यायामुदिते रवौ। प्राजापत्येन तत्तुल्यं महापातकनाशनम्। प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टकरं हि तत्। सर्वमर्हति पूतात्मा प्रातःस्नायी जपादिकम्। स्नानादनन्तरं तावदुपस्पर्शनमुच्यते। अनेन तु विधानेन आचान्तः शुचितामियात्। प्रक्षाल्य पादौ हस्तौ च त्रिः पिबेदम्बु वीक्षितम्।

संहत्याङ्गुष्ठमूलेन द्विः प्रमृज्यात्ततोमुखम्। संहत्य तिसृभिः पूर्व्वमास्यमेवमुपस्पृशेत्। ततः पादौ समभ्युक्ष्य अङ्गानि समुपस्पृशेत्। अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम्। अङ्गुष्ठानामिकाभ्याञ्च चक्षुःश्रोत्रे पुनः पुनः। कनिष्ठाङ्गुष्ठया नाभिं हृदयञ्च तलेन वै। सर्व्वाभिस्तु शिरः पश्चाद्बाहू चाग्रेण संस्पृशेत्। सन्ध्यायाञ्च प्रभाते च मध्याह्ने च ततः पुनः। सन्ध्यां नोपासते यस्तु ब्राह्मणोहि विशेषतः। स जीवन्नेव शूद्रः स्यान्मृतः श्वा चैव जायते। सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्व्वकर्म्मसु। यदन्यत् कुरुते कर्म्म न तस्य फलमश्नुते। सन्ध्याकर्म्मावसाने तु स्वयं होमोविधीयते। स्वयं होमे फलं यत्तु तदन्येन न जायते। ऋत्विक् पुत्त्रोगुरुर्भ्राता भागिनेयोऽथ विट्पतिः। एभिरेव हुतं यत्तु तद्धुतं स्वयमेव हि। देवकार्य्यं ततः कृत्वा गुरुमङ्गलवीक्षणम्। देवकार्य्याणि पूर्व्वाह्णे मनुष्याणाञ्च मध्यमे। पितॄणामपराह्णे च कार्य्याण्येतानि यत्नतः। पौर्व्वाह्णिकन्तु यत् कर्म्म यदि तत् सायमाचरेत्। न तस्य फलमाप्नोति बन्ध्यास्त्रीमैथुनं यथा। दिवसस्याद्यभागे तु सर्व्वमेतद्विधीयते। द्वितीये च तथा भागे वेदाभ्यासोविधीयते। वेदाभ्यासो हि विप्राणां परमं तप उच्यते। ब्रह्मयज्ञः स विज्ञेयः षडङ्गसहितस्तु यः। वेदस्वीकरणं पूर्व्वं विचारोऽभ्यसनं जपः। ततोदानञ्च शिष्येभ्यो वेदाभ्यासो हि पञ्चधा। समित्पुष्पकुशादीनां स कालः समुदाहृतः। तृतीये चैव भागे तु पोष्यवर्गार्थसाधनम्। पिता माता गुरुर्भार्य्या प्रजा दीनाः समाश्रिताः। अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्ग उदाहृतः। ज्ञातिर्बन्धुजनः क्षीणस्तथाऽनाथः समाश्रितः। अन्येऽप्यधनयुक्ताश्च पोष्यवर्ग उदाहृतः। भरणं पोष्यवर्गस्य प्रशस्तं स्वर्गसाधनम्। नरकं पीडने चास्य तस्माद्यत्नेन तं भरेत्। सार्व्वभौतिकमन्नाद्यं कर्त्तव्यन्तु विशेषतः। ज्ञानविद्भ्यः प्रदातव्यमन्यथा नरकं व्रजेत्। स जीवति य एवैकोबहुभिश्चोपजीव्यते। जीवन्तोऽमृतकाश्चान्ये य आत्मम्भरयो नराः। बह्वर्थे जीव्यते कश्चित् कुटुम्बार्थे तथा परः। आत्मार्थेऽन्यो न शक्नोति स्वोदरेणापि दुःखितः। दीनानाथविशिष्टेभ्योदातव्यं भूतिमिच्छता। अदत्तदाना जायन्ते परभाग्योपजीविनः। यद्ददाति विशिष्टेभ्यो यज्जुहोति दिने दिने। तत्तु वित्तमहं मन्ये शेषं कस्यापि रक्षति। चतुर्थे च तथा भागे स्नानार्थं मृदमाहरेत्। तिलपुष्पकुशादीनि स्नानञ्चाकृत्रिमे जले। नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते। तेषां मध्ये तु यन्नित्यं तत्पुनर्भिद्यते त्रिधा। मलापकर्षणं पश्चान्मन्त्रवत्तु जले स्मृतम्। सन्ध्यास्नानमुभाभ्याञ्च स्नानभेदाः प्रकीर्त्तिताः। मार्ज्जनं जलमध्ये तु प्राणायामोयतस्ततः। उपस्थानं ततः पश्चात् सावित्र्या जप उच्यते। सविता देवता यस्या मुखमग्निस्त्रिधा स्थितः। विश्वामित्र ऋषिश्छन्दो गायत्री सा विशिष्यते। पञ्चमे च तथाभागे संविभागो यथार्हतः। पितृदेवमनुष्याणां कीटानाञ्चोपदिश्यते। देवैश्चैव मनुष्यैश्च तिर्य्यग्भिश्चोपजीव्यते। गृहस्थः प्रत्यहं यस्मात्तस्माज्ज्येष्ठाश्रमी गृही। त्रयाणामाश्रमाणान्तु गृहस्थो योनिरुच्यते। तेनैव सीदमानेन सीदन्तीहेतरे त्रयः। मूलप्राणो भवेत् स्कन्दः स्कन्धाच्छाखाः सपल्लवाः। मूलेनैव विनष्टेन सर्व्वमेतद्विनश्यति। तस्मात् सर्व्वप्रयत्नेन रक्षितव्यो गृहाश्रमी। राज्ञा चान्यैस्त्रिभिः पूज्यो माननीयश्च सर्व्वदा। गृहस्थोऽपि क्रियायुक्तो न गृहेण गृहाश्रमी। न चैव पुत्त्रदारेण स्वकर्म्मपरिवर्जितः। अस्नात्वा चाप्यहुत्वा चाजप्त्वाऽदत्त्वा च मानवः। देवादीनामृणी भूत्वा नरकं प्रतिपद्यते। एक एव हि भुङ्क्तेऽन्नमपरोऽन्नेन भुज्यते। न भुज्यते सः एवैको यो भुङ्क्तेऽन्नं यथाविकम्। विभागशीलो यो नित्यं क्षमायुक्तोदयापरः। देवतातिथिभक्तश्च गृहस्थः स तु धार्म्मिकः। दया लज्जा क्षमा श्रद्धा प्रज्ञा योगः कृतज्ञता। एते यस्य गुणाः सन्ति स गृही मुख्य उच्यते। संविभागं ततः कृत्वा गृहस्थः शेषभुग्भवेत्। भुक्त्वा तु सुखमास्थाय तदन्नं परिणामयेत्। इतिहासपुराणाद्यैः षष्ठञ्च सप्तमं नयेत्। अष्टमे लोकयात्रा तु बहिः सन्ध्या ततः पुनः। होमो भोजनकञ्चैव यच्चान्यद्गृहकृत्यकम्। कृत्वा चैवं ततः पश्चात् स्वाध्यायं किञ्चिदाचरेत्। प्रदोषपश्चिमौ यामौ वेदाभ्यासेन तौ नयेत्। यामद्वयंशयानो हि ब्रह्मभूयाय कल्पते। नैमित्तिकानि काम्यानि निपतन्ति यथा यथा। तथा तथैव कार्य्याणि न कालस्तु विधीयते। अस्मिन्नेव प्रयुञ्जानो ह्यस्मिन्नेव तु लीयते। तस्मात् सर्व्वप्रयत्नेन कर्त्तव्यं सुखमिच्छता। [illegible] मध्यमौ यामौ हुतशेषं हविश्च यत्। भुञ्जानश्च शयानश्च ब्राह्मणो नावसीदति।

"कलौ विशेषस्तु गृहस्थकर्त्तव्यकृष्यादिकं बृहत्पराशरेणोक्तं कश्चिच्छक्येऽनुक्तत्वात् प्रसङ्गादिहोच्यते यथा बृ०

"अतःपरं गृहस्थस्य कर्माचारं कलौ युगे। धर्मं साधारणं साक्षाच्चतुर्वर्णे क्रमागतम्। युष्माकं सम्प्रवक्ष्यामि पाराशरप्रचोदितम्। षट्कर्मसहितो विप्रः कृषिवृत्तिं समाश्रयेत्। हीनाङ्गं व्याधिसंयुक्तं प्राणहीनञ्च दुर्बलम्। क्षुद्युक्तं तृषितं श्रान्तमनड्वाहं न वाहयेत्। स्थिराङ्गं नीरुजं तृप्तं शान्तं षण्डविवर्जितम्। अदृष्टं सबलप्राणमनड्वाहं तु वाहयेत्। वाहयेद्दिवसस्यार्द्धं पश्चात् स्नानं समाचरेत्। कृशगवैर्न कृषिं कुर्यात्सर्वथा धेनुसंग्रहः। बन्धनं पालनं रक्षां द्विजः कुर्याद्गृही गवाम्। वत्साश्च यत्नतो रक्ष्या वर्द्धन्ते ते यथाक्रमम्। न दूरे तास्तु मोक्तव्याश्चरणाय कदाचन। दूरे गावश्चरन्त्यो वै न भवन्ति शुभायनाः। प्रातरेव हि दोग्धव्या दुह्याः सायं तथा गृही। दोग्धुर्विपर्यये नैव वर्द्धन्ते ताः कदाचन। अनादेयतृणं जग्ध्वा स्रवन्त्यनुदिनं पयः। तुष्टिकृद्देवतादीनां पूज्या गावः कथन्न ताः। यस्याः शिरसि ब्रह्मास्ते स्कन्धदेशे शिवः स्मृतः। पृष्ठे विष्णुस्तथा तस्थौ श्रुतयश्चरणेषु तु। या अन्या देवताः काश्चित्तस्या लोमसु ताः स्थिताः। सर्वदेवमयी गौस्तु तुष्येत्तद्भक्तितो हरिः। हरति स्पर्शनात्तापं पयसा पोषयन्ति याः। प्रापयन्ति दिवं दत्ताः पुण्या गावः कथन्न ताः। यच्छफाहतभूमेस्तु उद्धताः पांशुसंस्पृशः। प्रीणयेत् पुरुषस्यैनो वन्द्या गावः कथन्न ताः। शकृन्मूत्रं हि यस्यास्तु पीतं पुनाति पातकम्। किमपूज्यं हि तस्या गोरिति पाराशरोऽब्रवीत्। गौरवत्सा न दोग्धव्या न चैव गर्भसम्भिनी। प्रसूता च दशाहार्वाग्दोग्धा चेन्नरकं व्रजेत्। दुर्बला व्याधिसंयुक्ता पुष्पिता या द्विवत्सभूः। सा साधुभिर्न दोग्धव्या वर्णिभिः सुखमीप्सुभिः। कुलान्ते पुष्पिता गावः कुलान्ते बहुवत्सलाः। कुलान्ते चलचित्ता स्त्री कुलान्ते बन्धुविग्रहः। एकत्र पृथिवी सर्वा सशैलवनकानना। तथा गौर्ज्यायसी साक्षादेकत्रोभयतोमुखी। यथोक्तविधिना चैता वर्णैः पाल्यास्तु पूजिताः। पालयेत्पूजयन्नेताः स प्रेत्येह च मोदते। दक्षिणाभिमुखा गाव उत्तराभिमुखा अपि। बन्धनीयास्तथैतास्तु न च प्राक्पश्चिमामुखाः। गोवृषवाजिशालायां सुतीक्ष्णं लोहदात्रकम्। स्थाप्यं तु सर्वदा तस्यां गवि तृप्तविमोक्षणात्। गावो देयाः सदा रक्ष्याः पोष्याः पाल्याश्च सर्वदा। ताडयन्ति च ये पापा ये चाकर्षन्ति ता नराः। नरके पच्यन्तेऽङ्गानि श्वासेन च प्रपीडिताः। सपत्रचर्मदण्डेन मृदु तासां निवर्त्तनम्। गच्छ गच्छेति तां ब्रूयात् मा मा भैरिति वारयेत्। संस्पृशन् गां नमस्कृत्य कुर्यात्तान्तु प्रदक्षिणाम्। प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा। तृणोदकादिसंयुक्तं यः प्रदद्याद्गवाह्निकम्। सोऽश्वमेधसमं पुण्यं लभते नात्र संशयः। पृथिव्यां यानि तीर्थानि समुद्राश्च सरांसि च। गवां शृङ्गोदकस्नाने कलां नार्हन्ति षोडशीम्। कुतस्तेषां हि पापानि येषां गृहमलङ्कृतम्। सततं बालवत्साभिर्गोभिः स्त्रीभिरिव स्वयम्। ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम्। तिष्ठन्त्येकत्र मन्त्राणि हविरेकत्र तिष्ठति। गोभिर्यज्ञाः प्रवर्त्तन्ते गोभिर्देवाः प्रतिष्ठिताः। गोभिर्वेदाः समुद्गीर्णाः सषडङ्गपदाः क्रमात्। सौरभेयास्तु तस्याग्रे पृष्ठतोऽप्यस्य ताः स्थिताः। वसन्ति हृदये नित्यन्तासां मध्ये वसन्ति ये। ते पुण्यपुरुषाः सौख्यं नाकेऽपि दुर्लभाश्च ते। शृङ्गमूले स्थितो ब्रह्मा शृङ्गमूले तु केशवः। शृङ्गाग्रे शङ्करं विद्यात्त्रयोदेवाः प्रतिष्ठिताः। शृङ्गाग्रे सर्वतीर्थानि स्थावराणि चराणि च। सर्वे देवाः स्थिता देहे सर्वदेवमयी हि गौः। ललाटाग्रे स्थिता देवी नासामध्ये तु षण्मुखः। कम्बलाश्वतरौ नागौ तत्कर्णौ यौ व्यवस्थितौ। स्थितौ तस्याश्च सौरभ्याश्चक्षुषोः शशिभास्करौ। दन्तेषु वसवस्त्वष्टौ जिह्वायां वरुणः स्थितः। सरस्वती च हुङ्कारे यमयक्षौ च गण्डयोः। ऋषयो रोमकूपेषु प्रस्रावे जाह्नवीजलम्। कालिन्दी गोमये तस्या अपरा देवतास्तथा। अष्टविंशतिदेवानां कोट्यो लोमसु ताः स्थिताः। उदरे गार्हपत्योऽग्निर्हृदये दक्षिणस्तथा। मुखे चाहवनीयस्तु चावसथ्यस्तु कुक्षिषु। एवं यो वर्त्तते गोषु ताडने क्रोधवर्जितः। महतीं श्रियमाप्नोति स्वर्गलोके महीयते। कुल्यं तस्या न लङ्घेत पूतिगन्धं न वर्जयेत्। यावत्पिबति तद्गन्धं तावत्पुण्यं प्रवर्द्धते। यो गां पयस्विनीं दद्यात्तरुणीं वत्ससंयुताम्। शिवस्यायतनं दत्तं दत्तं तेन तु विश्वकम्। उक्ता गौर्वैधसा सृष्टा तस्य ह्युत्पादनाय च। तैरुत्पादितशस्येन सर्वमेतद्धि धार्यते। यश्चैतान् पालयेत्

यत्नाद्वर्द्धयेच्चैव यत्नतः । जगन्ति तेन सर्व्वाणि साक्षात् स्युः पालितानि च । यावद्गोपालने पुण्यमुक्तं पूर्व्वमनीषिभिः । उक्ष्णोऽपि पालने तेषां फलं दशगुणं भवेत् । जगदेतद्धृतं सर्व्वमनडुद्भिश्चराचरम् । वृष ईहावता रक्ष्यः पालनीयस्तु सर्व्वदा । धर्म्मोऽयं भूतले साक्षाद्ब्रह्मणा हितकारिणा । त्रैलोक्यं धारणायालमन्नानाञ्च प्रसूयते । अनादेयानि वासानि विध्वंसति सकामतः । भ्रमति भूतले दूरसुखागङ्को न पूजयेत् । उत्पादयन्ति शस्यानि मर्द्दयन्ति वहन्ति च । आनयन्ति दवीयस्यमुक्ष्णोवा कोऽधिको भुवि । स्कन्धेन दूराच्च वहन्ति भारं तृणादि किञ्चिच्च च खादयन्ति । स्वीयेन जीवेन परस्य जीवं रक्षन्ति पुष्णन्ति विवर्द्धयन्ति । पुण्यास्तु गावो वसुधातलेऽमी बिभ्रत्यहो पृष्ठगगर्भभारम् । भारः पृथिव्या दशताडिताया एकस्य चोक्ष्णो ह्यपि साधुवाचः । एकेन दत्तेन वृषेण येन दत्ता भवेयुर्द्दश सौरभेयाः । माहेश्वरीयं धरणी समाना तस्माद्वृषात् पूजितमस्ति नान्यत् । उत्पाद्य शस्यानि तृणञ्चरन्ति तदेव भूयः सकलं वहन्ति । न भारखिन्नाः प्रवदन्ति किञ्चिदहो वृषाणामार्य्यति जीवलोकः । तृतीयेऽह्नि चतुर्थे वा यदेवोक्षाऽदृढोभवेत् । तदा नसा तु भेत्तव्या नैव प्रागदुर्ब्बलस्य च । नासावेधनकीलन्तु खादिरं शाल शैंशपम् । द्वादशाङ्गुलकञ्चार्य्यन्तज्ज्ञैस्त्रीणि समानि वा । शाला द्विजानां वृषगोहयानां तां याम्यदिग्द्वारवतीं विदध्यात् । सौम्या ककुब्द्वारवतीं शुभान्तेषां शमिच्छन् हृतपाप्मनश्च । गावो वृषो वा हयहस्तिनो वा अन्येऽपि सर्व्वे पशवो द्विजेन्द्राः । याम्यां मुखा दिङ्मुखमुत्तरादिङ्मुखांशकास्ते खलु बन्धनीयाः । शालाप्रवेशे वृषगोपशूनां राजापि यत्नाद्धयकुञ्जराणाम् । होमञ्च सप्तार्च्चिषि शास्त्रयुक्तं कुर्य्याद्विधिज्ञो द्विजपूजनञ्च । लाङ्गलं संप्रवक्ष्यामि यत्काष्ठं यत्प्रमाणतः । हलीशायास्तथामानं प्रतोदस्य युगस्य च । चत्वारिंशत्तथाचाष्टावङ्गुलानि कुहः स्मृतः । अथार्द्धमङ्गुलैर्भव्यं हलीशावेधतश्च यः । षोडशैव तु तस्याधः षड्विंशतिस्तथोपरि । वेधस्तथा च कर्त्तव्यः प्रमाणेन षडङ्गुलः । अष्टाङ्गुलमुरस्तस्य वेधादूर्द्ध्वं प्रकल्पयेत् । ग्रीवा दशाङ्गुला चोर्द्ध्वं हस्तग्राही ततः स्मृतः । अङ्गुलैश्चाष्टभिस्तत् स्याद्वेधः स्यात् प्रतिहारकः । तस्याधस्ताद्यश्चत्वारि स वेधश्चतुरङ्गुलः ।

शार्व्वतस्त्वैः शुभः कार्य्यस्तद्वेधस्त्र्यङ्गुलो भवेत् । पञ्चाङ्गुलमुरस्तस्याः सीरस्येति त्रिभाजनम् । पृथुत्वं शिरसोधार्य्यं हस्ततलप्रमाणकम् । अङ्गुलानि तथा चाष्टौ उरसः पृथुता स्मृता । बन्धाद्बहिः प्रतोहारी षट्‌त्रिंशदङ्गुला भवेत् । सुतीक्ष्णलोहफालस्य सुक्षादामादिदारकत् । न सीरं क्षीरवृक्षस्य न विल्वपिचुमर्द्दयोः । इत्यादीनां हि कुर्व्वाणो न नन्दति चिरं गृही । प्राञ्जला सप्तहस्ता तु हलीशा विदुषां मता । तस्या वेधः सुवर्णायाः कार्य्यौ नववितस्तिभिः । मूलाग्रयोर्न तत्कुर्य्यात् कीर्त्तिघ्नौ तौ प्रकीर्त्तितौ । प्रमादतस्तु ताः कुर्व्वन् सशस्यो नश्यते गृही । नीचोच्चवृषमानेन तज्ज्ञास्तां प्रवदन्ति हि । चतुर्हस्तं युगं कार्य्यं स्कन्धस्थानेऽर्द्धचन्द्रवत् । मेषशृङ्ग्याः कदम्बस्य शालाधन्यतमस्य च । सम्या वेधाद्बहिः कार्य्या दशाङ्गुलप्रमाणिका । तन्माने च प्रशाली च तदन्तरदशाङ्गुलम् । प्रतोदोविषमपर्व्वैर्नैणवस्य चतुःकरः । तदग्रे तु प्रकर्त्तव्यं यथाकारं तु लोहवत् । हीनातिरिक्तं कर्त्तव्यं नैव किञ्चित्प्रमाणतः । कुर्य्यादनडुहां दैन्याद्दैन्यात् नरकं व्रजेत् । यथाभीष्टं यथा शोभं वाहकस्य प्रमाणतः । भूमेश्च कर्षणायालं तज्ज्ञाः सर्व्वं वदन्ति हि । योजनं तु हलस्याथ प्रवक्ष्यामि यथा तथा । श्रेष्ठनक्षत्रसंयुक्ते पुण्येऽह्नि तद्विधीयते । यत्र दिने तु बुध्येत तत्र कार्य्यं विजानता । यत्र कृत्यं हितं चापि पुण्यं वा मनसि स्मरेत् । तत्र विद्वान् द्विजश्रेष्ठः पुण्येऽह्नि तद्धि कारयेत् । मातृश्राद्धं द्विजः कृत्वा यथोक्तविधिना गृही । द्रव्यकालानुसारेण कुर्व्वतो धर्म्मतः कृषिम् । प्रोक्षयन् मण्डलं पुष्पधूपदीपैः समर्च्चयेत् । इन्द्राय च तथाश्विभ्यां मरुद्भ्यश्च यथा द्विजः । कुर्य्याद्बलिं हुतिं विद्वान् उदकानाञ्चयाय च । तथा कुमार्य्यै सीतायै अनुमत्यै तथा बलिम् । नमः स्वाहेति मन्त्रेण कामयन्नात्मनः शुभम् । दधिगन्धाक्षतैः पुष्पैः शमीपत्रैस्तिलैस्तथा । संघृष्य सीरफालाग्रे हेम्ना वा रजतेन वा । प्रलिप्य मधुसर्पिर्भ्यां कुर्य्याच्चैव प्रदक्षिणम् । अथोक्ष्णो मण्डलं कुर्य्यात् कृत्वा सीरप्रवाहनम् । पुष्पं लाङ्गलकल्याणं कल्याणाय नमोऽस्त्विति । सीतायाः स्थापनं कुर्य्यात् पाराशरऋषिं स्मरेत् । सीतां युञ्जत इत्याद्यैर्मन्त्रैः सीरं प्रवाहयेत् । दधिदूर्व्वाक्षतैः पुष्पैः शमीपत्रैश्च पुष्कलैः । सीतां पूज्य ततो भक्तोरत्नवस्त्रैर्विषाणकैः । सप्त धान्यानि चादाय प्रोक्ष्य पूर्व्वमुखो

हली । तानि दत्त्वा खलक्षेत्रे किरन् भूमौ कृषेद्द्विजः । न यवैर्न तिलैर्हीनं द्विजः कुर्य्याच्च कर्षणम् । तद्विहीनन्तु कुर्वाणं न प्रशंसन्ति देवताः । तिलमात्रच्युतं तोयं दक्षिणेनास्यतेर्द्दिशि । तेन तृप्यन्ति पितरो यावच्च तिलविक्रयः । न विक्रीय तिलान् यस्तु तर्पयेत्सर्व्वदेवताः । विमुच्य पितरस्तस्य प्रयान्तीव तिलैः सह । उषाजलं यवस्तम्बपत्रेभ्यो भूतले पतत् । पयोदविहतायैस्तु तर्पयेत्सर्व्वदेवताः । देवपर्ज्जन्यभूसीरयोगात् कृषिः प्रजायते । व्यापारात् पुरुषस्यापि तस्मात्तस्योद्यतो भवेत् । शालीन् भूशणकार्पासं वार्त्ताकुप्रभृतीनि च । वापयेत्सर्व्वबीजानि सर्व्ववापी न सीदति । चन्द्रक्षये पतिर्विप्रो यो युनक्ति वृषान् क्वचित् । तत्पश्च दशवर्षाणि त्यजन्ति पितरो हि तम् । चन्द्रक्षये द्विजो विद्वान् यो भुङ्क्ते तु पराशनम् । भोक्तुर्मासार्ज्जितं पुण्यं भवेदन्नवतस्तु तत् । चन्द्रार्कयोस्तु संयोगे कुर्य्याद्यः स्त्रीनिषेवणम् । सरेतोभोजिनस्तस्य षण्मासं पितरः स्थिताः । चन्द्रक्षये च यः कुर्य्यात्तरुस्तरुनिकृन्तनम् । तत्पर्णसंख्यया तस्य भवन्ति ब्रह्महत्यकाः । वनस्पतिगते सोमे योऽ पच्चानं व्रजेन्नरः । प्रभ्रष्टद्विजकर्माणं तं त्यजन्त्यमरादयः । वासांसीन्दुक्षये यो रजकस्यामतिः क्षिपेत् । पिबन्ति पितरस्तस्य मासं वस्त्रजलन्तु तत् । सोमक्षये द्विजो याति तत्कामस्तु हुताशनम् । तदेव पितृपापाग्निदग्धो नरकमाविशेत् । अष्टमी कामभोगेन षष्ठी तैलोपभोगतः । कुहूस्तु दन्तकाष्ठेन हिनस्त्यासप्तमं कुलम् । चन्द्राप्रतीतौ पुरुषस्तु दैवादद्यादसत्या यदि दन्तकाष्ठम् । सुराधिराजः सहनस्तु तेन घातः कृतः स्यात्पितृदेवतानाम् । तस्माद्यत्नाद्विधाणानि गावश्चैव वृषास्तथा । चरणाय विसृज्यन्ते आगतान्निशि भोजयेत् । य उत्पाद्येह शस्यानि सर्व्वाणि तृणचारिणः । जनमुत्तं हतं यैस्तु पूज्यन्ते किन्न ते वृषाः । येनैकेन प्रदत्तेन दत्तं गोदशकम्भवेत् । यद्रूपेण स्थितो धर्म्मः पूज्यन्ते किन्न ते वृषाः । पाल्या हि यत्नतस्ते वै वाहनीया यथाविधि । स याति नरकं घोरं यो वाहयत्यपालयन् । नाधिकाङ्गो न हीनाङ्गः पुष्टिताङ्गो न दूषितः । वाहनीयो हि शूद्रेण वाहयन् क्षयमाप्नुयात् । वर्ज्जनीयादृष्टदोषा गावो वै दोहने नरैः । पाल्या वै यत्नतः सर्व्वे पालयन् शुभमाप्नुयात् । अन्नार्थमेतान् वृषभान् ससर्ज्ज परमेश्वरः । अन्ने नाप्यायते सर्व्वं त्रैलोक्यं सचराचरम् । अग्निर्ज्ज्वलति चान्नार्थे वाति चान्नाय मारुतः । गृह्णाति चाम्भसां सूर्य्यो रसमन्नाय रश्मिभिः । अन्नं प्राणो बलं चान्नमन्नाज्जीवितमुच्यते । अन्नं सर्व्वस्य चाधारः सर्व्वमन्ने प्रतिष्ठितम् । सुरादीनां हि सर्व्वेषामन्नं वीजं परं स्थितम् । तस्मादन्नात्परं तत्त्वं न भूतं न भविष्यति । द्यौः पुमान् धरणी नारी अम्भोवीजन्दिवश्च्युतम् । द्युधात्रीतोयसंयोगादन्नादीनां हि सम्भवः । आपोमूलं हि सर्व्वस्य सर्व्वमप्सु प्रतिष्ठितम् । आपोऽमृतरसो ह्याप आपः शुक्रं बलं महः । सर्व्वस्य वीजमापो वै सर्व्वमद्भिः समावृतम् । सद्य आप्यायना ह्यापः आपो ह्येवतराह्यतः । किञ्चित्कालं विनाऽन्नाद्यैर्जीवन्ति मनुजादयः । न जीवन्ति विनाप्यद्भिस्तस्मादापोऽमृतं स्मृतम् । दत्तानि चाद्भिरेतस्यां किं न दत्तं क्षितौ भवेत् । तथान्नेन प्रदत्तेन सर्व्वं दत्तं भवेदिह । अतोऽन्नार्थभावेन कर्त्तव्यं कर्षणं द्विजैः । यथोक्तेन विधानेन लाङ्गलादिप्रयोजनम् । सीते ! सौम्ये ! कुमारि ! त्वं देवि ! देवार्च्चिते ! श्रिये । मत्कृता च यथासिद्धा तथा मे सिद्धिदा भव । मकत्कृतोर्विना नाम्ना सीतायाः स्थापनं विना । विनाप्यक्षोरक्षणार्थं सर्व्वं हरति राघवः । वापने लवने क्षेत्रे खले सन्नीप्रवाहणे । एष एव विधिर्ज्ञेयो धान्यानाञ्च प्रवेशने । देवायतनोद्यानबिपानस्थानगोव्रजम् । सीमाश्मशानभूमिञ्च वृक्षच्छायाश्रितां तथा । भूमिं निखातयूपाञ्च शयनस्थानमेव च । अन्यामपि हि चायाह्रां न कर्षेत् कृषिकृत् धराम् । ऊषरां वाहयेद्भूमिं वल्मीकककरीहताम् । वाहयेन्नाप्रमत्तश्च न नदीपुलिनं तथा । यद्यसौ वाहयेल्लोभात्तद्वाह्यापि हि मानवः । क्षीयते सोऽचिरात्पापात् सपुत्रपशुबान्धवः । नरकं घोरतामिस्रं पापीयान् याति चैव सः । योऽपहृत्य परकीयां कृषिकृद्वाहयेद्धराम् । स भूमिस्थेन पापेन ह्यनन्तनरकं वसेत् । न दूरे वाहयेत् क्षेत्रं नचैवात्यन्तिके तथा । वाहयेच्च पथि क्षेत्रं वाहयन्दुःखभाग्भवेत् । क्षेत्रेष्वेवं वृतिं कुर्य्यात् यामुष्ट्रो नावलोकयेत् । न लङ्घयेत्पशुर्यान्ति नातीयाद्याश्च शूकरः । बन्धश्च यत्नतः कार्य्यो मृगादित्रासनाय च । अत्राप्युपद्रवं राजतस्करादिसमुद्भवम् । संरक्षेत्सर्व्वतो यत्नाद्यस्मात् षड्भागमुत्करात् । कृषिकर्मानवस्त्वेवं मत्वा धर्मं कृषेर्ध्रुवम् । अनवद्यां शुभां स्निग्धां जलावगाहनक्षमाम् । निम्नां हि वाहयेद्भूमिं यत्र विस्रवते

जलम्। वाहयेत्तु जलाभ्यर्णे अपुष्टसेकसम्भवैः। शारदस्तु च कैःस्थाने कलम्बादि वपेद्बली। अर्धाम्बुतासु कार्पासं तदन्यत्र तु हैमनम्। वसन्तग्रीष्मकालीयमप्सु स्निग्धेषु तद्विदः। केदारेषु तथा शालीन् जलोपान्तेषु चेक्षुकान्। तुल्याकशाकमूलानि कन्दानि च जलान्तिके। वृष्टिविश्रान्तपानीयक्षेत्रेषु च यवादिकान्। गोधूमांश्च मसूरांश्च खल्वान् खलकुलत्थया। समस्निग्धेषु वोप्यानि भूमिजीवान् विजानता। तिला बहुविधा वोप्या अतसीशणमेव च। स्वदम्बुतो जगत्सर्वं वापयेत्कृषिकत्तरः। सम्पश्येच्चरतः सर्वान् गोवृषादीन् स्वयङ्गृही। चिन्तयेत्सर्वमात्मानं स्वयमेव कृषिं व्रजेत्। प्रथमं कृषिवाणिज्यं द्वितीयं योनिपोषणम्। तृतीयं विक्रयं, वक्रं चतुर्थं राजसेवनम्। नखैर्विलिखने यस्या ब्रूयुर्दोषं मनीषिणः। तस्याः सीरविदारेण किन्न पापं क्षितेर्भवेत्। तृणैकच्छेदमात्रेण प्रोच्यते क्षय आयुषः। असङ्ख्यकन्दनिर्वासादसङ्ख्यातमवेदघम्। यदघं मत्स्यबधानां तथा सङ्कुधिषामपि। अंहः कुक्कुटिकानाञ्च तदेव कृषिजीविनाम्। बधकानाञ्च यत्पापं यत्पापं मृगयोरपि। कदर्य्याणाञ्च यत्पापं तत्पापं कृषिजीविनाम्। वर्णानाञ्च गृहस्थानां कृषिवृत्त्युपजीविनाम्। तदेनसो विशुद्ध्यर्थं प्राह सत्यवतीपतिः। द्वादशो नवमो वापि सप्तमः पञ्चमोऽपि वा। धान्यभागः प्रदातव्यो देहिनः क्षेत्रिणो ध्रुवम्। क्षमाच्च्युतभूमौ च विप्रां वै क्षेत्रभुग्भवेत्। एकैकांशापकर्षः स्याद्यावद्दशमसप्तमौ। ग्रामेशस्य नृपस्यापि वर्णिभिः कृषिजीविभिः॥ स स भागः प्रदातव्यो यतस्तौ कृषिभागिनौ। व्यूढौ च सर्वमात्राणां देयोऽंशः स्यात्तदर्हशः। एकैकांशापकर्षस्तु यावद्दशमसप्तमौ। ब्राह्मणस्तु कृषिं कुर्वन्नाहयेदिच्छया धराम्। न किञ्चित्कस्यचिद्दद्यात्स सर्वस्य प्रभुर्य्यतः। ब्रह्मा वै ब्राह्मणानां स्यात्प्रभुस्तद्जदादितः। तद्रक्षणाय बाहुभ्यामसृजत् क्षत्रियानपि। पशुपाल्याशनोत्पत्त्यै ऊरुभ्याञ्च तथा विशः। द्विजदास्याय पद्भ्यां शूद्रमकल्पयत्। यत्किञ्चिज्जगती यत्र भूगेहाश्व गजादिकम्। स्वभावेनेह विप्राणां ब्रह्मा स्वयमकल्पयत्। ब्राह्मणश्चैव राजा च द्वावप्येतौ धृतव्रतौ। न तयोरन्तरं किञ्चित्प्रजा धर्मेण रक्षयेत्। तस्माच्च ब्राह्मणो दद्यात् कुर्वाणो धर्मतः कृषिम्। ग्रामेशस्य नृपस्यापि किञ्चिन्मितमसौ बलिम्। अथान्यत्सम्प्रवक्ष्यामि कृषिकृच्छ्रिकारणम्। संशुद्धः कर्षकोयेन स्वर्गलोकमवाप्नुयात्। सर्वसत्त्वोपकाराय सर्वत्र कृषिकत्तरः। कुर्य्यात् कृषिं प्रयत्नेन सर्वसत्त्वोपजीव्यकृत्। सर्वस्य स्थितिकारण्यात्स देवपितृभिः पुनः। मनुष्याणान्तु पोषाय कृषिं कुर्य्यात् कृषीवलः। वयांसि चान्यसत्त्वानि क्षुत्तृष्णापीडितान् द्विजान्। विमोच्य सर्वतापेभ्यः स्वर्गलोकमवाप्नुयात्। चतुर्दिक्षु खले कुर्य्यात् प्राच्यामतिघनावृतिम्। सैकद्वारपिधानाञ्च पिदध्याच्चैव सर्वतः। खरोष्ट्राजोरणांस्तत्र विशतस्तु निवारयेत्। श्वशूकरसृगालादिकाकोलूककपोतकान्। निरुध्य मोक्षणं कुर्य्यात् दानीयाभ्युक्षणाम्बुभिः। रक्षा च भस्मना कुर्य्याज्जलधाराभिरक्षणम्। निरुध्यमर्चयेत्सीतां पराशरस्मृतिं स्मरन्। प्रेतभूतादिनामानि न वदेच्च तदग्रतः। स्तूतिकास्त्रहवत्तत्र कर्त्तव्यं परिरक्षणम्। हरन्त्यरक्षितं यस्मात् रक्षांसि सर्वमेव हि। प्रशस्तं दिनपूर्वाह्णे नापराह्णे न सन्ध्ययोः। धान्योन्मानं सदा कुर्य्यात्सीतापूजनपूर्वकम्। यजेत खलभिक्षाभिः खलेरोहिण्यएव हि। भक्त्या सर्वं प्रदत्तं हि तत्समस्तमिहाक्षयम्। खलयज्ञदक्षिणैषा ब्रह्मणा निर्मिता पुरा। भागधेयमयीं कृत्वा तां गृह्णन्तीह मात्रिकाम्। शतक्रत्वादयो देवाः पितरः सोमपादयः। सनकादिमनुष्याश्च ये चान्ये दक्षिणाशनाः। तानुद्दिश्य च विप्रेभ्यो दद्याच्च प्रथमं हली। विवाहे खलयज्ञे च संक्रान्तौ ग्रहणेषु च। सुते जाते व्यतीपाते दत्तं भवति चाक्षयम्। अन्येषामर्थिनां पश्चात्कारुकाणां पुनः पुनः। दीनानामप्यनाथानां कुष्ठिनां कुशरीरिणाम्। क्लीबान्धबधिरादीनां सर्वेषामपि दीयते। वर्णानां पतितानाञ्च सुहृद्भृतानि तर्पयेत्। चाण्डालानाञ्च पाकानां प्रीत्याप्युच्चावचाददत्। ये केचिदागतास्तत्र पूज्यास्ते विधिवद्द्विजाः। स्तोकशः सीरिभिः सर्वैर्वर्णिभिर्गृहमेधिभिः। दत्त्वा त्वष्टतया वाचा क्रमेणाथ विसर्जयेत्। तत् कृत्वा स्वगृहं गच्छेच्छ्राद्धमभ्युदयं चरेत्। शरद्धेमन्तवसन्तनवैः श्राद्धमाचरेत्। नाकृत्वान्नमश्नीयादश्नंस्तदघमश्नुते। कृष्यासत्पाद्य धान्यानि खलयज्ञं समाप्य च। सर्वसत्त्वहिते युक्त इहामुत्र सुखी भवेत्। कृषेरन्यतमो धर्मो न लभेत् कृषितोऽन्यतः। न सुखं कृषितोऽन्यत्र यदि धर्मेण कर्षति। अवस्त्रत्वं निरन्नत्वं कृषितो नैव जायते। अनातिथ्यञ्च दुष्टत्वं गोमतो न कदाचन। निर्धनत्वस-

नातिभूषये । नापि परिवदे श्वश्रूं सर्वदा परियन्त्रिता । अवधानेन सुभगे ! नित्योत्थिततयैव च । भर्त्तारो वशगा मह्यं गुरुशुश्रूषयैव च । नित्यमार्य्यामहं कुन्तीं वीरसूं सत्यवादिनीम् । स्वयं परिचराम्येतां पानाच्छादनभोजनैः । नैतामतिशये जातु वस्त्रभूषणभोजनैः । नाहं परिवदे वाचं तां पृथां पृथिवीसमाम् । अष्टावग्रे ब्राह्मणानां सहस्राणि स्म नित्यदा । भुञ्जते रुक्मपात्रीषु युधिष्ठिरनिवेशने । अष्टाशीतिसहस्राणि स्नातका गृहमेधिनः । त्रिंशद्दासीक एकैको यान् बिभर्त्ति युधिष्ठिरः । दशान्यानि सहस्राणि येषामन्नं सुसंस्कृतम् । ह्रियते रुक्मपात्रीभिर्यतीनामूर्द्ध्वरेतसाम् । तान् सर्वानग्रहारेण ब्राह्मणान् ब्रह्मवादिनः । यथार्हं पूजयामि स्म पानाच्छादनभोजनैः । शतं दासीसहस्राणि कौन्तेयस्य महात्मनः । कम्बुकेयूरधारिण्यो निष्ककण्ठ्यः स्वलङ्कृताः । महार्हमाल्याभरणाः सुवर्णाश्चन्दनोक्षिताः । मणीन् हेम च बिभ्रत्यो नृत्यगीतविशारदाः । तासां नाम च रूपञ्च भोजनाच्छादनानि च । सर्वासामेव वेदाहं कर्म चैव कृताकृतम् । शतं दासीसहस्राणि कुन्तीपुत्रस्य धीमतः । पात्रीहस्ता दिवारात्रमतिथीन् भोजयन्त्युत । शतमश्वसहस्राणि दश नागायुतानि च । युधिष्ठिरस्यानुयात्रमिन्द्रप्रस्थनिवासिनः । एतदासीत्तदा राज्ञो यन्महीं पर्यपालयत् । येषां संख्याविधिञ्चैव प्रदिशामि शृणोमि च । अन्तःपुराणां सर्वेषां भृत्यानाञ्चैव सर्वशः । आगोपालाविपालेभ्यः सर्वं वेद कृताकृतम् । सर्वं राज्ञः समुदयमायञ्च व्ययमेव च । एकाहं वेद्मि कल्याणि ! पाण्डवानां यशस्विनि ! । मयि सर्वं समासज्य कुटुम्बं भरतर्षभाः । उपासनारताः सर्वे घटन्ति स्म वरानने ! । तमहं भारमासक्तमनाधृष्यं दुरात्मभिः । सुखं सर्वं परित्यज्य रात्र्यहानि घटामि वै । अधृष्यं वरुणस्यैव निधिपूर्णमिवोदधिम् । एकाहं वेद्मि कोषं वै पतीनां धर्मचारिणाम् । अनिशायां निशायाञ्च सहायाः क्षुत्पिपासयोः । आराधयन्त्याः कौरव्यांस्तुल्या रात्रिरहश्च मे । प्रथमं प्रतिबुध्यामि चरमं संविशामि च । नित्यकालमहं सत्ये ! एतत् संवशनं मम । एतज्जानाम्यहं कर्त्तुं भर्त्तुः संवशनं महत् । असत्स्त्रीणां समाचारं नाहं कुर्य्यां न कामये । तच्छ्रुत्वा धर्मसहितं व्याहृतं कृष्णया तदा । उवाच सत्या सत्कृत्य पाञ्चालीं धर्मचारिणीम् । अभिपन्नास्मि पाञ्चालि ! याज्ञसेनि ! क्षमस्व मे । कामकारः सखीनां हि सोपहासं प्रभाषितम्” २२२अ०।

“द्रौपद्युवाच । इमन्तु ते मार्गमपेतमोहं वक्ष्यामि चित्तग्रहणाय भर्त्तुः । अस्मिन् यथावत् सखि ! वर्त्तमाना भर्त्तारमाच्छेत्स्यसि कामिनीभ्यः । नैतादृशं दैवतमस्ति सत्ये ! सर्वेषु लोकेषु सदेवकेषु । यथा पतिस्तस्य हि सर्वकामा लभ्याः प्रसादात् कुपितश्च हन्यात् । तस्मादपत्यं विविधाश्च भोगाः शय्यासनान्युत्तमदर्शनानि । वस्त्राणि माल्यानि तथैव गन्धाः स्वर्गश्च लोको विपुला च कीर्त्तिः । सुखं सुखेनेह न जातु लभ्यं दुःखेन साध्वी लभते सुखानि । सा कृष्णमाराधय सौहृदेन प्रेम्णा च नित्यं प्रतिकर्मणा च । तथाऽऽसनैश्चारुभिरग्र्यमाल्यैर्दाक्षिण्ययोगैर्विविधैश्च गन्धैः । अस्याः प्रियोऽस्मीति यथा विदित्वा त्वामेव संश्लिष्यति तद्विधत्स्व । श्रुत्वा स्वरं द्वारगतस्य भर्त्तुः प्रत्युत्थिता तिष्ठ गृहस्य मध्ये । दृष्ट्वा प्रविष्टं त्वरितासनेन पाद्येन चैनं प्रतिपूजयस्व । संप्रेषितायामथ चैव दास्यामुत्थाय सर्वं स्वयमेव कार्य्यम् । जानातु कृष्णस्तव भावमेतं सर्वात्मना मां भजतीति सत्ये ! । त्वत्सन्निधौ यत् कथयेत् पतिस्ते यद्यप्यगुह्यं परिरक्षितव्यम् । काचित् सपत्नी तव वासुदेवं प्रत्यादिशेत्ते न भवेद्विरागः । प्रियांश्च रक्तांश्च हितांश्च भर्त्तुस्तान् भोजयेथा विविधैरुपायैः । द्वेष्यैरपक्षैरहितैश्च तस्य भिद्यस्व नित्यं कुहकोद्यतैश्च । मदं प्रमादं पुरुषेषु हित्वा संयच्छ भावं प्रतिगृह्य मौनम् । प्रद्युम्नशाम्बावपि ते कुमारौ नोपासितव्यौ रहिते कदाचित् । महाकुलीनाभिरपापिकाभिः स्त्रीभिः सतीभिस्तव सख्यमस्तु । चण्डाश्च शौण्डाश्च महाशनाश्च चौराश्च दुष्टाश्चपलाश्च वर्ज्याः । एतद्यशस्यं भगदैवतञ्च स्वर्ग्यं तथा शत्रुनिवर्हणञ्च । महार्हमाल्याभरणाङ्गरागा भर्त्तारमाराधय पुण्यगन्धा” २२३अ० ।

“गृहिणी सचिवो रहः सखी प्रियशिष्या ललिते कलाविधौ” रघुः “न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते” उ०त० स्मृतिः “प्रायेण गृहिणीनेत्राः कन्यार्थेषु कुटुम्बिनः” कुमा० “शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने भर्त्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः । भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः” शकु० “ज्वालागताभ्योऽधिगृहं गृहिण्यः” माघः ।

जलम्। वाहयेत्तु जलाभ्यर्णे अपुष्टसेकसञ्चयैः। शारदस्तुच्चकैःस्थाने कलमादि वपेद्धली। अधोमुतासु कार्पासं तदन्यत्र तु हैमनम्। वसन्तग्रीष्मकालीयमप्सु स्निग्धेषु तद्विदः। केदारेषु तथा शालीन् जलोपान्तेषु चेक्षुकान्। तुलाकशाकमूलानि कन्दानि च जलान्तिके। दृष्टिविश्वाल्पपानीयक्षेत्रेषु च यवादिकान्। गोधूमांश्च मसूरांश्च खल्वान् खलकुलन्तथा। समस्निग्धेषु चोप्यानि भूमिजीवान् विजानता। तिला बहुविधाश्चोप्या अतसीशणमेव च। सदम्बुतो जगत्सर्वं वापयेत्कृषिकश्चरः। सम्पश्येच्चरतः सर्वान् गोहपाटीन् स्वयङ्गृही। चिन्तयेत्सर्वमात्मानं स्वयमेव कृषिं व्रजेत्। प्रथमं कृषिवाणिज्यं द्वितीयं योनिपोषणम्। तृतीयं विक्रयं, वक्रं चतुर्थं राजसेवनम्। नखैर्विलिखने यस्या ब्रूयुर्दोषं मनीषिणः। तस्याः सीरविदारेण किन्न पापं क्षितेर्भवेत्। तृणैकच्छेदमात्रेण प्रोच्यते क्षय आयुषः। असङ्ख्यकन्दनिर्यासादसङ्ख्यातस्वेदघम्। यदघं मत्स्यबधानां तथा शकुनिनामपि। अंहः कुक्कुटिकानाञ्च तदेव कृषिजीविनाम्। बधकानाञ्च यत्पापं यत्पापं मृगयोरपि। कदर्य्याणाञ्च यत्पापं तत्पापं कृषिजीविनाम्। वर्णानाञ्च गृहस्थानां कृषिवृत्त्युपजीविनाम्। तदेनसो विशुद्ध्यर्थं प्राह सत्यवतीपतिः। द्वादशो नवमो वापि सप्तमः पञ्चमोऽपि वा। धान्यभागः प्रदातव्यो देहिनः क्षेत्रिणो ध्रुवम्। अयस्माच्च्युतभूमौ च विंशां वै क्षेत्रभुग्भवेत्। एकैकांशापकर्षः स्याद्यावद्दशमसप्तमौ। ग्रामेशस्य नृपस्यापि वर्णिभिः कृषिजीविभिः॥ स स भागः प्रदातव्यो यतस्तौ कृषिभागिनौ। व्यूढौ च सर्वमात्राणां देयोऽंशः स्याच्चतुर्दशः। एकैकांशापकर्षस्तु यावद्दशमसप्तमौ। ब्राह्मणस्तु कृषिं कुर्वन्वाहयेदिच्छया धराम्। न किञ्चित्कस्यचिद्दद्यात्स सर्वस्य प्रभुर्यतः। ब्रह्मा वै ब्राह्मणानां स्यात्प्रभुस्त्वसृजदादितः। तद्रक्षणाय बाहुभ्यामसृजत् क्षत्रियानपि। पशुपाल्याशनोत्पत्त्यै ऊरुभ्याञ्च तथा विशः। द्विजदासाय पण्याय पद्भ्यां शूद्रमकल्पयत्। यत्किञ्चिज्जगती यत्र भूगेहाश्च गजादिकम्। स्वभावेनेह विप्राणां ब्रह्मा स्वयमकल्पयत्। ब्राह्मणश्चैव राजा च द्वावप्येतौ धृतव्रतौ। न तयोरन्तरं किञ्चित्प्रजा धर्मेण रक्षयेत्। तस्माच्च ब्राह्मणो दद्यात् कुर्वाणो धर्मतः कृषिम्। ग्रामेशस्य नृपस्यापि किञ्चिन्मितमसौ बलिम्। अथान्यत्सम्प्रवक्ष्यामि कृषिकृच्छुद्धिकारणम्। संशुद्धः कर्षकोयेन स्वर्गलोकमवाप्नुयात्। सर्वसत्त्वोपकाराय सर्वत्र कृषिकृन्नरः। कुर्य्यात् कृषिं प्रयत्नेन सर्वसत्त्वोपजीव्यकृत्। सर्वस्य स्थितिकारण्यात्र देवपितृभिः पुनः। मनुष्याणान्तु पोषाय कृषिं कुर्य्यात कृषीवलः। वयांसि चान्यसत्त्वानि क्षुत्तृष्णापीडितान् द्विजान्। विमोच्य सर्वतापेभ्यः स्वर्गलोकमवाप्नुयात्। चतुर्दिक्षु खले कुर्य्यात् प्राच्यामतिघनावृतिम्। सैकद्वारपिधानाञ्च पिदध्याच्चैव सर्वतः। खरोष्ट्राजोरणांस्तत्र विशतस्तु निवारयेत्। शूकरशृगालादिकाकोलूककपोतकान्। त्रिसन्ध्यं प्रोक्षणं कुर्य्यात् दानीयाभ्युक्षणाम्बुभिः। रक्षा च भस्मना कुर्य्याज्जलधाराभिरक्षणम्। त्रिसन्ध्यमर्चयेत्सीतां पराशरऋषिं स्मरन्। प्रेतभूतादिनामानि न वदेच्च तदग्रतः। सूतिकागृहवत्तत्र कर्त्तव्यं परिरक्षणम्। हरन्त्यरक्षितं यस्मात् रक्षांसि सर्वमेव हि। प्रशस्तं दिनपूर्वाह्णे नापराह्णे न सन्ध्ययोः। धान्योन्मानं सदा कुर्यात्सीतापूजनपूर्वकम्। यजेत खलभिक्षाभिः खलेरोहिण्यएव हि। भक्त्या सर्वं प्रदत्तं हि तत्समस्तमिहाक्षयम्। खलयज्ञ दक्षिणैषा ब्रह्मणा निर्मिता पुरा। भागधेयमयीं कृत्वा तां गृह्णन्त्वीह मात्रिकाम्। शतक्रत्वादयो देवाः पितरः सोमपादयः। सनकादिमनुष्याश्च ये चान्ये दक्षिणाशनाः। तानुद्दिश्य च विप्रेभ्यो दद्याच्च प्रथमं हली। विवाहे खलयज्ञे च संक्रान्तौ ग्रहणेषु च। पुत्रे जाते व्यतीपाते दत्तं भवति चाक्षयम्। अन्येषामर्थिनां पश्चात्कारुकाणां पुनः पुनः। दीनानामप्यनाथानां कुष्ठिनां कुशरीरिणाम्। क्लीबान्धबधिरादीनां सर्वेषामंग दीयते। वर्णानां पतितानाञ्च क्षुद्रभूतानि तर्पयेत्। चाण्डालानाञ्च पाकानां प्रीत्याद्युच्चावचाद्ददत्। ये केचिदागतास्तत्र पूज्यास्ते विधिवद्द्विजाः। स्तोकशः सीरिभिः सर्वैः वर्णिभिर्गृहमेधिभिः। दत्त्वा त्वन्ततया वाचा क्रमेणाथ विसर्जयेत्। तत् कृत्वा स्वगृहं गच्छेच्छ्राद्धमभ्युदयं चरेत्। शरद्धेमन्तवसन्तनवान्नैः श्राद्धमाचरेत्। नाकृत्वाक्नन्नदश्नीयादश्नंस्तदघमश्नुते। कृष्यासत्पाद्य धान्यानि खलयज्ञं समाप्य च। सर्वसत्त्वहिते युक्त इहामुत्र सुखी भवेत्। कृषेरन्यतमो धर्मो न लभेत् कृषितोऽन्यतः। न सुखं कृषितोऽन्यत्र यदि धर्मेण कर्षति। अवस्त्रत्वं निरन्नत्वं कृषितो नैव जायते। अनातिथ्यञ्च दुष्टत्वं गोमतो न कदाचन। निर्धनत्वम-

नातिभूषये । नापि परिवदे श्वश्रूं सर्वदा परियन्त्रिता । अवधानेन सुभगे ! नित्योत्थिततयैव च । भर्त्तारो वशगा मह्यं गुरुशुश्रूषयैव च । नित्यमार्य्यामहं कुन्तीं वीरसूं सत्यवादिनीम् । स्वयं परिचराम्येतां पानाच्छादनभोजनैः । नैतामतिशये जातु वस्त्रभूषणभोजनैः । नाहं परिवदे वाचं तां पृथां पृथिवीसमाम् । अष्टावग्रे ब्राह्मणानां सहस्राणि स्म नित्यदा । भुञ्जते रुक्मपात्रीषु युधिष्ठिरनिवेशने । अष्टाशीतिसहस्राणि स्नातका गृहमेधिनः । त्रिंशद्दासीक एकैको यान् बिभर्त्ति युधिष्ठिरः । दशान्यानि सहस्राणि येषामन्नं सुसंस्कृतम् । ह्रियते रुक्मपात्रीभिर्यतीनामूर्द्ध्वरेतसाम् । तान् सर्वानग्रहारेण ब्राह्मणान् ब्रह्मवादिनः । यथार्हं पूजयामि स्म पानाच्छादनभोजनैः । शतं दासीसहस्राणि कौन्तेयस्य महात्मनः । कम्बुकेयूरधारिण्यो निष्ककण्ठ्यः स्वलङ्कृताः । महार्हमाल्याभरणाः सुवर्णाश्चन्दनोक्षिताः । मणीन् हेम च बिभ्रत्यो नृत्यगीतविशारदाः । तासां नाम च रूपञ्च भोजनाच्छादनानि च । सर्वासामेव वेदाहं कर्म चैव कृताकृतम् । शतं दासीसहस्राणि कुन्तीपुत्रस्य धीमतः । पात्रीहस्ता दिवारात्रमतिथीन् भोजयन्त्युत । शतमश्वसहस्राणि दश नागायुतानि च । युधिष्ठिरस्यानुयात्रमिन्द्रप्रस्थनिवासिनः । एतदासीत्तदा राज्ञो यन्महीं पर्य्यपालयत् । येषां संख्यां विधिञ्चैव प्रदिशामि शृणोमि च । अन्तःपुराणां सर्वेषां भृत्यानाञ्चैव सर्वशः । आगोपालाविपालेभ्यः सर्वं वेद कृताकृतम् । सर्वं राज्ञः समुदयमायञ्च व्ययमेव च । एकाहं वेद्मि कल्याणि ! पाण्डवानां यशस्विनि ! । मयि सर्वं समासज्य कुटुम्बं भरतर्षभाः । उपासनारताः सर्वे घटन्ति स्म वरानने ! । तमहं भारमासक्तमनाधृष्यं दुरात्मभिः । सुखं सर्वं परित्यज्य रात्र्यहानि घटामि वै । अधृष्यं वरुणस्येव निधिपूर्णमिवोदधिम् । एकाहं वेद्मि कोषं वै पतीनां धर्मचारिणाम् । अनिशायां निशायाञ्च सहायाः क्षुत्पिपासयोः । आराधयन्त्याः कौरव्यांस्तुल्या रात्रिरहश्च मे । प्रथमं प्रतिबुध्यामि चरमं संविशामि च । नित्यकालमहं सत्ये ! एतत् संवननं मम । एतज्जानाम्यहं कर्त्तुं भर्त्तुः संवननं महत् । असत्स्त्रीणां समाचारं नाहं कुर्य्यां न कामये । तच्छ्रुत्वा धर्मसहितं व्याहृतं कृष्णया तदा । उवाच सत्या सत्कृत्य पाञ्चालीं धर्मचारिणीम् । अभिपन्नास्मि पाञ्चालि ! याज्ञसेनि ! क्षमस्व मे । कामकारः सखीनां हि सोपहासं प्रभाषितम्” २२२अ० ।

“द्रौपद्युवाच । इमन्तु ते मार्गमपेतमोहं वक्ष्यामि चित्तग्रहणाय भर्त्तुः । अस्मिन् यथावत् सखि ! वर्त्तमाना भर्त्तारमाच्छेत्स्यसि कामिनीभ्यः । नैतादृशं दैवतमस्ति सत्ये ! सर्वेषु लोकेषु सदैवतेषु । यथा पतिस्तस्य हि सर्वकामा लभ्याः प्रसादात् कुपितश्च हन्यात् । तस्मादपत्यं विविधाश्च भोगाः शय्यासनान्युत्तमदर्शनानि । वस्त्राणि माल्यानि तथैव गन्धाः स्वर्गश्च लोको विपुला च कीर्त्तिः । सुखं सुखेनेह न जातु लभ्यं दुःखेन साध्वी लभते सुखानि । सा कृष्णमाराधय सौहृदेन प्रेम्णा च नित्यं प्रतिकर्मणा च । तथाऽऽसनैश्चारुभिरग्र्यमाल्यैर्दाक्षिण्ययोगैर्विविधैश्च गन्धैः । अस्याः प्रियोऽस्मीति यथा विदित्वा त्वामेव संश्लिष्यति तद्विधत्स्व । श्रुत्वा स्वरं द्वारगतस्य भर्त्तुः प्रत्युत्थिता तिष्ठ गृहस्य मध्ये । दृष्ट्वा प्रविष्टं त्वरितासनेन पाद्येन चैनं प्रतिपूजयस्व । संप्रेषितायामथ चैव दास्यामुत्थाय सर्वं स्वयमेव कार्य्यम् । जानातु कृष्णस्तव भावमेतं सर्वात्मना मां भजतीति सत्ये ! । त्वत्सन्निधौ यत् कथयेत् पतिस्ते यद्यप्यगुह्यं परिरक्षितव्यम् । काचित् सपत्नी तव वासुदेवं प्रत्यादिशेत्ते न भवेद्विरागः । प्रियांश्च रक्तांश्च हितांश्च भर्त्तुस्तान् भोजयेथा विविधैरुपायैः । द्वेष्यैरपक्षैरहितैश्च तस्य भिद्यस्व नित्यं कुहकोद्यतैश्च । मदं प्रमादं पुरुषेषु हित्वा संयच्छ भावं प्रतिगृह्य मौनम् । प्रद्युम्नशाम्बावपि ते कुमारौ नोपासितव्यौ रहिते कदाचित् । महाकुलीनाभिरपापिकाभिः स्त्रीभिः सतीभिस्तव सख्यमस्तु । चण्डाश्च शौण्डाश्च महाशनाश्च चौराश्च दुष्टाश्चपलाश्च वर्ज्याः । एतद्यशस्यं भगदैवतञ्च स्वर्ग्यं तथा शत्रुनिवर्हणञ्च । महार्हमाल्याभरणाङ्गरागा भर्त्तारमाराधय पुण्यगन्धा” २२३अ० ।

“गृहिणी सचिवो रहः सखी प्रियशिष्या ललिते कलाविधौ” रघुः “न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते” उ०त० स्मृतिः “प्रायेण गृहिणीनेत्राः कन्यार्थेषु कुटुम्बिनः” कुमा० “शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने भर्त्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः । भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः” शकु० “ज्वालागताभ्योऽधिगृहं गृहिण्यः” माघः ।

**गृहीत** त्रि० ग्रह–कर्मणि क्त । १स्वीकृते, २ज्ञाते, ३प्राप्ते ४धृते च । "गृहीतपत्युद्गमनीयवेशा" कुमा० । "गृहीत इव केशेषु मृत्युना धर्ममाचरेत्" नीतिशा० "पत्नी गृहीतवत्ना" वेणी० भावे क्त । ५ग्रहणादौ न० ततः तत्कृतमनेन इष्टादि० इनि । गृहीतिन् कृतग्रहणे त्रि० स्त्रियां ङीप् ।

**गृहीतगर्भा** स्त्री गृहीतो गर्भो यया । गर्भवत्यां तल्लक्षणादि गर्भवतीशब्दे २५५५पृ० उक्तम् । [च हेमच० ।

**गृहीतदिक्** त्रि० गृहीता दिक् येन । १पलायिते २तिरोहिते

**गृह्नु** त्रि० ग्रह–क्नु । ग्रहीतरि "इदु भोजो यो गृहवे ददात्यन्नकामाय चरते कृशाय" ऋ० १०।११७।२

**गृहेरुह** पु० गृहे रोहति रुह–क अलुक् ७त० । गृहजातवृक्षे स चाप्रशस्तः यथाह भा० आनु० १२७अ० "भिन्नभाण्डञ्च खट्वाञ्च कुक्कुटं शुनकं तथा । अप्रशस्तानि सर्वाणि यश्च वृक्षो गृहेरुहः"

**गृहेनर्दिन्** पु० गृहे एव नर्दति न युद्धे नर्द–इनि पात्रेसमितादिस० । कापुरुषे रणभीरौ गृहे आस्फालयितरि ।

**गृहेश** पु० ६त० । १गृहस्वामिनि गृहेश्वरादयोऽप्यत्र "अर्थस्तस्मिन् स्थाने गृहेश्वराधिष्ठितेऽङ्के वा" वृहत्सं० ५१अ० । २राशीश्वरे च ।

**गृहोलिका** स्त्री गृहे वलते वल–चलने क्वुन् बा०सम्प्र० । ज्येष्ठ्यां गृहगोधिकायाम् हेमच० ।

**गृह्य** पु० ग्रह–पदास्वैरीत्यादिना क्यप् । गृहासक्ते १मृगे २खगे च पञ्जरादिबन्धनेन परतन्त्रीकृतत्वात् तेषां तथात्वम् । ३गुह्ये मलद्वारे, न० ४अस्वैरिणि ५आयत्ते, ६स्वपक्षीये पक्ष्ये च त्रि० मेदि० । "गृणगृह्यावचने विपश्चितः" किरा० "अगृह्यां शीतकामत्वाद्वेगृह्यामनिन्दिताम्" भट्टिः । गृहे भवः यत् ७गृहभवे, वस्तुनि त्रि० । ८गृहनिमित्तेऽग्नौ ९तत्रत्यकर्मणि च "उक्तानि वैतानिकानि गृह्याणि वक्ष्यामः" आश्व० गृ० १।१।२।गृहनिमित्तोऽग्निः गृह्यः । तत्र भवानि कर्माण्यपि लक्षणया गृह्याणीत्युच्यन्ते । गृहशब्दो भार्यायां शालायाञ्च वर्त्तते । यथा "सगृहो गृहमागतः" इत्यत्र हि पूर्वो गृहशब्दो भार्यावचनः उत्तरस्तु शालावचनः येषाञ्च भार्यासंयोगादुत्पन्नाग्नौ इमानि कर्माणि प्रवर्त्तन्ते तेषामयं गृह्यशब्दो भार्यावचनः । येषान्तु दायविभागकालेऽग्निरुत्पद्यते तेषां शालावचनः । "भार्यादिरग्निर्दायादिर्वा तस्मिन् गृह्याणि" इति गौतमसूत्रः" नारा० "तेऽस्य गृह्याणि कर्माणि कुर्युर्वैतानिकानि च ।" वैश्वदेवस्य सिद्धस्य गृह्येऽग्नौ विधिपूर्वकम् । अग्निहोत्रं समादाय गृह्यञ्चाग्निपरिच्छदम्" इति च मनुः । तदस्त्यस्य साध्यतया अच् । १०वेदादितकर्मप्रयोगज्ञापके गोभिलसूत्रादौ ग्रन्थभेदे च । गृह्यमग्निमधिकृत्य च शाखिभेदेन गृह्यकाराश्च गोभिलाश्वलायनकात्यायनादयोऽतिविख्याताः । ११नगरबाह्यस्थे ग्रामे स्त्री टाप् मेदिनिः स्वार्थे क । गृह्यक तत्रैवार्थे । संज्ञायां कन् । गृहासक्ते पक्षिमृगादौ अमरः ।

**गॄ** विज्ञापने चुरा० आत्म०सक० सेट् । गारयते अजीगरत् ।

**गॄ** शब्दे क्र्यादि० पर०प्वादि० सक० सेट् । गृणाति अगारीत जगार जगरतुः । गीर्य्यते गीर्णः । गीः ।

अनु+शंसनविषयहर्षोत्कृष्टव्यापाररूपप्रोत्साहने तद्योगे पूर्वव्यापारस्य कर्त्ता संप्रदानसंज्ञो भवति यथा अध्वर्युः होत्रे अनुगृणाति होता प्रथमं शंसति तमध्वर्युः प्रोत्साहयतीत्यर्थः सि०कौ०

प्रति+अनुगृणातिवत् अर्थादि अस्यावपूर्वप्रयोगो नास्ति इति "अवाद्ग्रः" पा० सूत्रे भाष्यकार आह स्म

**गॄ** निगरणे तु० पर० सक० सेट् । अस्य वा रस्य लत्वम् गिरति गिलति अगारीत् अगालीत् जगार (ल) । जगरतुः । गीर्यते गीर्णः गीर्णिः गिरः गिरिः

अव+नीचैःकथने आत्म० अवगिरते नीचैः कथयतीत्यर्थः ।

उद्+वमने । "रोमन्थः उद्गीर्य चर्वणम्" सि०कौ० "अनुद्गीर्णसुरायुधम्" कुमा० ।

सम्+प्रतिज्ञायाम् आत्म० । संगिरते प्रतिजानीते इत्यर्थः । "वसूनि देशांश्च निवर्त्तयिष्यन् रामं नृपः संगिरमाण एवं" भट्टिः ।

**गेद्** गतौ भ्वा० आत्म०सक० सेट् । गेदते अगेदिष्ट ऋदित् । अजिगेदत । जिगेदे । उदित् । गेदित्वा गेत्वा ।

**गेन्दु(ण्डु)क** पु० गच्छतीति गम–ड गः इन्दुरिव इवार्थे कन् । कन्दुके वस्त्रनिर्मिते गोलाकारे क्रीडनके । पृषो० वा उत्वे गेण्डुकश्च तत्रार्थे । पृषो० गेन्दू (ण्डू) कोऽपि दीर्घमध्यः । तत्रार्थे जटाधरः ।

**गेय** त्रि० गै–कर्त्तरि नि० यत् । १गायके "गेयो माणवकः साम्नाम्" सि०कौ० कर्मणि यत् । २गातव्ये त्रि० "अरण्ये गेयं साम" भावे यत् । ३गीतौ न० "गेये केन विनीतौ वाम्" रघुः । "वर्णैः कतिपयैरेव ग्रथितस्य स्वरैरिव । अनन्ता वाङ्मयस्याहो गेयस्येव विचित्रता" माघः

गेव सेवने भ्वा०आ०सक०सेट् । गेवते अगेविष्ट । ऋदित् अजिगेवत । जिगेवे । [जिगेवे ऋदित् अजिगेवत् । गेष्णः ।

गेष अन्वेषणे भ्वा० आत्म० सक० सेट् । गेषते अगेषिष्ट ।

गेष्णु पु० गेष—बा० न । १पर्वणि ग्रन्थौ (गाँटि) २अवयवभेदे "तस्यर्क् च साम च गेष्णौ" छा०उ० "तस्य ऋक् च साम च गेष्णौ पृथिव्याद्युक्तलक्षणे पर्वणी" भा० "तस्य यद्रूपममुष्य तद्रूपं यौ गेष्णौ तावस्य गेष्णौ" छा०उ०

गेष्णु त्रि० गै—इष्णु च् । गायने सि०कौ०

गेह न० गे गणेशो गन्धर्वो वा ईहः ईप्सितो यत्र । गृहे। "जामयोयानि गेहानि" "एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन" मनुः । "त्यक्त्वा गेहं झटिति यमुना मञ्जुकुञ्जं जगाम" पदाङ्कदू० "गेहदाहेऽग्नये" क्षामवते पुरोडाशः" कात्या०श्रौ०२५।४।२६। "यजमानस्य निवासगृहदाहेऽग्निमृहदाहे वा क्षामवत्यामाग्निमुद्दिश्य पुरोडाशः निर्वाप्य इत्यर्थः" कर्कः ।

स्वामिभेदादिना गेहानां नामभेदा हेमचन्द्रेण दर्शिता यथा

"प्रासादो देवभूपानां हर्म्यन्तु धनिनां गृहम् । मठाव सथ्यावसथाः स्युश्छात्रप्रतिवेश्मनि । पर्णशालोटजश्चैव विहारो जिनसद्मनि । गर्भागारे प्रवरको वासौकः शयनास्पदम् । भाण्डागारं तु कोषः स्याच्चन्द्रशाला शिरोगृहम् । कुप्यशाला तु सन्धानी कायमानो तृणौकसि। होत्रीयन्तु हविर्गेहं प्राग्वंशः प्राग् हविर्गृहात् । आथर्वणं शान्तिगृहमास्थानगृहमिन्द्रकम् । तैलिशाला यन्त्रगृहमरिष्टं सूतिकागृहम् । सूदशाला रसवती पाकस्थानं महानसम् । हस्तिशाला तु चतुरं वाजिशाला तु मन्दुरा । सन्दानिनी तु गोशाला चित्रशाला तु जालिनी । कुम्भशाला पाकपुटी तन्तुशाला तु गर्त्तिका । नापितशाला वपनी शिल्पा खरकुटीच सा । आवेशनं शिल्पिशाला सत्रशाला प्रतिश्रयः । आश्रमस्तु मुनिस्थानमुपघ्नस्त्वन्तिकाश्रयः । प्रपा पानीयशाला स्याद्गञ्जा तु मदिरागृहम् । पक्कणः शवरावासो घोषस्त्वाभीरपल्लिका । पण्यशाला निषद्याट्टो हट्टा विपणिरापणः । वेश्याश्रयः पुरं वेशो मण्डपस्तु जनाश्रयः" । ततोऽस्त्यर्थे इनि । गेहिन् मतुप् मस्य वः । गेहवत् गृहस्वामिनि स्त्रियां ङीप् । गेहं गेहकार्य्यं साध्यतयाऽस्त्यस्याः इनि ङीप् । भार्य्यायाम् "मद्गेहिन्याः प्रिय इति सखे! चेतसा कातरेण" मेघ०।

गेहेक्ष्वेडिन् त्रि० गेहे एव क्ष्वेडते क्ष्वेड—इनि पात्रे० स०। गृहासक्ते युद्धादावनासक्ते कापुरुषे । युक्तारोह्यादित्वात् अस्य आद्युदात्तता ।

गेहेदाहिन् त्रि० गेहे दहति दह—इनि पात्रे०स०। कापुरुषे एवं गेहेविजितिन् गेहेव्याड गेहेमेहिन् गेहेदृप्त गेहेधृष्ट इत्येतेऽपि पात्रे०स०। कापुरुषे आद्युदात्तता च

गेहेशूर पु० गृहएव शूरः पात्रेसमितादि स०। कापुरुषे युक्तारोह्या० आद्युदात्तता [अमरः ।

गेहोपवन न० गेहसमीपस्थमुपवनम् । गृहसन्निकृष्टोपवने

गेह्य त्रि०गेहे भवः गेहाय हितं वा यत् । १गेहभवे २गेहहिते च । "यस्मै धायुरदधा मर्त्यायाभक्तं चिद्भजते गेह्यम्" ऋ० १।१०।७

गै गाने भ्वा०पर०सक०अनिट् । गायति । अगासीत् । जगौ जगतुः । गीयते गेयं गानं गीता गीतः गीतिः । गायकः गायनः गाथा गातुम् । गापयति जिगीषति । "यशोऽपि तावत् प्रभवामि गातुम्" नैष० "गेये केन विनीतं वाम्" ? रघुः । "तत्र स्म गाथा गायन्ति शाम्ना परमवल्गुना" भा०व० १७८१ "गीतज्ञो यदि गीतेन माप्नोति परमं पदम्" याज्ञ० "जयोदारणं बाहुगीपयामास किन्नरान्" रघुः ।

अनु+पश्चाद्गाने । अनुगायति "काचिदञ्चितपञ्चमरागम्"

अभि+आभिमुख्येन समन्ताच्च गाने "राजधानीषु राज्ञां च समाजेष्वभ्यगायताम्" रामा० आ०

अव+निन्दने अवगीतम् ।

उत्+उच्चैर्गाने । "उद्गातृतामिच्छति किन्नराणाम्" कुमा०। "उद्गीयमानं वनदेवताभिः" रघुः।

उप+समीपगाने । "शिष्यप्रशिष्यैरुपगीयमानमवेहि तन्मण्डनमिश्रधाम" शङ्करदिग्विजयः । आधिक्येन गाने च "निवृत्ततर्षैरुपगीयमानात्" भाग०[गमेष्वपि" मनुः ।

नि+निश्चयेन गाने । "तथा च श्रुतयो बह्व्यो निगीता निग-

परि+समन्ततो गाने । "तस्य कर्माण्युदाराणि परिगीतानि सूरिभिः" भाग०१।१।१७ "ऋषिभिः परिगीतानि छन्दोभिश्च पृथक् पृथक्" गीता

प्र+प्रकर्षेण गाने । "यावत् कीर्त्तिर्मनुष्यस्य पृथक् लोके प्रगीयते" भा०उद्यो० ११८४

वि+निन्दने । "सुमया न विगीयते नृपैः" विगीयसे (केतक!) मन्मथदेहदाहिना" नैष० विविधगाने च । [गायकैः ।

सम्+सम्यग्गाने । "सङ्गीयमानसत्कीर्त्तिः सखीभिः सुर-

**गैर** त्रि॰ गिरौ भवः अण् । १पर्वतभवे स्त्रियां ङीप् । सा च (विष्णुक्रान्ता) २लाक्षाबीजचूर्णे रक्तमा॰ (गेरिमाटि) ३उपधातुभेदे न॰ शब्दार्थचि॰।

**गैरकंवूल** न॰ नीलकण्ठताजकोक्ते वर्षलग्नकालिक ग्रहयोगभेदे तल्लक्षणादि तत्रोक्तं यथा
"यस्याधिकारः स्वर्क्षादि शुभोऽथवाऽप्यशुभोऽपि वा । केनापि दृश्यमूर्त्तिश्च स शून्याध्वग इष्यते । लग्नका- र्य्येशयोरित्थशाले शून्याध्वगः शशी । उच्चादिपदशून्यत्वा न्नेत्थशालोऽस्ति केनचित् । यद्यन्यर्क्षं प्रविश्यैषः स्वभो- च्चस्थेत्थशालवान् । गैरकंवूलमेतत्तु पदोनेनाशुभं स्मृतम् । उदा॰ । किमस्ति सुखमिति प्रश्ने सिंहलग्नं रविः क्रिये । अष्टांशैः, सुखपः कुम्भे भौमोऽंशैः रवि- भिस्तयोः । इत्थशालोऽस्ति तत्रेन्दुः कन्यायां चरमेऽ- शके । स्वर्क्षादिपदहीनस्य नेत्थशालोऽस्ति केनचित् । स्वर्क्षोच्चगेन शशिनाऽन्यर्क्षस्थे नेत्थशालकृत् । गैरकंवूल मन्येन सहायाल्लाभदायकम्" । पृषो॰ गैरकंवूलमप्यत्र

**गैरायण** पुंस्त्री गिरेर्गोत्रापत्यम् अश्वा॰ फञ् । गिरिगो- त्रापत्ये ।

**गैरिक** न॰गिरौ भवम् ठञ् । (गेरिमाटि)उपधातुभेदे तद्गुणादि भावप्र॰ उक्तं यथा । "गैरिकं रक्तधातुश्च गैरेयं गिरिजं तथा । सुवर्णगैरिकं त्वन्यत् ततो रक्ततरं हि तत् । गैरिकद्वितयं स्निग्धं मधुरं तुवरं हिमम् । चक्षुष्यं दाहपित्तास्रकफहिक्काविनाशनम्" [राजनि॰।

**गैरिकाक्ष** पु॰ गैरिकमिवाक्षि पुष्पमस्य । जलमधुके वृक्षे ।

**गैरेय** न॰ गिरौ भवम् ढक् । शिलाजतुनि अमरः । (गेरि- माटी) ख्याते उपधातुभेदे भावप्र॰।

**गो** पुंस्त्री गच्छत्यनेन गम—करणे डो । १स्वनामख्याते पशुभेदे वृषस्य यानसाधनत्वात् स्त्रीगव्याश्च दानद्वारा स्वर्गगति- साधनत्वाच्च तथात्वम् । गतिसाधनतया तस्य तथार्थत्व- योगेन यौगिकत्वेऽपि योगरूढत्वम् । एतेन दर्पणकृता "व्युत्पत्तिलभ्यस्य मुख्यार्थत्वे गौः शेते इत्यत्रापि लक्षणा स्यात् "गमेर्डोः" इति व्युत्पादितस्य गोशब्दस्य शयनकालेऽपि प्रयोगात्" इति यदुक्तं तत् प्रामादिकमेव गमेर्डोः इत्युणादिप्रत्ययस्य कर्त्तृवाचकत्वानियमात् "ताभ्यामन्यत्रोणादयः पा॰सूत्रे उणादीनां अपादा- नसंप्रदानभिन्नार्थत्वनियमात् अत्र करणार्थकडोप्रत्ययेन व्युत्पादितस्य गोशब्दस्य शयनकालेऽपि गतिसाधनस्व- रूपयोग्यवाचकत्वात् फलोपधायकत्वनियमे यान- शयनादीनामपि गतिशयनादिविगमकाले तच्छब्द- वाच्यतानुपपत्तेः । गम्यते ज्ञायते अनेन करणे, शीघ्रं गच्छति कर्त्तरि वा डो । २रश्मौ किरणे तस्य शीघ्र गामित्वात् चाक्षुषज्ञानहेतुत्वाच्च तथात्वम् सूर्यादिकिरण संपर्कं विना चाक्षुषज्ञानासम्भवात् रश्मेर्ज्ञानसाधनत्वात् तथात्वम् । ३वज्रे ४हीरके तस्यापि कठिनद्रव्येऽपि गतिमत्त्वात् तथात्वम् । कर्मणि डो । ५स्वर्गे कर्मिभि र्गम्यमानत्वात् तस्य तथात्वम् मेदि॰। ६चन्द्रे विश्वः कर्मिभिस्तल्लोकगमनात्तस्य तथात्वम् ७सूर्ये ८लोमेषु वत्ते भानुदीक्षितः । सूर्यस्य शीघ्रगतिकत्वात् चार्चिरादि- ष्वधिष्ठातृतया आतिवाहिकत्वात् तथात्वम् । "संवत्स- रादादित्यमादित्याच्चन्द्रमसम्"छा॰उ॰। आतिवाहिकशब्दे ६५१पृ॰दृश्यम् ९ऋषभनामौषधे राजनि॰। तस्य गोना- मकत्वात् तथात्वम् । करणे डो । १०नेत्रे स्त्री तस्य चाक्षुषज्ञानसाधनत्वात् तथात्वम् । कर्त्तरि डो । ११वाणे स्त्री तस्य शीघ्रगतिकत्वात् तथात्वम् । कर्मणि डो । १२दिशि स्त्री दिशां पलायनकाले गम्यमान- त्वात्तथात्वम् । १३वाचि स्त्री तस्याः ज्ञानहेतुत्वात् तथात्वम् । आधारे डो । १४भुवि स्त्री तस्याः गमना- धारत्वात् तथात्वम् १५जले च स्त्री॰ब॰व॰ केचित् तस्य निम्नगतित्वात् १६पशुमात्रे अमरः १७मातरि १८लो- मनि भानुदीक्षितः । १९वृषराशौ २०नवसंख्यायाम् गोर्भूमेर्नवखण्डात्मकत्वात् आकाशे सदागतिमद्ग्रहाणां नवत्वाद्वा तत्संख्यासाम्यात् तथात्वम् । २१पुरुरवोभा- र्य्यायां गविजातशब्दे २५६६ पृ॰दृश्यम् । ज्ञानहेतुत्वात् २२इन्द्रिये गोचरः । पदान्तस्थितस्योपसर्जनस्य समा॰ह्रस्वः शीतगुः सहस्रगुः । अस्य उत्तरपदस्थत्वे तत्पुरुषे टच् समा॰। पुंसि परमगवः स्त्रियां षित्त्वात् ङीष् दुग्धगवी गोः पुरीषं मयट् । गोमय (गोवर) ख्याते पदार्थे न॰ गौर्विद्यतेऽस्य मिनि गोमिन् । मतुप् । गोमत् गोविशिष्टे गोस्वामिनि च त्रि॰ स्त्रियां ङीप् । गोःस्थाने गोष्ठच् गोगोष्ठ गोस्थाने न॰ गोमांसगुणा भावप्र॰उक्ता यथा "गोमांसं तु गुरु स्निग्धं पित्तश्लेष्मविवर्द्धनम् । बृंहणं वातहृत् बल्यमपथ्यं पीनसप्रणुत् । गोरिदं यत् "वान्तोयि प्रत्यये" पा॰ अवादेशः । गव्य गोदुग्धादौ भावप्र॰ तद्गुणाद्युक्तं यथा
"गव्यं दुग्धं विशेषेण मधुरं रसपाकयोः । शीतलं स्तन्यकृत् स्निग्धं वातपित्तास्रनाशनम् । दोषधातुमल-

स्रोतःक्लिन्नत्वक्लेदकरं गुरु। जरासमस्तरोगाणां शान्तिकृत् सेविनां सदा”। चीरवर्गशब्दे २२७७ पृ० विवृतिः। गव्यदधिगुणाः भावप्र० उक्ता यथा
“गव्यं दधि विशेषेण स्वाद्वम्लञ्च रुचिप्रदम्। पवित्रं दीपनं हृद्यं पुष्टिकृत् पवनापहम्। उक्तं दघ्नामशेषाणां मध्ये गव्यं गुणाधिकम्”
“तन्नवनीतगुणाः” तत्रोक्ता यथा
“नवनीतं हितं गव्यं वृष्यं वर्णबलाग्निकृत्। संग्राहि वातपित्तासृक्क्षयार्शोऽर्दितकासहृत्। तद्धितं बालके वृद्धे विशेषादमृतं शिशोः”
तद्घृतगुणाः भावप्र० उक्ता यथा
“गव्यं घृतं विशेषेण चक्षुष्यं वृष्यमग्निकृत्। स्वादुपाककरं शीतं वातपित्तकफापहम्। मेधालावण्यकान्त्योजस्तेजोवृद्धिकरं परम्। अलक्ष्मीपापरक्षोघ्नं वयसः स्थापकं गुरु। बल्यं पवित्रमायुष्यं सुमङ्गल्यं रसायनम्। सुगन्धं रोचनं चारु सर्वाज्येषु गुणाधिकम्”।
तन्मूत्रगुणा भावप्र० उक्ता यथा
“गोमूत्रं कटु तीक्ष्णोष्णं क्षारं तिक्तं कषायकम्। लघ्वग्निदीपनं मेध्यं पित्तकृत्कफवातहृत्। शूलगुल्मोदरानाहकण्डूक्षिमुखरोगजित्। किलासगदवातामवस्तिरुक्कुष्ठनाशनम्। कासश्वासापहं शोथकामलापाण्डुरोगहृत्। कण्डूकिलासगदशूलमुखाक्षिरोगान् गुल्मातिसारमरुदामयमूत्ररोधान्। कासं सकुष्ठजठरक्रिमिपाण्डुरोगान् गोमूत्रमेकमपि पीतमपाकरोति। सर्वेष्वपि च मूत्रेषु गोमूत्रं गुणतोऽधिकम्। अतोऽविशेषात् कथने मूत्रं गोमूत्रमुच्यते। प्लीहोदरश्वासकासशोथवर्चोग्रहापहम्। शूलगुल्मरुजानाहकामलापाण्डुरोगहृत्। कषायं तिक्ततीक्ष्णञ्च पूरणात् कर्णशूलनुत्”।
तत्र सौरभ्याम् “पङ्के गौरिव सीदति” भा०वि० १८१। “यथा गौर्गवि चाफला” मनुः “गोघ्नवत् विहितः कल्पः” प्रा०त० विश्वा०। वाचि “पन्नगगवीगुम्फेषु चाजागरीत्” मल्लि० “प्रेयेद्रुतपतङ्गगवोहैयङ्गवीनं रसात्” नैष०
नेत्रादिषु “गोमध्यमध्ये! मृगगोधरे! हे सहस्रगोभूषणकिङ्कराणाम्। नादेन गोभिः शिखरेषु मत्ता नृत्यन्ति गोकर्णशरीरभक्षाः” चौरः। “गामात्मसारां रघुरप्यवेक्ष्य” रघुः “क्षिप्रावरोधाङ्गनमुत्पथेन गाम्” माघः। हितादौ यत्। गव्य गोहितादौ भुवि पदान्ते गोशब्दस्य अतिपरे परहृपं गोऽग्रं प्रकृतिवद्भावश्च गो अग्रं अचिपरे वा अवङ् गवाग्रम्। अश्वशब्दे परे गवाश्वादि० द्वन्द्व एकवद्भावः। गवाश्वम्। [वैद्यक०

**गोकण्ट** पु० गोः पृथिव्याः कण्ट इव। (गोखुरी) चुपभेदे

**गोकण्टक** पु०न० गोः भूमेः कण्टक इव। १विकङ्कतवृक्षे (वइचि) राजनि०। २गोः खुरे च मेदि०३तत्क्षते स्थपुटे ४विषमोन्नते हेमच०।

**गोकर्ण** पु० गौरिव कर्णौ यस्य। १सर्पे, “नृत्यन्ति गोकर्णशरीरभक्षाः” इति चौरः। गौरिव कर्णोऽस्य। २अश्वतरे, ३मृगभेदे, ४गणदेवताभेदे, ५अनामिकायुतविस्तृताङ्गुष्ठमाने, शैवे ६तीर्थभेदे च मेदि०। ७रुद्रभेदे। “गजेन्द्रकर्ण! गोकर्ण पाणिकर्ण! नमोऽस्तु ते” भा०शा० २८६ अ० “महाबलस्य गोकर्णे” आगमः “गोकर्णे भद्रकर्णी स्यात्” देवीगीता “ततोऽभिव्रज्य भगवान् केरलांस्तु त्रिगर्त्तकान्। गोकर्णाख्यं शिवक्षेत्रं सान्निध्यं यत्र धूर्जटेः”। भाग०। ८काशीस्थे शिवलिङ्गभेदे च “गोकर्णभारभूतेशौ तत्कर्णौ परिकीर्त्तितौ” काशीख०११अ०।

**गोकर्णी** स्त्री गोः कर्ण इव पत्रमस्याः गौरा०ङीष्। मूर्वालतायाम् अमरः। [अघोपदत्वात् न ह्रस्वः। गवादौ

**गोका** स्त्री गौरेव स्वार्थे क।“केऽणः” पा०सूत्रे पूर्वपकारेण

**गोकामुख** पु० भारतवर्षस्थे पर्वतभेदे “भारतेऽप्यस्मिन् वर्षे सरिच्छैलाः सन्ति बहवः। मलयमङ्गलप्रस्थ इत्युपक्रमे “नीलो गोकामुख इन्द्रकीलः कामगिरिरिति चान्ये च शतसहस्रशः शैलाः” भाग० ५।१६।१५।१७श्लो०

**गोकिराटिका** स्त्री गां वाचं किरति कॄ—क तथा सती अटति अट–ण्वुल्। सारिकायाम् खगभेदे हेमच०।

**गोकिराटा** स्त्री गोःकरा वाणीकिरा सती अटति अट अच् गौरा० ङीष्। सारिकाखगे राजनि०।

**गोकि(की)ल** पु०गोः पृथिव्याः कील इव। १मूषले २हले च हारा०, पृषो० ह्रस्वमध्यः तत्रार्थे हेमच०।

**गोकुल** न० ६त०। १गोसमूहे “ग्रामान् वा बहुगोकुलान्” भा०व०१७१।७८। गवां कुलमत्र। २गोष्ठे “गोकुले कन्दुशाला यां तैलयन्त्रे क्षुयन्त्रयोः। अमीमांस्यानि शौचानि स्त्रीषु बालातुरेषु च” ति०त०शाता०। मथुरापुर्य्याः पूर्वदक्षिणस्थे यमुनापारवर्त्तिनि व्रजाख्ये ३नन्दगोपवासस्थाने च “कालेन व्रजता तात! गोकुले रामकेशवौ” जानुभ्यां सह पाणिभ्यां रिङ्गमाणौ विजह्रतुः” भाग० १०स्क०। सोऽभिजनोऽस्य अण् तस्य बहुत्वे लुक्। पिता-

दिक्रमेण तद्वासिजनेषु आर्षे प्रयोगे क्वचित् एकार्थेऽपि लुक्। "लोकं विकुण्ठमुपनेष्यति गोकुलं स्म" भा० २।८।१२ "गोकुलं गोकुलवासिजनम्" श्रीधरः

**गोकुलिक** त्रि॰गोर्नेतस्य कुलः संस्थानमत्र। १केकरे। गवि पङ्कस्थगव्यां कुलिकः जडइव। २पङ्कस्थगव्युपेक्षके च मेदि०।

**गोकृत** न॰३त॰। १गोमये २गवा चरिते त्रि॰।

**गोक्ष्वेडक** पुंस्त्री गवि क्ष्वेड इव कायति कै—क। सुश्रुतोक्ते प्रतुदखगभेदे कपोतादिगणे "कुलिङ्गगोक्ष्वेडकेत्याद्युक्ता "प्रतुदाः" इत्युक्तं सुश्रुतेन।

**गोखा** स्त्री गां भूमिं खनत्यनया खन—ड। नखे पाठान्तरे क्रोडादिषु पाठात् स्वाङ्गत्वेऽप्युपसर्जने न ङीष्

**गोखु(क्षु)र** पु॰गोः पृथिव्याः खु(क्षु)र इव। स्वनामख्याते क्षुपभेदे। तत्पर्यायगुणाद्युक्तं भावप्र॰

"गोक्षुरः क्षुरकोऽपि स्यात् त्रिकण्टः स्वादुकण्टकः। गोकण्टको गोक्षुरको वनशृङ्गाट इत्यपि। स्थूलं कथाच दंष्ट्रा च तथा स्वादिक्षुगन्धिका। गोक्षुरः शीतलः स्वादुर्बलकृद् बस्तिशोधनः। मधुरो दीपनो वृष्यः पुष्टिदश्चाश्मरीहरः। प्रमेहश्वासकासार्शःकृच्छ्रहृद्रोगवातनुत्"।

स च लघुपञ्चमूलान्तर्गतो दशमूलान्तर्गतश्च यथाह तत्रैव "शालपर्णी पृश्निपर्णी वार्त्ताकी कण्टकारिका। गोक्षुरः पञ्चभिश्चैतैः कनिष्ठं पञ्चमूलकम्। पञ्चमूलं लघु स्वादु बल्यम्पित्तानिलापहम्। नात्युष्णं बृंहणं ग्राहि ज्वरश्वासाश्मरीप्रणुत्" "उभाभ्यां पञ्चमूलाभ्यां दशमूलमुदाहृतम्। दशमूलं त्रिदोषघ्नं श्वासकासशिरोरुजः। तन्द्राशोथज्वरानाहपार्श्वपीडाऽरुचीर्हरेत्।"

गोक्षुरिः इकारान्तोऽपि तत्रार्थे शब्द॰पृषो॰साधु।

**गोगोयुग** न॰गवोर्द्वित्वम् गो+द्वित्वे गोयुगच्। गवोर्द्वित्वे।

**गोगोष्ठ** न॰ गोः स्थानम् गो+स्थाने गोष्ठच्। गवां स्थाने।

**गोगृष्टि** स्त्री गौर्गृष्टिः जात्या समासे परनिपातः। सकृत्प्रसूतायां गवि सि॰कौ॰।

**गोग्रन्थि** पु॰ गोजातो ग्रन्थिः। १करीषे। गोर्ग्रन्थिर्यत्र। २गोष्ठस्थाने। ३गोर्ग्रन्थिरिव। गोजिह्विकौषधौ मेदि॰।

**गोघ्न** त्रि॰ गां हन्ति हन—क ६त॰। गोहन्तरि। तद्व्रतं मनुना दर्शितं यथा

"उपपातकसंयुक्तोगोघ्नोमासं यवान् पिबेत्। कृतवापोवसेद्गोष्ठे चर्मणा तेन संवृतः। चतुर्थकालमश्नीयादक्षारलवणं मितम्। गोमूत्रेण चरेत् स्नानं द्वौ मासौ नियतेन्द्रियः। दिवानुगच्छेत्तागास्तु तिष्ठन्नूर्द्ध्वं रजः पिबेत्। शुश्रूषित्वा नमस्कृत्वा रात्रौ वीरासनं वसेत्। तिष्ठन्तीष्वनुतिष्ठेत्तु व्रजन्तीष्वप्यनुव्रजेत्। आसीनासु तथासीनोनियतोवीतमत्सरः। आतुरामभिशस्तां च चौरव्याघ्रादिभिर्भयैः। पतितां पङ्कमग्नां वा सर्वप्राणैर्विमोचयेत्। उष्णे वर्षति शीते वा मारुते वाति वा भृशम्। न कुर्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः। आत्मनो यदि वान्येषां गृहे क्षेत्रे खलेऽथवा। भक्षयन्तीं न कथयेत् पिबन्तं चैव वत्सकम्। अनेन विधिना यस्तु गोघ्नोगामनुगच्छति। स गोहत्याकृतं पापं त्रिभिर्मासैर्व्यपोहति। वृषभैकादशा गाश्च दद्यात् सुचरितव्रतः। अविद्यमाने सर्वस्वं वेदविद्भ्योनिवेदयेत्। "गोघ्नवत् विहितः कल्पश्चान्द्रायणमथापि वा" प्रा॰त॰ स्मृतिः। गौर्हन्यतेऽस्मै सम्प्रदाने क। २अतिथिभेदे तस्यागमने हि मधुपर्कार्थं गोहननं विहितम् "महोक्षं वा महाजं वा श्रोत्रियाय प्रकल्पयेत्" इति स्मृतेः कलौ तु तन्निषेधः "मधुपर्के पशोर्वधः" इत्यादिना पुराणे कलिवर्ज्येषु तस्योक्तेः।

**गोघृत** न॰गोः पृथिव्या घृतमिव यस्य पोषकत्वात्। १वृष्टिजले त्रिका॰। ६त॰। २गव्ये घृते च

**गोचन्दन** न॰गोशीर्षाख्यं चन्दनम् शा॰त॰। गोशीर्षाख्ये चन्दने "गोचन्दनामोहनिकामधुकमाक्षिकंमधु। सुवर्णमिति संयोगः पेयः सौभाग्यमिच्छता" सुश्रुतः

**गोचर** पु॰ गावः इन्द्रियाणि चरन्त्यस्मिन् नि॰अच्। १इन्द्रियवेद्ये रूपरसादौ विषये। एकैकेन्द्रियविषयाश्च शब्दादयस्तत्र श्रोत्रस्य शब्दो विषयः, एवं त्वचः स्पर्शः, नेत्रस्य रूपम्, जिह्वाया रसः, घ्राणस्य गन्धः। २ज्ञानमात्रविषयेऽपि "सदसत्संशयगोचरोदरी" नैष॰ "अवाङ्मनसगोचरम्" वेदा॰सा॰ गोचरत्वं ज्ञाननिरूपिता विषयता सा च स्वरूपसम्बन्धविशेषः। कर्त्तरि अच्। ३भूमिचरे त्रि॰। गावश्चरन्त्यस्मिन् अच्। ४गवां प्रचारस्थानादौ, "उपारताः पश्चिमरात्रिगोचरात्" किरा॰ ५गन्तव्यदेशे "इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्" कठोप॰ ६देशमात्रे, "ज्ञानमस्ति समस्तस्य जन्तोर्विषयगोचरे" देवीमा॰। ७गत्यां व्योमगतिमतां ग्रहाणां चरः भावे अच्। गतिभेदे च "गोचरे वा विलग्ने वा ये ग्रहारिष्टसूचकाः" ज्यो॰ सन्निमित्ततया-

ऽस्त्यस्य अच् । ज्योतिषोक्ते जन्मराश्यवधिकेषु तत्तत् स्थानेषु रविसूर्यादिग्रहगमननिमित्तशुभाशुभनिरूपणे । ज्योतिषोक्त गोचरशुद्धग्रशुद्धी वामवेध दक्षिणवेधादिकं च मु०चि० पी०धा० उक्तम् यथा

"सूर्यो रसान्त्ये खयुगेऽग्निनन्दे शिवाशयोर्भौमशनी तमश्च । रसाङ्कयोर्लाभशरे गुणान्त्ये, चन्द्रोऽम्बराब्धौ गुणनन्दयोश्च (१)। लाभाष्टमे चाद्यशरे रसान्त्ये नगद्वये, सोऽद्विशरेऽब्धिरामे । रसाङ्कयोर्नामविधौ खनागे लाभव्यये, देवगुरुः शराब्धौ (२)। द्वयन्त्ये नवाशे द्विगुणे शिवाग्नौ, शुक्रः कुनागे द्विनगेऽग्निरूपे। वेदाम्बरे पञ्चनिधौ गजेषौ नन्देशयोर्भानुरमे शिवाग्नौ (३)। क्रमाच्छुभो विद्ध इति ग्रहैः स्यात्पितुः सुतस्यात्र न वेधमाहुः । दुष्टोऽपि खेटो विपरीतवेधाच्छुभो द्विकोणे शुभदः सितेऽब्जः (४)। स्वजन्मराशेरिह वेधमाहुरन्ये ग्रहाधिष्ठितराशितः सः । हिमाद्रिविन्ध्यान्तर एव वेधो न सर्वदेशेष्विति काश्यपोक्तिः (५)। जन्मर्क्षे निधनं ग्रहे जनिभतो घातः, क्षितिः श्रीर्व्यथा चिन्ता सौख्यकलत्रदौस्थ्यमृतयः स्युर्माननाशः सुखम् । लाभोपाय इति क्रमात्तदशुभध्वस्त्यै जपः स्वर्णगोदानं शान्तिरथो ग्रहं त्वशुभदं नो वीक्ष्यमाहुः परे (६)। पापान्तःपापयुग् द्यूने पापाच्चन्द्रः शुभोऽप्यसत् । शुभांशे चाधिमित्रांशे गुरुदृष्टोऽशुभोऽपि सत् (७)। सितासितादौ सदृशे चन्द्रे पक्षौ शुभाशुभौ । व्यत्यासे चाशुभौ प्रोक्तौ सङ्कटेऽब्जबलं त्विदम् (८)। वज्रं शुक्रेऽब्जे सुमुक्ता, प्रवालं भौमे,ऽगौ गोमेदमार्कौ सुनीलम् । केतौ वैदूर्यं, गुरौ पुष्पकं ज्ञे पाचिः, प्राङ्माणिक्यमर्के तु मध्ये (९)। माणिक्यमुक्ताफलविद्रुमाणि गारुत्मतं पुष्पकवज्रनीलम् । गोमेदवैदूर्यकमर्कतः स्यूरत्नान्ययोग्यस्य हिते सुवर्णम् (१०)। धार्यं राजावर्त्तकं राहुकेत्वोरौप्यं शुक्रेन्द्वोश्च, मुक्ता गुरोस्तु । लोहं मन्दस्यारभान्वोः प्रवालं ताराजन्मर्क्षाच्चिराद्दत्तिनः स्यात्" (११)। मु०चि० ।

"अथ गोचरप्रकरणं व्याख्यायते तत्र जन्मराशितः प्रोक्तनिषिद्धस्थानस्थितेदानीन्तनग्रहवशेन शुभाशुभनिरूपणं गोचर इत्युच्यते तत्र ग्रहाणां गोचरफलं शुभाशुभरूपमुपजातिकाद्वयेनेन्द्रवज्रया चोपजातिका पूर्वार्द्धेन चाह सूर्यो रसान्त्ये इत्यादौ सर्वोद्वन्द्वो विभाषयैकवद्भवतीति समाहारद्वन्द्व एकवचनान्तः। शिवाशयोरित्यादावितरेतरयोगद्वन्द्वः अम्बराब्धावित्यादिषु त्वनत्यमागमशासनमिति नुमभावोऽध्येयः एवं सर्वत्र व्याख्येयम् । अत्र चतुर्थश्लोकेनान्वयः स्वजन्मराशेरिति पञ्चमश्लोकस्थपदमत्राध्याहार्यम्। तत्र सूर्यग्रहः स्वजन्मराशेः रसान्त्ये क्रमाच्छुभो विद्धश्च स्यात् । सूर्यः स्वजन्मराशेः सकाशाद्यदि षष्ठस्थाने तदा शुभम् अतः जन्मराशेर्द्वादशस्थानस्थिताश्चेदन्ये ग्रहाः स्युस्तदा विद्धः शुभोऽप्यशुभफलदाता अत्र शनैश्चरस्य सूर्यपुत्रत्वाद्वेधो नाङ्गीकार्यः अतः पितुर्जनकस्य सुतसम्बन्धिनं वेधं नाहुः सुतस्यापि पितृसम्बन्धिवेधं नाहुः । तथा खयुगे जन्मराशेर्दशमे सूर्यः शुभश्चतुर्थस्थानस्थिताश्चेदन्ये ग्रहाः शनिवर्जिताश्च स्युस्तदा विद्ध इत्येवं श्लोकत्रयं सम्यग्व्याख्येयम् । तथा अग्निनन्दे तृतीयनवमयोः, शिवाशयोरेकादशपञ्चमयोः सूर्यः क्रमाच्छुभो विद्धश्च ज्ञेयः उक्तञ्च नारदेन "शुभोऽर्को जन्मतस्त्र्यायदशषट्सु विध्यते। जन्मतो नवपञ्चाब्धव्ययगैर्व्यार्किभिस्तदा" । अथ भौमेति । भौमशनी तमो राहुश्चैते ग्रहाः स्वजन्मराशितः रसाङ्कयोः षष्ठनवस्थानयोः क्रमाच्छुभा विद्धाश्चेत्यर्थः परन्तु शनेः सूर्यवेधो नास्तीत्युक्तमेवेति । यदाह वसिष्ठः "त्रिषडेकादशसहितो धरासुतो रिष्फधर्मसुतसंस्थैः। दिनकरतनयोऽपि शुभो न विद्यते खेचरैर्विनोष्णकरमिति" । "शनिवद्राहुकेतू च" इति वचनाद्राहोरप्येवमेवेति विचारः । राहोरुपलक्षणत्वात्केतोरपि उक्तञ्च शार्ङ्गधरेण "राहुकेतुफलं सर्वं मन्दवत्कथितं बुधैः। वेधोऽपि तद्वदेवोक्तो वामवेधस्तथैव च ।" अथ चन्द्र इति जन्मराशितः अम्बराब्धौ दशमचतुर्थयोः, गुणनन्दयोस्तृतीयनवमयोः(१) लाभाष्टमे एकादशाष्टमयोः, आद्यशरे प्रथमपञ्चमयोः, रसान्त्ये षष्ठद्वादशस्थानयोः नगद्वये सप्तमद्वितीययोः स्थानयोश्चन्द्रः क्रमात्शुभः विद्धश्च ज्ञेयः चन्द्रस्य बुधवेधो नास्ति । उक्तञ्च नारदेन "विध्यते जन्मतोनेन्दुर्द्यूनाद्यायारिखत्रिषु । खेष्टान्त्याब्धु धर्मस्थैर्विबुधैर्जन्मतः शुभः" इति । अथ ज्ञ इति जन्मराशेः द्विशरे द्विपञ्चमयोः अब्धिरामे चतुर्थतृतीययोः, रसाङ्कयोः षष्ठनवमयोः, नामविधौ अष्टमप्रथमयोः, खनागे दशमाष्टमयोः, लाभव्यये एकादशद्वादशयोः स्थानयोर्ज्ञो बुधः क्रमाच्छुभो विद्धश्च ज्ञेयः । परं त्वत्र चन्द्रवेधो नास्ति यदाह नारदः "ज्ञः स्वाब्ध्यग्न्यष्टखायेषु जन्मतश्चेन्न विध्यते। सुतत्र्यब्ध्याद्याष्टमान्त्यसंस्थितैरिन्दुजः शुभः" इति अथ देवगुरु-

रिति जन्मराशितः शराब्धौ पञ्चमचतुर्थयोः, (२) द्व्यन्त्ये द्वितीयद्वादशस्थानयोः, नवाशे नवमदशमयोः स्थानयोः द्विगुणे द्वितीयतृतीययोः शिवाग्नौ एकादशतृतीययोः। देवगुरुर्वृहस्पतिः क्रमाच्छुभो विद्धश्च ज्ञेयः उक्तञ्च नारदेन "जन्मतः स्वायगोऽक्ष्यद्रिष्वन्त्याद्युजलत्रिगैः जन्मराशेर्गुरुः श्रेष्ठो ग्रहैर्यदि न विध्यते" इति। अथ शुक्र इति जन्मराशेः कुनागे प्रथमाष्टमयोः, द्विनगे द्वितीयसप्तमयोः, अग्निरूपे तृतीयप्रथमयोः, वेदाम्बरे चतुर्थदशमयोः, पञ्चनिधौ पञ्चमनवमयोः, गजेषौ अष्टमपञ्चमयोः, नन्देशयोर्नवमदशमयोः, भानुरसे द्वादशषष्ठयोः, शिवाग्नौ एकादशतृतीययोः स्थानयोः, (२) शुक्रः क्रमाच्छुभो विद्धश्च ज्ञेयः यदाह नारदः "जन्मभादाद्यताद्यष्टान्त्यायेष्विष्टो न विध्यते। भार्गवो मृत्युसप्ताद्यखाङ्केशायारिपञ्चगैरिति" आद्युतेत्यभिविधावाङः सहतेनान्त्राभिविधिरिति तेन प्रथमद्वितीयतृतीयचतुर्थपञ्चमानां ग्रहाणामित्यर्थः। इदमत्राकूतं यो यो ग्रहः रवस्त्र्यद्यादौ प्राक्पठितेषु स्थानेषु विद्यमानः स स ग्रहः शुभदः शुभस्थानव्यतिरिक्ताखिलस्थानेषु विद्यमानः स स ग्रहोऽशुभफलदाता अतएवाह श्रीपतिः "सर्वे लाभगृहस्थिताश्च सरिपुत्र्यर्कः कुजार्की त्रिषट्। प्राप्तौ शाद्यसमन्मथारिषु शशी खाष्टारिवर्जं भृगुः। धीधर्मान्तधनेषु वाक्पतिरिति स्वाष्टाब्धुखस्थो बुधः श्रेष्ठो जन्मगृहाद्धि गोचरविधौ विद्धो न चेत् स्याद्ग्रहैरिति"। अर्थादेवानुक्तस्थानेष्वशुभः स स ग्रहः। अत ग्रहाणां विहितनिषिद्ध स्थानफलानि विधिरत्ने। तत्र

रवेः। "स्थानं जन्मनि नाशयेद्दिनकरः कुर्यात्, द्वितीये भयं, दुश्चिक्ये३ श्रियमातनोति हिबुके४ मानक्षयं यच्छति। दैन्यं पञ्चमगः करोति रिपुहा षष्ठेऽध्वहा सप्तमे पीड़ामष्टमगः करोति परुषां कान्तिक्षयं धर्म९गः। कर्मसिद्धिजनकस्तु कर्म१०गो वित्तलाभकृदथाय११संस्थितः। द्रव्यनाशजनितां महापदं यच्छति व्यय१२गतो दिवाकरः"

चन्द्रस्य—जन्मन्यन्नं दिशति हिमगुर्वित्तनाशं द्वितीये दद्यात् द्रव्यं सहज३भवने कुक्षिरोगं चतुर्थे। कार्ये नाशं तनय५स्थगो वित्तलाभं च षष्ठे द्यूने७ द्रव्यं युवतिसहितं मृत्यु८संस्थोऽपमृत्युम्। नृपभयं कुरुते नवमः शशी दशमधामगतस्तु महत् सुखम्। विविधमाय११गतः कुरुते धनं व्यय१२गतस्तु रुजं धनसंक्षयम्"

कुजस्य—"प्रथमगृहगः क्षोणीसूनुः करोत्यरिजं भयं क्षपयति धनं वित्त२स्थाने तृतीयगतोऽर्थदः। अरिभयगतः पाताले४ऽर्थान् क्षिणोति हि पञ्चमो रिपु६गृहगतः कुर्याद्वित्तं रुजं मदन७स्थितः। जननितो निधन८स्थः शस्त्राबाधां धराजो दिशति नवमसंस्थः कायपीड़ामतीव। शुभमपि दशमस्थो लाभ११गो भूरिलाभं १२व्ययभवनगतोऽसौ व्याध्यनर्थार्थनाशान्"

बुधस्य—"बुधः प्रथमगोभयं दिशति बन्धमर्थं धने२ धनं रिपुभयान्वितं सहज३गचतुर्थेऽर्थदः। अनिर्वृतिकरो भवेत्तनय५गोऽरि६गः स्थानदः करोति मदन७स्थितो बहुविधां शरीरव्यथाम्। अष्टमे शशिसुते धनवृद्धिर्धर्म९गस्तु महतीं तनुपीडाम्। कर्म१०गः सुखमथाय११गतोऽर्थं द्वादशे भवति वित्तविनाशः।

गुरोः—"भयं जन्मन्यार्यो जनयति धन२स्थोऽर्थमतुलं तृतीयेऽङ्गक्लेशं दिशति च चतुर्थेऽर्थविलयम्। सुखं पुत्र५स्थाने रुजमपि च कुर्यादरि६गृहे गुरुर्द्यूने७ पूजां धननिचयनाशं च निधने८। धर्म९गतो धनवृद्धिकरः स्यात्प्रीतिहरो दशमेऽमरपूज्यः। स्थानधनानि ददाति स आये११ द्वादशगस्तु मानसपीडाम्"

भृगोः। "जन्मन्यतिक्षयकरो भृगुजोऽर्थदोऽर्थे २दुश्चिक्य३गः सुखकरो धनदश्चतुर्थे। स्यात्सुतदस्तनय५गोऽरि६गतोऽरिवृद्धिं शोकप्रदो मदन७गो निधने८ऽर्थदायी। जनयति विविधाम्बराणि धर्मे९ न सुखकरो दशमस्थितस्तु शुक्रः। धननिचयकरः स लाभ११संस्थो व्यय१२भवनेऽपि धनागमं करोति"

शनेः। "वित्तध्वंसं रुगाप्तिं दिनकरतनयो जन्मराशिं प्रपन्नो वित्तक्लेशं द्वितीये धनहरणकृतं वित्तलाभं तृतीये। पाताले४ शत्रुवृद्धिं सुतभवन५गतः पुत्रमित्रार्थनाशं षष्ठे स्थानेऽर्थलाभं जनयति मदने७ दोषसंघातमार्किः। शरीरपीडां निधने८ च धर्मे९ धनक्षयं कर्मणि१० दौर्मनस्यम्। उपान्त्य११गो वित्तमनर्थमन्त्ये१२ शनिर्ददातीत्यवदद्वशिष्ठः"

राहोः केतोश्च—"राहुर्जन्मगतो भयं च कलहं सौभाग्यमानक्षयं वित्तं सम्महासुखं नृपभयं चार्थक्षयं यच्छति। सन्तापं कलहं च वित्तमधिकं शीघ्रं विनाशं क्रमात् केतुस्तत्फलमेव राशिषु वदेच्छंसन्ति गर्गादयः"।

एतच्छुभाशुभफलप्रदा ग्रहाः कक्षसन्धिगतास्तथा राशिसन्धिगता स्वगृहराशेः फलं ददति वक्रिणस्तु प्रागराशेरित्याह कमलासनः "कक्षसन्धिगताः

खेटाः राशिसन्धिगता ग्रहाः। पूर्वराशेः फलं दद्यु-र्वक्रो तद्विपरीतगमिति" राशिग्रहणं नक्षत्रस्याप्युपलक्षणम्। वसिष्ठोऽपि "भवनान्त्यगताश्चिन्त्यान्तगताश्च गगनचराः। दद्युः परभवनफलं प्राग्भवनफलं च वक्रिता यत्र" इति। अस्यार्थः भवनं नक्षत्रं तस्य सन्धिः एकस्माद्विनिर्गत्यापरत्र संक्रमणं सन्धिरेवं राशिसन्धिश्च। तत्र सन्धिमानम्। "देवद्युहूर्त्तवोऽष्टाष्टौ नाड्योऽङ्गाः स्वल्पाः क्रमात्। वर्ज्याः संक्रमणेऽर्कादेः प्राग्रेऽर्केऽस्यातिनिन्दिताः" इति विवाहप्रकरणे वक्ष्यति ग्रन्थकृत्। संक्रमणकाल एव सन्धिकालः सर्वेषां ग्रहाणाम् "वरिष्ठविम्बं ग्रहभुक्तिभक्त"मित्यादिना भास्करेणोक्तत्वात्। तदेतदस्माभिः संक्रान्तिप्रकरणे सप्रपञ्चं निरूपितं तत एवावधार्यम्। तत्र सूर्यादिग्रहाः देवद्युहूतिपद्योक्त घटिकोपलक्षिते नक्षत्रान्ते राश्यन्ते वा स्थिता जिगमिषितस्य नक्षत्रस्य राशेर्वा फलं प्रयच्छन्ति वक्रिणस्तु पूर्वोक्तलक्षणोपलक्षिते नक्षत्रादौ राश्यादौ वा स्थिता भुक्तस्य नक्षत्रस्य राशेर्वा फलं ददति। तत्र भौमाद्याः ग्रहाः वक्रातिचारयोः प्राप्ताशिफलं कियन्ति दिनानि प्रयच्छन्तीत्याह वसिष्ठः "दशदिवसं पञ्चदिनं त्रिपक्षमतिचारवक्रयोर्दद्युः। भौमाद्याः पञ्चदिनं प्राप्ताशिफलं च पञ्च मासांश्चेति" भौमाद्याः स्वगत्या यावता कालेन राशिं जहति ततोऽल्पेन न्यूनाधिकभावेन स चारः यदा चारसमये राशिं जहति सोऽतिचारः, वक्रं प्रसिद्धमेव। अथ वामवेधं शुक्लपक्षे चन्द्रबलं चोपजात्युत्तरार्द्धेनाह। दुष्टोऽपि स्वजन्मराशेः सकाशादनिष्टस्थानस्थितोऽपि खेटो विपरीतवेधात् वामवेधाच्छुभः शुभफलदाता। अयमर्थः येषु षड्दशमतृतीयैकादशेषु स्थितः सूर्यः शुभफलदाता तद्भिन्नान्यष्टौ स्थानान्यशुभान्येव तत्र द्वादशचतुर्थनवमपञ्चमाख्येष्वनिष्टस्थानेषु स्थितः सूर्यस्तदैवानिष्टफलदः स्याद्यदा प्राक् पठितैः क्रमेण षष्ठादिस्थानस्थितैः शनिवर्जितैः ग्रहैर्न विद्धः यदा तु विद्धस्तदा शुभफलदोऽपि षष्ठादिस्थाने शुभदो नैव स्यात्। अन्येषु स्थानेषु प्रथमद्वितीयसप्ताष्टमेषु स्थितः सूर्योऽनिष्टफलद एव। एवं चन्द्रबुधयोः षडेव विरुद्धस्थानानीति क्रमवेधवामवेधौ स्याताम्। भौमस्य तु त्रीण्येव शुभानीतराण्यशुद्धान्येव तत्र नवपञ्चमद्वादशस्थानस्थितभौमस्याशुभस्य क्रमेण षष्ठैकादशतृतीयस्थानस्थैर्ग्रहैर्भौमवेधेन शुभत्वमेव। अन्येष्वशुभस्थानस्थितेष्वशुभ एव भौमः। एवं शनिराहुकेतवोऽप्येवाः गुरोरप्येवमेव। तत्र तु प्रथमषष्ठस्थानस्थो गुरुरशुभ एव। शुक्रस्य तु नवस्थानानां शुभत्वात्तद्व्यतिरिक्तानि त्रीणि षष्ठसप्तमदशमस्थानान्यशुभानि तेषामेव क्रमेण द्वादशद्वितीयचतुर्थस्थानस्थग्रहजनितवामवेधेन शुभत्वमेव। अन्येषां तु तत्रापठितत्वात् स्थानानां शुभत्वादेव न वामवेधविचारार्हत्वमिति परिस्फुटोऽर्थः। यदाह कश्यपः "अपि विद्धो ग्रहः कश्चित् ददाति शुभं फलम्। वामवेधविधानेन त्वशुभोऽपि शुभप्रदः। अतस्तद्द्विविधं पूर्वं विचार्यैव फलं वदेत्" इति। वसिष्ठोऽपि "वेधसमन्वितखचराणां प्रदिशन्त्यशुभफलं किञ्चित्। व्यत्ययवेधविधानादपि शुभास्ते शुभप्रदाः सततमिति" व्यत्ययवेधो वामवेधः। द्विकोण इति। सिते शुक्लपक्षेऽपि चन्द्रो द्विकोणे द्वितीयनवमपञ्चमस्थानेषु स्थितः शुभदः तत्रापि क्रमेण षष्ठाष्टमचतुर्थस्थानस्थितैर्बुधवर्जितैर्ग्रहैर्नो विद्धः इत्यपि ध्येयं उक्तं च नारदेन "शुक्लपक्षे शुभश्चन्द्रो द्वितीयनवपञ्चगः। रिपुरन्ध्रबन्धुसंस्थैर्न विद्धो हि गगनेचरैरिति" यदि विध्यते तदाऽशुभफलद एव (४) अथ द्विविधवेधे मतद्वयमुपजात्याह स्वजन्मेति। इह द्विविधवेधविधावन्ये नारदादयः। स्वजन्मराशेः सकाशाद्द्विविधं वेधं क्रमिकं वामिकं चाहुः। तथा चोभयथापि नारदेन जन्मत इत्युक्तम्। अथ कश्यपादिमतमुच्यते। स पुनर्द्विविधोऽपि वेधो ग्रहाधिष्ठितराशितो ज्ञेयः यथा सूर्यो जन्मराशेः सकाशात् षष्ठस्थितः शुभः स सूर्यःस्वाक्रान्तराशितो द्वादशस्थानस्थितैः शनिवर्जितैर्ग्रहैर्न विद्धः तथा सूर्यो जन्मराशिद्वादशस्थोऽपि नेष्टः सः सूर्यःस्वाक्रान्तराशिषष्ठस्थितैः शनिवर्जितैर्ग्रहैर्विद्धश्चेत्तदा शुभफलद इत्यर्थः। अथैतस्यैव द्विविधवेधस्य देशविशेषविषयत्वमुच्यते। हिमाद्रिविन्ध्यनामानौ पर्वतौ महे अविशेषावस्थया प्रसिद्धौ तयोरन्तरालवर्त्तिन्येव देशे स द्विविधोऽपि वेधो ज्ञेयः न सर्वदेशेषु हिमाद्रिविन्ध्यान्तराल बहिर्भूतसर्वदेशेषु द्विविधोऽपि वेधदोषो नास्तीति कश्यपस्य मुनेरुक्तिर्वचनम्। जन्मनक्षत्रादौ स्थानभेदे ग्रहणफलमाह जन्मार्क्ष इत्यादि। "यन्नक्षत्रगतो राहुर्ग्रसते चन्द्रभास्करौ। तज्जातानां भवेत्पीडा ये नराः शान्तिवर्जिताः।" भार्गवीये विशेषोऽपि "यस्य राज्यस्य नक्षत्रे स्वर्भानुरुपरज्यते। राज्यभङ्गं सुहृन्नाशं मरणं चात्र निर्दिशेदिति" राज्यस्य नक्षत्रे अभिषेकनक्षत्रे यदा

कदाचिद्राहुभुज्यमाननक्षत्रस्योपरागनक्षत्रत्वे ऐक्यमेव तदायं सन्दिग्धफलनिर्देशः यदा तु नक्षत्रभेदस्तदोपरज्यमाननक्षत्रेऽप्येवं फलनिर्देशः एवं राशिभेदेषूपरज्यमानराशिभेदेष्वप्येवम् । यतोऽस्मन्मते राहोर्दिग्देशकालावरणादिभेदात् ग्रहणत्वमेव नास्ति । तदुक्तं सिद्धान्तशिरोमणौ "दिग्देशकालावरणादिभेदान्न च्छादको राहुरिति ब्रुवन्ति"। एतदुपपत्तिर्भास्करेण स्वपद्यैरेव निरूपिता पितृचरणैश्च तोडरानन्दे राहुचारविचारे प्रपञ्चिता परन्तु राहुसाहित्यं विना ग्रहणानयनस्य शरसंस्कृतिमाश्रित्य स्वच्छानयनविशिष्टत्वात् करत्वादिति साहित्यविवक्षयैव राहोरुपरक्तत्वमुच्यते। अतएवोक्तं वराहेण "तस्मिन् काले सान्निध्यमस्य तेनोपचर्यते राहुः । याम्योत्तरा शशिगतिर्गणितेऽप्युपचर्यते तेनेति"५ । अथ जन्मादिराशिफलमुच्यते जनिभत इति । पञ्चम्यास्तसिल् जन्मराशेरारभ्य द्वादशसु राशिषु ग्रहणे सति क्रमादनुक्रमेण घातादिफलं भवति यथा जन्मराशौ ग्रहणे सति घातः शरीरपीडा, द्वितीयराशौ क्षतिः द्रव्यनाशः, तृतीयराशौ श्रीर्लक्ष्मीः, चतुर्थराशौ शरीरपीडा, पञ्चमराशौ चिन्ता पुत्रादीनां, षष्ठे राशौ सौख्यं, सप्तमराशौ कलत्रदोस्थ्यं स्त्रीमरणं, अष्टमराशौ मृत्युर्मरणं, नवमराशौ माननाशः, दशमराशौ सुखम्, एकादशराशौ लाभः, द्वादशराशौ मृत्युः आत्मन इति केचित् द्रव्यस्येत्यपरे, इदं च फलं षण्मासपर्यन्तमनुक्तमपि ध्येयं तदुत्तरं हि ग्रहणान्तरसम्भावनात् यथोक्तं दैवज्ञमनोहरे"घातं हानिमथ श्रियं जननिभाद्ध्वंसं च चिन्तां क्रमात् सौख्यं दारवियोजनं च कुरुते व्याधिं च मानक्षयम् । सिद्धिं लाभमपायमर्कशशिनोः षण्मासमध्ये ग्रहः इति" क्वचित्तु "स्थानान्त्र एवं शुभमध्यमाधमाः" इत्युक्तम् । दैवज्ञमनोहरे "घाताच्चतीयोऽष्टमगश्चतुर्थस्तथायसंस्थः शुभदः स्वराशिः । नवांशधीसप्तमगश्च विद्भिः पूज्यो द्विषट्को दशमाद्यसंस्थः" इति अत्र वाक्ये घातराशितोगणनोक्ता "त्रिषड्दशायोपगतं नराणां शुभप्रदं स्याद्ग्रहणं रवीन्द्वोः । द्विसप्तनन्देषु च मध्यमं स्याच्छेषेष्वनिष्टं मुनयो वदन्तीति" अत्रावध्यपेक्षायां स्वजन्मराशेरित्याध्याहार्यमेव । अथाशुभसूचकग्रहणप्रतीकारमाह तदशुभेति तत्र सूर्यचन्द्रयोर्ग्रहणस्य सम्बन्धि यदशुभं दुष्टफलं तस्य ध्वस्त्यै नाशाय जपः स्वर्णगोदानं अपो गायत्र्यादीनां मन्त्राणां स्वर्णं प्रसिद्धं गौः- प्रसिद्धा भूमिर्वा उपलक्षणत्वादन्येषां रूप्यादीनां यथा शक्त्या दानं कार्यमिति शेषः उक्तं च दैवज्ञमनोहरे "सुवर्णनिर्मितं नागं सतिलं ताम्रभाजनम् । सदक्षिणं सवस्त्रं च श्रोत्रियाय निवेदयेत् । सौवर्णं राजतं वापि बिम्बं कृत्वा स्वशक्तितः । भवेदुपगतक्लेशः छिद्रे विप्राय कल्पयेत् । दानमन्त्रश्च । तमोमय ! महाभीम ! सोमसूर्यविमर्दन ! । हेमनाग ! प्रदानेन मम शान्तिप्रदो भव" । स्कन्दपुराणे गोदानं भूमिदानं च स्वर्णदानं विशेषतः । ग्रहणे क्लेशनाशाय दैवज्ञाय निवेदयेत्" । किंचात्र देशविशेषः पात्रविशेषो द्रव्यविशेषश्च नापेक्ष्य इत्याह व्यासः "सर्वं गङ्गासमं तोयं सर्वे ब्रह्मसमा द्विजाः । सर्वभूमिः कुरुक्षेत्रं ग्रहणे चन्द्रसूर्ययोरिति" । तत्र स्नानदानादिकं कस्मिन् काले कर्त्तव्यमित्याह "ग्रस्यमाने भवेत् स्नानं ग्रस्ते होमो विधीयते । मुच्यमाने भवेद्दानं मुक्ते स्नानं विधीयत" इति तस्मिन् काले जपादिकमपि विधेयम् "सूर्येन्दुग्रहणं यावत्तावत् कुर्याज्जपादिकमिति" शिवरहस्योक्तेः आदिशब्दात् सुरार्चनमपि अत्र जन्मनक्षत्रजन्मराश्योर्ग्रहणशान्तिमाह वशिष्ठः "यस्यैव जन्मनक्षत्रे ग्रस्येते शशिभास्करौ तस्य व्याधिभयं घोरं जन्मराशौ धनक्षयः । द्रव्यमन्त्रविधानेन तस्य दोषापनुत्तये । उपरागस्नानविधिं सम्यग्वक्ष्ये समासतः । मण्डलं चतुरस्रं तु गोमयेन विलेपयेत् । अष्टदलेशानदिग्भागे वर्णकैः समलङ्कृते । स्थापयेच्चतुरः कुम्भांस्तत्र तान् सागरात्मकान् । सर्ववेदात्मकान् स्वत्वा सर्वतीर्थात्मकान् शुभान् । पञ्चवोशीरमायुक्त्यसर्वौषधिसमन्वितान् । मृत्तिकाहेमरत्नेन दग्धगुग्गुलचन्दनैः । पञ्चगव्याक्षतव्याजिस्फटिकैः सर्वपावनैः" । इत्युपक्रमे "तिलहोमं व्याहृतिभिः सहस्रमष्टसंयुतम् । एवं कृत्वा प्रयत्नेन स्नानकर्म समाचरेत् । आमन्त्र्य नवभिर्मन्त्रैः कुम्भान् संकल्पपूर्वकान् । एतानेव ततो मन्त्रान् वर्णयेच्चैव संलिखेत् । कर्तुः शिरसि तं बद्ध्वा वार्त्तिकैर्वेदमन्त्रकैः । सुमन्त्रितैः कुम्भजलैः स्नाप्यं नीराजयेत्ततः । दध्याज्यमग्ने विप्रेभ्यः शुक्लमाल्याम्बरः शुचिः । ऋत्विग्भ्यो दक्षिणां दद्याच्छिष्टेभ्यश्च स्वशक्तितः । योऽसौ वज्रधरो देव आदित्यानां प्रभुर्मतः । सहस्रनयनश्चन्द्रग्रहपीडां व्यपोहतु१ । यः कर्मसाक्षी लोकानां धर्मो महिषवाहनः । यमश्चन्द्रोपरागस्य ग्रहपीडां व्यपोहतु२ । रक्षोगणाधिपः

साक्षात् प्रलयानलसन्निभः। चन्द्रस्य यासे कायस्य रक्षःपीडां व्यपोहतु ३। नागपाशधरो देवः सदा मकरवाहनः। वरुणोऽम्बुपतिश्चान्द्रग्रहपीडां व्यपोहतु४। प्राणरूपो हि लोकानां वायुः कृष्णमृगप्रियः। वायुश्चन्द्रोपरागस्य पीडनं मे व्यपोहतु५। योऽसौ निधिपतिर्देवः खड्गशूलगदाधरः। चन्द्रोपरागकलुषां पीडां चापि व्यपोहतु६। योऽसाविन्दुधरो रुद्रः पिनाकी वृषवाहनः। चन्द्रोपरागपीडाञ्च नाशयेत् सङ्कटं तथा।
७ त्रैलोक्ये यानि भूतानि चराणि स्थावराणि च। ब्रह्मविष्ण्वर्कयुक्तानि तानि पापं दहन्तु मे८। आमन्त्रणोक्तमन्त्रोक्तास्त एव च मन्त्रकाः। अर्चयित्वा पितॄन् देवान् गोभूस्वर्णाम्बरादिभिः। अनेन विधिना यस्तु ग्रहस्नानं समाचरेत्। तत्रास्य ग्रहपीडा स्यादाजन्मसुधनक्षयः। परमां सिद्धिमाप्नोति पुनरावृत्तिदुर्लभम्। सूर्य्यग्रहेऽप्येवमेव सूर्य्यनाम्ना विधीयते।” अत्र यद्यपि जन्मराशौ धनक्षय इत्युक्तं तत्र च दोषाल्पत्वात् प्रतिमादानशान्त्यकर्त्तव्यता प्रतीयते तथापि प्राग्विलिखितवृद्धवचःसु विरुद्धफलाभिधानादेवास्य जन्मराशावपि ग्रहणे शान्तिर्विधेया। उभयाभिधानेन शान्त्यभिधानात् उक्तञ्च मत्स्यपुराणे “यस्य राशिं समासाद्य भवेद्ग्रहणसम्भवः। तस्य शान्तिं प्रवक्ष्यामि मन्त्रौषधिविधानतः”। इति अतो जन्मनक्षत्रजन्मराशिव्यतिरिक्ते विरुद्धे ग्रहणे शान्तिर्न विधेया वचनाभावात् किन्तु स्वविभवरूपं दानादिरूपं विधेयमिति तात्पर्य्यार्थः। सूर्य्यग्रहेऽप्येवमेवेति योऽसौ वज्रधरो देव आदित्यानां प्रभुर्मतः। सहस्रनयनः सूर्य्यग्रहपीडां व्यपोहतु” इत्युक्तदिशा चन्द्रपदस्थाने सूर्य्यपदं पूर्व्वमन्त्रश्लोकेषु प्रयोज्यमित्यर्थः। अथेदं ग्रहणं स्थानविशेषेणारिष्टजनकमित्युक्तं तच्च ग्रहणं न द्रष्टव्यमित्याह नो वीक्ष्यमिति उक्तं च “जन्मसप्ताष्टरिष्फाङ्कदशमस्थे निशाकरे। दृष्टोऽरिष्टप्रदो राहुर्जन्मर्क्षे निधनेऽपि चेति”जन्मर्क्षं जन्मनक्षत्रं निधनं वधतारा सप्तमी। अत्र दृष्ट इति पदश्रवणात् दुष्टस्थानावस्थितो राहुर्दृष्टः पुंसोऽरिष्टजनकः यदा तु मेघाद्यावरणेन स्वगृहमध्यावस्थित्या वा चक्षुष्मतोऽपि पुंसो राहुदर्शनाभावस्तदाऽरिष्टं नास्ति एवं चान्धस्य यत्र कुत्राप्यवस्थितस्य स्वगृहाद्बहिर्गन्तुमशक्नुवतो दुर्व्वारादेः सर्व्वारिष्टं स्नानादि वा नास्ति इति तेषामाशयः। अत्रेदं चिन्त्यते किमिदं ग्रहणं

दृष्टमेव स्नानाद्यधिकारसम्पादकम्? उत मेघाद्यावरणेनादृष्टमपि? कुतः सन्देहः? उभयथा वचनोपलम्भात् तथा हि वृद्धवशिष्ठः “सर्व्वेषामेव वर्णानां सूतकं राहुदर्शने। सचेलं तु भवेत् स्नानं सूतकान्नं विवर्जयेदिति”। षट्त्रिंशन्मते “सर्व्वेषामेव वर्णानां सूतकं राहुदर्शने। स्नात्वा कर्म्माणि कुर्व्वीत शृतमन्नं विवर्जयेदिति”। शृतं पक्वं शृतं पाके”पा०इति निपातनात् यद्यपि तस्मिन् सूत्रे“क्षीरहविषोरेवेति”महाभाष्यकृतोक्तं तथापि महामुनिप्रयोगादन्यस्मिन्नपि द्रव्ये ओदनादौ पाकसामान्याद्वृत्तिः। विष्णुः “राहुदर्शनदत्तं हि आब्रह्मचन्द्रतारकमिति”। शातातपः “स्नानं दानतपः श्राद्धमनन्तं राहुदर्शने” इति एवमादीनि वचांसि दर्शनपदसहितान्युपलभ्यन्ते अन्यथापि वशिष्ठः“ग्रहणे संक्रमे वापि न स्नायाद्यदि मानवः। सप्तजन्मनि कुष्ठी स्याद्दुःखभागी च जायते”इति विष्णुपुराणेऽपि“चन्द्रसूर्य्यग्रहे स्नायात् सूतके मृतकेऽपि च। अस्नायी मृत्युमाप्नोति स्नायी पापं न विन्दतीति” एवमादीनि दर्शनपदानाक्रान्तानि वचांस्युपलभ्यन्ते। तत्र दर्शनवादिन आहुः दर्शनपदानाक्रान्तेषु वचःसु ग्रहणस्य निमित्तत्वं प्रतिपाद्यते। “ग्रहणे संक्रमे वापीति” निमित्तसप्तम्युपलम्भात्। ज्ञानमेव च ग्रहणं स्नानदानादिकं प्रति निमित्तं भवति तज्ज्ञानापेक्षायां च राहुदर्शनपदोपेतवचनालोचनेन चाक्षुषज्ञानस्यैव निमित्तत्वं यतश्चाक्षुष एव ज्ञाने दर्शनशब्दार्थं ज्योतिःशास्त्रीयज्ञाने तु लक्षणाप्रसक्तिः। एवं सति मेघाच्छन्नग्रहणदिवसजातचन्द्रग्रहणं रात्रिभवेषु सूर्य्यग्रहणेषु न स्नानदानादावधिकारः तस्माद्दृष्टग्रहणं दृष्ट्वा स्नानदानादिकं विधेयमित्यर्थः सम्पन्नो भवति, नैतत्सहृदयहृदङ्गमं यतो वचनेषु राहुदर्शनग्रहणपदयोः समानार्थकता नास्ति कथम् “अदृश्यरूपाः कालस्य मूर्त्तयो भगणाश्रिताः। शीघ्रमन्दोच्चपाताख्या ग्रहाणां गतिहेतवः।” इति सूर्य्यसिद्धान्ते चन्द्रादिग्रहपातानामदृश्यतोक्ता पातो राहुश्च पर्य्यायः। उक्तञ्च तत्रैव “दक्षिणोत्तरयोरेव पातो राहुः स्वरंहसा। विक्षिपत्येष विक्षेपश्चन्द्रादीनामपक्रमादिति” केशवार्केणाप्युक्तम् “पर्य्यायेण तु राहुपातयोर्नाममनी विदुरेव तान्त्रिकाः इति। अतो राहुदर्शनमेव गगनकुसुमायमानम्। ननु ग्रहणे सूर्य्यचन्द्रयोश्छादको राहुर्दृश्यत एव अतएव “राहुग्रस्ते निशाकरे” इत्यादि पुराणोक्तिः बाधीयसीति चेन्न

"भानोर्भार्द्धे महीच्छाया तत्तुल्येऽर्कसमेऽपि वा । शशाङ्कपाते ग्रहणं कियद्भागाधिकोनके" इत्युपक्रम्य "छादको भास्करस्येन्दुरधःस्थो घनवद्भवेत् । भूच्छायां प्राङ्मुखश्चन्द्रो विशत्यस्य भवेदसाविति" । अतो भूच्छायाऽस्य चन्द्रस्य छादको भवेदित्यर्थः इति सूर्य्यसिद्धान्ते स्पष्ट एव छाद्यच्छादकभावोऽभिहितः पुराणेन सह विरोधपरिहारस्तु "दिग्देशकालावरणादिभेदान्न छादको राहुरिति ब्रुवन्ति । यन्मानिनः केवलगोलविद्यां स्तत्संहितावेदपुराणवाक्यमिति" पूर्व्वपक्षं विधाय "राहुः कुभामण्डलगः शशाङ्कं शशाङ्कगश्छादयतीनविम्बम् । तमोमयः शम्भुवरप्रदानात् सर्व्वागमानामविरुद्धमेतदिति" भास्कराचार्य्यैरेवोक्तः "तस्मिन् काले सान्निध्यमस्य तेनोपचर्य्यते राहुरिति" वराहेण चोक्तम् तस्माद्राहुदर्शनं तु नास्त्येव भवन्मते दर्शनं चाक्षुषमेवोच्यते नान्यत् एवं सति राहोर्दर्शनं राहुदर्शनमिति तत्पुरुषोऽनुपपन्नः । यदि तु समीपलक्षकदर्शनशब्दमङ्गीकृत्य तदर्थः क्रियते । तदापि यस्य स्वरूपमेवानुपपन्नं तस्य समीपे तु सुतरामिति वाचैरप्येतदुच्यते । तस्माद्दर्शनशब्देनोपरागो लक्ष्यते राहुदर्शनं राहूपरागस्तस्मिन् राहुदर्शने इति । अयमर्थः । राहुर्नाम पातः तस्य सम्बन्धेन दर्शनमुपराग इति । न च राहुरेव लक्षणयोपरागपरस्तस्य दर्शनमिति पूर्व्वपक्षाभिमतार्थसिद्धिरिति वाच्यं लक्षणा स्वर्थान्तरान्तराश्रये सति वक्तव्या । "अत्यन्तादर्शनं राहोस्तथा चात्यन्तदर्शने । प्रजापीड़ा विनिर्द्दिष्टा व्याधिदुर्भिक्षतस्करैरिति" विष्णुधर्म्मोत्तरादिवाक्येषु पदान्तराभिधानाद्राहुदर्शनेनोपरागो लक्ष्यते । इदं च राहोः पातनामकग्रहणं प्रति हेत्वर्थान्तरमस्तीत्यतो राहुदर्शनग्रहणयोः समानार्थता नास्तीत्येवं सिद्धमिति । प्रागुक्तानां सर्व्ववचसां ग्रहणे स्नायादित्येव वाक्यार्थः फलितो भवति । किञ्च ग्रहणे चाक्षुषमेव दर्शनं निमित्तं विवक्षितं चेत्तदा "नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कथञ्चन । नोपरक्तं न वारिस्थं न मध्ये नभसो गतम्" इत्युक्तोपरक्तसूर्य्यदर्शननिषेधो नोपपद्येत नन्वयं निषेधः सूर्य्योपरागदर्शन एव न चन्द्रोपराग इति चेन्न "नाशुचौ राहुतारकाम्" इत्यत्र राहुनामग्रहणाद्रविचन्द्रोपरागद्वयविषयकोपसंहारस्य युक्तत्वात् अशुचे रजस्वलापतितादेर्ग्रहणं तु दोषाधिक्यसूचनार्थं यथा श्राद्धे कुलीनानां ब्राह्मणानामामन्त्रणे उक्ते अन्येषां निषिद्धत्वादेव कुण्डगोलक ब्राह्मणामन्त्रणे सिद्धे पुनर्निषेधो दोषाधिक्यार्थमेव । "भास्करालोकनाश्लीलपरिवादादि वर्जयेदिति" स्मृतिवाक्यस्य तूद्यदस्तगाम्यादित्यदर्शनपरतया व्याख्यानस्य युक्तत्वात् । केचित्तु दर्शनादर्शनविषयकयोर्विध्योस्तुल्यबलत्वादिच्छया स्नायादिति व्याचख्युः तच्चिन्त्यं "जन्मसप्ताष्टरिफाङ्केत्यादिना सामान्यतो निषिद्धस्योपरक्तदर्शनस्य पुनर्निषेधात् प्रागुक्तदिशा राहुदर्शनपदस्य राहूपरागलक्षकत्वेन तुल्यबलत्वाभावाच्च तस्मादुपरक्तयोः सूर्य्यचन्द्रमसोर्यस्य कस्यापि दर्शननिषेधसत्त्वात् ग्रहणे स्नानदानाद्युक्तेस्तज्ज्ञानं च ज्योतिःशास्त्रैकदेशगणितपञ्चेभ्यो बुद्धा तस्मिन् काले स्नानदानादि विधेयमिति सिद्धान्तः । अतएव मेघाद्यावृतेऽप्युपरागे स्नानादिकं विधेयमेव ननु गणितपञ्चाधीनमुपरागज्ञानमेव चेत् स्नानादिप्रयोजकं तदा रात्रौ सूर्य्यग्रहणस्य जायमानत्वात्तदापि स्नानादिकं स्यात् । सत्यमेवैतत् वचनात्तथा न क्रियते । तदुक्तं निगमे "सूर्य्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहो यदि । तत्र स्नानं न कुर्व्वीत दद्याद्दानं न च क्वचिदिति" । अतएव तादृशे ग्रहणे दृष्टेऽपि दोषं नास्तीत्यपि स्मर्य्यते । न चैतद्भागे प्रतिषेधादित्यधिकरणेन पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवीत्युदाहृतवाक्यवदित्यानुवाद इति वाच्यं विधिशेषत्वाभावात् यथा पृथिव्यामग्निश्चेतव्य इति न निषेधविधिरस्ति तत्र नान्तरिक्षे न दिवीति दृष्टान्तो निषेधविधेः शेषस्तथात्र सूर्य्यग्रहो यदा रात्रावित्येतद्वाक्यस्य विधेः शेष इति । किञ्चैवं ब्रुवतस्तव मतेऽनर्थकमेव वाक्यं स्यात्तच्चैतद्युक्तम् अतएवाह जाबालिः "संक्रान्तेः पुण्यकालस्तु षोडशोभयतः कलाः । चन्द्रसूर्य्योपरागे तु यावद्दर्शनगोचरः" इति । ग्रस्तास्तमनपर्य्यन्तं दर्शनगोचरत्वात्तावान् कालः पुण्यकालो भवतीति माधवो व्याचख्यौ तदुक्तं विश्वरूपनिबन्धे "दिवा चन्द्रग्रहो रात्रौ सूर्य्यपर्व्व न पुण्यदम् । सन्धिस्थं पुण्यवत्प्रोक्तं यावद्दर्शनगोचरः" इति । अन्ये तु मेघावृते तदनावृते चोपरागे गणितागतस्थितिघटिकाः पुण्यकाल इत्याहुः । दर्शने त्वेवंविधे निर्णये भुजच्छायादुपरिस्थितत्वमेव विवक्षितं तदाह वशिष्ठः स्वसिद्धान्ते "सूर्य्यस्यादर्शनं रात्रिर्दिनं तद्दर्शनात्मकम् । भुजच्छायादुपरि च स्थितोऽर्कों दर्शनं स्मृतमिति" अर्कं इत्युपलक्षणं चन्द्रादिग्रहनक्षत्राणाम् । आकाशप्रदेशःसमन्ताद्भूवंशमन इव यत्र भाति स प्रदेशो भुजच्छ-

वाच्यः अतएव विष्णुधर्मोत्तरे "अहोरात्रं न भोक्तव्यं सूर्यचन्द्रग्रहो यदा। मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानं कृत्वा ततः परमिति।" ग्रस्तास्ते भृगुः "ग्रस्तगौ वास्तमनं तु रवीन्दू प्राप्नुतो यदि। तयोः परेद्युरुदये स्नात्वाभ्यवहरेन्नरः" इत्यनयोर्वाक्ययोर्दर्शनोदयशब्दौ भुजङ्गत्वोपरिस्थितत्वोपलक्षकौ अन्यथा मेघाद्यावरणेन परदिवसेऽपि दर्शनाभावे उपवासः प्रसज्येत तथा यत्र स्पर्शकाले ग्रहणं दृष्ट्वा स्नानं विहितं तत्रान्तरा मेघावरणात् सूर्यचन्द्रयोर्दर्शनाभावो दिवसद्वयं त्रयं वा स्यात्तत्राप्युपवासप्रसङ्गः। न च सर्वे शिष्टास्तथाऽऽचरन्ति। तस्माद्दर्शनार्थमभ्युपेत्य शास्त्रीयज्ञानपरतैव व्याख्या कर्त्तव्या। तस्यां च सत्यां पूर्वोक्तरीत्या च मेघानावृतेऽप्युपरागे तमदृष्ट्वैव प्रशस्तचक्षुषा अन्येन च गन्तुमशक्नुवद्भिर्ज्ञातरैव स्नानदानादिकं विधेयमिति फलितोऽर्थः। अतएव भागवते रविग्रहे कुरुक्षेत्रे स्नानाद्यर्थं मिलितानां पाण्डवीयलोकानां मध्ये धृतराष्ट्रोऽपि परिगणित इति शिष्टाचारोऽप्यस्ति। एवं च सत्यरिष्टजनकत्वाभावेऽपि ग्रहणदर्शननिषेधः किं पुनररिष्टजनकत्वे। तस्माज्जन्मसप्ताङ्केत्यादिपद्यं निर्मूलत्वाद्युक्ताग्रहत्वाच्चोपेक्ष्यं प्रत्यक्षोपलभ्यमानवसिष्ठमत्स्यपुराणादिवाक्येषु दर्शनपदाभावाच्च। अतएव मूले परे इति पदं प्रयुक्तम्। शान्तिस्तु दर्शनाभावेऽपि विधातुमुचिता यतोऽरिष्टयोगानां स्वरूपसत्तामेवारिष्टजनकत्वमस्ति अन्यथा ग्रहवेधस्योत्पातादिसूचितारिष्टनिवृत्तिहेतुः शान्तिर्दर्शनाभावे न विधीयेत इत्यलमतिप्रसक्तानुप्रसङ्गेन (६)। पी० धा०। अधिकमुपरागशब्दे १२८५ पृ० द्रष्टव्यम्। "अथ चन्द्रबले विशेषमनुष्टुभाह पापान्तः इति शुभोऽपि शुभफलदोऽपि चन्द्रः पापान्तःपापयुग् द्यूने पापद्वयमध्यवर्त्ती पापग्रहयुक्तः पापद्यूने सप्तमस्थाने वर्त्तमानश्चेत् स्यात्तदा असन् अशुभ एव यदात्वशुभोऽप्यशुभफलदातापि चन्द्रः शुभांशे सौम्यग्रहनवांशे स्यादथवाऽधिमित्रस्य नवांशे स्यात्तथा गुरुणा बृहस्पतिना दृष्टः सन् शुभफलदाता भवेत् यदाह राजमार्त्तण्डः "पापग्रहेण संयुक्तः पापजामित्रसंस्थितः। पापद्वयमध्यगतः शुभोऽप्यशुभदः शशी। अनिष्टस्थानसंस्थोऽपि भवेच्छुभकरः शशी। सौम्यभागाधिमित्रांशे गुरुणा वापि वीक्षित" इति (७)। अथ चन्द्रबलस्य विधानान्तरमनुष्टुभाह। सितेति सितादौ शुक्लपक्षप्रतिपदि समीचीने चन्द्रे सति सम्पूर्णः शुक्लपक्षः शुभः असितादौ कृष्णपक्षप्रतिपदि दुष्टे चन्द्रे सति सम्पूर्णः कृष्णपक्षः शुभः व्यत्यासे च पूर्वोक्तादर्थाद्वैपरीत्ये द्वावपि पक्षावनिष्टौ यदा शुक्लपक्षप्रतिपदि चन्द्रोदुष्टश्चेत्तदा सकलशुक्लपक्षोऽनिष्टः। यदा कृष्णपक्षप्रतिपदि चन्द्रः शुभश्चेत्तदा सम्पूर्णः कृष्णपक्षोऽनिष्टः इति उक्तञ्च रत्नमालायां "वलक्षपक्षादिगते हिमांशौ शुभे शुभं पक्षमुदाहरन्ति। सितेतरादावशुभे च पक्षाविन्द्रावनिष्टौ भवतोऽन्यथा तौ" कश्यपोऽपि शुक्लादीन्दुः शुभो यस्य तत्पक्षस्तस्य शोभनः। कृष्णादीन्दौ त्वशुभदे शुभस्तद्वत्त्वथेऽन्यथेति" इदमेतादृशमल्पबलं चन्द्रबलं तु सङ्कटे विवाहयात्रावश्यकर्त्तव्ये तात्कालिचन्द्रबलाभावे ग्राह्यं नान्यथेत्यर्थः (८)। अथ ग्रहाणां दौष्ट्यपरिहारपूर्वकं तुष्टिसम्पादनार्थं नवरत्नसमुदायधारणं शालिन्याह वज्रं शुक्रे इति। अत्रैकां सुवर्णमुद्रिकां कृत्वा तत्र दशभागे वर्त्तुलाकारे नवधा विभक्ते प्रागादिक्रमेण नवरत्नानि दृढं निधेयानि तत्र प्रागिति पञ्चम्यन्तमव्ययं पञ्चमी चेयं ल्यब्लोपे अतः प्रागादिदिक्षु इत्ययमर्थो जातः तत्र शुक्रप्रीतये पूर्वस्यां दिशि वज्रकं हीरकं निधेयम्। एवं चन्द्रप्रीत्यर्थं शोभनमुक्ताफलमाग्नेय्यां, भौमप्रीत्यर्थं प्रवालं दक्षिणस्याम् अगौ राहुप्रीत्यर्थं गोमेदं नैर्ऋत्याम्। आर्कौ शनिप्रीतये शोभननीलं पश्चिमायाम्। केतुप्रीतये वैदूर्यं वायव्याम्। गुरुप्रीतये पुष्पकं पुष्परागम् उत्तरस्याम्। बुधप्रीतये पाचिः गारुत्मतम् ऐशान्यां सूर्यप्रीतये माणिक्यं मध्यमकोष्टे इति (९)।

अथ सति द्रव्यसामर्थ्ये नवरत्नसमुदायधारणस्य शक्यत्वात्तदुक्तं इदानीमसति द्रव्यसामर्थ्ये यद्ग्रहकृतं दौष्ट्यं तद्ग्रहरत्नधारणमिन्द्रवज्रयाह माणिक्येति। सूर्यप्रीत्यर्थं माणिक्यं धार्यम्। एवं चन्द्रस्य मुक्ताफलम्। भौमस्य विद्रुमम्। बुधस्य गारुत्मतं गारुडं पाचिः। गुरोः पुष्पकं पुष्परागः। शुक्रस्य वज्रम्। शनेर्नीलं राहोर्गोमेदं (लसु निया इति) कान्यकुब्जभाषयाङ्कः केतोर्वैदूर्यमित्यवमर्कतोऽर्कादीनां ग्रहाणां रत्नानि धार्याणि स्युः। तत्र यद्ग्रहकृतं दौष्ट्यं तस्य ग्रहस्य तुष्ट्यै तद्रत्नं धार्यमित्यर्थः यदाह कश्यपः "सूर्यादीनां च संतुष्ट्यै माणिक्यं मौक्तिकं तथा। सुविद्रुमं मरकतं पुष्परागं च वज्रकम्। नीलगोमेदवैदूर्यं धार्यं स्वस्वदृढक्रमात्"। अथोक्तस्य स्फुटे सुवर्णमित्यग्रिमश्लोकेन सम्बन्धः (१०) अथ महामूल्यरत्नधारणे यस्य सामर्थ्याभावस्तदर्थमल्प-

मूल्यानि रत्नानि ताराबलं च शालिन्याह धार्यमिति। अथो शस्य बुधस्य सुदे सन्तोषार्थं सुवर्णं यथाशक्ति धार्यम्। राहुकेत्वोः प्रीत्यै राजावर्त्तकं मणिविशेषो धार्यः एवं शुक्रेन्द्वोस्तुष्ट्यै रौप्यं, गुरोस्तुष्ट्यै मुक्ता। मन्दस्य शनेस्तुष्ट्यै लोहम्। आरभान्वोर्मङ्गलसूर्ययोः प्रीत्यै प्रवालं धार्यम्। उक्तं च श्रीपतिना “धार्यं तुष्ट्यै विद्रुमं भौमभान्वोरूप्यं शुक्रेन्दोश्च हेमेन्दुजस्य। मुक्ता सूरेर्लौहमर्कात्मजस्य राजावर्त्तः कीर्त्तितः शेषयोश्चेति” सूरेः सुरगुरोः। शेषयोः राहुकेत्वोः। दीपिकाकारस्तु ओषधीमूलानि धार्याणीत्याह “मूलं धार्यं त्रिशूल्याः सवितरि विमुखे, चौरिकामूलमिन्दौ, जिह्वाहेर्भूमिपुत्रे, रजनिकरसुते वृद्धदारोश्च मूलम्। भार्गी जीवेऽथ शुक्रे भवति शुभकरं सिंहपुच्छस्य मूलं, विल्वोत्थं चार्कपुत्रे, तमसि मलयजं, केतुदोषेऽश्वगन्धमिति” त्रिशूली बिल्वः चौरिका चिरिणी जिह्वाहिर्नागजिह्वा वृद्धदारुर्विदारी। भार्गी प्रसिद्धा। सिंहपुच्छं (वाघोट चारिवारेति) मध्यदेशभाषया प्रसिद्धम्। मलयजं चन्दनम्। अश्वगन्धं प्रसिद्धम्। एतदोषधीमूलधारणं सर्वथा रत्नधारणाशक्तौ वेदितव्यम्” पी॰ धा॰ गोचरप्रसङ्गात् ताराबलादिकमाह तत्रैव

तारेति। यद्दिने ताराबलमस्ति वा नवेति विचारश्चिकीर्षितस्तद्दिने या तारा सा जन्मर्क्षात् जन्मनक्षत्रात् त्रिरावृत्तितः पुनरावृत्तित्रयेण गणनीया स्यात्। त्रिरिति “द्वित्रिचतुर्भ्यः सुजिति” पा॰ सुजन्तमव्ययम्। स्वजन्मनक्षत्राद्दिननक्षत्रे गणिते नवभिर्भक्ते त्रिश आवृत्तयो भवन्त्यवशिष्टतारायाः शुभमशुभं वाच्यमिति फलितोऽर्थः ११।

“जन्माख्यसम्पद्विपदः क्षेमप्रत्यरिसाधकाः। वधमैत्रातिमैत्राः स्युस्तारा नामसदृक्फलाः १२॥ मृत्यौ स्वर्णतिलान् विपद्यपि गुडं, शाकं त्रिजन्मस्वथो दद्यात् प्रत्यरितारकासु लवणं, सर्वो विपत्प्रत्यरिः। मृत्युश्चादिमपर्यये न शुभदोऽथैषां द्वितीये शका नादिमान्त्यतृतीयका अथ शुभाः सर्वे तृतीये स्मृताः १३॥ षष्टि ६० घ्नं गतभर्क्षघटीयुक्तं युगा४हृतम्। शराब्धि ४५ हृल्लब्धतोऽर्क१२शेषेऽवस्थाः क्रियादिषोः १४॥ प्रवासनाशौ मरणञ्जयञ्च हास्यारतिक्रीडितसुप्तभुक्ताः। ज्वराख्यकम्पस्थिरता अवस्था मेषात् क्रमान्नामसदृक्फलाः स्युः १५। लाजाकुष्ठबलाप्रियङ्गुघनसिद्धार्थैर्निशादारुभिः पुङ्खालोध्रयुतैर्जलैर्निगदितं स्नानं ग्रहोत्थापहृत्। धेनुः कम्बुरथो वृषश्च कनकम्पीताम्बरं कुण्टकः श्वेतो, गौरसिता, महासिरज इत्येता रवेर्दक्षिणाः १६। सूर्यारसौम्यास्फुजितोऽब्जनागसप्ताद्रिषसान्विषुरम्निनाडीः। तमोयमेज्याब्जिरसाश्विमासान् गतव्यराशेः फलदाः पुरस्तात् १७। दुष्टे योगे हेम, चन्द्रे च शङ्खं, धान्यं तिथ्यर्धे, तिथौ तण्डुलांश्च। वारे रत्नं भे च गां, हेम नाड्यां, दद्यात्सिन्धूत्थञ्च तारासु राजा १८। राश्यादिगौ रविकुजौ फलदौ, सितेज्यौ मध्ये, सदा शशिसुत, श्चरमेऽजमन्दौ। अध्वाद्य वह्निभयसन्मतिवस्त्रसौख्यदुःखानि मासि जनिभे रविवासरादौ” १६ मु॰ चि॰।

अथ शेषक्रमेण सकलास्तारासंज्ञा अनुष्टुभाह। जन्माख्येति। स्पष्टार्थमिदम्पद्यम्। यदाह नारदः “जन्म सम्पद्विपत् क्षेमं प्रत्यरिः साधको वधः। मित्रम्परममित्रन्तु जन्मभाच्च पुनः पुनरिति”। एवं तारा गणनीया इति शेषः। तत्र तृतीयापञ्चमीसप्तम्यस्तारा निषिद्धाः अनिष्टफलश्रवणात्। अर्थादन्याः समीचीनाः समीचीनफलश्रवणात्। उक्तञ्च “जन्मतारा द्वितीया च षष्ठी चैव चतुर्थिका। अष्टमी नवमी चैव षट् च ताराः शुभावहाः” इति। जन्मनक्षत्रन्तु कार्यविशेषे गृहीतं प्रतिषिद्धञ्च तत्राग्रे निर्णेष्यते। तदिदन्ताराबलं कृष्णपक्षविषयं न तूभयपक्षसाधारणम्। तदाह नारदः “कृष्णे बलवती तारा शुक्लपक्षे बली शशीति”। युक्तञ्चैतत् यतोऽत्रार्थवादो रत्नमालायाम् “न खलु बहुलपक्षे शीतरश्मेः प्रभावः, कथितमिह हि तारावीर्यमार्यैः प्रधानम्। अतिविकलशरीरे प्रेयसि प्रोषिते वा प्रभवति खलु कर्तुं सर्वकार्याणि योषा। शुक्ले पक्षे शीतरश्मिर्बलीयान्न प्राधान्यं तारकायास्तु तत्र। भर्त्रा युक्ते विद्यमानेऽपि कान्ते न स्वातन्त्र्यं योषितः क्वापि दृष्टमिति” १२

अथावश्यककार्ये दुष्टताराणामकारद्वयेन परिहारं शार्दूलविक्रीडितेनाह “मृत्यौ स्वर्णतिलानिति। मृत्यौ सप्तम्यां वधतारायां स्वर्णतिलान् यथाशक्ति सुवर्णयुक्तां स्तिलान् ब्राह्मणाय दद्यात्। विपद्यपि विपत्संज्ञायां तृतीयतारायाङ्गुडमिक्षुविकारन्दद्यात्। त्रिजन्मसु तिसृषु जन्मतारासु शाकम्प्रसिद्धं हन्ताकादि दद्यात्। अथो प्रत्यरितारकासु पञ्चम्यान्तारायां लवणन्दद्यात्। तदाह नारदः “जन्मत्रिपञ्चसप्ताख्या ताराऽनिष्टफलप्रदा। अनिष्टपरिहाराय दद्याद्दानन्द्विजातये। शाकं

गुडञ्च लवणं सतिलं काञ्चनं क्रमादिति” अत्र सतिलमिति विशेषणं काञ्चनपदस्य न लवणपदस्य तेन वधतारायां सतिलं काञ्चनन्देयम्। उक्तञ्च दीपिकायाम् “प्रत्यरौ लवणन्दद्याच्छाकन्दद्याद्विजन्मसु। विपत्तारे गुडन्दद्याद्विधने तिलकाञ्चनमिति” अथ द्वितीयः परिहार उच्यते। तत्रादिमपर्य्यये प्रथमावृत्तौ विपत्प्रत्यरिवधत्यश्च तृतीयापञ्चमीसप्तम्यस्ताराः सर्वा अपि सामान्यतः षष्टिघटिकात्मिका अपि न शुभदाः स्युः अथ द्वितीये पर्य्याये द्वितीयावृत्तौ विपत्प्रत्यरिवधत्यूनामादिप्रान्त्यतृतीयका अंशा न शुभदाः विपत्तारायां प्रथमविंशतिघटिकास्त्याज्याः। इतराश्चत्वारिंशच्छुभाः। प्रत्यरितारायां मध्यमा विंशतिघटिकास्त्याज्यास्तदुभयतो विंशतिर्विंशतिर्घटिकाः शुभाः। वधतारायामन्तिमा विंशतिर्घटिकास्त्याज्या आद्याश्चत्वारिंशच्छुभा इति नवीना व्याकुर्वते। जीवांशशब्देन नक्षत्रचतुर्थांशमाहुः। तथासति आदिप्रान्त्यतृतीयकाश्चरणाः क्रमेण निषिद्धाः इतरे शुभाः। अथ तृतीये पर्य्याये तृतीयावृत्तौ विपत्प्रत्यरिवधवश्यैते सर्वे षष्टिघटिकात्मका अपि शुभाः शोभनफलदाः स्मृताः। तथा च जगन्मोहने गुरुरित्युक्त्या पठितं “पर्य्याये प्रथमे वर्ज्या विपत्प्रत्यरिनैधनाः। द्वितीये त्वंशका वर्ज्यास्तृतीये त्वखिलाः शुभाः” द्वितीये पर्य्याये अंशकानाह स एव। “आद्यांशो विपदि त्याज्यः प्रत्यरौ चरमोऽशुभः। वधे त्याज्यस्तृतीयोंऽशः शेषा अंशास्तु शोभनाः” इति। अत्रांशो नक्षत्रचतुर्थांश उच्यते। किमत्र प्रमाणमिति चेत् उच्यते। “जन्मर्क्षाद्दशमर्क्षं स्यात्सांघातक्षन्तु षोडशम्। अष्टादशं सामुदायं त्रयोविंशं विनाशनम्। मानसं पञ्चविंशर्क्षं नाचरेच्छुभमेषु तु” इति नारदोक्तं वैनाशिकाख्यनक्षत्रयोर्विंशभस्य दुष्टत्वम्। तदपवादमाह च्यवनः “वैनाशिकाख्ये नक्षत्रे अष्टाशीत्यंशकं विना। शेषांशाः शुभदा ज्ञेया जन्मनीन्दुमतांशकाः।” इति। अत्र वैनाशिकं प्रत्यरिसंज्ञकन्तस्य चरमांशस्यानिष्टता प्राप्ता साष्टाशीत्यंशकं विनेत्यनेन व्याख्यते इत्यत्र एकत्र दृष्टः शास्त्रार्थोऽपरत्रापि विनियुज्यत इति न्यायादत्रापि सैव व्याख्येति न नवीनमतस्याप्रायोऽप्रमाणकत्वात् १३। अथ चन्द्रावस्था वक्ष्यति तद्गणनोपायमनुष्टुभाह षष्टिघ्नमिति। अत्र चन्द्रस्य राशौ राशौ द्वादश अवस्थाः सन्ति यदाह नारदः “चन्द्रस्य द्वादशावस्था राशौ राशौ यथाक्रमात्। यात्रोद्वाहादिके कार्य्ये संज्ञा तुल्यफलप्रदा” तत्राश्विनीमारभ्य गतभानि षष्ट्या गुणयानि वर्त्तमाननक्षत्रभुक्तघटीयुक्तानि कार्य्याणि। तानि पुनर्युगैश्चतुर्भिराहतानि शराब्धि४५ हृत् पञ्चचत्वारिंशता भाज्यानि। यल्लब्धमागतं गतावस्थास्ताः शेषं वर्त्तमानावस्था तत्र लब्धाङ्कस्यापि द्वादशाधिक्ये द्वादशभिर्भागे प्रवासाद्यवस्था चन्द्रस्य गताः स्युः। ता अवस्था मेषराशेः पुंसः प्रवासादिसंज्ञा वृषराशिस्थे चन्द्रे नष्टादिसंज्ञाः स्युः। एवं मिथुनादिदशराशिषु मृतादिसंज्ञाद्यवस्थाः क्रमेण भवन्तीत्यर्थः। यदाह नारदः “षष्टिघ्नं चन्द्रनक्षत्रं तत्कालघटिकान्वितम्। वेदघ्नमिषु४५ वेदाप्तमवस्था भानु१२भाजिताः।” इति। अत्रोपपत्तिः एकैकस्मिन् राशौ द्वादशद्वादशावस्थाः सन्ति, सामान्यतो नक्षत्रभोगः षष्टिघटिकात्मक इत्येवं सति राशिभोगघटिकाः पञ्चत्रिंशदधिकशतं भवन्ति। तत्र त्रैराशिकं यद्येताभिः१३५ घटीभिर्द्वादशावस्था लभ्यन्ते तदेष्टघटीभिः किमिति तत्रैकः कल्पः गुणनाभ्यां विकारानापत्ते द्वादशाभापवर्त्तने १३५ भाजको जातो १२ अत्रानयोर्गुणकभाजकयोस्त्रिभिरपवर्त्ते गुणकश्चत्वारः ४ भाजकः पञ्चचत्वारिंशत् ४५ तत्कालघटीयोगस्तु न्यायप्राप्त एव। तथा द्वादशभागोऽपि तदाधिक्यस्य निष्प्रयोजनत्वात् अत्रेदमवधार्य्यम् यद्यपि नक्षत्राणां घटीन्यूनाधिकभावः सम्भवति तथापि षष्टिघटिकात्मकेन व्यवहारः कार्य्यः। विद्यमाननक्षत्र भुक्तं तु स्वभोगं ज्ञात्वा षष्टिघटिकात्मकं कृत्वा तत्र योज्यम्। यथा यदि स्वभोगेन षष्टिघटिका लभ्यन्ते तदेष्टघटीभिः किमिति त्रैराशिकेनेष्टघटीनां षष्टिर्गुणको नक्षत्रभोगो भाजक इति १४। अथ द्वादशावस्थानामानि सफलान्युपजात्याह प्रवासनाशाविति। स्पष्टार्थमिदं पद्यम्। उक्तञ्च कश्यपेन “प्रवासनष्टा च मृता जया हास्या रतिर्मुदा। सुप्ता भुक्ता ज्वरा कम्पा सुस्थितिर्नामसदृशभा” इति। मुदा। “षिद्भिदादिभ्योऽङ्” पा० अङ् ततष्टाप् १५। अथ यात्रायां वैकृतपरिहारार्थं सौभाग्यजलस्नानं दर्शयन् शार्दूलविक्रीडितेनाह। लाजाकुष्ठमिति। लाजा भ्रष्टशालयः इति केचित् वस्तुतस्तु ओषधीसाहचर्य्याल्लाजाशब्देन लज्जावती उच्यते। कुष्ठं प्रसिद्धम्। बला “बरियाग इति” कान्यकुब्जभाषायामाहुः। प्रियङ्गुः

रालः। वनो मुस्ता, सिद्धार्थाः सर्षपाः (शिरषा) इति महाराष्ट्राः (सरिषा) इति कान्यकुब्जाः। निशे हरिद्राद्वयं दारु देवदारुः पुङ्खा शरपुङ्खा। लोध्रं प्रसिद्धं एतैरौषधैर्युतानि गङ्गादिजलानि तैः कृत्वा स्नानं दुष्टग्रहसूचितारिष्टनाशकं स्यात्। उक्तञ्च दीपिकायाम् "सिद्धार्थलोध्ररजनीद्वयकुष्ठधान्यं लामज्जकं सफलिनी सवचा च मांसी। स्नानं कुरु ग्रहगणप्रशमाय नित्यं सर्वे रविप्रभृतयः सुसुखीभवन्ति।" दैवज्ञमनोहरेऽपि "सप्रियङ्गुरजनीद्वयमांसी कुष्ठलाजसितसर्षपखण्डैः। वारिभिः सकुवचैः सहलोध्रैः स्नानमस्ति निखिलग्रहपीडामिति" वारिभिस्तीर्थोदकैः रत्नमालायां तु प्रत्येकं ग्रहाणामौषधभेदस्नानमुक्तं यथा।

रवेः—"मनःशिलैलासुरदारुकुङ्कुमैरुशीरयष्टीमधुपद्मकान्वितैः। सताम्रपुष्पैर्विषमे स्थिते रवौ शुभावहं स्नानमुदाहृतं बुधैः"।

चन्द्रस्य—"पञ्चगव्यगजदानविमिश्रैः शङ्खशुक्तिकुमुदस्फटिकैश्च। शीतरश्मिकृतवैकृतहन्तृ स्नानमेतदुदितं नृपतीनाम्"।

कुजस्य—"बिल्वचन्दनबलारक्तपुष्पैर्हिङ्गुलकफलिनीबकुलैश्च। स्नानमद्भिरिह मांसियुताभिर्भौमदोषविनिवारणमाहुः"।

बुधस्य—"गोमयाक्षतफलैः सगोरोचनैः क्षौद्रशुक्तिकनकमूलहेमभिः। स्नानमुक्तमिदमत्र मुच्यतां बोधनाशुभविनाशनं बुधैः"।

गुरोः—"मालतीकुसुमयुक्तसर्षपैः पल्लवैश्च मदयन्तिकोद्भवैः। क्षिप्रमम्बु मधुकेन च स्फुटं वैकृतं गुरुकृतं विनिहन्ति"।

शुक्रस्य—"एलया च शिलया समन्वितैर्वारिभिः सफलमूलकुङ्कुमैः। स्नानतो भृगुसुतोपपादितं दुःखमेति विलयं न संशयः"।

शनेः—"असिततिलाञ्जनलोध्रबलाभिः शतकुसुमाघनलाजयुताभिः। रवितनये कथितं विषमस्थे दुरितहृदाप्लवनं मुनिमुख्यैः"।

राहुकेत्वोः—"लोध्रगर्भतिलपत्रकसाहुलिदामकनकाभिपयोभिः। स्नानमार्त्तिमिह हन्ति राहोः स्याज्जनमिदमेव च केतोः"। राहुकथितद्रव्यजलस्नानं केत्वर्थं स्यात्। अतएवोक्तं दीपिकायाम् "प्रयोज्यमौषधस्नानं ग्रहविप्रसुरार्चनम्। ग्रहानुद्दिश्य होमो वा ग्रहाणां प्रीतिमिच्छता" तत्र ग्रहपूजाहोमौ वशिष्ठसंहितायां महता प्रबन्धेनोक्तौ तौ तत एवावगन्तव्यौ इत्यलमतिविस्तरेण। अथ रवेरिति। रविमारभ्य दक्षिणा उच्यन्ते। तत्र सूर्य्यप्रीत्यर्थं धेनुर्गौः। चन्द्रप्रीत्यर्थं कम्बु शङ्खः। कम्बु इति नपुंसकलिङ्गम् पृथक्पदम् "शङ्खः स्यात्कम्बुरस्त्रियाम्" इत्यमरोक्तेः। मङ्गलप्रीत्यर्थमरुणः आरक्तो वृषः। बुधप्रीत्यर्थं कनकं सुवर्णम्। गुरुप्रीत्यर्थं पीताम्बरं तच्च यथाविभवं कार्पासं कौषजं च। शुक्रप्रीत्यर्थं श्वेतो घोटकः। शनिप्रीत्यर्थमसिता श्यामवर्णा गौः। राहुप्रीत्यर्थं महाऽसिर्बृहन्मौल्यखड्गः। केतुप्रीत्यर्थमजः छागो दक्षिणेत्यर्थः। यदाह वशिष्ठः "धेनुं शङ्खं रक्तवृषं हेम पीताम्बरद्वयम्। श्वेताश्वं कृष्णधेनुञ्च कृष्णलोहमजं क्रमात्। स्वर्णेन वा समीहत्य दातव्या दक्षिणा ततः। आचार्य्याय जापकेभ्यो ब्राह्मणेभ्योऽथ शक्तितः" इति। अत्र प्रत्येकं दानमन्त्रास्तत्रैवोक्ताः ग्रन्थभूयस्त्वभयान्न लिख्यन्ते। "एवं यः कुरुते सम्यक् ग्रहयज्ञं नृपोत्तमः। सर्वान् कामानवाप्नोति शुभस्थानफलं लभेत्" नृपोत्तम इत्युपलक्षणम्। तेन यः कश्चिद्ग्रहस्थोऽपि कुर्य्यात् तत्र च विभवानुरूपाणि ग्रहदानानि प्रोक्तानि कैश्चित् यथा।

रवेः—"कौसुम्भवस्त्रं गुडहेमताम्रमाणिक्यगोधूमसुवर्णपद्मम्। सवत्सगोदानमतिप्रणीतं दुष्टाय सूर्य्याय मसूरिकाश्च"।

चन्द्रस्य—"घृतकलसं सितवस्त्रं दधिशङ्खं चैव मौक्तिकसुवर्णौ। रजतञ्च सम्प्रदद्याच्चन्द्रारिष्टोपशमनाय"।

कुजस्य—"प्रवालगोधूममसूरिकाश्च वृषश्च ताम्रः करवीरपुष्पम्। आरक्तवस्त्रं गुडहेमताम्रं दुष्टाय भौमाय च चन्दनं हि"।

बुधस्य—"नीलं वस्त्रं मुद्गदानं बुधाय रत्नं पाची दासिका हेमसर्पिः। कांस्यं दन्तः कुञ्जरस्याथ मेषो रौप्यं सर्वं पुष्पमाल्यादिकञ्च।

गुरोः—"अश्वः सुवर्णं शुकपीतवस्त्रं सपीतधान्यं लवणं सपुष्पम्। सशर्करं तद्रजनीप्रयुक्तं दुष्टाय शान्त्यै गुरवे प्रदेयम्" रजनी हरिद्रा।

शुक्रस्य—"चित्रवस्त्रमपि दानवार्च्चिते दुष्टगे मुनिवरैः परिगीतम्। तण्डुलं घृतसुवर्णरूप्यकं वज्रकं परिमलो धवलोऽश्वः"।

शनेः—"नीलकं महिषं कृष्णं वस्त्रं लोहं सदक्षिणम्। दद्याच्च दक्षिणायुक्तं शनिदोषोपशान्तये"।

राहोः—"राहोर्दानं बुधैर्मेषो गोमेदं लोहकम्बलौ। सुवर्णं नागरूप्यञ्च सतिलं ताम्रभाजनम्"
केतोः—"केतौ वैदूर्य्यममलं तैलं मृगमदस्तथा। ऊर्णातिलाश्च संयुक्ता दद्यात् क्लेशापनुत्तये"।
अन्यच्च संहिताप्रदीपे "भानुस्ताम्बूलदानादपहरति नृणां वैकृतं वासरोत्थ" सोमः श्रीखण्डदानादवनिसुतवरो भोजनात् पुष्पदानात्। सौम्यः शक्रस्य मन्त्री हरिहर नमनात् भार्गवः शुभ्रवस्त्रैस्तैलस्नानात् प्रभाते दिनकरतनयौ ब्रह्मनत्या परौ चेति"। ब्रह्मा ब्राह्मणः। परौ राहुकेतू १६। अथ सूर्यादयो ग्रहा गन्तव्यराशेः प्राक् कियद्भिर्दिनैः फलं दद्युरित्येतदुपजात्याह सूर्यारसौम्येति। सूर्यादयो ग्रहा गन्तव्यराशेर्निजनिजभिन्नराशेः पुरस्तात् पूर्वमेवैतत्संख्यकदिवसघटीमासान् अत्र "कालाध्वनोरत्यन्तसंयोगे" इति पा॰द्वितीया ततो नैरन्तर्येण तावन्तं कालं फलदाः स्युः तद्यथा। सूर्यो गन्तव्यराशेः प्राक् अन्त्यपञ्चान् पञ्च दिवसान् फलदः। एवमारो भौमोऽष्ट दिवसान् पूर्वं फलदः, बुधः सप्त दिवसान्, शुक्रोऽपि सप्त दिवसान्, विधुश्चन्द्रः अग्निनाडीर्घटिकात्रयमेव प्राक् फलदः, राहुर्गन्तव्यराशेः प्राक् त्रिमासं फलदः एवं शनिः षण्मासान्। गुरुर्द्विमासान् पूर्वं फलद इत्यर्थः। उक्तञ्च "सूर्यः पञ्चदिनं शशी त्रिघटिकं भौमोऽष्ट वै वासरान् सप्ताहानि भृगुः ससोमतनयो, मासद्वयं वै गुरुः। षण्मासान् पुरतोऽपि सूर्यतनयो राहुश्च मासत्रयं, केतुश्चैव ददाति भावि सकलं गन्तव्यराशेः फलमिति"। जगन्मोहने त्वेव मुक्तम् "आदित्यादिग्रहा दद्युर्लग्ने वा गोचरेऽपि वा। सप्तविंशति २७ भागोर्द्ध्वं परराशिफलं खल्विति १७। अथ प्रसङ्गादावश्यकमङ्गलयात्राकर्त्तव्येषु सत्सु तिथ्यादिविषयकदुष्टयोगसद्भावे तद्दोषनिवारणार्थं दानं शालिन्याह। दुष्टे इति। दुष्टे व्यतीपातादिरूपे योगे सति हेम सुवर्णं यथाशक्ति राजा दद्यात्। च पुनश्चन्द्रे दुष्टे विहितान्यस्थानस्थिते शङ्खं दद्यात्। तिथ्यर्द्धे करणे भद्राख्ये दुष्टे धान्यं दद्यात्। तिथौ दुष्टे चतुर्थ्यादिरूपे तण्डुलान् दद्यात्। वारे दुष्टेऽनुपचयरूपे रत्नं प्रवालमुक्तादि दद्यात्। भे राशौ दुष्टे क्रूरग्रहाधिष्ठितत्वादिदोषसहिते सति गां दद्यात्। नाड्यां घटिकायां दुर्मूहूर्त्तादिना दुष्टायां सत्यां हेम सुवर्णं दद्यात् च पुनस्तारासु दुष्टासु विपत्प्रत्यरिवधरूपासु सिन्धूत्थं लवणं दद्यात्। पूर्वं दुष्टतारासु प्रत्येकं विशिष्य दानमुक्तमिदानीं तदशक्तौ लवणमेव देयमिति पुनरुक्तिपरिहारः। उक्तञ्च दीपिकायाम् "योगस्य हेम, करणस्य च धान्यमिन्दोः शङ्खञ्च, तण्डुलमणी तिथिवारयोश्च। तारावलाय लवणान्यथ गां च राशेर्दद्याद्द्विजाय कनकं शुचि नाडिकायामिति" १८ अथात्र गोचरप्रसङ्गात् सूर्यादयो ग्रहाः राश्यन्तरगताः सन्तः कदा शुभाशुभफलदातारो भवन्ति तथा चान्द्रमासाधिकरणकरविवासरादौ स्वजन्मनक्षत्रप्रवेशे सति फलविशेषं च वसन्ततिलकाद्वयेनाह राश्यादिगाविति। रविकुजौ सूर्यमङ्गलौ राश्यादिगौ राशिप्रथमदशांशमध्यस्थितौ सन्तौ फलदौ निखिलफलदातारौ। अवशिष्टांशेष्वीषदीषत् फलदौ। एवं सितेज्यौ शुक्रबृहस्पती मध्ये मध्यगतांशदशके निखिलफलदातारावन्यत्रेषदीषत्। शशिसुतो बुधः सदा त्रिंशदंशेषु निखिलफलदाता। अक्षमन्दौ चन्द्रशनैश्चरौ चरमदशके निखिलफलदातारावन्यत्रेषदीषत्। उक्तञ्च वसिष्ठेन "भवनादिगतौ फलदौ रविभौमौ मध्यगौ च गुरुशुक्रौ। अन्त्यगतौ शशिरविजौ सदैव फलदः शशाङ्कसुतः"। वराहेणापि "दिनकररुधिरौ प्रवेशकाले गुरुभृगुजौ भवनस्य मध्ययातौ। रविसुतशशिनौ विनिर्गमस्थौ शशितनयः फलदस्तु सर्वकालमिति" रुधिरो भौमः। अध्वेति। यस्मिन् मासे स्वीयजन्मनक्षत्रप्रवेशे सूर्यादिवाराश्चेत् स्युः तदा तस्मिन् मासेऽध्वादीनि फलानि वाच्यानि तद्यथा। रविवारे जन्मनक्षत्रप्रवेशे सति तस्मिन् मासे अध्वा मार्गोऽटनमिति यावत्, फलं तस्य पुंसो भवेत्। एवं चन्द्रवारे जन्मनक्षत्रप्रवेशे अन्नं भक्ष्यं तत्प्राप्तिः स्यादित्यर्थः। एवं भौमवारे वह्निभयं भवेत्। बुधवारे सन्मतिः। सती समीचीना धर्मयुक्ता बुद्धिर्भवेत्। गुरुवारे वस्त्रप्राप्तिर्भवेत्। भृगुवारे सौख्यं भवेत्। शनिवारे दुःखप्राप्तिः स्यादित्यर्थः। उक्तञ्च ज्योतिषरत्नसंग्रहे वामनेन "अध्वा भोजनमग्निभीः सुमतिता वस्त्रं सुखं चासुखं मासे मासि फलं भवेज्जननभे सूर्यादिवारे स्थिते" इति अत्र "मासास्तथा च तिथयस्तुहिनांशुमानादिति" भास्कराचार्यवाक्याच्चान्द्रः शुक्लप्रतिपदादि दर्शान्तो मासो ग्रह्यत इति शिवम्" १९ पी॰धा॰। अष्टवर्गशुभालाभ एव गोचरशुद्धेर्ग्राह्यता तन्मानम् अष्टवर्गशब्दे ५२२ पृ॰उक्तम्

**गोचर्मन्** न० ६त०। १गवां चर्मणि, गोचर्म च स्तम्भने आसनतया विहितम् यथाह समयाचारतन्त्रे २पटले “मेषासनं तु वश्यार्थमाकृष्टौ व्याघ्रचर्म च। शान्तौ मृगाजिनं शस्तं मोक्षार्थं व्याघ्रचर्म च। गोचर्म स्तम्भने देवि! मोहने वाजिचर्म च”। “सप्तहस्तेन दण्डेन त्रिंशद्दण्डैर्निवर्त्तनम्। दश तान्येव गोचर्म ब्राह्मणेभ्यो ददाति यः” इति २वृहस्पत्युक्ते “दश-हस्तेन वंशेन दशवंशान् समन्ततः। पञ्च चाभ्यधिकान् दद्यादेतद्गोचर्म चोच्यते” इति ३वशिष्ठोक्ते च भूमान-भेदे “अपि गोचर्ममात्रेण भूमिदानेन पूयते” भा० आनु० ६२अ०।

**गोचर्मवसन** पु० गोचर्म वसनमस्य। महादेवे “गो-पालिर्गोपतिर्ग्रामो गोचर्मवसनो हरः” भा०आनु० १७अ० शिवसहस्रनामोक्तौ

**गोचारक** त्रि० गां चारयति वासादौ चर—णिच्—ण्वुल्। गोरक्षके (राखाल)

**गोचारिन्** त्रि० गौरिव चरति चर—णिनि। तपस्विभेदे “गोचारिणोऽथाश्मकुट्टादन्तोलूखलिकास्तथा। मरीचिपाः फेनपाश्च तथैव मृगचारिणः” भा०आनु० १४अ०

**गोची** स्त्री गामञ्चति अनुच—क्विप् ङीप् नलोपे अल्लोपः। गवाचीशब्दार्थे १मत्स्यभेदे। गाः शिवस्तुतिरूपाः वाचः अञ्चति अनुच+क्विप् ङीप्। २हिमालयपत्न्यां शब्दार्थचि०

**गोच्छाल** पु०गां भूमिमाच्छादयति छद—णिच्—अण् पृषो०। भूकदम्बे (चाकुलिया)। रत्नमाला

**गोज** पु० “नृपायां नृपसंसर्गात् प्रमादाद्गूढजातकः। सोऽपि क्षत्रिय एव स्यादभिषेके च वर्जितः। अभिषेकं विना चायं गोज इत्यभिधीयते। सर्वं च राजवत्तस्य शस्यते पदवन्दनम्” इत्युशनसोक्ते सङ्कीर्णजातिभेदे अस्य राजशब्देन समासे राजदन्तादित्वात् पूर्वनिपातः द्वन्द्वे एकवद्भावश्च। “गोदुग्धप्रभवं किं वा छागदुग्धसमुद्भवम्। भवेत् गोजं त्रिदोषघ्नं रोचनं बलवर्द्धनम्। वह्निदीप्तिकरं हृद्यं सद्यस्तृप्तिकरं लघु। अतीसारेऽग्निमान्द्ये च ज्वरे जीर्णे प्रशस्यते”। भावप्र० उक्त लक्षणके २गोछागदुग्धविकारभेदे न०। ३गोजात-मात्रे त्रि०। गोलोमिकावृक्षे स्त्री राजनि०।

**गोजर** पु० गोषु मध्ये जरः जीर्णः। वृद्धबलीवर्दे “नाद्रियन्ते यथापूर्वं कीनाशा इव गोजरम्” भाग०३।३०। १४। “गोजरं वृद्धबलीवर्दम्” श्रीधरः।

**गोजल** न०गवि जातं जलम्। गोमूत्रे राजनि०।

**गोजा** त्रि० गवि पृथिव्यां व्रीह्यादिरूपेण जायते विट् आत्त्वम्। व्रीह्यादिषु। ऋ०४।४०।५।उदा०। २गोलोमि-कावृक्षे राजनि०। ३सुरभ्यां जाते च

**गोजागरिक** न० गवि स्वर्गे जागरः अप्रमत्तताऽस्त्यस्य ठन्। १मङ्गले मङ्गलस्य स्वर्गसाधनाय सदोद्यततया तथा-त्वम्। गवि भूमौ जागरिकः प्रहरीव अस्त्ररूपकण्टक-धारित्वात्। २कण्टकारवृक्षे। गोषु व्रीह्यादिषु जागरो-ऽस्त्यस्य ठन्। ३भक्ष्यकारके त्रि०शब्दार्थचि०

**गोजात** पु० गवि जातः। १गोनामकपुत्रस्यपत्नीजाते २सुरभीजाते घृतादौ ३स्वर्गजाते त्रि०“शृण्वन्तु नोदिव्याः पार्थिवासो गोजाता उत ये यज्ञियासः”। ऋ०७।३५।१५

**गोजापर्णी** स्त्री गोजाः दुग्धफेन इव शुभ्रत्वात् पर्णमस्य गौरा०ङीष्। दुग्धफेनावृक्षे राजनि०।

**गोजित्** पु० गां भूमिं जयति जि—क्विप्। वृषे बलेन पृथिवीजयित्वात्तस्य तथात्वम्। ऋ०१।१०६।१। ८।५८।१०

**गोजिह्वा** स्त्री गोर्जिह्वेव। (गोजिया) लताभेदे। स्वार्थे क। तत्रैवार्थे अमरः। “गोजिह्वा गोजिका गोजी दार्विका खरपर्णिनी। गोजिह्वा वातला शीता ग्रा-हिणी कफपित्तनुत्। हृद्या प्रमेहकासास्रव्रणज्व-रहरी लघुः। कोमला तुवरी तिक्ता स्वादुपाकरसा स्मृता” भावप्र० तद्गुणा उक्ताः।

**गोजि(जी)** स्त्री गोजिह्वा पृषो०। गोजिह्वाख्ये लताभेदे भावप्र० वा ङीप्। “गोजी च पिष्टा सह तालपत्र्या” “सतु-द्रफेनशाकगोजीकाकोडुम्बरिकाः” इति च सुश्रुतः

**गोजिरा** स्त्री गौर्भूमिः तल्लग्नशस्यादि जीर्य्यतेऽनया जॄ—क ६त०। शस्यादिजारिकायाम् “गोजिरया रंहमाणः पुरन्ध्या” ऋ०८।११०।२ [कुमांसगुडके भरतः

**गोड** पु० गोलक+पृषो०। (गोँड) इति ख्याते नाभौ प्रक्ष-

**गोडिम्ब** पु० गोर्भूमेर्डिम्ब इव। शृगालजम्ब्वां शब्दार्थचि०।

**गोडुम्बा** स्त्री गां भूमिं तुम्बति अर्द्दति तुवि—क पृ०। (गो-मुक) १गवादन्यां (तरमुज) २शीर्णवृन्ते पु० मेदि०। स्वार्थे क। गोडुम्बिका गवादन्याम् रत्नमाला

**गोणी** स्त्री गुण—घञ् नि० गुणः गोण+आवपनेऽर्थे ङीप्। धान्याधारे (गुण) ख्याते १आवपनपात्रे २छिद्रवस्त्रे, ३शाणट्यां, ४द्विशूर्पात्मके मानभेदे, ५द्रोणीपरिमाणे च। “गोणी त्वावपनं चेत्” जानपदा० पा० सू० सि०कौ०। तस्य द्विशूर्पात्मकता भावप्र० उक्ता यथा

"सूर्पाभ्याञ्च भवेद्द्रोणी वाहो गोणी च सा स्मृता। द्रोणीचतुष्टयं खारी कथिता सूक्ष्मबुद्धिभिः। चतुःसहस्रपलिका षस्वत्यधिका च सा। पलानां द्विसहस्रञ्च भार एकः प्रकीर्त्तितः। तुला पलशतं ज्ञेयं सर्व्वत्रैवैष निश्चयः। माषटङ्कार्द्धबिल्वानि कुडवः प्रस्थ आढकम्। राशिर्गोणी खारिकेति यथोत्तरचतुर्गुणम्"। पञ्चभिः सप्तभिर्वा गोणीभिः क्रीतः तद्धितार्थे द्विगौ परिमाणात् ठञ्। "द्विगोर्लुगनपत्ये" पा० तस्य लुकि उपसर्जनस्त्रीप्रत्ययस्य लुक्। ततः "इद्गोण्याः" पा०इत् पञ्चगोणि सप्तगोणि पञ्चगोण्यादिक्रीते पटादौ त्रि०। ह्रस्वा गोणी ष्टरच् षित्त्वात् ङीष्। गोणीतरी ह्रस्वगोण्याम्। [च २तद्वति त्रि० मेदिनिः।

**गोण्ड** पु०गोरण्ड इव। १नीचजातिभेदे (गोँड) २वृद्धनाभौ

**गोण्डाकरी** स्त्री रागभेदे "गोण्डाकरीरागेण रूपकतालेन गीयते" गीतगो०।

**गोतम** पु०गोभिस्तमोध्वस्तं यस्य पृषो०। १मुनिभेदे तन्नामनिरुक्तिः भा० आनु० ९३ अ०यथा "गोतमोऽयं मतोऽधूमोदमस्तो मम दर्शनात्। गोभिस्तमोमम ध्वस्तं जातमात्रस्य देहतः। विद्धि मां गोतमं कृत्ये यातुधानि! निबोध मे" इति। स च श्वेतवराहकल्पे ब्रह्मणो मानसः पुत्रः यथाह वायु०गया०२अ० "ब्रह्मा संभृतसंभारो मानसा न्दृत्विजोऽसृजत्" इत्युपक्रमे "सुकपालं गोतमञ्च तथा वेदशिरोव्रतम्"। इति। स च गोत्रप्रवर्त्तकः गोत्रशब्दे दृश्यम्। गोतमस्यापत्यम् ऋष्यण्। गौतम तद्वंश्ये प्रवरप्रवर्त्तके ऋषिभेदे बहुत्वे तस्य लुक् गोतमाः। गौतमशब्देऽधिकं वक्ष्यते आर्षशब्दे ८०७पृ०उदा० दृश्यम्। गोतमवंश्याश्चाङ्गिरसगोत्रोत्पन्ना दश तच्छब्दे दास्वत्रैव दृश्याः। अतिशयेन गौः जडत्वात् तमप्। २अतिजडे पुंस्त्री। "मुक्तये यः शिलात्वाय शास्त्रमूचे सचेतसाम्। गोतमं तमवेतैव यथा वेत्थ तथैव सः" नैष० चार्वाकोक्तिः। तस्य चान्वीक्षिकीविद्याप्रकाशकत्वमक्षपादशब्दे ४३पृ० दृश्यम् तच्छब्दे एव तच्छास्त्रप्रतिपाद्याद्युक्तम्। तस्य छात्राः गौतम गोतमच्छात्रे गौरा० ङीष्। गोतमी तद्भार्यायां शतानन्दमातरि ३अहल्यायाम् स्त्री

**गोतमान्वय** पु० गोतमोऽन्वयो वंशप्रवर्त्तको यस्य। शाक्यमुनौ मायादेवीसुते हेम०।

**गोतमस्तोम** पु० गोतमेन दृष्टः स्तोमः। १यज्ञभेदे "अथ प्रातर्गोतमस्य चतुरुत्तरस्तोमो भवति तस्य चतस्रपु बहिष्पवमानमष्टाक्षराक्षराण्याख्यानि, द्वादश माध्यन्दिनः पवमानः, षोडश पृष्ठानि, विंशत्यामार्भवः पवमानः, चतुर्विंशत्याग्निष्टोम साम" शत०ब्रा०१३।५।१।१। दानशीलप्रजाकामनया कर्त्तव्ये एकाहसाध्ये २यज्ञभेदे च "गोसवेन य इच्छेत् दानकामा मे प्रजा स्यादिति" आश्व० श्रौ० ९।५।१४ तद्विधानं तत्रैवोक्तम् दृश्यम्।

**गोतमीपुत्र** पु० ६त०। गोतम्या अहल्यायाः पुत्रे शतानन्दे

**गोतल्लज** पु० प्रशस्तः गौः "प्रशंसावचनैश्च" पा०पूर्वनि०। प्रशस्ते गवि स्त्रियामपि पुंस्त्वमेव नियतलिङ्गत्वात् अमरः। गोषु मध्ये तल्लज इति शब्दक०व्युत्पत्तिकल्पनं प्रामादकमेव पाणिनीयसूत्रे कर्मधारये तद्विधानात्

**गोतीर्थ** न० गवा कृतं तीर्थम्। १गोष्ठे "बलिर्निवेद्यो गोतीर्थे रेवत्यै प्रयतात्मना" सुश्रु०२तीर्थभेदे च। "तस्यां त्रितस्यो धनसोमनोश्च पृथोरथास्त्रेरसितस्य वायोः। तीर्थं सुदासस्य गवां गुहस्य यच्छ्राद्धदेवस्य स आसिषेवे" भाग० ३।१।२२। त्रितादीनामेकादश तीर्थानि तत्तन्नाम्ना प्रसिद्धानि" श्रीधरः

**गोतीर्थक** पु० "पार्श्वगतेन शस्त्रेण छेदो गोतीर्थको भवेत्" सुश्रुतोक्ते छेदभेदे "आधौ तत्र बहुच्छिद्रे भिषजा विजानता। अर्द्धलाङ्गलिकश्छेदः कार्यो लाङ्गलिकोऽपि वा। सर्व्वतोभद्रको वापि कार्यो गोतीर्थकोऽपि च" सुश्रुते तत्प्रयोगे निमित्तमुक्तम्।

**गोत्र** पु० गां भूमिं त्रायते त्रैङ् पालने क। १पर्व्वते तस्य विष्कम्भरूपेण पृथिव्या धारकत्वात् तथात्वम् गोत्रभित्। गूयते शब्द्यतेऽनेन गुङ् शब्दे करणे ष्ट्रन् गुधूपचीत्यादिना त्रो वा। २आख्यायां नामनि तया शब्द्यमानत्वात्तस्यास्तथात्वम् गोत्रस्खलनम्। ३सम्भावनीयबोधे ४कानने ५क्षेत्रे ६मार्गे च मेदि०। ७छत्रे हेमच०। ८सङ्घे ९वृद्धौ शब्दच०। १०वित्ते धने विश्वः ११मुनिभेदस्यापत्यादिवंशे न०। गोत्रकाराश्चाष्टौ सुप्रसिद्धाः यथाह नि० सि० बौधायनः:

"विश्वामित्रोजमदग्निर्भरद्वाजोऽथ गोतमः। अत्रिर्वसिष्ठः कश्यप इत्येते सप्त ऋषयः सप्तानामृषीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रमिति" मत्स्य सप्ताह यथा "जमदग्निर्भरद्वाजो विश्वामित्रात्रिगोतमाः। वशिष्ठकाश्यपागस्त्या मुनयो गोत्रकारिणः। एतेषां यान्यपत्यानि तानि गोत्राणि मन्यते" एतदुपलक्षणमन्येषामपि दर्शनात्। तथा च धर्म्मप्रदीपे गोत्राणि तु चतुर्विंशतिरित्याह यथा च

इत्युक्तम् "शाण्डिल्यः कश्यपश्चैव वात्स्यः सावर्णकस्तथा । भरद्वाजो गौतमश्च सौकालीनस्तथापरः । कलमपश्चाग्निवेश्यश्च कृष्णात्रेयवशिष्ठकौ । विश्वामित्रः कुशिकश्च कौशिकश्च तथापरः । घृतकौशिकमौद्गल्यौ आलम्ब्यानः पराशरः । सौपायनस्तथाऽत्रिश्च वासुकीरोहितस्तथा वैयाघ्रपद्यकश्चैव जामदग्न्यस्तथापरः । चतुर्विंशति गोत्राणां कथिता पूर्व्वपण्डितैः" । "सौकालीनकमौद्गल्यौ पराशरवृहस्पती । काश्यपो विष्णुकौशिकौ कात्यायनात्रेयकाण्वकाः । कृष्णात्रेयः साङ्कृतिश्च कौण्डिल्यो गर्गसंज्ञकः । आङ्गिरस इति ख्यातः अनावृकाख्यसंज्ञितः । नव्यजैमिनिवृद्धाख्याः शाण्डिल्यो वत्सएव च । सावर्णालम्ब्यानवैयाघ्रपद्या घृतकौशिकः । शक्तिः काण्वायनश्चैव वासुकिर्गौतमस्तथा । शुनकः सौपायनश्च मुनयो गोत्रकारिणः । एतेषां यान्यपत्यानि तानि गोत्राणि मन्यते" । सर्व्वे द्विचत्वारिंशद्गोत्रकाराः । "अपत्यं पौत्रप्रभृति गोत्रम्" पा॰ १२ उक्ते पौत्रप्रभृतौ अपत्यत्वेन विवक्षिते वंश्ये न॰ तस्यायमाशयः— प्रवराध्यायप्रसिद्धं लोके गोत्रमिह तु तदप्रसिद्धस्यापि संज्ञार्थमिदम् पौत्रादेरप्यपत्यत्वाव्यभिचारादपत्यपदस्यापत्यत्वेन विवक्षितमित्यर्थः तेन पौत्रादेस्तत्त्वेन विवक्षायामेव गोत्रत्वम् । पौत्रापत्यशब्दयोः सम्बन्धिकतया यदीयपौत्रादि तं प्रत्येव तस्य गोत्रत्वम् इति । अस्य प्रयोजनं तु "एकोगोत्रे" पा॰ नियमार्थं तथाहि गोत्रे एक एवापत्यप्रत्ययः स्यात् । उपगोर्गोत्रापत्यम् औपगवः । गार्ग्यः । नाडायनः । "गोत्रे स्वैकोन संख्यानां प्रत्ययानाम्परम्परा । यद्वा स्यादूनसंख्येभ्यो ऽनिष्टोत्पत्तिः प्रसज्यते । अपत्यम्पितुरेव स्यात्ततः प्राचामपीति च । मतभेदेन तद्व्यन्ये सूत्रमेतत्तथोत्तरम्" सि॰ कौ॰ अयमर्थः पितुरेवापत्यमिति पक्षे हि उपगोस्तृतीये वाच्ये औपगवादि स्यात् । चतुर्थे त्वजीवत्स्वे स्वतंश्ये औपगवेः फक् । इत्यमिञ्फकोः परम्परायां मूलाच्छततमे गोत्रे एकोनशतमत्ययाः स्युः । पितामहादीनामपीति मुख्यपक्षे तु तृतीये वाच्ये उपगोरणा दृष्टे सिद्धेऽपि अणन्तादिञपि स्यात् चतुर्थे फगिति ततः फगिञाः परम्परायां शततमे गोत्रेऽष्टनवतिरनिष्टप्रत्ययाः स्युः। अतो नियमार्थमिदं सूत्रम्"। इति गोत्रापत्ये अनेकप्रत्ययाः पा॰ विहिता विस्तरभयान्नोक्ताः । गोत्रान्तरे जातस्यापि दानादितो गोत्रान्तरत्वं स्मृतिविहितं यथा "गोत्ररिक्थे जनयितुर्न भजेत् दत्रिमः सुतः । गोत्ररिक्थानुगः पिण्डोव्यपैति ददतः स्वधा" मनुः । अयमाशयः दानात् जनयितुः स्वत्वे निवृत्ते द्वादशविधपुत्रान्तर्गतत्वेन दत्तदाकीनां पुत्रनिधित्वेन विधानात् विधानेन संस्कारादिना च ग्रहीतुः पुत्रत्वे तद्गोत्रत्वम् । दत्तकन्यायान्तु वचनादेव पितृगोत्रापहारेण पतिगोत्रप्राप्तिः तथा च उ॰ त॰ व्यवस्थापितं यथा

"तदानीं गोत्रापहारमाह लघुहारीतः । "स्वगोत्राद्भ्रश्यते नारी विवाहात् सप्तमे पदे । पतिगोत्रेण कर्त्तव्या तस्याः पिण्डोदकक्रिया" । पाणिग्रहणादपि पितृगोत्रापहारमाह श्राद्धविवेके वृहस्पतिः । "पाणिग्रहणिका मन्त्राः पितृगोत्रापहारकाः । भर्त्तुर्गोत्रेण नारीणां देयं पिण्डोदकं ततः" । यत्तु सपिण्डनस्य गोत्रापहारित्वप्रतिपादकवचनम् । "संस्थितायान्तु भार्यायां सपिण्डीकरणान्तिकम् । पैतृकं भजते गोत्रमूर्द्ध्वन्तु पतिपैतृकम्" इति कात्यायनीयं तत् शाखान्तरीयं शिष्टव्यवहाराभावात् । अतएव "अनुमन्त्रिता गुरुं गोत्रेणाभिवादयेत्" इति गोभिलोक्तं सप्तपदीगमनानन्तरं पत्युरभिवादनं तत् पतिगोत्रेण कर्त्तव्यमिति भट्टनारायणैरुक्तम् एतेन पितृगोत्रेणेति सरलाभवदेवभट्टाभ्यामुक्तं हेयम् । श्राद्धे गोत्रोल्लेखे विशेषः श्रा॰ त॰ प्रचेताः "गोत्रसम्बन्धनामानि पितॄणां परिकल्पयन्" । सामगानां श्राद्धादिकर्मभेदे तस्य विभक्तिविशेषान्ततामाह तत्रैव गोभिलः "गोत्रं स्वरान्तं सर्वत्र गोत्रस्याक्षय्यकर्मणि । गोत्रस्तु तर्पणे प्रोक्त एवं कर्त्ता न मुह्यति" शाखिभेदेन प्रेततर्पणे तु विशेषः ब्रह्मपु॰ उक्तः । "अमुकामुकगोत्रस्तु प्रेतस्तृप्यत्विदं जपन्" । "स्नात्वा सचेलमाचम्य सिञ्चेयुरुदकं जले । गोत्रनामानुवादादि तर्पयामीति चोत्तरम्" छन्दोगविषयं गोभिलवाक्यम् "विपक्षगोत्रं दयितेन लम्भिता" किरा॰ "स्फुटमिन्द्रताद्य मयि गोत्रभिदा" माघ॰ । "गोत्रविस्खलितमूचुरङ्गनाः" रघुः । "स्मरसि स्मर ! मेखलागुणैरुत गोत्रस्खलितेषु बन्धनम्" कुमा॰। "गोत्रभिदोऽप्यमर्षण" रघुः । गोत्रं करोति कृ—णिनि । गोत्रकारिन् गोत्रप्रवर्त्तके ऋषिभेदे । "सप्तैते गोत्रकारिणः" बौधा॰। तृच् गोत्रकर्त्तृ तत्रार्थे "तपस्विनो ब्रह्मविदो गोत्रकर्त्तार एव च" भा॰ आनु॰ ४अ॰। गां भूमिं त्रायते त्रै—क । १२मेघे निरु॰। गोत्रभिच्छब्दे दृश्यम् ।

**गोत्रकीला** स्त्री गोत्रः पर्वतः कील इव विष्टम्भकत्वात् यस्याः । पृथिव्यां हेमच०

**गोत्रज** पुंस्त्री गोत्रे समाने वंशे जायते जन—ड । एकगोत्रोत्पन्ने "तत्सुतो गोत्रजो बन्धुः" याज्ञ० । यद्यपि गोत्रोत्पन्नमात्रेऽस्य प्रवृत्तिस्तथापि अशौचप्रकरणे "दशाहेन सपिण्डास्तु शुध्यन्ति प्रेतसूतके । त्रिरात्रेण सकुल्यास्तु स्नात्वा शुध्यन्ति गोत्रजाः" व्यासवाक्ये गोत्रजपदं पारिभाषिकं यथाह बृहन्मनुः "सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते । समानोदकभावस्तु निवर्त्तताचतुर्दशात् । जन्मनाम्नां स्मृतेरेके तत्परं गोत्रजा मताः" इति "गोत्रजा निवृत्तसमानोदकभावाः शु०त०रघु० । वस्तुतः गोत्रजपदस्य गोत्रोत्पन्नमात्रार्थकत्वेऽपि सामान्यविशेषन्यायेन सपिण्डादेर्विशेषाणां चोक्तत्वाद्भिन्नपरत्वम् अत एव "तत्सुतो गोत्रजोबन्धुरित्यत्र याज्ञ०वचने गोत्रजपदेन पितामह्यादेर्ग्रहणमिति तद्व्याख्याने च मिता० "गोत्रजाः सपिण्डाः पितामह्यादयः समानगोत्राः" इत्युक्तम् ।

**गोत्रभाग** पु० गोत्राणामेकगोत्रजातानां भागः । गोत्रजातानां परस्परविभागे "गोत्रसाधारणं त्यक्त्वा योऽन्यदेशं समाश्रितः । तद्वंशस्यागतस्यांशः प्रदातव्यो न संशयः । तृतीयः पञ्चमश्चैव सप्तमोवापि यो भवेत् । जन्मनामपरिज्ञाने लभेतांशं क्रमागतम् । यं परम्परया मौलाः सामन्ताः स्वामिनं विदुः । तदन्वयस्यागतस्य दातव्या गोत्रजैर्मही । भुक्तिस्त्रैपुरुषी सिध्येदपरेषां न संशयः । अनिवृत्ते सपिण्डत्वे सकुल्यानां न सिध्यति । अस्वामिना तु यद्भुक्तं गृहक्षेत्रापणादिकम् । सुहृद्बन्धुसकुल्यस्य न तद्भोगेन हीयते । विवाह्यश्रोत्रियैर्भुक्तं राज्ञामात्यैस्तथैव च । सुदीर्घेणापि कालेन तेषां सिध्यति तत्तु न" बृहस्पतिः गोत्रसाधारणं द्रव्यमिति शेषः विवाह्यो जामाता

**गोत्रभिद्** पु० गोत्रं पर्वतं मेघं वा भिनत्ति भिद्—क्विप् । इन्द्रे इन्द्रस्य वृष्ट्यर्थं मेघभेदनात् पर्वतपक्षपातनाद्वा तथात्वम् । "पुरन्दरो गोत्रभिद्बाजुरायात्" यजु० २०।३८ "गोभूमिस्तां दृष्ट्वा त्रायन्ते गोत्रा मेघाः तान् वृष्ट्यर्थं भिनत्ति गोत्रान् गिरीन् वा भिनत्ति" वेददी० । तस्य गिरिपक्षभेदनकथा पौराणिकी अनुसन्धेया । यथा "ततोऽद्रयो जातपक्षा विष्णोश्चैव तु मायया । प्रस्थिता मेदिनीं त्यक्त्वा यथापूर्वं निवेशिताः । ततस्थानमसुराणान्तु घातादिष्टं जलार्णवे । प्रतीच्यां पर्वताः सर्वे निमग्नञ्जुर्यथा गजाः । तत्रासुरेभ्यः संसृत्त आधिपत्यं सुराश्रयम् । तत्कुलैरासुराः सर्वं चक्रुर्द्योमसुत्तमम्" इत्युपक्रमे "धरण्यान्तु गिरीन् स्थाप्य स्वेषु स्थानेषु गोःपतिः । चिच्छेद पविना पक्षान् सर्वेषां भुवि चारिणाम् । एकः सपक्षो मैनाकः सुरैस्तत्समये कृतः" अग्नि पु० । "पक्षच्छेदोद्यतं शक्रं शिलावर्षीव पर्वतः" इति तदनुसारेण रघौ वर्णितम् । गोत्रं नाम भिनत्ति । २नामभेदके एकनामोच्चारणकाले अन्यनामोच्चारके च । "तदयुक्तमङ्ग तव विश्वसृजा न कृतं यदीक्षणसहस्रतयम् । प्रकटीकृता जगति येन खलु स्फुटमिन्द्रताद्य मयि गोत्रभिदा" माघः । "गोत्रभिदा पर्वतभिदा नामभेदिना च" मल्लि० ।

**गोत्रवृक्ष** पु० गोत्रभवो नगजातो वृक्षः । धन्वनवृक्षे भावप्र० ।

**गोत्रस्खलन** न० गोत्रे नामनि स्खलनम् । अन्यस्य नामग्रहणापया अन्यस्य नामग्रहणरूपे रागहेतुके स्खलने । "जगाद गोत्रस्खलने च का न तम्" (नलम्) नैष० । "गोत्रस्खलने भ्रान्तिं मानिनि ! जानीहि केवलां मेऽत्र । आख्यानतोविशेषप्रतिपत्तिः पाणिनीय इव" उद्भटः । भावे क्त "गोत्रस्खलितमप्यत्र न० "उत गोत्रस्खलितेषु बन्धनम्" कुमा० [स्वादिमेषणेन लै—क । २भूमौ अमरः ।

**गोत्रा** स्त्री गवां समूहः त्र । १गोसमूहे गां त्रायते त्र-

**गोत्रादि** पु० "तिङोगोत्रादीनि कुत्सनाभीक्ष्ण्ययोः" पा० तिङन्तात् परस्य अनुदात्ततानिमित्ते शब्दगणे तद्गणश्च पा०ग०सूत्रे उक्तो यथा "गोत्र ब्रुव प्रवचन प्रहसन प्रकथन प्रत्यायन प्रपञ्च प्राय न्याय प्रचक्षण विचक्षण अवचक्षण स्वाध्याय भूयिष्ठ वानाम" ।

**गोत्व** न० गोर्भावः त्व । गोशब्दप्रवृत्तिनिमित्ते गवेतरावृत्तौ सकलगोव्यक्तिस्थे जातिभेदे । तल्लक्षणन्तु गवेतरावृत्तित्वे सति सकलगोव्यक्तिवृत्तित्वम् । सत्ताद्रव्यत्वादिजातेः सकलगोव्यक्तिवृत्तित्वात् तद्वारणाय सत्यन्तम् विशेषणं गगनादेर्गवेतरावृत्तित्वात् विशेष्यदलम् । वृत्तिताद्वयञ्च समवायेन ग्राह्यं तेन गवेतरघटादौ कालिकसम्बन्धेन गोत्वस्य सत्त्वेऽपि नासम्भवः न वा गवेतरासमवेतस्य गगनादेः कालिकेन सकलगोव्यक्तिवृत्तित्वादतिव्याप्तिः । तस्याश्च जातेः गोपदप्रवृत्तिनिमित्तत्वमुक्तं काव्य० प्र० वाक्यपदीये "गौः स्वरूपेण न गौर्नाप्यगौः गोत्वाभिसम्बन्धात्तु गौः" यतो गोत्वसम्बन्धादेव गोर्गोपद-

वाच्यता अतो गोत्वस्य गोपदप्रवृत्तिनिमित्तत्वम् । तद्व्यञ्जकञ्च गलकम्बलादिमत्त्वरूपआकारभेदः संस्थानविशेषस्यैव जातिव्यञ्जकत्वात् । तत्र गोपदं गोत्वे शक्तं व्यक्तेर्भानमनुमानात् तुल्यवित्तिवेद्यत्वाद्वेति मीमांसकामन्यन्ते अनुमानञ्च गामानयेत्यादौ गोत्वानयनमिति शाब्दबोधात् परम् गोत्वकर्मकानयनं गोकर्मकानयनं विनाऽनुपपन्नमिति व्यतिरेकव्याप्तिग्रहाधीनम् । गोत्वविशिष्टे शक्तमिति तु नैयायिकाः व्यक्तिमात्रस्य शक्यत्वे व्यक्तीनामानन्त्यात् व्यभिचारः । अतद्व्यावृत्तिरूपोऽपोहो वा गोपदशक्य इति तु बौद्धाः

**गोद** पु० गां नेत्रं दायति शोधयति दै—क । १मस्तकस्थे मस्तिष्के हेम० मस्तिष्कस्य नेत्रप्रकाशहेतुत्वात् तथात्वम् । गां ददाति दा—क । २गोदातरि त्रि० । “असदस्तु श्रियं पुष्टां गोदोऽश्वस्य पिष्टपम्” मनुः । गोदावर्य्यां समीपस्थे देशभेदे पु० ततः चतुरर्थ्याम् अण् । गोदः तद्देशादूरभवादौ त्रि० जनपदे तु वरणा०तस्य लुप् । गोदौ जनपदः “विशेषणानाञ्चाजातेः” पा० । लुबर्थस्य विशेषणानामपि तल्लिङ्गवचने न तु जातेः । गोदौ रमणीयौ” सि०कौ०

**गोदत्र** न० गांदं त्रायते त्रै—क । मस्तिष्करक्षके शकटादौ

**गोदन्त** न०गोर्दन्त इवावयवोऽस्य इत० । हरिताले राजनि०

**गोदा** स्त्री गां स्वर्गं ददाति स्नानेन दा—क । गोदावरीनद्याम् हेम० । “नेष्टोऽस्य गोदोत्तरतश्च यावत्” सु०चि० ।

**गोदान** न० गावो केशालोमानि वा दीयन्ते खण्ड्यन्तेऽत्र । आधारे ल्युट् । १केशान्ताख्ये द्विजाति संस्कारभेदे केशान्तशब्दे २२५०पृ० दृश्यम् । “अथास्य गोदानविधेरनन्तरम्” रघुः । तत्र “एवेन गोदानम्” आश्व०गृ०१।१८।१। इत्यादिसूत्रजा तेन निरूपितम् । “चूडोपनयनगोदानविवाहाः” आश्व०गृ० । गवि पृथिव्यां दीयते निधीयते क्षापकाले दा—कर्म्मणि ल्युट् । २दक्षिणकर्णसमीपस्थे शिरःप्रदेशे । “अपरेण दक्षिणाग्निम् दक्षिणं गोदानमुन्दति” कात्या० श्रौ० ५।२।१४। “दक्षिणं गोदानं वितार्य्यौनत्तीमामापः” कात्या० श्रौ० ७।२।८। “क्षपद्भिर्गवि पृथिव्यां दीयते इति गोदानं शिरसोदक्षिणं प्रदेशं वितार्य्य कङ्कतादिना तत्स्थाने केशान् विजटान् कृत्वा उन्दति क्लेदयति अद्भिरार्द्रं करोति इमामापः इत्यादि मन्त्रेण” कर्कः । ३इत० । गोः सुरभ्या वृषस्य वा ३दाने । गोप्रशंसापूर्वकं तद्दानप्रकारो हेमाद्रि०दा० उक्तो यथा

भविष्यत् पुराणे । ब्रह्मोवाच “आदित्यदुहिता गौर्हि पृथ्वीयं परिकीर्त्तिता । श्रेयोऽर्थं सर्वलोकानामुत्पन्ना क्रतुसिद्धये । ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम् । एकत्र मन्त्रास्तिष्ठन्ति हविरेकत्र तिष्ठति । गोभ्यो यज्ञाः प्रवर्त्तन्ते गोभ्योदेवाः समुत्थिताः । गोभ्यो वेदाः समुद्गीर्णाः सषडङ्गपदक्रमाः । शृङ्गमूले गवां नित्यं ब्रह्माविष्णू समाश्रितौ । शृङ्गाग्रे सर्वतीर्थानि स्थावराणि चराणि च । शिरोमध्ये महादेवः सर्वभूतमयः स्थितः । ललाटाग्रे स्थिता देवी नासावंशे च षण्मुखः । कम्बलाश्वतरौ नागौ नासापुटसमाश्रितौ । कर्णयोरश्विनौ देवौ चक्षुषोः शशिभास्करौ । दन्तेषु वायवः सर्वे जिह्वायां वरुणः स्थितः । सरस्वती च हुङ्कारे यमयक्षौ च गण्डयोः । सन्ध्याद्वयं तथोष्ठाभ्यां ग्रीवामिन्द्रः समाश्रितः । रक्षांसि ककुदेशे तु साध्याश्चोरसि संस्थिताः । चतुष्पात् सकलो धर्मः स्वयं जङ्घासु संस्थितः । खुरमध्ये तु गन्धर्वाः खुराग्रेषु च पन्नगाः । खुराणां पश्चिमाग्रेषु गणाश्चाप्सरसां स्थिताः । रुद्राश्चैकादश पृष्ठे वसवः सर्वसन्धिषु । श्रोणीतटस्थाः पितरः सोमोलाङ्गूलमाश्रितः । आदित्यरश्मयोबाले पिण्डीभूता व्यवस्थिताः । साक्षाद्गङ्गा च गोमूत्रे गोमये यमुना स्थिता । क्षीरे सरस्वती देवी नर्मदा दधिसंस्थिता । हुताशनः स्वयं सर्पिर्ब्राह्मणानां गुरुः परः । अष्टाविंशतिदेवानां कोट्योरोमसु संस्थिताः । उदरे पृथिवी ज्ञेया सशैलवनकानना । चत्वारः सागराः पूर्णा गवाङ्के तु पयोधराः । एतद्धि कथितं सर्वं यथा गोषु प्रतिष्ठितम् । जगद्वै देवशार्दूल ! स देवासुरमानवम्” । स्कन्दपुराणे “तृणानि खादन्ति वसन्त्यरण्ये पिबन्ति तोयान्यपरिग्रहाणि । दुह्यन्ति वाहन्ति पुनन्ति पापं गवां रसैर्जीवति जीवलोकः । तुष्टास्तु गावः शमयन्ति पापं दत्तास्तु गावस्त्रिदिवं नयन्ति । संरक्षितास्तोपनयन्ति वित्तं गोभिर्न तुल्यं धनमस्ति किञ्चित् । शष्पं समश्नाति ददाति नित्यं पापक्षतिं मित्रविवर्द्धनं च । स एव चार्थैः परिभुज्यते च गोभिर्न तुल्यं धनमस्ति किञ्चित् । तृणानि शुष्काणि वने चरित्वा पीत्वापि तोयान्यमृतं स्रवन्ति । यद्गोमयाद्याश्च पुनन्ति लोकान् गोभिर्न तुल्यं धनमस्ति किञ्चित्” । हारीतः “बहुक्षीरास्तु यो गा वै ब्राह्मणायोपपादयेत् । उत्तारयेत्स आत्मानं सप्त सप्त कुलानि च” ।

देवलः "सुशीलां लक्षणवतीं युवतीं वत्ससंयुताम्। बहुदुग्धवतीं स्निग्धां धेनुं दद्याद्विचक्षणः"। वेदव्यासः "यस्त्वात्मविक्रयं कृत्वा गाः क्रीत्वा संप्रयच्छति। आत्मविक्रयतुल्यास्ताः शाश्वतीः इन्द्रकौशिक"। तथा संग्रामेष्वर्जयित्वा तु यो वै गाः सम्प्रयच्छति। यावतीः स्पर्शयेद्गावः स तावत् फलमश्नुते"। तावदिति पूर्वोक्त तावद्गोरोमसम्मितं संवत्सरं स्वर्गफलमित्यर्थः। "यो वै द्यूते धनं जित्वा क्रीत्वा गाः संप्रयच्छति। स दिव्यमयुतं शाक्रवर्षाणां फलमश्नुते"। 'अन्तर्जाताः, सुक्रयज्ञानलब्धाः पणक्रीता निर्जिताश्चौकजाश्च। कृच्छ्रोत्सृष्टाः पोषणाभ्यागताश्च द्वारैरेतैर्गोविशेषाः प्रशस्ताः"। अन्तर्जाता गर्भिण्य इति भारतपदप्रकाशकारः। सुक्रयलब्धाः यथामूल्यक्रयप्राप्ताः ज्ञानलब्धाः प्रतिग्रहलब्धाः पणक्रीताः भृतिलब्धाः निर्जिता युद्धादिना, ओकजाः गृहजाताः, कृच्छ्रोत्सृष्टाः पोषणाभ्यागता अतिव्याध्यादिकृच्छ्राक्रान्ताः सत्यः स्वामिना यास्त्यक्ताः स्वयं च पोषणं कृत्वा लब्धाः। "कृशा दुष्टा दुर्बला व्याधिता च न दातव्या या च मूल्यैरदत्तैः। क्लेशैर्विप्रं या फलैः संयुनक्ति तस्यावीर्याश्चाफलाश्चापि लोकाः"। मूल्यैरदत्तैः स्वीकृतेति शेषः। तथा। "न कृशां पापवत्सां वा बन्ध्यां रोगान्वितां तथा। न व्यङ्गामपरिश्रान्तां दद्याद्गां ब्राह्मणाय वै। योदद्यान्नोपयुक्तार्थां जीर्णान्धेनुञ्च निष्फलाम्। तमः संप्रविशेद्दाता द्विजं क्लेशेन योजयन्"। ब्रह्मपुराणे "पीतोदकां जग्धतृणां दुग्धदोहां निरिन्द्रियाम्। उन्मत्तामङ्गहीनाञ्च मृतवत्सां महाशनाम्। केशबालपुरीषास्थिक्रव्यादां सन्धिनीं खलाम्। पुटधेनुं यमलसूं नित्यं व्रणयितस्तनीम्। न दद्याद्ब्राह्मणेभ्यश्च सदोषं वृषभन्तथा"। पीतोदकां जग्धतृणामिति, वृद्धत्वोपलक्षणपरम्। दुग्धदोहां, स्वकीयस्तनपायिनीं, महाशनाम् बहुभक्षां, पुटधेनुं बाल्यावस्थैव या गर्भिणी। विश्वामित्रः "नैकशृङ्गाञ्च निःशृङ्गां स्फुटिताक्षीं चलत्खुराम्। न दद्यात् त्रिस्तनीञ्चैव गां शुभामेव दापयेत्"। महाभारते "अम्बरीषोगवां दत्त्वा ब्राह्मणेभ्यो प्रतापवान्। अर्बुदानि दशैकञ्च सराष्ट्रोऽभ्यपतद्दिवम्। दत्त्वा शतसहस्रन्तु गवां राजा प्रसेनजित्। सवत्सानां महातेजा गतोलोकाननुत्तमान्"। तथा। "प्रासादा यत्र सौवर्णाः शय्या रत्नोज्ज्वलास्तथा। सराश्चाप्सरसो यत्र तत्र गच्छन्ति गोप्रदाः। गोप्रदोनरकन्नैति पयः पीत्वाम्बुजञ्जलम्। विमानेनार्कवर्णेन दिवि राजन्! विराजते। तच्चारुवेशाः सुश्रोण्यः शतशोवरयोषितः। रमयन्ति विमानस्थं दिव्याभरणभूषिताः। वेणूनां वल्लकीनाञ्च नूपुराणाञ्च निःस्वनैः। हासैश्च हरिणाक्षीणां सुप्तः सन् प्रतिबुध्यते। यावन्ति रोमाणि भवन्ति धेन्वास्तावन्ति वर्षाणि महीयते स्वः। स्वर्गाच्च्युतश्चापि ततस्तु लोके कुले समुत्पत्स्यति गोमतां सः"। विष्णुः "गोप्रदानेन स्वर्गमाप्नोति दशधेनुप्रदोगोलोकं शतप्रदश्च ब्रह्मलोकम्"। जाबालः "होमार्थमग्निहोत्रस्य योगान्दद्यादयाचिताम्। त्रिवित्तपूर्णा पृथिवी तेन दत्ता न संशयः"। याज्ञवल्क्यः "यथाकथञ्चिद्दत्त्वा गां धेनुं वाऽधेनुमेव वा। अरोगामपरिक्लिष्टां दाता स्वर्गे महीयते"। अङ्गिराः 'गौरेकस्यैव दातव्या श्रोत्रियस्य विशेषतः। सा हि तारयते पूर्वान् सप्त सप्त च सप्त च"। नन्दिपुराणे "अपात्रे सा तु गौर्दत्ता दातारन्नरकं नयेत्। कुलैकविंशत्या युक्तं ग्रहीतारञ्च तारयेत्। विधिना च यदा दत्ता पात्रे धेनुः सदक्षिणा। तदा तारयते जन्तून् कुलानामयुतैः शतैः। पात्राण्याध्यात्मिका मुख्याः मुमुक्षवश्चाग्निहोत्रिणः। देवताश्च तथा मुख्या गोदानं ह्येतदुत्तमम्"। महाभारते "वृत्तिग्लाने सीदति चातिमात्रम् कृष्यर्थं च होमहेतोः प्रसूत्याम्। गुर्वर्थे वा बालसंवृद्धये वा धेनुन्दद्याद्देशकाले विशिष्टे"। प्रसूत्यां सोमयागे। तथा "न वधार्थं प्रदातव्या न कीनाशे न नास्तिके। गोजीवे न च दातव्या तथा गौः पुरुषर्षभ!"। कीनाशो हलवाहकः। आत्रेयः "सीदते बहुभृत्याय श्रोत्रियायाऽऽहिताग्नये। अतिथिप्रियाय दान्ताय देया धेनुर्गुडान्विता। अकुलीनाय मूर्खाय लुब्धाय पिशुनाय च। हव्यकव्यव्यपेताय गौर्न देया कथञ्चन"। अथ दानविधिः। विश्वामित्रः "प्राङ्मुखीं गामवस्थाप्य सवत्सान्तां सुपूजिताम्। पुच्छदेशे तु दाता वै स्नातो बद्धशिखो भवेत्। उदङ्मुखस्तु विप्रः स्वात्मामलक्षणलक्षितः। आज्यपात्रं करे कृत्वा कनकेन समन्वितम्। निक्षिप्य पुच्छं तस्मिंस्तु घृतदिग्धं प्रगृह्य च। सतिलं विप्रपाणिन्तु प्रागग्रन्तु निधापयेत्। सतिलं सकुशञ्चापि गृहीत्वा दानमाचरेत्। अनेनैव तु मन्त्रेण पात्रहस्ते जलं क्षि-

पेत् । यज्ञसाधनभूता या विश्वस्याघप्रणाशिनी । विश्वरूपः परो देवः प्रीयतामनया गवा । अनुव्रज्य तु तां धेनुं ब्राह्मणेन समन्विताम् । गोमतीन्तु ततो विद्यां जपेत प्रयतः शुचिः । उद्दिश्याथ वासुदेवं प्रीयतामिति चानघ ! । पात्रं मनसि सञ्चिन्त्य तोयमप्सु विनिक्षिपेत् । जलशायी ब्रह्मपिता पद्मनाभः सनातनः । अनन्तभोगशयनः प्रीयतां परमः पिता" । गोमतीमाह यमः "गावः सुरभयोनित्यं गावोगुग्गुलगन्धिकाः । गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं महत् । अन्नमेव परं गावो देवानां हविरुत्तमम् । पावनं सर्व्वभूतानां रक्षन्ति च वहन्ति च । हविषा मन्त्रपूतेन तर्पयन्त्यमरान्दिवि । ऋषीणामग्निहोत्रेषु गावो होमप्रतिष्ठिकाः । सर्व्वेषामेव भूतानां गावः शरणमुत्तमम् । गावः पवित्रं परमं गावो मङ्गलमुत्तमम् । गावः सर्व्वस्य लोकस्य गावोधन्याः शुभावहाः । नमोगोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च । नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः । ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम् । एकत्र मन्त्रास्तिष्ठन्ति हविरेकत्र तिष्ठति" । अन्यापि गोमती, महाभारतोक्ता तिलधेनुदाने दर्शिता । "ततश्चानयोर्विकल्पानुष्ठानमिति । सर्व्वगोदानसाधारणं मन्त्रमाह वशिष्ठः । "घृतक्षीरप्रदा गावो घृतयोन्यो घृतोद्भवाः । घृतनद्यो घृतावर्त्तास्ता मे सन्तु सदा गृहे । घृतं मे हृदये नित्यं घृतं नाभ्यां प्रतिष्ठितम् । घृतं मे सर्व्वतश्चैव घृतं मे मनसि स्थितम् । गावोममाग्रतोनित्यं गावः पृष्ठत एव च । गावो मे सर्व्वतश्चैव गवां मध्ये वसाम्यहम्" । "इत्याचम्य जपन् सायं प्रातश्च पुरुषः सदा । यदह्ना कुरुते पापं तस्मात् स परिमुच्यते" । दक्षिणा चात्र सुवर्णम् यदाह वशिष्ठः "सुवर्णं दक्षिणामाहुर्गोप्रदाने महाफले । सुवर्णं परमं ह्यायुर्दक्षिणार्थे न संशयः । गोप्रदानन्तारयते सप्त पूर्व्वान् नरांस्तथा । सुवर्णं दक्षिणां दत्त्वा तावद्द्विगुणमुच्यते । सुवर्णं परमं दानं सुवर्णं दक्षिणा परा । सुवर्णं पावनं प्राहुः परिमाणं परन्तथा" अत्र सुवर्णशब्दस्य हिरण्यपर्य्यायत्वे यथाशक्त्यनुष्ठानम् । अपरे त्वाहुः सकृदुच्चरितसुवर्णशब्दावगतपरिमाणार्थपरित्यागानुपपत्तेः सुवर्णशब्दस्य प्राहुरित्यादिक्रियाकर्मभूततया द्वितीयान्तत्वेन लिङ्गविशेषनिर्द्धारणाच्च परिमाणार्थतैव न्याय्येति । एवं च शक्त्यनियतानुष्ठानप्रसङ्गः तथा परिमाणपरन्तथेत्येतदपि समञ्जसं स्यात्" ।

वर्णभेदेन गोदानफलादि तत्रोक्तं यथा

"कृष्णाङ्गान्ददते यस्तु पट्टच्छन्नां स्वलङ्कृताम् । घण्टामालाकुलां कृत्वा पुष्पैश्चैवाप्यलङ्कृताम् । विधिवच्च द्विजातिभ्यो यमलोकं न पश्यति । आयुरारोग्यमैश्वर्यं दाता कामांश्च मानवाम् । श्वेताङ्गान्ददते यस्तु दिव्यरत्नैरलङ्कृताम् । घण्टामालाकुलां कृत्वा पुष्पैश्चैवाप्यलङ्कृताम् । मुखे धूपः प्रदातव्यो घृतेनास्यञ्च पूरयेत् । सुवर्णशृङ्गाभरणा तथा रौप्यखुरा शुभा । पट्टच्छन्ना शुभा चैव दातव्या ध्यानयोगिने । यस्तु दद्याच्च गां श्वेतां तस्य पुण्यफलं शृणु । जन्मप्रभृति यत् पापं मातृकं पैतृकं च यत् । कुलोत्तरस्य धूर्त्तस्य तत्क्षणादेव नश्यति । गान्ददानीह दत्त्वेव वाचा पूयेत सर्व्वशः । पिता पितामहश्चैव तथैव प्रपितामहः । नरकस्थाः प्रमुच्यन्ते सोमलोकं व्रजन्ति ते । गौरीं चैव प्रयच्छेत्तु यस्तु गां वै नरः शुचिः । अहोरात्रोषितश्चैव कृतशौचोनरः सदा । स्वर्णशृङ्गीं रौप्यखुरां मुक्तालाङ्गूलभूषिताम् । घण्टामालाकुलां चैव गन्धपुष्पैरलङ्कृताम् । कृतपञ्चाम्बरेत् प्राज्ञो मुखे धूपं प्रदापयेत् । भक्ष्यभोज्यान्नपानेन ब्राह्मणान् भोजयेत् पुमान् । गान्ददानीह दत्त्वेव वाचा पूयेत सर्व्वशः । मातृकं पैतृकं चैव यच्चान्यद्दुष्कृतं भवेत् । पापञ्च तस्य तत् सर्व्वं दहत्यग्निरिवेन्धनम् । वर्षकोटिसहस्रन्तु पुमान् स दिवि मोदते । दासीदासैरलङ्कारैः स्तूयते सर्व्वजन्तुभिः । अरोगश्चैव जायेत तेजस्वी च भवेन्नरः । नीलवर्णाञ्च गान्दद्याद्दोग्ध्रीं शीलगुणान्विताम् । स्वर्णशृङ्गीं रौप्यखुरां मुक्तालाङ्गूलभूषिताम् । पट्टच्छन्नां शुभां सौम्यां घण्टादामैरलङ्कृताम् । पञ्चरङ्गेण सूत्रेण गलवेष्टनशोभिताम् । रुद्रस्य प्रमुखे देया विष्णोश्च ब्रह्मणश्च ह । गां ददानीह दत्त्वेव वाचा पूयेत सर्व्वशः । पिता पितामहश्चैव तथैव प्रपितामहः । नरकस्थाः प्रमुच्यन्ते नीलां गां ददते तु यः । वर्षकोटिसहस्राणि लोके तिष्ठति वारुणे । दधिक्षीरवहा नद्यो वर्त्तन्ते सर्व्वतः सदा । घृतशैलाः प्रपद्यन्ते नवनीतस्य पर्व्वताः । कृषिभागी बहुधनो दुर्भिक्षञ्च न पश्यति" ।

सवर्णवत्ससहितायाः कपिलादिकाया गोर्दानविधिस्तत्रैव महाभारते ।

"समानवत्सां कपिलां धेनुं दत्त्वा पयस्विनीम् ।

सुव्रतां वस्त्रसम्पन्नां ब्रह्मलोके महीयते”। समानवत्सां समानवर्णवत्साम्। “रोहिणीं तुल्यवत्सां च धेनुं दद्यात्पयस्विनीम्। सुव्रतां वस्त्रसंवीतां इन्द्रलोके महीयते। समानवत्सां शबलां धेनुं दत्त्वा पयस्विनीम्। सुव्रतां वस्त्रसंवीतां सोमलोके महीयते”। शबलां कर्व्वुराम्। “समानवत्सां कृष्णान्तु धेनुं दत्त्वा पयस्विनीम्। सुव्रतां वस्त्रसंवीतामग्निलोके महीयते। वातरेणुसवर्णान्तु सवत्सां कामदोहनाम्। प्रदाय वस्त्रसंवीतां वायुलोके महीयते। समानवत्सां धूम्रान्तु धेनुं दत्त्वा पयस्विनीम्। सुव्रतां वस्त्रसंयुक्तां यमलोके महीयते। अघ्न्यां हेमसवर्णान्तु सवत्सां कामदोहनाम्। प्रदाय वस्त्रसंवीतां वारुणं लोकमश्नुते। अघ्न्या, गौः। कामदोहनां अनायासदोह्याम्। “हिरण्यवर्णां पिङ्गाक्षीं सवत्सां कामदोहनाम्। प्रदाय वस्त्रसंवीतां कौवेरं लोकमाप्नुयात्”। पलालधूमवर्णान्तु सवत्सां कामदोहनाम्। प्रदाय वस्त्रसंवीतां पितृलोके महीयते। सवत्सां पीवरीन्दत्त्वा सितकण्ठीमलङ्कृताम्। वैश्वदेवमसम्बाधं स्थानं श्रेष्ठं प्रपद्यते। सितकण्ठीं कृष्णगलाम्। “समानवत्सां गौरीन्तु धेनुन्दत्त्वा पयस्विनीम्। सुव्रतां वस्त्रसंवीतां वसूनां लोकमश्नुते। सुव्रता सुखदोह्या। “पाण्डुकम्बलवर्णान्तु सवत्सां कामदोहनाम्। प्रदाय वस्त्रसंवीतां साध्यानां लोकमश्नुते। वत्सोपपन्नां नीलाङ्गीं सर्व्वरत्नसमन्विताम्। गन्धर्व्वाप्सरसां लोकान् दत्त्वा प्राप्नोति मानवः। गोप्रदानरतो याति भित्त्वा जलदसञ्चयान्। विमानेनार्कवर्णेन दिवि राजन्! विराजते। तञ्चारुवेशाः सुश्रोण्यः सहस्रं वरयोषितः। रमयन्ति नरश्रेष्ठं गोप्रदानरतन्नरम्”।

देवतोद्देशेन गोदानविधिस्तत्रैव लिङ्गपुराणे

“देवदक्षिणदिग्भागे धेनुः कार्य्या उदङ्मुखी। प्राङ्मुखं वत्सकं कृत्वा ब्राह्मणं च उदङ्मुखम्। प्राङ्मुखो यजमानस्तु पूजयेद्ब्राह्मणं ततः। कोऽदादिति च मन्त्रेण गृह्णीयाद्ब्राह्मणः स्वयम्”। देवोऽत्र महेश्वरः। “एवंविधानतो दत्त्वा याति दाता शिवालयम्। तत्र भुक्त्वाक्षयान् भोगानन्ते प्राप्नोति शाश्वतम्”। देवीपुराणे “नीलां वा यदि वा श्वेतां पाटलां कपिलामपि। सदुग्धां वत्सलाञ्चैव सुखदोह्यां शुभान्नृप”। “आदाय विधिवद्देवीं पूजयेच्छुभपङ्कजैः। धूपन्तु पञ्चनिर्य्यासन्तुरुष्कागुरुचन्दनम्। दत्त्वा तु मन्त्रपूर्व्वन्तु नैवेद्यमुपकल्पयेत्। पायसं घृतसंयुक्तं चामयेच्च तथा तु ताम्। द्विजाय शिवभक्ताय सवत्साङ्गां निवेदयेत्। सहेमवस्त्रकांस्यां च महापुण्यमवाप्नुयात्। यावत्तद्रोमसंख्यानं तावद्देव्याः पुरं वसेत्। इहैव गतपापोऽसौ जायते नृपसत्तम!।” विष्णुधर्म्मे “मान्धाता उवाच। ब्रह्मणः प्रीणनार्थाय केशवस्य शिवस्य च। यानि दानानि देयानि तान्याचक्ष्व द्विजोत्तम!। येन चैव विधानेन दानं पुंसः सुखावहम्। ऐहिकामुष्मिकार्थञ्च करोति न विहन्यते। वशिष्ठ उवाच। गोदानमादौ वक्ष्यामि प्रत्यक्षक्रमयोगतः। “येन चैव विधानेन धेनुं नाधिकविस्तरम्। पुण्यन्दिनमथासाद्य स्नात्वाऽऽतर्प्य पितॄंस्तथा। कृतोपवासः सम्प्राश्य पञ्चगव्यं नरेश्वर!। घृतक्षीराभिषेकञ्च कृत्वा विष्णोः शिवस्य च। तमभ्यर्च्च्य यथान्यायं पुष्पादिभिरनुक्रमात्। उदङ्मुखीं प्राङ्मुखीं वा गृष्टिं कृत्वा पयस्विनीम्”। गृष्टिः सकृत्प्रसूतेत्यर्थः। “सपुत्रां वस्त्रसंवीतां सितयज्ञोपवीतिनीम्। स्वर्णशृङ्गीं रौप्यखुरां सुवर्णोपरिसंस्थिताम्। शक्तितो दक्षिणायुक्तां ब्राह्मणाय निवेदयेत्। गावो ममाग्रतः सन्तु गावो मे सन्तु पृष्ठतः। गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम्। प्रदक्षिणं ततः कृत्वा धेनुं द्विजवरस्य तम्। इमां नः प्रतिगृह्णीष्व धेनुर्दत्ता मया तव। स मे पापापनोदाय गोविन्दः प्रीयतामिति”। वह्निपुराणे तु अयमधिको मन्त्रः। “या धेनुः काश्यपस्यासीदत्रेर्वा गोतमस्य च। साभिकामफला देवी इह लोके परत्र चेति। एवमुच्चार्य्य तं विप्रं गोविन्दं नृप! कल्पयेत्। अनुव्रजेत्तु गच्छन्तं पदान्यष्टौ नराधिप!। अनेन विधिना धेनुं यो विप्राय प्रयच्छति। सर्वकामसमृद्धात्मा विष्णुलोकं स गच्छति। सप्तावरान् सप्तपरानात्मानञ्चैव मानवः। सप्तजन्मकृतात् पापान्मोचयत्यवनीपते!। पदेपदेऽश्वमेधस्य गोसवस्य च मानवः। फलमाप्नोति राजेन्द्र दद्याच्चैवं जगौ हरिः। सर्वकामदुघा सम्यक् सर्वकालेषु पार्थिव!। भवत्यथो पापहरा यावदिन्द्राश्चतुर्द्दश। सर्व्वेषामेव पापानां कृतानामविजानता। प्रायश्चित्तमिदं प्रोक्तमनुतापोपबृंहितम्। सर्व्वेषामेव देवानामेकजन्मानुगं फलम्। हाटकक्षितिगौरीणां सप्तजन्मानुगं फलम्। ब्राह्मणैः क्षत्रियैर्व्वैश्यैः शूद्रैश्चान्यैश्च मानवैः। लोकाः कामदुघाः प्राप्ता दत्त्वैतद्विधिना नृप!। गोभ्योऽ-

धिकं जगति नापरमस्ति किञ्चिद्दानम् पवित्रमिति शास्त्रविदो वदन्ति । ताः सम्भवः सुरसदश समीह-मानैर्देया सदैव विधिना द्विजपुङ्गवेभ्यः ।"

"अतः परन्तु गोदानं कीर्त्तयिष्यामि तेऽनघ ! । गावोऽधिकास्तपस्विभ्यो यस्मात् सर्वेभ्य एव च । तस्मान्महेश्वरो देवस्तपस्ताभिः समास्थितः । ब्रह्मलोके वसन्त्येताः सोमेन सह भारत ! । यान्तीं ब्रह्मर्षयः सिद्धाः प्रार्थयन्ति परां गतिम् । पयसा हविषा दध्ना शकृता चाथ चर्मणा । अस्थिभिश्चोपकर्वन्ति शृङ्गैर्बालैश्च भारत ! । नासां शीतातपौ स्यातां सदैताः कर्म कुर्वते । न वर्षविषयं वापि दुःखमासां भवत्युत । ब्राह्मणैः सहिता यान्ति तस्मात् पारमकं पदम् । एकं गोब्राह्मणं तस्मात् प्रवदन्ति मनीषिणः । रन्तिदेवस्य यज्ञे ताः पशुत्वेनोपकल्पिताः । अतश्चर्मण्वती राजन् । गोचर्मभ्यः प्रवर्त्तिता । पशुत्वञ्च विनिर्मुक्ताः प्रदानायोपकल्पिताः । ता इमा विप्रमुख्येभ्यो यो ददाति महीपते ! । निस्तरेदापदं कृच्छ्रां विषमस्थोऽपि पार्थिव ! । गवां सहस्रदः प्रेत्य नरकं न प्रपद्यते । सर्वत्र विजयञ्चापि लभते मनुजाधिप ! । अमृतं वै गवां क्षीरमित्याह त्रिदशाधिपः । तस्माद्ददाति यो धेनुममृतं स प्रयच्छति । अग्नीनामव्ययं ह्येतद्धौम्यं वेदविदो विदुः । तस्माद्ददाति यो धेनुं स हौम्यं सम्प्रयच्छति । स्वर्गो वै मूर्त्तिमानेष, वृषभं यो गवां पतिम् । विप्रे गुणयुते दद्यात् स वै स्वर्गे महीयते । प्राणा वै प्राणिनामेते प्रोच्यन्ते भरतर्षभ ! । तस्माद्ददाति यो धेनुं प्राणानेष प्रयच्छति । गावः शरण्या भूतानामिति वेदविदो विदुः । तस्माद्ददाति यो धेनुं शरणं स प्रयच्छति । न बधार्थं प्रदातव्या न कीनाशे न नास्तिके । गोजीविने न दातव्या तथा गौर्भरतर्षभ ! । ददत् स तादृशानां वै नरो गां पापकर्मणाम् । अक्षयं नरकं यातीत्येवमाहुर्मनीषिणः । न कृशां पापवत्सां वा बन्ध्यां रोगान्वितां तथा । न व्यङ्गां न परिश्रान्तां दद्याद्गां ब्राह्मणाय च । दशगोसहस्रदो हि शक्रेण सह मोदते । अक्षयान् लभते लोकान्नरः शतसहस्रदः ॥ भा०आनु० ६६ अ०

**गोदारण** न० गां भूमिं दारयति दृ—णिच्—ल्यु । १ला-ङ्गले अमरः । २कुद्दाले हेमच० ।

**गोदावरी** गां स्वर्गं ददाति स्नानात् दा—वनिप् ङीप् रश्चान्तादेशः । स्वनामख्याते नदीभेदे सा च नदी दक्षिणस्तु दण्डकारण्यसमीपस्था यथाह "सत्कृत्य शरभङ्गं स दण्डकारण्यमाश्रितः । नदीं गोदावरीं रम्यामाश्रित्य न्यवसत्तदा" भा०व०२७३अ० । "ततो गोदावरीं प्राप्य नित्यं सिद्धनिषेविताम् । गवामयमवाप्नोति वासुकेर्लोकमुत्तमम् भा०व०८५अ० । "गङ्गे ! च यमुने ! चैव गोदावरि ! सरस्वति ! । नर्म्मदे ! सिन्धु ! कावेरि ! जलेऽस्मिन् सन्निधिं कुरु" । जले तीर्थावाहनमन्त्रः ।

**गोदुग्ध** न० ६त० । गोः क्षीरे । भावप्र० तद्गुणा उक्तास्तद्वाक्यं गोशब्दे दर्शितम् । वर्णभेदेन गोदुग्धस्य गुणास्तत्रैव "कृष्णाया गोर्भवं दुग्धं वातहारि गुणाधिकम् । पीतायाः हरते पित्तं तथा वातहरं भवेत् । श्लेष्मलं गुरु शुक्लाया रक्तायाश्चापि वातहृत् । बालवत्सविवत्सानां गवां दुग्धं त्रिदोषकृत् । वष्कयिण्यास्त्रिदोषघ्नं तर्पणं बलकृत् पयः । जाङ्गलानूपशैलेषु चरन्तीनां यथोत्तरम् । पयो गुरुतरं स्नेहो यथाहारं प्रवर्त्तते । स्वल्पान्नभक्षणाज्जातं क्षीरं गुरु कफप्रदम् । तत्तु बल्यं परं हृद्यं स्वस्थानां गुणदायकम् । पलालतृणकार्पासबीजजं रोगिणो हितम्" राजनि०तु "गवां प्रत्यूषसि क्षीरं गुरु विष्टम्भि दुर्जरम् । तस्मादभ्युदिते सूर्ये यामं यामार्द्धमेव वा । समुत्तार्य पयोपात्यं तत्पथ्यं दीपनं लघु । विवत्साबालवत्सानां पयो दोषसमीरितम् । शस्तं वत्सैकवर्णायाश्चवलीकृष्णयोरपि" दृष्टादा मासपर्णादा जर्जश्शृङ्गी च या भवेत् । तासां गवां हितं क्षीरं शृतं वाऽशृतमेव वा । गवां सितानां वातघ्नं कृष्णानां पित्तनाशनम् । श्लेष्मघ्नं रक्तवर्णानां त्रीन् हन्ति कपिलापयः" राजनि० ।

**गोदुग्धदा** स्त्री गोदुग्धं ददाति सम्पादयति दा—क । चणिकातृणे राजनि० । तद्भोजनाद्गोदुग्धवृद्धेस्तस्यास्तथात्वम् ।

**गोदुह्** त्रि०गां दोग्धि दुह—क्विप् ६त०। १गोदोहके (दोयाल) "चिरं निदध्यौ दुहतः स गोदुहः" माघः । २गोपे च "चेतोऽस्माकं गुणवदगुणं गोदुहां देहमेतत्" उद्धवदू० दुह—क । गोदुहोऽप्यत्र पु० ।

**गोदोह** पु० भावे घञ् । ६त० । "१गोदोहने ।" "रुद्रायतने भूमौ गोदोहात् कोटिहोमाच्च" ह०स० २६अ० । कर्मणि घञ् । "अकर्मकधातुभियोंगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञ इति वाच्यम्" वार्त्ति० अस्यार्थः

माषमासं गोदोहमास्ते इत्यादौ सर्वस्याकर्मकधातूनां व्याप्तिगर्भितस्वार्थपरतायां तात्पर्यग्राहकमिदं वार्त्तिकं यथाह हरिः "कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः। सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते। अतस्तैः कर्मभिर्युक्तो धातुर्व्यैरकर्मकः। तस्य कर्मणि भावे च निमित्तत्वाय कल्पते" इति। अस्यायं भावः माषमास्ते गोदोहमास्ते इत्यादौ धातोरेव सम्बन्धपूर्वकासनादौ आसनादिकरणक सम्बन्धे वा निरूढलक्षणाया ज्ञापकमेतद्वार्त्तिकम्। तत्र धातोराद्यार्थलक्षणायां प्रधानक्रियाया अकर्मकत्वात् दुहादिषु पाठाभावाच्च गौणकर्मणि लकारासम्भवेन भाव एव लकारस्तेन माषमास्यत इत्येव प्रयोगः। द्वितीयार्थलक्षणायान्तु प्रधानक्रियायाः सकर्मकतया कालादेस्तत्कर्मत्वेन मुख्यकर्मण्येव लकारस्तेन माष आस्यते गोदोह आस्यते इति प्रयोग इति विवेकः। अत्र कस्येत्यभिधानात् क्तयोगे न तेभ्यः षष्ठीति द्योतितमिति मनोरमायां स्पष्टम्। २गोदुग्धे च "ह्यो गोदोहोद्भवं घृतम्" अमरः। आधारे घञ्। ३गोदोहनकाले च तत्कालश्च मुहूर्त्ताष्टमभागात्मकः यथाह आ॰त॰ विष्णुपु॰ "ततो गोदोहमात्रं वै कालं तिष्ठेत् गृहाङ्गने। अतिथिग्रहणार्थाय तदूर्द्ध्वं वा यथेच्छया" गोदोहनकालश्च मुहूर्त्ताष्टमभागात्मकः "आचम्य च ततः कुर्यात् प्राज्ञो द्वारावलोकनम्। मुहूर्त्तस्याष्टमं भागमुदीक्ष्योह्यतिथिर्भवेत्" मार्क॰ पु॰ एकवाक्यत्वात्" आ॰ त॰ रघु॰।

**गोदोहन** न॰ भावे ल्युट् ६त॰। १गोदोहने। आधारे ल्युट्। २गोदोहनकाले। "न ह्यस्यतेऽद्यावस्थानमपि गोदोहनं क्वचित्" भाग॰१।१९।२७। आधारे ल्युट् ङीप्। गोदोहनी गोदोहनाधारपात्रे गार्ग्याम् स्त्री जटाधरः।

**गोद्रव** पु॰ द्रवति द्रु—अच् ६त॰। गोमूत्रे राजनि॰।

**गोधन** न॰ गवां धनं समूहः। १गोसमूहे गौरेव धनमस्य। २गोरूपधनवति त्रि॰। गौरेव धनम्। ३गोरूपे धने न॰। "अद्यैव किं चिरेण स्म व्रजामः सह गोधनैः" हरिवं॰ ६६अ॰ "गोधनेषु प्रतोलीषु वरद्वारमुखेषु च। असंस्कारदोषेषु पर्य्युक्तास्तत्र शोभनाः" भा॰वि॰४७अ॰ धन—रवे भावे अच् गोर्वज्रस्य रव इव रवोऽस्य। ४स्थूलाग्रवाणे पु॰ शब्दक॰ हरिवं॰ मूलं दृश्यम्।

**गोधर** पु॰ गां पृथिवीं विष्टम्भकतया धरति धर—अच्। महीधरे पर्वते शब्दार्थचि॰

**गोधर्म** पु॰ गोरिव धर्मः। मैथुनेऽविचाररूपे गोसदृशे धर्मे "गोधर्मं सौरभेयाच्च सोऽधीत्य निखिलं मुनिः (दीर्घतमाः) भा॰आ॰१०४अ॰ उतथ्यशब्दे १०७५पृ॰ दृश्यम्।

**गोधा** कौटिल्ये कण्ड्वादेराकृतिगणः नामधातुः पर॰ अक॰ सेट्। गोधायति अगोधायीत्।

**गोधा** स्त्री गुध्यते वेष्ट्यते बाहुरनया करणे घञ्। धनुर्ज्याघातवारणाय प्रकोष्ठे १बध्यमाने चर्मणि। "बद्धगोधाङ्गुलित्राण्" भा॰ व॰ १७अ॰ "गोधाश्लिष्टभुजा शाखैरभ्रूझोमा रणाटवी" माघः। "ततश्चटचटाशब्दो गोधाघातादभूत्तयोः" भा॰ द्रो॰ १२९अ॰। कर्त्तरि अच्। (गोसाप) इति ख्याते २सर्पभेदे स्त्री अमरः "श्वाविधं शल्यकं गोधां खड्गकूर्मशशांस्तथा। भक्ष्यान् पञ्चनखेष्वेतानहुष्ट्रांश्चैकतोदतः" मनुना तन्मांसं पञ्चनखेषु भक्ष्यतयाऽभिहितम्। तन्मांसपाकगुणादि भावप्र॰उक्तं यथा "गोधाञ्चोष्णजलैर्भूयः क्षालितां खण्डशः कृताम्। स्विन्नाञ्च तक्रतोयाभ्यां क्षालितां सूक्ष्मखण्डिताम्। तलयेद्वेसवाराद्यैः प्रलेहो वा विधानतः। विपाके मधुरा गोधा वातपित्तप्रणाशिनी। कषाया कटुका प्रोक्ता कफघ्नी बलवर्द्धिनी।" सा तु स्थलजजलभेदाद्द्विधा। स्वार्थे क। अत्रैवार्थे। गोधायाः अपत्यम् वा ढक्। गौधेर पक्षे शुभ्रा॰ ढक्। गौधेय उदीचा॰ मते आरक्। गौधार तदपत्ये पुंस्त्री ढकि स्त्रीत्वे ङीप् इति भेदः।

**गोधापदी** स्त्री गोधाया इव पादो मूलमस्याः स्वाङ्गत्वात् जातित्वाद्वा कुम्भपद्या॰ ङीपि पद्भावः। (गोयालिया) लताभेदे। स्वार्थे क। अत्रैवार्थे रत्नमाला।

**गोधायस्** त्रि॰ गां दधाति धा—बा॰ असुण् ६त॰। गोधारके "गोधायसं वि धनसैरदर्दः" ऋ॰१०।६९।७।

**गोधावीणाका** स्त्री गोधायाश्चर्मणा नद्धा वीणा ह्रस्वा सा कन्। ह्रस्वगोधाचर्मनद्धवीणायाम्। "गोधावीणाका काण्डवीणाश्च पत्न्योवादयन्त्युपगायन्ति" कात्या॰श्रौ॰ १३।३।१७

**गोधास्कन्ध** पु॰ गोधेव स्कन्धोऽस्य। विट्खदिरे। राजनि॰

**गोधि** पु॰ गौर्नेत्रं धीयते यस्मिन् आधारे इन्। १ललाटे अमरः गुध—इन्। २गोधायां सर्पभेदे शब्दचि॰ गोधि—स्वार्थे क, गोधेव क अत इत्त्वं वा। गोधिका (गोसाप) गोधायाम् अमरः।

**गोधिकापुत्र** पु॰६त॰। १गोधायावके सर्पात् गोधायामुत्पन्ने (सोना गोसाप) इति ख्याते २सर्पभेदे पुंस्त्री शब्दार्थचि॰।

गोधिनी स्त्री गुध–णिनि । वृहतीभेदे राजनि०।

गोधुम पु० गुध–बा० उम । गोधूमे शब्दच० ।

गोधूम त्रि० गुध–ऊम । १नागरङ्गे २व्रीहिभेदे च (गोहुम) च मेदिनिः तद्भेदादि भावप्र०उक्तं यथा "गोधूमः सुमनोऽपि स्यात् त्रिविधः स च कीर्त्तितः । महागोधूम इत्याख्यः पश्चाद्देशात् समागतः । मधूली तु ततः किञ्चिदल्पा सा मध्यदेशजा । निःशूको दीर्घगोधूमः क्वचिन्नन्दीमुखाभिधः । गोधूमो मधुरः शीतो वातपित्तहरो गुरुः । कफशुक्रप्रदो बल्यः स्निग्धः सन्धानकृत्सरः । जीवनो वृंहणो वर्ण्योवर्ण्यो वीर्यस्थिरत्वकृत् । कफप्रदः नवीनो न च पुराणः पुराणयवगोधूमक्षौद्रजाङ्गलमूल्यभुगिति" वाग्भटेन वचनं सङ्गीतत्वात् । मधूली शीतला स्निग्धा पित्तघ्नी मधुरा लघुः । शुक्रला वृंहणी पथ्या तद्वन्नन्दीमुखा स्मृता" तस्य कृतान्नशब्दे २१८१पृ० पाकविशेषो दृश्यः ।

गोधूमक पुंस्त्री गोधूम इव कं शिरोऽस्य । राजिमत् सर्पभेदे अहिशब्दे ५८१ पृ० सुश्रुतवाक्यं दृश्यम् ।

गोधूमचूर्ण ६त० । (मयदा) इति ख्याते पदार्थे "शुष्कगोधूमचूर्णेन किञ्चित् पुष्टां तु रोटिकाम्" भावप्र० । कृतान्नशब्दे दृश्यम् ।

गोधूमसम्भव न० सम्भवत्यस्मात् सम्+भू–अपादाने अप् गोधूमः सम्भवोऽस्य । सौवीरे काञ्जिकभेदे राजनि० ।

गोधूमसार पु० ६त० । (गोहमेरपालो) इति ख्याते गोधूमस्य सारांशे तत्करणप्रकारः पाकराजेश्वरे "निस्तुषान् गोधूमानुदूखले कण्डयित्वा सायङ्काले मृत्तिकादिपात्रे जले मग्नं कृत्वा परदिने प्रभातसमये उपरिस्थं जलं क्रमेण दूरीकृत्याऽधःस्थं सारमातपे शुष्कं कृत्वा पात्रान्तरे स्थापयेदिति" । [गोलोमिकायां राजनि० ।

गोधूमी स्त्री गां भूमयति धूम+णिच्–अण् गौरा० ङीष् ।

गोधूलि स्त्री गवां खुरोत्थितो धूलिरत्र काले । गवां प्रचारदेशात् गृहागमनकाले गोखुरोद्धृतधूलियुक्ते समयभेदे सच कालो यथा "सन्ध्यातपार्द्धरक्तपश्चिमदिग्विभागे व्योम्नि स्फुरद्विरलतारकसन्निवेशे । यत्र गवां खुरपुटोद्गलितैरजोभिर्गोधूलिरेव कथितो मनुजेन योगः" पी० धा० धृतवाक्योक्तः उपयमशब्दे १२७५।७६पृ० अस्य विहितद्विष्या "तिथ्यादिषु निषिद्धेषु चन्द्रताराविलोमतः । अपां गोधूलियोगं वा स्वीकृत्य गमनं चरेत् । प्राच्यामूषां प्रतीच्याञ्च गोधूलिं वर्जयेन्नृपः । दक्षिणे चाभिजिद्वक्षत्तरे च निशां तथा" । ज्यो० त० वराहः गोरजस् शब्दोऽप्यत्र उपयमशब्दे २५७५।७६पृ० उदा०

गोधेनु स्त्री गौर्धेनुः जात्या समासे परनिपातः । दुग्धवत्यां सवत्सायां गवि

गोधेर त्रि० गुध–एरच् । गोप्तरि उणादिकोषः

गोध्र पु० गां भूमिं धरति धृ–मूलवि० क । महीधरे पर्वते

गोनन्दी स्त्री गवि जले नन्दति नन्द–अच् गौरा०ङीष् । १सारसपक्षिणि हारा० स्कन्दस्य २गणभेदे पु० "प्रियकश्चैव नन्दश्च गोनन्दश्च प्रतापवान्" भा०शल्य०४६अ०

गोनर्द पु० गवि जले नर्द्दति नर्द–अच् । १सारसखगे मेदि० गवा जलेन नर्दति । २कैवर्त्तीमुस्तके न० मेदि० । गवा वाचा नर्दते अच् । ३देशभेदे पु० स च कूर्मविभागे बृ०स० १४ अ०दक्षिणस्यामुक्तः "अथ दक्षिणेन लङ्का" इत्युपक्रमे "दशपुरगोनर्दकेरलाः" । सोऽभिजनोऽस्य अण् । गौनर्द तद्देशवासिनि बहुषु अणो लुक् । तद्देशवासिषु ब० व० । गोनर्दनीचम्भूद्रान् वैदेहांस्तानयः सृपति" बृ०स० ६अ० ।

"तत्राजेऽपि अण् । गौनर्द तन्नृपे "काश्मीरराजो गोनर्दोदरदाधिपतिर्नृपः" काश्मीर राजो गोनर्दः कश्मीराधिपतिस्तथा" हरि०६१अ० बहुषु तस्य लुप् । गवि वृषे नर्दते नर्द–अच् । ४महादेवे पु० "गोनर्दो गोप्रभावश्च गोवृषेश्वरवाहनः" भा०शा०२८६अ० । दक्षकृत शिवस्तुतौ । गोनर्दे देशे भवः "एङ् प्राचां देशे" पा० वृद्धसंज्ञत्वात् छः । गोनर्दीय तद्देशभवे त्रि०प्राचोऽन्यमते अण् । गौनर्द तत्रार्थे त्रि० ।

गोनर्दीय पु० गोनर्दे देशे भवः एङादित्वेन वृद्धसंज्ञत्वात् छ । पतञ्जलिमुनौ हेमच० । तस्य गोनर्ददेशोद्भवकथा वृहत् कथायां दृष्टा सर्वलोपोद्धातेऽस्माभि दिङ्मात्रमुक्ता ।

गोन(ना)स पुं०स्त्री०गौरिव नासा अस्य वा नसादेशः । महाहिसर्पभेदे (गोखुराझाप) अमरः स्त्रियां जातित्वात् ङीष् । दीर्घमध्य इति हेमचन्द्रः । अहिशब्दे ५१८पृ०सुश्रुतवाक्यं दृश्यम् । गोनसस्तदाकारोऽस्त्याख्या अच् गौरा० ङीष् । २ओषधिभेदे स्त्री । सुश्रुते तन्नामाख्यादि तत्र १५६१ पृ० उक्तम् । दीर्घमध्यस्य वैक्रान्तमणौ हेमच० । [मिनि च ।

गोनाथ पु० ६त० । १वृषे राजनि० । २भूमिनाथे ३गोस्वा-

गोनाय पु० गां नयति नी–अण् । १गोपे शब्दार्थचि० । "तद्यथा गोनायोऽश्वनायः पुरुषनायः" इति का०उप० । "गोनायः गोपालकः" भा० ।

**गोनिष्यन्द** पु० गोभिर्निष्यन्दते निस्यन्द–अच् ५त०। गोमूत्रे राजनि०। तस्य गोतो निष्यन्दमानत्वात्तथात्वम्।

**गोप** पु०स्त्री० गां भूमिं वा पाति रक्षति पा–क। (गोयाला) १जातिभेदे स्त्रियां ङीष्। "व्याधांश्छाकुनिकान् गोपान्" मनुः। "मणिबन्ध्यां तन्तुवायात् गोपजातेश्च सम्भवः" पराशरः "सच्छूद्रौ गोपनापितौ" इत्युक्तेः तस्य सच्छूद्रत्वम् २ग्रामाधिकृते ३भूरक्षके, च पु०। ४गोशाध्यक्षे च मेदि०। गोरक्षकमात्रे च। "गोपः क्षीरभृतो यस्तु स दुह्याद्दशतो वराम्। गोस्वाम्यनुमते भृत्यः सा स्यात्पालेऽभृते भृतिः" मनुः। "नन्दगोपगृहे जाता यशोदा गर्भसम्भवा" देवी भा०। "गोपवधूटी दुकूलचौराय" भाषा० "तद्वनं तापसानित्यं गोपाश्च वनचारिणः" भा० व० १२ अ०।

गोपयति गुप–अच्। ६रक्षके। "सर्वे देवा भुवनस्यास्य गोपाः" भा० आनु० १० अ०। कर्म्मणि चिकर्म्मण्युपपदे गुप–अण्। भूगोपादि तत्तद्वस्तु पालके। "दिव्यास्त्रविज्ज्वलिततेजाः कर्णो वैकर्तनो वृषः। सेनागोपश्च कथम्" भा० कर्ण० ८ अ०। "पृष्ठगोपे वृकोदरे" भा० आ० २०। अ०। स्त्रियां अजन्तत्वात् ईप्। सुग्धबो० गौरा० ङीष् पा०। "शालिगोप्योजगुर्गुणान्" रघुः। ७ उपकारके त्रि० शब्दर०। गां जलं पिबति पा-क। ८ बोले शब्दार्थचि०।

**गोपक** त्रि० गोप वा स्वार्थे क गुप–ण्वुल्। १गोपे २बहुग्रामाध्यक्षे। ३रक्षके टाप् स्त्रियां ङीष्। ततः शिवा० अपत्ये अण्। गौपिक गोपिकापत्ये पुंस्त्री।

**गोपकन्या** स्त्री गोपस्य कन्येव प्रियतया। १शारिवोषधौ राजनि०। ६त०। गोपजातिकन्यायां च "वल्लवीगोपकन्याश्च रात्रौ संकाल्य कालवित्" नाम दामोदरेत्येवं गोपकन्यास्तुदाऽब्रुवन्" हरिव० ७७ अ०

**गोपकर्कटिका** स्त्री गोपप्रिया कर्कटिका शाक० त०। (राखालशसा) ख्याते वृक्षे राजनि०।

**गोपघोण्टा** स्त्री० गोपप्रिया घोण्टा शा० त०। "वदरीसदृशाकारो वृक्षः सूक्ष्मफलो भवेत्। अटव्यामेव सा घोण्टा गोपघोण्टेति कीर्त्तिता" शब्दर० उक्ते १वृक्षे। २हस्तिकोली, रत्नमा०।३विकङ्कतवृक्षे (बैंचो) राजनि०।

**गोपति** पु० ६त०। गवां पशूनां पत्यौ १शिवे, २वृषे, (षांड) "रक्षसां वशमापन्नं सिंहानामिव गोपतिम्" रामा०। भूमिपतौ ३नृपे ४श्रीकृष्णे, किरणपतौ ५सूर्य्ये, ६स्वर्गपतौ शक्रे, मेदिनिः। ७ऋषभनामौषधौ राजनि०। "गोपालिर्गोपतिर्ग्रामो गोचर्म्मवसनो हरः" भा० आनु० १७अ० शिवसहस्रनामोक्तौ। "उत्तरो गोपतिर्गोप्ता" विष्णुस० "गवां पालनात् गापवेशधारणात् गोभिर्ह्रीतस्याः पालनाद्वा गोपतिः" भा० "सिंहेन निहतं गोष्ठे गोः सवत्सेव गोपतिम्" कि० ४।२२। गोस्वामिनि च हारा०। "प्रुवा अस्मिन् गोपतौ स्यात् बह्वीः" यजु० १।१ "गोपतौ गवां गयावस्मिन् यजमाने" वेददी०। सूर्य्यस्य किरणपतित्वात् तथात्वम् "मार्त्तण्डो गोपतिः श्रीमान् कृतज्ञश्च प्रतापवान्"। आदित्यहृदयम् "तपसाराध्य वरदं देवं गोपतिमीश्वरम्" भा० आ० १७२ अ० सूर्य्यकन्यातपती विवाहोक्तौ" ८असुरभेदे "गोपतिस्तालकेतुश्च निहतौ शार्ङ्गधन्वना" हरिव० १६१ अ०।

तस्य भावः त्व–गोपतित्व पत्यन्तत्वात् यत्। गोपत्य गोपतिभावे न० "येनांशेन हृता गावः कश्यपेन महात्मना। स तेनांशेन जगतीं गत्वा गोपत्वमेष्यति" हरिव० ५६ अ०।

**गोपथ** पु० अथर्ववेदीयब्राह्मणभेदे।

**गोप(ष्प)पद** न० गोः पदं पदस्थानयोग्यस्थानम्। "गोष्पदं सेवितासेवितप्रमाणेषु पा० उक्तार्थे सुट्षत्वे। गवामसेविते वनादौ। १गोसेविते गोर्गतिगोचरे स्थाने २गोपदमात्रप्रमाणे क्षेत्रे न० तद्भिन्नार्थे न सुट्। ४गोसरणे।

**गोपदल** पु० गोपदं गोचरणन्यासयोग्यं स्थानं तदाकारं वा लाति ला–क। गुवाकवृक्षे तस्य गोचरणन्यासयोग्यस्थानस्थत्वात् तदाकार मूलकाण्डत्वाद्वा तथात्वम्।

**गोपन** न० गुप–गोपने रक्षणे भावे ल्युट्। १अपह्नवे कृतस्य कर्म्मणोऽप्रकाशने २रक्षणे च "सैन्येन महता युक्तं भरद्वाजस्य गोपने" भा० भी० ५३अ०। "क्षान्त्या मह्याः धारणे गोपने च" भा० आनु० ३६ अ०। चु० गुप–दीप्तौ भावे ल्युट्। ३दीप्तौ। गुप्य–ईर्ष्याकुलत्वयोः भावे ल्युट्। ४ईर्ष्यायाम् ५आकुलत्वे च। चु० गुप दीप्तौ भावे युच् गोपना ६दीप्तौ स्त्री।

**गोपनीय** त्रि० गुप–गोपने रक्षणे वा कर्म्मणि अनीयर्। १अप्रकाश्ये २रक्षणीये च। "गोपनीयमिदं दुःखमिति मे निश्चिता मतिः" भा० शान्ति० १४६ अ०। "गोपनीयं प्रयत्नेन न वाच्यं यस्य कस्यचित्" तन्त्रसा०

**गोपव(व)धू** स्त्री ६त० गोपस्य वधूरिव प्रियत्वात्।

१शारिवौषधौ भावप्र० २गोपजातिस्त्रियां "गोपवधूटी दुकूलचौराय" भाषा०। "प्रक्त तमगमन् किल यस्य गोपवध्वः" भाग०१।८।२८। अत्र मुकुटः वधूशब्दस्य वध्वँ वादित्वमाह स वध्नात्यविद्ययेति बन्धधातोरूप्रत्ययेन निष्पन्नत्वादिति। वस्तुतः ऊप्रत्ययस्याकित्त्वान्नलोपाभावप्रसङ्गः। किन्तु "वहोधश्च" उणा० ऊप्रत्यये धश्चान्तादेशेन सिद्धत्वेन अन्तःस्थवादित्वमेव न्यायः।

**गोपभद्र** न० गोपे भद्रमिव। १शालूके शब्दर० गोपे भद्रा। २काश्मीरीवृक्षे स्त्री राजनि०। संज्ञायां कन्। ३गम्भारीवृक्षे रत्नमाला शालूकादीनां गोपप्रियत्वात् तथात्वम्।

**गोपरस** पु० गां जलं पिबति पा—क गोपः रसोऽस्य। बोले शब्दरत्ना०।

**गोपराष्ट्र** पु० ब०व०गोपप्रधानाः राष्ट्राः शा०त०। भारतवर्षस्थे आभीरप्रधाने जनपदभेदे। "अत ऊर्द्धं जनपदान्निबोध गदतो मम" इत्युपक्रमे "अश्मकाः पांशुराष्ट्राश्च गोपराष्ट्राः करीतयः" भा० भी० ९अ०।

**गोपरिचर्य्या** स्त्री ६त०। गोसेवायां तत् प्रकारो हेमा०दा० उक्तखण्डादौ ब्रह्मपुराणे

"वन्दनीयाश्च पूज्याश्च गावः सेव्यास्तु नित्यशः। तथा। "गवाङ्कोषे स्थितानान्तु यः करोति प्रदक्षिणम्। प्रदक्षिणीकृतं तेन जगत् सदसदात्मकम्।" विष्णुः "गावः पवित्रा माङ्गल्या गवि लोकाः प्रतिष्ठिताः। गावो वितन्वते यज्ञान् गावः सर्वाघसूदनाः। गोमूत्रं गोमयं सर्पिः क्षीरं दधि च रोचना। षडङ्गमेतत्परमं माङ्गल्यं सर्वदा गवाम्। शृङ्गोदकं गवां पुण्यं सर्वाघविनिसूदनम्। गवां कण्डूयनञ्चैव सर्वकल्मषनाशनम्। गवां ग्रासप्रदानेन स्वर्गलोके महीयते।" पद्मपुराणे "सदा गावः प्रणम्यास्तु मन्त्रेणानेन पार्थिव!। नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च। नमो ब्रह्मसुताभ्यश्च भूयो भूयो नमो नमः। मन्त्रस्य स्मरणादेव गोदानफलमाप्नुयात्"। आदित्यपुराणे "लवणं च यथाशक्त्या गवां ये वै ददत्युत। तेषां पुण्यकृतां लोका, गवां लोकं व्रजन्ति ते। योऽप्यं भक्त्या किञ्चिदप्राश्य दद्याद्गोभ्यो नित्यं गोव्रती सत्यवादी। शान्तो बुद्धो गोसहस्रस्य पुण्यं संवत्सरेणाप्नुयाद्धर्मशीलः"। देवीपुराणे "गोपालको गवां गोष्ठे यस्तु धूमं न कारयेत्। मक्षिकाक्षीणनरके मक्षिकाभिः स भक्ष्यते। क्षतवत्सान्तु गां यस्तु दृष्ट्वा पिबते नरः। वाहितास्त्वाचिरं तिष्ठेत् क्षुधार्त्तो वै नराधमः"। महाभारते "गोकुलस्य तृषार्त्तस्य जलान्ते वसुधाधिप!। उत्पादयति यो विघ्नं तमाहुर्ब्रह्मघातकम्। कृत्वा गवार्थे शरणं शीत-वात-सहं महत्। आसप्तमं तारयति कुलं भरतसत्तम!"। ब्रह्मपुराणे "सदोषा गौर्गृहे जाता परिपाल्या सदा स्वयम्। दुःशीलोऽपि द्विजः पूज्यो न तु शूद्रः सुसंयतः। अनाथानां गवां यत्नात्कार्यस्तु शिशिरे मठः। पुण्यार्थं यत्र दीयन्ते तृण-तोये-स्थानानि च"। हारीतः "द्वौ मासौ पाययेद्वत्सं तृतीये द्विस्तनं दुहेत्। चतुर्थे त्रिस्तनञ्चैव यथान्यायं यथा बलम्"। ब्रह्मपुराणे "आषाढ्यामाश्वयुज्याञ्च पौष्यां माघ्यां च सर्वदा। न दुह्यीयाद्गवां क्षीरं सर्वं वत्साय निक्षिपेत्। न दण्डान्वाहयेच्चैव न गां भारेण पीडयेत्। युगादिषु युगान्तेषु षडशीतिमुखेषु च। दक्षिणोत्तरगे सूर्ये तथा विषुवतोर्द्वयोः। संक्रान्तिषु च सर्वासु ग्रहणे चन्द्रसूर्ययोः। पञ्चदश्याञ्चतुर्दश्यां द्वादश्यामष्टमीषु च। उपचारो गवां कार्यो मासि मासि यथाक्रमम्। लवणस्य तु चत्वारि पलान्यष्टौ घृतस्य च। परकीयस्य दुग्धस्य तथा देयानि षोडश। द्वात्रिंशत् शीतलस्यापि जलस्य च पलानि च। आदौ विचार्य पयसः परिमाणं बलं रुचिम्। आकस्मिकन्तु दातव्यं पुण्यार्थन्तु गवाह्निकम्। प्रभाते लवणं यत्र दीयते च ततो जलम्। ततस्तृणानि भोज्यञ्च पेयञ्च मांसवर्जितम्। निशि दीपः सतन्त्रीका दिव्या पौराणिकी कथा। एवं कृते मही पूर्णा रत्नैर्दत्ता भवेत् फलम्। गोप्रदानात्तु यत्पुण्यं गवां संरक्षणाद्भवेत्। मनुष्यैस्तृणतोयाद्यैर्गावः पाल्याः प्रयत्नतः। देयाः पूज्याश्च पोष्याश्च प्रतिपाल्याश्च सर्वदा"। तथा "तृणोदकाद्येषु वनेषु मत्ताः क्रीडन्तु गावः सवृषाः सवत्साः। क्षीरं प्रसुञ्चन्तु सुखं स्वपन्तु शीतातपव्याधिभयैर्विमुक्ताः। इमं मन्त्रं स शुद्धात्मा जपेन्नित्यं समाहितः। गच्छन् तिष्ठन् जपन् जिघ्रन् भुञ्जन् क्रीडन् ससत्स्वजन्। महाभयेषु सर्वेषु समेषु विषमेषु च। प्रयाणकाले च तथा श्रोतव्यमभयप्रदम्"। तथा "घासग्रासादिकं देयं निशि दीपः सुभास्वरः। इतिहासपुराणानां व्याख्यानं सोपवीणनम्। अन्तस्तुष्टैर्यथाशक्त्या परिचर्या यथाक्रमम्। ताडनाक्रोशखेदाश्च स्वप्नेऽपि न कदाचन। तासां मूत्रपुरीषे तु नोद्वेगः

क्रियते क्वचित् । शोधनीयश्च गोवाटः शुष्कक्षारादिकैः सदा । ग्रीष्मे छायाकुलं वेश्म शीते तप्तं विकर्द्दमम् । वर्षासु चाथ शिशिरे सुखोष्णं वातवर्जितम् । उच्छिष्टं मूत्रविट्‌श्लेष्ममलं जह्याच्च तत्र च । रजस्वला न प्रवेश्या नान्त्यजातिर्न पुंश्चली । न लङ्घयेद्वत्सतरीं न क्रीडेद्‌गोष्ठसन्निधौ । न गन्तव्यं गवां मध्ये सोपानत्कैः सपादुकैः । हस्त्यश्वरथयानैश्च सवितानैः कदाचन । दक्षिणोत्तरगैः प्रह्वैर्गन्तव्यञ्च पदातिभिः । गावः क्षुधातुराः पाल्याः श्रद्धया पितृमातृवत् । गिरिप्रपातसिंहर्क्षशीतातपभयातुराः । महाकोलाहले घोरे दुर्दिने देशविप्लवे । गवां तृणानि देयानि शीतलञ्च तथा जलम्” । विष्णुधर्म्मोत्तरे “पुष्कर उवाच गवां हि पालनं राज्ञा कर्त्तव्यं भृगुनन्दन ! । गावः पवित्रा माङ्गल्या गोषु लोकाः प्रतिष्ठिताः । गावो वितन्वते यज्ञं गावो विश्वस्य मातरः । शकृन्मूत्रं परं तासामलक्ष्मीनाशनं परम् । तद्धि मेध्यं प्रयत्नेन तत्र लक्ष्मीः प्रतिष्ठिता । उद्वेगश्च न गन्तव्यः शकृन्मूत्रे विजानता । गवां मूत्रपुरीषे तु ष्ठीवनाद्यं न संत्यजेत् । गोरजः परमं पुण्यमलक्ष्मीविघ्ननाशनम् । गवां कण्डूयनञ्चैव सर्व्वकल्मषनाशनम् । गवां शृङ्गोदकं राम ! जाह्नवीजलसन्निभम् । गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । पवित्रं परमं ज्ञेयं स्नाने पाने च भार्गव ! । रक्षघ्नमेतन्माङ्गल्यं कलिदुःस्वप्ननाशनम् । रोचना च तथा धन्या रक्षोगदगरापहा । यस्तु कल्यं समुत्थाय सुखमाज्ये निरीक्षते । तस्याऽलक्ष्मीः क्षयं याति वर्द्धते न च किल्विषम् । गवां ग्रासप्रदानेन पुण्यं सुमहदश्नुते । यावतीः शक्नुयाद्‌गास्तु सुखं धारयितुं गृहे । धारयेत्तावतीर्नित्यं क्षुधार्त्तास्ता न धारयेत् । दुःखिता धेनवो यत्र वसन्ति द्विजमन्दिरे । नरकं समवाप्नोति नात्र कार्य्या विचारणा । दत्त्वा परगवे ग्रासं पुण्यं सुमहदश्नुते । शिशिरं सकलं कालं ग्रासं परगवे तथा । दत्त्वा स्वर्गमवाप्नोति संवत्सरशतानि षट् । अग्रभक्तं नरो दत्त्वा नित्यमेव तथा गवाम् । समाष्टकेन लभते नाकलोकं समायुतम् । सायं प्रातर्मनुष्याणामशनं वेदनिर्मितम् । तथैकमशनं दत्त्वा गवां नित्यमतन्द्रितः । द्वितीयं यः समश्नाति तेन संवत्सरान्नरः । गवां लोकमवाप्नोति यावन्मन्वन्तरं द्विज ! । शीतत्राणं गवां कृत्वा गृहे पुरुषसत्तम ! ।

गवां प्रपाणे पानीयं कृत्वा पुरुषसत्तम ! । वारुणं लोकमाप्नोति क्रीडत्यप्सरसां गणैः । गवां पानप्रवृत्तानां यस्तु विघ्नं समाचरेत् । ब्रह्महत्या कृता तेन घोरा भवति भार्गव ! । परां तृप्तिं नचाप्नोति यत्र तत्राभिजायते । गवां प्रचारभूमिन्तु वाहयित्वा हलादिना । नरकं महदाप्नोति यावदिन्द्राश्चतुर्द्दश । सिंहव्याघ्रभयत्रस्तां पङ्कलग्नां जले गताम् । गामुद्धृत्य नरः स्वर्गे कल्पभोगानुपाश्नुते । गवां लवणदानेन रूपवानभिजायते । सौभाग्यं महदाप्नोति लावण्यञ्च द्विजोत्तम ! । औषधञ्च तथा दत्त्वा विरोगस्त्वभिजायते । औषधं लवणं तोयमाहारञ्च प्रयच्छति । तासाञ्चैव वराङ्गानां सुरन्तीनां मिथो वने । यास्तत्तृष्ण्य हको हन्याञ्च पालस्तत्र किल्विषी । गोवधेन नरो याति नरकानेकविंशतिम् । तस्मात्सर्व्वप्रयत्नेन कार्य्यं तासान्तु पालनम् । विक्रयाच्च गवां राम ! नरकं प्रतिपद्यते । तासान्तु कीर्त्तनादेव नरः पापात् प्रमुच्यते । तासां संस्पर्शनं धन्यं सर्व्वकल्मषनाशनम् । दानेन च तथा तासां कुल्यान्यपि समुद्धरेत् । उदक्याप्रसूतिकादोषो नैव तत्र गृहे भवेत् । भूमिदोषस्तथान्योऽपि यत्रैका वसते च गौः । गवां निःश्वासवातेन परा शान्तिर्गृहे भवेत् । नीराजनं तत्परमं सर्व्वस्थानेषु कीर्त्यते । गवां संस्पर्शनाद्राम ! कल्मषं क्षीयते नृणाम् । गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । एकरात्रोपवासश्च श्वपाकमपि शोधयेत् । पृथक् च प्रत्ययाभ्यस्तमिति सान्तपनं स्मृतम् । सर्व्वकामप्रदं राम ! सर्व्वाशुभविनाशनम् । कृत्वातिकृच्छ्रं पयसा दिवसानेकविंशतिम् । निर्म्मलास्तेन चीर्णेन भवन्ति पुरुषोत्तमाः । त्र्यहमुष्णं पिबेन्मूत्रं त्र्यहमुष्णं घृतं पिबेत् । त्र्यहमुष्णं पयः पीत्वा वायुभक्षः परं त्र्यहम् । तप्तकृच्छ्रमिदं प्रोक्तं सर्व्वाशुभविनाशनम् । शीतकृच्छ्रस्तथैवैष ब्रह्मा-क्षीतैः प्रकीर्त्तितः । सर्व्वाशुभविनाशाय निर्म्मितो ब्रह्मणा स्वयम् । गोमूत्रेणाचरेत् स्नानं वृत्तिं कुर्य्याच्च गोरसैः । उत्थितास्तूत्थितस्तिष्ठेदुपविष्टासु च स्थितः । अभुक्तवत्यां नाश्नीयादपीतासु च नो पिबेत् । त्राणं चैवात्मना कार्य्यं भयार्त्तासु समुद्धरेत् । आत्मानमपि सन्त्यज्य गोव्रतं तत् प्रकीर्त्तितम् । सर्व्वपापप्रशमनं मासेनैकेन भार्गव ! । व्रतेनानेन पूर्णेन गोलोकं पुरुषो व्रजेत् । अभीष्टमथ वा राम ! यावदिन्द्राश्चतुर्द्दश । गवा-

माहारनिर्मुक्तानश्नन् प्रतिदिनं यवान्। मासेन तदवाप्नोति यत्किञ्चिन्मनसेच्छति। गोमतीञ्च तथा विद्यां सायं प्रातस्तथा जपेत्। गोलोकमाप्नोति नरो नात्र कार्या विचारणा। उपर्युपरि सर्वेषां गवां लोकः प्रकीर्त्तितः। निवसन्ति सदा यत्र गावस्ताकाशगा दिवि। विमानेषु विचित्रेषु हृतेष्वप्सरसाङ्गणैः। किङ्किणीजालचित्रेषु वीणासु रचनादिषु। सदा कामफला नद्यः क्षीरपायसकर्दमाः। शीतलामलपानीयाः सुवर्णसिकतास्तथा। पुष्करिण्यः शुभास्तत्र वैदूर्यकमलोत्पलाः। मानसी च तथा सिद्धिस्तत्र लोके भृगूत्तम!। तन्तु लोकं नरा यान्ति गवां भक्त्या न संशयः। गोमतीं कीर्त्तयिष्यामि सर्वपापप्रणाशिनीम्। तान्तु मे गदतो विप्र! शृणुष्व सुसमाहितः। गावः सुरभयो नित्यं गावो गुग्गुलुगन्धिकाः। गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं परम्। अन्नमेव परं गावो देवानां हविरुत्तमम्। पावनं सर्वदेवानां रक्षन्ति च वहन्ति च। हविषा मन्त्रपूतेन तर्पयन्त्यमरान् दिवि। ऋषीणामग्निहोत्रेषु गावो होमनियोजिताः। सर्वेषामेव भूतानां गावः शरणमुत्तमम्। गावः पवित्रं परमं गावो मङ्गलमुत्तमम्। गावः स्वर्गस्य सोपानं गावो धन्याः सनातनाः। नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च। नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः। ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम्। एकत्र मन्त्रास्तिष्ठन्ति हविरेकत्र तिष्ठति। देवब्राह्मणगोसाधुसाध्वीभिः सकलं जगत्। धार्यते वै सदा तस्मात् सर्वे पूज्यतमा मताः। यत्र तीर्थे सदा गावः पिबन्ति तृषिता जलम्। उत्तरन्त्यथ वा येन, स्थिता तत्र सरस्वती। गवां हि तीर्थे वसतीह गङ्गा पुष्टिस्तथासां रजसि प्रवृद्धा। लक्ष्मीः करीषे प्रणतौ च धर्मस्तासां प्रणामं सततञ्च कुर्यात्”। भविष्यत्पुराणे “ब्रह्मोवाच गामालभ्य नमस्कृत्य कुर्याद्यस्तु प्रदक्षिणम्। प्रदक्षिणी कृता तेन सप्तद्वीपा वसुन्धरा। गवां हुङ्कारशब्देन दृष्टिपातेन सत्तम!। पापं प्रणश्यते यस्मात्तस्मात्पश्येत्स्पृशेच्च ताः। कुतस्तस्य भवेत्पापं गृहं यस्य विभूषितम्। सततं बालवत्साभिरर्जुनीभिरलङ्कृतम्। यावन्तीर्थानि मेदिन्यामासमुद्रं सरांसि च। गवां शृङ्गोदकस्नानकलां नार्हन्ति षोडशीम्। गवामस्थि न लङ्घेन स्पृते गन्धं न वर्जयेत्। यावदाघ्राति तद्गन्धं तावत् पुण्येन युज्यते। गवां कण्डूयनं धन्यं गोप्रदानफलप्रदम्। तुल्यं गोशतदानस्य भयरोगादिपालनम्। तृणोदकादिसंयुक्तं यः प्रदद्याद्गवाह्निकम्। कपिलाशतदानस्य फलं विद्यान्न संशयः। पञ्चभूते! शिवे! पुण्ये! पवित्रे! सूर्यसम्भवे!। प्रतीच्छेदं मया दत्तं सौरभेयि! नमोऽस्तु ते। बहुना च किमुक्तेन गावः पाल्याः प्रयत्नतः। गावो देयास्तथा रक्ष्याः पूज्याश्चापाह्याश्च सर्वशः। गां वै ये ताडयन्तीह सर्वलोकस्य मातरम्। ते यान्ति रौरवं नाम नरकं नात्र संशयः। ताडयेद्यस्तु सैमोहात् यो वा कश्चिन्नराधमः। स गच्छेन्नरकं घोरं सम्पीडकमिति श्रुतिः। आयान्तीं हन्तुकामां यः सौरभेयीं विभावरीम्। क्षम मातरिति ब्रूयात् स याति परमं पदम्”। वराहपुराणे ‘यम उवाच गावः पवित्रं मङ्गल्या देवानामपि देवता। यस्ताः शुश्रूषते भक्त्या स पापेभ्यः प्रमुच्यते। यावज्जीवं कृतं पापं तत्क्षणादेव नश्यति। लाङ्गूलेनोद्धृतं तोयं मूर्ध्ना गृह्णाति यो नरः। शरत्सु क्षुपजातेभ्यः स पापेभ्यः प्रमुच्यते। प्रस्नवे यो गवां स्नायात् रोहिण्यां मानवो भुवि।’ सर्वपापकृतान् दोषान् दहत्याशु न संशयः। धेनोस्तनाद्विनिष्क्रान्तां धारां क्षीरस्य यो नरः। शिरसा प्रतिगृह्णीयात्स पापेभ्यः प्रमुच्यते”। आधिकं कपिशब्दे २२०१।२ पृ० दर्शिते वृहत्पराशरवाक्ये दृश्यम्।

**गोपवन** न० गोपप्रधानं वनं शाक०त०। गोपभूयिष्ठे वने तत्र भवः विदा० अञ्। गौपवन तत्र भवे त्रि० “सकच्छेषमहालेयमवालेयसकार्द्रकेयमशौभ्रेयमवामरथ्यमगौपवनम्” कात्या० १०।२।२१ सोऽभिजनोऽस्य विदा० अञ्। गौपवन पित्रादिक्रमेण तत्र वासिजने तस्य गोत्रापत्यम् अन्त्यानन्तर्य्ये विदा० अञ्। तद्गोत्रापत्ये बहुषु तस्य लुक्। गोपवना गोपवनस्यपुरुषापत्येषु।

**गोपवनादि** बहुत्वे गोत्रप्रत्ययस्य लुग्निमित्ते शब्दगणे स च गणः पा० ग० उक्तो यथा।

गोपवन शिग्रु विन्दु भाजन अश्वावतान श्यामाक श्यामक श्यापर्ण विदाद्यन्तर्गणोऽयम्। गोपवन शिग्रु विन्दु भोगक भाजन शमिक अश्वावतान श्यामाक श्यामक श्यावलि श्यापर्ण हरितादिश्च।

हरित किन्दास वह्यस्क अर्कलूष वध्योग विष्णु वृद्ध प्रतिबोध रथीतर रथन्तर। गविष्ठिर निषाद शबर

बलस मठर सडाकु स्रुपाकु स्रुद पुनर्भू पुत्र दुहितृ ननान्दृ परस्त्री परशु च" ।

**गोपवल्ली** स्त्री गां पाति पा—क कर्म० । १मूर्वालतायां राजनि० । २शत्राकालतायां (शत्रामावास) । शब्दर० ।

**गोपस्** त्रि०गुप—असुन् आर्द्धधातुकत्वाद्द्वाऽऽय्याभावः । १गोप्तरि २रक्षितरि । "स जगार भुवनस्य गोपास्तं कापेयं नाभिपश्यन्ति" छा०उ० 'गोपाः रक्षिता' भाष्यम् । अस्य गोपाशब्दोदाहरणतया कस्यचिदुक्तिः भ्रामादिकी । गोपूर्व्व कक्किवन्तपाधातुसिद्धगोपाशब्दस्य गोपालनकर्त्रर्थकत्वेन तत्र भुवनस्येतिकर्म्मणोऽनन्वयापत्तेः अग्रपक्षे गोपायस्य गोप्तरि त्रि० ।

**गोपा** स्त्री गां पाति पा—क टाप् । १शत्राकालतायाम् शब्दरत्ना० । गां पाति पा—क्विप् । २गोरक्षके च । "गोपा विश्वपावत्" सुग्ध० ।

**गोपाध्यक्ष** पु० ६त० । गोरक्षकपतौ "गोपाध्यक्षो भयत्रस्तो रथमास्थाय सत्वरः" भा० वि० ३५ अ० ।

**गोपानसी** स्त्री० गवां किरणानां पानं शोषणं गोपानं तत् स्यति सो—क गौरा० ङीष् । कुट्टेषु छादनार्थं वक्रे १वक्रकाष्ठे (सुदनी) २वक्रनाधारे पटलाधारे वंशपञ्जरे च अमरः । "गोपानसीषु क्षणमास्थितानाम्" माघः । [ "गोपायकानां भुवनत्रयस्य" किरा० ।

**गोपायक** त्रि० गोपयति गुप—आय+ण्वुल् । रक्षके

**गोपायन** न० गुप—आय—भावे ल्युट् । १गोपने "गोपायनं प्रकुरुते जगतः सार्वलौकिकम्" हरिवं० ४ अ० । कर्त्तरि ल्यु । २रक्षके । "गोपानां बहुसाहस्रैर्बलैर्गोपायनैर्वृतः" भा० भी० ७अ० ।

**गोपायित** त्रि० गुप—आय—कर्म्मणि क्त । १रक्षिते अमरः । भावे क्त । २अतीतगोपने न० ।

**गोपाल** पु० गां भूमिं पशुभेदं वा पालयति पालि—अण् उप०स० । १नृपे २गोरक्षके च । "क्षत्रियात् शूद्रकन्यायां समुत्पन्नस्तु यः सुतः । स गोपाल इति ज्ञेयो भोज्योविप्रैर्न संशयः" पराशरोक्ते ३सङ्कीर्णजातिभेदे । "आर्द्धिकः कुलमित्रस्य गोपालोदासनापितौ । एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत्" मनुना तस्य भोज्यान्नतोक्ता । नन्दनन्दने ४विष्णोरवतारभेदे तद्रूपञ्च पद्मपु०पाताल ख० "त्वामहं द्रष्टुमिच्छामि चक्षुर्भ्यां मधुसूदन !" । श्रीकृष्णं प्रति व्यासप्रार्थने भगवदुक्तिः व्यासवाक्ये यथा "पश्चाद्य दर्शयिष्यामि स्वरूपं वेदगोपितम् । ततोऽपश्यमहं भूप ! बालं बालाम्बुद प्रभम् । गोपकन्यावृतं गोपं हसन्तं गोपबालकैः । कदम्बमूलमासीनं पीतवाससमुज्ज्वलम् । वनं वृन्दावनं नाम नवपल्लवमण्डितम् । कोकिलभ्रमरारावमनोभवमनोहरम् । नदीमपश्यं कालिन्दीमिन्दीवरदलप्रभाम् । गोवर्द्धनं तथाऽपश्यं कृष्णरामकरोद्धृतम् । महेन्द्रदर्पनाशाय गोगोपालसुखावहम् । दृष्ट्वा विहृष्टो ह्यभवं सर्व्वभूषणभूषणम् । गोपालमबलासङ्गमुदितं वेणुनादिनम्, । तस्य ध्यानमन्त्रयन्त्रादिकं तन्त्रसारे दृश्यम् ।

**गोपालक** पु० गां पालयति पालि—ण्वुल् ६त० । १गोरक्षके २भूमिरक्षके च ३शिवे त्रिका०गोपाल+स्वार्थे क । उक्तार्थे ४नन्दनन्दने ।

**गोपालकक्ष** स्त्री गोपालप्रधाना कक्षा । भारतवर्षस्य प्राच्यां देशभेदे "अत ऊर्द्धं जनपदान्निबोध गदतो मम" इत्युपक्रमे "कक्षा गोपालकक्षाश्च जाङ्गलाः कुरुवर्णकाः" । भा० भी०९अ० । तस्य राजनि अण् । गौपालकक्षः तद्दृपे बहुत्वे तस्य लुक् । गोपालकक्षास्तन्नृपेषु "ततो गोपालकक्षांश्च सोत्तरानपि कोशलान् । मल्लानामधिपञ्चैव पार्थिवांश्चाजयत् प्रभुः" (भीमः) भा० स०२९अ० । भीमप्राचीविजयोक्तौ ।

**गोपालकर्कटी** स्त्री । गोपालस्य गोरक्षकस्य प्रिया कर्कटी । राजनि० । क्षुद्रकर्कट्याम् (राखालशसा) ।

**गोपालतापनीय** न० गोपालस्तापनीय सेव्यो यत्र । उपनिषद्भेदे उपनिषच्छब्दे १२२२ पृ० दृश्यम् । गोपालतापनमप्यत्र न० ।

**गोपालधानी** स्त्री० गोपालोधीयतेऽत्र धा—आधारे ल्युट् ङीप् ६त० । गोष्ठे । तस्य पूलासेन समासे राजद० पूर्वनि० समाहारैकत्वं च गोपालधानीपूलासम् ।

**गोपालव** पु० गोपालं तद्धर्मं वाति वा—क उप० स० । गोपतिधर्मयुक्ते आयुधजीविनि राजन्यभेदे । तस्य ब्राह्मणत्वे आयुधजीवित्वेऽपि स्वार्थे न ष्यञ् । "अब्राह्मणेति किं गोपालवाः" सि० कौ० ।

**गोपालि** पु० गां वृषभं पालयति पालि—इन् । "शिवे "गोपालिर्गोपतिर्ग्रामः" भा० आनु० १७ अ० शिवसहस्रनामोक्तौ २प्रवरभेदे प्रवराध्यायः ।

**गोपालिका** स्त्री गोपालकस्य पत्नी पालकान्तत्वात् न ङीष् टापि अत इत्वम् । १आभीरपत्न्याम् २शारिवौषधौ च स्वार्थेत्रि० । गवां रक्षणात्तस्यास्तथात्वम् ३कीटभेदे हेमचन्द्र ।

गोपाली स्त्री गोपालस्तदादटरोऽस्त्यत्र अच् गौरा० ङीष्। १गोपालकर्कट्याम् राजनि०। गोपालस्य पत्नी ङीष्। २गोपपत्न्याम्। गां पालयति पालि–ण्वुल् ईप् सुगध०। ३गोपालयित्र्यां ४कुमारानुचरे मातृभेदे च "अञ्जजाता च गोपाली बृहदम्बालिका तथा" भा० श० ४७ अ०।

गोपाष्टमी स्त्री गोपप्रियाष्टमी। कार्त्तिकस्य शुक्लाष्टम्याम्। "शुक्लाष्टमी कार्त्तिके तु स्मृता गोपाष्टमी बुधैः। तद्दिने वासुदेवोऽभूत् गोपः पूर्वं स वत्सपः। तत्र कुर्य्यात् गवां पूजां गोग्रासं गोप्रदक्षिणम्। गवानुगमनं कार्य्यं सर्वान् कामानभीप्सता" कूर्मपु०।

गोपिका स्त्री गोपायति गुप–ण्वुल्। १गोपालयित्र्याम् गोप्येव स्वार्थे क ह्रस्वः। २गोपपत्न्याम्। [ त्रिका०।

गोपित्त न० गोः पित्तमिव। गोरोचनाख्ये गन्धद्रव्यभेदे

गोपिन् स्त्री गोपायति गुप–णिनि। १रक्षितरि स्त्रियां ङीप् सा च २शृगामालतायाम् शब्दच०। अतिशयेन गोपी इष्ठन् टिलोपः। गोपिष्ठ गोप्तृतमे त्रि०। "कामचारस्य वा कामग्याय गोपिष्ठो गोपायादिति वा" शत० ब्रा० २।२।२।२ "गोपिष्ठः गोपायितृतमः" भाष्यम्।

गोपिल त्रि० गुप–इलच्। गोप्तरि तत्सन्नुरथ्यां यञ्। गौपलेय गुपिलनिर्वृत्तादौ त्रि०।

गोपी स्त्री गोपजातिः स्त्री जातौ ङीष्। १गोपजातिस्त्रियाम्। वृन्दावनस्थगोप्यश्च श्रुतिदेवमुनिकन्यारूपा यथा पद्मपु० पाता० "गोप्यस्तु श्रुतयो ज्ञेयाः ऋषिका गोपकन्यकाः। देवकन्याश्च राजेन्द्र! न मानुष्याः कथञ्चन"। तत्र श्रेष्ठा राधाचन्द्रावलीविशाखाललितादयः। मूलम् उज्ज्वलमणौ द्रष्टव्यम्। "इत्येवं दर्शयन्त्यस्ताश्चैवं गोप्योऽचेतसः" भाग० १०।३।१२। ब्र० प्रभा० ख० तु चन्द्ररूपकृष्णस्य कलारूपता तासामुक्ता यथा। "ततो गोप्यो महादेवि! आद्यायाः षोडश स्मृताः। तासां नामानि ते वच्मि तानि त्वेकमनाः शृणु। लम्बिनी चन्द्रिका कान्ता क्रूरा शान्ता महोदया। भीषणी नन्दनी शोका सुपर्णा विमलाऽक्षया। शुभदा शोभना पुण्या हंसकुताः कलाः क्रमात्। हंसएव मनः कृष्णः परमात्मा जनार्द्दनः। तस्यैताः शक्तयो देवि! षोडशैव प्रकीर्त्तिताः चन्द्र रूपी ततः कृष्णः कलारूपास्तु ताः स्मृताः संपूर्णमण्डला तासां मालिनी षोडशी कला। प्रतिपत्तिथिमारभ्य विहरत्यासु चन्द्रमाः। षोडशैव कला यास्तु गोपीरूपा वरानने! एकैकशस्ताः संभिन्नाः सहस्रेण

पृथक् पृथक्"। गोपायति गुप–अच् गौरा० ङीष्। २रक्षिकायां स्त्रियाम् "गीतानि गोप्याः कलमं कृगव्रजः" माघः। स्वार्थे क। गोपिका तत्रार्थे "सहासमालोकयति स्म गोपिका" माघः।

गोपीगीता स्त्री भाग० १०स्क० उक्तायां गोपीभिः कृतकृष्णस्तुतौ सा च "जयति तेऽधिकं जन्मना व्रजे" त्याद्येकत्रिंशत्तमाध्यायस्था।

गोपीजनवल्लभ पु० गोप्येव जनस्तस्य वल्लभः। श्रीकृष्णे "गोपीजनवल्लभाय स्वाहा"तन्त्रसारे तन्मन्त्रः। गोपीभर्त्रादयोऽप्यत्र "गोपीभर्त्तुर्विरहविधुरा काचिदिन्दीवराक्षी" पदाङ्कदूतम्।

गोपीत पु० स्त्री गौर्गोरोचनेव पीतः। खञ्जनभेदे। सु० सू० ४५ अ० "पीतो गोपीत इति क्षेमकरः खञ्जनोदृष्टः" तस्य दर्शने क्षेमकारितोक्ता।

गोपीथ न० पा–भावे थक्–"गोपीथेत्यादि" पा०नि० गोः सोमस्य पीथः। सोमपाने। "प्रति त्वं चारुमध्वरं गोपीथाय प्रहूयसे" ऋ०१।१९।१। "गोपीथाय सोमपानाय" भा०। गावः पिबन्त्यस्मिन् आधारे थक्। २तीर्थे गोर्जलायतरणे सोपाने तीर्थस्य जलायतरणसोपानत्वात्तथात्वम्। "गोपीथं तीर्थमाख्यातम्" उणादि वृ०। गुप–भावे थक् नि०। ३रक्षणे पु० "गोपीथाय जगत्सृष्टेः काले स्वस्थाच्युतात्मकः" भाग० ४।२२।५०। "जगत्सृष्टेर्गोपीथाय रक्षणाय" श्रीधरः। "अजातशत्रुः पृतनां गोपीथाय मधुद्विषः" भाग० १।१०।३६। "गोपीथाय रक्षणाय" श्रीधरः। गोपीथाय हितं यत्। गोपीथ्य तत्र हिते त्रि० "ऊर्जमिव दक्षा गोपीथ्याय हि दधाथ तत् पुरूरवो यओजः" ऋ० १०।९५।११।

गोपुच्छ पु० गोः पुच्छ इव पुच्छो यस्य। १गोलाङ्गूलाख्ये वानरे हेमच० "सर्ववानरगोपुच्छा यमृक्षाद्या भजन्ति वै" (यं सुग्रीवम्) भा०व० २८१अ०। "गोपुच्छैर्हरिभिर्मर्कैर्नकुलैर्नाभिभिर्वृतम्" (आश्रमम्) भाग० ३।२१।४३। "गोपुच्छशालावृकमर्कटाश्च" भाग० ८।२।१७। गोपुच्छाकारत्वात् २हारभेदे अमरः। हेत०। ३गोलाङ्गूले न०। "गोपुच्छस्य वल्मीकगेऽथ वा दर्शनं भजङ्गस्य" वृ० स० ९५ अ०। ततः शर्करा० स्वार्थे अण्। गोपुच्छ तत्रार्थे त्रि०।

गोपुटा स्त्री गोरिव पुटमस्याः। स्थूलैलायाम् राजनि०।

**गोपुटिक** न० गोः शिववृषस्य पुटिकं पुटयुक्तं मस्तकम्। शिववृषस्य मस्तके त्रिका०।

**गोपुर** न० पुर—अग्रगमने क गवां पुरम्, गवा जलेन पूर्य्यते पृ—वज्रर्थे क वा। १पुरद्वारे २श्रेष्ठद्वारे अमरः। तत्र गवामग्रगमनात्तथात्वम्। ३कैवर्त्तीमुस्तके मेदि० तस्य जलेन पूरणात्तथात्वम् "गुप्तवप्रचयप्रख्यैर्गोपुरैर्नन्दनोपमैः" भा०आ०२०६०स्लो०। "गोपुराट्टालकोपेतं चतुर्द्वारं दुरासदम्" भा०व० १७२अ०। "पुरगोपुरं प्रति ससैन्यसागरम्" माघः। "पीडा पुरस्यैव च गोपुरस्थे" (शनि) वृ० स० ८९ अ०।

**गोपुरक** पु० पुर—क ६त० गोपुर+स्वार्थे के। १गवां पूरके त्रिका० २गोपुरशब्दार्थे च गां भूमिं पिपर्त्ति पृ—क संज्ञायां कन्। ३कुन्दूरकवृक्षे राजनि०।

**गोपुरीष** न० ६त०। गोमये राजनि०।

**गोपेन्द्र** पु० गोप इन्द्र इव। १श्रीकृष्णे हेमच०। "गोपेन्द्रस्यानुजे ज्येष्ठे नन्दगोपकुलोद्भवे" भा० भी० २३अ०। ६त०। २गोपेश्वरे नन्दे च गोपेश्वरादयोऽप्यत्र।

**गोपेश** पु० ६त०। १नन्दगोपे "गोपेशं परितः परे" मुग्ध० २शाक्यमुनौ त्रिका०।

**गोप्तव्य** त्रि० गुप—कर्मणि तव्य वा आयाभावः। १अप्रकाश्ये २रक्षणीये च "पौरजानपदाश्चैव गोप्तव्यास्ते यथा सुखम्" भा० क० ६५ अ०। इट्पक्षे गोपितव्य आयपक्षे गोपायितव्य तत्रार्थे त्रि०।

**गोप्तृ** पु०गुप—तृच्। रक्षके। "तस्मै सभ्याःसभार्य्याय गोप्त्रे गुप्ततमेन्द्रियाः" रघुः। "तस्यार्थे सर्वभूतानां गोप्तारं धर्म्यमात्मजम्"। "मुच्यते ब्रह्महत्यायाः गोप्ता गोब्राह्मणस्य च" मनुः २संवरके च। ३विष्णौ पु० "उत्तरो गोपतिर्गोप्ता" विष्णुस० "सकलभूतपालनात् गोप्ता" भा०। "गोहितो गोपतिर्गोप्ता" विष्णुस०। "स्वात्मानं स्वमायया गोपायति संवृणोति गोप्ता" भा०। स्त्रियां ङीप्। "गुह्यातिगुह्यगोप्त्री त्वम्" देवीजपसमापनमन्त्रः। इट्पक्षे गोपितृ आयपक्षे गोपायितृ तत्रार्थे त्रि० स्त्रियां ङीप्।

**गोप्य** त्रि० गुप—कर्मणि यत्। १रक्षणीये २गोपनीये अप्रकाशनीये च। "आयुर्वित्तं गृहच्छिद्रं मन्त्रमैथुन भेषजम्। तपोदानापमानं च नव गोप्यानि यत्नतः" काशीख०। ३दासीपुत्रे पु० मेदि०।

**गोप्यादित्य** पु० प्रभासतीर्थस्थे गोपीस्थापितरविमूर्त्तिभेदे तत्कथा स्क० प्रभा० ख० यथा "ततो गच्छेन्महादेवि! गोप्यादित्यमनुत्तमम्। भूतेशाद्वायवे भागे धनुर्भिस्त्रिशतान्तरे। बलातिबलदैत्यघ्नी दक्षिणाग्नेयसंस्थितम्। धनुषां दशके देवि! संस्थितं पापनाशनम्। तस्योत्पत्तिं प्रवक्ष्यामि महापापहरां शुभाम्" इत्युपक्रमे "अथ तत्र कृतान् ज्ञात्वा प्रासादान् यादवैः पृथक्। ततो गोप्योऽपि ताः सर्वाः सहस्राणि च षोडश। कृष्णमाराध्य भावेन स्थापयाञ्चक्रिरे रविम् ऋषिभिर्नारदाद्यैस्तु तथा क्षेत्रनिवासिभिः तत् प्रतिष्ठापयामासुः प्रतिष्ठाविधिना रविम्। प्रतिष्ठिते ततः सूर्य्ये ददुर्दानानि भूरिशः। ततः क्षेत्र निवासिभ्यस्तीर्थ देवरतेषु वै। ततस्ते ऋषयः सर्वे सन्तुष्टा हृष्टमानसाः। चक्रुर्नाम रवेस्तत्र गोप्यादित्येति विश्रुतम्"।

**गोप्याधि** पु० कर्म्म०। आधिभेदे आधिशब्दे ७११ पृ० दृश्यम्। "गोप्याधिभोगे नो वृद्धिः" याज्ञ०।

**गोप्रकाण्ड** न० प्रशस्तो गौः (जातिः) "प्रशंसावचनैश्च" पा० नित्यस० परनि०। श्रेष्ठे गवि अमरः। नियतलिङ्गत्वात् क्लीवत्वमेव "प्रकाण्डमुद्धतल्लजौ" अमरोक्तेः। शब्दक० पुंस्त्वोक्तिश्चिन्त्या। यदपि तत्र गोषु मध्ये प्रकाण्ड इत्युक्तं तदपि प्रामादिकं "प्रशंसावचनैश्चेति सूत्रस्य कर्म्मधारयसमासमात्रविषयत्वात्।

**गोप्रचार** पु० प्रचरत्यस्मिन् प्र+चर—आधारे घञ् ६त०। १गोचारणस्थाने। "ग्रामेच्छया गोचारो भूमिराजवशेन वा" याज्ञ० "गवादीनां चारणाय कियानपि भूभागोऽकृष्टः कल्पनीयः" मिता०। स्कन्दपु० प्रभा० खण्डोक्ते २तीर्थभेदे। "गोप्रचारकथा पुण्या गोपीनां द्वारकागमः" इहन्ना० तत्प्रतिपाद्योक्तौ।

**गोप्रतार** पु० गवां प्रतारः प्रतरणतुल्यः संमर्दोऽत्र। रामस्य वैकुण्ठगमनकाले तदनुगामिनां पुरवासिनां गोप्रतरणतुल्यसम्मर्दयुते सरयूस्थे १तीर्थभेदे। "गोप्रतारं ततो गच्छेत् सरय्वास्तीर्थमुत्तमम्। यत्र रामो गतः स्वर्गं सभृत्यबलवाहनः। देहं त्यक्त्वा महाराज! तस्य तीर्थस्य तेजसा। रामस्य च प्रसादेन व्यवसायाच्च भारत!। तस्मिंस्तीर्थे नरः स्नात्वा गोप्रतारे नराधिप!। सर्वपापविशुद्धात्मा स्वर्गलोके महीयते" भा०व०८४अ०। "ऋदोरप्" पा०अप्। गोप्रतरोऽप्यत्र "यत्रोप्रतरकल्पोऽभूत् संमर्दस्तत्र मज्जताम्। अतस्तदाख्यया तीर्थं पावनं भुवि पप्रथे" रघुः। अत्रापि दीर्घमध्यता इत्यन्ये।

गवा हषभेन प्रतारो गमनमस्य। २शिवे पु०। "गोनर्दो गोप्रतारश्च गोहषेश्वरवाहनः" भा० आनु० २८६अ०। शिवसहस्रनामोक्तौ। कप् इत०। ३गोःप्रतारे पु० अनुपदम् उक्तं रघुवाक्यम् उदा०।

**गोप्रवेश** पु०इत०। १गोवनादितो ग्टहप्रवेशे "गोप्रवेशसमयेऽप्यतोऽपयोयाति कृष्णपशुरेव वा पुरः" ह०स० २५अ०। आधारे ल्युट्। २तत्काले। स च कालः सूर्यास्तमयात् प्राक्कालः तथा च वर्णितम् रघौ "सञ्चारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम्। प्रचक्रमे पल्लवरागताम्रा प्रभा पतङ्गस्य मुनेश्च धेनुः"।

**गोफणा** स्त्री सुश्रुतोक्ते व्रणवन्धनभेदे तत्र कोषदामेत्याद्युपक्रमे "वितानगोफणा पञ्चाङ्गी चेति चतुर्दश वन्धविशेषास्तेषां नामभिराकृतयः प्रायेण व्याख्याताः" सुश्रुतः "चिवुकनासौष्ठांसवस्तिषु गोफणाम्"। (निदध्यात्) सुश्रुत०।

**गोबाल** पु० इत०। १गोकेशे २तल्लोमनि च स च सीमाज्ञानाय भूमौ निधेयः यथाह मनुः "अश्मनोऽस्थीनि गोबालांस्तुषान् भस्म कपालिकाः। करीषमिष्टकाङ्गारशर्कराः बालुकास्तथा। यानि चैवं प्रकाराणि कालाद्भूमिर्न भक्षयेत्। तानि सर्वाणि सीमायामप्रकाशानि कारयेत्"। गोबाल इव बालोऽस्याः "पाककर्णेत्यादि" पा० ङीप्। ओषधिभेदे स्त्री सि० कौ०।

**गोभण्डीर** पु०स्त्री भट–भाषणे बा० ईरन् गवि जले भण्डीरः। जलकुक्कुभखगे त्रिका०। स्त्रियां जातित्वात् ङीष्। [स्तस्य चात्मजः" हरिवं० ३२ अ०।

**गोभानु** पु० तुर्वसुप्रपौत्रे "तुर्वसोस्तु सुतो वह्निर्गोभानु-

**गोभिल** पु० छन्दोपग्टह्याकारके ऋषिभेदे।

**गोभृत्** पु० गां भूमिं बिभर्त्ति भृ–क्विप् इत०। पर्वते "नादेन गोभृच्छिखरेषु मत्ताः नृत्यन्ति गोकर्णशरीरभक्ष्याः" चौरः। तेन निर्वृत्तम् सङ्कला०अञ्। गौभृत पर्वतनिर्वृत्ते त्रि० स्त्रियां ङीप्। [ अजुगोमत् न।

**गोम** लेपने अद० चुरा० उभ० सक० सेट्। गोमयति-ते

**गोमक्षिका** स्त्री गोः क्लेशदायिका मक्षिका। (डाँस) ख्याते मक्षिकाभेदे शब्दर०।

**गोमघ** त्रि०गां मंहति ददाति मंहि–अच् छन्दसि नि नलोपः हस्य घश्च इत०। गोदातरि। "कदा गोमघा हवनानि गच्छाः, ऋ० ६।३५।२ "मंहतेर्दानार्थस्य रूपमुत्तरपदम्" भा० "स गोमघा जरित्रे" ६।३५।४। "गोमघा गोदाती" भा० "अश्वामघा गोमघा वा हुवेम" ऋ०७।७१।१।

**गोमण्डल** न० इत०। १गोसमूहे २भूमण्डले। "मग्नां च तोयापदि दुस्तरायां गोमण्डलस्योद्धरणं चकार" माघः। ३किरणसंघे च।

**गोमत्** त्रि० गौरस्त्यस्य मतुप्। १गोस्वामिनि २गोयुक्ते च "इन्द्र! गोमन्निहायाहि" यजु०२६।४ "गावः स्तुतिरूपा वाचः किरणा वा विद्यन्तेऽस्य गोमान्" वेददी० स्त्रियां ङीप्। सा च ३नदीभेदे स्त्री "गोमतीं धूतपापां च गण्डकीञ्च महानदीम्" भा० भी० ६अ०। स्कन्दपु० प्रभा० तन्माहात्म्यम् "गोमत्युत्पत्तिकथनं तस्यां स्नानादिजं फलम्। चक्रतीर्थस्य माहात्म्यं गोमत्युदधिसङ्गमः" इहद्वा० तत्खण्डप्रतिपाद्ये। अत्र उदधिसङ्गम इत्युक्तेः "गङ्गा सरस्वती पुण्या यमुना च महानदी। गोदावरी गोमती च नदी तापी च नर्मदा" इत्युपक्रमे "नद्यः समुद्रसंयोगात् सर्वाः पुण्याः शुभावहाः" प्रभा० खण्डोक्तेश्च सा समुद्रगा अन्या तु गोमती काशीतोऽनतिदूरे उत्तरस्यां गङ्गासङ्गता यथाह" भा० व० ८४ अ० यथा "गोमतीगङ्गयोश्चैव सङ्गमे लोकविश्रुते। अग्निष्टोममवाप्नोति कुलञ्चैव समुद्धरेत्" गोमतीस्नान फलं तत्रैव "रामतीर्थे नरः स्नात्वा गोमत्यां कुरुनन्दन!। अश्वमेधमवाप्नोति पुनाति च कुलं नरः। शतसाहस्रकं तीर्थं तत्रैव भरतर्षभ!। तत्रोपस्पर्शनं कृत्वा नियतो नियताशनः। गोसहस्रफलं पुण्यं प्राप्नोति भरतर्षभ!" गौः गोपदमाधिक्येन विद्यतेऽस्यां विद्यायां मतुप् ङीप्। ५विद्याभेदे सा च गोदानशब्दे २६८८पृ०दर्शिता अन्या तिलधेनुशब्दे वक्ष्यते "गोमत्या विद्यया धेनुं तिलानामभिमन्त्र्य च" भा०आनु०७८अ०। "पञ्चगव्येन गोघाती मासेनैकेन शुध्यति। गोमतीं च जपेद्विद्यां गवां गोष्ठे च संवसेत्" शाता०। गोमत्यां भवः पलद्या० अण्। गौमत तत्रभवे त्रि० स्त्रियां ङीप्। गोमत्या अदूरभवो देशः अण्। गौमत तत्सन्निकृष्टदेशादौ त्रि० स्त्रियां ङीप्। बहुत्वे तस्य वरणा० लुप्। गोमत्यः। उक्तगोमच्छब्दस्य सर्वनामस्थाने नुम् गोमान् गोमन्तावित्यादि रूपम्। गोमानिवाचरति गोमत्+क्विप् गोमतीति ततः क्विप् गोमत्। ४गोस्वामितुल्ये अत्र सर्वनामस्थाने धातुत्वात् न नुम्। गोमत् गोमतौ इत्येव। षष्ठीतत्पुरुषे गोमतीशब्दस्य "वैदेहि बन्धोर्हृदयं विदद्रे" इत्यत्रेव "ङ्यापोः संज्ञाछन्दसोः"

या० आर्षे प्रयोगे वा ह्रस्वः । "सा लतेव महाशालं फुल्लं गोमतितीरजम्" भा० वि० २७ अ० । न तु ह्रस्वान्तं शब्दान्तरम् केषाञ्चित् तथा कल्पनं तु प्रामादिकम् । गौस्तदस्य अस्ति मतुप् ङीप् ( भागाड़ ) ख्यातायां ५ भूमौ "भोजनं यत्र तत्रापि शयनं हट्टमन्दिरे । मरणं गोमतीतीरे" उद्भटः ।

**गोमतल्लिका** स्त्री प्रशस्ता गौः (जातिः) "प्रशंसावचनैश्च" पा० नित्यस० परनि० । प्रशस्ते गवि पुंस्त्वेऽपि स्त्रीत्वमेव । "प्रशंसावचनैश्चेति" पा०सूत्रे वचनग्रहणं रूढमात्रशब्दपरिग्रहार्थं तेन ये यौगिकाः शस्तशोभनादयः ये च विशेषवचनाः शुचिसाध्वादयः ये च गौणवृत्त्या सिंहोमाणवक इत्यादौ प्रशंसां बोधयन्ति ते सर्वे व्युदस्यन्ते" मनो० । प्रशंसावचनरूढशब्दाश्चामरे पठिता यथा "मतल्लिका मचर्चिका प्रकाण्डमुद्घतल्लजौ । प्रशस्तवाचकान्यमून्ययः शुभावहो विधिः" । गोमचर्चिकाप्यत्रार्थे स्त्री ।

**गोमत** न० गवां मतम् । गव्यूतौ शब्दार्थ० ।

**गोमत्स्य** पु० गौरिव स्थूलो मत्स्यः । सुश्रुतोक्ते नादेये मत्स्यभेदे । "तत्र नादेयाः रोहितपाठीनपाटलाराजीववर्म्मिगोमत्स्यकृष्णमत्स्यवागुञ्जारमुरलसहस्रदंष्ट्रप्रभृतयः"

**गोमथ** त्रि० गां दुग्धं मथ्नाति मथ-अच् इत० । गोदुहे गोपे । ततः चतुरर्थ्यां कुमुदा० ठक् । गौमथिक तत्सन्निकृष्टदेशादौ त्रि० ।

**गोमन्त** पु० सह्यपर्व्वतनिकटस्थे पर्व्वतभेदे । "ततस्तु ताः गमिष्यामः सह्यस्य विवरं गिरेः । गोमन्तमिति विख्यातं नैकशृङ्गविभूषितम्" हरिवं० ९६अ० । तद्वर्णनञ्च "एवं वयं जरासन्धाद् भतः कृतकिल्विषाः । सामर्थ्यवन्तः सम्बन्धाद् गोमन्तं समुपाश्रिताः । त्रियोजनायतं सद्म त्रिस्कन्धं योजनावधि । योजनान्ते शतद्वारं वीरविक्रमतोरणम्" भा० स० १३ अ० ।

"तद्गच्छ कृष्ण ! शैलेन्द्रं गोमन्तं तु नगोत्तमम्" तत्रैव । जरासन्धेन तत्र कृष्णयुद्धकथा तत्पर्वतदाहकथा च हरिवं०९९अ० दृश्या । "मथुरापूर्व्वाद्रिहिमवद्गोमन्तचित्रकूटस्थाः" वृ० स० १६ अ० ।

**गोमन्द** पु० पर्वतभेदे । "क्रौञ्चद्वीपे महाक्रौञ्चो गिरीरत्नचयाकरः । सम्पूज्यते महाराज ! चातुर्वर्ण्येन नित्यदा । गोमन्दः पर्वतो राजन् ! सुमहान् सर्वधातुकः । यत्र नित्यं निवसति श्रीमान् कमललोचनः" भा० भी० १२अ० ।

**गोमय** पुंन० गोः पुरीषं गो+मयट् अर्द्धर्चादि । (गोवर) १गोः पुरीषे तद्गुणादिगोशब्दे २६८२पृ०दृश्यम् । "व्यक्त जीर्णदेहाया वन्ध्यायाश्च विशेषतः । रोगार्त्तायाः प्रसूताया न गोर्गोमयमाहरेत्" शब्दार्थचि० स्मृतिः । गोमयस्य श्रेष्ठताकारणम् ।

"शतं वर्षसहस्राणां तपस्तप्तं सुदुष्करम् । गोभिः पूर्वं विसृष्टाभिर्गच्छेम श्रेष्ठतामिति । अस्मत्पुरीषस्नानेन जनः पूयेत सर्वदा । शकृता च पवित्रार्थं कुर्वीरन् देवमानुषाः । ताभ्यो वरं ददौ ब्रह्मा तपसोऽन्ते स्वयं प्रभुः । एवं भवत्विति विभुर्लोकांस्तारयतेति च" । तत्र लक्ष्म्या वासो यथा गोलक्ष्मीसंवादे "अवश्यं मानना कार्य्या तवास्माभिर्यशस्विनि ! । शकृन्मूत्रे निवस त्वं पुण्यमेतद्धि नः शुभे ! । श्रीरुवाच । दिष्ट्या प्रसादो युष्माभिः कृतो मेऽनुग्रहात्मकः । एवं भवतु भद्रं वः पूजितास्मि सुखप्रदाः !" इति भा० शा० दानधर्मे उक्तम् । "गोमयं यमुना साक्षात् गोमूत्रं च सरस्वती" काशीख० । "गोमयाच्च वृश्चिको जायते" शास्त्रकारप्रवादः "सुधाङ्गना गोमयगोमुखानि" माघः । "शुचिं देशं विविक्तं च गोमयेनोपलेपयेत्" मनुः । २तदात्मके त्रि० स्त्रियां ङीप् ।

**गोमयच्छत्र** न० गोमये तदाधारस्थाने छत्रमिव । शिलीन्ध्रे (छातिया) । त्रि० स्वल्पार्थे ङीप् स्वार्थे क । गोमयच्छत्रिकापि तत्रार्थे स्त्री हारा० ।

**गोमयप्रिय** न० गोमयं प्रियमस्य साधनत्वात् । भूस्तृणे शिलीन्ध्रे रत्नमाला ।

**गोमयोत्था** स्त्री गोमयादुत्तिष्ठति उद्+स्था-क टाप् । (गुवरियापोका) कीटभेदे हेमच० ।

**गोमयोद्भव** त्रि० गोमयादुद्भवति उद्+भू-अच् । १गोमयजाते २आरग्वधे (सोदाल) वृक्षे च पु० शब्दर० ।

**गोमहिषदा** स्त्री कुमारानुचरे मातृभेदे । "शृणु मातृगणान् राजन् ! कुमारानुचरानिमान्" इत्युपक्रमे "पयोदा गोमहिषदा गोविषाणी च भारत !" भा०श०४७अ० ।

**गोमांस** न० इत० । गवां मांसे तद्गुणादि गोशब्दे २६८२पृ० उक्तं "गोमांसभक्षणे प्राजापत्यं चरेत्" सुमन्तुः तच्चाज्ञानतः, ज्ञानतस्तद्भक्षणे चान्द्रायणं यथाह शातातपः "अगम्यागमने चैव मद्यगोमांसभक्षणे । शुद्ध्यै चान्द्रा-

यण कुर्यान्नदीं गत्वा समुद्रगाम्" विष्णुना तु द्विजातीनां तत्र पुनरुपनयनमुक्तं यथा "विड्वराह ग्रामककुक्कुटनरगोमांसभक्षणे सर्वेष्वेव द्विजातीनां प्रायश्चित्तान्ते भूयः संस्कारं कुर्यात्।"

**गोमातृ** स्त्री ६त०। गवां मातरि सुरभौ कश्यपपत्नीभेदे। "गोमातरः सुशीलाद्यास्तत्र सन्ति शिवप्रियाः" काशीख० २अ०।

**गोमायु** पु० स्त्री गां विकृतां वाचं मिनोति मा—उण्। १शृगाले,अमरः "अनु हुङ्कुरुते घनध्वनिं नहि गोमायुरुतानि केशरी" किरा०। "पांशुवर्षे दिशां दाहे गोमायुविरुते तथा" मनुः। तन्मूत्रादिभक्षणनिषेधमाह मनुः "विड्वराहखरोष्ट्राणां गोमायोः कपिकाकयोः। प्राश्य मूत्रपुरीषाणि द्विजश्चान्द्रायणं चरेत्।" तद्रुतादिशुभाशुभफलं वृ० सं० उक्तं यथा "श्वभिः शृगालाः सदृशाः फलेन विशेष एषां शिशिरे मदाप्तिः। हुहुरुतान्ते परतश्च टाटा पूर्णः स्वरोऽन्ये कथिताः प्रदीप्ताः। लोमाशिकायाः खलु कक्कशब्दः पूर्णः स्वभावप्रभवः स तस्याः। येऽन्ये स्वरास्ते प्रकृतेरपेताः सर्वे च दीप्ता इति सम्प्रदिष्टाः। पूर्वोदीच्योः शिवा शस्ता शान्ता सर्वत्र पूजिता। धूमिताभिमुखी हन्ति स्वरदीप्ता दिगीश्वरान्। सर्वदिक्ष्वशुभा दीप्ता विशेषेणाह्नयशोभना। पुरे सैन्येऽपसव्या च कष्टा सूर्योन्मुखी शिवा। याह्वीत्यग्निभयं शास्ति टाटेति मृतवेदिका। धिग्धिग् दुष्कृतमाचष्टे सज्वाला देशनाशिनी। नैव दारुणतामेके सज्वालायाः प्रचक्षते। अर्कोद्यनलवत्तस्या वक्त्रं लालास्वभावतः। अन्यप्रतिरुता याम्या सोद्बन्धमृतशंसिनी। वारुण्यनुरुता सैव शंसते सलिले मृतिम्। अक्षोभः श्रवणं चेष्टं धनप्राप्तिः प्रियागमः। क्षोभप्रधानभेदश्च वाहनानां च सम्पदाम्। फलमासप्रमादेतद्याच्यां परतो रुतम्। याम्यायां तद्विपर्यस्तं फलं षट्पञ्चमादृते। या रोमाञ्चं मनुष्याणां शकृन्मूत्रं च वाजिनाम्। रावात् त्रासं च जनयेत्सा शिवा न शिवप्रदा। मौनं गता प्रतिरुते नरद्विरदवाजिनाम्। या शिवा सा शिवं सैन्ये पुरे वा सम्प्रयच्छति। भेभे इति शिवा भयङ्करी भो भो व्यापदमादिशेच्च सा। मृतवक्त्र निवेदनी फिफी हुहु चात्महिता शिवा स्वरे। शान्ता त्ववर्णात् परमं रुवन्ती टाटामुदीर्णमिति वाश्यमाना। टे टे च पूर्वं परतश्च थे थे तस्याः स्वतुष्टिप्रभवं रुतं तत्। उच्चैर्घोरं वर्णमुच्चार्य पूर्वं पश्चात् क्रोशेत् क्रोष्टुकस्यानुरूपम्। या सा क्षेमं प्राह वित्तस्य चाप्तिं संयोगं वा प्रोषितेन प्रियेण"। श्वरुतादिफलं श्वचक्रे वक्ष्यमाणं तत्तुल्यफलमेतस्येत्यतिदिष्टम्। २गन्धर्वभेदे जटाधरः। "बहुभिः सह गन्धर्वैः प्रागायत च तुम्बुरुः" इत्युपक्रमे "गोमायुः सूर्यवर्चाश्च सोमवर्चाश्च सप्रभः" हरिवं० २६ अ०।

**गोमायुभक्ष** पु० गोमायुं भक्षयति भक्ष—अण् उप० स०। नीचजातिभेदे अर्कपुत्रसेन्युपक्रमे "गोमायुभक्षपूलिकवोक्कणाश्वमुखविकलाङ्गाः" वृ०स० १६ अ० तस्य शनिविभागे उक्तिः।

**गोमिन्** त्रि० गौरस्त्यस्य मिनि। १गोस्वामिनि अमरः स्त्रियां ङीप्। "यदन्यगोषु वृषभो वत्सानां जनयेच्छतम्। गोमिनामेव ते वत्सा मोघं स्कन्दितमार्षभम्" मनुः। २उपासके ३शृगाले पु० मेदि०। ४बुद्धभिक्षुविशेषे पु० त्रिका०। शालाशब्दे परे समासे छात्र्यादि०। "छात्र्यादयः शालायाम्" पा० अस्य उदात्तता।

**गोमीन** पु० स्त्री गौरिव स्थूलो मीनः। गोमत्स्याख्ये मीनभेदे "न दद्यात् तिलकमठं मत्स्यमेव। गोमीनं चक्रमकुलं वडालरावबं तथा" मत्स्यसूक्तम्।

**गोमुख** पु० गोर्मुखमिव मुखमस्य। १नक्रे २यक्षभेदे च हेमच०। ३मातलिपुत्रे "बहुगोमातल तस्य तत पुत्रश्च गोमुखः" भा०क०६६अ०। ४वाद्यभेदे ५कुटिलाकारे लेपने च न० मेदि० वाद्यभेदे पुंस्त्वमपि यथा "आडम्बरान् गोमुखांश्च डिण्डिमांश्च महास्वनान्" भा०शा०४७अ०। "मृदङ्गाभेरीभेर्यः पणवानकगोमुखाः" भा० द्रो० ८२ अ०। "पणवानकगोमुखाः सहसैवाभ्यहन्यन्त" गीता। लेपनञ्च तदाकारेण भित्तौ लेखनम् "मुग्धाङ्गनागोमयगोमुखानि" माघः। ६तदाकारे सन्धिभेदे (सुरङ्ग) तन्त्रोक्ते जपमालारक्षणाय पट्टवस्त्रादिनिर्मिते स्वनामख्याते ७पदार्थे न०। तस्य लक्षणं मुण्डमालात० उक्तं यथा।

"चतुर्विंशाङ्गुलमितं पट्टवस्त्रादिसम्भवम्। निर्मायाष्टाङ्गुलिमुखं ग्रीवायां षडङ्गुलम्। ज्ञेयं गोमुखयन्त्रञ्च सर्वतन्त्रेषु गोपितम्। तन्मुखे स्थापयेन्मालां ग्रीवामध्यगते करे। प्रजपेद्विधिना सुभ्रु वर्णमालाधिकं प्रिये! निधाय गोमुखे मालां गोपयेन्मातृजारवत्" (गोमुड़) ख्याते द्वन्दीभेदे स्त्री गोमु-

स्वाकारत्वात् ८हिमालयात् भूमौ गङ्गापतनगुहायां स्त्री ङीप्।

**गोमूत्र** न० ६त०। (चोना) इति ख्याते गोमूत्रे गोशब्दे २६८१ पृ० तद्गुणाद्युक्तम्। "शुद्धिर्विजानता कार्य्या गोमूत्रेणोदकेन वा।" "गोमूत्रमग्निवर्णं वा पिबेदुदकमेव वा" "गोमूत्रेण चरेत् स्नानं द्वौ मासौ नियतेन्द्रियः" मनुः।

**गोमूत्रिका** स्त्री गोमूत्रस्येव गतिरस्त्यत्र ठन्। चित्रालङ्कारभेदे तल्लक्षणमलङ्कारशब्दे ३८२ पृ० दृश्यम्। सा च पादार्द्धश्लोकविपरीतभेदाच्चतुर्विधा। दिङ्मात्रमुदाह्रियते"

म। द। नो। वि।क। र। द्वा।नं।सा।धा।नो।ध्या।वि।णा।दि।भिः।
वा।ह।धे।वि।का। स। द्वा।नं।यु।धा।सा।ध्या।वि।षा।णि। भिः।

माघे १९ स० ४६ श्लोके तल्लक्षणान्तरं मल्लिनाथोक्तं यथा "वर्णानामेकरूपत्वं यद्येकान्तरमर्द्धयोः। गोमूत्रिकेति तत् प्राहुर्दुष्करं तद्विदो विदुः"।

षोडशकोष्ठद्वये पङ्क्तिद्वये द्वयं द्वयं क्रमेण विलिख्य एकान्तरविनिमयेन वाचने श्लोकनिष्पत्तिरिति तदुद्धारः। गोमूत्रप्रकारः प्रकारे स्थूला० कन् टापि अत इत्त्वम्। गोमूत्रतुल्ये वक्रसरलप्राये ३प्रचारादौ। "गोमूत्रिकाप्रचारेषु" दशकु० "गोमूत्रतुल्यवक्रसरलप्रचारेषु" (ताम्बुड) ख्याते ४तृणभेदे स्त्री राजनि०।

**गोमृग** पु०स्त्री गवाकृतिर्मृगः। गवये तस्य गवाकृतित्वात् तथात्वम्। "अश्वस्तूपरो गोमृगस्ते प्राजापत्याः" यजु० २४।१। स्त्रियां जातित्वात् ङीष्।

**गोमेद** पु०गौरिव मेद्यति मिद–अच्। १मणिभेदे २द्वीपभेदे तन्नामनिरुक्तिर्यथा "गोमेदे गोपतिर्नाम राजाभूद्गोसवोद्यतः। याज्याऽभूद्वह्निकल्पानामौतथ्यानां मनोः कुले। स तेषु हरियज्ञाय प्रवृत्तेषु भृगून् गुरून्। वव्रे, तं गोतमः कोपादशपत् सोऽगमत् क्षयम्। यज्ञवाटेऽस्य ता गावो दग्धाः कोपाग्निना मुनेः। तन्मेदसा मही च्छन्ना गोमेदः स ततोऽभवदिति" युक्तिकल्पतरुः। ३प्लक्षद्वीपस्थे वर्षाचलभेदे तद्वर्षोपक्रमे" मर्य्यादाकारकास्तेषां तथान्ये वर्षपर्वताः। सप्तैव तेषां नामानीत्यभिधाय "गोमेदश्चैव चन्द्रश्च नारदो दुन्दुभिस्तथा। सोमकः सुमनाः शैलो वैभ्राजश्चैव सप्तमः" विष्णु पु०। स्वार्थे क। मणिभेदे तस्य परीक्षादियुक्तिकल्पतरावुक्तं यथा "हिमालये वा सिन्धौ वा गोमेदमणिसम्भवः। स्वच्छकान्तिर्गुरुः स्निग्धो वर्णाढ्यो दीप्तिमानपि। वलक्षः पिञ्जरो धन्यो गोमेद इति कीर्त्तितः। चतुर्द्धा जातिभेदस्तु गोमेदेऽपि प्रकाश्यते। ब्राह्मणः शुक्लवर्णः स्यात् क्षत्रियो रक्त उच्यते। आपीतो वैश्यजातिस्तु शूद्रस्त्वानील उच्यते। छाया चतुर्विधा श्वेता रक्ता पीताऽसिता तथा। गुरुप्रभाढ्यः सितवर्णरूपः स्निग्धो मृदुर्वीतमलाङ्गरागः। स्वच्छस्तु गोमेदमणिर्धृतोऽयं करोति लक्ष्मीं धनधान्यवृद्धिम्। लघुर्विरूपोऽतिखरोऽन्यमानः स्नेहोपलिप्तो मलिनः खरोऽपि। करोति गोमेदमणिर्विनाशं सम्पत्तिभोगे बलवीर्य्यरागैः। ये दोषा हीरके ज्ञेयास्ते गोमेदमणावपि। परीक्षा वह्नितः कार्य्या शाणे वा रत्नकोविदैः॥ स्फटिकेनैव कुर्वन्ति गोमेदप्रतिरूपकम्। शुद्धस्य गोमेदमणेस्तु मूल्यं सुवर्णतो द्वैगुणमाहुरेके। अन्ये तथा विद्रुमतुल्यमूल्यं तथा परे चामरतुल्यमाहुः। चतुर्विधानामेषान्तु धारणं परिसम्मतम्"। स च जलकालुष्यशोधकः यथाह सुश्रुतः "तत्र (जले) सप्त कालुष्यप्रसाधनानि भवन्ति तद्यथा कतकगोमेदकबिसग्रन्थिसैवालमूलवस्त्राणि मुक्तामणिश्चेति"। स्वार्थे क। द्वीपभेदे। "शाकं ततः शाल्मलमत्र कौशं क्रौञ्चं च गोमेदकपुष्करे च। द्वयोर्द्वयोरन्तरमेकमेकं समुद्रयोर्द्वीपमुदाहरन्ति" सि० शि०।

**गोमेदसन्निभ** पु० गोमेदेन तुल्यः निभस०। दुग्धपाषाणे राजनि०।

**गोमेध** पु० मेध–वधे आधारे घञ् ६त०। गोसवाख्ये यज्ञभेदे गोसवशब्दे विवृतिः "गवां मेधमवाप्नोति अप्सरोभिश्च मोदते" भा० आनु० १०९ अ०।

**गोऽम्भस्** न० ६त०। गोमूत्रे राजनि०।

**गोयज्ञ** पु० गवां कृतो यज्ञः। १गोसवयज्ञे तच्छब्दे विवृतिः। गा उद्दिश्य यज्ञः। श्रीकृष्णेन गोपानां हितार्थं वृन्दावने प्रवर्त्तिते गोवर्द्धनगिरियज्ञसहिते गवां महोत्सवकारके २व्यापारभेदे तत्तथा हरिवं० ७२ अ०। "शरद्येवं सुशस्यायां प्राप्तायां प्रावृषः क्षये। नीलचन्द्रार्कवर्णैश्च रचितं बहुभिर्द्विजैः। फलैः प्रवालैर्घनमिन्द्रचापघनोपमम्। भवनाकारविटपं लतापरममण्डितम्। विशालमूलविततं पवनाभोगधारिणम्। अर्चयामो गिरिं देवं गाश्चैव सविशेषतः। सावतंसैर्विषाणैश्च बर्हापीडैश्च दंशितैः। घण्टाभिश्च प्रलम्बाभिः पुष्पैः शारदिकैस्तथा। शिवाय गावः पूज्यन्तां

गिरियज्ञः प्रवर्त्त्यताम्। पूज्यतां त्रिदशैः शक्रो गिरि-रक्षाभिरिज्यताम्। गोयज्ञं कारयिष्यामि बलादेव न संशयः”। एवं श्रीकृष्णेनोक्ते गोपवाक्यं यथा “यत्त्वयाऽभिहितं वाक्यं गिरियज्ञं प्रति प्रभो। कस्तल्लङ्घयितुं शक्तो वेलामिव महोदधेः। स्थितः शक्रमहस्तात! श्रीमान् गिरिमहस्त्वयम्। त्वत्प्रणीतोऽद्य गोपानां गवां हेतोः प्रवर्त्त्यताम्। भाजनान्युपकल्प्यन्तां पयसः पेशलानि च। कुम्भाश्च विनिवेश्यन्तामुदपानेषु शोभनाः। पूर्य्यन्तां पयसा नद्यो द्रोण्यश्च विपुलायताः। भक्ष्यं भोज्यञ्च पेयञ्च तत्सर्व्वमुपनीयताम्। भाजनानि च मांसस्य न्यस्यन्तामोदनस्य च। त्रिरात्रञ्चैव सन्दोहः सर्व्वघोषस्य गृह्यताम्। विशस्यन्ताञ्च पशवो भोज्या ये महिषादयः। प्रवर्त्त्यताञ्च यज्ञोऽयं सर्व्वगोपसुसङ्कुलः। आनन्दजननो घोषो महान् मुदितगोकुलः। तूर्य्यप्रणादघोषैश्च वृषभाणाञ्च गर्ज्जितैः। हम्बारवैश्च वत्सानां गोपानां हर्षवर्द्धनः। दधिह्रदः शरावर्त्तः पयःकुल्यासमाहतः। मांसराशिप्रकृष्टाढ्यः प्रकाशौदनपर्वतः। संप्रावर्त्तत यज्ञः स गिरेर्गोभिः समाकुलः। तुष्टगोपगणाकीर्णो गोपनारीमनोहरः। अथाभिवृत्तपर्य्यन्ते पर्य्याप्ते यज्ञसंविधौ। यज्ञं गिरेस्तिथौ सौम्ये चक्रुर्गोपा द्विजैः सह। यजनान्ते तदन्नन्तु तत्पयो दधि चोत्तमम्। मांसञ्च मायया कृष्णो गिरिर्भूत्वा समश्नुते। तर्पिताश्चापि विप्राग्र्यास्तुष्टाः सम्पूर्णभोजनाः। उत्तस्थुः प्रीतमनसः स्वस्ति वाच्य यथासुखम्। भुक्त्वा चावभृथे कृष्णः पयः पीत्वा च कामतः। संतृप्तोऽस्मीति दिव्येन रूपेण प्रजहास वै। तं गोपाः पर्वताकारं दिव्यस्रगनुलेपनम्। गिरिमूर्द्ध्नि स्थितं दृष्ट्वा कृष्णं जग्मुः प्रधानतः। भगवानपि तेनैव रूपेणाच्छादितः प्रभुः। सह तैः प्रणतो गोपैर्ववन्दात्मानमात्मना। तमूचुर्विस्मिता गोपा देवं गिरिवरे स्थितम्। भगवंस्त्वद्वशे युक्ता दासाः किं कुर्म? किङ्कराः। स उवाच ततो गोपान् गिरिप्रभवया गिरा। अद्य प्रभृति याज्योऽहं गोषु यद्यस्ति वो दया। अहं वः प्रथमो देवः सर्वकामकरः शुभः। मम प्रभावाच्च गवामयुतान्युपभोक्ष्यथ। शिवश्च वो भविष्यामि मद्भक्तानां वने वने। रंस्येऽहं सह युष्माभिर्यथा दिवि गतस्तथा। ये चेमे प्रथिता गोपा नन्दगोपपुरोगमाः। एषां प्रीतः प्रयच्छामि गोपानां विपुलं धनम्। पर्य्याप्नुवन्तु क्षिप्रं मां गावो वत्ससमाकुलाः। एवं मम परा प्रीतिर्भविष्यति न संशयः” ७४ अ०।

**गोयान** न० गवा कृष्टं यानम्। गवाकृष्टे याने (शगड) “गोयानेनागतस्तुष्टः पादाभ्यां शुभचेष्टितः” सुश्रुतः गोयाने मैथुननिषेधमाह मनुः “मैथुनन्तु समासेव्य पुंसि योषिति वा द्विजः। गोयानेऽप्सु दिवा चैव सवासाः स्नानमाचरेत्”।

**गोयूति** स्त्री “गोर्यूतौ छन्दसि” पा०अध्वपरिमाणे” वार्त्ति० छन्दोऽध्वपरिमाणभिन्ने न वान्तादेशः। गोर्गतौ।

**गोरक्ष** पु० गां रक्षति सेवनात् रक्ष—अण् उप० स० (चाकुलिया) १लताभेदे २नागरङ्गे मेदि०। ३ऋषभनामौषधौ हेम०। ४गोपालके त्रि०। भावे घञ्। ५गोः रक्षणे च। “कृषिगोरक्षमास्थाय जीवेद्वैश्यस्य जीविकाम्” मनुः।

**गोरक्षक** त्रि० गां रक्षति रक्ष—ण्वुल् ६त०। (राखाल) गोपालके “गोरक्षकान् वाणिजकान् तथा कारुकशीलवान्। प्रेष्यान् वार्द्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत्” मनुः।

**गोरक्षकर्कटी** स्त्री कर्म०। क्षुद्रकर्कट्याम् (राखालकाकुड) भावप्र०। [ २मोघूमे च जटा०।

**गोरक्षजम्बू** स्त्री गोरक्षे गोपे जम्बूरिव। १घोण्टाफले

**गोरक्षतण्डुला** स्त्री गोरक्षः तण्डुलो वीजं यस्याः। (गोरक्षचाकुलिया) क्षुपभेदे रत्नमाला।

**गोरक्षतुम्बी** स्त्री गोरक्षी तुम्बी। कुम्भाकारतुम्ब्याम् राजनि०

**गोरक्षदुग्धा** स्त्री गोरक्षं गोपोषकं दुग्धं निर्यासोऽस्याः। मालवप्रसिद्धे क्षुपभेदे गोरक्षीक्षुपे राजनि०।

**गोरक्षी** स्त्री० गां रक्षति रक्ष—अण् ङीप् उप०स०। मालवप्रसिद्धे क्षुपभेदे राजनि०। [ मेदि०।

**गोरङ्कु** पु०स्त्री गवा वाचा रङ्कुरिव। पक्षिभेदे नग्नके

**गोरट** पु० गवि रटति रट—अच्। दुग्धखदिरे राजनि० तस्य गोः पोषणाय रटनात् तथात्वम्।

**गोरण** न० गुर—भावे ल्युट्। उत्तोलने उद्यमे अमरः।

**गोरथ** पु०मगधदेशस्थे पर्वतभेदे। “अतीत्य गङ्गां शोणञ्च त्रयस्ते प्राङ्मुखास्तदा। कुशचीरच्छदा जग्मुर्मागधं क्षेत्रमच्युताः। ते शश्वद्गोधनाकीर्णमम्बुमन्तं शुभद्रुमम्। गोरथं गिरिमासाद्य ददृशुर्मागधं (जरासन्धपुरम्) पुरम्”। भा० स० १६ अ०।

**गोरस** पु०६त०। १गोदुग्धे २दध्नि ३तक्रे च हेम०। “व्या-

धानां मांसपरमं मध्यानां गोरसोत्तरम्। तैलोत्तरं दरिद्राणां भोजनं भरतर्षभ!" भा०उ०३३अ०। "शालाः शालीक्षुगोरसैः" भा० आश्व० ८५ अ०। गोरसानुपभुञ्जान उपभोगांश्च भारत!" भा० व० २३९ अ०। "अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम्। अस्नेहा अपि गोधूमयवगोरसविक्रियाः" याज्ञ० अस्नेहस्य चिरस्थितस्य तद्विकारस्य भोज्यतामाह। "हरिद्रा गोरसो धान्यं पुनः पाकेन शुध्यति" स्मृतिः। ४वाक्यरसे च "कोरसा गोरसं विना" उद्भटः।

**गोरसज** न० गोरसात् दध्नो जायते जन–ड ५त०। तक्रे राजनि०।

**गोराज** पु० ६त० टच् समा०। श्रेष्ठवृषे शब्दर०।

**गोराटिका** गोरिव रटति रट+ण्वुल्। शारिकापक्षिणि राजनि०। अच् गौरा० ङीष्। गोराटीत्यपि तत्रैव हेमच०।

**गोरिका** स्त्री गोराटिका पृषो०। शारिकाखगे राजनि०।

**गोरुत** न०६त० १गवां शब्दे तद्रुतशुभाशुभफलं गवेङ्गितशब्दे २५६७ पृ० उक्तम्। गोरुतं तच्छब्दः श्रुतिगोचरत्वेन अस्त्यस्य अच्। गोरवश्रवणयोग्ये २क्रोशद्वयात्मके देशे हेमच०।

**गोरूप** न० ६त०। १गोः रूपे "जुगोप गोरूपधरामिवोर्वीम्" रघुः। गोः रूपमिव रूपमस्य। २महादेवे पु०। "गोरूपश्च महादेवो ह्यस्थश्चोद्धृराकृतिः" भा० आनु० १४ अ०। [राजनि०।

**गोरोत** न० गवा किरणेन रोचते रोच–अच्। हरिताले

**गोरोचना** स्त्री गोभ्यो जाता रोचना हरिद्रा। स्वनामख्याते गन्धद्रव्ये भावप्र०।

"गोरोचना हिमा तिक्ता वश्या मङ्गलकान्तिदा। विषालक्ष्मीग्रहोन्मादगर्भस्रावक्षतापहृत्" भावप्र०। "गोरोचनापत्रविभक्तरम्याः" "गोरोचनाक्षेपनितान्तगौरैः" कुमा०। सा च यन्त्रलेखनद्रव्यं "गोरोचनालक्तककुङ्कुमेन" तन्त्रसारोक्तेः। [अमरः।

**गोर्द** न० गुर। अर्द्धर्चादित्वात् नि०। मस्तिष्के मस्तकस्थे घृते

**गोल** पु० गुड–अच् डस्य लः। १सर्ववर्तुले २मदनवृक्षे रत्नमा०। ३जारात् जाते विधवायाः सुते धरणी। ४बोले जटाधरः। गोलः विषयतयाऽस्त्यस्य अच्। खगोलभूगोलज्ञापके भास्करीये गोलाध्यायाख्ये ५ग्रन्थे च।

"तं तां च प्रणिपत्य गोलममलं बालावबोधं ब्रुवे। मध्याद्यं द्युसदां यदत्र गणितं तस्योपपत्तिं विना प्रौढिं प्रौढसभासु नैति गणको निःसंशयो न स्वयम्। भोज्यं यथा सर्वरसं विनाज्यं राज्यं यथा राजविवर्जितं च। सभा न भातीव सुवक्तृहीना गोलानभिज्ञो गणकस्तथात्र"। "गोलः स्फुटः क्षेत्रविशेष एव प्राज्ञैरतः स्यादृगणितेन गम्यः" सि० शि० उक्ते ६क्षेत्रभेदे ७मण्डले न० मेदि० ८ज्योतिषोक्ते ग्रहयोगभेदे पु०। "ग्रहाणामेकस्मिन् यदि भवति भस्मिन् निवसतिस्तदा गोलोयोग, प्रलयपदमिन्द्रोऽपि लभते। भवेल्लोको रुग्णः, परिहरति पुत्रञ्च जननी नृपाणां नाशः स्यात् ज्वलति वसुधा शुष्यति नदी" प्रश्नकौमुदी "सप्त ग्रहा यदैकस्था गोलयोगस्तदा भवेत्। दुर्भिक्षं राष्ट्रपीडा च तस्मिन् काले नृपक्षयः" मयूरचित्रकम्। "एकादिवृद्धोपेतैर्भवनात् योगान् विहायसंख्याख्यान्। गोलयुगशूलकेदारपाशदामाख्यवीणाः स्युः। दुःखितदरिद्रघातुककृषिकर दुःशील पशुपनिपुणानाम्। जन्म क्रमेण दुःखिनः परभाग्यैः सर्व एवैते" दीपिका।

**गोलक** पु० गुड–ण्वुल् डस्य लः। १मणिके अलिञ्जरे (जाला) २गुडे च हेमच०। ३गन्धरसे रत्नमाला ४कलाये (मटर) ख्याते शब्दच० तस्य गोलाकृतित्वात् तथात्वम्। गोल+स्वार्थे क। ४गोलशब्दार्थे ५पिण्डे च "तेजसां गोलकः सूर्यः ग्रहर्क्षाण्यम्बुगोलकाः। प्रभावन्तोहि दृश्यन्ते सूर्यरश्मिप्रदीपिताः" सू०सि०। ६गोलोके न० "यद्रूपं गोलकं धाम तद्रूपं नास्ति मामके" तन्त्रसा०। जारजगोलकस्य संस्काराद्रर्हता कुण्डशब्दे २०८७ पृ० उक्ता। ७इन्द्रियाधिष्ठानभेदे न०। चक्षुर्गोलकम्।

**गोलक्षण** न० ६त०। गोः शुभाशुभसूचके चिह्नभेदे वृ० सं०तच्च लक्षणाद्युक्तं यथा

"पराशरः प्राह बृहद्रथाय गोलक्षणं यत् क्रियते ततोऽयम्। मया समासः शुभलक्षणास्ता सर्वास्तथाप्यागमतोऽभिधास्ये। सास्राविलरूक्षाक्ष्यो मूषकनयनाश्च न शुभदा गावः। प्रचलच्चिपिटविषाणाः करटाः खरसदृशवर्णाः। दशसप्तचतुर्दन्त्यः प्रलम्बमुण्डानना विनतपृष्ठाः। ह्रस्वस्थूलग्रीवा यवमध्या दारितखुराश्च। श्यावातिदीर्घजिह्वा गुल्फैरतितनुभिरतिबृहद्भिर्वा। अतिककुदाः कृशदेहा नेष्टा हीनाधिकाङ्ग्यश्च। वृषभोऽप्येवं स्वजातिलक्ष-

वृषभः सिराततक्रोड़ः। स्थूलसिराचितगण्डस्थित-स्थानं मेहते यश्च। मार्जाराक्षः कपिलः करटो वा न शुभदो द्विजस्येष्टः। कृष्णोष्ठतालुजिह्वः श्वसनो यूथस्य घातकरः। स्थूलशकृन्मणिशृङ्गः सितोदरः कृष्णसारवर्णश्च। स्वगृहजातोऽपि त्याज्यो यूथविनाशावहो वृषभः। श्यामकपुष्पचिताङ्गो भस्मारुणसन्निभो विडालाक्षः। विप्राणामपि न शुभं करोति वृषभः परिगृहीतः। ये चोद्धरन्ति पादान् पङ्कादिव योजिताः कृशग्रीवाः। कातरनयना हीनाश्च पृष्ठतस्ते न भारसहाः। मृदुसंहतताम्रोष्ठास्तनुस्फिजस्ताम्रतालुजिह्वाश्च। तनुहृस्वोच्चश्रवणाः सुकुक्षयः स्पष्टजङ्घाश्च। आताम्रसंहतखुरा व्यूढोरस्का वृहत्ककुदयुक्ताः। स्निग्धश्लक्ष्णतनुत्वग्रोमाणस्ताम्रतनुशृङ्गाः। तनुभूस्पृग्वालधयो रक्तान्तविलोचना महोच्छ्वासाः। सिंहस्कन्धास्तन्वल्पकम्बलाः पूजिताः सुगताः। वामावर्तैर्वामे दक्षिणपार्श्वे च दक्षिणावर्तैः। शुभदा भवन्त्यनडुहो जङ्घाभिश्चैणकनिभाभिः। वैदूर्यमल्लिकाबुद्बुदेक्षणाः स्थूलनेत्रवर्त्मणः। पार्ष्णिभिरस्फुटिताभिः शस्ताः सर्वेऽपि भारवहाः। घ्राणोद्देशे शबलो मार्जारमुखः सितश्च दक्षिणतः। कमलोत्पललाक्षाभः सुवालधिर्वाजितुल्यजवः। लम्बैर्वृषणैर्मेषोदरश्च संक्षिप्तवक्षणक्रोड़ः। ज्ञेयो भाराध्वसहो जवेऽश्वतुल्यश्च शस्तफलः। सितवर्णः पिङ्गाक्षस्ताम्रविषाणेक्षणो महावक्त्रः। हंसो नाम शुभफलो यूथस्य विवर्धनः प्रोक्तः। भूस्पृग्वालधिराताम्रवङ्क्षणो रक्तदृक् ककुद्मी च। कल्माषश्च स्वामिनमचिरात् कुरुते पतिं लक्ष्म्याः। यो वा सितैकचरणो यथेष्टवर्णश्च सोऽपि शस्तफलः। मिश्रफलोऽपि ग्राह्यो यदि नैकान्तप्रशस्तोऽस्ति” ६१अ०।

**गोलत्तिका** स्त्री गवि भूमौ लत्तिकेव। वनचरपशुस्त्रीभेदे “रोहित् कण्डृणाची गोलत्तिका तेऽप्सरसाम्” यजु० २४।३७। “रोहित् कृष्णः, कुण्डृणाची, वनचरी गोलत्तिकापि” वेददी०। [तदपत्ये पु० स्त्री।

**गोलन्द** पु० ऋषिभेदे तस्यापत्यं गर्गा० यञ्। गौलन्द्य

**गोलयन्त्र** न० सि० शि० उक्ते यन्त्रभेदे।

“अपवृत्तगरविचिह्नं क्षितिजे धृत्वा कुजेन संसक्ते।
नाड़ीवृत्ते विन्दुं कृत्वा धृत्वाथ जलसमं क्षितिजम्।
रविचिह्नस्य च्छाया पतति कुमध्ये यथा तथा विधृते।
उडुगोले कुजविन्द्वोर्मध्ये नाड्यो द्युजाताः स्युः”।

“यथोक्तविधिना खगोलान्तर्भगोलं बद्ध्वा तत्र क्रान्तिवृत्ते मेषादेरारभ्य रविभुक्तं राशिभागाद्यं दत्त्वा तदग्रे तच्चिह्नं तदपवृत्तग-रविचिह्नमुच्यते। भगोलं चालयित्वा-रविचिह्नं क्षितिजे धार्य्यम्। तथा धृते सति क्षितिजं प्राच्यां विषुवन्मण्डले यत्र लग्नं तत्र खटिकया विन्दुः कार्य्यः। ततः क्षितिजवृत्तं जलसमं यथा भवति तथा गोलयन्त्रं स्थिरं कृत्वा भगोलस्तथा चाल्यो यथा रविचिह्नस्य च्छाया भूगर्भे पतति। तथा कृते सति विषुववृत्ते क्षितिजविन्द्वोर्मध्ये यावत्यो घटिकास्तावत्यस्तस्मिन् काले दिनगता ज्ञेयाः। अपवृत्ते मेषादेरारभ्य प्राक् क्षितिजपर्य्यन्तं यद्राशिभागाद्यं तल्लग्नं ज्ञेयम्” प्रमिताक्षरा।

**गोलवण** न० गवे देयं परिमितं लवणम्। यावद्गवे लवणं दीयते तावन्मिते लवणे। “गोबललवणयोः” पा० प्रमाणे गम्ये एतयोः परतः पूर्वं तत्पुरुषे प्रकृतिस्वरता।

**गोला** स्त्री गां वस्तुभूमिम् आधारत्वेन लाति ला—क। १गोदावरीनद्याम्। गां वाचं लाति।२सख्यां,३कुनट्याम्। गां दीप्तिं जलं वा लाति। ४पत्राञ्जने, ५मणिके, ६मण्डले, ७बालक्रीड़नके ८दुर्गायाञ्च मेदि०।

**गोलाक्ष** पु० ऋषिभेदे तस्य गोत्रापत्यम् अश्वा० फञ्। गौलाक्षायण तद्गोत्रापत्ये पुंस्त्री।

**गोलाङ्गूल** पु० स्त्री गोलाङ्गूलमिव लाङ्गूलमस्य। १वानरभेदे त्रिका० स च कश्यपपत्न्याः क्रोधायाः कन्यायां हरिनाम्न्यां जातः यथाह भा०आ० ६६अ० “नव क्रोधवशा नारीः प्रजज्ञे क्रोधसम्भवा। मृगी च मृगमन्दा च हरी भद्रमना अपि” इत्युपक्रमे “हर्य्याश्च हरयोऽपत्यं वानराश्च तरस्विनः। गोलाङ्गूलांश्च भद्रं ते हर्य्याः पुत्रान् प्रचक्षते”। २कृष्णवानरे राजनि०। तल्लक्षणञ्च काशी ख० ३अ०। “गोलाङ्गूला रक्तमुखा नीलाङ्गा यूथनायकाः।”

**गोलाध्याय** पु०गोलस्वरूपादिप्रतिपादके भास्करीये ग्रन्थभेदे।

**गोलास** पु० गां भूमिं लासयति प्रकाशयति लस—णिच् अण् उप० स०। शिलीन्ध्रे हारा०।

**गोलिह** पु०गोभिर्लिह्यते लिह-घञर्थे क।१वृत्तिकायां २घण्टापाटलौ (घण्टापारुलि) च जटा०। [पारुलि) अमरः।

**गोलीढ** पु० गोभिर्लिह्यते लिह-क्त। घण्टापाटलौ (घण्टा-

**गोलोक** पु० वैकुण्ठोर्द्ध्वस्थे स्थानभेदे तत्स्थानमानादि ब्रह्मवै० पु० उक्तं यथा

“निराधारश्च वैकुण्ठो ब्रह्माण्डानां परोवरः। तत्पर-श्चापि गोलोकः पञ्चाशत्कोटियोजनात्। ऊर्द्ध्वे निराश्रयश्चापि रत्नसारविनिर्म्मितः। सप्तद्वारः सप्त-सारः परिखासप्तसंयुतः। लक्षप्राकारयुक्तश्च नद्या विरजया युतः। वेष्टितो रत्नशैलेन शतशृङ्गेण चारुणा। योजनायुतमानञ्च यस्यैकं शृङ्गमुज्ज्वलम्। शतकोटियोजनश्च शैलउच्छ्रित एव च। दैर्घ्यं तस्य शतगुणं प्रस्थे च लक्षयोजनम्। योजनायुत विस्तीर्णस्तत्रैव रासमण्डलः। अमूल्यरत्ननिर्म्माणो वर्त्तुलश्चन्द्रबिम्बवत्। पारिजातवनेनैव पुष्पितेन च वेष्टितः। कल्पवृक्षसहस्रेण पुष्पोद्यानशतेन च। नानाविधैः पुष्पवृक्षैः पुष्पितेन च चारुणा। त्रिकोटि रत्नभवनैर्गोपीनाञ्च रचितः। रत्नदीपयुक्तश्च रत्नतल्पसमन्वितः। नानाभोगसमायुक्तो मधुवापी-शतैर्युतः। पीयूषवापीयुक्तश्च कामभोगसमन्वितः। गोलोकवृत्तसंस्थानं वर्णनं वा विशारदः। न कोपि वेद विद्वान् वा वेदविद्वान् व्रजेश्वर !”।

**गोलोमिका** स्त्री गोः लोमेव लोमास्य ङीप् ततः स्वार्थे के अणो ह्रस्वः। (पाउरी) (गोधूमा) इति च ख्यातायां १पत्तरिग्रास्। २कांटु रुपुच्छायाञ्च। राजनि०।

**गोलोमी** स्त्री गोर्लोमेव लोम लोमसदृशं दलादिकमस्याः ङीप्। १श्वेतदूर्वायाम्। गोलोमेव जाता अण् ङीप्। २वचायाम्। गवा वाचा लोमयति अनुकूलयति लोमन्+नामधातु—अच् गौरा० ङीप्। ३वेश्यायां हेमच०। ४गोलोमिकाशब्दे राजनि०।

**गोवतस** पु० ६त०। गवां वतुते तन्नामद्रावगौवृतम् व्रत शब्दे दृश्यम्। [(नेकडेवाव) राजनि०।

**गोवतसादिन्** पु० गोवत्समत्ति अद—णिनि६त०। वृके

**गोवन्दनी** स्त्री गवि भूमौ वन्द्यते वन्द—कर्म्मणि ल्युट् ङीप्। १प्रियङ्गौ,अमरः २पीतदण्डोत्पले रत्नमाला।

**गोवर** न० गोषु व्रियते वृ—वा०अ। “गोष्ठान्तर्गोखुरक्षुण्णशुष्क-चूर्णितगोमयम्। गोवरं तत्समाख्यातं वरिष्ठं रस-साधने” भावप्र० उक्ते शुष्कगोमयचूर्णे (गेटा)

**गोवर्द्धन** न० वृध—णिच् भावे ल्युट् ६त०। १गवां वर्द्धने। करणे ल्युट्। २गिरियज्ञभेदे तत्प्रकारो गोयज्ञशब्दे दृश्यः वृधि—णिच्—कर्त्तरि ल्यु ६त०। ३वृन्दावनस्थे पर्व्वत-भेदे पु० तस्य पूजाकालो हरिभक्तिविलासे१६वि० उक्तो यथा “प्रातर्गोवर्द्धनं पूज्य द्यूतञ्चैव समाचरेत्। भूषणीयास्तथा गावः पूज्याश्च दोहवाहनाः। श्री-कृष्णदासवर्य्योऽयं श्रीगोवर्द्धनभूधरः। शुक्लप्रतिपदि प्रातः कार्त्तिकेऽम्बरोऽत्र वैष्णवैः”। “प्रातर्गोवर्द्धनं पूज्य रात्रौ जागरणं चरेत्” इति क्वचित् पाठः। तस्मा-त्तदिदं कर्म्म गोवर्द्धनप्राधान्येन गोप्रधान्येन च ख्यात-मप्येकमेव ज्ञेयम्। तत्र दिननिर्णयमाह देवलः “प्रतिपद्दर्शसंयोगे क्रीडनन्तु गवां मतम्। परविद्धान्तु यः कुर्य्यात् पुत्रदारधनक्षयः”। निर्णयामृतधृतं पुरा-णान्तरवचनम् “या कुहूः प्रतिपन्मिश्रा तत्र गाः पूजयेन्नृप !। पूजामात्रेण वर्द्धन्ते प्रजा गावो महो-पते !। ततः प्रातर्गोवर्द्धनं पूज्येति पूर्वोक्तातात्पर्य्यकं द्वितीयासर्गस्तु सर्व्वथा निषिद्धः तद्यथा “नन्दायां दर्शने रक्षाबलिदानदशासु च। भद्रायां गोकुलक्रीड़ा देशनाशाय जायते”। पुराणसमुच्चये तु सम्भावितचन्द्रो-दयो द्वितीयासंयोग एव निषिध्यते “गवां क्रीडा दिने यत्र रात्रौ दृश्येत चन्द्रमाः। सोमोराजा पशून् हन्ति सुरभी पूजकांस्तथा”। तदुदयसम्भावनञ्च निर्णयामृते निर्णीतं यथा “प्रतिपद्यापराह्णिकत्रिमुहूर्त्तव्यापिन्यां द्वितीयायां चन्द्रदर्शनं सम्भाव्यते तदुक्तमग्न्याधान-विषये वृद्धशातातपेन” द्वितीया त्रिमुहूर्त्ता चेत् प्रति-पद्यापराह्णिकी। अन्वाधानञ्चतुर्दश्यां परतः सोम-दर्शनादिति”। अपराह्णश्च पञ्चधा विभक्तस्याह्नश्चतुर्थो भागः। ततश्च यत्र प्रतिपदि पराह्णत्रिमुहूर्त्तव्यापिनी द्वितीया तत्र चन्द्रदर्शनसम्भावनमिति। अन्यदा तूत्तरैव प्रतिपत्तत्र ग्रहीता तथैवोक्तं पुराणसमुच्चये “वर्द्धमानतिथौ नन्दा यदा सार्द्धत्रियामिका। द्वितीया वृद्धिगामित्वादुत्तरा तत्र चोच्यते”। किञ्च। यदा पूर्णप्रतिपत् परत्र निष्-क्रामति तदाप्युत्तरैव कार्य्या यथोक्तं भविष्योत्तरे “यथा द्वादशभिर्मासैर्मासो वृद्धो मलिम्लुचः। तथैवाहोरात्र-वृद्ध्या तिथिः प्रोक्तो मलिम्लुचः। यथा मलिम्लुचः पूर्व-स्त्याज्योग्राह्यस्तथा परः। त्याज्या तिथिस्तथा पूर्वा ग्राह्या चैव तथोत्तरेति” निर्णयामृतमतम् किन्तु वञ्जुलीन्यायेन दैवं स्यात्तु शक्यते। तद्वदत्रापि देवलादिवचनप्रामाण्य-मस्तीति। अथ गोवर्द्धनपूजाविधिः। तत्रैव पाद्मे “मथुरायाश्च पश्चात्तत्र कृत्वा गोवर्द्धनं गिरिम्। गोमयेन महास्थूलं तत्र पूज्यो गिरिर्यथा। मथुरायां तथा साक्षात् कृत्वा चैव प्रदक्षिणम्। वैष्णवं धाम संप्राप्य

मोदते हरिसन्निधौ"। पूजामन्त्रः। "गोवर्द्धन! धराधार! गोकुलत्राणकारक!। विष्णुबाहुकृतोच्छ्रायो गवां कोटिप्रदो भव" गोपूजामन्त्रः स्कान्दे तत्रैव "लक्ष्मीर्या लोकपालानां धेनुरूपेण संस्थिता। घृतं वहति यज्ञार्थे मम पापं व्यपोहतु। अग्रतः सन्तु मे गावो गावो मे सन्तु पृष्ठतः। गावो मे पार्श्वतः सन्तु गवां मध्ये वसाम्यहम्"। अथ तत्र गोक्रीड़ा तत्रैव "क्रोधापयेद्वापयेद्वा गोमहिष्यादिकं ततः। दृष्यान कर्षयेद्गोपैरुक्तिप्रत्युक्तिवादनात्"। पाद्मे च तत्रैव "क्रीड़ापादेस्तथा भूपा क्रीडनं वारणान्तथा"। तत्कालादप्रभृति तत्रैव "एवं गोवर्द्धनो नाम पूजनीयो विधानतः। गोवर्द्धनमखोरस्यः कृष्णसन्तोषकारकः"। "गोवर्द्धनस्याकृतिरन्वकारि" माघः।

**गोवर्द्धनधर** पु० गोवर्द्धनं वृन्दावनस्थपर्वतभेदं धरति धर-अच् ६तत्०। श्रीकृष्णे नन्दनन्दने तस्य तद्धारणकथा हरि० ७५अ० यथा "गवां तत् कदनं दृष्ट्वा दुर्दिनागमजं महत्। गोपांश्चा सन्ननिधनान् कृष्णः कोपं समादधे। स चिन्तयित्वा संरब्धो दृष्टोपायो मयेति च। आत्मानमात्मना वाक्यमिदमूचे प्रियंवदः। अयाहमिममुत्पाद्य सकाननवनं गिरिम्। कल्पयेयं गवां स्थानं वर्षत्राणाय दुर्द्धरम्। अयं धृतो मया शैलः पृथ्वीगृहमिवापरम्। त्रास्यन्ते सव्रजा गावो मद्वश्याश्च भविष्यन्ति। एवं सञ्चिन्तयित्वा तु कृष्णः सत्यपराक्रमः। बाहोर्बलं दर्शयिष्यन् समीपे तं महीधरम्। दोर्भ्यामुत्पाटयामास कृष्णो गिरिरिवापरः। स धृतः सङ्गतो मेघैर्गिरिः सव्येन पाणिना। गृहभावङ्गतस्तत्र गृहाकारेण वर्ष्मणा"। "धृतं गोवर्द्धनं दृष्ट्वा परित्रातञ्च गोकुलम्। कृष्णस्य दर्शनं शक्रो रोचयामास विस्मितः" हरि० ७६ अ०।

**गोवर्द्धनधारिन्** पु० गोवर्द्धनं नगं धारयति धारि-णिनि। नन्दनन्दने श्रीकृष्णे। [ वन्ध्यायां गवि।

**गोवशा** स्त्री वशा वन्ध्या गौः जात्या समासे परनि०।

**गोवाट** न० ६तत्०। गोशालायां गोष्ठे "सार्गलद्वारगोवाटमध्ये गोस्थानसङ्कुलम्" हरिवं० ६१। "गोवाटेषु च ये वृक्षाः परिवृत्तार्गलेषु च। सर्व्वे गोष्ठाग्निषु गताः जयमक्षयवर्चसः हरिवं० ६५ अ०।

**गोवास** पु० वस आधारे घञ्। ६तत्०। गवां वासस्थाने गोष्ठे "निवेशनमथो जग्मुर्जरासन्धस्य धीमतः। गोवासमिव वीक्षन्तः सिंहा हैमवता यथा" भा० स० २० अ०।

**गोवासदासन** पु० प्राच्ये देशभेदे तत्र भवः "एङ् प्राचां देशे" पा० एङाद्येर्वृद्धसंज्ञत्वात् छ। गोवासदासनीय तत्र भवे त्रि० तद्राजे पु० "गोवासदासनीयानां वशातीनाञ्च भारत!। प्राच्यानां वाटधानानां भोजानाञ्चाभिमानिनाम्" भा० द० २३अ०।

**गोवासन** पु० गां वासयति वस-णिच्-ल्यु ६तत्०। गवां वासयितरि ब्राह्मणभेदे। "गोवासना ब्राह्मणाश्च दासनीयाश्च सर्व्वतः। प्रीत्यर्थं ते महाराज। धर्म्मराजो महात्मनः" भा० स० ५१अ०।

**गोविकर्त्त** पु० गां विकृन्तति वि+कृत-अण् उप० स०। १गोघातके २कर्षके चालिके च। "रौद्रीयजमानस्याक्षावापगोविकर्त्तेभ्यो गवेधुकाम्" कात्या० श्रौ० १५।३।१२। अप्रकृतां गां भूमिं विकृन्तति गोविकर्त्तः कर्षुकः गोहिंसको व्याधो वा। "अक्षावापस्य गृहेभ्यो गोविकर्त्तस्य च गवेधुकां सम्भृत्य" शत० ब्रा० ५।३।१।१०। "गोविकर्त्तः मृगयासहायभूतो गोहिंसको व्याधः" भा०।

**गोविकर्त्तृ** पु० त्रि० गां विकृन्तति वि+कृत-तृच् ६तत्०। पाकाद्यर्थं गोघातके। "आरालिको गोविकर्त्ता सूपकर्त्ता नियोधकः। आसं युधिष्ठिरस्याहम्" भा० वि० २अ०। "नियोधकः बाहुयुद्धकारी।

**गोवितत** पु० गावो वितता अत्र। गोभूयिष्ठे अश्वमेधयज्ञे "याजयामास तं कण्वो विधिवद्भूरिदक्षिणम्। श्रीमान् गोविततं नाम वाजिमेधमवाप सः" भा० आ०७४अ०। गोविनतोऽप्यत्र। "गोविनतेन शतानीकः" शत० ब्रा० १३।५।४।१६। "आदाय सत्वा दशमास्यमश्वं शतानीको गोविनतेन" शत०ब्रा० १३।५।४।२१ "गोविनतो नाम वक्ष्यमाणस्तोमविशेषोऽश्वमेधः" भा०। तत्स्तोमभेदाः। "चतुर्विंशाः पवमानाः, त्रिवृदस्थावर्तं चतुश्चत्वारिंशाः पवमाना एकविंशान्याज्यानि त्रिणवान्युक्थान्येकविंशानि पृष्ठानि षट्त्रिंशाः पवमानास्तर्यास्त्रे गवाभ्यावर्त्तमग्निष्टोमसामाद्येकविंशान्युक्थान्येकविंशः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिः" ता० ब्रा० उक्ताः।

**गोविदांपति** पु० गां वेदवाणीं विदन्ति गोविदः वेदज्ञास्तेषां पतिः अलुक्स०। परमेश्वरे "आनन्दः सुरानन्दो गोविन्दो गोविदांपतिः" विष्णुस०।

**गोविन्द** पु० गां वेदमयीं वाणीं गां भुवं धेनुं स्वर्गं वा विन्दति "गवादिषु संज्ञायाम्" पा०श, इत०। विष्णौ वराहरूपेण भुव ऐश्वर्य्यप्राप्तेः इन्द्रेण स्वर्गस्य निवेदनात् मत्स्यरूपेण वेदस्योद्धारणात् गोभिर्वेदान्तवाक्यैः विद्यते इति वा तस्य तथात्वम् "गोभिरेव यतो वेद्यो गोविन्दः समुदाहृतः" विष्णुसहस्र० भाष्यधृतवाक्यम्" "नष्टां तु धरणीं पूर्व्वमविन्दत् यत् गुहागताम्। गोविन्द इति तेनाहं देवैर्वाग्भिरभिष्टुतः" भा०शा०३४४अ०। "गौरेषा भवतो वाणी तां च वेदयते भवान्। गोविन्दस्तु ततोदेवमुनिभिः कथ्यते भवान्।" तद्भाष्यधृतहरिवं०वाक्यम्। "अहं किलेन्द्रो देवानां त्वं गवामिन्द्रतां गतः। गोविन्द इति लोकास्त्वां स्तोष्यन्ति भुवि शाश्वतम्" हरिवं०७६ अ०। गोभिश्च गोविन्दस्याभिषेककथा हरिव० ७६ अ० यथा "ततः शक्रस्तु तान् गृह्य घटान् दिव्यपयोधरान्। अभिषेकेण गोविन्दं योजयामास योगवित्। दृष्ट्वाभिषेच्यमानं च गावस्तम् सह यूथपैः। स्तनैः प्रस्नवसंयुक्तैः सिषिचुः कृष्णमव्ययम्।" अभिषिक्तं तु तं गोभिः शक्रो गोविन्दमव्ययम्" इति च।

**गोविन्दद्वादशी** स्त्री गोविन्दप्रिया द्वादशी। फाल्गुनशुक्लद्वादश्याम् तत्स्वरूपविधानादि ब्रह्म पु० यथा "फाल्गुनामलपक्षे तु पुष्यर्क्षे द्वादशी यदि। गोविन्दद्वादशी नाम महापातकनाशिनी। तस्यामुपोष्य विधिवन्नरः संक्षीणकल्मषः। प्राप्नोत्यनुत्तमां सिद्धिं पुनरावृत्तिदुर्लभामिति"। "आमर्दकी द्वादशीति लोके ख्यातेयमेव हि। यत्र आमर्द्दकीपूजा व्रतमस्यां विशेषतः"। तदुक्तं ब्राह्मे पापनाशिनीमाहात्म्यप्रसङ्गे "फाल्गुने तु विशेषेण विशेषः कथितो नृप! आमर्दक्याव्रतं पुण्यं विष्णुलोकप्रदं नृणाम्"। प्रभासखण्डे च देवीमहेश संवादे "फाल्गुनस्य सिते पक्षे एकादश्यामुपोषितः। स्नात्वा नद्यां तडागे वा वाप्यां कूपे गृहेऽपि वा। गत्वा गिरौ वने वापि यत्र सा प्राप्यते शिवा। क्षीरोदे मथ्यमाने तु यदा वृक्षः समुत्थितः। आमर्दाच्चैव दैत्यानां तेन साऽऽमर्दकी स्मृता। शिवा लक्ष्मीः स्मृतो वृक्षः सेव्यते सुरसत्तमैः। देवैर्ब्रह्मादिभिः सर्वैर्द्धात्रोऽसौ वैष्णवः स्मृतः। तत्र गत्वा हरिः पूज्यो वृक्षमूलेऽथ वा शिवा। पूजया पुष्पैः शुभैरात्रौ कार्य्यं जागरणं हरेः। करकं जलपूर्णन्तु कर्त्तव्यं पात्रसंयुतम्। हविष्यान्नन्तु कर्त्तव्यं दीपः कार्य्यो विधानतः। एवं जागरणं कार्य्यं कथाश्रवणतत्परैः। मुच्यन्ते देहिनः पापैः कलिजैः कायसम्भवैः। देहान्ते च नराः सर्वे पूज्यन्ते हरिमन्दिरे"।

**गोविष्** स्त्री इत०। गोमये अमरः।

**गोविषाण** न० इत०। गोः शृङ्गे (सिङ्) "अनर्थकमनायुष्यं गोविषाणस्य भक्षणम्। दन्ताश्च परिमृद्ध्यन्ते रसश्च न च लभ्यते" भा० शा० १४० अ०। "नैपालं वा गोविषाणोद्भवं वा" सुश्रुतः। गोविषाणं साधनतयाऽस्त्यस्य ठन्। गोविषाणिक गोविषाणनिर्मिते वाद्यभेदे पु०। "पटहान् झर्झरांश्चैव क्रकचान् गोविषाणिकान्" भा० शल्य० ४७ अ०।

**गोविष्ठा** स्त्री इत०। गोमये राजनि०।

**गोवीथि** स्त्री गगनस्थे नक्षत्रभेदत्रयरूपे मार्गभेदे। "नागगजैरावतवृषभगोजरद्गवमृगाजदहनाख्याः। अश्विन्याद्याः कैश्चित्त्रिभाः क्रमाद्वीथयः कथिताः"। "पैतामहात् त्रिभात्त्रिस्रो गोवीथ्यामश्विन्यः पौष्णं द्वे चापि भद्रपदे" वृ०स० ६अ०।

**गोवीर्य्य** न० इत०। गवां वीर्य्ये "भूतावनिश्रितायां तु दशमं भागमाप्नुयुः। लाभगोवीर्य्यशस्यानां वाणिगोपकृषीवलाः" नारद स०।

**गोवृन्द** न० इत०। गोसमूहे हला०।

**गोवृन्दारक** न० गौर्वृन्दारकमिव उपमितसमासे व्याघ्रादेराकृतिगणत्वेन सिद्धेऽपि "वृन्दारकनागकुञ्जरैः पूज्यमानम्" पा० सामान्यप्रयोगेऽपि अस्य समासार्थं पुनर्ग्रहणमिति सि० कौ०। श्रेष्ठे गवि।

**गोवृष** पु० गवि वर्षति रेतः वृष—क। श्रेष्ठे वृषे। "मणिः सूत्र इव प्रोतो नस्योत इव गोवृषः" भा० व० ३०अ०। "गोवृषं वत्सकं वापि यथेच्छं विनिवेदयेत्" आ०त० भविष्यपु०। गोवृषं श्रेष्ठवृषम्" रत्नाकरः। "भगवान् गोवृषध्वजः" भा०अनु०८४अ०। "ग्राम्याणां गोवृषश्चासि भवां लोकप्रपूजितः" भा० आनु० १४अ०। "मृगाणामथ शार्दूलं गोवृषन्तु गवामपि" हरिवंशे०४अ०। गौश्च वृषश्च तौ साहचर्य्यान्नास्त्यत्र अच्। सामान्यविशेषद्योतके गोबलीवर्द्दन्याये, गोबलीवर्दन्यायोऽप्यत्र

**गोव्याघ्र** न० गौश्च व्याघ्रश्च सदाविरोधित्वात् समाहा०द्व०। गोव्याघ्रसमाहारे।

**गोव्याधिन** पु०गोत्रप्रवर्त्तके ऋषिभेदे प्रवराध्याये मूलं दृश्यम्

**गोव्रज** पु० ६त०। १गोसमूहे। गावो व्रजन्त्यत्र व्रज—आधारे

क। २गोगतिस्थाने ३गोष्ठे च पु० "न मूत्रं पथि कुर्व्वीत न भस्मनि न गोव्रजे" "नाधीयीत श्मशानान्ते ग्रामान्ते गोव्रजेऽपि वा"। "कृतवापनो निवसेद् ग्रामान्ते गोव्रजेऽपि वा" मनुः।

**गोव्रत** न० गोहत्यानिमित्तं गोषु व्रतम्। १गोहत्यानिमित्ते गोषु व्रतभेदे तच्च व्रतं विष्णुनोक्तं यथा।

"मासमेकं कृतवापनो गवानुगमनं कुर्यात् आसीनास्वासीत स्थितासु स्थितः स्यात् अवसन्नाश्चोद्धरेत् भयेभ्यश्च रक्षेत् तासां शीतादित्राणमकृत्वा नात्मनः कुर्यात् गोमूत्रेण स्नायात् गोरसैश्च वर्त्तेत एतद् गोव्रतं गोवधे कुर्यात्" पराशरस्तु सापवादं तत्र विशेषमाह "गवां संरक्षणार्थाय न दुष्येद्रोधबन्धयोः। तद्वधन्तु न तं विद्यात् कामाकामकृतन्तथा। अङ्गुष्ठमात्रस्थूलो वा बाहुमात्रः प्रमाणतः। आर्द्रस्तु सपलाशश्च दण्डइत्यभिधीयते। दण्डादूर्द्ध्वं यदन्येन प्रहरेद्वा निपातयेत्। प्रायश्चित्तं चरेत् प्रोक्तं द्विगुणं गोव्रतञ्चरेत्। रोधबन्धनयोक्त्राणि घातनञ्च चतुर्विधम्। एकपादञ्चरेद्रोधे द्विपादं बन्धने चरेत्। योक्त्रेषु पादहीनं स्याच्चरेत् सर्वं निपातने। गोचारे च गृहे वापि दुर्गेष्वपि समेष्वपि। नदीष्वपि समुद्रेषु खातेऽप्यथ दरीमुखे। दग्धदेशे स्थिताः गावस्तत्मनाशोध उच्यते। योक्त्रदामकडोरैश्च घण्टाभरणभूषणैः। गृहे वापि वने वापि बद्धा स्यान्मौङ्ख्ता यदि। तदेव बन्धनं विद्यात् कामाकामकृतञ्च तत्। हलेषु शकटे पङ्क्तौ भारे वा पीडितोनरैः। गोपतिर्म्मृत्युमाप्नोति योक्त्रे भवति तद्वधः। मत्तः प्रमत्तउन्मत्तश्चेतनोवाप्यचेतनः। कामाकामकृतक्रोधाद्दण्डैर्हन्यादथोपलैः। प्रहृता वा मृता वापि तद्धि हेतुर्निपातने। मूर्च्छितः पतितोवापि दण्डेनाभिहतः स तु। उत्थितस्तु यदा गच्छेत् पञ्च सप्त दशैव वा (पदानि)। ग्रासं वा यदि गृह्णीयात्तोयं वापि पिबेद् यदि। पूर्वव्याध्युपसृष्टश्चेत् प्रायश्चित्तं न विद्यते। पिण्डस्थे पादमेकन्तु द्वौ पादौ गर्भसम्मिते। पादोनं व्रतमुद्दिष्टं हत्वा गर्भमचेतनम्। पादेऽङ्गरोमवपनं द्विपादे श्मश्रुणोऽपि च। त्रिपादे तु शिखावर्जं सशिखन्तु निपातने। पादे वस्त्रयुगञ्चैव द्विपादे कांस्यभाजनम्। पादोने गोद्वयं दद्याच्चतुर्थं गोद्वयं स्मृतम्। निष्पन्नसर्वगात्रन्तु दृश्यते वा सचेतनम्। अङ्गप्रत्यङ्गसम्पन्ने द्विगुणं गोव्रतं चरेत्। पाषाणेनैव दण्डेन गावोयेनाभिघातिताः। शृङ्गभङ्गे चरेत् पादं द्वौ पादौ तेन पातने। लाङ्गूले कृच्छ्रपादन्तु द्वौ पादावस्थिभञ्जने। त्रिपादञ्चैव कर्णे तु चरेत् सर्वं निपातने। शृङ्गभङ्गेऽस्थिभङ्गे च कटिभङ्गे तथैव च। यदि जीवति षण्मासान् प्रायश्चित्तं न विद्यते। व्रणभङ्गे च कर्त्तव्यः स्नेहाभ्यङ्गस्तु पाणिना। यवसञ्चापहर्त्तव्योयावद्दृढबलोभवेत्। यावत्सम्पूर्णसर्वाङ्गस्तावत्तं पोषयेन्नरः। गामेवं ब्राह्मणस्याग्रे नमस्कृत्य विसर्जयेत्। यद्यसम्पूर्णसर्वाङ्गोहीनदेहोभवेत्तदा। गोघातकस्य तस्यार्द्धं प्रायश्चित्तं विनिर्द्दिशेत्। काष्ठलोष्टकपाषाणैः शस्त्रेणोपहतो बलात्। व्यापादयति यो गान्तु तस्य शुद्धिं विनिर्दिशेत्। चरेत् सान्तपनं काष्ठे, प्राजापत्यन्तु लोष्टके। तप्तकृच्छ्रन्तु पाषाणे शस्त्रे चैवातिकृच्छ्रकम्। पञ्च सान्तपने गावः प्राजापत्ये तथा त्रयः। तप्तकृच्छ्रे भवन्त्यष्टावतिकृच्छ्रे त्रयोदश। प्रमापणे प्राणभृतां दद्यात्तत्प्रतिरूपकम्। तस्यानुरूपं मूल्यं वा दद्यादित्यब्रवीन्मनुः। अन्यत्राङ्कनलक्ष्मभ्यां वाहने दाहने तथा। सायं संयमनार्थन्तु न दुष्येद्रोधबन्धयोः। अतिदाहेऽतिवाहे च नासिकाभेदने तथा। नदीपर्वतसञ्चारे प्रायश्चित्तं विनिर्द्दिशेत्। अतिदाहे चरेत् पादं द्वौ पादौ वाहने चरेत्। नासिके पादहीनन्तु चरेत् सर्वं निपातने। दहनात्तु विपद्येत अनड्वोवापि यन्त्रितः। उक्तं पराशरेणैव ह्येकपादं यथाविधि। रोधबन्धनयोक्त्रञ्च भारः प्रहरणं तथा। दुर्गप्रेरणयोक्त्रञ्च निमित्तानि वधस्य षट्। बन्धपाशसुगुप्ताङ्गोम्रियते यदि गोपशुः। भवने तस्य नाथस्य पापे कृच्छ्रार्द्धमर्हति। न नारिकेलैर्नच शाणवालैर्नचापि मौञ्जैर्नच बद्धशृङ्खलैः। एतैस्तु गावोन निबन्धनीयाबद्धा तु तिष्ठेत् परशुं गृहीत्वा। कुशैः काशैश्च बध्नीयाद्गोपशुं दक्षिणामुखम्। पाशलग्नाग्निदग्धेषु प्रायश्चित्तं न विद्यते। यदि तत्र भवेत् मृत्युः प्रायश्चित्तं कथं भवेत्?। जपित्वा पावनीं देवीं मुच्यते तत्र किल्विषात्। प्रेरयन् कूपवापीषु वृक्षच्छेदेषु पातयन्। गवाशनेषु विक्रीणंस्ततः प्राप्नोति गोवधम्। आराधितस्तु यः कश्चिद्भिन्नकक्षोयदा भवेत्। श्रवणं हृदयं भिन्नं मग्नोवा कूपसङ्कटे। कूपादुत्क्रमणे चैव भग्नोवा ग्रीवापादयोः। स एवं म्रियते, तत्र त्रीन् पादांस्तु समाचरेत्। कूपखाते तटीबन्धे नदीबन्धे प्रपासु च। पानीयेषु विपन्नानां प्राय-

श्चित्तं न विद्यते। कूपखाते तटीखाते दीर्घखाते तथैव च। अन्येषु धर्मखातेषु प्रायश्चित्तं न विद्यते। वेश्मद्वार निवासेषु योनरः खातमिच्छति। स्वकार्य्यं गृहखातेषु प्रायश्चित्तं विनिर्द्दिशेत्। निशि बन्धनिरुद्धेषु सर्पव्याघ्र-हतेषु च। अग्निविद्युद्विपन्नानां प्रायश्चित्तं न विद्यते। ग्रामघाते शरौघेण वेश्मबन्धनिपातने। अतिवृष्टिहता-नाञ्च प्रायश्चित्तं न विद्यते। संग्रामे प्रहतानाञ्च ये दग्धा वेश्मकेषु च। दावाग्नौ ग्रामघाते वा प्रायश्चित्तं न विद्यते। यन्त्रिता गौश्चिकित्सार्थं मूढगर्भविमोचने। यत्ने कृते विपद्येत प्रायश्चित्तं न विद्यते। व्यापन्नानां बहूनाञ्च बन्धने रोधनेऽपि वा। भिषग्मिथ्योपचारे च प्रायश्चित्तं विनिर्द्दिशेत्। गोवृषाणां विपत्तौ च यावन्तः प्रेक्षकाजनाः। न वारयन्ति तां तेषां सर्वेषां पातकं भवेत्। एकोहतोयैर्बहुभिः समस्तैर्न ज्ञायते कस्य हतोऽभिघाता-त्। दिव्येन तेषामुपलभ्य हन्ता निवर्त्तनीयोन्टपसन्नि-युक्तैः। एका चेद्बहुभिः कापि दैवाद्व्यापादिता भवेत्। पादं पादञ्च हत्यायाश्चरेयुस्ते पृथक् पृथक्। हतेषु रुधिरं दृश्यं व्याधिग्रस्तः कृशोभवेत्। नाना भवति दृष्टेषु एव-मन्वेषणं भवेत्। मनुना चैवमेकेन सर्वशास्त्राणि जान-ता। प्रायश्चित्तन्तु तेनोक्तं गोषु चान्द्रायणं चरेत्। केशानां रक्षणार्थाय द्विगुणं गोव्रतं चरेत्। द्विगुणे व्रतआदिष्टे दक्षिणा द्विगुणा भवेत्। राजा वा राजपुत्रोवा ब्राह्म-णोवा बहुश्रुतः। अकृत्वा वपनं तस्य प्रायश्चित्तं विनि-र्दिशेत्। यस्य न द्विगुणं दानं केशस्य परिरक्षितः। तत्पापं तस्य तिष्ठेत वक्ता च नरकं व्रजेत्। यत्कि-ञ्चित् क्रियते पापं सर्वं केशेषु तिष्ठति। सर्वान् केशान् समुद्धृत्य च्छेदयेदङ्गुलिद्वयम्। एवं नारीकुमारीणां शि-रसोमुण्डनं स्मृतम्। न स्त्रियाः केशवपनं न दूरे श-यनाशनम्। न च गोष्ठे वसेद्रात्रौ न दिवा गाअनुव्रजेत्। नदीषु सङ्गमे चैव अरण्येषु विशेषतः। न स्त्रीणामजिनं वा सोव्रतमेवं समाचरेत्। त्रिसन्ध्यं स्नानमित्युक्तं सुरा-णामर्च्चनं तथा। बन्धुमध्ये व्रतं तासां कृच्छ्रचान्द्रायणा-दिकम्। गृहेषु नियतं तिष्ठेच्छुचिर्नियममाचरेत्। इह योगावधं कृत्वा प्रच्छादयितुमिच्छति। स याति नरकं घोरं कालसूत्रमसंशयम्। विमुक्तोनरकात्तस्मान्मर्त्त्यलोके प्रजा-यते। क्लीवोदुःखी च कुष्ठी च सप्त जन्मानि वै नरः। तस्मात् प्रकाशयेत् पापं स्वधर्मं सततं चरेत्। स्त्रीबाल-भृत्यगोविप्रेष्वतिकोपं विवर्जयेत्"। अधिकं गोहत्याशब्दे दृश्यम्। गोहितं व्रतम्। २गोसेवारूपे व्रते गोशब्दे तत्परिचर्य्याप्रकरणे उदा॰तत्प्रकारश्च तत्र दृश्यः।

**गोशकृत्** न॰ ६त॰। गोमये जटा॰। "उदकुम्भं सुमनसो गोशकृन्मृत्तिकाः कुशान्। पयोघृतं वाऽऽमरणाद्गोशकृद्-रसमेव वा" मनुः।

**गोशर्य्य** त्रि॰ शृ—कर्त्तरि बा॰ यत् गौः शर्य्या शीर्णा यस्य। शीर्णगौ शयौ" "याभिर्गोशर्य्यमावतम्" ऋ॰ ८।८।२०। "गोशर्य्यः शयुः" भा॰।

**गोशाल(ला)** स्त्री न॰। गवां शाला "विभाषा सेनेत्यादिना" वा क्लीवता। गवां शालायाम्। तत्रजातः एकादित्वेन प्राचां मते वृद्धसंज्ञत्वाच् छ, अन्यमते अण्, तस्य स्थाना-न्तगोशालेत्यादि पा॰ लुक्। गोशाल तत्र जाते त्रि॰। स्त्रीत्वपक्षे तु न लुक्। गोशालीय गौशाल वा तत्र-जाते त्रि॰ इति भेदः।

**गोशीर्ष** पु॰ गोः शीर्षमिव शीर्षं यस्य। १ऋषभपर्व्वते तस्य गोशीर्षाकारशृङ्गत्वात् तथात्वम्। स आकरत्वेनास्त्यस्य अच्। २चन्दनभेदे। गोशीर्षोद्युत्पत्तिकथा रामा॰ कि॰ का॰४१स॰ ३८।४०श्लो॰। "तञ्च देशमतिक्रम्य महान्वृषभ संस्थितिः। सर्व्वरत्नमयः श्रीमान्वृषभो नाम पर्व्वतः। गोशीर्षकं पद्मकं च हरिश्यामं च चन्दनम्। दिव्य-मुत्पद्यते तत्र तच्चैवाग्निसमप्रभम्"। तदाकारे ३अस्त्र-भेदे च "अयोगुडैर्भिन्दिपालैर्गोशीर्षैर्मुखलैरपि" भा॰ द्रो॰ १७९ अ॰। ६त॰। ४गोमुण्डे न॰।

**गोशीर्षक** पु॰ गोः शीर्षमिव कायति कै—क। १द्रोणी पुष्पीवृक्षे रत्नमा॰ स्वार्थे क। २चन्दनभेदे गोशीर्ष-शब्दे उदा॰।

**गोशृङ्ग** पु॰ गोः शृङ्गमिव शृङ्गमस्य। ऋषिभेदे "हिमवद्-वनमध्यस्थो गोशृङ्ग ऋषिसत्तमः" "गोशृङ्गस्य ऋषेस्तत्र दृश्यते तथाश्रमम्" स्क॰ पु॰ प्रभा॰ ख॰। २दक्षिण-देशस्थे पर्व्वतभेदे च। "तथैव सहदेवोऽपि प्रययौ दक्षिणां दिशम्" इत्युपक्रमे "निषादभूमिं गोशृङ्गं पर्व्वतप्रवरं तथा। तरसैवाजयच्छ्रीमान्" भा॰ स॰ १०अ॰। ६त॰। ३गोविषाणे न॰। तदाकारोऽस्त्यस्य अच्। ४वर्व्वर वृक्षे पु॰ राजनि॰।

**गोश्रुति** पु॰ व्याघ्रपद्गोत्रापत्ये ऋषिभेदे "तद्धैतत् सत्य-कामोजाबालो गोश्रुतये वैयाघ्रपद्यायोवाच" छा॰ उ॰।

**गोश्व** पु॰ द्वि॰ व॰। इतरे॰ द्व॰ पररूपम् "गवाश्वप्रभृतीनि च" पा॰ "यथोच्चारितानि तथैव साधूनि स्युः" सि॰

कौ० । पक्षे नैकवद्भावः न क्लीवता च । गवि अश्वे च । पक्षे एकवद्भावः अवङ् च । तत्रार्थे न० ।

**गोष(स)खि** पु० गौः सखाऽस्य वेदे वा षत्वम् । १गोसहायके "स्तोता मे गोषखा स्यात्" ऋ० ८।१४।१। "यस्मिन्निन्द्रः सोमं पिबति गोसखायम्" ऋ० ५।३७।४। ६त० अच् समा० न षत्वम् । २गोः सहाये

**गोषड्गव** न० गवां षट्कम् गो+षड्गवच् । गोषट्के एवं छागषड्गवादयश्छागादिषट्के न० ।

**गोषणि(सनि)** त्रि० गां सनोति ददाति सन–दाने इन् सवनादिषु पाठात् न नित्यं षत्वम् किन्तु पूर्व्वपदात् वा षत्वम् । १गोदातरि "यस्ते अश्वसनिर्भक्षोयोगोषनिस्तस्य" यजु० ८।१२। पक्षे षत्वम् । "गोषणिं धियमश्वं वाजसातुत" ऋ० ६।५३।१०।

**गोषद्** त्रि० गवि वाचि सीदन्ति सद–क्विप् पूर्व्वपदात् षत्वम् । स्वरसहायके । गोषदितिशब्दोऽस्त्यत्राध्यायेऽनुवाके वा गोषदा० वुन् । गोषदक गोषच्छब्दयुक्ते अध्याये अनुवाके च पु० । अच् । गोषद तत्रार्थे त्रि० ।

**गोषदादि** पु० अध्यायानुवाकयोः "गोषदादिभ्यो वुन्" पा० मत्वर्थे वुन्प्रत्यय निमित्ते शब्दगणे । स च गणः पा०ग० सू० उक्तो यथा गोषद् इषेत्वा मातरिश्वन् देवस्यत्वा दैवीरापः कृष्णास्या खरेष्ठा देवीधियः रक्षोहण युञ्जान अञ्जन प्रभूत प्रतूर्त्त कृशानु गोषद्" ।

**गोषन्** त्रि० गां सनोति सन–विच् ६त० "सनोतेरनः" पा० नान्तस्य नित्यषत्वनिषेधेऽपि पूर्वपदात् वा षत्वम् । गोदातरि "शंसामि गोषणो नपात्" ऋ० ४।३२।२२ ।

**गोषा** त्रि० गां सनोति सन–विट् ङा । सनोतेरनः" पा० षत्वम् । गोदातरि "गोषा इन्द्रोन्नृषामसि" सि० कौ० धृता श्रुतिः "इत्था गृणन्तो महिनस्य शर्म्मन् दिवि ष्याम पार्य्ये गोषतमाः" ऋ० ६।३३।५। अत्र "वह्वपेत्यादि" पा० सू० गोषाशब्दस्य तमपि परे ह्रस्वः ।

**गोषा(सा)ति** स्त्री सो–भावे–क्तिन् ऊतियूतीत्यादिना नि०, सन–भावे क्तिन् ङा वा ६त० षत्वम् । १गोलाभे २गोदाने च "गोषाता यस्य ते गिरः" ऋ० ८।८४।७। "गोषातौ गवां लाभे" भा० सप्तम्या डाच् एव सुत्रत्व । गवां सातिर्लाभोऽस्य । २लब्धगौ लब्धपशुके त्रि० "यत्र गोषाता धृषितेषु खादिषु" ऋ० १०।३८।१। गोषातौ लब्धपशुके" भा० ।

**गोषादी** स्त्री गां सादयति सद–णिच्–अण् उ० स० षत्वं गौरा० ङीष् । पक्षिभेदे । "गोषादी देवानां पत्नीभ्यः" यजु० २४।२४। ।

**गोषेधा** स्त्री गोरिव सेध उत्सेधोयस्याः पूर्वपदात् षत्वम् । दुर्लक्षणायां स्त्रियाम् । "विश्वपदीं वृष्दतीं गोषेधां विधमामुत" अथ० १।१८।४। [ जुगोष्ट ।

**गोष्ट** संघाते भ्वा० आत्म० अक० सेट् । गोष्टते अगोष्टिष्ट ।

**गोष्टोम** पु० गोसंज्ञः स्तोमोऽत्र । उकथ्यसंस्थे बहुमन्त्रात्मके १स्तोमभेदे । २तदुपलक्षिते एकाहसाध्ये यागभेदे च "स एतान् स्तोमानपश्यत् ज्योतिर्गौरायुरितीमे वै लोका एते स्तोमा अयमेव ज्योतिरयमध्यमो गौरसावुत्तम आयुः" ता० ब्रा० ४।१।७।

"स पूर्व्वोक्तः प्रजापतिः एतान् स्तोमान् स्तोमशब्देन त्रिवृदादिस्तोमवन्त्यहानि लक्ष्यन्ते । तानि ज्योतिर्गौरायुरिति एतन्नामकान्यपश्यत् । तत्र ज्योतिरग्निष्टोमसंस्थः, गौरायुश्चैते उकथ्यसंस्थे० ज्योतिष इयं स्तोमकॢप्तिः । त्रिवृद्बहिष्पवमानं पञ्चदशान्याज्यानि पञ्चदशो माध्यन्दिनः पवमानः सप्तदशानि पृष्ठ्यानि सप्तदश आर्भव एकविंशोग्निष्टोमसामेति । अथ गोष्टोमस्य, पञ्चदशोबहिष्पवमानः त्रिवृदाज्यानि सप्तदशमाध्यन्दिनं सवनमेकविंशं तृतीयसवनम् । अथायुष्टोमस्य त्रिवृद्बहिष्पवमानं पञ्चदशान्याज्यानि सप्तदशमाध्यन्दिनं सवनमेकविंशं तृतीयसवनमिति । एते उक्ताः स्तोमा इमे लोका वै भूरादिकाः खलु, कः कतमोलोक इति बुभुत्सायामाह अयमेव लोकोज्योतिः, अयमध्यमोऽन्तरिक्षलोको वै असादुत्तमस्तृतीयः स्वर्लोक आयुः, स्तोमत्रयस्य लोकत्रयेण सह संख्यासाम्यात् तद्रूपता एतैः त्रिभिः स्तोमैः साधनैस्त्रीन् लोकान् प्राजनयदिति शेषःअथैतान् विधत्ते" भा० ।

"यदेते स्तोमा भवन्तीमानेव लोकान् प्रजनयन्त्येषु लोकेषु प्रतितिष्ठन्ति" ता० ब्रा० ८ । "यद्देषोऽतिरात्रो भवतीति वाक्यवदेतत्सर्वं व्याख्येयम् । अभिप्लवषडहस्योत्तरं त्र्यहं विधातुमाह" भा० "स एतन्त्र्यहं पुनः प्रायुङ्क्त तेन षड्हेन षट्क्रतून् प्राजनयत्" ता०ब्रा०९ ।"स प्रजापतिरेतं पूर्व्वोक्तं त्र्यहं पुनः प्रयुक्तवान् । गौरायुर्ज्योतिरिति क्रमोऽत्रावगन्तव्यः । तथा चापस्तम्बः "ज्योतिष्टोममग्निष्टोमं रथन्तरसामानमुक्थं बृहत्सामानमायुमुक्थं रथन्तरसामानं ज्योतिष्टोमं बृहत्सामानमिति । तेन षड्हेन षट् क्रतून् वसन्ता-

दीन् प्राजनयत् सृष्टवान्। अथार्थवादानुगुण्याय पूर्व्व-विहितेन त्र्यहेन संयुज्य इममुत्तरं त्र्यहं विधत्ते" भा०। "तदेष षडहो भवति ऋतूनेव प्रजनयन्ति ऋतुषु प्रतितिष्ठन्ति" ता० ब्रा० १०।

**गोष्ठ** न० गावस्तिष्ठन्त्यत्र घञर्थे क षत्वम्। गवां स्थाने अमरः। "गोष्ठेषु गोष्ठीकृतमण्डलासनान्" माघः। गोष्ठी बहुजनाः कर्त्तृतयास्त्यस्य अच्। २गोष्ठीकर्त्तव्ये श्राद्धभेदे न० "पितॄन् स्वदितमित्येव वाच्यं गोष्ठे तु सुश्रुतम्" मनुः "गोष्ठे गोष्ठीश्राद्धे "गोष्ठ्यां शुद्ध्यर्थमष्टमम्" इति विश्वामित्रेण द्वादशविधश्राद्धगणनायां गोष्ठश्राद्धस्य विधानात्" कुल्लू०।

**गोष्ठपति** पु० ६०। गोः स्थानाध्यक्षे अमरः।

**गोष्ठश्व** पु० गोष्ठे श्वा अचतुरेत्यादि अच् समा०। १गोष्ठस्थे शुनि तत्तुल्ये परहिंसके स्वगृहे स्थित्वा २परद्वेष्टरि च त्रिका०। षष्ठीसमासे तु न अच् समा०। गोष्ठश्वा इत्येव

**गोष्ठागार** न० ६त०। गोष्ठस्य सभाया बहुजनस्थानस्यागारम्। बहुजनागारे गृहे हारा०।

**गोष्ठाध्यक्ष** पु० ६०। गोष्ठपतौ।

**गोष्ठान** न० गोः स्थानं वेदे पूर्वपदात् षत्वम्। १गवां स्थाने गोष्ठे। "व्रजं गच्छ गोष्ठानम्" यजु० १।२५। लोके तु गोस्थानमित्येव। "गोष्ठं गोस्थानकम्" अमरः।

**गोष्ठा(पा)ष्टमी** स्त्री "कार्त्तिके शुक्लपक्षे तु स्मृता गोष्ठा-(पा)ष्टमी बुधैः। तद्दिने वासुदेवोऽभूत् गोपः पूर्वन्तु वत्सपः" इत्युक्तायामष्टम्याम् गोपाष्टमीशब्दे दृश्यम्।

**गोष्ठि** स्त्री गावो वाग्विशेषास्तिष्ठन्त्यत्र स्था—बा० कि ६त० षत्वम्। १गोष्ठीशब्दार्थे २परस्परसंलापे च। "आलस्यं मदमोहौ च चापलं गोष्ठिरेव च। स्तब्धता चाभिमानित्वं तथाऽत्यागित्वमेव च। तएते सप्त दोषाः स्युः सदा विद्यार्थिनां मताः" भा० उ० १५६२ श्लो०।

**गोष्ठी** स्त्री गावोऽनेकार्थाचस्तिष्ठन्ति अत्र स्था—घञर्थे क। ६त० अम्बाम्बेति षत्वम्" गौरा० ङीष्। १सभायां परिषदि। "तत्र गोष्ठीषु रथ्यासु सिद्धप्रव्रजितेषु च। भा० वि० ६। २परस्परालापे "गोष्ठीसुखमनुभवन्तस्तिष्ठन्ति" हितो०। ३पोष्यवर्गे च"। "विषं गोष्ठी दरिद्रस्य" चाणक्यः। ४समूहे गोष्ठशब्दे उदा०। सभायाम् अस्य पुंस्त्वमपि। "समुत्क्रुश्यान् पर्वतसन्निरोधान् गोष्ठान् हरीणां गिरिसन्निभाना:। भा० व० १७७ अ०।

**गोष्ठीपति** पु० ६त० १बहुपोष्यवर्गपालके २सभापतौ च।

**गोष्ठेक्ष्वेडिन्** पु० गोष्ठे क्ष्वेडते क्ष्विड—क्षे हे णिनि पात्रेसमि० नि०। प्रगल्भे। युक्तारोह्या० आद्युदात्ततास्य। एवं गोष्ठेगल्भ गोष्ठेपटु गोष्ठेपण्डितः गोष्ठेशूरः गोष्ठेविजित इत्येतेऽपि पात्रेसमिता नि०। सभाप्रगल्भे सभाकुशले। पूर्व्ववत् आद्युदात्ततावेषाम्।

**गोष्ठेशय** पु० गोष्ठे गोस्थाने शेते शी—अच् अलुक् स०। गोव्रतार्थं गोष्ठशयनकारके। "पञ्चगव्यं पिबेत् गोघ्नो मासमासीत संयतः। गोष्ठेशयो गोऽनुगामी गोप्रदानेन शुध्यति" याज्ञ०।

**गोष्ठ्य** त्रि० गोष्ठे भवः यत्। १गोष्ठे भवे। २रुद्रभेदे पु०। "नमोव्रज्याय च गोष्ठ्याय च" यजु० १६।४४।

**गोष्पद** न० गोः पदम्, गावः पद्यते यस्मिन् देशे वा "गोष्पदं सेवितासेवितप्रमाणेषु" पा० सेवितादौ सुट्। गोः पदजाते १गर्त्ते, २गोपदप्रमाणे च। ३गोभिः सेवितदेशे ४तदसेविते वनादौ च। "बाहुभ्यां सागरं तीर्त्वा लङ्घितुं गोष्पदं लघु" रामा०ल०६८स०। "भीष्मद्रोणार्णवं तीर्त्वा कर्णपाताल (वड़वानल) सम्भवम्। मा निमज्जस्व सगणः शल्यमासाद्य गोष्पदम्" भा० श० ७अ०। ५प्रभासक्षेत्रस्थे तीर्थभेदे। तत्स्थानादि स्क०पु० प्रभा० "इयं सरस्वती पुण्या सर्वदैव हि विद्यते। पञ्चस्रोताः प्रभासे तु दुष्प्रापा त्रिदशैरपि। तस्या यत्पञ्चमं स्रोतो न्यङ्कुमत्यास्तटानि च। तस्य मध्ये स्थितं तीर्थं गोष्पदेति च विश्रुतम्" "पापिनां मुक्तिदं तीर्थमाद्या रुद्र गया स्मृता। तदास्मिन् गोष्पदं नाम कलौ ख्यातं धरातले। यदा क्षीरोदमथनात् प्रसूता लोकमातरः। तदा देवि! समन्तात्तु ता गतास्तीर्थसन्निधौ। पदं तत्र निमग्नं च नन्दिन्याश्च शिलातले। शिलां खुराङ्कितां दृष्ट्वा जानुदेशाङ्कितां तथा" इत्युपक्रमे देवान् प्रति नन्दिनीवाक्यम्। "इदं मम पदं देवाः! शिलासंस्थं विराजते। गगनाङ्गणभूमिस्थं चन्द्रविम्बमिवापरम्। अद्य प्रभृति भो देवा! त्रैलोक्ये सचराचरे। गोष्पदं नाम विख्यातं लोके ख्यातिं गमिष्यति"।

**गोस** पु० गां जलं स्यति सो—क। १बोले २उष्णकाले ३विभाते मेदि०।

**गोसङ्ख्य** पु० गाः संचष्टे सम्+चक्ष—अच्। गोपे। अमरः। "गोसङ्ख्य आसं कुरुपुङ्गवानाम्"। "तेषां गोसङ्ख्य आसं वै तन्त्रिपालेति मां विदुः" इति च भा० वि० १०अ०।

**गोसत्र** पु॰ गोभिः कृतं सत्रम्। गवामयनाख्ये सत्रभेदे "गावो वा एतत् सत्रमासत" ता॰ब्रा॰ ४,१,१, गवामयन शब्दे विवृतिः।

**गोसदृक्ष** पुंस्त्री गोः सदृक्षः। गोतुल्ये गवये हेम॰। २जात्यादिना गोतुल्ये त्रि॰। गोसदृशादयोऽपि तत्रार्थे।

**गोसनि** पु॰ गां सनोति सन–इण् ६त॰ पूर्व्वपदात् वा षत्वे प्राप्ते सनना॰ न षत्वम्। गोदातरि गोषणिशब्दे उदा॰ दृश्यम्। "गोसनिं वाचमुदेयम्" अथ॰३।२०।१०।

**गोसम्प्रदाय** त्रि॰ गां सम्प्रददाति सम्+प्र+दा–"आतोऽनुपसर्गे" पा॰ अनुपसर्गइत्युक्तेः न कः किन्तु अण्। गोसंप्रदातरि।

**गोसम्भवा** स्त्री गोरिव सम्भवो लोमादिरूपाकारो यस्याः। १श्वेतदूर्वायां राजनि॰। २गोजाते त्रि॰।

**गोसर्ग** पु॰ गावःसृज्यन्तेऽत्र काले सृज–आधारे घञ्। गवां वनगमाय मोचन काले सूर्य्येण किरणानां त्यागकाले १प्रातःकाले "गोसर्गे चार्द्धरात्रे च तथा मध्यन्दिनेषु च" सुश्रु॰। [ख्याते गोधाख्ये जन्तौ।

**गोसर्प** पुंस्त्री गोरिव चतुश्चरणवत्त्वात् सर्पः। (गोसाप)

**गोसव** पु॰ गौः सूयते हिंस्यतेऽत्र सू–हिंसायाम् आधारे अप् पूर्व्वपदात् वा न षत्वम्। गोसत्राख्ये यज्ञभेदे "स्वर्जिता गोसवेन वा" हेमा॰ दा॰ लिङ्गपु॰। तत्कर्त्तव्यता च कात्या॰ श्रौ॰ २२,११,२ सूत्रादौ उक्ता यथा "ऋषभगोसवौ" १सू॰ "ऋषभोगोसवश्च क्रतू भवतः" कर्कः "पूर्वो राज्ञः" २सू॰ "पूर्वः ऋषभसंज्ञको राज्ञः" कर्कः "दक्षिणा ऋषभसहस्रं द्वादशं वा शतम्" ५सू॰ "विकल्पेन ऋषभसंज्ञक ऋषभाणां सहस्रं, द्वादशाधिकं शतं वा" (दक्षिणा) कर्कः। "उकथ्यो गोसवोऽयुत दक्षिणः" ६सू॰। गोसवसंज्ञः क्रतुरुकथ्यसंस्थो भवति अयुतदक्षिणश्च" कर्कः। "वैश्यस्य इत्येके" ७सू॰ मन्यन्ते। "सर्वेषामित्यपरे" ८सू॰। स्वराजानो विशो यं पुरस्कुर्वीरन् स एतेन यजेत" ९सू॰। "राज्ञा सहिता विशः प्रजाः सर्वे पुरुषा यं पुरस्कुर्वीरन् मुख्यत्वेनाङ्गीकुर्वीरन् स गोसवेन यजेत"। "आस्थण्डिलेऽभिषिच्यते" १०सू॰। "प्रतिदुराहवनीयस्य दक्षिणतः" ११सू॰। "स्थितः आगान्तुकत्वादन्तो। आहवनीयात् दक्षिणस्यां स्थण्डिले उपविष्टो यजमानः प्रतिदुह्माधारोष्णेन दुग्धेनाभिषिच्यते "संस्पर्तिरित्येनं ब्रूयुः "गोसवयाजिनं जनाः" कर्कः। "वैश्यस्तोम दक्षिणालिङ्गो मरुत्स्तोमोगणयज्ञो भ्रातृणां सखीनां वा १२सू॰। वैश्यस्तोमदक्षिणायां यानि लिङ्गानि तान्यत्रापि भवन्ति" कर्कः। गां स्वर्गं सुनोति अच् षत्वम् "दातुः स्वर्गदातरि" "तिलोऽसि सोमदैवत्यो गोसवो देवनिर्म्मितः" तिलदानमन्त्रः।

**गोशशस्** पु॰ गवि जले शशति शश–बा॰ असच् ७त॰। वोले रायमुकुटः।

**गोसहस्र** न॰ गवां सहस्रं दातव्यतया यत्र। तुलापुरुषादिषोडशमहादानान्तर्गते पञ्चमे महादानभेदे "अथातः संप्रवक्ष्यामि महादानानुकीर्त्तनम्"। "यत्तत् षोडशधा प्रोक्तं वासुदेवेन भूतले" इति चोपक्रम्य "कल्पपादपदानञ्च गोसहस्रं च पञ्चमम्" इत्युक्त्वा तद्दान प्रकारः हेमा॰ दा॰ मत्स्य पु॰ उक्तो यथा

"मत्स्य उवाच। अथातः संप्रवक्ष्यामि महादानमनुत्तमम्। गोसहस्रप्रदानाख्यं सर्वपापहरं परम्। पुण्यं तिथिमयासाद्य युगमन्वन्तरादिकम्। पयोव्रतस्त्रिरात्रं स्यादेकरात्रमथापि वा। लोकेशावाहनं कुर्य्यात् तुलापुरुषदानवत्। पुण्याहवाचनं कुर्य्याद्धोमः कार्य्यस्तथैव च। ऋत्विग्मण्डपसम्भारभूषणाच्छादनादिकम्। वृषं लक्षणसंयुक्तं वेदिमध्येऽधिवासयेत्। गोसहस्राद्विनिष्क्रम्य गवां दशकमेव"। पयोव्रतस्त्रिरात्रमिति दानदिनात् पूर्वं त्रिरात्रं पयोव्रतः स्यादित्यर्थः, अत्रादिशब्देन देशकाल–वृद्धिश्राद्ध–शिवादिपूजा–गुर्वृत्विग्वरण–मधुपर्कदान–कुण्डवेदिवितान–चक्रलेखनपताकादीनि मत्स्यपुराणोक्ततुलापुरुषदाने विहितानि गृह्यन्ते। वृषं लक्षणसंयुक्तं, वृषलक्षणानि, "उन्नतस्कन्धककुदम् उज्ज्वलायतकम्बलम्" इत्यादीनि वृषोत्सर्गप्रकरणे मत्स्यपुराणोक्तान्येव वेदितव्यानि, गोसहस्राद्विनिष्क्रम्येति दशोत्तरगोसहस्रादिति वेदितव्यम्, अग्रे दशाधिकगोसहस्रयिनियोगदर्शनात्। यद्यपि गवां दशकमित्यत्र गोमात्रप्रतीतिः तथापि उत्तरत्र "ऋत्विग्भ्यो धेनुमेकैकां दशकाद्विनिवेदयेदिति" धेनुसंशब्दनात्, पुराणान्तरे "गोसहस्राद्विनिष्क्रम्य सवत्सं दशकं गवामिति" श्रवणाच्च धेनुदशकमेवाधिवासनीयम्। इतरत्र पुनर्गोवृष्य धेनुरूपत्वादरः। "गोसहस्रं बहिः कुर्य्याद्वस्त्रमाल्यविभूषितम्। सुवर्णशृङ्गाभरणं रौप्यपादसमन्वितम्। अतः प्रवेश्य दशकं वस्त्रमाल्यैस्तु पूजयेत्। सुवर्ण–घण्टिकायुक्तं ताम्रदोहनिकान्वितम्। सुवर्णतिलकोपेतं हेमपट्टैरलङ्कृतम्। कौशेयवस्त्रसंवीतं माल्यगन्ध-

समन्वितम् । हेमरत्नयुतैः शृङ्गैश्चामरैश्चापि शोभितम् । पादुकोपानहच्छत्रभाजनासनसंयुतम् । “दशसौवर्णिके शृङ्गे, खुराः, पञ्चपलास्तथा”। पञ्चाशत्पलमितो दोहनकः अन्यत्र तथाभिधानात् वशिष्टकादौ सुवर्णशब्दोऽत्र षोडशमाषपरिमितहिरण्यवचनः, सकृदुच्चरितसुवर्णशब्दावगतपरिमाणपरित्यागानुपपत्तेः। पादुके काष्ठमय्यौ, चर्म्मकृते उपानहाविति भेदः । “गवां दशकमध्ये स्यात् काञ्चनो नन्दिकेश्वरः । कौशेयवस्त्रसंवीतो नानाभरणभूषितः। लवणद्रोणशिखरे-माल्येक्षुफलसंयुतः । कुर्य्यात् पलशतादूर्द्ध्वं सर्व्वमेतदशेषतः । शक्तितः फलसाहस्रत्रितयं यावदेव तु । गोशते वै दशांशेन सर्व्वमेतत् प्रकल्पयेत्” । लवणद्रोणशिखरे, लवणद्रोणोपरीत्यर्थः । नन्दिकेश्वरलक्षणं ललितविजयात् “ऊर्द्ध्वस्त्रिनेत्रो द्विभुजः सौम्यास्यो नन्दिकेश्वरः । वामे तु शूलभृद्धस्ते चाक्षमालासमन्वितः” इति ऊर्द्ध्व इति, अशयानानुपविष्ट इत्यर्थः । पलशतादूर्द्ध्वं पलसहस्रत्रितयं यावदिति, साभरणनन्दिकेश्वरविषयमेतत् आनन्तर्य्यात् । गोशते वै दशांशेनेति गोशते देये गामेकामेकञ्च वृषभं वेदिमध्येऽधिवासयेत् । पलशतादूर्द्ध्वं पलशतत्रयं यावदिति साभरणनन्दिकेश्वररचनादिकं कुर्य्यादित्यर्थः ।“पुण्यं कालमथासाद्य गीतिमङ्गलनिःस्वनैः । सर्व्वौषध्युदकस्नानस्नापितो वेदिपुङ्गवैः । इममुच्चारयेन्मन्त्रं गृहीतकुसुमाञ्जलिः” । अत्रापि पूर्व्ववत् पूर्व्वेद्युरधिवासनं विधाय द्वितीयदिवसे ब्राह्मणवाचनानन्तरमग्निकुण्डेषु ऋत्विगुपवेशनादिपूर्णाहुतिपर्य्यन्तं कर्म्मशेषं गुरुः समापयेत् । ततः पुण्यकालम् आत्मानुकूललग्नमुहूर्त्तादिलक्षणमासाद्य कुण्डसमीपस्थितकलसोदकेन ब्राह्मणैः स्नापितः शुक्लमाल्याम्बरधरो यजमानो वक्ष्यमाणमन्त्रानुदीरयेत् । “नमो वो विश्वमूर्त्तिभ्यो विश्वमातृभ्य एव च । लोकाधिवासिनीभ्यश्च रोहिणीभ्यो नमो नमः । गवामङ्गेषु तिष्ठन्ति भुवनान्येकविंशतिः । ब्रह्मादयस्तथा देवा रोहिण्यः पान्तु मातरः । गावो मे अग्रतः सन्तु गावो मे सन्तु पृष्ठतः । गावः शिरसि मे नित्यं गवां मध्ये वसाम्यहम् । यस्मात् त्वं वृषरूपेण धर्म्म एव सनातनः । अष्टमूर्त्तेरधिष्ठानमतः पाहि सनातनः । इत्यामन्त्र्य तु यो दद्याद्गुरवे नन्दिकेश्वरम् । सर्व्वोपकरणोपेतं गोयुगञ्च विचक्षणः । ऋत्विग्भ्यो धेनुमेकैकां दशकाद्विनिवेदयेत् । गवां च शतमथैकैकं तदर्द्धं चाथ विंशतिम्” । दश पञ्चाथवा दद्यादन्येभ्यस्तदनुज्ञया” । दानवाक्यमत्र तुलापुरुषवद्बेदितव्यम्, एते च शतप्रभृति पञ्चपर्य्यन्ता विकल्पा ऋत्विग्विषयाः तदानन्तर्य्यात्, ततश्चायमर्थः सिद्धो भवति गोदशकमध्यान्नन्दिकेश्वरयुतं गोयुगं गुरवे प्रतिपाद्य शेषाणामष्टानाङ्गवामेकैकामेकैकस्मै ऋत्विजे दद्यात्, तथा गोसहस्रमध्यात् शतद्वयं गुरवे प्रदाय एकैकं शतमृत्विग्भ्यो दद्यात्, अथ वा शतं गुरवे पञ्चाशतं पञ्चाशतमृत्विग्भ्यः, अथ वा चत्वारिंशतं गुरवे विंशतिं विंशतिमृत्विग्भ्यः । विंशतिं, वा गुरवे दश दशर्त्विग्भ्यः, दश वा गुरवे पञ्च पञ्चर्त्विग्भ्यो दद्यात् शेषा गास्तदनुज्ञया अन्येभ्योऽपि दद्यात् । दक्षिणाञ्चात्र पूर्व्ववदेव दद्यात् अनुक्तदक्षिणासु सुवर्णः दक्षिणेति वचनात् यथाशक्ति सुवर्णं वा । ततः पूर्व्ववदेव पुण्याहवाचन-देवतापूजन-विसर्जनादि कुर्य्यात् । “नैका बहुभ्यो दातव्या यतो दोषकरी भवेत् । बह्व्यश्चैकस्य दातव्या श्रीमतारोग्यवृद्धये । पयोव्रतः पुनस्तिष्ठेदेकाहं गोसहस्रदः” । इदञ्च पयोव्रतानुष्ठानं, शक्त्यपेक्षम् “अशक्तौ नक्तमिष्यते” इति वचनात् । “श्रावयेत् शृणुयाद्वापि महादानानुकीर्त्तनम् । तद्दिनं ब्रह्मचारी स्याद्यदीच्छेद्विपुलां श्रियम्” । आथर्वणगोपथब्राह्मणे “अथातो गोसहस्रविधिर्गोष्ठ उदकान्ते शुचौ देशे प्राञ्चमिध्ममुपसमाधाय अन्वालभ्याथ जुहुयात्, आ गावस्सूक्तेनाद्यं जुहुयात्, महाव्रीहीणामैन्द्रञ्च सौम्यञ्च सहस्रं तस्याः पयसि श्रपयित्वा गाव इति, एवमुभय इत्येतेन जुहुयात् पश्चादग्नेः क्षीरोदकपूर्णकलसमवस्थाप्याहिसंवोगोष्ठेनेति दश गाः स्नापयेत् त्वरमाणोऽन्याः समभ्युक्ष्य सहस्रं, तस्याः स्नानोदकेनेममिन्द्रं वर्द्धय क्षत्रियं म इति, राजानमभिषिञ्चेमा आप इति, षड्भिर्यथोक्तमञ्जनाभ्यञ्जनानुलेपनं कृत्वा सहस्रतमीं प्रथमामलंकृत्य गावो मारुपतिष्ठत प्रजावती सूयवसादिति च पर्य्यासयेत् प्रियमशनन्त्वा द्विरब्रमसा इति सहस्रतमीमालभ्य जपेत् मया गावः पतिना सवत्समिति मन्त्रेणानेनार्घं दत्त्वा सहस्रतमीं पुनरुपसंगृह्य भूमिष्ठा प्रतिगृह्णात्विति जपेत् सहस्रं, तस्याः पृष्ठतो व्रजन् सर्व्वाः प्रदक्षिणीकृत्य नमस्कृत्य स्वस्ति वाच्य ब्राह्मणेभ्यो निवेद्य दश गा दक्षिणाः कर्त्रे सहस्रतमीं वस्त्रयुग्मञ्च तदपि । सप्तजन्मानुगं पापं पुरुषैः सप्तभिः कृतम् । तत्क्षणात् विधिनानेन नाशयेद्गोप्रदो नरः । सर्व्वेषामिह दानानां फलं यत् परिकीर्त्तितम् ।

तद्वाप्नोति विप्रेभ्यो गोसहस्रप्रदोनरः। अश्वमेधं वृषोत्सर्गं गोसहस्रत्रयन्तु यः। दद्यान्मोचाय इत्याहुः पितरस्तर्पयन्ति हि। तस्मादनेन विधिना गोसहस्रन्तु योनरः। प्रदद्यात् स विशुद्धात्मा याति तत् परमं पदमिति"। मत्स्यपुराणे "अनेन विधिना यस्तु गोसहस्रप्रदोभवेत्। सर्वपापविनिर्मुक्तः सिद्धचारणसेवितः। विमानेनार्कवर्णेन किङ्किणीजालमालिना। सर्वेषां लोकपालानां लोके संपूज्यते सुरैः। प्रतिमन्वन्तरं तिष्ठेद्राजराजो भवेत् पुनः। अश्वमेधशतं कुर्याच्छिवध्यानपरायणः। वैष्णवं लोकमास्थाय ततो मुच्येत बन्धनात्। पितरश्चाभिनन्दन्ति गोसहस्रप्रदं शुभम्। अपि स्यात्स कुलेऽस्माकं पुत्रोदौहित्र एव च। गोसहस्रप्रदो भूत्वा नरकादुद्धरिष्यति। स यस्तत्कर्मकरो वा स्यादपि दृष्टा तथैव च। संसारसागरादस्मादस्मान् सन्तारयिष्यति। इति पठति य एतद्गो-सहस्रप्रदानं सुरभुवनमुपेयात्स करेद्वापि पश्येत्। अनुभवति सुखं वा बाध्यमानो निकामम् प्रहतकलुषदेहः सोऽपि यातीन्द्रलोकम्"।

अन्यपुराणोक्तस्तद्विधिस्तत्रैव दृश्यः। ६त०। २गवां सहस्रे च। गोसहस्रं तद्दानफलं विद्यतेऽत्र अच्। गौरा० ङीष्। ३सोमवारयुतायाम् ४मङ्गलवारयुतायां वा। अमाख्यायाम् स्त्री। जाह्नवीस्नाने तस्यास्तथापुण्यजनकत्वमुक्तं ति० त० व्यासेन "अमावास्यां भवेद्वारो यदि भूमिसुतस्य च। गोसहस्रफलं दद्यात् स्नानमात्रेण जाह्नवी। सिनीवाली कुहूर्वापि यदि सोमदिने भवेत्। गोसहस्रफलं दद्यात् स्नानं यन्मौनिना कृतम्"।

**गोसाद** त्रि० गां सादयति सद–णिच् अण् उप० स०। गोचालके गोसारथौ "गौः सदसादिसारथिषु" पा० पूर्व्वपदप्रकृतिस्वरः।

**गोसादिन्** त्रि० गां सादयति सद–णिच्–णिनि ६त०। गोसारथौ। गोसादवत् पूर्व्वपदे प्रकृतिस्वरः।

**गोसारथि** पु० ६त०। गोचालके सारथौ गोसादवत् पूर्व्वपदे प्रकृतिस्वरः।

**गोस्तन** पु०गोः स्तन इव गुच्छो यस्य। १चतुर्यष्टिकहारे अमरः। ६त०। २गोःस्तने च "करीरपनसास्थि गोस्तनाकाराणि" "सुवृत्तं गोस्तनाकारं सर्वभूतगुणोद्भवम्" सुश्रु०।

**गोस्तना(नी)** स्त्री गोः स्तनइव फलमस्याः स्वाङ्गत्वात् वा ङीष्। १कपिलद्राक्षायाममर टीका तः गोः स्तनाइव स्तना अस्याः ङीष्। २कुमारानुचरमातृभेदे। "शृणु मातृगणान् राजन्! कुमारानुचरानिमान्" इत्युपक्रमे" प्रभावती विशालाक्षी पालिता गोस्तनी तथा" भा० श० ४७अ०।

**गोस्तोम** पु० गोनामकः स्तोमः पूर्व्वपदात् वा षत्वाभावः। एकाहसाध्ये अग्निष्टोमाङ्गे यज्ञभेदे। "गोस्तोमभूमिस्तोमव्रतस्तितसवानाम्" आश्व० श्रौ० ८।५।२। "गोस्तोमो भूमिस्तोमोवनस्पतिसव इति त्रयः एकाहाः कर्त्तव्याः" नारा० ह०। गोष्टोमशब्दे विवृतिः।

**गोस्थान** न० ६त०। गोष्ठे अमरः "मध्ये गोस्थानसङ्कुलम्" हरिवं० ६१अ०। स्वार्थे क। तत्रार्थे।

**गोस्वामिन्** ६त०। गवां स्वामिनि। "तावत् भूयो वा गोस्वामिने दत्त्वा" कात्या० श्रौ०। १५।६।१२। "गोस्वाम्यनुमते भृत्यः सा स्यात् पालेऽभृते भृतिः" मनुः। "प्राजापत्यं चरेत् कृच्छ्रं गोस्वामी व्रतमुत्तमम्" पराशरः। गवामिन्द्रियाणां स्वामी। २जितेन्द्रिये यतीनामुपाधिभेदे। वोपदेवगोस्वामी रूपगोस्वामी।

**गोह** पु० गुह्यतेऽत्र गुह–घञ् बा० ऊत्त्वाभावः। गेहे "अद्रिमौशिजस्य गोहे" ऋ० ४,२१,६। 'गुहा यदीमौशिजस्य गोहे" ७ "विदद् गौरस्य गवयस्य गोहे" ८ "गोहे गृहे" भाष्यम्। तस्यादूरभवोदेशः सुवास्त्वा० अण्। गौह गेहादूरभवे त्रि० स्त्रियां ङीप्।

**गोहत्या** स्त्री ६त०। गोहनने। प्राणवियोगफलकव्यापारोहननम् यथाह वह्निपु० "स्यात् प्राणवियोगफलकव्यापारोहननं स्मृतम्। रागात् द्वेषात् प्रमादाद्वा स्वतः परत एव वा"। हत्याया ज्ञानाज्ञानकृतत्वं च प्रा० त० न्यरूपि यथा

"अथ ज्ञानकृतादिनिरूपणम्। तत्र गोवधस्य बुद्धिपूर्वकत्वं तदा भवति,यदि गां ज्ञात्वा एतां हन्मीति इच्छया हन्ति, तदा कामनाद्वारैव ज्ञानस्य प्रवृत्त्यङ्गत्वात्, तदभावे त्वबुद्धिपूर्वकत्वम्। अतएव प्रवृत्त्यङ्गज्ञानस्य कामनाव्यभिचाराभावादेव 'कृच्छ्रांस्तु चतुरः कुर्य्यात् गोवधे बुद्धिपूर्वके। अमत्या च द्वयं कार्य्यम्, इति विश्वामित्रवचने ज्ञानाज्ञानाभ्यां द्वैविध्यमुक्तम् अन्यत्र कामाकामाभ्यामित्युक्तम् यथा बृहस्पतिः "कामाकामकृतं त्वेवं महापापं द्विधा मतम्। पुरुषापेक्षया चैव निष्कृतिर्द्विविधा स्मृता"। इत्यत्र गवयादिभ्रमेण योगोवधस्तत्र वधस्य न ज्ञानकृतत्वं गोत्वेनाज्ञानात्। गोत्वेन गां जानन्नप्यन्योद्देशक्षिप्तनाराचादिना यदि हन्ति

तदापि न ज्ञानकृतत्वं तद्विषयकहननेच्छारूपद्वाराभावात्"। तत्र साक्षात् परम्पराकृतव्यापारभेदः मिता॰ उक्तो यथा "साक्षात्कर्त्तृनिमित्तिनोश्च भेदस्तेनैव दर्शितः 'पाषाणैर्लगुडैर्वापि शस्त्रेणान्येन वा बलात्। निपातयन्ति ये गास्तु कृत्स्नं कुर्य्युर्व्रतं हि ते। तथैव गाढजङ्घांसपार्श्वग्रीवादिमोटनैरिति"। एतदुक्तम्भवति। पाषाणलगुडादिभिर्ग्रीवादिमोटनादिना वा ये गां निपातयन्ति। ते साक्षाद्धन्तारस्तेष्वेव कृत्स्नं प्रायश्चित्तम्। ये तु व्यवहित रोधबन्धादिव्यापारयोगिनस्ते निमित्तिन स्तेषां न कृत्स्नव्रतसम्बन्धः किन्तु तदवयवैरेव पादद्विपादादिभिरिति तत्रावरोधादीनां व्यवहितव्यापारत्वाविशेषेऽपि वचनात् क्वचित्पादः क्वचिद्द्विपादः पादोनं क्वचिदिति" युक्तम्।

तस्याः घोधकं प्रायश्चित्तं स्वामिभेदाद्भिन्नं प्रा॰त॰ उक्तं यथा तत्र ब्राह्मणस्वामिकस्य गोर्वधे मानवं प्रायश्चित्तं तच्च गोघ्नशब्दे दर्शितं तत्र सप्तदश धेनवः तन्मूल्यं वा। क्षत्रियस्वामिकस्य गोर्वधे देवलोक्तं तच्च तत्रैवोक्तं यथा "गोघ्नः षण्मासान् तच्चर्मणा परिवृतो गोग्रासाहारो गोव्रती यवाशी गोभिरभिसञ्चरन् विप्रमुच्यते"। गोग्रासाहारो गोग्रासाहर्त्ता "कर्मण्यण्" इति साधुः। षण्मासयावकभक्षणं द्वादशप्राजापत्यतुल्यं दक्षिणा च विशेषानुपदेशाद् यथाशक्ति देयेति। एतज्ज्ञानादज्ञानात्तदर्द्धं स्त्रीशूद्रबालवृद्धानामर्द्धम् एकस्योभयपरत्वे पादः। वैश्यसम्बन्धिनो गोर्वधे तु शातातपः "पञ्चगव्येन गोघाती मासैकेन विशुध्यति। गोमतीञ्च जपेद्विद्वान् गवां गोष्ठे च संवसेत्"। पञ्चगव्यमाह शातातपः "गोशकृद् द्विगुणं, मूत्रं सर्पिर्विद्याच्चतुर्गुणम्। क्षीरमष्टगुणञ्चैव पञ्चगव्ये तथा दधि" तथाऽष्टगुणम्। यमः "आहृत्य प्रणवेनैव उत्थाप्य प्रणवेन च। प्रणवेन समालोड्य प्रणवेनैव तत्पिबेत्"। उत्थाप्य मिश्रीकृत्य।

"मन्त्राम्नाने मिताक्षरायां षट्त्रिंशन्मतम् "जपहोमादि यत्किञ्चित् कृच्छ्रोक्तं सम्भवेन्न चेत्। सर्वं व्याहृतिभिः कुर्य्यात् गायत्र्या प्रणवेन च"। गवां गोष्ठ इति श्रवणकुण्डलवत् तात्कालिकगोसत्त्वावबोधाय। गोमतीजपसहितमासपञ्चगव्यपानं प्राजापत्यपञ्चकतुल्यम्। एतदज्ञानकृते ज्ञानकृते तु द्वैगुण्यम्। स्त्रीशूद्रबालवृद्धानामर्द्धम् एकस्योभयधर्मपरत्वे पादः।

शूद्रसम्बन्धिनोगोर्वधे तु विश्वामित्रः "कृच्छ्रांस्तु चतुरः कुर्य्यात् गोवधे बुद्धिपूर्वके। अमत्या च द्वयं कार्य्यं तदर्द्धं बालवृद्धयोः। स्त्रीशूद्रयोरेवमेतद्वधे चैव न संशयः"। कृच्छ्रान् प्राजापत्यानि। तच्चतुष्टयाशक्तौ चतस्रोधेनवः द्वादश कार्षापणा वा। एतज्ज्ञानकृते अज्ञाने तदर्द्धं स्त्रीशूद्रबालवृद्धानामर्द्धम्। एकस्योभयधर्म्मपरत्वे पादः। प्रा॰त॰रघु॰। स्वामिकृतविशेषस्तु प्रायश्चित्तविवेकानुसारादुक्तः।

गर्भिण्यादौ तु विशेषमाह वृहस्पतिः "गर्भिणीं कपिलां दोग्ध्रीं होमधेनुञ्च सुव्रताम्। रोधादिना घातयित्वा द्विगुणं गोव्रतञ्चरेत्"। गर्भिणीवधे तु विशेषमाह वृद्धयमः "गवां निपतने चैव गर्भनाशोयदा भवेत्। एकैकत्र चरेत् कृच्छ्रं यथापूर्वं तथा परम्"। कृच्छ्रपदं व्रतपरम् द्विगुणं गोव्रतमित्येकवाक्यत्वात् "पादमुत्पन्नमात्रे तु द्वौ पादौ गात्रसम्भिते। पादोनं व्रतमादिष्टं हत्वा गर्भमचेतनम्। अङ्गप्रत्यङ्गसम्पन्ने गर्भे चेतःसमन्विते। द्विगुणं गोव्रतं कुर्य्यात् प्रायश्चित्तं विशुद्धये"। मध्यमवचनं भवदेवेन व्याख्यातम् यथा "यदि लगुडाद्यभिघातेन गौर्जीवति गर्भमात्रपातो भवति तदोत्पन्नगर्भमात्रपाते यथोक्तप्रायश्चित्तपादाचरणम्। गात्रावयवोत्पत्तौ प्रायश्चित्तपादद्वयं सकलगात्रसम्पत्तौ चैतन्याभावे प्रायश्चित्तपादत्रयम्। अथ चैतन्ययुक्तगर्भघाते कृत्स्नमेव प्रायश्चित्तमूहनीयम्"। मिताक्षरायान्तु गर्भिणीवधे यदा गर्भोऽपि निहतोभवति तदा प्रतिनिमित्तं नैमित्तिकमावर्त्तत इति न्यायादविशेषेण द्विगुणव्रतप्राप्तौ षट्त्रिंशन्मते विशेषोक्तः 'पादमुत्पन्नमात्रे तु द्वौ पादौ दृढतां गते। पादोनं व्रतमुद्दिष्टं हत्वा गर्भमचेतनम्। अङ्गप्रत्यङ्गसम्पन्ने गर्भे चेतःसमन्विते। द्विगुणं गोव्रतं कुर्य्यादेषा गोघ्नस्य निष्कृतिः"। दोग्ध्रीं बहुक्षीराम्। वृहस्पतिः "अतिवृद्धामतिकृशामतिबालाञ्च रोगिणीम्। हत्वा पूर्वविधानेन चरेदर्द्धं व्रतं द्विजः"। पूर्वविधानेन मन्वाद्युक्तत्रैमासिकादिना अतिवृद्धा तृणच्छेदनासमर्था अतिकृशा कृशत्वेन दोहनवाहनायोग्या अतिबाला वर्षपर्य्यन्तं बाला तदतिक्रान्ता द्विवर्षीया। तथा च वृहदङ्गिराः 'वर्षमात्रा तु बाला स्यादतिबाला द्विवार्षिकी। अतःपरन्तु सा गौः स्यात्तरुणी दन्तजन्मनि"। अतएव वक्ष्यते द्विपादस्तु द्विहायने' इति संवर्त्तः। 'व्यापन्नानां बहूनाञ्च बन्धने रोधनेऽपिवा। भिषङ्मिथ्योपचारे च द्विगुणं गोव्रतञ्चरेत्। एकप्रयत्ने निष्पन्ने बहूनां गवां वधे प्रायश्चित्तगौरवमुक्तं न तु तन्वता पापभेदाभावात्

एकप्रयत्नजन्यत्वे नैकमेव गुरुतरं पापमिति प्रायश्चित्तमपि तथा। बहूनामित्येकाधिकपरम्। तद्विवक्षायामपि गोद्वयवधे प्रयत्नाभेदेऽपि विशेषवचनाभावात् प्रायश्चित्तद्वैगुण्यं युक्तम्। अपिशब्दात् गृहदाहादिना। कामकृते तु प्रायश्चित्तावृत्तिः। द्वयोपपातकानुवृत्तौ यमः "गोघ्नवद्विहितः कल्पश्चान्द्रायणमथापि वा। अभ्यासे तु तयोर्भूयस्ततःशुद्धिमवाप्नुयात्"। तयोर्गोवधतदन्योपपातकयोः। संवर्त्तापस्तम्बौ "एका चेद्बहुभिः कापि दैवाद्व्यापादिता भवेत्। पादं पादञ्च हत्यायाश्चरेयुस्ते पृथक् पृथक्"। हत्याया यत्र यद्विहितं व्रतं तत्र तस्यैव पादं प्रत्येकं कुर्युः। एकेत्युपलक्षणम् अतोबहुभिर्द्वयोर्बहूनाञ्च हनने प्रतिपुरुषं पादद्वयं त्रयं वा कल्पनीयमिति मिताक्षरा। वस्तुतस्तु एकाधिकानामेकैकपुरुषस्यैकप्रयत्नजन्यवधे "व्यापन्नानां बहूनामिति" पूर्वोक्तवचनात् एकैकपुरुषस्य द्विपादं प्रायश्चित्तम् प्रयत्नभेदे तु गोघ्नवदित्यनेन तन्त्रताया अभावात् प्रत्येकं प्रतिपुरुषं द्विपादावृत्तिरिति। एतच्चाकामतोवधे द्रष्टव्यम् दैवादिति विशेषोपादानात् कामकृते तु बहूनामपि प्रत्येकं कृत्स्नदोषसम्बन्धात् पूर्णप्रायश्चित्तं युक्तं सत्रिणां फलमिव प्रतिपुरुषं कृत्स्नव्यापारसमवायात्। "एकं घ्नतां बहूनाञ्च यथोक्ताद्द्विगुणोदमः" इति प्रत्येकं दण्डद्वैगुण्यदर्शनाच्चेति मिताक्षरा। वस्तुतस्तु सर्वत्र पापे "स्यात्त्वकामकृते यत्तु द्विगुणं बुद्धिपूर्वके" इत्यङ्गिरोवचनेनाम्नानात् स्थाने द्वैगुण्यदर्शनादत्रापि स्थाने द्विपादएव युक्तः। सत्रे तु "सप्तदशावराश्चर्द्धिकामाः सत्रमुपासीरन्निति" श्रवणात्तथेति। एकं घ्नतामिति परवचनन्तु गोवधातिरिक्तविषयम् गोवधे एका चेदित्युपदेशेन दण्डवत् प्रायश्चित्तानि भवन्तीत्यतिदेशानवसरात्। तदवसरत्वे प्रत्येकं पूर्णप्रायश्चित्तद्वैगुण्यं स्यात् न पूर्णप्रायश्चित्तमात्रम् अतएव प्रायश्चित्तविवेके "एकं घ्नतां बहूनामिति" मनुष्यवधे उक्तम्। बहुभिरित्युपादानात् द्वाभ्यां हनने तु प्रत्येकं सम्पूर्णप्रायश्चित्तम्"।

अथैकहायनादिगोवधप्रायश्चित्तम् वृद्धप्रचेताः "एकवर्षे गवि हते कृच्छ्रपादो विधीयते। अबुद्धिपूर्वं पुंसः स्यात् द्विपादस्तु द्विहायने। त्रिहायणे त्रिपादः स्यात् प्राजापत्यमतःपरम्"। इदमपि प्रायश्चित्तलाघवेन अबुद्धिपूर्वकाधमशूद्रस्वामिकवधविषयमिति प्रायश्चित्तविवेकः। तेन यत् स्वामिकवधे यत् प्रायश्चित्तं तस्यैव तत्र पादादिकमूहनीयमतएवातिबालामित्यत्र तथैवोक्तम्। अतःपरं चतुर्हायणे इत्यर्थः। बुद्धिपूर्वे एतदेव द्विगुणमित्यर्थः" प्रा० त० रघुः।

अपालननिमित्तगोवधप्रायश्चित्तम् प्रा० त० उक्तं यथा पराशरः "शीतानिलहता चैव उद्बन्धनमृतापि वा। शून्यागाराद्युपेक्षायां प्राजापत्यं विनिर्दिशेत्। अपालनात् प्रणश्येत्तु गौश्चरन्ती कथञ्चन। जलौघपल्वले मग्ना नागविद्युद्धतापि वा। श्वभ्रे वा पतिताऽकस्मात् श्वापदैर्वापि भक्षिता। प्राजापत्यं चरेत् कृच्छ्रं गोस्वामी व्रतमुत्तमम्। सशिखं वपनं कार्यं त्रिसन्ध्यमवगाहनम्। शृङ्गैर्वापि खुरैर्युक्तां लाङ्गूलश्रवणादिभिः। आर्द्रमेव हि तच्चर्म परिधाय स गां व्रजेत्। तासां मध्ये वसेद्रात्रौ दिवा ताभिः समं व्रजेत्। ब्राह्मणस्य विशेषेण तथा राजन्यवैश्ययोः। प्रायश्चित्ते ततश्चीर्णे कुर्याद्ब्राह्मणभोजनम्। अनडुत्सहितां गाञ्च दद्याद्विप्राय दक्षिणाम्"। अत्र गोस्वामीत्यभिधानात् उत्सृष्टवृषवत्सतरीषु स्वत्वाभावादपालननिमित्तकतद्वधे तदुत्सृष्टृदोषोनास्तीति प्रतीयते। तत्स्वत्वाभावेनान्येषां सम्भाव्यमानमौपादानिकस्वत्वं निराकरोति कल्पतरुधृतब्रह्मपुराणम् "अथ वृत्ते वृषोत्सर्गे दाता वक्रोक्तिभिः पदैः। ब्राह्मणानाह, यत् किञ्चित् मयोत्सृष्टन्तु निर्जने। तत् कश्चिदन्योन नयेद्विभाज्यञ्च यथाक्रमम्। न वाह्यं न च तत्क्षीरं पातव्यं केनचित् क्वचित्"। वक्रोक्तिभिः काकूक्तिभिः स्वाम्यभावेनोत्सृष्टपशोः पालननियमाभावशङ्कान्यादिभक्षणे मोच्यत्वमप्याह याज्ञवल्क्यः "महोक्षोत्सृष्टपशवः सूतिकागन्तुकादयः। पालोयेषाञ्च ते मोच्या दैवराजपरिप्लुताः"। महोक्षोऽनिर्वीर्यः महाबलीवर्द्दः। उत्सृष्टपशवः देवतोद्देशेन पित्रादिनिष्ठफलोद्देशेन वा चक्राद्यङ्कितास्त्यक्तपशवः। सूतिका अनिर्गतदशाहाः। आगन्तुका ग्रामान्तरादागताः। आदिशब्दात् उशनसोक्ताश्च यथा "अदण्ड्या हस्तिनोऽश्वाश्च प्रजापाला हि ते स्मृताः। अदण्ड्याः काणकुण्ठाश्च वृषभः कृतलक्षणः" कुण्ठः खञ्जः। अत्र काणकुण्ठशब्दाभ्यामत्यन्ताक्षम उच्यते। वृषभःकृतलक्षणः प्रागुक्तोत्सृष्टपशुः एते सपाला विपाला वा सर्वथा मोच्याः तथा च मनुः "अनिर्दशाहां गां सूतां वृषान् देवपशूंस्तथा। सपालान् वा विपालान् वा अदण्ड्यान् मनुरब्रवीत्"। एतद्भिन्नानां येषाञ्च पालोऽस्ति

तेऽपि मोच्याः। अर्थात्तत्र पालोदण्डनीयः। दैवराजपरिप्लुताः गजादिद्रावणात् सेनादिदर्शनाद्वा पलायिताः पशवो यदि क्षेत्रे चरन्ति तदा न दोष इत्यर्थः। पालकान्तरसत्त्वे तु मनुः "दिवा वक्तव्यता पाले रात्रौ स्वामिनि तद्गृहे। योगक्षेमेऽन्यथा चेत्तु पालोवक्तव्यतामियात्"। "दिवा पशूनां पालहस्तन्यस्तानां योगक्षेमविषये दोषे जाते पालकस्य गर्हणीयता रात्रौ पुनः पालप्रत्यर्पितानां स्वामिनां दोषः। अन्यथा यदि रात्रावपि पालहस्तगता भवन्ति तदा दोषे उत्पन्ने पाल एव गर्हणीयतां प्राप्नोति" इति कुल्लूकभट्टः। स्मृतिसागरे वृहदङ्गिराः "अनागतस्य चानेता व्यागतस्य च रक्षकः। रात्रावपि यदान्योऽस्ति तदा स्वामी न दोषभाक्"। ननु दण्डप्रकरणोक्तमनुवचनं प्रायश्चित्ते कथमिति चेन्न। "दण्डवत् प्रायश्चित्तानि भवन्तीति" श्रुतेः तथा व्यवहाराच्च। एवञ्च "यत्रापवर्त्तते युग्यं वैगुण्यं प्राजकस्य च। तत्र स्वामी भवेद्दण्ड्यो हिंसायां द्विशतं दमः" इति मनुवचने "यत्र सारथेरकौशलात् यानमन्यथा गच्छति तत्र हिंसायामसुशिक्षितसारथिनियोगात् स्वामी द्विशतं दण्डं दाप्यः स्यादिति" कुल्लूकभट्टव्याख्यानदर्शनात् अयोग्यपालकसमर्पणे स्वामिनो दोषात्तस्यैव प्रायश्चित्तमुक्तम्। 'यावत् शस्यं विनश्येत्तु क्षेत्री तावत् फलं लभेत्। पालस्ताड्योऽथ गोस्वामी पूर्वोक्तं दण्डमर्हति" याज्ञवल्क्यवचने गवादिदोषेण यावत् शस्यं विनश्यति तावदेव पालकात् प्राप्तव्यं पालकाशक्तौ पालकस्ताड्यः स्वामी पूर्वोक्तं दण्डादिमर्हतीति दर्शनाच्च। गोवधप्रायश्चित्ते पालकद्रव्यासम्भवे स्वामिना द्रव्यं दत्त्वा प्रायश्चित्तं कारयितव्यं कर्त्तव्यं वा। म्लेच्छपालके स्वयं कर्त्तव्यम्। सशिखवपनमित्यत्र नैमित्तिकेन सशिखवपनेन "सदा बद्धशिखेन तु" इत्यस्य "गायत्र्या तु शिखां बद्धा नैरृत्यां ब्रह्मरन्ध्रतः। जुटिकान्तु ततोबद्धा ततः कर्म समाचरेत्" इति ब्रह्मपुराणोक्तस्य च नित्यस्य बाधोन दोषाय फलचमसेन सोमस्य बाधवत् गोदोहेन चमसस्य बाधवच्च। "सशिखं वपनं कार्यमास्नानात् ब्रह्मचारिणा। इति कात्यायनकृतछन्दोगपरिशिष्टेऽप्येवम्। एतदेकश्रुतिमूलकत्वात् तद्भृतपारस्करीये पर्युप्तशिरसमिति सूत्रेऽपि तथैवार्थः तद्भाष्यकृता हरिशर्मणापि परिसर्वतोभावेनोप्तशिरसं मुण्डितशिरसमिति व्याख्यातम्। न च "एते लूनशिखास्तस्य दशनैरपिरोद्धृतैः। कुशाः काशा विराजन्ते वटवः सामगा इव" इति विष्णुपुराणीये सामगा इति विशेषणान्नान्येषां लूनशिखत्वमिति वाच्यं प्रागुक्तवचनात् सर्वेषां सशिखवपनप्राप्तेः विध्यन्तरकल्पनापत्तेश्च। तृणसागरयोरौपम्यन्तु हरिणसुखहेतुत्वेनाप्युक्तं तयोः सुखहेतुत्वञ्च भक्ष्यत्वेन गायकत्वेनेति शेषः। एवं प्राचीनावीतित्वादिना "सदोपवीतिना भाव्यम्" इत्यस्यापि बाध इति प्रसङ्गादुक्तम्। ब्राह्मणस्य विशेषेणेति ब्राह्मणस्य गवानुगमनं मुख्यम्। एतेनापालनकृतगोवधे प्राजापत्यं करणीयमिति अत्रेतिकर्त्तव्यतापि प्रजापत्यतुल्येति पण्डितसर्व्वस्वे हलायुधः। वृषभो गौश्च दक्षिणा। ब्राह्मणभोजनं विशेषयति यज्ञपार्श्वः "गर्भाधानादिकृत्येषु ब्राह्मणान् भोजयेद्दश"। प्राजापत्यद्वयाशक्तौ धेनुद्वयं तदशक्तौ षट् कार्षापणाः। एवञ्च वृषमूल्यं पञ्च कार्षापणाः गोमूल्यमेकः कार्षापणः। शूलपाणिप्रभृतिभिस्तु इतिकर्त्तव्यतायां विशेषो नादृतः। एतच्च शूद्रस्वामिकेतरवधविषयम् शूद्रस्वामिकस्याम्नानात् साक्षाद्वधे यत्किञ्चिद्दक्षिणकक्कृच्छ्रद्वयस्य निबन्धृभिर्व्यवस्थापितत्वेनापालनकृतवधे तदधिकस्यायुक्तत्वात् वरं तत्तुल्यं कृच्छ्रद्वयं युक्तमुत्पश्यामः। अतएव एतद्विषयएव स्मृतिसागरसारे वृहदङ्गिराः 'अरक्षिते तु कूपादौ हते व्याघ्रादिभक्षिते। व्रतार्द्धमाचरेत् स्वामी रक्षिते नास्ति दूषणम्"। व्रतार्द्धं कामकृतव्रतार्द्धं नास्ति दूषणमिति यदि प्रमत्ता गौर्निवारयन्तं पालमतिक्रम्य गर्त्तकान्तारादौ म्रियते तदा नेत्यर्थः। अन्यत्र सत्येव पालके सम्यक्पालनाभावेन श्वभ्रादौ पाताद्धोमरणे प्रायश्चित्तमाह विष्णुः 'पल्वलौघटकव्याघ्रश्वापदादिनिपातने। श्वभ्रोद्बन्धनसर्पाद्यैर्हते पादोनमाचरेत्। अपालने तु कृच्छ्रं स्यात् शून्यागाराद्युपप्लवे"। पादोनं प्राजापत्यमेव उत्तरवचने कृच्छ्रश्रवणात्। तथा "पादश्चाप्राप्तके देयोवत्से स्वामिन्यरक्षिते"। अप्राप्तके अप्राप्तदम्यावस्थे त्रिहायणपर्यन्ते इति यावत्। एवम्भूते वत्सेऽरक्षिते श्वभ्रपातादिना हते सति स्वामिना प्राजापत्यपादः करणीयः। अत्र पादमात्रप्रायश्चित्तत्वात् बालत्वादिना नानुग्रहः। ततश्चाप्राप्तदम्यावस्थवत्सापालननिमित्तकवधजन्यपापक्षयकाम इति प्रयोज्यम्"

आतिदेशिकी गोहत्या बहुविधा यथा "सावित्र्युवाच। विप्रहत्याञ्च गोहत्यां किंविधामातिदेशिकीम्। क

वा त्वगामगस्या वा को वा सन्ध्याविहीनकः। एतेषां लक्षणं सर्वं वद वेदविदांवर!। यम उवाच, गामाहारं प्रकुर्वन्तं पिबन्तं यो निवारयेत्। याति गोविप्रयोर्मध्ये गोहत्याञ्च लभेत्स। दण्डैर्गान्ताडयन् मूढो यो विप्रो वृषवाहकः। दिने दिने गवां हत्यां लभते नात्र संशयः। ददाति गोभ्य उच्छिष्टं भोजयेद्वृषवाहकम्। भोजयेद्वृषवाहान्नं स गोहत्यां लभेद्ध्रुवम्। वृषलीपतिं याजयेद्योभुङ्क्तेऽन्नं तस्य यो नरः। गोहत्याशतकं सोऽपि लभते नात्र संशयः। पादं ददाति वह्नौ यो गाश्च पादेन ताड़येत्। गृहं विशेदधौताङ्घ्रिः स्नात्वा गोवधमालभेत्। यो भुङ्क्ते स्निग्धपादेन शेते स्निग्धाङ्घ्रिरेव च। सूर्योदये च द्विर्भोजी स गोहत्यां लभेद्ध्रुवम्। अवीरान्नञ्च योभुङ्क्ते योनिजीवी च ब्राह्मणः। यस्त्रिसन्ध्याविहीनश्च स गोहत्यां लभेद्ध्रुवम्। पितृंश्च पर्वकाले च तिथिकाले च देवताः। न सेवतेऽतिथिं योहि स गोहत्यां लभेद्ध्रुवम्। स्वभर्त्तरि च कृष्णे वा भेदबुद्धिं करोति या। कटूक्त्या ताड़येत् कान्तं सा गोहत्यां लभेद्ध्रुवम्। गोमार्गखननं कृत्वा ददाति शस्यमेव च। तड़ागे च तदूर्द्धे वा स गोहत्यां लभेद्ध्रुवम्। प्रायश्चित्तं गोवधस्य यः करोति व्यतिक्रमः। अर्थलोभादथाज्ञानं स गोहत्यां लभेद्ध्रुवम्। राजके दैवके यत्नात् गोस्वामी गां न पालयेत्। दुःखं ददाति यो मूढो गोहत्यां लभते ध्रुवम्। प्राणिनं लङ्घयेत् यो हि देवार्च्चामनलं जलम्। नैवेद्यं पुष्पमन्नञ्च स गोहत्यां लभेद्ध्रुवम्। शश्वन्नास्तीति यो वादी मिथ्यावादी प्रतारकः। देवद्वेषी गुरुद्वेषी स गोहत्यां लभेद्ध्रुवम्। देवताप्रतिमां दृष्ट्वा गुरुं वा ब्राह्मणं सति!। न सम्भ्रमान्नमेत् यो हि स गोहत्यां लभेद्ध्रुवम्। न ददात्याशिषं कोपात् प्रणताय च यो द्विजः। विद्यार्थिने च विद्याञ्च स गोहत्यां लभेद्ध्रुवम्" ब्रह्म वै० पु० प्रकृतिख०, २७अ०। "शुष्कमोषकरोविप्रो गोवधस्य व्रतं चरेत्" प्रा० त० उक्तेः शुष्कमोषोऽपि आदेशिकः गोवधः।

**गोहन्** त्रि० गां हन्ति हन–क्विप् ६त०। १गोहन्तरि मेघस्य जलभेदके २इन्द्रे पु०। "आ रे गोहा नृहा बधोवः" ऋ० ७।५६।१७। "गोहा गवां मेघस्थसलिलानां भेदकः" भा०।

**गोहन** त्रि० गुहू–संवरणे ल्यु जत्वाभावश्छान्दसः। सं वरके "समाने अहन् विरवद्ग गोहनाः" ऋ० १।३४।१ "गुहू संवरणे नन्द्यादित्वात् ल्युः"ऊदुपधायाः गोहः" पा० प्राप्तस्य ऊत्त्वस्याभावश्छान्दसः" भा०।

**गोहमुख** पु० भारतवर्षस्थे पर्वतभेदे। भागवतोक्तगोकामुख पर्वतस्य विष्णुपु० गोहमुखेति नाम। गोकामुखशब्दे दृश्यम्। [इत्वे त्रिका०।

**गोहरितकी** स्त्री गोः हरितकीव हितकारित्वात्। बिल्व-

**गोहल्ल** न० हल–विलेखे क्विप् तं लाति ला–क गोर्हल्लः। गोमये हारा०।

**गोहालिया** स्त्री गवां हाले विलेखे साधु बा० य। (गोयालिया) ख्याते लताभेदे "पीतं गोयालियामूलं तिलदध्याज्यसंयुतम्। निबद्धमूत्रं कथितं प्रवर्त्तयति शङ्कर!" इति गारुड़े १८०अ०।

**गोहित** पु० गवां हितं यस्मात् ५ब०। १विल्वे, २घोषालतायाञ्च। ३गोहितकारके त्रि०। ४विष्णौ पु० "गोहितो गोपतिर्गोप्ता" विष्णुसह०। "गोभ्यो हितो गोहितः, गोर्भूमेर्भारावतारणेच्छया शरीरग्रहणं कुर्वन् गोहितोवा" भाष्यम्। [मूले हेमच०।

**गोहिर** न० गुह–बा० इरच् पृषो० ऊत्त्वाभावः। पाद-

**गोह्य** त्रि० गुह–ण्यत् बाहुल्यात् ऊत्त्वस्य नियमनात् नोत्त्वम्। १गुह्ये २अप्रकाश्ये ३संवरणीये च।

**गौकक्ष्य** पुंस्त्री गौकक्षर्षेर्गोत्रापत्यं गर्गा० यञ्। गौकक्षर्षिगोत्रापत्ये। तस्य छात्रः कण्वा० अण् यलोपः। गौकक्ष तच्छात्रे गौकक्ष्यस्यापत्यं तिका० फिञ्। गौकक्ष्यायनि तदपत्ये पुंस्त्री। स्त्रियां क्रौड्या० ष्यङ्। गौकक्ष्या गौकक्षगोत्रस्त्रियाम्। बहुत्वे "यञञोश्च" पा० यञो लुक्। गोकक्षास्तद्गोत्रापत्येषु।

**गौग्गुलव** त्रि० गुग्गुलौ भवः अण्। गुग्गुलुभवे धूपादौ स्त्रियां शार्ङ्गरवा० ङीन्।

**गौच्य** पु० गोच्याः हिमालयपत्न्याः अपत्यम् ढकि प्राप्ते बा० यत्। हिमालयपुत्रे मैनाके शब्दार्थचि०।

**गौञ्जिक** पु० गुञ्जा तुलामानभेदः तद्ग्रहणं शीलमस्य ठक्। स्वर्णकारे त्रिका०।

**गौड़** पु० "बङ्गदेशं समारभ्य भुवनेशान्तगं शिवे!। गौडदेशः समाख्यातः सर्वविद्याविशारदः" स्कन्दपु० उक्ते १देशे २तद्देशस्थे जने ब०व०। "सारस्वताः कान्यकुब्जा गौडमैथिलकोत्कलाः। पञ्च गौडा इति ख्याताविन्ध्यस्योत्तरवासिनः" स्कन्दपु०इत्युक्तेषु विप्रप-

र्व्वतोत्तरभागवासिषु ३ब्राह्मणभेदेषु च। स्वार्थे क तत्रार्थे। "अथ पूर्व्वस्याम्" इत्युपक्रमे "उदयगिरि भद्रगौडकपौण्ड्रोत्कलकाशिमेकलाम्बष्ठाः" वृ०स०१४अ० कूर्मविभागे पूर्व्वस्यदेशोक्तौ। "अस्ति गौडविषये कौशाम्बी नाम नगरी" हितो०। "गौडोराष्ट्रमनुत्तमं निरुपमा तत्रापि राढा पुरी" प्रबोधच०। "सर्व्वे सिंहगुरुर्व्वर्ज्यः कलिङ्गे गौडगुर्जरे" मुहू० चि०। गुडस्य विकारः अण्। ४गुडविकारे खण्डखाद्यादौ त्रि० "गुडस्य तप्तमद्यस्य पीत्वा गौडं सुरासवम्" भा० द० ४४अ०। "नानास्वादरसानाञ्च खाण्डवानां तथैव च। भोजनानि सुपूर्णानि गौडानि च सहस्रशः" रामा० बा० ५३ सो०। "गौडमस्त्रमनम्लं वा पानकं गुरु मूत्रलम्" सुश्रुतः। ५मदिराभेदे स्त्री "गौडी पैष्टी तथा माध्वी विज्ञेया त्रिविधा सुरा। यथैवैका तथा सर्व्वा न पातव्या द्विजोत्तमैः" मनुः। "गौडीं माध्वीं सुरां पैष्टीं पीत्वा विप्रः समाचरेत्। तप्तकृच्छ्रं पराकं च चान्द्रायणमनुक्रमात्" बृहस्पतिः। ६काव्यरीतिभेदे स्त्री "पदसंघटना रीतिरङ्गसंस्थाविशेषवत्। उपकर्त्री रसादीनां सा पुनः स्याच्चतुर्व्विधा। वैदर्भी चाथ गौडी च पाञ्चाली लाटिका तथा" विभज्य "ओजःप्रकाशकैर्व्वर्णैर्बन्ध आडम्बरः पुनः। समासबहुला गौडी" सा० द०। तल्लक्षणमुक्तं यथा "चञ्चद्भुजभ्रमितचण्डगदाभिघात–संचूर्णितोरुयुगलस्य सुयोधनस्य। स्त्यानावनद्धघनशोणितशोणपाणिरुत्तंसयिष्यति कचांस्तव देवि! भीमः" वेणीसं०। यथा च गौडजनप्रियत्वात् गौडैः प्रयुज्यमानत्वाच्च गौडीसंज्ञां लभते। गौड+छ। गौडीया तत्रार्थे। "बहुतरसमासयुक्तामहाप्राणाक्षरा च गौडीया। रीतिरनुप्रासमहिमपरतन्त्राऽस्तोभवाक्या च" पुरुषोत्तमः। ७रागिणीभेदे स्त्री संगीतदा०। पुरशब्दे परे समासे अस्य "अरिष्टगौडपूर्व्वम्" पा० अन्तोदात्तता। गौडपुरम्।

**गौड़पाद** पु० माण्डूक्योपनिषदि तदर्थकश्लोककारके वेदान्तिपण्डितभेदे। ते च "बहिःप्रज्ञो विभुर्विश्वो ह्यन्तःप्रज्ञस्तु तैजसः" इत्यादयः "दुर्दर्शमतिगम्भीरमजं साम्यं विशारदम्। बुद्धा पदमनानात्वं नमस्कुर्म्मो यथाबलम्" इत्यन्ताः शतं श्लोकाः।

**गौड़वास्तुक** पु० न० "तदेव च बृहत्पत्रं रक्तं चेत् गौडवास्तुकम्" इत्युक्तलक्षणे वास्तुकभेदे। (चिल्लीशाक) राजनि०।

**गौड़िक** त्रि० गुडे साधु गुडा० ठक्। १इक्षौ। गौडः गुडविकारः साधनतयाऽस्त्यस्य ठन्। २गुडविकारसाध्ये मद्यभेदे। "इच्छया गौडिका मद्या गुरवोऽनिलनाशनाः" "मधुमांसोपदंशं वा पिबेद्वाप्यथ गौडिकम्" इति च सुश्रु०।

**गौण** त्रि० गुणमधिकृत्य प्रवृत्ता गौणी तत आगतः अण्। १सादृश्यलक्षणलक्ष्यसम्बन्धरूपया गौण्या लक्षणया प्रवृत्ते शब्दे "गौणश्चेन्नात्मशब्दात्" शा० सू०। २अमुख्ये च। "यद्वाऽऽगामिक्रियामुख्यकालस्याथन्तरालवत्। गौणकालत्वमिच्छन्ति केचित् प्राक्तनकर्म्मणि" उद्वा०त० हरिहरपद्धतिः। "एवमागामियागीय मुख्य कालादनन्तरः। स्वकालादुत्तरो गौणः कालः पैत्रस्य कर्म्मणः" छन्दोग०। "तदा गौणमनन्तस्य नामानन्तेति विश्रुतम्" भा० शा० १८२ अ०। "बहूनि मम नामानि कीर्त्तितानि महर्षिभिः। गौणानि तत्र नामानि कर्म्मजानि च कानि चित्" २४२ अ०। स्त्रियां ङीप्। "गौण्यश्रुतेः" शा० सू०। (गौणीवृत्पत्तिः) गुणं सादृश्यमधिकृत्य प्रवृत्ता अण् ङीप्। ३सादृश्यमूलकलक्षणाभेदे स्त्री। "सादृश्यात्तु मता गौण्यस्ताश्च षोडशभेदिताः" सा० द०। "सादृश्येतरसम्बन्धेऽपि वृत्तेर्गौणत्वमिच्छन्ति। "अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते। लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता" काव्य प्र०।

गुणोऽप्रधानमेव स्वार्थे प्रज्ञा०अण्। ४अप्रधाने कर्मादौ। "गौणे कर्म्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्" व्या० का०। गौणस्य भावः ष्यञ् गौण्य न०, त्व गौणत्व न०, तल् गौणता स्त्री, अप्रधानत्वे "गयादेः स्थोऽन्तगौण्येऽनीयसः" मुग्ध०। "वृत्तेरिष्टा तु गौणता" काव्यप्र० गौणत्वञ्च प्रसिद्धवस्तुभेदस्यैव यथाह शा०भा० "प्रसिद्धवस्तुभेदस्य गौणत्वमुख्यत्वप्रसिद्धेः। यस्य हि प्रसिद्धो वस्तुभेदः यथा केशरादिमानाकृतिविशेषोऽन्वयव्यतिरेकाभ्यां सिंहशब्दप्रत्ययभाङ्मुख्योऽन्यः प्रसिद्धः। ततश्चान्यःपुरुषः प्रायिकैः क्रौर्य्यशौर्य्यादिभिः सिंहगुणैः सम्पन्नः प्रसिद्धः तस्य पुरुषे सिंहशब्दप्रत्ययौ गौणौ भवतः नाप्रसिद्धवस्तुभेदस्य"।

**गौणचान्द्र** पु०। "चान्द्रोऽपि द्विविधः प्रोक्तो गौणमुख्यप्रभेदतः। गौणः कृष्णप्रतिपदः पौर्णमास्यन्तईरितः" मलद्र० उक्ते कृष्णपदादिपौर्णमास्यन्ते चान्द्रे मासे कल व्यवस्था नि० सि० उक्ता यथा

त्रिकाण्डमण्डनः “चान्द्रोऽपि शुक्लपक्षादिः कृष्णादिर्वेति च द्विधा” इत्युक्त्वा देशभेदेन तद्व्यवस्थामाह “कृष्णपक्षादिकं मासं नाङ्गीकुर्वन्ति केचन। येऽपीच्छन्ति न तेषाञ्च देशे विन्ध्यस्य दक्षिणे” इति विन्ध्यस्य दक्षिणे कृष्णादिनिषेधाद् उत्तरतो द्वयोरभ्यनुज्ञा गम्यते तत्रापि शुक्लादिर्मुख्यः कृष्णादिर्गौणः शास्त्रेषु चैत्रशुक्लप्रतिपद्येव चान्द्रसंवत्सरारम्भोक्तेः तदुक्तं दीपिकायां “चान्द्रोऽब्दोमधुशुक्लप्रतिपदारम्भः” इति न हि ये कृष्णादिं मन्यन्ते तेषां वत्सरारम्भोभिद्यते अतः शुक्लादिर्मुख्यः कृष्णादिना मलमासासम्भवाच्च चान्द्रस्य सर्वनक्षत्रभोगेन नाक्षत्रमासः। सावनादीनां व्यवस्थोक्ता हेमाद्रौ ब्रह्मसिद्धान्ते “अमावास्यापरिच्छिन्नोमासः स्याद्ब्राह्मणस्य तु। संक्रान्तिपौर्णमासीभ्यां तथैव नृपवैश्ययोः”। अत्र ब्राह्मणादीनां यत्र कर्मविशेषे वचनान्तरेण “वसन्ते ब्राह्मणोऽग्निमादधीत” इत्यादिवन्मास उक्तस्तत्र दर्शान्तत्वमात्रं नियम्यते न तु सर्वकर्मसु दर्शान्तएवेति छन्दोगार्थसौभरेयादिनिधननियमवद्विधिलाघवात् त्रैवर्णिकानां सर्वकर्मसु मासविशेषविधेः सावनादीनां शूद्रानुलोमादिपरत्वापत्तेश्चेति गुरुचरणाः। ज्योतिर्गर्गः “सौरमासो विवाहादौ यज्ञादौ सावनः स्मृतः। आब्दिके पितृकार्ये च चान्द्रोमासः प्रशस्यते”। ऋष्यशृङ्गः “विवाहव्रतयज्ञेषु सौरं मासमुदाहृते। पार्वणे त्वष्टकाश्राद्धे चान्द्रमिष्टन्तथाब्दिके” स्मृत्यन्तरे “एकोद्दिष्टविवाहादौ कृष्णादौ सौरसावनौ” ज्योतिर्गर्गः “आयुर्दायविभागश्च प्रायश्चित्तक्रिया तथा। सावनेनैव कर्त्तव्या शत्रूणां चाप्युपासना” विष्णुधर्मे “नक्षत्रसत्त्राण्ययनानि चेन्दोर्मासेन कुर्य्याद्ग्रहगणात्मकेनेति” ब्राह्मे “तिथिकृत्ये च कृष्णादिं व्रते शुक्लादिमेव च। विवाहादौ च सौरादिं मासं कृत्ये विनिर्दिशेत्”

**गौणिक** त्रि० गुणे रूपादौ साधु कथा० ठक्। १गुणसाधने। गुणं वेत्ति तत्प्रतिपादकं ग्रन्थमधीते वा उक्था० ठक्। वसन्ता० ठक् वा। २गुणवेत्तरि ३तद्ग्रन्थपाठके च त्रि० गुणैः सत्त्वादिभिः निर्वृत्तः ठञ्। सत्त्वादिनिर्वृत्ते ४पदार्थे स्त्रियां ङीप्। तत्र गुणभेदेन गतिभेदो मनुना दर्शितो यथा

“येन यांस्तु गुणेनैषां संसारान् प्रतिपद्यते। तान् समासेन वक्ष्यामि सर्वस्यास्य यथाक्रमम्। देवत्वं सात्त्विका यान्ति मनुष्यत्वञ्च राजसाः। तिर्य्यक्त्वं तामसा नित्यमित्येषा त्रिविधा गतिः। त्रिविधा त्रिविधैषा तु विज्ञेया गौणिकी गतिः। अधमा मध्यमाऽग्र्या च कर्मविद्याविशेषतः। स्थावराः कृमिकीटाश्च मत्स्याः सर्पाः सकच्छपाः। पशवश्च मृगाश्चैव जघन्या तामसी गतिः। हस्तिनश्च तुरङ्गाश्च शूद्रा म्लेच्छाश्च गर्हिताः। सिंहा व्याघ्रा वराहाश्च मध्यमा तामसी गतिः। चारणाश्च सुपर्णाश्च पुरुषाश्चैव दाम्भिकाः। रक्षांसि च पिशाचाश्च तामसीषूत्तमा गतिः। झल्ला मल्ला नटाश्चैव पुरुषाः शस्त्रवृत्तयः। द्यूतपानप्रसक्ताश्च जघन्या राजसी गतिः। राजानः क्षत्रियाश्चैव राज्ञश्चैव पुरोहिताः। वादयुद्धप्रधानाश्च मध्यमा राजसी गतिः। गन्धर्वा गुह्यका यक्षा विबुधानुचराश्च ये। तथैवाप्सरसः सर्वा राजसीषूत्तमा गतिः। तापसा यतयो विप्रा ये च वैमानिका गणाः। नक्षत्राणि च दैत्याश्च प्रथमा सात्त्विकी गतिः। यज्वान ऋषयो देवा वेदा ज्योतींषि वत्सराः। पितरश्चैव साध्याश्च द्वितीया सात्त्विकी गतिः। ब्रह्मा विश्वसृजो धर्मो महानव्यक्तमेव च। उत्तमां सात्त्विकीमेतां गतिमाहुर्मनीषिणः। एष सर्वः समुद्दिष्टस्त्रिप्रकारस्य कर्मणः। त्रिविधस्त्रिविधः कृत्स्नः संसारः सार्वभौमिकः”। गुणएव अङ्गुल्या० स्वार्थे ठक्। ५गुणशब्दार्थे पु०

**गौतम** पु० गोतमस्यर्षेर्गोत्रापत्यम् ऋष्यण्। १गोतमर्षिगोत्रापत्ये २भरद्वाजसुतौ पु०। स च वैवस्वते मन्वन्तरे सप्तर्षिमध्यवर्त्ती यथाह हरिवं० ७अ० “अत्रिर्वसिष्ठोभगवान् कश्यपश्च महानृषिः। गौतमश्च भरद्वाजो विश्वामित्रस्तथैव च। तथैव पुत्रो भगवानृचीकस्य महात्मनः। सप्तमो जमदग्निश्च ऋषयः साम्प्रतं दिवि” शतानन्दपिता अहल्यापतिश्च गौतमस्ततोभिन्न एव। तत्कथा च” रा० बा० ४८।४९अ० “गौतमस्याश्रमं श्रेष्ठं पूर्वमासीन्महात्मनः इत्यादौ दृश्या

अहल्यापुत्रे ३शतानन्दे “गौतमश्च शतानन्दः” वीरच०। गोतमगोत्रस्य शरद्वतोऽपत्ये ४कृपाचार्य्ये ५तस्य भगिन्यां द्रोणपत्न्यां कृप्यां स्त्री ङीप्। “कृपः स्मृतः स वै तस्मात् गौतमी च कृपी मता। एते शारद्वताः प्रोक्ता एते ते गौतमाः स्मृताः” हरिवं ३२अ०। कृपशब्दे २१९२पृ० विवृतिः। “तत आसाद्य तरसा दारुणं गौतमीसुतम्” (अश्वत्थामानम्) भाग० १।७।४७श्लो०। ६मायादेवीसुते शाक्यमुनौ अमरः। एकतादीनां मुनीनां ७पितरि। “आसन् पूर्वयुगे राजन्! मुनयोभ्रातरस्त्रयः। एकतश्च द्वितश्चैव त्रितश्चादित्यसन्निभाः” इत्युपक्रमे “तेषाञ्च

तपसा प्रीतो नियमेन दमेन च। अभवद्‌ गौतमो नित्यं पिता धर्मरतः सदा” भा० शा० ३७अ०। ८दुर्गायां स्त्री मेदि० “गौतमीं कंसभयदां यशोदानन्दवर्द्धिनीम्” हरिवं०१७अ०। ९राक्षसीभेदे स्त्री शब्दर०। तस्येदमित्यण् ङीप्। १०गोदावरीनद्यां स्त्री गौरा०ङीष्। “गौतमस्याघनाशिनी” इति गोदावरीस्नानमन्त्रलिङ्गादघनाशाय तस्यास्तत्सेवितत्वाद्वा तथात्वम्” “ताम्रारुणा वेत्रवती पर्णाशा गौतमी तु सा। गोदावरी च वेणा च” भा० आ०१६५अ०। ११गोरोचनायाञ्च स्त्री राजनि०। १२शाक्यमुनिप्रणीतविद्यायाम् १३गौतमप्रणीतायां षोड़शपदार्थविद्यायाञ्च स्त्री। “अधीत्य गौतमीं विद्यां शृगालत्वमवाप्नुयात्। पुराणान्तरे तद्विद्याध्ययननिषेधः।

**गौतमसम्भवा** स्त्री गौतमाय तदघनाशाय सम्भवतीति अच्। गौतमगङ्गायां गोदावरीनद्याम् राजनि०। ब्रह्मपु०गौतमं प्रति त्र्यम्बकवाक्यम्। “इयन्तु गौतमी पुत्र! यत्र क्वापि ममाज्ञया। सर्वेषां सर्वदा नृणां स्नानान्मुक्तिं प्रदास्यति। कचित् काले पुण्यतमं किञ्चित्तीर्थं सुसङ्गमे। सर्वेषां सर्वदा तीर्थं गौतमी नात्र संशयः। इयं माहेश्वरी गङ्गा गौतमी वैष्णवीति च। ब्राह्मी गोदावरी नन्दा सुनन्दा कामदायिनी। ब्रह्मतेजःसमानीता सर्वपापप्रणाशिनी” “एवमेषाऽपि ते प्रोक्ता गङ्गाख्याता महामते!। माहेश्वरी वैष्णवी च सैव ब्राह्मी च पावनी। भागीरथी देवनदी हिमवच्छिखराश्रया। महेश्वरजटाभारेरेवं द्वैविध्यमागतम्। विन्ध्यस्य दक्षिणे गङ्गा गौतमी सा निगद्यते। उत्तरे सापि विन्ध्यस्य भागीरथ्यभिधीयते”

**गौतम** पु० गच्छतीति गं गात्रमुत्तायति उद्+तम–अच् स्वार्थे अण्। स्थावरविषभेदे हेमच०। [सम्बन्धिनि।

**गौदन्तेय** त्रि० गोदन्तस्येदम् शुभ्रा० ढक्। गोदन्तचन्दन

**गौदानिक** त्रि० गोदानं कर्मास्य ब्रह्मचर्य्यस्य महानाम्न्यादिभ्यः षष्ठ्यर्थे उपसंख्यानम्” वार्त्ति० ठक्। १गोदानाख्यब्रह्मचर्य्यसम्बन्धिनि। गोदाने उक्तं ठक्। २गोदानोक्ते कर्मणि। “उपरि हविषं कृत्वा गामवञ्च ब्राह्मणेभ्यः प्रदाय गौदानिकं कर्मः कुर्वीत” आश्व० गृ० १।८।६। “ततो गौदानोक्तं कर्म्म चापि कुर्य्यात्” नारा० वृत्तिः। [गौधेरोऽप्यत्र गोधाशब्दे दृश्यम्।

**गौधार** पु०गोधायाः अपत्यम् आरक्। गोधापुत्रे। गौधेयः

**गौधूम** त्रि० गोधूमस्य विकारः बिल्वा० अण्। गोधूमविकारे रोटिकादौ स्त्रियां ङीप्। “गौधूमं चषालं भवति” श त० ब्रा० ५।२।१।६। “उत्कीर्य्य समाप्यो गोधूमचषालः” कात्या०श्रौ०१४।१।२२। “गोधूमपिष्टमयचषालो भवतीत्यर्थः। [भवनयोग्ये क्षेत्रे।

**गौधूमीन** न०गोधूमस्य भवनं क्षेत्रम् गोधूम–खञ्। गोधूम

**गौधेरकायणि** पुंस्त्री गोधेरस्यापत्यं वाकिना० फिञ् कुक् च। गौधेरापत्ये। पक्षे अत इञ् न कुक्। गौधेरि तदपत्ये पुंस्त्री।

**गौनर्द** त्रि० गोनर्ददेशे भवः प्राचोभिन्नमते एङादित्वेऽपि वृद्धत्वाभावात् न छ, किन्तु अण्। १गोनर्ददेशभवे २पातञ्जलमुनौ पु०

**गौपत्य** न० गोपतेर्भावः पत्यन्तत्वात् यक्। गोपतिभावे गोस्वामित्वे। “विश्वरूपूजो मा विश गौपत्येन” यजु० ३।२२। “रायस्पोषं गौपत्यन्”। ४१।५८।

**गौपवन** पु० गोपवनशब्दे व्युत्पत्तिः। ऋषिभेदे स च मधुकाण्डस्य वंशस्थोमुनिभेदः “अथ वंशः पौतिमाषग्राव् गौपवनात् गौपवनः” वृ०उ० ४।६।१।

**गौपिक** पु० स्त्री गोपिकाया अपत्यम् ढकोबाधकः शिवा० अण्। गोपिकाऽपत्ये स्त्रियां ङीप्।

**गौपिलेय** त्रि० गोपिल+चतुरर्थ्यां सख्या० ढक् गोपिल निर्वृत्तादौ। [सदृशे।

**गौपुच्छ** त्रि०गोपुच्छमिव शर्करा० इवार्थे अण्। गोपुच्छ-

**गौपुच्छिक** त्रि० गोपुच्छेन क्रीतम् ठञ्। १गोपुच्छक्रीते। गोपुच्छेन तरति ठञ्। २गोपुच्छेन तारके च।

**गौप्तेय** पु० स्त्री गुप्ता वैश्यजातिस्त्री तस्या अपत्यम् शुभ्रा० ढक् तन्नामिकाणोऽपवादः। गुप्ताया अपत्ये।

**गौभृत** त्रि गोभृता निर्वृत्तं सङ्कला०अण्। गोभृता निर्वृत्ते

**गौमत** त्रि० गोमत्यां भवः पलद्या० अण्। गोमतीनदीभवे मत्स्यादौ।

**गौमतायन** पु० स्त्री गोमत्यां भवादि वा० फञ्। गोमतीभवादौ। ततः अरीहणा०चतुरर्थ्यां वुञ्। गौमतायनक० तन्निर्वृत्तादौ त्रि०। [निर्वृत्तादौ।

**गौमयिक** त्रि० गोमयेन निर्वृत्तादि कुमुदा० ठञ्। गोमय

**गौमायन** पु०स्त्री गोमिनोगोत्रापत्यम् अश्वा०फञ् टिलोपः। गोस्वामिगोत्रापत्ये।

**गौर** पु० गुङ्–गतौ र नि० वृद्धिः गुर–घञ् प्रज्ञाद्यण् वा। १चन्द्रे २श्वेतसर्षपे मेदि० ३धवहृक्षे राजनि० ४पीतवर्णे ५श्वेतवर्णे ६अरुणवर्णे च पु० ७तद्विशिष्टे त्रि०

स्त्रियां गौरा॰ङीष्। ८श्रीचैतन्यदेवे महाप्रभौ अनन्तसंहिता। ६पद्मकेशरे न॰मेदि॰ १०स्वर्णे ११कुङ्कुमे च न॰ राजनि॰। तत्र श्वेतवर्णयुक्ते "कैलासगौरं वृषमारुरुक्षोः" रघुः पीतवर्णाद्यो "गोरोचनाभनितान्तगौरै" कुमा॰ अरुणवर्णाद्यो "कोषैः पिष्टातकोघैः कृतदिवसमुखैः कुङ्कुमक्षोदगौरैः" रत्ना॰"तरुणादित्यगौरैश्च शरगौरैश्च वानरैः" रामा॰ कि॰३०;स॰। "नितान्तगौर्यौ कृतकुङ्कुमेष्वलम्" किरा॰ १२परिमाणभेदे यथोक्तं याज्ञ॰" जालसूर्यमरीचिस्थं त्रसरेणुरजः स्मृतम्। तेऽष्टौ लिक्षा च तास्तिस्रो राजसर्षप उच्यते। गौरस्तु ते त्रयः षट् च यवोमध्यस्तु ते त्रयः" इति। १३मृगभेदे पु॰ स्त्री "गौरजो महिषः कृष्णः शूकरो गवयो रुरुः। द्विशफाः पशवश्चेमे अविरुष्ट्रश्च सत्तम!। खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा। एते चैकशफाः क्षत्तः!" भाग॰ ३।१०।२२। अ॰। "महोरगाश्च भवतो विद्रवन्ति सगौरकृष्णाः शरभाश्चमर्यः" भाग॰ ८।२।१६अ॰। १४विशुद्धे त्रि॰ मेदि॰। "कडाराः॰कर्मधारयेऽस्य वा पूर्वनिपातः गौरपटःपटगौरः।

**गौरत्व** न॰ गोरक्षस्य भावः कर्म्म वा ष्यञ्। वैश्यकर्मभेदे पाशुपाल्ये। "कृषिगौरक्ष्यवाणिज्यं वैश्यकर्म्म स्वभावजम्" गीता।

**गौरग्रीव** पु॰ गौरी ग्रीवास्य। १देशभेदे २तद्देशवासिनि च तस्यापत्यम् तस्येदं वा रैवतका॰छ गौरग्रीवय। ३तदपत्ये पुंस्त्री ४तत्सम्बन्धिनि त्रि॰ गौरग्रीवदेशश्च वृ॰स॰१४अ॰ कूर्मविभागे मध्यभागे उक्तः। "गौरग्रीवोद्देहिकपुण्डास्य पाञ्चालाः"।

**गौरचन्द्र** पु॰ चैतन्यदेवे महाप्रभौ "कृष्णश्चैतन्यो गौराङ्गो गौरचन्द्रः शचीसुतः। प्रभुर्गौरो गौरहरि नामानि भक्तिदानि मे" अनन्तसंहिता एतस्य दृढतरप्रमाणत्वं संप्रदायविदो न मन्यन्ते।

**गौरजीरक** पु॰ कर्म॰। श्वेतजीरके। राजनि॰।

**गौरतित्तिरि** पुंस्त्री श्वेततित्तिरिभेदे। "तित्तिरिः सर्व्वदोषघ्नो ग्राही वर्णप्रसादनः। हिक्काश्वासानिलहरो विशेषात् गौरतित्तिरिः" सुश्रुते तन्मांसगुणोक्तिः [राजनि॰]

**गौरत्वच्** पु॰ गौरी त्वक् यस्य। इङ्गुदीवृक्षे (जियापुति)

**गौरपृष्ठ** पु॰ यमसभासदन्नृपभेदे। "इन्द्रद्युम्नो भीमजानुर्गौरपृष्ठो नलोगयः" भा॰स॰ अ॰ यमसभावर्णने।

**गौरमुख** पु॰ गौरं विशुद्धं मुखमस्य। शमीकर्षेः शिष्ये मुनिभेदे तेन हि शिष्येण स्वपुत्रशृङ्गिशापवृत्तान्तं शमीकर्षिः परिक्षिते न्यवेदयत् तत्कथा भा॰आ॰४२अ॰। "एवमादिश्य शिष्यं स प्रेषयामास सुव्रतः। परिक्षिते नृपतये दयापन्नो महातपाः। संदिश्य कुशलप्रश्नं कार्य्यवृत्तान्तमेव च। शिष्यं गौरमुखं नाम शीलवन्तं समाहितम्। सोऽभिगम्य ततः शीघ्रं नरेन्द्रं कुरुवर्द्धनम्। विवेश भवनं राज्ञः पूर्व्वं द्वाःस्थैर्निवेदितः। पूजितस्तु नरेन्द्रेण द्विजो गौरमुखस्तदा। आचख्यौ च परिश्रान्तो राज्ञे सर्व्वमशेषतः। शमीकवचनं घोरं यथोक्तं मन्त्रिसन्निधौ। गौरमुख उवाच। शमीकोनाम राजेन्द्र! विषये वर्त्तते तव। ऋषिः परमधर्म्मात्मा दान्तः शान्तो महातपाः। "तस्य त्वया नरव्याघ्र! सर्पः प्राणैर्वियोजितः। अवसक्तो धनुष्कोट्या स्कन्धे मौनान्वितस्य च। क्षान्तवांस्तव तत्कर्म पुत्रस्तस्य न चक्षमे। तेन शप्तोऽसि राजेन्द्र! पितुरज्ञातमद्य वै। तक्षकः सप्तरात्रेण मृत्युस्तव भविष्यति। तत्र रक्षां कुरुष्वेति पुनः पुनरथाब्रवीत्। तदन्यथा न शक्यञ्च कर्त्तुं केनचिदप्युत। न हि शक्नोमि तं यन्तुं पुत्रं कोपसमन्वितम्। ततोऽहं प्रेषितस्तेन तव राजन्! हितार्थिना"। गौरं शुक्लं मुखमस्य। श्वेतमुखादौ त्रि॰ स्त्रियां स्वाङ्गत्वात् वा ङीष्।

**गौरमृग** पु॰ स्त्री नित्यकर्म॰। गौरवर्णे मृगभेदे स्त्रियां ङीष्। "क्रोष्टा मायोरिन्द्रस्य गौरमृगः" यजु॰ २४।३।

**गौरव** न॰ गुरोर्भावः कर्म्म वा ष्यञ्॰ वा अण्। १गुरुत्वे २तत्कर्म्मणि च। "तथापि यन्माय्यपि ते गुरुरित्यस्ति गौरवम्" माघः। "तामगौरवभेदेन" "प्रायश्चलं गौरवमाश्रितेषु" कुमा॰। "सहस्रं तु पितॄन् माता गौरवेणातिरिच्यते" मनुः। गौरवं साधनतयास्त्यत्र अच्। ३गौरवहेतुके अभ्युत्थाने हेम॰। गुरोरिदम् अण्। ४गुरुसम्बन्धिनि त्रि॰। "मध्यगया भगगेन गुरोर्गौरववत्सराः" वसिष्ठसिद्धान्तः।

**गौरवाहन** पु॰ श्वेतवाहने नृपभेदे। कुन्तिभोजो महातेजाः पार्थिवो गौरवाहनः" भा॰ स॰ ३३अ॰।

**गौरवित** त्रि॰ गौरवं जातमस्य तार॰ इतच्। पूज्ये। "गौरवितक्रियाहेतुर्भक्तिः" शब्दचि॰ मथुरानाथः।

**गौरशाक** पु॰ गौरः शाकोऽस्य। मधुकभेदे जटा॰।

**गौरशिरस्** त्रि॰ गौरं शिरोऽस्य अतिवृद्धत्वात्। १शुक्लवर्णकेशयुक्ते २मुनिभेदे पु॰। "शङ्खश्च लिखितश्चैव तथा गौरशिरा मुनिः" भा॰ स॰ ७अ॰ इन्द्रसभोक्तौ। स च

राजनीतिशास्त्रप्रणेता यथाह" भा० शा० ५८अ०। "विशालाक्षश्च भगवान् काव्यश्चैव महातपाः। सहस्राक्षो महेन्द्रश्च तथा प्राचेतसो मनुः। भारद्वाजश्च भगवांस्तथा गौरशिरा मुनिः। राजशास्त्रप्रणेतारो ब्रह्मण्या ब्रह्मवादिनः"

**गौरसर्षप** पु०कर्म०। १श्वेतसर्षपे (सितसरिषा) रत्नमाला। तद्गुणा भावप्र० उक्ता यथा "गौरस्तु सर्षपः प्राज्ञैः सिद्धार्थ इति कथ्यते। सर्षपस्तु रसे पाके कटुःस्निग्धः सतिक्तकः। तीक्ष्णोष्णः कफवातघ्नो रक्तपित्ताग्निवर्द्धनः। रक्षोहरोजयेत् कण्डूं कुष्ठकोष्ठकृमिग्रहान्। यथारक्तस्तथा गौरः किन्तु गौरोवरोमतः"। स च क्षौमशोधकः यथाह मनुः"श्रीफलैरंशुपट्टानां क्षौमाणां गौरसर्षपैः" द्रव्यशुद्धौ। "सगौरसर्षपैः क्षौमम्" गौरसर्षपकल्केन साज्येन साधितस्य च" याज्ञ०। २राजसर्षपत्रयमिते परिमाणे च। "त्रसरेणवोऽष्टौ विज्ञेया लिक्षैका परिमाणतः। ता राजसर्षपास्तिस्रस्ते त्रयो गौरसर्षपः" मनुः।

**गौरसुवर्ण** पु० गौरः श्वेतः सुष्ठु वर्णोऽस्य। चित्रकूटप्रसिद्धे पत्रशाकभेदे "गौरसुवर्णं शिशिरं कफपित्तज्वरप्रणुत्। दाहारुचिभ्रान्तिरक्तश्रमहृत् पथ्यमेव च" राजनि० तद्गुणा उक्ताः।

**गौरा** स्त्री गौर+गौरादिगणे वर्णवाचिनएव गौरशब्दस्य ग्रहणात् विशुद्धार्थपरत्वे टाप्। विशुद्धायाम् स्त्रियाम् द्विरूपकोषः। तदर्थपरतायामेव टाबन्तता वर्णपरत्वे तु ङीषिन्तित्याकारे स्थितम्।

**गौराङ्ग** पु०गौरं श्वेतं पीतं वाऽङ्गमस्य। १विष्णौ "श्वेतोरक्तस्तथा पीत इदानीं कृष्णतां गतः" भाग०१०स्क० तस्य युगावतारे श्वेताङ्गत्वात् पीताङ्गत्वाच्च तथात्वम्। गौरं विशुद्धमङ्गमस्य। विशुद्धकान्तियुक्ते नन्दनन्दने २श्री कृष्णे च "गौराङ्गं गौरदीप्ताङ्गं पठेत् स्तोत्रं कृताञ्जलिः। नन्दगोपसुतं चैव नमस्यामि गदाग्रजम्" ब्रह्मयामलम्। "गौराङ्गो नादगम्भीरः स्वनामामृतलालसः" कृष्णयामलम्। ३नवद्वीपस्थशचीसुते इति वैष्णवाः। ते हि तत् परतयैव यामलवाक्यद्वयं व्याचक्षुः ४गौरवर्णदेहके त्रि०स्त्रियां ङीष्। गौराङ्गताहेतुरौषधकल्कं गरु० पु० १६४ अ० यथा "कुष्माण्डनालक्षारस्तु समांभूतश्च तत्त्वचः। जलपिष्टा हरिद्रा च सिद्धा मन्दानलेन हि। माहिषेण पुरीषेण वेष्टिता द्विज-

मध्वज!। अस्या उद्वर्त्तनं कुर्यादङ्गगौरत्वसाधनम्"।

**गौराजाजी** स्त्री कर्म०। श्वेतजीरके राजनि०।

**गौरादि** पु० "षिद्गौरादिभ्यश्च" पा० उक्ते ङीषनिमित्ते शब्दगणभेदे स च गणः पा० ग० सू० उक्तोयथा "गौर मत्स्य मनुष्य शृङ्ग पिङ्गल हय गवय मुकय ऋष्य पुट तुण द्रुण द्रोण हरिण काकण पटर उणक आमलक कुवल बिम्ब बदर कर्कर तर्कार शर्कार पुष्कर शिखण्ड सलद शष्कण्ड सनन्द सुषम सुषव अलिन्द गडुल पाण्डश आढक आनन्द आश्वत्थ सृपाट आपच्चिक शष्कुल सूर्म शूर्प सूच यूष यूथ सूप मेथ वल्लक धातक सल्लक मालक मालत साल्वक वेतस वृस अतस उभय भृङ्ग मह मठ छेद पेश मेद श्वन् तक्षन् अनडुही अनड्वाही एषण (करणे) देह देहल काकादन गवादन तेजन रजन लवण औद्गाहमानि गौतम पारक अयस्थूण भौरिकि भौलिकि भौलिङ्गि यान मेध आलम्बि आलजि आलब्धि आलक्षि केवाल आपक आरट नट टोट नोट मूलाट शातन पोतन पातन पानठ आस्तरण अधिकरण अधिकार आग्रहायण प्रत्यवरोहिन् सेचन सुमङ्गल (संज्ञायाम्) अण्डर सुन्दर मण्डल मन्थर मङ्गल पट पिण्ड षण्ड ऊर्द गुर्द शम सूद आर्द हृद पाण्ड भाण्ड लोहाण्ड कदर कन्दर कदल तरुण तलुन कल्माष बृहत् महत् सोम सौधर्म रोहिणी (नक्षत्रे) रेवती (नक्षत्रे) विकल निष्कल पुष्कल कटी (श्रोणिवचने)। पिप्पल्यादयश्च। पिप्पली हरितकी कोशातकी शमी वरी शरी पृथिवी कोष्ट्री मातामही पितामही आकृतिगणः"। गौरशब्दस्य तोपधभिन्नवर्णवाचित्वेऽपि प्रातिपदिकस्वरेणोत्सर्गतः कृष्णे तिषिदन्तोदात्ततया अन्यतो ङीषित्यस्याप्रवृत्तेर्गणे पाठः।

"उपाद् द्व्यजजिनमगौरादयः"पा० उपात् परस्य द्व्यजन्मादेरन्तोदात्ततायां पर्युदस्ते शब्दगणे स च गणः पा० ग० उक्तो यथा "गौर तैष तैल लेट लोट दिहवा कृष्ण कन्या गध कल्पपाद।" उपगौरः

**गौरार्द्रक** न० नित्यकर्म०। स्थावरविषभेदे हेमच०।

**गौरावस्कन्दिन्** पु० गुरोरिदं गौरवं गुरुपत्नीरूपं कलत्रं तदास्कन्दति आ+स्कन्द—णिनि वेदे पृषो० वर्णविपर्ययः। अहल्याजारे शक्रे इन्द्रागच्छेत्युपक्रमे "गौरावस्कन्दिन्नहल्यायै जारेति" शत० ब्रा० ३।३।४।१८।

**गौराश्व** पु॰ गौरोऽश्वोऽस्य । १नृपभेदे । "अलर्कः काश्यसेनश्च गयो गौराश्व एव च" भा॰स॰ ८ अ॰ । यमसभ्योक्तौ २श्वेतवाहने श्वेताश्वे अर्जुने च ।

**गौरास्य** पुंस्त्री गौरमास्यं यस्य । गौरमुखे कृष्णदेहे वानरभेदे राजनि॰ । स्त्रियां जातित्वेऽपि योपधत्वात् न ङीष् किन्तु टाप् ।

**गौराहिक** पुंस्त्री गौरः शुभ्रः अहिः कर्म॰ संज्ञायां कन् । सुश्रुतोक्ते निर्विषे सर्पभेदे "गौराहिकवृक्षेशय" इति सुश्रु॰ अहिशब्दे दृश्यम् ।

**गौरि** पु॰ गौरस्यापत्यम् इञ् । आङ्गिरसे ऋषिभेदे "गौरेराङ्गिरसस्य साम" श्रुतिः ।

**गौरिक** त्रि॰ गौरवर्णोऽस्त्यस्य ठन् । १श्वेतवर्णयुक्ते २श्वेतसर्षपे पु॰ "यवाह्वगौरिकोन्मिश्रैः पादलेपः प्रशस्यते" सुश्रुतः ।

**गौरिमत्** त्रि॰ गौरीं मन्यते मन+क्विप् इत॰ ङ्यापोरिति संज्ञायां ह्रस्वः । १गौरीनामयुक्ते गौरीतीर्थे तत्रस्थे २नदीभेदे स्त्री शार्ङ्ग॰ङीन् । (भोगवत् गौरिमत्) संज्ञायाम्" तद्गणसूत्रोक्तेः संज्ञायामेव ङीन् अन्यत्र ङीप् ।

**गौरिल** पु॰ गौरवर्णोऽस्त्यस्य बा॰इलच् । १सिद्धार्थे श्वेतसर्षपे २लौहचूर्णे च मेदि॰ ।

**गौरिवीति** पु॰ गौर्य्यां वेदवाचि वीतिः विशेषगतिरस्य "ङ्यापोरिति" संज्ञायां ह्रस्वः । शक्तिसुतनिपुते ऋषिभेदे । "गौरवीतिः शाक्त्यः जलमिवाह" शत॰ब्रा॰१२।८।३।७। "स्तोमवामा गौरवीतेरवर्द्धनः" ऋ॰५।२९।११। गौरिवीते रेतन्नामकस्य मन्त्रद्रष्टुः" भा॰ । गौरिवीतिना दृष्टं साम अण् । गौरिवीत तद्दृष्टे सामभेदे "तृतीयसवनाग्निहिष्णोः श्यिपिविष्टवतीषु गौरिवीतेन" कात्या॰ श्रौ॰ २५।१३।६।"गौरिवीतं नाम सामभेदस्तेन स्तुवीरन्" कर्कः ।

**गौरिसक्थ** पु॰ गौर्य्या इव सक्थि अस्य षच् समा॰ ह्रस्वः सुषामा॰ षत्वम् । गौरीतुल्यसक्थियुक्ते ।

**गौरी** स्त्री गौर+गौरा॰ ङीष् । १गौरवर्णायां स्त्रियाम् "कपोलभित्तीरिव लोध्रगौरीः" माघः । २हिमालयसुतायां कालीनाम्न्यां मेनकाकन्यायां तस्याः प्राक् कृष्णवर्णत्वेन जातत्वेऽपि पश्चात् पीताङ्गत्वात् तथात्वं कालिकापुराणशब्दे २०१५पृ॰४५अ॰तन्मूलं दृश्यम् । पुराणान्तरे "योगाग्निदग्धदेहा सा पुनर्जाता हिमालये । शङ्खेन्दुकुन्दधवला ततो गौरीति सा स्मृता" इत्युक्तम् तच्च कल्पान्तरविषयम् । "अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी" इत्युक्तायां ३अष्टवर्षायां स्त्रियाम् । ४हरिद्रायां ५दारुहरिद्रायाम् ६गोरोचनायां ७वरुणपत्न्याञ्च । ८प्रियङ्गुवृक्षे ९पृथिव्यां १०नदीभेदे च मेदि॰ "लेभे प्रसेनजिज्जायां गौरीं नाम पतिव्रताम् । अभिशप्ता तु सा भर्त्रा नदी वै बाहुदाऽभवत्" हरिवं॰ १२ अ॰ ११उक्तायां सूर्य्यवंश्यप्रसेनजिज्जायायाम् तस्याएव बाहुदानदीरूपत्वोक्तेः नदीविशेषः बाहुदानदीपर इति बोध्यम् । १२बुद्धशक्तिभेदे हेम॰ । १३मञ्जिष्ठायां १४श्वेतदूर्वायां १५मल्लिकायां १६तुलस्यां १७सुवर्णकदल्याम् १८आकाशमांस्याञ्च राजनि॰ । सर्वासाञ्चासां शुभ्रपीतरक्तविशुद्धपत्रपुष्पादियुक्तत्वात्तथात्वम् १९रागिणीभेदे संगीतदामो॰ । २०वाचि निघण्टुः । "गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन्" ऋ॰१।१६४।४०।"गौरी गौरवशीला शब्दब्रह्मात्मिका च वाक् मिमाय । मिमतिः प्रतिष्ठार्थे धातुः । प्रतिष्ठितानि घटादिद्रव्याणि तक्षती तत्तद्वाचकत्वेन निष्पादयन्ती । एकपदी अव्याकृतत्वेनैकप्रतिष्ठानैकरूपावात्मना । द्विपदी सुप्तिङ्भेदेन पदद्वयवती । चतुष्पदी नामाख्यातोपसर्गनिपातभेदेन । अष्टापदी आमन्त्रितसहितसुब्विभक्तिभिरष्टभेदेनाष्टापदी । नवपदी नवसु पदेषु भवन्ती बभूवुषी पश्चाद्बहुविधाभिव्यक्तियोगेयुषी परमे व्योमन् उत्कृष्टे हृदयाकाशे मूलाधारे सहस्राक्षरानेकाकारेण व्याप्ताऽनेकध्वनिप्रकारा भवतीत्यर्थः" भा॰। निरु॰११।४। व्याख्यान्तरं दृश्यम् । गौरीरिति सुलोपाभावश्छान्दसः। "सोमो गौरी अधिश्रितः" ऋ॰९।१।१२।३। गौरी गौर्य्याम् मध्यमायां वाचि" भा॰ "सुपां सुलुक्" पा॰ सप्तम्या लुक् । "ईदूतौ च सप्तम्यर्थे" पा॰ तस्य प्रगृह्यसंज्ञत्वात् न यणादेशः, भा॰। २१दीप्तिमत्यां स्त्रियां निरु॰। "गौरी रोचते ज्वलतिकर्म्मणः । अय पीतोवा गौरोवर्णः एतस्मादेव प्रशस्तो भवति तस्या एषा भवति" "गौरीर्मिमाय सलिलानि" श्रुति मभिलक्ष्य उक्तनिरुक्तिः । पार्वतीरूपा गौरी च माघशुक्लचतुर्थ्यां पूज्या यथाह ति॰ भविष्योत्त॰ पु॰ माघशुक्लमभिलक्ष्य "चतुर्थी वरदा नाम तस्यां गौरी सुपूजिता । सौभाग्यमतुलं कुर्यात्"

**गौरीकान्त** पु॰ ६त॰ महादेवे गौरीनाथादयोऽप्यत्र ।

**गौरीगुरु** पु॰६त॰। पार्वतीपितरि हिमालये "गौरीगुरोर्म-

ह्वरमाविवेश" रघुः "अखिलमिदममुष्यं गौरीगुरोः" किरा० गौरीपित्रादयोऽप्यत्र ।

**गौरीज** न० गौर्य्यारजसो जायते जन—ड । १अभ्रके राजनि० अभ्रकशब्दे २११ पृ० दृश्यम् । २कार्त्तिकेये पु० ।

**गौरीतक्रम्** न० गौर्य्या निर्म्मितं तक्रम् । "लवणं मरिचं विश्वं जीरं नारङ्गजं त्वचम् । एलाचूर्णान्वितं तक्रं धूपयेत् हर्त्तहिङ्गुना । गौर्य्येदं विहितं तक्रं सर्व्वदोषनिबर्हणम्" शब्दार्थचि० उक्ते तक्रभेदे

**गौरीपट्ट** पु० गौर्य्याः पट्टमिव स्थानम् । शिवलिङ्गस्थे गौर्य्याः पूजास्थाने शिवलिङ्गशब्दे विवृति०

**गौरीपुत्र** पु० ६त०। कार्त्तिके गौरीतनयादयोऽप्यत्र [राजनि०

**गौरीपुष्प** पु० गौरी हरिद्रेव पीतं पुष्पमस्य । प्रियङ्गुवृक्षे

**गौरीमन्त्र** पु० तन्त्रसारोक्ते गौर्य्या मन्त्रभेदे तस्योद्धारस्य "ह्रीं गौरि! रुद्रदयिते ! योगेश्वरि ! सवर्म (हुँ) फट् । द्विठान्तः षोडशवर्णोऽयं मन्त्रः सद्भिरुदीरितः"

**गौरीललित** न० गौरी हरिद्रेव ललितम् पीतवर्णत्वात् । हरिताले राजनि० ।

**गौरीशिखर** न० गौर्य्यास्तपःस्थानं शिखरम् । स्वनामख्याते पर्वतभेदरूपे तीर्थभेदे "प्रजासु पश्चात् प्रथितं तदाख्यया जगाम गौरी शिखरं शिखण्डिमत्" कुमा०

**गौरीसुत** पु० ६त० । १अष्टवर्षोढाजतनये शब्दार्थचि० । २कार्त्तिके च । [ठक् । गुरुपत्नीगामिनि ।

**गौरुतल्पिक** पु० गुरुतल्पं गुरुपत्नीं गच्छति परदारा०

**गौलक्षणिक** त्रि० गोलक्षणं वेत्ति तद्ग्रन्थमधीते वा "विद्यालक्षणकल्पान्ताच्च" वार्त्ति० ठक् । १गोलक्षणवेत्तरि २तद्ग्रन्थाध्येतरि च ।

**गौलन्द्य** पुंस्त्री गोलन्दगोत्रापत्यं गर्गा० यञ् । गोलन्दर्षिगोत्रापत्ये स्त्रियां जातित्वात् ङीष् यलोपः । गोलन्दी तदपत्यस्त्रियाम् । गौलन्द्यस्य छात्राः कण्वा० अण् यलोपः । गौलन्दास्तच्छात्रेषु ।

**गौलाङ्कायन** पुंस्त्री गोलाङ्कस्य गोत्रापत्यम् अश्वा० फञ् । गोलाङ्कर्षेर्गोत्रापत्ये स्त्रियां जातित्वात् ङीष् ।

**गौलिक** पु० गुडे साधु ठक् डस्य लः । मुष्ककवृक्षे राजनि०

**गौलोमन** त्रि० गोलोमेव शर्करा० अण् । गोलोमसदृशे स्त्रियां ङीप् ।

**गौल्मिक** पु० गुल्मे रक्षणार्थस्थानभेदे नियुक्तः ठक् । गुल्मरूपरक्षणार्थस्थाननियुक्ते यामिके सेनाभेदे "तथैव गुल्मे संप्रेक्ष्य पयानान् मध्यगौल्मिकान्" "त्यक्त्वा द्वाराणि च द्वाःस्थास्तथा गुल्मानि गौल्मिकाः" भा०शा० ८अ० [राजनि० ।

**गौल्य** न० गुडस्य भावः ष्यञ् डस्य लः । माधुर्य्ये मधुररसे

**गौशतिक** त्रि० गोशतमस्यास्ति "एकगोपूर्वात्" पा० शतसहस्रादित्यपकर्षात् ठञ् । गोशतस्वामिनि स्त्रियां ङीप् ।

**गौष्ठ** त्रि० गोष्ठ्यां भवः पलद्या० अण् । गोष्ठभवे स्त्रियां ङीप् । स्वार्थे अण् ङीप् गौष्ठीत्यपि गोष्ठ्याम् । तच्छब्दस्यैव पलद्यादिषु पाठ इत्यन्ये ।

**गौष्ठीन** न० पूर्वं भूत गोष्ठं खञ् । भूतपूर्वगोष्ठे । "तामुवाच स गौष्ठीने वने स्त्रीपुंसभीषणे" भट्टिः

**गौसहस्रिक** त्रि० गोसहस्रमस्त्यस्य गौशतिकवत् ठञ् । गोसहस्रस्वामिनि ।

**गौहलव्य** पुंस्त्री गुहलोर्ऋषेर्गोत्रापत्यम् गर्गा०यञ् । गुहलुगोत्रापत्ये स्त्रियां ङीप् लोहिता० स्वार्थे ष्फः । गौहलव्यायनी ।

**ग्धि** स्त्री अद—क्तिन् वेदे घसादेशः उपधालोपश्च तस्य जश्विधौ न स्थानिवत्त्वम् । भक्षणे । "सग्धिश्च मे" सि० कौ० धृता श्रुतिः ।

**ग्ना** स्त्री गम—बा० ना डिच्च । स्त्रीमात्रे "ग्नास्त्वा कृन्तन्नपसोऽतन्वत वयित्र्यो वयन्" ता०ब्रा०१।८।९। "गच्छन्ति पुंमांसमेना इति ग्नाः स्त्रियः" भा० "मेना ग्ना इति स्त्रीणां स्त्रियस्त्यायतेरपत्रपणकर्म्मणः । मेना मानयन्त्येनाम् । ग्ना गच्छन्त्येनाः" निरु० । २देवपत्न्याम् । "आ ग्ना अग्न इहावसे होत्राम्" ऋ०१।२२।१०। ग्ना देवपत्नी भा० । ग्ना अस्त्यस्य मतुप् मस्य वः । ग्नावत् सपत्नीके । "अभि यज्ञं गृणीहि नो ग्नावो नेष्टः" ऋ० १।१५।३। "मतुवसोरुः" संबुद्धौ विसर्गः भा० । ३वाचि निघ० । "तव ग्नावो मित्रमहः सजात्यम्" ऋ० २।१।५। ग्ना स्तुतिवाचस्ताः सन्तीति मतुप् । "छन्दांसि वै ग्नाः इति श्रुतेः ४वेदे च वेदस्य वाग्विशेषत्वात्तथात्वम् । "नराशंसो ग्नास्पतिर्नो अव्याः" ऋ० २ ३८।१० ग्नास्पतिर्देवपत्नीनां पतिश्छन्दसां पतिर्वा" भा० "ग्नास्पतिरित्यत्र वा० सुट् । सान्तं वा शब्दान्तरम् अतएव निघण्टौ ग्नाः इति विसर्गान्तं पठितम् ।

**ग्मा** स्त्री गम्यतेऽत्र गम—बा० ड्मा । पृथिव्यां निघ० ।

**ग्रथ** कुटिलीकरणे आत्म० इदित् सक० सेट् । ग्रन्थते अग्रन्थिष्ट जग्रन्थे ।

**ग्रथन** न० ग्रन्थ—बा० क्यु नलोपः । (गाँथा) । ग्रन्थने

“दोषस्थिरत्वात् ग्रथनाच्च” सुश्रुतः। “ग्रथनञ्च विदर्भस्य संपुटोरोधनं तथा। योगः पल्लव इत्येते विन्यासाः षट्सु कर्म्मसु”। “मन्त्रेणान्तरितान् कृत्वा साध्यवर्णान् यथाविधि। ग्रथनं तद्विजानीयात् प्रशस्तं शान्तिकर्म्मणि” २तन्त्रसारोक्ते “मन्त्रेणान्तरितसाध्यवर्णविन्यासभेदे च।

**ग्रथित** त्रि॰ ग्रन्थ—संदर्भे क्त नलोपः। सूत्रादिना कृतसन्दर्भे माल्यादौ “पर्य्यायग्रथिताक्षसूत्रवलयाः” प्रबो॰। “अथास्य रत्नग्रथितोत्तरीयम्”“कुसुमैर्ग्रथिताम पार्थिवैः” (स्रजम्) रघुः। “तच्छ्लोककूटमद्यापि ग्रथितं सुदृढं मुने”भा॰आ॰ १अ॰। “वर्णैः कतिपयैरेव ग्रथितस्य स्वरैरिव” माघः। २क्रान्ते ३हिंसिते च मेदि॰।

**ग्रथिन्** त्रि॰ग्रन्थ—बा॰इनि किच्च नलोपः। जल्पके। “न्यक्रतून् ग्रथिनो मृध्रवाचः” ऋ॰ ७।६।३। “ग्रथिनो जल्पकान्” भा॰।

**ग्रथ्नन** पु॰ ग्रन्थ—बा॰ नङ्। स्तवके। “ललाटे नीलमित्युक्तं ग्रथ्नः स्तवक उच्यते। कपुष्टिकाभितः केशाः मूर्द्ध्नि पश्चात् कपुष्टिका” भट्टनारायणधृतवाक्यम् “पश्चात् पतिरवस्थाय गुम्फनमौडुम्बरं ललाटे ग्रथ्नमावध्नाति” गोभिलसूत्रम्।

**ग्रन्थ** संदर्भे वा चु॰उभ॰पक्षे क्र्या॰ प॰सक॰सेट्। ग्रन्थयति—ते ग्रथ्नाति अजग्रन्थत् अग्रन्थीत्। ग्रन्थयामास बभूव चकार चक्रे। जग्रन्थ जग्रथतुः—जग्रन्थतुः। जग्रन्थिथ जग्रथिथ इत्येके। अस्य कविकल्पद्रुमे पा॰ गणे च परस्मैपदित्वेव क्र्यादिकस्य पाठः। णिचि तु उभयपदिता। भारद्वाजीयास्तु पठन्ति “णिश्रन्थिग्रन्थिब्रू-आत्मनेपदाकर्मकाणामात्मनेपदेषूपसंख्यानम्” श्रन्थि ग्रन्थ्योराधृषीयत्वात् णिजभावपक्षे ग्रहणम्। ग्रन्थति ग्रन्थम्। श्रन्थति मेखलान्देवदत्तः। ग्रन्थते ग्रन्थः। अग्रन्थिष्ट। श्रन्थते। अश्रन्थिष्ट। इति भारद्वाजीय मते आत्म॰। तेनोभयपदता। सि॰कौ॰पक्षे भ्वा॰दित्वमपि तेन ग्रन्थति इत्यादि क्र्यादिकयोस्तु श्रथ्नीते। ग्रथ्नीते सि॰कौ॰। एतच्च कर्म कर्त्तरि न तु कर्त्तरि इत्यन्ये

उद्+उत्तोल्य ग्रथने। “केशपक्षान् उदग्रथ्नीतरान्” आश्व॰श्रौ॰१०।८।८“लताप्रतानोद्ग्रथितैः स केशैः”रघुः। “माल्यानि तस्योद्ग्रथितानि पट्टैः” भा॰व॰ ११२ अ॰ “कर्म्मीयं ग्रथितमुद्ग्रथयन्ति सन्तः”भाग॰ ४।२२।२७।

**ग्रन्थ** पु॰ ग्रन्थ—सन्दर्भे भावे घञ्। १गुम्फने। कर्म्मणि घञ्। २शास्त्रे “ग्रन्थग्रन्थिरिह क्वचित् क्वचिदपि न्यासि प्रयत्नान्मया” नैष॰। “ग्रन्थग्रन्थिं तदा चक्रे मुनिर्गूढं कुतूहलात्” भा॰ आ॰ १अ॰। ३धने ४द्वात्रिंशद्वर्णमितानुष्टुप् छन्दस्के श्लोके हेम॰।

**ग्रन्थकार** स्त्री ग्रन्थं करोति अण् उप॰ स॰। ग्रन्थकारके (शाकल्यम्) “तस्माह भगवांस्तुष्टो ग्रन्थकारो भविष्यति” भा॰ आनु॰ ३८४ अ॰। कृ—क्विप् ६त॰। ग्रन्थकृदप्यत्र। “ग्रन्थकृल्लोकविख्यातो भविताम्यजरामरः” भा॰ आनु॰ १४अ॰। “ग्रन्थारम्भे विघ्नविघाताय समुचितेष्टदेवतां ग्रन्थकृत् परामृशति” काव्यप्र॰। तृच्। ग्रन्थकर्त्तृ ण्वुल् ग्रन्थकारक अत्रार्थे त्रि॰। तृचि स्त्रियां ङीप्।

**ग्रन्थकुटी** स्त्री ग्रन्थस्य कुटीव। लेख्यस्थाने त्रिका॰।

**ग्रन्थन** न॰ ग्रन्थ—भावे ल्युट्। (गाँथा) सन्दर्भे गुम्फने हेमच॰। चु॰ ग्रन्थ—युच्। ग्रन्थनाऽप्यत्र स्त्री।

**ग्रन्थसन्धि** पु॰ ६त॰। ग्रन्थस्य सन्धौ। तन्नामानि च कतिचित् त्रिका॰पठितानि। “सर्गो वर्गः परिच्छेदोद्घाताध्यायाङ्कसंग्रहाः। उच्छ्वासः परिवर्त्तश्च पटलः काण्डमस्त्रियाम्। स्थानं प्रकरणं पर्व्वाह्निकञ्च ग्रन्थसन्धयः”। उपक्रमे गुणादीत्युक्तेः अन्यदपि ग्रन्थसन्धिनाम भवतीति सूचितम्। तेन कुसुमाञ्जलौ स्तवकः, काव्यप्र॰उल्लासः,। वेदे प्रपाठकब्राह्मणानुवाकादयः।

**ग्रन्थि** पु॰ ग्रन्थ—संदर्भे भावे करणादौ वा यथायथं सर्व्वधातुभ्य, इन् नित्स्वरः, “खनिकष्यज्यसीत्यादिना इर्वा स्वरे भेदः। १वंशादिपर्व्वणि (गाँट) अमरः। २काण्डसन्धौ ३भद्रमुस्तायाम् ४हितावल्यां ५पिण्डालौ राजनि॰। ६बन्धने ७रोगभेदे मेदि॰। ८मायापाशे “भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः” तैत्ति॰ उप॰। ग्रथि—कौठिल्ये भावे इन्। ९कौटिल्ये। कर्त्तरि इन्। १०ग्रन्थिपर्णवृक्षे मेदि॰। रोगभेद निदानादि सुश्रुते दर्शितं यथा “अथातो ग्रन्थ्यपच्यर्बुदगलगण्डानां निदानं व्याख्यास्यामः। वातादयो मांसमसृक्प्रदुष्टाः सन्दूष्य मेदश्च कफानुविद्धम्। वृत्तोन्नतं विग्रथितन्तु शोफं कुर्व्वन्त्यतोग्रन्थिरिति प्रदिष्टः। आयम्यते व्यथ्यत एति तोदं प्रत्यस्यते कृत्यत एति भेदम्। कृष्णोऽमृदुर्व्वस्तिरिवाततश्च भिन्नः स्रवेच्चानिलजोऽसमच्छम्। दन्दह्यते धूप्यति चातिमात्रं पापच्यते प्रज्वलतीव चापि। रक्तः सपीतोऽप्यथ वापि पित्ताद्भिन्नः स्रवेदुष्णमतीव चास्रम्। शीतो

विवर्णोऽल्परुजोऽतिकण्डुः पाषाणवत्संहननोपपन्नः। शिराभिवृद्धिश्च कफप्रकोपाद्भिन्नः स्रवेच्छुक्लघनञ्च पूयम्। शरीरवृद्धिक्षयवृद्धिहानिः स्निग्धोमहानल्परुजोऽतिकण्डुः। मेदःकृतो गच्छति चातिभिन्ने पिण्याकसर्पिःप्रतिमन्तु मेदः। व्यायामजातैरबलस्य तैस्तैराक्षिप्य वायुर्हि शिराप्रतानम्। संपीड्य सङ्कोच्य विशोष्य चापि ग्रन्थिं करोत्युन्नतमाशु वृत्तम्। ग्रन्थिः शिराजः स तु कृच्छ्रसाध्यो भवेद्यदि स्यात्सरुजश्चलश्च। अरुक् स एवाप्यचलोमहांश्च मर्मोत्थितश्चापि विवर्जनीयः”

**ग्रन्थिक** न० ग्रन्थिरिव+कायति–कै–क ग्रन्थ+अस्त्यर्थे ठन् वा। १पिप्पलीमूले २ग्रन्थिपर्णे ३गुग्गुलौ ४करीरे वंशे ५दैवज्ञे ६सहदेवाख्ये पाण्डवे च पु० मेदि०।

**ग्रन्थित** त्रि० ग्रथि–क्त। गुम्फिते अमरः।

**ग्रन्थिदला** स्त्री ग्रन्थिर्दलेऽस्याः। मालाकन्दे राजनि०।

**ग्रन्थिदूर्वा** स्त्री ग्रन्थिप्रधाना दूर्वा शा० त०। (गाँटदूर्वा) दूर्वाभेदे राजनि०।

**ग्रन्थिन्** त्रि० ग्रन्थस्तदर्थो वा ज्ञेयतयाऽस्त्यस्य १ग्रन्थिनि वा ग्रन्थार्थवेत्तरि २ग्रन्थयुक्ते तद्विशिष्टे ३ग्रन्थनकर्त्तरि च। “अज्ञेभ्योग्रन्थिनः श्रेष्ठा ग्रन्थिभ्यो धारिणोवराः मनुः। “ग्रन्थी भवति पण्डितः” सर्वत्र स्त्रियां ङीप्। “सुम्न आपिर्ह्रदे चक्षुर्न ग्रन्थिनी चरण्युः” ऋ०१०।९५।६। ग्रन्थिनी ग्रन्थवती संदर्भवती” भा०। [राजनि०।

**ग्रन्थिपत्र** पु० ग्रन्थिप्रधानं पत्रमस्य। चोरकनाम गन्धद्रव्ये

**ग्रन्थिपर्ण** न० ग्रन्थौ पर्णान्यस्य ग्रन्थीनि ग्रन्थयुतानि वा पर्णान्यस्य। (गाठिवाला) १वृक्षभेदे अमरः। “ग्रन्थिपर्णं तिक्ततीक्ष्णं कट्ष्णं दीपनं लघु। कफवातविषश्वासकण्डूदौर्गन्ध्यनाशनम्” भावप्र०। २चोरनामगन्धद्रव्ये राजनि० ३जतुकालतायां स्त्री राजनि० ४गण्डदूर्वायां स्त्री राजनि० गौरा० ङीष्।

**ग्रन्थिफल** पु० ग्रन्थि ग्रन्थियुक्तं फलमस्य। १कपित्थवृक्षे २मदनवृक्षे ३शाकरुण्डवृक्षे च राजनि०।

**ग्रन्थिबन्धन** न० ६त०। (गाटबाँधा) पुस्तकादौ १दृढबन्धनार्थे बन्धनभेदे २जन्मतिथौ गोरोचनायुतसूत्रबन्धने च। “गुडदुग्धतिलानद्यात् जन्मग्रन्थेश्च बन्धनम्। गुग्गुलुनिम्बसिद्धार्थदूर्वागोरोचनायुतम्” क्वचि०।

**ग्रन्थिब(व)र्हिन्** पु० ग्रन्थिं बर्हति बर्ह–स्तुतौ ग्रन्थिं बर्हति बर्ह–बधे णिनि। ग्रन्थिपर्णवृक्षे शब्दर०

**ग्रन्थिभेद** पु० ग्रन्थिं वस्त्रादिग्रन्थिं भिनत्ति भिद–अण् उप०स०। (गाटकाटा) चौरभेदे “अङ्गुलिं ग्रन्थिभेदस्य छेदयेत् प्रथमे ग्रहे। द्वितीये हस्तचरणौ तृतीये बधमर्हति” मनुः “उत्क्षेपकग्रन्थिभेदौ करसंदंशहीनकौ। कार्यौ द्वितीयापराधे करपादैकहीनकौ” याज्ञ०

**ग्रन्थिमत्** त्रि० ग्रन्थिरस्त्यत्र मतुप्। १ग्रन्थियुक्ते (गांटयुक्ते) स्त्रियां ङीप् “कृष्णत्वचं ग्रन्थिमतीं दधाना” कुमा० (हाडयोडा) २अस्थिसंहारिवृक्षे पु०भावप्र०

**ग्रन्थिमत्फल** पु०ग्रन्थिमत् फलमस्य। लकुचवृक्षे (मान्दार) इति ख्याते वृक्षे राजनि०।

**ग्रन्थिमूल** न० ग्रन्थि गुम्फनवत् मूलं यस्य। १गृञ्जने राजनि० २मालादूर्वायां स्त्री टाप् राजनि०।

**ग्रन्थिल** त्रि० ग्रन्थिर्विद्यतेऽस्य सिध्मा० लच्। ग्रन्थियुक्ते मेदि० २पिप्पलीमूले न०राजनि०। ३आर्द्रके न०शब्दच० ४विकङ्कतवृक्षे (बइचि)५करीरवृक्षे च अमरः। ६तण्डुलीयशाके ७हिताबल्यां ८पिण्डालौ ९चोरनामगन्धद्रव्ये १०विकङ्कटवृक्षे च राजनि०। भद्रमुस्तायां ११मालादूर्वायां १२गण्डदूर्वायाञ्च स्त्री राजनि०। [त्रिका०

**ग्रन्थिहर** पु०ग्रन्थिं हरति हर–अच्। अमात्ये मन्त्रिणि

**ग्रन्थीक** न० ग्रन्थिक+पृषो०। पिप्पलीमूले हि०को०

**ग्र(ग्ल)प्स** पु० ग्रस्+पृषो० द्विधारूपम्। स्तवके। “अथास्य दुग्वेन शालाटग्र(ग्ल)प्सेन, सीमन्तं व्यूहति” आश्व० गृ० १।१४।४। ग्र(ग्ल)प्सः स्तवक उच्यते”नारा०।

**ग्रस** भक्षणे भ्वा० आत्म० सक० सेट्। ग्रसते अग्रसिष्ट जग्रसे। उदित् ग्रसित्वा ग्रस्त्वा। ग्रस्तः। “हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम्”माघः“सुमहान्तमपि ग्रासं ग्रसे लक्ष्यं यदृच्छया” भा० शा० १७९ अ०। “य इमां पृथिवीं कृत्स्नां संक्षिप्य ग्रसते पुनः” भा०व० २६ श्लो०। “राहुग्रस्ते निशाकरे” भा० व० २६६७ श्लो०। ग्रासः। ग्रसनम्; क्विप् धातुत्वाच्च दीर्घः ग्रत् ग्रसौ ग्रस इति।

**ग्रस** भक्षणे वा चुरा०उभ०पक्षे भ्वा०पर०सक० सेट्। ग्रासयति–ते ग्रसति अजिग्रसत्–त अग्रासीत् अग्रसीत्। ग्रासयाम् बभूव आस चकार चक्रे। ग्रसितः। “न च ग्रापितमन्येन ग्रसेदर्थं कथञ्चन” मनुः।

**ग्रसन** न० ग्रस–भावे ल्युट्। १भक्षणे “ग्रसनादजगरः शरीरमात्रहरो न विषात्” सुश्रु०। २राहुणा चन्द्रसूर्ययोरुपरागे च। वृ०स० ५ अ० उक्ते तद्ग्रंशादि

३ग्रासे च। उपरागशब्दे विवृतिः। ४असुरभेदे पु० “दृष्ट्वा तदस्त्रमाहात्म्यं सेनानीर्ग्रसनोऽसुरः”। “तमप्रत्यर्थं जगतामजय्यं चक्रं पपात ग्रसनस्य कण्ठे”। “द्विधा तु कृत्वा ग्रसनस्य कण्ठं तद्रक्तधारारुणघोरनाभि” इति च मत्स्यपु०।

**ग्रसिष्ठ** त्रि० अतिशयेन ग्रसिता ग्रसितृ+इष्ठन् तृचो लोपे इटोऽसिद्धिः। ग्रसितृतमे “भोगमानत्वादिह ग्रसिष्ठ ओषधीरजीगः” ऋ०१।१६३।७। “ग्रसिष्ठः ग्रसितृतमः” भा०

**ग्रसिष्णु** त्रि०ग्रस–इष्णुच्। १ग्रसनशीले “अत्ता चराचरग्रहणात्” शा० सू० न्यायात् २परब्रह्मणि च। “भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च” गीता।

**ग्रस्त** त्रि०ग्रस–कर्मणि क्त उदित्त्वात् क्त्वावेट्कत्वेन इडभावः। १भक्षिते लुप्तवर्णपदे २असंपूर्णोच्चारितशब्दे न० अमरः।

**ग्रस्तृ** त्रि०ग्रस+तृच् आर्षे इडभावः। भक्षके। “सिंहिकासुतवे राहुम्” “ग्रस्तारं चैव चन्द्रस्य सूर्य्यस्य च महाप्रभम्” हरिवं०२२६ अ०।

**ग्रस्तास्त** पु० ग्रस्त एवास्तः। अदृष्टमोक्षे ग्रासोत्तरमस्तगते सूर्य्ये चन्द्रे च। उपरागशब्दे १२१५ पृ० विवृतिः।

**ग्रस्तोदय** पु० ग्रस्तस्य उदयः। ग्रासोत्तरं रविचन्द्रयोरुदये “ग्रस्तास्तादौ विशेषमाह गुरुः “ग्रस्तास्ते त्रिदिनं पूर्वं पश्चात् ग्रस्तोदये तथा। खण्डग्रासे च त्रिदिनं निःशेषे सप्त सप्त चेति”। काश्यपस्तु “ग्रस्तोदये परे दोषो ग्रस्तास्तेऽर्वाक् शशीनयोः। द्युनिशार्द्धे तूभयं तत् खण्डाखण्डव्यवस्थया” इत्याह।

**ग्रस्य** त्रि० ग्रस–कर्मणि बा० यत्। अदनीये “यच्छक्यं ग्रसितुं ग्रस्यं ग्रस्तं परिणमेच्च यत्” भा०उ०३९अ०। ण्यत्। ग्रास्य तत्रार्थे त्रि०।

**ग्रह** हस्तव्यापारभेदे स्वीकारे ज्ञाने च क्र्या० उभ०सक०सेट्। गृह्णाति गृह्णीते। गृह्णीयात् गृह्णीत। गृह्णातु गृहाण। अगृह्णात् अगृह्णीत। अग्रहीत् अलिटि इटो दीर्घः। अग्रहीष्टाम्। अग्रहीष्ट। जग्राह जगृहतुः जग्रहिथ जगृहिव। जगृहे जगृहिषे। ग्रहीता गृह्यात् ग्रहीषीष्ट ग्रहीष्यति ते। ग्रहीतव्यः ग्रहणीयम् ग्राह्यम् पदास्वैरिपक्ष्येषु गृह्यम्। छन्दसि प्रतिगृह्यमपिगृह्यं लोके तु प्रतिग्राह्यम् अपिग्राह्यम्। जलचरे ग्राहः। ज्योतिषि अच् ग्रहः। गृहीतः गृहीतिः। ग्रहणम् अप् ग्रहः। उद्ग्राहः सुरौ संग्राहः सञ्चये संग्रहः। ग्रहीतुम्। गृहीत्वा प्रतिगृह्य। ज्ञाने “हंसं तनौ सन्निहितं चरन्तं मुनेर्मनोवृत्तिरिव स्विकायाम्। ग्रहीतुकामादरिणाशयेन” नैष०। “गृह्णाति चक्षुः सम्बन्धादालोकोद्भूतरूपयोः” भाषा०। हस्तव्यापारे “गृहाण शस्त्रं यदि सर्ग एष ते” “तौ जगृहतुः पादान् राजा राज्ञी च मागधी” रघुः। “दश गृहान् गृह्णाति” श्रुतिः स्वीकारश्च स्वत्वापादनव्यापारः सेवनादिना आयत्तीकरणञ्च तत्राद्ये “तत्र किञ्चिन्न गृह्णीयात् प्राणैः कण्ठगतैरपि” प्रा०त० गङ्गामा० द्वितीये “शरद्रौद्रं न गृह्णीयात् गृह्णीयात् मार्गपौषयोः” नीतिः कर्मणि गृह्यते अग्राहि अग्राहिषाताम् अग्रहीषाताम्। अग्राहिष्यते अग्रहीष्यते। णिच् ग्राहयति ते अजिग्रहत् त। सन् जिघृक्षति ते। यङ् जरीगृह्यते। यङ्लुक् जरी(रि)गृहीति जर्गृहीति जरी(रि)गर्ढि जर्गर्ढि मुग्ध०” सि०कौ०जाग्रहीति जाग्राढि। ज्ञानसामान्यार्थत्वे णिचि प्रयोज्यस्य कर्मत्वं “शिष्यं वेदं ग्राहयतीति। गुरुत्वमात्रार्थकत्वेऽपि कर्मत्वम् मुग्धबो० “अजीग्रहत्तं जनको धनुस्तत्” भट्टिः। “अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाक” कुमा०अन्यमते भक्षणीयत्वेन विवाह्यत्वेन च बोधयामासेत्यर्थकत्वात् नानुपपत्तिः। मुग्धबो० द्विकर्मकमध्ये पाठात् “जग्राह यज्वनोभोज्यम्” उदा० भा०मते न द्विकर्मकतेति भेदः। वेदे हस्य भकारः। “इमामगृभ्णन् रशनामृतस्य” श्रुतिः। आर्षेऽपि क्वचित् हस्य भः गृभीतशब्दे उदा०।

अति+अतिक्रम्य वर्त्तने “अतिग्रहाव्यथनक्षेपेष्वकर्त्तरि तृतीयायाः” पा० “अतिक्रम्य ग्रहोऽतिग्रहः चारित्र्यतोऽतिगृह्यते चारित्र्येणान्यानतिक्रम्य वर्त्तते इत्यर्थः” सि० कौ० “तदेतानतिग्राह्यान् दृष्ट्वा तानत्यगृह्णत” शत०ब्रा० ४।५।४।२

अनु+आनुकूल्यकरणे “वयमप्यनुगृह्णीमो द्विधा कृत्वा वरूथिनीम्” भा० वि० ८८६श्लो०।

सम्+अनु+बन्धनादिना आनुकूल्ये “अवमुच्य किरीटं स केशान् समनुगृह्य च। उदतिष्ठज्जरासन्धः” भा०स०८८५श्लो०।

अप+सन्ततधारातोविच्छिद्य पृथक्कृत्य ग्रहणे “अपगृह्य पुनरिन्द्रवायू” कात्या० श्रौ० ८।६।२ “अपगृह्य सन्ततधारातोविच्छिद्य पृथक्कृत्वा पुनस्तस्या एव धाराया गृह्णाति” कर्कः अपसारणे च “अथैकं

ह्यमपगृह्णाति" शत०ब्रा० १।८।३।१६। "उभौ ह्येवे अपगृह्योपासाते" २।५।२।४२ रोधने च। "स (अग्नि:) ते विप्र: सह वज्रेण वाङ्मपगृह्यास्तपसा जातमन्यु:" भा०आश्व० ६अ०

अपि+पिधाने "यत्रैतत् कर्णावपिगृह्य निनदमिव"छा०उ० "अपगृह्य पिधाय" भा० "तस्मात् कर्णं पितृदैवत्यं हि तदपिगृह्यम्" शत०ब्रा०३।८।१।१५। आच्छादने च "तस्मात् कल्याणस्यानपि गृह्णीत"शत०ब्रा०४।१।३।८

अभि+आभिमुख्येन ग्रहणे "अम्बालिका च बलवदभिगृह्य चाण्डवर्मणा परिणेतुमात्मनोभवनमानीता" दशकु०

अव+प्रतिरोधे नियमे च"मन्दोऽपि नाम न महानवगृह्य साध्यः" माघः "देवनीयं शंसति पदावग्रहम्" तैत्ति० "वृष्टिवर्षं तद्विघातेऽवग्राहावग्रहौ समौ"अमरः"रावणावग्रहक्लान्तमिति वागमृतेन सः"। "वृष्टिर्भवति शस्यानामवग्रहविशोषिणाम्" रघु०।

वि+अव+अवनतौ अक०। "तस्मैव कपालम् व्यवगृह्णीतात्मिव भवति व्यवगृह्णीतान्मेव हि द्यौ:"शत०ब्रा०७।५।१।२ "व्यवगृह्णीताम् विविधमवगृह्णीतोऽवनतः अन्तो यस्य" भा०

आ+आभिमुख्येनाकर्षणे "आ त एता वचोयुजा हरी गृभाण सुमद्रथा" ऋ० ८।४५।२६ "आगृभाण अस्मदभिमुखं यातुं हस्ताभ्यामाकर्षयेत्यर्थः" भा०। निर्बन्धे "चलेऽपि काकस्य पदार्पणाग्रहः" नैष०।

आ+सम्+आभिमुख्येन संग्रहे "आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभं संगृभाय" ऋ० ८।८१।१। आसंगृभाय आभिमुख्येन संगृहाण" भा०

उद्+ऊर्द्ध्वं विसृज्य दाने "वाजस्य मा प्रसव उद्ग्राभेणोदग्रभीत्"यजु०१७।६३। ऊर्द्ध्वं विसृज्य दानम् उद्ग्रहः" वेददी० "उद्गृह्णते स्वाहोद्गृह्णीताय स्वाहा" २२।२६। उद्धृत्य उत्तोल्य ग्रहणे"शक्तिं योऽग्र्यामुदग्रहीत्"भट्टिः।

उद्+गृह्+णिच्। उद्ग्राहि—उपन्यासे "उद्ग्राहितमुपन्यस्तम्" वैजयन्ती "विशेषविदुषः शास्त्रं यत्तवोद्ग्राह्यते मया" माघः। "मोऽज्जिगृहः सुनीतानि" भट्टिः

उप+उद्+ज्ञाने। "तस्य हि मुखमुपोद्गृह्णन् वाच"छा०उ० "मुखं द्वारं विद्यायादाने तीर्थमुपोद्गृह्णन् जाननित्यर्थः" भा०

उप+सामीप्येन ग्रहणे "दशापवित्रमुपगृह्य हिंकरोति" शत० ब्रा० ४।२।२।११ अवष्टम्भे च "तेजो वा अङ्गो-

भूयस्तद्वा एतद्वायुमुपगृह्याकाशमभितपति" छा० उ० "तद्वा एतत्तेजो वायुमुपगृह्यावष्टभ्य स्वात्मना निश्चलीकृत्य वायुमाकाशमभिव्याप्नुवत्तपति" भा०

नि+बलेन निरोधे प्रातिकूल्यकरणेन नियमने च। "स वै प्रविशमानस्तु शूद्रेणाश्वेन रक्षिणा। निगृहीतो बलाद् द्वारि सोऽवातिष्ठत पार्थिवः"भा०व० १२६अ०। "निगृहीतः कन्धरायां शिशुना दृढमुष्टिना" हरिव० २०अ०। "तस्मात् यस्य महाबाहो निगृहीतानि सर्वशः। इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता" गीता "अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति" याज्ञ०

प्रति+नि+प्रतिरूपतया ग्रहणे "आदित्यपात्रेण द्रोणकलशात् प्रतिनिगृह्णीते" शत०ब्रा० ४।३।५।६

वि+नि+विशेषेण निग्रहे "शिरःसु विनिगृह्णीतान् बोधयामास पाण्डवः" भा० आ० १२८ अ०

निस्+निःशेषेण ग्रहणे निग्रहे च "शक्रस्त्वमिति यो दैत्यैर्निर्गृहीतः किलाभवत्" भा०आनु०१८८८श्लो०

परि+परितोग्रहणे "बाहुना परिजग्राह दक्षिणेन शिरोधराम्" भा०आ०६३२श्लो०। "ज्ञानेन परिगृह्य तान्" मनुः। स्वीकारे च "कस्य गुप्तः परिग्रहः" भा० शा० गन्धर्वं प्रति अर्जुनोक्तिः

प्र+प्रकर्षेण ग्रहणे। "प्रगृहीतस्य योऽमात्योनिगृहीतस्य कारणैः"भा०वि० १२श्लो०। सन्धिकार्यनिषेधाय विशिष्य ग्रहणे "प्रगृह्यं पदम्" पा० प्रगृह्यशब्दे दृश्यम्।

प्रति+दत्तवस्तुनोग्रहणे "सप्त वित्तागमाः धर्म्यादायोलाभ क्रयो जयः। विभागः संप्रयोगश्च सत्प्रतिग्रह एव च" स्मृतिः "याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेत्" स्मृतिः अदृष्टार्थत्यक्तद्रव्यस्वीकार एव प्रतिग्रहो मुख्यः अन्यत्र भाक्तः। "तीरे प्रतिग्रहस्याज्यस्त्याज्यो धर्मस्य विक्रयः" "तत्र न प्रतिगृह्णीयात् प्राणैः कण्ठगतैरपि" प्रा० त० गङ्गामा०। "प्रतिग्रहादपात्रेभ्यः सन्तुष्टो येन केनचित्" प्रा०त०"अभिपद्य च बाहुभ्यां प्रत्यगृह्णादमर्षितः भा० व० ४४१ श्लो०। प्रतिरूपतया शस्त्रादिग्रहणे च "तथैव पाण्डवो भीष्मे दिव्यमस्त्रमुदीरयन्। प्रत्यगृह्णादमेयात्मा" भा० वि० ६० अ०। स्वीकारमात्रे "प्रतिग्रहीतुं प्रणयिप्रियत्वात्" कुमा० "अमोघाः प्रतिगृह्णन्तावर्घानुपदमाशिषः" रघुः।

वि+विरोधे रोधने। "सन्दधीत न चानार्यं विगृह्णीयाच्च बन्धुभिः" भा० शा०७७अ०"विगृह्य शतून् कौन्तेय!

जेयः क्षितिपतिस्तदा” भा० आश्व० ६अ० । विशेषेण ज्ञाने “न विगृह्णाति वैषम्यम्” भाग० ३।२२।२४ श्लो०। “अविग्रहा गतादिस्था यथा ग्रामादिकर्मभिः” हरिः विशेषणगृहः अव्ययीभावः । विग्रहो देहः । “रक्त-प्रसाधितभुवः क्षतविग्रहाश्च” वेणी पञ्चविधवृत्तिस्फु-टीकरणवचनभेदे “वृत्त्यर्थविवरणं विग्रहः” सि०कौ० “समस्या विग्रहस्यया” शब्दश०प्र० ।

**सम्+सञ्चये** नानास्थानपठितस्य एकत्र समावेशार्थे संदर्भ-भेदे “संग्रहेऽस्तमुपागते” वाक्यपदीयम् । सङ्कोचने “संगृह्णती कौशिकमुत्तरीयम्” भा०व० १५६०२श्लो० एकत्रीकरणे “संगृह्य तत्समैरङ्गैर्निर्ममे स्त्रियमुत्तमाम्” ८५५८ श्लो० सम्यक्ग्रहणे “औषधानि च सर्वाणि मूलानि च फलानि च । चतुर्विधांश्च वैद्यान् वै संगृह्णी-याद्विशेषतः” भा०शा० २६५४ श्लो०। लुटौ संग्राहः सञ्चये द्रव्यसंग्रहः” सि०कौ०

**ग्रह** आदाने वा चुरा० उभ० पक्षे भ्वा० पर० सक० वेट् । ग्राहयति ते ग्रहति । अजिग्रहत् त अग्रहीत् अ-ग्राहीत् ।

**ग्रह** पु० ग्रह–अच् । १नवसु सूर्यादिषु । २बालारिष्टकारेषु स्कन्दग्रहादिषु भावे अप् । ३अनुग्रहे, ४निर्बन्धे, “अव-श्यभव्येष्वनवग्रहग्रहा” नैष० ५आदाने ग्रहणे, ६रणो-द्यमे, ७मलबन्धे, ८चन्द्रसूर्ययोगांशे च “तदा सम्भाव्यते ग्रहः” इति ज्योतिषम् “एकरात्रं परित्यज्य कुर्यात् पाणिग्रहं ग्रहे” ज्योति० सूर्यादयश्च “सूर्यश्चन्द्रो मङ्गलश्च बुधश्चापि बृहस्पतिः । शुक्रः शनैश्चरो राहुः केतुश्चेति नव ग्रहाः”। एषां गतिभेदाः खगगति-शब्दे २४१२पृ०दर्शिताः । राहुकेत्वोर्यथा ग्रहत्वं पौ०भा० व्यवस्थापितं तच्च केतुशब्दे २२२४ पृ०उक्तम् । शा०ति० १पटले “लोकानद्रीन् स्वरान् धातून् मुनीन् द्वीपान् ग्रहानपि । समिधः सप्तसंख्याताः सप्त जिह्वा हविर्भुजः” इत्यनेन ग्रहाणां यत् सप्तत्वमुक्तं तत् वराहमताभि-प्रायेण । तच्च १३११पृ० उपरागशब्दे अस्ततास्वाद-विशेषादित्याद्युक्तम् । अन्यमताभिप्रायेण ग्रहाणां नवत्वं ६पटले शा०ति०उक्तं यथा “नव वर्णाः समुत्पन्ना नवरत्नेश्वरा ग्रहाः । अर्केन्दुरक्तज्ञगुरुभृगुमन्दाहि-केतवः । माणिक्यं मौक्तिकं चारु विद्रुमं गारुडं पुनः । पुष्परागं लसद्वज्रं नीलं गोमेदकं शुभम् । वैदूर्यं नव रत्नानि” ।

स्कन्दग्रहादीनां नवानां लक्षणविभागः सुश्रुते उक्तो यथा “अथातो नवग्रहाकृतिविज्ञानीयमध्यायं व्याख्यास्यामः ॥ बालग्रहाणां विज्ञानं साधनञ्चाप्यनन्तरम् । उत्पत्तिं का-रणञ्चैव सुश्रुतैकमनाः शृणु ॥ स्कन्दग्रहः१स्तु प्रथमः स्कन्दापस्मार२ एव च । शकुनी३ रेवती४ चैव पूतना५ चान्धपूतना६ ॥ पूतना शीतनामा७ च तथैव मुखमण्डि-का८ । नवमो नैगमेयश्च९ यः पितृग्रहसंज्ञितः ॥ धा-त्रीमात्रोः प्राक्प्रदिष्टापचाराच्छौचभ्रष्टान्मङ्गलाचारही-नान् । त्रस्तान् हृष्टांस्तर्जितान् क्रन्दितान् वा पूजाहे-तोर्हिंस्युरेते कुमारान् ॥ ऐश्वर्यस्थास्ते न शक्या विशन्तो देहं द्रष्टुं मानुषैर्विश्वरूपाः । आप्तं वाक्यं तत्समी-क्ष्याभिधास्ये लिङ्गान्येषां यानि देहे भवन्ति ॥ शूनाक्षः क्षतजसगन्धिकः स्तनद्विट् वक्रास्यो हतचलितैकपक्ष्मनेत्रः । उद्विग्नः सुललितचक्षुरल्परोदी स्कन्दार्त्तो भवति च गा-ढमुष्टिवर्चाः१ ॥ निःसंज्ञो भवति पुनर्भवेत्ससंज्ञः संरब्धः करचरणैश्च नृत्यतीव । विण्मूत्रे सृजति विनद्य जृम्भ-माणः फेनञ्च प्रसृजति तत्सखाभिपन्नः२ ॥ स्रस्ताङ्गो भयचकितो विहङ्गगन्धिः संस्रावित्रणपरिपीड़ितः सम-न्तात् । स्फोटैश्च प्रततनुः सदाहपाकैर्विज्ञेयो भवति शिशुः क्षतः शकुन्या३ ॥ रक्तास्यो हरितमलोऽतिपा-ण्डुदेहः श्यावो वा ज्वरमुखपाकवेदनार्त्तः । रेवत्या व्यथिततनुश्च कर्णनासं मृद्नाति ध्रुवमभिपीड़ितः कुमारः४॥ स्रस्ताङ्गः स्वपिति सुखं दिवा न रात्रौ विड्भिन्नं सृजति च काकतुल्यगन्धिः । छर्द्यार्त्तो हृषिततनूरुहः कुमार-स्तृष्णालुर्भवति च पूतनागृहीतः५ ॥ यो द्वेष्टि स्तनम-तिसारकासहिक्काछर्दीभिर्ज्वरसहिताभिरर्द्यमानः । दुर्वर्णः सततमधःशयोऽम्लगन्धिस्तं ब्रूयुर्भिषजोऽन्ध-पूतनार्त्तम्६॥ उद्विग्नो भृशमतिवेपते प्ररुद्यात् संलीनः स्वपिति च यस्य चान्त्रकूजः । विस्राङ्गो भृशमतिसा-र्यते च यस्तं जानीयाद्भिषगिह शीतपूतनार्त्तम्७ ॥ म्लानाङ्गः सुरुचिरपाणिपादवक्त्रो बह्वाशी कलुषसिरा-वृतोदरो यः । सोद्वेगो भवति च मूत्रतुल्यगन्धिः स ज्ञेयः शिशुरथ वक्त्रमण्डिकार्त्तः८ ॥ यः फेनं वमति विनम्यते च मध्ये सोद्वेगं विलपति चोर्द्ध्वमीक्षमाणः । ज्वर्य्येत प्रततमथो वसासगन्धिर्निःसञ्ज्ञो भवति हि नैगमेयजुष्टः९ ॥ प्रस्तब्धो यः स्तनद्वेषी मुह्यते चावि-शन्मुहुः । तं बालं नचिराद्धन्ति ग्रहः सम्पूर्णलक्षणः ॥ विपरीतमतःसाध्यं चिकित्सेदचिरार्दितम् । गृहे पुरा-

अहविषाभ्यज्य बालं शुचौ शुचिः ॥ सर्षपान् प्रकिरेत्तेषां तैलैर्दीपञ्च कारयेत् । सदासन्निहितश्चापि जुहुयाद्धव्यवाहनम् ॥ सर्वगन्धौषधीवीजैर्गन्धमाल्यैरलङ्कृतम् । अग्नये कृत्तिकाभ्यश्च स्वाहा स्वाहेति संस्मरन् ॥ नमः स्कन्दाय देवाय ग्रहाधिपतये नमः । शिरसा त्वाभिवन्देऽहं प्रतिगृह्णीष्व मे बलिम् ॥ निरुजो निर्विकारश्च शिशुर्मे जायतां ध्रुवम्"॥

सोत्पत्तिकमन्यग्रहभेदा भा०व०२२९अ०उक्ताः यथा

"यावत् षोड़श वर्षाणि भवन्ति तरुणाः प्रजाः । प्रबाधत मनुष्याणां तावद्रूपैः पृथग्विधैः । अहञ्च वः प्रदास्यामि रौद्रमात्मानमव्ययम् । परमं तेन सहिताः सुखं वत्स्यथ पूजिताः । मार्कण्डेय उवाच । ततः शरीरात् स्कन्दस्य पुरुषः पावकप्रभः । भोक्तुं प्रजाः स मर्त्यानां निष्पपात महाबलः । अपतत् सहसा भूमौ विसंज्ञोऽथ क्षुधार्दितः । स्कन्देन सोऽभ्यनुज्ञातो रौद्ररूपोऽभवद्ग्रहः । स्कन्दापस्मारमित्याहुर्ग्रहं तं द्विजसत्तमाः ।। विनता तु महारौद्रः कथ्यते शकुनीग्रहः । पूतनां राक्षसीं प्राहुस्तं विद्यात् पूतनाग्रहम् । कष्टा दारुणरूपेण घोररूपा निशाचरी । पिशाची दारुणाकारा कथ्यते शीतपूतना । गर्भान् सा मानुषीणान्तु हरते घोरदर्शना । अदितिं रेवतीं प्राहुर्ग्रहस्तस्यास्तु रैवतः । सोऽपि बालान्महाघोरो बाधते वै महाग्रहः । दैत्यानां या दितिर्माता तामाहुर्मुखमण्डिकाम् । अत्यर्थं शिशुमांसेन संप्रहृष्टा दुरासदा । कुमाराश्च कुमार्य्यश्च ये प्रोक्ताः स्कन्दसम्भवाः । तेऽपि गर्भभुजः सर्वे कौरव्य ! सुमहाग्रहाः । तासामेव तु पत्नीनां पतयस्ते प्रकीर्त्तिताः । अज्ञायमाना गृह्णन्ति बालकान् रौद्रकर्म्मिणः । गवां माता तु या प्राज्ञैः कथ्यते सुरभिर्नृप !। शकुनिस्तामथारुह्य सह भुङ्क्ते शिशून् भुवि । सरमा नाम या माता शुनां देवी जनाधिप !। सापि गर्भान् समादत्ते मानुषीणां सदैव हि । पादपानाञ्च या माता करञ्जनिलया हि सा। वरदा सा हि सौम्या च नित्यं भूतानुकम्पिनी । करञ्जे तां नमस्यन्ति तस्मात् पुत्त्रार्थिनो नराः । इमे त्वष्टादशान्ये वै ग्रहा मांसमधुप्रियाः । द्विपञ्चरात्रं(१०)तिष्ठन्ति सततं सूतिकागृहे। कद्रुः सूक्ष्मवपुर्भूत्वा गर्भिणीं प्रविशत्यथ । भुङ्क्ते सा तत्र तं गर्भं सा तु नागं प्रसूयते । गन्धर्व्वाणाञ्च या माता सा गर्भं गृह्य गच्छति । ततो विलीनगर्भा सा मानुषी भुवि दृश्यते । या जनित्री त्वप्सरसां गर्भमास्ते प्रगृह्य सा । उपविष्टं ततो गर्भं कथयन्ति मनीषिणः । लोहितस्योदधेः कन्या धात्री स्कन्दस्य सा स्मृता । लोहितायनिरित्येवं कदम्बे सा हि पूज्यते । पुरुषेषु यथा रुद्रस्तथार्य्या प्रमदास्वपि । आर्य्या माता कुमारस्य पृथक्कामार्थमिज्यते । एवमेते कुमाराणां मया प्रोक्ता महाग्रहाः । यावत् षोड़श वर्षाणि अशिवास्ते शिवास्ततः । ये च मातृगणाः प्रोक्ताः पुरुषाश्चैव ये ग्रहाः । सर्वे स्कन्दग्रहा नाम ज्ञेया नित्यं शरीरिभिः । तेषां प्रशमनं कार्य्यं स्नानं धूपमथाञ्जनम् । बलिकर्म्मोपहारश्च स्कन्दस्येज्या विशेषतः । एवमभ्यर्च्चिताः सर्वे प्रयच्छन्ति शुभं नृणाम् । आयुर्वीर्य्यञ्च राजेन्द्र ! सम्यक्पूजानमस्कृताः । ऊर्द्ध्वन्तु षोडशाद्वर्षाद्ये भवन्ति ग्रहा नृणाम् । तानहं संप्रवक्ष्यामि नमस्कृत्य महेश्वरम् । यः पश्यति नरो देवान् जाग्रद्वा शयितोऽपि वा । उन्मादयति स तु क्षिप्रं तन्तु देवग्रहं विदुः । आसीनस्य शयानस्य यः पश्यति नरः पितॄन् । उन्मादयति स तु क्षिप्रं स ज्ञेयस्तु पितृग्रहः । अवमन्यति यः सिद्धान् क्रुद्धाश्चापि शपन्ति यम् । उन्मादयति स तु क्षिप्रं ज्ञेयः सिद्धग्रहस्तु सः । उपाघ्राति च यो गन्धान्रसांश्चापि पृथग्विधान् । उन्मादयति स तु क्षिप्रं स ज्ञेयो राक्षसग्रहः । गन्धर्व्वाश्चापि यं दिव्याः संविशन्ति नरं भुवि । उन्मादयति स तु क्षिप्रं ग्रहो गान्धर्व्व एव सः । अधिरोहन्ति यं नित्यं पिशाचाः पुरुषं प्रति । उन्मादयति स तु क्षिप्रं ग्रहः पैशाच एव सः । आविशन्ति च यं यक्षाः पुरुषं कालपर्य्यये । उन्मादयति स तु क्षिप्रं ज्ञेयो यक्षग्रहस्तु सः । यस्य दोषैः प्रकुपितं चित्तं मुह्यति देहिनः । उन्मादयति स तु क्षिप्रं साधनं तस्य शास्त्रतः । वैक्लव्याच्च भयाच्चैव घोराणां चापि दर्शनात् । उन्मादयति स तु क्षिप्रं सान्त्वं तस्य तु साधनम् । कश्चित् क्रीडितुकामो वै भोक्तुकामस्तथाऽपरः । अभिकामस्तथैवान्यदित्येष त्रिविधो ग्रहः । यावत् सप्ततिवर्षाणि भवन्त्येते ग्रहा नृणाम् । अतःपरं देहिनान्तु ग्रहतुल्यो भवेज्ज्वरः । अप्रकीर्णेन्द्रियं दान्तं शुचिं नित्यमतन्द्रितम् । आस्तिकं शुद्धचारञ्च वर्ज्जयन्ति सदा ग्रहाः । इत्येष ते ग्रहोद्देशो मानुषाणां प्रकीर्त्तितः । न स्पृशन्ति ग्रहा भक्तान्नरान्देवे महेश्वरे"।

मवम् हध्यानादिकं ग्रहयज्ञशब्दे वक्ष्यते । ग्रहकक्षादिमानं तन्तज्ञानादिकञ्च तत्तद्ग्रहशब्दे उक्तं वक्ष्यमाणञ्च द्रष्टव्यम् । "उच्चस्थे ग्रहपञ्चके" नि०न०श्रीरामजन्मादौ "ग्रहैस्ततः पञ्चभिरुच्चसंस्थितैः" रघुः । गृह्यतेऽनेन करणे अप् । होमादिग्रहणपात्रे "दश ग्रहान् गृह्णाति" "एकं समाप्ते" श्रुतिः सोमादिग्रहणसाधनपात्रनामानि च यागभेदेन भिन्नानि तानि "दश सोमग्रहान् गृह्णाति" इत्यादौ शत०ब्रा० दर्शितानि । एवं यागभेदे ग्रहभेदाः तत्रत्या द्रष्टव्याः । गृह्यतेऽनेन करणेऽप् । १०घ्राणाद्युक्ते घ्राणादीनां ग्रहत्वम् ह०उ०उक्तं यथा "याज्ञवल्क्येति होवाच कति ग्रहाः कत्यतिग्रहाः? इति अष्टौ ग्रहा अष्टावतिग्रहा इति ये तेऽष्टौ ग्रहा अष्टावतिग्रहाः कतमे ते? इति । प्राणो१ वै ग्रहः सोऽपानेनातिग्राहेण गृहीतोऽपानेन हि गन्धं जिघ्रति । वाग्२ वै ग्रहः स नाम्नातिग्राहेण गृहीतो वाचा हि नामान्यभिवदति । जिह्वा३ वै ग्रहः स रसेनातिग्राहेण गृहीतो जिह्वया हि रसान्विजानाति । चक्षु४ वै ग्रहः स रूपेणातिग्राहेण गृहीतश्चक्षुषा हि रूपाणि पश्यति । श्रोत्रं५ वै ग्रहः स शब्देनातिग्राहेण गृहीतः । श्रोत्रेण हि शब्दाञ्छृणोति । मनो६ वै ग्रहः स कामेनातिग्राहेण गृहीतो मनसा हि कामान् कामयते । हस्तौ७ वै ग्रहः स कर्मणातिग्राहेण गृहीतो हस्ताभ्यां हि कर्म करोति । त्वग्८वै ग्रहः स स्पर्शेनातिग्राहेण गृहीतस्त्वचा हि स्पर्शान्वेदयत इत्येतेऽष्टौ ग्रहा अष्टावतिग्रहाः" ह०उ० ।

"ये तेऽष्टौ ग्रहा अभिहिताः कतमे ते नियमेन ग्रहीतव्या इति तत्राह । प्राणो वै ग्रहः प्राण इति घ्राणमुच्यते । प्रकरणाद्वायुसहितः सोऽपानेनेति गन्धेनेत्येतदपानसचिवत्वादपानो गन्ध उच्यते । अपानोपहृतं हि गन्धम् घ्राणेन सर्वो लोको जिघ्रति । तदेतदुच्यते अपानेन हि गन्धान् जिघ्रतीति । वाग्वै ग्रहो वाचा ह्यध्यात्मपरिच्छिन्नया आसङ्गविषयास्पदया सत्याऽनृताऽसभ्यबीभत्सादिवचनेषु व्यापृतया गृहीतो लोकोऽपहृतः तेन वाक् ग्रहः स नाम्नातिग्राहेण गृहीतः स वागाख्यो ग्रहो नाम्ना वक्तव्येन विषयेणातिग्राहेणातिग्राहेणेति दैर्घ्यं छान्दसं, नाम वक्तव्यार्थी हि वाक् । तेन वक्तव्येनार्थेन प्रयुक्ता वाक् तेन वशीकृता तेन तत्कार्यमकृत्वा नैव तस्या मोक्षः । अतो नाम्नातिग्राहेण गृहीता वागित्युच्यते वक्तव्यासङ्गेन हि प्रवृत्ता सर्वानर्थैर्युज्यते । समानमन्यद् वृत्ते त्वक्पर्यन्ता अष्टौ ग्रहाः स्पर्शपर्यन्ताश्च एतेऽष्टावतिग्रहा इति" भा० ।

ग्रहकल्लोल पु० ग्रहेषु कल्लोल इव । राहौ त्रिका० ।

ग्रहकुष्माण्ड पु० गृह्णाति ग्रह–अच् कुष्माण्डवदाकारोऽस्त्यस्य अच् कर्म० । नराणामुपद्रावके कुष्माण्डाकारे रक्षोभेदे । "डाकिनी शाकिनी पूतना वेताल राक्षसाः । ग्रहकुष्माण्डखेटाद्या कातकर्णीशिशुग्रहाः । सर्वे प्रणाशयान्ति शिवतार्थजलेक्षणात्" का० ख० ३३अ० । अत्र ग्रह इति भिन्नं पदमप्यन्ये

ग्रहगणित न० ग्रहाणां तद्गत्यादीनां गणितं गणनं यत्र । त्रिस्कन्धज्योतिषान्तर्गते तन्त्रसंज्ञके शास्त्रभेदे "ज्योतिःशास्त्रमनेकभेदविषयं स्कन्धत्रयाधिष्ठितम्" इत्युपक्रमे "स्कन्धैस्त्रिभिः गणितेन या ग्रहगतिस्तन्त्राभिधानं त्वसौ" मु० स० १अ० । "ग्रहगणितहोरासंहिताहोरा ग्रन्थभेदतः । तत्र ग्रहगणिते पौलिशरोमकवासिष्ठसौरपैतामहेषु पञ्चस्वेतेषु सिद्धान्तेषु" इत्येन तत्रैव तद्भेदा उक्ताः । तत्पाद्यविषयाश्च गणकशब्दे दर्शितवाक्ये उक्तप्रायाः । सौरागमप्रतिपाद्यविषयाश्च शि०शि० सम्मता यथा । मध्यमाधिकारः कालमानम् भगोलः ग्रहस्फुटीकरणम् । ग्रहकक्षा प्रत्यब्दशुद्धिः अधिमासादिस्फुटीकरणम् । त्रिप्रश्नाधिकारः । पर्वसम्भवः चन्द्रग्रहणम् सूर्यग्रहणम् ग्रहणच्छाया ग्रहोदयास्तनिर्णयः । शृङ्गोन्नतिः ग्रहयुतिः भग्रहयुतिः पाताधिकारः । एषां च विशेषस्तत्तच्छब्दे उक्तो वक्ष्यते च ।

ग्रहगोचर पु० ६त० । ग्रहाणां जन्मराशितः स्थानभेदेन शुभाशुभसूचके गतिभेदे । गोचरशब्दे उक्तप्रायोऽपि विशेषोऽत्र भिधीयते यथा ह०सं०१०४अ० । तत्र ये श्लोकाश्छन्दस्तान्नामापि तत्र भङ्ग्योक्तं द्रष्टव्यम्

"प्रायेण गोचरो व्यवहार्योऽतस्तत्फलानि वक्ष्यामि । नानावृत्तैस्तन्नो गुरुचपलत्वं क्षमन्त्वार्याः । माण्डव्यगिरं श्रुत्वा न मदीया रोचतेऽथवा नैवम् । साध्वी तथा न पुंसां प्रिया यथा स्याद्यौवनचपला ।

सूर्यः षट्त्रिदशस्थितस्त्रिदशषट्सप्ताद्यगश्चन्द्रमा जीवः सप्तनवद्विपञ्चमगतो वक्रार्किजौ षट्त्रिगौ । सौम्यः षड्द्विचतुर्दशाष्टमगतः सर्वेऽप्युपान्त्ये शुभाः शुक्रः सप्तमषड्दशर्क्षसहितः शार्दूलवत्त्रासकृत् ।

वामवेधेन शुद्धः”। वामवेधश्च दूरानजन्केति एतमतेति वक्ष्यमाणवचनाभ्यामेकार्थत्वाद्द्वैविध्यम्। “उपचयकरशुक्लः स्वयं शुक्ले च शुभमभिलषमाणः सौम्यमध्यस्थितो वा। सखिवरभवनस्थः शुक्लः कारकत्वेऽपि चेन्दुर्जयधनसुखदाता तत्प्रकारोऽन्यथा तु”। मध्यग इत्यस्य मध्यचारी। उपचयकरस्थ पश्चाद्वर्त्ती वा कृतपरोक्तम्। “भानां यथा सम्भवतश्च पश्चाद् ग्रहाणां यदि वा शशाङ्कः। शुभपदानां शुभदः प्रयाणे याम्येन यातोऽपि शुभः शशाङ्कः। योऽयस्य दशमगृहगः स तस्य वश्यो भवति विजयेन। स्वर्क्षतुङ्गमूलत्रिकोणगाः कण्टकेषु यावन्त आस्थिताः। जन्मकालवशगास्ते तु कारकाः कर्म्मणस्तु तेषां विशेषतः। सितपक्षादौ चन्द्रे शुभे शुभं पक्षमशुभमशुभे च। कृष्णे गोचरशुभदेन शुभः पक्षः शुभोऽतोऽन्यः”। भीमपराक्रमे। “शुक्लपक्षे प्रतिपदि चन्द्रे शिवे शिवं पक्षम्। कृष्णे प्रतिपदि ताराशुद्धौ शुभं विदुः पक्षम्”। शान्त्यादिस्तत्रैव

“मार्कण्डेयपुराणम् “द्रव्ये गच्छेषु भृत्येषु सुहृत्सु तनयेषु च। भार्य्यायाञ्च गृहे दुष्टे भयं पुण्यवतां नृणाम्। आत्मन्यथाल्पपुण्यानां सर्व्वत्रैवातिपापिनाम्। न कुत्रापि सुपापानां नराणां जायते भयम्”।

**ग्रहगति** स्त्री ६त०। ग्रहाणां प्रत्यहं भोगगमनभेदे। तत्र खगगतिशब्दे २४१४ पृ० ग्रहगतिभेदास्तत्कारणादिकं च दर्शितम्। तत्र ग्रहाणां सावनदिनगतिमानं सि०शि० उक्तं तच्च खगोलशब्दे २४२२पृ० उक्तमपि विशेषोऽत्रोच्यते। तत्र ग्रहाणां दिनगतिसाधनं सि०शि० उक्तं यथा

“महीमितादहर्गणात् फलानि यानि तत्कलाः। भवन्ति मध्यमाः कलात्मिकाः सदा द्युभुक्तयः। समा गतिस्तु योजनैर्नभःसदां सदा भवेत्। कलादिकल्पनावशान्मृदुद्रुता च सा स्मृता” सि०शि०।

“अत्रोपपत्तिस्त्रैराशिकेन। पूर्वं गतिर्योजनात्मिका ग्रहाणां तुल्योक्ता। इदानीमतुल्या। सा कलादिकल्पनावशात्। इदानीमतुल्यत्वे कारणमाह” प्रमिता०
“कक्षाः सर्वा अपि दिविषदां चक्रलिप्ताङ्कितास्ता वृत्ते लघ्व्यो लघुनि महति स्युर्महत्यश्च लिप्ताः। तस्मादेते शशिबुधसितादित्यभौमेज्यमन्दा मन्दाक्रान्ता इव शशधराद्यान्ति यान्तः क्रमेण” सि०शि०।

“यतः सर्वा अपि कक्षाश्चक्र२१६००। लिप्ताभिरेवाङ्किताः अतो महति वृत्ते महत्यो लिप्ताः स्युः। लघुनि लघ्व्यः। तद्यथा चन्द्रकक्षा सर्वाधःस्था अधः। तस्यामेका कला पञ्चदशभिर्योजनैर्भवति। शनेः कक्षा सर्वोपरिस्था सा महती। तस्यामेका कला योजनानां षड्भिः सहस्रैरेकसप्तत्यूनैः ५९२९ भवति। योजनं चतुःक्रोशमेव। अतश्चन्द्रात् सकाशादूर्ध्वोर्ध्वस्था बुधशुक्रादयः क्रमेण मन्दाक्रान्ता मन्दगतय इव भान्ति। मन्दाक्रान्ताच्छन्दोऽपि सूचितम्” प्रमिता०। स्फुटगतिमाह

“दिनान्तरस्पष्टखगान्तरं स्याद् गतिः स्फुटा तत्समयान्तराले। कोटीफलघ्नी मृदुकेन्द्रभुक्तिस्त्रिज्योद्धृता कर्किमृगादिकेन्द्रे। तया युतोना ग्रहमध्यभुक्तिस्तात्कालिकी मन्दपरिस्फुटा स्यात्। समीपतिथ्यन्तसमीपचालनं विधोस्तु तत्कालभवेन युज्यते। सुदूरसंचालनमाद्यया यतः प्रतिक्षणं सा न समा महत्त्वतः” सि०शि०

“अद्यतनश्वस्तनस्फुटग्रहयोरौदयिकयोर्दिनार्द्धजयोर्वा तात्कालिकयोर्वा यदन्तरं कलादिकं सा स्फुटा गतिः। अद्यतनात् श्वस्तने न्यूने वक्रा गतिर्ज्ञेया। तत्समयान्तराल इति। तस्य कालस्य मध्येऽनया गत्या ग्रहश्चालयितुं युज्यत इति। इयं किल स्थूला गतिः। अथ सूक्ष्मा तात्कालिकी कथ्यते। तुङ्गगत्यूना चन्द्रगतिः। अन्येषां ग्रहाणां ग्रहगतिरेव केन्द्रगतिः। मृदुकेन्द्रकोटिफलं कृत्वा तेन केन्द्रगतिर्गुण्या त्रिज्यया भाज्या लब्धेन कर्क्यादिकेन्द्रे ग्रहगतिर्युक्ता कार्या। मृगादौ तु रहिता कार्या। एवं तात्कालिकी मन्दपरिस्फुटा स्यात्। तात्कालिकया भुक्त्या चन्द्रस्य विशिष्टं प्रयोजनं तदाह। समीपतिथ्यन्तसमीपचालनमिति। तात्कालिकचन्द्रस्यासन्नात् कालाद्गतो वा गम्यो वा यदासन्नस्तिथ्यन्तस्तदा तात्कालिकया गत्या तिथिसाधनं कर्त्तुं युज्यते। तथा समीपचालनं च। यदा तु दूरतरस्तिथ्यन्तो दूरचालनं वा चन्द्रस्य तदाद्यया स्थूलया कर्त्तुं युज्यते स्थूलकालत्वात्। यतश्चन्द्रगतिर्महत्त्वात् प्रतिक्षणं समा न भवति। अतस्तद्द्वयेनैव विशेषोऽभिहितः। अथ गतिफलवासना। अद्यतनश्वस्तनग्रहयोरन्तरं गतिः। अत एव ग्रहफलयोरन्तरं गतिफलं भवितुमर्हति। अथ तत्साधनम्। अद्यतनश्वस्तनकेन्द्रयोरन्तरं केन्द्रगतिः। भुजज्याकरणे यद्भोग्यखण्डं तेन सा गुण्या शरादिदस्रैः२२५ भाज्या। तत्र तावत् तात्कालिकभोग्यखण्ड-

करणायानुपातः। यदि त्रिज्यातुल्यया कोटिज्ययाद्यं भोग्यखण्डं शरद्विदस्ततुल्यं लभ्यते तदेष्टया किमित्यत्र कोटिज्यायाः शरद्विदस्ता २२५ गुणस्त्रिज्या हरः। फलं तात्कालिकं स्फुटभोग्यखण्डं तेन केन्द्रगतिर्गुणनीया शरद्विदस्तैर्भाज्या। अत्र शरद्विदस्तमितयोर्गुणकभाजकयोस्तुल्यत्वान्नाशे कृते केन्द्रगतेः कोटिज्या गुणस्त्रिज्या हरः स्यात्। फलमद्यतनकेन्द्रदोर्ज्ययोरन्तरं भवति। तत्फलकरणार्थं स्वपरिधिना गुण्यं भांशै ३६० र्भाज्यम्। पूर्वं किल गुणकः कोटिज्या सा यावत् परिधिना गुण्यते भांशै ३६० र्ह्रियते तावत् कोटिफलं जायत इत्युपपन्नं कोटी फलघ्नी मृदुकेन्द्रभुक्तिरित्यादि। एवमद्यतनश्वस्तनग्रहफलयोरन्तरं तद्गतेः फलं कर्क्याादिकेन्द्रे ग्रहर्णफलस्यापचीयमानत्वात् तुलादौ धनफलस्योपचीयमानत्वाद्धनम्। मकरादौ तु धनफलस्यापचीयमानत्वान्मादादृणफलस्योपचीयमानत्वादृणमित्युपपन्नम्” प्रमिता०।

ग्रहगन्ध पु० ६त०। ग्रहयज्ञशब्दे वक्ष्यमाणे सूर्यादुद्देशेन देये रक्तचन्दनादौ।

ग्रहचिन्तक पु० ग्रहान् शुभाशुभदायकतया चिन्तयति चिन्ति—ण्वुल् ६त०। दैवज्ञे सांवत्सरिके। “वक्तव्यमिष्टं जगतोऽशुभं वा शास्त्रोपदेशाद्ग्रहचिन्तकेन” वृ० स० २४अ०।

ग्रहण न० ग्रह—भावे ल्युट्। १स्वीकारे २ज्ञाने। ३आदरे ४उपरागे चन्द्रसूर्य्ययोः राहुणा ग्रसने करणे ल्युट्। ५करे मेदि०। ६इन्द्रिये राजनि०। ७शब्दे जटा०। तत्र करस्य ग्रहणसाधनत्वात् इन्द्रियाणां शब्दस्य च ज्ञानसाधनत्वात् तथात्वम्। उपरागस्य यथा राहुकतत्वं तथा उपरागशब्दे १२११पृ० उक्तम्।

“चक्षुषा दर्शनं राहोर्यत्तद्ग्रहणमुच्यते” संवत्सरप्रदीपः। तत्रातुरस्यापि स्नानमाह “आदित्यकिरणैः पूतं पुनः पूतञ्च वह्निना। जलं, व्याध्यातुरः स्नायात् ग्रहणेऽप्युष्णवारिणा” व्यासः। तत्र सर्वजलस्य गाङ्गतुल्यतामाह व्यासः “सर्वं भूमिसमं दानं सर्वे व्याससमा द्विजाः। सर्वं गङ्गासमं तोयं ग्रहणे नात्र संशयः”। तत्र श्राद्धस्यावश्यकतामाह शाता०। “सर्वस्वेनापि कर्त्तव्यं श्राद्धं वै राहुदर्शने। अकुर्वाणस्तु तत् श्राद्धं पङ्के गौरिव सीदति”। तत्रामान्नेन श्राद्धमाह प्रचेताः “आपद्यनग्नौ तीर्थे च चन्द्रसूर्य्यग्रहे तथा। आमश्राद्धं द्विजैः कार्य्यं शूद्रेण तु सदैव हि”। आमश्राद्धेऽपि विशेषो योगिनीतन्त्रे “निरग्नेरामश्राद्धे तु अन्नं न चालयेत् क्वचित्। वृद्धौ तु चालयेदन्नं संक्रमे ग्रहणेषु च”। ग्रहणश्राद्धादिकं मलमासेऽपि कार्यं यथाह कालमा० स्मृतिः “चन्द्रसूर्य्यग्रहे स्नानं श्राद्धदानजपादिकम्। कार्य्याणि मलमासेऽपि नित्यं नैमित्तिकं तथा”। तत्र दीक्षायां नैव कालादिशुद्ध्यपेक्षा “सत्तीर्थेऽर्कविधुग्रासे तन्तुदामनपर्वणोः। मन्त्रदीक्षां प्रकुर्वाणो मासर्क्षादीन् न शोधयेत्” सारसंग्रहः। तत्र वारभेदे गुणाधिक्यम् “चन्द्रग्रहश्चन्द्रवारे रवौ सूर्य्यग्रहस्तथा। चूड़ामणिरयं योगस्तत्रानन्तफलं स्मृतम्। अन्यस्माद्ग्रहणात् कोटिगुणमत्र फलं लभेत्” गरु०पु०। अत्र पुरश्चरणप्रकारः “अथ वान्यप्रकारेण पुरश्चरणमिष्यते। ग्रहणेऽर्कस्य चेन्दोर्वा शुचिः पूर्वमुपोषितः। नद्यां समुद्रगामिन्यां नाभिमात्रोदके स्थितः। यद्वा पुण्योदके स्नात्वा शुचिः पूर्वमुपोषितः। ग्रहणादि विमोक्षान्तं जपेन्मन्त्रं समाहितः। अनन्तरं दशांशेन क्रमाद्धोमादिकं चरेत्। तदन्ते महतीं पूजां कुर्य्याद्ब्राह्मणतर्पणम्। ततो मन्त्रप्रसिद्ध्यर्थं गुरुं संपूज्य तोषयेत्। एवञ्च मन्त्रसिद्धिः स्याद्देवता च प्रसीदति”। ति०त० पुरश्चरणच०। तत्र स्नानस्यावश्यकतामाह वृद्धवसिष्ठः “संक्रमे ग्रहणे चैव न स्नायाद्यस्तु मानवः। सप्तजन्मसु कुष्ठी स्याद्दुःखभागी च सर्वदा” अत्राशौचेऽपि साङ्गस्नानमात्रं कार्य्यं यथाह स्मृतिः। “सूतके मृतके चैव न दोषो राहुदर्शने। स्नानमात्रन्तु कर्त्तव्यं दानश्राद्धविवर्जितम्”। अत्र क्षताशौचं नास्ति यथोक्तम् “चन्द्रसूर्य्यग्रहे चैव मृतानां पिण्डकर्मणि। महातीर्थे तु संप्राप्ते क्षतदोषो न विद्यते” भविष्यपु०।

तत्र ज्ञाने “भार्य्यात्वसंपादकं ग्रहणं विवाहः” उद्वा०त० रघु०. “अतएव सतां परार्थता ग्रहणानां हि यथा यथार्थता” नैष०। आदाने “पाणिग्रहणिकाः मन्त्रा नियतं दारलक्षणम्” उ० त० स्मृतिः। “आचारधूमग्रहणात् बभूव” रघुः “स बाहुशतमुद्यम्य सर्वास्त्रग्रहणं रणे” हरिवं०४८अ०। अर्थवद्ग्रहणेनानर्थकस्य” “अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन तदन्तविधिं प्रयोजयन्ति” व्या० परिभाषा।

ग्रहणक न०ग्रह्यतेऽनेन ग्रह—करणे ल्युट् ततः स्वार्थे क। ग्राहके शास्त्रे। “हकारादीनामपि ग्रहणकशास्त्रबलात्

ग्राच्यत्वं स्यात्" सि॰कौ॰। शब्देन्दुशेखरे तु ग्रहणकेत्यत्र गाहकेति पाठः।

**ग्रह(णि)णी** स्त्री गृह्णाति रोगिणोदेहम् ग्रह–अनि वा ङीप्। १पित्तधराख्ये कलाभेदे २तदाश्रिते रोगभेदे प्रवाहिकायां च तद्रोगस्थाननिदानाद्युक्तं सुश्रुते यथा

"दुष्यति ग्रहणी जन्तोरग्निसादनहेतुभिः। अतिसारे निवृत्तेऽपि मन्दाग्नेरहिताशिनः। भूयः सन्दूषितो वह्निर्ग्रहणीमभिदूषयेत्। तस्मात्कार्य्यः परीहारस्त्वतीसारे विरिक्तवत्। यावन्न प्रकृतिस्थः स्याद्दोषतः प्राणतस्तथा। षष्ठी पित्तधरा नाम या कला परिकीर्त्तिता। पक्वामाशयमध्यस्था ग्रहणी सा प्रकीर्त्तिता। ग्रहण्यां बलमग्निर्हि स चापि ग्रहणीश्रितः। तस्मात्संदूषिते वह्नौ ग्रहणी सम्प्रदुष्यति। एकशः सर्वशश्चैव दोषैरत्यर्थमूर्च्छितैः। सा दुष्टा बहुशोभुक्तमाममेव विमुञ्चति। पक्वं वा सरुजं पूति मुहुर्बद्धं मुहुर्द्रवम्। ग्रहणीरोगमाहुस्तमायुर्वेदविदो जनाः। तस्योत्पत्तौ विदाहान्नसदनालस्यतृट्क्लमाः। बलक्षयोऽरुचिः कासः कर्णक्ष्वेडान्त्रकूजनम्। अथ जाते भवेज्जन्तुः शूनपादकरः कृशः। पर्व्वरुग्लौल्यतृट्छर्दिज्वरारोचकदाहवान्। उद्गिरेच्छुक्ततिक्ताम्ललोहधूमामगन्धिकम्। प्रसेकमुखवैरस्यतमकारुचिपीडितः। वाताच्छूलाधिकैः पायुहृत्पार्श्वोदरमस्तकैः। पित्तात्सदाहैर्गुरुभिः कफात्त्रिभिस्त्रिलक्षणैः। दोषवर्णैर्नखैस्तद्वद्विण्मूत्रनयनाननैः। हृत्पाण्डूदरगुल्मार्शःप्लीहाशङ्की च मानवः"।

"नानाविधद्रव्यचौरो जायते ग्रहणीयुतः" शाता॰। तस्याः कर्मभेदविपाकतोक्ता। तस्या महारोगत्वमदाद्यशब्दे उक्तम् "वृद्धस्य ग्रहणीरोगो नागृहीत्वा निवर्त्तते" वैद्य॰।

**ग्रहणीहर** न॰ ग्रहणीं हरति हृ–अच्। १लवङ्गे शब्दच॰ २ग्रहणीहारके औषधादौ त्रि॰।

**ग्रहदक्षिणा** पु॰ ग्रहाणां ग्रहोद्देशेन देया दक्षिणा। ग्रहोद्देशेन ग्रहयज्ञे देयत्वेनादिष्टदक्षिणायाम् ग्रहयज्ञशब्दे विवृतिः।

**ग्रहदान** पु॰ ६त॰। ग्रहोद्देशेन तदशुभशान्त्यै दानम्। ग्रहाशुभनिवारणार्थं देये द्रव्यभेदे गोचरशब्दे ग्रहगोचरशब्दे ग्रहविप्रशब्दे च तद्विवृतिः।

**ग्रहदृष्टि** स्त्री। ६त॰। ग्रहाणां स्वस्थानापेक्षया स्थानभेदेषु दर्शनभेदे सा च वृहज्जातके तट्टीकायां चोक्ता यथा "त्रिदशत्रिकोणचतुरस्रसप्तमान्यवलोकयन्ति चरणाभिवृद्धितः। रविजामरेज्यरुधिराः परे च ये क्रमशो भवन्ति किल वीक्षणेऽधिकाः" वृहज्जा॰। "यस्मिन् स्थाने खेटाः स्थितास्तस्मात्त्रिदशादीनि स्थानानि चरणाभिवृद्धितः पादवृद्ध्यावलोकयन्ति खेटो यस्मिन् राशौ व्यवस्थितः तस्मात्तृतीयगः खेटो दशमगतश्च तौ तृतीयदशमराशी च पादेन चतुर्भागदृष्ट्यावलोकयति एवं त्रिकोणस्थौ नवपञ्चमस्थानगतावर्द्धदृष्ट्या, चतुरस्रेऽष्टमचतुर्थे अष्टमचतुर्थस्थानस्थौ पादहीनदृष्ट्या सप्तमगे खेटं परिपूर्णदृष्ट्या। चरणाभिवृद्धित इत्यत्राभिशब्दो वीप्सां द्योतयति चरणचरणवृद्ध्या पादपादवृद्ध्येत्यर्थः। यावत्पाददृष्ट्या पश्यन्ति तावत् फलं प्रयच्छन्ति तथा च स्वल्पजातके "दशमतृतीये नवमपञ्चमे चतुर्थाष्टमे कलत्रं च। पश्यन्ति पादवृद्ध्या फलानि चैवं प्रयच्छन्ति"। अर्थादेव खेटा उक्तस्थानानि पश्यन्तीति तथा च सारावल्याम् "सव्यं पश्यति सदा खगाश्चरणवृद्धितः सर्वे। त्रिदशत्रिकोणचतुरस्रसप्तमगतान् फलं क्रमेणैव। पूर्णं पश्यति रविजस्तृतीयदशमे त्रिकोणमपि जीवः। चतुरस्रं भूमिसुतः सितार्कबुधहिमकराः कलत्रं च"। तथा यवनेश्वरः "द्वौ पश्चिमौ ११।१२। षष्ठमथ द्वितीयं स्वस्थानराशेः परिहृत्य राशिम्। शेषान् खगः पश्यति सर्वकालमिष्टेषु चैषां विहिता दृगिष्टा। जामित्रभे दृष्टिफलं समस्तं सपादहीनं चतुरस्रयोश्च। त्रिकोणयोर्दृष्टिफलार्द्धमाहुर्दुश्चिक्यसंज्ञे दशमे च पादम्"। रविजामरेज्यरुधिरा इति। किलेत्यागमसूचने चरणाभिवृद्धित इत्यनुवर्त्तते एते रविजादयश्चरणाभिवृद्धितः पादोपचयाद्वीक्षणे दर्शने क्रमशोऽधिकफलप्रदा भवन्ति रविजः सौरिः स दर्शने पादफलप्रदः, अमरेज्यो बृहस्पतिरर्द्धफलप्रदः रुधिरोऽङ्गारकः स पादहीनफलप्रदः। अपरेऽर्कचन्द्रबुधशुक्रास्ते वीक्षणे समस्तफलप्रदाः। एतन्नैसर्गिकं ग्रहाणां दृष्टिफलम्। स्थानवशादेतेषां यथास्वं दृष्टिफलमूह्यम् एवमेके व्याचक्षते। अपरे तु आहुः स्थानफलमेतत् तेन त्रिदशादिस्थानगतान् ग्रहराशीन् पश्यन्तो रविजादयो दर्शनेऽधिकफलप्रदा भवन्ति तद्यथा तृतीयदशमस्थान् ग्रहान् राशीन् वा शनैश्चरः पश्यन्नन्येभ्यो ग्रहेभ्योऽधिकफलप्रदो भवति परिपूर्णं पश्यतीत्यर्थः। एवं त्रिकोणस्थान् जीवः, चतुरस्रगान् भौमः, सप्तमस्थान् परे सूर्यचन्द्रबुधशुक्राः। एतच्च बहुतराचार्याणां मतम्। तथा च भगवान्

गर्गः "दुश्चिक्य३ दशमान् सौरिस्त्रिकोणस्थान् बृहस्पतिः। चतुर्थाष्टमगान् भौमः शेषाः सप्तमसंस्थितान्। भवन्ति वीक्षणे नित्यमुक्ताधिकफलाः खगाः"। भट्टो० वराहमते राहोर्ग्रहत्वाभावेन न तस्य दृष्टिस्तेनोक्ता। ज्यो० त० अन्यखेटदृष्टेः तद्दृष्टिश्चोक्ता यथा "दशमे च तृतीये च पाददृष्टिरुदाहृता। अर्द्धदृष्टिश्च नवमे पञ्चमे परिकीर्त्तिता। चतुर्थे त्वष्टमे चैव पादोना परिकीर्त्तिता। सप्तमे परिपूर्णा च फलमेवं प्रकल्प्यते। तृतीयदशमावार्किः पश्यन् पूर्णफलप्रदः। त्रिकोणगान् गुरुश्चैव चतुर्थाष्टमगान् कुजः। सुतमदननवान्त्ये पूर्णदृष्टिः ६०सुरारेर्युगलदशमराशौ दृष्टिपादत्रयाङ्कः४५। सहजरिपुचतुर्थेष्वष्टमे चार्द्धदृष्टिः ३०स्वितिभवनमुपान्त्यं नैव दृश्यं हि राहोः"।

सर्वकर्मोपयोगिनैसर्गिकग्रहदृष्टिचक्रम्।

| स्थान | र | च | म | बु | बृ | शु | श | रा |
|---|---|---|---|---|---|---|---|---|
| १ | ० | ० | ० | ० | ० | ० | ० | ० |
| २ | ० | ० | ० | ० | ० | ० | ० | ४५ |
| ३ | १५ | १५ | १५ | १५ | १५ | १५ | ६० | ३० |
| ४ | ४५ | ४५ | ६० | ४५ | ४५ | ४५ | ४५ | ३० |
| ५ | ३० | ३० | ३० | ३० | ६० | ३० | ३० | ६० |
| ६ | ० | ० | ० | ० | ० | ० | ० | ३० |
| ७ | ६० | ६० | ६० | ६० | ६० | ६० | ६० | ६० |
| ८ | ४५ | ४५ | ६० | ४५ | ४५ | ४५ | ४५ | ३० |
| ९ | ३० | ३० | ३० | ३० | ६० | ३० | ३० | ६० |
| १० | १५ | १५ | १५ | १५ | १५ | १५ | ६० | ४५ |
| ११ | ० | ० | ० | ० | ० | ० | ० | ० |
| १२ | ० | ० | ० | ० | ० | ० | ० | ६० |

तात्कालिकदृष्टिस्तु द्रष्टृदृश्यग्रहयोर्द्रष्टृखेटराशग्रोर्वा अनुपदं वक्ष्यताजतोक्तवत् कल्पनीया इयांस्तु विशेषः तत्र एकादिशेषे ये ध्रुवा उक्ता अत्र न तथा किन्तु दर्शितचक्रानुसारेण खगभेदे ध्रुवाः कल्पनीया इति। नैसर्गिकतात्कालिकमित्रादिकं तु अरिशब्दे ३२५पृ० उक्तम्। तदनुसारेण मित्रादिदृष्टिरूह्या नीलकण्ठताजके तु वर्षप्रवेशफलोपयोगिनी अन्यविधैव दृष्टिरुक्ता यथा "दृष्टिः स्यान्नवपञ्चमे बलवती प्रत्यक्षतः स्नेहदा पादोना४५ऽखिलकार्यसाधनकरी मेलापकाख्योच्यते। गुप्तस्नेहकरी तृतीयभवभे कार्यस्य संसिद्धिदात्र्यं शोना ४०कथिता तृतीयभवने षड्भाग१०दृष्टिर्भवे ११। दृष्टिः पादमिता१५ चतुर्थदशमे गुप्तारिभावा स्मृताऽन्योन्यं सप्तमभे तथैकभवने प्रत्यक्षवैराऽखिला६०। दृष्टं दृक्त्रितयं क्षुताह्वयमिदं कार्यस्य विध्वंसनं संग्रामादिकलिप्रदं दृश दृशा स्युर्द्वादशांशान्तरे।

वर्षप्रवेशोपयोगिग्रहदृष्टिचक्रम्।

| स्थान | र | च | मं | बु | बृ | शु | श | |
|---|---|---|---|---|---|---|---|---|
| १ | ६० | ६० | ६० | ६० | ६० | ६० | ६० | प्रत्यक्षवैरा |
| २ | ० | ० | ० | ० | ० | ० | ० | |
| ३ | ४० | ४० | ४० | ४० | ४० | ४० | ४० | गुप्तस्नेहा |
| ४ | १५ | १५ | १५ | १५ | १५ | १५ | १५ | गुप्तारिः |
| ५ | ४५ | ४५ | ४५ | ४५ | ४५ | ४५ | ४५ | प्रत्यक्षमित्रा |
| ६ | ० | ० | ० | ० | ० | ० | ० | ० |
| ७ | ६० | ६० | ६० | ६० | ६० | ६० | ६० | प्रत्यक्षवैरा |
| ८ | ० | ० | ० | ० | ० | ० | ० | ० |
| ९ | ४५ | ४५ | ४५ | ४५ | ४५ | ४५ | ४५ | प्रत्यक्षस्नेहा |
| १० | १५ | १५ | १५ | १५ | १५ | १५ | १५ | गुप्तारिः |
| ११ | १० | १० | १० | १० | १० | १० | १० | गुप्तमित्रा |
| १२ | ० | ० | ० | ० | ० | ० | ० | |

तात्कालिकस्फुटदृष्टिस्तु

"अपास्य पश्यं निजदृश्यखेटादेकादिशेषे ध्रुवलिप्तिकाः स्युः। शून्यं खवेदास्तिथयोऽक्षवेदाः खं षष्टिरभ्रं शरवेदसंख्या। तिथ्यभ्रचन्द्रावियदभ्रतर्काः शेषांशयातैष्यविशेषघातात्। लब्धैः खरामैरधिकोनगतैष्ये स्वर्णं ध्रुवैताः स्फुटदृष्टिलिप्ताः" नी०ता०उक्तया दिशा आनेया।

**ग्रहदेवता** स्त्री ६त०। सूर्य्यादिग्रहाणामधिष्ठातृरुद्रादिदेवभेदे सा च ग्रहयज्ञशब्दे दृश्या ग्रहाधिदेवताद्योऽप्यत्र। [वक्ष्यमाणे गुग्गुलुप्रभृतौ धूपे।

**ग्रहधूप** पु० ग्रहाणां ग्रहोद्देशेन धूपः। ग्रहयज्ञशब्दे

**ग्रहनायक** पु०६त० १सूर्य्ये २अर्कवृक्षे २शनौ च शब्दरत्ना०

**ग्रहनाश** पु० ग्रहं मलबन्धं नाशयति नश–णिच्–अण् उप० स०। शाकवृक्षे (क्षातियान्) शब्दर०।

**ग्रहनाशन** पु० ग्रहं मलबन्धं नाशयति नश–णिच्–ल्यु शाकवृक्षे रत्नमा०।

**ग्रहनेमि** पु०ग्रहाणां ग्रहकक्षाणां नेमिरिव। चन्द्रे शब्दच० तस्य च ग्रहकक्षाधःस्थितत्वेन नेमितुल्यत्वात् तथात्वम्।

**ग्रहपति** पु० ६त०। १सूर्य्ये २अर्कवृक्षे अमरः। ३चन्द्रे च। "तस्य विस्तीर्य्यते राज्यं ज्योत्स्नाः ग्रहपतेरिव" भा० शा० १६८ अ०।

**ग्रहपुष** पु० ग्रहं पुष्णाति स्वकरैः पुष–क । सूर्य्ये हेम० तस्य च तथात्वं खगोलशब्दे पृ० द्रष्टव्यम् ।

**ग्रहप्रत्यधिदैवत** न० ६त० । ग्रहाणां देवतानां देवतासु अग्न्यादिषु ग्रहयज्ञशब्दे २४२५पृ० दृश्यम् ।

**ग्रहबल** न० ६त० । ग्रहाणां बलभेदे तानि च बृहज्जातके तद्व्याख्याने भट्टोत्पलेन चोक्तानि यथा

"स्वोच्चसुहृत्स्वत्रिकोणनवांशैः स्थानबलं स्वगृहोपगते च । दिक्षु बुधाङ्गिरसौ रविभौमौ सूर्य्यसुतः सितशीतकरौ च । उदगयने रविशीतमयूखौ वक्रसमागमगाः परिशेषाः । विपुलकरा युधि चोत्तरसंस्थाश्चेष्टितवीर्य्ययुताः परिकल्प्याः । निशिशशिकुजसौराः सर्वदा ज्ञोऽह्नि चान्ये बहुलसितगताः स्युः क्रूरसौम्याः क्रमेण । द्व्ययनदिवसहोरामासपैः कालवीर्य्यं शकुबुगुशुचराद्याद्वृद्धितो वीर्य्यवन्तः" बृहज्जा० । "अत्र ग्रहाणां चतुर्विधं स्थानदिक्चेष्टाकालाख्यं बलम् । तत्र तावत् स्थानदिग्बलं दोधकेनाह "स्वोच्चसुहृदिति स्वग्रहण प्रत्येकमभिसंबध्यते तत्र स्वोच्चे स्थितो ग्रहो बलवान् भवति, तात्कालिकस्य सुहृदो मित्रस्य क्षेत्रे स्थितो बलवानेव स्वत्रिकोणे आत्मीयमूलत्रिकोणे स्थितः, स्वनवांशे स्थितः, स्वगृहे स्वराशावुपगतः प्राप्तो बलवानेव, एतेषामन्यतमे व्यवस्थितो ग्रहः स्थानबलयुक्तो भवति । तत्रार्कस्य सिंहः स्वत्रिकोणम् तदेव गृहं क्षेत्रम् । चन्द्रस्य वृष उच्चः स एव त्रिकोणम्, भौमस्य मेषः त्रिकोणम् तदेव स्वक्षेत्रं, बुधस्य कन्या उच्चः सैव मूलत्रिकोणं स्वक्षेत्रं च । गुरोः धन्वी त्रिकोणं, तदेव स्वक्षेत्रम् सौरेः कुम्भस्त्रिकोणम् तदेव स्वक्षेत्रम् । शुक्रस्य तुला त्रिकोणं तदेव स्वक्षेत्रम् एतेषामाचार्य्येण विशेषेणोक्तः अस्माभिरन्यहोरशास्त्रादानीय शिष्यहितायेह लिख्यते तथा च सारावल्याम् "विंशतिरंशाः सिंहे त्रिकोणमपरे स्वभवनमर्कस्य । उच्चं भागत्रितयं वृष इन्दोः स्यात्त्रिकोणमपरेऽंशाः । द्वादशभागा मेषे त्रिकोणमपरे स्वभन्तु भौमस्य । उच्चफलं कन्यायां बुधस्य तु रङ्गांशकैः सदा चिन्त्यम् । परतस्त्रिकोणजातः पञ्चभिरंशैः स्वराशिजं परतः । दशभागा जीवस्य त्रिकोणफलं स्वभं परं चापे । शुक्रस्य तु तिथयोऽंशास्त्रिकोणमपरे घटे स्वराशिश्च । कुम्भे त्रिकोणजनिते रविजस्य रवेर्यथा सिंहे" एतदार्य्याचतुष्टयम् । दिक्षु बुधाङ्गिरसावित्यादि । प्राच्याद्यासु चतसृषु दिक्षु क्रमाद्बुधादयो बलिनो भवन्ति तत्र पूर्वस्यां बुधाङ्गिरसौ ज्ञजीवौ बलिनौ भवतः लग्नस्थावित्यर्थः दक्षिणस्यां रविभौमौ सूर्य्याङ्गारकौ दशमस्थावित्यर्थः पश्चिमायां सूर्य्यसुतः शनिः सप्तमस्थ इत्यर्थः । उत्तरस्यां सितशीतकरौ शुक्रचन्द्रौ चतुर्थस्थावित्यर्थः । यो ग्रहो यत्र बली स तस्मात्सप्तमस्थानस्थो विबलो भवति मध्येऽनुपात ऊह्य इति सर्वत्रेयं परिभाषा ग्रहाणामुच्चनीचप्रविभागे राशीनां दिग्बलप्रविभागेऽपि, तथा च यवनेश्वरः "गुर्विन्दवौ पूर्वविलग्नसंस्थौ नभस्तलस्थौ च दिवाकरारौ । सौरोऽस्तगः शुक्रनिशाकरौ तु तुर्य्ये स्थितौ तौ सबलौ भवेतामिति" । अन्यबले ग्रहाणाम् अन्तरेऽनुपात एव युक्तः । एतत् ग्रहाणां दिग्बलमुच्यते । अधुना चेष्टाबलं दोधकेनाह उदगयने इति मकरादिराशिषट्कमुत्तरमयनं कर्कटादिराशिषट्कं दक्षिणमयनमिति उदगयने उत्तरायणे रविशीतमयूखौ सूर्य्यचन्द्रमसौ बलिनौ भवतः । परिशेषाः भौमबुधगुरुसितसौराः वक्रगाः विपरीतगतयो बलिनो भवन्ति तथा समागमगाश्चन्द्रेण सहिताः बलिन एव चन्द्रेण संयोगो ग्रहाणां समागमशब्दवाच्यः रविणा सहास्तमयो भौमादीनां परस्परं युद्धम् उक्तञ्चाचार्य्यविष्णुचन्द्रेण "दिवसकरेणास्तमयः समागमः शीतरश्मिसहितानाम् । कुसुतादीनां युद्धम् निगद्यतेऽन्योन्ययुक्तानामिति" विपुलकरा इति विपुलाः करा येषां ते विपुलकराः विस्तीर्णरश्मयो बलिनो भवन्ति शीघ्रकेन्द्रे द्वितीयतृतीयपदस्थे ग्रहस्य विपुलकरत्वं प्रायः सम्भवति वक्रासन्नत्वात् युधि संग्रामे चोत्तरसंस्था बलिन एव कुसुतादीनां युद्धमित्युक्तम् । तत्र यः उत्तरदिग्भागसंस्थितो जयी स च बलवान् उत्तरसंस्थत्वमत्रोपलक्षणार्थम् । यस्तेजस्वी स एव बलवान् तत्रैतल्लक्षणम् "दक्षिणदिक्स्थः परुषो वेपथुरप्राप्य सन्निवृष्टतनुः । अधिरूढो विकृतोनिःप्रभो विवर्णश्च यः । स जितः उक्तविपरीतलक्षणसम्पन्नो जयगतो विनिर्दिष्टः । विपुलः स्निग्धोद्युतिमान् दक्षिणदिक्स्थोऽपि जय उक्तः" इति एतच्छुक्रस्य प्रायः सम्भवति यस्मात् लिशाचार्य्यः "सर्वे जयिन उदक्स्था दक्षिणदिक्स्थो जयी शुक्रः" इति । एतच्चेष्टाबलम् एषामन्यतमेन संयुक्तश्चेष्टाबलसंयुक्तो भवति । अधुना ग्रहाणां कालबलं नैसर्गिकबलं च मालिन्याह निशीति शशिकुजसौराश्चन्द्रभौमशनयः निशि रात्रौ वीर्य्यवन्तो बलिनः । ज्ञोबुधः

सर्वदा सर्वस्मिन् काले निशि दिने च बली। अन्ये परे रविगुरुसिता अह्नि दिने बलिनः। क्रूराः पापाः प्रागुक्ताः बहुलपक्षे, कृष्णपक्षेऽपि क्रूरो बलवान् भवति यवनेश्वरः "मासे तु शुक्ले प्रतिपत्प्रवृत्ते पूर्वे शशी मध्यबलो दशाहे। श्रेष्ठो द्वितीयेऽल्पबलस्तृतीये सौम्यैस्तु दृष्टो बलवान् सदैवेति" सितगताः शुक्लपक्षे स्थिताः सौम्याः बलिनः। द्व्ययनेति द्वे अयने प्रमाणं यस्य द्व्ययनं तत्तु वर्षं स्ववर्षे आत्मीयवर्षे, यो ग्रहो यत्र वर्षेऽधिपतिः स तत्र बलवान् स्वदिवसे आत्मीयवासरे स्वहोरायां कालहोरायाम्। तथा स्वमासे यस्मिन् मासे योऽधिपतिः स तत्र बली द्व्ययनदिवसहोरामासानां ये अधिपतयस्तैर्ग्रहैः कालबलोपेतैरुपलक्षणीयम्। ते कालबलोपेता इत्यर्थः केचिद्द्व्ययनदिवसहोरामासपैरिति पठन्ति अन्ये स्वदिवसमहोरामासपैरिति पठन्ति य एषामपरः पाठः एतेषु कालेषु सर्वे एव बलिनो भवन्ति एतत् ग्रहाणां कालवीर्य्यम्। एतेषामन्यतमेन संयुक्तः कालबलसम्पन्नो भवति। शकुबुगुशुचराद्या इति शादयो वर्णाः आद्या येषाम् ते शकाराद्यः शनैश्वरः सर्वेभ्यो बलहीनः कुकाराद्यः कुजः भौमः शनैश्वराद्बलवान्। बुकाराद्यो बुधः स भौमाद्बलवान् गुकाराद्यो गुरुः स बुधाद्बली, शुकाराद्यः शुक्रः स जीवाद्बली चकाराद्यश्चन्द्रः स शुक्राद्बली रकाराद्यो रविः स चन्द्राद्बलीति। एतद्ग्रहाणां नैसर्गिकबलम्। यच्चादेवानेन स्वल्पजातके उक्तम् "मन्दारसौम्यवाक्पतिसितचन्द्रार्का यथोत्तरं बलिनः। नैसर्गिकबलमेतद्बलसाम्ये स्यादधिकचिन्तेति"। यदा ग्रहाणां ग्रहयोर्वा बलसाम्यं भवति तदा बलाधिक्यम् अधिकवीर्यवत्ता चयेति। अत्राचार्य्येण चतुःप्रकारस्य फलं नोक्तं तच्चान्यशास्त्राल्लिख्यते तथा च सारावल्याम् "उच्चबलेन समेतः परां विभूतिं खगः प्रसाधयति। स्वत्रिकोणबलः पुंसां साचिव्यं बलपतित्वं वा। स्वर्क्षबलेन च सहितः प्रमुदितधनधान्यसंपदाक्रान्तम्। मित्रबलसंयुक्तो जनयति कीर्त्यान्वितं पुरुषम्। तेजस्विनमतिसुखिनं सुस्थिरविभवं नृपाच्च लब्धधनम्। स्वनवांशकबलयुक्तः करोति पुरुषं प्रसिद्धं च"। स्वल्पजातके चोक्तम् "बलवान्मित्रस्वगृहोच्चनवांशकेष्वीक्षितः शुभैश्चापि। चन्द्रसितौ स्त्रीक्षेत्रे पुरुषक्षेत्रोपगाः शेषाः" इति तत्र शुभदृष्ट्यादिफलं तावत् "शुभदर्शनबलसहितः पुरुषं कुर्याद्गुणान्वितं ख्यातम्। सुभगं प्रधानमखिलं सुरूपदेहं च सौख्यं च। पुंस्त्रीभवनबलेन च करोति जनपूजितं कलाकुशलम्। पुरुषं प्रसन्नचित्तं कल्पं परलोकभीतञ्च" आशाबलसमवेतो नयति स्वदिशं नभश्चरः पुरुषम्। नन्या वस्त्रविभूषणवाहनसौख्यान्वितं कुरुते। कश्चिद्राज्यं कश्चित्प्रजां कश्चिद्द्रव्यं कश्चिद्यशः। ददाति विहगश्चेष्टावीर्य्यसमन्वितः। बलिनस्तु महावीर्याः शुभा राज्यप्रदाः खगाः। पापा व्यसनदाः पुंसां कुर्वन्ति च वृथाटनम्। स्वस्थं शरीरसमागमसुखमाहवजयबलेन विदधाति। शुभमतुलं विहगेन्द्रो राज्यं च विनिर्जितारातिम्। रात्रिदिवाबलपूर्णैर्भूगजलाभेन शौर्यपरिवृद्ध्या। मलिनयति शत्रुपक्षं भुङ्क्ति लक्ष्मीं नभश्चरैः पुरुषः। द्विगुणं द्विगुणं दद्युर्वर्षाधिपमासदिवसहोरेशाः। कुर्युर्दृष्ट्या सौख्यं स्वदशासु धनं च कीर्त्तिञ्च। पक्षबलाद्रिपुनाशं वराम्बरहस्तिसम्पदं दद्युः। स्त्रीकनकभूमिलाभं कीर्त्तिञ्च शशाङ्कधवलतराम्। सकलबलभारभरिता निर्मलकरजालभासुराः सततम्। राज्यं खगा विदध्युः सौख्यञ्च मनोरथातीतम्। आचारसौख्यशुभशौचयुताः सुरूपास्तेजस्विनः कृतविदो द्विजदेवभक्ताः। वस्त्रमाल्यजनभूषणसंप्रियाश्च सौम्यग्रहैर्बलयुतैः पुरुषा भवन्ति। लुब्धाः कुकर्मनिरता निजकार्य्यनिष्ठाः पापान्विताः सकलहाश्च तमोऽभिभूताः। क्रूराः शठा बधरता मलिनाः कृतघ्नाः पापग्रहैर्बलयुतैः पिशुनाः कुरूपाः। पुंराशिषु ग्रहेन्द्रैर्वीराः संग्रामकाङ्क्षिणो बलिनः। निःस्नेहाः सुकठोराः क्रूरा मूर्खाश्च जायन्ते। युवतिभवनस्थितेषु च मृदवः संग्रामभीरवः पुरुषाः। जलकुसुमवस्त्रनिरताः सौम्याः कलहैः सुसंयुक्ताः इति" एतत्सर्वं सुगमम्" भट्टोत्पलः। ताजकोक्तखगबलं च पञ्चवर्गीशब्दे द्वादशद्वादशवर्गीशब्दे च वक्ष्यते। [होढ़ेन देये गुडोदनादौ द्रव्ये।

**ग्रहबलि** पु० चतुर्थ्यर्थे द्वत०। ग्रहयज्ञे वक्ष्यमाणे ग्र-

**ग्रहभक्ति** स्त्री ६त०। ग्रहाणां विभागरूपे देशपुरुषद्रव्यादिभेदे सा च वृ०स० १६अ० उक्ता यथा

रवेः—"प्राङ्नर्मदार्धशोणोड्रवङ्गसुह्माः कलिङ्गवाह्लीकाः। शकयवनमगधशबरप्राग्ज्योतिषचीनकाम्बोजाः। मेकलकिराताटविका बहिरन्तःशैलजाः पुलिन्दाश्च। द्रविडानां प्रागर्धं दक्षिणकूलं च यमुनायाः। चम्पोदुम्बरकौशाम्बिचेदिविन्ध्याटवीकलिङ्गाश्च। पुण्ड्रा गोलाङ्गूलश्रीपर्वतवर्द्धमानाश्च। इक्षुमतीत्यथ तस्करपारतकान्तारगोपबीजानाम्। तुषधान्यकटुकतरुकनकदहनविषसम-

शूराणाम्। भेषजभिषक्चतुष्पदकृषिकरस्वपरहिंस्रयायिचौराणाम्। व्यालारण्ययशोयुततीक्ष्णानां भास्करः स्वामी"।

विधोः—"गिरिसलिलदुर्गकोशलभरुकच्छसमुद्ररोमकतुषाराः। वनवासितङ्गणहलस्त्रीराज्यमहार्णवद्वीपाः। मधुरसकुसुमफलसलिललवणमणिशङ्खमौक्तिकाब्जानाम्। शालियवौषधिगोधूमसोमपाक्रन्दविप्राणाम्। सितसुभगतुरगरतिकरयुवतिचमूनाथभोज्यवस्त्राणाम्। शृङ्गिनिशाचरकार्षकयज्ञविदां चाधिपश्चन्द्रः"।

कुजस्य—"शोणस्य नर्मदाया भीमरथायाश्च पश्चिमार्द्धस्थाः। निर्विन्ध्या वेत्रवती सिप्रा गोदावरी वेणा। मन्दाकिनी पयोष्णी महानदी सिन्धुमालतीपाराः। उत्तरपाण्ड्यमहेन्द्राद्रिविन्ध्यमलयोपगाश्चोलाः। द्रविडविदेहान्ध्राश्मकभासापुरकौङ्कणाः समं त्रिशिखाः। कुन्तलकेरलदण्डककान्तिपुरम्लेच्छसङ्करजाः। नासिक्यभोगवर्द्धनविराटविन्ध्याद्रिपार्श्वगा देशाः। ये च पिबन्ति सुतोयां तापीं ये चापि गोमतीसलिलम्। नागरकृषिकरपारतहुताशनाजीविशस्त्रवार्त्तानाम्। आटविकदुर्गकर्वटवधकनृशंसावलिप्तानाम्। नरपतिकुमारकुञ्जरदाम्भिकडिम्भाभिघातपशुपानाम्। रक्तफलकुसुमविद्रुमचमूपगुडमद्यतीक्ष्णानाम्। कोशभवनाग्निहोत्रिकधात्वाकरशाक्यभिक्षुचौराणाम्। शठदीर्घवैरबह्वाशिनां च वसुधासुतोऽधिपतिः"।

बुधस्य—"लौहित्यः सिन्धुनदः सरयूर्गम्भीरिका रथाह्वा च। गङ्गाकौशिक्याद्याः सरितो वैदेहकाम्बोजाः। मथुरायाः पूर्वार्द्धं हिमवद्गोमन्तचित्रकूटस्थाः। सौराष्ट्रसेतुजलमार्गपण्यबिलपर्वताश्रयिणः। उदपानयन्त्रगान्धर्वलेख्यमणिरागगन्धयुक्तिविदः। आलेख्यशब्दगणितप्रसाधकायुष्यशिल्पज्ञाः। चरपुरुषकुहकजीवकशिशुकविशठसूचकाभिचाररताः। दूतनपुंसकहास्यज्ञभूततन्त्रेन्द्रजालज्ञाः। आरक्षकनटनर्तकघृततैलस्नेहबीजतिक्तानि। व्रतचारिरसायनकुशलवेसराश्चन्द्रपुत्रस्य"।

गुरोः—"सिन्धुनदपूर्वभागो मथुरापश्चार्द्धभरतसौवीराः। स्रुघ्नोदीच्यविपाशासरिच्छतद्रूरमठसाल्वाः। त्रैगर्तपौरवाम्बष्ठपारताश्वाटधानयौधेयाः। सारस्वतार्जुनायनमत्स्यार्द्धग्रामराष्ट्राणि। हस्त्यश्वपुरोहितभूपमन्त्रिमाङ्गल्यपौष्टिकासक्ताः। कारुण्यसत्यशौचव्रतविद्यादानधर्मयुताः। पौरमहाधनशब्दार्थवेदविदभिचारनीतिज्ञाः। मनुजेश्वरोपकरणं छत्रध्वजचामराद्यं च। शैलेयकमांसीतगरकुष्ठरससैन्धवानि वल्लीजम्। मधुररसमधूच्छिष्टानि चोरकश्चेति जीवस्य"।

भृगोः—"तक्षशिलामार्त्तिकावतबहुगिरिगान्धारपुष्कलावतकाः। प्रस्थलमालवकैकयदाशार्णोशीनराः शिवयः। ये च पिबन्ति वितस्तामिरावतीं चन्द्रभागसरितं च। रथरजताकरकुञ्जरतुरगमहामात्रधनयुक्ताः। सुरभिकुसुमानुलेपनमणिवज्रविभूषणाम्बुरुहशय्याः। वरतरुणयुवतिकामोपकरणमृष्टान्नमधुरभुजः। उद्यानसलिलकामुकयशःसुखौदार्यरूपसम्पन्नाः। विद्वदमात्यवणिग्जनघटकृच्चित्राण्डजास्त्रिफलाः। कौशेयपट्टकम्बलपत्रौर्णिकरोध्रपत्रचोचानि। जातीफलागुरुवचापिप्पल्यश्चन्दनं च भृगोः"।

शनेः—"आनर्त्तार्बुदपुष्करसौराष्ट्राभीरशूद्ररैवतकाः। नष्टा यस्मिन्देशे सरस्वती पश्चिमो देशः। कुरुभूमिजाः प्रभासं विदिशा वेदस्मृतीमहीतटजाः। खलमलिननीचतैलिकविहीनसत्त्वोपहतपुंस्त्वाः। बन्धनशाकुनिकाशुचिकैवर्त्तविरूपवृद्धसौकरिकाः। गणपूज्यस्खलितव्रतशबरपुलिन्दार्थपरिहीनाः। कटुतिक्तरसायनविधवयोषितो भुजगतस्करमहिष्यः। खरकरभचणकवातलनिष्पावाश्चार्कपुत्रस्य"।

राहोः—"गिरिशिखरकन्दरदरीविनिविष्टा म्लेच्छजातयः शूद्राः। गोमायुभक्षशूलिकवोक्काणाश्वमुखविकलाङ्गाः। कुलपांसनहिंस्रकृतघ्नचौरनिःसत्यशौचदानाश्च। खरचरनियुद्धवित्तीव्ररोषगर्भाशया नीचाः। उपहतदाम्भिकराक्षसनिद्राबहुलाश्च जन्तवः सर्वे। धर्मेण च सन्त्यक्ता माषतिलाश्चार्कशशिशत्रोः"।

केतोः—"गिरिदुर्गपह्लवश्वेतहूणचोलावगाणमरुचीनाः। प्रत्यन्तधनिमहेच्छव्यवसायपराक्रमोपेताः। परदारविवादरताः पररन्ध्रकुतूहला मदोत्सिक्ताः। मूर्खाधार्मिकविजिगीषवश्च केतोः समाख्याताः"।

"उदयसमये यः स्निग्धांशुर्महान् प्रकृतिस्थितो यदि च न हतो निर्घातोल्कारजोग्रहमर्दनैः। स्वभवनगतः स्वोच्चप्राप्तः शुभग्रहवीक्षितः स भवति शिवस्तेषां येषां प्रभुः परिकीर्त्तितः। अभिहितविपरीतलक्षणैः क्षयमुपगच्छति तत्परिग्रहः। डमरभयगदातुरा जना नरपतयश्च भवन्ति दुःखिताः। यदि न रिपुकृतं भयं नृपाणां स्वसुतकृतं नियमादमात्यजं वा। भवति जनपदस्य चाप्यवृष्ट्या गमनमपूर्वपुराद्रिनिम्नगासु"।

**ग्रहभीतिजित्** पु० ग्रहभीतिं जयति जि—क्विप् ६त०। (चिड़ानाम) गन्धद्रव्ये राजनि०।

**ग्रहभोजन** न० ६त०। ग्रहाणां देवे बलिरूपे गुडौदनादि द्रव्ये ग्रहयज्ञशब्दे विवृतिः।

**ग्रहमण्डल** न० ६त०। १ग्रहसमूहे। ग्रहोद्देशेन पूजामण्डलम्। तत्पूजार्थे अष्टपद्माकारे २स्थानभेदे च ग्रहयज्ञशब्दे विवृतिः।

**ग्रहमैत्र** न० ग्रहयोर्दम्पतिचन्द्राधिष्ठितराशिपयोर्मैत्रम्। विवाहे विचारणीये दम्पतिराशिपग्रहयोर्मैत्रे। उपयमशब्दे विवृतिः।

**ग्रहयज्ञ** पु० ग्रहाणां तदुद्देशेन यज्ञः। शान्तिपुष्ट्याद्यर्थं ग्रहोद्देशेन क्रियमाणे यज्ञभेदे तदारम्भकालादिकम् संस्का० त० उक्तं यथा

दीपिकायाम् "शुभग्रहार्कवारेषु मृदुक्षिप्रध्रुवेषु च। शुभराशिविलग्नेषु शुभं शान्तिकपौष्टिकम्"। मृदुगणः चित्रानुराधामृगशिरोरेवत्यः। क्षिप्रगणो लघुगणः पुष्याश्विहस्ताः। ध्रुवगणो रोहिण्युत्तरात्रयम्। "गोचरे वा विलग्ने वा ये ग्रहा रिष्टसूचकाः। पूजयेत्तान् प्रयत्नेन पूजिताः स्युः शुभावहाः" गोचरे स्वराश्यपेक्षया यदा कदापि। विलग्ने जन्मलग्ने सूचका न तु रिष्टकारकाः। तेन दुष्टग्रहसूचनीयदोषोपशमनं फलम्। मत्स्यपुराणे "उत्सवानन्दसन्तानयज्ञोद्वाहादिमङ्गले। मातरः प्रथमं पूज्याः पितरस्तदनन्तरम्। ततो मातामहाश्चैव विश्वेदेवास्तथैव च"। नान्दीमुखे वारादिदोषो नास्ति। "नान्दीमुखे पितृश्राद्धे संक्रान्त्यां ग्रहग्रहे"। अत्र शूद्रस्याप्यधिकारः "स्मार्त्तं शूद्रः समाचरेदिति" वचनात् तस्य स्मार्त्तत्वेन प्रतिनिधिनाप्यारम्भः कर्त्तव्यः "श्रौतं कर्म स्वयं कुर्यादन्योऽपि स्मार्त्तमाचरेत्। अशक्तौ श्रौतमप्यन्यः कुर्य्यादाचारमन्ततः" इति शातातपीयात्। अनन्त उपक्रमात् परतः। तत्प्रकारः मत्स्य पु० ९२ अ० उक्तो यथा

"श्रीकामः शान्तिकामो वा ग्रहयज्ञं समारभेत्। वृष्ट्यायुःपुष्टिकामो वा तथैवाभिचरन् पुनः। येन ब्रह्मन्! विधानेन तन्मे निगदतः शृणु। सर्वशास्त्राण्यनुक्रम्य संक्षिप्य ग्रन्थविस्तरम्। ग्रहशान्तिं प्रवक्ष्यामि पुराणश्रुतिनोदिताम्। पुण्येऽह्नि विप्रकथिते कृत्वा ब्राह्मणवाचनम्। ग्रहान् ग्रहादिदेवांश्च स्थाप्य होमं समारभेत्। ग्रहयज्ञस्त्रिधा प्रोक्तः पुराणश्रुतिकोविदैः। प्रथमोऽयुतहोमः स्याल्लक्षहोमस्ततः परम्। तृतीयः कोटिहोमस्तु सर्वकामफलप्रदः। अयुतेनाहुतीनाञ्च नवग्रहमखः स्मृतः। तस्य तावद्विधिं वक्ष्ये पुराणश्रुतिभाषितम्।

ग्रहवेदिः—"गर्तस्योत्तरपूर्वेण वितस्तिद्वयविस्तृताम्। वप्रद्वयावृतां वेदिं वितस्त्युच्छ्रयसम्मिताम्। संस्थापनाय देवानां चतुरस्रामुदङ्मुखाम्। अग्निप्रणयनं कृत्वा तस्यामावाहयेत् सुरान्। देवतानां ततः स्थाप्या विंशतिर्द्वादशाधिका३२। सूर्य्यः सोमस्तथा भौमो बुधजीवसितार्कजाः। राहुः केतुरिति प्रोक्ता ग्रहा लोकहितावहाः"।

मण्डलेस्थानम्—"मध्ये तु भास्करं विद्याल्लोहितं दक्षिणेन तु। उत्तरेण गुरुं विद्याद्बुधं पूर्वोत्तरेण तु। पूर्वेण भार्गवं विद्यात् सोमं दक्षिणपूर्वके। पश्चिमेन शनिं विद्याद्राहुं पश्चिमदक्षिणे। पश्चिमोत्तरतः केतु" स्थापयेच्छुक्लतण्डुलैः"।

अधिदेवता—"भास्करस्येश्वरं विद्यादुमाञ्च शशिनस्तथा। स्कन्दमङ्गारकस्यापि बुधस्य च तथा हरिम्। ब्रह्माणञ्च गुरोर्विद्याच्छुक्रस्यापि शचीपतिम्। शनैश्चरस्य तु यमं राहोः कालं तथैव च। केतोर्वै चित्रगुप्तञ्च सर्वेषामधिदेवताः"।

प्रत्यधिदेवता—"अग्निरापः क्षितिर्विष्णुरिन्द्र ऐन्द्री च देवताः। प्रजापतिश्च सर्पाश्च ब्रह्मा प्रत्यधिदेवताः"।

पञ्चलोकपालाः—"विनायकं तथा दुर्गां वायुमाकाशमेव च। आवाहयेद्व्याहृतिभिस्तथैवाश्विकुमारकौ"।

ग्रहवर्णाः—"संस्मरेद्रक्तमादित्यमङ्गारकसमन्वितम्। सोमशुक्रौ तथा श्वेतौ बुधजीवौ च पिङ्गलौ (पीतौ)। मन्दराहू तथा कृष्णौ धूम्रं(चित्रम्)केतुगणं विदुः"।

ग्रहवर्णानि देयानि वासांसि कुसुमानि च। धूपामोदोऽत्र सुरभिरुपरिष्टाद्वितानकम्। शोभनं स्थापयेत्प्राज्ञः फलपुष्पसमन्वितम्।

ग्रहबलिः—गुडौदनं रवेर्दद्यात्सोमाय घृतपायसम्। अङ्गारकाय संयावं बुधाय क्षीरषष्टिकम्। दध्योदनञ्च जीवाय, शुक्राय च घृतौदनम्। शनैश्चराय कृशरमाजमांसञ्च राहवे। चित्रौदनञ्च केतुभ्यः सर्वभक्ष्यैरथार्चयेत्"। "प्रागुत्तरेण तस्माच्च दध्यक्षतविभूषितम्। चूतपल्लवसंछन्नं फलवस्त्रयुगान्वितम्। पञ्चरत्नसमायुक्तं पञ्चभङ्गसमन्वितम्। स्थापयेदव्रणं कुम्भं वरुणं तत्र विन्यसेत्। गङ्गाद्याः

सरितः सर्वाः समुद्रांश्च सरांसि च । गजाश्वरथ्यावल्मीकसङ्गमाद्ध्रदगोकुलात् । मृदमानीय विप्रेन्द्र! सर्वौषधिजलान्वितम् । स्नानार्थं विन्यसेत्तत्र यजमानस्य धर्मवित् । सर्वे समुद्राः सरितः सरांसि च नदास्तथा । आयान्तु यजमानस्य दुरितक्षयकारकाः । एवमावाहयेदेतानमरान् मुनिसत्तम ! । होमं समारभेत् सर्पिर्यवव्रीहितिलादिना" ।

ग्रहसमित्—"अर्कः पलाशखदिरावपामार्गोऽथ पिप्पलः । औदुम्बरः शमी दूर्वा कुशाश्च समिधः क्रमात्" ।

एकैकस्याष्टकशतमष्टाविंशतिरेव वा । होतव्या मधुसर्पिर्भ्यां दध्ना चैव समन्विताः । प्रादेशमात्राः सशिखाः सवल्काः सुपलाशिनीः । समिधः कल्पयेत् प्राज्ञः सर्वकर्मसु सर्वदा । देवानाम च सर्वेषामुपांशु परमार्थवित् । स्वेन स्वेनैव मन्त्रेण होतव्याः समिधः पृथक् । होतव्यं च घृताभ्यक्तं चरुभक्ष्यादिकं पुनः । मन्त्रैर्दशाहुतीर्हुत्वा होमं(मयुतम)व्याहृतिभिस्ततः । उदङ्मुखाः प्राङ्मुखा वा कुर्युर्ब्राह्मणपुङ्गवाः । मन्त्रवन्तश्च कर्त्तव्याश्चरवः प्रतिदैवतम् । हुत्वा च तांश्चरून् सम्यक् ततो होमं समाचरेत्" ।

ग्रहादिमन्त्राः—"आ कृष्णेनेति सूर्याय होमः कार्यो द्विजन्मना । आप्यायस्वेति सोमाय मन्त्रेण जुहुयात् पुनः । अग्निर्मूर्द्धा दिवो मन्त्र इति भौमाय कीर्तयेत् । अग्ने ! विवस्वदुषस इति सोमसुताय वै । बृहस्पते ! परिदीया रथेनेति गुरोर्मतः । शुक्रन्ते अन्यदिति च शुक्रस्यापि निगद्यते । शनैश्चरायेति पुनः शन्नो देवीति होमयेत् । कया नश्चित्र आभुव इति राहोरुदाहृतः । केतुं कृण्वन्नपि ब्रूयात् केतूनामपि शान्तये" ।

अधिदेवतामन्त्राः—"आ वो राजेति रुद्रस्य बलिहोमं समाचरेत् । आपोहिष्ठेत्युमायास्तु स्योनेति स्वामिनस्तथा । विष्णोरिदं विष्णु रिति तमीशेति स्वयम्भुवः । इन्द्रमिद्देवतातये इन्द्राय जुहुयात्ततः । तथा यमस्य चायं गौरिति होमः प्रकीर्त्तितः । कालस्य ब्रह्मजज्ञानमिति मन्त्रः प्रशस्यते । चित्रगुप्तस्य चाज्ञातमिति मन्त्रविदो विदुः" ।

प्रत्यधिदेवतामन्त्राः—"अग्निं दूतं वृणीमह इति वह्नेरुदाहृतः । उदुत्तमं वरुणमित्यपां मन्त्रः प्रकीर्त्तितः । भूमेः पृथिव्यन्तरिक्षमिति वेदेषु पठ्यते । सहस्रशीर्षा पुरुष इति विष्णोरुदाहृतः । इन्द्रायेन्द्रो मरुत्वत इति शक्रस्य शस्यते । उत्तानपर्णे सुभगे इति देव्याः समाचरेत् । प्रजापतेः पुनर्होमः प्रजापते इति स्मृतः । नमोऽस्तु सर्पेभ्य इति सर्पाणां मन्त्र उच्यते । एष ब्रह्मा य ऋत्विज इति ब्रह्मण्युदाहृतः" ।

लोकपालमन्त्राः—"विनायकस्य चातू न इति मन्त्रो बुधैः स्मृतः । जातवेदसे सुनवामेति दुर्गामन्त्र उच्यते । आदित्प्रत्नस्य रेतस आकाशस्य उदाहृतः । प्रा(क्रा)णाभिर्युमिहीनाश्च वायोर्मन्त्रः प्रकीर्त्तितः । एषो उषा अपूर्व्येति अश्विनोर्मन्त्र उच्यते" ।

पूर्णाहुतिश्च मूर्द्धानं दिव इत्यभिपातयेत् । अथाभिषेकमन्त्रेण वाद्यमङ्गलगीतकैः । पूर्णकुम्भेन तेनैव होमान्ते प्रागुदङ्मुखम् । अव्यङ्गावयवैर्ब्रह्मन् ! हेमस्रग्दामभूषितैः । यजमानस्य कर्त्तव्यं चतुर्भिः स्नपनं द्विजैः ।

अभिषेकमन्त्रः—"सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः । वासुदेवो जगन्नाथस्तथा सङ्कर्षणो विभुः । प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते । आखण्डलोऽग्निर्भगवान् यमो वै निरृतिस्तथा । वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः । ब्रह्मणा सहितः शेषो दिक्पालास्त्वामवन्तु ते । कीर्त्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः । बुद्धिर्लज्जा वपुः शान्तिस्तुष्टिः कान्तिश्च मातरः । एतास्त्वामभिषिञ्चन्तु धर्मपत्न्यः समागताः । आदित्यश्चन्द्रमा भौमो बुधजीवौ सितोऽर्कजः । ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः । देवदानवगन्धर्वा यक्षराक्षसपन्नगाः । ऋषयोमुनयो गावो देवमातर एव च । देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसाङ्गणाः । अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च । औषधानि च रत्नानि कालस्यावयवाश्च ये । सरितः सागराः शैलास्तीर्थानि जलदा नदाः । एते त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये" ।

ततः शुक्लाम्बरधरः शुक्लगन्धानुलेपनः । सर्वौषधैः सर्वगन्धैः स्नापितो द्विजपुङ्गवैः । यजमानः सपत्नीकः ऋत्विजः सुसमाहितान् । दक्षिणाभिः प्रयत्नेन पूजयेद्गतविस्मयः" ।

ग्रहदक्षिणाः—"सूर्याय कपिलां धेनुं शङ्खं दद्यात्तथेन्दवे । रक्तं धुरन्धरं दद्याद्भौमाय च ककुद्मिनम् । बुधाय जातरूपन्तु गुरवे पीतवाससी । श्वेताश्वन्दैत्यगुरवे कृष्णाङ्गामर्कसूनवे । आयसं राहवे दद्यात् केतुभ्यश्छागमुत्तमम् । सुवर्णेन समा कार्या यजमानेन दक्षिणा । सर्वेषामथ वा गावो दातव्या हेमभूषिताः । सुवर्णमथ वा

दद्याद्गुरवे येन तुष्यति । स्वमन्त्रेणैव दातव्याः सर्वाः सर्वत्र दक्षिणाः" ।

द्रव्यदानमन्त्राः तत्र कपिलायाः—"कपिले ! सर्वभूतानां पूजनीयासि रोहिणी ! । सर्वदेवमयी यस्मादतः शान्तिं प्रयच्छ मे" ।

शङ्खस्य—"पुण्यस्त्वं शङ्ख ! पुण्यानां मङ्गलानाञ्च मङ्गलम् । विष्णुना विधृतश्चासि ततः शान्तिं प्रयच्छ मे ।

वृषस्य—"धर्म्मस्त्वं वृषरूपेण जगदानन्दकारक ! । अष्टमूर्त्तेरधिष्ठानमतः शान्तिं प्रयच्छ मे" ।

हेम्नः—"हिरण्यगर्भगर्भस्त्वं हेम ! बीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे" ।

पीतवस्त्रस्य—"पीतवस्त्रयुगं यस्माद्वासुदेवस्य वल्लभम् । प्रदानात्तस्य मे विष्णो ! ह्यतः शान्तिं प्रयच्छ मे" ।

अश्वस्य—"विष्णुस्त्वमश्वरूपेण यस्मादमृतसम्भवः । चन्द्रार्कवाहनो नित्यमतः शान्तिं प्रयच्छ मे" ।

धेनोः—"यस्मात्त्वं पृथिवी सर्वा धेनुः केशवसन्निभा । सर्वपापहरा नित्यमतः शान्तिं प्रयच्छ मे" ।

अयसः—"यस्मादायसकर्म्माणि तवाधीनानि सर्वदा । लाङ्गलाद्यायुधादीनि तस्माच्छान्तिं प्रयच्छ मे" ।

छागस्य—"यस्मात्त्वं सर्वयज्ञानामङ्गत्वेन व्यवस्थितः । यानं विभावसोर्नित्यमतः शान्तिं प्रयच्छ मे" ।

गोः—गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश । यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च" ।

शय्यायाः—"यस्मादशून्यं शयनं केशवस्य च सर्वदा । शय्या ममाप्यशून्याऽस्तु दत्ता जन्मनि जन्मनि" ।

रत्नानाम्—"यथा रत्नेषु सर्वेषु सर्वे देवाः प्रतिष्ठिताः । तथा रत्नानि यच्छन्तु रत्नदानेन मे सुराः" ।

भूमेः—"यथा भूमिप्रदानस्य कलां नार्हन्ति षोड़शीम् । दानान्यन्यानि मे शान्तिर्भूमिदानाद्भवत्विह" ।

"एवं संपूजयेद्भक्त्या वित्तशाठ्येन वर्जितः । रत्नकाञ्चनवस्त्रौघैर्धूपमाल्यानुलेपनैः । अनेन विधिना यस्तु ग्रहपूजां समाचरेत् । सर्वान् कामानवाप्नोति प्रेत्य स्वर्गे महीयते । यस्तु पीडाकरो नित्यमल्पवित्तस्य वा ग्रहः । तञ्च यत्नेन संपूज्य शेषानप्यर्च्चयेद् बुधः । ग्रहा गावो नरेन्द्राश्च ब्राह्मणाश्च विशेषतः । पूजिताः पूजयन्त्येते निर्दहन्त्यवमानिताः । यथा बाणप्रहाराणां कवचं वारणं भवेत् । तद्वद्दैवोपघातानां शान्तिर्भवति वारणम् । तस्मान्न दक्षिणाहीनं कर्त्तव्यं भूतिमिच्छता । संपूर्णया दक्षिणया यस्मादेकोऽपि तृप्यति । सदैवायुतहोमोऽयं नवग्रहमखे स्थितः । विवाहोत्सवयज्ञेषु प्रतिष्ठादिषु कर्म्मसु । निर्विघ्नार्थं मुनिश्रेष्ठ ! तथोद्वेगाद्भुतेषु च । कथितोऽयुतहोमोऽयं लक्षहोममतः शृणु" ।

लक्षहोमः—"सर्वकामाप्तये यस्माल्लक्षहोमं विदुर्बुधाः । पितॄणां वल्लभं साक्षाद्भुक्तिमुक्तिफलप्रदम् । ग्रहताराबलं दृष्ट्वा कृत्वा ब्राह्मणवाचनम्" ।

मण्डपः—"गृहस्योत्तरपूर्वेण मण्डपं कारयेद् बुधः । रुद्रायतनभूमौ वा चतुरस्रमुदङ्मुखम् । दशहस्तमथाष्टौ वा हस्तान् कुर्य्याद्विधानतः । प्रागुदक्प्लवनां भूमिं कारयेद् यत्नतो बुधः । प्रागुत्तरं समासाद्य प्रदेशं मण्डपस्य तु । शोभनं कारयेत् कुण्डं यथावल्लक्षणान्वितम् । चतुरस्रं समन्तात् सयोनिवक्त्रं समेखलम् । चतुरङ्गुलविस्तारा मेखला तद्वदुच्छ्रिता । प्रागुदक्प्लवना कार्य्या सर्वतः समवस्थिता । शान्त्यर्थं सर्वलोकानां नवग्रहमखः स्मृतः । मानहीनाधिकं कुण्डमनेकभयदायकम् । यस्मात्तस्मात् सुसम्पूर्णं शान्तिकुण्डं विधीयते" ।

विस्तरभयात् कोटिहोमोनोक्तः तत्रैवाध्यायशेषे द्रष्टव्यः ।

अत्र याज्ञवल्क्येन ग्रहाणां मन्त्रान्तरमुक्तं यथा "आ कृष्णेन, इमन्देवा, अग्निर्मूर्द्धा दिवः ककुत् । उद्बुध्यस्वेति च ऋचो यथासंख्यं प्रकीर्त्तिताः । बृहस्पते अतिदर्यस्तथैवान्नात्परिस्रुतः । शन्नोदेवीस्तथा, काण्डात्केतुं कृण्वन्निमास्तथा" ।

विधानपा॰ विष्णुधर्म्मोत्तरवाक्यादन्ये मन्त्रा उक्ताः हेमाद्रिशान्तिकाण्डे विधानमालादौ चापरे मन्त्रा उक्ता एवं विप्रतिपत्तौ शाखिभेदाद्व्यवस्था । शाखिभेदान्मन्त्रभेदाश्च मत्कृततत्त्वादानादिपद्धतौ द्रष्टव्याः । तत्प्रतीकानि च विवरणपत्रे वक्तव्यानि तानि च तत्र द्रष्टव्यानि । क्वचित् मत्स्यपुराणवाक्यान्मन्त्रभेदस्तु शाखिभेदात् व्यवस्थाप्यः ।

तत्र ग्रहयज्ञे ग्रहाणां पूजनाय स्फटिकादिमूर्त्तिकरणं तदभावे पटे लेखनं तदभावे मण्डले वर्त्तुलाद्याकारलेखनं वा कृत्वा पूजादिकं कार्यं यथाह याज्ञ॰ १अ॰

"सूर्य्यः सोमो महीपुत्रः सोमपुत्रो बृहस्पतिः । शुक्रः शनैश्चरो राहुः केतुश्चेति ग्रहाः स्मृताः" याज्ञ॰। "एते सूर्य्यादयो नव ग्रहाः पूज्या इत्युक्तं किं कृत्वेत्याह" मिता॰ "ताम्रकात् स्फाटिकाद्रक्तचन्दनात् स्वर्णकादुभौ ।

रजताद्यसः सीसात्कांस्यात् कार्य्या ग्रहाः क्रमात्। स्ववर्णैर्वा पटे लेख्या गन्धैर्मण्डलकेषु वा" याज्ञ०। "सूर्य्यादीनां मूर्त्तयस्ताम्रादिभिर्यथाक्रमङ्कार्यास्तदलाभे स्ववर्णकैः पटे लेख्या मण्डलेषु वा गन्धैरक्तचन्दनादिभिर्यथावर्णं लेख्या इत्यन्वयः। द्विभुजत्वादिविशेषस्तु मत्स्यपुराणोक्तो द्रष्टव्यः तद्यथा "पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः। सप्ताश्वरथसंस्थोऽपि द्विभुजः स्यात् सदा रविः। श्वेतः श्वेताम्बरधरो दशाश्वः श्वेतभूषणः। गदापाणिर्द्विबाहुश्च कर्त्तव्यो वरदः शशी। रक्तमाल्याम्बरधरः शक्तिशूलगदाधरः। चतुर्भुजो मेषगमो वरदः स्याद्धरासुतः। पीतमाल्याम्बरधरः कर्णिकारसमद्युतिः। खड्गचर्मगदापाणिः सिंहस्थो वरदो बुधः। देवदैत्यगुरू तद्वत् पीतश्वेतौ चतुर्भुजौ। दण्डिनौ वरदौ कार्य्यौ साक्षसूत्रकमण्डलू। इन्द्रनीलद्युतिः शूली वरदो गृध्रवाहनः। बाणबाणासनधरः कर्त्तव्योऽर्कसुतः सदा। करालवदनः खड्गचर्मशूली वरप्रदः। नीलः सिंहासनस्थश्च राहुरत्र प्रशस्यते। धूम्रा द्विबाहवः सर्वे गदिनो विकृताननाः। गृध्रासनगता नित्यं केतवः स्युर्वरप्रदाः। सर्वे किरीटिनः कार्य्या ग्रहा लोकहितावहाः। स्वाङ्गुलेनोच्छ्रिताः सर्वे शतमष्टोत्तरं सदेति"।

"यथावर्णं प्रदेयानि वासांसि कुसुमानि च। गन्धाश्च बलयश्चैव धूपो देयश्च गुग्गुलुः। कर्त्तव्या मन्त्रवन्तश्च चरवः प्रतिदैवतम्" याज्ञ०। "यथावर्णं यस्य ग्रहस्य यो वर्णस्तद्वर्णानि वस्त्रगन्धपुष्पाणि देयानि" मिता०।

मण्डले ग्रहलेखनाकारस्तु

"वर्त्तुलो भास्करः कार्य्योऽर्द्धचन्द्रो निशाकरः। अङ्गारकस्त्रिकोणस्तु बुधश्चापाकृतिस्तथा। पद्माकृतिः गुरुः कार्य्यश्चतुःकोणस्तु भार्गवः। सर्पाकृतिः शनिः कार्य्यो राहुस्तु मकराकृतिः। खड्गाकृतिस्तथा केतुः कार्य्यो मण्डलपूजने" शान्तिदीपिकोक्तः।

ग्रहध्यानं मत्स्यपुराणोक्तमपि ग्रहयागतत्त्वोक्तं मण्डले मानभेदगोत्रजन्मभूम्याद्यनुगुणं ध्यानं प्रदर्श्यते।

सूर्य्यस्य "क्षत्रियं काश्यपं रक्तं कालिङ्गं द्वादशाङ्गुलम्। पद्महस्तद्वयं पूर्वाननं सप्ताश्ववाहनम्। शिवाधिदैवतं सूर्यं वह्निप्रत्यधिदैवतम्"।

सोमस्य "सामुद्रं वैश्यमात्रेयं हस्तमात्रं सिताम्बरम्। श्वेतं द्विबाहुं वरदं दक्षिणं सगदेतरम्। दशाश्वं श्वेतपद्मस्थं विचिन्त्योमाधिदैवतम्। जलप्रत्यधिदैवञ्च सूर्य्यास्यमाह्वयेत् तथा"।

मङ्गलस्य "आवन्त्यं क्षत्रियं रक्तं मेषस्थं चतुरङ्गुलम्। आरक्तमाल्यवसनं भारद्वाजं चतुर्भुजम्। दक्षिणोर्द्ध्वक्रमाच्छक्तिवराभयगदाकरम्। आदित्याभिमुखं देवं तद्वदेव समाह्वयेत्। स्कन्दाधिदैवतं ध्यायेत् क्षितिप्रत्यधिदैवतम्"।

बुधस्य "मागधं ह्यङ्गुलात्रेयं वैश्यं पीतं चतुर्भुजम्। वामोर्द्ध्वक्रमतश्चर्मगदावरदखड्गिनम्। सूर्य्यास्यं सिंहगं सौम्यं पीतवस्त्रं तथाह्वयेत्। नारायणाधिदैवञ्च विष्णुप्रत्यधिदैवतम्"।

बृहस्पतेः "द्विजमाङ्गिरसं पीतं सैन्धवञ्च षडङ्गुलम्। ध्यात्वा पीताम्बरं जीवं सुपद्मस्थं चतुर्भुजम्। दक्षोर्द्ध्वाक्षवरदकरकादण्डमाह्वयेत्। ब्रह्माधिदैवं सूर्य्यास्यमिन्द्रप्रत्यधिदैवतम्"।

शुक्रस्य "शुक्रं भोजकटं विप्रं भार्गवञ्च नवाङ्गुलम्। पद्मस्थमाह्वयेत् सूर्यमुखं श्वेतं चतुर्भुजम्। सदाक्षवरकरकादण्डहस्तं सिताम्बरम्। शक्राधिदैवतं ध्यायेत् शचीप्रत्यधिदैवतम्"।

शनेः "सौराष्ट्रं काश्यपं शूद्रं सूर्यास्यं चतुरङ्गुलम्! कृष्णं कृष्णाम्बरं गृध्रगतं सौरिं चतुर्भुजम्। तद्वद्बाणवरशूलधनुर्हस्तं समाह्वयेत्। यमाधिदैवतं प्रजापतिप्रत्यधिदैवतम्"।

राहोः "राहुं मलयजं शूद्रं पैठीनं द्वादशाङ्गुलम्। कृष्णं कृष्णाम्बरं सिंहासनं ध्यात्वा तथाह्वयेत्। चतुर्बाहुं खड्गवरशूलचर्मकरन्तथा। कालाधिदैवं सूर्यास्यं सर्पप्रत्यधिदैवतम्"।

केतूनाम् "कौशद्वीपं केतुगणं जैमिनीयं षडङ्गुलम्। धूम्रं गृध्रगतं शूद्रमाह्वयेद्विकृताननम्। सूर्य्यास्यं धूम्रवसनं वरदं गदिनं तथा। चित्रगुप्ताधिदैवञ्च ब्रह्मप्रत्यधिदैवतम्"।

अत्र चन्द्रस्य सामुद्रत्वं राहोर्मलयजत्वं केतोः कौशद्वीपत्वमुक्तं पुराणान्तरानुसारेण वक्ष्यमाणजन्मभूम्यादिबोधकवचनेन विरोधभिया विकल्प आश्रयणीयः स चाचारभेदात् "व्यवस्थित इति बोध्यम्। एवं वाहनेऽपि विकल्पः। मत्कृततुलादानादिपद्धतौ एतेषां मध्ये केषाञ्चिदन्यवाहनत्वस्य दर्शितत्वात्"।

अधिदेवादीनां ध्यानमुक्तं विष्णुधर्मोत्तरे।

शिवस्य "पञ्चवक्त्रो वृषारूढ़ः प्रतिवक्त्रं त्रिलोचनः। कपालशूलखट्टाङ्गी चन्द्रमौलिः सदाशिवः"।

उमायाः "अक्षसूत्रं च कमलं दर्पणं च कमण्डलुम्। उमा बिभर्त्ति हस्तेषु पूजिता त्रिदशैरपि"।

स्कन्दस्य "कुमारः षण्मुखः कार्य्यः शिखण्डकविभूषणः। रक्ताम्बरोदेवो मयूरवरवाहनः। कुक्कुटश्च तथा घण्टा तस्य दक्षिणहस्तयोः। पताका वैजयन्त्याख्या शक्तिः कार्या च वामयोः"।

विष्णोः "विष्णुः कौमोदकीपद्मशङ्खचक्रधरः क्रमात्। प्रदक्षिणं दक्षिणाधःकरादारभ्य नित्यशः"।

ब्रह्मणः "पद्मासनस्थो जटिलो ब्रह्मा कार्य्यश्चतुर्भुजः। अक्षमालां स्रुवं बिभ्रत् पुस्तकं च कमण्डलुम्। वासः कृष्णाजिनं तस्य पार्श्वे हंसस्तथैव च"।

शक्रस्य "चतुर्दन्तगजारूढो वज्री कुलिशभृत्करः। शचीपतिः प्रकर्त्तव्यो नानाभरणभूषितः"।

यमस्य "दंष्ट्रीलोयमः कार्य्योदण्डहस्तोविजानता। रक्तदृक् पाशहस्तश्च महामहिषवाहनः"।

कालस्य "कालः करालवदनो नीलाङ्गश्च विभीषणः। पाशहस्तोदण्डहस्तः कार्य्यो वृश्चिकरोमवान्"।

चित्रगुप्तस्य "अपीच्यवेशः स्वाकारः द्विभुजः सौम्यदर्शनः। दक्षिणे लेखनीं चित्रगुप्तो वामेऽस्य पत्रकम्। पिङ्गलश्मश्रुकेशान्तः पीनाङ्गजठरोऽरुणः"। "पिङ्गाक्षवितयोऽरुणः" इति वा पाठः।

प्रत्यधिदेवानां तत्राग्नेः "छागस्थः साक्षसूत्रोऽग्निः सप्तार्चिः शक्तिधारकः। चिह्नितं चमरेणास्य करमन्यं प्रकल्पयेत्"।

जलस्य "आपः स्त्रीरूपधारिण्यः श्वेता मकरवाहनाः। दधानाः पाशकलशौ मुक्ताभरणभूषिताः"।

क्षितेः "शुक्लवर्णा मही कार्य्या दिव्याभरणभूषिता। चतुर्भुजा सौम्यवपुश्चण्डांशुसदृशाम्बरा। रत्नपात्रं सस्यपात्रं पात्रमोषधिसंयुतम्। पद्मं करे च कर्त्तव्यं भुवो यादवनन्दन!। दिग्गजानां चतुर्णां सा कार्य्या पृष्ठगता तथा"। विष्णोरिन्द्रस्य च लक्षणमुक्तम्।

शचग्राः "वामे शचग्राः करे कार्य्या सौम्यसन्तानमञ्जरी। वरदा मण्डिता कार्य्या द्विभुजा च तथा शची"।

प्रजापतेः "यज्ञोपवीती हंसस्य एकवक्त्रश्चतुर्भुजः। अक्षं स्रुचं स्रुवं बिभ्रत् कुण्डिकाञ्च प्रजापतिः"। अक्षं अक्षमालाम्। कुण्डिकां कमण्डलुम्।

सर्पाणाम् "अक्षसूत्रधराः सर्पाः कुण्डिकापुच्छभूषणाः। एकभोगास्त्रिभोगा वा सर्वे कार्य्याश्च भीषणाः"।

ब्रह्मलक्षणं प्रागुक्तम्।

अथ विनायकादिपञ्चलोकपाललक्षणानि विष्णुधर्मोत्तरे

विनायकस्य "चतुर्भुजस्त्रिनेत्रश्च कर्त्तव्योऽत्र गजाननः। नागयज्ञोपवीतश्च शशाङ्ककृतशेखरः। दण्डं दक्षकरे दद्यात् द्वितीये चाक्षसूत्रकम्। तृतीये परशुं दद्याच्चतुर्थे मोदकं तथा"।

दुर्गायाः "शक्तिं वाणं तथा शूलं खड्गं चक्रं च दक्षिणे। चन्द्रबिम्बमधो वामे खेटमूर्द्ध्वे कपालकम्। शुकं टङ्कं च बिभ्राणा सिंहारूढोर्दिग्भुजा। एषा देवी समुद्दिष्टा दुर्गा दुर्गार्त्तिहारिणी"

वायोः "धावद्धरिणपृष्ठस्थो ध्वजधारी समीरणः। वरदाङ्कनकरो धूम्रवर्णः कार्य्यो विजानता"।

आकाशस्य "नीलोत्पलाभं गगनं तद्वर्णाम्बरधारि च। चन्द्रार्कहस्तं कर्त्तव्यं द्विभुजं सौम्यखण्डवत्"।

अश्विनोः "पीतपद्मसवर्णाभौ पद्मपत्रसमाम्बरौ। द्विभुजौ देवभिषजौ कर्त्तव्यौ रूपसंयुतौ। तयोरोषधयः कार्य्या दिव्या दक्षिणहस्तयोः। वामयोः पुस्तके कार्य्ये दर्शनीया स्तथाद्विजाः (खगाः)। एकस्य दक्षिणे पार्श्वे वामे चान्यस्य यादव!। नारीयुगं प्रकर्त्तव्यं सुरूपं चारुदर्शनम्"

ग्रहाणां वर्णगोलादिसूचकध्यानानि यागतत्त्वोक्तानि पूर्वदर्शितान्येव

विनायकादीनां मण्डले स्थापनस्थानमुक्तं रुद्रकल्पे विष्णु ध॰यथा

"राहुमन्ददिनेशानामुत्तरस्यां यथाक्रमम्। गणेशदुर्गा वायुश्च, राहुकेत्वोश्च दक्षिणे। आकाशमश्विनौ चेति पञ्च तान् स्थापयेत् द्विजः"।

धूपादौ विशेषः हेमाद्रौ स्क॰पु॰ "रवेः कुन्दुरकं धूपं शशिनस्तु घृताक्षतम्। भौमे सर्जरसं चैव अगुरुञ्च बुधे तथा। सिल्हुजं गुरवे दद्यात् शुक्रे विल्वागुरु स्मृतम्। गुग्गुलुर्मन्दचारे तु लाक्षा राहोश्च केतवे"। कुन्दुरकं शल्लकी निर्यासः विल्वागुरु विल्वफलनिर्याससहितमगुरु।

गन्धभेदस्तत्रैव "दिवाकरकुजाभ्यां तु दापयेद्रक्तचन्दनम्। चन्द्रे गन्धं भार्गवे च सितचूर्णं प्रदापयेत्। कुङ्कुमेन च संयुक्तं चन्दनं जीवसौम्ययोः। अगुरु चापि कस्तूरी राहुकेत्वर्कजेषु च"।

विधानमालादौ अन्यविधा गन्धधूपाः पुष्पभेदाश्चोक्तास्ते

च विवरणपत्ते दृष्टव्याः तत्र जीवस्य चतुःसमगन्ध उक्तः स च "कस्तूरिकाया द्वौ भागौ चत्वारश्चन्दनस्य तु। कुङ्कुमस्य त्रयश्चैव शशिनश्च चतुःसमम्" इत्युक्तः गुरोर्दशाङ्गधूपस्तत्रोक्तः स च "हेमाद्रौ व्रतखण्डे" षड्भागकुष्ठं द्विगुणो गुडश्च लाक्षात्रयं पञ्च नखस्य भागाः हरीतकी सर्जरसः समांशौ भागैकमेकं त्रिलवं शिलाजम्। घनस्य चत्वारि पुरस्य चैको धूपोदशाङ्गः-कथितो मुनीन्द्रैः" रत्नानि तु ग्रहशब्दे शारदा० हृप० उक्तानि दृष्टव्यानि। "अभावे सितपुष्पाणि चन्दनं च विलेपनम्। एतेषां गुग्गुलुर्धूपो नैवेद्यं घृतपायसम्"।

ग्रहमण्डललेखनप्रकारः—उभयतो हस्तमिते ग्रहवेदिमध्यस्थले पूर्वपश्चिमाग्राश्चतस्रो दक्षिणोत्तराग्राश्च चतस्रोरेखाः कुर्यात् तथा करणे अष्टाङ्गुलदीर्घविस्तारीणि समान्तरालानि नव खण्डानि सम्पद्यन्ते तत्र विवरणपत्ते वक्ष्यमाणमानकं सूर्यादीनां वर्त्तुलाद्याकारं कुर्यात्। स्वस्वमण्डले च स्व स्व स्थापनम् स्वस्वामेऽधिदेवानां स्वस्वदक्षिणे प्रत्यधिदेवानां सूर्याभिमुखतया सर्वेषां स्थापनम् विनायकादिस्थापनञ्च प्रागुक्तस्थानेष्विति विवेकः।

होमे समिद्विदलक्षणादिकं विधानपारि० स्कन्दपु० "प्रादेशमात्रा अर्कस्य समिधश्चार्कसम्भवाः। दधिमध्वाज्यसंयुक्ताः प्रतिदेवञ्च होमयेत्। पालाशीर्वै व सोमाय। खादिरीर्लोहिताय च। अपामार्गीर्बुधायेति अश्वत्थीश्च बृहस्पतेः। औदुम्बरीश्च शुक्राय मन्दाय च शमीमयीः। दौर्वीराहोः कुशान् केतोर्होममन्त्रास्ततः परम्"। समिल्लक्षणं चिन्तामणौ "समिधां लक्षणं वक्ष्ये संख्या तासां तथैव च। विशीर्णा विदला ह्रस्वा वक्राः सशुषिरा कृशाः। अतिस्थूलातिदीर्घाश्च समिधः कार्यनाशिकाः। विशीर्णाऽऽयुःक्षयकरी विदला पुत्रनाशिनी। शुषिरा व्याधिजननी कृशा च रिपुवर्द्धिनी। दीर्घा विदेशगमनी स्थूला चात्मविनाशिनी। अकृशा ह्यसमाऽस्थूला साद्रीं च सुफलाशिनी। प्रादेशाच्चाधिका न्यूना समित् स्यात् सर्वकर्मसु"। अथार्कादीनां फलं होमसंख्या च तत्रैव दर्शितं यथा "अर्को नाशयति व्याधिं पलाशः सर्वकामदः। खदिरस्त्वर्थलाभाय अपामार्गः सुदर्शनः। अश्वत्थः सर्वकामाय भाग्यायौदुम्बरस्तथा। शमी शमयते पापं दूर्वाऽऽयुर्विवर्द्धिनी। कुशान् दह्यादिकामानां रक्षणं रक्षणं विदुः। अष्टोत्तरन्तु साहस्रं शतमष्टाधिकं तु वा। अष्टाविंशतिमष्टौ वा एकैकस्य तु होमयेत्। देवानामपि सर्वेषामुपांशु परमार्थवित्। स्वेन स्वेनैव मन्त्रेण होतव्याः समिधः पृथक्। होतव्यं च घृताद्यक्तं चरुभक्तादिकं पुनः। मन्त्रैर्दशाहुतीर्दद्याद्धोमोव्याहृतिभिस्ततः" अयुतादिहोमप्रक्रमात् व्याहृतिभिरयुतादिहोमः।

ग्रहाणां जन्मभूम्यादिज्ञानावश्यकतामाह स्कन्दपु० "जन्मभूर्गोत्रमग्निञ्च वर्णस्थाने मुखानि च। योऽज्ञात्वा कुरुते शान्तिं ग्रहास्तेनावमानिताः" अतः शान्तिकाले तेषां जन्मभूम्यादिज्ञानमपेक्षितं तच्च विशेषेण ध्याने दर्शितमपि प्रपञ्चार्थमिहोच्यते। तत्र रव्यादीनां जन्मभूम्यादयो यथा तत्रैव

जन्मभूः—"उत्पन्नोऽर्कः कलिङ्गेषु यमुनायाञ्च चन्द्रमाः। अङ्गारकस्त्ववन्त्यां वै मगधेषु हिमांशुजः। सैन्धवेषु गुरुर्जातः शुक्रो भोजकटे तथा। शनैश्चरस्तु सौराष्ट्रे राहुर्वर्वरके पुरे। अन्तर्वेद्यां तथा केतुरित्येता ग्रहभूमयः। यस्य यस्य च यद्गोत्रं तत्ते वक्ष्याम्यतः परम्"।

ग्रहगोत्रम्—"आदित्यः काश्यपे गोत्रे आत्रेयश्चन्द्रमा भवेत्। भारद्वाजो भवेद्भौमस्तथात्रेयश्च सोमजः। शक्रपूज्योऽङ्गिरोगोत्रः शुक्रोवै भार्गवस्तथा। शनिः काश्यप एवायं राहुः पैठिनसिस्तथा। केतवो जैमिनीयाश्च ग्रहाग्निस्तदनन्तरम्"।

ग्रहवह्निः—"आदित्ये कपिलो नाम पिङ्गलः सोम उच्यते। धूमकेतुस्तथा भौमे जाठरोऽग्निर्बुधे स्मृतः। गुरौ चैव शिखी नाम शुक्रे भवति हाटकः। शनैश्चरे महातेजा राहुकेत्वोर्हुताशनः" इति। इत्थमेव होमकाले तत्तदग्निनाम कृत्वा जुहुयात्।

अथैषां वर्णाः स च द्विधा विप्रादिजातिरूपभेदात् तत्र रूपे तत्रैव "भास्कराङ्गारकौ रक्तौ शुक्लौ शुक्रनिशाकरौ। सोमपुत्रो गुरुश्चैव तावुभौ पीतकौ स्मृतौ। कृष्णः शनैश्चरस्तद्वत् राहुश्चित्राश्च केतवः"। विप्रादिवर्णस्तु। "ब्राह्मणौ शुक्रवागीशौ क्षत्रियौ भौमभास्करौ। चन्द्रो वैश्यो बुधः, शूद्रामन्दोराहुश्च केतवः"।

स्थानं तत्रैव "मध्ये तु भास्करं विद्याच्छशिनं पूर्वदक्षिणे। दक्षिणे लोहितं विद्याद् बुधं पूर्वोत्तरेण तु। उत्तरे तु गुरुं विद्यात् पूर्वतो भार्गवं न्यसेत्। पश्चिमेन शनिं विद्याद्राहुं दक्षिणपश्चिमे। पश्चिमोत्तरतः केतुः स्थाप्या वै शुक्लतण्डुलैः इति"।

मुखं स्कान्दे "शुक्रार्कौ प्राङ्मुखौ ज्ञेयौ गुरुज्ञौ तावुदङ्मुखौ। प्रत्यङ्मुखः शनिः सोमः शेषा दक्षिणतोमुखाः"। अत्र प्राङ्मुखौ ऊर्द्धदृष्टी, उदङ्मुखौ वामदृष्टी, प्रत्यङ्मुखोऽधोदृष्टिः, दक्षिणतोमुखा दक्षिणदृश्य इति व्याख्येयम् "आदित्याभिमुखाः सर्व्वे इत्यनेन सर्व्वेषां सूर्य्याभिमुखत्वोक्तेः" इति विधानपारिजातादयः। "वर्णरूपगुणैर्युक्तान् व्याहृत्यावाहयेत्तु तानिति" स्कान्दोक्तेरावाहनसमयेऽपि वर्णभूम्यादिकीर्त्तनपूर्व्वकमावाहनं कार्य्यमेवमग्रेऽपि होमकाले तथाकरणमिति बोध्यम् "चित्रान्नं च "अजाक्षीरेण संसिक्ता यवाश्च तिलतण्डुलाः। अजाकर्णस्य रक्तेन रक्ताश्चित्रान्नसंज्ञिताः" दीपिकोक्तम् प्रयोगो रुद्रक्रतुवादादानादिपद्धतौ दृश्यः।

सूर्य्यादिग्रहाणां जन्मभूम्यादिसूचकविवरणपत्रम्।

| जन्मभूम्यादि | सूर्य्यस्य | चन्द्रस्य | भौमस्य | बुधस्य | जीवस्य | शुक्रस्य | शनेः | राहोः | केतोः |
|---|---|---|---|---|---|---|---|---|---|
| जन्मभूमिः | कलिङ्गः | यमुना | अवन्तिः | मगधः | सैन्धवः | भोजकटः | सौराष्ट्रः | वर्वरकः | अन्तर्वेदी |
| गोत्रम् | काश्यपः | अत्रिः | भरद्वाजः | अत्रिः | अङ्गिराः | भृगुः | काश्यपः | पैठिनसिः | जैमिनिः |
| अग्निः | कपिलः | पिङ्गलः | धूमकेतुः | जाठरः | शिखी | हाटकः | महातेजाः | हुताशनः | हुताशनः |
| विप्रादिवर्णः | क्षत्रियः | वैश्यः | क्षत्रियः | वैश्यः | विप्रः | विप्रः | शूद्रः | शूद्रः | शूद्रः |
| रूपात्मकवर्णः | रक्तः | शुक्लः | रक्तः | पीतः | पीतः | शुक्लः | कृष्णः | कृष्णः | चित्रम् |
| मण्डले स्थानम् | मध्यम् | पूर्वदक्षिणः | दक्षिणः | पूर्वोत्तरः | उत्तरः | पूर्वः | पश्चिमः | दक्षिणपश्चिमः | पश्चिमोत्तरः |
| मुखम् (सर्वे सूर्य्याभिमुखाः) | ऊर्द्धदृष्टिः | अधोदृष्टिः | दक्षिणदृष्टिः | वामदृष्टिः | वामदृष्टिः | ऊर्द्धदृष्टिः | अधोदृष्टिः | दक्षिणदृष्टिः | दक्षिणदृष्टिः |
| मण्डले आकारः | वर्त्तुलः | अर्द्धचन्द्रः | त्रिकोणः | चापः | पद्मम् | चतुष्कोणः | सर्पः | मकरः | खड्गः |
| उभयतोष्टाङ्गुलनवकोष्ठेषु तन्मानम् | ४।व्या० १२प० | ८व्या० २४प० | ४।व्या० १२प० | २।व्या० ६प० | ४व्या० १२प० | ३व्या० ९प० | ४व्या० १२प० | ४व्या० १२प० | ६व्या० १८प० |
| वाहनम् | सप्ताश्वरथः | दशाश्वरथः | मेषः | सिंहः | हस्ती | हयः | उष्ट्रः | सिंहः | उष्ट्रः |
| मूर्त्तिद्रव्यम् | ताम्रम् | स्फटिकम् | श्वेतचन्दनम् | स्वर्णम् | स्वर्णम् | रजतम् | लौहम् | सीसम् | कांस्यम् |
| गन्धभेदाः द्विधा | रक्तचन्दनम् | श्वेतचन्दनम् | रक्तचन्दनम् | कुङ्कुमम् | कुङ्कुमम् | श्वेतचन्दनम् | कस्तूरी | कस्तूरी | कस्तूरी |
| मतान्तरे | तत् | तत् | तत् | तत् | चतुःसमम् | तत् | सा | कुलागुरु | सा |
| पुष्पभेदाः | करवीरम् | कुमुदं | जवा | चम्पकम् | पद्मम् | जातिः | मल्लिका | कुन्दम् | मल्लिका |
| धूपभेदाः | गुग्गुलुः | घृताक्तयवधूपः | सर्जरसाक्तसिह्लकम् | पीतागुरुसिह्लजम् | दशाङ्गम् | साज्यविल्वागुरु | पद्मकाष्ठम् | यक्षधूपः | मधुमिश्रगुडत्वचम् |
| मतान्तरे | कुन्दुरुकम् | घृताक्ततम् | सर्जरसः | पीतागुरु | सिह्लजम् | विल्वागुरु | गुग्गुलुः | लाक्षा | लाक्षा |
| फलम् | द्राक्षा | इक्षुः | पूगम् | नागरङ्गम् | जम्बीरम् | वीजपूरम् | जातिफलम् | नारिकेलम् | दाडिमम् |
| वस्त्रम् | रक्तम् | श्वेतम् | रक्तम् | पीतम् | पीतम् | श्वेतम् | कृष्णम् | कृष्णम् | चित्रम् |
| रत्नानि | माणिक्यम् | मुक्ता | प्रवालम् | गारुत्मतम् | पुष्परागम् | हीरकम् | नीलकम् | गोमेदकम् | वैदूर्य्यम् |
| बलिभेदाः | गुडौदनः | घृतपायसम् | यावकम् | क्षीरयष्टिकम् | दध्योदनः | घृतौदनः | कृसरम् | आजमांसम् | चित्रान्नम् |
| समिधः | अर्कः | पलाशः | खदिरः | अपामार्गः | अश्वत्थः | उडुम्बरः | शमी | दूर्वात्रयम् | कुशत्रयम् |
| दक्षिणा | कपिलाधेनुः | शङ्खः | रक्तवृषः | स्वर्णम् | पीतवस्त्रं | श्वेताश्वः | कृष्णाधेनुः | खड्गः | छागः |
| जपसङ्ख्या | ६००० | १०००० | ७००० | १७००० | १६००० | २०००० | १९००० | १८००० | ७००० |
| अधिदेवता | शिवः | उमा | स्कन्दः | नारायणः | ब्रह्मा | शक्रः | यमः | कालः | चित्रगुप्तः |
| प्रत्यधिदेवता | अग्निः | जलम् | क्षितिः | विष्णुः | इन्द्रः | शची | प्रजापतिः | सर्पः | ब्रह्मा |

वेदभेदे ग्रहादीनां मन्त्रभेदा हेमाद्र्याद्युक्ताः प्रतीकतो दर्श्यन्ते

| ग्रहादीनाम् | ऋग्वेदिनः | यजुर्वेदिनः | सामवेदिनः | अथर्ववेदिनः |
|---|---|---|---|---|
| रवेः | आ कृष्णेन रजसा | आ कृष्णेन रजसा | उदु त्यं जातवेदसम् | विषासहिं सहमानम् |
| चन्द्रस्य | आप्यायस्व समेतु | इमं देवा असपत्नम् | सन्ते पयांसि समुयन्तु | शकधूमं नक्षत्राणि |
| भौमस्य | अग्निर्मूर्द्धा दिवः | अग्निर्मूर्द्धा दिवः | अग्निर्मूर्द्धा दिवः | त्वया मन्यो ! सरथम् |
| बुधस्य | अग्ने ! विवस्वदु | उद्बुध्यस्वाग्ने ! | अग्ने ! विवस्वत् | यद्राजानो विभजन्तः |
| गुरोः | बृहस्पते ! परिदीया | बृहस्पते ! अतियदर्य्यः | बृहस्पते ! परिदीया | बृहस्पतिर्नः परिपातु |
| शुक्रस्य | शुक्रं ते अन्यत् | अन्नात्परिस्रुतः | शुक्रं ते अन्यत् | हिरण्यवर्णाः शुचयः |
| शनेः | समग्निरग्निभिः | शन्नोदेवीरभीष्टये | शन्नोदेवीरभीष्टये | सहस्रबाहुः पुरुषः |
| राहोः | कया नश्चित्रः | काण्डात् काण्डात् | कया नश्चित्रः | दिव्यं चित्रमृतुथाः |
| केतोः | केतुं कृण्वन्नकेतवे | केतुं कृण्वन्नकेतवे | केतुं कृण्वन्नकेतवे | यस्ते पृथुःस्तनयित्नुः |
| सूर्याधिदेववह्नेः | आ वीराजानम् | त्रियम्बकम् | आ वीराजानम् | मानोविदन् विव्याधिनः |
| चन्द्राधिदेवोमायाः | गौरीर्मिमाय | श्रीश्च ते लक्ष्मीश्च | आपोहि ष्ठा | आपोहि ष्ठा |
| कुजाधिदेवस्कन्दस्य | कुमारं माता | यदक्रन्दः प्रथमम् | स्योना पृथिवि ! | अग्निरिव मन्यो ! त्विषितः |
| बुधाधिदेवविष्णोः | इदं विष्णुर्विचक्रमे | विष्णो रराटमसि | इदं विष्णुर्विचक्रमे | प्र तद्विष्णुः स्तवते |
| जीवाधिदेवब्रह्मणः | त्वमित् सप्रथाः | आ ब्रह्मन् ब्राह्मणः | त्वमित् सप्रथाः | ब्रह्म जज्ञानम् |
| शुक्राधिदेवेन्द्रस्य | इन्द्रं वो विश्वतः | सजोषा इन्द्र ! | इन्द्रमित् देवतातये | इन्द्रेमं प्रतरम् |
| शन्यधिदेवयमस्य | यमाय सोमं सुनुत | यमाय त्वाङ्गिरस्वते | आयं गौः पृश्निः | यः प्रथमं प्रवतमाससाद |
| राह्वधिदेवकालस्य | ब्रह्म जज्ञानम् | कार्षिरसि समुद्रस्य | ब्रह्म जज्ञानम् | रोहितः कालो अभवत् |
| केत्वधिदेवचित्रगुप्तस्य | सचोवाजं हि | चित्रावसो ! स्वस्ति | चित्र इच्छिशोः | आम्नातं यदनाम्नातम् |
| सूर्यप्रत्यधिदेवाग्नेः | अग्निं दूतं वृणीमहे | अग्निं दूतं पुरोदधे | अग्निं दूतं वृणीमहे | समास्त्वाग्ने ! ऋतवः। |
| चन्द्रप्रत्यधिदेवजलस्य | अप्सु मे सोमः | आपोहि ष्ठा | उदुत्तमं वरुण ! | शन्नोदेवीरभीष्टये |
| भौमप्रत्यधिदेवक्षितेः | स्योना पृथिवि ! | स्योना पृथिवि ! | पृथिव्यन्तरिक्षम् | भूमे ! मातर्निधेहि |
| बुधप्रत्यधिदेवहरेः | सहस्रशीर्षा पुरुषः | इदं विष्णुर्विचक्रमे | सहस्रशीर्षा पुरुषः | इदं विष्णुर्विचक्रमे |
| जीवप्रत्यधिदेवेन्द्रस्य | इन्द्रायेन्दो ! मरुत्वते | इन्द्र आसां नेता | इन्द्रायेन्दो ! | इन्द्र ! जुषस्व प्रवहा |
| शुक्रप्रत्यधिदेवशच्याः | उत्तानपर्णे ! सुभगे ! | अदित्यै रास्नासि | एकाष्टका तपसे | प्रेतं पादौ प्रस्फुरतम् |
| शनिप्रत्यधिदेवप्रजापतेः | प्रजापते ! न त्वदु | प्रजापते ! न त्वदु | प्रजापते ! न त्वदु | नक्तं जाताऽस्योषधे ! |
| राहुप्रत्यधिदेवसर्पाणाम् | आयं गौःपृश्निः | नमोऽस्तु सर्पेभ्यः | तवेदिन्द्रा वयम् | शेरभक शेरभ ! |
| केतुप्रत्यधिदेवब्रह्मणः | ब्रह्म जज्ञानम् | ब्रह्म जज्ञानम् | एष ब्रह्मा य ऋत्विजः | ये दिशामन्तर्देशेभ्यः |
| विनायकस्य | आ तू न इन्द्र ! | गणानां त्वा गणपतिम् | आ तू न इन्द्र ! | निर्लक्ष्म्यं ललामम् |
| दुर्गायाः | जातवेदसे सुनवाम | अम्बे ! अम्बिके ! | इमं स्तोममर्हते | पृतनाजितं सहमानम् |
| वायोः | प्राणाशिशुर्महीनाम् | वायो ! ये ते सहस्रिणः | प्राणा शिशुर्महीनाम् | अन्तरीक्षे वायवे |
| आकाशस्य | आदित् प्रत्नस्य | घृतं घृतपावानः | आदित् प्रत्नस्य | आस्यतः पचतो विद्धि |
| अश्विनोः | एषो उषा अपूर्व्या | या वां कशा | एषो उषा अपूर्व्या | सं चेन्नया यो अश्विना |
| | एते च मन्त्रा ऋग्वेदस्य याज्ञवल्क्यस्थानस्थास्तच्छिक्षक्रमहितं तुलादानादिपद्धतौ ७५—७८ पत्रेषु स्वरूपतो दर्शितास्तत एवावसेयाः। | एते च मन्त्राः शुक्लयजुर्वेदे याज्ञवल्क्यस्थानस्थास्तच्छिक्षासहितं तुलादानादिपद्धतौ१०६—११०पत्रेषु स्वरूपतोदर्शिताः। | एते च मन्त्राः सामवेदस्य याज्ञवल्क्यस्थानस्थास्तच्छिक्षानुसारेण तुलादानादि पद्धतौ१२७—१३०पत्रेषु स्वरूपतोदर्शिताः। | एते च मन्त्राः अथर्ववेदे याज्ञवल्क्यस्थानस्थास्तच्छिक्षानुसारेण तुलादानादिपद्धतौ १४८—१५२पत्रेषु स्वरूपतोदर्शिताः। |

**ग्रहयुति** पु० ६त०। ग्रहाणामेकराश्यादिस्थितिभेदेन भूतलस्थानां कल्पनीययोगभेदे तद्विशेषः सूर्य्यसि० उक्तो यथा "ताराग्रहाणामन्योन्यं स्यातां युद्धसमागमौ। समागमः शशाङ्केन सूर्य्येणास्तमनं सह" सू०सि० "ताराग्रहाणां भौमादिपञ्चग्रहाणां परस्परं योगे युद्धसमागमौ वक्ष्यमाणलक्षणभिन्नौ स्तः। चन्द्रेण सह पञ्चतारान्यतमस्य योगः समागमसंज्ञः। सूर्य्येण सह पञ्चताराणामन्यतमस्य चन्द्रस्य वा योगस्तदस्तमनं पूर्णास्तङ्गतत्वम् न त्वस्तमात्रम् युत्यभावे प्रागपरकाले तस्य सत्त्वात्। अथ युतेर्गतैष्यत्वं सार्द्धश्लोकेनाह" रङ्गना० "शीघ्रे मन्दाधिकेऽतीतः संयोगो भवितान्यथा। द्वयोः प्राग्यायिनोरेवं वक्रिणोस्तु विपर्य्ययात्। प्राग्यायिन्यधिकेऽतीतो वक्रिण्येष्यः समागमः" सू०सि०।

"ययोर्ग्रहयोर्योगोऽभिमतस्तयोर्ग्रहयोर्मध्ये यः शीघ्रगतिर्ग्रहस्तस्मिन् मन्दाधिके मन्दगतिग्रहादधिके सति तयोः संयोगो युतिसंज्ञोऽतीतः पूर्वं जात इत्यर्थः। अन्यथा मन्दगतिग्रहे शीघ्रगतिग्रहादधिके सतीत्यर्थः। तयोर्योगो भविता एष्यः। एवमुक्तं गतैष्यत्वम् द्वयोर्ग्रहयोः प्राग्यायिनोः पूर्व्वगतिकयोर्भवति। वक्रिणोर्वक्रगतिग्रहयोर्व्विपर्य्ययादुक्तवैपरीत्यात्। तुकाराद्गतैष्यो योगो भवति। शीघ्रगतिग्रहे मन्दगतिग्रहादधिके एष्यः संयोगो, मन्दगतिग्रहे शीघ्रगतिग्रहादधिके गतः संयोग इत्यर्थः। अथैकस्य वक्रत्वे आह। प्राग्यायिनीति। द्वयोर्मध्ये एकतरस्मिन् वक्रिणि सति तदा वक्रगतिग्रहात् पूर्वगतिग्रहेऽधिके सति गतो यातः। यदा तु पूर्व्वगतिग्रहाद्वक्रगतिग्रहेऽधिके सति समागमो योगस्तदा एष्यः स्यात्। अत्रोपपत्तिः। पूर्वगत्योर्ग्रहयोर्मध्ये शीघ्रगस्याधिकत्वेऽग्रे योगासम्भवात् पूर्व्वं योगो जातः। मन्दगस्याधिकत्वे शीघ्रगस्य न्यूनत्वादग्रे योगो भविष्यति। वक्रिणोस्तु शीघ्रगस्याधिकत्वेऽग्रे तन्न्यूनत्वेन योगसम्भवादेष्यो योगो मन्दगस्याधिकत्वे शीघ्रगस्योत्तरोत्तरं न्यूनत्वसम्भवेनाग्रे योगासम्भवाद्गतो योगः। अथ वक्रगतिग्रहात् पूर्व्वगतिग्रहेऽधिके उत्तरोत्तरं योगासम्भवाद्गतो योगः। पूर्वगतिग्रहाद्वक्रगतिग्रहेऽधिके वक्रगतिग्रहस्य न्यूनत्वेनाग्रे योगसम्भवादेष्यः संयोग इति। अथ युतिकाले तुल्यग्रहयोरानयनं युतिकालस्य गतैष्यदिनाद्यानयनं च सार्द्धश्लोकत्रयेणाह" रङ्गना०।

"ग्रहान्तरकलाः स्वस्वभुक्तिलिप्तासमाहताः। भुक्त्यन्तरेण विभजेदनुलोमविलोमयोः। द्वयोर्व्वक्रिण्यथैकस्मिन् भुक्तियोगेन भाजयेत्। लब्धं लिप्तादिकं शोध्यं गते, देयं भविष्यति। विपर्य्ययाद्वक्रगत्योरेकस्मिंस्तु धनव्ययौ। समलिप्तौ भवेतां तौ ग्रहौ भगणसंस्थितौ। विवरं तद्वदुद्धृत्य दिनादि फलमिष्यते" सू०सि०।

"युतिसम्बन्धिनोर्ग्रहयोरभीष्टैककालिकयोरन्तरस्य कलाः पृथक् स्वस्वगतिकलाभिर्गुणिताः (क्रमभूताः) द्वयोर्ग्रहयोरनुलोमविलोमयोर्मार्गगयोर्वक्रगयोर्व्व्यर्थः। स्फुटगत्यन्तरेण गणको भजेत्। विशेषमाह। वक्रिणीति अथानन्तरं द्वयोर्मध्य एकतरे वक्रिणि सति तयोर्गतियोगेन भजेत्। फलं कलादि स्वं स्वं गते योगे सति ग्रहयोर्मार्गगयोः शोध्यं, भविष्यति—एष्ये योगे सति तयोर्देयं योज्यम्। द्वयोर्वक्रगत्योः स्वं स्वं फलं विपर्य्ययादुक्तवैपरीत्यात् कार्यम्। गते योगे योज्यम्। एष्ये योगे हीनमित्यर्थः। द्वयोर्मध्ये एकतरे तुकाराद्वक्रिणि सति तयोर्ग्रहयोर्वक्रमार्गगयोः स्वस्वकलात्मकफलाङ्कौ धनव्ययौ युतहीनौ कार्यौ। तथाहि। गतयोगे मार्गगग्रहे स्वफलं हीनं, वक्रिणि ग्रहे योज्यम्। एष्ये योगे वक्रग्रहे शोध्यम्। मार्गगग्रहे योज्यमिति। एवं कृते तौ युतिसम्बन्धिनौ ग्रहौ भगणसंस्थौ भगणे राश्यधिष्ठितचक्रे संस्थितयोस्तौ राश्याद्यात्मकौ समलिप्तौ समकलौ स्तः। लिप्तापदस्य भगणावयवोपलक्षणत्वेन समौ स्त इत्यर्थः। अथ युतिकालज्ञानमाह विवरमिति। अभीष्टकालिकयोर्युतिसम्बन्धिनोर्ग्रहयोरन्तरं कलात्मकं तद्वत् समकलोपयुक्तफलज्ञानार्थं यथा गतिगुणितमन्तरं गतियोगेन गत्यन्तरेण भक्तं तथेत्यर्थः। तेन हरेण भक्त्वा फलं दिनादिकं गतैष्ययुतिवशादभीष्टकालाद्गतमेष्यमुच्यते। तत्समये तद्युतिकाले तौ ग्रहौ समौ स्त इत्यर्थः। अत्रोपपत्तिः। यदि गत्यन्तरेण गतिकलास्तदा ग्रहान्तरकलाभिः का? इति फले गतयुतौ ग्रहयोः शोध्ये। एष्ययुतौ योज्ये। द्वयोर्वक्रत्वे गत्यन्तरभक्तफले गतयुतौ ग्रहयोर्योज्ये। एष्ययुतौ शोध्ये वक्रग्रहस्योत्तरोत्तरं न्यूनत्वात्। अथैको वक्री तदा तयोरन्तरं प्रत्यहं गतियोगेनोपचितम्। अतो गतियोगहरेणागतं फलं गतयोगे मार्गगग्रहे हीनं, पूर्वं तस्य न्यूनत्वात्। वक्रग्रहे योज्यम् पूर्वं तस्याधिकत्वात्। एष्ययोगे मार्गगग्रहे योज्यम् उत्तरोत्तरमधिकत्वात्। वक्रग्रहे शोध्यम् तस्याग्रे न्यूनत्वात्। यदि गतियोगेन गत्यन्तरेण वा

दिनमेकं लभ्यते तदान्तरकलाभिः किम्? इत्यनुपातेन गतैष्यदिनाद्यागमः" रङ्गना०

ग्रहयुद्ध न० ६त०। ग्रहाणामुपर्य्युपरिस्थितानां किरण संस्पर्शादिना युद्धभेदे तद्भेदादिकं सू० सि० उक्तं यथा "उल्लेखं तारकास्पर्शाद्भेदे भेदः प्रकीर्त्यते। युद्धमंशुविमर्दाख्यमंशुयोगे परस्परम्। अंशादूनेऽपसव्याख्यं युद्धमेकोऽत्र चेदणुः। समागमोंऽशादधिके भवतश्चेद्बलान्वितौ" सू०सि०।

"भौमादिपञ्चताराणां मध्ये द्वयोर्युतौ तारकास्पर्शेऽस्विमेव्यो: स्पर्शमात्रादुल्लेखसञ्ज्ञं युद्धं वदन्ति युतिभेदज्ञाः। इदं न द्वयोर्मानैक्यखण्डतुल्ययाम्योत्तरान्तरे। भेदे मण्डलभेदे भेदो भेदसञ्ज्ञो युद्धावान्तरभेदो युद्धभेदतत्त्वज्ञैः कथ्यते। अयं भेदो मानैक्यखण्डादूने द्वयोर्याम्योत्तरान्तरे। अत्र भास्कराचार्य्यैस्तु "मानैक्यार्धाद्द्युचरविवरेऽल्पे भवेद्भेदयोगः कार्य्यं स्वयंग्रहवदखिलं लम्बनाद्यं स्फुटार्थम्। कल्प्योऽधःस्थः सुधांशुस्तदुपरिग इनो लम्बनादिप्रसिद्ध्यै किं त्वर्कादेव लग्नं ग्रहयुतिसमये कल्पितार्काच्च साध्यम्। प्राग्वत् तल्लम्बनेन ग्रहयुतिसमयः संस्कृतः प्रस्फुटः स्यात्। खेटौ तौ दृष्टियोग्यौ ग्रहयुतिसमये कार्य्यमेवं तदैव। याम्योदक्स्यद्युचरविवरं भेदयोगे स बाणो ज्ञेयः सूर्य्याद्भवति च यतः शीतगुः सा शराशा। मन्दाक्रान्तोऽल्पजुरपि तदाधःस्थितः स्यात् तदैन्द्र्यां स्पर्शो मोक्षोऽपरदिशि तदा पारिलेख्येऽवगम्यः" इति विशेषोऽभिहितः। भगवता तु सूक्ष्मबिम्बयोराकाशे दूरतो विविक्तदर्शनासम्भवाद्यर्थप्रयासादुपेक्षितमिति ध्येयम्। युतावन्योऽन्यं किरणयोगे सति अंशुमर्दाख्यं किरणसङ्कुलसञ्ज्ञं युद्धं स्यात्। द्वयोर्याम्योत्तरान्तरेंऽशात् षष्टिकलात्मकैकभागादूनेऽनधिके सत्यपसव्यसञ्ज्ञं युद्धं भवति। अत्र विशेषमाह। एक इति। अत्रापसव्ययुद्धे एको द्वयोरन्यतरोऽणुरल्पबिम्बश्चेत् तदापसव्यं युद्धं व्यक्तं स्यादन्यथा त्वव्यक्तं युद्धं स्यात्। एषां चतुर्णां फलम्। "अपसव्ये भयं ब्रूयात् संग्रामं रश्मिसङ्कुले। लेखनेऽमात्यपीडा स्याद्भेदने तु धनक्षयः" इति भार्गवीयोक्तं ज्ञेयम्। युद्धभेदानुक्त्वा समागममाह समागम इति। द्वयोर्याम्योत्तरान्तरे षष्टिकलात्मकैकभागादभ्यधिके सति समागमो योगो भवति। अत्रापि विशेषमाह भवत इति। युतिविषयकौ ग्रहौ बलान्वितौ बलेन—"स्थानादिबलचिन्तात्र अर्था केनापि न कृता। प्रश्नत्रयेऽप्यन्यत्र स्यात् स्थौल्यदीप्त्यादिबलं स्मृतम्" इति ब्रह्मसिद्धान्तवचनात् स्थूलमण्डलतयान्वितौ युक्तौ स्थूलबिम्बौ समावित्यर्थः। चेत् स्तस्तदा समागमस्तयोर्व्यक्तः स्यात्। अन्यथा त्वव्यक्तः समागमः। "द्वावपि मयूखयुक्तौ विपुलौ स्निग्धौ समागमे भवतः। अत्रान्योऽन्यं प्रीतिर्विपरीतावात्मपक्षघ्नौ। युद्धं समागमो वा यद्यव्यक्तं तु लक्षणैर्भवतः। भुवि भूभृतामपि तथा फलमव्यक्तं विनिर्दिष्टम्" इत्युक्तेः। "भेदोल्लेखांशुसम्मर्दा अपसव्यस्तथापरः। ततो योगो भवेदेषामेकांशकसमापनात्" इति काश्यपोक्तेश्च सर्वं निरवद्यम्। अथ युद्धे पराजितस्य ग्रहस्य लक्षणमाह" रङ्गना०

"अपसव्ये जितो युद्धे पिहितोऽणुरदीप्तिमान्। रूक्षो विवर्णो विध्वस्तो विजितो दक्षिणाश्रितः" सू०सि०।

"द्वयोर्मध्ये यस्त्वितरेण विध्वस्तो हतः स विजितः पराजितो ज्ञेयः। हतस्य लक्षणमाह अपसव्य इति। अपसव्ये युद्धे यो जितो जयलक्षणैर्विवर्जितः। एतेनोल्लेखादित्रये सङ्ख्याफलं न पराजितस्य फलमिति सूचितम्। पिहित आच्छादितोऽव्यक्त इति यावत्। अणुरितरग्रहबिम्बादल्पबिम्बः। अदीप्तिमान् प्रभारहितः। रूक्षोऽस्निग्धः विवर्णः वर्णेन स्ववर्णेन स्वाभाविकेन रहित इत्यर्थः। दक्षिणाश्रित इतरग्रहापेक्षया दक्षिणदिशि स्थितः। "स्थानो वा व्यपगतरश्मिवान् रश्मिमण्डलो वा रूक्षो वा व्यपगतरश्मिवान् क्षयी वा। व्याक्रान्तो विनिपतितः कृतापसव्यो विज्ञेयो हत इति सग्रहो ग्रहेण" इति भार्गवीयोक्तेः। अथ श्लोकोत्तरार्धेन जयिनो ग्रहस्य लक्षणमाह" रङ्गना०

"उदक्स्थो दीप्तिमान् स्थूलो जयी याम्येऽपि यो बली" सू० सि० "इतरग्रहापेक्षयोत्तरदिक्स्थः दीप्तिमान् प्रभायुक्तः स्थूल इतरग्रहबिम्बापेक्षया पृथुबिम्बः। जयी जययुक्तः स्यात्। अथोत्तरदक्षिणदिक्स्थत्वक्रमेण जयपराजयौ न स्त इत्याह याम्य इति। दक्षिणदिशि यो ग्रहो बली दीप्तिमान् पृथुबिम्बो भवति स जयी। अपिशब्द उत्तरदिशासमुच्चयार्थकः। तथा च जयपराजयलक्षणयोर्दिक्स्थानमनुपयुक्तमिति भावः। अथ युद्धे विशेषमाह रङ्ग०। "आसन्नावप्युभौ दीप्तौ भवतश्चेत् समागमः। स्वल्पौ द्वावपि विध्वस्तौ भवेतां कूटविग्रहौ" सू०सि०। "उभौ द्वौ आसन्नावेकभागान्तरगतान्तरितौ। अपिशब्दाद्युद्धलक्षणाक्रान्तौ। दीप्तौ प्रभायुक्तौ चेत् स्यातां तदा बलान्विता-

विति समागमलक्षणैकदेशसद्भावात् समागमाख्यं युद्धम्। द्वावपि यदि स्थूलौ स्वच्छबिम्बौ विध्वस्तौ द्वावपि पराजयलक्षणाक्रान्तौ स्यातां तदा क्रमेण कूटविग्रहसञ्ज्ञकौ युद्धभेदौ स्याताम्। अथोत्सर्गतः शुक्रस्य जयलक्षणाक्रान्तत्वमस्तीति वदन् समागमः शशाङ्केनेति प्राक् प्रतिज्ञातसमागमे उक्तप्रकारमतिदिशति” रङ्ग०।

“उदक्स्थो दक्षिणस्थो वा भार्गवः प्रायशो जयी। शशाङ्केनैवमेतेषां कुर्यात् संयोगसाधनम्” सू०सि०।

“इतरग्रहापेक्षयोदक्स्थो दक्षिणदिक्स्थो वोभयदिशीत्यर्थः। शुक्रः प्रायश उत्सर्गतो जयलक्षणाक्रान्तत्वेन जयी। कदाचित् पराजयलक्षणाक्रान्तो भवतीति तात्पर्यार्थः। एतेषां भौमादिपञ्चताराणां चन्द्रेण सह संयोगसाधनं युतिसाधनमेषामुक्तरीत्या गणकः कुर्यात्। अत्र विशेषार्थकम्। ‘अयनत्या स्फुटो ज्ञेयो विक्षेपः शीतगोर्युतौ’ इत्यर्थं क्वचित् पुस्तके दृश्यते न सर्वत्रेति क्षिप्तत्वात्तदुपेक्षितम् अधिकारस्याप्रस्तुतत्वापत्तेश्च। एतदुक्तान्ययोगे नतिसंस्कारनिषेधस्य सिद्धेस्तस्यायुक्तत्वमिति तदनुक्तौ सूर्यग्रहणोक्तरीत्या साधारण्येन सर्वत्र तद्विशेषोक्तेरर्थसिद्धेरिति ध्येयम्। नन्वेषां ग्रहाणां दूरान्तरेण सदोर्ध्वाधरान्तरसद्भावात् परस्परं योगासम्भवेन कथं युतिः सङ्गतेत्यत आह” रङ्ग०।

“भावाभावाय लोकानां कल्पनेयं प्रदर्शिता। स्वमार्गगाः प्रयान्त्येते दूरमन्योन्यमाश्रिताः” सू०सि०।

“एते ग्रहाः स्वमार्गगाः स्वस्वकक्षास्था अन्योन्यमाश्रिता युतिकालजद्रूर्ध्वाधरान्तराभावेन संयुक्ताः सन्तः प्रयान्ति गच्छन्ति इति दूरं दूरान्तरेण दर्शनादियं ग्रहयुतिकल्पना कल्पनात्मिकाऽवास्तवा प्रदर्शिता पूर्वोक्तग्रन्थेन कथिता। नन्ववस्तुभूता किमर्थमुक्तेत्यतः प्रयोजनमाह भावाभावायेति। लोकानां भूस्थप्राणिनां भावः शुभफलमभावोऽशुभफलं तस्मै शुभाशुभफलादेशायावस्तुभूतापि युतिरुक्तेति भावः” रङ्ग०।

युद्धभेदास्तत्फलविशेषाः समागमजयादिफलभेदाश्च वृ० सं० १७अ० उक्ता यथा

“युद्धं यथा यदा वा भविष्यदादिश्यते त्रिकालज्ञैः। तद्विज्ञाने करणं मया कृतं सूर्यसिद्धान्तात्। वियति चरतां ग्रहाणामुपर्युपर्यात्ममार्गसंस्थानाम्। अतिदूराद्दृग्विषये समतामिव सम्प्रयातानाम्। आसन्नक्रमयोगाद्भेदोल्लेखांशुमर्दापसव्यैः। युद्धं चतुःप्रकारं पराशराद्यैर्मुनिभिरुक्तम्। भेदे वृष्टिविनाशो भेदः सुहृदां महाकुलानां च। उल्लेखे शस्त्रभयं मन्त्रिविरोधः प्रियान्यत्वम्। अंशुविरोधे युद्धानि भूभृतां शस्त्ररुक्क्षुदवमर्दाः। युद्धे चाप्यपसव्ये भवन्ति युद्धानि भूपानाम्। रविराक्रन्दो मध्ये पौरः पूर्वेऽपरे स्थितो यायी। पौरा बुधगुरुरविजा नित्यं शीतांशुराक्रन्दः। केतुकुजराहुशुक्रा यायिन एते हता ग्रहा हन्युः। आक्रन्दयायिपौरान् जयिनो जयदाः स्ववर्गस्य। पौरे पौरेण हते पौराः पौरान् नृपान् विनिघ्नन्ति। एवं याय्याक्रन्दौ नागरयायिग्रहाश्चैव। दक्षिणदिक्स्थः परुषो वेपथुरप्राप्य संनिवृत्तोऽणुः। अधिगूढो विकृतो निष्प्रभो विवर्णश्च यः स जितः। उक्तविपरीतलक्षणसम्पन्नो जयगतो विनिर्दिष्टः। विपुलः स्निग्धो द्युतिमान् दक्षिणदिक्स्थोऽपि जययुक्तः। द्वावपि मयूखयुक्तौ विपुलौ स्निग्धौ समागमे भवतः। तत्रान्योऽन्यप्रीतिर्विपरीतावात्मपक्षघ्नौ। युद्धं समागमो वा यद्यव्यक्तौ तु लक्षणैर्भवतः। भुवि भूभृतामपि तथा फलमव्यक्तं विनिर्देश्यम्”।

कुजजयस्य “गुरुणा जितेऽवनिसुते वाह्लीका यायिनोऽग्निवार्त्ताश्च। शशिजेन शूरसेनाः कलिङ्गसाल्वाश्च पीड्यन्ते। सौरेणारे विजिते जयन्ति पौराः प्रजाश्च सीदन्ति। कोष्ठागारम्लेच्छक्षत्रियतापाश्च शुक्रजिते”।

बुधजयस्य “भौमेन हते शशिजे वृक्षसरित्तापसाश्मकनरेन्द्राः। उत्तरदिक्स्थाः क्रतुदीक्षिताश्च सन्तापमायान्ति। गुरुणा बुधे तु विजिते म्लेच्छशूद्रचौरार्थयुक्तपौरजनाः। त्रैगर्त्तपार्वतीयाः पीड्यन्ते कम्पते च मही। रविजेन बुधे ध्वस्ते नाविकयोधाब्जसधनगर्भिण्यः। भृगुणा जितेऽग्निकोपः सस्याम्बुदयायिविध्वंसः”।

जीवजयस्य “जीवे शुक्राभिहते कुलूतगान्धारकैकया मद्राः। साल्वा वत्सा वङ्गा गावः सस्यानि नश्यन्ति। भौमेन हते जीवे मध्यो देशो नरेश्वरा गावः। सौरेण चार्जुनायनवसातियौधेयशिविविप्राः। शशितनयेनापि जिते बृहस्पतौ म्लेच्छसत्यशस्त्रभृतः। उपयान्ति मध्यदेशश्च संक्षयं यच्च भक्तिफलम्”।

शुक्रजयस्य “शुक्रे बृहस्पतिहते यायी श्रेष्ठो विनाशमुपयाति। ब्रह्मक्षत्रविरोधः सलिलं च न वासवस्त्यजति। कोशलकलिङ्गवङ्गा वत्सा मत्स्याश्च मध्यदेशयुताः। महतीं व्रजन्ति पीडां नपुंसकाः शूरसे-

नाश। कुजविजिते भृगुतनये बलमुख्यवधो नरेन्द्रसंग्रामाः। सौम्येन पार्वतीयाः क्षीरविनाशोऽल्पवृष्टिश्च। रविजेन सिते विजिते गणमुख्याः शस्त्रजीविनः क्षत्रम्। जलजाश्च निपीड्यन्ते सामान्यं भक्तिफलमन्यत्"।

शनिजयस्य "असिते सितेन निहतेऽर्घवृद्धिरहिविहगमानिनां पीडा। क्षितिजेन टङ्कणान्ध्रोड्रकाशिबाह्लीकदेशानाम्। सौम्येन पराभूते मन्देऽङ्गवणिग्विहङ्गपशुनागाः। सन्ताप्यन्ते गुरुणा स्त्रीबहुला महिषकशकाश्च"।

अयं विशेषोऽभिहितो हतानां कुजज्ञवागीशसितासितानाम्। फलं तु वाच्यं ग्रहभक्तितोऽन्यद् यथा तथा घ्नन्ति हताः स्वभक्तीः"।

"नीचस्थितेऽरिष्टगृहेऽथ पराजिते वा जीवे भृगौ व्रतविधौ सुतिकर्महोमः" ज्यो० त०। उपयमशब्दे तत्कालस्य वर्ज्यतोक्तिर्दृश्या। पञ्चविधग्रहग्रहविमर्दादियोऽप्यत्र, तत्र च चन्द्रस्यान्यखेटैः समागमे विशेषः न युद्धम् इत्युक्तं वृ० सं० १८ अ० यथा

"भानां यथासम्भवमुत्तरेण यातो ग्रहाणां यदि वा शशाङ्कः। प्रदक्षिणं तच्छुभकृन्नराणां याम्येन यातो न शिवः शशाङ्कः। चन्द्रमा यदि कुजात् प्रयात्युदक् पार्वतीयबलशालिनां जयः। क्षत्रियाः प्रमुदिताः स्वयायिनो भूरिधान्यमुदिता वसुन्धरा। उत्तरतः सुतस्य शशाङ्कः पौरजयाय सुभिक्षकरश्च। सस्यचयं कुरुते जयवृद्धिं कोशचयं च नराधिपतीनाम्। बृहस्पतेरुत्तरगे शशाङ्के पौरद्विजक्षत्रियपण्डितानाम्। धर्मस्य देशस्य च मध्यमस्य वृद्धिः सुभिक्षं मुदिताः प्रजाश्च। भार्गवस्य यदि यात्युदक् शशी कोशयुक्तगजवाजिवृद्धिदः। यायिनां च विजयो धनुष्मतां सस्यसम्पदपि चोत्तमा तदा। रविजस्य शशी प्रदक्षिणं कुर्याच्चेत्पुरभूभृतां जयः। शकबाह्लिकसिन्धुपह्लवा मुदमाप्ता यवनैः समन्विताः। येषामुदग् गच्छति भग्रहाणां प्रालेयरश्मिर्निरुपद्रवश्च। रद्व्यपौरेतरभक्तिदेशान् पुष्णाति याम्येन निहन्ति तानि। शशिनि फलमुदक्स्थे यद्ग्रहस्योपदिष्टं भवति तदपसव्ये सर्वमेव प्रतीपम्। इति शशिसमवायाः कीर्तिता भग्रहाणां न खलु भवति युद्धं साकमिन्दोर्ग्रहर्क्षैः"।

**ग्रहयुद्धभ** न० ग्रहयोर्युद्धं यत्र तादृशं भम्। ग्रहयुद्धाधिकरणे नक्षत्रे उपमयशब्दे उदा०।

**ग्रहवर्षादिफल** न० ६त०। १स्वर्षादिग्रहस्वामिकवर्षमासफलभेदे। ७त०। २तद्बोधकशास्त्रे च तच्च वृ० सं० २० अध्यायात्मकं यथा

रवेः—"सर्वत्र भूर्विरलसस्ययुता वनानि दैत्याधिमत्तदिपदंष्ट्रिसमाकुलानि। स्यन्दन्ति नैव च पयः प्रचुरं स्रवन्त्यो रुग्भेषजानि न तथातिबलान्वितानि। तीक्ष्णं तपत्यदितिजः शिशिरेऽपि काले नात्यम्बुदा जलमुचोऽचलसन्निकाशाः। नष्टप्रभर्क्षगणशीतकरं नभश्च सीदन्ति तापसकुलानि सगोकुलानि। हस्त्यश्वपत्तिमदसह्वबलैरुपेता बाणासनासिमुसलातिशयाश्चरन्ति। घ्नन्तो नृपा युधि नृपानुचरैश्च देशान् संवत्सरे दिनकरस्य दिनेऽथ मासे"।

विधोः—"व्याप्तं नभः प्रचलिताचलसन्निकाशैर्व्यालाञ्जनालिमहिषच्छविभिः पयोदैः। गां पूरयद्भिरखिलाममलाभिरद्भिस्तत्कण्ठकेन गुरुणा ध्वनितेन चाशाः। तोयानि पद्मकुमुदोत्पलवन्त्यतीव फुल्लद्रुमाण्युपवनान्यलिनादितानि। गावः प्रभूतपयसो नयनाभिरामा रामा रतैरविरतं रमयन्ति रामान्। गोधूमशालियवधान्यवरेक्षुवाटा भूः पाल्यते नृपतिभिर्नगराकराढ्या। चित्यङ्किता क्रतुवरेष्टिविघुष्टनादा संवत्सरे शिशिरगोरभिसम्प्रवृत्ते"।

कुजस्य—"वातोद्धतश्चरति वह्निरतिप्रचण्डो ग्रामान् वनानि नगराणि च सन्दिधक्षुः। हाहेति दस्युगणपातहता रटन्ति निःस्वीकृता विपशवो भुवि मर्त्यसङ्घाः। अभ्युन्नता वियति संहतमूर्तयोऽपि मुञ्चन्ति न क्वचिदपः प्रचुरं पयोदाः। सीम्नि प्रजातमपि शोषमुपैति सस्यं निष्पन्नमप्यविनयादपरे हरन्ति। भूपा न सम्यगभिपालनसक्तचित्ताः पित्तोत्थरुक्प्रचुरता भुजगप्रकोपः। एवंविधैरुपहता भवति प्रजेयं संवत्सरेऽवनिसुतस्य विपन्नसस्या"।

बुधस्य—"मायेन्द्रजालकुहकाकरनागराणां गान्धर्वलेख्यगणितास्त्रविदां च वृद्धिः। पिप्रीषया नृपतयोऽद्भुतदर्शनानि दित्सन्ति तुष्टिजननानि परस्परेभ्यः। वार्त्ता जगत्यवितथाऽविकला त्रयी च सम्यक् चरत्यपि मनोरिव दण्डनीतिः। अध्यक्षरं स्वभिनिविष्टधियोऽत्र केचित् आन्वीक्षिकीषु च परं पदमीहमानाः। हास्यज्ञदूतकविबालनपुंसकानां युक्तिज्ञसेतुजलपर्वतवासिनां च। हार्दिं करोति मृगलाञ्छनजः स्वकेऽब्दे मासेऽथ वा प्रचुरतां भुवि चौषधीनाम्"।

गुरोः—"ध्वानिरुद्धरितोऽध्वरे द्युगामी विपुलो यज्ञमुषां मनांसि भिन्दन्। विचरत्यनिशं द्विजोत्तमानां

हृदयानन्दकरो ऽध्वरांशभाजाम्। क्षितिरुत्तमसस्यवत्यनेकद्विपपत्त्यश्ववनोरुगोकुलाढ्या। क्षितिपैरभिपालनप्रहृष्टा द्युचरस्पर्द्धिजना तदा विभाति। विविधैर्वियदुन्नतैः पयोदैर्व्वृतभूमिं पयसाभितर्पयद्भिः। सुरराजगुरोः शुभेऽत्र वर्षे बहुसस्या क्षितिरुत्तमर्द्धियुक्ता"।

भृगोः—"शालीक्षुमत्यपि धरा धरणीधराभधाराधरोज्झितपयःपरिपूर्णवप्रा। श्रीमत्सरोरुहततांबुतडागकीर्णा योषेव भात्यभिनवाभरणोज्ज्वलाङ्गी। क्ष्मां क्षितौ क्षपितभूरिबलारिपक्षम् उद्घुष्टनैकजयशब्दविराविताशम्। संहृष्टशिष्टजनदुष्टविनष्टवर्गां गां पालयन्त्यवनिपा नगराकराढ्याम्। प्रेपीयते मधु मधौ सह कामिनीभिर्जेगीयते श्रवणहारि सवेणुवीणम्। बोभुज्यतेऽतिथिसुहृत्स्वजनैः सहान्नम् अब्दे सितस्य मदनस्य जयावघोषः"।

शनेः—"उद्वृत्तदस्युगणभूरिरणाकुलानि राष्ट्राण्यनेकपशुवित्तविनाकृतानि। रोरुद्यमाणहतबन्धुजनैर्जनैश्च रोगोत्तमाकुलकुलानि बुभुक्षया च। वातोद्धुताम्बुधरवर्जितमन्तरिक्षम् आरुग्णनैकविटपं च धरातलं, द्यौः। नष्टार्कचन्द्रकिरणातिरजोऽवनद्धा, तोयाशयाश्च विजलाः सरितोऽपि तन्व्यः। जातानि कुत्रचिदतोयतया विनाशम् ऋच्छन्ति पुष्टिमपराणि जलोक्षितानि। सस्यानि मन्दमभिवर्षति वृत्रशत्रौ वर्षे दिवाकरसुतस्य सदा प्रवृत्ते"।

"अणुरपटुमयूखो नीचगोऽन्यैर्जितो वा न सकलफलदाता पुष्टिदोऽतोऽन्यथा यः। यदशुभमशुभेऽब्दे मासजं तस्य वृद्धिः शुभफलमपि चैवं याप्यमन्योऽन्यतायाम्"।

**ग्रहवह्नि** पु० ६त०। ग्रहयज्ञे ग्रहोद्देशेन होमाऽधिकरणे वह्निभेदे स च ग्रहयज्ञशब्दे २७६२पृ० दर्शितः।

**ग्रहविप्र** पु० ६त०। ग्रहोद्देश्यकदानग्रहणेन पतिते विप्रभेदे (दैवज्ञ) "तस्य ग्रहदानोद्देश्यता च ग्रहयामले ६पटले उक्ता यथा

"तुलादानञ्च यो दद्याद् ग्रहविप्राय सुन्दरि। आपन्नश्चापि भवेत् सोऽपि भुवि संमोदते सुखम्। सुवर्णस्य तुलां दद्याद् ग्रहविप्राय यः प्रिये!। तस्य तुष्टः सुरगुरुरायुर्वृद्धिं करोति सः। यस्तु रौप्यतुलादानं दद्यात् ग्रहद्विजाय च। सन्तुष्टस्तस्य शुक्रः सन् स सृजेद्दीर्घजीवितम्। ग्रहद्विजाय यो दद्यात्तुलां ताम्रस्य पार्व्वति!। सन्तुष्टो मङ्गलस्तस्य दीर्घायुष्यं करोति हि। यो दद्याद् ग्रहविप्राय पित्तलस्य तुलां प्रिये!। तस्य तुष्टो बुधः कुर्यादायुःपुष्टिं सुगौरवम्। ग्रहविप्राय लौहस्य तुलां यस्तु प्रयच्छति। प्रीतः शनैश्वरस्तस्य विपुलायुः प्रयच्छति। शीशकस्य तुलां दद्याद् ग्रहविप्राय यः प्रिये!। तस्याशु राहुः सुप्रीतः सौभाग्यायुःप्रयच्छति। यः खर्परतुलां दद्याद् ग्रहविप्राय सुन्दरि!। सन्तुष्टो भगवान् केतुस्तस्यायुर्व्वर्द्धयेत् सुखम्। तुलां ताम्रस्य यो दद्याद् ग्रहविप्राय सुन्दरि!। आदित्यस्तस्य स प्रीतो दीर्घायुः परियच्छति। ग्रहविप्राय यो दद्याद् तुलां कांस्यस्य सुन्दरि!। सन्तुष्टस्तस्य रात्रीशो विभूत्यायुःप्रयच्छति"।

**ग्रहशृङ्गाटक** न० ६त० सं० २०अ० उक्ते ग्रहयोगभेदे यथा "यस्यां दिशि दृश्यन्ते विशन्ति ताराग्रहा रविं सर्व्वे। भवति भयं दिशि तस्यामायुधकोपक्षुधातङ्कैः। चक्रधनुःशृङ्गाटकदण्डपुरप्रासवज्रसंस्थानाः। क्षुदवृष्टिकरा लोके समराय च मानवेन्द्राणाम्। यस्मिन् खांशे दृश्या ग्रहमाला दिनकरे दिनान्तगते। तत्रान्यो भवति नृपः परचक्रोपद्रवश्च महान्। यस्मिन्नृक्षे कुर्युः समागमं तज्जनान् ग्रहा हन्युः। अविभेदाः परस्परममलमयूखाः शिवास्तेषाम्। ग्रहसंवर्त्तसमागमसम्मोहसमाजसन्निपाताख्याः। कोशश्चेत्येतेषामभिधास्ये लक्षणं सफलम्। एकर्क्षे चत्वारः सह पौरैर्यायिनोऽथ वा पञ्च। संवर्त्तो नाम भवेच्छिखिराहुयुतः स सम्मोहः। पौरः पौरसमेतो यायी सह यायिना समाजाख्यः। यमजीवसङ्गमेऽन्यो यद्यागच्छेत्तदा कोशः। उदितः पश्चादेकः प्राक् चान्यो यदि स सन्निपाताख्यः। अविकृततनवः स्निग्धा विपुलाश्च समागमे धन्याः। सर्वौ तु संवर्त्तसमागमाख्यौ सम्मोहकोशौ भयदौ प्रजानाम्। समाजसञ्ज्ञः सुसमः प्रदिष्टो वैरप्रकोपः खलु सन्निपाते"

**ग्रहसमागम** पु० ६त०। चन्द्रेण सह भौमादिपञ्चग्रहयोगभेदे। ग्रहयुतिशब्दे ग्रहशृङ्गाटकशब्दे च विवृतिः

**ग्रहादि** पु० पा० उक्ते कर्त्तरि णिनिप्रत्ययनिमित्ते धातुगणभेदे स च गणः णिन्यन्तया पा० ग० सू० उक्तो यथा ग्राही उत्साही उद्दासी उद्भासी स्थायी मन्त्री संमर्द्दी (रक्षश्रुवपशां नौ) निरक्षी निश्रावी निवापी निशायी (याचृव्याहृव्रजवदवसां प्रतिषिद्धानाम्) अयाची अव्याहारी असंव्याहारी अव्राजी अवादी अवासी (अचः अचित्तकर्त्तृकानाम्) अकारी अहारी अविनायी विशायी विषायी (अभिभावी भूते) अपराधी उपरोधी परिभवी परिभावी इति ग्रहादिराकृतिगणः"

**ग्रहाधार** पु० ६त० । ध्रुवनक्षत्रे ; तस्य तथात्वञ्च खगोलशब्दे पृ० २४१६।२० दर्शितम् ग्रहाश्रयादयोऽप्यत्र ।

**ग्रहाधिकरण** न० ग्रहस्य पात्रविशेषस्यैकत्वाविवक्षाख्यापकमधिकरणम् । न्यायरूपे पञ्चाङ्गे अधिकरणभेदे तच्च जै० ३अ० १पादे दर्शितं संक्षेपतस्तत उद्धृत्य तत्त्वबोधिन्यामुक्तं यथा

"सोमयागे श्रूयते "दशापवित्रेण ग्रहं संमार्ष्टीति" दशापवित्रं वासःखण्डं ग्रहः सोमरसादिहविःपात्रविशेषः तत्र एकस्यैव मार्ज्जनमुत एकत्वाविवक्षया सर्व्वेषामिति संशये "पशुना रुद्रं यजेत" इत्यत्रेव एकवचनादेकत्वविवक्षया एकस्यैव मार्ज्जनं न सर्व्वेषां तथा च सू० "एकत्वं युक्तमेकस्य श्रुतिसंयोगादिति, प्राप्ते ब्रूमः । ग्रहाणां यागोपकरणतया प्राप्तानामनेन मार्जनसंस्कारो विधीयते तत्र ग्रहमिति द्वितीयया एकस्योद्देश्यत्वं फलवत्त्वञ्च बोध्यते प्रधानं ग्रहं प्रति मार्ज्जनं गुणः 'प्रतिप्रधानं गुण आवर्त्तनीयः'. इति न्यायेन सर्व्वेषां मार्जनं प्राप्तम् उद्देश्यगतमेकत्वमविवक्षितं न च ग्रहत्वजातिर्मार्ज्जनेन संस्कार्य्या इति तदाश्रयैकमार्जनेन सर्वे संस्कृता भवन्ति, जातेः सर्वद्रव्यवृत्तित्वादित्येकत्वविवक्षायामपि सर्वमार्ज्जनसिद्धिरिति वाच्यं जातेरमूर्त्तत्वात् अपूर्वासाधनत्वाच्च तल्लक्षितानां द्रव्याणामपूर्व्वसाधनतया संमार्गात् तदुक्तम् "उद्देश्यलक्षणं जातिर्यद्द्रव्यं लक्ष्यते तया । तस्याङ्गमेष सम्मार्गः सर्वस्येति विनिश्चयः" । नचैकत्वं नोद्देश्यगतम् अपि तु एकत्वं सम्मार्ज्जनञ्चोभयं विधेयमिति वाच्यं "ग्रहं संमृज्य तु सचैकः कार्य्य इति वाक्यभेदापत्तेः एकत्वस्य सर्वग्रहेषु सिद्धत्वेन विधानासम्भवात् स्वसमानाधिकरणकर्म्मतानिरूपकमार्ज्जनसजातीयकर्मतासमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकैकत्वरूपविशिष्टमेकत्वं विधेयं तथा सति सर्वमार्जनासिद्धिः अतएव एकत्वविशिष्टग्रहस्य मार्जनं विधीयते एकत्वं ग्रहत्वञ्च सर्वेषु वर्त्तत इति एकत्वविवक्षायामपि सर्वमार्जनसिद्धिरित्यपि परास्तं तादृशैकत्वस्याव्यावर्त्तकत्वात् विशिष्टैकत्वविवक्षायाञ्च उक्तदोषादिति साम्प्रदायिकाः । अत्रेदमवधेयम् एकत्वविवक्षायामपि सर्वमार्जनसिद्धिः तथाहि एकत्वविवक्षायां प्रत्येकमेव मार्जनं न तु मिलितानामेकं मार्जनं तथात्वे साहित्ये बहुवचनं निर्दिश्येत । तस्मादेकवचननिर्देशात् प्रतिप्रधानं गुणावृत्तिन्यायात् प्रत्येकं सर्वेषां मार्जनमिति । इत्थञ्च स्वसमानाधिकरणकर्मतानिरूपकमार्जननिरूपितकर्मतासमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकैकत्वरूपविशिष्टैकत्वमेव विवक्षितं स्यात् । अविवक्षितत्वसिद्धान्तस्तु एकस्यैव मार्जनं न सर्वेषामिति प्रापकस्य स्वसमानाधिकरणेत्यादिपूर्व्वपक्षोक्तस्य सामान्यतो मार्जनघटितैकत्वस्य विवक्षामादाय । न चैवं ग्रहं संमार्ष्टीति वाक्यात् कथं सर्वेषां मार्जनबोधः ग्रहत्वेनोपस्थितस्यैव ग्रहस्य मार्जनबोधनादिति वाच्यम् उद्देश्यविधेयभेदेन भिन्नानामेव वाक्यानां तन्त्रेणोच्चारणात् प्रतिप्रधानं गुणावृत्तिन्यायात् सर्वमार्जनसिद्धौ वाक्यभेदकल्पनागौरवस्याप्रामाणिकत्वात् अतएव भावार्थदीपिकायां रुक्मिणीस्वयंवरीयषड्वधारणव्याख्याने "न चैवं वाक्यभेदः अनूद्यविधेयभेदेन विभिन्नानामेव वाक्यानां सकृत्प्रयोगात् ग्रहं समार्ष्टीतिवदिति" दृष्टान्तीकृतं श्रीधरस्वामिचरणैः" ।

**ग्रहाधीश** पु० ६त० । सूर्ये ग्रहाध्यक्षादयोऽप्यत्र ।

**ग्रहामय** पु० ग्रहकृत आमयः । ग्रहावेशे स्कन्दग्रहाद्यावेशे राजनि० ।

**ग्रहावमर्द्दन** पु० ग्रहौ चन्द्रसूर्य्यौ अवमृद्नाति अव+मृद–ल्यु । १राहौ । चन्द्रसूर्य्यावमर्द्दनमिति तद्ध्यानलिङ्गात्तस्य तथात्वम् । भावे ल्युट् ६त० । २ग्रहयोः परस्परयुद्धे च । "ग्रहावमर्द्दने चैव पुण्यस्नानं समाचरेत्" वृ० सं० ४८अ० ।

**ग्रहाशिन्** पु० ग्रहं स्कन्दग्रहदोषमश्नाति नाशयति अश+अश–णिनि । ग्रहनाशकवृक्षे शब्दर० ।

**ग्रहाह्वय** पु० ग्रहं ग्रहदोषमाह्वयति नाशाय आकारयति आ+ह्वे–श । भूताङ्कुश वृक्षे राजनि० । तस्य ग्रहदोषनाशनेऽङ्कुशतुल्यत्वात्तथात्वम् ।

**ग्रहिल** त्रि० ग्रहोऽस्त्यस्य काशा० इलच् । निर्बन्धयुक्ते । निर्बन्धश्च कोपादनुरागातिशयाच्च भवति तत्र "कोपकृतनिर्बन्धयुक्ते । "न निशाऽखिलयाऽपि वापिका प्रससाद ग्रहिलेव मानिनी" नैष० । अनुरागाधीननिर्बन्धयुक्ते "प्रसाधनग्रहिलैरस्माभिः रसादीनां व्यङ्ग्यत्वमुक्तम्" सा० द० ।

**गृहीतृ** त्रि० ग्रह–तृच् इटोदीर्घः । १ग्रहणकर्त्तरि २ज्ञानग्राहिणि च । "विषयाणां ग्रहीतॄणि शनैः पञ्चेन्द्रियाणि च" मनुः । "ग्रहीता यदि नष्टः स्यात् कुटुम्बार्थं कृतोव्ययः" मनुः ।

**ग्राह्य** पु० ग्रहः हविःपात्रभेदएव स्वार्थे यत्। हविःपात्र रूपे यज्ञिये पात्रभेदे। "आग्रायणोऽसि शुक्रस्ते ग्रहो विचितस्त्वा" यजु० ४।२४। "ग्रहएव ग्राह्यः शुक्रपदमैन्द्र वायवादिग्रहाणामुपलक्षणम्" वेददी०।

**ग्राभ** पु० ग्रह—ण वेदे हस्य भः। ग्राहके। "आ तू न इन्द्र! चुमन्तं चित्रं ग्राभं संगृभाय" ऋ० ८।८१।१। "ग्राभं ग्राहकम्" भा०।

**ग्राम** पु० ग्रस—मन् आदन्तादेशः। "विप्राश्च विप्रभृत्याश्च यत्र चैव वसन्ति हि। स तु ग्राम इति प्रोक्तः शूद्राणां वास एव वा इति" "तथा शूद्रजनप्रायाः सुसमृद्धकृषीवलाः। क्षेत्रोपयोगभूमध्ये वसतिर्ग्रामसंज्ञिका" इतिप्रोक्तलक्षणे विप्रादीनां १वासस्थाने, "धनुः शतं परिणाहोग्रामात् क्षेत्रान्तरं भवेत्" याज्ञ०। "ग्रामेष्वात्मविसृष्टेषु" रघुः। "त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्। ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्" हितोप० "यथा कुटुम्बिनः सर्व्वेऽप्येकीभूता भवन्ति हि। तथा स्वराणां सन्दोहो ग्राम इत्यभिधीयते" इत्युक्ते २स्वरसंघभेदे, "षड्जग्रामो भवेदादौ मध्यमग्रामएव च। गान्धारग्राम इत्येतत् ग्रामत्रयमुदाहृतम्" "नन्द्यावर्त्तोऽथ जीमूतः सुभद्रो ग्रामकास्त्रयः। षड्जमध्यमगान्धारास्त्रयाणां जन्महेतवः" मल्लिनाथधृतवाक्यम् तेषाञ्च सप्तस्वरविशेषयोगात् एकविंशतिमूर्च्छनाहेतुत्वं यथोक्तं तत्रैव "क्रमात् स्वराणां सप्तानामारोहश्चावरोहणम्। सा मूर्च्छनोच्यते ग्रामस्था एताः सप्त सप्त च"। "ग्रामत्रयेऽपि प्रत्येकं सप्त सप्त मूर्च्छनाइत्येकविंशतिमूर्च्छना भवन्तीति" मल्लि०। अधिकं संगीतदामोदरे दृश्यम्। "स्फुटीभवद्ग्रामविशेषमूर्च्छनाम्" माघः। किञ्चिच्छब्दपूर्व्वकः ३तदर्थसंघाते च यथा शब्दग्रामः अर्थग्राम इत्यादि। "शङ्खाकरकरग्रामः" कविकल्पद्रुमः। ४जनपदे च "यस्याश्वासः प्रदिशि यस्य गावो यस्य ग्रामा यस्य विश्वे रथासः" ऋ० २।१२।७। "गमन्तेऽत्र ग्रामाज्जनपदाः" भा०। स्वार्थे क, तेष्वर्थे "दीयन्तां ग्रामकाः केचित्" भा० उद्यो० १४६६ श्लो०। स्वल्पार्थे टी ततः स्वार्थे क ग्रामटिका स्वल्पग्रामे स्त्री "स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः" सा० द०। ५ग्रामवासि कर्षकादिजने ६ग्रामसदृशे संहते ग्रामस्वेदमण। ७तत्सम्बन्धिनि ८ग्राम्यधर्म्मे च।

**ग्रामकाम** त्रि० ग्रामं स्वकीयत्वेन कामयते कम—णिङ् अण् उप० स०। ग्रामसम्बन्धितया ग्रामस्य कामुके। "यवाग्वा ग्रामकामः" कात्या०श्रौ०४।१५।२२। "उपहव्यो ग्रामकामस्य" २२।८।७। "दीर्घव्याधिग्रामकामप्रजाकामपशुकामानां वा" २२।६।१७।

**ग्रामकुक्कुट** पुंस्त्री ७त०। ग्राम्ये कुक्कुटभेदे "कलविङ्कं प्लवं हंसं चक्राङ्गं ग्रामकुक्कुटम्" "छत्राकं विड्वराहं च लशुनं ग्रामकुक्कुटम्। पलाण्डुं गृञ्जनं चैव मत्या जग्ध्वा पतेत् द्विजः" इति मनुना तन्मांसभक्षणं निषिद्धम् स्त्रियां जातित्वात् ङीष्।

**ग्रामकुमार** त्रि० ग्रामेषु मध्ये कुमारः सुन्दरः। ग्रामसुन्दरे। तस्य भावः मनोज्ञा० वुञ्। ग्रामकुमारक तद्भावे न०।

**ग्रामकुलाल** पु० ग्रामे कुलालः। ग्राम्ये कुलाले कुम्भकारे "ग्रामः शिल्पिनि" पा० अस्य वा प्रकृतिस्वरता ग्राम शब्दस्य आद्युदात्तः। एवं ग्रामनापितादिषु वा आद्युदात्तता। ततः मनोज्ञा० भावे वुञ्। ग्रामकुलालक तद्भावे न० [दारा० स्त्रियां जातित्वात् ङीष्।

**ग्रामकूट** पुंस्त्री ग्रामस्य कूट इव वञ्चनाप्रधानत्वात्। शूद्रे

**ग्रामक्रोड** पुंस्त्री ग्रामे क्रोडः। ग्राम्यशूकरे स्त्रियां जातित्वात् ङीष्। "स दोग्ध्रीं धेनुमुत्सृज्य ग्रामक्रोडीं दुधुक्षति" काशीख०२६अ०। ग्रामशूकरादयोऽप्यत्र पुंस्त्री०।

**ग्रामगृह्य** त्रि० ग्रह—बाह्यार्थे क्यप् ५त०। १ग्रामबाह्ये स्त्रियां टाप् सा च २ग्रामबाह्यसेनायाम्। [तथात्वम्।

**ग्रामगेय** न० ग्रामे गेयम्। सामभेदे तस्य ग्रामे गेयत्वात्

**ग्रामगोदुह्** पु० ७त०। ग्राम्ये गोपे "ग्रामः शिल्पिनि" पा० वा अस्य प्रकृतिस्वरत्वे प्राप्ते युक्तारोह्या० आद्युदात्तता।

**ग्रामघात** पु० ६त०। ग्रामस्य द्रव्यहरणेन हननप्राये व्यापारे। "ग्रामघाते हिताभङ्गे पथि मोषाभिदर्शने। शक्तितोनाभिधावन्तो निर्वास्याः सपरिच्छदाः" मनुः। "ग्रामघाते ग्रामलुण्ठने" कुल्लू०। २ग्रामवृत्तिजनहनने च। "स्वगोऽसकृद्ग्रामघातमाचष्टे" वृ० सं० ३०अ०। "एकस्थाने रुवन्दीप्तः सप्ताहाद् ग्रामघातकृत्" ८६अ०।

**ग्रामघातिन्** पुंस्त्री ग्रामार्थं तत्रस्थलोकभक्षणार्थं हन्ति पशून् हन—णिनि। ग्रामस्थबहुलोकपोषणार्थं पशुघातके। "ग्रामघाती च कौन्तेय! मांसस्य परिविक्रयी" भा० शा० ३४ अ० प्रायश्चित्तीयोपाख्याने।

**ग्रामघोषिन्** पु० ग्रामे क्षपके घोषोऽस्यस्य इनि। संक्रन्दने

इन्द्रे। "संक्रन्दनः प्रमदो वृषणॢ येषाः प्रवेदसहुधा ग्रामघोषी" अथ० ५।२०।९। इच्छार्थं वृषकेण शब्दमानत्वात्तस्य तथात्वम्।

**ग्रामचर्य्या** स्त्री ६त०। ग्राम्यधर्मे स्त्रीसम्भोगे "सर्वशो वर्जयेद्ग्रामचर्य्याम्" आश्व०श्रौ० १२।८।१। यतिधर्मोक्तौ "ग्रामचर्य्या स्त्रीसम्भोगः" नारा०वृ०।

**ग्रामज** त्रि० ग्रामे जायते जन–ड। ग्राम्ये धान्यादौ।

**ग्रामजनिष्पावी** स्त्री कर्म०। नखनिष्पाव्यां धान्यभेदे राजनि०।

**ग्रामजात** त्रि० ग्रामे जायते जन–कर्त्तरि क्त। ग्राम्ये धान्यादौ "न ग्रामजातान्यार्त्तोऽपि मूलानि च फलानि च" मनुः वानप्रस्थधर्मोक्तौ। "ग्रामजातानि अफाल कृष्टभूभागे जातान्यपि फलादीनि न भक्षयेत्" कुल्लू०।

**ग्रामजाल** न०। ग्रामसमूहे चक्रशब्दार्थे त्रिका०।

**ग्रामजित्** त्रि० ग्रामं संहतं जयति विश्लेषणेन, जि–क्विप्। संघातकस्य वस्तुनः विश्लेषयितरि। "नियुत्वन्तो ग्रामजितो यथा नरः" ऋ० ५।५४।८।

**ग्रामणी** त्रि० ग्रामं समूहं नयति प्रेरयति स्वस्वकार्य्येषु नी–क्विप् णत्वम्। १प्रधाने २ग्रामाध्यक्षे ३नापिते पु० मेदि०। "ग्रामणीभ्योऽन्नं सुरां सुरापेभ्यः" कौषीत० ब्रा०। ग्रामं ग्रामधर्म्मं नयति। ४भोगिके हेम० ग्राम्येण मैथुनव्यापारेण नयति कालम्। बहुजनभोग्यायां स्त्रियां ५वेश्यायां ६नीलिकायां च स्त्री हेमच०। ७विष्णौ पु० "अग्रणीर्ग्रामणीः श्रीमान्" विष्णुस०। "भूतग्रामस्य नेतृत्वात् ग्रामणीः भा०। ग्रामण्यः इदम् तस्येदमित्यण्। ग्रामण्य तत्सम्बन्धिनि त्रि०। ग्रामणीरिवाचरति क्यच् ग्रामणीयते। ततः कर्त्तरि अच् ग्रामणीय तत्तुल्ये त्रि० "सिनुधुकुक्षिताये च ग्रामणीयमहाबलाः" भा० स० २१अ०।

**ग्रामणीथ्य** न० ग्रामण्यः भावः त्व वेदे पृषो०। आधिपत्ये। "एषोऽलं श्रियै धारणाय राज्यस्य वा ग्रामणीथ्याय" शत० ब्रा० ८।६।२।१। [तच्चितरि।

**ग्रामतक्ष** पु० ६त० टच् समा०। बहूनां साधारणे काष्ठ

**ग्रामता** स्त्री ग्रामाणां समूहः तल्। ग्रामसमूहे "तस्मादिदं प्राच्यो ग्रामता बहुविशालाः" ऐत० २।४४।

**ग्रामधर्म्म** पु० ग्रामे भवः अण् ग्राम्यो धर्म्मः। ग्राम्यधर्म्मे मैथुने शब्दार्थचि० तस्य स्त्रीपुंधर्म्मत्वात्तथात्वम्।

**ग्रामपाल** पु० ग्रामं पालयति पालि–अण् उप० स०। ग्राम रक्षके १सैन्यभेदे २ग्रामाध्यक्षे च।

**ग्रामपुत्र** पु० ग्रामस्य ग्रामस्थबहुजनस्य पुत्र इव पाल्यत्वात्। बहूनां पाल्यतया पुत्रतुल्ये। ततोमनोज्ञा० भावे वुञ्। ग्रामपुत्रक तद्भावे न०।

**ग्रामप्रेष्य** पु० ६त०। बहूनां प्रेष्ये। ततः मनोज्ञा० भावे वुञ्। ग्रामप्रेष्यक तद्भावे न० ग्रामप्रेष्यस्य श्राद्धेऽपाङ्क्तोक्ता यथा "वृषलीपतिः पिशुनोनर्त्तनश्च ग्रामप्रेष्यो यश्च भवेत् विकर्म्मा" भा०शा०६५अ०। "प्रेष्यो ग्रामस्य राज्ञश्च कुनखी श्यावदन्तकः" मनुः।

**ग्रामभृत** पु०ग्रामेण तत्रस्थसमूहेन भृतः प्रेष्यः। बहुजनभरणीये। स च अब्राह्मणः यथाह शाता० "अब्राह्मणास्तु षट् प्रोक्ता ऋषिणा तत्त्ववादिना। आद्यो राजभृतस्तेषां द्वितीयः क्रयविक्रयी। तृतीयो बहुयाज्यः स्यात् चतुर्थो ग्रामयाजकः। पञ्चमस्तु भृतस्तेषां ग्रामस्य नगरस्य च। अनागतां तु यः पूर्वां सादित्यां चैव पश्चिमाम्। नोपासीत द्विजः सन्ध्यां स षष्ठोऽब्राह्मणः स्मृतः"।

**ग्राममद्गुरिका** स्त्री ग्रामस्य प्रिया मद्गुरिका। ग्रामस्य मद्गुरिकेव वा (सिङ्गी) १मत्स्यभेदे २ग्रामयुद्धे च मेदि०।

**ग्राममुख** पु० ग्रामो ग्रामस्थजनो मुखमिवास्य। हट्टे त्रिका० तस्य ग्रामजननिष्पाद्यत्वात्तन्मुखत्वम्।

**ग्राममृग** पु० ६त०। कुक्कुरे हारा०। कुक्कुरस्य ग्रामे मृगतुल्यत्वात्तथात्वम् स्त्रियां जातित्वात् ङीष्।

**ग्रामयाजक** पु० ६त०। ग्रामस्य नानावर्णानां याजके अपकृष्टविप्रे। ग्रामभृतशब्दे दृश्यम्। "गुरौ चान्तके पापे कृतघ्ने ग्रामयाजके" भा० व० १९९अ०। अपाङ्क्तोक्तौ।

**ग्रामयाजिन्** पु० ग्रामान् ग्रामस्थनानावर्णान् याजयति यज–णिच्–णिनि। ग्रामयाजके। "नाश्नोतियततो यज्ञे ग्रामयाजिहुते तथा" मनुः अभोज्यान्नोक्तौ।

**ग्राम(मे)वास** पु० ७त० वा अलुक्स०। ग्रामे स्थितौ

**ग्राम(मे)वासिन्** त्रि० ग्रामे वसति वस–णिनि वा अलुक्स०। ग्रामे स्थायिनि स्त्रियां ङीप्।

**ग्रामषण्ड** पु० ग्रामे ग्रामधर्मे षण्डः। ग्राम्यधर्मरहिते क्लीबे। ततः मनोज्ञा० भावे वुञ्। ग्रामषण्डक तद्भावे न०

**ग्रामस्थ** त्रि० ग्रामे तिष्ठति स्था–क। ग्रामवासिनि

**ग्रामहासक** पु० ग्रामं हासयति हस–णिच्–ण्वुल्। भगिनीपतौ शब्दच०।

**ग्रामाधान** न० ग्रामस्य ग्रामपोषणार्थमाधीयते आ+धा–ल्युट्। मृगयायाम् हलायुधः।

**ग्रामान्त** न॰ ६त॰ । ग्रामसमीपे उपशल्ये "नाधीयीत-श्मशानान्ते ग्रामान्ते गोव्रजेऽपि वा" "कृतवापनो निवसेत् ग्रामान्ते गोव्रजेऽपि वा" मनुः । ग्रामान्ते भवः वृद्ध-त्वाच्छः । ग्रामान्तीय ग्रामसमीपभवे त्रि॰ "पथि क्षेत्रे परिवृते ग्रामान्तीयेऽथ वा पुनः" मनुः ।

**ग्रामिक** पु॰ ग्रामे तद्रक्षणे नियुक्तः ठञ् । ग्रामरक्षणाय नियुक्ते ग्रामाध्यक्षे "ग्रामे दोषान् समुत्पन्नान् ग्रा-मिकः शनकैः स्वयम् । शंसेत् ग्रामदशेशाय दशेशो विंशतीशिने" मनुः । "यानि राजप्रदेयानि प्रत्यहं ग्रामवासिभिः । अन्नपानेन्धनादीनि ग्रामिकस्तान्यवाप्नु-यात्" मनुना तद्वृत्तिरुक्ता । "ग्रामेयान् गुणदोषांश्च ग्रामिकः प्रतिभावयेत्" "यानि ग्राम्याणि भोज्यानि ग्रामिकस्तान्युपाश्नीयात्" भा॰शा॰ ८७अ॰ । तस्य भावः पुरोहि॰ यक् । ग्रामिक्य तद्भावे न॰ ।

**ग्रामिन्** त्रि॰ ग्रामः स्वामित्वेन आधारत्वेन वाऽस्त्यस्य इनि । १ग्रामस्वामिनि २ग्रामवासिनि च । ३ग्राम्यधर्म-युक्ते मैथुनयुक्ते च । "आसुरी सेट्मर्वांमहाव्यवाये ग्रा-मिणां रतिः" भाग॰ ४।२६।१४। स्त्रियां ङीप् । सा च ४नीलीवृक्षे स्त्री जटा॰ ।

**ग्रामीण** पुंस्त्री ग्रामे भवः खञ् । १कुक्कुरे, २काके, मेदि॰ ३ग्राम्यशूकरे च राजनि॰ । ४ग्रामोद्भवे त्रि॰ । "ग्रामी-णस्य प्रथमतः पशव्रतोगवयादिकम्" भाषा॰ । ग्रामीण-वध्वस्तमलक्षिता जनः" माघः । ५नीलिकोषधौ, मेदि॰ ६पालङ्कशाके च स्त्री राजनि॰ ।

**ग्रामेय** त्रि॰ ग्रामे भवः वा॰ढक् । १ग्रामभवे "ग्रामेयान् गुणदोषांश्च" मनुः । २वेश्यायां स्त्री

**ग्रामेयक** त्रि॰ ग्रामे भवः कत्र्या॰ ढकञ् । ग्रामभवे । "ग्रामेयककुलानाञ्च समस्तं शीघ्रं वाक्षिकः" मनुः । अत्र ग्रामयिकेति पाठः लिपिकरप्रमादात् ।

**ग्रामेश** पु॰६त॰। ग्रामपतौ ग्रामाध्यक्षे ग्रामेश्वरादयोऽप्यत्र ।

**ग्राम्य** त्रि॰ ग्राम—भवार्थे—वा यत् । १ग्रामभवे कृषकादौ "अलमन्यथेन सुन्दरि! ग्राम्यजनो मिष्टमश्नाति" कु॰र॰ । २मूढे ३प्राकृते । ४मैथुने च "व्यवायो ग्राम्यधर्मश्च" अ-मरः। प्राकृते "ग्राम्यानपशत्रून् कथिर्षं पिपासतः" माघः । मूढे "ग्राम्यभावमपहातुमिच्छवः" माघः । ५स्त्रीकारे ६रतबन्धे ७भण्डादिवचने अश्लीले हालिकादिप्रसिद्ध-वाक्ये च न॰ शब्दार्थचि॰ । ८काव्यदोषभेदे पु॰ । स च शब्दगतोऽर्थगतश्च तत्र शब्दगतः सा॰ द॰ । शब्ददोषविभागे "दुःश्रव्यत्रिविधाश्लीलानुचितार्थाप्रयु-क्तताः । ग्राम्योऽप्रतीतसन्दिग्धनेयार्थनिहतार्थताः" इत्यादिना शब्ददोषान् विभज्य "कटिस्ते हरते मनः" इत्युदाहृतम् "अपुष्टदुष्क्रमग्राम्यव्याहताश्ली-लकष्टताः" इत्यादिनाऽर्थदोषान् विभज्य च "स्वपिहि त्वं समीपे मे स्वपिम्येवाधुना प्रिय!" इत्य-र्थस्य ग्राम्यत्वमुदाहृतम् । "ग्राम्या मिथुनतुलास्त्री चापाद्यलिघटा निशासु मेषघ्नौ च" ज्यो॰उक्तेषु ९सदा-मिथुनादिराशिषु १०रात्रौ मेषवृषराशयोश्च पु॰ । ११पशुभेदे पुंस्त्री॰ । यथाह पैठीनसिः "ग्राम्यारण्याश्च-तुर्दश गौरविरजोऽश्वोऽश्वतरो गर्दभो मनुष्यश्चेति सप्त ग्राम्याः पशवः, महिषवानरऋक्षसरीसृपरुरुपृषतमृगाश्चेति सप्तारण्याः" । "अश्वाश्वतरगोखरोष्ट्रबस्तोरभ्रमेदःपुच्छक प्रभृतयो ग्राम्याः इति सुश्रुतोक्ते १२पशुभेदे पुंस्त्री॰ "ग्राम्या वातहराः सर्वे वृंहणाः कफपित्तलाः । मधुरा रसपाकाभ्यां दीपना बलवर्द्धनाः" सुश्रु॰ । १३ओष-धिभेदे स्त्री । "तिलमाषव्रीहियवाः प्रियङ्गवो गोधू-माश्चेति सप्त ग्राम्या ओषधयः" तैत्ति॰ । ओषधि शब्दे १५६४ पृ॰ दृश्यम् ।

**ग्राम्यकन्द** पु॰ कर्म॰। कन्दभेदे (ग्रामेर ओल) रत्नमा॰

**ग्राम्यकर्कटी** स्त्री कर्म॰ । कुष्माण्डे त्रिका॰ ।

**ग्राम्यकर्मन्** न॰ ग्राम्यस्य प्राकृतस्य हालिकादेः कर्म । मैथुने व्यवाये । "ग्राम्यकर्म्मणैव विस्मृतकालावधिः" भाग॰ ५।१४।१।

**ग्राम्यकुङ्कुम** न॰ कर्म॰ । कुसुम्भे त्रिका॰ ।

**ग्राम्यधर्म्म** पु॰ ग्राम्यस्य प्राकृतस्य हालिकादेः धर्मः । व्यवाये मैथुने अमरः । "प्रमत्तोग्राम्यधर्मेषु" भा॰व॰ ४८ अ॰ । "प्रमत्तं ग्राम्यधर्मेषु" २८॰ अ॰ । स अस्त्यस्य इनि ग्राम्यधर्म्मिन् मैथुनरते त्रि॰ । "शूद्रादायोगवश्चापि वैश्यायां ग्राम्यधर्मिणः" भा॰आनु॰४८अ॰ । [दर्शिताः ।

**ग्राम्यपशु** पु॰ कर्म्म॰ । पशुभेदेषु ते च पशवः ग्राम्यशब्दे

**ग्राम्यमद्गुरिका** स्त्री कर्म॰ । हस्तिनीमत्स्ये हारा॰ ।

**ग्राम्यमृग** पुंस्त्री कुक्कुरे जटा॰ स्त्रियां ङीष् ।

**ग्राम्यवल्लभा** स्त्री ६त॰। १पालङ्कशाके (पालङ्क) राजनि॰ हालिकादिग्राम्यप्रियत्वात्तस्य तथात्वम् । २वेश्यायाञ्च

**ग्राम्यवादिन्** त्रि॰ ग्राम्यं वदति णिनि । ग्राम्यशब्दवादके हालिकादौ । "यः परस्तात् ग्राम्यवादी तस्य स्वदाद् व्रीहीनाहरेत्" तैत्ति॰ २।३।१।३।

**ग्राम्यशूकर** पुंस्त्री कर्म० । विड्वराहे स्त्रियां ङीष् ।

**ग्राम्या** स्त्री ग्रामे भवा यत् । १तुलस्यां शब्दार्थचि० २नीलीवृक्षे ३नल्याबोङ्क्षे च राजनि० ।

**ग्राम्यायणि** पुंस्त्री० ग्राम्यस्यापत्यम् तिका० फिञ् । ग्राम्यस्य प्राकृतादेरपत्ये । स्त्रियां इदन्तत्वात् वा ङीप् ।

**ग्राम्याश्व** पु० कर्म० । गर्दभे त्रिका० स्त्रियां जातित्वेऽपि अजा० टाप् ।

**ग्रावग्राभ** पु० ग्रावाणमभिषवणपाषाणं स्तुत्या गृह्णाति ग्रह–अण् हस्य भः उप०स० । ग्रावस्तुति ऋत्विग्भेदे । "अग्निर्मन्द्रो ग्रावग्राभ उत शस्ता सुविप्रः" ऋ० १।१६२।५। "ग्रावग्राभः ग्राव्णः स्तुत्या गृह्णातीति ग्रावस्तुत्" भा० ।

**ग्रावन्** पु० ग्रसते ग्रस–ड ग्रः आवनति वन–संभक्तौ विच् कर्म० । १प्रस्तरे, २पर्वते, अमरः ३मेघे विश्वः । ४दृढे त्रि० शब्दर० । "श्रोता ग्रावाणो विदुषो न यज्ञम्" यजु० ६।२६। "मूर्द्ध्नि ग्राव्णां जर्जरा निर्झरौघाः" माघः । "ग्रावसु संसृतेष्वभिनिदधाति क्षत्रं वै सोमो विशो ग्रावाणः" शत० ब्रा० ३।८।३।३।

**ग्रावरोहक** पु० ग्रावणि रोहति रुह–ण्वुल् ७त० । अश्मन्याकृते रत्नमा० ।

**ग्रावस्तुत्** पु० ग्रावाणं स्तौति स्तु–क्विप् ६त० । होतुः सहाये ऋत्विग्भेदे अश्वायनशब्दे ८१ पृ० विवृतिः । छच् । ग्रावस्तोत्रीयस्तत्र । तस्येदम् च ग्रावस्तोत्रीय अण् ग्रावस्तोत्र तत्सम्बन्धिनि त्रि० ग्रावस्तोत्राय हितम् छ । ग्रावस्तोत्रीय तस्य कृते त्रि० "प्रस्तोता ब्राह्मणाच्छंसि ग्रावस्तोत्री" कात्या० श्रौ० २४,५।४५।

**ग्रावहस्त** पु० ग्रावा अभिषवसाधनं पाषाणो हस्तेऽस्य । अभिषवसाधनपाषाणयुक्तहस्ते ग्रावस्तुति ऋत्विग्भेदे । "ग्रावहस्तासो अध्वरे" ऋ० १।१५।७।

**ग्रावायण** पु० प्रवरभेदे हेमा० व्र० ख० प्रवराध्याये दृश्यम् ।

**ग्रास** पु० ग्रस्यते ग्रस–कर्मणि घञ् । ग्रसनयोग्याह्नादौ तन्मानञ्च "कुक्कुटाण्डप्रमाणस्य यावान् वा प्रविशेन्मुखम् । एतं ग्रासं विजानीयात् शुद्ध्यर्थं कायशोधनम्" पराशरः । "यावतो ग्रसते ग्रासान् हव्यकव्येष्वमन्त्रवित् । तावतो ग्रसते प्रेत्य दीप्तशूलष्ट्ययोगुडान्" "ग्रामादाहृत्य वाश्नीयादष्टौ ग्रासान् वने वसन्" "एकैकं ग्रासमश्नीयात् त्र्यहाणि त्रीणि पूर्ववत्" इति च मनुः । "सायं द्वाविंशतिर्ग्रासाः प्रातः षड्विंशतिः स्मृताः । अयाचिते चतुर्विंशः परञ्चानशनं स्मृतम्" पराशरः । प्रायश्चित्ते ग्रासभोजनस्य परिसङ्ख्याङ्गत्वमुक्तं प्रा० त० "भोजनस्य रागप्राप्तत्वात् नाप्राप्तप्रापको विधिः । सचाहरहः सन्ध्यामुपासीत इत्येवं रूपः । नापि तद्ग्रहणस्यानादिश्रुतत्वेन स्वायोगव्यवच्छेदमात्रफलको नियमविधिः । स च तत्तिथौ तत्तद्ग्रासान् भुञ्जीतेत्येवं रूपः । तथा च "स्वरुच्या क्रियमाणे च यत्रावश्यं क्रिया क्वचित् । नोच्यते नियमः सोऽत्र ऋतावभिगमो यथा" । तथात्वे च पितृमरणादावपि भोजनं प्रसज्येत हविष्यान्नभोजनव्रतादावपि उपवासाभाव एव सम्पद्येत तद्ग्रहणसमकालनियान्यभक्षणेऽपि न दोषः स्यात् । तस्मादगत्या "श्रुतार्थस्य परित्यागादश्रुतार्थस्य कल्पनात् । प्राप्तस्य बाधादित्येवं परिसंख्या त्रिदोषिका" इत्युक्तस्वार्थहान्यर्थान्तरकल्पनरागप्राप्तबाधरूपदोषत्रयदुष्टापि अन्ययोगव्यवच्छेदफलिका परिसंख्यैव युक्ता, सा च कृति भोजने तत्तत्तिथौ तत्तद्ग्रासानेव भुञ्जीत नान्यदित्येवं रूपा तस्मात्तदतिरिक्तभोजनाभावपरत्वेन उपवासेऽपि दोषाभावः । तदुक्तं भट्टपादैः "अन्यार्थं श्रूयमाणा च यान्यार्थप्रतिषेधिका । परिसंख्या तु सा ज्ञेया यथा प्रोक्षितभोजनम्" । अन्यथा प्राजापत्यव्रतेऽपि "त्र्यहमयाद्यायाचितमिति" "अयाचितन्तु मध्याह्ने चतुर्विंशन्तु शुद्धये" इति ब्रह्मपुराणोक्तायाचितस्यालाभे व्रतलोपापत्तिः स्यात्" ॥ १ग्रहणे छाद्यच्छादकयोः २स्पर्शे । "छादको भास्करस्येन्दुरधःस्थो घनवद्भवेत् । भूच्छायां प्राङ्मुखश्चन्द्रो विशत्यस्य भवेदसौ" इत्युपक्रम्य "यद्ग्राह्यमर्धितं तस्मिन् सकलं न्यूनमन्यथा । योगाद्भिन्नेन स्याच्छन्ने ग्राससम्भवः" इति । "स्फुटतिथ्यवसाने तु मध्यग्रहणमादिशेत् । स्थित्यर्द्धनाडिकाहीने ग्रासो मोक्षस्तु संयुते" सू०सि० "स्पष्टतिथ्यन्तकाले तुकारात् तत्पूर्व्वापरकालनिरासः । मध्यग्रहणं ग्रासोपचयसमाप्तिं कथयेत् । मध्यग्रहणसम्बन्धेन मध्यसूर्य्यचन्द्रानीतमध्यतिथ्यन्ते तत्सम्भव इति कस्यचिद् भ्रमस्तद्वारणार्थम् स्फुटेति । स्थित्यर्द्धघटिकाभिर्हीने तिथ्यन्ते ग्रासः स्पर्शः । संयुते स्थित्यर्धघटीभिर्युते तिथ्यन्ते काले मोक्षः । तुकारः स्पर्शमोक्षस्थित्यर्धाभ्यां स्पर्शमोक्षकालाविति विपर्यव्यवस्थापकः । अत्रोपपत्तिः । तिथ्यन्तकाले छाद्यच्छादकयोः पूर्व्वापरान्तराभावाद्योगे मण्डलस्यार्धो यावान् भवति

ततः पूर्व्वोग्रिमकालयोर्न्यून एवातोऽत्र मध्यग्रहण-कालः” रघुना० ।

**ग्रासशल्य** न० ग्रासे शल्यम् । ग्रासस्थिते मत्स्यादिकण्टक-रूपे शल्ये तदुद्धारोपायः सुश्रुते दर्शितोयथा “ग्रासशल्ये तु कण्ठासक्ते निःशङ्कमनवबुद्धस्कन्धे मुष्टि-नाभिहन्यात् स्नेहं मद्यं पानीयं वा पाययेत्” ।

**ग्राह** पु० ग्रह—जलचरे ण । (हाँगोर) ख्याते जलचरभेदे अमरः “सन्निमज्जज्जगदिदं गम्भीरे कालसागरे । जरा-मृत्युमहाग्राहे न कश्चिदवबुध्यते” भा० शा० २८ अ० । “जग्राहाजगरो ग्राहोभुजयोरुभयोर्बलात्” भा० व० १७८अ० “तस्माद् ग्राहाद्विमुच्यते” मनुः । भावे घञ् । १ग्रहणे २आग्रहे निर्बन्धे च । “मूढग्राहेणात्मनोयत् पीडया क्रियते तपः” गीता । “मूढग्राहेण अविवेककृतेन दुराग्रहेण” श्रीधरः । ४आदाने हस्तव्यापारे ५स्वीकारे जलचरभिन्नेऽपि कर्त्तरि वेदे ण । ६गृहीतरि त्रि० “अध्वर्युं यजमानं वा ग्राहो विन्दति” शत०ब्रा० ३।५।३।२५। क्वचित् कर्मणि उपपदे अण् । तत्तत्कर्म ग्राहके “पार्ष्णिग्राहस्तु पृष्ठतः” अमरः । “ऋणञ्च ग्राह ऋणं दाप्यः” याज्ञ० ।

**ग्राहक** पु० ग्रह—ण्वुल् । १श्येनपक्षिणि २विषवैद्ये च । ३गृहीतरि त्रि० । ग्रह—णिच्—ण्वुल् । ४ग्राहके विक्रेन्द्रियादौ “ग्राहकैर्गृह्यते चौरो लोप्त्रेणाथ पदेन वा” याज्ञ० “यथास्य ग्राहकाण्येषां शब्दादीनामि-मानि तु । इन्द्रियाणि सदा देही धारयन्निव तप्यते” भा० वन० २१०अ० । ५सितावरशाके राजनि० ।

**ग्राहिन्** पु० ग्रह—णिनि । १कपित्थे शब्दच० । २मलबन्ध-कारके, (धारक) त्रि० वैद्यकम् । “कषायानुरसं ग्राहि स्निग्धं मेधाबलावहम्” भावप्र० दाडिमफलगुणोक्तौ । ३ग्राहके, “व्यालग्राही यथा व्यालान् बलादुद्धरते बिलात्” काशीख० । “पल्लवग्राहि पाण्डित्यम्” उद्भटः । स्त्रियां ङीप् । सा च ४प्रतिकूलायाम् । “मा स्म भूर्ग्राहिणी भीरु ! “भक्तिः ग्राहिणी प्रतिकूला” जयम० । ५क्षुद्र-दुरालभायां स्त्री राजनि० । ६ताम्रमूलाख्ये (चोरह) रत्नमाला तयोर्मलबन्धकारित्वात्तथात्वम् । [राजनि० ।

**ग्राहिफल** पु० ग्राहि मलबन्धकं फलं यस्य । कपित्थवृक्षे ।

**ग्राहुक** त्रि० ग्रह—वा० उकञ् । ग्रहणशीले “उदावर्त्तः प्रजा ग्राहुकः स्यात्” तैत्ति० ६।४।१।१।

**ग्राह्य** त्रि० ग्रह—ण्यत् । १गृहीतुमुचिते, २ग्रहणयोग्ये, ३उपादेये, ४स्वीकार्य्ये, ५ज्ञेये च । “गन्धं द्विजातिभि-ग्राह्यं धर्म्मो यत्रोपरुध्यते” मनुः । “अस्मिंस्तु किल संमर्दे ग्राह्यम् विविधमायुधम्” भा०द्रो०११२ अ० । “अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्म्मणः” स्मृतिः “विप्राद्यपहृतं ग्राह्यम्” मनुः । “चक्षुर्ग्राह्यं भवे-द्रूपम्” भाषा० । ६प्रतिबध्यज्ञाने प्रकारीभूतधर्म्मे यथा ह्रदोवह्न्यभाववानिति ज्ञानस्य प्रतिबध्यं ह्रदो वह्निमानितिज्ञानं तत्र प्रकारीभूतो वह्निः ।

**ग्रीवा** स्त्री गिरत्यनया गॄ—वनिप् नि० । कन्धरायाम् “ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः” शकु० । तन्मानादिकमुक्तं सुश्रुते यथा “चतुरङ्गुलानि मेहनवदनान्तरनासाकर्णललाटग्रीवो-च्छ्रायदृष्ट्यन्तराणि । द्वादशाङ्गुलानि भगविस्तारमेहन-नाभिहृदयग्रीवास्तनान्तरमुखायाममणिबन्धप्रकोष्ठस्थौ-ल्यानि । चतुर्विंशतिविस्तारपरिणाहं मुखग्रीवम्” सुश्रु० । “ग्रीवाग्रसंसक्तयुगैस्तुरङ्गैः” माघः । “पाद-योर्दाढिकायाञ्च ग्रीवायां वृषणेषु च” मनुः । “प्राग्-ग्रीवमुत्तरलोम” आश्व०गृ० १।१४।२। “इदमहं रक्षसां ग्रीवा अपि कृन्तामि” यजु० ५।२२। दशग्रीवः कम्बु-ग्रीवः इत्यादि । [तस्य गोत्रापत्ये पुंस्त्री स्त्रियां ङीष् ।

**ग्रीवाक्ष** पु० ऋषिभेदे तस्य गोत्रापत्यं शिवा० अण् । ग्रैवाक्ष

**ग्रीवाघण्टा** स्त्री ७त० । ग्रीवास्थितघण्टायां त्रिका० ।

**ग्रीवाबिल** न० ६त० । ग्रीवान्तर्गते गर्त्तभेदे त्रिका० ।

**ग्रीविन्** पुंस्त्री० दीर्घा ग्रीवाऽस्त्यस्य वा० इनि टिलोपः । १उष्ट्रे जटाधरः स्त्रियां ङीष् । २दीर्घग्रीवायुक्ते त्रि० ।

**ग्रीष्म** पु० ग्रसते रसान् ग्रस—मनिन् । ज्यैष्ठाषाढमास-द्वयात्मके १ऋतुभेदे । “ग्रीष्मे तीव्रकरोभानुर्न हेमन्ते तथाविधः” सूर्य्यसि० । “निहर्त्तुमिच्छोर्वनितासखस्य तस्यात्मभवि ग्रीष्मसुखे बभूव” रघुः । “अनेन विधिना श्राद्धं त्रिरब्दस्येह निर्वपेत् । हेमन्तग्रीष्मवर्षासु-पाञ्चयज्ञिकमन्वहम्” “ग्रीष्मे पञ्चतपास्तु स्यात् वर्षास्व-भ्रावकाशिकः” मनुः । स्वार्थे अण् । ग्रैष्म तत्रार्थे तस्ये-दमण् । तत्सम्बन्धिनि त्रि० “शुक्रश्च शुचिश्च ग्रैष्मावृतू” यजु०१।६। “ग्रैष्मौ ग्रैष्मसम्बन्धिनौ ऋतू ऋत्ववयवौ” वेददी० । अतोऽस्य यथा चान्द्रमासात्मकता तथर्तु-शब्दे १४२७ पृ० दर्शिता । सौरत्वं तु ज्योतिर्गण-नामात्रोपयोगित्वेन ज्योतिषे व्यवह्रियते तदपि तत्रैव शब्दे दर्शितम् । सुश्रुतोक्तग्रीष्मगुणादिकं ऋतुशब्दे दर्शितम् ।

ग्रीष्मे सूर्यकिरणस्य तीव्रत्वे कारणम् सू० सि०उक्तं यथा "मेषादौ देवभागस्थे देवानां याति दर्शनम्। असुराणां तुलादौ तु सूर्यस्तद्भागसञ्चरः" सू०।

"जम्बुद्वीपलवणसमुद्रसन्धौ परिधिवृत्तं भूगोलमध्ये तन्मस्तके चाकाशे वृत्तं विषुवद्वृत्तं तत्र क्रान्तिवृत्तं षड्भान्तरेण स्थानद्वये लग्नं तन्मेषतुलास्थानं प्रवहवायुना विषुवद्वृत्तमार्गे भ्रमति मेषस्थानात् कर्कादिस्थानं विषुवद्वृत्ताच्चतुर्विंशत्यंशान्तरे उत्तरतः, मकरादिस्थानं विषुवद्वृत्ताच्चतुर्विंशत्यंशान्तरे दक्षिणतः, तत् स्वस्थाने प्रवहवायुना भ्रमति। एवं क्रान्तिवृत्तप्रदेशाः स्वस्वस्थाने प्रवहवायुना भ्रमन्ति। तत्र मेषादौ देवभागस्थः "जम्बुद्वीपं च देवानां देवासुरविभागकृदिति" पूर्वोक्तेः। तत्सम्बद्धा मेषादिकन्याान्ता राशय उत्तरगोलः। ततस्थः सूर्यो मेषादौ मेषादिप्रदेशे देवानां मेरोरुत्तरायवर्तिनां दर्शनं षण्मासानन्तरं प्रथमदर्शनं याति गच्छति प्राप्नोतीत्यर्थः विषुवद्वृत्तस्य तत्क्षितिजत्वात्। एवं दैत्यानां मेरोर्दक्षिणाग्रवर्तिनामित्यसुराणामित्युक्तेनैवोक्तम्। तद्भागसञ्चरो दैत्यभागे समुद्रादिदक्षिणविभागस्थस्तुलादिमीनान्ता राशयो दक्षिणगोलस्तत्र सञ्चरो गमनं यस्येत्येताहृशः सूर्यस्तुलादिप्रदेशे तुकाराद्दर्शनानन्तरं प्रथमदर्शनं प्राप्नोतीत्यर्थः तेषामपि विषुवद्वृत्तक्षितिजत्वात्। अथ प्रसङ्गाद्ग्रीष्मे तीव्रकरः इत्याद्यर्थोक्तप्रश्नस्योत्तरमाह" रङ्गना०।

"अत्यासन्नतया तेन ग्रीष्मे तीव्रकरा रवेः। देवभागेऽसुराणां तु हेमन्ते मन्दताऽन्यथा" सू० सि०।

"तेन—उत्तरदक्षिणगोलयोः सूर्यस्योत्तरदक्षिणसञ्चारक्रूपकारणेनेत्यर्थः। देवभागे जम्बुद्वीपे अत्यासन्नतया सूर्यस्यात्यन्तनिकटस्थत्वेन ग्रीष्मे ग्रीष्मर्तौ सूर्यस्य तेजोगोलकस्य किरणास्तीक्ष्णा अत्युष्णाः, असुराणां देवभाग इत्यस्यापकृष्टतया भाग इत्यस्य समन्वयाद्दैत्यानां भागे समुद्रादिदक्षिणप्रदेशे हेमन्ते हेमन्तर्तौ तुकारात् अन्यथा सूर्यस्य दूरस्थत्वेन मन्दता किरणानामत्युष्णताभावः। देवभागे हेमन्तर्तौ कराणां मन्दता। अतएव तत्र शीताधिक्यं च। तथाच देवभागे दक्षिणगोले सूर्यस्य दूरस्थत्वमुत्तरगोले निकटस्थत्वं मध्याह्ने नतांशानां क्रमेणाधिकाल्पत्वादिति भावः" र० ना०।

२तत्कालभवे ऊष्मणि पु० ३तद्वति त्रि० मेदि०

**ग्रीष्मजा** स्त्री ग्रीष्मे जायते जन—ड। (जोया आता) १नवल्याम् २नवमल्लिकायाञ्च शब्दच०। ३ग्रीष्मजातमात्रे त्रि०

**ग्रीष्मधान्य** न० ग्रीष्मे जातं तत्कालभवं धान्यम्। धान्यभेदे (बोरो) "ग्रीष्मधान्यजननोऽत्र राघवः" ह०स०८अ०। वर्षभेदफलोक्तौ [राजनि०।

**ग्रीष्मपुष्पी** स्त्री ग्रीष्मे पुष्पं यस्याः ङीप्। कदम्बपुष्पवृक्षे।

**ग्रीष्मभवा** स्त्री ग्रीष्मे भवति भू—अच्। १नवमल्लिकायाम् रत्नमाला। २ग्रीष्मजातमात्रे त्रि०। [स्वार्थे क तत्रार्थे।

**ग्रीष्मसुन्दर** पु० ७त०। (गिमः) शाकभेदे। राजनि०।

**ग्रीष्महास** न० ग्रीष्मे हासोविकाशोऽस्य। इन्द्रतूले। (वुडिरसुता) तस्य वियति ग्रीष्मे उड्डीयमानत्वात् इन्द्रतूलतत्त्वत्वात्तथात्वम्।

**ग्रीष्मी** स्त्री ग्रीष्मः कालः कारणत्वेनास्त्यस्य अच् गौरा० ङीष्। नवमल्लिकायां राजनि०।

**ग्रीष्मोद्भवा** स्त्री ग्रीष्मे काले उद्भवति उद्+भू—अच्। १नवमल्लिकायां राजनि० २ग्रीष्मजातमात्रे त्रि०।

**ग्रुच** चौर्ये गतौ च भ्वा० पर०सक० सेट्। ग्रोचति इरित् अग्रुचत् अग्रोचीत्। जुग्रोच। उदित् ग्रुचित्वा० ग्रक्त्वा। क्त्वो वेट्कत्वात् निष्ठायां नेट् ग्रुक्तः।

**ग्रैव** त्रि० ग्रीवायां भवः शरीरावयवत्वात् यति प्राप्ते "ग्रीवाभ्योऽण् च" पा० अण्। ग्रीवाभवे "नाक्षसत् करिणां ग्रैवं त्रिपदीच्छेदिनामपि" रघुः।

**ग्रैवेय** त्रि०ग्रीवायां भवः "ग्रीवाभ्योऽण् च"पा०चात् ढञ्। ग्रीवाभवे "सरत्नासक्तमातङ्गग्रैवेयस्फुरितत्विषाम्"रघुः।

**ग्रैवेयक** न० ग्रीवायां बद्धः अलङ्कारः "कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु" पा० ढकञ्। ग्रीवाबद्धे अलङ्कारभेदे (कण्ठी) "अस्माकं सखि! वाससी न रुचिरे ग्रैवेयकं नोज्ज्वलम्" सा० द०।

**ग्रैव्य** त्रि० ग्रीवायां भवः वेदे ष्यञ्। ग्रीवाभवे। "अपचयाः सप्ततिः संयन्ति ग्रैव्या अभि" अथ० ६।२५।२।

**ग्रैष्मी** स्त्री ग्रीष्मे ऋतौ भवः पक्षे ऋत्वण् ङीप्। १नवमल्लिकायाम् त्रिका०२ग्रीष्मर्तुसम्बन्धिनि त्रि० ग्रीष्म अण्। तस्येदम् उत्सा० अण्। ३जघ्मसम्बन्धिनि त्रि० उभयतः स्त्रियां ङीप्।

**ग्रैष्मक** त्रि० ग्रीष्मे ऋतौ भवः "ग्रीष्मवसन्ताभ्यामन्यतरस्याम्" पा० पक्षे वुञ्। ग्रीष्मर्तुभवे "ग्रैष्मकधान्यं कुरुते समर्थमुभयोपयोग्यञ्च" ह०स०४अ० "कुरुते पुष्पाणि च ग्रैष्मकम्" इत्या०। उभयत्र ग्रैष्मिकमित्यपपाठः भवार्थे ठञोऽविधानात् तदधीते वेदेत्यधिकारे एव वसन्ता० ठञो विधानात् भवार्थे वुञोविधानाच्च।

**ग्रैष्मिक** त्रि० ग्रीष्मधर्मं वेद तत्प्रतिपादकग्रन्थमधीते वा वसन्ता० ठञ्। १ग्रीष्मधर्मवेत्तरि २तद्ग्रन्थाध्यायिनि च

**ग्लपन** न० ग्लै—णिच् पुक् ह्रस्वः भावे ल्युट्। १ग्लानिकरणे "तद्धि शद्यालाघवग्लपनक्लमविचारणकरम्" सुश्रुतः। कर्त्तरि ल्यु। २ग्लानिकारके त्रि०।

**ग्लस** भक्षणे भ्वा० आत्म० सक० सेट्। ग्लसते अग्लसिष्ट। जग्लसे। उदित् ग्लसित्वा-ग्लस्त्वा। ग्लस्तः।

**ग्लस्त** त्रि० ग्लस—क्त क्त्वावेट्कत्वात् नेट्। भक्षिते अमरः

**ग्लह** आदाने वा चुरा० उभ० पक्षे भ्वा० सक० वेट्। ग्लाहयति ते ग्लहति अजिग्लहत् त अग्लहीत् अग्लाक्षीत्। णिचोऽभावे गाढा। गाढः इत्यादि आदानं च द्यूतक्रीडार्थं पणादानम्। "तदेषां ग्लहमानानां ध्रुवौ जयपराजयौ" भा० क० ८७ अ०। "दुर्य्योधनो ग्लहते पाण्डवेन" भा० व० ६१अ० "शकुने! हन्त दिव्यामो ग्लहमानाः परस्परम्" भा० स० ५६ अ०। सर्व्वत्र आर्षम् आत्मनेपदम्। "इमाश्चेत् पूर्व्वं कितवोऽग्लहीष्यत्" भा० स० ६८ अ०।

**ग्लह** पु० ग्रह—ग्लह—वा "अक्षेषु ग्लहः" पा० कर्मणि नि०। देवनविषये पणरूपे ग्राह्ये वस्तुनि (खुड़)(बाजि) ख्याते पदार्थे "व्यात्युक्षीमभिसरणग्लहामदीव्यन्" माघः। "अक्षग्लहः सोऽभिभवेत् परं नः" भा० स० ५८अ०। "महाधनं ग्लहं त्वेकं शृणु मे भरतर्षभ!" ७४ अ०। सभिकस्य द्यूतविषये ग्लहविभागभेदः याज्ञ० दर्शितो यथा "ग्लहे शतिकवृद्धेस्तु सभिकः पञ्चकम् शतम्। गृह्णीयात् धूर्त्तकितवादितरात् दशकं शतम्"।

**ग्लान** त्रि० ग्लै—कर्त्तरि क्त। १रोगादिना क्षीणदेहादौ दीने अमरः। भावे क्त। २दैन्ये न०

**ग्लानि** स्त्री ग्लै—भावे नि। १दौर्बल्ये २स्वकार्य्याक्षमतायाम् हेम०। "स्वकर्मस्थोनिवर्त्तन्ते मनश्च ग्लानिमृच्छति" मनुः। "रत्यायासमनस्तापक्षुत्पिपासादिसम्भवा। ग्लानिर्निष्प्राणता कम्पकार्श्यानुत्साहतादिकृत्" सा० द० उक्ते ३व्यभिचारिगुणभेदे यथा
"किसलयमिव मुग्धं बन्धनाद्विप्रलूनं हृदयकुसुमशोषी दारुणो दीर्घशोकः। ग्लपयति परिपाण्डु क्षाममस्याः शरीरं शरदिज इव घर्मः केतकीपत्रगर्भम्" सा० द०।

**ग्लाव** पु० दल्भमित्रयोरपत्ये छान्दोग्यायण ऋषिभेदे। "अथातः शौव उद्गीथ स्तद्ध वकोदाल्भ्यो ग्लावो वा मैत्रेयः स्वाध्यायमुद्ववाज" छा० उप०।

**ग्लाविन्** त्रि० ग्लै बा० विनि। अकृते "पश्चादोषाय ग्लाविनम्" यजु० ३०।१७। "ग्लाविनमकृतम्" वेददी०।

**ग्लास्नु** त्रि० ग्लै—स्नु। ग्लानियुक्ते अमरः। "वसन् माल्यवति ग्लास्नू रामोजिष्णु रधृष्णुवत्" भट्टिः।

**ग्लुच** चौर्य्ये गतौ च भ्वा० पर० सक० सेट्। ग्लोचति इरित् अग्लुचत्-अग्लोचीत्। जुग्लोच उदित् क्त्वा वेट्। ग्लुचित्वा ग्लुक्त्वा क्तो वेट्कत्वात् ग्लुक्तः। "बहूनामग्लुचत् प्राणानग्लोचीच्च रणे यशः" भट्टिः।

**ग्लुचुक** पु० ऋषिभेदे तस्य गोत्रापत्यम् "प्राचामवृद्धात् फिन् बहुलम्" पा० फिन्। ग्लुचुकायनि तद्गोत्रापत्ये पुंस्त्री० स्त्रियां वा ङीप्। ग्लुचुकायनिभक्तिः देश्योऽस्य "गोत्रक्षत्रियाख्येभ्यो बहुलम्" पा० वुञ्। ग्लौचुकायनक तत्सेवके त्रि०।

**ग्लुञ्च** चौर्य्ये गतौ च भ्वा० पर० सक० सेट्। ग्लुञ्चति इरित् अग्लुचत् अग्लुञ्चीत् जुग्लुञ्च। जुग्लुञ्च(ञ्चु)तुः। उदित् ग्लुञ्चित्वा ग्लुक्त्वा। क्तो वेट्कत्वात् ग्लुक्तः।

**ग्लेप** दैन्ये अक० गतौ चाले च सक० भ्वा० आ० सेट्। ग्लेपते अग्लेपिष्ट जिग्लेपे ऋदित् अजिग्लेपत् त।

**ग्लेव** सेवने भ्वा० आ० सक० सेट्। ग्लेवते अग्लेविष्ट। जिग्लेवे ऋदित् अजिग्लेवत् त।

**ग्लेष** अन्वेषणे भ्वा० आ० सक० सेट्। ग्लेषते अग्लेषिष्ट जिग्लेषे। ऋदित्। अजिग्लेषत्।

**ग्लै** क्षये हर्षक्षये च भ्वा० पर० अक० अनिट्। ग्लायति अग्लासीत्। जग्लौ जग्लिथ—जग्लाथ। ग्लानिः ग्लास्नुः। ग्लानः। ग्लेयम्। णिचि ग्लपयति ते अजिग्लपत् त। ग्लानिशब्दे उदा०। "मनो ग्लपयते तीव्रम् विषं गन्धेन सर्व्वशः" भा० आनु० ४६६४ श्लो०। "ग्लपयति यथा शशाङ्कम् न तथा हि कुमुद्वतीं दिवसः" शकु०। "पतङ्गैर्ग्लपितावहम्" भट्टिः। "बालस्य लक्ष्मीं ग्लपयन्निमन्दोः" कुमा०। "यस्य वैराणि कोपश्च सहृद्दुःखमजिग्लपः" भट्टिः।

**ग्लौ** पु० "ग्लाह्योर्डौः" उणा० ग्लै—डौ। १चन्द्रे तस्य प्रतिमासं कृष्णपक्षे क्षीयमाणत्वात्तथात्वम् तन्नामनामके २कर्पूरे च अमरः। "कल्मेट् कविग्लौश्च रिपौ क्षतौ ग्लौश्चन्मेट् सुराराश्च मदे च सर्व्वे" कुलु० चि०। ३हृदयनाड्याञ्च "ग्लौभिर्गुल्मान् हिराभिः स्रवन्तीः" यजु० २५।८। "ग्लायन्ति श्राम्यन्ति ग्लावो हृदयनाड्यः" वेददी०।

**इति वाचस्पत्ये गकारादि शब्दार्थनिरूपणम्।**

# घ

**घ** घकारस्योच्चारणं स्थानं जिह्वामूलं "जिह्वामूले तु कुः प्रोक्तः" शिक्षोक्तेः "अकुहविसर्जनीयानां कण्ठः" इत्युक्तिस्तु जिह्वामूलरूपकण्ठपरा। अस्योच्चारणे आभ्यन्तरः प्रयत्नः स्पर्शः जिह्वामूलस्पर्शनेन तदुच्चारणात् अतएवास्य स्पर्शवर्णत्वम्। बाह्यप्रयत्नास्तु घोषनादसंवारमहाप्राणाः सि॰कौ॰मूलं दृश्यम्। तस्य तन्त्रे वाचकशब्दा उक्ता यथा "घः खड्गी घुर्घुरा मण्डी सुखडीशस्त्रिपुरान्तकः। वायुः शिवोत्तमः सत्यकिङ्किणी घोरनादकः। मरीचिर्वरुणो मेधा कालरूपी च दाम्भिकः। लम्बोदरी ज्वालमाला नन्देशो हननं ध्वनिः। त्रैलोक्यविद्या संहर्त्ता कामाख्या मनवा मघा" वर्णोद्धारतन्त्रम् अस्य ध्येयरूपं यथा "मालतीपुष्पवर्णाभां षड्भुजां रक्तलोचनाम्। शुक्लाम्बरपरीधानां शुक्लमाल्यविभूषिताम्। वदा चरेत्सखीं रम्यां लोचनत्रयराजिताम्। एवं ध्यात्वा घकारन्तु तन्मन्त्रं दशधा जपेत्"। अस्य मातृकान्यासे दक्षिणकराङ्गुलीषु न्यस्यता।

**घ** पु॰ घट–बा॰ ड। १घटायां २घर्घरशब्दे च मेदि॰।

**घकार** पु॰ घ–स्वरूपे कार। घस्वरूपे वर्णे "एवं ध्यात्वा घकारन्तु" वर्णोद्धारत॰। [जघन्थ।

**घग्घ** हसने भ्वा॰ पर॰ अक॰ सेट्। घग्घति अघग्घीत्।

**घट** चेष्टायां भ्वा॰ आत्म॰ अक॰ सेट् घटादि। घटते अघटिष्ट जघटे घटमानः। षित् अङ् घटा। "घटस्व परमा यत्नाय शुद्ध त्वमपि सायकान्" भा॰ व॰ १५८१ श्लो॰। "कदाचित् तस्य दृढस्य घटमानस्य यत्नतः" १०४७२श्लो॰। "प्रागेव मरणात्तस्माद् राज्यायैव घटामहे" १२८१ श्लो॰। "अङ्गदेन समं योद्धुमघटिष्ट नरान्तकः" भट्टिः। णिच् योजने सक॰ मित्त्वात् ह्रस्वः घटयति। अजीघटत् त "अनेन मैत्री घटयिष्यतोविधेः" नैष॰। "अन्यथा घटयिष्यामि" शकु॰। "इत्थं नारीर्घटयितुमलं कामिभिः काममासुः" माघः।

उद्+घट–आवरणनिवारणे निरावरणकरणे। "द्वारे पुरस्तोद्घटितापिधाने" कुमा॰।

प्र+प्रारम्भे "ततः प्रजघटे युद्धम्" भट्टिः।

वि+वियुक्तौ अक॰ "ततोविजघटे शैलैः" भट्टिः। "कार्यं छद्घाटितं क्वापि मध्ये विजघटे यतः" हितो॰। "विघटितास्तृणालताप्रत्ययः" प्रबो॰। णिच्–वियोजने सक॰ विघटयति ते।

सम्+ सम्यक्श्लेषे संयोगे अक॰। संघटते संयुज्यते इत्यर्थः णिच् संयोजने सक॰ संघटयति–संयोजयतीत्यर्थः।

**घट** हिंसे सक॰ संघाते अक॰ चु॰ उभ॰ सेट्। घाटयति-ते अजीघटत्-त। घाटा।

उद्+निरावरणे उद्घाटयति द्वारम् "उद्घाटिनी कुञ्चिका" हृच्छक॰। "उन्मादः स्वयमुद्घाटितेऽथ पिहिते सर्वकुलविनाशः" ह॰स॰ ५१अ॰।

**घट** दीप्तौ वा चु॰ उभ॰ पक्षे भ्वा॰ पर॰ अक॰ सेट्। घाटयति ते घटति। अजीघटत्-त अघाटीत् अघटीत्।

**घट** शब्दकरणे चुरा॰ उभ॰ अक॰ सेट् इदित्। घण्टयति-ते अजघण्टत् त। घण्टा निघण्टुः।

**घट** पु॰ घटते अच्। कम्बुग्रीवादिमति पृथुबुध्नोदराकारियुक्ते पदार्थे अमरः कुम्भतुल्यनिखलताहेतुत्वात् प्राणायामभेदे २कुम्भके। ३हस्तिकुम्भे च मेदि॰। "कुम्भस्तु द्रोणविंशतिः" कात्यायनोक्ते द्रोणविंशतिपरिमाणे इति शब्दक॰। तच्चिन्त्यम् कुम्भशब्दस्यैव तदर्थे परिभाषितत्वात् तदर्थकशब्दमात्रस्य तत्रापरिभाषितत्वाच्च। वैद्यकोक्तद्रोणपरिमाणार्थकतापि तत्रोक्ता चिन्त्या तत्र कुम्भशब्दस्यैव परिभाषितत्वात्। ४कुम्भराशौ "हरिः कीटघटेन च" ज्यो॰ त॰ पताकीवेधे

**घटक** त्रि॰ घटयति घट–णिच्–ण्वुल्। १योजके। तद्भेदाः "धावकोभावकश्चैव योजकश्चांशकस्तथा। दूषकः स्तावकश्चैव षडेते घटकाः स्मृताः" इत्युक्ताः। "घटकं ब्राह्मणं देवि! स्पर्शेषु यत्नतस्त्यजेत्" महिषमर्द्दिनीत॰तस्यास्पृश्यतोक्ता। योजकश्च वरकन्ययोर्विवाहे योजकः, वस्तुमात्रयोर्योजकश्चेति द्विधा।

२स्वविषयताव्यापकविषयताविशिष्टे "यः स्वार्थघटकार्थस्य स्वार्थान्वयिनि बोधने। अनुकूलोबहुव्रीहिः स तयोरथवादिमः" शब्द॰प्र॰। "साध्याभावाधिकरणत्वं च साध्यवत्ताग्रहविरोधितावदकसम्बन्धेनेति साध्याभावप्रतियोगित्वञ्च साध्यतावच्छेदकसम्बन्धेन इति च नव्यनैया॰। तस्य भावः त्व घटकत्वम् स्वभिन्नत्वस्वव्यापकत्वोभयसम्बन्धेन विषयताविशिष्टत्वं। भवति च वह्न्यभावे वह्नेर्घटकत्वम् वह्न्यभावज्ञानीयविषयताया वह्निविषयताव्याप्यत्वात्।

**घटकर्पर** पु० विक्रमादित्यसभ्ये नवरत्नान्तर्गते कविभेदे। "धन्वन्तरिःक्षपणकोऽमरसिंहशङ्कुर्वेतालभट्टघटकर्परकालिदासाः। ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य" ज्योतिर्विदाभरणम्। तत्कृतकाव्यञ्च नीतिसाराख्यं तन्नाम्ना प्रसिद्धमस्ति। तत्र "गिरौ कलापी गगने पयोदाः" इत्यादिकं "यथा करोतु नीतिज्ञो व्यवसायमितस्ततः। फलं पुनस्तदेव स्याद् यद्विधेर्मनसि स्थितम्" इत्यन्तम्। ६त०। २भग्नघटावयवभेदे (खावरा) "तस्मै वहेयमुदकं घटकर्परेण" नीतिसारः "घटकर्परतीक्ष्णाग्रः" पञ्चत०।

**घटकार** त्रि० घटं करोति कृ-अण् उप० स०। कुम्भकारे (कुमार) शिल्पिभेदे "घटकारपुरोहितावद्ग्राः" वृ०स० १६अ०। ण्वुल्। घटकारकोऽप्यत्र।

**घटकृत्** त्रि०घटं करोति कृ-क्विप्। कुम्भकारके "विहगमाल्यवणिग्जनघटकृच्छिलान्त्यजाश्विफलाः" वृ०स० १६अ०।

**घटग्रह** त्रि० घटं गृह्णाति कर्मण्युपपदेऽपि न अण् किन्तु "शक्तिलाङ्गलाङ्कुशतोमरयष्टिघटघटीधनुःषु ग्रहेरुपसंख्यानम्" वार्त्ति० अनुद्यमने अच्। कुम्भग्राहके। उद्यमने तु अण्। घटग्राह तत्रार्थे त्रि०

**घटज** पु० घटात् जायते जन-ड। कुम्भसम्भवे अगस्त्ये मुनौ। कुम्भयोनिशब्दे २११७ पृ० दृश्यम्। "किं बहूक्तेन घटज! काशी प्राप्नाय तेन वै" काशीख०२०अ०। घटजातादयोऽप्यत्र। [अच् ह्रस्वः। कुट्टन्यां त्रिका०।

**घटदासी** स्त्री घटयति नायकौ परस्परं योजयति घटि-

**घटन** न०घटि+ल्युट्। योजने संमेलने "अघटनघटनापटीयसी माया"वेदा०। "तप्तेन तप्तमयसा घटनाय योग्यम्"विभा०।

**घटना** स्त्री चु०घट-युच्। १संहतकरणे, २योजने ३मेलने, ४करिणां समूहे च अमरः। "वाच्यं सृष्टनिजपराक्रमघटनामालोक्य कालविद्भिः" वृ० स० ५१अ०। "प्रियजनघटनामाशु दुःशीलतां च" वृ० स० ५२अ०।

**घटराज** पु० घटेन योजनेन राजते राज-अच्। कुम्भकारा० कपालद्वययोजनात्तस्य जातत्वात्तथात्वम्।

**घटपर्य्यसन** न० ६त०। प्रायश्चित्ते पराङ्मुखस्य पतितस्य त्यागार्थं जीवतएव तस्य प्रेतकार्य्यार्थं च ज्ञातिभिः क्रियमाणे दास्याः पादेन कुम्भस्य निरुदककरणे तद्विधिः मनुना दर्शितो यथा

"पतितस्योदकं कार्य्यं सपिण्डैर्बान्धवैर्बहिः। निन्दितेऽहनि सायाह्ने ज्ञात्यृत्विग्गुरुसन्निधौ। दासी घटमपां पूर्णं पर्य्यस्येत् प्रेतवत् पदा। अहोरात्रमुपासीरन्नशौचं बान्धवैः सह। निवर्त्तेरंश्च तस्मात्तु सम्भाषणसहासने। दायाद्यस्य प्रदानञ्च यात्रा चैव हि लौकिकी। ज्येष्ठता च निवर्त्तेत ज्येष्ठावाप्यञ्च यद्धनम्। ज्येष्ठांशं प्राप्नुयाच्चास्य यवीयान् गुणतोऽधिकः" "पतितस्येति। महापातकिनो जीवतएव प्रेतस्योदकक्रिया वक्ष्यमाणरीत्या सपिण्डैः समानोदकैश्च ग्रामाद्बहिर्गत्वा ज्ञात्यृत्विग्गुरुसन्निधाने रिक्तायां नवम्यादौ तिथौ दिनान्ते कर्त्तव्या। दासीति। सपिण्डसमानोदकप्रयुक्ता दासी उदकपूर्णं घटं प्रेतवदिति दक्षिणाभिमुखीभूय पादेन क्षिपेत् यथा स निरुदको भवति तदनु ते सपिण्डाः समानोदकैः सहाहोरात्रमशौचमाचरेयुः। निवर्त्तेरन्निति। तस्मात् पतितात् सपिण्डादीनां सम्भाषणमेकासनोपवेशनं च तस्मै रिक्थदानं सांवत्सरिकादौ निमन्त्रणादिरूपो लोकव्यवहारः एतानि निवर्त्तेरन्। ज्येष्ठतेति। ज्येष्ठस्य यत् प्रत्युत्थानादिकं कार्य्यं तत्तस्य न कार्य्यं ज्येष्ठलभ्यं च तस्य विंशोद्धारादिकं धनं न देयं यद्यपि रिक्थप्रदानप्रतिषेधादेवाप्युद्धारप्रतिषेधः सिद्धः तथापि यवीयसस्तत्प्राप्त्यर्थमनूद्यते तस्यैव ज्येष्ठस्य सम्बन्धि धनं सोद्धारांशं तदनुजो गुणाधिको लभते" कुल्लू०।

विस्तरस्तु मिताक्षरायामुक्तो यथा

"यस्त्वेतत्यादेतत् चिकीर्षति तस्य किं कार्य्यमित्याह "दासीकुम्भं बहिर्ग्रामान्निनयेरन् स्वबान्धवाः। पतितस्य बहिः कुर्युः सर्वकार्य्येषु चैव तम्" या०। "जीवतएव पतितस्य स्वज्ञातयो बान्धवाः मातृपक्षाश्च ते सर्वे सन्निपत्य दासी प्रेष्या तया सपिण्डादिप्रेरितयाऽऽनीतं कुम्भमपाम्पूर्णं ग्रामाद्बहिर्निनयेयुः। एतच्चतुर्थ्यादिरिक्ततिथिष्वह्नः पञ्चमे भागे गुर्वादिसन्निधौ कार्यम् "पतितस्योदकङ्कार्यं सपिण्डैर्बान्धवैःसह। निन्दितेऽहनि सायाह्ने ज्ञात्यृत्विग्गुरुसन्निधाविति" मनुस्मरणात्। अथ वा दास्येव सपिण्डादिप्रयुक्ता निनयेत् यथाह मनुः "दासी घटमपाम्पूर्णम्पर्यस्येत् प्रेतवत्तदा। अहोरात्रमुपासीरन्नशौचं बान्धवैः सहेति"। प्रेतवदिति दक्षिणामुखापसव्यत्वयोः प्राप्त्यर्थम्। तच्च निनयनमुदकपिण्डदानादिप्रेतक्रियोत्तरकालं द्रष्टव्यम्। "तस्य विद्यागुरुयोनिसम्बन्धांश्च सन्निपात्य सर्वाण्युदकादीनि प्रेतकर्म्माणि कुर्युः पात्रञ्चास्य विपर्य्यस्येयुर्दासः कर्म्मकरो वावकरात्पात्रमानीय दासी घटं पूरयित्वा दक्षिणामुखी पदा विपर्य-

स्येदनुदकमुदकं करोति नामग्राहान्तं सर्वे त्वालभेरन् प्राचीनावीतिनोमुक्तशिखा विद्यागुरवो योनिसम्बन्धाश्च वीच्चेरन्नपउपस्पृश्य ग्राममविशेयुरिति" गौतमस्मरणात्। स्वयञ्च त्यागोत्यदि बन्धुभिः प्रेर्य्यमाणोऽपि प्रायश्चित्तं न करोति तदा द्रष्टव्यः "तस्य गुरोर्बान्धवानां राज्ञश्च समक्षन्दोषानभिख्याप्यानुभाष्य पुनः पुनराचारं लभस्वेति स यद्येवमप्यनवस्थितमतिः स्यात्ततोऽस्य पात्रं विपर्य्यस्येदिति" शङ्खस्मरणात्। ततस्तं लब्धोदकम्पतितं सर्वकार्य्येषु सम्भाषणसहासनादिषु बहिःकुर्युर्वर्जयेयुः। तथा च मनुः "निवर्त्तेरंस्ततस्तस्य सम्भाषणसहासने। दायाद्यस्य प्रदानञ्च यात्रा चैव हि लौकिकी"। यदि स्नेहादिना सम्भाषणङ्करोति तदा प्रायश्चित्तं कार्य्यम्। "अत ऊर्द्ध्वन्तेन सह सम्भाष्य तिष्ठेदेकरात्रं जपन् सावित्रीमज्ञानपूर्व्वं ज्ञानपूर्व्वं त्रिरात्रमिति"। घटनिनयनादयोऽप्यत्र।

**घटप्रक्षेप** न० ६त०। "कृतप्रायश्चित्तेन महापुण्यजलाशये स्नानोत्तरं स्वपक्षसमीपे पुण्यजलपूर्णघटस्यापवर्जने तद्विधिः मिता० दर्शितो यथा "यदा तु बन्धुत्यागादन्यथा वा जातवैराग्यः प्रायश्चित्तं कुर्य्यात्तदा किं कार्य्यमित्याह "चरितव्रत आयाते निनयेरन्नवं घटम्। जुगुप्सेरन्न चाप्येनं संवसेयुश्च सर्व्वशः" या०। "कृतप्रायश्चित्ते बन्धुसमीपमुपनरायाते तत्सपिण्डाद्यास्तेन सहिता नवमनुपहतं घटमुदकपूर्णं निनयेयुः। एतच्च निनयनं पुण्यह्रदादिस्नानोत्तरकालन्द्रष्टव्यम्। "प्रायश्चित्ते तु चरिते पूर्णकुम्भमपां नवम्। तेनैव सार्द्धमास्येयुः स्नात्वा पुण्यजलाशये" इति मनुस्मरणात्। गौतमेन तु विशेष उक्तः "यस्तु प्रायश्चित्तेन शुध्येत्तस्मिन् शुद्धे शातकुम्भमयम्पात्रं पुण्यतमाद्ध्रदात्पूरयित्वा स्रवन्तीभ्यो वा त एनमप उपस्पर्शयेयुरथास्मै तत्पात्रन्दद्युस्तत्सम्प्रतिगृह्य जपेत् शान्ता द्यौः शान्ता पृथिवी शान्तं शिवमन्तरिक्षं योरोचनस्तमिह गृह्णामीत्येतैर्यजुर्भिः पावमानीभिस्तरत्समन्दीभिः कूष्माण्डैश्चाज्यं जुहुयाद्धिरण्यं दद्याद्गाञ्चाचार्य्याय यस्य तु प्राणान्तिकम्प्रायश्चित्तं स मृतः शुध्येदेतदेव शान्त्युदकं सर्व्वेषूपपातकेष्विति तत एनङ्कृतप्रायश्चित्तं नैव कुत्सयेयुस्तथा सर्व्वकार्य्येषु क्रयविक्रयादिषु तेन सह संव्यवहरेयुः"। "प्रकृतएव चरितव्रतविधौ विशेषमाह "घटेऽपवर्जिते ज्ञातिमध्यस्थो यवसं गवाम्। प्रदद्यात् प्रथमं गोभिः सत्कृतस्य हि सत्क्रिया" या०। मिताक्ष० अत्रेदं बोध्यम् घटेऽपवर्जिते इत्यादि याज्ञ० वचनस्य प्रायश्चित्ते तु चरिते इत्यादि मनुवचनस्य च प्रकरणात् घटप्रक्षेपस्य पतितविषयकत्वावधारणे "स्वशिरसा यवसमादाय गोभ्योदद्यात्" इति हारीतवचनस्य गोग्रासमात्रदानप्रतिपादकत्वेन तस्य सर्व्वप्रायश्चित्तशेषत्वेनावधारणेऽपि "एवं हारीतयाज्ञवल्क्यवचनैकवाक्यतया वक्ष्यमाणमनुवचनद्वयमपि सामान्यप्रायश्चित्तोत्तरकर्त्तव्यतापरं न तु प्रकरणादसत्प्रतिग्रहमात्रपरं तस्मासत्प्रतिग्रहमात्रपरतया यत् कुल्लूकभट्टव्याख्यानं तत्प्रदर्शनमात्रम् एवं घटापवर्जनमपि न पतितमात्रविषयम् यथाह मनुः "उपवासकृशं तं तु गोव्रजात् पुनरागतम्। प्रणतं परिपृच्छेयुः साम्यं सौम्येच्छसीति किम्। सत्यमुक्त्वा तु विप्रेषु विकिरेत् यवसं गवाम्"। इत्यन्तेन प्रा० त० यदु घटापवर्जनस्यापि सर्व्वप्रायश्चित्तशेषतया व्यवस्थापितम् तच्चिन्त्यम् दर्शितहारीतवाक्ये "उपवासकृशमित्यादिमनुवाक्ये च घटापवर्जनस्यानुक्तेः पतितविषये च प्रागुक्तमनुयाज्ञवल्क्यवाक्ययोर्घटापवर्जनस्योक्तेः उभयस्यैकविषयत्वाभावात् ततश्च सर्व्वप्रायश्चित्ते केवलं गोग्रासदानमात्रं शेषकर्त्तव्यं पतितप्रायश्चित्ते तु घटापवर्जनरूपविशेषकार्य्यसहितगोग्रासदानमिति विषयविवेकसम्भवे मनुयाज्ञवल्क्यवचनसङ्कोचस्यायुक्तत्वात् किञ्च हारीतवचनस्य गोग्रासदानविषयत्वेन अवश्येऽपि याज्ञवल्क्यवाक्ये "घटेऽपवर्जिते इत्यनेन प्राप्तपतितविषयकघटापवर्जनमनूद्य गोग्रासमात्रविधायकत्वात् न सामान्यपरत्वं यद्विषये घटापवर्जनं विहितं तद्विषयेऽपि गोग्रासदानाधिक्यविधानार्थं तस्य प्रवृत्तेः घटापवर्जनं तु पतितविषयकं प्रकरणादवगम्यते। किञ्च पतितविषये दासीपदा घटप्रक्षेपपूर्व्वकं निरुदकघटकरणं घटपर्य्यसनशब्दे मन्वादिवाक्येन दर्शितम् तदुत्तरमेव मनुयाज्ञवल्क्याभ्यां घटापवर्जनं विहितमिति तस्य तद्विषयकत्वौचित्यात् न तु तत्सङ्कोचः इति। वस्तुतस्तु घटपर्य्यसनशब्दे दर्शितगौतमवाक्ये "एतदेव शान्त्युदकं सर्व्वेषूपपातकेषु" इत्युक्तेः शान्त्युदकग्रहणस्य सर्व्वोपपातकप्रायश्चित्तशेषत्वावधारणात् शान्त्युदकग्रहणस्य च पूर्णघटनिनयनपूर्वकत्वौचित्येन सर्व्वोपपातकप्रायश्चित्ते शान्त्युदकग्रहणार्थं घटनिनयनं कार्य्यमिति सुधीभिर्भाव्यमिति। घटापवर्जनघटनिनयनादयोऽप्यत्र।

**घटसम्भव** पु॰ सम्भवत्यस्मात् सम्+भू—अपादाने अप् घटः सम्भवोऽस्य । कुम्भसम्भवे अगस्त्ये घटोद्भवादयोऽप्यत्र

**घटसृञ्जय** पु॰ब॰व॰। दक्षिणस्थे जनपदभेदे "अथापरे जनपदा दक्षिणा भरतर्षभ!" इत्युपक्रमे "सूपकारास्तथावाश्च सनीपा घटसृञ्जयाः" जम्बूखण्डनिर्माणे भा॰भी॰९अ॰।

**घटा** स्त्री घट—भावे अङ् । १सघाते "यदगारघटाट्टकुट्टिमस्रवदिन्दूपलतुन्दिलापया" नैष॰। २घटनायां ३गोष्ठ्यां ४सभायाञ्च मेदि॰ ५करिणां युद्धादावेकत्र संघाते अमरः "आयाताश्च करिणां घटाशतैः" माघः । ६घटने योजने च अच् । ७तदर्थे पु॰ ।

**घटाटोप** पु॰ घटया आटोपः । आडम्बरे ।

**घटाभ** पु॰ हिरण्यकशिपुसेनापतौ असुरभेदे । "तत्रासीनं महाबाहुं हिरण्यकशिपुं प्रभुम् । उपासन्ति" इत्युपक्रमे "घटाभोविकटाभश्च संह्रादश्चेन्द्रतापनः" हरिवं॰ २३३ अ॰ । कुम्भाकारत्वात्तस्य तथात्वम् ।

**घटाल** त्रि॰ घटा घटनाऽस्त्यस्य निन्दिता सिध्मा॰ । "जटाघटाकटाकालाः क्षेपे" ग॰सू॰ लच् । निन्दितघटनायुक्ते । [ राजनि॰ ।

**घटालाबू** स्त्री घटइवालाबूः । कुम्भतुम्ब्याम् (गोललाउ)

**घटिक** न॰ घटेन तरति तरतीत्यधिकारे "नौद्व्यचष्ठन्" पा॰ ठन् । घटेन नद्यादितारिणि ।

**घटिका** स्त्री "गुर्वक्षराणांमुदितं च षष्ट्या पलं पलानां घटिका किलैका" इति ज्योतिर्विदाभरणोक्ते १षष्टिपलात्मके दण्डरूपे काले । घटयति विहितकार्य्यकरणाय घट—णिच्—ण्वुल् । २दण्डद्वयरूपे मुहूर्त्तात्मके काले । अल्पो घटः ङीप् ततः स्वार्थे क । ३अल्पे घटे । इवार्थे कन्। ४नितम्बे न॰शब्दच॰। "चतस्रो घटिकाः प्रातररुणोदय उच्यते । यतीनां स्नानकालोऽयं गङ्गाम्भःसदृशः स्मृतः । त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टयम् । नाडीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते" कालमा॰ ब्रह्मवै॰ । "व्रतोपवासस्नानादौ घटिकैका यदा भवेत् । उदये सा तिथिर्ग्राह्या श्राद्धादावस्तगामिनी" विष्णुधर्मो॰ । "अत्र घटिका मुहूर्त्तं श्राद्धयोग्यकालानुरोधादिति वक्ष्यते ब्रह्मवै॰ घटिकादण्डरूपा परवचने नाडीनामाद्यन्तचतुष्टयमित्यनुरोधात्" ति॰ त॰ रघु॰ । "त्रिंशत् कलार्क्षी घटिका क्षणः स्यात् नाडीद्वयं ते खगुणैर्दिनञ्च" सि॰ शि॰ "आर्क्षी भचक्रभ्रमस्य षष्टिअंशः घटिका" प्रमिता॰ ।

**घटिघट** पु॰ वध्या घटते घट—अच् संज्ञात्वात् ह्रस्वः । महादेवे तस्य कालरूपेण घटीवत् स्थितत्वात् तथात्वम् । "नमोऽघटाय घण्टाय नमो घटिघटाय च" हरिवं॰ २७८ अ॰ शिवस्तुतौ ।

**घटित** त्रि॰ घट-णिच्—क्त । १योजिते रचिते २स्वविषयताव्याप्यविषयताविशिष्टे भवति च वह्न्यभावः वह्निघटितः वह्न्यभावविषयताया वह्निविषयताव्याप्यत्वात्" "प्रतियोगिवैयधिकरण्यघटितव्यापकताया निवेशः" व्युत्पत्तिवादे गदाधरः । तस्य भावः त्व घटितत्व तद्भावे न॰ । विशिष्टान्तराघटितत्वं विशिष्टद्वयाघटितत्वम् इति च सामान्यनिरुक्तौ गदाधरः ।

**घटिन्** पु॰घट+तदाकारो ऽस्त्यस्य इनि १कुम्भराशौ "मतस्यौ घटी नृमिथुनं सगदं सवीणम्" ज्यो॰ तं॰ । तस्य कुम्भाकारत्वात् शिरसि तद्युक्तत्वाच्च तथात्वम् २कुम्भयुक्ते त्रि॰ स्त्रियां ङीप् ।

**घटिन्धम** त्रि॰ घटीं धमति ध्मा—खश् मुम् ह्रस्वश्च । मुखमारुतेन घटीवादके । [धायके ।

**घटिन्धय** त्रि॰ घटीं धयति धेट—खश् मुम् ह्रस्वश्च । कुम्भ-

**घटिल** त्रि॰ घटोऽस्त्यस्य पिच्छा॰ इलच् । कुम्भयुक्ते ।

**घटी** स्त्री घटः कालमानज्ञापकः सच्छिद्रः कुम्भः ज्ञापकतयाऽस्त्यस्याम् अच् गौरा॰ ङीष् । १दण्डात्मके काले । "गुर्व्वक्षरैः खेन्दुमितैरसुस्तैः । षड्भिः पलं तैर्घटिका खषड्भिः । स्याद्वा घटीषष्टिरहः खरामैः" सि॰ शि॰ । अल्पार्थे ङीप् । २क्षुद्रे कुम्भे ।

**घटीकार** स्त्री घटीं करोति अण् । कुम्भकारे शिल्पिभेदे ।

**घटीग्रह** त्रि॰ घटीं गृह्णाति ग्रह—अनुद्यमने घटग्रहवत् अच् । घटीग्राहको उद्यमेन तु अण् । घटीग्राह तदर्थे त्रि॰ ।

**घटीयन्त्र** न॰ षष्ट्याः दण्डरूपकालस्य ज्ञापकं यन्त्रम् । कालमानज्ञापके यन्त्रभेदे । (घडि) तत्र यन्त्रं नानाविधं सू॰ सि॰ रङ्गनाथयोर्दर्शितं तत्र दिवसे कालज्ञानस्य शङ्कुच्छायादियन्त्रैः साध्यत्वमुक्त्वा घटीयन्त्रादिकं तु अहर्निशतज्ज्ञानसाधनमिति घटीयन्त्रादिकमेवात्र तत्रोक्तं प्रदर्श्यते यथा

"अथ घटीयन्त्रादिभिश्चमत्कारियन्त्रैर्वा सर्वोपजीव्यं कालं सूक्ष्मं साधयेदिति कालसाधनमुपसंहरति"

"तोययन्त्रकपालाद्यैर्मयूरनरवानरैः । ससूत्ररेणुगर्भैश्च सम्यक् कालं प्रसाधयेत्" सू॰सि॰ ।

"जलयन्त्रं तत् कपालं च कपालाख्यं जलयन्त्रं वक्ष्यमाणं

तदाद्यं प्रथमं येषां तैर्यन्त्रैर्वालुकायन्त्रप्रभृतिभिः सा-
मेत्वटीयन्त्रैर्मयूरनरवानरैः । मयूराख्यं स्वयंवहयन्त्रं
निरपेक्षं नरयन्त्रं शङ्क्वाख्यं छायायन्त्रं पूर्वोद्दिष्टं
वानरयन्त्रं स्वयंवहं निरपेक्षमेतैः सूत्रवरेणुगर्भैः सूत्र-
सहिता रेणवो धूलयो गर्भे मध्ये येषां तैः सूत्रप्रोताः
षष्टिसङ्ख्याकाः सुहृटिता मयूरोदरस्था सूक्ष्मात् घटिका-
न्तरेण स्वत एव निःसरन्तीति लोकप्रसिद्धा तादृशैर्यन्त्रै-
रित्यर्थः । यद्वा सूत्राकारेण रेणवः सिकतांशा गर्भे
उदरे यस्यैतादृशं यन्त्रं वालुकायन्त्रं प्रसिद्धम् । तेन
सहितैर्मयूरादियन्त्रैर्मयूराद्युक्तयन्त्रैर्वालुकायन्त्रेण चेति
सिद्धोऽर्थः । चकारस्तोययन्त्रकपालाद्यैरित्यनेन समु-
च्चयार्थकः । कालं दिनगतादिकं सम्यक् सूक्ष्मं प्रसा-
धयेत् । प्रकर्षेण सूक्ष्मत्वे नातिसूक्ष्मत्वे नेत्यर्थः । जानी-
यादित्यर्थः । ननु मयूरादिस्वयंवहयन्त्राणि कथं साध्या-
नीत्यतस्तत्साधनप्रकारा बहवो दुर्गमाश्च सन्तीत्याह" र०ना०
"पारदाराम्बुसूत्राणि शुल्वतैलजलानि च । बीजानि
पांसवस्तेषु प्रयोगास्तेऽपि दुर्लभाः" सू० "तेषु मयूरादि-
यन्त्रेषु स्वयंवहार्थमेते प्रयोगाः प्रकर्षेण योज्याः । प्र-
कर्षस्तु यावदभिमतसिद्धेः । एते क इत्यत आह । पार-
दाराम्बुसूत्राणीति । पारदयुक्ता आराः । तथा च सि-
द्धान्तशिरोमणौ "लघुकाष्ठजमसमचक्रं समसुषिराराः समा-
न्तरा नेम्याम् । किञ्चिद्वक्रा योज्याः सुषिरस्यार्धे पृथक्
तासाम् । रसपूर्णे तच्चक्रं द्व्याधाराक्षस्थितं स्वयं भ्र-
मति" । (१) इति । अम्बु जलस्य प्रयोगः । सूत्राणि
सूत्रसाधनप्रयोगः । शुल्वं ताम्रम् । तैलजलानि
तैलयुक्तजलस्य प्रयोगः । चकारात् तयोः पृथक् प्रयो-
गोऽपि । तथा च सिद्धान्तशिरोमणौ "उत्कीर्य नेमि(२)
मथवा परितो मदनेन संलग्नम् । तदुपरि तालदलाद्यं
कृत्वा सुषिरे रसं क्षिपेत् तावत् । यावद्रसैकपार्श्वं क्षि-
प्तजलं नान्यतो याति । पिहितच्छिद्रं तदतश्चक्रं भ्र-
मति स्वयं जलाकृष्टम् ।(३) ताम्रादिमयस्याङ्कुशरूपनल-
स्य स्वपूर्णस्य । एकं कुण्डजलान्तर्द्वितीयमग्रं त्वधो-
मुखं च बहिः । युगपन्मुक्तं चेत् कं नलेन कुण्डाद्बहिः
पतति । नेम्यां बद्धा घटिकाश्चक्रं जलयन्त्रवत् तथा
धार्यम् । नलकप्रच्युतसलिलं पतति यथा तद्घटीमध्ये ।
भ्रमति ततस्तत् सततं पूर्णघटीभिः समाकृष्टम् । चक्र-
च्युतं तदुदकं कुण्डे याति प्रणालिकया" इति । बीजानि
केवलं तद्बीजप्रयोगाः । पांसवो धूलिप्रयोगास्ते युक्ताः ।

अविशदत्वात् प्रयोगेषु सुगमतरा इत्यर्थः। दुर्लभाः साधा-
रणत्वेन मनुष्यैः कर्तुमशक्या इत्यर्थः। अन्यथा प्रतिगृहं
स्वयंवहानां प्राचुर्यापत्तेः । इयं स्वयंवहविद्या समु-
द्रान्तर्निवासिजनैः फिरङ्गाख्यैः सम्यगभ्यस्तेति । कु-
हकविद्यात्वादत्र विस्ताराननुद्योग इति संक्षेपः । अथ
कपालाख्यं जलयन्त्रमाह" रङ्ग०।"ताम्रपात्रमधश्छिद्रं
न्यस्तं कुण्डेऽमलाम्भसि। षष्टिर्मज्जत्यहोरात्रे स्फुटं यन्त्रं
कपालकम्" सू० "यत् ताम्रघटितं पात्रमधश्छिद्रमधोभागे
छिद्रं यस्य तत् । अमलाम्भसि निर्मलं जलं विद्यते
यस्मिन् तादृशे कुण्डे हृहद्भाण्डे न्यस्तं धारितं सदहो-
रात्रे नाक्षत्राहोरात्रे षष्टिः षष्टिवारमेव न न्यूनाधिकं
मज्जति अधश्छिद्रमार्गेण जलागमनेन जलपूर्णतया
निमग्नं भवति । तत् कपालकं कपालमेव कपालकं
घटखण्डानां कपालपदवाच्यत्वात् घटाधस्तनार्धाकारं
यन्त्रं घटीयन्त्रं स्फुटं सूक्ष्मम् तद्घटनं तु । "शुल्वस्य
दिग्भिर्विहितं पलैर्यत् षडङ्गुलोच्चं द्विगुणायतास्यम् ।
तदम्भसा षष्टिपलैः प्रपूर्यं पात्रं घटार्धप्रतिमं घटी स्यात् ।
सत्र्यंशमाषत्रयनिर्मिता या हेम्नः शलाका चतुरङ्गुला
स्यात् । विद्धं तया प्राक्तनमत्र पात्रं प्रपूर्यते नाडिकया-
म्बभिस्तत्" इति व्यक्तम् । भगवता तु सूक्ष्मत्वमुक्तम् ।
अथ शङ्कुयन्त्रं दिवैव कालज्ञानार्थं नान्यदेत्याह"
रङ्ग० "नरयन्त्रं तथा साधु दिवा च विमले रवौ ।
छायासंसाधनैः प्रोक्तं कालसाधनमुत्तमम्" सू०सि० ।
रङ्गनाथ धृतसि०शि०वाक्यानि प्र०मि० व्याख्यातानि यथा
लघुदार्वित्यादि (१) ग्रन्थिकीलरहिते लघुदारुमये भ्रम-
सिद्धे चक्रे आराः । किंविशिष्टाः । समप्रमाणाः सम-
सुषिराः समतौल्याः समान्तरा नेम्यां योज्याः । ताश्च
नद्यावर्तवदेकत एव सर्वाः किञ्चिद्वक्रा योज्याः । ततस्ता-
साम् आराणां सुषिरेषु पारदस्तथा क्षेप्यो यथा सुषिरार्धमेव
पूर्णं भवति । ततो मुद्रिताराग्रं तच्चक्रमयस्कारशाला-
वद्द्व्याधारस्थं स्वयं भ्रमति । अत्र युक्तिः । यन्त्रै-
कभागे रसो हाराम्लं प्रविशति । अन्यभागे त्वाराग्रं
धावति । तेनाकृष्टं तत् स्वयं भ्रमतीति" प्रमि० ।
उत्कीर्येत्यादि "(२)तन्नेमिं भ्रमयन्त्रेण समन्तादुत्कीर्य
द्व्यङ्गुलमात्रं सुषिरस्य वेधो विस्तारश्च यथा भवति तत-
स्तस्य सुषिरस्योपरि तालपत्रादिकं मदनादिना संलग्नं
कार्यम् । तदपि चक्रं द्व्याधाराक्षस्थितं तस्योपरि
नेम्यां तावदक्षं विद्धा सुषिरे रसस्तावत् क्षेप्यो यावत्

सुषिरस्याधोभागो रसेन मुद्रितः। पुनरेकपार्श्वे जलं प्रक्षिपेत्। तेन जलेन द्रुतोऽपि रसो गुरुत्वात् परतः सारयितुं न शक्यते। अतो मुद्रितच्छिद्रं तच्चक्रं जलेनाकृष्टं स्वयं भ्रमतीति” प्रमि०।

ताम्रादिमयस्येत्यादि (२) “ताम्रादिधातुमयस्याङ्कुशरूपस्य वक्रीकृतस्य नलस्य जलपूर्णस्यैकमग्रं जलभाण्डेऽन्यदग्रं बहिरधोमुखं चैकहेलया यदि विमुच्यते तदा भाण्डजलं सकलमपि नलेन बहिः सरति। तद्यथा छिन्नकमलस्य कमलिनीनलस्य जलस्थभाण्डे क्षिप्तस्य जलपूर्णसुषिरस्यैकमग्रं भाण्डाद्बहिरधोमुखं द्रुतं यदि ध्रियते तदा भाण्डजलं सकलमपि नलेन बहिर्याति। इदं कुक्कुटनाडीयन्त्रमिति शिल्पिनां हरमेखलिनां च प्रसिद्धम्। अनेन बहवश्चमत्काराः सिद्ध्यन्ति। अथ चक्रनेम्यां घटीर्बद्धा जलयन्त्रवत् द्राधाराक्षसंस्थितं तथा निवेशयेद्यथा नलकप्रच्युतजलं तस्य घटीमुखे पतति। एवं पूर्णघटीभिराकृष्टं तद्भ्रमत् तेन निरार्य्यते। अथ चक्रच्युतस्योदकस्याधःप्रणालिकया कुण्डगमने कृते कुण्डे पुनर्जलप्रक्षेपनैरपेक्ष्यम्” प्रमि०।

विष्णुपु० अन्यथा तन्निर्माणप्रकार उक्तो यथा “नाडिका तु प्रमाणेन कला दश च पञ्च च। उन्मानेनाम्भसः सा तु पलान्यर्द्धत्रयोदश। हेममाषैः कृतच्छिद्रा चतुर्भिश्चतुरङ्गुलैः। मागधेन प्रमाणेन जलप्रस्थस्तु संस्मृतः” विष्णु० पु०।

“अम्भस उन्मानेन उन्मीयतेऽनेनेत्युन्मानं पात्रम्। अर्द्धेन योगे त्रयोदश सार्द्धद्वादशेत्यर्थः। उन्मानरूपेण घटितानि सार्द्धद्वादशपलानि सा नाडिका सार्द्धद्वादशपलताम्रनिर्मितपात्रेण सा नाडिका ज्ञातव्येत्यर्थः। किं प्रमाणं तत् पात्रं कार्य्यं तदाह। सार्द्धद्वादशपलजलेन हि मागधदेशप्रस्थः पूर्य्यते तत्प्रमाणं पात्रं कार्य्यम् इत्यर्थात् सिद्धम्। ननु तथापि पात्रेण कथं नाडिकाज्ञानं क्रियापरिच्छेद्यत्वात् कालस्येत्याशङ्क्य क्रियासिद्धये प्रस्थादि विशिनष्टि हेमेति। माषः पञ्चगुञ्जः। हेम्नो माषैश्चतुर्भिश्चतुरङ्गुलेन शलाकारूपेण रचितैः कृतच्छिद्रा। एतदुक्तं भवति। सार्द्धद्वादशपलताम्रमयं मागधप्रस्थसम्मितमूर्द्ध्वायतं पात्रं चतुर्माषचतुरङ्गुलहेमशलाकया कृताधश्छिद्रं जले स्थापितं तेन छिद्रेण यावता कालेन पूर्य्यते तावान् कालो नाडिकेति।

तथाच शुकः “द्वादशार्द्धपलोन्मानं चतुर्भिश्चतुरङ्गुलैः। स्वर्णमाषैः कृतच्छिद्रं यावत् प्रस्थजलप्लुतमिति”। श्रीधरव्याख्या। ६त०। ङ्यापोः संज्ञायां ह्रस्वः। घटियन्त्रमप्यत्र “ततः संसारचक्रेऽस्मिन् भ्राम्यते घटियन्त्रवत्” मार्क०पु०। वस्त्रा कूपात् उद्धारणार्थं यन्त्रम्। २कूपात् कुम्भोद्धारणार्थे यन्त्रभेदे। घटीयुक्तं यन्त्रं घटीयन्त्रं तच्च घटीयुक्तजलोद्धारणयन्त्रं पश्चिमदेशे प्रसिद्धम्। (जलतोलार कल)। “कमलपलपुटघटितघटीयन्त्राणि” काद०।

घटोत्कच पु० भीमेन हिडिम्बायामुत्पन्ने राक्षसभेदे तदुत्पत्तिकथा भा० आ० हिडिम्बवधप० १५५अ० यथा “बिभ्रती परमं रूपं रमयामास पाण्डवम्। रमयन्ती तथा भीमं तत्र तत्र मनोजवा। प्रजज्ञे राक्षसी पुत्रं भीमसेनान्महाबलम्। विरूपाक्षं महावक्त्रं शङ्कुकर्णं विभीषणम्। भीमनादं सुताम्रोष्ठं तीक्ष्णदंष्ट्रं महारवम्। महेष्वासं महावीर्य्यं महासत्वं महाभुजम्। महाजवं महाकायं महामायमरिन्दमम्। दीर्घघाणं महोरस्कं विकटोद्बद्धपिण्डिकम्। अमानुषं मानुषजं भीमवेगं महाबलम्। यः पिशाचानतीत्यान्यान् बभूवातीव राक्षसान्। बालोऽपि यौवनं प्राप्तो मानुषेषु विशाम्पते!। सर्व्वास्त्रेषु परं वीरः प्रकर्षमगमद्बली। सद्यो हि गर्भान् राक्षस्यो लभन्ते प्रसवन्ति च। कामरूपधराश्चैव भवन्ति बहुरूपिकाः। प्रणम्य विकचः पादावग्रहीत् स पितुस्तदा। मातुश्च परमेष्वासस्तौ च नामास्य चक्रतुः। घटो हास्योत्कच इति माता तं प्रत्यभाषत। अब्रवीत्तेन नामास्य घटोत्कच इति स्म ह। अनुरक्तश्च तानासीत् पाण्डवान् स घटोत्कचः। तेषाञ्च दयितो नित्यमात्मभूतो बभूव ह। संवाससमयो जीर्ण इत्याभाष्य ततस्तु तान्। हिडिम्बा समयं कृत्वा स्वां गतिं प्रत्यपद्यत। कृत्यकाल उपस्थास्ये पितॄनिति घटोत्कचः। आमन्त्र्य रक्षसां श्रेष्ठः प्रतस्थे चोत्तरां दिशम्। स हि सृष्टो मघवता शक्तिहेतोर्म्महात्मना। कर्णस्याप्रतिवीर्य्यस्य प्रतियोद्धा महारथः”।

स च द्रोणप० घटोत्कचवधप० इन्द्रदत्तशक्त्या कर्णेन निहतः। तत्कथा तत्र १८० अ० दृश्या यथा “ततोऽब्रुवन् कुरवः सर्व एव कर्णं दृष्ट्वा घोररूपाञ्च मायाम्। शक्त्या रक्षो जहि कर्णाद्य तूर्णं नश्यन्त्येते कुरवो धार्त्तराष्ट्राः। करिष्यतः किञ्च नो भीमपार्थौ

तपन्तमेनं जहि पार्थ निशीथे। यो नः संग्रामाद्घोररूपाद्विमुच्येत् स नः पार्थान् सबलान् योधयेत। तस्मादेनं राक्षसं घोररूपं जहि शक्त्या वै दत्तया वासवेन। मा कौरवाः सर्व्व एवेन्द्रकल्पा रात्रियुद्धे कर्ण! नेशुः सयोधाः। स बध्यमानो रक्षसा वै निशीथे दृष्ट्वा राजंस्त्रास्यमानं बलञ्च। महच्च श्रुत्वा निनदं कौरवाणां मतिं दध्रे शक्तिमोक्षाय कर्णः। स वै क्रुद्धः सिंह इवात्यमर्षी नामर्षयत् प्रतिघातं रणे तम्। शक्तिं श्रेष्ठां वैजयन्तीमसह्यां समाददे तस्य वधं चिकीर्षन्। यासौ राजन्! निहिता वर्षपूगान् बधायाजौ सत्कृता फाल्गुनस्य। यां वै प्रादात् सूतपुत्राय शक्रः शक्तिं श्रेष्ठां कुण्डलाभ्यां निनाय। तां वै शक्तिं लेलिहानां प्रदीप्तां पाशैर्युक्तामन्तकस्यैव रात्रिम्। मृत्योः स्वसारं ज्वलितामिवोल्कां वैकर्त्तनः प्राहिणोद्राक्षसाय। तामुत्तमां परकायापहन्त्रीं दृष्ट्वा सौतेर्बाहुसंस्थां ज्वलन्तीम्। भीतं रक्षो विप्रदुद्राव राजन्! कृत्वात्मानं विन्ध्यपादप्रमाणम्। दृष्ट्वा शक्तिं कर्णबाह्वन्तरस्थां नेदुर्भूतान्यन्तरीक्षे नरेन्द्र!। ववुर्वातास्तुमुलाश्चापि राजन्! सनिर्घाता चाशनिर्गां जगाम। सा तां मायां भस्म कृत्वा ज्वलन्ती भित्त्वा गाढं हृदयं राक्षसस्य। ऊर्द्ध्वं ययौ दीप्यमाना निशायां नक्षत्राणामन्तराण्याविशन्ती। युद्ध्वा चित्रैर्विविधैः शस्त्रपूगैर्दिव्यैर्वीरो मानुषैराक्षसैश्च। नदन्नादान् विविधान् भैरवांश्च प्राणानिष्टांस्त्याजितः शक्रशक्त्या। इदञ्चान्यच्चित्रमाश्चर्य्यरूपं चकारासौ कर्म्म शत्रुक्षयाय। तस्मिन् काले शक्तिनिर्भिन्नमर्म्मा बभौ राजन्! शैलमेघप्रकाशः। ततोऽन्तरीक्षादपतद्गतासुः स राक्षसेन्द्रो भुवि भिन्नदेहः। अवाक्शिरास्तब्धगात्रो विजिह्वो घटोत्कचो महदास्थाय रूपम्। स तद्रूपं भैरवं भीमकर्म्मा भीमं कृत्वा भैमसेनिः पपात। हतोऽप्येवं तव सैन्यैकदेशमपोथयत् स्वेन देहेन राजन्!"। [प्रस्तयोध्यत्र।

**घटोत्कचान्तक** पु॰ ६त॰। कर्णे त्रिका॰। घटोत्कचारि-

**घटोदर** पु॰ घट इव उदरमस्य। असुरभेदे। "घटोदरो महापार्श्वः प्रथनः पिठरस्तथा" हरिवं॰ २२२अ॰। हिरण्यकशिपुसेनापत्यकृतौ। स च वरुणसभ्यः यथाह भा॰ स॰ ९अ॰। घटोदर इत्यादि समानम्।

**घट्ट** चलने भ्वा॰ आत्म॰ सक॰ सेट्। घट्टते अघट्टिष्ट। जघट्टे। घट्टितः घट्टनम्।

**घट्ट** चालने चुरा॰ उभ॰ सक॰ सेट्। घट्टयति-ते अजघट्टत्-त। घट्टित "विघट्टितानां सरलद्रुमाणाम्" कुमा॰। "तदीयमातङ्गघटाविघट्टितैः" "तसन्ती चलशफरीविघट्टितघट्टनाः" माघः। परिस्फुरन्मीनविघट्टितोरवः" किरा॰। "रथाङ्गिराघट्टनया नभस्वतः माघ:"।

**घट्ट** पु॰ घट्यतेऽत्र घञ्। १स्नानाद्यावतरणस्थाने (घाट) २शुल्कग्रहणस्थाने (घाटि) "घट्टादिदेये शुल्कोऽस्त्री" अमरः। भावे घञ्। ३चालने। अमरः।

**घट्टकुटीप्रभात** न॰ घट्टस्था कुटी तत्र प्रभातमिव। न्यायभेदे शुल्कदानभिया विपथेन रात्रौ पलायमानस्य चौरवणिजः घट्टस्थकुटीसमीपे प्रभाते यथा अभीष्टसिद्ध्यभावः एवं विपथेन धावमानस्य तद्दोषतादवस्थ्यरूपो हि न्यायभेदस्तथाभूतः "तदिदं घट्टकुटीप्रभातवृत्तान्तमनुहरति"। खण्डनखण्डखाद्यम्।

**घट्टगा** स्त्री नदीभेदे। राजनि॰।

**घट्टजीविन्** पु॰ घट्टं तरिकशुल्कस्थानं नद्यवतरणस्थाने देयं शुल्कं वा जीवति जीव–णिनि। (पाटुनि) नौकातारके वर्णसङ्करजातिभेदे स च "वैश्यायां रजकाज्जातः" विवादभङ्गार्णवसेतुः

**घट्टना** स्त्री चु॰ घट्ट–युच्। १चालने "रथाङ्गिराघट्टनया नभस्वतः" माघः। २वृत्तौ च हेमच॰। भ्वा॰ घट्ट–ल्युट्। ३चालने न॰। "इह च्छलानिष्ठुरकण्टघट्टनात्" माघः। "कम्पयन्तौ महावृक्षानुरुपादपघट्टनैः" हरिवं॰२७०अ॰। "सुप्तसर्पइव दण्डघट्टनात्" रघुः।

**घट्टित** त्रि॰ घट्ट–कर्मणि क्त १निर्मिते, २चालिते, चित्रपटादेरञ्जनार्थम् अन्नचूर्ण क्षिप्ते वसनादौ (कलप दिया घोँटा)। शब्दार्थचि॰।

**घण** दीप्तौ तना॰ उभ॰ अक॰ सेट्। घणोति घणुते। अघाणीत्–अघणीत् अघणिष्ट जघाण जघणे। उदित् घणित्वा–घण्ट्वा। क्लीवेटकत्वात् निष्ठा त्वनिट् घण्टः।

**घण्ट** त्रि॰ घण–क्त उदित्त्वेन नेट्। १दीप्ते २स्वनामख्याते व्यञ्जनभेदे पु॰।

**घण्टक** पु॰ घण्ट+संज्ञायां कन्। (घट्काण) क्षुपभेदे राजनि॰

**घण्टकर्ण** पु॰ घण्टोदीप्तः कर्ण इव पत्रमस्य। (घट्काण) क्षुपभेदे राजव॰।

**घण्टा** स्त्री चु॰ घटि–शब्दकरणे अच्। कांस्यनिर्मिते वाद्यभेदे। "घण्टां वा परशुं वापि वामतः सन्निवेशयेत्" दुर्गाध्यानम्। तन्निर्माणप्रकारमाहात्म्ये स्कान्दे ब्रह्मनारदसंवादे "स्नानार्च्चनक्रियाकाले घण्टानादं

करोति यः। पुरतो वासुदेवस्य तस्य पुण्यफलं शृणु। वर्षकोटिसहस्राणि वर्षकोटिशतानि च। वसते देवलोके तु अप्सरोगणसेवितः। सर्व्ववाद्यमयी घण्टा केशवस्य सदा प्रिया। वादनाल्लभते पुण्यं यज्ञकोटिसमुद्भवम्। वादित्रनिनदैस्तुर्य्यगीतमङ्गलनिस्वनैः। यः स्नापयति गोविन्दं जीवन्मुक्तो भवेद्धि सः। वादित्राणामभावे तु पूजाकाले हि सर्व्वदा। घण्टाशब्दो नरैः कार्य्यः सर्व्ववाद्यमयी यतः। सर्व्ववाद्यमयी घण्टा देवदेवस्य वल्लभा। तस्मात् सर्व्वप्रयत्नेन घण्टानादन्तु कारयेत्। मन्वन्तरसहस्राणि मन्वन्तरशतानि च। घण्टानादेन देवेशः प्रीतो भवति केशवः"। विष्णुधर्म्मोत्तरे श्रीभगवत्प्रह्लादसंवादे "शृणु दैत्येन्द्र! वक्ष्यामि घण्टामाहात्म्यमुत्तमम्। प्रह्लाद! त्वत्समो नास्ति मद्भक्तो भुवनत्रये। मम नामाङ्किता घण्टा पुरतो मम तिष्ठति। अर्च्चिता वैष्णवगृहे तत्र मां विद्धि दैत्यज!। वैनतेयाङ्कितां घण्टां सुदर्शनयुतां यदि। ममाग्रे स्थापयेद्यस्तु देहे तस्य वसाम्यहम्। यस्तु वादयते घण्टां वैनतेयेन चिह्निताम्। धूपे नीराजने स्नाने पूजाकाले विलेपने। ममाग्रे प्रत्यहं वत्स! प्रत्येकं लभते फलम्। मखायुतं गोऽयुतञ्च चान्द्रायणशतोद्भवम्। विधिना ह्यकृता पूजा सफला जायते नृणाम्। घण्टानादेन तुष्टोऽहं प्रयच्छामि स्वकं पदम्। नागारिचिह्निता घण्टा रथाङ्गेन समन्विता। वादनात् कुरुते नाशं जन्ममृत्युभयस्य च। गरुड़ेनाङ्कितां घण्टां दृष्ट्वाहं प्रत्यहं सदा। प्रीतिं करोमि दैत्येन्द्र! लक्ष्मीं प्राप्य यथाऽधनः। दृष्ट्वाऽमृतं यथा देवाः प्रीतिं कुर्व्वन्त्यहर्निशम्। सुपर्णे च तथा प्रीतिं घण्टाशिखरमास्थिते। स्वकरेण प्रकुर्व्वन्ति घण्टानादं समन्वितः। मदीयार्च्चनकाले तु फलं कोट्यैन्दवं कलौ"। अन्यत्र च "घण्टादण्डस्य शिखरे सचक्रं स्थापयेत्तु यः। गरुड़ं वै प्रियं विष्णोः स्थापितं भुवनत्रयम्। सचक्रघण्टानादन्तु मृत्युकाले शृणोति यः। पापकोटियुतस्यापि नश्यन्ति यमकिङ्कराः। सर्व्वे दोषाः प्रलीयन्ते घण्टानादे कृते, हरेः। दैवतानां मुनीन्द्राणां पितृणामुत्सवो भवेत्। अभावे वैनतेयस्य चक्रस्यापि न संशयः। घण्टानादेन भक्तानां प्रसादं कुरुते हरिः। गृहे यस्य भवेच्चित्रं घण्टा नागारिसंयुता। न सर्पाणां तत्र भयं नाग्निविद्युत्समुद्भवम्। यस्य घण्टा गृहे नास्ति शङ्खश्च पुरतो हरेः। कथं भागवतं नाम गीयते तस्य देहिनः"। "अतो भगवतः प्रीत्यै घण्टा श्रीगरुड़ान्विता। सं शोध्या वैष्णवै र्यत्नाच्चक्रेणोपरिलक्षिता। स्नाने शङ्खादिवाद्यन्तु नामसंकीर्त्तनं हरेः। गीतं स्तवं पुराणादिपठनञ्च प्रशस्यते" हरिभक्तिविलासः। सर्व्वदेवपूजने धूपदीपदानोत्तरं वामहस्तेन घण्टावादनं तन्त्रसारे उक्तं यथा

"धूपभाजनमस्त्रेण (फट्) प्रोक्षणाभ्यर्च्च वह्निरानुना (नमः)। अस्त्रेण पूजितां घण्टां वादयन् गुग्गुलुं दहेत्"। श्यामादौ तु तन्मन्त्रविशेषः तन्त्रसारे उक्तः "तथा जयध्वनिमन्त्रमातः स्वाहेत्युदीर्य्य च। अभ्यर्च्य वादयेद् घण्टामस्त्रेण धूपयेत्ततः" गौतमीये "उत्तोल्य दृष्टिपर्य्यन्तं घण्टां वामदिशि स्थिताम्। वादयन् वामहस्तेन दक्षहस्तेन चार्च्चयेत्"। एवं नीराजनेऽपि। २घण्टापाटलिवृक्षे शब्दर०। ३अति-बलायां ४नागबलायां च राजनि०। [हले शब्दर०।

**घण्टाक** पु० घण्टेव कायति कै–क। घण्टापाटलि

**घण्टाकर्ण्ण** पु० शिवानुचरभेदे (घेँटु) ख्याते "घण्टाकर्णोगणः श्रीमान् शिवस्यातीव वल्लभः" शिवपु०। मीनसंक्रान्तौ तस्य पूज्यतामाह कल्पचिन्तामणौ "चैत्रे मासि च संपूज्यो घण्टाकर्णो वटात्मकः। आरोग्याय स्नुहीमूले संक्रान्त्यां तत्र कारयेत्"। पूजामन्त्रः। "घण्टाकर्ण! महावीर! सर्व्वव्याधिविनाशन!। विस्फोटकभये प्राप्ते रक्ष रक्ष महाबल!" ति० त०। २काशीस्थे ह्रदभेदे। "इयञ्च चित्रघण्टेशी घण्टाकर्णह्रदं स्वयं ह्रदः" काशी० ३३अ०।

**घण्टाताड** पु० घण्टां कालज्ञापकघण्टां ताडयति ताडि–अण् उप० स०। १कालसूचकघण्टावादके (घण्टापाड़े) "मैत्रेयकन्तु वैदेहो माधुकं संप्रसूयते। नृन् प्रशंसत्यजस्रं यो घण्टाताडोऽरुणोदये" मनूक्ते २सङ्कीर्णजातिभेदे च

**घण्टानाद** पु० ६त०। १घण्टाशब्दे। घण्टाया नाद इव नादोऽस्य। २कुबेरमन्त्रिभेदे शब्दार्थचि०।

**घण्टापथ** पु० घण्टानां घण्टादिवाद्यानां घण्टायुक्तहस्त्यादीनां वा पन्थाः ६त० अच् समा०। महति १राजपथे "दशधन्वन्तरो राजमार्गो घण्टापथः स्मृतः" कौटिल्यः।

**घण्टापाटलि** पु० हन्यते हन–कर्म्मणि ड टस्य नेत्वम् नि० वत्तं पट–गतौ अञ् पाटलं करोति ला–बा° कि कर्म०। (घण्टापारुलि) वृक्षभेदे अमरः।

**घण्टारवा** स्त्री घण्टेवारौति आ+रु—अच्। (शनशण) वृक्षभेदे अमरः यस्य फलं पक्वं सत् घण्टेवारौति

**घण्टाली** स्त्री घण्टां तच्छब्दमलति अल—अण् ङीप्। १कोषातक्याम्। शब्दच०। २घण्टाश्रेण्यौ। राजनि०।

**घण्टावीज** पु० घण्टेव वीजमस्य। जयपालवृक्षे। राजनि०

**घण्टाशब्द** पु० घण्टायाः शब्दइव शब्दोयस्य। १कांस्ये हेमच०। शब्दच०। २तच्छब्दे

**घण्टिका** स्त्री क्षुद्रा घण्टा स्वल्पार्थे कन्। क्षुद्रघण्टायां तत्तुल्याकारत्वात् २तालुस्थजिह्वायाञ्च (आलजिव) हेमच०।

**घण्टिनीवीज** न० घण्टाऽस्त्यस्याःतदाकारफलत्वात् इनि ङीप् घण्टिन्याः घण्टायुक्ताया वीजम्। जयपाले राजनि०।

**घण्टु** पु०घटि—उन्।१गजघण्टायां २प्रतापे च उणादिकोषः

**घण्टेश्वर** पु० मङ्गलपुत्रे व्रणदातरि देवभेदे "मङ्गलस्य प्रिया मेधा तस्यां घण्टेश्वरोमहान्। व्रणदाता च तेजस्वी विष्णुतुल्यो बभूव ह" ब्रह्मवै०।

**घण्ड** पु० घण—बा० ड तस्य नेत्त्वम्। भ्रमरे संचिप्तसारः।

**घतन** त्रि० हन्ति हन—हन्तेर्युग्याद्यन्तयोर्घत्वतत्वे" उणा० युन्। मारके उज्ज्वलद० वलार्थे घातनेति पाठोऽयुक्तः

**घन** पु० हन—मूर्त्तौ अप् घनादेशश्च। १मेघे २मुस्तके ३समूहे ४दार्ढ्ये ५विस्तारे च ६लौहमुद्गरे मेदि० ७शरीरे ८कफे ९अभ्रके राजनि०। "समत्रिवातश्च घनः प्रदिष्टः" इति १०क्षीलावत्युक्ते समाङ्कत्रयवधे। ११निविडे सान्द्रे त्रि० अमरः १२ दृढे त्रि० मेदि०। १३पूर्णे १४सम्पुटे त्रि० शब्दर०। १५करतालादिकांस्यवाद्यभेदे १६मध्यम नृत्ये च न० अमरः। १७लौहे न० हेमच० १८त्वचे न० राजनि०। तत्र मेघस्योत्पत्तिभेदादिकं पुराणसर्वस्वे ब्रह्माण्डपु० उक्तं यथा

"सूर्य्यः किरणजालेन वायुयुक्तेन सर्व्वतः। जगतो जलमादत्ते कृत्स्नस्य द्विजसत्तमाः!। आदित्यभूतं भूतेभ्यः सोमं संक्रमते जलम्। नाडीभिर्वायुयुक्ताभिर्लोकाधारः प्रवर्त्तते। यत् सोमाच्च्यवते सूक्ष्मं तदभ्रेष्ववतिष्ठते। मेघावाय्वभिघातेन विसृजन्ति जलं भुवि। एवं प्रकारेणैव पतते चासकृज्जलम्। न नाशमुदकस्यास्ति तदेव परिवर्त्तते। सन्धारणार्थं भूतानां मायैषा विष्णुनिर्मिता। अनया मायया व्याप्तं त्रैलोक्यं सचराचरम्। विश्वेशो लोककृद्देवः सहस्रांशुः प्रजापतिः। धाता कृत्स्नस्य लोकस्य प्रभविष्णुर्दिवाकरः। सार्व्वलौकिकमम्भोय तत् सोमो नभसोरसः। एवं भूतं जगत् सर्व्वमेतत्तथ्यं प्रकीर्त्तितम्। सूर्य्यादुष्णं निस्रवति सोमाच्छीतं प्रवर्त्तते। शीतोष्णवीर्य्यौ द्वावेतौ युक्त्या पालयतो जगत्। सोमात्सुतोद्भवा गङ्गा पवित्रा विमलोदका। भद्रासोमपुरोगाश्च महानद्यो द्विजोत्तमाः!। सर्व्वभूतशरीरेषु यास्त्वापोऽपसृताभुवि। तेषु सन्दह्यमानेषु जङ्गमस्थावरेषु च। धूमन्ते सर्वभूतेभ्यो निष्क्रामन्तीह सर्वशः। तेन चाभ्राणि जायन्ते स्थानमभ्रमयं स्मृतम्। तेजोऽर्कः सर्वभूतेभ्य आदत्ते रश्मिभिर्जलम्। समुद्राद्वायुसंयोगाद्वहन्त्यपः। ततस्त्वृतुगते काले परिवृत्तो दिवाकरः। नियच्छत्यपोमेघेभ्यः शुक्लकृष्णैर्गभस्तिभिः। अभ्रस्थाः प्रपतन्त्यापो वायुना समुदीरिताः। सर्वभूतहितार्थाय रश्मभूताः समन्ततः। ततो वर्षति षण्मासान् सर्वभूतविवृद्धये। वायव्यं स्तनितञ्चैव विद्युदग्निसमुद्भवा। मेहनाच्च मिहेर्धातोर्मेघत्वं व्यञ्जयन्त्युत। न भ्रश्यन्ति यतश्चापस्तदभ्रं कवयो विदुः। मेघानां पुनरुत्पत्तौ त्रिविधा योनिरुच्यते। अग्निजा ब्रह्मजा चैव पक्षजा च पृथग्विधाः। त्रिधा घनाः समाख्यातास्तेषां वक्ष्यामि सम्भवम्। आग्नेयाः सूक्ष्मजाः प्रोक्तास्तेषां धूमात् प्रवर्त्तनम्। शीतदुर्दिनवाता ये स्वगुणास्ते व्यवस्थिताः। महिषाश्च वराहाश्च मत्तमातङ्गरूपिणः। भूत्वा धरणिमभ्येत्य रमन्ति विचरन्ति च। जीमूता नाम ते मेघा ये तेभ्यो जीवसम्भवाः। विद्युद्गुणविहीनाश्च जलधारावलम्बिनः। मूका मेघा महाकाया आवहस्य वशानुगाः। क्रोशमात्राच्च वर्षन्ति क्रोशार्द्धादपि वा पुनः। पर्वतानां नितम्बेषु वर्षन्ति गह्वरेषु च। बलाकागर्भदाश्चैव बलाकागर्भधारिणः। ब्रह्मजाश्चैव ये मेघा ब्रह्मनिश्वाससम्भवाः। ते हि विद्युद्गुणोपेताः स्तनयित्नुप्रियस्वनाः। तेषु शब्दप्रणादेन भूमेःस्वाङ्गरुहोद्भवैः। वायुवाहाभिषिक्तेषु वायुर्यौवनमश्नुते। तेष्वियं प्रावृडासक्ता भूतानां जीवितोद्भवा। जीमूता नाम ते मेघा ये तेभ्यो जीवसम्भवाः। द्वितीयं प्रवहं वायुं मेघास्ते तु समाश्रिताः। इतो योजनमात्राच्च सार्द्धार्द्धादपि वा च ते। वृष्टिसर्गो द्विधा तेषां धाराऽऽसारः प्रकीर्त्तितः। पुष्करावर्त्तका नाम ये मेघाः पक्षसम्भवाः। संयोगाद्वायुनोच्छिन्नाः पर्वतानां महौजसाम्। कामगानां च लोकानां सर्व्वेषां शिवमिच्छताम्। पुष्करा नाम ते मेघा वृहन्तो ऽस्मत्-

धराः। पुष्करावर्त्तकास्तेन कारणेनेह शब्दिताः। नानारूपधराश्चैव महाघोरस्वनाश्च ये। कल्पान्तवृष्टेः स्रष्टारः संवर्त्ताग्नेर्नियामकाः। वर्षन्ति ते युगान्तेषु तृतीयास्ते प्रकीर्त्तिताः। अनेकरूपसंस्थानाः पूरयन्तो महीतलम्। वायुं परिवहं ते स्युः श्रिताः कल्पान्तसावकाः। योऽण्डस्य च विभिन्नस्य प्राकृतस्याभवत्तदा। यस्मात् ब्रह्मा समुत्पन्नश्चतुर्वक्त्रः स्वयम्भुवः। तस्यैवाण्डकपालानि सर्वमेघाः प्रकीर्त्तिताः। तेषामाप्यायनं धूमः सर्वेषामविशेषतः। तेषां श्रेष्ठस्तु पर्जन्यश्चत्वारश्चैव दिग्गजाः। गजानां पर्वतानाञ्च मेघानां भोगिभिः सह। कुलमेकं पृथक् भूतं योनिस्त्वेकं जलं स्मृतम्। पर्जन्यो दिग्गजाश्चैव हेमन्ते शीतसम्भवाः। तुषारवृष्टिं वर्षन्ति हिमं सस्यविवृद्धये"।

वायुविशेषकृतएव घनभेदो भा०शा०३३०अ० दर्शितो यथा "प्रेरयत्यभ्रसंघातान् धूमजांश्चोष्मजांश्च यः। प्रथमः प्रथमे मार्गे प्रवहो नाम योऽनिलः। अम्बरे स्नेहमभ्येत्य तडिद्भ्यश्चोत्तमद्युतिः। आवहो नाम संभाति द्वितीयः श्वसनोनदन्। उदयं ज्योतिषां शश्वत् सोमादीनां करोति यः। अन्तर्देहेषु चोदानं यं वदन्ति मनीषिणः। यश्चतुर्भ्यः समुद्रेभ्यो वायुर्धारयते जलम्। उद्धृत्याददते चापो जीमूतेभ्योऽम्बरेऽनिलः। योऽद्भिः संयोज्य जीमूतान् पर्ज्जन्याय प्रयच्छति। उद्वहो नाम वंहिष्ठस्तृतीयः स सदागतिः। समुह्यमाना बहुधा येन नीताः पृथग्घनाः। वर्षमोक्षकृतारम्भास्ते भवन्ति घनाघनाः। संहता येन चाविद्धा भवन्ति नदता नदाः। रक्षणार्थाय सम्भूताः मेघत्वमुपयान्ति च। योऽसौ वहति भूतानां विमानानि विहायसा। चतुर्थः संवहो नाम वायुः स गिरिमर्द्दनः। येन वेगवता रुग्णा रूक्षेणारुजता नगाः। वायुना सहिता मेघास्ते भवन्ति वलाहकाः। दारुणोत्पातसञ्चारो नभसः स्तनयित्नुमान्। पञ्चमः स महावेगो विवहो नाम मारुतः। यस्मिन् पारिप्लवा दिव्या वहन्त्यापोविहायसा। पुण्यञ्चाकाशगङ्गायास्तोयं विष्टभ्य तिष्ठति"।

समत्रिघातश्चेत्यादेरयमर्थः समसंख्यानां त्रयाणां घातः यद्यप्यत्र समयोर्द्वयोर्घातेन वर्गरूपेण तन्मूलस्य समत्वं नास्ति तथापि समशब्देन सदृशघातद्विघातत्वेन समत्वं बोध्यं यथा १घनः १। द्वाभ्यां द्वयोर्गुणने ४चत्वारः तेषां द्वाभ्यां गुणनेद। एवं त्रयाणां त्रिभिर्गुणने ९नव तेषां पुनस्त्रिभिर्गुणने २७। एवं क्रमेण वारद्वयं समसमद्विघातरूपवर्गगुणनात् घनरूपत्वं जायते तत्रैकादीनां दशपर्य्यन्तानां घनसंख्याः सुबोधाय प्रदर्श्यन्ते यथा

१ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १०
१ । ८ ।२७।६४।१२५।२१६।३४३।५१२ ७२९।१०००

अस्य प्रकारान्तरं स्थाप्योघनोऽन्त्यस्येत्यादि लीलावत्यां दृश्यं विस्तरभयान्नोक्तम्।

"जटासक्तं विपर्य्यस्य घनमाहुर्मनीषिणः" इत्युक्ते १९वेदपाठभेदे ऋग्वेदशब्दे १४०९।११।१२ पृ० विवृतिः तत्र सान्द्रे प्रचण्डघनगर्जितप्रतिरुतानुकारी (रवः) सुश्रुः"वेणी०।"जघनेन घनेन सा""लौहोद्घनघनस्कन्धाः" भट्टिः। लौहमुद्गरे "प्रतिजघान घनैरिव मुष्टिभिः" किरा०। मेघे "प्राहुषमिव घनकीशजालाम्" काद०। "रजनीतिमिरावगुण्ठिते पुरमार्गे घनशब्दविक्लवाः" कुमा० "अवस्थावद्घनरसा शतालोपरिदेविता" उद्भटः। घनशत्रुमः। मूर्त्तौ—काठिन्ये"द्वारं तमोघनप्रख्यम्"भट्टिः। "तमसोघनो मूर्त्तिः काठिन्यम् तेन मूर्त्तिमत्तमःसमम्" जयम०। [त्रिका०।

**घनकफ** पु० घनस्य मेघस्य कफ इव। मेघोपले करके।

**घनकाल** पु० घनप्रधानः कालः। वर्षर्त्तौ शब्दच०।

**घनगोलक** पु० घनेन मूर्त्त्या गोल इव कायति कै—क। संश्लिष्टस्वर्णरजते हेमच०। [चि०।

**घनच्छद** पु० घना निविडाश्छदा यस्य। शिग्रौ। शब्दार्थ

**घनजम्बाल** पु० कर्म०। सान्द्रजम्बाले चुलुके (घनसेओयाला) त्रिका०। [दीप्तौ च शब्दर०।

**घनज्वाला** स्त्री घनस्य ज्वालेव। १वज्राग्नौ। हेम०। २मेघ-

**घनताल** पुंस्त्री० घनतायां निविडतायाम् अलति पर्य्याप्नोति अल—अच्। १सारङ्गखगे स्त्रियां जातित्वात् ङीष्। कर्म०। २वाद्यादितालभेदे।

**घनतोल** पुंस्त्री० घनं मेघं तोलयति ऊर्द्धं नयति आह्वानेन तुल—उन्मितौ अण् उप० स०। चातके खगे तदारावेण हि मेघोत्थानमनुमीयते इति तस्य तथात्वम्। स्त्रियां जातित्वात् ङीष्।

**घनत्वच** पु० घना निविडा त्वक् यस्य। शिग्रौ शब्दार्थचि०।

**घनद्रुम** पु० कर्म०। विकण्टकद्रुले राजनि०।

**घननाभि** पु० घनस्य मेघस्य नाभिरिव योनित्वात्। धूमे शब्दर० धूमस्य मेघयोनित्वात् तथात्वम् मेघस्य धूमयोनित्वं च घनशब्दे २७८६पृ० दर्शितम्।

**घनपत्र** पु॰ घनानि पत्राण्यस्य । १पुनर्णवायाम् राजनि॰ । २घनच्छदे शिग्रौ च ।

**घनपदवी** स्त्री ६त॰ । आकाशे शब्दार्थचि॰ । तस्य मेघाधारतया तत्सञ्चारस्थानतया च तथात्वम् । “क्रामद्भिर्घनपदवीमनेकसंख्यैः” किरा॰ ।

**घनपल्लव** पु॰घना निबिडाः पल्लवा अस्य । शोभाञ्जने जटा॰।

**घनपाषण्ड** पुंस्त्री घनेन मेघध्वनिना पाषण्ड इव उन्मत्तत्वात् । मयूरे शब्दमा॰ । स्त्रियां जातित्वात् ङीष् ।

**घनफल** पु॰ घनानि निबिडानि फलान्यस्य । विकङ्कतवृक्षे राजनि॰ तत्फलानां निबिडतया जायमानत्वात्तथात्वम् ।

**घनमूल** न॰ घनस्य समत्रिघातस्य मूलमाद्यम् । यस्य समाङ्कत्रयघातस्य घनरूपता तादृशे अङ्के । एकाद्यङ्कानां घनमूलादि प्रदर्श्यन्ते

१।८।२७।६४।१२५।२१६।३४३।५१२।७२९।१०००

१।२। ३। ४। ५। ६। ७। ८। ९। १०

तस्य मूलानयनं लीला॰ उक्तं यथा

“अथ घनमूले करणसूत्रं वृत्तद्वयम्। “आद्यं घनस्थानमथाघने द्वे पुनस्तथान्त्याद्घनतो विशोध्य। घनं पृथक्स्थं, पदमस्य कृत्या त्रिघ्न्या तदाद्यं विभजेत् फलन्तु। पंक्त्यां न्यसेत्, तत्कृतिमन्त्यनिघ्नीं त्रिघ्नीं त्यजेत्तत्प्रथमात्, फलस्य। घनं तदाद्याद्घनमूलमेवं पङ्क्तिर्भवेदेवमतः पुनश्च”

अस्यार्थः यस्य घनमूलं स्त्रह्यते तस्याद्यं स्थानं घनस्थानं स्यात् घनशोधनस्थानमित्यर्थः । अथ द्वे स्थाने अघने तदतिरिक्ते तथा पुनः घनस्थानम् अघने द्वे इति पुनःपुनरित्यर्थः। अन्त्यात्घनतः स्थानात्घनं विशोध्य तस्य घनस्य पदं पृथक्स्थं स्थाप्यं तस्य पदस्य कृत्या त्रिघ्न्या तदाद्यम् अघनस्थानं विभजेत्। फलं तु पूर्व्वमूलपङ्क्त्यां न्यसेत्। तस्य फलस्य कृतिम् अन्त्यनिघ्नीं पङ्क्तिस्थतद्व्यतिरिक्तपूर्व्वकृतिनिघ्नीमित्यर्थः। त्रिघ्नीञ्च तत्प्रथमादाद्यघनस्थानात् त्यजेत्। तदाद्यात्घनस्थानात्फलघनं त्यजेत् । एवं पुनः तद्यथा अस्य पङ्क्त्यात्मकपदस्य कृत्या त्रिघ्न्या तदाद्यं विभजेत् । फलन्तु पङ्क्त्यां न्यसेत् । तत्कृतिम् अन्त्यनिघ्नीं त्रिघ्नीं तत्प्रथमात् त्यजेत्। तदाद्यात् फलस्य घनं त्यजेदिति। एवंकृते या पङ्क्तिर्भवेत् तद् घनमूलं भवति” । “अङ्कस्य वामागतिः” इत्युक्तेः वामस्थिताङ्कस्यान्त्यत्वं दक्षिणस्थस्य चाद्यत्वमिति सर्व्वत्र ज्ञेयम् । घनपदमप्यत्र । “घनपदञ्च ततोऽपि घनात् सखे ! यदि घनेऽस्ति घना भवतोमतिः” लीला॰ । घनं मूलमस्य । २मोरटवृक्षे पु॰ राजनि॰ ।

**घनरस** पु॰ घनस्य मेघस्य मुस्तकस्य वा रसो निष्यन्दः । १जले । २कर्पूरे च कर्म॰ । ३सान्द्ररसे । घनोरसोऽस्य । ४पीलुपर्ण्यां ५मोरटवृक्षे च मेदि॰ । ६निविडरसके त्रि॰ । जले तु न॰ रत्नको॰ । [किरा॰ ।

**घनवर्त्मन्** न॰ ६त॰ । आकाशे “घनवर्त्म सहस्रधेव कुर्वन्”

**घनवल्लिका** स्त्री घना निबिडा वल्ली यस्याः कप् ह्रस्वः । १अमृतस्रवालतायाम् । घनस्य वल्लीव २विद्युति राजनि॰

**घनवल्ली** स्त्री घनस्य मेघस्य वल्लीव । १विद्युति २अमृतस्रवालतायाम् राजनि॰ । [६त॰ । २मेघवाते ।

**घनवात** पु॰ घनो निबिडोवातोऽत्र । १नरकभेदे हेमच॰ ।

**घनवास** पु॰ घनोवासो मध्योऽस्य । कुष्माण्डे हारा॰ ।

**घनवाहन** पु॰ घन इव शुभ्रं वाहनमस्य । १शिवे । घनो-मेघो वाहनमस्य । २इन्द्रे च हेमच॰ ।

**घनवीथि** स्त्री घनानां वीथिः । आकाशे । “घनवीथिवीथिमवतीर्णवतः” माघः ।

**घनश्याम** पु॰ घनः मेघइव श्यामः । निविडकृष्णवर्णे । “अये राम घनश्याम ! चुम्बामि मुखपङ्कजम् । यदि जीवामि शोकेन पुनर्द्रक्ष्यामि ते मुखम्” महानाटकम् । “समानकर्णविन्यस्तस्फुरन्मकरकुण्डलम् । हेमाम्बरं घनश्यामं श्रीवत्सं श्रीनिकेतनम्”भाग॰श्रीकृष्णरूपोक्तौ ।

**घनसार** पु॰ घनस्य मुस्तकस्य सारः । १कर्पूरभेदे १७२२ पृ॰ विवृतिः । “शरदिन्दुकुन्दघनसारनीहारहारेत्यादि” दशकुमा॰ । घनोनिबिडः सारोऽस्य । २दक्षिणावर्त्तपारदे मेदि॰ । ३वृक्षभेदे ४जले च धरणी । ६त॰ । ५मेघ वारिदे ।

**घनस्कन्ध** पु॰ घनः स्कन्धो यस्य । कोशाम्रवृक्षे राजनि॰ ।

**घनस्वन** पु॰६त॰। १मेघध्वनौ । घनेन तज्जलेन सुष्ठु अनिति अन--अच् ३त॰ । २तण्डुलीयशाके राजनि॰ ।

**घनहस्त** पु॰ घनः समत्रिघातमितोहस्तोऽत्र । दीर्घविस्तारोद्धेषु १हस्तमाने २मागधप्रस्थखारिकायां च “हस्तोन्मितैर्विस्तृतिदैर्घ्यपिण्डैर्यद्द्वादशास्रं घनहस्तसंज्ञम् । धान्यादिके तद्घनहस्तमानं शास्त्रोदिता मागधखारिका सा” लीला॰ ।

**घना** स्त्री घन+अस्त्यर्थे अच् । १माषपर्ण्यां २रुद्रजटायाञ्च राजनि॰ तयोर्निविडपत्रत्वात् तथात्वम् । ३निविडायां स्त्रियाम् । “अदीयसीमपि घनाम्” (वाचम्) माघः ।

**घनाकर** पु॰ ६त॰। घनानामाकरः घनान् आकिरति आ+कॄ—अच् वा। वर्षाकाले शब्दरत्ना॰।

**घनागम** पु॰ आगम्यतेऽत्र आ+गम—आधारे घञ्। घनानां मेघानामागमः ६त॰। वर्षाकाले "घनागमे राजपथे हि पिच्छिले" नैष॰। भावे घञ् ६त॰। २मेघागमने च।

**घनाघन** पु॰ हन—अच् नि॰। १इन्द्रे २वर्षुकमेघे मत्ते घातुके ३गजे, अमरः ४अन्योन्यघट्टने पु॰। ५निरन्तरघातुके त्रि॰ हेमच॰। "ततोऽर्ज्जुनं भिन्नकटेन दन्तिना घनाघनेनानिलतुल्यवर्च्चसा" भा॰ क॰ ३८अ॰। वर्षुकमेघश्च भा॰ शा॰ ३३०अ॰ दर्शितो यथा "समुह्यमाना बहुधा येन नीताः पृथग्घनाः। वर्षमोक्षप्रवृत्तास्ते भवन्ति घनाघनाः" "असज्जद्वायुनाक्षिप्ते यथा खस्थो घनाघनः" हरि॰ ८७। ७काकमाच्यां स्त्री

**घनात्यय** पु॰ घनानामत्ययोऽत्र। शरत्काले हेमच॰। "वातिकानां घनात्यये" सुश्रु॰। ६त॰। २घनातिक्रमे पु॰। घनव्यवायोऽप्यत्र। "घनव्यवायेन गभस्तिमानिव" रघुः

**घनामय** पु॰ घनो दृढः आमयो यस्मात् ५ब॰। खर्ज्जूरवृक्षे त्रिका॰।

**घनामल** पु॰ घनोऽमलः विशेषणस॰। वास्तूकशाके त्रिका॰

**घनाश्रय** पु॰ ६त॰। आकाशे हेमच॰।

**घनोदधि** पु॰ घन उदधिरत्र। नरकभेदे हेमच॰।

**घनोपल** पु॰ ६त॰। करके (शिल) हेमच॰।

**घम्ब** गतौ भ्वा॰ पर॰ सक॰सेट्। घम्बति अघम्बीत्। जघम्ब

**घर** पु॰ हन्यते गम्यतेऽतिथिभिः हन— "हन्तेरन् घत्व" उणा॰ नलोपश्च। गृहे दशपादीवृत्तिः।

**घरट्ट** पु॰ घृ—सेके विच् घरं सेकमट्टते अट्ट—अतिक्रमे अण् उप॰ स॰। (याँता) प्रसिद्धे सक्तुपेषण्याम् "प्रतिहट्टपथे घरट्टजात्" नैष॰। [मतृणभेदे शब्दर॰।

**घर्वट** पु॰ घृ—विच् घरे सेकाय घटते घट अच्। (आङ्गारा)

**घर्घर** पु॰ घर्घेत्यनुकरणशब्दं राति रा—क। १घरट्टजादिध्वनिभेदे। २तद्युक्ते त्रि॰ "कलहाश्च घनान् यदुत्थिताद्धुनाप्युज्झति घर्घरस्वरः" नैष॰। ३पर्व्वतद्वारे ४द्वारे ५उलूके ६नदभेदे च पु॰ मेदि॰। ६ध्वनिमात्रे ७हासे हेमच॰। घर्घरनदश्च अङ्गदेशान्तर्गतः विन्ध्याद्रेर्निर्गतः गङ्गायां सङ्गतः चम्पानगरीतोऽनतिदूरपूर्वस्थः। (घाघर) लोकप्रसिद्धः ८क्षुद्रघण्ट्यां स्त्री। "घर्घरा क्षुद्रघण्टी स्यात्" मल्लि॰ धृतवाक्यम्। "चलावचूडाः कलघर्घरारवैः" माघः। घर्घरेति शब्दानुकरणम् तथा ध्वनिभेदः। तादृशध्वनिभेदएव घर्घरेति मल्लि॰। ९वीणाभेदे मेदि॰। घर्घर+अस्त्यर्थे अच्। घर्घर नदसङ्गतायां १०गङ्गायां स्त्री वा गौरा॰ ङीष्। घर्घरस्वनाप्यत्र। "घृणावती घृणिनिभिर्घर्घरी घृकनादिनी। घूङ्घुणापिञ्जरतनुर्घर्घरा घर्घरस्वना" काशीख॰ २९अ॰ गङ्गानामोक्तौ। स्वार्थे क नदभेदे पु॰। "शोणे घर्घरके जलं तु रुचिदं सन्तापशोषापहम्। पथ्यं वह्निकरम् तथा च बलदं क्षीणाङ्गवृद्धिप्रदम्" राजनि॰।

**घर्घरिका** स्त्री घर्घरोऽस्त्यस्याः ठन्। १क्षुद्रघण्टिकायां २नदीभेदे ३वादित्रभाण्डे ४भृष्टधान्ये हेमच॰। ५वाद्यभेदे विश्वः।

**घर्घरित** न॰ घर्घरं करोति णिच्—भावे क्त। शूकरजातीयध्वनिभेदे। "निशम्यते घर्घरितं स्वखेदं क्षयिष्णु मायामयशूकरस्य" भाग॰ ३।१३।२५।

**घर्घुर्घा** स्त्री घृ—विच् घुर—ध्वनौ क्विप् तौ हन्ति हन—ड नि॰ हस्य घः। (घुरघुरिया) कीटभेदे यमकीटे रत्नमा॰

**घर्व** गतौ भ्वा॰ पर॰ सक॰ सेट्। घर्वति अघर्वीत्। जघर्व

**घर्म्म** पु॰ घरति अङ्गात् घृ—सेके (क्षरणे) कर्त्तरि मक् नि॰ गुणः। १अङ्गनिष्यन्दे स्वेदे श्रमजवारिणि। घरत्यङ्गमनेन करणे मक्। २आतपे ३ग्रीष्मकाले तयोः अङ्गस्वेदसाधनत्वात्तथात्वम्। ४आतपयुक्ते दिवसे निघ॰। घर्मश्च आतपादिव स्वरविकारसत्वादपि भवति यथाह सा॰द॰ "विकाराः सत्वसम्भूताः सात्विकाः परिकीर्त्तिताः। सत्वमात्रोद्भवत्वात्ते भिन्ना अप्यनुभावतः। स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः। वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्विकाः स्मृताः" इति विभज्य "वपुर्जलोद्गमः स्वेदो रतिघर्म्मश्रमादिभिरिति" सकारणं स्वेदोलक्षितः ५यज्ञे निघ॰। "पितृभिर्घर्म्मसद्भिः" ऋ॰ १०।१५।९। "धर्मसद्भिः यज्ञसादिभिः" भा॰। वै॰ घृ—दीप्तौ मक्। वैदिकप्रयोगे ६दीप्ते त्रि॰ घर्मस्वरसशब्दे उदा॰। ७रसे "मधुनः सारघस्य घर्मं पात वसवः" यजु॰ ३८।६। "घर्मं रसम्" वेददी॰ ८गवादि निष्यन्दे दुग्धे पु॰ तस्य गोःक्षरणात्तथात्वम्। "घर्माय दीष्व" यजु॰ ३८।२। हे वत्स! घर्माय घर्मार्थं दीष्व देहि पयः शेषय मा सर्व्वं पासीत्यर्थः" वेददी॰। "रज्जुसंदानमादाय" कात्या॰ श्रौ॰ २६।४।१। "सन्दानम् घर्मधुगबन्धनार्थाय पाशवती रज्जुः" कर्कः। "उपयमन्यामासिञ्चति घर्म्मम्"

कात्या०श्रौ० २६।६।१७। "घर्म्यं घर्मसंबन्धि तन्मध्यस्थितमाज्य पयसत्यां स्रुचि आसिञ्चति" कर्कः परीशाभ्यां घर्म्ममुत्पाद्य स्रुकपुष्करस्योपर्य्यधोमुखं करोतीत्यर्थः" वं०व्या०घर्मसम्बन्धि घृतमुपयमन्यामासिञ्चति पूर्वं स्रुकस्थम्नीतमधुना घर्मस्थं स्रुचि नयतीत्यर्थः" यजु० ३८।१६। वेददी०। तत्र निदाघकाले "निःश्वासहार्य्यांशुकमाजगाम घर्मः प्रियावेशमिवोपदेष्टुम्" रघुः। ऊष्मणि "स वमन् रुषाम्बु घनघर्मविगलदुरुगण्डमण्डलः" माघः।

**घर्म्मचर्चिका** स्त्री घर्मकृता चर्चिकेव। (घामाचि) इति ख्याते घर्मविचर्चिकायाम्। "स्वेदयान्तीनि दुष्यन्ति क्रोधशोकश्रमैस्तथा। ततः स्वेदः प्रवर्त्तेत दौर्गन्ध्यं घर्मचर्चिका। राजिकाकृतिरूपण्येषा यतो घर्मविचर्चिका" इति प्रयोगामृतम्। घर्मविचर्चिकाप्यत्र।

**घर्म्मदीधिति** पु० घर्म्मो दीधितौ यस्य। सूर्य्ये "यः ससोम इव घर्म्मदीधितिः" रघुः। घर्म्मद्युति घर्म्मभानु घर्म्मरश्मिप्रभृतयोऽप्यत्र "घर्म्मद्युतेरिह दुहः पटलेन धाम्नाम्" किरा०। "या घर्म्मभानोस्तनयापि शीतलैः" माघः। "लोकालोकव्याहतो घर्म्मरश्मिः" भावः।

**घर्म्मदुह्** स्त्री घर्म्मं दुग्धं दोग्धि दुह—क्विप् ६त०। दुग्धदुहायां धेन्वाम् "घर्म्मधुगभ्याले चादोहे च" कात्या० श्रौ० २५।६।२। घर्म्मदुघाप्यत्र। "घर्म्मदुघाया दोहनप्रदेश" तत्सूत्रे कर्कः।

**घर्म्मपावन्** घर्म्मम्प्माणं पिबति पा—वनिप्। ऊष्मपाख्ये पितृगणभेदे। "स्वाहा पितृभ्य ऊर्द्धबर्हिर्भ्यो घर्म्मपावभ्यः" यजु० ३८।१५।

**घर्म्मसद्** पु० घर्म्मे यज्ञे सीदति सद—क्विप्। यज्ञसादिषु पितृषु। "घर्म्मैः पितृभिर्घर्म्मसद्भिः" ऋ० १०।१५।६।१०। "घर्म्मसद्भिः यज्ञसादिभिः" भा०।

**घर्म्मस्तुभ** पु० घर्म्मं स्तुभ्नाति स्तुभ—क्विप्। वायौ। प्रचारेण घर्म्मनाशात्तस्य तथात्वम्। "घर्मस्तुभे (मारुताय) दिव आ पृष्ठ यज्वने" ऋ० ५।५४।१।

**घर्म्मस्वरस्** पु० जिघर्त्ति वै० घृ—क्षरणे दीप्तौ मक् नि०। घर्म्माः दीप्ताः स्वृ—असुन् स्वरसो येषाम्। दीप्तध्वनौ। "घर्म्मस्वरसो नद्यो अप व्रन्" ऋ० ४।५५।६ "घर्म्मस्वरसो दीप्तध्वनयः" भा०।

**घर्म्मस्वेद** पु० घर्मो दीप्तः क्षरन् वा स्वेदो, घर्मे यज्ञे स्वेदो गतिर्वाऽस्य। १दीप्तगमने २क्षरत्स्वेदजले ३यज्ञे गन्तरि च "ब्रह्मणस्पतिर्वृषभिर्वराहैर्घर्मस्वेदेभिर्द्रविणं व्यानट्" ऋ० १०।६७।७। घर्मस्वेदेभिः दीप्तागमनैर्यद्वा क्षरदुदकैः अथवा घर्मो यज्ञः तं प्रति गन्तृभिः" भा०।

**घर्म्मान्त** पु० घर्मस्य ऊष्मणोऽन्तोयत्र। वर्षाकाले राजनि०। "घर्मान्ते तोयदोर्म्मिभिः" हरिवं० १७७अ०।

**घर्म्मान्तकामुकी** स्त्री ७त०। बलाकायाम् राजनि०। वर्षाकाले एव तस्याः कामयमानत्वात् तथात्वम्।

**घर्षण** न० घृष—भावे ल्युट्। (घषा) व्यापारभेदे।

**घर्षणाल** पु० घर्षणायालति अल+पर्य्याप्तौ अच्। शिलापुत्रे (नोडा) त्रिका०। [त्रिका०।

**घर्षणी** स्त्री घृष्यतेऽसौ कर्मणि ल्युट् ङीप्। हरिद्रायां

**घल** न० घोल+पृषो०। तक्रे घोले शब्दच०।

**घष(स)** क्षरणे भ्वा० आत्म० अक० सेट् इदित्। घंष(स)ते अघंषि(सि)ष्ट। जघंषे(से)

**घस** भक्षणे भ्वा० पर० सक० अनिट्। घसति। लृदित् अघसत्। जघास जक्षतुः जघसिथ जघस्थ। ग्रस्तः वेदे ग्धिः लोके, घस्तिः।

**घसि** पु० घस—भावे इन्। भक्षणे हेमच०।

**घस्मर** त्रि० घस—क्मरच्। भक्षणशीले। "तुराध्वरे घस्मरजित्वरेण" भट्टिः। "घस्मरा नष्टशौचाश्च प्राय इत्यनुशुश्रुम:" भा० क० ४० अ०। कौशिकपुत्राणां गर्गशिष्याणां गुरुगवीमांसभक्षणात् व्याधमृगादियोनिमाप्तानां सप्तानां मध्ये मृगभेदे "शुभेन कर्मणा तेन जाता जातिस्मरा मृगाः। त्रासानुत्पाद्य संविग्ना रम्ये कालञ्जरे गिरौ। उन्मुखो नित्यवित्रस्तः स्तब्धकर्णो विलोचनः। पण्डितो घस्मरो नादी नामतस्तेऽभवन्मृगाः" हरिवं० २१अ०।

**घस्र** पु० घसत्यन्धकारं घस—रक्। १दिवसे अमरः। २हिंस्रे त्रि० मेदि० ३कुङ्कुमे न त्रिका०।

**घा** स्त्री हन—बा० ड हस्य घश्च। १काञ्च्यां २घाते च मेदि०।

**घाट** पु० चु०घट—अच्। ग्रीवायाः पश्चाद्भागे अवटौ (घाड़) शब्दर०। तदैवार्थे स्त्री टाप् अमरः। "दोषास्तु दुष्टास्त्रय एव मन्यां संपीड्य घाटां सुरुजाः सतीव्राम्" सुश्रु०। ३घट्टे ४गवादिप्रचारस्थानभेदे "घाटाः किं बहवोऽभ्यतरभिद्याः सर्व्वतोव्रजे" हरिवं० २२१अ०। घाटा अस्त्यस्य अर्श०अच्। ५घाटायुक्ते त्रि०।

**घाटाल** पु० घाटा+सिध्मा० अस्त्यर्थे लच्। सुश्रुतोक्ते सान्निपातिकविद्रधिरोगलक्षणभेदे "नानारूपरुजास्रावो घाटालो विषमो महान्। विषमं पच्यते वापि विद्रधिः सान्निपातिकः" सुश्रुतः"। घाटालस्य नद्याद्यता-

रस्याभवत् गम्भीरतायुक्तत्वात् तद्वदुच्चतानतत्वेन च तथात्वम् ।

**घाटिका** स्त्री घाटा स्वार्थे क । घाटायाम् शब्दच० ।

**घाण्टिक** पु० घण्टया चरति ठक् । "राज्ञां प्रबोधसमये घण्टाशिल्पास्तु घाण्टिकाः" इत्युक्तलक्षणे राज्ञां प्रबोधनाय घण्टां वादयित्वा १स्तुतिपाठके २घण्टावादके त्रि०अमरः । अस्य घाटिकइत्यमरटीकायां भरतः पपाठ। घण्टा तदाकारं पुष्पमस्त्यस्य ठन्। ३धुस्तूरे हारा० तस्य तदाकारकुसुमत्वात्तथात्वम् "पुष्पे घाण्टिकघोषिकयवनवणिक्कितवकुसुमानि"। "उपतापं यान्ति च घाण्टिका विभेदश्च मित्राणाम्। बृ०स०१०अ०। शपथवचनेन ४व्यवहारिणि" प्रा० वि० । "राजपौरुषिके विप्रे घाण्टिके परिचारके"। दैवपैत्रयोः अपाङ्क्तौ तस्याभोज्यान्नतामाह यमः "राजान्नं हरते तेजः" इत्युपक्रमे "पाप्मा तथान्नं शौण्डस्य घाण्टिकस्य तथैव च। इतरे ये त्वभोज्यान्नास्तेषामन्नं विवर्जयेत्। कृच्छ्रं द्वादशरात्रं वा तप्तकृच्छ्रमथापि वा"। "घाण्टिकोदिव्यवाचकः" प्रा० वि० ।

**घात** पु० हन-घञ् । १प्रहारे, २मारणे, ३ पूरणे, गुणने च । "चरेत् व्रतमहत्वाऽपि घातार्थञ्चेत् समागतः" याज्ञ० । "पतन्ति द्विरदा भूमौ वज्रघातादिवाचलाः" भा० आ० १४८अ० । "समद्विघातः कृतिरुच्यतेऽथ" लीला० । करणे घञ् । ४बाणे मेदि० । चतुरङ्गक्रीडायां वद्यादिबलानां स्थानविशेषेषु ५अन्यबलनामागमे तदपसारणेन तत्स्थाने तदाक्रमे। चतुरङ्गशब्दे दृश्यम् । जन्मतारापेक्षया ६निधनाख्ये सप्तमषोडशपञ्चविंशतितमनक्षत्रे च ।

**घातक** त्रि० घातयति हन-ण्वुल्। हननकर्त्तरि । "अनुमन्ता विशसिता निहन्ता क्रयविक्रयी। संस्कर्त्ता चोपहर्त्ता च खादकश्चेति घातकाः" मनुः। अत्र खादकस्यापि घातकत्वमुक्तं मिताक्षरायां तु कर्त्तृप्रयोजकादीनां घातकत्वं समर्थितं यथा

"हन्तिरयं प्राणवियोगकरे व्यापारे रूढः। यद्व्यापारसमनन्तरङ्कालान्तरे वा कारणान्तरनिरपेक्षः प्राणवियोगो भवति स ब्राह्मणं हतवानिति ब्रह्महा"। 'तथाशब्दः प्रकारवचनोऽनुग्राहकप्रयोजकादिकर्त्तृसंग्रहार्थः। अनुग्राहकश्च यः पलायमानमभिशस्तमुपरुन्धन् परेभ्यश्च हन्तारम्परिरक्षन् हन्तुर्दृढिमानमुपजनयन्नुपकरोति स उच्यते। अतएव मनुना अनुग्राहकस्य हिंसाफलसम्बन्धो दर्शितः "बहूनामेककार्य्याणां सर्वेषाम् शस्त्रधारिणाम्। यद्येकोघातयेत्तत्र सर्वे ते घातकाः स्मृताः" इति। तथा प्रयोजकादीनामप्यापस्तम्बेन फलसम्बन्ध उक्तः "प्रयोजयिताऽनुमन्ता कर्त्ता चेति स्वर्गनरकफलेषु कर्म्मसु योभूय आरभते तस्मिन् फलविशेषः" इति। तत्राप्रवृत्तस्य प्रवर्त्तकः प्रयोजकः स च त्रिप्रकारः। आज्ञापयिताऽभ्यर्थयमान उपदेष्टेति। तत्राज्ञापयिता नाम स्वयमुच्चः सन्नीचम्भृत्यादिकं यः प्रेषयति मदीयममित्रञ्जहीति स उच्यते। अभ्यर्थयमानस्तु यः स्वयमसमर्थः प्रार्थनादिना मच्छत्रुं व्यापादयेति समर्थं प्रवर्त्तयति सोऽभिधीयते। अनयोश्च स्वार्थसिद्ध्यर्थमेव प्रयोक्तृत्वम्। उपदेष्टा पुनः त्वं शत्रुमित्थं व्यापादयेति मर्म्मोद्घाटनाद्युपदेशपुरःसरम्प्रेरयन् कथ्यते। तत्र च प्रयोज्यगतमेव फलमिति तेषाम्भेदः। अनुमन्ता तु प्रवृत्तस्य प्रवर्त्तकः स च द्विप्रकारः कश्चित् स्वार्थसिद्ध्यर्थमनुजानाति कश्चित्परार्थमिति। नन्वनुमननस्य कथं हिंसाहेतुत्वं न तावत् प्राणवियोगोत्पादनेन, तस्य साक्षात्कर्त्तृव्यापारजन्यत्वात् नापि प्रयोजकस्येव साक्षात् कर्त्तृप्रवृत्त्युत्पादनद्वारेण, प्रवृत्तस्य प्रवर्त्तकत्वात्। न च साधु त्वया व्यवसितमिति प्रवृत्तमेवानुमन्यत इति शङ्कनीयम्। तादृशस्यानुमननस्य हिंसाप्रत्यहेतुत्वाद्व्यर्थत्वाच्च। उच्यते यत्र हि राजादिपारतन्त्र्यात् स्वयं मनसा प्रवृत्तोऽपि प्रवृत्तिविच्छेदादागामिदण्डभयाद्वा शिथिलप्रयत्नो राजाद्यनुमतिमपेक्षते तत्रानुमतिर्हन्तुः प्रवृत्तिमुपोद्बलयन्ती हिंसाफलम्प्रति हेतुतां प्रतिपद्यते। तथा योऽपि भर्त्सनेन ताडनधनापहारादिना परान् कोपयति सोऽपि मरणहेतुभूतमन्यूत्पादनद्वारेण हिंसाहेतुर्भवत्येव। अतएव विष्णुनोक्तम् "आक्रुष्टस्ताडितोवापि धनैर्वापि वियोजितः। यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम्"। तथा "ज्ञातिमित्रकलत्रार्थं सुहृत्क्षेत्रार्थमेव च। यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकमिति"। न च कृतेष्वप्याक्रोशनादिषु कस्यचिन्मन्यूत्पत्त्यदर्शनादकारणतेति शङ्कनीयम् पुरुषस्वभाववैचित्र्यात् येऽल्पतरेणापि निमित्तेन जातमन्यवोभवन्ति तेष्वव्यभिचार इति नाकारणता। एतेषाञ्चानुग्राहकप्रयोजकादीनां प्रत्यासत्तिव्यवधानापेक्षया व्यापारगतगुरुलाघवापेक्षया च फलगुरुलाघवात् प्रायश्चित्तगुरुलाघवम्बोद्ध-

त्वम् "यो भूय आरभते तस्मिन् फलविशेषः" इति वचनात्तथाऽनुग्राहकस्य तावत् स्वयमेव हिंसायां प्रवृत्तत्वेन स्वतन्त्रकर्त्तृत्वे सत्यपि साक्षात्प्राणवियोगफलकखड्गप्रहारादिव्यापारयोगित्वाभावेन साक्षात्कर्त्तृत्वयो हिंसारम्भकत्वाभावादल्पफलत्वमल्पप्रायश्चित्तञ्च, प्रयोजकस्य तु स्वतन्त्रकर्त्तृप्रवृत्तिजनकत्वेन व्यवहितत्वात्ततोऽल्पफलत्वं, प्रयोजकादीनां मध्ये परार्थप्रवृत्तेरुपदेष्टुरल्पफलत्वम्। ननु प्रयोजकस्य हस्तस्थानीयत्वात् प्रयोज्यस्य न फलसम्बन्धो युक्तः यदि परप्रयुक्त्या प्रवर्त्तमानस्यापि फलसम्बन्धस्तर्हि स्थपतितडागखनित्रप्रभृतीनामपि मूल्येन प्रवर्त्तमानानां स्वर्गादिफलप्राप्तिप्रसङ्गः। उच्यते। "शास्त्रफलम्प्रयोक्तरीति" न्यायेनाधिकारिकर्त्तृगतफलजनका देवकुलतडागनिर्माणादयः। न च स्थपतितडागखनित्रादयो देवकुलतडागादिकरणादिष्वधिकारिणोऽस्वर्गकामित्वात्। अत्र पुनः परप्रयुक्त्या प्रवर्त्तमानानामप्यहिंसायामधिकारित्वाद्भवत्येव तद्व्यतिक्रमनिबन्धनो दोषः। अनुमन्तुस्तु प्रयोजकाद्यल्पफलत्वम्प्रयोजकव्यापाराद्बहिरङ्गत्वाल्लघुत्वाच्च अनुमननस्य, निमित्तकर्त्तुः पुनराक्रोशकादेः प्रवृत्तिहेतुभूतमन्युजनकत्वेन व्यवहितत्वान्मरणानुसन्धानं विना प्रवृत्तत्वाच्चानुमन्तुः सकाशादल्पफलत्वम्। ननु यदि व्यवहितस्यापि कारणत्वन्तर्हि मातापित्रोरपि हन्तृपुरुषोत्पादनद्वारेण हननकर्त्तृत्वप्रसङ्गः। उच्यते नहि पूर्वभावित्वमात्रेण कारणत्वम् अकारणस्यापि तथा भावित्वापत्तेः। यत् खलु स्वरूपातिरिक्तकार्योत्पत्त्यनुगुणव्यापारयोगि भवति तद्धि कारणं, "यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयादिति" रथन्तरसामतैव क्रतोरैन्द्रवायवाग्रताकारणं, न हि तत्र सोमयागः स्वरूपेण कारणं व्यभिचारात्। न च पित्रोस्तादृशविधकारणलक्षणयोगित्वमिति नातिप्रसङ्गः। अनेनैव न्यायेन धर्माभिसन्धिना निर्मितकूपवाप्यादौ प्रमादपतितब्राह्मणादिमरणे खानयितुर्दोषाभावः। न हि कूपोऽनेन खानितः अतोऽहमात्मानं व्यापादयामीत्येवं कूपखननिमित्तव्यापादनं यथाऽऽक्रोशादौ अतः कूपकर्त्तुरपि कारणत्वमेव न पुनर्हिंसाहेतुत्वमिति मातापितृतुल्यतैव। तथा कचित्सत्यपि हिंसानिमित्ततायोगित्वे परोपकारार्थप्रवृत्तौ वचनाद्दोषाभावः यथाह संवर्त्तः "बन्धने गोश्चिकित्सार्थे गूढगर्भविमोचने। यत्ने कृते-विपत्तिश्चेत् प्रायश्चित्तं न विद्यते। औषधं स्नेहमाहारन्ददद्गोब्राह्मणादिषु। दीयमाने विपत्तिः स्यान्न स पापेन लिप्यते। दाहच्छेदशिराभेदप्रयत्नैरुपकुर्वताम्। प्राणसन्त्राणसिद्ध्यर्थं, प्रायश्चित्तं न विद्यते" इति। एतच्च दानं निदाननिपुणभिषग्विषयम्। इतरत्र "भिषङ्मिथ्या चरन् दाप्यः" इत्यत्र दोषो दर्शितः। यत्र तु मन्युनिमित्ताक्रोशनादिकमकुर्वतोऽपि नाम स्वहीत्वोन्मादादिनात्मानं व्यापादयति तत्रापि न दोषः। "अकारणं तु यः कश्चित् द्विजः प्राणान् परित्यजेत्। तस्यैव तत्र दोषः स्यान्नतु यम्परिकीर्त्तयेदिति" स्मरणात्। तथा यत्राप्याक्रोशकादिजनितमन्युरात्मानं खड्गादिना प्रहृत्य मरणादर्वागाक्रोशकादिकृता धनदानादिना सन्तोषितो यदि जनसमक्षमुच्चैः श्रावयति नात्राक्रोशकस्यापराध इति तत्रापि वचनान्न दोषः। यथाह विष्णुः "उद्दिश्य कुपितो हत्वा तोषितः श्रावयेत् पुनः। तस्मिन्मृते न दोषोऽस्ति द्वयोरुच्छ्रावणे कृते" इति। एतेषाञ्च प्रयोजकादीनां दोषगुरुलघुभावपर्यालोचनया प्रायश्चित्तविशेषं वक्ष्यामः" मिता०।

प्राय० वि० तस्य पञ्चविधत्वमुक्तं यथा "प्राणवियोगफलकव्यापारोवधः तन्निष्पादकत्वञ्च साक्षात् परम्परोदासीनं स्मृतिकारपरिगणितं वधित्वम् अतो नेषुकारादिष्वतिव्याप्तिः तच्च पञ्चविधं स्मृतिस्मरणात् कर्त्ता प्रयोजकोऽनुमन्ता अनुग्राहको निमित्ती चेति यथा आपस्तम्बः "प्रयोजयिता अनुमन्ता कर्त्ता चेति सर्व्वे स्वर्गनरकफलभोक्तारो योभूय आरभते तस्मिन्फलविशेषः"। अनुग्राहकमाह याज्ञवल्क्यः "चरेद्व्रतमहत्वापि घातार्थञ्चेत् समागतः" तथा मनुः "बहूनामेककार्य्याणां सर्व्वेषां शस्त्रधारिणाम्। यद्येकोघातकस्तत्र सर्व्वे ते घातकाः स्मृताः"। भविष्ये "यद्येकं बहवो विप्रा घ्नन्ति विप्रमनागसम्। तदेषां निष्कृतिं वच्मि शृणुष्वैकमना गुह!। तेषां यस्य प्रहारेण स विप्रोनिधनं गतः। सरस्वतीप्रतिस्रोतः सञ्चरेत् पापशुद्धये"। सच द्विविधः। एकोवध्यप्रतिरोधकः अन्यः स्वल्पप्रहर्त्ता। निमित्तिनमाह विष्णुः "अन्यायेन गृहीतस्वो न्यायमर्थयते तु यः। यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम्"। अत्र नरान्तरव्यापार व्यवधानेन वधनिष्पादकः कर्त्ता, यः कर्त्तारं कारयति स प्रयोजकः सोऽपि द्विविधः। एकःस्वतोऽप्रवृत्तमेव पदातिं वेतनादिना वधार्थं प्रवर्त्तयति

अपरः स्वतःप्रवृत्तमेव मन्त्रोपायोपदेशादिना प्रोत्साहयति। अनुमतिदाता अनुमन्ता अनुमतिश्च द्विविधा। एका यद्विरोधाद्धननं न सम्भवति तस्य विरोधिनोमया निरोधः कर्त्तव्यइति युक्तिरनुमतिः। अपरा एनं हन्मीतिवचने शक्तस्याप्रतिषेधः। अतएव कात्यायनः “स्वं द्रव्यं दीयमानन्तु यत् स्वामी न निवारयेत्। ऋक्रियभिर्वा परैर्वापि दत्तं तेनैव तद्भवेत्”इत्तमिति दातुमनुमतमित्यर्थः। तथा “प्रार्थ्यमानोऽर्थिना यत्र योऽस्यार्थो न विघातितः। दानकालेऽथवा तूष्णीं स्थितः सोऽर्थोऽनुमोदितः”। अत्राप्रतिषेध एवानुमतिरुक्ता। अतएव “परवचनमप्रतिषिद्धमनुमतं भवतीति” न्यायविदः। बध्यस्य पलायनादिरोधकोऽनुग्राहकः। उद्देश्यत्वे सति हन्तुर्मन्यूत्पादको निमित्ती। तत्र प्रयोजकस्य कर्तृप्रयुक्तिद्वारेण बधकारणत्वम् अनुमन्तुश्च हन्तुर्निर्भयत्वेन दृढतरप्रहारोत्पत्तिद्वारेण, अनुग्राहकस्य पलायनाद्यसम्भवेन हननीयस्थैर्य्यं कुर्व्वतः प्रहारस्वरूपोत्पत्तिद्वारेण कारणत्वं, निमित्तिनो हन्तृमन्यूत्पादनद्वारेण इति प्रयोजकादीनां च चतुर्णां व्यवहितहनन कारणानाम् अवान्तरव्यापारप्रकारभेदाद्भेदः। अतः पञ्चविधं बधित्वम्” ॥

ततोजिकनमतं प्रदर्श्य दूषयित्वा स्वमतं तेन दर्शितं यथा “तथाच चेतनान्तरव्यापाराव्यवधानेन धात्वर्थनिष्पादकश्चेतनः कर्त्ता, कर्म्मकरणादिकारकचक्रप्रयोक्ता वा कर्त्तेति सामान्येन कर्तृलक्षणः। यत्र पदातिद्वारा ब्राह्मणं हन्ति तत्र न पदातेः करणत्वं हननकर्म्मकाले कर्तृव्यापारव्याप्यत्वाभावात् न वा तस्याव्यवधायकत्वं प्रमाणाभावात् खड्गस्य तु व्यवधायकत्वेऽपि न दोषः तस्य चेतनत्वाभावात् न वा तस्य व्यवधायकत्वं हन्तृव्यापारे हन्तुः साक्षादेव कारणत्वात् द्वैधीभावफलनिष्पत्तौ खड्गव्यापारस्य सहकारितामात्रम् अतएवाश्वेन पदातिना च राजा सञ्चरतीति सत्यपि चेतनान्तरव्यापारे तस्य सहकारितामात्रं न तु व्यवधायकत्वं स्वव्यापारे राज्ञः साक्षात्कारणत्वात् एवञ्च यजमानस्य स्वव्यापारे यागे देवतोद्देशेन द्रव्यत्यागलक्षणे साक्षात्कारणत्वमेव प्रक्षेपादौ च तदङ्गे ऋत्विगादिव्यापरः, सत्रेऽपि साधारणद्रव्यत्यागात् सप्तदशानामेव कर्त्तृत्वम् एकस्य तदसम्भवात् यागव्यतिरिक्तकर्म्मणि प्रत्येकं सप्तदशानां कर्म्मव्यवस्था। अथ वा “स्वर्गकामोयजेत” “सप्तदशावरा ऋद्धिकामाः सत्रमुपासीरन्निति” वेदे कामिनां कर्तृत्वावगतेस्तदनुपपत्त्या ऋत्विग्व्यापारान्तर्भावो न व्यवधायकः आग्नेयादिकरणत्वानुपपत्तिकल्पितोत्पत्त्यपूर्व्वमिव। न चेह तथा, कर्तृत्वे प्रमाणाभावात् तस्मात् पूर्व्वोक्तकर्तृलक्षणानाक्रान्तत्वादस्वतःप्रवृत्तपदातिप्रेरको न बधकर्त्ता किन्तु प्रयोजक एव। अनुग्राहकोऽपि न कर्त्ता कर्तृलक्षणाव्याप्यत्वात् सत्वे तु विशेष उक्त एव। पाक्षिकमरणानुमन्तृत्वान्निमित्तिनोऽनुमन्तृत्वमयुक्तम् एवं प्रयोजकस्यानुमन्तृत्वापत्तेः अतो मन्यूत्पादनद्वारा योनिमित्तवान् स निमित्तीत्यनुमन्तृतः प्रकारान्तरएवायं प्रयोजकादिवत् अतो यथा कथञ्चिन्निमित्ततामात्रेण यदि निमित्तबधः तदा मातापित्रोरिषुकारस्यापि निमित्तत्वं स्यादिति निरस्तं, ननु सत्यपि मन्यूत्पादने, न निमित्तत्वं यथा बध्यस्य बधकमन्यूत्पादकस्य, नह्यनुत्पादितमन्युः कश्चित् कमपि व्यापादयति, असत्यपि मन्यूत्पादे निमित्तत्वं यथा मरणाभिसन्धानेन अन्ने विषप्रक्षेप्तुर्नहि तस्य कर्त्तृत्वं सम्भवति नरान्तरविषभक्षणव्यापारव्यवधानात् अतस्तत्रापि कर्तृत्वमस्तीति भवदेवमतं निरस्तं सत्यं कर्त्रादिचतुष्टयविलक्षणो वाचनिकनिषिद्धनिमित्तभावएव निमित्तीति निमित्तिलक्षणं नेषुकारस्य बध्यस्य वा निमित्तभावो निषिद्धः अभक्ष्यान्नदातुश्च निषिद्ध एव। अहितमाहारादिकं मरणफलकं हितनिश्चयेन क्रियमाणं न पापहेतुरिति वदता अहितं मरणफलकमहितबुद्ध्या क्रियमाणं पापहेतुरिति दर्शितं निमित्तबधापवादकवचनेन, एतच्च वक्ष्यते एवं यत्राभिसन्धानं नास्ति हेत्वन्तरव्यवस्थापितं विषं खादित्वा कश्चिन्म्रियते तत्र न बधित्वम् एवं व्याघ्रादिमारणार्थकृतयन्त्रादावन्यस्य मरणे न बधित्वम् एवं कूपखातादावपि। मरणाभिसन्धाने तु तत्रास्त्येव। तथा यः कश्चित् संशयस्थाने प्रस्थाप्यते बलवती च मरणाशङ्का भवति तत्र प्रस्थापितोयदि म्रियते तत्र बधित्वं, पाक्षिकमरणाभिसन्धानात् अतएवेतरनिमित्तिनो विषप्रक्षेप्तुर्जघन्यत्वम् तथा च याज्ञवल्क्यः “कृच्छ्रत्रयं गुरुः कुर्य्यात् म्रियेत प्रहितो यदि”। बौधायनः “गुरुः प्रयुक्तश्चेन्म्रियते गुरुस्त्रीन् कृच्छ्रान् चरेत्”। उपकाराचरणेन बधनिष्पत्तौ निमित्तबधापवादमाह संवर्त्तः “औषधं स्नेहमाहारं ददद्गोब्राह्मणेषु च। प्राणिनां प्राणवृत्त्यर्थं प्रायश्चित्तं न विद्यते। यन्त्रणे गोश्चिकित्सायां मूढगर्भविमोचने।

यत्ने कृते विपत्तिः स्यात् प्रायश्चित्तं न विद्यते"। मूढगर्भो ऽन्तर्मृतगर्भः। तथा "दाहच्छेदसिराभेदप्रयत्नैरुपकुर्व्वताम्। द्विजानां गोहितार्थेषु प्रायश्चित्तं न विद्यते"। याज्ञवल्क्यः "क्रियमाणोपकारे तु मृते विप्रे न पातकम्। विपाके गोवृषाणाञ्च भेषजाग्निक्रियासु च"। विशेषमाहाङ्गिराः "औषधे तु न दोषोऽस्ति स्वेच्छया पिबते यदि। अन्यथा दीयमाने तु प्रायश्चित्तं न संशयः"। मन्यूत्पादने निमित्तवधमाह वृद्धशातातपः "गोभूहिरण्यहरणे स्त्रीसम्बन्धकृतेऽपि च। यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम्" विष्णुः "अन्यायेन गृहीतस्वो न्यायमर्थयते तु यः। यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम्"। तथा बृहस्पतिनाम्ना पठितानि वचनानि "ज्ञातिमित्रकलत्रार्थं सुहृत्क्षेत्रार्थमेव च। यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम्। गोभूहिरण्यहरणे स्त्रीणां क्षेत्रगृहस्य च। यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम्। गुर्व्वर्थं पितृमातर्थमात्मार्थमथ वा पुनः। यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम्" षट्त्रिंशन्मतमिति कृत्वा पठितम् "आक्रोशितस्ताडितो वा धनैर्वा परिपीडितः। यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम्"। अत्रोद्दिश्येति सर्व्वत्र कीर्त्तनात् उद्देशाभावे निमित्ततामात्रेण वधित्वं नास्ति, अर्थादिहरणाक्रोशनताड़नादीनां मन्युकारणानामनुपात्तत्वादेतेषामभावे धनाद्यर्थं वृक्षारोहणादिना ये म्रियन्ते तत्र कीर्त्तनमात्रेण निमित्तवधो नास्ति तथा च पठन्ति "असम्बन्धेन यः कश्चित् द्विजः प्राणान् परित्यजेत्। तस्यैव तद्भवेत् पापं न तु यं परिकीर्त्तयेत्"। असम्बन्धेनेति वाक्कृतादिसकलापराधसम्बन्धाभावपरम्। यच्च "सम्बन्धेन विना देव! शुष्कवादेन कोपितः"। इति भविष्यपुराणवचनं वार्षिकप्रायश्चित्तविधायकम् तत् वाक्कृतेतरापराधसम्बन्धाभावपरं "शुष्कवादेन कोपितः" इत्यभिधानात्। एवं यत्राक्रोशनादौ पश्चात्कृतेनापराधः तत्रापि न वधः। यथा बृहस्पतिः "आक्रुष्टस्तु यदाऽऽक्रोशंस्ताड़ितः प्रतिताड़यन्। हत्वाततायिनञ्चैव नापराधी भवेन्नरः" शास्त्रविहितताडनादौ कृते यत्र शिष्यादिर्म्रियते तत्रापि वधो नास्त्येव यथा भविष्यपुराणे "पुत्रः शिष्यस्तथा भार्य्या शासितव्यो हितेच्छता। न शास्ता तत्र दोषेण लिप्यते देवसत्तम!"। अशास्त्रीयताडनादौ भवत्येव यथा मनुः "पुत्रः शिष्यस्तथा भार्य्या दासी दासस्तु पञ्चमः। प्राप्तापराधास्ताड्याः स्यू रज्ज्वा वेणुदलेन वा। अधस्तात्तु प्रहर्त्तव्यं नोत्तमाङ्गे कदाचन। अतोऽन्यथा तु प्रहरंश्चौरस्याप्नोति किल्बिषम्"। एवञ्च विहितदण्डाचरणे शास्त्रीयकरग्रहणे क्रियमाणे यदि म्रियते तदापि वधो नास्त्येव दण्डादिशास्त्रविधिविरोधाच्चिषेधाप्रवृत्तेः। सोमविक्रयणे तु रागादेव प्रवृत्तिसम्भवान्न विरोधः। आततायिवधापवादमाह बृहस्पतिः "नाततायिवधे हन्ता किल्बिषं प्राप्नुयात् क्वचित्। विनाशिनमथायान्तं घातयन्नापराप्नुयात्" किल्बिषाभावः प्रायश्चित्तनिषेधार्थः। अपराधाभावो दण्डनिषेधार्थः। यतः "सर्व्वत एवात्मानं गोपायीत इति श्रुतिमूलमिदम् अतः पलायनादिनापि आत्मरक्षणाभावे इदं बोद्धव्यम्। कात्यायनः "आततायिनमायान्तमपि वेदान्तपारगम्। जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत्"। जिघांसीयन् इयात् गच्छेदित्यर्थः। देवलः "उद्यम्य शस्त्रमायान्तं भ्रूणमप्याततायिनम्। निहत्य भ्रूणहा न स्यादहत्वा भ्रूणहा भवेत्"। भ्रूणो ब्राह्मणविशेषः दोषदर्शनं नियमार्थम्। मनुविष्णू "गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम्। आततायिनमायान्तं हन्यादेवाविचारयन्"। एवकारो नियमार्थः "तथा नाततायिवधे दोषोहन्तुर्भवति कश्चन। प्रकाशं वाऽप्रकाशं वा मन्युस्तन्मन्युमृच्छति" यस्माद्धन्तुर्मन्युर्हन्यमानमन्युं नाशयति न पुनः पुरुषो हन्ति हन्यते वेति हननविधेरनुवादः। "आततायिनमाह वशिष्ठः" "अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः। क्षेत्रदारापहारी च षडेते आततायिनः" विष्णुकात्यायनौ "उद्यतासिविषाग्निञ्च शापोद्यतकरं तथा। आथर्व्वणेन हन्तारं पिशुनञ्चैव राजसु। भार्य्यातिक्रमिणञ्चैव विद्यात् सप्ताततायिनः। यशोवृत्तहरानन्यानाहुर्धर्म्मार्थहारकान्"। विशेषमाह कात्यायनः "अनाचारितपूर्व्वोयस्त्वपराधे प्रवर्त्तते। प्राणद्रव्यापहारे च प्रवृत्तस्याततायिता" अनाचारितोऽनपकृतः। एतेन पूर्व्वकृतापकारस्य मारणोद्यतस्य नाततायिता तेन प्रत्यपकारिवधे दोष एव। ननु आततायिनोरपि गोब्राह्मणयोर्हनने दोषमाह सुमन्तुः "आततायिवधे न दोषोऽन्यत्र गोब्राह्मणात् यदा हन्यात् तदा प्रायश्चित्तं कुर्य्यात्"। तथा भविष्ये "शिरस्वानमपि गोविप्रं न हन्यादै कदाचन" इति अतः पूर्व्ववचनविरोधः तत्र व्यव-

स्यामाह कात्यायनः "आततायिनि चोत्कृष्टे तपःस्वाध्यायजन्मतः। बधस्तत्र तु नैव स्यात् पापे हीने वधोभृगुः"। जन्मपदेन जातिः कुलञ्चोच्यते। तेन हन्त्रपेक्षया तपोविद्याजातिकुलैरुत्कृष्टोनाततायी बध्यएव। अतएव भगवद्गीतायामाह "पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः" इति एतान् भीष्मादीन् अत्यन्तोत्कृष्टगुणानित्यर्थः। एवञ्च तादृताततायिनश्चाहनने फलमप्याह बृहस्पतिः "आततायिनमुत्कृष्टं वृत्तस्वाध्यायसंयुतम्। यो न हन्याद्वधप्राप्तं सोऽश्वमेधफलं लभेत्" यद्यपि "गुरुं बहुश्रुतं हन्यात्" इति श्रूयते तथापि गुरोः सकाशात् कुलविद्यातपोभिः शिष्यस्याऽप्युत्कर्षसम्भवात् एवं बहुश्रुतादपि। एवमधमवर्णस्योत्तमवर्णो न बध्यः। पूर्वकृतापराधविषयं वा सुमन्तुवचनम्। गौराततायपि न बध्यः "नखिनां शृङ्गिणां चैव दंष्ट्रिणामाततायिनाम्। हस्त्यश्वानां तथान्येषां बधे हन्ता न दोषभाक्" इति कात्यायनवचनं गोव्यतिरिक्तशृङ्गिविषयम् विशेषमाह कात्यायनः "उद्यतानान्तु पापानां हन्तुर्दोषो न विद्यते। निवृत्तास्तु यदारम्भादुपहरणं न बधः स्मृतः"। तन्त्रोक्ते ग्राह्यमन्त्रसाधकयोः २शुभाशुभज्ञापके राशिचक्रस्थे साधकराश्यपेक्षया साध्यराशेर्द्वादशाष्टचतुःसंख्यान्विते कोष्ठेऽवस्थाने। चक्रशब्दे च राशिचक्रं वक्ष्यते तत्र विवृतिः "वह्निरुद्रमुनयस्तु पोषका द्वादशाष्टचतुरस्तु घातकाः" एतच्च विष्णुविषयम् रामार्च्चनचन्द्रिकाधृतत्वात्" कृष्णानन्दः।

**घातन** न० हन—हन्त्यर्थत्वात् स्वार्थे णिच्—भावे ल्युट्। १मारणे हनने २यज्ञार्थपश्वालम्भने शब्दार्थ०। घातयति कर्त्तरि ल्यु। २मारके त्रि० हन्तेरौणादिके युनि तु घतन इत्येव घतनशब्दे विवृतिः। शब्दकल्पद्रुमे घतनेत्यत्र लिपिकरप्रमादकृतघातनशब्ददर्शनात् सि० कौ० सम्मतत्वेन घातनशब्दकल्पनं प्रामादिकमेव "हन्तेर्युन्नाद्यन्तयोर्घत्वतत्वे" उणा० ५।४२। घतनस्यैव सिद्धेः दीर्घत्वे निमित्ताभावात्। चुरा०हन्तेस्तथाप्रत्ययकल्पने घत्वतत्वविधानानर्थक्यप्रसङ्गात्। एवं मुद्रित पुस्तके "घातनो मारकः" इति दीर्घपाठोऽपि प्रमादकृतएव

**घातवार** पु० राशिविशेषजातस्याशुभसूचके वारभेदे यथा "नक्रे भौमो गोहरिस्त्रीषु मन्दश्चन्द्रोद्वन्द्वेऽर्कोऽजभे ज्ञश्च कर्के। शुक्रः कोदण्डालिमीनेषु, कुम्भे यूके जीवो घातवारा न शस्ताः" शब्दार्थचि० ज्यो० वाक्यम्।

**घातस्थान** न० ६त०। श्मशाने शब्दार्थचिन्तामणिः।

**घाति** पु० हन—इण्। पक्षिबन्धने संक्षिप्तसारे उणादिवृत्तिः।

**घातिन्** त्रि० हन-ताच्छील्यार्थे णिनि। हननकरणशीले। स्त्रियां ङीप्।

**घातिपक्षिन्** पुंस्त्री०कर्म्म०। श्येनखगे हारा०स्त्रियां ङीप्।

**घातुक** त्रि० हन-उकञ्। १हिंस्रे २क्रूरे च अमरः।

**घात्य** त्रि० हन—ण्यत्। १बध्ये २बधार्हे ३गुणनीये च।

**घार** पु० घृ—सेके घञ्। सेचने।

**घारि** न० छन्दोविशेषे। "रं विधाय लं निधाय धारि नाम वृत्तमेहि"। यथा "राम राम राम राम। सारमेतदेव नाम"। शब्दार्थ चि०।

**घार्तिक** त्रि० पु० घृतेन निर्वृत्तः ठञ्। घृतप्रचुरे छिद्रबहुले (घिओड़) पक्वान्नभेदे हेमच०। घृतपूरशब्दे दृश्यम्। "तृतीयस्य घार्त्तिकं ददाति स इदमाह "छिद्रेष्वनर्था बहुलीभवन्ति" पञ्चत०।

**घार्त्तेय** त्रि० घृताया अपत्यम् द्व्यच्कत्वात् ढक्। १दीप्ताया अपत्ये ततः यौधेया० स्वार्थे अञ्। तत्रार्थे स्त्रियां शार्ङ्गरवा० ङीन्। २तद्राजे च तस्य च यौधेया० तद्राजस्य स्त्रितां न लुक्। घार्त्तेयी। तत्र घार्त्तेयी इति तत्र पाठान्तरम्।

**घास** पु० घस—कर्म्मणि घञ्। गवादीनां भक्ष्ये तृणभेदे अमरः। "घासमुष्टिं परगवे दद्यात् संवत्सरं तु यः" भा० आनु० ६९अ०। "घासं दद्यात् परगवे" प्रा०त० २भक्ष्यद्रव्यमात्रे च "अश्वायेव तिष्ठते घासमस्मै" यजु० ११।७५। "घासं समिद्रूपम्" वेददी०। "कर्षितं व्याधितं क्लिष्टमपानीयमघासकम्। परिश्रान्तं च मन्दञ्च प्रहर्त्तव्यमरेर्बलम्" भा० शा० १४४अ०।

**घासकुन्द** पु० घासार्थः कुन्दः। घासार्थकुन्दे तत्प्रचुरस्थाने ततः कुमुदा० चतुरर्थ्यां ठक्। घासकुन्दिक तत्सन्निकृष्टदेशादौ त्रि०।

**घासि** पु० वस वा०—इण्। १अग्नौ त्रिका० कर्म्मणि इण्। २भक्ष्ये तृणादौ त्रि० उज्ज्वलदत्तः "यच्च पपौ यच्च घासिं जघान" ऋ०१।१६२।१४। "घासिमदनीयम्" भा०।

**घिणा** ग्रहणे भ्वा०आ०सक० सेट् इदित्। घिण्णते अघिण्णिष्ट जिघिण्णे।

**घु** ध्वनौ भ्वा० आत्म० अक०अनिट्। घवते अघोष्ट। जुघुवे।

**घु** पु० घु—ध्वनौ बा० डु। १ध्वनौ जटाधरः। अत्र ध्वनिः वनकपोतस्य (घुघु) ख्यातस्य ध्वनिः। नैष० वाक्ये व्यक्तं

भविष्यति "दाधाघ्वदाप् पा० उक्ते दाधारूपे पारिभाषिके २धातुद्वये च। "यास्तेताः स्वेच्छया संज्ञाः क्रियन्ते टिघुभादयः। कथं नु तासां साधुत्वं ? नैव ताः साधवो मताः" इत्याशङ्क्य "अनपभ्रंशरूपत्वं नाप्या-साधुशब्दता। असाधूनां प्रयोगे वा प्रत्यवायोऽपि नो तथा" इति हरिणा तस्यानपभ्रंशत्वेन साधुत्वमुक्तं संज्ञाकरणफलं तु स्वशास्त्रे तया व्यवहारः यथा "उप-सर्गात् घोः किः" पा०। "दाक्षीपुत्रस्य तन्त्रे ध्रुव-मयमभवत् कोऽप्यधीती कपोतः (घुघु) कण्ठे शब्दौ-घसिद्धिप्रततनखकठिनीशेषभूषानुयातः। सर्वं विस्मृत्य दैवात् स्मृतिनुदषि गतां घोषयन् यो घुसंज्ञां प्राक् संस्कारेण सम्यगपि भुवति शिरः पट्टिकापाठजेन" नैष०। "स्वरौ गुरू" कुम्भ० परिभाषिते ३लघुवर्णे च।

**घुट** आवर्त्तने (घाँटा) भ्वा० आत्म० सक० सेट्। घोटते लृदित् अघुटत् जुघुटे। [जुघोट।

**घुट** प्रतिघाते तु० कुटा० पर० सक० सेट्। घुटति अघुटीत्

**घुट** पु० कु० घुट-अच्। चरणग्रन्थौ गुल्फे हेम०। ततः स्वार्थे क, घुट--ण्वुल् वा। घुटक अत्रैवार्थे पु०।

**घुटि** (टी) स्त्री कुटा० घुट—इन् वा ङीप्। गुल्फे द्विरूपको०।

**घुटिक** पु० घुट+अस्त्यर्थे ठन्। गुल्फे हेमच०। तत्रार्थे स्त्री टाप् अमरः। [जुघोड।

**घुड** व्याघाते तु० कु० पर० सक० सेट्। घुडति अघुडीत्

**घुण** भ्रमणे भ्वा० आ० अक० सेट्। घोणते अघोणिष्ट। जुघुणे।

**घुण** भ्रमणे तु० प० अक० सेट्। घुणति अघोणीत् जुघोण।

**घुण** ग्रहणे भ्वा० आ० इदित् सक० सेट्। घुण्णते अघुण्णिष्ट जुघुण्णे।

**घुण** पु० घुण--क। स्वनामख्याते काष्ठभक्षके कीटभेदे। "घुणोपहतकाष्ठवेणुनलनालीदुष्कालाव्रूक्षवेध्यपस्य" सुश्रुतः। "भग्नं शरा धनुर्घुणैरुपहतम्" महाना०।

**घुणप्रिया** स्त्री ६त०। ऊर्ध्वरपलश्चे शब्दार्थचि०।

**घुणवल्लभा** स्त्री ६त०। अतिविषायां भावप्र०।

**घुणाक्षर** न० घुणकृतमक्षरम्। घुणाख्यकृमिणा काष्ठच्छेदन-द्वारेण अयत्ननिष्पादिते १वर्णाकाररेखाभेदे। तत् तुल्यतयाऽस्त्यस्य अच्। तत्तुल्ये अनुद्देशेनापि किञ्चि-दभीष्टसिद्धिरूपे २न्यायभेदे पु० "सकज्जयमरेनी-रामन्यन्तं कि घुणाक्षरम्" राजत०। अवैद्यसौविनां सिद्धिः स्यात् घुणाक्षरवत् कचित्" रत्नाव०।

**घुणि** त्रि० घुण—इन्। भ्रान्ते "सं वा भरिष्यति घुणिर्भ-विष्यति" शत० ब्रा० ११।४।२।१४। [तत्रैवार्थे। हेमच०।

**घुण्ट** पु० घुट—क नि० नुम्। १गुल्फे शब्दमाला। स्वार्थे क।

**घुण्टिक** न० घुण्टस्तदाकारोऽस्त्यस्य ठन्। गुल्फाकारद-ल्ये वनस्थे करीषे (कारुडा) शब्दच०।

**घुण्ड** पुंस्त्री घुण—ड तस्य नेत्त्वम्। भ्रमरे उणादिको०।

**घुम्** अ० घुण—बा० डुम्। अव्यक्तशब्दे चादावाकृतिगणलब्धः।

**घुर** ध्वनौ भीमभवने च तु० पर० अक० सेट्। घुरति अघो-रीत्। जुघोर। "अघोरीद्व महाघोरम्"। "जुघुरे चातिभैरवम्" भट्टिः। भावे नङ्। घोरम्।

**घुर** त्रि० घुर—क। ध्वनिभेदकारके। प्रकारे तस्य द्वित्वम्। घुरघुर घुरप्रकारे घोषाशब्दे काद० उदा०।

**घु(रि)री** स्त्री घुर—बा० कि वा ङीप्। शूकरतुण्डे "कः कः कुत्र न घुर्घुरायितघुरीघोरो घुरेत् शूकरः" सा० द०।

**घुर्घुर** स० घुरित्यव्यक्तं घुरति घुर—क। (घुरघुरिया) १यमकीटे त्रिका०। २शूकरशब्दे च। घुर्घुर इवा-चरति क्यङ्। घुर्घुरायते। "कासश्वासक्षतायासः कण्ठे घुर्घुरायते" वैद्यकम्। "कः कः कुत्र न घुर्घु-रायितघुरीघोरो घुरेत् शूकरः" सा० द०।

**घुर्घुरक** पु० घुर्घुर इव कायति कै—क। सुश्रुतोक्ते दर्वी-करविशेषद्रुमभेदे। "दर्वीकरविषेण दुष्टपक्ष्मे "स्वराव सादौ घुर्घुरको जडतेत्यादि" सुश्रु०।

**घुर्घुरिका** स्त्री घुर्घुरोवराह्वध्वनिरस्त्यस्याः ठन्। तमकका-सोपद्रवे रुग्भेदे (गला घड्घड्) "तृट्स्वेदवमथुप्रायः कण्ठघुर्घुरिकान्वितः। विशेषाद्दुर्दिने तास्ये श्वासः स्यात् तमकोमतः" सुश्रु०।

**घुर्घुरी** स्त्री घुर्घुरः शूकरशब्दोऽस्त्यस्य अच् गौरा० ङीष्। जलजन्तुभेदे "सत्किरायाम्" त्रिका०।

**घुलञ्च** पु० घुर—क्विप् तमञ्चति अञ्च--अण् उप० स० रस्य लः। (गडगडे) गवेधुकाख्ये रत्नमाला।

**घुलघुलारव** पुंस्त्री घुलघुलित्यव्यक्तमारौति आ+रु—अच्। पारावतभेदे राजनि०।

**घुष** कान्तौ अक० शब्दे स० भ्वा० आत्म० सेट् इदित्। घुंषते अघुंषिष्ट जुघुंषे मान्योऽस्मिन्निकाल्ये घृष्टघ्णम्।

**घुष** वधे भ्वा० पर० सक० सेट्। घोषति इरित् अघुषत् अघोषीत्। जुघोष। घोषः। घुष्टः।

**घुष** स्तुतौ आविष्कारे च वा चु० उभ० पक्षे भ्वा० पर० सक० सेट्। घोषयति ते घोषति अजूघुषत् त इरित्

अघुषत् अघोषीत्। जुघोषाम् बभूव आस चकार चक्रे। जुघोष णिजभावे घुषितः—घुष्टः। घोषः घोषणा। घ षणम्। "इति स द्रुपदो राजा स्वयंवरमघोषयत्" भा० आ० १८५अ०। "सुहृदां प्रियमाख्यातं घोषयन्तु च ते जयम्" भा० वि० ३४अ०। "जयमघोषयदस्य तु केवलम्" रघुः। आविष्करणञ्च सर्वजनश्रुतियोग्यशब्दकरणम्। (ढेंडरापेटा)

आ+सम्यक् घोषणे। "आघोषयत् भूमिपतिः समस्तम्" भट्टिः। सततक्रन्दने इत्यन्ये। [इ० स०१८अ०।

उद्+उद्‌माविष्करणे। "उद्घुष्टजयशब्दविराविताशाः"

**घु(घू)षित** त्रि० घुष—क्त वा इट्। शब्दिते इडभावे। घुष्ट इत्यपि तत्र उच्चशब्देन प्रकटिताभिप्राये २वाक्यादौ न०।

**घुष्टान्न** न० घुष्टं को भोक्तेत्युद्घुष्य देयमन्नम्। कोभोक्तेत्युद्घुष्य सत्रादौ दीयमानेऽन्ने तस्याभोज्यतामाह मनुः "गवा चान्नमुपघ्रातं घुष्टान्नञ्च विशेषतः। गणान्नं गणिकान्नं च विदुषा च जुगुप्सितम्"।

**घुसृण** न० घु(घ्र)—बा० क्सृणक् पृषो० नलोपः घुणेःस्य सम्। कुङ्कुमे त्रिका०। "घुसृणैर्व जलाशयोदरे" इति नैषधम्।

**घुसृणपिञ्जरतनु** स्त्री घुसृणमिव घुसृणेन वा आपिञ्जरा तनुरस्याः। गङ्गायां "घुसृणपिञ्जरतनुर्घर्घरी घर्घरस्वना" काशी० २९अ० गङ्गानामोक्तौ

**घूक** पुस्त्री० घू इत्यव्यक्तं कायति कै—क। उलूके पेचके। हेमच०। स्त्रियां जातित्वात् ङीष्।

**घूकनादिनी** स्त्री घूक इव नदति नद—णिनि ङीप्। गङ्गायाम् "घर्घरा घूकनादिनी" काशी० २९अ०। गङ्गानामोक्तौ।

**घूकारि** पुंस्त्री० ६त०। काके हेमच०। तस्य पेचकवैरित्वं लोकसिद्धम्। स्त्रियां जातित्वात् वा ङीप्।

**घूकावास** पु० ६त०। शाखोटवृक्षे राजनि०। तस्य निविडद्रुमशाखायुतत्वेन कोटरवत्त्वात् दिवाभीरोलस्याश्रयकारादतत्वेनास्यास्यावासत्वम्।

**घूर** हिंसायां सक० जीर्णतायाम् अक० दि० आत्म० सेट्। घूर्यते अघूरिष्ट। जुघूरे ईदित्। घूर्णः। ध्वनौ च "जुघूरेक्ताभिनेतारम्" भट्टौ दीर्घमध्यं पठित्वा तस्य ध्वन्यर्थकता भरत आह।

**घूर्ण** भ्रमणे भ्वा० ह० उभ० सेट्। घूर्णति ते। अघूर्णीत् अघूर्णिष्ट। जुघूर्ण जुघूर्णे। "गुरुभारसमाक्रान्तश्चचाल च जुघूर्ण च" रामा० कि०। "केचिदाविश्चत सन्ध्या भयात् केचिदघूर्णिषु" "अघूर्णिष्टां च्युतो च्छाञ्च तावशिश्रियतासुभौ" इति च भट्टिः। घूर्णितः घूर्णितवान्। "ततोरथो घूर्णितवान् नरेन्द्र!" भा०क०९०अ०। "कादम्बरीमदविघूर्णितलोचनस्य युक्तं हि लाङ्गलभृतः पतनं पृथिव्याम्" उद्भटः। "भो इयाः पर्वतस्थाः बहुकुसुमयुता वायुना घूर्णमाना" महाना०। वायुनेति हेतौ तृतीया सयकारपाठे शानन्तात् कर्मणि शानच् कर्त्तरि तृतीयेति भेदः। णिचि घूर्णयति ते अजुघूर्णत् त। "नयनान्यरुणानि घूर्णयन्" कुमा०। "घूर्णयन् मदिरास्वादमदपाटलितद्युती" माघः। कर्म्मणि घूर्ण्यते अघूर्णि। घूर्ण्यमानः। "वायुना घूर्ण्यमानाः" महाना० पाठान्तरम्।

**घूर्ण** पु० घूर्णयति अच्। (गिमा) १शाकभेदे पीयूषसुन्दरके शब्दच०। २भ्रान्ते त्रि०। भावे घञ्। ३भ्रमणे। घूर्ण—णिच्—अच्। ४घूर्णकारके रोगभेदे

**घूर्णन** न० घूर्ण—भावे ल्युट्। १भ्रमणे चक्राकारावर्त्ते। हेमच०। युच्। घूर्णनाप्यत्र स्त्री "घूर्णनागात्रपतनभ्रमणादर्शनादिकृत्" सा०द०।

**घूर्णायमान** त्रि० घूर्णः भ्रान्त इवाचरति क्यङ्० चार्थे वा क्यङ् कर्त्तरि शानच्। भ्राम्यमाणे। "इन्द्राद्यैरखिलार्थसाधनपरैः संस्तूयमानं कुङ्कः पीतोन्मत्तफलाद्गुलालसतया घूर्णायमानेक्षणम्" इति कलापधातुव्याख्याकारः।

**घूर्णि** पु० घूर्ण—भावे इन्। भ्रमणे हेमच०।

**घूर्णित** त्रि० घूर्ण—णिच् कर्मणि क्त। १भ्रमिते। कर्त्तरि क्त। २भ्रान्ते प्रचलायिते अमरः। घूर्णधातौ उदा०।

**घूर्णिका** स्त्री शुक्राचार्यकन्यादेवयानीपरिचारिकाभेदे। "गते तु नाहुषे तस्मिन् देवयान्यप्यनिन्दिता। उवाच शोकसन्तप्ता घूर्णिकामागतां पुरः। देवयान्युवाच। त्वरितं घूर्णिके! गच्छ शीघ्रमाचक्ष्व मे पितुः। नेदानीं सम्प्रवेक्ष्यामि नगरं वृषपर्वणः। वैशम्पायन उवाच। सा तत्र त्वरितं गत्वा घूर्णिकाऽसुरमन्दिरम्। दृष्ट्वा काव्यमुवाचेदं सम्भ्रमाविष्टचेतना" भा० का० ७८अ०।

**घृ** सेके भ्वा० पर० सक० अनिट्। घरति अघार्षीत्। जघार

**घृ** सेके छादने च चु० उभ० सक० सेट्। घारयति ते अजीघरत् त। घारयां बभूव आस चकार चक्रे। घारितः। आ+समन्तात्सेके आघारः। तच्चाग्रे ६२५ दृश्यम्। "प्रणीत घृतदाज्याभिघारघोरा" वीरच०।

**घृ** भासे अक० सेके सक० जु० पर० अनिट् । जिघर्त्ति अघार्षीत् । अयं वैदिकः । घर्मः (दीप्तः) ।

**घृङ्** अव्य० अव्यक्तशब्दे । “घृङिङति पपात” इत्युपक्रमे तद्यद्घृङिङत्यपतत्तस्माद्घर्मः” शत० ब्रा० १४।१।१।१० ।

**घृण** दीप्तौ तना० उभ० अक० सेट् । घर्णोति घृणोति घर्णुते घृणुते अघर्णीत् अघर्णिष्ट जघर्ण जघृणे घृणा । उदित् । घर्णित्वा घृण्ट्वा । क्त्वो वेट्कत्वात् निष्ठा त्वनिट् । घृण्णः । वेदे गणव्यत्ययोऽपि “आ यो घृणे न ततृषाणो अजरः” ऋ० ६।१५।५। “आघृणे आदीप्यते” भा० ।

**घृण** ग्रहणे भ्वा० आत्म० सक० सेट् इदित् । घृण्णते अघृण्णिष्ट । जघृण्णे ।

**घृण** पु० घृण–दीप्तौ क । १दिवसे निघ० । २दीप्तौ ३उष्णे च । “अह्ना शं भानुना शं हिमा शं घृणेन ऋ० १०।३७। १०। “घृणेन उष्णेन” भा० । “घृणान्न भीषा अद्रिवः ऋ० १।१३३।६। “घृणात् दीप्तात्” भा० ।

**घृणा** स्त्री घृ–सेके नक् । १कारुण्ये–दयायां कारुण्येन हि हृदयं सिक्तमिवार्द्रं भवतीति तस्य तथात्वम् । “मन्द-मस्यन्निषुलतां घृणया मुनिरेष वः” किरा० । “इत्यङ्गते गतघृणः किमयं विधत्ताम्” रघुः २जुगुप्सायां निन्दा-याञ्च अमरः “तां विलोक्य वनितावधे घृणाम्” “प्राग-जीयत घृणा ततो मही” इति च रघुः । “अधारि पद्मेषु तदङ्घ्रिणा घृणा” नैष० ।

**घृणालु** त्रि० घृणा+बा० आलुच् । कृपायुक्ते “निष्पादितस्य कात्स्न्येन भगवद्भिर्घृणालुभिः” भाग० ४।२२।४१।

**घृणावत्** त्रि० घृणा+अस्त्यर्थे मतुप् मस्य वः १कृपायुक्ते स्त्रियां ङीप् । सा च २गङ्गायाम् घृणिनिधिशब्दे उदा० ।

**घृणावास** पु० ६त० । १कुष्माण्डे त्रिका० । २कृपायुक्ते च

**घृणि** पु० घृ–नि नि० गुणाभावः । १किरणे, २ज्वालायाम्, अमरः । ३तरङ्गे, ४सूर्य्ये ५जले न० मेदि० ६दीप्ते त्रि० “तस्य त्यक्तस्वभावस्य घृणेर्मायावनौकसः” भाग० ७।२।६। घृणेर्दीप्तस्य

**घृणिनिधि** पु० निधीयते अस्मिन् नि+धा आधारे कि ६त० । १सूर्य्ये २गङ्गायाञ्च “घृणावती घृणिनिधिः” काशीख० गङ्गानामोक्तौ ।

**घृणीवत्** त्रि०घृणिरस्त्यस्य मतुप् बा०वेदे न मस्य वः दीर्घः । दीप्तिमति ; “घृणीवा चेतति त्मना” ऋ० १०।१७६।३। “घृणीवान् दीप्तिमान्” भा० ।

**घृत** पुंन० घृ–सेके क्त । अर्द्धर्चादि दुग्धभवे “सर्पिर्विली-नमाज्यं तु घनीभूतं घृतं भवेत्” उक्ते घनीभूते १आज्ये घृत गुणभेदादि भावप्र० उक्तं यथा

“घृतमाज्यं हविः सर्पिः कथ्यन्ते तद्गुणा अथ । घृतं र-सायनं स्वादु चक्षुष्यं वह्निदीपनम् । शीतं वीर्य्ये विषालक्ष्मी पापपित्तानिलापहम् । अल्पाभिष्यन्दि कान्त्योजस्तेजो लावण्यबुद्धिकृत् । स्वरस्मृतिकरं मेध्यमायुष्यं बलकृद्गुरु । उदावर्त्तज्वरोन्मादशूलानाहव्रणान् हरेत् । स्निग्धं कफकरं रक्षःक्षयवीसर्परक्तनुत् ।

गव्यस्य घृतस्य गुणाः गव्यं घृतं विशेषेणेत्यादि भावप्र० वाक्यम् २५८२ पृ० उक्तम् घृतभेदगुणा भावप्र०उक्ता यथा

माहिषस्य गुणाः । “माहिषन्तु घृतं स्वादु पित्तरक्तानिला-पहम् । शीतलं श्लेष्मलं वृष्यं गुरु स्वादु विपच्यते” ।

छागस्य गुणाः “आजमाज्यङ्करोत्यग्निं चक्षुष्यं बलवर्द्ध-नम् । कासे श्वासे क्षये चापि हितं पाके भवेत्कटु” ।

अथ उष्ट्रीघृतम् “औष्ट्रं कटु घृतं पाके शोषक्रिमिविषा-पहम् । दीपनं कफवातघ्नं कुष्ठगुल्मोदरापहम्” ।

अथ आविकघृतम् “पाके लघ्वाविकं सर्पिः सर्वरोगविनाश-नम् । वृद्धिं करोति चास्थीनामश्मरीशर्करापहम् । चक्षुष्यमग्निव्युषणं वातदोषनिवारणम्” ।

अथ नारीघृतम् । “कफेऽनिले योनिदोषे पित्ते रक्ते च तद्धितम् । चक्षुष्यमाज्यं स्त्रीणां वा सर्पिः स्यादमृतो-पमम्” ।

अथाश्वघृतम् “वृद्धिं करोति देहाग्नेर्लघु पाके विषा-पहम् । तर्पणं नेत्ररोगघ्नं दाहनुद्वडवाघृतम्” ।

दुग्धघृतस्य गुणाः “घृतं दुग्धभवं ग्राहि शीतलं नेत्र-रोगहृत् । निहन्ति पित्तदाहास्रमदमूर्च्छाभ्रमानिलान्” ।

अथ ह्यस्तनदधिजघृतगुणाः “हविर्ह्यस्तनदुग्धोत्थं तद्धया-ङ्गवीनकम् । हैयङ्गवीनं चक्षुष्यं दीपनं रुचिकृत्प-रम् । बलकृद्वृंहणं वृष्यं विशेषाज्ज्वरनाशनम्” ।

पुराणघृतस्य गुणाः “वर्षादूर्द्ध्वं भवेदाज्यं पुराणं तत् त्रिदोषनुत् । मूर्च्छाकुष्ठविषोन्मादापस्मारतिमिरापहम् । यथा यथाऽखिलं सर्पिः पुराणमधिकं भवेत् । तथा तथा गुणैः स्वैः स्वैरधिकं तदुदाहृतम्” ।

अथ नूतनस्य घृतस्य विषयाः “योजयेन्नवमेवाज्यं भोजने तर्पणे श्रमे । बलक्षये पाण्डुरोगे कामलानेत्ररोगयोः” ।

घृतप्रयोगस्याविषयाः “राजयक्ष्मणि बाले च वृद्धे श्लेष्म-कृते गदे । रोगे सामे विसूच्याञ्च विबन्धे च मदात्यये । ज्वरे च दहने मन्दे न सर्पिर्बहु मन्यते” ।

अस्य गव्यादिघृतभेदास्तद्गुणादिकं च सुश्रुतेनोक्तं यथा “घृतन्तु सौम्यं शीतवीर्य्यं मृदु मधुरमल्पाभिष्यन्दि स्नेहनमुदावर्त्तोन्मादापस्मारशूलज्वरानाहवातपित्तप्रशमनमग्निदीपनं स्मृतिमतिमेधाकान्तिस्वरलावण्यसौकुमार्य्यौजस्तेजोबलकरमायुष्यं वृष्यं मेध्यं वयःस्थापनं गुरु चक्षुष्यं श्लेष्माभिवर्द्धनं पाप्मालक्ष्मीप्रशमनं विषहरं रक्षोघ्नञ्च। विपाके मधुरं शीतं वातपित्तविषापहम्। चक्षुष्यमग्र्यं बल्यञ्च गव्यं सर्पिर्गुणोत्तरम्। आजं घृतं दीपनीयं चक्षुष्यं बलवर्द्धनम्। कासे श्वासे क्षये चापि पथ्यं पाके च तल्लघु। मधुरं रक्तपित्तघ्नं गुरु पाके कफापहम्। वातपित्तप्रशमनं सुशीतं माहिषं घृतम्। औष्ट्रं कटु रसं पाके शोफक्रिमिविषापहम्। दीपनं कफवातघ्नं कुष्ठगुल्मोदरापहम्। पाके लघ्वाविकं सर्पिर्नच पित्तप्रकोपणे। कफेऽनिले योनिदोषे शोषे कम्पे च तद्धितम्। पाके लघूष्णवीर्य्यञ्च कषायं कफनाशनम्। दीपनं बद्धमूत्रञ्च विद्यादैकशफं घृतम्। चक्षुष्यमग्र्यं स्त्रीणान्तु सर्पिः स्यादमृतोपमम्। वृद्धिं करोति देहाग्न्योर्लघुपाकं विषापहम्। कषायं बद्धविण्मूत्रं तिक्तमग्निकरम् लघु। हन्ति कारेणवं सर्पिः कफकुष्ठविषक्रिमीन्। क्षीरघृतं पुनः संग्राहि रक्तपित्तभ्रममूर्च्छाप्रशमनं नेत्ररोगहितञ्च।

सर्पिर्मण्डस्तु मधुरः सरोयोनिश्रोत्राक्षिशिरसां शूलघ्नो वस्तिनस्याक्षिपूरणेषूपदिश्यते। सर्पिः पुराणं सरं कटुविपाकं त्रिदोषापहं मूर्च्छामेद उन्मादोदरज्वरगरशोफापस्मारयोनिश्रोत्राक्षिशिरःशूलघ्नं दीपनं वस्तिनस्याक्षिपूरणेषूपदिश्यते। भवन्ति चात्र।

पुराणं तिमिरश्वासपीनसज्वरकासनुत्। मूर्च्छाकुष्ठविषोन्मादग्रहापस्मारनाशनम्। एकादशशतञ्चैव वत्सरानुषितं घृतम्। रक्षोघ्नं कुम्भसर्पिः स्यात्परतस्तु महाघृतम्। पेयं महाघृतं भूतैः कफघ्नं पवनाधिकैः। बल्यं पवित्रं मेध्यञ्च विशेषात्तिमिरापहम्। सर्वभूतहरञ्चैव घृतमेतत्प्रशस्यते”। “उग्रगन्धं पुराणं स्याद्दशवर्षस्थितं घृतम्। लाक्षारसनिभं शीतं प्रपुराणमतः परम्” राजवल्लभः। तस्य गुरुतमत्वमाह वैद्यके “अन्नादष्टगुणं चूर्णं चूर्णादष्टगुणं पयः। पयसोऽष्टगुणं मांसं मांसादष्टगुणं घृतम्” पक्वघृतस्य वर्षान्तेऽवीर्य्यतामाह “घृतमब्दात् परं पक्वं हीनवीर्य्यत्वमाप्नुयात्” राजव०। “घृतं कांस्ये दशाहिकम्” इत्युक्तघृतस्याभक्ष्यता। “तेजो वै घृतमिति” श्रुत्या वाक्यशेषे घृतप्रशंसनात् “अक्ताः शर्करा उपदधाति” इत्यादौ घृतेनैवाञ्जनम् न तैलेनेति मीमांसायां स्थितम्। घृतघटितौषधस्य षण्मासपर्य्यन्तं वीर्य्यवत्त्वं वैद्यके उक्तम्। पक्वघृतादि नानाविधं चक्रदत्तादौ उक्तं विस्तरभयान्नोक्तम्। “घृतं घृतपावानः पिबत वसां वसापावानः” यजु० ६।१९। घृ—दीप्तौ कर्त्तरि—क्त। २दीप्ते ३सेचके च त्रि० शब्दर०। अस्य घृतादित्वात् अन्तोदात्तता। ४जले न० शब्दार्थचि०।

**घृतकरञ्ज** पु० घृतमिव घनीभूतनिर्यासकत्वात् करञ्जः। (घियाकरम्चा) करञ्जभेदे राजनि०।

**घृतकुमारी** स्त्री घृतमिव कुमारी सुन्दरी। घृततुल्यनिर्यासे स्वनामख्याते गुल्मभेदे शब्दरत्ना० स्वार्थे क ह्रस्वः। घृतकुमारिकाप्यत्र स्त्री भावप्र० कुमारीशब्दे दृश्यम्।

**घृतकुल्या** स्त्री घृतपूरिता कुल्या। घृतपूरितसरित्यां त्रिका०।

**घृतकेश** पु० घृतोद्दीप्तः केश इव ज्वाला अस्य। वह्नौ “जर्जोनपातं घृतकेशमीमहे” ऋ० ८।६०।२।

**घृतकौशिक** पु० घृतोद्दीप्तः कौशिकः। १गोत्रभेदे २तद्गोत्रान्तर्गतप्रवरभेदे च ‘घृतकौशिकगोत्रस्य कुशिककौशिकघृतकौशिकाः प्रवराः” उ० त० रघु०। “स च यजुर्वेदीयशाखान्तर्गतः “घृतकौशिकाद् घृतकौशिकः” शत० ब्रा० १४।५।५।२१। तथा तत्रैव १४।७।३।२७।

**घृतच्युता** स्त्री घृतं च्युतं यस्याः। कुशद्वीपस्थे नदीभेदे। कुशशब्दे २१४५पृ० दृश्यम्।

**घृतदीधिति** पु० घृतेन घृता दीप्ता वा दीधितिरस्य। अग्नौ

**घृतधारा** स्त्री घृतं घृततुल्यं जलं धारयति धारि—अण् उप० स०। पश्चिमदेशस्थे नदीभेदे। “शुभामतिरसाञ्चैव घृतधारेति विश्रुताम्। वराहः सरितं पुण्यां प्रतीच्यामकरोत् प्रभुः” हरिवं० २२५अ०। ६त०। २घृतस्याविच्छिन्नसन्ततौ च।

**घृतनिर्णिज्** त्रि० घृतं दीप्तं निर्णिक् रूपं यस्य। १दीप्तरूपे। “दीदायानिध्मो घृतनिर्णिगप्सु” ऋ० २।३५।४। निर्णिगिति रूपनाम दीप्तरूपः” भा०। “जुष्टासो अद्य घृतनिर्णिजो गुः” ऋ० ४।३५।२। “घृतनिर्णिजो मिश्रद्रव्येण दीप्तरूपाः” भा०। घृतं निर्णेनेक्ति निर्+निज—क्विप् ६त०। तापनद्वारा विलापनेन २घृतशोधके वह्नौ। “शोचिष्केशो घृतनिर्णिक् पावकः” ३।१७।१। “घृतनिर्णिक् घृतस्य तापनद्वारा विलापनेन शोधकः” भा०।

**घृतप** पु० ब०व० घृतमाज्यं पिबन्ति+पा—क उप० स० । आज्यपाख्ये पितृगणभेदे । "घृतपाः सोमपाः यथा वैश्वानरमरीचिपाः" भा० शा० १६६अ० । २घृतपान कर्त्तरि त्रि० ।

**घृतपदी** स्त्री घृतं पादे संस्थितं यस्याः पाद्भावः स्वाङ्गत्वात् ङीपि पद्भावः । इडादेवताभेदे । शत० ब्रा० इडा ब्राह्मणे १।८।१।२६। तन्निरुक्तिर्दर्शिता यथा "मानवी घृतपदीति मनुर्ह्येतामग्रेऽजनयत तस्मादाह मानवीति घृतपदीति यदेवास्यै घृतं पदे समतिष्ठत तस्मादाह घृतपदीति" । तद्ब्राह्मणोपोद्घाते "इडाया मानवीमिडादेवतां वक्तुं मानवी घृतपदीमैत्रावरुणीत्येतानि च निगदपदानि व्याख्यायन्ते"भा०। घृताः दीप्ताः पादा यस्याः प्राग्वत् पाद्भावादि । २सरस्वत्यामिडादेव्याञ्च । "हविषीडा देवी घृतपदी जुषन्त" ऋ० १०,७०,८। इडेतन्नामिका देवी सरस्वती घृतपदी दीप्तपदोपेता" भा० । [राजनि० ।

**घृतपर्णक** पु० घृतमिव स्वादु पर्णमस्य कप् । घृतकरञ्जे

**घृतपीत** त्रि० घृतं पीतं येन वाहिता० वा परनिपातः । घृतपानकर्त्तरि पक्षे पीतघृत इत्यपि तत्रार्थे त्रि० ।

**घृतपूर** पु० घृतेन पूर्य्यते पूरि—कर्म्मणि अच् । पक्वान्नभेदे तस्य प्रचुरघृतेन पक्वत्वात्तथात्वम् तत्पाकप्रकारादि शब्दार्थ चि०"मर्द्दितां समितां क्षीरनालिकेरघृतादिभिः । अवगाह्य घृते पक्वा घृतपूरोऽयमुच्यते । घृतपूरो गुरुर्वृष्यः कफकृद्रक्तमांसदः । रक्तपित्तहरो हृद्यः स्वादुः पित्तहरोऽग्निदः । अपि च "क्षीरेण मर्द्दितं चूर्णं गोधूमानां सुगालितम् । विस्तार्य्य सर्पिषा पाच्यं कटाहेऽथ सिताप्लुतम् । घृतपूरोऽयमुद्दिष्टः कर्पूरमरिचान्वितः" । नारिकेलजस्तु "समिता मर्द्दिता क्षीरे नारिकेलसिताफलैः । अवगाह्य घृते पाच्यो घृतपूरोऽपरः स्मृतः" । दुग्धजोऽपि "पाकपिण्डीकृतं क्षीरं शर्कराचूर्णमिश्रितम । एतत्पूरविनिर्माणं कारयेत् स्वल्पसर्पिषि" । शालिभवोऽपि "सुशालीपिष्टं दुग्धन्तु क्वाथितं वस्त्रगालितम् । खण्डयुक्तं घृते पक्वं घृतपूरो भवेदयम्" । कसेरुजोऽपि "कसेरुचूर्णं निःक्षिप्य पाकपिण्डीकृतं पयः । निर्म्माणं घृतपूराणां शर्करासहितं भवेत्" । आम्ररसजः "पक्वाम्रस्य घृते तप्ते रसस्तनलपिण्डितः । शुद्धशर्करया योज्यो घृतपूरो यदृच्छया । क्षीरमाद्यं स्वरूपं हि खण्डचूर्णं ततः स्मृतम् । योजिते यो विशेषोऽत्र तदाख्यावर्णसंहितः । घृतपूरो गुरुर्वृष्यो हृद्यः पित्तानिलापहः । सद्यः प्राणप्रदो बल्यः सुरुच्योऽग्निप्रदीपनः । शृङ्गाटकसखानामप्येवं स्याद् घृतपूरकः । विचार्य्य वस्तुसंयोगं तद्गुणानपि चाहरेदिति" ।

**घृतपूर्णक** पु० घृतं पूर्णमत्र कप् । करञ्जभेदवृक्षे त्रिका० घृतपूर्णकरञ्जकोऽप्यत्र भावप्र० करञ्जशब्दे १६८८पृ० दृश्यम् ।

**घृतपृष्ठ** पु० घृतं दीप्तं पृष्ठमस्य । क्रौञ्चद्वीपपतौ प्रियव्रत पुत्रे राजभेदे । क्रौञ्चशब्दे २२४१पृ० विवृतिः ।

**घृतप्रतीक** पु० घृतं प्रतीकं मुखं यस्य । अग्नौ । तस्य उत्तरवेद्यामाज्याघारेणोद्दीपनात् तथात्वम् "घृतप्रतीको घृतयोनिः" यजु० ३५।१७।

**घृतप्रयस्** पु० घृतं तत्सहितं प्रयोऽन्नं यस्य । वह्नौ "घृतप्रयाः सधमादे मधूनाम्" ऋ० ३।४३।३। "घृतप्रयाः घृतसहितानि प्रयांसि अन्नरूपाणि हवींषि यस्य" भा० ।

**घृतप्रसत्त** पु० प्र+सद—वा० त ३त० । घृतेन प्रसन्ने वह्नौ । "घृत प्रसत्तो असुरः सुशेवः" ऋ० ५।१५।१।

**घृतमण्ड** पु० ६त० । घृतसारे । गलितघृतस्याधःस्थे सारांशभेदे (जमादानाघि) "ततः स घृतमण्डेन हृद्येनेन्द्रियबोधिना" । "भुक्तवन्तं घृतमण्डेन यष्टीमधुकसिद्धेन तैलेन वानुवासयेत्" सुश्रु० । सर्पिर्मण्डोऽप्यत्र घृतशब्दे तद्गुणाः सुश्रुतोक्ता दर्शिता । घृतमण्डोऽस्त्यस्याः अच् । २काकोल्यां स्त्री शब्दच० ।

**घृतमण्डलिका** स्त्री घृतमण्डं तदाकारनिर्यासं लाति ला—क संज्ञायां कन् अत इत्त्वम् । हंसपदीवृक्षे राजनि०

**घृतलेखनी** स्त्री घृतं लिख्यतेऽनया लिख—करणे ल्युट् ङीप् । दारुमये घृतलेखनपात्रीभेदे हेमच० ।

**घृतवती** स्त्री द्वि०व० । घृतमुदकं हेतुत्वेन कार्य्यत्वेन वास्त्यस्याम् मतुप् मस्य वः ङीप् । द्यावापृथिव्योः निघ० । "अद्भ्यः पृथिवी" इति श्रुतेर्भूमेर्जलहेतुकत्वात् तथात्वम् दिवश्च उदकहेतुत्वात् तथात्वम् । २आज्ययुक्ते ३घृतपदयुक्ते च त्रि० स्त्रियां ङीप् । "तैलं प्रतिनिधिं कुर्य्यात् घृतार्थे याज्ञिको यदि । मन्त्रस्यैव तदा ब्रूयात् होता घृतवतीमिति" ति० त० यज्ञपार्श्वः ।

**घृतवर** पु० घृतं वरमत्र । घृतपूरे पक्वान्नभेदे हेमच० । तस्य घृतप्रचुरत्वात्तथात्वम् ।

**घृतस्थला** स्त्री घृतमुदकं स्थलमुत्पत्तिस्थानं यस्याः घृतं दीप्तं स्थलं नितम्बस्थलं यस्या वा । अप्सरोभेदे । अप्-

सरसां हि जलोद्भवत्वं भाग० ८।७ ६। समुद्रमन्थने उक्तं यथा "ततश्चाप्सरसो जाता निष्ककण्ठ्यः सुवाससः" तासां मध्ये अस्याः प्रशस्तनितम्बस्थलत्वात् तथात्वम्। "घृतस्थला घृताची च विश्वाची चोर्वशी तथा" हरिवं० २२६अ०।

**घृतस्पृश्** त्रि० घृतं स्पृशति स्पृश–क्विन्। घृतस्पर्शिनि क्विन्नन्तत्वात् खादौ कुः। घृतस्पृक् घृतस्पृग्भ्यामित्यादि

**घृताची** स्त्री घृतमुदकं कारणतयाऽञ्चति अन्च–क्विप् नलोपे स्त्रियां ङीप् पूर्वाणोदीर्घश्च। १अप्सरोभेदे तस्या घृताज्जातत्वात् तथात्वम्। घृतस्थलाशब्दे दृश्यम्। सा च पौरवरौद्राश्वनृपस्य परिग्रहे दश पुत्रान् कन्याश्च दश सुषुवे यथा हरिवं० ३१अ०।

"रौद्राश्वस्य घृताच्यां वै दशाप्सरसि सूनवः। ऋचेयुः प्रथमस्तेषां कृकणेयुस्तथैव च। कक्षेयुः स्थण्डिलेयुश्च सन्नतेयुस्तथैव च। दशार्णेयुर्जलेयुश्च स्थलेयुश्च महाबलः। वननित्योवनेयुश्च पुत्रिकाश्च दश स्त्रियः। रुद्रा शूद्रा च भद्रा च मलदा मलहा तथा। खलदा चैव राजेन्द्र! नलदा सुरसाऽपि च। तथा गोचपला च स्त्री रत्नकूटा च ता दश"।

२रात्रौ निघ० तस्याः सोमरश्मिजादिशिशिरजलस्रुयत्वात् तथात्वम्। घृतमाज्यमञ्चति प्राप्नोति। ३घृतप्राप्तरि त्रि० स्त्रियां ङीप्। "घृताच्यसि जुहूर्नाम्ना" यजु०२।६। ४उदकयुक्ते त्रि० स्त्रियां ङीप्। "ई वहन्ति सूर्यं घृताचीः" ऋ०७।६०।२ "घृताचीः उदकवत्यः" भा०। घृतं दीप्तं रूपमञ्चति। ५दीप्तरूपवति त्रि० स्त्रियां ङीप् पूर्ववत् सर्वम्। "स विश्वाचीरभिचष्टे घृताचीः" ऋ०१०।१३९।२। "घृताचीर्दीप्तरूपवतीः" भा०।

**घृताचीगर्भसम्भवा** स्त्री घृताच्या गर्भ इव सम्भवति सम्+भू–अच्। स्थूलैलायाम् राजनि०। घृताच्या गर्भे सम्भवोऽस्य। २ऋतेयुप्रभृतौ पौरवे नृपभेदे पु० ३तत्कन्यायां स्त्री घृताचीशब्दे विवृतिः।

**घृतादि** पु० घृतमादिर्यस्य "घृतादीनाञ्च" शान्तनवाचार्य्यसूत्रोक्ते अन्तोदात्ततानिमित्ते शब्दगणे स च आकृतिगणः" सि० कौ०।

**घृतान्न** पु० घृतमाज्यमन्नमदनीयं यस्य। हविर्भुजि वह्नौ। "तपुर्मूर्द्धा घृतान्नः पावकः" ऋ० ७।३।१। २घृतभोजिनि त्रि० घृतेन मिश्रितमन्नम्। ३घृतमिश्रिते अन्ने न०।

**घृतार्चिस्** पु० घृतेनार्चिर्यस्य घृतं दीप्तमर्चिर्यस्य वा। वह्नौ। "घृतार्चिः प्रीतिमांश्चापि प्रजज्वाल दिधक्षया" भा० आ० ५८ अ०।

**घृतावनि** स्त्री घृतस्यावनिरिव। यूपकर्णे हेमच०।

**घृतावृध्** त्रि० घृतमुदकं वर्द्धतेऽनया क्विप् दीर्घः इत०। उदकवर्द्धके "घृतेन द्यावापृथिवी अभिवृते घृतश्रिया घृतपृचा घृतावृधा" ऋ०६।७०।४। उदकवर्द्धके द्यावापृथिव्यावित्यर्थः औस्थाने आच्।।

**घृतासुति** पु० घृतमुदकं वृष्टिरूपमासुवति आ+सु–क्विच् वृष्टिसंपादकयोर्मित्रावरुणयोः "ता (मित्रावरुणौ) सम्राजा घृतासुती यज्ञे यज्ञ उपस्तुता" ऋ० १।१३६।६। औस्थाने आच्। घृतमासुतिरन्नं यस्य। घृतान्नयोः इन्द्राविष्णोः। (इन्द्राविष्णू) "घृतासुती द्रविणं दत्तमस्मे" ऋ० ६।६८।६। अस्य कथाभ्यम्।

**घृताहवन** पु० घृतेनाहूयतेऽस्मिन् आ+हु–आधारे ल्युट् जुहोतेरविवक्षितकर्म्मकत्वे नाकर्म्मकत्वात् घृतस्य करणत्वमेव "तृतीया च होश्छन्दसि" पा० कर्म्मणि न तृतीया किन्तु "कर्त्तृकरणयोस्तृतीया" पा० करणे तृतीया ३त०। घृतेनाहवनाधिकरणे वह्नौ। "घृताहवन! दीदिवः प्रति ष्म रिषतो दह। अग्ने! त्वं रक्षस्विनः" ऋ०१।१२।५। घृताव्हन!! अग्ने!" भा०।

**घृताहुति** स्त्री घृतेनाहुतिः "तृतीया च होश्छन्दसि" पा० कर्मणि तृतीया जुहोतेरविवक्षितकर्म्मकत्वेनाकर्मकत्वात् करणे तृतीया वा ३त०। घृतेनाहुतौ। "यद्यजूंषि घृताहुतिभिः। यत्सामानि मध्वाहुतिभिः" आश्व० गृ० ३।३।२।

**घृताह्व** पु० घृतं तद्गन्धमाह्वयते स्पर्द्धते निर्यासेन आ+ह्वे–क उप० स०। घृततुल्यगन्धनिर्यासके सरलद्रुमे त्रिका०।

**घृतिन्** त्रि० घृतमाज्यमुदकं वा प्राशस्त्येनास्त्यस्य इनि। १प्रशस्ताज्यके २प्रशस्तजलके च स्त्रियां ङीप्। "पयस्विनीं घृतिनीमत्युदाराम्" (गङ्गाम्)भा०आनु०२६अ०।

**घृतेयु** पु० पौरवे रौद्राश्वनृपपुत्रभेदे ऋतेयुशब्दे दृश्यम् तत्र जलेयुरित्यत्र घृतेयुरिति विष्णुपु० पाठः

**घृतेली** स्त्री घृते स्नेहद्रव्ये इलति शेते इल–शये अच् गौरा० ङीष्। तैलपायिकायां (तेलापोका) हेमच०।

**घृतोद** पु० घृतमिव स्वादु उदकमस्य उदकस्योदः। कुशद्वीपावरके समुद्रभेदे घृतोदध्यादयोऽप्यत्र कुशशब्दे २१४२ पृ० दृश्यम्।

**घृतौदन** पु० घृतेन मिश्रः ओदनः। "भक्ष्येण मिश्रणे" पा०३त०। आज्यमिश्रिते ओदने। "दध्योदनं च जीवाय शुक्राय च घृतौदनम्" ग्रहबलिकथने सं० त०।

**घृत्समद** पु०गृत्समद+पृषो०। ऋषिभेदे विष्णुपु०तथापाठः।

**घृष** सघर्षे स्पर्द्धायाञ्च सक० पर० सेट्। घर्षोमर्द्दनम् (घषा) व्यापारभेदः संमर्द्दो वा घर्षति अघर्षीत् जघर्ष। घर्षणं घर्षः। उदित् घर्षित्वा घृष्ट्वा। क्त्वो वेट्कत्वात् निष्ठा त्वनिट् घृष्टः। घर्षित इति प्रयोगस्तु तारका० इतजन्तः। "धातुजं सृजते रेणुं वायुवेगेन घर्षितम्" (शैलराजः) रामा० १।७६अ०।

**घृष्ट** त्रि० घृष–कर्म्मणि क्त। मर्दिते १कृतघर्षणे "घृष्टरसाञ्जनं नार्याः क्षीरेण" सुश्रु०। "द्रौपद्या ननु मत्स्यराजभवने घृष्टं न किं चन्दनम्" पञ्चतन्त्रम्। २गन्धभेदे "घृष्टोमलयजोगन्धः सरलस्य नमेरुणा। अगुरुप्रभृतिश्चापि यस्य पङ्कः प्रतीयते। घृष्टः स घृष्टगन्धोऽयं द्वितीयः परिकीर्त्तित" इति शब्दार्थचि० धृतवाक्यम्।

**घृष्टि** पुंस्त्री घृष–कर्त्तरि क्तिच्। १शूकरे मेदि० स्त्रियां वा ङीप्। (चामरआलु) २वाराह्याम् अमरः। ३अपराजितायाम् स्त्री मेदि०। भावे क्तिन् घर्षणे (घषा) ४व्यापारभेदे ५स्पर्द्धायाञ्च स्त्री मेदि०। क्तिचन्तत्वात् न ङीप् (कुलिया)। रत्नमा०।

**घृष्टिला** स्त्री घृष्टिं लाति ला–क। पृश्निपर्ण्याम्। (चा-

**घृष्वि** पुंस्त्री घर्षति भूमिं तुण्डेन घृष–क्विन् क्वचिद् घृष्वि इत्यादि उ०नि०न वलोपः। १वराहे २घर्षणशीले त्रि०। "मदन्ति वीरा विदथेषु घृष्वयः" ऋ० १।८५।१। "प्र वः शर्द्धाय घृष्वये" १।३७।४। "घृष्वये शत्रुघर्षणयुक्ताय" भा०। "क्रीडन्ति क्रीडा विदथेषु घृष्वयः" १।१६६।२। एवं सर्वत्र घृष्विशब्दस्य इदन्तत्वेन प्रयोगदर्शनात् क्विन्प्रत्ययान्तत्वेव निष्पन्नत्वात् क्वचिद्वराह इति सि०कौ० उक्तेश्च शब्दक० घृष्वृशब्दस्य नान्तत्वकल्पनं प्रामादिकमेव। स्त्रियां वा ङीप्।

**घेल्कुलिका** स्त्री (घँचु) ख्याते क्रौञ्चादने दृक्षे रत्नमाला।

**घोङ्क** पुंस्त्री पक्षिभेदे शब्दच० स्त्रियां ङीप्।

**घोट(क)** पु० घुट–अच् ण्वुल् वा। अश्वे। तस्य भुविवेष्टनाकारेण चेष्टनात्तथात्वम्। स्त्रियां जातित्वात् ङीप्। "घोटी छोधा विकृतविरुतं तु हेतुहीनं हसन्ती" का०द०। तल्लक्षणादि अश्वशब्दे ४८८पृ० दृश्यम्" भा०।

**घोटकमुख** पु० घोटकस्य मुखमिव मुखमस्य। १किन्नरभेदे २प्रवरर्षिभेदे च हेमा० व्र० प्रवराध्याये दृश्यम्।

**घोटकारि** पु० ६त०। महिषे शब्दार्थ चि०। तस्य यथाऽश्वैरं तथा उपयमशब्दे १२५० पृ० उक्तम् स्त्रियां वा ङीप्। २हयारिदृक्ष करवीरे च। हयारिशब्दे दृश्यम्।

**घोटिका** स्त्री घुट–ण्वुल् टापि अत इत्त्वम्। कर्कन्ध्वाम् राजनि०।

**घोणा** स्त्री घुण–अच्। १अश्वनासिकायां २नासामात्रे च अमरः। "जवनिरोधस्फोतरोषघुरघुरायमाणघोर घोणेन" काद०। "गौरः प्रलम्बोज्ज्वलचारुघोणः" भा० आ० १८६ अ०। अस्य क्रोडादित्वात् स्वाङ्गत्वेऽपि न ङीप् दीर्घघोणा स्त्री।

**घोणिन्** पुंस्त्री दीर्घा घोणाऽस्त्यस्य व्रीह्या० इनि। शूकरे अमरः। स्त्रियां ङीप्।

**घोण्टा** स्त्री घुण–वा ट तस्य नेत्त्वम्। वदरीभेदे (सेकोलाकुल) २पूगदृक्षे च मेदि०। [हेमच०।

**घोण(न)स** पु० गोनस+पृषो०। तिलत्से गोनसे सर्पभेदे

**घोर** न० घुर–अच्। १विषे राजनि० २भयानके त्रि० हेम०। घोणाशब्दे उदा०। "शिवाघोरस्वनां पश्चात्" रघुः। "घोरेऽस्मिन् भूतसंसारे" मनुः। "घोररावां महारौद्रीम्" कालीध्यानम्। ३शिवे पु० "घोराय घोररूपाय घोरघोरतराय च" भा०शा०२८६अ० शिवस्तोत्रे। "नमोवः पितरोघोराः" यजु० २।३२।

**घोरक** पु० व०। देशभेदे। "काश्मीरश्च कुमारश्च घोरका हंसकायनाः" भा० स० ५१अ०।

**घोरघुष्य** न० घोरं घुष्यते घुष–क्यप्। कांस्ये राजनि०। घोरं घृष्टं यस्य घोरघृष्टमित्यपि तत्र पाठः। तत्रार्थे राजनि०।

**घोरघोरतर** पु० घोर+प्रकारे द्वित्वम् ततः तरप्। १शिवे घोरशब्दे दृश्यम् २अत्यन्तघोरे त्रि०।

**घोरदर्शन** पुंस्त्री घोरं दृश्यतेऽसौ दृश–कर्म्मणि ल्युट्। १उलूके राजनि० स्त्रियां जातित्वात् ङीष्। २भयानके त्रि०। "वीचाङ्कके महावाङ्कस्तद्दन घोरदर्शनम्" भा० सौ० ६अ०।

**घोरवासन** पुंस्त्री घोरं वासनं शब्दोऽस्य। १शृगाले शब्दर०। स्त्रियां जातित्वात् ङीष्। २घोरशब्दयुक्ते त्रि०।

**घोरवासिन्** पुंस्त्री० घोरं वसति रस–णिनि। १शृगाले हेमच०। स्त्रियां ङीप्। २घोरशब्दकारिणि त्रि०

**घोररूप** पु॰ घोरमुग्रं रूपमस्य १महादेवे। घोरशब्दे दृश्यम्। २उग्ररूपे त्रि॰।

**घोरवाशन** पुंस्त्री॰ घोरं वाशते वाश–ल्यु। १शृगाले शब्दर॰ स्त्रियां जातित्वात् ङीष्। २भयानकशब्दकारिणि तिर्य्यग्जातिमात्रे त्रि॰।

**घोरवाशिन्** पुंस्त्री॰ घोरं वाशते वाश–णिनि। १शृगाले हेमच॰ २भयानकशब्दकारिणि पक्षि मृगादौ च स्त्रियां ङीप्।

**घोरा** स्त्री घुर–अच्। १देवताडीलतायां, राजनि॰ भयानकायां स्त्रियां त्रिका॰। “२करालवदनां घोराम्” कालीध्यानम्। ३रात्रौ, ४सांख्योक्तायां राजस्यां मनोवृत्तौ शब्दार्थचि॰ ज्योतिषोक्ते “रवावृषभे संक्रमे भास्करस्य भवेद्घोरनाम्नी युक्ते” २।१०। ११।२०।२५। संख्यकनक्षत्रे ५रविसंक्रान्तिभेदे च। संक्रमशब्दे विवृतिः

**घोल** पुंन॰ घुड–कर्म्मणि घञ् डस्य लः। १तक्रे मथितदधि। “तत्तु सस्नेहमजलं मथितं घोलमुच्यते” सुश्रु॰। “शर्करं निर्जलं घोलं वातपित्तहरं स्मृतम्। मस्तुना रहितं शाल्यं दधि शुभ्रतरे पटे। जीरसैन्धवसंमिश्रं घोलं घनतरं स्मृतम्। जीरसैन्धवसंयुक्तं घोलं वातप्रणाशनम्। अतीसारे च मन्देऽग्नौ हितं रुच्यं बलप्रदम्” शब्दार्थचि॰ वैद्यकम्। “हिङ्गुजीरयुतं घोलं सैन्धवेन च संयुतम्। भवेदतीव वातघ्नमर्शोऽतीसारहृत् परम्। रुचिदं पुष्टिदं बल्यं वस्तिशूलविनाशनम्। मूत्रकृच्छ्रे तु सगुडं पाण्डुरोगे सचित्रकम्। भावप्र॰ द्रव्यभेदयुतस्य तस्य गुणादिकमुक्तम्।

**घोलज** न॰ घोलात् जायते जन–ड। घोलजाते घृतादौ।

**घोलवटक** पु॰ घोलमिश्रितो वटकः। वटकभेदे “विष्टम्भी घोलवटको विदाही पवनापहः” मदनपालनि॰।

**घोलि(ली)** घुड–इन् डस्य वा ङीप्। पत्रशाकभेदे राजनि॰

**घोष** पु॰ घुष–आधारे घञ्। १आभीरपल्ल्यां तस्यां गोभिर्नादात् तथात्वम् कर्त्तरि अच्। २गोपाले ३कांस्ये न॰ मेदि॰ ४मशके त्रिका॰। भावे घञ्। ५ध्वनौ ६मेघशब्दे “स्वयां यमः खयः+कँपौ विसर्गः शर एव च। एते श्वासानुप्रदाना अघोषाश्च विवृण्वते। कण्ठमन्ये तु घोषाः स्युः” शिक्षोक्ते ७वर्णोच्चारणबाह्यप्रयत्नभेदे। ८घोषलतायाम् स्त्री शब्दार्थचि॰ “न च वृन्दावने कार्य्यो गवां घोषः कदाचन” हरिवं॰३२८१स्लो॰ शब्दे “द्युमन्तं घोषं विजयाय कृण्महे” ऋ॰ १०,८४।४। “तत्र भुक्त्वा पुनः किञ्चित् तूर्य्यघोषैः प्रहर्षितः” मनुः। गोपे “हैयङ्गवीनमादाय घोषवृद्धानुपस्थितान्” रघुः। धूमा॰ वुञ्। घोषक आभीरपल्लीभवे त्रि॰।

**घोषक** पु॰ घोष+स्वार्थे क। धामार्गवे घोषातकीलतायाम् अमरः। [श्वेतघोषातकीलताभेदे रत्नमा॰।

**घोषकाकृति** पु॰ घोषकस्य लताभेदस्याकृतिरिवाकृतिरस्य।

**घोषण** न॰ घुष–भावे ल्युट्। १ध्वनौ णिच्–भावे ल्युट्। उच्चैःशब्देन ज्ञापने २व्यापारभेदे (ढेड़रा पेटा)। “वीर्य्यविक्रमशौर्य्याणां घोषणं सहितं भवेत्” रामा॰ सुन्द॰ ५८अ॰। युच्। घोषणाऽप्यत्र स्त्री। “राजा सर्वत्र पटहशब्देन घोषणामाज्ञापयामास” पञ्चत॰। “दिग्विजृम्भितकाकुत्स्थपौलस्त्यजयघोषणः” रघुः।

**घोषयित्नु** पुंस्त्री॰ घुष–णिच् वा॰ इत्नुच्। १ब्राह्मणे २कोकिले। ३वन्दिनि त्रि॰ शब्दरत्ना॰।

**घोषवत्** त्रि॰ घोषः ध्वनिः वर्णभेदोच्चारणे बाह्यप्रयत्नोवाऽस्त्यस्य मतुप् मस्य वः। १घोषरूपबाह्यप्रयत्नयुक्ते गकारादिवर्णभेदे। “सर्वे स्वरा बलवन्तो घोषवन्तः कर्त्तव्याः” छा॰ उ॰ “घोषवदाद्यन्तरन्तस्थमभिनिष्ठानान्तं द्व्यक्षरं चतुरक्षरं वा” आश्व॰गृ॰१।१५।५।६। “वर्गप्रथमद्वितीयवर्णा ऊष्माणश्च हकारवर्जमघोषवन्तः शिष्टाः घोषवन्तः। तदादौ यस्य तत्तथोक्तं अन्तर्मध्येऽन्तःस्थायरलवा यस्य तत् तथोक्तम्। अभिनिष्ठानो विसर्गः अन्ते यस्य तत् अक्षरं स्वरः। अकारादयो द्वादश स्वराः शिष्टं व्यञ्जनम् अपरिमितव्यञ्जनः। चतुरक्षरं वा। तत्र द्व्यक्षरे भद्रः देवः भवः। चतुरक्षरे भवनाथः नागदेवः रुद्रदत्तः नारा॰ “आदौ घोषवदक्षरं यरलवान् मध्ये पुनःस्थापयेदन्ते दीर्घविसर्जनीयरहितं नाम प्रयत्नात् कृतम्” गर्गः। शाखिभेदात् ऽविसर्गान्तता व्यवस्थाप्या। २ध्वनियुक्ते च। “त्वं यज्ञमतुलं घोषं घोषवांस्त्वं बलाहकः” भा॰ आ॰ २५अ॰। स्त्रियां ङीप्। सा च ३वीणायां हेमच॰।

**घोषा** स्त्री घुष्यते भ्रमरैरियं कर्म्मणि घञ्। १शतपुष्पायां, मधुरिकायां, (मौरि) मेदि॰ २कर्कटशृङ्ग्यां, राजनि॰। ४कोशातक्याञ्च शब्दार्थचि॰। [घोषालतायां रत्नमा॰।

**घोषातकी** स्त्री कोषातकी+पृषो॰। कोषातकीलतायां श्वेत-

**घोषादि** पु॰ “घोषादिषु च” पा॰ परस्थितेषु पूर्वपदस्याद्युदात्ततानिमित्तेषु शब्दभेदेषु स च गणः घोष कट वल्लभ हृद बदरी पिङ्गल पिशङ्ग माला रक्षा शाला कूटशाल्मली अश्वत्थ तृण शिल्पी मुनि प्रेक्षा।”

**घौर** पु० घोरस्यर्षेरपत्यम् ऋष्यण् । कण्वगोत्रप्रवरे ऋषिभेदे । "कण्वानामाङ्गिरसाजमीढ़ एवेति घोरस्य चैके व्रुवतेऽवक्रयाजमीढमाङ्गिरसघौरकाण्वेति" आ० श्री० १२।१३।१

**घ्रंस** पु० ग्रस्यन्ते रसा अस्मिन् ग्रस—आधारे घञ् पृषो० । १दिवसे निघ० । "यो अस्मै घ्रंस उत वा य ऊधनि" ऋ० ५।३४।३। इमामृचमधिकृत्य निरु० ६।१०। उक्तं यथा घ्रंस इत्यहर्नाम ग्रस्यन्तेऽस्मिन् रसाः" इति । अहस्तुल्ये २दीप्ने त्रि० "परि घ्रंसमोमना वां वयो गात्" ऋ० ७।६८।४। घ्रंसं दीप्तम्" भा० । इमामृचमधिकृत्य निरुक्ते तु घ्रंसमहरिति व्याख्यातम् । पृषो० अन्त्य-लोपे घ्रंस् अप्यत्र । "न घ्रंस्तताप न हिमो जघान" अथ० ७।१८।२।

**घ्रस** वृ सवत् धातुरिति केचित् ।

**घ्रा** गन्धग्रहणे अक० घ्राणजप्रत्यक्षे सक० भ्वा०प० अनिट् । जिघ्रति अघ्रात् अघ्रासीत् अघ्रातास् अघ्रासिष्टाम् । जघ्रौ जघ्रिथ जघ्राथ । घ्राता घ्रेयात् घ्रायात् । कर्म्मणि भावे वा घ्रायते अघ्रायि "अघ्रायि वान् गन्धवहः सुगन्धः" भट्टिः । "पाड्वर्गिकं जिघ्रति षड्गुणेशः" भाग० १।३।६। नासिकया गन्धज्ञानमिह (सोङा) ग्रहणम् । उपसर्गपूर्वकस्य तदुपसर्गद्योत्यार्थयुक्ते ग्रहणे । घ्रेयः घ्रातं—घ्राणम् घ्रातिः

**घ्राण** न० घ्रा—करणे ल्युट् । १नासिकेन्द्रिये । तस्य मतभेदेन भौतिकादिता इन्द्रियशब्दे ८५४०पृ० दर्शिता । "इन्द्रियं घ्राणलक्षणम्" भाषा० तस्य पार्थिवत्वे प्रमाणं सि० मु० दर्शितं यथा

"घ्राणेन्द्रियं पार्थिवं रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वात् कुङ्कुमगन्धादिव्यञ्जकघृतवत् न च दृष्टान्ते स्वकीयरूपादिव्यञ्जकत्वादसिद्धिरिति वाच्यं परकीयरूपाद्यव्यञ्जकत्वस्य तदर्थत्वात् न च नवशरावगन्धव्यञ्जकजलेन नैकान्तमिति वाच्यं तस्य सक्तुरसाभिव्यञ्जकत्वात् यद्वा परकीयेति न देयं, वायूपनीतसुरभिभागस्य दृष्टान्तत्वसम्भवात् न च घ्राणेन्द्रियसन्निकर्षस्य गन्धमात्रव्यञ्जकत्वात् तत्र व्यभिचार इति वाच्यं द्रव्यत्वे सति इति विशेषणात्" । कर्म्मणि क्त वा तस्य नः । २क्षतघ्राणे त्रि० घ्रातोऽप्यत्र । भावे ल्युट् । (सोङा) ३व्यापारे न० घ्राणेन सूकरो हन्ति पक्षवातेन कुक्कुटः" मनुः । तस्याधिष्ठातारावश्विनौ ।

**घ्राणज** न० घ्राणे जायते करणस्याधारत्वविवक्षया "सप्तम्यां जनेर्डः" पा० जन—ड ७त० । नासिकेन्द्रियजाते प्रत्यक्षभेदे "घ्राणजादिप्रभेदेन प्रत्यक्षं षड्विधं मतम्" भाषा० तत्र प्रत्यक्षं गन्धादेर्यथाह तत्रैव "घ्राणस्य गोचरो गन्धो गन्धत्वादिरपि स्मृतः" । "घ्राणग्राह्योभवेद्गन्धो घ्राणस्यैवोपकारकः" इति च

**घ्राणतर्पण** पु० घ्राणमिन्द्रियं तर्पयति । सुगन्धे अमरः ।

**घ्राणदुःखदा** स्त्री घ्राणस्य दुःखं ददाति दा—क । छिक्कन्यां (हाँचि) भावप्र० ।

**घ्राणश्रवस्** पु० घ्राणमिव श्रवः कर्णोऽस्य । कार्त्तिकेय सैन्यभेदे । "घ्राणश्रवाः प्रतिस्कन्दः काञ्चनाक्षोजलन्धरः" भा० आनु०४६अ० कुमारसैनिकोक्तौ

**घ्राति** स्त्री घ्रायते अनया घ्रा—करणे क्तिन् । १नासिकायां शब्दच० । भावे क्तिन् । २घ्राणे (सोङा) व्यापारे स्त्री "ब्राह्मणस्य रुजः कृत्या घ्रातिरघ्रेयमद्ययोः" मनुः ।

**इति वाचस्पत्ये घकारादिशब्दार्थनिरूपणम् ।**

## ङ

ङकारः व्यञ्जनवर्णभेदः कवर्गपञ्चमः तस्योच्चारणस्थानं कण्ठमूलं नासिका च "जिह्वामूले तु कुः प्रोक्तः" इति "अमोऽनुनासिका नह्रौ" इति च शिक्षोक्तेः तदुच्चारणे आभ्यन्तरप्रयत्नः कण्ठमूले जिह्वामूलस्पर्शः । बाह्यप्रयत्नाः संवारनादघोषाल्पप्राणाः । मातृकान्यासेऽस्य दक्षकराङ्गुल्यग्रेषु न्यस्यता । तस्य तन्त्रे वाचकशब्दा वर्णोद्धारतन्त्रे उक्ता यथा "ङः शङ्खो भैरवश्चण्डो विन्दूत्तंसः शिशुः प्रियः । एकोरुद्रोदक्षनखः खर्परोविषयस्पृहः । कान्तिः श्वेतोऽङ्कुशोधीरोद्दिलात्मा ज्वालिनी वियत् । मन्त्रशक्तिश्च मदनो विघ्नेशी चात्मनायकः । एकनेत्रो महानन्दो दुर्द्धरश्चन्द्रमा यतिः । शिवश्नलो नीलकण्ठः कामेशी चमसांशुकौ" । कामधेनुतन्त्रे तस्य ध्येयरूपमुक्तं यथा । "ङकारं परमेशानि । स्वयं परमकुण्डलीम् । सर्वदेवमयं वर्णं त्रिगुणं लोललोचने ! । पञ्चप्राणमयं वर्णं ङकारं प्रणमाम्यहम्" "नकार-

"आद्यनुस्वारपञ्चमौ झिविधातुषु" इत्यमरेणौ भावन्त सर्वधातुषु वर्गपञ्चमवर्णस्य नकारजत्वोक्तेः ङकारस्य तत्र नकारजत्वम् तेन अङ्क—क्विपि अन् इत्यादिरूपम्। तस्य काव्यादौ प्रथमनिर्देशफलं यथा "कः खः गोघश्च लक्ष्मीं वितरति वियशो ङस्तथा चः सुखं छः" वृ॰र॰ टी॰ हल्युक्ते रुपयशः। [एकाक्षरकोषः।

ङ पु॰ ङु—बा॰ ड। १विषये २विषयस्पृहायां मेदि॰ ३भैरवे

ङु ध्वनौ भ्वा॰ आत्म॰ अक॰ अनिट्। ङवते अङविष्ट। जुङुवे। सनि जुङूषते।

इति वाचस्पत्ये ङकारादिशब्दार्थनिरूपणम्।

## च

चकारः व्यञ्जनवर्णभेदः चवर्गस्याद्यः तस्योच्चारणस्थानं तालु "इचुयशानां तालु" सि॰कौ॰ उक्तेः तस्योच्चारणे-आभ्यन्तरप्रयत्नः तालुनि जिह्वामध्यस्पर्शः श्वासविवाराघोषाल्पप्राणा बाह्यप्रयत्नाः। मातृकान्यासे वामबाहुमूलेऽस्य न्यस्तता। अस्य वाचकशब्दाः वर्णोद्धारतन्त्रे उक्ता यथा। "चः पुष्कलो हली वाणी चामशक्तिः सुदर्शनः। चर्म्मुण्डधरो भीमो महिषाचारलक्षणः। एकरूपो रुचिः कूर्म्मः शाल्मली दीर्घबाहुकः। वामबाहुमूलं माया चतुर्मूर्तिस्वरूपिणी। दयितश्च निषेधश्च लक्ष्मीश्चनीयलोचनः। चन्दनं चन्द्रमा देवशेतनो हस्तिको बुधः। देवी कोटमुखस्वात्मा कुमारी पूर्वफाल्गुनी। अनङ्गमेखला वायुर्मोदिनी च सुलावली"। तस्य ध्येयरूपं यथा "चवर्णं शृणु सुश्रोणि! चतुर्वर्गप्रदायकम्। कुण्डलीसहितं देवि! स्वयं परमकुण्डलीम्। सततं कुण्डलीयुक्तं पञ्चप्राणमयं सदा। पञ्चप्राणमयं वर्णं पञ्चप्राणात्मकं सदा। त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं प्रिये!" कामधेनुतन्त्रम् काव्यबन्धादौ प्रयोगे सुखदायकता ङशब्दे तन्मूलमुक्तम्।

च अव्य॰ चि—चक्ष—वा बा॰ ड। १पादपूरणे २पक्षान्तरद्योतने ३अवधारणे मेदि॰ ४हेतौ त्रिका॰। पादपूरणार्थस्य निरर्थकतैव। "निरर्थकं चादि पादपूरणैकप्रयोजनम्" चन्द्रालोकः ५समुच्चये ६अन्वाचये ७इतरेतरयोगे ८समाहारे च" अमरः। "चार्थे द्वन्द्वः" पा॰ सि॰कौ॰ व्याख्यातं यथा

"समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः। परस्पर (१) निरपेक्षस्याऽनेकस्य (२) एकस्मिन् (३) अन्वयः समुच्चयः। अन्यतरस्यानुषङ्गिक (४) त्वेऽन्वाचयः। मिलितानां (५) अन्वय इतरेतरयोगः। समूहः (६) समाहारः। तत्रेश्वरं गुरुञ्च भजस्वेति समुच्चये भिक्षामट गाञ्चानयेत्यन्वाचये च न समासोऽसामर्थ्यात् (७)। धवखदिरौ। संज्ञापरिभाषम्"।

व्याख्यातं चैतदस्माभिः सरलायाम्।

(१) "परस्परनिरपेक्षस्येति एकस्य क्रियान्वयोत्तरमपरस्यावृत्त्या तदन्वय इति न तयोः परस्पराकाङ्क्षा। (२) अनेकस्येति तेनैकस्य सापेक्षत्वेऽपि न दोष उभयोस्तथात्वाभावात्। समुच्चये चशब्देन समभिव्याहृतपदार्थेतरसापेक्षत्वं बोध्यते तदसमभिव्याहारे तु न। अतएवात्रैक एव चशब्दः प्रयुज्यते तेन चशब्दोत्तरचशब्दस्यैव समभिव्याहृतक्रियाद्यान्वये इतरसापेक्षत्वं गतत्वस्येति बोध्यम्। (३)एकस्मिन् एकधर्मावच्छिन्ने इत्यर्थः अन्वय इत्येतस्य यत्रेत्यादिस्तथाच यत्रैवमन्वयस्तत्र समुच्चयचशब्दार्थ इति भावः। न त्वन्वय एव समुच्चय इति भ्रमितव्यम्। अन्वयश्च विशेष्यतया विशेषणतया वा तत्राद्यं चैत्रो गच्छति पचति चेत्यादौ क्रियासमुच्चये, अन्त्यम् ईश्वरं गुरुञ्च भजस्वेत्यादौ द्रव्यसमुच्चये। (४) आनुषङ्गिकत्वमनुद्देश्यत्वमन्यतरस्य प्राधान्यञ्च तस्यान्विक्रियाया अवश्यकर्त्तव्यत्वरूपं तथाच समभिव्याहृतक्रियादिगतमानुषङ्गिकत्वञ्चाप्यत्वमन्वाचयचकारार्थः। (५) मिलितानामिति परस्परापेक्षाणामुद्भूतावयवभेदसमूहरूपाणामित्यर्थः। अन्वय इत्यस्यैकधर्मावच्छिन्नेनान्वय इत्यर्थः। तेन नीधातोः संयोगजनकव्यापारजनकव्यापारबोधकतया द्विकर्मकत्वेन अजां ग्रामं नयतीत्यादौ अजाग्रामयोरुभयोरपि धातूपात्तक्रियायामन्वयेन तत्र न चकारयोगो नापि समासः तयोरेकस्य संयोगेऽपरस्य संयोगानुकूलव्यापारेऽन्वयादेकत्रान्वयाभावात्। अतएव यत्रानेकचकारप्रयोगः, यत्रैवमन्वयश्च तत्रेतरेतरयोगत्वादयसमूहश्च चार्थ इत्यर्थः। (६) अनुद्भूतावयवभेदसमूहस्य प्रतीत्या प्रत्येकावयववृत्तिधर्म एव प्रत-

त्तिनिमित्तं समाहारे तु द्वित्वत्वादिनैव समूहस्य भानात् समूहत्वमेव प्रवृत्तिनिमित्तमिति विशेषः । एवञ्च उभयत्रैव समूहस्य बोधः । (७) असामर्थ्यादिति एकार्थीभावाभावादित्यर्थः । तथाहि बहुव्रीहिघटकपदानां कर्माद्यन्तर्भावेणैव द्वन्द्वघटकपदानां चार्थान्तर्भावेणैव एकार्थीभाव आवश्यकः "समर्थः पदविधिरिति" पा० परिभाषितत्वात् चार्थे द्वन्द्व इत्युक्तेश्च । न चेतरेतरान्वये परस्परनिरपेक्षाणामेकार्थीभावः सम्भवति येन समुच्चयान्वाचययावेकार्थीभावेऽन्तर्भूतौ स्याताम् । ततश्चेतरेतरयोगे समाहारे च साहित्यस्य सत्त्वादेकार्थीभावस्तयोस्तदभावाच्च तयोरिति बोध्यम् । इयांस्तु विशेष इतरेतरयोगे साहित्यं विशेषणं द्रव्यं विशेष्यं, समाहारे तु साहित्यं प्रधानं द्रव्यं विशेषणमिति यथा चानयोर्बोधवैलक्षण्यं तथाकरे द्रष्टव्यम्"। पक्षान्तरं चात्र पुनरर्थकम् यथा "मूर्खोऽपि शोभते तावत् सभायां वस्त्रवेष्टितः । तावच्च शोभते मूर्खो यावत् किञ्चित् न भाषते" हितो० । ९तुल्ययोगित्वे १०विनियोगे च शब्दार्थचि०। तत्र तुल्ययोगितालङ्कारस्य चेन द्योतनात्तस्य तदर्थकता यथा "सङ्कुचन्ति सरोजानि स्वैरिणी वदनानि च" चन्द्रा० । एवं दीपकालङ्कारद्योतकताऽपि ३६६पृ० दृश्या । "सती च योषित् प्रकृतिश्च निश्चला" माघः । चकारद्वयप्रयोगे क्वचिद्विकल्पयोगितायाः क्वचित्तुल्यप्राधान्यस्य चावबोधनम् यथा "इतीरिता पत्ररथेन तेन ह्रीणा च हृष्टा च बभाण भैमी" नै०। "कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी" कुमा०। लिदनुबन्धः चण् अव्ययं तस्य प्रयोगे णित्त्वम्।

**च** पु० चीयते शुक्लपक्षे किरणैः अङ्कं परधनं वा चिनोति वा चि—ड । १चन्द्रे २कच्छपे ३चौरे ४चण्डेशे ५चवर्गे च मेदि० । ६निर्बीजे ७दुर्जने च त्रि० शब्दरत्ना० ।

**चक** भ्रान्तौ भ्वा० पर०अक० सेट् इदित् । चङ्कति अचङ्कीत् । चचङ्क ।

**चक** प्रतिघाते तृप्तौ च भ्वा० आ० अक० सेट् । चकते अचकिष्ट चचके । मित् चकयति । प्रतिघातः भयहेतुकोऽनिष्टशङ्कया गमनादिप्रतिरोधः । "व्याधानुसारचकिता हरिणीव यासि" मृच्छ०। "पौरस्त्यचकितेश्वरः" रघुः । उद्—अप्रतिघाते । "यं चेकितानमनुचिताय उच्चकन्ति" भाग० ६।१०।४३। उच्चकन्ति अप्रतिहतानि भवन्ति

**चकास** दीप्तौ अदा० जक्षा० पर० अक० सेट् । चकास्ति अचकासीत् । चकासाम्—बभूव आस चकार । णिचि । अचचकासत् । "चकासति च मांसादास्तथा रक्षेषु जाग्रति" । "चकासां चक्रुरतस्थुः" "शोकादभूषैरपि भूचकासाञ्चकार नागेन्द्ररथाश्वमिश्रैः" भट्टिः । "चकासतं चारु चमूरुचर्मणा" माघः ।

**चकित** न० चक—भावे क्त । १भये २सम्भ्रमे च । "कृतोऽपि दयितस्याग्रे चकितं मदसम्भ्रमः" सा० द० उक्ते ३स्त्रीणां सात्त्विकालङ्कारभेदे यथा "त्रस्यन्ती चलशफरीविघट्टितोरूर्वामोरूरतिशयमाप विभ्रमस्य । क्षुभ्यन्ति प्रसभमहो विनाऽपि हेतोर्लीलाभिः किमु सति कारणे तरुण्यः" "सचकितसस्मितवक्त्रवारिजश्रीः" । "भयचकितमाहवे निजस्" माघः । "भः ससभनगा यस्यां साष्टच्छिदिह चकिता" वृ० र० उक्ते ३छन्दोभेदे स्त्री । कर्त्तरि क्त । ४शङ्किते ५भीते च त्रि० ।

**चकोर** पु० चक—तृप्तौ ओरन् । स्वनामख्याते—पक्षिभेदे "कोकप्रीतिचकोरपारणपटुः" मुरारिः । "इमां किमाचामयसे न चक्षुषी चिरं चकोरस्य भवन्मुखस्पृशी" नैष० । "इतश्चकोराक्षि ! विलोकयेति" रघुः । स्वार्थे क तत्रार्थे अमरः । "तन्मांसगुणा राजनि० उक्ता यथा "चाटकं शीतलं स्वच्छं हृद्यं कापिञ्जलामिषम् । तद्वच्चकोरजं मांसं हृद्यञ्च बलपुष्टिदम्" ।

**चक्क** आर्त्तौ चुरा०उभ०सक०सेट् । चक्कयति ते अचचक्कत् त ।

**चक्र** पु० क्रियतेऽनेन कृ—घञर्थे क नि० द्वित्वम् । १चक्रवाके पक्षिणि, (चका) अमरः २रथाङ्गे, (चाका) ३सैन्ये, ४समुदाये, ५राष्ट्रे, ६दम्भभेदे, ७कुम्भकारोपकरणे, "कलसे निजहेतुदण्डजः किमु चक्रभ्रमिकारितागुणः" नैषधम् । ८अस्त्रभेदे । ९व्यूहभेदे, १०जलावर्त्ते, मेदि० ११ग्रामजाले, त्रिका० १२तगरपुष्पे, १३तैलिकयन्त्रे तन्त्रोक्तेषु मूलाधारादिषु स्थितेषु षट्सु १४पद्मेषु, १५सर्वतोभद्रादिषु, १६देवार्चनयन्त्रेषु "श्रीचक्रमेतदुदितं परदेवतायाः" तन्त्रम्। मन्त्रशोधोपयोगिषु १६अकडमादिषु, १७वर्णरुद्रादिचक्रेषु, "प्रवृत्ते भैरवीचक्रे सर्वे वर्णा द्विजोत्तमाः इति" तन्त्रम् १८अलङ्कारोक्ते काव्यबन्धविशेषे च न०। अलङ्कारशब्दे ३८९ पृ० दृश्यम् अर्द्धर्चादित्वात् द्विलिङ्गत्वेऽपि लक्ष्यभेदेनैवास्य लिङ्गभेदनियमः । तत्र अस्त्रभेदचक्रलक्षणं हेमाद्रौ परि० लक्षणसमुच्चये "औशनसे धनुर्वेदे जमदग्निं प्रति शुक्र उवाच । अत्र यथाप्रवक्तुर्दिग्मात्रं निबोध तत्रोत्तममध्यमाधमभेदेन

चक्रं त्रिविधं भवति । चन्मष्टाभिरारैरुत्तमं, षडारं मध्यमं चतुर्भिरारैः सम्पन्नमधमं भवति । तत्र श्लोकः । अष्टारमुत्तमं चक्रं षडारं मध्यमं भवेत् । अधमं चतुरारं स्यादिति चक्रं भवेत्त्रिधा । द्वादशपलमुत्तममेकादशपलं मध्यमं दशपलमधमं चेति बालानाम् । अबालानां पञ्चाशत्पलमुत्तमं चत्वारिंशत्पलं मध्यमं त्रिंशत्पलं कनिष्ठमिति । तथाऽष्टाङ्गुलमुत्तमं सप्ताङ्गुलं मध्यममधमं षडङ्गुलं भवति बालानाम्, अबालानान्तु षोडशाङ्गुलमुत्तमं चतुर्दशाङ्गुलं मध्यममधमं द्वादशाङ्गुलं भवति । तत्र श्लोकौ । द्वादशैकादशदशपलानि क्रमशः शिशोः । अबालस्य द्विरष्टो स्युर्द्विषत्र द्वादशापि च । बालानां त्रिविधं चक्रमष्टसप्तषडङ्गुलम् । षोडशाङ्गुलमन्येषां द्विहीने मध्यमाधमे । त्रिविधं चतुर्दशाङ्गुलमाद्यं द्विद्विहीनं मध्यमं कनिष्ठं चेति । तत्र त्र्यङ्गुला सैक्यायसमयी प्रथमा नेमिः । सार्द्धद्व्यङ्गुला मध्यमा नेमिर्द्व्यङ्गुला तु कनिष्ठा नेमिःस्यात्तु मध्यमपरिमण्डला नेमिभिर्विस्तृताभिःस्यात् मणिरत्नालङ्कृता स्थूलमूला या नेमिः सा चक्रे पूजिता भवति । तत्र सैक्यं शिल्पिभिर्विचित्रमनेकविधसंस्थानमतिमनोहरं चक्रं कर्त्तव्यमन्यत् सुधारचक्रं कुर्व्वीत" ।

विष्णुचक्रलक्षणन्तु हरिभ० ४वि० । "द्वादशारन्तु षट्कोणं वलयत्रयसंयुतम् । चक्रं स्याद्दक्षिणावर्त्तः शङ्खश्च श्रीहरेः स्मृतः"

तन्त्रोक्तं भैरवीचक्रं च तत्त्वचक्रत्वेन प्रसिद्धम् तत्र च निष्कामाणामधिकारः रुद्रयामलोक्ते चक्रपञ्चके तु सकामानाम् यथाह चक्रं पञ्चविधं प्रोक्तं तन्त्रे तु रुद्रयामले । विधिना पूजिते चक्रे सौख्यमोक्षफलं लभेत् । महाचक्रं राजचक्रं दिव्यचक्रं तथाऽपरम् । वीरचक्रम् चतुर्थञ्च पशुचक्रञ्च पञ्चमम् । राजचक्रं राज्यदं स्यान्महाचक्रं तु मोक्षदम् । देवत्वदं देवचक्रं वीरचक्रं तु सिद्धिदम् । पशुचक्रं तु दारिद्र्यशोकदुःखामयप्रदम् । कापट्ये दक्षिणाहीने सर्व्वचक्रन्तु निष्फलम् । सकामाश्चैव निष्कामाद्द्विविधाभुवि मानवाः । उद्राशयाः कामिनो ये तेषामत्राधिकारिता । ब्रह्मज्ञानाय तु प्रोक्तं भैरवीचक्रमुत्तमम् । ब्रह्मज्ञानयुतानां तु तत्त्वचक्रेऽधिकारिता । " महानिर्व्वाणे च " नात्राधिकारः सर्व्वेषां ब्रह्मज्ञान् साधकान् विना । परब्रह्मोपासका ये ब्रह्मज्ञा ब्रह्मतत्पराः । शुद्धान्तःकरणाः शान्ताः सर्वप्राणिहिते रताः । निर्विकारा निर्विकल्पा दयाशीला दृढव्रताः । सत्यसङ्कल्पका ब्राह्मास्त एवात्राधिकारिणः । ब्रह्मभावेन तत्त्वज्ञा ये पश्यन्ति चराचरम् । तेषां तत्त्वविदां पुंसां तत्त्वचक्रेऽधिकारिता । सर्व्वब्रह्ममयो भावश्चक्रेऽस्मिन् तत्त्वसंज्ञके । येषामुत्पद्यते देवि त एव तत्त्वचक्रिणः" । अत्र सर्व्वत्र चक्राकारेण मण्डलरूपनिवेशनात् चक्रत्वम् । चक्रानुष्ठानञ्च श्यामारहस्यादौ द्रष्टव्यम् । योगोपयोगितया देहस्थमूलाधारादिचक्रनिरूपणाय इडादिनाडीनिवेशनोक्तिपूर्व्विका चक्रभेदोक्तिः तन्त्रसारे "गौतम उवाच । देवर्षे ! योगयुक्तानां योगानुभवदर्शक ! । सांख्ययोगविशेषज्ञ । कर्म्मयोगनिषेधक ! विना योगं न सिध्येत्तु कुण्डलीचङ्क्रमः प्रभो ! । मूलपद्मे कुण्डलिनी यावन्निद्रायिता प्रभो ! । तावत् किञ्चिन्न सिध्येत मन्त्रयन्त्रार्च्चनादिकम् । जागर्त्ति यदि सा देवी बहुभिः पुण्यसञ्चयैः । तदा प्रसादमायान्ति मन्त्रयन्त्रार्च्चनादयः । शिवब्रह्महरेर्लोके षडैश्वर्य्यसमन्वितः । योगयोगाङ्गतेनुक्लिम्न्वसिद्धिरनुत्तमा । सिद्धे मन्त्रे परावाप्तिरिति शास्त्रेषु निर्णयः । तस्मात् कार्य्यं परं योगं कथयस्व मुनीश्वर ! । मुक्तात्मा येन विहरेत् स्वर्गे मर्त्ये रसातले । जीवन्मुक्तश्च देहान्ते निर्व्वाणपदमाप्नुयात् । नारद उवाच । कथयामि तव स्नेहाद्योगयोग्योऽसि गौतम ! । संसारोत्तरणे युक्तिर्योगशब्देन कथ्यते । ऐक्यं जीवात्मनोराहुर्योगं योगविशारदाः । तव स्नेहात् समाख्यास्ये योगविघ्नकरास्त्विमे । कामक्रोधलोभमोहमदमात्सर्य्यसंज्ञकाः । योगाङ्गैरेभिर्निर्ज्जित्य योगिनो योगमाप्नुयुः । यमनियमावासनप्राणायामौ ततः परम् । प्रत्याहारं धारणाख्यं ध्यानं सार्द्धं समाधिना । योगाङ्गान्याहुरेतानि योगिनां योगसाधने" । "यमादयस्तु । "अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यं दयाऽऽर्जवम् । क्षमा धृतिर्मिताहारः शौचञ्चेति यमा दश । तपः सन्तोषमास्तिक्यं दानं देवस्य पूजनम् । सिद्धान्तश्रवणञ्चैव ह्रीर्मतिश्च जपो हुतम् । दशैते नियमाः प्रोक्ता योगशास्त्रविशारदैः" आसनानि प्रोक्तानि । "इडयाकर्षयेद्वायुं बाह्यं षोडशमात्रया । धारयेत् पूरितं योगी चतुःषष्ट्या तु मात्रया । सुषुम्णा मध्यगं सम्यग्द्वात्रिंशन्मात्रया शनैः । नाड्या पिङ्गलया चैव रेचयेद्योगवित्तमः । प्राणायाममिमम्प्राहुर्योगशास्त्रविशारदाः । भूयो भूयः क्रमात्तस्य व्यत्यासेन क्रमाच्चरेत् । मात्रावृद्धिक्रमेणैव

सव्यग्द्वादश षोडश । जपध्यानादिभिर्युक्तं सगर्भं तं विदुर्बुधाः । तदपेतं निगर्भञ्च प्राणायामस्वरं विदुः । क्रमादभ्यस्यतः पुंसो देहस्वेदोद्गमोऽधमः । मध्यमः कम्पसंयुक्तो भूमित्यागः परो मतः । उत्तमस्य गुणावाप्तिर्यावच्छीलनमिष्यते । इन्द्रियाणां विचरतां विषयेषु निवर्हणम् । बलादाहरणं तेभ्यः प्रत्याहारोऽभिधीयते । अङ्गुष्ठगुल्फजानूरुसीमनीलिङ्गनाभिषु । हृद्ग्रीवाकण्ठदेशे तु लम्बिकायां तथा नसि । भ्रूमध्ये मस्तके मूर्द्ध्नि द्वादशान्ते यथाविधि । धारणं प्राणमरुतो धारणेति निगद्यते । समाहितेन मनसा चैतन्यान्तरवर्त्तिना । आत्मन्यभीष्टदेवानां ध्यानं ध्यानमिहोच्यते । समत्वभावनां नित्यं जीवात्मपरमात्मनोः । समाधिमाहुर्मुनयः प्रोक्तमष्टाङ्गलक्षणम् । इत्यादि कथितं विप्र ! कामादिषट्कनाशनम् । इदानीं कथयिष्येऽहं मन्त्रयोगमनुत्तमम् । विश्वं शरीरमित्युक्तं पञ्चभूतात्मकं मुने ! । चन्द्रसूर्य्याग्नितेजोभिर्जीवब्रह्मैक्यरूपकम् । तिस्रः कोट्यस्तदर्द्धेन शरीरे नाड्यो मताः । तासु मुख्या दश प्रोक्तास्तासु तिस्रोऽग्रवस्थिताः । प्रधाना मेरुदण्डेऽत्र सूर्य्याग्निचन्द्ररूपिणी । शक्तिरूपा सा च नाडी साक्षादमृतविग्रहा । दक्षिणे पिङ्गलाख्या तु पुंरूपा सूर्य्यविग्रहा । दाडिमीकुसुमप्रख्या विषाभा मुनिभिः स्मृता । मेरुमध्यस्थिता या तु मूलस्था ब्रह्मविग्रहा । सर्व्वतेजोमयी सा तु सुषुम्णा वह्निरूपिणी । तस्यामध्ये विचित्राख्या अमृतस्राविणी शुभा । सर्व्वदेवमयी सा तु योगिनां हृदयङ्गमा । विसर्गाद्बिन्दुपर्य्यन्तं व्याप्य तिष्ठति तत्त्वतः । मूलाधारे त्रिकोणाख्ये इच्छाज्ञानक्रियात्मके । मध्ये स्वयम्भूलिङ्गन्तु कोटिसूर्य्यसमप्रभम् । तदूर्द्ध्वं कामबीजन्तु कलाशान्तीन्दुनायकम् । तदूर्द्ध्वे तु शिखाकारा कुण्डली ब्रह्मविग्रहा । तद्बाह्ये हेमवर्णाभं शवर्णं चतुर्दलम् । द्रुतहेमसमप्रख्यं पद्मं तत्र विभावयेत् । तदूर्द्ध्वेऽनलसमप्रख्यं षड्दलं हीरकप्रभम् । वादिलान्तषड्वर्णेन स्वाधिष्ठानसंज्ञकम् । मूलमाधारषट्कानां मूलाधारं ततो विदुः । स्वशब्देन परं लिङ्गं स्वाधिष्ठानं ततो विदुः । तदूर्द्ध्वे नाभिदेशे तु मणिपूरं महाप्रभम् । मेघाभं विद्युदाभञ्च बहुतेजोमयन्ततः । मणिवद्भिन्नं तत् पद्मं मणिपूरं तथोच्यते । दशभिश्च दलैर्युक्तं डादिफान्ताक्षरान्वितम् । शिवेनाधिष्ठितं पद्मं विश्वालोकैककारणम् । तदूर्द्ध्वेऽनाहतं पद्मम् उद्यदादित्यसन्निभम् । कादिठान्ताक्षरैरर्कपत्रैश्च समधिष्ठितम् । तन्मध्ये वाणलिङ्गन्तु सूर्य्यायुतसमप्रभम् । शब्दब्रह्ममयं शब्दोऽनाहतस्तत्र लभ्यते । तेनाहताख्यं पद्मं तन्मुनिभिः परिकीर्त्तितम् । आनन्दसदनं तत्तु पुरुषाधिष्ठितं परम् । तदूर्द्ध्वन्तु विशुद्धाख्यं षोड़शदलपङ्कजम् । स्वरैः षोडशभिर्युक्तं धूम्रवर्णं महाप्रभम् । विशुद्धिं तनुते यस्माज्जीवस्य हंसलोकनात् । विशुद्धं पद्ममाख्यातमाकाशाख्यं महाप्रभम् । आज्ञाचक्रन्तदूर्द्ध्वे तु आत्मनाधिष्ठितं परम् । आज्ञासंक्रमणन्तत्र गुरोराज्ञेति कीर्त्तितम् । द्विदलं हक्षसंयुक्तं बोधनन्तु तदूर्द्ध्वतः । एवञ्च शिवचक्राणि प्रोक्तानि तव सुव्रत ! । सहस्राराम्बुजं बिन्दुस्थानं तदूर्द्ध्वमीरितम् । इत्येतत् कथितं सर्व्वं योगमार्गमनुत्तमम्” ।

दीक्षणीयतन्त्रोक्तमन्त्राणां साधकस्य शुभाशुभदायकताविचाराङ्गचक्राणि तन्त्रसारे दर्शितानि यथा

“अनुकूलं मन्त्रं गृह्णीयात्तथाच ‘स्वतारराशिकोष्ठानामनुकूलान् भजेन्मनून्’’ । वाराहीतन्त्रे “ताराचक्रं राशिचक्रं नामचक्रं तथैव च । तत्र चेत् सगुणो मन्त्रो नान्यचक्रं विचारयेत्” । इति तु प्रधानतया बोद्धव्यम् । “अरिमन्त्रं न गृह्णीयादकुलञ्च तथैव च” । इत्यादिदर्शनात् तत्र चक्रविचारस्यावश्यकत्वात् प्रथमं तन्निरूप्यते । तत्र सिद्धिसारस्वते “नृसिंहार्कवराहाणां प्रासादप्रणवस्य च । सपिण्डाक्षरमन्त्राणां सिद्धादीन्नैव शोधयेत् । स्वप्नलब्धे स्त्रिया दत्ते मालामन्त्रे च त्र्यक्षरे । वैदिकेषु च सर्व्वेषु सिद्धादीन्नैव शोधयेत् । एकाक्षरस्य मन्त्रस्य मालामन्त्रस्य पार्व्वति ! । वैदिकस्य च मन्त्रस्य सिद्धादीन्नैव शोधयेत्” । मालामन्त्रो यथा वाराहीतन्त्रे “विंशत्यर्णाधिका मन्त्रा मालामन्त्राः प्रकीर्त्तिताः । नपुंसकस्य मन्त्रस्य सिद्धादीन्नैव शोधयेत् । हंसस्याष्टाक्षरस्यापि तथा पञ्चाक्षरस्य च । एकद्वित्र्यादिबीजस्य सिद्धादीन्नैव शोधयेत्” चामुण्डातन्त्रे “काली तारा महाविद्या षोड़शी भुवनेश्वरी । भैरवी छिन्नमस्ता च विद्या धूमवती तथा । बगला सिद्धविद्या च मातङ्गी कमलात्मिका । एता दश महाविद्याः सिद्धविद्याः प्रकीर्त्तिताः । नात्र सिद्धाद्यपेक्षास्ति नक्षत्रादिविचारणा । कालादिशोधनं नास्ति न चारिमित्रादिदूषणम् । सिद्धविद्या तथा नात्र युगसेवापरिश्रमः । नास्ति किञ्चिन्महादेवि ! दुःखसाध्यं कथञ्चन” । मालिनीविजये “काली तारा महाविद्या त्वरिता छिन्नमस्तका । वाग्वादिनी चान्नपूर्णा

तथा प्रत्यङ्गिरा मता। कामाख्यावासिनी बाला मातङ्गी शैलवासिनी। इत्याद्याः सकला विद्याः कलौ पूर्णफलप्रदाः। सिद्धविद्यास्तथा नात्र युगसेवापरिश्रमः। तथा चैता महाविद्याः कलिदोषैर्न बाधिताः” इत्यादि वचनाद्देषु विचारो नास्ति। वस्तुतस्तु इदन्तु प्रशंसापरम् सर्व्वत्र विचारस्यावश्यकत्वम्। दुरदृष्टवशात् कदाचिदेवैरि मन्त्रश्च स्वप्नादौ प्राप्तया तत्तद्दोषस्य दृष्टत्वादिति तु साम्प्रदायिकाः। तत्रादौ

कुलाकुलचक्रम् तच्च तच्छब्दे २१३४पृ० दर्शितम्।

राशिचक्रम् आगमकल्पद्रुमे “रेखाद्वयं पूर्व्वपरेण कुर्य्यात्तन्मध्यतो याम्यकुवेरभेदात्। एकैकमीशाननिशाचरे तु हुताशवाय्वोर्विलिखेत्ततोऽर्णान्। वेदाग्निपङ्क्तियुगत्र्यवणाग्निसंख्यान् पञ्चद्व्याणशरपञ्चचतुष्टयार्णान्। मेषादितः प्रविलिखेत् सकलांस्तु वर्णान् कन्यागतान् प्रविलिखेदथ शादिवर्णान्”। तद्भक्तान्तरं शारदायाम् “बालं गौरं खुरं शोणं शमो शोभेति राशिषु। क्रमशोभेदिता वर्णाः कन्यायां शादयः स्मृताः”। अ आ इ ई मेषः। उ ऊ ऋ वृषः। ॠ ऌ ॡ मिथुनम्। ए ऐ कर्कटः। ओ औ सिंहः। अं अः शष सह क्षाः कन्यका। कवर्गस्तुला। चवर्गो वृश्चिकः। टवर्गो धनुः। तवर्गो मकरः। पवर्गः कुम्भः। यवर्गो मीनः। स्वराशेरानुकूलं मन्त्रं भजेत् “स्वतारराशिकोष्ठानामनुकूलान् भजेन्मनून्” इति वचनात्। “राशीनां शुभता ज्ञेया त्यजेच्छत्रुं क्षतिं व्ययम्। स्वराशेर्मन्त्रराश्यन्तं गणनीयं विचक्षणैः”। यदा तु स्वराशेरज्ञानम् तदा साधकनामाक्षरसम्बन्धिनं राशिं परिगृहीत्वा गणयेत्। ‘साध्याक्षरराश्यन्तं गणयेत् साधकाक्षरादितः’ रामार्च्चनचन्द्रिकाधृतवचनात्। नारायणीये च “अज्ञाते राशिनक्षत्रे नामाद्यक्षरराशितः” इति। रामार्च्चनचन्द्रिकायाम्” “एकपञ्चनवबान्धवाः स्मृताः द्वौ च षट् च दशमास्तु सेवकाः। वह्निरुद्रसुरयस्तु पोषकाः द्वादशाष्टचतुरस्तु घातकाः”। चतुरस्तु घातका इति विष्णुविषयं रामार्च्चनचन्द्रिकाधृतत्वात्। शक्त्यादौ तु षष्ठं वर्जनीयम्“षष्ठाष्टमद्वादशानि वर्जनीयानि यत्नतः” इति वचनात्। तन्त्रान्तरे “लग्नं धनं भ्रातृबन्धू पुत्रारिकलत्रकम्। मरणं धर्म्मकर्म्मायव्यया द्वादश राशयः। लग्नोऽतिलोभजननोधनदश्च धनस्मवेत्। भ्राता स्वाकारी बन्धुरर्थकृत् सुखदः सुतः। शत्रुर्नाशाय, सम्पत्त्यै कलत्रं भवति ध्रुवम्। मरणं मरणायैव, धर्म्मोधर्म्माय कल्पते। कर्म्माणि सर्व्वसिद्धिः स्यादायोऽतिशीघ्रदस्तथा। लाभालाभौ व्ययः कुर्य्यादेषाक्रमविचारणा। नामानुरूपमेतेषां शुभाशुभफलं दिशेत्। वैष्णवे तु शत्रुस्थाने बन्धुरिति पाठः। तथाच तन्त्रराजे “तेन मन्त्रादिवर्णेन नाम्नश्चाद्याक्षरेण च। गणयेद्यदि षष्ठं वाप्यष्टमं द्वादशन्तु वा। रिपुमन्त्राद्यवर्णः स्यात्तेन तस्याहितं भवेत्।”

अष्टवर्गचक्रम्—अष्टवर्गशब्दे १२२ पृ० तद्बोध्यम्।

नक्षत्रचक्रम्—भैरवीतन्त्रे “ऊर्द्ध्वगा दश रेखाःस्युस्तिर्य्यक् स्युस्तावत्स्तुकाः। सप्तविंशतिकोष्ठानि तेषु वर्णान् लिखेद्यथा। गणाक्षरनिर्णयः। अ आ अश्विनी देवगणः। इ भरणी मानुषः। ईउऊ कृत्तिका राक्षसः। ऋॠऌॡ रोहिणी मानुषः। ए मृगशिरोदेवः। ऐ आर्द्रा मानुषः। ओ औ पुनर्वसू देवः। कः पुष्योदेवः। खगघ अश्लेषा राक्षसः। ङच मघा राक्षसः। छ पूर्वफल्गुनी मानुषः। जझ उत्तरफाल्गुनी मानुषः। ञट हस्ता देवः। ठड चित्रा राक्षसः। ढ स्वाती देवः। णत विशाखा राक्षसः। थदध अनुराधा देवः। न ज्येष्ठा राक्षसः। पफ मूला राक्षसः। ब पूर्वाषाढ़ा मानुषः। भ उत्तराषाढ़ा मानुषः। म श्रवणा देवः। यर धनिष्ठा राक्षसः। ल शतभिषा राक्षसः। वश पूर्वभाद्रपदा मानुषः। षसह उत्तरभाद्रपदा मानुषः। अं अः क्ष रेवती देवः। निबन्धे “प्राप लोभात् षट्प्रात्यं कद्रस्ताद्रिस्तःकरम्। लोकलोयपटुः प्रायः स्वलौ शोभेषु भेदिताः। वर्णाः क्रमात् स्वरान्त्यौ तु रेवत्यंशगतौ तदा। अन्त्यव्यञ्जनसंख्यात्र ग्राह्या वर्गादिवर्जितः”। तथा च पिङ्गलातन्त्रे “उत्तराद्दक्षिणा यान्तु रेखां कुर्य्याच्चतुष्टयीम्। दश रेखाः पश्चिमाग्राः कर्त्तव्या वरवर्णिनि॥ अश्विन्यादिक्रमेणैव विलिखेत्तारकाः पुनः। वक्ष्यमाणविधानेन तन्मध्ये वर्णकान् लिखेत्। अकारादिक्षकारान्तानुद्विचन्द्राक्षिवेदकान्। भूवीन्दुनेत्रचन्द्रांश्च अश्लेषायां तथो प्रिये। द्विभूनेत्रनेत्रयुग्मानि वेन्दुनेत्राग्निचन्द्रकान्। मघादिज्येष्ठापर्य्यन्तं द्वितीयं नवतारकम्। वह्निभूनेन्दुचन्द्रांश्च दशेन्दुनेत्रवह्निकान्। तेषु भेदितान् वर्णान् रेवत्यन्त्ययुगे क्रमात्। एवैकत्र्यद्विरूपावनिभुजगयुगायुग्मभूयुग्मपक्षाः युग्मैकाद्वित्रिरूपानलशरशशिभूद्व्येकपक्षाग्निवेदाः। वर्णाः क्रमात् स्वरान्त्यौ तु रेवत्यंशगतावुभौ। तथा च निबन्धे “पूर्वोत्तरा-

मघ स्वैव भरण्याद्रौ च रोहिणी । इमानि मानुषाण्याहु-र्नक्षत्राणि मनीषिणः । ज्येष्ठाशतभिषामूलधनिष्ठाश्लेष कृत्तिकाः । चित्रामघाविशाखाः स्युस्तारा राक्षसदेवताः । अश्विनी रेवती पुष्यः स्वाती हस्तपुनर्वसू । अनुराधा मृगशिरःश्रवणा देवतारकाः । तथाच "स्वजातौ परमा प्रीतिर्मध्यमा भिन्नजातिषु । रक्षोमानुषयोर्नाशो वैरं दानवदेवयोः । जन्मसम्पद्विपत्क्षेमं प्रत्यरिः साधको वधः । मित्रं परममित्रञ्च जन्मादीनि पुनः पुनः । जन्मतृतीयपञ्चमसप्तमानि नक्षत्राणि वर्ज्यानि । तथा च "रसाष्टनवभद्राणि युगयुग्मगतान्यपि । इतराणि न भद्राणि" इत्यादि । स्वनक्षत्रादेव नक्षत्रं गणनीयम् । स्वनक्षत्राज्ञाने स्वनामाद्यक्षरसम्बन्धिनक्षत्रादेव नक्षत्रं गणनीयमिति । प्रादक्षिण्येन गणयेत् साधकाद्याक्षरात् सुधीः" ।

अकथहचक्रम्—तत्र अकथहशब्दे २८ पृ० द्रष्टव्यम्

अकडमचक्रम्—गोपालविषयम् अकडमशब्दे २७पृ० उक्तम्

ऋणिधनिचक्रम्—ऋणिधनिचक्रशब्दे १४२८ पृ० द्रष्टव्यम्

अन्यान्यपि तदुपयोगीनि चक्राणि रुद्रयामले द्रष्टव्यानि । स्वरोदयसम्मतानि नरपतिजयचर्य्योक्तानि "स्वरचक्राणि चक्राणि भूबलानि बलानि च" इत्यादिना षडङ्गोपक्रमे उक्तानि २० स्वरचक्राणि सर्वतोभद्रादीनि ८४ चक्राणि च क्रमशः प्रदर्श्यन्ते । तत्र षडङ्गेषु प्रथमाङ्के स्वरचक्राणि विंशतिस्तत्रादौ

१ मात्रास्वरचक्रम्—"अथातः संप्रवक्ष्यामि प्रोक्ता ये ब्रह्मयामले । मात्रादिभेदभिन्नानां स्वराणां षोड़शोदयात् । मातृकायां पुरा प्रोक्ताः स्वराः षोड़शसंख्यया । तेषां द्वावन्तिमौ त्याज्यौ चत्वारश्च नपुंसकाः । दश शेषाः स्वराग्राह्याःस्यादेकैकं द्विके द्विके । ह्रस्वास्तत्र स्वरा आद्या ह्रस्वाः पञ्च स्वरोदये । लाभालाभं सुखं दुःखं जीवितं मरणं तथा । जयः पराजयो वेति सर्वं ज्ञेयं स्वरोदये । स्वरादिमातृकोच्चारोमातृव्याप्तं जगत्त्रयम् । तस्मात् स्वरोद्भवं सर्वं त्रैलोक्यं सचराचरम् । स्वरवेत्ता हितस्तेन दैवज्ञो देवतांशकः अकारादिस्वराःपञ्च ब्रह्माद्याः पञ्च देवताः । निवृत्त्याद्याः कलाः पञ्च इच्छाद्यं शक्तिपञ्चकम् । मायाद्या मन्त्रभेदाश्च धराद्यं भूतपञ्चकम् । शब्दादिविषयास्ते च कामबाणा इतीरिताः । पिण्डं पदं तथा रूपं द्वन्द्वातीतं निरञ्जनम् । स्वरभेदस्थितं ज्ञानं ज्ञायते गुरुतः सदा । अकारादिस्वराः पञ्च तेषामष्टौभिदास्त्वमः । मात्रा वर्णो ग्रहो जीव राशिर्भं पिण्डयोगकम् । "प्रसुप्तो भाषते येन येनागच्छति शब्दितः । नामाद्यवर्णो या मात्रा मात्रास्वरः स हि स्मृतः" ।

२ वर्णस्वरचक्रम्—"कादिहान्तान् लिखेद्वर्णान् स्वराधोङ-ञणोज्झितान् । तिर्य्यक्पङ्क्तिक्रमेणैव पञ्चत्रिंशत्प्रकोष्ठके । नरनामादिमोवर्णो यस्मात् स्वरादधः स्थितः । स स्वरस्तस्य वर्णस्य वर्णस्वर इहोच्यते । वसौ शषौ खषौ चैव जयौ चैव परस्परम् । ज्ञेयौ तुल्यव्रतौ भिन्नस्वरस्याधःस्थितावपि । न प्रोक्ता ङ ञणावर्णा नामादौ सन्ति ते न हि । चेद्भवन्ति तथा ज्ञेया गजडास्ते यथाक्रमम् । वहूनि यस्य नामानि नरस्य स्युः कथञ्चन । तस्य पश्चाद्भवं नाम ग्राह्यं स्वरविशारदैः । यदि नाम्नि भवेद्वर्णः संयुक्ताक्षरलक्षणः । ग्राह्यस्तस्यादिमो-वर्ण इत्युक्तं ब्रह्मयामले ।"

३ ग्रहस्वरचक्रम्—"अस्वरोमेषसिंहान्ति, इः कन्याद्वन्द्वकर्कटाः । उस्वरे च धनुर्मीनौ एस्वरे तु तुलावृषौ । ओस्वरे मृगकुम्भौ च राशीशास्तु ग्रहस्वराः । स्वराधः स्थापयेत् खेटान् राश्योर्यस्य नायकः । भौमशुक्रज्ञचन्द्रार्कौबुधशुक्रारमन्त्रिणः । सौरिः सौरिस्तथा जीवो मेषादीनामधीश्वराः" ।

४ जीवस्वरचक्रम्—"षोड़शाक्षरोऽकावर्गःस्यात् कादिवर्गास्तु पञ्चकाः । चतुर्वर्णौ यशौ वर्गौ संख्यावर्गे प्रकीर्त्तिताः । नाम्नि वर्णाः स्वराग्राह्यावर्गाणां वर्णसंख्यया । पिण्डिताः पञ्चभिर्भक्ताः शेषं जीवस्वरं विदुः

५ राशिस्वरचक्रम्—"मेषवृषावकारे च मिथुनाद्याः षड़ंशकाः । मिथुनांशत्रयञ्चैवमिकारे सिंहकर्कटौ । कन्यातुले उकारे च वृश्चिकाद्यास्त्रयोंऽशकाः । एकारे वृश्चिकस्यांशाः षट् चापे षट् मृगादिमाः । अंशास्त्रयोमृगस्यान्त्याः कुम्भमीनौ तथौस्वरे । एवं राशिस्वराः प्रोक्ता नवांशकक्रमोदिताः

६ ऋक्षस्वरचक्रम्—"अकारे सप्तऋक्षाणि रेवत्यादिक्रमेण च । पञ्च पञ्च इकारादावेवमृक्षस्वरोदये"

७ पिण्डस्वरचक्रम्—"नाम्नि वर्णस्वरात् संख्यातश्च मात्रास्वरास्तथा । पिण्डे शरहृते शेषे पिण्डस्वरइहोच्यते"

८ योगस्वरचक्रम्—"मात्रादिस्वरभेदेन स्वरानुत्पाद्य नामतः । योगे शरहृते शेषे योगस्वर इहोच्यते"

९ द्वादशवार्षिकस्वरचक्रम्—"प्रोक्ता नैसर्गिकाश्चाष्टौ मात्राद्या नामजाःस्वराः । एतेषामुदयान् वक्ष्ये द्वादशाब्दादिषु

क्रमात्। प्रभवादिक्रमेणैव अकारादिस्वरास्तथा। वर्षैर्द्वादशभिर्मानमेकैकस्य स्वरोदये। उदयोद्वादशाब्दानां प्रत्येकं द्वादशाब्दिकः। अस्यान्तरोदयोवर्षमासमेकं दिनद्वयम्। लोकाश्विनाडिकाः ४२ प्रोक्ता अष्टत्रिंशत्पलानि च"

१० वार्षिकस्वरचक्रम्—प्रभावाद्यब्दमेकैकमुदयश्चास्वरादिकः। द्वादशाब्दस्य वर्षौना तद्भुक्तिर्वार्षिके स्वरे"

११ अयनस्वरचक्रम्—"अस्वरोदक्षिणे स्वामी इस्वरश्चोत्तरायणे। वर्ग भुक्त्यर्द्धमानेन भोगः षाण्मासिकस्वरे"।

१२ ऋतुस्वरचक्रम्—"अकारादिस्वराः पञ्च वसन्तादिक्रमोदयाः। एकैकस्मिन् स्वरे प्रोक्तोद्विसप्ततिदिनोदयः। षड्दिनानि रदा३२ नाड्यो वह्निवेद३४ पलानि च। अन्तरोदयमानं स्याद् ऋतुनाम्नि स्वरोदये" इति

१३ मासस्वरचक्रम्—"नभस्यमार्गवैशाखेष्वस्वरस्योदयोभवेत्। आश्विनश्रावणाषाढेष्विकारो नायकः स्मृतः। उकारश्चैत्रपौषे स्यादेकारो ज्यैष्ठकार्त्तिके। ओकार उदयं याति माघफाल्गुनमासयोः। द्वे दिने त्र्यब्ध्यो४२ नाड्यश्चाष्टत्रिंशत् पलानि च। अन्तरोदयउक्तोऽसाविति मासस्वरोदये"

१४ पक्षस्वरचक्रम्—"अस्वरः कृष्णपक्षेशः शुक्लपक्षेश इस्वरः। पक्षात्मिकान्तरा भुक्तिर्मासभुक्त्यर्द्धमानतः"

१५ तिथिस्वरचक्रम्—"अकारादिक्रमाच्चास्य नन्दादितिथि पञ्चकम्। नन्दा भद्रा जया रिक्ता पूर्णा च कथिताः क्रमात्। दिनस्वरोदयोनित्यं स्वस्वतिथ्यादि जायते। एकैकस्य स्वरस्य स्युर्घटी पञ्च पलानि भैः२७। अस्यान्तरोदयः प्रोक्तोदिनस्वरस्य सूरिभिः"

१६ घटीस्वरचक्रम्—"घटीस्वरो घटीपञ्च पलानि सप्तविंशतिः। एवं घटीस्वरोयाति दिनस्वरवटीस्वरः। अस्यान्तरोदयः प्रोक्तोघटिकार्द्धप्रमाणतः"

१७ तिथिवारर्क्षादिस्वरचक्रम्—"द्वादशाब्दादिनाड्यन्ताः स्वस्थानाच्च स्वकालतः। उदयन्ते पुनस्ते च ते चैकादशधा स्वराः। वर्षमासदिनानाडीपलानि च यथाक्रमम्। कालमानं मया प्रोक्तं पञ्चधात्र स्वरोदये। द्वादशाब्दस्वरादीनां भुक्तं यत्लमयन्तु यत्। तद्भक्तं च स्वभोगेन लब्धशेषादिकं भवेत्। लब्धभुक्तस्वरा ज्ञेयाः शेषश्चैवोदिताः स्वराः। अस्मिन् षष्ट्यादिभक्ते च भुक्तं स्यादुदितः स्वरः। उदितस्य स्वरस्य स्युर्नामस्वरवशेन ताः। पञ्च बालादिकावस्थाः स्वस्वकालप्रमाणतः"।

(यो यस्य कालसंभोगो तस्य कालगतान्तरम्। पिण्डितं भुक्तिसंभक्तं लब्धाङ्केन गतोदयः। शेषस्वरोदयोज्ञेयः स्वस्य संख्याहृते ततः। पञ्चावस्थाः स्वरूपेण ज्ञेयं तस्य बलाबलम्। उदयास्तस्वरौ यत्र नामाद्यक्षरजस्वरात्। तत्र बालादयोऽवस्था भवन्त्येकादिसंख्यया। नामस्वरोदयोबालः कुमारश्च द्वितीयकः। तृतीयो-युवा तुर्यो वृद्धोमृत्युस्तु पञ्चमः) ग्रन्थान्तरेऽधिक पाठः।

आद्योबालः कुमारश्च युवा वृद्धो मृतिस्तथा। निजावस्थास्वरूपेण फलदा नात्र संशय। किञ्चिल्लाभकरोबालः कुमारस्त्वर्द्धलाभदः। सर्वसिद्धिं युवा दत्ते वृद्धे हानिर्मृते क्षयः। यात्रायुद्धे विवादे च नष्टदृष्टे रुजान्विते। बालस्वरोभवेद्दुष्टोविवाहादिशुभे शुभः। सर्वेषु शुभकार्येषु यात्राकाले तथैव च। कुमारः कुरुते सिद्धिं संग्रामे सर्वतोजयम्। शुभाशुभेषु कार्येषु मन्त्रयन्त्रादिसाधने। सर्वसिद्धिं युवा दत्ते यात्रायुद्धे विशेषतः। दाने देवार्च्चने दीक्षागूढमन्त्रप्रकल्पने। वृद्धस्वरो भवेद्भव्योरणे भङ्गो भयं गमे। विवाहादिशुभं सर्व्वं संग्रामाद्यशुभं तथा। न कर्त्तव्यं नृभिः किञ्चिज्जाते मृत्युस्वरोदये। मृतोबालस्तथा वृद्धः कुमारस्तरुणस्वरः। यथोत्तरबलाः सर्व्वे ज्ञातव्याः स्वरवेदिभिः। योयस्य पञ्चमे स्थाने स स्वरो मृत्युदायकः। तृतीये तु भवेत् वृद्धिः शेषामध्यफलप्रदाः। मृत्युहीनस्वरे नाम्नि जयोनाम्नि स्वराधिके। समनाम्नि भवेत् साम्यं सन्धिर्जयपराजयौ। एकमात्रो द्विमात्रश्च त्रिचतुःपञ्चमात्रकाः। यथोत्तरबलाः सर्व्वे ज्ञातव्याः स्वरपारगैः। एकमात्रः कवर्णश्च किःस्यश्च द्विमात्रकः। कुस्तृतीयस्तु तुर्य्यः केः, कोवर्णः पञ्चमात्रकः। आद्ये स्वरे भवेत् साम्यं द्वितीयोऽर्द्धफलप्रदः। तृतीये तु फलं पूर्णं तुर्य्ये बन्धपरम्परा। शतोमृत्युस्वरे प्राप्ते यूनि प्राप्ते स्वकीयके। तत्काले प्रारभेद्युद्धं विजयो भवति ध्रुवम्। तत्काले मातृकोग्राह्योदिने वर्णस्वरस्तथा। पक्षे ग्रहस्वरोज्ञेयो मासे जीवस्वरोदयः। ऋतौ राश्यंशकोग्राह्यः षण्मासे धिष्ण्यसम्भवः। अब्दे पिण्डस्वरोज्ञेयो योगो द्वादशवार्षिके। सर्व्वकाले बली वर्णः सर्वव्यापी न संशयः। तस्मात्सर्व्वप्रयत्नेन वर्णं वीक्ष्यं बलाबलम्। यथा पदं हस्तिपदे प्रविष्टं यथा हि नद्यः खलु सागरेषु। यथा हरेर्द्देहगताश्च देवास्तथा स्वरा वर्णफलोदयाःस्युः। साधनं मन्त्रयन्त्रस्य यात्रायोगश्च सर्व्वदा। अतोमुख्यानि कार्य्याणि मात्रास्वरबले कुरु। वर्णस्वरबले सर्वं कर्त्तव्यं

च शुभाशुभम्। सिद्धिदं सर्व्वकार्य्येषु युद्धकाले विशेषतः। मारणं मोहनं स्तम्भविद्वेषोच्चाटनं तथा विवादं विग्रहं घातं कुर्य्यात् मृत्युस्वरोदये। स्नान पानादिकं सर्व्वं वस्त्रालङ्कारभूषणम्। विद्यारम्भं विवाहञ्च कुर्य्याज्जीवस्वरोदये। प्रासादारामहर्म्याणि देवतास्थापनार्च्चनम्। राजाभिषेचनं यात्रा प्रवेशो वीजवापनम्। स्त्रीविवाहस्य दीक्षा च कर्त्तव्या राशिके स्वरे। शान्तिकं पौष्टिकं यात्रा प्रवेशोवीजवापनम्। स्त्रीविवाहस्तथा सेवा कर्त्तव्या भस्वरोदये। शत्रूणां देशभङ्गश्च कोटयुद्धं च वेष्टनम्। सेनाध्यक्षस्तथा मन्त्री कर्त्तव्यः पिण्डकोदये। योगेन साधयेद्योगं देहस्थं ज्ञानसम्भवम्। आणवं शाम्भवं चैव शाक्तेयञ्च तृतीयकम्। तिथिवारञ्च नक्षत्रं पृथक् पृथक् प्रभाषितम्। यस्तदेकत्र संमेल्य कुर्य्याद्दर्णस्वरोदये। सस्वरो वर्णतोयत्र तत्तस्याधःस्थितं कुरु। यस्य नामादिमं वर्णं तिथिवारर्क्षसम्भवम्। तद्दिनं वर्जयेत्तस्य हानिर्मृत्युकरं यतः। अनेन स्वरयोगेन शत्रूणां मारणादिकम्। मन्त्रयन्त्रक्रियाहोमं साधयेत्तद्दिने शुभः। तत्र बालादयोऽवस्थाभानुसंख्याभवन्ति हि। उदयन्ते क्रमेणैव स्वस्वभुक्तिप्रमाणतः। घटिकाख्ये दिने पक्षे मासे ह्ययने तथा। वर्षे द्वादशवर्षे च अवस्था जायते स्वरे। भपत्रानि घटीपञ्च सपादार्द्धं दिनद्वयम्। षडहं पञ्चमासं च वर्षैकं भुज्यते क्रमात्। भुक्तस्वरप्रमाणं च पिण्डस्थं भोगभाजितम्। गतावस्था गताङ्केन शेषास्तत्कालजा मताः। मूका १च बाला२ शिशु३ हासिका४ च कुमारिका५ यौवन६ राज्यदा७ च। क्लेशाद८ च मोचा९ ज्वरिता१० प्रवासा११ मृता१२ च बालस्वरजा अवस्था। स्वस्था१ शुभा२ मोहन३ हर्ष४ हर्षि५ महोदया६ शान्तिकरी७ सदर्पा८। मदा९ समा१० शान्तिगुणोदया११ च माङ्गल्यदा१२ द्वादशधा कुमारे। उत्साह१ धैर्य्योग्रजया २।३।४। च बाला५ माङ्गल्ययुक्ता६ च सकाम७ पुष्टा८। सुखा९ च सिद्धिश्च१० धनेश्वरी११ च शान्ताभिधा१२ द्वादशधा युवाख्ये। वैकल्य१ शोषा२ च तथा च मोषा३ च्युतेन्द्रिया४ दुःखित५ रात्रि६ निद्रा७। बुद्धिप्रभङ्गाद८ च नष्ट९ च खिन्ना१० जरा११ मृता१२ द्वादश वृद्धजा च। छिन्ना१ च बन्धा२ रिपुघातकारी३ शोका४ मही५ ज्वालन६ कुष्टदा७ च। व्रणाङ्किता८ भेदकरी९ च दाहा१०

मृत्यु११ जया१२ द्वादश मृत्युजा दशाः। एवं षष्टिरवस्थाः स्युरवस्थापञ्चके सदा। तासु सर्वासु विज्ञेयं स्वनामसदृशं फलम्। अवस्था फलम्।

१८ तात्कालिकदिनस्वरचक्रम्—"तिथ्यादावुदयं याति ककारादिर्घटीस्वरः। बालस्वरादिकं प्रश्ने फलं तस्य वदाम्यहम्। तिथिभुक्तघटीसंख्यां कृत्वा पलमयीं ततः। स्वनवह्नि२२७हृते शेषे स्वरस्तत्कालसम्भवः। तिथिभुक्तघटी या स्याद्रुद्र११ षष्टिभाजिता। शेषे तिथिस्वरात् मोक्तस्तत्कालजघटीस्वरः। शेषं रुद्रा११ हतं षष्ट्या भाजयेच्चान्तरोदयः। वर्षं तस्य फलं वाच्यं शेषे तत्कालजस्वरः। तिथिभुक्तघटीसंख्या विशघ्ना नवखेन्दुना१०९। हृता घटीस्वरः शेषे तत्र स्यादन्तरोदयः। यमुद्दिश्य कृतः प्रश्नः फलं तस्य प्रजायते। यत्र नोद्दिश्यते किञ्चित् तत्र प्रष्टुः शुभाशुभम्। बालोदये यदा पृच्छा लाभार्थे स्वल्पलाभदा। रुजार्थे चिररोगाय गमे हानिः जयो रणे। कुमारोदयवेलायां लाभोभवति पुष्कलः। रुजानाशोजयी युद्धे यात्रा सर्व्वत्र सिद्धिदा। युवोदये लभेद्राज्यं क्लेशच्छेदश्च तत्क्षणात्। संग्रामे शत्रुहन्ता च यात्रा च सफला भवेत्। वृद्धोदये न लाभः स्यात् क्लेशिनां क्लेशवर्द्धनम्। संग्रामे भङ्गमायाति यात्रायां न निवर्त्तते। मृतोदये यदा दूतः पृच्छति स्वप्रयोजनम्। तत् सर्वं मृत्युदं ज्ञेयं युद्धे मृत्युश्च भङ्गदः। ओजस्वराः पुमांसः स्युः स्त्रियो युग्मस्वरान् विदुः। स्वस्वस्वरोदये जाते पुंसां स्त्रीणां बलं भवेत्। बलिनःस्युस्तदा तेभ्यो बली स्वस्य स्वरोदये। गर्भार्थे पुंस्वरे पुत्रः कन्या कन्यास्वरोदये। युग्मे युग्मं, जयो नष्टे मातुर्मृत्युश्च संक्रमे। द्युनाडीस्वरयोः पुंसोः पुंयुग्मं, स्त्रीयुगं स्त्रियोः। तयोस्तु पुंस्त्रियोः पुंस्त्रीयुग्मं गर्भे विनिर्द्दिशेत्। तिथिनाडीस्वरे साम्ये पुंपुंस्त्रीस्त्री प्रजायते। असाम्ये तिथिनाडीस्थे गर्भे साम्यं न विद्यते"।

"तत्रजन्मनि विशेषः। "जन्मर्क्षे जन्मपादस्तद्वर्णे योऽचरजस्वरः। तेनाक्षरेण विज्ञेयःस्वभावः प्राणिनामिह। चपलः कातरोमूर्खः कृपणश्चाऽजितेन्द्रियः। असत्यबहुभाषी च जाते बालस्वरोदये। व्यवसायी कलाभिज्ञः स्त्रीरतः सुभगः सदा। दीर्घायुर्विग्रही शूरः कुमारोदयसम्भवः। सर्वलक्षणसम्पूर्णोराजा भवति धार्मिकः। सर्वकालजयी युद्धे जातो युवोदये शुभः। स्त्रीजितो धार्मिकः कामी विवेकी स्थिरसाहसः। सत्यवादी सदाचारः

पुमान् दृद्धोदयोद्भवः। क्रोधी समत्सरः क्रूरोनिःकामोविकलेन्द्रियः। सर्वकार्य्यालसो दुष्टोजन्म यस्य मृतोदये” जातस्य शुभाशुभनिर्णयः। “ककारादिदकारान्ताः पञ्च ह्रस्वाः स्वरास्तथा। वलिनः स्युः सिते पक्षे शेषाः सर्वे सितेतरे। एकस्वरः पृथक् वर्णोयोधयोरभवोर्य्यदि। तत्र पञ्चवलं ग्राह्यं शुक्लकृष्णविभेदतः। एकपञ्चाक्षरैरेक स्वरस्ये योधयोर्द्वयोः। शुक्ले गौरः परः कृष्णे युद्धे जयति निश्चितम्। यस्मिन्नेव स्वरे कृष्णो गौरोवा सुभटोयदि। स्वरासन्नाक्षरे ह्रस्वोदीर्घोदूराक्षरे जयो। प्रमाणनाम वर्णैक्यं युद्धकारकयोर्यदि। तत्र युद्धे बलं देयं यायिस्थायिविभेदतः। योधयोः सर्वभेदैक्ये स्वरे यूनि कुमारके। यायी जयी तथा स्थायी बालवृद्धान्तिमस्वरे। आद्यास्तिथे स्त्रयोवर्णा द्वौ द्वौ शेषकयोर्मतौ। एवं तिथिवशे ज्ञेया वर्णसंख्या तिथिस्वरे। वर्णतिथ्यादितिथ्याख्या जन्महानिर्मृतिस्तथा। शौजन्म नीरुजा हानौ मृतौ मृत्युर्न संशयः। यदुक्तं यामले तन्त्रे ज्ञातं गुरुप्रसादतः। स्वराद्दिनफलं वक्ष्ये पुंसां कर्मप्रकाशकम्। योगपिण्डर्क्षराश्याख्यान् जीवखेटाऽक्षरस्वरान्। उत्पाद्य नामतश्चाष्टौ मात्रान्तान् स्थापयेत् क्रमात्। तस्याधःस्थान्लिखेच्चाष्टौ द्वादशाब्दादिकालजान्। स्वभोगेन समायुक्तान् भोगश्चैकादशांशकः। यथोत्तरबलाः सर्वे तथा कालबलात्पुनः। कालोदयबलाश्चापि ज्ञातव्याः स्वरवेदिभिः। अकारादिस्वराधःस्था संख्याः वेदप्रमाणिकाः। विन्यस्य चक्रयोगेण तेन विंशोपकामताः। योगात् द्वादशवर्षाःस्युरवस्था पिण्डितोवदृक्षे। भस्वरादयने ज्ञेया राशिस्वराहतुस्वरे। जीवात् मासस्वरेऽवस्था ग्रहात्पक्षस्वरे तथा। वर्णाद्दिनस्वरे ज्ञेया मात्रास्वरात्घटीस्वरे। द्वादशाब्दादिकः कालोयत्राऽकारादिकस्वरे। स्थितस्तत्र शुभो न स्यात् पञ्चावस्थाशुभोऽपि च। स्वरौ वृद्धान्तिमौ दुष्टौ बालपूर्वदलं तथा। शेषं सार्द्धद्वयं भव्यमिति ज्ञेयं शुभाशुभम्। बालवृद्धान्तिमादुष्टाः, शुभौ युवकुमारकौ। उत्पाद्यौ क्रमयोगेण योद्धृरङ्कौ शुभाशुभौ। यो यत्र वर्त्तते कालो द्वादशाब्दादिसम्भवः। अकारादिस्वरस्थाने योगादि फलनिर्णयः। योगात् द्वादशवर्षं च पिण्डाद्वर्षं च सायनम्। भात्वृजीवितोमासं ग्रहात् पक्षोऽक्षरात् दिनम्। योगादिस्वरयोगेण द्वादशाब्दादिकः क्रमात्। यावदुत्पाद्यते राशिस्तावत् ज्ञेयं शुभाशुभम्।” (अङ्कयुग्माधिकत्वेन तद्दिने तस्य तत्फलम्। द्वादशवार्षिकाद्या ये स्वान्तरोदयसंस्थिताः। ते शुभाश्चैकतः स्थाप्यास्त्वशुभास्त्वन्यतः पृथक्। वेदवेदाङ्गनेत्राणि वेदसंख्या क्रमेण च। शुभाशुभस्वरूपस्य राशियुग्मस्य मध्यतः। एकस्मात्पतिते शेषे ज्ञेयं तद्दिनजं फलम्। विंशत्या ताडिते शेषे चतुःषष्टिविभाजिते। लब्धा विंशोपकास्तत्र शुभाशुभप्रकाशकाः। योगे स्वकर्म तः, पिण्डे शरीराङ्गे सुहृज्जनात्। राशौ स्वकुलतो, जीवे स्ववित्ताद्, ग्रहतो रिपोः। वर्णे स्वस्वामिनो ज्ञेयो, मात्रायां स्त्रीजनात् फलम्। एवं ज्ञात्वा वदेद्विद्वान्दिने फलशुभाशुभम्)”। अन्यान्तरेऽधिकपाठः

१९ दिक्चक्रम्—“पूर्वस्मिन्नस्वरः स्वामी इस्वरो दक्षिणे तथा। उस्वरः पश्चिमे ज्ञेयः एःसौम्ये मध्य ओस्वरः। यस्यां दिश्युदयं याति स्वरस्तत्पञ्चमीं दिशम्। वर्जयेत् सर्वकार्य्येषु यात्राकाले विशेषतः। गच्छतः पृच्छकस्याशु स्वरस्यास्तमितां दिशम्। हानिर्मृत्युभयं रोगो जायते नात्र संशयः

२० देहजस्वरचक्रम्—“अथान्यत् संप्रवक्ष्यामि शरीरस्थं स्वरोदयम्। हंसचारस्वरूपेण येन ज्ञानं त्रिकालजम्। कुण्डलिनी महाशक्तिर्नाभिस्थाऽहिस्वरूपिणी। ततोदशोर्द्धगा नाड्योदश चाधोगतास्ततः। द्वे द्वे तिर्य्यग्गते नाड्यौ चतुर्विंशतिसंख्यया। कुण्डलिन्यां महाशक्तौ मूलमार्गे भवन्त्यमूः। ताभ्यः सूक्ष्ममुखा नाड्यः शरीरस्यातिपोषिकाः। सप्त शतानि जायन्ते सप्तोत्तराणि संख्यया। प्रधाना दश नाड्यस्तु दशवायुप्रवाहिकाः। नामानि नाड़िकानाञ्च वातानाञ्च वदाम्यहम्। इड़ा पिङ्गला सुषुम्णा गान्धारी हस्तिजिह्विका। पूषा यशाऽलंबुषा च कुहूः शङ्खिनिका तथा। प्राणोऽपानःसमानश्चोदानव्यानौ तथैव च। नागः कूर्मः कृकरश्च देवदत्तो धनञ्जयः। प्रकटो वायुसञ्चारो लक्ष्यते देहमध्यगः। पिङ्गलेड़ासुषुम्णाभिर्नाडीभिस्तिसृभिर्बुधैः। (अष्टाङ्गुले वहेद्वह्निरनिलश्चतुरङ्गुलः। दिवाकराङ्गुला पृथ्वी सलिलं षोडशाङ्गुलम्। नीलवर्णो भवेद्वायुरक्तवर्णोऽहुताशनः। पीतवर्णस्तु माहेयः शुक्लवर्णस्तु वारुणः। चापाकारो भवेद्वायुस्त्रिकोणो वह्निरुच्यते। चतुरस्रस्तु माहेयो वर्त्तुलो वारुणःस्मृतः। कटुस्वादुर्भवेद्वायुस्तीक्ष्णस्वादोऽनलोभवेत्। कषायकस्तु माहेयो मधुरो वारुणोमतः) अधिकपाठः। “इड़ानाडीस्थितश्चन्द्रः पिङ्गला

भानुवाहिनी। सुषुम्णा शम्भुरूपेण शम्भुर्हंसस्वरूपकः। हकारो निर्गमे प्रोक्तः सकारस्तु प्रवेशकः। हकारः शम्भुरूपेण सकारः शक्तिरुच्यते। शक्तिरूपस्थितश्चन्द्रो वामनाडीप्रवाहकः। दक्षनाडीप्रवाहे तु शम्भुरूपी दिवाकरः। एकैकस्य कलाः पञ्च क्रमेणैवोदयन्ति ताः। पृथिव्यापस्तथा तेजो वायुराकाशमेव च। मध्ये पृथ्वी अधश्चाप ऊर्द्ध्वं वहति चानलः। तिर्य्यग्वायुप्रवाहश्च नभोवहति संक्रमे। चलाहितं नभःप्रोक्तं सर्व्वशास्त्रेषु भाषितम्। अपां स्थाने स्थितं वस्तु पृथिव्यामुत्तरं गतम्। तेजसा पूर्व्वगं वस्तु त्वाकाशे दक्षिणं गतम्। त्रिंशद्दिनावधिः पृथ्वी सलिलं पक्षसंख्यकम्। एकविंशद्दिनं तेजोवायुः पञ्चदिनं स्मृतम्। षड्दिनं तु व्योम्नि स्यात् प्रश्नशास्त्रेषु सम्मतम्। दूतोक्तवर्णसंख्याङ्कोद्विगुणोभज्यते त्रिभिः। यद्येकं द्वितयं श्रेष्ठं तृतीये मरणं भवेत्। लग्नं तिथिसमायुक्तं सनक्षत्रं त्रयान्वितम्। पञ्चभिस्तु हरेद्भागं शेषाङ्कं तत्त्वमुच्यते। पृथ्व्यापौ चोत्तमौ प्रोक्तौ तैजसे सर्व्वसिद्धयः। वायौ च निष्फलं ज्ञेयमाकाशे मरणं ध्रुवम्। पृथ्व्याद्येकैकतत्त्वस्याप्येकैकघटिकोदयः। अहोरात्रस्य मध्ये स्यात्तेन द्वादशसङ्क्रमाः। आदौ चन्द्रः सिते पक्षे भास्करस्तु सितेतरे। प्रतिपदादिदिनान्येवं त्रीणि त्रीणि क्रतोदयौ। चन्द्रोदये यदा सूर्य्यश्चन्द्रः सूर्य्योदये यदा। अशुभं हानिरुद्वेगः शुभं सर्व्वं निजोदये। शशाङ्कं चारयेद्रात्रौ दिवा चार्य्यो दिवाकरः। इत्यभ्यासरतोनित्यं स योगी नात्र संशयः। यात्रादाने विवाहे च वस्त्रालङ्कारभूषणे। शुभकर्म्मणि सन्धौ च प्रवेशे च शशी शुभः। विग्रहे द्यूतयुद्धेषु स्नानभोजनमैथुने। व्यवहारे भये भङ्गे भानुनाड़ी प्रशस्यते। दूरयुद्धे जयी चन्द्रः समासन्ने दिवाकरः। वहन्नाडीपदेनैव कृता यात्राऽतिसिद्धिदा। पृथ्वीजले शुभे तत्त्वे तेजो मिश्रफलोदयम्। हानिमृत्युकरौ पुंसामुभयौ व्योममारुतौ। योद्धृद्वयकृते प्रश्ने पूर्णे च प्रथमोजयी। रिक्तसंस्थे द्वितीयस्तु जयी भवति नान्यथा। युद्धकाले यदा चन्द्रः स्थायी जयति निश्चितम्। यदा सूर्य्यप्रवाहश्च यायी च विजयी तदा। पार्थिवे समतं युद्धं सन्धिर्भवति वारुणे। विजयोवह्नितत्त्वेन वायौ भङ्गो मृतिस्तु खे। पूर्णनाडीगते पृष्ठे शून्यमग्रे तदग्रतः। शून्यस्थाने कृते शत्रुर्म्रियते नात्र संशयः। पूर्व्वोत्तरदिशोश्चन्द्रे भानौ पश्चिमयाम्ययोः। स्थितस्तत्र जयी युद्धे स्थायी यायी क्रमेण च। वामनाड्युदये चन्द्रः कर्त्तव्योवामसंमुखः। सूर्य्यवाहे तथा सूर्य्यः पृष्ठदक्षिणयोर्जयी। शयने वा प्रसङ्गे वा युवत्यालिङ्गनेऽपि वा। यः सूर्य्येण पिबेच्चन्द्रं स भवेन्मकरध्वजः। जीवेन गृह्यते जीवो जीवो जीवस्य दीयते। जीवस्थानगता जीवोबाला जीवान्तवशगा। रात्रित्रियामवेलायां प्रसुप्ते कामिनीजने। ब्रह्मजीवं पिबेद्यस्तु बालाजीवहरोनरः। अष्टाक्षरं जपित्वा तु तस्मिन् क्षणे रते सति। तत्क्षणे दीयते चन्द्रोमोहमायाति कामिनी। शिव आलिङ्ग्यते शक्त्या प्रसङ्गे यत्क्षणेन तु। तत्क्षणे पाययेच्चन्द्रं मोहमायाति कामिनी। चन्द्रचारी विषं हन्ति सूर्य्यो बालां वशं नयेत्। सुषुम्णायां भवेन्मोक्ष एकोदेवस्त्रिधा स्थितः। भुक्तमात्रे च मन्दाग्नौ स्त्रीणां वश्यार्थकर्म्मणि। शयनं सूर्य्यवाहेन कर्त्तव्यं सर्व्वदा बुधैः। श्रान्ते शोके विषार्त्ते च ज्वरिते मूर्च्छितेऽपि च। स्वजनस्यापि बोधार्थे चन्द्रचारं प्रवाहयेत्। ऊर्द्ध्वं वामाग्रतो दूतोज्ञेयोवामपथोदये। पृष्ठे दक्षे तथाऽधस्तात् सूर्य्यवाहगमोमतः। पूर्णनाडीगतो दूतो यत् पृच्छति शुभाशुभम्। तत् सर्व्वं सिद्धिदं ज्ञेयं शून्ये शून्यं न संशयः। पृथिव्यादिद्वितत्त्वेन दिनमासाब्दकै फलम्। शोभनञ्च तथा दुष्टं व्योममारुतवह्निभिः। श्वासप्रवेशकाले तु दूतोवाञ्छति जल्पितुम्। सर्व्वतः सिद्धिमायाति निर्गमे नास्ति सुन्दरम्। सूर्य्ये च विषमान् वर्णान् समवर्णान् निशाकरे। वाहस्थो भाषते दूतस्तदा लाभोऽन्यथा न हि। गर्भप्रश्ने यदा दूतः पूर्णे पुत्रः प्रजायते। शून्ये कन्यायुगे युग्मं गर्भपातश्च संक्रमे। मारणं मोहनं स्तम्भं विद्वेषोच्चाटनं वशम्। प्रेरणाकर्षणं क्षोभं भानुनाड्युदये कुरु। शान्तिकं पौष्टिकं क्षेमं दिव्यौषधिरसायनम्। योगाभ्यासादिकर्म्माणि कर्त्तव्यानि निशाकरे। चन्द्रसूर्य्यस्वराभ्यासं ये कुर्व्वन्ति सदा नराः। अतीतानागतज्ञानं तेषां हस्तगतं सदा”

इति स्वरोदये स्वरचक्रनिर्णायकं प्रथमाङ्कम्।

सर्व्वचक्रोपयोगि बालादिचक्रं ज्यो० त० दर्शितं यथा

“ऋवर्णञ्च लृवर्णञ्च त्यक्त्वा कोष्ठेषु पञ्चसु। अकाराद्याः स्वरा लेख्या एकैकस्मिन् द्विकं द्विकम्। कादिहान्तान् लिखेद्वर्णान् स्वराधोङञणोज्झितान्। तिर्य्यक्पङ्क्तिक्रमेणैव पञ्चत्रिंशत्प्रकोष्ठके। अकारादिक्रमात् न्यस्य नन्दादितिथिपञ्चकम्। अर्कारौ विधुज्ञौच गुरुः शुक्रः

शनिस्तथा। वाराः कोष्ठेष्वधो लेख्या अस्वरे सप्त भानि च। पञ्च पञ्च इकारादौ रेवत्यादिक्रमेण च। प्रसुप्तो बुध्यते येन येनागच्छति शब्दितः। तस्य नाम्नस्त्वादिवर्णोयत्र तिष्ठेत्स्वरस्य च। तस्माद्बालः कुमारश्च युवा वृद्धो मृतिः क्रमात्। किञ्चिल्लाभकरो बालः कुमारस्त्वर्द्धलाभदः। सर्व्वसिद्धिं युवा धत्ते वृद्धे हानिर्मृते क्षयः। यदि नाम्नि भवेद्वर्णः संयुक्ताक्षरलक्षणः। ग्राह्यस्तस्यादिमोवर्ण इत्युक्तं ब्रह्मयामले। तिथिवारर्क्षभेदेन प्रत्येकं बलमार्दितः। नामवर्णादितो ज्ञेयं फलं पुंसां दिने दिने। तिथ्यादिमेलनवशात् फलं ज्ञेयं शुभाशुभम्। युवत्रये शुभं पूर्णं अशुभञ्च क्षतित्रये। अन्यत्राप्येवमूह्यं स्यात् शङ्करेण शुभाशुभम्।”

बालादेरेव नामान्तराणि क्रमेण जन्मकर्म्माधानपिण्डच्छिद्राणि पञ्चस्वराग्रन्थे उक्तानि तत्र च तिथिसंख्याभेदेनाङ्कभेदाश्चोक्ताः। ८१।८७।९३।९९।१०५।

द्वितीयमङ्कं ८४ चक्रात्मकं स्वरोदये उक्तं तेषां नामोद्देशः अङ्कशब्दे ७२पृ०दर्शितः तत्रादौ एकाशीतिपदं

१ सर्व्वतोभद्रचक्रम्—“अथातः संप्रवक्ष्यामि चक्रं त्रैलोक्यदीपनम्। विख्यातं सर्व्वतोभद्रं सद्यप्रत्ययकारकम्। ऊर्द्ध्वगा दश विन्यस्य तिर्य्यग्रेखास्तथा दश। एकाशीतिपदं चक्रं जायते नात्र संशयः। अकारादिस्वराः कोष्ठेष्वीशादौ विदिशि क्रमात्। सृष्टिमार्गेण दातव्याः षोड़शैव चतुर्भ्रमम्। कृत्तिकादीनि धिष्ण्यानि पूर्व्वाशादौ लिखेत्ततः। सप्त सप्त क्रमेणैव अष्टाविंशतिसंख्यया। अवकहडा दिशि प्राच्यां मटपरता दक्षिणे देयाः। नयभजखाश्च वारुण्यां गशदचलाश्चोत्तरस्यां स्युः। त्रयस्त्रयोवृषाद्यास्तु पूर्व्वादिक्रमतो बुधैः। राशयो द्वादशस्थाप्या मेषान्ता दक्षमार्गतः। शेषेषु कोष्ठकेष्वेवं नन्दादितिथिपञ्चकम्। वाराणां सप्तकं लेख्यं भौमाद्यं तत्तिथिक्रमात्। भौमादित्यौ तु नन्दायां भद्रायां सोमसोमजौ। जयायां देवपूज्यञ्च रिक्तायां भृगुजं लिखेत्। पूर्णायाञ्च शनिः प्रोक्तो ग्रहवेधं विलोकयेत्। शन्यर्कराहुकेत्वाराः क्रूरा शेषाः शुभग्रहाः। क्रूरयुक्तो बुधः क्रूरः क्षीणचन्द्रस्तथैव च। इत्येष सर्व्वतोभद्रप्रस्तावः कथितो मया। यस्मिन् ऋक्षे स्थितः खेटस्ततो वेधत्रयं भवेत्। ग्रहदृष्टिवशेनात्र वामदक्षिणसंमुखे। भुक्तं भोग्यं तथाक्रान्तं विद्धं क्रूरग्रहेण भम्। शुभाशुभेषु कार्य्येषु वर्जनीयं प्रयत्नतः। वक्रगे दक्षिणा दृष्टिर्वामा दृष्टिश्च शीघ्रगे। संमुखी मध्यचारे च ज्ञेया भौमादिपञ्चके। सूर्य्ययुक्ता ग्रहाः शीघ्रास्तथा चार्के द्वितीयगे। समास्तृतीयगे ज्ञेया मन्दा भानौ चतुर्थगे। वक्राः स्युः पञ्चषष्ठेऽर्के त्वतिवक्रा नगाष्टगे। नवमे दशमे भानौ जायते सहजा गतिः। द्वादशैकादशे सूर्य्ये लभन्ते शीघ्रतां पुनः। रविस्थित्यंश· कलिंशावधेः संख्याऽत्र कल्प्यते। न तु राश्यन्तर· स्पर्शात् द्वितीयादिनिरूपणम्। राहुकेतू सदा वक्रौ शीघ्रगौ चन्द्रभास्करौ। गतेरेकस्वभावत्वादेषां दृष्टित्रयं सदा। क्रूरा वक्रा महाक्रूराः सौम्या वक्रा महाशुभाः। स्युः सहजाः स्वभावस्थाः सौम्याः क्रूराश्च शीघ्रगाः। ऋक्षसन्धिगताः खेटा राशिसन्धिगतास्तथा। अग्रराशेः फलं दद्युर्वक्रे तु विपरीतगम्। घङछाः षणठाश्चैव धफटस्थभजास्तथा। एतत्त्रिकं त्रिकं विद्धं विद्धैः कषभदैः क्रमात्। घङछा रौद्रगे वेधे षणठा हस्तगे ग्रहे। धफढाःपूर्व्वाषाढ़ायां थझञा भाद्र उत्तरे। बवौ शसौ खषौ चैव जयौ णनौ परस्परम्। एकेन हि द्वयं विद्धं शुभाशुभग्रहव्यधे। अवर्णादिस्वरद्वन्द्वे त्वेकवेधात् द्वयोर्व्यधः। युग्मवर्णाग्रके वेधे अनुस्वारविसर्गयोः”। (अकारादियुग्मवर्णात्मकवेधवदनुस्वारविसर्गयोरेकवेधादुभयवेधइत्यर्थः)। “कोणस्थधिष्ण्ययोर्मध्ये अन्त्यादिपादगे ग्रहे। अकारादिचतुष्के तु वेधः पूर्णतिथौ तथा। एकादिक्रूरवेधेन फलं पुंसां प्रजायते। उद्वेगश्च भयं हानिर्व्याधिर्मृत्युः क्रमेण च। ऋक्षे भ्रमोऽक्षरे हानिः स्वरे व्याधिर्भयं तिथौ। राशौ विद्धे महाविघ्नः पञ्चविद्धो न जीवति। एकवेधे भयं युद्धे युग्मवेधे धनक्षयः। त्रिवेधे तु भवेद्भङ्गो मृत्युर्वेधे चतुर्थकैः”। (दृष्टित्रये उदाहरणम् “भरण्यकारवृषभं नन्दां भद्रां तुलाञ्च तम्। विशाखां हरिभं विध्येद्गुपह आग्नेयसंस्थितः। उदाहरणान्तरम् “वं युग्मभोस्वरं कन्यां रफं स्वातीमुकारकम्। अश्विनीं रोहिणीमथोऽभिजिद्भमेवं परेष्वपि) ज्ञात्वा दुष्टफलाः क्रूरास्तथा सौम्याः शुभप्रदाः। क्रूरयुक्ताःपुनः सौम्या ज्ञेयाः क्रूरफलप्रदाः। अर्कवेधे मनस्तापो द्रव्यहानिश्च भूसुते। रोगपीड़ाकरः सौरीराहुकेतू च विघ्नदौ। चन्द्रे मिश्रफलं पुंसां रतिलाभश्च भार्गवे। बुधवेधे भवेत् प्रज्ञा जीवः सर्व्वशुभप्रदः। स्वर्क्षे त्वस्ये बलं पूर्णं पादोनं मित्रभे ग्रहे। अर्द्धं समगृहे प्रोक्तं पादं शत्रुगृहे

स्थिते । इदञ्च सौम्यक्रूराणां बलं स्थानवशात् समम् । एतदेव फलं विद्धि सौम्ये क्रूरे विपर्य्ययात् । स्थानवेधसमायोगात् यत्संख्यं जायते बलम् । तत्संख्यं वेध्यवस्तूनां फलं ज्ञेयं शुभाशुभम् । ग्रहाः सौम्यास्तथा क्रूराः वक्राः शीघ्रोच्चनीचगाः । स्थानञ्च वेध्यमित्येवं बलं ज्ञात्वा फलं वदेत् । वक्रग्रहे फलं द्विघ्नं त्रिगुणं स्वोच्चसंस्थिते । स्वभावजं फलं शीघ्रे नीचस्थेऽर्द्धफलोग्रहः । तिथिराश्यंशनक्षत्रं विद्धं क्रूरग्रहेण यत् । सर्व्वेषु शुभकार्य्येषु वर्ज्जयेत्तत् प्रयत्नतः । न नन्दति विवाहे च यात्रायां न निवर्त्तते । न रोगात् मुच्यते रोगी वेधवेलाकृतोद्यमः । रोगकाले भवेद्वेधः क्रूरखेचरसम्भवः । वक्रगत्या, भवेन्मृत्युः शीघ्रे चाप्यरुजान्वितः । वेधस्थाने रणे भङ्गो दुर्गे खण्डः (भङ्गः) प्रजायते । कविप्रवेशनं तत्र योधाघातश्च तत्र वै"। (कविसौरयोद्धा)। "यत्र पूर्व्वादिकाष्ठायां वृषराश्यादिगो रविः । सा दिगस्तमिता ज्ञेया शेषास्तिस्रः सदोदिताः । ईशानस्थाः स्वराः प्राच्यां ज्ञेया आग्नेयगा यमे । नैर्ऋतस्थाश्च वारुण्यां, वायव्यां सौम्यगा मताः । नक्षत्राणि स्वरा वर्णा राशयस्तिथयोदिशः । ते सर्व्वेऽस्तमिता ज्ञेया यत्र भानुस्त्रिमासिकः । नक्षत्रेऽस्ते रुजा, वर्णे हानिः, शोकः स्वरेऽस्तगे । राशौ विघ्न, स्तिथौ भीतिः, पञ्चास्ते मरणं भवेत् । यात्रा युद्धं विवादश्च द्वारं प्रासादकर्म्मणोः । न कर्त्तव्यं शुभं चान्यदस्ताशाभिमुखं नरैः । अस्ताशायां स्थितं यस्य नाम्नः प्रथममक्षरम् । स आर्त्तः सर्व्वकार्य्येषु ज्ञेयो दैवहतो नरः । अरौ कोटे तथा युद्धे चातुरङ्गे महाबले । त्यजेदस्तंगतान् योद्धा यदीच्छेद्विजयं रणे । नक्षत्रेऽभ्युदिते पुष्टि, र्वर्णे लाभः, स्वरे सुखम् । राशौ जय, स्तिथौ तेजः सदाप्तिः पञ्चकोदये । प्रश्नकाले भवेद्विद्धं यल्लग्नं क्रूरखेचरैः । तद्दुष्टं, शोभनं सौम्यै, र्मिश्रैर्मिश्रफलं भवेत् । ग्रहैर्न विद्धं यल्लग्नं फलं लग्नस्वभावतः । ज्ञातव्यं द्रेष्क्काणेन भाषितं यच्चरादिकम् । (शीर्षोदये सौम्यविलग्नवर्गे लग्नेऽपि वा सौम्ययुते शुभं स्यात् । अतोऽन्यथात्वे तु तदन्यथात्वं, मिश्रं विमिश्रै रधिकं बलाढ्यैः । केन्द्रोपगा नवमपञ्चमगाश्च सौम्याः केन्द्राष्टवर्जमशुभास्त्रिषडायसंस्थाः । सर्व्वार्थसाधनकराः परिपृच्छतां स्यु रेभिर्व्विपर्य्ययगतैस्तु विपर्य्ययः स्यात् । लग्नाधिनाथोयदि केन्द्रगः स्यात् तन्मित्रमेतस्य च केन्द्रगं वा । व्ययाष्टकेन्द्राण्यपहाय पापा अन्यत्र याता यदि तच्छुभं स्यात् । आद्योलग्नाधिपः कार्य्ये लग्ने कार्य्याधिपोयदि । लग्नपः कार्य्यपश्चापि लग्ने यदि तृतीयकः । चतुर्थः कार्य्यगौ स्यातां यदि लग्नपकार्य्यपौ । कार्य्यसिद्धिस्तदा ज्ञेया मित्रञ्चेदधिकं फलम् । एवं दृष्टिवशाज्ज्ञेयं फलं तद्वच्चतुष्टयम् । पूर्णनाड़ीस्थितो दूतोयत् पृच्छति शुभाशुभम् । तत् सर्व्वं सिद्धिमाप्नोति शून्ये शून्यं समीरणे । आदौ शून्यगतः पृच्छेत् पश्चात् पूर्णां विशेद् यदि । तदा सर्व्वार्थसिद्धिः स्यात् वामे वामं न संशयः । श्वासप्रवेशकाले चेद् दूतोजल्पति वाञ्छितम् । तस्यार्थसिद्धिमाप्नोति निर्गमे नास्ति सुन्दरम् । ऊर्द्ध्वामाग्रतोदूतोज्ञेयो वामपथस्थितः । पृष्ठे दक्षे तथाधस्ताद्दक्षवाहौ गतोमतः । यात्रादानविवाहेषु वस्त्रालङ्कारभूषणे । शुभे कर्म्मणि सन्धौ च प्रवेशे वामगः शुभः । कलह द्यूतयुद्धेषु स्नानभोजनमैथुने । व्यवहारे भये भङ्गे दक्षनाड़ी प्रशस्यते)। अन्यप्रकरणोक्तमेतत् ज्यो॰ त॰ परिशिष्टम् । "क्रूरैरुभयतोविद्धा यस्याक्षरतिथिस्वराः । राशिधिष्ण्यञ्च पञ्चापि तस्य मृत्युर्न संशयः । मण्डलं नगरं ग्रामोदुर्गं देवालयं पुरम् । क्रूरैरुभयतोवेधे विनश्यन्ति न संशयः । कृत्तिकायां तथा पुष्ये रेवत्याञ्च पुनर्व्वसौ । वेधे सति क्रमाद्वेधोवर्णेषु ब्राह्मणादिषु । पूर्व्वात्रयं तथाग्नेयं ब्राह्मणानां प्रकीर्त्तितम् । उत्तरात्रितयं पुष्यं क्षत्रियाणां विनिर्द्दिशेत् । पौष्णं मैत्रं मघा चैव प्राजापत्यं विशाम्पतेः । आदित्यमश्विनीं हस्तं शूद्राणामभिजित्तथा । विद्धैरेभिर्द्विजातीनां कारुकाणां च शेषकैः । तौल्यं भाण्डं रसोधान्यं गजाश्वादिचतुष्पदाः । सर्व्वं महार्घतां याति यावत् क्रूरोव्यधे स्थितः । क्रूरवेधसमायोगे यस्योपग्रहसम्भवः । तस्य मृत्युर्न सन्देहोरोगाद्वापि रणेऽपि वा । सूर्य्यभात् पञ्चमं धिष्ण्यं ज्ञेयं विद्युन्मुखाभिधम् । शून्यञ्चाष्टमभं प्रोक्तं सन्निपातश्चतुर्द्दशम् । केतुरष्टादशं प्रोक्तमुल्का स्यादेकविंशतिः । द्वाविंशतितमं कम्पस्त्रयोविंशञ्च वज्रकम् । निर्घातश्च चतुर्विंशमुक्ता अष्टावुपग्रहाः । प्रस्थाने विघ्नदाः प्रोक्ताः सर्व्वकार्य्येषु सर्व्वदा । प्रसङ्गादत्र

१ षड्नाडीचक्रं नवनाडीचक्रञ्चोक्तं यथा "जन्मभं कर्म्म आधानं विनाशः सामुदायिकम् । सांघातिकमिदं धिष्ण्यं षट्कं सार्वजनीनकम् । जातिदेशाभिषेकैश्च नव धिष्ण्यानि

भूपतेः । वेधं ज्ञात्वा फलं ब्रूहि सौम्यैः क्रूरैः शुभाशुभम् । जन्मभं जन्मनक्षत्रं दशमं कर्म्मसंज्ञकम् । एकोनविंशमाधानं त्रयोविंशं विनाशकम् । अष्टादशञ्च नक्षत्रं सामुदायिकसंज्ञकम् । सांघातिकञ्च विज्ञेयं धिष्ण्यं षोड़शमेव हि । षट्‌त्रिकञ्च राजजातेर्जातिनाम स्वनामभम् । देशभं देशनामर्क्षं राज्यभं चाभिषेकभम् । मृत्युः स्याज्जन्मभे विद्धे कर्म्मभे क्लेश एव च । आधानर्क्षे प्रवासः स्यात् विनाशे बन्धुविग्रहः । सामुदायिकभे रिष्टं हानिः सांघातिके तथा । जातिभे कुलनाशः स्यात् बन्धनञ्चाभिषेकभे । देशर्क्षे देशभङ्गः स्यात् क्रूरैरेवं शुभैः शुभम् । उपग्रहसमायोगे मृत्युर्भवति नान्यथा । भयं भङ्गश्च घातश्च मृत्युर्भङ्ग्युता मृतिः । क्रूरैरेकादिपञ्चान्तैर्युधि वेधे फलं भवेत् । तिथिं धिष्ण्यं स्वरं राशिं वारञ्चैव तु पञ्चमम् । यद्दिने वेधयेच्चन्द्रस्तद्दिने स्यात् शुभाशुभम् । तिथ्यादिपञ्चके विद्धे चन्द्रयोगोयदा भवेत् । उक्तं फलं तदा वाच्यं तद्दिने ग्रहसम्भवम् ।

अथार्घं संप्रवक्ष्यामि यदुक्तं चादिजामले । एकाशीतिपदे चक्रे ग्रहभेदाच्छुभाशुभम् । देशः कालस्ततः पण्यमिति त्रीण्यर्घनिर्णये । चिन्तनीयानि विज्ञानि सर्वकालं विचक्षणैः । देशोऽथ मण्डलं स्थानमिति देशस्त्रिधोच्यते । वर्षमासदिनं चेति त्रिधा कालोऽपि कथ्यते । धातुर्मूलं च जीवश्च इति पण्यं त्रिधा मतम् । अथ त्रिकत्रयस्यास्य वक्ष्यामि स्वामिखेचरान् । देशेशा राहुमन्देज्या मण्डलस्वामिनः पुनः । केतुसूर्य्यसिताः स्थाननाथाश्चन्द्रारचन्द्रजाः । वर्षेशा राहुकेत्वार्क्किजीवा मासाधिपाः पुनः । भौमार्कज्ञसिता ज्ञेयाश्चन्द्रः स्यात् दिवसाधिपः । धात्वीशाः सौरिपातारा, जीवेशाश्चेन्दुसूरयः । मूलेशाः केतुशुक्रार्का इति पण्याधिपाग्रहाः । पुंग्रहा राहुकेत्वर्कजीवभूमिसुता मताः । स्त्रीग्रहौ शुक्रशशिनौ सौरिसौम्यौ नपुंसकौ । सितेन्दू सितवर्णेशौ रक्तेशौ भौमभास्करौ । पीतेशौ ज्ञगुरू कृष्णनाथाः केतुतमोऽर्क्कजाः । ग्रहोवक्रोच्चयोर्यः स्यादुदये च बलाधिकः । देशादीनां स एवैकः स्वामी खेटस्तदा मतः । स्वगृहे वक्रतुङ्गे स्यादुदये च बलाधिकः । वक्रोदये स्वहर्म्ये च पूर्णवीर्य्यो ग्रहो भवेत् । तदग्रपृष्ठगे खेटे बलं त्रैराशिकात् मतम् । उच्चांशस्थे बलं पूर्णं नीचांशस्थे दलं बलम् । त्रैराशिकवशात्ज्ञेयमन्तरे तु बलं बुधैः । एवं देशादिनाथा ये ग्रहवेधे व्यवस्थिताः । सुहृदः शत्रवोमध्याश्चिन्तनीयाः प्रयत्नतः । स्वमित्रसमशत्रूणां विध्यन् देशादिकं क्रमात् । शुभग्रहः शुभं दत्ते चतुस्त्रिद्व्येकपादकैः । दुष्टं दुष्टग्रहः कुर्य्यादेकद्वित्रिचतुःपदैः । विद्धं पूर्णदृशा पश्यन् तत्पादेन फलं ग्रहः । अविद्धं त्वन्यथा ज्ञेयं फलं दृष्ट्यनुमानतः । वर्णादिस्वरराशीनां मेषाद्ये राशिमण्डले । ग्रहदृष्टिवशात् सर्वं विद्धं वर्णादिकं मतम् । स्वरवर्णः स्वचक्रोक्तस्तिथिवेधाच्च पीडयेत् । तिथिवर्णेषु यो राशिस्तद्दृष्टिः स्यात्त्रियोक्षणात् । अशुभो वा शुभोवापि युक्तो विध्यंस्तिथिं ग्रहः । सर्वं निजफलं दत्ते क्षणे पक्षे तु तद्फलम् । खेटकैकैकाशके ज्ञेया पूर्णा दृष्टिः सदा बुधैः । दृष्टिहीने पुनर्वेधे न स्यात् किञ्चित् शुभाशुभम् । इत्येवं दृष्टिभेदेन निर्द्दिष्टं सकलं फलम् । वर्णादिपञ्चके विद्धे ग्रहो दत्ते शुभाशुभम् । सौम्यः पूर्णदृशा पश्यन् विद्धं वर्णादिपञ्चकम् । फलं विंशोपकाः पञ्च क्रूरस्य चतुरोदिशेत् । वर्णादिपञ्चके यावत् स्थानवेधे च तावती । दृष्टिस्तदनुमानेन वाच्या विंशोपका बुधैः । एवं विंशोपका येऽत्र सम्भवन्ति शुभाशुभाः । अन्योन्यं शोधयेत्तेषां शेषात् ज्ञेयं शुभाशुभम् । देशध्वंसः प्रजापीडा नृपविग्रहस्तथा । यत्र दृष्टिस्तु तत्र स्याद्दुर्भिक्षं मण्डले तथा । वर्त्तमानार्घविंशांशाः कल्प्या विंशोपका इह । ते क्रमात् वर्त्तमानार्घे देयाः पात्याः शुभाशुभाः । अकालेऽपि फलं पुष्पं वृक्षाणां यत्र जायते । स्वजातिमांसभुक्तिश्च दुर्भिक्षं तत्र रौरवम् । परचक्रागमोयत्र विग्रहश्च स्वराज्यके । ऋतोर्विपर्य्ययो यत्र दुर्भिक्षं मण्डले भवेत् । भूमिकम्पोरजःपातोरक्तवृष्टिश्च जायते । देशे सर्वसुखोपेते वेधादेतद्वदेत्बुधः । दीपो यथा गृहस्यान्तमुद्द्योयति सर्वतः । तथेदं सर्वतोभद्रं चक्रं ज्ञानप्रकाशकम्” ।

२ शतपदचक्रम्—“चक्रं शतपदं वक्ष्ये ऋक्षांशाक्षरसम्भवम् । नामादिवर्णतोज्ञेवा ऋक्षराश्यंशकास्तथा । तिर्य्यगूर्द्ध्वगता रेखा रुद्रसंख्यालिखेद्ध्रुवः । जायते कोष्ठकानाञ्च शतैकं १०० नात्र संशयः । न्यस्येदवकहडादि रौद्रादिविदिशि क्रमात् । (अ व क ह ड़ा ऐशान्यां म ट प र ता हरिति चाग्नेय्याम् । न य भ ज खा नैर्ऋत्यां ग श द च लावायव्याम्) पञ्च पञ्च क्रमेणैव विंशवर्णान् नियोजयेत् । पञ्चस्वरसमायोगे

एकैकं पञ्चधा कुरु । (अवर्णाद्यास्तयोर्ज्ञेयाः सन्ध्यक्षर युतस्तथा । सजातीयैक्यमास्थाय पञ्चस्वरविनिर्णयः । ऋदॢलृतोरप्यकारेण शेन सस्य परिग्रहः) अधिक पा० । “कुर्य्यात् कुपभुदस्थाने त्रीणि त्रीण्यक्षराणि च । कुघङछो भवेत् स्तम्भे रौद्रे त्वीशानगोचरे । पुषणठो भवेत् स्तम्भे हस्ते चाग्नेयसंज्ञके । भुधफढोभवेत् स्तम्भे पूर्वाषाढ़े च नैरृते । दुथझञो भवेत् स्तम्भे वायव्ये भाद्रउत्तरे । एवं स्तम्भचतुष्कञ्च ज्ञातव्यं स्वरवेदिभिः । धिष्ण्यानि कृत्तिकादीनि प्रत्येकं चतुरक्षरैः । साभिजिन्त्यंशकास्तत्र शतैकं द्वादशाधिकम् । यदृक्षांशककोष्ठस्थः क्रूरः सौम्योऽपि वा ग्रहः। ततस्तं वेधयेत् तिर्यक् पुंसोनामादिमाक्षरम् । सौम्यैर्विद्धं शुभं ज्ञेयमशुभं पापखेचरैः । मिश्रैर्मिश्रफलं तत्र निर्वेधे न शुभाशुभम् । यदुक्तं सर्वतोभद्रे ग्रहोपग्रहवेधतः । शुभाशुभफलं सर्वं तदिहापि विचिन्तयेत्”। (पञ्च स्वराः अ इ उ ए ओकारास्तैर्योगे धिष्ण्यानि नक्षत्राणि। अत्र चतुर्भिर्वर्णैरेकं नक्षत्रं यथा । अ इ उए ३।ओ वविवु । ४ । वेवोककि । ५ । कुघङछ । ६ । केकोहहि । ७ । हुहेहोड । ८ । डिडुडेडो । ९ । ममिमुमे । १० । मोटटिटु । ११ टेटोपपि । १२ । पुषणठ १३ । पेपोररि । १४ । रुरेरोत । १५ । तितुतेतो । १६ । ननिनुने । १७ । नोययियु । १८ । येयोभभि । १९ । भुधफढ । २० । भेभोजजि । २१ । जुजेजोख । (अभिजित्)० । खिखुखेखो । २२ । गगिगुगे । २३ । गोशशिशु । २४ । शेशोददि । २५ । दुथझञ । २६ । देदोचचि । २७ । चुचेचोल । १ । लिलुलेलो । २ । ऋदॢलृयुक्तः ऋकारयुक्तेन ज्ञेयः । ह्रस्वेन दीर्घोज्ञेयः । तालव्यशकारेण दन्त्यसकारोज्ञेयः) ।

३ अंशचक्रम् — “अष्टाविंशोर्द्ध गा रेखा अष्टाविंशतिर्तिर्य्यग्गाः। अंशचक्रं भवत्येवं यदुक्तं चादिजामले। कृत्तिकादीनि भान्यत्र पादाक्षरक्रमेण च । साभिजिन्ति न्यसेत् सर्वाण्यष्टाविंशतिसंख्यया । यो ग्रहो यत्र कक्षांशे तं तत्रैव न्यसेद्बुधः। वेधयेत् संमुखं वर्णं शुभो वाप्यशुभोऽपि वा। आद्यांशेन चतुर्थांशं चतुर्थांशेन चादिमम् । द्वितीयेन तृतीयं तु तृतीयेन द्वितीयकम् । यस्य नामाक्षरं विद्धमंशचक्रे ग्रहेण तु । क्रूरैः रिष्टं शुभैर्हानिद्वाभ्यां मृत्युर्न संशयः । क्रूरोभयस्थिते वेधे मृत्युर्विघ्नं शुभाशुभैः । शुभोभयगते वेधे व्याधिपीड़ा च बन्धनम् । वैधव्यञ्च विवाहे तु यात्राकाले महाभयम् । रोगे मृत्यू रणे भङ्गः क्रूरवेधे न संशयः । अद्रयः सागरानद्यो देशग्रामपुराणि च । क्रूरवेधे विनश्यन्ति नात्र कार्य्या विचारणा। चन्द्रस्यर्क्षांशको विद्धो भवेद्यत्रापरग्रहैः । तन्मानं तद्दिनं वर्ज्यं सर्वदा शुभकर्मणि”

४ छत्त्रयचक्रम्—आदौ चक्रं समालिख्य छत्त्रयसुशोभितम् । अश्विन्यादीनि लेख्यानि सप्तविंशतिभानि च । अश्विन्याद्यं मघाद्यञ्च मूलाद्यञ्च क्रमेण च। उत्तरे पर्वके याम्ये चैतच्छत्त्रयं मतम्। प्रतीचीमध्यरेखायामीशानान्तं हयाधिपः । आग्नेयान्तं नराधीशस्तन्मध्ये च गजाधिपः । अश्वाध्यक्षो गजाध्यक्षोनराध्यक्षः क्रमेण च । एषां छत्रविभागेण ज्ञातव्यं हि शुभाशुभम् । अन्येषां भूभृतामृक्षं यत्र छत्रे व्यवस्थितम् । तच्छत्रं तस्य भूपस्य शुभाशुभफलप्रदम् । यत्र छत्रे स्थितः सौरिभङ्गं तस्य विनिर्दिशेत् । फलञ्च चामरादीनां प्रत्येकं च यदास्पदम् । चामरं कलसं वीणा छत्रं दण्डं पतद्ग्रहम् । आसनं कीलकं रज्जुर्न्नव भेदा प्रकीर्त्तिताः । चामरे १चण्डता वायोरनावृष्टिश्च जायते । दुर्भिक्षं च भवेद्घोरं प्रजापीड़ा न संशयः । कलसस्थे २भवेद्युद्धं रणे भङ्गो महद्भयम् । वातपातादिकं सर्वं जायते नात्र संशयः । वीणासंस्थे ३चार्कपुत्रे पट्टराज्ञी विनश्यति । चलचित्तो भवेद्राजा भयभीता च मेदिनी । यदाक्रान्तत्रये सौरिश्छत्रे४ दण्डे५ पतद्ग्रहे७। तदा तस्य भवेद्भङ्गश्छत्रस्यापि न संशयः। आसनस्य भवेन्नाश आसनस्थे ७ शनैश्चरे। युवराजक्षयः कीलेद बन्धनं रज्जुसंस्थिते९ । सौम्ययुक्तोऽतिचारस्थः शनिरुक्तफलो न हि । वक्रगः क्रूरयुक्तश्च सर्व्वं क्रूरं करोति सः । शनिराहुकुजादित्यायदाजीवेन्दुसंयुताः । उत्तराधीशराज्यस्य निश्चितं छत्रभङ्गदाः । क्रूरचतुष्टयं चैव बुधचन्द्रेण संयुतम् । पूर्व्वछत्रविनाशाय कथितं पूर्व्वसूरिभिः । एवं पापचतुष्कं च यदा शुक्रेन्दु संयुतम्। दक्षिणाधिपतेश्छत्रविनाशो भाषितो बुधैः। एवमन्येषु राज्येषु यत्र यस्य च सम्भवः । उपग्रह समायोगाच्छत्रभङ्गं विनिर्दिशेत् । यथा दुष्टफलः सौरिस्तथा सौम्यफलोगुरुः । भौमज्ञौ शुक्रराहू च रविचन्द्रौ बले समौ । यथा हानिकराः क्रूरास्तथा सौम्याः शुभप्रदाः। क्रूरयुक्तो भवेत् क्रूरश्चन्द्रः सौम्ययुतः शुभः। सौम्यक्रूरा यदा छत्रे अष्टावेकत्र संस्थिताः। छत्रभङ्गो भवे-

नस्य परचक्रागमेण च। नृपनामर्क्षगोराहुः केतुर्वा यस्य संस्थितः। छत्रभङ्गोभवेत्तस्य विषदानेन भूपतेः। मृगयां साहसं यात्रां दुष्टाश्वगजवाहनम्। विग्रहञ्च त्यजेद्राजा छत्रस्थैः क्रूरखेचरैः। एवं ज्ञात्वा सदा राजा करोति ग्रहशान्तिकम्। यदुक्तं यामले तन्त्रे तेन शान्तिर्भविष्यति” इति

५ सिंहासनचक्रम्(२)——“अथातः संप्रवक्ष्यामि चक्रं सिंहासनत्रयम्। येन विज्ञातमात्रेण क्रियते राज्यनिर्णयः। सप्तविंशतिनक्षत्रेष्वेकैकन्तु नवात्मकम्। अश्विनीमघमूलाद्यं पञ्चनाड़ीविभेदितम्। अश्विन्याद्युत्तरे भागे मघाद्यं पूर्वतः स्थितम्। मूलाद्यं दक्षिणे भागे ज्ञातव्यं नृपतित्रयम्। इतरेषु च राज्येषु नृपनामर्क्षतोवदेत्। शुभाशुभमिदम् सर्वं यस्य यत्र शनिः स्थितः। नाड़िकापञ्चभेदेन एकैकस्याऽऽसनं भवेत्। आधारमासनं पट्टं सिंहं सिंहासनं तथा। आधारादिफलं सर्वमेकैकस्य वदाम्यहम्। ग्रहवेधवशाज्ज्ञेयं सौम्यैः क्रूरैः शुभाशुभम्। नृपस्याऽऽधारनामर्क्षे यदा पट्टाभिषेचनम्। पराधीनगतं राज्यं कुरुते नात्र संशयः। आसनस्थेन नक्षत्रेण नीतियुक्तो भवेन्नृपः। प्रधानपुरुषादेशी प्रजाशान्तिकरो भवेत्। पट्टनक्षत्रे यदा राजा चोपविष्टो यदासने। पूर्वराजस्थितेस्तुल्यं चिरं पालयते महीम्। सिंहरूपी भवेद्राजा सिंहनक्षत्रासने स्थितः। संग्रामस्य प्रियोनित्यमसाध्यो मन्त्रिणः सदा। सिंहासनगते नक्षत्रे तेजस्वी भीषणाकृतिः। चलचित्तो महाक्रोधी प्रजापीड़ाकरोन्नृपः। तत्कालेन्दुगते नक्षत्रे क्रूरनिर्वेधनाडिके। शुभावस्थे शुभलग्ने संस्थायो नृप आसने। ईदृशे च समायोगे उपविष्टो यदासने। एच्छिद्य शत्रुसंघातमेकच्छत्रं करोति सः। क्रूरग्रहगतनाड्यामुपविष्टो यदासने। बन्धनं भूमिनाशश्च तथा मृत्युः प्रजायते। आधारादिफलं तत्र क्रूरैरेव शुभैः शुभम्। आधारनक्षत्रगः सौरिरनावृष्टिं करोति सः। दुर्भिक्षं रौरवं घोरं प्रजामृत्युः प्रजायते। आसनस्थो यदा सौरिर्युद्धे भङ्गप्रदोभवेत्। अथ वा व्याधिपीडा च चानदुःखञ्च जायते। पट्ट नक्षत्रे यदा सौरिः पट्टराज्ञी विनश्यति। प्रियो वाथ कुमारो वा मन्त्रिवर्गक्षयोऽपि वा। सिंहे सिंहासने वाथ यदि तिष्ठति सूर्यजः। तदा मृत्युर्न सन्देहो यदि शक्रसमोनृपः। शन्यर्कराहुमाहेया यदा चन्द्रर्क्षसंयुताः। यस्यासनगता एते तदा तस्य क्षयङ्कराः। क्रूरयुक्तोऽतिवक्रश्च क्रूरनाडीगतोऽपि वा। आसने चन्द्रयोगेण कालरूपी शनैश्वरः। एवं शुभफलं दद्याद्देवमन्त्री न संशयः। करोति विपुलं राज्यं यस्यासनगतो गुरुः”

६ कूर्मचक्रम्(५)——“कूर्मचक्रं प्रवक्ष्यामि यदुक्तं कौशलागमे। येन विज्ञातमात्रेण ज्ञायते देशनिर्णयः। यस्य शृङ्गैक देशस्था देवास्त्रिविंशकोटयः। स मेरुः पृथिवीमध्ये श्रूयते दृश्यते न तु। तादृशाः पर्वताश्चाष्टौ सागरा द्वीप दिग्गजाः। सर्वं तु विधृता भूम्या सा धृता येन तं शृणु। दंष्ट्रायां सा वराहेण विधृता सवराधरा। मुस्ताखननतोयस्य शोभते मृत्तिका यथा। ईदृशोऽपि महाकायो वराहः शेषमस्तके। तस्य चूड़ामणेरूर्द्ध्वं शोभते मशकोपमः। एवंविधः स शेषोऽपि कुण्डलीभूय संस्थितः। कूर्मपृष्ठैक भागेन विसतन्तुरिवाबभौ। वपुःस्कन्धः शिरः पुच्छनखाङ्घ्रि प्रभृतीनि च। मानेन तस्य कूर्मस्य कथयामि प्रयत्नतः। शङ्कोः शतसहस्राणि योजनानि वपुः स्थितम्। तदर्द्धेन भवेत् पुच्छं पुच्छार्द्धेन तु कुक्षिकम्। ग्रीवाऽस्याऽयुतकोटीभिर्मस्तकं सप्तकोटिभिः। नेत्रयोरन्तरं तस्य कोटिरेका प्रजायते। मुखं कोटिद्वयं तस्य द्विगुणेन च पादयोः। अङ्गुलीनां नखाग्रे तु योजनायुतसंख्यया। एवं कूर्मप्रमाणन्तु कथितं चादियामले। तस्योपरिस्थिता चेयं सप्तद्वीपवती मही। कूर्माकारं लिखेच्चक्रं सर्वावयवसंयुतम्। पूर्वभागे मुखं तस्य पुच्छं पश्चिममण्डले। पूर्वापरं लिखेद्वेधं वेधस्योत्तरदक्षिणे। ईशानराक्षसे वेधं वेधमाग्नेयमारुते। नाभिशीर्षचतुःपादकुक्षिपुच्छेषु संस्थिते। तारात्रयाङ्किते ह्यस्मिन् सौरिं यत्नेन चिन्तयेत्। अधिके भक्तिके तत्र पादार्द्धेषु भमण्डलम्। चतुर्विंशति संख्याः स्युस्तांश्च हन्ति शनिः क्रमात्। अश्विन्याद्युत्तरभागे मघाद्यं पूर्वतः स्थितम्। मूलं च दक्षिणे भागे ज्ञातव्यं नृपतित्रयम्। व्यापकग्रहराशिस्थे चन्द्रे मन्दोविशेषतः। यद्यद्विष्ण्यपदार्द्धे च तत्र दोषा भवन्त्यमी। अतिवृष्टिरनावृष्टिर्मूषिकाः शलभाः शुकाः। स्वचक्रं परचक्रञ्च सप्तैताः ईतयः स्मृताः। कृत्तिका रोहिणी सौम्यं (५) कूर्मनाभीगतं त्रयम्। साकेता मिथिला चम्पा कौशाम्बी कौशिकी तथा। अहिच्छत्रं गया विन्ध्यमन्तर्वेदी च मेकला। कान्यकुब्जं प्रयागञ्च मध्यदेशो विनश्यति। रौद्रम्पुनर्वसू पुष्यः कूर्मस्य च शिरःस्थितम्। सगौड़ो हस्तिबन्धश्च पञ्चराटञ्च कामरूः। वरेन्द्री च तथा ज्ञेया मगधश्च तथैव च। शूरसेनो वने-

वासः पूर्वदेशोविनश्यति । अश्लेषा च मघापूर्वफाल्गुन्याग्नेयगोचरे । अङ्गवङ्गौ कलिङ्गश्च पूर्वजाश्चैव कोशलाः । डाहलोजयहन्ता च तथैवच सुलज्जिका । उड्डीयानं वराटञ्च अग्निदेशो विनश्यति । उत्तरा हस्तचित्रा च दक्षिणं कुक्षिमाश्रिताः । दर्दुरश्च महेन्द्रश्च वनवासश्च सिंहलः । तापी भीमरथी लङ्का त्रिकूटं मलयस्तथा । श्रीपर्वतः किष्किन्धा इति नश्यन्ति दक्षिणः । स्वाती विशाखा मैत्रं च कूर्मनैर्ऋत्यगोचरे । नासिक्यं च सुराष्ट्रं चोत्तरमालवकं तथा । वाह्लीकं च प्रकाशञ्च भृगुकच्छञ्च कोङ्कणम् । खेटापुरं च मौटेरं देशा नश्यन्ति चेदृशाः । जेष्ठा मूलं तथाषाढा पुच्छे कूर्मस्य संस्थिताः । पारावतं मरुकच्छमवन्ती पूर्वमालवः । पारातवर्वरद्वीपं सौराष्ट्रं सैन्धवं तथा । जनस्थानं विनश्यन्ति स्त्रीराज्यं पुच्छपीडने । उत्तराद्वित्रिकञ्चापि पादे वायव्यगोचरे । गुर्ज्जरं तङ्कणञ्चैव मरुदेशं सरस्वतीम् । जालन्धरं वराटं च वालुकोदधिसंयुतम् । मेरुश्टङ्गं विनश्यन्ति ये चान्ये कोणसंस्थिताः । शतभिषादित्रयञ्चैव उत्तरं कुक्षिमाश्रितम् । नेपालं कीरकाश्मीरगञ्जनखुरसानकम् । माथुरं म्लेच्छदेशश्च खसकेदारमण्डले । क्षिमाश्रया विनश्यन्ति ये देशाश्चोत्तराश्रयाः । रेवती चाश्विनी याम्यं२ पादे त्वीशानगोचरे । गङ्गाद्वारं कुरुक्षेत्रं श्रीकण्ठं हस्तिनापुरम् । अश्ववक्त्रं कपादाश्च गजकर्णस्तथैव च । विनश्यन्ति च ते सर्वे देशा स्त्वीशानगोचरे । सौरिःस्वदेशगोयत्र तत्र यत्नेन चिन्तयेत् । परदेशस्थितः कुर्याद्दिग्वहंष्टं यशोवतेः । यतस्थः पीडयेत्तत्र वेधस्थाने तथैव च । देशनामर्क्षगः सौरिर्भङ्गटो नात्र संशयः। १पृथ्वीकूर्मं समालिख्य क्षत्तिकादि यमान्तकम् । देशादिस्वस्वकक्षादि वक्ष्ये कूर्मचतुष्टयम् । पूर्ववच्चक्रमालिख्य देशनामर्क्षपूर्वकम् । २देशकूर्मो भवेत्तत्र यत्र सौरिस्तथान्यथा । नगरे ३नागरक्षं कृत्वा वेध्यं तु पूर्ववत् । सौरिस्थाने भवेद्दुःखं वेधस्थाने तथैव च । ४क्षेत्रजे क्षेत्रभान्यत्र कृत्वा कूर्मं यथास्थितम् । सौरिस्थाने तथा वेधे जायतेऽत्र महद्भयम् । ५गृहकूर्मं समालिख्य गृहद्वारसुखस्थितम् । स्वाम्यर्क्षपूर्वकम् कृत्वा ततोयोज्यं शुभाशुभम् । गृहमध्यस्थितः सौरिः शोकसन्तापदायकः । द्वारे विघ्नप्रदोज्ञेयः पावके वह्निदायकः । ज्ञेयो मृत्युप्रदो याम्ये राक्षसे राक्षसाद्भयम् । वारुणे शुभदोज्ञेयो वायव्ये शून्यदायकः । अर्थलाभप्रदः सौम्ये शाङ्करे सर्वसिद्धिदः । सौरिर्बलाधिकोदुष्टः स्वल्पवीर्य्यः शुभावहः । समकालं पीडयेद्यत्र भानुजः कूर्मपञ्चकम् । तत्र स्थाने महायुद्धं जायते नात्र संशयः । दुष्टस्थाने गते चन्द्रे कर्त्तव्यन्तत्र शान्तिकम् । यदुक्तं यामले तन्त्रे सर्वविघ्नविनाशकम् । यन्देशञ्चैवं पश्यन्ति राङ्गभौमशनैश्चराः । परचक्रभयं चाग्निदुर्भिक्षन्तत्र दारुणम् । कूर्मचक्रं महाचक्रं कथितञ्चादियामले । त्रिकालविषयज्ञानं पाणिस्थं येन जायते" ।

तन्त्रोक्तमन्त्रग्रहणतत्साधनोपयोगिकूर्म्मचक्रं तु कूर्म्मचक्रशब्दे दृष्टे उक्तं तत्र द्रष्टव्यम् ।"

७ पद्मचक्रम्—"पद्माकारं लिखेच्चक्रमष्टपत्रं सुशोभनम् । कोष्ठकं नवमं मध्ये पद्मचक्रं प्रजायते । क्षत्तिकादीनि भान्यत्र त्रीणि त्रीणि यथाक्रमम् । मध्यकोष्ठादि रुद्रान्तं सप्तविंशतिसंख्यया । नव खण्डा धरा सा च नवभागेषु संस्थिता । यत्र खण्डे स्थितः सौरिः खण्डं तच्च विनश्यति"

८ फणीश्वरचक्रम्—"क्षत्तिकाद्यं लिखेच्चक्रं सर्पाकारं फणीश्वरम् । सप्तनाडीसमायुक्तं सौरिवेधं विलोकयेत् । नाड्येकैकसमायोगे जम्बूद्वीपादि गच्छते । सप्त द्वीपाः क्रमेणैव पीडयन्ते सौरिपीडया । जम्बुप्लक्षस्तथा शाकः कुशः क्रौञ्चश्च शाल्मलिः । सप्तमः पुष्करद्वीपः पीड्यन्ते सौरिपीडया" । कालानलचक्राणि सप्त

९ राहुकालानलचक्रम्—(१)"अथातः संप्रवक्ष्यामि प्रोक्ता या ब्रह्मयामले । राहुकालानलो यात्रा सद्यःप्रत्ययकारणम् । ग्रहयोगवशाद्यात्रा ज्योतिःशास्त्रे प्रभाषिता । या सा शुभेषु कार्य्येषु फलदा न तु सङ्कटे । यस्य छायाप्रभावेण छाद्येते शशिभास्करौ । तस्य राहोः प्रभावश्च वक्ष्येऽहं रणकर्म्मणि । केचित् सूर्य्यं वदन्त्येवं ग्रहोराहुरकारणम् । यतो वर्षे दिने लग्ने-ष्वाधिपत्यं न दृश्यते । आधिपत्ये स्थिता ये च वर्षे मासे दिवानिशोः । ते चाधिकारिणोज्ञेया राहू राजाऽभिधीयते । वेदागमपुराणेषु विख्यातो राहुखेचरः । तस्य माहात्म्यमज्ञात्वा मिथ्या जल्पति स्वल्पवित् । दुष्टारिष्टेषु सर्वेषु जातकादिषु मन्यते । सद्यः प्रत्ययदो राहुः स कथं स्यादकारणम् । भ्रमँश्च कालरूपेण संहारेच्च महीतले । स्वचक्रादृष्टया रौद्रोज्ञेयो राहुर्न संशयः । यहा ग्रासभयाद्यस्य दृष्टिमार्गे भ्रमन्ति च । तस्य नामान्यहं वक्ष्ये मुखं पुच्छं क्रमेण च । राहुरग्रस्तमः

पातः स्वर्भानुः सिंहिकासुतः। दैत्यच्छाया शिरोवक्त्रं ग्रहारिश्च विधुन्तुदः। पुच्छं केतुः शिखी सर्पो गुदं गुह्यं घटोमतम्। उत्पातो विषगर्भश्च धूमकालः ग्रहान्तकः। कूर्म्माधारगतोराहुः सर्परूपेण संस्थितः। तस्य चक्रं प्रवक्ष्यामि राहुकालानलाख्यकम्। शलाकासप्तकं चक्रं मीशाद्यौ कृत्तिकादिकम्। साभिजित् सर्व्वमालिख्य अष्टाविंशतितारकाः। यत्र ऋक्ष स्थितोराहुर्वदनं तद्विनिर्द्दिशेत्। मुखात् पञ्चदशे ऋक्षे पुच्छं तस्य व्यवस्थितम्। एकोत्तरशतं ख्याताः जायन्ते तत्र केतवः। व्याप्नुवन्तो जगत्सर्वं सहस्रार्कसमत्विषः। राहुभुक्तानि ऋक्षाणि जीवपक्षे त्रयोदश। त्रयोदशाऽपि भोग्यानि मृतपक्षः प्रकीर्त्तितः। मृतपक्षे मुखान्तस्य गुदं जीवाङ्गमध्यगम्। एवमङ्गद्वयं राहोर्ज्ञातव्यं स्वरवेदिभिः। जीवपक्षे क्षपानाथे मृतपक्षे रवौ स्थिते। तस्मिन् काले शुभा यात्रा विपरीता तु हानिदा। चन्द्रादित्यौ यदा युक्तौ जीवपक्षव्यवस्थितौ। तत्र क्षेमं जयो लाभो यात्राकाले न संशयः। मृतपक्षे यदा काले संस्थितौ चन्द्रभास्करौ। तदा हानिर्भयं भङ्गोमृत्युर्यात्राफलं मतम्। जीवपक्षस्थिते चन्द्रे कार्य्यं स्यादमृतोपमम्। मृतपक्षे मृतं ज्ञेयं यतश्चन्द्रवलात् बलम्” तत्राङ्गभेदेन फलभेद उक्तस्तत्

राहुषडङ्गविभागचक्रम्—“अतः षडङ्गभेदेन राहुचक्रं वदाम्यहम्। मुखं हृदुदरं गुह्यं पुच्छं मस्तकमेव च। मुखैकं हृदये सप्त षड्क्षाणि तथोदरे। ऋक्षैकं गुह्यगं तस्य षट् पुच्छे

“मुखाद्यङ्गनामभेदः सप्रमस्तके मुखाद्यङ्गस्य नामानि फलं चास्य वदाम्यहम्। यथोत्तरं क्रमेणैव चन्द्रार्कभ्रमणेन च। यत्र ऋक्षे स्थितो राहुस्तस्याभिधानमीरितम्। गिलितं कर्त्तरी जिह्वा चन्द्राङ्गं वदनं तथा। राहुधिष्ण्याग्रतः सप्त भुक्तधिष्ण्यानि यानि च। तानि सम्पुटसंज्ञानि कामाङ्गं हृदयन्तथा। हृदयाग्रे स्थितायाश्च तारका रससंख्यया। कामाङ्गं जठरं जीवं सम्पुटोदरसंज्ञकम्। तत्पुरोयत्तु नक्षत्रमेकं पञ्चदशं मुखात्। गुदसद्गिलितं गुह्यं केतुश्चन्द्राङ्गकर्त्तरी। गुर्दधिष्ण्याग्रतोयानि धिष्ण्यानि रससंख्यया। पुच्छं सूर्य्याङ्गवज्राङ्गपुटमृत्युस्तथैव च। शेषाणि सप्त भान्यत्र मध्यमान्यस्य पुच्छयोः। कपालं मस्तकं शीर्षं रुद्राङ्गं भोगिमण्डलम्। स्थिररूपी स्थितोभानुश्चररूपश्च चन्द्रमाः। क्रमेणैकैकशोऽङ्गानां योगषट्कं वदाम्यहम्।

मुखादियोगषट्कम्—“राहुवक्त्रे स्थिते सूर्य्ये चन्द्रे हृदयसंस्थिते। यायिनो विजयस्तत्र स्थायिनो भङ्ग आहवे। मुखाग्रसंस्थिते सूर्य्ये चन्द्रे चोदरगे तथा। अत्र यायी जयेद्युद्धे हेलया नात्र संशयः। भास्करे गिलिताङ्गस्थे चन्द्रे वज्राङ्गसंस्थिते। स्थायी भङ्गमवाप्नोति यायी जयति सर्व्वतः। राहुऋक्षस्थितो भानुश्चन्द्रे पुच्छाङ्गसंस्थिते। स्थायिनोविजयोयुद्धे यायिनो मृत्युमादिशेत्। राहुजिह्वां गते सूर्य्ये चन्द्रे रुद्राङ्गसंस्थिते। बलावर्तौ भवेत्तत्र सैन्ययोरुभयोरपि। राहुऋक्षस्थितोभानुश्चन्द्रस्तत्रैव संस्थितः। न कश्चिज्जयमाप्नोति सैन्ययोरुभयोःक्षयः”।

हृदयादियोगषट्कम्। “हृदयस्थे दिवानाथे जठरस्थे निशाकरे। निर्द्दिष्टः स्थायिनोमृत्युर्यायी जयति निर्व्रणः। हृदयस्थो यदा भानुः शशाङ्कोगुदमाश्रितः। हेलया जयते यायी स्थायी च म्रियते रणे। कामाङ्गके दिवानाथे पुच्छषट्के निशाकरे। स्थायिनो विजयस्तत्र यायिनश्च पराजयः। सम्पुटस्थो यदादित्यो रुद्राङ्गे चन्द्रमा स्थितः। यायी च भङ्गमायाति किञ्चित्स्थायी जयी रणे। कामाङ्गं याति चेत् भानुश्चन्द्रे राहुमुखस्थिते। संग्रामे विजयी यायी, स्थायिनो भङ्गमादिशेत्। हृदयाङ्गे यदा युक्तौ चन्द्रादित्यौ व्यवस्थितौ। देवानपि जयेत् यायी किंपुनर्मानवं बलम्”।

उदरादियोगषट्कम्—“उदरस्थे दिवानाथे निशानाथे गुदस्थिते। समयुद्धं भवेत्तत्र किञ्चित् यायी जयी रणे। सम्पुटस्थो यदा भानुः पुच्छे भवति चन्द्रमाः। यायिभङ्गो, जयः स्थात्तत्र काले न संशयः। कामाङ्गगः सहस्रांशुर्म्मस्तकस्थो निशाकरः। यात्रिकोभङ्गमायाति स्थाने वासी जयी रणे। भानुरुदरगोयत्र निशेशोराहुवक्त्रगः। विवादी क्षीयते तत्र स्थायी जयति नान्यथा। स्वर्भानोरुदरे भानुर्हृदये तारकाधिपः। अनायासेन संग्रामे यायिनो जयमादिशेत्। उदराङ्गे यदा युक्तौ चन्द्रादित्यौ व्यवस्थितौ। तदा सन्धिर्न्न सन्देहः सैन्ययोरुभयोरपि”।

गुदादियोगषट्कम्—“केतुधिष्ण्ये स्थिते सूर्य्ये चन्द्रे वज्राङ्गसंस्थिते। यायिभङ्गो, जयी स्थायी भाषितं ब्रह्मयामले। गुदे तीक्ष्णांशुसंयुक्ते कपालस्थे निशाकरे। यायी च भज्यते तत्र स्थायी जयति नान्यथा। गुदऋक्षस्थितः सूर्य्योराहुऋक्षस्थितः शशी। महाहवं भवेद्घोरं किञ्चित् स्थायी जयी रणे। भानुसद्गिलिते ऋक्षे शशभृत्

संपुटे यदि । यायिनो विजयस्तत्र स्थायिनो भङ्गमादिशेत् । गुदभे वर्त्तते भानुर्ज्जठरे रोहिणीपतिः । दण्डयित्वा रिपोः सैन्यं याताभ्येति निजालयम् । गुदे दिनकरो यत्र तत्रैव यामिनीकरः । समयुद्धं भवेत्तत्र किञ्चिदागन्तुको जयी" ।

वज्राङ्गयोगषट्कम्—"सूर्य्याङ्गस्थः सहस्रांशुर्ज्जिह्वायां शीतगुः स्थितः । यायिनोविजयं विद्यात् स्थायिनश्च पराजयम् । पुच्छक्षेत्रस्थितो भानुः रुद्रक्षेत्रे तु चन्द्रमाः । यायिनो मृत्युरायाति जयलाभौ च स्थायिनः । पुच्छषट्के यदादित्यः कामाङ्गे चन्द्रमाः स्थितः । यायी विजीयते तत्र शक्रतुल्योऽपि वैरिभिः । अंशुमाली स्थितोवज्रे जठरस्थे सुधाकरे । आदत्तेऽरिश्रियं सर्वां जित्वा यायी रणाङ्गणे । भास्करे राहुपुच्छस्थे मृगाङ्के गुदमाश्रिते । समयुद्धं भवेत् तत्र किञ्चित् यायी जयी रणे । सूर्य्याचन्द्रमसौ यत्र वज्राङ्गे यदि संस्थितौ । सैन्ययोरुभयोस्तत्र बधो भवति निश्चितम्" ।

कपालादियोगषट्कम्—"रुद्राङ्गस्थे दिवानाथे राहुजिह्वाङ्गगः शशी । स्थायिनस्तु जयस्तत्र भङ्गो भवति यायिनः । राहुशीर्षस्थिते मित्रे शशाङ्के हृदि संस्थिते । विना युद्धेन गृह्णीयाद्यायी सर्वामरिश्रियम् । कपालसंस्थितः सूर्य्यः सम्पुटस्थो यदा शशी । यायिना जीयते तत्र स्थायिनो भङ्गमादिशेत् । मस्तकस्थे दिवानाथे धिष्ण्यनाथे गुदाश्रिते । यायिनो विजयो युद्धे स्थायिनस्तु पराजयः । राहुशीर्षगतोभानुः पुच्छर्क्षे तु निशाकरे । अन्योऽन्यं विग्रहं घोरं युद्धं भवति दारुणम् । दिनेशो राहुरुद्राङ्गे चन्द्रस्तत्रैव सङ्गतः । विनाशं कोषराज्यस्य यायिनो मृत्युमादिशेत् ।"

राहुदशाङ्गविभागचक्रम्—"हृदयादीनि चाङ्गानि जिह्वान्तानि क्रमेण च । दशसंख्यान्यहं वक्ष्ये राहुचक्रस्य मध्यतः । पुष्पितं फलितं चैव निःफलं झटितं गुदम् । राजमन्तामसं हृद्धं मृतं जिह्वा क्रमेण च । पुष्पिते त्रीणि धिष्ण्यानि क्षेमलाभकराणि च । शत्रुभङ्गो भवेद्युद्धे यात्रा मासेन लाभदा । ततश्चत्वारि धिष्ण्यानि पक्षैकेण फलन्ति च । गजवाजिधनं देशं यायी तु लभते ध्रुवम् । अफलेषु त्रिधिष्ण्येषु षण्मासैर्य्यायिनं प्रति । सन्धिं सेवां तथा देशं स्थायी यच्छति निश्चितम् । फलं प्राप्नोति वर्षेण झटितैश्च त्रितारकैः । हस्त्यश्वपुत्रमित्रादि देशकोषपरिग्रहैः । गुदैकेन भङ्गं लक्ष्मीः पद्मिनी प्रियवादिनी । रूपयौवनसम्पन्ना मासयुग्मेन लभ्यते । विग्रहस्य भवेद्वृद्धिर्युद्धे भङ्गस्तथैव च । रोगपीड़ा भवेद्वर्षे राजसाख्यैस्त्रितारकैः । हस्त्यश्वपुत्रमित्रादि देशकोषपरिग्रहाः । षड्भिर्मासैर्विनश्यन्ति यायिनस्तामसत्रये । तामसाग्रे चतुष्के तु तारकाहृद्धसंज्ञकाः । सर्व्वनाशकराः प्रोक्ता मासैकेन न संशयः । ततस्त्रीणि मृत्युभानि राजमृत्युप्रदानि च । आशीविषस्य गुल्मस्य पक्षैकेण फलन्ति च । युद्धे भङ्गोमहाभीतिर्द्रव्यनाशः कुलक्षयः । सद्यो मृत्युं लभेद्यायी राहुवक्त्रे सुनिश्चितम् ।" इति दशाङ्गफलम् ।

"युद्धकाले यदा शीघ्रं यात्रायोगो न लभ्यते । उत्पाद्येते तदा शीघ्रं तत्कालेन्दुदिवाकरौ । इष्टनाड्योहताधिष्ण्यैः षष्टिभागाप्तशेषके । अश्विन्यादीन्दुभुक्तेन युतस्तत्कालचन्द्रमाः । यथा चन्द्रस्तथा सूर्य्यः कर्त्तव्यश्चेष्टकालिकः । अहोरात्रस्य मध्ये तौ विभ्रान्तौ धिष्ण्यमण्डले । स्थिरचक्रे पुरा प्रोक्तं चन्द्रादित्यफलं मया । चरचक्रेऽप्यनेनैव प्रकारेण फलम्वदेत् । सर्व्वेषु शुभकार्य्येषु यात्राकाले विशेषतः । सर्व्वकाले शुभश्चन्द्रोज्ञेयो हृदि गुदोदरे । पुच्छषट्के कपालस्थे शशाङ्के राहुवक्त्रगे । बन्धनं हानिर्मृत्युश्च सर्व्वकार्य्येषु जायते । हृदि गुदोदरे चन्द्रे विवाहे नन्दति द्वयम् । नैःस्वं वैधव्यविद्वेषौ मुखे पुच्छे तु मस्तके । पुष्पिते फलिते गुह्ये प्रश्नकाले शशो शुभः । अफले झटिते मध्ये मृत्युः शेषाङ्गगे विधौ । ऊर्द्ध्वं तु खेचरं चक्रमधोभूचरमुच्यते । उभयोः सन्निपातेन राहुकालानलं मतम्" ।

१० सूर्य्यकालानलचक्रम्—"ऊर्द्ध्वगास्त्रिस्त्रः शूलाग्रास्तिस्त्रस्तिर्य्यक् च संस्थिताः । द्वे द्वे नाड्यौ स्थिते कोणे दण्डयुग्मं तथैकया । मध्ये त्रिशूलदण्डाधो भानुभाद्यं भमण्डलम् । साभिजिच्च प्रदातव्यं सव्यमार्गेण सर्व्वदा । ऋक्षाष्टके जयोलाभः ऋक्षषट्के तथा पुनः । दण्डयुग्मे रुजाभङ्गो मृत्युः शूलत्रये स्फुटम् । नामऋक्षं स्थितं यत्र ज्ञेयं तत्र शुभाशुभम् । अधोगतैश्च नक्षत्रैरुद्वेगोबन्धबन्धनम् । विवाहे विग्रहे युद्धे रोगार्त्तौ गमने तथा । सूर्य्यकालानलं चक्रं ज्ञातव्यं च प्रयत्नतः ।" (रोगे च कुजनक्षत्रं दिन ऋक्षन्तु युद्धके । प्रयाणे कृत्तिका लेख्या अन्यत्रार्कस्य दीयते) । क्वचित् अधिकपाठः

११ चन्द्रकालानलचक्रम्—"चन्द्रकालानलं चक्रं व्योमाकारं लिखेद्बुधः । चतुर्द्दिक्षु त्रिशूलानि मध्ये भिन्नानि कार-

येत् । पूर्वत्रिशूलमध्यस्थं दिनऋक्षादि लेखयेत् । सव्य-मार्गेण दातव्या अष्टाविंशतितारकाः । त्रिशूले च बहिर्मध्ये मध्ये बहिस्त्रिशूलके । त्रिस्थूले चक्रबाह्ये च चक्रमध्ये तथैव च । नामऋक्षं स्थितं यत्र तत्र ज्ञेयं शुभाशुभम् । त्रिशूले च भवेन्मृत्युर्मध्यञ्च बहिरष्टकम् । लाभः क्षेमं जयः प्रज्ञा चन्द्रगर्भे न संशयः । वर्ज्जनीयं प्रयत्नेन प्रथमाष्टत्रिपञ्चकम् । ऋक्षं द्वात्रिंशकं चात्र कालरूपं न संशयः । लाभालाभौ सुखं दुःखं जय-श्चैव पराजयः । चन्द्रकालानलं चक्रं ज्ञात्वा संशय-वर्ज्जितम्"।

१२ घोरकालानलचक्रम्—"शलाकासप्तकं चक्रं लिखित्वा चन्द्रभादितः । त्रिषु त्रिषु च ऋक्षेषु नव सूर्यादयो-ग्रहाः । यदङ्के नामनक्षत्रं युद्धकारस्य जायते । फल-न्तस्य प्रवक्ष्यामि एकैकस्य यथाक्रमम् । भानुना शोकस-न्तापः शशाङ्कः क्षेमलाभदः । भूसुतो मृत्युमाधत्ते बुधे-बुद्धिः प्रजायते । जीवे लाभः, शुभं शुक्रे, सूर्यपुत्रे महद्भयम् । राहुणा घातपातश्च केतौ मृत्युर्न संशयः । यात्राजन्मविवाहेषु संग्रामे विग्रहेऽपि वा । घोर कालानलं चक्रं ज्ञात्वा कर्म समारभेत्" ।

१३ गूढकालानलचक्रम्—"सप्तरेखोद्भवं चक्रं चन्द्रभाद्यं भमण्डलम् । लिखित्वा कल्पयेच्चक्रं षडङ्गं जयका-ङ्क्षिभिः । दिनर्क्षाद्गण्यते चक्रे गूढसम्पुटकर्त्तरी । दण्डः कपालं वज्राङ्कं ज्ञातव्यं स्वरवेदिभिः । यत्र ऋक्षे स्थितश्चन्द्रस्तत्रादौ त्रीणि गूढकम् । सम्पुटे नव भान्य-त्र कर्त्तरी च ततस्त्रिभिः । दण्डे धिष्ण्यानि च त्रीणि कपाले धिष्ण्यसप्तकम् । वज्राङ्के त्रीणि धिष्ण्यानि षडङ्ग-स्येति निर्णयः । यदङ्के नामनक्षत्रं युद्धकारस्य जायते । दद्यात् शुभाशुभं तस्य गूढकालानले स्थितम् । गूढस्थे विभ्रमो, युद्धे जयो भवति सम्पुटे । कर्त्तर्यां सक्षतं युद्धं, दण्डे भङ्गो न संशयः । कपालस्थे भवेन्मृत्युर्वज्रे तस्य महद्भयम् । गूढकालानलं चक्रं भाषितं ब्रह्म-जामले" ।

१४ शशिसूर्यकालानलचक्रम्—"द्वादशारं लिखेच्चक्रं मेषादि द्वादशान्वितम् । क्षेत्रयुग्मञ्च तत्रैव विख्यातं रविचन्द्रयोः । सिंहाद्यं मकरान्तञ्च भास्करस्योदाहृतम् । कुम्भादिकर्क पर्यन्तं चन्द्रक्षेत्रं न संशयः । चन्द्रक्षेत्रगते सूर्ये चन्द्र-स्तत्रैव संस्थितः । यायिनो विजयो युद्धे स्थायिनो भङ्ग-मादिशेत् । सूर्यक्षेत्रे गते चन्द्रे सूर्यस्तत्रैव संस्थितः । यायी भङ्गमवाप्नोति स्थायिनो विजयो भवेत् । सूर्ये सूर्याङ्कसंयुक्ते चन्द्रे चन्द्राङ्कसंगते । तदा काले भवेद्गूढसन्धिर्युद्धं तस्य विपर्यये । सूर्यक्षेत्रगते चन्द्रे चन्द्रक्षेत्रगते रवौ । महायुद्धं प्रवर्त्तेत संहारः सैन्ययोर्द्वयोः । यात्रायां युद्धकाले च चक्रमेतद्वि-लोकयेत्" । अत्र विशेषः । "एकेन क्रूरवेधेन विद्धो भवति चन्द्रमाः । स्वल्पं युद्धं तदा काले जायते नात्र संशयः । द्वाभ्यां वापि त्रिभिर्वापि पापैर्विद्धो यदा शशी । तदा युद्धं महाघोरं सैन्ययोरुभयोरपि । वक्रैः पृष्ठे भवेद्युद्धमग्रे चैवातिचारिभिः । मध्यगत्या भवेन्मध्ये पापैः सौम्यैस्तु तत् न हि । ऊर्द्ध-दृष्टौ भवेदूर्द्धं मध्यदृष्टौ तु मध्यमे । अधोदृष्टा-वधस्ताच्च केकरे पार्श्वतो भवेत् । शनिराहुकुजादित्या-स्त्वेकरेखागता यदि । चन्द्रेण संयुतास्ते च तदा पात चतुष्टयम् । शनिना चन्द्रयुक्तेन जीववेधगतेन च । तदा दृष्टिर्भवेन्नूनं वर्णोपलमयोक्तितम् । भौमे-नाग्निर्भवेत् पातो राहुणा लौहपातकृत् । भानु-ना वज्रपातश्च सर्वैः सर्वे भवन्ति च । शुक्रेण जलपातोऽपि पांशुपातः शशाङ्कजे । गुरुणा चञ्चला-पातः दिग्दाहः केतुना भवेत्" ।

१५ संघट्टचक्रम्—"अश्विन्यादि लिखेत् चक्रं सप्तविंशति तारकम् । त्रिकोणं नवभिर्वेधः कर्त्तव्यस्तिर्य्यगाकृति । अश्विनीरेवतीवेधो वेधः स्वातिविशाखयोः । मघापौष्णो मघाश्लेषे अश्लेषामूलयोस्तथा । एवं संघट्टचक्रं च कार्यं सूत्रगता ग्रहाः । भूपनामर्क्षसंघट्टे युद्धं भवति नान्यथा । निर्वेधे सौम्यवेधे च युद्धं नास्ति न संशयः । क्रूरवेधे भवेद्युद्धं तत्काले घोरदर्शनम् । युद्धकाङ्क्षी भवेद्राजा यस्य भं क्रूरवेधितम् । युद्धहेतौ भवेत् सौम्ये तथा वेधविवर्जिते । सौम्यक्रूरविभागेन मित्रामित्र क्रमेण च । वक्रातिचारगत्या च युद्धं स्वल्पञ्च नास्ति च" ।

१६ कुलाकुलचक्रम्(२)—"द्वितीया दशमी षष्ठी कुलाकुल-मुदाहृतम् । विषमा अकुलाः सर्वाः शेषाश्च तिथयः कुलाः १ रविचन्द्रौ गुरुः सौरिश्चत्वारोऽप्यकुला मताः । भौमशुक्रौ कुलाख्यौ च बुधवारः कुलाकुलः २ । वारु-णार्द्राभिजिन्मूलं कुलाकुलमुदीरितम् । कुलानि समधिष्ण्यानि शेषाण्यकुलानि च ३ । तिथौ वारे च नक्षत्रे अकुले यायिनो जयः । कुलाख्ये स्थायिनो नूनं सन्धिश्चैव कुलाकुले" ।

१७ कुम्भचक्रम्(२)—“कुम्भाकारं लिखेच्चक्रं तिर्य्यग्रेखाप्रभेदितम्। तस्य चोर्द्ध्वमधोलेख्यमेकैकान्तरभं क्रमात्। भानुभाद्यं न्यसेत्तत्र रिक्तां पूर्णामिति क्रमात्१। एवं राशिक्रमाल्लेख्यारिक्ता पूर्णा इति क्रमात्२। रिक्ते रिक्ता भवेद्यात्रा पूर्णे यात्रा शुभावहा। इति यात्राफलं ज्ञेयं कुम्भचक्रद्वये स्थितम्”।

१८ प्रस्तारचक्र—“त्रयोदशोर्द्ध्वगा रेखा दश रेखाश्च तिर्य्यगाः। भवेयुः कोष्ठकास्तत्र सङ्ख्ययाष्टोत्तरं शतम्। मेषाद्या राशयो लेख्यास्तिर्य्यक् प्रथमपङ्क्तिषु। नवांशराशयश्चाधो नवधा सर्व्वराशिषु। कवर्गो नवधा लेख्यं कोष्ठके प्रथमाष्टके। द्वितीये सप्तमे चाद्या एवं टाद्यास्त्रिषष्ठके। यशवर्गौ चतुर्थे च अवर्गः पञ्चमे तथा। नवद्वादशके ताद्याः शेषे पाद्याः द्विकोष्ठके। चतुरक्षरसंयोगात् अश्विन्यादिक्रमेण च। ज्ञेया नवांशका वर्ण्णा मेषादिराशिमण्डले। भौमं शुक्रं बुधं चन्द्रं भानुं सौम्यं सितं कुजम्। गुरुं सौरिं शनिं जीवं विदध्यात् कोष्ठकोपरि। कोष्ठाक्षरगतो ज्ञेयश्चन्द्रस्तत्कालसम्भवः। तदधीनं फलं सर्व्वं लाभालाभजयादिकम्। दिनक्षत्रगतानाड्यः सप्तविंशतिताडिताः। षष्टिभक्ते भवेद्भं तत्कालेन्दुगतं स्फुटम्। इष्टनाड्योद्धृताधिष्ण्यैः षष्टिभागाप्तशेषके। अश्विन्यादीन्दुभुक्तेन युक्तस्तत्कालचन्द्रमाः। क्रूरक्षेत्राक्षरे चन्द्रे न शुभं सर्व्वकर्म्मसु। शुभक्षेत्रे शुभं चैव प्रस्तारे चन्द्रनिर्णयः। नाडीफलौ यशौ वर्गौ ववर्गाद्युफलोदयः। कुःपक्षेण च मासेन ऋतौ च तोऽयनोदयः। जन्मकाले विवाहे च याने जन्मनि सङ्करे। शशाङ्कस्य फलं श्रेष्ठं स्वरशास्त्रेषु निश्चितम्। अंशकेनांशकं गुण्यं भुवयुक्तं कृतं पुनः। चतुःस्थामुनयः (७,७,७,७), सूर्य्याः १२ सप्त७ रन्ध्र ९ गुणेषवः५३। मासाः१२ शैलाः७ इनाः१२ तत्त्वाः२४ राशीनां च भुवादमे। गुणाः ३ शैलाः ७ युगाः ४ पञ्च सप्त पञ्चाद्रयो ७ युगाः४। नागाद वाणा ५ रसाङ्क भूता५ मेषादेरंशका इमे। नन्दस्य योऽंशकोदेवि! तस्य स्वामी च यो ग्रहः। तद्वशात् कालविज्ञानमुदितांशकसंख्यया। सूर्य्येऽयनं क्षपश्चन्द्रे दिनान्यारे तथा बुधे! ऋतवश्च, गुरौ मासाः, शुक्रे पक्षः प्रकीर्त्तितः। सूर्य्यपुत्रे समा देवि! सर्व्वदैवविधिः स्मृतः”।

१९ तुम्बुरचक्रे दृष्टिचक्रम्—“प्रस्तारे द्वादशारे च कक्षाचरक्रमेण च। नवांशराशिमार्गेण चक्रं भवति तुम्बरम्। यत्र मेषादिराशिस्थस्तत्कालेन्दुः प्रजायते। ग्रहदृष्टिवशात् सर्व्वं ज्ञेयं तत्र शुभाशुभम्। त्रिदशे पञ्चमे धर्म्मे चतुर्थाष्टमसप्तमे। पादवृद्ध्या निरीक्षन्ते प्रयच्छन्ति तथा फलम्। जड्दृष्टी च भौमार्क्कौ केकरौ बुधभार्गवौ। समदृष्टी च जीवेन्दू शनिराहू त्वधोमुखौ। मेषो वृषो मृगः कन्या कर्कमीनतुलास्तथा। आदित्यादिग्रहेषूच्चा नीचं तु तस्य सप्तमम्। परमोच्चा दिशो१० रामा३ अष्टाविंशतिथोन्द्रियाः १५।५। सप्तविंशास्तथा विंशः सूर्य्यादीनां तथांशकाः। परमोच्चात् परं नीचमर्द्धचक्रांशसंख्यया। नीचस्थानात् क्रमेणोच्च उक्तोऽसावत्र खेचरः। उच्चान्नीचाच्च यत्तुर्य्यं समस्थानं तदुच्यते। उच्चनीचसमस्थाने चन्द्रं ज्ञात्वा फलं वदेत्। उच्चस्थानस्थितं चन्द्रं भौमादित्यौ प्रपश्यतः। समस्थाने च गुर्विन्दू नीचस्थं राहुसूर्य्यजौ। बुधशुक्रौ त्रिकोणे च चन्द्रं तत्कालसम्भवम्। अन्यतस्थं न पश्यन्ति जात्यन्धा इव खेचराः। सौम्यदृष्टिस्थिते चन्द्रे सर्व्वं सौख्यं प्रजायते। क्रूरदृष्टिगतं पुंसां मृत्युर्हानिर्महद्भयम्। एवं शुभयुते चन्द्रे सर्व्वं सौख्यं प्रजायते। क्रूरैः क्रूरफलं तत्र मिश्रैर्म्मिश्रं न संशयः। रक्तं पीतं सितं कृष्णं चन्द्रे वर्णचतुष्टयम्। ज्ञातव्यञ्च प्रयत्नेन प्रश्नकाले सदा बुधैः। रविर्भौमः सितः सौम्यो गुरुः सौरिः शशी तमः। वर्गेशाश्च अवर्गादौ ग्रहा ज्ञेया विचक्षणैः। ख्यातौ रविकुजौ रक्तौ पीतौ जीवबुधौ ग्रहौ। शशिशुक्रौ सितौ वर्णौ कृष्णत्वं राहुमन्दयोः। यद्वर्णवर्गगश्चन्द्रस्तस्य स्वामी च यो ग्रहः। तस्य वर्णेन वर्णत्वं शशाङ्कस्य प्रजायते। रक्ते चन्द्रे भवेद्युद्धं कृष्णे मृत्युर्न संशयः। पीते शुभं विजानीयात्सिते शुभतरं फलम्”।

२० तुम्बुरचक्रम्—“द्वादशारं लिखेच्चक्रं नाडिकैका त्रिधा पुनः। पञ्चमे पञ्चमे स्थाने तिर्य्यग्वेधं तथा कुरु। अष्टोत्तरशतं चैव नाडीसंख्या प्रजायते। अचराद्यस्य चक्रस्य नाडिकाग्रेषु विन्यसेत्। क्रूरवेधाक्षरे चन्द्रो यदा तत्कालसम्भवः। तदा तस्य फलं वच्म्य विवाहादौ शुभाशुभम्। विवाहे क्रूरवेधेन वैधव्यं च विशीलता। यात्रायाञ्च भवेद्धानिर्मृत्युर्भङ्गो महाहवे। क्रूराः सर्व्वे हानिकरा ग्रहाः सौम्याः शुभप्रदाः। द्व्यादिवेधो भवेद्यस्य तस्य मृत्युर्न संशयः। तत्कालेन्दुफलं सर्व्वं

यदुक्तं चादियामले । गोपितं त्वन्यशास्त्रेषु मया चात्र प्रकाशितम्” । अङ्कशब्दे ७२पृ० चक्रनामोद्देशे चरमित्यशुद्धम् । तुम्बरमिति शुद्धम् एवमन्यस्याप्यशुद्धस्यात् दर्शितचक्रनामानुसारेण तत्र शुद्धता बोध्या

२१ भूचरखेचरचक्रम्—“अधःस्थं भूचरं चक्रमूर्द्ध्वस्थं खेचरं तथा । चरस्थिरविभागेन स्थायी यायी फलं क्रमात् । मेषादिद्वादशारे च वाममार्गेण भूचरम् । तस्योर्द्ध्वं खेचरं चक्रं दक्षमार्गेण सर्वदा । ये ग्रहाराहुमार्गस्था भूचक्रे ते व्यवस्थिताः । सूर्य्यमार्गेण ये लग्नाः खेचराः खेचरस्थिताः । भूचक्रे संस्थितैः पापैः खेचक्रे सौम्यखेचरैः । स्थायियायिबलं ज्ञेयं क्रमात् स्वरविचक्षणैः । सौम्याश्च भूचरे चक्रे क्रूराः खेचरगा यदि । संहारोजायते तत्र सैन्ययोरुभयोरपि । भूचरस्याग्रहा यत्र दृश्यन्ते च शुभाशुभाः । यायी संहारमायाति स्थायी सार्द्धजये जयी । खेचरे खेचराः सर्वे सौम्याः पापगतायदा । स्थायिनो बलसंवर्त्तौ यायी जयति सत्वतः । भूचरे खेचरे सर्वे यदा मिश्रा शुभाशुभाः । तदा मिश्रं फलं वाच्यं स्थायिनो यायिनोऽपि वा” ।

२१ पथचक्रम्—“अश्विन्यादीनि धिष्ण्यानि पङ्क्तियुक्त्या लिखेद्बुधः । नाडीनाञ्च त्रये वेधः सर्पाकारः पथाख्यके । क्रूरवेधस्थिता नाडी तद्धिष्ण्येन युते दिने । यात्रा युद्धं न कर्त्तव्यं पथचक्रे त्विदम् फलम्” !

२२ नाडीचक्रम्(२)—आर्द्रादिकं लिखेच्चक्रं क्रमान्तञ्च त्रिनाडिकम् । भुजङ्गवदथाकारं मध्ये मूलं प्रतिष्ठितम् । यद्दिने चैकनाडीस्थाश्चन्द्रनामर्क्षभास्कराः । तद्दिनं वर्जयेत्तस्य विवाहे विग्रहे रणे ।” १एकनाडीगते भौमे रविजीवसमन्विते । यदा चन्द्रेण संयुक्ते तदाक्षौणी परिप्लुता । ऊर्द्ध्वनाडीगतो वायुर्मध्यनाड्यां समोभवेत् । अधोनाड्यां भवेत्वृष्टि रेनद्दृष्टेस्तु लक्षणम्२ विवाहाङ्गत्रिनाड़ीचक्रम्—“अश्विन्यादि लिखेच्चक्रं सर्पाकारं त्रिनाडीकम् । तत्र वेधवशात् ज्ञेयं विवाहादि शुभाशुभम् । आद्यनाडीगनक्षत्राण्यश्विरौद्र पुनोत्तराः७।१२। हस्तेन्द्रमूलवारुण्यः पूर्वभाद्रपदस्तथा१ याम्यः सौम्योष्णगुरुदर्य्योनि११श्चित्रा मित्र१७ जलाह्वयम् २० । धनिष्ठा चोत्तरा भाद्रा मध्यनाड़ीव्यवस्थिताः । कृत्तिका रोहिणी सार्पः९ मघास्वातीविशाखकम् । उत्तरा श्रवणं पौष्णं२७ पृष्ठनाड़ीव्यवस्थिताः । वेधनाड्यामश्विन्यादिधिष्ण्यं च द्वितीयकम् । याम्यादि तुर्य्यतुर्य्यं च कृत्तिकादि द्विकं द्विकम् । एवं निरीक्ष्य बोद्धव्यं कन्यामन्त्रे गुरौ स्वरे । पण्यस्त्रीस्वामिमित्रेषु देशे ग्रामे पुरे गृहे । एकनाड़ीस्थऋक्षाणि यदा स्युर्वरकन्ययोः । तदा बेधं विजानीयाद्गुर्वादिषु तथैव च । प्रकटं यस्य जन्मर्क्षं तस्य जन्मर्क्षतोवदेत् । प्रनष्टं जन्मभं यस्य तस्य नामार्क्षतो वदेत् । द्वयोर्ज्जन्मभयोर्वेधो द्वयोर्न्नामर्क्षयोस्तथा । जन्मनामर्क्षयोर्वेधो न कर्त्तव्यः कदाचन । एकनाड़ीस्थिता दुष्टा भर्त्तुस्त्वैव कुलाङ्गना । तस्मान्नाड़ीव्यधोवीक्ष्या विवाहे शुभमिच्छता । आद्यनाड़ीव्यधे भर्त्ता मध्यनाड़ीव्यधे द्वयम् । पृष्ठनाड़ीव्यधे कन्या म्रियते नात्र संशयः । समासन्ने व्यधे शीघ्रं दूरवेधे चिरेण तु । व्यधान्तरभमानेन वर्षं रिष्टं प्रजायते । एकर्क्षं जायते यत्र विवाहे वरकन्ययोः । मूलवेधो भवेत्तत्र महादुष्टफलप्रदः । एकनाड़ीस्थिता यत्र गुरुर्मन्त्रश्च देवताः । तत्र द्वेषं रुजं मृत्युं क्रमेण फलमादिशेत् । प्रभुःपण्याङ्गना मित्रं देशो ग्रामः पुरं गृहम् । एकनाड़ीगता भव्या न भव्या वेधवर्ज्जिताः । क्रूरग्रहगता नाड्यो यस्य जन्मर्क्षसम्भवाः । तस्य मृत्युर्न्न सन्देहो यात्रायुद्धे भयं भवेत् । द्व्यादिक्रूरव्यधो यस्य चक्रे चैव त्रिनाडिके । हानिर्विघ्नं भयं क्लेशोजायते बधबन्धनम् । एवं सौम्यव्यधो यस्य जन्मधिष्ण्ये प्रजायते । जयो लाभः सुखं तस्य जायते नात्र संशयः । शुभपापग्रहैर्विद्धा यस्य जन्मर्क्षनाड़िका । तस्य मिश्रं फलं वाच्यं नाड़ीचक्रे स्वरज्ञकैः” २ ।

“एतच्चक्रं समालिख्य अश्विन्याद्यं हि पङ्क्तितः । वेधो द्वादशनाड़ीभिः कर्त्तव्यः पन्नगाकृतिः । आद्यांशेन चतुर्थांशं चतुर्थांशेन चादिमम् । द्वितीयेन तृतीयञ्च तृतीयेन द्वितीयकम् । एवं चांशव्यधोयेषां जायते वरकन्ययोः । तेषां मृत्युर्न्न सन्देहः शेषांशाः स्वल्पदुःखदाः । गुरुमन्त्राश्च देवाश्च स्वस्थाने च सुशोभनाः । अन्यांशकगताभव्या ज्ञातव्या स्वरवेदिभिः । एवं जानाति यश्चक्रं चक्रराजं त्रिनाडिकम् । तस्य पार्थिवत्वे ज्ञानं सर्व्वदैव प्रतिष्ठितम्” ३ ।

२१ कालचक्रम्—“नवोर्द्ध्वगानि धिष्ण्यानि नव तिर्य्यग्गतानि च । अधोगतानि धिष्ण्यानि नव चैव विनिर्द्दिशेत् । चतुर्न्नाडीक्षतो वेधो मध्यऋक्षत्रयोज्झितः । सर्पाकारञ्च तच्चक्रं कालचक्रं प्रजायते । त्रीणि मध्यगतर्क्षाणि तानि कालमुखानि च । कोणस्थिते च ये धिष्ण्ये ते च

टंष्ट्रे द्वयं मतम्। दिनर्क्षमादितः कृत्वा नामर्क्षं यत्र संस्थितम्। मुखदंष्ट्रागतो मृत्युः शुभमन्यत्र संस्थिते। ज्वरिते नष्टदग्धे च विवाहे विग्रहे रणे। काल टंष्ट्रास्थगं नाम यस्य तस्य महद्भयम्"।

२४ सूर्य्यफणिचक्रम्—"सप्तविंशतिभान्यत्र पङ्क्तियुक्त्या क्रमेण च। त्र्यन्तरे त्र्यन्तरे चैव फणिचक्रं त्रिनाडिकम्। यत्र ऋक्षे स्थितो भानुस्तदादि गणयेद्बुधः। नामर्क्षं च स्थितं यत्र ज्ञेयं तत्र शुभाशुभम्। कुर्य्यान्मृत्युं च रोगञ्च नाडीवेधं गतो नृणाम्। वर्ज्जयेत् सर्व्वकार्य्येषु युद्धकाले विशेषतः। निर्व्वेधर्क्षकमध्यस्थं यस्य नाम प्रजायते। सिद्ध्यन्ति तस्य कार्य्याणि संग्रामे विजयो भवेत्"।

२५ "चन्द्रफणिचक्रम्—"सूर्य्यफणीश्वरे चक्रे यदुक्तं च शुभाशुभम्। चन्द्रादौ तत्फलं चक्रे ज्ञेयं सर्वं फणीश्वरे।"

२६ कविचक्रम्—"हीनसैन्यः सदा स्थायी यायी सैन्याधिकः सदा। अबलस्य बलोपायं वक्ष्येऽहं कविसङ्गरे। प्रयाणे चोत्प्रयाणे वा निशीथे मृगयाकृते। शोकार्त्तिव्यसनप्राप्ते हतसैन्ये विनायके। अष्टधा कविकालस्तु कथितो दुर्बले नृपे। इत्थं कुर्वन् परान् युद्धे जयतीह न संशयः। चतुरस्रं त्रिनाड़ीकम् कविचक्रं लिखेद्बुधः। प्रवेशे निर्गमे भानि स्थानधिष्ण्यादि विन्यसेत्। यत्र नामाङ्किते स्थाने शत्रुसैन्यं व्यवस्थितम्। तत्र चक्रम् समालेख्यं सेनाध्यक्षपूर्वकम्। त्रीणि त्रीणि प्रवेशे च ईशादौ विदिशि क्रमात्। निर्गमे तुर्य्यतुर्य्यौ च पूर्वाशादिक्रमेण च। सौम्याः क्रूरा ग्रहाश्चात्र प्रवेशे निर्गमे स्थिताः। वक्रातिचारगास्तत्र ज्ञात्वा कविरणं कुरु। जीवपक्षस्थिते चन्द्रे ऋकुलर्क्षे प्रवेशके। यानं कविरणे प्रोक्तं ज्ञात्वा प्रवेशनिर्गमौ। उदितेऽस्तखरो यस्य यत् जन्मेन्दुस्थाश्रयः। तद्दिने ते भटाः सर्वे वर्जनीयाः कवौ रणे। क्रूरे शीघ्रे प्रवेशर्क्षे यत्र तत्र विशेद्रणे। वक्रसुधे निर्गमे सौम्ये तद्दिशि निर्गमं कुरु। प्रवेशर्क्षे प्रवेशं च निर्गमे निर्गमे कुरु। भूबलं पृष्ठतः कृत्वा प्रोक्तः कविरणे जयः।"

२७ खलचक्रम्—"चतुरस्रं चतुर्द्वारं खलचक्रं लिखेद्बुधः। नन्दाद्यास्तिथयोन्यस्ताः पूर्वद्वारक्रमेण च। पूर्वाशादिचतुष्के तु सप्त सप्त क्रमेण तु। कृत्तिकादि लिखेन्मध्ये खले भान्यष्टविंशतिम्। शनिचन्द्रौ कुज सौम्यौ भानुशुक्रौ बृहस्पतिः। मध्ये बहिर्गतादेया अपसव्यं दिशां क्रमैः। यद्दिने यद्दिशि स्युस्ते तिथिधिष्ण्यदिनाधिपाः। प्रवेशः खलकद्वारे कर्त्तव्यस्तेन सर्वदा। खलकाभ्यन्तरे कालः शनिसूर्य्येज्यमङ्गलैः। बुधशुक्रेन्दुभिर्बाह्ये यायी स्थायी क्रमाज्जयी। खलके मध्यनक्षत्रे यो ग्रहो यत्र संस्थितः। तत्र स्थाने गते चन्द्रे फलं वक्ष्ये शुभाशुभम्। सूर्य्यस्थानेस्थिते शूरे मृत्युश्चन्द्रसमाश्रिते। भौमस्थाने महाक्रोधी बुधस्थाने महद्भयम्। गुरुस्थाने स्थितः स्यात्सुभिक्षमायाति भार्गवे। शनिस्थे सततं युद्धं राहुस्थे मरणं ध्रुवम्। वक्रस्थाने भवेद्युद्धं शीघ्रस्थाने च धावति। समचारगते स्थायी क्षीणेन्दुस्थे च मोहनम्। क्रूरपृष्ठ जयो युद्धे, सौम्यपृष्ठे पराजयः। क्रूरे च संमुखे मृत्युर्ज्जयः सौम्यग्रहे स्थिते। योधयोः पृष्ठगाः क्रूरा उभयोर्मृत्युकारकाः। सौम्याः सन्धिप्रदा युद्धे मिश्रा मिश्रफलप्रदाः।"

२८ कोटचक्रम्(८)—"अथातः सं प्रवक्ष्यामि कोटयुद्धस्य निर्णयम्। अल्पारिः कुरुते यत्र भूरिसैन्यपराभवम्। यस्याश्रयबलादेव राज्यं कुर्वन्ति भूतले। विग्रहं चतुरशायां सामात्यैः शत्रुभिःसह। विषमं दुर्गमं घोरं चक्रं भीरुभयावहम्। कपिशीर्षैश्च शोभाढ्यं रौद्राट्टलकमण्डितम्। प्रतोली यत्र कालास्यं परिखा कालरूपिणी। रणमण्डकृताटोपः ठिङ्कुनीयन्त्रमण्डितम्। मुसलैर्मुद्गरैः पाशैःकुन्तखड्गैर्धनुःशरैः। संयुतैः सुभटैः शूरैरिति दुर्गं समादिशेत्। दुर्गस्थो दुर्गमः शत्रुरसाध्यो येन सिध्यति। कोटचक्रं प्रवक्ष्यामि विभ्रधादष्टधा मतम्। प्रथमं मृण्मयं कोटं जलकोटं द्वितीयकम्। तृतीयं ग्रामकोटञ्च चतुर्थं गिरिगह्वरम्। पञ्चमं पर्वतारोहं षष्ठकोटञ्च डामरम्। सप्तमं वक्रभूमिस्थं विषमाख्यं तथाष्टमम्। मृण्मये साधयेत् खनित्वा जलस्थे जलमोक्षणम्। ग्रामदुर्गेऽग्निदानञ्च प्रवेशो गह्वरेषु च। पर्वते स्थानभेदश्च भूबलं डामरे रणे। चक्राख्ये कवियोगस्य विषमे स्थायियायिता। अतिवर्त्तं कालकर्णञ्चक्रावर्त्तं च डामरम्। तालावर्त्तं तु पद्माक्षं यत्रभेदश्च शाम्बरम्। एतन्नामाष्टकं ज्ञेयं दुर्गाष्टकक्रमेण च। यस्य वर्गस्य योभक्ष्यः स वर्गस्तस्य भञ्जकः। अ गरुडः क मार्ज्जारः च सिंहः ट शुनीसुतः। त सर्पः प आखुश्च य गजः श अजासुतः। दुर्गवर्गस्य ये भक्ष्या वर्ज्यास्तद्भागजा नराः।

तद्वर्ग्यास्तु रणे त्याज्या न कर्त्तव्या गडाधिपाः स्ववर्गपञ्चमे स्थाने खण्डभङ्गश्च जायते। अवर्गाद्यष्टकं ज्ञेयं पूर्वाद्यष्टदिशां क्रमात्। कोटचक्रं लिखेच्चादौ चतुरस्रं त्रिनाड़िकम्। कृत्तिकादीनि भान्यत्र साभिजिन्ति न्यसेद्बुधः। बहिः कोटे च मध्ये च मध्ये दुर्गे बहिर्बहिः। प्रवेशो निर्गमस्तत्र ज्ञातव्यः स्वरवेदिभिः। ईशात् प्रवेशधिष्ण्यानि मध्यात् प्राचीविनिर्गमः। वह्निहर्द्दिश भान्यत्र प्राकारे तारकाष्टकम्। दुर्गमध्ये तथा चाष्टौ तन्मध्ये स्तम्भतुर्य्यकम्। कृत्तिका पुष्यसार्पञ्च मघास्वातीविशाखकम्। अनुराधाभिजित् कर्णौ धनिष्ठाश्वियमाह्वयम्। ब्राह्मं पुनर्वसु भाग्यं चित्रा ज्येष्ठा तथोत्तरा॥१७। शतभं रेवती चैव प्राकारे तारकाष्टकम्। मृगरौद्रोत्तराहस्तमूलमाषाढपूर्वकम्। पूर्वोत्तरा तथा भाद्रा मध्ये ताराष्टकं तथा। प्राच्यां रौद्रं यमे हस्तं पूर्वाषाढ़ा च पश्चिमे। कौवेर्यामुत्तरा भाद्रा ह्येतत्स्तम्भचतुष्टयम्। कृत्तिकाद्यं मघाद्यञ्च मैत्राद्यं वासवादिकम्। त्रीणि त्रीणि प्रवेशे च द्वादशर्क्षाणि निर्गमे। कृत्तिकादिरयं न्यासः सुबोधार्थः प्रदर्शितः। दुर्गभाद्गणना चात्र ग्रहैर्वाच्यं ततः फलम्। दुर्गनामस्थितो वर्णो यद्वर्गोच्चारितः स्फुटम्। तदाशादिलिखेच्चक्रं क्रमात् स्वरविचक्षणैः। चतुरस्रं१ वृत्तं२ दीर्घं३ त्रिकोणं४ वृत्तदीर्घकम्५। अर्द्धचन्द्रं६ तथा ज्ञेयं गोस्तनं७ धनुराकृति८। चतुरस्रे यथा न्यासो भूमिभागक्रमेण च। प्रवेशे निर्गमे ह्यस्ति तथा वृत्तादिसप्तके। दुर्गे भित्तिविभागेन दातव्यं धिष्ण्यमण्डलम्। तत्रस्थैः खेचरैः सर्वैः फलं वाच्यं यथोदितम्। बाह्यभे मध्यभे वापि यत्रस्थाः क्रूरखेचराः। तत्र स्थाने क्षतं यत्र हन्ति दुर्गं ससैनिकम्। बुधशुक्रेन्दुजीवाश्च सदा सौम्या ग्रहा मताः। शन्यर्कराहुकेत्वारा मताः क्रूरा बुधैरिमे। त्रिप्रकारो ग्रहे चारो वक्रः शीघ्रः समो मतः। उच्चनीचसमास्ते च त्रिधा चक्रे भ्रमन्ति च। ऊर्द्धं चाधः समास्तिर्य्यग्दृष्टिभेदश्चतुर्विधः। स्वर्क्षे मित्रे समं शत्रौ चतुर्द्धा च ग्टहे ग्रहः। सूर्य्यमुक्ता उदीर्यन्ते शीघ्राश्चार्कौ द्वितीयगे। समास्तृतीयगे यान्ति मन्दगत्या चतुर्थगे। वक्रः स्यात् पञ्चषष्ठेऽर्कौ त्वतिवक्रोऽष्टसप्तमे। नवमे दशमे भानौ जायते कुटिला गतिः। शीघ्रगाश्च भवन्त्यत्रे द्वादशैकादशे तथा। राहुर्वक्रः सदा ज्ञेयो रवीन्दू शीघ्रगौ तथा। शीघ्रोऽतिचारगत्या च समश्च सप्तमन्दया। वक्रातिवक्रकौटिल्यगत्या वक्रग्रहो मतः। क्रूरोऽतिक्रूरतां याति सौम्यायात्यतिसौम्यताम्। वक्रचारे समुत्पन्ने शीघ्रे तत्रविपर्य्ययः। मेषो वृषो मृगः कन्या कर्कमीनतुलास्तथा। रव्यादीनां क्रमादुच्चं नीचं यत्तस्य सप्तमम्। उच्चान्नीचाच्च यत्तुर्य्यं समस्थानं तदुच्यते। उच्चस्थं मध्यमं नीचं वक्रे यत्र व्यवस्थितम्। ऊर्द्धदृष्टी च भौमार्कौ केकरौ बुधभार्गवौ। समदृष्टी च जीवेन्दू शनिराहू त्वधोदृशौ। सुहृदोर्केन्दुभौमेज्या एवं शुक्रज्ञभानुजाः। अन्योन्यं वैरिणोह्येते राहोः सर्वे च शत्रवः। स्वक्षेत्रस्थे बलं पूर्णं पादोनं मित्रभे ग्रहे। अर्द्धं समग्रहे ज्ञेयं पादं शत्रुग्टहस्थिते। क्रूरोगर्भे पुरं हन्ति प्राकारे खण्डकारकः। बहिःस्थो वेष्टके सैन्ये मृत्युदो नात्र संशयः। क्रूरागर्भे, शुभा बाह्ये निश्चितन्ते पुरान्तकाः। सौम्या मध्ये बहिः क्रूरा असाध्यं दुर्गमुच्यते। क्रूरचतुष्टयं मध्ये प्राकारे सौम्यखेचराः। भेदोभङ्गो भवेत्तत्र विना युद्धेन ग्टह्यते। प्राकारे संस्थिताः क्रूरामध्ये सौम्याग्रहा यदि। दुर्गभङ्गे समुत्पन्ने भङ्गमायाति वेष्टकः। मध्ये नाडीस्थिताः सौम्याः क्रूरा बहिरवस्थिताः। सैन्यावर्त्तौबहिः शत्रोर्विना युद्धेन जायते। प्राकारे पुरमध्ये च यदा क्रूरा व्यवस्थिताः। सौम्या बाह्ये तदा दुर्गमयत्नेनापि सिद्ध्यति। सौम्या मध्ये च कोटे च बाह्ये पापग्रहा यदि। देवैर्ब्रह्मादिभिर्दुर्गं रणारम्भे न ग्टह्यते। प्राकारबाह्गगाः क्रूराः सौम्या मध्यगता यदि। युद्धे प्राकारखण्डश्च पुरभङ्गो न जायते। सौम्या बाह्ये तथा कोटे मध्ये क्रूरग्रहाःस्थिताः। स्वयं दुर्गं प्रयच्छन्ति वेष्टकस्य गडाधिपाः। बाह्याभ्यन्तरगाः क्रूराः प्राकारे शोभना ग्रहाः। रिपुपक्षः क्षयं याति विनायुद्धेन निश्चितम्। प्राकारस्था ग्रहाः क्रूरा बहिर्म्मध्ये शुभाःस्थिताः। समयुद्धं भवेत्तत्र खण्डःपातो दिने दिने। स्तम्भान्तरगता यस्य ग्रहाः सौम्याः शुभान्विताः। भवेयुस्तस्य कोटस्य न नाशस्तु कदाचन। यदि साक्षादहं (शिवः) तत्र युध्यमानोरणेऽम्बिके !! तथापि न भयं विद्यादिति सत्यं च नान्यथा। सौम्याः क्रूराग्रहाश्चाष्टौ मध्ये प्राकारबाह्यगाः। एकस्था यत्र कुर्वन्ति सङ्ग्रामं तत्र दारुणम्। गजाश्वरथभूपालैः सामन्तैर्मण्डलेश्वरैः। तत्राध्यक्षभटामर्द्द उभयोः सैन्ययोः क्षयः। बाह्ये शत्रुप्रवेशर्क्षे

संग्रामं चारभेद्यदा। तदा सिध्यति तत् दुर्गं न करोतीह विस्मितम्। कोटस्थैस्तु गतोयोद्धा शस्त्रहस्तो महाबलः। शस्त्रं त्यक्त्वा ब्रवीत्येवं धर्म्ममार्गं ददस्व मे। निर्गमेषु च ऋक्षेषु संग्रामं यदि चारभेत्। नैव सिद्ध्यति तद्दुर्गं कोटस्थस्य जयावहः। बाह्यनाड्यां स्थिता ये च ग्रहाः पापान्विता यदा। मध्ये शुभान्विता ये च तत्र भङ्गो न जायते। गडाधीशाः स्मृताः सौम्या वेष्टाधीशाश्च पापकाः। चोत्रयुग्मे स्थिता ये च ज्ञातव्याश्च प्रयत्नतः। गडाधीशो भवेच्चन्द्रो वेष्टाधीशश्च भास्करः। चन्द्रसूर्य्यविभागेन ज्ञातव्यं च बलाबलम्। अंशाधीशोभवेच्चन्द्रस्ताराधीशोहि भास्करः। चन्द्रसूर्य्यगतिं ज्ञात्वा पश्चाद्द्वेषं तु कारयेत्। वेष्टाधीशो भवेन्मध्ये गडाधीशो हि बाह्यगः। स्वयं दुर्गं प्रयच्छन्ति वेष्टकस्य गडाधिपाः। चापकुन्तगदापाशखड्गहस्तैर्महाभटैः। अभङ्गयोर्द्वयो राज्ञोः सैन्यावर्त्तौ हि जायते। वाहिन्यो रक्तवाहिन्यो दुस्तराः प्रेतसङ्कुलाः। यत्रास्थिकपङ्क्तिप्राङ्गा अन्त्रमालावगुण्ठिताः। ष्टध्रकाकशिवाश्येनशाकिनीप्रेतराक्षसाः। वेतालखेचरा भूताः पिशाचाः स्वेच्छयागताः। ईदृशश्च महाघोरं तत्काले जायते ध्रुवम्। न कश्चिद्विजयी युद्धे द्वयं याति यमालयम्। समसंख्याः शुभाः क्रूराः वहिर्म्मध्ये यदा स्थिताः। तदा सन्धिं विजानीयात् सैन्ययोरुभयोरपि। क्रूरैर्भङ्गोजयः सौम्यैर्मिश्रैर्मिश्रं फलं मतम्। विचार्य्य युद्धं कर्त्तव्यं कोटचक्रे स्वरोदये। प्रवेशधिष्ण्यगे चन्द्रे जीवपक्षश्च संस्थिते। निशि कविरणं दुर्गे कर्त्तव्यं बाह्यसैन्यकैः। निर्गमर्क्षस्थिते चन्द्रे दुर्गाभ्यन्तरगैर्नृपैः। कर्त्तव्यं कवियुद्धं तु रात्रौ सुप्ते वहिर्ज्जने। प्रवेशनिर्गमावृक्षौ सैन्ययोरुभयोर्न्निशि। कवौ कोटे जयोयुद्धे विपरीते पराजयः। क्रूरोवक्री प्रवेशर्क्षे पुरमध्यगतो यदा। तदा कोटविनाशाय कोटस्थो बाह्यभूपतेः। प्रवेशे बाह्यगैर्वक्रैः क्रूरैः स्वसैन्यविग्रहः। दुर्भिक्षं मृत्युर्भङ्गश्च वहिःसैन्यस्य जायते। निर्गमर्क्षे बहिःस्थे च क्रूरो वक्रं करोति चेत्। प्राकारस्य भवेद्भङ्गः प्राकारस्थे पुरस्य च। पुरभे निर्गमे वक्राः कथञ्चित् क्रूरखेचराः। दुर्गं मुक्त्वा तदा काले दुर्गस्थः प्रपलायते। यथा क्रूरैस्तथा सौम्यैः फलं ग्राह्यं विपर्य्यये। मिश्रैर्मिश्रं विजानीयात् कोटचक्रे न संशयः। उक्तग्रहैः समायोगो न चान्यैर्न्न वलोज्झितैः। न भास्करकरोच्छिन्नैर्न खेचरपराजितैः। दुर्गसैन्यं तथा तुङ्गे प्राकारे मध्यभागतः। नीचस्थं वेष्टकं सैन्यं ज्ञातव्यं स्वरवेदिभिः। कोटं कोटाधिपौ नीचौ निघ्नन्तौ भौमभास्करौ। समस्थौ च पुरं सर्वमुच्चस्थौ निष्फलौ च तौ। प्राकारवेष्टकान् घ्नन्त्यानुच्चस्थौ राहुसूर्य्यजौ। प्राकारस्थौ बहिःसैन्यं नीचस्थौ निःफलौ च तौ। समदृष्ट्या गुरुचन्द्रौ पश्यतः सर्व्वतः सदा। तिर्य्यक्स्थानं बुधशुक्रौ फलदौ नात्र संशयः। ऊर्द्धदृष्टिग्रहैः कुर्य्यात्-ढङ्कलीयन्त्रवाहनम्। समे च साधयेत् खड्गरन्ध्रपातमधोमुखे। दुर्गमध्यस्थिते सूर्य्ये जलशोषः प्रजायते। चन्द्रे भङ्गः, कुजे दाहो, बुधे बुद्धिबलानराः। वाक्पतौ दुर्गमध्यस्थे सुभिक्षं प्रचुरं जलम्। चलचित्तानराः शुक्रे, मृत्युरोगौ शनैश्चरे। दुर्गमध्ये स्थिते राहौ भेदोभङ्गो महद्भयम्। केतौ मध्यगते तत्र विपदानं गडाधिपे। इत्युक्तं फलं मध्ये एवं बाह्यस्थितैर्ग्रहैः। उपग्रहसमायोगादत्यन्तं प्राणसंशयः। अकारादिस्वराः पञ्च पूर्व्वाद्याशाचतुष्टये। मध्येऽन्त्यं सव्यमालिख्य अन्तस्थाने च खण्डिका। दुर्गनाम्नः स्वरोयस्य बालो वास्तमितोऽपि वा। तद्दिने प्रारभेद्युद्धं दुर्गं सिद्ध्यति नान्यथा। वज्रार्गलविधानं च कर्त्तव्यं दुर्गरक्षणे। भञ्जने यमराजाख्यं यदुक्तं चादिजामले। शुक्रोबुधोगुरुर्मन्दो राहुर्मन्दः सितोबुधः। चन्द्रः सूर्य्यः शनिः सौम्यो वैशाखात् कोटपालकाः”।

२६ गजचक्रम्—“अथातः सं प्रवक्ष्यामि चक्रं मातङ्गनामकम्। येन विज्ञातमात्रेण यात्रायुद्धे जयोभवेत्। गजाकारं लिखेच्चक्रं सर्व्वावयवसंयुतम्। अष्टाविंशति भान्यत्र देयानि सृष्टिमार्गतः। मुखे शुण्डाग्र नेत्रे च कर्णे शीर्षाङ्घ्रिपुच्छके। द्विकं द्विकञ्च दातव्यं पृष्ठोदरे चतुश्चतुः। द्विरदनामभान्यादौ वदनाद्गण्यते बुधैः। यत्र धिष्ण्ये स्थितः सौरिर्ज्ञेयं तत्र शुभाशुभम्। मुखशुण्डाग्रनेत्रे च सौरिभं मस्तकोदरे। युद्धकाले भवेद्यस्य जयस्तस्य न संशयः। पादे पृष्ठे च पुच्छे च कर्णसंस्थे शनैश्चरे। मृत्युर्भङ्गो रणे तस्य ऐरावतसमोयदि। एतेषां दुष्टभानाञ्च यत्काले संस्थितः शनिः। तत्काले पट्टबन्धश्च वर्जनीयः प्रयत्नतः। पृथिव्या भूषणं मेरुः शर्व्वर्य्यां भूषणं शशी। नराणां भूषणं विद्या सैन्यानां भूषणं गजः। शरतोमरचक्राद्यैर्गजस्कन्धहतानराः।

तत्क्षणात् स्वर्गमायान्ति तस्मात् स्वर्गोपमा गजाः । नास्ति हस्तिसमो योद्धा नास्ति हस्तिसमः सखा । नास्ति हस्तिसमो बन्धुर्नास्ति हस्तिसमो रिपुः" ।

२० अश्वचक्रम्—"अश्वाकारं लिखेच्चक्रमश्वधिष्ण्यादितारकाः । वदनात् सृष्टिगा देया अष्टाविंशतिसंख्यया । मुखाक्षिकर्णशीर्षेषु पुच्छाङ्घ्रौ युग्मसंख्यया । पञ्च पञ्चोदरे पृष्ठे सौरिर्यत्र फलं ततः । मुखाक्ष्युदरशीर्षेषु यदा सौरिर्व्यवस्थितः । युद्धकाले तदा तस्य जयो भवति नान्यथा । कर्णपुच्छाङ्घ्रिपृष्ठस्थे अश्वचक्रेऽर्कनन्दने । विभ्रमं भङ्गं हानिञ्च करोत्यश्वो महाहवे । एतत्स्थाने स्थितः सौरिर्यदा काले हयस्य च । पट्टबन्धे गमे युद्धे वर्ज्जयेत्तं हयं नृपः । देशान्तरस्थितास्तस्य रिपवः सन्ति शङ्किताः । तुरङ्गायस्य भूपस्य विचरन्ति महीतले । मेदिनी तस्य यस्याश्वा इति वाक्यं विनिश्चितम् । सर्व्वाःश्रियो न राजन्ते विनाऽश्वेन महीभुजाम्" ।

२१ रथचक्रम्—"आदौ चक्रं समालिख्य रथाकारं सुशोभनम् । रथाग्रे त्रित्रिशूलानि रथचक्रं त्रिदण्डकम् । भानुभं मध्यशूलाग्रे ततः खर्क्षगतानि च । त्रीणि त्रीणि लिखेदेवं सप्तविंशतिसंख्यया । महारथिकनक्षत्रं यत्र तत्र शुभाशुभम् । शृङ्गे मृत्युर्ज्जयश्चक्रे रथे सन्धिः सदण्डके" ।

२२ व्यूहचक्रम्—"अष्टारं वर्त्तुलाकारं व्यूहचक्रं त्रिनाडिकम् । दण्डचतुष्टयं बाह्ये कर्त्तव्यञ्च चतुर्द्दिशम् । पूर्व्वदण्डाग्रतोन्यस्य दिनभाद्यं भमण्डलम् । प्रवेशे निर्गमे चैव त्रीणि त्रीणि प्रदक्षिणे । शशिसंज्ञाष्टकं मध्ये तद्बाह्ये भानुसंज्ञकम् । तृतीयं राहुसंज्ञं च केतु दण्डचतुष्टये । चन्द्रर्क्षे विजयो लाभः सूर्य्यर्क्षे मध्यमं फलम् । राहुधिष्ण्याष्टके विघ्नं मृत्युः केतुचतुष्टये । एवमुक्तं चतुःस्थाने यद्दिने यस्य नामभम् । तद्दिने तत् फलं तस्य सर्व्वकार्य्येषु सर्व्वदा" ।

२३ कुन्तचक्रम्—"कुन्ताकारं लिखेच्चक्रं तीक्ष्णदण्डसमन्वितम् । दिनभादि समारभ्य कर्त्तव्यं नवकत्रयम् । राजभं नवके यत्र तत्र वक्ष्ये शुभाशुभम् । तीक्ष्णे मृत्युर्ज्जयो दण्डे शेषधिष्ण्ये समं रणम्" ।

२४ खड्गचक्रम्—"खड्गचक्रं समालिख्य नवभेदसमन्वितम् । योधधिष्ण्यात् समारभ्य त्रीणि त्रीणि लिखेद्बुधः । एवं वज्रं तथा दृष्टिं पालिकां वस्त्रधारिके । खड्गं तीक्ष्णं विजानीयात् नवाङ्गानि विधानतः । यवादौ यत्र बध्यान्ते जायन्ते क्रूरखेचराः । मृत्युर्भङ्गो भवेद्रात्रुं सौम्यैर्लाभो जयस्तथा । खड्गे धाराद्वये तीक्ष्णे क्रूरैर्जयति सङ्गरे । सौम्यैस्तथा भवेद्भङ्गो मिश्रैर्मिश्रफलं मतम्" ।

२५ छुरिकाचक्रम् । "यथा खड्गं तथा विद्याच्छुरिका चक्रनिर्णयम् । क्रूरसौम्यविभागेन योधधिष्ण्यादि विन्यसेत्" ।

२६ चापचक्रम्—"चापचक्रं समालेख्य गुणबाणसमन्वितम् । शशिनक्षत्रतोभानि त्रीणि त्रीणि समालिखेत् । त्रीणि बाणस्य मूले तु मध्ये मूर्द्ध्नि क्रमात्तथा । चापमूलस्य मध्योर्द्ध्वे त्रीणि त्रीणि तथा पुनः । गुणे तु त्रीणि त्रीण्येव योधनक्षत्रतः फलम् । शरमूले भवेन्मृत्युर्मध्ये व्याधिः फले जयः । गुणमध्ये भवेद्भङ्गश्चापमध्ये धनक्षयः । चापोर्द्ध्वे विजयो ज्ञेयो, गुणोर्द्ध्वे लाभसंयुतः । चापाधो विग्रहो मृत्युर्गुणाधोऽपि तथा फलम् । पापग्रहयुते नेष्टं विशेषेण तु नान्यथा । सौम्ययोगे जयो लाभश्चापचक्रे समादिशेत् । शुभपापसमायोगे बलाधिक्ये बलं स्फुटम्" ।

२७ शनिचक्रम्—"शनिचक्रं नराकारं लिखित्वा सौरिभादितः । नामधिष्ण्यं भवेद्यत्र ज्ञेयं तत्र शुभाशुभम् । मुखैकं स्कन्धद्वयोस्तुर्य्यं षट्पादे तुर्य्यं वामके । हृदि पञ्च त्रयं शीर्षे नेत्रगुह्ये द्विकं द्विकम् । हान्यास्ये दक्षदोर्लाभः भ्रमोऽङ्घ्रौ वामदोरुजम् । हृदि श्रीर्मस्तके राज्यं नेत्रे सौख्यं मृतिर्गुदे । जन्माष्टद्वादशे तुर्य्ये यदा विघ्नकरः शनिः । तदा सौख्यं वपुस्यं चेत् हृत्शीर्षे नेत्रदक्षदोः । तृतीयैकादशे षष्ठे यदा सौख्यकरः शनिः । तदा विघ्नं शरीरं चेत् वक्त्राङ्घ्रिगुह्यवामदोः । यस्य पीड़ाकरः सौरिस्तस्य चक्रमिदं स्फुटम् । लिखित्वा कृष्णवर्णेन तैलमध्ये क्षिपेद्बुधः । निःक्षिप्य भूमिमध्यस्थं कृष्णपुष्पैः प्रपूजयेत् । तुष्टिं याति न सन्देहः पीड़ां कृत्वा शनैश्चरः" ।

२८ सेवाचक्रम्—"सेवाचक्रं शीर्षे सप्त पृष्ठे सप्त तथोदरे । पादयोः सप्त ऋक्षाणि साभिजिन्यत्र विन्यसेत् । स्वामिभाद्भृत्यभं गुण्यं, भृत्यभात् स्वामिभं तथा । निष्फलं पादपृष्ठस्थे फलदं मस्तकोदरे" ।

२९ नरचक्रम्—"नरचक्रं समालिख्य अष्टावयवसंयुतम् । येन विज्ञातमात्रेण क्रियते घातनिर्णयः । मुखैकं मस्तके

त्रीणि हस्ते पादे चतुश्चतुः। हृदि पञ्च त्रिकं कण्ठे साभिजित् तत्र विन्यसेत्। कृत्वा योधभमादौ तु मुख-मस्तकवामके। हस्तपादोदरे कण्ठे दक्षहस्ताङ्घ्रि गण्यते। यत्राङ्गे भानुभौमार्किराहवो धिष्ण्यसंस्थिताः। तत्र घातं विजानीयात् चन्द्रयोगे विशेषतः। ग्रह-भुक्तिप्रमाणेन नवांशकक्रमेण च। प्रहारो जायते तत्र चक्रे द्विगुणसंख्यया। निजभे चार्द्धघातं च पादोनं मित्रभे ग्रहे। उदासीने भवेत् सर्वं द्विगुणं शत्रुभवने। एकोऽप्यनेकघातं च करोति भवनोज्झितः। भवने च यदा खेटाः स्थिता घातं न कुर्वते। यत्र यत्र स्थिते घातो यत्र यत्र स्थितेन हि। तत्फलं कथयिष्यामि ग्रहभूमिवशात् पुनः। क्रूराघातं न कुर्वन्ति पृष्ठदक्षिणगा रणे। सम्मुखा वामगा हेतौ योधाङ्गे घातकारकाः। दक्षिणाङ्गे गताः क्रूराः सौम्या वामाङ्गसंस्थिताः। शिर-श्छेदे समुत्पन्ने भटं धावति सम्मुखम्। यस्य वामाङ्गगाः क्रूराः सौम्या यस्य च दक्षिणे। तस्य भङ्गो रणे नूनं यदि शूरो महाभटः"।

४० डिम्भचक्रम्—"डिम्भचक्रे न्यसेद्भानि भानुभात् त्रीणि मस्तके। मुखे त्रीणि द्वयं स्कन्धे एकैकं बाहुहस्तयोः। पञ्चहृन्नाभिगुह्येऽकं षट्जान्वेकैकपादयोः। विलिख्य-स्सूर्यनक्षत्रात् जन्मभं तत्र चिन्तयेत्। शीर्षस्थे छत्रला-भश्च वक्त्रे मिष्टान्नभोजनम्। स्कन्धेऽवनी च, बाहुभ्यां स्थानभ्रष्टो भवेन्नरः पाणिभ्यां तस्करो लक्ष्मी हृद्यल्पायुश्च नाभिभे। गुह्ये कामी, भ्रमो, जानौ, स्तोकजीवी च पादयोः"।

४१ पक्षिचक्रम्—"चञ्चुमस्तककण्ठे च हृदुदराङ्घ्रिपक्षयोः। त्रीणि त्रीणि क्रमेणैव शशिभाद्विन्यसेद्बुधः। चञ्चुस्थे नामभे मृत्युः, शीर्षे कण्ठोदरे हृदि। विजयः पक्षे मलाभश्च भङ्गदं पादपक्षयो."।

४२ वर्गचक्रम्—"अगरुडः क मार्जारश्चः सिंहः टः शुनी-सुतः। तःसर्पः प आखुश्च य गजः शअजासुतः। वसु-बाणाङ्कवेदास्तु चन्द्राग्निनेत्रवह्नयः। वर्गाङ्काः क्रमशो-ज्ञेया वैनतेयाद्यजान्तकाः। पूर्वादिक्रमशो ज्ञेयं वर्गा-र्यादिगष्टकम्। नाम्नि मात्राक्षराः ग्राह्या वर्गाङ्कोपेत संख्यया। प्रत्येकं स्थापयेत्तत्र पिण्डं कृत्वाष्टभिर्भजेत्। शेषसंख्यो ध्वजो१धूम्रः२ सिंहः३ श्वा४ वृष५राश भौ६। गजो७ध्वाङ्क्षः८ क्रमेणैवमायाह्यष्टौ भवन्ति च। ध्वाङ्क्षखरासभोत्क्षाणो गजः सिंहोध्वजोऽन्त्यः। यथो-त्तरवलाः सर्वे ज्ञातव्याः स्वरवेदिभिः। प्रभौ योधे पुरे देशे मित्रनारीगृहेषु च। बलिनन्याये भवेल्लाभोन लाभोत्रलवर्ज्जिते"।

४३ आयचक्रम्—"ध्वजो धूम्रोऽथ सिंहःश्वा सौरभेयः ख-रोगजः। ध्वाङ्क्षश्चेति क्रमेणैव आयाष्टकदिगष्टके। प्रतिपदाद्द्वितीयादौ तिथिभुक्तिप्रमाणतः। अहो-रात्रे ततः सर्वे यामभुक्त्या भ्रमन्ति च। इन्द्रस्थाने महा-लाभ आग्नेय्यां मरणं ध्रुवम्। दक्षिणे विजयः सौख्यं, नैर्ऋत्यां बन्धनं क्षतिः। वारुण्यां सर्वलाभश्च वायव्यां हानिकारकम्। उत्तरे धनधान्यं च त्वैशान्यां निःफलं मतम्। अतीतं गोहरिध्वाङ्क्षै र्वर्त्तमानं ध्वजेऽनले। अनागतं परं विद्यात् धूम्र कुक्कुट हस्तिभिः। वृषे ध्वजे समीपस्थं, दूरस्थः गर्जसिं-हयोः। श्वाने खरे च मार्गस्थो निःफलं धूम्रध्वाङ्क्षयोः। ऐन्द्राग्नेय्यो र्मूलचिन्ता धातुर्दक्षिणनैर्ऋतौ। वारु-ण्यां धातुचिन्ता च जीवचिन्तोत्तरे शिवे"। आया-वर्गाष्टके ज्ञेया दिगष्टकक्रमेण च। स्वोदये मृत्युदं ज्ञेयं सर्वकार्येषु सर्वदा"।

४४ विरिञ्चिचक्रम्—"अथातः संप्रवक्ष्यामि सद्यःप्रत्ययका-रकम्। चक्रं विरिञ्चिविख्यातं यत्सूरैरपि दुर्गमम्। कृत्तिका चोत्तरा फाल्गुन्युत्तराषाढभादितः। पङ्क्ति युक्त्या न्यसेद्भानि क्रमेण नवकत्रयम्। वेधोऽपि तिर्य्य-गस्तत्र कर्त्तव्यो नवकत्रये। क्रूरसौम्यैर्ग्रहैर्विद्धं ज्ञेयं तत्र शुभाशुभम्। जन्मसम्पद्विपत्क्षेम प्रत्यरिः साधको बधः। मित्रातिमित्रगास्ताराःनव भेदा भवन्ति च। जन्मत्रयस्य वेधेन मृत्युः क्रूरग्रहैर्भवेत्। जयो-लाभः शुभैस्तत्र मिश्रैर्मिश्रफलं मतम्। सौम्योदः शुभतारास्थस्तत्ताराभावपोषकः। दुष्टास्थो दुष्टभावक्तो क्रूरे तस्माद्विपर्ययः। जन्मत्रये स्थितः सौरिः क्षेमाये-राङ्कभूमिजौ। मित्रातिमित्रगे सूर्ये जायते बधबन्धनम्। जन्मत्रये यदा मन्दौ क्षेमाये बुधभार्गवौ। मित्राति मित्रगे चन्द्रे जयलाभसुखानि च। त्रिपञ्चसप्तताश्च रोगोत् पत्तिर्यदा तदा। चिरं रोगे क्षतिस्तास्तु क्रूरविद्धासु जायते"।

४५ सप्तशलाकचक्रम्—"तिर्य्यगूर्द्धं गतारेखा सप्तसप्त न्यसे-द्बुधः। कृत्तिकादीनि भान्यत्र साभिजिन्ति क्रमेण च। भुक्तं भोग्यं तथाऽऽक्रान्तं विद्धं पापग्रहेण भम्। शुभा-शुभेषु कार्येषु वर्ज्जनीयं प्रयत्नतः। यस्याभिधान

मभ्यन्तं विद्धं क्रूरग्रहेण च । देशग्रामं पुरं सैन्यं नरो नारी विनश्यति”। अधिकमुपयमग्रन्थे १२६२पृ० द्रष्टव्यम् ।

४६ पञ्चशलाकचक्रम्—“तिर्यगूर्द्ध्वगताः पञ्च द्वे द्वे रेखे च कोणयोः । ईशकोणाग्ररेखायां कृत्तिकां विलिखेद्बुधः। विशाखाकृत्तिकावेधो भरण्याश्चानुराधया । धनिष्ठा सार्पयोर्वेधो मघाश्रवणयोस्तथा । शुभाशुभैर्ग्रहैर्विद्धं विवाहे परिवर्जयेत् । यदि विद्धं महादुष्टं क्रूरवेधमहद्भयम्” । अधिकमुपयमग्रन्थे १२६२पृ० द्रष्टव्यम् ।

४७ चन्द्रचक्रम्—वक्ष्ये न्दुसदृशं चक्रं त्रित्रिशूलसमन्वितम् । मध्ये द्वादश भान्यत्र षट् पृष्ठे नव शूलके । मध्ये शूलस्य मध्यस्थं शशभृद्भत्वमादितः । सव्येन गण्यते चक्रं यावद्युद्धस्य नामभम् । शृङ्गे मृत्युर्भयं मध्ये, पृष्ठे भङ्गो महाहवे । चतुरङ्गे कवौ कोटे द्वन्द्वे युद्धे विशेषतः” ।

४८ भास्करचक्रम्—“रेखात्रयं त्रिशूलाग्रं तिर्य्यग्रेखाद्वयान्वितम् । एकैकाः कोणगास्तत्र मध्याधोभानुभादितः । अधस्त्रये भवेन्मृत्युश्चतुर्भिः कोणगैः शुभम् । द्वादश मध्ये संप्रोक्ता नवत्रीश्चैव दाहकाः ।”

४९ प्रथममातृकाचक्रम्—“षोडशोर्द्ध्वगतारेखाः पञ्च रेखाश्च तिर्य्यगाः । कोष्ठकानां भवेद् षष्टिर्मात्राङ्कस्वरयोजना । पूर्णिमादिविलोमश्चान् लिखेत् प्रतिपदादिकान् । तदधो मातृकालेख्या ङञणान्त्यस्वरोज्झितान् । संहृत्य नामवर्णाङ्कान् मात्राभेदेन संयुतान् । मुनिभि(७)स्तु हरेद्भागं पश्चात् ज्ञेयं शुभाशुभम् । मात्राधिके भवेल्लाभो मात्राहीने पराजयः । मातृकायाः प्रभेदोऽयं तस्मात् ज्ञेयः प्रयत्नतः” ।

५० द्वितीयमातृकाचक्रम्—“द्वादशोर्द्ध्वगता रेखाः पञ्चरेखाश्च तिर्य्यगाः । मातृकाप्रस्तरे तत्र षण्डान्त्यस्वरवर्ज्जितान् । कोष्ठकाधो लिखेदङ्कान् पञ्च युग्मं त्रिकं त्रयम् । षड्द्वयमष्टकं त्रीणि नवकैकं तथैव च । नाम वर्णस्य या संख्या मात्रासंख्या तथैव च । पिण्डिता नवभिर्भक्ता जयो मात्राधिके रणे ।”

५१ तृतीयमातृकाचक्रम्—“भानुमार्त्तण्डदोर्बाणतिथ्यद्रिरसदिग्गजाः । नवाङ्कास्तदधः स्थाप्याः पञ्चस्वरकखादितः । ङञणोना हकारान्ता नवधा कोष्ठकक्रमैः । नाममात्राक्षराङ्कैक्यसप्तशेषेऽधिके जयः” ।

“भूबाणादित्यदोर्बाणतिथिवेदाश्वदिग्गजान् । वसुनन्दान्तकान् लिख्य षण्डकोज्झितमातृकाम् । पुन्नामवर्णमात्राणां सङ्ख्यायोगेऽष्टशेषके । मात्राधिके जयो युद्धे मात्राहीने पराजयः” पाठान्तरम् ।

५२ विजयचक्रम्—“अथ सारतरं वक्ष्ये लम्पटाचार्य्यभाषितम् । जयपराजयौ येन नामोच्चारणतः स्फुटम् । लग्नालग्नप्रभेदेन घोषाघोषक्रमेण च । प्रवेशनिर्गमाभ्यां च चक्रं जयपराजयम् ।”

५३ श्येनचक्रम्—“श्येनचक्रं समालिख्य पक्षिरूपं सुशोभनम् । चञ्चुग्रे भानुभं कृत्वा अष्टाविंशतिभं लिखेत् । ऋक्षैकं चञ्चुकोटिस्थं शीर्षे नेत्रे त्रिकं त्रिकम् । पादे पृष्ठे चतुष्कं च उदरे नव भानि च । नाम ऋक्षं स्थितं यत्र फलं तस्य वदाम्यहम् । चञ्च्वग्रे बधबन्धाय नामर्क्षं च यदा भवेत् । लाभः शीर्षोदरे नेत्रेऽशुभं स्यात् पादपृष्ठयोः ।”

५४ तोरणचक्रम्—“नाडीचतुष्टयं चक्रं लिखित्वा तोरणाकृति । रूपभाद्विन्यसेत् भानि प्रवेशे निर्गमे तथा । स्तम्भमूले स्थिताम्यष्टौ सिंहद्वारे तथाष्टकम् । मालायामष्टकं चैव चतुर्धिष्ण्यानि तोरणे । निर्गमे चन्द्रमा यत्र प्रवेशे यत्र भास्करः । तत्र काले शुभा यात्रा विपरीता च हानिदा । चन्द्रःप्रवेशऋक्षस्थो निर्गमस्थो दिवाकरः । बधबन्धनदा यात्रा प्रवेशे तत्र शोभना । चन्द्रादित्यौ प्रवेशर्क्षे अथ वा निर्गमे स्थितौ । मिश्रं फलं भवेत्तत्र प्रवेशे वाऽथ निर्गमे । क्रूरग्रहयुतश्चन्द्रः प्रवेशे वाऽथ निर्गमे । तद्दिने भूभुजां चैव निषिद्धा राजपट्टिका । शुभग्रहयुते चन्द्रे शसिंहद्वारभसंस्थिते । प्रवेशः पट्टबन्धस्य भूभुजां शोभनः स्मृतः । स्तम्भे सौरिर्नृपं हन्ति सिंहे स्वचक्रविग्रहः । मालास्थिते बलं राज्यं तोरणे सर्वसिद्धिदः” ।

५५ अहिचक्रम्—“अहिचक्रं प्रवक्ष्यामि यथा सर्वज्ञभाषितम् । द्रव्यं शल्यं तथा शून्यं येन जानन्ति साधकाः । निधिच्छिन्नैकस्थः सम्भ्रान्तो यत्र भूतले । तत्र चक्रमिदं स्थाप्यं स्थानद्वारमुखस्थितम् । ऊर्द्ध्वरेखाष्टकं लेख्यं तिर्य्यक् पञ्च तथैव च । अहिचक्रं भवत्येवमष्टाविंशतिकोष्ठकम् । अहिगत्या च नक्षत्रे तत्काले यत्र चन्द्रमाः । द्रव्यं शल्यं भवेत्तत्र चन्द्रभास्करसंक्रमे । तत्र पौष्णाश्वियाम्यर्क्षकृत्तिकामघभाग्यकम् । उत्तराफाल्गुनी लेख्यं पूर्व्वपङ्क्त्यां भसंस्तकम् । अहिर्बुध्नाजपादर्क्षे शतभं ब्राह्मसर्पभम् । पुष्यं हस्तं समालेख्यं द्वितीयपङ्क्तिसंस्थितम् । विधिं

विष्णु धनिष्ठाख्यं सौम्यं रौद्रं पुनर्वसुम्। चित्रभं च तृतीयायां पङ्क्तौ वै धिष्ण्यसप्तकम्। विश्वभं तोयभं मूलं ज्येष्ठां चैत्रविशाखके। स्वातीं पङ्क्त्यां चतुर्थ्यां च कृत्वाथ प्रविलोकयेत्। एवं प्रजायते चक्रे प्रस्तारः पन्नगाकृतिः। द्वारस्तम्भे मघायाम्ये द्वारस्था कृत्तिका ततः। अश्विन्यादित्रिकश्चैव आर्द्रादिपञ्चकं मघा। रेवती पूर्वभाद्रेन्दोः पूर्वाषाढचतुष्टयम्। शेषाणि भानुभान्यत्र प्रोक्तानि सर्वसंख्यया। शशाङ्के चन्द्रभे द्रव्यं शल्यं भवति सूर्य्यभे। उदयादिगतानाड्यो भ२७घ्नाःषष्ट्याप्तशेषके। दिनेन्दुभुक्तयुक्तोऽसौ भवेत् तत्कालचन्द्रमाः। ग्रहैर्भुक्तानि धिष्ण्यानि स्वस्वभैर्गुणयेत्ततः। भुक्तपादकलायोज्याः षष्ट्या भाजं ततो-ऽहरेत्। लब्धस्य त्रिंशता भागो ग्रहाःस्युः शशिपूर्वकाः। अश्विन्यादीन्दुभुक्तानि भानि षष्टिहतानि च। स्वभुक्तनाडीसंयुक्तं द्विघ्नं नन्दहृतं त्रिधा। दिनेन्दुभुक्तभागादि जायन्ते चेष्टकालिकाः। चन्द्रवत् साधयेत्-सूर्य्यस्पष्टार्थं चेष्टकालिकम्। पश्चात् विलोकयेत् तौ च स्वस्थानं चाश्वो स्थितौ। चन्द्रर्क्षे च यदाऽर्कोऽन्दु तदास्ति निश्चितं निधिः। भानुक्षेत्र-गतौ द्वौ च तदा शल्यं न संशयः। स्वस्व भे स्थितयं ज्ञेयं नास्ति किञ्चिद्विपर्य्यये। स्थितं न लभ्यते द्रव्यं चन्द्रे क्रूरग्रहान्विते। पुष्टे चन्द्रे भवेत्पुष्टः क्षीणे चन्द्रेऽल्पको निधिः। ग्रहदृष्टिवशात् सोऽपि विज्ञेयो नवधा बुधैः। नवांशकानुमानेन भूमानं तस्य कल्पयेत्। कालमानेन तत्संख्या धातुमानं निरीक्षणैः। हैमं तारं च ताम्रं च ... कांस्याय-मं त्रपु। चन्द्रे नागं विजानीयाद् भास्करादिग्रहेक्षिते। मिश्रैर्मिश्रं भवेद्द्रव्यं शून्यं दृष्टिविवर्जिते। सर्वग्रहेक्षिते चन्द्रे निर्दिष्टोऽसौ महानिधिः। हैमं तारञ्च ताम्रारं पाषाणं स्वर्णमयायसम्। सूर्य्यादिग्रहगे चन्द्रे द्रव्यभाण्डं प्रजायते। भुक्तराश्यंशमानेन भूमानं कादिकैः करैः। नीचे निम्नः, परे नीचे-जलस्थोऽसौ महानिधिः। स्वोच्चस्थे ऊर्द्धगं द्रव्यं न-वांशकक्रमेण च। कोष्ठद्वयं परित्यज्य लेख्या मे-षादयः क्रमात्। प्रश्नलग्नाधिपो यत्र तत्र द्रव्यं विनिर्दिशेत्। परमोच्चे परे तुङ्गे भित्तिस्थस्वच-संक्रमे। चन्द्रांशभुक्तिमानेन द्रव्यसंख्याभिधीयते। तस्माद्दशगुणा वृद्धिः षड्वर्गे तु बलक्रमात्। अधिष्ठितं भवेत् द्रव्यं यत्र चन्द्रो ग्रहान्वितः। तदधिष्ठायको-ज्ञेयो भास्करादिग्रहक्रमात्। ग्रहं मुख्यग्रहं चैव क्षेत्रपालं च मातृकाम्। दीपेशं भीषणं रुद्रं दक्षं नागं विदुः क्रमात्। ग्रहे होमः प्रकर्त्तव्यो मुख्ये नायरागो बलिः। क्षेत्रपाले सुरामांसं मातृकायां महाबलिः। दीपेशे दीपिकापूजा भीषणे भीषणार्च्चनम्। रुद्रे च रुद्रियोजाप्योयक्षे यक्षादिशान्तयः। नागे नाग ग्रहाःपूज्या गणनाथेन संयुताः। लक्ष्मीधरादितत्त्वानि सर्वकार्य्येषु पूजयेत्। निवृत्तेनैकमध्ये च सम्भ्रान्तो यत्र भूतले। तत्र चक्रं लिखेद्धीमान् द्रव्यशल्यस्य निर्णयम्। एवं कृतविधाने तु असाध्यो निधिराप्यते। निधिं प्राप्य नरा लोके वन्दनीया न संशयः”।

५६ चन्द्रशृङ्गोन्नतिचक्रम्—“मीनमेषोदयश्चन्द्रः सततं दक्षिणोत्तरा। उत्तरोत्तरशेषेषु समत्वं वृषकुम्भयोः। विड्वरं स्यात् समे चन्द्रे दुर्भिक्षं दक्षिणोन्नते। ईतिरोगं भयं शूले सुभिक्षं तूत्तरोन्नते”।

५७ जीवचक्रम्—“शीर्षे राज्यं चतुर्भिर्भवति खलु करे दक्षिणे श्रीश्चतुर्भिः पीड़ां षड्भिः पदस्थैर्भ्रतिरपि च भवेद्वामहस्ते चतुर्भिः। कण्ठे चैकेन भूतिर्मदन-शरमितैर्वक्षसि प्रीतिलाभः स्याच्चेत्रस्थैस्त्रिभिर्नैरवि वशमसुखं वाक्पतेश्चक्रमेतत्”।

५८ लाङ्गलचक्रम्—“लाङ्गलं दण्डिकायूकं योत्रद्वयसम-न्वितम्। दण्डिकादि लिखेद्भानि दिनेशाक्रान्तभादितः। दण्डिकाहलयूकानां द्विद्विस्थाने त्रिकं त्रिकम्। योत्रयोः पञ्चकं सव्यगणना चक्रलाङ्गले। दण्डस्थे च गवां हानिर्युगस्थे स्वामिनो भयम्। लक्ष्मीर्लाङ्गलयोत्रस्थे क्षेत्रारम्भो दिनर्क्षगे”। “त्रिकं त्रिकं त्रिकं पञ्च त्रिकं पञ्च द्विकं द्विकम्। अशुभानि शुभानि स्युश्चक्रे लाङ्गल संज्ञके” क्वचिदधिकः पाठः।

५९ बीजोप्तिचक्रम्—“सूर्य्यभादुरगं स्थाप्यं त्रिनाड्याक्रान्त-न्तरं क्रमात्। मुखे त्रीणि गले त्रीणि भानि द्वादश चोदरे। पुच्छे तुर्य्यं बहिः पञ्च दिनभाच्च फलं वदेत्। वदने पुलाकं विद्याद्गलकेऽङ्गारकस्तथा। उदरे धान्य-वृद्धिश्च पुच्छे धान्यक्षयोभवेत्। ईतिरोगभयं बाह्ये चक्रे बीजोप्तिसम्भवे”।

६० वृषचक्रम्—“वृषचक्रं वृषाकारं सर्वावयवसंयुतम्। लिखित्वा विन्यसेद्भानि वृषनामर्क्षपूर्वकम्। मुखाक्षि-कर्णशीर्षेषु शृङ्गस्कन्धे द्विकं द्विकम्। त्रीणि पृष्ठे द्विकं

पुच्छे द्वि द्विः पादोदरे न्यसेत् । हलः वाहवीजोम्भिपारम्भादिदिनर्क्षकम् । यत्राङ्के संस्थितश्चन्द्रस्तस्य वक्ष्ये शुभाशुभम् । हान्यास्ये च सुखानि लोचनगते कर्णे च भिक्षाटनम्, शीर्षे स्यात् स्वान्तरत्र पट्टकयुगे स्कन्धे स्थिते शोभनम् । पृष्ठे राजभयं च पुच्छभगते पादे भ्रमं हृत्सुखमेवं चन्द्रभजं फलं प्रकटितं चक्रे वृषाख्ये नृणाम्”।

६१ सप्तनाडीचक्रम्—“अथातः संप्रवक्ष्यामि यच्चक्रं सप्तनाडिकम् । येन विज्ञातमात्रेण वृष्टिं जानन्ति साधकाः । कृत्तिकादि लिखेद्भानि साभिजिन्ति क्रमेण च । सप्तनाडीव्यधस्तत्र कर्त्तव्यः पन्नगाकृतिः । ताराचतुष्कवेधेन नाड्येकैका प्रजायते । तासां नामान्यहं वक्ष्ये तथा चैव फलानि च । कृत्तिका च विशाखा च मैत्राख्यं भरणी तथा । ऊर्द्ध्वाख्या शनि नाडी स्याच्चण्डनाड्यभिधा मता । रोहिणी स्वाति ज्येष्ठाश्वि द्वितीया नाडिका मता । आदित्यप्रभवा नाडी वायुनाडी तथैव च । सौम्यं चित्रा तथा मूलं पौष्णर्क्षं च चतुष्ककम् । तृतीयाऽङ्गारका नाडी दहनाख्या तथैव च । रौद्रं हस्तं तथा पूर्वाषाढभाद्रोत्तरा तथा । चतुर्थी जीवनाडी स्यात् सौम्या नाडी प्रकीर्त्तिता । पुनर्वसूत्तराफाल्गुन्युत्तराषाढतारका । पूर्वभाद्रश्च शुक्राख्या पञ्चमी नीरनाडिका । पुष्यर्क्षं फाल्गुनी पूर्वा साभिजिच्छततारका । षष्ठी नाडी च विज्ञेया बुधाख्या जलनाडिका । अश्लेषर्क्षं मघा कर्णौ धनिष्ठाभं तथैव च । अमृताख्या हि चन्द्रस्य सप्त नाड्यः प्रकीर्त्तिताः । मध्यमार्गे स्थिताः सौम्या नाडी तस्याग्र पृष्ठतः । सौम्ययाम्यगतं ज्ञेयं नाडिकानां त्रिकं त्रिकम् । क्रूरा याम्यगता नाड्यः सौम्याः सौम्यदिगाश्रिताः । मध्यनाडी च मध्यस्था ग्रहरूपफलप्रदा । एकनाडीगता द्व्याद्या ग्रहाःक्रूराः शुभार्यदि । ततोनाड़ीफलं वाच्यं शुभं वा यदिवाऽशुभम् । ग्रहाःकृष्णम्भ हायातं गताश्चण्डाख्यनाडिकाम् । वायुनाडीं मतावायुं दहन्यामपि दाहकाः । सौम्यनाडीगतामध्या नीरस्था मेघवाहकाः । जलायां वृष्टिदा चन्द्रनाडिकाऽप्यतिवृष्टिदा । एकोऽप्येतत्फलं दत्ते स्वनाडीसंस्थितो ग्रहः । भूरितः सर्वनाडीषु धत्ते नाडीभवं फलम् । प्रावृट्काले समायाते रौद्रर्क्षगते रवौ । नाडीवेधसमायोगे जलयोगं वदाम्यहम् । यत्र नाडी स्थितश्चन्द्रस्तत्स्थाः खेचरा यदि । क्रूरसौम्यैर्विमिश्रैश्च तद्दिने वृष्टिरुत्तमा । एवमन्त्यांशकं योगो जायते यदि खेचरैः । तत्र काले महावृष्टिर्यावत्तु तस्यांशके शशी । केवलैः सौम्यपापैर्वा ग्रहैर्विद्धो यदा शशी । तदा तु तुच्छपानीयं दुर्द्दिनं तु भवेद्ध्रुवम् । यस्य ग्रहस्य नाडीस्थश्चन्द्रमास्तद्ग्रहेण च । दृष्टो युक्तः करोत्यम्भो यदि क्षीणेन जायते । पीयूषनाडीगश्चन्द्रस्तत्र खेटाः शुभाशुभाः । त्रिचतुःपञ्चपानीयं दिनान्येकत्रिसप्तकम् । एवं जलाख्यनाडीस्थे चन्द्रे मिश्रग्रहान्विते । दिनार्द्धं दिवसं पञ्च दिनानि जायते जलम् । नीरनाड़ीस्थिते चन्द्रे तत्रस्थैः पूर्ववद्ग्रहैः । यामं दिनार्द्धकं त्रीणि दिनानि जायते जलम् । अमृतादित्रये यत्र भवन्ति सर्वखेचराः । तत्र वृष्टिः क्रमाज्ज्ञेया ह्यष्टकैरवयासरान् । सौम्यनाडीगताः सर्वे वृष्टिदास्ते दिनत्रयम् । शेषनाड्यां महावात दुष्टवृष्टिप्रदा ग्रहाः । निर्जला जलदानाड़ी भवेद्योगे शुभाधिके । क्रूराधिकसमायोगे जलदा ऽप्यम्बुवाहिका । एकनाडीसमारूढौ चन्द्रमोधरणीसुतौ । यदि तत्र भवेज्जीवस्तदा वारिमयी मही । याम्यनाडीगताः क्रूरा अनावृष्टिप्रसूचकाः । शुभयुक्ता जलाख्यास्थास्तेऽतिवृष्टिप्रदायकाः । बुधशुक्रौ यदैकत्र गुरुणा च समन्वितौ । चन्द्रयोगे तदा काले जायते वृष्टिरुत्तमा । जलयोगसमायाते यदा चन्द्सितौ ग्रहौ । क्रूरैर्दृष्टौ युतौ वापि तदा मेघोऽल्पवृष्टिदः । उदयास्तमिते मार्गे चक्रे युक्ते च संक्रमे । जलनाडीगताः खेटा महावृष्टिप्रदामताः” । “प्रावृषि शीतकरो भृगुपुत्रात् सप्तमराशिगतः शुभदृष्टः । सूर्यसुतान्नवपञ्चमगोवा सप्तमगश्च जलागमनाय” । क्वचित् पाठान्तरम् ।

६२ संवत्सरचक्रम्—“चक्रं सांवत्सरं वक्ष्ये यदुक्तं कौशलागमे । येन विज्ञायते सम्यग्वर्षे वर्षे शुभाशुभम् । द्वादशारं लिखेच्चक्रं तत्र मेषादिराशयः । संस्थाप्याः क्रमयोगेण मीनान्ताः सव्यमार्गगाः । तत्र चक्रे समालेख्या मेषादिराशिमार्गगाः । प्रभवाद्यब्दमेकैकं षष्टिपञ्चप्रवर्त्तनैः । एकराशौ स्थितो यत्र वत्सरो वर्त्तमानकः । तद्राशिस्थं फलं वीक्ष्य यत्किञ्चित् वार्षिकं मतम् । चैत्रे या प्रतिपच्छुक्ला तस्याः काले प्रवेशयेत् । एतद्विलोकयेच्चक्रं कालज्ञानविनिश्चये । तत्र सप्त ग्रहाख्यस्य राशौ यो यत्र संस्थितः । वर्षे राशौ विचिन्त्याक्ते रेखास्थानगता ग्रहाः। उपचयेषु गता, क्रूराः सौम्या

श्चिद्राल्यवर्ज्जिताः। ग्रहरेखाप्रदाज्ञेया मित्रमध्यस्थिता ग्रहाः। स्वर्क्षे द्विनं फलं दत्ते स्वोच्चे त्रिन्नं तथैव च। फलार्द्धं शत्रुगेहस्थो नीचस्थो निष्फलो ग्रहः। एवं रेखाप्रमाणेन वर्षविंशोपका मताः। ज्ञातव्यादिशि केन्द्रेण वर्षे वर्षे प्रयत्नतः। एवं वर्षफलं प्रोक्तं चैत्रमासाद्यवासरात्। आषाढ़े कार्त्तिकेऽप्येवं जलं धान्यं विचिन्तयेत्। ननु देशे पुरे ग्रामे फलं भिन्नं प्रदृश्यते। तस्मात् तत्कारणं वाच्यं येन जानन्ति साधकाः। देशादिराशिनाथस्य यो रेखादायको ग्रहः। मित्रोदासीन शत्रुत्वे फलं भिन्नं करोति सः। मित्रं द्विन्नं फलं दत्ते समः साम्यं करोति च। शत्रुः सर्व्वहरो ज्ञेयः सर्व्वदा कालचिन्तकैः। एवं विचार्य्य कर्त्तव्या काल विंशोपकाबुधैः। तथा पानीयधान्यानां स्वकाले च विचिन्तयेत्"।

६२ स्थानचक्रम्—"स्थानचक्रं प्रवक्ष्यामि यदुक्तं जम्भटागमे। येन विज्ञायते सम्यक् स्थाने स्थाने शुभाशुभम्। स्थानपीड़ाप्रभावेण राज्ञां पीड़ा प्रजायते। तस्मादपीडिते स्थाने स्थातव्यं सर्व्वदा बुधैः। स्थाननामोद्भवं राशिं कृत्वादौ द्वादशारके। राशिमण्डलकं न्यस्य वाममार्गेण संस्थितम्। तत्र नव ग्रहा स्थाप्याः मासचन्द्रः स्वराशिभे। तेषां विलोकनं वीक्ष्य स्थानराशिगतायथा। तृतीयैकादशे पादं द्विपादं व्योमबन्धुगे१०।४। त्रिकोणे५।९। त्र्यङ्घ्रि मृत्यस्ते १।७। पूर्णं पश्यन्ति खेचराः। शन्यर्क राहुकेत्वाराः पञ्च क्रूरा ग्रहा मताः। शेषं चतुष्टयं सौम्यं मासेन्दुश्चापि पञ्चमः। एवं पञ्च ग्रहाः क्रूराः पञ्च सौम्यास्तथैव च। तेषां शुभाशुभाम् दृष्टिं ज्ञात्वा स्थानवलं वदेत्। एकैकग्रहजा दृष्टिः पूर्णपादचतुष्टयम्। पञ्चभे लापकैस्तेषां पादानां विंशतिर्भवेत्। तत्र विंशःपकाज्ञेया सौम्यक्रूरग्रहोद्भवाः। एवं प्रसाधयेद्दृष्टिं युग्मं मानं शुभाशुभम्। बह्वी स्तोकोनिता शेषा जायते दृक्शुभाशुभा। ते च विंशोपकास्तस्य स्थानस्य बलनिर्णये। एवं देशे पुरे ग्रामे बलं यत्र शुभाधिकम्। तत्र स्थाने स्थितोराजा दुष्टैरष्टैर्न पीड्यते। स्थानबलप्रभावेण स्वबलस्य बलोदयः। शत्रुसैन्यं क्षयं याति यावत्स्थाने शुभे स्थितः। एतानि सर्व्वचक्राणि ज्ञात्वा युद्धं समारभेत्। जयेदिह न सन्देहः शक्रतुल्योऽपि भूभुजि"। एतेषां त्रिषष्टिसंख्याकत्वेऽपि अन्तान्तरचक्रसंख्याभेदेन चतुरशीतिसंख्यापूरणम्।

अङ्गशब्दे ७२ पृ० दर्शितानि "तथाचान्तरचक्रं च मृगचक्रं तथैव च। श्वचक्रं वातचक्रञ्च चक्राङ्गेषु चतुष्टयम्" गर्गोक्तानि च चत्वारि चतुष्षष्ट्यङ्गज्योतिषमध्ये अन्तरादिचक्राणि यानि तत्र चान्तरचक्रं वृ० सं० ८७अ० उक्तं यथा

"ऐन्द्र्यां दिशि शान्तायां विरुवन् पर्सञ्चितागमं वक्ति। शकुनिः पूजालाभं मणिरत्नद्रव्यसम्प्राप्तिम्। तदनन्तरेदिशि कनकागमो भवेद्वाञ्छितार्थसिद्धिश्च। आयुधधन पूगफलागमस्तृतीये भवेद्भागे। स्निग्धद्विजस्य सन्दर्शनं चतुर्थे तथाऽऽहिताग्नेश्च। कोणेऽनुजीविभिक्षुप्रदर्शनं कनकलोहाप्तिः। याम्ये त्वाद्ये न्टपपुत्रदर्शनं सिद्धिरभिमतस्याप्तिः। परतः स्त्रीधर्म्माप्तिः सर्षपयवलब्धिरप्युक्ता। कोणाच्चतुर्थखण्डे लब्धिर्द्रव्यस्य पूर्वनष्टस्य। यद्वा तद्वा फलमपि यात्रायां प्राप्नुयाद्याता। यात्रासिद्धिः प्रथमदक्षिणेन शिखिमहिषकुक्कटाप्तिश्च। याम्याद्द्वितीयभागे चारणसङ्गः शुभं प्रीतिः। ऊर्द्ध्वं सिद्धिः कैवर्त्तसङ्गमो मीनतित्तिराद्याप्तिः। प्रव्रजितदर्शनं तत्परे च पक्वान्नफललब्धिः। नैरृत्यां स्त्रीलाभस्तुरगालङ्कारदूतलेखाप्तिः। परतोऽस्य चर्मतच्छिल्पिदर्शनं चर्म्ममयलब्धिः। वानरभिक्षुश्रमणावलोकनं नैरृतीत्तृतीयांशे। फलकुसुमदन्तघटितागमश्च कोणाच्चतुर्थांशे। वारुणतामर्णवजानरत्नवैदूर्य्यमणिमयप्राप्तिः। परतोऽतः शवरव्याधचौरसङ्गः पिशितलब्धिः। परतोऽपि दर्शनं वातरोगिणां चन्दनागुरुप्राप्तिः। आयुधपुस्तकलब्धिस्तद्वित्समागमश्चोर्ध्वम्। वायव्ये फेनकचामरौर्णिकाप्तिः समेति कायस्थः। मृण्मयलाभोऽन्यस्मिन् वैतालिकतूर्य्यभाण्डानाम्। वायव्याद्यत्तृतीये मित्रेण समागमो धनप्राप्तिः। वस्त्राश्वाप्तिरतः परमिष्टसुहृत्सम्प्रयोगश्च। दधिमण्डतण्डुलाजानां लब्धिरुरगदर्शनं च विप्रस्य। स्वर्णाशाप्तिरनन्तरमुपगच्छति सार्थवाहश्च। वेश्याबटुदाससमागमः परे शुष्कपुष्पफललब्धिः। अतः परं चित्रकरस्य दर्शनं वस्त्रसम्प्राप्तिः। ऐशान्यां देवलको सङ्गमो धान्यरत्नपशुलब्धिः। प्राक् प्रथमे वस्त्राप्तिः समागमश्चापि बन्धकया। रजकेन समायोगो जलजद्रव्यागमश्च परतोऽतः। हस्त्युपजीविसमाजश्चाराद्धनदंष्ट्रलब्धिश्च। द्वात्रिंशत् प्रविभक्तं दिक्चक्रं वास्तुवन्नेऽप्युक्तम्। अरनाभिस्थैरन्तः फलानि नवधा विकल्प्यानि। नाभिस्थे बन्धुसुहृत्समागमस्तुष्टिरुत्तमा भवति। प्राग्वत्

पट्टवस्त्रागमस्तत्र नृपतिसंयोगः। आग्नेये कौलिकतक्षपारिकर्म्मिकसूतसंयोगः। लब्धिश्च तत्कृतानां द्रव्याणामश्वलब्धिर्वा। नेमीभागं बुद्धा नाभीभागं च दक्षिणे योऽरः। धार्म्मिकजनसंयोगस्तत्र भवेद्धर्म्मलाभश्च। उत्क्रोडककापालिकागमो नैरृते समुद्दिष्टः। वृषभस्य चात्र लब्धिर्माषकुलत्थाद्यमशनं च। अपरस्यां दिशि योऽरस्तत्रासक्तिः कर्षीवलैर्भवति। सामुद्रद्रव्यतुषारकाचफलमद्यलब्धिश्च। भारवहतक्षभिक्षुकसन्दर्शनमपि च वायुदिक्संस्थे। तिलककुसुमस्य लब्धिः सनागपुन्नागकुसुमस्य। कौवेर्य्यां दिशि शकुनः शान्तायां वित्तलाभमाख्याति। भागवतेन समागममाचष्टे पीतवस्त्रैश्च। ऐशाने व्रतयुक्तवनितासन्दर्शनं समुपयाति। लब्धिश्च परिज्ञेया कृष्णायोवस्त्रघरट्टानाम्। याम्येऽष्टांशे पञ्चाद्विषट्त्रिसप्ताष्टमेषु मध्यफला। सौम्येन च द्वितीये श्रेष्ठ्यतिशोभना यात्रा। अभ्यन्तरे तु नाभ्यां शुभफलदा भवति षट्सु चारेषु। वायव्यानैरृतयोरुभयोः क्लेशावहा यात्रा। शान्तासु दिक्षु फलमिदमुक्तं दीप्तास्ततोऽभिधास्यामि। ऐन्द्र्यां भयं नरेन्द्रात् समागमश्चैव शत्रूणाम्। तदनन्तरदिशि नाशः कनकस्य भयं सुवर्णकाराणाम्। अर्थक्षयस्तृतीये कलहः शस्त्रप्रकोपश्च। अग्निभयं च चतुर्थे भयमाग्नेये च भवति चौरेभ्यः। कोणादपि द्वितीये धनक्षयो नृपसुतविनाशः। प्रमदागर्भविनाशस्तृतीयभागे भवेच्चतुर्थे च। हैरण्यककारुकयोः प्रध्वंसः शस्त्रकोपश्च। अथ पञ्चमे नृपभयं मारीसृततदर्शनं च वक्तव्यम्। षष्ठे तु भयं ज्ञेयं गन्धर्वाणां सडोम्बनाम्। धीवरशाकुनिकानां सप्तमभागे भयं भवति दीप्ते। भोजनविघात उक्तो निर्ग्रन्थिभयं च तत्परतः। कलहो नैरृतभागे रक्तस्रावोऽथ शस्त्रकोपश्च। अपराद्ये चर्म्मकृतं विनश्यति चर्म्मकारजभयम्। तदनन्तरे परिव्राट्श्रमणभयं तत्परे त्वनशनभयम्। वृष्टिभयं वारुण्यां श्वतस्कराणां भयं परतः। वायुग्रन्थिविनाशः परे परे शस्त्रपुस्तवार्त्तानाम्। कोणे पुस्तकनाशः परे विषस्तेन वायुभयम्। परतो वित्तविनाशो मित्रैः सह विग्रहश्च विज्ञेयः। तस्यासन्नेऽश्ववधो भयमपि च पुरोधसः प्रोक्तम्। गोचरणशस्त्रघातावुदक् परे सार्थघातधननाशौ। आसन्ने च श्वभयं व्रात्यद्विजदासगणिकानाम्। ऐशानस्यासन्ने चित्राम्बरचित्रलब्धयं प्रोक्तम्। ऐशाने त्वग्निभयं दूषणमप्युत्तमस्त्रीणाम्। प्रोक्तश्चैवासन्ने दुःखोत्पत्तिः स्त्रिया विनाशश्च। भयमूर्द्ध्वं रजकानां विज्ञेयं चाक्रिकानां च। हस्त्यारोहभयं स्याद् द्विरदविनाशश्च मण्डलसमाप्तौ। अभ्यन्तरे तु दीप्ते पत्नीमरणं ध्रुवं पूर्व्वे। शस्त्रानलप्रकोपावाग्नेये वाजिमरणशिल्पिभयम्। याम्ये धर्म्मविनाशः परेऽग्न्यवस्कन्दचोत्रवधाः। अपरे तु कर्षिणां भयमथ कोणे चानिले खरोष्ट्रवधः। अत्रैव मनुष्याणां विसूचिकाविषभयं भवति। उदगर्थविप्रपीडा दिश्यैशान्यां तु चित्तसन्तापः। ग्रामीणगोपपीडा तत्र च नाभ्यां तथात्मवधः"।

२ मृगचक्रं वृ०स० ९२अ० यथा

"सीमागता वन्यमृगा रुवन्तः स्थिता व्रजन्तोऽथ समापतन्तः। सम्प्रत्यतीतैष्यभयानि दीप्ताः कुर्व्वन्ति शून्यं परितो भ्रमन्तः। ते ग्राम्यसत्त्वैरनुवाश्यमाना भयाय रोधाय भवन्ति वन्यैः। द्वाभ्यामपि प्रत्यनुवाशितास्ते वन्दिग्रहायैव मृतौ भवन्ति। वन्ये सत्त्वे द्वारसंस्थे पुरस्य रोधो वाच्यः सम्प्रविष्टे विनाशः। सूते मृत्युः, स्याद्भयं संस्थिते च गेहं याते बन्धनं सम्प्रदिष्टम्।"

३ श्वचक्रं वृ० स० ८९ अ०

"नृतुरगकरिकुम्भपर्य्याणसक्षीरवृक्षेष्टकासञ्चयच्छत्रशय्यासनोलूखलानि ध्वजं चामरं शाद्वलं पुष्पितं वा प्रदेशं यदा श्वावमूत्र्याग्रतो याति यातुस्तदा कार्य्यसिद्धिर्भवेदार्द्रके गोमये मिष्टभोज्यागमः शुष्कसम्मूत्रणे गौडिकामोदकावाप्तिरेवाथ वा। अथ विषतरुकण्टकीकाष्ठपाषाणशुष्कद्रुमास्थिश्मशानानि मूत्र्यावहत्याथवा यायिनोऽग्रेसरोऽनिष्टमाख्याति शय्याकुलालादिभाण्डान्यभुक्तान्यभिन्नानि वा मूत्रयन् कन्यकादोषकृद् भुज्यमानानि चेद् दुष्टतां तद्गृहिण्यास्तथा स्यादुपानत्फलं गोस्तु सम्मूत्रणे वर्णजः सङ्करः। गमनमुखमुपानहं सम्प्रगृह्योपतिष्ठेद्यदा स्यात्तदा सिद्धये मांसपूर्णाननेऽर्थाप्तिरार्द्रेण चास्थ्ना शुभं साग्न्युल्मुकेन शुष्केण चास्थ्ना च हीनेन मृत्युः प्रशान्तोल्मुकेनाभिघातोऽथ पुंसः शिरोहस्तपादादिवक्त्रे भुवो स्यागमो वस्त्रचीरादिभिर्व्यापदः केचिदाहुः सवस्त्रे शुभम्। प्रविशति तु गृहं सशुष्कास्थिवक्त्रे प्रधानस्य तस्मिन् वधः शृङ्खलाशीर्णवल्लीवरत्रादि वा बन्धनं चोपगृह्योपतिष्ठेद्यदा स्यात्तदा बन्धनं लेढि पादौ विधुन्वन् स्वकर्णावुपर्याक्रमंश्चापि विघ्नाय यातुर्विरोधे विरोधस्तथा स्याद्धकण्डूयने स्यात् स्वपंश्चोर्द्ध्वपादः सदा दो-

वक्रन्। सूर्य्योदये ऽर्काभिमुखो विरौति ग्रामस्य मध्ये यदि सारमेयः। एको यदा वा बहवः समेताः शंसन्ति देशाधिपमन्यमाशु। सूर्य्योन्मुखः श्वा ऽनलदिक्स्थितश्च चौरानलत्रासकरोऽचिरेण। मध्याह्नकाले ऽनलमृत्यु-शंसी सशोणितः स्यात्कलहो ऽपराह्ने। रवन्दिनेशाभिमुखो ऽस्तकाले कृषीवलानां भयमाशु धत्ते। प्रदोषकालेऽनिलदिङ्मुखस्तु धत्ते भयं मारुततस्करोत्थम्। उदङ्मुखश्चापि निशार्धकाले विप्रव्यथां गोहरणं च शास्ति। निशावसाने शिवदिङ्मुखश्च कन्याभिदूषानलगर्भपातान्। उच्चैःस्वराः स्युस्तृणकूटसंस्थाः प्रासादवेश्मोत्तमसंस्थिता वा। वर्षासु वृष्टिं कथयन्ति नीव्रामनत्र मृत्युं दहनं रुजश्च। प्रावृट्कालेऽवग्रहे ऽम्भो ऽवगाह्य प्रत्यावृत्तै रेचकैश्चाप्यभीक्ष्णम्। आधुन्वन्तो वा पिबन्तश्च तोयं वृष्टिं कुर्वन्त्यन्तरे द्वादशाहात्। द्वारे शिरो न्यस्य बहिः शरीरं रोरूयते श्वा गृहिणीं विलोक्य। रोगप्रदः स्यादथ मन्दिरान्तर्बहिर्मुखः शंसति बन्धकीं ताम्। कुड्यमुत्किरति वेश्मनो यदा तत्र खानकभयं भवेत्तदा। गोष्ठमुत्किरति गोग्रहं वदेद्धान्यलब्धिमपि धान्यभूमिषु। एकेनाक्ष्णा साश्रुणा दीनदृष्टिर्मन्दाहारो दुःखकृत्तद्गृहस्य। गोभिः सार्धं क्रीडमानः सुभिक्षं क्षेमारोग्यं चाभिधत्ते मुदं च। वामं जिघ्रेज्जानु वित्तागमाय स्त्रीभिः सार्कं विग्रहो दक्षिणं चेत्। ऊरुं वामं चेन्द्रियार्थोपभोगाः सव्यं जिघ्रेदिष्टमित्रैर्विरोधः। पादौ जिघ्रेद्यायिनश्चेद्यात्रां प्राह प्रार्थितं वाञ्छितां निश्चलस्य। स्थानस्थस्योपानहौ चेद्विजिघ्रेत् क्षिप्रं यात्रां सारमेयः करोति। उभयोरपि जिघ्रतीह बाह्वोर्विज्ञेयो रिपुचौरसम्प्रयोगः। अथ गोपायति भस्मनि स्वभक्ष्यान् मांसास्थीनि च शीघ्रमग्निकोपः। ग्रामे भषित्वा च बहिः श्मशाने भषन्ति चेदुत्तमपुंविनाशः। यियासतश्चाभिमुखो विरौति यदा तदा श्वा निरुणद्धि यात्राम्। उकारवर्णेन रुते ऽर्थसिद्धिरोकारवर्णेन च वामपार्श्वे। व्याक्षेपमौकारकृतेन विद्यान् निषेधकृत्सर्वरुतैश्च पश्चात्। खङ्खेति चोच्चैश्च मुहुर्मुहुर्ये रुवन्ति दण्डैरिव ताड्यमानाः। श्वानो ऽभिधावन्ति च मण्डलेषु ते शून्यतां मृत्युभयं च कुर्युः। प्रकाश्य दन्तान् यदि लेढि सृक्किणी तदाऽशनं मिष्टमुशन्ति तद्विदः। यदाननं चावलिहेन्न सृक्किणी प्रवृत्तभोज्ये ऽपि तदान्नविघ्नकृत्। ग्रामस्य मध्ये यदि वा पुरस्य भषन्ति संहत्य मुहुर्मुहुर्ये। ते क्लेशमाख्यान्ति तदीश्वरस्य श्वारण्यसंस्थो मृगवद्विचिन्त्यः। इन्द्रोपगे क्रोशति तोयपातः स्यादिन्द्रकीले सचिवस्य पीडा। वायोर्गृहे शस्यभयं गृहान्तः पीडा पुरस्यैव च गोपुरस्थाः। भयं च शय्यासु तदीश्वराणां याने भषन्तो भयदाश्च पश्चात्। अथापसव्या जनसन्निवेशे भयं भषन्तः कथयन्त्यरीणाम्"।

४अनिलचक्रञ्च अनिलशब्दे १६६पृ०दर्शितम्। व्यूहस्य चक्राकारः स च द्रोणेनाभिमन्युवधपर्व्वणि कृतः। "चक्रव्यूहो महाराज! द्रुगाचार्य्येणाभिकल्पितः" भा० द्रो०३४अ०। इत्यादिनोक्तः। यन्त्ररूपचक्राणि यन्त्रशब्दे वक्ष्यन्ते। तत्र राष्ट्रे "स्वचक्रं परचक्रञ्च" इतिकथने एतद्ग्रन्थवृद्धे अनुपदं दर्शितवाक्ये। समूहे "भूरेणवो नभसि नद्धपयोदचक्रम्" माघः। "दिक्चक्रमाक्रामति" मृच्छ०। सुदर्शनाख्ये राष्ट्रे च। "अविचालितचारुचक्रयोरनुरागादुपगूढयोः श्रिया" माघः। "न चक्रमस्याक्रमताधिकन्धरम्" माघः। चक्रवाके। "तव तन्वि! कुचावेतौ नियतं चक्रवर्त्तिनौ" उद्भटः। कुम्भकारचक्रे चक्रवाके च। "कलसे निजहेतुदण्डजः किमु चक्रभ्रमिकारितागुणः। स तदुच्चकुचौ भवन् प्रभाभरचक्रभ्रमिमातनोति यत्" नैष०। राशिचक्रे "त्रिंशत्कृत्यो युगे भानां चक्रं प्राक्परिलम्बते" सू०सि०। "रवेश्चक्रभोगोऽर्कवर्षं प्रदिष्टम्" सि० शि०। २० मण्डलाकारे रेखाविन्यासभेदे "चक्रे सचक्रनिभचङ्क्रमणच्छलेन" "वितत्य वात्यामयचक्रचङ्क्रमात्" नैष०। "शालग्रामशिलाचक्रम् गोमतीचक्रम्" एकद्वारे चतुश्चक्रं वनमालाविभूषितम्" शालग्रामशब्दे दृश्यम्।

चक्रक पु० चक्रमिव कायति कै—क। तर्कभेदे। तल्लक्षणं "स्वापेक्षणीयापेक्षितसापेक्षत्वनिबन्धनः प्रसङ्गश्चक्रकः" तर्के जगदीशः। अपेक्षा च ज्ञप्तौ उत्पत्तौ स्थितौ च। अन्योन्याश्रयशब्दे दर्शिते आपादके जन्यपदमन्तर्भाव्योदाहरणम्। अपेक्षा चात्र साक्षात्परस्परासाधारणी ग्राह्या" तर्के जगदीशः। तत्र ज्ञप्तौ एतद्घटज्ञानं यद्येतद्घटज्ञानजन्यज्ञानजन्यज्ञानजन्यं स्यात् तदा एतद्घटज्ञानजन्यज्ञानजन्यज्ञानभिन्नं स्यात्। उत्पत्तौ घटोऽयं यद्येतद्घटजन्यजन्यजन्यः स्यात् तदा एतद्घटजन्यजन्यभिन्नः स्यात्। स्थितौ घटोऽयं यद्येतद्घटवृत्तिवृत्तिः स्यात् तथात्वेनोपलभ्येतेति। २१ऋषिभेदे पु० चक्रस्य गोत्रा-

पत्यम् अश्वा॰ फञ्। चाक्रायण चक्रगोत्रापत्ये पुंस्त्री "उशस्तिर्ह चाक्रायणः" छा॰उ॰। कुण्डलकलितनगण-मिह सुलभं गन्धकुसुमरसविरचितवलयम्। चक्रसुरग-पतिवरपरिगणितं षोडशकलमतिसुललितभणितम्" इत्युक्तलक्षणे २२ छन्दोभेदे चक्राकारे २३ दद्रुरोगे चक्रमर्द्दः। २४मनस्तत्त्वे चक्रगदाधरशब्दे उदा॰। गिरिनद्या॰ ततः परं नदीनितम्बशब्दस्थनस्य वा णत्वम्।

**चक्रकारक** न॰ चक्रं चक्राकाररेखां करोति कृ—ण्वुल् ६त॰। १नखे शब्दार्थचि॰। तस्य नारीकुचयोः चक्रा-काररेखाकरणात् तथात्वम् २व्याघ्रनखाख्ये गन्धद्रव्ये अमरः। [(चाकुलिया) शब्दच॰।

**चक्रकुल्या** स्त्री चक्रस्य तदाकारस्य कुल्येव। १चित्रपर्ण्याम्

**चक्रगज** पु॰ चक्रे चक्राकारे दद्रुरोगे गजइव मर्द्दकत्वात्। चक्रमर्द्द वृक्षे (दादमर्दनवृक्ष) राजनि॰।

**चक्रगण्ड** पु॰ चक्रमिव गण्डुः। (गालबालिश)ख्याते उप-धानभेदे हेमच॰।

**चक्रगदाधर** पु॰ "मनस्तत्त्वात्मकं चक्रं बुद्धितत्त्वात्मिकां गदाम्। धारयन् लोकरक्षार्थं मुक्तश्चक्रगदाधरः" विष्णुसं॰ भाष्यधृतवाक्योक्ते परमेश्वरे

**चक्रगुच्छ** पु॰ चक्रमिव गुच्छोऽस्य। अशोकवृक्षे शब्दच॰।

**चक्रचर** त्रि॰ चक्रेण संघशश्चरति चर—ट। संघीभूय चा-रिणि गजविहगादौ। "तथा नागाः सुपर्णाश्च सि-द्धाश्चक्रचरास्तथा" भा॰ व॰ ८२१४ श्लो॰।

**चक्रचारिन्** पु॰ चक्रेण चरति णिनि। रथे। "विधिरेकक-चक्रचारिणं किमु निर्म्मित्सति मान्मथं रथम्" नैष॰।

**चक्रजीवक** पु॰चक्रेण कुम्भसाधनचक्रेण जीवति जीव—ण्वुल् ६त॰। कुम्भकारे हेमच॰।

**चक्रतीर्थ** न॰चक्रेण सुदर्शनेन क्षालनेन कृतं तीर्थम्। प्रभास क्षेत्रस्थे वैष्णवे तीर्थभेदे तत्कथा स्क॰ प्रभा॰ "तस्य सीमां प्रवक्ष्यामि विष्णुक्षेत्रस्य भामिनि!। पूर्वे-यमेश्वरं यावत् श्रीसोमेशस्तु पश्चिमे। उत्तरे तु विशा-लाक्षी दक्षिणे सरितां पतिः" इत्युपक्रमे "चक्रतीर्थे नरः स्नात्वा सोपवासोजितेन्द्रियः। द्वादश्यां कार्त्तिके मासि-दद्यात् विप्रेषु काञ्चनम्। विष्णुं संपूज्य विधिना मुच्यते सर्वपातकैः। देव्युवाच चक्रतीर्थं कथं नाम त्वया प्रोक्तं वृषध्वज!। कुत्र तिष्ठति तत्तीर्थं किंप्रभावं वदस्व मे। ईश्वर उवाच। पुरा देवासुरे युद्धे हत्वा दैत्यान् जनार्द्दनः। चक्रं प्रक्षालयामास तत्र वै रक्तरञ्जितम्। अष्टकोटीस्तु तीर्थानि तत्रानीय स्वयं हरिः। तीर्थं प्रकल्पयामास शुद्धिं कृत्वा सुदर्शने। तीर्थस्य चक्रे नामापि चक्रतीर्थमिति श्रुतम्। अष्टायुतानि तीर्था-नामष्टौ कोट्यस्तथैव च। तत्र सन्ति महादेवि! चक्रतीर्थे न संशयः। यस्तत्र कुरुते स्नानमेकचित्तो नरोत्तमः। सर्वतीर्थाभिषेकस्य स प्राप्नोत्यखिलं फलम्। तीर्था-नामष्टकोट्यस्तु निवसन्ति वरानने!। एकादश्यां विशेषेण चन्द्रसूर्यग्रहे तथा। तत्र स्नात्वा महादेवि! यज्ञ-कोटिफलं लभेत्। तस्य कल्पेषु नामानि शृणु ते कथयाम्यहम्। कोटितीर्थं पूर्वकल्पे श्रीनिधानं द्विती-यके। तृतीये शतधारं च चक्रतीर्थं चतुर्थके। एवं ते कल्पनामानि अतीतान्यखिलानि ते। कथितान्येवमन्यानि ज्ञेयानि विबुधैः क्रमात्। तत्र यद्दीयते दानं तस्य संख्या न विद्यते। अर्द्धक्रोशप्रमाणञ्च विष्णुक्षेत्रं प्रकी-र्त्तितम्। ब्रह्महत्यापसर्पीय सत्यमेतन्मयोदितम्। मासोपवासी तत्क्षेत्रमग्निहोत्री पतिव्रता। स्वाध्यायी यज्ञयाजी च तपश्चान्द्रायणादिकम्। तिलोदकं च पितॄणां श्राद्धञ्च विधिपूर्व्वकम्। एकरात्रं त्रिरात्रं वा कृच्छ्रसान्तपनं तथा। मासोपवासी तत्रैव अन्यद्वा पु-ण्यकर्म्म कृत्। दैत्यारिक्षेत्रमासाद्य यत्किञ्चित् कुरुते नरः। अन्यक्षेत्रात् कोटिगुणं पुण्यं भूयान्न संशयः। सुदर्शने वरे तीर्थे गोदानं तत्र दापयेत्। सम्यक्यात्रा-फलप्रेप्सुः सर्वपापविशुद्धये। चाण्डालः श्वपचोवापि तिर्यग्योनिगतस्तथा। तस्मिन् तीर्थे मृतः सम्यक् अ-च्युतं लोकमाप्नुयात्। इति संक्षेपतः प्रोक्तं चक्रतीर्थ-समुद्भवम्। माहात्म्यं सर्वपापघ्नं सर्वकामफलप्रदम्"।

**चक्रतैल** न॰ चक्रस्य तत्फलस्य तैलम्। चक्रमर्द्दफल-जाते तैले। "चक्रतैलेन चाभ्यज्य सज्जचूर्णेन चूर्णयेत्"। "कृत्वा सूक्ष्मेण नेत्रेण चक्रतैलेन तर्पयेत्" सुश्रुतः।

**चक्रदंष्ट्र** पुंस्त्री चक्रमिव दंष्ट्रास्य। शूकरे राजनि॰।

**चक्रदत्त** न॰ चक्रपाणिना निर्म्मिते वैद्यकशास्त्रभेदे

**चक्रदन्ती** पु॰ चक्रमिव फलरूपदन्तोऽस्याः। दन्तीवृक्षे राजनि॰।

**चक्रदन्तीवीज** न॰ ६त॰। जयपालवीजे राजनि॰।

**चक्रदेव** पु॰ यादवे नृपभेदे। "अष्टादश सहस्राणि भ्रातॄणां सन्ति नः कुले। आहुकस्य शतं पुत्रा एकैकस्त्रिदशा-वरः। चारुदेष्णः सह भ्रात्रा चक्रदेवश्च सात्यकिः। अहञ्च रौहिणेयश्च" भा॰ स॰ १३अ॰। कृष्णोक्तिः।

**चक्रद्वार** पु० चक्रमिव द्वारमत्र । पर्व्वतभेदे । "द्रोणस्य शतशृङ्गस्य चक्रद्वारस्य पर्वतः" भा० शा० ३२२अ० ।

**चक्रधनुस्** पु० सूर्य्याज्जाते कपिलाख्ये ऋषिभेदे । "अत्र चक्रधनुर्नाम सूर्य्याज्जातो महानृषिः । विदुर्यं कपिलं देवं येनार्त्ताः सगरात्मजाः" भा० उ० १०८अ० ।

**चक्रधर** पु० चक्रं मनस्तत्त्वं सुदर्शनाख्यमस्त्रं वा धरति–धृ–अच् । १चक्रधारिणि विष्णौ २ग्रामयाजिनि च मेदि० । "प्रचक्रमे चक्रधरप्रभावः" रघुः । ३चक्रास्त्रधारकमात्रे नृपादौ "यजन्ते क्रतुभिर्द्देवास्तथा चक्रधरान्नृपाः" भा० व० ८५अ० ।

**चक्रधर्म्मन्** पु० विद्याधरभेदे । "विद्याधराधिपश्चैव चक्रधर्म्मा सहानुजैः । उपाचरति तत्रस्थं धनानामीश्वरं प्रभुम्" भा० स० १० अ० ।

**चक्रधारण** न० चक्रं धार्य्यतेऽनेन धारि–करणे ल्युट् । रथावयवभेदे अक्षनाभौ शब्दार्थ० ।

**चक्रधारा** स्त्री ६त० । चक्रस्याग्रे शब्दार्थ० ।

**चक्रनख** पु० चक्रमिव नखोऽस्यास्य अच् । व्याघ्रनखे गन्धद्रव्यभेदे राजनि० ।

**चक्रन(ण)दी** स्त्री चक्रप्रधाना विष्णुचक्राविर्भावस्थानं नदी गिरिनद्या० वा णत्वम् । गण्डकीनद्याम् । "यत्रास्मिन्पदात्युभयतो नाभिदृषच्चक्रैश्चक्र(ण)नदी नाम सरित्प्रवरा सर्वतःपवित्रीकरोति" भाग०५।७,११। "चक्रनदी गण्डकी" श्रीधरः ।

**चक्रनाभि** पु० ६त० । चक्रस्य नाभौ । "यावत्यस्तु सिराः काये सम्भवन्ति शरीरिणाम् । नाभ्यां सर्वा निबद्धास्ताः प्रतन्वन्ति समन्ततः । नाभिस्थाः प्राणिनां प्राणाः प्राणान्नाभिर्व्युपाश्रिता । सिराभिरावृता नाभिश्चक्रनाभिरिवारकैः" सुश्रुतः ।

**चक्रनामन्** पु० चक्रात् मक्षिकाचक्रात् नाम यस्य । १माक्षिकधातौ हेमच० । तस्य मक्षिकापटलजातत्वात् तथात्वम् २चक्रनामनामके चक्रवाके च ।

**चक्रनायक** पु० चक्रं तदाकारं नयति नी–ण्वुल् ६त० । व्याघ्रनखे गन्धद्रव्यभेदे राजनि० ।

**चक्रपट्टाट** पु० चक्रः चक्राकारो दद्रुरोगः पट्टमिव तत्राटति प्रसर्पति अच् ७त० । चक्रमर्द्दवृक्षे दद्रुघ्ने शब्दर० ।

**चक्रपद** न० चक्रपदमिह भगणतनुकृतिः" वृ०र० टी० उक्ते नवोदशाक्षरपादे छन्दोभेदे । [६त० । आरगवधे वैद्यकम् ।

**चक्रपरिव्याध** पु० चक्रं दद्रुरोगं परिविध्यति परि+व्यध–ण

**चक्रपर्णी** स्त्री चक्रमिव पर्णमस्याः ङीप् । पृश्निपर्ण्याम् शब्दच० ।

**चक्रपाणि** पु० चक्रं पाणावस्य प्रहरणार्थत्वात् सप्तम्याः परनि० व्य० बहु० । विष्णौ । "निघ्नन्नमित्रान् समरे चक्रपाणिरिवासुरान्" भा० भी० ४८अ० । "प्रायेण निष्क्रामति चक्रपाणौ" माघः ।

**चक्रपाणिदत्त** पु० चक्रदत्ताख्यवैद्यकग्रन्थकारके विद्वद्भेदे ।

**चक्रपाद** पु० चक्रं पाद इव यस्य । रथे अजयपालः ।

**चक्रपाल** पु० चक्रं पालयति पालि+अण् । सेनापति चक्ररक्षके योधभेदे । चक्ररक्षशब्दे दृश्यम् ।

**चक्रपुष्करिणी** चक्रेण खननात् विष्णुना कृता पुष्करिणी । काशीस्थे मणिकर्णिकाख्ये पुष्करिणीभेदरूपे तीर्थे तत्कथा काशीख० २६अ० यथा

"खनित्वा तत्र चक्रेण रम्यां पुष्करिणीं हरिः । निजाङ्गस्वेदसन्दोहसलिलैस्तामपूरयत् । समाः सहस्रं पञ्चाशत् तपउग्रञ्चकार सः । चक्रपुष्करिणीतीर्थे तत्र स्थाणुसमाकृतिः" इत्युपक्रमे "त्वदीयचरणाम्भोजमकरन्दमधूत्सुकः । मत्तोऽभ्रमरो भ्रान्तिं विहायास्त्वाशु निश्चलः । त्वदीयस्यास्य तपसो महोपचयदर्शनात् । यन्मया लोलितो मौलिरहिश्रवणभूषणः । तदान्दोलनतः कर्णात् पपात मणिकर्णिका । मणिभिः खचिता रम्या ततोऽस्तु मणिकर्णिका । चक्रपुष्करिणीतीर्थं पुरा ख्यातमिदं शुभम् । त्वया चक्रेण खननात् शङ्खचक्रगदाधर ! । मम कर्णात् पपातेयं यदा च मणिकर्णिका । ततः प्रभृति लोकेऽत्र ख्यातास्तु मणिकर्णिका" । "अस्मिंस्तीर्थवरे शम्भो ! मणिश्रवणभूषणे । सन्ध्यां स्नानं जपं होमं वेदाध्ययनमुत्तमम् । तर्पणं पिण्डदानञ्च देवतानाञ्च पूजनम् । गोभूतिलहिरण्यानि दीपान्नाम्बरभूषणम् । कन्यादानं प्रयत्नेन सप्ततन्तूननेकशः । व्रतोत्सर्गं वृषोत्सर्गं लिङ्गादिस्थापनं तथा । करोति यो महाप्राज्ञो ज्ञात्वायुः क्षणभङ्गुरम् । विपत्तिं विनाशाद्यपि लब्ध्वा कर्म्मनिभङ्गुराम् । अश्नया मुक्तिरेकाऽस्तु विपाकस्तस्य कर्म्मणः । अन्यत्रापि शुभं कर्म्म यद्दत्तं श्रद्धया सुखम् । विनात्मघातकमिमान ! त्यक्त्वा प्रायोपवेशनम् । नैष्कर्म्ये यस्याः स्थियो हेतुरस्तु जगदीश्वर ! । नानुशोचति नाप्नोति हत्वा कालान्तरेऽपि यत् । तदिहाक्षयमेवास्तु तदीश ! त्वदनुग्रहात् । तव प्रसादात्सर्वेश ! सर्वमक्षयमस्तु तत् । यदस्ति यद् भविष्यञ्च यद्भूतञ्च सदाशिव ! । तस्मादेतच्च सर्वस्मात् क्षेत्रमस्तु शुभं दृढम् । दक्ष सदाशिव !

स्थतो न किञ्चिदधिकं शिव ! । तथाऽऽनन्दवनादस्मात् किञ्चनास्त्यधिकं क्वचित् । विना सांख्येन योगेन विना स्वात्मावलोकनम् । विना व्रततपोदानैः श्रेयोऽस्तु प्राणिनामिह" । [अस्त्रभेदे त्रिका० ।

**चक्रफल** न० चक्रमिव फलमग्रं यस्य । चक्राकाराग्रयुक्ते

**चक्रबन्धु** पु० ६त० । सूर्य्ये हेमच० । चक्रबान्धवादयोऽप्यत्र ।

**चक्रभृत्** पु० चक्रं बिभर्त्ति भृ—क्विप् ६त० । १सुदर्शनधरे विष्णौ २चक्रास्त्रधारिणि च

**चक्रभेदिनी** स्त्री चक्रौ चक्रवाकौ भिनत्ति वियोजयति भिद—णिनि ङीप् । रात्रौ त्रिका० रात्रौ हि तयोर्वियोगात्तथात्वम् ।

**चक्रभोग** पु० चक्रस्य राशिचक्रस्य भोगः । "यत्स्थानमारभ्य चलितो ग्रहः पुनस्तत्स्थानमायाति स चक्रभोगः परिवर्त्त संज्ञः" इति सू०सि०टी०रङ्गनाथोक्ते ग्रहाणां राशिचक्रभोगे 'तेषान्तु परिवर्त्तेन पौष्णान्ते भगणः स्मृतः" इति सू० सि० टीकायां दृश्यम् ।

**चक्रभ्रम** पु० चक्रमिव भ्रमति भ्रम—अच् । कुन्दाख्ये शिल्पिनां यन्त्रभेदे शब्दार्थचि० । इन् च चक्रभ्रमिरप्यत्र । भावे इन् । चक्रभ्रमणे चक्रवाकभ्रान्तौ च "किमु चक्रभ्रमिकारिता गुणः" नैष० ।

**चक्रमण्डलिन्** पुंस्त्री० चक्रमिव मण्डलोऽस्त्यस्य इनि । अजगरसर्पे हेम० स्त्रियां ङीप् । [भा०मौ०४अ० ।

**चक्रमन्द** पु० नागभेदे । "तथा नागौ चक्रमन्दातिषण्डौ"

**चक्रमर्द** पु० चक्रं चक्राकारं दद्रुरोगं मृद्नाति मृद—अण् उप० स० (दादमर्दन) क्षुपभेदे राजनि० । ण्वुल् । चक्रमर्दकोऽप्यत्र अमरः । "चक्रमर्द्दो लघुः स्वादूरूक्षः पित्तानिलापहः । हृद्यो हिमः कफश्वासकुष्ठदद्रुक्रिमीन् हरेत् । हन्त्युष्णं तत्फलं कुष्ठकण्डूदद्रुविषानिलान् । गुल्मकासक्रिमिश्वासनाशनं कटुकं स्मृतम्" भावप्र० ।

**चक्रमुख** पुंस्त्री चक्रमिव वृत्तं मुखमस्य । शूकरे हारा० स्त्रियां जातित्वात् ङीष् ।

**चक्रमुद्रा** स्त्री "हस्तौ तु संमुखौ कृत्वा संलग्नौ सुप्रसारितौ । कनिष्ठाङ्गुष्ठकौ लग्नौ मुद्रैषा चक्रसंज्ञिका" तन्त्रसारोक्ते देवपूजनाङ्गमुद्राभेदे ।

**चक्रमुषल** पु० चक्रं मुषलञ्च साधनतया अत्रास्ति अच् । चक्रमुषलनिष्पाद्ये युद्धभेदे "तत चक्रं हलञ्चैव गदां कौमोदकीं तथा । सौनन्दं मुषलञ्चैव वैष्णवान्यायुधानि च । दर्शयिष्यन्ति संग्रामे पास्यन्ति च महीक्षिताम् । रुधिरं कालयुक्तानां वपुर्भिः कालसन्निभैः । स चक्रमुषलो नाम संग्रामः कृष्ण ! विश्रुतः । दैवतैरिह निर्दिष्टः कालः स्यादेष सञ्चितः" हरि०९६अ० । चक्रेण निर्वृत्तम् अण् । चाक्र तन्निर्वृत्ते युद्धे "चाक्रं मौषलमित्येवं संग्रामं रणवित्तमाः । कथयिष्यन्ति लोकेऽस्मिन् ये भविष्यन्ति पार्थिवाः" हरि० १०अ० ।

**चक्रयान** न० चक्रयुक्तं यानम् । चक्रयुक्ते याने रथादौ । "असौ पुष्प(ष्प)रथश्चक्रयानं न समराय यत्" अमरः ।

**चक्ररक्ष** पु० चक्रं रक्षति अण् उप० स० । युद्धे सेनापति चक्ररक्षके योधभेदे । "माद्रेयौ चक्ररक्षौ तु फाल्गुनस्य तदाऽकरोत्" भा०आ०१३८अ० । "यमौ च चक्ररक्षौ ते भवितारौ महाबलौ" भा० वि० ३३अ० । "चक्ररक्षश्च शूरोऽथ मदिराक्षोऽतिविश्रुतः" ३३अ० । ण्वुल् चक्ररक्षकोऽप्यत्र । [जातित्वात् ङीष् ।

**चक्ररद** पुंस्त्री चक्रमिव वृत्तोरदोऽस्य । शूकरे त्रिका० स्त्रियां

**चक्रलक्षणा** स्त्री चक्रे मण्डलाकारकुण्डे लक्षणं प्रतीकारसाधनरूपं चिह्नमस्य । गुडूच्याम् रत्नमा० ।

**चक्रलताम्र** पु० चक्र—तम्रौ करणे रक् चक्रः तस्मिन्साधनं लताम्रः । इक्षुरसालवृक्षे राजनि० [कुन्ताभेदे अमरः ।

**चक्रला** स्त्री चक्रं दद्रुरोगं लाति ला—क । उच्चटायाम्

**चक्रलिप्ता** स्त्री ६त० । राशिचक्रस्य कलारूपे भागभेदे कलाश्च २१६०० मिताः । तथाहि द्वादशराश्यात्मकचक्रस्य एकैकराशेस्त्रिंशांशात्मकत्वात् ३६० अंशात्मकं राशिचक्रम् अंशस्य ६० कलामितः तदङ्कस्य षष्ट्या गुणने २१६०० कलाभवन्ति इति कलापर्य्यायलिप्तानां तावन्मितत्वम् ।

**चक्रवत्** त्रि० चक्रमस्त्यस्य मतुप् मस्य वः । १चक्राक्षयुक्ते स्त्रियां ङीप् । २तैलिके च । "सूनाचक्रध्वजवतां वेशेनैव च जीवताम्" मनुः । "सूनावान् पशुमारणपूर्व्वकमांसविक्रयजीवी । चक्रवान् तैलविक्रयजीवी तैलिकः ध्वजवान् मद्यविक्रयजीवी शौण्डिकः" कुल्लूकः । चक्रं तदाकारोऽस्त्यस्य । चक्राकारसदृशाकारयुक्ते ३पर्व्वतभेदे पु० । "तत्रैव चक्रसदृशं चक्रवन्तं महाचलम् । सहस्रकूटं विपुलं भगवान् संन्यवेशयत्" हरिवं० २२५अ० ।

**चक्रवर्त्तिन्** पु० चक्रे भूमण्डले वर्त्तितुं, चक्रं सैन्यचक्रं वा सर्व्वभूमौ वर्त्तयितुं शीलमस्य वृत—वृत—णिच्—वा णिनि । १समुद्रपर्य्यन्तक्षितेरधीश्वरे, अमरः २वास्तूकशाके राजनि० । ३जतुकायां शब्दार्थचि० ४जटामांस्याम् ४अलक्तके च स्त्री ङीप् राजनि० । ५जनीनाम-

गन्धद्रव्ये स्त्री अमरः चक्र इव वर्त्तते। चक्रवाकतुल्ये त्रि० "तव तन्वि! कुचावेतौ नियतं चक्रवर्त्तिनौ। आसमुद्रक्षितीशोऽपि भवान् यत्र करप्रदः" उद्भटः। "यत्र चक्रवर्त्तित्वमवाप्य वीरः स्वैः कर्म्मभिः शक्रसमप्रभावः" हरिवं० १५४अ०। "इन्दुर्गजानां गिरिचक्रवर्त्ती" कुमा०। "जन्म यस्य पुरोर्वंशे युक्तरूपमिदं तव। पुत्रमेवं गुणोपेतं चक्रवर्त्तिनमाप्नुहि" शकु०। "विद्याधरराज्यमिव चक्रवर्त्तिनरवाहनोचितम्" काद०।

**चक्रवाक** पुंस्त्री० चक्रशब्देन उच्यते वच–परिभाषणे कर्म्मणि घञ् न्यङ्क्वा० कुत्वम्। स्वनामख्याते खगे अमरः। "परस्पराक्रन्दिनि चक्रवाकयोः पुरोवियुक्ते मिथुने कृपावती" कुमा०। स्त्रियां जातित्वात् ङीष्। "वरुणाय चक्रवाकीम्" यजु० २४।२२। "सरिदपरतटान्तादागता चक्रवाकी" माघः। "दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम्" मेघ०।

**चक्रवाकवती** स्त्री चक्रवाकाः भूम्ना सन्त्यत्र मतुप् मस्य वः ङीप् अजिरा० संज्ञायामपि न दीर्घः। बहुलचक्रवाकयुक्ते नदीभेदे।

**चक्रवाट** पु० चक्रस्येव वाटोऽत्र वट–वेष्टने घञ्। १क्रियाराहे कर्म्मप्रारम्भे २पर्य्यन्ते ३शिखातरौ च मेदि०।

**चक्रवाड(ल)** पु० चक्रमिव वाडते वेष्टयति वाड–अच्। वा डस्य लः चक्रमिव वलते वल वा० ण लस्य वा डः। १लोकालोकपर्व्वते। २मण्डले न० अमरः। लोकालोकपर्व्वतस्य भूमण्डलवेष्टनाकारेण स्थितत्वात् तथात्वम्। ३मण्डलाकारेण वर्त्तिनि समूहमात्रे च "किरीटहाराङ्गदचक्रवाडैर्विभूषिताङ्गाः पृथुबाहुवक्षः" भा० आ० १८७अ०। "एवं स कृष्णो गोपीनां चक्रवालैरलङ्कृतः" हरिवं० ७७अ०। वलधातोर्वाडधातोर्वा अन्तःस्थादित्वेन वर्ग्यादित्वाभावात् अस्य शब्दस्य वर्ग्यमध्यत्वकल्पनं प्रामादिकमेव।

**चक्रवात** पु० चक्रमिव वातः। (घूर्णी)। भ्रमिवायौ वात्यायाम्। "दैत्योनाम्ना तृणावर्त्तः कंसभृत्यः प्रचोदितः। चक्रवातस्वरूपेण जहारासीनमर्भकम्" भाग० ७।१८श्लो०

**चक्रवृद्धि** स्त्री चक्रमिव वृद्धिः। "वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृता" इति नारदोक्ते १वृद्धिभेदे। तद्दानादिप्रकारः मनुना दर्शितो यथा "नातिसांवत्सरीं वृद्धिं नचादृष्टां पुनर्हरेत्। चक्रवृद्धिः कालवृद्धिः कारिता कायिका च या। ऋणं दातुमशक्तो यः कर्त्तुमिच्छेत् पुनः क्रियाम्। स दत्त्वा निर्जितां वृद्धिं करणं परिवर्त्तयेत्। अदर्शयित्वा तत्रैव हिरण्यं परिवर्त्तयेत्। यावती सम्भवेद् वृद्धिस्तावतीं दातुमर्हति"। "सर्व्वैकस्मिन्मासि मासद्वये मासत्रये वा गते तस्य वृद्धिः विगणय्य एकदा दातव्येत्येवं विधि नियमपूर्व्वकवृद्धिग्रहणमुत्तमर्णः संवत्सरपर्य्यन्तं कुर्य्यात् नातिक्रान्ते संवत्सरे वृद्धिं गृह्णीयात् न च शास्त्रोक्तधर्म्याद्विकत्रिकशताद्यधिकां गृह्णीयात्। अधर्म्यत्वबोधनार्थो निषेधः। चक्रवृद्ध्यादिचतुष्टयीं चाशास्त्रीयां न गृह्णीयात्। तासां स्वरूपमाह वृहस्पतिः "कायिका कायसंयुक्ता मासग्राह्या च कालिका। वृद्धेर्वृद्धिश्चक्रवृद्धिः कारिता ऋणिना कृता"। तत्र चक्रवृद्धिः स्वरूपेणैव गर्हिता। कालवृद्धिस्तु द्विगुणाधिकग्रहणेन। कायिका चातिवाहदोहादिना। कारिता ऋणिकेन या आपत्काल एव उत्तमर्णपीड़या कृता। चतस्रोऽपि वृद्धीरशास्त्रीया न गृह्णीयात्। तथा च वृहस्पतिः "भागो यद्द्विगुणादूर्द्ध्वं चक्रवृद्धिश्च गृह्यते। पूर्णे च सोदयं पश्चात् वार्द्धुष्यं तद्विगर्हितम्"। कात्यायनः "ऋणिकेन कृता वृद्धिरधिका सम्प्रकल्पिता। आपत्कालकृता नित्यं दातव्या कारिता तथा। अन्यथा कारिता वृद्धिर्न दातव्या कथञ्चन"। ऋणं दातुमिति। अधमर्णो धनदानासामर्थ्यात् यदि पुनर्लेख्यादिक्रियां कर्त्तुमिच्छेत् स निर्ज्जितां उक्तमार्गेण सत्यतया आत्मसात् कृतां वृद्धिं दत्त्वा करणं लेख्यं पुनः कुर्य्यात्। अदर्शयित्वेति। यदि दैवगत्या वृद्धिहिरण्यमपि समग्रं दातुं न शक्नोति तदा तद् गृहीत्वैव तत्रैव पुनः क्रियमाणे लेख्यादौ वृद्धिहिरण्यादिशेषमारोपयेत्। यत्प्रमाणं चक्रवृद्धिधनं तदानीं सम्भवति तद्दातुमर्हति" कुल्लू०।

चक्रमस्त्यस्य अच् चक्रं चक्रवच्छकटादि तन्निमित्ता वृद्धिः। २शकटादिभाटकरूपलाभे च। "चक्रवृद्धिं समारूढो देशकालव्यवस्थितः। अतिक्रामन् देशकालौ न तत्फलमवाप्नुयात्" मनुः। "चक्रवृद्धिमिति। चक्रवृद्धिशब्देनात्र चक्रवच्छकटादिभाटकरूपा वृद्धिरभिमता चक्रवृद्धिमाश्रित उत्तमर्णो देशकालव्यवस्थितः। यदि वाराणसीपर्य्यन्तं लवणादि शकटेन वहामि तदाममैतद्धनं दातव्यमिति वेतने देशव्यवस्थितः। यदि मासं यावद्वहामि तदा ममैयद्धनं दातव्यमिति कालव्यवस्थितिः एवमभ्युपगतदेशकालौ नियमस्थौ दैवादपूरयन् शकटादिनाऽवहन् लाभरूपफलं सकलं न प्राप्नोति" कुल्लू०।

**चक्रव्यूह** पु॰ चक्राकारः व्यूहः। चक्राकारे सेनासन्नि-
वेशभेदे चक्रशब्दे दृश्यम्।

**चक्रशल्या** स्त्री चक्रमिव शल्यमस्य। श्वेतगुञ्जायां राजनि॰

**चक्रश्रेणी** स्त्री चक्राणां श्रेणिरत्र ङीष्। अजशृङ्ग्याम्
वृक्षभेदे रत्नमाला तस्याःफलानां चक्राकारशृङ्गरूपतया
जातत्वा तथात्वम्। [२चक्रवाके अमरः।

**चक्रसंज्ञ** न॰ चक्रस्य संज्ञा संज्ञास्य। १वङ्गे धातुभेदे हेमच॰

**चक्रसंवर** पु॰ चक्रमिन्द्रियचक्रं संवृणोति अच्। बुद्धभेदे
त्रिका॰।

**चक्रसक्थ** त्रि॰ चक्रमिव सक्थि अस्य षच् षचः षित्त्वेन
नित्यमन्तोदात्तता "सक्थञ्चाचक्रान्तात्" पा॰ चक्रान्तप्रति-
षेधात् न विभाषयाऽन्तोदात्तता। चक्रतुल्यसक्थियुक्ते।

**चक्रसाह्वय** पुंस्त्री॰ चक्रेण समाना आह्वा यस्य। चक्रवाके
"चकोरान् वानरान् हंसान् सारसान् चक्रसाह्वयान्" भा॰
आनु॰ ५४अ॰। जातित्वेऽपि योपधत्वात् स्त्रियां टाप्।

**चक्रहस्त** पु॰ चक्रं हस्तेऽस्य। १चक्रपाणौ विष्णौ २चक्रधा-
रिमात्रे त्रि॰। [कुप्राख्ये राजनि॰।

**चक्रा** स्त्री चक–ष्ट्रन् रक्। १नागरमुस्तायां, २कर्कटशृ-

**चक्रांश** पु॰ चक्रस्य राशिचक्रस्यांशः। राशिचक्रस्य ३६०
षष्ट्युत्तरशतत्रयात्मके भागे।

**चक्रा(क्री)ङ्गी** स्त्री चक्राकारेणाकति अङ्कते वा अक–गतौ
अकिङ् गतौ अच् गौरा॰ ङीष्। हंस्यां शब्दरत्ना॰।

**चक्राङ्ग** पु॰ चक्रमिवाङ्गं चक्रमिवाङ्कं यस्य। १हंसे। स्त्रियां
जातित्वात् ङीष्। चक्रमङ्गमस्य। २रथे अमरः। "द्-
दृशुश्च चक्राङ्गा वचः काकं विहङ्गमाः" भा॰ कर्ण॰
४१अ॰ हंसकाकीये। ३चक्रवाके "कलविङ्कं प्लवं हंसं
चक्राङ्गं ग्रामकुक्कुटम्" मनुः अभक्ष्यमांसोक्तौ। हंसस्य
पृथगुपादानादस्य चक्रवाकार्थता। [लतायां रत्नमाला।

**चक्राङ्गा** स्त्री चक्रमिवाङ्गमस्त्यस्याः अच्। सुदर्शनायां

**चक्राङ्गी** स्त्री चक्रमिव चक्रं छत्त्रकरमङ्गं वाऽस्याः ङीष्।
१कटुरोहिण्याम् मेदि॰। २हंस्यां शब्दर॰। ३हि-
लमोचिकायां त्रिका॰। ४मञ्जिष्ठायां ५वृद्धिदारक्यां
च राजनि॰। ६कर्कटशृङ्ग्यां रत्नमा॰।

**चक्राट** पु॰ चक्रं चक्राकारमटति अट–अण् उप॰ स॰।
१विषवैद्ये २धूर्त्ते ३दीनारे परिमाणभेदे च मेदि॰।

**चक्राधिवासिन्** पु॰ चक्रं छत्त्रकरमधिवासयति अधि+वासि
णिनि। छत्त्रकरसौरभयुक्ते नागरङ्गवृक्षे(नारेङ्गानेवु)त्रिका॰।

**चक्रायुध** पु॰ चक्रमायुधमस्य। १विष्णौ "चक्रायुधेन चक्रेण
पिबतोऽमृतमोजसा। शिरश्छिन्नम्" भा॰आ॰१९२अ॰।
२ चक्रास्त्रधारिमात्रे चक्रप्रहरणादयोऽप्यत्र।

**चक्रावर्त्त** पु॰ चक्रस्येवावर्त्तः। घूर्णने हेमच॰।

**चक्राह्व** पु॰ चक्रेति आह्वा यस्य। १चक्रमर्द्दे राजनि॰।
२चक्रवाके च।

**चक्रि** त्रि॰ कृ–कि द्वित्वम्। करणशीले "चक्रिं विश्वानि
चक्रये" ऋ॰ १।६।२। विश्वानीत्यत्र क्रियोगे षष्ठी
निषेधात् कर्म्मणि द्वितीया। [राजनि॰।

**चक्रिका** स्त्री चक्रं तदाकारोऽस्त्यस्याः ठन्। जानुनि

**चक्रिन्** पु॰ चक्रमस्त्यस्य इनि। १विष्णौ २ग्रामजालिके
३चक्रवाके ४सर्पे पुंस्त्री॰। ५कुलाले ६सूचके त्रि॰
मेदि॰। ७अजे पुंस्त्री ८तैलिके शब्दर॰। चक्रं राष्ट्रचक्रं
स्वत्वेनास्त्यस्य इनि। ९चक्रवर्त्तिनि हेमच॰। १०चक्र-
मर्द्दे तस्य तदाकारपत्त्रत्वात्। ११तिनिशे १२व्याघनखे पु॰
१३काके १४गर्दभे च पुंस्त्री॰ राजनि॰। तयोश्चक्रवद्-
भ्रमणवत्त्वात्तथात्वम्। १५चक्रयुक्ते त्रि॰ सर्व्वत्र स्त्रियां
ङीप्। १६चक्रयुक्तरथाद्यारूढे त्रि॰। "चक्रिणोदश-
मीस्थस्य" मनुः। "चक्रिणः चक्रयुक्तरथाद्यारूढस्य"
कुल्लू॰। "वैश्यायां शूद्रतश्चौराज्जातश्चक्री स उच्यते"
उशनसोक्ते १७संकीर्णजातिभेदे पुंस्त्री॰। "पदं महे-
न्द्रालयचारु चक्रिणः" माघः। विष्णोश्च मनस्तत्त्वा-
त्मकचक्रस्य लोकरक्षार्थं सुदर्शनचक्रस्य वा धारणात्
तथात्वम्। अतएव "अरौद्रः कुण्डली चक्री" "शङ्ख-
भृन्नन्दकी चक्री" विष्णुस॰ द्विधा प्रयोगः अवय-
वार्थभेदाभ्यामिति बोध्यम्।

**चक्रीवत्** पुंस्त्री॰ चक्रं तद्वद्भ्रमणमस्त्यस्य मतुप् आसन्दी-
वदित्या॰ पा॰ नि॰। १गर्दभे अमरः। "चक्रीवदङ्गरुह
धूम्ररुचो विसस्रुः" माघः। २राजभेदे पु॰ सि॰कौ॰।
वैदिकप्रयोगे ३चक्रयुक्तमात्रे च। "सदोहविर्धानानि
चक्रीवन्ति" कात्या॰ श्रौ॰ २४।२३।१०। सदोहविर्धाना
न्यनांसि चक्रीवन्ति" २४।५।२६। स्त्रियां सर्व्वत्र ङीप्

**चक्रु** त्रि॰ कृ–कु द्वित्वञ्च। कर्त्तरि उज्ज्वलद॰।

**चक्रेश्वरी** स्त्री ६त॰। १जिनानां विद्याभेदे २राष्ट्रेश्वरे पु॰।

**चक्रोपजीविन्** त्रि॰ चक्रं तैलनिष्पीडनयन्त्रमुपजीवति उप
जीव–णिनि। तैलिके।

**चच** कथने त्यागे च अदा॰ आत्म॰सक॰सेट्। चष्टे। अख्यत्
ख्यात त्यागे तु समचचिष्ट चक्षौ चख्ये चचक्षे।
आख्यमते अकशासीत् अकशास्त। चकशौ चकशे।

अनु+पश्चादुक्तौ “परायतीं मातरमन्वचष्ट” ऋ० ४।१८।३।
अभि+आभिमुख्येन दर्शने “कदा चिकित्वो अभिचक्षसे नः” ऋ० ५।३।९।
अव+अधोदर्शने।“सुपर्णोऽवचक्षत क्ष्मां सोमः” ऋ०९।७१।९।
आ+आख्याने। “विचक्षणः प्रस्तुतमाचचक्षे। “स रावणहृतां ताभ्यां वचसाचष्ट मैथिलीम्” रघुः। [२।४।४।२।
अनु+आ+अन्वाख्याने “एतमेव तदन्वाचक्षते” शत० ब्रा०
अभि+आ+आभिमुख्येनाख्याने। “अभ्याचष्टानुरागाश्रैरक्षोभूतेन चक्षुषा” भाग० १।९।११। “अभ्याचष्ट प्रचक्रमे” ८।५।१४। [शत० ब्रा० ३।३।३।४।
उद्+आ+उदाहरणे “तस्मादध्वर्य्युरेव गोर्वीर्य्यमुदाचष्टे”
प्रति+आ+प्रत्याख्याने निराकरणे “गुरुपत्नीति ज्ञात्वाऽहं प्रत्याचक्षे न दोषतः” भा० आ०७७अ०।
वि+आ+व्याख्याने विवरणे। “व्याचक्षाणस्य तु मे निदिध्यासस्व” शत० ब्रा० १४।५।४।४।
सम्+आ+सम्यगाख्याने। “तत्सत्यं नः समाचक्ष्व” भाग०१।४।१३। [परिचक्षते” मनुः।
परि+परितः कथने विख्यातौ “वेदप्रदानादाचार्य्यं पितरं
प्र+प्रकर्षेण कथने विख्यातौ। “तं देवनिर्म्मितं देशं ब्रह्मावर्त्तं प्रचक्षते” मनुः “दहति प्रेतमिति प्रचक्षते” रघुः।
प्रति+प्रत्युत्तरोक्तौ प्रतिरूपोक्तौ च “यदा तु सर्व्वभूतेषु दारुष्वग्निमिव स्थितम्। प्रतिचक्षीत मां लोकः” भाग०३।९।३।
वि+विशेषेण कथने प्रख्यातौ “विश्वं विचक्षते धीराः योगराद्धेन चक्षुषा” भाग० ३।११।१७। विचक्षणः।
सम्+सम्यक्कथने। “मेरोरथान्तरे पार्श्वे पूर्व्वे संचक्ष्व सञ्जय!” भा० भी०७अ०।

**चक्षण** न०चक्ष–ल्युट् न ख्यादेशः। १अनुग्रहेण दर्शने “कद्रुद्रस्य चक्षणम्” ऋ० ११०५।६। “चक्षणमनुग्रहदर्शनम्” भा०। २कथने च। करणे ल्युट्। ३अरुचौ मद्यपानादिरोचके (चाकना) द्रव्यभेदे हेमच०।

**चक्षणि** त्रि० चक्ष–अनि। प्रकाशके। “स नो विभावा चक्षणिर्न” ऋ०६।४।२। [२उपाध्याये उणादिकोषः।

**चक्षस्** पु० चक्ष–असि न ख्यादेशः। १वृहस्पतौ त्रिका०।

**चक्षुःश्रवस्** पुंस्त्री० चक्षुषा शृणोति श्रु–असुन्, चक्षुरेव श्रवः कर्णौ यस्य वा। सर्पे अमरः। “अदस्तदाकर्णिफलाढ्यजीवितं दृशोर्द्वयं नस्तदवीक्षि चाफलम्। इति स्म चक्षुःश्रवसां प्रिया नले स्तुवन्ति निन्दन्ति हृदा तदात्मनः” नैष०।

**चक्षुर्मल** न० ६त०। (पिँचुटि) नेत्रमले शब्दार्थचि०।

**चक्षुर्वर्द्धनिका** स्त्री शाकद्वीपस्थे नदीभेदे। “महानदी च कौरव्य! तथा मणिजला नदी। चक्षुर्वर्द्धनिका चैव नदी भरतसत्तम!” भा०भी० ११अ०। [रत्नमा०।

**चक्षुर्वहन** न०चक्षुस्तज्ज्योतिर्वहति वह–ल्यु। १मेषशृङ्गीवृक्षे

**चक्षुर्विषय** पु० ६त०। १चक्षुर्ग्राह्ये रूपादौ। स च भाषा०उक्तो यथा “उद्भूतरूपं नयनस्य गोचरो द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये। विभागसंयोगपरापरत्वे स्नेहद्रवत्वं परिमाणयुक्तम्। क्रियां जातिं योग्यवृत्तिं समवायञ्च तादृशम्। गृह्णाति चक्षुः, सम्बन्धादालोकोद्भूतरूपयोः”। २नेत्रप्रचारस्थाने च “गुरोस्तु चक्षुर्विषये न यथेष्टासनो भवेत्” मनुः।

**चक्षुर्हन्** त्रि० चक्षुषा हन्ति हन–क्विप् ३त०। दृष्टिमात्रेण घातिनि “सर्पस्पर्शसमाः केचित्तथान्ये मकरस्पृशः। विभाव्य घातिनः केचित्तथा चक्षुर्हणोऽपरे” भा०आनु० ३५अ०। “त्वां ते चक्षुर्हणं प्राप्य दग्धा घोरेण चक्षुषा” भा०भी० १२२अ०।

**चक्षुष्मत्** त्रि० प्रशस्तं चक्षुरस्त्यस्य मतुप्। प्रशस्तनेत्रयुक्ते “चक्षुष्मत्ता तु शास्त्रेण सूक्ष्मकार्य्यार्थदर्शिना” रघुः।

**चक्षुष्य** त्रि० चक्षुषे हितः यत्। १चक्षुर्हिते २प्रियदर्शने जटा०। ३केतकवृक्षे ४पुण्डरीकवृक्षे पु० मेदि० ५शोभाञ्जनवृक्षे पु० राजनि० ६रसाञ्जने हेमच०। ७सौवीराञ्जने ८खर्परीतुत्थे ९प्रपौण्डरीके च न० राजनि०। “शीतेन शिरसः स्नानं चक्षुष्यमिति निर्द्दिशेत्” सुश्रु०। “चक्षुष्यः श्रुतो भवति य एवं वेद” छा० उ०। चक्षुषि भवः शरीरावयवत्वात् यत्। १०नेत्रजाते त्रि०। “चक्षुष्यः खलु महतां परैरलङ्घ्यः” माघः। “चक्षुष्यः अक्षिजः प्रियश्च। “प्रियेऽक्षिजे तु चक्षुष्य” इति विश्वः” मल्लि०।

**चक्षुस्** न० चक्ष–धातूनामनेकार्थत्वात् दर्शने करणे उसि। १नेत्रे तच्च चाक्षुषज्ञानसाधनमिन्द्रियभेदः अक्षिशब्दे ४५ पृ० दृश्यम् तस्य तैजसत्वं सुक्ता० समर्थितं यथा “चक्षुस्तैजसं परकीयस्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात् प्रदीपवत् प्रदीपस्य स्वीयस्पर्शव्यञ्जकत्वादाद्यं परकीयेति वटादेः स्वीयरूपव्यञ्जकत्वात् व्यभिचारवारणाय द्वितीयं परकीयेति अथवा प्रभायादृष्टान्तत्वसम्भवादाद्यं परकीयं न देयम्” चक्षुःसन्निकर्षे नयात्ववारणाय द्रव्यत्वे सतीति वाच्यम्”। चक्षुषोऽधिष्ठातृदेवः

सूर्यः। "दिग्वातार्कप्रचेतोऽश्व्यादि" शा॰ति॰उक्तेः। २तेजसि च। सूर्यश्चक्षुषे" ताण्ड्य॰ब्रा॰। चक्षुषे तेजसे" भा॰।

**चक्षुष्या** स्त्री चक्षुषे हिता यत्। १सुभगायां स्त्रियां २कुलत्थिकायां मेदि॰। ३अजशृङ्ग्याम् ४वनकुलत्थिकायाञ्च राजनि॰।

**चक्षूराग** पु॰ चक्षुषोरागः रक्तता। १नेत्रारुणतायां चक्षुषः तदाकर्षकः रागः अनुरागः। २नेत्राकर्षके अनुरागे "चक्षूरागः कोकिलेषु (न परकलत्रेषु)" काद॰।

**चक्षूरोग** पु॰ ६त॰। नेत्ररोगे नेत्रावयवविभागः सुश्रुतोक्तः अक्षिशब्दे ४५ पृ॰दर्शितः। तत्र निदानादि सुश्रुते उक्तं "उष्णाभितप्तस्य जलप्रवेशाद्दूरेक्षणात् स्वप्नविपर्य्ययाच्च। प्रसक्तसंरोदनशोककोपक्लेशाभिघातादतिमैथुनाच्च। शुक्तारनालाम्लकुलत्थमाषनिषेवणाद्वेगविनिग्रहाच्च। स्वेदादृजोधूमनिषेवणाच्च छर्देर्विघातादृमनातियोगात्। वाष्पग्रहात् सूक्ष्मनिरीक्षणाच्च नेत्रे विकारान् जनयन्ति दोषाः। वाताद्दश तथा१० पित्तात् कफाच्चैव त्रयोदश। रक्तात् षोडश विज्ञेयाः सर्वजाः पञ्चविंशतिः। तथा बाह्यौ पुनर्द्वौ च रोगाः षट्सप्ततिः स्मृताः। हताधिमन्थोऽनिमिषो दृष्टिर्गम्भीरिका च या। यच्च वातहतं वर्त्म न ते सिध्यन्ति वातजाः। याप्योऽथ तन्मयः काचः साध्याः स्युः सान्यमारुताः। शुष्काक्षिपाकाधीमन्थस्यन्दमारुतपर्य्ययाः। असाध्योह्रस्वजात्यो यो जलस्रावश्च पैत्तिकः। परिम्लायी च नीलश्च याप्यः काचोऽथ तन्मयः। अभिष्यन्दोऽधिमन्थोऽम्लाध्युषितं शुक्तिकाह्वया। दृष्टिः पित्तविदग्धा च पोथक्यो लगणश्च यः। असाध्यः कफजस्रावो याप्यः काचोऽथ तन्मयः। अभिष्यन्दोऽधिमन्थश्च बलासग्रथितञ्च यत्। दृष्टिः श्लेष्मविदग्धा च पोथक्यो लगणश्च यः। क्रिमिग्रन्थिपरिक्लिन्नवर्त्मशुक्लार्म्मपिष्टकाः। श्लेष्मोपनाहः साध्यास्तु कथिताः श्लेष्मजेषु तु। रक्तस्रावोऽजकाजातं शोणितार्शोऽवलम्बितम्। शुक्रं न साध्यं काचश्च याप्यस्तज्जः प्रकीर्त्तितः। मन्थस्यन्दौ क्लिष्टवर्त्म हर्षोत्पातौ तथैव च। सिराजावञ्जनाख्या च सिराजालञ्च यत् स्मृतम्। पर्वण्यथाव्रणं शुक्रं शोणितार्म्मार्ज्जुनश्च यः। एते साध्या विकारेषु रक्तजेषु भवन्ति हि। पूयस्रावो नाकुलान्ध्यमक्षिपाकात्ययोऽलजी। असाध्याः सर्वजा याप्याः काचः कोपश्च पक्ष्मणः। वर्त्मावबन्धो यो व्याधिः सिरासु पिडका च या। प्रस्तार्य्यर्माधिमांसार्मस्नाय्वर्मोत्सङ्गिनी च या। पूयालसश्चार्बुदञ्च श्यावकर्दमवर्त्मनी। तथार्शोवर्त्म शुक्रार्मः शर्करावर्त्म यच्च वै। सशोफश्चाप्यशोफश्च पाको बहलवर्त्म च। अक्लिन्नवर्त्म कुम्भीका विसवर्त्म च सिध्यति। सनिमित्तोऽनिमित्तश्च द्वावसाध्यौ तु बाह्यजौ। षट्सप्ततिविकाराणामेषा संग्रहकीर्त्तना। नव सन्ध्याश्रयास्तेषु वर्त्मजास्त्वेकविंशतिः। शुक्रभागे दशैकश्च चत्वारः कृष्णभागजाः। सर्वाश्रयाः सप्तदश दृष्टिजा द्वादशैव तु। बाह्यजौ द्वौ समाख्यातौ रोगौ परमदारुणौ। भूय एतान् प्रवक्ष्यामि सङ्ख्यारूपचिकित्सितैः"।

"अथातः सन्धिगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः। पूयालसः१ सोपनाहः२ स्रावाः ३।४।५।६ पर्वणिकालजी ७।८। क्रिमिग्रन्थिश्च९ विज्ञेया रोगाः सन्धिगता नव। पक्कः शोफः सन्धिजः संस्रवेद्यः सान्द्रं पूयं पूति पूयालसः१ सः। ग्रन्थिर्नाल्पो दृष्टिसन्धावपाकः कण्डूप्रायो नीरुजस्तूपनाहः२। गत्वा सन्धीनश्रुमार्गेण दोषाः कुर्य्युः स्रावान् रुग्विहीनान् स्वलिङ्गान्। तान् वै स्रावान् नेत्रनाडीमथैके तस्या लिङ्गं कीर्त्तयिष्ये चतुर्धा। पाकः सन्धौ संस्रवेद्यश्च पूयं पूयास्रावो३ नैकरूपः प्रदिष्टः। श्वेतं सान्द्रं पिच्छिलं यः स्रवेच्च श्लेष्मास्रावो नीरुजः स प्रदिष्टः। रक्तास्रावः३ शोणितोत्थः सरक्तं कोष्णं नाल्पं संस्रवेन्नातिसान्द्रम्। पीताभासं नीलमुष्णं जलाभं पित्तस्रावं४ संस्रवेत् सन्धिमध्यात्। ताम्रा तन्वी दाहशूलोपपन्ना रक्ताज्ज्ञेया पर्वणी७ वृत्तशोफा जाता सन्धौ कृष्णशुक्ले ऽलजी८ स्यात्तस्मिन्नेवाख्यापिता पूर्वलिङ्गैः। क्रिमिग्रन्थिर्वर्त्मनः पक्ष्मणश्च कण्डूं कुर्य्युः क्रिमयः९ सन्धिजाताः। नानारूपा वर्त्मशुक्लस्य सन्धौ चरन्तोऽन्तर्नयनं दूषयन्ति।" "अथातोवर्त्मगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः। पृथग्दोषाः समस्ताश्च यदा वर्त्मव्यपाश्रयाः। सिरा व्याप्यावतिष्ठन्ते वर्त्मस्वधिकमूर्च्छिताः। विवर्द्ध्य मांसं रक्तञ्च तदा वर्त्मव्यपाश्रयान्। विकारान् जनयन्त्याशु नामतस्तान्निबोधत। उत्सङ्गिन्यथ१ कुम्भीका२ पोथक्यो३ वर्त्मशर्करा४। तथार्शोवर्त्म५ शुष्कार्शः६ स्तथैवाञ्जननामिका७। बहलवर्त्म८ यच्चापि व्याधिर्वर्त्मावबन्धकः९। क्लिष्टकर्दमवर्त्मा(ख्यौ)१० श्याववर्त्म११ तथैव च। प्रक्लिन्न१२ मपरि-

क्लिन्नं१३ वर्त्म१४ वातहतं१५न्तु यत्। अर्बुदं१६ निमिषः१७श्चापि शोणितार्शः१८श्च यत् स्मृतम्। लगणो१९ विसनामा२० च पक्ष्मकोपः२१स्तथैव च। एकविंशतिरित्येते विकारा वर्त्मसंश्रयाः। नामभिस्ते समुद्दिष्टा लक्षणैस्तान् प्रवक्ष्महे। पिडकाभ्यन्तरमुखी बाह्याधोवर्त्मसंश्रया। विज्ञेयोत्सङ्गिनी१ नाम तद्रूपपिडकान्विता। कुम्भीकबीजप्रतिमाः पिडकाः पक्ष्मवर्त्मनोः। आध्मायन्ते तु भिन्ना याः कुम्भीकपिडकास्तु ताः२। कण्डूस्रावान्विता गुर्व्यो रक्तसर्षपसन्निभाः। पिडकाश्च रुजावत्यः पोथक्य३ इति संज्ञिताः। पिडकाभिः सुसूक्ष्माभिर्घनाभिरभिसंवृता। पिडका या खरा स्थूला सा ज्ञेया वर्त्मशर्करा४। सूक्ष्माः खराश्च वर्त्मस्थास्तदर्शोवर्त्म५ कीर्त्यते। दीर्घोऽङ्कुरः खरः स्तब्धो दारुणो वर्त्मसम्भवः। व्याधिरेष समाख्यातः शुष्कार्शः६ इति संज्ञितः। दाहतोदवती ताम्रा पिडका वर्त्मसम्भवा। मृद्वी मन्दरुजा सूक्ष्मा ज्ञेया साऽञ्जननामिका७। वर्त्मोपचीयते यस्य पिडकाभिः समन्ततः। सवर्णाभिः समाभिश्च विद्याद्बहलवर्त्म८ तत्। कण्डूमताल्पतोदेन वर्त्मशोफेन यो नरः। न समं छादयेदक्षि भवेद्बन्धः९ स वर्त्मनः। मृद्वल्पवेदनं ताम्रं यद्वर्त्म सममेव च। अकस्माच्च भवेद्रक्तं क्लिष्टवर्त्म१० तदादिशेत्। क्लिष्टं पुनः पित्तयुक्तं विदहेच्छोणितं यदा। तदा क्लिन्नत्वमापन्नमुच्यते वर्त्मकर्दमम्११। यद्वर्त्म बाह्यतोऽन्तश्च श्यावं शूनं सवेदनम्। दाहकण्डूपरिक्लेदि श्याववर्त्मेति१२ तन्मतम्। अरुजं बाह्यतः शूनमन्तः क्लिन्नं स्रवत्यपि। कण्डूनिस्तोदभूयिष्ठं क्लिन्नवर्त्म१३ तदुच्यते। यस्य धौतानि धौतानि सम्बध्यन्ते पुनः पुनः। वर्त्मान्यपरिपक्वानि विद्यादक्लिन्नवर्त्म१४ तत्। विमुक्तसन्धिनिश्चेष्टं वर्त्म यस्य निमील्यते। एतद्वातहतं१५ विद्यात् सरुजं यदि वाऽरुजम्। वर्त्मान्तरस्थं विषमं ग्रन्थिभूतमवेदनम्। विज्ञेयमर्बुदं१६ पुंसां सरक्तमवलम्बितम्। निमेषणीः सिरा वायुः प्रविष्टो वर्त्मसंश्रयाः। चालयेदतिवर्त्मानि निमेषः१७ स गदो मतः। छिन्नाश्छिन्ना विवर्द्धन्ते वर्त्मस्था मृदवोऽङ्कुराः। दाहकण्डूरुजोपेतास्तेऽर्शः शोणितसम्भवाः१८। अपाकः कठिनः स्थूलो ग्रन्थिर्वर्त्मभवोऽरुजः। सकण्डूः पिच्छिलः कोलप्रमाणो लगणस्तु१९ सः। शूनं यद्वर्त्म बहुभिः सूक्ष्मैश्छिद्रैः समन्वितम्। विसमन्तर्जल इव विसवर्त्मेति२०तन्मतम्। पक्ष्माशयगता दोषाः तीक्ष्णाग्राणि खराणि च। निर्वर्त्तयन्ति पक्ष्माणि तैर्घृष्टञ्चाक्षि दूयते। उत्पाटितैः पुनः शान्तिः पक्ष्मभिश्चोपजायते। वातातपानलद्वेषी पक्ष्मकोपः२१ स उच्यते।"

शुक्लभागरोगभेदास्तु११ अर्म्मन् शब्दे २७९पृ० सुश्रुतोक्ता दर्शिताः तत्रत्यं ततः शेषन्तु यथा

"स्नाय्वर्मेत्यभिपठितं खरं प्रपाण्डु५। श्यावाः स्युः पिशितनिभास्तु बिन्दवो ये शुक्तिर्वै सितनयने स शुक्तिसंज्ञः६। एको यः शशरुधिरोपमः सुबिन्दुः शुक्लस्थो भवति तमर्जुनं७ वदन्ति। उत्सन्नः सलिलनिभोऽथ पिष्टशुक्लो बिन्दुर्यः स भवति पिष्टकः८ सुवृत्तः। जालाभः कठिनसिरो महान् स रक्तः सन्तानः स्मृत इह जालसंज्ञित९स्तु। शुक्लस्थाः सितपिडकाः सिरावृता यास्ता विद्यादसितसमीपजाः सिराजाः१०। कांस्याभो भवति सिरावृतः सिते यो बिन्दुर्वा स तु विरजो बलासकाख्यः११।"

कृष्णभागतरोगास्तु तत्रोक्ताः४ कृष्णगतशब्दे २२१२पृ० दर्शिताः। सर्वगतरोगास्तु१५ तत्रोक्ता यथा

"अथातः सर्वगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः। स्यन्दास्तु४ चत्वार इहोपदिष्टास्तावन्त एवेह तथाधिमन्थाः४। शोफान्वितो१०ऽशोफयुत१७श्च पाकावित्येवमेते दश सम्प्रदिष्टाः। हताधिमन्थो११ऽनिलपर्य्यय१२श्च शुष्काक्षिपाको१३ऽन्यत एव वातः१४। दृष्टिस्तथाम्लाध्युषिता१५ सिराणामुत्पातहर्षावपि१६ सर्वभागाः। प्रायेण सर्वे नयनामयास्ते भवन्त्यभिष्यन्दनिमित्तमूलाः। तस्मादभिष्यन्दमुदीर्य्यमाणमुपाचरेदाशु हिताय धीमान्। निस्तोदनं स्तम्भनरोमहर्षसङ्घर्षपारुष्यशिरोऽभितापाः। विशुष्कभावः शिशिराश्रुता च वाताभिपन्ने नयने भवन्ति१। दाहप्रपाकौ शिशिराभिनन्दा धूमायनं बाष्पसमुच्छ्रयश्च। उष्णाश्रुता पीतकनेत्रता च पित्ताभिपन्ने नयने भवन्ति२। उष्णाभिनन्दा गुरुताक्षिशोफः कण्डूपदेहौ सितताऽतिशैत्यम्। स्रावो मुहुः पिच्छिल एव चापि कफाभिपन्ने नयने भवन्ति३। ताम्राश्रुता लोहितनेत्रता च राज्यः समन्तादतिलोहिताश्च। पित्तस्य लिङ्गानि च यानि तानि रक्ताभिपन्ने नयने भवन्ति४। वृद्धैरेतैरभिष्यन्दैर्नराणामक्रियावताम्। तावन्तस्त्वधिमन्थाः स्युर्नयने तीव्रवेदनाः। उत्पाट्यत इवात्यर्थं नेत्रं निर्मथ्यते तथा। शिरसोऽर्द्धन्तु तं विद्यादधिमन्थं स्वलक्षणैः। नेत्रमुत्पाट्यत इव मथ्यतेऽरणिवच्च यत्। सङ्घर्षतोदनिर्भेद-

मांससंरब्धमाविलम्। कुञ्चनास्फोटनाध्मानवेपथुव्यथनैर्युतम्। शिरसोऽर्द्धञ्च येन स्यादधिमन्थः स मारुतात्५। रक्तराजिचितं स्रावि वह्निनेवावदह्यते। यकृत्पिण्डोपमं दाहि क्षारेणाक्तमिव क्षतम्। प्रपक्वोच्छूनवर्त्मान्तमस्वेदं पीतदर्शनम्। मूर्च्छाशिरोदाहयुतं पित्तेनाक्ष्यधिमन्थितम्६। शोफवन्नातिसंरब्धं स्रावकण्डूसमन्वितम्। शैत्यगौरवपैच्छिल्यदूषिकाहर्षणान्वितम्। रूपं पश्यति दुःखेन पांशुपूर्णमिवाविलम्। नासाध्मानशिरोदुःखयुतं श्लेष्माधिमन्थितम्७। बन्धुजीवप्रतीकाशं ताम्यति स्पर्शनाक्षमम्। रक्तास्रावं सनिस्तोदं पश्यत्यग्निनिभा दिशः। रक्तमग्नारिष्टवच्च कृष्णभागश्च लक्ष्यते। यद्दीप्तं रक्तपर्यन्तं तद्रक्तेनाधिमन्थितम्८। हन्याद्दृष्टिं सप्तरात्रात्कफोत्थोऽधीमन्थोऽसृक्‌सम्भवः पञ्चरात्रात्। षड्रात्राद्वा मारुतोत्थो निहन्यान्मिथ्याचारात्पैत्तिकः सद्य एव। कण्डूपदेहाश्रुयुतः पक्वोडुम्बरसन्निभः। दाहसंहर्षताम्रत्वशोफनिस्तोदगौरवैः। जुष्टो मुहुः सवेदास्रुसस्रावशीतास्वुपिच्छिलम्। संरम्भी पच्यते यच्च नेत्रपाकः स शोफजः९॥ शोफहीनानि लिङ्गानि नेत्रपाके त्वशोफजे१०। अन्तःशिराणां श्वसनः स्थितो दृष्टिं प्रतिक्षिपन्॥ हताधिमन्थं११ जनयेत्तमसाध्यं विदुर्बुधाः। पक्ष्मद्वयाक्षिभ्रुवमाश्रितस्तु यत्रानिलः सञ्चरति प्रदुष्टः। पर्यायशश्चापि रुजः करोति तं वातपर्याय-१२मुदाहरन्ति॥ यत्कूणितं दारुणरूक्षवर्त्म विलोकने चाविलदर्शनं यत्। सुदारुणं यत्प्रतिबोधने च शुष्काक्षिपाकोपहतं१३ तदक्षि॥ यस्यावटूकर्णशिरोहनुस्थो मन्यागतो वाप्यनिलोऽन्यतो वा। कुर्य्याद्रुजोऽतिभ्रुवि लोचने वा तमन्यतोवात१४मुदाहरन्ति॥ अम्लेन भुक्तेन विदाहिना वा सञ्छाद्यते सर्वत एव नेत्रम्। शोफान्वितं लोहितकं सनीलैरेताहगम्लाध्युषितं१५ वदन्ति॥ अवेदना वापि सवेदना वा यस्याक्षिराज्यो हि भवन्ति ताम्राः। मुहुर्विरज्यन्ति च ताः समन्ताद्व्याधिः सिरोत्पात१६ इति प्रदिष्टः॥ मोहात्सिरोत्पात उपेक्षितस्तु जायेत रोगस्तु सिराप्रहर्षः१७। ताम्राच्छमस्रं स्रवति प्रगाढं तथा न शक्नोत्यभिवीक्षितुञ्च॥ अथातो दृष्टिगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः॥ मसूरदलमात्रान्तु पञ्चभूतप्रसादजाम्। खद्योतविस्फुलिङ्गाभां सिद्धां तेजोभिरव्ययैः॥ आवृतां पटलेनाक्ष्णोर्बाह्येन विवराकृतिम्। शीतसात्म्यां नृणां दृष्टिमाहुर्नयनचिन्तकाः॥

रोगांस्तदाश्रयान् घोरान् षट् च षट् च प्रचक्ष्महे। पटलानुप्रविष्टस्य तिमिरस्य च लक्षणम्॥ सिराभिरभिसृत्य विगुणोऽभ्यन्तरे भृशम्। प्रथमे पटले दोषो यस्य दृष्टौ व्यवस्थितः॥ अव्यक्तानि स रूपाणि सर्वाण्येव प्रपश्यति। दृष्टिर्भृशं विह्वलति द्वितीयं पटलं गते॥ मक्षिकान् मशकान् केशान् जालकानि च पश्यति। मण्डलानि पताकाश्च मरीचीः कुण्डलानि च॥ परिप्लवांश्च विविधान् वर्षमभ्रं तमांसि वा। दूरस्थान्यपि रूपाणि मन्यते च समीपतः॥ समीपस्थानि दूरे च दृष्टेर्गोचरविभ्रमात्। यत्नवानपि चात्यर्थं सूचीपाशं न पश्यति॥ ऊर्द्ध्वं पश्यति नाधस्तात्तृतीयं पटलं गते। महान्त्यपि च रूपाणि च्छादितानीव वाससा॥ कर्णनासाक्षियुक्तानि विपरीतानि वीक्षते। यथादोषञ्च रज्येत दृष्टिर्दोषे बलीयसि॥ अधःस्थिते समीपस्थं दूरस्थञ्चोपरिस्थिते। पार्श्वस्थिते तथा दोषे पार्श्वस्थानि न पश्यति॥ समन्ततः स्थिते दोषे सङ्कुलानीव पश्यति। दृष्टिमध्यगते दोषे स एकं मन्यते द्विधा॥ द्विधास्थिते त्रिधा पश्येद्बहुधा चानवस्थिते। तिमिराख्यः स वै दोषश्चतुर्थपटलङ्गतः॥ रुणद्धि सर्वतो दृष्टिं लिङ्गनाशः स उच्यते। तस्मिन्नपि तमोभूते नातिरूढे महागदे॥ चन्द्रादित्यौ सनक्षत्रावन्तरिक्षे च विद्युतः। निर्मलानि च तेजांसि भ्राजिष्णूनि च पश्यति॥ स एव लिङ्गनाशस्तु नीलिकाकाचसंज्ञितः। तत्र वातेन चारूपाणि भ्रमन्तीव स पश्यति॥ आविलान्यरुणाभानि व्याविद्धानि च मानवः। पित्तेनादित्यखद्योतशक्रचापतडिद्गुणान्॥ शिखिबर्हविचित्राणि नीलकृष्णानि पश्यति। गौरचामरगौराणि श्वेताभ्रप्रतिमानि च॥ पश्येद्‌सूक्ष्माण्यत्यर्थं व्यभ्रे चैवाभ्रसंप्लवम्। सलिलप्लावितानीव परिजाड्यानि मानवः॥ तथा रक्तेन रक्तानि तमांसि विविधानि च। कफेन पश्येद्रूपाणि स्निग्धानि च सितानि च॥ हरितश्यावकृष्णानि धूमधूम्राणि चेक्षते॥ सन्निपातेन चित्राणि विप्लुतानीव पश्यति। बहुधा वा द्विधा वापि सर्वाण्येव समन्ततः॥ हीनाधिकाङ्गान्यथ वा ज्योतींष्यपि च पश्यति॥ पित्तं कुर्य्यात् परिम्लायि मूर्च्छितं रक्ततेजसा। पीता दिशस्तथोद्यन्तमादित्यमिव पश्यति॥ विकीर्य्यमाणान् खद्योतैर्वृक्षांस्तेजोभिरेव च। वक्ष्यामि षड्विधैरागैर्लिङ्गनाशमतः परम्॥ रागोऽरुणो मारुतजः प्रदिष्टः पित्तात्

परिम्लाय्यथवापि नीलः। कफात् सितः शोणितजस्तु रक्तः समस्तदोषोऽथ विचित्ररूपः॥ रक्तजं मण्डलं दृष्टौ स्थूलकाचारुणप्रभम्। परिम्लायिनि रोगे स्यात्म्लाय्या-नीलञ्च मण्डलम्॥ दोषक्षयात् कदाचित् स्यात्स्वयं तत्र च दर्शनम्॥ अरुणं मण्डलं वाताच्चञ्चलं परुषन्तथा। पित्तान्मण्डलमानीलं कांस्याभं पीतमेव वा॥ श्लेष्मणा बहलं स्निग्धं शङ्खकुन्देन्दुपाण्डुरम्। चलत्पद्मपलाशस्थः शुक्लबिन्दुरिवाम्भसः॥ मृद्यमाने च नयने मण्डलं तद्विसर्पति। प्रवालपद्मपत्राभं मण्डलं शोणितात्मकम्॥ दृष्टिरागो भवेच्चित्रो लिङ्गनाशे त्रिदोषजे। यथास्वदोष-लिङ्गानि सर्वेष्वेव भवन्ति हि॥ षड् लिङ्गनाशाःषडिमे च रोगा दृष्ट्याश्रयाः षट् च षडेव च स्युः। तथा नरः पित्तविदग्धदृष्टिः१ कफेन चान्यः२स्त्वथ धूमदर्शी३॥ यो ह्रस्वजात्यो४ नकुलान्ध्यता५ च गम्भीरसंज्ञा६ च तथैव दृष्टिः॥ पित्तेन दुष्टेन गतेन दृष्टिं पीता भवेद्यस्य नरस्य दृष्टिः। पीतानि रूपाणि च मन्यते यः स मानवः पित्तविदग्धदृष्टिः१॥ प्राप्ते तृतीयं पटलन्तु दोषे दिवा न पश्येन्निशि वीक्षते च। तथा नरः श्लेष्म-विदग्धदृष्टि२ स्तान्येव शुक्लानि हि मन्यते तु॥ त्रिषु स्थितोऽल्पः पटलेषु दोषो नक्तान्ध्यमापादयति प्रसह्य। दिवा स सूर्य्यानुगृहीतदृष्टिर्वीक्षेत रूपाणि कफाल्प-भावात्॥ शोकज्वरायासशिरोभितापैरभ्याहता यस्य नरस्य दृष्टिः। सधूमकान् पश्यति सर्वभावांस्तं धूम-दर्शीति३ वदन्ति रोगम्॥ स ह्रस्वजात्यो४ दिवसेषु कृच्छ्रा-द्ध्रस्वानि रूपाणि च यो न पश्येत्। रात्रौ स शीतानुगृहीतदृष्टिः पित्ताल्पभावादपि तानि पश्येत्॥ विद्योतते येन नरस्य दृष्टिर्दोषाभिपन्ना नकुलस्य यद्वत्। चित्राणि रूपाणि दिवा स पश्येत् स वै विकारो नकुलान्ध्यसंज्ञः५। दृष्टिर्विरूपा श्वसनोपसृष्टा सङ्कुच्यते ऽभ्यन्तरतश्च याति॥ रुजावगाढा च तमक्षिरोगं गम्भीरिकेति६ प्रवदन्ति तज्ज्ञाः। बाह्यौ पुनर्द्वाविह सम्प्रदिष्टौ निमित्ततश्चाप्यनिमित्ततश्च॥ निमित्ततस्तत्र शिरोऽभितापाज्ज्ञेयस्त्वभिष्यन्दनिदर्शनैश्च। सुरर्षि-गन्धर्वमहोरगाणां सन्दर्शनेनापि च भास्कराणाम्॥ हन्येत दृष्टिर्मनुजस्य यस्य स लिङ्गनाशस्त्वनिमित्तसंज्ञः। तत्राक्षि विस्पष्टमिवावभाति वैदूर्य्यवर्णा विमला च दृष्टिः। विदीर्य्यते सीदति हीयते वा नृणामभीघातहता तु दृष्टिः। इत्येते नयनगता महाविकाराः सङ्ख्याताः पृथ-गिह षट् च सप्ततिश्च। एतेषां पृथगिह विस्तरेण सर्वं वक्ष्येऽहं तदनु चिकित्सितञ्च तावत्"॥ [चचाच।

**चच** धातने स्वादि॰पर॰सक॰सेट्। चच्नोति अचचीत् अचाचीत्

**चञ्चुर** पु॰ स्त्री॰ चकि–भ्रान्तौ कर्त्तृकरणादौ–उरच्। १रथे २हस्ते च मेदि॰। ३यानमात्रे न॰ त्रिका॰।

**चङ्क्रमण** न॰ क्रम+यङ्लुट्–यङोलुक्। १अतिवेगेन गमने २पुनः पुनर्भ्रमणे च। तस्य गुणमाह सुश्रुतः "यत्तु चङ्क्रमणं नातिदेहपीडाकरं भवेत्। तदायुर्बलमेधाग्नि प्रदमिन्द्रियबोधनम्"। "श्रमानिलहरं वृष्यं पुष्टिनि-द्राधृतिप्रदम्" "अनारोग्यमनायुष्यं चक्षुषोरुपघातकृत्। पादाभ्यामनुपानद्भ्यां सदा चङ्क्रमणं नृणाम्" इति च सुश्रुतः। रोगभेदे तन्निषेधः सुश्रुते दर्शितो यथा अर्शश्चिकित्सिते "वर्ज्जयेदित्यनुद्वृत्तो अश्वादियानं व्यायामं मैथुनं वेगनिग्रहम्। अत्यशनं चङ्क्रमणमुप-वासं गुरूणि च"। "स्थानासनं चङ्क्रमणं यान-यानाभिभाषणम्। व्रणवान्न निषेवेत"। "तत्र स्निग्ध स्विन्नवान्तविरिक्तास्थापितानुवासितसिराविद्धैः परि-परिहर्त्तव्यानि क्रोधायासमैथुनदिवास्वप्नवाग्व्यायाम यानोत्थानासनचङ्क्रमणशीतवातातपविरुद्धासात्म्याजीर्णा-न्याबललाभात् मासमेके मन्यन्ते"।

**चङ्ग** त्रि॰ चीयते ची॰ बा॰ ड चमङ्गं यस्य शक॰। (चाङ्गा) ख्याते १सुस्थे २शोभने ३दक्षे च मेदि॰।

**चचर** त्रि॰ चर–अच् बा॰ द्वित्वम्। चरणशीले "पतरेव चचरा चन्द्र निर्णिक्" ऋ॰ १०।१०६।८। चचरा संचन्तौ भा॰ औत्स्थाने आच्।

**चचेण्डा** स्त्री चम् उपचीयमानं प्रकारे द्वित्वम् उपचीय-मान प्रकारेण अण्डमिव फलमस्य पृषो॰। (टिचिड़ा) ख्याते दृहत्फले पटोल सदृशे लताभेदे वैद्य॰।

**चञ्च** पु॰ चन्च–अच्। पञ्चाङ्गुले मानभेदे शब्दार्थचि॰।

**चञ्चत्पुट** पु॰ "ताले चञ्चत्पुटे ज्ञेयं गुरुद्वन्द्वं लघुप्लुतम्" संगीतदा॰ उक्ते तालभेदे।

**चञ्चरिन्** पुंस्त्री॰ चर–यङोलुक् बा॰ उत्त्वाभावः णिनि। भ्रमरे। "करी वरीभरीति चेत् दिशं सरीसरीति-काम्। स्थिरी चरीकरीति चेत् न चञ्चरीति चञ्चरी" उद्भटः" स्त्रियां ङीप्। [भ्रमरे त्रिका॰।

**चञ्चरीक** पुंस्त्री॰ चर–फर्फरीकादि॰ ईकन् नि॰ द्वित्वम्।

**चञ्चरीकावली** स्त्री "यमौ रौ विख्याता चञ्चरीकावली गः" वृ॰ र॰ टी॰ उक्ते त्रयोदशाक्षरपादके वर्णवृत्तभेदे।

**चञ्चल** पु॰ चन्च–अलच् चञ्चं गतिं लाति ला–क वा। १कामुके, २वायौ शब्दार्थ॰। ३चपले, ४अस्थिरे च त्रि॰ अमरः। ५विद्युति, ६लक्ष्म्याञ्च स्त्री मेदि॰। पिप्पल्यां शब्दच॰। "चञ्चलचूडं चपलैर्वत्सकुलैः केलिपरम्"। (क्षणम्) छन्दोम॰। "नागजिह्वेव चञ्चला" भा॰ क॰ ७७अ॰।

**चञ्चा** स्त्री चन्च–अच्। नलनिर्म्मिते कटभेदे (चाँच) मेदि॰। चञ्चेवेति इवार्थे कन् "लुब् मनुष्ये" इति तस्य लुप्। तृणमयपुरुषे लुपिव्यक्तिवचनत्वात् स्त्री।

**चञ्चु** पु॰ चन्च–उन्। १एरण्डवृक्षे मेदि॰ २मृगे शब्दर॰। ३रक्तैरण्डे ४क्षुद्रचञ्चुवृक्षे राजनि॰। ५नाडीचशाके शब्दार्थचि॰ (चेचुनाड़ी) ख्याते ६पत्रशाकभेदे स्त्री भावप्र॰। "चिञ्चुश्चञ्चुश्च चञ्चुकी च दीर्घपत्रा सतिक्तिका। चञ्चुः शीता सरा रुच्या स्वाद्वी दोषत्रयापहा। धातुपुष्टिकरी बल्या मेध्या पिच्छिलिका स्मृता"। ७पक्षिणामोष्ठे स्त्री वा जङ्। "खगचञ्चुपुटद्रोणीपूरणे तव कः श्रमः" चातका॰। "करयन्त्रणदन्तुरान्तरे व्यलिखच्चञ्चुपुटेन पक्षती" "तनुदेनतुकबन्धुपविद्धतः पटुचञ्चुपुटकोटिकुट्टनैः" इति च नैष॰। स्वार्थे क। पक्षिणामोष्ठे स्त्री।

**चञ्चुपत्र** पु॰ चञ्चुरिव पत्रमस्य। चञ्चुशाके राजनि॰।

**चञ्चुभृत्** पुंस्त्री॰ चञ्चुं बिभर्त्ति भृ–क्विप्। पक्षिणि त्रिका॰

**चञ्चुमत्** पुंस्त्री चञ्चुरस्त्यस्य मतुप्। पक्षिणि हारा॰ स्त्रियां ङीप्।

**चञ्चुर** पु॰ चन्च–उरच्। १पत्रशाकभेदे चञ्चुनामके शाके राजनि॰। २दक्षे त्रि॰ "पुराणः पुण्यचञ्चुरः" भा॰ आ॰ ९०४७श्लो॰। "विज्ञाताखिलशास्त्रार्थो लौकिकाचारचञ्चुरः" काशी॰ १०अ॰।

**च(चु)ञ्चुल** पु॰ विश्वामित्रपुत्रभेदे। "विश्वामित्रस्य च सुता इत्युपक्रमे "उदुम्बराञ्जभिण्णातास्तारकायणच(चु)ञ्चुलाः" हरि॰ २७अ॰। [शाकभेदे।

**चञ्चुशाक** न॰ चञ्चुनामकं चञ्चुसदृशं वा शाकमस्य।

**चञ्चुसूचि** पुंस्त्री॰ चञ्चुः सूचिरिव यस्य। कारण्डवपक्षिणि स्त्रीत्वपक्षे वा ङीप्। वा कप्। अत्रैव।

**चट** भेदे भ्वा॰ पर॰ सक॰ सेट्। चटति अचटीत्–अचाटीत्। चचाट। चटुः चाटुः।

**चुट** वधे भेदे च चु॰उभ॰सक॰सेट्। चाटयति ते अचीचटत् त उद्+भेदने वधे उच्चाटने स्थानान्तरायने च। "उच्चाटनीयः करतालिकानाम्" नैष॰। उच्चाटनम्।

**चटक** पुंस्त्री॰ चटति भिनत्ति धान्यादिकम् चट–क्वुन्। १कलविङ्के (चड़ुइ) अमरः जातित्वेऽपि स्त्रियामजादित्वात् टाप् न तु ङीप्। स्वार्थे क। चटककोऽप्यत्र। स्त्रियां जातित्वेऽपि टापि चिपका॰ नित्यं न अत इत्त्वम्। तन्मांसगुणादि भावप्र॰ उक्तं यथा "चटकः कलविङ्कः स्यात् कुलिङ्गः कालकण्ठकः। कुलिङ्गः शीतलः स्निग्धः स्वादुः शुक्रकफप्रदः। सन्निपातहरो ग्रामचटकश्चातिशुक्रलः"। २पिप्पलीमूले न॰ अमरटीका। ३श्यामाखगे स्त्री राजनि॰। चटका+स्वार्थे क। अतो वेत्त्वम् चटकका चटकिका" सि॰ कौ॰। चटकस्य चटकाया वा अपत्यं पुमान् अण् ऐरक्। चाटकैर चटकापत्ये पुंसि। स्त्रियान्तु अणो लुक्। चटका चटकयोः स्त्र्यपत्ये स्त्री।

**चटकामुख** न॰ चटकाया मुखमिव मुखमस्य। अस्त्रभेदे "क्षुरप्रैश्चटकामुखैः" भा॰ क॰ ४० अ॰। [हेमच॰।

**चटकाशिरस्** पु॰ चटकायाः शिर इव। पिप्पलीमूले।

**चटचटाय** चट–भेदने अच् प्रकारे द्वित्वम्। चटचटम् चटचटेत्यव्यक्तं शब्दं वा करोतिभृशा॰ च्व्यर्थे वा क्यङ् नामधातुः आत्म॰ अक॰ सेट्। चटचटायते अचटचटायिष्ट। "हुतभुक्तेन चाज्येन भृशं चटचटायते" सुश्रु॰। "चामरतिलसिद्धार्थकादीन् निरन्तरं चटचटायितान्" दशकु॰। क्विप् यङ्लोपाल्लोपौ। चटचटा तादृशशब्दकरणे "ततश्चटचटाशब्दः प्रादुरासीत् महारणे"। [हला॰।

**चटिका** स्त्री चट–बा॰इकन्। १पिप्पलीमूले २चटकायां

**चटिकाशिरस्** न॰ चटिकायाः शिर इव। पिप्पलीमूले अमरः। "सर्व्वे सान्ता अदन्ताःस्युः" इत्युक्तेः प्रयो॰ चटिकाशिरोऽप्यत्र भरतः।

**चटु** पु॰ चट–डन्। १प्रियवाक्ये, २व्रतिनामासनभेदे, ३उदरे च मेदि॰। प्रियवाक्ये न॰ संक्षि॰। "छायां निजस्त्रीचटुलालसानाम्" माघः।

**चटुल** त्रि॰ चट–उलच्। १चञ्चले, चपले हेमच॰। २विद्युति स्त्री जटाधरः। "मदेन किञ्चिच्चटुलालसानां" "आयस्तमैक्षत जनश्चटुलाग्रपादम्" चञ्चूपदष्टचटुलाहिपताकयाऽन्ये" माघः। "लासातिमात्रचटुलैः स्मरतः सुनेत्रैः" रघुः।

**चटूल्लोल** त्रि॰ चटौ उल्लोलः। १चाटुकारलोके २चञ्चले त्रिका॰ ३सुन्दरे उणादिको॰ ४चञ्चले हारा॰।

**चड** कोपे भ्वा॰आत्म॰अक॰सेट् इदित् । चण्डते अचण्डिष्ट । चचण्डे । चण्डः चण्डी [ चण्डत् त ।

**चड** कोपे चुरा॰उभ॰अक॰सेट् इदित् । चण्डयति ते अच-

**चण** शब्दे भ्वा॰पर॰सक॰सेट् । चणति अचाणीत्–अचणीत् चचाण चेणतुः ।

**चण** गतौ हिंसे च भ्वा॰पर॰सक॰ सेट् वा घटा॰ मित् । चणति अचाणीत्–अचणीत् । चचाण चेणतुः चण-यति ते–चाणयति ते ।

**चण** दाने भ्वा॰ पर॰ अक॰ सेट् घटा॰ । चणति अचणीत्-अचाणीत् । चणयति । चचाण चेणतुः । चणकः ।

**चण्** अव्य॰ चण–क्विप् । चेदर्थे अस्य णित्त्वम् । समुच्चयादौ तु अननुबन्ध एव चशब्द इति मनोरमा

**चण** पु॰ चण–अच् । चणके शस्यभेदे (छोला) राजनि॰ ।

**चणक** पु॰ चण–दाने क्वुन् । १शस्यभेदे (वुट)(छोला) अमरः २मुनिभेदे च तस्य गोत्रापत्यं गर्गा॰यञ् चाणक्यः ।"चणकः शीतलोरूक्षः पित्तरक्तकफापहः । लघुः कषायो विष्टम्भी वातलो ज्वरनाशनः । सचाङ्गारेण सम्भृष्टस्तैलभृष्टस्य तद्गुणः । आर्द्रभृष्टो बलकरो रोचनश्च प्रकीर्त्तितः । शुष्कभृष्टोऽतिरूक्षः स्याद्वातकुष्ठप्रकोपनः । स्विन्नः पित्तकफं हन्यात् सूपः क्षोभकरोऽहितः । आर्द्रोऽतिकोमलो रुच्यः रक्तपित्तहरो हिमः" । हरितार्द्रचणकव्यञ्जनन्तु । "सुहरित हरिमन्थः क्षोदभिन्नो नखाग्रैः प्रथममुदकसिक्तो वेसवारेण सिद्धः । लवणमरिचमङ्गात् तैलहिङ्गुप्रसिक्तः शिखरयति विभोक्तुर्जाठरं मन्दवह्निम् । छोलाभिधायकफलं परिभृष्य शुद्धं तप्ते घृते सुललितक्वथितोषणाभ्याम् । संसाधितम् सुरभितं शुचिरामठेन जिह्वातले विशति नित्यमतिप्रकामम्" शब्दार्थचि॰धृतवैद्यकम् ।

तस्य शाकगुणपाकादि तत्रैव दर्शितं यथा "रुच्यं चणकशाकं स्याद् दुर्जरं कफवातकृत् । अम्लं विष्टम्भजनकं पित्तनुद्दन्तशोथहृत् । सकलं चाणकं शाकमल्पतनकेण साधितम् । सहिङ्गुलवणे तप्ते भर्जितं रामठान्वितम् । नारामभावसहजाश्चणकप्रवालाः सम्मर्दिता मरिचसैन्धवशृङ्गवेरैः । संचूर्णिताः कटुकतैलयुताः सुपक्वैर्भृष्टैः सुहिङ्गुचणकैः परिदत्तवासाः ।"

**चणकरोटिका** स्त्री चणकचूर्णनिर्म्मिता रोटिका । "चाणक्या रोटिका रूक्षा श्लेष्मपित्तास्रनुत् गुरुः । विष्टम्भिनी न चक्षुष्या" शब्दार्थचि॰ धृतवैद्यकोक्ते चणकरोटिकारूपे भक्ष्यभेदे

**चणकात्मज** पु॰ ६त॰ । चाणक्ये वात्स्यायने मुनौ हेमच॰

**चणकाम्ल** न॰ चणकजातमम्लम् । चणकक्षारे तच्छाकपाकेन निष्पादिते क्षारभेदे "चणकाम्लकमत्यम्लं दीपनं दन्तहर्षणम् । लवणानुरसं रुच्यं शूलाजीर्णविबन्धनुत्" भावप्र॰ । [ शब्दार्थचि॰ ।

**चणकाम्लवारि** न॰ ६त॰ । क्षेत्रस्थचणकपत्रशिशिरजले

**चणद्रुम** पु॰ चणश्चणकइव द्रुमः । क्षुद्रगोक्षुरे राजनि॰ ।

**चणपत्री** स्त्री चणस्य चणकस्य पत्रमिव पत्रमस्याः ङीप् । रुदन्तीवृक्षे राजनि॰

**चणिका** स्त्री चणति रसं चण–दाने बा॰ क्वुन् चण इव इवार्थे कन् वा । गोदुग्धायाम् तृणभेदे राजनि॰

**चण्ड** न॰ चडि–कोपे अच् चण–दाने चमु–अदने बा॰ ड तस्य नेत्त्वम् । १तीक्ष्णे शब्दर॰ । २तिन्तिडीवृक्षे यमकिङ्करे ३दैत्यभेदे च पु॰ मेदि॰ । । "चण्डमुण्डौ महासुरौ" देवीमा॰ । ४अत्यन्तकोपने त्रि॰ अमरः ५तीव्रतायुक्ते त्रि॰शब्दर॰ । "अथैकधेनोरपराधचण्डात्" रघुः । "चण्डग्राहवतीं श्रीमान्" भा॰ आ॰ १७७अ॰ । बह्वा॰ पाठात् स्त्रियां वा ङीष् । चण्डी चण्डा । तस्य भावः तल् चण्डता स्त्री त्व चण्डत्व न॰इमनिच् चण्डिमन् पु॰ तीव्रत्वे । "भ्राम्यत्पिण्डितचण्डिमा" वीरच॰ । ततः शिवा॰ अपत्ये अण् चाण्ड तदपत्ये पुंस्त्री स्त्रियां ङीप्

**चण्डकौशिक** पु॰ १ऋषिभेदे "अथ काक्षीवतः पुत्रं गौतमस्य महात्मनः । शुश्राव तपसि श्रान्तमुदारं चण्डकौशिकम्" भा॰स॰१६अ॰ । चण्ड कौशिको वर्ण्यत्वेनाऽस्त्यत्र अच् । २स्वनामख्याते नाटकभेदे न॰ ।

**चण्डतुण्डक** पु॰ गरुडात्मजभेदे "सुवर्णचूडो नागाशी दारुणश्चण्डतुण्डकः" भा॰ उ॰ १००अ॰ गरुडात्मजोक्तौ

**चण्डनायिका** स्त्री दुर्गानायिकाभेदे । एवं चण्डवती चण्डोग्रा अपि दुर्गानायिकाभेदे ।

**चण्डबल** पु॰ वानरभेदे "बलं चण्डबलाख्यञ्च वज्रबाहुञ्च वानरम्" भा॰ व॰ २८६अ॰ ।

**चण्डभार्गव** पु॰ च्यवनवंश्ये ऋषिभेदे । "तत्र होता बभूवाथ ब्राह्मणश्चण्डभार्गवः । च्यवनस्यान्वये ख्यातोविप्रो वेदविदां वरः" भा॰ आ॰ ५३अ॰ । सर्पसत्रे होत्रायुक्तौ

**चण्डमुण्डा** स्त्री चण्डश्च मुण्डश्च घात्यत्वेनास्त्यस्याः अच् । चामुण्डायां हेमच॰ । चामुण्डाशब्दे दृश्यम् ।

**चण्डमुण्डी** स्त्री स्थानभेदे "चण्डमुण्डीमहास्थाने दण्डिनी परमेश्वरी" तन्त्र॰ ।

**चण्डरुद्रिका** स्त्री चण्डोरुद्रोवेद्यत्वेनास्त्यस्याः ठन्। विद्याभेदे शब्दरत्ना०।

**चण्डवृष्टिप्र(यात)ताप** पु० "यदिह नयुगलं ततः सप्तरेफास्तदा चण्डवृष्टिप्र(याता) पातोभवेद्दण्डकः" वृ० र० उक्ते दण्डकभेदे।

**चण्डशक्ति** पु० चण्डा शक्तिरस्य। वलिसैन्यस्थदैत्यभेदे। "शुम्भः पुचण्डशक्तिश्च कुशनेत्रः शशिध्वजः" हरि०२४अ०

**चण्डा** स्त्री चडि–अच् चन–चस वा ड तस्य नेत्त्वं वा टाप्। १दुर्गानायिकाभेदे। उग्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका। चण्डा चण्डवती चण्डनायिकाद्यति चण्डिका" देवीपु०। जिनानां २शासनदेवताभेदे हेम०। ३चोरनामगन्धद्रव्ये अमरः ४शङ्खपुष्पीद्रुमे मेदि०। ५लिङ्गिनीलतायां ६कपिकच्छाम् ७आखुपर्ण्यां ८श्वेतदूर्वायां च राजनि०। ९नदीभेदे शब्दर०। एतासांचण्डवीर्य्यत्वात् तथात्वम्। १०कोपनायां स्त्रियां च स्त्री

**चण्डांशु** पु० चण्डास्तीव्रा अंशवो यस्य। सूर्य्ये अमरः। चण्डदीधितिचण्डभानुप्रभृतयोऽप्यत्र।

**चण्डात** पु० चण्डमतति अत–अण्। करवीरे अमरः।

**चण्डातक** पु० न० चण्डां कोपनामतति अत–ण्वुल्। वरस्त्रीणामर्द्धोरुपर्य्यन्ते वस्त्रे अमरः अस्य पुंस्त्वमप्येके

**चण्डाल** पु० चडि–आलच्। १स्वनामख्याते जातिभेदे, शूद्रेण ब्राह्मण्यामुत्पादिते सङ्कीर्णवर्णे "शूद्रादायोगवः क्षत्ता चण्डालश्चाधमोमतः" मनुना वैश्यक्षत्रविप्राङ्गनासु शूद्राज्जातानां क्रमेण आयोगवादिसंज्ञा कृता। ततः जातित्वात् स्त्रियां ङीषि प्राप्ते शार्ङ्गरवा० ङीन् स्वरे भेदः। "चण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च। पतत्यज्ञानतोविप्रः ज्ञानात् साम्यन्तु गच्छति" स्मृतिः। चण्डालस्पृष्टजलस्य अपेयशब्दे २५४ पृ० तदन्नभक्षणस्य अभक्ष्यशब्दे २७४पृ०तत्स्पर्शस्य अस्पृश्यशब्दे ५७० पृ० तद्द्रव्यग्रहणस्य च निषेधः अग्राह्यशब्दे ६७ पृ० उक्तः। "अथ रात्र्यां व्यतीतायां तस्यां राजा बभूव ह। चण्डालदर्शनो राम! सद्य एव दुराकृतिः। नीलपीताम्बरधरो रक्ताम्बरकृतोत्तरः। संरक्तताम्रचोराक्षः करालो हरिपिङ्गलः। कृष्णचर्मनिवासी च लौहाभरणभूषितः" तस्य स्वरूपादिकं रामा० उक्तम्। तत्कर्मादि मनूक्तं यथा "चण्डालश्वपचानान्तु बहिर्ग्रामात् प्रतिश्रयः। अपपात्राश्च कर्त्तव्या धनमेषां श्वगर्द्दभम्। वासांसि मृतचेलानि भिन्नभाण्डेषु भोजनम्। कार्ष्णायसमलङ्कारः परिव्रज्या च नित्यशः। न तैः समयमन्विच्छेत् पुरुषो धर्ममाचरन्। व्यवहारो मिथस्तेषां विवाहः सदृशैः सह। अन्नमेषां पराधीनं देयं स्याद्भिन्नभाजने। रात्रौ न विचरेयुस्ते ग्रामेषु नगरेषु च। दिवा चरेयुः कार्य्यार्थं चिह्निता राजशासनैः। अबान्धवं शवञ्चैव निर्हरेयुरिति स्थितिः। बध्यांश्च हन्युः सततं यथाशास्त्रं नृपाज्ञया। बध्यवासांसि गृह्णीयुः शय्याश्चाभरणानि च।" २क्रूरकर्मणि त्रि०। "कर्म्म चण्डालयोगोत्थं मम पापक्षयं कुरु" षड्गणशक्तिस्नानमन्त्रम्

**चण्डालकन्द** पु०चण्डालप्रियः कन्दः शाक०। कन्दभेदे राजनि

**चण्डालवल्लकी** स्त्री ६त०। वीणाभेदे कण्डोले अमरः।

**चण्डालिका** स्त्री चण्डालःभक्षकत्वेन वादकत्वेनवास्त्यस्याः ठन्। १चण्डालवीणायां २ओषधिभेदे च। चण्डमलति अल–ण्वुल्। ३उमायां स्त्री मेदि०।

**चण्डि** स्त्री चडि–कोपे इन्। दुर्गायां भरतः

**चण्डिकघण्ट** पु० चण्डस्तीक्ष्णस्वनोऽस्त्यस्याः ठन् चण्डिका तीक्ष्णस्वना घण्टा यस्य। शिवे। "नमश्चण्डिकघण्टाय घण्टाय घण्टघण्टिने" भा० शा० २८६अ० शिवस्तुतौ

**चण्डिका** स्त्री चण्डी स्वार्थे क चडि कोपे ण्वुल् वा। दुर्गायाम् अमरः।

**चण्डिल** पु० चडि–कोपे इलच् चण्ड+अस्त्यर्थे इलच् वा। १नापिते २वास्तुकशाके हेम० नापितस्य तीक्ष्णास्त्रवत्त्वात् वास्तुकस्य तीक्ष्णवीर्य्यवत्त्वाच्च तथात्वम्। ३नदीभेदे स्त्री उणादिको०

**चण्डी** स्त्री चण्ड–बह्वा० वा ङीष्। १दुर्गायां सप्तशतीव्याख्यायां गुप्तवत्यां तु तन्नामनिरुक्त्यादिरुक्तं यथा "प्रसादो निष्फलो यस्य कोपोऽपि च निरर्थकः। न तं भर्त्तारमिच्छन्ति षण्डं पतिमिव स्त्रियः" इत्यादिना महाभयजनकत्वेनैव कोपस्य साफल्योक्तेस्तादृश एव कोपे चडिधातोर्व्युत्पत्त्या प्रवृत्तेस्तद्वशादेव "नमस्ते रुद्र मन्यव" इत्यादिना प्रथमं मन्यव एव नमस्कार दर्शनात् "भीषास्माद्वातः पवते भीषोदेति सूर्य्यः भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः" इत्यादिश्रुत्या वाय्वादिभयजनककोपस्यापि परब्रह्मलिङ्गत्वमुक्तमेव अतएव 'महद्भयं वज्रमुद्यतमिति श्रुतौ वज्रपदेन ब्रह्मैवोच्यते नायुधविशेषो भयजनकत्वलिङ्गादित्युक्तमुत्तरमीमांसायाम्। "कम्पनादित्यधिकरणे। तस्माच्छब्दात्पुंयोगलक्षणे ङीषि चण्डीति पदनिष्पत्तिः। तत्स्वरूपं चोक्तं रहस्यत्रयपरीक्षायाम्

दीक्षितैः "नित्यं निर्दोषगन्धं निरतिशयसुखं ब्रह्मचैतन्यमेकं धर्मोधर्मीति भेदद्वितयमिति पृथग्भूय मायावशेन। धर्मस्तत्रानुभूतिः सकलविषयिणी सर्वकार्य्यानुकूला शक्तिश्चेच्छादिरूपा भवति गुणगणस्याश्रयस्त्वेक एव। कर्त्तृत्वं तत्र धर्मी कलयति जगतां पञ्चसृष्ट्यादिकृत्ये धर्मः पुंरूपमाप्य सकलजगदुपादानभावं बिभर्त्ति। स्त्रीरूपं प्राप्य दिव्या भवति च महिषी स्वाश्रयस्यादिकर्त्तुः प्रोक्तौ धर्मप्रभेदावपि निगमविदां धर्मिवत् ब्रह्मकोटी इति॥" वृहद्वासिष्ठे उत्पत्तिप्रकरणे द्वादशे सर्गे सृष्ट्यारम्भकालिकं ब्रह्मसत्तामात्रं प्रक्रम्य "तदात्मनि स्वयं किञ्चिच्चेत्यतामिव गच्छति। अगृहीतात्मकं संविदहंमर्शनपूर्वकम्। भाविनामार्थकलनैः किञ्चिदूहितरूपकम्। आकाशादणु शुद्धं च सर्वस्मिन् भाति बोधनम्। ततः सा परमा सत्ता सचेतश्चेतनोन्मुखी। चिन्नामयोग्या भवति किञ्चिल्लभ्यतया तदा। घनसंवेदना पश्चाद्भाविजीवादिनामिका। सम्भवत्यात्तकलना यदोज्झति परं पदमित्यादि"। तट्टीकायामपि सन्मात्रस्य ब्रह्मणः "स ईक्षत लोकान्नु सृजै" इति श्रुतिसिद्धमीक्षणभावं दर्शयति तदिति त्रिभिः। अगृहीतात्मकम् अहङ्काराध्यासरहितम्। अतएव संविन्मात्रेणाहन्ताविमर्शः। सर्वस्मिन्नपि सृज्यविषये भाविनामरूपानुसन्धानांशेऽपि किञ्चिदेव संसृष्टमिव। अतएवाकाशादप्यण्वेव न तु घनम्। अतएव च शुद्धमेव घनमालिन्याभावाद्ब्रह्मैव। चेत्यतां गच्छन्तीव सती सचेतश्चेतना ईक्षणवृत्त्यभिव्यक्तचैतन्यं तदुन्मुखी तत्प्रधाना सती किञ्चिल्लभ्यतया वाक्प्रवृत्तिविषयधर्म्मलाभेन तदा चिन्नामयोग्या भवतीत्यर्थः। पश्चात्तु सैव वृत्तिस्थिरावृत्त्या घनीभूता सम्यगेवात्तकलना सूक्ष्मप्रपञ्चात्मभावलक्षणपरिच्छेदग्राहिणी सती परं पदमपरिच्छिन्नभूमानन्दात्मभावं यदा विस्मरति तदा हिरण्यगर्भाख्यसमष्टिजीवादिनामिका भवतीत्याह। घनेति। ईदृशेक्षणाद्यात्मिका चण्डी चिदादिनामकसमष्टिवृत्तिरूपधर्म्मात्मकशुद्धब्रह्माभिन्नानां ज्ञानेच्छाक्रियाणां तिसृणां व्यष्टीनां महासरस्वतीमहाकालीमहालक्ष्मीरितिप्रवृत्तिनिमित्तवैलक्षण्येन नामरूपान्तराणि तादृशनामरूपविशिष्टदेवतात्रयसमष्टित्वं प्रवृत्तिनिमित्तीकृत्य धर्म्मो चण्डिकेति व्यवहारः। एवं व्यष्टीनां वामाज्येष्ठारौद्रीति पश्यन्तीमध्यमावैखरीति ब्रह्मा विष्णुः रुद्र इति रूपभेदेन समष्टेरपि अम्बिका शान्ता परेत्यादि संज्ञा अनन्ताः तन्त्रान्तरादवगन्तव्याः द्वितीयसमष्टित्वादेवैषा तुरीयेति शक्तिर्निर्दिश्यते आचार्य्यभगवत्पादैरप्युक्तं "गिरामाहुर्देवीं द्रुहिणगृहिणीमागमविदो हरेः पत्नीं पद्मां हरसहचरीमद्रितनयाम्। तुरीया कापि त्वं दुरधिगमनिःसीममहिमा महामाये! विश्वम्भ्रमयसि परब्रह्ममहिषीति"। २हिंसायां ३कोपनायाञ्च मेदिनी। "मल्लिकाक्षकुले चण्डि!" शा० ट० "नयुगसयुगगुरुभिः किल चण्डी" वृत्त० र० उक्ते ४छन्दोभेदे उपचारात् दुर्गामाहात्म्यावेदके मार्कण्डेयपुराणान्तर्गते सप्तशतीमालामन्त्रात्मके ५स्तवभेदे। तत्पाठप्रकारादि यथा वाराहीत० "अर्गलं कीलकञ्चादौ पठित्वा कवचं पठेत्। जपेत् सप्तशतीं पश्चात् क्रम एष शिवोदितः। अर्गलं दुरितं हन्ति कीलकं फलदं तथा। कवचं रक्षयेन्नित्यं चण्डिका त्रितयं तथा" तिथित० मत्स्यसू०। "जप्त्वा च प्रणवं चादौ स्तोत्रं वा संहितां पठेत्। अन्ते च प्रणवं दद्यादित्युवाचादिपूरुषः। सर्वत्र पाठे विज्ञेयो ह्यन्यथा विफलं भवेत्। शुद्धेनाऽनन्यचित्तेन पठितव्यं प्रयत्नतः। न कार्य्यासक्तमनसा कार्य्यं स्तोत्रस्य वाचनम्। आधारे स्थापयित्वा तु पुस्तकं वाचयेत् सुधीः। हस्तसंस्थापनादेव यस्मादल्पफलं लभेत्। स्वयञ्च लिखितं यत्तु कृतिना लिखितं न यत्। अब्राह्मणेन लिखितं तच्चापि विफलं भवेत्। ऋष्यिच्छन्दादिकं न्यस्य पठेत् स्तोत्रं विचक्षणः। स्तोत्रे न दृश्यते यत्र प्रणवन्यासमाचरेत्। सङ्कल्पिते स्तोत्रपाठे संख्यां कृत्वा पठेत् सुधीः। अध्यायं प्राप्य विरमेन्नतु मध्ये कदाचन। कृते विरामे मध्ये तु अध्यायादिं पठेन्नरः" तत्रैव भविष्यपु०। "ब्राह्मणं वाचकं विद्यान्नान्यवर्णजमादरात्। श्रुत्वान्यवर्णजाद्राजन्! वाचकान्नरकं व्रजेत्। देवार्च्चामग्रतः कृत्वा ब्राह्मणानां विशेषतः। ग्रन्थिञ्च शिथिलं कुर्य्याद्वाचकः कुरुनन्दन!। पुनर्बध्नीत तत्स्थलं न मुक्ता धारयेत् क्वचित्। विस्पष्टमद्रुतं शान्तं स्पष्टाक्षरपदन्तथा। कलस्वरसमायुक्तं रसभावसमन्वितम्। बुध्यमानः सदर्थं वै ग्रन्थार्थं कृत्स्नशो नृप!। ब्रह्मणादिषु सर्वेषु ग्रन्थार्थञ्चार्पयन्निव। य एवं वाचयेद्ब्रह्मन्! स विप्रो व्यास उच्यते। सप्तस्वरसमायुक्तं काले काले विशाम्पते!। प्रदर्शयन् रसान् सर्वान् वाचयेद्वाचको नृप!"। तस्य फलं यथा "चण्डीपाठ-

फलं देवि! शृणुष्व गदतो मम। एकावृत्त्यादिपाठानां यथावत् कथयामि ते। संकल्पपूर्वं संपूज्य न्यस्याङ्गेषु मनून् सकृत्। पाठाञ्जलिप्रदानाद्धि सिद्धिमाप्नोति मानवः। उपसर्गस्य शान्त्यर्थं त्रिरावृत्तं पठेन्नरः। ग्रहोपशान्त्यै कर्त्तव्यं पञ्चावृत्तं वरानने!। महाभये समुत्पन्ने सप्तावृत्तं समुच्चरेत्। नवावृत्त्या भवेच्छान्तिर्वाजपेयफलं लभेत्। राजवश्याय भूत्यै च रुद्रावृत्तमुदीरयेत्। अर्कावृत्त्या काम्यसिद्धिर्वैरहानिश्च जायते। मन्वावृत्त्या रिपुर्वश्यस्तथा स्त्री वश्यतामियात्। सौख्यं पञ्चदशावृत्त्या श्रियमाप्नोति मानवः। कलावृत्त्या पुत्रपौत्रधनधान्यागमं विदुः। राज्ञां भीतिविमोक्षाय वैरस्योच्चाटनाय च। कुर्य्यात् सप्तदशावृत्तं तथाष्टादशकं प्रिये!। महाव्रणविमोक्षाय त्रिंशावृत्तं पठेत् सुधीः। पञ्चविंशावर्त्तनात्तु भवेद्बन्धविमोक्षणम्। सङ्कटे समनुप्राप्ते दुश्चिकित्स्यामये तथा। जातिध्वंसे कुलोच्छेदे आयुषो नाश आगते। वैरिवृद्धौ व्याधिवृद्धौ धननाशे तथा क्षये। तथैव त्रिविधोत्पाते तथा चैवातिपातके। कुर्य्याद् यत्नात् शतावृत्तं ततः सम्पद्यते शुभम्। श्रियोवृद्धिः शतावृत्ताद्राज्यवृद्धिस्तथापरे। मनसा चिन्तितं देवि! सिध्येदष्टोत्तराच्छतात्। शताश्वमेधयज्ञानां फलमाप्नोति सुव्रते!। सहस्रावर्त्तनात् लक्ष्मीरावृणोति स्वयं स्थिरा। भुक्त्वा मनोरथान् कामान् नरोमोक्षमवाप्नुयात्। यथाश्वमेधः क्रतुराट् देवानाञ्च यथा हरिः। स्तवानामपि सर्व्वेषां तथा सप्तशतीस्तवः। अथ वा बहुनोक्तेन किमेतेन वरानने!। चण्ड्याः शतावृत्तपाठात् सर्वाः सिद्ध्यन्ति सिद्धयः” तिथितत्त्वधृतमत्स्यसूक्तादि “सकामैः संपुटो जाप्यो निष्कामैः संपुटं विना। शतमादौ शतञ्चान्ते संपुटोऽयमुदाहृतः” इत्याद्युक्तेः कामनाभेदेन नवार्ण (ऐँ ह्रीँ क्लीँ चामुण्डायै विच्चे) मन्त्रादिभिरस्याः संपुटता, अनया वा नवार्णस्य संपुटता कार्य्येति मतद्वयं तत्र गुप्तवत्यां सप्तशतीस्तोत्रेण नवार्णस्य संपुटतोक्ता यथाह डामरतन्त्रे “मार्कण्डेय पुराणोक्तं नित्यं चण्डीस्तवं पठन्। पुटितं मूलमन्त्रस्य जपेनाप्नोतिवाञ्छितमिति”। पुटितमिति पाठक्रियाविशेषणम्। पुटितत्वं संपुटाकारता। तथा च स्तवोयथा मूलमन्त्रजपस्य संपुटाकारोभवति तथा पठनान्मूलजपस्य यद्वाञ्छितम्फलन्तत्सिध्यतीत्यर्थः। ततस्तवीयर्ष्यादिन्यासपूर्वकञ्चरित्रत्रयम्पठित्वा मध्ये स्वसङ्कल्पितसंख्यानुसारेण सहस्रादिसंख्याकं नवार्णञ्जपित्वा पुनश्चण्डीस्तवं पूर्ववत्पठेत्। परन्त्वेतदन्ते पुनर्मूलमष्टोत्तरशतमात्रं जप्त्वाऽऽत्मनिवेदनादिकं कुर्यात्। अयं च जपोऽङ्गभूतोन प्रधानसंख्यायामुपयुज्यते इति विशेषः। तदप्युक्तं तत्रैव चरित्रत्रयस्य ऋष्यादीनुक्त्वा “एवं संस्मृत्य ऋष्यादीन्ध्यात्वा पूर्वोक्तमार्गतः। सार्धस्तुतिः पठेच्चण्डीस्तवं सप्तशताक्षरम्। समाप्तौ तु महालक्ष्मीं ध्यात्वा कृत्वा षडङ्गकम्। जपेदष्टशतं मूलं देवतायै निवेदयेदित्यादि”। केचित्तु मूलमन्त्रजपेन पुटितं चण्डीस्तवं पठन्निति प्रथमश्लोकं योजयन्तस्तरमश्लोके पुनर्विधानं संख्यामात्रपरमिति मन्यमानाः सप्तशतीस्तोत्रस्यैव मूलेन संपुटीकारोविधीयत-इत्यङ्गाङ्गीभाववैपरीत्यमिच्छन्ति। तदयुक्तं “बहुषु तन्त्रेषु नवार्णं प्रकृत्य तत्प्रकरणे सप्तशतीपाठविधानेन नवार्णजपस्य प्राकरणिकत्वेनान्याङ्गत्वायोगात्। तत्रविद्यमानाया अपि स्तोत्रे फलश्रुतेः प्रयाजफलश्रुतः “वसन्तमेवर्त्तूनामवरुन्धे” इत्यस्याइवाविवक्षितार्थकत्वात्। मरीचिकल्पे “रात्रिसूक्तं जपेदादौ मध्ये चण्डीस्तवम्पठेत्। प्रान्ते तु जपनीयं वै देवीसूक्तमिति क्रमः। एवं संपुटितं स्तोत्रं पूर्वोक्तफलदायकम्”इत्यनेन वैदिकसूक्तद्वयेन संपुटिततायाः सप्तशत्यां विधानाच्च। स च स्तवः मार्कण्डेयपुराणस्यत्रिसप्तत्यध्यायोत्तरं षडशीतितमाध्यायान्तमभिव्याप्तः। “सावर्णिः सूर्यतनयः” इत्यारभ्य सावर्णिर्भविता मनुरित्यन्तस्त्रयोदशभिरध्यायैः परिच्छिन्नः श्लोकसमूहात्मको मालामन्त्रत्वेन प्रसिद्धः। अस्य सप्तशतीत्वव्यवहारस्तु न श्लोकसंख्यया तेषां षट्शतोतोऽपि न्यूनत्वात्। नापि कवचादित्रयरहस्यत्रययोर्मेलनेन, संख्याधिक्यापत्तेः। “जपेत् सप्तशतीं चण्डीं कृत्वा तु कवचं पुरः” इत्यनेन कवचस्य सप्तशत्याः पृथङ्निर्द्देशाच्च। तस्मात्स्वपे एकमन्त्रात्मकस्यापि मालामन्त्रस्य होमाङ्गत्वेन संपुटार्थत्वेन च सप्तशतधा विभजनात् शतवृद्धिप्रस्येवैकानेकमन्त्रात्मकत्वे विरोधाभावात्तथा व्यवहारोपपत्तिः। एतस्योत्तमत्वन्तु तन्त्रान्तरे “यथाश्वमेधः क्रतुषु देवानाञ्च यथा हरिः। स्तवानामपि सर्वेषान्तथा सप्तशतीस्तवः”। तत्रापि कलावतिप्रशस्तः “कलौ चण्डीविनायकाविति” वचनात्। वाराहीतन्त्रे सर्वेषां स्तोत्राणां परशुरामशापमुक्त्वा तद्विरहितानि कतिचिद्वर्णितानि “भीष्मपर्वणि या गीता सा प्रशस्ता कलौ युगे। विष्णोर्नाम

सहस्राख्यं महाभारतमध्यगम् । चण्ड्याः सप्तशतीस्तोत्रं तथा नामसहस्रकम्" इत्यादिना "भार्गवाख्येन रामेण शप्तान्यन्यानि कारणात्" इत्यन्तेन । यद्यपि तन्त्रान्तरेऽस्यापि स्तोत्रस्य शिवशापः कीलनं चेति सिद्धिनिरोधकावुक्तौ तथापि तत्रैव शापोद्धारोत्कीलनयोः कर्मविशेषयोस्तदङ्गत्वेन सकृत्करणविधानात्तदकरणे सिद्धिविरहोक्त्या तदावश्यकत्वपरौ तावर्थवादौ । तत्र शापोद्धारो यथा त्रयोदशप्रथमौ, द्वादशद्वितीयौ, एकादशतृतीयौ, दशमचतुर्थौ, नवमपञ्चमौ, अष्टमषष्ठौ, अध्यायौ पठित्वा सप्तममध्यायं द्विः पठेदित्याकारकः प्रयोगः । उत्कीलनं यथा । आदौ मध्यमचरित्रं पठित्वा ततः प्रथमचरित्रन्ततस्तृतीयचरित्रं पठेदित्याकारकः । "अन्त्याद्यार्कद्विरुद्रत्रिदिगब्ध्यङ्केष्विभर्तवः । अश्वोऽश्व इति सर्गाणां शापोद्धारे मनोः क्रमः । उत्कीलने चरित्राणां मध्याद्यान्त्यमिति क्रमः" । अङ्कोनवमः इषुः पञ्चमः इभोऽष्टमः । "ददाति प्रतिगृह्णाति नान्यथैषा प्रसिद्ध्यति" इति विहितं दानप्रतिग्रहनामकमुत्कीलनं तु कीलकाध्यायव्याख्यावसरे विशदीकरिष्यते । एवं सम्प्रदायस्य निर्दोषत्वमुत्तमङ्गलं शीघ्रसिद्धिदमिदमिति सिद्धम् । एतद्वाचनक्रमो वाराहीतन्त्रे "यावन्न पूर्यतेऽध्यायस्तावन्न विरमेत्पठन् । यदि प्रमादादध्याये विरामो भवति प्रिये ! । पुनरध्यायमारभ्य पठेत्सर्वं मुहुर्मुहुः । अनुक्रमात्पठेदेव शिरःकम्पादिकं त्यजेत् । न मानसं पठेत्स्तोत्रं वाचिकन्तु प्रशस्यते । कण्ठतः पाठाभावे तु पुस्तकोपरि वाचयेत्" । तल्लेखनेऽपि तत्र विशेषः "न स्वयं लिखितं स्तोत्रं नाब्राह्मणलिपिम्पठेत् । न च स्वयंकृतं स्तोत्रं तथान्येन च यत्कृतम् । यतः कलौ प्रशंसन्ति ऋषिभिर्भाषितं तु यत्" । यत्तु "आधारे स्थापयित्वा तु पुस्तकं वाचयेत्ततः । हस्तसंस्थापनादेव भवेदर्द्धफलं ध्रुवमिति" । तस्य व्यवस्थापि तत्रैव "पुस्तके वाचनं हस्ते सहस्रादधिकं यदि । ततोन्यूनस्य तु भवेद्वाचनं पुस्तकं विना" । सहस्रान्यूनमन्त्रस्य कण्ठे पाठसत्त्वे पुस्तकं विनैव वाचनं, तदभावे आधारे पुस्तकस्थापनेनैव वाचनं सहस्राधिकस्य तु पाठसत्त्वेऽप्याधारस्थापितपुस्तकोपर्य्येव वाचनमिति वचनार्थः । प्रकृतस्तोत्रस्य सहस्रान्यूनत्वात् "ततः कृताञ्जलिपुटः स्तुवीत चरितैरिमैरिति" वैकृतिकरहस्ये विधानाच्च कण्ठपाठाभावे पुस्तकस्याधारे स्थापनेनैव वाचनम् । कण्ठपाठीकृत्य पुस्तकं विनैव तु कृताञ्जलितया पठनमुत्तममिति द्रष्टव्यम् । अत्र सहस्रशब्देन द्वात्रिंशदक्षरात्मकस्यैकैकानुष्टुप्कल्पनेन तादृशानुष्टुप्छन्दःसहस्रं ज्ञेयमिति स्पष्टम् शक्तिसङ्गमतन्त्रराजे "द्वात्रिंशता स्वरैर्युक्त एकोऽप्यनुष्टुभो निगद्यते । सएव गदितः श्लोक स्तारानेत्रसमुद्भवः" इत्यादिना । तेन गद्यात्मकमालामन्त्रेष्वप्यस्य नियमस्य प्रसरो ज्ञेयः । स्तोत्रपूर्व्वोत्तरभागपाठाभावे नैष्फल्यादिवचनानि शक्तिसङ्गमएव द्रष्टव्यानि ।"ऋषिच्छन्दोदैवतादि पठेत् स्तोत्रे समाहितः । यत्र स्तोत्रे न दृश्येत प्रणवन्यासमाचरेत्"। डामरे "सप्तशत्याश्चरित्रे तु प्रथमे पद्मभूर्मुनिः । छन्दो गायत्रमुदितं महाकाली तु देवता । वाग्बीजं पावकस्तत्त्वं धर्मार्थे विनियोजनम् । मध्यमस्य चरित्रस्य मुनिर्विष्णुरुदाहृतः । उष्णिक्छन्दो महालक्ष्मीर्देवता बीजमद्रिजा । वायुस्तत्त्वं भवेत्तत्र मोक्षार्थे विनियोजनम् । उत्तरस्य चरित्रस्य ऋषिः शङ्कर ईरितः । त्रिष्टुप् छन्दो देवतास्य महापूर्वा सरस्वती । कामोबीजं रविस्तत्त्वं कामार्थे विनियोजनम् । ह्रीं चण्डिकायै व्यस्तेन समस्तेन षडङ्गकौ । वाग्ऐँ अद्रिजा ह्रीँ कामः क्लीँ इति नवार्णप्रथमबीजत्रयम् ध्यानादिकं नवार्णवत् । अस्य पुरश्चरणस्वरूपं मरीचिकल्पे "कृष्णाष्टमीं समारभ्य यावत्कृष्णचतुर्दशीम् । एकैकोत्तरमाजाप्यं पूर्वसंपुटितन्तु तत् । एवं देवि ! मया प्रोक्तः पौरश्चरणिकः क्रमः । तदन्ते हवनं कुर्य्यात्प्रतिश्लोकेन पायसम् । रात्रिसूक्तं प्रतिऋचं तथा देव्याश्च सूक्तकम् । हुत्वान्ते प्रजपेत्स्तोत्रमादौ पूजादिकं मुने !" इति । पूर्वाभ्यां पूर्व्वोक्ताभ्यां रात्रिसूक्तदेवीसूक्ताभ्यां संपुटितम् । प्रतिश्लोकेनेति मन्त्रविभागोपलक्षणम् कात्यायन्यादितन्त्रोक्तसप्तशतीविभागग्रन्थस्य हवनादिविधिं प्रति वाक्यशेषत्वेन तेनैव वेद्यपदार्थनिर्णयावश्यम्भावात् "यन्न दुःखेनेत्यादेः स्थलान्तरस्थस्याप्यग्निहोत्रादिविधिशेषत्वेन स्वीकारेण स्वर्गपदार्थनिर्णयस्य वैदिकसंमतत्वात् । होमसंख्या तु स्तोत्रस्य त्रिरावृत्तिरूपेति वृद्धाः । रात्रिसूक्तदेवीसूक्ते च ऋग्वेदशाकलसंहितायां प्रसिद्धे तथेत्यनेन जपे क्लृप्तक्रमः संपुटाकारो निर्दिश्यते । तच्छब्दस्य पूर्व्वपरामर्शित्वात् । तस्य श्लोकपूरणमात्रार्थत्वे तु द्वाभ्यामपि सूक्ताभ्यां त्रिरावृत्तसप्तशतीहोमोत्तरमेव पठक्रमानुसारेण होमः । "विश्वेश्वरीं जगद्धात्रीम्"

इति स्तवोरात्रिसूक्तम्। "नमो देव्यै महादेव्यै" इति स्तवो देवीसूक्तमिति कश्चित्। तन्न। प्रतिश्लोकेन प्रतिऋचमिति प्रतिनियतनिर्देशविरोधात्। ऋक्सूक्तादिशब्दानां वैदिकमन्त्रेष्वेव रूढ्या प्रसिद्धेः। मत्स्यसूक्तमित्यादिकाचित्कतान्त्रिकव्यवहारस्य केवलयौगिकत्वेनोपपत्तेः। तेन ऋक्पदस्य श्लोके लक्षणेत्युक्तिरपि साहसमात्रम्। समुद्रमनोध्यानादिविधौ इहदूधन्तरपदयोः प्रतिनियतनिर्देशबलादेव लक्षणाव्यवस्थाया इव प्रकृते कृप्राया एव शक्तेर्व्यवस्थादार्ढ्यस्य कैमुतिकन्यायेनैव सिद्धेः। यदि त्वेवमालोच्यते "विश्वेश्वर्यादिकं सूक्तं दृष्टं यद्ब्रह्मणा पुरा। स्तुतये योगनिद्राया मम देव्याः पुरन्दर !। महिषान्तकरी सूक्तं सर्वसिद्धिप्रदं तथा। देव्या ययादिकं दिव्यं दृष्टं देवैः महर्षिभिः। देवि ! प्रपन्नार्तिहरे प्रसीदेत्यादिकं तथा। नारायणीस्तुतिर्नाम सूक्तं परमशोभनम्। असुघ्रास्तुतये दृष्टं ब्रह्माद्यैः सकलैः सुरैः। नमो देव्यादिकं सूक्तं सर्वकामफलप्रदमिति" विश्वकलितवेषपाखरात्रलक्ष्मीतन्त्रे व्यवहारदर्शनादेतेषां स्तोत्राणामपौरुषेयसिद्धान्तत्वाच्च सूक्तर्षव्यवहारो युज्यत एवेति, तदा कात्यायनीतन्त्रमते विश्वेश्वरीमिति श्लोकात् पूर्वं ब्रह्मोवाचेत्यस्य पाठाभावात्तदुत्तरमेव तत्पाठाच्च त्वं स्वाहेत्यारभ्यैव स्तोत्रारम्भः तस्य च योगनिद्रात्मकरात्रिदेवतात्वान्मरीचितन्त्रे रात्रिसूक्तपदेन निर्देश इति समाधेयम्। परन्तु तत्तन्त्रमनुसरता विश्वेश्वरीमिति श्लोकाद्धोमदशायां न होतव्यम्। स्तोत्रान्तिमश्लोकस्य द्वेधा विभागोऽपि न कार्य्यः। देवीसूक्तेऽपि त्रेधा विभागोऽङ्गहोमे न विधेयः प्रधानविधिशेषस्याङ्गविधावन्वयेन प्रतिऋचमिति पदे लक्षणाकल्पने मानाभावादित्यवधेयम्। क्रोडतन्त्रे "प्रत्यृचावर्त्तनं देवि ! त्वश्वमेधेन संमितम्। त्रिरावृत्त्या लभेत्कामान् पञ्चावृत्त्या रिपून् जयेत्"। काम्ये तु प्रयोगे विशेषः। कात्यायनीतन्त्रे "एकावृत्त्यादिपाठानां प्रत्यहं पठतां नृणाम्। सङ्कल्पपूर्व्वं संपूज्य न्यस्याङ्गेषु मनून् सकृत्। पश्चाद्बलिप्रदानेन फलं प्राप्नोति मानवः"। बलिश्च ब्राह्मणादिभेदेन व्यवस्थयोक्तः कालिकापुराणे विशेषः द्रष्टव्यः। तत्राशक्तानामपि तत्रैव "कुष्माण्डमिक्षुदण्डञ्च मद्यमासवमेव च। एते बलिसमाः प्रोक्तास्तृप्तौ छागसमाः सदा"। छागसमाः पञ्चविंशतिवर्षावधितृप्तिजनकाः "अजाविकानां रुधिरैः पञ्चविंशतिवार्षिकीम्। तृप्तिमाप्नोति परमां शार्दूलरुधिरैस्तथेति" तत्रैवोक्तेः। वस्तुतस्तु "न हिंस्या दिति" निषेधस्य संकोचमन्तरेणैव छागसमानतृप्तिसम्भवे छागबलिर्ब्राह्मणैर्न कार्य्य एव। एवं मद्यासवे अपि न देये। "वरं प्राणाः प्रगच्छन्तु ब्राह्मणो नार्पयेत्सुरामिति" "ब्राह्मणो मदिरां दत्त्वा ब्राह्मण्यादेवहीयते" इति च इहत्सङ्कमतन्त्रवचनात्। अत एव तत्प्रतिनिधिरपि कालिकापुराणे स्मर्यते "अवश्यं विहितं यत्र मद्यं तत्र द्विजः पुनः। नारिकेलजलं कांस्ये, ताम्रे चैवोत्सृजेन्मधु"। कात्यायनीतन्त्रे "उपसर्गोपशान्त्यर्थं त्रिरावृत्तिं पठेन्नरः। ग्रहदोषोपशान्त्यर्थं पञ्चावृत्तं वरानने !। महाभये समुत्पन्ने सप्तावृत्तमुदीरयेत्" इत्यादिना फलभेदेन संख्याभेदाननेकानुक्त्वोपसंहृतम् "अथ वा बहुनोक्तेन किमन्येन वरानने !। चण्ड्याः शतावृत्तपाठात्सर्वाः सिध्यन्ति सिद्धयः" इति। इतोऽप्यधिकाः सहस्रसंख्यादयोऽत्र द्रष्टव्याः। हरगौरीतन्त्रे "श्रीकामः पुत्रकामोवा सृष्टिमार्गक्रमेण तु। जपेच्चक्रादिमारभ्य शुम्भदैत्यवधावधि। आदिमारभ्य प्रजपेत्पश्चाच्छेषं समापयेत्। शान्त्यादिकामः सर्वत्र स्थितिमार्गक्रमेण तु। सावर्णिः सूर्य्यतनयः सावर्णिर्भविता मनुः। सङ्कटे चान्त्यमारभ्य पश्चादादि समापयेत्"। इत्यादिकस्य कामनाभेदेन पाठवैचित्र्यस्य कतिपयश्लोकमात्रपाठेन तत्तत्प्रयोगवैचित्र्यस्य च विस्तरो डामरादितन्त्रेभ्योऽन्यान्तरेभ्य एवावगन्तव्यः। केरलास्तु एकैकस्मिन्दिवसे एकैकमेव चरित्रं पठेदिति दिनत्रयेणैकावृत्तिरित्येकः पक्षः। "चन्द्राब्धिभूवेदकरेन्दुदस्रसङ्ख्याकानध्यायान् क्रमेण दिनभेदेन पठेदिति सप्तभिर्दिनैरेका वृत्तिरित्यन्यः पक्षः इत्याहुः। अत्र द्वितीयमेव पक्षं पाटोऽयंद्विप्रकारः। इति सप्ताचार्यां संस्पृह्नन्त बहवस्तदनुयायिनोऽनुतिष्ठन्ति कचटतपयशवर्गैवरिहभपिण्डान्त्यैरक्षरैरङ्काः नेत्रे शून्यं चेयं तथा स्वरे केवले कथिते" इति प्रसिद्धपरिभाषया सकारयकारककारा एकस्मिन्ठपरेफा द्वयो द्विशब्दश्चतुर्षु संकीतित इति। तत्रमूलतन्त्राणि त एव जानन्ति। सन्त्यपि तानि तन्त्रवचनानि एकदिनेनैकावृत्त्यशक्तपराणि। अस्ति हि तादृशोऽप्यस्य प्रयोगः कात्यायनीतन्त्रे मन्त्रविभजनान्ते" होमे स्वाहान्तिका एते पूजायां तु नमोऽन्तिमाः। तर्पणे तर्पया-

स्यन्ता जहनीयाबुधैर्मताः” इति वचनात् सप्तशतब्राह्मणभोजने प्रतिव्यक्त्येकैकमन्त्रेण काण्डानुसमयेन षोडशोपचाराणां पदार्थानुसमयेन वा पञ्चोपचाराणां वा कर्त्तुमशक्यतया स्वेच्छयाऽध्यायभेदेन वाऽनेकदिनसाध्यैकप्रयोगप्रसक्तौ उक्तरचनैर्विभजननियमो विधीयत इति। अत्र स्वयं पठितुमसमर्थस्य वा प्रभोर्वा ब्राह्मणद्वाराऽपि प्रयोग इष्टः। तत्पक्षे दक्षिणा नियमस्तन्त्रेषु “पञ्चस्वर्णं शतावृत्तेः पञ्चावृत्तेस्तु तत्त्रयम्। पञ्चावृत्तेः स्वर्णमेकं त्रिरावृत्तेस्तदर्धकम्। एकावृत्तौ पादमेकं दद्याद्वा शक्तितो बुधः” इति गुप्तवती। पाठे इतिवधशब्दौ न पाठ्यौ अध्यायान्ते विधानपारिजाते स्थितम्।

नन्दादिशक्तिभेदाश्चामर्यादिवीजभेदाश्च अन्यतोऽत्र द्रष्टव्याः। चण्ड्याः होमाङ्गत्वेन संपुटार्थत्वेन च सप्तशतमन्त्रविभागः कात्यायनीतन्त्रे दर्शितः गुप्तवत्यां च तद्वाक्यव्याख्यानपूर्वकं मन्त्रविभागे विशेषं युक्त्या निर्णीय संग्रहश्लोकैर्यथा निर्णीतं तथात्र प्रदर्श्यते। तत्र एकाध्यायात्मक प्रथम चरितस्य मन्त्रविभागसूचकास्तत्रत्याः श्लोका यथा “मार्कण्डेय उवाचेति मन्त्रः प्राथमिकोमतः। सावर्णाद्या रुनिवराश्रमान्ताः श्लोकका दश। सोऽचिन्तयत् तदा तत्रेत्यर्धश्लोकात्मकोमनुः। मत्पूर्व्वैरित्युपक्रम्य सप्त श्लोकान्तपान्तिमाः। अथ वैश्यः, समाध्याद्याःसंस्थितान्तास्ततस्त्रयः। किं नु तेषां कथं ते किम् इत्यर्धश्लोककौ मनू। राजोवाच ततोयस्त्रिव्यर्धश्लोकमन्त्रकौ। मार्कण्डेयस्ततौ समाधिः श्लोकार्धमन्त्रकौ। वैश्योक्तिरेवमित्याद्या बन्धुपन्तास्ततस्त्रयः। तेषां कृते करोमीति द्वावर्द्धश्लोकमन्त्रकौ। कृत्वा तु ताविति श्लोको राजोक्तिर्भगवन्निति। दुःखायेति च मन्त्रौ द्वावर्धश्लोकात्मकौ मतौ। ममत्वाद्यामूढतान्ताश्चत्वारोऽथ ऋषेर्वचः। ज्ञानमस्तीत्युपक्रम्य रुक्तायेऽन्तास्ततोदश। सा विद्येति च संसारेत्यप्यर्धश्लोककौ मनू। राजोक्ति भंगवन् केति श्लोको यत्तदिति द्वयम्। अर्द्ध श्लोकात्मकस्तृषिर्नित्यैवेति तथापि तत्। द्वावर्धश्लोकमन्त्रौ स्तो देवानां कार्य्यमादितः। तेजसः प्रभुरित्यन्ता श्लोकाः षड् ब्रह्मणोऽथ वाक्। त्वं स्वाहा त्वं स्वधेत्याद्याः श्लोकमन्त्रास्त्रयोदश। प्रबोधं चेति बोधश्चेत्यर्धश्लोकात्मकौ मनू। ऋषिरेवं स्तुतेत्यादि विभ्रान्तं श्लोकपञ्चकम्। तावपीत्युक्तवन्तावित्यर्द्ध श्लोकमनुद्वयम्। भगवांश्च भवेतां क्रिमन्ये नेत्यर्धयुग्मकम्। ऋषिवाक्यं वञ्चिताभ्यामित्येकः श्लोकमन्त्रकः। आवां जहीत्यर्धमृषिस्तथेति श्लोकयोर्युगम्। इत्यष्टसप्ततिश्लोकै७८रध्यायप्रथमात्मनः। प्रथमस्य चरित्रस्य सर्व्वे मन्त्राश्चतुःशतम्१०४। तेषूवाचाङ्किता मन्त्राद्वेद्वकद्वेद्वकत्रिपञ्चभिः। मर्कण्डपुत्रभगवद्वैश्यब्रह्मन्टपर्षिभिः। चतुर्द्दश स्युः श्लोकार्द्धाश्चतुर्विंशतिरीरिताः। अवशिष्टास्तु षट्षष्टिःश्लोकमन्त्रा इति स्थितिः”।

अध्यायत्रयात्मकस्य द्वितीयचरितस्य मन्त्रविभागसूचकास्तत्रत्याः संग्रहश्लोका यथा

“ऋषिवागष्टषष्टिः स्युः श्लोकादेवासुरादयः। एवं द्वितीयकेऽध्याये मन्त्रा एकोन सप्ततिः६९। ऋषिर्निहन्यमानाद्याः पञ्चत्रिंशच्च मन्त्रकाः। देव्युक्तिर्गर्ज्ज गर्ज्जेति श्लोक एक ऋषेर्वचः। पञ्च श्लोका इति चतुश्चत्वारिंशत्४४ तृतीयके। ऋषिः शक्रादयः श्लोकाः षड्विंशतिरथर्षिवाक्। श्लोकद्वयमथो देवी श्लोकार्धं व्रियतामिति। देवा ऊचुस्त्रयः श्लोका भगवत्या कृतादिकाः। इह येऽस्मत्प्रपन्ना त्वमितर्धश्लोककोमनुः। ऋषेर्वचस्त्रतःश्लोकोऽध्याये तु चतुर्थके। मन्त्राद्विचत्वारिंशत्४२ स्युरध्यायत्रितयात्मनः। मध्यमस्य चरित्रस्य पञ्चपञ्चाशदुत्तराः। शतं१५५ मन्त्रा स्तेषु देव्या वचसी द्वे ऋषेस्तु षट्। देवानामेकमर्धं द्वे अन्ये श्लोका इति स्थितिः”।

नवाध्यायात्मकस्य तृतीयचरित्रस्य मन्त्रविभागसूचकास्तत्रत्याः संग्रह श्लोका यथा

“ऋषिर्वाक्पुराशुम्भेत्यादयः श्लोककास्तु षट्। देवा ऊचुर्नमोदेव्या इत्यादिश्लोकपञ्चकम्। ततःश्लोकैकत्रिंशत्या प्रतिश्लोकं त्रिशस्त्रिशः। विभागादनुषङ्गाभ्यां त्रिषष्ट्या स्तुतयो यथा। महाकाल्याद्यर्थभेदान्नमस्तस्या इति त्रयः। मन्त्राः पूर्वोत्तरौ शेषौ या देव्यर्धं नमोनमः। तेषामाद्यन्तयोर्योज्यौ प्रतिमन्त्रक्रमेण तौ। तेन पर्य्यवसानं स्यादेकैकोमन्त्र ईदृशः। या देवीत्यर्धमुच्चार्य्य नमस्तस्यै नमोनमः। इत्युच्चरेत् त्रिपाद्गायत्र्येषा स्वर्गापवर्गदा। एते पूर्वोत्तरार्धाङ्कियोगोत्था एकविंशतिः। भवन्ति विष्णुमायादिभान्त्यन्तपदगर्भिताः। प्रथमा विष्णुमायोक्ता द्वितीया चेतना ततः। बुद्धिर्निद्रा क्षुधा छाया शक्तिस्तृष्णा तथाष्टमी। क्षान्तिर्जातिरथो लज्जा शान्तिः श्रद्धा त्रयोदशी। कान्तिर्लक्ष्मीस्ततोवृत्तिः स्मृतिरूपेण संस्थिता। दया तुष्टिस्ततोमाता भ्रान्तिरित्येकविंशतिः। स्वस्थानद्वन्द्वया त्रिः प्रोक्ता स्त्रिषष्टिर्मनवः स्मृताः। इन्द्रियाणामितिश्लोक एकमन्त्रस्तदुत्तरः। चिति-

रूपेण येत्येष प्राग्वत् मन्त्रत्रयात्मकः। स्तुता सुरै रिति श्लोकाष्टभिरेव स्तवादिकाः। श्लोकाः सप्तदशार्षि र्निशम्येति मनुत्रयम्। दूतोक्तिर्देवि! दैत्येति नव- श्लोका ऋषेर्वचः। इत्युक्ता सा तदेत्येकः श्लोको देवीवचस्ततः। सत्यमुक्तमिति श्लोकचतुष्कमथ दूत- वाक्। अवलिप्तेति चत्वारः श्लोका देव्यास्ततोवचः। एवमेतदिति द्वावित्येकोनत्रिंशदुत्तरम्। शतं १२९ मन्त्राः पञ्चमे षट्सप्तति७६ श्लोकमण्डिते। अथर्षिरित्या- कर्ण्येति चतुःश्लोकी ऋषेर्वचः। तेनाज्ञप्तइति श्लोक त्रयं देवीवचस्ततः। दैत्येश्वरेणेत्येकोऽथ ऋषिरित्युक्ता इत्यमी। द्वादशेति मताः षष्ठे चतुर्विंशतिमन्त्रकाः२४। अथर्षिवाक् मयाज्ञप्ता इत्याद्यास्त्वाद्यत्रिंशतिः २१। ऋषिस्ताविव्युभावित्यं सप्तमे सप्तविंशतिः२७। अथर्षिवाणी चण्डे चेत्यारभ्याभिजवान तम्। इत्यन्तः पञ्च पञ्चा- शच्छ्लोकामन्त्रास्ततःपरम्। सुखेन काली जम्हे इत्यर्धश्लोकमन्त्रकः। ततोऽसाविति षट् श्लोकास्त्रि- षष्टिश्चेत्यमष्टमे६३। राजा विचित्रमित्यादि श्लोक द्वयमथो ऋषिः। चकार कोपमित्याद्याः सप्तत्रिंश दुदीरिताः। इत्येकचत्वारिंशत्४१स्युर्नवमाध्यायमन्त्र- काः। ऋषिर्निशुम्भं निहतमिति द्वावम्बिका- वचः। एकैवेति द्वयं देवी तत एकोऽहमित्यृषिः। ततः प्रववृते युद्धमिति श्लोकास्त्रयोदश। तत्रापि सा नि- राधारेत्यर्धश्लोकात्मकोमनुः। नियुद्धं खे तदा दैत्य इत्याद्या मनवोनव। इत्येवं दशमेऽध्याये द्वात्रिंशन् मनवोमताः३२। ऋषेर्देव्याहते तत्रेत्याद्यास्त्रिंशच्चतु- र्युताः३४। देवीवाग् वरदेत्योको देवाः सर्वेति चैककः। देवी वैवस्वतेत्यष्टावथ शाकम्भरी मनुः। अर्धश्लोका- त्मकः पश्चाच्छ्लोकास्तत्रैव चेति षट्। एवमेकादशे मन्त्राः पञ्चपञ्चाशदीरिताः५५। देवीवागेभिरित्याद्याः श्लोका अष्टादशोदिताः। सर्वं ममैतदित्यर्धं पश्चाद्याः श्लोकका दश। ऋषेर्वचनमित्युक्त्वेत्याद्याः श्लोका- स्ततस्त्रयः। निशुम्भे चेत्यर्धमनुरेवं भगवतीति षट्। इत्येकचत्वारिंशत्४१स्युः द्वादशाध्यायमन्त्रकाः। ऋषिरे तत्त इत्यर्धश्लोको मन्त्रस्ततस्त्रयः। एवंप्रभावा से त्याद्या मार्कण्डेय उवाच ह। इति तस्येति षट् श्लोका- देवी यदिति चैककः। मार्कण्डेय उवाचाथ ततो वव्रे मनुद्वयम्। देव्युवाच ततः स्वल्पैरहोभिरिति षण्म- ताः। अर्धश्लोकात्मका मन्त्रा मार्कण्डेयवचस्ततः। इति दत्त्वा तयोरेवं देव्यावरमिति द्वयम्। द्विर्दण्डकद्वितन्या- यादावृत्तं स्याच्चतुष्टयम्। इत्येवमेकोनत्रिंशन्२९मनवः- स्युः त्रयोदशे। अत्रापरे नवार्णानि केचिदेकादशाभ्यधुः। न तत् कात्यायनीतन्त्रजल्पितं किन्तु कल्पितम्। इत्यु- त्तरचरित्रेऽस्मिन्नध्यायत्रितयनाध्नि। सम्भूय मन्त्र संख्यैकचत्वारिंशच्चतुःशती४४१। अर्धश्लोकात्मका मन्त्रा स्तेषु द्वादश कीर्त्तिताः। त्रिपाद् मन्त्रास्तु षट्षष्टिर्द्वौ- श्लोकौ पुनरुक्तकौ। श्लोका अपुनरुक्तास्तु त्रिशती सप्त- विंशतिः ३२७। राजैको देवदूतोक्ती द्वे द्वे देव्युक्तयो- दश। मार्कण्डेयोक्तयस्तिस्र ऋषिवाक्यानि षोड़श। इत्युवाचाङ्किता मन्त्राश्चतुस्त्रिंशदिति २४ स्थितिः। अथ- सर्वे मिलितास्तदध्यायेषु त्रयोदशसु। पञ्च शतानि श्लोका अष्टसप्ततियुतानि५७८। तेष्वन्त्यौ श्लोकौ द्विगुणौ भवतस्त्रेधा द्वाविंशतिभागः। एकोनविंशतेश्च द्वेधा ते पञ्चषष्टिरतिरिक्ताः। ब्रह्मा भगवान्दूतोवैश्यो देवा नृपो मकण्डुसुतः। देव्यृषयश्चैकैकद्विद्वित्रिचतुः शरार्कऋचमिताः। इति सप्ताधिकपञ्चाशदुवाच पदाङ्किता अमी अधिकाः। द्वाविंशतिशतमेषां श्लोकैर्योगेन मन्त्रसप्तशती। इति विभजनमुदित प्रतिमन्त्रं कात्यायनीतन्त्रे। तस्मादेतत् प्रकृतिकम- पूर्णमन्यत्तु यामलप्रभृति। एकमन्त्रस्त्रिपान्मन्त्रः पुन रुक्तोऽर्धमन्त्रकः। उवाचाङ्कितइत्येवं मन्त्रः प्रोक्तोऽत्र पञ्चधा। मन्त्रपिण्डः श्लोकपिण्डोऽध्यायपिण्ड इति त्रिधा।” गुप्तवती

नागोजीभट्टकृतविभागस्त्वन्यादृशः विस्तरभयान्नोक्तः उ- भयोश्च युक्तायुक्तत्वमुभयग्रन्थदर्शनेन सुधीभिर्विचिन्त्यम्।

तदयं संक्षेपः।

| अध्यायः | श्लोकः | श्लोकात्मा | अर्द्धश्लोकात्मा | त्रिपाद् | उवाचाङ्कितः | मन्त्रः |
|---|---|---|---|---|---|---|
| १ च० १ | ७८ | ६६ | २४ | ० | १४ | १०४ |
| २ | ६८ | ६८ | ० | ० | १ | ६९ |
| ३ | ४१ | ४१ | ० | ० | ३ | ४४ |
| ४ | ३६ | ३५ | २ | ० | ५ | ४२ |
| २ च० २ | १४५ | १४४ | २ | ० | ९ | १५५ |
| ५ | ७६ | ५४ | ० | ६६ | ९ | १२९ |
| ६ | २० | २० | ० | ० | ४ | २४ |
| ७ | २५ | २५ | ० | ० | २ | २७ |
| ८ | ६१॥ | ६१ | १ | ० | १ | ६३ |

| अध्यायः | श्लोकः | श्लोकात्मा | अर्द्धश्लोकात्मा | त्रिपाद् | उवाचाङ्कितः | मन्त्रः |
|---|---|---|---|---|---|---|
| ९ | ३९ | ३९ | • | • | २ | ४१ |
| १० | २७॥ | २७ | १ | • | ४ | ३२ |
| ११ | ५०॥ | ५० | १ | • | ४ | ५५ |
| १२ | ३८ | ३७ | २ | • | २ | ४१ |
| १३ | १७॥ | १४ | ७ | • | ६ | पुनरुक्त२२९ |
| ३च० ९ | ३५५ | ३२७ | १२ | ६६ | ३४ | पुनरुक्त२४४१ |
| समष्टिः१३ | ५७८ | ५३७ | ३८ | ६६ | ५७ | पुनरुक्त२ ७०० |

अस्या रहस्यमुक्तं मार्कण्डेय पु० प्राधानिकादिरहस्ये "राजोवाच। भगवन्नवतारा मे चण्डिकायास्त्वयोदिताः। एतेषां प्रकृतिम्ब्रह्मन्! प्रधानं वक्तुमर्हसि। आराध्यं यन्मया देव्याः स्वरूपं येन च द्विज!। विधिना! ब्रूहि सकलं यथावत् प्रणतस्य मे। ऋषिरु० "इदं रहस्यं परममनाख्येयं प्रचक्षते। भक्तोऽसीति न मे किञ्चित्तवावाच्यं नराधिप!। सर्व्वस्याद्या महालक्ष्मीस्त्रिगुणा परमेश्वरी। लक्ष्यालक्ष्यस्वरूपा सा व्याप्य कृत्स्नं व्यवस्थिता। मातुलिङ्गं गदां खेटं पानपात्रं च बिभ्रती। नागं लिङ्गं च योनिञ्च बिभ्रती नृप मूर्द्धनि। तप्तकाञ्चनवर्णाभा तप्तकाञ्चनभूषणा। शून्यं तदखिलं स्वेन पूरयामास तेजसा। शून्यं तदखिलं लोकं विलोक्य परमेश्वरी। बभार रूपमपरन्तमसा केवलेन हि। सा भिन्नाञ्जनसंकाशा दंष्ट्राचितवरानना। विशाललोचना नारी बभूव तनुमध्यमा। खड्गपात्रशिरःखेटैरलङ्कृतचतुर्भुजा। कबन्धहारं शिरसा बिभ्राणा हि शिरःस्रजम्। ताञ्चोवाच महालक्ष्मीस्तामसीं प्रमदोत्तमाम्। ददामि तव नामानि यानि कर्म्माणि तानि ते। महामाया महाकाली महामारी क्षुधा तृषा। निद्रा तृष्णा चैकवीरा कालरात्रिर्दुरत्यया। इमानि तव नामानि प्रतिपाद्यानि कर्म्मभिः। एभिः कर्म्माणि ते ज्ञात्वा योऽधीते सोऽश्नुते सुखम्। तामित्युक्त्वा महालक्ष्मीः स्वरूपमपरन्नृप। सत्त्वाख्येनातिशुद्धेन गुणेनेन्दुप्रभन्दधौ। अक्षमालाङ्कुशधरा वीणापुस्तकधारिणी। सा बभूव वरा नारी नामान्यस्यै च सा ददौ। महाविद्या महावाणी भारती वाक्सरस्वती। आर्य्या ब्राह्मी महाधेनुर्वेदगर्भा सुरेश्वरी। अथोवाच महालक्ष्मीर्महाकालीं सरस्वतीम्। युवां जनयतान्देव्यौ मिथुने स्वानुरूपतः। इत्युक्त्वा ते महालक्ष्मीः ससर्ज मिथुनं स्वयम्। हिरण्यगर्भौ रुचिरौ स्त्रीपुंसौ कमलासनौ। ब्रह्मन्विधे विरिञ्चेति धातरित्याह तं नरम्। श्रीःपद्मे कमले लक्ष्मीत्याह माता स्त्रियञ्च ताम्। महाकाली भारती च मिथुने सृजतः स्म ह। एतयोरपि रूपाणि नामानि च वदामि ते। नीलकण्ठं रक्तबाहुं श्वेताङ्गं चन्द्रशेखरम्। जनयामास पुरुषं महाकाली सितां स्त्रियम्। स रुद्रः शङ्करः स्थाणुः कपर्द्दी च त्रिलोचनः। त्रयी विद्या कामधेनुः शास्त्रीभाषाक्षरास्वरा। सरस्वती स्त्रियङ्गौरीं कृष्णं च पुरुषं नृपः। जनयामास नामानि तयोरपि वदामि ते। विष्णुः कृष्णो हृषीकेशो वासुदेवो जनार्दनः। उमा गौरी सती चण्डी सुन्दरी सुभगा शिवा। एवं युवतयः सद्यःपुरुषत्वं प्रपेदिरे। चक्षुष्मन्तोऽनुपश्यन्ति नेतरेऽतद्विदो जनाः। ब्रह्मणे प्रददौ पत्नीं महालक्ष्मीर्नृप त्रयीम्। रुद्राय गौरीं वरदां वासुदेवाय च श्रियम्। स्वरया सह सम्भूय विरिञ्चोऽण्डमजीजनत्। बिभेद भगवान् रुद्रस्तद्गौर्य्या सह वीर्य्यवान्। अण्डमध्ये प्रधानादि कार्य्यजातमभून्नृप!। महाभूतात्मकं सर्व्वं जगत्स्थावरजङ्गमम्। पुपोष पालयामास तं लक्ष्म्या सह केशवः। महालक्ष्मीरेवमजा राजन्! सर्व्वेश्वरेश्वरी। निराकारा च साकारा सैव नानाभिधानभृत्। नामान्तरैर्निरूप्यैषा नाम्ना नान्येन केनचित्" १४अ०। "ऋषिरुवाच। त्रिगुणा तामसी देवी सात्त्विकी या त्रिधोदिता। सा शर्व्वा चण्डिका दुर्गा भद्रा भगवतीर्य्यते। योगनिद्रा हरेरुक्ता महाकाली तमोगुणा। मधुकैटभनाशार्थं यान्तुष्टावाम्बुजासनः। दशवक्त्रा दशभुजा दशपादाञ्जनप्रभा। विशालया राजमाना त्रिंशल्लोचनमालया। स्फुरद्दशनदंष्ट्राढ्या भीमरूपापि भूमिप!। रूपसौभाग्यकान्तीनां सा प्रतिष्ठा महाश्रियाम्। खड्गबाणगदाशूलचक्रशङ्खभुशुण्डिभृत्। परिघं कार्म्मुकं शीर्षं निश्च्योतद्रुधिरं दधौ। एषा सा वैष्णवी माया महाकाली दुरत्यया। आराधिता वशीकुर्य्यात्पूजाकर्त्तुश्चराचरम्। सर्व्वदेवशरीरेभ्यो याऽऽविर्भूताऽमितप्रभा। त्रिगुणा सा महालक्ष्मीः साक्षान्महिषमर्द्दिनी। श्वेतानना नीलभुजा सुश्वेतस्तनमण्डला। रक्तमध्या रक्तपादा नीलजङ्घोरुरुन्मदा। सुचित्रजघना चित्रमाल्याम्बरविभूषणा। चित्रानुलेपना कान्तिरूपसौभाग्यशालिनी। अष्टादशभुजा पूज्या सा सहस्रभुजा सती। आयुधान्यत्र वक्ष्यन्ते दक्षिणाधःकर-

क्रमात् । अक्षमाला च कमलं बाणोऽसिः कुलिशं गदा । चक्रं त्रिशूलं परशुः शङ्खो घण्टा च पाशकः । शक्तिर्दण्डश्चर्म चापं पानपात्रं कमण्डलुः । अलङ्कृतभुजामेभिरायुधैः कमलासनाम् । सर्वदेवमयीमीशां महालक्ष्मीमिमां नृप ! । पूजयेत्सर्वदेवानां स लोकानां प्रभुर्भवेत् । गौरीदेहात्समुद्भूता या सत्त्वैकगुणाश्रया । साक्षात्सरस्वती प्रोक्ता शुम्भासुरनिवर्हिणी । दधौ चाष्टभुजा बाणमुषले शूलचक्रभृत् । शङ्खं घण्टां लाङ्गलञ्च कार्मुकं वसुधाधिप ! । एषा संपूजिता भक्त्या सर्वज्ञत्वं प्रयच्छति । निशुम्भमथिनी देवी शुम्भासुरनिवर्हिणी । इत्युक्तानि स्वरूपाणि मूर्त्तीनान्तव पार्थिव ! स्वरूपाणि जगन्मातुः, पृथगर्च्चां निशामय । महालक्ष्मीर्यदा पूज्या महाकाली सरस्वती । दक्षिणोत्तरयोः पूज्ये पृष्ठतो मिथुनत्रयम् । विरिञ्चिः स्वरया मध्ये रुद्रो गौर्य्या च दक्षिणे । वामे लक्ष्म्या हृषीकेश इत्येवन्देवतात्रयम् । अष्टादशभुजा मध्ये वामे चास्या दशानना । दक्षिणेऽष्टभुजा लक्ष्मीर्महती तां समर्च्चयेत् । अष्टादशभुजा चैषा यदा पूज्या नराधिप ! । दशानना चाष्टभुजा दक्षिणोत्तरयोस्तदा । कालमृत्यू च संपूज्यौ सर्व्वारिष्टप्रशान्तये । यदा चाष्टभुजा पूज्या शुम्भासुरनिवर्हिणी । नवास्याः शक्तयः पूज्यास्तदा रुद्रविनायकौ । नमो देव्या इति स्तोत्रैर्महालक्ष्मीं समर्च्चयेत् । अवतारत्रयार्च्चायां स्तोत्रमन्त्रास्तदाश्रयाः । अष्टादशभुजा चैषा पूज्या महिषमर्द्दिनी । महालक्ष्मीर्महाकाली महती च सरस्वती । ईश्वरी पुण्यपापानां सर्वलोकमहेश्वरी । महिषान्तकरी येन पूजिता स जगत्प्रभुः । पूजयेज्जगतां धात्रीं चण्डिकां भक्तवत्सलाम् । अर्घ्यादिभिरलङ्कारैर्गन्धपुष्पैस्तथोत्तमैः । धूपैर्दीपैः सनैवेद्यैः नानाभक्ष्यसमन्वितैः । रुधिराक्तेन बलिना मांसेन सुरया नृप ! । सुरभिणा स्नानीयेन चन्दनेन सुगन्धिना । सकर्पूरैश्च ताम्बूलैर्भक्तिभावसमन्वितैः । वामभागेऽग्रतो देव्याः छिन्नशीर्षं महासुरम् । पूजयेन्महिषं येन गतं सायुज्यमीशया । दक्षिणे पुरतः सिंहमत्युग्रं धर्म्ममीश्वरम् । ततः कृताञ्जलिर्भूत्वा स्तुवीत चरितैस्त्रिभिः । एकेन वा मध्यमेन नैकेनेतरयोरिह । चरितार्द्धञ्च न जपेज्जपन् छिद्रमवाप्नुयात् । स्तोत्रमन्त्रैः स्तुवीतेमां यदि वा जगदम्बिकाम् । प्रदक्षिणनमस्कारं कृत्वा मूर्ध्नि कृताञ्जलिः । क्षमापयेज्जगद्धात्रीं मुहुर्मुहुरतन्द्रितः । प्रतिश्लोकञ्च जुहुयात्पायसं तिलसर्पिषा । जुहुयात्स्तोत्रमन्त्रैर्वा चण्डिकायै शुभं हविः । नमोनमः पदैर्देवीं पूजयेत् सुसमाहितः । प्रयतः प्राञ्जलिः प्रह्वः प्राणानारोप्य चात्मनि । सुचिरम्भावयेदीशां चण्डिकान्तन्मयो भवेत् । एवं यः पूजयेद्भक्त्या प्रत्यहं परमेश्वरीम् । भुक्त्वा भोगान्यथाकामं देवीसायुज्यमाप्नुयात् । यो न पूजयते नित्यं चण्डिकां भक्तवत्सलाम् । भस्मीकृत्यास्य पुण्यानि निर्दहेत्परमेश्वरी । तस्मात् पूजय भूपाल ! सर्वलोकमहेश्वरीम् । यथोक्तेन विधानेन चण्डिकां सुखमाप्स्यसि” ५ अ० ।

“ऋषिरुवाच । नन्दा[१] भगवती नाम या भविष्यति नन्दजा । संस्तुता पूजिता ध्याता वशीकुर्य्याज्जगत्त्रयम् । कनकोत्तमकान्तिः सा सुकान्तिकनकाम्बरा । देवी कनकदामाढ्या कनकोत्तमभूषणा । कमलाङ्कुशपाशाब्जैरलङ्कृतचतुर्भुजा । इन्दिरा कमला लक्ष्मीः सा श्रीरुक्माम्बुजासना १ । या रक्तदन्तिका[२] नाम देवी प्रोक्ता मयानघ । तस्याः स्वरूपं वक्ष्यामि शृणु सर्व्वभयापहम् । रक्ताम्बरा रक्तवर्णा रक्तसर्वाङ्गभूषणा । रक्तायुधा रक्तनेत्रा रक्तकेशाऽतिभीषणा । रक्ततीक्ष्णनखा रक्तदशना रक्तदंष्ट्रिका । पतिं नारीवानुरक्ता देवी भक्तं भजेज्जनम् । वसुधाभनितम्बा सा सुमेरुयुगलस्तनी । दीर्घौ लम्बावतिस्थूलौ तावतीव मनोहरौ । कर्कशावतिकान्तौ तौ सर्वानन्दपयोनिधी । भक्तान् सम्पाययेद्देवी सर्वकामदुघौ स्तनौ । खड्गपात्रं च मुसलं लाङ्गलञ्च बिभर्त्ति सा । आख्याता रक्तचामुण्डा देवी योगेश्वरीति सा । अनया व्याप्तमखिलं जगत्स्थावरजङ्गमम् । इमां यः पूजयेद्भक्त्या स व्याप्नोति चराचरम् । अधीते य इमं नित्यं रक्तदन्तीवपुस्तवम् । तं सा परिचरेद्देवी पतिं प्रियमिवाङ्गना २ । शाकम्भरी[३] नीलवर्णा नीलोत्पलविभूषणा । गम्भीरनाभिस्त्रिवलीविभूषिततनूदरी । सुकर्कशसमोत्तुङ्गवृत्तपीनघनस्तनी । मुष्टौ शिलीमुखैः पूर्णं कमलं कमलालया । पुष्पपल्लवमूलादिफलादिशाकसञ्चयान् । काम्यानन्तरसैर्युक्तं क्षुत्तृण्मृत्युजरापहम् । कार्मुकञ्च स्फुरत्कान्तिबिभर्त्ति परमेश्वरी । शाकम्भरी शताक्षी स्यात् सैव दुर्गा[४] प्रकीर्त्तिता । शाकम्भरीं स्तुवन्ध्यायन् जपन्संपूजयन्नमन् । अक्षय्यमश्नुते शीघ्रमन्नपानादि सर्वशः । भीमाऽपि[५] नीलवर्णा सा दंष्ट्रादशनभासुरा ।

विशाललोचना नारी वृत्तपीनघनस्तनी। चन्द्रहासं च डमरुं शरं पात्रञ्च बिभ्रती। एकवीरा कालरात्रिः सैवोक्ता कामदा स्तुताध्। तेजोमण्डलदुर्धर्षा-भ्रामरीद् चित्रकान्तिभृत्। चित्रभ्रमरपाणिः सा महामारीति गीयते६। इत्येतामूर्त्तयोदेव्या व्याख्याता वसुधाधिप!। जगन्मातुश्चण्डिकायाः कीर्त्तिताः कामधेनवः। इदं रहस्यं परमं न वाच्यं कस्यचित्त्वया। व्याख्यानं दिव्यमूर्त्तीनामधीष्वावहितः स्वयम्। देव्याध्यानं मया प्रोक्तं गुह्याद्गुह्यतरम्महत्। तस्मात्सर्वप्रयत्नेन सर्वकाम फलप्रदम्। ११अ०।

शतचण्डीविधानं मन्त्रमहोदधौ १८ तरङ्गे नवार्ण प्रयोगानन्तरं प्रतिपादितं यथा

"शतचण्डीविधानन्तु प्रवक्ष्ये प्रीतये नृणाम्। नृपोपद्रवआपन्ने दुर्भिक्षे भूमिकम्पने। अतिवृष्टावनावृष्टौ परचक्रभये क्षये। सर्व्वे विघ्ना विनश्यन्ति शतचण्डीविधौ कृते। रोगाणां वैरिणां नाशो धनपुत्र समृद्धयः। शङ्करस्य भवान्या वा प्रासादनिकटे शुभम्। मण्डपं द्वारवेद्याढ्यं कुर्य्यात् सध्वजतोरणम्। तत्र कुण्डं प्रकुर्व्वीत प्रतीच्यां मध्यतोऽपि वा। स्नात्वा नित्य कृतिं कृत्वा वृणुयाद्दश वाडवान्। जितेन्द्रियान् सदाचारान् कुलीनान् सत्यवादिनः। व्युत्पन्नांश्चण्डिकापाठरतांश्च्छादयावतः। मधुपर्कविधानेन वस्त्रस्वर्णादिदानतः। जपार्थमासनं मालां दद्यात्तेभ्योऽपि भोजनम्। ते हविष्यान्नमश्नन्तो मन्त्रार्थगतमानसाः। भूमौ शयानाः प्रत्येकं जपेयुश्चण्डिकास्तवम्। मार्कण्डेयपुराणोक्तं दशकृत्वः सचेतसः। नवार्णं चण्डिकामन्त्रं जपेयुश्चाऽयुतं पृथक्। यजमानः पूजयेच्च कन्यानां नवकं शुभम्। द्विवर्षाद्यादशाब्दान्ताः कुमारीः परिपूजयेत्। नाधिकाङ्गीं न हीनाङ्गीं कुष्ठिनीञ्च व्रणाङ्किताम्। अन्धां काणां केकराञ्च कुरूपां रोमयुक्तनुम्। दासीजातां रोगयुक्तां दुष्टां कन्यां न पूजयेत्। विप्रां सर्व्वेष्टसिद्ध्यै यशसे क्षत्रियोद्भवाम्। वैश्यजां धनलाभाय पुत्राप्त्यै शूद्रजां यजेत्। द्विवर्षा सा कुमार्य्युक्ता त्रिमूर्त्तिर्हायनत्रिका। चतुरब्दा तु कल्याणी पञ्चवर्षा तु रोहिणी। षडब्दा कालिका प्रोक्ता चण्डिका सप्तहायनी। अष्टवर्षा शाम्भवी स्याद्दुर्गा च नवहायनी। सुभद्रा दशवर्षोक्ता ता मन्त्रैः परिपूजयेत्। एकाब्दायाः प्रीत्यभावो रुद्राब्दा तु विवर्जिता। तासामावाहने मन्त्रः प्रोच्यते शङ्करोदितः। मन्त्राक्षरमयीं लक्ष्मीं मातृणां रूपधारिणीम्। नवदुर्गात्मिकां साक्षात् कन्यामावाहयाम्यहम्। कुमारिकादि कन्यानां पूजामन्त्रान् ब्रुवेऽधुना। जगत्पूज्ये! जगद्वन्द्ये! सर्व्वदेवस्वरूपिणि। पूजां गृहाण कौमारि!१ जगन्मातर्नमोऽस्तु ते। त्रिपुरां२ त्रिपुराधारां त्रिवर्गज्ञानरूपिणीम्। त्रैलोक्यवन्दितां देवीं त्रिमूर्त्तिं पूजयाम्यहम्। कालात्मिकां कलातीतां कारुण्यहृदयां शिवाम्। कल्याणजननीं देवीं कल्याणीं३ पूजयाम्यहम्। अणिमादिगुणाधारामकाराद्यक्षरात्मिकाम्। अनन्तशक्तिकां लक्ष्मीं रोहिणीं४ पूजयाम्यहम्। कामचारां शुभां कान्तां कालचक्रस्वरूपिणीम्। कामदां करुणोदारां कालिकां५ पूजयाम्यहम्। चण्डवीरां चण्डमायां चण्डमुण्डप्रभञ्जिनीम्। पूजयामि महादेवीं चण्डिकां६ चण्डविक्रमाम्। सदानन्दकरीं शान्तां सर्व्वदेवनमस्कृताम्। सर्व्वभूतात्मिकां देवीं शाम्भवीं७ पूजयाम्यहम्। दुर्गमे दुस्तरे कार्य्ये भवार्णवविनाशिनीम्। पूजयामि सदा भक्त्या दुर्गां८ दुर्गार्त्तिनाशिनीम्। सुन्दरीं स्वर्णवर्णाभां सुखसौभाग्यदायिनीम्। सुभद्रजननीं देवीं सुभद्रां९ पूजयाम्यहम्। एतैर्मन्त्रैः पुराणोक्तैस्तां तां कन्यां प्रपूजयेत्। गन्धैः पुष्पैर्भक्ष्यभोज्यैर्वस्त्रैराभरणैरपि। वेदीं विरचिते रम्ये सर्व्वतोभद्रमण्डले। घटं संस्थाप्य विधिवत्तत्रावाह्यार्च्चयेच्छिवाम्। तदग्रे कन्यकाश्चापि पूजयेद्ब्राह्मणानपि। उपचारैस्तु विविधैः पूर्व्वोक्तावरणान्यपि। एवं चतुर्द्दिनं कृत्वा पञ्चमे होममाचरेत्। पायसाज्यत्रिमध्वक्तैर्द्राक्षारम्भाफलैरपि। मातुलाङ्गैरिक्षुखण्डैर्नारिकेलैः पुरैस्तिलैः। जातिफलैराम्रफलैरन्यैर्मधुरवस्तुभिः। सप्तशत्या दशावृत्त्या प्रतिश्लोकं हुतञ्चरेत्। अयुतञ्च नवार्णेन स्थापितेऽग्नौ विधानतः। कृत्वाऽऽवरणदेवानां होमं तत्तन्नाममन्त्रतः। कृत्वा पूर्णाहुतिं सम्यग्देवमग्निं विसृज्य च। अभिषिञ्चेच्च यष्टारं विप्रौघः कलसोदकैः। निष्कं सुवर्णमथ वा प्रत्येकं दक्षिणां दिशेत्। भोजयेच्च शतं विप्रान् भक्ष्यभोज्यैः पृथग्विधैः। तेभ्योऽपि दक्षिणान्दत्त्वा गृह्णीयादाशिषस्ततः। एवं कृते जगद्वश्यं सर्व्वे नश्यन्त्युपद्रवाः। राज्यं धनं यशः पुत्रानिष्टमन्यं लभेत सः"।

सहस्रचण्डीविधानं तत्रैव १८ तरङ्गे

"एतद्दशगुणं कुर्य्याच्चण्डीसाहस्रिकं विधिम्। विद्यावतः सदाचारान् ब्राह्मणान् वृणुयाच्छतम्। प्रत्येकं चण्डिकापाठान् विदध्युस्ते दिशा१० मितान्। अयुतं प्रजपेयुस्ते प्रत्येकं च नवार्णकम्। पूर्व्वोक्ताः कन्यकाः पूज्याः पूर्व्वमन्त्रैः शतं शुभाः। दशाहमेवं संपाद्य होमं कुर्य्युः प्रयत्नतः। सप्तशत्याः शतावृत्त्या प्रतिश्लोकं विधानतः। लक्षसंख्यं नवार्णेन पूर्व्वोक्तैर्द्रव्यसञ्चयैः। होतृभ्यो दक्षिणान्दत्त्वा पूर्व्वोक्तान् भोजयेद्द्विजान्। सहस्रसंमितान् साधून् देव्याराधनतत्परान्। एवं सहस्रसंख्याके कृते चण्डीविधौ नृणाम्। सिध्यत्यभीप्सितं सर्व्वं दुःखौघश्च विनश्यति। मारीदुर्भिक्षरोगाद्या नश्यन्ति व्यसनोच्चयाः। नेमं विधिं वदेद्दुष्टे खले चौरे गुरुद्रुहि। साधौ जितेन्द्रिये दान्ते वदेद्विधिमिमं परम्। एवं सा चण्डिका तुष्टा वक्तॄन् श्रोतॄंश्च रक्षति"।

चण्डीनवाक्षरविधानं तत्रैव १८तरङ्गे

"अथोनवाक्षरम्मन्त्रं वक्ष्ये चण्डीप्रसत्तये। वाङ्माया मदनो दीर्घलक्ष्मीस्तन्द्रा श्रुतीन्दुयुक्। डायै सटक् जलं कूर्म्मद्वयं झिण्टीशसंयुतम्। (ऐँ ह्रीँ क्लीँ चामुण्डायै विच्चे) नवाक्षरोऽस्य ऋषयो ब्रह्मविष्णुमहेश्वराः। छन्दांस्युक्तानि मुनिभिर्गायत्र्युष्णिगनुष्टुभः। देव्यः प्रोक्ता महापूर्व्वाः काली लक्ष्मीः सरस्वती। नन्दाशाकम्भरीभीमाः शक्तयोऽस्य मनोः स्मृताः। स्याद्रक्तदन्तिकादुर्गाभ्रामर्य्यो बीजसञ्चयः। अग्निवायुभगास्तत्त्वम्फलं वेदत्रयोदितम्। सर्व्वाभीष्टप्रसिद्ध्यर्थं विनियोग उदाहृतः। ऋषिच्छन्दोदैवतानि शिरोमुखहृदि न्यसेत्। शक्तिबीजानि स्तनयोस्तत्त्वानि हृदये पुनः। एकेनैकेन चैकेन चतुर्भिर्युगलेन च। समस्तेन च मन्त्रेण कुर्य्यादङ्गानि षट् सुधीः। ततएकादश न्यासान् कुर्वीतेष्टफलप्रदान्। प्रथमो मातृकान्यासः कार्य्यः पूर्व्वोक्तमार्गतः। कृतेन येन देवस्य सारूप्यं याति मानवः। अथ द्वितीयं कुर्व्वीत न्यासं सारस्वताभिधम्। बीजत्रयन्तु मन्त्राद्यं तारादि हृदयान्तिकम्। क्रमादङ्गुलिषु न्यस्येत् कनिष्ठाद्यासु पञ्चसु। करयोर्मध्यतः पृष्ठे मणिबन्धे च कूर्परे। हृदयादिषडङ्गेषु विन्यसेत् जातिसंयुतम्। अस्मिन् सारस्वते न्यासे कृते जाड्यं विनश्यति। ततस्तृतीयं कुर्व्वीत न्यासं मातृगणान्वितम्। मायाबीजादिका ब्राह्मी पूर्व्वतः पातु मां सदा। माहेश्वरी तथाग्नेय्यां कौमारी दक्षिणेऽवतु। वैष्णवी पातु नैरृत्ये वाराही पश्चिमेऽवतु। इन्द्राणी वायुकोणे च चामुण्डा चोत्तरेऽवतु। ऐशाने तु महालक्ष्मीरूर्द्ध्वं व्योमेश्वरी तथा। सप्तद्वीपेश्वरी भूमौ रक्षेन्नागेश्वरी तले। तृतीयेऽस्मिन् कृते न्यासे त्रैलोक्यविजयी भवेत्। न्यासं चतुर्थं कुर्व्वीत नन्दजादिसमन्वितम्। नन्दजा पातु पूर्व्वाङ्गं कमलाङ्कुशमण्डिता। खड्गपात्रकरा पातु दक्षिणे रक्तदन्तिका। पृष्ठे शाकम्भरी पातु पुष्पपल्लवसंयुता। धनुर्बाणकरा दुर्गा वामे पातु सदैव माम्। शिरःपात्रकरा भीमा मस्तकाच्चरणावधि। पादादि मस्तकं यावद्भ्रामरी चित्रकान्तिभृत्। तुर्य्यं न्यासं नरः कुर्व्वन् जरामृत्यू व्यपोहति। अथ कुर्वीत ब्रह्माद्यं न्यासं पञ्चममुत्तमम्। पादादिनाभिपर्य्यन्तं ब्रह्मा पातु सनातनः। नाभेर्विशुद्धिपर्य्यन्तं पातु नित्यं जनार्द्दनः। विशुद्धेर्ब्रह्मरन्ध्रान्तं पातु रुद्रस्त्रिलोचनः। हंसः पातु पदद्वन्द्वं वैनतेयः करद्वयम्। चक्षुषी वृषभः पातु सर्व्वाङ्गाणि गजाननः। परापरौ देहभागौ पात्वानन्दमयो हरिः। कृतेऽस्मिन् पञ्चमे न्यासे सर्व्वान् कामानवाप्नुयात्। षष्ठं न्यासं ततः कुर्य्यान्महालक्ष्म्यादिसंयुतम्। मध्यं पातु महालक्ष्मीरष्टादशभुजान्विता। ऊर्द्ध्वं सरस्वती पातु भुजैरष्टाभिरूर्जिता। अधः पातु महाकाली दशबाहुसमन्विता। सिंहो हस्तद्वयं पातु मम हंसोऽक्षियुग्मकम्। महिषं दिव्यमारूढो यमः पातु पदद्वयम्। महेशश्चण्डिकायुक्तः सर्व्वाङ्गाणि ममावतु। षष्ठेऽस्मिन् विहिते न्यासे सद्गतिं प्राप्नुयान्नरः। मूलाक्षरन्यासरूपं न्यासं कुर्वीत सप्तमम्। ब्रह्मरन्ध्रे नेत्रयुगे श्रुत्योर्नासिकयोर्मुखे। पायौ मूलमनोर्वर्णांस्ताराद्यान्नमसाऽन्वितान्। विन्यसेत् सप्तमे न्यासे कृते रोगक्षयोभवेत्। पायुतो ब्रह्मरन्ध्रान्तं पुनस्तानेव विन्यसेत्। कृतेऽस्मिन्नष्टमे न्यासे सर्व्वदुःखं विनश्यति। कुर्वीत नवमं न्यासं मन्त्रव्याप्तस्वरूपकम्। मस्तकाच्चरणं यावच्चरणान्मस्तकावधि। पुरोदक्षे पृष्ठदेशे वामभागेऽष्टशो न्यसेत्। मूलमन्त्रकृतोन्यासो नवमो देवताप्रियकृत्। ततः कुर्वीत दशमं षडङ्गन्यासमुत्तमम्। मूलमन्त्रं जातियुक्तं(दीर्घस्वरयुक्तम्)हृदयादिषु विन्यसेत्। कृतेऽस्मिन् दशमे न्यासे त्रैलोक्यं वशगं भवेत्। दशन्यासोक्तफलदं कुर्य्यादेकादशं ततः। खड्गिनी शूलिनीत्यादि(१अ०६१—६५) पठित्वा श्लोकपञ्चकम्। आद्यं(ऐँ)कृष्णतरं बीजं ध्यात्वा सर्व्वाङ्गके न्यसेत्।

न्मूलेन पाहि नो देवीत्यादि (४अ०२३–२६) श्लोकचतुष्टयम्। पठित्वा सूर्य्यसदृशं द्वितीयं (ह्रीँ) सर्व्वतो न्यसेत्। सर्व्वस्वरूपे सर्व्वेशे इत्यादि (११अ०२३–२७) श्लोकपञ्चकम्। पठित्वा स्फटिकाभासं तृतीयं (क्लीँ) स्वतनौ न्यसेत्। ततः षडङ्गं कुर्वीत विभक्तैर्मूलवर्णकैः। एकैकेन चैकेन चतुर्भिर्युगलेन च। समस्तेन च मन्त्रेण कुर्य्यादङ्गानि षट् सुधीः। शिखायां नेत्रयोः श्रुत्योर्नसोर्वक्त्रे गुदे न्यसेत्। मन्त्रवर्णान् समस्तेन व्यापकं त्वष्टशः सरेत्। खड्गं चक्रगदेषुचापपरिघान् शूलं भुशुण्डीं शिरः शङ्खं सन्दधतीं करैस्त्रिनयनां सर्व्वाङ्गभूषावृताम्। नीलाश्मद्युतिमास्यपाददशकां सेवे महाकालिकां यामस्तौत् शयिते हरौ कमलजो हन्तुं मधुकैटभौ। अक्षस्रक्परशू गदेषुकुलिशं पद्मं धनुः कुण्डिकां दण्डं शक्तिमसिञ्च चर्म्म जलजं घण्टां सुराभाजनम्। शूलं पाशसुदर्शने च दधतीं हस्तैः प्रवालप्रभां सेवे सैरिभमर्द्दिनीमिह महालक्ष्मीं सरोजस्थिताम्। घण्टाशूलहलानि शङ्खमुसले चक्रं धनुः सायकं हस्ताब्जैर्दधतीं घनान्तविलसच्छीतांशुतुल्यप्रभाम्। गौरीदेहसमुद्भवां त्रिजगतामाधारभूतां महापूर्व्वामत्र सरस्वतीमनुभजे शुम्भादिदैत्यार्द्दिनीम्। एवं ध्यात्वा जपेल्लक्षचतुष्कं तद्दशांशतः। पायसान्नेन जुहुयात् पूजिते हेमरेतसि। जयादिशक्तिभिर्युक्ते पीठे देवीं यजेत्ततः। तत्त्व२५पत्राष्टतत्र्यस्रे षट्कोणाष्टदलान्विते। त्रिकोणमध्ये संपूज्य ध्यात्वा तां मूलमन्त्रतः। पूर्व्वकोणे विधातारं स्वशक्त्या सह पूजयेत्। विष्णुं श्रिया च नैर्ऋत्ये, वायव्ये तूमया शिवम्। उदग्दक्षिणयोः सिंहं महिषञ्च क्रमाद्यजेत्। षट्कोणेषु च पूर्व्वादौ नन्दजां रक्तदन्तिकाम्। शाकम्भरीं तथा दुर्गां भीमाञ्च भ्रामरीं यजेत्। सबिन्दुनामवर्णाद्यास्ताराद्याश्च नमोऽन्तिमाः। नन्दजाद्या यजेच्छक्तीर्वक्ष्यमाणा अपीष्टशीः। अष्टपत्रेषु ब्रह्माणी पूज्या माहेश्वरी परा। कौमारी वैष्णवी चाथ वाराही नारसिंह्यपि। पश्चादैन्द्री च चामुण्डा तथा तत्त्व २५ दलेष्विमाः। विष्णुमाया चेतना च बुद्धिर्निद्रा क्षुधा ततः। छाया शक्तिः परा तृष्णा क्षान्तिर्ज्जातिश्च लज्जया। शान्तिः श्रद्धा कान्तिलक्ष्म्यौ धृतिर्वृत्तिः श्रुतिः स्मृतिः। दया तुष्टिस्ततः पुष्टिर्माता भ्रान्तिरिति क्रमात्। बहिर्भूगृहकोणेषु गणेशः क्षेत्रपालकः। वटुकश्चापि योगिन्यः पूज्या इन्द्रादिका अपि। एवं सिद्धे मनौ मन्त्री भवेत् सौभाग्यभाजनम्। मार्कण्डेयपुराणोक्तं नित्यं चण्डीस्तवं पठन्। पुटितं मूलमन्त्रेण जपन्नाप्नोति वाञ्छितम्। आश्विनस्य सिते पक्षे आरभ्याग्नितिथिं सुधीः। अष्टम्यन्तं जपेल्लक्षं दशांशं होममाचरेत्। प्रत्यहं पूजयेद्देवीं पठेत् सप्तशतीमपि। विप्रानाराध्य मन्त्री स्वमिष्टार्थं लभतेऽचिरात्। सप्तशत्याश्चरित्रे तु प्रथमे पद्मभूर्मुनिः। छन्दो गायत्रमुदितं महाकाली तु देवता। वाग्वीजं (ऐँ) पावकस्तत्त्वं धर्म्मार्थे विनियोजनम्। मध्यमे च चरित्रे तु मुनिर्विष्णुरुदाहृतः। उष्णिक्छन्दो महालक्ष्मीर्देवता वीजमद्रिजा(ह्रीँ)। वायुस्तत्त्वं धनप्राप्त्यै विनियोग उदाहृतः। उत्तरस्य चरित्रस्य ऋषिः शङ्कर ईरितः। त्रिष्टुप्छन्दो देवता च महापूर्व्वा सरस्वती। कामोवीजं (क्लीँ) रविस्तत्त्वं कामाप्त्यै विनियोजनम्। एवं संस्मृत्य ऋष्यादीन् ध्यात्वा पूर्व्वोक्तमार्गतः। सार्थस्मृति पठेच्चण्डीस्तवं स्पष्टपदाक्षरम्। समाप्तौ तु महालक्ष्मीं ध्यात्वा कृत्वा षडङ्गकम्। जपेदष्टशतं१०८ मूलं देवतायै निवेदयेत्। एवं यः कुरुते सोऽत्र नावसीदति जातुचित्। चण्डिकां प्रभजन्मर्त्त्यो धनैर्धान्यैर्यशस्यैः। पुत्त्रैः पौत्त्रैश्चाऽऽरोग्यैर्युक्तो जीवेद्वहुः समाः”।

निर्णयसि० २परि० शतचण्डीविधौ विशेष उक्तो यथा रुद्रयामले “शतचण्डीविधानञ्च प्रोच्यमानं शृणुष्व तत्। सर्व्वोपद्रवनाशार्थं शतचण्डीं समारभेत्। षोडशस्तम्भसंयुक्तं मण्डपं पल्लवोज्ज्वलम्। वसुकोणयुतां वेदीं मध्ये कुर्य्यात्त्रिभागतः। पक्वेष्टकचितां रम्यामुच्छ्राये हस्तसम्मिताम्। पञ्चवर्णरजोभिश्च कुर्य्यान्मण्डलकं शुभम्। पञ्चवर्णवितानञ्च किङ्किणीजालमण्डितम्। आचार्य्येण समं विप्रान् वरयेद्दश सुव्रतान्। ऐशान्यां स्थापयेत्कुम्भं पूर्व्वोक्तविधिनाचरेत्। वारुण्याञ्च प्रकर्त्तव्यं कुण्डं लक्षणलक्षितम्। मूर्त्तिं देव्याः प्रकुर्वीत सुवर्णस्य पलेन वै। तदर्द्धेन तदर्द्धेन तदर्द्धेन महामते!। अष्टादशभुजान्देवीं कुर्य्याद्वाष्टकरामपि। पट्टकूलयुगच्छन्नान्देवीं मध्ये निधापयेत्। देवीं संपूज्य विधिवज्जपं कुर्य्युर्दश द्विजाः। शतमादौ शतञ्चान्ते जपेन्मन्त्रं नवार्णकम्। चण्डीं सप्तशतीमध्ये संपुटोऽयमुदाहृतः। एकं द्वे त्रीणि चत्वारि जपेद्दिनचतुष्टयम्। रूपाणि क्रमशस्तद्वत् पूजनादिकमाचरेत्। पञ्चमे दिवसे प्रातर्होमं कुर्य्याद्विधा-

नतः। गुडूचीम्बायसन्दूर्वातिलान् शुक्लान् यवानपि। चण्डीपाठस्य होमन्तु प्रतिस्तोकन्दशांशतः। होमं कुर्य्याद्विजादिभ्यः समिदाज्यचरून् क्रमात्। कृत्वा पूर्णाहुतिन्दद्यात्विप्रेभ्यो दक्षिणां क्रमात्। कपिलाङ्गां नीलमणिं श्वेताश्वं छत्रचामरे। अभिषेकन्ततः कुर्य्युर्यजमानस्य ऋत्विजः। एवङ्कृतेऽमरेशान! सर्वसिद्धिः प्रजायते"। "सहस्रचण्डीं विधिवत्कुर्य्याद्विघ्ने महाभये! राज्यभ्रंशे महोत्पाते जनमारे महाभये। गजमारेऽश्वमारे च परचक्रभये तथा। इत्याद्याधिविधे दुःखे क्षयरोगादिजे भये। सहस्रचण्डिकापाठं कुर्याद्वा कारयेत्तथा। जापकास्तु शतप्रोक्ता विप्रास्तत्र नवाडयः। भोज्याः सहस्रं विप्रेन्द्रा गोशतं दक्षिणान्दिशेत्। गुरवे द्विगुणन्देयं शय्यादानन्तथैव च। सप्तधान्यं च मूदानं श्वेताश्वं च मनोहरम्। पञ्चनिष्कमिता मूर्त्तिः कर्त्तव्या वाऽर्धमानतः। अष्टादशभुजा देवी सर्वायुधविभूषिता। अयारिताश्चं दातव्यं सहस्रं प्रतग्रहप्रभो!। शतं वा नियताहारः पयःपानेन वर्त्तयेत्। एवं चण्डिकापाठं सहस्रं तु समाचरेत्। तस्य साध्यकार्यसिद्धिस्तु नात्र कार्या विचारणेति"। एतद्द्वयं यद्यपि महानिबन्धेषु नास्ति तथापि प्रचररूपत्वाद्दुक्तमिति दिक्। वाराहीतन्त्रे "सङ्कटे समनुप्राप्ते दुश्चिकित्स्यामये तथा। जातिभ्रंशे कुलोच्छेदेऽप्यायुषो नाश आगते। वैरिवृद्धौ व्याधिवृद्धौ धननाशे तथा-क्षये। तथैव त्रिविधोत्पाते तथा चैवातिपातके। कुर्य्याद्यत्नाच्चण्ड्याःशताद्दृत्तिन्ततः सम्पद्यते शुभम्। श्रेयोवृद्धिः शताद्दृत्ताद्राज्यवृद्धिस्तथा परा। मनसा चिन्तितन्देवि! सिध्येदष्टोत्तराच्छतात्। सहस्रावर्त्तनाल्लक्ष्मीरावृणोति स्वयं स्थिरा। भुक्त्वा मनोरथान् कामान्नरो मोक्षमवाप्नुयात्। चण्ड्याः शताद्दृत्तपाठात्सर्वाः सिध्यन्ति सिद्धयः"। ७काल्या भैरवभेदे पु०। "असिताङ्गोरुरुश्चण्ड उन्मत्तः क्रोधनस्तथा" तन्त्रसा०। शद्मावरणाष्टभैरवोक्तौ। संचार्यां कन्। चण्डिका सप्तवर्षीयां कुमार्य्याम् अत्रैव शब्दे मन्त्रमहोदधिवाक्यम् दृश्यम्। [राजनि०।

**चण्डीकुसुम** पु० चण्डीप्रियं कुसुमं यस्य। रक्तकरवीरवृक्षे।

**च(ण्डे)ण्डीश** पु० रुद्रगणभेदे "चण्ड(ण्डी)शः पूषणां देवं भगं नन्दीश्वरोऽग्रहीत्" भाग०४।५।१६। इत०। २शिवे पु०चण्डीश्वरोऽप्यत्र त्रिभुवनगुरोर्धाम चण्डीश्वरस्य"मेघ०

**चण्डु** पु० चडि–उन्। छुन्दुरे मूषिके शब्दच०।

**चण्डेश्वर** पु० चण्ड ईश्वरः। रक्ततनौ शिवमूर्त्तिभेदे "चण्डेश्वरं रक्ततनुं त्रिनेत्रम्" तन्त्रसारः।

**चण्डोग्रशूलपाणि** पु० शिवमूर्त्तिभेदे। "चण्डोग्रशूलपाणेश्च मनुतः सर्वार्थसाधकः"तन्त्रसारे तन्मनुतः उक्तः।

**चत** याचने भ्वा० उभ० द्वि० सेट्। चतति ते एदित् अचतीत्। अचतिष्ट। चचात चेते। निरुक्तौ अयं गत्यर्थतयोक्तः। "शुद्धा चतन्तमुशिजो नमोभिः" ऋ० १०। ४६।२। "चतन्तं चरतिर्गतिकर्मा" निरु० भा०। अस्य वैदिकेऽनिट्त्वम् चत्तः। "चत्तो इतश्चत्तामुतः" ऋ० १०।१५५।२। "दूरे चत्ताय च्छनत्सद्गहनम्" ऋ० १।१३२। ६। याचनस्य हिंसायां हत्तेरस्य हिंसार्थत्वमपि! "तं व इन्द्रं चतिनमस्य" ऋ० ६।१८।४। "चतिनं नाशकमिति" भा०। वा० इति।

**चतुःकूटा** स्त्री श्रीविद्यामन्त्रभेदे तन्त्रसारे तत्स्वरूपं दृश्यम् "चतुःकूटा महाविद्या शङ्करेण प्रपूजिता" तन्त्रसा०।

**चतुःपञ्च** त्रि० चत्वारः पञ्च वा वार्थे बहु० डच्। चतुःसंख्यके पञ्चसंख्यके वा। "अजानतामिवान्योन्यं चतुःपञ्चावशेषिताः" भाग० १।१५।२३। वा रस्य षत्वे चतुष्पञ्चेत्यप्यत्र।

**चतुःपञ्चाशत्** त्रि० चतुरधिका पञ्चाशत्। (चौयान्न) १चतुरधिकपञ्चाशत्संख्यायां २तत्संख्यान्विते च "पशुपुरोडाशोष्वविस्तुतःपञ्चाशत्" शत० ब्रा० ६।२।२।३७। ततः पूरणार्थे डट्। चतुःपञ्चाश तत्संख्यापूरणे त्रि० स्त्रियां ङीप्। वा रस्य षत्वे चतुष्पञ्चाश इत्यप्यत्र।

**चतुःपत्री** स्त्री चत्वारि चत्वारि पत्राण्यस्याः। क्षुद्रपाषाणभेदे राजनि०। वा रस्य षत्वे चतुष्पत्रीत्यप्यत्र

**चतुःपर्णी** स्त्री चत्वारि चत्वारि प्रतिपर्णं पर्णान्यस्याः। क्षुद्राम्लिकायाम् (आमरुल्) राजनि०। वा रस्य षत्वे चतुष्पर्णीत्यप्यत्र।

**चतुःपुण्ड्र** पु० चत्वारि पुण्ड्राणीवास्य। भिण्डावृक्षे राजनि०। वा रस्य षत्वे चतुष्पुण्ड्र इत्यप्यत्र।

**चतुःफला** स्त्री चतुर्धा विभक्तं फलमस्याः। नागबलायाम् राजनि०। वा रस्य षत्वे चतुष्फलाप्यत्र।

**चतुःशाल** न० चतसृणां शालानां समाहारः। अन्योन्याभिमुखशालाचतुष्टये "एकग्रामे चतुःशाले दुर्भिक्षे राष्ट्रविप्लवे। पतिना नीयमानायाः पुरः शुक्रो न दुष्यति ज्यो० त०। वा रस्य विसर्गषत्वे चतुश्शालेत्यप्यत्र। ङ्खत्वे वा ङीप् चतुः(श्)शालीत्यप्यत्र स्त्री।

चतुःषष्टि स्त्री चतुरधिका षष्टिः। (चौषट्टि) १चतुरधिकषष्टिसंख्यायां २तत्संख्यान्विते च। वा रस्य विसर्गषत्वे। ततः पूरणे डट्। चतुःषष्ट तत्संख्यापूरणे त्रि॰ स्त्रियां ङीप्।

चतुःषष्टिकला स्त्री चतुःषष्टिमिता कला। उपविद्याभेदे तास्र कलाशब्दे श्रीधरधृतवाक्ये दर्शिताः। शुक्रनीतिशास्त्रे तु ४अ॰ अन्यविधा उक्ता यथा "पृथक् पृथक् तु विद्यानां लक्षणं संप्रकाशितम्। कलानां न पृथग् लक्ष्म नाम चास्तीह केवलम्। पृथक् पृथक् क्रिया चात्र कलाभेदस्तु जायते। यां यां कलां समाश्रिता, तन्नाम्ना जातिरुच्यते। हावभावादि संयुक्तं नर्त्तनं १ च कला स्मृता। अनेकवाद्यविकृतौ ज्ञानं तद्वादने २ कला। वस्त्रालङ्कारसंधानं ३ स्त्रीपुंसोश्च कला मता। अनेकरूपाविर्भावकृतिज्ञानं ४ कला स्मृता। शय्यास्तरणसंयोगे पुष्पादिग्रथनं ५ कला। द्यूताद्यनेकक्रीडाभिरञ्जनं ६ तु कला स्मृता। अनेकासन संधाने रतिज्ञानं ७ कला स्मृता। कलासप्तकमेतद्धि गान्धर्वे समुदाहृतम्। मकरन्दासवादीनां मद्यादीनां कृतिः ८ कला। शल्यगूढाहृतौ ज्ञाने सिराव्रणव्यधः ९ कला। हीनादिरससंयोगे उन्नादिसंपाचनं १० कला। वृक्षादिप्रसवारोपपालनादिकृतिः ११ कला। पाषाणधात्वादिदृतिस्तद्भस्मकरणं १२ कला। यावदिक्षुविकाराणां कृतिज्ञानं १३ कला स्मृता। धात्वोषधीनां संयोगक्रियाज्ञानं १४ कला स्मृता। धातुसाङ्कर्य्यपार्थक्यकरणं १५ तु कला स्मृता। संयोगपूर्वविज्ञानं १६ धात्वादीनां कला स्मृता। क्षारनिष्कासनज्ञानं १७ कलासंज्ञं तु तत् स्मृतम्। कलादशकमेतत्तु ह्यायुर्वेदागमेषु च। शस्त्रसन्धानविक्षेपः १८ पदादिन्यासतः कला। सन्ध्याघाताकृष्टिभेदैर्मल्लयुद्धं १९ कला स्मृता। कलाऽभिलक्षिते देशे यन्त्राद्यस्त्रनिपातनम् २०। वाद्यसंकेततोव्यूहरचनादि २१ कला स्मृता। गजाश्वरथगत्या तु युद्धसंयोजनं २२ कला। कला पञ्चकमेतद्धि धनुर्वेदागमस्थितम्। विविधासनमुद्राभिर्देवतातोषणं २३ कला। सारथ्यञ्च गजाश्वादेर्गतिशिक्षा २४ कला स्मृता। मृत्तिकाकाष्ठपाषाणधातुभाण्डादिसत्क्रिया २५।२६।२७।२८। पृथक् कला चतुष्कं तु चित्रोद्याने खनिः २९ कला। तडागवापीप्रासादसमभूमिक्रिया ३० कला। घट्याद्यनेकयन्त्राणां वाद्यानां कृतिः ३१ कला। हीनमध्यादिसंयोग वर्णादिरञ्जनं ३२ कला। जलवाय्वग्निसंयोगनिरोधादिक्रिया ३३ कला। नौकारथादियानानां कृतिज्ञानं ३४ कला स्मृता। सूत्रादिरज्जुकरणे विज्ञानं ३५ तु कला स्मृता। अनेकतन्तुसंयोगैः पटबन्धः ३६ कला स्मृता। वेधादिसदसज्ज्ञानं ३७ रत्नानां तु कला स्मृता। स्वर्णादीनां तु याथात्म्यविज्ञानं ३८ च कला स्मृता। कृत्रिमस्वर्णरत्नादिक्रियाज्ञानं ३८ कला स्मृता। स्वर्णाद्यलङ्कारकृतिः ३९ कला लेपादिसत्कृतिः ४०। मार्द्दवादिक्रियाज्ञानं ४१ चर्म्मणां तु कला मता। पशुचर्म्माङ्गनिर्हारक्रियाज्ञानं ४२ कला स्मृता। दुग्धदोहादिविज्ञानं ४३ घृतान्तं तु कला स्मृता। सीवने कञ्चुकादीनां विज्ञानं ४४ तु कला स्मृता। बाह्वादिभिश्च तरणं ४५ कलासंज्ञं जले स्मृतम्। मार्जने गृहभाण्डादेर्विज्ञानं ४६ तु कला मता। वस्त्रसम्मार्जनं ४७ चैव क्षुरकर्म्म ४८ कले ह्युभे। तिलमांसादिस्नेहानां कला निष्कासनं ४९ मता। सीराद्याकर्षणे ज्ञानं ५० वृक्षाद्यारोहणे ५१ कला। मनोऽनुकूलसेवायाः कृतिज्ञानं ५२ कला मता। वेणुतृणादिपात्राणां कृतिज्ञानं ५३ कला मता। काचपात्रादिकरणविज्ञानं ५४ तु कला मता। संसेचनं ५५ संहरणं ५६ जलानां तु कला स्मृता। लोहाभिसारशस्त्रास्त्रकृतिज्ञानं ५७ कला मता। गजाश्ववृषभोष्ट्राणां पल्याणादिक्रिया ५८ कला। शिशोः संरक्षणे ज्ञानं ५९ धारणे ६० क्रीडने ६१ तथा। सुयुक्तताडनज्ञानं ६२ मपराधिजने तथा। नानादेशीयवर्णानां सुसम्यग्लेखनं ६३ कला। ताम्बूलरक्षादिकृतिविज्ञानं ६४ तु कला स्मृता। आदाने आशुकारित्वं प्रतिदाने चिरक्रिया। कलासु द्वौ गुणौ ज्ञेयौ सर्व्वास्वेतौ मनीषिभिः। चतुःषष्टिः कलाह्येताः संक्षेपेण निदर्शिताः। यां यां कलामाश्रितोयस्तांतां कुर्य्यात् स एव हि"। "चतुःषष्टिकलाविद्या ईश्वरीप्रीतिवर्द्धनम्" गायत्रीकवचम्। वा रस्य विसर्गषत्वे चतुष्षष्टिकलाप्यत्र

चतुःसप्तति स्त्री चतुरधिका सप्ततिः। (चौहत्तर) १चतुरधिकसप्ततिसंख्यायां २तत्संख्यान्विते च ततः पूरणे डट्। चतुःसप्त त तत्पूरणे त्रि॰ स्त्रियां ङीप्। वा रस्य विसर्गसत्वम्।

चतुःसम न॰ चत्वारि समानि यत्र। "लवङ्गं जीरकं पथ्या यमानी च चतुःसमम्" वैद्यकोक्ते लवङ्गादिचतुर्द्रव्यात्मके

औषधभेदे, शब्दार्थचि॰ वैद्यके तद्गुणा उक्ता यथा “लवङ्गं जीरकं पथ्या यमानी च चतुः समम्। आमशूलविबन्धघ्नं पाचनं भेदि शोधनुत्”। “कस्तूरिकाया द्वौ भागौ चत्वारश्चन्दनस्य तु। कुङ्कुमस्य त्रयश्चैव शशिनश्च चतुःसमम्” इत्युक्तेषु २मिलितेषु तत्तत्परिमाणान्वितकस्तूरीचन्दनकुङ्कुमकर्पूरेषु च। वा रस्य विसर्गसत्वे चतुस्सममप्यत्र।

**चतुर्** त्रि॰ ब॰ व॰ चत–उरन्। १चतुःसंख्यायाम्, २चतुःसंख्यान्विते च। “चत्वारोवयमृत्विजः स भगवान् कर्म्मोपदेष्टा हरिः” वेणी॰। स्त्रियां गौणे मुख्ये च चतस्रादेशः। “तासामाद्याश्चतस्रस्तु निन्दितैकादशी च या” मनुः। प्रियचतसा अतिचतसा। नञा सुना विना च समासे बहु॰ अच् समा॰। अचतुरः सुचतुरः विचतुरः। अव्ययीभावे टच् समा॰ उपचतुरम्। अवयवे तयप् चतुष्टय। चतुःसंख्यायां तदन्विते च त्रि॰ स्त्रियां ङीप् “चरितार्था चतुष्टयी” कुमा॰। “ततोवारे सुच् “रात्सस्य” पा॰ सलोपे। चतुर् २चतुर्वारे अव्य॰। तत्रार्थे चतुस् इति शब्दकल्पनं प्रामादिकम्। “चतुरवत्तः कात्या॰ श्रौ॰। “चतुर्नमो अष्टकृत्वो भवाय” अथ॰ ११।२।८। “चतुरुपह्वयते” तै॰ स॰ २।६।७।३। चतुष्टयार्थे च “गूढ़मैथुनधर्म्म च काले काले च संग्रहम्। अप्रमादमनालस्यं चतुः शिक्षेत वायसात्” इति चाणक्यः।

**चतुर** पु॰ चत–उरच्। १वक्रगतौ २हस्तिशालायाञ्च हेमच॰। ३कार्य्यदक्षे ४आलस्यहीने ५निपुणे च त्रि॰। ६नायकभेदे पु॰ तल्लक्षणं रसमञ्जर्य्याम् “वाक्चेष्टाव्यङ्ग्यसमागमश्चतुरः। तत्र वचनव्यङ्ग्यसमागमो यथा “तमोजटाले हरिदन्तराले काले निशायास्तव निर्गतायाः। तटे नदीनां निकटे वनानां घटेत शातोदरि! कः सहायः”। चेष्टाव्यङ्ग्यसमागमो यथा “कान्ते कनकजम्बीरं करे कमपि कुर्व्वति। अपारनिमले भानौ विन्दुमिन्दुमुखी ददौ”। तां वीक्ष्य लीलाचतुरामनङ्गः “नव प्रियं यश्चतुरावलोकिनः” कुमा॰। “न पुनरेति गतं चतुरं वयः”। “मृगया जहार चतुरेव कामिनी” रघुः। चतुर्+अर्श॰ अच्। ६चतुर्विशिष्टे त्रि॰।

**चतुरंशा** स्त्री वर्णवृत्तभेदे “द्विजवरकर्णौ विहरसवर्णौ भवति यदा सा किल चतुरंशा” छन्दोम॰।

**चतुरक्रम** पु॰ “द्रुतद्वन्द्वं लघुद्वन्द्वं तथा प्रान्ते गुरुर्भवेत्। द्वात्रिंशदक्षरैर्युक्तः शृङ्गारे चतुरक्रमः” इति संगी॰दा॰ उक्ते रूपकभेदे।

**चतुरङ्ग** न॰ चत्वारि अङ्गानि यस्य। १हस्त्यश्वरथपदातिरूपाङ्गचतुष्टययुते सैन्ये। “प्रयातेऽस्मिन्नरव्याघ्र! बलेन महताहृतः। क्रमेण चतुरङ्गेण यत्नेन जितकाशिना” भा॰व॰२० अ॰। रक्तहरितपीतश्यामलरूपाणि चत्वारि बलस्वरूपाणि क्रीड़ासाधनान्यङ्गान्यस्य। (चतूराजी) २क्रीड़ाभेदे। तत्क्रीड़ाप्रकारः ति॰त॰ व्यासयुधिष्ठिरसंवादे “युधिष्ठिर उवाच। अष्टकोष्ठ्याञ्च या क्रीड़ा तां मे ब्रूहि तपोधन!। प्रकर्षेणैव मे नाथ! चतुराजी यथा भवेत्। व्यास उवाच। अष्टौ कोष्ठान् समालिख्य प्रदक्षिणक्रमेण तु। अरुणं पूर्वतः कृत्वा दक्षिणे हरितं बलम्। पार्थ! पश्चिमतः पीतमुत्तरे श्यामलं बलम्। राज्ञोवामे गजं कुर्य्यात् तस्मादश्वं ततस्तरिम्। कुर्य्यात् कौन्तेय! पुरतो युद्धे पत्तिचतुष्टयम्। कोणे नौका द्वितीयेऽश्वस्तृतीये च गजोवसेत्। तुरीये च वसेद्राजा वटिकाः पुरतः स्थिताः। पञ्चकेन वटी राजा, चतुष्कोणैव कुञ्जरः। त्रिकोणैव चलत्यश्वः पार्थ! नौका द्वयेन तु। कोष्ठमेकं विलङ्घ्याथ सर्वतोयाति भूपतिः। अग्रएव वटी याति बलं हन्त्यग्रकोणगम्। यथेष्टं कुञ्जरोयाति चतुर्दिक्षु महीपते!। तिर्य्यक् तुरङ्गमो याति लङ्घयित्वा त्रिकोष्ठकम्। कोणकोष्ठद्वयं लङ्घ्य व्रजेन्नौका युधिष्ठिर। सिंहासनं चतूराजी नृपाकृष्टञ्च षट्पदम्। काककाष्ठं बृहन्नौका नौकाकृष्टप्रकारकम्। घाताघाते वटी नौका बलं हन्ति युधिष्ठिर!। राजा गजोहयश्चापि त्यक्त्वा घातम् निहन्ति च। अत्यन्तं स्वबलं रक्षेत् स्वराजबलमुत्तमम्। अल्पस्य रक्षया पार्थ! हन्तव्यं बलमुत्तमम्”। नौकायाश्चत्वारि पदानि अश्वस्याष्टौ पदानि इत्याविक्यमश्वस्य। “मतङ्गजस्य गर्वेण राजा क्रीड़ति निर्भरम्। तस्मात् सर्वबलं दत्त्वा रक्ष कौन्तेय! कुञ्जरम्। सिंहासनं चतूराजी यदत्रस्थानतो भवेत्। सर्वसैन्यैर्गजैर्व्वापि रक्षितव्योमहीपतिः। अन्यराजपदे गत्वा यदा घातो युधिष्ठिर। तदा सिंहासनं तस्य भण्यते नृपसत्तम। राजा च नृपतिं हत्वा कुर्य्याद्वै सिंहासनं यदा। द्विगुणं वाहयेत् पणमन्यथैकगुणं भवेत्”। द्विगुणं पणं दातव्यत्वेन प्रापयेत्। “मित्रसिंहासनं पार्थ! यदारोहति भूपतिः। तदा सिंहासनं नाम सर्वं नयति तद्बलम्। यदा सिंहासनं कर्त्तुं राजा गच्छ-

यदाश्रितः। तदा घातेऽपि हन्तव्यो बलेनापि सुरक्षितः। विद्यमाने नृपे यस्य स्वकीये च नृपत्रयम्। प्राप्नोति तु यदा तस्य चतूराजी तदा भवेत्। नृपेणैव नृपं हत्वा चतूराजो यदा भवेत्। द्विगुणं वाहयेत् पण्यमन्यथैकगुणं भवेत्। स्वपदस्थं यदा राजा राजानं हन्ति पार्थिव!। चतुरङ्गे तदा भूप! वाहयेच्च चतुर्गुणम्। यदा सिंहासने काले चतूराजी समुत्थिता। चतूराजी भवत्यत्र नतु सिंहासनं नृप!"। अत्रेदं वीजम् उभयथा जयेऽपि परसिंहासनाधिकारात् परराजवधे शौर्य्याधिक्यनिष्कण्टकत्वदर्शनात् क्रीड़ायामपि तथा कल्प्यते। "राजद्वयं यदा हस्ते आत्मनोराज्ञि संस्थिते। परेण संहृतस्यैको बलेनाप्यपहार्य्यते। राजद्वयं यदा हस्ते न स्यादन्यकरे परः। तदा राजा हि राजानं घातेऽपि तं हनिष्यति। नृपाकृष्टो यदा राजा गमिष्यति युधिष्ठिर!। घाताघाते पि हन्तव्यो राजा तत्र न रक्षकः। कोणे राजपदं त्यक्त्वा वटिकान्तं यदा व्रजेत्। वटी च षट्पदं नाम तदा कोष्ठबलं नयेत्। यदा तस्य भवेत् पार्थ! चतूराजी च षट्पदम्। तदापि च चतूराजी भवत्येव न संशयः। पदातेः षट्पदे सिद्धे राज्ञा वा हस्तिना तथा। षट्पदं न भवेत्तस्य अवश्यं शृणु पार्थिव!। सप्तमे कोष्ठके यत् स्याद्वटिका दशमेन वै। तदान्योन्यस्य हन्तव्यं सुखाय दुर्बलं बलम्। त्रिवटीकस्य कौन्तेय! पुरुषस्य कदाचन। षट्पदं न भवत्येव इति गोतमभाषितम्। नौकैका वटिका यस्य विद्यते खेलने यदि। गाढ़ावटीति विख्याता पदं तस्य न दुष्यति"। पदं राजपदं कोणपदञ्च। "हस्ते रङ्गे बलं नास्ति काककाष्ठं तदा भवेत्। वदन्ति राक्षसाः सर्वे तस्य शक्तौ जयाजयौ। प्रोत्थिते पञ्चमे राज्ञि कृते वस्थाञ्च षट्पदे। अशौचं स्यात्तदा हन्ति चलित्वा चालितं बलम्। द्विरष्टत्र्यागते तस्मात् हन्यात् परबलं जयी। पार्थ! सिंहासने काले काककाष्ठं यदा भवेत्। सिंहासनं भवत्येव काककाष्ठं न भण्यते। उपरिष्ठाच्च यत्स्थानं तस्योपरि चतुष्टये। नौकाचतुष्टयं यत्र क्रियते तस्य नौकया। नौकाचतुष्टयं तस्य वृहन्नौकेति भण्यते। न कुर्य्यादेकदा राजन्! गजस्याभिमुखं गजम्। यदि कुर्वीत धर्मज्ञः पापयुक्तो भविष्यति। स्थानाभावे यदा पार्थ! हस्तिनं हस्तिसंमुखम्। करिष्यति तदा राजन्! इति गोतमभाषितम्। प्राप्ते गजद्वये राजन्। हन्तव्योवामतोगजः"। इति चतुरङ्गक्रीड़नम्।

**चतुरङ्गिन्** त्रि॰ चत्वारि अङ्गानि हस्त्यश्वरथपदातयः अङ्गा सन्त्यस्य इनि। बाहुल्येन हस्त्यश्वादिसेनाङ्गचतुष्टययुक्ते। "चालयन् वसुधां चेमां बलेन चतुरङ्गिणा" भा॰ आ॰ ६४अ॰। स्त्रियां ङीप्। "प्रेषयिष्ये तवार्थाय वाहिनीं चतुरङ्गिणीम्" ७३अ॰।

**चतुरङ्गुला** स्त्री चतस्रोऽङ्गुलयः प्रमाणमस्य पर्व्वणः अच् समा॰। १आरग्वधे (सोन्दाल)। अमरः। २चतुरङ्गुलमिते त्रि॰। "स चतुरङ्गुलमेवोभयतोऽन्तत उपगृहति" शत॰ ब्रा॰ १०।२।२।१। "तस्यास्तास्तु समा दीर्घाः प्रादेशाश्चतुरङ्गुलाः" आ॰ त॰ छन्दोप॰।

**चतुरम्ल** न॰ चतुर्णामम्लद्रव्याणां समाहारः पात्रा॰ न स्त्रीत्वम्। "अम्लवेतसवृक्षाम्लवृहज्जम्बीरनिम्बुकैः। चतुरम्लं हि, पञ्चाम्लं वीजपूरयुतं भवेत्" भावप्र॰ उक्ते अम्लवेतसादिचतुष्के।

**चतुरशीति** स्त्री चतुरधिका अशीतिः। (चौराशी) १चतुरधिकाशीतिसंख्यायां २तत्संख्यान्विते च। पूरणे डट्। चतुरशीत तत्संख्यापूरणे त्रि॰ स्त्रियां ङीप्।

**चतुरस्र** त्रि॰ चतस्रोऽस्रयः कोणा अस्य नि॰ अच्। १चतुष्कोणे पा॰ तालव्यमध्यस्यैव निपातनम्। दन्त्यमध्यत्वे चतुरस्रिरित्येव स्यात्। अस्य दन्त्यमध्यत्वं शब्दकल्पद्रुमोक्तं चिन्त्यम् सुप्रातसुश्वेति" पा॰ ५।४।१ सू॰ तालव्यमध्यस्यैव ग्रहणात् "चतुरस्रं त्रिकोणं वा वर्त्तुलं चार्द्धचन्द्रकम्। कर्त्तव्यमानुपूर्व्व्येण ब्राह्मणादिषु मण्डलम्" बौधा॰। २ब्रह्मसन्ताने केतुभेदे पु॰ "चतुरस्रा, ब्रह्मसन्तानाः" वृ॰सं॰११अ॰। केतुशब्दे दृश्यम्। ३अन्यूनानतिरिक्ते त्रि॰। "बभूव तस्याश्चतुरस्रशोभि" कुमा॰। "चतस्रोऽस्रयोऽस्य तच्चतुरस्रमन्यूनानतिरिक्तम्" मल्लि॰।

**चतुरात्मन्** पु॰ चतुरं निपुणम् आत्मा मनोऽस्य चत्वारोबुद्ध्यादय आत्मानोयस्य, चतस्रोविभूतय आत्मानोऽस्य वा। परमेश्वरे विष्णौ। "चतुरात्मा चतुर्व्यूहः" "चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात्" इति च विष्णुस॰। "रागद्वेषादिरहितत्वाच्चतुरं मनोऽस्येति मनोबुद्धिरहङ्कारश्चित्तं चतुष्टयमात्मा अस्येति वा चतुरात्मा। "ब्रह्मा दक्षादयः कालस्तथैवाखिलजन्तवः। विभूतयो हरेरेता जगतः सृष्टिहेतवः। विष्णुर्मन्वादयः कालः सर्वभूतानि च द्विज!। स्थितेर्निमित्तभूतस्य विष्णोरेता

विभूतयः। रुद्रः कालान्तकाद्याश्च समस्ताश्चैव जन्तवः। चतुर्धा प्रलयायैता जनार्दनविभूतयः" विष्णु पु०। उभयविधव्युत्पत्त्या द्विधानामकत्वात् विष्णुस० द्विरुक्तिः

**चतुरानन** पु० चत्वारि आननान्यस्य। चतुर्मुखे वेधसि अमरः। "तस्यां स चाम्भोरुहकर्णिकायामवस्थितो लोकमपश्यमानः। परिक्रमन् व्योम्नि विवृत्तनेत्रश्चत्वारि लेभेऽनुदिशं मुखानि" भाग० ३।८।१८। उक्तोऽस्य तथात्वम्। "इतरतापशतानि यथेच्छया वितर तानि सहे चतुरानन!" उद्भटः

**चतुराश्रम** न० चतुर्णामाश्रमाणां समाहारः। "चत्वार आश्रमा ब्रह्मचारिगृहस्थवानप्रस्थपरिव्राजकाः" वशिष्ठोक्तेषु ब्रह्मचार्यादिषु। तेषां विशेषधर्मास्तत्तच्छब्दे द्रष्टव्याः। तेषां साधारणधर्मा मनुनोक्ता यथा "चतुर्भिरपि चैवैतैर्नित्यमाश्रमिभिर्द्विजैः। दशलक्षणको धर्मः सेवितव्यः प्रयत्नतः। धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः। धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्। दश लक्षणानि धर्मस्य ये विप्राः समधीयते। अधीत्य चानुवर्त्तन्ते ते यान्ति परमां गतिम्। दशलक्षणकं धर्ममनुतिष्ठन् समाहितः। वेदान्तं विधिवच्छ्रुत्वा संन्यसेदनृणो द्विजः"। तस्य भावः ष्यञ्, स्वार्थे वा ष्यञ्। चातुराश्रम्य तद्धर्मे चतुर्ष्वाश्रमेषु च न०। "चातुराश्रम्यधर्मांश्च वेदधर्मांश्च पार्थिव" भा० शा० ६५ अ०।

**चतुरूषण** न० चतुर्णामूषणानां समाहारः। पिप्पलीमूलसहिते शुण्ठीपिप्पलीमरिचरूपे त्रिकटौ। "त्र्यूषणं सकणामूलं कथितं चतुरूषणम्। व्योषस्येव गुणाः प्रोक्ता अधिकाश्चतुरूषणे" भावप्र०।

**चतुर्गति** स्त्री चतस्रो वर्णाश्रमाणां यथोक्तकारिणां गतिः। १परमेश्वरे। "चतुर्मूर्त्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः" विष्णुसं०। चतुर्भिर्गतिरस्य। २कच्छपे पुंस्त्री हेमच०।

**चतुर्जातक** न० चतुर्णां जातकानां सुगन्धद्रव्याणां समाहारः। त्वगेलापत्रकनागकेशरेषु तदुपक्रम्य "एतच्च रोचनं रूक्षं तीक्ष्णोष्णं मुखगन्धहृत्। लघु पित्ताग्निकृद्वर्ण्यं कफवातविषापहम्" भावप्र०। "त्रिकटु चतुर्जातककुसुम्भकुङ्कुमं खादेत्" सुश्रुतः।

**चतुर्ण(न)वति** स्त्री चतुर्भिरधिका नवतिः पूर्व्वपदाद् वा णत्वम्। (चौरानव्वुइ) १चतुरधिकनवतिसंख्यायां २तत्संख्येये च। "चतुर्ण(न)वत्यधिकानि त्रीणि शतानि" कात्या० श्रौ० १६।८।२३। पूरणे डट्। चतुर्ण(न)वत तत्संख्यापूरणे त्रि० स्त्रियां ङीप्।

**चतुर्थ** त्रि० चतुर्णां पूरणः डट् थुक् च। चतुःसंख्यापूरणे स्त्रियां ङीप् सा च चन्द्रस्य २चतुर्थकलायाः ह्रासवृद्धिरूपायां तिथौ" चतुर्थ्यामुदितश्चन्द्रो नेक्षितव्यः कदाचन" ति० त० पुरा०। ३व्याकरणपरिभाषिते ङेः आमभ्यस्रूपे विभक्तिभेदे "सम्प्रदाने चतुर्थी" पा० "इतिहोमे न प्रयुञ्ज्यात् गोनामसु तथाष्टसु" छन्दोगप०। चतुर्थीमिति शेषः शुक्लकृष्णपक्षयोश्चतुर्थ्यां उभयदिनप्राप्तौ कस्या ग्राह्यता तन्निर्णयः कालमा० चतुर्थीप्र० यथा "अथ चतुर्थी निर्णीयते। सा च युग्मवाक्यात् परविद्धा पूज्या। न च शुक्लपक्षे तथात्वेऽपि कृष्णपक्षे पूर्व्वैव स्यादिति शङ्कनीयम् युग्मवाक्यस्य पक्षद्वयसाधारणत्वात्। "चतुर्दश्या च पूर्णिमेत्ये तच्छुक्लपक्षविषयत्वे सिद्धमिति चेत् तस्यैकस्य युग्मस्य शुक्लपक्षविषयत्वेऽपि "प्रतिपदाप्यमावास्या" इत्यनेन पक्षद्वयस्पर्शिना युग्मेन साहचर्यादितरेषामपि पक्षद्वयस्पर्शित्वं किं न स्यात्। एवं तर्हि साहचर्ययोर्द्वयोरपि परस्परकलहादनिर्णय इति चेत् न कारणान्तरेण निर्णेतव्यत्वात्। तर्हि चतुर्दशीपूर्णिमायुग्ममेकपक्षवर्त्तितिथिद्वयात्मकत्वात् द्वितीयादियुग्मैः सदृशं प्रतिपदामावास्यायुग्मन्तु भिन्नपक्षद्वयवर्तितिथिद्वयरूपत्वाद्विलक्षणम्। अतः पूर्णिमायुग्मसाहचर्य्यमेव निर्णय इति चेन्नैवम् श्रुत्या साहचर्य्यस्य बाध्यमानत्वात्। द्वितीयादिशब्दो मुख्यया वृत्त्या पक्षद्वयवर्त्तिनस्तिथीन् ब्रूते। सोऽयं श्रुतिलिङ्गादिषु षट्सु प्रथमं प्रमाणं साहचर्य्यन्तु सन्निधिः। स च स्थानावान्तरभेदत्वात्पञ्चमं प्रमाणम्। तच्च प्रथमादत्यन्तदुर्बलं सोऽयमर्थः पूर्वमीमांसायां तृतीयाध्याये श्रुतिलिङ्गादिस्थले महता प्रबन्धेन प्रपञ्चितः जै० सूत्रञ्चैतत् "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति"। इममेव च श्रुतिसन्निध्योर्विरोधमुद्दिश्योत्तरमीमांसायां गुणोपसंहारे विचारितम्। तथा हि ताण्डिशाखायां श्रूयते "ओमित्येतदक्षरमुद्गीथमुपासीतेति"। अस्यायमर्थः। पञ्चभक्तियुक्तस्य साम्न उद्गीथाख्या भक्तिः कश्चिदवयवः तञ्चावयवमुद्गाता यागकाले गायति। गीयमानं तमुद्गीथं सएवोद्गाता ताण्डिशाखाम्नातोपनिषद्विहितैरनेकैर्गुणैरुपासीतेति ते च गुणास्ताण्डिशाखायामेव विहिताः। उद्गी-

यभक्तिस्तु ताण्डिशाट्यायनिजैमिनीयतलवकारादिषु सर्वासु सामशाखासु पठिता । तत्र यदिदन्ताण्डिशाखोक्तगुणानामुपासनं तत्किं ताण्डिशाखागत एवोद्गीथविशेषे अवतिष्ठते किं वा सर्वशाखागत उद्गीथसामान्ये सञ्चरतीति संशयः । तत्र सन्निधिवशादुद्गीथविशेषेऽवतिष्ठत इति पूर्व्वः पक्षः । उद्गीथशब्दो मुख्यया वृत्त्योद्गीथसामान्यं ब्रूते । न च सन्निधिना पञ्चमप्रमाणेन प्रथमप्रमाणस्य श्रुतेः सङ्कोचो युक्तः । तस्मादुपासनमुद्गीथसामान्ये संचरतीति राद्धान्तः । अनेन न्यायेन प्रकृतेऽपि साहचर्य्याख्येन सन्निधिना द्वितीयादिश्रुतेः सङ्कोचायोगाद्युग्मादिशास्त्रं पक्षद्वयविषयं द्रष्टव्यम् । यदि चतुर्दशीपूर्णिमयोः कृष्णपक्षविषयत्वं न सम्भाव्यते तर्हि तत्रैकत्र शुक्लपक्षविषयत्वमस्तु । तथा प्रतिपद्युग्ममपि गत्यन्तराभावात्पक्षद्वयसम्बन्धिविषयम् एवं व्यवस्थितौ सत्यां युग्मशास्त्रेण पक्षद्वयेऽपि चतुर्थी परविद्धैव प्राप्नोति । ननु वचनान्तरेण चतुर्थीद्वयस्य व्यवस्था प्रतीयते । तथा च मार्कण्डेयपुराणे "शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः । कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविरिति" । अत्र च वक्तव्यं किमिदं शुक्लादिवाक्यं युग्मादिशास्त्रनियमद्वारा एकवाक्यतया तिथीनां व्यवस्थापकमुत स्वातन्त्र्येण । यदि नियमद्वारा तर्हि युग्माग्नीत्यादियुग्मे पूर्वतिथीनामुत्तरविद्धानामपूज्यत्वेन "शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः" इत्येतत्पूर्वार्द्धमविरोधि उत्तरार्द्धन्तु विरोधि । तथा तेष्वेव युग्मेषु चरमतिथीनां पूर्वविद्धानां पूज्यत्वेन "कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः" इत्युत्तरार्द्धमविरोधि । पूर्व्वार्द्धन्तु विरोधि । तथा दर्शप्रतिपद्युग्मे कृष्णपक्षगतस्य दर्शस्योदये पूज्यत्वं शुक्लपक्षगतायाः प्रतिपदोऽस्तमये पूज्यत्वं तथा सति तत्रोभयत्र विरोधः स्फुटतरः । तस्मान्न युग्मादिशास्त्रमनेन नियन्तुं शक्यम् । नापि स्वातन्त्र्येण तिथीनां व्यवस्थापकम् तत्र युग्मादिशास्त्रविरोधस्यापरिहार्य्यत्वात् । अविरोधेन तु शुक्लादिवाक्यस्य दशम्यादिविषयत्वम्प्रतिपत्प्रकरणे प्रसङ्गादुदाहृतम् । तस्माच्छुक्लकृष्णयोरपि पक्षयोर्युग्मादिशास्त्राच्चतुर्थी परविद्धा ग्राह्या । वृहद्वशिष्ठोऽपि "एकादशी तथा षष्ठी अमावास्या चतुर्थिका । उपोष्याः परसंयुक्ताः पराः पूर्व्वेण संयुताः" इति । ननु परविद्धोपवासः क्वचित् प्रतिषिध्यते । "द्वितीया पञ्चमी वेधादृशमी च त्रयोदशी । चतुर्दशी चोपवासे हन्युः पूर्व्वोत्तरे तिथी" इति । अयमर्थः । पञ्चमी वेधेन पूर्व्वां चतुर्थीन्तिथिमुत्तराञ्च षष्ठीं तिथिमुपवासविषये हन्ति अतः पञ्चमीविद्धायां चतुर्थ्यां नोपवास इति । नैष दोषः व्रतभेदेन व्यवस्थोपपत्तेः सन्ति हि चतुर्थ्यां भिन्नदेवताविषयाणि बहूनि व्रतानि । तत्र विष्णुधर्म्मोत्तरप्रोक्ते चतुर्मूर्त्तिव्रते मूर्त्तिचतुष्टयोपेतो विष्णुर्देवता । स्कन्दपुराणोक्ते अङ्गारकचतुर्थीव्रते भौमो देवता कूर्म्मपुराणोक्ते यमव्रते यमो देवता । सौरपुराणादिप्रोक्तेषु दूर्वागणपत्यादिव्रतेषु विनायको देवता कूर्म्मपुराणप्रोक्ते नागचतुर्थीव्रते शेषशङ्खपालादयः सर्पा देवतास्तत्र विनायकनागव्यतिरिक्तानां व्रते परेद्युरुपवासः प्राप्नोति तादृशे विषये पञ्चमीवेधनिषेधो व्यवस्थापनीयः ! तथा पूर्व्वविद्धाप्रशंसा च तस्मिन्नेव विषये द्रष्टव्या । अतएव ब्रह्मवैवर्त्ते पूर्व्वोत्तरविद्धयोर्विधिनिषेधौ स्मर्य्येते "चतुर्थीसंयुता कार्य्या तृतीया, च चतुर्थिका । तृतीयया युता, नैव पञ्चम्या कारयेत्क्वचिदिति" । तथा तत्रैव पूर्व्वविद्धा प्रशस्यते "चतुर्थीसंयुता या च सा तृतीया फलप्रदा । चतुर्थी तु तृतीया या महापुण्यफलप्रदेति" । तस्याश्च विनायकव्रतविषयत्वं तत्रैव सूचितम् "कर्त्तव्या व्रतिभिर्वत्स ! गणनाथसुतोषणीति" स्कन्दपुराणेऽपि "विनायकव्रते कार्य्या सर्व्वमासेषु षण्मुख ! । चतुर्थी तु जयायुक्ता गणनाथसुतोषणीति" । विनायकव्रतानुष्ठाने चतुर्थ्यां मध्याह्नव्यापित्वं मुख्यं प्रयोजकम् । तदाह बृहस्पतिः "चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते । मध्याह्नव्यापिनी चेत् स्यात्परतश्चेत्परेऽहनीति" । (विनायकस्य माता दुर्गा तत्तिथिस्तृतीया तया विद्धा) यदा पूर्वेद्युर्मध्याह्नव्यापिनी भवति तदा मुख्यप्रयोजकस्य विद्यमानत्वान्मातृविद्धत्वगुणसद्भावाच्च सा ग्राह्या तादृशे विषये परेद्युः सत्या अपि मध्याह्नव्यापिन्यास्त्याज्यता । अतएव प्रशस्यत इत्युक्तम् । परेद्युरेव यदा मध्याह्नव्यापिनी तदा मातृविद्धत्वगुणाभावेऽपि प्रधानप्रयोजकानुसारेण परविद्धैव ग्राह्या । तथा च स्मृत्यन्तरम् "मातृविद्धा प्रशस्ता स्याच्चतुर्थी गणनायके । मध्याह्नेऽपरतश्चेत् स्यान्नागविद्धा प्रशस्यते" इति । ननु बहुषु वचनेषु पूर्वविद्धाया गणनाथसन्तोषकत्वमुक्तम् । अतः पूर्वविद्धत्वस्यैव मुख्यप्रयोजकता युक्ता । नैवम् । मध्याह्न

व्यापित्वस्यैव वैयर्थ्यप्रसङ्गात्। अवश्यं हि तदा-मध्याह्नव्यापित्वं प्रसङ्गाद्भवति। अतस्तद्विधानं व्यर्थं व्यावर्त्त्याभावात्। अथोच्येत पक्षान्तरेऽप्यनेकवचनविहितस्य पूर्वविद्धत्वस्य वैयर्थ्यन्तदवस्थम् मध्याह्नव्यापित्वेनैव तन्निर्णयादिति तन्न यदा तिथिक्षयवशादुभयत्र मध्याह्नव्याप्तिर्नास्ति यदा चोभयत्र कृत्स्नमध्याह्नव्यापित्वं तदेकदेशव्यापित्वं वा समानन्तत्र सर्वत्र मध्याह्नव्याप्त्या निर्णयाभावे सति पूर्वविद्धत्वेनैव निर्णेतव्यत्वात्। एवं तर्हि सावकाशनिरवकाशयोर्निरवकाशम्बलीय इति न्यायेन मध्याह्नव्यापित्वस्य निरवकाशतया प्राबल्यमित्येव वक्तव्यन्तु मुख्यतयेति चेत्। मुख्यत्वस्यापि सम्भवात् तिथिनिर्णये कर्मकालव्याप्तिशास्त्रस्य मुख्यत्वञ्चास्य प्रकरणस्य प्रारम्भे दर्शितम्। कर्म्मकालस्तु विनायकव्रतस्य मध्याह्नः। “प्रातःशुक्लतिलैः स्नात्वा मध्याह्ने पूजयेन्नृपेति” तत्कल्पे विधानात्। अतोमुख्यत्वादपि मध्याह्नव्यापित्वं प्रबलमिति। ननु कस्याञ्चित्स्मृतौ पूर्वविद्धत्येन मध्याह्नव्यापित्वबाध उपलभ्यते। “जया च यदि सम्पूर्णा चतुर्थी क्षयते यदि। जया सैव हि कर्त्तव्या नागविद्धान्न कारयेदिति” स्मरणात्। नैवम्। अस्य वचनस्य दिनद्वये मध्याह्नस्पर्शाभावविषयत्वेनाप्युपपत्तेः। तथाहि पूर्वदिने विनायकव्रतप्रयोजके मध्याह्ने जया सम्पूर्णा, परेद्युर्मुहूर्त्तत्रयक्षयवशान्मध्याह्नादर्वागेव चतुर्थी समाप्ता-तदा दिनद्वये कर्मकाले ग्राह्यतिथेश्चतुर्थ्या अभावाद्विनायकव्रते किन्दिनमुपादेयमिति वीक्षायां पूर्वदिनं विधातुं परदिनं प्रतिषेधति। अथोच्येत। “जया च यदि सम्पूर्णा” इत्यनेन कर्मकालरूपमध्याह्नसमाप्तिपर्यन्तत्वन्न विवक्षितम् किन्त्वहःस्समयपर्यन्तत्वमिति। एवं तर्हि पूर्वविद्धतैव नास्ति वेधिकायाः पूर्वतिथेः सम्पूर्णत्वे सति वेध्यायाश्चतुर्थ्या अनवकाशत्वात्। अथ मा भूत्पूर्वविद्धत्वं तथापि मध्याह्नव्यापिन्यां जयायां विहितायां परेद्युर्मध्याह्नव्यापित्वं बाध्यत इति चेत्। नैवम्। न खलूत्तरदिनहेयत्वे मध्याह्नव्यापित्वं कारणतयोपन्यस्यते किन्तु नागविद्धत्वम्। अतो नागविद्धत्वनिन्दायां वचनस्य तात्पर्यम् न चतुर्थीरहितजयाविधाने। अन्यथा चतुर्थीनिन्दायामपि तात्पर्यं प्रसज्येत। नच तद्युक्तम्। नहि वरघाताय कन्यामुद्वाहयन्ति। वचनच्छाया तु कैमुतिकन्यायेनाभिलक्ष्यते यदिशब्दप्रयोगात्। यद्यपि जया सम्पूर्णा तथापि नागविद्धा हेया। किमुत जया युक्तायाश्चतुर्थ्याः सम्भवन्त्यामितिहि वचनव्यक्तिः। मध्याह्नव्याप्तावियती भक्तिः कुतस्तवेति चेत्। चतुर्थीरहितायां शुद्धतृतीयायान्तवापि कुतो भक्तिरिति समानः पर्यनुयोगः। वचनबलादित्युत्तरमस्माकमपि। वचनयोः परस्परकलहे पूर्वोक्ताभ्यां मुख्यत्वनिरवकाशत्वाभ्यां मध्याह्नवचनमेवातिप्रबलं सिद्धिविनायकव्रते तस्य प्रतिपदोक्तत्वादपि प्रबलत्वम्। जयावचनन्तु गौर्य्यादिव्रते चरितार्थम्। तच्च व्रतं भविष्यत्पुराणेऽभिहितम् “विनायकं समभ्यर्च्य चतुर्थ्यां यदुनन्दन!। सर्वविघ्नविनिर्मुक्तः कार्य्यसिद्धिमवाप्नुयात्” इत्यभिधायानन्तरमिदं पठ्यते “निद्रां रतिं शिवां भद्रां कीर्त्तिं मेधां सरस्वतीम्। प्रज्ञां तुष्टिं तथा-कान्तिं तत्रैवाहनि पूजयेत्। विद्याकामो विशेषेण पूजयेच्च सरस्वतीमिति”। लिङ्गपुराणेऽपि “चतुर्थ्यान्तु गणेशस्य गौर्य्याश्चैव विधानतः। पूजां कृत्वा लभेत्सिद्धिं सौभाग्यञ्च नरः क्रमादिति”। नारदीयपुराणेऽपि “माघशुक्लचतुर्थ्यान्तु गौरीमाराधयेद्बुधः। चतुर्थी वरदा नाम गौरी तत्र सुपूजितेति”। अतो यथोक्तरीत्या विनायकव्रते मध्याह्नव्यापित्वेनैव निर्णयः। गौरीव्रते तु जयावचनन्द्रष्टव्यम्। तत्र यदा दिनद्वयेऽप्येतद्वैषम्ये मध्याह्नैकदेशव्यापिनी तदा पूर्वदिने तन्महत्त्वञ्चेति तदेवोपादेयम्। उत्तरदिने तन्महत्त्वे किम्महत्त्वगुणेन तदुपादेयं? किं वा मातृविद्धत्वगुणेन पूर्वमुपादेयमिति? संशये पूर्वमिति ब्रूमः। परस्य नागविद्धत्वदोषोपेतत्वात् पूर्वस्य च तदभावात्। एतदेवाभिप्रेत्य स्कान्दपुराणे पठ्यते “ज्यैष्ठे च वटसावित्री तथानङ्गत्रयोदशी। विनायकचतुर्थी च कर्त्तव्या संमुखी तिथिरिति”। विनायकव्रतवन्नागव्रतेऽपि चतुर्थी मध्याह्नव्यापिनी ग्राह्या। नागव्रतञ्च कूर्मपुराणे दर्शितम्। “तिथौ युगाह्वयायाञ्च समुपोष्य यथाविधि। शङ्खपालादिनागानां शेषस्य च महात्मनः। पूजा कार्या पुष्पगन्धक्षीराप्यायनपूर्वकम्। विषाणि तस्य नश्यन्ति नच तान् घ्नन्ति पन्नगाः” इति। युगाह्वया चतुर्थी। मध्याह्नव्यापित्वञ्च देवलेनोक्तम् “युगमध्यन्दिने यत्र तत्रोपोष्य फणीश्वरान्। क्षीरेणाप्याय्य पञ्चम्यां पूजयेत्प्रयतोनरः। विषाणि तस्य नश्यन्ति न तान् हिंसन्ति पन्नगाः” इति विनायकचतुर्थीनागचतुर्थ्योरियान्विशेषः। एकभक्तन्यायेन मध्याह्नव्याप्तेः षोढा-

भेदे सति यदा परेद्युरेव मध्याह्नव्याप्तिस्तदा विनायक चतुर्थी परा। इतरेषु तु पञ्चसु भेदेषु जयायोगस्य प्रशस्तत्वात् पूर्वेद्युरेव सा भवति। यदा तु पूर्वेद्युरेव मध्याह्नव्यापिनी तदा नागचतुर्थी पूर्वा। इतरेषु तु पञ्चसु भेदेषु पञ्चमीयोगस्य प्रशस्तत्वात् उत्तराभवति। तत्प्राशस्त्यञ्च पूजयेदिति वचनादवसीयते"।

**चतुर्थक** पु० चतुर्थेऽह्नि भवोरोगः कन्। "दिनत्रयमतिक्रम्य यः स्यात् सहि चतुर्थकः" इति वैद्यकोक्ते विषमज्वरभेदे।

**चतुर्थकाल** पु० चतुर्थः कालःभोजनकालः। "मुनिभिर्द्विरशनं प्रोक्तं विप्राणां मर्त्यवासिनां नित्यम्। अहनि च तमस्विन्याम्" छन्दोपरिशिष्टेन दिने भोजनद्वयस्य विधानेन तृतीयभोजनकालोत्तरे सार्द्धदिनात्मके भोजनकाले। "चतुर्थकालमश्नीयादत्यारणवरां मितम्" मनुः।

**चतुर्थभक्त** न० चतुर्थे चतुर्थकाले भक्तं यत्र। सार्द्धदिनात्मके भक्तकाले। "चतुर्थभक्तक्षपणं वैश्ये शूद्रे विधीयते" भा० आनु० १०६ अ०।

**चतुर्थभाज्** पु० चतुर्थमंशं धान्यादेः भजते करह्रपेण भजक्वि। आपदि चतुर्थभागरूपकरग्राहिणि नृपे। "चतुर्थमाददानोऽपि क्षत्रियोभागमापदि। प्रजाः रक्षन् परं शक्त्या किल्बिषात् प्रतिमुच्यते" मनुः। "चतुर्थभाङ् महाराज! भोज इन्द्रसखो बली" भा० स० १६ अ०।

**चतुर्थांश** पु०कर्म०। १चतुर्भागैकभागे "चतुर्थांशोऽस्य धर्मस्य रक्षिता लभते फलम्" हरिवंशे १७०अ०। चतुर्थोऽंशोऽस्य। २चतुर्थांशस्वामिनि त्रि०। "सर्वेषामर्द्धिनो मुख्यास्तदर्द्धेनार्द्धिनोऽपरे। तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्च पादिनः" मनुः दक्षिणार्थगोशतविभागोक्तौ। तुरीयांशादयोऽप्यत्र। "औरसे पुनरुत्पन्ने तुरीयांशहराः सुताः" कात्या० स्मृ०।

**चतुर्थिका** स्त्री। पलपरिमाणे वैद्यकपरिभाषा तस्य चतुःकर्षात्मकत्वात्तथात्वम्।

**चतुर्थीकर्म्मन्** पु० विवाहादनन्तरं चतुर्थ्यां तिथौ कर्त्तव्ये कर्म्मभेदे। "अथातश्चतुर्थीकर्म्म" गोभिलः "विवाहनिष्पत्त्यनन्तरं चतुर्थ्यां तिथौ वक्ष्यमाणं कर्म्म वर्त्तिष्यते" सं०त० रघुनन्दनः।

**चतुर्दंष्ट्र** पु०चतस्रोदंष्ट्रा यस्य। स्कन्दस्य सैनिकभेदे। "चतुर्दंष्ट्रोऽष्टजिह्वश्च मेघनादः पृथुश्रवाः" भा०श०४६०अ० स्कन्दसैनिकोक्तौ। २वलिसैन्यभेदे। "अष्टदंष्ट्रश्चतुर्दंष्ट्रो मेघनादो जलन्धमः" हरिव०२४०अ०वलिसैन्योक्तौ। ३परमेश्वरे च। "चतुर्द्दंष्ट्रश्चतुर्भुजः" विष्णु स०। "चतस्रोदंष्ट्रा अस्य चतुर्दंष्ट्रोन्नृसिंहविग्रहः शाङ्खशाखा शृङ्गं दंष्ट्रा इत्युच्यते चतस्रोदंष्ट्राः शृङ्गाणि अस्य "चत्वारि शृङ्गा इ श्रौति" इत्यादिश्रुतेः" भा०।

**चतुर्द्दन्त** पु० चत्वारो दन्ता अस्य। ऐरावते इन्द्रगजे हेमच०। "चतुर्द्दन्तगजारूढो वज्री कुलिशभृत्करः" विष्णुध० इन्द्रध्यानम्। चत्वारोदन्ता अस्य गवादेः संख्यापूर्व्वकत्वात् वयसि दतादेशः। चतुर्दत् चतुर्दन्तोपलक्षितवयोविशिष्टे गवादौ स्त्रियां ङीप्।

**चतुर्द्दशन्** पु० ब० व०। चतुरधिकादश। (चौद्दा) १चतुरधिकदशसंख्यायां २तत्संख्येये च। ततः पूरणे डट्। चतुर्दश तत्संख्यापूरणे त्रि० स्त्रियां ङीप्। सा च चन्द्रस्य चतुर्दशकलाया ह्रासवृद्धिरूपक्रियारूपायां तिथौ। "चतुर्दश्यष्टमी चैव अमावास्या च पूर्णिमा" ति० त० पु०।

उभयपक्षयोस्तस्या उभयदिनसत्त्वे कर्म्मभेदे कस्या ग्राह्यता तन्निर्णयः कालमा० चतुर्द्दशीप्रक० यथा

"अथ चतुर्दशी निर्णीयते। अत्रापि शुक्लकृष्णपक्षभेदेन व्यवस्था भवति। तत्र युग्मशास्त्रेण शुक्लचतुर्दशी परविद्धा ग्राह्या। तथा व्यासोऽपि "शुक्ला चतुर्द्दशी ग्राह्या परविद्धा सदा व्रते" इति। पूर्वविद्धाप्रतिषेध उत्तरविद्धा विधिश्चोत्यु भयमपि स्यन्दपुराणे पठ्यते "सदा कार्या त्रयोदश्या न तु युक्ता चतुर्दशी। पौर्णमासीयुता सा स्याच्चतुर्द्दश्या च पूर्णिमेति"। नारदीयेऽपि "तृतीयैकादशी षष्ठी शुक्लपक्षे चतुर्दशी। पूर्वविद्धा न कर्त्तव्या कर्त्तव्या परसंयुतेति"। यत्तु भाद्रशुक्लचतुर्दश्यामनन्तव्रतमविष्योत्तरेऽभिहितम् तत्र पूर्वविद्धा परविद्धा वा मध्याह्नव्यापिनी ग्राह्येति केचिदाहुः। लिङ्गञ्च तत्र प्रमाणत्वेनोदाहरन्ति। "मध्याह्ने भोज्यवेलायां स मुत्तीर्य सरित्तटे। ददर्श शीला सा स्त्रीणां समूहं रक्तवाससाम्। चतुर्दश्यामर्चयन्तमक्त्या देवं पृथक् पृथगिति"। "अत्र मध्याह्ने भोज्यवेलायामित्यनेन मध्याह्नस्य कर्मकालत्वं प्रतीयते। अतस्तद्व्यापिनी तिथिर्ग्राह्या। नैतत्सारम्। यथा विनायकव्रते "मध्याह्ने पूजयेन्नृपेति मध्याह्नः कर्मकालत्वेन विहितः। नात्र तथा विधिरस्ति। उदाहृतं तु लिङ्गमर्थवादगतत्वान्न स्वातन्त्र्येण कस्यचिदर्थस्य प्रमापकं किन्तु सति प्रमाणान्तरे तस्योपोद्बलकं भवति। नचात्र प्रमाणान्तरमस्याशः। अतोन

मध्याह्नः कर्म्मकालः। तथा सति ह्यौदयिकी ग्राह्येति वचनेन युग्मशास्त्रादिभिश्चोदयव्यापिनी ग्राह्या। सा च तिथ्यन्तरवत्त्रिमुहूर्त्तेति मुख्यः कल्पः द्विमुहूर्त्तेत्यनुकल्पः एवं सति शिष्टाचारोऽप्यनुगृहीतो भवति। चैत्रश्रावण चतुर्द्दश्यौ शुक्लपक्षे अपि रात्रियोगिन्यौ ग्राह्येति। तथा च बौधायनः "मधोः श्रावणमासस्य शुक्ला या तु चतुर्द्दशी। सा रात्रिव्यापिनी ग्राह्या परा पूर्व्वाह्ण गामिनीति"। परा मासान्तर्व्वर्त्तिनी शुक्लचतुर्द्दशी। कृष्णा चतुर्द्दशी तु पूर्व्वविद्धैव ग्राह्या। तथा चापस्तम्बः "कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्द्दशी। पूर्व्वविद्धा तु कर्त्तव्या परविद्धा न कर्हिचिदिति"। अपराह्णव्यापित्वे तु शुक्लचतुर्द्दश्यपि पूर्व्वविद्धा ग्राह्या तथा च स्कन्दपुराणे "चतुर्द्दशी च कर्त्तव्या त्रयोदश्या युता विभो!। मम भक्तैर्महाबाहो! भवेद्या चापराह्णिकी। दर्शविद्धा न कर्त्तव्या राकाविद्धा कदाचनेति"। अत्र मम भक्तैरितीश्वरोक्तिलिङ्गाच्छिवचतुर्द्दशीविषयत्वं द्रष्टव्यम्। तदेवं व्रतान्तरेषु चतुर्द्दशी निर्णीता। अथ शिवरात्रिव्रतं निर्णीयते। तत्रेदञ्चिन्त्यते। किमयं शिवरात्रिशब्दः रूढः ?। किं वा यौगिकः ?। उत लाक्षणिकः ?। अथ वा योगरूढ़ ? इति। किन्तावत्प्राप्तम्। रूढ़इति। तिथिविशेषे शिवरात्रिशब्दस्य संज्ञारूपेण स्मरणात्। तथा च स्क० नागरखण्डे "माघमासस्य शेषे या प्रथमा फाल्गुनस्य च। कृष्णे चतुर्द्दशी सा तु शिवरात्रिः प्रकीर्त्तितेति"। कामिके "माघमासेऽसिते पक्षे विद्यते या चतुर्द्दशी। तद्रात्रिः शिवरात्रिः स्यात्सर्व्वपुण्यशुभावहेति"। यद्यप्यत्र शिवस्य रात्रिः शिवरात्रिरित्यवयवार्थः प्रतीयते तथापि योगात् रूढ़ेर्बलवत्त्वाद्योगोऽत्र न ग्राह्यः। प्राबल्यञ्चाश्वकर्णादिशब्देष्ववगम्यते। अश्वस्य कर्ण इत्यवयवार्थप्रतीतावपि तमुपेक्ष्य रूढ्या वृक्षविशेषवाचित्वस्वीकारात्। ननु काकदन्तपरीक्षासमानोऽयं विचारः। यद्ययं शिवरात्रिशब्दोरूढ़ः यदि वा यौगिकः उभयथाप्यनुष्ठाने विशेषाभावात्। नैवम्। अस्त्येव महान्विशेषः। यौगिकत्वे शिवसम्बन्धिव्रतजातं सर्व्वं यस्यां रात्रावनुष्ठीयते सा सर्व्वाशिवरात्रिः स्यात्। माघमासादिपदञ्च तदानीमुपलक्षणं भवेत्। रूढ़िपक्षे तु माघमासादेर्व्विशेषणत्वात् तद्विशिष्टाया एकस्याएव तिथेः शिवरात्रित्वम्। अतः कर्त्तव्यएव विचारः। तत्राहीनन्यायेन रूढ़िमेवाद्रियामहे। तस्य

च न्यायस्य संग्राहकावेतौ श्लोकौ भवतः "अहीनस्य द्वादशेति प्रकृतौ विकृतावुत। न हीन इति योगेन प्रकृतौ तद्विकल्प्यताम्। शीघ्रधीहेतुतो रूढ़ेरहीने विकृताविदम्। उत्कृष्यतां द्वादशत्वं साङ्गात् प्रकृतकर्म्मणः"। अयमर्थः ज्योतिष्टोमे श्रूयते "तिस्र एव साह्नस्योपसदोद्वादशाहीनस्य यज्ञस्य सवीर्य्यत्वायेति"। अह्ना सह वर्त्तत इति साह्नः। एकदिननिष्पाद्योज्योतिष्टोमः। तस्य प्राचीनेषु त्रिषु दिनेष्वङ्गत्वेनानुष्ठेया होमा उपसच्छब्दवाच्याः। तास्तिस्र उपसदो विधाय पुनरहीनशब्दवाच्यस्य कर्म्मणो द्वादशोपसदो विधीयन्ते। तत्र संशयः। किमिदं द्वादशोपसत्त्वं द्विरात्राद्यहीनप्रकृतिभूते साह्नशब्दवाच्ये प्रकृते ज्योतिष्टोमे निविशते ? आहोस्विदहीनशब्दवाच्ये विकृतिरूपे द्विरात्रादावुत्कृष्यते ? इति। तदर्थमिदञ्चिन्त्यते। अहीनशब्दो यौगिको रूढोवेति। तत्र न हीन इति व्युत्पत्तेर्व्विस्पष्टं प्रतिभासाद्यौगिकएवायम्। तदर्थश्च प्रकृतावुपपन्नः। साङ्गप्रधानस्य सर्व्वस्य साक्षाद्वाचकशब्दैरेवोपदिष्टत्वेन हीनत्वाभावाद्विकृतौ तु विशेषएव वाचकशब्दैरुपदिश्यते। इतरत्सर्व्वमतिदेशात् प्राप्यते। अत उक्तिसङ्कोचात् विकृतेर्हीनत्वम्। एवञ्च सत्यहीनशब्दस्य ज्योतिष्टोमे प्रवृत्तिसम्भवात्प्रकरणानुग्रहणाच्च तत्रैव द्वादशत्वं निविशते। न च पूर्व्ववाक्यविहितेन त्रित्वेन बाधः शङ्कनीयः वाक्ययोः समानबलत्वेन व्रीहियववद्विकल्पोपपत्तेः। तस्माद्ज्योतिष्टोमएव द्वादशत्वविधिरिति प्राप्ते ब्रूमः। विकृतिरूपे द्विरात्रादाविदं द्वादशत्वं विधीयते। कुतः अहीनशब्दस्य श्रौतप्रयोगबाहुल्येन तत्रैव रूढत्वात्। रूढिश्च शीघ्रबुद्धिहेतुत्वेन योगाद्बलीयसी, योगे त्ववयवार्थं प्रथमतो निश्चित्य पश्चात्समुदायार्थो निश्चेतव्य इति विलम्बः। न चात्र प्रकरणविरोधः शङ्कनीयः बलीयसा वाक्येन प्रकरणस्य बाधितत्वात्। तस्मादिदं द्वादशत्वं प्रकृतज्योतिष्टोमादुत्कृष्य विकृतिषु द्विरात्रादिषु निवेशनीयमिति। अत्र यथा रूढ़ोऽहीनशब्दस्तथा शिवरात्रिशब्दोऽपि रूढ़ इति प्रथमः पक्षः। अपर आह। यौगिकएवायं शिवरात्रिशब्दः। कुतः शिवसम्बन्धमुपजीव्य तच्छब्दस्य प्रवृत्तत्वात्। तथा च स्कन्दपुराणे "माघस्य कृष्णपक्षे या तिथिस्सैव चतुर्द्दशी। शिवरात्रिस्तु सा ख्याता सर्व्वपापनिषूदनी"। "तस्य रात्रिः समाख्याता शिवरात्रिः शिवप्रिया। तस्यां सर्व्वेषु लि-

ङ्गेषु सदा संक्रमते हरः। यानि कानि च लिङ्गानि चराणि स्थावराणि च। तेषु संक्रमते देवि! तस्यां रात्रौ यतो हरः। शिवरात्रिस्ततः प्रोक्ता तेन सा हरवल्लभेति"। शिवरहस्ये "तत्प्रभृत्येव देवर्षे! माघकृष्णचतुर्द्दशी। शिवरात्रिः समाख्याता प्रियेयन्त्रिपुरद्विषः" इति स्क० अवन्तिखण्डे "माघफाल्गुनयोर्मध्ये असिता या चतुर्द्दशी। शिवरात्रिस्तु सा ख्याता सर्वपापनिषूदनी"। तस्माच्छिवसम्बन्धिनी रात्रिः शिवरात्रिरिति यौगिकोऽर्थः प्रोक्षणीन्यायेन ग्रहीतव्यः। तस्य च न्यायस्य संग्राहकावेतौ श्लोकौ "संस्कारजातियोगेषु कं ब्रूते प्रोक्षणीरिति। संस्कारं सार्वभौमत्वाज्जातिशुद्धे जनोक्तितः। अन्योन्याश्रयतो नाद्येन जातिः कल्प्यशक्तितः। यौगिकः क्लृप्तशक्तित्वात्क्लृप्तिर्व्याकरणे स्थिता" अयमर्थः। दर्शपूर्णमासाङ्गतया श्रूयते "प्रोक्षणीरासादयतीति"। तत्र संशयः। किमयं प्रोक्षणीशब्दोऽभिमन्त्रणाशादनाद्युदकसंस्कारं ब्रूते?। किं वा जलावान्तरजातिविशेषम्? आहोस्वित् प्रोक्ष्यन्ते पात्राण्याभिरिति योगम्?। तत्र संस्कारं ब्रूत इति तावत्प्राङ्गुतः? सार्वभौमत्वात्। सर्वेषु हि संस्कारविधिवाक्यादिप्रदेशेषु प्रोक्षणीशब्दः श्रूयते। "प्रोक्षणीरासादयेध्मावर्हिरुपसादयेति" प्रैषवाक्यप्रयोगः। "प्रोक्षणीरासादयतीति" विधिवाक्ये। एवमभिमन्त्रणादिवाक्यान्युदाहरणीयानि तस्मात्संस्कारं ब्रूतइत्येकः पक्षः। जातिं ब्रूत इति पक्षान्तरम्। लोके हि जलक्रीड़ासु प्रोक्षणीभिरुद्वेजिताः स्म इत्युदकजातौ प्रयोगो दृश्यते। तत्र न तावत्संस्कारं ब्रूत इत्याद्यः पक्ष उपपद्यते। कुतः? अन्योन्याश्रयत्वात्। नापि जातिं ब्रूत इति द्वितीयः पक्षोयुक्तः उदकजातौ प्रोक्षणीशब्दशक्तेर्व्यवहारे पूर्वमक्लृप्तत्वेनातः परं शक्तेः कल्पनीयत्वप्रसङ्गात्। नच योगेऽपि शक्तिः कल्पनीया व्याकरणेनैव क्लृप्तत्वात् व्याकरणे हि उक्ष सेचन इत्यस्माद्धातोः करणे ल्युट्प्रत्ययेन शब्दो व्युत्पादितः। तथा सति प्रकर्षेणोक्ष्यते अनेनेति योगेन सेचनसाधनमुदकादिकं सर्वं प्रोक्षणशब्दवाच्यं सम्पद्यते। प्रकृते तु स्त्रीशब्दवाच्यानामपां सेचनसाधनत्वात् तद्वचनस्य प्रोक्षणशब्दस्य ङीप्प्रत्ययान्तत्वेन प्रोक्षणीरितिद्वितीयाबहुवचनान्तः शब्दोनिष्पद्यते। नन्वहीनाधिकरणे रूढ़ेः प्राबल्यमुक्तम्। प्रोक्षण्यधिकरणे च योगस्य प्राबल्यमुच्यते। अतः परस्परविरोधः। मैवम् लब्धात्मिका हि रूढ़िर्योगमपहरतीति। नच प्रोक्षणीशब्दे रूढ़िर्लभ्यते। वृद्धव्यवहारेण जातावव्युत्पादितत्वात्। अहीनशब्दोऽपि द्विरात्रादिषु न वृद्धैर्व्युत्पादित इतिचेत् न। व्याकरणे व्युत्पादितत्वात्। "अह्नः खः क्रतौ" इत्यनेन वारुचेन वार्त्तिकेनाहन्शब्दात् खप्रत्ययमुत्पाद्य खस्येनादेशं कृत्वा क्रतुविषयतया व्युत्पादितो अहीनशब्दः। नन्वेवं सति घट्टकुटीप्रभातन्यायस्तत्र प्रसज्येत यतोऽहीनशब्दे योगम्परिहर्त्तुंकामेन भवता व्याकरणमुपजीव्य योगे पर्यवसानं कृतम्। नायन्दोषः। पूर्वपक्षिणोऽभिमते समासलक्षणे योगे पर्यवसानस्यानभिधानात्। नच नञ्समासोऽपि व्याकरणेषु व्युत्पादित इति शङ्कनीयम्। नञ्समासस्वीकारे सति "अयज्ञोवाएष" इत्यादाविवाऽहीनशब्दस्याद्युदात्तत्वप्रसङ्गात् मध्योदात्तोह्ययं शब्द आम्नायते। तस्मात्पक्षद्वये योगसाम्येऽपि समासरूपयोगम्पूर्वपक्षाभिमतं निराकृत्य औतरूढ़िः सिद्धान्तिना समाश्रिता। तामेव रूढ़िं प्रकटयितुं वररुचिना वार्त्तिकं कृतम् अतः सत्यपि प्रकृतिप्रत्ययविभागे यौगिकत्वं न शङ्कितुं शक्यते। तथा गोत्वजातौ रूढ़स्यापि गोशब्दस्यौणादिकसूत्रेषु "गमेर्डोः" इति प्रकृतिप्रत्ययविभागङ्कृत्वा गच्छतीति गौरिति व्युत्पत्तिः प्रदर्शिता। तद्वदत्राप्यवगन्तव्यम्। प्रोक्षणीशब्दे तु न रूढ़िज्ञापनाय किञ्चित्सूत्रं स्वतन्त्रं विहितमस्ति। किन्तर्हि सर्वधातुसाधारणेनावयवार्थव्युत्पादकेन ल्युट्प्रत्ययेन व्युत्पादितत्वात्। यौगिक एवायं प्रोक्षणीशब्दः। तस्मात्प्रोक्षणीशब्दवच्छिवरात्रिशब्दो यौगिक इति द्वितीयः पक्षः। अन्ये तु पुनर्मन्यन्ते। लाक्षणिकोऽयं शिवरात्रिशब्दः। तिथिवाचकेन शब्देन तत्तिथौ क्रियमाणस्य व्रतविशेषस्य लक्ष्यमाणत्वात्। अतएवेशानसंहितायामुक्तम् "शिवरात्रिव्रतन्नाम सर्वपापप्रणाशनम्। आचाण्डालमनुष्याणां भुक्तिमुक्तिप्रदायकम्। अर्द्धरात्रादधश्चोर्ध्वं युक्ता यत्र चतुर्दशी। तत्तिथावेव कुर्वीत शिवरात्रिव्रतं व्रती। शिवरात्रिव्रतङ्कार्यं भूतान्वितमहानिशि। शिवरात्रिव्रतन्देव करिष्ये शिवसन्निधौ। निर्विघ्नं कुरु मे देव। भक्तयाह्य! महेश्वरेति"। नारदीयसंहितायाम् "अर्द्धरात्रयुता यत्र माघकृष्णचतुर्दशी। शिवरात्रिव्रतं तत्र कुर्याज्जागरणं तथेति"। पद्मपुराणेऽपि "अर्द्धरात्रादधः-

न्योर्ध्वं यदि युक्ता चतुर्दशी । तत्तिथावेव कुर्वीत शिवरात्रिव्रतं व्रती” स्कन्दपुराणे “शिवरात्रिव्रतन्देव ! कथयस्व महेश्वरेति” । नच कालवाचकस्य शब्दस्य व्रतवाचकत्वमदृष्टचरमिति शङ्कनीयम् । कालवाचकाभ्याममावास्यापौर्णमासीशब्दाभ्यां यागत्रयरूपयोरिष्ट्योस्तत्कालसम्बन्धिन्योरुपलक्षितत्वात् । अतएव श्रूयते “यएवंविद्वान् पौर्णमासीं यजते य एवं विद्वानमावास्यां यजते” इति । स्मृतिष्वपि सर्वत्र तिथिवाचकैः शब्दैस्तत्सम्बन्धिनो व्रतविशेषा लक्ष्यन्ते । स्कन्दपुराणे “जन्माष्टमी नैव कृता कदाचित्कल्पायुतं पच्यते रौरवेष्विति” । ऋष्यशृङ्गोऽपि “एकादशीन्तु कुर्वीत क्षीयते द्वादशी यदेति” एवमन्यत्राप्युदाहार्यम् । तस्माल्लाक्षणिकोऽयं शिवरात्रिशब्द इति तृतीयः पक्षः । अथ सिद्धान्तं ब्रूमः । योगरूढ़एवायं शिवरात्रिशब्दः । योगो द्वितीयपक्षोपन्यासेन दर्शितः । रूढ़िश्च प्रथमोपन्यासेन । तत्रैकस्य स्वीकारे सत्यन्यविषयं शास्त्रन्तदनुग्राहकउदाहृतो न्यायश्च बाध्येत । नच यौगिकत्वे सति शिववृतोपेतेषु त्रयोदश्यादितिथ्यन्तरेषु शिवरात्रित्वं प्रसज्येतेति वाच्यम् । तस्यातिप्रसङ्गस्य रूढ्या निवारणात् । यथा पङ्कजशब्दे पङ्काज्जायत इति योगं स्वीकृत्य भेकादिष्वतिप्रसङ्गो रूढ़िस्वीकारेण निवार्यते । तद्वदत्रापि योगरूढ़तायां न कोऽप्यतिप्रसङ्गः । नच मुख्ये सम्भवति लक्षणाश्रयणमुचितम् । अथोच्येत । लक्षणाया अभावे व्रतविषयत्वन्न स्यादिति । तन्न । बहुव्रीहिस्वीकारे योगेनैव तत्सिद्धेः । शिवस्य प्रिया रात्रिर्यस्मिन् व्रतेऽङ्गत्वेन विहिता तद्व्रतं शिवरात्र्याख्यं तस्मान्निर्मन्थ्यन्यायेनात्र योगरूढ़ः शिवरात्रिशब्दः । तस्य न्यायस्य संग्राहकः श्लोकः“निर्मन्थ्यो यौगिको योगरूढ़ो वा योगभासनात् । यौगिकोऽचिरजाते ऽग्नौ नियते यौगरूढ़िभाक्” । अस्यायमर्थः । इष्टकाचयने श्रूयते “निर्मन्थ्येनेष्टकाः पचन्तीति”। तत्र संशयः। किमयं निर्मन्थ्यशब्दो यौगिकः ? किं वा योगरूढ़ः ? इति । निःशेषेण मथ्यत इति योगस्य प्रतीयमानत्वात्प्रोक्षणीन्यायेन योग इति पूर्वःपक्षः । अत्र द्वावग्नी विद्येते चिरनिर्मथितोऽचिरनिर्मथितश्च । चयनप्रक्रमयोर्ध्वां निर्मीय तस्य मुखायाङ्क्षितकालस्यारणाय योऽग्निर्निर्मथ्यते सोऽचिरनिर्मथितः । तेनेष्टकाः पच्यन्ते तस्यैव प्रत्यासन्नत्वात् । तथा च मन्थनस्याग्निहितयसाधारण्येऽप्यचिरनिर्मथितमग्निं नियन्तुं रूढ़िराश्रयणीया । यथा वा नावनीतं घृतमित्यत्र नवनीतजन्यत्वयोगस्य चिराचिरयोरुभयोः साधारण्येऽपि नूतनएव घृते नावनीतशब्दो लोके प्रसिद्धे नियम्यते तद्वदत्राप्यवगन्तव्यम् । तथा च सति प्रतीयमानयोगस्यापरिहृतत्वान्नियत्यै रूढ़िस्वीकाराच्च योगरूढ़ोऽयं निर्मन्थ्य इति राद्धान्तः । अनेनैव न्यायेन शिवरात्रिशब्देऽपि योगरूढ़िराश्रीयते । तत्र शिवस्य रात्रिः शिवरात्रिरिति तत्पुरुषसमासेन योगेन प्रवर्त्तमानः शब्दोरूढ्या माघकृष्णचतुर्दशीरूपे कालविशेषे नियम्यते । शिवस्य रात्रिर्यस्मिन् व्रते इति बहुव्रीहिसमासेन योगेन प्रवृत्तः शब्दोरूढ्याव्रतविशेषे नियम्यते । तच्च शिवरात्रिव्रतमेकादशीजयन्तीव्रतवत्संयोगपृथक्त्वन्यायेन नित्यङ्काम्यञ्चेत्युभयविधम् । तत्र नित्यत्वमकरणे प्रत्यवायवीप्सानित्यनिश्चलशब्दैरवगन्तव्यम् । तत्राकरणे प्रत्यवायः स्कन्दपुराणे पठ्यते “परात्परतरन्नास्ति शिवरात्रिः परात्परम् । न पूजयति भक्त्येशं रुद्रन्त्रिभुवनेश्वरम् । जन्तुर्जन्मसहस्रेषु भ्रमते नात्र संशयः” । वीप्सापि तत्र पठिता “वर्षे वर्षे महादेवि ! नरोनारी पतिव्रता । शिवरात्रौ महादेवङ्कामम्भक्त्या प्रपूजयेदिति” । नित्यनिश्चलशब्दौ च तत्रैव “माघकृष्णचतुर्दश्यां यः शिवं शंसितव्रतः । सुमुक्षुः पूजयेन्नित्यं स लभेदीप्सितम्फल मिति” । “कृष्णे वो यदि वा शुक्ले प्रक्षीयते हिमवानपि । मेरुमन्दरकैलासश्रीशैलो- विन्ध्य एव च । चलन्त्येते कदाचिद्वै निश्चलं हि शिवव्रतमिति” । काम्यत्वञ्च फलश्रवणादवगन्तव्यम् । तच्च स्कन्दपुराणे “शिवञ्च पूजयित्वा योजागर्त्ति च चतुर्दशीम् । मातुः पयोधररसन्न पिबेत्स कदाचन । यदीच्छेद्वाञ्छितान् भोगान् दिवि देवमनोरमान् । आगमोक्तविधिं कृत्वा प्राप्नोति परमम्पदम् । मम भक्तस्ततो देवि ! शिवरात्रिमुपोषकः । गणत्वमक्षयन्दिव्यमक्षयं शिवशासनम् । सर्वान्भुक्त्वा महाभोगान्मुक्तो भूयोन जायते” इति । काम्यव्रतस्येशानसंहितायां वर्षसंख्या पठ्यते “एवमेतद्व्रतङ्कुर्यात्प्रतिसंवत्सरं व्रती । द्वादशाब्दिकमेतत्स्याच्चतुर्विंशाब्दिकन्तु वा । सर्वान् कामानवाप्नोति प्रेत्य चेह च मानवः” इति । नित्यकामरूपस्यास्य व्रतस्य सर्वाधिकारित्वमीशानसंहितायामुक्तम् “शिवरात्रिव्रतन्नाम सर्वपापप्रणाशनम् । आचाण्डाल मनुष्याणां भुक्तिमुक्तिप्रदायकमिति” । अधिकारिण

यथाः स्कन्दपुराणे दर्शिताः “माघमासे तु कृष्णा या फाल्गुनादौ चतुर्दशी। सा च पुण्या तिथिर्ज्ञेया सर्वपातकनाशिनी। अहिंसा सत्यमक्रोधो ब्रह्मचर्यं दया क्षमा। शान्तात्मा क्रोधहीनश्च तपस्वी ह्यनसूयकः। तस्मै देयमिदन्देवि! गुरुपादानुगो यदि। अन्यथा योददातीदं स तदा नरकं व्रजेदिति”। उक्ताधिकारिणा नुष्ठेयं व्रतस्वरूपं त्रिविधम् “उपवासो जागरणं पूजा च। तदुक्तं नागरखण्डे “उपवासप्रभावेण बलादपि च जागरात्। शिवरात्रौ तथा तस्य लिङ्गस्यापि च पूजया। अक्षयाँल्लभते भोगान् शिवसायुज्यमाप्नुयादिति”। स्क० महाखण्डे “स यश्च लिङ्गमभ्यर्च्य सोपवासः सजागरः। अजानन्नपि निष्पापो निषादो गणतां गतः”। अत्रेदञ्चिन्त्यते किमेता उपवासजागरपूजा व्रतस्य स्वरूपे स्वेच्छया विकल्प्यन्ते? उत समुच्चिता एवेति?। तत्र विकल्प्यन्ते इति तावत्प्राप्तम्। कुतः। एकैकस्येतरनिरपेक्षतया विधानात्। तथाहि स्कन्दपुराणे केवलोपवासविधिः पठ्यते “अखण्डितव्रतो यो हि शिवरात्रिमुपोषयेत्। सर्वान् कामानवाप्नोति शिवेन सह मोदत इति”। तथा केवलजागरणं पठ्यते “कश्चित्पुण्यविशेषेण व्रतहीनोऽपि यः पुमान्। जागरं कुरुते तत्र स रुद्रसमतां व्रजेत्”। तथा केवलपूजा पठ्यते “यः पूजयति भक्त्या शमनेकफलतां व्रजेदिति”। तस्मादुपवासादयस्त्रयोऽपि विकल्प्यन्ते। यदि नागरखण्डमहाखण्डयोः समुच्चयविधिरस्तीत्युच्यते। तर्हि प्रत्येकं वा समुदायो वा यथेष्टमनुष्ठीयतामिति प्राप्ते ब्रूमः। वैश्वानरविद्योपासनन्यायेन समुदाय एवात्रानुष्ठेयः। तस्य च न्यायस्य संग्राहकावेतौ श्लोकौ “वैश्वानरमुपास्तेऽत्र प्रत्येकसमुदायतः। विकल्पः समुदायो वा नियतो द्विविधाद्विधेः। विकल्प इति चेन्मैवं समुदायप्रशस्तितः। व्यवयुत्यानुवादेन प्रत्येकोक्त्युपपत्तितः” इति। अयमर्थः। छन्दोगैराम्नायते “वैश्वानरमुपास्ते इति। द्युलोकादित्यवाय्वाकाशोदकपृथिवीरूपैः षड्भिरवयवैरुपेतोऽवयवी सर्वात्मको विराट् पुरुषो वैश्वानरशब्दवाच्यः! तत्र संशयः। किं द्युलोकाद्यवयवा अवयवी च प्रत्येकं विकल्पेनोपास्याः? उतावयव्येव नियमेनोपास्यः? इति। विकल्प इति तावत् प्राप्तम् कुतः द्विविधस्य विधेः श्रूयमाणत्वात्। प्राचीनशालसत्ययज्ञेन्द्रद्युम्नजनबुडिलोद्दालकनामभिः षड्भिर्महर्षिभिः क्रमेण द्युलोकादयः षडवयवाः प्रत्येकमुपासिताः। तद्वृत्तान्तकथनपरेषु वाक्येषु षण्णामवयवानां प्रत्येकमुपास्तिविधयो नियमाश्च फलसहिता उपलभ्यन्ते। पुनश्चान्ते षड्भ्यस्तेभ्यो महर्षिभ्योऽश्वपती राजा समुदायोपास्तिमवोचत। अतो द्विविधविधिबलेन यथेच्छं विकल्प इति प्राप्ते ब्रूमः। समुदाय एवात्र नियमेनोपासितव्यः कुतः प्रस्तुतत्वात्। अवयवोपास्तिवाक्यान्यव्यवयुत्यानुवादरूपत्वेनाप्युपपद्यन्ते। तस्मात्समुदाय उपास्य इति राद्धान्तः। अनेन न्यायेन प्रकृतेऽप्युपवासादीनान्त्रयाणां समुदायस्यैव व्रतरूपत्वम्। ननु क्वचिदुपवासादित्रयं विधाय पुनः पक्षान्तररूपेणोपवासव्यतिरिक्तं द्वयं पठ्यते। “अथवा शिवरात्रिञ्च पूजाजागरणैर्नयेदिति”। नायन्दोषः। अथ वेत्यनुकल्पोपक्रमेणाशक्तविषयत्वोपपत्तेः। अत्र व्रते विहितानां त्रयाणां परस्परमङ्गाङ्गिभावबोधकप्रमाणाभावादाग्नेयादिषड्यागवत्सत्त्वेककालसम्बन्धविधानात् फलविधानाच्च समं प्राधान्यन्द्रष्टव्यम्। अस्यैवोपोद्बलकं लिङ्गमभिधीयते। लुब्धकस्य भद्रान्वजन्म प्राप्नवतो दुर्वाससा सह संवादे पठ्यते “कृष्णपक्षे चतुर्दश्याञ्च कश्चिन्मृगमाप्नवान्। अरण्येऽपि प्राणरक्षार्थं क्षुधासम्पीडितोऽवसत्” इत्युपक्रम्य “धनुःकोट्याहतान्येव विल्वपत्राणि मानद!। पतितानि महाराज! शम्भोः शिरसि भूतले। तत्रैव तस्थौ राजेन्द्र! सर्वरात्रमतन्द्रितः। रात्रिशेषं स्थितो व्याधः सञ्जष्टिरनामिषः। प्रभाते विमले जाते दृष्ट्वा तत्रैव शङ्करम्। विल्वपत्रैर्नरश्रेष्ठ! कन्दमूलैश्च पारितः” इति। एतस्मिन् यथोक्ततिथिनिर्णीतम् इदं विचार्यते। किं व्रतान्तरेष्वियाभ्युदयास्तमयवेध आदर्त्तव्यः? किं वा प्रदोषवेधः? आहोस्विन्निशीथवेध? इति। तत्र पूर्वेद्युरुदये त्रयोदशीवेधः परेद्युरस्तमये दशवेध इत्युदयास्तमये वेधो युक्तः तस्य व्रतान्तरेषु क्लृप्तत्वात् क्लृप्तस्य च कल्प्याद्बलीयस्त्वात्। मैवम्। सामान्याद्विशेषस्य बलीयस्त्वात्। समानरूपोह्युदयास्तमयवेधः सर्वतिथिषु समानत्वात् विशेषरूपौ प्रदोषनिशीथवेधौ कृष्णचतुर्दशीलक्षणे तिथिविशेषे शिवरात्र्याख्यं व्रतविशेषमुपजीव्य प्रवृत्तत्वात्। एतदेवाभिप्रेत्य ईशानसंहितायामुक्तम्। “उदयेऽन्विताः कचिद्ग्राह्याः कचिदस्तमयेऽन्विताः। व्रतिभिस्तिथयो ह्यस्माद्वर्जयित्वा व्रतन्त्विदमिति”। अस्मिंस्तु व्रते प्रदोष

वेधोवायुपुराणे दर्शितः "त्रयोदश्यस्तगे सूर्य्ये चतसृष्वेव नाडिषु। भूतविद्धा तु या तत्र शिवरात्रिव्रतञ्चरेदिति"। स्मृत्यन्तरेऽपि "प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्दशी। रात्रौ जागरणं यस्मात्तस्मात्तां समुपोषयेदिति"। कामिके "आदित्यास्तमये काले अस्ति चेद्या चतुर्दशी। तद्रात्रिः शिवरात्रिः स्यात्सा भवेदुत्तमोत्तमेति"। निशीथवेधो नारदीयसंहितायां दर्शितः। "अर्द्धरात्रयुता यत्र माघकृष्णचतुर्दशी। शिवरात्रिव्रतं तत्र सोऽश्वमेधफलं लभेदिति"। स्मृत्यन्तरेऽपि "भवेद्यत्र त्रयोदश्यां भूतव्याप्ता महानिशा। शिवरात्रिव्रतं तत्र कुर्य्याज्जागरणन्तथेति"। ईशानसंहितायाम् "माघकृष्णचतुर्दश्यामादिदेवो महानिशि। शिवलिङ्गतयोद्भूतः कोटिसूर्य्यसमप्रभः। तत्कालव्यापिनी ग्राह्या शिवरात्रिव्रते तिथिः। अर्द्धरात्रादधश्चोर्द्ध्वं युक्ता यत्र चतुर्दशी। तत्तिथावेव कुर्वीत शिवरात्रिव्रतं व्रती। नार्द्धरात्रादधश्चोर्द्ध्वं युक्ता यत्र चतुर्दशी। नैव तत्र व्रतं कुर्य्यादायुरैश्वर्यहानिदेति"। "व्याप्यार्द्धरात्रं यस्यान्तु लभ्यते या चतुर्दशी। तस्यामेव व्रतं कार्य्यं मत्प्रसादार्थिभिर्नरैः। पूर्व्वेद्युर्वा परेद्युर्वा महानिशि चतुर्दशी। व्याप्ता सा दृश्यते यस्यान्तस्यां कुर्य्याद्व्रतन्नरः। लिङ्गाविर्भावकाले तु व्याप्ता ग्राह्या चतुर्द्दशी। तदूर्द्ध्वाधोन्विता भूता सा कार्य्या व्रतिभिः सदा। मम प्रियकरी ह्येषा माघकृष्णचतुर्द्दशी। महानिशान्वितायान्तु तत्र कुर्य्यादिदं व्रतमिति"। एवं सति पूर्व्वेद्युरेव यत्र प्रदोषनिशीथोभयव्याप्तिस्तत्र व्रतमाचरणीयम्। पूर्व्वेद्युरेवोभयव्याप्तौ स्कन्दपुराणे पठ्यते। "त्रयोदशी यदा देवि! दिनभुक्तिप्रमाणतः। जागरे शिवरात्रिःस्यान्निशि पूर्णा चतुर्दशी। दिनभुक्तिरस्तमयः। परेद्युरेवोभयव्याप्तौ कामिके पठ्यते "निशाद्वये चतुर्द्दश्यां पूर्वा त्याज्या परा शुभेति"। दिनद्वयेऽप्युभयव्याप्तिस्तु न सम्भाव्यते यामद्वयवृद्धेरभावात्। दिनद्वयेऽप्युभयव्याप्त्यभावोऽपि न सम्भाव्यते यामद्वयक्षयस्याभावात्। एकैकस्मिन् दिनएकैकव्याप्तौ तु कथमिति चेत्। सा ह्येवं प्रसज्यते। पूर्व्वेद्युर्निशीथव्याप्तिः परेद्युः प्रदोषव्याप्तिरिति। तत्रैकव्याप्तेर्दिनद्वये समानत्वेऽपि जयायोगस्य प्रशस्तत्वाद्दर्शयोगस्य निन्दितत्वाच्च पूर्व्वेद्युरेवोपवासः। जयायोगप्राशस्त्यञ्चानेकवचनैरादृतत्वादवगम्यते। तथा च स्कन्दपुराणे पठ्यते "कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिचतुर्द्दशी। एताः पूर्व्वयुताः कार्य्यास्तिथ्यन्ते पारणम्भवेत्"। "जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च। पूर्व्वविद्धैव कर्त्तव्या तिथिभान्ते च पारणम्"। "श्रावणी दुर्गनवमी तथा दूर्वाष्टमी च या। पूर्व्वविद्धा तु कर्त्तव्या शिवरात्रिर्बलेर्दिनमिति"। "जयन्ती शिवरात्रिश्च कार्य्ये भद्राजयान्विते" इति। नागरखण्डे "माघफाल्गुनयोर्मध्ये असिता या चतुर्द्दशी। अनङ्गेन समायुक्ता कर्त्तव्या सा सदा तिथिरिति" पद्मपुराणे "अर्द्धरात्रात् पुरस्ताच्चेज्जयायोगो यदा भवेत्। पूर्व्वविद्धैव कर्त्तव्या शिवरात्रिः शिवप्रियैरिति"। ब्रह्मवैवर्त्ते "रुद्रव्रतेषु सर्व्वेषु कर्त्तव्या सम्मुखी तिथिः। अन्येषु व्रतकल्पेषु परयुक्तामुपावसेदिति"। दर्शयोगनिन्दा च स्कन्दपुराणे दर्शिता "महतामपि पापानां दृष्टा वै निःकृतिः पुरा। न दृष्टा कुर्व्वतां पुंसां कुहूयुक्तां तिथिं शिवामिति"। अन्यान्यपि यानि कानिचिद्दर्शयोगनिन्दावचनानि तत्र तत्र श्रूयन्ते। तानि सर्व्वाण्यस्मिन्विषये योजनीयानि। यदा पूर्व्वेद्युर्निशीथादूर्द्ध्वं प्रवृत्ता चतुर्द्दशी, परेद्युः क्षयवशात्निशीथादर्व्वागेव समाप्ता तदा पूर्व्वेद्युः प्रदोषनिशीथव्याप्त्योरुभयोरप्यसम्भवात्परेद्युः प्रदोषव्याप्तेरेकस्याः सद्भावाच्च परविद्धैव ग्राह्या। एतदेवाभिप्रेत्य स्मर्य्यते "माघासिते भूतदिनं कदाचिदुपैति योगं यदि पञ्चदश्या। जयाप्रयुक्तां न तु जातु कुर्य्याच्छिवस्य रात्रिं प्रियकृच्छिवस्येति"। यदा पूर्व्वेद्युः प्रदोषादूर्द्ध्वं प्रवृत्ता चतुर्द्दशी, परेद्युः क्षयवशात्प्रदोषादर्व्वागेव समाप्ता तदा परेद्युर्व्याप्तिद्वयाभावात्पूर्व्वेद्युर्निशीथव्याप्तेः सद्भावाज्जयायोगाच्च पूर्व्वेद्युरेवोपवासः। अत्रायं विवेकः सम्पन्नः। दिनद्वये निशीथव्याप्तौ तदव्याप्तौ च प्रदोषव्याप्तिर्नियामिका। तथा दिनद्वयेऽपि प्रदोषव्याप्तौ तदव्याप्तौ च निशीथव्याप्तिर्नियामिका। एकैकस्मिन् दिन एकैकव्याप्तौ जयायोगो नियामक इति। अथ शिवरात्रिव्रतस्याहोरात्रसाध्यत्वेनाहनि रात्रौ च सम्बन्धे साधारणे सति अहर्व्वर्जमुपेक्ष्य प्रदोषनिशीथयोरेव कुतः शास्त्राणां पक्षपात इति चेत्। रात्रेरत्र प्रधानत्वादिति ब्रूमः। तत्प्राधान्येन चोपपत्तिः स्कन्दपुराणे पठ्यते "निशि भ्रमन्ति भूतानि शक्तयः शूलभृद्यतः। अतस्तस्यां त्रयोदश्यां सत्यां तत्पूजनम्भवेदिति"। तस्यान्त्रयोदश्यामिति व्यधिकरणे सप्तम्यौ। तथा

चायमर्थः सम्पद्यते । त्रयोदशीनिशीथे तस्यां चतुर्दश्यां विद्यमानायां शिवपूजनम्भवेदिति । नागरखण्डेऽपि "माघमासस्य कृष्णायां चतुर्दश्यां सुरेश्वर ! । अहं यास्यामि भूपृष्ठे रात्रौ नैव दिवा कलौ । लिङ्गेषु च समस्तेषु चरेषु स्थावरेषु च । संक्रमिष्याम्यसन्दिग्धं वर्षपापविशुद्धये । रात्रौ तस्यां हि मे पूजां यः करिष्यति मानवः । मन्त्रैरेतैः सुरश्रेष्ठ ! विपापः स भविष्यतीति" । सा च शिवरात्रिचतुर्दशी त्रिधा भवति । एकतिथ्यात्मिका तिथिद्वयात्मिका तिथित्रयात्मिका चेति । तत्र सूर्य्योदयमारभ्य प्रवृत्ता परदिनोदयपर्य्यन्तैकतिथ्यात्मिका । सा वेधदोषाभावात् प्रशस्ता । तिथिद्वयात्मकत्वं च द्वेधा भवति । जयायोगेन दर्शयोगे न च । तत्र योगद्वयमेकैकस्मिन्विषये प्रशस्तम् । स च विषयविशेषः पूर्वमेवोदाहृतः । तिथित्रयात्मकत्वन्त्वतिप्रशस्तम् । एतदेवाभिप्रेत्य पुराणे पठ्यते "त्रयोदशीकलाप्येका मध्ये चैव चतुर्दशी । अन्ते चैव सिनीवाली त्रिस्पृश्यां शिवमर्चयेत्" । यथा त्रिस्पृशी प्रशस्ता तथा वारविशेषेण योगविशेषेण च प्रशस्ता भवति । तथा च स्कन्दपुराणे पठ्यते "माघकृष्णचतुर्दश्यां रविवारो यदा भवेत् । भौमेवाथ भवेद्देवि ! कर्त्तव्यं व्रतमुत्तमम् । शिवयोगस्य योगे वै तद्भवेदुत्तमोत्तमम् । शिवरात्रिव्रतन्त्वेतत्तद्भवेदुत्तमोत्तममिति" । ननु यदा पूर्वविद्धायामुपवासस्तदा परेद्युः किं तिथ्यन्ते पारणम्भवति किं वा तिथिमध्ये । शास्त्रन्तु पक्षद्वयेऽपि समानम् । तत्र तिथ्यन्तपारणवचनानि पूर्वमुदाहृतानि "तिथिमध्यपारणवचनन्तु स्कन्दपुराणे पठ्यते "उपोषणं चतुर्दश्यां चतुर्दश्यान्तु पारणम् । कृतैः सुकृतलक्षैश्च लभ्यते वाथ वा न वा । ब्रह्मा स्वयं चतुर्वक्त्रैः पञ्चवक्त्रैस्तथाप्यहम् । सिक्थे सिक्थे फलन्तस्य शक्तौ वक्तुं न पार्वति ! । ब्रह्माण्डोदरमध्ये तु यानि तीर्थानि सन्ति वै । संस्थितानि भवन्तीह भूतायां पारणे कृते" । "तिथीनामेव सर्वासामुपवासव्रतादिषु । तिथ्यन्ते पारणं कुर्य्याद्विना शिवचतुर्दशीमिति" । बाढम् । अस्ति हि द्विविधं शास्त्रं तस्य च द्विविधस्य शास्त्रस्य प्रतिपत्प्रकरणोक्तन्यायेन व्यवस्था द्रष्टव्या । यदा यामत्रयादर्वागेव चतुर्दशी परिसमाप्यते । तदा तिथ्यन्ते पारणम् । यदा तु चतुर्दशी यामत्रयमतिक्रामति तदा चतुर्दशीमध्ये पूर्वाह्णे पारणं कुर्य्यात्" । ति॰त॰ अन्यथोक्तं गौडमात्रप्राह्यत्वान्नोक्तम् ।

चतस्रोदशा अस्य । २चतुर्दशायुक्ते त्रि॰ । "अधीतिबोधाचरणप्रचारणैर्दशाश्चतस्रः प्रणयन्नुपाधिभिः । चतुर्दशत्वं कृतवान् कुतः ? स्वयं न वेद्मि विद्यासु चतुर्दशस्वयम्" नैष॰ । प्रकारे धाच् । चतुर्दशधा चतुर्दश प्रकारे अव्य॰ । नान्तत्वात् पूरणे डटि प्राप्ते असंख्यादेरिति पर्य्युदासेऽपि क्वचिदार्षे मट् । चतुर्दशम चतुर्दश पूरणे त्रि॰ । "मनुर्वा इन्द्रसावर्णिश्चतुर्दशम इत्यपि" भाग॰ ८।१३।१५।

**चतुर्दशभुवन** न॰ समा॰ द्विगुः पात्रादि न ङीप् स्त्रीत्वे । भूलोकादिषु चतुर्दशसु लोकेषु । "भूर्लोकास्यो दक्षिणो व्यक्तदेशात् तस्मात् सौम्योऽयं भुवः स्वश्च मेरुः । लभ्यः पुण्यैः खे महः स्याज्जनोऽतोऽनल्पानल्पैः स्यात्तपः सत्यमन्त्यः" "सि॰ शि॰ भुवनकोषे भूलोकादि सप्तकमुक्तम् "अथवनेरप्यधस्तात् सप्त भूविवरा एकैकशो योजनायुतान्तरेणायामविस्तारेणोपक्लृप्ताः । अतलं वितलं सुतलं तलातलं महातलं रसातलं पातालमिति" भाग॰ ५।२४।११ श्लोके अतलादिसप्तकमुक्तम् तद्विवरणं तत्राध्याये दृश्यम् । भूलोकादिविवरणं काशीख॰ २२अ॰ । "पादगम्यं हि यत् किञ्चिद्वस्वस्ति धरणीतले । तद्भूर्लोक इति ख्यातं साब्धि द्वीपाद्रिकाननम् । भूर्लोकाच्च भुवर्लोक आब्रह्मात् समुदाहृतः । आदित्याद्वाध्रुवं विप्र ! स्वर्लोक इति गीयते । महर्लोकः क्षितेरूर्द्ध्वमेककोटिप्रमाणतः । कोटिद्वयोत्तरः ख्यातो जनो भूर्लोकयोजनैः । चतुःकोटिप्रमाणस्तु तपोलोको हि भूतलात् । उपरिष्टात् क्षितेरष्टौ कोटयः सत्यमीरितम्" । योगिनां तनुमध्ये ध्येयानि स्थानभेदे चतुर्दश भुवनादीनि योगस्वरोदये उक्तानि यथा । "ब्रह्माण्डे सन्ति ये अण्डाः पिण्डमध्येऽपि संस्थिताः । तलं पादाङ्गुष्ठतले तस्योपरि तलातलम् । महातलं गुल्फमध्ये गुल्फोपरि रसातलम् । सुतलं जङ्घयोर्म्मध्ये वितलं जानुमध्यगम् । ऊर्वोर्म्मध्ये तलं प्रोक्तं सप्तपातालमीरितम् । तलातलञ्चातलञ्च महातलरसातलम् । सप्तपातालमेतत्तु सुतलं वितलं तलम् । इदानीं पिण्डमध्ये तु सप्तलोकं शृणु प्रिये ! । मूलाधारे तु भूर्लोको लिङ्गाग्रे तु भुवस्ततः । स्वर्लोको लिङ्गमूले तु मेरुमूले महस्तथा । मेरुच्छिद्रे जनोलोको मेरुनाड्यां तपस्तथा । कमले सत्यलोकस्तु इति लोकाः पृथक् पृथक् ।

भूर्भुवःस्वर्महश्चेति जनश्चैव तपस्तथा। सप्तमःसत्यलोकस्तु सप्त लोका इति स्मृताः। सप्तलोकैस्तु पातालैर्भुवनानि चतुर्दश। अथ ब्रह्माण्डमध्यस्थाश्चत्वारो लोकपालकाः। पिण्डमध्ये तु तान् ज्ञात्वा सर्वसिद्धीश्वरोभवेत्। इन्द्रो-ब्रह्मा विष्णुरीशश्चत्वारश्चान्तदेवताः। मूलाधारे चतुःपत्रे गजारूढो महानिति। सृष्टिकर्त्ता च तत्रैव स्वाधिष्ठाने महान् हरिः। मणिपूरे शूलपाणिरष्टसिद्धीश्वरो-महान्। तालुद्वारे तालुमध्ये ललाटे वक्षःकण्ठके। शृङ्गाटिकाकपाले च लम्बिकाब्रह्मरन्ध्रके। नवचक्र-मूर्द्धचक्रे इ त्रिकूटेत्येकविंशतिः। ब्रह्माण्डानि वसन्ती-ति ज्ञातव्यानि प्रयत्नतः। सप्त द्वीपानि कथ्यन्तेऽधुना-तानि शृणु प्रिये!। जम्बुद्वीपन्तु मज्जायां शाकद्वीपन्तु मध्यमे। शाल्मद्वीपः शिरोमध्ये मांसमध्ये कुशस्तथा। त्वचि क्रौञ्चोलोममध्ये गोमेदद्वीप ईरितः। नखमध्ये तथा श्वेतः सप्तद्वीपा वसुन्धरा। जम्बुःशाकस्तथा शा-ल्मःकुशःक्रौञ्चश्च गोमयः। श्वेतः सप्तेति खण्डानि सप्तखण्डैर्वसुन्धरा। सप्तान्येतानि रूपाणि देहमध्ये स्थितानि च। समुद्राःसप्त कथ्यन्ते पिण्डमध्ये व्यवस्थिताः। लवणेक्षुसुरासर्पिर्दधिदुग्धजलान्तकाः। लवणः स्वेदमध्ये तु इक्षूरक्ते मधु त्वचि। सर्पिर्मेदोवसा-मध्ये दधिक्षीरं ललाटके। वीर्य्यमध्ये स्थितोऽब्धः पादे कूर्म्मः स्थितोमहान्। इदानीन्तु नवद्वारे नवखण्डा-नि संशृणु। पादादौ भारतं खण्डं काश्मीरं विक्रम-ण्डलु। द्विजखण्डमेकपादं खण्डं वक्ष्ये समण्डलम्। कैवर्त्तगर्त्तगान्धारं नवखण्डमिति स्थितम्। इदानीं पर्वताष्टौ च कथ्यन्ते शृणु यत्नतः। मेरुदण्डे सुमेरुस्तु पीठमध्ये हिमालयः। वामस्कन्धे तथा दक्षे मलयोमन्द-राचलः। विन्ध्यस्तु दक्षिणे कर्णे वामे मैनाक ईश्वरि!। ललाटे मध्यदेशे तु श्रीशैलः परमेश्वरि!। तथा ब्रह्मकपा-लस्थः कैलासःपर्वतोमहान्। सुमेरुर्हिमवान् विन्ध्योमलयो-मन्दरस्तथा। श्रीशैलः मैनाकश्चेति कैलासोऽष्टौ च पर्वताः। अपरे पर्वताःसर्वे अङ्गुलीमध्यवासिनः। शरीरे नव-नाडीस्था नर्म्मदा च महेश्वरि!। इडायां यमुना देवि! पिङ्गलायां सरस्वती। सुषुम्णायां वहेद्गङ्गा चान्याऽ-न्यासु च नाडिषु। गङ्गासरस्वतीगोदानर्म्मदायमुना-तथा। कावेरी चन्द्रभागा च वितस्ता च इरावती। द्विसप्ततिसहस्रेषु नदीनदगरिश्वरः। इतस्ततोदेहमध्ये नक्षत्राणि सप्तविंशतिः। योगाश्च राशयश्चैव ग्रहाश्च तिथ-यस्तथा। लहरीषु मीनमत्स्यौ वाहनं स्थापनं तथा। सर्वाङ्गेषु च देवेशि! समग्रब्रह्मसमण्डलम्। त्रयस्त्रिंशत्-कोटयस्तु निवसन्ति च देवताः। तथा पीठानि सर्वाणि देहमध्ये स्थितानि च। हृदये व्योममध्ये तु अनन्ताद्या-स्तु वासुकिः। उदरे व्योममध्ये तु परे नागा वसन्ति हि। गन्धर्वकिन्नराःशूरा विद्याधराप्सरादयः। अनेकतीर्थ-वर्णाश्च गुह्यकाश्च वसन्ति हि। अनन्तसिद्धये बुद्ध्या प्रका-शोवर्त्तते हृदि। मेघस्य मण्डलं ज्ञेयमश्रुपाते तथैव च। चन्द्रार्कौ नेत्रयोर्मध्ये जङ्गलोमसु साक्षिणः। तृणगु-ल्मादिकञ्चापि विश्वरूपं ततस्ततः। समस्तदर्शनान्मुक्तः स्वर्गभोगश्च सत्सुखम्। तदेतच्चिन्तया याति रोगशोक-विवर्ज्जिताम्"।

**चतुर्दशविद्या** स्त्री ब० व० संज्ञात्वात् कर्म्म०। वेदादिषु चतुर्दशसु विद्यासु। ताश्च "विद्याश्चतुर्दश प्रोक्ताः क्रमेण तु यथास्थिति। षडङ्गमिश्रितावेदा धर्म्मशास्त्रं पुराणकम्। मीमांसातर्कमपि च एता विद्याश्चतुर्दश" नन्दि पु०। "पुराणन्यायमीमांसाधर्म्मशास्त्राङ्गमिश्रिताः। वेदाः स्थानानि विद्यानां धर्म्मस्य च चतुर्दश" या० स्मृतौ विद्यास्थानत्वोक्तेस्तासां तथात्वम्।

**चतुर्दशाङ्ग** न० चतुर्दश अङ्गान्यस्य। "चिरज्वरे वात-कफोत्थे वा त्रिदोषजे वा दशमूलमिश्रः। किरात-तिक्तादिगणः प्रयोज्यः शुद्ध्यर्थिना वा त्रिवृता विमिश्रः" चक्रदत्तोक्ते पाचनभेदे।

**चतुर्द्दिश** न० चतसृणां दिशानां समाहारः असंज्ञात्वात् द्विगुः। चतसृषु दिक्षु। दिक्शब्देन समासे चतुर्दिश इत्येव। संज्ञात्वे तु कर्म्मधा०। प्राच्यादिषु चतसृषु दिक्षु ब० व०। "शिवाभिर्घोररावाभिश्चतुर्द्दिक्षु समन्वि-ताम्" कालीध्यानम्।

**चतुर्द्दोल** पु न० (चण्डोल) इति (चन्दोल) इति ख्याते "राज्ञोयद् द्विपदं यानं विशेषाख्यमलं विदुः। चतुर्भि-रुह्यते यत्तु चतुर्दोलं तदुच्यते" उक्ते चतुर्भिर्वाह्ये यानविशेषे। प्रसङ्गाच्चतुर्दोलाष्टदोलत्वलक्षणभेदादिकं भोज-देवोक्तं प्रदर्श्यते। "चतुर्भिर्वाहकैर्दण्डैः षड्भिः कुम्भैः सुसंस्थितैः। स्तम्भैरष्टाभिरुदितं चतुर्द्दोलमनु-त्तमम्। तद्भेदा जयकल्याणवीरसिंहा यथाक्रमम्। चतुर्विधानां भूपानां चतुर्द्दोलाः प्रकाशिताः। त्रिहस्त-सम्मितायामो द्विहस्तपरिणाहवान्। हस्तद्वयोन्नतः प्रोक्तश्चतुर्द्दोलोजयाख्यया। चतुर्हस्तायतोयस्तु सार्द्धहस्त-

स्तु विस्तृतौ। चतुर्द्दोलः समाख्यातः कल्याणस्तावदुन्नतः। पञ्चहस्तायतोयस्तु त्रिहस्तपरिणाहवान्। तावदेवोन्नतोवीरश्चतुर्द्दोल उदाहृतः। आयामपरिणाहाभ्यां चतुर्हस्तमितोहि यः। चतुर्द्दोलोह्ययं सिंहस्तदर्धेनोन्नतः शुभः। सर्वोऽथ द्विविधः प्रोक्तः सच्छदिश्चापि निश्छदिः। आद्यः समरवर्षासु परः केलिवनालये। सर्वेषामेव काष्ठानां दण्डः स्याद्वज्रवारणः। चन्दनेनैव घटना सर्वेषामुपयुज्यते। लोमजं सर्ववस्त्रेषु कनकं सर्वधातुषु। कुम्भश्च पद्मकोषश्च मिरिश्चेति यथाक्रमम्। त्रैदेशानां महीन्द्राणां चतुर्दोलेषु विन्यसेत्। दर्पणं चार्द्धचन्द्रश्च हंसः केकी शुकोगजः। अश्वः सिंहश्च तस्याग्रे आदित्यादिदशोत्तरान्”। मणिनियमस्तु दण्डवत्। “रक्तः शुक्लश्च पीतश्च कृष्णश्चित्रस्तथाऽरुणः। नीलः कपिल इत्युक्तः पताकानान्तु सङ्ग्रहः। चतुर्दोलः सपताकः शुभयानमिति स्मृतः। कुन्तास्त्वष्टैर्दशभिर्युक्तः स्याद्राजकेशानाम्। चामरदण्डैर्दशभिर्दिग्जयिनां चतुर्दोलः। चापपत्त्रस्य पुच्छस्येत् सर्वोपरि परिन्यसेत्। यात्रासिद्धिरयं नाम्ना चतुर्दोलो महीभुजाम्। स्तम्भच्छदिरहितो निश्छदिरुक्तश्चतुर्दोलः”। मानं पूर्ववत्। “स पुनर्द्विविधः प्रोक्तः सध्वजश्चाथ निर्ध्वजः। ध्वजान् षड्त्र न्यस्यन्ति षड्वर्गविजयैषिणः। तेषां मानन्तु चत्वारः स्वामिहस्तैकसम्मिताः। कोणेषु पश्चादग्रेषु हस्तद्वयमितौ ध्वजौ। सुवर्णं रजतं युग्मं त्रिविधानां महीभुजाम्। मणिचामरकुम्भानां खड्गादीनां विनिश्चयः। चतुर्दोलध्वजोराज्ञां विज्ञेयो नवदण्डवत्। निर्ध्वजे तु चतुर्दोले मानमन्यविधं शृणु। आयामपरिणाहाभ्यां चतुर्हस्तमितोहि यः। विजयोनाम विख्यातश्चतुर्दोलोमहीभुजाम्। विजयो मङ्गलो भव्योवितस्त्यैकैश्चोच्छ्रितः। त्रिविधानां महीन्द्राणां यानत्रयमुदाहृतम्। अष्टाभिरुह्यते यस्तु अष्टदोल सुशन्ति तम्। सोपानद्वितयश्चात्र विज्ञेयं शिल्पिनिर्मितम्”। भोजस्तु। “अष्टाभिर्वाहकैर्दण्डैः षड्भिस्तु दशभिर्घटैः। स्तम्भैस्तु दशभिर्ज्ञेयमष्टदोलं महीभुजाम्। तद्भेदाजयकल्याणवीरसिंहा यथाक्रमम्। चतुर्विधानां भूपानामष्टदोलाः प्रकीर्त्तिताः। षड्भिर्हस्तैर्मितायामः परिणाहे चतुर्भुजः। चतुर्हस्तोन्नतो राज्ञामष्टदोलं जयं विदुः। आयामपरिणाहाभ्यां पञ्चहस्तमितोहि यः। कल्याणाख्योऽष्टदोलोऽयं चतुर्हस्तमितोन्नतिः। सप्तहस्तायतः कार्योविस्तरे पञ्चहस्तकः। पञ्चहस्तोन्नतो वीरश्चाष्टदोलो महीभुजाम्। आयामपरिणाहाभ्यामष्टहस्तमितोहि यः। सिंहनामाष्टदोलोऽयं विज्ञेयः षड्भुजोन्नतः। सर्वोऽयं द्विविधः प्रोक्तः सच्छदिश्चापि निश्छदिः। काष्ठवस्त्रघटादीनां मणीनां चामरस्य च। चतुर्दोलवदुन्नेयोनियमोऽन्योऽपि सूरिभिः। पूर्ववन्निश्छदेर्मानं ध्वजमानमिहोच्यते। दशध्वजास्तेषु चाष्टौ स्वामिहस्तद्वयोन्नताः। पश्चादग्रे ध्वजौ राज्ञश्चतुर्हस्तमितौ मतौ। मणिचामरपत्त्राणां निर्णयो निष्पताकवत्। निर्ध्वजश्चाष्टदोलोयः शिबिकेति स गद्यते। मणिकुम्भमुखादीनां नियमो नवदण्डवत्”। “एवं द्वादश षोड़श विंशति दोलादिकाः कार्य्याः। मानं सार्द्धद्विगुणितं सार्द्धत्रिगुणितं युक्तमेतेषाम्। विंशतिदोलात् परतो भोजमते सम्मवेद्यानम्”। यानं वहृणुयोज्यं बहुगुणमेतज्जगाद वै व्यासः”। भविष्योत्तरेऽपि “यदुक्तं द्वैपदं यानं तेन मानेन योन्वपः। स यानं कुरुते दिव्यं स चिरं सुखमश्नुते। स्वयोगयुक्तयानस्थो भोगमाप्नोति मानवः। परयौगिकयानस्थः क्लेशमाप्नोति पुष्कलम्। योदम्भादथवाऽज्ञानाद्यानं प्रकुरुतेऽन्यथा। तस्यैतानि विनश्यन्ति आयुर्विद्यायशोधनम्। प्रधानं यानमाश्रित्य नियमोऽयं समाश्रितः। नाप्रधाने निर्णयोऽस्ति तस्मिन्नन्तु मनोज्ञता”।

**चतुर्द्वार** न० चत्वारि द्वाराण्यस्य। १चतुर्मुखे गृहभेदे। समाहारद्विगुः। २चतुर्षु द्वारेषु न०। “मण्डपं कारयेत्तत्र चतुर्द्वारसमन्वितम्” हेमाद्रौ तुलादानप्रकरणे।

**चतुर्द्धा** अव्य० चतुःप्रकारम् धाच्। चतुःप्रकारे। “ततश्च शेषं प्रविभज्य शीघ्रमर्द्धं चतुर्द्धा मम चात्मनश्च” भा० आ० १८२ अ०। “द्विधा विधाय चैकैकं चतुर्द्धा प्रथमं पुनः। स्वस्वेतरद्वितीयांशैर्योजनात् पञ्च पञ्च ते” पञ्चदशी

**चतुर्बाहु** पु० चत्वारोबाहवोऽस्य। १विष्णौ “पीतवासाश्चतुर्बाहुः शङ्खचक्रगदाधरः” भाग० ८।१७।२। २चतुर्भुजयुक्तमात्रे त्रि०। ३चतुष्कोणे क्षेत्रे च न०।

**चतुर्भद्र** न० चतुर्णां धर्म्मार्थकाममोक्षाख्यानां भद्राणां श्रेयसां समाहारः। १धर्म्मार्थकाममोक्षेषु अमरः। चत्वारि भद्राण्यस्य। २तद्युक्ते त्रि०। “स चेन्ममार सञ्जय! चतुर्भद्रतरस्त्वया” भा० भा० द्रो० अभिमन्यु व० प० षोड़शराजिके अङ्कतः प्रयुक्तम्।

**चतुर्भाव** पु० चतुर्णां भावः उत्पत्त्युपादानम्। विष्णौ परमेश्वरे “चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात्” विष्णु स०। “धर्मार्थकाममोक्षाख्यं पुरुषार्थचतुष्टयं भवत्युत्पद्यतेऽस्मादिति चतुर्भावः” भा०।

**चतुर्भुज** पु० चत्वारो भुजा यस्य। १विष्णौ “चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः” विष्णु स०। २तदवतारे वासुदेवे नन्दनन्दने च “तेनैव रूपेण चतुर्भुजेन सहस्रबाहो! भव विश्वमूर्त्ते!” गीता। “तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शङ्खगदाद्युदायुधम्” भाग० १०।३।८। स्त्री० ३चतुर्बाहुयुक्ते त्रि०। “सुकेश्यौं चतुर्भुजाम्” ध्यानध्यानम्। “तत्राल आसीद्द्वपुषा चतुर्भुजः” (शिशुपालः) माघः। ४चतुष्कोणे क्षेत्रे न०। भुनक्ति भुज—क चतुर्णां धर्मार्थकामानां भुजः। ५धर्मार्थकाममोक्षभाजने त्रि०।

**चतुर्मुख** पु० चत्वारि मुखान्यस्य। १चतुरानने वेधसि चतुराननशब्दे दृश्यम्। “चतुर्वर्गफलं ज्ञानं कालावस्थाश्चतुर्युगम्। चतुर्वर्ण्यमयो लोकस्त्वत्तः सर्वं चतुर्मुखात्” मनुः। २चतुर्द्वारे ग्रहे न०। चतुर्णां मुखानां समाहारः ङीप्। ३चतुर्षु मुखेषु स्त्री। “चतुर्मुखसमीरिताः” कुमा०। “चतुर्भिर्मुखैः समीरिताः वाक्ये उत्तरपदद्विगुः। समाहारे चतुर्मुखी स्यात्। ४औषधभेदे पु० तल्लक्षणं वैद्यके यथा

“रसगन्धकलौहाभ्रं समं सूताज्जि, हेम च। सर्वं खल्लतले क्षिप्त्वा कन्यारसविमर्दितम्। एरण्डपत्रैरावेष्ट्य धान्यराशौ दिनत्रयम्। संस्थाप्य तत उद्धृत्य सर्वरोगेषु योजयेत्। एतद्रसायनवरं त्रिफलामधुसंयुतम्। मदाग्निबलं खादेत् वलीपलितनाशनम्। क्षयमेकादशविधं कासं पञ्चविधं तथा। कुष्ठमष्टादशविधं पाण्डुरोगान् प्रमेहकान्। शूलं श्वासञ्च हिक्काञ्च मन्दाग्निं चाम्लपित्तकम्। व्रणान् सर्वान्नाम्लवातविसर्पं विद्रधिं तथा। अपस्मारग्रहोन्मादान् सर्वाशांसि त्वगामयान्। क्रमेण सेवितं हन्ति वृक्षमिन्द्राशनिर्यथा। पौष्टिकं बलमायुष्यं पुत्रप्रसवकारकम्। चतुर्मुखेण देवेन कृष्णात्रेयेण सूचितम्”। चतुर्मुखप्रकाशितत्वादस्य चतुर्मुखत्वम्।

**चतुर्मूर्त्ति** पु० चतस्रो मूर्त्तयोऽस्य। १परमेश्वरे तस्य विराट्सूत्रात्माव्याकृततुरीयमूर्त्तिकत्वात् तथात्वम्। “चतुर्मूर्त्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः” विष्णु स०। चतस्रो मूर्त्तयः विराट्सूत्रात्माव्याकृततुरीयात्मानोऽस्य” शाङ्करभाष्यम्।

**चतुर्युग** न० चतुर्णां युगानां समाहारः पात्रादि० न ङीप् क्लीवे। सत्यत्रेताद्वापरकलिरूपेषु चतुर्षु युगेषु “तद्द्वादशसहस्राणि चतुर्युगमुदाहृतम्। सूर्य्याब्द-सङ्ख्यया द्वित्रिसागरैरयुताहतैः ४३२०००० । सन्ध्या-सन्ध्यांशसहितं विज्ञेयं तच्चतुर्युगम्” सू० सि०।

**चतुर्वक्त्र** पु० चत्वारि वक्त्राण्यस्य। चतुरानने चतुर्वदनादयोऽप्यत्र।

**चतुर्वय** पु० चत्वारोवयाः शाखा अवयवा अस्य। चमसभेदे। “एकं वि चक्र चमसं चतुर्वयम्” ऋ० ४।३६।४। वयाः शाखाः चतुःशाखं चतुरवयवम्” भा०।

**चतुर्वर्ग** पु० ६त०। धर्मार्थकाममोक्षसमुदाये “चतुर्वर्गफलं ज्ञानं कालावस्थाश्चतुर्युगम्” मनुः।

**चतुर्वर्गचिन्तामणि** पु० हेमाद्रिकृते स्मृतिनिबन्धभेदे “यः पूर्वं चारुचिन्तामणिममितगुणं मन्दराद्रिः समुद्रम् निर्मथ्य प्रायशोऽयं वितरति बहुशः प्रार्थनादर्थमेव। समालोक्य सर्वश्रुतिनिगमपुराणेतिहासाम्बुराशीन् हेमाद्रिः स्वदैवैव प्रकटयति चतुर्वर्गचिन्तामणिं सः। “खण्डानि चास्मिन् व्रतदानतीर्थमोक्षाभिधानि क्रमशो भवन्ति। यत्पञ्चमं तत्परिशेषखण्डमखण्डितो यत्र विभाति धर्म्मः” हेमाद्रि ग्र०ख०। “चतुरेण चतुर्वर्गचिन्तामणिवणिज्यया। हेमाद्रिर्वोपदेवेन मुक्ताफलमचीकरत्” मुक्ताफलम्।

**चतुर्वर्ण** पु० ब०व० चत्वारोवर्णाः संज्ञात्वात् न समा० द्वि० कर्म०। ब्राह्मणक्षत्रियवैश्यशूद्रेषु चतुर्षु वर्णेषु। “चतुर्वर्णमयो लोकस्त्वत्तः सर्वं चतुर्मुखात्” मनुः। स्वार्थे भावे वा ष्यञ् चातुर्वर्ण्य चतुर्षु वर्णेषु तद्भावे च न०। “चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः” गीता०

**चतुर्वर्णादि** पु० स्वार्थे ष्यञ्प्रत्ययनिमित्ते का० वार्त्तिकोक्ते शब्दगणे। “चतुर्वर्णादीनां स्वार्थे उपसंख्यानम्” का० वार्त्ति०। स च गणः “चतुर्वर्ण चतुराश्रम सर्वविद्य त्रिलोक त्रिस्वर षड्गुण सेना अनन्तर सन्निधि समीप उपमा सुख तदर्थ इतिह मणिक” चतुर्वर्णादिः।

**चतुर्विंशति** स्त्री चतुर्भिरधिका विंशतिः। (चब्बिश) १चतुरधिकविंशतिसंख्यायां २तत्संख्येये च। पूरणे डट्। चतुर्विंश तत्संख्यापूरणे त्रि० स्त्रियां ङीप्।

**चतुर्विंशतिक** त्रि० चतुरधिका विंशति र्यत्र कप्। १चतुर्विंशतिसंख्यायुक्ते। २सांख्योक्ते प्राकृतिके गणे पु०

"पञ्चभिः पञ्चभिः ब्रह्म चतुर्भिर्दशभिस्तथा। एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः। महाभूतानि पञ्चैव भूरापोऽग्निर्मरुन्नभः। तन्मात्राणि च तावन्ति गन्धादीनि मतानि वै। इन्द्रियाणि दश श्रोत्रं त्वग्दृग्रसननासिकाः। वाक्करौ चरणौ मेढ्रं पायु र्दशम उच्यते। मनोबुद्धिरहङ्कारश्चित्तमित्यन्तरात्मकम्। चतुर्द्धा लक्ष्यते भेदोवृत्त्या लक्षणरूपया" भाग०३।२६।१४। तादृशगणश्च "प्रकृतेर्महान् महतोऽहङ्कारस्तस्मात् गणश्च षोडशकः। तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि" सा० का० उक्तः।

**चतुर्विंशतिमूर्त्ति** स्त्री कर्म०। विष्णोर्हस्तभेदेनचक्रादिविन्यासभेदेन चतुर्विंशतिसंख्यके मूर्त्तिभेदे तन्मूर्त्तिलक्षणं तद्भेदेन विष्णोर्नामभेदाश्च अग्निपु० उक्ताः यथा "ओंरूपः १केशवः पद्मशङ्खचक्रगदाधरः। २नारायणः शङ्खपद्मगदाचक्री प्रदक्षिणम्। ततो गदी ३माधवोऽरिशङ्खपद्मी नमामि तम्। चक्रकौमोदकीपद्मशङ्खी ४गोविन्द ऊर्जितः। मोक्षदः श्रीगदी पद्मी शङ्खी विष्णु५श्च चक्रधृक्। चक्रशङ्खाब्जगदिनं ६मधुसूदनमानमे। भक्त्या त्रिविक्रमः ७पद्मी गदी शङ्खी च चक्र्यपि। शङ्खचक्रगदापद्मी वामनः ८ पातु मां सदा। मुक्तिदः श्रीधरः ९ पद्मी चक्री गदी च शङ्ख्यपि। हृषीकेशो१० गदाचक्री पद्मी शङ्खी च पातु नः। वरदः पद्मनाभ११स्तु शङ्खाब्जारिगदाधरः। दामोदरः १२ पद्मशङ्खगदाचक्री नमामि तम्। रक्षेद्गदी शङ्खचक्री वासुदेवो१३ऽब्जभृज्जगत्। सङ्कर्षणो १४ गदी शङ्खी पद्मी चक्री च पातु नः। चक्री शङ्खगदी पातु प्रद्युम्नः १५पद्मभृत् प्रभुः। अनिरुद्ध१६श्चक्रगदी शङ्खी पद्मी च पातु नः। सुरेशोऽर्य्यब्जशङ्खाढ्यः श्रीगदी पुरुषोत्तमः१७। अधोक्षजः१८ पद्मगदी चक्री शङ्खी च पातु नः। देवो नृसिंहः१९ श्चक्राब्जगदाशङ्खी नमामि तम्। अच्युतः२० श्रीगदी पद्मी चक्री शङ्खी च पातु नः। बालरूपी शङ्खगदी उपेन्द्र२१ श्चक्रपद्म्यपि। जनार्द्दनः२२ पद्मचक्री शङ्खधारी गदाधरः। शङ्खी चक्री च पद्मी च हरिः२३ कौमोदकीधरः। कृष्णः२४ शङ्खी गदी पद्मी चक्री मे भुक्तिमुक्तिदः। आदिमूर्त्तिर्वासुदेवस्तस्मात् सङ्कर्षणोऽभवत्। सङ्कर्षणाच्च प्रद्युम्नः प्रद्युम्नादनिरुद्धकः। केशवादिप्रभेदेन एकैकस्य त्रिधा क्रमात्। द्वादशाक्षरकं स्तोत्रं चतुर्विंशतिमूर्त्तिमत्। यः पठेच्छृणुयाद्वापि निर्मलः सर्वमाप्नुयात्"।

चतुर्विंशतिमूर्त्तीनां दक्षहस्तोर्द्धादिष्वस्तन्यासभेदेन नामभेदविवृतिः।

| मूर्त्तिनाम | दक्षोर्द्धं | दक्षाधः | वामोर्द्धं | वामाधः। |
|---|---|---|---|---|
| १केशवस्य | १पद्मम् | १शङ्खः | १चक्रम् | १गदा |
| २नारायणस्य | १शङ्खः | १पद्मम् | १गदा | १चक्रम् |
| ३ माधवस्य | १गदा | १चक्रम् | १शङ्खः | १पद्मम् |
| ४ गोविन्दस्य | १चक्रम् | १गदा | १पद्मम् | १शङ्खः |
| ५ विष्णोः | २गदा | २पद्मम् | २शङ्खः | २चक्रम् |
| ६ मधुसूदनस्य | २चक्रम् | २शङ्खः | २पद्मम् | २गदा |
| ७ त्रिविक्रमस्य | २पद्मम् | २गदा | ३शङ्खः | ३चक्रम् |
| ८ वामनस्य | २शङ्खः | २चक्रम् | २गदा | पद्मम् |
| ९ श्रीधरस्य | ३पद्मम् | ३चक्रम् | ३गदा | २शङ्खः |
| १० हृषीकेशस्य | ३गदा | ४चक्रम् | ३पद्मम् | ३शङ्खः |
| ११ पद्मनाभस्य | ३शङ्खः | ३पद्मम् | २चक्रम् | ३गदा |
| १२ दामोदरस्य | ४पद्मम् | ३शङ्खः | ४गदा | ४चक्रम् |
| १३ वासुदेवस्य | ४गदा | ४शङ्खः | ३चक्रम् | ३पद्मम् |
| १४ सङ्कर्षणस्य | ५गदा | ५शङ्खः | ४पद्मम् | ५चक्रम् |
| १५ प्रद्युम्नस्य | ३चक्रम् | ६शङ्खः | ५गदा | ४पद्मम् |
| १६ अनिरुद्धस्य | ४चक्रम् | ३गदा | ४शङ्खः | ५पद्मम् |
| १७ पुरुषोत्तमस्य | ५चक्रम् | ४पद्मम् | ५शङ्खः | ४गदा |
| १८ अधोक्षजस्य | ५पद्मम् | ४गदा | ४चक्रम् | ४शङ्खः |
| १९ नृसिंहस्य | ६चक्रम् | ५पद्मम् | ६गदा | ५शङ्खः |
| २० अच्युतस्य | ६गदा | ६पद्मम् | ५चक्रम् | ६शङ्खः |
| २१ उपेन्द्रस्य | ४शङ्खः | ५गदा | ६चक्रम् | ६पद्मम् |
| २२ जनार्द्दनस्य | ६पद्मम् | ५चक्रम् | ६शङ्खः | ५गदा |
| २३ हरेः | ५शङ्खः | ६चक्रम् | ५पद्मम् | ६गदा |
| २४ कृष्णस्य | ६शङ्खः | ६गदा | ६पद्मम् | ६चक्रम् |

हेमाद्रिव्र० ख० मुद्रितपुस्तके ११४पृ० चतुर्विंशतिमूर्त्तीनां ध्यानवाक्यत्वेन यन्मुद्रितं तत्र केशवमूर्त्तिं विहाय त्रयोविंशतिमूर्त्तीनां ध्यानानि सन्ति तत्र चरमे "विष्णुर्विभर्त्ति यः" इत्यत्र "कृष्णोविभर्त्ति य" इत्येव भवितुमुचितम् विष्णोः पूर्व्वमुक्तत्वात् कृष्णस्यानुक्तत्वात्। तथा वासुदेवादीनां त्रयोविंशतिमूर्त्तीनामेव मूर्त्तिज्ञापकाः सार्द्धैकादशश्लोकाः सन्ति केशवमूर्त्तिज्ञापकमर्द्धपद्यं पतितम्। तच्च संस्कर्त्तुः प्रमादवशात् एवं मूर्त्तिभेदलक्षणैक्यमपि इति सुधीभिश्चिन्त्यम्।

चतुर्षु कक्षेषु चतुरस्रविन्यासभेदाच्चतुर्विंशतिसंख्यकाएव मूर्त्तिभेदा भवन्ति। "स्थानान्तमेकादिचयाङ्कघातः संख्याविभेदाः" लीला० उक्तदिशा १।२।३।४। २४संख्या इति तद्वृत्तौ उक्तम्।

**चतुर्विद्या** स्त्री चतस्रः विद्या संज्ञात्वात् कर्म्म०। १ऋग्यजुःसामाथर्वाख्यासु विद्यासु। चतस्रोवेदरूपा विद्याअस्य। २चतुर्वेदाभिज्ञे। ततः स्वार्थे चतुर्वर्णा० ष्यञ् चतुःशतिका० उभयपदवृद्धिः। चातुर्वैद्य चतुर्वेदाभिज्ञे

**चतुर्विध** त्रि० चतस्रो विधा अस्य। चतुःप्रकारे "एव वोऽभिहितो धर्म्मोब्राह्मणस्य चतुर्विधः"। "पारुष्यमनृतं चैव पैशुन्यञ्चापि सर्वशः। असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम्" इति च मनुः। चतुर्विधशरीराणि (जरायुजाण्डजस्वेदजोद्भिज्जाख्यानि) धृत्वा मुक्त्वा सहस्रशः। सुकृतान्मानवोभूत्वा ज्ञानी चेन्मोक्षमाप्नुयात्" मल्लार्थचि० धृतवाक्यम्।

**चतुर्वीज** न० समाहारद्विगुः। "मेथिकाचन्द्रसूरस्य कृष्णाजाजी यवानिका। एतच्चतुष्टयं युक्तं चतुर्वीजमिति स्मृतम्" भावप्र० उक्ते बीजचतुष्टये। "तच्चूर्णं भक्षितं नित्यं निहन्ति पवनामयान्। अजीर्णं शूलमाध्मानं पार्श्वशूलं कटिव्यथाम्" भावप्र० तद्गुणा उक्ताः।

**चतुर्वेद** पु० चत्वारोवेदाः प्रतिपादका अस्य, चतुरो वेदान् वेत्ति अधीते वा विद्–अण् उप० स० वा। १परमेश्वरे "चतुर्वेदश्चतुर्होत्रश्चतुरात्मा सनातनः" हरिवं०२२८अ०। २चतुर्वेदाभिज्ञे च। ततः स्वार्थे ष्यञ्। चतुर्वेदस्योभयपदवृद्धिः। चातुर्वैद्य तदर्थे पु०।

**चतुर्वेदविद्** पु० चतुरो वेदान् वेत्ति विद्–क्विप् ६त०। १विष्णौ "चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपाद्" विष्णु स०। २चतुर्वेदाभिज्ञमात्रे च।

**चतुर्व्यूह** पु० चत्वारो व्यूहा अस्य। १विष्णौ "चतुर्व्यूहश्चतुर्गतिः" विष्णु स०। "शरीरपुरुषः, छन्दः पुरुषोवेदपुरुषो महापुरुषः इयि बह्वृचोपनिषदुक्ताश्चत्वारोव्यूहा अस्येति चतुर्व्यूहः" भा०। "चतुरात्मा चतुर्व्यूहः" विष्णु स०। "सृष्ट्यादिकार्य्यार्थं चत्वारोव्यूहा विभागा वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धसंज्ञा मूर्त्तयो यस्य सः" भाष्यम्। उभयविधव्युत्पत्तियोगात्तु द्विनामतया द्विधा प्रयोगः। तथा। "व्यूह्यात्मानञ्चतुर्द्धा वै वासुदेवादिमूर्त्तिभिः। सृष्ट्यादीन् प्रकोरोत्येष विश्रुतात्मा जनार्द्दनः" इति विष्णु पु०। मार्कण्डेयपुराणे च "मूलकारणं वासुदेवाख्यं व्यूहकोत्तम्" "द्वितीया पृथिवीं मूर्द्ध्नि शेषाख्या धारयत्यधः। तामसी सा समाख्याता तिर्य्यक्त्वं समुपाश्रिता। तृतीया कर्म कुरुते प्रजापालनतत्परा। सत्त्वोद्रिक्ता तु सा ज्ञेया धर्मसंस्थानकारिणी। चतुर्थी जलमध्यस्था शेते पन्नगतल्पगा। राजसास्तद्गुणः सर्गं सा करोति सदैव हि"। साङ्ख्ये २मोक्षशास्त्रे। तत्र हि हेयं हानं हेयहेतुः हानोपायश्चेति चत्वारोव्यूहाः प्रतिपाद्याःसन्ति। तत्र त्रिविधं दुःखं हेयम्। तदत्यन्तनिवृत्तिर्हानम्। प्रकृतिपुरुषसंयोगद्वारा चाविवेको हेयहेतुः। विवेकख्यातिस्तु हानोपाय इति। ३चिकित्साशास्त्रे च न०। तत्र च रोग आरोग्यं रोगनिदानं भैषज्यमिति चत्वारोव्यूहा उक्ताः इति तस्य तथात्वम्।

**चतुर्हायन(ण)** त्रि० चत्वारोहायना अस्य। चतुर्वर्षोद्भवे जन्तौ वयोवाचित्वे स्त्रियां ङीप् णत्वञ्च। वयोऽन्यत्र न ङीप् णत्वं वा। चतुर्हायना शाला।

**चतुर्होतृ** पु० कर्म्म०। चतुर्वेदोक्तहोमचतुष्टयकारिषु होतृषु "चतुर्होतारआप्रियश्चातुर्मास्यानि नीविदः" अथ० ११।७।१९। चतुर्होतृणां कर्म्म अण्। चातुर्होत्र तत्कृतकर्म्मणि। "चतुर्भुजश्चतुर्मूर्त्तिश्चातुर्होत्रप्रवर्त्तकः" हरिवं० २७६ अ०।

**चतुर्होत्र** पु० चत्वारि होत्राणि होमा प्रोक्तयो अस्य। १विष्णौ परमेश्वरे। चतुर्वेदश्चतुर्होत्रश्चतुरात्मा सनातनः" हरिवं० २२८अ०।

**चतुर्होत्रक** न० चत्वारि होत्राणि यत्र कर्म्मणि कप्। चतुर्होत्रविधायके चतुर्वेदे "त्रय्या चतुर्होत्रकविद्यया च" भाग० ७।३।२८।

**चतुल** त्रि० चत–उलच्। स्थापयितरि संक्षिप्तसा०।

**चतुश्चक्र** न० रुद्रयामलोक्ते दीक्षाङ्गमन्त्रशुद्धिज्ञापके चक्रभेदे यथा "चतुश्चक्रं प्रवक्ष्यामि शृणु पार्वतीवल्लभ!। वामदक्षिणयोगेन रेखापञ्चकमालिखेत्। पूर्वपश्चिमभेदेन पञ्च रेखाः समालिखेत्। चतुष्कोष्ठे दक्षभागे चतुष्कोष्ठे च मन्त्रवित्। तदधश्च चतुष्कोष्ठे तद्वामस्थे चतुर्गृहे। प्रलिखेत् क्रमशश्चाद्ये चतुर्मन्दिरमध्यगे। स्निग्धञ्च शीतलं अग्रं सिद्धञ्चापि ततः परम्। अकारञ्च उकारञ्च तथौकारं ततः परम्। स्निग्धस्थमिति वर्णं च शीतलस्थं शृणु प्रभो!। आकारञ्च ऊकारञ्च तथौकारं ततः परम्। तदधोजगृहस्थं वर्णं शृणु महाप्रभो!!

इकारश्च ऋकारश्च एतमोङ्कारतः परम्। त्रिकोणेहस्थितं वर्णं शृणु सर्वसुखप्रदम्। ईकारश्च ऋकारश्च औकारश्च ततः परम्। दक्षे चतुर्गेहस्थितान् वर्णान् तव वदामि तान्। आह्लादं चापि प्रत्यायं सम्बन्धं शुभमित्यपि। एतत्कोष्ठस्थितान् सर्वान् शुभाशुभफलप्रदान्। ककारश्च खकारश्च भकारश्च अकारकम्। आह्लादस्थमिति प्रोक्तं प्राप्तिमात्रेण सिद्धिदम्। प्रत्यायस्थं मकारश्च धकारं सत्वमित्यपि। सम्बन्धस्य हि ङकारश्च टकारं ठठमित्यपि। शुभस्थश्च ढकारश्च थकारं सतमित्यपि। तदधःस्थं चतुर्गेहं लौकिकं सात्त्विकं तथा। मानसिकं राजसिकं चतुर्गेहस्थितं त्रिमम्। लौकिकस्थं अकारश्च दकारं च मकारकम्। सात्त्विकस्थं धकारश्च नकारश्च यकारकम्। मानसिकस्थं शृणु भो पकारं च फकारकम्। तद्वामस्थचतुर्गेहं शृणु पञ्चानन! प्रभो!। सुप्तं सिद्धञ्च सिद्धञ्च दुष्टमन्त्रं प्रकीर्त्तितम्। एतद्गेहस्थितान् वर्णमात्रान् स्पृशाति योनरः। वर्जयित्वा सुप्तमन्त्रं सिद्धं सिद्धञ्च दुष्टकम्। ऐहिके सिद्धिमाप्नोति परे मुक्तिमवाप्नुयात्। यद्भाग्यवशात् सुप्तादिषु गेहेषु लभ्यते। तदा मन्त्रं शोधयेत् वै सुप्तस्तम्भितकीलितैः। वर्जितैर्दोषजालस्थै रशुभं भूतशुद्धये। भूतलिप्या पुटीकृत्य जप्त्वा सिद्धिं ततो लभेत्। न तु वा वर्जयेत् गेहं चतुष्कं वर्णवेष्टितम्। सुप्तगेहस्थितं वर्णं शृणुष्व पञ्चकानन। बकारश्च भकारश्च ततोऽन्यष्टहसंस्थितम्। शकारश्च षकारश्च सिद्धगेहस्थितं द्वयम्। सकारश्च हकारश्च सिद्धगेहस्थितं द्वयम्। दुष्टगेह स्थितं नाथ! लकारं गगनं तथा। निजस्वभावमुक्तं यत्मन्त्रं समुपाश्रयेत्"।

**चतुश्चत्वारिंशत्** स्त्री चतुरधिका चत्वारिंशत्। (चोयाल्लिश) १चतुरधिकचत्वारिंशत्संख्यायां २तत्संख्यान्विते च। पूरणे डट्। चतुश्चत्वारिंश तत्संख्यापूरणे त्रि० स्त्रियां ङीप्।

**चतुःशृङ्ग** पु० चत्वारि शृङ्गाण्यस्य। १कुशद्वीपस्थ वर्षपर्वते "बभ्रुश्चतुःशृङ्गः कपिलश्चित्रकूटोदेवानीकऊर्द्ध्वरोमा द्रविणः" भाग०५ २०।११ श्लो०। २परमेश्वरे च। "चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे" इत्यादि श्रुतौ तस्य चतुःशृङ्गत्वोक्तेस्तथात्वम्। ३शब्दशास्त्रे च तस्य नामाख्यातनिपातोपसर्गरूपचतुर्विधार्थबोधकत्वात् तथात्वम्।

**चतुष्क** न० चतुरवयवं चत्वारोऽवयवायस्य वा कन्। १चतुःसंख्यायां २तदन्विते च "एकं द्विकं त्रिकं चैव चतुष्कं पञ्चकं तथा। नामाद्यौ इति सर्वेऽमी पक्षाः शास्त्रे व्यवस्थिताः" हरिः। "एतत् कष्टतमं विद्यात् चतुष्कं कामजे गणे" द्विकस्त्रिकश्चतुष्कश्च पञ्चकश्च शतं समम्" इति च मनुः। ३चतुःस्तम्भे मण्डपभेदे "चतुष्कपुष्पप्रकरावकीर्णयोः" "नार्य्यश्चतुष्काभिमुखं व्यनैषुः" इति च कुमा०। "नारीमनांसीव चतुष्कमन्तः" रघुः। ४अथकार्य्यां (मशारि) ५पुष्करिणीभेदे च स्त्री ङीप् मेदि०। ६वर्णाष्टभेदे न० शब्दार्थ०।

**चतुष्कर्णी** स्त्री चत्वारः कर्णा अस्या ङीप्। १कुमारानुचरमातृभेदे "खरकर्णी चतुष्कर्णी कर्णप्रावरणा तथा" भा० श० ४७अ० कुमारानुचरमातृगणोक्तौ। चत्वारः कर्णाः श्रवणसाधनं यत्र। २द्वाभ्यां क्रियमाणे मन्त्रे पु० "षट्कर्णोभिद्यते मन्त्रश्चतुष्कर्णः स्थिरोभवेत्" पञ्चत०।

**चतुष्कल** पु० चतस्रः कलाः मात्रायत्र। आर्य्यादिषु चतुर्मात्रायुते गणभेदे "ज्ञेया सर्वान्तमध्यादिगुरवोऽत्र चतुष्कलाः। गणाश्चतुर्लघूपेताः पञ्चार्य्यादिषु संस्थिताः" छ०र०

**चतुष्कोण** त्रि० चत्वारः कोणा यत्र। १चतुरस्रे तदाकारे २क्षेत्रभेदे न०।

**चतुष्टय** त्रि०चत्वारोऽवयवा विधा अस्य तयप्। १चतुर्विधे भागवति चतुष्के। स्त्रियां ङीप् "प्रवत्तिरासीच्छब्दानां चरितार्था चतुष्टयी" कुमारः। "तदेषु सर्वमेध्येतत्प्रयुञ्जीत चतुष्टयम्" मनुः। "चतुष्टयमयं देहादिदक्षम्"। चतुर्णामवयवः तयप्। २चतुःसंख्यायाम् "युक्तं मणिस्तम्भचतुष्टयेन" कुमा०। "केन्द्रं चतुष्टयं कण्टकम्" नील०ता० उक्तेषु ३लग्नचतुर्थसप्तमदशमस्थानेषु न०।

**चतुष्टोम** पु० चतुरुत्तरः स्तोमः त्रिवृत्पञ्चदशसप्तदशैकविंशानां समूहः मध्यपदलोपी स०। चतुरुत्तरस्तोमे "त्रिवृत्तोऽष्टाचत्वारिंशः भर्गं चतुष्टोमः" यजु० १४।२३। चतुर्हिङ्कुं स्तूयमानत्वात् २वायौ च। "अएव चतुष्टोमस्तोमस्तं तदुपदधाति तद्यत्तमाह भर्गमिति प्रतिष्ठा वै भर्गं प्रतिष्ठा चतुष्टोमोऽथो वायुर्वाव भर्गं चतुष्टोमः स आभिश्चतसृभिर्दिग्भिः स्तुते वायुर्वै सर्वेषां भूतानां प्रतिष्ठा तदेतद्रूपमुपदधातीति" शत० ब्रा० ८।४।१।२६। ३स्तोमभेदे। "समीचीर्दिशः स्तुताश्चतुष्टोमः स्तोमः" यजु० १४।२५। "चतुष्टोमेन स्तोमेन समीचीः समीच्यादिशः स्तुताः" वेददी०।

**चतुष्पञ्चाशत्** स्त्री चतुरधिका पञ्चाशत् । (चौयान्न) १चतु रुत्तरपञ्चाशत्संख्यायां २तत्संख्येये च । ततः पूरणे डट् । चतुष्पञ्चाश तत्संख्यापूरणे त्रि॰ स्त्रियां ङीप् ।

**चतुष्पत्री** स्त्री चत्वारि चत्वारि पत्राण्यस्याः जातित्वात् ङीप् । १सुनिषण्णके (सुसुनि) शाकभेदे "चाङ्गेरी सदृशः पत्रैश्चतुर्द्दल इति स्मृतः । शाकोजलान्विते देशे चतुष्पत्रीति चोच्यते" शब्दार्थचि॰ । २क्षुद्रपाषाणभेदिनि च राजनि॰ ।

**चतुष्पथ** पु॰ चत्वारः पन्थानः ब्रह्मचर्य्यादयः आश्रमा यस्य अच् समा॰ । १ब्राह्मणे अमरः ब्राह्मणानां हि "एष वोऽभिहितो धर्म्मो ब्राह्मणस्य चतुर्विधः" मनुना चातु-राश्रम्यस्य उक्तत्वात् तथात्वम् । चतुर्णां पथां समाहारः अच् । २चतुर्ष्पथे (चौमाथा) पथि ।

**चतुष्पथनिकेता** स्त्री चतुष्पथे निकेतोऽस्याः । कुमारानुचर मातृभेदे "चतुष्पथनिकेता च गोकर्णी महिषानना" भा॰ श॰ ४७अ॰ कुमारानुचरमातृगणोक्तौ ।

**चतुष्पथरता** स्त्री ७त॰ । कुमारानुचरमातृभेदे । "चतु-ष्पथरता चैव भूतितीर्थान्यगोचरा" भा॰ श॰४७अ॰ ।

**चतुष्पद** पुंस्त्री चत्वारि पदानि चरणा यस्य । १चतुश्चरणे गवादौ जन्तौ स्त्रियां जातित्वात् ङीप् । २तिर्य्यग्रूपे मुख्यकरणभेदे न॰ । करणशब्दे १६८०पृ॰ क॰ वि॰ वाक्य दृश्यम् । अस्य शब्दक॰ पुंस्त्रोक्तिः चौरागमविरुद्धा । "अमचतुराद्यान्त्यार्द्धे वृषाजसिंहाश्चतुश्चरणाः" ज्यो॰ त॰ उक्तेषु ३मकराद्यार्द्धधनुरन्त्यार्द्धमेषवृषसिंहराशिषु पु॰ । स्त्रीत्वं ४करणभेदे न॰ हेमच॰ ।

**चतुष्पदवैकृत** न॰ ६त॰ । ह॰ स॰ उक्ते चतुष्पदजन्तुप्रस-वादिविकारे यथा

"परयोनावभिगमनं भवति तिरश्चामसाधु धेनूनाम् । उक्षाणो वान्योऽन्यं पिबन्ति श्वा वा सुरभिपुत्रम् । मासत्रयेण विद्यात् तस्मिन्निःसंशयं परागमनम् । तत्प्रतिघातायैतौ श्लोकौ गर्गेण निर्दिष्टौ । त्यागो विवासनं दानं तत्तस्याशु शुभं भवेत् । तर्पयेद्ब्राह्मणां श्चात्र जपहोमांश्च कारयेत् । स्थालीपाकेन धातार पशुना च पुरोहितः । प्राजापत्येन मन्त्रेण यजेद्बहुक दक्षिणम्" ४६अ॰ ।

**चतुष्पदी** स्त्री चत्वारः पादा अस्याः अन्त्यलोपः समा॰ वा ङीप् पादः पद्भावः । १पद्ये "पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा" छन्दोम॰ । २प्राकृतभाषादिप्रसिद्धे (चौपाया) छन्दोभेदे ३चतुश्चरणस्त्रीपशौ च अन्य-लिङ्गे चतुष्पादित्येव ।

**चतुष्पर्णी** स्त्री चत्वारि चत्वारि पत्रे पत्रे पर्णान्यस्याः ङीप् । (सुसनी) शाकभेदे । राजनि॰ ।

**चतुष्पाटी** स्त्री चतस्रोदिशः पाठयति पाटि—अण् उप॰स॰ । नद्यां शब्दमाला

**चतुष्पाठी** स्त्री चतुर्णां वेदानां पाठोऽत्र गौरा॰ ङीष् । छात्राणामध्ययनमण्डपे (चौपाडी) ख्याते ।

**चतुष्पाणि** पु॰चत्वारः पाणयोऽस्य । १विष्णौ हारा॰ २चतु-र्बाहुयुक्तमात्रे त्रि॰ ।

**चतुष्पाद्** त्रि॰ चत्वारः पादा अस्य अन्त्यलोपः समा॰ । चतुश्चरणयुक्ते गवादौ स्त्रियां ङीप् पादः पद्भावः चतु-ष्पदीत्येव । समासान्तविधेरनित्यत्वात् अन्त्यलोपा-भावे चतुष्पादोऽपि तत्रार्थे "भिक्षाचिह्नचतुष्पादं विषमं परिकीर्त्तितम्" छन्दोम॰ ।

**चतुस्तन** स्त्री चत्वारः स्तना अस्याः वा न ङीप् । सुरभौ गवि । "तस्यै स्तनानुन्नयति । अथयत् स्तनानुन्नयति वा चतुस्तना भवति चतुस्तना हि गौः" शत॰ ब्रा॰ ६।५।२।१८।२। गवादिष्वादौ च पक्षे ङीपि चतुस्तनीत्यपि ।

**चतुस्त्रिंशत्** स्त्री चतुरधिका त्रिंशत् । (चौतिश) १चतुर-धिकत्रिंशत्संख्यायां २तत्संख्येये च । पूरणे डट् । चतुस्त्रिंश तत्संख्यापूरणे त्रि॰ स्त्रियां ङीप् ।

**चतुस्त्रिंशज्जातक** पु॰ बुद्धभेदे हेमच॰ ।

**चतुस्सन** पु॰ ब॰ व॰ चतुर्णां धर्म्मार्थकाममोक्षाणां सनः दाता सन—दाने अच् ६त॰ चत्वारः सनेतिशब्दा नाम्नि येषां वा । १सनकसनत्कुमारसनन्दसनातनेतिनामकेषु चतुर्षु ब्रह्मपुत्रेषु ऋषिषु तन्नाम्नां सनादित्वेन तथात्वम् । २तदवतारधारिणि चतुर्वर्गदातरि वा ३विष्णौ पु॰ "तप्तं तपो विविधलोकसिसृक्षया मे आदौ सनात् स्वतपसः स चतुःसनोऽभूत्" भाग॰ २।७।६।

**चतुस्स्रक्ति** पु॰ चतस्रः स्रक्तयः कोणादिरूपा अस्य । चतु-र्दिगवच्छिन्ने । "चतुःस्रक्तिर्नाभिर्ऋतस्य" यजु॰ ३८।२० । "चतस्रः स्रक्तयः कोणा दिग्रूपायस्य सः" वेददी॰ । "चतुःस्रक्तिरेव कूपो भवति" शत॰ ब्रा॰ ६।३।३।२६।

**चतूराजी** स्त्री चतुर्णां राज्ञां समाहारः टच् समा॰। चतुरङ्ग क्रीडायां क्रीडाभेदे चतुरङ्गशब्दे २८६३पृ॰ दृश्यम् ।

**चतूरात्र** न॰चतसृणां रात्रीणां समाहारः चतसृभिः रात्रि-भिर्निर्वृत्तः वा अच् तस्य लुक् वा अच् समा॰ "संख्यापूर्व्वं

रात्रमिति" पा० क्लीबत्वम् । १चतसृषु रात्रिषु २तत्साध्ये क्रतुभेदे च । "चतूरात्रम्" कात्या०श्रौ० १८।१।१४। "अयं क्रतुर्भवतीति शेषः" कर्कः । चतूरात्रादिष्वधिकम्" कात्या० श्रौ० २२।१।७। "सहस्रमधिकं दक्षिणा" कर्कः ।

**चत्वर** न० चत–ष्वरच् । १स्थण्डिले होमार्थं कृतसंस्कृत भूभागे २गृहाद्बहिरङ्गने (उठान) (चाताल) इति च ख्याते ३स्थाने अमरः "गृहाणां गृहवास्तूनि कार्यान्तां त्रिकचत्वराः" हरि० ११३अ० । ४नानाजनस्थानानां वासस्थाने "सहि श्रेष्ठिचत्वरे प्रतिवसति" मृच्छ० । "न चत्वरे निशि तिष्ठेत् निगूढः" भा० उ० ३६अ० । (चोतारा) ५ख्याते स्थाने "चत्वरान् राजमार्गांश्च समानन्तःपुराणि वः" हरिवं० ११६अ० । ६चतसृणां रथ्यानां सङ्गमे शब्दार्थचि० । "अनुरथ्यासु सर्वासु चत्वरेषु च कौरव !" भा० व० १५अ० ।

**चत्वरवासिनी** स्त्री चत्वरे वस्तुं शीलमस्याः वस–णिनि ङीप् । कुमारानुचरमातृभेदे । "कृष्णाम्बिका निम्बुटिका रामा चत्वरवासिनी" भा०४७अ० ।

**चत्वारिंशत्** स्त्री चत्वारो दशतयः परिमाणमस्याः । "पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्" इत्यादि" पा० नि० । (चाल्लिश) १संख्यायां २तत्संख्येये च । ततः पूरणे तमप् । चत्वारिंशत्तम तत्संख्यापूरणे त्रि० स्त्रियां ङीप् ।

**चत्वाल** पु० चत–वालञ् संज्ञापूर्वकत्वेन वृद्धेरनित्यत्वात् न वृद्धिः । चात्वाले १होमकुण्डे २दर्भे च मेदि० ।

**चद** याचने भ्वा० द्विक० उभ० सेट् । चदति ते एदित् अचदीत् अचदिष्टाम् । चचाद चेदतुः चेदे ।

**चद** आह्लादे दीप्तौ च भ्वा० अक० प० सेट् इदित् । चन्दति अचन्दीत् चचन्द चचन्दतुः । चन्द्रः ।

**चदिर** पुंस्त्री चद–किरच् । १हस्तिनि २भुजगे च स्त्रियां जातित्वात् ङीष् । ३चन्द्रे ४कर्पूरे च पु० संक्षिप्तसा० ।

**चन** हिंसे भ्वा० प० सक० सेट् । चनति अचनीत्–अचानीत् चचान चेनतुः । मित् णिचि चनयति ते ।

**चन** शब्दे तु० प० अक० सेट् । चनति अचा (च) नीत् चचान चेनतुः । णिचि चानयति ।

**चन** अव्य० चन–शब्दे अच् । असाकल्ये "असाकल्ये तु चिच्चन" इत्यमरः । समुच्चायार्थकचशब्देन नञः समास इत्यन्ये "युवोरिदाप्रश्चन प्र मिणन्ति व्रतं वाम्" ऋ०२।२४।१२। "चनेत्येतत्पदद्वयसमुदायः । ऐकपद्यं त्वध्यापक साम्प्रदायिकम् । २नेत्यर्थे "पूर्वीश्चन प्रसितयस्तरन्ति" ऋ० ७।३२।१३। "चनेति समुदायो नेत्यर्थे" भा० । ३अप्यर्थे "स्वप्नश्चनेदनृतस्य प्रयोता" ऋ० ७।८६।६। "स्वप्नश्चन स्वप्नोऽपि" भा० । "महिम्न एषां पितरश्चनेशिरे" ऋ० १०।५६।४। पितरश्चन पितरोऽपि" यत्तु मुग्धबो० "किमःक्त्यन्ताच्चिच्चनौ" विभक्त्यन्तात् किमः चिच्चनप्रत्ययौ विहितौ तच्चिन्त्यम् अप्यर्थकेन असाकल्यार्थेन वा चनशब्देन गतार्थत्वात् कदाचन कथञ्चनेत्यादौ कदापि कथमपीत्यर्थलाभात् न प्रत्ययान्तरकल्पनम् । प्रागुक्तप्रयोगे किमोऽभावेऽपि प्रयोगदर्शनात् किम इत्यस्य प्रायिकत्वकल्पनेऽपि चनप्रत्यये परे पूर्व्वसुपः लोपापत्तेश्च । तन्मते चित्त्वेन प्रत्ययस्याव्ययसंज्ञकत्वात् तयोश्चित्त्वाभावेनानव्ययत्वापत्तेः स्वरवैलक्षण्यानुपपत्तेश्च

**चनस्** न० चाय् पूजादौ "चायतेरन्ने ह्रस्वश्च" उणा० असुन् चात् नुट् । १भक्ते उज्ज्व० । "चनो धाः सहसो यहो" ऋ० १।२६।१०। "चनोदधिष्व पचतोत सोमम्" निरुक्तधृतश्रुतिः ।

**चनसित** न० च न शब्दे अच् चनः सित अवसानमस्य । ब्राह्मणस्यापत्यच्चनामभेदे । "नाध्यधनाम्नाऽऽ ह्वयीत चनसितेत्यर्हता सह । सम्भाषमाणो ब्रूयाद्विचक्षणेतीतरैरिति" कर्कधृतमनुवाक्यम् । "जागर्त्येतां रात्रिं क्रीते राजनि द्वितीयां श्वः सुत्यायां स्तोमां चनसितं विचक्षणमिति" नामधेयान्तेषु दधाति चनसितेति ब्राह्मणं, विचक्षणेति राजन्यवैश्यौ" "विचक्षणचनसितवतीं वाचम्" कात्या० श्रौ० ७।५।७। "विचक्षणशब्दवतीं चनसितशब्दवतीं च वाचं ब्राह्मणादिनामधेयभूतां वाणीं वदेत्" कर्कः ।

**चनस्य** चनोऽन्नमिच्छति क्यच् नामधातुः अन्नेच्छायां पर० अक० सेट् । चनस्यति अचनस्यीत् । "पुरुभुजा चनस्यतम्" ऋ० १।३।१।

**चनिष्ठ** त्रि० चनोऽन्नम् उपचारात् तद्वान् ततः अतिशये इष्ठन् विन्मतोर्लुकि टिलोपः । अन्नवत्तमे "अग्ने वो अस्तु सुमतिश्चनिष्ठा" ऋ०७।५७।४। "चनिष्ठा अन्नवत्तमा" भा० ।

**चन्द** पु० चदि आह्लादने णयन्तात् अच् । १चन्द्रे २कर्पूरे च शब्दार्थर० ।

**चन्द(न्द्र)क** पु० चन्द(न्द्र) इव कायति शुभ्रत्वात् कै–क । (चाँदा) मत्स्यभेदे "चन्द(न्द्र)कोऽरुचिकृत् वल्यश्चानभिष्यन्दकृदपि" राजवल्लभः ।

**चन्दन** पु०न० चदि–णयन्तात् ल्यु । स्वनामख्याते मलयाच-

लजे वृक्षविशेषे तद्भेदगुणादिकं भावप्र० उक्तं यथा "श्रीखण्डं चन्दनं न स्त्री भद्रश्रीस्तैलपर्णिकः। गन्धसारो मलयजस्तथा चन्द्रद्युतिश्च सः। स्वादे तिक्तं कषे पीतं छेदे रक्तं तनौ सितम्। ग्रन्थिकोटरसंयुक्तं चन्दनं श्रेष्ठमुच्यते। चन्दनं शीतलं रूक्षं तिक्तमाह्लादनं लघु। श्रमशोषविषश्लेष्मतृष्णापित्तास्रदाहनुत्। अथ पीतचन्दनम् (कलम्बक)। "कालीयकन्तु कालीयं पीताभं हरिचन्दनम्। हरिप्रियं कालसारं तथा कालानुसार्य्यपि। कालीयकं रक्तगुणं विशेषाद्व्यङ्गनाशनम्"। अथ रक्तचन्दनम् "रक्तचन्दनमाख्यातं रक्ताङ्गं क्षुद्रचन्दनम्। तिलपर्णं रक्तसारं तत्प्रवालफलं स्मृतम्। रक्तं शीतं गुरु स्वादु छर्दितृष्णास्रपित्तहृत्। तिक्तं नेत्रहितं वृष्यं ज्वरव्रणविषापहम्। तत्र पुंसि "सत्संश्रयस्थोऽपि दूष्यते कृष्णसर्पशिशुनेव चन्दनः" शकु०। क्लीवे "विना मलयमन्यत्र चन्दनं न विवर्द्धते" पञ्चत०। "ततः सर्वाङ्गिकाः सर्व्वे दिव्यचन्दनभूषिताः" भा० स० ५७ अ०। "चन्द्रचन्दनरोलम्बरुताद्युद्दीपनं मतम्" सा० द०। तस्य शृङ्गारोद्दीपकत्वमुक्तम्। २रक्तचन्दने न० मेदि० ३वानरभेदे पु० हेम०। ४शारिवौषधौ स्त्री राजनि०। (मधुखाली) नगरीसमीपस्थे ५नदीभेदे च स्त्री।

**चन्दनगिरि** पु० चन्दनस्योत्पत्तिस्थानं गिरिः। मलयाचले

**चन्दनगोपी** स्त्री चन्दनमपि गोपायति गुप—अण्। शारिवाभेदे राजनि०।

**चन्दनधेनु** स्त्री पतिपुत्रवत्या मृताया नार्य्या उद्देशेन पुत्रदातव्यायां चन्दनाङ्कितधेनौ। तद्विधिमाह रत्नाकरे देवलः "जीवद्भर्त्री तु या नारी पुत्रिणी म्रियते यदि। सवत्सामङ्कितां धेनुमाचार्य्याय प्रदापयेत्। पतिपुत्रवती नारी म्रियते याग्रतस्तयोः। वृषं नचोत् सृजेत् पुत्रः पिता यावच्च जीवति"। तथा कर्मोपदेशिन्यां ब्राह्मणसर्वस्वे च हलायुधधृतानि वचनानि स्मृतिः "पतिपुत्रवती नारी म्रियते भर्त्तुरग्रतः। चन्दनेनाङ्कितां धेनुं तस्याःस्वर्गाय कल्पयेत्"। तथा जातूकर्ण्यः धेनुं चन्दनमालिप्य यो दद्यान्मातृहेतवे। यदि पापशतैर्युक्ता तथापि स्वर्गमाप्नुयात्"। तथा वशिष्ठः "न युक्तश्च वृषोत्सर्गः पिता यावत् तु जीवति। चन्दनेनाङ्कितां धेनुमाचार्य्याय प्रदापयेत्"। "चतुर्हस्तो भवेद्यूपो वन्यवृक्षसमुद्भवः। वर्त्तुलः शोभनः स्थूलः कर्त्तव्यो धेनुमौक्तिकः। बिल्वस्य बकुलस्यैव कार्य्यो यूपः प्रशस्यते। अभावे वारुणेनापि यूपं कुर्य्याद्विधानतः"। "तरुणीरूपसम्पन्ना सुशीला च पयस्विनी। न्यायार्ज्जिता स्वगृहे जाता देया सा श्रोत्रियाय गौः। नदीतीरे वने गोष्ठे देवतायतनेषु च। व्रीहिक्षेत्रे कुशक्षेत्रे राजद्वारे चतुष्पथे"। एषु वचनेषु वृषोत्सर्गनिषेधचन्दनधेनूत्सर्गविध्योर्युगपदुपसंहारदर्शनात् वृषोत्सर्गस्थाने प्रधानतया चन्दनधेनूत्सर्गः प्रतीयते अतोऽस्य वृषोत्सर्गकार्य्यकारित्वात् तत्फलहेतुत्वं लभ्यते। "एकोद्दिष्टं न कुर्व्वीत न्यासिनाञ्चैव सर्वदा। अहन्येकादशे प्राप्ते पार्व्वणं तु विधीयते" इति श्राद्धविवेकधृतोशनोवचने त्रिदण्डसंन्यासिनाम् एकोद्दिष्टनिषेधपार्व्वणविध्योर्युगपदुपसंहारात् एकोद्दिष्टस्थाने पार्व्वणमिव। यद्वा पतिपुत्रवतीरूपप्रेतविशेषाधिकृतवृषं न चोत् सृजेदिति निषेधचन्दनधेनूत्सर्गविधिभ्यां प्रेतमात्राधिकृतसामान्यवृषोत्सर्गविध्यवगतफलभावनाकरणीभूतवृषकर्मकत्यागमनूद्य तत्कर्मीभूतवृषमपहाय तत्स्थाने धेनुमात्रगुणविधिर्लाघवादवगम्यते। पशुयागे सामान्यविध्यवगतापःप्रणयनीयाधिकरणचमसस्थाने "गोदोहेनापः प्रणयेदिति" विशेषविधिना गोदोहगुणविधिवत्। "बालाभेऽपि प्रवेशिनीम्। उपोष्य द्वादशीं तत्र त्रयोदश्यान्तु पारणम्" इत्यत्र एकादशीरूपनिमित्तस्थाने द्वादशीमात्रगुणविधिवच्च। अन्यथा धेनूत्सर्गस्य पृथक्कर्मत्वे फलभावनातत्करणनियोज्यानां पृथक्कल्पने गौरवं स्यात्। उक्तविधिनिषेधयोरुपसंहारवैयर्थ्यञ्च स्यात्। ततश्च कारणैक्यात् फलैक्यमिति। चन्दनधेनूत्सर्गेऽपि प्रेतत्वविमुक्तिपूर्वकस्वर्गप्राप्तिः फलम्। एवं कपिलोक्तमन्त्रस्य पापव्यपगमस्वर्गप्रार्थनायाश्चपि तथैव तात्पर्य्यम्। तथा जातूकर्ण्यवचनस्थपापस्वर्गपदयोरपि तथैव तात्पर्य्यं बोध्यम्। मतार्थानां विधिशेषिणामेव जैमिन्युक्तप्रामाण्येन प्रकृते सिद्धे विधिशेषित्वे लाघवात् "पापिष्ठमपि शुद्धेन शुद्धं पापकृतापि वेति" कात्यायनवचनस्थ पापपदस्य प्रेतत्व एव तात्पर्य्यदर्शनाच्च। अत्र यद्यपि पतिपुत्रवतीत्यत्र पतिपुत्रवत्त्वस्य विशेषणीभूतकर्त्रन्वयिमरणानन्वयित्वेन न विशेषणत्वं किन्तूपलक्षणत्वमेव ततश्च काकवन्तो देवदत्तस्य गृहा इतिवत् कादाचित्कतद्वत्तामादायापि पतिपुत्रवतीति प्रयोग उपपद्यते। तथापि

"अग्रतस्तयोः" "भर्त्तुरग्रतः" इत्याभ्यां मरणकालिकी पतिपुत्रसत्ताऽवगम्यते गवां गोष्ठे दुतिवत्। अथ वा पराद्धान्वयेन धेनूत्सर्गकालिकीति। यच्च "अपुष्पिता मृता काचित् तस्याधेनुर्विगर्हिता" इति कपिलवचने अपुष्पितायाः पुत्रकर्त्तृकधेनूत्सर्गनिषेधस्याप्रसक्ततया सपत्नीपुत्रकर्त्तृकधेनूत्सर्गनिषेधप्राप्तौ तद्दृष्ट्या पतिपुत्रवतीत्वस्य सपत्नीपुत्रवतीपरत्वम् अवश्यं वाच्यम्। तदेकवाक्यतया पुत्रिणीत्यादावपि तथात्वमिति वाच्यम्। अपुष्पितेति कपिलार्द्धस्य प्रसक्तिपूर्व्वकनाधं पतिपुत्रयदुनिवृत्त रजस्वाया धेनूत्सर्गनिषेधार्थत्वात् गत्यां सत्यां लक्षणाया वीजाभावात्। प्रतियोगिवत् ध्वंसप्रागभावयोरपि अत्यन्ताभावविरोधित्वमते तु अजातपुष्पस्त्रीपरत्वं वा भवतु तथात्वेऽपि "तस्या धेनुर्विगर्हितेति" अप्रसक्तार्थापि अपुष्पिता धेनुदाननिन्दा स्तुतिपरा। यथा हरेरुत्थाने "पौष्णमैत्रेण किन्तेन प्रतिपद्यथ योनिमि" इत्यप्रसक्तापि निन्दा एकादश्यादिपौर्णमास्यन्तपञ्चके रेवत्यन्तपाद्योमविधिस्तुतिपरा यथा वा वेदगाने "यो गिरा गिरेति ब्रूयात् स आत्मानमपि गिरेत्" इत्यप्रसक्तनिन्दा "ऐरं कृत्वा अवगिरेदिति विधेः स्तुतिपरा। अतएव उक्तं शाबरभाष्ये "न हि निन्दा निन्द्यं निन्दितुं प्रवर्त्तते अपि तु इतरत् स्तोतुमिति"। स्तुतौ हि अप्रसिद्धगुणदोषारोपो न दोषाय। नचात्र काम्यस्यैव कार्त्तिक्यादिवृषोत्सर्गस्य स्थाने धेनुदानं विधीयते इति वाच्यम्। तन्मात्रपरत्वे मानाभावात्। प्रत्युत म्रियत इति वर्त्तमानार्थकविभक्त्या वर्त्तमानसामीप्येनाचिरप्रमीतोपस्थितेश्च। ये तु "बह्वीनामेकपत्नीनामेका चेत् पुत्रिणी भवेत्। सर्व्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुरिति" मनुना पुत्रवतीत्वाभिधानादेव पतिपुत्रवतीत्वम् सपत्नीपुत्रवती प्रतीयते इति ब्रुवते तेऽतीव भ्रान्ताः। पुत्रवतीतिपदस्याखण्डतया मतुपा पतिपदस्यान्वये तटस्थत्वापत्तेः। ननु समतुल्यवयो वर्णोऽथ वः स्याद्द्विसा द्विजाः। वृषोत्सर्गे तथा पुंसां स्त्रीणां स्त्रीणोर्विधिष्यते" इति भविष्यसंवादाद्धेनुदानमिदं पतिपुत्रवत्या वृषोत्सर्गे दक्षिणादानस्य विशेषरूपम्, न तु प्रधानकर्म्मान्तरं गौरवात्। न च दक्षिणाया अङ्गत्वेन फलासङ्गतिः। "यस्य पर्णमयी जुहूर्भवति न स पापश्लोकं शृणोतीति" वत्तदुपपत्तेरिति चेत् न वृषोत्सर्गदक्षिणातश्चन्दनाङ्कितधेनुदानस्य प्रकरणान्तराम्नानेन प्रकरणान्तरन्यायतः प्रधानत्वसिद्धेः वृषोत्सर्गस्थानीयत्वेनानुवर्त्तमानशिष्टाचारात्। धेनुदानयुगपद्वृषोत्सर्गनिषेधानामसङ्गतेः कपिलपञ्चरात्रे चन्दनधेनुदानस्यापीति कर्त्तव्यतायां वृषरूपदक्षिणादानविधानाच्च। यथा कपिल उवाच "अतःपरं प्रवक्ष्यामि धेनुदानमनुत्तमम्। पतिपुत्रवती नारी म्रियते भर्त्तुरग्रतः। चन्दनेनाङ्कितां धेनुमाचार्य्याय निवेदयेत्"। तथा "जीवद्भर्त्तौ तु या नारी पुत्रिणी म्रियते यदि। वत्ससमङ्कितां धेनुमाचार्य्याय निवेदयेत्। साध्वी पतिव्रता नारी म्रियते याग्रतस्तयोः। वृषं नैवोत्सृजेत् पुत्रः पिता यावत् तु जीवति। मृतपुत्रा च या नारी वन्ध्या वा तु या भवेत्। तस्या धेनुर्न दातव्या वृषोत्सर्गो विधीयते। "अपुष्पिता मृता काचित्तस्या धेनुर्विगर्हिता। दद्याद्धेनुं सुतो ज्येष्ठः कनिष्ठो वृषमुत्सृजेत्। द्वयोः सोदरयोरेको भवेत् ज्येष्ठः प्रधानकः। त्रयाणां द्वौ सुतौ ज्येष्ठौ, चतुर्णाञ्च त्रयः स्मृताः। पञ्चानां सोदराणाञ्च त्रयो ज्येष्ठाः प्रकीर्त्तिताः। ज्येष्ठेनैव तु कर्त्तव्यं धेनुदानं विधानतः। हेमशृङ्गीं खुरै रूप्यैः सुशीलां वस्त्रसंयुताम्। कांस्योदरीं ताम्रपृष्ठां घण्टाचामरभूषिताम्। प्रवालमालिकां दद्यात् कर्णयोरुभयोरपि। चन्दनेनाङ्कितां धेनुमाचार्य्याय निवेदयेत्। अक्षयं लोकमवाप्नोति दिवि देवैश्च मोदते। चन्दनेनाङ्कितां धेनुं दत्त्वा गच्छेत् सुरालयम्। तावत्तिष्ठति स्वर्लोके यावदाहूतसंप्लवम्। न चोत्सर्गो वृषस्यात्र वत्सतर्य्यान्वितस्य च। वृषोत्सर्गविधानेन कर्त्तव्यं सर्व्वकर्म च। मानस्तोकेति मन्त्रेण दक्षे वृषोऽभ्यसीति च। धेनोश्च स्फिग्देशे तु त्रिशूलाङ्कं समालिखेत्। वामभागे विशेषोऽयं दक्षे चक्रं समालिखेत्। तत्रान्यद्वर्जयेद्विद्वानाचार्य्यस्तु विधानवित्। ततो वै संलिखेच्चक्रं पञ्चाङ्गुलप्रमाणकम्। शूलं षडङ्गुलं कार्य्यं दक्षे वामे यथाविधि। पूर्व्वाशाभिमुखीं धेनुं यजमानोत्तरामुखः। मत्स्यकादिक्रमेणैव प्रतिमन्त्रैः प्रपूजयेत्"।

"एवंविधिष्टां तां धेनुं दत्त्वा तर्पणमारभेत्। पुच्छं गृहीत्वा पित्रादीन् वषोत्सर्गविधानतः। ऐशान्यां चालयेत् किञ्चित् आचार्य्याय च दक्षिणाम्। वृषभञ्च ततो दद्यादाचार्य्याय गुणान्वितम्। पूजयेत् ब्राह्मणांश्चैव

वस्त्रमाल्यादिभिस्ततः। कांस्यपात्रं वस्त्रयुग्मं सुवर्णञ्च विशेषतः। आचार्य्याय प्रदातव्यं ब्रह्मणे कनकं तथा। आगतान् पूजयेद्भक्त्या यथाशक्ति विधानतः। दीनान्धकृपणादींश्च अन्नाद्यैः परिपोषयेत्"। पुस्तकान्तरे पाठाधिक्यं यथा "एकादशाहे प्रेतायाः षण्मासे चाब्दिके तथा। त्रिपक्षे मासिके वापि दद्याद् गां चन्द्रनाङ्किताम्" तथा वराहपुराणम् "अयने विषुवेऽष्टम्यां युगाद्यापूर्णिमासु च। दर्शे मन्वन्तरे चैव धेनुं दद्यात् सुपूजिताम्"। ननु "आद्यश्राद्धे त्रिपक्षे वा" इत्यादिना आद्यश्राद्धकर्त्तव्यनित्यवृषोत्सर्गकालस्य परपरकालो गौणः। न वा सर्वे मुख्याः कालाः। तत्र नाद्यः त्रिपक्षादौ शिष्टाचारविरोधात्। नापि द्वितीयः त्रिपक्षादौ नित्यत्वबोधकाभावात्। वस्तुतः आद्यश्राद्धे वृषोत्सर्गस्य नित्यत्वं त्रिपक्षादौ काम्यत्वम्। आद्यश्राद्धपदम् अशौचान्तद्वितीयदिनपरम् "अशौचान्तात् द्वितीयेऽह्नीत्याद्येकवाक्यत्वात्। अत्र च आद्यश्राद्धस्य विघ्नपतितत्वेन एकादशाहादौ क्रियमाणत्वे वृषोत्सर्गमपि न कुर्य्यात्। आद्यश्राद्धदिने वृषोत्सर्गाकरणे त्रिपक्षाद्यान्यतमकालेऽपि वृषोत्सर्गस्यावश्यप्रेतत्वपरीहारकत्वेन तस्य पुनः संवत्सरसाध्यसकृत्कृतस्य नित्यत्वं कल्प्यम्। एवं धेनुदानस्यापि। अतएव पूर्णे संवत्सरे मलमासपातेऽपि प्रागकृतश्चेत् कार्य्य एव इति नवीनाजगुः। एककर्त्तृकानेकवृषोत्सर्गोऽपि शिष्टाचारादेकदिनेऽपि। तथा हि स्वर्गलोकगमनफलश्रुतेः काम्यत्वेन "यो भूय आरभते तस्मिन् फले विशेषः" इति न्यायादविरोधः। ननु नैमित्तिकत्वात् कथमावृत्तिः "सकृत् कृते कृतः शास्त्रार्थः" इति न्यायात् नचैकत्र क्रियाद्वयमिति वचनाच्च। अत्रायं विशेषः काम्यनैमित्तिकं फलविशेषार्थं भूयः कार्य्यं, नैमित्तिकमात्रं तु सकृदेव। किञ्च। संक्रान्त्यादिनिमित्तकश्राद्धमपि पुनः पुनः स्यात्। नैवं तत्र पितृतृप्तिरूपप्रधानफलस्य सकृत्त्वेन चरितार्थत्वात्। अतोक्तानि सर्वाण्येतानि वचनानि तिर्य्यगधिकरणन्यायमूलानि तथा हि तिर्य्यगधिकरणे तिर्य्यक्पङ्गुत्रार्षेयदेवतानामनधिकार इति यागमात्रे उक्तम्। तत्र हेतवः तिरश्चां विशिष्टान्तःकरणविरहात् त्रार्षेयाणाम् अव्यवहितमूकानामवेक्षणश्रवणोच्चारणविरहात् साङ्गयागासामर्थ्यात् देवानां यथा यागाद्यधिकारस्तद्वत्" अपितुः पितृकत्वे तु अधिकारो न विद्यते" इति छन्दोगपरिशिष्टे अग्निष्वात्ताद्यन्तर्गणानुक्त्वा "जीवत्पितृकश्चैतानन्यांश्चेतर" इति कात्यायनसूत्रे च जीवत्पितृकस्य पितृतर्पणनिषेधात् वृषोत्सर्गे तदङ्गभूततत्पुच्छमर्द्दितोदकतर्पणविरहात् साङ्गकरणासामर्थ्यात् वृषोत्सर्गेऽनधिकारः। अतएव द्वैतनिर्णयेऽपि स्त्रियाः करणीभूतन्यूनाङ्गबाधेन यागवद् वृषोत्सर्गस्य बाध उक्तो वाचस्पतिमिश्रेण। धेनुदानाङ्गतर्पणे तु प्रधानाधिकारश्रुतेः जीवत्पितृकाधिकृतविशेषविधानाच्चाधिकार एवाभ्युदयिकश्राद्धवत् जन्मप्रभृत्युपनयनाङ्गस्वमिस्रवपनवच्च। अयन्तु सामान्यशास्त्रोपजीवित्वेन निषेधः पर्य्युदास एव। स यदि पतिपुत्रवतोभिन्नाया वृषोत्सर्गं कुर्य्यात् इत्येवंमात्रस्तदा पूर्व्वभागवैयर्थ्यं स्यात्। यदि पतिपुत्रवत्या जीवत्पितृकपुत्रभिन्नो वृषोत्सर्गं कुर्य्यादिति विशिष्टरूपस्तथापि पतिपुत्रवत्यास्तदुभयरहितायाश्च जीवत्पितृकपौत्रादिना वृषोत्सर्गः स्यात्। स चायुक्त एव प्रागुक्तवचनन्यायविरोधात्। तस्मात् समुदायवचनसार्थक्याय पतिपुत्रवतीभिन्नाया वृषोत्सर्गं कुर्य्यात्। तथा जीवत्पितृकभिन्नो वृषोत्सर्गं कुर्य्यात् इति वचनन्यायसंवादाद्वाक्यद्वयमेव सिद्ध्यति प्रमाणवद्गौरवस्य स्वीकृतत्वात् दर्शपौर्णमासयोः षट्प्राधानापूर्व्ववत्। अथ योक्तदेवलादिवचने "ज्येष्ठेनैव तु कर्त्तव्यं धेनुदानं विधानतः" इत्यन्तकापिलादिसकलवचनपर्य्यालोचनया कनिष्ठपुत्रवतीभिन्नपतिपुत्रवतीतरजनस्य कापिलपतिप्रसूतकनिष्ठपुत्रभिन्नजीवत्पितृकादन्यो जनो वृषोत्सर्गं कुर्य्यात् इति सामान्यत एव वृषोत्सर्गविधिः। तथा पतिपुत्रवत्या ज्येष्ठपुत्र एव चन्द्नाङ्कितधेनुमुत्सृजेदिति विधिश्च सिद्ध्यति। ततश्च पतिपुत्रवत्याः कनिष्ठपुत्रसत्त्व एव तदन्यमृतपितृकेण वा वृषोत्सर्गः कार्य्यः। कनिष्ठपुत्राभावे तु न केनापि। एवं पत्यादिना न चन्द्नधेनुदानमिति। प्रतिप्रसूतकनिष्ठान्यजीवत्पितृकेण न कस्यापि वृषोत्सर्गः कार्य्य इत्यपि च पर्य्यवसितम्। वस्तुतस्तु पतिपुत्रवत्या वृषोत्सर्गनिषेधे तत्पुत्रस्य जीवत्पितृकत्वेनानधिकार एव हेतुः न तु स्त्रियाः पतिसत्त्वं पुत्रसत्त्वं वा मृतपुत्रत्वादिप्रागुक्तकापिलवचने पतिसत्त्वे कनिष्ठपुत्रसत्त्वे च वृषोत्सर्गावगतेः तत्पुत्रस्य पितुः सत्त्व एवानधिकारोक्त्या तन्मरणे वृषोत्सर्गावगमाच्च। न वा तदुभयसत्त्वं मिलितम् उक्त-

न्यायावगतस्य तत्पुत्रस्य जीवत्पितृकत्वहेतोरेव तादृश निषेधप्राप्तेः पतिपुत्रसत्त्वयोर्निर्वीजहेतुत्वकल्पना नौचित्यात् तयोर्वाचनिकहेतुत्वे तु अदृष्टकल्पनाया अनाश्यत्वात् सिद्धजीवत्पितृकनिषेधप्रपञ्चतया पतिपुत्रवत्या निषेधोपपत्तौ अधिकनिषेधकल्पने गौरवाच्च। यस्तु जीवत्पितृकवर्षोत्सर्गनिषेधे पतिपुत्रवत्याः पृथगुपसंहारः सोऽपि तस्याः पुत्रानधिकारमात्रप्रयुक्तसिद्धवृषोत्सर्गाभावभागित्वानुवादः पूर्ववाक्यावगतधेनुदानस्य वृषोत्सर्गस्थानीयत्वज्ञापनार्थं एवेति प्रागपि निरूपितम्। ततश्चोक्तवचने तिर्य्यगधिकरणन्यायप्राप्तं जीवत्पितृकस्य वृषोत्सर्गकर्तृत्वाभावमनूद्य सपतिकाया वृषोत्सर्गस्थाने चन्दनाङ्कितधेनूत्सर्ग एव विधीयते। एतेन वृषोत्सर्गकर्त्तरि कपिलप्रतिप्रसूतसपतिकावृषोत्सर्गव्रतिमतृकनिष्ठपुत्रान्यजीवत्पितृकेतरत्वविशेषणं सपतिकाया वृषोत्सर्गस्थाने ज्येष्ठपुत्रस्यैव चन्दनाङ्कितधेनूत्सर्गमात्रेस्य लभ्यते। अतोजीवत्पितृकेण काम्यवृषोत्सर्गः पतिते प्रव्रजिते वा पितरि जीवति पितामहादिवृषोत्सर्गश्च न कार्य्यः। एवं सपतिकाया अपि पुत्रस्य कर्माधिकारे असत्त्वे वा पत्या कन्यादिना वा वृषोत्सर्गः कार्य्य एवेति स्थितम्। इदन्तु रत्नाकरहलायुधाचार्य्यचूडामणिविद्याभूषणशुभङ्करमहादेवभट्टाचार्य्य प्रभृतीनामपि सम्मतं तेषां पृथक् पृथक् पद्धतिरपि प्रसिद्धास्ति। क्वचिद्देशे वार्त्तभट्टाचार्य्यस्यापि समूलपद्धतिर्दृश्यते। अत एवात्र विशेषादर्शिनामनाचारोऽनाचार एव। अत्र भविष्योक्तप्रकारस्तु वैकल्पिकएव "स्मृतिशास्त्रे विकल्पो हि आकाङ्क्षापूरणे सतीति"जैमिन्युक्तेः। तत्रत्यपूजाहोमाद्यङ्गेषु विशेषमन्त्रोक्तेः। कपिलकल्पेन वृषोत्सर्गधर्मातिदेशेन विशेषोक्तनिरासाच्च" नव्यवाचस्पतिमतम्। रघुनन्दनमते तु चन्दनधेनोः काम्यत्वमात्रत्वात् वृषोत्सर्गं विहाय केवल चन्दनधेनुदानं न शास्त्रसिद्धं काम्येन नित्यबाधायोगात् सति सामर्थ्ये उभयकर्त्तव्यतायां वृषोत्सर्गनिन्दा चन्दनधेनुदानस्तुतिपरा। रघुनन्दनकततत्त्वद्धतिसत्त्वेऽपि तस्य काम्यस्यैव विधानार्थत्वम् इति साम्प्रदायिकाः

**चन्दनपुष्प** न०चन्दनमिव सुगन्धि पुष्पमस्य। लवङ्गे राजनि०

**चन्दनमय** त्रि० चन्दनात्मकः मयट्। चन्दनदारुनिर्म्मिते पर्य्यङ्कादौ "यः सर्वः सौपर्णैः पर्य्यङ्को निर्म्मितः स फलदाता" इत्युपक्रमे "चन्दनमयोरिपुघ्नो धर्म्मयशोदीर्घजीवितकृत्" इ०स०७८अ० तन्मयपर्य्यङ्कस्य फलमुक्तम्।

**चन्दनशारिवा** स्त्री चन्दनइव सुगन्धिः शारिवा। शारिवाभेदे राजनि०। [ह्रत०। २धृष्टचन्दनसारे च।

**चन्दनसार** पु० चन्दनस्येव सारोऽस्य। १वज्रक्षारे राजनि०

**चन्दनाचल** पु० चन्दनस्याकरोऽचलः। मलयाचले राजनि०। चन्दनाद्रिप्रभृतयोऽप्यत्र।

**चन्दनादि** पु० "चन्दनञ्च तथोशीरं कर्पूरोगन्धशाकुची। एलाकर्चूरगोक्षुराः सप्तैते चन्दनादयः" इति वैद्यकोक्ते पित्तोपशमने द्रव्यसमूहे।

**चन्दनाद्य** न० "चन्दनाद्यं नखं वाप्यं यष्टिशैलेयपद्मकम्। मञ्जिष्ठा सरलं दारु शठ्येलापूतिकेशरम्। पत्रं तैलं मुरा मांसी कङ्कोलं वनिताम्बुदम्। हरिद्रे शारिवे तिक्ता लवङ्गागुरुकुङ्कुमम्। त्वग्रेणुनलिकाभिस्तैलं मस्तुचतुर्गुणम्। लाक्षारससमं सिद्धं ग्रहघ्नं बलवर्णकृत्। अपस्मारज्वरोन्मादकृत्याऽलक्ष्मीविनाशनम्। आयुःपुष्टिकरं चैव वशीकरणमुत्तमम्" चक्रदत्तोक्ते तैलभेदे।

**चन्दनीया** स्त्री चन्द्यतेऽनया वा० करणे अनीयर्। गोरोचनायाम् राजनि०। [पु० मेदि०।

**चन्दिर** पुंस्त्री० चदि–किरच्। १गजे स्त्रियां ङीष्। २चन्द्रे

**चन्द्र** पु० चदि–आह्लादे णिच्–रक्। व्योमस्थे जलमये मण्डलाकारे (चाँद) ख्याते पदार्थे। तन्मण्डलमानादि इन्दुशब्दे ९५५।५६ पृ०उक्तम्। स च ग्रहभेदः तदधिष्ठातृदेवादि ग्रहयज्ञशब्दे २७५७ पृ० दर्शितम्। अधिकमिन्दुशब्दे ९३० पृष्ठादौ दृश्यम्। तस्योत्पत्तिः अब्जिशब्दे १११पृ०उक्तम्। तद्वंशादि हरिवंशे भागवते च दृश्यम्। चन्द्रस्य दिग्वलवर्णादिज्ञानाय सर्वग्रहाणां दिग्वलाद्युच्यते तत्र ज्यो० त०

"रक्तश्यामोभास्करोगौरइन्दुर्नात्युच्चाङ्गोरक्तगौरोमहीजः। दूर्वाश्यामोज्ञोगुरुर्गौरगात्रः श्यामः शुक्रोभास्करिः कृष्णदेहः"। "सूर्य्यः शुक्रः क्षमापुत्रः सैंहिकेयः शनिः शशी। सौम्यस्त्रिदशमन्त्री च प्राच्यादिदिगधीश्वराः"। "प्राच्यां सौम्यसुराचार्य्यौ याम्यां भास्करभूमिजौ। प्रत्यक् सौरिरुदीच्यान्तु सितेन्दू दिग्वलान्वितौ"। "भौमार्कजीवाः पुरुषाः क्लीबौ सोमजभानुजौ। स्त्र्याख्यौ भार्गवचन्द्रौ द्वौ तत्पतित्वात्तथोच्यते"। "चन्द्रार्कजीवाज्ञसितौ कुजार्कौ यथाक्रमं

सत्वरजस्तमांसि"। "कटुलवणतिक्तमिश्रितमधुराम्लौ च कषायकोऽर्कतः"। "ब्राह्मणे शुक्रवागीशौ क्षत्रिये भौमभास्करौ। चन्द्रो वैश्ये बुधः शूद्रे पतिर्मन्दोऽन्त्यजे जने"। "ऋग्वेदाधिपतिर्जीवो यजुर्वेदाधिपः सितः। सामवेदाधिपो भौमः शशिजोऽथर्ववेदराट्"। "मधुपिङ्गलदृक् चतुरस्रतनुः पित्तप्रकृतिः सविताल्पकचः। तनुवृत्ततनुर्बहुवातकफः प्राज्ञश्च शशी मृदुवाक् शुभदृक्। भूमिजस्तरुणमूर्त्तिरुदारः पैत्तिकः सुचपलः कृशमध्यः। श्लिष्टवाक् सततहास्यरुचिर्ज्ञः पित्तमारुतकफप्रकृतिश्च। बृहत्तनुः पिङ्गलमूर्द्धजेक्षणो बृहस्पतिः श्रेष्ठमतिः कफात्मकः। भृगुः सुखी कान्तवपुः सुलोचनः कफानिलात्माऽसितवक्रमूर्द्धजः। मन्दोऽलसः कपिलदृक् कृशदीर्घगात्रः स्थूलद्विजः परुषरोमकचोऽनिलात्मा" "मित्राणि सूर्याच्छशिभौमजीवाः सूर्येन्दुजौ सूर्यशशाङ्कजीवाः। आदित्यशुक्रौ रविचन्द्रभौमा बुधार्कजौ चन्द्रजभार्गवौ च। "सितासितौ चन्द्रसुतो न कश्चित् बुधः शशी सौम्यसितौ रवीन्दू। रवीन्दुभौमा रवितस्त्वमित्रा मित्राविशेषस्तु समः प्रदिष्टः। बुधः कुजेज्यास्फुजिदर्कपुत्राः, शुक्रार्कजौ, भौमगुरेज्यमन्दाः। शनिः, कुजेज्यौ सुरराजमन्त्री रव्यादिकोऽमी समसंज्ञिताः स्युः"। तच्चारफलादिकम् ज्यो० त० उक्तम् तत्र इन्दुशब्दे ८९१।९२ पृ० दृश्यम् "कर्कादूनः शशी पापः" समयामृतम्। अत्रिजातसोमस्य चन्द्रलोकप्राप्तिकथा काशीख० १४अ०। "पिता सोमस्य भो विप्र! जज्ञेऽत्रिर्भगवानृषिः। ब्रह्मणो मानसात् पूर्वं प्रजासर्गं विधित्सतः। अनुत्तरं नाम तपो येन तप्तं हि तत् पुरा। त्रीणि वर्षसहस्राणि दिव्यानीति हि नौ श्रुतम्। ऊर्द्ध्वमाचक्रमे तस्य रेतः सोमत्वमीयिवः। नेत्राभ्यां तच्च सुस्राव दशधा द्योतयत् दिशः। तं गर्भं विधिना हृष्टा दश देव्यो दधुस्ततः। समेत्य धारयामासुर्नैव ताः समशक्नुवन्। यदा न धारणे शक्तास्तस्य गर्भस्य ता दिशः। ततस्ताभिः सजूः सोमो निपपात वसुन्धराम्। पतितं सोममालोक्य ब्रह्मा लोकपितामहः। रथमारोपयामास लोकानां हितकाम्यया। स तेन रथमुख्येन सागरान्तां वसुन्धराम्। त्रिःसप्तकृत्वो द्रुहिणश्चकाराथ प्रदक्षिणम्। तस्य यत् स्रावितं तेजः पृथिवीमन्वपद्यत। तेनौषध्यः समुद्भूता याभिः सन्धार्यते जगत्। स लब्धतेजा भगवान् ब्रह्मणा वर्द्धितः स्वयम्। तपस्तेपे महाभाग! पद्मानां दशतीर्दश। अविमुक्तं समासाद्य क्षेत्रं परमपावनम्। संस्थाप्य लिङ्गममृतं चन्द्रेशाख्यं स्वनामतः। बीजौषधीनां तोयानां राजाऽभूद् द्विजन्मनाम्। प्रसादाद्देवदेवस्य विश्वेशस्य पिनाकिनः। तत्र कुण्डं विधायैकममृतोदमिति स्मृतम्। यस्याम्बुपानस्नानाभ्यां नरोऽज्ञानात् प्रमुच्यते। तुष्टेन देवदेवेन स्वमौलौ योधृतः सदा। आदाय तत्कलामेकां जगत्सञ्जीवनीं पराम्। पश्चाद्दक्षेण शप्तोऽपि मासान्ते क्षयमाप्य च। आप्याय्यतेऽसौ कलया पुनरेव तया शशी। स तत् प्राप्य महद्राज्यं सोमः सोमवतां वरः। राजसूयं समाजह्रे सहस्रशतदक्षिणम्। दक्षिणामददत् सोमस्त्रीँल्लोकानिति नौ श्रुतम्। तेभ्यो ब्रह्मर्षिमुख्येभ्यः सदस्येभ्यश्च भो द्विज!। हिरण्यगर्भो ब्रह्मात्रिर्भृगुर्यत्रर्त्विजोऽभवन्। सदस्योऽभूद्धरिस्तत्र बहुभिर्मुनिभिर्वृतः। तं सिनी च कुहूश्चैव द्युतिः पुष्टिः प्रभा वसुः। कीर्त्तिर्धृतिश्च लक्ष्मीश्च नव देव्यः सिषेविरे। उमया सहितं रुद्रं सन्तर्प्याध्वरकर्मणा। प्राप सोमइति ख्यातिं दत्तां सोमेन शम्भुना। तत्रैव तप्तवान् सोमस्तपः परमदुष्करम्। तत्रैव राजसूयञ्च चक्रे चन्द्रेश्वराग्रतः। तत्रैव ब्राह्मणैः प्रीतैरित्युक्तोऽसौ कलानिधिः। सोमोऽस्माकं ब्राह्मणानां राजा त्रैलोक्यदक्षिणः। तत्रैव देवदेवस्य त्रिलोचनपदङ्कृतः। शम्भुना प्रीतमनसा त्रैलोक्याह्लादहेतवे। त्वं ममापि परा मूर्त्तिरित्युक्तस्तपोबलात्! जगत्तवोदयं प्राप्य भविष्यति सुखोदयम्। त्वत्पीयूषमयैर्हस्तैः स्पृष्टमेतच्चराचरम्! भानुतापपरीतञ्च परां ग्लानिं विहास्यति"।

"इति दत्त्वा वरान् शम्भुस्तस्मै चन्द्रमसे द्विज!। अन्तर्हितो महेशानस्तस्मिन् वैश्वेश्वरे पुरे। तदारभ्य च लोकेऽस्मिन् द्विजराजाऽधिपोऽभवत्"। तस्य मासमध्ये दक्षशापात् क्षयवृद्धी पाद्मे स्वर्गखण्डे उक्ते यथा

"अश्विन्याद्यास्तु दक्षस्य उपयेमे सुता विधुः। रोहिण्यामेव सततं बहुप्रेमा रराम ह। दृष्ट्वा तदितरास्तास्तु तप्ताः पितरमब्रुवन्। अस्माकं कामदस्तात! जामाता तव रोहिणीम्। रमयत्येव सततं तेन तप्ता वयं पितः!। तत् श्रुत्वा चाप्रियं दक्षः सोममाह भजस्व भोः। प्रेम्णा समेन सर्व्वास्त्वं दुहितॄर्मम मानद!। जगृहे तद्वचो नैव सोमः सप्रेम रोहिणीम्। तथैव रमयामास श्रुत्वा दक्षश्चुकोप ह। शशाप तेन भविताऽयक्षीणोऽस्मद्वचोतिगः। यक्ष्मणा च परिग्रस्तो भव त्वं क्षीणरेतकः।

अथ शयमिते तस्मिन् सर्व्वास्ताः सहिताः स्त्रियः। पितरं शरणं प्राप्ताः क्षीयते नः पतिः पितः! । न वयं तेन वर्त्तामो विना सुखनिराकृताः। उवाच दक्ष स्ताः सर्व्वाः शापो मे नान्यथा भवेत्। मासमध्ये पक्ष-मेकं वर्द्धतां स क्रमेण वै। क्षयं क्रमेण प्राप्नोतु पक्षमेकं व्यवस्थया। एवं शापं वरञ्चैव लेभे तस्य व्यवस्थया। तथैव राजते व्योम्नि क्षयवृद्धी दधद्विधुः"। ज्योतिःशोक्ततत्कारणन्तु इन्दुशब्दे ६३२ पृ० दर्शितम्।

२आह्लादजनकद्रव्यमात्रे त्रिका०। ३कर्पूरे ४स्वर्णे ५जले ६काम्पिल्ले पु० मेदि०। ७द्वीपभेदे शब्दमा०। ८विसर्गवर्णे तन्त्रसंकेतः चदि—दीप्तौ रक्। ९कमनीये त्रि० १०मयूरपिच्छे मेचके हेमच०। ११शोणमुक्ताफले व्याडिः। अन्यपदलोपे १२चन्द्रगुप्ते नृपे च। "क्रूरग्रहः सकेतुः चन्द्रमसंपूर्णमण्डलमिदानीम्" मुद्राराः। "चन्द्रं गता पद्मगुणान्न भुङ्क्ते" कुमा०। "वधूजनचन्द्रमधश्चकार" माघः। "चन्द्रचन्दनरोलम्बरुताद्युद्दीपनं मतम्" सा० द० तस्य शृङ्गाररसोद्दीपकत्वमुक्तम्। स्वर्णे "चन्द्ररथः "होता मन्द्रः शृण्वच्चन्द्ररथः" ऋ०१।१४१।१२।१३हीरके। चन्द्राधिष्ठातृके १४मृगशिरोनक्षत्रे १५एकाङ्के च।

**चन्द्रक** पु० चन्द्र इव कायति कै—क। मयूरपुच्छस्थे चन्द्राकारे १पदार्थे अमरः। २नखे शब्दच० ३मत्स्यभेदे (चाँदा) राजनि०। "चन्द्रकस्त्वनभिष्यन्दी मधुरो बलवर्द्धनः" राजनि० तद्गुणाउक्ताः। स्वार्थे क। ४चन्द्रशब्दार्थे जले पतितस्नेहांशस्य चन्द्राकारे ५मण्डले च "यां चन्द्रकैर्मदजलस्य महानदीनाम्" माघः। ६सितमरिचे न० राजनि० ७शिग्रुवीजे न० शब्दार्थचि० चन्द्रकोजातोऽस्य तारका० इतच्। चन्द्रकित जातचन्द्रके त्रि०।

**चन्द्रकला** स्त्री ६त०। चन्द्रमण्डलस्य षोडशभागैकभागे तासां नामानि कलाशब्दे १७८४पृ० दर्शितानि तिथिभेदे स्त्रीणां देहांशभेदे स्थितानां तासां नामभेदाश्च कामशास्त्रे उक्ता यथा

"पूषा यशा सुमनसा रतिः प्राप्तिस्तथा धृतिः। ऋद्धिः सौम्या मरीचिश्च तथा चैवांशुमालिनी। अङ्गिरा शशिनी चेति छाया सम्पूर्णमण्डली। तुष्टिश्चैवामृता चेति कलाः सोमस्य षोड्श"।

**चन्द्रकवत्** पुंस्त्री चन्द्रकोऽस्त्यस्य मतुप् मस्य वः। मयूरे "प्रादुद्रुवत् सपदि चन्द्रकवान् द्रुमाग्रात्" माघः। स्त्रियां ङीप्।

**चन्द्रकाटुकि** पु० प्रवरभेदे हेमा० व्र० ख० मूलं दृश्यम्।

**चन्द्रकान्त** पु० चन्द्रः कान्तोऽभीष्टो यस्य। स्वनामख्याते १मणिभेदे तद्दर्शने हि तस्य स्रवणात् तत्कान्तत्वम्। २कैरवे, ३श्रीखण्डचन्दने च न०। ४रात्रौ, ५ज्योत्स्नायां, स्त्री मेदि० ६चन्द्रशोभायां, चन्द्रपत्न्याञ्च स्त्री शेषच०। "चन्द्रकान्तोद्भवं वारि पित्तघ्नं विमलं स्मृतम्" सुश्रु०। "सायं शशाङ्ककिरणाहतचन्द्रकान्तः" "दृष्ट्वा तवाननवपुरिदं चन्द्रकान्तानुसारि" अमरुश०। "चन्द्रकान्ताभिधा रौ तौ विरामः स्वराष्टौ" वृ० र० टी० उक्ते पञ्चदशाक्षरपादके ७छन्दोभेदे स्त्री। "द्वादशकातर्ज चन्द्रकेतुराजधान्यां स्त्री चन्द्रकेतुशब्दे दृश्यम्।

**चन्द्रकान्ति** न० चन्द्रस्येव कान्तिरस्य शुभ्रत्वात्। १रजते रूप्ये, ६त०। तद्गुणादि भावप्र० उक्तं यथा

"त्रिपुरस्य वधार्थाय निर्निमेषैर्विलोचनैः। निरीक्षयामास शिवः क्रोधेन परिपूरितः। अग्निसदृक्काशमपतत्तस्यैकस्माद्विलोचनात्। ततोरुद्रः समभवद्वैश्वानर इव ज्वलन्। द्वितीयादपतन्नेत्रादश्रुविन्दुस्तु वामकात्। तस्माद्रजतत्पन्नमुक्तकर्म्मसु योजयेत्। कृत्रिमञ्च भवेत्तद्धि वङ्गादिरसयोगतः। रूप्यन्तु रजतं तारञ्चन्द्रकान्ति सितप्रभम्। गुरुस्निग्धं मृदुश्वेतं दाहे छेदे घनक्षमम्। वर्णाढ्यं चन्द्रवत् स्वच्छं रूप्यं नवगुणं शुभम्। कठिनं कृत्रिमं रूक्षं रक्तं पीतं दलं लघु। दाहच्छेदघनैर्नष्टं रूप्यं दुष्टं प्रकीर्त्तितम्। रूप्यं शीतं कषायाम्लं स्वादु पाकरसं सरम्। वयसः स्थापनं स्निग्धं लेखनं वातपित्तजित्। प्रमेहादिकरोगांश्च नाशयत्यचिराद्ध्रुवम्। तारं शरीरस्य करोति तापं विड्वनं बलं यच्छति शुक्रनाशम्। वीर्य्यं बलं हन्ति तनोश्च पुष्टिं महाघदान् शोषयति ह्यशुद्धम्"। चन्द्रस्य २दीप्तौ [ स्त्रियां ङीप्।

**चन्द्रकिन्** पु० स्त्री चन्द्रकोऽस्त्यस्य इनि। मयूरे त्रिका०

**चन्द्रकुण्ड** पुंन० ६त०। कामरूपस्थे चन्द्रकृते कुण्डभेदे चन्द्रकूटशब्दे दृश्यम्।

**चन्द्रकूट** पु० कामरूपस्थे पर्व्वतभेदे तत्कथा कालिका० ८१अ० "पूर्व्वं वायुगिरेः शैलश्चन्द्रकूट इति स्मृतः। त्रिकोणस्थानसङ्काशस्तदूर्द्ध्वं चन्द्रमण्डलम्। द्वितीयवर्गस्याद्यन्तु विन्दिन्दुश्यामलङ्कृतम्। चन्द्रवीजमिति प्रोक्तं तेन चन्द्रं प्रपूजयेत्। अद्यापि प्रतिदर्शं तु पर्व्वतं तं निशापतिः। प्रदक्षिणीकरोत्येव दशभीरश्मिभिः

युतः। तस्यैव पूर्व्वभागे तु सोमकुण्डाह्वयं सरः। तत्र स्नात्वा च पीत्वा च नरः कैवल्यमश्नुते। स्वर्भानुग्रस्तचन्द्रः कामाख्यासेवने यदा। तदा तद्रश्मिसंघात निःसृतास्तोयराशयः। तैस्तोयैर्व्यासवः कुण्डमकरोदिन्द्रचन्द्रयोः। मध्ये पुष्करमस्थाने स्वयं ब्रह्म शिलोपरि। चन्द्ररश्मिसमुद्भूत! चन्द्रकुण्डमहोदधे!। सुधास्रव! सान्द्राद! त्वं चन्द्र! कलुषं हर। इत्यनेन तु मन्त्रेण स्नातश्च चन्द्रधामसि। चन्द्रकूटं समारुह्य पूजयेद्वस्तु तं नरः। अविच्छिन्ना सन्ततिस्तु सुकान्ता तस्य जायते। परत्र चन्द्रभवनं भित्त्वा याति परं पदम्। तीरे तु चन्द्रकूटस्य नन्दनो नाम वै गिरिः। तस्मिन् वसति शक्रस्तु कामाख्यासेवने रतः। त्वद्भावं समासाद्य सर्व्वदेवेश्वरो हरिः। सेवितं त्रिदशेशानैः सततं वर्त्तते नरः। चन्द्रकूटस्य तु गिरेर्नन्दनस्य तथा गिरेः। मूर्त्तिद्वयं तथा चन्द्रः पद्मिनवति त्रिधा। चन्द्रकुण्डजले स्नात्वा समारुह्याथ नन्दनम्। आराध्य शक्रं लोकेशं महाफलमवाप्नुयात्"।

**चन्द्रकूप** पु० चन्द्रकृतः कूपः। काशीस्थे कूपभेदे। "चन्द्रकूपजले स्नात्वा जपाद्व नियमं व्रती" काशीख०१०अ०।

**चन्द्रकेतु** पु० भारतप्रसिद्धे १कौरवानुचरे सैन्यभेदे "शतघ्नम् चन्द्रकेतुं महामेघं सुवर्च्चसम्। सूर्य्यभासञ्च पञ्चैतान् हत्वा विव्याध कौरवम्" भा०द्रो०४८अ०। २लक्ष्मणात्मजभेदे। तस्य देशभेदे राज्याभिषेककथा रामा० उ०१०२स० "इमौ कुमारौ सौमित्रे! तव धर्म्मविशारदौ। अङ्गदचन्द्रकेतुश्च राज्यार्थे दृढविक्रमौ। इमौ राज्येऽभिषेक्ष्यामि देशः साधु विधीयताम्। रमणीयोह्यसंबाधो रमेतां यत्र धन्विनौ। न राज्ञां यत्र पीडा स्यात्राश्रमाणां विनाशनम्। स देशो दृश्यतां सौम्य नापराध्यामहे यथा। तथोक्तवति रामे तु भरतः प्रत्युवाच ह। अयं कारुपथो देशो रमणीयो निरामयः। निवेश्यतां तत्र पुरमङ्गदस्य महात्मनः। चन्द्रकेतोः सुरुचिरं चन्द्रकान्तं निरामयम्। तद्वाक्यं भरतेनोक्तं प्रतिजग्राह राघवः। तञ्च कृत्वा वशे देशमङ्गदस्य न्यवेशयत्। अङ्गदीया पुरी रम्याप्यङ्गदस्य निवेशिता। रमणीया सुगुप्ता च रामेणाक्लिष्टकर्म्मणा। चन्द्रकेतोश्च मल्लस्य मल्लभूम्यां निवेशिता। चन्द्रकान्तेति विख्याता दिव्या स्वर्गपुरी यथा। ततो रामः परां प्रीतिं लक्ष्मणो भरतस्तथा। ययुर्युद्धे दुराधर्षा अभिषेकञ्च चक्रिरे। अभिषिच्य कुमारौ द्वौ प्रस्थाप्य सुसमाहितौ। अङ्गदं पश्चिमां भूमिं चन्द्रकेतुमुदङ्मुखम्। अङ्गदञ्चापि सौमित्रिर्लक्ष्मणोऽनुजगाम ह। चन्द्रकेतोस्तु भरतः पार्ष्णिग्राहो बभूव ह"। [अमावास्यायाम् मेदि०।

**चन्द्रक्षय** पु० क्षीयतेऽस्मिन् क्षि—आधारे अच्। ६त०।

**चन्द्रगिरि** पु० चन्द्रकूटाख्ये पर्व्वतभेदे

**चन्द्रगुप्त** पु० मौर्य्यवंश्ये राजभेदे तद्राज्याभिषेककथा बृहत्कथायां विस्तरतो दृश्या। "नव नन्दान् द्विजः कश्चित् प्रपन्नानुद्धरिष्यति। तेषामभावे जगतीं मौर्य्या भोक्ष्यन्ति वै कलौ। स एव चन्द्रगुप्तं वै द्विजो राज्येऽभिषेक्ष्यति" भाग० १२।१।७। श्लो०। "द्विजः कश्चित् चाणक्यः" श्रीधर० "ततोऽपि द्विजकलेषु दर्शाविकयवनत्वे। भविष्यं चन्द्रराज्यञ्च चाणक्योवानु वनिष्यतीति" स्कन्दपुराणेकथाख्यातात् तथायता।

**चन्द्रगृह** न० ६त०। कर्कराशौ। चन्द्रमन्दिरादयोऽप्यत्र

**चन्द्रगोल** पु० चन्द्र इव गोलः। गोलाकारे चन्द्रमण्डले

**चन्द्रगोलस्थ** पु० ब०व०। चन्द्रगोले तिष्ठन्ति स्था—क। चन्द्रलोकस्थेषु सुधाभोजिषु पितृलोकेषु त्रिका०। "विधूर्द्धभागे पितरोवसन्ति" सू०सि०उक्ते स्तेषां तथात्वम्।

**चन्द्रगोलिका** स्त्री चन्द्रगोलः साधनत्वेनास्त्यस्य ठन्। ज्योत्स्नायां हेम०।

**चन्द्रचञ्चल** पु० चन्द्र इव चञ्चलः। (चलिया) १मत्स्यभेदे जटा०। (चाँदा) २मत्स्ये स्त्री शब्दर०।

**चन्द्रचार** पु० चन्द्रस्य चारः गतिभेदः। चन्द्रमण्डलस्य राशिविशेषे गतौ तत्फलम् इन्द्रशब्दे ८११पृ० उक्तम्

**चन्द्रचूड** पु० चन्द्रः चूडायाम् यस्य। चन्द्रशेखरे शिवे।

**चन्द्रज** पु० चन्द्राज्जायते जन—ड। बुधे चन्द्रजातादयोऽप्यत्र। इन्दुजशब्दे ६३४पृ० दृश्यम्। "रौद्रादीनि मघान्तान्युपाश्रिते चन्द्रजे प्रजापीडा" बृ०स०७।१।

**चन्द्रतापन** पु० दानवभेदे। "श्वेतशीर्षचन्द्रहन्तुचन्द्रश्च चन्द्रतापनः" हरिवं० २४०अ० दानवोक्तौ

**चन्द्रदार** पु० ब० व० ६त०। अश्विन्यादिषु १दक्षकन्यासु चन्द्रकलत्रेषु २तदाभनक्षत्रेषु च।

**चन्द्रदेव** पु० भारतप्रसिद्धे कुरुदलस्थे नृपभेदे "प्रत्युद्ययुस्त्रिगर्त्तास्तम् (अर्ज्जुनम्) इत्युपक्रमे "सत्यसेनश्चन्द्रदेवो मित्रदेवः श्रुतञ्जयः" "शत्रुञ्जयश्च निघ्नत्या चन्द्रदेवं तथापरैः" इति च भा० क० २७अ०।

**चन्द्रद्युति** पु० चन्द्रस्य द्युतिरिव द्युतिरस्य। चन्दने

भावप्र॰ चन्दनशब्दे दृश्यम् ६त॰। २चन्द्रस्य प्रकाशे स्त्री

**चन्द्रनाभ** पु॰ चन्द्रोनाभौ यस्य संज्ञायाम् अच्। भारतप्रसिद्धे दानवभेदे। “सूर्य्यनाभश्च विक्रान्तश्चन्द्रनाभश्च भारत!” हरिवं॰ २२४अ॰ दानवोक्तौ।

**चन्द्रनामन्** पु॰ चन्द्रस्य नामान्येव नामान्यस्य। कर्पूरे शब्दार्थचि॰। चन्द्रसंज्ञचन्द्राह्वयादयोऽप्यत्र

**चन्द्रपाद** पु॰ ६त॰। चन्द्रकिरणे। “नियमितपरिखेदा तच्छिरश्चन्द्रपादैः” कुमा॰। चन्द्रचरणादयोऽप्यत्र।

**चन्द्रपुत्र** पु॰ ६त॰। बुधे चन्द्रनन्दनादयोऽप्यत्र।

**चन्द्रपुष्पा** स्त्री चन्द्र इव श्वेतं पुष्पमस्याः। श्वेतकण्टकार्य्याम् राजनि॰।

**चन्द्रप्रभ** पु॰ चन्द्रस्य प्रभेव प्रभाऽस्य। १जैनभेदे हेम॰। “क्रमिरिपुदहनव्योषत्रिफलामरदारुचव्यभूनिम्बम्। भागश्मिलं मुस्तं सशटिवचामाक्षिकञ्चैव। लवणक्षार निशायुगकुस्तुम्बुरुगजकरणातिविषाः। कर्षांशकान्येव समानि कुर्य्यात् पलाष्टकञ्चाश्मजतोर्विदध्यात्। निष्पत्रशुद्धस्य पुरस्य धीमान् पलद्वयं लौहरजस्तथैव। सिताचतुष्कं पलमत्र वंशत्वानिकुम्भकुम्भत्रिवृन्मिश्रुक्तम्। चन्द्रप्रभेयं गुटिका प्रयोज्या चार्शांसि निर्व्वापयते षडेव। भगन्दरं पाण्डुरकामलाश्च निनष्ट वह्नेः कुरुते च दीप्तिम्। हन्त्यामयान् पित्तकफानिलोत्थान् नाडीगते मर्म्मगतव्रणे च। पन्थ्यर्बुदे विद्रधिराजयक्ष्मणोर्मेहे भगाख्ये प्रबले च योज्या। शुक्रक्षये चाश्मरिमूत्रकृच्छ्रे शुक्रप्रवाहेऽप्युदरामये च। भक्तस्य पूर्व्वं सततं प्रयोज्या तक्रानुपानं त्वथ मस्तुपानम्। काजीरसो जाङ्गलजो रसो वा पयोऽथ वा शीतजलानुपानम्। बलेन नागस्तुरगोजवेन दृष्ट्या सुपर्णः श्रवणे वराहः। बलीपलितनिर्म्मुक्तो वृद्धोऽपि तरुणायते। न पानभोजत्र परिहार्य्यमस्ति न शीतवातातपमैथुनेषु। शम्भुं समभ्यर्च्य कृतप्रसादेनाप्ता वटी चन्द्रमसः प्रासादादिति” सुखबोधोक्ते गुटिकाभेदे स्त्री चक्रदत्तोक्ते २वर्त्तिभेदे स्त्री तत्प्रकारो यथा “त्रिफलाकुक्कुटाण्डत्वक्कासीसमयसोरजः। नीलोत्पलं विडङ्गानि फेनञ्च सरितां पतेः। काजेन पयसा पिष्ट्वा भावयेत्ताम्रभाजने। सप्तरात्रं स्थितं भूयः पिष्ट्वा क्षीरेण वर्त्तयेत्। एषा दृष्टिप्रदा वर्त्तिरन्धस्याभिन्नचक्षुषः। चन्दनत्रिफलापूगपलाशतरुशोणितैः। जलपिष्टैरियं वर्त्तिरशेषतिमिरापहा। निशाद्वयाभयामांसीकुष्ठतृणाविचूर्णिता। सर्व्वनेत्रामयान् हन्यादेतत् सौगतमञ्जनम्। व्योषोत्पलाभयाकुष्ठताक्ष्यैर्वर्त्तिः कृता हरेत्॥ अर्व्बुदं पटलं काचं तिमिरार्म्माश्रुनिस्रुतिम्। त्र्यूषणं त्रिफलाक्रसैन्धवालमनःशिलाः। कृ दोपदेहकण्डुघ्नी वर्त्तिः शस्ता कफापहा। एकगुणा मागधिका द्विगुणा च हरीतकी। सलिलापिष्टा वर्त्तिरियं नयनसुखाख्या तिमिरपटलकाचाश्रुहरी। अञ्जनं श्वेतमरिचं पिप्पली मधुयष्टिका। विभीतकस्य मध्यन्तु शङ्खनाभिर्मनःशिला। एतानि समभागानि अजाक्षीरेण पेषयेत्। छायाशुष्कां कृतां वर्त्तिं नेत्रेषु च प्रयोजयेत्। अर्बुदं पटलं काचं तिमिरं रक्तराजिकाम्। अधिमांसं मलञ्चैव यश्च रात्रौ न पश्यति। वर्त्तिश्चन्द्रप्रभा नाम जातान्ध्यमपि शोधयेत्।”

**चन्द्रमाला** स्त्री चन्द्रस्य कर्पूरस्य मालेव तुल्यगन्धित्वात्। १स्थूलैलायाम् राजनि॰। अन्त्यस्थवमध्य इत्यन्ये। २औषधभेदे ६त॰। ३ज्योत्स्नायां ४चन्द्रपत्न्याञ्च।

**चन्द्रभस्मन्** न॰ चन्द्र इव शुभ्रं भस्म। कर्पूरे शब्दार्थचि॰।

**चन्द्रभाग** पु॰ चन्द्रस्य भागोऽत्र। १पर्व्वतभेदे तत्र जातायां २नद्यां स्त्री। तयोः कथा कालि॰पु॰ २०।२२अ॰ यथा “ऋषय ऊचुः। “चन्द्रभागा कथं सिन्धुस्त्वोत्पन्ना महागिरौ। कीदृक्सरस्तद्द्विपेन्द्र! वृहल्लोहितसंज्ञकम्। कथं स पर्व्वतश्रेष्ठश्चन्द्रभागाह्वयोऽभवत्। चन्द्रभागाह्वया कस्मान्नदी जाता शुभोदका। एतन्नः श्रोष्यमाणानां जायते कौतुकं महत्। माहात्म्यं चन्द्रभागायाः कासारस्य गिरेस्तदा। मार्कण्डेय उवाच। श्रूयतां चन्द्रभागाया उत्पत्तिर्द्विज सत्तमाः!। युष्माभिश्चन्द्रभागस्य महात्म्यं नाम कारणम्। हिमवद्गिरिसंसक्तशतयोजनविस्तृतः। योजनत्रिंशतोच्छ्रायः कुन्देन्दुधवलोगिरिः। तस्मिन् गिरौ पुरा वेधाश्चन्द्रं शुद्धं सुधानिधिम्। विभज्य कल्पयामास देवार्थं स पितामहः। पित्रर्थञ्च तथा तस्य तिथिवृद्धिक्षयात्मकम्। कल्पयामास जगतां हिताय कमलासनः। विभक्तश्चन्द्रमा यस्मात् तस्मिन् पर्व्वतसत्तमे। अतो देवाश्चन्द्रभागं नाम्ना चक्रुः पुरा गिरिम्” कालि॰ पु॰ २०।२२अ॰। “मार्कण्डेय उवाच। “यत्र देवसमा भूता सानौ तस्य महागिरेः। तत्र जाता देवनदी सीताख्या वचनाद्विधेः। स्नापयित्वा यदा चन्द्रं सीतातोयैर्मनोहरैः। चन्द्रं

पपुत्रं ह्लयार्कयात् सर्व्वे ते त्रिदिवौकसः। तदा सीताजलं चन्द्रस्नानयोगाच्च सास्त्रतम्। भूत्वा निपतितं तस्मिन् हृहल्लोहितसंज्ञके। तद्दिव्यं तदा तोयम् तस्मिन् सरसि निर्मलम्। तद्दर्श स्वयं ब्रह्मा विष्टपं साधु नज्जलम्। तद्दर्शनाज्जलात्तस्मादुत्थिता कन्यकोत्तमा। चन्द्रभागेति तन्नाम विधिश्चक्रे स्वयं ततः। भार्य्यार्थं सागरस्तान्तु जग्राह ब्रह्मसम्मते। तत्रैवाधिष्ठितं तोये गदापाणेर्निशापतिः। निर्भिद्य पश्चिमे पार्श्वे गिरिं तत्तु प्रवाहते। तत्सान्वतजलं भित्त्वा हृहल्लोहितसंज्ञकम्। कासारं सागरं जातं चन्द्रभागा नदी तु सा। सागरोऽपि तदा भार्य्यां चन्द्रभागां महानदीम्। तेन तोयप्रवाहेण निनाय भवनं स्वकम्। एवं तस्मिन् समुत्पन्ना चन्द्रभागाह्वया नदी। चन्द्रभागे महाशैले गुणैर्गङ्गासमा सदा"।

**चन्द्रभूति** न० चन्द्रस्येव भूतिः कान्तिरस्य। रजते राजनि० तस्य चन्द्रतुल्यकान्तिमत्त्वात् तथात्वम्। [ हेमच०।

**चन्द्रमणि** पु० चन्द्रप्रियो मणिः शाक० त०। चन्द्रकान्तमणौ

**चन्द्रमण्डल** न० ६त०। गोलाकारे विम्बे चन्द्रस्य तन्मानादि इन्दुशब्दे ९१२ पृ० दृश्यम्।

**चन्द्रमल्ली** स्त्री चन्द्र इव मल्ली। अष्टापद्यां शब्दच०।

**चन्द्रमस्** पु० चन्द्रमाह्लादं मिमीते मि—असुन् मादेशः चन्द्रं कर्पूरं माति तुलयति मा—असुन् वा। १चन्द्रे २कर्पूरे च अमरः। "सितासितौ चन्द्रमसोन कश्चित्"ज्यो०त०। "राहुर्वै भूत्वा चन्द्रमसं ग्रसति"श्रुतिः।"क्रूरग्रहः सकेतुश्चन्द्रमसं पूर्णमण्डलमिदानीम्" मुद्रारा०। तस्येदमित्यण् चान्द्रमस तत्सम्बन्धिनि "तिथिश्चान्द्रमसं दिनम्" सू० सि०। स्त्रियां ङीप्। "पश्चात्रिता चान्द्रमसीमभिख्याम्" कुमा०।

**चन्द्रमा** स्त्री चन्द्रेण मीयते मा—घञर्थे क। नदीभेदे। "कौशिकी निम्नगा शोणं बाहुदामथ चन्द्रमाम्" भा० भी० ९अ० भारतवर्ष नदीकथने।

**चन्द्रमौलि** पु० चन्द्रो मौलावस्य। महादेवे इन्दुमौलिशब्दे ९३६ पृ० दृश्यम्। "चन्द्रमौलिः सदाशिवः" विष्णुधर्मो०।

**चन्द्ररसा** स्त्री चन्द्र इवाह्लादको रसोऽस्याः। भारतवर्षस्थे नदीभेदे। "चन्द्ररसा ताम्रपर्णीत्यादि" भाग०५।१८।१८। नद्युक्तौ "तत्रचन्द्ररसा ताम्रपर्ण्यादयः" भाग०४।२।२१।

**चन्द्ररेखा** स्त्री ६त०। चन्द्रस्य मण्डलस्थचक्ररेखाभेदे २अप्सरोभेदे च "चन्द्ररेखा तिलोत्तमा" काशीख०८अ०। ३वाकुचीलतायाम् राजनि०। ४चन्द्रशेखरसहजायां चन्द्रशेखरशब्दे दृश्यम्। "नसरयुगलैश्चन्द्ररेखर्त्तुलोकैः" वृ० र० टी० उक्ते ५छन्दोभेदे च

**चन्द्ररेणु** पु० चन्द्र आह्लादकोरेणुरस्य। काव्यचौरे त्रिका०।

**चन्द्रला** स्त्री कर्णाटदेशख्याते १देवीभेदे २तत्स्थाने च शब्दार्थचि०

**चन्द्रलेखा** स्त्री चन्द्रं तत्कान्तिं लिखति लिख—अण् उप० स०। (हाकुच) ख्याते १लताभेदे राजनि०। ६त०। २चन्द्ररेखायाम्। "म्रौ म्यौ चेद्भवेतां सप्ताष्टकैश्चन्द्रलेखा" छन्दोम० उक्ते पञ्चदशाक्षरपादके ३छन्दोभेदे च।

**चन्द्रलोहक** चन्द्र इव शुभ्रं लोहकं धातुद्रव्यम्। रजतधातौ राजनि०।

**चन्द्रवंश** पु० ६त०। चन्द्रस्य सन्तानादिपरम्परायां स च हरिवं २५अध्यायादौ उक्तः। तत्र भवः यत्। चन्द्रवंश्य तद्वंशोद्भवे त्रि०। [ द्वादशाक्षरपादके छन्दोभेदे।

**चन्द्रवर्त्मन्** न० चन्द्रवर्त्म निगदन्ति वनभसैः वृ० र० उक्ते

**चन्द्रवल्लरी** स्त्री ६त०। सोमलतायाम् भरतः।

**चन्द्रवल्ली** स्त्री चन्द्र इव वल्ली सुधातुल्यमधुस्राविलात्। १माधवीलतायाम् राजनि०। २सोमलतायां च।

**चन्द्रविन्दु** पु० चन्द्रः अर्द्धचन्द्रयुक्तोविन्दुः। अर्द्धचन्द्राकारोपरिगतविन्दुरूपसन्निवेशरूपे वर्णभेदे।

**चन्द्रविहङ्गम** पुंस्त्री चन्द्र इव अर्द्धाङ्गे शुभ्रः विहङ्गमः। (शङ्खचिल)पक्षिणि खगे त्रिका०। स्त्रियां जातित्वात् ङीष्

**चन्द्रव्रत** न० चन्द्रस्य चन्द्रलोकप्राप्तये व्रतम् नियमः। चान्द्रायणसंज्ञके व्रते। चान्द्रायणशब्दे दृश्यम्।

**चन्द्रशाला** स्त्री चन्द्रः शालेवाधारो यस्याः। १ज्योत्स्नायाम् त्रिका०। चन्द्र इव शाला उच्चस्थितत्वात्। २प्रासादोपरिस्थे गृहे (चिलेघर) हारा०। "वियद्गतः पुष्पकचन्द्रशालाः" रघुः। "गृहराजः षोडशकस्त्रिचन्द्रशाला भवेद्वलभी" "बहुरुचिरचन्द्रशाला षड्विंशः पञ्चभौमश्च" वृ० स० ५६अ०। ततः स्वार्थे क। चन्द्रशालिका १वटभ्यां त्रिका०।

**चन्द्रशिला** स्त्री चन्द्रप्रिया शिला शाक०मध्यपद०स०। चन्द्रकान्ते प्रस्तरभेदे।"प्रह्लादिता चन्द्रशिलेव तूर्णम्"भट्टिः।

**चन्द्रशु(सू)र** पु० चन्द्रे तज्जे सैम्यिके रोगे शू(सू)र इव। चादसुर) (हालौ) इति च ख्याते वृक्षभेदे तस्य फले न०" भावप्र०। "चन्द्रशू(सू)रं हितं हिक्कावातश्लेष्मातिसारिणाम्"। तद्गुणा उक्ताः

चन्द्रशेखर पु० चन्द्रः चन्द्रकला शेखरोऽस्य । १महादेवे इन्द्रशब्दे ८३५ पृ० दृश्यम् । "रहस्युपालभ्यत चन्द्रशेखरः" कुमा०। चन्द्रयुक्तः शेखरोऽस्य । २पर्व्वतभेदे । ३पौष्यन्टपपुत्रे करवीरपुराधीशे नृपभेदे कालिका पु० ४६ अ० तत्कथा यथा "ततः पुत्रार्थिनं भूपं प्रसन्नो वृषभध्वजः। अच्युतदत्तफलं हस्ते ददौ तं समुवाच ह। ईश्वर उवाच। इदं फलं ब्रह्मदत्तं विभज्य नृपते! त्रिधा। भोजयैताः स्वजाया स्त्वं प्रहृष्टः सुस्थमानसः। ततः प्रदत्ते भवत एतासु फलत्रये॥ आधास्यन्ति च गर्भांस्तु भार्य्यास्ते युगपन्नृप!। काले प्राप्ते च युगपत् प्रसवो योषितां तव। भविष्यति नृपश्रेष्ठ! तदेवं त्वं करिष्यसि। एकस्या जठरे शीर्षं भार्य्यायास्ते भविष्यति। अपरस्यास्तथा कुक्षौ मध्यभागो भविष्यति। अधोनाभ्यास्तु यो भागः सोऽपरस्यां भविष्यति। ततः खण्डत्रयं भूप! यथास्थानं पृथक् पृथक्। योजयिष्यसि पश्चात्ते पुत्र एको भविष्यति। तस्य शीर्षे चन्द्ररेखा सहजा संभविष्यति। तेनैव नाम्ना स ख्यातिं गमिष्यति च भूपते!।" इत्युपक्रमे "इत्युक्त्वा स महादेवस्तासां गर्भान् स्वयं तदा। संस्कर्त्तुं जाह्नवीतोयमात्मनः शिरसो न्यधात्। ततःफले स्वयं देवः प्रविवेश वृषध्वजः। तत्क्षणात् तत्फलं भूतं त्रिभागं स्वयमेव ह। पौष्यस्तत्फलमादाय मुदितः सह भार्य्यया। प्रययौ मन्दिरं हृष्टोऽनुज्ञाप्य वृषध्वजम्। ततः समुचिते काले प्राप्ते ताभिस्तु भक्षितम्। तत् फलं नृपशार्दूलात् गर्भास्ताश्चाहिताः शुभाः। सम्पूर्णे गर्भकाले तु गर्भेभ्यः समजायत। खण्डत्रयं पृथक् राजा यथा भर्गेण भाषितम्। तत्र खण्डत्रयं पौष्यो यथास्थानं नियोज्य च। एकं पिण्डं चकाराशु तत्र पुत्रो व्यजायत। तस्य शीर्षे तदा राजन् सहजेन्दुकला शुभा। विरराज यथा स्वच्छा शरत्काले कला विधोः। तं सर्वलक्षणोपेतं पीनोरस्कं सुनासिकम्। सिंहग्रीवं विशालाक्षं दीर्घायतभुजं तदा। दृष्ट्वा पौष्यो ऽथ भार्य्याभिस्तिसृभिः सह संमुदम्। लेभे दरिद्रः सत्कोषं प्राप्येव विपुलं ततः। तस्य नामाकरोद्राजा ब्राह्मणैः स्वैः पुरोहितैः। चन्द्रशेखर इत्येवं कान्त्या चन्द्रेण वा समः। ववृधे स महाभागः प्रत्यहं चाक्षरोच। कलाभिरिव तेजस्वी शरदीव निशाकरः। एवं तिसृणामम्बानां गर्भे जातो यतोहरः। अतस्त्र्यम्बकनामाऽभूत् प्रथितो लोकदेवयोः" इत्युपक्रमे "सर्व्वां क्षितिं वशे चक्रेऽमात्यैः स चन्द्रशेखरः। सार्व्वभौमो नृपोभूत्वा राजभिः परिसेवितः। अमरैरिव देवेन्द्रो विजहार श्रिया युतः। एवं पौष्यसुतो भूत्वा त्र्यम्बकः प्राप निर्वृतिम्। ब्रह्मावर्त्ताह्वये रम्ये करवीराह्वये पुरे। दृषद्वतीनदीतीरे राजा भूत्वा समोद ह"। "अनविंशतिवर्णाढ्यैः सिद्धिदश्चन्द्रशेखरः। कथितः केन्द्रके ताले भवेत् शृङ्गारवीरयोः" संगी० दा० उक्ते ४ध्रुवकभेदे। ५चट्टलदेशस्थमहापीठे स्थितस्थे भैरवभेदे "चट्टले दक्षबाहुर्मे भैरवश्चन्द्रशेखरः। व्यक्तरूपा भगवती भवानी तत्र देवता"। "विशेषतः कलियुगे वसामि चन्द्रशेखरे" तन्त्रचूडामणिः। [स्त्री मत्स्य०।

चन्द्रसम्भव पु० चन्द्रः सम्भवोऽस्य। १बुधे। २अुद्रैलायाम्

चन्द्रसेन पु० चन्द्र आह्लादिका सेनाऽस्य। भारतप्रसिद्धे समुद्रसेनपुत्रे राजभेदे "समुद्रसेनपुत्रश्च चन्द्रसेनः प्रतापवान्" भा० आ० १८६अ०। "जघान च (द्रौणिः) पृषदृश्च चन्द्रसेनञ्च मानिनम्" भा० द्रो० १५६अ०। "समुद्रसेनं निर्ज्जित्य चन्द्रसेनञ्च पार्थिवम्" भा० स० २८अ०। भीमप्राचीविजये।

चन्द्रहन् पु० चन्द्रं हतवान् हन–क्विप्। १दानवभेदे राहौ "एकाक्षश्चन्द्रहा राहुः संहारो महदस्वनः" हरिवं० ४२अ०। श्वेतशीर्षश्चन्द्रहन्तुश्चन्द्रहा चन्द्रतापनः २४०अ०।

चन्द्रहनु पु० चन्द्र इव हनुरस्य। दानवभेदे चन्द्रहनु शब्दे उदा०।

चन्द्रहन्तृ पु० चन्द्रं हन्ति हन–तृच् ६त०। असुरभेदे भारतयुद्धकाले सएव शुनकन्टपरूपेण प्रादुर्भूतः। यथाह भा० आ० सम्भ० ६७अ०। "चन्द्रहन्तेति यस्तेषां कीर्त्तितः प्रवरोऽसुरः। शुनकोनाम राजर्षिः स बभूव नराधिपः" "चन्द्रहन्ता क्रोधहन्ता क्रोधवर्द्धन एव च" हरिवं० ४२अ०। दानवकथने

चन्द्रहास पु० चन्द्रस्येव हासः प्रभाऽस्य, चन्द्रं हसति सितत्वात् हस–अण् वा। १खड्गे २रावणखड्गे च मेदि०। ३रौप्ये न० राजनि०। ४गुडूच्यां स्त्री राजनि०।

चन्द्रा स्त्री चदि–आह्लादे रक्। १एलायां २वितान चन्द्रातपे च शब्दरत्ना०। ३गुडूच्यां शब्दार्थचि०

चन्द्रांशु पु० चन्द्रस्यांशुरिवाह्लादकोऽंशुरस्य। १विष्णौ परमेश्वरे "काङ्गः सप्ताचरोमन्त्रचन्द्रांशुर्भास्करद्युतिः" विष्णु स०। "संसारतापतिमांशुतापतापितचेतसां प्र-

न्द्रांशुरिवाह्लादकत्वात्” भा० । ६त० । २चन्द्रस्य किरणे च ।

**चन्द्रातप** पु० चन्द्रस्य आतो गमनं ततः याति पा—क । (चादोंया) १वितानेचन्द्रस्य आतप इव किरणः । २ज्योत्स्नायाम् हेम० । “चन्द्रातपमिव रसतामुपेतम्” काद० । [तनयादयोऽप्यत्र ।

**चन्द्रात्मज** पु० ६त० । बुधे तनुजशब्दे दृश्यम् । चन्द्र-

**चन्द्रानन** पु० चन्द्र इवाननमस्य । कार्त्तिकेये “अमोघस्त्वनघो रौद्रः प्रियश्चन्द्राननस्तथा” भा० व० २३१ अ० । कार्त्तिकेयनामोक्तौ । २चन्द्रतुल्यवदने त्रि० ।

**चन्द्रार्द्ध** पु० ६त० । चन्द्रस्य कलारूपे भागे तुल्यभागार्द्धत्वे अर्द्धचन्द्र इत्येव ख्यात् । “भुजाभ्यां न शुशुभे गजदन्तेन केशवः । चन्द्रार्द्धबिम्बसंयुक्तो यथैकशिखरो गिरिः” हरिवं० ८७अ० । “मौलावस्य जाह्नवीन्दू चन्द्रार्द्धचूडे ! प्रसवति स महाघोरपापावतंसे !” प्राचालवः ।

**चन्द्रालोक** पु० पीयूषवर्षकविकृते अलङ्कारग्रन्थभेदे । “चन्द्रालोकममुं स्वयं वितनुते पीयूषवर्षः कविः” इति इति तदारम्भपद्यम् ।

**चन्द्रावली** स्त्री वृन्दावनस्थे गोपीभेदे । “राधाचन्द्रावलीमुख्याः प्रोक्ता नित्यं प्रिया व्रजे । कृष्णवन्नित्यसौन्दर्य्यवैदग्ध्यादिगुणाश्रयाः” उज्ज्वलमणिः । [ राजनि० ।

**चन्द्रास्पदा** स्त्री चन्द्र आस्पदं यस्याः । कर्कटशृङ्ग्याम् ।

**चन्द्रिका** स्त्री चन्द्रोऽस्त्यस्याः आश्रयत्वेन ठन् चदि—दीप्तौ रक् ततः स्वार्थे क वा । १ज्योत्स्नायाम् अमरः । २स्थूलैलायां(चाँदा)। ३मत्स्यभेदे ४चन्द्रभागानद्याम् शब्दर०। ५कर्ण्यस्फोटालतायां ६वर्त्तिकायां० । ७श्वेतकण्टकार्यां ८मेथिकायां ९स्थूलैलायां राजनि०।१०चन्द्रशूरे भावप्र०। “मेघमुक्तविशदां स चन्द्रिकाम्” रघु० । “नवचन्द्रिकाकुसुमकीर्णतमः” माघः । “न कस्य कुरुते चित्तभ्रमं चन्द्रिका” सा० द० । चन्द्रि चन्द्रयुक्तं कं शिरोऽस्य ११शिवे पु०। “चन्द्रिकानुभावेन कृता दत्तकचन्द्रिका” १२ज्योत्स्नाया इव आह्लादिकायां स्त्रियां स्त्री स्मृतिचन्द्रिका अलङ्कारचन्द्रिका इत्यादि ।

**चन्द्रिकाद्राव** पु० चन्द्रिकया द्रावोनिष्यन्दो यस्य । चन्द्रकान्तमणौ राजनि० ।

**चन्द्रिकापायिन्** पुंस्त्री चन्द्रिकां पिबति पा—णिनि । चकोरपक्षिणि शब्दार्थचि० स्त्रियां ङीप् ।

**चन्द्रिकाम्बुज** न० चन्द्रिकेव शुभ्रमम्बुजम् । सितोत्पले राजनि० ।

**चन्द्रिन्** त्रि० चन्द्रोऽस्त्यस्य इनि । १चन्द्रयुक्ते “चन्द्रिकानुभावेन कृता दत्तकचन्द्रिका” २सुवर्णयुक्ते च “चन्द्री यजति प्रचेताः” यजु० २०।३७। “चन्द्री” सुवर्णमयः” वेददीपः । [३वास्तूके च मेदि० ।

**चन्द्रिल** पु० चन्द्र+वा० अस्त्यर्थे इलच् । १शिवे । २नापिते

**चन्द्री** स्त्री चदि—रक् गौरा० ङीष् । वाकुच्याम् राजनि० ।

**चन्द्रेश्वर** पु० चन्द्रसेविते काशीस्थे शिवमूर्त्तिभेदे चन्द्रशब्दे दृश्यम् । चन्द्रेशोऽप्यत्र लिङ्गपरत्वे न० ।

**चन्द्रेष्टा** स्त्री चन्द्र इष्टोयस्याः निशायाः वा परनिपातः । उत्पलिन्याम् राजनि० ।

**चन्द्रोदकुण्ड** पु० चन्द्रस्तत्सदृशं यस्य वा उदादेशः कर्म० । काशीस्थे कुण्डरूपे तीर्थभेदे “तथा चन्द्रोदकुण्डे च आप्लुत्यन्ति पूर्व्वजाः” काशीख० १४ अ० ।

**चन्द्रोदय** पु० चन्द्रस्योदयः । विधोः प्राथमिकदर्शनयोग्यस्थानेषु १प्रकाशे दिनेषु तिथिसम्भेदस्थित्या तन्निरूपणं हरिभक्तिविलासे १६ वि० यथा “प्रतिपदापराह्णिकत्रिमुहूर्त्तव्यापिकां द्वितीयायां चन्द्रदर्शनं सम्भाव्यते । तदुक्तमन्वाधानविषये हेमाद्रौ शातातपेन । “द्वितीया त्रिमुहूर्त्ता चेत् प्रतिपद्यापराह्णिकी । अन्वाधानं चतुर्दश्यां परतः सोमदर्शनादिति अपराह्णश्च पञ्चधा विभक्तस्याह्नश्चतुर्थोभागः । ततश्च यत्र प्रतिपदि अपराह्णे त्रिमुहूर्त्तव्यापिनी द्वितीया तत्र चन्द्रदर्शनसम्भावनमिति”

सुखबोधोक्ते २औषधभेदे तत्पाकप्रकारो यथा सुखबोधे “पलं मृदुस्वर्णदलं रसेन्द्रं पलाष्टकं षोडश गन्धकस्य । शोणैः सुकार्पासभवैः प्रसूनैः सर्वं विमर्द्याथ कुमारिकाद्भिः । तत्काचकुम्भे निहितं सुगाढे मृत्कर्पटैरह्निचतुष्टयञ्च । पचेत् क्रमाग्नौ सिकताख्ययन्त्रे ततोरजः पल्लवरागरम्यम् । निष्कद्वयं चैतस्य पलं पलानि चत्वारि कर्पूररजस्तथैव । जातीफलं शोषणमिन्दुपुष्पं कस्तूरिकाया इह शाण एकः । चन्द्रोदयोऽयं कथितस्तु शाणो भुक्तोऽहिवल्लीदलमध्यवर्त्ती । मदोन्मत्तानां प्रमदाशतानां गर्वाधिकत्वं श्लथयत्यकाण्डे । घृतं घनीभूतमतीव दुग्धं मृदूनि मांसानि समस्तकानि । माषान्नपिष्टानि भवन्ति पथ्यान्यानन्ददायीन्यपराणि चात्र । वलीपलितनाशनस्तनुभृतां वयःस्तम्भनः समस्त-

मदखण्डनः प्रचुररोमपञ्चाननः। व्यद्देषु रसराड्यं भवति यस्य चन्द्रोदयः सपञ्चशरदर्पितो मृगदृशां भवेद् लभः"। २चक्रदत्तोक्ते वर्त्तिभेदे स्त्री तत्प्रकारो यथा "हरीतकी वचाकुष्ठं पिप्पली मरिचानि च। विभीतकस्य मज्जा च शङ्खनाभिर्मनःशिला। सर्वमेतत् समं कृत्वा छागीक्षीरेण पेषयेत्। नाशयेत्तिमिरं कण्डूं पटलान्यर्बुदानि च। अधिकानि च मांसानि यश्च रात्रौ न पश्यति। अपि द्विवार्षिकं पुष्पं मासेनैकेन साधयेत्। वर्त्तिश्चन्द्रोदया नाम नृणां दृष्टिप्रसादनी"।

**चन्द्रोपल** पु० चन्द्रप्रियः उपलः। चन्द्रकान्तमणौ हेमच० इन्दुकिरणसंपर्कात् तस्य क्षरणात् तत्प्रियत्वम्।

**चन्द्रौरस** पु०६त०। १बुधे "श्वो श्वो लो चेदिह भवति च चन्द्रौरसः" वृ० र० टीकोक्ते चतुर्द्दशाक्षरपादके २वर्णवृत्तभेदे च

**चप** चूर्णीकरणे चु० उभ० सक० सेट् घटा०। चपयति-ते अचीचपत्-त। चिन्तातोरेव स्वार्थे णिचि तद्रूपमित्यन्ये।

**चप** सान्त्वने भ्वा० पर० सक० सेट्। चपति अचापीत-अचपीत्। णिचि चापयति।

**चप** गतौ चु०उभ०सक०सेट् इदित्। चम्पयति ते अचचम्पत् त

**चपट** पु० चपेट+पृषो०। (चड) चपेटे अमरटीका।

**चपल** न० चुप-मन्दायां गतौ कल उपधोकारस्याकारः। १शीघ्रे मेदि० २क्षणिके त्रि० हेमच०। ३पारदे ४मत्स्ये ५चातके ६प्रस्तरभेदे च पु० मेदि०। ७चये पु० राजनि०। ८तरले चञ्चले च त्रि० मेदि०। ९दोषमनिश्चित्य कर्मकारिणि त्रि०अम०। १०विकले त्रि० शब्दर०। ११लक्ष्म्यां स्त्री "निलयः श्रियः सततमेतदिति प्रथितं यदेव जलजन्मतया। दिवसात्ययात्तदपि मुक्तमहो चपलाजनं प्रति न चोद्यमदः" माघः। १२विद्युति १३पुंश्चल्यां १४पिप्पल्याञ्च स्त्री मेदि०। १५जिह्वायां स्त्री शब्दच०। १६विजयायां १७मदिरायां स्त्री राजनि०।"नीचि नियतमिह यच्चपलो नियतः स्फुटं नभसि निम्नगासुतः" माघः "शैशवाच्चपलमप्यशोभत" रघुः। "न पाणिपादचपलो न नेत्रचपलोऽनृजुः" मनुः। शौण्डा० ७त०। नेत्रचपलः। पादचपलः। अभूततद्भावे कृतादिभिः अभूततद्भावार्थे समासः। चपलकृतःचपलभूतः। विस्पष्टा० गुणवचनशब्दे परे तत्पुरुषे अस्य प्रकृतिस्वरत्वात् अन्तोदात्तता। चपलकटुकम्। प्रियादि०तस्मिन् परे पूर्वस्य न पुंवत्। प्रकाशमाना चपला विद्युत् यत्र प्रकाशमानाचपल इत्यादि। चपलस्य भावः अण् चापल न० ष्यञ् चापल्य न० त्व चपलत्व न० अनवस्थितत्वे "सहजचापलदोषसमुद्धतः" माघः। "मा चापलायेति गणान् न्यषेधीत्" कुमा०। "उभयार्द्धयोर्जकारो द्वितीयतुर्य्यौ गमध्यगौ यस्याः चपलेति नाम तस्याः प्रकीर्त्तितं नागराजेन" वृ० र० उक्ते आर्य्याविशेषे,१८मात्रावृत्तभेदे स्त्री। स्वार्थे क। चपलक त्रि०। भृशा० अभूततद्भावार्थे क्यङ्। चपलायते अचपलायिष्ट

**चपलता** स्त्री चपल–तल्। चाञ्चल्ये सा०द० उक्ते १व्यभिचारिगुणभेदे। "धृतिचपलताग्लानिचिन्तावितर्काः" व्यभिचारिण उद्दिश्य "मात्सर्य्यद्वेषरागादेश्चापल्यमनवस्थितिः। तत्र भर्त्सनपारुष्यस्वच्छन्दाचरणादयः" इति लक्षयित्वा "अन्यासु तावदुपमर्दसहासु भृङ्ग! लोलं विनोदय मनः सुमनोलतासु। मुग्धामजातरजसं कलिकामकाले व्यर्थं कदर्थयसि किं नवमालिकायाः" सा० द० उदाहृतम्।

**चपलाङ्ग** पु० चपलमङ्गमस्य। शिशुमारे जलजन्तुभेदे। त्रिका०। [र० उक्ते छन्दोभेदे।

**चपलावक्त्र** न० "चपलावक्त्रमयुजोर्नकारश्चेत् पयोराशेः" वृ०

**चपेट** पु० चप-घञर्थे क चपाय सान्त्वनाय एटति गच्छति इट-क। विस्तृताङ्गुलिके हस्ते (चापड़) स्त्रीत्वमीप्सते "खण्डिकोपाध्यायः शिष्याय चपेटां ददातीति" भाष्यप्रयोगात्। स्वार्थे क। अत्रैवार्थे अमरः।

**चपेटी** स्त्री भाद्रशुक्लषष्ठ्याम्। "प्रवृत्या द्वादशे मासि सम्पूज्यापत्यवृद्धये। सुते जाते तथा षष्ठ्यां षष्ठीद्वादशरूपिणी। वैशाखे चान्दनी षष्ठी ज्यैष्ठे चारण्यसंज्ञिता। आषाढ़े कार्दमी प्रोक्ता श्रावणे लुण्ठनी मता। भाद्रे चपेटी विख्याता दुर्गाख्याश्वयुजे तथा। नाड़ाख्या कार्त्तिके मासि मार्गे मूलकरूपिणी। पौषे माल्यचरूपा च शीतला तपसि स्मृता। गोरूपिणी फाल्गुने च चैत्रेऽशोका प्रकीर्त्तिता,, स्कान्द० पु०

**चप्य** त्रि० चप–पवर्गान्तत्वात् कर्म्मणि यत्। अदनीये। "चप्यं भवत्यन्नाद्यस्यावरुद्ध्यै" शत० ब्रा० १२.७।२।१३ "चप्यं न पायुर्भिषगस्य" यजु० १९। ८८।

**चम** अदने भ्वा० प० सक० सेट्। चमति आचामति। विचमति। आचमीत् चचाम चेमतुः। उदित् चमित्वा चान्त्वा। आचान्तः। आचमनम् आचमनीयम्। "आचान्तः पुनराचामेत्" स्मृतिः। "मनाग् मन्त्रोऽपि नाचामसि" प्रबोधच०। "चचाम मधु माध्वीकम्"

भट्टिः। णिचि चामयति। "इमां किमाचामयसे न चक्षुषी" नैष०।

**चम** भक्षे स्वादि० वैदिकः प० सक० सेट्। चम्नोति उदित् चमित्वा चान्त्वा। कविकल्पद्रुमे "कुश्चियां गम्ल् गत्यां चम् नुचम् जम् जिमु क्षम" इति वाक्ये "परोऽनुबन्धः पूर्व्वेषाम्" इति तत्रोक्तेः सर्व्वेषामुदित्त्वं तेन शब्दकल्पद्रुमे स्वादिगणीयस्य उदित्त्वानुक्तिः प्रामादिकी

**चमत्कार** पु० चमदित्यव्यक्तं क्रियते कृ—भावे घञ्। लोकातीतवस्तु दृष्ट्वा चित्तस्य आनन्दहेतौ १प्रकाशे विस्मये, "लोकोत्तरचमत्कारप्रायदस्य प्रमात्रभिः"। "चमत्कारश्चित्तविस्ताररूपो विस्मयापरपर्य्याय" सा० द०। "रसे सारश्चमत्कारः सर्व्वत्राप्यनुभूयते" तद्धृतधर्म्मदत्तवाक्यम्। "चमत्कारश्च लोकातीतार्थावलम्बेन किमेतदितिज्ञानधाराजननेन चित्तवृत्तेः दीर्घविस्तारः। दृष्टहेतुभ्योऽसम्भावितत्वज्ञानेन हेत्वन्तरानुसन्धानाय मनसोव्यापारभेद एव चित्तविस्तार इत्यन्ये। सुखविशेष एव चमत्कार इत्यपरे। चमत्कारत्वञ्च आह्लादगतो जातिविशेषः यथाह रसगङ्गाधरे "रमणीयार्थप्रतिपादकः शब्दः काव्यं रमणीयता च लोकोत्तराह्लादजनकज्ञानगोचरता लोकोत्तरत्वञ्च आह्लादगतचमत्कारत्वापरपर्य्यायोऽनुभवसाक्षिकोजातिविशेषः" इति। "इत्थं च चमत्कारजनकभावनाविषयार्थप्रतिपादक शब्दत्वं यत्प्रतिपाद्यार्थविषयकभावनात्वं चमत्कार जनकतावच्छेदकं तत्त्वं, स्वविशिष्टजनकतावच्छेदकार्थ प्रतिपादकतासंसर्गेण चमत्कारत्ववत्त्वमेव वा काव्यत्वमिति फलितम्" इति च। कर्त्तरि अच्। २अपामार्गे त्रिका०।

**चमर** पुंस्त्री चम—अरच्। १महिषाकृतौ मृगभेदे, यस्य पुच्छेन चामराख्यं व्यजनं भवति, स्त्रियां जातित्वात् ङीष्। "कुर्व्वन्ति बालव्यजनैश्चमर्य्यः" "बालप्रसत्वं शिथिलं चमर्य्यः" कुमा०। "स्फुरति चानुवनं चमरीचयः" माघः। २दैत्यभेदे पु०। ३चमरबालजाते चामरे न०।

**चमरपुच्छ** पुंस्त्री चमरस्य पुच्छमिव पुच्छमस्य। (कोकड़े) बिलेशये १पशुभेदे। राजनि०। ६त०। २चामरे न०

**चमरिक** पु० चमरमिव केशरोऽस्त्यस्य ठन्। कोविदारवृक्षे रक्तकाञ्चनारे वृक्षे अमरः

**चमरी** स्त्री चमरजातिस्त्री ङीष् चमरमिवाकारोऽस्त्यस्या अच् गौरा० ङीष् वा। १चमरजातिस्त्रियां चमरशब्दे उदा०। २मञ्जर्य्यां मेदि०।

**चमस** पुंन० अर्द्धर्चादि० चमन्त्यस्मिन् चम—असच्। १पलाशादिकाष्ठजाते यज्ञियपात्रभेदे तल्लक्षणभेदादिकं यज्ञपार्श्वे उक्तं यथा "चमसानां तु वक्ष्यामि दण्डाः स्युश्चतुरङ्गुलाः। त्र्यङ्गुलस्तु भवेत्खातो विस्तारश्चतुरङ्गुलः। विकङ्कतमयाः श्लक्ष्णाः सत्वचश्चमसाः स्मृताः। अन्येभ्यो वापि वा कार्य्यास्तेषां दण्डेषु लक्षणम्। होतुर्मण्डल एव स्याद् ब्रह्मणश्चतुरस्रकः। उद्गातॄणां च त्र्यश्रिः स्याद्याजमानः पृथुः स्मृतः। प्रशास्तुरवतष्टः स्यादुत्तष्टो ब्राह्मणंशिनः। पोतुरपि विशाखो स्यान्नेष्टुः स्यादिष्टहोतकः। अच्छावाकस्य रास्नाव आग्नीध्रस्य मयूखकः। इत्येते चमसाः प्रोक्ता ऋत्विजां यज्ञकर्म्मणि। पलाशाद्वा वटाद्वान्यग्रोधाद्वा चमसाः स्मृताः" कात्या० श्रौ० १।२।२६। सूत्रभाष्ये कर्कः "स च चमसश्चतुरस्रो द्वादशाङ्गुल दीर्घश्चतुरङ्गुलखातः सदण्डश्च भवति परिशिष्टात् सूत्रकारप्रस्थानाच्च। चमसवत्स्रुवेणेति स्रुवस्य चतुरस्रतां विधाय चमसवदित्येव चमसस्य विशां चतुरस्रतामाह" कात्या०श्रौ० २।३।१। "चमसवद्विशेषात्" शारी० सू०। "अर्वाग्बिलश्चमस" इति तद्भाष्यधृतश्रुतिः। स्त्रीत्वमपि मेदि०। २सोमपानपात्रभेदे च। कर्म्मणि असच्। ३पर्पटे पिष्टकभेदे ४लड्डुके च पु० "चूर्णं यच्छुष्कमाषाणां चमसी साऽभिधीयते" भावप्र० उक्ते (धूमसी) ख्याते ५माषचूर्णे च स्त्री गौरा० ङीष्।

**चमसिन्** पु० चमस+अस्त्यर्थे इनि। चमसयुक्ते स्त्रियां ङीप् ततः नडा० अपत्ये फक्। चामसायन तदपत्ये पुंस्त्री०

**चमसोद्भेद** पु० भारतप्रसिद्धे प्रभासान्तिकस्थे तीर्थभेदे। "ततस्तु चमसोद्भेदमच्युतस्त्वगमद्बली। चमसोद्भेद इत्येवं यं जनाः कथयन्त्युत" भा० शल्य० ३६अ०। "एष वै चमसोद्भेदो यत्रादृश्या सरस्वती। यत्रैनामभ्यवर्त्तन्त सर्व्वाः पुण्याः समुद्रगाः" भा०व० १३०अ०। चमसोद्भेदनमप्यत न० "आश्रमान् सरितश्चैव सरांसि च नराधिप!। चमसोद्भेदनं विप्रास्तत्रापि कथयन्त्युत" ८८अ०। "स्नात्वा तु चमसोद्भेदे अग्निष्टोमफलं लभेत्" ८२अ०।

**चमीकर** पु० कृतस्वराभिधे स्वर्णस्योत्पत्तिस्थाने शब्दार्थचि० यद्योगात् स्वर्णं चामीकरमित्युच्यते।

**चमू** स्त्री चम—ऊ। सेनामात्रे (गजाः ७२९, रथाः ७२९ अश्वाः २१८७, पदात्यः ३६४५), एतत्संख्याभेदान्विते सैन्यभेदे च अमरः। "अक्षौहिणीशब्दे ४६पृ० दृश्यम्।

"रक्षाहेतोर्नवशशिभृता वासवीनां चमूनाम्" मेघ० । आधारे च । २चमसे स्त्री "द्रप्सा मधश्चमूषदः" ऋ० १। १४।४। "चमूषदः चमसादिपात्रेषु अवस्थिताः" भा० । ३द्यावापृथिव्योः द्वि० व० निघ०

**चमूचर** पु० चमूषु चरति चर–ट । २सैनिके शब्दार्थचि० ।

**चमूनाथ** पु० ६त० । सैन्याध्यक्षे "युवतिचमूनाथभोज्य-वस्त्राणाम्" वृ० सं० १६अ० । चमूपत्यादयोऽप्यत्र ।

**चमूरु** पुंस्त्री चम–खर्जूरा० ऊर प्रषो० अत उत्त्वम् । मृग-भेदे । "चकाशतं चारुचमूरुचर्मणा" माघः । "इद-मद्युतं न चमूरुदृशः" प्रसन्नरा० ।

**चमूहर** पु० चमुं दैत्यसैन्यं हरति हृ–अच् । महादेवे "चमूहरः सुरेशश्च व्योमारिः शङ्करोभवः" भा० आनु० ८१अ० शिवनामोक्तौ । [पुष्पादौ न० ।

**चम्प** पु० तु० चपि–अच् । १कोविदारवृक्षे शब्दमाला २तत्-

**चम्पक** पु० चपि–ण्वुल् । (चाँपा) प्रसिद्धपुष्पप्रधाने १वृक्षभेदे अमरः । "चम्पकः कटुकस्तिक्तः कषायो मधु-रोहिमः । विषक्रमिहरः कृच्छ्रकफवातास्रपित्तहृत्" भावप्र०तद्गुणा उक्ताः । २तत्पुष्पादौ न० "व्यालोकयच्च-म्पककोरकावलीः" नैष० । "उन्निद्रपुष्पचनचम्पकपिङ्ग-भासा" माघः । ३पनसफलैकभागभेदे (चाँपी) ख्याते पदार्थे (चाँपाकला) पुंलिङ्गे ४कदलीभेदे पु०तत्फले न० राजनि० । "चम्पकं वातपित्तघ्नं गुरु वीर्यकरं तथा । अतिशीतं रसे पाके मधुरं कथितं बुधैः" भावप्र०तद्गुणा उक्ताः । ५साङ्ख्यमतसिद्धे सिद्धिभेदे "न्यायेन स्वयं परीक्षितमप्यर्थं तावन्न श्रद्धत्ते यावद्गुरुशिष्यसब्रह्म-चारिभिः सह न संवाद्यते अतः सुहृदां गुरुशिष्य-सब्रह्मचारिणां संवादकानां प्राप्तिः सुहृत्प्राप्तिः सा सिद्धिश्चतुर्थी चम्पकमुच्यते इति" सांख्यशास्त्रम् ।

**चम्पकचतुर्द्दशी** स्त्री ज्यैष्ठशुक्लचतुर्द्दश्याम् ज्यैष्ठमासे इत्युपक्रमे "चतुर्द्दश्यां च शुक्लायां चम्पकैः पूजयेत् शि-वम् । अयुतैर्वा सहस्रैर्वा शतैर्वा परमेश्वरि ! । पायसञ्च बलिं दद्यात् ततो नक्तं चरेद्व्रती । वृषस्येऽर्कं विशेषेण न भूयो जायते भुवि । त्रिसन्ध्यन्तु चम्पकैश्च सहस्रं जुहुयाद्विधि । चतुर्दश ज्वरान् हन्ति हत्वा द्रोहाणि यानि च । चम्पकचतुर्द्दशी ख्याता पूजयेद्वै सदाशिवम् । दशजन्मकृतं पापमर्चनादेव नश्यति" मत्स्यसू० ४५प० ।

**चम्पकमाला** स्त्री चम्पकपुष्पनिर्मिता माला ६त० । १चम्पक पुष्पमालायाम् । २चम्पकपुष्पाकारे स्त्रीणां कण्ठाभरण-भेदे । (चापकलि) शब्दार्थ० । "भो भगयुक्तौ चम्पकमाला" वृ०र० उक्ते दशाक्षरपादके ३वर्णवृत्तभेदे चम्पकमालेत्यत्र "रुक्मवतीयम्" इत्यपि पाठः ।

**चम्पकरम्भा** स्त्री चम्पकोपपदा रम्भा शा० त० । (चाँपा-कला) कदलीभेदे राजनि० ।

**चम्पकारण्य** न० चम्पकप्रधानमरण्यम् । भारतप्रसिद्धे तीर्थभेदे "ततो गच्छेत राजेन्द्र ! चम्पकारण्यमुत्तमम् । तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत्" भा० व० ८४अ० । [उण् । पनसे (काँटाल) शब्दार्थचि० ।

**चम्पकालु** पु० चम्पकेन पनसावयवभेदेन अलति अल–

**चम्पकावती** पु० चम्पक+अस्त्यर्थे मतुप् मस्य वः संज्ञायां दीर्घः । चम्पापुर्यां कर्णराजधान्याम् (भागलपुर) ख्याते पुरीभेदे शब्दरत्ना० ।

**चम्पकुन्द** पु० चम्प इव कुन्दते कुदि–अच् । (काँटकाँड़ा) मत्स्यभेदे राजनि० । [६त० । पनसे त्रिका० ।

**चम्पकोष** पु० चम्पकैरुपलक्षिते कोष अस्य । आधारे च

**चम्पा** स्त्री चम्प–अच् । कर्णपुर्याम् अङ्गदेशस्थे पुरीभेदे । (चाँपाइ) ख्याते तन्निकटस्थे २नदीभेदे ३पनसावयवभेदे (चाँपि) शब्दार्थचि० [शब्दे उक्ते दृश्यम् ।

**चम्पाधिप** पु० ६त० । कर्णे तस्य तद्राज्यकर्तृत्वात् अङ्गाधिप-

**चम्पापुरी** स्त्री चम्पानामिका पुरी । अङ्गदेशस्थे कर्णराज-धान्याम् । चम्पानगर्यादयोऽप्यत्र ।

**चम्पालु** पु० चम्पया अलति अल–उण् । पनसे शब्दरत्ना० ।

**चम्पावती** स्त्री चम्पा अङ्गदेशस्थः नदीभेदः अस्त्यस्याः मतुप् मस्य वः । चम्पापुर्यां शब्दरत्ना० ।

**चम्पू** स्त्री चपि–ऊ । "गद्यपद्यमयी काव्यी चम्पूरित्यभि-धीयते" इत्युक्ते काव्यभेदे अमरटी० ।

**चम्पेश** पु० ६त० । कर्णे त्रिका० । [वाशिष्ठ र०व१

**चम्पोपलक्षित** पु० ३त० । १अङ्गदेशे हेमच० २तद्देश०

**चम्ब** गतौ भ्वा०पर०सक०सेट् । चम्बति अचम्बीत् । चचम्ब

**चम्रिष** त्रि० चमसु चमसेषु इष्यति सृज्यति इष–क्विप् वेदे नि० वस्य रः । चमसस्थे । "तस्य चम्रिषोऽन्यो न" ऋ० १।५६।१। "चमसु चमसेषु इषः वर्त्तमानाः" भा० । पृषो० दीर्घः चम्रीष इत्यप्यत्रार्थे । "चम्रीषो न शरद्य पाञ्चजन्यः" ऋ० १।१००।१२।

**चय** गतौ भ्वा० आ० सक० सेट् । चयते अचयिष्ट चेये ।

**चय** पु० चि–भावकर्मादौ अच् । १समूहे । २वप्रे ३प्राकार मूलबन्धने । यदुपरि प्राकारो निक्षिप्यते प्राकारमूलस्थित

वेदिकेति यावत् । तथा चार्थशास्त्रम् । "खातमुद्धृत मृदा वप्रं कारयेत् तस्योपरि प्राकारमिति" । पगार इति गौड़भाषा । ४परिखोद्धृतमृत्कूटे । तत्-प्रभूते "स्फुरति चातुवनं चमरीचयः" । "निजयेषु नक्षत्रमिवाश्रनाश्रये:" "क्वचित्खिलामिलवधारितं पुरः" इति च माघः । वप्रे "चयाट्टालकशोभिना" भा०व०१६०अ० । ५अग्न्याद्देश्चयने संस्कारभेदे । "यत्रांश्च प्रचयानलान्" हरिवं० ४१अ० । ६पुष्पादेः समाहरणे ७पीठे मेदि० । चये कुशलः आकर्षा० कन् । चयक चयनकुशले त्रि० ।

चयन न० चि—भावे ल्युट् । १पुष्पादेः समाहरणे २अग्न्यादेः संस्कारभेदे च । चयनप्रकारः कात्यायनौ द्रष्टव्यः "स यथा कामयेत तथा कुर्य्यादिति चयनस्य तथाचयनस्येति" शत०ब्रा०८।५।२।११। चीयतेऽनेन करणे ल्युट् । संस्कारसाधने ३यूपादौ च । "येन भागीरथी गङ्गा चयनैः काञ्चनैश्चिता" भा० द्रो० ५१अ० ।

चर गतौ भ्वा० पर० सक० सेट् । चरति अचारीत् । चचार चेरतुः । "दिवा चरेयुः कार्य्यार्थं चिह्निताराजशासनैः" मनुः । "चेरतुः चरदुःखौ" भट्टिः "इदं तनौ मज्जिहितं चरन्तम्" नैष० । चरः चारः चरणम् चरितं चरित्रम् । चरन् संचूर्य्यते "ततश्चूर्य्यमाणास्तौ" भट्टिः । यङ्लुकि चंचुरीति चंचूर्त्ति ।

अति+अतिक्रम्य गमने "अतिचेरुर्वयस्याली युयुधुश्च परस्परम्" भाग० ३।१७।१४। "अथोमतशालश्चरत् सोम दिवि निशाकरः" हरिवं० २२६अ०। "पुत्राः पितृनत्यचरत्रार्य्यमालश्चरन् मतीन्" भा० शा० ८३८७श्लो० । अतिचारशब्दोक्तेऽर्थे अतिचारशब्दे ९९५पृ० द्रष्टव्यम् ।

वि+अति व्यतिक्रमे "त्वामहं न व्यतिचरे मनसाऽपि कदाचन" रामा० लं० १०१ । [१।८।१।८।

अधि+आधिक्येन चरणे । "यास्यपरिष्टादधिचरन्ति" शत०

अनु+अनुगमने पश्चाद्गमने साहाय्यकरणे । अनुचरः ।

अप+अपकारे अनिष्टसम्पादने । "योऽस्य धर्ममपचरेत् न माचक्षीत वै द्विजः" भा०शा० ६५८६ । "पितृदेवर्षिभृत्यानां न चापचरिता मया" मार्क० पु० ।

अभि+आभिमुख्येन चरणे अतिक्रमे व्यभिचारे च "पतिं या नाभिचरति मनोवाग्देहसंयता" मनुः "यथैवाहं नाभिचरे कदाचित्" भा० वि० ४५७ अ० । अनिष्ट सम्पादने "श्येनेनाभिचरन् यजेत" श्रुतिः । अभिचारश्च मारणोच्चाटनादीनि षट् कर्माणि "प्रति तमभिचर योऽस्मान् द्वेष्टि" अथ० २।११।२। अभिचारशब्दे दृश्यम् ।

वि+अभि+विशेषेण अतिक्रमे । यस्य यथान्यसमुचितं तस्य तदतिक्रमे । "उभाभ्यां व्यभिचरतीव षट्पदौ" किरा०। "व्यभिचचार न तापकरोऽनलः" नैष० । हेतोः साध्याभाववद्वृत्तित्वं, साध्यस्य च हेतुसमानाधिकरणाभाव प्रतियोगित्वं व्यभिचारः । "न तावदव्यभिचरितत्वं तद्धि न साध्याभाववदवृत्तित्वम्" अनुमानचिन्ता० । स्त्रीणाञ्च पतिमतिक्रम्य अन्यपुंसि गमनं व्यभिचारः ।

अव+अवलात् करणे । "कलायं अवचारितम्" । "कफवातज्वरं कृत्वाऽश्रीघ्रं वालेऽवचारितम्" "प्रमार्जनं धावनञ्च योऽस्य वीक्षावचारयेत्" "दूर्वां पुनर्नवाञ्चैव लेपे साध्ववचारयेत्" इति च सुश्रु० ।

आ+अनुष्ठाने । "प्रक्षितायां प्रविष्टेयां स्थितायां स्थितिमाचरेः" रघुः । "यद्यदाचरति श्रेष्ठः" गीता । प्रतिपाल्यत्वादिना ग्रहणीकरणे च "संप्राप्ते षोडशे वर्षे पुत्रं मित्रवदाचरेत्" चाण० ।

अधि+आ+आधिक्येनाचरणे "मध्यासनेऽध्याचरिते न यस्य न समाविशेत्" मनुः ।

अनु+आ+अनुगमने तत्सदृशानुष्ठाने "यौऽत तत्कर्म्म राजर्षेर्नाभिरन्वाचरेत् पुमान्" भाग० ४।५।७।

सम्—उद्+आ सम्यगाचरणे । "बालानपि च मार्गस्थान् साम्नैव समुदाचरेत्" भा० शा० ९९अ० ।

उप+आ+उपासने । "उपाचरति तत्रस्थं धनानामीश्वरम् प्रभुम्" भा० व० १०अ० ।

सम्+आ+सम्यगाचारे । "त्वया पापानि घोराणि समाचीर्णानि पाण्डव" भा० क० ११अ० । उपघातदर्शनम् । "उच्छिष्टाग्निनिषेकञ्च दूरादेव समाचरेत्" मनुः ।

उद्+उल्लङ्घ्य गतौ सक० आत्म० । धर्म्ममुच्चरते "धर्म्ममुल्लङ्घ्य गच्छतीति" सि० कौ० । उपरिष्टाद्गतौ अक० प० । वाष्प उच्चरति "उपरिष्टाद्गच्छति" सि० कौ० । "सौदामनीमुच्चरन्तीं यथैव" भा० व० १११अ० । "जीवावुदुच्चरत्" भट्टिः "दिव्यस्तूर्य्यध्वनिरुदचरत् व्यञ्जुवानो दिगन्तान्" रघुः । कण्ठताल्वाद्यभिघातेन उत्पादने "सकृदुच्चरितः शब्दः सकृदर्थं गमयतीति न्यायः । "अन्यदा जगति राम इत्ययं शब्द उच्चरित एव मामगात्" रघुः ।

वि+उद्+विशेषेण उत्थितौ। "यथाऽग्नेः क्षुद्राविस्फुलिङ्गा व्युच्चरन्ति" शत० ब्रा० ४।५।१।२३।

सम्+उद्+सम्यगुत्थितौ। "समुच्चरन्त्यस्मादापः" निरु०६।११

उप+उपासने "गिरिशमुपचचार प्रत्यहं सा सुकेशी" कुमा०। अन्यथास्थितस्य वस्तुनोऽन्यथात्वप्रतिपादनरूपे शब्दादिव्यापारभेदे उपचारश्च लक्षणा छलं वा। "यथा लोके स्वशक्तिषु योधेषु वर्तमानौ जयपराजयौ राज्ञि उपचर्येते" सा० द०। "तेनोपचर्यते राज्ञः"। "याम्योत्तरा शशिगतिर्गणितेऽप्युपचर्यते तेन" सू० सि० ५।१५।

दुस्+दुष्टाचरणे। "कामवक्रव्यहृदया भर्त्तारं दुश्चरन्ति याः" रामा० आर० ३।२५।

निस्+निर्गमने "दूतश्चैतस्य निश्चक्रमुः सर्वे युयुत्सवः" हरिवं० २२अ०। "यतोयतोनिश्चरति मनश्चञ्चलमस्थिरम्" गीता।

परि+परितोगमने "कक्षा स्वेनास्तथा शुभ्रा नीचैः परिचरन्ति च" रामा० ल० १६।११। परितः सेवने "गात्रसंवाहनैश्चैव श्रमापनयनैस्तथा। शक्रः सर्वेषु कालेषु दितिं परिचचार ह" रामा० बा० ४६ अ० ११। "आम्रं छित्त्वा कुठारेण निम्बं परिचरेत्तु यः" रा० अयो० ३५।१४। परिचर्य्या परिचारकः।

प्र+प्रकाशेन गतौ। "प्राणः प्रालीयत ततः पुनश्च प्रचचार ह" भा०आश्व०२३अ०। प्रकर्षेण चरणे च। "यैः कर्मभिः प्रचरितैः शुश्रूष्यन्ते द्विजातयः" मनुः। प्रचारः।

सम्+प्र+सम्यग् प्रकाशके। "यदा प्रभृति चैवेह लोके संप्रचरिष्यति" भा० आनु० ८६अ०।

वि+विशेषेण गतौ "विचरन्ति महीपाला यात्रार्थं विजिगीषवः" रामा० आर० २२।७। "ततोद्रौणिर्महावीर्य्यः पार्थस्य विचरिष्यतः" भा० वि० ५८अ०। "रात्रौ न विचरेयुस्ते ग्रामेषु नगरेषु च" "इन्द्रियाणां विचरतां विषयेष्वपहारिषु" मनुः। वि+चु० चर पर्य्यालोचनया निर्णये। "आयतिं सर्वकार्य्याणां तदात्वञ्च विचारयेत्" मनुः। "मित्रामित्रं विचारयेत्" भा० शा० ३८२६। "विचारदृक्चारदृगप्यवर्त्तत" "भविता न विचारचारु चेत्" नैष०।

सम्+सम्यग्गतौ "नैव वाताः प्रवायन्ते न मेघाः सञ्चरन्ति च" हरिवं० १०७५८। "आमेखलं सञ्चरतां घनानाम्" कुमा० "सञ्चारोरतिमन्दिरावधि" रतिमञ्जरी करणविभक्तिसहकारे आत्म०। "रथेन सञ्चरते" सि० कौ०। "पद्भ्यां त्वपः सञ्चरमाण एव" नैष०।

चुर संशये असंशये च चुरा० उभ० सक० सेट्। चारयति ते अचीचरत् त विचारयति विचारणा विचारितः

चर पु० चर—अच्। स्वपरराष्ट्रवृत्तान्तज्ञानार्थं राजनियोगेन दूतस्ततो भ्रमणकर्त्तरि चारे १प्रणिधौ, अमरः २कपर्द्दके, राजनि०। ज्योतिषोक्तेषु ३मेषकर्कटतुलामकरराशिषु ४स्वातिपुनर्वसुश्रवणादित्रिकरूपे नक्षत्रभेदे ५भौमवारे ६अद्यूतभेदे। ७चले अनवस्थिते त्रि०मेदि०। ८खञ्जनखगे पुंस्त्री शब्दमा०। चरलक्षणादिकमुक्तं युक्तिकल्पतरौ "विश्वस्तानिव तेजोभिर्नभस्तानिव वेगतः। राजा चरैर्जगत् सर्वं प्राप्नुयाल्लोकसम्मतैः। तर्केङ्गितज्ञः स्मृतिमान् स्वीयभावप्रकाशकः। क्लेशायासक्षमो दक्षः सर्वत्र भयवर्जितः। सुभक्तो राजसु तथा कार्य्याणां प्रतिपत्तिमान्। स्वयोनिरूप्याञ्चारेण परराष्ट्रं विचक्षणः। कालज्ञो मन्त्रकुशलान् सांवत्सरचिकित्सकान्। तथान्यानपि युञ्जीत समर्थान् शुद्धचेतसः। अङ्गुष्ठांश्च तथाऽलुब्धान् दृष्टार्थान् तथ्यभाषिणः। पार्श्वस्थक्षपणादीन् परराष्ट्रे नियोजयेत्। स्वदेशपरदेशज्ञान् सुशीलान् सुविचक्षणान्। वार्त्ताहर्य्यान् बहूंश्चैव चराणां विनियोजयेत्। नैकस्य वचने राजा चारस्य प्रत्ययं वहेत्। द्वयोः संवादमाज्ञाय यद्युक्तं कार्य्यमारभेत्। तस्माद्राजा प्रयुञ्जीत चरान् बहुसहस्रान् बहून्। नीरेतोवामनाः कुब्जास्तद्विधा ये च कारवः। भिक्षुक्यश्चारणा दास्यो मालाकार्य्यः कलाविदः। अन्तःपुरगतां वार्त्तां निर्हरेयुरलक्षिताम्। प्रकाशश्चाप्रकाशश्च चरस्तु द्विविधो मतः। अप्रकाशोऽयमुद्दिष्टः प्रकाशो दूतसंज्ञकः"। "शत्रुप्रजावृत्तं विज्ञातुं कुशलाश्च ये। ते गूढचाराः कर्त्तव्याः यथार्थश्रुतबोधकाः" शुक्रखिलनीतिशा०। "चरस्थिरद्व्यात्मकनामधेयामेषादयोऽमी क्रमशस्त्रिधा स्युः" ज्यो०त०। "वातादित्यहरित्रयं चरगणः" ज्यो० त० १५।१२।२२।२३।२४ संख्यकनक्षत्राणि चराणि। "येऽनेन लङ्कोदयकालिकास्ते देशान्तरेण स्वपुरोदये स्युः। देशान्तरं प्रागपरं तथान्यद् याम्योत्तरं तच्चरसंज्ञमुक्तम्" सि०शि० "वउदयान्तरकर्मणा लङ्कायामौदयिका ये ह्रा जातास्ते देशान्तरकर्मणा स्वपुरौदयिकाः स्युः। तच्च देशान्तरं द्विविधम्। एकं पूर्वापरमन्यद्याम्योत्तरम्। तच्चरसंज्ञमुक्तम्" प्रमि० उक्ते याम्योत्तरादौ देशान्तरे। चरानयनप्रकारादि सू० सि०र० नारथाभ्यां दर्शितं यथा

"अथ दिनरात्रिमानज्ञानार्थं चरानयनं विवक्षुः प्रथमं तदुपयुक्तां स्पष्टक्रान्तिमाह" र० ना०

"विक्षेपापक्रमैकत्वे क्रान्तिर्विक्षेपसंयुता। दिग्भेदे वियुता स्पष्टा भास्करस्य यथाऽऽगता" सू०

"यस्य ग्रहस्य स्पष्टक्रान्तिरभीष्टा तस्य ग्रहस्यायनांशसंस्कृतस्य भुजज्यातः परमापक्रमज्येत्यादिना क्रान्तिरयनांशसंस्कृतग्रहगोलदिक्का ज्ञेया। तस्य विक्षेपोऽपि पूर्वोक्तप्रकारेण पातोनगोलदिक्को ज्ञेयः। गोलस्तु मेषादिषट्कमुत्तरस्तुलादिषट्कं दक्षिणः। अथ शरक्रान्त्योरेकदिक्त्वेन क्रान्तिः कलाद्या कलात्मकविक्षेपेण युता तयोर्दिगन्यत्वे क्रान्तिर्विक्षेपेण वियुतान्तरिता शेषदिक्का स्पष्टा क्रान्तिः स्यात्। ननु सूर्यस्य विक्षेपाभावात् कथं स्पष्टा क्रान्तिर्ज्ञेयेत्यत आह भास्करस्येति। सूर्यस्य यथागता पूर्वागता क्रान्तिरेव स्पष्टा क्रान्तिः। अत्रोपपत्तिः। विषुवद्वृत्ताद्ग्रहबिम्बकेन्द्रपर्यन्तं याम्यमुत्तरं वान्तरं स्पष्टक्रान्तिरिति तयोरेकदिक्त्वे तद्योगतुल्यमन्तरं, भिन्नदिक्त्वे तदन्तरमितमन्तरमिति। अत्र शरस्य क्रान्तिसंस्कारयोग्यत्वसम्पादिका क्रिया लोकश्रमभयात् स्वल्पान्तरत्वाच्चोपेक्षिता भगवता कृपावता। अन्यथा शरस्य ध्रुवाभिमुखत्वे भगवदुक्तमायनदृक्कर्म कथमव्याहतं स्यादित्यलम्। अथ दिनरात्रिमानज्ञानार्थमहोरात्रासून् साधयति" र० ना०।

"ग्रहोदयप्राणहता खखाष्टैकोद्धृता गतिः। चक्रासवो लब्धयुताः स्वाहोरात्रासवः स्मृताः" सू०।

"ग्रहस्य येऽयनांशसंस्कृतराशेर्लङ्कायां निरक्षोदयासवस्तैर्गुणिता निजस्फुटगतिः कलाद्यष्टादशशतभक्ता फलेन युताश्चक्रासवः षष्टिघटिकानामसवः षट्शतयुतैकविंशतिसहस्रमिताः स्वस्वग्रहस्याहोरात्रासवः कालतत्त्वज्ञैः कथिताः। अत्रोपपत्तिः। ग्रहः पूर्वं गत्या लम्बितः प्रत्यहेण गतिभोगकालेन भचक्रपरिवर्तानन्तरमुदेत्यतो भचक्रपरिवर्तकालः षष्टिघटिकासुमितो ग्रहगतिकलासम्बद्धासात्मककालेनाधिको ग्रहाहोरात्रमसात्मकं नाक्षत्रप्रमाणेन भवति। तत्रैकराशिकलाभिर्यदि ग्रहसम्बद्धराश्युदयप्राणास्तदा गतिकलाभिः क इत्यनुपातेन गत्यसव इत्युपपन्नं ग्रहोदयेत्यादि। अनेनैव श्लोकेन ग्रहाणामुदयान्तरकर्मापीत्युक्तं भगवता। तथाहि। अनुपातानीतमध्यग्रहाणां नियताहोरात्रमानान्तरकाले ग्रहाणां सिद्धिः रविमध्यगत्यसूनां प्रतिराशौ भिन्नत्वेन मध्यमस्याहोरात्रमानस्य नियतत्वाभावादर्कौराशिकाक्रमतयाहा अनियतमध्याकाहोरात्रकालान्तरेणार्धरात्रे ग्रहसंस्कारेण भवन्ति तदेवोदयान्तरं तत्साधनं भगवता स्वल्पान्तरत्वादुपेक्षितम्। कथमन्यथा गतिकलासूनां समत्वमुपेक्ष्य गतिकलानामसवो भगवदुक्ताः सङ्गच्छन्ते उदयान्तरस्य गतिकलासुभेदोत्पन्नत्वात्। अथ चरोपयुक्तां क्रान्तिज्यां द्युज्यां चाह" र० ना०।

"क्रान्तेः क्रमोत्क्रमज्ये द्वे कृत्वा तत्रोत्क्रमज्यया। हीना त्रिज्या दिनव्यासदलं तद्दक्षिणोत्तरम्" सू०।

"स्पष्टक्रान्तेः क्रमोत्क्रमज्ये क्रमज्योत्क्रमज्ये द्वे अपि प्रसाध्य तत्र तन्मध्ये क्रान्त्युत्क्रमज्यया त्रिज्या हीना दिनव्यासदलमहोरात्रवृत्तस्य व्यासार्धं द्युज्येत्यर्थः। तद्दिनव्यासार्धं दक्षिणोत्तरं दक्षिणगोल उत्तरगोले च स्यात् क्रान्तेर्गोलद्वयेऽपि सत्त्वात्। अपरा क्रान्तिज्यैव। अत्रोपपत्तिः। क्रान्त्यंशानां क्रमज्या क्रान्तिज्या भुजो विषुवद्वृत्ताहोरात्रवृत्तान्तर्गतमुभयगोले तदुभयतस्तद्व्यासार्धं द्युज्या कोटिस्त्रिज्या कर्ण इति गोले प्रत्यक्षम्। त्रिज्यावृत्त उन्मण्डले याम्योत्तरवृत्ते वा प्रत्यक्षम्। तत्र भुजकर्णयोर्वर्गान्तरपदं कोटिरिति क्रान्तिज्यावर्गोनात्त्रिज्यावर्गान्मूलं द्युज्या। तत्रापि भुजोत्क्रमज्यया हीना त्रिज्या कोटिक्रमज्या स्यादिति वृत्ते प्रत्यक्षदर्शनात् क्रान्त्युत्क्रमज्ययोना त्रिज्या द्युज्या स्यादिति लाघवेन वर्गमूलनिरासेनोक्तं भगवता क्रान्तेरित्यादि। अथ चरानयनपूर्वकं दिनरात्रिमानसाधनं श्लोकत्रयेणाह" र० ना०।

"क्रान्तिज्या विषुवद्भाघ्नी क्षितिज्या द्वादशोद्धृता। त्रिज्यागुणाहोरात्रार्धकर्णाप्ता चरजासवः।
तत्कार्मुकमुदक्क्रान्तौ धनहानी पृथक्स्थिते। स्वाहोरात्रचतुर्भागे दिनरात्रिदले स्मृते।
याम्यक्रान्तौ विपर्यस्ते द्विगुणे तु दिनक्षपे। विक्षेपयुक्तोनितया क्रान्त्या भानामपि स्वके" सू०।

"क्रान्तिज्या विषुवद्दिनीयमध्याह्ने द्वादशाङ्गुलशङ्कोश्छाया तया गुणया द्वादशभक्ता फलं कुज्या स्यात्। सा त्रिज्यया गुणिताहोरात्रार्धकर्णाप्ताहोरात्रवृत्तस्यार्धकर्णेन व्यासदलेन द्युज्यया भक्ता फलं चरजा ज्या चरज्येत्यर्थः। अस्याश्चरज्याया धनुरसवश्चरासवो भवन्ति। स्वाहोरात्रचतुर्भागे स्वस्य चरसम्बन्धिनो ग्रहस्य प्रागुक्ताहोरात्रासवस्तेषां चतुर्थांशे पृथक्स्थिते स्थानद्वयस्थे उक्-

रक्रान्तौ सत्यां चरासू धनहानी युतहीनौ कार्यौ तौ क्रमेण दिनरात्रिदले दिनार्धरात्र्यर्धे कालविद्भिरुक्तौ । दक्षिणक्रान्तौ सत्यां विपर्यस्तौ दिनरात्रिदले यत्र हीनं तद्दिनार्धं, यत्र युतं तद्रात्र्यर्धमित्यर्थः । तत्कारात् ते दिनरात्र्यर्धे द्विगुणे दिनक्षपे दिनमानरात्रिमाने ग्रहस्य स्तः । उक्तरीत्या नक्षत्राणामपि दिनरात्रिमाने साध्ये इत्याह । विक्षेपेत्यादि । नक्षत्रध्रुवाणामानीतया क्रान्त्या नक्षत्रविक्षेपैकभिन्नदिक्क्रमेण युतयान्तरितयोक्तप्रकारेण सिद्धया स्वके नक्षत्रदिनरात्रिमाने साध्ये इत्यर्थः । अत्रोपपत्तिः । द्वादशाङ्गुलशङ्कुः कोटिः पलभा भुजोऽक्षकर्णः कर्णः, क्रान्तिज्या कोटिः, कुज्या भुजोऽग्रा कर्ण इत्यक्षक्षेत्रद्वयं प्रसिद्धम् । तत्र यदि द्वादशकोटौ पलभा भुजः, तदा क्रान्तिज्याकोटौ को भुज इत्यनुपातेन कुज्या । तत्स्वरूपं तु निरक्षदेशक्षितिजस्वदेशक्षितिजान्तरालस्थिताहोरात्रवृत्तप्रदेशस्य द्युज्याप्रमाणेन ज्या इति त्रिज्याप्रमाणेन तज्ज्या चरज्येति द्युज्याप्रमाणेन कुज्या त्रिज्याप्रमाणेन केत्यनुपातेन चरज्या तद्धनुश्चरासवोऽहोरात्रवृत्तखण्डप्रदेशे निरक्षस्वक्षितिजान्तराल उत्तरगोले स्वक्षितिजस्य निरक्षक्षितिजादधःस्थत्वान्निरक्षक्षितिजयाम्योत्तरवृत्तान्तरालेऽहोरात्रवृत्तचतुर्थांशत्वादहोरात्रासुचतुर्थांशे चरासवो युता दिनार्धं हीना रात्र्यर्धं दक्षिणगोले स्वक्षितिजस्य निरक्षक्षितिजादूर्ध्वस्थत्वाद्धीना दिनार्धं, युता रात्र्यर्धमित्युपपन्नं सर्वं क्रान्तिज्येत्यादि" ।

तत्र प्रणिधौ । "राजन्यकान्युपायज्ञैरेकार्थानि चरैस्तव" माघः । "तेषां वृत्तं परिणयेत् सम्यग्राष्ट्रेषु तच्चरैः" मनुः । चले "तस्य सर्वाणि भूतानि स्थावराणि चराणि च" "देवेभ्यश्च जगत्सर्वं चरं स्थाण्वनुपूर्वशः" मनुः । सुपि कर्मण्युपपदे "चरेष्टः" पा० ट चरणकर्त्तरि त्रि० । भूचरः खचरः । "शठोमिथ्याविनीतश्च वकव्रतचरोद्विजः" मनुः । मेषादौ "चरलग्ने चरांशे वा स्थापनं च विसर्ज्जनम्" ति० त० । स्वार्थे अण् । चार प्रणिधौ

चरक पु० चरएव स्वार्थे क संज्ञायां कन् वा । १चरे दूतभेदे । २आयुर्वेदकारकमुनिभेदे पु० । "देवाकर्ण्य सुश्रुतेन चरकस्योक्तेन जानेऽखिलं स्यादस्या नलदं विना न दलने तापस्य कोऽपि क्षमः" नैष० । मन्त्रिवैद्योयोरेकरूपोक्तौ । चरकनामनिरुक्तिः आयुर्वेदशब्दे ७८० पृ० दर्शिता । ३तत्कृते ग्रन्थे च भावप्रका० तत्र च ग्रन्थे सूत्रस्थानं निदानस्थानं विमानस्थानं शारीरस्थानम् इन्द्रियस्थानं चिकित्सितस्थानं कल्पस्थानं सिद्धिस्थानम् इत्यष्टौ स्थानानि । ४पर्पटे राजनि० । ५चक्रकरे ६भिक्षौ शब्दार्थचि० ।

चरकाल पु० "निरक्षदेशक्षितिजाख्यवृत्तस्वक्षितिजाख्यवृत्तखण्डकं तज्ज्ञा गुरन्यदेशे । स्वे स्वे कुजेऽर्कस्य यतः समोऽथासुरार्द्धमर्कोदययोस्तु मध्ये" सि० शि० । "आदौ स्वदेशेऽथ निरक्षदेशे सूर्योदयोऽस्तमयोऽन्यथातः । स्वं यतोऽस्याद्युदये स्वमस्ते फलं चरोत्थं रविसौम्यगोले । याम्ये विलोमं खलु तत्र यस्मादुन्मण्डलं स्वक्षितिजादधस्तात् । नाथाह्वयादुत्तरयाम्यभागौ गोलस्य तावुत्तरयाम्यगोलौ" सि० शि० उक्ते दिनमानज्ञानोपाये कालभेदे ।

चरगृह न० चररूपं गृहम् । मेषकर्कतुलामकरूपेषु राशिषु । चरगेहादयोऽप्यत्र । [ जातित्वात् ङीष् ।

चरट पुंस्त्री चर—बा० अटच् । खञ्जनखगे शब्दमा० स्त्रियां

चरण पु० चर—करणे ल्युट् । १देहावयवभेदे पादे "स्वं च धातोश्चरणौ भुवस्तले" माघः "द्वितीये हस्तचरणौ तृतीये वधमर्हति" मनुः । २वेदैकदेशे शाखापरपर्याये "गोत्रं च चरणैः सह" महाभाष्यका० । चरणव्यूहः । ३अकर्द्धेः किरणे । ४श्लोकानां चतुर्थभागे पादे च । "प्रथमाङ्घ्रिसमो यस्य तृतीयश्चरणोभवेत्" छन्दोम० । "५चतुर्थभागमात्रे । "पश्यन्ति खेटाश्चरणाभिवृद्धितः" ज्योति० । ६एक देशमात्रे "ज्योतिश्चरणाभिधानात्" शा० सू० । भावे ल्युट् । ७अनुष्ठाने "अकृत्वा भैक्ष्यचरणम्" "तपश्चरणैश्चोग्रैः" मनुः । "रमणीयचरणा अभ्याशो ह रमणीयां योनिमापद्येरन्" श्रुतिः चरणशब्दस्य आचारार्थकत्वेऽपि कर्म्ममात्रपरत्वमुक्तं शा० सू० भा० । तच्चानुशयशब्दे १८६ पृ० उक्तम् चरण+चतुरर्थ्यां कृशा० अ । चरणस तन्निर्वृत्तादौ त्रि०

चरणग्रन्थि पु० ६त० । गुल्फे हेमच० ।

चरणपर्व्वन् न० ६त० । गुल्फे त्रिका० ।

चरणव्यूह पु० चरणानां वेदशाखानां व्यूहोऽत्र । वेदशाखाविभाजके ग्रन्थभेदे ।

चरणायुध पुंस्त्री० चरण आयुधं यस्य । कुक्कुटे अमरः "आकर्ण्य सम्प्रति रुतं चरणायुधानाम्" सा० द० । स्त्रियां जातित्वात् ङीष् ।

चरणि पु० चर—अनि । मनुष्ये "सुविद्वांसं च तत्य चरणीनाम्" ऋ०८।२४।२३। "चरणीनां मनुष्याणाम्" भा० ।

स्यारतण्डुलमीषत्खिन्नतण्डुलम् अपूर्णं यथा स्तेन चरुणा स्थाल्याः पूरणं न भवति तथा श्रपयित्वा आसादितेनाज्येनाभिघार्य्य दक्षिणत उद्वास्य दक्षिणाग्नेः पूर्वमार्गेणाग्नेर्दक्षिणमुत्तरत आनीय सव्यं कृत्वा तिष्ठंस्तिस्रः समिध आधायोपविश्य प्राङ्मुखो मेक्षणेन चरुं जुहोति” कर्कः।

शाखान्तरे चरुपाकप्रकारो भवदेवपद्धत्यादौ ज्ञेयः। “यवमयश्चरुर्भवति” श्रुतिः। “श्यामाकगावेधुकनैवारयवमयः” तै० स० “चरुर्वै देवानामन्नमोदनो हि चरुः” शत० ब्रा० ४।४।२।१। “ये पूष्णे चरुं कुर्व्वन्ति प्रपिष्टानामेव कुर्व्वन्ति यथा दन्तकायैवम्” १।७।४।७। “यद्यप्यदन्तकः पूषा पैष्टमत्ति सदा चरुम्। अग्नीन्द्रेश्वरस्याधम्मार्त्तण्डुलोऽत्र विधीयते” छन्दो०। “हेमपात्रगतं दोर्भ्याम् आदधानः पयश्चरुम्” “स तेजो वैष्णवं पत्न्योः विभेजे चरुसंज्ञितम्” “चरोरर्द्धार्द्धभागाभ्यां तामयोजयतामुभे” इति च रघुः।

**चरुचेलिन्** चरुश्चेलमिवास्यस्य इनि। महादेवे। “चरुचेली मिलीमिली” भा० अ० २८६ अ० शिवनामोक्तौ

**चरुव्रण** पु० चरोर्व्रण इव। पिष्टापूपे (पिताइपिठा) त्रिका०।

**चरुस्थाली** स्त्री ६त०। चरुपाकार्थस्थाल्यां “तिर्य्यगूर्द्धसमिन्मात्रा दृढा नातिहृन्मुखी। मृण्मय्यौडुम्बरी वापि चरुस्थाली प्रशस्यते” कर्म्मप्रदीपे तल्लक्षणमुक्तम्।

**चर्च** अध्ययने चुरा० उभ० सक० सेट्। चर्चयति-ते अचचर्चत्-त। चर्चितः चर्चा।

**चर्च** उक्तौ भर्त्सने च तु०पर०सक०सेट्। चर्चति अचर्चीत्। उक्तिरत्र विचारार्थपरिभाषणम्।

**चर्चरी** स्त्री चर्च-बा० अरन् गौरा० ङीष्। १गीतिभेदे। २अलकुञ्चकेशे ३करध्वनौ च। “चर्चरी गीतिभेदे च केशभित्करशब्दयोः” रुद्रः। ४हर्षक्रीड़ायां सुभूतिः। ५कार्पटिकानां सादरवचने ६तौर्यत्रिके ७वसन्तसमयक्रीड़ायाम् ८चर्मर्य्याम्। ९साटोपवाक्ये शब्दार्थचि० १०वर्णवृत्तविशेषे। यथा हारयुक्तसुवर्णकङ्कणपाणिशङ्खविराजिता पादनूपुरसङ्गता सुपयोधरद्वयभूषिता। शोभिता वलयेन पिङ्गलपन्नगाधिपवर्णिता चर्चरी तरुणीव चेतसि चाकशीति सुसङ्गता” “अनन्तरे चर्चरी” “जलहर! संहर एह कोवमइ आढत्तओ, अविरल धारा सारादिसामुहओ। ए! मजि पुहवि भमन्ते जइ पिअ पेक्खिहिमि, तवेव जं जु करीहिसि, तंत्र सहीहिमि” “अनन्तरे चर्चरी “गन्धम्मादण-मह्उअर-लोएहिं वज्जन्तेहिं परहु अदूरेहिम्। पसरिअ-पवणुव्वेल्लिअ-पल्लव-णिअरु सुललिअ-विविहपआरेहिं णच्चइ कप्पअरु” इति च विक्रमोर्व०।

स्वार्थे क अत इत्त्वम्। चर्चरिकाप्यत्रार्थे

**चर्चरीक** पु० चर्च-ईकन् फर्फरी० नि०। १महाकालभैरवे २केशविन्यासे ३शाके च मेदि०।

**चर्चस्** पु० चर्च-असुन्। १निधिभेदे त्रिका० निधिशब्दे दृश्यम्

**चर्चा** स्त्री चर्च-अच्। १दुर्गायाम्। चु० चर्च-भावे अङ्। २विचारणायां ३चिन्तायां ४चार्चिक्ये चन्दनादिना देहलेपने च मेदि०। स्वार्थे क। चर्चिका तेष्वर्थेषु चर्चां वेत्ति तत्परं ग्रन्थं वाऽधीते उक्था० ठक्। चार्चिक विचारणाभिज्ञे तत्परग्रन्थाध्येतरि च त्रि०

**चर्चि** स्त्री चर्च-भावे इन्। विचारणायाम् “द्वे चर्चीअतिरिच्येते एकया गौरतिरिक्तः एकयायुष्मन:” तै० ब्रा० १।२।२।२।

**चर्चिक्य** न० चार्चिक्य पृषो० ह्रस्वः। चार्चिक्ये हेम०

**चर्चित** त्रि० चर्च-कर्म्मणि क्त। १चन्दनादिना कृतलेपे देहादौ। “पयोधराश्चन्दनपङ्कचर्चिताः” ऋतुसं०। “भुजं चन्दनचर्चितम्” भा० व० २२७२ श्लो०। भावे क्त २तथालेपने न०।

**चर्त्त्य** त्रि० चृत-कर्म्मणि यत्। हननीये।

**चर्पट** पु० सौ० चृप-दीप्तौ अटन्। १स्फारे २विपुले ३चपेटे ४पर्पटे च मेदि०। ५भाद्रशुक्लषष्ठ्यां चपेट्याम् स्त्री शब्दार्थचि०। ६पिष्टकभेदे पोल्यां स्त्री गौरा० ङीष्। त्रिका०। [र्बीत्। चचर्ब।

**चर्ब्ब** गतौ भक्षणे च भ्वा० पर० सक० सेट्। चर्बति अच-

**चर्भट** पु० चर-क्विप् भट-अच् कर्म्मधा०। १इर्वारौ कर्कट्यां हला० गौरा० ङीष् २हर्षक्रीड़ायां ३साटोपवाक्ये ४चर्चायाञ्च हेम०।

**चर्म्म** न० चर्म्म साधनतया अस्त्यस्य अच् टिलोपः। चर्म्मनिर्म्मिते फलके (ढाल) भरतः।

**चर्म्मकषा(सा)** स्त्री चर्म्म कष(स)ति कष-अच्। पश्चिमदेशप्रसिद्धे गन्धद्रव्यभेदे (चामरकषा) २सप्तलावतायां चर्म्मकसाप्यत्र भरतः

**चर्म्मकार** त्रि० चर्म्म तन्निर्म्मितं पादुकादि करोति कृ-अण् उप० स०। १पादुकादिकारके “चाण्डाल्यां तीव-

राज्जातश्चर्म्मकार इति स्मृतः” पराशरोक्ते २सङ्कीर्ण-जातिभेदे पुंस्त्री स्त्रियां जातित्वात् ङीष्। “चर्म्म-कारस्य द्वौ पुत्रौ गणकोवाद्यपूरकः”। “मनुना तु वैदेह्यां निषादाज्जातस्य कारावराख्यचर्म्मकारसंज्ञोक्ता यथा “कारावरो निषादात्तु चर्म्मकारः प्रसूयते” उत्तरत्र वैदेह्यामेवेत्युक्तेः अत्रापि तस्यामेवेत्यन्वयः। उग्र-नया तु “सूताद्विप्रप्रसूतायां सूतोवेणुक उच्यते। न्हषायामेव तस्यैव जातोयश्चर्म्मकारकः” इत्युक्तम्। एवञ्च मुनित्रयप्रामाण्यात् त्रिविधैव चर्म्मकारजातिः। “धिग्वणानां चर्म्म कार्य्यम्” मनुना तेषां इत्तिरुक्ता। चर्म्म करोति क्विप् चर्म्मकृदप्यत्र। ण्वुल् चर्म्मकारक तत्रार्थे [षभौ मेदि० २चर्म्मकारजातिस्त्रियां च

चर्म्मकारी स्त्री चर्म्म किरति कृ—अण्। १कर्म्मकषायामो-

चर्म्मकील पु० चर्म्मणि कील इव। गुह्यजाते रोगभेदे (हारिष) स्याते रोगे “व्यानो व्यङ्गोत्वा श्लेष्माणम्। करोत्यर्शस्त्वचो बहिः। कीलोपमंस्थिरखरं चर्म्म-कीलन्तु तद्विदुः। वातेन तोदपारुष्यं पित्तादसित-रक्तता। श्लेष्मणा स्निग्धता तस्य ग्रथितत्वमवर्णता” माधवक० तन्निदानाद्युक्तम्। “चर्म्मकीलं जतुमणिं मशकान् तिलकालकान्। उत्कृत्य शस्त्रेण दहेत् क्षाराग्निभ्यामशेषतः” भावप्र०। [पत्रायां हेमच०

चर्म्मचटका स्त्री चर्म्मणा चटकेव। (चामचिका) अजिन

चर्म्मचटी स्त्री चर्म्म चटति भिनत्ति चट—भेदे अच् गौरा० ङीष्। (चामचिका) अजिनपत्रायां शब्दरत्ना०। स्वार्थे क। चर्म्मचटिकाप्यत्र। [रोगे राजनि०।

चर्म्मचित्रक न० चर्म्म चित्रयति चित्र—ण्वुल्। श्वेतकुष्ठ-

चर्म्मज न० चर्म्मणि जायते जन—ड। १रोमणि। २रुधिरे च राजनि०।

चर्म्मण्य त्रि० चर्म्मणि भवः शरीरावयवत्वात् यत्। चर्म्म-भवे। “श्लेष्मणा चर्म्मण्यं वान्यद्वा विश्लिष्टं संश्लेष-येत्” ऐत० ब्रा० ५।२२।

चर्म्मण्वती स्त्री चर्म्मन्+अस्त्यर्थे मतुप् मस्य वः संज्ञायां आसन्दीवदित्यादिना नि०। नदीभेदे। सा च रन्ति-देवस्य यज्ञोपकल्पितगोराशिचर्म्मत उत्पन्ना यथाह “महानदी चर्म्मराशेरुत्क्लेदात् सुस्रुवे यतः। ततश्च-र्म्मण्वतीत्येवं विख्याता सा महानदी” भा० शा०२९अ०। “रन्तिदेवस्य यज्ञे ताः पशुत्वेनोपकल्पिताः। अतश्चर्म्म-ण्वतीं राजन्! गोचर्म्मभ्यः प्रवर्त्तिता” भा०अनु०६६अ०

नर्म्मदाफलं दक्षिणसिन्धुफलञ्चोक्ता भा० व० ८२अ० तन्माहात्म्यं यथा “चर्म्मण्वतीं समासाद्य नियतो नियताशनः। रन्तिदेवाभ्यनुज्ञातो अग्नि-ष्टोमफलं लभेत्”। अतस्तस्या दक्षिणदेशस्थत्वम्। अस-ञ्ज्ञायां तु चर्म्मवत् इत्येव। चर्म्मयुक्ते त्रि० स्त्रियां ङीप्। [राजनि०।

चर्म्मतरङ्ग पु० चर्म्मणि तरङ्ग इव। जरया पलिते वलौ।

चर्म्मतिल त्रि० चर्म्मणि तिला अस्य। चर्म्मोपरिजात कृष्णतिलके (तिल) युक्तदेहादौ [हेम०।

चर्म्मदण्ड पु० चर्म्मणा कृतोदण्डः। कशायाम् (कोड़ा)

चर्म्मदल न० चर्म्म दलयति दल—अण्। क्षुद्रकुष्ठभेदे। “स्फोटैः सकण्डूव्यथनौषचोषास्तलेषु तच्चर्म्मदलं वदन्ति” सुश्रुतः। “चर्म्मदलाजगल्लीमशकाधिष्ठाना” सुश्रुतः।

चर्म्मदूषिका स्त्री चर्म्म दूषयति दूषि—ण्वुल्। कोठरोगे राजनि०।

चर्म्मद्रुम पु० चर्म्म चर्म्माकारवल्कलं तत्प्रधानोद्रुमः। भूर्ज-वृक्षे राजनि०। तस्य चर्म्माकारवल्कलत्वात् तथात्वम्।

चर्म्मन् न० चर—मनिन्। १देहावरिकायां त्वचि, २इन्द्रियभेदे येन स्पर्श उपलभ्यते तस्मिन् ३फलके (ढाल) च। “त्वगिन्द्रियन्तु वायवीयं यथाह “देहव्यापि त्वगिन्द्रियम्” भाषा०। तस्य तथात्वं सि० मु० समर्थितं यथा “शरीर व्यापकं स्पर्शग्राहकमिन्द्रियं तच्च वायवीयं रूपादिषु मध्ये स्पर्शस्यैव व्यञ्जकत्वात् अङ्गसङ्गिसलिलशैत्यव्यञ्जक व्यजनवातवत्”। मनसा त्वग्योगो ज्ञानसामान्ये कारणं यथाह तत्रैव “त्वचोयोगो मनसा ज्ञानकारणम्” “त्वङ्मनःसंयोगो ज्ञानसामान्ये कारणमित्यर्थः किं तत्र प्रमाणं सुषुप्तिकाले त्वचं त्यक्त्वा पुरीतति वर्त्तमानेन मनसा ज्ञानाजननमिति। ननु सुषुप्तिकाले किं ज्ञानं भविष्यति अनुभवरूपं स्मरणरूपं वा। नाद्यः अनुभव-सामग्र्यभावात्तथाहि चाक्षुषादिप्रत्यक्षे चक्षुरादिना सह मनःसंयोगस्य हेतुत्वात् तदभावादेव न चाक्षुषादि-प्रत्यक्षं, ज्ञानादेरभावादेव न मानसप्रत्यक्षं, ज्ञानाद्यभावे च नात्मनोऽपि प्रत्यक्षमिति। व्याप्तिज्ञानाभावात् नानु-मितिः, सादृश्यज्ञानाभावात् नोपमितिः, पदज्ञानाभावात् न शाब्दबोधः, इत्यनुभवसामग्र्यभावात् नानुभवः। उद्बोधकाभावाच्च न स्मरणम्। नैवं सुषुप्तिप्राक्कालोत्-पन्नेच्छादिव्यक्तेस्तत्सम्बन्धेनात्मनश्च प्रत्यक्षप्रसङ्गात् तदती-न्द्रियत्वे मानाभावात् सुषुप्तिप्राक्काले निर्विकल्पमेव जायत

इन्यत्रापि प्रमाणाभावात्। अथ ज्ञानमात्रे त्वङ्मनःसंयोगस्य यदि कारणत्वं तदा रासनचाक्षुषादिप्रत्यक्षकाले स्पार्शनप्रत्यक्षं स्यात् विषयेन्द्रियसंयोगस्य विषयत्वक्संयोगस्य च तदा सत्त्वात् परस्परप्रतिबन्धादेकमपि वा न स्यादिति। अत्र केचित् पूर्वोक्तयुक्त्या त्वङ्मनोयोगस्य हेतुत्वे सिद्धे चाक्षुषादिसामग्र्याः स्पार्शनादिप्रतिबन्धकत्वमनुभवानुरोधात् कल्प्यते इति। अन्ये तु सुषुप्त्यनुरोधात् चर्म्ममनःसंयोगस्य ज्ञानहेतुत्वं कल्प्यं चाक्षुषादिप्रत्यक्षकाले त्वचि मनःसंयोगाभावान्न स्पार्शनप्रत्यक्षमिति वदन्ति"। चर्म्म त्वचोर्भेद इति तु रहस्यम्। त्वचश्च सप्तविधा यथाह सुश्रुतः "तस्य खल्वेवम्प्रवृत्तस्य शुक्रशोणितस्याभिपच्यमानस्य क्षीरस्येव सान्तानिकाः सप्त त्वचो भवन्ति। तासां प्रथमाऽवभासिनी नाम या सर्व्ववर्णानवभासयति पञ्चविधाञ्च छायां प्रकाशयति सा व्रीहेरष्टादशभागप्रमाणा सिध्मपद्मकण्टकाधिष्ठाना, द्वितीया लोहिता नाम षोडशभागप्रमाणा तिलकालकन्यच्छव्यङ्गाधिष्ठाना, तृतीया श्वेता नाम द्वादशभागप्रमाणा चर्म्मदलाजगल्लीमशकाधिष्ठाना, चतुर्थी ताम्रा नामाष्टभागप्रमाणा विविधकिलासकुष्ठाधिष्ठाना, पञ्चमी वेदिनी नाम व्रीहिपञ्चभागप्रमाणा कुष्ठविसर्पाधिष्ठाना, षष्ठी रोहिणी नाम व्रीहिप्रमाणा ग्रन्थ्यपच्यर्वुदश्लीपद गलगण्डाधिष्ठाना, सप्तमी मांसधरा नाम व्रीहिद्वयप्रमाणा भगन्दरविद्रध्यर्शोऽधिष्ठाना" यदेतत्प्रमाणं निर्दिष्टं तन्मांसलेष्ववकाशेषु न ललाटसूक्ष्माङ्गुल्यादिषु। यतो वक्ष्यत्युदरेषु व्रीहिमुखेनाङ्गुष्ठोदरप्रमाणमवगाढं विध्येदिति"।

फनकविकृतिर्युक्तिकल्पतरौ यथा

"शरीरावरकं वस्तु चर्म्म इत्यभिधीयते। तत्पुनर्द्विविधं काष्ठचर्म्मसम्भवभेदतः। शरीरावरकत्वञ्च लघुता दृढता तथा। दुर्भेद्यतेति कथितश्चर्म्मणां गुणसंग्रहः। सितो रक्तस्तथा पीतः कृष्ण इत्यभिशब्दितः। ब्रह्मादिजातिभेदेन चर्म्मणां वर्णनिर्णयः। चित्रवर्णस्तु सर्वेषां सर्व्वदैवोपपद्यते" इति भोजदेवः।

**चर्म्मनालिका** स्त्री चर्म्मनिर्म्मिता नालिकेव। कशायां ताडन्यां (कोड़ा) शब्दार्थचि०।

**चर्म्मपट्टिका** स्त्री चर्म्मनिर्म्मिता पट्टिका। (चामाटी) चर्म्ममयपट्टिकायाम् शब्दार्थचि०। [नपत्रायां जटा०।

**चर्म्मपत्रा** स्त्री चर्म्मैव पत्रं पक्षोऽस्याः। (चामचिका) खजि-

**चर्म्मपादुका** स्त्री चर्म्ममयी पादुका। चर्म्मकृतपादत्राणे। "ततो ब्रह्मचारी अनेन मन्त्रेण चर्म्मपादुके पादयोर्निदध्यात्" भवदेवः। [ मयपात्रभेदे (कुपा) मेदि०।

**चर्म्मपुट(क)** पु० चर्म्ममयं पुटमत्र वा कप्। हतिसंज्ञके चर्म्म-

**चर्म्मप्रभेदिका** स्त्री चर्म्म प्रभिनत्ति प्र+भिद्—ण्वुल् टापि अत इत्वम् हेत०। चर्म्मभेदनेऽस्त्रभेदे अमरः

**चर्म्मप्रसेविका** स्त्री चर्म्मणा प्रसीव्यते प्र+षिव—बा० कर्म्मणि—वुन् टापि अत इत्वम्। भस्त्रायाम् अग्निसन्दीपनार्थे चर्म्ममये यन्त्रभेदे अमरः।

**चर्म्ममण्डल** पु० ब० व०। देशभेदे "अपरान्ताः परान्ताश्च पङ्क्ताश्चर्म्ममण्डलाः" भा० भी० ९अ० देशोक्तौ।

**चर्म्ममय** त्रि० चर्म्मणोविकारः मयट्। चर्म्मनिर्म्मिते पात्रादौ स्त्रियां ङीप्। "द्वीपिचर्म्मावनद्धैश्च व्याघ्रचर्म्ममयैरपि", भा० भी० ४६अ०। "यथा काष्ठमयो हस्ती यथा चर्म्ममयो मृगः" मनुः।

**चर्म्ममुण्डा** स्त्री चामुण्डा+पृषो०। दुर्गायां हेमच०।

**चर्म्ममुद्रा** स्त्री "वामहस्तं तथा तिर्य्यक् कृत्वा चैव प्रसार्य्य च। आकुञ्चिताङ्गुलिः कुर्य्यात् चर्म्ममुद्रेयमीरिता" तन्त्रसारोक्ते देवपूजाङ्गे मुद्राभेदे।

**चर्म्मन्** त्रि० चर्म्ममये कवचादौ मन्यति अभ्यस्यति म्ना—क। चर्म्ममयकवचादौ कृताभ्यासे। "अष्टयचर्म्मना अभितोजनाः" ऋ० ८।५।३८। "साध्येभ्यश्चर्म्मम्नम्" यजु० ३०। १५। पुरुषमेधे देवभेदोद्देनालभ्यपुरुषभेदोक्तौ।

**चर्म्मयष्टि** स्त्री चर्म्ममयी यष्टिरिव। अश्वादेस्ताडन्यां (कोड़ा)। शब्दार्थचि०।

**चर्म्मरङ्गा** स्त्री चर्म्मणि रङ्गोऽस्याः। १आवर्त्तकीलतायां विभाण्डयाम् राजनि०। २देशभेदे पु० ब० व० स च देशः इ०स० कूर्म्मविभागे १४अ० पश्चिमोत्तरदिशि उक्तः। "दिशि पश्चिमोत्तरस्याम्" इत्युपक्रमे "गुरुहामलकच्चचर्म्मरङ्गाख्याः"।

**चर्म्मरी** स्त्री चर्म्म—राति रा—क गौरा० ङीष्। स्थावरविषान्तर्गते फलविषे लताभेदे। "कुमुद्वतीरेणुकाकरम्भकर्कोटकरेणुकखद्योतकचर्म्मरील्वुपक्रमे फलविषाः" सुश्रु०।

**चर्म्मरु** पु० चर्म्म—राति रा—बा० कु। चर्म्मकारे त्रिका०।

**चर्म्मवत्** त्रि० चर्म्मन+अस्त्यर्थे मतुप् मस्य वः असंज्ञात्वात् न नि०। १चर्म्मयुक्ते स्त्रियां ङीप्। "लोहचर्म्मवती चापि शक्तिः सघुहस्तिका" भा० व० १५अ०। २सुबलात्मजभेदे पु०। "गजोगवाक्षो वृषभश्चर्म्मवानार्जवः शुकः। षड्ते बलसम्पन्ना निर्य्ययुर्महतो बलात्" इत्युप-

क्रमे "अस्मद्भवाचाखे सर्वे सुवर्णस्तम्भजारवे" भा० भी० ८१अ० इत्युक्तम् ।

चर्म्मवसन पु० चर्म्म गजासुरचर्म्म वसनमस्य । कृत्तिवाससि शिवे कृत्तिवासशब्दे २१८८ पृ० दृश्यम् ।

चर्म्मवृक्ष पु० चर्म्मप्रधानः चर्म्मतुल्यवल्कप्रधानो वृक्षः । भूर्जवृक्षे । "खर्जूरा नारिकेलाश्च चर्म्मवृक्षो हरितकी" हरिवं० । ३१अ० ।

चर्म्मसम्भवा स्त्री चर्म्मणि त्वचि सम्भवति सम्+भू—अच् । स्थूलैलायां शारा० । तत्फलस्य त्वङ्मध्ये सम्भवात्तस्यास्तथात्वम् ।

चर्म्मसार पु० चर्म्मणः सारः । रसे राजनि० । भुक्ताहारादेः रसस्य त्वङ्मध्ये जायमानत्वात् तस्य तथात्वम् ।

चर्म्माम्भस् पु० चर्म्मणोऽम्भः । चर्म्मान्तरस्थे रसे राजनि० । भुक्ताहारादिरसस्य चर्म्माभ्यन्तरस्थत्वात्तस्य तथात्वम् ।

चर्म्मार पु० चर्म्म शिल्पसाधनतया करोति कृ—अण् । उप० स० । चर्म्मकारे जटा० ।

चर्म्मावकर्त्तिन् पु० चर्म्म अवकृन्तति स्वशिल्पनिर्वाहाय अव+कृती छेदे णिनि । चर्म्मकारे । तदन्नभक्षणं मनुना निषिद्धं यथा "स्वाकुः सुवर्णकाराणां यमचर्म्मावकर्त्तिनाम्" ।

चर्म्मिक त्रि० चर्म्म चर्म्ममयं फलकं (ढाल) । युद्धसाधनतयाऽस्त्यस्य व्रीह्या० ठन् । चर्म्ममयफलकेन योद्धरि (ढाली) तस्य भावः कर्म वा पुरोहिता० यक् । चार्म्मिक्य तद्भावे न० ।

चर्म्मिन् त्रि० चर्म्म देहावरकं (ढाल) फलकं वा अस्त्यस्य वा इनि टिलोपः । चर्म्मयुक्ते (ढालि) ख्याते चर्म्मिके । "नागे नागे दश रथा शतमश्वा रथे रथे । अश्वेऽश्वे दश धानुष्का धानुष्के दश चर्म्मिणः" भा० भी० २० अ० । चर्म्माणि वल्कलान्यस्याः सन्ति वा इनि । २भूर्जवृक्षे अमरः । ३कदल्यां ४भृङ्गरीटे च पु० शब्दर० ।

चर्य्या स्त्री चर—"परिचर्य्यापरिसर्य्येत्यादि" पा० परीत्यस्याविवक्षातः भावे क्यप् । १आचारमात्रे "वनवासस्य शूरस्य चर्य्या हि रोचते" रामा० अ० २६।१५। २गतौ "चर्य्याणां हयमुत्तमम्" भा० आ० ६२७ श्लो० । ३ईर्य्यापथस्थितौ परिव्राजकादीनां व्रतानुष्ठाने नियमस्य परित्यागे । "गदमदचरयमश्चानुपसर्गे" पा० कर्म्मणि यत् । ४कर्त्तव्ये आचरणीये त्रि० "षट्त्रिंशदाब्दिकं चर्य्यं गुरौ त्रैवेदिकं व्रतम्" मनुः भावे यत् । ५आचरणे न० ।

चर्व्व अदने दन्तैश्चूर्णने (चिवान) वा चुरा० उभ० पक्षे भ्वा० पर० सक० सेट् । चर्व्वयति-ते चर्व्वति अचचर्व्वत्-त अचर्व्वीत् चर्व्वयां बभूव आस चक्रे चचर्व्व । चर्व्वणं चर्व्वणा चर्व्वितः । रसास्वादव्यापारे चर्व्वणशब्दे दृश्यम् ।

चर्व्वण न० चर्व्व—भावे ल्युट् । १दन्तैश्चूर्णने (चिवान) २रसास्वादव्यापारभेदे च सा० द० । युच् चर्व्वणाप्यत्र स्त्री । "प्रमाणं चर्व्वणैवात्र स्वाभिन्ने विदुषां मतम्" चर्व्वणाऽऽस्वादनम् । तच्च "स्वादः काव्यार्थसम्भेदादात्मानन्दसमुद्भवः" । "निष्पत्त्या चर्व्वणस्यास्य निष्पत्तिरुपचारतः" "यद्यपि रसाभिन्नतया चर्व्वणस्यापि न कार्य्यत्वं तथापि तस्य कादाचित्कतया उपचरितेन कार्य्यत्वेन कार्य्यत्वमुपपद्यते" इति च सा० द० ।

चर्व्वा स्त्री चर्व्व—अङ् । १चर्व्वणे २तलप्रहारे शब्दार्थचि० ।

चर्व्वित त्रि० चर्व्व—कर्म्मणि क्त । १भक्षिते दन्तैश्चूर्णिते २आस्वादिते च ।

चर्व्वितपात्र न० ६त० । चर्व्वितस्य ताम्बूलादेस्त्यागार्थं पात्रम् (पिकदानी) ख्याते पतद्ग्रहे । "ताम्बूलं दर्पणं पानपात्रं चर्व्वितपात्रकम्" ब्रह्मपु० पा० ख० ।

चर्व्य त्रि० चर्व्व—कर्म्मणि ण्यत् यत् वा । दन्तैश्चूर्णनीये भक्ष्यभेदे आहारशब्दे ८९९ पृ० भावप्रका०वाक्यम् यथा "भोज्यं भक्ष्यं तथा चर्व्यं गुरु विद्यात् यथोत्तरम् । चर्व्यं च चिपिटकचणकादि" । "षट्कोटिं ब्राह्मणानाञ्च भोजयामास नित्यशः । चूष्यपेयलेह्यचर्व्यै रतिहृष्टं दिने दिने" ब्र० वै० पु० ।

चर्षणि पु० कृष-अनि "आदेश्च चः" उणा० । मनुष्ये निघ० । "यत्पञ्चचर्षणीनां वसूनाम्" ऋ० १।७।९ "अर्य्यम्णो मातृका पत्नी तयोश्चर्षणयः सुताः । यत्र वै मानुषी जातिर्ब्रह्मणा चोपकल्पिता" भाग० ६।६।४१ श्लोकः, तद्व्याख्यायां चर्षणयः कृताकृतज्ञानवन्तः" श्रीधरः । विचर्षणि विश्वचर्षणीत्यादिना निघण्टौ कर्षतेः पश्यतिकर्म्मसूत्रत्वेन तथार्थत्वम् । अस्यायमभिप्रायः "कृषेरादेश्च चः" उणा० २।१०२। सूत्रे उज्ज्वलदत्तेन "आदेश्च चः" इति पठित्वा चर्षणिः वल्मीक्युदाहृतम् । अतश्चर्षणिनिष्पत्तिर्निघण्टुप्रोक्तचषधातोरेव । सि०कौ० तु "आदेश्च चः" इति पाठात् कृषधातोरेव तच्छब्दनिष्पत्तिरिति भेदः । तयोर्युक्तायुक्तत्वं सुधीभिर्भाव्यम् । कृदिकारान्तत्वात् स्त्रियां वा ङीप् । २पुंश्चल्यां स्त्री "यच्चर्षणीनामुद्गायश्चोत्कलम्" भाग० १०।२९।२। वाक्ये चर्षणीनां पुंश्चलीनाम्

द्रव्यपरत्वं युक्तम् । मनुष्यजातिपरत्वे स्त्रियां वा ङीप् । "इदमुक्ता चर्मणीष्टता" ऋ० ८।८०।५। चर्मणी-ष्टताऽसुरहननद्वारेण मनुष्यजातिधारकवज्रेण" भा०

**चल** गतौ भ्वा०पर० सक० सेट् । चलति अचालीत् । चचाल । चेलतुः । चलन् चलितः ज्वलादि० चालः पचा०चलः । "कृष्णेन निहते चैद्ये चचाल च वसुन्धरा" भा० सा० ४४अ० । "चलत्येकेन पादेन तिष्ठत्येकेन बुद्धिमान्" चाण० । "तिलमात्रमपि चलितुं न शक्नोति" सुश्रु० । आर्षे आत्म० । "न धर्माच्चलते बुद्धिर्धर्मराजस्य धीमतः" भा०स० ७८अ० । णिचि । चलयति चालयति । "चाल-यन् वसुधां चेमां बलेन चतुरङ्गिणा" भा० आ० ८४अ० कम्पने अक० मित् । चलयति ते । अचीचलत् "चलयन् भृङ्गरुचस्तवालकान्" रघुः "तां प्राविशत् कपिव्याघ्र-श्चलनचलयन् शनैः" भट्टिः । "यूनां मनश्चलयति प्रसभं नभस्वान्" ऋ० सं० गत्यर्थस्य न मित्त्वम् "मित्त्वे" इति कविकल्पद्रुमे कम्पार्थएव तस्य मित्त्वोक्तेः "आचालयेयुः शैलांस्ते क्रुद्धाभिन्द्युर्महीतले" हरिव० ५४अ० । पर्वतानाञ्च शिखराण्याचालयति वेगवान्" भा० शा० १५४अ० ।

उद्+ऊर्द्ध्वगमने उत्क्रम्य गतौ "पुष्पोच्चलितषट्पदम्" रघुः उत्थाय गतौ च । "उच्चलितः प्रयाताम्" रघुः ।

वि+विशेषेण चलने । "व्यचालीदस्यायं पतिः" भट्टिः ।

**चल** विलासे तु० प० अ० सेट् । चलति अचालीत् चचाल ।

**चल** भृतौ पोषणे चु० सक० उभ० सेट् । चालयति ते अचीचलत् ।

**चल** त्रि० चल वा पचा० अच् । १तरले, चञ्चले, २कम्प-युक्ते अमरः । ३परमेश्वरे पु० । "घृताशीरचलश्चलः" विष्णु स० । "न स्वरूपान्न सामर्थ्यात् नच ज्ञानादि-कात् गुणात् । चलनं विद्यते यस्मादचलः कीर्त्तितो-ऽच्युतः" स्मृतेः । वायुरूपेण चलतीति चलः" भा० । कम्पार्थकचलतेः स्वार्थे णिचि भावे अच् । ४कम्पने मेदि० । "मित्त्वे" कविकल्प० । चलनं च रजसः कार्य्यं यथाह सा० का० "सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलञ्च रजः" ।

"सत्त्वतमसी स्वयमक्रियतया स्वस्वकार्य्यप्रवृत्तिं प्रत्यवसी-दन्ती रजसोपष्टभ्येते अवसादात् प्रच्याव्य स्वकार्य्ये ते उत्साह्य प्रयत्नं कार्य्येते । तदिदमुक्तमुपष्टम्भकम् इति । कस्मादित्यत उक्तं चलमिति । तदनेन रजसः प्रवृत्त्यर्थत्वं दर्शितम् । रजस्तु चलत् परितस्त्रैगुण्यं चालयद्गुरुणाऽऽवृण्वता च तमसा तत्र तत्र प्रवृत्ति-प्रतिबन्धेन क्वचिदेव प्रवर्त्त्यते" । सा०त०कौ० ।

"जौ नजौ भौ चेच्चलमिदमुदितं मुनैस्त्रिभिः स्वरैः" वृ० र० उक्ते अष्टादशाक्षरपादके ५ वर्णवृत्तभेदे न० "स हतकुलशलकाकपक्षकैः" रघुः । "यथाम्बुना प्रच-लता तरवोऽपि चला इव" भाग० ७।१।२१। "न खलु प्रेम चलं सुहृज्जने" "प्रायश्चलं गौरवमाश्रितेषु" कुमा०

**चलकेतु** पु० कर्म० । केतुभेदे स च "कपरश्मां चलकेतुः शिखया याम्याग्रयाङ्गुलोच्छ्रितया । गच्छेत् यथा यथोदक् तथा तथा दैर्घ्यमायाति" वृ० सं० ११अ० । उक्तः

**चलचञ्चु** पुंस्त्री चला चञ्चुरस्य । चकोरखगे हेम० ।

**चलत्पूर्णिमा** स्त्री चलन्ती पूर्णिमा तद्युपलक्षितः चन्द्र इव । (चाँदा) चन्द्रकमीने त्रिका० ।

**चलदङ्ग** पुंस्त्री चलन्ति अङ्गान्यस्य । (चेङ्गा) मत्स्यभेदे राजनि० । वा कप् । चलदङ्गक तत्रार्थे जटा० ।

**चलदल** पु० चलानि चञ्चलानि दलान्यस्य । अश्वत्थवृक्षे अमरः । चलपत्रादयोऽप्यत्र । "अङ्गेन (स्त्रीचिह्न-भेदेन) केनापि विजेतुमस्या गवेष्यते किं ? चलपत्र-पत्रम् । न चेद्विशेषादितरच्छदेभ्यस्तस्यास्तु कम्पस्तु कुतोभयेन" नैष० । तस्य कम्पयुक्तपत्रता वर्णिता ।

**चलन** न० चल–भावे ल्युट् । १कम्पे २गतौ च । कर्त्तरि ल्यु । ३कम्पयुक्ते त्रि० मेदि० । ४हरिणे पुंस्त्री जटा० जाति त्वात् स्त्रियां ङीप् । करणे ल्युट् । ५चरणे हेमच० ।

**चलनक** न० चलन+संज्ञायां कन् । चरणातके हेमच० ।

**चलनी** स्त्री चलत्यत्र चल–आधारे ल्युट् ङीप् । १गज-बन्धन्यां वाचाम् २घर्घ्याञ्च ( घाघरा ) वस्त्रभेदे हेमच० ।

**चलसंक्रान्ति** स्त्री कर्म० । अयनांशचलनभेदात् तत्त-द्राशिविशेषांशे रव्यादेः प्रथमाङ्गप्रवेशे अयन संक्रान्ति-शब्दे ३२८पृ० विवृतिः । [द्रव्यभेदे च रत्नमा० ।

**चला** स्त्री चल–अच् । १लक्ष्म्यां मेदि० २सिह्लके गन्ध-

**चलाचल** त्रि० चल–अच् नि० । १चञ्चले अमरः २काके पुंस्त्री राजनि० स्त्रियां जातित्वात् ङीष् । "चलाचलै-रनुपदमाहृताः कुरैः" माघः । "जन्मिनोऽस्य स्थितिं विद्वान् लक्ष्मीमिव चलाचलाम्" किरा० ।

**चलातङ्क** पु० चलस्य चलनस्यातङ्कोभयमस्मात् । वातामय भेदे राजनि० ।

**चलित** त्रि० चल-कर्त्तरि क्त। १कम्पिते अमरः। २गते "चलितदुर्ब्बलपक्षपरिग्रहः" "चलितः पुरः पतिमुपेतमात्मजम्" माघः। ३प्राप्ते ४ज्ञाते च त्रि०। भावे क्त। ४चलने ५गतौ च न०। [मेदि०।

**चलु** पु० चल-उन्। गण्डूषे हेमच०।

**चलुक** पु० चलुना मीयते कन्। १प्रसृतौ २भाण्डभेदे च

**चलेषु** पु० चलो लक्ष्यमप्राप्त इषुर्यस्य। लक्ष्यमप्राप्तवाणके मन्दधानुष्के। अत्र "उदराश्वेषु क्षेपे" पा० इषु शब्दे परे क्षेपे पूर्व्वपूर्व्वपदस्यान्तोदात्ततविधानात् पूर्व्वपदमन्तोदात्तम्।

**चवर्ग** पु० च+प्रातिशाख्योक्तः वर्गप्रत्ययः ६त० वा। तालुस्थानोच्चरितानां अप्रवर्णानां वर्गे (च छ ज झ ञ) वर्णेषु। ततः "वर्गान्ताच्च" पा० छ। चवर्गीय तदर्थभवे त्रि०।

**चवल** पु० चर्व-बा० अलच् पृषो०। राजमाषे कलायभेदे शब्दार्थचि०। [ङीप्। तत्रार्थे शब्दर०

**चवि** स्त्री चर्व-इन् पृषो०। चव्ये (चइ) शब्दर०। वा

**चविका** स्त्री चवि+स्वार्थे क। चव्ये अस्य स्त्रीत्वमाह हट्टः "कटूष्णा चविका लघ्वी रोचनी दीपनी मता। जन्तूक्ष्मश्वासकासघ्नलरोगविमर्द्दिनी" राजनि०। "भेदिनी कफनाशिनी" इत्यधिकं राजवल्लभेनोक्तम्।

**चव्य** न० चर्व-कर्म्मणि यत् पृषो०। १चविकायाम् तस्य स्त्रीत्वमप्याह भरतः। स्वार्थे क चव्यिका तत्रार्थे राजनि०। सा च २वचायां मेदि०। [राजनि०।

**चव्यजा** स्त्री चव्यमिव जायते जन-ड। गजपिप्पल्याम्

**चव्यफल** न० चव्यमिव फलति फल-अच्। गजपिप्पल्याम् राजनि०।

**चव्यादि** न० "चव्यं त्रिकटुकं पाठा क्षारं कुस्तुम्बुरूणि च। यमानी पिप्पलीमूलमुभे च विड्सैन्धवे। चित्रकं बिल्वमभयां पिष्ट्वा सर्पिर्विपाचयेत्। शकृद्वातानुलोम्यार्थं जाते दध्नि चतुर्गुणे। प्रवाहिकां गुदभ्रंशं मूत्रकृच्छ्रं परिस्रवम्। गुदवङ्क्षणशूलञ्च घृतमेतद्व्यपोहति" चक्रदत्तोक्ते घृतभेदे।

**चष** भक्षे भ्वा० उभ० सक० सेट्। चषति ते अचषीत् अचाषीत् अचषिष्ट चचाष चेषतुः चेषे।

**चष** वधे भ्वा० प० सक० सेट्। चषति अच-(चा)षीत्।

**चषक** पु०न० चष-करणे क्वुन् अर्द्धर्चादि। १मद्यपानपात्रे अमरः। तच्च स्वर्णादिकं युक्तिकल्पतरावुक्तम् यथा "यत् पानपात्रं भूपानां तच्चषकं बुधैः। काञ्चनं राजतं चैव स्फाटिकं काचमेव च। इत्थं स्वर्णादिकं च चतुर्थां पृथिवीभुजाम्। इत्यन्यस्मात् तेषां निर्णयः पाठस्मृतः। स्वस्थितमेतत् रत्नैश्चतुर्भिः समन्वितम्। मार्त्तिकं वाथ फालं वा पर्णपात्रमथोच्यते। काष्ठजं धातुजं चैव आकृत्यादिमहीभुजाम्। यदन्यत्तोयपानादिपात्रं पृथ्वीभुजां भवेत्। एवं तत्रापि नियम इति भोजस्य सम्मतः" "आननैः परिहृतं चषकान्तः" माघः। कर्म्मणि क्वुन्। २मधुनि, ३मद्यभेदे च न० मेदि० [च त्रि० कौ०।

**चषति** पु० चष-भक्षे वधे वा भावे अति। १भक्षे २वधे

**चषाल** पु०न० चष-आलच् अर्द्धर्चादि। यूपकटके यज्ञियपशुबन्धनार्थं यूपमध्यदेये वलयाकारे काष्ठमये लौहमये वा पदार्थे अमरः। तच्च स्वर्णादिकमुक्तं का० श्रौ० ६।१।२८। इत्यादौ "चषालमूर्ध्वं पृथक्कालमस्तोभि मथ्वसंस्कृतम्" २८सू० "यूप परिवासनानन्तरं यदवशिष्टं पृथक्कृतमष्टम् तत्चषालं कर्त्तव्यम् प्रसारिताङ्गुलिः मणिरामविचरनात् पृथक् इत्युच्यते चषालमिति संज्ञा सं व्यवहारार्था "आ चषालेभ्यात्" इत्यादौ। अष्टाश्रि अष्टकोणम् तदपि तक्षणेनाष्टकोणं कुर्य्यात् तथैव। उलूखलवन्मध्ये संकुचितम्" कर्कः। "अर्द्धमग्रे प्रतिमुञ्चति" २९सू० "तच्चषालं यूपस्याग्रे अर्द्धं प्रतिमुञ्चति अतएवोर्द्धप्रतिमोकविधानाद्यमालस्य तथा वेधः कार्य्यः। प्रतिमुञ्चतीति वचनाच्च चूडाग्रो यूपः चषालं च सन्धिरमिति गम्यत इति हरिस्वामिनः तथा चाहापस्तम्बः "मूलतोऽतष्टमुपरम् अष्टाश्रिरनु पूर्वोऽयतोऽणीयान् प्रमाणाष्टाश्रिरिति" कर्क० "द्व्यङ्गुलं त्र्यङ्गुलं वा तदतिक्रान्तं यूपस्य" ३० सू० "यूपस्य यूपाग्रस्य द्व्यङ्गुलं त्र्यङ्गुलं वा चषालं तदतिक्रान्तं चषालच्छिद्राच्चेषादतिक्रान्तं भवति अतिक्रम्योर्द्धं निःसृतं भवति तथा चषालस्योर्द्धं प्रवयणं कर्त्तव्यम् यथा चषालो यूपाग्रादधो द्व्यङ्गुले त्र्यङ्गुले वा तिष्ठतीत्यर्थः" कर्कः "भूषणालुलिताङ्गुलीयकम्" माघः

**चह** कल्के (प्रतारणे) भ्वा० पर० सक० सेट्। चहति अचहीत्। चचाह चेहतुः।

**चह** कल्के (प्रतारणे) अद० चुरा० उभ० सक० सेट्। चहयति-ते अचचहत् त। चहयां, बभूव आस-चकार चक्रे।

**चक्क** कल्के प्रतारणे चुरा० उभ० सक० सेट् घटा० चक्कयति ते अचीचक्कत्-त ।

**चाकचक्य** न० चक-अच् चकः प्रकारे द्वित्वं चकचकस्य भावः ष्यञ् । उज्ज्वलतायाम् । "नहि लोकसिद्धसामग्री प्रातिभासिकरजतोत्पादिका किन्तु विलक्षणैव । त-थाहि । काचादिदोषदूषितलोचनस्य पुरोवर्त्ति द्रव्य-संयोगादिदमाकारा चाकचक्याकारा च काचिदन्तः-करणवृत्तिरुदेतीति" "चाकचक्यसंदर्शनसमुद्बुद्धरजत-त्वसंस्कारसध्रीचीना" इति च वेदान्त० प० । पृषो० । चाकचिक्यमप्यत्र शब्दार्थचि० ।

**चाकचिक्य** स्त्री चक-चञ् चाकं दीप्तिं चिनोति चि-क्विप् तद्वती चीयते चि-बा० ड । श्वेतगुञ्जायां रत्नमा० ।

**चाक्र** त्रि० चक्रेण निर्वृत्तम् अण् । चक्रनिर्वृत्ते "चाक्र मौषलमित्येवं संग्रामं रक्षसस्तयः" हरिवं० १०० अ० ।

**चाक्रवर्मण** पु० चक्रवर्मणोऽपत्यम् अण् न टिलोपः । चक्रवर्मणोऽपत्ये व्याकरणाचार्यभेदे । "ईपत्या-क्रवर्मणस्य" उणा० ३।१।२सू० । "ईद चाक्रवर्मणस्य" पा० ६।१।१२ सू० । [ढञ् । चक्रवाकसन्नोपादौ ।

**चाक्रवाकेय** त्रि० चक्रवाकस्यादूरदेशादि चतुरर्थ्यां सख्या०

**चाक्रायण** पु० चक्रस्य गोत्रापत्यम् अश्वादि० फञ् । चक्र-स्य गोत्रापत्ये उषस्तौ "मटचीहतेषु कुरुष्व उष-स्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राण आस" छा० उ० ।

**चाक्रिक** त्रि० चक्रेण समूहेन यन्त्रभेदेन चक्रयुक्तशकटेन वा चरति ठक् । संघीभूय मिलित्वा स्तुतिपाठके १घाण्टिके अमरः "पिशुनान्तृतिनां चैव तथा चाक्रिकवन्दिनाम्" याज्ञ० । "चाक्रिको घोषयामास पुरुषो मृष्टकुण्डलः" हरिवं० १५६ अ० । २तैलकारे हेमच० ३शाकटिके (गाडओयान) ख्याते च शब्दार्थचि० "भिक्षुकांश्चाक्रिकांश्चैव क्लीवोन्मत्तान् कुशीलवान् । दाह्यान् कुर्यान्नरश्रेष्ठो दोषाय ते स्युरन्यथा" भा० शा० ६९ अ० । [ढञ् । चक्रनिर्वृत्तादौ ।

**चाक्रेय** त्रि० चक्रेण निर्वृत्तादि चक्र+सख्या० चतुरर्थ्यां

**चाक्षुष** न० चक्षुषा गृह्यते चक्षुस्+ग्रीषिकोऽण् । चक्षु-र्ग्राह्ये १रूपादौ २तद्वति त्रि० । तद्ग्राह्यविषयाश्च चक्षुर्विषयशब्दे २८४२ पृ० दृश्याः । चक्षुषा निर्वृत्तः अण् । ३प्रत्यक्षे न० । तज्ज्ञाने चक्षुषः करणत्वेऽपि विषयभेदेन तस्य व्यापारभेदा भाषा० उक्ता यथा "द्रव्यग्रहस्तु संयोगात् संयुक्तसमवायतः । द्रव्येषु सम-वेतानां तथा तत्समवायतः । तत्रापि समवेतानां शब्दस्य समवायतः । तद्वृत्तीनां समवेतसमवायेन तु ग्रहः" । द्रव्यचाक्षुषं प्रति चक्षुःसंयोगो व्यापारः । द्रव्यसमवेत-चाक्षुषं प्रति चक्षुःसंयुक्तसमवायः । द्रव्यसमवेतसमवेत-चाक्षुषं प्रति चक्षुःसंयुक्तसमवेतसमवायः" । चक्षुषोऽ-पत्यम् । चक्षुर्नामकस्य रिपुञ्जयाख्यस्य पुत्रे षष्ठे मनुभेदे तत्कथा यथा "चक्षुषा ब्रह्मदौहित्र्यां वीरिण्यां स रिपु-ञ्जयः । वीरणस्यात्मजायान्तु चक्षुर्मनुमजीजनत् । मनुर्वै राजकन्यायां नड्वलायां स चाक्षुषः । जनयामास तन-यान्दश शूरानकल्मषान् । ऊरुः पूरुः शतद्युम्न-स्तपस्वी सत्यवाक् कविः । अग्निष्टुदतिरात्रश्च सुद्युम्नश्चापराजितः । अभिमन्युस्तु दशमो नड्वला यामजायत" मत्स्यपु० ४अ० । "षष्ठं ते सम्प्र वक्ष्यामि तन्निबोध नराधिप ! । भृगुर्नभो विवस्वांश्च सुधामा विरजास्तथा । अतिनामा सहिष्णुश्च सप्तैते तु महर्षयः । चाक्षुषस्यान्तरे तात ! मनोर्देवा-निमान् शृणु । आद्याः प्रभूता ऋभवः पृथुकाश्च दिवौकसः । लेखा नाम महाराज ! पञ्च देवगणाः-स्मृताः । अरण्येरङ्गिरसः पुत्रा महात्मानो महौजसः । नाड्वलेया महाराज ! दश पुत्रास्तु विश्रुताः । ऊरु-प्रभृतयो राजन् ! षष्ठं मन्वन्तरं स्मृतम्" हरि० ७अ०

**चाक्ष्म** त्रि० चक्ष-बा० म पृषो० । दूरदर्शि "चाक्ष्मो यद्वाचं भरते मती" ऋ० २।२४।९। "चाक्ष्मः सर्वस्य द्रष्टा" भा० ।

**चाङ्ग** पु० चीयते चि-ड चमङ्गमस्य । १चाङ्गेर्यां रायमु० । चमङ्गं तदवयवो दन्तोऽस्मात् । दन्तपटुत्वे शब्दार्थचि० ।

**चाङ्गेरी** स्त्री चाङ्गं दन्तपटुत्वमीरयति ईर-अण् उप० स० गौरा०ङीष् । अम्ललोणिकायाम् (आमरुल) अमरः । "चाङ्गेरी दीपनी रुच्या लघूष्णा कफवातनुत् । पित्त-लाम्ला ग्रहण्यर्शःकुष्ठातीसारनाशिनी" भावप्र० ।

**चाङ्गेरीघृत** न० चक्रदत्तोक्ते चाङ्गेरीपके घृतभेदे तत्-पाकविधिर्यथा "नागरं पिप्पलीमूलं चित्रकं हस्तिपि-प्पली । श्वदंष्ट्रा पिप्पली धान्यं बिल्वं पाठा यमानिका । चाङ्गेरीस्वरसे सर्पिः कल्कैरेतैर्विपाचितम् । चतुर्गु-णेन दध्ना च तद्घृतं कफवातनुत् । अर्शांसि ग्रह-णीदोषं मूत्रकृच्छ्रं प्रवाहिकाम् । गुदभ्रंशार्त्तिमानाहं घृतमेतद्व्यपोहति" चक्रदत्तः

**चाट** पु॰ चुर॰ चट–भेदे अच्। आदौ विश्वासमुत्पाद्य पश्चात् धनापहर्त्तरि चौरे "चाटचारभटादिषु दत्तं भवति निष्फलम्" स्मृतिः। "चाटतस्करदुर्वृत्तमहासाहसिकादिभिः। पीड्यमानाः प्रजारक्ष्याः कायस्थैश्च विशेषतः" याज्ञ॰। "चाटाः प्रतारकाः विश्वास्य ये परधनमपहरन्ति" मिताक्षरा

**चाटपुट** पु॰ "गुरुर्लघु प्लुतश्चैव भवेच्चाटपुटाभिधः" सङ्गीतदामोदरोक्ते तालभेदे।

**चाटु** पु॰न॰ चट–ञुण्। १प्रियवाक्ये २मिथ्याप्रियवाक्ये (खोसामुदेरकथा) च। "कुर्वन् चाटुसहस्राणि अव्यक्तकलया गिरा" हरिवं॰२॰। "नो चाटुश्रवणं कृतं न च दृशा हारोऽन्तिके वीक्षितः" सा॰ द॰। स्वार्थे क। अत्रैवार्थे "विश्वस्तचाटुकशतानि रतान्तरेषु" सा॰ द॰

**चाटुकार** त्रि॰ चाटु करोति। हेत्वादौ प्राप्तस्य टस्यापवादेन "न शब्दश्लोकेत्यादिना" पा॰ अण्। सतत चाटुवाक्यकर्त्तरि। "चाटुकारमपि प्राणनाथं रोषादपास्य या" सा॰ द॰।

**चाटुपटु** पु॰ ७त॰। भण्डे (भाँड़) हारा॰।

**चाटु(टूल्लो)लोल** त्रि॰ चाटुषु लोलः (उल्लोलः। (खोसामुदे) चाटुकारे हारा॰।

**चाटुवटु** पु॰ ७त॰। विदूषके क्रीड़ासहचरे भण्डे।

**चाटूक्ति** स्त्री ६त॰। प्रियकथने। चाटुवाक्यमोक्तियत्र। २सेवायाम् हारा॰। [ कथकाले।

**चाणक** पुंस्त्री चाणकस्य ज्ञातः अण् यलोपः। चाण-

**चाणकीन** न॰ चणकस्य भवनं क्षेत्रं खञ्। चणकोत्पत्तियोग्यक्षेत्रे।

**चाणक्य** पु॰ चणकस्य मुनेर्गोत्रापत्यम् गर्गा॰ यञ्। १वात्स्यायने चन्द्रगुप्तमन्त्रिणि कौटिल्ये "नव नन्दा भविष्यन्ति चाणक्योयान् हनिष्यति" विष्णु पु॰। चन्द्रगुप्तशब्दे दृश्यम् सहि नन्दवंशोत्खातेन मौर्य्यं चन्द्रगुप्तं राज्येऽभिषिक्तवान्। बृहत् कथायां तद्विवृतिः। चाणक्येन प्रोक्तम् अण्। तत्कृतग्रन्थे २नीतिशास्त्रभेदे च। "चाणक्यं सारसंग्रहम्" चाणक्यम्। चणक+स्वार्थे ष्यञ्। ३चणकशब्दार्थे।

**चाणक्यमूलक** न॰ चणक एव चाणक्यम् तदिव मूलमस्य। (चणकमूली) ख्याते मूलकभेदे। शब्दार्थचि॰

**चाणू(नू)र** पु॰ कंसानुचरे मल्लयुद्धाभिज्ञेऽसुरभेदे। "नाम कुवलयापीडं चाणू(नू)रं मुष्टिकं तथा" हरिवं॰४२अ॰। "वराहश्च किशोरश्च मल्लौ दानवसत्तमौ। मल्लौ रङ्गगतौ तत्र यातौ चाणू(नू)रमुष्टिकौ" हरिवं॰७५अ॰। अस्य दन्त्यनकाममध्यतेति केचित्।

**चाणू(नू)रसूदन** पु॰ चाणू(नू)रं सूदयति सूदि–ल्यु। वासुदेवे कृष्णे तद्वधकथा हरिवं॰ ८७अ॰।
"ततः क्रोधाभिताम्राक्षः कंसः परमकोपनः। चाणू(नू)रमादिशद्युद्धे कृष्णस्य सुमहाबलम्" इत्युपक्रमे "दोर्भ्यां मानस्य कृष्णस्तु चाणू(नू)रं पूर्वजीविनम्। प्राहरन्मुष्टिना मूर्द्ध्नि वक्षस्याहत्य जानुना। निःसृते चास्य रुधिरे तस्य नेत्रे सबन्धने। तापनीये यथा घण्टे कक्षोपरि विलम्बिते। पपात च तरङ्गस्य मध्ये निःसृतलोचनः। चाणू(नू)रो विगतप्राणो जीवितान्ते महीतले"। चाणू(नू)रमर्दनादयोऽप्यत्र।

**चाण्ड** पुंस्त्री चण्डस्यापत्यं शिवा॰ अण्। १चण्डस्यापत्ये। चण्डस्य भावो युवा॰ अण्। २चण्डतायाम् न॰।

**चाण्डाल** पुंस्त्री चण्डाल एव स्वार्थे अण्। चण्डालशब्दार्थे अमरः। स्त्रियां जातित्वात् ङीष्।

**चाण्डालकि** पु॰ स्त्री चाण्डालस्यापत्यम् इञ् "व्यासवरुडनिषादचाण्डालेत्यादि" पा॰ अकङ्। चण्डालापत्ये।

**चाण्डालिका** स्त्री चण्डालेन निर्वृत्ता ठक्। वीणाभेदे अमरः। चण्डालेन कृता कुला॰ अण्। २चण्डालकृतवस्तुमात्रे त्रि॰

**चाण्डालिकाश्रम** न॰ भारतप्रसिद्धे तीर्थभेदे "कोकामुखे विगाह्याथ गत्वा चाण्डालिकाश्रमे" भा॰आनु॰२५अ॰।

**चाण्डाली** स्त्री चाण्डमालाति आ+ला–क गौरा॰ ङीष्। १लिङ्गिनीलतायां राजनि॰ जातौ ङीष्। २चाण्डालजाति स्त्रियाञ्च।

**चातक** पुंस्त्री चत–याचने कर्त्तरि ण्वुल्। सारङ्गे स्वनामख्याते खगभेदे स्त्रियां जातित्वात् ङीष्। अयञ्च पक्षी लावादिषु सुश्रुते पठितः। "लावाद्या विकिरास्त्वेते" वर्णिता "मधुराः कषाया दोषशमनाश्चेति" सामान्यतस्तद्गुणास्तत्रोक्ताः। "स्वगयन्त्यमूः शमितचातकार्त्तस्वराः" माघः। "किं चातकः फलमपेक्ष्य सवज्रपाताम्" उद्भटः।

**चातकानन्दन** पु॰ चातकमानन्दयति आ+नन्द–णिच्–ल्यु। १वर्षाकाले राजनि॰। २मेघे। वृष्टिजलपानस्य चातकव्रतत्वेन मेघस्य तथात्वम्।

**चातकाष्टक** न॰ काव्यभेदे काव्यसंग्रहे दृश्यम्।

**चातन** न॰ चत–णिच्–ल्युट्। १अर्द्दने २पीड़ने च।

**चातुर** त्रि॰ चतुर एव स्वार्थे अण्। १चतुरे २नियन्तरि ३नेत्रगोचरे मेदि॰। चतुर्भिरुह्यते शैषिकोऽण्। "च-तुश्चक्रयुक्ते २शकटे न॰ सि॰ कौ॰

**चातुरक्ष** न॰ चतुर्भिरक्षैर्निष्पाद्यते अण्। १क्रीडाभेदे २उपधानभेदे (गालवालिश) पु॰ मेदि॰।

**चातुरर्थिक** पु॰ चतुर्षु अर्थेषु विहितः ठक्। "तद-स्मिन्नस्तीति देशे तन्नाम्नि" ०४।२।६७। "तेन निर्वृत्तम्" ६८। "तस्य निवासः" ६९। "अदूरभवश्च" ७० पा॰ सूत्रचतुष्कोक्तार्थेषु विहिते प्रत्ययभेदे। "जनपदे लुप्" पा॰। जनपदे वाच्ये चातुरर्थिकस्य लुप् स्यात्" सि॰ कौ॰।

**चातुराश्रमिक** त्रि॰ चतुर्षु आश्रमेषु विहितः ठक्। ब्रह्मचर्य्याद्याश्रमविहिते धर्मे। "चातुर्विद्यं यथावर्णं चातुराश्रमिकान् परम्। तानहं संप्रवक्ष्यामि शाश्वतान् लोकभावनान्" भा॰ आ॰ १५ अ॰।

**चातुराश्रम्य** न॰ चत्वार आश्रमाः संघातात् कर्म॰ ततः ब्राह्मणा॰ स्वार्थे ष्यञ्। ब्रह्मचारिगृहस्थवानप्रस्थ-भिक्षुकरूपेषु आश्रमेषु "चातुर्विद्यं चातुर्होत्रं चातु-राश्रम्यमेव च" भा॰ शा॰ ४६अ॰।

**चातुरिक** पु॰ चातुरीं वेत्ति ठक्। सारथौ जटाधरः।

**चातुरी** स्त्री चतुरस्य भावः ष्यञ् षित्वात् ङीष्यलोपौ। चतुरतायां "तद्धटचातुरीतुरी" नैष॰

**चातुर्जातक** न॰ चतुर्जातकएव स्वार्थेऽण्। गुडत्वगेला नागकेशररूपे गन्धचतुष्टये राजनि॰।

**चातुर्दश** न॰ चतुर्दश्यां दृश्यते शैषिकोऽण्। १रक्षसि सि॰ कौ॰। चतुर्दश्यां भवः सन्धिवेला॰ अण्। २चतु-र्दशीभवे त्रि॰

**चातुर्दशिक** पु॰ चतुर्दश्याम् अनध्यायेऽधीते ठक्। चतु-र्दश्यामध्येतरि। "शिष्यं हन्ति चतुर्दशी" मनुना तस्या अनध्यायतोक्तेस्तथात्वम्।

**चातुर्भद्र** न॰ चतुर्भद्रमेव स्वार्थे अण्। नागरातिविषा-मुस्तागुडूचीरूपे द्रव्यचतुष्टये राजनि॰।

**चातु(र्थ)र्थिक** पु॰ चतुर्थे चतुर्थेऽह्नि भवः ठक् वुञ् वा। चतुर्थचतुर्थदिनजाते ज्वरभेदे "चातुर्थ(र्थि)कोज्वरोरुद्रो ह्यन्ये चैव ज्वरास्ततः। जम्बूफलं हरिद्रा च सर्प-स्यैव च कञ्चुकम्। सर्व्वज्वराणां धूपोऽयं हर-चातुर्थ(र्थि)कस्य च" गारुड़े १८७अ॰।

**चातुर्वर्ण्य** न॰ चत्वारो वर्णाएव चतुर्वर्णा॰ स्वार्थे ष्यञ्। ब्राह्मणादिषु चतुर्षु वर्णेषु "चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः" गीता।

**चातुर्भद्रावलेह** पु॰ चतुर्भिर्भद्रैर्निर्वृत्तः अण् कर्म॰। "कट्फलं पौष्करं शृङ्गी कृष्णा च मधुना सह। कासश्वासज्वरहरः श्रेष्ठो लेहः कफान्तकृत्" चक्रद-त्तोक्ते अवलेहभेदे।

**चातुर्भौतिक** त्रि॰ चतुर्भिः पृथिव्यप्तेजोवायुभिर्निर्वृत्तः ठक् अनुश॰द्विपदवृद्धिः। चतुर्भिर्भूतैर्निष्पादिते देहादौ नैयायिकादिमते आकाशस्यारम्भकत्वाभावात् चार्वाक-मते आकाशस्याभावात् भौतिकानां चतुर्भूतारब्धता। वेदान्त्यादिमते देहस्य पाञ्चभौतिकत्वमिति भेदः। यद्यपि मनुष्यदेहस्य पार्थिवत्वं नैयायिकैरङ्गीकृतं तथापि अन्यभूतानां तत्रोपष्टम्भकत्वात् चातुर्भौतिकत्वम् इति विवेकः।

**चातुर्महाराजिक** पु॰ चत्वारो महाराजिकाः साकार त्वेनास्त्यस्य प्रज्ञा॰ अण्। परमेश्वरे "महाराजिक चातुर्महाराजिक" भा॰ शा॰ ३४॰ अ॰ नारदकृतविष्णु-स्तुतौ। महाराजिकानां च चतुःसंख्यकगणदेवतात्वात् तस्य तदात्मकत्वेन तथात्वम्।

**चातुर्मास** त्रि॰ चतुर्षु मासेषु भवः असंज्ञायाम् अण्। चतुर्षु मासेषु भवे। २यज्ञे ३पौर्णमास्यां च स्त्री ङीप्। संज्ञायान्तु यज्ञे ण्यः। चातुर्मास्य इत्येव तत्कल्पे दृश्यम्

**चातुर्मासिक** त्रि॰ चतुरोमासान् व्याप्य ब्रह्मचर्य्यमस्य ठक्। चतुर्मासव्यापकब्रह्मचर्य्ययुक्ते कर्म्मणि। यज्ञे तु "चतुर्मासान् ण्योयज्ञे" वार्त्ति॰ ण्य। चातुर्मास्य इत्येव।

**चातुर्मास्य** त्रि॰ चतुर्षु मासेषु भवोयज्ञः "चतुर्मासान् ण्योयज्ञे" वार्त्ति॰ ण्य। चतुर्माससाध्ये यज्ञभेदे। चातुर्मास्ये च चत्वारि पर्व्वाणि वैश्वदेववरुणप्रघासशाक मेधशुनाशीरीयसंज्ञानि। तत्कर्त्तव्यप्रयोगादि का॰ श्रौ॰ ५अध्यायादौ दृश्यम्। तदारम्भकालश्च फाल्गुनीपूर्णि-मोत्तरं प्रतिपदि तत्रोक्तः। २वार्षिकचातुर्मास्यकर्त्तव्ये व्रते च यथाह वराहपु॰ "आषाढ़शुक्लद्वादश्यां पौर्णमास्यामथापि वा। चातुर्मास्यव्रतारम्भं कुर्य्यात् कर्कटसंक्रमे। अभावे तु तुलार्केऽपि मन्त्रेण नियमं व्रती। कार्त्तिके शुक्ल द्वादश्यां विधिवत् तत् समापयेत्। चतुर्ष्वपि हि तच्चीर्णं चातुर्मास्यं व्रतं नरः। कार्त्तिक्यां शुक्लपक्षे तु द्वादश्यां तत्समापयेत्"। मात्स्ये "चतुरो वार्षिकान् मासान् देवस्योत्थापनावधि। मधुस्वरोभवेन्नित्यं नरो गुड़

विसर्जनात्। तैलस्य वर्जनादेव सुन्दराङ्गः प्रजायते। कटुतैलपरित्यागात् शत्रुनाशः प्रजायते। लभते सन्ततिं दीर्घां स्थालीपाकमभक्षयन्। सदा मुनिः सदायोगी मधुमांसस्य वर्जनात्। निराधिर्नीरुगोजस्वी विष्णुभक्तश्च जायते। एकान्तरोपवासेन विष्णुलोकमवाप्नुयात्। धारणापारणोन्नाम्न गङ्गास्नानं दिने दिने। ताम्बूलवर्जनाद्भोगी रक्तकण्ठश्च जायते। घृतत्यागात् सुलावण्यं सर्वस्निग्धवपुर्भवेत्। फलत्यागेन मतिमान् बहुपुत्रश्च जायते। नमोनारायणायेति नत्वाऽनशनजं फलम्। पादाभिवन्दनाद्विष्णोर्लभेद्गोदानजं फलम्। एवमादिव्रतैः पार्थ! तुष्टिमायाति केशवः। "अत्रैव यतिमधिकृत्य काठकगृह्यम्। "एकरात्रं वसेत् ग्रामे नगरे पञ्चरात्रकम्। वर्षाभ्योऽन्यत्र वर्षासु मासांश्च चतुरो वसेत्"। एतदपवादविषयम्। "ऊर्द्ध्वं वार्षिकाभ्यां मासाभ्यां नैकस्थानवासी" इति शङ्खोक्तेः। "चातुर्मास्यगते या (द्वितीया) तु" ति॰त॰ अनध्यायोक्तौ

**चातुर्मास्यद्वितीया** स्त्री "आषाढ़े फाल्गुनोर्ज्जेषु या द्वितीया विधुक्षये। चातुर्मास्यद्वितीयास्ताः प्रवदन्ति महर्षयः" इति स्मृत्युक्ते आषाढादिद्वितीयाचतुष्के

**चातुर्य्य** न॰ चतुरस्य भावः ष्यञ्। चतुरतायां दक्षतायाम् "चातुर्य्यमुज्झतमनोभवदा रतेषु" सा॰ द॰ "संभोगवोह चातुर्य्यैर्हावभावमनोहरैः" भा॰ आ॰ २९०५।

**चातुर्वर्ण्य** न॰ चत्वारो ब्राह्मणादयोवर्णा एव स्वार्थे ष्यञ्। ब्राह्मणादिषु चतुर्षु १वर्णेषु "चातुर्वर्ण्यं मया सृष्टमिति" गीता। भावे—ष्यञ्। २चतुर्वर्णधर्मे। वर्णभेदेन धर्मभेदाः मत्स्ये न दर्शिताः यथा।

"चातुर्वर्ण्यहितार्थाय मनुः शास्त्रमथाकरोत्। यजनं याजनं दानं तथैवाध्यापनक्रियाम्। प्रतिग्रहञ्चाध्ययनं विप्रः कर्माणि कारयेत्। दानमध्ययनञ्चैव यजनञ्च यथाविधि। क्षत्रियस्य तु वैश्यस्य कर्मेदं परिकीर्त्तितम्। क्षत्रियस्य विशेषेण प्रजानां परिपालनम्। कृषिगोरक्ष वाणिज्यं वैश्यस्य परिकीर्त्तितम्। शूद्रस्य द्विजशुश्रूषा सर्व्वशिल्पानि चाप्यथ। क्षमा सत्यं दमः शौचं सर्व्वेषामविशेषतः। ब्राह्मणः क्षत्रियो वैश्य स्त्रयोवर्णा द्विजातयः। तेषां जन्म द्वितीयन्तु विज्ञेयं मौञ्जिबन्धनम्। आचार्य्यस्तु पिता प्रोक्तः सावित्री जननी तथा। ब्रह्मक्षत्रविशाञ्चैव मौञ्जीबन्धनजन्मनि। विप्राः शूद्रसमास्तावद्विज्ञेयास्तु विचक्षणैः। यावद्वेदे न जायन्ते द्विजाज्ञेया स्तु तत्परम्"। "ब्राह्मणः क्षत्रियोवैश्यः शूद्रश्चेति वर्णाश्चत्वारः। तेषामाद्याद्विजातयः। तेषां निषेकाद्यः श्मशानान्तो मन्त्रवत् क्रियासमूहः। तेषाञ्च धर्माः, ब्राह्मणस्याध्यापनं क्षत्रियस्य शस्त्रनिष्ठता वैश्यस्य पशुपालनं शूद्रस्य द्विजातिशुश्रूषा। द्विजानां यजनाध्ययने। अथैतेषां वृत्तयः ब्राह्मणस्य याजनप्रतिग्रहौ, क्षत्रियस्य क्षितित्राणं, कृषिगोरक्षवाणिज्यकुसीदयोनिपोषणानि वैश्यस्य, शूद्रस्य सर्वशिल्पानि। आपद्यनन्तरा वृत्तिः" विष्णु सं॰।

**चातुर्होतृक** पु॰ चतुर्होतृप्रतिपादकग्रन्थस्य व्याख्यानः कृदन्तात् ठञ्। चतुर्होतृप्रतिपादकग्रन्थव्याख्याने। चतुर्होतॄणां कर्म अण्। चातुर्होत्र चतुर्णां होतॄणां कर्मणि। चतुर्होतृमन्त्रे उदा॰।

**चातुष्टय** पु॰ चतुष्टयं कलापभेदवृत्तिं वेत्ति अधीते वा अण्। "लुगस्य कोपधात्" पा॰ कोपधात् प्रत्ययस्य लुकोविधानात् अस्य च कोपधत्वाभावात् न लुक्। चतुष्टय इत्यभिज्ञे

**चातुष्प्राश्य** न॰ चतुर्भिरत्विग्भिर्ब्रह्मादिभिर्ऋत्विग्भिः प्राश्यम् ततः स्वार्थेऽण्। चतुरृत्विजां भोजनपर्य्याप्ते ओदने। "चातुष्प्राश्यमोदनं पचन्ति" शत॰ब्रा॰ २।१।४।४। "दर्शपौर्णमासानोआग्नेयदक्षिणाग्निपक्वं चातुष्प्राश्यं ब्राह्मणान् भोजयेत्" का॰ श्रौ॰ ४।६।१०।

**चात्र** न॰ चाय-करणे ष्ट्रन्। अग्निमन्थनयन्त्रावयवभेदे। अन्नुवारयाख्ये ६२ पृष्ठे दृश्यम्। तत्र च पृष्ठे चत्रमिति पाठः प्राचीनमुद्रितग्रन्थपाठानुसारेण प्रमादात् मुद्रितः स्वत्र चात्रमित्येव पाठः साधुः का॰ श्रौ॰ ४।८।२६ सूत्रभाष्ये तत्स्वरूपादिकम् कर्क आह।

"अथो पुरस्तात् प्रत्यङ्मुखे स्थिते मन्थनं कुर्य्यात्। तत्र च प्रथममधरारणिमुत्तराग्रां निधाय उत्तरारण्या ईशानदिग्भागादष्टाङ्गुलदीर्घं द्व्यङ्गुलविपुलं प्रमन्थं छित्त्वा तस्य मूलं चात्रबुध्ने प्रवेश्य अधरारण्या मूलादष्टाङ्गुलं त्यक्त्वा अग्रात् द्वादशाङ्गुलं त्यक्त्वा तदन्तराले अङ्गुलचतुष्टयपरिमिते पूर्वारण्यन्ते मन्थानं कृत्वा चात्रबुध्नोत्तस्य प्रमन्थस्याग्रं तत्र निधाय चात्राग्र कीलकाग्रमोपस्य दृढपाशौवौलौ निधाय यन्त्रं धारयित्वा चात्रं नेत्रेण प्रदक्षिणं निर्वेष्टयित्वा तथा मन्थनं कुर्य्यात् यथा जातोऽग्निः प्राच्यां पतति तत्र यजमानः प्राङ्मुखो यन्त्रधारणं करोति पत्नी चात्रं

नेमेव निर्वर्त्तयित्वा गमनं करोति तथा शाखान्तरादध्वर्युश्च तस्मादध्वर्युः प्रत्यङ्मुखोऽभिमन्त्रतीति”। चात्वं च खादिरं द्वादशाङ्गुलदीर्घं वर्त्तुलम् अग्रे लोहकीलयुतम् मूले प्रमन्थाग्रप्रवयनार्थगर्त्तयुतम् मूलेऽग्रे च लोह पट्टिकया संयुक्तं कार्यम्”। “औवीली च खादिरी द्वादशाङ्गुलदीर्घा चतुरङ्गुलविपुलाधोभागे यथा चात्राग्रस्थितकीलकोपरिस्थापनार्थलोहपट्टिकायुक्ता उपरिभागे वर्त्तुला च कार्या। नेत्रं च गोवालशणसूत्रैस्त्रिवृत् व्याममात्रं कार्यम्। केचित् प्रमन्थाग्रेण मन्थन्ति, अपरे तु मूलेन”

**चात्वाल** पु० चत—वालञ्। १यज्ञकुण्डे २दर्भे ३उत्ताने ४उत्कटे च विश्वः ४उत्तरवेद्याङ्गे स्तूपे ५तत्खातावटे च “चात्वालोत्करावन्तरेण सञ्चरः” का० श्रौ० १।२।४२। “चात्वालश्च उत्करश्च चात्वालोत्करौ तौ अन्तरेण तयोरन्तरालेन सर्वेषां विहितकार्यार्थं सञ्चरः गमनागमनमार्गो भवति। अयं च सोत्तरवेदिकेषु वरुणप्रघासमहाहविःपशुसोमेषु ज्ञेयः चात्वालस्येष्वेव सत्त्वात् सोत्तरवेदिकेषु सर्वेष्वनेनैव मार्गेण गमनागमने कार्ये” कर्कः। “तच्चात्वालं परिलिखति या चात्वालस्य मात्रा नात्र मात्रास्ति यत्रैव स्वयं मनसा मन्येताथेयोत्करं तच्चात्वालं परिलिखेत्” शत० ब्रा० ३।५।१।२६। “या चात्वालस्य मात्रा यैवोत्तरवेदेरुक्ता सैवेत्यर्थः चात्वालखननोत्पन्नयैव मृदोत्तरवेदिकरणात्” भा०।

“चात्वालं चात्वालवत्सु” आश्व० श्रौ० ११।६। “चात्वालो नामावटः पशुसोमादिष्वस्ति येषु उत्तरवेद्यर्थं यत्र मृत् चात्वाल्लियते तद्वत्सु” ना० रा० उक्तेः उत्तरावेद्यर्थमृदाहरणजातावटएव चात्वाल इति गम्यते।

**चानराट** न० चनराटस्येदम् अण्। चनराटस्थपश्चात्स्याने तस्मिन् शब्दे परे दिक्शब्दा अन्तोदात्ताः। “पूर्वचानराटम्” सि० कौ०।

**चान्दनिक** त्रि० चन्दनेन सम्पद्यते ठक्। चन्दनेन कृतशोभे “वपुश्चान्दनिकं यस्य कार्यवेदनिकं ज्ञयम्” भट्टिः।

**चान्द्र** त्रि० चन्द्रस्येदम् अण्। १चन्द्रसम्बन्धिनि दिनमासादौ २तन्माने च। “अर्काद्विनिःसृतः प्राचीं यद्यात्यहरहः शशी। तच्चान्द्रमानमंशैस्तु ज्ञेया द्वादशभिस्तिथिः” सू० सि०

“सूर्यात् समागमं त्यक्त्वा विनिःसृतः पृथग्भूतः सन् चन्द्रोऽहरहः प्रतिदिनं यत् यत्सङ्ख्यामितं प्राचीं पूर्वां दिशं गच्छति तत् प्रतिदिनं चान्द्रमानं तत्तु तत्सम्बन्धि अंशमितम्। ननु सौरदिनं सूर्यांशेन यथा भवति तथैतद्रूपैर्भागैः कियद्भिः पूर्णं चान्द्रं दिनं भवतीत्यत आह। अंशैरिति। भागैस्तु कारात् सूर्यचन्द्रान्तरोत्पन्नैस्तस्य तद्रूपत्वात्। द्वादशभिर्द्वादशसङ्ख्याकैस्तिथिर्ज्ञेया। एकं चान्द्रदिनं ज्ञेयमित्यर्थः। एतदुक्तं भवति सूर्यचन्द्रयोगाच्चान्द्रदिनप्रवृत्तेः पुनर्योगे मासस्माप्तेर्भगणान्तरेण चान्द्रो मासस्त्रिंशच्चान्द्रदिनात्मकः। अतस्त्रिंशद्भिर्द्वैर्भगणांशान्तरं तदैकेन किमिति। द्वादशभागैरेकं चान्द्रदिनम्। “दर्शः सूर्येन्दुसङ्गमः” इत्यभिधानाद्दर्शावधिकमासस्य त्रिंशत्तिथ्यात्मकत्वात् तिथिश्चान्द्रदिनरूपेति। अथ चान्द्रव्यवहारमाह” रं०न०“तिथिः करणमुद्वाहः क्षौरं सर्वक्रियास्तथा। व्रतोपवासयात्राणां क्रिया चान्द्रेण गृह्यते” सू० सि०।

“तिथिः प्रतिपदाद्या करणं बवादिकमुद्वाहो विवाहः क्षौरं चौलकर्म। एतदाद्याः सर्वक्रिया व्रतबन्धाद्युत्सवरूपा व्रतोपवासयात्राणां नियमोपवासगमनानां क्रिया करणम्। तथा समुच्चयार्थकः। चान्द्रमानेन गृह्यते अङ्गीक्रियते। अथ चान्द्रमासं प्रसङ्गात् पितृमानं चाह” रं०ना०।

“त्रिंशता तिथिभिर्मासश्चान्द्रः पित्र्यमहः स्मृतम्” सू०सि० “कालेन येनैति पुनः शशीनं क्रामन् भचक्रं विवरेण तस्य। मासः स चान्द्रोऽङ्कयमाः कुराम्नः पूर्णेषवः। २६।३१।५०। स्वतत्कुदिनप्रमाणम्” सि०शि० “दर्शान्ते किल शशी रविणा युक्तो भवति। ततो द्वावपि पूर्वतो गच्छतः। तयोः शशी शीघ्रगत्वात् प्रत्यहं गत्यन्तरेणाग्रतो याति। एवं गच्छन् चक्रकला २१६०० तुल्यमन्तरं यदाग्रतो याति तदा रविणा योगमेति। तयोः कालयोरन्तरालं चान्द्रमासः। तत्प्रमाणमनुपातेन। चन्द्रार्कयोर्मध्यगती व्यादौ सम्यक् सावयवे कृत्वा यदि गत्यन्तरेणैकं कुदिनं लभ्यते तदा चक्रकलातुल्येनान्तरेण कियन्तीत्यनुपातेन चान्द्रमासे कुदिनानि लभ्यन्ते। २६।३१।५०”। प्रमिता०। अधिकं गौणचान्द्रशब्दे २७३५ पृ० दृश्यम्। आपस्तम्बः “चन्द्रमाः कृष्णपक्षान्ते सूर्येण सह युज्यते। सन्निकर्षादथारभ्य सन्निकर्षावधिः परम्। चन्द्रार्कयोः रवेर्मासश्चान्द्र इत्यभिधीयते” विष्णु ध०। २चान्द्रायणव्रते न०। “चान्द्रं कृच्छ्रं तदर्द्धं च ब्रह्मक्षत्रविशां विधिः” प्रा० त०। “चान्द्र

चान्द्रायणम्" रघु०। ३चन्द्रकान्तमणौ पु० हेमच०। ४चन्द्रसम्बन्धिमात्रे त्रि० स्त्रियां ङीप् "गुरुकाव्यानुगां बिभ्रत् चान्द्रीमभिनभः श्रियम्" माघः। सा च ५श्वेतकण्टकार्य्यां राजनि०। ६आर्द्रके न० राजनि०। ७मृगशीर्षनक्षत्रे न० तस्य तद्देवताकत्वात् तच्छब्दे ४९७ पृ० उक्तम् [ राजनि०।

**चान्द्रक** न० चान्द्रमार्द्रकमिव कायति कै—क। शुण्ठ्याम्

**चान्द्रपुर** पु० १पूर्व्वदेशस्थे देशभेदे १तद्देशवासिषु ब० व०। स च देशः "अथ पूर्व्वस्याम्" इत्युपक्रमे "चान्द्रपुराः शूर्पकर्णाश्च" वृ० सं० १४अ० कूर्म्मविभागे उक्तः।

**चान्द्रभागा** स्त्री चान्द्रो भागोऽंशोऽस्याम्। चन्द्रभागानद्याम् चन्द्रभागाशब्दे दृश्यम्।

**चान्द्रमस** त्रि० चन्द्रमस इदम् अण्। १चन्द्रसम्बन्धिनि दिनमासादौ। "तिथिश्चान्द्रमसं दिनम्" ति० त० ज्योतिषसिद्धान्तीयवाक्यत्वेन पठितम्। २मृगशिरोनक्षत्रे न० तस्य तद्देवताकत्वात्तथात्वम्। ३चन्द्रसम्बन्धिमात्रे त्रि० स्त्रियां ङीप् "लब्धोदया चान्द्रमसीव लेखा"। "पद्माश्रिता चान्द्रमसीमभिख्याम्" कुमा०। "सुरद्विपश्चान्द्रमसी सुधेव" रघुः।

**चान्द्रमसायनि** पु० चन्द्रमसोऽपत्यम् तिका० फिञ्। बुधग्रहे हला०। पृषो०। चान्द्रमसायनोऽप्यत्र।

**चान्द्रमास** पु० कर्म०। चन्द्रसम्बन्धिमासे चान्द्रमसशब्दे दृश्यम्

**चान्द्रव्रतिक** पु० चान्द्रव्रतं चान्द्रायणं वा व्रतमस्त्यस्य ठन्। १चन्द्रतुल्यव्रताचारिणि नृपे। "परिपूर्णं यथा चन्द्रं दृष्ट्वा हृष्यन्ति मानवाः। तथा प्रकृतयो यस्मिन् स चान्द्रव्रतिको नृपः" मनुः। २चान्द्रायणव्रताचारिणि च

**चान्द्रायण** न० चन्द्रस्यायनमिवायनमत्र पूर्वपदात् संज्ञायां णत्वम्। संज्ञायां दीर्घः स्वार्थेऽण् वा। व्रतभेदे तद्भेदादिकं मिता० उक्तं यथा। "तिथिवृद्ध्या चरेत्पिण्डान् शुक्ले शिख्यण्डसम्मितान्। एकैकं ह्रासयेत् कृष्णे पिण्डं चान्द्रायणं चरन्" या०। "चान्द्रायणाख्यं कर्म कुर्व्वन् मयूराण्डप्रमितान् पिण्डान् शुक्ले आपूर्य्यमाणपक्षे तिथिवृद्ध्या चरेद्वर्धयेत् यथा प्रतिपदादिषु तिथिषु चन्द्रकलानामेकैकशोवृद्धिरेवं ग्रासे। तद्वत्पिण्डान् प्रतिपद्येको द्वितीयायां द्वावित्येवमेकैकशोवर्धयन् भक्षयेद् यावत्पौर्णमासी ततः पञ्चदश्यां पञ्चदश ग्रासान् भुक्त्वा ततः कृष्णपक्षे प्रतिपदि, चतुर्दश द्वितीयायां त्रयोदशेत्येवमेकैकशो ग्रासान् ह्रासयन्नश्नीयाद्यावच्चतुर्दशी। ततश्चतुर्दश्यामेकं ग्रासं भक्षित्वेन्दुक्षयेऽर्थादुपवसेत्। तथा च वशिष्ठः। "एकैकं वर्द्धयेत्पिण्डं शुक्ले कृष्णे च ह्रासयेत्। इन्दुक्षये न भुञ्जीत एष चान्द्रायणो विधिरिति"। चन्द्रस्यायनमिवायनं चरणं यस्मिन् कर्मणि ह्रासवृद्धिभ्यां तच्चान्द्रायणम् संज्ञायान्दीर्घः (णत्वञ्च) इदञ्च यववत् प्रान्तयोरणीयो मध्ये स्थवीय इति यवमध्यमिति कथ्यते। एतदेव व्रतं यदा कृष्णपक्षप्रतिपदि प्रक्रम्य पूर्व्वोक्तक्रमेणानुष्ठीयते तदा पिपीलिकामध्यमिव सूक्ष्ममध्यं भवतीति पिपीलिकातनुमध्यमिति कथ्यते तथाहि। पूर्व्वोक्तक्रमेण कृष्णप्रतिपदि चतुर्दश ग्रासान् भुक्त्वैकैकग्रासापचयेन चतुर्दशीं यावद्भुञ्जीत ततश्चतुर्दश्यामेकं ग्रासं भक्षित्वामावास्यायामुपोष्य शुक्लप्रतिपद्येकमेव ग्रासमश्नीयात्तत एकैकोपचयभोजनेन पञ्चदशे निर्वर्त्त्यमाने पौर्णमास्यां पञ्चदश ग्रासाः सम्पद्यन्त इति युक्तैव पिपीलिकामध्यता। तथाच वशिष्ठः। "मासस्य कृष्णपक्षादौ ग्रासानद्याच्चतुर्दश। ग्रासापचयभोजी सन् पक्षशेषं समापयेत्। तथैव शुक्लपक्षादौ ग्रासम्भुञ्जीत चापरम्। ग्रासोपचयभोजी सन् पक्षशेषं समापयेदिति" यदा त्वेकस्मिन् पक्षे तिथिवृद्धिह्रासवशात् षोडश दिनानि भवन्ति चतुर्दश वा तदा ग्रासानामपि वृद्धिह्रासौ वेदितव्यौ "तिथिवृद्ध्या पिण्डांश्चरेदिति नियमात्। गौतमेन त्वत्र विशेषो दर्शितः "अथातश्चान्द्रायणं तस्योक्तो विधिः। कृच्छ्रे वपनं व्रतञ्चरेत्। श्वोभूतां पौर्णमासीमुपवसेत्। आप्यायस्व" (ऋ०१।९१।१६।) "सन्ते पयांसि (१७) नवोनवः" (ऋ० १०।८५।१९।) इति चैताभिस्तर्पणमाज्यहोमो हविषश्चानुमन्त्रणमुपस्थानञ्चन्द्रमसः। "यद्देवादेवहेडनम्" इति चतसृभिराज्यं जुहुयात्। देवकृतस्येति चान्ते समिद्भिस्तिसृभिः। ओं भूर्भुवःस्वः महः जनः तपः सत्यं यशः श्रीः ऊर्क् इट् ओजः तेजः पुरुषः धर्मः शिवः इत्येतैर्ग्रासानुमन्त्रणम्। प्रतिमन्त्रं मनसा नमःस्वाहेति वा सर्वान् एतैरेव ग्रासान् भुञ्जीत ग्रासप्रमाणमास्याविकारेण चरुभैक्ष्यसक्तुकणयावकशाकपयोदधिघृतमूलफलोदकानि हवींष्युत्तरोत्तरम्प्रशस्तानि पौर्णमास्यां पञ्चदश ग्रासान् भुक्त्वैकापचयेनापरपक्षमश्नीयात्। अमावास्यायामुपोष्यैकोपचयेन पूर्वपक्षं विपरीतमेकेषाम् एष चान्द्रायणो मासः" इति। अत्र

ग्रासप्रमाणमात्राविकारेणेति यदुक्तन्तद्वाक्याभिप्रायम् तेषां शिख्यण्डपरिमितपञ्चदशग्रासभोजनायक्तेः। क्षीरादिद्रवहविषां शिख्यण्डपरिमितत्वन्तु पर्णपुटिकादिना सम्पादनीयम्। तथा कुक्कुटाण्डाद्यामलकादीनि तु ग्रासपरिमाणानि स्मृत्यन्तरोक्तानि शक्तविषयाणि शिख्यण्डपरिमाणाल्लघुत्वात्तेषां, यत्तु नरत्व"श्वोभूतां पौर्णमासीमुपवसेदिति" चतुर्दश्यामुपवासमभिधाय पौर्णमास्यां पञ्चदश ग्रासान् भुक्त्वेत्यादिना द्वात्रिंशदहरात्मकत्वं चान्द्रायणस्योक्तम् तत्पक्षान्तरप्रदर्शनार्थम् न सार्वत्रिकम्। योगीश्वरादिवचनानुरोधेन त्रिंशदहरात्मकस्य दर्शितत्वात्। यद्येतत्सार्वत्रिकं स्यात्तदा नैरन्तर्येण संवत्सरे चान्द्रायणानुष्ठानानुपपत्तिः स्यात् चन्द्रगत्यनुवर्त्तनानुपपत्तिश्च। चान्द्रायणान्तरमाह" मिता०। "यथा कथञ्चित्पिण्डानाञ्चत्वारिंशच्छतद्वयम्। मासेनैवोपभुञ्जीत चान्द्रायणमथापरम्"या०। "पिण्डानाञ्चत्वारिंशदधिकं शतद्वयं मासेन भुञ्जीत यथाकथञ्चित्प्रतिदिनं मध्याह्नेऽष्टौ ग्रासान् तथा नक्तन्दिवसयोश्चतुरश्चतुरो वा। अथवैकस्मिंश्चतुरोऽपरस्मिन् द्वादश वा तथैकरात्रमुपोष्यापरस्मिन् षोडश वेत्यादि प्रकाराणामन्यतमेन शक्त्यपेक्षया भुञ्जीतेत्येतत् पूर्वोक्ताच्चान्द्रायणद्वयादपरं चान्द्रायणम्। अतस्तयोर्नायं ग्राससंख्यानियमः। किन्तु तत्र पञ्चविंशत्यधिकशतद्वयसंख्यैव। मनुना चैते प्रकारा दर्शिताः"अष्टावष्टौ समश्नीयात्पिण्डान्मध्यन्दिने स्थिते। नियतात्मा हविष्यस्य यतिचान्द्रायणञ्चरन्। चतुरः प्रातरश्नीयात्पिण्डान्विप्रःसमाहितः। चतुरोऽस्तमिते सूर्य्ये शिशुचान्द्रायणञ्चरन्। यथाकथञ्चित्पिण्डानान्तिस्रोऽशीतीः समाहितः। मासेनाश्नन् हविष्यस्य चन्द्रस्यैति सलोकतामिति। "तथा चत्वारिंशच्छतद्वयान्नूनसंख्यकग्राससम्पादनेऽपि संग्रहार्थमपर ग्रहणम्। यथाह यमः"त्रींस्त्रीन् पिण्डान् समश्नीयान्नियतात्मा दृढव्रतः। हविष्यान्नस्य वै मासमृषिचान्द्रायणं स्मृतमिति"। एषु च यतिचान्द्रायणप्रभृतिषु न चन्द्रगत्यनुसरणमपेक्षितमतस्त्रिंशद्दिनात्मकसावनमासेन नैरन्तर्येण चान्द्रायणानुष्ठाने यदि कथञ्चित्तिथिवृद्धिह्रासवशेन पञ्चम्यादिष्वारम्भोभवति तथापि न दोषः। यदपि सोमायनाख्यं मासव्रतं मार्कण्डेयेनोक्तम् "गोक्षीरं सप्तरात्रन्तु पिबेत् स्तनचतुष्टयात्। स्तनत्रयात्सप्तरात्रं सप्तरात्रं स्तनद्वयात्। स्तनेनैकेन षड्रात्रं त्रिरात्रं वायुभुग्भवेत्। एतत्सोमायनं नाम व्रतङ्कल्मषनाशनमिति"। तदपि चान्द्रायणधर्म्मकमेव। हारीतेनापि "अथातश्चान्द्रायणमनुक्रमिष्याम इत्यादिना सेतिकर्त्तव्यताकञ्चान्द्रायणमभिधाय"एवं सोमायनमित्यतिदेशस्याभिधानात्। यत्तु न त्वेन कृष्णचतुर्थीमारभ्य शुक्लद्वादशीपर्य्यन्तं सोमायनमुक्तम् "चतुर्थीप्रभृतिचतुःस्तनेन त्रिरात्रं त्रिस्तनेन त्रिरात्रं, द्विस्तनेन त्रिरात्रमेकस्तनेन त्रिरात्रमेवमेकस्तनप्रभृति पुनश्चतुःस्तनान्ते या ते सोम! चतुर्थी तनूस्तया नः पाहि तस्यै स्वाहा या ते सोम! पञ्चमी षष्ठीत्येवं यथार्थास्तिथिहोमाएकमाम्नाएताभ्यः पूतश्चन्द्रमसःसामान्यतां समानलोकतां सायुज्यञ्च गच्छतीति"। चतुर्विंशतिदिनात्मकसोमायनमभिहितन्तदशक्तविषयम्" मिता०। प्रायश्चित्तविवेकेऽत्र विशेषोऽभिहितो यथा "तत्र मनुः। "एकैकं ह्रासयेत् पिण्डं कृष्णे, शुक्ले च वर्द्धयेत्। उपस्पृशंस्त्रिषवणमेतच्चान्द्रायणं स्मृतम्। एतमेव विधिं कृत्स्नमाचरेद्यवमध्यमे। शुक्लपक्षादिनियतश्चरेच्चान्द्रायणं व्रतम्। अष्टावष्टौ समश्नीयात् पिण्डान्मध्यन्दिने स्थिते। नियतात्मा हविष्याशी यतिचान्द्रायणं चरन्। चतुरः प्रातरश्नीयात् पिण्डान् विप्रः समाहितः। चतुरोऽस्तमिते सूर्य्ये शिशुचान्द्रायणं स्मृतम्। यथा कथञ्चित्पिण्डानां तिस्रोऽशीतीः समाहितः। मासेनाश्नन् हविष्यस्य चन्द्रस्यैति सलोकताम्" एतत्पञ्चविधं चान्द्रायणं पिपीलिकातनुमध्यं यवमध्यं यतिचान्द्रायणं सर्व्वतोमुखं शिशुसाह्वञ्च। तथाच जावालः। पिपीलिकं यवमध्यं यतिचान्द्रायणन्तथा। चान्द्रायणं तथा ज्ञेयं चतुर्थं सर्व्वतोमुखम्। पञ्चमं शिशुसाह्वञ्च तुल्यं पुण्यफलोदयम्"। कृष्णप्रतिपदमारभ्य मासमेकं यदा क्रियते तदा पिपीलिकमध्यं भवति। शुक्लप्रतिपदारम्भे यवमध्यम्। उभयत्रामावास्यायामभोजनम्। कृष्णप्रतिपदि चतुर्द्दशग्रासभोजनारम्भे ह्रासक्रमेण चतुर्द्दश्यामेकोग्रासः अमावास्यायामभोजनमेव प्राप्नोति। तथाच वशिष्ठः"मासस्य कृष्णपक्षादौ ग्रासानद्याच्चतुर्दश"। नन्वेवं क्रमेण पञ्चविंशत्युत्तरं ग्रासशतद्वयं स्यात्। न चत्वारिंशद्ग्रासाधिकशतद्वयं तच्च याज्ञवल्क्येनोक्तम्"यथा कथञ्चित्पिण्डानां चत्वारिंशच्छतद्वयम्"। इति "यथा कथञ्चित्पिण्डानां तिस्रोऽशीतीः समाहितः" इति मनुनाप्युक्तम्। उच्यते। संयमदिवसे पौर्णमास्याममावास्यायां वा पञ्चदशग्रासभोजनेन संख्यापूरणसम्भवात्। अथ वा पञ्चदश्यादिकमेवेदं व्रतं न प्रति-

पदादिकं चतुर्दश्यामेव व्रतसङ्कल्पः यथाह गौतमः "पौर्णमास्यां पञ्चदश ग्रासान् भुक्त्वा एकैकापचयेनापरपक्षमश्नीयात् अमावास्यायामुपोष्य एकैकोपचयेन पूर्वपक्षं विपरीतमेकेषाम्"। शङ्खलिखितौ "अमावास्यां व्रतोपायनं यवमध्यम्। अमावास्यायां पञ्चदश पिण्डानश्नीयात्"। उपायनमारम्भः। युक्तञ्चेदम् "अमावास्यामुपोषण पञ्चदशकलात्मकस्य चन्द्रमसः सूर्य्यं प्रविष्टत्वात् अत एकैककलानिर्गमस्य प्रतिपदादिषु वृद्धिशब्दवाच्यत्वात्। जावालः "एकैकं वर्द्धयेद्ग्रासं शुक्ले कृष्णे च ह्रासयेत्। अमावास्यां न भुञ्जीत यवमध्यं चरन् द्विजः। एकैकं ह्रासयेत् पिण्डं कृष्णे, शुक्ले च वर्द्धयेत्। पौर्णमास्यां न भुञ्जीत पिपीलितनुमध्यमम्"। अत्र कल्पतरुव्याख्यानम् "एकैकं ह्रासयेदिति कृष्णप्रतिपदि पञ्चदश ग्रासानारभ्य एकैकापचयेनामावास्यायामेकोग्रासः तदनन्तरं शुक्लप्रतिपदि द्वौ ग्रासावेवं वृद्धिक्रमेण चतुर्दश्यां पञ्चदश ग्रासाः सम्पद्यन्ते पौर्णमास्यां चोपवासइति पिपीलिकतनुमध्यं चान्द्रायणम्। एवं यवमध्ये शुक्लप्रतिपदि एकोग्रासः एवमेकैकोपचयने पूर्णिमायां पञ्चदश ग्रासाः कृष्णप्रतिपदि चतुर्दश ग्रासा एवमेकैकापचयेन अमावस्यायामुपवासः"। ऋषिचान्द्रायणमाह यमः "त्रींस्त्रीन् पिण्डान् समश्नीयान्नियतात्मा दृढव्रतः। हविष्यान्नस्य वै मासमृषिचान्द्रायणं स्मृतम्"। अत्र चत्वारिंशच्छतद्वयंसंख्या नास्ति। ग्रासपरिमाणमाह पराशरः। "कुक्कुटाण्डप्रमाणन्तु यावान् वा प्रविशेन्मुखम्। एतं ग्रासं विजानीयाच्छुद्ध्यर्थं कायशोधनम्"। सकलचान्द्रायण एव चतुर्दश्यामुपवासं कृत्वा अपरदिने पञ्चदश्यां संयमः कार्य्यः तत्फलमाह। वौधायनः। "शुक्लाञ्चैव चतुर्दशीमुपवसेत् कृष्णां चतुर्दशीं वा केशश्मश्रुनखरोमाणि वापयित्वा" इत्यभिधाय तिथिनक्षत्रादिहोमं प्रत्यहमुक्तवान् विस्तरभयान्न लिखितम्"।

"एकमाप्त्वा विपापोविपाप्मा सर्व्वमेनोहन्ति द्वितीयमाप्त्वा सपूर्व्वान् दशापरानात्मानञ्चैकविंशं पङ्क्तिञ्च पुनाति संवत्सरञ्चाप्त्वा चन्द्रमसः सलोकतामाप्नोतीति" गौतमः। एवञ्च सर्व्वविधचान्द्रायणे चान्द्रस्य चन्द्रसम्बन्धिनो लोकस्यायनं यस्मादिति व्युत्पत्तिरित्यवधेयम्। अस्य पुंस्त्वमपि "एष चान्द्रायणोविधिः" प्राशुक्तस्मृतेः अत्र तस्येदमित्यर्थेऽणि तत्र चान्द्रायणशब्दस्य तत्सम्बन्धिवाचकत्वात् पुंस्त्वमित्यन्ये। चान्द्रायणव्रताशक्तौ तत्प्रत्याम्नायधेनुमूल्याद्युक्तं प्रा० वि० आपस्तम्बः "कापालिकान्नभोक्तॄणां तन्नारीगामिनां तथा। ज्ञानात् कृच्छ्राब्दमुद्दिष्टमज्ञानादैन्दवद्वयम्" तथा रजकाद्यन्त्यजाधिकारे यमः "भुक्त्वा चैषां स्त्रियो गत्वा पीत्वापः प्रतिगृह्य च। कृच्छ्राब्दमाचरेज्ज्ञानादज्ञानादैन्दवद्वयम्"। ज्ञानतः कृच्छ्राब्दं त्रिंशद्धेनुदानसमानं विधायाज्ञाने तदर्द्धं चान्द्रायणद्वयं विदधाति। तेन चान्द्रायणद्वये पञ्चदश धेनवः अर्थादेकस्मिंश्चान्द्रायणे सार्द्धसप्तधेनवः। यत्रैकमेव चान्द्रायणं तत्रार्द्धधेनोरसम्भवाद्धेन्वष्टकं देयम्। शिशुचान्द्रायणे तु पादोनधेनुचतुष्टयम्। यतोऽत्र प्रात्यहिकाष्टग्रासपरिमाणेन मासैकेन चत्वारिंशदुत्तरग्रासशतद्वयेन द्वात्रिंशदुत्कृष्टस्येति व्यवस्थया सार्द्धसप्तदिनभोजनं पर्य्यवस्यति सार्द्धद्वाविंशतिश्चोपवासाःपर्य्यवस्यन्ति। अतः सङ्कलनया पादोनप्राजापत्यचतुष्टयं स्यात्। यद्यपि यवमध्यपिपीलिकतनुमध्यचान्द्रायणयोरप्येतावन्त एव ग्रासास्तथापि वचनात् तुरुटिद्धुपवासैः क्लेशातिशयाच्च सार्द्धसप्त धेनवः। अत्र तु तदभावान्न्यायाच्च पादोनधेनुचतुष्टयमेव। एवं यतिचान्द्रायणसर्व्वतोमुखचान्द्रायणर्षिचान्द्रायणेषु बोध्यम्" प्रा० वि०।

मिताक्षरायां विशेष उक्तो यथा "चान्द्रायणविषयभूतेषु पुनरुपपातकेषु प्राजापत्यत्रयं तदशक्तस्य प्रत्याम्नायस्तावानेव। यत्पुनश्चतुर्विंशतिमतेऽभिहितम् "अष्टौ चान्द्रायणे देयाः प्रत्याम्नायविधौ सदेति" तदतिधनिनः पिपीलिकामध्यादिचान्द्रायणप्रत्याम्नायविषयम्। मासातिकृच्छ्रविषयभूते पुनरुपपातके सार्द्धसप्तप्राजापत्याः प्रत्याम्नायाश्च धेन्वादयस्तावन्त एव। यच्च चान्द्रायणस्यापि तत्रैव प्रत्याम्नानमुक्तम्। "चान्द्रायणं मृगारेष्टिः पवित्रेष्टिस्तथैव च। मित्रविन्दापशुश्चैव कृच्छ्रमासत्रयन्तथा। नित्यनैमित्तिकानाञ्च काम्यानाञ्चैव कर्म्मणाम्। इष्टीनामपशुबन्धानामभावे चरवः स्मृताः" इति। तदपि चान्द्रायणाशक्तस्य। यत्तु कृच्छ्रमासत्रयन्तथेति कृच्छ्राष्टकमत्याम्नातम्। तदतिजठरमूर्खविषयम्। "चान्द्रायणस्त्रिभिः कृच्छ्रैरिति दर्शितत्वादित्यलमतिप्रपञ्चेन।" ऐन्दवादयोऽप्यत्र।

चान्द्रायणिक त्रि॰ चान्द्रायणमावर्त्तयति ठञ्। चान्द्रायणव्रतानुष्ठायिनि राजनि॰।

**चान्द्री** स्त्री चन्द्रस्येयम् अण् । १चन्द्रपत्न्यां २ज्योत्स्ना-यां । तत्तुल्यशुभ्रत्वात् ३श्वेतकण्टकार्याञ्च राजनि० । ४चन्द्रसम्बन्धिन्यां स्त्रियां चान्द्रशब्दे उदा० ।

**चाप** पु० चपस्य वंशभेदस्य विकारः अण् । १धनुषि, अमरः मेषावधिकेऽ२नवमे राशौ च "इत्थगुणमाश्रिते चापै-रसिचर्मायुधैः खड्गे" मनुः । "स चापमुत्-सृज्य विवृद्धमत्सरः" रघुः । "कलायमसितश्चापः पञ्चशाद्वूलरक्षणः" भा० वि० ४२अ० । ३वृत्तक्षेत्रार्द्धे "दलीकृतं चक्रमुशन्ति चापम् कोदण्डखण्डं खलु तस्य गोलम्" सि० शि० । ज्याभेदेन चापभेदा नयनं च लीला० दर्शितं० तच्च वाक्यं जीवशब्दे २४०४ दर्शितम् । [ शब्दार्थ चि० ।

**चापपट** पु० चापस्यापावयवस्य पटः पत्रमस्य । पियालवृक्षे

**चापल** न० चपलस्य भावः कर्म्म वा अण् । अविमृश्य-कारिताक्रमे प्रयोजनं विनाऽपि पाण्यादेश्चालनकर्म्मे वा १चपलकर्म्मणि चपलशब्दे उदा० "मात्सर्यद्वेष-रागादेश्चापलं स्वनवस्थितिः" सा०द० २उक्तलक्षणे नव-स्थाने च । ष्यञ् । चापल्यमप्यत्र ।

**चापिन्** पु० चापोऽस्त्यस्य इनि । १धनुर्द्धारिणि योधभेदे । २शिवे पु० । "त्वं गदी त्वं शरी चापी खट्वाङ्गी झर्झरी तथा" भा०शा०२८६अ० । दक्षकृतशिवस्तुतौ ३धनूराशौ च । "चापी नरोऽश्वजनो मकरोमृगास्यः" ज्यो०त०

**चाफट्टि** पुंस्त्री चफट्टेर्गोत्रापत्यम् इञ् । चफट्टेर्गोत्रापत्ये स्त्रियां ङीप् । यूनि—तौल्वला० फक् तस्य न लुक् । चाफट्टायनि यूनि तदपत्ये स्त्रियां ङीप् ।

**चामर** पुंन० चमर्य्याः विकारः तत्पुच्छनिर्म्मितत्वात् । चमरीपुच्छकृतव्यजने अमरः । चामरलक्षणादिकमुक्तं युक्तिकल्पतरौ यथा

"अथ चामरोद्देशः । "हंसदयोत्तनः शुक्लः सुवर्णं वलिभूषितः । हीरैश्चालङ्कृतो राज्ञां भव्यमानसुख-प्रदः । बलेश्चामरदैर्घ्याद्वा आयामत्वं प्रकाशितम् । भव्यो भद्रोजयः शीलः सुखः सिद्धबलः स्थिरः । विनस्यो कैत्रसंज्ञया दिनेशादिदिशां भुवाम् । सौवर्णं राजतं युग्मं तद्देशानां महीभुजाम् । योजयेदिति निखिलं ब-लिकल्पनकर्म्मणि । स्थलजं जाङ्गलोराजा कानूपो जलजं वहेत् । हीरश्च पद्मरागश्च वैदूर्य्यं नीलएव च । मणिर्वलिषु योक्तव्यो ब्रह्मादीनां यथाक्रमम् । शुक्लो रक्तोऽथ पीतश्च नानावर्णो यथाक्रमम् । चामरो राज-केशस्य न सामान्यस्य भूपतेः । न भव्यमानसो नूनं चामरं शुभमावहेत्" । अथ चामरपरीक्षा । "स्थलजं जलजं चेति चामरं द्विविधं विदुः । मेरौ हिमालये विन्ध्ये कैलासे मलये तथा । उदयेऽस्तगिरौ चैव गन्धमादनपर्व्वते । एवमेतेषु शैलेषु याश्चमर्य्यो भव-न्ति हि । तासां बालस्य जायेत चामरेत्यभिधा भुवि । आपीताः कनकाद्रिजा हिमगिरेः शुभ्रा मता विन्ध्य-जाः कैलासादसिताः सिता मलयजाः शुक्लास्तथा पिङ्गलाः । आरक्ता उदयोद्भवाश्चमरजा आनीलशुक्ल-त्विषः कृष्णाः केचन गन्धमादनभवाः प्रावृड्विषश्-चामराः । अन्येषु प्रायशः कृष्णाश्चामराः सम्भवन्ति हि । ब्रह्मक्षत्रियविट्शूद्रजातय स्तास्तुर्विधाः । चमर्य्यः पर्व्वतोद्भूता यथापूर्वं शुभावहाः । दीर्घ-बालाः सुलघवः स्निग्धाङ्गाश्चापि कोमलाः । विरलाः स्ततुपर्वाश्चमर्य्यो ब्रह्मजातयः । विना संस्कार मप्यासां चामरं विमलं भवेत् । दीर्घबालाः सुगुरवः क्षत्रियास्तु भृशं घनाः । विज्ञेया स्थूलपर्वाणश्चमर्य्यो वैश्यजातयः । संस्कारे चाप्यसंस्कारे न स्वभावं त्यजे-दिदम् । खर्ववालाः सुलघवः कोमलाङ्गाः भृशं घनाः । चमर्य्यस्तनुपर्वाणो विज्ञेयाः शूद्रजातयः । संस्कारे-णापि मलिनमासां चामरमिष्यते । दीर्घता लघुता चैव स्वच्छता घनता तथा । गुणाश्चत्वार इत्येते चामराणां प्रकीर्त्तिताः । खर्वता गुरुता चैव वैवर्ण्यं मलिना-ङ्गता । दोषाश्चत्वार इत्येते चामराणां प्रकीर्त्तिताः । दीर्घे दीर्घायुराप्नोति लघौ भीतिविनाशनम् । स्वच्छे-स्त्वाङ्गनकीर्त्तिभ्यां घने स्युः स्थिरसम्पदः । खर्वे खर्वा-युर्वृद्धिः गुरुर्दुःखभयप्रदः । विरले रोगशोकाभ्यां मलि-ने मृत्युमादिशेत्" । इति स्थलजम् । अथ जलजम् । "लवणेक्षुसुरासर्पिर्दधितोयपयोऽब्धिषु । यथोत्तरं शुभ-वहाश्चमर्य्यः सप्त सप्तसु । पुच्छानि तासां कृत्तानि जन्तुभिर्मकरादिभिः । कदाचिदुपलभ्यन्ते तत्तीरे पुण्य-शालिभिः । लवणाब्धिसमुद्भूतं पीतं गुरु तथा लघु । वह्नौ क्षिप्तस्य बालस्येत् किञ्चित् चटचटायते । इक्षु-सिन्धूद्भवं ताम्रं चामरं विमलं लघु । मक्षिका मशका-श्चैव तस्मिन् व्रजति चामरे । सुराब्धिजातं कलुषं कर्वूरं पुरुकर्कशम् । तद्गन्धेनैव माद्यन्ति अपि दृष्ट्वा मत-ङ्गजाः । सर्पिःसिन्धुभवं स्निग्धं श्वेतापीतं घनं लघु । वायुरोगाः प्रशाम्यन्ति तस्य वीजनवायुना । जलज-

स्निग्धवृत्तं पाण्डु दीर्घं लघु घनं महत्। अस्य वातेन नश्येयुस्तृष्णामूर्च्छामदोभ्रमः। नारिष्टं न भयं तस्य यस्येदं चामरं गृहे। क्षीरोदसम्भवं श्वेतं दीर्घं लघु घनं महत्। अस्य चामरवातस्य विज्ञेयो गुणविस्तरः। नाल्पेन तपसा लभ्यो देवानामपि जायते। ह्रियतेऽभ्यन्तरे सिद्धैर्नागैः सम्पत्तिलोलुपैः। एषां पर्य्यवदुच्येयं जातिदोषगुणादिकम्। स्थलजे जलजे चैव भाव्यमेतद्विशेषणम्। स्थलजं सुखदंष्ट्रं हि दाहे भिषभिषायते। जलजं वह्निदंष्ट्रं महाल्पं धूममुद्गिरेत्। चामराणां समुद्दिष्टमित्येवं लक्षणद्वयम्। एवं विलक्षणं यो धत्ते स राजा सुखमश्नुते। जलजं चामरं राजा यो धत्ते जाङ्गलेश्वरः। तस्याचिरात् कुलं वीर्यं लक्ष्मीरायुश्च नश्यति। अनूपाधीश्वरो राजा यो वहेत् स्थलजं तथा। तस्य तानि विनश्यन्ति लक्ष्मीरायुर्यशो बलम्। नालं वर्णदृते तेषां विधेयं शिल्पिना क्रमात्। संस्कारो वालुकायन्त्रे मसूरदलिकादिभिः। तदुष्णवलिकाघातात् कलिमत्वं विपद्यते"।

"सचामरे देवमसेविषाताम्" कुमा०। "गच्छन्नसुचलितचामरचारुमन्वम्" माघः। "शशिप्रभं छत्रमुभे च चामरे" रघुः। अस्य स्त्रीत्वमपि वा ङीप्। तत्रार्थे भरतः।

**चामरग्राह** त्रि० चामरं गृह्णाति ग्रह—अण् उप० स०। चामरेण वीजनकर्त्तरि स्त्रियां टाप् सुग्धबोधमते अण् ङीप् इति भेदः। ततः रेवत्या० अपत्ये ठक्। चामरग्राहिक तदपत्ये पुंस्त्री। णिनि चामरग्राहिन् तत्रार्थे त्रि० स्त्रियां ङीप्।

**चामरपुष्प(क)** पु० चामरमिव पुष्पमस्य। १क्रमुके, २काशे, ३केतके ४आम्रे च मेदि० एषां चामरतुल्यपुष्पकत्वात् तथात्वम्। वा कप्। तत्रार्थे जटा०।

**चामरिन्** पुंस्त्री चामरमिव केशरोऽस्त्यस्य इनि। १घोटके जटाध०। २चामरयुक्तमात्रे त्रि० स्त्रियां ङीप्।

**चामीकर** न० चमीकरे स्वर्णाकरभेदे भवम् अण्। १स्वर्णे २धूस्तूरे च अमरः। "जगतीरिह स्फुरितचारुचामीकराः" माघः। तस्य विकारः अण्। ३स्वर्णमये त्रि० "सशब्दचामीकरकिङ्किणीकः" कुमा०। अस्योत्पत्त्यादिकं कनकशब्दे १६४४ पृ० उक्तम्।

**चामुण्डा** स्त्री० "यस्माच्चण्डं च मुण्डञ्च गृहीत्वा त्वमुपागता। चामुण्डेति ततो लोके ख्याता देवी भविष्यसि" देवीमा० निरुक्तनामके देवीभेदे। २परब्रह्मणः समष्टिरूपशक्तिभेदे ३ब्रह्मविद्यायाञ्च गुप्तवती। तत्र (ऐँ ह्रीँ क्लीँ चामुण्डायै विच्चे) इति चण्डिकानवार्णार्थनिरूपणे उक्तं यथा।

"निर्धूतनिखिलध्वान्ते! नित्यमुक्ते। परात्परे!। अखण्डब्रह्मविद्यायै चित्सदानन्दरूपिणि!। अनुसन्दध्महे नित्यं वयं त्वां हृदयाम्बुजे। इत्थं विज्ञापयत्येषा या कल्याणी नवाक्षरी। अस्या महिमलेशोऽपि गदितुं केन शक्यते। बहूनां जन्मनामन्ते प्राप्यते भाग्यगौरवात्। एनमर्थं गुरोर्लब्ध्वा तस्मै दत्त्वा च दक्षिणाम्। आशिषञ्च परां लब्ध्वा मन्त्रसिद्धिमवाप्नुयादित्यादि"। अत्र प्रथमश्लोके संबुद्धित्रयं ततश्चतुर्थ्यन्ततः पुनः संबुद्धित्रयमिति सप्तभिः पदैः क्रमेण मन्त्रे सप्तधा परिच्छेदः। पदानां तत्तद्भक्त्यन्तता तत्तदर्थाचेति कथितं तदुत्तरपद्यार्द्धेनाकाङ्क्षितपदानामध्याहार उक्तः। इतरत् स्पष्टम्। सच्चिदानन्दात्मकपरब्रह्मधर्म्मत्वाद्देवशक्तेरपि त्रिरूपत्वम्। तत्र चिद्रूपा महासरस्वती वाग्बीजेन (ऐँ)सम्बोध्यते। ज्ञानेनैवाज्ञाननाशात् निर्धूतनिखिलध्वान्तपदेन तद्विवरणम् युक्तमेव। नित्यत्वं त्रिकालाबाध्यत्वम्। अतएव सत्तात्वं कल्पितवियदादिप्रपञ्चविरामाधिष्ठानत्वम्। एतेन सद्रूपात्मकलक्ष्मीरूपस्य हृल्लेखया (ह्रीँ) सम्बोधनमिति व्याख्यातम्। पर उत्कृष्टः सर्वानुभवसंवेद्य आनन्द एव तस्यैव पुरुषार्थत्वात्। "आत्मनः कामाय सर्वं प्रियं भवतीति" श्रुत्या तदितरेषामपि तदर्थत्वेनानन्दस्यैव सर्वशेषितया परत्वात्। स च मानुषानन्दमारभ्योत्तरोत्तरं शतगुणाधिक्येन श्रुतौ बहुशोवर्णितः "तेषु परमातिशायी स एको ब्रह्मण आनन्द" इति परमावधित्वेनाम्नातएव परात्परः "स्वात्मानन्दलवीभूतब्रह्माद्यानन्दसन्ततिः" इति पुराणं च तेन आनन्दप्रधानमहाकालीस्वरूपस्य कामबीजेन (क्लीँ) सम्बोधनमुक्तम्। चामुण्डाशब्दो हि मोक्षकारणीभूतनिर्विकल्पकवृत्तिविशेषपरः तादर्थ्ये चतुर्थी चमूं सेनां वियदादिसमूहरूपां लुडाति लड्योरैक्यात् लाति आदत्ते स्वात्मसाक्षात्कारेण नाशयतीति व्युत्पत्तेः। पृषोदरादित्वात्सर्वं साधु" इत्याहुः। "मया तवात्रोपहृतौ चण्डमुण्डौ महासुरौ" इति पद्ये द्विवचनयोः स्वारस्येन तूलमूलभेदेनाज्ञानद्वयपरत्वम् "यस्माच्चण्डं च मुण्डञ्च गृहीत्वा त्वमुपागता।

चामुण्डे ति ततो लोके ख्याता देवी भविष्यतीति” पद्योऽपि तूलमूलाविद्यापरताऽवसेया इति रहस्यम्। विच्चे इति। चित् च, इ, इति पदत्रयात्मकं बीजक्रमेणोक्तानाञ्चित्सदानन्दानां वाचकं सम्बुध्यन्तं अस्य स्त्री ई इत्यस्य ह्रस्वे इ इति हे आनन्दमयब्रह्मरूपि इत्यर्थः। चित्पदं ज्ञानपरम्प्रसिद्धमेव चकारोऽपि नपुंसकः सन् सत्यपर इति योज्यम् अनुसन्दध्मह इत्यादिः शेषः। इत्यञ्च महासरस्वत्यादिरूपेण चिदादिरूपे! चण्डिके त्वाम्ब्रह्मविद्याप्राप्त्यर्थं वयं सर्व्वदा ध्यायेम इतिमन्त्रार्थः फलितः। तस्यायं सङ्ग्रहः “महासरस्वति चिते! महालक्ष्मि! सदात्मिके!। महाकालग्रानन्दरूपे! तत्त्वज्ञानप्रसिद्धये। अनुसन्दध्महे चण्डि! वयन्त्वां हृदयाम्बुजे” इति। यद्यपि श्रीमत्येव बीजम्महालक्ष्म्याःप्रसिद्धम्। न हृल्लेखा (ह्रीँ)। तथापि हकारशकारयोरूष्मवर्णत्वेन साजात्यादातीव भेदः। अतएव “श्रीश्च ते लक्ष्मीश्च ते पत्न्याविति” श्रुतौ शाखान्तरे श्रीपदस्थाने ह्रीपदपाठः। एवं कामबीज एव लकारस्य स्थाने रेफयोजनेन कालीबीजता रलयोश्चान्यस्थत्वेनैक्याद्रात्यन्तं भेदः। तन्त्रान्तरेषु तु कालीसरस्वत्योर्वास्तविकभेदमभिप्रेत्य बीजयोर्वैपरीत्यव्यवहारोऽपि दृश्यत इति द्रष्टव्यम्। अयं चार्थः प्राचीनैर्वर्णितत्वाय एव सम्यक्परिष्कृत्योक्तः। वस्तुतस्तु लक्षणविरोधस्य छान्दसत्वेन पृषोदरादिपाठकल्पनया च समाधानस्याविवादादन्योऽपि प्रकारः सुवचः। चमु अदने इति धातोः उण् चामुरदनीयः पदार्थः स च ब्रह्मातिरिक्तः सर्वोऽपि “अत्ता चराचरग्रहणात्” इत्यधिकरणे तथा निर्णयात् तत्खण्डयति उड्डापयति न विषयीकुरुते ब्रह्ममात्रविषयिणीति यावत्। अथवा चकार एकाक्षरनिघण्टुरीत्या चन्द्रवाचक आह्लादप्रकाशगुणयोगादिन्दु ज्ञानपर आनन्दपरो वा सन् ब्रह्मैव वक्ति। तत् आसमन्तात् मुण्डयतीति चामुण्डा मुण्डनं नामाधारापेक्षया न्यूनसत्ताकवस्तुनिरासः शिरस्सापेक्षया न्यूनसत्तावतामेव केशानां वपने प्रयोगात्। गौड़पादीयभाष्ये तु शरीरराहित्यलक्षणम् मुण्डनं मुण्डकोपनिषदि प्रोक्तं अथवा। चानाम्बुजानां मुखानां वा मुण्डमिव शीर्षमिव स्थिता सर्वोत्तमा चरमवृत्तिरूपा ब्रह्मविद्येति यावत्। अथ चण्डिकारूपदेवतापरएव चामुण्डाशब्दः। अत एव मन्त्रान्ते वह्निजाया योजनेन होमे चामुण्डाया इदमित्येव त्यागो विधिशब्दस्य मन्त्रत्वे दृव्यविकरणन्यायसिद्धो युज्यते। चतुर्थीबलाच्च नमःशब्दस्यैवाध्याहारः। बीजत्रयमप्यव्ययरूपं चतुर्थ्यन्तमेव व्यष्टिदेवतात्रयवाचकमभेदद्योतकं तद्विशेषणम् विच्चे इत्यप्यखण्डमव्ययं स्वरादेराकृतिगणत्वात्। मन्त्रस्य पदखण्डशो न्यासप्रकरणेऽस्य युगलस्य विभजनं विनैव न्यासविधानात्। भगमालिनी नित्यामन्त्रादिषु बहुषु तस्य प्रयोगसत्त्वेन तत्रोक्तार्थरीत्या निर्वाहाभावाच्च ततश्च हे अम्ब बन्धनकरणीभूतामिमां रज्जुं ग्रन्थिविसर्जनादिना मोचयेति। स्त्री सम्बोध्यकमोक्षप्रार्थनारूपो विशिष्टस्तदर्थः। यदापि दक्षिणामूर्त्तिसंहितायां भगमालिनीमन्त्रस्य देवतागणनावसरे “अमोघां चैव विच्चाञ्च तथेशीं क्लिन्नदेवतामिति” पाठाद्विच्चानामिका काचिद्देवतैवेत्यालोच्यते तदापि परिकरालङ्कारेण साभिप्रायं चामुण्डाविशेषणम्”।

**चाम्पिला** स्त्री चपि—भावे अङ् चम्पैव चाम्पा ततः अस्त्यर्थे इलच्। चम्पानद्याम् त्रिका०।

**चाम्पेय** न० चम्पायां नद्यां जम्बुनद्यां भवं ढक्। १स्वर्णे २धुस्तूरे च अमरः। ३चम्पके ४नागकेशरे च पु०किञ्जल्के न० स्वार्थे क तत्रार्थे राजनि०। तत्र स्वर्णे मणिमाणिक्यचाम्पेयदुकूलेभाश्वगोधनम्” काशी० ख० २४अ०। ५चम्पायां भवे त्रि०। ६विश्वामित्रात्मजभेदे पु० “अवालिनीचिकस्यैव चाम्पेयोज्जयनौ तथा” भा० आ० ४अ०। विश्वामित्रात्मजोक्तौ।

**चाय** निशाने (चाक्षुषज्ञाने) पूजने च सक० उभ० वेट्। चायति ते आचायीत् अचासीत् अचायिष्ट अचास्त अदित्। अचचायत् त। “तं पर्व्वतीया प्रमदाश्चायिरे” माघः। “अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते” कठोप०। यङि चेकीयते। चायस्त्रिभावः। अपचिति० अपचितः।

**चाय** त्रि०चयस्य विकारः ताला०अण्। चयमये स्त्रियां ङीप्।

**चायनीय** त्रि० चाय—कर्म्मणि अनीयर्। पूजनीये “उपस्तुतिमा भराञ्चयम्” इत्यस्यार्थ्चि चित्रशब्दनिरुक्तौ चित्रं चायनीयं महनीयमिति” निरुक्तकारः १२।६।

**चायमान** पु० चयमानस्य राज्ञोऽपत्यम् शिवा० अण्। १चयमानन्टपापत्ये। “अभ्यावर्त्ती चायमानो ददाति” ऋ० ६।२८।८। “चायमानश्चयमानस्य न्टपस्य पुत्रः” भा०। चाय—शानच्। २पूजयति ३पश्यति च त्रि०

**चायु** त्रि० चाय–उण् । पूजके । "अग्ने मुछ चायवः" ऋ० १।२४।४। "चायवः पूजकाः" भा० ।

**चार** पु० चरणं चर–घञ् । १प्रणिधौ गुप्तचरे "चारैश्चानेकसंस्थानैः प्रोत्साद्य वशमानयेत्" "तत्कारप्रतिषेधार्थं चारैश्चाप्यनुचारयेत्" उपस्थाप्यास्तदर्थैव चारान् सम्यग्विधाय च"—इति च मनुः । २प्रियालवृक्षे (पियाशाल) मेदि० ३कारागारे हेम० चर–भावे घञ् ४गतौ गोप्रचारः ग्रहचारः "चारोद्याः ग्रहाः कथमघादिल्पमल्पहस्तेषु" वृ० सं० दृश्यम्। "भगणार्धेनान्तरितो ग्रहाति कथं नियतचारः" ५कम० । कार्यभेदे दूतनियोगादिकं कालिकापु० ८५अ० उक्तं यथा ।
"कृषिर्गोरक्षं वाणिज्यं खल्यानां करसाधनम् । आदानं सैन्यकरयोर्बन्धनं गजवाजिनोः । भूमेर्ग्रहणानाञ्च भोजनं सततं जनैः । प्रजानां चारवेतूनां बन्धनं चेति चाष्टकम् । एतदष्टासु वर्गेषु चारान् सम्यक् प्रयोजयेत् । कार्याकार्यविभागाय चाष्टवर्गाधिकारिणाम् । अतो चारान् नियुञ्जीयादष्ट वर्गेषु पार्थिवः । दशस्वन्येषु युञ्जीत क्रमशः शृणु तानि मे । स्वामी सचिवराष्ट्राणि मित्रं कोषो बलं तथा । दुर्गन्तु सप्तमं ज्ञेयं राज्याङ्गं गुरुभाषितम् । दुर्गयुक्तं २षड्वर्गे चारं माञ्चनि योजयेत् । तस्मादिमानि शेषाणि पञ्च चारपदानि तु । गुह्यान्ते ष्वेव पुत्रेषु सक् पृपादौ महानदी । मनूदासीनयोश्चैव बलाबलविनिश्चये । आदौ दशसु चैतेषु चारान् राजा प्रयोजयेत् । न यत् प्रकाशं जानीयात् तत्तु चारैर्निरूपयेत् । निश्चित्य तत्प्रतीकारमवश्यं क्षिप्रताचरेत् । यथानियोगमेतेषां यो यो यत्नान्यथा चरेत् । ज्ञात्वा तत्र नृपश्चारैर्दण्डयेद्वा नियोजयेत् । चारांस्तु मन्त्रिणा साङ्ग्" रहसि संस्थितो नृपः । प्रदोषसमये पृच्छेत्तदानीमेव साधयेत् । स्वपुत्रं चाथ गुह्यान्ते ये तु चारा महानसे । नियुक्तांस्तान् मध्यरात्रे पृच्छेत् यथापि मन्त्रिणि । एतान् चारान् स्वयं पश्येत् नृपतिर्मन्त्रिणा विना । अन्यांश्च मन्त्रिणा साङ्गं निरूप्य प्रदिशेत् फलम् । नैकवेशधरश्चारो नैको भीतश्चाहवर्जितः । संस्तुतो नहि सर्वत्र नातिदीर्घो न वामनः । सततं न दिवाचारी न रोगी नाल्पबुद्धिमान् । न वित्तविभवैर्हीनो न भार्यापुत्रवर्जितः । कार्यश्चारो नृपतिना गुह्यतत्त्वविनिर्णये । अनेकवेशग्रहणचमं भार्यानुतैर्युतम् । बहुदेशवचोभिज्ञं पराभिप्रायवेदकम् । दृढ़भक्तं प्रकुर्वीत चारं शक्तमसाध्वसम् । अधितिष्ठेत् स्वयं राजा कृषिमालासमेतया । वणिकपथे च दुर्गादौ तेषु शक्तान्नियोजयेत् । अन्तःपुरे मित्रसुल्यान् धीरान् वृद्धान् नियोजयेत् । षण्डान् षण्डान् तथा वृद्धान् स्त्रियो या बुद्धितत्पराः । गुह्यान्तद्वारि युञ्जीयात् स्त्रियो बुद्धिमनीषिणीः" । चरेण चरणेन निर्वृत्तम् अण् । ५कृत्रिमविषे—न० हेमच० ।

**चारक** त्रि० चारयति चर–णिच्–ण्वुल् । गवादीनां तृणादिषु गमयितरि १पशुपालके मेदि० चार–स्वार्थे क । २बन्धे ३गतौ च । ४प्रियालवृक्षे राजनि० । ५कारागारे । हेम० । "निगडितचरणा चारके निरोद्धव्या" दशकु० ।

**चारकीण** त्रि० चरकाय हितम् खञ् । चरकहिते ।

**चारचक्षुस्** पु० चारश्चक्षुरस्य । नृपे । "यस्मात् पश्यन्ति दूरस्थाः सर्वानर्थान्नराधिपाः । चारेण तस्मादुच्यन्ते राजानश्चारचक्षुषः,, रामा० ३ । ३७ । "प्रकाशांश्चाप्रकाशांश्च चारचक्षुर्महीपतिः" मनुः "गावः पश्यन्ति गन्धेन वेदैः पश्यन्ति च द्विजाः । चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः" नीतिशा० । "स्वमण्डलकार्यावलोकने चाराश्चक्षूंषि क्षितिपालानामिति" नीतिवाक्यामृतम् ।

**चारटिका** स्त्री चर–णिच् शकादि० अट् संज्ञायां कन् अतइत्वम् । नलीनामगन्धद्रव्ये राजनि० ।

**चारटी** स्त्री चर–णिच्–शकादि० अटन् गौरा० ङीष् । १पद्मचारिणीवृक्षे अमरः । २भूम्यामलक्यां राजनि० ।

**चारण** पु० चारयति कीर्त्तिं चर–णिच्–ल्यु । कीर्त्तिसञ्चारके नटे अमरः । "चाटचारणदासेषु दत्तं भवति निष्फलम्" श्रुतिः । "गन्धर्वाणां ततो लोकः परतः शतयोजनात् । देवानां गायनास्ते च चारणाः स्तुतिपाठकाः" पद्म० पु० स्व० ख० । [राजपथे हेम० ।

**चारपथ** पु० चारार्थः बहुजनगत्यर्थः पन्थाः अच् समा० ।

**चारभट** पु० चारे बुद्धिसञ्चारे भटः । धीरे हेम० ।

**चारमिक** त्रि० चरममधीते वसन्ता० ठक् । ग्रन्थसमाप्तिपर्यन्ताध्यायिनि । [ध्वजे वायौ त्रिका० ।

**चारवायु** पु० चारेण रवेरुदग्गतिभेदेन कृतो वायुः । निदा-

**चारायण** पुंस्त्री चरस्य गोत्रापत्यम् नडा० फक् । चरगोत्रापत्ये । तेषां छात्राः अण् "वृद्धाच्छः" पा० छ ।

चारायणीय तच्छात्रे। चारायणेभ्य आगतः वुञ्। चारायणक तत आगते त्रि०।

**चारिणी** स्त्री चर–णिनि ङीप्। करुणीवृक्षे राजनि०।

**चारित्र** न० चर–"चरेर्वृत्ते" उणा० णित्रन् चरित्रमेव स्वार्थे अण् वा। १चरित्रे २स्वभावे हेम०। ३कुलक्रमागताचारे शब्दार्थचि०। "चारित्रं येन नो लोके दूषितं दूषितात्मना" हरिव० १७०। ४तिन्तिड़ीवृक्षे स्त्री शब्दरत्ना०। ५मरुत्तनन्दपुत्रभेदे पु० "मरुत्तो मरुत्तन्तो देवानजनयत् सुतान्" इत्युपक्रमे "नरुष चाङ्गतिश्चैव चारित्रं अन्नपन्नगम्" हरिव० २०४ अ०।

**चारित्र्य** न० चरित्रमेव स्वार्थे ष्यञ्। चरित्रशब्दार्थे।

**चारिन्** त्रि० चर–णिनि। सञ्चारकारिणि गन्तरि "सङ्गमाय निधि गूढ़चारिणम्" रघुः "प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ" गीता स्त्रियां ङीप् स्वैरचारिणी।

**चारी** स्त्री चारी गतिभेदोऽस्त्यस्या अच् गौरा० ङीष्। गतिभेदयुक्तनृत्यक्रीडायां सङ्गी० दा० तल्लक्षणादिकमुक्तं यथा

"न हि चारीं विना नृत्ये नृत्यशास्त्रं प्रवर्त्तते। शृङ्गारादिरसानान्तु भावोद्दीपनकारिकाम्। माधुर्योद्वर्त्तना नृत्ये चारी चारुगतिर्मता"। अन्ये तु "एकपादप्रचारो यः सा चारी न निगद्यते। पादयोश्चारणं यत्र सा चारीति निगद्यते। करणानां समायोगः खण्डकः परिकीर्त्तितः। त्रिभिः खण्डैश्चतुर्भिर्वा मण्डलं समुदाहृतम्। समनखा नूपुरविद्धा तिर्य्यङ्मुखी सरला च। कातरा च कुवीरा च विश्लिष्टा रथचक्रिका। पार्ष्णिरेचितका तलदर्शिनी गजहस्तिका। पराहततला चारुताड़िताग्रमाङ्गुना। स्तम्भक्रीड़निका स्वगतास्तिका चारुरेचिका। तलोद्वृत्ता सञ्चरिता स्फुरिकापि तथैव च। लङ्घितजङ्घा सङ्कुटिता स्यादथैव मदालसा। उत्कुञ्चिता तिर्य्यगूर्द्ध्वं कुञ्चिता चापकुञ्चिता। षड्विंशति भौमचार्य्य इत्याख्याता मनीषिभिः"। अन्ये तु। "सम पादस्थिता विद्धा शकटास्याङ्घ्रिकापि च। विश्याचा ताड़िताऽऽबद्धा एकैका क्रीड़िता तथा। उरुवृत्ता छन्दिता च जनिता स्यन्दिता तथा। स्यन्दितावत् समतन्वी समोत्सारितमट्टिता। उच्छन्दिता च विज्ञेया चार्य्यः षोड़श भूमिगाः। इति भूमिचारी। आकाशचारी यथा "चारीश्चाकाशगा वक्ष्ये विक्षेपा तथरी तथा। अङ्घ्रिताड़िता भ्रमरी पुरःक्षेपा च सूचिका। अपक्षेपा जङ्घावर्त्ता विद्धा च हरिणप्लुता "अकजङ्घान्दोलिता च जङ्घाजङ्घालिका तथा। विद्युत्क्रान्ता भ्रमरिका दण्डपार्श्वेति षोड़श"। अन्ये तु।"विभ्रान्तातिक्रान्ताऽपक्रान्ता च पार्श्वक्रान्तिका। ऊर्द्ध्वजानुर्दोलपादोद्वृत्ता नूपुरपादिका। भुजङ्गत्रासिका क्षिप्ताऽऽविद्धा ताला च सूचिका। विद्युत्क्रान्ता भ्रमरिका दण्डपादा तथैव च। आकाशचारिका एताः षोड़शैव निरूपिताः"। एतास्वेव भूमिचारीष्वप्यन्तरभेदोऽस्ति। "तिर्य्यक्चारी ऊर्द्ध्वचारी अधश्चारी ति ता ऊहनीयाः।"तैलाभ्यक्तेन गात्रेण लघ्वाहारो जितश्रमः। स्तम्भे वा भित्तिदेशे वा प्रथमं ताः प्रयोजयेत्। कृत्वाहारं तथास्नात्वा भुक्त्वा तां न समाचरेत्। नृत्ये पादस्य विन्यासश्चारी सैवाभिधीयते। शृङ्गारादिरसानान्तु भवेद्दीपनकारणम्। माधुर्यं भूयसा नृत्ये नृत्यतालल्लयान्विताः। नियताङ्गविशेषाणां चारी सञ्चारतो भवेत्" स० दामो०।

**चारु** पु० चरति चित्ते–उण्। १बृहस्पतौ २मनोहरे त्रि० मेदि० "चक्रायतं चारुचमूरुचर्म्मणा "ऊर्द्ध्वप्रसारित सुराधिपचापचारु" माघः। गुणवचनत्वेन स्त्रियां वा ङीप् चार्व्वी चारुः। ३कुङ्कुमे न० शब्दार्थचि०। ४रुक्मिणीतनयभेदे पु० "चारुगर्भशब्दे दृश्यम्।

**चारुक** पु० चारु+संज्ञायां कन्। शरबीजरूपे क्षुद्रधान्यभेदे भावप्र० तद्गुणा उक्ता यथा "चारुकः शरबीजं स्यात् कथ्यन्ते तद्गुणा अथ। चारुको मधुरो रूक्षो रक्तपित्तकफापहः। शीतलो लघुरुष्यश्च कषायो वातकोपनः"। [याम् राजनि०।

**चारुकेशरा** स्त्री चारूणि केशराण्यस्याः। नागरमुस्ता-

**चारुगर्भ** पु० श्रीकृष्णस्य रुक्मिणीगर्भजाते तनयभेदे यथा "तस्याम् (रुक्मिण्याम्) उत्पादयामास पुत्रान् दश महारथान्। चारुदेष्णं सुदेष्णञ्च प्रद्युम्नञ्च महाबलम्। सुषेणं चारुगुप्तञ्च चारुबाहुञ्च वीर्य्यवान्। चारुविन्दं सुचारुञ्च भद्रचारुन्तथैव च। चारुञ्च बलिनां श्रेष्ठं सुतां चारुमतीं तथा" हरिव० ११८अ०। चारुगुप्तादयोऽप्यत्रोक्ताः तत्पुत्रभेदे।

**चारुचित्र** पु० धृतराष्ट्रपुत्रभेदे "चित्रोपचित्रौ चित्राक्षश्चारुचित्रः शरासनः" भा० आ० ११७अ०।

**चारुधारा** स्त्री चारु चारुतां धारयति धारि–अण् चार्व्वी धाराऽस्या वा। इन्द्रपत्न्यां शच्याम् त्रिका०।

**चारुनेत्र** त्रि० चारु मनोहरं नेत्रमस्य। १सुलोचने

२हरिणे पुंस्त्री त्रिका० । ३अप्सरोभेदे स्त्री "चारुनेत्रा घृताची च मेनका पुञ्जिकास्थली" काशीख० १०अ० ।

**चारुपर्णी** स्त्री० चारूणि पर्णान्यस्याः ङीप् । (गन्धभादाल) प्रसारिण्याम् राजनि० ।

**चारुपुट** पु० चारु—पुटमत्र । तालभेदे संगीतदा० ।

**चारुफला** स्त्री चारु फलमस्याः । द्राक्षायाम् राजनि० ।

**चारुयशस्** पु० श्रीकृष्णपुत्रभेदे "त्वया द्वादश वर्षाणि व्रती भूतेन शुष्यता । आराध्य पशुभर्त्तारं रुक्मिण्यां जनिताःसुताः । चारुदेष्णः सुचारुश्च चारुवेशो यशोधरः । चारुश्रवा चारुयशाः प्रद्युम्नः शम्भुरेव च । यथा ते जनिताः पुत्रा रुक्मिण्यां चारुविक्रमाः" भा० अनु० १४अ० । चारुगर्भशब्दानुक्ताः श्लोकाच्च चारुश्रवस् इत्यादयोऽपि तत्पुत्रभेदे ।

**चारुलोचन** त्रि० चारु लोचनमस्य । १सुन्दरनेत्रयुक्ते २हरिणे पुंस्त्री० स्त्रियां जातित्वात् ङीष् शब्दार्थचि० ।

**चारुवक्त्र** त्रि० चारु वक्त्रमस्य । १सुमुखे २कुमारानुचरभेदे पु० "श्वेतवक्त्रः सुवक्त्रश्च चारुवक्त्रश्च पाण्डुरः" भा० श० ४६अ० कुमारानुचरोक्तौ

**चारुवर्द्धना** स्त्री चारु चारुतां वर्द्धयति वृध—णिच्—ल्यु । १नार्य्यां राजनि० । २मनोहरतावर्द्धकमात्रे त्रि० ।

**चारुव्रता** स्त्री चारु व्रतमस्याः । १मासोपवासिन्यां स्त्रियां त्रिका० २ताडृशव्रतयुक्ते पुरुषे पु० ।

**चारुशिला** स्त्री नित्यकर्म्म० । १मणिमात्रे त्रिका० । कर्म्मधा० । २मनोहरशिलामात्रे स्त्री "कुतूहलाच्चारुशिलोपवेशम्" भट्टिः ।

**चारुशीर्ष** त्रि० चारु शीर्षमस्य । १मनोज्ञमस्तके २शक्रसखे आलम्बायने पु० । "चारुशीर्षस्तु तं प्राह शक्रस्य दयितः सखा । आलम्बायन इत्येव विश्रुतः करुणात्मकः" भा० अनु० १८अ० । स च आलम्बस्यापत्यम् ।

**चारुहासिन्** त्रि० चारु हसति हस—णिनि । १मनोहरहासिनि स्त्रियां ङीप् । सा च "अयुग्भवा चारुहासिनी" वृ० र० उक्ते २वैतालीयभेदे छन्दसि ।

**चार्च्चिक्य** न० चर्च्च—भावे ण्वुल् चर्च्चिकैव स्वार्थे ष्यञ् । चन्दनादिना गात्रलेपने अमरः । [ वेष्टिते रथे ।

**चार्म्म** पु० चर्म्मणा परिवृतो रथः अण् । चर्म्मणा सर्व्वतो

**चार्म्मण** न० चर्म्मणां समूहः अण् । चर्म्मसमुदाये ।

**चार्म्मिक** त्रि० चर्म्मणा निर्वृत्तः ठक् । चर्म्मनिर्म्मिते भाण्डादौ । "चर्म्मचार्म्मिकभाण्डेषु" मनुः । ततः पुरोहिता० भावे यक् । चार्म्मिक्य तद्भावे न० ।

**चार्म्मिकायणि** पुंस्त्री चर्म्मिणोऽपत्यम् वाकिना० फिञ् कुक् नलोपश्च । चर्म्मिणो (ढाली) नामकयोधस्यापत्ये ।

**चार्म्मिण** न० चर्म्मिणां समूहः अण् । चर्म्मिणां समूहे ।

**चार्व्वाक** पु० चारुः लोकसम्मतो वाको वाक्यं यस्य पृषो० । बृहस्पतिशिष्ये लोकायते नास्तिकभेदे तन्मतसिद्धपदार्थादि सर्व्वद० स० दर्शितं यथा ।

"अथ कथं परमेश्वरस्य निःश्रेयसप्रदत्वमभिधीयते बृहस्पतिमतानुसारिणा नास्तिकशिरोमणिना चार्वाकेण दूरोत्सारितत्वात् । दुरुच्छेदं हि चार्वाकस्य चेष्टितम् । प्रायेण सर्व्वप्राणिनस्तावत् "यावज्जीवं सुखं जीवेन्नास्ति मृत्योरगोचरः । भस्मीभूतस्य देहस्य पुनरागमनं कुतः" इति लोकगाथामनुरुन्धाना नीतिकामशास्त्रानुसारेणार्थकामावेव पुरुषार्थौ मन्यमानाः पारलौकिकमर्थमपह्नुवानाश्चार्वाकमतमनुवर्त्तमाना एवानुभूयन्ते । अत एव तस्य चार्व्वाकमतस्य लोकायतमित्यन्वर्थमपरं नामधेयम् । तत्र पृथिव्यादीनि भूतानि चत्वारि तत्त्वानि तेभ्य एव देहाकारपरिणतेभ्यः किण्वादिभ्यो मदशक्तिवत् चैतन्यमुपजायते, तेषु विनष्टेषु सत्सु स्वयं विनश्यति । "तदिह विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीति" । तत्र चैतन्यविशिष्टदेह एवात्मा देहातिरिक्त आत्मनि प्रमाणाभावात् प्रत्यक्षैकप्रमाणवादितया अनुमानादेरनङ्गीकारेण प्रामाण्याभावात् । अङ्गनालिङ्गनादिजन्यं सुखमेव पुरुषार्थः । न चास्य दुःखसंभिन्नतया पुरुषार्थत्वमेव नास्तीति मन्तव्यम् अवर्जनीयतया प्राप्तस्य दुःखस्य परिहारेण सुखमात्रस्यैव भोक्तव्यत्वात् । तद्यथा मत्स्यार्थी सशल्कान् सकण्टकान् मत्स्यानुपादत्ते स यावदादेयं तावदादाय निवर्त्तते । यथा वा धान्यार्थी सपलालानि धान्यान्याहरति यावदादेयं तावदादाय निवर्त्तते । तस्माद् दुःखभयान्नानुकूलवेदनीयं सुखं त्यक्तुमुचितम् । न हि मृगाः सन्तीति शालयो नोप्यन्ते । न हि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते । यदि कश्चिद् भीरुर्दृष्टं सुखं त्यजेत् तर्हि स पशुवन्मूर्खो भवेत् । तदुक्तम् "त्याज्यं सुखं विषयसङ्गमजन्म पुंसां दुःखोपसृष्टमिति मूर्खविचारणैषा । व्रीहीन् जिहासति सितोत्तमतण्डुलाढ्यान् को नाम भोस्तुषकणोपहितान् हितार्थी" । ननु पारलौकिकसुखाभावे बहुवित्तव्ययशरीरायाससाध्ये अग्निहोत्रादौ

विद्यावृद्धाः कथं प्रवर्त्तिष्यन्ते इति चेत् तदपि न प्रमाणकोटिं प्रवेष्टुमीष्टे अनृतव्याघातपुनरुक्तदोषैर्दूषिततया वैदिकम्मन्यैरेव धूर्त्तवकैः परस्परं कर्म्मकाण्डप्रामाण्यवादिभिर्ज्ञानकाण्डस्य, ज्ञानकाण्डप्रामाण्यवादिभिश्च कर्म्मकाण्डस्य प्रतिक्षिप्तत्वेन त्रय्या धूर्त्तप्रलापमात्रत्वेन अग्निहोत्रादेर्जीविकामात्रप्रयोजनत्वात् तथा चाभाणकः "अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् । बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः" ॥ अत एव कण्टकादिजन्यं दुःखमेव नरकं लोकसिद्धो राजा परमेश्वरः देहोच्छेदो मोक्षः । देहात्मवादे च कृशोऽहं कृष्णोऽहमित्यादिसामानाधिकरण्योपपत्तिः । मम शरीरमिति व्यवहारो राहोः शिर इत्यादिवदौपचारिकः । तदेतत् सर्व्वं समग्राहि । "अत्र चत्वारि भूतानि भूमिवार्य्यनलानिलाः । चतुर्भ्यः खलु भूतेभ्यश्चैतन्यमुपजायते । किण्वादिभ्यः समेतेभ्यो द्रव्येभ्यो मदशक्तिवत् ॥ अहं स्थूलः कृशोऽस्मीति सामानाधिकरण्यतः । देहः स्थौल्यादियोगाच्च स एवात्मा न चापरः ॥ मम देहोऽयमित्युक्तिः सम्भवेदौपचारिकीति"॥ स्यादेतत् स्यादेष मनोरथो यद्यनुमानादेः प्रामाण्यं न स्यात् अस्ति च प्रामाण्यं कथमन्यथा धूमोपलम्भानन्तरं धूमध्वजे प्रेक्षावतां प्रवृत्तिरुपपद्येत । नद्यास्तीरे फलानि सन्तीति वचनश्रवणसमनन्तरं फलार्थिनां नदीतीरे प्रवृत्तिरिति । तदेतन्मनोराज्यविजृम्भणम् । व्याप्तिपक्षधर्म्मताशालि हि लिङ्गं गमकमभ्युपगतमनुमानप्रामाण्यवादिभिः व्याप्तिश्चोभयविधोपाधिविधुरः सम्बन्धः स च सत्तया चक्षुरादिवन्नाङ्गभावं भजते किन्तु ज्ञाततया । कः खलु ज्ञानोपायो भवेत् । न तावत् प्रत्यक्षं तच्च बाह्यमान्तरं वाऽभिमतम् । न प्रथमः तस्य सम्प्रयुक्तविषयज्ञानजनकत्वेन भवति (वर्त्तमाने) प्रसरसम्भवेऽपि भूतभविष्यतोस्तदसम्भवेन सर्व्वोपसंहारवत्या व्याप्तेर्दुर्ज्ञानत्वात् । न च व्याप्तिज्ञानं सामान्यगोचरमिति मन्तव्यं व्यक्त्योरविनाभावाभावप्रसङ्गात् । नापि चरमः अन्तःकरणस्य बहिरिन्द्रियतन्त्रत्वेन बाह्येऽर्थे स्वातन्त्र्येण प्रवृत्त्यनुपपत्तेः । तदुक्तम् "चक्षुराद्युक्तविषयं परतन्त्रं बहिर्मनः इति । नाप्यनुमानं व्याप्तिज्ञानोपायः तत्र तत्राप्येवमिति अनवस्थादौस्थ्यप्रसङ्गात् । नापि शब्दस्तदुपायः काणादमतानुसारेणानुमानएवान्तर्भावात् अनन्तर्भावे वा वृद्धव्यवहाररूपलिङ्गावगतिसापेक्षतया प्रागुक्तदूषणजङ्घालत्वात् धूमध्वजयोरविनाभावोऽस्तीति वचनमात्रे मन्वादिवद्विश्वासाभावाच्च । अनुपदिष्टाविनाभावस्य पुरुषस्यार्थान्तरदर्शनेनार्थान्तरानुमित्यभावे स्वार्थानुमानकथायाः कथाशेषत्वप्रसङ्गाच्च । उपमानादिकन्तु दूरापास्तं तेषां संज्ञासंज्ञिसम्बन्धादिबोधकत्वेनानौपाधिकसम्बन्धबोधकत्वासम्भवात् ; किञ्च उपाध्यभावोऽपि दुरवगमः उपाधीनां प्रत्यक्षत्वनियमासम्भवेन प्रत्यक्षाणामभावस्य प्रत्यक्षत्वेऽपि अप्रत्यक्षाणामभावस्याप्रत्यक्षतया अनुमानाद्यपेक्षायामुक्तदूषणानतिवृत्तेः । अपि च साधनाव्यापकत्वे सति साध्यसमव्याप्तिरिति तल्लक्षणं कक्षीकर्त्तव्यम् । तदुक्तम् "अव्याप्तसाधनो यः साध्यसमव्याप्तिरुच्यते स उपाधिरिति" शब्देऽनित्यत्वे साध्ये सकर्तृकत्वं घटत्वमश्रावणत्वं च व्यावर्त्तयितुमुपात्तान्यत्र क्रमतो विशेषणानि त्रीणि । तस्मादिदमनवद्यं समासमेत्यादिनोक्तमाचार्य्यैश्चेति । तत्र विध्यध्यवसायपूर्व्वकत्वान्निषेधाध्यवसायस्योपाधिज्ञाने जाते तदभावविशिष्टसम्बन्धरूपं व्याप्तिज्ञानं व्याप्तिज्ञानाधीनं चोपाधिज्ञानमिति परस्पराश्रयवज्रप्रहारदोषोवज्रलेपायते ; तस्मादविनाभावस्य दुर्बोधतया नानुमानाद्यवकाशः । धूमादिज्ञानानन्तरमग्न्यादिज्ञाने प्रवृत्तिः प्रत्यक्षमूलतया भ्रान्त्या वा युज्यते । क्वचित् फलप्रतिलम्भस्तु मणिमन्त्रौषधादिवत् यादृच्छिकः । अतस्तत्साध्यमदृष्टादिकमपि नास्ति । नन्वदृष्टानिष्टौ जगद्वैचित्र्यमाकस्मिकं स्यादिति चेत् न तद्भद्रं स्वभावादेव तदुपपत्तेः । तदुक्तम् "अग्निरुष्णो जलं शीतं शीतस्पर्शस्तथानिलः । केनेदं चित्रितं तस्मात् स्वभावात्तद्व्यवस्थितिरिति" । तदेतत् सर्व्वं बृहस्पतिनाप्युक्तम् । "न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः । नैव वर्णाश्रमादीनां क्रियाश्च फलदायिकाः । अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् । बुद्धिपौरुषहीनानां जीविका धातृनिर्म्मिता । पशुश्चेन्निहतः स्वर्गं ज्योतिष्टोमे गमिष्यति । स्वपिता यजमानेन तत्र कस्मान्न हिंस्यते । मृतानामपि जन्तूनां श्राद्धं चेत् तृप्तिकारणम् । गच्छतामिह जन्तूनां व्यर्थं पाथेयकल्पनम् । स्वर्गस्थिता यदा तृप्तिं गच्छेयुस्तत्र दानतः । प्रासादस्योपरिस्थानामत्र कस्मान्न दीयते? । यावज्जीवेत् सुखं जीवेदृणं कृत्वा घृतं पिबेत् । भस्मीभूतस्य देहस्य पुनरागमनं कुतः । यदि गच्छेत् परं लोकं देहादेष विनिर्गतः । कस्माद्भूयो न चायाति ? बन्धुस्नेहसमाकुलः । ततश्च जीवनोपायो ब्राह्मणैर्विहितस्त्विह ।

मृतानां प्रेतकार्य्याणि न त्वन्यद्विद्यते क्वचित् । त्रयो वेदस्य कर्त्तारो भण्डधूर्त्तनिशाचराः । जर्फरीतुर्फरीत्यादि पण्डितानां वचः स्मृतम् । अश्वस्यात्र हि शिश्नन्तु पत्नीग्राह्यं प्रकीर्त्तितम् । भण्डैस्तद्वत् परञ्चैव ग्राह्यजातं प्रकीर्त्तितम् । मांसानां खादनं तद्वन्निशाचरसमीरितमिति"। तस्माद्बहूनां प्राणिनामनुग्रहार्थं चार्व्वाकमतमाश्रयणीयमिति रमणीयम्"। नैषधे च तन्मतं भङ्ग्या वर्णितं यथा

"ग्रावोन्मज्जनवद्यज्ञफलेऽपि श्रुतिसत्यता । का श्रद्धा तत्र धीवृद्धाः! कामाध्वा यत् खिलीकृतः । केनापि बोधिसत्त्वेन जातं सत्त्वेन हेतुना । यद्देहमर्म्मभेदाय जगदे जगदस्थिरम् । अग्निहोत्रं त्रयीतन्त्रं त्रिदण्डं भस्मगुण्ठनम् । प्रज्ञापौरुषनिःस्वानां जीवो जल्पति जीविका । शुद्धिर्वंशद्वयीशुद्धौ पित्रोः पित्रोर्यदेकशः । तदनन्तकुलादोषाददोषा जातिरस्ति का । कामिनीवर्गसंसर्गैर्न कः सङ्क्रान्तपातकः । नाश्नाति स्नाति हा मोहात् कामक्षाममिदं जगत् । ईर्ष्यया रक्षतो नारीर्धिक् कुलस्थितिदाम्भिकान् । स्मरान्धत्वाविशेषेऽपि तथा नरमरक्षतः । परदारनिवृत्तिर्या सोऽयं स्वयमनादृतः । अहल्याकेलिलोलेन दम्भो दम्भोलिपाणिना । गुरुतल्पमतौ पापकल्पनां त्यजत द्विजाः! । येषां वः पत्युरत्युच्चैर्गुरुदारग्रहे ग्रहः । पापात्तापा, मुदः पुण्याद्, परासोः स्युरिति श्रुतिः । वैपरीत्यं ध्रुवं साक्षात्तदाख्यानबलाबले । सन्देहेऽप्यन्यदेहाप्तेर्विवर्ज्यं वृजिनं यदि । त्यजत श्रोत्रियाः ! सत्यं हिंसादूषणसंशयात् । यस्त्रिवेदविदां वन्द्यः स व्यासोऽपि जजल्प वः । रामाया जातकामायाः प्रशस्तां हस्तधारणाम् । सुकृते वः कथं श्रद्धा सुरते च कथं न सा ? । तत्कर्म्म पुरुषः कुर्य्याद्येनान्ते सुखमेधते । बलात् कुरुत पापानि सन्तु तान्यकृतानि वः । सर्व्वान् बलकृतानर्थानकृतान् मनुरब्रवीत् । स्वागमार्थेऽपि माऽकार्ष्ट व्यतीथिका ! विचिकित्सितम् । तं तमाचरतानन्दं स्वच्छन्दं यं यमिच्छथ । श्रुतिस्मृत्यर्थबोधेषु कैकमत्यं महाधियाम् । व्याख्या बुद्धिबलापेक्षा सा नोपेक्ष्या सुखोन्मुखी । यस्मिन्नस्तीति धीर्दृष्टे तद्दाहे वः किमेनसा । क्वापि किन्तत् फलं न स्यादात्मेति परसाक्षिके । मृतः स्मरति कर्म्माणि मृते कर्म्मफलोर्म्मयः । अन्यभुक्तैर्मृते तृप्तिरित्यलं धूर्त्तवार्त्तया ! एकं सन्दिग्धयोस्तावद्भावि तत्रेष्टजन्मनि । हेतुमाहुः स्वमन्त्रादीनसाङ्गानन्यथा विटाः । जनेन जानताऽस्मीति कायं नायं त्वमित्यसौ । त्यज्यते ग्राह्यते चान्यदहो स्तुत्याऽतिधूर्त्तया । एकस्य विश्वपापेन तापेऽनन्ते निमज्जनः । कः श्रौतस्यात्मनो भीरो! भरः स्याद् दुरितेन ते । भिन्ने छन्नात् कृतात् पुण्यात् तन्मात्रे हि फलोदयः । ध्यातं तनुभूर्व्यन्यस्य ध्यातमेवात्मनो यदि । मृषानीव मृषावादान् विधूनय वधूरतु । तथापि तादृशस्यैव का चिरं जनवञ्चना । कुरुध्वं कामदेवाज्ञां ब्रह्माद्यैरप्यलङ्घिताम् । वेदोऽपि देवकीयाज्ञा तत्राज्ञा काधिकार्हणा । प्रतापमपि वेदस्य भागं मन्यध्वमेव चेत् । केनाभाग्येन दुःखाय विधीनपि तथेच्छथ । श्रुतिं पठत विज्ञाः! प्रज्ञप्तां ब्रूथ च स्वयम् । मीमांसामांसलप्रज्ञा! तां यूपद्विपदायिनीम् । को हि वेदास्त्यमुष्मिन् वा लोक इत्याह या श्रुतिः । तत्प्रामाण्यादमुं लोकं लोकः प्रत्येतु वा कथम् । धर्म्माधर्म्मौ मनुर्ज्जल्पन्नवकव्याजेनवर्ज्जनौ । व्याजान्मस्तकदण्डार्थौ श्रद्धायि सुधा बुधैः । व्यासस्यैव गिरा तस्मिन् श्रद्धावद्धा स्थ आस्तिकाः । मत्स्यस्याप्युपदेश्यान् वः कोमदृश्यानपि भाषताम् । पक्षिलः पाण्डवानां च व्यासवाट्पटुः कविः । निनिन्द तेषु निन्दत्सु स्तुवत्सु स्तुतवान्न किम् ? । न भ्रातुः किल देव्यां स व्यासः कामात् समाभजत् । दासीरतस्तदासीद्यन्माता तन्माप्यदेशि किम् ?। देवैर्द्विजैः कृता ग्रन्थाः पन्था येषां तदादृतौ । गां नतैः किं न तैर्दृष्टं ततोऽप्यात्माऽधरीकृतः । साधु कामुकता मुक्ता शान्तस्वान्तैर्मखोन्मुखैः । सारङ्गलोचनासारां दिवं प्रेत्यापि लिप्सुभिः । उभयी प्रकृतिः कामे सज्जेदिति मुनेर्मतम् । अपवर्गे तृतीयेति भणतः पाणिनेरपि । विश्वस्य परियानाय जना अनितमज्जनाः । विपद्दायापतः पश्चाद्मत्सरोरध्वविभ्रमम् । कः शमः क्रियतां प्राज्ञाः! प्रीयाप्रीतौ परिश्रमः । भस्मीभूतस्य भूतस्य पुनरागमनं भ्रमः । एनसानेन तिर्य्यक् स्यादित्यादिः का विभीषिका । राजिलोऽपि हि राजेव स्वैः सुखी सुखहेतुभिः । हतास्त्रैर्द्दिवि दीव्यन्ति दैत्या दैत्यारिणा रणे । तत्रापि तेन युद्धान्तो हता अपि तथैव ते । स्वश्च मद्यं च संसारे मुक्तौ तु ब्रह्म केवलम् । इति स्वोक्तिचित्तक्लान्तिर्दग्धो वेदवादिनाम् । मुक्तये यः शिलात्वाय शास्त्रमूचे सचेतसाम् । गोतमं तमवेतैव यथा वित्थ तथैव सः । दारा हरिहरादीनां तन्मग्नमनसो भृशम् । किं न मुक्ताः पुनः सन्ति कारा-

गारे मनोभुवः। देवश्चेदस्ति सर्वज्ञः करुणाभागवन्ध्यवाक्। तत्किं वाग्व्ययमात्रान्नः कृतार्थयति नार्थिनः। भक्तिनां भावयन् दुःखं स्वकर्मजमपीश्वरः। स्यादकारणवैरी नः कारणादपरे परे। तत्राप्रतिष्ठया साम्यादन्योन्यस्य व्यतिघ्नताम्। मायामायान्मतानां स्यात् केषां सत्तिपक्षवत्। अक्रोधं शिक्षयन्त्यन्यान् क्रोधना ये तपोधनाः। निर्धनास्ते धनायैव धातुवादोपदेशिनः। किं चित्रं दत्त तुष्टेयमदातरि हरिप्रिया। दत्त्वा सर्वं धनं लुब्धो बन्धनं लब्धवान् बलिः। रोगभा द्रोणभा च सर्वोऽयं धनिनस्तेतरा जनः। विसृज्य लोभसंक्षोभमेकदा यदुदास्यते। दैन्यस्यायुष्यमस्तैन्यमभक्ष्यं कुक्षिवञ्चना। स्वाच्छन्द्यमेकतानन्दकन्दलीकन्दमेककम्" २दुर्योधनसखे राक्षसभेदे चार्वाकवधपर्वशब्दे विवृतिः

**चार्वाकवधपर्वन्** न० भा० शान्तिपर्वान्तर्गते अवान्तरपर्वभेदे तद्वधकथा च तत्र ३८अ० यथा। "निःशब्दे च स्थिते तत्र ततो विप्रजने पुनः। राजानं ब्राह्मणच्छद्मा चार्वाको राक्षसोऽब्रवीत्। तत्र दुर्योधनसखो भिक्षुरूपेण संवृतः। साक्षः शिखी त्रिदण्डी च धृष्टो विगतसाध्वसः। वृतः सर्वैस्तथा विप्रैराशीर्वादविवक्षुभिः। परःसहस्रै राजेन्द्र! तपोनियमसंस्थितैः। स दुष्टः पापमाशंसुः पाण्डवानां महात्मनाम्। अनामन्त्र्यैव तान् विप्रांस्तमुवाच महीपतिम्। चार्वाक उवाच। इमे प्राहुर्द्विजाः सर्वे समारोप्य वचो मयि। धिग्भवन्तं कुनृपतिं ज्ञातिघातिनमस्तु वै। किं तेन स्यादि कौन्तेय! कृत्वेमं ज्ञातिसंक्षयम्। घातयित्वा गुरूंश्चैव मृतं श्रेयो न जीवितम्। इति ते वै द्विजाः श्रुत्वा तस्य दुष्टस्य रक्षसः। विव्यथुश्चुक्रुशुश्चैव तस्य वाक्यप्रधर्षिताः। ततस्ते ब्राह्मणाः सर्वे स च राजा युधिष्ठिरः। व्रीडिताः परमोद्विग्नास्तूष्णीमासन् विशाम्पते!। युधिष्ठिर उवाच। प्रसीदन्तु भवन्तो मे प्रणतस्याभियाचतः। प्रत्यासन्नव्यसनिनं न मां धिक्कर्तुमर्हथ। वैशम्पायन उवाच। ततो राजन्! ब्राह्मणास्ते सर्व एव विशाम्पते!। ऊचुर्नैतद्वचोऽस्माकं श्रीरस्तु तव पार्थिव!। जज्ञुश्चैव महात्मानस्ततस्तु ज्ञानचक्षुषा। ब्राह्मणा वेदविद्वांसस्तपोभिर्विमलीकृताः। ब्राह्मणा ऊचुः। एष दुर्योधनसखा चार्वाको नाम राक्षसः। परिव्राजकरूपेण हितं तस्य चिकीर्षति। न वयं ब्रूम धर्मात्मन् व्येतु ते भयमीदृशम्। उपतिष्ठतु कल्याणं भवन्तं भ्रातृभिः सह। वैशम्पायन उवाच। ततस्ते ब्राह्मणाः सर्वे हुङ्कारैः क्रोधमूर्च्छिताः। निर्भर्त्सयन्तः शुचयो निजघ्नुः पापराक्षसम्"। मुद्रितपुस्तके शान्तिपर्व्वणि एतत्पर्व्व दृश्यते किन्तु भा० आदिपर्व्वणि उपक्रमणिकाध्याये स्त्रीपर्व्वान्तर्गतपर्वोक्तौ "चार्वाकस्य वधः पर्व रक्षसो ब्रह्मरूपिणः। आभिषेचनिकं पर्व धर्मराजस्य धीमतः। प्रविभागो गृहाणाञ्च पर्वोक्तं तदनन्तरम्। शान्तिपर्व ततो यत्र राजधर्मानुशासनम्"। इत्यनेन गृहविभागपर्य्यन्तस्य स्त्रीपर्वत्वेन तत्रोक्तिः। तच्च पर्व मुद्रितपुस्तके शान्तिपर्व्वणि ४४अध्यायपर्य्यन्तम्। अतस्तत्पूर्व्वमेव स्त्रीपर्व्वत्वमनुमीयते अन्यथा प्रतिज्ञाविरोधःस्यात् यद्वि च स्त्रीपर्वणि सप्तविंशतिरध्याया एव आदिपर्वोपक्रमणिकाध्याये प्रतिज्ञाताः प्रतिज्ञाताश्च शान्तिपर्व्वणि ३३९ अध्यायाः मुद्रितपुस्तके च स्त्रीपर्व्वणि २७अध्याया एव इमग्रन्ते मुद्रितपुस्तके शान्तिपर्वणि च ४४अध्याये गृहविभागो दृश्यते इत्यध्यायाधिक्यं तथापि शान्तिपर्व्वणि ३३९अध्यायानामेव वक्तव्यत्वेन प्रतिज्ञातत्वात् मुद्रितपुस्तके च ३६७ अध्यायानां दर्शनात् अध्यायाधिक्यस्य लिपिकरप्रमादकृतत्वस्येव स्त्रीपर्वण्यपि सप्तविंशतिसंख्याधिक्यस्य लिपिकरप्रमादकृतत्वस्यापि वक्तुं शक्यत्वात्। वस्तुतस्तु उपक्रमणिकाध्याये चार्वाकस्य वधः पर्व इत्यतः पूर्व्वमेव "शान्तिपर्व ततः मोक्षम् इत्यादि पद्यं मूलपन्थे स्थितम्। लिपिकरप्रमादात् उत्तरत्र मुद्रितमिश्रेण कल्पितमुचितम् अतस्तस्य शान्तिपर्वान्तर्गतत्वेऽपि न विरोधः। अध्यायसंख्याधिक्यस्य तु लिपिकरप्रमादकृतत्वमेव न्यायः। अतएव उपक्रमणिकायां स्त्रीपर्वप्रतिपाद्यविषयकथने "तोयकर्म्मणि चारब्धे राज्ञामुदकदायिके। गूढोत्पन्नस्य चाख्यानं कर्णस्य पृथयात्मनः" इत्यन्तेन स्त्रीपर्वसमाप्त्युक्तिः सङ्गच्छते।

**चार्व्वाट** (त) पु० चारु आहन्ति आ+हन्–"दाराधाहनोऽणन्तस्य च टः संज्ञायाम्, चारौ वा" वार्त्ति० अण् वा टान्तादेशः। सुन्दराघातके खड्गभेदे

**चार्वादि** पु० नञः परतः अन्तोदात्ततानिमित्ते पा० ग० सूत्रोक्ते शब्दगणे स च गणः "चारु, साधु, यौधकि, अनङ्गमेजय, वदान्य (अकस्मात्) वर्त्तमान वर्द्धमान त्वरमाण (ध्रियमाण क्रीयमाण रोचमान शोभमानाः) संज्ञायाम्। विकारः (सदृशे) व्यस्तसमस्ते। गृहपति गृहपतिक।

मागताः" सुश्रुतः "त्रयः परार्थं क्लिश्यन्ति साक्षिणः प्रतिभूः कुलम्। चत्वारस्तूपचीयन्ते विप्र आढ्यो वणिङ् नृपः" मनुः

परि+परिचये पुनः पुनरनुशीलने। "चरणारविन्दस्य ध्यानपरिचितभक्तियोगः" भाग० ५।७।१। "सुतजातं चिरपरिचितं त्याजितो दैवगत्या" मेघः। "हेतुः परिचयस्थैर्ये वक्तुर्गुणनिकैव वा" माघः।

प्र+प्रकर्षेण चयने समाहारे च सक० "कर्णिकारान् प्रचिन्वती" भा० आ० ७७

वि+विशेषेण चयने। "पुष्पं पुष्पं विचिन्वीत मूलच्छेदं न कारयेत्। मालाकार इवारामे न यथाङ्गारकारकः" भा० उ० ११११श्लो०

सम्+ सम्यक् चयने समाहारे "संचिन्वन्ति सदा युक्ता जातरूपञ्च मौक्तिकम्" हरिवं०५२१६

चिकित त्रि० जु० चि–ज्ञाने कर्मणि क्त "छन्दस्युभयथा" पा० निष्ठायाः सार्वधातुकसंज्ञायां शप् जुहोत्यादित्वात् तस्य श्लुः द्वित्वम्, कित–ज्ञाने यङ् लुक् पचाद्यच्। संज्ञापूर्वकत्वात् अभ्यासगुणाभावः इति माधवः। १ज्ञाते २अतिशयज्ञातरि च "त्वं सोम! प्रचिकितो मनीषा" ऋ० १।९१।१। अस्य भाष्ये उक्ता व्युत्पत्तिर्दृश्या। ३ऋषिभेदे। तस्यापत्यम् इञ् इञन्तत्वात् यूनि फक्। चैकितायन तस्य यूनपत्ये पुंस्त्री। "त्रयोऽहोऽप्यर्थे कुशला बभूवुः शिलकः शालावत्यश्चैकितायनो दाल्भ्यः" छा० उ०।

चिकितान त्रि० कित–ज्ञाने कानच्। १अभिज्ञे "तपोवसो! चिकितानो अचित्तान्" ऋ० ३।१८।२। "चिकितानः कर्माभिज्ञः" भा०। २ऋषिभेदे पु०। तस्यापत्यमण् ततः यूनि वा० ढक्। चैकितानेय तस्य यूनपत्ये। "तस्यापि ब्रह्मदत्तश्चैकितानेयो राजानं भक्षयन्नुवाच" छ०उ०।

चिकितु त्रि० कित–ज्ञाने उन् वेदे द्वित्वम्। अभिज्ञे "अचेत्यग्निश्चिकितुर्हव्यवाट्सुमद्रथः" ऋ० ८।५६।५।

चिकित्वन् त्रि० कित–ज्ञाने क्वनिप् वेदे नि० द्वित्वम्। ज्ञातरि। "केतेन शर्मन्त्सचते सुषामण्यग्ने! तुभ्यं चिकित्वना" ऋ० ८।६०।१८।

चिकित्वित् त्रि० कित–ज्ञाने वा० क्विप् वेदे नि० द्वित्वम्। अभिज्ञे "यवयद्द्वेषसं त्वा चिकित्वित्सूनृतावरि" ऋ० ५।५२।४। "चिकित्विन् मनसं त्वा देवं मर्तास ऊतये" ऋ० ५।२२।३।

चिकित्सक पु० कित–रोगापनयने स्वार्थे सन्–ण्वुल्। रोगापनयनकर्त्तरि वैद्ये अमरः। "पूयं चिकित्सकस्यान्नम्" मनुः। तस्य धर्मादि चिकित्साशब्दे दृश्यम्

चिकित्सा स्त्री कित–स्वार्थे सन्–भावे अ। रोगप्रतीकारे रोगनिवारणोपाये अमरः। अस्य लक्षणभेदाङ्गादिकम् भावप्र० उक्तं यथा

"या क्रिया व्याधिहरणी सा चिकित्सा निगद्यते। दोषधातुमलानां या साम्यकृत् सैव रोगहृत्"। क्रियाच कर्म व्याधिर्हन्यतेऽनयेति व्याधिहरणी "करणाधिकरणयोश्चेति" पा०सूत्रेण करणार्थे ल्युट् तथाच। "याभिः क्रियाभिर्जायन्ते शरीरे धातवः समाः। सा चिकित्सा विकाराणां कर्म तद्भिषजां स्मृतम्"। "या ह्युदीर्णं शमयति नान्यं व्याधिं करोति च। सा क्रिया न तु या व्याधिं हरन्त्यन्यमुदीरयेत्"। क्रियाच चिकित्सा। तथा चामरसिंहः "आरब्धो निष्कृतिः शिक्षा पूजनं सम्प्रधारणम्। उपायः कर्म चेष्टा च चिकित्सा च नवक्रिया इति। अथ चिकित्साविध्युपदेशः। "आतमात्मचिकित्सज्ञः स्वायोमित्र्योऽस्य तया गदः। चक्षुष्मत्विर्षैस्तुल्यः सर्वोऽपि विकरोत्यसौ। रोगमादौ परीक्षेत ततोऽनन्तरमौषधम्। ततः कर्म भिषक् पश्चात् ज्ञानपूर्वं समाचरेत्"। अयमर्थः भिषक् आदौ रोगं परीक्षेत विचारयेत्। ततः पश्चाद्रोगौषधविचारानन्तरं ज्ञानपूर्वं सावधानो न त्वरया कर्म चिकित्सामौषधदानादिरूपां समाचरेदित्यर्थः। रोगाज्ञानेन चिकित्साकरणे दोषमाह

"यस्तु रोगमविज्ञाय कर्माण्यारभते भिषक्। अप्यौषधविधानज्ञस्तस्य सिद्धिर्यदृच्छया"। स्वैरितया सिद्धिर्भवति नापि भवतीत्यर्थः। अन्यच्च

"भेषजं केवलं कर्त्तुं यो जानाति न चामयम्। वैद्यकर्म स चेत् कुर्याद्वधमर्हति राजतः"।

रोगज्ञाने भेषजाज्ञाने दोषमाह।

"यस्तु केवलरोगज्ञो भेषजेष्वविचक्षणः। तं वैद्यं प्राप्य रोगी स्याद्यथा नौर्नाविकं विना"। नाविकं कर्णधारं विना यथा नौः सङ्कटे पतति तथा स रोगीत्यर्थः। अन्यच्च

"यस्तु केवलशास्त्रज्ञः क्रियास्वकुशलो भिषक्। स मुह्यत्यातुरं प्राप्य यथा भीरुरिवाहवम्"।

रोगौषधयोर्ज्ञाने गुणमाह।

"यस्तु रोगविशेषज्ञः सर्वभैषज्यकोविदः। देशकालविभा-

गम्यस्तस्य सिद्धिर्न संशयः। आदावन्ते रुजां शान्ते प्रयतेत चिकित्सकः। भेषजानां विधानेन ततः कुर्य्याच्चिकित्सितम्”। चिकित्सितमित्यत्र भावे क्तः।
“विकाराणामकुशलो न जिह्रीयात् कदाचन। न हि सर्व्वविकाराणां नामतोऽस्ति ध्रुवा स्थितिः”।
न जिह्रीयात् न लज्जेत। ध्रुवा नियता। “नास्ति रोगो विना दोषैर्यस्मात्तस्माच्चिकित्सकः। अनुक्तमपि दोषाणां लिङ्गैर्व्याधिमुपाचरेत्। येन कुर्वन्त्यसाध्यानां चिकित्सां ते भिषग्वराः। अतो वैद्यैः श्रमः कार्य्यः साध्यासाध्यपरीक्षणे”। रोगशान्त्युपाया अप्युच्यन्ते। “शीते शीतप्रतीकारमुष्णे तूष्णनिवारणम्। कृत्वा कुर्य्यात् क्रियां प्राप्तां क्रियाकालं न हापयेत्। अप्राप्ते वा क्रियाकाले प्राप्ते वा न क्रिया कृता। क्रिया हीनातिरिक्ता च साध्येष्वपि न सिध्यति”। अयमर्थः। काले चिकित्साऽवसरे अप्राप्तेऽनागते। या क्रिया चिकित्सा। यथा ज्वरे जीर्णतामप्राप्ते तरुण एव कषायदानक्रिया न सिध्यति। या च क्रिया चिकित्सावसरे प्राप्ते न कृता अर्थात् पश्चात् कृता। यथा दाहे कथञ्चिच्छान्ते पश्चाच्छीतलानुलेपनादिक्रिया। तथा हीनातिरिक्ता च क्रिया साध्येष्वपि न सिध्यति। अतिरिक्तां हीनां च क्रियां वर्ज्जयन्नाह। “विकारेऽल्पे महत् कर्म्म क्रिया लघ्वी गरीयसि। इयमेतद्द्वौ शल्यं कौशल्यं युक्तकर्म्मणा। क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत्। पूर्व्वस्यां शान्तवेगायां न क्रियासङ्करो हितः”। भिन्नरूपाभिस्तु क्रियाभिः साङ्कर्य्यमपि न दोषाय। यतश्चाह “क्रियाभिस्तुल्यरूपाभिर्न क्रियासङ्करो हितः। ताभिस्तु भिन्नरूपाभिः साङ्कर्य्यं नैव दुष्यति”। अतएवोक्तम् “लङ्घनं वालुकास्वेदो नस्यं निष्ठीवनं तथा। अवलेहोऽञ्जनञ्चापि प्राक् प्रयोज्यं त्रिदोषजे”। ज्वर इति शेषः। “नचैकान्तेन निर्द्दिष्टे शास्त्रे निविशते बुधः। स्वयमप्यत्र भिषजा तर्कणीयं चिकित्सता”। यतश्चाह “उत्पद्यते च सावस्था दोषकालबलं प्रति। यस्यां कार्य्यमकार्य्यं स्यात् कर्म्म कार्य्यं विवर्ज्जितम्”। विवर्ज्जितं कर्म्म कर्त्तव्यं भवतीत्यर्थः। अथ चिकित्सायां फलमाह। “क्वचिदर्थः क्वचिन्मैत्री क्वचिद्धर्म्मः क्वचिद्यशः। कर्म्माभ्यासः क्वचिच्चेति चिकित्सा नास्ति निःफला। आयुर्व्वेदोदितां युक्तिं कुर्व्वाणा विहितां च ये। पुण्यायुर्व्वृद्धिसंयुक्ता निरोगाश्च भवन्ति ते। नैव कुर्वीत लोभेन चिकित्सां पुण्यविक्रियाम्। ईश्वराणां वसुमतां लिप्सेतार्थन्तु वृत्तये। चिकित्सितं शरीरं यो न निष्क्रीणाति दुर्म्मतिः। स यत्करोति सुकृतं सर्वं तद्भिषगश्नुते। न देवो मनुजैर्हीनो न मनुष्या निरामयाः। ततः सर्व्वत्र वैद्यानां सुसिद्धा एव वृत्तयः”। अथ चिकित्साया अङ्गानि। “रोगी दूतो भिषग्दीर्घमायुर्द्रव्यं सुसेवकः। षडौषधं चिकित्सायाम् इत्यङ्गानि बुधा जगुः”। तत्र रोगिणो लक्षणमाह। “रोगो यस्यास्ति रोगी स स चिकित्स्यस्तु यादृशः। यादृशश्चाचिकित्स्योऽपि वक्ष्यमाणो निशम्यताम्”। तत्र चिकित्स्यः। “निजप्रकृतिवर्णाभ्यां युक्तः सत्त्वेन चक्षुषा। चिकित्स्यो भिषजां रोगी वैद्यभक्तो जितेन्द्रियः”। सत्त्वं व्यसनाभ्युदयक्रियादिष्वविक्लवताकरं तेन युक्तः। चक्षुषा चक्षुरुपलक्षितेन। ततोऽन्येनापीन्द्रियेण चिकित्स्यः रोगान्मोचयितव्यः। अन्यच्च “आयुष्मान् सत्त्ववान् साध्यो द्रव्यवान् मित्रवानपि। चिकित्स्यो भिषजा रोगी वैद्यवाक्यकृदास्तिकः”। आयुर्वेदोऽस्तीति मतिर्यस्य आस्तिकः। अथाचिकित्स्यः “चण्डः साहसिको भीरुः कृतघ्नो व्यग्र एव च। शोकाकुलो मुमूर्षुश्च विहीनः करणैश्च यः। वैरी वैद्यविदग्धश्च श्रद्धाहीनश्च शङ्कितः। भिषजामविधेयाश्च नोपक्रम्या भिषग्विधाः। एतानुपाचरन्वैद्यो बहून् दोषानवाप्नुयात्”। चण्डोऽत्यन्तक्रोधशीलः। कृतघ्नो वैद्यकृतोपकारलोपकः। व्यग्रो व्याकुलः। विहीनः करणैश्च यः निजेन्द्रियशक्तिरहितः। वैरी न चिकित्स्यः कदाचिद्रोगोद्रेके अपवादभयात्। वैद्यविदग्धो वैद्यधूर्त्तः। तथा च सुश्रुतः। “स न सिध्यति वैद्यस्तु गृहे यस्य न पूज्यते”। शङ्कितो वैद्यविश्वासरहितः। भिषजामविधेयाः वैद्यवचनाविधायिनः। भिषग्विधाः वैद्यतुल्याः एते नोपक्रम्याः न चिकित्स्याः। अथ दूतस्य लक्षणम्। “यश्चिकित्सकमानेतुं याति. दूतः स कथ्यते। स च यादृक् प्रशस्तस्तादृगत्र निगद्यते। दूताः सुजातयो दक्षाः पटवो निर्म्मलाम्बराः। सुखिनोऽश्ववृषारूढाः शुभ्रपुष्पफलैर्युताः। सजातयः सुचेष्टाश्च सजीवदिशि सङ्गता। भिषजां समये प्राप्ता रोगिणः सुखहेतवे”। सजातयः रोगिसमानजातयः। “यस्यां प्राणमरुद्याति सा नाडी जीवसंज्ञिता”। अथ दूतस्य यात्रायां शकुनविचारः। “वैद्याह्वानाय दूतस्य

गच्छतो रोगिणः क्षते। न शुभं सौख्यशकुनं प्रदीप्तस्तु सुखावहः"। प्रदीप्तोऽग्निः। दूतो रोगी च रिक्तहस्तो वैद्यं न पश्येत्। तथाच "रिक्तहस्तो न पश्येत्तु राजानं भिषजं गुरुमिति"। अथ वैद्यस्य लक्षणम्। "चिकित्सां कुरुते यस्तु स चिकित्सक उच्यते। स च यादृक् समीचीनस्तादृशोऽपि निगद्यते। तत्त्वाधिगतशास्त्रार्थो दृष्टकर्मा स्वयङ्कृती। लघुहस्तः शुचिः शूरः सज्जोपस्करभेषजः। प्रत्युत्पन्नमतिर्धीमान् व्यवसायी प्रियंवदः। सत्यधर्मपरो यश्च वैद्य ईदृक् प्रशस्यते"। दृष्टकर्मा दृष्टा परेण कृता चिकित्सा येन सः स्वयङ्कृती स्वयं चिकित्साकारकः। लघुहस्तः क्षिप्रहस्तः। अथ निषिद्धो वैद्यः। "कुचेलः कर्कशः स्तब्धो ग्रामीणः स्वयमागतः। पञ्च वैद्या न पूज्यन्ते धन्वन्तरिसमा यदि। कर्कशः अप्रियवादी स्तब्धः साभिमानः। ग्रामीणः व्यवहाराचतुरः। अथ वैद्यस्य कर्माह। "व्याधेस्तत्त्वपरिज्ञानं वेदनायाश्च निग्रहः। एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः"। अस्यायमर्थः व्याधेः सम्यक्परिचयो व्यथाशान्तिकरणं वैद्यस्य कर्म नतु वैद्य आयुषः प्रभुरित्यर्थः। अपरे त्वेवं व्याचक्षते व्याधेस्तत्त्वतः परिचयो वेदनाया शान्तिकरणं। एतदेव वैद्यस्य वैद्यत्वं किन्तु वैद्य आयुषः प्रभुः आगन्तुमृत्युशतहरणात्। तथा च सुश्रुते धन्वन्तरिः "एकोत्तरं मृत्युशतमथर्वाणः प्रचक्षते। तत्रैकः कालसंयुक्तः शेषास्त्वागन्तवः स्मृताः"। अयमर्थः अथर्वाणः अथर्वतत्त्वज्ञत्वेनाथर्वतुल्याः मृत्युमेकोत्तरं शतं प्रचक्षते। तत्रैको मृत्युः कालसंयुक्तः। काल आयुषोऽन्ते शरीरिणामवश्यं संहर्त्ता। सर्वैरुपायैर्निवारयितुमशक्यः। स ब्रह्मादीनायुषोऽन्ते संहरति। यत आह लिङ्गपुराणे कार्त्तिकेयं प्रति महादेवः "ममायुर्ग्रसते कालः कुतः पुत्र!। रसायनमिति"। तेन कालेन संयुक्तः। संहाराय नियुक्तः सोऽवश्यं भावी शेषाः शतं मृत्यवः आगन्तवः आगन्तुरूपहेतुजन्मानः कार्य्यकारणयोरभेदोपचारात्। आगन्तवो हेतवः यथा। "विषमाशनमजीर्णोऽन्नभोजनञ्च दुर्देशजलपानम्। तथाऽतिबलैर्व्यायसनमहिषमत्तमातङ्गादिभिर्युद्धम्। दन्दशूकेन क्रीडनमत्युच्चच्छायारोहणम् बाहुभ्याम् महानदीतरणमेकाकिनो रात्रौ दुर्गे मार्गे गमनम्" इत्यादि। आगन्तुहेतुजा मृत्यवो दुर्निमित्ता भावि-भावनबलवत्त्वादायुषि सत्यपि मारयन्ति। यथा तैलवर्त्तिवह्निषु विद्यमानेषु वात्या दीपं नाशयति। तथाच "यथा सत्यपि तैलादौ दीपं निर्वापयेन्मरुत्। एवमायुष्यहीनेऽपि हिंसन्त्यागन्तुमृत्यवः"। किन्तु आगन्तुनिमित्तानि निवारयितुं शक्यन्ते। यत आह सुश्रुते धन्वन्तरिः "दोषागन्तुनिमित्तेभ्यः रसमन्त्रविशारदौ। रक्षेतां नृपतिं नित्यं यत्नाद्वैद्यपुरोहितौ"। वैद्यमन्त्रिणौ नृपतिं नित्यं यत्नाद्रक्षेताम्। कुतः दोषागन्तुनिमित्तेभ्यः दोषा निषिद्धाहारविहारदूषिता वातपित्तकफरोगोत्पादकाः। आगन्तवः निषिद्धविहारा अतिबलवैरिविग्रहादयः ते निमित्तानि येषान्तेभ्यः शतमृत्युभ्यः। वैद्यपुरोहितौ कथं मृत्युशतं निवारयितुं शक्तौ तत्राह। यतस्तौ रसमन्त्रविशारदौ प्रथमं वैद्येन दिनचर्य्यारात्रिचर्य्यर्त्तुचर्य्योक्ताहारविहाराभ्यां वातपित्तकफशमनतान् समानेव रक्षति ततो रसशास्त्रोक्तैः रसभस्मादिभिर्निषिद्धाहारविहारदूषितदोषजनितान् विकारान्मृत्युहेतून् अपहरति। मन्त्री च सद्बुद्धिदानेन मृत्युहेतुभ्यो निषिद्धविहारेभ्यो नृपतिं निवारयति। तत्र आगन्तुमृत्यवो निवारयितुं शक्या नत्ववश्यम्भाविनः। अथायुर्विचारः। "भिषगादौ परीक्षेत रुग्णस्यायुः प्रयत्नतः। सत आयुषि विस्तीर्णे चिकित्सा सफला भवेत्"। सा च त्रिधा "आसुरी मानुषी दैवी चिकित्सा सा त्रिधा मता। सूत(पारद)प्रधाना दैवी स्यात् छेदभेदात्मिका ऽऽसुरी। मानुषी मद्रसा ज्ञेया जपहोमादितत्कृता। कलौ चाल्पबले लोके मानुषी तत्र पूजिता" वैद्यकम्।

**चिकित्सित** त्रि० कित–स्वार्थे सन् कर्मणि क्त। १कृतरोगप्रतीकारे। भावे क्त। २चिकित्सायां न० अमरः। "सूतानामश्वसारथ्यमम्बष्ठानां चिकित्सितम्" मनुना अम्बष्ठानां चिकित्सितवृत्तिरुक्ता। चिकित्सा जाताऽस्य तारका० इतच्। ३जातचिकित्से त्रि०। ४ऋषिभेदे पु० तस्यापत्यं गर्गा० यञ्। चैकित्सित्य तदपत्ये पुंस्त्री स्त्रियां ङीप् यलोपश्च चैकित्सिती।

**चिकित्स्य** त्रि० कित–स्वार्थे सन् कर्मणि यत्। प्रतीकार्य्ये चिकित्साकार्य्ये उदा०। "क्षेत्रियच् परक्षेत्रे चिकित्स्यः" पा०। "भेषजैः स चिकित्स्यः स्यात् य उन्मार्गेण गच्छति" भा० शा० १४अ०। "अन्योऽचिकित्स्यरोगाप्ता मम भ्रातरो निरंशकाः" या०।

चिक्किन त्रि० निनता नासिका इनच् "पिटच्छिकचि च" वार्ति० इनच् प्रकृतेष चिक्यादेशः। निम्ननासिके (खाँदा)

चिकिल पु० चि—बा० इलच् कुक् च। पङ्के हेम०।

चिकीर्षक त्रि० कृ—सन—ण्वुल्। कर्त्तुमिच्छौ अत्र ण्वुलो-लित्त्वात् "लिति" पा० प्रत्ययात् पूर्व्वस्योदात्तता। अत्र "न पदान्तद्विर्वचनवरेयलोपस्वरेत्यादि" पा०। करोतेः सन्नन्तात् ण्वुल् अतोलोपः स च लितीति स्वरे कर्त्तव्ये न स्थानिवत्। इति मनोरमोक्तेः स्वरे कर्त्तव्ये अल्लोपस्य न स्थानिवत्त्वम्।

चिकीर्ष्य त्रि० कर्त्तुमेष्यम् कृ—सन् कर्मणि यत्। कर्त्तु-मेष्ये अत्र यतस्तित्त्वात् "तित्स्वरितम्" पा० स्वरितस्वरः

चिकुर पु० चि इत्यव्यक्तं शब्दं कुरति कुर—क। १केशे, अमरः "चिकुरप्रकराः जयन्ति ते" नैष० २हस्तभेदे, ३पर्वते, ४सरीसृपे च। ५चपले, तरले, ६चञ्चले च त्रि० मेदिनी। चपलश्च दोषजनितस्य नय-वृत्त्यनादिकारी। अत्र सर्पः सर्पभेदः सुमुखपिता यथाह" भा० उ० १०२अ० "ऐरावतकुले जातः सुमुखोनाम नामराट्। आर्य्यकस्य मतः पौत्रो दौहित्रो वामनस्य च। एतस्य हि पिता नागश्चिकुरो-नाम मातले!। नचिराद्वैनतेयेन पञ्चत्वमुपपादितः। ततो ऽब्रवीत् प्रीतमना मातलिर्नारदं वचः। एष मे रुचितस्तात। जामाता भुजगोत्तमः। क्रियतामत्र यत्नो हि प्रीतिमानस्म्यनेन वै। अस्मै नागाय वै दातुं प्रियां दुहितरं मुने!"। कथार्थकात् अस्मात् सम्भूहार्थे पक्ष माथ इत्त प्रत्ययाः। चिकुरपक्ष चिकुरपाश चि-कुरहस्त केशसमूहे पु०। चिकुर+इतो चिच् कर्म्मणि क्त। चिकुरित चञ्चलीकृते त्रि०। "आरक्तचिकुरितेक्षणाम्" काद०।

चिकूर पु० चिकुर+पृषो०। केशे शब्दभेदप्रकाशः।

चिक्क पीडने चु० उभ० सक० सेट्। चिक्कयति ते अचि-चिक्कत् त। [ आंम्। (कुँको) लिका०

चिक्क पु० चिक् इत्यव्यक्तेन शब्देन कायति कै—क। कुकुन्द-

चिक्कण पु० चिक्क—क्विप् चिक् तं कणति कण—शब्दे अच्। १गुवाकवृक्षे। २तत्फले न० राजनि०। ३मसृणे स्निग्धे (चिकण) त्रि०। शब्दमा० ४चिक्कणगुणवत्त्वात् उत्तमायां गवि स्त्री। अमरः "कठिनश्चिक्कणः श्लक्ष्णः पिच्छिलो मृदु दारुणः" भा० शा० १८४अ०। गौरा० ङीष्। पूगवृक्षे हरीतक्यां तत्फले च स्त्री राजनि०। अस्य कन्नान्ते तत्पुरुषे क्लीवता विङ्व्या० आद्युदात्तता च चिक्कणकन्यम्।

चिक्कस पु० चिक्क—असच्। यवचूर्णे हेमच०।

चिक्का स्त्री चिक्क—अच्। १पूगवृक्षे राजनि०। २तत्फलेऽपि स्त्री

चिक्किर पु० चिक्क—बा इरच्। मूषिकभेदे। छन्दुरशब्दे ११८८पृ० दृश्यम्। "छाजनः पुत्रकः स्वर्णोहिंसिरश्चिक्कि-रस्तथा" सुश्रुत०।

चिक्लिद त्रि० क्लिद—यङ् लुक् अच् नि०। अतिशयक्लेदयुक्ते।

चिङ्गट पु० चिङ्गट+पृषो०। मत्स्यभेदे हारा०। "चिङ्गट-स्तु गुरुर्ग्राही मधुरो बलवर्द्धनः। मेदःपित्तास्त्र नाशी तु हृद्योरोचनकृत्तथा। कफवातकरो ज्ञेयः" राजवल्ल०। अल्पार्थे ङीष्। (गुणचिङ्गड़ी) क्षुद्र-चिङ्गटे "चिङ्गटी मधुरा दृष्या कफवातविनाशिनी गुर्वी श्लेष्मकरी सा च" राजव०।

चिङ्गड पु० चिमित्यव्यक्तशब्देन गच्छति गच्छते गम गत्ये— कर्मणि घञर्थे संज्ञायाम् क अस्य डः। (चिङ्ड़ी) मत्स्यभेदे शब्दमाला

चिचिण्ड पु० चि—बा० इण्डच् चुक् च। फलप्रधाने वृक्षे भावप्र०। "चिचिण्डो वातपित्तघ्नः बल्यो बलदपिच्छदः। शोषिणोऽतिहितोज्ञेयः पटोलात् किञ्चिदूनकः" तद्गुणा उक्ताः।

चिच्चिटिङ्ग पु० चीयते चि—कर्म्मणि क्विप् चिदग्निः तत्र चिटिं प्रेषणं गच्छति गम—ड पृषो० मुम्। कीट-भेदे कीटशब्दे २०५८पृ० सुश्रुतवाक्यं दृश्यम्।

चिच्छक्ति चिदेव शक्तिः। चैतन्ये संक्षेपशारीरकम् "चिच्छक्तिः परमेश्वरस्य विमला चैतन्यमेवोच्यते"। "चिच्छक्तिरस्ति परमात्मनि तेन सोऽपि व्यक्तो जगत्सु विदितोभवकल्पकर्त्ता। कोऽन्यस्तया विरहितः प्रभ-वत्यसुप्तिन् कर्त्तुं विकर्त्तुमपि यञ्चलितं स्वशक्त्या" देवीभागवतम्। "मायाख्यस्य चिच्छक्त्या चैतन्यं स्थितमात्मनि" भाग० १।७।२४।

चिच्छायापत्ति स्त्री चितिः बुद्ध्यादेः, बुद्ध्यादौ वा चितेः छाया प्रतिविम्बः तस्या आपत्तिः। सांख्यमते १चितेः बुद्ध्यादेः प्रतिविम्बप्राप्तौ वेदान्तिमते २बुद्ध्यादौ चितः प्रतिविम्बनप्राप्तौ च। चित्प्रतिविम्बस्वीकारस्य बोध-पत्तिकः "अन्तःकरणस्य तदुज्ज्वलितत्वाल्लोहवदधि-ष्ठातृत्वम्" सां० सू० भाष्ये समर्थितस्तत्र वाक्यं १९५। १९६पृ० उक्तम् ततः शेषन्तु "ननु प्रतिविम्बहेतुतया

संयोगविशेषावश्यकत्वे प्रतिबिम्बकल्पना व्यर्था प्रतिबिम्बकार्य्यस्यार्थग्रहणादेः संयोगविशेषादेव सम्भवादिति । नैवम् । बुद्धौ चैतन्यप्रतिबिम्बश्चैतन्यदर्शनार्थं कल्प्यते दर्पणे मुखप्रतिबिम्बवत् । अन्यथा कर्मकर्तृविरोधेन स्वस्य साक्षात् स्वदर्शनानुपपत्तेः । अयमेव च चित्प्रतिबिम्बो बुद्धौ चिच्छायापत्तिरिति चैतन्याध्यास इति चिदावेश इति चोच्यते । यश्च चैतन्ये बुद्धेः प्रतिबिम्बः स आरूढ़विषयैः सह बुद्धेर्भानार्थमिष्यते । अर्थाकारतयैवार्थग्रहणस्य बुद्धेरन्यत्र स्थले दृष्टत्वेन तां विना संयोगविशेषमात्रेणार्थभानस्य पुरुषेऽप्यनौचित्यात् अर्थाकारस्यैवार्थग्रहणशब्दार्थत्वाच्चेति । स चार्थाकारः पुरुषे परिणामो न सम्भवतीत्यर्थात् प्रतिबिम्बरूप एव पर्यवस्यतीति दिक् । स चायमन्योऽन्यप्रतिबिम्बो योगभाष्ये व्यासदेवैः सिद्धान्तितः । "चितिशक्तिरपरिणामिन्यप्रतिसंक्रमा च परिणामिन्यर्थे प्रतिसंक्रान्तेव तद्वृत्तिमनुपतति तस्याश्च प्राप्तचैतन्योपग्रहरूपाया बुद्धिवृत्तेरनुकारिमात्रतया बुद्धिवृत्त्यविशिष्टा हि ज्ञानवृत्तिरित्याख्यायत" इत्यादिना ।

अन्तःकरणस्यैकत्वेऽपि वृत्तिभेदाद्भेदः सा० प्र० भाष्ये समर्थितस्तद्वाक्यञ्च अन्तःकरणशब्दे १८५पृ० उक्तम्

**चिच्छल** पु० १देशभेदे २तद्वासिषु ब० व० । "मेखलैश्च पुरैश्चैव चिच्छलैश्च समन्वितः" भा०भी० ८८अ० ।

**चिञ्चा** स्त्री चिमित्यव्यक्तं शब्दं चिनोति चि—ड । १तिन्तिडीवृक्षे अमरः । तत्फले अण् हरितक्या० लुपि व्यक्तिवचनत्वात् स्त्री । स्वार्थे क । २गुञ्जायां चिञ्चिकाप्यत्र गौरा० ङीष् । चिञ्चीत्यप्यत्र केचित्

**चिञ्चिड** पु० चिमित्यव्यक्तशब्देन चिडति चिड—वासे । चिञ्चिण्डवृक्षे भावप्र० । चिञ्चिण्ड इत्यत्र चिञ्चिड इति पाठः गुणास्तु चिञ्चिण्डशब्दोक्ताः

**चिञ्चाटक** पु० चिञ्चेवाटति अट—ण्वुल् । (चेँचको) तृणभेदे रत्नमा० । चिञ्चोटक इत्यपि पाठः तत्रार्थे शब्दा०

**चिञ्चाम्ल** न० चिञ्चेवाम्लम् । अम्लशाके । (आमरुल) राजनि० ।

**चिञ्चासार** पु० चिञ्चाया इव सारोऽस्य । अम्लशाके (आमरुल) राजनि० । [ चिचेट—चेटः चेटी ।

**चिट** प्रेषणे भ्वा० पर० सक० सेट् । चेटति अचेटीत् ।

**चिट** प्रेषणे चु०उभ० सक० सेट् । चेटयति ते अचीचिटत् त

**चिटी** स्त्री चिट—क गौरा० ङीष् । चण्डालवेशधारिण्यां योगिन्याम् तन्मन्त्रप्रयोगः तन्त्रसारे उक्तो यथा । "तारं चिटिद्वयं ब्रूयाच्चाण्डालि च ततः परम् । महदाद्यं ततो ब्रूयादमुकं मे ततः परम् । वशमानय ठ—द्वन्द्वं चिटिमन्त्र उदाहृतः (ओं चिटि ! चिटि ! महाचाण्डालि अमुकं मे वशमानाय स्वाहा) सप्तभिर्दिवसैर्भूपान् वशयेद्दिविना जनः" । विधि माह । "विलिख्य तालपत्रे तं साध्यनाम्नाभिगर्भितम् । निःक्षिप्य क्षीरसंमिश्रे जले तत्क्वाथयेन्निशि । वश्यो भवति साध्योऽस्य नात्र कार्य्या विचारणा । तालपत्रे लिखित्वैनं मद्भक्तालीष्टके खनेत् । वश्याय सर्वजन्तूनां प्रयोगोऽयमुदाहृतः" ।

**चित** ज्ञाने भ्वा०पर० सक० सेट् । चेतति अचेतीत् । चिचेत ईदित् चित्तः । "य इन्द्र ! सोमपातमो मदः शविष्ठ चेतति" ऋ० ८।१२।१। "एवं तेऽचेतिषुः सर्वे" भट्टिः । "शतानीदस्य कर्त्वा चेतन्ते दस्युतर्हणाम्" ऋ० ६।४७।२। आ० वेदे पदव्यत्ययः । चेतः चेतनः चित् । "क्षमर्दिहतमचेतनुनीरजीकारितच्छाम्" भट्टिः ।

**चित** ज्ञाने चु० आत्म०सक०सेट् । चेतयति ते अचीचितत् त चेतना चेतितः । "पूर्वं चेतयते जन्तुरिन्द्रियैर्विषयान् पृथक्" भा० शा० ६८६० "किन्तु सुप्तोऽस्मि जागर्मि चेतयामि न चेतये" भा० स्वर्गा० २अ० "राक्षसाश्चेतयन्ति न" भट्टिः । अस्य अदन्तत्वमपि । तस्य चितयतीत्यादिरूपम् "इन्द्र न यज्ञैश्चितयन्त आयवः" ऋ० १।१३१।२

**चित** स्मृतौ चु० उभ० सक० सेट् इदित् । चिन्तयति ते अचिचिन्तत् त चिन्तितः चिन्तनम् चिन्तनाचिन्ता । "यद्यहं नैषधादन्यं मनसापि न चिन्तये" भा० व० ६१अ० "तस्मादस्य वधं राजा मनसाऽपि न चिन्तयेत्" मनुः ।

**चित्** स्त्री चित—सम्पदा० भावे क्विप् । १ज्ञाने चेतनायाम् अमरः । २चैतन्ये । "सच्चिदानन्दविग्रहम्" वे० सा० ३चित्तवृत्तिभेदे । "चिदसि मनासि धीरसि" यजु० ४।१९। "अचेतनदेहादिसंघातस्य चेतनत्वं संपादयन्ती बाह्यवस्तुषु निर्विकल्परूपं सामान्यज्ञानं जनयन्ती वृत्तिश्चित्तं तदेवात्र चिदित्युच्यते" वेददी० ४निर्विशेषस्फुरणमात्रे चेतने स्वतएव प्रकाशमाने ब्रह्मणि "निर्विकल्पकं सर्वावभासकं ज्ञानं प्रत्यगात्मस्वरूपं चिदिति" व्याख्यातारः "चिदिहास्तीति चिन्मात्रमिदं चिन्मयमेव च । चित्त्वं चिदहमेते च लोकाश्चिदिति भावयेत्" वेदान्तप्र०। चिद्रसः

चिद्रूपः “चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः । उपासकानां सिद्ध्यर्थं ब्रह्मणो रूपकल्पना” । “तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः । इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः” योगवाशिष्ठः

चिनोति चि—कर्त्तरि क्विप् । ५चयनकर्त्तरि त्रि० अग्निचित् । कर्म्मणि क्विप् । ६अग्नौ । ७असाकल्ये अव्य० अमरः । कच्चित् कथञ्चित् जातुचित् । ८अव्यक्तानुकरणे च अव्य० चित्कारः “नहि करिणि दृष्टे चित्कारेण तमनुमिमतेऽनुमातारः” वाचस्पतिमिश्रः । मुग्धबोधे विभक्त्यन्तात् किमः चिच्चनौ प्रत्ययौ विहितौ इति भेदः । तच्चिन्त्यं चनशब्दे तदेतदुक्तः जातुचित् इत्यादिप्रयोगासिद्धिश्च तत्र किमः प्रकृतिकत्वाभावात् ।

**चित** त्रि० चि—कर्म्मणि क्त । १व्याप्ते मेदि० २कृतचयने “अवचितबलिपुष्पा वेदिसम्मार्गदक्षा” कुमा० । ३सञ्चिते ४आच्छादिते च “तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितः क्षीयते” श्रुतिः ५शवदाहाधारचुल्लीभेदे स्त्री अमरः । “प्रत्ययाताञ्जलियाचितां चिताम्” कुमा० “वद वामोरु ! चिताधिरोहणम्” रघुः “त्वया न पठिता चण्डी मया नापि चिकित्सितम् । अकस्मान्नगरोपान्ते कथं धूमायते चिता” हास्यार्णवः । “चिताग्नेरिव दुष्प्रेक्ष्यम्” भा० व० २१४अ० । “सगोत्रजैर्धृतो नीत्वा तु चितामारोप्यते शवः । अधोमुखो दक्षिणादिक्चरणस्तु पुमानिति । उत्तानदेहा नारी तु सपिण्डैरपि बन्धुभिः । चाण्डालाग्नेरमेध्याग्नेः सूतिकाग्नेश्च कर्हिचित् । पतिताग्नेश्चिताग्नेश्च न शिष्टैर्ग्रहणं स्मृतम्” शु०त० । अधिकं चितिशब्दे दृश्यम् । मन्त्रसाधनाङ्गचितालक्षणं तन्त्रसारे उक्तं यथा “असंस्कृता चिता ग्राह्या न तु संस्कारसंस्कृता । चाण्डालादिषु संप्राप्ता केवलं शीघ्रसिद्धिदा” । चितासाधनप्रकारः वीरतन्त्रे ‘अष्टम्याञ्च चतुर्द्दश्यां पक्षयोरुभयोरपि । कृष्णपक्षे विशेषेण साधयेद्वीरसाधनम् । तत्रार्द्धप्रहरे यामे गते च सुरसुन्दरि ! । शवं वापि चितां वापि नीत्वा गत्वा यथासुखम् । साधयेत् स्वहितं मन्त्री मन्त्रध्यानपरायणः । भयं नैव तु कर्त्तव्यं हास्यन्तत्र विवर्ज्जयेत् । चतुर्द्दिशं न वीक्षेत मन्त्रमेव समभ्यसेत्” । तत्र पूजाद्रव्यम् ‘सामिषान्नं गुडं छागं सुरापायसपिष्टकम् । नानाफलञ्च नैवेद्यं स्वस्वकल्पोक्तसाधितम् । चितास्थानं समानीय सुहृद्भिः शस्त्रपाणिभिः । समानगुणसम्पन्नैः साधयेत् वीतभीः स्वयम्” । [ त्रिका० ।

**चिताचूडक** न० चितेव चूडकं चूलकम् यस्य कः । चितायां

**चिति** स्त्री चि+आधारे क्तिन् । १चितायाम् तत्करणदेशादिः का० श्रौ० २५।७।१५ । सूत्रोक्तो यथा “वितानं साधयित्वा समे बहुलतृणेऽन्तराग्नी चितिं चिनोति” १५सू० वितानसाधनमग्नीनां यथादेशस्थापनं कृत्वा समे तृणबहुले देशेऽन्तराग्नी काष्ठैः चितिं चिनोति” कर्कः ‘पूर्वतरम् उद्धृत्य क्षीरिणीः पुरुषाहृतीः” १६सू० “पुरुषव्याहृतानं यासामोषधीनाम् ता उद्धृत्य” देव० “क्षीरयुक्ताः पुरुषाहृतीः पुरुषनाम्नीः पुंलिङ्गशब्दाभिधेयाः अर्काद्याः” कर्कः । “विशाखाशरायमगन्धापृश्निपर्ण्यध्यण्डाश्च” १७सू० “उद्धृत्येति वर्त्तते विशाखा दूर्वा शरोदुम्बः पृश्निपर्णी माषपर्णी अध्यण्डा टणाटविका” देव० “अश्वगन्धा आसन्धिः पृश्निपर्णी लक्ष्मणेत्यपरे अध्यण्डा च ब्रह्ममण्डूकीति निगमे” कर्कः “चितिवत्” कात्या० श्रौ० २१।३।२१ “देशो भवति तद्युक्त इत्यर्थः । स चितिवत् कृतस्य दाहार्थं यादृशैः काष्ठैश्चितिर्विहिता तादृशे देशे” कर्कः । भावे क्तिन् । २समूहे मेदि० । अग्न्यादेः ३चयने संस्कारभेदे । अग्निचयनप्रकारः शत० ब्रा० ७।१।१।१ “गार्हपत्यं चेष्यन् पलाशशाखया व्युदूहति अवस्यति ह्येतद् गार्हपत्यं चिनोति इत्यादिके” विस्तरेणोक्तः । चीयतेऽस्याम् आधारे क्तिन् अग्निचयनाधारे ४इष्टकाभेदे तासामुपधानादि संस्काराः शत० ब्रा० ८।१।१।१ “प्राणभृत उपदधाति । प्राणा वै प्राणभृतः प्राणानेवैतदुपदधाति ताः प्रथमायां चितावुपदधाति” ‘एषोऽग्नेर्यत् प्रथमा चितिः पुरस्तात्तत् प्राणानुपादधाति तस्मादिमे पुरस्तात् प्राणाः इत्यादिके उक्ता इयत्ता” । “प्रथमोत्तमयोः पादमात्रीरतिरिक्ताः” कात्या० श्रौ० १७।७।२६ । “प्रथमोत्तमयोश्चित्योरतिरिक्ता या पादमात्री भवन्ति नातोऽतिरिक्ता चेति” कर्कः प्रथमापञ्चम्योः अतिरिक्ता या महत्य इष्टकास्ताः पादमात्रीरुपदधाति” सं०व्या० । ५कुड्याद्यर्थेष्टकादीनां समूहविशेषे । इष्टकामानेन चितिमानस्थानोपयोगिव्यवहारः चितिव्यवहारः । स च लीला० दर्शितो यथा चितौ करणसूत्रं सार्द्धवृत्तम् । “उच्छ्रयेण गुणितं चितेः किल क्षेत्रसम्भवफलं घनं भवेत् । इष्टिकाघनहृते घने चितेरिष्टिकापरिमितिश्च लभ्यते । इष्टिकोच्छ्रयहृदुच्छ्रितिश्चितेः स्युः स्तराश्च दृषदां चितेरपि ।

उदाहरणम्। अष्टादशाङ्गुलं दैर्घ्यं विस्तारो द्वादशाङ्गुलः। उच्छ्रितिस्त्र्यङ्गुला वा चेष्टिकानां चितौ किल। वह्निस्तृतिः पञ्चकराष्टहस्तं दैर्घ्यं च यस्यां त्रिकरोच्छ्रितिश्च। तस्यां चितौ किं फलमिष्टिकानां सङ्ख्या च का ब्रूहि कति स्तराश्च। न्यासः।




इष्टिकायाः घनहस्तमानं१/६४ चितेः घनफलम् ४०। उच्छ्रयेण गुणितं चितेर्घनफलम् १२०। अथवा इष्टिका सङ्ख्या २५६०। स्तरसङ्ख्या २४। एवं पाषाणचयेऽपि। "चितेः कपि" पा० कपि परे दीर्घः एकचितीकः "पञ्चचितिकोऽग्निः" इत्यादौ छन्दसि न दीर्घः। चाय—दीप्तौ क्तिन् चिभावः। ६चैतन्ये स्वयंप्रकाशे चिच्छब्दार्थे स्त्री "आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवला" संक्षे शारी०। ७दुर्गायाम्। "चितिश्चैतन्यमात्राद्वा चेतना वा चितिः स्मृता। महान् व्याप्य स्थिता सर्वान् सद्वा वा प्रकृतिर्मता" देवीभाग०पु० ४५अ०।

**चितिका** स्त्री० चितिरिव कायति कै–क। १कटिस्थशृङ्खलायाम् हारा०। चिति+स्वार्थे क। २चितिशब्दार्थे चिता+स्वार्थे क अतइत्त्वम्। ३चितायाम्।

**चित्कण** पु० त्रि० चिदित्यव्यक्तशब्दं कणति कण–अच्। चित्शब्दकारके। क्लीबकन्थशब्दे परे तत्पुरुषे चिह्णादि० आद्युदात्तता। चित्कणकन्थम्।

**चि(ची)त्कार** पु० चित्+कृ–भावे घञ् पृषो० वा दीर्घः। चिदित्यव्यक्तशब्दकरणे। "न हि करिणि दृष्टे चि(ची)त्कारेण तमनुमिमतेऽनुमातारः" वाचस्पति मिश्रः। "स विषीदति चित्कारात् ताडितो मर्द्दभो यथा" हितो०।

**चित्त** न० चिती–ज्ञाने वा० करणे क्त। १अन्तःकरणभेदे "मनोबुद्धिरहङ्कारश्चित्तं करणमान्तरम्। संशयो निश्चयो गर्वः स्मरणं विषया इमे" वेदा०प०। तस्य च करणम् अनुसन्धानात्मक वृत्तिभेदः। चिच्छब्दे दृश्यम्। २अन्तःकरणमात्रे अमरः "योगश्चित्तवृत्तिनिरोधः" पात० सू०। "अनन्य चित्तेन मया यथात्मना" नैष०। "अन्तश्चतुर्दश बहुराख्यातैः क्रमानिर्वर्णितेन मनोबुद्ध्यहङ्कारचित्ताभिधानरिन्द्रियचतुष्कैश्च क्रमात् संशयनिश्चयाहङ्कारचैत्यांश्च दर्शनेतान् सूक्ष्मविषयाननुभवतः" वे० सा० उक्तेः अस्याधिष्ठाता अच्युतः। कर्म्मणि कर्त्तरि वा क्त। ३ज्ञाते ४ज्ञातरि च। चित्तं च सांख्यमते त्रिगुणप्रकृतिकार्य्यम्। तदेतद्योगसूत्रभाष्यादौ दर्शितम्। "योगश्चित्तवृत्तिनिरोधः" पात० १।१।सू०

"चित्तं हि प्रख्याप्रवृत्तिस्थितिशीलत्वात् त्रिगुणम्। प्रख्यारूपं हि चित्तसत्त्वम्। रजस्तमोभ्यां संसृष्टम् ऐश्वर्य्यविषयप्रियं भवति। तदेव तमसानुविद्धमधर्म्माज्ञानावैराग्यानैश्वर्य्योपगं भवति। तदेव प्रक्षीणमोहावरणं सर्व्वतः प्रद्योतमानमनुविद्धं रजोमात्रया धर्म्मज्ञानवैराग्यैश्वर्य्योपगं भवति तदेव रजोलेशमलापेतं स्वरूपप्रतिष्ठं सत्त्वपुरुषान्यताख्यातिमात्रं धर्म्ममेघध्यानोपगं भवति। तत्परं प्रसंख्यानमित्याचक्षते ध्यायिनः। चितिशक्तिरपरिणामिन्यप्रतिसंक्रमा दर्शितविषया शुद्धा चानन्ता च सत्त्वगुणात्मिका चेयम्। अतो विपरीता विवेकख्यातिरित्यतस्तस्यां विरक्तं चित्तं तामपि ख्यातिं निरुणद्धि। तदवस्थं चित्तं संस्कारोपगं भवति। स निर्बीजः समाधिः, न तत्र किञ्चित् सम्प्रज्ञायत इत्यसम्प्रज्ञातः द्विविधः स योगश्चित्तवृत्तिनिरोध" इति भा०। "कुतः पुनरेकस्य क्षिप्तादिभूमिसम्बन्धः त्रिगुणं चैतस्य चित्तस्य वृत्तयो निरोद्धव्या इत्याशङ्क्य प्रथमं तावदवस्थासम्बन्धहेतुमुपन्यस्यति। चित्तं हीति। प्रख्याशीलत्वात् सत्त्वगुणम्। प्रवृत्तिशीलत्वाद्रजोगुणम् स्थितिशीलत्वात् तमोगुणम्। प्रख्याग्रहणमुपलक्षणार्थं तेनान्येऽपि सात्त्विकाः प्रसादलाघवप्रीत्यादयः सूच्यन्ते। प्रवृत्त्या च परितापशोकादयो राजसाः। स्थितिः प्रवृत्तिविरोधी तमोवृत्तिधर्म्मः स्थितिग्रहणात् गौरवावरणदैन्यादय उपलक्ष्यन्ते। एतदुक्तं भवति एकमपि चित्तं त्रिगुणनिर्म्मिततया गुणानाञ्च वैषम्येण परस्परविमर्द्दवैचित्र्याद्विचित्रपरिणामं सदनेकावस्थमुपपद्यत इति। क्षिप्ताद्या एव चित्तस्य भूमयः यथासम्भवमवान्तरावस्थाभेदवत्यस्ता दर्शयति। प्रख्यारूपं हीति चित्तरूपेण परिणतं सत्त्वं चित्तसत्त्वं, तदेवं प्रख्यारूपतया सत्त्वप्राधान्यं चित्तस्य दर्शितम्। तत्र चित्ते सत्त्वात् किञ्चिद्गूने

रजस्तमसी यदा न्यग्भूते भवतः तदैश्वर्यं च विषयाश्च शब्दादयस्तानेव प्रियाणि यस्य तत्तथोक्तं सत्त्वप्राधान्यात् खलु चित्तं तत्त्वे प्रविविचिषुरपि तमसा तमसा पिहितत्वादणिमादिकमेव तत्त्वमभिमन्यमानं तत्प्रविविचिषति प्रविचिनुते च स एव च रजसा चिन्त्यमानम्। तथाप्यनवस्थितत्वात् तत् प्रियमात्रं भवति। सत्त्वादिषु पुनरस्य चरवाङ्गी प्रेषा निरुद्ध एव। तदनेन विक्षिप्तं चित्तमुक्तम् क्षिप्तं दर्शयन् मूढमपि सूचयति तदेव तमसेति। यदा हि तमो रजो विजित्य प्रवृत्तं तदा चित्तसत्त्वावरकतमःसमुत्सारणेऽसमर्थत्वात् रजःसमुत्थितं चित्तमधर्माद्युपगच्छति। अधर्मश्च विपर्ययज्ञानमभावप्रत्ययालम्बनश्च निद्राख्यमुक्तम्। ततश्च मूढावस्थापि सूचितेति। अनैश्वर्यं सर्वत्रेच्छाप्रतिघातः। अधर्मादिप्राप्तं चित्तं भवतीत्यर्थः। यदा तु तदेव चित्तसत्त्वमाविर्भूतसत्त्वप्रतततमःपटलं सरजस्कं भवति तदा धर्मज्ञानवैराग्यैश्वर्याण्युपगच्छतीत्याह प्रक्षीणेत्यादि। मोहस्तमस्तदेव प्रावरणं प्रकर्षेण क्षीणं यस्य तत्तथोक्तम्। अतएव सर्वतो विशेषाविशेषलिङ्गमात्रालिङ्गपुरुषेषु प्रद्योतमानं तथापि च धर्मार्थैश्वर्याणि च कल्पते प्रवृत्त्यभावादित्यत आह। तदुविद्धं रजोमात्रया रजसः प्रवर्त्तकत्वादस्ति धर्मादिरित्यर्थः। तदनेन संप्रज्ञातसमाधिसम्पन्नयोर्मधुभूमिकप्रज्ञाज्योतिषोः प्राथमिकयोर्योगिनोश्चित्तसत्त्वं संगृहीतम् संप्रत्यतिक्रान्तभावनीयस्य ध्यायिनश्चतुर्थीं चित्तस्यावस्थामाह तदेव चित्तं रजोलेशमलापेतम् अतएव स्वरूपप्रतिष्ठमभ्यासवैराग्यपुटपाकप्रक्षालितविधूतरजस्तमोमलस्य हि बुद्धिसत्त्वतपनीयस्य स्वरूपप्रतिष्ठस्य विषयेन्द्रियप्रत्याहृतस्यानवच्छिन्नाधिकारतया च कार्य्यकारिणो विवेकख्यातिः परं कार्य्यमवशिष्यत इत्याह सत्त्वपुरुषान्यताख्यातिमात्रं चित्तं धर्ममेघध्यानोपगं भवति। धर्ममेघश्च वक्ष्यते। अतएव योगिजनप्रसिद्धिमाह तदिति। सत्त्वपुरुषान्यताख्यातिमात्रं चित्तं धर्ममेघपर्य्यन्तं परं प्रसंख्यानमित्याचक्षते ध्यायिनः। चित्तसामान्याधिकरण्यं च धर्मधर्मिणोरभेदविवक्षया द्रष्टव्यम्। विवेकख्यातेर्हानहेतुं चितिशक्तेश्चोपादानहेतुं निरोधसमाधिमवतारयितुं चितिशक्तेः साधुतामसाधुताञ्च विवेकख्यातेर्दर्शयति चितिशक्तिरित्यादि। सुखदुःखमोहात्मकत्वमशुद्धिः। सुखमोहावपि विवेकिनं दुःखाकुरुतः। अतो दुःखपक्षे यौ तथाचातिसुन्दरमप्यन्नवत् दुनोति। तेन तदपि हेयमेव विवेकिनः। सेयमविशुद्धिरन्तवती चितिशक्तौ पुरुषे न स्त इत्युक्तं शुद्धा चानन्ता चेति। ननु सुखदुःखमोहात्मकशब्दादीन् इव चेतयमाना तदाकारापत्त्या कथं विशुद्धा तदाकारपरित्यागपरिवर्जने च कुर्वती कथमनन्तेत्यत उक्तं दर्शितविषयेति ;दर्शितो विषयः शब्दादिर्यस्यै सा तथोक्ता। भवेदेतदेवं यदि बुद्धिवच्चितिशक्तिर्विषयाकारतामापद्येत। किन्तु बुद्धिरेव विषयाकारेण परिणता सती अतदाकारायै चितिशक्तये विषयमादर्शयति ततः पुरुषश्चेतयत इत्युच्यते। ननु विषयाकारां बुद्धिमनारूढाया चितिशक्तेः कथं विषयवेदनं! विषयारोहे वा कथं न तदाकारापत्तिरिति अतः उक्तम् अप्रतिसंक्रमेति। प्रतिसंक्रमः सञ्चारः स चितेर्नास्तीत्यर्थः। स एव कुतोऽस्या नास्तीत्यत उक्तम् अपरिणामिनीति। न चितेश्चिदियोऽपि धर्माधर्माऽवस्थालक्षणः परिणामोऽस्ति येन लिङ्गरूपेण परिणता सती बुद्धिसंयोगेन परिणमेत। चितिशक्तेरसंक्रान्ताया अपि विषयसंवेदनमुपपादयिष्यते। तदियं चितिशक्तिः शोभनेति, विवेकख्यातिस्तु बुद्धिसत्त्वात्मिका अशोभनेत्युक्तम्। अतश्चितिशक्तेर्विपरीतेति। यदा च विवेकख्यातिरपि हेया तदा कैव कथा दुःखान्तराणां दोषकलुषाणामिति भावः। ततस्तद्दोषनिरोधसमाधेरवतारो युज्यते इत्याह अतस्तस्यामिति। ज्ञानप्रसादमात्रेण हि परेण वैराग्येण विवेकख्यातिमपि निरुणद्धीत्यर्थः। अथ निरुद्धाऽशेषवृत्ति चित्तं कीदृशमित्यत आह तदवस्थमित्यादि। स निरोधः अवस्था यस्य तत्तथोक्तम्। निरोधस्य स्वरूपमाह स निर्बीज इति। क्लेशसहितः कर्माशयो जात्यायुर्भोगबीजं तस्मान्निर्गतः निर्बीजः अस्यैव योगिजनप्रसिद्धामन्वर्थसंज्ञामादर्शयति। न तत्रेति। उपसंहरति। द्विविधः स योगश्चित्तवृत्तिनिरोध इति" विवरणम्।

"तदवस्थे चेतसि विषयाभावात् बुद्धिबोधात्मा पुरुषः किंस्वभावः? इति—भा०

"तदा द्रष्टुः स्वरूपेऽवस्थानम्" ३सू०।

"स्वरूपप्रतिष्ठा तदानीं चितिशक्तिर्यथा कैवल्ये व्युत्थानचित्ते तु सति तथापि भवन्ती न तथा" भा०।

"संप्रज्ञातरूपमवतारयं चोदयति। तदवस्थे चेतसीति

क्रिमाच्चेपे तत्तदाकारपरिणतबुद्धिबोधात्मा स्वयं पुरुषः सदानुभूयते न तु बुद्धिबोधरहितोऽतोऽस्य पुरुषस्य बुद्धिबोधस्वभावः सवितुरिव प्रकाशः। नच संस्कारशेषे चेतसि सोऽस्ति, न च स्वभावमपहाय भावो वर्त्तितुमर्हति इति भावः। स्यादेतत् संस्कारशेषामपि बुद्धिं कस्मात् पुरुषो न बुध्यते? इत्यत आह विषयाभावादिति। न बुद्धिमात्रं पुरुषस्य विषयोऽपि तु पुरुषार्थवती बुद्धिः। विवेकख्यातिविषयभोगौ च पुरुषार्थौ तौ च निरुद्धावस्थायां न स्त इति सिद्धो विषयाभाव इत्यर्थः। सूत्रेण परिहरति "तदा द्रष्टुः स्वरूपेऽवस्थानम्" सू०। "स्वरूप इत्यारोपितम् शान्तघोरमूढस्वरूपं निवर्त्तयति पुरुषस्य हि चैतन्यं स्वरूपमनौपाधिकम् नतु बुद्धिबोधः शान्तादिरूप औपाधिको हि सः स्फटिकस्येव स्वभावतः स्वच्छधवलस्य जपाकुसुमसन्निधानोपाधिररुणिमा नचोपाधिनिवृत्तावुपहितनिवृत्तिरतिप्रसङ्गादिति भावः। स्वरूपस्य चाभेदेऽपि भेदं विकल्प्य अधिकरणभाव उक्त इति। अयमेवार्थो भाष्यकृता द्योत्यते। स्वरूपप्रतिष्ठेति। तदानीं निरोधावस्थायां न व्युत्थानावस्थायामिति भावः। स्यादेतत् व्युत्थानावस्थायामप्रतिष्ठिता, स्वरूपे चितिशक्तिः, निरोधावस्थायां प्रतितिष्ठन्ती परिणामिनी स्यात् व्युत्थाने वा स्वरूपप्रतिष्ठाने सति व्युत्थान निरोधयोरविशेष इत्यत आह व्युत्थानचित्ते त्विति न जातु कूटस्थनित्या चितिशक्तिः स्वरूपात् च्यवते। तेन यथा निरोधे तथैव व्युत्थानेऽपि। न खलु शुक्तिकायाः प्रमाणविपर्य्ययज्ञानगोचरत्वेऽपि स्वरूपोदयव्ययौ भवतः प्रतिपत्ता त्वतथाभूतमपि तथात्वेनाभिमन्यते। निरोधसमाधिमपेक्ष्य सम्प्रज्ञातोऽपि व्युत्थानमेवेति" विवरणम्।

"कथन्तर्हि दर्शितविषयत्वात्"—भा०

"वृत्तिसारूप्यमितरत्र" ४सू०

"व्युत्थाने याः चित्तवृत्तयः तदविशिष्टवृत्तिः पुरुषः। तथा च सूत्रं "एकमेव दर्शनं" "ख्यातिरेव दर्शनमिति" "चित्तम् अयस्कान्तमणिकल्पं सन्निधिमात्रोपकारि दृश्यत्वेन स्वं भवति पुरुषस्य स्वामिनः। तस्माच्चित्तवृत्तिबोधे पुरुषस्यानादिसम्बन्धो हेतुः" भाष्यम्।

"सूत्रान्तरमवतारयितुं पृच्छति कथन्तर्हि इति। यदि भवति न तथा केन तर्हि प्रकारेण प्रकाशत इत्यर्थः। हेतुपदमध्याहृत्य सूत्रं पठति। दर्शितविषयत्वात्। वृत्तिसारूप्यमितरत्र। इतरत्र व्युत्थाने याश्चित्तवृत्तयः शान्तघोरमूढास्ता एव विशिष्टा अभिन्नावृत्तयो यस्य पुरुषस्य स तथोक्तः सारूप्यमित्यत्र सवद् एकपर्य्यायः। एतदुक्तं भवति जपाकुसुमस्फटिकयोरिव बुद्धिपुरुषयोः सन्निधानादभेदग्रहे बुद्धिवृत्तीः पुरुषे समारोप्य शान्तोऽस्मि दुःखितोऽस्मि मूढोऽस्मीति अध्यवस्यति। यथा मलिने दर्पणतले प्रतिबिम्बितं मुखं मलिनतामारोप्य शोचत्यात्मानं मलिनोऽस्मीति। यद्यपि पुरुषस्यारोपोऽपि शब्दादिविज्ञानवत् बुद्धिवृत्तिः यद्यपि च प्राकृतत्वेनाचिद्रूपतयाननुभाव्यस्तथापि बुद्धेः पुरुषत्वमापादयन् पुरुषवृत्तिरिवानुभव इवावभासते। तथाचायमविपर्य्ययोऽप्यात्मा विपर्य्ययवानिवाऽभोक्तापि भोक्तेव विवेकख्यातिरहितोऽपि तत्सहित इवाविवेकख्यातेः प्रकाशते। एतच्च चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनमित्यत्र सत्त्वपुरुषयोरत्यन्तासङ्कीर्णयोः प्रत्ययाविशेषो भोग इत्यत्र चोपपादयिष्यते। एतच्च मतान्तरेऽपि सिद्धमित्याह तथा चेति। पञ्चशिखाचार्य्यस्य सूत्रम् "एकमेव दर्शनमिति"। ननु कथमेकं दर्शनं यावता बुद्धेः शब्दादिविषया विवेकविषया च वृत्तिः प्राकृततया जडत्वेनाननुभाव्या, दर्शनं ततोऽन्यत् पुरुषस्य, चैतन्यमनुभवो दर्शनमित्यत आह "ख्यातिरेव दर्शनमिति" उदयव्ययधर्म्मिणीं वृत्तिं ख्यातिं लौकिकाभिप्रेतत्यतदुक्तमेवेति चैकमेव चैतन्यन्तु पुरुषस्य स्वभावो न ख्यातिः। तत्तु न लोकप्रत्यक्षगोचरोऽपि त्वागमानुमानगोचर इत्यर्थः। तदनेन व्युत्थानावस्थायां मूलकारणमविद्यां दर्शयता तद्धेतुकसंयोगो भोगहेतुः स्वस्वामिभावोऽपि सूचित इति तमुपपादयन्नाह। चित्तं स्वं भवति। पुरुषस्य स्वामिन इति सम्बन्धः। ननु चित्तजनितमुपकारं भजमानो हि चेतनश्चित्तस्येशिता न चास्य तज्जनितोपकारसम्भवस्तदसम्बन्धादनुपकार्य्यत्वात् तत्संयोगतदुपकारभागित्वे परिणामप्रसङ्गादित्यत आह अयस्कान्तमणिकल्पं सन्निधिमात्रोपकारि दृश्यत्वेनेति। न पुरुषसंयुक्तं चित्तमपितु तत्सन्निहितं सन्निधिश्च पुरुषस्य न देशतः कालतो वा तदसंयोगात् किन्तु योग्यतालक्षणोऽस्ति च पुरुषस्य भोक्तृशक्तिश्चित्तस्य भोग्यशक्तिः। तदुक्तम् दृश्यत्वेनेति। शब्दाद्याकारपरिणतस्य भोग्यत्वेनेत्यर्थः। भोगश्च यद्यपि शब्दाद्याकारवृत्तिश्चित्तस्य धर्म्मस्तथापि चित्तचैतन्ययोरभेदसमारोपाद्वृत्तिसारूप्यात् पुरुषस्येत्युक्तम्। तस्माच्चितेनासंयोगेऽपि तज्जनितोपकारभागिता

पुरुषस्यापरिणामिता चेति सिद्धम्। ननु सत्त्वाभिसम्बन्धो भोगहेतुरविद्यानिमित्तोऽविद्या तु किन्निमित्ता न खलु निर्निमित्तं कार्य्यमुत्पद्यते। यथाहुः "स्वप्नादिवदविद्यायाः प्रवृत्तिः कस्य किंकृता" इति शङ्कामुपसंहारव्याजेनोद्धरति। तस्मात् चित्तवृत्तिबोधे शान्तघोरमूढाकारचित्तवृत्त्युपभोगे अनाद्यविद्यानिमित्तत्वादनादिः संयोगः हेतुः अविद्यावासनयोश्च सन्तानो वीजाङ्कुरसन्तानवदनादिरिति भावः" विवरणम्।

अन्तःकरणशब्दे १९५ पृ० अधिकमुक्तम्।

कैवल्यपादे च ज्ञानज्ञेययोर्भेदव्यवस्थापनेन तद्विशेष उक्तो यथा "कुतश्चैतदन्याय्यम्" भा०

"वस्तुसाम्ये चित्तभेदात्तयोर्विभक्तः पन्थाः" सू०।

"बहुचित्तावलम्बनीभूतमेकं वस्तु साधारणं तत् खलु नैकचित्तपरिकल्पितं नाप्यनेकचित्तपरिकल्पितं किन्तु स्वप्रतिष्ठितं कथं? वस्तुसाम्ये चित्तभेदात्, धर्म्मापेक्षं चित्तस्य वस्तुसाम्येऽपि सुखज्ञानं भवति, अधर्मापेक्षं ततएव दुःखज्ञानम्, अविद्यापेक्षं ततएव मूढज्ञानं सम्यग्दर्शनापेक्षं ततएव माध्यस्थ्यज्ञानमिति। कस्य तच्चित्तेन परिकल्पितं? नचान्यचित्तपरिकल्पितेनार्थेनान्यस्य चित्तोपरागो युक्तः तस्माद्वस्तुज्ञानयोर्ग्राह्यग्रहणभेदभिन्नयोर्विभक्तः पन्था नानयोः सङ्करगन्धोऽप्यस्तीति साङ्ख्यपक्षे पुनर्वस्तु त्रिगुणं चलञ्च गुणवृत्तमिति धर्म्मादिनिमित्तापेक्षं चित्तैरभिसंबध्यते निमित्तानुरूपस्य च प्रत्ययस्योत्पद्यमानस्य तेन तेनात्मना हेतुर्भवति। केचिदाहुर्ज्ञानसहभूरेवार्थो भोग्यत्वात् सुखादिवदिति नत तथा द्वारा साधारणत्वं बाधमानाः पूर्वोत्तरेषु क्षणेषु वस्तुरूपमेवापह्नुवते" भा०

तदेवमुक्तमूलां भाष्यकृद्विज्ञानातिरिक्तस्थापने युक्तिमुक्त्वा सौत्रीं युक्तिमवतारयति कुतश्चैतदिति। वस्तुसाम्ये इति यन्नानात्वे यस्यैकत्वं तत्ततोऽन्यत् भिद्यते यथा चैत्रस्य ज्ञानमेकं भिन्नेभ्यो देवदत्तविष्णुमित्रमैत्रप्रत्ययेभ्यो भिद्यते ज्ञाननानात्वेऽपि चार्थो न भिद्यते इति भवति विज्ञानेभ्योऽन्यः अभेदश्चार्थस्य ज्ञानभेदेऽपि प्रमातॄणां परस्परप्रतिसन्धानादवसीयते। अस्ति हि रक्तद्विष्टविमूढमध्यस्थानामेकस्यां योषिति प्रतीयमानायां प्रतिसन्धानं या त्वया दृश्यते सैव मयापीति। तस्माद्वस्तुसाम्ये चित्तभेदात् ज्ञानभेदात्तयोरर्थज्ञानयोर्विभक्तः पन्थाः स्वरूपभेदोपायः सुखज्ञानं कान्तायाः कान्तस्य सपत्नीनां दुःखज्ञानं तामविन्दतो विषादः। स्यादेतत् यत्नैकस्य चित्तेन परिकल्पितः कामिनीलक्षणोऽर्थः तेनैवान्येषामपि चित्तमुपरज्यते इति साधारणमुपपद्यते इत्यत आह नचान्येति तथा सत्येकस्मिन्नीलज्ञानवति सर्व्व एव नीलज्ञानवन्तः स्युरिति नन्वर्थवादिनामप्येकोऽर्थः कथं सुखादिभेदाद्भिन्नविज्ञानहेतुर्न ह्यविलक्षणात् कारणात् कार्य्यभेदो युक्त इत्यत आह साङ्ख्यपक्षे इति एकस्यैव बाह्यस्य वस्तुनस्त्रैगुण्यपरिणामस्य त्रैरूप्यमुपपन्नम्।

एवमपि सर्वेषामविशेषेण सुखदुःखमोहात्मकं विज्ञानं स्यादित्यत आह धर्म्मादिनिमित्तापेक्षं रजःसहितं सत्त्वं धर्म्मापेक्षं सुखज्ञानं जनयति। एवमधर्म्मापेक्षं रजो दुःखं, तमस्तु तथाभूतं मूढज्ञानम्। सत्त्वमेव तु विगतरजस्कं विद्यापेक्षं माध्यस्थ्यज्ञानमिति ते च धर्म्मादयो न सर्वे सर्वत्र पुरुषे सन्ति। किन्तु कश्चित् कश्चिदिति अभ्युपपन्ना व्यवस्थेति। अत्र केचिदाहुः प्रवादुकाः ज्ञानसहभूरेवार्थो भोग्यत्वात् सुखादिवदिति एतदुक्तं भवति भवत्वर्थो ज्ञानात् व्यतिरिक्तः तथाप्यसौ जडत्वात् न ज्ञानमन्तरेण शक्यः प्रतिपत्तुं ज्ञानेन तु भासनीयः तथाच ज्ञानसमयएवास्ति नान्यदा प्रमाणाभावादिति तदेतन्मतं तावत् दूषयति भाष्यकारः तत्र तया द्वारेति वस्तु खलु सर्वचित्तसाधारणमनेकक्षणपरम्परोह्यमानं परिणामात्मकमनुभूयते लौकिकपरीक्षकैः तच्चेद्विज्ञानेन सह भवेत् नूनमेवंविधमेव चेदिदमंशस्योपरि कोऽयमनुरोधः येन सोऽपि नापह्नूयेतेत्यर्थः" विव०।

"नचैकचित्ततन्त्रं वस्तु तदप्रमाणकं तदा किं स्यात्" सू०।

"एकचित्ततन्त्रं चेद्वस्तु स्यात्तदा चित्ते व्यग्रे निरुद्धे वा स्वरूपमेव तेनापरामृष्टमन्यस्याविषयीभूतमप्रमाणकमगृहीतस्वभावकं केनचित्तदानीं किं तत्स्यात्? सम्बध्यमानं वा पुनश्चित्तेन कुत उत्पद्येत ये चास्यानुपस्थिता भागास्ते चास्य न स्युरेवं नास्ति पृष्ठमित्युदरमपि न गृह्येत तस्मात् स्वतन्त्रोऽर्थः सर्वपुरुषसाधारणः स्वतन्त्राणि च चित्तानि प्रतिपुरुषं प्रवर्त्तन्ते तयोः सम्बन्धादुपलब्धिः पुरुषस्य भोग इति" भा०।

"मा वा भूदिदमंशस्यापह्नवो ज्ञानसहभूरेवास्त्वर्थः तथाप्याह नचैकं किं स्यात् यदि घटग्राहि चित्तं तद् यदा पटव्यग्रतया न घटे वर्त्तते यद् वा विवेकविषयमासीत् तदेव च निरोधं समापद्यते तदा घटज्ञानस्य वा विवेकज्ञानभेदमात्र जीवनलक्षणाघातष्ट एव स्यादित्याह एकचित्तेति किं तत् स्यात् न स्यादित्यर्थः। संबध्यमानञ्च चित्तेन तद्

वस्तु विवेकोवा घटो वा कुत उत्पद्यते नियतकारणान्वयव्यतिरेकानुविधायिभावानि हि कार्य्याणि न स्वकारणमतिवर्त्य कारणान्तराद्भवितुमीशते, मा भूदकारणत्वे तेषां कादाचित्कत्वव्याघातः न च तज्ज्ञानकारणत्वमेव तत्कारणत्वमिति युक्तम्। आशाभोदकस्य उपार्ज्जितमोदकस्य वोपयुज्यमानस्य रसवीर्य्यविपाकादिसाम्यप्रसङ्गात् तस्मात् वाभूत्तं सम्बध्यमानं वा पुनश्चित्तेनेति। अपि च योयोऽर्वागभागः स सर्वोमध्यपरभागव्याप्तः ज्ञानाधीने सद्भावे तस्याननुभूयमानत्वान्मध्यपरभागौ न स्त इतिव्यापकाभावादर्वागभागोऽपि न स्यात् इत्यर्थाभावात् कुतो ज्ञानसहभूरर्थ इत्याह। ये चास्येति अनुपस्थिता अज्ञाताः, उपसंहरति तस्मादिति सुगमं शेषम्" विवरणम्।

"तदुपरागापेक्षित्वाच्चित्तस्य वस्तु ज्ञाताज्ञातम्" सू०।

"अयस्कान्तमणिकल्पा विषयाः। अयःसधर्म्मकं चित्तमभिसम्बध्योपरञ्जयन्ति येन च विषयेणोपरक्तं चित्तं स विषयोज्ञातस्ततोऽन्यः पुनरज्ञातोवस्तुनोज्ञाताज्ञातस्वरूपत्वात् परिणामि चित्तम्" भा०।

"स्यादेतत् अर्थश्चेत् स्वतन्त्रः स च जड़स्वभाव इति न कदाचित् प्रकाशेत प्रकाशने वा जड़त्वमप्यस्यापगतमिति भावोऽप्यपगच्छेत् न जातु स्वभावमपहाय भावोवर्त्तितुमर्हति न चेन्द्रियाद्याधेयो जड़स्वभावस्यार्थस्य धर्म्मःप्रकाश इति साम्प्रतम्। अर्थधर्म्मत्वे नीलत्वादिवत् सर्वपुरुषसाधारण इत्येकः शास्त्रार्थज्ञ इति सर्व एव विद्वांसः प्रसज्येरन् न जाल्मःकश्चिदस्ति। न चातीतानागतयोः धर्म्मः प्रत्युत्पन्नयुक्तः तस्मात् स्वतन्त्रोऽर्थउपलम्भविषय इति मनोरथमात्रमेतदित्यत आह तदुपरागेति। जडस्वभावोऽप्यर्थः इन्द्रियप्रणालिकया चित्तमुपरञ्जयति तदेवंभूतं चित्तदर्पणमुपसंक्रान्तप्रतिविम्बा चितिशक्तिश्चित्तमर्थोपरक्तं चेतयमानार्थमनुभवति नत्वर्थे किञ्चित् प्राकव्यादिकमाधत्ते नाप्यसंबद्धा चित्तेन, तत् प्रतिविम्बसंक्रान्तेरुक्तत्वादिति। यद्यपि च सर्वगतत्वाच्चित्तस्य चेन्द्रियस्य चाहङ्कारिकस्य विषये नास्ति सम्बन्धः तथापि यत्र शरीरे वृत्तिमच्चित्तं तेन सह सम्बन्धो विषयाणामित्ययस्कान्तमणिकल्प इत्युक्तम् अयःसधर्मकं चित्तमिति। इन्द्रियप्रणालिकयाभिसंबध्योपरञ्जयन्ति अतएव चित्तं परिणामीत्याह वस्तुन इति" विव०।

"यस्य तु तदेव चित्तं विषयस्तस्य सदाऽपरिणामित्वात्" भा०।

"सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वात्" सू०।

"यदि चित्तवत् प्रभुरपि पुरुषः परिणमेत् ततस्तद्विषयाश्चित्तवृत्तयः शब्दादिविषयवत् ज्ञाताज्ञाताः स्युः सदा ज्ञातत्वन्तु मनसस्तत्प्रभोः पुरुषस्यापरिणामित्वमनुमापयति" भा०।

"तदेवं चित्तव्यतिरेकेणार्थमवस्थाप्य तेभ्यः परिणतिधर्मकेभ्यो व्यतिरिक्तमात्मानमादर्शयितुं तद्धर्म्मापरिणामित्वमस्य वक्तुं पूरयित्वा सूत्रं पठति "यस्य तु तदेव चित्तं विषयस्तस्य सदाऽपरिणामित्वात्"। क्षिप्तमूढ़विक्षिप्तैकाग्रतावस्थितं चित्तमानिरोधात् सर्वदा पुरुषेणानुभूयते वृत्तिमत् तत् कस्य हेतोः? यतः पुरुषोऽपरिणामी परिणामित्वे चित्तवत् पुरुषोऽपि ज्ञाताज्ञातविषयो भवेत्। ज्ञातविषय एव त्वयं तस्मादपरिणामी ततश्च परिणामिभ्योऽतिरिच्यते इति तदेतदाह यदि चित्तवदिति। सदा ज्ञातत्वं तु मनसः सवृत्तिकस्य तस्य यः प्रभुः स्वामी भोक्तेति यावत् तस्य प्रभोः पुरुषस्यापरिणामित्वमनुमापयति तथाचापरिणामिनस्तस्य परिणामिनश्चित्तात् पुरुषस्य भेद इति भावः" विव०।

"स्यादाशङ्का चित्तमेव स्वाभासं विषयाभासञ्च वैशेषिकाणां चित्तात्मवादिनाञ्च भविष्यत्यग्निवत्" भा०।

"न तत्स्वाभासं दृश्यत्वात्" सू०।

"यथेतराणीन्द्रियाणि शब्दादयश्च दृश्यत्वान्न स्वाभासानि तथा मनोऽपि प्रत्येतव्यम्। न चाग्निरत्र दृष्टान्तः नह्यग्निरात्मरूपमप्रकाशं प्रकाशयति। प्रकाशश्चायं प्रकाश्यप्रकाशकसंयोगे दृष्टः न च स्वरूपमात्रेऽस्ति संयोगः किञ्च स्वाभासं चित्तमित्यग्राह्यमेव कस्यचिदिति शब्दार्थः। तद्यथा स्वात्मप्रतिष्ठमाकाशमित्यप्रतिष्ठमित्यर्थः स्वबुद्धिप्रचारप्रतिसंवेदनात् सत्त्वानां प्रवृत्तिर्दृश्यते। क्रुद्धोऽहम्भीतोऽहमसुत्र मे रागोऽसुत्र मे क्रोध इत्येतत् स्वबुद्धेरग्रहणे न युक्तमिति" भा०।

"अत्र वैनाशिकमुत्थापयति स्यादाशङ्केति अयमर्थः स्यादेतदेवं यदि चित्तमात्मनो विषयः स्यात् अपि तु स्वप्रकाशने तत् विषयाभासं पूर्वचित्तं प्रतीत्य समुत्पन्नं तत्कुतः पुरुषस्य सदा ज्ञानविषयत्वं कुतस्तरां वाऽपरिणामतया परिणामिनश्चित्ताद्भेद इति भवेदेतदेवं यदि स्वसंवेदनं चित्तं स्यात्तत्तु नास्ति तद्धि परिणामितया नीलादिवदनुभवव्याप्यम्। यस्मादनुभव-

ग्राह्यं न तत् स्वाभासं भवितुमर्हतीति स्वात्मनि वृत्तिविरोधात् नहि तदेव क्रिया च कर्म च कारकञ्च न हि पाकः पच्यते छिदा वा छिद्यते पुरुषस्त्वपरिणामी नानुभवकर्मेति नास्मिन् स्वयंप्रकाशता न युज्यते अपराधीनप्रकाशता ह्यस्य स्वयंप्रकाशता नानुभवकर्मता तस्मात् दृश्यत्वात् दर्शनकर्म चित्तं न स्वाभासम् आत्मप्रकाशप्रतिबिम्बितस्यैव चित्तस्य तावद्वृत्तिविषयाः प्रकाशन्त इति भावः। ननु दृष्टोऽग्निः स्वयं प्रकाशश्च न हि यथा घटादयोऽग्निना व्यज्यन्ते एवमग्निरप्यन्तरेणेत्यत आह। तथाग्निरत्रेति कस्मात्? न हीति मा भाग्निरप्यन्तरात् प्रकाशिष्ट विज्ञानात् तु प्रकाशत इति न स्वयं प्रकाशत इति न व्यभिचार इत्यर्थः। प्रकाशाद्यवच्छिनत्ति। क्रियारूपः प्रकाश इति यावत् एतदुक्तं भवति या या क्रिया सा सा सर्वा कर्तृकरणकर्मसम्बन्धेन दृष्टा यथा पाको दृष्टस्तान्नितण्डुलसम्बन्धेन तथा प्रकाशोऽपि क्रियेति तथापि तथा भवितव्यं सम्बन्धश्च भेदाश्रयो नाभेदे सम्भवति इत्यर्थः। किञ्च स्वाभासं चित्तमित्यग्राह्यमेव कस्यचिदिति शब्दार्थः। स्यादेतत् मा भूत् ग्राह्यं चित्तं न हि यद्ग्रहणस्य कारणस्याव्यापकस्य च निवृत्तौ चित्तनिवृत्तिः इत्यत आह स्वबुद्धीति बुद्धिश्चित्तं प्रचारा व्यापाराः सत्वाः प्राणिनश्चित्तस्य वृत्तिभेदाः क्रोधलोभादयः स्वाश्रयेण च सह प्रत्यात्ममनुभूयमानाश्चित्तस्याग्राह्यतां विघटयन्तीत्यर्थः। स्वबुद्धिप्रचारप्रतिसंवेदनमेव विशदयति क्रुद्धोऽहमिति" विवरणम्।

"एकसमये चोभयानवधारणम्" ।सू०।

"न चैकस्मिन् क्षणे स्वपररूपावधारणं युक्तं क्षणिकवादिनां यद् भवनं सैव क्रिया तदेव च कारकमित्यभ्युपगमः" । भा० ।

"स्वाभासं विषयाभासं चित्तमिति प्रवाणो न तावत् येनैव व्यापारेणात्मानमवधारयति तेनैव विषयमपीति वक्तुमर्हति नह्यविलक्षणो व्यापारः कार्यभेदाय पर्याप्तः, तस्माद्व्यापारभेदोऽङ्गीकर्त्तव्यः न च वैनाशिकानामुत्पत्तिभेदातिरिक्तः अस्ति व्यापारः न चैकस्याः क्षणोत्पत्तेरविलक्षणायाः कार्य्यवैलक्षण्यसम्भवः तस्याकस्मिकत्वप्रसङ्गात्। न चैकस्योत्पत्तिद्वयसम्भवः तस्माद्धर्मस्य च ज्ञानरूपस्य चावधारणं नैकस्मिन् समये इति तदेतद्भाष्येणोच्यते न चैकस्मिन् क्षणे इति तथाचोक्तं वैनाशिकैः "भूतिर्यैषा क्रिया सैव कारकं सैव चोच्यते" इति तस्माद्ग्राह्यमेतच्चित्तस्य सदातनं स्वाभासत्वमुपनयत् दृष्टारञ्च दृष्टुरपरिणामित्वं च दर्शयतीति सिद्धम्" विवरणम्।

"चित्तान्तरदृश्ये बुद्धिबुद्धेरतिप्रसङ्गः स्मृतिसङ्करश्च" सू०।

"स्यान्मतिः स्वरसनिरुद्धं चित्तं चित्तान्तरेण समनन्तरेण गृह्यत" इति। अथ चित्तं चेच्चित्तान्तरेण गृह्येत बुद्धिः केन गृह्यते साप्यन्यया साप्यन्ययेत्यतिप्रसङ्गः स्मृतिसङ्करश्च यावन्तो बुद्धिबुद्धीनामनुभवास्तावत्यः स्मृतयः प्राप्नुवन्ति तत्सङ्कराच्चैकस्मृत्यनवधारणञ्च स्यादित्येवं बुद्धिप्रतिसंवेदिनं पुरुषमपलपद्भिः वैनाशिकैः सर्वमेवाकुलीकृतं, ते तु भोक्तृस्वरूपं यत्र क्वचन कल्पयन्तो न न्यायेन संगच्छन्ते। केचित् सत्त्वमात्रमपि परिकल्प्यास्ति स सत्त्वो य एतान् स्कन्धान् निक्षिप्यान्यांश्च प्रतिसन्धत्त इत्युक्त्वा ततएव पुनस्त्रस्यन्ति तथा स्कन्धानां पुनर्निर्वेदाय विरागायानुत्पादाय प्रशान्तये गुरोरन्तिके ब्रह्मचर्यं चरिष्यामीत्युक्त्वा सत्त्वस्य पुनः सत्त्वमेवापह्नुवते "साङ्ख्ययोगादयस्तु प्रवादाः स्वशब्देन पुरुषमेव स्वामिनं चित्तस्य भोक्तारमुपयन्तीति" भा०।

"पुनर्वैनाशिकमुत्थापयति। स्यान्मतिः मा भूत् दृश्यत्वेन स्वसंवेदनम् एवमप्यात्मा न सिध्यति। स्वसन्तानवर्त्तिना चरमचित्तक्षणेन स्वरसनिरुद्धस्वजनकचित्तक्षणग्रहणादित्यर्थः। समस्य तज्ज्ञानत्वेनानन्तरस्य चाव्यवहितत्वेन समनन्तरं तेन। चित्तान्तरस्य च। बुद्धिरिति चित्तमित्यर्थः नागृहीता चरमा बुद्धिः पूर्व्वबुद्धिग्रहणसमर्था ज्ञानवद्बुद्ध्या संबद्धा पूर्व्वा बुद्धिर्बुद्धा भवितुमर्हति। नह्यगृहीतदण्डो दण्डिनमवगन्तुमर्हतीति तस्मादनवस्थेति विज्ञानवेदनसंज्ञारूपसंस्काराः स्कन्धाः। साङ्ख्ययोगादयः प्रवादाः साङ्ख्याश्च योगाश्च तत्प्रवादयो येषां वैशेषिकादिप्रवादानान्ते साङ्ख्ययोगादयः प्रवादाः सुगममन्यत्" विवरणम्।

"कथं?" भा० "चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम्" सू०।

"अपरिणामिनी हि भोक्तृशक्तिरप्रतिसंक्रमा च परिणामिन्यर्थे प्रतिसंक्रान्तेव तद्वृत्तिमनुपतति तस्याश्च प्राप्तचैतन्योपग्रहरूपाया बुद्धिवृत्तेरनुकारिमात्रतया बुद्धिवृत्त्यविशिष्टा हि ज्ञानवृत्तिराख्यायते तथाचोक्तं "न पातालं न च विवरं गिरीणां नैवान्धकारं कुक्षयो नोदधीनाम्। गुहा यस्यां निहितं ब्रह्म शाश्वतं बुद्धिवृत्तिविशिष्टं कवयो वेदयन्ते इति" भा०।

"स्यादेतत् यदि चित्तं न स्वाभासं नापि चित्तान्तरवेद्यं ह्यात्मनापि कथं भोक्ष्यते चित्तं? न खल्वात्मन स्वयंप्रकाशस्याप्यस्ति काचित् क्रिया न तामन्तरेण कर्त्ता न चासम्बद्धश्चित्तेन कर्मणा तस्य भोक्ता अतिप्रसङ्गादित्याशयवान् पृच्छति कथमिति। एतस्योत्तरमाह चितेरिति। यत् तदवोचत् वृत्तिसारूप्यमितरत्रेति तदितः समुत्थितचित्तेः स्वबुद्धिसंवेदनं बुद्धेस्तदाकारापत्तौ चितिप्रतिबिम्बाधारतया तद्रूपतापत्तौ सत्यां यथाहि चन्द्रमसः क्रियामन्तरेणापि संक्रान्तचन्द्रप्रतिबिम्बममलं जलमचलं चलमिव चन्द्रमसमवभासयति एवं विनापि चितिव्यापारम् उपसंक्रान्तचितिप्रतिबिम्बं चित्तं स्वगतया क्रियया क्रियावतीमसङ्गतामपि सङ्गतां चितिशक्तिमवभासयत् भोग्यभावमाच्छादयत् भोक्तृभावमापादयति तस्या इति सूत्रार्थः भाष्यमप्येतदर्थमसकृत्तत्र तत्र व्याख्यातम् इति न व्याख्यातमत्र बुद्धिवृत्त्यविशिष्टत्वे ज्ञानवृत्तेरागममुदाहरति तथाचोक्तं न पातालमिति शाश्वतस्य शिवस्य ब्रह्मणो विशुद्धस्वभावस्य चितिच्छायापन्नां मनोवृत्तिमेव चितिच्छायापन्नत्वाच्चितेरव्यविशिष्टां गुहां वेदयन्ते तस्यामेव गुहायां तद् गुह्यं ब्रह्म तदवनयित्तु स्वयंप्रकाशमनावरणमनुपसर्गं प्रद्योतते परमदेहस्य भगवत इति तदेवं दृश्यत्वेन चित्तस्य परिणामिनस्तदतिरिक्तः पुमान परिणतिधर्म्मा व्युत्पादितः" विव०।

"अथ चैतदभ्युपगम्यते" भा०।

"द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम्" सू०।

"मनो हि मन्तव्येनार्थेनोपरक्तं तत् स्वयञ्च विषयत्वाद्विषयिणा पुरुषेणात्मीयया वृत्त्याभिसम्बद्धं तदेतच्चित्तमेव द्रष्टृदृश्योपरक्तं विषयविषयिनिर्भासं चेतनाचेतनस्वरूपापन्नं विषयात्मकमप्यविषयात्मकमिवाचेतनं चेतनमिव स्फटिकमणिकल्पं सर्व्वार्थमित्युच्यते। तदनेन चित्तसारूप्येण भ्रान्ताः केचित्तदेव चेतनमित्याहुः अपरे चित्तमात्रमेवेदं सर्वं, नास्ति खल्वयं गवादिर्घटादिश्च सकारणो लोक इति, अनुकम्पनीयास्ते कस्मात्? अस्ति हि तेषां भ्रान्तिबीजं सर्वरूपाकारनिर्भासं चित्तमिति समाधिप्रज्ञायां प्रज्ञेयोऽर्थः प्रतिबिम्बीभूतस्तस्यालम्बनीभूतत्वादन्यः स चेदर्थश्चित्तमात्रं स्यात् कथं प्रज्ञयैव प्रज्ञारूपमवधार्य्येत तस्मात् प्रतिबिम्बीभूतोऽर्थः प्रज्ञायां येनावधार्य्यते स पुरुष इति एवं ग्रहीतृग्रहणग्राह्यस्वरूपचित्तभेदात्त्रयमप्येतत्तज्जातितः प्रविभजन्ते सम्यग्दर्शिनस्तैरधिगतः पुरुषः" वेदव्यासभाष्यम्

"संप्रति लोकप्रत्यक्षमप्यत्र प्रमाणयति। अत चैतदिति अवश्यं चैतदित्यर्थः। इद्धित्यादि यथा हि नीलाद्यनुरक्तं चित्तं नीलाद्यर्थं प्रत्यक्षेणैवावस्थापयति एवं द्रष्टृच्छायापत्त्या तदनुरक्तं चित्तं द्रष्टारमपि प्रत्यक्षेणावस्थापयति अस्ति हि द्राकारं ज्ञानं नीलमहं सम्प्रत्येमि" इति तस्मात् ज्ञेयवत् ज्ञातापि प्रत्यक्षसिद्धोऽपि न विविच्यावस्थापितो यथा जले चन्द्रमसो बिम्बं नत्वेतावता तदप्रत्यक्षं न चास्य जलगतत्वे तदप्रमाणमिति चन्द्ररूपेण प्रमाणं भवितुमर्हति तस्माच्चित्ते प्रतिबिम्बिततया चैतन्यगोचरापि चित्तवृत्तिर्न चैतन्यागोचरेति तदिदं सर्व्वार्थत्वं चित्तस्येति तदेतदाह मनो हीति न केवलः तदाकारापत्त्या मन्तव्येनार्थेनोपरक्तं मनः अपितु स्वयं चेति चकारो भिन्नक्रमः पुरुषेणेत्यस्यानन्तरं द्रष्टव्यः तच्छायापत्तिः पुरुषस्य वृत्तिः इयञ्च चैतन्यच्छायापत्तिश्चित्तस्य वैनाशिकैरभ्युपेतव्या कथमन्यथा चित्ते चैतन्यमेते आरोपयाम्बभूवुरित्याह तदनेनेति केचिद्वैनाशिका बाह्यार्थवादिनः। अपरे विज्ञानमात्रवादिनः। ननु यदि चित्तमेव द्रष्ट्राकारं दृश्याकारं चानुभूयते हन्त चित्तादभिन्नावेव द्रष्टृदृश्यौ यथाहुः। "अभिन्नोऽपि हि बुद्ध्यात्मा विपर्य्यासितदर्शनैः। ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते" इति तत्कथमेतेऽनुकम्पनीया इत्यत आह। समाधिप्रज्ञायामिति ते खलूक्ताभिरुपपत्तिभिश्चित्तातिरिक्तं पुरुषमभ्युपगमय्याप्याशङ्क्ययोगोपदेशेन समाधिप्रज्ञायामात्मगोचरायामवतार्य्य बोधयितव्याः। तद्यथा समाधिप्रज्ञायां प्रज्ञेयोऽर्थः आत्मप्रतिबिम्बीभूतोऽन्यः कस्मात्? तस्यात्मनः आलम्बनीभूतत्वात् अथ चित्तादभिन्नमेव कस्मान्नालम्बनं भवतीति यदि युक्तिबोधितापि वैजात्याद्वदेत् तत्र हेतुमाह स चेदात्मरूपोऽर्थः चित्तमात्रं स्यात् न तु ततो व्यतिरिक्तः ततः कथं प्रज्ञयैव प्रज्ञारूपमवधार्य्येत स्वात्मनि वृत्तिविरोधात्। उपसंहरति तस्मादिति। समीचीनोपदेशेनानुकम्पिता भवन्तीति आह। एवमेतदिति जातितः स्वभावतः इत्यर्थः" वि०।

"इतश्चैतत्—तदसङ्ख्येयवासनाभिश्चित्रमपि परार्थं संहत्यकारित्वात्" सू०।

"तदेतच्चित्तमसङ्ख्येयाभिर्वासनाभिरेव चित्रीकृतमपि परार्थं परस्य भोगापवर्गार्थं न स्वार्थं संहत्यकारित्वाद्-

गृहवत् संहत्यकारिणा चित्तेन न स्वार्थेन भवितव्यं न सुखचित्तं सुखार्थं न ज्ञानं ज्ञानार्थमुभयमप्येतत् परार्थं यश्च भोगेनापवर्गेण चार्थेनार्थवान् पुरुषः स एव परो, न परः सामान्यमात्रम् यत्तु किञ्चित्परं सामान्यमात्रं स्वरूपेणोदाहरेद्वैनाशिकस्तत् सर्व्वं संहत्यकारित्वात् परार्थमेव स्यात्। यस्त्वसौ परो विशेषः स न संहत्यकारी पुरुष इति" भा०।

"चित्तातिरिक्तात्मसद्भावे हेत्वन्तरमवतारयति इतख्येति। यद्यप्यसंख्येयाः कर्म्मवासनाः क्लेशवासनाश्च चित्तमेवाधिशेरते न तु पुरुषं, तथाच वासनाधीना विपाकाश्चित्तमाश्रयतया चित्तस्य भोक्तृतामावहन्ति। भोक्तुरर्थे च भोग्यमिति सर्वं चित्तार्थं प्राप्तं तथापि तच्चित्तमसंख्येयवासनाभिश्चित्रमपि परार्थं, कस्मात्? संहत्यकारित्वादिति सूत्रार्थः। स्यादेतत् चित्तं संहत्यापि करिष्यति स्वार्थं च भविष्यति कः खलु विरोध इति यदि कश्चित् ब्रूयात् तं प्रत्याह। संहत्यकारित्वेति सुखचित्तमिति भोगस्योपलक्षणम् तेन दुःखचित्तमपि द्रष्टव्यं ज्ञानमित्यपवर्ग उक्तः। एतदुक्तं भवति सुखदुःखचित्ते प्रतिकूलानुकूलात्मके नात्मनि सम्भवतः स्वात्मनि वृत्तिविरोधात् न चान्योऽपि संहत्यकारी साक्षात् परम्परया वा सुखदुःखे विद्यमानस्ताभ्यामनुकूलनीयः प्रतिकूलनीयो वा तस्मादयं साक्षात् परम्परया वा न सुखदुःखयोर्व्रियते स एवायमनुकूलनीयः प्रतिकूलनीयो वा, स च नित्योदासीनः पुरुषः एवमपवृज्यते येन ज्ञानेन तस्यापि ज्ञेयतन्त्रत्वात् स्वात्मनि च वृत्तिविरोधाच्च ज्ञानार्थत्वं न चान्यविषयादन्यस्यापवर्गसम्भवो विदेहप्रकृतिलयानामपवर्गासम्भवात् तस्मात्तज्ज्ञानमपि पुरुषार्थमेव न तत् स्वार्थं संहतपरार्थत्वे चानवस्थाप्रसङ्गादसंहतपरार्थसिद्धिरिति" विव०।

"विशेषदर्शिन आत्मभावभावनानिवृत्तिः" सू०।

"यथा प्रावृषि तृणाङ्कुरस्योद्भेदेन तद्बीजसत्तानुमीयते तथा मोक्षमार्गश्रवणेन यस्य रोमहर्षाश्रुपातौ दृश्येते तत्राप्यस्ति विशेषदर्शनबीजमपवर्गभागीयं कर्माभिनिर्वर्त्तित मित्यनुमीयते तस्यात्मभावभावना स्वाभाविकी प्रवर्त्तते यस्याभावादिदमुक्तं स्वभावमुक्त्वा दोषाद् येषां पूर्वपक्षे रुचिर्भवत्यरुचिश्च निर्णये भवति। तत्रात्मभावभावना कोऽहमासं कथमहमासं किं स्विदिदं? कथं? स्विदिदं के भविष्यामः कथं भविष्यामः? इति। सा तु विशेषदर्शिनो निवर्त्तते कुतः चित्तस्यैव विचित्रः परिणामः पुरुषस्त्वसत्यामविद्यायां शुद्धश्चित्तधर्मैरपरामृष्ट इति ततोऽस्यात्मभावभावना कुशलस्य निवर्त्तत इति" भा०।

"तदेवं कैवल्यमूलबीजमसमात्मदर्शनमुक्त्वा तदुपदेशाधिकृतं पुरुषमनधिकृतपुरुषान्तराद्व्यावृत्तमाह। विशेषेत्यादि यस्यात्मभावे भावनास्ति तस्याष्टाङ्गयोगोपदेशादनुतिष्ठतो युञ्जानस्य तत्परिपाकात् चित्तसत्त्वपुरुषयोर्विशेषदर्शनादात्मभावभावना निवर्त्तते। यस्यात्मभावभावनैव नास्ति नास्तिकस्य, तस्योपदेशानधिकृतस्यापरिनिश्चितात्मतत्परलोकभावस्य नोपदेशो न विशेषदर्शनं नात्मभावभावनानिवृत्तिरिति सूत्रार्थः नन्वात्मभावभावनायाः चित्तवर्त्तिन्याः कुतोऽवगमः? इत्यत आह यथा प्रावृषीति प्रागभवीयं तत्त्वदर्शनबीजमपवर्गभागीयं यत्कर्माष्टाङ्गयोगानुष्ठानं तदेकदेशानुष्ठानं वा तदभिनिर्वर्त्तितमस्तीत्यनुमीयते तस्य आत्मभावभावनाऽवश्यमेव स्वाभाविकी यत्नमन्तं विनापि प्रवर्त्तते अनधिकारिणमात्मभिन्नं वचनेन दर्शयति यस्याभावादिदमिति पूर्व्वपक्षो नास्ति कर्म्मफलं, परलोकिनोऽभावात् परलोकाभाव इति तत्र रुचिः, अरुचिश्च निर्णये पञ्चविंशतितत्त्वविषये। आत्मभावभावना प्राग्व्याख्याता। विशेषदर्शिनः परामर्शमाह चित्तस्यैवेति तस्य विशेषदर्शनकुशलस्यात्मभावभावना विनिवर्त्तते इति" विवरणम्।

चित्तस्य च बाह्येन्द्रियव्यापारं विना बाह्यार्थेष्वसामर्थ्यं, गुणभेदेन विकारभेदाश्च पञ्चदश्यामुक्ता यथा "मनोदशेन्द्रियाध्यक्षं हृत्पद्मगोलके स्थितम्। तच्चान्तःकरणं बाह्येष्वस्वातन्त्र्याद्विनेन्द्रियैः। अक्षेष्वर्पितेष्वेतद्गुणदोषविचारकम्। सत्त्वं रजस्तमश्चास्य गुणा विक्रियते हि तैः। वैराग्यं क्षान्तिरौदार्यमित्याद्याः सत्त्वसम्भवाः। कामक्रोधौ लोभयत्नावित्याद्या रजसोत्थिताः। आलस्यभ्रान्तितन्द्राद्या विकारास्तमसोत्थिताः। सात्त्विकैः पुण्यनिष्पत्तिः पापोत्पत्तिश्च राजसैः। तामसैर्नोभयं किन्तु वृथायुःक्षपणं भवेत्"। पातञ्जलमते तस्य वृत्तयः पञ्चविधास्तासां स्वरूपादिकं समाधिपादे सूत्रभाष्यविवरणादौ दर्शितं तच्च क्लिष्टशब्दे २२४४ पृ० दर्शितम्

**चित्तज** पु० चित्ते जायते जन—ड। मनोभवे कामदेवे चित्तजन्मचित्तयोनिप्रभृतयोऽप्यत्र "चित्तयोनिरभवत् पुनर्नवः" रघुः।

**चित्तज्ञ** त्रि० चित्तं चित्तवृत्तिं जानाति ज्ञा–क । आशयाभिज्ञे । "कलाकौशलसत्त्वाढ्यो भक्तिश्चित्तज्ञता स्मृता" सा० द० [न्यूनत्वे दोषे ।

**चित्तदोष** पु० ६त० । चित्तस्य विषयाग्रहणासामर्थ्यरूपे

**चित्तनदी** स्त्री चित्तवृत्तिरूपा नदी । पुण्यपापरूपोभयस्रोतोवाहिन्याम् चित्तवृत्तौ तत्र "विवेकनिम्ना कैवल्यप्राग्भारा पुण्यवाहिनी । अविवेकनिम्ना संसारप्राग्भारा पापवाहिनी" इति भेदः ।

**चित्तपरिकर्म्मन्** न० ६त० । पातञ्जलोक्ते चित्तप्रसादनाख्ये मैत्र्यादिभावनाभेदे चित्तप्रसादनशब्दे दृश्यम्

**चित्तप्रसन्नता** स्त्री ६त० । हर्षे हेम० ।

**चित्तप्रसादन** न० चित्तस्य प्रसादनं प्रसन्नताकरणम् । पातञ्जलोक्ते चित्तप्रसन्नतासम्पादके मैत्र्यादिभावनाजन्ये चित्तसंस्कारभेदे मैत्र्यादिभावनानां च तथात्वं पात० सूत्रभाष्यादावुक्तं यथा

"यस्य चित्तस्यावस्थितस्येदं शास्त्रेण परिकर्म्म निर्द्दिश्यते, तत्कथं ?— भा०

"मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्" सू० ।

"तत्र सर्व्वप्राणिषु सुखसम्भोगापन्नेषु मैत्रीं भावयेत्, दुःखितेषु करुणाम्, पुण्यात्मकेषु मुदिताम् । अपुण्यशीलेषूपेक्षाम् ।—एवमस्य भावयतः शुक्लो धर्म्म उपजायते—ततश्चित्तं प्रसीदति प्रसन्नमेकाग्रं स्थितिपदं लभते" भा० ।

"अपरिकर्म्मितमनसोऽसूयादिमतः समाधितदुपायसम्पत्त्यनुत्पादात् चित्तप्रसादनोपायानसूयादिविरोधिनः प्रतिपादयितुमुपक्रमते यस्य चित्तस्यावस्थितस्येदमिति । मैत्रीकरुणेत्यादि प्रसादनान्तम् । सुखितेषु मैत्रीं सौहार्द्दं भावयत ईर्ष्याकालुष्यं निवर्त्तते चित्तस्य । दुःखितेषु च करुणामात्मनीव परस्मिन् दुःखप्रहाणेच्छां भावयतः परापकारचिकीर्षाकालुष्यं चेतसो निवर्त्तते । पुण्यशीलेषु प्राणिषु मुदितां हर्षं भावयतः असूयाकालुष्यं चेतसो निवर्त्तते । अपुण्यशीलेषु चोपेक्षां माध्यस्थ्यं भावयतोऽमर्षकालुष्यं चेतसो निवर्त्तते । ततश्चास्य राजसतामसधर्म्मनिवृत्तौ सात्त्विकः शुक्लो धर्म्म उपजायते । सत्त्वोत्कर्षसम्पन्नः सम्भवति । वृत्ति निरोधपक्षे तस्य प्रसादस्वाभाव्याच्चित्तं प्रसीदति प्रसन्नं वक्ष्यमाणेभ्य उपायेभ्यः एकाग्रं स्थितिपदं लभते । असत्यां पुनर्मैत्र्यादिभावनायां न ते उपायाः स्थितिं कल्पन्ते" विव० ।

करणे ल्युट् ङीप् । चित्तप्रसादकौ मैत्र्यादिभावनायाम् । "तत् पूर्व्वेषु चित्तप्रसादनीवनज्ञो मैत्र्यादिभावनाः" वीरच० । [दर्पोऽस्मय ।

**चित्तभु** पु० चित्ते भवति भू–क्विप् ७त० । कामे चित्तभवा-

**चित्तभूमि** स्त्री चित्तस्य भूमिरवस्था । पातञ्जलप्रसिद्धे चित्तस्यावस्थाभेदे तद्भूमयश्च नानाविधाः तत्र चित्तशब्दे दर्शिता क्षिप्तमूढविक्षिप्तैकाग्रताः चतस्रः उक्ताः । मधुमती ज्योतिष्मती विशोका ऋतम्भरा च समाधिभूमयः चान्याश्चान्याश्चित्तविक्षेपशब्दे ऋतम्भरशब्दे च दृश्याः । साधनपादे च सूत्रभाष्यादौ सप्तान्या अप्युक्ताः यथा "सप्तधा प्रान्तभूमिः प्रज्ञा" सू० ।

"तस्येति । प्रत्युदितख्यातेः प्रत्याम्नायः सप्तधेति अशुद्ध्यावरणमलापगमाच्चित्तस्य प्रत्ययान्तरानुत्पादे सति सप्तप्रकारैव प्रज्ञा विवेकिनो भवति । तद् यथा परिज्ञातं हेयं, नास्य पुनः परिज्ञेयमस्ति क्षीणा हेयहेतवो न पुनरेतेषु क्षेतव्यमस्ति, साक्षात्कृतं निरोधसमाधिना हानम् । भावितो विवेकख्यातिरूपो हानोपाय इत्येषा चतुष्टयी कार्य्या विमुक्तिः प्रज्ञायाः । चित्तविमुक्तिस्तु त्रयी चरिताधिकारा बुद्धिगुणा गिरिशिखरकूटच्युता इव ग्रावाणो निरवस्थानाः स्वकारणे प्रलयाभिमुखाः सह तेनास्तं गच्छन्ति । न चैषां विलीनानां पुनरस्त्युत्पादः प्रयोजनाभावादिति एतस्यामवस्थायां गुणसम्बन्धातीतः स्वरूपमात्रज्योतिरमलः केवली पुरुष इत्येतां सप्तविधां प्रान्तभूमिप्रज्ञामनुपश्यन् पुरुषः कुशल इत्याख्यायते प्रतिप्रसवेऽपि चित्तस्य मुक्तः कुशल इत्येव भवति गुणातीतत्वादिति सिद्धा भवति विवेकख्यातिर्हानोपायः इति" भा० ।

"विवेकख्यातिनिष्ठायाः स्वरूपमाह सूत्रेण तस्येत्यादि । व्याचष्टे तस्येति प्रत्युदितख्यातेरुत्पन्नख्यातेर्योगिनः प्रत्याम्नायः परामर्शः अशुद्धिरेवावरणं चित्तसत्त्वस्य तदेव मलं तस्यापगमात् चित्तस्य प्रत्ययान्तरानुत्पादे तामसराजसव्युत्थानप्रत्ययानुत्पादे निर्विप्लवविवेकख्यातिनिष्ठामापन्नस्य सप्तप्रकारैव प्रज्ञा विवेकिनो भवति विषयभेदात् प्रज्ञाभेदः । प्रकृष्टोऽन्तो यासां भूमीनामवस्थानां तास्तथोक्ता यतः परं नास्ति संप्रकर्षः प्रान्ता भूमयः यस्याः प्रज्ञाया विवेकख्यातेः सा तथोक्ता ता एव सप्त प्रकाराः प्रज्ञाभूमीरुदाहरति तद्यथेति । तत्र पुरुषप्रयत्ननिष्पाद्यासु चतसृषु भूमिषु प्रथमामुदाहरति परिज्ञातं हेयं यावत् किञ्च प्राधानिकं तत्सर्व्वं परिणामतापसं-

स्थानेषु च गुणवृत्तिविरोधात् दुःखमेवेति, हेयं तत्परिणा-
मम्। प्रान्ततां दर्शयति नास्य पुनः किञ्चिदपरिज्ञेय-
मस्ति। द्वितीयामाह क्षीणा इति। प्रान्ततामाह
न पुनरिति। तृतीयामाह साक्षात्कृतं पुरुषेण
निश्चितं यया संप्रज्ञातावस्थायामेव निरोधसमाधि
प्राप्यं ज्ञानं न पुनरस्मात् परं निश्चेतव्यमस्तीति शेषः।
चतुर्थीमाह भावितो निष्पादितः विवेकख्यातिरूपो हा-
नोपायः, नास्याः परं भावनीयमस्ति इति शेषः। एषा
चतुष्टयी कार्य्याविमुक्तिः, प्रयत्नकार्य्यं तया प्रयत्ननिष्पा-
द्या दर्शिता। क्वचित् पाठः कार्य्यविमुक्तिरिति कार्य्यान्त-
रेण विमुक्तिः प्रज्ञाया इत्यर्थः। प्रयत्ननिष्पाद्यामुक्त्वा
तदनिष्पादनीयामप्रयत्नसाध्यां चित्तविमुक्तिमाह चित्त-
विमुक्तिस्तु त्रयी इति। प्रथमामाह चरिताधिकारा
बुद्धिरिति भोगापवर्गं कार्य्यमित्यर्थः। द्वितीयामाह गुणा इति
प्रान्ततामाह न चैषामिति। तृतीयामाह एतस्या-
मवस्थायामिति एतस्यामवस्थायां जीवन्नेव पुरुषः
कुशलोऽस्त इत्युच्यते चरमदेहत्वादित्याह एतस्यामिति।
अनौपचारिकं कुशलमाह प्रतिप्रसवे प्रधानलयेऽपि
चित्तस्य मुक्तः कुशल इत्येव भवति गुणातीतत्वादिति"
विवरणम्। चित्तमेव भूमिः क्षेत्रम्। २चित्तरूपक्षेत्रे
तस्मिंश्च मैत्रीकरुणामुदितोपेक्षारूपैः संस्कारैः संस्कृते
समाधिलाभः इति योगशास्त्रे प्रसिद्धम्।

चित्तविक्षेप पु॰ ६त॰। पात॰ उक्तभावनायास्तेषु योगा-
न्तरायभूतेषु व्याध्यादिषु नवसु। ते च यथा
"व्याधिस्त्यानसंशयप्रमादालस्याऽविरतिभ्रान्तिदर्शनाऽलब्ध-
भूमिकत्वाऽनवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः" सू॰।
"अथ केऽन्तरायाः? ये चित्तस्य विक्षेपकाः के पुनस्ते ?
कियन्तो वेति? । भवन्ति नवान्तरायाश्चित्तविक्षेपाः
सहैते चित्तवृत्तिभिः, एतेषामभावे न भवन्ति पूर्वोक्ताश्चित्त-
वृत्तयः। व्याधिर्धातुरसकरणवैषम्यम्। स्त्यानम् अकर्म-
ण्यता चित्तस्य। संशयः उभयकोटिस्पृग्विज्ञानं स्या-
दिदमेवं, नैवं स्यादिति। प्रमादः समाधिसाधनानाम-
भावनम्। आलस्यं—कायस्य चित्तस्य च गुरुत्वादप्रवृत्तिः।
अविरतिः—चित्तस्य विषयसंप्रयोगात्मा गर्द्धः। भ्रान्तिद-
र्शनं विपर्य्ययज्ञानम्। अलब्धभूमिकत्वं समाधिभूमेर-
लाभः। अनवस्थितत्वं—लब्धायां भूमौ चित्तस्या-
प्रतिष्ठा। समाधिप्रतिलम्भे हि सति तदवस्थितं स्यादिति
एते चित्तविक्षेपाः नव योगमला योगप्रतिपक्षा योगा-
न्तराया इत्यभिधीयन्ते" [illegible] भाष्यम्।
"पृच्छति—अथ के इति। सामान्योत्तरं—ये इति। विशे-
षसंख्यां पृच्छति—के इति। उत्तरं—व्याध्यादिवचनम्।
अन्तरायाः नव, एताश्चित्तस्य योगान्तरायाः = योग-
विरोधिनश्चित्तस्य विक्षेपकाः। चित्तं सत्त्वमी व्याध्याद-
यो योगाद्विक्षिपन्ति अपनयन्तीति विक्षेपाः। योगप्रति-
पक्षत्वे हेतुमाह,—सहैत इति। संशयभ्रान्तिदर्शने
तावद्वृत्तितया वृत्तिनिरोधप्रतिपक्षौ, येऽपि न वृत्त-
यो व्याधिप्रभृतयस्तेऽपि वृत्तिसाहचर्य्याद्वृत्तप्रतिपक्षा
इत्यर्थः। पदार्थान् व्याचष्टे,—व्याधिरिति। धात-
वो वातपित्तश्लेष्माणः शरीरधारणात्, अशितपीता-
हारपरिणामविशेषो रसः करणानीन्द्रियाणि तेषां
वैषम्यं न्यूनाधिकभावः। अकर्मण्यता कर्मान-
र्हता। संशय उभयकोटिस्पृग्विज्ञानं यद्यप्यत-
द्रूपप्रतिष्ठत्वेन संशयविपर्य्यययोरभेदे उभयकोटि-
स्पर्शास्पर्शरूपाऽवान्तरविशेषविवक्षयाऽत्र भेदेनोपन्यासः।
अभावनमकरणं तत्राप्रवृत्तिरिति यावत्। कायस्य गुरुत्वं
कफादिना, चित्तस्य गुरुत्वं तमसा। गर्द्धः तृष्णा। मधु-
मत्यादयः समाधिभूमयः तत्र भूमेर्यदि तावतैव कृतकृत्य-
मान्यस्य समाधिभ्रेषः स्यात्तल्लब्धा अपि भूमेरनाप्तेः
स्यात्। यस्मात् समाधिप्रतिलम्भे तदवस्थितं स्यात्त-
स्मात्तत्र प्रयतितव्यमिति" विवरणम्।

चित्तविद् पु॰ चित्तमात्मत्वेन वेत्ति विद—क्विप्। बौद्धभेदे।
आत्मयाथिते लि॰ [उन्मादरोगे हेमच॰।

चित्तविप्लव पु॰ चित्तस्य विप्लवोऽनवस्थानं यस्मात् ५ब॰।

चित्तविभ्रम पु॰ चित्तस्य विभ्रमो विशेषेण भ्रमणमनवस्थानं
यस्मात् ५ब॰। उन्मादरोगे अमरः। "अङ्गीविष-
विकारोऽयं स्याद्वा मे चित्तविभ्रमः" भा॰ आ॰ २अ॰

चित्तल पुंस्त्री चित्तं लाति मनोहरत्वात् ला—क। मृगभेदे।
"अचिततिक्तोद्भवतैलविपक्वं लवणयुतं नवहिङ्गुरसा-
क्तम्। निकटुकचुक्रनिशार्द्रकमिश्रं बहुगुणचितल
मांसमपर्य्यम्। रसे पाके च मधुरं रक्तपित्तविना-
शनम्" भक्ष्यार्थचि॰ हरिवाक्यम्।

चित्तवृत्ति स्त्री ६त॰। चित्तस्य विषयाकारपरिणामभेदे
"योगश्चित्तवृत्तिनिरोधः" पात॰। तद्भेदाश्च पञ्चधा
चित्ताकार्दे १२४४पृ॰ उक्ताः।

चित्तसमुन्नति स्त्री सम्+उद् नम—क्तिन् ६त॰। १चित्तस्य
सम्यगुन्नमने उद्गतौ २गर्वे अमरः।

**चित्तहारिन्** त्रि॰ चित्तं हरति हृ–णिनि। मनोहरे स्त्रियां ङीप् अच्। चित्तहार अण्। चित्तहारक तदर्थे ताच्छील्ये ट। चित्तहर मनोहरवस्तुनि त्रि॰ स्त्रियां ङीप्। [एकविषये स्थिरचित्ततायाम् अमरः।

**चित्ताभोग** पु॰ समम् भोग आभोग एकविषयता ६त॰।

**चित्ति** स्त्री चित–ज्ञाने भावे क्तिन्। १प्रज्ञायाम् "उद्ध ता विश्वे देवा अग्ने! भवन्तु चित्तिभिः" यजु॰ १२३। २चिन्तने च "चित्तिं जुहोमि मनसा घृतेन" १७।७८। "चित्तिं चिन्तनम्" वेददी॰। ३कर्म्मणि च।"सा चित्तिभिर्निचकार, इति कर्म्मनामधिकृत्य "चित्तिभिः कर्म्मभिः" निरु॰ उक्तम् कर्त्तरि क्तिच्। ४ज्ञापयितरि ५ज्ञायके च त्रि॰ "चित्तिरपां दमे विश्वायुः" ऋ॰ १।६७।५। "चित्तिश्चेतयिता ज्ञापयिता वा" भा॰। भावे क्तिन्। ६ख्यातौ स्त्री। "चित्तिं दयस्व सुभगमस्मे" ऋ॰ २। २१।६। चित्तिं ख्यातिम् भा॰। [हेमच॰।

**चित्तोन्नति** स्त्री ६त॰। १चित्तस्योन्नतौ तद्धेतुत्वात् २गर्व्वे

**चित्पति** पु॰ ६त॰। चितःज्ञानस्य पतिः। मनोभिमानिनि जीवे। अस्य "न भूवाक्चिदित्यादि" पा॰ न पूर्वपदप्रकृतिस्वरः। "चित्पतिर्मा पुनातु" यजु॰ ४।४।

**चित्य** न॰ चि–क्यप्। १चितायां मृतदाहचुल्ल्याम् त्रिका॰ स्वार्थे तदर्थे अमरः। २चयनीये त्रि॰। भावे क्यप्। ३चयने स्त्री

**चित्र** चित्रीकरणे–लेख्ये अद्भुते च अद॰ चु॰ उभ॰ सक॰ सेट्। चित्रयति ते अचिचित्रत् त। चित्रितः चित्रः।

**चित्र** न॰ चित्र–भावे अच् चि–ष्ट्रन् वा। १तिलके। २आलेख्ये ३अद्भुते ४कर्बुरवर्णे ५तद्युक्ते त्रि॰ मेदि॰। ६आकाशे ७गुल्मभेदे हेम॰। ८यमभेदे पु॰ "वृकोदराय चित्राय" यमतर्पणमन्त्रः। ९एरण्डवृक्षे १०अशोकवृक्षे ११चित्रकवृक्षे राजनि॰१२चित्रगुप्ते चित्रगुप्तशब्दे दृश्यम् १३शब्दालङ्कारभेदे न॰ अलङ्कारशब्दे २८०पृ॰ दृश्यम्। "चित्रसंज्ञमीरितं प्रमाणिकापदद्वयम्" वृ॰ र॰ उक्ते १५षोडशाक्षरपादके छन्दोभेदे। "निसर्गचित्रोज्ज्वलसूक्ष्मपक्ष्मणा" "चित्रं चकार पदमर्द्धपुलायितेन" "रुचिरचित्रतनूरुहशालिभिः" इति च माघः।

**चित्रक** न॰ चित्रमिव कायति कै–क चित्–स्वार्थे क वा। १तिलके मेदि॰ चित्रेण कायति कै–क। २व्याघ्रे ३व्याघ्रभेदे (चिताबाघ)। पुंस्त्री हेमच॰ स्त्रियां जातित्वात् ङीष्। (चिराता)ख्याते ४ओषधिभेदे पु॰ "चित्रकः कटुकः पाके वह्निकृत् पाचनो लघुः। रूक्षोष्णो ग्रहणीकुष्ठशोथार्शःक्रिमिकासनुत्। वातश्लेष्महरो ग्राही वातार्शःश्लेष्मपित्तहृत्। विधिना चैत्रकं शाकं कासमर्द्दविमर्द्दितम्। तप्ततैले सवाष्पोके पाचितं तक्रसंस्कृतम्" भावप्र॰ तद्गुणादि। चित्र–कन्। ५चित्रकरे त्रि॰ ६शूरे ७अङ्गमालके शब्दार्थचि॰ ८एरण्डवृक्षे पु॰अमरः।

**चित्रकण्ठ** पु॰चित्रः कण्ठोऽस्य। १पारावते २तद्भेदे वनकपोते च (घुघु)। जटाधरः। स्त्रियां जातित्वात् ङीष्।

**चित्रकगुटिका** स्त्री चक्रदत्तोक्ते गुटिकाभेदे यथा "चित्रकः पिप्पलीमूलं द्वौ क्षारौ लवणानि च। व्योष॰ हिङ्ग्वजमोदाश्च चव्यञ्चैकत्र चूर्णयेत्। गुटिका मातुलुङ्गस्य दाडिमाम्लरसेन वा। कृत्वा विपाचयेद्दुष्टमामं दीपयत्याशु चानलम्। सौवर्च्चलं सैन्धवञ्च बिड्मौद्भिदमेव च। सामुद्रेण समं पञ्च लवणान्यत्र योजयेत्"।

**चित्रकघृत** न॰ "चित्रककाथकल्काभ्यां ग्रहणीघ्नं शृतं हविः। गुल्मशोफोदरप्लीहाशूलार्शोघ्नं दीपनं परम्" इति चक्रदत्तोक्ते घृतभेदे।

**चित्रकतैल** न॰ "चित्रकं चविकं दीप्यं निदिग्धिकाकरञ्जबीजलवणाक्षैः। गोमूत्रयुक्तं सिद्धं तैलं नासार्शसां विहितम्" चक्रदत्तोक्ते तैलभेदे

**चित्रकम्बल** पु॰ कर्म॰। कम्बलभेदे। (गालिचा)

**चित्रकर** त्रि॰ चित्रं लेख्यभेदम् आश्चर्य्यं वा करोति ताच्छील्यादौ ट। लेख्यादौ १चित्रशिल्पकरे। विश्वकर्म्मणः शूद्रागर्भजाते वर्णसङ्करभेदे २रङ्गाजीवे पुंस्त्री अमरः।

**चित्रकर्म्मन्** त्रि॰ चित्रं कर्म्मास्य। १चित्रकरे २आश्चर्य्यकारके च ३तिनिशवृक्षे पु॰ शब्दच॰। ६त॰। ४चित्रलेख्यक्रियाकरणे शिल्पे न॰।

**चित्रकहरीतकी** स्त्री चित्रकयुक्ता हरीतकी। चक्रदत्तोक्ते औषधभेदे "चित्रकस्यामलक्याश्च गुडूच्या दशमूलजम्। शतं शतं रसं दत्त्वा पथ्याचूर्णाढकं गुडात्। शतं पचेत् घनीभूते पलं द्वादशकं क्षिपेत्। व्योषत्रिजातयोः क्षारात् पलार्द्धमपरेऽह्नि। प्रस्थार्द्धं मधुनो दत्त्वा यथाग्न्यद्यादतन्द्रितः। हद्वेऽन्दैः क्षयं कासं पीनसं दुस्तरं क्रिमीन्। गुल्मोदावर्त्तदुर्नामश्वासान् हन्ति रसायनम्"।

**चित्रकाय** पु॰ चित्रः कायोऽस्य। १व्याघ्रे हेमच॰ (चिताबाघ) २व्याघ्रभेदे राजनि॰।

**चित्रकार** त्रि० चित्रं करोति कृ–अण् उप०स०। १चित्रकर्म्मकारके। "स्थपतेरपि गान्धिक्यां चित्रकारोव्यजायत" पराशरोक्ते २सङ्कीर्णजातिभेदे पु० स्त्री०।

**चित्रकुण्डल** पु० धृतराष्ट्रपुत्रभेदे। "चित्रवार्यचित्रवर्मा सुवर्मा दुर्विलोचनः। अयोबाहुर्महाबाहुश्चित्राङ्गश्चित्रकुण्डलः" भा०आ०११७अ०। चित्रवाण, चित्रवर्म्मन् चित्रमण्डल चित्राङ्ग तत्पुत्रभेदे। तत्राध्याये दृश्यम्।

**चित्रकूट** पु० चित्रं कूटं शृङ्गमस्य। पर्व्वतभेदे स च पर्वतः प्रयागक्षेत्रनिकटस्थभरद्वाजाश्रमात् अर्द्धतृतीययोजनादूरस्थितस्तिष्ठति यथा रामा० अयोध्याकाण्डे ६९अ० भरतं प्रति भरद्वाजवाक्यम् "भरतार्द्धतृतीयेषु योजनेष्वजने वने। चित्रकूटो गिरिस्तत्र रम्यनिर्झरकाननः। उत्तरं पार्श्वमासाद्य तस्य मन्दाकिनी नदी। पुष्पितद्रुमसंछन्ना रम्यपुष्पितकानना। अनन्तरं तत्सरितिचित्रकूटं च पर्वतम्। तयोः पर्णकुटीं तात! तत्र तौ वसतोध्रुवम्"! "ददर्श चित्रकूटस्थं सरामं बहुलक्ष्मणम्। तापसानामलङ्कारं धारयन्तं भर्तुर्द्धरम्" भा०व०२७६अ०। "ततो गिरिवरश्रेष्ठे चित्रकूटे विशाम्यते!" ८५अ०। "मथुरायाः पूर्वभिं हिमवद्गोमन्तचित्रकूटस्थाः" वृ० स० १६अ०। "चित्रकूटवनस्थञ्च कथिता स्वर्गतिर्गुरोः"। "दृप्तः ककुद्मानिव चित्रकूटः" इति च रघुः।

**चित्रकृत्** त्रि० चित्रं करोति कृ–क्विप्। १चित्रलेख्यकारके २आश्चर्यकारके च। ३चित्रकरे पु०स्त्री० ४तिनिशवृक्षे पु० अमरः। तस्य भावः त्व। चित्रकृत्त्व चित्रकारित्वे अद्भुतत्वे च हेमच०।

**चित्रकेतु** पु० १गरुड़पुत्रभेदे। "सुमुखश्चित्रकेतुश्च चित्रवर्हस्तथाऽनघः" भा० उद्यो० ९९अ०। गरुड़पुत्रोक्तौ। २लक्ष्मणपुत्रभेदे "अङ्गदश्चित्रकेतुश्च लक्ष्मणस्यात्मजौ स्मृतौ" भाग० ९।११।७। वशिष्ठस्य ऊर्ज्जायां जाते ३पुत्रभेदे "ऊर्ज्जायां जज्ञिरे पुत्रा वशिष्ठस्य परन्तप!। चित्रकेतुप्रधानास्ते सप्त सप्तर्षयोऽमलाः। चित्रकेतुः सुरोचिश्च विरजा मित्र एव च। उल्वणो वसुभृद्यानोद्युमान् शक्त्यादयोऽपरे" भाग० ४।१।२३।२४। "देवभागस्य कंसायां चित्रकेतुवृहद्बलौ" भाग०११।२४।२। उक्ते ४यदुवंश्ये देवभागपुत्रभेदे। ५शूरसेनन्पभेदे "आसीद्राजा सार्व्वभौमः शूरसेनेषु वै नृप!। चित्रकेतुरिति ख्यातोयस्यासीत् कामधुङ्मही" भाग०६।१४।६। तस्मै च पुत्रशोकातुराय नारदः तत्त्वज्ञानार्थं वासुदेवमन्त्रादिकमुपदिष्टवान् तत्कथा ततः परेऽध्यायद्वये दृश्या। ६चित्रपताके त्रि०। [ख्याते कीटभेदे २स्त्री स्त्रियां शब्दर०।

**चित्रकोण** पु० चित्रःकोणोऽस्य। १अञ्जनिकायाम् (अञ्जनी)

**चित्रगन्ध** न० चित्रो गन्धोऽस्य। १हरिताले राजनि०। २आश्चर्यगन्धयुक्ते त्रि०।

**चित्रगत** त्रि० चित्रे गतः। १लेख्यलिखिते चित्रार्पिते "शुशुभाते रथेऽतीव पटे चित्रगते इव" भा० भी० ४४अ०।

**चित्रगुप्त** पु०यमभेदे "चित्रगुप्ताय वै नमः" यमतर्पणमन्त्रः। कायस्थशब्दे १९३२पृ० तदुत्पत्त्यादिकं दृश्यम्। यमनियुक्तस्यैव तस्य यातनाधिकारित्वं शा० सू० भा० व्यवस्थापितं यथा

"ननु विरुद्धमिदं यमायत्ता यामनाः पापकर्म्माणोऽत्र भवन्तीति, यावता तेषु रौरवादिषु अन्ये चित्रगुप्तादयो नानाधिष्ठातारः स्मर्य्यन्ते इति, नेत्याह" भा०। "तत्रापि च तद्व्यापारादविरोधः" शा०सू० "तेष्वपि सप्तसु नरकेषु तस्यैव यमस्याधिष्ठातृत्वव्यापाराभ्युपगमात् अविरोधः। यमप्रयुक्ता एव हि ते चित्रगुप्तादयोऽधिष्ठातारः स्मर्य्यन्ते"।

तस्य च संयमन्यां पापिनां प्रबोधनप्रकारः पुराणसमुच्चये शिवधर्मोत्तरे उक्तो यथा

"निर्भर्त्सयति चात्यर्थं यमस्तान् पापकर्म्मिणः। चित्रगुप्तश्च भगवान् धर्मवाक्यैः प्रबोधयेत्। भो भो दुष्कृतकर्म्माणः! परद्रव्यापहारिणः!। गर्व्विता रूपवीर्य्येण परदारविमर्द्दकाः!। यत् स्वयं क्रियते कर्म्म तत् स्वयं भुज्यते पुनः। तत् किमात्मप्रतापार्थं भवद्भिः दुष्कृतं कृतम्। इदानीं किं प्रतप्यध्वं पीड्यमानाः स्वकर्मभिः। भुञ्जध्वं स्वानि कर्म्माणि नात्र दोषोऽस्ति कस्यचित्। एते ते पृथिवीपालाः संप्राप्ता मत्समीपतः। स्वकीयैः कर्मभिर्घोरैर्दुष्प्रज्ञा बलदर्पिताः। भो भो नृपा! दुराचारा:! प्रजाविध्वंसकारिणः!। अल्पकालस्य राज्यस्य कृते किं दुष्कृतं कृतम्?। राज्यलोभेन मोहेन बलादन्यायतः प्रजाः। विध्वंसिताः फलं तस्य भुङ्क्ष्वमधुना नृपाः!। क्व तद्राज्यं कलत्रञ्च यदर्थमशुभं कृतम्। तत्सर्वं संपरित्यज्य यूयमेकाकिनः स्थिताः। पश्यामस्तद्बलं सर्व्वं येन लहृद्दिहताः प्रजाः। यमदूतैस्ताड्यमाना अधुना कीदृशं भवेत्"। अस्य यमलेखकत्वकथा स्कं०पु०प्रभा० यथा "एवन्तु स्तुवतस्तस्य चित्रस्य विमलात्मनः। तथा तुष्टः

सहस्रांशुः कालेन महता विभुः । अब्रवीद्वत्स ! भद्रं ते वरं वरय सुव्रत ! । सोऽब्रवीद्यदि मे तुष्टो भगवांस्तोयदीधिते ! । प्रौढत्वं सर्व्वकार्य्येषु जायतां सन्मतिस्तथा । तत् तथेति प्रतिज्ञातं सूर्य्येण वरवर्णिनि ! । ततः सर्व्वज्ञतां प्राप्तश्चित्रोमित्रकुलोद्भवः । तं ज्ञात्वा धर्म्मराजस्तु बुद्ध्या परमया युतः । चिन्तयामास मेधावी लेखकोऽयं भवेद्यदि । जाता मे सर्व्वसिद्धिश्च निर्वृतिश्च परा भवेत् । एवं चिन्तयतस्तस्य धर्म्मराजस्य भामिनि ! । अग्नितीर्थं गतश्चित्रः स्नानार्थं लवणाम्भसि । स तत्र प्रविशन्नेव नीतस्तु यमकिङ्करैः । सशरीरो महादेवि ! यमादेशपरायणैः । स चित्रगुप्तनामाभूत् विचित्रचरित्र लेखकः । चित्रादित्येति नामास्य ततो लोके वरानने ! । सप्तम्यां नियताहारो यस्तं पूजयते नरः । सप्त जन्मानि दारिद्र्यं न दुःखं तस्य जायते" ।

**चित्रघण्टा** स्त्री चित्रा घण्टाऽस्याः । काशीस्थे देवीभेदे "विश्वे ! विश्वे ! विश्वभुजे । नमोऽस्तु ते श्रीचित्रघण्टे ! विकटे सुदर्शने !" काशी० ५अ० ।

**चित्रघण्टेशी** स्त्री काशीस्थे देवीभेदे । "इयञ्च चित्रघण्टेशी घण्टाकर्णस्त्वयं ह्रदः" काशीख० २६अ० ।

**चित्रचाप** पु० धृतराष्ट्रपुत्रभेदे "अयोबाहुर्महाबाहुश्चित्रचापसुकुण्डलौ" भा० आ० ६७अ० ।

**चित्रजल्प** पु० उज्ज्वलमण्युक्ते वाक्यभेदे तल्लक्षणभेदादिकं तत्रोक्तं यथा

"प्रेष्ठस्य सुहृदा लोके गूढरोषाभिजृम्भितः । भूरिभावमयो जल्पो यस्तीव्रोत्कण्ठतान्वितः । चित्रजल्पो दशाङ्गोऽयं प्रजल्पः परिजल्पितम् । विजल्पोज्जल्पसंजल्पा अवजल्पोऽभिजल्पितम् । आजल्पः प्रतिजल्पश्च सुजल्पश्चेति कीर्त्तिताः । एष भ्रमरगीताख्योदयमे प्रकटीकृतः । असंख्यभाववैचित्रीचमत्कृतिसुदुस्तरः । अपि चेच्चित्रजल्पोऽयं मनाक् तदपि कथ्यते । तत्र प्रजल्पः १ । असूयेर्ष्यामदयुजा योऽवधीरणमुद्रया । प्रियस्य कौशलोद्गारः प्रजल्पः स तु कीर्त्त्यते१ । यथा मधुप ! कितवबन्धो ! मा स्पृशाङ्घ्रिं सपत्न्याः कुचविलुलितमालाकुङ्कुमश्मश्रुभिर्नः । वहतु मधुपतिस्तन्मानिनीनां प्रसादं यदुसदसि विडम्ब्यं यस्य दूतस्त्वमीदृक् । १ । अथ परिजल्पितम् २ । प्रभोर्निर्दयताशाठ्यचापलाद्युपपादनात् । स्वविचक्षणताव्यक्तिर्भङ्ग्या स्यात् परिजल्पितम् २ । यथा सकृदधरसुधां स्वां मोहिनीं पायथित्वा सुमनस इव सद्यो दुस्त्यजेऽस्मान् भवादृक् । परिचरति कथं तत् पादपद्मं तु पद्मा अपि वत हृतचेता ह्युत्तमश्लोकजल्पैः २ । अथ विजल्पः ३ । "व्यक्तयाऽसूयया गूढमानमुद्रान्तरालया । अघद्विषि कटाक्षोक्तिर्विजल्पो विदुषां मतः ३ । यथा किमिह बहु षडङ्घ्रे ! गायसि त्वं यदूनामधिपतिमगृहाणामग्रतो नः पुराणम् । विजयसखसखीनां गीयतां तत्प्रसङ्गः क्षपितकुचरुजस्ते कल्पयन्तीष्टमिष्टाः । ३ । अथोज्जल्पः ४ । हरेः कुहकताख्यानं गर्व्वगर्भितयेर्ष्यया । सासूयश्च तदाक्षेपो धीरैरुज्जल्प ईर्य्यते ४ । यथा दिवि भुवि च रसायां काः स्त्रियस्तद्दुरापाः कपटरुचिरहासभ्रूविजृम्भस्य याः स्युः । चरणरज उपास्ते यस्य भूतिर्व्वयं का अपि च कृपणपक्षे ह्युत्तमश्लोकशब्दः । ४ । अथ संजल्पः ५ । सोल्लुण्ठया गहनया कयाप्याक्षेपमुद्रया । तस्याकृतज्ञताद्युक्तिः संजल्पः कथितो बुधैः ५ । यथा विसृज शिरसि पादं वेद्म्यहं चाटुकारैरनुनयविदुषस्तेऽभ्येत्य दौत्यैर्मुकुन्दात् । स्वकृत इह विसृष्टापत्यपत्यन्यलोका व्यसृजदकृतचेताः किन्नु सन्धेयमस्मिन् ५ । अथ अवजल्पः ६ । हरौ काठिन्यकामित्वधौर्त्त्यादासक्त्ययोग्यता । यत्र सेर्ष्यं भियेवोक्ता सोऽवजल्पः सतां मतः ६ । यथा मृगयुरिव कपीन्द्रं विव्यधे लुब्धधर्मा स्त्रियमकृत विरूपां स्त्रीजितः कामयानाम् । बलिमपि बलिमत्त्वा वेष्टयद्ध्वाङ्क्षवद्यस्तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थः६ । अथाभिजल्पितम्७ भङ्ग्या त्यागौचितं तस्य खगानामपि खेदनात् । यत्र सानुशयं प्रोक्तं तद्भवेदभिजल्पितम् । यथा यदनुचरितलीला कर्णपीयूषविप्रुट् सकृददनविधूतद्वन्द्वधर्मा विनष्टाः । सपदि गृहकुटुम्बं दीनमुत्सृज्य धीरा बहव इव विहङ्गा भिक्षुचर्य्यां चरन्ति । ७ । अथ आजल्पः ८ । जैह्म्यं तस्यार्त्तिदत्वञ्च निर्वेदाद्यत्र कीर्त्तितम् । भङ्ग्यान्यसुखदत्वञ्च स आजल्प उदीरितः । यथा वयमृतमिव जिह्मव्याहृतं श्रद्दधानाः कुलिकरुतमिवाज्ञाः कृष्णवध्वो हरिण्यः । ददृशुरसकृदेतत्तन्नखस्पर्शतीव्रस्मररुज उपमन्त्रिन् ! भण्यतामन्यवार्त्ता । ८ । अथ प्रतिजल्पः ९ । दुस्त्यजद्वन्द्वभावेऽस्मिन् प्राप्तिर्नार्हेत्यनुद्धतम् । दूतसंमाननेनोक्तं यत्र स प्रतिजल्पकः । प्रियसख ! पुन-

रामाः प्रेयसा प्रेषितः किं वेत्थ किमनुबध्य मानसी-
योऽसि मेऽङ्क ! नयसि कथमिहापि विमृ दुःखम दम्म-
प्रान्तं सततहरसि सौम्य ! श्रीवधूः सामवालो । ६ ।
अथ सुजल्पः १०। यत्रार्जवात् सगाम्भीर्यं सदैन्यं सह
चापलम् । सोत्कण्ठञ्च हरिः पृष्टः स सुजल्पो
निगद्यते । यथा—अपि वत मधुपुर्यामार्यपुत्रोऽधुनास्ते
स्मरति स पितृगेहान् सौम्य ! बन्धूंश्च गोपान् । क्वचि-
दपि स कथां नः किङ्करीणां गृणीते भुजमगुरुसुगन्धं
मूर्ध्न्यधास्यत् कदा नु" १० ।

**चित्रतण्डुल** न० चित्रस्तण्डुलोऽस्य । विडङ्गे रत्नमा-
ला । तत्रार्थे स्त्री अमरः ।

**चित्रत्वच्** पु० चित्रा त्वक् यस्य । भूर्जवृक्षे । राजनि० ।

**चित्रदण्डक** पु० चित्रो दण्डःकाण्डो यस्य कप् । (ओल)
सूरणे रत्नमाला ।

**चित्रदीप** पु० पञ्चदशीप्रकरणान्तर्गते दीपभेदे
"यथा चित्रपटे दृष्टमवस्थानां चतुष्टयम् । परमात्मनि
विज्ञेयं तथावस्थाचतुष्टयम् । यथा धौतो घट्टितश्च
लाञ्छितो रञ्जितः पटः । चिदन्तर्यामिसूत्रात्मा विराडा-
त्मा तथेर्यते । स्वतः शुभ्रोऽत्र धौतः स्याद्घट्टितोऽन्न-
विलेपनात् । मष्याकारैर्लाञ्छितः स्यात् रञ्जितो वर्ण-
पूरणात् । स्वतश्चिदन्तर्यामी तु मायावी सूक्ष्मसृष्टितः ।
सूत्रात्मा स्थूलसृष्ट्यैव विराडित्युच्यते परः । ब्रह्मा-
द्याःस्तम्बपर्यन्ताः प्राणिनोऽत्र जडा अपि । उत्तमा-
धमभावेन वर्त्तन्ते पटचित्रवत् । चित्रार्पितमनु-
ष्याणां वस्त्राभासाः पृथक् पृथक् । चित्राधारेण वस्त्रेण
सदृशा इव कल्पिताः । पृथक् पृथक् चिदाभासा-
श्चैतन्याध्यस्तदेहिनाम् । कल्प्यन्ते जीवनामानो बहुधा
संसरन्त्यमी । वस्त्राभासा स्थितान् वर्णान् यद्वदाधार
वस्त्रगान् । वदन्त्यज्ञास्तथा जीवं संसारं चिद्गतं
विदुः" इत्युपक्रमे । "जगच्चित्रं स्वचैतन्ये पटे चित्रमि-
वार्पितम् । मायया तदुपेक्ष्यैव चैतन्यम् परिशिष्यताम् ।
चित्रदीपमिमं नित्यं ये तु संदधते बुधाः । पश्यन्तोऽपि
जगच्चित्रं ते मुह्यन्ति न पूर्ववत्" पञ्चदशी ।

**चित्रदेवी** स्त्री चित्रं दीव्यति दिव—अच् गौरा० ङीष् ।
१महेन्द्रवारुण्यां राजनि० । २कुमारानुचरभेदे पु०
"उहरश्च तहारश्च चित्रदेवश्च वीर्यवान्" भा० शल्य०
४६अ० । कुमारानुचरोक्तौ

**चित्रधर्मन्** पु० भारतप्रसिद्धे नृपभेदे "विरूपाक्षस्तु दैतेय
चित्रयोधी महासुरः । चित्रधर्मेति विख्यातः क्षिता-
वासीत् स पार्थिवः" भा० आ० ६७अ० ।

**चित्रनेत्रा** स्त्री चित्रं नेत्रं यस्याः । सारिकायां हारा० ।

**चित्रपक्ष** पुंस्त्री चित्रौ पक्षावस्य । तित्तिरिखगे जटा-
धरः । स्त्रियां ङीष् । "चित्रपक्षः कफहरः वातघ्नो
मदकृत्प्रकृत्" भावप्र० तन्मांसगुणा उक्ताः ।

**चित्रपट** पु० कर्म० । (छिट) प्रख्याते १वस्त्रे मल्लावि-
चि० । २चित्राधारपटे पु० चित्रदीपशब्दे उदा० "निः-
शेषं द्विषसैन्यं तु स्थितं चित्रपटे यथा" हरिवं०
११७अ० ।

**चित्रपत्र** पु० चित्रं पत्रं यस्य । चित्रपत्रे स्वनामख्याते
"चित्रपत्रशकुनिनीडद्योतितेत्यादि" काद० ।

**चित्रपत्रिका** स्त्री चित्रं पत्रं पर्णं यस्याः कप् कापि
अतइत्वम् । १चित्रपर्ण्याम् रत्नमाला २द्रोणपुष्प्यां
राजनि० कवभावे गौरा०ङीष् । चित्रपत्री जलपिप्पल्यां
स्त्री राजनि० ।

**चित्रपथा** स्त्री प्रभासतीर्थस्थचित्रादित्याग्रस्थायाम् तत्कथा स्क० पु०
प्रभा० यथा
"ततोगच्छेन्महादेवि ! नदीं चित्रपथां शुभाम् । ब्रह्म-
कुण्डसमीपस्थां चित्रादित्यस्य मध्यतः । यदा चित्र-
स्तु संनीतो यमदूतैः सुरप्रिये ! ! सशरीरः महाप्राज्ञो
यमादेशपरायणैः । एवं ज्ञात्वा तु तत्तस्या भगिनी तस्य
दुःखिता । चित्रा, नदी ततोभूत्वा तथा तस्य महात्मनः ।
प्रविष्टा सागरे देवि ! अग्निवृन्दीव वाग्यसम् । तत-
श्चित्रपथानाम तस्याख्या हि जातयः । एवं तत्र समुत्-
पन्ना सा नदी वरवर्णिनि ! । तस्यां स्नात्वा नरोयस्तु
चित्रादित्यं प्रपश्यति । स याति परमं स्थानं यत्र देवो
दिवाकरः । अस्मिन् कलियुगे देवि ! अन्तर्हानं गता
नदी । प्रावृट्कालेऽथ दृश्येत दुर्लभं तत्र दर्शनम् । स्नानं
दानं विशेषेण सर्वपातकनाशनम् । भक्तोवाप्यथ वाऽभक्तो
रात्रौ वा यदि वा दिवा । पर्वकालेऽथवाऽकाले पवि-
त्रोह्यथ वाऽशुचिः । यदैव दृश्यते तत्र नदी चित्रपथा
प्रिये ! । प्रमाणं दर्शनं तस्या न कालस्तत्र कारणम् ।
दृष्ट्वा नदीं महादेवि ! पितरः स्वर्गसंस्थिताः । गायन्ति
तत्र वाञ्छन्ति न्यत्यन्ति च हसन्ति च । अस्माकं वंशजः
कश्चित् आगमत् करिष्यति । यावत् कल्पं तथास्माकं
प्रीतिमुत्पादयिष्यति । एवं ज्ञात्वा नरस्तत्र स्नानं आचरेत्
कारयेत् । सर्वपापविनाशार्थं पितॄणां प्रीतये तथा ।

इत्येतत् कथितं देवि ! यथा चित्रपथा नदी । प्रभासक्षेत्रमासाद्य संस्थिता पापनाशिनी” ।

**चित्रपदा** स्त्री चित्रं पदं स्वाधिष्ठानस्थानं यस्याः । १गोधालतायां शब्दमा० अष्टाक्षरपादके २छन्दोभेदे च । तल्लक्षणं “चित्रपदा यदि भौ गौ” छन्दोम० । आश्चर्य्यं पदं शब्दभेदोऽत्र । ३चित्रपदयुक्ते वाक्यादौ त्रि० । “वल्गु चित्रपदं श्लक्ष्णं याज्ञसेनी तथा वचः” भा०व० ३१अ० । “सप्त यदा भगणाः परतो गुरुरन्तगतो जनुकोजितदेश ! चित्रपदेति तदा युधि विक्रमतो हृतवैरिधराधिपकेश ! । सा कथिताधिकमङ्गल ! पिङ्गलनागवरेण दयाभिनिवेश ! गौड़कुलोज्ज्वल ! धारय चेतसि हे यशवन्त ! नरेश !” इत्युक्तलक्षणे ३छन्दोभेदे च

**चित्रपर्णी** स्त्री चित्राणि पर्णान्यस्याः । (चाकुलिया) ख्याते पृश्निपर्ण्याम् अमरः । २जलपिप्पल्यां ३द्रोणपुष्प्यां च राजनि० । ४मञ्जिष्ठायां रत्नमाला । स्वार्थे क । चित्रपर्णिका चित्रपर्णीभेदे रत्नमाला ।

**चित्रपादा** स्त्री चित्रौ पादौ यस्याः । शारिकायां हारा० ।

**चित्रपिच्छक** पुंस्त्री चित्रं पिच्छमस्य । मयूरे राजनि० स्त्रियां ङीष् ।

**चित्रपुङ्ख** पु० चित्रः पुङ्खोऽस्य । शरभेदे राजनि० ।

**चित्रपुष्पी** स्त्री चित्राणि पुष्पाण्यस्याः ङीप् । अम्बष्ठालतायाम् राजनि० । [वली स्त्रियां ङीष् ।

**चित्रपृष्ठ** पुंस्त्री० चित्रं पृष्ठमस्य । कलविङ्कपक्षिणि । हारा-

**चित्रफल** पु० चित्रं फलं फलकमिवाकारोऽस्त्यस्य अच् । (चितल) मत्स्ये राजनि० । स्वार्थे क । चित्रफलक तत्रार्थे ।

**चित्रफला** स्त्री चित्रं फलं यस्याः अजा० टाप् । १चिर्भट्यां २मृगेर्वारौ ३लिङ्गिन्यां ४महेन्द्रवारुण्याम् ५वार्त्ताक्यां ६कण्टकार्य्याञ्च राजनि० । एतासां चित्रफलत्वात्तथात्वम्” ।

**चित्रबर्ह** पुंस्त्री चित्रा बर्हा यस्य । १मयूरे स्त्रियां जातित्वात् ङीष् । “कार्त्तेनेमांश्चित्रबर्हान् शार्दूलान् क्रोष्टुकेन च । क्रीणीष्व पाण्डवान् राजन् ! मा मज्जीः शोकसागरे” भा०स०६०अ० । २गरुड़ात्मजभेदे । “सुमुखश्चित्रकेतुश्च चित्रबर्हस्तथाऽनलः” भा० उ० १००अ० । गरुड़ात्मजोक्तौ । [ ६७अ० । तत्पुत्रोक्तौ ।

**चित्रबाहु** पु० धृतराष्ट्रपुत्रभेदे । चित्रबाहुश्चित्रवर्म्मा” आ०

**चित्रभानु** पु० चित्रा भानवो यस्य । १अग्नौ २सूर्य्ये, ३चित्रकवृक्षे, ४अर्कवृक्षे च मेदिनिः । ५भैरवे शब्दरत्ना० । तत्राग्नौ “युक्तैः शिरोभिश्च स्वयं चित्रभानुं प्रपेदिरे” भा० आ० ५२अ० सर्पसत्रे । “किन्त्विमे मानवाः सर्वे दह्यन्ते चित्रभानुना” भा०आ० २२६अ० । ६अश्विनीकुमारयोः द्वि० व० । तयोश्चित्रभानुसूर्य्यजातत्वात् तथात्वम् “प्रपूर्वगापूर्वजौ चित्रभानू” भा० आ० ६०अ० अश्विनोःस्तुतौ । प्रभवादिषष्टिवर्षेषु ७भोड़शे वर्षे “चणका मुद्गमाषाश्च अन्यच्च द्विदलं प्रिये ! । महार्घं जायते सर्वं चित्रभानौ वरानने !” । “श्रेष्ठं चतुर्थस्य (होतायस्य) युगस्य पूर्वं यच्चित्रभानुं कथयन्ति वर्षम्” वृ० सं० ८अ० ।

**चित्रभेषजा** स्त्री चित्रमाश्चर्य्यं भेषजं यस्याः ५व० । काकोडुम्बरिकायाम् राजनि० ।

**चित्रमण्डल** पुंस्त्री० चित्रं मण्डलमस्य । मण्डलिनि सर्पभेदे सुश्रुतः अहिशब्दे ५८१पृ० दृश्यम् ।

**चित्रमृग** पु० चित्रवर्णो मृगः । पृषते मृगभेदे शब्दार्थचिन्ता० । “षण्मासांश्छागमांसेन पार्षतेन च सप्त वै” मनुव्या० “पृषतश्चित्रमृगः” कुल्लू० ।

**चित्रमेखल** पुंस्त्री चित्रा मेखलास्य । मयूरे त्रिका० ।

**चित्रयोधिन्** त्रि० चित्रं युध्यति युध–णिनि । १आश्चर्य्ययुद्धकारके स्त्रियां ङीप् । “यदा द्रोणोविविधानस्त्रमार्गान् निदर्शयन् समरे चित्रयोधी” भा० आ० १अ० । “विरूपाक्षश्च दैतेयश्चित्रयोधी महासुरः” भा० आ० ६७अ० । २अर्ज्जुने तन्नामनामके ३अर्ज्जुनवृक्षे पु० राजनि० ।

**चित्ररथ** पु० चित्रोरथोऽस्य । १सूर्य्ये २गन्धर्वभेदे च मेदि० । स च गन्धर्वः कश्यपात् मुनिनाम्न्यां दक्षकन्यायां बभूव यथाह “भीमोग्रसेनौ चेत्युपक्रमे “भीमश्चित्ररथश्चैव विख्यातः सर्वविद्वशी” इत्युपक्रमे “इत्येते देवगन्धर्वा मौनेयाः परिकीर्त्तिताः” भा० आ० ६५अ० । इत्युक्तम् स च अङ्गारपर्णनाम्ना अर्ज्जुनेन च तस्य दग्धरथत्वात् दग्धरथनामा बभूव यथाह भा० आ० १७०अ० । “गन्धर्व उवाच, “जितोऽहं पूर्वकं नाम मुञ्चाम्यङ्गारपर्णताम् । न च श्लाघ्ये बलेनाङ्ग नाम्नाद्य जनसंसदि । साध्विमं लब्धवांल्लाभं योऽहं दिव्यास्त्रधारिणम् । गान्धर्व्या मायचेच्छामि संयोजयितुमर्ज्जुन ! । अस्त्राग्निना विचित्रोऽयं दग्धो मे रथ उत्तमः । सोऽहं चित्ररथो भूत्वा नाम्ना दग्धरथोऽभवम्” ।

"गन्धर्वाणां चित्ररथः" गीता। "सागराणां नदीनाञ्च मेघानां वर्षितस्य च। गन्धर्वाणामधिपतिं चक्रे चित्ररथं विभुः" हरिवं० ४अ०। तस्य गन्धर्वाधिपत्य उक्तम्। २नदीभेदे स्त्री ३उषद्गोः पुत्रे पु० चैत्ररथिशब्दे दृश्यम्। चित्ररथमधिकृत्य कृतो ग्रन्थः अण्। चैत्ररथ भारतस्यादिपर्वान्तर्गतेऽवान्तरपर्वणि। तच्च पर्व आदिपर्वणि १६५ अवधि १८२ अध्यायपर्य्यन्तम्।

**चित्ररश्मि** त्रि० चित्रा रश्मयोऽस्य। १नानावर्णरश्मियुक्ते २मरुद्गणभेदे पु० हरिवं० २०४अ० "अग्निवत्तुर्हविर्ज्योतिः सावित्रं मित्रमेव च। अमरं शरदृष्टिञ्च वल्कवन्तं महाभुजम्। विरजश्चैव शुक्रश्च विश्वावसुविभावसू। अश्मन्तश्चित्ररश्मिश्च तथा निष्कुषितं ब्रुपम्। नक्तश्चाकृतिश्चैव चारित्रं प्रख्यपन्नगम्। बृहन्तञ्च बृहद्रूपं तथैव परतापनम्। मरुत्वती तथा यत्ते एतं वै मरुतां गणम्"।

**चित्ररेफ** पु० शाकद्वीपाधिपस्य प्रैयव्रतस्य मेधातिथेः १पुत्रभेदे तन्नामके तत्कृते २वर्षभेदे च। शाकद्वीपोपक्रमे "तस्यापि प्रैयव्रत एवाधिपतिः नाम्ना मेधातिथिः। सोऽपि विभज्य सप्त वर्षाणि पुत्रनामाङ्कितेषु स्वात्मजान् पुरोजवमनोजव पवमान धूम्रानीक चित्ररेफ बहुरूप विश्वाधार संज्ञान् निधाप्याधिपतीन् स्वयं भगवत्यनन्तआवेशितमतिस्तपोवनं प्रविवेश" भाग० ५।१२।१८।

**चित्रल** पु० चित्रमाश्चर्यं लाति ला–क। १कर्वूरवर्णे २तद्वति त्रि०शब्दरत्ना०। ३गोरचीष्टके स्त्री राजनि०।

**चित्रलता** स्त्री० नित्यकर्म्म०। मञ्जिष्ठायां राजनि०।

**चित्रलेखनी** स्त्री चित्रं लिख्यतेऽनया लिख ल्युट् करणे ङीप्। (तुली) कूर्च्याम्। उज्ज्वलद०।

**चित्रलेखा** स्त्री चित्रं लेखयति लिख–अण् उप०स०। १वाणासुरमन्त्रिणः कुम्भाण्डस्य कन्यायाम् २अप्सरोभेदे च। तस्याश्च चित्रलेखनदक्षता हरिवं० १७६अ० वर्णिता यथा "अथायावचनं श्रुत्वा रामा वाक्यमिदं पुनः। उवाच रुदतीश्चैव कुम्भाण्डतनया सखी। कुशला ते विशालाक्षि! सर्वथा सम्भविष्यते। अप्सरा चित्रलेखा वै क्षिप्रं विज्ञाप्यतां सखि!। अस्याः सर्व्वमशेषं वै त्रैलोक्यं विदितं सदा। एवमुक्त्वा तदेवोषा हर्षमागतविस्मया। तामपृच्छमानाथ चित्रलेखां सखीं प्रियाम्। कृताञ्जलिपुटा दीना उषा वचनमब्रवीत्। परमं शृणु मे वाक्यं यत्त्वां वक्ष्यामि भाविनि!। भर्त्तारं यदि मेऽद्य त्वं नानयिष्यसि मत्प्रियम्। कान्तं पद्मपलाशाक्षं मत्तमातङ्गविक्रमम्। त्यक्ष्याम्यहं प्रियान् प्राणांस्ततः कमललोचने!। चित्रलेखाऽब्रवीद्वाक्यमुषां हर्षवती शनैः। नैषोऽर्थः शक्यतेऽस्माभिर्वेत्तुं भाविनि! सुव्रते!। न कुलेन न वर्णेन न शीलेन न रूपतः। न देशस्य विज्ञातः यदि चौरो मया सखि!। किन्तु शक्यं यथा कर्त्तुं बुद्धिपूर्व्वं मया सखि!। प्रशृणुष्व शृणु मे वाक्यं यथाकाममवाप्स्यसि। देवदानवयक्षाणां गन्धर्व्वोरगरक्षसाम्। ये विशिष्टाः प्रभावेण रूपेणाभिजनेन च। यथाप्रधानतः सर्व्वानालिखिष्याम्यहं सखि!। मनुष्यलोके ये चापि प्रवरा लोकविश्रुताः। सप्तरात्रेण ते भीरु! दर्शयिष्यामि तानहम्। ततो विज्ञाय पट्टस्थं भर्त्तारं प्रतिलप्स्यसे। सा चित्रलेखया प्रोक्ता उषा हितचिकीर्षया। क्रियतामेवमित्याह चित्रलेखां सखीं प्रियाम्। ततः कुशलहस्तत्वाद्यथालेख्यं समन्ततः। इत्युक्त्वा सप्तरात्रेण कृत्वा लेख्यगतांस्तु तान्। चित्रपट्टगतान् मुख्यानानयामास शोभना। ततः प्रस्तीर्य्य पट्टं सा चित्रलेखा स्वयंकृतम्। अथायै दर्शयामास सखीनाञ्च विशेषतः"। "ततस्तु देव्या रूपेण चित्रलेखा वराप्सराः" तत्राध्यायादौ। भाग० १०।६२ अ०। कुम्भाण्डकन्यया चित्रलेखयैव तथा चित्रं लिखितमित्युक्तं यथा "बाणस्य मन्त्री कुम्भाण्डश्चित्रलेखा च तत्सुता। सख्यपृच्छत् सखीमूषां कौतूहलसमन्विता" इत्युपक्रमे। "चित्रलेखोवाच व्यसनं तेऽपकर्षामि त्रिलोक्यां यदि भाव्यते। तमानेष्ये वरं यस्ते मनोहर्त्ता तमादिश। इत्युक्त्वा देवगन्धर्वसिद्धचारणपन्नगान्। दैत्यविद्याधरान् यक्षान् मनुजांश्च यथालिखत्। मनुजेषु च सा वृष्णीन् शूरमानकदुन्दुभिम्। व्यलिखत् रामकृष्णौ च प्रद्युम्नं वीक्ष्य लज्जिता। अनिरुद्धं विलिखितं वीक्ष्योषाऽवाङ्मुखी ह्रिया। सोऽसावसाविति प्राह स्मयमाना महीपते!। चित्रलेखा तमाज्ञाय पौत्रं कृष्णस्य योगिनी। ययौ विहायसा राजन्! द्वारकां कृष्णपालिताम्" "मन्दाक्रान्ता नयरलघुयुता चित्रलेखा" छन्दोम० उक्ते ३अष्टादशाक्षरपादके "रुद्राश्वैर्मनततयकैः कीर्त्तिता चित्रलेखेयम्" वृ०र०टी०उक्ते च ४छन्दोभेदे। "समजा भजगा गुदिक्स्वरैर्भवति चित्रलेखा" वृ०र०टी० उक्ते ५छन्दोभेदे। ६व्रजाङ्गनाभेदे। "यद्वाऽसुष्मिन् जगति मृगदृशां सारभूतं यदासीदाकृष्येदं व्रजयुवतिसभा वेधसा

सा व्यधायि। नैतादृक् चेत् कथमुदधिसुतामन्तरेणाच्यु-तस्य प्रीतं तस्यां नयनयुगमभूत् चित्रलेखाङ्कितायाम्” उज्ज्वलमणिः कर्म्म०। ७चित्रायां रेखायाम् स्त्री रलयोरैक्यात् इत०। ७चित्रस्य लेखने पु०। “अना-ऽनिरुद्धसमागममिव, चित्रलेखादर्शितविचित्रसकलभुवना-कारम्। (राजकुलम्) काद०। [जटाधरः।

**चित्रलोचना** स्त्री चित्रं लोचनमस्याः। शारिकाखगे

**चित्रवदाल** पु० चित्रवद् आ समन्तात् अलति आ+अल-अच्। पाठीनमत्स्ये (बोयाल) जटाधरः।

**चित्रवर्म्मन्** पु० १धृतराष्ट्रपुत्रभेदे “चित्राङ्गश्चित्रवर्म्मा” भा० आ० ६७अ०। चित्रं वर्म्मास्य। २चित्रकवचयुक्ते त्रि०।

**चित्रवल्लिक** पु० वल्लीव कायति कै–क पृषो० ह्रस्वः कर्म्म०। पाठीनमत्स्ये हेमच०।

**चित्रवल्ली** स्त्री० नित्यकर्म्म०। १मृगेर्वारौ २महेन्द्रवारुण्याञ्च राजनि० कर्म्म०। ३चित्रायां लतायाम्।

**चित्रवहा** स्त्री चित्रं वहति वह–अच्। भारतप्रसिद्धे नदीभेदे “करीषिणीं चित्रवहां चित्रसेनाञ्च निम्नगाम्” भा०भी० ९अ०। नानानद्युक्तौ “ऋषिकुल्या तथा मेध्या नदी चित्रवहा तथा” भा० आनु०१६५अ० तीर्थोक्तौ।

**चित्रवाण** पु० १धृतराष्ट्रपुत्रभेदे “चित्रवाणश्चित्रवर्म्मा सुवर्म्मा दुर्विमोचनः” भा० आ० ११०अ०। २चित्रशरयुक्ते त्रि०

**चित्रवाहन** पु० मणिपूरेश्वरे नागभेदे। “मणिपूरेश्वरं राजन्! धर्म्मज्ञं चित्रवाहनम्”भा०आ० २१५अ०।

**चित्रवीर्य्य** पु० चित्रमाश्चर्यं वीर्य्यमस्य। रक्तैरण्डे। राजनि०।

**चित्रवेगिक** पु० चित्रवेगोऽस्त्यस्य ठन्। नागभेदे “वराहको वीरणकः सुचित्रश्चित्रवेगिकः” भा० आ० ५७अ०। नागोक्तौ।

**चित्रशाला** स्त्री चित्रलेखननिर्म्माणार्था शाला। चित्रलेखन-निर्म्माणार्थायाम् शालायाम्, जालिन्याम् हेम०।

**चित्रशिखण्डिज** पु० चित्रशिखण्डिनोऽङ्गिरसो जायते जन-ड। बृहस्पतौ अमरः। चित्रशिखण्डिप्रसूतादयो-ऽप्यत्र।

**चित्रशिखण्डिन्** पु०चित्रः शिखण्डः अस्त्यस्य इनि। “मरी-चिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः। वशिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिनः” इत्युक्तेषु सप्तसु मुनिषु अमरः। “ये हि ते ब्रह्मयःख्याताः सप्त चित्रशिखण्डि-नः। तैश्चैकमतिभिर्भूत्वा यत्प्रोक्तं शास्त्रमुत्तमम्”। “मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः। वशिष्ठश्च महातेजास्ते हि चित्रशिखण्डिनः। सप्त प्रकृतयो ह्येतास्तथा स्वायम्भुवो ऽष्टमः। एताभिर्धार्य्यते लोकास्ताभ्यः शास्त्रं विनिःसृतम्” भा० शा० ३३७अ०।

**चित्रशिरस्** पु० चित्रं शिरोऽस्य। १गन्धर्व्वभेदे “महाद्युति श्चित्रशिरा ऊर्णायुरनघस्तथा” हरिवं० २६१अ० गन्धर्व-भेदोक्तौ। २मूत्रपुरीषविषे सत्वभेदे सुश्रु० “चित्रशिरः सरावकुर्द्दिशतदारुकारिमेदकशारिकामुखास्त्वसन्द्य वि-शङ्किता मूत्रपुरीषविषाः” सुश्रुतः।

**चित्रशीर्षक** पु० चित्रं शीर्षमस्य कप्। कीटभेदे सुश्रुतः। कीटशब्दे २०५८पृ० दृश्यम्।

**चित्रसर्प** पु० नित्यकर्म्म०। मालुधानसर्पे शब्दर०।

**चित्रसेन** पु० धृतराष्ट्रपुत्रभेदे “तेषां धृतराष्ट्रस्य पुत्राणां चत्वा-रः प्रधाना बभूवुः। दुर्य्योधनो दुःशासनोविकर्ण-श्चित्रसेनश्चेति” भा०आ० ९५अ०। २गन्धर्व्वभेदे। “चि-त्रसेनस्य शीतोष्णस्तथा चित्ररथोऽपि च। एते चान्ये च गन्धर्व्वा धनेश्वरमुपासते” भा० स० १०अ०। ततस्ते खेचराः सर्व्वे चित्रसेने न्यवेदयत्। गन्धर्व्वराजस्तान् सर्व्वानब्रवीत् कौरवान् प्रति” भा० व० २४०अ०। अर्जुनेन तत्पराजयकथा तत्रैव दृश्यम्। “ऋज्वोगन्धर्व्व-राजानं चित्रसेनमरिन्दमम्। विजित्य तरसा संख्ये सेनं प्राप्य सुदुर्जयाम्” भा० वि० ४९अ०। चित्रगुप्त-दिक्षितयान्तर्गते मर्त्यलोकविवेचने ब्रह्मपादजक्षत्रिय-भेदे कायस्थशब्दे १९३३पृ० दृश्यम्। ५नदीभेदे स्त्री चित्रवहाशब्दे दृश्यम्।

**चित्रहस्त** पु० चित्र आश्चर्य्योहस्तः हस्तक्रिया यत्र। मल्ल युद्धाङ्गहस्तक्रियाभेदे “चित्रहस्तादिकं कृत्वा कक्षाबन्धं च चक्रतुः” भा० स० २२अ०। भीमजरासन्धयोर्मल्ल युद्धवर्णने।

**चित्रा** स्त्री चित्र–अच्। १मूषिकपर्ण्यां २गोडुम्बायां ३सुभ-द्रायां ४दन्तिकायां ५मायायां ६सर्पभेदे ७नदीभेदे च मेदि०। ८चित्रगुप्तस्य भगिन्यां सा च नदी भूत्वा चित्र यथा नदी जाता सैव चित्रा नदी। चित्रपथाशब्दे दृश्यम् ९अप्सरोभेदे हेमच०। १०व्रजाङ्गनाभेदे उज्ज्वलमणिः। “परमप्रेष्ठमध्ये तु ललिता सविशाखिका। सचित्रा च-म्पकलता तुङ्गविद्येन्दुलेखिका। रङ्गदेवी सुदेवी। चेत्यष्टौ सर्व्वगुणाः प्रिया” “चित्रानाम यच्छन्दोऽस्मिन् सुस्त्रयो-मास्ततो यौ” वृ० टी० उक्ते पञ्चदशाक्षरपादके वर्णवृत्तभेदे। राशिचक्रस्थे १२नक्षत्रभेदे। सा च

राशिचक्रस्य १७३।२० अवधि १८६।४० पर्य्यन्तं १३।२० अंशाद्यात्मिका तत्स्वरूपादिकम् अश्विन्यादिशब्दे ४९७पृ० उक्तम्। "हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव" रघुः। चित्रानामके चन्द्रकलत्रे १२दक्षकन्याभेदे च। १३मूषिकपर्ण्यां १४गोडुम्बायां १५दन्त्यां १६मञ्जिष्ठायां राजनि०। चित्रायां जाता अण् "चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम्" वार्त्ति० जातार्थाणो लुक्। १७चित्राजातायां स्त्रियां स्त्रीभिन्ने तु न लुक् चैत्रः इत्येव।

**चित्राक्ष** त्रि० चित्रमक्षि यस्य षच् समा०। चित्रनेत्रयुक्ते स्त्रियां षित्त्वात् ङीष्। सा च १शारिकाखगे त्रिका० २धृतराष्ट्रपुत्रभेदे पु० "चित्रोपचित्रौ चित्राक्षश्चारुचित्राङ्गदश्च ह" भा०आ० ६७अ०।

**चित्राक्षुप** पु० नित्यक० पृषो० द्रोणपुष्प्याम् शब्दार्थ चि०।

**चित्राङ्ग** पु० १धृतराष्ट्रपुत्रभेदे। "अयोबाहुर्महाबाहुश्चित्राङ्गश्चित्रकुण्डलः" भा०११७अ० तत्पुत्रोक्तौ। २चित्राङ्गयुक्तमात्रे त्रि०। ३रक्तचित्रके ४सर्पभेदे ५चित्रके (चिते) राजनि०। चित्रमङ्गं यस्मात्। ६हरिताले ७मञ्जिष्ठायां ८हिङ्गुले च न० राजनि०।

**चित्राङ्गद** पु० शान्तनोः सत्यवत्यां जाते पुत्रभेदे। "भीष्मः खलु पितुः प्रियचिकीर्षया सत्यवतीं मातरमुदवाहयत् यामाहुर्गन्धकालीमिति तस्यां पूर्व्वं कानीनो गर्भः पराशराद्द्वैपायनोऽभवत्। तस्यामेव शान्तनोरन्यौ द्वौ पुत्रौ बभूवतुः। विचित्रवीर्य्यश्चित्राङ्गदश्च तयोरप्राप्तयौवन एव चित्राङ्गदो गन्धर्वेण हतः विचित्रवीर्य्यस्तु राजासीत्" भा० आ० ९५अ०। ब्रह्मपादजचित्रगुप्तादित्रितयान्तर्गते अधोलोकविचारके २वत्सभेदे च। कायस्थभेदं चित्राङ्गदमुपक्रम्य "कलेर्द्दश सहस्राणि नागलोकेश्वरोभव। ततस्त्रिलोकनाथस्त्वमिन्द्रतुल्योभविष्यसि"इति प्रति तं ब्राह्मणशापमुक्त्वा। "तत आनन्दमनसा गतश्चित्राङ्गदस्तलम्" इत्युक्तम् आचार निर्णयतन्त्रे। ४गन्धर्व्वभेदे। हरिवं० १०८अ० दृश्यम्। ५अप्सरोभेदे स्त्री।"अलम्बुषा घृताची च चित्रा चित्राङ्गदा रुचिः" भा० आनु० १९०। मणिपूरेश्वरचित्रवाहनस्य कन्यायाम् ६अर्जुनकलत्रभेदे च स्त्री "अभिगम्य महाबाहुरभ्यगच्छन्महीपतिम्। मणिपूरेश्वरं राजन्! धर्म्मज्ञं चित्रवाहनम्। तस्य चित्राङ्गदा नाम दुहिता चारुदर्शना। तां ददर्श पुरे तस्मिन् विचरन्तीं यदृच्छया। दृष्ट्वा च तां वरारोहां चकमे चैत्रवाहिनीम्" भा० आ० १२५अ० "चित्राङ्गदा वरारोहानपराध्यति किञ्चन" भा० आश्व० ८१अ०

**चित्राङ्गदसू** स्त्री चित्राङ्गदं सूते सू—क्विप् ६त०। सत्यवत्यां शान्तनुन्यपकलत्रभेदे राजनि०।

**चित्राटीर** पु० चित्रां नक्षत्रमटति चित्रं वा अटति अट—बा० ईरच्। १चन्द्रे २घण्टाकर्णे शिवानुचरभेदे ३वक्षिकागरक्ताङ्कितभाले च मेदि०।

**चित्रादित्य** पु० चित्रस्य चित्रगुप्तस्य आदित्यः तत्पूजितत्वात्। प्रभासतीर्थस्थे चित्रगुप्तस्थापिते आदित्यमूर्त्तिभेदे चित्रपथाशब्दे दृश्यम्।

**चित्रान्न** न० नित्यकर्म्म०। चित्रौदने "दध्योदनं हविश्चूर्णं मांसं चित्रान्नमेव च" आह्नि० तल्लक्षणन्तु "अजाक्षीरेण संसिक्ता यवाश्च तिलतण्डुलाः। अजाकर्णस्य रक्तेन रक्ताश्चित्रान्नसंज्ञिताः" दीपिकोक्तम्।

**चित्रापूप** पु० नित्यकर्म्म०। पिष्टकभेदे त्रिका०।

**चित्रामघा** स्त्री० अपसि निघण्टुः। [ राजनि०।

**चित्रायस** न० कर्म्म० अच् समा०। तीक्ष्णलौहे (इस्पात)।

**चित्रायुध** त्रि० चित्राण्यायुधान्यस्य। १आश्चर्य्यायुधयुक्ते २धृतराष्ट्रपुत्रभेदे पु० "चित्रायुधो निषङ्गी च पाशी वृन्दारकस्तथा" भा० आ० ११७अ०। "कार्य्यैश्चित्रान्तरास्त्रित्रा चित्रायुधस्तदावहन्" भा० द्रो० २३अ०। कर्म०। आश्चर्य्यायुधे न० चित्रायुधसुरचितम्" भा० स० १६अ०। [ चित्रलिखितपुत्तलिकादौ।

**चित्रारम्भ** पु० आरभ्यते आ+रभ कर्मणि घञ् ७त०।

**चित्रार्पितारम्भ** त्रि० चित्रेऽर्पित आरम्भोऽस्य। चित्रलिखिते "तच्छासनात् काननमेव सर्वं चित्रार्पितारम्भमिवावतस्थे" कुमा०।

**चित्रावसु** पु० चित्राणि विविधानि चन्द्रार्कादीनि वसन्ति यस्यां वस उ—पृ० दीर्घः। रात्रौ "रात्रिर्वै चित्रावसुः स्त्रा चित्राणि संश्लिष्य वसतीति" शत० ब्रा० २।३।४।१२। "चित्राणि यहनक्षत्रादीनि" भा०। "चित्रावसो! स्वस्ति ते पारमशीय" यजु० ३।१८।

**चित्रिक** पु० चैत्रिक+पृषो०। चैत्रमासे शब्दरत्ना० चित्रा स्वार्थे क। चित्राशब्दे स्त्री।

**चित्रिन्** त्रि० चित्र—णिनि चित्र+अस्त्यर्थे इनि वा। १आश्चर्य्यकारके २चित्रयुक्ते च। स्त्रियां ङीप्। "अमिमिद्रुषाणि तुतुजिरा चित्रिणीष्वा" ऋ० ४।३३।२।

"चितिणीषु चित्रकर्मयुक्तासु" भा०। ३नायिकाभेदे स्त्री रतिमञ्जरी। "भवति रतिरसज्ञा नातिदीर्घा न खर्व्वा तिलकुसुम सुनासा स्निग्धदेहोत्पलाक्षी। कठिनघनकुचाढ्या सुन्दरी या सुशीला सकलगुणविचित्रा चित्रिणी चित्रवक्त्रा। पद्मिनी चित्रिणी चैव शङ्खिनी हस्तिनी तथा। शशो मृगो वृषोऽश्वश्च स्त्रीपुंयोर्जातिलक्षणम्। शशके पद्मिनी तुष्टा चित्रिणी रमते मृगम्। वृषभे शङ्खिनी तुष्टा हस्तिनी रमते हयम्। पद्मिनी पद्मगन्धा च मीनगन्धा च चित्रिणी। शङ्खिनी क्षारगन्धा च मद्यगन्धा च हस्तिनी"।

**चित्रेश** पु० ६त०। १चन्द्रे शब्दच०। २चित्रेश्वरशिवलिङ्गे न०

**चित्रेश्वर** न० प्रभासक्षेत्रस्थे चित्रगुप्तस्थापिते शिवलिङ्गभेदे यथा "ततो गच्छेन्महादेवि! चित्रेश्वरमनुत्तमम्। चतुर्णां सम्प्रके तस्य स्थितमाग्नेयदिङ्मुखे। लिङ्गं महाप्रभावं हि सर्वपातकनाशनम्। तत्र चित्रेश्वरं पूज्य नरकात् न भवेद्भयम्। यत्तदस्थिगतं पापं चित्रोमार्जयति प्रिये! तस्मात् सर्वप्रयत्नेन चित्रेशं पूजयेत् सदा। तस्मात् पाप युतोवापि नरकं नैव पश्यति"।

**चित्रोक्ति** स्त्री चित्रा आश्चर्यकरी उक्तिः। आकाशवाण्यां त्रिका०। २चित्रकथने च।

**चित्रोपला** स्त्री ६त०। चित्र उपलोयस्याम्। १नदीभेदे। "चित्रोपलां चित्रपथां मञ्जुलाम् मञ्जुवाहिनीम्" भा० स्त्रीप० ६अ०। नदीकथने। इयं चित्रोत्पलेति पुरुषोत्तमतत्त्वे उक्ता। "नदी तत्र महापुण्या विष्णुपादविनिर्गता। चित्रोत्पलेति विख्याता सर्वपापहरा शुभा" "चित्रोत्पला महानदी" रघुनन्दनः।

**चित्रौदन** पु० नित्यकर्म०। केतुवलिरूपे चित्रान्ने चित्राम्नशब्दे लक्षणमुक्तम्। "चित्रौदनञ्च केतुभ्यः सर्वभक्ष्यैः समर्च्चयेत्" संस्का० त०।

**चित्र्य** त्रि० चित्र—कर्मणि यत्। पूज्ये "सूर्य्यमा चत्योदिवि चित्र्यं रथम्" ऋ०५।६३।७। "चित्र्यं पूज्यम्" भा०।

**चिद्** अव्य०। चित्+ष्टपो०। १असाकल्ये चिच्छब्दार्थे। तस्य असाकल्यार्थत्वेऽपि "अथ निपाता उच्चावचेष्वर्थेषु निपतन्त्युपमार्थेऽपि" निरुक्तोक्तेः अव्ययाना मनेकार्थत्वात् वा २उपमायाम्। "दधि चिदित्युपमार्थे" निरु०। ३निन्दायाम् "कुल्माषांश्चिदाहरेदिति कुत्सिते" निरु०। "वनचिदिवगोमादितशिताश्चेड-

तेषु मतेः" पा० षट्सु परेषु तिङन्तं नानुदात्तम्। देवः पचति चित्" सि० कौ० "किंवृत्तं च चिदुत्तरम्" पा०। "अविद्यमानपूर्वं चिदुत्तरं यत् किंवृत्तं तद्युक्तं तिङन्तं नानुदात्तम्"। "विभक्त्यन्तं डतरडतमान्तकिमोरूपं किं वृत्तम्" सि० कौ०।

**चिदाकाश** पु० न०। चिद् आकाशमिव निर्लेपत्वात् सर्व्वाधारत्वाच्च। आकाशवन्निर्लेपे शुद्धे ब्रह्मणि।

**चिदात्मन्** पु० चित् चैतन्यमात्मा स्वरूपमस्य। चैतन्यस्वरूपे परात्मनि प्रत्यगात्मनि परपुरुषे। "एतद्रूपं भगवतोह्यरूपस्य चिदात्मनः" भाग० १।३।३५। श्लोकः

**चिदाभास** पु० चित आभासः प्रतिबिम्बः। बुद्ध्यादौ प्रतिबिम्बे जीवे "बुद्धिवृत्तिचिदाभासाविति वेदान्तका०। चित्तदोपशब्दे दृश्यम्। [शब्ददयालो हेमच०।

**चिद्रूप** पु० चिदेव रूपमस्य। १आत्मनि, २स्फूर्त्तिमति च।

**चिन्तन** न० चिति—भावे ल्युट्। अनुध्याने "परद्रव्येष्वभिध्यानं मनसाऽनिष्टचिन्तनम्" मनुः। युच्। चिन्तनाप्यत्र स्त्री।

**चिन्ता** स्त्री चिति—भावे अ। १अनुध्याने शा० द० उक्ते २व्यभिचारिगुणभेदे च तत् "धृतिचपलताग्लानिचिन्ता वितर्काः" व्यभिचारिणो विभज्य "ध्यानं चिन्ता हितानाप्तेः शून्यताश्वासतापकृत्" सा० द० लक्षितम्। "चिन्ता ज्वरो मनुष्याणां वस्त्राणामातपो ज्वरः" चाणक्यम्। "चिन्तामपरिमेयाञ्च प्रलयान्तामुपाश्रिताः" गीता। "धर्मक्रियात्मचिन्ता च सात्त्विक गुणलक्षणम्"मनुः। ३दर्शनसंभोगभावनाभेदे रसमञ्ज०।

**चिन्तामणि** पु० चिन्तायां सर्वकामदोमणिः शा० त०। चिन्तितार्थप्रदे मणिभेदे। "चिन्तामणीनुदारांश्च चिन्तिते सर्वकामदान्" हरिवं० १५२अ०। "सामर्थ्यसम्पादितवाञ्छितार्थचिन्तामणिः स्यान्न कथं हनुमान्" भट्टिः। २सर्वकामदे परमेश्वरे च "आयुरारोग्यमर्थञ्च भोगांश्चैवानुषङ्गिकान्। ददाति ध्यायतां नित्यम् सर्वकामप्रदो हरिः" इत्युक्तेस्तस्य तथात्वम्। ३मन्त्रविशेषे "सहजस्थानगो भौमो भाग्यस्थश्च बृहस्पतिः। चिन्तामणिसमाख्योऽयं यातुः संकल्पपूरकः" ज्यो० उक्ते ४यात्रायोगभेदे ५बुद्धदेवे त्रिका०। ६स्पर्शमणौ "यथा चिन्तामणिं स्पृष्ट्वा लौहं काञ्चनतां व्रजेत्"। पद्मोत्त०ख० कपिलस्य हृष्टादुर्भूते तदीयचिन्तामणिहारकगणदैत्यनाशके ७गणेशभेदे तत्कथा "गणं हत्वा महावीर्यं चिन्तामणिस्तया-

ऽऽहूतः चिन्तामणिरिति ख्यातं तव नाम भविष्यति। चतुर्भुजामणिं नाथ! त्वमेव स्वीकुरु प्रभो”!। “मुनिना कपिलेनासौ प्रार्थितोऽभिजिताऽपि च। मणिश्चिन्तामणिस्त्यक्त्वा शुशुभे स विनायकः। चिन्तामणिरिति ख्यातिस्ततोऽपि परमां दधौ। कपिलस्य गृहे जातः कपिलाख्यामतो ययौ” स्क० पु० गणपतिकल्पे

**चिन्तामणिविनायक** पु० काशीस्थे गणपतिमूर्तिभेदे “चतुर्थावरणे काश्यां भक्तविघ्नविनायकाः। द्रष्टव्या हृष्टचेतोभिः स्पष्टमष्टौ विनायकाः” इत्युपक्रमे “हेरम्बाद् दक्षिणे भागे चिन्तामणिविनायकः। भक्तचिन्तामणिः साक्षात् चिन्तितार्थसमर्पकः” काशी० ५७ अ०।

**चिन्तावेश्मन्** न० ६त०। मन्त्रणागृहे।

**चिन्ति** पु० चिति–इन्। देशभेदे तस्य सुराष्ट्रेण सह द्वन्द्वे कार्त्तकौजपा० पूर्वपदप्रकृतिस्वरः चिन्तिसुराष्ट्राः।

**चिन्तिडी** स्त्री तिन्तिडी+पृषो०। तिन्तिडीवृक्षे हिङ्कलो०।

**चिन्तित** त्रि० चिति–कर्म्मणि क्त। चिन्ताकर्म्मणि “सख्या सुखं सम्प्रयास्यपि चिन्तितानि” किरा०। कर्त्तरि क्त। २चिन्तायुक्ते ३तद्वासिकायां स्त्रियां स्त्री। भावे क्त। ४चिन्तायाम् न०।

**चिन्तिति** स्त्री० चिति–क्तिन् वा० इट् णिलोपश्च। चिन्तायाम् शब्दरत्ना०। [त्रिका०।

**चिन्तिया** स्त्री० चिन्ता+स्वार्थे वा० य। चिन्तायां

**चिन्त्य** त्रि० चिति–कर्म्मणि यत्। चिन्तनीये “केषु केषु च भावेषु चिन्त्योऽसि भगवन्! मया” गीता। “अयं हि सर्वकर्माणां धर्मश्चिन्त्यतमोऽनघ” भा०आनु० ४४अ०।

**चिन्त्यद्योत** पु० चिन्त्यः सन् द्योतते द्युत–अच्। देवभेदे। “गणा देवानामृषयः सोमपाश्च लोकाः शुभ्रास्तुषिता ब्रह्मकायाः। आभास्वरा गन्धपा दृष्टिपाश्च वाचा विरुद्धाश्च मनोविरुद्धाः। शुक्राश्च निर्माणरताश्च देवाः स्पर्शाशना दर्शपा आज्यपाश्च। चिन्त्यद्योता ये च देवेषु मुख्याये चाप्यन्ये देवास्त्वाजमीढ!। सुपर्णगन्धर्वपिशाचदानवा यक्षास्तथा चारणपन्नगाश्च” भा०अनु०१८अ०।

**चिपिट** पु० चि–पिटच् किच्च। (चिंड़ा) ख्याते पृथुके हेमच०। तत्करणप्रकारादि भावप्र० उक्तं यथा “शालयः सतुषा आर्द्रा भृष्टा अस्फुटितास्ततः। कुट्टिताश्चिपिटाः प्रोक्तास्ते स्मृताः पृथुका अपि। शालयो वनमालाद्याश्चिपिटा पुष्टिवर्द्धनाः”। तस्य भक्ष्याभक्ष्यत्वं यथा “द्विः खिन्नमद्यं पृथुकं शुद्धं देशविशेषके। नान्यत्र तं विप्राणां भोजने च निवेदने। अभक्ष्यं तु यतीनाञ्च विधवाब्रह्मचारिणाम्” ब्रह्मवै० पु०। “नासिकाया नते टीटच् निटच् चिपिटच् च” पा० वार्त्ति० चिपिटच् प्रत्ययेऽपि। २नतनासिकायां (खाँदा) ३तद्वति त्रि० (चेपटा) ४ख्याते पदार्थे “करतलपीडनचिपिटीकृतनवलवणपुटेन” काद०। “उन्नतो मांसलोऽङ्गुष्ठो वर्त्तुलोऽतुलभोगदः। वक्रोह्रस्वश्च चिपिटः सुखसौभाग्यभञ्जकः। चिपिटीभर्भवेद्दासी” इति काशी० ख० ३७। प्रान्ते अङ्गुल्यानिपीडनेन ५नेत्रस्याकुलतायाम्। “अस्ति द्विचन्द्रमतिरस्ति जनस्य तेन प्रान्तौ दृगन्तचिपिटीकरणादिरादिः” नैष०। “दृगन्तचिपिटीकरणं नेत्रान्ताकुलीकरणम्” मल्लि०। अङ्गुल्या हि नेत्रप्रान्तनिपीडने एकपदार्थस्य द्विधा भानं लोकप्रसिद्धम्। ६गुल्फाशिमोदाभ्ये स्त्री राजनि०। पृषो० चिपटोऽपि पृथुके हेमच०। स्वार्थे क। चिपिटक पृथुके अमरः।

**चिपिटनासिक** पु० चिपिटा नासिका यत्र। १देशभेदे स च देशः “उत्तरतः कैलासः” इत्युपक्रमे “कैशधरचिपिट नासिकदासेरकवाटधानाः” वृ०स० १४०अ० कूर्मविभागे उत्तरस्यामुक्तः। सोऽभिजनोऽस्य अण् तद्राजान्यो वा बहुत्वे लुक्। २तद्देशवासिषु ३तन्नृपेषु च ब० व०।

**चिपुट** पु० चिपिट+पृषो०। पृथुके कदः।

**चिप्प** पु० “नखमांसमधिष्ठाय वातः पित्तं च देहिनाम्। करोति दाहपाकौ च तं व्याधिं चिप्पमादिशेत्” भाव० उक्ते नखरोगभेदे। (आङ्गुल हाडा)

**चि(छि)प्पिका** ह० रात्रिचरजन्तुभेदे “लोमाशिकापिङ्गल चि(छि)प्पिकाख्यौ वल्गुल्युलूकौ शशकश्च रात्रौ” वृ० स० ८८अ०। “सर्वे स्वकालोत्क्रमचारिणः स्युर्देशस्य नाशाय नृपान्तरा वा” तस्य दिवाचारेऽनिष्टफलकत्वम् “नानाविधानि विरुतानि हि चि(छि)प्पिकायास्तस्याः शुभः कुलुकुलु र्न शुभास्तु शेषाः” वृ० स० ८८अ०।

**चिप्य** पु० स्वसुतोक्ते कृमिभेदे सनिरुद्धे दृश्यम्।

**चिमि** पु० चि–बा० मिक्। १शुकपक्षे शब्दरत्ना०। २पट्टकवचे (पाटशाक) शब्दमाला। स्वार्थे क तत्रार्थे।

**चिर** न० चि–रक्। १दीर्घकाले। २तद्वर्त्तिनि पदार्थे त्रि०। लघ्वादौ (।ऽ) त्रिकले गणे भञ्जार्थचि० “दीर्घसूत्री चिरक्रियः” अमरः। चिरजीवी चिरकारी चिरकालादि।

**चिरकारिन्** त्रि० चिरेण करोति कृ–णिनि। १चिरेण कर्मकर्त्तरि दीर्घसूत्रे। २गौतमस्य पुत्रभेदे पु०।

'चिरकारी महाप्राज्ञो गौतमस्याभवत् सुतः। चिरेण सर्वकार्याणि विमृश्यार्थान् प्रपद्यते। चिरं सञ्चिन्तयन्नर्थांश्चिरं जाग्रत् चिरं स्वपन्। चिरं कार्याभिपत्तिञ्च चिरकारी तथोच्यते" भा० शा० २६७अ०। तस्य चिरकारिताफलं तत्राध्याये वर्णितम्। स्वार्थे क, चिरःकारः क्रियाऽस्त्यस्य ठन् वा। चिरकारिकोऽप्यत्र तत्रैवोदा०

**चिरकाल** पु० कर्म०। दीर्घकाले। [क्रियाकारके अमरः।

**चिरक्रिय** त्रि० चिरा क्रिया यस्य। दीर्घसूत्रे विलम्बेन

**चिरजात** त्रि० चिरं दीर्घकालं जातः। दीर्घकालजाते। इन्द्रद्युम्नशब्दे ९८५पृ० उक्ते भा० व० वाक्ये उदा०

**चिरजीवक** पु० चिरं जीवति जीव–ण्वुल्। १जीवकवृक्षे। जटाधरः। २चिरजीवनयुते त्रि०

**चिरजीविका** स्त्री कर्म०। दीर्घकालवृत्तौ "इयोश्च हि" चिरजीविकास्य कठ० उ०

**चिरजीविन्** त्रि० चिरं जीवति जीव–णिनि। १दीर्घकालजीवनयुक्ते २विष्णौ ३काके च पु० मेदि०। ४जीवकवृक्षे ५शाल्मलिवृक्षे पु० राजनि०। ६मार्कण्डेये "अश्वत्थामा बलिर्व्यासो हनुमांश्च विभीषणः। कृपः परशुरामश्च सप्तैते चिरजीविनः" ति० त० उक्तेषु ७अश्वत्थामादिषु "चिरजीवी यथा त्वं भोः" ति०त०। मार्कण्डेयपूजामन्त्रः। अयं रात्रीत्रभूवैव हृद्भस्य चिरजीविनः" (दशरथस्य) रामा० अयो० १।२६। श्लोकः। [ दार्घे।

**चिरजीविन्** पु० चिरं जीवति जीव–णिनि। चिरजीविप-

**चिरण्टी** स्त्री चिरेण अटति पितृगृहात् भर्त्तृगेहम् अट–अच् पृषो०। १यौवनवत्यां पितृगेहस्थायां स्त्रियाम्। अमरः २युवत्यां रुद्रः। [शब्दरत्ना०।

**चिरतिक्त** पु० चिरस्तिक्तो रसो यत्र। (चिराता) भूनिम्बे

**चिरत्न** त्रि० चिरे भवः चिर+त्न। चिरन्तने पुरातने जटा०।

**चिरन्तन** त्रि० चिरम्+भवार्थे ट्युल् तुट् च। पुरातने अमरः। "स्वहस्तदत्ते मुनिमासने मुनिश्चिरन्तनस्तावदभिन्यवीविशत्" माघः। स्त्रियां ङीप्।

**चिरपाकिन्** पु० चिरेण पाकोऽस्त्यस्य दुर्ज्जरत्वात् इनि। कपित्थे राजनि०।

**चिरपुष्प** पु० चिराणि पुष्पाण्यस्य। बकुलवृक्षे राजनि०।

**चिरम्** अव्य० चि–बा० रमुक्। बहुकालार्थे हेम०। "चिरं चकोरस्य भवन्मुखस्पृशो" नैष०। "ततः प्रजानां चिरमात्मना धृताम्"। "विपत्प्रभावे चिरमस्य तस्थुषः" रघुः। एषु क्रियाविशेषणत्वात् चिरशब्दात् द्वितीयेत्यपि भवितुमर्हति। चिरन्तनः चिरञ्जीव इत्याद्यौ वाल उदा०

**चिरमेहिन्** पु० चिरेण मेहति मिह–णिनि। दीर्घकालेन प्रस्रावकारिणि गर्द्दभे हेमच०।

**चिरभण** पुंस्त्री० चिरं भणति भण–अच्। चिल्ले त्रिका०। तस्य दीर्घकालरावत्वात्तथात्वम्।

**चिररात्र** न० चिरा रात्रिः योगविभागात् अच् समा०। दीर्घकाले "चिररात्रोषिता स्नेह ब्राह्मणस्य निवेशने" भा० आ० १६८अ०। "चिररात्रप्रुषितं कर्म्म तद्वान् कर्त्तुमर्हति" भा०उ० ६३अ०।

**चिररात्राय** अव्य० चिररात्रमयते अय–अण् उप० स०। दीर्घकाले। "हविर्यद् चिररात्राय तदानन्त्याय कल्पते" मनुः "शक्यते दुस्त्यजेऽप्यर्थे चिररात्राय जीवितुम्" भा० व० १३१अ०।

**चिरलोक** पु० चिरः चिरकालस्थायी लोकोयेषाम्। मातृपितृलोकेषु पितृषु "स एकः पितॄणां चिरलोकलोकानामानन्दः" तैत्ति० उ०। "चिरकालस्थायी लोको येषां पितॄणां चिरलोकाः पितरः" भा०।

**चिरविल्व** पु० चिरं विलति विल–भेदने क। करञ्जवृक्षे अमरः। "चिरविल्वयुतं पुण्यं पनसार्जुनसंकुलम्।" भा० शा० ५१अ०। [ अमरः। स्वार्थे क अत्रार्थे

**चिरसूता** स्त्री चिरं सूता। बहुकालप्रसववत्यां गवादौ।

**चिरस्थ** त्रि० चिरं तिष्ठति स्था–क। १चिरस्थायिनि २नायके पु० त्रिका०। स्था– णिनि। चिरस्थायिन् दीर्घकालस्थायिनि त्रि० स्त्रियां ङीप्।

**चिरस्य** अव्य० चिरमस्यते अस–यत् शक०। दीर्घकाले। अमरः। "चिरस्य दृष्टेव मृतोत्थितेव" कुमा०।

**चिराटिका** स्त्री चिरमटति अट–ण्वुल् कापि अतइत्त्वम्। श्वेतपुनर्णवायां रत्नमा०। २चटिकालतायाञ्च (पाताडी) वैद्यकम्। "गोमूत्रगुडस्य पुरातनस्य यद्वावऽसत्तानि चिराटिकायाः" वैद्यकम्।

**चिरात्** अव्य० चिरमतति अत–क्विप्। १दीर्घकाले, "चिराद्धारैः समागतम्" रामा० ४।२७।१७। "तस्य चिरान्महतान्तेन कनकाकौ निवसतः" हितो०। २गरुडे पु० त्रिका०। ३चिरतिक्ते (चिराता) शब्दर०।

**चिराय** अव्य० चिरमयते अर्थ–अण्। चिरकाले दीर्घकाले। "चिराय यदि ते सौम्य! चिरमसि न दुःखितः" भा० शा० २६७अ०। "चिराय नाम्नः प्रथमाभिधेय-

ताम्”। “अभीष्टमासाद्य चिराय कालः” माघः।

चिरायुस् पु॰ चिरमायुर्यस्य। १देवे। २चिरजीविनि त्रि॰ त्रिका॰ “लब्धदौहृदा च वीर्यवन्तं चिरायुषं च पुत्रं जनयति” सुश्रुतः। [अचिरायीत्। वैदिकोऽयम्।

चिरि हिंसे स्वादि॰ पर॰ सक॰ सेट्। चिरिणोति

चिरि पु॰ चि–बा॰ रिक्। शुकखगे त्रिका॰। स्वार्थे क। तत्रार्थे हेमच॰।

चिरिण्टी स्त्री चिरण्टी+पृषो॰। स्ववासिन्यां पितृगेहस्थायां कन्यायाम् अमरे रिमध्यपाठान्तरम्।

चिरिविल्व पु॰ चिरविल्व+पृषो॰। करञ्जकवृक्षे भावप्र॰।

चिरु न॰ चीयते चि–बा॰ रुक्। बाहुसन्धौ शब्दच॰।

चिरे अव्य॰ चिरमेति इ–विच्। दीर्घकाले। “चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः” अमरटीकायाम् आद्यशब्देन चिरे चिरेण चिरात् इति लभ्यन्ते” भानुजदीक्षितः।

चिरेण अव्य॰ चिर+ बा॰ एनप्। दीर्घकाले “निद्रा चिरेण नयनाभिमुखी बभूव” रघुः। “चिरेण मित्रं बध्नीयात् चिरेण च कृतं त्यजेत्। चिरेण च कृतं मित्रं चिरं धारणमर्हति” भा॰ शा॰ २६७अ॰। [हेम॰।

चिर्भटी स्त्री चिरेण भटति भट-अच् गौ॰ ङीष् पृषो॰। कर्कट्याम्

चिर्भिट पु॰ चिर्भटी+पृषो॰। १कर्कटीभेदे गोरक्षकर्कट्याम् (गोमुख) राजनि॰। फले न॰ “चिर्भिटं मधुरं रूक्षं गुरु पित्तकफापहम्। अनुष्णं ग्राहि विष्टम्भि पक्वं तूष्णञ्च पित्तलम्” भावप्र॰ तत्फलगुणोक्तिः। [चिचेल।

चिल वासे आच्छादने च॰पर॰अक॰ सेट्। चिलति अचेलीत्।

चिल(मि)मीलिका स्त्री चिरं मिलति मीलति वा ण्वुल्। रलयोरैक्यम्। १कण्ठीभेदे २खद्योते ३विद्युति च मेदि॰।

चिलिचिम पु॰ चिल–इन् चिलिं वासं चिनोति चि–मक्। (चेलगुडगुडिया) मत्स्यभेदे अमरः। अस्य पृषो॰ चिलिचीम चिलीचिम चिलीचिमि चिलीचीम चेलिचीम चेलिम चिल्लिम चिलीचीमि इति रूपान्तराणि। (चेङ्गा) ख्याते मत्स्ये भरतः।

चिलमीनक पु॰ चिल–क कर्म॰ संज्ञायां कन्। (चेङ्गो) मत्स्ये भरतः। [अचिल्लीत्। चिचिल्ल।

चिल्ल शैथिल्ये भावकृतौ च भ्वा॰ पर॰ अक॰ सेट्। चिल्लति

चिल्ल पु॰ चिल्ल–अच्। १पक्षिभेदे (चिल) अमरः। क्लिन्न+पृषो॰। २क्लिन्ने त्रि॰ मेदि॰।

चिल्लक पुं स्त्री चिल्ल इव कायति शब्दायते कै–क। झिल्लिकायां शब्दरत्ना॰ चिल्ल+स्वार्थे क चिल्लशब्दार्थे पु॰ “खरोष्ट्रमहिषा व्याघ्रा। सिंहा सृमरचिल्लकाः” भा॰ द्रो॰ अ॰।

चिल्लभक्ष्या स्त्री ६त॰। क्षुद्रचिल्लासिन्यां शब्दच॰।

चिल्लाभ पु॰ चिल्ल इव प्रसह्यहारित्वादाभाति आ+भा–क। ग्रन्थिभेदके चौरे त्रिका॰।

चिल्लि पु॰ चिल्ल–इन्। भ्रूमध्ये शब्दार्थचि॰। स्वार्थे क तत्रार्थे। “खलितचरकेतनशरासनानतां चिल्लिकालताम्” काद॰

चिल्ली स्त्री चिल्ल–बा॰ ई। क्षुद्रवास्तुकशाके राजनि॰। “तण्डुलीयकपोटकाऽश्वबलाचिल्लीपालङ्क्यावास्तूकप्रभृतीनि। सृष्टमूत्रपुरीषाणि सक्षारमधुराणि च। मन्दवातकफान्याहु रक्तपित्तहराणि च। कटुविपाके क्रमिहरमेधाग्निबलवर्द्धनः। सक्षारः सर्वदोषघ्नो वास्तूको रोचकः सरः। चिल्ली वास्तूकवत् ज्ञेया पालङ्क्या तण्डुलीयवत्” सुश्रु॰। २झिल्लिकायां शब्दर॰। स्वार्थे क। चिल्लिकाप्यत्र।

चिवि स्त्री चीव–इन् पृषो॰। चिबुके जटाधरः।

चिविट पु॰ चिपिट+पृषो॰। चिपिटे त्रिका॰।

चिविल्लिका स्त्री रक्तदलायां क्षुद्रक्षुपभेदे राजनि॰।

चिबु(क) न॰ चीव–संवरणे उ पृषो॰ ह्रस्वः। ओष्ठाधोभागे अमरः। “वस्ति तालूदरं शीर्षं चिबुके गलशुण्डिके” याज्ञ॰। स्वार्थे क तत्रैवार्थे। २मुचकुन्दवृक्षे पु॰ राजनि॰।

चिश्चा अव्य॰ इषुप्रियशब्दविशेषानुकरणे। “चिश्चा कृणोति समनावगत्य” ऋ॰ ६।७५।५। चिश्चेति शब्दानुकरणे इषुधिर्युद्धविषयात्रिषुधिश्चिश्चाशब्दं करोति भा॰।

चिह्नण त्रि॰ चिक्कण+पृषो॰। चिक्कणे “आदिश्चिक्कणादीनाम्” पा॰ अस्य क्लीवकन्यशब्दे परे आद्युदात्तता। चिहणकन्यम् सि॰ कौ॰।

चिहणादि पु॰ क्लीवकन्यशब्दे परे आद्युदात्तत्वनिमित्ते शब्दगणे स च गणः पा॰ ग॰ सूत्रे उक्तो यथा “चिहण मडर मद्गुर वैतुल पटत्क वैडालिकर्णक वैडालिकर्णि कुक्कुट चिक्कण चित्कण चिहणादिः।

चिहुर पु॰ चिकुर+ पृषो॰। चिकुरे शब्दार्थचिन्तामणिः।

चिह्न लक्षणे अ॰ चु॰ उभ॰सक॰ सेट्। चिह्नयति ते अचिचिह्नत् त। सौत्रोऽयमिति छन्दाः।

चिह्न न॰ चिह्न-अच्, चह-न. उपधाया इत्त्वम् वा।

लघ्वादिके (।ऽ) १त्रिकले गणे शब्दार्थचि० । २लक्षणे च "चक्रे प्रजाः स्वाः सनिमेषचिह्नाः" "स्वनामचिह्नं निचखान सायकम्" रघुः ।

**चिह्नकारिन्** त्रि० चिह्नं करोति कृ–णिनि । १चिह्नकर्त्तरि २घोरदर्शने विश्वः स्त्रियां ङीप् ।

**चिह्नधारिन्** त्रि० चिह्नं धारयति धारि–णिनि । १चिह्नयुक्ते स्त्रियां ङीप् सा च २श्यामालतायां शब्दच० ।

**चिह्नित** त्रि० चिह्न–कर्म्मणि क्त । १अङ्कित २लाञ्छिते । "दिवा चरेयुः कार्य्यार्थं चिह्निताः राजशासनैः" मनुः ।

**चिल्ल** पु० चिल्ल+पृषो० (गञ्चारी) पर्व्वतप्रसिद्धे वृक्षभेदे शब्दार्थचि० । स्वार्थे क । तत्रार्थे "चिल्लकोयातनिर्ह्यारी लोभमोहातुरोऽकृत । आम्नेयो निग्रहस्तस्य फलं मत्स्यनिषूदनम्" भावप्र० ।

**चीक** मर्षणे वा चु० उभ० पक्षे भ्वा० पर० सक० सेट् । चीकयति ते चीकति अचीचिकत् त अचीकीत् ।

**चीचीकुचि** अव्य० शारिकादिशब्दानुकरणे "चीचीकूचीति वाशन्ते सारिका हरितच्छदाः" भा० सौ० २अ० । "चीचीकूचीति वाशन्तं त्वामद्य न शृणोमि किम्" हरिवं० २०अ० ।

[राजनि० ।

**चीडा** स्त्री चिड–पृषो० । स्वनामख्याते गन्धद्रव्ये ।

**चीन** पु० चि–नक् पृषो० दीर्घः । "कश्मीरं तु समारभ्य कामरूपात्तु पश्चिमे । भोटान्तदेशो देवेशि ! मानसेशाच्च दक्षिणे । मानसेशादुत्तरपूर्व्वे चीनदेशः प्रकीर्त्तितः" शक्तिसङ्गमतन्त्रोक्ते १देशभेदे । सोऽभिजनोऽस्य अण् तद्राजाणो वा बहुत्वे लुक् । २तद्देशवासिषु तन्नृपेषु च ब० व० । "वाजिनां च सहस्राणि चीनदेशोद्भवानि च" भा० उ० ७०अ० । अयञ्च देशः बृ० सं० १४अ० कूर्म्मविभागे ऐशान्यामुक्तः । ऐशान्यामित्युपक्रमे "वनराजकिरातचीनकौलिन्दाः" "यवनाश्चीनकाम्बोजा दारुणाम्लेच्छजातयः" भा० भी० ९अ० जनपदोक्तौ । तद्देशस्थाश्च क्रियालोपात् शनैः शूद्रत्वं गताः यथाह मनुः "शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः । वृषलत्वं गता लोके ब्राह्मणादर्शनेन च । पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजाः यवनाः शकाः । पारदाः पह्लवाश्चीनाः किरातादरदाःखशाः" । ४तद्देशजे वस्त्रभेदे च "कार्पासचीनदीनस्तनवसनदशान्दोलनस्पन्दमन्दः" उद्भटः । ५व्रीहिभेदे अष्टादशधान्यशब्दे ५२४पृ० दृश्यम् । "चीनकः कङ्गुभेदोऽस्ति स ज्ञेयः कङ्गुवद्गुणैः" भावप्र० । ६तन्ते ७मृगभेदे च मेदि० । ८पताकायां न० त्रिका० । ९सीसके न० रत्नमाला तन्त्रोक्ते १०तद्देशवासिजनानाम चारभेदे पु० । पृषो० अस्य चुरकापि वर्त्तते । ११चीनकर्पूरे राजनि० ।

**चीनकर्पूर** पु० चीनोद्भवः कर्पूरः । कर्पूरभेदे राजनि० ।

**चीनज** न० चीने तद्देशे जायते जन–ड । १तीक्ष्णलौहे राजनि० । २चीनजातमात्रे त्रि० ।

**चीनपिष्ट** न० चीनस्य सीसकस्य पिष्टं चूर्णं इत० । (चीनेर सिन्दुर) १सिन्दूरभेदे हेमच० । चीनं पिष्टमिव । २सीसके राजनि० ।

**चीनवङ्ग** न० चीनभवं वङ्गम् । सीसके राजनि० ।

**चीनांशुक** न० कर्म० । चीनाख्ये पट्टवस्त्रभेदे "चीनांशुकमिवकेतोः प्रतिवातं नीयमानस्य" शकु० । "चीनांशुकमिव पीनस्तनजघनायाः कलौनायाः" उद्भटः ।

**चीनाक** पु० चीनं तदाकारं स्म अति अक–अण् । (चीनिया) कर्पूरभेदे । "चीनाकसंज्ञः कर्पूरः कफक्षयकरः स्मृतः । कुष्ठकण्डूवमिहरस्तिक्तरसश्च सः" भावप्र० ।

**चीनाकर्कटी** स्त्री चीनमिव स्वादुः कर्कटी पृषो० दीर्घः । १राजकर्कट्यां किङ्कुराविङ्ककर्कटीभेदे राजनि० ।

**चीभ** प्रशंसायां भ्वा० आत्म० सक० सेट् । चीभते अचीभिष्ट । चिचीभे ऋदित् अचिचीभत् त ।

**चीर** न० चि–क्रन् दीर्घश्च । १वस्त्रखण्डे मेदि० । (कानि) "चीराणि किं पथि न सन्ति दिशन्ति भिक्षाम्" शान्तिश० । २वल्कले सुभूतिः । ३गोस्तने ४वस्त्रभेदे ५रेखा लक्षणभेदे मेदि० । ६सीसके ७चूडायां दशोक्तौ हेमच० । ८मिश्रभेदे १०जलजे च शब्दार्थचि० "तं कदाचित् तदभ्यासात् चीरवल्काम्बरम्" भा० व० १८७अ० । "वेदचीरपरिच्छदाः" कुमा० । स्वार्थे क । चीरशब्दार्थे

**चीरक** न० चीर–संज्ञायां कन् । विज्ञापनलेखने विश्वः ।

**चीरपत्रिका** स्त्री चीरमिव पत्रमस्याः कप् अत इत्त्वम् । चञ्चुशाके राजनि० ।

**चीरपर्ण** पु० चीरमिव पर्णमस्य । शालवृक्षे राजनि० ।

**चीरनिवसन** पु० चीरं निवसनं वस्त्रं यत्र । "ऐशान्यामित्युपक्रमे "पौरवचीरनिवेशनसिन्धुसमुद्राद्रिगह्वराः" बृ०सं० १४ उक्ते १देशभेदे २तद्देशवासिषु ३तन्नृपेषु ब०व० । ४चीरधारिणि त्रि०

[रूपिणः" सुश्रुतः ।

**चीरल्लि** पु० । पक्षिभेदे "भारद्वाजविल्लाश्च चापचीरल्लि

**चीरि** स्त्री चि–बा० क्रि दीर्घश्च । १नेत्रांशुके शब्दरत्ना० । २झिल्लिकायां इक्कल्लिकायां शब्दार्थचि०

**चोरिका** स्त्री चीरीति कायति कै–क । झिल्लिकायां हेमच० ।

**चोरिणी** स्त्री वैवस्वतमनोस्तपस्यास्थानसमीपस्थे वदरीक्षेत्रस्थे नदीभेदे । "ऊर्द्ध्वबाहुर्विशालायां वदर्य्यां स (वैवस्वतः) नराधिपः । इत्युपक्रमे "तं कदाचित् तपस्यन्तमार्द्रचीर जटाधरम् । चीरिणीतीरमागम्य मत्स्यो वचनमब्रवीत्" भा० व० १८७अ० । [पालङ्क्यशाके भावप्र० ।

**चोरितच्छदा** स्त्री चीरवदाचरितः छदो दलं यस्याः ।

**चोरीवाक** पु० चीरीतिशब्दोवाकः वाचकोऽस्य । कीटभेदे "चीरिवाकस्तु लवणं वलाका शकुनिर्दधि" मनुना लवणहरणकर्म्मविपाके तद्योनिरुक्ता" "स्त्रिवी वस्त्रं श्वा रसन्तु चीरी लवणहारकः" याज्ञ० ऐकवाक्यात् अस्य चीरीसमानार्थकताऽवसेया ।

**चोरुक** स्त्री चीति–रौति–रुशब्दे बा० क । १झिल्लिकायां शब्दार्थचि० । सा आहर्य्यत्वेनास्त्यस्य अच् । २फल-प्रधानवृक्षभेदे न० ।

**चीर्ण** त्रि० चर नक् पृषो० अत इत्वम् । १कृते २शीलिते, ३सम्पादिते "चीर्णव्रतानपि सदा क्रतसंहितानिमान्" याज्ञ० । ४विदारिते च । [स्वरूते च मेदि० ।

**चीर्णपर्ण** लि० चीर्णं विदारितं पर्णमस्य । १खर्जूरवृक्षे २नि-

**चोलिका** स्त्री चीति शब्दं लाति ला–क टापि अत इत्वम् चीरिका+रस्य लोवा । झिल्लिकायां शब्दरत्ना० ।

**चोल्लक** पु०चीदिति शब्दं लक्कति लक्क–अच् पृषो० । झिल्लिकायां शब्दर० ।

**चीव** ग्रहणे संवृतौ च भ्वा० उभ० सक० सेट् । चीवति ते अचीवीत् अचीविष्ट । चिचीव चिचीवे ऋदित् । अचिचीवत् त ।

**चीव** दीप्तौ चुरा०उभ०सक०सेट् । चीवयति ते अचीचिवत् त

**चीवर** न० चि–वरच् नि० दीर्घः चीव–अच् वा । भिक्षु प्रावरणे उज्ज्वलद० "कौपिनाच्छादनं यावत्तावदिच्छेच्च चीवरम्" भा० आ० ६१अ० । "प्रेतचीवरवसा स्वनो-ग्रया" रघुः । "पुच्छभाण्डचीवराण्णिङ्" पा० चीव-रार्ज्जने परिधाने च" वार्त्ति० चीवराणि अर्ज्जयति परिधत्ते वा संचीवरयते भिक्षुः सि० कौ० । [त्रिका० ।

**चीवरिन्** पु० चीवरमस्त्यस्य इनि । १भिक्षुके २बुद्धभिक्षुके

**चुक** पीड़ने चु० उभ०सक० सेट् । चुकयति ते अचुचुकत् त ।

**चुक्कार** पु० चुक–भावे–अच् चुकं पीड़नमाराति सम्यक् ददाति आ+रा–क । सिंहनादे त्रिका० ।

**चुक्र** न० चक–रक् अत उत्वञ्च । १अम्लरसे २अम्लवेतसे पु० विश्वः ३शाकभेदे, (चुकापालङ्क) ४शुक्तभेदे च शब्दार्थचि० । "चुक्रमत्यम्लमुष्णञ्च दीपनं पाचनं परम् । शूलगुल्मविबन्धामवातश्लेष्महरम् परम् । वमिहृष्णाक्षसैरसहृत् पीड़ावह्निमान्द्यहृत्" भावप्र० । ५काञ्जिकप्रभेदे । इरसान्ते ७सन्धानविशेषे शब्दार्थचि० "यन्मस्त्वादि शुचौ भाण्डे सगुडं क्षौद्रकाञ्जिकम् । धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते । द्विगुणं गुड़मध्वारनालमस्तुक्रमादिह" वैद्यकपरिभाषा । ततः इष्टा भावे इमनिच् । चुक्रिमन् अम्लत्वे पु० । स्वार्थे क संज्ञायां वा कन् । चुक्रक तत्रार्थे । (चुकपालङ्) शाके न० ।

**चुक्रफल** न० चुक्रं फलति फल–अच् । इचाम्ले राजनि० ।

**चुक्रवास्तुक** न० चुक्रं वास्तुकमिव । (चुकपालङ्) शाकभेदे राजनि० । [राजनि० ।

**चुक्रवेधक** न० चुक्रमिव विध्यति विध–ण्वुल् । काञ्जिकभेदे

**चुक्रा** स्त्री चक–रक् अत उत्वम् । १चाङ्गेर्य्याम् (आमरुल) मेदि० । २तिन्तिड्यां शब्दर० । स्वार्थे क चुक्रिका । अम्ल लोणिकायाम् (आमरुल) अमरः ।

**चुक्राम्ल** न० चुक्रमिवाम्लम् । १इचाम्ले (चुकापालङ्) २शाके ३अम्ललोणिकायां (आमरुल) स्त्री राजनि० ।

**चुक्री** स्त्री चुक्र+गौरा० ङीष् । चाङ्गेर्य्याम् "चुक्री लघु-तरा स्वाद्वी वातघ्नी कफपित्तकृत् । रुच्या लघुतरा पाके हृन्ताकेनातिरोचनी" भावप्र० ।

**चुच्चा** स्त्री चञ्च वधे बा० स पृषो० । १हिंसायां चक्षा शीलमस्य छत्रा० ण । चौच हिंसाशीले त्रि० । "शिलाकीर्णं स्वयं श्वभ्रं नीलाञ्जनसमोदकम् । लताविता-नसंकन्नं चौच(ण्ड)एडमित्यभिधीयते । अश्मादिभिरव-द्धं यत् चु(ण्डे)चेति च परे जगुः । तत्वत्युदकं चौ-(ण्डम्)च सुनिभिःसमुदाहृतम्" भावप्र० उक्ते जलाधारभेदे । सुश्रुतेन तज्जलस्य चौरटसंज्ञोक्ता अचौ-ण्टसलिलक्षालित योनिम्" इति सुश्रुते निदानस्थाने चोण्टेति पाठास्तु लिपिकरप्रमादकृतः भावप्र० बहुषु पुस्तकेषु चौण्डमिति पाठः युक्तएव त्रिकाण्डे चुण्टा-शब्दस्य उपकूपजलाशयार्थकत्वात् तत्रत्यजलस्यैव चौण्ड-संज्ञौचित्यात्

**चुचु(चू)क** पु० न० चुचु इत्यव्यक्तशब्दं कायति पीयमानं कै–क । १कुचस्याग्रे अमरः तत्र चूचुकमिति । दीर्घ-

द्यमिति भरतः पृषो०। २दक्षिणदेशभेदे ३तद्देशवासिषु "गुहाः पुलिन्दाः शबराश्चुचुका मद्रकैः सह" भा० शा० २०७अ०। [(सुषुणि) त्रिका०।

**चुचु** पु० चु० चूञ् बा० उ पृषो०। सुनिषण्णके शाकभेदे

**चुचुपा** पु० १देशभेदे २तद्देशवासिषु ब० व०। "अम्बष्ठालचराश्चैव चुचुपा वेणुपास्तथा" भा० उ० १२९अ०।

**चचूक** पु० चुचुक+पृषो०। कुचाग्रे "चचूको ना कुचस्याग्रमिति रत्नकोषात् पुंस्त्वम्।

**चु(चू)च्चु** पु० शाकभेदे। "चुञ्चूपतिका तरुणीजीवन्ती बिम्बीतिकानन्दीभल्लातकच्छगलान्त्री च वृक्षादनीफञ्जीशाल्मलीशेलु वनस्पतिप्रसवशणकर्बुदारकोविदार प्रभृतीनि। कषायस्वादुतिक्तानि रक्तपित्तहराणि च। कफघ्नान्यनिलं कुर्युः संग्राहीणि लघूनि च। लघुः पाके च जन्तुघ्नः पिच्छिलोऽर्शसिनां हितः। कषाय मधुरो ग्राही चु(च्चू)ञ्चूस्तेषां त्रिदोषहा। "सतीनोवास्तुकचुञ्चु(च्चु)चिल्लीमूलकपोतिकाः। मण्डूकपर्णी जीवन्ती शाकवर्गे प्रशस्यते" सुश्रु०। "चुञ्चू(च्चू) प्रभृतीनां लोध्रासवः" सुश्रुते तस्यानुपानमुक्तम्।

**चुच्च** स्नाने मन्थने पीडने सुरादिसन्धाने च भ्वा० पर० सक० चुच्चति अचुच्चीत् ईदित् चुक्तः।

**चुञ्चु** पु० १छुछुन्दर्यां हारा०। "चुञ्चुमद्गुश्च वैदेहवन्दिस्त्रियोर्ब्राह्मणेन जातौ बौधायनोक्ते २सङ्कीर्णजातिभेदे। "मेदान्ध्रचुञ्चुमद्गूनामारण्यपशुहिंसनम्" मनुना तद्वृत्तिरुक्ता। [तदर्थे हारा०।

**चुञ्चरी(ली)** स्त्री तिन्तिडीबीजद्यूते त्रिका०। वा रस्य लः

**चुञ्चुल** पु० गोत्रप्रवर्तके विश्वामित्रपुत्रभेदे "औदुम्बराह्यभिणाताम्भस्तारकायणचुञ्चुलाः" हरिवं०२७अ०।

**चुट** अल्पीभावे भ्वा० पर० अक० सेट्। चोटति अचोटीत् चुचोट। [ण्टीत् ।चुचुण्ट।

**चुण्ट** अल्पीभावे भ्वा० पर०अक०सेट् इदित्। चुण्टति अचु-

**चुण्ट** छेदने चुरा० उभ० सक० सेट् इदित्। चुण्टयति-ते अचुचुण्टत् त।

**चुट** छेदने वा चु० उभ० पक्षे तुदा० कुटा० पर० सक० सेट्। चोटयति-ते अचूचुटत्-त पक्षे चुटति अचुटीत् चुचोट।

**चुड्ड** अल्पीभावे चुरा० उभ० अक० सेट्। चुड्डयति-ते अचुचुड्डत्-त। [अचुचुण्डत्-त।

**चुण्ड** छेदने चुरा० उभ० सक० सेट् इदित्। चुण्डयति—ते

**चुड** अल्पीभावे भ्वा० पर० अक० सेट् इदित्। चुण्डति अचुण्डीत्।

**चुड्ड(ड्ड)** हतौ हावे च भ्वा० पर० सक० सेट्। चुड्डति अचुड्डीत्। क्विपि टोपधस्य चुट् डोपधस्य चुड्

**चुण** छेदने तु० कु० पर० सक० सेट्। चुणति अचुणीत् चुचोण।

**चुण्डा** स्त्री चुडि-अच्। कूपे त्रिका०। गौरा० ङीष्। उपकूपस्यजलाशये। तत्र भवः अण्। चौण्ड तत्रत्यजले सुश्रुतः। चुण्डाशब्दे दृश्यम्।

**चुत** क्षरणे भ्वा० प० सक० सेट्। चोतति इरित् अचुतत् अचोतीत् चुचोत [शब्दरत्ना०।

**चुत** पु० चोतति शोणितमस्मात् बा० चअर्थे क। गुदद्वारे

**चुद** नोदने चु० उ०सक० सेट्। चोदयति-ते अचूचुदत्-त चोदितः चोदना। "धियो योनः प्रचोदयात्" "चोदनालक्षणोऽर्थोधर्म्मः" जैमि०।

**चुद्री** स्त्री चुद—बा० क्री। कुट्टिन्यां हेमच०।

**चुप** मन्दगतौ भ्वा० पर० सक० सेट्। चोपति अचोपीत् चुचोप। "किं स्वित् सुप्तङ् न निमिषति किं स्विज्जातम् चोपति" भा० व० १३३अ० अष्टावक्रं प्रति प्रश्नः।

**चुपुनीका** स्त्री चुप-बा० उनङ् ततः स्वार्थे ईकक्। अग्निचयनार्थे इष्टकाभेदे "इष्टका चुपुनीका" तैत्ति० ४।४।५।१।

**चुप्य** त्रि० चुप—क्यप्। १शनैर्गन्तरि गोत्रप्रवर्त्तके २ऋषिभेदे पु०तस्य गोत्रापत्यम् अश्वा० फञ्। चौप्यायन तद्गोत्रापत्ये पुंस्त्री०।

**चुम्ब** चुम्बने मुखसंयोगभेदे वा चु० उभ० पक्षे भ्वा० पर० सक०सेट् इदित्। चुम्बयति ते चुम्बति अचुचुम्बत् त अचुम्बीत् चुचुम्ब। "धूर्त्तोऽपरां चुम्बति" सा०द०। "प्रियामुखं किं पुरुषश्चुचुम्ब" कुमा०। "दशनच्छद एव चुम्बयितुम्" दशकुमा०।

**चुबुक** चिबुक+पृषो० चुवि उकक् पृषो० नलोपो वा। चिबुकार्थे "औदुम्बरं मैत्रावरुणदण्डमास्यदघ्नं चुबुकदघ्नं वा" आपस्तम्बसूत्रम्।

**चुरू** पु० चु ऊ नि०। सुखे उज्ज्वलदत्तः।

**चुमुरि** पु० ऋग्वेदप्रसिद्धे असुरभेदे "धुनी चुमुरी या ह सिष्वप" ऋ० ६।२०।१३। "धुनिश्च चुमुरिश्चेत्येतन्नामकावसुरौ" भा०।

**चुम्ब** पु० चुबि—भावे घञ् अच् वा। १चुम्बने भावे अ।

२चुम्बने स्त्री "स्वेदोऽस्य चुम्बा प्रथमाऽभियोगः" "चुम्बाविरामे वदनं प्रमार्ष्टि" हृ० स० ७८अ० ।

चुम्बक पु चुम्बति लौहम् चुवि–ण्वुल् । स्वनामख्याते अयस्कान्ते मणिभेदे "चुम्बको लेखनः शीतोमेदोविष गरापहः" भावप्र० । २घटस्योपर्य्यावलम्बने ३वहु-ग्रन्थैकदेशे । ४चुम्बनकर्त्तरि ५कामुके ६चुम्बनपरे ७धूर्त्ते च त्रि० शब्दार्थचि० ।

चुम्बन न० चुवि–भावे ल्युट् । मुखसंयोगविशेषे । "समाश्लिष्टाः समाश्लेषैश्चुम्बिताश्चुम्बनैरपि । दष्टाश्च दंशनैः कान्तं दासीकुर्वन्ति योषितः" सा० द० । चुम्बनस्थानमाह कामशास्त्रे "मुखे स्तने ललाटे च कण्ठे च नेत्रयोरपि । जघने कर्णयोश्चैव कक्षोरूभग-मूद्धसु । चुम्बनस्थानमित्युक्तम् विज्ञेयं कामुकैरिह" । चु० चवि–भावे मुच् । चुम्बनाप्यत्र स्त्री

चुर स्तेये (परद्रव्यापहरणे) वा चु० उभ० पक्षे भ्वा० पर० सक० सेट् । चोरयति–ते चोरति अचूचुरत्–त अचोरीत् "यश्चाग्निं चोरयेत् स्वहात्" याज्ञ० । "अचू-चुरत् चन्द्रमसोऽभिरामताम्" माघः ।

चुर त्रि० चुर–क । चौर्य्यकर्त्तरि [अचुरणीत् ।

चुरण चौर्य्ये कण्ड्वा० पर० सक० सेट् । । चुरण्यति

चुरा स्त्री चुर–बा० भावे क । चौर्य्ये शब्दरत्ना० । चुरा-शीलमस्य छत्रा० ण । चौर चुराशीले त्रि० ।

चुरि(री) स्त्री चुर बा०कि वा ङीप् । उपकूपे कूपसमीपस्थे जलाधारे हेम० ।

चुरुचुर पु० त्रि० चुर–कु चुर–क कर्म्म० । पिशुने अस्य कर्णे उपपदे पात्रसमि० स० । कर्णेचुरुचुर कर्णे-पिशुने युक्तारो आद्युदात्ततास्य । [त पा०

चुल समुच्छ्रये वा चुरा०उभ०सक०सेट् । चालयति ते अचूचुलत्

चुल त्रि० चुर–क रस्य लः । चोरे ततः चतुरर्थ्यां बला० य च । चुल्य तन्निर्वृत्तादौ त्रि० ।

चुलका स्त्री नदीभेदे "कावेरीं चुलकां चापि वेणां शतबलामपि" भा० भी० ९अ० । नद्युक्तौ

चुलुक पु० चुल–उकञ् । १प्रसृतौ २निविडपङ्के, ३भाण्डभेदे च त्रिका० ४माप्रमाणमज्जनयोग्ये जले न० हेमच० । "काश्यामुत्तरवाहिन्या एकेन चुलुकेन तत्" काशी० ३९अ० । ६गोत्रप्रवर्त्तके ऋषिभेदे पु० ततः गर्गा० गोत्रे यञ् । चौलक्य चुलुकगोत्रापत्ये पुंस्त्री० । स्त्रियां ङीप् यलोपश्च चौलुकी ।

चुलुकिन् पु० चुलुक+अस्त्यर्थे इनि । शिशुमाराकारे मत्स्यभेदे शब्दरत्ना० । चुलकशालिनि त्रि० स्त्रियां ङीप् ।

चुलु(नृप)म्प लौल्ये भ्वा० पर० अक० सेट् । चुलुम्पति अचुलुम्पीत् "अम्भोधेर्नालिकेलीरसमिव चुलुकैश्चुलुम्प-न्त्यपो ये" महावी० । अस्य नोपधत्वे क्विपि चुलुन् मोपधत्वे चुलुम् । [२काम्यां स्त्री त्रिका० ।

चुलम्प पु० चुलुम्प–भावे घञ् । १बाललालने जटा० ।

चुलुम्पिन् पु० चुलुम्प–णिनि । शिशुमाराकृतिमत्स्ये शब्दर० ।

चुल्ल भाव कृतौ भ्वा० पर० अक० सेट् । चुल्लति अचुल्लीत् चुचुल्ल । [२तद्युक्ते जने त्रि० मेदि० ।

चुल्ल न० क्लिन्नस्य चुलादेशः लच्प्रत्ययः । १क्लिन्ननेत्रे

चुल्लकी स्त्री० चुल्ल–ण्वुल् गौरा० ङीष् । शिशुमारे कुम्भी-रभेदे मेदि० ।

चुल्ली(ल्लि) स्त्री चुल्ल–इन् वा ङीप् । चुल–वा०लिक् वा । पाकार्थमग्निस्थापनस्थाने (चुला) अमरः । "चुल्ली चिरं रोदिति" उद्भटः । "पञ्चसूना गृहस्थस्य चुल्ली पेषण्युप-स्करः" मनुः । अण् । चौल्लायन । दीर्घान्तः चितायां मेदि०

चुस्त पुंन० चु–क्त वा० सुट् । १पुष्टे मांसपिण्डभेदे २स्थालीभृष्टमांसे च शब्दार्थचि० । पनसफलान्तर्गते (भुति) इति ख्याते पदार्थे भरतः ।

चूचूक न० चूष्यते चूष–बा० ऊकः पृषो० [illegible] कुचाग्रे भरतः २चूषणशक्तिरहिते त्रि० [illegible] समापद्माश्चाखण्डालामूकचूचूकाः" भा० आश्व० ३६ [illegible]

चूडक पु० चूडास्त्यस्य बा० कन् । कूपे त्रिका० ।

चूडा स्त्री चुड–अङ् चुल–समुच्छ्रये अङ् डस्य ना [illegible] १मयूरशिखायां २शिरोमध्यस्थशिखामात्रे, [illegible] याम् अमरः । ३वडभ्यां ४बाहुभूषणे, मेदि० । ५कूपे हेमच० । ६कूपे त्रिका० । ७संस्कारभेदे तद्विहि-तनक्षत्रादि मुहू० पी० धा० उक्तं यथा ।

"चूडा वर्षात्तृतीयात् प्रभवति विषमेऽष्टार्करिक्ताद्यषष्ठी-पर्वोनाहे विचैत्रोदगयनसमये ज्ञेन्दुशुक्रेज्यकानाम् । वारे, लग्नांशयोश्चाखभनिधनतनौ नैधने शुद्धियुक्ते शाक्रोपेतैर्विमैत्रैर्मृदुचरलघुभैरायषट्त्रिस्थपापैः (१) क्षीणचन्द्रकुजसौरिभास्करैर्मृत्युशस्त्रमृतिपङ्गुताज्वराः । स्युः क्रमेण बुधजीवभार्गवैः केन्द्रगैश्च शुभमिष्टतारया (२) पञ्चमासाधिके मातु गर्भे चौलं शिशोर्न सत् । पञ्च-वर्षाधिकस्येष्टं गर्भिण्यामपि मातरि । (३)

ताराद्वौ दृष्टेऽब्जे त्रिकोणोच्चगे वा क्षौरं सत् स्यात्सौम्यमित्रस्ववर्गे । सौम्ये भेऽब्जे शोभने दुष्टतारा शस्ता ज्ञेया क्षौरयात्रादिकृत्ये (४) । ऋतुमत्याः सूतिकायाः सूनोश्चौलादि नाचरेत् । ज्येष्ठापत्यस्य न ज्यैष्ठे कैश्चिन्मार्गेऽपि नेष्यते" (५) । मुहूर्त्तचिन्तामणिः "चूडा वर्षादिति । तृतीयाद्वर्षादिति ल्यब्लोपे पञ्चमी । तेन गर्भाधानकालाज्जन्मकालाद्वा तृतीये विषमे वर्षे पञ्चमे सप्तमे वा चूडाकरणं प्रभवति कृतं सच्छुभोदर्कं भवतीत्यर्थः । यदाह वशिष्ठः "तृतीये पञ्चमेऽब्दे वा स्वकुलाचारतोहितम् । चौलं शिशूनां यत्नेन स्वगृह्योक्तविधानतः । आधानतोजन्मतो वा सप्तमाब्देऽपि कारयेत्" । स्वकुलाचारत इत्यनेन येषां कुले पार्थक्येन चूडाकरणं तत्र मुहूर्त्तविचारः । येषामुपनीत्या सहेष्यत इति पक्षस्तेषामुपनयनमुहूर्त्तेन सिद्धत्वान्न पृथक् मुहूर्त्तविचारानुन्मेषः । अतएवोक्तं याज्ञवल्क्येन "चूडा कार्या यथाकुलमिति" । मनुना प्रथमवर्षे उक्तम् । "चूडाकर्म्म द्विजातीनां सर्व्वेषामेव धर्मतः । प्रथमेऽब्दे तृतीये वा कर्त्तव्यं श्रुतिचोदनात्" एवं बहुकालोक्तौ यथागृह्यं व्यवस्था द्रष्टव्या । स्वगृह्ये विशेषकालानुक्तौ तु समबलत्वात्सर्व्वेषां विकल्पः । विशेषमाह गुरुः "तृतीयेऽब्दे शिशोर्गर्भाज्जन्मतो वा विशेषतः । पञ्चमे सप्तमे वापि स्त्रियाः पुंसोऽथवा सममिति । अष्टेति अष्टाष्टमी अर्काः द्वादशी रिक्ताः प्रसिद्धाः आद्या प्रतिपत् षष्ठी प्रसिद्धा पर्व्वाणि अष्टमीचतुर्द्दशीपूर्णिमामावास्यासंक्रान्तयः । एतैरूने रहितेऽहनि । अत्र तत्पुरुषसमासे "राजाहःसखिभ्यष्टजिति" पा० टच् "न सङ्कित" इति टिलोपः । अष्टम्यादितिथीस्त्यक्त्वा शेषासु तिथिषु चूडा स्यादित्यर्थः । यदाह गुरुः "द्वादशीं चाष्टमीं रिक्तां षष्ठीं प्रतिपदन्तथा । हित्वा शेषासु तिथिषु क्षौरकर्म शुभावहम्"कश्यपः"पञ्चपर्व्वतिथिं रिक्तां त्यक्त्वान्यदिवसे शुभमिति" । अतएवाह वशिष्ठः "पञ्चमी सप्तमी चैव दशम्येकादशी तथा । त्रयोदशी तृतीया च क्षुरकर्म शुभावहा" इति । चकाराद्द्वितीयाऽपि । ननु सप्तमी त्रयोदश्योर्गलग्रहत्वात्कथं तयोर्ग्रहणम् यदाह गुरुः "विद्यारम्भोव्रतादेशः क्षौरञ्चैव विशेषतः । गलग्रहे न कर्त्तव्यं यदीच्छेद्दीर्घजीवितमिति" चेत् उच्यते वैदिकं मुण्डनञ्चौलमित्युच्यते तद्विषयको विधिः । अवैदिक मुण्डनं सुखार्थं यत् क्षौरमुच्यते क्षुरस्य कर्म क्षौरमिति सामान्यव्युत्पत्तेरतस्तद्विषयको निषेध इति वयं ब्रूमः । अन्ये देशाचारतो व्यवस्थामाहुस्तदयुक्तं विरोधाभावात् । विचैत्रेति । चैत्ररहिते उत्तरायणे चूडा स्यात् । शुभाशुभप्रकरणाभिहितो जन्ममासनिषेधोऽत्रापि ध्येयः । तदाह राजमार्त्तण्डः "उत्तरवर्त्मनि सवितरि चूडाकरणं जगुर्बुधा जवनाः । चैत्रं हित्वा पापग्रहदिवसं जन्ममासञ्च" । तथा ज्ञेन्दुशुक्रेज्यकानां वारे लग्नांशयोश्चेति सौम्यग्रहवारे सौम्यग्रहाणां लग्ने कर्कमिथुनवृषकन्यातुलाधनुर्मीना-नामन्यतमे लग्ने तेषामेव च नवांशे चूडा स्यात् ।"चन्द्रज्ञगुरुशुक्राणां वारलग्नांशकेषु चेति" काश्यपोक्तेः । विशेषमाह पराशरः "सितेज्यसौम्यवारेषु क्षौरं पक्षद्वये हितम् । इन्दुवारः सिते पक्षे वाराः शेषा न शोभनाः" । प्रयोगपारिजाते पापवाराणामप्यपवादः पठितः "पापग्रहाणां वारेऽपि विप्राणां तु शुभो रविः । क्षत्रियाणां तु भूसूनुर्विट्शूद्राणां शनिः शुभः ।" इति । तथा अस्वभनिधनतनौ भं लग्नं राशिश्च स्वस्य भे स्वभे स्वाभ्यां निधनमष्टमलग्नं तच्च विद्यते यस्मिन् तनौ स्वजन्मजन्मलग्नराशिभ्यामष्टमलग्नरहिते लग्ने चूडा स्यादित्यर्थः । तथा नैधनेऽष्टमस्थाने शुद्धियुक्ते शुद्धिः शुक्रव्यतिरिक्तसर्व्वग्रहराहित्यं तद्युक्ते सति चूडा स्यात् । उक्तञ्च कश्यपेन "नैधने शुद्धिसंयुक्ते लग्नराशौ न नैधने" इति । पराशरः "अष्टमस्था ग्रहाःसर्व्वे नेष्टाः शुक्रविवर्ज्जिताः । शुक्रश्च निधने क्षौरे सर्व्वसंपत्करः शिशोरिति"। शाक्रोपेतैरिति । शाक्रोपेतैर्ज्येष्ठायुक्तैर्विमैत्रैरनुराधारहितैर्म्मृदुचरलघुभिर्द्वादशभिर्नक्षत्रैरुपलक्षिते काले चूडा स्यात् । यदाह वशिष्ठः "अदितिद्वितये पौष्णद्वितये श्रवणत्रये । हस्तात्त्रितये शाक्रे सैन्दवे चौलमीरितम्" । कश्यपोऽपि "दास्रेन्द्वदितिपुष्येन्द्रभेषु हस्तत्रयेऽपि च । विष्णुत्रये च पौष्णर्क्षे चौलकर्म शुभप्रदमिति" अविहितनक्षत्रेषु जन्मनक्षत्रमप्रशस्तमित्याह कश्यपः "नवान्नप्राशने चौले व्रतबन्धेऽभिषेचने । शुभदञ्जन्मनक्षत्रमशुभं त्वन्यकर्म्मणीति" नारदादिवाक्यान्यन्नप्राशनेऽभिहितानि अत्र केचित् जन्मनक्षत्रपदन्ताराधरं ज्ञेयमित्याहुः तथाचोक्तं लल्लेन "हित्वैकं जन्मर्क्षन्त्वे तारे जन्मसंज्ञिते शुभदे । उद्वाहे चोपनये यात्रायामन्नभोजने क्षुरे कार्ये" इति । तत्र अवैदिकक्षुरविषयकत्वात् "जन्म

न्मै कर्मनक्षत्रे” इति गुरुवचनमपि तद्विषयमेव वैदिक क्षुरपरञ्चैतत्काश्यपादिवाक्यमिति समञ्जसम्। अथ लग्नबलमाह। आयेति। एकादशषष्ठतृतीयस्थानस्थितैः पापग्रहैश्चोपलक्षिते काले चूडा स्यात्। “अषष्ठान्त्यारिगे चन्द्रे पापैरायारिसंस्थितैः” इति काश्यपोक्तेः। (१) क्षीणेति। तथा क्षीणचन्द्रः। कुजो मङ्गलः सौरिः शनिः भास्करः सूर्यः एतैः केन्द्रस्थैः क्रमेण यथासङ्ख्यं मृत्युः मरणं, शस्त्रहतिः शस्त्रानुहतिः, पङ्गुता खञ्जता ज्वरः प्रसिद्धः एतानि फलानि स्युर्भवेयुः। बुधजीव भार्गवैस्तु केन्द्रस्थैः शुभकल्याणकारि फलं चूडाकर्त्तुः स्यात् तदुक्तं रत्नमालायां “क्षौरकर्मणि सकलविधिना चौलमाहुर्मुनीन्द्राः केन्द्रं यातेषु क्षपागुरुभौमसूर्यैः ज्वरः स्यात्। शस्त्राघातो धरणितनये पङ्गुता चार्क-पुत्रे शीतज्योतिष्यपचिततनौ निश्चितं नाशमेति”। केन्द्र-व्यतिरिक्तस्थानफलमपि तत्रैव “धनव्ययत्रिकोणगैरसद्ग्रहैर्भवेत्तावपि। क्षुरक्रिया न शोभना शुभैस्तु पुष्टिकारिणीति” स्मृतौ तु शुक्र एव शस्तो नान्ये शुभग्रहाः प्रागुक्तपराशरवाक्यस्वरसात्। क्षुरक्रिया चौलम् दुष्टतारयेति च पुनरिष्टतारया गोचरप्रकरणोक्तया शुभफलदतारया चूडा स्यात्। उक्तञ्च राजमार्त्तण्डेन “रविशुद्धौ ग्रहकरणं रविगुरुशुद्धौ व्रतोद्वाहौ। क्षौरन्ताराशुद्धौ शेषञ्चन्द्राश्रितं कर्मेति”। ज्योतिर्निबन्धे “विवाहे सविता, शस्तोव्रतबन्धे बृहस्पतिः। क्षौरे ताराविशुद्धिश्च, शेषे चन्द्रबलम्बलमिति”। चौलप्रयोजनमाह वशिष्ठः “सर्व्वेषामेव वर्णानां चूडाकर्मविधिः स्मृतः। केशमूलं पिता ज्ञेयः, केशाग्रं जननी तथा। चौलेनैवायुषो वृद्धिश्चौलेनैवायुषः क्षयः। तस्माच्चौलं प्रयत्नेन कारयेद्बुद्धिमान्नरः” व्यवहारनिबन्धे चौलारम्भे विशेषमाह श्रीपतिः” “केशवमानर्त्तपुरं पाटलिपुत्रम्पुरीमहिच्छत्राम्। दितिमदितिञ्च स्मरतां क्षौरविधौ भवति कल्याणमिति”। यत्तु कैश्चिदुक्तम् “चन्द्रशुद्धिर्यत्र नास्ति ताराया विशेषतः। क्षौरभेऽपि कर्त्तव्यं वारेण बुधसोमयोः” इति तत्सामान्यक्षौरविषयम् (२)। पीयूषधारा

अथ सगर्भायां स्वमातरि सत्यां शिशोश्चौलार्थङ्कालमनुष्टुभाह। पञ्चेति चौलाधिकारिणः शिशोर्मातुर्गर्भे पञ्चमासेभ्योऽधिके सति चौलं न सत् शुभफलदात् नैव स्यात्। अतः पञ्चमासेभ्यः पूर्व्वञ्चौलकृतं सच्छुभफलमित्यर्थः तदुक्तं ग्टह्यपरिशिष्टे “चूडाकर्म्म न कर्त्तव्यं यस्य मातास्ति गर्भिणी। करोति यदि मन्दात्मा तदा गर्भस्य नाशनम्। पितोर्म्मृतिं वदन्त्येके चतुरब्दोत्तरे स्फुटम्” इति। वशिष्ठः “पुत्र चूडाकृतौ माता गर्भिणी यदि वा भवेत्। विपद्यते गुरुश्चैव दम्पती शिशुरब्दतः। गर्भे मातुः कुमारस्य न कुर्य्याच्चौलकर्म च। पञ्चमासादधः कुर्य्यादतऊर्द्ध्वं न कारयेत्”इति। अस्यापवादमाह। पञ्चेति पञ्चवर्षाधिकस्योल्लङ्घितपञ्चमवर्षस्य शिशोर्मातरि गर्भिण्यामपि सत्यां पञ्चमासादप ऊर्द्ध्वं विहितकाले चौलमिष्टङ्कल्याणकारि भवेत्। अतो बालो यावत्पञ्चवर्षो न भवति तावत्पर्य्यन्तं निषेध इत्यर्थः। तदाह नारदः “सूनोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत्। पञ्चमाब्दात् प्रागथोर्द्ध्वं गर्भिण्यामपि कारयेत्”। यदा तूपनयनेन सह चौलञ्चिकीर्षितं तदा विशेषमाह ज्योतिर्नारदः “सहोपनीत्या कुर्य्याच्चेत्तदा दोषो न विद्यते” इति। अत्र तु पञ्चवर्षाणां न्यूनाधिकभावो नापेक्षितः सर्व्वापवादकत्वादस्य। एवं पार्थक्येन मौञ्ज्यपि सगर्भायां संस्कार्य्यमातरि सत्यां न भवति। तदुक्तम् “सूनोर्मातरि गर्भिण्यां मौञ्जी चूडे न कारयेत्। गते तु पञ्चमे मासे गर्भादीनां क्षतिर्भवेत् (३)।

अथ चौले ताराबलमावश्यकमित्युक्तं तत्र दुष्टायां तारायां सत्यामपवादं शालिन्याह तारादौष्ट्ये इति। ताराणां दुष्टत्वं गोचरप्रकरणेऽभिहितं तत्तत एवावधार्य्यम्। तस्मात्तारादौष्ट्ये सत्यपि क्षौरञ्चौलं सच्छोभनं स्यात्। कस्मिन् सति? अब्जे चन्द्रे त्रिकोणगे नवपञ्चमस्थानस्थिते, अथ वोच्चगे वृषराशिस्थे। अथ वा सौम्यानां बुधगुरुशुक्राणां वर्गे षड्वर्गे अथ वा स्वस्यैव षड्वर्गे सति। उक्तञ्च ज्योतिस्तत्त्वे “सौम्यसुहृद्भि-जवर्गे चन्द्रे तुङ्गे त्रिकोणगे वापि। क्षौरादिकोपकरणे तारादोषो न दोषाय”। आदिशब्देन यात्रा। “विपत्तारे गुडं दद्यात्”इत्यादयोऽपि तारादौष्ट्यापवादाः प्रागुक्तास्तेऽप्यत्रोह्याः। अथ शुभतारायाङ्गुणमाह सौम्ये भे विहिते नक्षत्रे सति अब्जे शोभने चन्द्रे गोचरोक्ताष्टस्थानस्थे सति दुष्टताराऽसमीचीनतारापि चेत् स्यात्तदा क्षौरयात्रादि मङ्गलकृत्येषु शस्ताऽतिप्रशस्ता निखिलदोषापवादिका स्यादित्यर्थः। तदप्युक्तं ज्योतिस्तत्त्वे “कृष्णपक्षे त्वन्दशान्तिथौ रिक्ता चन्द्रश्चाष्टमगस्तथा।

तन्मध्ये नाशयेत्तारा षट्पञ्च नवमी तथा। जन्माख्यद्य्रष्टमी तारा न शुभा नापि निन्दितेति। (४) पी॰धा॰ "अथ चौलादिकर्म्मे कालविशेषनिषेधमाह ऋतुमत्या इति। ऋतुः स्त्रीधर्म्मः स यस्या अस्तीति ऋतुमती तस्यास्तथा सूतिकाया जातापत्यायाः सूनोः पुत्रस्योपलक्षणत्वात्कन्याया वा चौलोपनयनविवाहाद्युक्तवक्ष्यमाणकर्म्म नाचरेत् न कारयेत्। उक्तं च प्रचेतसा "यस्य माङ्गलिकं कर्म्म तस्य माता रजस्वला। वैधव्यं जायते तत्र कन्यायाः पाणिपीडने"। पाणिपीडने वैधव्यमन्यत्र मृत्युरित्यर्थः। सूतिकाया अपि कर्म्मानर्हकाल उक्तो विष्णुस्मृतौ। "सूतिकाम्पुत्रवतीं विंशतिरात्रेण कर्म्माणि कारयेत् मासेन स्त्रीजननीमिति"।

अतएव सूतिकाया उक्तकालपर्य्यन्तं कर्म्मानर्हत्वात्तदपत्यस्यापि मङ्गलकर्म्मे निषेधः। ज्येष्ठेति ज्येष्ठापत्यस्याद्यगर्भस्य पुत्रस्य कन्याया वा व्रतबन्धविवाहादि शुभकर्म्म ज्यैष्ठमासे न भवति उक्तञ्च रत्नमालायाम् "आद्यगर्भदुहितुः सुतस्य वा ज्यैष्ठमासि न च जातु मङ्गलमिति" केचिदिति। मार्गेऽपि मार्गशीर्षमासेऽपि केचिदाचार्य्या आद्यगर्भसुतकन्ययोर्मङ्गलकर्म्म नेच्छन्ते तदाह वात्स्यः "मार्गे मासि तथा ज्यैष्ठे विवाहं चौलमेव च। ज्येष्ठपुत्रदुहित्रोश्च न कुर्वीत व्रतं तथा"। भरद्वाजोऽपि "मार्गशीर्षे तथा ज्यैष्ठे क्षौरं परिणयं व्रतम्। आद्यपुत्रदुहित्रोश्च यत्नतः परिवर्जयेत्"। अस्मादेव ज्ञापकात् द्वितीयादिगर्भपुत्रदुहित्रोर्ज्यैष्ठे मार्गशीर्षे च न मङ्गलकृत्यानां निषेधः किं तु विधिरिति प्रतिभाति" पी॰ धा॰।

**चूड़ामणि** पु॰ चूडास्थितो मणिः शा॰ त॰। १शिरःस्थे रत्ने अमरः। "चूडामणीकृतविधुर्वलयीकृतवासुकिः" सि॰ कु॰। "चूडामणिभिरुद्घृष्टपादपीठं महीक्षिताम्" रघुः। चूडायां मणिरिवास्य। २काकमाचिकाफले मेदि॰। ३ग्रहणविशेषे यथा गारुडे। "सूर्य्यग्रहः सूर्य्यवारे सोमे सोमग्रहस्तथा। चूडामणिरयं योगस्तत्रानन्तं फलं स्मृतम्। अन्यस्मात् ग्रहणात् कोटिगुणमत्र फलं लभेत्"

**चूड़ाम्ल** न॰ चूडायामप्यम्लम्। वृक्षाम्ले राजनि॰।

**चूडार** त्रि॰ चूडामृच्छति ऋ—अण्। चूडागते ततः। प्रगद्या॰ चतुरर्थ्यां ञ्य। चौडार्य्य तन्निर्वृत्तादौ त्रि॰।

**चूडारक** त्रि॰ चूडामृच्छति ऋ—ण्वुल्, चूडा+वा॰ आरक वा। १चूडायुक्ते २ऋषिभेदे पु॰ तस्य गोत्रापत्यम् इञ्। चौडारकि तद्गोत्रापत्ये पुंस्त्री। बहुत्वे तु द्वन्द्वे अद्वन्द्वे च इञो लुक्। चूडारकाः तद्गोत्रापत्येषु ब॰व॰।

**चूडारत्न** न॰ चूडाया रत्नम्। चूडामणौ हेमच॰।

**चूडाल** त्रि॰ चूडा अस्त्यस्य प्राणिस्थत्वात् ल। चूडायुक्ते "चूडालाः कर्णिकालाश्च पङ्काश्च पिठरोदराः" भा॰ सौ॰ ७अ॰। २मस्तके न॰ शब्दरत्ना॰। ३उच्चटातृणे स्त्री अमरः ४श्वेतगुञ्जायां ५नागरमुस्तायां च राजनि॰।

**चूडावत्** त्रि॰ चूडा अस्त्यर्थे पक्षे बला॰ मतुप् मस्य वः। चूडाविशिष्टे पक्षे इनि। चूडिन् तत्रार्थे पुरोहितादिगणे चूडिक इति निर्द्देशात् पक्षे ठनपि। चूडिक उक्तार्थे। ततः पुरोहिता॰ भावादौ यक्। चौडिक्य चूडाविशिष्टत्वे न॰। [चूणत् त।

**चूण** सङ्कोचे चुरा॰ उभ॰ सक॰ सेट्। चूणयति ते अचु-

**चूत** पु॰ चूष—क्त चोतति रसम् चुत—अच् वा पृषो॰। १आम्रे, अमरः "नवचूतप्रसवोग्रमिष्यति" "चूताङ्कुरास्वादकषायकण्ठः"। "सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः" कुमारः। च्यु—क्त पृषो॰। २गुदद्वारे न॰। स्वार्थे क। चूतक आम्रे कूपके च।

**चूर** दाहे दिवा॰ आत्म॰ सक॰ सेट्। चूर्य्यते अचूरिष्ट। चुचूरे ईदित् चूर्णः। [इष्यम्।

**चूरु** पु॰ चूर—उण्। क्रमिभेदे सुश्रु॰ क्रमिशब्दे २१९४पृ॰

**चूर्ण** पेषे चु॰ उभ॰ सक॰ सेट्। चूर्णयति-ते अचु-चूर्णत् त। चूर्णः चूर्णितः

**चूर्ण** न॰ चूर्ण—कर्म्मणि अच्। १पेषणजाते क्षोदे (मयदा) प्रभृतौ राजनि॰ "अन्नादष्टगुणं चूर्णं चूर्णादष्टगुणं पयः" वैद्य॰। तल्लक्षणमुक्तं भावप्र॰ "अत्यन्तशुष्कं तद्द्रव्यं सुपिष्टं वस्त्रगालितम्। तत् स्याच्चूर्णं रजःक्षोदस्तन्मात्रा कर्षसम्मिता। चूर्णे गुडः समो देयः शर्करा द्विगुणा मता। चूर्णे तु भर्जितं हिङ्गु देयं नोत्क्लेदकृद्भवेत्। लिहेच्चूर्णं द्रवैः सर्वैर्घृताद्यैर्द्विगुणोन्मितैः। पिबेच्चतुर्गुणैरेव चूर्णमालोडितं द्रवैः। चूर्णावलेहगुटिका कल्कानामनुपानकम्। पित्तवातकफातङ्के त्रिद्व्येकपलमाहरेदिति" (आवीर) २क्षाते। क्षोदे "अलकेषु चमूरेणुश्चूर्णप्रतिनिधीकृतः" रघुः। ४धूलौ तस्य लोपकरणे ५क्षारे (चूण) मेदि॰। "चूर्णमानीयतां तूर्णं पूर्णचन्द्रनिभानने!। पर्णानि स्वर्णवर्णानि सौदन्त्याकर्णलोचने" उद्भटः। भावे अच् ६पेषणे पु॰

चूर्णक न० चूर्ण+स्वार्थे क। १चूर्णने २चूर्णशब्दार्थे ३पद्यभेदे न० तल्लक्षणादिकं छन्दो०उक्तं यथा "अपादः पदसन्तानो गद्यं तच्च त्रिधा मतम्। चूर्णकोत्कलिकाप्रायवृत्तगन्धिप्रभेदतः" "अकठोराक्षरं स्वल्पसमासं चूर्णकं विदुः। तत्तु वैदर्भरीतिस्थं गद्यं हृद्यतरम् भवेत्" ३यवक्षौ (छातु) पु० त्रिका०।

चूर्णकार त्रि० चूर्णं करोति कृ-अण् उप० स०। पेषणकारके। (चूण) इति पदार्थनिष्पादके (चुनारी) इति ख्याते २सङ्कीर्णजातिभेदे पुंस्त्री०। स च नटकन्यायां पुण्ड्रकाज्जात इत्याह पराशरः।

चूर्णकुन्तल पु० चूर्ण्यते इति चूर्णः कर्म०। शिरःस्थे क्षुद्रकेशे अलके अमरः। [ख्याते कर्करे हारा०।

चूर्णखण्ड न० चूर्णस्य तदर्थं खण्डम्। (काँकरचुटिङ्)

चूर्णपारद पु० चूर्णं पारदस्य एकदेशिस०। पारदहेतुभूते चूर्णरूपे हिङ्गुले राजनि०। [शाके राजनि०।

चूर्णशाकाङ्क पु० चूर्णं इव शाकः अङ्को यस्य। गौरसुवर्ण-

चूर्णादि न० अप्राणिषष्ठ्यन्तात् परस्य आद्युदात्ततानिमित्ते शब्दगणे स च पा० ग० सू० उक्तो यथा "चूर्ण करिव करिप शाकिन शाकट द्राक्षा तूस्त कुन्दम दलप चमसी चक्कन चौल। "चूर्णादीनामप्राणिषष्ठ्याः" पा०। सक्तुचूर्णम्।

चूर्णि(र्णी) स्त्री अशेषविदुषां तर्कं चूर्णयति चूर्ण-इन्। पतञ्जलिकृते महाभाष्ये "चूर्णिभागुरिवामटाः" व्या० का०। २कपर्दकशते हि० को०। ३कार्षापणे पुराणपरिमितकपर्दके"अशीत्युत्तरपरिमितधेनुशतं देयं तदशक्तौ चत्वारिंशत्पुराणोत्तरचूर्णीशतपञ्चकम्" प्रा० वि०। भावे इन्। ४चूर्णने स्त्री वा ङीप्।

चूर्णिदासी स्त्री चूर्णौ चूर्णने नियुक्ता दासी शा० त०। पेषणनियुक्तायां दास्यां शब्दार्थचि०।

चूर्णिका स्त्री चूर्णस्चूर्णनमस्त्यस्याः ठन्। सक्तुषु शब्दार्थचि०

चूर्णिकृत् पु० चूर्णिं महाभाष्यं करोति कृ-क्विप्। महाभाष्यकारके पतञ्जलिमुनौ। [हि० को०।

चूर्णिन् त्रि० चूर्णैः संसृष्टः इनि। चूर्णसंसृष्टे अपूपादौ

चूर्त्ति स्त्री चर-भावे क्तिन् अत उत्त्वम्। चरणे

चूल पु० चुल-क पृषो० दीर्घः। केशे अमरः। "मुक्तकेशाश्च चूलिनः" लिङ्गपु०। "शिखिनं चूलिनञ्चैव तप्तकुण्डलभूषणम्" हरिवं०४५अ०। "गृहीतचूलको विप्रोऽम्बष्ठकेन रजकादिना" मत्स्यसू०।

चूला स्त्री चूडा+डस्य लः। गृहोपरिस्थिते चन्द्रशालायां (चिलेघर) शब्दार्थचि०२चूडायाञ्च। तस्या इदम् अण्। चौल चूडासम्बन्धिनि संस्कारभेदे चूडाशब्दे दृश्यम्।

चूलिक न० घृतभ्रष्टसमितायाम् (लुचि) शब्दार्थ०।

चूलिका स्त्री चुल-समुच्छ्राये ण्वुल् पृषो० दीर्घः। १हस्तिकर्णमूले, २नाटकाङ्गभेदे च "अर्थोपक्षेपकाः पञ्च विष्कम्भकप्रवेशकौ। चूलिकाङ्कावतारोऽथ स्यादङ्कमुखमित्यपि" सा० द०। अर्थोपक्षेपकलक्षणे नाटकाङ्गानि विभज्य "अन्तर्जवनिकासंस्थैः सूचनाऽर्थस्य चूलिका" इति लक्षितम्। यथा वीरचरिते चतुर्थाङ्कस्यादौ "भो भो वैमानिकाः प्रवर्त्तन्तां रङ्गमङ्गलानीत्यादि" रामेण परशुरामोजितः इति नेपथ्ये पात्रैः सूचितम्। "अंगुलताजालजटिलचूलिकानाम्" काद०।

चूष पाने (चोषा) भ्वा० पर० सक० सेट्। चूषति। अचूषीत्। चुचूष। चूषणम्

चूषा स्त्री चूष्यते पीयते पृष्ठमांसेनाऽऽश्लिष्यतां नीयते चूष-घञर्थे क। १हस्तिमध्यबन्धनरज्ज्वाम् कक्षायाम् अमरः भावे अङ्। २चूषणे स्त्री

चूष्य त्रि० चूष-कर्मणि ण्यत्। जिह्वौष्ठाभ्यां संयोगभेदेन पेये आहारशब्दे चर्व्यशब्दे च दृश्यम्। "प्राणिभिर्भक्ष्यभोज्यलेह्यपेयचूष्याभ्यवहार्याणाम्" भा० व० १९१अ०।

चृत हिंसे ग्रन्थने च तुदा० सक० सेट्। चृतति अचर्तीत् चचर्त। चर्तिष्यति चर्त्स्यति।

चृत(प) संदीपने वा चु० उभ० पक्षे भ्वा० पर० सक० सेट्। चर्त्त(र्प)यति-ते। अचीचृत(प)त्-त अचचर्त्त(र्प)त्-त। पक्षे चर्त्त(र्प)ति अचर्त्तीं(र्पी)त्।

चेकित त्रि० कित-यङ्लुकि अच्। १अतिशयवासज्ञानाभ्यां युक्ते। २ऋषिभेदे पु० तस्य गोत्रापत्यं गर्गा० यञ्। चैकित्य तद्गोत्रापत्ये पुंस्त्री०।

चेकितान त्रि० कित-यङ्लुकि ताच्छील्ये चानश्। १अत्यन्तज्ञानयुक्ते २महादेवे पु० "वृद्धमीशानवृषभं जिह्वं शम्भुं कपर्द्दिनम्। चेकितानं परं योनिं तिष्ठतो गच्छतश्च हृ" भा० द्रो० २०१अ०। ३नृपभेदे। "धृष्टद्युम्नश्चेकितानः काशीराजश्च वीर्य्यवान्" गीता।

चेट(ड) पु० चिट-परप्रैष्ये अच् वा टस्य डः। १दासे हेमच० स्त्रियाम् उभयत्र ङीप्। २दास्याम्। स्वार्थे क चेटक १दासे अमरः। उपपतिनायके २सम्भानदक्षे रसम०। स्त्रियां चेटि(डि)का। "शृङ्गारस

सहाया विटचेटविदूषकाद्याः स्युः"। "उत्तमाः पीठमर्दाद्याः मध्यौ विटविदूषकौ तथा। शकारचेटाद्या अधमाः परिकीर्त्तिता" सा० द०। "ताम्बूलाक्तं दशनमसकृत् दर्शयन्तीह चेटी" सा० द०।

**चेत्** अव्य० चित—विच्। १यद्यर्थे २पक्षान्तरे, अमरः ३अत्यन्तेच्छेऽपि सन्दिग्धतया कथने च शब्दार्थचि०। "सत्यं चेत् गुरुवाक्यमेव पितरो देवाश्च चेत् योगिनी प्रीता चेत् परदेवता च यदि चेत् वेदाः प्रमाणं हि चेत्। शाक्तीयं यदि दर्शनं भवति चेदाज्ञाप्यमोघास्ति चेत् स्वातन्त्र्या अपि कौलिकाश्च यदि चेत् स्यान्मे जयः सर्वदा" तन्त्रम्। "चेत्कण्ठके पक्षफरे तु यहाः समस्ता" नील० वा०। अधिकं (चेद्) शब्दे दृश्यम्

**चेतकी** स्त्री चेतयति उन्मीलयति बुद्धिबलेन्द्रियाणि चित—णिच् ण्वुल् गौरा० ङीष्। १हरीतक्याम् अमरः। तस्या उत्पत्तिभेदादिकं भावप्र० उक्तं यथा "पपात विन्दुर्मेदिन्यां शक्रस्य पिबतोऽमृतम्। ततो दिव्या समुत्पन्ना सप्तजातिर्हरीतकी। हरीतक्यभया पथ्या कायस्था पूतनाऽमृता। हैमवत्यव्यथा चापि चेतकी श्रेयसी शिवा। वयस्था विजया चापि जीवन्ती रोहिणीति च। विजया रोहिणी चैव पूतना चामृताऽभया। जीवन्ती चेति पथ्याया विज्ञेयाः सप्त जातयः। अलाबुवृत्ता विजया १वृत्ता सा रोहिणी २स्मृता। ३पूतनाऽस्थिमती सूक्ष्मा कथिता मांसलाऽमृता४। पञ्चरेखाऽभया५ प्रोक्ता जीवन्ती स्वर्णवर्णिनी६। त्रिरेखा चेतकी७ ज्ञेया सप्तानामियमाकृतिः। विजया सर्वरोगेषु रोहिणी व्रणरोहिणी। प्रलेपे पूतना योज्या शोधनार्थेऽमृता हिता। अक्षिरोगेऽभया शस्ता जीवन्ती सर्वरोगहृत्। चूर्णार्थे चेतकी शस्ता यथायोगं प्रयोजयेत्। चेतकी द्विविधा प्रोक्ता श्वेता कृष्णा च वर्णतः। षड़ङ्गुलायता शुक्ला, कृष्णा त्वेकाङ्गुला स्मृता। काचिदास्वादमात्रेण काचिद् गन्धेन भेदयेत्। काचित् स्पर्शेन दृष्ट्यान्या चतुर्द्धा भेदयेच्छिवा। चेतकी पादपच्छायामुपसर्पन्ति ये नराः। भिद्यन्ते तत्क्षणादेव पशुपक्षिमृगादयः। चेतकी तु धृता हस्ते यावत्तिष्ठति देहिनः। तावद्भिद्येत रोगैस्तु प्रभावान्नात्र संशयः। न धार्य्यं सुकुमाराणां कृशानां भेषजद्विषाम्। चेतकी परमा शस्ता हिता सुखविरेचनी। सप्तानामपि जातीनां प्रधानं विजया स्मृता। सुखप्रयोगा सुलभा सर्वरोगेषु शस्यते। हरीतकी पञ्चरसा लवणा तु वरा परम्। रूक्षोष्णा दीपनी मेध्या स्वादुपाका रसायनी। चक्षुष्या लघुरायुष्या वृंहणी चानुलोमिनी। श्वासकासप्रमेहार्शःकुष्ठशोथोदरकृमीन्। वैस्वर्य्यग्रहणीरोगविबन्धविषमज्वरान्। गुल्माध्मानतृषाच्छर्दिहिक्काकण्डूहृदामयान्। कामलां शूलमानाहं प्लीहानञ्च यकृत्तथा। अश्मरीं मूत्रकृच्छ्रञ्च मूत्राघातञ्च नाशयेत्। स्वादुतिक्तकषायत्वात्पित्तहृत्कफहृत् तु सा। कटुतिक्तकषायत्वादम्लत्वाद्वातहृच्छिवा। पित्तकृत्कटुकाम्लत्वाद्वातकृत्र कथं शिवा। प्रभावाद्दोषहन्तृत्वं सिद्धं यत्तत् प्रकाश्यते! हेतुभिः शिष्यबोधार्थं न पूर्वं क्रियतेऽधुना। कर्म्मान्यत्वं गुणैः साम्यं दृष्टमाश्रयभेदतः। यतस्ततो नेति चिन्त्यं धात्रीलकुचयोर्यथा। पथ्याया मज्जनि स्वादुः स्नाय्वाम्लो व्यवस्थितः। वृन्ते तिक्तस्त्वचि कटुरस्थनि स्तुवरो रसः। नवा स्निग्धा घनावृत्ता गुर्वी क्षिप्ता च याम्भसि। निमज्जेत् सा प्रशस्ता च कथितातिगुणप्रदा। नवादि गुणयुक्तत्वं तथैकत्र द्विकर्षता। हरीतक्याः फले यत्र द्वयं तच्छ्रेष्ठमुच्यते। चर्विता वर्द्धयत्यग्निं पेषिता मलशोधिनी। स्विन्ना संग्राहिणी पथ्या भृष्टा प्रोक्ता त्रिदोषनुत्। उन्मीलिनी बुद्धिबलेन्द्रियाणां निर्मूलिनी पित्तकफानिलानाम्। विस्रंसिनी मूत्रशकृन्मलानां हरीतकी स्यात् सह भोजनेन। अन्नपानकृतान् दोषान् वातपित्तकफोद्भवान्। हरीतकी हरत्याशु भुक्तस्य परियोजिता। लवणेन कफं हन्ति पित्तं हन्ति सशर्करा। घृतेन वातजान् रोगान् सर्वरोगान् गुडान्विता। सिन्धूत्थशर्करासुण्ठीकणामधुगुडैः क्रमात्। वर्षादिष्वभया प्राश्या रसायनगुणैषिणा। अध्वातिखिन्नो बलवर्जितश्च रूक्षः कृशो लङ्घनकर्षितश्च। पित्ताधिको गर्भवती च नारी विमुक्तरक्तस्त्वभयां न खादेत्"। तस्याः फलम् अण् हरीतक्या० तस्य लुप् लुपि व्यक्तिवचनत्वम्। २तत्फलेऽपि स्त्री। ३जातिपुष्पे राजनि०।

**चेतन** पु० चित—ल्यु। १आत्मनि जीवे २परमेश्वरे हेमच०। ३मनुष्ये राजनि०। ४प्राणिमात्रे अमरः। ५प्राणयुक्ते त्रि० मेदि०। "उन्मादस्थापरिच्छेदश्चेतनाचेतनेषु" च सा० द०। "चेतनं पुष्करं कोशैः क्षुधाध्मातैः समन्ततः" हरिवं० ६७अ०। तस्य भावः ष्यञ् चैतन्य न०। त्व चेतनत्व न० तल् चेतनता स्त्री चेतनायाम् "शरीरस्य न चैतन्यम्" भाषा० "चैतन्यमात्मनोविद्यात्" श्रुतिः।

**चेतनकी** पु० चेतनं करोति कृ-ड गौ० ङीष्। हरीतक्याम् राजनि० ।

**चेतना** स्त्री चु० चित-युच्। १बुद्धौ २ज्ञाने ३चैतन्ये चिति स्वरूपज्ञानव्यञ्जिकायां प्रमाणामाधारणकारणिकायां ४चित्तवृत्तौ "चेतनानामधिष्ठानं मनोदेहश्च सेन्द्रियः। केशलोमनखाग्रान्नमलद्रव्यगुणैर्विना" शब्दार्थचि० धृत-वाक्ये केशादिव्यतिरिक्तस्यैव देहस्य चेतनाव्यञ्जकत्व-मुक्तम्। गर्भस्यस्य सप्तमे मासि चैतन्ययोगः यथाह याज्ञ० "मनश्चैतन्ययुक्तोऽसौ नाडीस्नायुसिरायुतः। सप्तमे, चाष्टमे चैव त्वङ्मांसस्मृतिमानपि" असौ पूर्व्वोक्तो गर्भः सप्तमे मासि मनसा चेतनया च युक्तः" मिता०। "निमेषश्चेतना यत्न आदानं पाञ्चभौतिकम्" याज्ञ० "षष्ठस्तु चेतनाधातुर्मन इत्यभिधीयते" भा० व० २०६ अ०। [जनि०। २ज्ञेये त्रि०।

**चेतनीया** स्त्री चेतनायै हिता छ। १ऋद्धिनामौषधे रा-

**चेतस्** न० चित-करणे असुन्। १चित्ते अमरः "चेतो नलं कामयते मदीयम्" "चेतोजन्मशरप्रसूनमधुभि-र्व्यामिश्रतामाश्रयत्" नैष० "गच्छति पुरः शरीरं धावति पश्चादसंस्थितं चेतः" शकु०। २चित्तवृत्तौ निघ०। चित्तवृत्तेः सांख्यमते पौरुषेयबोधकरणत्वात् तथात्वम्। ३कर्त्तरि असुन्। ३ज्ञातरि त्रि०। भावेऽसुन्। ४चैतन्ये ५प्रज्ञायाम् न०।

**चेतिष्ठ** त्रि० अतिशयेन चेतयिता इष्टन् तृणोलोपे तचि-मित्तकेटो निवृत्तिः णिलोपश्च। अतिशयचेतयितरि "क्रत्वा चेतिष्ठो विशामुषर्भुत्" ऋ० १।६५।५। "चे-तिष्ठोऽतिशयेन चेतयिता" भा०। "वसुश्चेतिष्ठो वसुधा-तमश्च" यजु० २७।१५।

**चेतोंऽशु** पु० चेतसश्चैतन्यस्यांशुरिव जीवे रवेरिव चिदात्म-कस्य पुरुषस्य चेतोरूपा जलार्कसमाः प्राज्ञतैजस-विश्वभेदेन देवतिर्य्यगादिदेहभेदेषु विभाव्यमाना इति वेदान्तप्रकरणोक्तेस्तस्य तथात्वम्

**चेतोजन्मन्** पु० चेतसि जन्मास्य। मनोभवे कन्दर्पे "चेतो-जन्मशरप्रसूनमधुभिर्व्यामिश्रतामाश्रयत्" नैष०। चेतो-भवादयोऽप्यत्र।

**चेतोमत्** त्रि० चेतस्+अस्त्यर्थे मतुप् बा० न मस्य वः। १चेतोयुक्ते २चैतन्ययुक्ते। "चेतोमन्ति च सामानि धनुर्वेदश्च भारत!" भा० व०।

**चेतोमुख** पु० चेतोमुखं द्वारं यस्य। चैतन्यदीप्तेऽज्ञानवृत्ति प्रधाने प्राज्ञे" "आनन्दभुक् चेतोमुखः प्राज्ञः" इति श्रुतिः। चेतसो मुखत्वञ्च चेतःकारणाज्ञानवृत्ति-मुखत्वात्।

**चेत्तृ** त्रि० चित-अन्तर्भूतण्यर्थे ताच्छील्ये तृन् वेदे नि० इड्भावः। ज्ञापयितरि। "स चेत्ता देवता पदम्" ऋ० १।२२।५।"चेत्ता ज्ञापयिता" भा० प्रक्रिया उक्तरूपैव

**चेत्य** त्रि० चित-कर्म्मणि ण्यत्। ज्ञेये। "तं त्राता चरणे चेत्यः" ऋ० ६।११५। "चेत्येन हृदयं चैत्तः क्षेत्रज्ञः प्राविशद् यदा" भाग० ३।२६।५अ०।

**चेदि** पु० देशभेदे सोऽभिजनोऽस्य अण्, तद्राजाणश्च बहुत्वे लुक्। २तद्देशवासिषु ३तन्नृपेषु च ब० व०। "चेदि-मत्स्यकरूषाश्च भोजाः सिन्धुकुलिन्दकाः" भा० भी० ९अ० जनपदोक्तौ। स च देशः शुक्तिमतीनदीतीरस्थः उपरिचरशब्दे ११२०पृ०। दृश्यम्। चेदि+स्वार्थे क। चेदिदेशे वृ० स० १४अ० कूर्म्मविभागे अथ पूर्व्वस्या-मित्युपक्रमे "शौलिकविदर्भवत्साव्ध्र चेदिकाश्चोर्द्ध-कण्ठाश्च"।

**चेदिपति** पु० ६त०। १उपरिचरनामके वसुभेदे उपरि-चरशब्दे ११२१पृ० दृश्यम्। २दमघोषसुते शिशुपाले च। "एवं तेषु निवृत्तेषु क्षत्रियेषु समन्ततः। चेदी-नामधिपोऽधावत् बलवानन्तकोपमः। दमघोषसुतो वीरः शिशुपालो महीपतिः" भा० आ० १८७अ०। चेदि-पादयोऽप्यत्र "वसुपूर्णां च वसुधां वस चेदिषु चेदिप!" भा० आ० १०६अ०।

**चेदिराज्** पु० चेदिषु राजते राज-क्विप्। चेदिपतौ १उपरिचरवसौ २शिशुपाले च त्रिका०। "मा वेदि यदसावेको जेतव्यश्चेदिराडिति" माघः।

**चेदिराज** पु० चेदीनां राजा टच् समा०। उपरिचराख्ये वसौ। तस्य भूमिविवरगतिकथादि भा० शा० ३३९अ०। "अजेन यष्टव्यमिति प्राहुर्देवा द्विजोत्तमान्। स च छागोऽप्यजो ज्ञेयो नान्यः पशुरिति स्थितिः। ऋषय ऊचुः। वीजैर्यज्ञेषु यष्टव्यमिति वै वैदिकी श्रुतिः। अजसंज्ञानि वीजानि छागं नो हन्तुमर्हथ। नैष धर्मः सतां देवा! यत्र बध्येत वै पशुः। इदं कृतयुगं श्रेष्ठं कथं वध्येत वै पशुः। भीष्म उवाच। तेषां संवदतामेव-मृषीणाम् विबुधैः सह। मार्गागतो नृपश्रेष्ठस्तं देशं प्राप्तवान् वसुः। अन्तरीक्षचरः श्रीमान् समग्रबल-वाहनः। तं दृष्ट्वा सहसा यान्तं वसुं ते त्वन्तरीक्षगम्।

ऊचुर्द्विजातयो देवानेष च्छेत्स्यति संशयम् । यज्वा दानपतिः श्रेष्ठः सर्व्वभूतहितप्रियः । कथं स्विदन्यथा ब्रूयादेष वाक्यं महान् वसुः । एवं ते संविदं कृत्वा विबुधा ऋषयस्तथा । अपृच्छन् सहसाभ्येत्य वसुं राजानमन्तिकात् । भो राजन् ! केन यष्टव्यमजेनाहोस्विदौषधैः । एतं न संशयं छिन्द्धि प्रमाणं नो भवान्मतः । स तान् कृताञ्जलिर्भूत्वा परिपप्रच्छ वै वसुः । कस्य वैकोमतः कामो ब्रूत सत्यं द्विजोत्तमाः ! । ऋषय ऊचुः । धान्यैर्यष्टव्यमित्येव पक्षोऽस्माकं नराधिप ! । देवानान्तु पशुः पक्षो मतो राजन् ! वदस्व नः । भीष्म उवाच । देवानान्तु मतं ज्ञात्वा वसुना पक्षसंश्रयात् । छागेनाजेन यष्टव्यमेवमुक्तं वचस्तदा । कुपितास्ते ततः सर्व्वे मुनयः सूर्य्यवर्च्चसः । ऊचुर्वसुं विमानस्थं देवपक्षार्थवादिनम् । सुरपक्षो गृहीतस्ते यस्मात्तस्माद्दिवः पत । अद्य प्रभृति ते राजन्नाकाशे विहता गतिः । अस्मच्छापाभिघातेन महीं भित्त्वा प्रवेक्ष्यसि । ततस्तस्मिन्मुहूर्त्तेऽथ राजोपरिचरस्तदा । अधो वै सम्बभूवाशु भूमेर्विवरगो नृपः । स्मृतिस्त्वेनं न विजहौ तदा नारायणाज्ञया । देवास्तु सहिताः सर्व्वे वसोः शापविमोक्षणे । चिन्तयामासुरव्यग्राः सुकृतं हि नृपस्य तत् । अनेनास्मत्कृते राज्ञा शापः प्राप्तो महात्मना । अस्य प्रतिप्रियं कार्य्यं सहितैर्नो दिवौकसाम् । इति बुद्ध्या व्यवस्याशु गत्वा निश्चयमीश्वराः । ऊचुः संहृष्टमनसो राजोपरिचरन्तदा । ब्रह्मण्यदेवभक्तस्त्वं सुरासुरगुरुर्हरिः । कामं स तव तुष्टात्मा कुर्य्याच्छापविमोक्षणम् । मानना तु द्विजातीनां कर्त्तव्या वै महात्मनाम् । अवश्यं तपसा तेषां फलितव्यं नृपोत्तम ! । यतस्त्वं सहसा भ्रष्ट आकाशान्मेदिनीतलम् । एकन्त्वनुग्रहं तुभ्यं दद्मो वै नृपसत्तम ! । यावत्त्वं शापदोषेण कालमासिष्यसेऽनघ ! । भूमेर्विवरगो भूत्वा तावत्त्वं कालमाप्स्यसि । यज्ञेषु सुहुतं विप्रैर्वसोर्धारां समाहितैः । प्राप्स्यसेऽस्मदनुध्यानान्मा च त्वां ग्लानिरस्पृशत् । न क्षुत्पिपासे राजेन्द्र ! भूमेश्छिद्रे भविष्यतः । वसोर्धाराभिपीतत्वात्तेजसाप्यायितेन च । स देवोऽस्मद्वरात् प्रीतो ब्रह्मलोकं हि नेष्यति" ।

**चेमी(वी)** स्त्री रागिणीभेदे हला० ।

**चेय** त्रि० चि—कर्म्मणि यत् । १चेतव्ये चयनीये २आधानाङ्गसंस्कारसंस्कार्य्ये वह्नौ च "अग्निश्चेयो बहुभिश्चापि यज्ञैः" भा०शा०२९२अ० । ३चेतुं योग्ये । हस्तचेयम् अङ्कुशचेयं पुष्पम् । [भगं वसुत्तये" ऋ० ८।६१।७।

**चेरु** पु० चि—बा० रु । चयनशीले "त्वं ह्येहि चेरवे विदा

**चेल** लौल्ये अक०गतौ सक०भ्वा०प०सेट् । चेलति अचेलीत् चिचेल ऋदित् अचिचेलत् त ।

**चेल** न० चिल-आच्छादने कर्म्मणि घञ् । १वस्त्रे । चेल-लौल्ये अच् । २अधमे त्रि० अमरः । "चेलचर्म्माविपालस्तु त्रिरात्रं स्यादभोजनम्" मनुना तस्य हरणे त्रिरात्रोपवासो विहितः "मा ज्ञातिचेलं भुवि कश्चिद्भूः" भट्टिः ज्ञातिचेलमित्यत्र "कुत्सितानि कुत्सनैः" पा० समासे परनिपातः । "चेलखेटकटुकाण्डं गर्हायाम्" पा० निन्दायां चेलादीनाम् आद्युदात्तता । पुत्रश्चेलमिव चेलसादृश्येन पुत्रस्य निन्दा गम्यते सि०कौ० "घरूपचेलड्ब्रुवेत्यादि पा० चेलडादीनि वृत्तिविषये कुत्सनवाचीनि" सि० कौ० तेषु परेषु ङ्यन्तस्य ह्रस्वः पचादिषु टित्करणसामर्थ्यात् ङीप् "ब्राह्मणिचेली" सि० कौ० । "चेले क्नोपेः" पा० अस्मिन् उपपदे क्नोपेर्णमुल् चेलक्नोपम् ।

**चेलगङ्गा** स्त्री चेलमिव गङ्गा । गोकर्णसमीपस्थे नदीभेदे । "गोकर्णस्योपरिष्टात्तु भ्रंशितः स महासुरः । पपात चेलगङ्गायाः पुलिने सह कन्यया" हरिवं० १४९अ० । "गङ्गा सरस्वती चैव चेलगङ्गा च निम्नगा" १२६अ० ।

**चेलान** पु०चेल—बा० आनच् । फलप्रधाने लताभेदे (फेलन) रत्नमा० ।

**चेलाल** पु० चेलमिवालति अल—अच् । लतापनसे त्रिका० ।

**चे(चै)लाशक** पु० चेलं तत्स्थयूकामश्नाति अश—ण्वुल् । प्रेतभेदे । "चे(चै)लाशकस्तु भवति शूद्रो धर्म्मात् स्वकात् च्युतः" मनुः । "चेलः कीटभेदस्तद्भक्षकः प्रेतो भवति" गोविन्दराजः । "चेलसम्बन्धिनी यूका चेलकस्तद्भक्षकः" इति कुल्लूकभट्टः ।

**चेलिका** स्त्री चेल—ण्वुल् । पट्टवसने (चेलिर कापड़) "सेयं कृष्णस्य वनिता पीतशाटीपरिच्छदा । रक्तचेलिकया छन्ना शातकुम्भनिभच्छवी" पद्मपु० ।

**चेलुक** पु० चेल—उक । बुद्धभिक्षुशिष्ये त्रिका० ।

**चेल्ल** चालने गतौ च भ्वा० पर० सक० सेट् । चेल्लति अचेल्लीत् चिचेल्ल ऋदित् अचिचेल्लत् त ।

**चेष्ट** ईहायां भ्वा० आ० सक० सेट् । चेष्टते अचेष्टिष्ट । चिचेष्टे । अचचेष्टत् अचिचेष्टत् न । चेष्टितः चेष्टा चेष्ट-

मानः। "गङ्गायां हि न शक्नोमि दृढ्त्वाच्चेष्टितुं चिरम्" मत्स्यपु०। "अतत्वरच्च तान् योद्धुमपि चेष्टत्व राघवौ" भट्टिः "रूढचेष्टितभूमिषु" रघुः। "आस्ते शेते चेष्टतेऽश्नातिश्नुति परित्रायति" भाग० ५।२६। "यदा स देवो जागर्त्ति तदेदं चेष्टते जगत्" मनुः। "चेष्टनस्पर्शनेऽनिलम्" मनुः। "तच्चैव विहितं यन्त्रं तथा चेष्टयितुर्वशे" भा० शा० ३३अ०।

**चेष्टक** त्रि० चेष्ट–ण्वुल्। १चेष्टान्विते। २रतिबन्धभेदे पु०। "पादमेकं हृदि न्यस्य द्वितीयेनैव चेष्टयेत्। कान्तक्रोडे स्थिता नारी बन्धोऽयं चेष्टकोमतः" स्मरदीपिका।

**चेष्टा** स्त्री चेष्ट-अङ्। "आत्मजन्या भवेदिच्छा इच्छाजन्या भवेत् कृतिः। कृतिजन्या भवेच्चेष्टा चेष्टाजन्या भवेत्क्रिया" इत्युक्ते कृतिजन्ये क्रियासाधने कायिके व्यापारे। "चेष्टावदन्त्यावयवित्वं शरीरत्वम्" सि०मु०। "बाह्यैर्विभावयेल्लिङ्गैर्भावैरन्तर्गतं नृणाम्। स्वरवर्णेङ्गिताकारैश्चक्षुषा चेष्टितेन च। आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च। नेत्रवक्त्रविकारैश्च लक्ष्यतेऽन्तर्गतं मनः" मनुः "चेष्टा हस्तास्फालनादि" कुल्लू०। "चेष्टाभोजन वाग्रोधे नेत्रादिप्रतिभेदने" याज्ञ०। "वायोस्तु स्पर्शनं चेष्टां व्यूहनं रौक्ष्यमेव च" याज्ञवल्क्येन तस्य वायुकार्यत्वमुक्तम्।

**चेष्टानाश** पु० चेष्टाया नाशोऽत्र। प्रलयकाले राजनि०।

**चेष्टाबल** न० ज्योतिषोक्ते ग्रहाणां बलभेदे तच्च वृहज्जा० उक्तं यथा

"उदगयने रविशीतमयूखौ वक्रसमागमगाः परिशेषाः। विपुलकरा युधि चोत्तरसंस्थाश्चेष्टितवीर्ययुताः परिकल्प्याः" बृ० जा०।

"अधुना चेष्टाबलं दोधकेनाह उदगयने इति मकरादि राशिषट्कमुत्तरमयनं कर्कटादिषट्कं दक्षिणमयनमिति। उदगयने उत्तरायणे रविशीतमयूखौ सूर्यचन्द्रमसौ बलिनौ भवतः। परिशेषाः भौमबुधगुरुसितसौराः वक्रगाः विपरीतगतयो बलिनो भवन्ति तथा समागमगाश्चन्द्रेण सहिताः बलिन एव चन्द्रेण संयोगोग्रहाणां समागमशब्दवाच्यः रविणा सहास्तमयो भौमादीनां परस्परं युद्धम्। उक्तञ्चाचार्यविष्णुचन्द्रेण "दिवसकरेणास्तमयः समागमः शीतरश्मिसहितानाम्। कुसुतादीनां युद्धम् निगद्यतेऽन्योन्ययुक्तानामिति" विपुलकराइति विपुलाः करा येषां ते विपुलकराः विस्तीर्णरश्मयो बलिनो भवन्ति शीघ्रकेन्द्रे द्वितीयतृतीयपदस्थे ग्रहस्य विपुलकरत्वं प्रायः संभवति वक्रासन्नत्वात् युधि संग्रामे चोत्तरसंस्था बलिन एव। कुसुतादीनां युद्धमित्युक्तम् तत्र यः उत्तरदिग्भाग संस्थितो जयी स च बलवान् उत्तरसंस्थत्वमत्रोपलक्षणार्थम्। यस्तेजस्वी स एव बलवान्। तत्रैतज्जय लक्षणम् "दक्षिणदिक्स्थः परुषोवेपथुरप्राप्य संनिवृत्तोऽणुः। अधिरूढोविकृतोनिःप्रभो विवर्णश्च यः स जितः। उक्तविपरीतलक्षणसम्पन्नो जयगतो विनिर्दिष्टः। विपुलः स्निग्धोद्युतिमान् दक्षिणदिक्स्थोऽपि जययुक्तः" इति एतच्चोक्तस्य प्रायः सम्भवति यस्मात्पुलिशाचार्यः "सर्वे जयिन उदक्स्था दक्षिणदिक्स्थो जयी शुक्रः" इति एतच्चेष्टाबलम्। एषामन्यतमेन संयुक्तश्चेष्टाबलसंयुक्तो भवति" भट्टोत्पलः।

**चेष्टित** त्रि० चेष्ट–कर्त्तरि क्त। १चेष्टायुक्ते। भावे क्त २गतौ ३कायादिव्यापारे च न० मेदि० चेष्टाशब्दे उदा०।

**चैकितय** पुंस्त्री चेकितस्य गोत्रापत्यम्। गर्गा० यञ्। चैकितयैर्गोत्रापत्ये तस्य छात्त्रः कण्वा० अण् यलोपः। चैकित तच्छात्त्रे।

**चैकित्सितय** पुंस्त्री चिकित्सितर्षेरपत्यम् गर्गा० यञ्। चिकित्सितर्षेरपत्ये ततः कण्वा० छात्त्रे अण्। चैकित्सित। तच्छात्त्रे। [स्त्रियां अणन्तत्वात् ङीप्।

**चैकीर्षित** त्रि० चिकीर्षित एव प्रज्ञा० अण्। चिकीर्षिते

**चैटयत** त्रि० चेट इव यतते यत–अच् ततः स्वार्थे अण्। चेटतुल्ययतगोत्रे तस्यापत्यं तिका० फिञ्। चैटयतायनि तदपत्ये पुंस्त्री। स्त्रियां क्रोड्या० ष्यङ्। चैटयत्या। चैटयतानां विषयः भौरिक्या० विधल्। चैटयतविध तद्विषये न०।

**चैतन्य** न० चेतन एव, चेतनस्य भावो वा ष्यञ्। वेदान्तिमते चित्स्वरूपे १परमात्मनि न्यायादिमते २आत्मधर्मे चेतनायाम्। "चैतन्यमात्मनोविद्यान्न बिभेति कुतश्चन" श्रुतिः वेदान्तिमते राहोः शिर इतिवत् अभेदे षष्ठी, अन्यमते भेदे। "शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः" भाषा० ३प्रकृतौ मेदि०। "प्रकृतिश्च दृष्टान्तानुपरोधात्" शा० सू० चैतन्यस्य जगत्प्रकृतित्वाङ्गीकारेण तथात्वम्। "चैतन्यं परमाणूनां प्रधानस्यापि नेष्यते। ज्ञानक्रिये जगत्कर्त्र्यौ दृश्येते चेतनाश्रये" वेदान्तका०। चेतन एव स्वार्थे ष्यञ्। ४योगर्भजाते

कलौ कृष्णावतारभेदे अनन्तसंहिता। तस्या न प्रामाणिकत्वमिति स्मार्त्तानुयायिनः। वैष्णवास्तु तन्मूलतयैव चैतन्यदेवस्य कृष्णावतारत्वमिच्छन्ति। वयं तु तस्याः प्रामाणिकत्वे संवादिमूलग्रन्थान्तरस्यादर्शनात् उदासीना इत्यतः न किञ्चित् ब्रूमहे। यदि चासौ अवतारः यदि वा न, तथापि तस्य वैष्णवसम्प्रदायगुरुत्वात् पूज्यत्वं मन्यामहे चैतन्यचन्द्रोदयः चैतन्यचरितामृतं चैतन्यभागवतम् इत्यादयो ग्रन्थाः तन्माहात्म्यावेदका वैष्णवसम्प्रदायप्रसिद्धाः सन्ति। [दिक् दृश्यम्।

**चैतन्यभैरवी** स्त्री तन्त्रसारोक्ते भैरवीभेदे तत्र तन्मन्त्रा-

**चैत्त** न० चित्तस्येदम् अण्। चित्तसम्बन्धिनि १स्मरणादौ। “सन्द्रचतुर्मुखशङ्कराच्युतैः क्रमान्नियन्त्रितेन मनोबुद्ध्यहङ्कारचित्ताख्येनान्तरिन्द्रियचतुष्केण क्रमात् संशयनिश्चयाहङ्कार्य्यचैत्तांश्च सर्व्वानेतान् स्थूलविषयाननुभवतः” वेदान्तसा०। २चित्ताभिमानिके क्षेत्रज्ञे “चैत्येन हृदयं चैत्तः क्षेत्रज्ञः प्राविशद्यदा। विराट् तदैव पुरुषः सलिलादुदतिष्ठत” भाग० ।३।२६।५८। बौद्धमते विज्ञानस्कन्धातिरिक्ते ४स्कन्धमात्रे। तैस्तु चित्तं चैत्तमिति द्विविधस्यैव पदार्थस्याङ्गीकारेण विज्ञानातिरिक्तस्य चैत्तत्वात्। बुद्धशब्दे तद्भेदो दृश्यः।

**चैत्य** न० चित्याया इदमण्। १आयतने अमरः। २सुखरहिते सचित्ये अचित्ये वा यज्ञायतने भरतः। ३देवायतनमात्रे ४देवकुले (देउल) च। ५बुद्धे ६बिम्बे ७उद्देश्यवृक्षे मेदि०। ८ग्रामादिप्रसिद्धमहावृक्षे। ९देवावासे १०जिनतरौ पु० मेदि०। “सेतुवल्मीकनिम्नास्थिचैत्याद्यैरुपलक्षिता। चैत्यश्मशानसीमासु पुण्यस्थाने सुरालये” याज्ञ०। “चैत्ये भयं ग्रहकृतम्” वृ० स० ५२अ०। “चैत्यस्थाने स्थितं वृक्षं फलवन्तमिव द्विजाः” भा० अनु० १६६अ०। चैत्ये भवः अण् चैत्यस्थे देवभेदे चैत्यमखभेदे शब्दे दृश्यम्।

**चैत्यक** पु० चैत्य इव कायति कै-क। अश्वत्थवृक्षे त्रिका०। गिरिव्रजपुरवेष्टकपञ्चगिरिमध्ये २पर्वतभेदे “वैहारो विपुलः शैलो वराहो वृषभस्तथा। तथा ऋषिगिरिस्तात! शुभाश्चैत्यकपञ्चमाः। एते पञ्च महाशृङ्गाः पर्वताः शीतलद्रुमाः। रक्षन्तीवाभिसंहत्य संहताङ्गा गिरिव्रजम्”। “मागधानान्तु रुचिरं चैत्यकान्तरमाद्रवान्” “भङ्क्ता भेरीत्रयं तेऽपि चैत्यप्रकारमाद्रवन्”। “मागधानां सुरुचिरं चैत्यकान्तं समाद्रवन्”। “चैत्यकस्य गिरेः शृङ्गं भित्त्वा किमिह छद्मना” भा०स०२०अ०।

**चैत्यगृह** न० चैत्यस्य समीपे गृहम्। चतुष्पथस्थे चैत्यसन्निहिते गृहे शब्दार्थचि०।

**चैत्यतरु** पु० कर्म्म०। ग्रामादौ १प्रसिद्धवृक्षे २अश्वत्थवृक्षे रत्नमाला। चैत्यवृक्षादयोऽप्यत्र। “चैत्यतरौ सा पतिता सत्क्षतपीडां करोत्युल्का” वृ० स० ३३अ०। “चैत्यद्रुम श्मशानेषु” मनुः। [त्रिका०।

**चैत्यमुख** पु० चैत्यस्य देवकुलस्येव मुखमस्य। कमण्डलौ

**चैत्ययज्ञ** पु० आश्व० गृह्योक्ते यज्ञभेदे तस्य विधानादि यथा “चैत्ययज्ञे प्राक् स्विष्टकृतश्चैत्याय बलिं हरेत्” सू०। चैत्ये भवाश्चैत्याः। शङ्करः पशुपतिः आर्य्या ज्येष्ठा इत्येवमादयः। यदि कस्यैचिद्देवतायै प्रतिशृणोति यदि आत्मनोऽभिप्रेतं वस्तु लब्धं ततस्त्वा महमाज्येन स्थालीपाकेन पशुना वा यक्ष्यामीति ततो लब्धे वस्तुनि तस्य तेन यागं कुर्यात् स चैत्ययज्ञः। तत्र स्विष्टकृतः प्राक् चैत्याय बलिं हरेत् नमस्कारान्तेन नामधेयेन पुनश्चैत्यस्य ग्रहणं प्रत्यक्षहरणार्थम्। तेन चैत्यायतने एवोपलेपनादि कुर्य्यात्” ना० वृ०। “यद्यु वै विदेशस्थं पलाशदूतेन यत्र वेच्छा वनस्पते इत्येतयर्चा द्वौ पिण्डौ कृत्वा वीवधेऽभ्याधाय दूताय प्रयच्छेदिमन्तस्मै बलिं हरेति चैनं ब्रूयादयं तुभ्यमिति यो दूताय” सू०। “यदि विदेशस्थं चैत्यं यजेत् तदा पलाशदूतेन बलिं हरेत्। पलाशेन दूतं वीवधञ्च कुर्यात्। यत्र वेच्छेत्यृचा द्वौ पिण्डौ कृत्वा वीवधेऽभ्याधाय दूताय प्रयच्छेत्। तयोरेकं पिण्डं निर्दिश्य दूतं वदति इमं तस्मै बलिं हरेति। अपरं दूताय प्रयच्छति अयं तुभ्यमिति। एतयर्चेति वचनम् अन्यत्र पादग्रहणेऽपि क्वचित् कृत्स्नं भवतीत्येवमर्थम्। तेन ‘आत्वाहार्षमन्तरेधीति ऋषभं मा समानानामिति” च सूक्तं सिद्धम्। अन्ये पुनरभ्यासार्थं मन्यन्ते पिण्डकरणे वीवधाभ्याधाने दूताय प्रदानेइति ना० वृ०। “प्रति भयं चेदन्तरा शस्त्रमपि किञ्चित्” सू०। “कर्त्तुश्चैत्यस्य च मध्ये भयमस्ति चेत् शस्त्रमपि किञ्चित् दद्यात् दूताय” ना० वृ०। “नाव्या चेत् नद्यन्तरा प्लवरूपमपि किञ्चिदनेन तरितव्यमिति” सू०। “उभयोर्मध्ये यदि नावा तार्य्या नदी स्यात् तदा प्लवरूपमपि किञ्चित् दद्यात् अनेनेति मन्त्रेण” ना०वृ०। “धन्वन्तरियज्ञे ब्रह्मणमग्निं चान्तरा पुरो-

द्वितायाग्ने बलिं हरेत्" स्मृ०। "यदि धन्वन्तरि स्त्रैत्यो भवति तदा ब्राह्मणमग्निं चान्तरा पुरोहिता-याग्ने बलिं हरेत् पुरोहिताय नम इति ततो धन्वन्तरये नम इति। धन्वन्तरौ विदेशस्थे तयं विशेषः धन्वन्तरेश्च पुरोहितस्य चैकः पिण्डः द्वितीयो द्रूतस्य"। ना० द्व०।

**चैत्यविहार** पु० चैत्यस्येव विहारोऽत्र। जिनगृहे हेम०।

**चैत्र** न० चि–ष्ट्रन् चित्रमेव स्वार्थे अण् ग। १देवकुले (देउल) स्मृते मेदि० २बुद्धभिक्षुके पु० ३वर्षाचलभेदे पु० त्रिका० कुलपर्व्वतशब्दे २१२१पृ० दर्शिते विष्णु पु०वाक्ये "गोमेदश्चैव चन्द्रश्चेत्यत्र चैत्र इति पाठान्तरदर्शनात् त्रिकाण्डोक्तिः समञ्जसा। चित्रायां भवः अण्। ४बुधस्य कलत्रभेदचित्राया गर्भजे ५बुधपुत्रभेदे पु० ब्रह्मवै० पा० ख०। चित्रानक्षत्रयुक्ता पौर्णमासी अण् ङीप् चैत्री-साऽस्मिन् मासे पुनरण्। चित्रानक्षत्रयुक्तपौर्णमासी युक्ते तदुपलक्षिते वा ६चान्द्रे मासि बार्हस्पत्ये ७वर्षभेदे दृतयाभूते अर्क्कमासे मीनस्थरविके ८सौरचैत्रे च कार्त्तिकशब्दे १९४८पृ० दृश्यम्। चित्रायां भवः अण्। १०चित्रानक्षत्रजाते त्रि० स्त्रियान्तु तस्याणो लुक्। चित्रा चित्राजातायां स्त्रियां स्त्री चित्राशब्दे दृश्यम्। स्वार्थे क तत्रार्थे शब्दरत्ना०। "फाल्गुनं वाथ चैत्रं वा मासं प्रति यथाबलम्" मनुः। "मीनादिस्थो रविर्येषा-मारम्भः प्रथमक्षणे। भवेत् तेऽब्दे चान्द्रमासाश्चैत्राद्या द्वादश स्मृताः" व्यासः "चैत्रे मदोन्मादिनी" उद्वा०त०।

**चैत्ररथ** न० चित्ररथेन गन्धर्वेण निर्वृत्तम् अण्। १कुबेर-स्योद्याने अमरः। "बभौ वल्गुजमाकीर्णं वनं चैत्ररथं यथा" हरिव० २२४अ०। "एकोययौ चैत्ररथप्रदेशान्" रघुः २मुनिभेदे पु० "आविक्षितमभिष्यन्तं तथा चैत्ररथं मुनिम्" भा० आ० ६४अ०। चैत्ररथेः शशविन्दोरपत्यम् स्त्री अण् ङीप्। ३शशविन्दोःसुतायां स्त्री "मान्धातु-र्युवनाश्वस्य त्रिलोकीविजयी सुतः। तस्य चैत्ररथी भार्य्या शशविन्दोःसुताऽभवत्" हरिव०१२अ०। चित्ररथं गन्धर्व-मधिकृत्य कृतोग्रन्थः अण्। ४भारतपर्व्वान्तर्गतेऽवान्तर-पर्वभेदे न० चित्ररथशब्दे दृश्यम्। "तथा चैत्ररथं देव्याः पाञ्चाल्याश्च स्वयंवरम्" भा० आ० १०अ० अवान्तरपर्वोक्तौ।

**चैत्ररथि** पु० चित्ररथस्य उपङ्गु पुत्रस्यापत्यम् अण्। उपङ्गु पुत्र चित्ररथस्यापत्ये शशविन्दौ नृपे "ततः प्रसूतिमिच्छन् वै उपङ्गुःसोऽग्र्यमात्मजम्। जज्ञे चित्ररथस्तस्य पुत्रः कर्मभिरन्वितः। आसीत् चैत्ररथिर्वीरो यज्वा विपुल दक्षिणः। शशविन्दुः परं वृत्तं राजर्षीणां समन्वितः" हरिव० ३७अ०।

**चैत्ररथ्य** न० चैत्ररथमेव स्वार्थे ष्यञ्। चैत्ररथवने "मानसे चैत्ररथ्ये च स रेमे रामया रतः" भाग०२।१२।२८अ०।

**चैत्रमख** पु० चैत्रे कर्त्तव्यो मख इव महोत्सवः। चैत्रमासे मदनत्रयोदश्यादिकर्त्तव्ये वसन्तोत्सवे हेमच०।

**चैत्रायण** पुंस्त्री चित्रस्य गोत्रापत्यम् नडा०फक्। १चित्रस्य गोत्रापत्ये। चित्रेण निर्वृत्तादि पक्षा० फक्। २चित्र-निर्वृत्तादौ त्रि०।

**चैत्रावली** स्त्री चैत्रे आवलिः सम्यक् बलिरत्र ङीप्। चैत्रपौर्णमास्यां त्रिका०। "चैत्रावल्याः परेऽपि या" ति० त०। "चैत्रावली मदनत्रयोदश्यीत्यपरे तस्यामेव मदनपूजाविधानात्तस्यास्तथात्वम्।

**चैत्रिक** पु० चित्रानक्षत्रयुक्ता पौर्णमासी साऽस्मिन् मासे पक्षे ठञ्। चैत्रमासे अमरः।

**चैत्रिन्** पु० चैत्री विद्यतेऽस्मिन् व्रीह्या० इनि। चैत्रमासे राजनि०। तत्र चैत्रिरित्यपि तत्र वा० इञ्।

**चैत्री** स्त्री चित्रानक्षत्रयुक्ता पौर्णमासी अण् ङीप्। चित्रानक्षत्रयुक्तायां पौर्णमास्यां सा हि चैत्रमासे एव भवति योग्यत्वात् कार्त्तिकशब्दे १९४८ पृ० दृश्यम् "चैत्र्यां हि पौर्णमास्यां तु तव दीक्षा भविष्यति" भा० आश्व० ७२अ०। "चैत्र्यां वा मार्गशीर्ष्यां वा सेना-योगः प्रशस्यते" भा० शा० १००अ०।

**चैदिक** पुं त्रि० चेदिदेशे भवः काश्या० ठञ् ञिठ् वा इदित्। चेदिदेशभवे स्त्रियां तु ठञि ङीप् ञिठि–टाप्।

**चैद्य** पु० चेदीनां जनपदानां राजा ष्यञ्। १शिशुपाले। "क्रुद्धस्य चैद्यं प्रति" "त्वया विप्रकृतश्चैद्यः" माघः।

**चैन्तित** पुंस्त्री० चिन्तितायाः तन्नामिकायाः स्त्रिया अपत्यम् "अव्यद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः" पा० अण्। चिन्तितानामिकायाः स्त्रिया अपत्ये। चिन्तायुक्तायाः स्त्रिया अपत्ये तु ढक्। चैन्तितेय इत्येव।

**चैल** त्रि० चेलस्येदम् अण् १वस्त्रसम्बन्धिनि स्वार्थे अण्। २चेले वस्त्रे चे(चै)लाशकशब्दे दृश्यम्। "चैलकम्बल-वेश्मानि विचित्राणि महान्ति च" भा० आ० १२८अ०। "प्रदीप्तमिव चैलान्तं कक्षं देशं न संव्रजेत्" भा० शा० २८९अ०।

**चैलकि** पु० चेलकस्यापत्यम् इञ्। जीवलनामर्षौ "तद-

क्षोवाच जीवलश्चैलकिः” शत० ब्रा० २।३।१।३४। चैलकर्षिस्तु “चैलक उन्मात् शाण्डिल्यायन” इति शत० ब्रा० १०।४।५।२०। शाण्डिल्यगोत्रे उक्तः।

**चैलधाव** त्रि० चैलं वस्त्रं धावति मार्ष्टि धाव–स्वजि अण् उप० स०। वस्त्रक्षालके रजके (धोपा) “चैलधावसुराजीविसहोपपतिवेश्मनाम्” याज्ञ० तदन्नभोजनं निषिद्धम्।

**चोकुटि** पु० गोत्रप्रवरभेदे हेमा० प्रवरा०।

**चोक्ष** पु० १स्वभावसिद्धशुचिषु वनप्रदेशेषु। “अवकाशेषु चोक्षेषु नदीतीरेषु चैव हि” मनुव्या० कुल्लू०। तत्र भवं यत्। चौक्ष्य तत्रभवे उदके “अचौक्ष्यसलिलक्षालितयोनिम्” सुश्रुतः। “शुचौ दक्षे च चोक्षः स्यात्” त्रिका० उक्ते २दक्षे। “ब्रह्मण्यन्तो दयावन्तश्चोक्षाश्चोक्षजनप्रियाः” भा० अनु० १४४अ०।

**चोच** न० चु–बा० च। १वल्कले २चर्म्मणि भरणिः। प्रशस्तं चोचमस्यास्ति अच्। ३त्वक्पत्रे पु० अमरः ४गुड़त्वचि शब्दार्थ०। स्वार्थे क। तत्रार्थे “दद्याच्चात्र पिप्पलीमूलतण्डुलीयकवराङ्गचोचकेत्यादि” सुश्रु०।

**चोड** पु० चुल–समुच्छ्राये अच् लस्य डः। १प्रावरणे २देशभेदे ब० व० मेदि०। चोलशब्दे दृश्यम्।

**चोडी** स्त्री चुल–अच् गौरा०ङीष् लस्य डः। शाट्यां हेमच०।

**चोद** पु० चोदयति चुद–अच्। अश्वादेः प्रेरके १कशादौ। “जघने चोद एषां वि सक्थानि नरो यमुः” ऋ०४।६।१।२। “चोदः प्रेरिका कशा अराग्रकाष्ठविशेषो वा” २प्रेरकमात्रे त्रि० “चोदः कविनुच्यात् जातवेदः” ऋ० १।१४३।७। “चोदः प्रेरकः” भा०।

**चोदक** पु० चुद–ण्वुल्। १प्रवर्त्तके विधिवाक्ये “वर्त्तमानोपदेशाच्चोदनाशब्दात्स्तुत्यर्थाभावान्नैवचेति वचनान्निर्देशात् कर्मचोदकः” कात्या० श्रौ० १।१०।१ “अग्नीदग्नीन्नित्यादिः कर्मचोदकः कर्मविधायकः विधिवाक्यमित्यर्थः न तु मन्त्रः। कुतः वर्त्तमानोपदेशात् एवमादयो वर्त्तमानमर्थमनुष्ठेयत्वेन यत उपदिशन्ति अग्निविहरणं कर्त्तव्यं स्तरणं च कर्त्तव्यमित्येवमुपदिश्यते किं च चोदनाशब्दात् अपि च एषु प्रैषेषु चोदनाशब्दो विधिशब्दोऽस्ति विधौ हि लोट् स्मर्यते। लोट् चेति” पा०। लोटो मध्यमपुरुषवचनानि चैतानि विहर स्तृणीहि आसादयेत्यादीनि तस्मादपि कर्मचोदका एते” कर्कः २प्रेरकमात्रे त्रि०

**चोदन** न० चुद–भावे ल्युट्। १प्रवर्त्तने चोदनाशब्दार्थे। “प्रथमेऽब्दे तृतीये वा कर्त्तव्यं श्रुतिचोदनात्” मनुः। २प्रेरणमात्रे च “कार्य्यकारणसन्देहे भवत्यन्योन्यचोदनात्” भा० अनु० १अ०। कर्त्तरि ल्यु। ३चोदके त्रि०। “अपिप्रयं चोदना वा मिमाना” यजु० २९।७। “चोदना चोदनानि कर्म्माणि” वेददी०।

**चोदना** स्त्री चु० चुद-युच्। “चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः” इति भट्टोक्ते प्रवर्त्तनावाक्ये “चोदनालक्षणोऽर्थो धर्म्मः” इति मीमांसासूत्रम्। २प्रेरणायां, ३प्रवर्त्तनायाञ्च। चोद्यतेऽनया करणे बा० युच् ४प्रवृत्तिहेतौ च “ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्म्मचोदना” गीता। “ज्ञानमिष्टसाधनमिति बोधः, ज्ञेयमिष्टसाधनं कर्म्म। परिज्ञाता एतज्ज्ञानाश्रयः, कर्म्मचोदना कर्म्म चोद्यते प्रवर्त्त्यतेऽनया चोदना ज्ञानादित्रितयं प्रवृत्तिहेतुरित्यर्थः” श्रीधरः। ५अज्ञातार्थज्ञापके शब्दमात्रे—“चोदनाप्रवृत्तिभेदाच्च” “या हि चोदना धर्म्मस्य लक्षणं सा स्वविषये नियुञ्जानैव पुरुषमवबोधयति ब्रह्मचोदना तु पुरुषमवबोधयत्येव केवलम्, अवबोधस्य चोदनाजन्यत्वात् न पुरुषोऽवबोधे नियुज्यते यथाऽक्षसन्निकर्षेणार्थाऽवबोधे तद्वत्” शा० सू० शाङ्करभाष्यम्। “अज्ञातज्ञापकः शब्दः चोदना तस्याः प्रवृत्तिर्बोधकत्वं तद्वैलक्षण्याच्च जिज्ञास्यभेद इत्यर्थः। संग्रहवाक्यं विवृणोति या हीति लक्षणं प्रमाणं “स्वर्गकामो यजेत” इत्यादि वाक्यं हि स्वविषये धर्मे यागादिके स्वर्गभावनारूपे फलहेतुयागादिगोचरनियोगे वा हितसाधने यागादौ वा, पुरुषं प्रवर्त्तयदेवावबोधयति “अहमात्मा ब्रह्म” इत्यादि वाक्यं तु पुरुषं केवलमप्रपञ्चं ब्रह्म बोधयत्येव न प्रवर्त्तयति विषयाभावात् नन्ववबोध एव विषयोऽस्तु तत्राह न पुरुष इति ब्रह्मचोदनया पुरुषोऽवबोधे न प्रवर्त्त्यते इत्यत्र हेतुं पूर्ववाक्येनाह अवबोधस्येति। स्वजन्यज्ञाने स्वयं प्रमाणं न प्रवर्त्तकमित्यत्र दृष्टान्तमाह यथेति मानादेव बोधस्य जातत्वात् जाते च तस्मिन् विध्ययोगात् न वाक्यार्थज्ञाने पुरुषप्रवृत्तिः। तथा च प्रवर्त्तकमानमेयो धर्मः, उदासीनमानमेयं ब्रह्मेति” रत्नप्रभा। लौगाक्षिभास्करेणापि “वेदप्रतिपाद्यप्रयोजनवदर्थो धर्म्मः” इति धर्मलक्षणमुक्त्वा “चोदनालक्षणोऽर्थो धर्म” जै० सूत्रस्थचोदनापदस्य वेदमात्रपरत्वमुररीकृतम्। तल्लक्षणे चार्थपदस्य इष्यमाणपरत्वेन

सिद्धे इच्छाभावात् अश्वत्थः सद्रूत्वेन इष्यमाणत्वाभावात् वेदप्रतिपाद्यत्वेऽपि नातिव्याप्तिरिति बोध्यम्। ५चोदनाविधौ यागादिप्रयत्ने च। "एकं वा संयोग रूपचोदनाऽख्याऽविशेषात्" जै० सू०। "कर्मैक्यप्रतिपादकाः संयोगरूपचोदनासंज्ञारूपाः पदार्थास्तेषामविशेषादैक्यम्। "तत्र चोदना प्रवर्त्तकः शब्दः चोदितप्रयत्नो वा" रत्नप्रभा। [ङः। कन्दु के लिका०।

**चोदनागुड** पु० चोदनया नोदनया गुड्यते गुर-क रस्य

**चोद्य** न० चुद-ण्यत्। १प्रश्ने २पूर्वपक्षे च अमरः ताभ्यां हि उत्तरदानाय प्रवर्त्तनात् तयोस्तथात्वम्। "चोद्यं वा परिहारो वा क्रियतां द्वैतभाषया। अद्वैतभाषया चोद्यं नास्ति नापि तदुत्तरम्" वेदान्तका०। ३आश्चर्ये च "चपलाजनं प्रति न चोद्यमदः" माघः। "चोद्यं चोदनीयम् कथमित्याक्षेप्यम्" मल्लि०। "सत्यं ध्यानं समाधानं चोद्यं वैराग्यमेव च" भा० उ० ४२अ०। ४अद्भुते ५प्रेरणार्हे त्रि०। "नित्योत्थिता गुरुकर्म्मस्वचोद्याः" भा० अनु० १०२अ०।

**चोपन** न० चुप-ल्युट्। १मन्दगमने, २तूष्णीम्भवने, ३मौने च।

**चोर** पु० चुर-अच्। १स्तेयकर्त्तरि परद्रव्यापहारके शब्दर०। २गन्धद्रव्यभेदे, हेमच० ३कृष्णशठाख्ये इडडचन्द्रः। ब्राह्मणा० कर्म्मणि ष्यञ्। चौर्य्यं तत्कर्म्मणि परद्रव्यापहरणे। "सा च द्रव्यशा कृतस्तव धनं द्यूतेन चौर्य्येण वा चौर्य्यद्यूतपरिग्रहोऽपि भवतो नष्टस्य काऽन्या गतिः" उद्भटः। चोरस्य भावः मनोज्ञा०वुञ्। चौरिका चोरभावे स्त्री। ४कविभेदे पु० कविरमरः कविरमरः कवी चोरमयूरौ"उद्भटः। तत्कृतग्रन्थश्च चोरपञ्चाशिका"। तत्र चौर्य्यपदार्थो निर्णीय प्रदर्श्यते। परमात्मस्वत्ववद्द्रव्यहरणमेव चौर्य्यं तेन साधारणधनापहारे न चौर्य्यम्। यथाह दायभागे "य एव हि परस्वेदमिति विशेषं जानानः परस्वे स्वत्वहेतुमन्तरेणैव स्वत्वमारोपयति स स्तेन इति लोकप्रसिद्धोऽर्थः न चात्रेदं परकीयम् इदं वा ममेति विवेक्तुं शक्नोति द्रव्यस्याविभक्तत्वात्। यथा यदेव हि ममेदमिति विशेषं जानानः परस्वत्वापत्तये स्वामी त्यजति, परश्च विशेषेणेदं ममेति स्वत्वं प्रत्येति तत्रैव दाननिष्पत्तिः। न च साधारणधने तथा सम्भवतीति साधारणधनमदेयमुक्तं तथा स्तेयमपि नैतन्मम धनं परस्वेदमिति जानत एव भवतीति न साधारणधनापहारे स्तेयनिष्पत्तिः"। "परद्रव्यहरणं स्तेयमिति परशब्दात् आत्मीयत्वव्यवच्छेदेनैव परकीयत्वस्यावगमात् साधारणासाधारणयोश्चासाधारणस्यैव शीघ्रप्रतीतेः। चोरचौर्य्यभेदलक्षणदण्डभेदादिकं च वीरमित्रोदये दर्शितं यथा।

"मनुः स्यात्साहसं त्वन्वयवत् प्रसभङ्कर्म यत् कृतम्। निरन्वयम्भवेत् स्तेयं हृत्वापह्नूयते च यदिति" अस्यार्थः। अन्वयवद्द्रव्यरक्षकराजाध्यक्षादिसमक्षं बलावष्टम्भेन यत्परधनापहरणादिकं क्रियते तत् साहसम्। स्तेयं पुनर्निरन्वयं स्वाम्याद्यसमक्षं यद्वञ्चयित्वा परधनाद्यपहरणं तदुच्यते। यच्च राजाद्यध्यक्षादिसमक्षमपहृत्य न मयेदं कृतमिति भयान्निह्नूयते तदपि स्तेयमिति। अतएव नारदः "उपायैर्विविधैरेषां छलयित्वाऽपकर्षणम्। सुप्तमत्तप्रमत्तेभ्यः स्तेयमाहुर्मनीषिणः" इति॥ एवमिदं तत् क्षुद्रादिनिर्दिष्टपालस्तान्याह स एव "क्षुद्रकाण्डावकसद्भास्थिदारुचर्मतृणादि यत्। शमीधान्यं कृतान्नञ्च क्षुद्रं द्रव्यमुदाहृतम्। वासः कौशेयवर्ज्जञ्च गोवर्जं पशवस्तथा। हिरण्यवर्ज्जं लोहञ्च मध्यं व्रीहियवादि च। हिरण्यरत्नकौशेयस्त्रीपुङ्गोगजवाजिनः। देवब्राह्मणराज्ञाञ्च विज्ञेयन्द्रव्यमुत्तममिति"। बलात्कारकृतमपहरणं साहसान्तर्गतं स्तेयमित्याह स एव "तस्यैव भेदः स्तेयः स्याद्विशेषस्तत्र तूच्यते। आधिः साहसमाक्रम्य स्तेयमाधिस्छलेन तु" इति। तस्यैव साहसस्यैव। आधिः पीडा धनापहरणादिद्वारा आक्रम्य प्रसह्य परस्य क्रियमाणः क्लेशः साहसरूपं स्तेयम्। छलेन क्रियमाण आधिः केवलस्तेयमित्यर्थः। तस्करज्ञानोपायमाह याज्ञवल्क्यः "ग्राहकैर्गृह्यते चौरो लोप्त्रेणाथ पदेन वा। पूर्वकर्मापराधी च तथा चाशुद्धवासकः। अन्येऽपि शङ्कया ग्राह्या जातिनामादिनिह्नवैः। द्यूतस्त्रीपानसक्ताश्च शुष्कभिन्नमुखस्वराः। परद्रव्यगृहाणाञ्च पृच्छका गूढचारिणः। निराया व्ययवन्तश्च विनष्टद्रव्यविक्रयाः" इति। ग्राहकैराजपुरुषैर्लोप्त्रेणापहृतभाजनादिना, अशुद्धवासः अप्रज्ञातस्थानवासी। जातिनिह्नवो नाहं शूद्रइत्येवंरूपः। नामनिह्नवो नाहं डित्थ इत्येवं रूपः। आदिग्रहणात् स्वदेशग्रामकुलाद्यपलापेन च लक्षिता ग्राह्याः। द्यूतपण्याङ्गनामद्यपानादिष्वतिप्रसक्ताः तथा कुतोऽस्ति त्वमिति चोरग्राहिभिः पृष्टो यदि शुष्कमुखोभिन्नस्वरो

वा भवति। बहुवचनात् खिन्नललाटादीनां ग्रहणम्। तथा ये निष्कारणङ्कियदस्य द्रव्यं किं वास्य गृहमित्येवं पृच्छन्ति ये चाकारणेनात्मानङ्गूहयित्वा चरन्ति। ये चायाभावेऽपि बहुव्ययकारिणः। ये च विनष्टद्रव्याणा-ञ्जीर्णवस्त्रभिन्नभाजनादीनामनिर्ज्ञातस्वामिकानां विक्रयकारिणः, ते सर्वेऽपि चौर्यसम्भावनया ग्राह्या इत्यर्थः। एवंविधलिङ्गयुक्तान् पुरुषान् गृहीत्वैते चौरा भवन्ति नवेति सम्यक् परीक्षेत न तावन्मात्रेण निश्चिनुयात् अचौरस्यापि लिङ्गसम्बन्धसम्भवात्। अतएव नारदः "अन्यहस्तात्परिभ्रष्टमकामादुत्थितम्भुवि। चोरेण वा परिक्षिप्तं लोप्त्रं यत्नात् परीक्षयेत्। असत्याः सत्यसङ्काशाः सत्याश्चासत्यसन्निभाः। दृश्यन्ते विविधा भावास्तस्माद्युक्तं परीक्षणमिति"। स्तेयस्य त्रैविध्यमाह स एव "तदपि त्रिविधं ज्ञेयं द्रव्यापेक्षमनीषिभिः। क्षुद्रमध्योत्तमानां तु द्रव्याणामपकर्षणादिति"। चौरस्य द्वैविध्यमाह वृहस्पतिः "प्रकाशाश्चाप्रकाशाश्च तस्करा द्विविधाः स्मृताः। प्रज्ञासामर्थ्यमायाभिः प्रभिन्नास्ते सहस्रधेति"। प्रकाशतस्करानाह स एव। "नैगमा वैद्यकितवाः सभ्योत्कोचकवञ्चकाः। दैवोत्पादविदो भद्राः शिल्पज्ञाः प्रतिरूपकाः। अक्रियाकारिणश्चैव मध्यस्थाः कूटसाक्षिणः। प्रकाशतस्करा ह्येते तथा कुहकजीविनः" इति प्रतिरूपकाः प्रतिरूपकराः। अतएव नारदः "प्रकाशवञ्चकास्तत्र कूटमानतुलाश्रिताः। उत्कोचकाः सोपधिका वञ्चकाः परयोषितः। प्रतिरूपकराश्चैव मङ्गलादेशवृत्तयः। इत्येवमादयो ज्ञेयाः प्रकाशतस्करा भुवीति"। नैगमादिव्याजेन ये परद्रव्यापहारकास्ते नैगमाद्याः। अप्रकाशतस्करस्वरूपभेदानाह व्यासः "साधनाङ्गान्विता रात्रौ विचरन्त्यविभाविताः। अविज्ञातनिवासाश्च ज्ञेयाः प्रच्छन्नतस्कराः। उत्क्षेपकः सन्धिभेत्ता पान्थमुड्ग्रन्थिभेदकः। स्त्रीपुंसोश्च पशुस्तेयी चौरो नवविधः स्मृतः" इति। रात्राविति प्रायिकम् अरण्यादौ दिवापि सम्भवात्। उत्क्षेपकः धनिनामनवधानतां निश्चित्य तत्समीपस्थं धनमुत्कृत्य ग्राहकः। सन्धिभेत्ता गृहयोः सन्धौ स्थित्वा तत्रत्यभित्तिभेत्ता। पान्थमुट् कान्तारादौ पथिकानामन्नप्रत्यपहारकः। ग्रन्थिभेदकः परिणानीयादिग्रथितं धनं गृहीतुं तद्ग्रन्थिमोचक इति। प्रकाशतस्कराणां दण्डमाह स एव "स्त्रीपुंसौ वञ्चयन्तीह मङ्गलादेशवृत्तयः। गृह्णन्ति छद्मना चार्थं मनार्य्यास्त्वार्यलिङ्गिनः। नैगमाद्या भूरिधना दण्ड्या दोषानुरूपतः। यथा तेन निवर्त्तन्ते तिष्ठन्ति सन्नये तथेति"। दोषानुरूपतो दण्ड्या नतु धनानुरूपत इत्यभिप्रायः। केषाञ्चित् प्रकाशतस्कराणां दण्डमाह वृहस्पतिः "प्रच्छाद्य दोषं व्यामिश्र्य पुनः संस्कृत्य विक्रयी। पण्यं तद्द्विगुणं दाप्यो वणिग् दण्डं च तत्समम्। अज्ञातौषधिमन्त्रस्तु यश्च व्याधेरतत्त्ववित्। रोगिभ्योऽर्थं समादत्ते स दण्ड्यश्चोरवद्भिषक्। कूटाक्षदेविनः क्षुद्रा राजलभ्यहराश्च ये। गणका वञ्चकाश्चैव दण्ड्यास्ते कितवाः स्मृताः। अन्यायवादिनः सभ्यास्तथैवोत्कोचजीविनः। विश्वस्तवञ्चकाश्चैव निर्वास्याः सर्वएव ते। ज्योतिर्ज्ञानन्तथोत्पातमविदित्वा तु ये नृणाम्। श्रावयन्त्यर्थलोभेन विनेयास्ते प्रयत्नतः। दण्डाजिनादिभिर्युक्तमात्मानं दर्शयन्ति ये। हिंसन्ति छद्मना नॄणां वध्यास्ते राजपूरुषैः। अल्पमूल्यञ्च संस्कृत्य नयन्ति बहुमूल्यताम्। स्त्रीबालकान् वञ्चयन्ति दण्ड्यास्तेऽर्थानुसारतः। हेमरत्नप्रवालाद्यान् कृत्रिमान् कुर्वते तु ये। क्रेतुर्मूल्यं प्रदाप्यास्ते राज्ञा तद्द्विगुणं दमम्। मध्यस्थं वञ्चयन्त्येकं स्नेहलोभादिना यदा। साक्षिणश्चान्यथा ब्रूयुर्दाप्यास्ते द्विगुणन्दममिति"। राजलभ्यः करविशेषः। मनुरपि "सर्वकण्टकपापिष्ठं हेमकारन्तु पार्थिवः। प्रवर्त्तमानमन्याये छेदयेल्लवशः क्षुरैरिति।" विष्णुरपि "द्यूते च कूटाक्षदेविनां करच्छेदः" इति। अप्रकाशतस्कराणां दण्डमाह सएव "उत्क्षेपकस्य सन्दंशच्छेदो राजपुरुषैः"। सन्दंशोऽत्र करः तथा च याज्ञवल्क्यः "उत्क्षेपकग्रन्थिभेदौ करसन्दंशहीनकौ। कार्य्यौ द्वितीयापराधे करपादैकहीनकाविति"। अङ्गुष्ठतर्जन्योर्ग्रन्थिमोचने साधकतमत्वेनात्र सन्दंशशब्देन तयोर्ग्रहणम्। प्रथमापराधे तौ क्रमेण पाणिसन्दंशाभाववन्तौ कर्त्तव्यौ, द्वितीयापराधे उभावप्येकपाणिपादाभाववन्तौ कर्त्तव्यावित्यर्थः। सन्धिभेत्तॄणां दण्डमाह मनुः "सन्धिम्भित्त्वा तु ये चौर्य्यं रात्रौ कुर्वन्ति तस्कराः। तेषां छित्त्वा नृपो हस्तौ तीक्ष्णशूले निवेशयेदिति"। तानिति शेषः। वृहस्पतिरपि "सन्धिच्छेदकृतो ज्ञात्वा शूलमाग्राहयेत् प्रभुरिति"। आग्राहयेत् आरोपयेदित्यर्थः। पान्थमुषि दण्डमाह स एव "तथा

पान्थमुषं हत्वं गले बद्धावलम्बयेदिति"। पान्थमुषं पथिलुण्ठकम्। ग्रन्थिभेदकस्य दण्डमाह मनुः "अङ्गुली ग्रन्थिभेदस्य छेदयेत् प्रथमे ग्रहे। द्वितीये हस्तचरणौ तृतीये बधमर्हतीति"। अङ्गुली तर्जन्यङ्गुष्ठौ। द्वितीये हस्तस्य चरणस्य च छेदः तृतीये वध इत्यर्थः। अतएव नारद आह" "प्रथमे ग्रन्थिभेदानामङ्गुष्ठहस्तयोर्बधः" इति। स्त्रीहर्त्तुर्दण्डमाह व्यासः "स्त्रीहर्त्ता लोहशयने दग्धव्यो वै कटाग्निनेति"। पुंहर्त्तुर्दण्डमाह स एव "नरहर्त्तुर्हस्तपादौ छित्त्वा स्थाप्यश्चतुष्पथे" इति। गोहर्त्तुर्दण्डमाह वृहस्पतिः "गोहर्त्तुर्नासिकां छित्त्वा बद्धाम्भसि निमज्जयेदिति"। नारदः "सर्वस्वं हरतो नारीं, कन्यां तु हरतो वधः। वाजिवारणलोहानां चाददीत वृहस्पतिरिति"। सर्वस्वमित्यनुषङ्गः। पशुहर्त्तुर्दण्डमाह व्यासः" "पशुहर्त्तुस्त्वर्द्धपादं तीक्ष्णशस्त्रेण कर्त्तयेदिति"। पशुहर्त्ता पश्वनुसारेण दण्डनीय इत्याह नारदः "महापशून् स्तेनयतो दण्डस्तूत्तमसाहसम्। मध्यमपशून् पूर्वन्तु क्षुद्रपशून् तथा हृतः इति। हृत इति षष्ठी। वन्दीग्रहादीनां दण्डमाह याज्ञवल्क्यः "वन्दिग्राहांस्तथा वाजिकुञ्जराणां च हारिणः। प्रसह्यघातिनश्चैव शूलमारोपयेन्नृपः"इति। अङ्गच्छेदादयः उत्तमसाहसत्वाद् ब्राह्मणव्यतिरिक्तोत्तमद्रव्यापहारविषयाः "साहसेषु य एवोक्तस्त्रिषु दण्डो मनीषिभिः। स एव दण्डः स्तेयेऽपि द्रव्येषु त्रिष्वनुक्रमादिति" नारदेनोत्तमसाहसस्योत्तमद्रव्यविषयत्वेन व्यवस्थापनात्तेन क्षुद्रमध्यमद्रव्याच्चेपकादीनां तदनुरूपो न करच्छेदादिः। तस्करस्यापहृतं धनन्तत्स्वामिने दापयित्वा दण्डः कर्त्तव्य इत्याह याज्ञवल्क्यः "चौरं प्रदाप्यापहृतं घातयेद्विविधैर्बधैरिति" धान्याद्यपहरणे दण्डमाह मनुः "धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिकं बधः। शेषे त्वेकादशगुणं दाप्यस्तस्य च तद्धनमिति"। कुम्भो विंशतिप्रस्थाः शेषे दशकुम्भाधिकान्न्यूने, तस्य धान्यस्वामिनः। रत्नहरणे दण्डमाह स एव "मुख्यानाञ्चैव रत्नानां हरणे बधमर्हतीति"। स एव। "सुवर्णरजतादीनामुत्तमानाञ्च वाससाम्। पञ्चाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते। शेषे त्वेकादशगुणं मूल्याद्दण्डं प्रकल्पयेत्। पुरुषाणां कुलीनानान्नारीणाञ्च विशेषतः"इति। अत्र सुवर्णादीनां संख्या कर्षमितेत्याहुः वृद्धाः इति मदनरत्ने। अत्राङ्गच्छेदादिदण्डो ब्राह्मणव्यतिरिक्तविषयः "सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद्विप्रवासयेदिति" याज्ञवल्क्यस्मरणात्। चिह्नं ललाटे श्वपदाकाराङ्कनम्। तथा च मनुः "गुरुतल्पे भगः कार्य्यः सुरापाणे सुराध्वजः। स्तेये च श्वपदं कार्य्यं ब्राह्मणस्य शिरः पुमानिति"। एतच्च प्रायश्चित्तमकुर्वतां दण्डोत्तरकालं न तु प्रायश्चित्तं चिकीर्षताम्। "प्रायश्चित्तन्तु कुर्वाणाः सर्वे वर्णा यथोदितम्। नाङ्क्या राज्ञा ललाटे तु दाप्यस्तूत्तमसाहसमिति" मनुस्मरणात्। जात्यादिभेदेन च दण्डतारतम्यमाह स एव "अष्टापाद्यन्तु शूद्रस्य स्तेये भवति किल्बिषम्। षोडशैव तु वैश्यस्य द्वात्रिंशत् क्षत्रियस्य तु। ब्राह्मणस्य चतुःषष्टिः पूर्णं वापि शतम्भवेत्। द्विगुणा वा चतुःषष्टिस्तद्दोषगुणवेदिनः" इति। यस्मिन्नपराधे यो दण्ड उक्तः स शूद्रकर्त्तृके तस्मिन्नष्टगुणः दापनीयः वैश्यकर्त्तृके षोडशगुणः, क्षत्रियकर्त्तृके द्वात्रिंशद्गुणः। ब्राह्मणकर्त्तृके चतुःषष्टिगुणः शतगुणो वा अष्टाविंशत्युत्तरशतगुणो वेत्यर्थः। माषाद्यूनमूल्यानां क्षुद्राणां मूल्यात् पञ्चगुणो दम इत्याह नारदः "काष्ठभाण्डतृणादीनां मृण्मयानान्तथैव च। वेणुवैणवभाण्डानां तथा स्नाय्वस्थिचर्म्मणाम्। शाकानामार्द्रमूलानां हरणे फलमूलयोः। गोरसेक्षुविकाराणां तथा लवणतैलयोः। पक्वान्नानां कृतान्नानां मत्स्यानामौषधस्य च। सर्वेषामल्पमूल्यानां मूल्यात्पञ्चगुणो दमः" इति। यत्पुनः क्षुद्रद्रव्यविषये द्विगुणदण्डप्रतिपादकं मनुवचनम् "सूत्रकार्पासकिण्वानां गोमयस्य गुडस्य च। दध्नः क्षीरस्य तक्रस्य पानीयस्य तृणस्य च। वेणुवैणवभाण्डानां लवणानान्तथैव च। मृण्मयानां च हरणे मृदोभस्मन एव च। अजानां पक्षिणाञ्चैव लवणस्य घृतस्य च। मांसस्य मधुनश्चैव यच्चान्यत् पशुसम्भवम्। अन्येषाञ्चैवमादीनां मद्यानामोदनस्य च। पक्वान्नानाञ्च सर्वेषां तन्मूल्याद्द्विगुणो दमः" इति। तदल्पप्रयोजनविषयम्। धान्यादीनामल्पप्रयोजनद्रव्यापहरणे न दण्डः यथाह स एव "द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके। आददानः परक्षेत्रान्न दण्डं दातुमर्हति। चणकव्रीहिगोधूमयवानां मुद्गमाषयोः। अनिषिद्धैर्ग्रहीतव्या मुष्टिरेका पथि स्थितैः। तथैव सप्तमे भक्ते भक्तानि षडनश्नता। अश्वस्तनविधानेन हर्त्तव्यं हीनकर्म्मणः" इति। न केवलं चौरस्यैव दण्डः किन्त्वचौरस्यापि

चौरोपकारिणः इत्याह याज्ञवल्क्यः "भक्तावकाशाग्न्युदकमन्त्रोपकरणव्ययान्। दत्त्वा चौरस्य वा हन्तुर्जानतो दम उत्तम" इति। भक्तम् अशनम्। अवकाशो-निवासस्थानम्। अग्निश्चौरस्य शीतापनोदनाद्यर्थः। उदकं तृषितस्य। मन्त्रः चौर्यप्रकारोपदेशः, उपकरणं चौर्यसाधनम्। व्ययः अपहारार्थं देशान्तरं गच्छतः पाथेयम्। एतानि चौरस्य हन्तुर्वा दुष्टत्वं जानन्नपि यः प्रयच्छति तस्योत्तमसाहसो दण्ड इत्यर्थः। कात्यायनोऽपि "चौराणां भक्तदा ये स्युस्तथाग्न्युदकदायिनः। दातारश्चैव भाण्डानां प्रतिग्राहिण एव च। समदण्डाः स्मृता ह्येते ये च प्रच्छादयन्ति तानिति"। चौरोपेक्षाकारिणं प्रत्याह नारदः "शक्ताश्च य उपेक्षन्ते तेऽपि तद्दोषभागिनः। उत्क्रोशतां जनानां तु ह्रियमाणे धने तथा। श्रुत्वा ये नाभिधावन्ति तेऽपि तद्दोषभागिनः" इति। द्रव्यभेदेन चौर्यप्रायश्चित्तं प्रायश्चित्तशब्दे दृश्यम्। तत्कर्म्मविपाकश्च कर्म्मविपाकशब्दे १७४२पृ० दृश्यः।

चोरक पु० चोरः स्वनामख्यातद्रव्यमिव कायति कै—क। १ग्रन्थिपर्णाख्ये रत्नमाला। स च "शैलेयकमांसीतगरकुष्ठरससैन्धवानि वन्नीजम्। मधुररसमधूच्छिष्टानि चोरकश्चेति जीवस्य" वृ० सं० १६अ० जीवभक्तौ उक्तः

चोरघात पु० चोरं हन्ति हन—अण्। राज्ञां हस्तिभेदे शब्दार्थ०।

चोरपुष्पी स्त्री चोर इव पुष्पमस्याः रात्रिविकाशित्वात्। शङ्खिन्याम्। स्वार्थे क अत इत्त्वम्। चोरपुष्पिकाप्यत्र अमरः। [नाशायाम्" शब्दार्थचि०।

चोरस्नायु पु० चोरस्य गन्धद्रव्यभेदस्य स्नायुरिव। काक-

चोरा स्त्री चोरतुल्यं रात्रिविकाशित्वेन पुष्पमस्त्यस्याः अर्श० अच्। शङ्खपुष्पिकायाम् शब्दार्थचि०।

चो(चौ)रिका स्त्री चोरस्य भावः मनोज्ञा० वुञ् ठन् वा। चौर्य्ये रायमुकुटः।

चोल पु० चुल समुच्छ्राये कर्म्मणि घञ्। १स्त्रीणां कञ्चुके २आप्रपदीने वस्त्रे ३कूर्पासके।(चोला)इति ख्याते पुंसां वस्त्रभेदे। "द्रविडलङ्कयोर्मध्ये चोलदेशः प्रकीर्त्तितः। लक्षकर्णाश्च ते प्रोक्तास्तद्देशोऽवान्तरो भवेत्" इत्युक्ते ४देशे "अपरे जनपदा दक्षिणेन" इत्युपक्रमे "कौकुट्टकास्तथा चोलाः कोङ्कणा मालवानकाः" भा० भी० ९अ०। जनपदोक्तौ। स च देशः अधुना (ताञ्जोर) इति ख्यातः।

स च वृ०स०१४अ० कूर्म्मविभागे दक्षिणस्यामुक्तो यथा "अथ दक्षिणेन" इत्युपक्रमे "कर्णाटमहाटविचित्रकूटनासिक्यकोल्लगिरिचोलाः"। तस्य राजा अण्, सोऽभिजनोऽस्य वा अण्। चौल तन्नृपे तद्देशवासिनि च। बहुत्वे तस्य लुक्। चोलाः ५तद्देशवासिषु ६तन्नृपेषु च ब-व०। तन्नृपाश्च क्षत्रिया अपि म्लेच्छतामाप्ताः काम्बोजशब्दे १९०६पृ० दृश्यम्। ७चीनदेशस्थक्षुद्रभेदे शब्दार्थचि०।

चोलक पु० चोल इव कायति कै—क। १वाणवारे कवचे २वल्कले च शब्दर०।

चोलकिन् पु० चोलकमिवास्त्यस्य इनि। १करीरे (बाँशेरकोंड़) | २नागरङ्गे मेदि० ३किष्कुपर्वणि हारा०।

चोरगणेश पु० कर्म्म०। करच्छिद्रवतां जापिनां जपफलहारके तन्त्रोक्ते गणेशभेदे।

चोलण्डुक पु०चोलस्याण्डुक इव शक० । शिरोवेष्टे शिका०

चोलन न० चोलइवाचरति क्विप् ततः कर्त्तरि ल्यु। १नागरङ्गे २करीरे ३किष्कुपर्व्वणि च शब्दार्थचि०।

चोली स० चुल—घञ् गौरा० ङीप्। स्त्रीणां १कञ्चुकाख्ये आप्रपदीने वस्त्रे (चोला) इतिख्याते पुंसां २वस्त्रभेदे च शब्दार्थचि० [शब्दार्थचि०।

चोलोण्डुक पु० चोलण्डुक इव। शिरोवेष्टे उष्णीषे

चोष पु०चोयते यः स चासावुषोदाहश्चेति। पार्श्वस्थेनाग्निनेव जनिते सन्तापभेदे। "हृच्छूलपीडनयुतं पवनेन, पित्तात्तृड्दाहचोषबहुलं सकफप्रवेकम्" "चोषः पार्श्वस्थिताग्निनेव सन्तापः" भावप्र०।

चोष्य न०चूष—ण्यत् पृषो० गुणः। चूष्ये चूषणीये। "पचाम्यन्नं चतुर्विधम्" गीताव्याख्यायां "प्राणिभिर्भुक्तं भक्ष्यं भोज्यं लेह्यं चूष्यं चेति चतुर्विधमन्नं पचामि। तत्र यद्दन्तैरवखण्ड्यावखण्ड्य भक्ष्यते अपूपादि तद्भक्ष्यं, यत्तु केवलं जिह्वया विलोड्य निगीर्य्यते पायसादि तद्भोज्यम्। यज्जिह्वायां निःक्षिप्य, रसास्वादेन निगीर्य्यते द्रवीभूतं गुडादि तल्लेह्यम्। यत्तु दंष्ट्राभिर्निष्पीड्य रसं निगीर्य्यावशिष्टं त्यज्यते इक्षुदण्डादि तच्चूष्यमिति चतुर्विधस्य भेदः" श्रीधरः। अत्र क्वचित्पुस्तके चूष्यमित्यत्र चोष्यमितिपाठदर्शनात् चोष्यशब्दकल्पना केषाञ्चित् प्रामादिकी अनार्षवाक्ये पृषो० कल्पनाया अयुक्तत्वात्। किन्तु "भोजनीयानि पेयानि भक्ष्याणि विविधानि च। लेह्यान्यमृतकल्पानि चोष्याणि च तथाऽर्जुन"। भा० आ० १७५अ०। अत्रार्ष-

स्यात् पृषो० कल्पना युक्तैव। एवं "भक्ष्यं भोज्यञ्च पेयञ्च चोष्यं लेह्यं तथैव च" हरिवं० १४५ अ०।

**चोस्क** पु० १हयोत्तमे शब्दार्थचि०। २सिन्धुवारे (सोँदाल) वृक्षे च त्रिका०।

**चौड(ल)** न० चूडा प्रयोजनमस्य चूडा० अः वा डस्य लः। चूडाकर्मणि चूडाशब्दे २९५७ पृ० दृश्यम् "गार्भैर्होमैर्जातकर्म्मचौडमौञ्जीनिबन्धनैः" मनुः। चूडैव स्वार्थे अण्। चूडायाम्" "लेलिहानैर्महानागैः क्षतचौडमभिवहन्"भा० व० १७अ०।

**चौडि** पुंस्त्री चूडाया इदम् बाह्वा० इञ्। चूडासम्बन्धिनि स्त्रियां वा० ङीप्।

**चौरठ्र(रड्र)** न० जलभेदे चुत्रागब्दे पृ०२९५५ दृश्यम्।

**चौदायनि** पु० गोत्रप्रवर्त्तके प्रवराध्यायप्रसिद्धे ऋषिभेदे

**चौपयत** पु० चुप—अच् चोपः सन् यतते यत—अच् ततः स्वार्थे अण्। ऋषिभेदे तस्यापत्यम् तिका० फिञ्। चौपयतायनि तदपत्ये स्त्रियां तु क्रौड्या० ष्यङ्। चौपयत्या। चौपयतानां विषयः भौरि० विधल्। चौपयतविध तद्विषये न०। गोत्रापत्ये अश्वा० फक् चौपयतायन तद्गोत्रापत्ये पुंस्त्री

**चौपैया** स्त्री मात्रावृत्तभेदे तल्लक्षणं यथा "चौपैयावृत्तं त्रिंशन्मात्रं फणिपतिपिङ्गलभणितं कुरु कमलतरङ्गममति हृदयङ्गम मत्तं गुरुमुपनीतम्। यदि दशवसुरविभिश्छन्दोविद्भिः क्रियते यतिरभिरामम् सपदि स्तवसमये नृपतिः कवये वितरति संसदि कामम्"।

**चौर** पु० चुरा शीलमस्य चूडा० णः चोरएव अण् वा। प्रच्छन्नपरद्रव्याहारके अमरः। "सुवर्णचौरः कौनख्यं सुरापः श्यावदन्तताम्" मनुः २कविभेदे कवी चौरमयूरकौ" उद्भटः तत्कृतग्रन्थश्चौरपाञ्चाशिका।

**चौरपुष्पौषधि** स्त्री चौरपुष्पिकानामौषधौ मेदि०।

**चौरिकाक** पु० काकभेदे "लवणं चौरयित्वा तु चौरिकाकः प्रजायते" भा०अनु० १११अ०।

**चौलि(डि)** पु० चौलस्यापत्यम् इञ्। प्रवराध्यायप्रसिद्धे ऋषिभेदे।

**चौलुक्य** पुंस्त्री चुलुकस्य गोत्रापत्यं गर्गा० यञ्। चुलुकर्षिगोत्रापत्ये तस्य छात्त्रः कण्वा० अण् यलोपः। चौलुक चौलुक्यच्छात्त्रे।

**च्यवन** पु० च्यु—ल्यु। भार्गवे ऋषिभेदे तस्य नामनिरुक्तिः भा० आ० ६ अ० दर्शिता यथा।

"भृगोः सुदयिता भार्य्या पुलोमेत्यभिविश्रुता। तस्यां समभवद्गर्भो भृगुवीर्य्यसमुद्भवः। अस्मिन् गर्भेऽथ सम्भूते पुलोमाया भृगूद्वहात्। समये समशीलिन्यां धर्मपत्न्यां यशस्विनः। अभिषेकाय निष्क्रान्ते भृगौ धर्मभृतां वरे। आश्रमं तस्य रक्षोऽथ पुलोमाऽभ्याजगाम ह। तं प्रविश्याश्रमं दृष्ट्वा भृगोर्भार्य्यामनिन्दिताम्। हृच्छयेन समाविष्टो विचेताः समपद्यत" ५ अ० इत्युपक्रमे "अग्नेरथ वचः श्रुत्वा तद्रक्षः प्रजहार ताम्। ब्रह्मन्! वराहरूपेण मनोमारुतरंहसा। ततः स गर्भो निवसन् कुक्षौ भृगुकुलोद्वहः। रोषान्मातुश्च्युतः कुक्षेश्च्यवनस्तेन सोऽभवत्। तं दृष्ट्वा मातुरुदराच्च्युतमादित्यवर्चसम्। तद्रक्षो भस्मसाद्भूतं पपात परिमुच्य ताम्। सा तमादाय सुश्रोणी ससार भृगुनन्दनम्। च्यवनं भार्गवं पुत्रं पुलोमा दुःखमूर्च्छिता" ६ अ०। २क्षरणयुक्ते त्रि० "यस्तु न च्यवते नित्यं यशसा वचसा श्रिया। अग्निर्निश्च्यवनो नाम" भा०व०२१८ अ०। भावे ल्युट्। ३क्षरणे न० दुश्च्यवनः।

**च्यवनप्राश** पु० च्यवनेन प्राश्यते प्र+अश० कर्मणि घञ्। चक्रदत्तोक्ते औषधभेदे यथा

"विल्वाग्निमन्थश्योनाककाश्मर्य्यः पाटली बला। पर्ण्यश्चतस्रः पिप्पल्यः श्वदंष्ट्रा बृहतीद्वयम्। शृङ्गी तामलकी द्राक्षा जीवन्ती पुष्करा गुरु। अभया वामृता ऋद्धिर्जीवकर्षभकौ शठी। मुस्तं पुनर्णवा मेदा सूक्ष्मैलोत्पलचन्दने। विदारी वृषमूलानि काकोली काकनासिका। एषां पलोन्मितान् भागान् शतान्यामलकस्य च। पञ्च दद्यात् तदैकध्यं जलद्रोणे विपाचयेत्। ज्ञात्वा गतरसान्येतान्यौषधान्यथ तं रसम्। तच्चामलकमुद्धृत्य निष्कुलं तैलसर्पिषोः। पलद्वादशके भृष्ट्वा दत्त्वा चार्द्धतुलां भिषक्। मत्स्यण्डिकायाः पूताया लेहवत् साधु साधयेत्। षट्पलं मधुनश्चात्र सिद्धशीते प्रदापयेत्। चतुष्पलं तु गाक्षीर्य्याः पिप्पल्या द्विपलन्तथा। पलमेकं निदध्याच्च त्वगेलापत्रकेशरात्। इत्ययं च्यवनप्राशः परमुक्तो रसायनः। कासश्वासहरश्चैव विशेषेणोपदिश्यते। क्षीणक्षतानां वृद्धानां बालानाञ्चाङ्गवर्द्धनम्। स्वरक्षयमुरोरोगं हृद्रोगं वातशोणितम्। पिपासां मूत्रशुक्रस्थान् दोषांश्चैवापकर्षति। अस्य मात्रां प्रयुञ्जीत चोपरुन्ध्याच्च भोजनम्। अस्य प्रयोगाच्च्यवनः सुवृद्धोऽभूत् पुनर्युवा। मेधां स्मृतिं कान्तिमनामयत्वं

वपुःप्रकर्षं बलमिन्द्रियाणाम्। स्त्रीषु प्रहर्षं परमग्निवृद्धिं वर्णप्रसादं पवनानुलोम्यम्। रसायनस्यास्य नरः प्रयोगाल्लभेत जीर्णोऽपि कुटीप्रवेशात्। जराकृतं रूपमपास्य रूपं बिभर्त्ति रूपं नवयौवनानाम्। सिता मतस्यण्डिकाऽलाभे धात्र्याश्च मृदु भर्जनम्। चतुर्भागजले प्रायो द्रव्यं शतरसं भवेत्।"

**च्यवान** पु० च्यवन+पृषो० दीर्घः। च्यवनर्षौ "प्रमुञ्चन्तं द्रापिमिव च्यवानात्" ऋ०१।११६।१०। "च्यवानात् च्यवनाद्दषेः" भा० "युवं च्यवानमश्विना जरन्तं पुनर्युवानं चक्रथुः शचीभिः" ऋ०१।११७।१३। "हे अश्विनौ युवं युवां शचीभिराकीर्यैर्निमज्ज्यलक्षणैः कर्मभिः जरन्तं जीर्य्यन्तं च्यवानमेतन्नसंज्ञमृषिं युवानं पुनर्यौवनोपेतं चक्रथुः" भा० "च्यवानऋषिर्भवति स्तोतॄणां च्यवानमित्यस्य निगमा भवन्ति" इति निरु० ४।१९

**च्यावन** त्रि० च्यु-णिच्-ल्यु। च्युतिकारके "दुश्च्यावच्यावनो जेता हन्ता ब्रह्मद्विषां हरः" भा० कर्ण० ३४अ०। भावे ल्युट्। २च्युतिसम्पादने "यद्दं च्यावनं स्थानात् प्रतिष्ठाञ्च शतक्रतोः" हरिवं० २८ अ०।

**च्यु** गतौ भ्वा० आत्म० सक० अनिट्। च्यवते अच्योष्ट। चुच्युवे। च्युतः। च्युतिः "यस्तु न च्यवते नित्यम् यशसा वर्चसा श्रिया" भा०व० २१८ अ०। "अद्य ते कतिचिद्राजंस्त्व्युत्तस्मात्‌कवेशनः" रा० अयो० ७२।५। "न च्यवेयं स्वधर्म्मात्" भा०अ० २८६ अ०। "अच्योष्ट सत्त्वान्नृपतिश्च्युताशः" "च्युताशनायाः फलवद्विभूत्या" भट्टिः उपसर्गपूर्वकस्य तत्तदुपसर्गद्योतितार्थयुक्तगतौ।

**च्यु** सहने सक० हसने अक० चु० उभ० सेट्। च्यावयति अचि(चु)च्यवत् त। चु(चि)च्यावयिषति

**च्युत** क्षरणे भ्वा० पर० अक० सेट्। च्योतति इरित् अच्युत अच्योतीत्। चुच्योत। च्युतः। "इदं शोणितमध्यग्रं संप्रहारेऽच्युतनयोः" इदं कवचमच्योतीत्" इति च भट्टिः। [च्युतः। च्युतोपलः।

**च्युत** त्रि० च्यु-क्त च्युत--क वा। १गते २क्षरिते च। अ-

**च्युति** स्त्री च्यु-भावे क्तिन्। १गतौ "भयात् च्युतिः क्षत्रियस्य न धर्मेषु प्रशस्यते" भा० आ०१०३अ०। "कुर्य्यां हरस्यापि पिनाकपाणेर्धैर्य्यच्युतिं के मम धन्विनोऽन्ये" कुमा०। च्यु भावे क्तिन्। ३क्षरणे। मदच्युतिः। च्योतति शोणितमस्मात् अपादाने क्ति। ४गुदद्वारे शब्दार्थचि०।

**च्युप** पु० च्यवन्ते आपन्तेऽनेन धातूनामनेकार्थत्वात् च्यु-भावे प किच्च। वक्त्रे उज्ज्व०। पान्तादुपधत्वात् पुंस्त्वम्।

**च्युस** हानौ हसने चु० उभ० अक० सेट्। च्योसयति ते अचुच्युसत् त।

**च्यूत** पु० चूत+पृषो०। आम्रवृक्षे शब्दर० पाठान्तरम्।

**चौल** न० च्यु-गतौ करणे लण्। १बले निघ०। कर्त्तरि लण्। २गन्तरि २अग्रेऽग्रे-२क्षीणपुण्यजने" सि०कौ०।

इति वाचस्पत्ये चकारादिशब्दार्थनिरूपणम्।

---

२९८७पृ० चयशब्दपरिशिष्टम्।

भावप्र० उक्ते दोषवृद्ध्यादौ "कालस्वभावोऽयमाहारादिवशात् पुनः। चयादीन् यान्ति सद्योऽपि दोषाः काले विशेषतः। चयकोपशमाः पूर्वाह्णे वसन्तस्य लिङ्गं, मध्याह्ने ग्रीष्मस्य, अपराह्णे प्रावृषः, प्रदोषे वार्षिकम् शरदमर्द्धरात्रे प्रत्यूषसि हेमन्तमुपलक्षयेत्। एवमहोरात्रमपि वर्णमिव शीतोष्णवर्षादोषोपचयप्रकोपोपशमान् जानीयादिति। सुश्रुतः। चयकोपशमा दोषा विहाराहारसेवनैः। समानैर्यान्त्यकालेऽपि विपरीते विपर्य्ययम्। समानैः तुल्यैः चयादियोग्यैरिति यावत्। विपर्य्ययं कालेऽपि वैपरीत्यं बोध्यम्। चयलक्षणमाह सुश्रुतः। स्वस्थानस्थस्य दोषस्य वृद्धिः स्यात्स्फास कोष्ठता। पीतावभासता वह्निमन्दता चाङ्गगौरवम्। आलस्यञ्चयहेतौ तु द्वेषश्च चयलक्षणम्। सञ्चयोपहृता दोषा लभन्ते नोत्तरां गतिम्। ते तूत्तरासु गतिषु भवन्ति बलवत्तराः"।

## २९७२ पृ० चोरगणेशशब्दपरिशिष्टम् ।

चोरगणेशमन्त्रादिकमुक्तं गणेशविमर्षिण्याम् "चक्षुर्द्वयं तथा कर्णद्वयं नासापुटद्वयम् । मुखं नाभिं लिङ्गमूलं गुदस्थानं तथैव च । मनोद्वारं भ्रुवोर्मध्ये दशैव द्वारसंज्ञिताः । अङ्कुशं प्रथमं वीजं हृदये दशधा जपेत् । प्रजपान्ते ततो मातः! कपाटं निःक्षिपेत्ततः । कर्णयोश्च तथा कूर्च्चं कालीं नासापुटे ततः । मुखे स्त्रीं द्विविधं वीजं नाभौ वाणीं ततो जपेत् । हसौ वीजं लिङ्गमूलेवं गुदे परिकीर्त्तितम् । क्रोंकारञ्च भ्रुवोर्मध्ये मनःस्थाने तथैवच । एतदेकादशं वीजं प्रतिद्वारे कपाटवत् । चोरगणेशमन्त्र जप्त्वा कर्ममात्रं न कुर्य्यात् । यदि कुर्य्यात्तदादोष उक्तो वर्णविलासतन्त्रे । "गणेश उवाच । अधुनाहं प्रवक्ष्यामि चोरमन्त्रमतः शृणु । चोरमन्त्रपरिज्ञानं विना हे ब्राह्मणेश्वरि ! । पुराणं प्रपठेद्यस्तु स एव मूर्त्तिमान् कलिः । परजन्मनि पापिष्ठः स भवेच्चौरकुक्कुरः । शिवपूजा विष्णुपूजा शक्तिपूजा तथैवच । सर्वपूजासु यत्तेजो हरते गणपः स्वयम् । पञ्चाशद्गणदेवानां ज्योतींषि मुनिपुङ्गवा ! । प्रतिद्वारपथे गत्वा प्रतिपद्मेषु जृम्भते । हरन्ति जपतेजांसि प्रतिपद्मेषु संस्थिताः । जपपूजासु यत्तेजस्तत्र चौरो गणाधिपः । तस्माच्चौरप्ररोधार्थं चौरमन्त्रं जपेद्बुधः । ततस्तु पूजयेद्धीमान् यस्य या इष्टदेवताः । ततः फलमवाप्नोति ब्रह्मादित्रिदिवौकसः । चौरमन्त्रं महामन्त्रं पञ्चाशद्गणतोषणम् । चौरमन्त्रं विना भद्रे ! शान्तिस्वस्त्ययनं कुतः । कर्णद्वयं तथा चक्षुर्द्वयं नासा मुखं ततः । नाभिस्थाने लिङ्गमूले गुदस्थाने तथैव च । मनोद्वारं भ्रुवोर्मध्यं दशैकं द्वारमीरितम् । प्रतिद्वारे न्यसेन्मन्त्रं चौराख्यं ब्राह्मणेश्वरि ! । चौरमन्त्रञ्चाह भद्रे ! प्रतिद्वारे कपाटवत् । रहस्यं ते प्रवक्ष्यामि पञ्चाशद्गणतोषणम् । अङ्कुशं पञ्चमं वीजं प्रथमे दशधा जपेत् । प्रजप्य सुभगे ! मातः ! कपाटं निःक्षिपेत्ततः । अन्यथा अङ्कुशैर्वीजैः कपाटं भेदिरे गणाः । चन्द्रिकान्तर्गतानित्यं शङ्करं वरसुन्दरम् । चन्द्रिकासु समालीनः शिञ्जिनी श्वणिमा गुणः । चन्द्रविन्द्वात्मिका नित्या गणेशपरिपूजिता । ह्रौं ह्रीं वीजद्वयमिति विन्यसेन्नयनद्वये । कर्णयोश्च तथा ह्रौं ह्रौं ङँ ङँ नासाद्वये तथा । मुखे स्त्रीं द्विविधं वीजं नाभौ क्लीं सुभगेश्वरि ! । हसौ वीजं लिङ्गमूले गुदेवं परिकीर्त्तितम् । ङङ्कारञ्च भ्रुवोर्मध्ये मनःस्थाने तथैव च । एतदेकादशद्वारे चौरमन्त्राणि विन्यसेत् । दशधा चौरमन्त्रञ्च एकधा वापि वीजकम् । अनेनैव जपेनापि प्रतिद्वारे कपाटकम्" । जपकालोऽपि तत्रैव । "शृणु चापि प्रवक्ष्यामि मन्त्रस्य जपनिर्णयम् । प्रातःकाले च शय्यायां मुक्तस्वापः स्वदेहके । पूर्ववन्मातृकान्यासं विन्यसेन्मातृकास्थले । तथा एकादशद्वारे चौरमन्त्राणि विन्यसेत् । दशधा चौरमन्त्रञ्च एकधा वापि संजपेत् । चौरमन्त्रजपात् तुष्टिर्गणेशस्य तदा भवेत् । यमस्य नाधिकारोऽपि चौरमन्त्रजपात् प्रिये ! । सर्वमन्त्रजपात्तेजः सर्वस्य तु समुपस्थितम् । तत्तेजो हरणे शक्तिर्गणेशस्य नचैव हि" चोरगणेशोऽप्यत्र । अयञ्चशब्द उक्तपृष्ठे चारकशब्दात् परं बोध्यः तत्र च कर छिद्रेत्यत्र करणच्छिद्रेति शुद्धम् करणं च नेत्रादि । छिद्रं द्वारानावरणम् ।

---

## छ

छकारो व्यञ्जनवर्णभेदः स्पर्शसंज्ञस्तस्योच्चारणस्थानं तालु आभ्यन्तरप्रयत्नः जिह्वामध्येन तालुस्पर्शः । वाह्यप्रयत्नाः विवारश्वासाऽघोषा महाप्राणश्च । मातृकान्यासेऽस्य वामकूर्परे न्यासः । तन्त्रमते अस्य वाचकशब्दाः । "छग्छन्दनं सुषुम्णा च पशुः पशुपतिः स्मृतिः । निर्मलं तरलं वह्निर्भूतमात्रा विलासिनी । एकनेत्रश्च चपलो द्विशिरा वामकूर्परः । गोकर्णो लाङ्गली रामः काममाता सदाशिवः । माता निशाचरः पायुर्वित्ततः स्थितिशब्दकः" वर्णाभिधानम् । "मातृकावर्णात्मिकायास्तस्या ध्यानमुक्तं वर्णोद्धारतन्त्रे "ध्यानमस्याः प्रवक्ष्यामि द्विभुजां तु त्रिलोचनाम् । पीताम्बरधरां नित्यं वरदां भक्तवत्सलाम् । एवं ध्यात्वा छकारन्तु तन्मन्त्रं दशधा जपेत्" । काव्येऽस्य प्रथमनिर्देशफलं वृ० र० टी० उक्तं यथा "कः खोगो घश्च लक्ष्मीं वितरति वियशोङस्तथा चः सुखं छः प्रीतिं जोमित्रलाभमित्यादि" ।

**छ** पु० १छकारवर्णे । छो-घञर्थे भावे क । २छेदने स्त्री

कर्म्मणि वजर्थे क। २निर्म्मले त्रि॰ मेदि॰। ४गृहे न॰ शब्दार्थचि॰। छद्–बा॰ भावे ड। ५छादने।

**छग** पुंस्त्री छं रोमभिश्छादनं गच्छति गम–ड। अजे छागे हेमच॰। स्त्रियां जातित्वात् ङीष्।

**छगण** पुंन॰। छाय वह्नेश्छादनाय गण्यते गण–कर्म्मणि अच्। करीषे हेमच॰

**छगल** पुंस्त्री छो–कलच् गुक् ह्रस्वश्च। १छागे स्त्रियां जातित्वात् ङीष्। २नीलवस्त्रे न॰। ३वृद्धदारकवृक्षे पु॰ हेमच॰। ४छगलप्रधानदेशे पु॰ सोऽभिजनोऽस्य तक्षशिला॰ अञ्। ५तद्देशवासिनि त्रि॰। ६मुनिपत्नीभेदे स्त्री छागली ७ऋषिभेदे पु॰। ततो बाह्वा॰ अपत्ये इञ्। छागलि तदपत्ये पुंस्त्री। आत्रेये तु अण्। छागल आत्रेये छागलापत्ये। तद्भिन्ने छागल्या अपत्ये च ढक्। छागलेय ऋषिभेदे सच स्मृतिकर्त्ता।

**छगलक** पुंस्त्री छगल+स्वार्थे क। छागे अमरः।

**छगलण्ड** पु॰ दक्षिणदेशे समुद्रसन्निधौ प्रचण्डादेव्याःस्थाने शब्दार्थचि॰।

**छगलाङ्घ्रि(न्त्री)** स्त्री छगलस्येवान्त्रम् अङ्घ्रिर्मूलं वा यस्याः अदन्तात् गौरा॰ ङीष्। १वृद्धदारकौषधे अमरः २वृके शब्दर॰। स्वार्थे क। अत्रैवार्थे।

**छगलिन्** पु॰ ऋषिभेदे। स च कलापान्तेवासी। “हरिद्रुश्छगली तुम्बुरुरुलपश्चत्वारः कलापान्तेवासिनः” मनो॰ तत्र कलापान्तेवासित्वात् अणि प्राप्ते विशेषविधिना तेन प्रोक्तमधीयते इत्यर्थे ढिनुक्। छागलेयिन् तदुक्ताध्येतृषु ब॰ व॰।

**छच्छिका** स्त्री “छच्छिका सरहीनं स्यादच्छा प्रचुरवारिका। छच्छिका शीतला लघ्वी पित्तश्रमतृषाहरी। वातनुत् कफकृत् सा तु दीपनी लवणान्विता” इत्युक्ते तक्रभेदे। भावप्र॰। सरहीनं दधीति शेषः।

**छटा** स्त्री छो–अटन् किच्च। १दीप्तौ, २परम्परायाञ्च शब्दार्थचि॰ “यस्यास्वलद्वारिधिवारिवीचिच्छटोच्छलच्छङ्खकुलाकुलेन” “शठच्छटाभिन्नघनेन बिभ्रता” माघः। “स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटा” काव्यप्र॰। “नीरेन्दीवरदामसुन्दरवपुस्तस्याः कटाक्षच्छटा” सा॰ द॰।

**छटाफल** पु॰ छटेव परम्परान्वितं फलं यस्य। गुवाके। त्रिका॰।

**छटाभा** स्त्री छटया दीप्त्या भाति भा॰–क। विद्युति हारा॰।

**छत्त्र** पु॰ छद–णिच् ष्ट्रन् ह्रस्वः अर्द्ध चा॰। छत्त्राकारपत्रे (छातारिया) १तृणभेदे रत्नमाला। २आतपत्रे न॰। मेदि॰। ३अतिच्छत्रायां (छत्ता) वृक्षे स्त्री। ४भूतृणे राजनि॰। तत्र आतपत्रशब्दे ६२९पृ॰ उपानहारणशब्दे ११८०पृष्ठे च विवृतिः। “रथाश्वं हस्तिनं छत्त्रं धनं धान्यं पशून् स्त्रियः”। “अभ्यङ्गमञ्जनञ्चाक्ष्णोरुपानच्छत्त्रधारणम्” मनुः। शशिप्रभं छत्त्रमुभे च चामरे” रघुः। ५आवरणमात्रे च। छत्त्रं गुरोर्वैगुण्याच्छादनं शीलं यस्य छत्त्रा॰ ण। छात्त्र शिष्ये।

**छत्त्रक** पु॰ छत्रमिव कायति कै-क। (राङ्गाकुलेखाडा) १वृक्षे, २मत्स्यरङ्गे पक्षिणि च रत्नमाला। स्वार्थे क ३छत्रे न॰। ४ईश्वरगृहभेदे शब्दार्थचि॰।

**छत्त्रगुच्छ** पु॰ छत्त्रमिव गुच्छोऽस्य। गुण्डतृणे राजनि॰।

**छत्त्रध(धा)र** पु॰ छत्त्रं धरति धारयति वा अच् अण् वा। छायाकरणाय नियुक्ते दासभेदे तत्र अणन्तस्य “अणि नियुक्ते” पा॰ पूर्व्वपदमाद्युदात्तम्।

**छत्त्रपत्र** पु॰ छत्त्रमिव पत्रमस्य। १स्थलपद्मे, रत्नमाला २भूर्जपत्रवृक्षे च त्रिका॰।

**छत्त्रपुष्प(क)**पु॰ छत्त्रमिव पुष्पमस्य वा कप्। तिलकवृक्षे शब्दार्थचि॰। [स्वातन्त्र्ये च मेदि॰।

**छत्त्रभङ्ग** पु॰ छत्रस्य भङ्गो यत्र। १नृपनाशे २वैधव्ये ३अ-

**छत्त्रा** स्त्री छद–त्रण् टाप्। (मौरि)वृक्षे मेदि॰ २अतिच्छत्रे (सुलफा) ३कुस्तुम्बुरौ (धनिया) ४शिलीन्ध्रे च मेदि॰। ५मञ्जिष्ठायां राजनि॰।

**छत्त्राक** न॰ छत्त्रा अति छत्त्रेव कायति कै–क। १शिलीन्ध्रे “छत्त्राकं विड्वराहञ्चेति” मनुः। “पलाण्डुं विड्वराहञ्च छत्त्राकं ग्रामकुक्कुटम्” याज्ञ॰। २जालवर्वुरवृक्षे पु॰ राजनि॰ गौरा॰ ङीष्। ३रास्नायां स्त्री अमरः।

**छत्त्रातिच्छत्त्र** पु॰ छत्त्रमतिक्रम्य छत्त्रमावरणमस्त्यस्य अच्। छत्त्राकारे जलोद्भवे सुगन्धितृणभेदे शब्दरत्ना॰।

**छत्त्रादि** पु॰ “छत्त्रादिभ्योणः” पा॰ शीलार्थे णप्रत्ययनिमित्ते पा॰ ग॰ सू॰ उक्ते गणभेदे स च गणो यथा छत्त्र शिक्षा प्ररोह स्था बुभुक्षा चुरा तितिक्षा उपस्थान कृषि कर्म्मन् विश्वधा तपस् सत्य अनृत विशिखा विशिका भक्षा उदस्थान पुरोडाश विक्षा चुक्षा मन्त्र” छात्त्रः चौर इत्यादि

राजनि॰।

**छत्त्राधान्य** न॰ छत्त्रा धान्यमिव। कुस्तुम्बुरौ धन्याके

**छत्त्रिका** स्त्री छत्त्रं तदाकारं पुष्पं वाऽस्त्यस्य ठन्। १भिलीन्ध्रे स्वेदजे शाकभेदे हारा० तस्या उत्पत्तिस्थानादिकं भावप्र० उक्तं यथा "उक्तं संस्वेदजं शाकं भूमिच्छत्रं शिलीन्ध्रकम्। क्षिति गोमयकाष्ठेषु वृक्षादिषु तदुद्भवेत्। सर्वे संस्वेदजाः शाकादोषलाः पिच्छलाश्च ते। गुरवश्छर्दीतीसारज्वरश्लेष्मामयप्रदाः। श्वेतशुभ्रस्थलीकाष्ठवंशगोमयसम्भवाः। नातिदोषकरास्ते स्युः शेषास्तेभ्यो विगर्हिताः"। २छत्त्रविशिष्टे त्रि० ततः पुरोहिता० भावे यक्। छात्त्रिक्य छत्त्रयुक्तत्वे न०

**छत्त्रिन्** त्रि० छत्त्रमस्त्यस्य। १आतपत्रयुक्ते। "छत्त्रिणो गच्छन्ति" सा० द०। "वर्षातपे च छत्त्री दण्डी रात्र्यटवीषु च" भावप्र० "मौञ्जी यज्ञोपवीती च छत्त्री दण्डाजिनी तथा" (वामनः) हरिवं० १६२अ०। २नापिते पु० शब्दरत्ना० [सि० कौ०

**छत्वर** पु० छद-ष्वरच् नि० दस्य तः। १गृहे २कुञ्जे च

**छद** संवृतौ अद०चु०उभ०सक०सेट्। छदयति ते अचिच्छदत् त

**छद** संवृतौ वा चु० पक्षे भ्वा० उभ० सक० सेट्। छादयति ते छदति ते अचिच्छदत् त अच्छादीत्–अच्छदीत् अच्छदिष्ट। ऊर्ज्जने बलाधाने जीवने चायं मित्। छदयति ते इति भेदः। क्तः–छादितः। वेदे ह्रस्वः छदः। "अग्निमन्तश्छादयसि" अथ० ९,२.१४० "कान्तं छादयेदाज्येन" कात्या० श्रौ० ४,६,१, "छादयन्निषु जालेन" भा० आ० १२८३अ०। उपसर्गपूर्व्वकस्य तत्तदुपसर्गद्योत्यार्थयुक्तसंवरणे "आच्छाद्य चार्चयित्वा च" मनुः।

**छद** संवृतौ चु० उभ० सक० सेट् इदित् पाणि०। छन्दयति ते अचिच्छन्दत् त। छन्दः।

**छद** पु० छद–पुंसि संज्ञायां घः ह्रस्वः। १वृक्षादिपत्रे २खगपत्रे अमरः ३पर्ण्णपर्णवृक्षे ४तमालवृक्षे च मेदि० "क्षतां विन्दुसरोरत्नैर्मयेन स्फाटिकच्छदाम्" (नलिनीम्) भा० स० ४९अ०। "नित्यपुष्पफलास्तत्र पादपाः हरितच्छदाः" भा० व० ८९अ०

**छदन** न० छद–ल्युट्। १पत्रे, २पक्षे मेदिनिः (तेजपात) ३त्वचे राजनि०। भावे ल्युट्। ४पिधाने न०। "विमलस्फाटिकाभानि पाण्डुरच्छदनानि" हरिवं० २२९अ०। "विमलस्फाटिकाभानि पाण्डुरच्छदनैर्द्विजैः" भा० व० १५८अ०।

**छदपत्त्र** पु० छदार्थं पत्त्रमस्य। भूर्जपत्रे रत्नमाला।

**छदि** स्त्री छद-कि। छदिषि पटले (चाल) अमरः "छदिः स्त्रियाम्" पा० उक्तेरिदन्ततास्य।

**छदिस्** न० छद–इसि। पटले सान्तं क्लीवं रायमुकुटः। "इन्द्रस्य छदिरसि" यजु० ४।२८.२ गृहे निघण्टुः

**छद्मतापस** पु० छद्मना छलेन तापसः। लोकप्रतारणार्थं तापसताख्यापनाय तापसलिङ्गधारिणि तत्कर्माननुष्ठायिनि वैडालव्रतिके शब्दार्थचि०

**छद्मन्** न० छाद्यते स्वरूपमनेन छद-मनिन्। १कपटे २छले। ३स्वरूपाच्छादने मेदि०। "अगाद वदनच्छद्मपद्मपर्य्यन्तपातिना" माघः। "छद्मना चरितं च तत्" मनुः "शकांश्च यवनांश्चैव अजयच्छद्मपूर्वकम्" भा०स० २९अ०

**छद्मिका** स्त्री छद्म अस्त्यस्याः व्रीह्या० इनि संज्ञायां कन्। गुडूच्यां राजनि०।

**छद्मिन्** त्रि०छद्म अस्त्यर्थे व्रीह्या० इनि। छद्मयुक्ते "ब्राह्मणाच्छद्मिने देवलोके गत्वा परां गतिम्" भा०व०२९९अ०। "बाहुकश्छद्मिनं नलम्" ७७अ०। स्त्रियां ङीप्।

**छन्द** पु० छदि–संवरणे धातोरनेकार्थत्वात् इह इच्छायाम् अच्। १अभिलाषे, २वशतायाम्, "स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटा" काव्यप्र०। ३विषभेदे च अमरः ४विषे शब्दच०। ५रहसि त्रि० अमरटीका। "छन्दानुवृत्तिदुःसाधाः सुहृदो विमनीकृताः" माघः। "वरदानात् पितुः कामं छन्दमृत्युरसि प्रभो!" भा० शा० ५०अ०।

**छन्दक** त्रि० छन्दयति संवृणोति रक्षति छदि–ण्वुल्। १रक्षके २वासुदेवे पु०। "वासुदेव! सर्वच्छन्दक! हरिहय! हरिमेध! महायज्ञ"। भा०शा०३४०अ० नारदकृतनारायणस्तवे।

**छन्दःपर्ण** पु० छन्दांसि वेदविहितकर्म्माणि पर्णानीव यस्य। मायामये संसारे। "छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित्" गीता छन्दांसि छादनात् तत्त्ववस्तुप्रावरणात् संसारवन्धनादीनि कर्म्माणि ऋग्यजुःसामवेदविहितानि पर्णानीव यस्य यथा वृक्षस्य छादनार्थानि रक्षणार्थानि च पर्णानि एवं धर्माधर्मोपार्ज्जनेन कर्मभिः संसार वृक्षोरक्ष्यते इति तस्य तथात्वम्।

**छन्दश्चिति** स्त्री ६त० छन्दसां समूहे। तत्र छन्दोभेदे एकादिगुरुज्ञानाय करणसूत्रं लीला० उक्तं यथा "छन्दश्चित्यादौ करणसूत्रं श्लोकत्रयम् "एकाद्येकोत्तराश्रङ्का व्यस्ता भाज्याः क्रमस्थितैः। परः पूर्वेण सङ्गु-

णात्रस्तत्परस्तत्परेण च ॥ एकद्वित्र्यादिभेदाः स्युरिदं साधारणं स्मृतम् । छन्दश्चित्युत्तरे छन्दसुपयोगोऽस्य तद्विदाम् ॥ मूषावहनभेदादौ खण्डमेरौ च शिल्पके । वैद्यके रसभेदीये तन्नोक्तं विस्तृतेर्भयात् । तत्र छन्दश्चित्युत्तरे किञ्चिदुदाहरणम् । “प्रस्तारे मित्र ! गायत्र्याः स्युः पादे व्यक्तयः कति । एकादिगुरवश्चाशु कथ्यतां तत्पृथक् पृथक् । इह हि षडक्षरगायत्रीचरणः अतः षडन्तानां एकाद्येकोत्तराङ्काणां व्यस्तानां क्रमस्थानाञ्च न्यासः

६ ५ ४ ३ २ १

१ २ ३ ४ ५ ६

६ १५ २० १५ ६ १ यथोक्तकरणेन लब्धाः एकगुरुव्यक्तयः । ६ । द्विगुरवः । १५ । त्रिगुरवः। २० । चतुर्गुरवः । १५ । पञ्चगुरवः । ६ । षड्गुरवः । १ । तथैका सर्व्वलघुः । १ । एवमासामैक्यं पादव्यक्तिमितिः । ६४ । एवञ्चतुश्चरणाक्षरसङ्ख्याकानङ्कान् यथोक्तं विन्यस्य एकादिगुरुभेदानानीय तान् सैकानेकीकृत्य जाता गायत्रीवृत्तव्यक्तिसङ्ख्या । १६७७७२१६ । एवमुक्थाद्युत्कृतिपर्य्यन्तं छन्दसां व्यक्तिमितिर्ज्ञातव्या” ।

अधिकं प्रस्तारशब्दे मर्कटीजालशब्दे मेरुशब्दे पताकाशब्दे च द्रष्टव्यम् ।

**छन्दस्** न० छन्दयति असुन् । १वेदे भावे असुन् । २स्वैराचारे ३अभिलाषे च मेदि० । ४कपटे । नियताक्षरवर्णमात्रादिसन्निवेशवशात् ५चतुश्चरणादौ पद्ये । लौकिक तत्संज्ञाभेदाश्च वृत्तरत्नाकरादौ सलक्षणा उक्तास्ते तु तत्तच्छब्दे उक्ता वक्ष्यन्ते च । वैदिकच्छन्दांसि तु सर्वानुक्रमिकायां कात्यायनेन दर्शितानि यथा

“अथ छन्दांसि गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यतिजगतीशक्वर्यतिशक्वर्यष्ट्यत्यष्टिधृत्यतिधृतयः कृतिप्रकृत्याकृतिविकृतिसंकृत्यतिकृत्युत्कृतयः चतुर्विंशत्यक्षरादीनि चतुरुत्तराणि । ऊनाधिकेनैकेन निचृद्भुरिजौ द्वाभ्यां विराट्स्वराजौ । पादपूरणार्थं तु क्षैप्रसंयोगैकाक्षरीभावान् व्यूहेत् । आद्ये तु सप्तके पादविशेषात् संज्ञाविशेषास्तानतुक्रमिष्यामो न एवोदाहरिष्यामो विराड्रूपा विराट्स्थानाश्च बहुला अपि त्रिष्टुभ एवेत्युद्देशः । तत्र दशैकादशद्वादशाक्षराणां वैराजत्रैष्टुभजागता इति संज्ञा अनादेशेऽष्टाक्षराः पादास्तृप्यादाच्चः । प्रथमं छन्दस्त्रिपदा गायत्री । पञ्चकाश्चत्वारः षट्कश्चैकश्चतुर्थश्चतुष्को वा पदपङ्क्तिः । षट्सप्तैकादशा उष्णिग्गर्भा । त्रयः सप्तकाः पाद निचृन्मध्यमः षत्कश्चेद्गतनिचृद्दशकश्चेद्यवमध्या । यस्यास्तु षट्सप्तकाष्टकाः सा वर्धमाना विपरीता प्रतिष्ठा । द्वौ षट्कौ सप्तकश्चेति ह्रसीयसी ।१

द्वितीयमुष्णिक् त्रिपदाऽन्त्यो द्वादशकः । आद्यश्चेत् पुर उष्णिङ् मध्यमश्चेत्ककुप् । त्रैष्टुभजागतचतुष्काः ककुम्न्यङ्कुशिरैकादशिनोः परः षट्कस्तनुशिरा मध्ये चेत्पिपीलिकमध्याद्यपञ्चकस्त्रयोऽष्टका अनुष्टुब्गर्भा । चतुःसप्तकोष्णिगेव ।२

तृतीयमनुष्टुप् । पञ्चपञ्चकाः षट्कश्चैको महापदपङ्क्तिः। जागतावष्टकश्च कृतिः। मध्ये चेदष्टकः पिपीलिकमध्या । नवकयोर्मध्ये जागतः काविराट्। नववैराजत्रयोदशैर्नष्टरूपा। दशकास्त्रयो विराडैकादशका वा ।४

चतुर्थं बृहती तृतीयो द्वादशकः । आद्यश्चेत् पुरस्ताद्बृहती । द्वितीयश्चेन्न्यङ्कुसारिण्युरोबृहती स्कन्धग्रीवी वा । अन्त्यश्चेदुपरिष्टाद्बृहती । अष्टिनोर्मध्ये दशकौ विष्टारबृहती। त्रिजागतोर्ध्वबृहती । त्रयोदशिनोर्मध्येऽष्टकः पिपीलिकमध्या । नवकाष्टकैकादशाष्टिनो विषमपदा । चतुर्नवका बृहत्येव। ५

पञ्चमं पङ्क्तिः पञ्चपदा । अथ चतुष्पदा विराड्दशकाः । अयुजौ जागतौ सतोबृहती युजौ चेद्विपरीताऽऽद्यौ चेत् प्रस्तारपङ्क्तिरन्त्यौ चेदास्तारपङ्क्तिराद्यन्त्यौ चेत् संस्तारपङ्क्तिर्मध्यमौ चेद्विष्टारपङ्क्तिः ।६

षष्ठं त्रिष्टुप् त्रैष्टुभपदा । द्वौ तु जागतौ यस्याः सा जागते जगती त्रैष्टुभे त्रिष्टुप् । वैराजौ जागतौ चाभिसारिणी । नवकौ वैराजस्त्रैष्टुभश्च द्वौ वा वैराजौ नवकस्त्रैष्टुभश्च विराट्स्थानैकादशिनस्त्रयोऽष्टकश्च विराड्रूपा । द्वादशिनस्त्रयोऽष्टकश्च ज्योतिष्मती । यतोऽष्टकस्ततोज्योतिः । चत्वारोऽष्टका जागतश्च महाबृहती । मध्ये जागतश्चेद्यवमध्या आद्यौ दशकावष्टकास्त्रयः पङ्क्त्युत्तरा विराट् पूर्वा वा ।७

सप्तमं जगती जागतपदा । अष्टिनस्त्रयः स्वौ च द्वौ महासतोबृहती । अष्टकौ सप्तकः षट्कौ दशकौ नवकश्च षडष्टका वा महापङ्क्तिः” ।

तत् प्रतिपादकग्रन्थस्य वेदाङ्गत्वं यथोक्तं शिक्षाग्रन्थे

२१।७। "छन्दःपादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते। शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्। तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते" इति।

छन्दोग्रन्थस्य वेदोपयोगिता ऋग्वेदभाष्ये दर्शिता यथा छन्दोग्रन्थोऽप्युपयुज्यते छन्दोविशेषाणां तत्र तत्र विहितत्वात्। "तस्मात् सप्त चतुरुत्तराणि छन्दांसि प्रातरनुवाकेऽनूच्यन्ते" इति ह्याम्नातम्। गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यस्तानि सप्त छन्दांसि। चतुर्विंशत्यक्षरा गायत्री। ततोऽपि चतुर्भिरक्षरैरधिकाष्टाविंशत्यक्षरोष्णिक्। एवमुत्तरोत्तराधिका अनुष्टुबादयोऽवगन्तव्याः। तथान्यत्रापि श्रूयते। "गायत्रीभिर्ब्राह्मणस्य दध्यात्, त्रिष्टुब्भीराजन्यस्य, जगतीभिर्वैश्यस्येति"। तत्र मगणयगणादिसाध्यो गायत्र्यादिविवेकश्छन्दोग्रन्थमन्तरेण न सुविज्ञेयः। किञ्च "यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति। गर्त्तं वा पद्यते। प्र वा मीयते पापीयान् भवति तस्मादेतानि मन्त्रे मन्त्रे विद्यादिति" श्रूयते। तज्ज्ञानाय वेदनाय छन्दोग्रन्थ उपयुज्यते।

३ सामभेदे "छन्दांसि जज्ञिरे तस्मात् यजुस्तस्मादजायत" श्रुतिः छन्दोगः।

छन्दोऽधीते "श्रोत्रियंश्छन्दोऽधीते" पा० अण् वा श्रोत्रियचादेशः। श्रोत्रिय छन्दोऽध्येतरि पक्षे अणन्तम्। छान्दस तत्रार्थे "श्रोत्रियच्छान्दसौ समौ" अमरः। छन्दसा इच्छया निर्म्मितम् यत्। छन्दस्य इच्छया निर्म्मिते त्रि०। छन्दसो व्याख्यानो ग्रन्थः यत् अण् वा। छन्दस्य छान्दस वेदव्याख्यानग्रन्थे। तत्र गायत्र्यादौ छन्दसि "सप्त छन्दांसि क्रतुमेकं तन्वन्ति" भा० व० १३४अ०। "गायत्री छन्दसामहम्" गीता। "छन्दोभिरच्छादयन् यदेभिरच्छादयन् तच्छन्दसां छन्दस्त्वम्" छा० उ०। वेदे "छन्दसि बहुलम्" पा०। "युक्तश्छन्दांस्यधीयीत" मनुः "हिरण्यगर्भो भगवान् यस्य छन्दसा स्तुतः" हरिवं० २२६अ०। "आसीन्महीक्षितामाद्यः प्रणवश्छन्दसामिव" रघुः। इच्छायाम् छन्दस्यः। छन्दस इदम् अण्। छान्दस वेदसम्बन्धिनि त्रि० सर्वच्छन्दसि समार्द्धसमविषमभेदादज्ञानाय लीला० उक्तं यथा

"समादिवृत्तज्ञानाय करणसूत्रं सार्द्धार्य्या। पादाक्षरमितगच्छे गुणवर्गफलं चये द्विगुणे॥ समवृत्तानां सङ्ख्या तद्वर्गो वर्गवर्गश्च। स्वस्वपदोनौ स्यातामर्द्धसमानाञ्च विषमाणाम्॥ उदाहरणम्। समानामर्द्धतुल्यानां विषमाणां पृथक् पृथक्। वृत्तानां वद मे सङ्ख्यामनुष्टुप्छन्दसि द्रुतम्॥ न्यासः। उत्तरगुणः।२। गच्छः। ८। लब्धाः समवृत्तानां सङ्ख्याः। २५६। तथार्द्धसमानाम्। ६५२८०। विषमाणाञ्च। ४२९४९०१७६०। "अङ्घ्रयो यस्य चत्वारस्तुल्यलक्षणलक्षिताः। तच्छन्दःशास्त्रतत्त्वज्ञाः समवृत्तं प्रचक्षते॥ प्रथमाङ्घ्रिसमो यस्य तृतीयश्चरणो भवेत्। द्वितीयस्तुर्य्यवद्वृत्तं तदर्द्धसममुच्यते॥ यस्य पादचतुष्कोऽपि लक्ष्म भिन्नं परस्परम्। तदाहुर्विषमं वृत्तं छन्दःशास्त्रविशारदाः"॥

**छन्दस्तुभ्** पु० छन्दसा पक्षेण स्तुभ्नाति सूर्य्यम् स्तुभ–क्विप्। गरुडापत्यभेदे तस्य तत्कथा "पितामह उवाच। एष लोकविनाशाय रविः क्रुद्धस्तु समुद्यतः। प्रदहन्नेव हि लोकान् स भस्मराशीकरिष्यति। तस्य प्रतिविधानञ्च विहितं पूर्व्वमेव हि। कश्यपस्य सुतो धीमानरुण इत्यभिविश्रुतः। महाकायो महातेजाः स स्थास्यति पुरो रवेः। करिष्यति च सारथ्यं तेजश्चास्य हरिष्यति। लोकानां स्वस्ति चैवं स्यादृषीणाञ्च दिवौकसाम्। प्रमतिरुवाच। ततः पितामहाज्ञप्तः सर्वं चक्रे तदाऽरुणः। उदितश्चैव सविताप्यरुणेन समावृतः" भा० आ० २४अ०।

**छन्दु** त्रि० छदि–उण्। उपच्छन्दयितरि। "क्वा छन्दुर्भवति हूर्य्यतः" ऋ० १०५४,४। "छन्दुरुपच्छन्दयिता" भा०।

**छन्दोग** पु० छन्दः सामवेदं गायति गै–क। "सामवेदज्ञे "दद्यान् भोजयेत् श्राद्धे बह्वृचं वेदपारगम्। शाखान्तगमथाध्वर्य्युं छन्दोगन्तु समाप्तिकम्" मनुः। "छन्दोगैर्विविधैः पृथक्" गीता। छन्दोगपरिशिष्टम्।

**छन्दोदेव** पु० ब्राह्मण्यां नापितेन जाते मतङ्गनामके चण्डालभेदे तपसा इन्द्रदत्तवरेण छन्दोदेवनामतां प्राप्ते स्त्रीणां पूज्ये देवभेदे तत्कथा भा० आनु० २७अ०। "ब्राह्मण्यां वृषलेन त्वं मत्तायां नापितेन ह। जातस्त्वमसि चण्डालो ब्राह्मण्यं तेन तेऽनशत्" ७अ० इत्युपक्रमे तेन निर्व्विद्य तपश्चरन्तं तं प्रति इन्द्रस्य वरदानादि "नूनं दैवं न शक्यं हि पौरुषेणातिवर्त्तितुम्। तदर्थं यत्नवानेवं न लभे विप्रतां विभो!। एवं गते तु धर्म्मज्ञ। दातुमर्हसि मे वरम्। यदि तेऽहमनुग्राह्यः किञ्चिद्वा

सुकृतं मम। वैशम्पायन उवाच। इत्युक्ते तदा प्राह ततस्तं बलवृत्रहा। चोदितस्तु महेन्द्रेण मतङ्गः प्राब्रवीदिदम्। यथा कामविहारी स्यां कामरूपी विहङ्गमः। ब्रह्मक्षत्राविरोधेन पूजाञ्च प्राप्नुयामहम्। यथा ममाक्षया कीर्त्तिर्भवेच्चापि पुरन्दर!। कर्त्तुमर्हसि तद्देव! शिरसा त्वां प्रसादये। शक्र उवाच। छन्दोदेव इति ख्यातः स्त्रीणां पूज्यो भविष्यसि। कीर्त्तिश्च तेऽतुला वत्स! त्रिषु लोकेषु यास्यति। एवं तस्मै वरं दत्त्वा वासवोऽन्तरधीयत। प्राणांस्त्यक्त्वा मतङ्गोऽपि संप्राप्तः स्थानमुत्तमम्" भा०अनु० २९अ०।

**छन्दोभाषा** स्त्री छन्दसां भाषा। १छन्दसां कथने ततोभवे तद्व्याख्याने ग्रन्थेऽर्थे ऋगयनादि० अण्। छान्दोभाष तत्रभवे तद्व्याख्याने ग्रन्थे च। २उपाङ्गशास्त्रभेदे "उपाङ्गानि शृणु प्रभो!" इत्युपक्रमे "प्रतिपदमनुपदं छन्दोभाषासमन्वितम्। मीमांसान्यायतर्काश्च उपाङ्गं परिकीर्त्तितम्" हेमा० दा० ख० देवीपु०।

**छन्दोम** पु०त्रिरात्रे अहीने यागभेदे "त्र्यहाः पञ्च गर्गादि छन्दोमान्तर्वैकुपराकाः" कात्या० श्रौ० २३।२।८। त्र्यहास्त्रिवृताः पञ्च अहीनाः "द्वितीये त्रिवृतोऽतिरात्राःसर्वे राज्यकामस्य" ८।१०। सू०। "त्रिवृतत्रिवृत्स्तोमयुक्ताः अतिरात्राः (सर्वे गर्गादयः) पञ्च राज्यकामस्य क्रतवो भवन्ति" कर्कः।

**छन्दोमदशाह** पु० दशाहसाध्ये यागभेदे "छन्दोमदशाहः पशुकामस्य" कात्या० श्रौ०। २३।५।२८। छन्दोमदशाह इति संज्ञा स पशुकामस्य भवति" कर्कः। तत्राहान्याह। "पृष्ठ्यवत्त्वाच्चत्वारश्छन्दोमाः" २६स्व०। "चतुर्थे दशरात्रे पृष्ठ्यावत्त्वाद्द्वे द्वादशाहिकाश्चत्वारश्छन्दोमा भवन्ति तत्र पूर्वे ष डहश्चत्वारष्टत्राःपञ्चाहाः ततश्चत्वारश्छन्दोमाः ततोदशमोविश्वजिदतिरात्रः" स० व्या०।

**छन्दोमान** न० ६त०। छन्दसां माने ततो भवे व्याख्याने च ऋगयनादि० अण्। छान्दोमान तत्र भवे तद्व्याख्याने च।

**छन्दोविचिति** स्त्री ६त०। छन्दसां गायत्र्यादीनां १समुदाये। छन्दसां विचितिर्विचयोऽत्र। छन्दःशास्त्रे च। "छन्दोविचितिरित्येवं षडङ्गोवेदउच्यते" ततः ऋगयना० भवे व्याख्याने चार्थे अण्। छान्दोविचित तद्भवे तद्व्याख्याने च।

**छन्न** त्रि० चुर० छद–क्त नि०। १आच्छादिते। २निर्ज्जने १रहसि न० "छन्नेष्वपि स्पष्टतरेषु यत्र" माघः। पक्षेछादित तत्रार्थे त्रि०।

**छप** गतौ वा चुरा० उभ० पक्षे भ्वा० पर० सक० सेट् इदित्। छम्पयति ते छम्पति अचच्छम्पत् त अच्छम्पीत्। चच्छम्प।

**छम** भक्षणे भ्वा० पर० सक० सेट्। छमति अच्छमीत्। उदित् छमित्वा–छान्त्वा छान्तः। छमण्डः [दिकोषः]

**छमण्ड** पु० छम–अण्डच्। मातापितृविहीने (छोँड) उणा-

**छर्द्द** वमने चुरा० उभ० सक० सेट्। छर्दयति ते अचच्छर्दत् त। छर्दितः। छर्द्दिः।

**छर्द्द** न०छर्द–भावे अच्। वमने हेम०। क्लीवत्वमभिधानात्।

**छर्द्दन** न० छर्द–भावे ल्युट्। १वमने। हेमच०। "छर्दनं दध्युदश्विद्भ्यामथ वा तण्डुलाम्बुना" सुश्रु०। कर्त्तरि ल्यु। २वमनकर्त्तरि त्रि०। ३अलम्बुषशाखे पु०। हेतौ णिच्–ल्यु। ४निम्बवृक्षे पु०हेमच० ५मदनवृक्षे भावप्र०।

**छर्द्दापनिका** स्त्री छर्दं वमनमापयति आपि–ल्यु स्वार्थे क अत इत्त्वम्। कर्कट्याम् राजनि०।

**छर्द्दि** स्त्री छर्दयति छर्द–हेतौ णिच–इन्। वमनरोगे तन्निदानादि च सुश्रुते उक्तं यथा।

"अथातश्छर्द्दिप्रतिषेधमध्यायं व्याख्यास्यामः। अतिद्रवैरतिस्निग्धैरहृद्यैर्लवणैरपि। अकाले चातिमात्रैश्च तथा ऽसात्म्यैश्च भोजनैः। श्रमात् भयात्तथोद्वेगादजीर्णात् क्रिमिदोषतः। नार्य्याश्चापन्नसत्त्वायास्तथाऽतिद्रुतमश्नतः। बीभत्सैर्हेतुभिश्चान्यैर्द्रुतमुत्क्लेशितो बलात्। छादयन्नाननं वेगैरर्द्दयन्नङ्गभञ्जनैः। निरुच्यते छर्द्दिरिति दोषो वक्त्रं प्रधावितः। दोषानुदीरयन् वृद्धानुदानो व्यानसङ्गतः। ऊर्द्ध्वमागच्छति भृशं विरुद्धाहारसेविनाम्। हृल्लासोद्गाररोधौ च प्रसेको लवणस्तनुः। द्वेषोऽन्नपाने च भृशं वमीनां पूर्व्वलक्षणम्। प्रच्छर्द्दयेत् फेनिलमल्पमल्पं शूलार्द्दितोऽभ्यर्द्दितपार्श्वपृष्ठः। श्रान्तः सघोषं बहुशः कषायं जीर्णेऽधिकं साऽनिलजा वमिस्तु। योऽम्लं भृशं वा कटुतिक्तवक्त्रः पीतं सरक्तं हरितं वमेद्वा। सदाहचोषज्वरवक्त्रशोषमूर्च्छान्विता पित्तनिमित्तजा सा। यो हृष्टरोमा मधुरं प्रभूतं शुक्लं हिमं सान्द्रकफानुविद्धम्। अभक्तरुग्गौरवसादयुक्तोवमेद्धमी सा कफकोपजा स्यात्। सर्व्वाणि रूपाणि भवन्ति यस्यां सा सर्व्वदोषप्रभवा मता तु। बीभत्सजा दौर्हृदजाऽऽमजा च याऽसात्म्यतोया क्रिमिजा च या हि। सा पञ्चमी तां च विभावयेत् दोषोच्छ्रयेणैव यथोक्तमादौ।

आमाशयोत्क्लेशभवाश्च सर्व्वास्तस्माद्धितं लङ्घनमेव तासु। शूलहृल्लासबहुला कृमिजा च विशेषतः। कृमिहृद्रोगतुल्येन लक्षणेन च लक्षिता। क्षीणस्योपद्रवैर्युक्तां शास्रक्तयां सतन्द्रिकाम्। छर्दिं प्रसक्तां कुशलो नारभेत चिकित्सितुम्। वमीषु बहुदोषासु छर्दनं हितमुच्यते। विरेचनं वा कुर्व्वीत यथादोषोच्छ्रयं भिषक्। संसर्गीश्चानुपूर्व्वेण यथास्वं भेषजाव तान्। लघूनि परिशुष्काणि सात्म्यान्यन्नानि वाऽऽचरेत्। यथास्वञ्च कषायाणि ज्वरघ्नानि प्रयोजयेत्"।

"कासः श्वासो ज्वरो हिक्का तृष्णा वैचित्त्यमेव च। हृद्रोगस्तमकश्चैव ज्ञेयाश्छर्द्देरुपद्रवाः" इति माधवकरः। वा ङीप्। तत्रार्थे "आमाशयोत्क्लेशभवा हि सर्व्वाश्छर्द्योमता लङ्घनमेव तस्मात्" सुश्रुतः।

**छर्दिका** स्त्री छर्द-णिच् ण्वुल्। १उत्कासिकायां, २विष्णुक्रान्तायाञ्च। धात्वर्थे ण्वुल्। ३वमने। राजनि०। स्वार्थे क पृषो०। छर्दीकाप्यत्र। [च शब्दच०।

**छर्दिकारिपु** स्त्री पु० ६त०। १सूक्ष्मैलायाम्। २छर्दिनाशके

**छर्दिघ्न** पु० छर्दिं हन्ति-हन-टक्। १निम्बभेदे। २छर्दिनाशके त्रि० रत्नमाला स्त्रियां ङीप्।

**छर्दिस्** स्त्री छर्द-भावे इसि। १वमने. २कर्त्तरि इसि। ३वमिरोगे ३उद्गारे च। छर्द-कर्म्मणि इसि। ४गृहे निघ०। "यातं छर्दिष्पा उत नः परस्पाः" ऋ०८।९।११। "छर्दिरिति गृहनाम तस्य पालकाः" भा०। "अग्निष्टाभिपातु महा स्वस्त्या छर्दिषा" यजु० १३।१९। "छर्दिषा गृहेण" वेददी०। छृद-दीप्तौ इसि। ४तेजसि "वायुष्टाभिपातु मह्या स्वस्त्या छर्दिषा" यजु० १४।१२। "छर्दिषा तेजोविशेषेण" वेददी०।

**छल** न० छल-अच्। १स्वरूपाच्छादने २व्याजे ३यथार्थगूहने ४कूटयुद्धादिना तन्मर्य्यादायाश्चलने ५शाठ्ये ६कापट्ये न्यायमतसिद्धे कार्य्यान्तरेण प्रयुक्तस्य वाद्युक्तशब्दस्यार्थान्तरकल्पनया प्रतिवादिना दत्ते ७दूषणभेदे तल्लक्षणभेदादिकं गौ० सू० वृत्तौ दर्शितम्। यथा "विवातोऽर्थविकल्पोपपत्त्या छलम्। १। तत् त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलञ्चेति। २। अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम्। ३। सम्भवतोऽर्थस्यातिसामान्ययोगादसम्भूतार्थकल्पना सामान्यच्छलम्। ४। धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम्। ५। वाक्छलमेवोपचारच्छलं तदविशेषात्। ६। न तदर्थान्तरभावात्। ७। अविशेषे वा किञ्चित्साधर्म्यादेकच्छलप्रसङ्गः। ८। गौ० सू० "क्रमप्राप्तं छलं लक्षयति। अर्थस्य वाद्यभिमतस्य यो विकल्पो विरुद्धः कल्पो अर्थान्तरकल्पनेति यावत् तदुपपत्त्या युक्तिविशेषेण यो वचनस्य वाद्युक्तस्य विघातो दूषणं तच्छलमित्यर्थः वक्तृतात्पर्य्याविषयार्थकल्पनेन दूषणाभिधानमिति फलितं तात्पर्य्याविषयत्वं विशेष्ये विशेषणे संसर्गे वा यथा नेपालादागतोऽयं नवकम्बलवत्त्वादित्यत्र नवसङ्ख्यापरत्वकल्पनयाऽसिद्ध्यभिधानं, प्रमेयं धर्मत्वादित्यत्र पुण्यार्थकल्पनया भागासिद्ध्यभिधानम् वह्निमान् धूमादित्यत्र धूमावयवे व्यभिचाराभिधानम्।१ वृ० लक्षितं छलं विभजते। २। तत्र वाक्छलं लक्षयति। यत्र शक्यार्थद्वये सम्भवति एकार्थनिर्णायकविशेषाभावादनभिप्रेतशक्यार्थकल्पनेन दूषणाभिधानं तद्वाक्छलं, लक्षणन्तु शक्त्या एकार्थशाब्दबोधतात्पर्य्यकशब्दस्य शक्यार्थान्तरतात्पर्य्यकत्वकल्पनया दूषणाभिधानं यथा नेपालादागतोऽयं नवकम्बलवत्त्वादित्युक्ते कुतोऽस्य नवसङ्ख्यकाः कम्बला इति एवं गौर्विषाणीत्युक्ते कुतोगजस्य शृङ्गं श्वेतोधावतीति श्वेतरूपवदभिप्रायेणोक्ते श्वेतो न धावतीत्यभिधानमित्यादिकमुह्यम् ॥ ३ वृ०। सामान्यछलं लक्षयति। सामान्यविशिष्टसम्भवदर्थाभिप्रायेणोक्तस्य अतिसामान्ययोगादसम्भवदर्थकत्वकल्पनया दूषणाभिधानं सामान्यच्छलम्। यथा ब्राह्मणोऽयं विद्याचरणसम्पन्न इत्युक्ते ब्राह्मणत्वेन विद्याचरणसम्पदं साधयतीति कल्पयित्वा परो वदति कुतो ब्राह्मणत्वेन विद्याचरणसम्पन्नत्वे व्यभिचारात् ॥ ४ वृ०। उपचारच्छलं लक्षयति। धर्मशब्दस्यार्थेन विकल्पो विविधः कल्पः शक्तिलक्षणान्यतररूपस्तया शक्तिलक्षणयोरेकतरवृत्त्या प्रयुक्ते शब्दे तदपरवृत्त्या यः प्रतिषेधः स उपचारच्छलं यथा मञ्चाः क्रोशन्ति नीलो घट इत्यादौ मञ्चस्था एव क्रोशन्ति न तु मञ्चाः एवं घटस्य कथं नीलरूपाभेदः। एवम् अहं नित्य इति शक्त्या प्रयुक्ते अमुकस्मादुत्पन्नस्त्वं कथं नित्य इति प्रतिषेधोऽप्युपचारच्छलम् वाद्यभिप्रेतार्थस्यादूषणेन छलस्यासदुत्तरत्वम्। न च श्लिष्टलाक्षणिकप्रयोगाद्वादिनएवापराधः स्यादिति वाच्यं तत्तदर्थबोधकतया प्रसिद्धस्य शब्दस्य प्रयोगे वादिनोऽनपराधात् अन्यथा पर्वतोवह्निमानित्युक्ते पर्वतोऽयं कथमवह्निमानित्यादिदूषणेनानुमानाद्युच्छेदः स्यात् ॥ ५ वृ०। प्रसङ्गाच्छलं

परीक्षितुं पूर्वपक्षयति। शब्दस्यार्थान्तरकल्पनाऽविशेषाद्वाक्छलमेवोपचारच्छलं स्यादिति द्वित्वमेव न तु त्रित्वमिति शङ्कार्थः ॥ ६ सू० ॥ समाधत्ते। उपचारच्छलस्य वाक्छलाभेदो न, तयोरर्थान्तरभावात् भिन्नत्वात् भिन्नतया प्रमाणसिद्धत्वादिति फलितार्थः। पूर्व्वोक्तभेदकधर्म्मेण भेदसम्भवेऽपि यत्किञ्चिद्धर्मेणाभेदे सामान्यधर्मेणाभेदस्य सर्व्वत्र सम्भवाद्विभागः कुत्रापि न स्यादिति। ७ सू०। विपक्षे बाधकमभिप्रेत्याह यत्किञ्चिद्धर्मादविशेषे किञ्चित्साधर्म्याच्छलत्वादिरूपाच्छलस्यैक्यं स्यान्न तु त्वदभिमतं द्वित्वमपीति भावः" ॥ ८ वृत्तिः "आक्षिप्तकेतुकुथसैन्यगजच्छलेन" माघः। "धर्म्मेण व्यवहारेण छलेनाचरितेन च। प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च" मनुः। "भुवनहितच्छलेन यम्" भट्टिः "अध्यारुरोहेव रजश्छलेन" रघुः। "छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः" याज्ञ०। "भूतं तत्त्वार्थसम्बद्धं प्रमादाभिहितं छलम्" नारदोक्ते ८प्रमादाभिहिते च ९छलकारिणि त्रि०। स्वार्थे क। तत्रार्थे "आवाभ्यां (मधुकैटभाभ्याम्)छाद्यते विश्वं रजसा तमसा तथा। रजस्तमोमयावावां यतीनां दुःखलक्षणौ। छलकौ धर्म्मशीलानां दुस्तरौ सर्व्वदेहिनाम्" हरिवं२०१अ०। १०नाटकप्रभेदव्वीथ्यङ्गभेदे न० "वीथ्यामेको भवेदङ्कः" इत्युपक्रमे "अस्यास्त्रयोदशाङ्गानि निर्दिशन्ति मनीषिणः। उद्घात्यकावलगितेत्यादिना विभज्य सा० द० लक्षितं यथा "प्रियाभैरप्रियैर्वाक्यैर्विलोभ्य छलना छलम्" "यथा वेणीसं भीमार्जुनौ" "कर्त्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रम्। कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः क्वास्ते? दुर्य्योधनोऽसौ कथयतु न रुषा द्रष्टुमभ्यागतौ स्वः"।

**छल** नामधातुः छल+कृतौ-णिच् सक० सेट्। छलयति "छलयसि विक्रमणे बलिमद्भुत वामन!" गीतगो० "द्यूतं छलयतामस्मि" गीता।

**छलन** न० छल+कृतौ णिच्–भावे ल्युट्। १प्रतारणे "यथापरं यथायोगं न च स्यात् छलनं पुनः" भा० भी० १अ०। युच्। २वञ्चनायां स्त्री शब्दार्थचि०। "छलना छलम्" सा०द०।

**छलिक** न० नाटकभेदे अलङ्कारशब्दे ३९३पृ० उक्ते दृश्यकाव्यभेदे दृश्यम्। "देवि! शर्म्मिष्ठायाः कृतिं चतुष्पदीम् छलिकं दुष्प्रयोज्यमुदाहरन्ति" मालविका०।

**छलित** छल+नामधा० कर्म्मणि क्त। १प्रतारिते "छलितरामं नाटकम्। भावे क्त। २प्रतारणे न०।

**छल्ली** स्त्री छद–क्विप् तां लाति ला–क गौरा०ङीष्। १वल्कले (छाल) शब्दरत्ना० २लतायाम् ३सन्ततौ च। मेदि० ला–वा० कि। छल्लिरपि तत्रार्थे।

**छवि (वी)** स्त्री छ्यति असारं छिनत्ति तमो वा छो–वि–क्विन्न वा ङीप्। १शोभायां २कान्तौ च अमरः। "आपाण्डुरसुखच्छविः" रघुः। "आपाण्डुरीभूतमुखच्छवीनाम् कुमा०।

**छष** वधे भ्वा० उभ० सक० सेट्। छषति ते अच्छा(च्छ)षीत् अच्छषिष्ट। चच्छाष चच्छषे।

**छा** पु० छो–क्विप्। १पारदे एकाक्षरको० २छेदनकर्त्तरि [त्रि०।

**छाग** पुंस्त्री छो–गन् स्वनामख्याते पशुभेदे अमरः। जातित्वात् स्त्रियां ङीष्। २पुरोडाशे न० शब्दार्थचि०। छागस्या दुग्धम् अण्। ३छाग्या दुग्धे न० छागस्येदम् अण्। ४छागसम्बन्धिनि त्रि० स्त्रियां ङीप्। छागस्य लक्षणादिकं वृ० सं० दर्शितं यथा

"छागशुभाशुभलक्षणमभिधास्ये नवदशाष्टदन्तास्ते।
धन्याः स्थाप्या वेश्मनि सन्त्याज्याः सप्तदन्ता ये।
दक्षिणपार्श्वे मण्डलमसितं शुक्लस्य शुभफलं भवति।
ऋष्यनिभकृष्णलोहितवर्णानां श्वेतमपि शुभदम्।
स्तनवदवलम्बते यः कण्ठेऽजानां मणिः स विज्ञेयः।
एकमणिः शुभफलकृद्धन्यतमा द्वित्रिमणयो ये।
मुण्डाः सर्वे शुभदाः सर्वसिताः सर्वकृष्णदेहाश्च।
अर्धासिताः सितार्धा धन्याः कपिलार्धकृष्णाश्च।
विचरति यूथस्याग्रे प्रथमं चाम्भोऽवगाहते योऽजः।
स शुभः सितमूर्धा वा मूर्धनि वा टिक्किका यस्य।
स पृषतकण्ठशिरा वा तिलपिष्टनिभश्च ताम्रदृक् शस्तः।
कृष्णचरणः सितो वा कृष्णो वा श्वेतचरणो यः।
यः कृष्णाण्डः श्वेतो मध्ये कृष्णेन भवति पट्टेन।
यो वा चरति सशब्दं मन्दं च स शोभनश्छागः।
ऋष्यशिरोरुहपादो यो वा प्राक्पाण्डुरोऽपरे नीलः।
स भवति शुभकृच्छागः श्लोकश्चाप्यत्र गर्गोक्तः। कुट्टकः कुटिलश्चैव जटिलो वामनस्तथा। ते चत्वारः श्रियः पुत्रा नालक्ष्मीके वसन्ति ते। अथाप्रशस्ताः खरसदृशनादाः प्रदीप्तपुच्छाः कुनखा विवर्णाः। निकृत्तकर्णा द्विपमस्तकाश्च

भवन्ति ये चासिततालुजिह्वाः । वर्णैः प्रशस्तैर्मणिभिश्च युक्ता मुण्डाश्च ये ताम्रविलोचनाश्च । ते पूजिता वेश्मसु मानवानां सौख्यानि कुर्वन्ति यशः श्रियं च" । बलौ तस्य शुभाशुभत्वं युक्तिकल्पतरौ दर्शितं यथा "तेषां शुभाय निर्दिष्टं पशुरस्तु बलौ । ये कृष्णाः शुचयश्छागाः पशवोऽन्ये तथैव च । देवजातिभिरुत्सृज्यास्ते सर्वार्थसिद्धये । ये पीता हरिता वापि नरजातेरुदीरिताः । ये शुक्लाश्च महान्तो वा रक्ता जातेः शुभप्रदाः । यो मोहादथ वाऽज्ञानाद्बलिमन्यं प्रयच्छति । वध एव फलं तस्य नान्यत् किञ्चित् फलं भवेदिति" । तन्मांसगुणा भावप्र० उक्ता यथा "छागलो बर्करश्छागो बस्तोऽजः छेलकः स्तुभः । अजा छागी स्तुभा चापि छेलिका च गलस्तनी । छागमांसं लघु स्निग्धं स्वादुपाकं त्रिदोषनुत् । नातिशीतमदाहि स्यात् स्वादु पीनसनाशनम् । परं बलकरं रुच्यं बृंहणं वीर्य्यवर्द्धनम् । अजाया अप्रसूताया मांसं पीनसनाशनम् । शुष्ककासेऽरुचौ शोषे हितमग्नेश्च दीपनम् । अजातश्च बालस्य मांसं लघुतरं स्मृतम् । हृद्यं ज्वरहरं श्रेष्ठं सुखदं बलदं स्मृतम् । मांसं निष्कुषिताण्डस्य (खासि) छागस्य कफकृत् गुरु । स्रोतःशुद्धिकरं बल्यं मांसदं वातपित्तनुत् । वृद्धस्य वातलं रूक्षं तथा व्याधिमृतस्य च । ऊर्द्ध्वजत्रुविकारघ्नं छागमुण्डं रुचिप्रदम् ।" तद्दुग्धादिगुणास्तत्रोक्ता यथा "छागं कषायं मधुरं शीतं ग्राहि पयो लघु । रक्तपित्तातिसारघ्नं क्षयकासज्वरापहम् । अजानां लघुकायत्वात्तथानाद्व्यनिषेवणात् । नात्यम्बुपानाद्व्यायामात् सर्वव्याधिहरं पयः । आजं दध्युत्तमं ग्राहि लघु दोषत्रयापहम् । शस्यते श्वासकासार्शःक्षयकार्श्येषु दीपनम् । तद्घृतगुणा घृतशब्दे २७९८ पृ० दृश्याः । तन्मूत्रगुणाः "गोजाविमहिषीणां तु स्त्रीणां मूत्रं प्रशस्यते । खरोष्ट्रेभनराश्वानां पुंसां मूत्रं हितं स्मृतम् ।" "अनादेशे पशुश्छागः" ति० त० "मात्स्यहारिणकौरभ्रशाकुनच्छाग...र्षभैः" याज्ञ० । "मासांश्छागमांसेन" मनुः "अनादेशे यज्ञे स एव पशुशब्दवाच्यः यथाह कात्या० श्रौ० ६ ३।२०। "छागो मन्त्राम्नानात्" सू० । "अजं पशुमुपाकरोति होता यक्षदश्विनौ छागस्येत्यादिषु मन्त्रेषु छागस्याम्नानात् तथा "अग्नीषोमाभ्यां छागस्य वपायै मेदसोऽनुब्रूहीति" यदि च छागो याग- साधनं भवति तदा अयं मन्त्रः संगतार्थो भवति नान्यथा । पुनः कीदृशम् । "पन्नदम्" सू० । "पन्नदो जातदन्त इति निगमेणूक्तम्" । "अव्यङ्गम्" सू० । विगतमङ्गं चक्षुःकर्णादिकं यस्यासौ व्यङ्गः अन्यूनाङ्गम् शाखान्तरात्" कर्कः "वायव्यं श्वेतमालभेत" श्रुतौ छाग एवालभ्यः "छागो वा मन्त्रवर्णात्" जै० सू० तथा निर्णयात् ।

**छागण** पु० छया छादनेन गण्यते गण–कर्मणि अच् । छगण+स्वार्थे अण्–वा । करीषाग्नौ त्रिका० ।

**छागभोजिन्** पु० छागं भुङ्क्ते भुज–णिनि । १वृके राजनि० । २छागमांसभक्षके त्रि० स्त्रियां ङीप् ।

**छागमय** न० छाग+मयट् । स्कन्दस्य षष्ठे वक्त्रे "षष्ठं छागमयं वक्त्रं स्कन्दस्यैवेति विद्धि तत् । षट्शिरोऽभ्यन्तरं राजन् ! नित्यं मातृगणार्चितम् । "षण्मुखानां प्रवरं तस्य शीर्षाणामिह शब्द्यते । शक्तिं येनासृजद्दिव्याम् भद्रशाख इति स्म ह" भा० व० २२७ अ० ।

**छागमुख** पु० छागस्य मुखमिव मुखमस्य । १कुमारानुचरभेदे २कुमारे कार्त्तिकेये च तस्य षष्ठशिरसश्छागतुल्याकारत्वात् तथात्वम् "कुमारास्ते विशाखञ्च पितृत्वे समकल्पयन् । स भूत्वा भगवान् संख्ये रक्षंश्छागमुखस्तदा" भा० व० २२७ अ० ।

**छागमित्र** पु० छागस्य मित्रम् । देशभेदे तत्र भवः काश्या० ठञ् ञिठ् वा इति । छागमित्रिक तद्भवे त्रि० स्त्रियां ठञि ङीप् ञिठि टाप् ।

**छागरथ** पु० छागो रथोऽस्य । छागवाहने वह्नौ हेमच० ।

**छागल** पु० छगल एव प्रज्ञा० अण् । १छागे पशुभेदे । छगलस्यार्षेगोत्रापत्यम् अण् । २आत्रेये ऋषिभेदे आत्रेयभिन्ने तु छागलिरित्येव छगलशब्दे दृश्यम् । स्वार्थे क । तत्रार्थे संज्ञायां कन् । "श्वेतं सुपाकं समदीर्घवृत्तं निःशल्कलं छागलकं वदन्ति । गले द्विकण्टः किल तस्य पृष्ठे कण्टः सुपथ्यो रुचिदो बलप्रदः" राजनि० उक्ते ४मत्स्यभेदे

**छागलाद्यघृत** न० चक्रदत्तोक्ते छागमांसपक्वे घृतभेदे यथा "छागमांसतुलां गृह्य साधयेज्जलपाम्भसि । पादशेषेण तेनैव घृतपस्थं विपाचयेत् । ऋद्धिवृद्धी च मेदे द्वे जीवकर्षभकौ तथा । काकोली क्षीरकाकोलीपृथक् कल्कैः पलोन्मितैः । सम्यक् सिद्धे त्ववतार्य्य शीते तस्मिन् प्रदापयेत् । शर्करायाः पलान्यष्टौ मधुनः कुडवं क्षिपेत् । पलं पलं पिबेत् प्रातर्यक्ष्माणं हन्ति

दुर्ज्जयम्। क्षतक्षयञ्च कासञ्च पार्श्वशूलमरोचकम्। स्वरक्षयमुरोरोगं श्वासं हन्यात् सुदारुणम्”।
“तोयद्रोणार्द्धितये मांसं छागलस्य पलशतं पक्त्वा। जलमष्टांशं सुकृतं तस्मिन् विपचेद् घृतं प्रस्थम्। कल्केन जीवनीयानां कुड़वेन तु मांससर्पिरिदम्। पित्तानिलं निहन्यात् तज्जानपि रसकयोजितं पीतम्। श्वासकासायुषौ यक्ष्माणं पार्श्वहृद्रुजां घोराम्। अध्वव्यवायशोषं शमयति चैवापरं किञ्चित्। छागशकृद्रसमलक्षीरैर्दध्ना च साधितं सर्पिः। सक्षारं यक्ष्महरं कासश्वासोपशान्तये परमम्”। भैषज्यरत्नावल्यां विशेषो यथा “आजं चर्म्मविनिर्मुक्तं त्यक्तश्टङ्गनखादिकम्। पञ्चमूलीद्वयञ्चैव जलद्रोणे विपाचयेत्। तेन पादावशेषेण घृतप्रस्थं विपाचयेत्। जीवनीयैः सयष्ट्याह्वैः क्षीरञ्चैव शतावरी। छागलाद्यमिदं नाम्ना सर्ववातविकारनुत्। अर्द्दिते कर्णमूले च वाधिर्य्ये मूकमिन्मिने। जड़गद्गदपङ्गूनां खञ्जे गृध्रसिकुब्जयोः। अपतानेऽपतन्त्रे च सर्पिरेतत् प्रशस्यते। पृथगष्टौ तुलां पञ्चमूलछन्दाजमांसयोः। निःक्वाथ्य सलिलद्रोणे क्वाथे पादावशेषिते”। “छागमांसतुलां गृह्य दशमूल्याः पलं शतम्। अश्वगन्धपलशतं वाट्यालकशतं तथा। घृताढकं पचेत्तोयैश्चतुर्भागावशेषितैः। क्षीरं स्नेहसमं दद्यात् शतावर्य्या रसं तथा। ताम्रपात्रे दृढ़े चैव शनैर्मृद्वग्निना पचेत्। अस्यौषधस्य कल्कस्य प्रत्येकं शुक्तिसम्मितम्। जीवन्ती मधुकं द्राक्षा काकोल्यौ नीलमुत्पलम्। मुस्तं सचन्दनं रास्ना पर्णिनीद्वय शारिवे। मेदे द्वे च तथा कुष्ठं जीवकर्षभकौ शटी। दार्व्वी प्रियङ्गुः त्रिफला नतं तालीशपद्मकौ। एलापत्रं वरी नागजातीकुसुम धान्यकम्। मञ्जिष्ठा दाड़िमं दारु रेणुकं शैलबालुकम्। विड़ङ्गं जीरकञ्चैव पेषयित्वा विनिःक्षिपेत्। वस्त्रपूते च शीते च शर्कराप्रस्थसंयुतम्। निधापयेत् स्निग्धभाण्डे आर्द्रे वा भाजने शुभे। अस्यौषधस्य सिद्धस्य दृष्टा वीर्य्यमतःपरम्। देवदेवं नमस्कृत्य संपूज्य गणनायकम्। पिबेत् पाणितलं तस्य व्याधिं वीक्ष्यानुपानतः। सर्ववातविकारेषु अपस्मारे विशेषतः। उन्मादे पक्षघाते च आध्माने कोष्ठनिग्रहे। कर्णरोगे शिरोरोगे बाधिर्य्ये चापतन्त्रके। भूतोन्मादे च गृध्रस्यां मोह्नारे चाक्षिपातजे। पार्श्वशूले च हृच्छूले वाह्यायामार्द्दिते तथा। वातकण्टकहृद्रोगमूत्रकृच्छ्रे सपङ्गुके। क्रोष्टुशीर्षे तथा खञ्जे कुब्जे चाध्मानमिन्मिने। अपतानेऽन्तरायामे रक्तपित्ते तथोद्र्गमे। अानाहेऽर्शोविकारेषु चातुर्थकज्वरेऽपि च। हनुग्रहे तथा शोषे क्षोभे चैवापबाहुके। दन्तापतानके भग्ने दाहे चाक्षेपके तथा। जीर्णज्वरे विषे कुष्ठे शेफस्तम्भे मदात्यये। आढ्यवातेऽग्निमान्द्ये च वातरक्तगदेषु च। एकाङ्गरोगिणे चैव तथा सर्वाङ्गरोगिणे। हस्तकम्पे शिरःकम्पे जिह्वाकम्पे जड़े श्रमे। क्षोणेन्द्रिये नष्टशुक्रे शुक्रनिःसरणे तथा। स्त्रीणां वातासृपाते च पटले चाक्षिस्पन्दने। एकाङ्गस्पन्दने चैव सर्वाङ्गस्पन्दने तथा। नागादिजनिते वाते स्त्रीणामप्रसवेऽहेतुके। आभिचारिकदोषे च धनसन्तापसम्भवे। ये वातप्रभवा रोगा ये च पित्तसमुद्भवाः। शिरोमध्यगता ये च जङ्घापार्श्वादिसंस्थिताः। मात्स्यघाताभिभूतस्य शिशुर्यश्च विशुष्यति। प्रक्षीणबलमांसस्य न वर्त्मगमनक्षमः। घृतेनानेन सिध्यन्ति वज्रसङ्क्रिरिवासुरान्। निहन्ति सकलान् रोगान् घृतं परमदुर्लभम्। रसायनं वह्निबलप्रदञ्च वपुःप्रकर्षं विदधाति रूपम्। दन्तादलेन्द्रेण समानतेजा दीर्घायुषं पुत्रशतं करोति। स्त्रीणां शतं गच्छति वातिरेकं न याति तृप्तिं सरसः समाङ्गः। अपुत्रिणी पुत्रशतं करोति शतायुषं कामसमं बलिष्ठम्। महत् घृतं नाम तु छागलाद्यं विनिर्मितं वातनिसूदनञ्च। शिवं शुभं रोगभयापहञ्च चकार हारीतमुनिर्विशिष्टः। शृगालवर्ह्हिणः पाके पुमांसं तत्र दापयेत्। मयूरी जम्बुकी छागी वीर्य्यहीनाः स्वभावतः। भाषितं काशिराजेन छागमेव नपुंसकम्”। [काव्यप्र०।

छागवाहन पु० छागोवाहनमस्य। वह्नौ त्रिका०। [च्छटा”।

छात त्रि० छो—क्त। १छिन्ने २दुर्वले अमरः। “छाततराम्बु-

छात्त्र पु० छत्त्रं गुरोर्दोषगुणावरणं शीलमस्य छत्त्रा० ण। १अन्तेवासिनि शिष्ये २मधुभेदे न “वरटाः कपिलाः पीताः प्रायोहिमवतोवने। कुर्वन्ति छत्त्राकारं तु तज्जं छात्त्रं मधु स्मृतम्। छात्त्रं कपिलपीतं स्यात् पिच्छिलं शीतलं गुरु। स्वादुपाकं क्रमिघ्नं च रक्तपित्तप्रमेहजित्। भ्रमतृष्णामोहविषहृत् तर्पणञ्च गुणाधिकम्” भावप्र०। [अल्पत्वे मन्दे शिष्ये हारा०।

छात्त्रगण्ड पु० छात्त्रो गण्ड इव। यद्यस्य पादमात्रवेत्तारि

छात्त्रदर्शन न० छात्त्रं मधुभेद इव दृश्यते दृश—कर्म्मणि

ल्युट्। १मधुरत्वास्वादे हैयङ्गवीने शब्दच०। ६त० २शिशस्य दर्शने च।

**छात्त्रव्यंसक** पु० छात्रो व्यंसकः मयू० परनि०। मन्दशिष्ये

**छात्त्रि** स्त्री चु०छद–क्तिन्। छादने। कर्त्तरि क्तिच्। २छादके अस्य शालाशब्दे परे "छात्त्र्यादयः शालायाम्" पा०। आद्युदात्तता। छात्त्रिशाला "यद्यपि शालान्त स्तत्पुरुषे नपुंसकलिङ्गोभवति तदापि "तत्पुरुषे शालायां नपुंसके" पा० इत्येतस्मात् पूर्वविप्रतिषेधेनायमेव स्वरः छात्त्रिशालम्" सि० कौ०

**छात्त्र्यादि** पु० "छात्त्र्यादयः शालायाम्" पा० शालान्त तत्पुरुषे आद्युदात्ततानिमित्ते शब्दगणे स च गण छात्त्रि पेलि भाण्ड व्याडि आखण्ड आटि गोमि" छात्त्रिशाला छात्त्रिशालम्।

**छाद** न० छादयति चु० छद–अच्। पटले (छात्) चाल। इतिख्याते पदार्थे जटाधरः।

**छादन** पु० चु०–छद–ल्यु। १नीलाम्लानवृक्षे। भावे ल्युट्। २छादने। "छादनार्थं प्रकीर्णश्च कटैश्च तृणसङ्कुलैः" हरिवं० ६६अ०। करणे ल्युट्। ३पत्रे न० राजनि०। "छादने वक्रदारुणि" अमरनिर्द्देशात् कर्त्तरि ल्यु। ४छादके त्रि०। "फणाभृतां छादनमेकमोकसाम्" माघः।

**छादित** त्रि० छद–क्त "वाऽदान्तशान्तादिना पक्षे णिलोभावः। आच्छादिते छन्ने। [ठक्। तृणे।

**छादिषेय** न० छदिषे हितम् "छदिरुपधिबलेर्ढक्" पा०।

**छाद्मिक** त्रि० छद्मना चरति व्यवहरति ठक्। १कापटिके कपटव्यवहारिणि "धर्मध्वजी सदा लुब्धश्छाद्मिको लोकदम्भकः" मनुः।

**छान्दड** पु० ऋषिभेदे

**छान्दस** पु० छन्दोऽधीते वेत्ति वा पक्षे अण्। वेदाध्येतरि १श्रोत्रिये अमरः। छन्दसो व्याख्यानो ग्रन्थः तत्रभवो वा अण्। २वेदव्याख्याने ग्रन्थे ३वेदभवे च त्रि०। तस्येदम् अण्। ४वेदसम्बन्धिनि त्रि० स्त्रियां सर्व्वत्र ङीप्। "छान्दसीभिरुदाराभिः श्रुतिभिः (कर्णैः) समलङ्कृतः (वराहः)" हरिवं० २२३अ०। छान्दसः प्रयोगः। ततो मनोज्ञा० भावे वुञ्। छान्दसिका छान्दसभावे स्त्री।

**छान्दोग्य** न० छन्दोगानां धर्म्म आम्नायः समूहो वा "चरणेभ्यो धर्म्मवत् पा० छन्दोगौक्थिकयाज्ञिक" पा०ञ्य। छन्दोगानामाम्नायभेदे उपनिषद्रूपे। उपनिषच्छब्दे १२२२पृ० दृश्यम्। तेषां २धर्म्मे ३समूहे च।

**छान्दोमिक** त्रि० छन्दोमस्येदम् ठक्। यज्ञभेदसम्बन्धिनि १सूक्ते २अहनि च "छान्दोमिकं सूक्तम्" निरु० ७।२१। "अहनी च्छान्दोमिके" २२।६।२२ कात्या० श्रौ०कर्कः

**छाया** स्त्री छो–ण। १आतपाभावे २प्रतिबिम्बे ३सूर्य्यपत्नीभेदे संज्ञाप्रतिकृतौ ४कान्तौ च अमरः ५पालने ६उत्कोचे ७पङ्क्तौ मेदि०। ८कात्यायन्यां शब्दरत्ना०। ९तमसि हेमच०। तत्र अनातपे "छायामिव भानुगतां निषेव्य" कुमा०। "छायामच्छामृच्छति सलिलस्य" माघः "छायेव तस्यानुगतिश्च पश्चात्" नैष०। "स्वं रागादुपरि वितन्वतोत्तरीयम्। कान्तेन प्रतिपदवारितातपायाः। स छत्त्रादपरविलासिनीसमूहाच्छायासीदधिकतरा तदा परस्याः" माघः।

"गुहां प्रविष्टौ सुकृतस्य लोके छायातपौ ब्रह्मविदो वदन्ति" श्रुतिः संज्ञाप्रतिकृतिछायाकथा हरिवं०९अ०। "स वै विवस्वतः पूर्व्वं श्राद्धदेवः प्रजापतिः। यमश्च यमुना चैव यमजौ संबभूवतुः। श्यामवर्णं च तद्रूपं संज्ञा दृष्ट्वा विवस्वतः। असहन्ती तु स्वां छायां सवर्णां निर्ममे ततः। मायामयी तु सा संज्ञा तस्याश्छायासमुत्थिता। प्राञ्जलिः प्रणता भूत्वा छाया संज्ञां नरेश्वर!। उवाच किं मया कार्य्यं कथयस्व शुचिस्मिते!। स्थिताऽस्मि तव निर्द्देशे शाधि मां वरवर्णिनि!। संज्ञोवाच अहं यास्यामि भद्रन्ते स्वमेव भवनं पितुः। त्वयेह भवने मह्यं वस्तव्यं निर्व्विकारया।

इमौ च बालकौ मह्यं कन्या चेयं सुमध्यमा। संभाव्यास्ते न चाख्येयमिदं भगवते क्वचित्। छायोवाच। आ कचग्रहणाद्देवि! आ शापान्नैव कर्हिचित्। आख्यास्यामि मतं तुभ्यं गच्छ देवि! यथासुखम्। वैशम्पायन उवाच। समादिश्य सवर्णान्तु तथेत्युक्ता तया च सा। त्वष्टुः समीपमगमद्व्रीडितेव तपस्विनी। पितुः समीपगा सा तु पित्रा निर्भर्त्सिता तदा। भर्त्तुः समीपं गच्छेति नियुक्ता च पुनः पुनः। अगच्छद्वडवा भूत्वाऽऽच्छाद्य रूपमनिन्दिता। कुरूनथोत्तरान् गत्वा तृणान्यथ चचार ह। द्वितीयायान्तु संज्ञायां संज्ञेयमिति चिन्तयन्। आदित्यो जनयामास पुत्रमात्मसमं तदा। पूर्वजस्य मनोस्तात सदृशोऽयमिति प्रभुः। मनुरेवाभवन्नाम्ना सावर्ण इति चोच्यते। द्वितीयोयः सुतस्तस्याः स विज्ञेयः शनैश्चरः। सततं पार्थिवी तात! स्वस्य पुत्रस्य वै तदा। चकाराभ्यधिकं स्नेहं तथा पूर्व्वजेषु वै। मनुस्तस्याश्च,

मत्तत्तु यमस्तस्या न चक्षमे ।॰ तां स रोषाच्च बाल्याच्च भाविनोऽर्थस्य गौरवात् । पदा सन्तर्जयामास छायां वैवस्वतो यमः । तं शशाप ततः क्रोधात् सावर्णजननी नृपः । चरणः पततामेष तवेति भृशदुःखिता” ।

छाया च तमोरूपद्रव्यान्तरमिति मीमांसकाः । तेन “त्वं दूरमपि गच्छन्ती हृदयं न जहासि मे । दिवावसानच्छायेव पुरोमूलं वनस्पतेः” शकु० । छायागतिरुक्ता सङ्गच्छते” नैयायिकास्तु तेजःसामान्याभाव एव तमश्छायादिकमङ्गीचक्रुः तत्र गत्यादिकमौपचारिकम्” “अत्र च तेजःसामान्याभावप्रयोजकस्य छायासम्बन्धित्वम् यथा वृक्षस्यातपसम्बन्धप्रतिरोधात् छायासम्बन्धित्वं तथा च वृक्षप्रयुक्तातपाभावः” इति बोधः “छाया बाहुल्ये” पा० । छायान्तस्तत्पुरुषो नपुंसकं स्यात् पूर्व्वपदार्थबाहुल्ये” इक्षूणां छाया इक्षुच्छायम् सि० कौ० । कस्य बाहुल्यमित्यपेक्षायां छायायानिमित्तभूतावरकद्रव्याणामेव बाहुल्यमर्थाच्चिम्नं नन्वत्र षष्ठी तत्पुरुषे पूर्व्वपदार्थगतमित्याशयेन पूर्व्वपदार्थेत्युक्तम् । “इक्षुच्छायानिषादिन्य” इत्यत्र आङ्प्रश्लेषः” सि०कौ० । “आवरकद्रव्यस्यैकत्वे तु “विभाषा सेनासुराच्छायेत्यादि” पा० वा क्लीवत्वम् कुड्यछाया कुड्यच्छायम् ।

आतपाभावश्च तेजःसामान्यप्रभासञ्चाराभावः तेन प्रदीपप्रभावरकपदार्थस्य प्रभानिरोधसम्बन्धित्वात् शङ्कुच्छाया नरच्छाया इत्यादि । दीपादिच्छायामानज्ञानार्थो व्यवहारःछायाव्यवहारः तत्र करणसूत्रं लीला०उक्तं यथा । “अथ छायाव्यवहारे करणसूत्रं वृत्तम् । छाययोः कर्णयोरन्तरे ये तयोर्वर्गविश्लेषभक्तारसाद्रीषवः । सैकलब्धेः पदघ्नन्तु कर्णान्तरं भान्तरेणोनयुक्तं दले स्तः प्रभे । उदाहरणम् । नन्दचन्द्रैर्मितं छाययोरन्तरं कर्णयोरन्तरं विश्वतुल्यं ययोः । ते प्रभे वक्ति योयुक्तिमान् वेत्त्यसौ व्यक्तमव्यक्तयुक्तं हि मन्येऽखिलम् । न्यासः




छायान्तरं । १९ । कर्णान्तरम् । १३ । अनयोर्वर्गान्तरेण । १९२ । भक्ता रसाद्रीषवः ।५७६। लब्धं ३। सैकस्यास्य । ४ । मूलम् । २ । अनेन कर्णान्तरं ।१३। गुणितं । २६ । द्विस्थं । २६ । भान्तरेण । १९ । ऊनयुतं ।७। ४५ । तदर्द्धे लब्धे छाये ७/२।४५/२ तत्कल्योर्योगपदमित्यादिना जातौ कर्णौ २५/२।५१/२ । छायान्तरे करणसूत्रं वृत्तार्द्धम् । शङ्कुः प्रदीपतलशङ्कुतलान्तरघ्नश्छाया भवेद्विनरदीपशिखौच्चभक्तः ।

उदाहरणम् । शङ्कुप्रदीपान्तरभूस्त्रिहस्ता दीपोच्छ्रितिः सार्द्धकरत्रया चेत् । शङ्कोस्तदा काङ्गुलसम्मितस्य तस्य प्रभा स्यात् कियती वदाशु । न्यासः




शङ्कुः १/२ प्रदीपशङ्कुतलान्तरं ३ अनयोर्घातः ३/२ विनरदीपशिखौच्चेन । ३ । भक्तोलब्धानि छायाङ्गुलानि । १२ ।अथ दीपोच्छ्र्त्यानयनाय करणसूत्रं वृत्तार्द्धम् । छायाहृते तु नरदीपतलान्तरघ्ने शङ्कौ भवेन्नरयुते खलु दीपकौच्चम् ।

उदाहरणम् । प्रदीपशङ्क्वन्तरभूस्त्रिहस्ता छायाङ्गुलैः षोडशभिः समा चेत् । दीपोच्छ्रितिः स्यात् कियती वदाशु प्रदीपशङ्क्वन्तरमुच्यतां मे । न्यासः




शङ्कुः । १२ । छायाङ्गुलानि । १६ । शङ्कुप्रदीपान्तर

हस्ताः । २ । लब्धं दीपकौच्चं हस्ताः ११/४ । प्रदीप शङ्क्वन्तरभूमानानयनाय करणसूत्रं वृत्तार्द्धम् । विशङ्कु दीपोच्छ्रयसङ्गुणा भा शङ्कूद्धृता दीपनरान्तरं स्यात् । उदाहरणम् । पूर्व्वोक्तएव दीपोच्छ्रायः ११/४ शङ्कुङ्गुलानि । १२ । छाया । १७ । लब्धाः शङ्कुप्रदीपान्तरहस्ताः । २ ।

छायाप्रदीपान्तरदीपौच्चानयनाय करणसूत्रं सार्द्धवृत्तम् । छायाग्रयोरन्तरसङ्गुणा भा छायाप्रमाणान्तरहृद्भवेद्भूः । भूशङ्कुघातः प्रभया विभक्तः प्रजायते दीपशिखौच्चमेवम् । त्रैराशिकेनैव यदेतदुक्तं व्याप्तं स्वभेदैर्हरिणेव विश्वम् । उदाहरणम् । शङ्कोर्भार्कमिताङ्गुलस्य सुमते ! दृष्टा किलाष्टाङ्गुला छायाग्राभिमुखे करद्वयमिते न्यस्तस्य देशे पुनः । तस्यैवार्कमिताङ्गुला यदि तदा छाया प्रदीपान्तरं दीपौच्चञ्च कियद्वद व्यवहृतिं छायाभिधां वेत्सि चेत् । न्यासः




अत्र छायाग्रयोरन्तरमङ्गुलात्मकं । ५२ । छाये च ।८। १२ । अनयोरान्तरा । ८ । इयमनेन । ५२ । गुणिता । ४१६ । छायाप्रमाणान्तरेण । ४ । भक्ता लब्धं भूमानम् ।१०४। इदं प्रथमच्छायाग्रदीपतलयोरन्तरमित्यर्थः। एवं द्वितीयच्छायाप्रमानं । १५६ । भूशङ्कुघातः प्रभया विभक्तइति जातमुभयतोऽपि दीपौच्चं सममेव हस्ताः ६/१/२ एवमित्यत्र छायाव्यवहारे त्रैराशिककल्पनयाऽऽमयनं वर्त्तते तद्यथा । प्रथमच्छायातोद्वितीयच्छाया । १२ । यावताधिका तावता छायाग्रयवेन यदि छायाग्रान्तरतुल्या भूर्लभ्यते तदा छायया किमिति एवं पृथक् पृथक् छायाप्रदीपतलान्तरप्रमाणं लभ्यते । ततोद्वितीयं त्रैराशिकं यदि छायातुल्ये भुजे शङ्कुः कोटिस्तदा भूतुल्ये भुजे किमिति लब्धं दीपकौच्चमुभयतोऽपि तुल्यमेव । एवं पञ्चराशिकादिकमखिलं त्रैराशिककल्पनयैव सिद्धम् ।

"भवेत्सैव (मेघविस्फूर्जितैव) च्छाया तयुगगयुता स्याद्द्वादशान्ते यदा" इत्युक्ते ऊनविंशत्यक्षरपादके १० छन्दोभेदे च ।

शङ्कुछाया हि दिग्देशकालज्ञानोपायः यथोक्तं त्रिप्रश्नाधिकारे सूर्य्यसिद्धान्तरङ्गनाथाभ्याम् । तत्र च त्रयाणां दिग्देशकालानां प्रश्नाः त्रिप्रश्नाः तेषामधिकार इति त्रिप्रश्नशब्दार्थः । तत्रादौ दिग्ज्ञानमाह ।

"शिलातलेऽम्बुसंशुद्धे वज्रलेपेऽपिवा समे । तत्र शङ्क्वङ्गुलैरिष्टैः समं मण्डलमालिखेत् । तन्मध्ये स्थापयेच्छङ्कुं कल्पनाद्वादशाङ्गुलम् । तच्छायाग्रं स्पृशेद्यत्र वृत्ते पूर्वापरार्धयोः । तत्र बिन्दू विधायोभौ वृत्ते पूर्वापराभिधौ । तन्मध्ये तिमिना रेखा कर्त्तव्या दक्षिणोत्तरा । याम्योत्तरादिशोर्मध्ये तिमिना पूर्वपश्चिमा । दिङ्मध्यमत्स्यैः संसाध्या विदिशस्तद्वदेव हि" । सू॰ सि॰ "तत्र दिक्साधनोपक्रमे प्रथनमम्बुसंशुद्धे जलवत्समीकृते शिलाप्रदेशे । अपि वाथ वा तदभावेऽन्यत्र वज्रलेपे चत्वरादौ घुट्टनादिना समस्थाने कृते शङ्क्वङ्गुलैः शङ्कुस्याङ्गुलविभागमानगृहीतैरभीष्टसङ्ख्याकाङ्गुलैर्व्यासार्धरूपैर्वृत्तमवक्रमालिखेत् । सर्वतः केन्द्राद्वृत्तपरिधिरेखा तुल्या यथा स्यात् तथेत्यर्थः । ततस्तन्मध्ये तस्य वृत्तस्य केन्द्ररूपमध्ये कल्पनया द्वादशसङ्ख्याकाङ्गुलानि तुल्यानि यस्मिंस्तं द्वादशविभागाङ्कितमित्यर्थः । शङ्कुं समतलमस्तकपरिधिकाष्ठदण्डं स्थापयेत् । ततः पूर्वापरार्धयोर्दिनस्य प्रथमद्वितीयभागयोस्तच्छायाग्रं स्थापितशङ्कोश्छायान्तप्रदेशो मण्डलपरिधौ यस्मिन् विभागे स्पृशेत् । दिनस्य प्रथमविभागेऽनुचर्या छायाह्रासाद्वृत्ते यत्र प्रविशति, दिनस्यापरार्धे छायानुचयवृद्धेर्वृत्ते यत्र निर्गच्छतीत्यर्थः । तत्र निर्गमनप्रवेशस्थानयोरुभौ द्वौ बिन्दू पूर्वापरसञ्ज्ञौ क्रमेण वृत्ते परिधिरेखायां कृत्वा तन्मध्ये पूर्वापरबिन्द्वन्तरमध्ये तिमिना मत्स्येन रेखा कार्या सा दक्षिणोत्तररेखा भवति। मत्स्यस्तु बिन्द्वन्तरादल्पमितेन व्यासार्धेन बिन्दुद्वयकेन्द्रकल्पनेन वृत्तद्वयं निष्पाद्य वृत्तद्वयसंयोगाभ्यां वृत्तद्वयपरिधिविभागाभ्यामन्तर्गतं मत्स्याकारं स्थानं भवति । तत्रैकः संयोगो मुखं बाह्यवृत्तभागसम्मार्जनेन, अपरसंयोगस्तु पुच्छमितरवृत्तभागद्वयसम्मार्जनेन । मुखपुच्छमध्यस्पृक् रेखा दक्षिणोत्तररेखा । तत्र पूर्व्वबिन्दोः सव्यं रेखाग्रं दक्षिणा दिक् । पश्चिमबिन्दोः सव्यं रेखाग्रमुत्तरा दिक् ।

अनन्तरं पूर्ववृत्तं मत्स्यश्च समार्जनीयः। शङ्कुरपि तत्स्थानान्निष्काश्यः इति केवला दक्षिणोत्तररेखा स्थितेति तात्पर्य्यम्। दक्षिणोत्तरदिशोर्मध्यस्थाने तिमिना दक्षिणोत्तररेखामितेन व्यासार्धेन दक्षिणोत्तरस्थानाभ्यां पूर्ववत् प्रत्येकं वृत्तं विधाय पूर्ववत् सिद्धेन मत्स्येनेत्यर्थः। पूर्वपश्चिमा रेखा कार्या। तत्र पूर्वविन्दोरासन्नं रेखाग्रं पूर्वा, पश्चिमविन्दोरासन्नं रेखाग्रं पश्चिमेति मत्स्यसम्मार्जनेन केवला पूर्वापररेखापि सिद्धा। अथ रेखासंयोगस्थानाद्दिक्साधनोपक्रमोक्तं पूर्ववृत्तमुल्लिखेत् तद्वृत्तपरिधौ यत्र रेखा लग्ना तत्र दिगिति तद्वृत्तमध्यस्य दिक्चतुष्टयं वृत्ते सिद्धम्। तद्वत् यथा दक्षिणोत्तराभ्यां पूर्वापरा साधिता तत्प्रकारेणेत्यर्थः। एवकारोऽन्यप्रकारनिरासार्थकः। हि निश्चयेन। विदिशः कोणदिशो दिशां पूर्वादिसिद्धदिशां ये मध्यमत्स्या अव्यवहितदिग्द्वयान्तरोत्पन्ना लघवस्तैः संसाध्याः सम्यक्प्रकारेण साध्याः। रेखावृत्तसंयोगस्थत्वेन ज्ञेयाः। अत्रोपपत्तिः। क्षितिजपूर्वापरवृत्त संयोगौ पूर्वापरविभागस्थौ पूर्वापरदिशे तत्र पूर्वापरविभागज्ञानं सूर्य्योदयास्ताभ्यां तत्र क्षितिजे पूर्वापरवृत्तं कुत्र लग्नमिति ज्ञानं तु विषुवद्वृत्तक्रान्तिवृत्तसम्पातस्यसूर्य्यस्योदयास्तस्थलज्ञानेन विषुवद्वृत्तस्य पूर्वापरक्षितिजवृत्तसम्पातयोः सम्बद्धत्वात्। अथान्यस्मिन् दिने सूर्य्यस्योदयास्तावग्रांशान्तरेण याम्योत्तरे भवत इति सूर्य्योदयास्तस्थानाभ्यामग्रांशान्तरेणोत्तरयाम्ये पूर्वापरस्थानं भवतीति क्षितिजस्य महत्त्वाद्दूरत्वाच्च तद्ज्ञानेन पूर्वापरज्ञानमशक्यमतस्तत्सूत्रेण स्वाभीष्टप्रदेशे तज्ज्ञानार्थमभीष्टसमस्थले क्षितिजानुकारं वृत्तं कृतम्। तत्रापि सूर्य्योदयास्तस्थलत्वेन स्थलज्ञानस्य दुःशकत्वात् छायार्थं शङ्कुः स्थाप्यः। तथापि सूर्य्योदये छायानन्त्याद्वृत्तपरिधौ तत्प्रवेशाभावः। परन्तु यथा यथा सूर्य ऊर्द्धं भवति तथा तथा छायाह्रासादत्र छाया वृत्तपरिधौ यदा प्रविशति तत्स्थानात् तात्कालिको वक्ष्यमाणभुजो व्यस्तोऽर्धज्याकारेण देयस्तदुत्क्रमज्या यत्र परिधिप्रदेशे लगति तत्र शङ्कुस्थानस्य पश्चिमा। छायाग्रस्य पूर्वापरसूत्राद्भुजान्तरेण याम्योत्तरपतनात् सूर्य्यापरदिशि छायापतनाच्च। एवं दिनापरार्धे सूर्य्यो यथा यथाधः सञ्चरति तथा तथा छायावृद्धेः शङ्कुच्छायावृत्तपरिधौ यत्र यदा निर्गच्छति तात्कालिको वक्ष्यमाणभुजो व्यस्तोऽर्धज्याकारेण तत्स्थाने देयस्तदुत्क्रमज्या यत्र परिधिप्रदेशे लगति तत्र शङ्कुस्थानस्य पूर्वा। तत्सूत्रं पूर्वापरसूत्रम्। इदं शङ्कोरुपलक्षणत्वेन ज्ञानं तथा छायोपलक्षणेनापि प्रदेशस्य पूर्वापरसूत्रज्ञानम्। तथा हि। यत्र छायाग्रं विशति तत्रापरा, छायाग्रं यतो निर्गच्छति तत्र पूर्वा। तत्रापि प्रवेशनिर्गमयोरेककालत्वासम्भवात्तात्कालिकः प्रवेशस्तत्काले छायायाः पश्चिमत्वं तत्र वस्तुभूतं तत्काले निर्गमनस्य पूर्वत्वासम्भवः। एवं निर्गमकाले निर्गमस्थानस्य पूर्वत्वं वस्तुभूतं तत्काले प्रवेशस्य पश्चिमत्वासम्भवः। एककालिकसिद्ध्यर्थमुभयोरेकतरं चिह्नं चाल्यं तत्कालिकभुजयोरन्तरेण तत्र पूर्वचिह्नं भुजान्तराङ्गुलैरयनदिशि चाल्यम्। पश्चिमचिह्नं वा व्यस्तायनदिशि चाल्यम्। तत्सूत्रं सूत्रमध्यदेशस्य पूर्वापरसूत्रम्। एतन्मध्ये स्थापितशङ्कोश्छायाग्रप्रवेशनिर्गमचिह्नाभ्यां यथोक्तरीत्या भुजदानेन सिद्धपूर्वापरसूत्रेणाभिन्नत्वात्। तदुक्तं सिद्धान्तशिरोमणौ "तत्कालापमजीवयोस्तु विवराद्भाकर्णमित्या हृतात् लम्बज्याप्तमिताङ्गुलैरयनदिश्यैन्द्री स्फुटा चालिता" इति। तदेतद्भगवता लोकानुकम्पया स्वल्पान्तरत्वादेकतरविन्दुचालनं नोक्तं सुखार्थं किञ्चित्स्थूलावेव निर्गमप्रवेशविन्दू पूर्वापराभिधावुक्तौ। एवञ्चाभीष्टस्थानं प्रवेशनिर्गमसूत्रमध्ये यथा भवति तथानेन प्रकारेण मण्डलकेन्द्रशङ्कुस्थापनादिनाऽभीष्टप्रदेशे पूर्वापरदिशे साध्ये इति। तन्मध्ये दक्षिणोत्तररेखाविन्दुद्वयोत्पन्नमध्यमत्स्यरेखैवेति। याम्योत्तरमध्ये पूर्वापरा रेखा तद्दिङ्मध्यमत्स्येनेति याम्योत्तरदिशोरित्यादि सम्यगुक्तम्। ननु पूर्वापरविन्दुभ्यां मत्स्येन या दक्षिणोत्तररेखा तदग्राभ्यां मत्स्येन रेखा पूर्वापरविन्दुस्पृष्टैवेति पूर्वं तस्या एव विन्द्वन्तरत्वेन सिद्धत्वात् पुनः साधनं व्यर्थमन्यथा दक्षिणोत्तररेखाया अप्यसङ्गतत्वापत्तेरिति चेत् सत्यम्। दक्षिणोत्तररेखाशुद्ध्यर्थमेव पूर्वापरविन्दुस्पृष्टरेखायाः पुनः साधनमिति केचित्। वस्तुतस्तु दक्षिणोत्तरपूर्वापरसूत्रसम्पातरूपाभीष्टस्थानात् केन्द्रात् प्रागुक्तवृत्तस्य वक्ष्यमाणोपयोगित्वेनावश्यकत्वात् तस्य च पूर्वापरविन्द्वन्तरसूत्राधिकव्याससूत्रत्वाद्विन्द्वन्तररेखा मूलाग्रयोर्वर्धनीया सा तत्र वृत्ते पूर्वापररेखा भवति। तस्या विन्द्वोरुपर्यधस्य वक्रत्वं कदाचित् स्यादतः प्रथममेव पूर्वरेखासिद्ध्यर्थं विन्द्वन्तरसिद्धमत्स्यमुखपुच्छगत-

रेखाया विन्दनराधिकत्वेन तदुत्पन्नमत्स्यरेखाया ऋज्व्याः सुतरामधिकत्वेन पुनः पूर्व्वापररेखासाधनं युक्ततरमिति तत्त्वम् । एवमेवाव्यवहितदिग्द्वयान्तरोत्पन्नलघुमत्स्यैस्तुभिः सूत्रैर्वृत्ते कोणदिशः । तदिदमभीष्टस्थानकेन्द्रकमण्डले दिगष्टकं सिद्धम् ॥ अथ दिक्सूत्रसम्पातरूपाभीष्टस्थानात् तात्कालिकच्छायाग्रस्थानमाह” र०ना०

“चतुरस्रं बहिः कुर्य्यात् सूत्रैर्मध्याद्विनिर्गतैः । भुजसूत्राङ्गुलैस्तत्र दत्तैरिष्टप्रभा स्मृता” सू० सि० ।

“मध्यादभीष्टस्थानाद्दिग्रेखा सम्पातरूपाद्विनिर्गतैर्निःसृतैरष्टदिग्रेखारूपैः । बहिर्दिक्सूत्रसम्पातकेन्द्रवृत्ताद्बहिः । अनेनैव वृत्तकरणं पूर्व्वमनुक्तं द्योतितम् । अन्यथा बहिरित्यस्यानुपपत्तेः । पूर्व्ववृत्ताग्रहणे तु दिग्रेखासम्पातस्य मध्यत्वानुपपत्तेः । चतुरस्रं कोणरेखाधिकसूत्रकर्णद्वयतुल्यं समचतुर्भुजं कुर्य्यात् । यथा च तद्गतम् । तत्र चतुरस्रे भुजसूत्राङ्गुलैर्वक्ष्यमाणभुजमितसूत्रस्थाङ्गुलैर्निर्गमप्रवेशकालिकैर्दत्तैः पूर्व्वापरसूत्रतदर्द्धच्यावद्दीयमानैस्तत्र वृत्ते यस्मिन् प्रदेशे भुजाग्रं तत्प्रदेशे इष्टप्रभा निर्गमप्रवेशान्यतरकालिकच्छायाग्रमुक्तम् । प्रतीतिस्तु दिक्सूत्रसम्पातस्थशङ्कुना ज्ञेया । अत्रोपपत्तिः । वक्ष्यमाणभुजस्य छायाग्रपूर्व्वापरसूत्रान्तरत्वेन प्रतिपादितत्वादिष्टच्छायाग्रमुक्तदिशा ज्ञातं सम्यक् । चतुरस्रकरणं वक्ष्यमाणाग्रसाधकप्राच्यपररेखानुकाररेखाया वृत्तान्तस्तद्बहिर्वा ऋजुत्वसिद्ध्यर्थमिति । अथ पूर्व्वापररेखायाः सञ्ज्ञान्तरमाह” र० ना० ।

“प्राक्पश्चिमाश्रिता रेखा प्रोच्यते सममण्डलम् । उन्मण्डलं च विषुवन्मण्डलं परिकीर्त्यते” सू० सि० ।

“प्राक्पश्चिमाश्रिता पूर्व्वपश्चिमसम्बद्धा साधिता रेखा समवृत्तमुच्यते । सैव रेखोन्मण्डलं विषुवन्मण्डलम् । चः समुच्चये । उभयसञ्ज्ञकं कथ्यते । अत्रोपपत्तिः । क्षितिजपूर्व्वापरवृत्तसंयोगौ पूर्व्वापरे तत्सूत्रं पूर्व्वापरसूत्रमिति । पूर्व्वापरवृत्तस्य भूमावूर्द्ध्वाधरानुकारिवृत्तत्वेनादर्शनाद्रेखाकारतयैव दर्शनाच्च पूर्व्वापरवृत्तमपि तत्सूत्रम् । पूर्व्वापरवृत्तस्य सममण्डलत्वेनाभिधानात् तद्रेखासममण्डलसञ्ज्ञोक्ता । अथ स्वनिरक्षदेशक्षितिजवृत्तस्योन्मण्डलाख्यस्य तत्संयोगयोः संलग्नत्वात् तन्मध्यसूत्रत्वेन पूर्व्वापरसूत्रस्यापि सत्त्वात् पूर्व्वापरसूत्रमुन्मण्डलसञ्ज्ञम् । एतेनान्यदेशक्षितिजसञ्ज्ञया स्वदेशक्षितिजसञ्ज्ञा सुतरां सिद्धेति पूर्व्वापरसूत्रस्य क्षितिजवृत्तसञ्ज्ञा द्योतिता । पूर्व्वापरस्थानयोः क्षितिजवृत्तस्य संलग्नत्वादुन्मण्डलवृत्तस्य क्षितिजानुकारित्वाच्च । एवं निरक्षदेशपूर्व्वापरवृत्तं विषुवन्मण्डलाख्यं पूर्व्वापरस्थानयोः संलग्नमिति तन्मध्यसूत्रत्वेनापि पूर्व्वापरसूत्रस्य सिद्धत्वात् पूर्व्वापरसूत्रं विषुवन्मण्डलसञ्ज्ञं क्रान्तिवृत्तस्य द्युवृत्तस्य च चलत्वात् कादाचित्कत्वेन पूर्व्वापरस्थानसंलग्नत्वात् तत्सञ्ज्ञा नोक्तेति ध्येयम् अथाग्राज्ञानमाह” र०ना० ।

“रेखा प्राच्यपरा साध्या विषुवद्भाग्रगा तथा । इष्टच्छायाविषुवतोर्मध्यमग्राऽभिधीयते” सू०सि० ।

“तस्मिंश्चतुरस्रे पूर्व्वापररेखात उत्तरभागे विषुवद्भाग्रगाऽक्षभाग्रप्रदेशस्याक्षभाङ्गुलान्तरितेत्यर्थः । प्राच्यपरा रेखा पूर्व्वापररेखानुकारा रेखा तथा सर्व्वतस्तुल्यान्तरेण यथेष्टच्छायाग्ररेखाभुजान्तरेण तथाक्षभान्तरेण कार्य्या । अनन्तरमिष्टच्छायाविषुवतोरिष्टच्छायाग्ररेखाक्षभाग्ररेखयोरित्यर्थः । मध्यं चतुरस्रेऽङ्गुलात्मकमन्तरालं सर्व्वतस्तुल्यम् । अग्रा कर्णवृत्ताग्रोच्यते । अत्रोपपत्तिः । भुजस्य कर्णवृत्ताग्रा पलभासंस्काररूपे उक्तत्वाद्दक्षिणगोले पलभाधिकोत्तरभुजसद्भावेन पलभोनो भुजोऽग्रेति, प्राच्यपरसूत्रादुत्तरभागेऽक्षभाग्ररेखा भुजमध्ये भवतीति द्वयो रेखयोरन्तरमग्रा पलभोनभुजरूपा । एवमुत्तरगोले उत्तरभुजस्य पलभाल्पत्वाद्भुजोनपलभाग्रेति पलभारेखा प्राच्यपरसूत्रादुत्तरभागस्था भुजरेखातोऽप्यग्रान्तरेणोत्तरदिशीति द्वयो रेखयोरन्तरं भुजोनपलभारूपं कर्णवृत्ताग्रा । एवं दक्षिणभुजस्य पलभोनाग्रात्वात् पलभायुतो भुजोऽग्रेति प्राच्यपरसूत्राद्भुजाग्रपलभाग्ररेखयोः क्रमेण याम्योत्तरत्वात् तयोरन्तरालं पलभाभुजैक्यरूपमग्रा, पलभायाः शङ्कुतलानुकल्पत्वात् सदोत्तरत्वं छायाकल्प्यत्वादयुक्तम् गोले शङ्कुतलस्य दक्षिणत्वादुपपत्त्याप दिशि छायासद्भावाच्च । अतएव प्राच्यपरसूत्राद्दक्षिणभागे दक्षिणभुजवशादक्षभाग्ररेखाकल्पने उक्तानुपपत्त्या सम्युत्तरभागे पूर्व्वापरसूत्रादिति विषुवद्भाग्रगेत्यत्र व्याख्यातम्” अथ प्रसङ्गाज्ज्ञातच्छायातः कर्णज्ञानं तच्छुद्धिं चाह र० ना० ।

“शङ्कुच्छायाकृतियुतेर्मूलं कर्णोऽस्य वर्गतः । प्रोज्झ्य शङ्कुकृतिं मूलं छाया शङ्कुर्विपर्य्ययात्” सू० सि०

“द्वादशाङ्गुलशङ्कुच्छाययोर्वर्गयोगात् पदं छायाकर्णः स्यात् । अथास्य शुद्धिरूपं छायासाधनमाह । अस्येति । छायाकर्णस्य वर्गात् शङ्कुवर्गं चतुश्चत्वारिंद-

दधिकं शतं विशोध्य मूलं छाया। प्रकारान्तरेण छायाकर्णशुद्धिमाह। शङ्कुरिति। विपर्ययाच्छायासाधनवैपरीत्याच्छायाकर्णवर्गाच्छायावर्गं विशोध्य मूलमित्यर्थः। शङ्कुर्द्वादशाङ्गुलमितः स्यात्। अत्रोपपत्तिः। द्वादशाङ्गुलशङ्कुः कोटिश्छाया भुजस्तत्कृत्योर्योगपदं कर्ण इत्यत्र कर्णः कर्णे इत्याद्यत्रत्रैवाद्युक्तरीत्योपपन्नम्। ननु दिक्साधनोत्तरमिष्टप्रभायाः कर्णसाधनं भगवता सर्वज्ञेन किमर्थमुक्तमग्रेऽग्रादीनां स्वतन्त्रतयोक्तत्वात्। न च विना गणितश्रममग्राज्ञानार्थमिदं युक्तमुक्तमिति वाच्यम्। वक्ष्यमाणभुजज्ञानस्याग्रोपजीव्यत्वेन तस्याश्च भुजोपजीव्यत्वेनान्योन्याश्रयात् गणितज्ञातायायाः पुनः साधनस्य व्यर्थत्वाच्च। न च भुजसूत्राङ्गुलैर्दत्तैरित्यनेनेष्टच्छायाग्रं ज्ञातमिति न, किन्त्वेतदुक्त्या दिक्सूत्रसम्पातस्थशङ्कोर्वृत्तपरिधौ छायाग्रज्ञानात् तत्पूर्वापरसूत्रान्तरे भुजसद्भावाद्विना गणितं भुजोऽपि ज्ञात इति नान्योन्याश्रय इति वाच्यम्। तथापि भगवतः सर्वज्ञस्य निष्प्रयोजनत्वोक्तेरनुचितत्वात्। विना प्रयोजनं मन्दोक्तेरप्यभावाच्च। न हि दिक्साधनेऽग्राभुजादिकमावश्यकं येन तदुक्तिर्युक्ता। किन्तु कर्णसाधनस्य गणितोक्त्या वक्ष्यमाणकर्णसाधनतुल्यत्वेनात्र कथनमनुचितम्। न हि दिक्साधनार्थं "भाकर्णमित्या कृतादिति" सिद्धान्तशिरोमण्युक्तिवदत्र छायाकर्ण उपयुक्तो येन तदुक्तिर्युक्तेति चतुरस्रमित्यादिश्लोकचतुष्टयमन्येन मन्दबुद्धिना क्षिप्तं न भगवतोक्तमिति चेन्नैवम्। भुजसाधनोपजीव्याग्राया एतदुक्तप्रकारेण सिद्धौ दिशः सम्यक् सिद्धा इति दिक्साधनशुद्ध्यर्थमग्रासाधनम्। प्रकारान्तरेणापि वक्ष्यमाणत्रिज्यावृत्तीयाग्रया त्रिज्या लभ्यते तदानयागतया कोट्यनुपातेन साधितकर्णसंवादेन शुद्ध्यवगमार्थं कर्णसाधनं चोक्तम्। अनयाग्रया कर्णस्तदा त्रिज्यावृत्तीयाग्रया क इति फलस्य त्रिज्यातुल्यत्वानयनार्थं वा कर्णसाधनमिति केचित्। वस्तुतस्तु मण्डले छायाप्रवेशनिर्गमस्थानस्थितपूर्वापरबिन्द्वोः प्रत्येकं रेखेति रेखाद्वयं सर्वतस्तुल्यान्तरं कार्यं तेनान्तरेणान्यतरो बिन्दुर्याम्यस्तौ पूर्वापरबिन्दू तद्रेखामध्यस्थानस्थ पूर्वापररेखेति। तत्रोभयबिन्दुरेखयोरन्तराङ्गुलमानं स्वल्पत्वाद्गणयितुमशक्यमतः प्रत्येकरेखे प्राच्यपररेखे प्रकल्प्य तन्मध्यकेन्द्रात् पूर्ववृत्तं प्रत्येकमिति वृत्तद्वयं कुर्यात्। तत्र स्वस्ववृत्ते स्वस्वप्राच्यपररेखास्पृष्टा कार्या ताभ्यां स्वस्वकालिकौ भुजौ स्वस्ववृत्ते देयौ तदग्रे छायाग्ररेखे स्वस्ववृत्ते कार्ये स्वस्वप्राच्यपरसूत्रात् स्वस्ववृत्ते उत्तरभागेऽग्रभाङ्गुलान्तरेण रेखे कार्ये ततः स्वस्ववृत्ते स्वस्वतद्रेखयोरन्तरं स्वस्ववृत्ते उभयकालिककर्णवृत्ताग्रे बहुत्वेन गणयितुं शक्यं तदन्तरं पूर्वबिन्द्वोर्याम्योत्तरमन्तरं कर्णवृत्ताग्रासाधनकथनेनानीतं भुजान्तरस्य बिन्द्वन्तरत्वात् तस्य चाग्रान्तरत्वेन फलितत्वात्। विषुवद्दिने गोलभेदे तु भुजान्तरमग्रायोग इति बिन्द्वोर्याम्योत्तरमग्रायोग इति। तेनोक्तरीत्या बिन्दुद्वयस्थसूत्रं पूर्वापरसूत्रं स्फुटमित्याशयेन भगवताग्रा निरूपिता तस्याः शुद्ध्यर्थं कर्णोऽपि साधित इति तत्त्वम्" र० ना०।

अतः परं "त्रिंशत्कृत्यो युगे भानामित्यादिः" ग्रन्थः। स च अयनशब्दे ३२६।३२७ पृ० दर्शितः। सोऽत्रानुसन्धेयः।

"स्फुटं दृक्तुल्यतां गच्छेदयने विषुवद्द्वये। प्राक् चक्रं चलितं हीने छायार्कात् करणागते। अन्तरांशैरथावृत्य पश्चाच्छेषैस्तथाधिके" सू० सि०।

"अयने दक्षिणोत्तरायणसन्धौ विषुवद्द्वये गोलसन्धौ चलितं चक्रं दृक्तुल्यतां दृष्टिगोचरतां स्फुटमनायासं गच्छेत्। तत्र प्रत्यक्षतस्तच्चलितमन्तरं दृश्यत इत्यर्थः। तथा च सृष्ट्यादिकाले रेवतीयोगताराग्रावधि मेषतुलाद्योः कर्कमकराद्योर्विषुवायनप्रवृत्तेरिदानीं त्वन्यत्र, तत्स्वरूपे प्रत्यक्षे इति क्रान्तिवृत्तं चलितमन्यथा तदनुपपत्तेरिति भावः। ननु पूर्वतोऽपरत्र वा चलितमिति कथं ज्ञेयमित्यत आह। प्रागिति। छायार्काद्द्युदिने सूर्यस्यायनदिक्परावर्तनसमये प्राच्यपरसूत्रस्थत्वं वा तस्मिन् दिनेऽन्यस्मिन् दिने वा मध्याह्नच्छायातो वक्ष्यमाणप्रकारेण सूर्यः साध्यस्तस्मादित्यर्थः। करणागते प्रागुक्तप्रकारेणानीतः स्पष्टः सूर्यस्तस्मिन्नित्यर्थः। न्यूने सति। अन्तरांशैः सूर्ययोरन्तरांशैश्चक्रं क्रान्तिवृत्तं प्राक् पूर्वस्मिन् चलितमिति ज्ञेयम्। अथ यद्यधिके सति शेषैः सूर्ययोरन्तरांशैश्चक्रमावृत्य परिवृत्य पश्चात् पश्चिमाभिमुखं तथा चलितमिति ज्ञेयम्। अत्रोपपत्तिः। छायातो वक्ष्यमाणप्रकारेण सूर्यो वर्तमानसम्पाताद्गणितागतस्तु रेवतीयोगतारासम्पाताद्यवधितोऽतस्तयोरन्तरमयनांशास्तत्र क्रान्तिवृत्तस्य पूर्वचलने गणितागतार्काच्छायार्कोऽधिको भवति। पश्चिमचलने तु न्यूनो भवतीति सम्यगुपपन्नम्। अथ चराद्युपजीव्यां पलभामाह" र० ना०।

एवं विषुवती छाया स्वदेशे या दिनार्धजा। "दक्षिणोत्तररेखायां सा तत्र विषुवत्प्रभा" सू० सि०।

"स्वाभीष्टदेशे एवं विषुवती चलितविषुवद्दिनसम्बन्धादेवत्यासन्नत्वात् उपचाराद्विषुवत्सञ्ज्ञा तद्व्यावर्तकमेवमिति। दिनार्धजा माध्याह्निकी या यन्त्रिता द्वादशाङ्गुलशङ्कोश्छाया दक्षिणोत्तररेखायां निरक्षोत्तरदक्षिणदेशक्रमेणोत्तरस्थां दक्षिणस्थां प्रभायाः दक्षिणोत्तररेखास्थत्वं विना मध्याह्नासम्भवात् सा तन्त्रिता तत्र तस्मिन्नभीष्टदेशे विषुवत्प्रभाऽक्षभा भवति। एतेन द्वादशाङ्गुलशङ्कुः कोटिः पलभा भुजस्तत्कृत्योर्योगपदं कर्णः इत्यक्षकर्णः कर्ण इत्यक्षक्षेत्रं वक्ष्यमाणोपयुक्तं प्रदर्शितम्। तदा सूर्यस्य विषुवद्वृत्तस्थत्वाद्विषुवत्प्रभेति सञ्ज्ञोक्ता। अथ लम्बाक्षयोरानयनमाह" र० ना०।

"शङ्कुच्छायाहते त्रिज्ये विषुवत्कर्णभाजिते। लम्बाक्षज्ये तयोश्चापे लम्बाक्षौ दक्षिणौ सदा" सू० सि०।

"त्रिज्ये द्विस्थाने शङ्कुच्छायाहते एकत्र द्वादशगुणिता अपरत्र प्रागुक्तया विषुवत्प्रभया गुणिता विषुवत्कर्णभाजितोभयत्राक्षकर्णेन भक्ता फले क्रमेण लम्बज्याक्षज्ये तयोर्ज्ययोर्धनुषी क्रमेण लम्बाक्षौ सदोभयगोले दक्षिणदिक्स्थौ भवतः। अत्रोपपत्तिः। याम्योत्तरवृत्ते निरक्षदेशपूर्वापरवृत्तयोर्यदन्तरं तदक्षः। याम्योत्तरवृत्ते दक्षिणक्षितिजप्रदेशाद्विषुवद्वृत्तस्य यदन्तरं तल्लम्बः। उभावपि गोले स्वपूर्वापरवृत्ताद्दक्षिणौ तज्ज्ये चाक्षलम्बज्ये भुजकोटी त्रिज्याकर्णे इत्यक्षक्षेत्रेणाद्यकर्णकर्णे द्वादशपलभे कोटिभुजौ तदा त्रिज्याकर्णे कावित्यनुपाताभ्यां लम्बाक्षज्ये तद्धनुषी लम्बाक्षावित्युपपन्नम्। अथ मध्याह्नच्छायातोऽक्षानयनं श्लोकाभ्यामाह" र० ना०

"मध्यच्छाया भुजस्तेन गुणिता त्रिभमौर्विका। स्वकर्णाप्ता धनुर्लिप्ता नतास्ता दक्षिणे भुजे। उत्तराश्चोत्तरे याम्यास्ताः सूर्यक्रान्तिलिप्तिकाः। दिग्भेदे मिश्रिताः साम्ये विश्लिष्टाश्चाक्षलिप्तिकाः" सू० सि०।

"अभीष्टदिने माध्याह्निकी छाया भुजसञ्ज्ञा ज्ञेया। तेन भुजेन त्रिज्या गुणिता मध्याह्नच्छायाकर्णेन भक्ता फलस्य धनुःकला नता नतसञ्ज्ञास्ता नतकला दक्षिणे भुजे मध्याह्नच्छायारूपभुजे प्राच्यपरसूत्रमध्याद्दक्षिणदिक्स्थे सति, उत्तरदिक्का उत्तरे भुजे दक्षिणाः। चो विपर्ययव्यवस्थार्थकः। ता नतकलाः सूर्यक्रान्तिकलाः प्रागुक्ताः। दिग्भेदे स्वदिशोर्भिन्नत्वे मिश्रिताः संयुक्ताः साम्येऽभिन्नदिक्त्वे विश्लिष्टा अन्तरिताः। चो विपर्ययव्यवस्थार्थकः। अक्षकला भवन्ति। अत्रानयनस्य भुजसञ्ज्ञया भगवतोपपत्तिरुक्ता। तथाहि। द्वादशाङ्गुलशङ्कुकोटौ मध्याह्नच्छायाकर्णे वा मध्यच्छायाभुजस्तदा वास्तविकमध्याह्नकाले सूर्यस्य याम्योत्तरवृत्ते खमध्यान्तरेण नतत्वं ता नतकलास्तज्ज्या नतांशज्या मध्याह्नोन्नतांशज्यारूपशङ्कौ त्रिज्याकर्णे वा भुज इति मध्याह्नच्छायाकर्णे कर्णे मध्याह्नच्छाया भुजस्तदा त्रिज्याकर्णे को भुज इत्यनुपातेन नतज्या तद्धनुरत्र कलात्मकत्वान्नतकलास्ता मध्यसम्बद्धा इति छायादिग्विपरीतदिक्काः। अथ क्रान्त्यंशाक्षांशयोरेकदिक्त्वे योगेन नतांशा इति दक्षिणा नतकला दक्षिणक्रान्तिकलाभिर्हीना अक्षांशा भवन्ति। क्रान्त्यंशाक्षांशयोर्भिन्नदिक्त्वेऽन्तरेण नतांशा यदि दक्षिणास्तदा क्रान्त्यूनाक्षांशस्य नतत्वादुत्तरक्रान्तियुता अक्षांशाः। यदि तूत्तरास्तदाक्षोनक्रान्तेर्नतत्वान्नतोनोत्तरक्रान्तिरक्ष इति सम्यगुपपन्नम्। अक्षात् पलभानयनमाह" र० ना०।

"ताभ्योऽक्षज्या च तद्वर्गं प्रोज्झ्य त्रिज्याकृतेः पदम्। लम्बज्यार्कगुणाक्षज्या विषुवद्भा च लम्बया" सू० सि०।

"ताभ्योऽक्षकलाभ्योऽक्षज्या भवति। चः समुच्चये। अक्षज्यावर्गं त्रिज्यावर्गात् त्यक्त्वा शेषान्मूलं लम्बज्या। अनन्तरमक्षज्या द्वादशगुणा लम्बया लम्बज्यया गुणनस्य भजनसम्बन्धाद्भक्ता लब्धं विषुवद्भा पलभा स्यात्। अत्रोपपत्तिः। अक्षकलानां याक्षज्या तस्याश्च त्रिज्याकर्णे भुजत्वात् तद्वर्गोनात् त्रिज्यावर्गान्मूलं लम्बज्या कोटिः। तदाक्षज्या भुजस्तदा द्वादशकोटौ को भुज इत्यनुपातेन विषुवच्छायेति। अथाक्षज्ञाने नतभागेभ्यः क्रान्तिद्वारा सूर्यसाधनं सार्धश्लोकाभ्यामाह" र० ना०।

"स्वाक्षार्कनतभागानां दिक्साम्येऽन्तरमन्यथा। दिग्भेदेऽपक्रमः शेषस्तस्य ज्या त्रिज्यया हता। परमापक्रमज्याप्ता चापं मेषादिगो रविः। कर्कादौ प्रोज्झ्य चक्रार्धात् तुलादौ भार्धसंयुतात्। मृगादौ प्रोज्झ्य भगणान्मध्याह्नेऽर्कः स्फुटो भवेत्" सू० सि०।

"स्वदेशाक्षांशेष्टदिनीयमध्याह्नसूर्यनतांशयोर्भागानां बहुत्वाद्बहुवचनम्। एकदिक्त्वेऽन्तरमन्यदिक्त्वेऽन्यथा योगः कार्यः। शेष उक्तसंस्कारसिद्धोऽङ्कः क्रान्तिः स्यात्। तस्यापक्रमस्य ज्या त्रिज्यया गुण्या परमक्रान्तिज्यया प्रागुक्तया भक्ता फलस्य धनुर्भागादिकं मेषादिगो मेषादि-

राशित्रितयान्तर्गतोऽर्कः स्यात्। कर्कादित्रयेऽर्के चक्रार्धात् षड्राशित आगतार्कं त्यक्त्वा शेषं मध्याह्नकाले स्फुटोऽर्कः स्यात्। तुलादित्रितये षड्भयुतादागतार्कात् स्फुटोऽर्को ज्ञेयः। आगतोऽर्कः षड्भयुतः स्फुटोऽर्कः स्यादित्यर्थः। मकरादित्रयेऽर्के द्वादशराशिभ्य आगतार्कं त्यक्त्वा शेषमयनांशसंस्कृतः स्फुटोऽर्कः स्यात्। करणागतज्ञानार्थं व्यस्तायनांशसंस्कृत इत्यर्थसिद्धम्। पूर्वं तत्संस्कृतग्रहात् क्रान्तिः साध्येत्यर्थस्योक्तेः। अत्रोपपत्तिः। एकदिशि क्रान्त्यक्षयोगात्मकं दक्षिणमतोऽक्षोनं क्रान्तिर्दक्षिणा। भिन्नदिशि क्रान्त्यूनाक्षो नतं दक्षिणमनेनाक्षो हीनः क्रान्तिरुत्तरा। अक्षोनक्रान्तिर्नतं तदुत्तरमतोऽक्षयुतं क्रान्तिरुत्तरा। अस्या ज्या क्रान्तिरर्कज्या। यदि परमक्रान्तिज्यया त्रिज्याभुजः स्यात् तदानया केतीष्टा सायनार्कभुजज्या तद्धनुः सायनार्कभुजः। भुजस्य चतुर्षु पदेषु तुल्यत्वात् प्रथमपदे मेषादित्रये सूर्यस्यैव भुजत्वाद्भुज एव सूर्यः। कर्कादित्रये द्वितीयपदे षड्भादूनस्यार्कस्य भुजत्वाद्भुजोनषड्भमर्कः। एवं तृतीयपदे तुलादित्रये षड्भेन हीनार्कस्य भुजत्वात् षड्युतो भुजोऽर्कः। चतुर्थपदे मकरादित्रये सूर्योनभगणस्य भुजत्वात् सूर्योनभगणोऽर्क इति सर्वं वैपरीत्यात् सुगमतरम्। अथागतस्फुटसूर्यस्य करणागतस्फुटतुल्यत्वज्ञानमागतस्फुटसूर्यान्मध्यमस्य करणागतमध्यमार्कतुल्यत्वेन विशेषं वक्तुं श्लोकार्धेनाह र० ना०।

"तस्मान्मन्दमसकृद्वामं फलं मध्यो दिवाकरः"। सू०सि०।

"तस्मादागतस्फुटसूर्यान्मान्दं फलं मन्दफलमसकृदनेकवारं वामं व्यस्तं संस्कृतं स्फुटसूर्योऽहर्गणानीतः स्फुटसूर्यः स्यात्। अयमर्थः। स्फुटसूर्यं मध्यमं प्रकल्प्य पूर्वं मन्दोच्चात् प्रागुक्तरीत्या मन्दफलं धनमृणमानीय स्फुटसूर्ये ऋणं धनं कार्यं मध्यमसूर्यः। अस्मादपि मन्दफलं स्पष्टसूर्ये व्यस्तं संस्कृतं मध्यमोऽस्मादपि मन्दफलं स्पष्टे व्यस्तं मध्यमार्क इति यावदविशेषस्तावदसकृत् साध्योऽर्को मध्योऽहर्गणानीतो भवतीति। तथा च मध्यमार्कात् स्फुटार्कसाधनमेकवारं मन्दफलसंस्कारः स्फुटार्कान्मध्यार्कसाधने त्वनेकवारं मन्दफलव्यस्तसंस्कार इति विशेषोऽभिहितः। अत्रोपपत्तिः। मध्यमसूर्यादानीतमन्दफलेन संस्कृतो मध्यःस्फुटोऽर्को भवति। अयं वा तेनैव मन्दफलेन व्यस्तं संस्कृतो मध्यो भवति। अत्र स्फुटार्कान्मध्यार्कसाधने मध्यमज्ञानाभावात् तदानीतमन्दफलज्ञानमशक्यमतः स्फुटसूर्यं मध्यमं प्रकल्प्यानीतमन्दफलेनाभिमतासन्नेन स्फुटोऽर्कौ व्यस्तं संस्कृतो मध्यमासन्नः। अस्मादपि मन्दफलमभिमतासन्नमपि पूर्वस्मात् सूक्ष्ममिति यावदविशेषे मध्यार्कसाधितं मन्दफलं भवतीति निरवद्यं सर्वमुक्तम्। अथ मध्याह्ने छायाकर्णयोरानयनं विवक्षुः प्रथमं तात्कालिकनतांशज्ञानं कथयंस्तद्भुजकोटिज्ये कार्ये इत्याह" र० ना०।

"स्वाक्षार्कापक्रमयुतिर्दिक्साम्येऽन्तरमन्यथा। शेषं नतांशाः सूर्यस्य तद्बाहुज्या च कोटिजा" सू० सि०।

"दिक्साम्ये एकदिक्त्वे स्वदेशाक्षांशमध्याह्नकालिकसूर्यक्रान्त्यंशयोर्योगः। अन्यथा अत उक्तादेकदिक्त्वाद्वैपरीत्ये भिन्नदिक्त्वे इत्यर्थः अक्षांशक्रान्त्यंशयोरन्तरं कार्यं शेषं संस्कारोत्पन्नं सूर्यस्य मध्याह्ने नतांशास्तेषां नतांशानां भुजरूपाणां ज्या कोटिजा तदंशा नवतिशुद्धाः कोटिस्तत उत्पन्ना ज्या। चः समुच्चये। साध्या। अत्रोपपत्तिः। याम्योत्तरवृत्ते सूर्यस्य मध्याह्ने स्वस्तिकादनन्तरं नतांशा विषुवद्वृत्तपर्यन्तमक्षांशाः। विषुवद्वृत्तसूर्ययोरन्तरं क्रान्त्यंशाः। अतो दक्षिणक्रान्तौ क्रान्त्यक्षयोगो नतांशा उत्तरक्रान्तौ क्रान्त्यूनाक्षोऽक्षोनक्रान्तिर्वा दक्षिणोत्तरनतांशास्तेषां ज्या दृग्ज्या भुजस्तत्कोटिज्या महाशङ्कुः कोटिस्त्रिज्या कर्ण इति छायाक्षेत्रे तदंशानां भुजत्वात्" अथ छायाकर्णयोरानयनमाह। र०ना०।

"शङ्कुमानाङ्गुलाभ्यस्ते भुजत्रिज्ये यथाक्रमम्। कोटिज्यया विभज्याप्ते छायाकर्णावहर्दले" सू० सि०।

"भुजत्रिज्ये नतांशज्यात्रिज्ये इत्यर्थः। शङ्कोः प्रमाणाङ्गुलानि द्वादश तैर्गुणिते कार्ये। उभयत्र कोटिज्यया नतांशोननवत्यंशानां ज्ययेत्यर्थः। भक्त्वा लब्धे द्वे यथाक्रमं भुजज्यात्रिज्यास्थानीयफलक्रमेण मध्याह्ने छायातत्कर्णौ भवतः। अत्रोपपत्तिः। द्वादशाङ्गुलशङ्कोः कोटिरिष्टच्छायाभुजस्तत्कृत्योर्योगपदं कर्ण इति छायाकर्णः कर्ण इति छायाक्षेत्रे। महाशङ्कुकोटौ दृग्ज्यात्रिज्ये भुजकर्णौ तदा द्वादशाङ्गुलशङ्कुकोटौ कावित्यनुपातेन मध्याह्नकाले छायातत्कर्णौ भवतः। साधकयोस्तात्कालिकत्वादित्युपपन्नम्" र० ना०।

अथ भुजसाधनं विवक्षुः प्रथममग्रा कर्णाग्रे आनयति।

"क्रान्तिज्या विषुवत्कर्णगुणाप्ता शङ्कुजीवया। अर्काग्रा स्वेष्टकर्णघ्नी मध्यकर्णोद्धृता स्वका" सू० सि०।

सूर्यक्रान्तिज्या अक्षकर्णगुणिता शङ्कुजीवया शङ्कुर्द्वादशाङ्गुलस्तद्रूपा ज्या तयेत्यर्थः। द्वादशभिरिति फलितम्। भक्ता फलं सूर्यस्याग्रा। उपलक्षणादुग्रहस्यापि। इयमग्रा स्वाभिमतकालिकच्छायाकर्णेन गुणिता मध्यकर्णोद्धृता कर्णस्य व्यासस्य मध्यमर्धमिति मध्यकर्णोव्यासार्धं त्रिज्या तयेत्यर्थः। भक्ता फलं स्वका स्वकर्णाग्रा स्यात्। अत्रोपपत्तिः। क्रान्तिज्योन्मण्डले कोटिरग्रा क्षितिजे कर्णः कुज्या भुज इत्यक्षक्षेत्रे द्वादशकोटावक्षकर्णः कर्णस्तदा क्रान्तिज्याकोटौ कः कर्ण इत्यनुपातेनाग्रा। त्रिज्यावृत्ते इयं कर्णवृत्ते केत्यनुपातेन कर्णवृत्ताग्रेत्युपपन्नम्। अथ भुजानयनं श्लोकाभ्यामाह" र० ना०।

"विषुवद्भायुताकार्ग्रा याम्ये स्यादुत्तरो भुजः। विषुवत्यां विशोध्योदग्गोले स्याद् बाहुरुत्तरः। विपर्ययाद्भुजो याम्यो भवेत् प्राच्यपरान्तरे। माध्याह्निको भुजो नित्यं छाया माध्याह्निकी स्मृता" सू० सि०।

"अर्काग्रा स्वस्वाभीष्टकालिककर्णाग्रा याम्ये दक्षिणगोले विषुवद्भायुताक्षच्छायया युक्तोत्तरदिक्को भुजः स्यात्। उत्तरगोले विषुवत्यां पलभायां कर्णाग्रां विशोध्य न्यूनीकृत्य शेषमुत्तरदिक्को भुजः स्यात्। ननु कर्णाग्रा पलभायां यदा न शुध्यति तदा कथं भुजः साध्य इत्यत आह। विपर्ययादिति। अक्षभां कर्णाग्रायां विशोध्य शेषं दक्षिणो भुजः स्यात्। ननु भुजस्य याम्यत्वमुत्तरत्वं वा कस्मादित्यत आह प्राच्यपरान्तर इति। पूर्वापरसूत्रादन्तरालप्रदेशे याम्ये उत्तरो वा भुजः स्यादित्यर्थः। ननु तथापि द्वितीयावधेरनुक्तत्वादन्तरस्याप्रसिद्धेः पूर्वापरसूत्रात् कस्यान्तरं भुज इत्याशङ्कायां उत्तरं मध्याह्नच्छायास्वरूपकथनच्छलेनाह माध्याह्निक इति मध्याह्नकालिको भुजः सदा माध्याह्निकी मध्याह्नकालिकी छायोक्ता। तथा च छायाग्रं प्राच्यपरसूत्राद्याम्यमुत्तरं वा यदन्तरेण स भुज इति व्यक्तीकृतम्। अत्रोपपत्तिः। शङ्कुमूलं प्राच्यपरसूत्राद्याम्यमुत्तरं वा यदन्तरेण स याम्योत्तरो भुजो पक्षस्य। शङ्कुस्तु यद्दादलम्बसूत्रं क्षितिजसमसूत्रावधि तत्रायं भुजः शङ्कुतलाग्रयोः संस्कारजः। शङ्कुतलं तु स्वाहोरात्रवृत्तस्थितोदयास्तसूत्राच्छङ्कुमूलं यदन्तरेण तद्दक्षिणम्। अग्रा तु पूर्वापरसूत्रादुदयास्तसूत्रावध्यन्तरमुत्तरदक्षिणगोलक्रमेणोत्तरदक्षिणा। तत्र पश्चात्परदिशि मण्डलान्तरेऽस्ताद्यस्तमिति शङ्कुतलमुत्तरमग्रापि व्यस्तदिक्केति तत्संस्कारो भुजो गोले प्रत्यक्षः। स महाशङ्कोरिति यदि महाशङ्कोरयं तदा द्वादशाङ्गुलशङ्कोः क इत्यनुपातेन भुजः पूर्वापरसूत्राच्छायाग्रावधिः। तत्र शङ्कुतलाग्रे द्वादशाङ्गुलशङ्कोः साधिते तत्संस्कारेण भुजः स एव। तत्राग्रा पूर्वं साधिता शङ्कुतलं तु द्वादशाङ्गुलशङ्कोः पलभा महाशङ्कुः कोटिः शङ्कुतलं भुजो दृतिः कर्ण इत्यक्षक्षेत्रे द्वादशकोटौ पलभा भुजस्तदा महाशङ्कुकोटौ को भुज इत्यनुपातेन शङ्कुतलमानीय महाशङ्कोरियं द्वादशाङ्गुलशङ्कोः किमित्यनुपातेन गुणहरयोस्तुल्यत्वान्नाशेन पलभाया एवावशिष्टत्वात्। सा तूत्तरा दक्षिणगोलेऽग्राया उत्तरत्वादेकदिक्त्वेन पलभाग्रयोर्योगे उत्तरो भुजः। उत्तरगोलेऽग्राया दक्षिणत्वेन भिन्नदिक्त्वात् पलभाग्रयोरन्तरं भुजस्तत्र पलभायाः शेषस्तूत्तरो भुजोऽग्रायाः शेषं दक्षिणो भुजः। मध्याह्ने छायाया भुजरूपत्वान्मध्याह्नकालिको भुजो मध्याह्नच्छायेति सर्वं युक्तम्। अथ याम्योत्तरवृत्तस्थच्छायाकर्णमुक्त्वा पूर्वापरवृत्तस्थच्छायाकर्णं प्रकारद्वयेनाह" र० ना०।

"लम्बाक्षजीवे विषुवच्छायाद्वादशसङ्गुणे। क्रान्तिज्याप्ते तु तौ कर्णौ सममण्डलगे रवौ" सू० सि०।

"लम्बज्याक्षज्ये क्रमेणाक्षभाद्वादशभ्यां गुणिते उभयत्र क्रान्तिज्यया भक्ते तुकारात् फले, सममण्डलस्थेऽर्के तौ द्वयोरप्यच्छायासम्बद्धौ कर्णौ भवत उभयत्र छायाकर्णः स्यात्। अत्रोपपत्तिः। समस्थकोपरि पूर्वापरानुकारेण यद्वृत्तं तत्सममण्डलसञ्ज्ञम्। तत्रस्थस्य छायाकर्णानयनम्। पलभाभुजेऽक्षकर्णः कर्णस्तदा क्रान्तिज्याभुजे कः कर्ण इति समशङ्कुः क्रान्तिज्याभुजे समशङ्कुकुज्योन्नतद्युज्योः क्रमेण कर्णकोटित्वात्। अथाच्छङ्कुमानाङ्गुलान्यस्त इत्यादिना त्रिज्या द्वादशगुणितानेन भक्ता तत्र।

"छेदं लवं च परिवर्त्य हरस्य शेषः कार्योऽत्र भागहरणे गुणनाविधिश्च" इत्युक्तेः। पलभयापि गुण्या क्रान्तिज्याक्षकर्णाभ्यां भक्ता। तत्र त्रिज्या द्वादशगुणिता अक्षकर्णभक्ता लम्बज्येति सिद्धाता लम्बज्या पलभागुणिता क्रान्तिज्याभक्ता फलं समवृत्तगतच्छायाकर्णः। अथात्रैव पलभाभुजे द्वादशकोटिरक्षज्याभुजे का कोटिरिति लम्बज्यापहृते पलभयोस्तुल्यत्वान्नाशादक्षज्या द्वादशगुणा

क्रान्तिज्या भक्ता छायाकर्णः सममण्डलगतः। क्रान्तिज्यायाः यदायं कर्णः सिद्ध्येत् हि सर्वदा समवृत्तगतो ग्रह इति समवृत्तगतग्रहस्यैव कर्णः साध्यो नान्यदेति सूचनार्थं सममण्डलगे रवावित्युक्तम्" ।

ननु यद्ग्रहाधिष्ठिताहोरात्रपूर्वापरवृत्तसम्पातादवलम्बरूपसमशङ्कोर्गोले प्रत्यक्षसिद्धस्य साधनार्थं समवृत्तसत्त्वाभावेऽपि छायाकर्णः साध्यः। सममण्डलगे रवावित्युक्तिस्तु स्वाधिष्ठिताहोरात्रवृत्तपरा न त्वन्यदा न साध्योऽन्यथा-ऽव्यक्तत्वेन प्रकारस्यातिप्रसङ्गापत्तेः। न हि प्रकारे तद्व्यावर्तकं विशेषणं प्रसिद्धं येन नातिप्रसङ्गः। परन्तु यदा सममण्डलेऽक्षांशाधिकक्रान्त्या ग्रहाधिष्ठितस्वाहोरात्र-वृत्तानामसम्बन्धस्तदा गोले समशङ्कोरदर्शनात् तत्र कथं तत्साधनमनिवारितमित्यतः सममण्डलगे रवावित्यस्य पूर्वोक्त एवार्थ इत्यभिप्रायं सममण्डलकर्णानयनप्रकारान्तरकथनच्छलेनाह" र० ना० ।

"सौम्याक्षोना यदा क्रान्तिः स्यात्तदा द्युदलश्रवः। विषुवच्छाययाभ्यस्तः कर्णो मध्याप्रयोद्भृतः" सू० सि०

"यदोत्तरा क्रान्तिरक्षादल्पा स्यात् तदा द्युदलश्रवः समवृत्तस्थार्कक्रान्तिसाधितमध्याह्नकर्णः। न तु मध्याह्नकालिकः। अक्षभया गुणितो मध्याग्रया व्हृतैतमध्याह्नकर्णाग्रया भक्तः फलं समण्डलगतग्रहविम्बस्य छायाकर्णः स्यात्। अत्र सौम्येत्यनेन दक्षिणक्रान्तौ तदसाधनं सममण्डलगतग्रहविम्बस्यादर्शनादिति स्फुटत्वम्। अन्यथाऽऽल्पक्रान्तौ दक्षिणगोले समशङ्कोः प्रत्यक्षत्वात् तन्निवारणानुपपत्तेः। अत्रोपपत्तिः। सममण्डलप्रवेशकालिकमध्याह्नच्छायाकर्णादवस्तुभूतात् कर्णेन द्वादशाङ्गुलशङ्कुस्तदा त्रिज्याकर्णेन क इति मध्यशङ्कुस्तात्कालिकः। द्वादशकोटावक्षभा भुजस्तदा महाशङ्कुकोटौ क इति शङ्कुतलम्। द्वादशनाशात् पलभात्रिज्याघातो मध्यकर्णभक्त इति। अनेन भुजेन मध्यशङ्कुस्तदाऽग्राभुजेन क इति समशङ्कुर्द्वादशाग्रामध्यकर्णघातो मध्यकर्णपलभाभ्यां भक्तोऽग्राभुजे समशङ्कुतद्धृत्योः कोटिकर्णत्वात्। अस्मात् पूर्वप्रकारेण छायाकर्णानयने द्वादशनाशात्मध्यकर्णपलभाभित्रिज्याघातोऽग्रामध्यकर्णाभ्यां भक्त इति तुल्ययोर्मध्यकर्णमितगुणहरयोर्नाशकरणेन सिद्धम्। स्वतन्त्रे चास्य नियोऽनुमयक्यत्वात्। तथापि भाजकहरौ त्रिज्याऽपवर्त्य हरस्थाने मध्यकर्णगुणिताग्रा त्रिज्याभक्तेति मध्यकर्णाग्रा सिद्धातो मध्याग्रयोद्भृत इत्युक्तम्। भाजकस्थाने तु मध्यकर्णपलभाघात इति दक्षिणगोले ग्रहादर्शनात्र साधितः। उत्तरगोलेऽपि क्रान्तिरक्षाधिका तदा सममण्डलप्रवेशासम्भवात्र साधितः सममण्डलावध्यक्षांशत्वात्। अल्पक्रान्तौ तत्सम्भवात् साधितः। नह्यसिद्धं गोले गणितसाध्यं मानाभावादित्युपपन्नं सौम्येत्यादि। भास्कराचार्यैस्तु "मार्तण्डः सममण्डलं प्रविशति स्वल्पेऽपमे स्वात् पलात् इत्यत्रो ह्युत्तरगोल एव स विशन् साध्या तदैवास्य भा। अन्यत्रेऽपि समाख्यमण्डलभिने यः शङ्कुरुत्पद्यते नूनं सोऽपि परानुपातविषये नैवं क्वचिद्व्यति" इत्यनेन तथापि साधितः। अथ स्वाभिमतकर्णेन स्वकाकाले भुजार्थं कर्णहत्याया साध्येति सूचनार्थं कर्णायासक्तप्रकारेण पुनरपि मध्यकर्ण इति प्रागुक्तस्य स्फुटीकरणार्थं चाह" र० ना० ।

"स्वक्रान्तिज्या त्रिजीवाघ्नी लम्बज्याप्ताऽग्रा मौर्विका। स्वेष्टकर्णहता भक्ता त्रिज्यायाग्राङ्गुलादिका" सू० सि०

"स्वाभिमतकालिकक्रान्तिज्या त्रिज्यया गुणिता लम्बज्यया भक्ता फलमग्रा ज्यारूपा। लम्बज्याकोटौ त्रिज्या कर्णः क्रान्तिज्याकोटौ कः कर्ण इत्यग्रेत्युपपत्तिः। उत्तरार्धं पुनरुक्तं व्याख्यातप्रायम्। यदि तु पूर्वोक्तकर्णवृत्ताग्रानयनश्लोके शङ्कुजीवेत्यस्य शङ्कोः कोटिरूपत्वात् पूर्वसाधितनतांशभुजकोटिज्ययेत्यर्थो मध्यकर्ण इत्यस्य च तात्कालिकमध्याह्नच्छायायाः कर्णस्तदा न पुनरुक्तम्। परन्त्वर्काग्रेत्यस्य तात्कालिकमध्याह्नकालिककर्णाग्रार्थः स्वकेत्यस्य च स्वाभीष्टकालिककर्णाग्रार्थो बोध्यः। एतदुपपत्तिस्तु द्वादशकोटावक्षकर्णः कर्णस्तदा क्रान्तिज्याकोटौ कः कर्ण इति स्वकालिकाग्रा। त्रिज्यावृत्ते इयं तदा तात्कालिकमध्याह्नकालिकच्छायाकर्णेन नतांशकोटिज्याभक्तद्वादशत्रिज्याघातात्मकेन केति द्वादशत्रिज्याघातयोर्गुणहरत्वेन तुल्ययोर्नाशादक्षकर्णगुणितक्रान्तिज्या तात्कालिकमध्याह्ननतांशकोटिज्यया भक्तेति। तात्कालिकमध्याह्नच्छायाकर्णेनेयं कर्णाग्रा तदा स्वाभीष्टकालिकच्छायाकर्णेन केति स्वकालिकी कर्णाग्रेत्युपपन्ना। सूर्याधिष्ठिताहोरात्रवृत्तयाम्योत्तरवृत्तोर्ध्वसम्पातस्तात्कालिकमध्याह्न परानुपातार्थं बोध्यम्। अथ कोणच्छायाकर्णसाधनार्थं कोणशङ्कुं द्विगजेन्द्र श्लोकपञ्चकेनाह" र० ना० ।

"त्रिज्यावर्गार्धतोऽग्रज्या वर्गोनाद्द्वादशाहतात् । पुनर्द्वादशनिघ्नाच्च लभ्यते यत् फलं बुधैः । शङ्कुवर्गार्धसंयुक्तविषुवद्वर्गभाजितात् । तदेव करणीनाम तां पृथक् स्थापयेद्बुधः । अर्कघ्नी विषुवच्छायाऽग्रज्यया गुणिता तथा । भक्ता फलाख्यं तद्वर्गसंयुक्तकरणीपदम् । फलेन हीनसंयुक्तं दक्षिणोत्तरगोलयोः । याम्ययोर्विदिशोः शङ्कुरेवं याम्योत्तरे रवौ । परिभ्रमति शङ्कोस्तु शङ्कुरुत्तरयोस्तु सः । तत्त्रिज्यावर्गविश्लेषान्मूलं दृग्ज्याभिधीयते" सू० सि० ।

"पूर्वप्रकारानीतैस्तात्कालिकाग्रज्याया न तु कर्णाग्रायाः पूर्वं कर्णस्यैवासिद्धेः । वर्गेण हीनात् त्रिज्यावर्गार्धाद्द्वादशगुणात् पुनर्द्वितीयवारं द्वादशगुणात् । चः समुच्चये । तेन द्वादशगुणितस्य द्विधा स्थापननिरासाच्चतुश्चत्वारिंशदधिकशतगुणितादित्यर्थः । पृथक् गुणकोक्तिस्तु गुणनसुखार्थम् । शङ्कोर्द्वादशाङ्गुलात्मकस्य वर्गार्धेन द्विसप्तत्या युक्तेन पलभावर्गेण भाजिताद्बुधैर्गणितकर्तृभिर्यत्सङ्ख्यामितं फलं प्राप्यते तत्सङ्ख्यामितं करणी नामसञ्ज्ञया करणी । तां करणीं बुधो गणकः पृथगेकत्र स्थाने स्थापयेत् । ततो द्वादशगुणिता पलभाग्रज्यया पूर्वगृहीतया गुणिता तथा द्विसप्ततियुतेन पलभावर्गेण भक्ता लब्धं फलसञ्ज्ञं तस्य फलस्य वर्गेण युतायाः करण्या मूलं दक्षिणोत्तरगोलयोः क्रमेण फलेनोनयुतम् । एवमुक्तप्रकारेण सिद्धः शङ्कुः, शङ्कोर्गणितकर्तुः सकाशाद्दक्षिणोत्तरे सूर्ये परिभ्रमति सति तुकारः क्रमार्थे क्रमेण याम्ययोरुत्तरयोर्विदिशोराग्नेयनैरृत्योरैशानीवायव्योः कोणयोरित्यर्थः । द्वितीयतुकारः पूर्वापरदिने विभागक्रमाधिकत्वेन विदिशोरित्यत्रान्वेति तेन दिनपूर्वार्धे आग्नेयैशान्योर्दक्षिणोत्तरक्रमेण, दिनापरार्धे नैरृत्यवायव्योर्दक्षिणोत्तरक्रमेणेति फलितार्थः । स कोणसञ्ज्ञः शङ्कुः स्यात् । कोणशङ्कुत्रिज्ययोर्वर्गान्तरान्मूलं दृग्ज्योच्यते" र० ना० ।

अथैतच्छायाच्छायाकर्णयोरानयनमाह ।

"स्वशङ्कुना विभज्याप्ते दृक्त्रिज्ये द्वादशाहते । छायाकर्णौ तु कोणेषु यथास्वं देशकालयोः" सू० सि० ।

"कोणीयदृग्ज्यात्रिज्ये द्वादशगुणे दृग्ज्यासम्बन्धिकोणशङ्कुना भक्ते लब्धे दृग्ज्यात्रिज्याक्रमेण छायाच्छायाकर्णौ स्तः । तुकारादेवं कोणेषु चतुर्षु देशकालयोः यथास्वं स्वमनतिक्रम्येति यथास्वं यथादेशं यथाकालं छायाच्छायाकर्णौ साध्यौ । अयमर्थः । क्वचिद्देशे चतुर्षु कोणेषु क्वचिच्च कोणद्वये क्वचिच्च दिनार्धे एव कोणद्वय इत्यादि देशकालानुरोधेन यथायोग्यमिति । अत्रोपपत्तिः प्रागुक्ता स्पष्टा च" । अथ दिक्प्रदेशसम्बन्धेन छायाकर्णावुक्त्वा कालसम्बन्धेन सार्धश्लोकाभ्यामाह" र० ना० ।

"त्रिज्योदक्चरजायुक्ता याम्यायां तद्विवर्जिता । अन्त्या नतोत्क्रमज्योना स्वाहोरात्रार्धसङ्गुणा । त्रिज्याभक्ता भवेच्छेदो लम्बज्याघ्नोऽथ भाजितः । त्रिभज्यया भवेच्छङ्कुस्तद्वर्गं परिशोधयेत् । त्रिज्यावर्गात् पदं दृग्ज्या छायाकर्णौ तु पूर्ववत्" । सू० सि०

"उत्तरगोले चरोत्पन्नया ज्यया चरज्ययेत्यर्थः । पूर्वं चरानयने चरज्यायाश्चरजेति सञ्ज्ञोक्तेः । युक्ता त्रिज्याऽन्त्या स्यात् । याम्यगोले तया चरज्ययोना त्रिज्याऽन्त्या स्यात् । नतोत्क्रमज्योना सूर्योदयाद्दिनगतघट्यो दिनशेषघट्यो वा दिनार्धान्तर्गता उन्नतसञ्ज्ञास्ताभिरूनं दिनार्धं नतकालो घट्यात्मकस्तस्मादसुभ्यो लिप्तास्तत्त्वयमैरित्यादिविधिना, सुनयो रन्ध्रयमला इत्याद्युक्तोत्क्रमज्यापिण्डैर्ज्योत्क्रमज्या । पञ्चदशघट्यधिकनते तु पञ्चदशघट्यूननतस्य क्रमज्याखण्डैः क्रमज्या तया युक्ता त्रिज्योत्क्रमज्या भवति । तया हीनेत्यर्थः । स्वाहोरात्रार्धसङ्गुणा । स्वगृहीतचरज्यासम्बन्ध्यहोरात्रवृत्तव्यासार्धं द्युज्या तया गुणिता त्रिज्यया भक्ता फलं छेदसञ्ज्ञं स्यात् । अथानन्तरं छेदो लम्बज्यया गुणितस्त्रिज्यया भाज्यः फलमिष्टकाले शङ्कुः स्यात् । तस्य शङ्कोर्वर्गं त्रिज्यावर्गाच्छोधयेत् । शेषस्य मूलं दृग्ज्या । आभ्यां छायाकर्णौ तु पूर्ववत् । पूर्वोक्तरीत्या भवतः । अत्र छायाकर्णौ त्विति कोणच्छायाकर्णसाधनश्लोकान्तभागस्य ग्रहणात् तच्छ्लोकोक्तरीत्याऽभीष्टशङ्कुदृग्ज्याभ्यां छायाकर्णौ साध्यावित्युक्तम् । अत्रोपपत्तिः । याम्योत्तरवृत्तोर्ध्वभागस्थाधिष्ठितद्युरात्रवृत्तसम्पातात् क्षितिजद्युरात्रवृत्तसम्पातद्वयबद्धोदयास्तसूत्रक्षितिजसम्बद्धयाम्योत्तरवृत्तसूत्रसम्पातपर्यन्तमहोरात्रवृत्ते सूत्रं त्रिज्यानुरूपमन्त्या । सा तूत्तरगोले चरज्यायुता त्रिज्या दक्षिणगोले चरज्ययोना त्रिज्या । उन्मण्डलयाम्योत्तरसूत्रावध्यहोरात्रवृत्तव्यासार्धं त्रिज्यात्वात् उन्मण्डलस्योत्तरदक्षिणक्रमेण क्षितिजादूर्ध्वाधःस्थत्वेन तद्याम्योत्तरसूत्रयोर्मध्ये चरज्यात्वाच्च ।

ग्रहाहोरात्रवृत्ते याम्योत्तराऽहोरात्रवृत्तसम्पाता-दुभयत्र नतघट्यन्तरस्थाने तत्सूत्रं नतकालस्य सम्पूर्ण-ज्या। तन्मध्यादूर्ध्वं सूत्रं शररूपं नतोत्क्रमज्या। तया हीनान्त्या ग्रहस्थानादहोरात्रवृत्ते उदयास्तसूत्रपर्य-न्तमृजुसूत्रं त्रिज्यानुरुद्धमिष्टाख्या। तत्तुल्या याम्योत्त-रोर्ध्वव्याससूत्रान्तर्गता सा द्युज्याप्रमाणसाधितेष्टहृतिः। द्युज्यागुणा त्रिज्याभक्ता फलं छेदः। यदि तस्मात् त्रि-ज्याकर्णे लम्बज्या कोटिस्तदेष्टहृतिकर्णे का कोटिरि-त्यनुपातेनेष्टशङ्कुः। अस्माद्दृग्ज्या छाया तत्कर्णा उक्तरीत्या सिद्ध्यन्तीत्युक्तमुपपन्नम्। अथ श्लोकत्रयेण छायाकर्णाभ्यां नतकालानयनमाह” र० ना०।

“अभीष्टच्छाययाभ्यस्ता त्रिज्या तत्कर्णभाजिता। दृग्-ज्या तद्वर्गसंशुद्धात् त्रिज्यावर्गाच्च यत् पदम्। शङ्कुः सत्रिभजीवाघ्नः स्वलम्बज्याविभाजितः। छेदः स त्रि-ज्यायाभ्यस्तः स्वाहोरात्रार्द्धभाजितः। उन्नतज्या तया हीना स्वान्त्या शेषस्य कार्मुकम्। उत्क्रमज्या-भिरेवं स्युः प्राक्पश्चार्द्धनतासवः”। सू० सि०

‘अभीष्टकालिकच्छायया गुणिता त्रिज्या गृहीतच्छा-यायाश्छायाकर्णेन भक्ता फलं दृग्ज्या दृग्ज्याया वर्गेण हीनात् त्रिज्यावर्गाद्यत्तच्छाभितं मूलम्। चकारोयत्त-दोर्नित्यसम्बन्धात् तच्छब्दपरः। अभीष्टशङ्कुः। स इष्टशङ्कुस्त्रिज्यया गुणितः स्वदेशीयलम्बज्यया भक्तः फलं छेदः। स छेदस्त्रिज्यया गुणितो द्युज्यया भक्त उन्नतकालस्य ज्या विलक्षणा। यद्धनुरुन्नतकालो न भवति। तयानीतयोन्नतज्यया हीना स्वान्त्या स्वद्युज्यासम्बद्धचरज्यावगतान्त्या। अवशेषस्योत्-क्रमज्याभिः“मुनयोरन्ध्रयमलाः” इत्याद्युक्तोत्क्रमज्या-पिण्डैर्धनुः। अवशेषस्य त्रिज्याधिकत्वे तु यदधिकं तस्य क्रमज्यापिण्डैर्धनुस्ततःपञ्चाशद्युक्तमुत्क्रमधनुर्भवति। एवं प्रकारेण सिद्धाङ्का दिनस्य पूर्वार्धापरार्धयोर्नतका-लासवो भवन्ति। अत्रोपपत्तिः। पूर्वोक्तव्यत्यासात् सुगमा। तत्र छेदस्त्रिज्यापरिणत इष्टान्त्या तस्या ज्यात्वासम्भवः। कथ्यु दयास्तसूत्रस्याहोरात्रवृत्तव्यास-सूत्रत्वाभावादित्युन्नतज्याकारेण स्वल्पान्तरत्वेन दर्शना-दुन्नतजेत्युक्तम्। अत एव भास्कराचार्यैः “इष्टान्त्य-कमुन्नतकालमौर्वीतुल्यां प्रकल्प्य” इत्याद्युक्तम्। तद्धनुर-मुनामुन्नतकालत्वापत्त्या तया हीनेत्यादिभागस्य व्यर्थ-त्वापत्तेरिति दिक्” र० ना०।

“इति त्रिप्रश्नाधिकारः” सू० सि०।

“दिग्देशकालानां प्रतिपादनमिदं परिपूर्तिमाप्तमित्यर्थः। तत्र दिशां साधनं शिलातल इत्यादि नियतं, तत्सम्बन्धेन समकोणयाम्योत्तरशङ्कूनां साधनान्यपि दिगन्तर्गतान्यनि-यतानि। पलभालम्बाक्षादिसाधनं देशनिरूपणं निय-तम्। अग्राचरादिसाधनमनियतम्। कालसाधनं तद्वशाच्छायादिसाधनं च कालनिरूपणमिति विवेकः” र० ना०।

एवं शङ्कुच्छायया देशभेदेन सूक्ष्मे कालसाधने स्थिते वक्ष्यमाणछायापादेन कालज्ञानं स्थूलं किञ्चिद् यविषय्-ञ्चेत्यवधेयम् छायाकर्णादिकं प्रसङ्गादत्रोक्तम्। तत्तदर्थं ञतस्तद् विशिष्य नोक्तम्। [छत्त्रधरे हेमच०।

**छायाकर** त्रि० छायां करोति छत्त्रेण कृ–ट ६त०।

**छायाङ्क** पु० छाया सूर्यप्रतिबिम्बः अङ्कोऽस्य। चन्द्रे हेमच०। तस्य सूर्यकिरणप्रतिबिम्बेनैव प्रकाशः इन्दु-शब्दे ९३१पृ० ह० स० उक्तदिशा दर्शितः “छाया मृगाङ्क छायाभृदादयोऽपि चन्द्रे।

**छायातनय** पु० ६त०। शनैश्चरे हला०। छायाशब्दे तस्य तत् पुत्रकथा दृश्या। छायासुतादयोऽप्यत्र। “सूर्यपुत्रं महाबाहुं छायागर्भसमुद्भवम्” शनिप्रणाममन्त्रः।

**छायातरु** पु० छायाप्रधानस्तरुः शा० त०। “पूर्वाह्णे च पराह्णे च तलं यस्य न मुञ्चति। अत्यन्तशीतला छाया स च्छायातरुरुच्यते” इत्युक्ते छायाप्रधाने वृक्षे। “स्निग्धच्छायातरुषु वसतिं रामगिर्य्याश्रमेषु” मेघः। छायावृक्षोऽप्यत्र स च नमेरुवृक्षे शब्दार्थचि०।

**छायापथ** छायायुक्तः पन्थाः। आकाशस्थे ज्योतिश्चक्रमध्य-वर्त्तिनि दक्षिणोत्तरायते तिरश्चीने आकाशस्थानभेदे। “छायापथेनेव शरत्प्रसन्नम्” रघुः।

**छायापाद** पु० छायायाः शङ्कुच्छायायाः पाद इव। द्वादशाङ्गुलशङ्कोश्छायापादमाने। मासभेदे मध्याह्ने तत्-संख्याभेदः तेन च दिनमानज्ञानं चाह” ज्यो० त० “अर्काङ्गुला तु सच्छाया काष्ठी द्व्यङ्गुलमूलिका। शङ्कु-संज्ञा भवेच्चैव तच्छायां परिकल्पयेत्। मध्याह्नहीने-रादित्ययुक्तैश्छायाङ्गुलैर्हरेत्। षट्पूरितद्विरादण्डं लब्धं दण्डादिकं भवेत्। पूर्वाह्णच्छाययातीतं परा-ह्णच्छाययैष्यकम्। शून्यैकरामवाणेभदिशोरुद्राः ।११ १।५।८।१०।११। क्रमोत्क्रमैः। आषाढादिषु मासेषु छाया माध्याह्निकी मता। अयनांशजमासान्ते व्युत्-

क्रमेणादितो बुधैः । संक्षोत्क्रान्त्यदिने भागहारे दृढीतरे तथा" । प्रकारान्तरन्तु, "पञ्चाब्धिरामयुग्मैक शून्यैकयुग्मराम्भयः । चतुःपञ्चर्त्तवो) ५,४,३,२,१,०।१, २,३,४,५,६, माघात् छायापादा दिनार्द्धके । अयनाग्रजमासान्ते त्रिपादगणनक्रमात् । दिने दिने भागहारो मध्यच्छायापदे मतः । शङ्कुः षट्त्रंशको व्याङ्गुलङ्गुलेर्व्यङ्गुलिस्तथा । सद्गुनं द्दिगतं हीनं मध्यपादैश षड्गुणैः । छायापादैश मध्योनैः षड्गुनैर्द्दिगुणैर्हरेत् । प्राङ्माद्दिप्रदार्द्धे तु लब्धा दण्डा गतैष्यकाः । प्राक् पश्चिमदिनार्द्धोन शेषात् षष्टिगुणात्फलम्" । इदञ्च देशभेदविषयं स्थूलञ्च सूक्ष्मन्तु सू° सि° उक्तं तच्च छायाशब्दे दृश्यम् ।

**छायापुरुष** पु° छायायां दृश्यः पुरुषः पुरुषाकृतिः । आकाशे दृश्ये निजच्छायानुरूपे पुरुषाकृतियुक्ते पदार्थे । तद्दर्शनोपायमाह योगप्रदीपिकायाम् ५पटले "शिव उवाच । निरभ्रं गगनं देवि ! यदा भवति निर्म्मलम् । तदा छायासखो भूत्वा निश्चलः प्रयतो धिया । स्वच्छायाकल्पमालोक्य स्वगुरूक्तक्रमेण वै । सम्मुखं गगनं पश्येच्छिनिमेषक्षणैकधीः । शुद्धस्फटिकसङ्काशः पुरुषस्तत्र दृश्यते । न दृश्यते यदा तत्र पुनस्तद्वत् परीक्षयेत् । बहुधा दर्शनेनैव साक्षात्कारो भवेत् ध्रुवम् । कस्यचित् भाग्यतो दृश्येत यदि विश्वाऽक्षिगोचरः । भवत्येव न सन्देहो गुरुविश्वासतः शिवे ! । गुरुं सम्यक् पूजयित्वा पश्येच्छायां समाहितः । तथा षण्मासपर्य्यन्तं मृत्युस्तस्य न विद्यते । शिरोहीनं यदा पश्येत् षण्मासाभ्यन्तरे मृतिः । यदा पादौ न दृश्येते भार्य्याहानिर्न संशयः । न दृश्येते यदा पाणी भ्रातृहानिर्न संशयः । एतज् ज्ञात्वा सुधीः सम्यक् गङ्गातीरं समाश्रयेत् । योगाभ्यासेन सततं प्राणायामेन संस्कृतः । यथा वा सतुसमीपस्थो लक्षं मृत्युञ्जयं जपेत् । योद्य भुक्तो हविष्याशी यतवाग्यतमानसः । मृत्युञ्जयेच सन्देहो अन्यथा मृत्युमृच्छति । यदा तु मलिनं पश्येत् ज्वरपीडा भवेत्तदा । तस्य शान्तिं प्रकुर्व्वीत शिवसेवां समाहितः । रक्तवर्णं यदा पश्येदैश्वर्य्यं भवति ध्रुवम् । मध्यच्छिद्रं यदा पश्येत् शत्रुघातो भवेत्तदा । एवं सन्दर्शनं देवि ! ज्ञानवान् भवति ध्रुवम् । नारदाय पुरा प्रोक्तं मया पुरुषदर्शनम् । तत्प्रसादान्महायोगी भूत्वा लोकांश्चरत्यसौ । स्वच्छायादर्शनं देवि ! कलौ पुरुषलक्षणम् । दीर्घायुः समवाप्नोति ज्ञानञ्चापि सुनिर्म्मलम्" ।

**छायायन्त्र** न° छायया कालज्ञानसाधकं यन्त्रम् । कालज्ञानसाधकेषु शङ्कुयष्टिचक्रप्रभृतिषु यन्त्रभेदे । "शङ्कुयष्टिधनुश्चक्रैश्छायायन्त्रैरनेकधा । गुरूपदेशाद्विज्ञेयं कालज्ञानमतन्द्रितैः" सू° सि° ।

**छायामान** पु° छायया सूर्य्यप्रतिबिम्बेन मीयते मा—कर्म्मणि ल्युट् । १चन्द्रे हेमच° ६त° । २छायायाः प्रमाणे न° ।

**छायामित्र** न° छाया मित्रमिव । आतपत्रे शब्दरत्ना° ।

**छायामृगधर** पु° छायारूपं मृगं धरति धृ—अच् । चन्द्रे त्रिका° । छायामृगधरादयोऽप्यत्र ।

**छायाविप्रतिपत्ति** स्त्री छायानां देहकान्तीनां तत्प्रभृतीनां विप्रतिपत्तिर्विरुद्धा प्रतिपत्तिः । सुश्रुतोक्ते नृणां मरणसूचके देहकान्त्यादीनामन्यथाभावे यथाह सुश्रुतः । "अथातश्छायाविप्रतिपत्तिमध्यायं व्याख्यास्यामः । श्यावा लोहितिका नीला पीतिका वापि मानवम् । अभिद्रवति यं छाया स परासुरसंशयम् । ह्रीश्रियौ नश्यतो यस्य तेज ओजः स्मृतिः प्रभा । अकस्माद्यं भजन्ते नो स परासुरसंशयम् । यस्याधरौष्ठः पतितः क्षिप्तश्चोर्द्ध्वं तथोत्तरः । उभौ वा जाम्बवाभासौ दुर्लभं तस्य जीवितम् । आरक्ता दशना यस्य श्यावा वा स्युः पतन्ति च । खञ्जनप्रतिमा वापि तं गतायुषमादिशेत् । कृष्णा स्तब्धावलिप्ता वा जिह्वा शूना च यस्य वै । कर्कशा वा भवेद्यस्य सोऽचिराद्विजहात्यसून् । कुटिला स्फुटिता वापि शुष्का वा यस्य नासिका । अवस्फूर्जति मग्ना वा न स जीवति मानवः । सङ्क्षिप्ते विषमे स्तब्धे रक्ते स्रस्ते च लोचने । स्रावौ वा प्रस्नुते यस्य स गतायुर्नरो ध्रुवम् । केशाः सीमन्तिनो यस्य संक्षिप्ते विनते भ्रुवौ । लुनन्ति चाक्षिपक्ष्माणि सोऽचिराद्याति मृत्यवे । नाहरत्यन्नमास्यस्थं न धारयति यः शिरः । एकाग्रदृष्टिर्मूढात्मा सद्यः प्राणान् जहाति सः । बलवान् दुर्बलो वापि सम्मोहं योऽधि गच्छति । उत्थाप्यमानो बहुशस्तं धीरः परिवर्जयेत् । उत्तानः सर्व्वदा शेते पादौ विकुरुते च यः । विप्रसारणशीलो वा न स जीवति मानवः । शीतपादकरोच्छ्वासश्छिन्नश्वासश्च यो भवेत् । काकोच्छ्वासश्च यो मर्त्त्यस्तं धीरः परिवर्जयेत् । निद्रा न च्छिद्यते यस्य यो वा जागर्त्ति सर्व्वदा । मुह्येद्वा वक्तुकामस्तु प्रत्याख्येयः

स जानता । उत्तरौष्ठञ्च यो लिह्यादुद्गारांश्च करोति यः । प्रेतैर्व्वा भाषते सार्द्धं प्रेतरूपं तमादिशेत् । खेभ्यः सरोमकूपेभ्यो यस्य रक्तं प्रवर्त्तते । पुरुषस्या विषार्त्तस्य सद्यो जह्यात्स जीवितम् । वाताष्ठीला तु हृदये यस्योर्द्धमनुयायिनी । रुजान्नविद्वेषकरी स पराशुरसंशयम् । अनन्योपद्रवकृतः शोफः पादसमुत्थितः । पुरुषं हन्ति नारीन्तु मुखजो गुह्यजो द्वयम् । अतिसारो ज्वरो हिक्का छर्द्दिः शूनाण्डमेढ्रता । श्वासिनः कासिनो वापि यस्य तं परिवर्ज्जयेत् । स्वेदो दाहश्च बलवान् हिक्का श्वासश्च मानवम् । बलवन्तमपि प्राणैर्व्वियुञ्जन्ति न संशयः । श्यावा जिह्वा भवेद्यस्य सव्यं चाक्षि निमज्जति । मुखञ्च जायते पूति यस्य तं परिवर्ज्जयेत् । वक्त्रमापूर्य्यतेऽश्रूणां स्विद्यतश्चरणावुभौ । चक्षुश्चाकुलतां याति यमराष्ट्रं गमिष्यतः । अतिमात्रं लघूनि स्युर्गात्राणि गुरुकाणि च । यस्याकस्मात् विज्ञेयो गन्ता वैवस्वतालयम् । पङ्कमत्स्यवसातैलघृतगन्धांश्च ये नराः । मृष्टगन्धांश्च ये वान्ति गन्तारस्ते यमालयम् । यूका ललाटमायान्ति बलिं नाश्नन्ति वायसाः । येषां वापि रतिर्नास्ति यातारस्ते यमालयम् । ज्वरातिसारशोफाः स्युर्यस्यान्योन्यावसादिनः । प्रक्षीणबलमांसस्य नासौ शक्यश्चिकित्सितुम् । क्षीणस्य यस्य क्षुत्तृष्णे हृद्यैर्मिष्टैर्हितैस्तथा । न शाम्यतोऽन्नपानैश्च तस्य मृत्युरुपस्थितः । प्रवाहिका शिरःशूलं कोष्ठशूलञ्च दारुणम् । पिपासा बलहानिश्च तस्य मृत्युरुपस्थितः । विषमेणोपचारेण कर्म्मभिश्च पुराकृतैः । अनित्यत्वाच्च जन्तूनां जीवितं निधनं व्रजेत् । प्रेतभूतपिशाचाश्च रक्षांसि विविधानि च । मरणाभिमुखं नित्यमुपसर्पन्ति मानवम् । तानि भेषजवीर्य्याणि प्रतिघ्नन्ति जिघांसया । तस्मान्मोघाः क्रियाः सर्व्वा भवन्त्येव गतायुषः" ।

छाल पु॰न॰ छा॰ वा॰ अलच् अर्द्धर्चा॰ । वल्कले ।

छालिक्य पु॰ छलिके रूपकभेदे भवः ष्यञ् । गानभेदे । तच्च गानं देवलोके स्थितं वासुदेवेन तत आनीय नरलोके प्रचारितं यथाह हरिवं॰ १४८ अ॰ ।

"छालिक्यगानं बहु संविधानं यद्देवगान्धर्व्वमुदाहरन्ति । जग्राह वीणामथ नारदस्तु षड्ग्रामरागादिसमाधियुक्ताम् । हल्लीषकन्तु स्वयमेव कृष्णः सुवंशघोषं नरपप्रियार्थम् । मृदङ्गवाद्यानपरांश्च वाद्यान् वराप्सरास्ता जगृहुः प्रतीताः । आसारितान्ते च ततः प्रतीता रम्भोत्थिता साभिनयाय तज्ज्ञा । तयाभिनीते वरगात्रयष्ट्या तुतोष रामश्च जनार्द्दनश्च । अथोर्वशी चारु विशालनेत्रा हेमा च राजन्नथ मिश्रकेशी । तिलोत्तमा चाप्यथ मेनका च एतास्तथाऽन्याश्च हरिप्रियार्थम् । जगुस्तथैवाभिनयञ्च चक्रुरिष्टैश्च कामैर्म्मनसोऽनुकूलैः । ता वासुदेवोऽप्यनुरक्तचित्तः संदृश्यगीताभिनयैरुदारैः । नरेन्द्रसूनो! परितोषितेन ताम्बूलयोगेन वराप्सरोभिः । तदागताभिर्व्वराहृतास्तु कृष्णप्रसूया मानमयास्तथैव । फलानि गन्धोत्तमवन्ति वीराश्छालिक्यगान्धर्व्वमथाहृतञ्च । कृष्णेच्छया च विदिवान्नृदेव! अनुग्रहार्थं भुवि मानुषाणाम् । स्थितञ्च रम्यं हरितेजसैव प्रयोजयामास स रौक्मिणेयः । छालिक्यगान्धर्व्वमुदारवृद्धिस्तेनैव ताम्बूलमथ प्रयुक्तम् । प्रयोजितं पञ्चभिरिन्द्रतुल्यैश्छालिक्यमिष्टं सततं नराणाम् । शुभावहं वृद्धिकरं प्रशस्तं मङ्गल्यमेवाथ तथा यशस्यम् । पुण्यञ्च पुष्ट्यभ्युदयावहञ्च नारायणस्येष्टमुदारकीर्त्तिः । जयावहं धर्म्मधुरावहञ्च दुःस्वप्ननाशं परिकीर्त्त्यमानम् । करोति पापञ्च तथा निहन्ति शृण्वन् सुरावासगतो नरेन्द्रः । छालिक्यगन्धर्व्वमुदारकीर्त्तिर्मेने किलैकं दिवसं सहस्रम् । चतुर्युगानां द्वापरेवतोऽथ ततः प्रवृत्ता सुकुमारजातिः । गान्धर्व्वजातिश्च तथा प्रराणि दोषाद्यथा दोषशतानि राजन्! । विवेद कृष्णश्च सनारदश्च प्रद्युम्नमुख्यैर्व्वद्धप्रभैमुख्यैः । विज्ञातमेतद्धि परं यथावदुद्देशमात्राणि जनैस्तु लोके । जानन्ति छालिक्यगुणोदयानां तोयं नदीनामथ वा समुद्रे । मातुं हि शक्य हिमवान् गिरिर्व्वा पलायतो वा गुणतोऽथ वापि । शक्यं न छालिक्यमृते तपोभिस्ताने विधानान्यथ मूर्च्छनासु । षड्ग्रामरागेषु च तत्र कार्य्यं तस्यैकदेशावयवेन राजन्! । लेशाभिधानं सुकुमारजातिं निष्ठां सुदुःखेन नराः प्रयान्ति । छालिक्यगान्धर्व्वगुणोदयेषु ये देवगन्धर्व्वमहर्षिसंघाः । निष्ठां प्रयान्तीत्यवगच्छ बुद्ध्या छालिक्यमेवं मधुसूदनेन । भैमोत्तमानां नरदेव! दत्तं लोकस्य चानुग्रहकाम्ययैव" ।

छि स्त्री छो—वा॰ कि । गर्हीयाम् एकाक्षरकोषः ।

छिक्कनी स्त्री छिक् इत्यव्यक्तं नासिकाशब्दं कनति शब्दायते कन—अच् गौरा॰ ङीष् । (नाक्छिकनी) वृक्षभेदे "छिक्कनी कटुका रुच्या तीक्ष्णोष्णा वह्निपित्तकृत् । वात-

रक्तहरी कुष्ठकृमिवातकफापहा" भावप्र० तद्गुणोक्तिः।

**छिक्कर** पु० छिक् इत्यव्यक्तं शब्दं करोति कृ–ट। हे० च० ८६अ० उक्ते छिक्कारे मृगभेदे "कुक्कुटैरपरिलख्य शिखिकश्चकछिक्काराः" "स्त्रीसंज्ञा भावभषककपिश्लीकर्ण-छिक्कराः" "छिक्करः कटपूरी च पिरीली चाङ्कि दक्षिणाः"। [शब्दरत्ना०।

**छिक्का** स्त्री छिक् इत्यव्यक्तं शब्दं करोति कृ–ड। क्षुते।

**छिक्कार** पु० छिगित्यव्यक्तं शब्दं करोति कृ–अण्। मृगभेदे। "छिक्कारो मृगजातिः चक्रवाकः कुक्कुटः प्रोक्तः" हे० च० ८६अ०।

**छिक्किका** स्त्री छिक्का क्षुतं साध्यत्वेनास्त्यस्याः बा० ठन्। छिक्कन्यां (नाकछिकनी) भावप्र०। क्षुत तत्रार्थे।

**छित** त्रि० छो–क्त वा इत्। छिन्ने अमरः इडभावपक्षे

**छित्ति** स्त्री छिद–क्तिन्। १छेदने कर्त्तरि क्तिच्। २करञ्जवृक्षे शब्दर०।

**छित्वर** त्रि० छिद–ष्वरप् पु० दस्य तः। १वैरिणि, २धूर्त्ते ३छेदके च उणादिको०। पित्त्वात् स्त्रियां ङीप्।

**छिद** द्वैधीकरणे रुधा० उभ० सक० अनिट्। छिनत्ति छिन्ते इरित्। अच्छिदत्, अच्छैत्सीत् अच्छित्त। "न छिन्द्यान्नखलोमानि" "न छिन्द्यात् करजैर्नखम्" मनुः "अच्छिन्दन्नुत्तमाङ्गानि" भा० व० १२।६३अ०। भिदादित्वात् अङ् छिदा। "कर्मस्थः पचतेर्भावः कर्मस्थाश्च भिदादयः" इत्युक्तेः ततः कर्मकर्त्तरि प्रत्ययः छिद्यते कटःस्वयमेव। छिदुरः स्वयंछिन्नः।

अप+अपलाप्य छेदने "एतस्मै वा एवापच्छिद्यैव पुनर्भवन्त्यपि" शत० ब्रा० ५।१।४।६। [४२० पृ० दृश्यम्।

अव+ विभागभेदे। स च दैशिकः कालिकश्च अवच्छेदशब्दे

वि+अव+व्यावर्त्तने निरासने व्यवच्छेदः।

आ+आक्षिप्य हरणे। (काड़ियालओया) अपहरणे "आच्छिन्द्युरितरांश्च च" नारदः। "भिक्षतामाच्छिनत्ति नः" कुमा०। सम्यक्छेदे च। "आच्छेत्स्याम्यहमेतस्य धनुर्ज्यामपि चाहवे" भा० व० १८६श्लो०।

उद्+समूलनाशने। "किं वा रिपूंस्तव गुरुः स्वयमुच्छिनत्ति" रघुः "उच्छेत्तुं प्रभवति यन्न सप्तसप्तिः" शकु०।

परि+इयत्तया विभागे। परिच्छेदः। "यशःपरिच्छेत्तुमियत्तयालम्" रघुः। "परिच्छिन्नप्रभावर्द्धिर्न मया न च विष्णुना" कुमा०।

वि+ विभागे भेदे च "विच्छिद्य तौ शरैर्वीरौ" हरिवं० ८५१२०श्लो०। "यदर्द्धे विच्छिन्नं भवति कृतसन्धानमिव तत्" शकु०। [छिन्नः" रामा० सु० ३७।१०।

**छिद्** त्रि० छिद–क्विप्। छेदनकर्त्तरि। "रामस्य हृदयछिद्

**छिदक** न० छिद–क्वुन्। वज्रे उणादिको०।

**छिदा** स्त्री छिद–भावे भिदा० अङ्। छेदने।

**छिदि** स्त्री छिद–इन् किञ्च। १परशौ २वज्रे उज्ज्वल०। ३छेत्तरि त्रि०। [४करवाले च मेदि० ५अग्नौ उज्ज्वल०।

**छिदिर** पु० छिद–किरच्। १कुठारे २पावके, ३रज्जुभेदे,

**छिदुर** त्रि० छिद–कुरच्। १वैरिणि, २धूर्त्ते ३छेदके, ४छेटनद्रव्ये च मेदि०। कर्मकर्त्तरि कुरच्। ५स्वयंछिन्ने त्रि०। "संलक्ष्यते न छिदुरोऽपि हारः" रघुः।

**छिद्र** भेदने अद० चुरा० उभ० सक० सेट्। छिद्रयति ते अचिच्छिद्रत् त। छिद्रितः छिद्रम्।

**छिद्र** न० छिद–रक् छिद्र–अच् वा। १दूषणे, २गर्त्ते, ३अवकाशे ४ज्योतिषोक्ते लग्नतोऽष्टमस्थाने। "छिद्राख्यमष्टमं स्थानम्" ज्यो० त०। "छिद्रं निवारयेत् सर्वं श्वसूकरसुखानुगम्" मनुः। "छिद्रेष्वनर्था बहुलीभवन्ति" शकु० "नास्य छिद्रं परोविद्यात् विद्याच्छिद्रं परस्य तु" मनुः। देहे छिद्रसंख्यामाह याज्ञ० मिताक्षरयोः

"रोमणां कोट्यस्तु पञ्चाशच्चतस्रः कोट्य एव च। सप्तषष्टिस्तथा लक्षाः सार्द्धाः स्वेदायनैः सह। वायवीयैर्विगण्यन्ते विभक्ताः परमाणवः" याज्ञ०। "पूर्वोदितशिराकेशादिसहितानां रोमणाम्परमाणवः सूक्ष्मसूक्ष्मतररूपा भागाः स्वेदस्रवणद्वारैः सह चतुःपञ्चाशत्कोट्यः तथा सप्तोत्तरषष्टिलक्षाः सार्द्धाः पञ्चाशल्लक्षसहिताः वायवीयैर्विभक्ताः पवनपरमाणुभिः पृथक् कृता विगण्यन्ते" मिता०। एता सूक्ष्मच्छिद्रसंख्याः स्थूलच्छिद्रसंख्या तु नव मुखनेत्रवर्णना नासापायूपस्थस्थानभेदात् तत्संख्याः तुल्यत्वेन ५नव संख्यायां च

**छिद्रकर्ण** त्रि० छिद्रयुक्तः कर्णोऽस्य। दुर्लक्षणरूपच्छिद्रयुक्तकर्णविशिष्टे छिन्नकर्णशब्दे दृश्यम्।

**छिद्रदर्शिन्** त्रि० छिद्रं पश्यति दृश–णिनि। १रन्ध्रान्वेषिणि रिपौ। कण्डरीकशब्दे १६२१ पृ० दर्शिते योगभ्रष्टे बाभ्रव्यपुत्रे २विप्रभेदे च "छिद्रदर्शी सुनेत्रश्च तथा बाभ्रव्यतत्सयोः। जातौ श्रोत्रियदायादौ वेदवेदाङ्गपारगौ" हरिवं० २३अ०। [राजनि०।

**छिद्रवैदेही** स्त्री छिद्रप्रधाना वैदेही। गजपिप्पल्याम्

**छिद्रान्तर्** पु० छिद्रमन्तर्मध्ये यस्य। नले। राजनि०।

**छिद्राफल** न० छिद्रं दूषणमाफलति आ+फल–अच् । कपटहेतौ मायारूपे फले राजनि० ।

**छिद्रित** त्रि० छिद्र–कर्म्मणि क्त । १कृतवेधे विद्धे हेमच० । छिद्र+तारका० इतच् । २जातच्छिद्रे । [ विश्वः ।

**छिद्वर** त्रि० छिद–ष्वरच् वा दस्य न तः । छित्वरशब्दार्थे

**छिन्न** त्रि० छिद–क्त । १कृतच्छेदने लूने अमरः । "सच्छिन्नधन्वा विरथः" देवीमा० । २विभक्ते च "छिन्नाभ्रमिव नश्यति" गीता । ३मन्त्रभेदे कुमारशब्दे २१६० पृ० दृश्यम् । ततः "अनत्यन्तगतौ क्तात्" पा० कन् । छिन्नक ईषच्छिन्ने । "अनत्यन्तगतिः साकल्येन सम्बन्धाभावः प्रकृतिवाच्यया छिदाक्रियया क्तार्थस्य कर्म्मण एकदेशप्रतीत्या साकल्येन सम्बन्धाभावो गम्यते" सि० कौ० । आगन्तुषु षट्सु व्रणेषु ४व्रणभेदे । "अनेकाकृतिरागन्तुः स भिषग्भिः पुरातनैः । समासतो लक्षणतः षड्विधः परिकीर्त्तितः । छिन्नं भिन्नं तथा विद्धं क्षतं पिच्चितमेव च । घृष्टमाडुस्तथा षष्ठं तेषां वक्ष्यामि लक्षणम् । तिरश्चीन ऋजुर्वापि यो व्रणश्चायतो भवेत् । गात्रस्य पातनं चापि छिन्नमित्युपदिश्यते" ।

**छिन्नकर्ण** त्रि० छिन्नः कर्णोऽस्य "कर्णे लक्षणस्य" पा० पूर्वस्य दीर्घे प्राप्ते बिष्टादित्वात् न दीर्घः । छिन्नकर्णरूप दुर्लक्षणयुक्ते । छिन्नकर्णकर्म्मविपाकस्तु शातातपे ६अ० दृश्यः ।

**छिन्नग्रन्थिनी** छिन्ना ग्रन्थिनी संज्ञायां कन् । त्रिपर्णिका- [ लतायाम् । राजनि० ।

**छिन्नद्वैध** त्रि० छिन्नं द्वैधं संशयोऽस्य । वेदान्तादिश्रवण परिपाकेण निवृत्तसंशये । छिन्नसंशयादयोऽप्यत्र

**छिन्ननाम** त्रि० छिन्ना नासाऽस्य । छिन्ना भूतनासिके तस्य रोगस्य कर्म्मविपाकः शातातपे ८अ० दृश्यः । [नाटी) राजनि० ।

**छिन्नपत्री** स्त्री छिन्नं पत्रं यस्याः ङीष् । अम्बष्ठायाम् । (आक-

**छिन्नमस्ता** स्त्री छिन्नं मस्तं यस्याः । दशमहाविद्यान्तर्गते देवीभेदे । "भैरवी छिन्नमस्ता च विद्या धूमावती तथा" तन्त्रसारः ।

**छिन्नरुह** पु० छिन्नः सन् रोहति रुह–क । १तिलकवृक्षे राजनि० २गुडूच्याम् स्त्री अमरः ३स्वर्णकेतक्यां ४शल्लक्याञ्च स्त्री राजनि० ।

**छिन्नवेशिका** स्त्री छिन्नो वेशो यस्याः संज्ञायां कन्–टापि अतइत्त्वम् । पाठायाम् (आकनादी) शब्दच० ।

**छिन्नश्वास** पु० कर्म्म० । क्षुद्रश्वासशब्दे २३८३पृष्ठे दर्शित सुश्रुतवाक्योक्ते श्वासभेदे ।

**छिन्ना** स्त्री छिद–क्त । १गुडूच्यां २पुंश्चल्याञ्च विश्वः ।

**छिन्नोद्भवा** स्त्री छिन्नाच्यद्भवति उद्+भू–अच् । गुडूच्याम् राजनि० ।

**छिलिहिण्ड** पु० पातालगरुड़वृक्षे "छिलिहिण्डः परो वृष्यः कफघ्नः पवनापहः" भावप्र० तद्गुणोक्तिः ।

**छुछुका** स्त्री छुछु इत्यव्यक्तशब्दं कायति कै–क पृषो० । छुछुन्दर्याम् (छुँचो) शब्दार्थचि० ।

**छुछुन्दर** पुंस्त्री छुछु इत्यव्यक्तः शब्दोदीर्य्यतेऽस्मात् दॄ–अपादाने अप् पृषो० । (छुँचो) इति ख्याते मूषिकभेदे उन्दुरशब्दे ११८८पृ० सुश्रुतवाक्ये दृश्यम् । "छुछुन्दरेण विड्भङ्गो ग्रीवास्तम्भोविजृम्भणम्" सुश्रु० । स्त्रियां जातित्वात् ङीष् । पृषो० छुछुन्दरिरप्यत्र "मतस्य छुछुन्दरिमत्कुणगन्धो यथा" सुश्रुतः । "छुच्छुन्दरिः शुभान् गन्धान् (हृत्वा) पत्रशाकन्तु बर्हिणः" मनुः । "पत्रशाकं शिखी हृत्वा गन्धांश्छुछुन्दरिः शुभान्" याज्ञ० ।

**छुच्छु** स्त्री छुछुकायाम् "शिवा श्यामा रला छुच्छुः पिङ्गला च्छुगोधिका । सूकरी परपुष्टा च पुन्नामानस्च वामतः" वृ० स० ८६अ० यात्रायां तस्या वामतः शुभदत्वमुक्तम् ।

**छुट** छेदने वा चुरा०उभ० पक्षे तु० कुटा० पर० सक० सेट् । छोटयति ते छुटति । अचुच्छुटत् त अच्छुटीत् ।

**छुड** छादने तु० कु० पर० सक० सेट् । छुडति अच्छुडीत् चुच्छोड

**छुड** पिधाने भ्वा० प० सक० सेट् । छोडति अच्छोडीत् चु- [च्छोड ।

**छुद्र** न० छद–रक् पृषो० । १प्रतीकारे २रश्मौ च उणादिको० ।

**छुप** स्पर्शे तु० पर० सक० अनिट् । छुपति अच्छौप्सीत् [ चुच्छोप ।

**छुप** पु० छुप–कर्त्तरि क, घञर्थे क वा । क्षुपे ह्रस्वशाखे वृक्षे २स्पर्शने मेदि० । ३चपले त्रि० आधारे क । ४युद्धे पु० विश्वः ।

**छुबुक** न० चुबुक+पृषो० । चुबुके ओष्ठाधरप्रदेशे । "कस्माध्यां छुबुकादधि" ऋ०१०।१६३।१। "छुबुकं व्यपदिशन् वा चैष वै प्रतिष्ठा वैश्वानरः" शत० ब्रा० १०।६।१।११।

**छुर** छेदे भ्वा०पर०सक० सेट् । छोरति अच्छोरीत् । चुच्छोर

**छुर** लेपने तु० कु० पर० सक० सेट् । छुरति अच्छुरीत् । चुच्छोर छुरितः । "छुरितमिव वियद्घनैर्विचित्रैः" वृ० स० २४०अ० । "कुसुमलवच्छुरितपर्य्यन्ते पर्य्यङ्कतले" दशकु० । "मनःशिलाविच्छुरिता निषेदुः" कुमा० ।

**छुरा** स्त्री छुर–क। सौधलेपनद्रव्ये सुधायां चूर्णे (कलिचुन्)हारा०।

**छुरिका** स्त्री छुर–छेदे क स्वार्थे क टापि अत इत्वम् छुर–बा० कुन् वा। स्वनामख्याते अस्त्रभेदे।

**छुरिकापत्री** स्त्री छुरिकेव पत्रमस्याः ङीष्। श्वेतालतायाम् राजनि०।

**छुरित** त्रि० छुर–क्त। १खचिते जटाधरः। २लिप्ते ३छिन्ने च त्रि० "परस्परेण च्छुरितामलच्छवी" माघः।

**छुरी** स्त्री छुर–क गौरा० ङीष्। छुरिकायाम् असिधेनौ भरतः।

**छूरिका** स्त्री छुरिका+पृषो०। १छुरिकार्थे २वन्ध्यायां गवि "गोषु ब्राह्मणसंस्थासु छूरिकायाश्च भेदने" छूरिकाया वन्ध्याया गोर्वाहनार्थं नासाभेदने" कुल्लू०

**छूरी** स्त्री छुरी–पृषो०। छुरिकायां हेम०।

**छृद** सन्दीपने वा चु० उभ० पक्षे भ्वा० पर० सक० सेट्। छर्दयति ते छर्दति अचिच्छृदत्–त अचच्छर्दत् त अच्छर्दीत्।

**छृद** देवने दीप्तौ च अक० वमने सक० रुधा० उभ० सेट्। छृणत्ति छृन्ते इरित्। अच्छृदत् अच्छर्दीत्। अच्छर्दिष्ट छर्दिष्यति–छर्त्स्यति उदित् छर्दित्वा छृत्त्वा छृन्नः

**छृप** याचने द्विक० शब्दे अक० वा चुरा० उभ० पक्षे भ्वा० पर० सेट्। छर्पयति ते छर्पति। अचिच्छृपत् त-अचच्छर्पत् त। अच्छर्पीत्

**छेक** पु० छो–बा० डेकन्। १गृहासक्ते मृगपक्ष्यादौ २नागरे विदग्धे त्रि० मेदि०। विदग्धप्रिये शब्दालङ्काररूपे ३अनुप्रासभेदे अनुप्रासशब्दे १७८पृ० दृश्यम्। ४मत्तायां स्त्रियां स्त्री शब्दार्थचि०। [दृश्यम्

**छेकापह्नुति** स्त्री अर्थालङ्कारभेदे। अलङ्कारशब्दे पृ० ३६८

**छेद** छेदने अद० चु० उभ० सक० सेट्। छेदयति ते अचिच्छेदत् त।

**छेद** पु० छिद–भावे घञ् अच् वा। १छेदने "अभिघातच्छेदपातानां क्रियन्ते नन्दनद्रुमाः" कुमा०। कर्त्तरि अच्। २छेदके, भाजके "छेदं गुणं गुणं छेदमिति" लीलावती। कर्मणि घञ्। ३खण्डे, त्रि० "वलाहकच्छेदविभक्तरागाम्" कुमा०। "बिसकिसलयच्छेदपाथेयवन्तः" मेघः। खण्डार्थस्य तु लिङ्गत्वेन स्त्रियां गौरा० ङीष्। ततो नित्यमर्हति ठञ्। छैदिक नित्यच्छेदार्हे वेतसादौ।

**छेदन** न० छिद–भावे ल्युट्। १द्विधाकरणे "करपाददतोभङ्गे छेदने कर्णनासयोः" याज्ञ०। करणे ल्युट्। २छेदनसाधने "नहि शस्त्रं शस्त्रविदां न शस्त्रं छेदनं कृतम्" भा० स० ५४अ०। कर्त्तरि ल्यु। ३छेदके त्रि०

**छेदनीय** पु० छेदनाय जलकालुष्यभेदनाय हित–छ। १कतकवृक्षे राजनि०। छिद–कर्म्मणि अनीयर्। २छेद्ये त्रि०

**छेदादि** पु० नित्यमर्हतीत्यर्थे ठञ्प्रत्ययनिमित्ते शब्दगणे स च गणः "छेद भेद द्रोह दोह नर्त्त कर्ष तीर्थ संप्रयोग विप्रयोग प्रयोग विप्रकर्ष प्रेषण संप्रश्न विप्रश्न विकर्ष प्रकर्ष (विराग विरङ्ग च)" पा०ग०सू०। छैदिकः

**छेदि** पु० छिद–इन्। १वज्रे उज्ज्व०। २छेत्तरि त्रि०। ३वर्द्धकौ पु० धरणिः। [हेमच०।

**छेदित** त्रि० छेदो जातोऽस्य तारका० इतच्। द्विधाकृते

**छेद्य** त्रि० छेत्तुं योग्यः कर्म्मणि योग्यार्थे ण्यत्। भेत्तुं योग्ये "शीर्षच्छेद्यमतोऽन्तं त्वाम्" भट्टिः।

छेद्याक्षिरोगप्रतिषेधोपायाः सुश्रुतोक्ता यथा "अथातश्छेद्यरोगप्रतिषेधं व्याख्यास्यामः। स्निग्धं भुक्तवतो ह्यस्य उपविष्टस्य यत्नतः। संरोधयेत् नयनं भिषक्चूर्णैस्तु लावणैः। ततः संरोषितं त्वर्मं सुस्विन्नं परिघट्टितम्। अर्म्म यत्र वलीजातं तत्रैतल्लगयेद्भिषक्। अपाङ्गं प्रेक्षमाणस्य बडिशेन समाहितः। मुचुण्ड्याप्यस्य मेधावी सूचीसूत्रेण वा पुनः। नघोत्तापयता क्षिप्रं कार्य्यमभ्युन्नतं तु तत्। शस्त्रपातभयाच्चास्य वर्त्मनी प्राकृष्येद्दृढम्। ततः प्रशिथिलीभूतं त्रिभिरेव विलम्बितम्। उल्लिखन्मण्डलाग्रेण तीक्ष्णेन परिशोधयेत्। विमुक्तं सर्वतश्चापि कृष्णाच्छुक्लाच्च मण्डलात्। नीत्वा कनीनकोपान्तं छिन्द्याच्चातिकनीनकम्। चतुर्भागस्थिते मांसे नाक्षि व्यापत्तिमर्च्छति। कनीनकवधाद्दस्य नाडी चाप्युपजायते। हीनच्छेदात्पुनर्वृद्धिं शीघ्रमेवाधिगच्छति। अर्म यच्चाल्पवद्यापि तदप्युन्नाच्छ्यं लम्बितम्। छिन्द्याद्दक्षेण शस्त्रेण वर्त्म शुक्लान्तमाश्रितम्। प्रतिसारणमक्ष्णोस्तु ततः कार्य्यमनन्तरम्। यवनालस्य चूर्णेन त्रिकटोर्लवणस्य च। स्वेदयित्वा ततः पश्चाद्बध्नीयात् कुशलो भिषक्। देशर्त्तुबलकालज्ञः स्नेहं दत्त्वा यथाहितम्। व्रणवत् संविधानन्तु तस्य कुर्यादतःपरम्। त्र्यहान्मुक्त्वा करस्वेदं दत्त्वा शोधनमाचरेत्। करञ्जबीजामलकमधुकैः साधितं पयः। हितमाश्च्योतनं शूले द्विरक्षः क्षौद्रसंयुतम्। मधुकोत्पलकिञ्जल्कदूर्वा-

कल्कैश्च मूर्द्धनि। प्रलेपः शस्तः शीतः क्षीरपिष्टः प्रशस्यते। लेख्याञ्जनैरपहरेदर्म्म शेषं भवेद्यदि। अर्म्म चाल्यन्दविनिभञ्चोलं रक्तमथापि वा। धूसरन्तनु यच्चापि शुक्रवत्तदुपाचरेत्। चर्म्माभम्बहलं यत्तु स्नायुमांसघनावृतम्। छेद्यमेव तदर्म्म स्यात्कृष्णमण्डलगञ्च यत्। विशुद्धवर्णमक्लिष्टं क्रियास्वक्षिगतक्लमम्। छिन्नेऽर्म्मणि भवेत्सम्यग्यथास्वमनुपद्रवम्। सिराजाले सिरायास्तु कठिनास्ताश्च बुद्धिमान्। उल्लिखेन्मण्डलाग्रेण वडिशेनावलम्बिताः। सिरासु पिडका जाता या न सिध्यन्ति भेषजैः। अर्म्मवन्मण्डलाग्रेण तासाञ्छेदनमिष्यते। रोगयोस्तैतयोः कार्य्यमर्म्मोक्तं प्रतिसारणम्। विधिश्चापि यथादोषं लेखनद्रव्यसम्भृतः। सन्धौ संस्वेद्य शस्त्रेण पर्वणीकां विचक्षणः। उत्तरे च त्रिभागे च वडिशेनावलम्बिताम्। छिन्द्यात्ततोऽर्द्धमध्ये स्यादस्रुनाडी ह्यतोऽन्यथा। प्रतिसारणमत्रापि सैन्धवक्षौद्रमिष्यते। लेखनीयानि चूर्णानि व्याधिशेषस्य भेषजम्। शङ्खं समुद्रफेनञ्च मण्डूकीञ्च समुद्रजाम्। स्फटिकं कुरुविन्दञ्च प्रवालाश्मन्तकन्तथा। वैदूर्य्यपुलकं मुक्तामयस्ताम्ररजांसि च। समभागानि सम्पिष्य सार्द्धं स्रोतोऽञ्जनेन तु। चूर्णाञ्जनं कारयित्वा भाजने मेषशृङ्गजे। संस्थाप्योभयतः कालमञ्जयेत्ततं बुधः। अर्म्माणि पिडकां हन्यात्सिराजालानि तेन वै। अर्शस्तथा यच्च नाम्ना शुष्कार्शोऽर्वुदमेव च। अभ्यन्तरं वर्त्मशया विधानं तेषु वक्ष्यते। वर्त्मोपस्वेद्य निर्भुज्य सूच्योत्क्षिप्य प्रयत्नतः। मण्डलाग्रेण तीक्ष्णेन मूले छिन्द्याद्भिषग्वरः। ततः सैन्धवकासीसकृष्णाभिः प्रतिसारयेत्। स्थिते च रुधिरे वर्त्म दह्नेत्सम्यक्शलाकया। क्षारेणावलिखेच्चापि व्याधिशेषो भवेद्यदि। तीक्ष्णैरुभयतो भागैस्ततो दोषमभिक्षिपेत्। वितरेच्च यथादोषमभिष्यन्दक्रियाविधिम्। शस्त्रकर्म्मण्युपरते मासञ्च स्यात्सुयन्त्रितः"।

कैमण्ड पु॰ कमण्डु+पृषो॰ अत एत्वम्। मातृपितृहीने बालके (काँड) उज्ज्वलदत्तः।

कैलक पुंस्त्री को—कर्म्मणि बा॰ डेलकन्। १कागे २काग्यां स्त्री टाप्। भावप्र॰ कागशब्दे दृश्यम्।

कैलु पु॰ को—बा॰ डेलु। सोमराज्याम् शब्दच॰

कैदिक त्रि॰ केदं नियमर्हति ठञ्। नित्यकेदार्हे वेतसे पु॰ शि॰ कौ॰।

क्षै क्षेदने दि॰ पर॰ सक॰ अनिट्। क्षति अक्षात्—अक्षासीत्। चक्षौ। क्षातः—क्षितः। [ दैवोया)।

क्षैटिका स्त्री कुट—ण्वुल्। तच्छन्यक्षुद्रध्वनौ (तुडी-

क्षैटिन् पु॰ कुट—णिनि। कैवर्त्ते त्रिका॰।

क्षैरण न॰ कुर—भावे ल्युट्। १परित्यागे त्रिका॰।

क्षैलङ्ग पु॰ कुर—बा॰ अङ्गच् रस्य लः। मातुलुङ्गे (टावालेबु) शब्दरत्ना॰।

क्षैहारा स्त्री द्वीपान्तरखर्जूरिकायाम्। "खर्जूरी गोस्तनाकारा परद्वीपादिहागता। जायते पश्चिमे देशे सा क्षौहारेति कीर्त्यते" भावप्र॰ खर्जूरशब्दे २४६८पृ॰ तद्गुणा दृश्याः।

क्ष्णु गतौ भ्वा॰ आत्म॰ सक॰ अनिट्। क्ष्णवते अक्ष्णोष्ट णोपदेशः अचि(चु)क्ष्णवत् त। षः सनि चु(चि) क्ष्णावयिषति ते।

इति वाचस्पत्ये ककारादिशब्दार्थनिरूपणम्।

---

# ज

जकारो व्यञ्जनवर्णभेदः स्पर्शसंज्ञकस्तस्योच्चारणस्थानं तालु, आभ्यन्तरप्रयत्नः जिह्वामध्यभागेन तालुस्पर्शः बाह्यप्रयत्नाश्च घोषसंवारनादाः अल्पप्राणश्च । मातृकान्यासेऽस्य वाममणिबन्धे न्यासः । तन्त्रोक्ता अस्य वाचकशब्दा यथा "जयस्तुराननः शूली भोगी च विजया स्थिरा । बलदेवो जयो जेता धातकी सुमुखो विभुः । लम्बोदरी स्मृतिः शाखा सुप्रभा कम्बुकाधरा । दीर्घबाहुश्चिह्नो नन्दी तेजाः सुराधिपः । जवनो वेगितो वाममणिबन्धपदात्मकः । चन्द्रास्तेश्वरो वेणी चामोदी मदविह्वलः" वर्णोद्धारतन्त्रम् । अस्य ध्येयरूपं यथा "जकारं परमेशानि ! या स्वयं मध्यकुण्डली । शरच्चन्द्रप्रतीकाशं सदा त्रिगुणसंयुतम् । पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा । त्रिशक्तिसहितं वर्णं त्रिविन्दुसहितं प्रिये !" कामधेनुतन्त्रम् । काव्येऽस्य प्रथमविन्यासफलं वृत्त० र० टी० उक्तं "जोमितलाभमित्यादि" ।

**ज** पु० जि–जन–जु–वा ड । १मृत्युञ्जये २जन्मनि ३पितरि ४जनार्द्दने त्रि० मेदि० ५विषे ६मुक्तौ ७तेजसि ८पिशाचे च । शब्दरत्ना०। ९वेगे एकाक्षरकोषः "जो गुरुमध्यगतः" इत्युक्ते गुरुमध्ये प्रान्तयोर्लघुद्वययुक्ते छन्दःशास्त्रप्रसिद्धे (।ऽ।) त्रिवर्णे १० गणे तस्य काव्यप्रथमविन्यासे। "भुजगोरुजं ज"इत्युक्तेः रोगःफलम् सर्पोऽस्य देवः"११जाते त्रि० "प्रावृट्शरत्कालदिवां जे" पा० अलुक् स०। प्रावृषिजः शरदिजः कालेजः दिविजः। "विभाषा वर्षक्षरशरेत्यादि" पा० । वर्षेज वर्षज इत्यादि। "तत्पुरुषे कृति बहुलम्" पा० । मनसिजः मनोजः सरसिजं सरोजमित्यादि। जरायुजः अण्डजः स्वेदजः उद्भिज्जः"। १२वेगिते १३जेतरि त्रि०शब्दरत्ना०। [कुपुष्पे न०मेदि०।

**जकुट** पु० जं जातं कुटति कुट–क । १मलयाचले २वार्त्ता-

**जक्ष** भक्षे सक० हासे अक० जक्षा० स्वपादि० प० सेट् । स्वपादित्वं रुदादाद्यन्तर्गणत्वेन भलादेः सार्वधातुकस्य इट्। जक्षिति जक्षितः अभ्यस्तसंज्ञः तेन जक्षति। अजक्षीत् "उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्यन्" शत०ब्रा० १४।७।१।१४। "अन्नन्नं कश्चिदश्नाति जक्षत्यां बहु जक्षिति" भाग० ४।२५।५७। "हविर्जक्षिति निःशङ्कोमखेषु भगवानसौ" जक्षिमोऽनपराधेऽपि" भट्टिः। अक्षानःस्वादितां केचित् मन्यन्ते । "यक्षतामिति येऽभ्युक्तास्ते वै यक्षास्तु यक्षणात्" विष्णुपु० यक्षनामनिरुक्तौ तथादर्शनात् ।

**जक्ष** दाने भ्वा० इदित् आ०सक०सेट् । इदित्करणसामर्थ्यात् अनुपधस्यापि नुम् । जङ्क्षते अजङ्क्षिष्ट । मित् । अजङ्क्षि अजाङ्क्षि (जा) जङ्क्षम् । इदित्करणात् जङ्क्ष्यते ।

**जक्षण** न० जक्ष–भावे ल्युट् । भक्षणे हेमच० ।

**जगच्चक्षुस्** पु० जगतां चक्षुरिव प्रकाशकत्वात्। सूर्ये हेमच०

**जक्षादि** पु० "जक्ष जागृ दरिद्रा च चकास्तिः शास्तिरेव च । दीधी वेवी च विज्ञेयो जक्षादिः सप्तकोगणः" इत्युक्ते अभ्यस्तसंज्ञे धातुसप्तके "नाभ्यस्ताच्छतुः" पा० जक्षत् जाग्रत् इत्यादि ।

**जगत्** पु०गम–क्विप् नि०द्वित्वम् तुक् च। १वायौ २जङ्गमे त्रि० मेदि० । ३विश्वे न० अमरः । ४लोके सचराचरे प्रपञ्चभूते भोगोपयोगिपरिकरसहिते मायामये संसारचक्रे यथोक्तमभियुक्तैः "न निरूपयितुं शक्या विस्पष्टं भासते च या । सा मायेतीन्द्रजालादौ लोकाः संप्रतिपेदिरे । स्पष्टं यथा जगच्चेदमशक्यं तन्निरूपणम् । मायामयं जगत् भाति वीक्षस्वापक्षपाततः"।"जगद्योनिरयोनिस्त्वं जगदन्तोनिरन्तकः। जगदादिरनादिस्त्वं जगदीशोनिरीश्वरः" कुमा०। "जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ" रघुः। "यदा स देवो जागर्त्ति तदेदं चेष्टते जगत्"मनुः। लोके "जगत्पर्याप्तसहस्रभानुना" "युगान्तकालप्रतिसंहृतात्मनोजगन्ति यस्यां सविकाशमासत"माघः। जङ्गमे "जगतां तस्थुषश्च" सन्ध्यामन्त्रः। क्विबन्तत्वात् जगत् जगतौ इत्यादिरूपम् "पृषन्महद्बृहज्जगच्छतृवच्च" पा० निपातनपक्षे जगन् जगन्तौ इत्यादिरूपमिति केचिदाहुस्तच्चिन्त्यम् तस्य शतृतुल्यत्वेऽपि "नाभ्यस्ताच्छतुरिति" पा० निषेधात् न नुम्। शतृतुल्यत्वप्रयोजनं तु स्त्रियां ङीप् जगती [हेमच० ।

**जगत्कर्त्तृ** पु० ६त० । १ईश्वरे तदभेदात् २चतुर्मुखादौ

**जगच्छन्द** पु० जगती छन्दोऽस्य वेदे नि० पुंवद्भावः । जगत्या छन्दसा स्तुत्ये । "स्वरोऽसि गयोऽसि जगच्छन्दाः" ता० ब्रा० १।५।१५ ।

**जगत्पति** पु० ६त० । १परमेश्वरे तदभेदात् २हरिहरादौ "यदा च तस्याधिगमे जगत्पतेः" कुमा० जगदीशादयोऽप्यत्र । "जगदीशो निरीश्वरः" कुमा०

**जगत्प्राण** पु० जगत् प्राणित्यस्मात् प्र+अन्—अपादाने घञ् ६त०। वायौ अमरः “जगत्प्राण ! प्राणानपहरसि किन्ने व्यवसितम्” सा० द० ।

**जगत्साक्षिन्** पु० ६त० । १ईश्वरे २सूर्य्ये च हेमच० ।

**जगत्सेतु** पु० जगतः सेतुरिव सर्व्वमर्य्यादाकारकत्वात् । परमेश्वरे जगतां सन्तारणहेतुत्वादसंभेदकरत्वाच्च वर्णाश्रमादीनां, “एष सेतुर्विधरणो लोकानामसंभेदाय” श्रुतेस्तस्य तथात्वम् । अलुक् समा० । जगतः सेतुरप्यत्र “औषधं जगतः सेतुः” विष्णु स० ।

**जगती** स्त्री गम—क्विप् “पृषन्महज्जगच्छत्रवत्” पा० शत्रृतुल्यत्वात् ङीप् । १भुवने । २पृथिव्यां “आर्य्यभट्टमते भूमेश्चलत्वात् गतिमत्त्वेन तथात्वम् । अन्यमते जगदाधारत्वात् तस्यास्तथात्वमिति भेदः । ३द्वादशाक्षरपादके छन्दोभेदे छन्दःशब्दे दृश्यम् । ४जम्बुवृक्षे हेमच० । ततो-भवादौ उत्सा० अञ् । जागत जगतीभवादौ । स्त्रियां टाप् । छन्दःशब्दे उदा० ।

**जगदम्बा** स्त्री ६त० । दुर्गायां स्वार्थे क । जगदम्बिकाप्यत्र । “सृष्टिस्थितिविनाशानां विधात्री जगदम्बिका” देवीगीता । जगद्धात्रीशब्दे उदा०

**जगदादि** पु० ६त० । १परमेश्वरे । २तदभेदाच्चतुराननादौ “जगदादिरनादिस्त्वम्” कुमा०

**जगदादिज** पु० हिरण्यगर्भरूपेण जगतामादौ जायते जन—ड । परमेश्वरे । “भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः” विष्णु स० ।

**जगदाधार:** पु० ६त०। १वायौ शब्दच० । २जगदाश्रये काले च “कालोहि जगदाधारः” ति० त० । जगदाश्रयादयोऽप्यत्र “जन्यानां जनकः कालो जगतामाश्रयोमतः” भाषा० ।

**जगदायु(युस्)** पु० जगतामायुःसाधनत्वात् आयुः पृषो० वा सलोपः । वायौ । “अहं केशरिणः क्षेत्रे वायुना जगदायुना” भा०व० १४७अ० । “वायुना द्विपदां श्रेष्ठः कथितो जगदायुषा” भा० शा० ३४०अ० ।

**जगद्गुरु** पु० ६त- । १परमेश्वरे । “सहि पूर्व्वेषामपि गुरुः कालेनानवच्छेदात्” पात० सू० तस्य सर्वगुरुत्वमुक्तम् तदभेदात् २शिवादौ “अथ ते मुनयः सर्वे मानयित्वा जगद्गुरुम्” (शिवम्) कुमा० । “मेने पराद्धर्यमात्मानं गुरुत्वेन जगद्गुरोः” रघुः । ३जगतामुपदेष्टरि नारदादौ । “नारदस्तु जगतोगुरुस्तस्मै विवक्षयाय गगनं विलङ्घ्य” नैष० जगद्गुरोगुरुः पञ्चमीत० । ४जगद्गुरो गुरुद्रव्ये च ।

**जगद्गौरी** स्त्री जगत्सु मध्ये गौरी । मनसादेव्यां शब्दर०।

**जगद्दीप** पु० जगतोदीपइव प्रकाशकत्वात् । परमेश्वरे “तस्य भासा सर्वमिदं विभाति” श्रुतिः तदभेदात् २शिवादौ “जगद्योनिं जगद्दीपं जयिनं जगतोगतिम्” भा० द्रो० २०२ शिवस्तवः ।

**जगद्धात्रृ** पु० ६त० । १परमेश्वरे । दुर्गामूर्त्तिभेदे स्त्री ङीप् । तस्याः पूजाकालव्यवस्था ।

निगमकल्पसारे ज्ञानसारस्वते ग्रन्थे च दुर्गाकल्पे “श्रीशिव उवाच । प्रसीद जगतां मातर्जगन्निस्तारकारिणि ! ! अतएव महेशानि ! तवाहं शरणागतः । त्वया यत् कथितं पूर्वं तत्सर्वञ्च श्रुतं मया । जगद्धात्री महादुर्गा चतुर्वर्गफलप्रदा । तस्याः पूजाविधिदिनं कालस्तत्र प्रकाशितम् । तदेव कथयेशानि ! श्रोतुमिच्छामि साम्प्रतम् । श्रीदेव्युवाच । कथयामि महेशान ! सावधानावधारय । तस्याः पूजाविधिदिनं समयं भावभेदतः । कार्त्तिके शुक्लपक्षे च या दुर्गानवमी तिथिः । सा प्रशस्ता महादेव ! महादुर्गाप्रपूजने । प्रातश्च सात्विकी पूजा मध्याह्ने राजसी मता । सायाह्ने तामसी पूजा त्रिविधा परिकीर्त्तिता । जपयज्ञादिभिर्देव ! इति त्रैकालिकी मता । अथान्यत् संप्रवक्ष्यामि शृणुष्व परमेश्वर ! । सप्तम्यादि नवम्यान्तं पूजाकाल इतीरितः । त्रिदिने त्रिविधा पूजा दशम्याञ्च विसर्जयेत् । पूजा परेऽह्नि देवेश ! तत्राप्यत्र विसर्जनम् । वेधितायाः प्रकारेण तत्र पूजा प्रकीर्त्तिता । शिव उवाच, त्रिसन्ध्याऽव्यापिनी सा तु यदि स्यान्नवमी तिथिः । त्रिकाले त्रिविधा पूजा कथं देव्या जगन्मयि ! । कथयस्व महेशानि ! इति मे संशयोहृदि । श्रीदेव्युवाच । सा प्रातर्व्यापिनी यत्र वासरे नवमी तिथिः । त्रिसन्ध्यं पूजयेत्तत्र वासरे जगदम्बिकाम् । मुहूर्त्तव्यापिनी चापि तत्र ग्राह्या महेश्वर ! । एककाले त्रिधा पूजां साधकोनैव कारयेत्” ।

तत्पूजायां दशम्यां बलिदाननिषेधः तन्त्रान्तरे “श्रीपार्वत्युवाच । दशम्यां बलिदानन्तु निषिद्धं जगदीश्वर ! । कथं त्रिकालं पूजा सा सम्भवेत् परमेश्वर ! । शिव उवाच “नवमीतिथिमाश्रित्य यत्र पूजाविधिर्भवेत् । निषिद्धं बलिदानन्तु दशम्यां तत्र सुन्दरि ! । नवमीदिनमाश्रित्य पूजाविधिरिहोदितः । दशम्यां

वलिदानन्तु निषिद्धं मात्र पार्वति”। आगमतत्त्वसारे पूर्वं प्रकारमुक्त्वा “मुहूर्त्तव्यापिनी चापि प्रातश्चेन्नवमी तिथिः। तद्दिने पूजनं कार्य्यं त्रिसन्ध्यं वरवर्णिनि!। त्रिकालं पूजयेत्तत्र नैककाले कदाचन”। कात्यायनीतन्त्रे ७पटले। “कुम्भराशिगते चन्द्रे नवम्यां कार्त्तिकस्य च। उपस्थ्यौदितो भानुर्दुर्गामाराध्य यत्नवान्। पुत्रारोग्यं वलं लेभे लोकसाक्षित्वमेव च। तां तिथिं प्राप्य मनुजः शनिभौमदिने यदि। प्रपूजयेन्महादुर्गां धर्म्मकामार्थमोक्षदाम्”। शक्तिसङ्गमतन्त्रे “कार्त्तिकस्य सिते पक्षे नवम्यां जगदीश्वरीम्। त्रिकालमेककालं वा वर्षे वर्षे प्रपूजयेत्। स्वर्णमयीं प्रतिमां भक्त्या जगद्धात्र्या विधानतः। पूजयित्वा परदिने प्रतिमां तां विसर्ज्जयेत्। पुत्रपौत्रधनैश्वर्य्यं संयुक्ताऽस्य भवेत् पुरी”। तन्त्रान्तरे। “कुजवारे युगाद्यायां नवम्यान्तु जगत्प्रसूः। प्रादुर्भूता महेशानी तत्र तां परिपूजयेत्” तन्त्रान्तरे। “त्रिकालं पूजयेद्दुर्गां मूलेनैकाक्षरेण च(दूँ)। नानारत्नविधानेन गीतवाद्यपुरःसरम्। कार्त्तिकस्य सिते पक्षे नवम्यान्तु विशेषतः। कृत्वैवं साधकश्रेष्ठो लभेद्राज्यमकण्टकम्”। योगिनीतन्त्रे “कार्त्तिकेऽमलपक्षे तु नवम्यान्तु विशेषतः। उद्धृतान्तु जगद्धात्रीं पूजयेद्दीपमालया” आगमतत्त्वसारे “कार्त्तिकेऽमलपक्षे तु नवम्याः भौमवासरे। आविर्भूता जगद्धात्री युगादौ दैत्यनाशिनी”। उत्तरकामाख्यातन्त्रे “कार्त्तिके शुक्लपक्षे तु त्रेतायां प्रथमेऽहनि। त्रिसन्ध्यं पूजयेद्देवीं दुर्गां सम्पत्प्रदक्षये”। कुब्जिकातन्त्रे “कार्त्तिके शुक्लपक्षे तु नवम्यां जगदम्बिकाम्। दुर्गां प्रपूजयेद्भक्त्या धर्म्मकामार्थसिद्धये। दुर्गाकल्पे विद्योत्पत्तौ “कार्त्तिके शुक्लपक्षेऽह्नि भौमवारे जगत्प्रसूः। सर्वदेवहितार्थाय दुष्टसंशमनाय च। आविरासीत् जगच्छान्त्यै युगादौ परमेश्वरी”। व्रतकालविवेकधृतवचनम् “कार्त्तिकेऽमलपक्षस्य त्रेतायां नवमेऽहनि। पूजयेत्तां जगद्धात्रीं सिंहपृष्ठे निषेदुषीम्”। स्मृतिः। “युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया। रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता”। कृत्यतत्त्वार्णवे “कार्त्तिकेऽमलपक्षे तु युगाद्या नवमी स्मृता। पूर्वाह्णसमये तत्र पूजाविधिरिहोदितः”। कृत्यतत्त्वार्णवे भविष्यपुराणम् “कार्त्तिके शुक्लपक्षे तु युगाद्या नवमी स्मृता। पूर्वाह्णसमये काष्ठात्मिका परदिने यदि। तत्र पूजादिकं कुर्य्यात् पिण्डनिर्वपणादृते”। स्मृतिसागरे “कार्त्तिकस्य युगाद्यायामम्बिकामोऽर्च्चयेदुमाम्”। ततश्च उक्तवचनेषु तत्तिथेर्युगादित्वेन कीर्त्तनात् तत्पूजायाश्च युगाद्यादिनकर्त्तव्यत्वेन विधानात् पूर्वापरदिनयोस्तस्याः सम्बन्धे परदिन एव कर्त्तव्यता न तु युग्मशास्त्रेण अष्टमीविद्धाया ग्राह्यता युगाद्या वर्षवृद्धिश्चेत्यादि वचनात् यत्तु “श्रावणी दौर्गनवमी दूर्वा चैव हुताशिनी। पूर्वविद्धैव कर्त्तव्येत्यादि” वचनं तत् एतद्भिन्ननवमीकर्त्तव्यदुर्गाव्रतपरम् नन्वव्रतं व्रतशब्दे वक्ष्यमाणं द्रष्टव्यम्। जगद्धात्रीविद्योत्पत्तिमाह कात्यायनीतन्त्रे ७६पटले। “पार्वत्युवाच। भगवन्! प्राणनाथेश! सर्वतत्त्वविशारद!। श्रुता कात्यायनीविद्यासमुत्पत्तिस्त्रिलोचन!। महादुर्गाजगद्धात्रीविद्योत्पत्तिर्भवेद्यतः। तत् सर्वं ब्रूहि भगवन्! कृपया परमेश्वर!। इति देवीप्रश्ने श्रीशिव उवाच। शृणु पार्वति! वक्ष्यामि रहस्यं परमाद्भुतम्। यत् श्रुत्वा लभते देवि! सौभाग्यमुत्तमम्। पुरा पुरन्दरमुखाः स्वेश्वरत्वाभिमानिनः। प्राहुः किमीश्वरोऽस्मत्तानतिरिच्य सुरानिति। अथ दुर्गा जगन्माता मित्वा चैतत्कुरूपिणी। एतेषां धर्मसेतूनामिन्द्रादीनां नियन्त्रणम्। करिष्यामीति निश्चित्य ज्योतीरूपं दधावसम्। तेषामाविरभूद्दुर्गा जगद्धात्री जगन्मयी। कोटिसूर्य्यप्रतीकाशं चन्द्रकोटिसमप्रभाम्। ज्वलन्तं पर्वतमिव सर्वलोकभयङ्करम्। तद्ददृशुः सुराः सर्वे भयमापुर्महौजसः। किमेतद्व विनिश्चेतुं शक्तास्ते ह्यभवन् सुराः। वायुमाहुः समाहूय किमेतत् परमाद्भुतम्। विजानीहि महद्वीर मातरिश्वन्! दिशां पते!। ततो वायुर्द्रुतं तत्र गतस्तेजोऽन्तिकं ततः। तमन्तिकमुपायातं प्राह तेजोमयी तमः। बलवन्! कस्त्वमायातो वीर्य्यं किञ्चास्ति वा त्वयि। आदातुं शक्यते सर्वं पृथिवीतलसम्भवम्। इति प्रत्युक्तवान् वायुः क्षणं तत्रैव तिष्ठति। आदत्स्वैतत् तृणमिति निदधौ वायवे तृणम्। वायुः सर्वप्रयत्नेन नादातुं तत्क्षमोऽभवत्। ततो देवाः प्राहुरग्निं भीता उद्विग्नमानसाः। अग्ने! एतद्विजानीहि किमेतत् कर्म चाद्भुतम्। इत्युक्तो देवताद्वन्द्वैरग्निस्तेजोऽन्तिकं गतः। अमरो जातवेदा वा तेजोवागित्युवाच तम्। स प्रोक्तवानग्निरस्मि सर्वदाहकशक्तिकः। दहैतत् तृणमत्यल्पमिति तस्मै तृणं ददौ। अग्निः सर्वप्रयत्नेन दग्धुं नैतत्तत्क्षमोऽभवत्। ततो निवृत्ते वह्निर्भूत्वा सोऽपत्र-

पान्वितः । एकतस्याः सुराः सर्वे मन्वयामासुरुत्तमम् । इयमेवेश्वरी नूनं स्तोषग्रामोनेश्वरावयम् । इति निश्चित्य सुधियस्तुष्टुवुः परमेश्वरीम् । प्राकृदैवगणाः सर्वे त्वमीशा नेश्वरा वयम् । ईश्वरत्वाभिमानेन यदस्माकं सुदुष्कृतम् । चन्तुमर्हसि तत् सर्वं कृपया जगदम्बिके । तव-रूपं सुगोप्यं यन्मङ्गल्यं सर्वमङ्गलम् । तद्द्रष्टुं वयमिच्छामो देहि दर्शनमुत्तमम् । इत्युक्तानां सुबुद्धीनामाविरासीच्चिदाम्बरे । तेजस्यन्तर्हिते तस्मिन् चमत्कारि कलेवरे । मृगेन्द्रोपरि सुचोरा सर्वालङ्कारभूषिता । चतुर्भुजा महादेवी रक्ताम्बरधरा शुभा । बालार्कसदृशी देहे नागयज्ञोपवीतिनी । त्रिनेत्रा कोटिचन्द्राभा देवर्षिगणसेविता । दर्शयामास देवानामेवं रूपं जगन्मयी । ततस्तां तुष्टुवुर्देवा जगद्धात्रीं महेश्वरीम् । वरं प्रापुः सुरगणायथेष्टं त्रिदशालये । तत्रैवान्तर्हिता देवी महादुर्गा जगन्मयी" । इयमेव कथा प्रायशः केनोपनिषदि स्थिता तद्वाक्यञ्च इन्द्रशब्दे ९४२ पृ० दर्शितम् । इयांस्तु विशेषः तत्र इन्द्रादिप्रबोधनाय प्रादुर्भूतया ब्रह्मशक्त्या हैमवत्या ब्रह्ममहात्म्यैनैव इन्द्रादीनामसुरजयशक्तिरुक्ता अत्र तु शक्तिशक्तिमतोरभेदेन जगद्धात्रीरूपेणाविर्भूताया देव्या माहात्म्योक्तिरिति ।

**जगद्बल** पु० जगतां बलमस्मात् । वायौ त्रिका० । तस्यैव व्यानरूपस्वदृत्तिभेदात् सर्वबलजक्रियाहेतुत्वस्य भङ्ग्या छान्दोग्ये उक्तत्वात् तस्य तथात्वम् यथा "अथोयान्यन्यानि वीर्यवन्ति कर्म्माणि यथाग्नेर्मन्थनमाजेः सरणं दृढस्य धनुष आयमनमप्राणन्ननपानंस्तानि करोत्येतस्य हेतोर्व्यानमेवोद्गीथमुपासीत" । बलस्य च सर्वक्रिया हेतुत्वं छान्दोग्ये भूमविद्यायामुक्तं यथा "बलं वाव विज्ञानाद्भूयोऽपि ह शतं विज्ञानवतामेको बलवानाकम्पयते स यदा बली भवत्यथोत्थाता भवत्युत्तिष्ठन् परिचरिता भवति परिचरन्नुपसत्ता भवत्युपसीदन्द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्त्ता भवति विज्ञाता भवति बलेन वै पृथिवी तिष्ठति बलेनान्तरिक्षं बलेन द्यौर्बलेन पर्वता बलेन देवमनुष्या बलेन पशवश्च वयांसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलकं बलेन लोकस्तिष्ठति बलमुपास्स्वेति" । सर्वक्रियाणां वायुकार्य्यत्वं च सुश्रुते दर्शितं यथा "वायव्याः स्पर्शः स्पर्शेन्द्रियं सर्वचेष्टादयः सर्वशरीरस्पन्दनं लघुता च" तेन सर्वचेष्टानां वायुकार्य्यत्वोक्त्या बलस्य च तत्र हेतुत्वोक्त्या च वायोरेव बलहेतुत्वमवसीयते ।

**जगद्योनि** स्त्री जगतां योनिरिवोत्पत्तिस्थानत्वात् । १परमेश्वरे तस्य जन्मादिहेतुत्वात् तथात्वम् । २शिवे ३विष्णौ ४चतुर्मुखे तु तदभेदोपचारात् "जगद्योनिरयोनिस्त्वम्" कुमा० ब्रह्मस्तवे । "जगद्योनिं जगद्बीजं जयिनं जगतोगतिम्" भा० भी० २०अ० शिवस्तवे । "नारायणं जगद्योनिं पुराणं पुरुषं ध्रुवम्" हरिव० १०७अ० । विष्णुस्तवे । ५पृथिव्यां शब्दच० तस्याः भूतचतुष्टयोत्पत्तिस्थानत्वात् तथात्वम् ।

**जगद्वहा** स्त्री जगन्ति वहति धारयति वह–अच् । सर्वधरायां मेदिन्याम् त्रिका० ।

**जगद्विनाश** पु० जगतोऽखिलकर्म्मवतो विनाशोऽत्र । कल्पान्ते प्रलयकाले । प्रलये च सर्वक्रियाशून्यत्वं यथाह मनुः । "यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति । तस्मिन् स्वपिति तु स्वस्थे कर्मात्मानः शरीरिणः । स्वकर्म्मभ्यो निवर्त्तन्ते मनश्च ग्लानिमृच्छति । युगपत्तु प्रलीयन्ते यदा तस्मिन् महात्मनि । तदायं सर्वभूतात्मा सुखं स्वपिति निर्वृतः । तमोऽयन्तु समाश्रित्य चिरन्तिष्ठति सेन्द्रियः । न च स्वं कुरुते कर्म्म तदोत्क्रामति मूर्त्तितः" ।

**जगनु(न्नु)** पु० जगता नम्यते नम–वा० कर्म्मणि डु वा पृषो०तनोपः । १जन्तौ वैश्वानरे २वह्नौ च मेदि० । विश्वे जगन्नुरिति पाठस्तत्रार्थे । तत्र जन्तोश्चेतनत्वेन जगतां नम्यमानत्वात् वह्नेस्तु सर्वैर्नम्यमानत्वात् तथात्वम्

**जगन्नाथ** पु० ६त० । १परमेश्वरे "एष सर्वेश्वरः" इत्यादिश्रुतेस्तस्य सर्वेश्वरत्वात् तथात्वम् । तदभेदात् २विष्णौ । अर्श०अच् । ३तदीयमूर्त्तिभेदे न० तत्क्षेत्रस्य तन्नामताकारणं स्कान्दपु० उत्कलखण्डे यथा "एतत्क्षेत्रवरं चास्य वपुर्भूतं महात्मनः । स्वयम् वपुष्मान् यत्रास्ते स्वनाम्ना ख्यापितं हि तत्" । तत्स्थानसीमातीर्थभेदादि पुरुषोत्तमतत्त्वे उक्तं यथा

ब्रह्मपुराणे "पृथिव्यां भारतं वर्षं कर्म्मभूमिरुदाहृता । न खल्वन्यत्र मर्त्यानां भूमौ कर्म्म विधीयते । तत्रास्ते भारते वर्षे दक्षिणोदधिसंस्थितः । ओड्रदेश इति ख्यातः स्वर्गमोक्षप्रदायकः । समुद्रादुत्तरे तीरे यावद्विरजमण्डलम्" । तीर्थकाण्डकल्पतरौ वामनपुराणम् "उपोष्य रजनीमेकां विरजां स नदीं ययौ । स्नात्वा

वैरजसे तीर्थे दत्त्वा पिण्डं पितॄंस्तथा । दर्शनार्थं ययौ धीमानजितं पुरुषोत्तमम् । तं दृष्ट्वा पुण्डरीकाक्षमक्षरं परमं शुचिः । उपोष्य स तिलान् दत्त्वा महेन्द्र ! दक्षिणं ययौ” । उपोष्य स्थित्वा । तथा “आदौ यद्दारु प्लवते सिन्धोः पारे अपूरुषम् । तदालभस्व दुर्द्दनो ! तेन याहि परं स्थलम्” तैत्ति०श्रुतिः । अस्य व्याख्या सायणभाष्ये “आदौ विप्रकृष्टे देशे वर्त्तमानं यद्दारु दारुमयं पुरुषोत्तमाख्यदेवताशरीरं प्लवते जलस्योपरि वर्त्तते अपूरुषं निर्म्मातृरहितत्वेन अपूरुषं तत् आलभस्व दुर्द्दनो ! हे! होतः,तेन दारुमयेन देवेन उपास्यमानेन परं स्थलं वैष्णवं लोकं गच्छेत्यर्थः । अथर्ववेदेऽपि “आदौ यद्दारु प्लवते सिन्धोर्म्मध्ये अपूरुषम् । तदालभस्व दुर्द्दनो तेन याहि परं स्थलम्” । अत्रापि तथैवार्थः मध्ये तीरे । स्कान्दपुराणम् “इन्द्रद्युम्न ! प्रयतस्ते भक्त्या निष्कामकर्म्मभिः । उत्सृज्य वित्तकोटीस्तु यन्ममायतनं कृतम् । भङ्गेऽप्येतस्य राजेन्द्र ! स्थानं न त्यज्यते मया” । ब्रह्मपुराणे “विरजे विरजा नाम ब्रह्मणा संप्रतिष्ठिता । तस्याः सन्दर्शने मर्त्यः पुनात्यासप्तमं कुलम् । स्नात्वा दृष्ट्वा तु तां देवीं भक्त्याऽऽपूज्य प्रणम्य च । नरः स्ववंशमुद्धृत्य मम लोकं स गच्छति । आस्ते वैतरणी नाम सर्वपापहरा नदी । तस्यां स्नात्वा नरश्रेष्ठ । सर्वपापैः प्रमुच्यते” । वैतरणीमधिकृत्य महाभारते “आयातभागं सर्वेभ्योभागेभ्यो भागमुत्तमम् । देवाः सङ्कल्पयामासुर्भयाद्रुद्रस्य शाश्वतीम् । इमां गाथां समुद्धृत्य मम लोकं स गच्छति । देवायनं तस्य पन्थाः शक्रस्येव विराजते” । ब्रह्मपुराणे “आस्ते स्वयम्भूस्तत्रैव क्रोड़रूपी हरिः स्वयम् । दृष्ट्वा प्रणम्य तं भक्त्या नरोविष्णुपुरं व्रजेत्” । तथा “विरजायां मम क्षेत्रे पिण्डदानं करोति यः । स करोत्यक्षयां तृप्तिं पितॄणां नात्र संशयः । मम क्षेत्रे मुनिश्रेष्ठ ! विरजे ये कलेवरम् । परित्यजन्ति पुरुषास्ते मोक्षं प्राप्नुवन्ति वै । नदी तत्र महापुण्या विन्ध्यपादविनिर्गता । चित्रोत्पलेति विख्याता सर्वपापहरा शुभा” । चित्रोत्पला महानदी । तथा “सत्यं सत्यं पुनः सत्यं क्षेत्रं तत् परमं महत् । पुरुषाख्यं सकृद्दृष्ट्वा सागराम्भःसकृत्प्लुतः । ब्रह्मविद्यां सकृज्ज्ञात्वा गर्भवासो न विद्यते” । पुरुषोत्तमक्षेत्रदर्शनसागरमरणब्रह्मविद्याजपानां प्रत्येकं गर्भवासाजनकत्वम् ।

कूर्म्मपुराणे “तीर्थं नारायणस्यास्य स्नात्वा तु पुरुषोत्तमम् । अत्र नारायणः श्रीमानास्ते परमपूरुषः । पूजयित्वा परं विष्णुं तत्र स्नात्वा द्विजोत्तमाः ! । ब्राह्मणान् भोजयित्वा तु विष्णुलोकमवाप्नुयात्” । श्राद्धकल्पतरौ वायुपुराणे “धूतपापं तथा तीर्थं सुभद्रादक्षिणस्तथा । गोकर्णोगजकर्णश्च तथा च पुरुषोत्तमः । एतेषु पितृतीर्थेषु श्राद्धमानन्त्यमश्नुते” । ब्रह्मपुराणे “चक्रं दृष्ट्वा हरेर्दूरात् प्रासादोपरिसंस्थितम् । सहसा मुच्यते पापात् सर्वस्मादिति मे मतिः” । तथा “मार्कण्डेयह्रदे गत्वा स्नात्वा चोदङ्मुखः शुचिः । निमज्जेत्त्रींश्च वारांश्च इमं मन्त्रमुदीरयन्” । “मार्कण्डेयह्रदे त्वेवं स्नात्वा दृष्ट्वा तु शङ्करम् । दशानामश्वमेधानां फलं प्राप्नोति मानवः । पापैः सर्वैर्विनिर्मुक्तः शिवलोकं स गच्छति । तत्र भुक्त्वा वरान् भोगान् यावदाहूतसंप्लवम् । इह लोकं समासाद्य ततो मोक्षमवाप्नुयात् । कल्पवृक्षं ततो गत्वा कृत्वा तं त्रिःप्रदक्षिणम् । पूजयेत् परया भक्त्या मन्त्रेणानेन तं वटम्” । “भक्त्या प्रदक्षिणं कृत्वा महाकल्पवटं नरः । सहसा मुच्यते पापात् जीर्णत्वच इवोरगः । छायां तस्य समासाद्य कल्पवृक्षस्य भो द्विजाः ! । ब्रह्महत्यां नरो दह्यात् पापेष्वन्येषु का कथा । दृष्ट्वा कृष्णाङ्गसम्भूतं ब्रह्मतेजोमयं वटम् । न्यग्रोधाकृतिनं विष्णुं प्रणिपत्य च भोद्विजाः ! । राजसूयाश्वमेधाभ्यां फलं प्राप्नोति चाधिकम् । तथा स्ववंशमुद्धृत्य विष्णुलोकं स गच्छति । वैनतेयं नमस्कृत्य कृष्णस्य पुरतः स्थितम् । सर्वपापविनिर्मुक्तस्ततोविष्णुपुरं व्रजेत् । दृष्ट्वा वटं वैनतेयं यः पश्येत् पुरुषोत्तमम् । सङ्कर्षणं सुभद्राञ्च स याति परमां गतिम् । प्रविश्यायतनं विष्णोः कृत्वा तं त्रिःप्रदक्षिणम् । सङ्कर्षणं स्वमन्त्रेण भक्त्याऽऽपूज्य प्रसादयेत्” । “एवं प्रसाद्य चानन्तमजेयं त्रिदशार्च्चितम् । कैलाशशिखराकारं चन्द्रात् कान्ततराननम् । नीलवस्त्रधरं देवं फणाविकटमस्तकम् । महाबलं हलधरं कुण्डलैकविभूषणम् ! रौहिणेयं नरोभक्त्या लभेताभिमतं फलम् । सर्व्वपापविनिर्म्मुक्तोविष्णुलोकं स गच्छति । आहूतसंप्लवं यावत् भुक्त्वा तत्र सुखं नरः । पुण्यक्षयादिहागत्य प्रवरे योगिनां कुले । ब्राह्मणप्रवरोभूत्वा सर्व्वशास्त्रार्थपारगः । ज्ञानं तत्र समासाद्य मुक्तिं प्राप्नोति दुर्लभाम् । एवमभ्यर्च्च्य हलिनं ततः

कृष्णं विचक्षणः । द्वादशाक्षरमन्त्रेण पूजयेत् सुसमाहितः” । आह्नुतसंप्लवं यावत् भूतसंप्लवं यावत् आप्रलय कालम् इति यावत् छान्दसोभकारस्य हकारः । द्वादशाक्षरमन्त्रेण ओं नमोभगवते वासुदेवाय इत्यनेन । “द्विषट्कवर्णमन्त्रेण भक्त्या ये पुरुषोत्तमम् । पूजयन्ति सदा धीरास्ते मोक्षं प्राप्नुवन्ति वै । तस्मात्तेनैव मन्त्रेण भक्त्या कृष्णं जगद्गुरुम् । संपूज्य गन्धमाल्याद्यैः प्रणिपत्य प्रसादयेत्” एवं प्रसाद्य देवेशं वरदं भक्तवत्सलम् । सर्वपापहरं देवं सर्वकामफलप्रदम् । पीनांसं द्विभुजं देवं पद्मपत्त्रायतेक्षणम् । महोरस्कं महाबाहुं पीतवस्त्रं शुभाननम् । शङ्खचक्रगदापाणिं मुकुटाङ्गदभूषणम् । सर्वलक्षणसंयुक्तं वनमालाविभूषितम् । दृष्ट्वा नरोऽञ्जलिं बद्ध्वा दण्डवत् प्रणिपत्य च । अश्वमेधसहस्राणां फलं प्राप्नोति भोद्विजाः ! । यत् फलं सर्वतीर्थेषु स्नानदाने प्रकीर्त्तितम् । नरस्तत् फलमाप्नोति दृष्ट्वा कृष्णं प्रणम्य च” । अत्र यद्यपि दृष्ट्वा प्रणम्येति श्रवणात् समुच्चितएव फलान्वयोऽन्यथा वाक्यभेदः स्यात् तथापि शेषे दर्शनमात्र एव फलोपसंहारात् प्रत्येकं फलान्वयइति वदन्ति । ब्रह्मपुराणे “ततः पुज्य स्वमन्त्रेण सुभद्रां भक्तवत्सलाम् । प्रसादयेत्ततोविप्राः ! प्रणिपत्य कृताञ्जलिः” । स्वमन्त्रेण प्रणवादिनमोन्तेन नाम्ना । यथा गारुडे “प्रणवादिनमोऽन्तेन चतुर्थ्यन्तञ्च सत्तमाः ! । देवतायाः स्वकं नाम मूलमन्त्रः प्रकीर्त्तितः”। “एवं प्रसाद्य तां देवीं जगद्धात्रीं जगद्धिताम् । बलदेवस्य भगिनीं सुभद्रां वरदां शिवाम् । कामगेन विमानेन नरोविष्णुपुरं व्रजेत् । निष्क्रम्य देवतागारात् कृतकृत्योभवेन्नरः । प्रणम्यायतनं पश्चात् व्रजेत्तत्र च भोद्विजाः ! । भक्त्या दृष्ट्वा च तं देवं प्रणम्य नरकेशरिम् । मुच्यते पातकैर्म्मर्त्यः समस्तैर्नात्र संशयः” । नरकेशरिं नरकेशरिणम् । तथा ‘अनन्ताख्यं वासुदेवं दृष्ट्वा भक्त्या प्रणम्य च । सर्वपापविनिर्मुक्तोनरोयाति परं पदम्’ । तथा “श्वेतगङ्गां नरः स्नात्वा यः पश्येत् श्वेतमाधवम्” । तथा “कुशाग्रेणापि राजेन्द्र ! श्वेतगाङ्गेयमम्बु च । स्पृष्ट्वा स्वर्गं गमिष्यन्ति मद्भक्ता ये समाहिताः । यस्त्विमां प्रतिमां लोके माधवाख्यां शशिप्रभाम् । विहाय सर्वलोकान् वै मम लोके महीयते” । तथा “श्वेतमाधवमालोक्य समीपे मत्स्यमाधवम् । एकार्णवजले मग्नं रोहितं रूपमास्थितम् ।

वेदानां तारणार्थाय रसातलतले स्थितम्” । तथा “आद्यावतारणं रूपं माधवं मत्स्यरूपिणम् । प्रणम्य प्रयतोभूत्वा सर्व्वदुःखाद्विमुच्यते” । तथा “पूर्व्वोक्तेन तु मन्त्रेण नमस्कृत्य तु तं वटम् । दक्षिणाभिमुखो गच्छेत् धन्वन्तरशतत्रयम्” । धनुःशतत्रयमित्यर्थः । तथा “उग्रसेनं पुरा दृष्ट्वा स्वर्गद्वारेण सागरम् । गत्वाचम्य शुचिस्तत्र ध्यात्वा नारायणं परम् । न्यसेदष्टाक्षरं मन्त्रं पश्चाद्धस्तशरीरयोः” । “समुद्रोदकेन नाचामेत्” तस्यापेयत्वस्य तैत्तिरीयश्रुतावुक्तत्वात् । “यैः कृतः सर्वभक्षोऽग्निरपेयश्च महोदधिः । क्षयी चाप्यायितश्चन्द्रः कोन नश्येत् प्रकोप्य तान्” इति मनुनाभिहितत्वाच्च” तस्यास्पृश्यत्वेऽपि विधिभेदेनैव तस्य स्पृश्यता यथाह ब्रह्मपुराणम्

“एवमुत्सार्य्य विधिवत्ततःस्नानं समाचरेत् । अन्यथा भोद्विजश्रेष्ठाः ! स्नानं तत्र न शस्यते” । वनपर्वणि “अग्निश्च तेजो वडवा च देहोरेतोधाविष्णोरमृतस्य नाभिः, एवं ब्रुवन् पाण्डव ! सत्यवाक्यमतोऽवगाहेत पतिं नदीनाम् । अन्यथा हि कुरुश्रेष्ठ ! स्पृष्टव्योन महोदधिः । कुशाग्रेणापि कौन्तेय ! देवयोनिरपां पतिः । देवान् पितॄंस्तथा चान्यान् सन्तर्प्याचम्य वाग्यतः” (अन्यान् ऋषीन्) ब्रह्मपु० । “कृत्वा त्वाद्दैवतैर्मन्त्रैरभिषेकञ्च मार्ज्जनम् । अन्तर्जले जपेत् पश्चात् त्रिरावृत्त्यघमर्षणम्” । अब्दैवतैः “आपोहिष्ठा” इत्यादिभिः । अघमर्षणम् ऋतञ्च सत्यञ्चेत्यादि । “हस्तमात्रं चतुःकोणं चतुर्द्वारं सुशोभनम् । पुरं विलिख्य भो विप्रास्तीरे तस्य महोदधेः । एवं मण्डलमालिख्य पूजयेत्तत्रभोद्विजाः ! । अष्टाक्षरविधानेन नारायणमजं विभुम् । ओंनमो नारायणाय” इत्यष्टाक्षरमन्त्रः । ब्रह्मपुराणे “तीर्थे चाभ्यर्च्च्य विधिवत् नारायणमनामयम् । रामं कृष्णं सुभद्राञ्च प्रणिपत्य च सागरम् । दशानामश्वमेधानां फलं प्राप्नोति मानवः ! सर्वपापविनिर्मुक्तः सर्वदुःखविवर्जितः । कुलैकविंशमुद्धृत्य विष्णुलोकञ्च गच्छति । पितॄणां ये प्रयच्छन्ति पिण्डं तत्र विधानतः । अक्षयां पितरस्तेषां तृप्तिं संप्राप्नुवन्ति वै” । तथा “कोट्यो नव नवत्यश्च तत्र तीर्थानि सन्ति वै । तस्मात् स्नानञ्च दानञ्च होमं जपसुरार्च्चनम् । यत् किञ्चित् क्रियते तत्र चाक्षयं भवति द्विजाः ! । ततोगच्छेत् द्विजश्रेष्ठाः ! तीर्थं यस्राङ्गसम्भवम् ।

इन्द्रद्युम्नसरोनाम यत्रास्ते पावनं शुभम्। गत्वा तत्र शुचिः श्रीमानाचम्य मनसा हरिम्। ध्यात्वोपस्थाय स जपन्निदं मन्त्रमुदीरयेत्”। “एवमुक्त्वा विधिवत् स्नात्वा देवानृषीन् पितॄन्। तिलोदकेन चान्यांश्च सन्तर्प्याचम्य वाग्यतः। दत्त्वा पितॄणां पिण्डांश्च संपूज्य पुरुषोत्तमम्। दशाश्वमेधिकं सम्यक् फलं प्राप्नोति मानवः”। तथा “नाना नद्यः समुद्राश्च सम्प्राप्ते पुरुषोत्तमे। ज्यैष्ठशुक्लदशम्यादि प्रत्यक्षं यान्ति सर्वदा। स्नानदानादिकं तस्मात् देवताप्रेक्षणादिकम्। यत् किञ्चित् क्रियते तात! तस्मिन्। कालेऽक्षयं भवेत्। एवं कृत्वा पञ्चतीर्थमेकादश्यामुपोषितः”। “ज्यैष्ठे शुक्लद्वादश्यान्तु पश्येत् श्रीपुरुषोत्तमम्। स पूर्वोक्तं फलं प्राप्य क्रीडित्वा चाच्युतालये। प्रयाति परमं स्थानं यस्मान्न विनिवर्त्तते”। तीर्थभेदेन स्नानान्तरावृत्तिमाह निगमः। “नावर्त्तयेत् पुनः कर्म्म तर्पणादिकमन्वहम्। काम्यनैमित्तिके हित्वा एकं ह्येकत्र वासरे। अपोह्य चाद्यं भागमुदकाद्यत्र कुत्रचित्। तिथ्योर्युग्मेऽप्ययुग्मे वा यद्यदाह्निकमाचरेत्”। ब्रह्मपु० “मार्कण्डेयवटः कृष्णो रौहिणेयो महोदधिः। इन्द्रद्युम्नसरश्चैव पञ्चतीर्थीविधिः स्मृतः”। मार्कण्डेयवटो मार्कण्डेयहृदः। कृष्णोऽक्षयवटः “न्यग्रोधाकृतिनं विष्णुमिति” पूर्वोक्तात्। वराहपुराणे “अस्तिष्ठदेकपादेन कुरुक्षेत्रे नराधिप!। वर्षाणामयुतं सप्त वायुभक्षो जितेन्द्रियः। ज्यैष्ठे मासि सिते पक्षे द्वादश्यान्तु विशेषतः। पुरुषोत्तममासाद्य ततोऽधिकफलं लभेत्। अग्निपुराणे “वैशाखस्य सिते पक्षे तृतीयाक्षयसंज्ञिता। तत्र मां लेपयेद्गन्धलेपनैरतिशोभनम्”। तथा “ज्यैष्ठ्यामहञ्चावतीर्णस्तत् पुण्यं जन्मवासरम्। तस्यां मे स्नपनं कुर्य्यात् महास्नानविधानतः। ज्यैष्ठे प्रातस्तने काले ब्रह्मणा सहितस्य माम्। रामं सुभद्रां संस्नाप्य मम लोकमवाप्नुयात्”। तथा “आषाढस्य सिते पक्षे द्वितीया पुष्यसंयुता। तस्यां रथे समारोप्य रामं मां भद्रया सह। यात्रोत्सवं प्रवर्त्त्याथ प्रीणयेच्च द्विजान् बहून्”। तथा “पुष्याभावेऽपि सा कार्य्या सदा सा प्रीतये मम”। स्कान्दपुराणे “फाल्गुन्यां क्रीडनं कुर्य्यात् दोलायां मम भूमिप!”। अन्यपुराणे “उत्तरे दक्षिणे विष्णोस्त्वयने पुरुषोत्तमं। दृष्ट्वा रामं सुभद्राञ्च विष्णुलोकं व्रजेन्नरः। नरो दोलागतं दृष्ट्वा गोविन्दं पुरुषोत्तमम्। फाल्गुन्यां संयतो भूत्वा गोविन्दस्य पुरं व्रजेत्। विषुवद्दिवसे प्राप्ते पञ्चतीर्थीविधानतः। कृत्वा सङ्कर्षणं कृष्णं दृष्ट्वा तस्माच्च मोहिनाः। नरः समस्तयज्ञानां फलं प्राप्नोति दुर्लभम्। विमुक्तः सर्वपापेभ्यो विष्णुलोकञ्च गच्छति। यः पश्यति तृतीयायां कृष्णं चन्दनरूषितम्। वैशाखस्य सिते पक्षे स यात्यच्युतमन्दिरम्”। तथा “मासि ज्यैष्ठे तु संप्राप्ते नक्षत्रे शक्रदैवते। पौर्णमास्यां तथा स्नानं सर्वकालं हरेर्द्विजाः। तस्मिन् काले तु ये मर्त्त्याः पश्यन्ति पुरुषोत्तमम्। बलभद्रं सुभद्राञ्च ते यान्ति पदमव्ययम्। तथा “स्नातः पश्यति यः कृष्णं व्रजन्तं दक्षिणामुखम्। मुक्तिकामस्वरूपं यान्तं ये पश्यन्ति तथास्थितम्। कृष्णं बलं सुभद्राञ्च ते यान्ति भवनं हरेः। ये पश्यन्ति तदा कृष्णं सम्प्राप्तं मण्डपे स्थितम्। हरिं रामं सुभद्राञ्च विष्णुलोकं व्रजन्ति ते”। तथा, “संवत्सरमुपोषित्वा मासमयनमथापि वा। तेन जप्तं हुतं तेन तेन तप्तं तपोमहत्। स याति परमं स्थानं यत्र योगेश्वरो हरिः”। तथा “दृष्ट्वा रामं महाज्यैष्ठ्यां कृष्णं सह सुभद्रया। विष्णुलोकं नरो याति समुद्धृत्य शतं कुलम्”। तथा “यावन्ति कांशतरोमाणि यावत् स पुरुषोत्तमे। कल्पवासयुगान्यष्टौ दिनेनैकेन लभ्यते”। मत्स्यपुराणे “कोटिजन्मकृतं पापं पुरुषोत्तमसन्निधौ। कृत्वा स्वर्गपदे स्नानं विमुञ्चति महोदधौ”। ब्रह्मपुराणे “पथि श्मशाने स्थण्डिले वा रथ्याप्रदेशेऽपि च यत्र तत्र। इच्छन्ननिच्छन्नपि यत्र तत्र संत्यज्य देहं लभते च मोक्षम्। देहं त्यजन्ति पुरुषा ये तत्र पुरुषोत्तमे। कल्पवृक्षं समासाद्य मुक्तास्ते नात्र संशयः। वटसागरयोर्मध्ये ये त्यजन्ति कलेवरम्। ते दुर्लभं परं मोक्षमाप्नुवन्ति न संशयः”। तत्रैव “तथा चैवोत्कले देशे कीर्त्तिवासा महेश्वरः। सर्वपापहरं तस्य क्षेत्रं परमदुर्लभम्। लिङ्गकोटिसमायुक्तं वाराणस्या समं शुभम्। एकाम्रकेति विख्यातं तीर्थाष्टकसमन्वितम्। तीर्थं बिन्दुसरो नाम तस्मिन् क्षेत्रे द्विजोत्तमाः!। देवानृषीन् मनुष्यांश्च पितॄन् सन्तर्पयेत्ततः। तिलोदकेन विधिना नामगोत्रविधानवित्। स्नात्वैवं विधिवत्तत्र सोऽश्वमेधफलं लभेत्। पिण्डं ये संप्रयच्छन्ति पितृभ्यः सरसस्तटे। पितॄणामक्षयां तृप्तिं ते कुर्व्वन्ति न संशयः। ततः शम्भोर्गृहं गच्छेद्वाग्यतः संयतेन्द्रियः। प्रविश्य पूजयेत् पूर्वं कृत्वा तत्र प्रदक्षिणम्।

आगमोक्तेन मन्त्रेण वेदोक्तेन च शङ्करम् । अदीक्षितश्च वा देवान् मूलमन्त्रेण चार्च्चयेत्' । तथा सर्व्वपापविनिर्मुक्तोरूपयौवनगर्व्वितः । कुलैकविंशमुद्धृत्य शिवलोकं स गच्छति' । 'पश्येद्देवं विरूपाक्षं देवीञ्च शारदां शिवाम् । गणचण्डं कार्त्तिकेयं गणेशं वृषभं तथा । कल्पद्रुमञ्च सावित्रीं शिवलोकं स गच्छति । एतन्मया मुनिश्रेष्ठाः । क्षेत्रं प्रोक्तं सुदुर्लभम् । कोणार्कस्योदधेस्तीरं भक्तिमुक्तिफलप्रदम् । स्नात्वैव सागरे दत्त्वा सूर्य्यायार्घं प्रणम्य च । नरो वा यदि वा नारी सर्व्वकामफलं लभेत् । ततः सूर्य्यालयं गच्छेत् पुष्पमादाय वाग्यतः । प्रविश्य पूजयद्भानुं कुर्य्यात् त्रिःप्रदक्षिणम् । दशानामश्वमेधानां फलं प्राप्नोति मानवः'' स्कन्दपु० उत्कलखण्डे ।
"तथा चानुदिनं देव्याः सिद्धाः क्षुद्रेयस्तथा । समर्च्चि तुमिच्छायान्ति देवेशं न तथाऽधमः । अहो तत्परमं क्षेत्रं विस्तृतं दशयोजनैः । तीर्थराजस्य सलिलादुत्थितं वालुकाचितम् । नीलाचलेन महता मध्यस्थेन विराजितम् । एकं स्तनमिव पृथ्व्याः सुदूरात् परिभावितम्" । ब्रह्माणं प्रति विष्णुवाक्यम् । "सागरस्योत्तरे तीरे महानद्यास्तु दक्षिणे । स प्रदेशः पृथिव्यां हि सर्व्वतीर्थफलप्रदम् । एकाम्रकाननाद् यावद् दक्षिणोदधितीरभूः । पदात् पदात् श्रेष्ठतमः क्रमेण परिकीर्त्तितः । सिन्धुतीरे च यो ब्रह्मन् राजते नीलपर्व्वतः । पृथिव्यां गोपितं स्थानं तव चापि सुदुर्लभम् । सुरासुराणां दुर्ज्ञेयं माययाच्छादितं मम । सर्व्वसङ्गपरित्यक्तस्तत्र तिष्ठामि देहभृत् । स्पृष्ट्या लयेन नाक्रान्तं क्षेत्रं मे पुरुषोत्तमम् । नीलाद्रेरन्तरभुवि कल्पन्यग्रोधमूलतः । वारुण्यां दिशि यत् कुण्डं रौहिणं नाम विश्रुतम् । तत्तीरे निवसन्तो मां पश्यन्तश्चर्म्मचक्षुषा । तदम्भसा क्षीणपापा मम सायुज्यमाप्नुयुः । व्रतेषु तीर्थेषु च यज्ञदानयोः पुण्यं यदुक्तं विमलात्मनां हि । अहर्निवासाल्लभते च सर्व्वं निमेषवासात् खलु चाश्वमेधिकम्" "जैमिनिरुवाच । उदकार्त्तः समागत्य कुतश्चिद्वायसोत्तमः । कारणोदकसंपूर्णे तस्मिन्कुण्डे निमज्जितः । विलोक्य माधवं नीलरत्नकान्तिं कृपानिधिम् । काकदेहं समुत्सृज्य लुठमानं मुहुः क्षितौ । शङ्खचक्रगदापाणिस्तस्य पार्श्वे व्यवस्थितः''। यमं प्रति लक्ष्मी वाक्यम् । "पञ्चक्रोशमिदं क्षेत्रं समुद्रान्तर्व्यवस्थितम् । त्रिकोणं तीर्थराजस्य तटभूमौ सुनिर्म्मलम् । सुवर्णवालुकाकीर्णं नीलपर्व्वतशोभितम् । योऽसौ विश्वेश्वरो देवः साक्षान्नारायणात्मकः । संयम्य विषयग्रामं समुद्रतटमास्थितः । उपासितुं जगन्नाथं चतुःषष्ठ्युत्तमः प्रभुः । यमेश्वर इतिख्यातो यमसंयमनाशनः । यं दृष्ट्वा पूजयित्वा तु कोटिलिङ्गफलं लभेत् । सीमा प्रतीचि क्षेत्रस्य शङ्खाकारस्य मूर्द्धनि । शङ्खाग्रे नीलकण्ठः स्यादेतत् क्षेत्रं सुदुर्लभम् । परमं पावनं क्षेत्रं साक्षान्नारायणस्य वै । शङ्खस्योत्तरभागस्तु समुद्रोदकसंप्लुतः । यत्सम्पर्कात् समुद्रोऽत्र तीर्थराजत्वमागतः । यथाऽयं भगवान् मुक्तिप्रदोऽक्षिपथं गतः । तथेदं मरणात् क्षेत्रं सिन्धुस्नानाद्धिमुक्तिदम् । चिच्छेद ब्रह्मणः पूर्व्वं रुद्रः क्रोधात्तु पञ्चमम् । तच्छिरो दुस्त्यजं ब्रह्मन् । ब्रह्माण्डं परिबभ्रमे । तत्रागतो यदा ब्रह्म कपालं परिमुक्तवान् । कपालमोचनं तीर्थं द्वितीयावर्त्तसंस्थितम् । तस्य दक्षिणपार्श्वे तु मरणं भवमोचनम् । तृतीयावर्त्तसीमायां शक्तिं मे विमलाह्वयाम् । जानीहि धर्म्मराज ! त्वं भुक्तिमुक्तिफलप्रदाम् । नाभिदेशे स्थितं ह्येतत् त्रयं कुण्डं वटो विभुः । कपालमोचनं यावदर्द्धाशनी प्रतिष्ठिता । मध्यं शङ्खस्य जानीयात् सुशुभं चक्रपाणिना । तां दृष्ट्वा प्रणमेद् यस्तु भोगान् सोऽश्नाति शाश्वतान् । सिन्धुराजस्य सलिलात् यावन्मूलं वटस्य वै । कीटपक्षिमनुष्याणां मरणात् मुक्तिदो मतः । अन्तर्वेदीतीयं पुण्या वाञ्छ्यते त्रिदशैरपि । यत्रस्थितान् हि पश्यन्ति सर्व्वां चक्राब्जधारिणः । कामाख्या क्षेत्रपालस्य विमलां चान्तरा स्थिता । साक्षाद्ब्रह्मस्वरूपोऽसौ नृसिंहो दक्षिणे विभोः । अन्तर्वेद्या रक्षणार्थं शक्तयोऽष्टौ प्रकल्पिताः । उग्रेण तपसा पूर्व्वमहं सर्व्वेण भाविता । पत्न्यर्थं वा मया सृष्टा गौरी तत्राथ भामिनी । सर्व्वसौन्दर्य्यवसतिर्वपुषो मे विनिर्गता । तदा दृष्टा मया भद्रे वचनं मे प्रियं कुरु । अन्तर्वेदीं रक्ष मम परितस्त्वं स्वमूर्त्तिभिः । साऽत्र तिष्ठति मत्प्रीत्या अष्टधा दिक्षु संस्थिता । मङ्गला वटमूले तु पश्चिमे विमला तथा । शङ्खस्य पूर्व्वभागे तु संस्थिता सर्व्वमङ्गला । अर्द्धाशनी तथा लम्बा कुवेरदिशि संस्थिता । कालरात्रिर्दक्षिणस्यां पूर्व्वस्यान्तु मरीचिका । कालरात्र्यास्तथा पश्चात् चण्डरूपा व्यवस्थिता । रुद्राख्या ह्यष्टधा भेदं दृष्ट्वा रुद्रोऽपि शङ्करः । आत्मानमष्टधा भित्त्वा उपास्ते परमेश्वरम् । कपालमोचनं नाम क्षेत्रपालं यमेश्वरम् । मार्कण्डेयं तथेशानं विश्वेशं

नीलकण्ठकम्। वटमूले वटेशञ्च लिङ्गान्यष्टौ महेशितुः। यानि दृष्ट्वा तथा स्पृष्ट्वा पूजयित्वा विमुच्यते"। तन्नैवेद्यान्नस्य चण्डालादिस्पर्शे स्थानभेदे भोज्यता। कैश्चिदपि निबन्धृभिः तन्नैवेद्यान्नस्य चण्डालादिना स्पर्शे भोज्यतायाः अनुक्तेः तन्मूलीभूतवचनानाम मूलकत्वं निबन्धृभिरदृष्टत्वात् समूलकत्वे तत्क्षेत्रमध्ये एव भक्ष्यता तथाहि "प्रविशन्तस्तु तत्क्षेत्रं सर्वैः स्युर्विष्णुमूर्त्तयः। यत्रान्नपाचिका लक्ष्मीर्भोक्ता यत्र जनार्दनः। चण्डालेनापि संस्पृष्टं ग्राह्यं तत्रान्नमग्रजैः" ब्रह्मवैवर्त्तपुराणवचनस्य समूलत्वे तत्र तत्प्रवेशमात्रेण सर्वेषाम् विष्णुमूर्त्तित्वनिर्देशेन तत्क्षेत्रस्थे एवान्त्यजादिस्पर्शे न दुष्टत्वं नान्यत्र।"विष्णुालयगतं तद्धि निर्माल्यं पतितादयः। स्पृशन्ति चेन्न दुष्टं हि यथा विष्णुस्तथैव ते" इति उत्कलखण्डीयवाक्यस्य समूलत्वे विष्णुालयगतमिति विशेषणात् तत्रैव तस्य स्पर्शदोषराहित्यं नेतरत्र। यत्तु "चिरस्थमपि संशुष्कं नीतं वाऽदूरदेशतः। यथा तथोपयुक्तं तु सर्वपापापनोदनम्" तत्रत्यशाक्यान्तरम् तत्र नीतं वाऽदूरदेशत इत्यकारप्रश्लेषः बोध्यः वा एवार्थे अदूरत एव निकटेस्थितमेव नीतं केनापि दुष्टतामिति व्याख्येयम् पूर्व्वोक्तवचनद्वयैकवाक्यत्वात्। वैष्णवास्तु तन्न मन्यन्ते। ते हि सर्वत्र तदन्नस्योपयोगं कुर्वन्ति। वङ्गदेशीयानां स्मार्त्तानां तु अन्यस्थानगतस्य पावनत्वेऽपि न भक्षणाचरणम्।"शालग्रामो हरेर्मूर्त्तिर्जगन्नाथस्य भारत!। कलेर्दशसहस्रान्ते त्यक्त्वा यायात् हरेः पदम्" ब्रह्मवै० पु०। "कलेर्दश सहस्राणि विष्णुस्तिष्ठतिमेदिनीम्। तदर्द्धं जाह्नवीतोयं तदर्द्धं ग्राम्यदेवता" इति च पठन्ति। "विमला तत्र देवः स्यात् जगन्नाथस्तु भैरवः"इति तन्त्रोक्ते तत्क्षेत्रस्थे पीठरक्षके ३भैरवभेदे पु०। भामिनीविलासरसगङ्गाधरादिग्रन्थकारके ४विद्वद्भेदे। "जगन्नाथस्यायं सुरधुनि! समुद्धारसमयः" तत्कृतगङ्गालहरी

**जगन्निवास** पु० ६त०। १परमेश्वरे तदभेदात् २विष्णौ च "जगन्निवासो वसुदेवसद्मनि" माघः। ईश्वरस्य प्रलये सर्वभूताधारत्वात् तथात्वम्।

**जगन्मङ्गल** न० जगतां मङ्गलं यस्मात्। कालीकवचभेदे "श्रीजगन्मङ्गलं नाम कवचं पूर्वसूचितम्" भैरवीत०।

**जगन्मोहिनी** स्त्री जगन्ति मोहयति मुह–णिच्–णिनि ६त०। १महामायायां २तदभिमानिन्यां दुर्गायां च।

**जगर** पु० जागर्त्ति युद्धे ऽनेन जागृ–अच् पृषो०। कवचे हेम०।

**जगल** पु० जन–ड गल–अच् कर्म्मधा०। १सुराकल्के (मेओया) अमरः २मदनवृक्षे ३पिष्टमद्ये ४धूर्त्ते त्रि० मेदि० कवचे न० हेम०। गोमये न० रत्नमाला। तत्र सुराकल्कगुणाः भावप्र० उक्ता यथा "याह्युष्णोऽजगलः पक्वा हृद्घ्नट्कफ शोफहृत्"।

**जग्ध** त्रि० अद–कर्म्मणि क्त। १भुक्ते अमरः भावे क्त। २भोजने न०। ["गर्हिताद्याद्ययोर्जग्धिः" स्मृतिः।

**जग्धि** स्त्री अद–क्तिन्। १भोजने, २सहभोजने च अमरः।

**जग्मि** पु० गम– किन् द्वित्वम् १वायौ तस्य सततगतित्वात् तथात्वम्। २गन्तरि त्रि० स्त्रियां वा ङीप्।

**जगुरि** त्रि० गृ–निगरणे किन् द्वित्वं वेदे उत्त्वम्। उद्गूर्णे। "दूरे ह्यध्वा जगुरिः पराचैः" ऋ०१०। १०८।१। २जङ्गमे च "इमामूचमधिकृत्य जगुरिः जङ्गमतेः" ११।२५। निरुक्ते उक्तेस्तथात्वम्

**जघन** न० वक्रं हन्ति हन–यङ् अच् पृषो०। स्त्रीणां १श्रोणिपुरोभागे, २श्रोण्यौ च। "चीनांशुकमिव पीनस्तनजघनायाः कुलीनायाः" उद्भटः। "जघनेन घनेन वा" भट्टिः। "गङ्गायमुनयोर्मध्ये पृथिव्या जघनं स्मृतम्। प्रयागं जघनस्थानम्" भा० व० ८५ अ०। [कुकुन्दरयोः हला०।

**जघनकूपक** पु० द्वि०ब० जघनस्य कूप इव कायति कै–क।

**जघनचपला** स्त्री "प्राक्प्रतिपादितमर्द्धं प्रथमे प्रथमेतरे तु चपलायाः। लक्ष्माश्रयेत सोक्ता विशुद्धधीभिर्जघनचपला" वृ० र० उक्ते मात्रावृत्तभेदे।

**जघनेफला** स्त्री० जघने इव मध्यभागे फलमस्याः अलुक्स०। काकोडुम्बरिकायाम् अमरः।

**जघन्य** त्रि० जघनमिव शाखा० यत् जघने भवः दिगा० यत् वा। १चरमे २गर्हिते "धर्म्मार्थकामाः सममेव सेव्या यो ह्येकसक्तः स जनोजघन्यः" ३लक्षणयुक्ते नरे ४अन्त्ये ५शूद्रे च शब्दर०। "जघन्यं सेवमानान्तु संयतां वासयेद्गृहे। उत्तमां सेवमानस्तु जघन्योवधमर्हति" मनुः वर्ण्यादि० वाकर्मधारये तत्पुरुषे अस्मात् उत्तरपदस्याद्युदात्तता। ६राजानुचरभेदे तल्लक्षणादि ह०स०६८अ० उक्तं यथा "पश्चापरे वामनको जघन्यः" इत्यादिना। विभज्य "मालव्यसेवी तु जघन्यनामा खण्डेन्दुतुल्यश्रवणः सुगन्धिः। शुक्रेण सारः पिशुनः कविश्च रूक्षच्छविः

स्थूलकराङ्गुलीकः। क्रूरो धनी स्थूलमतिः प्रतीतस्ताम्रच्छविः स्यात् परिहासशीलः, उरोऽङ्घ्रिहस्तोऽसिशङ्किपाणिपरस्वभाक्च जघन्यनामा"। "जघन्यगुणवृत्तस्था अधो गच्छन्ति तामसाः" गीता।

**जघन्यज** पु० जघन्ये चरमे जायते जन–ड। १शूद्रे, २कनिष्ठे त्रि० मेदि०। "ततोविष्णुरजघन्यो जघन्यजः" हरिवं० ८अ०। "जघन्यजस्तस्वकश्च श्रुतसेनेति यः श्रुतः" भा० आ० ३अ० जघन्यप्रभवादयोऽप्यत्र। "जिह्वायाः प्राप्नुयाच्छेदं जघन्यप्रभवो हि सः" मनुः।

**जघन्यभ** न० कर्म्म०। "आर्द्राश्लेषा तथा स्वातिर्ज्येष्ठा च भरणी तथा। शततारा जघन्यानि ताराश्च कथितानि वै" ज्यो० उक्तेषु षट्सु नक्षत्रेषु।

**जघ्नि** पु० हन–किन् द्वित्वञ्च। हननसाधनास्त्रादौ।

**जघ्नु** त्रि० हन–कु द्वित्वञ्च। घातके उणा०।

**जघ्रि** त्रि० घ्रा–किन् द्वित्वम्। घ्राणकर्त्तरि "आजन्तमभि विह्न जघ्रिः" ऋ० १।१६२।१५।

**जङ्गम** त्रि० गम–यङ्–अच्। सततगतियुते। "शरीरिणां स्थावरजङ्गमानाम्" कुमा० "भूतैः स्थावरजङ्गमैः" मनुः।

**जङ्गमकुटी** स्त्री जङ्गमा कुटीव। छत्रे त्रिका०।

**जङ्गमगुल्म** पु० कर्म०। रथके पदातिसमूहे "एवं विधान् नृपो देशान् गुल्मैः स्थावरजङ्गमैः। तस्करप्रतिषेधार्थं चारैश्चाप्यनुचारयेत्" मनुः।

**जङ्गमविष** न० सुश्रुतोक्ते विषभेदे तत्स्थानादि तत्रोक्तं यथा "अथातो जङ्गमविषविज्ञानीयमध्यायं व्याख्यास्यामः। जङ्गमस्य विषस्योक्तान्यधिष्ठानानि षोडश। समासेन मया यानि विस्तरस्तेषु वक्ष्यते। तत्र दृष्टिनिःश्वासदंष्ट्रानखमूत्रपुरीषशुक्रलालार्त्तवमुखसन्दंशविशर्द्धितगुदास्थिपित्तशूकशवानीति। तत्र दृष्टिनिःश्वासविषास्तु दिव्याः सर्पाः। भौमास्तु दंष्ट्राविषाः। मार्जारश्ववानरमकरमण्डूकपाकमत्स्यगोधाशम्बूकप्रचलाक (सौम्यकीटभेदः) गृहगोधिका चतुष्पादकीटास्तथान्ये दंष्ट्रानखविषाः। चिपिटपिच्चिटककषायवासिकसर्षपवासिकतोटकवर्च्चःकीटकौण्डिल्यकाः शकृन्मूत्रविषाः। मूषिकाः शुक्रविषाः। लूताः लालामूत्रपुरीषमुखसन्दंशनखशुक्रार्त्तवविषाः। वृश्चिकविश्वम्भरराजीवमत्स्योच्चिटिङ्गाः समुद्रवृश्चिकाश्चालविषाः (अत्र पुच्छापरपर्य्यायः कण्टकः) (हुल) इति। चित्रशिरःसरावकुर्दिशतदारुकारिमेदकसारिकामुखाः मुखसन्दंशविशर्द्धितमूत्रपुरीषविषाः। मक्षिकाकणभजलायुका मुखसन्दंशविषाः। विषहतास्थिसर्पकण्टकवरटीमत्स्यास्थिकेत्यस्थिविषाणि। शकुलीमत्स्यरक्तराजीवरकमत्स्याश्च पित्तविषाः। सूक्ष्मतुण्डोच्चिटिङ्गवरटाशतपदीशूकवलभिकाशृङ्गीभ्रमराः शूकतुण्डविषाः। कीटसर्पदेहा गतासवः शवविषाः। शेषास्त्वनुक्ता मुखसन्दंशविषेष्वेव गणयितव्याः। राज्ञोऽरिदेशे विषदस्युणाम्बु मार्गान्नधूमयवसनान् विषेण। संदूषयन्त्येभिरतिप्रदुष्टान् विज्ञाय लिङ्गैरभिशोधयेच्च। दुष्टं जलं पिच्छिलमुग्रगन्धि फेनान्वितं राजिभिरावृतञ्च। मण्डूकमत्स्यं म्रियते विहङ्गा मत्ताश्च सानूपचरा भ्रमन्ति। मज्जन्ति ये चात्र नराश्वनागास्ते च्छर्द्दिमोहज्वरदाहशोफान्। गच्छन्ति तेषामपहृत्य दोषान् दुष्टं जलं शोधयितुं यतेत"।

**जङ्गल** न० गल–यङ्–अच् पृषो०। १वने, २रहसि शब्दार्थचि० ३मांसे स्त्री मेदि० ४निर्वारिदेशे शब्दर०।

**जङ्गाल** पु० गम–यङ् लुक् वा० ड जङ्गं कुटिलगतिम् अलति वारयति अल–अण्। जलगतिवारणार्थ सेतौ (जाङ्गाल) जटाधरः।

**जङ्गिड** पु० राक्षसादिभयनिवारके मणिभेदे। "मणिं विष्कन्धदूषणं जाङ्गिडं बिभृमो वयम्" "अयं नो विश्वभेषजं जङ्गिडः पात्वंहसः" "देवैर्दत्तेन मणिना जङ्गिडेन मयोभुवा" अथ० २।४।१।२।४।

**जङ्गुल** न० गम–यङ् लुक् वा० उल। विषे त्रिका०।

**जङ्घा** स्त्री जंघन्यते कुटिलं गच्छति गत्यर्थकस्य हन्तेः कौटिल्ये यङ् लुकि अच् पृषो०। गुल्फजान्वोरन्तराले अवयवे अमरः। "पादजङ्घयोः सन्धाने गुल्फः" "जङ्घयोः सन्धाने जानु नाम" सुश्रु०। "बलाय्यैरत्निकास्थीनि जङ्घयोस्तावदेव च" याज्ञ०।

**जङ्घाकर** त्रि० जङ्घां तत्साध्यगतिं करोति कृ–"दिवाविभेत्यादिना" पाट०। जङ्घाकारिके धावके जङ्घाकर+स्वार्थे क। तत्रार्थे

**जङ्घाकरिक** त्रि० कृ–अप् करः विक्षेपः ६त० ततः अस्त्यर्थे ठन्। जङ्घाचालनेनाजीविनि धावके (धाउडे) अमरः।

**जङ्घात्राण** न० त्रायतेऽनेन त्रै–करणे ल्युट् ६त०। जङ्घासन्नाहे त्रिका०।

**जङ्घाप्रहत** त्रि० जङ्घा तद्गतिः प्रहतास्य निघातत्वात् परन्ति जङ्घागतिशून्ये मन्दगतिके। ततः अक्षद्यूता० निर्वृत्तेऽर्थे ठञ्। जाङ्घाप्रहतिक तन्निर्वृत्ते त्रि०।

**जङ्घाप्रहृत** त्रि० जङ्घा प्रहृताऽस्य । प्रहृतजङ्घाव्यापारे । ततः अस्त्यूता० निवृत्तेऽर्थे जाङ्घाप्रहृतिक तन्निर्वृत्ते त्रि० । [ ञ्यया भगुः” भा० स० ४अ० ।

**जङ्घाबन्धु** पु० ऋषिभेदे । “जङ्घाबन्धुश्च रैभ्यश्च कोपवेग-

**जङ्घारथ** पु० जङ्घा रथ इव यस्य । ऋषिभेदे । तस्य गोत्रापत्यम् इञ् । जाङ्घारथि तद्गोत्रापत्ये बहुत्वे तु यस्का० गोत्रप्रत्ययस्य लुक् । जङ्घारथास्तद्गोत्रापत्येषु

**जङ्घारि** पु० विश्वामित्रभेदे । “मार्गमर्षिर्हिरण्याक्षो जङ्घारि र्बाभ्रवायणिः” भा० अनु० ४अ० । विश्वामित्रपुत्रोक्तौ ।

**जङ्घाल** त्रि०जङ्घा वेगवती अस्त्यस्य लच् । धावके जङ्घाजो विनि । “हरिणैणकुरङ्गर्ष्य पृषतन्यङ्कुशम्बराः । राजीवश्च, तथा मुण्डी जङ्घालाः परिकीर्त्तिता” भावप्र० उक्तेषु मृगेषु पु० स्त्री । “जङ्घालाः प्रायशः सर्व्वे पित्तश्लेष्महराः स्मृताः । किञ्चिद्वातकराश्चापि लघवो बलवर्द्धनाः भावप्र० तन्मांसगुणोक्तिः ।

**जङ्घाशूल** न० जङ्घायाः शूलमिव । जङ्घायां व्यथाकारके शूलरोगभेदे । “जङ्घाशूलकरस्तम्भं सप्तरात्रेण नाशयेत्” गरुडपु० ।

**जङ्घिल** त्रि० अतिशयवेगवती जङ्घाऽस्त्यस्य पिच्छा० इलच् । वेगवज्जङ्घाविशिष्टे धावके । [जजाज जेजतुः

**जज** युद्धे भ्वा०पर०अक०सेट् । जजति अजाजीत्–अजजीत्

**जञ्ज** युद्धे भ्वा० प० अक सेट् इदित् । जञ्जति अजञ्जीत् जजञ्ज “पृत्सुजयी वसूय्येव जञ्जती” ऋ० १।१६८।७। कर्म्मणि जञ्ज्यते

**जझ्झ** शब्दकरणे भ्वा० अक० सेट् निरु० । जझ्झति अजझ्झीत्” “मरुतो जझ्झतीरिव” ऋ० ५।५२।६। “जझ्झतीः शब्दकारिण्यः” “जझ्झतीरापो भवन्ति शब्दकारिण्यः” निरु० ६।१६।

**जज्ञि** त्रि० ज्ञा–जन–वा किन् द्वित्वञ्च । ज्ञातरि २जाते च ।

**जञ्ज** त्रि० जजि–अच् । १योद्धरि भावे घञ् । २योधने । उञ्छादि० घञन्तत्वेन अन्तोदात्तता ।

**जञ्जन** त्रि० जन–यङ् लुक्–अच् । पृषो० पुनः १पुनर्जन्मवति ततोऽभूततद्भावे च्वि भूवोऽनुप्रयोगः पृषो० शतटी जञ्जणा भूतद्भावे “जिह्वाभिरहनन्नमर्दचिषा जञ्जणाभवन्” ऋ० ८।४३।८। २ज्वलति निरु० ।

**जञ्जपूक** त्रि० जप+यङ्–ऊक । अतिशय जपशीले ।

**जञ्जभ्यमान** त्रि० जभ–यङ्–शानच् । गात्रविनामेन विदारितमुखे पूर्व्वमीमांसा ।

**जट** संहतौ भ्वा० पर० अक० सेट् । जटति अजाटीत्–अजटीत् । जजाट जटतुः जटा ।

**जटा** स्त्री जट–अच् जन–उणा० टन् अन्त्यलोपश्च । १केशविकारे अन्योन्यसंलग्नकेशे २व्रतिनः ३शिखायां ४शठायाम् अमरः । ५मूले ६शाखायां मेदि० । ७कपिकच्छ्वाम् राजनि० । ८जटामांस्यां ९रुद्रजटायां १०शतावर्य्यां रत्नमाला० ११वेदपाठभेदे ऋग्वेदशब्दे १४११।१२पृ० दृश्यम्

**जटाचीर** पु० जटासहितं चीरं वसनमस्य । शिवे त्रिका० ।

**जटाजूट** पु० जटानां जूटोबन्धः जटासमूहे । (झुँटि) “जटाजूट समायुक्तामर्द्धेन्दुकृतशेखराम्” दुर्गाध्यानम् “शम्भोर्जटाजूटतटादिवापः” माघः ।

**जटाज्वाल** पु० जटेव ज्वालास्य । प्रदीपे हारा० ।

**जटाटङ्क** पु० जटा टङ्क इवास्य । शिवे महादेवे त्रिका० ।

**जटाटीर** पु० जटामटति अट–ईरन् । महादेवे त्रिका०

**जटाधर** पु० ६त० । शिवे १महादेवे शङ्करे० । २बुद्धभेदे त्रिका० । ३दाक्षिणात्ये देशभेदे स च देशः “क्रौञ्चद्वीपजटाधर कावेर्य्योरिष्यमूकश्च” वृ० स०१४अ० दक्षिणस्या मुक्तः ४कोषकारभेदे च ५जटाधारके त्रि० ।

**जटामांसी** स्त्री जटां मन्यते मन-स दीर्घश्च । खनामख्याते गन्धद्रव्यभेदे । “जटामांसी भूतजटा जटिला च तपस्विनी । मांसी तिक्ता कषाया च मेध्या कान्तिबलप्रदा । स्वाद्वी हिमा त्रिदोषास्रदाहवीसर्पकुष्ठनुत्” भावप्र० ।

**जटायु** (स्) पु० जटां याति या–कु जटा+उणा० युच् वा जट–संहतौ अच् जटं संहतमायुरस्य वा । १खनामख्याते खगभेदे, २गुग्गुलौ च मेदि० “द्वौ पुत्रौ विनतायास्तु गरुडोऽरुण एव च । तस्मात् जातोऽहमरुणात् संपातिश्च ममाग्रजः।जटायुरिति मां विद्धि श्येनीपुत्रमरिन्दम! । सोऽहं राम ! सहायस्ते भविष्यामि यदीच्छसि । सीतां च तात रक्षिष्ये त्वयि याते सलक्ष्मणे “जटायुषं तु प्रतिपूज्य राघवो मुदा परिष्वज्य च सन्नतोऽभवत् । पितुर्हि शुश्राव सखित्वमात्मवान् जटायुषा संकथितं पुनः पुनः” रामा० आर० १४अ० “सखा दशरथस्यासीज्जटायुररुणात्मजः । गृध्रराजो महावीरः सम्पातिर्यस्य सोदरः । स ददर्श तदा सीतां रावणाङ्कगतां स्नुषाम् । सक्रोधोऽभ्यद्रवत् पक्षी रावणं राक्षसेश्वरम् । अथैनमब्रवीद्दृष्टो मुञ्च मुञ्च मैथिलीम् । म्रियमाणे मयि कथं हरिष्यसि निशाचर! । न हि मे मोक्ष्यसे जीवन् यदि नोत्सृजसे वधूम्

उक्त्वैवं राक्षसेन्द्रं तं चकर्त्त नखरैर्भृशम् । पक्षतुण्ड प्रहारैश्च बहुशो जर्जरीकृतम् । चक्षार रुधिरं भूरि गिरिप्रस्रवणैरिव । स वध्यमानो गृध्रेण रामप्रियहितैषिणा । खड्गमादाय चिच्छेद भुजौ तस्य पतत्रिणः । निहत्य गृध्रराजं स भिन्नाभ्रशिखरोपमम् । जगामाथक्रमे सीतां गृहीत्वाङ्केन राक्षसः” भा० व० २७८ अ० तत्कथा दृश्या ।

**जटाल** पु० जटा— अस्त्यर्थे सिध्मा० लच् । १वटवृक्षे २कच्चुरे ३लुष्कके ४गुग्गुलौ च राजनि० ५जटायुक्ते त्रि० “चोरिणः शिखिनश्चास्य जटालोर्द्ध्वशिरोरुहाः” हरिवं० १८३ अ० । ६जटामांस्यां स्त्री राजनि० ।

**जटावत्** त्रि० जटा—अस्त्यर्थे मतुप् मस्य वः । १जटायुक्ते स्त्रियां ङीप् सा च २जटामांस्यां राजनि० ।

**जटावल्ली** स्त्री जटेव वल्ली । रुद्रजटायाम् राजनि० ।

**जटासुर** पु०जटायुक्तोऽसुरः । १असुरभेदे । स च ब्राह्मणरूपच्छद्मना वनगतयुधिष्ठिरावासे स्थित्वा भीमे वनान्तरंगते युधिष्ठिरादित्रय सहितां द्रौपदीं जहार ततोयदृच्छा प्राप्तेन भीमेन हतः । तत्कथा वनपर्वणि जटासुरवधपर्वणि दृश्या । २तदधिष्ठाने देशभेदे स च देशः वृ० स० १४अ० कूर्मविभागे ऐशान्यामुक्तः । “भल्लापल्लोलजटासुरकुनटखशघोषकुचिकाख्याः” ।

**जटासुरवध** पु० जटासुरस्य वधमधिकृत्य कृतो ग्रन्थः अण् आख्यायिकायां लुप् लुपि व्यक्तिवचनत्वात् पुंस्त्वम् । भारतवनपर्वान्तर्गतेऽवान्तरपर्वभेदे । “जटासुरवधः पर्व यक्षयुद्धमतः परम्” भा० आ० अ० वनपर्वणि अवान्तरपर्वोक्तौ ।

**जटि (टी)** पु० जट—इन् । १वटवृक्षे, शब्दरत्ना० २जटायां ३समूहे उणादिको० ४जटामांस्यां स्त्री वा ङीप् अमरः। ङीबन्तः ५पर्कटीवृक्षे शब्दर० ।

**जटिन्** पु०जटा अस्त्यस्य इनि । १प्लक्षे (पाकुड़) अश्वत्थतुल्यपत्रयुक्ते वृक्षभेदे । २जटावति त्रि० । “सुरापानापनुत्त्यर्थं चीरवासा जटी ध्वजी” मनुः ।

**जटिल** पुं स्त्री जटा—अस्त्यर्थे पिच्छा० इलच् । १सिंहे शब्दच० स्त्रियां जातित्वात् ङीष् । २जटायुक्ते त्रि० । “विवेश कश्चिज्जटिलस्तपोवनम्” कुमा० “मुण्डो वा जटिलो वा स्यात् अथ वा स्यात् शिखाजटः” मनुः । ३ब्रह्मचारिणि च । “जटिलञ्चानधीयानं दुर्बलं कितवं तथा” मनुः । स्त्रियां टाप् ४जटावत्यां स्त्रियां । ५जटामांस्यां अमरः ६पिप्पल्यां मेदि० । ७वचायाम् ८उच्चटायां रत्नमाला ९दमनकवृक्षे राजनि० ।

**जटु(डु)ल** पु० जट—उलच् पृषो० टस्य डो वा । देहस्थे कृष्णचिह्नभेदे पिप्लौ (जडुल) अमरः ।

**जठर** पुंन०जायते जन्तुर्गर्भो वाऽस्मिन् जन—अर—ठान्तादेशः । १कुक्षौ । २बद्धे, ३कठिने च त्रि० मेदि० । ४देशभेदे “अतऊर्द्ध्वं जनपदान्” इत्युपक्रमे “जठराः कुकुराश्चैव सदशार्णाश्च भारत!” भा० भी० ९अ० । “आस्तेऽस्याः जठरे वीर्यमविषह्यम् सुरद्विषाम्” भाग० ७।७।९। “वायुवेगसमौ वीरौ जठरौ तुरगोत्तमौ” रामा० अयो० १०७,१२। “यः कदाचित् सम्यक् पचति कदाचिदाध्मानशूलोदावर्त्तातिसारजठरगौरवान्त्रकूजनप्रवाहणानि कृत्वा स विषमः” सुश्रु० । जठरयन्त्रणा जठरव्यथा जठरामयः ।

**जठरनुद्** पु० जठरं नुदति रेचनाय नुद—क्विप् ६त० आरग्वधे (साँदाल) शब्दच० तस्य सेवने हि उदरभङ्गात्तस्य तथात्वम् ।

**जठराग्नि** पु० जठरस्थितोऽग्निः । कौक्षेये अन्नादिपाचके वह्नौ “अन्नरसोजठराग्निना पच्यमानोरक्ततां प्रतिपद्यते” मिताक्षरा जठरानलादयोऽप्यत्र “जठराग्निर्हि वायुना संधुक्ष्यमाणोऽन्नं पचति तत्प्रकारो योगार्णवे उक्तो यथा “आयुषंश्च भुक्तमाहारं स वायुः कुरुते द्विधा । संप्रविश्यान्नमध्यं तु पृथक् किट्टं पृथक् मलम् । अग्नेरूर्द्ध्वं जलं स्थाप्य तदन्नञ्च जलोपरि । जलस्याधः स्वयं प्राणः स्थित्वाग्निं धमते शनैः । वायुनाध्मायमानोऽग्निरत्युष्णं कुरुते जलम् । अन्नं तदुष्णतोयेन समन्तात् पच्यते पुनः। द्विधा भवति तत् पक्वं पृथक् किट्टं पृथग् रसम् । रसेन तेन ता नाड्यः संपूर्यन्ते क्रमेण च । प्रतर्पयन्ति सम्पूर्णास्ताश्च देहं समन्ततः” ।

**जठरामय** पु० ६त० । उदररोगे राजनि० अतिसारशब्दे १०६पृ० दृश्यम् । जठरगदादयोऽप्यत्र । “भवति धरणिजे चतुर्थगे ज्वरजठरगदासृगुद्भवः” वृ० स०१०४अ०

**जठल** न० जठरं साद्दृश्येनास्त्यस्य अर्श० अच् रस्य लः । जठरवदुदकाधारे “चतस्रो नावो जठलस्य जुष्टाः” ऋ० १।१८२।६। जठलस्य जठरवदुदकाधारस्य” भा० ।

**जड** त्रि० जलति घनीभवति जल—अच् डस्य लः । “इष्टं वानिष्टं वा न वेत्ति योमोहात् । परवशग. स भवेदिह नाम्ना जडसंज्ञकः पुरुषः” उक्तलक्षणे १मन्दबुद्धौ २मूर्खे

३वेदग्रहणासमर्थे "अनंशौ क्लीवपतितौ जात्यन्धबधिरौ तथा। उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः" मनुः "वेदाग्रहणसमर्थो जडः" इति दायभागः ४हिमग्रस्ते हिमेन मन्दक्रिये ५मूके ६ध्मपत्ते च मेदि०। ७जले न० राजमुकुटः। ८सीसके न०राजनि०। ९चेतनभिन्ने अज्ञानादि समूहे वेदान्तः। तन्मते हि पदार्थौ द्विधा जडोऽजडश्च तत्र जडोऽज्ञानतत्कार्य्यसंघः। अजडश्चेतनः इति भेदः। "अज्ञानादिसकलजडसमूहोऽवस्तु" वेदान्तसा० "वेदास्ते किं वा जननि! वयमुच्चैर्जडधियः" कालीस्तवः "नापृष्टः कस्यचिद् ब्रूयात् नचान्यायेन पृच्छतः। जानन्नपि हि मेधावी जडवत् लोक आचरेत्" मनुः। तस्य भावः ष्यञ् जाड्य न० तल् जडता स्त्री त्व

जड़त्व न० इमनिच् जडिमन् पु० जडभावे। [हलायुधः

जड़क्रिय त्रि० जड़स्य हिमक्लिष्टस्येव क्रियास्य। चिरक्रिये।

जड़ता स्त्री जड़+भावे तल्। अपाटवे शीतलत्वे "उदस्त्रोमाञ्चं व्रजति जड़तामङ्गमखिलम्" सा० द० "भुजलता जड़तामबलाजनः" रघुः। "अप्रतिपत्तिर्जडता स्यादिष्टानिष्टदर्शनश्रुतिभिः। अनिमिषनयननिरीक्षणतूष्णीम्भावादयस्तत्र" सा०द० उक्ते व्यभिचारिगुणभेदे। ष्यञ् जाड्य त्व जड़त्व तत्रार्थे न०।

जड़भरत पु०जडोमूक इव भरतः। आङ्गिरसप्रवरसुते योगिभेदे सहि पूर्व्वतरजन्मनि भरतनामा नृपतिरासीत् स च वानप्रस्थाश्रमे हरिणशिशुपालनेन तत्स्नेहवशात् मृत्युकाले तमनुस्मरन् मृगत्वमाप्तो कर्म्मक्षयात् तद्देहं त्यक्त्वा पुनः आङ्गिरसप्रवरस्य पुत्रतामासाद्य स्नेहदोषेण पुनस्तिर्य्यग्योनिप्राप्तिशङ्कया ज्ञानवानपि जडत्वमिव व्यञ्जयन्नासीत्। तत्कथा च भाग० ५स्क० स्थिता दिङ्मात्रमत्र प्रदर्श्यते।

"अथ कस्यचिद्द्विजवरस्याङ्गिरःप्रवरस्य शमदमतपःस्वाध्यायाध्ययनत्यागसन्तोषतितिक्षाप्रश्रयविद्यानसूयात्मज्ञानानन्दयुक्तस्यात्मसदृशश्रुतशीलाचाररूपौदार्य्यगुणा नव सोदार्य्या अङ्गजा बभूवुः। मिथुनञ्च यवीयस्यां भार्य्यायाम्। यस्तु तत्र पुमांस्तं परमभागवतं राजर्षिप्रवरभरतमुत्सृष्टमृगशरीरम् चरमशरीरेण विप्रत्वं गतमाहुः। तत्रापि स्वजनसङ्गाच्च भगवतः कर्म्मबन्धविध्वंसनश्रवणस्मरणगुणविवरणचरणारविन्दयुगलं मनसा विदधदात्मनः प्रतीघातमाशङ्कमानो भगवदनुग्रहेणानुस्मृतस्वपूर्व्वजन्मावलिरात्मानमुन्मत्तजडान्धबधिरस्वरूपेण दर्शयामास लोकस्य। तस्यापि ह वा आत्मजस्य स विप्रः पुत्रस्नेहानुबद्धमना आसमावर्त्तनात् संस्कारान् यथोपदेशं विदधान उपनीतस्य च पुनः शौचाचमनादीन् कर्म्मनियमाननभिप्रेतानपि समशिक्षयत्। अनुशिष्टेन हि भाव्यं पितुः पुत्रेणेति। स चापि तदु ह पितृसन्निधावेवासध्रीचीनमिव स्म करोति। छन्दांस्यध्यापयिष्यन् सह व्याहृतिभिः सप्रणवशिरस्त्रिपदां सावित्रीं ग्रैष्मवासन्तिकान्मासानधीयानमप्यसमवेतरूपं ग्राहयामास। एवं स्वतनुज आत्मन्यनुरागावेशितचित्तः शौचाध्ययनव्रतनियमगुर्व्वनलशुश्रूषणाद्यौपकुर्व्वाणककर्म्माण्यनभियुक्तान्यपि समनुशिष्टेन भाव्यमित्यसदाग्रहः पुत्रमनुशास्य स्वयं तावदनधिगतमनोरथः कालेनाप्रमत्तेन स्वयं गृह एव प्रमत्त उपसंहृतः। अथ यवीयसी द्विजसती स्वगर्भजातं मिथुनं सपत्न्या उपन्यस्य स्वयमनुसंस्थया पतिलोकमगात्। पितर्य्युपरते भ्रातर एनमतत्प्रभावविदस्त्रय्यां विद्यायामेव पर्य्यवसितमतयो न परविद्यायां जडमतिरिति भ्रातुरनुशासननिर्बन्धान्न्यवृत्सन्।

स च प्राकृतैर्द्विपदपशुभिरुन्मत्तजड़बधिरमूकेत्यभिभाष्यमाणो यदा तदनुरूपाणि प्रभाषते कर्म्माणि च कार्य्यमाणः परेच्छया करोति। विष्टितो वेतनतो वा याच्ञया यदृच्छया वोपसादितमल्पं बहुमिष्टं कदन्नं वाभ्यवहरति परं नेन्द्रियप्रीतिनिमित्तम्। नित्यनिवृत्तनिमित्तस्वसिद्धविशुद्धानुभवानन्दस्वात्मलाभाधिगमः सुखदुःखयोर्द्वन्द्वनिमित्तयोरसम्भावितदेहाभिमानः। शीतोष्णवातवर्षेषु वृष इवानावृताङ्गः पीनः संहननाङ्गः स्थण्डिलसंवेशनानुमर्द्दनामज्जनरजसा महामणिरिवानभिव्यक्तब्रह्मवर्च्चसः कुपटावृतकटिरुपवीतेनोरुमषिणा द्विजातिरिति ब्रह्मबन्धुरिति संज्ञयाऽतज्ज्ञजनावमतो विचचार। यदा तु परत आहारङ्कर्म्म वेतनत ईहमानः स्वभ्रातृभिरपि केदारकर्म्मणि निरूपितस्तदपि करोति। किन्तु न समं विषमं न्यूनमधिकमिति वेद। कणपिण्याकफलीकरणकुल्माषस्थालीपुरीषादीन्यप्यमृतवदभ्यवहरति। अथ कदाचित् कश्चिद्वृषलपतिर्भद्रकाल्यै पुरुषपशुमालभतापत्यकामः। तस्य ह दैवविमुक्तस्य पशोः पदवीन्तदनुचराः परिधावन्तो निशि निशीथसमये तमसा वृतायामनधिगतपशव आकस्मिकेन विधिना केदारान् वीरासनेन मृगवराहादिभ्यः संरक्ष-

मासमङ्गिरःप्रवरसुतमपश्यन्। अथ तमेनमनवद्यलक्षणमवमृश्य भर्त्तृकर्म्मनिष्पत्तिं मन्यमाना बद्ध्वा रशनया चण्डिकागृहमुपनिन्युर्मुदा विकसितवदनाः। अथ पणयस्तं स्वविधिनाभिषिच्याहतेन वाससाच्छाद्य भूषणानुलेपस्रक्ताम्बूलादितिलकादिभिरुपस्कृतं भुक्तवन्तं धूपदीपमाल्यलाजकिसलयाङ्कुरफलोपहारोपेतया वैशससंस्थया महता गीतस्तुतिमृदङ्गपणवघोषेण च पुरुषपशुं भद्रकाल्याः पुरत उपवेशयामासुः। अथ वृषलराजपतिः पुरुषपशोरसृगासवेन देवीं भद्रकालीं यक्ष्यमाणस्तदभिमन्त्रितमसिमतिकरालनिशितमुपाददे। इति तेषां वृषलानां रजस्तमःप्रकृतीनां धनमदरजउत्सिक्तमनसां भगवत्कलावीरकुलं कदर्थीकृत्योत्पथेन स्वैरं विहरतां हिंसाविहाराणां कर्म्मातिदारुणं यद्ब्रह्मभूतस्य साक्षाद्ब्रह्मर्षिसुतस्य निर्व्वैरस्य सर्व्वभूतसुहृदः सूनायामप्यननुमतमालम्भनं तदुपलभ्य ब्रह्मतेजसाऽतिदुर्विषहेण दन्दह्यमानेन वपुषा सहसोच्चचाट सैव देवी भद्रकाली। भृशममर्षरोषावेशरभसविलसितभ्रुकुटिविटपकुटिलदंष्ट्रारुणेक्षणाटोपातिभयानकवदना हन्तुकामेवेदं महाट्टहासमतिसंरम्भेण विमुञ्चन्ती तत उत्पत्य पापीयसां दुष्टानां तेनैवासिना विवृक्णशीर्ष्णां गलात् स्रवन्तमसृगासवमत्युष्णं सह गणेन निपीयातिपानमदविह्वलोच्चैस्तरां स्वपार्षदैः सह जगौ ननर्त्त च विजहार च शिरःकन्दुकलीलया। एवमेव खलु महदभिचारातिक्रमः कार्त्स्न्येनात्मने फलति। न वा एतद्विष्णुदत्त! महदद्भुतं यदसम्भ्रमः स्वशिरश्छेद आपतितेऽपि विमुक्तदेहाद्यात्मभावसुदृढहृदयग्रन्थीनां सर्व्वसत्त्वसुहृदात्मनां निर्व्वैराणां साक्षाद्भगवताऽनिमिषारिवरायुधेनाप्रमत्तेन तैस्तैर्भावैरभिरक्ष्यमाणानां तत्पादमूलमकुतश्चिद्भयमुपसृतानां भागवतपरमहंसानाम्"। ९अ०

"अथ सिन्धुसौवीरपते रहूगणस्य व्रजत इक्षुमत्यास्तटे तत्कुलपतिना शिबिकावाहपुरुषान्वेषणसमये दैवेनोपसादितः स द्विजवर उपलब्धः। एष पीवानसंहननाङ्गो गोखरवद्धुरं वोढुमलमिति पूर्व्वविष्टिगृहीतैः सह गृहीतः प्रसभमतदर्हं उवाह शिबिकां स महानुभावः! यदा हि द्विजवरस्येषुमात्रावलोकानुगतेर्न समाहिता पुरुषगतिस्तदा विषमगतां स्वशिबिकां रहूगण उपधार्य्य पुरुषानधिवहत आह। हे वोढारः साध्वतिक्रमत किमिति विषमुह्यते यानमिति?। अथ त ईश्वरवचः सोपालम्भमुपाकर्ण्य उपायाँस्तुरीयाच्छङ्कितमनसस्तं विज्ञापयां बभूवुः। न वयं नरदेव! प्रमत्ता भवन्नियमानुपथाः साध्वेव वहामः। अयमधुनैव नियुक्तोऽपि न द्रुतं व्रजति नानेन सह वोढुमु ह वयं पारयाम इति। सांसर्गिको दोष एव नूनमेकस्यापि सर्व्वेषां सांसर्गिणां भवितुमर्हतीति निश्चित्य निशम्य कृपणवचो राजा रहूगण उपासितवृद्धोऽपि निसर्गेण बलात्कृत ईषदुत्थितमन्युरविस्पष्टब्रह्मतेजसं जातवेदसमिव रजसावृतमतिराह अहो कष्टं भ्रातर्व्यक्तमुरुपरिश्रान्तो दीर्घमध्वानमेक ऊढवान् सुचिरं नातिपीवा न संहननाङ्गो जरसा चोपद्रुतो भवान् सखे! नो वा परएते संघट्टिन इति बहुविप्रलब्धोऽप्यविद्यया विरचितद्रव्यगुणकर्म्माशये स्वचरमकलेवरेऽवस्तुनि संस्थानविशेषे अहं ममेत्यनध्यारोपितमिथ्याप्रत्ययो ब्रह्मभूतस्तूष्णीं शिबिकां पूर्व्ववदुवाह। अथ पुनः स्वशिबिकायां विषमगतायां प्रकुपित उवाच रहूगणः। किमिदमरे त्वं जीवन्मृतो मां कदर्थीकृत्य भर्त्तृशासनमतिचरसि। प्रमत्तस्य च ते करोमि चिकित्सां दण्डपाणिरिव जनतायाः यथा प्रकृतिं स्वां भजिष्यसीति। एवं बह्वबद्धमभिभाषमाणं नरदेवाभिमानं रजसा तमसानुविद्धेन मदेन तिरस्कृताशेषभगवत्प्रियनिकेतं पण्डितमानिनं स भगवान् ब्राह्मणो ब्रह्मभूतः सर्व्वभूतसुहृदात्मा योगेश्वरचर्य्यायां नातिव्युत्पन्नमतिं स्मयमान इव विगतस्मय इदमाह। श्रीब्राह्मण उवाच। त्वयोदितं व्यक्तमविप्रलब्धं भर्त्तुः स मे स्याद्यदि वीर! भारः। गन्तुर्यदि स्यादधिगम्यमध्वा पीवेति राशौ न विदां प्रवादः। स्थौल्यं कार्श्यं व्याधय आधयश्च क्षुत्तृड्भयं कलिरिच्छा जरा च। निद्रा रतिर्मन्युरहं मदः शुचो देहेन जातस्य हि मे न सन्ति। जीवन्मृतत्वं नियमेन राजन्नाद्यन्तवद्यद्विकृतस्य दृष्टम्। स्वस्वाम्यभावो ध्रुव ईड्य! यत्र तर्ह्युच्यतेऽसौ विधिकृत्ययोगः। विशेषबुद्धेर्विवरं मनाक् च पश्यामि यन्न व्यवहारतोऽन्यत्। क ईश्वरस्तत्र किमीशितव्यमथापि राजन्! करवाम किन्ते। उन्मत्तमत्तजडवत् स्वसंस्थां गतस्य मे वीर! चिकित्सितेन। अर्थः कियान् भवता शिक्षितेन स्तब्धप्रमत्तस्य च पिष्टपेषः। श्रीशुक उवाच। एतावदनुवादपरिभाषया प्रत्युदीर्य्य स मुनिवर उपशमशील उपरतानात्म्यनिमित्त उपभोगेन कर्म्मारब्धं व्यपनयन् राजयानमपि तथैवोवाह। स

चापि पाण्डवेय! सिन्धुसौवीरपतिस्तत्त्वजिज्ञासायां सम्यक्श्रद्धयाधिकृताधिकारस्तद्धृदयग्रन्थिविमोचनं द्विजवच आश्रुत्य बहुयोगग्रन्थसम्मतं त्वरयाऽवरुह्य शिरसा तत्पादमूलमुपसृतः क्षमापयन् विगतनृपदेव स्मय उवाच। कस्त्वं निगूढश्चरसि द्विजानां बिभर्षि सूत्रं कतमोऽवधूतः। कस्यासि कुत्रत्य इहापि कस्मात् क्षेमाय नश्चेदसि नोत शुक्लः। नाहं विशङ्के सुरराजवज्रान्न त्र्यक्षशूलान्न यमस्य दण्डात्। नाग्न्यर्कसोमानिलवित्तपास्त्राच्छङ्के भृशं ब्रह्मकुलावमानात्। तद् ब्रूह्यसङ्गो जडवन्निगूढविज्ञानवीर्यो विचरस्यपारः। वचांसि योगग्रथितानि साधो! न नः क्षमन्ते मनसापि भेत्तुम्। अहञ्च योगेश्वरमात्मतत्त्वविदां मुनीनां प्रवरं गुरुवै! प्रष्टुं प्रवृत्तः किमिहारणं यत्साक्षाद्धरिं ज्ञानकलावतीर्णम्। स वै भवान् लोकनिरीक्षणार्थमव्यक्तलिङ्गो विचरत्यपि स्वित्। योगेश्वराणां गतिमन्धबुद्धिः कथं विचक्षीत गृहानुबद्धः" १०अ०।

ततः तेन रहूगणक्षमाय योगमुक्त्वा प्रारब्धावसाने मुक्तो बभूवेति कथा तदुत्तराध्यायादौ स्थिता।

**जडा** स्त्री जडं करोति जड+णिच्–अच्–टाप्। १शूकशिम्ब्याम् अमरः २भूम्यामलक्याम् रत्नमा०।

**जड़िमन्** पु० जडस्य भावः दृढा॰इमनिच्। जाड्ये। "जनित जड़िम व्याकुलं व्याहरन्तो" "इष्टानिष्टापरिज्ञानं यत्र प्रश्नेष्वनुत्तरम्। दर्शनश्रवणाभावो जड़िमा सोऽभिधीयते" इत्युज्ज्वलमण्युक्ते अवस्थाभेदे।

**जतविल** त्रि० जतुना निर्वृत्तादि काशा० इल। जतुद्रव्य निर्वृत्तादौ १कलकद्रव्ये २वह्न्युद्दीपने द्रव्यभेदे।

**जतु** न० जन–ड तोऽन्तादेशः। १अलक्ते, २लाक्षायाञ्च। स्वार्थे क। तत्रार्थे मेदि०। "शणं तैलं घृतञ्चैव जतुदारूणि चैव हि" भा० आ० १४४अ०। "अप्राज्ञमधिकं पापं स्निग्धते जतुकाष्ठवत्" भा०शा० ३००अ०। ३चर्म्मचटिकायां स्त्री "सन्धिभ्यो जतूः" यजु० २४।२५। "जतूः पत्राख्याः पक्षिणीः" मेदि०। तस्य विकारः "त्रपुजतुनोः षुक् च" पा० अण् षुक् च। जातुष तद्विकारे (कड़ चुड़ि) प्रभृतौ आभरणे।

**जतुक** न० जतु इव कायति कै–क। १हिङ्गौ मेदि०। २जनीनाम गन्धद्रव्ये स्त्री भरतः। ३चर्म्मचटिकायां स्त्री (चामचिका) शब्दरत्ना०। ४पर्पट्यां मालवदेशप्रसिद्धलतायां स्त्री भावप्र० "पर्पटी रञ्जना कृष्णा जतुका जननी जनी। जतुकृष्णाग्निसंस्पर्शा जतुका चक्रवर्त्तिनी। पर्पटी तुवरा तिक्ता शिशिरा वर्ण्यलघुः। विषव्रणहरी कण्डूकफपित्तास्र कुष्ठनुत्" भावप्र० तद्गुणोक्तिः।

**जतुकारी** स्त्री जतुकवत् संश्लेषमृच्छति ऋ+अण् उप० स० गौरा० ङीष्। जतुकालतायां राजनि०।

**जतुकृत्** स्त्री जतुवत्संश्लेषं करोति कृ–क्विप् ६त०। जतुकालतायाम् अमरः।

**जतुकृष्णा** स्त्री जत्विव कृष्णा। जतुकालतायाम् भावप्र०।

**जतुनी** स्त्री० जतु संश्लेषेण तद्रूपं नयति स्वसंश्लिष्टद्रव्यम् नी–क्विप् ६त०। चर्म्मचटिकायां त्रिका० तस्य संश्लेषात् द्रव्यस्य जतुवद्रूपापत्तिर्लोकसिद्धा।

**जतुपुत्रक** पु० जतुनिर्म्मितः पुत्र इवा (पुत्तली)। पाशकगुटियां तस्य जतुनिर्म्मितत्वेन तथात्वम्। काष्ठादि रचितस्य तु उपचारात् तन्नामता।

**जतुमणि** पु० "समुत्सन्नमरुजं मण्डलं कफरक्तजम्। सहजं लक्ष्म चैकेषां लक्ष्योजतुमणिश्च सः" इति माधवकरोक्ते रोगभेदे।

**जतुमुख** पु० जतुनेव संश्लिष्टं मुखमस्य ब० व०। व्रीहिभेदे "कृष्णव्रीहियावालमुखजतुमुखनन्दीमुखनाराचकत्वरितकुक्कुटाण्डकपारावतकपाटलप्रभृतयो व्रीहयः" सुश्रु०।

**जतुरसः** पु० ६त०। अलक्तके राजनि०।

**जतू** स्त्री जतुः चर्म्मचटिका प्राणिजातित्वेऽपि वेदे नि० ऊङ्। पक्षिभेदस्त्रियाम् "कृष्णो जतूः सुषीलका ते तय इतरजनानाम्" यजु० २४।२६। जतूः सुषीलका एतौ पक्षिविशेषौ" वेददी०।

**जतूकर्ण** पु० ऋषिभेदे। तस्य गोत्रापत्यम् गर्गा० यञ्। जातूकर्ण्य तद्गोत्रापत्ये तस्य छात्रः कण्वा० अण् यलोपश्च। जातूकर्ण तच्छात्रे। जातूकर्ण्यश्च उपस्मृतिकर्त्ता यथाह हेमा० दा० अङ्गिराः "जाबालिर्नाचिकेतश्च स्कन्दोलौगाक्षिकश्यपौ। व्यासः सनत्कुमारश्च शतद्रुर्जनकस्तथा। व्याघ्रः कात्यायनश्चैव जातूकर्ण्यः कपिञ्जलः। बौधायनः कणादश्च विश्वामित्रस्तथैव च। उपस्मृतिकृतएतान् प्रवदन्ति मनीषिणः"। जातूकर्ण्य इत्यत्र जातूकर्ण इति पाठः लिपिकरप्रमादात् तच्छात्रस्य उपस्मृति कर्त्तृत्वमभिप्रेत्य वा तथा पाठ इत्यन्ये।

**जतूका** स्त्री जन–ऊक्‌ा० नि०। १चर्म्मचटिकायां अमरः। २जनीनामगन्धद्रव्ये शब्दर०।

**जत्रु** न० जन–रु तोऽन्तादेशः। स्कन्धवक्षःसन्धौ "ग्रीवा प्रत्य-

दृगास्थि स्यात् जत्रुकैकं तथा हनु" याज्ञ० वक्षोऽंसयोः सन्धिः जत्रुः" मिता० "ऊर्द्ध्वजत्रुगतान् करोति च विशेषतः" सुश्रु० "जत्रुदेशे स्वगं वीरो व्यनासीदद्रथे तदा" भा० व० १७अ० । स्वार्थे—क तत्रार्थे शब्दरत्ना० ।

**जत्वश्मक** न० जतुरूपमश्मकम् । शिलाजतुनि राजनि० ।

**जन** जनने जुहो० पर० अक० सेट् घटा० । जजन्ति । अजनीत् अजानीत् घटा० । जनयति जनितः वि—अति परस्परजनने आत्म० । व्यतिजजन्ते । सार्वधातुकयोरिट् व्यतिजज्ञिषे व्यतिजज्ञिध्वे

**जन** जनने दि० आ० अक० सेट् जायते अजनि अजनिष्ट । जजान जज्ञतुः ईदित् । जातः । घटा० । जनयति । उभयोरपि उपसर्गात् परयोस्तत्तदुपसर्गद्योत्यार्थयुक्तजनने वृत्तिः ।

अति—अतिक्रम्य जनने सक० ।

अधि+आधिक्येन जनने । आधिपत्येन जनने च "तेजस एव तदध्यापोजायन्ते । "ब्राह्मणोजायमानोऽपि पृथिव्यामधिजायते" मनुः ।

अनु+ पश्चाज्जनने अक० । "पुत्रिकायां कृतायां च यदि पुत्रोऽनुजायते" मनुः । पश्चादुत्पत्त्या सादृश्य करणे सक० । "असौ कुमारस्तमतोऽनुजातस्त्रिविष्टपस्येव पतिं जयन्तः" रघु० ।

सम्+अनु+सम्यगनुजनने सक० "पितॄन् समनुजायन्ते नरा मातरमङ्गनाः" रामा० अयो० ३५।२६।

अभि+अभिलक्ष्यीकृत्य जनने सक० "भवन्ति सम्पदं दैवीमभिजातस्य भारत !" । "अज्ञानञ्चाभिजातस्य पार्थ ! सम्पद मासुरीम्" गीता । सम्यग्जनने आभिमुख्येन जनने अक० "शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते" "कामात् क्रोधोऽभिजायते" गीता ।

प्रति+प्रतिरूपजनने अक० । "प्रजापतिश्चरसि गर्भे त्वमेव प्रतिजायसे" प्रश्नो० ।

वि+विशेषेण जनने विरुद्धजनने विकारे च "पतिना रहिता तस्मात् पुत्रं देवी व्यजायत" रामा० आदि० ७०अ० । गर्भमोचने सक० "यूनां मत्ता प्रथमं विजज्ञतुः" ऋ० ८।६८।५। "पशुस्तिष्ठन् गर्भं धृत्वानुप विश्य विजायते" शत० ब्रा० ७।४।१।१। "काममाविजनितोः सम्भवेम" तै० सं० ३।५।१।५। "तस्मात् व्यजायत" रामा० बा० १।७०। "यन्त्री पुत्रं व्यजायत" बा २७।८।

**जन** पु० जन—अच् । १लोके "जनस्तुषाराञ्जनपर्वताविव" माघः २महर्लोकादूर्द्ध्वलोके ३असुरभेदे च जनार्द्दनः । तल्लोकप्राप्तिहेतुकथनं भूमेरुच्चतोक्तिश्च "इत्थं कथां कथयतोर्भगवद्गणयोः प्रिये ! । क्षणार्द्धेन विमानं तज्जनलोकं निनाय तान् । निवसन्त्यमलायत्र मानसाः ब्रह्मणः सुताः । सनन्दनाद्या योगीन्द्रा सर्वे तेहृर्द्ध्वरेतसः। अन्ये तु योगिनोये वै ह्यप्रस्खलद्ब्रह्मचारिणः । सर्व्वद्वन्द्वविनिर्मुक्तास्ते वसन्त्यत्र निर्मलाः । महर्लोकः स्थितेरूर्द्ध्वमेककोटिप्रमाणतः । कोटिद्वये तु संख्यातो जनो भूलोकतोजनैः" काशी० ख० ।

**जनक** पु० जन—णिच्—ण्वुल् । १पितरि अमरः "शुध्येत्तु जनकस्त्रिभिः" शु० त० । २उत्पादके त्रि० "जन्यानां जनकः कालो जगतामाश्रयोमतः" भाषा० "३उपस्कृतिकारके ३ऋषिभेदे जतूकर्णशब्दे दृश्यम् निमिवंशजाते ४ विदेहनृपभेदे । इक्ष्वाकुवंश्यनिमिवसिष्ठयोरन्योन्यशापात् विदेहताप्राप्तौ वसिष्ठस्य देहप्राप्तिरुक्ता रामा० उत्त० ५६ अ० । निमेर्जनकोत्पत्तिकथोक्ता यथा "दृष्ट्वा विदेहं राजानमृषयः सर्व एव ते। तञ्च ते याजयामासुर्यज्ञदीक्षां मनीषिणः । तञ्च देहं नरेन्द्रस्य रक्षन्ति स्म द्विजोत्तमाः । गन्धैर्माल्यैश्च वस्त्रैश्च पौरभृत्यसमन्विताः । ततो यज्ञे समाप्ते तु भृगुस्तत्रेदमब्रवीत् । आनयिष्यामि ते चेतस्तुष्टोऽस्मि तव पार्थिव ! । सुप्रीताश्च सुराः सर्वे निमेश्चेतस्तदाऽब्रुवन् । वरं वरय राजर्षे क्व ते चेतोनिरूप्यताम् । एवमुक्तः सुरैः सर्वैर्निमेश्चेतस्तदाऽब्रवीत् । नेत्रेषु सर्वभूतानां वसेयं सुरसत्तमाः ! । बाढमित्येव विबुधानिमेश्चेतस्तदाब्रुवन् । नेत्रेषु सर्वभूतानां वायुभूतश्चरिष्यसि । त्वत्कृते निमिषिष्यन्ति चक्षूंषि पृथिवीपते ! । वायुभूतेन चरता विश्रामार्थं मुहुर्मुहुः । एवमुक्ता तु विबुधाः सर्वे जग्मुर्यथागतम् । ऋषयोऽपि महात्मानो निमेर्देहं समाहरन् । अरणिन्तत्र निक्षिप्य मथनञ्चक्रुरोजसा । मन्त्रहोमैर्महात्मानः पुत्रहेतोर्निमेस्तदा । अरण्यां मथ्यमानायां प्रादुर्भूतो महातपाः । मथनान्मिथिरित्याहुर्जननाज्जनकोऽभवत् । यस्माद्विदेहात्संभूतोवैदेहस्तु ततः स्मृतः । एवं विदेहराजश्च जनकः पूर्वकोऽभवत् । मिथिर्नाम महातेजास्तेनायं मैथिलोऽभवत् । इति सर्वमशेषतो मया कथितं संभवकारणन्तु सौम्य । नृपपुङ्गवः शापजं द्विजस्य द्विजशापाच्च यदद्भुतं नृपस्य" ।

५शम्बरासुरपुत्रभेदे । "सेनस्कन्धोऽतिसेनश्च शनको जन-

कस्ततः” हरिवं० १६१अ० । “तद्धैतज्जनको वैदेहो याज्ञवल्क्यं प्रपच्छ” शत० ब्रा० ११।३। १।२। “सह-स्रमेतस्यां वाचि दद्मो जनको जनक इति वै जना धावन्तीति” १४।५।१।१।

**जनकतनया** स्त्री जनकस्य तनयेव तत्पाल्यत्वात् । रामकलत्रे जनकयज्ञे वेद्यां हलाकर्षणजातायां सीतायां सा हि सत्ययुगे बृहस्पतिसुतकुशध्वजकन्या वेदवती नामासीत् त्रेतायां सीताजातत्वात् सीतानाम्ना बभूव रामा० उत्त० १७अ० तत्कथा यथा ;

“कुशध्वजो नाम पिता ब्रह्मर्षिरमितप्रभः । बृह-स्पतिसुतः श्रीमान् बुद्ध्या तुल्यो बृहस्पतेः । तस्याहं कुर्वतो नित्यं वेदाभ्यासं महात्मनः । सम्भूता वाङ्मयी कन्या नाम्ना वेदवती स्मृता । ततो देवाः स गन्धर्वा यक्षराक्षसपन्नगाः । ते चापि गत्वा पितरं वरणं रोचयन्ति मे । न च मां स पिता तेभ्यो दत्त-वान् राक्षसेश्वर ! । कारणं तद्वदिष्यामि निशामय महा-भुज! । पितुस्तु मम जामाता विष्णुः किल सुरेश्वरः । अभिप्रेतस्त्रिलोकेशस्तस्मान्नान्यस्य मे पिता । दातु-मिच्छति तस्मै तु तच्छ्रुत्वा बलदर्पितः । शम्भुर्नाम ततो राजा दैत्यानां कुपितोऽभवत् । तेन रात्रौ शयानो मे पिता पापेन हिंसितः । ततो मे जननी दीना तच्छ-रीरं पितुर्मम । परिष्वज्य महाभागा प्रविष्टा हव्य-वाहनम् । ततो मनोरथं सत्यं पितुर्नारायणं प्रति । करोमीति तमेवाहं हृदयेन समुद्वहे । इति प्रतिज्ञा-मारुह्य चरामि विपुलं तपः । एतत्ते सर्वमाख्यातं मया राक्षसपुङ्गव ! । नारायणो मम पतिर्न त्वन्यः पुरुषोत्तमात् । आश्रये नियमं घोरं नारायणपरी-प्सया । विज्ञातस्त्वं हि मे राजन् ! गच्छ पौलस्त्य-नन्दन !। जानामि तपसा सर्वं त्रैलोक्ये यद्धि वर्त्तते ।” ततस्तां कामयमानेन रावणेन सा धर्षिता तस्मै शापं दत्त्वा ममार तत्कथा

“एवमुक्तस्तया तत्र वेदवत्या निशाचरः । मूर्द्धजेषु तदा कन्यां कराग्रेण परामृशत् । ततो वेदवती क्रुद्धा केशान् हस्तेन साऽच्छिनत् । असिर्भूत्वा करस्तस्याः केशांश्छिन्नांस्तदाऽकरोत् । सा ज्वलन्तीव रोषेण दह-न्तीव निशाचरम् । उवाचाग्निं समाधाय मरणाय कृतत्वरा । धर्षितायास्त्वयाऽनार्य! न मे जीवितमिष्यते । रक्षस्तस्मात् प्रवेक्ष्यामि पश्यतस्ते हुताशनम् । यस्मात्तु धर्षिता चाहं त्वया पापात्मना वने । तस्मात्तव वधार्थं हि समुत्पत्स्याम्यहं पुनः । न हि शक्यः स्त्रिया हन्तुं पुरुषः पापनिश्चय ! । शापे त्वयि मयोत्सृष्टे तपसश्च व्ययो भवेत् । यदि त्वस्ति मया किञ्चित्कृतं दत्तं हुतं तथा । तस्मात् त्वयोनिजा साध्वी भवेयं धर्मिणः सुता । एवमुक्त्वा प्रविष्टा सा ज्वलितं जातवेदसम् । पपात च दिवो दिव्या पुष्पवृष्टिः समन्ततः । सैषा जनकरा-जस्य प्रसूता तनया प्रभो ! । तव भार्या महाबाहो ! विष्णुस्त्वं हि सनातनः । पूर्वं क्रोधहतः शत्रुर्ययासौ निहतस्तया । उपाश्रयित्वा शैलाभस्तव वीर्यममानुषम् । एवमेषा महाभागा मर्त्येषूत्पत्स्यते पुनः । क्षेत्रे हल-मुखोत्कृष्टवेद्यामग्निशिखोपमा । एषा वेदवती नाम पूर्वमासीत् कृते युगे । त्रेतायुगमनुप्राप्य वधार्थं तस्य रक्षसः । उत्पन्ना मैथिलकुले जनकस्य महा-त्मनः” । कालिकापु० २७अ० तस्याः पृथिव्या उत्पत्ति-रुक्ता । कल्पभेदादविरोधः । जनकात्मजाजनकतनया-दयोऽप्यत्र ।

**जनकराजकूप** पु० तीर्थभेदे ।

**जनकसप्तरात्र** पु० सप्तभिः रात्रिभिःसाध्यः अच् तस्य लुक् अच् समा० जनकेन दृष्टः सप्तरात्रः । जनकदृष्टे सप्त-रात्रसाध्ये यागभेदे । “जनकसप्तरात्रमृद्धिकामः अभि-प्लव चतुरहो विश्वजिन्महाव्रतं ज्योतिष्टोमः” आश्व० श्रौ० १०।३।१४। “जनकसप्तरात्रस्याहःक्लृप्तिरुच्यते । अभिप्लव चतुरहो विश्वजिन्महाव्रतं ज्योतिष्टोम इति” नारा० “जनक सप्तरात्रः चतुर्भ्यो विश्वजिन्महाव्रतम्” । कात्या० श्रौ० २३।५।८ “चतुर्भ्यः पार्ष्टिकेभ्यः परो विश्व-जिन्महाव्रतं च” ।

**जनकारिन्** पु० जनैः कीर्य्यते कॄ-बा० कर्म्मणि णिनि । अलक्तके राजनि० । [शिवलिङ्गरूपे तीर्थभेदे शिवपु० ।

**जनकेश्वर** पु० जनकेन स्थापितः ईश्वरः । जनकस्थापिते

**जनङ्गम** पुंस्त्री जनेभ्योगच्छति वहिः गम-खच् मुम् च । चण्डाले स्त्रियां जातित्वात् ङीष् । “अवधीत् । जन-ङ्गम इवैष यदि हतपशो दृषसनु । सर्वमशुचिवपुरर्हति प्रतिमाननान्तु नितरां नृपोचिताम्” माघः ।

**जनचक्षुस्** न० जनस्य चक्षुरिव । लोकचक्षुर्वत्प्रकाशके सूर्य्ये “मुहूर्त्ताभ्युदिते सूर्य्ये जनचक्षुषि निर्म्मले” हरिवं० १४२ । लोकचक्षुःप्रभृतयोऽप्यत्र । “लोकचक्षुर्दिवाकरः” आदित्यहृदयम् ।

**जनजन्मादि** पु॰ जनस्य जनिमतो जन्मन आदिः। परमेश्वरे। "जननो जनजन्मादिः" विष्णुस॰।

**जनत्** पु॰ जन–भावे अति। जनने जनद्वच्छब्दे दृश्यम्।

**जनता** स्त्री जनानां समूहः तल्। जनसमूहे अमरः। "आगामिनीं स्पृहिरे जनतास्तद्रूपाम्"। "विहिताञ्जलिर्जनतया दधती" माघः।

**जनत्रा** स्त्री जनान् त्रायते त्रै–क। जङ्गमकुट्याम् हारा॰।

**जनदेव** पु॰ जनोदेव इव उपमितस॰। नरदेवे नरश्रेष्ठे राजनि "जनको जनदेवस्तु मिथिलायां जनाधिपः" भा॰ शा॰ २१८अ॰।

**जनद्वत्** पु॰ जनत् जननमस्त्यस्य मतुप् मस्य वः। जननगुणयोगिनि वह्नौ "अग्नये तपस्वते जनद्वते पावकवते स्वाहा" ऐत॰ ब्रा॰ ७।८।

**जनधा** पु॰ जनं दधाति धा–क्विप्। जनपोषके वह्नौ स हि जनानां जठरस्थितान्नादेः पाचनेन रसवीर्य्यसम्पादनद्वारा पोषकः इति तस्य तथात्वम्" तैत्ति॰ ब्रा॰ ४।१।१।१।१।१। उद्धा॰।

**जनन** न॰ जन–भावे ल्युट्। १उद्भवे २जन्मनि (स्वादृष्टोपनिबद्धशरीरग्रहणे) ३आविर्भावे च "यदैव पूर्वं जनने शरीरम्" कुमार॰। दीक्षितस्य यज्ञादिषु ४दीक्षादिसंस्कारभेदे दीक्षितस्य दीक्षारूपजन्मवत्त्वात् तथात्वम् "पुनर्वा एतमृत्विजो गर्भं कुर्वन्ति ये दीक्षयन्तीत्यादि" श्रुतेः। "मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने। तृतीयं यज्ञदीक्षायां द्विजस्य श्रुतिचोदनादिति" मनुः। आधारे ल्युट्। ५वंशे। जन–णिच्–भावे ल्युट्। ६उत्पादने। "अन्योऽन्यशोभाजननाद् बभूव" कुमार॰। कर्त्तरि ल्यु। ७उत्पादके त्रि॰ "सोमापूषणा जनना रयीणां जनना दिवो जनना पृथिव्याः" ऋ॰ २।४०।१। ८परमेश्वरे पु॰ "जननो जनजन्मादिः" विष्णुस॰।

**जननाशौच** न॰ जनननिमित्तमशौचम्। प्रसवनिमित्ताशौचे अशौचशब्दे ४८६पृ॰ दृश्यम्।

**जननि** स्त्री–जन अनि। जनीनामगन्धद्रव्ये शब्दरत्ना॰।

**जननी** स्त्री जनयति जन–णिच्–अनि जन–अपादाने अनि वा, ङीप्। १मातरि "जनन्यां संस्थितायान्तु समं सर्वे सहोदराः। भजेरन् मातृकं रिक्थं भगिन्यश्च सनाभयः" मनुः। २दयायां मेदि॰ ३जनीनामगन्धद्रव्ये ४चर्मचटिकायां शब्दर॰ ५यूथिकायां शब्दच॰ ६कटुकायां ७मञ्जिष्ठायाम् ८अलक्तके च राजनि॰। ९उत्पादकस्त्रीमात्रे "वदामस्ते किं वा जननि! वयमुच्चैर्जडधियः" कालीस्तवः "वीजप्ररोहजननीं ज्वलनः करोति" रघुः। "मासेन स्त्रीजननी" विष्णुस्मृ॰। १०जटामांस्यां राजनि॰।

**जनपद** पु॰ जनाः पद्यन्ते गच्छन्ति यत्र पद–आधारे घ। देशे। अमरः। "कुलानि जातीः श्रेणीश्च गणान् जनपदानपि" याज्ञव॰। जनपदभेदाश्च भा॰ भी॰ ९अ॰ दर्शिता यथा

"अतऊर्द्धं जनपदान्निबोध गदतो मम। तत्रेमे कुरुपाञ्चालाः शाल्वा माद्रेयजाङ्गलाः। शूरसेनाः पुलिन्दाश्च बोधा मालास्तथैव च। मत्स्याः कुशट्टाः कौशल्याः कुन्तयः काशिकोशलाः। चेदिमत्स्यकरूषाश्च भोजाः सिन्धुपुलिन्दकाः। उत्तमार्णा दशार्णाश्च मेकलाश्चोत्कलैः सह। पाञ्चालाः कोशलाश्चैव नैकपृष्ठा युगन्धराः। बोधा मद्राः कलिङ्गाश्च काशयोऽपरकाशयः। जठराः कुकुराश्चैव सदशार्णाश्च भारत"। कुन्तयोऽवन्तयश्चैव तथैवापरकुन्तयः। गोमन्ता मल्लकाः पाण्ड्राः विदर्भानूपवाहिकाः। अश्मकाः पांशुराष्ट्राश्च गोपराष्ट्राः करीतयः। अधिराज्यं कुशट्टाश्च मल्लराष्ट्रञ्च केरलाः। वारवास्यापवाहाश्च वक्रा वक्रातयः शकाः। विदेहा मगधाः कच्छा मलया विजयास्तथा। अङ्गा वङ्गाः कलिङ्गाश्च यकृल्लोमान एव च। मल्लाः सुदेष्णाः प्रह्लादा माहिषाः शशकास्तथा। वाह्लीका वाटधानाश्च आभीराः कालतोयकाः। अपरान्ताः परान्ताश्च पञ्चालाश्चर्म्मचण्डकाः। अटवीशिखराश्चैव मेरुभूताश्च मारिष!। उपावृत्तानुपावृत्ताश्च सुराष्ट्राः केकयास्तथा। कुट्टाः परान्ता माहेयाः कक्षाः सामुद्रनिष्कुटाः। अन्ध्राश्च बहवो राजन्नन्तर्गिर्य्यास्तथैव च। बहिर्गिर्य्याङ्गमलदा मागधा मानवाभटाः। महयुत्तराः प्रावृषेया भार्गवाश्च जनाधिप!। पुण्ड्रा भार्गाः किराताश्च सुदेष्णा यामुनास्तथा। शका निषादनिषधास्तथैवानर्त्तनैर्ऋताः। दुर्गलाः प्रतिमत्स्याश्च कुन्तलाः कुशलास्तथा। तीरग्रहा शूरसेना ईजिकाः कन्यकागणाः। तिलभारा मसीराश्च मधुमन्ताः सुकन्दुकाः। काश्मीराः सिन्धुसौवीरा गान्धारा दर्शकास्तथा। अभीसारा उलूताश्च शैवाला वाह्लिकास्तथा। दर्व्वीचरा नवादर्व्वा वातजामरथोरगाः। बहुवद्याश्च कौरव्य! सुदामानः सुमल्लिकाः। बध्राः करीषका-

श्चापि कुलिन्दोपत्यकास्तथा । वानायवो दशाः पार्श्वा रोमाणः कुशविन्दवः । कच्छा गोपालकच्छाश्च जाङ्गलाः कुरुवर्णकाः । किराता वर्व्वराः सिद्धा वैदेहास्ताम्रलिप्तकाः । ओड्रा म्लेच्छाः ससैरिन्ध्राः पार्व्वतीयाश्च मारिष ! । अथापरे जनपदा दक्षिणा भरतर्षभ ! । द्रविड़ाः केरलाः प्राच्या मूषिका वनवासिकाः । कर्णाटका माहिषका विकल्पा मूषकास्तथा । झिल्लिकाः कुन्तलाश्चैव सौहृदा नलकाननाः । कोकुट्टकास्तथा चोलाः कोङ्कणा मालवा नराः । समङ्गाः कनकाश्चैव कुकुराङ्गारमारिषाः । ध्वजिन्युत्सवसंकेतास्त्रिगर्त्ताः शाल्वसेनयः । व्यूढ़काः कोरकाः प्रोष्ठा समवेगवशास्तथा । तथैव विन्ध्यपुलिकाः पुलिन्दा वल्कलैः सह । मालवा वल्लवाश्चैव तथैवापरवर्त्तकाः । कुलिन्दाः कालदाश्चैव दण्डकाः करटास्तथा । मूषकास्तनवालाश्च सनीपा घटसृञ्जयाः । अलिदायाः शिवाटाश्च स्तनपाः सुनयास्तथा । ऋषिका विदर्भाः काकास्तङ्गनाः परतङ्गनाः । उत्तराश्चापरे म्लेच्छा जना भरतसत्तम ! । यवनाश्च सकाम्बोजा दारुणा म्लेच्छजातयः । सक्षद्ग्रहाः कुलत्थाश्च हूणाः पारसिकैः सह । तथैव रमणाश्चीनास्तथा च दशमालिकाः । क्षत्रियोपनिवेशाश्च वैश्यशूद्रकुलानि च । शूद्राभीराश्च दरदाः काश्मीराः पशुभिः सह । खाशीकाश्चान्तचाराश्च पह्लवा गिरिगह्वराः । आत्रेयाः सभरद्वाजास्तथैव स्तनपोषकाः । द्रोषकाश्च कलिङ्गाश्च किरातानाञ्च जातयः । तोमरा हन्यमानाश्च तथैव करभञ्जकाः । एते चान्ये जनपदाः प्राच्योदीच्यास्तथैव च” ।

इ०ह० १४अ० कूर्म्मविभागे तु तेषां मध्ये केषाञ्चित् दिग्भेदेन स्थितिर्दर्शिता ते च कूर्म्मविभागशब्दे द्र० उक्ता देशानां सीमादि तत्तच्छब्दे उक्तं वक्ष्यमाणञ्च केचिद्भेदास्तु पु० मध्यादिदेशभेदेन उक्ता यथा “तत्रेमे कुरुपाञ्चालाः शाल्वाश्चैव सजाङ्गलाः । शूरसेना भद्रकारा बोधकाः सपटच्चराः । मत्स्याः किराताः कुल्याश्च कुन्तयः कुन्तिकोन्तलाः । आवन्ताश्च कुलिङ्गाश्च कोलाश्चैवान्ध्रकैः सह । मध्यदेशाः जनपदाः प्रायशः परिकीर्त्तिताः । वाह्लिका वाटधानाश्च आभीराः कालतोयकाः । परन्ध्राश्चैव शूद्राश्च पह्लवाश्चात्तखण्डिकाः । गान्धारा यवनाश्चैव सिन्धुसौवीरमद्रकाः । शका द्रुह्याः पुलिन्दाश्च पारदा हारमूर्त्तिकाः । रामठाः कण्ठकाराश्च केकयादेशमालिकाः । क्षत्रियोपनिवेशाश्च वैश्यशूद्रकुलानि च । आत्रेयोऽथ भरद्वाजः प्रस्थलाः सदशेरकाः । लम्पकास्तनपानाश्च सैनिकाः सह जाङ्गलैः । एते देशा उदीच्यास्तु प्राच्यान्देशान्निबोधत । अङ्गावङ्गामद्गुरका अन्तर्गिरिवहिर्गिराः । ततः प्रवङ्गा मातङ्गा मलया मलवर्त्तकाः । सूक्ष्मोत्तराः प्रविजया भार्गवाङ्गेयमालवाः । प्राग्ज्योतिषाश्च पुण्ड्राश्च विदेहास्ताम्रलिप्तकाः । शाल्वमागधगोनर्द्दाः प्राच्या जनपदाः स्मृताः । तथाऽपरे जनपदा दक्षिणापथवासिनः । पाण्ड्याश्च केरलाश्चैव चोलाः कुल्यास्तथैव च । सेतुकासुख्यकाश्चैव कुपथाचारवासिकाः । नवराष्ट्राः माहिषकाः कलिङ्गाश्चैव सर्वशः । कावेराश्च सहैषीकैराटव्याः शवरास्तथा । पुलिन्द्राविन्ध्यमूषीका वैदर्भा दण्डकैः सह । कुलीयाश्च शिरालाश्च रूपसास्तामसैःसह । तथा तैत्तिरकाश्चैव सर्वे कारस्करास्तथा । नासिकाद्याश्च ये चान्ये ये चैवान्तरनर्मदाः । भानुकच्छाः समाहेयाः सह सारस्वतैस्तथा । काच्छीयाश्च सुराष्ट्राश्च आनर्त्ताश्चार्बुदैः सह । इत्येते अपरान्ताश्च शृणु ये विन्ध्यवासिनः । मालवाश्च करूषाश्च मेकलाश्चोत्कलैःसह । उत्तमार्णाः दशार्णाश्च भोजाः किष्किन्धिकैः सह । तोषलाःकोशलाश्चैव त्रैपुरा वैदिकास्तथा । तुमुरास्तुम्बुराश्चैव पटमाच्छिषधैः सह । अनूपास्तुण्डिकेराश्च वीतिहोत्रा अवन्तयः । एते जनपदाः ख्याता विन्ध्यपृष्ठनिवासिनः । अतो देशान् प्रवक्ष्यामि पर्वताश्रयिणश्च ये । निर्दीरा हंसवर्णाश्च कुपथा अपथाः खशाः । कुथप्रावरणाश्चैव ऊर्णादर्भाः समुद्गकाः । त्रिगर्त्ता मण्डलाश्चैव किराताश्चामरैः सह” । शक्तिसङ्गमतन्त्रे देशभेदसीमायुक्तं यथा “देशव्यवस्था देवेशि ! कथ्यते शृणु तत्परा । वैद्यनाथं समारभ्य भुवनेशान्तगं शिवे ! । तावदङ्गाभिधो देशो यात्रायां नहि दुष्यति । रत्नाकरं समारभ्य ब्रह्मपुत्रान्तगं शिवे ! । वङ्गदेशो मया प्रोक्तः सर्वसिद्धिप्रदर्शकः । जगन्नाथात् पूर्वभागात् कृष्णातीरान्तगं शिवे ! । कलिङ्गदेशः संप्रोक्तो वाममार्गपरायणः । कलिङ्गदेशमारभ्य पञ्चाष्टयोजनं शिवे ! । दक्षिणस्यां महेशानि ! कालिङ्गः परिकीर्त्तितः ; सुब्राह्मण्यं समारभ्य यावद्देवो जनार्द्दनः । तावत् केरलदेशः स्यात् तन्मध्ये सिद्धकेरलः । रामेश्वरात् व्यङ्कटेशात् हंसकेरलनामकः । अनन्तशैलमारभ्य यावत्सत्राद्व्ययं

परे। तावत् सर्वेशनामा तु केरलः परिकीर्त्तितः। शारदामठमारभ्य कुङ्कुमाद्रितटान्तकम्। तावत्काश्मीरदेशः स्यात् पञ्चाशद्योजनान्तकः। कालेश्वरं श्वेतगिरिं त्रैपुरं नीलपर्वतम्। कामरूपाभिधो देशो गणेशगिरिमूर्द्धनि। त्रिपञ्चकं समारभ्य मध्ये चोज्जयिनी शिवे। मार्ज्जारतीर्थं राजेन्द्र! कोलापुरनिवासिनी। तावद्देशो महाराष्ट्रः कर्णाटस्वामिगोचरः। जगन्नाथादूर्द्धभागादर्वाक् श्रीभ्रमरान्तिकात्। तावदन्ध्राभिधो देशः सौराष्ट्रं शृणु सादरम्। कोङ्कणात् पश्चिमं तीर्थं समुद्रप्रान्तगोचरम्। हिङ्गुलाटान्तको देवि! दशयोजनदेशतः। सौराष्ट्रदेशो देवेशि! तस्मात्तु गुर्ज्जराभिधः। श्रीशैलन्तु समारभ्य चोलेशानुमध्यभागतः। तैलङ्गदेशो देवेशि! ध्यानाध्ययनतत्परः। सुराम्बिकां समारभ्य मलयाद्र्यन्तगं शिवे!। मलयालाभिधोदेशो मन्त्रसिद्धिप्रवर्त्तकः। रामनाथं समारभ्य श्रीरङ्गान्तं किलेश्वरि!। कर्णाटदेशो देवेशि! साम्राज्यभोगदायकः। ताम्रपर्णीं समारभ्य शैलाद्रिशिखरोर्द्धतः। अवन्तीसंज्ञको देशः कालिका तत्र तिष्ठति। भद्रकाली महापूर्वं रामदुर्गाच्च पश्चिमे। श्रीविदर्भाभिधो देशो वैदर्भी तत्र तिष्ठति। गुर्ज्जरात् पूर्वभागे तु द्वारकातो हि दक्षिणे। मरुदेशो महेशानि! उष्ट्रोत्पत्तिपरायणः। श्रीकोङ्कणादधोभागे तापीतः पश्चिमे परे। आभीरदेशो देवेशि! विन्ध्यशैले व्यवस्थितः। अवन्तीतः पूर्वभागे गोदावर्य्यास्तथोत्तरे। मालवाख्यो महादेशो! धनधान्यपरायणः। द्रविड़तैलङ्गमध्ये चोलदेशः प्रकीर्त्तितः। लम्बकर्णाश्च ते मोक्षास्तङ्गदेवान्तरो भवेत्। कुरुक्षेत्रात् पश्चिमे तु तथा चोत्तरभागतः। इन्द्रप्रस्थान्महेशानि! दशयोजनकद्वये। पाञ्चालदेशो देवेशि! सौन्दर्य्यगर्वभूषितः। पाञ्चालदेशमारभ्य म्लेच्छाद्दक्षिणपूर्वतः। काम्बोजदेशो देवेशि! वाजिराजिपरायणः। वैदर्भदेशादूर्द्ध्वञ्च इन्द्रप्रस्थाच्च दक्षिणे। मरुदेशात् पूर्वभागे वैराटः परिकीर्त्तितः। काम्बोजादुच्चभागे तु इन्द्रप्रस्थाच्च पश्चिमे। पाण्ड्यदेशो महेशानि! महाशूरत्वकारकः। गण्डकीतीरमारभ्य चम्पारण्यान्तकं शिवे!। विदेहभूः समाख्याता तैरभुक्ताभिधः स तु। काम्बोजदेशमारभ्य महाम्लेच्छात्तु पूर्वके। वाह्लीकदेशो देवेशि! अश्वोत्पत्तिपरायणः। तप्तकुण्डं समारभ्य रामक्षेत्रान्तकं शिवे!। किरातदेशो देवेशि! विन्ध्यशैलेऽवतिष्ठति। करतोयां समारभ्य हिङ्गुलाटान्तगः शिवे! मुलतानदेशो देवेशि! महाम्लेच्छपरायणः। हिङ्गुपीठं समारभ्य मक्केशान्तं महेश्वरि!। खुरसानाभिधोदेशो म्लेच्छमार्गपरायणः। तन्मध्ये चोत्तरे देवि! ऐराकः परिकीर्त्तितः। काश्मीरन्तु समारभ्य कामरूपात्तु पश्चिमे। भोटान्तदेशो देवशि! मानसेशाच्च दक्षिणे। मानसेशादुत्तपूर्वे चीनदेशः प्रकीर्त्तितः। कैलासीरं समारभ्य सरयूं परितः परे। आमरगान् महेशानि! महाचीनाभिधो भवेत्। जटेश्वरं समारभ्य योगिन्यन्तं महेश्वरि। नेपालदेशो देवेशि! शिलहट्टं शृणु प्रिये। गणेश्वरं समारभ्य महोदध्यन्तगं शिवे!। शिलहट्टाभिधो देशः पर्वते तिष्ठति प्रिये!। वङ्गदेशं समारभ्य भुवनेशान्तगं शिवे। गौड़देशः समाख्यातः सर्वविद्याविशारदः। गोकर्णेशात् पूर्वभागे आर्य्यावर्त्तात्तु चोत्तरे। तैरभुक्तात् पश्चिमे तु महापुर्य्याश्च सर्वतः। महाकोशलदेशश्च सूर्य्यवंशपरायणः। व्यासेश्वरं समारभ्य तप्तकुण्डान्तकं शिवे!। मगधाख्यो महादेशो यात्रायां न हि दुष्यति। दक्षोत्तरक्रमेणैव क्रमात् कीकटमागधौ। चरणाद्रिं समारभ्य गृध्रकूटान्तकः शिवे!। तावत् कीकटदेशः स्यात्तदन्तर्मागधो भवेत्। जगन्नाथप्रान्तदेशश्चोत्कलः परिकीर्त्तितः। कामगिरिं समारभ्य द्वारकान्तं महेश्वरि!। श्रीकुन्तलाभिधो देशोऽदूर्णं शृणु महेश्वरि!। कामगिरेर्द्दक्षभागे मरुदेशात्तथोत्तरे। हूणदेशः समाख्यातः शूरास्तत्र रमन्ति च। अयाध्वङ्गं समारभ्य कोटिदेशस्य मध्यगे। समुद्रप्रान्तदेशो हि कोङ्कणः परिकीर्त्तितः। ब्रह्मपुत्रात् कामरूपात् मध्यभागे तु कैकयः। मागधादुच्चभागे तु विन्ध्याद्रेः पश्चिमतः शिवे!। शौरसेनाभिधोदेशः सूर्य्यवंशप्रकाशकः। हस्तिनापुरमारभ्य कुरुक्षेत्राच्च दक्षिणे। पाञ्चालपूर्वभागे तु कुरुदेशः प्रकीर्त्तितः। कुरुदेशात् पूर्वभागे कामाद्रेर्द्दक्षिणे शिवे!। सिंहलाख्यो महादेशः सर्वदेशोत्तमोत्तमः। शिलहट्टात् पूर्वभागे कामरूपात्तथोत्तरे। पुलिन्ददेशो देवेशि! नरमांसाशनः परः। गणेश्वरात् पूर्वभागे समुद्रादुत्तरे शिवे!। कच्छदेशः समाख्यातः कुदेशं शृणु सादरम्। पुलिन्दादुत्तरे भागे कच्छाच्च पश्चिमे शिवे!। मत्स्यदेशः समाख्यातो मत्स्यबाहुल्यकारकः। वैराटपाण्ड्ययोर्मध्ये पूर्वदक्षक्रमेण तु। मद्रदेशः समाख्यातो माद्रीह तत्र तिष्ठति। शूरसेनात् पूर्वभागे गण्डक्याः पश्चिमे! शिवे!।

सौवीरदेशो देवेशि ! सर्व्वदेशाधमाधमः । अवन्तीतः पश्चिमे तु वेदगाङ्गिशिवोत्तरे । लाटदेशः समाख्यातो वर्व्वरं शृणु पार्व्वति ! । मायापुरं समारभ्य सप्तकुक्षान्तपोत्तरे । वर्व्वराख्यो महादेशः सैन्धवं शृणु सादरम् । लङ्कापदेशमारभ्य मक्कान्तं परमेश्वरि ! । सैन्धवाख्यो महादेशः पर्व्वते तिष्ठति प्रिये ! । एते षट् पञ्चाशद्देशा मया प्रोक्ता महेश्वरि! । एतन्मध्ये ऽपि देवेशि! देशभेदा ह्यनेकशः । कोटिशः सन्ति देवेशि ! एते मुख्याः प्रकीर्त्तिताः । रहस्यातिरहस्यञ्च गोप्तव्यं पशुसङ्कटे । इति संक्षेपतः प्रोक्तं किमन्यत् श्रोतुमिच्छसि" ।

तत्र भवः उत्सा० अञ् । जनपदादागत अण् तस्येदम् अण् वा । जानपद तत्र भवे तत आगते तत्सम्बन्धिनि च । "नीवारपाकादिकडङ्गरीयैरामृश्यते जानपदैर्नकच्चित्" । "देयं चौरहृतं द्रव्यं राज्ञाजानपदाय तु" याज्ञ० स्त्रियां तु वृत्तौ जानपदेत्यादि पा० ङीष् । वृत्तावेव ङीषो नियमात् अन्यत्र जानपदा अजन्तस्य ङीपि जानपदी तत्रभवस्त्रियां पित्वात् आद्युदात्तता । "त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् । ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्" नीतिसारः ।

**जनपदिन्** त्रि० जनपदाः सन्त्यस्य स्वत्वेन इनि । जनपदस्वामिनि । "जनपदिनां जनपदेन समानशब्दानाम्" पा० "जनपदिनां जनपदस्वामिनाम्" सि० कौ० । स्त्रियां ङीप् । [ तायां हेमच० ।

**जनप्रवाद** पु० जनेषु प्रवादः ७त० । जनापवादे वचनीय

**जनप्रिय** पु० ६त० ।१ शोभाञ्जनवृक्षे २धन्याके च राजनि० । ३लोकप्रियमात्रे त्रि० ।

**जनभक्ष** पु० जनानां भक्षः भज–वा० कर्म्मणि स । १यजमानानां कामदानेन भजनीये । "सत्रासाहो जनभक्षो जनं सहः" ऋ०२।२१।१।३। २जनानां भजके च ।

**जनमेजय** पु० जनमेजयति एज–णिच्–खश् । १परीक्षितो नृपतेः पुत्रे २कुरुनामभूपपुत्रभेदे च । "ततः संवरणात्सौरी तपती सुषुवे कुरुम् । राजत्वे तं प्रजाः सर्व्वा धर्म्मज्ञ इति वव्रिरे । तस्य नाम्नाऽभिविख्यातं पृथिव्यां कुरुजाङ्गलम् । कुरुक्षेत्रं स तपसा पुण्यं चक्रे महातपाः । अविक्षितमभिष्वन्तं तथा चैत्ररथं मुनिम् । जनमेजयञ्च विख्यातं पुत्रांश्चास्यानुशुश्रुमः । पञ्चैतान् वाहिनी पुत्रान् व्यजायत मनस्विनी । जनमेजयस्य तनया भुवि ख्याता महाबलाः" भा०आ०९४अ० । ३पुरुनृपपुत्रे च "पुरोः पुत्रो महावीर्य्यो राजासीज्जनमेजयः" हरिवं० ३१अ० । तत्र परीक्षितःपुत्रो जनमेजयः सर्पसत्रे भारतं श्रुतवान् तत्कथा भा० आ० ५०अ० ।

"मन्त्रिणाञ्च वचः श्रुत्वा स राजा जनमेजयः । पर्य्यतप्यत दुःखार्त्तः प्रत्यपिंषत् करं करे । निःश्वासमुष्णमसकृद्दीर्घं राजीवलोचनः । मुमोचाश्रूणि च तदा नेत्राभ्यां प्ररुदन् नृपः । दुर्धरं बाष्पमुत्सृज्य स्पृष्ट्वा चापो यथाविधि । मुहूर्त्तमिव च ध्यात्वा निश्चित्य मनसा नृपः । अमर्षी मन्त्रिणः सर्व्वानिदं वचनमब्रवीत् । जनमेजय उवाच । श्रुत्वैतद्भवतां वाक्यं पितुर्मे स्वर्गतिं प्रति । निश्चितेयं मम मतिर्या च तां मे निबोधत । अनन्तरञ्च मन्ये ऽहं तक्षकाय दुरात्मने । प्रतिकर्त्तव्यमित्येवं येन मे हिंसितः पिता । ऋषेर्हि शृङ्गिणोवाक्यं कृत्वा दग्ध्वा च पार्थिवम् । इयं दुरात्मता तस्य काश्यपं यो न्यवर्त्तयत् । यद्यागच्छेत् स वै विप्रो ननु जीवेत् पिता मम । परिहीयेत किं तस्य यदि जीवेत् स पार्थिवः । काश्यपस्य प्रसादेन मन्त्रिणां विनयेन च । स तु वारितवान्मोहात् काश्यपं द्विजसत्तमम् । सञ्जिजीवयिषुं प्राप्तं राजानमपराजितम् । महानतिक्रमो ह्येष तक्षकस्य दुरात्मनः । द्विजस्य योऽददद्द्रव्यं मा नृपं जीवयेदिति । उत्तङ्कस्य प्रियं कुर्य्यामात्मनश्च महत् प्रियम् । भवताञ्चैव सर्व्वेषां गच्छाम्यपचितिं पितुः" ।

"सौतिरुवाच । एवमुक्ता ततः श्रीमान्मन्त्रिभिश्चानुमोदितः । आरुरोह प्रतिज्ञां स सर्पसत्राय पार्थिवः । ब्रह्मन् ! भरतशार्दूलो राजा पारीक्षितस्तदा । पुरोहितमथाहूय ऋत्विजो वसुधाधिपः । अब्रवीद्वाक्यसम्पन्नः कार्य्यसम्पत्करं वचः । यो मे हिंसितवांस्तातं तक्षकः स दुरात्मवान् । प्रतिकुर्य्यां तथा तस्य तद्भवन्तो ब्रुवन्तु मे । अपि तत्कर्म्म विदितं भवतां येन पन्नगम् । तक्षकं संप्रदीप्तेऽग्नौ प्रक्षिपेयं सबान्धवम् । यथा तेन पिता मह्यं पूर्व्वं दग्धो विषाग्निना । तथाहमपि तं पापं दग्धुमिच्छामि पन्नगम् । ऋत्विज ऊचुः । अस्ति राजन्महत् सत्रं त्वदर्थं देवनिर्मितम् । सर्पसत्रमिति ख्यातं पुराणे परिपठ्यते । आहर्त्ता तस्य सत्रस्य त्वन्नान्योऽस्ति नराधिप ! । इति पौराणिकाः प्राहुरस्माकं चास्ति स क्रतुः । सौतिरुवाच । एवमुक्तः स राजर्षिर्मेने दग्धं हि तक्षकम् । हुताशनमुखे दीप्ते प्रविष्टमिति सत्तम ! । ततोऽब्रवीन्मन्त्रविदस्तान्राजा ब्राह्मणांस्तदा ।

आहरिष्यामि तत् सत्रं सम्भाराः सन्तु सन्तु मे" ५६अ०। "श्रुत्वा तं सर्पसत्राय दीक्षितं जनमेजयम्। अभ्यागच्छदृषिर्विद्वान् कृष्णद्वैपायनस्तदा" । तदुपक्रमे "इदं वैशम्पायनं विप्रमुपविश्य क्रिया अपि । जनमेजय उवाच । कुरूणां पाण्डवानाञ्च भवान् प्रत्यक्षदर्शिवान्। तेषां चरितमिच्छामि कथ्यमानं त्वया द्विज! । कथं समभवद्भेदस्तेषामक्लिष्टकर्मणाम् । तच्च युद्धं कथं वृत्तं भूतान्तकरणं महत् । पितामहानां सर्वेषां दैवेनाविष्टचेतसाम्। कार्त्स्न्येनैतत्समाचक्ष्व यथावृत्तं द्विजोत्तम!। सौतिरुवाच । तस्य तद्वचनं श्रुत्वा कृष्णद्वैपायनस्तदा । शशास शिष्यमासीनं वैशम्पायनमन्तिके । व्यास उवाच । कुरूणां पाण्डवानाञ्च यथा भेदोऽभवत्पुरा । तदस्मै सर्वमाचक्ष्व यन्मत्तः श्रुतवानसि । गुरोर्वचनमाज्ञाय स तु विप्रर्षभस्तदा । आचचक्षे ततः सर्वमितिहासं पुरातनम् । राज्ञे तस्मै सदस्येभ्यः पार्थिवेभ्यश्च सर्वशः । भेदं सर्वविनाशञ्च कुरुपाण्डवयोस्तदा" । ६० अ० "वैशम्पायन उवाच । गुरवे प्राङ्नमस्कृत्य मनोबुद्धिसमाधिभिः । संपूज्य च द्विजान् सर्वांस्तथाऽन्यान् विदुषो जनान् । महर्षेर्विश्रुतस्येह सर्वलोकेषु धीमतः । प्रवक्ष्यामि मतं कृत्स्नं व्यासस्यास्य महात्मनः । श्रोतुं पात्रञ्च राजंस्त्वं प्राप्येमां भारतीं कथाम् । गुरोर्वक्त्रपरिष्पन्दो मनः प्रोत्साहतीव मे। शृणु राजन्! यथा भेदः कुरुपाण्डवयोरभूत् । राज्यार्थे द्यूतसम्भूतो वनवासस्तथैव च" । ६१ अ० ।

"स कदाचिन्मृगयां गतः पारीक्षितो जनमेजयः कस्मिंश्चित् स्वविषये आश्रममपश्यत्" भा० आ० ३अ० । "परीक्षितस्तु दायादो धार्मिकोजनमेजयः । जनमेजयस्य दायादास्त्रय एव महारथाः । श्रुतसेनोग्रसेनौ च भीमसेनश्च नामतः"।"द्वावृक्षौ तव वंशेऽस्मिन् द्वावेव च परीक्षितौ । भीमसेनास्त्रयो राजन् द्वौ चापि जनमेजयौ" । "ऋक्षस्य च द्वितीयस्य भीमसेनोऽभवत् सुतः ।" "अभिमन्योः परीक्षित्तु पिता तव जनेश्वर!" भा०आ०९२अ० । ४पुरञ्जयनृपपुत्रे "जनमेजयो महाराज! पुरञ्जयसुतोऽभवत् । जनमेजयस्य राजर्षेर्महाशालोऽभवत्सुतः" हरिवं० ३१अ० ।

**जनयति** स्त्री जन–णिच्–वा० भावे क्तिन् वेदे नि० णि० लोपाभावः । उत्पादने "जनयत्यै त्वा संयौमि" यजु० । १।२२।

**जनयितृ** पु० जन–णिच्–तृच् । १पितरि २उत्पादके त्रि० ३मातरि स्त्री ङीप् ।

**जनरव** पु० ६त० । लोकापवादे । "परीवादस्तथ्यो भवति वितथोवाऽपि महतां तथाप्युच्चैर्धाम्नो हरति महिमानं जनरवः" उद्भटः ।

**जनराज** पु० जनेषु राजते राज–क्विप् ७त०।जनाधिपे "जनराडसि रक्षोहा" यजु० ५।२४। जनराजादयोऽप्यत्र । [ प्रिये त्रि० ।

**जनवल्लभ** पु० ६त० । १श्वेतरोहितवृक्षे राजनि० २लोक-

**जनवाद** पु० ७त० । लोकापवादे । "द्यूतं च जनवादञ्च परीवादं तथाऽनृतम्" मनुः । तत्र साधु कथा० ठक् । जानवादिक जनप्रवादसाधौ त्रि० । अनुक०। जने वादोऽप्यत्र ततः साध्वर्थे कथादि० ठक् । जानेवादिक तत्साधौ त्रि० ।

**जनश्रुत** त्रि०जने श्रुतः विख्यातः। १लोकविख्याते २राजभेदे पु०तस्यापत्यम् इञ् । जानश्रुति तदपत्ये पौत्रायणे "जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी आस" छा०उ० ।

**जनश्रुति** स्त्री जनेभ्यः श्रूयते श्रु–क्तिन् । सत्यासत्यसाधारणलोकप्रसिद्धायां किंवदन्त्याम् अमर० ।

**जनस्** स्त्री द्वि०व० । जनयतः जन–णिच्–असुन् । सर्वभूतजनयित्र्योःद्यावापृथिव्योः । "पातु जनसी उभे अनु" ऋ० २।२।४।२ २जनलोके न० "जनस्तपःसत्यनिवासिनो जनाः" भाग० ३।१३।२५।

**जनस्थान** न० १दण्डकारण्ये जटाधरः । २तदन्तर्गतस्थानभेदे तच्च स्थानं पूर्वम् इक्ष्वाकुराजपुत्रदण्डस्य राजधानी आसीत् दण्डेन च शुक्राचार्यकन्या बलात्कारेणाभिधर्षिता तेन कुपितेन वशिष्ठेन शप्तोदण्डस्तत्कथा रामा० उत्त० यथा "सप्तरात्रेण राजासौ सभृत्यबलवाहनः । पापकर्मसमाचारो वधं प्राप्स्यति दुर्मतिः । सर्वसत्त्वानि यानीह जङ्गमानि स्थिराणि च । सर्वेषां पांशुवर्षेण क्षयः क्षिप्रं भविष्यति । दण्डस्य विषयो यावत् तावत् स वनमाश्रमम् । पांशुभूतमिवाकस्मात् सप्तरात्रात् भविष्यति । इत्युक्त्वा क्रोधसन्तप्तस्तदाश्रमनिवासिनम् । जनं जनपदस्यान्ते स्थीयतामित्युवाच । सप्ताहात् भस्मसाद्भूतः स चापि ब्रह्मतेजसा । तस्य दण्डस्य विषयोविन्ध्यशैवलसानुषु । तपस्विनः स्थिता यत्र तज्जनस्थानमुच्यते" "प्राप्य चाशु जनस्थानं खरादिभ्यस्तथाविधम्" "असौ जनस्थानमपोढ

विम्रम्” रघुः। “जनस्थाने चिरस्थितं राघवस्य दुरात्मनः”। भा० व० ४०अ० “खरेणासीत् महद्वैरं जनस्थाननिवासिना” भा० आ०२७६ अ०। २जनानां स्थाने च “जनस्थाने भ्रान्त कनकमृगतृष्णान्धितधिया” सा० द०।

**जना** स्त्री जन–बा० अङ्। उत्पत्तौ। [तीते।

**जनातिग** त्रि जनमतीत्य गच्छति अति+गम–ड। लोका-

**जनाधिनाथ** पु० ६त०। लोकाधिपे राजनि०। “जनाधिनाथो न ययौ विदग्धताम्” माघः जनाधिपादयोऽप्यत्र

**जनान्त** पु०६त०। १जनसमीपे २जनमर्य्यादायाम्। (जेला) ख्याते ३सीमाभेदाङ्किते देशभेदे धनञ्जयः।

**जनान्तिक** न० “त्रिपताककरेणान्यानपवार्य्यान्तरा कथा। अन्योन्यामन्त्रणं यत् स्यात् जनान्ते तज्जनान्तिकम्” सा० द० उक्ते १अप्रकाशकथने नाटकेऽस्य भूरिप्रयोगः। ६त०। २जनसमीपे च।

**जनार्द्दन** पु० जनैरर्द्यते याच्यते पुरुषार्थलाभाय अर्द्द–याचने कर्म्मणि ल्युट्। जनं जननमर्द्दति हिनस्ति ताड़यति जनान् समुद्रवासिनोऽसुरभेदान् अर्द्दयति वा कर्त्तरि ल्यु। “१विष्णौ परमेश्वरे “सर्व्वगः सर्व्वविद्भानुर्विष्वक्सेनो जनार्द्दनः” विष्णु स० २जनपीडके त्रि०। “जनावनायोद्यमिनं जनार्द्दनम् न्वये जगज्जीवपिवं वदन् शिवम्”नैष० गयातीर्थस्थे ३विष्णुमूर्त्तिभेदे तद्धस्ते जीवत्पुरुषेण स्वपिण्डस्य दानविधिः वायु पु० गयामाहात्म्ये यथा

“जनार्द्दनो भस्मकूटे तस्य हस्ते तु पिण्डदः। आत्मनोऽप्यथ वान्येषां सव्येनापि तिलैर्विना। जीवता दधिसंमिश्रं सर्व्वे ते विष्णुलोकगाः। यस्तु पिण्डो मया दत्त स्तव हस्ते जनार्द्दन!। मामुद्दिश्य त्वया देव! तस्मिन् पिण्डे कृते प्रभो!। एष पिण्डो मया दत्तस्तव हस्ते जनार्द्दन! अन्तकाले गते मह्यं त्वया देयो गयाशिरे। जनार्द्दन! नमस्तुभ्यं नमस्ते पितृमोक्षद!। पितृमाते नमस्तुभ्यं नमस्ते पितृरूपिणे। गयायां पितृरूपेण स्वयमेव जनार्द्दनः। त्वां दृष्ट्वा पुण्डरीकाक्षं मुच्यते च ऋणत्रयात्”। ४धातस्थानभेदे ग्रालग्रामशब्दे दृश्यम्। तदाम्ना भोजनकाले हरेः स्मरणीयता “भोजने च जनार्द्दनम्” इत्युक्तेः “आर्त्तसमाशाद्य जनार्द्दनस्य” माघः

**जनाशन** पु०जनानश्नाति अश–भोजने ल्यु। १वृके राजनि०। २लोकभोजिनि त्रि०। भावे ल्युट् ६त०।३लोकभक्षणे न०।

**जनाश्रय** पु० जनानां लोकानामाश्रयः। मण्डपे अमरः।

**जनाषाह्** पु०जनान् सहते सह–क्विप् पूर्व्वदीर्घः। लोकसहिष्णौ “त्वं जनाषाडिन्द्र! तव्यम्”ऋ० १।५४।११। “सहेः साडः”पा० अत्र षत्वम्।

**जनि(नी)** स्त्री जन–भावे इन् वा ङीष्। १उत्पत्तौ “जनिः कर्त्तुः प्रकृतिः” पा० २अभूतप्रादुर्भावे। जायते स्वयं गर्भो वाऽस्याम्, आधारे इ। २नार्य्याम् ।३मातरि ४स्नुषायां च अमरः ५जायायाम्। जायते आरोग्यमनया ।६ओषधिभेदे ७जतुकायाञ्च शब्दरत्ना०। ८जनीनामगन्धद्रव्ये रायमुकुटः।“उदीय्य सूर्य्यं कपटाज्जनीं जनः” नैष०।

**जनिका** स्त्री जनि(नी)+स्वार्थे क। १जनिशब्दार्थे। जनयति जन–णिच्–ण्वुल् कापि अत इत्त्वम्। २उत्पादिकायां स्त्रियां स्त्री।

**जनित** त्रि० जन–णिच्–क्त। उत्पादिते “सेनाचरीभवदिभाननदानवारिवासेन यस्य जनिता सुरभिर्यशश्रीः” नैष०। “मातिजनजनितनाशपदाम्” माघः।

**जनितृ** पु० जन–अन्तर्भूतण्यर्थे तृच्। १पितरि शब्दरत्ना०। २मातरि स्त्री ङीप् शब्दच०।

**जनित्र** पु० जन–णिच्–इत्रन्। १पितरि २मातरि स्त्री उज्ज्वल०। जन–भविष्यति इत्रन् ।२जनिष्यमाणे“अदितिर्जातमदितिर्जनित्वम्” यजु० २५।२३। “जनित्वं जनिष्यमाणम्” वेददी०।

**जनित्वन** न० जन–भावे बा० इत्वन। जनने। “जनित्वनाय मामहे” ऋ० ८।२।४२। ‘“जनित्वनाय जननाय”भा०।

**जनिनीलिका** स्त्री जन्या नीलिका।१महानीलीवृक्षे राजनि०

**जनिमत्** त्रि० जनिर्जन्मास्त्यस्य मतुप्। जन्मयुक्ते स्त्रियां ङीप् वेदे मस्य वः। जायायुक्ते “अव्यदश्वमेनांश्विश्वजनिवतश्चकर्थ”ऋ० ५।२१।२ जनिवतो जायावतः” भा०।

**जनिमन्** पु० जन–भावे मनिन्। जन्मनि उज्ज्व०।

**जनिष्य** त्रि० जन–बा० भविष्यति–स्य। जनिष्यमाणे “कुतएव जनिष्यांस्तु क्षमावादपरायणः” भा० शा० १६६अ०। “जातो वापि जनिष्यो वा” रामा० आर० ६६।१४।

**जनेष्ट** पु० ६त०। १मुद्गरवृक्षे राजनि० २जतुकायां ३वृद्धिनामौषधौ ४हरिद्रायां ५जातीपुष्पवृक्षे स्त्री राजनि० ६जनाभिमते त्रि०।

**जनोदाहरण** न० जनैरुदाह्रियते उद्+आ+हृ–कर्म्मणि ल्युट्। यशसि धनञ्जयः।

**जनी** त्रि॰ जनानवति अव–क्विप् ऊठि वृद्धिः। जनरक्षके।

**जन्तु** पु॰ जन–तुन्। १जननधीले प्राणिनि अमरः अविद्यादोषात् देहात्माभिमानिनि २जीवे। “एतेषामेव जन्तूनां भार्य्यात्वमुपयान्ति ताः” मनुः। “ज्ञानमस्ति समस्तस्य जन्तोर्विषयगोचरे” देवीमा॰ “स्वेदजाः कृमयः प्रोक्ता जन्तवश्च यथाक्रमम्” भा॰ आश्व॰ ११२६श्लो॰। सोमकस्य नृपस्य भार्य्यासु जायमाने पुत्रभेदे “युधिष्ठिरासीन् नृपतिः सोमको नाम धार्म्मिकः” इत्युपक्रमे “कदाचित्तस्य वृद्धस्य घटमानस्य यत्नतः! जन्तुर्नाम सुतस्तस्मिन् स्त्रीशते समजायत” इत्युक्त्वा “तस्य राज्ञ एकपुत्त्रत्वदुःखनिवारणाय सोमयेन वह्नौ जन्तुवपाया हवने कृते जन्तुपूर्वकं पुत्त्रशतं स्त्रीशते तस्याजायत इत्युक्तम् भा॰ व॰ १२७। २२८अ॰। जन्तूपाख्याने दृश्यम्। ४मनुष्ये व॰व॰” निघण्टुः।

**जन्तुक** पु॰ जन्तु+स्वार्थे क। जन्तुशब्दार्थे जन्तुनृपस्य गोत्रापत्यम् इञ्। जान्तुकि तद्गोत्रापत्ये उपका॰बहुत्वे तस्य इञो लुक् द्वन्द्वे अद्वन्द्वे च। जन्तुक २तद्गोत्रापत्येषु ब॰ व॰।

**जन्तुकम्बु** पु॰ जन्तुरूपः कम्बु। कृमिशङ्खे राजनि॰।

**जन्तुका** स्त्री जन्तुभिः कायति प्रकाशते कै–क। १लाक्षायां, तस्याहि कीटैः प्रकाशः। २नाभीहिङ्गुनि च राजनि॰।

**जन्तुघ्न** पु॰ जन्तून् कृमीन् हन्ति हन–क। १वीजपूरे। राजनि॰ २प्राणिघातके त्रि॰। ३विडङ्गे, ४हिङ्गुनि च न॰। शब्दमा॰ ५विडङ्गे स्त्री ङीप् राजनि॰। [राजनि॰।

**जन्तुनाशन** न॰ जन्तून् नाशयति नश–णिच्–ल्यु। हिङ्गुनि

**जन्तुपादप** पु॰ जन्तुप्रधानः पादपः। कोषाम्रवृक्षे राजनि॰।

**जन्तुफल** पु॰ जन्तवः फलेऽस्य। उडुम्बरे अमरः। [क्षितौ।

**जन्तुमती** स्त्री जन्तवः सन्त्यस्यां बाहुल्येन मतुप् ङीप्।

**जन्तुमारी** स्त्री जन्तून् कृमीन् मारयति मृ–णिच्–अण् उप॰स॰ गौ॰ङीष्। निम्बूके (निमकी)। राजनि॰। [त्रिका॰।

**जन्तुला** स्त्री जन्तून् कीटान् लाति ला–क। काशतृणे

**जन्तुहन्त्री** स्त्री जन्तून् हन्ति हन–तृच् ङीप्। १विडङ्गे राजनि॰ २जन्तुनाशके त्रि॰।

**जन्त्व** त्रि॰ जन–कृत्यार्थे त्वन्। जनितव्ये “यज्जातं यच्च जन्त्वम्” ऋ॰ ८।८८।६। “जन्त्वम् जनितव्यम्” भा॰

**जन्म** न॰ जन–भा॰ मन्। जन्मनि भरतः।

**जन्मकील** न॰ जन्मनः कील इव रोधकत्वात्। विष्णौ त्रिका॰

**जन्मतिथि** पु॰स्त्री जन्मनस्तिथिः। जन्मकालिकतिथिसजातीयतिथौ स्त्रीत्वे वा ङीप्। तत्र कृत्यानां सौरचान्द्रेणैव कर्त्तव्यता। तद्विधानादि नि॰ त॰ दर्शितं यथा

“तच्च मलमासे न कर्त्तव्यं चान्द्रमासीयत्वेन सावकाशत्वात्। नच तस्य सौरमासीयत्वं तथात्वे मलमासे तन्निषेधः कदाचिदप्राप्तौ तद्वर्षे तत्कृत्यलोपापत्तेः मचेष्टापत्तिः प्रतिसंवत्सरन्तद्विधानात् यथा ब्रह्मपुराणं नगेश्च “स्वैस्व जन्मदिवसे स्नातैर्मङ्गलपाणिभिः। गुरुदेवाग्निविप्राश्च पूजनीयाः प्रयत्नतः। स्वनक्षत्रञ्च पितरौ तथा देवः प्रजापतिः। प्रतिसंवत्सरञ्चैव कर्त्तव्यश्च महोत्सवः”। स्नातैस्तिलस्नातैः तथाच तत्तिथिमधिकृत्य ‘तिलोद्वर्त्ती तिलस्नायी तिलहोमी तिलप्रदः। तिलभुक् तिलवापी च षट्तिली नावसीदति।’ प्रजापतिर्ब्रह्मा। मङ्गलपाणिभिः अभिप्रेतार्थसिद्धिर्मङ्गलं तद्धेतुतया गोरोचनादिकमपि मङ्गलं तेन गुग्गुल्वादिपाणिभिरित्यर्थः। तथाच कृत्यचिन्तामणौ ‘गुडदुग्धतिलान्द्याज्जन्मन्येव वन्धनम्। गुग्गुलुं निम्बसिद्धार्थं दूर्वागोरोचनायुतम्। संपूज्य मातृविप्रेषौ महर्षिं प्रार्थयेदिदम्। चिरंजीवी यथा त्वं भो भविष्यामि तथा मुने!। रूपवान् वित्तवांश्चैव श्रियायुक्तश्च सर्वदा। मार्कण्डेय! महाभाग! सप्तकल्पान्तजीवन!। आयुरिष्टार्थसिद्ध्यर्थमस्माकं वरदो भव”। स्वनक्षत्रमिति स्वनक्षत्रं अश्विन्याद्यन्तर्गतजन्मकालीननक्षत्रं नामकरणे तथादर्शनात् वक्ष्यमाणब्रह्मपुराणोक्तप्रणवादिनमोऽन्तेन नाम्नैव पूजाविधानाच्च तदस्थाने स्वनक्षत्राय नम इत्युल्लेख्यम्। पूजायामर्घ्यानन्तरं पाद्यमाह मत्स्यपुराणम् “अर्घ्यं पाद्यादिकन्तत्र मधुपर्कं प्रयोजयेत्।’ पाद्यानन्तरमर्घ्यमाह नरसिंहपुराणम्। ‘पाद्यं चैव तृतीयया चतुर्थ्यार्घ्यं प्रदापयेत्।’ तृतीयया पुरुषसूक्तीयतृतीयया ऋचा उभयक्रमदर्शनादिच्छाविकल्पः इति श्रीदत्तः। श्रीपतिव्यवहारनिर्णये ‘नवाम्बरधरो भूत्वा पूजयेच्च चिरायुषम्।’ तथा ‘द्विभुजं जटिलं सौम्यं सुवृद्धं चिरजीविनम्। मार्कण्डेयं नरो भक्त्या पूजयेत् प्रयतस्तथा; ततो दीर्घायुषं व्यासं रामं द्रौणिं कृपं बलिम्। प्रह्लादञ्च हनूमन्तं विभीषणमथार्चयेत्।’ रामोऽत्र परशुरामः चिरजीविसाहचर्य्यात् द्रौणिरश्वत्थामा। तथा ‘स्वनक्षत्रं जन्मतिथिं प्राप्य सम्पूजयेन्नरः। षष्ठीञ्च दधिभक्तेन वर्षे वर्षे पुनःपुनः’। ‘एकैकां देवतां राम! समुद्दिश्य यथाविधि। चतुर्थ्यन्तेन धर्मज्ञ! नाम्ना च प्रणवादिना। होमद्रव्यमथैकैकं

शतसंख्यन्तु होमयेत्" इति विष्णुधर्म्मोत्तरदर्शनात्। एवं होमे स्वाहान्तता च मन्त्रस्य "स्वाहावसाने जुहुयात् ध्यायन् वै मन्त्रदेवताम्" इति स्मृतेः। अशक्तौ तु देवीपुराणम् "होमग्रहादिपूजायां शतमष्टोत्तरं भवेत्। अष्टाविंशतिरष्टौ वा यथाशक्ति विधीयते"। स्कान्दे "नखच्छेदं नखकेशानां मैथुनाध्वानमेव च। आमिषं कलहं हिंसां वर्षवृद्धौ विवर्जयेत्"। अध्वानम् अध्वगमनं कलहमित्यत्र सङ्गरमिति क्वचित् पाठः सङ्गरं युद्धम्। वर्षवृद्धौ जन्मदिने। वृद्धमनुः "स्नाते जन्मनि संक्रान्तौ श्राद्धे जन्मदिने तथा। अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा"। जन्मनि पुत्रजन्मनि। ज्योतिषे "स्नात्वा जन्मदिने स्त्रियं परिहरन् प्राप्नोत्यभीष्टां श्रियम् मत्स्यान्योचयतो द्विजाय ददतोऽप्यायुश्चिरं वर्द्धते। मत्स्यान् खादति यस्तु तस्य रिपवो नाशं प्रयान्ति ध्रुवं भुङ्क्ते यस्तु निरामिषं स हि भवेत् जन्मान्तरे पण्डितः"। दीपिकायाम् "जन्मर्क्षयुक्ता यदि जन्ममासे यस्य ध्रुवं जन्मतिथिर्भवेद्ध। भवन्ति तद्वत्सरमेव यावच्चैश्वर्यसन्मानसुखानि तस्य। कृतान्तकुजयोर्वारे यस्य जन्मदिनं भवेत्। अब्दयोगसंप्राप्तौ विघ्नस्तस्य पदे पदे"। कृतान्तकुजयोः शनिमङ्गलयोः। "तस्य सर्व्वौषधिस्नानं ग्रहविप्रसुरार्च्चनम्। ग्रहानुद्दिश्य होमो वा ग्रहाणां प्रीतिमिच्छता। सौरारयोर्दिने शुक्ला देयाग्रचे तु काञ्चनम्। सुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयम्। शठीचम्पकमुस्तञ्च सर्व्वौषधिगणः स्मृतः"॥ सौरारयोः शनिभौमयोः। रजनीद्वयं हरिद्रादारुहरिद्रे। एषां पत्रादीनामपि ग्रहणम्। कषायावयवग्रहणमाह मत्स्यपुराणम् "एषां पत्राणि साराणि मूलानि कुसुमानि च। एवमादीनि चान्यानि कषायाख्योगणः स्मृतः"। तत्र क्रमः। तिलोद्वर्त्तनं तिलयुक्तजलेन स्नानं नववस्त्रपरिधानं गुग्गुलुनिम्बसर्षपदूर्व्वागोरोचनाखञ्जनग्रन्थिं दक्षिणपाणौ बध्नीयात्। गुरुदेवाग्निविप्राः पूजनीयाः स्वनक्षत्रमपि पूजनीयम्। अत्र च "हस्तास्वाती श्रवणा च क्लीबे स्यान्मृगशिरोनपुंसि स्यात्। पुंसि पुनर्वसुपुष्यौ मूलं पुंस्त्री स्त्रियः शेषाः" इत्यनेन लिङ्गनिर्णयः। अनुक्तनक्षत्रादीनां गोपनमाह विष्णुधर्म्मोत्तरे "गोपयेज्जन्मनक्षत्रं धनसारं स्वके मतम्। प्रभोरपमानञ्च तस्य दुश्चरितञ्च यत्"। धनसारं धनश्रेष्ठं मतं छिद्रम्। पितरौ प्रजापतिः सूर्य्यो गणपतिर्मार्कण्डेयश्च पूजनीयः। "सतिलं गुडसंयुक्तमञ्जल्यर्द्धमितं पयः। मार्कण्डेयवरं लब्ध्वा पिबाम्यायुष्यहेतवे" इति गुडतिलदुग्धपानमन्त्रः। ततः प्रार्थनामन्त्रौ। "चिरजीवी यथा त्वं भो भविष्यामि तथा मुने!। रूपवान् वित्तवांश्चैव श्रिया युक्तश्च सर्व्वदा! मार्कण्डेय! महाभाग! सप्तकल्पान्तजीवन!। आयुरिष्टार्थसिद्ध्यर्थमस्माकं वरदो भव"। ततो व्यासपरशुरामाश्वत्थामकृपबलिप्रह्लादहनूमद्विभीषणाः पूजनीयाः। षष्ठ्यपि। "त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च। ब्रह्मविष्णुशिवैः सार्द्धं रक्षां कुर्व्वन्तु तानि मे"। इति मत्स्यपुराणीयं पठेत्। पितृमातृपादपद्मवन्दनक्रमस्तु विष्णुपुराणादुन्नेयः यथा "कृष्णोऽपि वसुदेवस्य पादौ जग्राह सत्वरः। देवक्याश्च महाबाहुर्बलदेवसहायवान्"। एतच्च "सहस्रन्तु पितॄन्माता गौरवेणातिरिच्यते" इति मनुवचने सहस्रं पितॄनपेक्ष्य यद्गौरवमुक्तं तत्पोषणपरत्वात्। अतएव मनुः "स्नाते भर्त्तरि पुत्रस्तु वाच्यो मातुररक्षिता"। वाच्यो गर्हणीयः। अत्र वैदिकेतरमन्त्रपाठे शूद्रादेरप्यधिकारः "वेदमन्त्रवर्जम् शूद्रस्य" इति छन्दोगाह्निकाचारचिन्तामणिधृतस्मृतौ वेदेति विशेषणात्। एवञ्च पुराणमधिकृत्य "श्राव्यं तव्यं न चान्येन ब्राह्मणं क्षत्रियं विना। श्रोतव्यमिह शूद्रेण नाध्येतव्यं कदाचन" इति भविष्यपुराणवचनं पुराणमन्त्रेतरपरम्। पञ्चयज्ञस्नानश्राद्धेषु पौराणिकमन्त्रोऽपि निषिद्धः। शूद्रमधिकृत्य "नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत्" इति याज्ञवल्क्येन "ब्रह्मक्षत्रविशामेव मन्त्रवत् स्नानमिष्यते। तूष्णीमेव हि शूद्रस्य स नमस्कारकं मतम्" इति योगियाज्ञवल्क्येन श्राद्धमधिकृत्य "अयमेव विधिः प्रोक्तः शूद्राणां मन्त्रवर्जितः। अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते" इति वराहपुराणेन च नमस्कारेणेति तूष्णीमिति मन्त्रवर्जित इति चाभिधानादेतत्परं वैदिकपरञ्च शूद्राधिकारे गौतमवचनं "अनुमतोऽस्य नमस्कारो मन्त्रः" इति। अनुपनीतस्यापि शूद्रसमत्वेन श्राद्धातिरिक्तवेदपाठनिषेधमाह मनुः "नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते। शूद्रेण हि समस्तावत् यावद्वेदे न जायते"। स्त्रीणामपि वैदिकमन्त्रनिषेधमाह नृसिंहतापनीयम् "सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्रयोर्नेच्छन्ति सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्री शूद्रो यदि जानीयात् स मृतोऽधोगच्छति" इति नेच्छन्तीतिपर्य्यन्तं पराशरभाष्येऽपि लिखितम्।

जन्मतिथेः प्रागुक्तब्रह्मपुराणीयत्वात् पौर्णमास्यन्तमासादरः। छन्दोगपरिशिष्टम् "उपाकर्म्म तथोत्सर्गः प्रसवाहोऽष्टकादयः। मानवृद्धौ पराः कार्य्या वर्जयित्वा तु पैतृकम्"। अत्राष्टकासाहचर्य्याज्जन्माष्टम्यां तथा दर्शनाच्च प्रसवाहो जन्मदिनम्।"द्वादश मासाः संवत्सरः क्वचित्त्रयोदश मासाः संवत्सरः"इति श्रुत्या वर्षे मासवृद्धिरूपा मानवृद्धिरुक्ता सैवात्र ग्राह्या न तु सौरे मासि तिथिद्वयलाभानुमानवृद्धिर्जीमूतवाहनोक्ता ग्राह्या तिथिद्वयलाभस्य मानवृद्धित्वे प्रमाणाभावात्। मानवृद्धावित्यत्र मासवृद्धाविति हेमाद्रिणा धृतम्। पैतृकं सपिण्डीकरणं मलमासस्तस्य प्रत्याब्दिकञ्च तयोर्मलमासेऽपि विधानात्। ज्योतिः पराशरोऽपि "उपाकर्म्म तथोत्सर्गः प्रसवाहोऽष्टकादयः। मासवृद्धौ पराः कार्य्या वर्जयित्वा तु पैतृकम्"। जन्मतिथेरुभयदिनलाभे तु देवीपुराणम् "युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया। रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता। भद्वये जन्मतिथिर्यदि स्यात् पूज्या तदा जन्मभसंयुतैव। असङ्गताभेन दिनद्वयेऽपि पूज्या परा या भवतीह यत्नात्"। भं नक्षत्रं परवचनं हृद्राजमार्त्तण्डेऽपि। पूर्व्वाह्णे तिथिनक्षत्रलाभ एवेदं कथ्यते "नक्षत्रे खण्डिते येन प्राप्तः कालस्तु कर्म्मणः। नक्षत्रकर्म्मण्यत्रैव तिथिकर्म तथैव च" इति वृहस्पतिवचनात्। खण्डिते खण्डद्वययुक्ते येन नक्षत्रखण्डेन विहितकालः प्राप्तः। नक्षत्रद्वैधे तु बौधायनमार्कण्डेयौ "तन्नक्षत्रमहोरात्रं यस्मिन्नस्तं गतो रविः। यस्मिन्नुदेति सविता तन्नक्षत्रं दिनं स्मृतम्"। पूर्व्वार्द्धमहोरात्रसाध्योपवासनक्तैकभक्तेषु "तत्रैवोपवसेदृक्षे यस्मिन्निशीथादर्वाग्भवेत्। उपवासे यदृक्षं स्यात् तद्धि नक्तैकभक्तयोः" इति स्कन्दपुराणात् निशीथादर्वागित्यनेन अर्द्धरात्रपूर्व्वकालत्वेन सूर्य्यास्तमयकालस्यापि लाभात्। "उपोषितव्यं नक्षत्रं येनास्तं याति भास्करः। यत्र वा युज्यते राम! निशीथे शशिना सह"इति विष्णुधर्म्मोत्तराच्च। उपवासवन्नक्तव्रतादीनामहोरात्रसाध्यता अहोरात्रसाध्यभोजनद्वयस्यैकतरपरित्यागसहितकालविशेषनियामकत्वात्। यस्मिन्नुदेतीति तु दिवसकर्त्तव्यस्नानदानादाविति बोध्यम्। पितृकार्य्येऽपि शुक्लकृष्णपक्षाभ्यां व्यवस्थामाह बौधायनः 'सा तिथिस्तच्च नक्षत्रं यस्मिन्नभ्युदितो रविः। वर्द्धमानस्य पक्षस्य हीने त्वस्तमयं प्रति"। हीने चन्द्रस्य हीनत्वात् कृष्णपक्षे, वर्द्धमानस्य चन्द्रस्य वर्द्धमानत्वेन शुक्लपक्षस्य। कालमाधवीयोऽप्येवम्। भोजराजः "यो जन्ममासे क्षुरकर्म्मयात्रां कर्णस्य वेधं कुरुते च मोहात्। नूनं स रोगं धनपुत्रनाशं प्राप्नोति मूढो वधबन्धनानि। जातं दिनं दूषयते वशिष्ठस्त्वष्टौ च गर्गो यवनो दशाहम्। जन्माख्यमासं किल भागुरिश्च चूडे विवाहे क्षुरकर्णवेधे"। एतद्विषयभेदस्तु राजमार्त्तण्डे "उक्तानि प्रतिषिद्धानि पुनः सम्भावितानि च। सापेक्षनिरपेक्षाणि श्रुतिवाक्यानि कोविदैः"। सापेक्षनिरपेक्षाणि समर्थासमर्थविषयकाणि। क्षुरेति क्षुरिकर्म्म। राजमार्त्तण्डे "देवकार्य्ये पितृश्राद्धे रवेरंशपरिक्षये क्षुरिकर्म्म न कुर्व्वीत जन्ममासेऽथ जन्मभे"। एवञ्च चूड़ इति चूड़ाकरणे अधिकदोषाय। नार्य्यास्तु जन्ममासे विवाहमाह श्रीपतिव्यवहारसमुच्चये "स्नानं दानं तपो विद्या सर्व्वमङ्गल्यवर्द्धनम्। उद्वाहश्च कुमारीणां जन्ममासे प्रशस्यते"। एवं "जन्मोदये जन्मसु तारकासु मासेऽथ वा जन्मनि जन्मभे वा। व्रतेन विप्रो नवसुश्रुतोऽपि विद्याविशेषैः प्रथितः पृथिव्याम्"इति व्यासवचनेन जन्ममासे उपनयनविधानात्तदङ्गक्षौरवपनेऽपि न दोषः। उदये लग्ने भे राशौ नवश्रुतोऽपि स्वल्पविद्योऽपि। अत्र जन्ममासकृत्याकृत्ये सौरादरो यात्रादिसाहचर्य्यात् व्यवहारोऽपि तथा। प्रतिमासे जन्मनक्षत्रकृत्यमाह विष्णुधर्म्मोत्तरम् "जन्मनक्षत्रगे सोमे शिरःस्नानेन यत्नतः। पूजा सोमस्य कर्त्तव्या नक्षत्रस्य तथात्मनः। श्राद्धं कुर्य्यात् प्रयत्नेन वह्निब्राह्मणपूजने। वाहनायुधरत्नाद्यं पूजनीयं प्रयत्नतः। सुराणामर्च्चनं कार्य्यं केशवस्य विशेषतः"।

**जन्मद** पु० जन्म ददाति दा—क। पितरि शब्दच०।

**जन्मदिन** न० जन्मनोदिनम्। जन्मदिवसे तच्च तिथिरूपं जन्मतिथिशब्दे उदा०।

**जन्मन्** न०जन—भावे मनिन्। १उत्पत्तौ, २आद्यक्षणसम्बन्धे, ३गर्भवासतोयोनिद्वारानिःसरणे ४न्यायाद्युक्ते अपूर्वदेहग्रहणे, अपूर्वदेहादिभिरात्मनः सम्बन्धे ज्योतिषोक्ते ५जन्मनक्षत्रे, तदवधिके ६दशमे ७ऊनविंशे च नक्षत्रे। तत्र मनुष्याणां जन्मप्रकारस्तु गर्भशब्दे २५४८ पृ० उक्तप्रायोऽपि अत्र विशेषः कश्चित् प्रदर्श्यते। "ऋतौ विकाशा भवति योनिः कमलवत् सदा। गर्भाशयस्ततः शुक्रं धत्ते रक्तसमन्वितम्। अन्यत्र काले सङ्कुला

योनिर्भवति योषिताम् । स्पृष्टं शुक्रमतो योनौ नैति गर्भाशयं शनैः । कृतार्थापि तु योनिश्चेद्वातपित्तकफावृता । भवेत्तदा विकारित्वं नैव तस्यां प्रजायते । ऋतुकाले यदा शुक्रं निर्दोषं योनिसंस्थितम् । तदा तद्वायुना स्पृष्टं स्त्रीरक्तेनैकतां व्रजेत् । निषेकं मानवं स्त्रीणां बीजं प्राप्तं रजसश्च । शुक्रमात्रोऽपि नरकात् स्वर्गाद्वापि प्रपद्यते । विसर्गकाले शुक्रस्य जीवः कारणसंवृतः । सूक्ष्मा प्रविशते योनिं कर्म्मभिः स्वैर्नियोजितः । तच्छुक्ररक्तमेकस्थमेकाहात् कललं भवेत् । पञ्चरात्रेण कललं बुद्बुदाकारतां व्रजेत् । बुद्बुदः सप्तरात्रेण मांसपेशी भवेत्ततः । द्विसप्ताहाद्भवेत् पेशी रक्तमांसाचिता दृढ़ा । बीजस्यैवाङ्कुराः पेश्यः पञ्चविंशतिरात्रतः । भवन्ति मासमात्रेण पञ्चधा जायते पुनः । ग्रीवा शिरश्च स्कन्धश्च पृष्ठवंशस्तथोदरम् ! पाणिपादं तथा पार्श्वं कटिगात्रं तथैव च । मासद्वयेन सर्वाणि क्रमशः सम्भवन्ति हि । त्रिभिर्मासैः प्रजायन्ते सर्वाङ्गाङ्कुरसन्धयः । मासैश्चतुर्भिरङ्गुल्यः प्रजायन्ते यथाक्रमम् । स्त्रैणं चतुर्थे चाङ्गानां पञ्चमे शोणितोद्भवः। षष्ठे बलस्य वर्णस्य नखलोम्नाञ्च सम्भवः। दन्तपङ्क्तिस्तथा गुह्यं जायन्ते च नखाः पुनः । कर्णयोश्च भवेच्छिद्रं षण्मासाभ्यन्तरेण च । पायुर्मेढ्रमुपस्थश्च नाभिश्चैवोपजायते । सन्धयो ये च गात्रेषु जायन्ते मासि सप्तमे । मनस्तु चेतनायुक्तं नाभीस्नायुशिरास्ततः । सप्तमे चाष्टमे चैव त्वङ्मांसस्मृतिमानपि । अङ्गप्रत्यङ्गसम्पूर्णः शिरःकेशसमन्वितः । विभक्तावयवः स्पष्टः पुनर्मासाष्टमेन च । नवमे दशमे मासि प्रबलैः सूतिमारुतैः । निःसार्य्यते बाणइव जन्तुश्छिद्रेण सज्वरः । मनसश्चञ्चलत्वेन यदा गर्भस्थितिर्भवेत् । तदा विकृतिरूपेण पापात्मा हि प्रजायते । पुटद्वयं समासाद्य यदा वहति मारुतः । तदा प्रसूते पापिष्ठान् षण्डान् कर्म्मबहिष्कृतान् । मातृरक्तोत्तरा नारी पितुः शुक्रोत्तरो नरः । उभयोर्वीजसामान्ये जायते वै नपुंसकम् । विषमायां तिथौ चिप्तं कुर्य्याद्बीजन्तु कन्यकाम् । समायां पुरुषं नूनं केचिदाहुर्मनीषिणः । वामाङ्गेन भवेन्नारी दक्षिणेन पुमान् भवेत् । रक्ताधिक्ये मातृरूपं शुक्राधिक्ये तु पैतृकम्। शुक्रशोणितसंघाते वायुना च द्विधा कृते । यमौ स्यातां त्रिधा चेति चतुर्धा बहुधापि वा । ततो हीनाधिकव्यङ्गकुब्जवामनकादयः । जायन्ते सर्पकुण्डाण्डा विक्रतान्याश्च योनयः” । “गर्भात् कोटिगुणं दुःखं योनियन्त्रनिपीड़ने । संमूर्च्छा तस्य जठराज्जायमानस्य देहिनः । जायमानः पुरीषासृङ्मूत्रशुक्राविलाननः । प्राजापत्येन वातेन पीड्यमानास्थिबन्धनः । अधोमुखो वै क्रियते प्रबलैः सूतिमारुतैः । क्लेशात् निष्क्रान्तिमायाति जठरान्मातुरातुरः। ततस्तं वैष्णवी माया समास्कन्दति मोहिनी । तया विमोहितात्मासौ ज्ञानभ्रंशमवाप्नुयात् । स्पृष्टमात्रस्य घोरश्च ज्वरः समुपजायते । तेन ज्वरेण महता महामोहः प्रजायते । कण्टकैरिव च्छिन्नाङ्गः क्रकचैरिव दारितः । पूतिव्रणान्निपतितो धरण्यां क्रिमिको यथा । तद्बुभुक्षापरीताङ्गः कचित्तिष्ठति वा रटन् । विण्मूत्रभक्ष्याद्यञ्च गतज्ञानः समाचरेत् । कण्डूयनेऽपि चाशक्तः परिवर्त्तेऽप्यनीश्वरः । स्तानपानादिकाहारमवाप्नोति परेच्छया । अशुचौ संस्तरे सुप्तःकीटदंशादिभिस्तथा । भक्ष्यमाणोऽपि नैवैषां समर्थो विनिवारणे । केन बन्धेन बद्धोऽहं कारणं किमकारणम् । किं कार्य्यं किमकार्य्यं वा किं वाच्यं किञ्च नोच्यते । कोऽधर्म्मः कश्च वै धर्म्मः कस्मिन् वा वर्त्तते कथम् । किं कर्त्तव्यमकर्त्तव्यं किं वा किं गुणदोषवत् । संमूढस्य स्मृतिभ्रंशः शीघ्रं संजायते पुनः । मतिः संजायते तूर्णं जन्तोस्तत्रैव जन्मनि । रक्तो मूढश्च लोकोयमकार्य्ये सम्प्रवर्त्तते । देही देहं परित्यज्य नेन्द्रस्थानमपीच्छति । तस्मात् कीटोऽपि जन्तूनां सुमूढ़ो जायते भृशम् । न चात्मानं विजानाति न परं न च दैवतम्। न शृणोति परं श्रेयः सति चक्षुषि नेक्षते । बुद्धौ सत्यां न जानाति बोध्यमानो बुधैरपि । संसारे क्लिश्यते तेन रागलोभवशानुगः” सुश्रुतः ।

जन्म च “जायतेऽस्ति वर्द्धते विपरिणमते अपक्षीयते नश्यति” यास्कोक्तेषु षट्सु भावविकारेषु आद्यो भावविकारः । “जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च” गीता । “जन्मसम्पद्विपत्क्षेमं प्रत्यरिः साधको वधः । मित्रं परममित्रञ्च त्रिरावृत्त्या पुनः पुनः” ज्यो० त० । “श्राद्धं दद्यात् स्वजन्मनि”। “जन्मर्क्षे निधनेऽपि च” ज्यो०त० । कर्त्तरि मनिन् । ८जने निरु० । आधारे मनिन् । ९जन्मलग्ने १०जन्मराशौ च “जन्मनीत्यं विचिन्त्यवान्” “जन्मनोचितयुक् शुभैः” नी०क०ता० ।

**जन्मप** पु० जन्म जन्मलग्नं पाति पा—क। १जन्मलग्नपतौ २जन्मराशिपतौ च जन्मपत्यादयोऽप्यत्र। "जन्मपः क्रूरितोऽशुभैः" नी० ता०।

**जन्मभ** न० ६त०। १जन्मनक्षत्रे २जन्मलग्ने ३ जन्मराशौ च ४जन्मनक्षत्रादिसजातीये नक्षत्रादौ जन्मर्क्षादयोऽप्यत्र। "जन्मर्क्षे निधनेऽपि च" ज्यो०त०।

**जन्मभूमि** स्त्री ६त०। जन्मस्थाने। "जननी जन्मभूमिश्च स्वर्गादपि गरीयसी" उद्भटः।
"वञ्चनीया वयं नूनं त्वया यादवनन्दन!। अथ वा प्राणिनस्तात! रमन्ते जन्मभूमिषु" हरिवं०१०२ अ०।

**जन्ममास** पु० ६त०। १जन्माधारमासे २तत्सजातीये मासे च "न जन्ममासे न च चैत्रपौषे चौरं विवाहो न च कर्णवेधः" ज्यो०त० "जन्मर्क्षे जन्ममासे वा तारायामथ जन्मनि। जन्मलग्ने भवेदूढ़ा धनाढ्या जन्मभोदये" चण्डेश्वरः। जन्ममासश्च यस्मिन् चान्द्रे मासे जन्म स मासः इत्येके जन्मतिथिमारभ्य त्रिंशत्तिथ्यात्मको मासो जन्ममास इति पक्षान्तरं यथाह मु० चि० व्याख्यायां पी० धा० "जन्मर्क्षमासतिथयो व्यतिपातभद्रावैधृत्यमापितृदिनानि तिथिक्षयर्द्धी। न्यूनाधिमासकुलिकप्रहरार्धपातविष्कम्भवज्रघटिकात्रयमेव वर्ज्यम्" मु० चि०। जन्मर्क्षमासतिथिप्रभृतयः पदार्थाः सर्वेषु कर्मसु वर्ज्या इति द्वितीयश्लोकेनान्वयः तान् पदार्थानाह जन्मर्क्षेति यस्मिन्नक्षत्रे जन्म भवेत् तज्जन्मर्क्षं यस्मिन् मासे जन्म भवेत् स जन्ममासः यस्यां तिथौ जन्म भवेत् सा जन्मतिथिः एते वर्ज्याः यदाह वसिष्ठः "स्वजन्ममासर्क्षतिथिक्षणेषु वैनाशकाद्यृक्षगणेषु भेषु। नोद्वाहयात्राभ्युदयाभिलाषी नैवाद्यगर्भं द्वितयं कदाचित्"। अयं च जन्मनक्षत्रमासतिथिनिषेधः आद्यगर्भस्यैव यदाह नारदः "जन्ममासे न जन्मर्क्षे न जन्मदिवसेऽपि वा। आद्यगर्भसुतस्यापि दुहितुर्वा करग्रहः" इति अनेनाद्यगर्भव्यतिरिक्तकन्यायास्ताद्दशवरस्य जन्मर्क्षमासतिथिषु शुभफलत्वमुक्तं भवति अतएवाह च्यवनः "जन्मर्क्षे जन्ममासे वा तारायामथ जन्मनि। जन्मलग्ने भवेदूढ़ा पुत्राढ्या पतिवल्लभा"। अथ जन्ममासलक्षणं जगन्मोहने वृद्धगर्गः "आरभ्य जन्मदिवसं यावत्त्रिंशद्दिनं भवेत्। स जन्ममासो विज्ञेयो गर्हितः सर्वकर्मसु" इति अस्यापि विशेषस्तत्रैव "जातं दिनं दूषयते वसिष्ठः षड्भेव गर्गस्त्रिदिनं तथात्रिः। तज्जन्मपक्षं किल भागुरिश्च व्रते विवाहे गमने क्षुरे चेति"। वस्तुतस्तु यस्मिंश्चान्द्रमासे चैत्रादौ जन्माभूत् स चान्द्रमासो जन्ममासतया त्याज्य इति युक्तमुत्पश्यामः "इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्त्तितः। अग्नीषोमौ स्थितौ मध्ये समाप्तौ पितृसोमकाविति" हारीतवचनात् "उपवासव्रतोद्वाहा यात्रा क्षौरोपनायनम्। तिथिवर्षादिनिखिलं चान्द्रमानेन दृश्यते" इति कश्यपोक्तेश्च। अत्र चान्द्रमासस्यैव चूड़ादौ निषेध इति स्थितम्।
जन्ममासस्य जन्मतिथिकृत्ये चान्द्रपरता क्षौरादिनिषेधे सौरपरतेति म० त० रघु०। "विवाहादौ स्मृतः सौरः" इति तद्धृतवचनात्। आचारभेदात् देशभेदाच्च व्यवस्था। उपयमशब्दे १२४४ पृ० अधिकं दृश्यम्।

**जन्मराशि** पु० ६त०। जन्मकालिकराशिसजातीये राशौ।

**जन्मवर्त्मन्** न० ६त०। योनौ त्रिका०। "योनेः शरीरम्" शा०सू० तस्याः शरीरोत्पत्तिस्थानत्वकीर्त्तनात् तथात्वम्।

**जन्मशय्या** स्त्री जन्मनिमित्तं शय्या। प्रसवार्थशय्यायाम्। "स ददर्श महात्मानं शरतल्पगतं प्रभो!। जन्मशय्यागतं वीरं कार्त्तिकेयमिव प्रभुम्" भा० भी० १२५ अ०।

**जन्मान्तर** न० अन्यत् जन्म मयू०स०। भवान्तरे परलोके। ततः गहा०भवार्थे छ। जन्मान्तरीय परजन्मभवे त्रि०। "जन्मान्तरीयतत्पापवतः सहमरणेनोद्धारः" शु०त० रघु०

**जन्माष्टमी** स्त्री कृष्णस्य जन्माधारोऽष्टमी। कृष्णजन्माष्टम्याम् कृष्णाष्टमी शब्दे २२२०पृ० विवृतिः। हरिभक्तिविलासमते तु तत्व्रतकालव्यवस्था यथा
"जन्माष्टमी पूर्वविद्धा न कर्त्तव्या कदाचन। पलवेधे तु विप्रेन्द्र! सप्तम्या चाष्टमीं त्यजेत्। सुरायाः बिन्दुना स्पृष्टं गङ्गाम्भःकलसं यथा। विना ऋक्षेण कर्त्तव्या नवमी संयुताष्टमी। सऋक्षापि न कर्त्तव्या सप्तमी संयुताष्टमी। तस्मात् सर्वप्रयत्नेन त्याज्यमेवाशुभं बुधैः। वेधे पुण्यक्षयं याति तमः सूर्योदये यथा। यच्च वह्निपुराणादौ प्रोक्तं विद्धाष्टमीव्रतम्। अवैष्णवपरं तच्च ज्ञेयं वा देवमायया"। [ जीवे अमरः।

**जन्मिन्** त्रि० जन्मास्त्यस्य व्रीह्यादि० इनि। प्राणिनि

**जन्मेजय** पु० जनमेजय+पृषो०। जनमेजयनृपे हारा०।

**जन्य** त्रि०जन-"भव्यगेयेत्यादि"पा०कर्त्तरि यत्। १जायमाने। जन-णिच्—कर्मणि यत्। २उत्पाद्ये "जन्यानां जनकः"भाषा०। कर्त्तरि यत्। ३जनके च मेदि०। जनीं वधूं वहति नयति वा यत्। ४नवोढाज्ञातिमित्रभृत्य-

स्निग्धेषु त्रि० मेदि०। ५हृष्टे, ६परीवादे, ७युद्धे च न० मेदि० "तत्र जन्यं रघोर्घोरं पार्वतीयगणैरभूत्" रघुः ८देहे पु० शब्दचि०। भावे यत्। ९जनने न०। १०मातृवयस्यायां स्त्री मेदि०। जनाय हितं यत्। ११जनहिते त्रि०। "तुष्टाव जन्यं विसृजन् जनार्दनम्" भाग० १।८।२ जन्यशब्दात् उत्करा० चतुरर्थ्यां छ। जन्यीय तन्निर्वृत्ते त्रि०। "याहीति जन्यामवदत् कुमारी" रघुः। १२प्रीतौ स्त्री हेम०। जनस्य जल्पः जन+जल्पेऽर्थे यत्। १३जनस्य जल्पे पु०।

**जन्यु** पु० जन—युच् बा०—न अनादेशः। १धातरि २वह्नौ ३प्राणिनि च मेदि०। भावे युच्। जनने पु० "अस्मतायास्तितीयोऽयं जन्युर्हि मम सर्वथा" हरिवं० १२५ अ०।

**जप** उच्चारणे वाचि च भ्वा० पर० सक० सेट्। जपति अजापीत्-अजपीत्। जजाप जेपतुः। जप्त्वा। "एतदक्षरमेतां च जपन् व्याहृतिपूर्विकाम्" मनुः। "ततः सप्रणवां सव्याहृतिकां गायत्रीं जपेत्" गोभि० "जपेत् सप्तशतीं मध्ये" चण्डीशब्दे दृश्यम्।

अभि+आभिमुख्येन जपे "चकार रक्षां कौशल्या मन्त्रैरभिजजाप च" रामा० अयो० २५।३०। अव्यक्तकथने च

उप+भेदने। (कानफुसलानि देओया) "जातारं कुरुराजस्तु शनैः कर्णमुपाजपत्" भा० वि० २२१६ "उपजप्यानुजपेत्" मनुः "उपजापः कृतस्तेन" माघः।

**जप** त्रि० जप—कर्त्तरि अच्। १जपकारके। "कर्णे जपै राहितराज्यलोभा" भट्टिः। ततस्तु विगते काले लभते जपतामपि" भा० आनु० २८अ०। काण्डपृष्ठशब्दे १८६० पृ० दृश्यम्। भावे अप्। २मन्त्रादेरावृत्तौ चण्डीशब्दे दर्शित सप्तशत्याः ३पाठे च। तत्प्रकारो यथा तन्त्रसा० "मनः संहृत्य विषयान्मन्त्रार्थगतमानसः। न द्रुतं न विलम्बञ्च जपेन्मौक्तिकपङ्क्तिवत्। जपः स्यादक्षरावृत्तिर्मानसोपांशुवाचिकैः। धिया यदक्षरश्रेण्या वर्णस्वरपदात्मिकाम्। उच्चरेदर्थमुद्दिश्य मानसः स जपः स्मृतः। जिह्वोष्ठौ चालयेत् किञ्चिद्देवतागतमानसः। किञ्चिच्छ्रवणयोग्यः स्यादुपांशुः स जपः स्मृतः। मन्त्रमुच्चारयेद्वाचा वाचिकः स जपः स्मृतः। उच्चैर्जपादिविशिष्टः स्यादुपांशुर्दशभिर्गुणैः। जिह्वाजपः शतगुणः सहस्रो मानसः स्मृतः। जिह्वाजपः स विज्ञेयः केवलम् जिह्वया बुधैः"। तत्र वर्ज्यानि "विण्मूत्रोत्सर्गशङ्कादियुक्तः कर्म करोति च। जपार्चनादिकं सर्वमपवित्रं भवेत् प्रिये!। मलिनाम्बरकेशादिमुखदौर्गन्ध्यसंयुतः। यो जपेत्तं दहत्याशु देवता गुप्तिसंस्थिता। आलस्यं जृम्भणं निद्रां क्षुतं निष्ठीवनं भयम्। नीचाङ्गस्पर्शनं कोपं जपकाले विवर्जयेत्"। देवताभेदे करमालाविशेषनियमो यथा

"तर्जनीमध्यमानामा कनिष्ठा चेति ताः क्रमात्। तिस्रोऽङ्गुल्यस्त्रिपर्वाणो मध्यमा चैकपर्विका। पर्वद्वयं मध्यमाया मेरुत्वेनोपकल्पयेत्। अनामामध्यमारभ्य कनिष्ठादित एव च। तर्जनीमूलपर्यन्तं दश पर्वसु संजपेत्। अनामामूलमारभ्य कनिष्ठादित एव च। तर्जनीमध्यपर्यन्तमष्टपर्वसु संजपेत्"। एतद्वचनन्तु अष्टोत्तरशतादिविषयम्। शक्तिविषये पुनः। "अनामिकात्रयं पर्व कनिष्ठादित्रिपर्विका। मध्यमायाश्च त्रितयं तर्जनीमूलपर्वणि। तर्जन्यग्रे तथा मध्ये यो जपेत् स तु पापकृत्। अनामामूलमारभ्य प्रादक्षिण्यक्रमेण च। मध्यादिमूलपर्यन्तमष्टपर्वसु संजपेत्"। श्रीविद्याविषये तु। "अनामामध्यमयोश्च मूलापञ्च द्वयं द्वयम्। कनिष्ठायाश्च तर्जन्यास्त्रयं पर्व सुरेश्वरि!। अनामामध्यमयोश्च मेरुः स्यात् द्वितयं शुभम्। प्रदक्षिणक्रमाद्देवि! जपेत् त्रिपुरसुन्दरीम्। कनिष्ठामूलमारभ्य प्रादक्षिण्यक्रमेण च। तर्जनीमूलपर्यन्तमष्टपर्वसु संजपेत्। इदमपि अष्टोत्तरशतादिविषयम्। "अङ्गुलीर्न वियुञ्जीत किञ्चिदाकुञ्चिते तले। अङ्गुलीनां वियोगाच्च छिद्रे च स्रवते जपः। अङ्गुल्यग्रे च यज्जप्तं यज्जप्तं मेरुलङ्घने। पर्वसन्धिषु यज्जप्तं तत्सर्वं निष्फलं भवेत्। गणनाविधिमुल्लङ्घ्य योजयेत्तज्जपं यतः। गृह्णन्ति राक्षसास्तेन गणयेत् सर्वथा बुधः। हृदये हस्तमारोप्य तिर्य्यक् कृत्वा कराङ्गुलीः। आच्छाद्य वाससा हस्तौ दक्षिणेन सदा जपेत्"। जपसंख्यासाधने द्रव्यभेदनिषेधो यथा। "नाक्षतैर्हस्तपर्वैर्वा न धान्यैर्न च पुष्पकैः। न चन्दनैर्मृत्तिकया जपसंख्यान्तु कारयेत्"। तत्र विहितद्रव्याणि "लाक्षा कुशीदसिन्दूरं गोमयञ्च करीषकम्। एभिर्निर्माय वटिकां जपसंख्यान्तु कारयेत्"। वर्णमाला जपनियमो यथा। "सबिन्दुं वर्णमुच्चार्य्य पश्चान्मन्त्रं जपेद्बुधः। अकारादिलकारान्तं बिन्दुयुक्तं विभाव्य च। वर्णमाला समाख्याता अनुलोमविलोमतः। पञ्चाशल्लिपिभिर्माला विहिता सर्वकर्मसु। अका-

गादिलकारान्ता वर्णमाला प्रकीर्त्तिता। क्षार्णं मेरुमुखं तत्र कल्पयेन्मुनिसत्तम!। अनया सर्वमन्त्राणां जपः सर्वसमृद्धिदः"। जपफलञ्च "जपनिष्ठो द्विजश्रेष्ठोऽखिलयज्ञफलं लभेत्। सर्वेषामेव यज्ञानां जायतेऽसौ महाफलः जपेन देवता नित्यं स्तूयमाना प्रसीदति। प्रसन्ना विपुलान् भोगान् दद्यान्मुक्तिञ्च शाश्वतीम्। यक्षरक्षःपिशाचाश्च ग्रहाः सर्पाश्च भीषणाः। जपन्तं नोपसर्पन्ति भयभीताः समन्ततः। यावन्तः कर्मयज्ञाः स्युः प्रदिष्टानि तपांसि च। सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम्। माहात्म्यं वाचिकस्यैतत् जपयज्ञस्य कीर्त्तितम्। तस्माच्छत गुणोपांशुः सहस्रो मानसः स्मृतः" तन्त्रसा०। "नोच्चैर्जपञ्च संकुर्यात् रहःकुर्यादतन्द्रितः। समाहितमनास्तूष्णीं मनसा वापि चिन्तयेत्। विधियज्ञात् जपयज्ञो विशिष्टो दशभिर्गुणैः। उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः। विना दर्भैस्तु यत्स्नानं यच्च दानं विनोदकम्। असंख्यातन्तु यज्जप्तं सर्वं तदफलं स्मृतम्। मुक्ताफलैर्विद्रुमेण रुद्राक्षैः स्फटिकेन वा। गणना सर्वथा कार्या सम्यगङ्गुलिपर्वभिः। हिरण्यरत्नमणिभिर्जप्ता शतगुणं भवेत्। सहस्रगुणमिन्द्राक्षैः पद्माक्षैरयुतं भवेत्। नियुतं वापि रुद्राक्षैर्भद्राक्षैस्तु न संशयः। पुत्रजीवकजप्यस्य परिसंख्या न विद्यते। दशभिर्जन्मजनितं शतेन च पुराकृतम्। नियुतं तु सहस्रेण गायत्री हन्ति दुष्कृतम्। प्राङ्मुखो वर्त्तयेत् मालां सहस्रं शतमेव वा" अग्निपु०।

जपाङ्गमन्त्रचैतन्यादिकज्ञानमावश्यकं तत्र मन्त्रचैतन्यं यथा कुब्जिकातन्त्रे पञ्चमपटले। "श्रीपार्वत्युवाच। भगवन्! सर्वदेवेश! लोकानां हितकारक। चतुर्वर्गप्रद देव! चैतन्यं मे प्रकाशय। शङ्कर उवाच। शृणु देवि! प्रवक्ष्यामि चैतन्यं परमाद्भुतम्। रहस्यं परमं पुण्यं गोपनीयं त्वया पुनः। चिच्चक्राच्चिन्तितं देवि! परिणामक्रमेण तु। वर्णभावं समासज्य निर्मलं विमलात्मकम्। षट्चक्रञ्च तथा भित्त्वा शब्दरूपं सनातनम्। नादविन्दुसमायुक्तं चैतन्यं परिकीर्त्तितम्। अथ वान्यप्रकारेण श्रूयतां पद्मलोचने!। विना येन न सिध्येत्तु जपपूजादिकिञ्चन। अनाहतस्य मध्ये तु ग्रथितं वर्णमुत्तमम्। सुषुम्णावर्त्मना देवि! कण्ठदेशाद्विनिर्गतम्। चैतन्यञ्च महेशानि! योगिनां योगरूपकम्। सहस्रारे वर्णरूपं परिणाम क्रमेण तु। कर्णिकामध्यसंस्थे तु नादविन्दुसमन्वितम्। एवं संचिन्तयेद्देवि! चैतन्यञ्च पुनः पुनः। मन्त्रवर्णांश्च चिच्चक्रे ग्रथितानि महेश्वरि!। तानि सञ्चिन्तयेद्देवि! सहस्रारदले तथा। चैतन्यमन्त्ररूपा च चैतन्यानन्ददायिनी। चैतन्यनादशक्तिश्च चैतन्यवर्णरूपकम्। मणिपूरे सदा चिन्त्यं मन्त्राणां प्राणरूपकम्। अथवान्यप्रकारेण श्रूयतां वरवर्णिनि!। कामबीजं (क्लीं) रमाबीजं (श्रीं) शक्तिबीजं (ह्रीं) सुरेश्वरि!। एतानि पूर्वमुच्चार्य मातृकां तदनन्तरम्। पुटितं मूलमन्त्रञ्च शतमष्टोत्तरं जपेत्। कोटिकोटिगुणञ्चैव लभते नात्र संशयः। अथवान्य प्रकारेण चैतन्यं शृणु पार्वति!। येन विज्ञातमात्रेण परमं पश्यति ध्रुवम्। सूर्यमण्डलमध्यस्थं चिन्तयेन्मूलमन्त्रकम्। अष्टोत्तरशतं जप्यं मूलविद्यास्वरूपकम्। गुरुं सञ्चिन्तयेत्तत्र शिवरूपं सनातनम्। शक्तिञ्च चिन्तयेत्तत्र ब्रह्मरूपां सनातनीम्। एवं सञ्चिन्तयेद्यस्तु जपेद्वा सुरसुन्दरि!। नासाध्यं तस्य लोकेऽस्मिन् सिद्धिर्देवि! करे स्थिता"। तथा प्रथमपटले "मन्त्रार्थं मन्त्रचैतन्यं योनिमुद्रां न वेत्ति यः। न सिद्ध्यति वरारोहे! कल्पकोटिशतैरपि। शतकोटिजपेनापि तस्य विद्या न सिद्ध्यतीति"। सरस्वतीतन्त्रे "कथयामि महाभन्त्रं मन्त्रार्थञ्च महेश्वरि!। येन विज्ञातमात्रेण सर्वसिद्धीश्वरो भवेत्। केवलं भावशुद्ध्या च मन्त्रार्थं प्राणवल्लभे!। केवलं ज्ञानयोगेन जीवन्मुक्तो भवेद्ध्रुवम्। काली तारा महाविद्या षोडशी भुवनेश्वरी। भैरवी छिन्नमस्ता च विद्या धूमावती प्रिये!। वगला चैव मातङ्गी कमला च प्रकीर्त्तिता। ब्रह्मविष्णुमहेशाद्यैः सर्वैर्देवैर्नमस्कृता। भोगदा मोक्षदा देवी कोटिब्रह्माण्डगोपिता। अस्याः स्मरणमात्रेण जीवन्मुक्तस्तु साधकः"। वरदातन्त्रे षष्ठपटले "शिव उवाच। मन्त्रार्थं कथयाम्यद्य शृणुष्व परमेश्वरि!। विना येन न सिध्येत्तु साधनैः कोटिभिः शिवे!। आदौ प्रसादबीजस्य मन्त्रार्थं शृणु पार्वति!। शिववाची हकारस्तु औकारः स्यात् सदाशिवः। शून्यं दुःखहरन्तु स्यात् तस्मात्तेन शिवं यजेत्। ह्रौँ। दं दुर्गावाचकं देवि! उकारश्चापि रक्षणे। विश्वमाता नादरूपा। कुर्वार्थो विन्दुरूपकः। तस्मात्तेनैव वीजेन दुर्गामाराधयेत् शिवे!। दुँ। "क काली ब्रह्म र प्रोक्तं महामायार्थकश्च ई। विश्वमातार्थकोनादो विन्दुर्दुःखहरार्थमः। तेनैव कालिका

देवीं पूजयेद्दुःखशान्तये । क्रीम् । ककारः शिववाची स्यात् रेफः प्रकृतिरुच्यते । महामायार्थ ईशब्दो नादो विश्वप्रसूः स्मृतः । दुःखहरार्थकोविन्दुर्भुवनां तेन पूजयेत्" ह्रीम् । महालक्ष्म्यर्थकः शः धनार्थो रेफ उच्यते । ई तुष्ट्यर्थोऽपरो नादो विन्दुर्दुःखहरार्थकः । लक्ष्मीदेव्या बीजमेतत्तेन देवीं प्रपूजयेत् । श्रीँ । सरस्वत्यर्थ ऐशब्दो विन्दुर्दुःखहरार्थकः । सरस्वत्याबीजमेतत्तेन वाणीं प्रपूजयेत् । ऐँ । कः कामदेव उद्दिष्टोऽप्यथवा कृष्ण उच्यते । ल इन्द्र ई तुष्टिवाची सुखदुःखप्रदश्च अम् । कामबीजार्थ उक्तस्ते तव स्नेहान् महेश्वरि । क्लीँ । हः शिवः कथितो देवि ! ऊ भैरव इहोच्यते । परार्थो नादशब्दस्तु विन्दुर्दुःखहरार्थकः । वर्मबीजत्रयोह्यत्र कथितस्तव यत्नतः । हूँ । गणेशार्थे गउक्तस्ते विन्दुर्दुःखहरार्थकः । गंबीजार्थस्तु कथितस्तव स्नेहान् महेश्वरि !। गँ । ग गणेशो व्यापकार्थो लकारस्तेज औमतः । दुःखहरार्थकोविन्दुर्गणेशं तेन पूजयेत् । ग्लौँ । क्षौं नृसिंहो ब्रह्म र ऊर्द्ध्वदन्तार्थकश्च औः। दुःखहरार्थको विन्दुर्नृसिंहं तेन पूजयेत् । क्ष्रौँ । नामादिवर्णाः सर्वेषां नामतश्च स्वयम्भुवा । तेनैवार्थमनुजानीयादर्थलभ्यन्तु चिन्तयेत् । यथायथं विभक्त्यन्तं मन्त्रार्थं चिन्तयेच्छिवे !। तत्तद्वर्णादियोगेन संक्षेपात् कथितं त्वयि । दुर्गोत्तारणवाचीतारकार्थस्तकारकः । मुक्त्यर्थो रेफ उक्तोऽत्र महामायार्थकश्च ई । विश्वमात्रर्थकोनादो विन्दुर्दुःखहरार्थकः । वधूबीजार्थ उक्तोऽत्र तव स्नेहान् महेश्वरि !। स्त्रीँ । यत्र विन्दुद्वयं मन्त्रे एकं दुःखहरार्थकम् । अन्यत् सुखप्रदं देवि ! ज्ञात्वा चार्थं विचिन्तयेत् । यत्र विन्दुद्वयं मन्त्रे अन्यत् पूर्णार्थकं मतम् । स्वाहामात्रर्थका देवी परार्था वा प्रकीर्त्तिता । शक्रमाता वषट्प्रोक्ता हरिप्रियार्थका गिरा । सुरार्था फट्द्वयश्चैव विद्धि बीजं विनिर्दिशेत् । यंबीजं वायुवाचि स्यात् लमैन्द्रं परिकीर्त्तितम् । अनेकाक्षरबीजे च स्वस्वबीजं स्वनामकम् । एवं ज्ञात्वा महेशानि ! मन्त्रार्थं परिचिन्तयेत् । एकबीजद्वयं यत्र पृथगर्थं प्रकल्पयेत् । बीप्सार्थं वा महेशानि ज्ञात्वा मन्त्रं जपेत्प्रिया । इति ते कथितो देवि मन्त्रार्थः परमेश्वरि ! ईंबीजेनैव पुटितं मूलमन्त्रं जपेद्यदि । तदेव मन्त्रचैतन्यं भवत्येव सुनिश्चितम्" । सरस्वतीतन्त्रे प्रथमपटले "ईश्वर उवाच । मन्त्रार्थं परमेशानि ! सावधानावधारय । मूलाधारे मूलविद्यां भावयेदिष्टदेवताम् । शुद्धस्फटिकसङ्काशां भावयेत् परमेश्वरीम् । भावयेदक्षरश्रेणीमिष्टविद्यां सनातनीम् । मुहूर्त्तार्द्धं विभाव्यैतां पश्चाद्ध्यानपरो भवेत् । ध्यानं कृत्वा महेशानि ! मुहूर्त्तार्द्धं ततः परम् । ततोजीवो महेशानि ! मनसा कमलेक्षणे !। स्वाधिष्ठानं ततोगत्वा भावयेदिष्टदेवताम् । बन्धूकारुणसङ्काशां जवासिन्दूरसन्निभाम् । विभाव्य अक्षरश्रेणीं पद्ममध्यगतां पराम् । ततो जीवः प्रसन्नात्मा पक्षिणा सह सुन्दरि !। मणिपूरं ततो गत्वा भावयेदिष्टदेवताम् । विभाव्य अक्षरश्रेणीं पद्ममध्यगतां पराम् । शुद्धस्फटिकसङ्काशां शिरःपद्मोपरिस्थिताम् । ततोजीवो महेशानि ! पक्षिणा सह पार्वति !। हृत्पद्मं प्रययौ शीघ्रं नीरजायतलोचने !। इष्टविद्यां महेशानि! भावयेत् कमलोपरि । विभाव्य अक्षरश्रेणीं महामरकतप्रभाम् । ततोजीवो वरारोहे ! विशुद्धं प्रययौ प्रिये !। तत्पद्मगह्वरं गत्वा पक्षिणा सह पार्वति !। इष्टविद्यां महेशानि! आज्ञायां परिचिन्तयेत् । पक्षिणा सह देवेशि! खञ्जनाक्षि ! शुचिस्मिते !। इष्टविद्यां महेशानि ! साक्षाद्ब्रह्मस्वरूपिणीम् । विभाव्य अक्षरश्रेणीं हरिद्वर्णां वरानने !। आज्ञाचक्रे महेशानि! षट्चक्रे ध्यानमाचरेत् । षट्चक्रे परमेशानि! ध्यानं कृत्वा शुचिस्मिते !। ध्यानेन परमेशानि ! यद्रूपं समुपस्थितम् । तदेव परमेशानि! मन्त्रार्थं विद्धि पार्वति" अथ कुल्लुकादि । सरस्वतीतन्त्रे तृतीयपटले "तारायाः कुल्लुका देवि ! महानीलसरस्वती । पञ्चाक्षरी कालिकायाः कुल्लुका परिकीर्त्तिता । कालीकूर्चं वधूमाया फट्कारान्ता महेश्वरि !। छिन्नायास्तु महेशानि ! कुल्लुकाष्टाक्षरी भवेत् । वज्रवैरोचनीये च अन्ते वर्म च पूरयेत् । सम्पत्प्रदायाः प्रथमं भैरव्याः कुल्लुका भवेत् । श्रीमत्त्रिपुरसुन्दर्याः कुल्लुका द्वादशाक्षरी । वाग्भवं प्रथमं बीजं कामबीजमनन्तरम् । लज्जाबीजं ततः पश्चात् त्रिपुरेति ततःपरम् । भगवतीति ततः पश्चादन्ते ठद्वयमुद्धरेत् । अथ कामबीजस्य कुल्लुका परिकीर्त्तिता । प्रासादबीजं शम्भोश्च मञ्जुघोषे षडक्षरम् । एकाक्षरी भुवनेश्वर्याः विष्णोः स्यादष्टवर्णकम् । नमोनारायणायेति प्रणवाद्यस्य कुल्लुका । मातङ्ग्याः प्रथमं बीजं माया धूमावतीं प्रति । बालायाश्च वधूबीजं लक्ष्म्याश्च निजबीजकम् । सरस्वत्या वाग्भवञ्च अन्नदाया अनङ्गक !। अपरेषाञ्च

देवानां मन्त्रमात्रं प्रकीर्त्तितम् । इयन्ते कथिता देवि ! संक्षेपात् कुल्लुका मया । अज्ञात्वा कुल्लुकामेतां योजपेदधमः प्रिये ! । पञ्चत्वमाशु लभते सिद्धिहानिश्च जायते । तथा जपादिकं सर्वं निष्फलं नात्र संशयः । तस्मात् सर्वप्रयत्नेन धारयेन्मूर्द्ध्नि कुल्लुकाम्” । तथा “विप्राणां प्रणवः सेतुः क्षत्रियाणां तथैव च । वैश्यानाञ्चैव फट्कारो माया शूद्रस्य कथ्यते । अजप्त्वा हृदि देवेशि ! यो वै मन्त्रं समुच्चरेत् । सर्वेषामेव मन्त्राणामधिकारोन तस्य हि । महासेतुश्च देवेशि ! सुन्दर्य्या भुवनेश्वरी । कालिकायाः स्वबीजञ्च तारायाः कूर्च्चबीजकम् । अन्यासान्तु वधूबीजं महासेतुर्वरानने ! । आदौ जप्त्वा महासेतुं जपेन्मन्त्रमनन्यधीः । धने धनेशतुल्योऽसौ वाग्मितायां वागीश्वरोपमः । युद्धे कृतान्त सदृशो नारीणां मदनोपमः । जपकालो भवेत्तस्य सर्वः कालो न संशयः । अथ वक्ष्यामि निर्वाणं शृणुष्वावहितानघे ! । प्रणवं पूर्वमुच्चार्य्य मातृकाद्यं समुच्चरेत् । ततो मूलं महेशानि ! ततोवाग्भवमुद्धरेत् । मातृकास्तु समस्तास्तु पुनः प्रणवमुद्धरेत् । एवं पुटितमूलन्तु प्रजपेन्मणिपूरके । एवं निर्वाणमीशानि ! यो न जानाति पामरः । कल्पकोटिसहस्रेण तस्य सिद्धिर्न जायते” । अथ मुखशोधनम् । पञ्चमपटले “ईश्वर उवाच । अपरैकं प्रवक्ष्यामि मुखशोधनमुत्तमम् । यन्न कृत्वा महादेवि ! जपपूजा वृथा भवेत् । अशुद्धजिह्वया देवि ! योजपेत् स तु पापकृत् । तस्मात्सर्वप्रयत्नेन जिह्वाशोधनमाचरेत् । महात्रिपुरसुन्दर्य्या मुखस्य शोधनं शुभे ! । श्रीबीजं प्रणवो लक्ष्मीस्तारः श्रीः प्रणवस्तथा । इमं षडक्षरं मन्त्रं सुन्दर्य्या दशधा जपेत् । शृणु सुन्दरि ! श्यामाया मुख शोधनमुत्तमम् । निजबीजत्रयं देवि ! प्रणवत्रितयं पुनः । कामत्रयं वह्निबिन्दुरतिचन्द्रयुतं पृथक् । एषा नवाक्षरी विद्या मुखशोधनकारिणी । तारायाः शृणु चार्वङ्गि ! अपूर्वमुखशोधनम् । जीवनं मध्यमं लज्जां भुवनेशीं ततः प्रिये ! । त्र्यक्षरीयं महाविद्या विज्ञेयाऽमृतवर्षिणी । दुर्गायाः शृणु चार्वङ्गि ! मुखशोधनमुत्तमम्; द्वादशस्वरमुद्धृत्य बिन्दुयुक्तं त्रयं तथा । अपरैकं प्रवक्ष्यामि बगलामुखशोधनम् । वाग्भवं भुवनेशीञ्च वाग्बीजं सुरवन्दिते ! । मातङ्ग्याः शोधनं देवि ! अङ्कुशं वाग्भवन्तथा । बीजञ्चाङ्कुशमेतद्धि विज्ञेयं त्र्यक्षरीयकम् । लक्ष्म्याश्च शोधनं देवि ! श्रीबीजं कमलानने !।

दुर्गायाः शोधनं माया वाग्बीजपुटिता भवेत् । दुर्गेस्वाहा पुनर्म्मायां वाग्बीजञ्च पुनश्च वाक् । प्रणवं दान्तमुद्धृत्य वामकर्णविभूषितम् । पुनः प्रणवमुद्धृत्य धनदामुखशोधनम् । एवं मन्त्रं महेशानि ! धूमावत्याभवेदपि । प्रणवो बिन्दुमान् देवि ! पञ्चान्तकोणशेषितुः । वेदादिगगनं वह्निमनुयुग्मन्तु चन्द्रवत् । त्र्यक्षरः परमेशानि ! । विष्णोश्च मुखशोधनम् । कन्यासां प्रणवं देवि ! बालादीनां प्रकीर्त्तितम् । स्त्रीणाञ्च शूद्रतुल्यं हि मुखशोधनमीरितम् । मुखशोधनमात्रेण जिह्वाऽमृतमयी भवेत् । अन्यथा मुखविड्युक्ता जिह्वा भवति सर्व्वदा । भक्ष्यैर्दूषिता जिह्वा मिथ्यावाक्येन दूषिता । कलहैर्दूषिता जिह्वा तत्कथं प्रजपेन्मनुम् । तच्छोधनमनाचर्य्य न जपेत् पामरः क्वचित् । शैवशाक्तवैष्णवादेः सर्वस्यावश्यमेव वा । अन्यथा प्रजपेन्मन्त्रं मोहेन यदि भाविनि ! । सर्वं तस्य वृथा देवि ! मन्त्रसिद्धिर्न जायते । अन्ते नरकगामी च भवेत् सोऽपि न चान्यथा । देवो यदि जपेन् मन्त्रं अकृत्वा मुखशोधनम् । तपनं तस्य देवेशि ! किं पुनर्म्मर्त्यवासिनाम्” । षष्ठपटले “ईश्वर उवाच । अथ वक्ष्यामि देवेशि ! प्राणयोगं शृणुष्व मे । विना प्राणं यथा देहः सर्वकर्मसु न क्षमः । विना प्राणं तथा मन्त्रः पुरश्चर्य्याशतैरपि । मायया पुटितोमन्त्रः सप्तधा जपतः पुनः । सप्राणो जायते देवि ! सर्वत्रायं विधिःस्मृतः । तथैव दीपनीं वक्ष्ये सर्वमन्त्रे च भाविनि ! । अन्धकारे गृहे यद्वत् किञ्चित् प्रतिभासते । दीपनीरहितो मन्त्रस्तथैव परिकीर्त्तितः । वेदादिपुटितं मन्त्रं सप्तवारं जपेत्पुनः । दीपनीयं समाख्याता सर्वत्र परमेश्वरि ! । वेदादिपुटितं कृत्वा प्रयत्नेन सुरेश्वरि ! । दशधा प्रजपेन्मन्त्रं सूतकद्वयमुक्तये । अथोच्यते जपस्यात्र क्रमस्य परमाद्भुतः । यं कृत्वा सिद्धिसंघानामधिपोजायते नरः । ननिर्गुर्वादिनामादौ नमो मन्त्रशिखां भजेत् । ततोऽपि मन्त्रचैतन्यं मन्त्रार्थभावना ततः । गुरुध्यानं शिरःपद्मे हृदीष्टध्यानमाचरेत् । कुल्लुकाञ्च ततः सेतुं महासेतुमनन्तरम् । निर्वाणञ्च ततो देवि ! योनिमुद्राविभावना । अङ्गन्यासं प्राणायामं जिह्वाशोधनमेव च । प्राणयोगं दीपनीञ्च अशौचभङ्गमेव च । भ्रूमध्ये वा नसोरग्रे दृष्टौ सेतुं जपेत् पुनः । सेतुमशौचभङ्गञ्च प्राणायाममिति क्रमः” । चतुर्थपटले । “कुल्लुकां मूर्द्ध्नि संजप्य हृदि सेतुं विचिन्तयेत् । महासेतुं विशुद्धौ

च कण्ठदेशं समुद्धरेत्। मणिपूरे तु निर्वीजं महाकुण्डलिनीमधः। स्वाधिष्ठाने कामबीजं राकिणीमूर्द्धि संस्थितम्। विचिन्त्य विधिवद्देवि! मूलाधारान्तिके शिवे!। विशुद्धान्तं महादेवि! विसतन्तुतनीयसीम्। वेदिस्थानं हि जीवात्मं ब्रह्मन्नावृतं मुहुः"।

**जपन** न० जप—भावे ल्युट्। जपे। "ससप्ताह एव वेदान्ते वर्त्तते जपनं प्रति" भा० शा० १०१६ अ०।

**जपमाला** स्त्री० जपस्य जपार्था माला। जपसाधने मालायां तद्विधानादि अक्षमालाशब्दे ४२ पृ० उक्तप्रायमधिकमत्र प्रदर्श्यते।

निम्नातन्त्रे नवमपटले "ईश्वर उवाच। अक्षमालां समाश्रित्य मातृकावर्णरूपिणीम्। अथ मुक्ताफलमयी भोगमोक्षप्रदायिनी। राजवश्यकरी सर्वसिद्धिदा नात्र संशयः। यथा मुक्ताफलमयी तथा स्फटिक निर्मिता। रुद्राक्षमाला गिरिजे! मोक्षदा च सर्वसिद्धिदा। प्रवालघटिता माला वश्यदा कर्मसाधिनी। माणिक्यरचिता माला साम्राज्यफलदायिनी। पुत्रजीवकमाला तु विद्यालक्ष्मीप्रदायिनी। पद्मबीजाक्षमाला तु महालक्ष्मीप्रदायिनी। रक्तचन्दनबीजाक्षमालावश्यफलप्रदा"। मुण्डमालातन्त्रे द्वितीयपटले "स्फाटिकैर्मोक्षलाभः स्यात् रुद्राक्षैर्वरपुत्रदा। जीवपुत्रैश्च धनदा पापघ्नी भोगमोक्षदा। शुद्धस्फटिकमाला तु महासम्पत्प्रदा प्रिये!। श्मशानधुस्तुरैर्माला एका धूमावतीविधौ"। तथा। "मणिरत्नप्रवालैश्च हेमराजतसम्भवा। माला कार्या कुशग्रन्थ्या सर्वभोग फलप्रदा"। समयाचारतन्त्रे द्वितीयपटले "पूर्व्वाम्नायादि सर्वेषां मालां शृणु यथाक्रमम्। जप्त्वा येनाशु लभते फलं देवैश्च दुर्लभम्। अक्षमाला प्रथमतो मातृकार्णस्वरूपिणी। अथ मुक्तामयी माला रतिमोक्ष फलदा। सर्वसिद्धिकरी माला सर्वराजवशङ्करी। प्रवालमालावश्यार्थं सर्वकार्यफलप्रदा। माणिक्यरचिता माला साम्राज्यफलदायिनी। पद्माक्षरचिता माला यशोलक्ष्मीप्रदा सदा। सुवर्णरचिता माला सर्वकामफलप्रदा। रक्तचन्दनमाला च भोगदा मोक्षदा भवेत्। रुद्राक्षरचिता माला सर्वकामफलप्रदा। सर्वमालां प्रपूज्याथ चन्दनेन विलेपिताम्। समाश्रित्य जपेन्नित्यं यथोक्तफलमाप्नुयात्। एता मालाश्च सुभगे! पश्चिमाम्नायेषु पूजिताः" मुण्डमालातन्त्रे "देव्युवाच अक्षमाला तु कथिता यत्नतो न प्रकाशिता। अक्षमालेति किं नाम फलं वा किं वदस्व मे। ईश्वर उवाच अक्षमाला तु देवेशि! काम्यभेदादनेकधा। भवति शृणु तत् प्राज्ञे! विस्तराद्युच्यते मया। अनुलोमविलोमेन क्लृप्तया वर्णमालया। आदिक्षान्तलादिआन्तक्रमेण परमेश्वरि!। क्षकारं मेरुरूपञ्च लङ्घयेन्न कदाचन"। मेरुलङ्घनदोषस्तु तत्रैव "मेरुहीना च या माला मेरुलङ्घ्या च या भवेत्। अशुद्धप्रतिकाशा च सा माला निष्फला भवेत्। चित्रिणी बिसतन्त्वाभा ब्रह्मनाडीगतान्तरा। तया संग्रथिता माला सर्वकामफलप्रदा। अष्टोत्तरशतं जप्त्वा आदिबीजं समाचरेत्। ककारलृद्वयं यत्तु तद्धि क्लीवं प्रचक्षते। वर्गाणामष्टभिर्वापि काम्यभेदात् क्रमेण तु अकचटतपयशा अष्टौ वर्गाः प्रकीर्त्तिताः"। मालयाजपविशेषस्तु निम्नातन्त्रे "अक्षमालां प्रपूज्याथ चन्दनेन सुलोचने!। समाश्रित्य जपेद्विद्वान् लक्षमात्रमनन्यधीः। योषितः सकला वश्याः सप्तद्वीपस्य पार्वति!। ततो द्वितीयलक्षञ्च प्रजपेद्वीरवन्दिते!। पातालतलनागेन्द्रकन्या वश्या भवन्ति हि। ततो लक्षत्रयं भद्रे! प्रजपेत् साधकोत्तमः। देवाङ्गना भवन्त्येव वश्यास्तस्य महेश्वरि!। महापातककोटीश्च नाशयेत् कमलेक्षणे! अभिमानेन सौभाग्यं सौख्यं सौन्दर्य्यमाप्नुयात्। चतुर्लक्षं प्रजप्याथ महायोगीश्वरो भवेत्। पञ्चलक्षजपाद्देवि! कुबेरपदवीं व्रजेत्। षड्लक्षं तु प्रजप्याथ देवपूज्यो भवेन्नरः। अणिमाद्यष्टसिद्धीनां नायको नात्र संशयः। राजानो वशगास्तस्य योषितश्च विशेषतः। नवलक्षं महादेवि! योजयेत् साधकोत्तमः। रुद्रमूर्त्तिः स्वयं साक्षात् कर्त्ता हर्त्ता न संशयः"। समयाचारतन्त्रे "उत्तराम्नाये या माला भूयः शृणु वदामि ते। अथ वर्णमयी माला सर्व्वोत्कृष्टा च सा मता। महाशङ्खमयी माला वाञ्छितार्थफलप्रदा। उडुम्बरफलस्याथ रुद्राक्षस्याथ कृता मता"। योगिनीतन्त्रे पूर्वखण्डे द्वितीय पटले "ईश्वर उवाच। वर्णमाला शुभा प्रोक्ता सर्वमन्त्रप्रदीपनी। तस्याः प्रतिनिधिर्देवि! महाशङ्खमयी शुभा। महाशङ्खः करे यस्य तस्य सिद्धिरदूरतः। तदभावे वीरवन्द्ये! स्फाटिकी सर्वसिद्धिदा"। मणिभेदेन फलभेदमाह मुण्डमालातन्त्रे "त्रिंशतैश्वर्य्यफलदा पञ्चविंशैस्तु मोक्षदा। चतुर्द्दशमयी मोक्षदायिनी भोगवर्द्धिनी। दशपञ्चात्मिका माला मारणोच्चाटने स्थिता। स्तम्भने मोहने

वशेऽत्र रोधने अञ्जने तनोः । पादुकासिद्धिमन्त्रे च शतसंख्या प्रकीर्त्तिता । अष्टोत्तरशतं कुर्य्यादथवा सर्व्वकामदम्” । योगिनीतन्त्रे “मणिसंख्या महादेवि ! मालायाः कथयामि ते । पञ्चविंशतिभिर्म्मोक्षं पुष्ट्यै तु सप्तविंशतिः । त्रिंशद्भिर्धनसिद्धिः स्यात् पञ्चाशन्मन्त्रसिद्धये । अष्टोत्तरशतैः सर्व्वसिद्धिरेव महेश्वरि ! ॥ एतत्साधारणं प्रोक्तं विशेषं कामिनां वदे । शिव उवाच । दन्तमाला जपे कार्य्या गले धार्य्या न्मणां शुभा । दशनैर्यदि कर्त्तव्या संख्या दन्तस्य ते प्रिये ! ॥ सर्व्वसिद्धिप्रदा माला राजदन्तेन मेरुणा । अन्यत्रापि महेशानि ! मेरुत्वेनैव साधयेत् । नित्यं जपं करे कुर्य्यान्न काम्यमवरोधनात् । काम्यमपि करे कुर्य्यान्मालाऽभावे प्रियंवदे ! ॥ अनाङ्गुल्या जपं कुर्य्यात् अङ्गुष्ठाङ्गुलिभिर्जपेत् । अङ्गुष्ठेन विना कर्म्म कृतं तन्निष्फलं भवेत्” । उत्पत्तितन्त्रे प्रथमपटले “नित्यं नैमित्तिकं काम्यं करे कुर्य्याद्विचक्षणः । करमाला महादेवि ! सर्व्वदोषविवर्जिता । छिन्नभिन्नादिदोषोऽपि करे नास्ति कदाचन । अक्षयस्तु करो देवि ! माला भवति तादृशी । ग्रन्थिः सा कुण्डलीशक्तिः पञ्चाशद्वर्णरूपिणी । अतएव महेशानि ! करमाला महाफला” । योगिनीतन्त्रे “तथा तथातो ग्रथनं मालानां तत्र शोधनम् । पूजां विधाय भक्त्या तु शुचिः पूर्व्वमुपोषितः । विजने ग्रथयेन्मौनी स्वयं मालाञ्च साधकः । कृतनित्यक्रियः शुद्धः शुद्धवर्णेषु च मन्त्रवित् । यथाकालं यथाकाममक्षाण्यानीय यत्नतः । अन्योऽन्यसमरूपाणि नातिस्थूलकृशानि च । कीटादिभिरदुष्टानि न जीर्णानि नवानि च । गव्यैस्तु पञ्चभिस्तानि प्रक्षाल्य च पृथक् पृथक् । पृथ्वीदेवेन्द्रपुत्राद्यैर्निर्म्मितं ग्रन्थिवर्जितम् । त्रिगुणं त्रिगुणीकृत्य पट्टसूत्रमथापि वा । शुक्लं रक्तं तथा कृष्णं शान्तिवश्याभिचारके । सूत्रं संपातयेद्विद्वान् तत्प्रक्षाल्य च पूर्व्ववत् । मालामेकैकमादाय सूत्रे संपातयेत् सुधीः । मुखे मुखन्तु संयोज्य पुच्छे पुच्छन्तु योजयेत् । गोपुच्छसदृशी कार्य्याथ वा सर्पाकृतिर्भवेत् । तत्सजातीयमेकाक्षं मेरुत्वेनाग्रतोन्यसेत् । एकैकमालामध्ये तु ब्रह्मग्रन्थिं प्रकल्पयेत्” । उत्पत्तितन्त्रे षष्टिपटले “क्रमोत्क्रमात्कृतावृत्त्या पञ्चाशद्वर्णमालया । यो जपः स तु विज्ञेय उत्तमः परिकीर्त्तितः । अकारादि क्षकारान्ता वर्णमाला प्रकीर्त्तिता” । अधिकं जपशब्दे द्रष्टव्यम् ।

तद्ग्रथनप्रकारादि तन्त्रसारे दर्शितं यथा सनत्कुमारीये “कार्पाससम्भवं सूत्रं धर्म्मकामार्थमोक्षदम् । तच्च विप्रेन्द्रकन्याभिर्निर्म्मितञ्च सुशोभनम् । शुक्लं रक्तं तथा कृष्णं पट्टसूत्रमथापि वा । शान्तिवश्याभिचारेषु मोक्षैश्वर्य्यजयेषु च । शुक्लं रक्तं तथा पीतं कृष्णं वर्णेषु च क्रमात् । सर्व्वेषामेव वर्णानां रक्तं सर्व्वेप्सितप्रदम् । त्रिगुणं त्रिगुणीकृत्य ग्रथयेत् शिल्पशास्त्रतः । एकैकं मातृकावर्णं सतारं प्रजपन् सुधीः । मणिमादाय सूत्रेण ग्रथयेन्मध्यभागतः । ब्रह्मग्रन्थिं विधायेत्थं मेरुञ्च ग्रन्थिसंयुतम् । ग्रथयित्वा पुरो मालां तत्संस्कारं समाचरेत् । कस्यचिन्मते मूलविद्यया ग्रथयेत् तथा च एकवीराकल्पे “मातृका वर्णतो ग्रन्थिं विद्यया वाथ कारयेत्” । सुवर्णादिगुणैर्व्वापि ग्रथयेत् साधकोत्तमः । ब्रह्मग्रन्थिं ततो दद्यात् नागपाशमथापि वा । कवचेनावबध्नीयान्मालां ध्यानपरायणः । सर्व्वशेषे ततो मेरुं सूत्रद्वयसमन्वितम् । ग्रथयेत्तारयोगेन बध्नीयात् साधकोत्तमः । एवं निष्पाद्य देवेशि ! प्रतिष्ठाञ्च समाचरेत्” । गौतमीये “मुखे मुखन्तु संयोज्य पुच्छे पुच्छन्तु योजयेत् । गोपुच्छसदृशी माला यद्वा सर्पाकृतिः शुभा” । मुखपुच्छनियमस्तु स्वच्छन्दमाहेश्वरे “रुद्राक्षस्योन्नतं प्रोक्तं मुखं पुच्छञ्च निम्नकम् । कमलाक्षस्य स्थूलांशं सविन्दुद्वितयं मुखम् । सविन्दु कस्य स्थूलांशं दृढं स्वच्छमिति स्थितम् । एवं ज्ञात्वा मुखं पुच्छं रुद्राक्षाम्भोरुहाक्षयोः । तत्सजातीयमेकाक्षं मेरुत्वेनाग्रतोन्यसेत् । एकैकं मणिमादाय ब्रह्मग्रन्थिं प्रकल्पयेत् । एकैकमातृकावर्णान् ग्रथनादौ तु संजपेत्” । ग्रन्थिनियमस्तु स्वच्छन्दमाहेश्वरे “त्रिवृत्तिग्रन्थिनैकेन तथार्द्धेन विधीयते” । अथ वा “नवभिस्तन्तुभिश्चाथ रज्जुं कृत्वोपवीतवत् । सार्द्धद्व्यावर्त्तनेन ग्रन्थिं कुर्य्याद्यथा दृढम्” । इत्येताभ्यामिच्छाविकल्पः । तथा “द्वादश्यां वैष्णवी माला कर्त्तव्या सोपवासतः । [illegible] विष्णुमन्त्रेण दिवाभागे प्रयत्नतः । शक्तीनामपि कर्त्तव्या रात्रिव्यक्ता यथाविधि । अष्टम्याञ्च नवम्याञ्च चतुर्द्दश्यान्तथैव च । त्रयोदश्यान्तथा कुर्य्याच्छिवस्याथ सुरेश्वरि ! शुभे लग्ने शुभे वारे शुभर्क्षे च शुभे तिथौ । प्रतिष्ठां कारयेन्मन्त्री स्वयं वा गुरुणापि वा । एवं निर्म्माय मालां वै शोधयेन्मुनिसत्तम ! ॥ कालिकापुराणे ब्रह्मग्रन्थियुतं कुर्य्यात् प्रतिबीजं यथास्थितम् । अथ वा ग्रन्थिरहितं दृढ-

रज्जुसमन्विताम् । अश्वत्थपत्रनवकैः पद्माकारन्तु कल्पयेत् । तन्मध्ये स्थापयेन्मालां मातृकां मूलमुच्चरन् । क्षालयेत् पञ्चगव्यैस्तु सद्योजातेन सज्जलैः” । इत्यादि । मालासंस्कारस्य नित्यतामाह रुद्रयामले “अप्रतिष्ठितमालाभिर्मन्त्रं जपति यो नरः । सर्वं तद्विफलं विद्यात् क्रुद्धा भवति देवता” । स्वच्छन्दमाहेश्वरे “मध्यमायां न्यसेत् मालां ज्येष्ठेनावर्त्तयेत सुधीः । भुक्तिमुक्तिप्रदा सेयं किन्त्वाथ मातृकाक्रमात् । कामनाभेदे अङ्गुलीनियमो यथा “तर्ज्जन्यङ्गुष्ठयोगेन शत्रूणां नाशने जपेत् । अङ्गुष्ठमध्यमायोगात् मन्त्रसिद्धिः सुनिश्चिता । अङ्गुष्ठानामिकायोगाच्चलोच्चाटनं मतम् । ज्येष्ठाकनिष्ठायोगेन शत्रूणां नाशनं मतम्” । “वैशम्पायनसंहितायाम् अङ्गुष्ठमध्यमानाञ्च गणयेत् मध्यमागतः । तर्ज्जन्या न स्पृशेदेनां मुक्तिदो गणनक्रमः । जीर्णे सूत्रे पुनः सूत्रं ग्रथयित्वा शतं जपेत् । प्रमादात् पतिता हस्तात् शतमष्टोत्तरं जपेत् । जपं स्वविश्वसंस्पर्शे क्षालयित्वाऽक्षमालिकाम्” । छिन्नेऽप्यष्टोत्तरशतजपः कार्य्यः करभ्रष्टच्छिन्नयोस्तुल्यत्वात्” तन्त्रसारः ।

जपयज्ञ पुं० जपएव यज्ञः । जपरूपे यज्ञे तद्भेदादिकं हारीतेनोक्तं यथा “त्रिविधो जपयज्ञः स्यात्तस्य तत्त्वं निबोधत । वाचिकश्च उपांशुश्च मानसश्च त्रिधाकृतिः । त्रयाणामपि यज्ञानां श्रेष्ठः स्यादुत्तरोत्तरः । यदुच्चनीचोच्चरितैः शब्दैः स्पष्टपदाक्षरैः । मन्त्रमुच्चारयन् वाचा जपयज्ञः स वाचिकः । शनैरुच्चारयन् मन्त्रं किञ्चिदोष्ठौ प्रचालयेत् । किञ्चित् श्रवणयोग्यः स्यात् स उपांशुर्जपः स्मृतः । धिया पदाक्षरश्रेण्या अवर्णमपदाक्षरम् । मन्त्रार्थचिन्तनाभ्यान्तु तदुक्तं मानसं स्मृतम् । जपेन देवता नित्यं स्तूयमाना प्रसीदति । प्रसन्ने विपुलान् भोगान् प्राप्नुवन्ति मनीषिणः । राक्षसाश्च पिशाचाश्च महासर्पाश्च भीषणाः । जपिताच्चोपसर्पन्ति दूरादेव प्रयान्ति ते । छन्दऋष्यादि विज्ञाय जपेन्मन्त्रमतन्द्रितः” । “विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः । उपांशुः स्यात् शतगुणः साहस्रो मानसः स्मृतः” । “ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः । सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम्” मनुः “जपयज्ञप्रसिद्ध्यर्थं विद्याञ्चाध्यात्मिकीं जपेत्” याज्ञ० “यज्ञानां जपयज्ञोऽस्मि” गीता ।

जपस्थान न० ६त० । नानातन्त्रोक्ते जपसाधनस्थानभेदे । तानि च नानातन्त्रोक्तानि प्रदर्श्यन्ते ।

“शारदायां द्वितीयपटले “पुण्यक्षेत्रं नदीतीरं गुहा पर्वतमस्तकम् । तीर्थप्रदेशाः सिन्धूनां सङ्गमः पावनं सरः । उद्यानानि विविक्तानि विल्वमूलं तटं गिरेः । देवाद्यायतनं कूलं समुद्रस्य निजं गृहम् । साधनेषु प्रशस्तानि स्थानान्येतानि मन्त्रिणाम् । नदीतीरं पुण्यनदीतीरं सामान्यनदीतीरस्य निषिद्धत्वात् । विविक्तानि विजनानि । राघवभट्टधृतम् “प्रसङ्गसुखशिवस्थाने दृषभादिविवर्ज्जिते । अश्वत्थविल्वतुलसीवपुष्पान्तराहृते । गवां गोष्ठेऽश्वत्थमूले पुण्यक्षेत्रेषु शस्यते” । गोष्ठ इत्यनेनैव गोस्थाने लब्धे गवामिति यदुक्तं तत्तात्कालिकगोसम्बन्धज्ञापनाय तेन गोसमीपे जपादिकर्म्म प्रशस्तमतएव गवां समीप इत्युक्तम् । वायवीयसंहितायाम् “सूर्य्यस्याग्रे गुरोरिन्दोर्दीपस्य च जलस्य च । विप्राणाञ्च गवाञ्चैव सन्निधौ शस्यते जपः । अथ वा प्रजपेत्तत्र यत्र चित्तं प्रसीदति” । मुण्डमालातन्त्रे तृतीयपटले च “नदीतीरे विल्वमूले श्मशाने शून्यवेश्मनि । एकलिङ्गे पर्वते वा देवागारे चतुष्पथे । शवस्योपरि मुण्डे वा जले वाऽऽकण्ठपूरिते । संग्रामभूमौ योनौ वा स्थाने वा विजने वने । यत्र कुत्र स्थले रम्ये यत्र वा स्यान्मनोलयः” इहनीलतन्त्रे द्वितीयपटले “एकलिङ्गे श्मशाने वा शून्यागारे चतुष्पथे । हर्म्ये वा साधयेद्देवीं सर्वाभीष्टप्रदायिनीम्” “पञ्चक्रोशान्तरे यत्र न लिङ्गान्तरमीक्ष्यते । तदेकलिङ्गमाख्यातं तत्र सिद्धिरनुत्तमा” इति श्यामारहस्यधृतेनैकलिङ्गं ज्ञातव्यम् । तथा “उज्जटे पर्वते वापि निर्जने वा चतुष्पथे । देवागारे देवशून्ये विल्वमूले नदीतटे । स्वगृहे निर्जनेऽरण्ये तथा चाश्वत्थसन्निधौ” इत्यपि श्यामारहस्ये । निरुत्तरतन्त्रे प्रथमपटले च “एकलिङ्गे श्मशाने वा शून्यागारे नदीतटे पातालभवने वापि गिरौ वा दीर्घिकातटे । शक्तिक्षेत्रे महापीठे विल्वमूले शिवालये । धात्रीवृक्षतलेऽश्वत्थमूले चैव तरोस्तले” । पातालभवने भूमिमध्ये । समयाचारतन्त्रे द्वितीयपटलेऽपि “जपस्थानानि देवेशि ! सिद्धपीठानि यानि च । सिद्धपीठे च शय्यायां स्त्रिया शय्या विशेषतः । चतुष्पथे सिद्धलिङ्गे गुरुदेवालये तथा । वटाश्वत्थविल्वमूले रम्भाया विपिने तथा । नदीतीरे शिवागारे गुहापर्वतमस्तके । जपस्थानानि देवेशि !

कथितानि नगात्मजे ! । शृणु देवि ! विशेषेण उत्तराम्नायहेतवे ! । वेश्यागृहे श्मशाने वा गत्वा मैथुनमाचरेत् । ततो जपादिकं देवि ! कृत्वा च लभते फलम् । अथ वा स्वगृहे रात्रौ भक्तिमान् सुसमाचरेत् । स प्राप्नोति फलं सर्वं चिन्तादिभयवर्जितः” पुरश्चरणरसोल्लासतन्त्रे चतुर्थपटले “गोष्ठं चतुष्पथञ्चैव त्रिपथञ्च वरानने ! । निर्जनञ्च तथारण्यं शून्यगेहं तथैव च । पर्वतञ्च नदीतीरं तथैव दीर्घिकातटम् । अश्वत्थवृक्षमूले च वटवृक्षतले तथा । धात्रीवृक्षतले देवि ! तथैव बकुलस्य च । यत्र पद्मवनं भद्रे ! शुक्लं रक्तं वरानने ! । द्रोणपुष्पस्य चार्वङ्गि ! यदि भाग्येन लभ्यते । अरुणादित्यसङ्काशं जपकालं परात् परम्” फलविशेषस्तु राघवभट्टेनोक्तो यथा । “गृहे जपः समः प्रोक्तो गोष्ठे शतगुणस्तु सः । आरामे च तथारण्ये सहस्रगुण उच्यते । अयुतः पर्वते पुण्ये नद्यां लक्षगुणस्तु सः । कोटिर्देवालये प्राहुरनन्तं शिवसन्निधौ” तत्र सिद्धपीठानि कुब्जिकातन्त्रे ७म पटले । “शिव उवाच । श्रूयतां सावधानेन सिद्धपीठं पतिव्रते ! । यस्मिन् साधनमात्रेण सर्वसिद्धीश्वरो भवेत् । मायावती मधुपुरी काशी गोरक्षकारिणी । हिङ्गुला च महापीठं तथा जालन्धरं पुनः । ज्वालामुखीमहापीठं पीठं नगरसम्भवम् । रामगिरिर्महापीठं तथा गोदावरी प्रिये ! । नेपालं कर्णसूत्रञ्च महाकर्णं तथा प्रिये ! । अयोध्याञ्च कुरुक्षेत्रं सिंहनादं मनोरमम् । मणिपूरं हृषीकेशं प्रयागञ्च तपोवनम् । वदरीञ्च महापीठं अम्बिकामर्द्दनालकम् । त्रिवेणीं च महापीठं गङ्गासागरसङ्गमम् । नारिकेलञ्च विरजा उड्डीयानं महेश्वरि ! । कमला विमला चैव तथा माहेष्मती पुरी । वाराही त्रिपुरा चैव वाङ्मती नीलवाहिनी । गोवर्द्धनं विन्ध्यगिरिः कामरूपं कलौ युगे । घण्टाकर्णोऽश्वग्रीवो माधवश्च सुरेश्वरि ! । क्षीरग्रामं वैद्यनाथं जानीयाद्वामलोचने ! । कामरूपं महापीठं सर्वकामफलप्रदम् । कलौ शीघ्रफलो देवि ! कामरूपे जपः स्मृतः” अन्यत्र जपेऽपि कामाख्यावस्त्रयोगेन फलमुक्तं तत्रैव “कामाख्यावस्त्रमादाय जपपूजाः समाचरेत् । पूर्णकामं लभेद्देवि ! सत्यं सत्यं न संशयः” तन्त्रचूड़ामणौ महापीठान्युक्तानि यथा । “ईश्वर उवाच । मातः ! परात्परे ! देवि ! सर्वज्ञानमयीश्वरि ! । कथ्यतां मे सर्वपीठं शक्तिभैरवदेवताः” देव्युवाच । “शृणु वत्स ! प्रवक्ष्यामि दयालो ! भक्तवत्सल ! । यानि विना न सिद्ध्यन्ति जपसाधनसत्क्रियाः । एकपञ्चाशतं पीठं शक्तिभैरवदेवताः । अङ्गप्रत्यङ्गपातेन विष्णुचक्रक्षतेन च । ममास्य वपुषो देव ! हिताय त्वयि कथ्यते । ब्रह्मरन्ध्रं १हिङ्गुलायां भैरवो भीमलोचनः । कोट्टरीशा महादेव ! त्रिगुणा सा दिगम्बरी । २करवीरे त्रिनेत्रं मे देवी महिषमर्द्दिनी । क्रोधीशो भैरवस्तत्र ३सुगन्धायाञ्च नासिका देवस्त्र्यम्बकनामा च सुनन्दा तत्र देवता । ४काश्मीरे कण्ठदेशश्च त्रिसन्ध्येश्वरभैरवः । महामाया भगवती गुणातीता वरप्रदा । ५ज्वालामुख्यां महाजिह्वा देव उन्मत्तभैरवः । अम्बिका सिद्धिदानाम्नी स्तनं ६ जालन्धरे मम । भीषणो भैरवस्तत्र देवी त्रिपुरमालिनी । हृत्पीठं ७वैद्यनाथे वैद्यनाथस्तु भैरवः । देवता जयदुर्गाख्या । ८नेपाले जानु मे शिव । कपाली भैरवः श्रीमान् महामाया च देवता । ९मानसे दक्षहस्तं मे देवी दाक्षायणी हर ! । अमरो भैरवस्तत्र सर्वसिद्धिप्रदायकः । १०उत्कले नाभिदेशन्तु विरजाक्षेत्रमुच्यते । विमला सा महादेवी जगन्नाथस्तु भैरवः । ११गण्डक्यां गण्डपातश्च तत्र सिद्धिर्न संशयः । तत्र सा गण्डकी चण्डी चक्रपाणिस्तु भैरवः । १२बहुलायां वामबाहुर्बहुलाख्या च देवता । भीरुको भैरवस्तत्र सर्वसिद्धिप्रदायक । १२ उज्जयिन्यां कूर्परञ्च माङ्गल्यः कपिलाम्बरः । भैरवः सिद्धिदः साक्षाद्देवी मङ्गलचण्डिका । १४चट्टले दक्षबाहुर्मे भैरवश्चन्द्रशेखरः । व्यक्तरूपा भगवती भवानी तत्र देवता । विशेषतः कलियुगे वसामि चन्द्रशेखरे । १५त्रिपुरायां दक्षपादो देवी त्रिपुरसुन्दरी । भैरवस्त्रिपुरेशश्च सर्वाभीष्टप्रदायकः । १६त्रिस्रोतायां वामपादो भ्रामरी भैरवेश्वरः । योनिपीठं कामगिरौ १७ कामाख्या तत्र देवता । यत्रास्ते त्रिगुणातीता रक्तपाषाणरूपिणी । यत्रास्ते माधवः साक्षादुमानन्दोऽथ भैरवः । सर्वदा विहरेद्देवी तत्र मुक्तिर्न संशयः । तत्र श्रीभैरवी देवी तत्र च क्षेत्रदेवता । प्रचण्डचण्डिका तत्र मातङ्गी त्रिपुरात्मिका । वगला कमला तत्र भुवनेशी सधूमिनी । एतानि नव पीठानि शंसन्ति वरभैरवाः । अङ्गुलीवृन्दं हस्तस्य १८प्रयागे ललिता भवः । १९जयन्त्यां वामजङ्घा च जयन्ती क्रमदीश्वरः । सर्वत्र विरला चाहं कामरूपे गृहे गृहे । २०गौरीशिखरमारुह्य पुनर्जन्म न विद्यते । भूतधात्री महामाया भैरवः क्षीरकण्ठकः । युगाद्या सा म-

ह्रामाया दक्षाङ्गुष्ठपदो मम । नकुलीशः कालीपीठे दक्षपादाङ्गुली मम । करतोयां समारभ्य यावद्दिक्करवासिनी । शतयोजनविस्तारं त्रिकोणं सर्व्वसिद्धिदम् । देवा मरणमिच्छन्ति किं पुनर्मानवादयः । भुवनेशी सिद्धिरूपा किरीटस्था २१किरीटतः । देवता विमलानाम्नी सम्वर्त्तो भैरवस्तथा । २२ वाराणस्यां विशालाक्षी देवता कालभैरवः । मणिकर्णीति विख्याता कुण्डलञ्च मम श्रुतेः । २३ कन्याश्रमे च पृष्ठं मेऽनिमिषो भैरवस्तथा । सर्व्वाणि देवता तत्र, २४ कुरुक्षेत्रे च गुल्फतः । स्थाणुनाम्नो च सावित्री अश्वनाथस्तु भैरवः । २५ मणिवन्धे च गायत्री सर्व्वानन्दस्तु भैरवः । २६ श्रीशैले च मम ग्रीवा महालक्ष्मीस्तु देवता । भैरवः शम्वरानन्दो देशे देशे व्यवस्थितः । २७काञ्चीदेशे च कङ्कालो भैरवो रुरुनामकः । देवता देवगर्भाख्या नितम्बः २८कालमाधवे । भैरवश्चासिताङ्गश्च देवी काली सुसिद्धिदा । दृष्ट्वा दृष्ट्वा नमस्कृत्य मन्त्रसिद्धिमवाप्नुयात् । २९ शोणाख्ये भद्रसेनस्तु नर्म्मदाख्या नितम्बके । ३० रामगिरौ तथा नासा शिवानी चण्डभैरवः । ३१ वृन्दावने केशजालमुमानाम्नी च देवता । भूतेशो भैरवस्तत्र सर्व्वसिद्धिप्रदायकः । संहाराख्य ऊर्द्ध्वदन्ते देवी नारायणी ३२ शुचौ । अधोदन्ते महारुद्रो वाराही ३३ पञ्चसागरे । ३४ करतोयातटे तल्पं वामे वामनभैरवः । अपर्णा देवता तत्र ब्रह्मरूपाकरोद्भवा । ३५श्रीपर्व्वते दक्षगुल्फं तत्र श्रीसुन्दरी परा । सर्व्वसिद्धीश्वरी सर्व्वा सुनन्दा ऽऽनन्दभैरवः । ३६कपालिनी भीमरूपा वामगुल्फविभागके । भैरवश्च महादेवः सर्व्वानन्दशुभप्रदः । उदरञ्च ३७ प्रभासे मे चन्द्रभागा यशस्विनी । वक्रतुण्डो भैरवश्चोर्द्ध्वौष्ठे भैरवपर्व्वते । ३८ अवन्त्याञ्च महादेवी लम्बकर्णस्तु भैरवः । ३९चित्रके भ्रामरी देवी चिवुकाख्यजले स्थले । भैरवः सर्व्वसिद्धीशस्तत्र सिद्धिरनुत्तमा । ४० गण्डो गोदावरीतीरे विश्वेशी विश्वमातृका । दण्डपाणिर्भैरवस्तु ४१वामे गण्डे तु राकिणी । भैरवोवत्सनाभस्तु तत्र सिद्धिर्न संशयः । ४२ रत्नावल्यां दक्षस्कन्धे कुमारी भैरवः शिवः । ४३ मिथिलायां महादेवी वामस्कन्धे महोदरः । ४४ नलाहाट्यां नलापातो योगीशो भैरवस्तथा । तत्र सा कालिका देवी सर्व्वसिद्धिप्रदायिका । ४५ कालीघट्टे मुण्डपातः क्रोधीशो भैरवस्तथा । देवता जयदुर्गाख्या नानाभोगप्रदायिनी । ४६ वक्रेश्वरे मनःपातो वक्रनाथस्तु भैरवः । नदी पापहरा तत्र देवी महिषमर्द्दिनी । ४७ यशोरे पाणिपद्मञ्च देवता यशोरेश्वरी । चण्डश्च भैरवस्तत्र यत्र सिद्धिमवाप्नुयात् । ४८अट्टहासे चौष्ठपातो देवी सा फुल्लरा स्मृता । विश्वेशो भैरवस्तत्र सर्व्वाभीष्टप्रदायकः । हारपातो ४९ नन्दिपुरे भैरवो नन्दिकेश्वरः । नन्दिनी सा महादेवी तत्र सिद्धिर्न संशयः । ५०लङ्कायां नूपुरश्चैव भैरवो राक्षसेश्वरः । इन्द्राक्षी देवता तत्र इन्द्रेणोपासिता पुरा । ५१विराटदेशमध्ये तु पादाङ्गुलिनिपातनम् । भैरवश्चामृताख्यश्च देवी तत्राम्बिका स्मृता । एतास्ताः कथिताः पुत्त्र ! पीठनाथाधिदेवताः। क्षेत्राधीशं विना देव ! पूजयेद्यान्यदेवताम् । भैरवैर्ह्रियते सर्व्वं जपपूजादिसाधनम् । अज्ञात्वा भैरवं पीठं पीठशक्तिञ्च शङ्कर ! । प्राणनाथ ! न सिध्येत् कल्पकोटिजपादिभिः । न देयं परशिष्येभ्यो निन्दकाय दुरात्मने । शठाय क्रूरकार्य्याय दत्त्वा मृत्युमवाप्नुयात् । दद्यात् शान्ताय शिष्याय मन्त्री मन्त्रार्थसिद्धये" । कुब्जानीलतन्त्रे पञ्चमपटले"पीठार्च्चनं महादेवि ! तत्र सिद्धिरनुत्तमा । पीठानां परमं पीठं कामरूपं महाफलम् । तत्र या क्रियते पूजा सकृद्वापि महेश्वरि ! । विहाय सर्व्वपीठानि तस्य देहे वसाम्यहम् । तस्मात्शतगुणं प्रोक्तं कामाख्यायोनिमण्डलम् । तेषां फलं महेशानि ! वक्तुं किं शक्यते मया । तत्र कोटिगुणैः सार्द्धमास्ते वसति तारिणी । यत् पीठं ब्रह्मणा गुप्तं वक्तुं सर्व्वसुखावहम् । यतो देवाश्च वेदाश्च मुनयश्चैव भावजाः । सर्व्वेऽप्याविर्भवन्त्येते तेन गुप्तं सदा कुरु । द्विविधञ्चैव यत् पीठं गोप्तव्यं तन्महेश्वरि ! । गुप्ताद्गुप्तं महापुण्यं दुरापं साधकाधमैः । व्यक्तं सर्व्वत्र देवेशि ! लभ्यते कुलसुन्दरि ! । पीठप्रसङ्गाद्देवेशि पीठानि शृणु भैरवि ! । शृणु तानि महाप्राज्ञे ! श्रेष्ठस्थानानि यानि च । सिद्धिप्रदानि साधूनां महद्भिः सेवितानि च । पुष्करञ्च गयाक्षेत्रम् अक्षयाख्यवटस्तथा । वराहपर्व्वतश्चैव तीर्थञ्चामरकण्टकम् । नर्म्मदा यमुना सिन्धुर्गङ्गाद्वारं तथा प्रिये ! । गङ्गासागरसङ्गश्च कुशावर्त्तश्च विल्वकम् । श्रीनीलपर्व्वतश्चैव कलम्बकुब्जके तथा । भृगुतुङ्गश्च केदारं सर्व्वप्रियमहावनम् । ललिता च सुगन्धा च शाकम्भरी सुरप्रियम् । कण्वतीर्थं महागङ्गा तण्डुलिकाश्रमएव च । कुमाराख्यप्रभासौ च तथा धन्या सरस्वती ।

अगस्त्याश्रममिष्टं मे कण्वाश्रममतःपरम्। कौशिकीसरयूःशोणो ज्योतिःसरःपुरःसरम्। कालोदकं प्रियं श्रीमत् प्रियमुत्तरमानसम्। मतङ्गवापी सप्तार्षिर्महाविष्णुपदं महत्। वैद्यनाथं महातीर्थं प्रियःकालाञ्जरोगिरिः। रामोच्छेदं गर्गोच्छेदं हरोच्छेदं महावनम्। भद्रेश्वरं महातीर्थं लक्ष्मणच्छेदमेव च। जानीहि प्रियश्रेष्ठा च कावेरी कपिलोदका। सोमेश्वरं शुक्रतीर्थं कृष्णवेणाप्रभेदकम्। पाटला च महाबोधिर्नागतीर्थं मदन्तिके। पुण्यं रामेश्वरं देवि! तथा मेघवनं हरेः। ऐलं वनफलञ्चैव गोवर्द्धनमजप्रियम्। हरिश्चन्द्रं पुरश्चन्द्रं पृथूदकमपि प्रियम्। इन्द्रनीलं महानादं तथैव प्रियमैनकम्। पञ्चाप्सरं पञ्चवटी वटीपर्वटिका तथा। गङ्गाविन्ध्यप्रसङ्गश्च प्रियनादवटं तथा। गङ्गारामाचलश्चैव तथैव ऋणमोचनम्। गौतमेश्वरतीर्थञ्च वशिष्ठतीर्थमेव च। हारीतञ्च तथा देवि! ब्रह्मावर्त्तं शिवप्रियम्। कुशावर्त्तमभिश्रेष्ठं हंसतीर्थं तथैव च। पिण्डारकवनं ख्यातं हरिद्वारं तथैव च। तथैव वदरीतीर्थं रामतीर्थं तथैव च। जयन्ती विजयन्तञ्च सर्वकल्याणदं प्रिये!। विजया शारदातीर्थं भद्रकालेश्वरं तथा। अश्वतीर्थं सुविख्यातं तथा देवशिवप्रियम्। ओघवती नदी चैव तीर्थमश्वपदं तथा। छागलिङ्गं मातृगणं करवीरपुरं तथा। सप्तगोदावरं तीर्थं लिङ्गाख्यं सर्व्वमोहनम्। किरीटमुत्तरे तीर्थं दक्षिणे तीर्थमुत्तमम्। विशालतीर्थं कात्यायनं वनं वृन्दावनं तथा। ज्वालामुखी हिङ्गुला च,महातीर्थं गणेश्वरम्। जानीहि सर्वतीर्थानां हेतुस्थानानि सुन्दरि!। अत्र सन्निहिता नित्यं सर्वे देवा महर्षयः। पितरो योगिनश्चैव ये ये सिद्धिपरायणाः। आशु सिद्ध्यन्ति कर्माणि श्रद्धाभक्तिमतां प्रिये!। पुण्यकाले पठेत् यस्तु तत्पुण्यमक्षयं भवेत्। श्राद्धकाले पठेत् यस्तु जुहुयाद्वापि भक्तितः। अक्षयं तद्भवेत् कव्यं पितॄणां परमं सुखम्। तस्मिन् स्थाने पठेद् यस्तु सिद्धिर्भवति तत्क्षणात्। अथ वक्ष्ये महेशानि! यत्र या देवता शृणु। यत्र ते यानि नामानि कथयिष्यामि तत् शृणु। मन्नोऽहं परमानन्दे तत् कथामृतवारिधौ! पुष्करे कमलाक्षी च गयायाञ्च गयेश्वरी। अक्षया अक्षयवटेऽमरेशोऽमरकण्टके। वराहपर्वते च त्वं वाराही धरणीप्रिया। नर्म्मदा नर्म्मदायाञ्च कालिन्दी यमुनाजले। शिवामृता च गङ्गायां रम्भा देवहिकाश्रमे। शारदा सरयूतीरे शोणे च कमलेश्वरी। अप्रकाशा सदा देवी ज्योतिर्म्मय्यब्धिसङ्गमे। श्रीरङ्गं श्रीगिरौ चैव काली कालोदके तथा। महोदरी महातीर्थे नीला चोत्तरमानसे। मातङ्गिनी मतङ्गे च शुप्तार्श्विविष्णुपादुके। स्वर्गदा स्वर्गमार्गे च गोदावर्य्यां गवेश्वरी। विमुक्तिश्चैव गोमत्यां विपाशायां महाबला। शतद्रूं शतरूपा च चन्द्रभागा च तत्र वै। ऐरावत्याञ्च ईर्नाम सिद्धिदा सिद्धतीरके। दक्षपञ्चनदे चैव दक्षिणाहं प्रकीर्त्तिता। औजसे वीर्य्यदा च त्वं सङ्गमा तीर्थसङ्गमे। बाहुदायामनन्ताहं कुरुक्षेत्रे रणेक्षणा। तपस्विनी पुण्यतमा भारती भारताश्रमे। सुकथा नैमिषारण्ये पाण्डौ च पाण्डुरानना। विशालायां विशालाक्षी कुण्डपृष्ठे शिवात्मिका। श्रद्धा कनखले तीर्थे शुद्धबुद्धिर्मुनीश्वरी। सुवेशा सुमना गौरी मानसे च सरोवरे। नन्दापुरे महानन्दा ललिता ललितापुरे। ब्रह्माणी ब्रह्मशिरसि महापातकनाशिनी। पूर्णिमा चेन्दुमत्याञ्च सिद्धमतिप्रिया सदा। जाह्नवीसङ्गमे हन्तिः स्वधा स्व पितृतृप्तिदा। पुण्याहं बाहुदायाञ्च प्रपायां पापनाशिनी। शत्रुसंहारिणी चैव घोररूपा महोदरी। स्वर्गोच्छेदे महावारिप्रबला च महावने। भद्रा च भद्रकाली च भद्रेश्वरी शिवप्रिय!। भद्रेश्वरेश्वरमा विष्णुप्रिया विष्णुपदे तथा। दारुणा नर्म्मदाच्छेदे कावेर्य्यां कपिलेश्वरी। भेदिनी कृष्णवेण्णायां संभेदे शुभवासिनी। श्रद्धा च शुक्रतीर्थे च प्रभासे चेश्वरी तथा। महाबोधौ महाबुद्धिः पाटले पाटलेश्वरी। सुवला नागतीर्थे च नागेशी नागनन्दिता। मदन्तौ च मदन्ती च प्रमदा च मदन्तिका। मेघस्वना मेघवासे विद्युत्सौदामनीच्छटा। रामेश्वरे महाबुद्धिर्वीरा चेलापुरे सती। प्रिया च भार्गवे दुर्गा सुवेशा सुरसुन्दरी। कात्यायनी महादेवी गोवर्द्धनेऽखिलात्मिका। शुभेश्वरी हरिश्चन्द्रे पुरचन्द्रे पुरेश्वरी। पृथूदके महावेगा मैनाकेऽखिलवर्द्धिनी। इन्द्रनीले महाकान्ता रत्नवेशा सुशोभना। माहेश्वरी महानादे महातेजा महावने। प्रत्यक्सरसि सारङ्गा पञ्चवट्यां तपस्विनी। वटीशा वटिकायाञ्च सर्ववर्णा सुरङ्गिणी। सङ्गमे विन्ध्यगङ्गायां विन्ध्ये श्रीविन्ध्यवासिनी। महानन्दा नन्दतटे गङ्गारामाचले शिवा। आर्य्यावर्त्ते महार्य्या त्वं विमुक्तिर्ऋणमोचने। अट्टहासे च चामुण्डा तत्र श्रीगौतमेश्वरी। वेदमयी ब्रह्मविद्या

वाशिवे त्वमरस्वती । हरिते हरिणाक्षी च ब्रह्मावर्त्ते ब्रह्मेश्वरी । गायत्री चैव सावित्री कुशावर्त्ते कुशप्रिया । हंसेश्वरी महातीर्थे परहंसेश्वरेश्वरी । पिण्डारकवने धन्या सुरसा सुखदायिनी । नारायणी वैष्णवी च गङ्गाद्वारे विमुक्तिदा । श्रीविद्या वदरीतीर्थे रामतीर्थे महाधृतिः । जयन्ती च जयन्ते त्वं विजयन्तेऽपराजिता । विजया च महाशुद्धिः शारदायाञ्च शारदा । सुभद्रे भद्रदा भव्या भद्रकालेश्वरे तथा । महाभद्रा महाकाली हयतीर्थे गवीश्वरी । वेददा वेदमाता च विदेहे वेदमस्तके । युवत्याञ्च महाविद्या महानद्यां महोदया । चण्डा च त्रिपदे चैव छागलिङ्गे बलिप्रिया । मातृदेशे जगन्माता करवीरपुरे सती । नलिनीरङ्गिणी रामा परमा परमेश्वरी । सप्तगोदावरे तीर्थे देवर्षिरखिलेश्वरी । अयोध्यायां भवानी च जयदा जयमङ्गला । माधवी मथुरायाञ्च देवकी यादवेश्वरी । वृन्दागोपेश्वरी राधारासवृन्दावने रमा । कात्यायनी महामाया भद्रकाली कलावती । चन्द्रमाला महायोगी महायोगिन्यधीश्वरी ब्रजेश्वरी यशोदेति ब्रजे श्रीगोकुलेश्वरी । काञ्च्यां कनककाञ्ची स्यादवन्त्यामभिपावनी । विद्या विद्यापुरे चैव विमला नीलपर्वते । रामेश्वरी सेतुबन्धे विमला पुरुषोत्तमे । विरजा यागपुर्य्याञ्च भद्रेऽपि भद्रकर्णिका । तमोलिप्ते तमोघ्नी च स्वाहा सागरसङ्गमे । कुलश्रीवंशदक्षिण माधवी माधवप्रिया । मङ्गले ! मङ्गले कोटे राढ़े मङ्गलचण्डिका । ज्वालामुखी शिवापीठे मन्दरे भुवनेश्वरी । कालीघट्टे गुह्यकाली किरीटे च महेश्वरी । किरीटेश्वरी महादेवी लिङ्गाख्ये लिङ्गवाहिनी । साक्षीसर्वत्र भक्तानामभक्तानां कुतोऽपि न । अथान्यत् सम्प्रवक्ष्यामि सिद्धस्थानानि सुन्दरि ! । सर्वपापविनाशार्थं सर्वसिद्धिप्रदं स्वयाम् । निर्म्मितानि शिवेनेह सिद्धस्थानानि यानि च । श्रुत्वा मनसि मत्वानि प्रकाश्यान्यधिकारिषु । अमरेशमहापीठे शुभतुङ्कारसंज्ञकः । तत्र दुर्गाह्वयं नाम चण्डिका च महेश्वरी । प्रभासे सोमनाथोऽसौ देवी च पुष्करेक्षणा । देवदेवाधिपः शम्भुर्नैमिषे च महेश्वरः । तत्र मत्ता च देवी च शिवानी लिङ्गधारिणी । पुष्करे च राजगन्धिः पुरहूता महेश्वरी । श्रीपर्वते श्रिया नाम शङ्करस्त्रिपुरान्तकः । मायावी शङ्करी तत्र भक्तानामखिलार्थदा । जल्पेश्वरे महास्थाने शङ्करी च त्रिशूलिनी । त्रिशूली शङ्करस्तत्र सर्वपापविमोचकः । आम्रातकेश्वरे सूक्ष्मासूक्ष्माख्या परमेश्वरी । गयाक्षेत्रे मङ्गलाख्या शिवोयः प्रपितामहः । कुरुक्षेत्रे शिवः स्थाणुः शिवा स्थाणुप्रिया परा । इष्टनाभे स्वयम्भुश्च देवी स्वायम्भुवा मता । उग्रः कनखले प्रोक्तः शिवोग्रे शिववल्लभा । विमलेश्वरे विश्वशम्भुर्विश्वाविश्वप्रिया सदा । अट्टहासे महानन्दो महानन्दा महेश्वरी । महान्तको महेन्द्रश्च पार्वती च महान्तका । भीमेश्वरो भीमपीठे शिवा भीमेश्वरी तथा । वस्त्रपादे भवो नाम भवानी भुवनेश्वरी । अद्रिकूटे महायोगा रुद्राणी परमेश्वरी । अविमुक्ते महादेवो विशालाक्षी शिवा परा । महामाये हरो रुद्रो महाभागा शिवा तथा । महाबलश्च गोकर्णे शिवभद्रा च चण्डिका । भद्रकर्णे महादेवो भद्रा च कर्णिका तथा । सुपर्णाख्ये सहस्राख्य उत्पला परमेश्वरी । स्थाणुसंज्ञे शिवस्था श्रीः खरस्था श्रीधरा शिवा । कमलालये महास्थाने कमलाख्यो महेश्वरः । कमलाक्षी महेशानी । सकलार्थप्रदायिनी । छागला तु कपर्दी च प्रभा च महेश्वरी । ऊर्द्धरेतामहारण्ये सम्भ्राख्या परमेश्वरी । माकोटाख्या महाकोटे शिवा च मुण्डकेश्वरी । मातुलेश्वरपीठे च करवीराद्र्यशेखरा । श्रीमद्व्याघ्रपुरे साक्षाद्रत्नाख्या सभापतिः । शिवः सभापतिर्नाम यत्र नृत्यति शङ्करः । आत्मानन्दसहानादपूर्णानन्दमहार्णवम् । नृत्यन्तं यत्र देवेशं देवेशी परिपश्यति । यत्र चाशु महादेवो भक्तानां वरदो भवेत् । नृत्यन्तं यत्र सर्वेशं वीक्ष्य लोको विमुच्यते । पुण्यस्थानेषु सर्वेषु स्थानमेतदनुत्तमम् । यद्यत्कर्म्माणि सर्वाणि अक्षयाणि भवन्ति वै । तस्मिन् महोत्तमे स्थाने शिवगङ्गाख्यमङ्गुलम् । तड़ागमस्ति तत्तीरे दक्षिणे नृत्यतीश्वरः । तड़ागेऽस्मिन् वसन् स्नात्वा समानार्थं समीक्ष्य तु । अष्टोत्तरसहस्रं तु जपेच्छुद्धो मुदान्वितः । यानि ते कथितान्यत्र सदा तिष्ठन्ति देवताः । भवन्ति सिद्धगन्धर्वाः सिद्धयः सर्वसिद्धिदाः । अत्र दत्तं हुतं जप्तं स्नानमक्षयपुण्यदम् । यद् यत् प्रकीर्त्तितं नाम भैरवं परिपूज्य च । प्रणवादिहृदन्तेन लभतेऽभीष्टसत्तमम् । भोजयेद् ब्राह्मणान् योऽत्र अक्षयं फलमश्नुते । इह नानासुखं भुक्त्वा हरगौरीपुरं ब्रजेत् । शोकदुःखविनाशोऽयं करुणानिधिरीश्वरः । निर्म्ममे सर्वसत्त्वैः पुण्यक्षेत्राणि भूतले । अकाले पुण्यमुक्तानामनेकपुण्य-

साधनैः । आस्तिकानां भवेदत्र निवासः साधनं प्रति । तस्माद् यत्नेन कर्त्तव्यमत्र साधनमुत्तमैः । इदानीं शृणु चार्वङ्गि ! पीठं सर्वाङ्गसुन्दरम् । अक्षमालामयं पीठं ब्रूहि मे परमेश्वरि ! । यत्र सिद्ध्यन्ति कार्य्याणि स्थितिस्ते शङ्करस्य च । विष्णोरगाधबोधस्य तत्प्रियाया महेश्वरि ! । अन्येषाञ्चैव देवानां युष्मत्पदनिवासिनाम् । प्रसादो हि भवत्याशु तत्र प्रीतिरनुत्तमा" ।

**जपा** स्त्री जप–अच् टाप् । जवावृक्षे हेमच० । तत्पुष्पेऽपि स्त्री । "ओड्रपुष्पं जपा चाथ त्रिसन्ध्या साऽरुणासिता । जपा संग्राहिणी केश्या त्रिसन्ध्या कफवातजित्" भावप्र० तद्गुणोक्तिः । "सान्ध्यं तेजः प्रतिनवजपापुष्परक्तं दधानः" मेघ० ।

**जप्य** त्रि० जप–कर्म्मणि यत् । १जपनीये अघमर्षणादौ । "फलदानान्तु वृक्षाणां छेदने जप्यमृक्शतम्" मनुः । भावे यत् । २जपे । "जप्येनैव तु संसिद्ध्येत् ब्राह्मणो नात्र संशयः" मनुः ।

**जप्येश्वर** पु० लिङ्गस्थानभेदे । "जप्येश्वरे महास्थाने शङ्करी च त्रिशूलिनी । त्रिशूली शङ्करस्तत्र सर्व्वपापविमोचकः" तन्त्रवाक्यम् । जपस्थानशब्दे दृश्यम् ।

**जबारु** न०जवमान् (जरमाण)–रोहित्+पृषो० । १जवमानरोहिणि २जरमाणरोहिणि च । "पृश्नेरग्रे रूप आरुपितं जबारु" ऋ० ४,५,७ । "जबारु जवमानरोहि जरमाणरोहि वा" भा० । "जबारु जवमानरोहि जरमाणरोहि" निरु० । ६।१७ ।

**जबाला** स्त्री सत्यकामस्यर्षेः मातरि । जबालायां भवः अण् । जाबाल सत्यकामाख्ये ऋषौ तत्कथा यथा

"सत्यकामो ह जाबालो जबालां मातरमामन्त्रयाञ्चक्रे ब्रह्मचर्यं भवति । विवत्स्यामि किं गोत्रोऽन्वहमस्मीति । सा हैनमुवाच नाहमेतद्वेद तात ! यद्गोत्रस्त्वमसि बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि स सत्यकाम एव जाबालो ब्रवीथा इति । स ह हारिद्रुमतं गौतममेत्योवाच ब्रह्मचर्य्यं भगवति वत्स्याम्युपेयां भगवन्तमिति । तं होवाच किं गोत्रोनुसोम्यासीति स होवाच नाहमेतद्वेद भो यद्गोत्रोऽहमस्मि अपृच्छं मातरं सा मां प्रत्यब्रवीद्बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाऽहमस्मि सत्यकामो नाम त्वमसीति सोऽहं सत्यकामो जबालोऽस्मि भोः इति । तं होवाच नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहरोपत्वा नेष्ये न सत्यादगाः" इति ।

**जभ** मैथुने भ्वा० पर० सक० सेट् । जभति अजभीत् । जजाभ जजभतुः जजभतुः । जभितः । मैथुनस्य मैथुनेन घर्षणम् । ता इमा जभितुं पापा उपक्रामन्ति मां प्रभो !" भाग० ३।२०।२७। "जभितुं मैथुनेन घर्षयितुम्" श्रीधरः ।

**जभ** मैथुने भ्वा० पर० अक० सेट् इदित् । जम्भति धातूनामनेकार्थत्वात् भक्षणेऽपि "श्वा न्वस्य जम्भिषदपि" ऋ० १०।८६।४ । "जम्भिषत् भक्षयतु" भा० ।

**जभ** जृम्भे चुरा० उभ० सक० इदित् । जम्भयति ते अजजम्भत् त । "जम्भयतमभितो रायतः शुनो" ऋ० १।१८२।४ "हनु हकस्य जम्भया" अथ० १९।४९।९ ।

**जभ** जृम्भे आ०भ्वा० आत्म०सेट् । जभते अजम्भिष्ट जजम्भे [ जेभे ।

**जम** भक्षे भ्वा०पर०सक० सेट् । जमति अजमीत् जजाम जमित्वा जान्त्वा । अनड्वान्: नैगमे ... गमनेकत्वेन । १।१७ जमदिति ज्वलदग्निर्वोच्यते । जामिमत्वनिरुक्तौ च ३।६ जमतेर्वा स्याद्गतिकर्मणो निरुमनप्रादा भवति" जमदग्निमत्वनिरुक्तौ च ११०४। "जमदग्नयः प्रजमिताग्नयो वा प्रज्वलिताग्नयो वा" इत्युक्तम् ।

**जमज** त्रि० द्वि०व० यमज+पृषो० यमजातयोः त्रिका० ।

**जमदग्नि** पु० जमन् प्रज्वलितोऽग्निरिव । भृगुवंश्ये ऋषिभेदे । तन्निरुक्तिः जमशब्दे दर्शिता । म०भा०अनु० अन्या निरुक्तिर्दर्शिता यथा "... जाजाहीह जिजाविषि । जमदग्निरिति ख्यातमतो मां विद्धि शोभने !" । तदुत्पत्तिकथा "ऋचीकस्तस्यां समभवद्रूरुं भित्त्वा सनातनः । महातेजा महावीर्य्यो बाल एव गुणैर्युतः । ऋचीकस्य तु पुत्रस्तु जमदग्निस्ततोऽभवत् । जमदग्नेस्तु चत्वार आसन् पुत्रा महात्मनः । रामस्तेषां जघन्योऽभूदजघन्यैर्गुणैर्युतः" भा० आ० ६६ अ० अस्योत्पत्तिकथा ऋचीकशब्दे १४१४ पृ० दर्शिता । स च एतन्मन्वन्तरे सप्तर्षिमध्यगतः यथा हरिवं० ७अ० "गौतमश्च भरद्वाजो विश्वामित्रस्तथैव च । तथैव पुत्रो भगवानृचीकस्य महात्मनः । सप्तमो जमदग्निश्च ऋषयः साम्प्रतं दिवि । साध्या रुद्राश्च विश्वे च वसवो मरुतस्तथा" ।

अयञ्च गोत्रकारकः तद्विवृतिः गोत्रशब्दे २७९६पृ० दृश्या । जमदग्नेरपत्यम् गर्गा० यञ् । जामदग्न्य तद-

पत्ये पुंस्त्री । बहुत्वे अस्त्रियाम् यञो लुक् । जमदग्नयः तदपत्येषु स्त्रियां तु न लुक् । जामदग्न्यःस्त्रियः।

**जमन** न०जम–भावे ल्युट् । भक्षणे अमरकोषे "जेमनं लेप आहार" इत्यत्र जमनमिति पाठान्तरम् ।

**जम्पती** पु० द्वि० व० । जाया च पतिश्च द्व०जायाया जम्। दम्पत्योः स्त्रीपुरुषयोः अमरः। पक्षे जायापती तत्रार्थे ।

**जम्बाल** पु० जम्ब–घञ् जम्बमालाति आदत्ते आ+ला–क । १पङ्के, अमरः । २शैवाले, मेदि० । ३केतक्यां शब्दच०। "जम्बूवज्जलविम्बवज्जलजवज्जम्बालवज्जालवत्" उद्भटः "अयं मौलिजजम्बालजटीलस्य भुवो ययौ" काशी०ख० १६ अ० ।

**जम्बालिनी** स्त्री जम्बाल+अस्त्यर्थे इनि । नद्याम् हेमच०।

**जम्बीर** पु० जम–गम्भीरा० नि० ईरन् बुक् च । (जामीर नेबु) ख्याते वृक्षभेदे । "जम्बीरमुष्णं गुरु चाम्लं वातश्लेष्मविबन्धनुत् । शूलकासकफक्लेशच्छर्दितृष्णामदोषजित् । आस्यवैरस्यहृत्पीडावह्निमान्द्यकृमीन् हरेत् । स्वल्पजम्बीरिका तद्वत्तृष्णाच्छर्दिनिवारिणी" भावप्र०। २मरुवके, ३अर्जके, ४सितार्जके, राजनि०। पृषो० ह्रस्वः जम्बिर तत्रार्थे पु० शब्दर०।

**जम्बु(म्बू)** स्त्री जम–अदने कु नि० बुक् पृषो० वा ह्रस्वः। (जाम) १वृक्षे अमरः तत्र ह्रस्वान्ते । "तस्या जम्ब्वोः फलरसो नदीभूय प्रवर्त्तते" विक्रमादित्यः । परिणतजम्बूफलोपभोगहृष्टाः" किरा० । दीर्घान्ते । तस्याः जम्ब्वाः फलरसो नदी भूत्वा जलाधिपः" भा०भी०७अ० २जम्बुनामके द्वीपे च जम्बुद्वीपशब्दे दृश्यम् । जम्ब्वाः फलम् अण् पक्षे अञ् । जाम्बव तत्फले न० । तस्य वा लुक् लुप् वा लुपि व्यक्तिवचनत्वात् । जम्बु न० जम्बू स्त्री ।

**जम्बुक** पु० जम्बु इव कायति कै–क । (गोलाबजाम) इति ख्याते १वृक्षे । २नीचे त्रि० ३श्योनाके राजनि० । स्वार्थे क । ४जम्बुशब्दार्थे । ५शृगाले पुंस्त्री० । "श्येनाः कङ्काबलाः श्येनावायसा जम्बुकास्तथा" भा० द्रो० ८७ अ० । स्त्रियां जातित्वात् ङीष् । "मत्स्यमांसपरिभ्रष्टा किं जम्बुकि ! निरीक्षसे" उद्भटः । ६कुमारानुचरभेदे । "शृणु नामानि चान्येषां येऽन्ये स्कन्दस्य सैनिकाः" इत्युपक्रमे "सञ्चारकः कोकनदो ग्रहपतश्च जम्बुकः" भा० श० ४६ अ० । दीर्घमध्येऽपि तदनुचरे तत्रैवाध्याये "चाषवक्त्रश्च जम्बूकः शाकवक्त्रश्च कज्जलः" ।

**जम्बुकेश्वर** पु० तीर्थभेदे शिवपु०।

**जम्बु(म्बू)खण्ड** पु०जम्बुद्वीपे "मेरोस्तु पश्चिमे पार्श्वे केतुमालो महीपते ! । जम्बूखण्डे च तत्रैव महाजनपदो नृप !" भा० भी० ७ अ० ।

**जम्बु(म्बू)खण्डविनिर्माण** न० जम्बुखण्डस्य विनिर्माणं निरूपणं यत्र । भा० भीष्मपर्वान्तर्गते अवान्तरपर्वभेदे । "जम्बूखण्डविनिर्माणं पर्वोक्तं तदनन्तरम्" भा० आ० १अ० अवान्तरपर्वोक्तौ ।

**जम्बु(म्बू)द्वीप** पुंन० जम्बु(म्बू)वृक्षयुक्तो द्वीपः भूमेः सप्तद्वीपान्तर्गते द्वीपभेदे । तत्सीमाविभागादि विष्णुपु० उक्तं यथा ।

"जम्बुप्लक्षाह्वयौ द्वीपौ शाल्मलिश्चापरो द्विज ! । कुशः क्रौञ्चस्तथाशाकः पुष्करश्चैव सप्तमः । एते द्वीपाः समुद्रैस्तु सप्त सप्तभिरावृताः । लवणेक्षुसुरासर्पिर्दधिदुग्धजलैः समम् । जम्बूद्वीपः समस्तानामेतेषां मध्यसंस्थितः । तस्यापि मेरुर्मैत्रेय ! मध्ये कनकपर्वतः । चतुरशीतिसाहस्रो योजनैरस्य चोच्छ्रयः । प्रविष्टः षोडशाधस्ताद्द्वात्रिंशन्मूर्ध्नि विस्तृतः । मूले षोडशसाहस्रो विस्तारस्तस्य भूभृतः । भूपद्मस्यास्य शैलोऽसौ कर्णिकासंस्थितिः स्थितः । हिमवान् हेमकूटश्च निषधश्चास्य दक्षिणे । नीलः श्वेतश्च शृङ्गी च उत्तरे वर्षपर्वताः । लक्षप्रमाणौ द्वौ मध्यौ दशहीनास्तथा परे । सहस्रद्वितयोच्छ्रायास्तावद्विस्तारिणश्च ते । नाभिश्च प्रथमं वर्षं ततः किंपुरुषं स्मृतम् । हरिवर्षं तथैवान्यत् मेरोर्दक्षिणतो द्विज ! । रम्यकञ्चोत्तरं वर्षं तथैवानु हिरण्मयम् । उत्तराः कुरवश्चैव यथा वै भारतं तथा । नवसाहस्रमेकैकमेतेषां द्विजसत्तम ! । इलावृतञ्च तन्मध्ये सौवर्णो मेरुरुच्छ्रितः । मेरोश्चतुर्दिशं तत्र नवसाहस्रविस्तरः । इलावृतं महाभाग ! चत्वार उपपर्वताः । विष्कम्भा रचिता मेरोर्योजनायुतमुच्छ्रिताः । पूर्वेण मन्दरो नाम दक्षिणे गन्धमादनः । विपुलः पश्चिमे भागे सुपार्श्वश्चोत्तरे स्मृतः । कदम्बस्तेषु जम्बूश्च पिप्पलो वट एव च । एकादशशतायामाः पादपा गिरिकेतवः । जम्बुद्वीपस्य सा जम्बूर्नामहेतुर्महामुने ! । महागजप्रमाणानि जम्ब्वास्तस्याः फलानि वै । पतन्ति भूभृतः पृष्ठे शीर्य्यमाणानि सर्वतः । रसेन तेषां प्रख्याता तत्र जम्बूनदीति वै । सरित् प्रवर्त्तते सा च पीयते तन्निवासिभिः । न स्वेदो न च दौर्गन्ध्यं न जरा नेन्द्रियक्षयः । तत्-

पानसुस्थमनसां जनानां तत्र जायते। गौरवत्तत्र संप्राप्य सुखवायुविशोषिता। जाम्बूनदाख्यं भवति सुवर्णं सिद्धभूषणम्। भद्राश्वं पूर्वतो मेरोः केतुमालञ्च पश्चिमे। वर्षे द्वे तु मुनिश्रेष्ठ! तयोर्मध्यमिलावृतम्। वनं चैत्ररथं पूर्वे दक्षिणे गन्धमादनम्। वैभ्राजं पश्चिमे तद्वदुत्तरे नन्दनं स्मृतम्। अरुणोदं महाभद्रं संशितोदं समानसम्। सरांस्येतानि चत्वारि देवभोग्यानि सर्वदा। शीतान्तश्चैव सुञ्जश्च कुररी माल्यवांस्तथा। वैकङ्कप्रमुखा मेरोः पूर्वतः केशराचलाः। त्रिकूटः शिशिरश्चैव पतङ्गो रुचकस्तथा। निषधाद्या दक्षिणतस्तस्य केशरपर्वताः। शिखिवासाः सवैदूर्यः कपिलो गन्धमादनः। जारुधिप्रमुखास्तद्वत् पश्चिमे केशराचलाः। मेरोरनन्तराङ्गेषु जठरादिष्ववस्थिताः। शङ्खकूटोऽथ ऋषभो हंसो नागस्तथापरः। कालञ्जराद्याश्च तथा उत्तरे केशराचलाः। चतुर्दशसहस्राणि योजनानां महापुरी। मेरोरुपरि मैत्रेय! ब्रह्मणः प्रथिता पुरी। तस्याः समन्ततश्चाष्टौ दिशासु विदिशासु च। इन्द्रादिलोकपालानां प्रख्याताः प्रवराः पुरः। विष्णुपदाद्विनिष्क्रान्ता प्लावयित्वेन्दुमण्डलम्। समन्ताद्ब्रह्मणः पुर्य्यां गङ्गा पतति वै दिवः। सा तत्र पतिता दिक्षु चतुर्द्धा प्रत्यपद्यत। सीता चालकनन्दा च वङ्क्षुर्भद्रा च वै क्रमात्। पूर्वेण शैलात् सीता तु शैलं यात्यन्तरीक्षगा। ततश्च पूर्ववर्षेण भद्राश्वेनैति सार्णवम्। भद्रा तथोत्तरगिरीनुत्तरांश्च तथा कुरून्। अतीत्योत्तरमम्भोधिं समभ्येति महामुने!। वङ्क्षुश्च पश्चिमगिरीनतीत्य सकलांस्ततः। पश्चिमं केतुमालाख्यं वर्षमभ्येति सार्णवम्। तथाचालकनन्दापि दक्षिणेनेत्य भारतम्। प्रयाति सागरं भूत्वा सप्तभेदा महामुने!। आनीलनिषधायामौ माल्यवद्गन्धमादनौ। तयोर्मध्यगतो मेरुः कर्णिकाकारसंस्थितः। भारताः केतुमालाश्च भद्राश्वाः कुरवस्तथा। पत्राणि लोकपद्मस्य मर्य्यादाश्चैव बाह्यतः। जठरो देवकूटश्च मर्य्यादापर्वतावुभौ। तौ दक्षिणोत्तरायामावानीलनिषधायतौ। मेरोः पश्चिमदिग्भागे यथा पूर्वौ तथा स्थितौ। त्रिशृङ्गो जारुधिश्चैव उत्तरे वर्षपर्वतौ। पूर्वपश्चायतावेतावर्णवान्तव्यवस्थितौ। इत्येते मुनिवर्य्योक्ता मर्य्यादापर्वतास्तव। जठराद्याः स्थिता मेरोर्येषां द्वौ द्वौ चतुर्दिशम्। मेरोश्चतुर्दिशं ये तु प्रोक्ताः केशरपर्वताः। शीतान्ताद्या मुने! तेषामतीवेह

मनोरमाः। शैलानामन्तरद्रोण्यः सिद्धचारणसेविताः। सुरम्याणि तथा तेषु काननानि पुराणि च। लक्ष्मीविष्ण्वग्निसूर्य्यादिदेवानां मुनिसत्तम!। तान्यायतनवर्य्याणि जुष्टानि वरकिन्नरैः। गन्धर्वयक्षरक्षांसि तथा दैतेयदानवाः। क्रीड़न्ति तासु रम्यासु शैलद्रोणीष्वहर्निशम्। भौमा ह्येते स्मृताः स्वर्गा धर्म्मिणामालया मुने!। नैतेषु पापकर्म्माणो यान्ति जन्मशतैरपि। भद्राश्वे भगवान् विष्णुरास्ते हयशिरा द्विज!। वराहः केतुमाले तु भारते कूर्म्मरूपधृक्। मत्स्यरूपश्च गोविन्दः कुरुष्वास्ते सनातनः। विश्वरूपेण सर्वत्र सर्वः सर्वेश्वरो हरिः। सर्वस्याधारभूतोऽसौ मैत्रेयास्तेऽखिलात्मकः। यानि किंपुरुषाद्यानि वर्षाण्यष्टौ महामुने। न तेषु शोकोनायासो नोद्वेगः क्षुद्भयादिकम्। सुस्थाः प्रजा निरातङ्काः सर्वदुःखविवर्जिताः। दशद्वादशवर्षाणां सहस्राणि स्थिरायुषः। न तेषु वर्षवर्य्येषु भौमान्यम्भांसि तेषु वै। कृतत्रेतादिका नैव तेषु स्थानेषु कल्पना। सर्वेष्वेतेषु वर्षेषु सप्त सप्त कुलाचलाः। नद्यश्च शतशस्तेभ्यः प्रसूता या द्विजोत्तम!"।"पराशर उवाच। उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम्। वर्षं तद्भारतं नाम भारती यत्र सन्ततिः। नवयोजनसाहस्रो विस्तारोऽस्य महामुने। कर्म्मभूमिरियं स्वर्गमपवर्गञ्च गच्छताम्। महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः। विन्ध्यश्च पारिपात्रश्च सप्तात्र कुलपर्वताः। अतः संप्राप्यते स्वर्गो मुक्तिमस्मात् प्रयान्ति च। तिर्य्यक्त्वं नरकञ्चापि यान्त्यतः पुरुषा मुने!। इतः स्वर्गश्च मोक्षश्च मध्यञ्चान्तश्च गम्यते। न खल्वन्यत्र मर्त्यानां कर्म्मभूमौ विधीयते। भारतस्यास्य वर्षस्य नव भेदान्निशामय। इन्द्रद्वीपः कशेरुमांस्ताम्रवर्णो गभस्तिमान्। नागद्वीपस्तथा सौम्यो गन्धर्वस्त्वथ वारुणः। अयन्तु नवमस्तेषां द्वीपः सागरसंवृतः। योजनानां सहस्रन्तु द्वीपोऽयं दक्षिणोत्तरात्। पूर्वे किराता यस्यान्ते पश्चिमे यवनाः स्थिताः। ब्राह्मणाः क्षत्रिया वैश्या मध्ये शूद्राश्च भागशः। इज्यायुद्धवणिज्याद्यैर्वर्त्तयन्तो व्यवस्थिताः। वेदस्मृतिमुखाश्चान्याः पारिपात्रोद्भवा मुने!। नर्म्मदा सुरसाद्याश्च नद्यो विन्ध्यविनिर्गताः। तापीपयोष्णीनिर्विन्ध्याकावेरीप्रमुखा नदी। गोदावरीभीमरथीकृष्णवेण्यादिकास्तथा। सह्यपादोद्भवा नद्यः स्मृताः पापभयापहाः। कृतमालाताम्रपर्णीप्रमुखा मलयोद्भवाः। त्रिसामा

ऋषिकुल्याद्याः शुक्तिमत्पादसम्भवाः । शतद्रुचन्द्रभागाद्या हिमवत्पादनिःसृताः । आसां नद्युपनद्यश्च सन्त्यन्यास्तु सहस्रशः । पश्चिमे कुरुपञ्चालमध्यदेशादयो जनाः । पूर्वदेशादिकाश्चैव कामरूपनिवासिनः । ओड्राः कलिङ्गमगधा दाक्षिणात्याश्च सर्वशः । तथापरान्ताः सौराष्ट्राः शूद्राभीरास्तथार्बुदाः । मारुका मालवाश्चैव पारिपात्रनिवासिनः । सौवीराः सैन्धवा हूणाः शाल्वाः शाकलवासिनः । मद्रारामास्तथाम्बष्ठाः पारसीकादयस्तथा । आसां पिबन्तः सलिलं वसन्ति सरितां सदा । चत्वारि भारते वर्षे युगान्यत्र महामुने ! । कृतं त्रेता द्वापरश्च कलिश्चान्यत्र न क्वचित् । तपस्तप्यन्ति मुनयो जुह्वते चात्र यज्विनः । दानानि चात्र दीयन्ते परलोकार्थमादरात् । पुरुषैर्यज्ञपुरुषो जम्बूद्वीपे सदेज्यते । तत्रापि भारतं श्रेष्ठं जम्बूद्वीपे महामुने ! । यतो हि कर्म्मभूरेषा ततोऽन्या भोगभूमयः । अत्र जन्मसहस्राणां सहस्रैरपि सत्तम ! । कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात् । गायन्ति देवाः किल गीतकानि धन्यास्तु ये भारतभूमिभागे । स्वर्गापवर्गास्पदहेतुभूते भवन्ति भूयः पुरुषाः सुरत्वात् । कर्म्माण्यसंकल्पिततत्फलानि संन्यस्य विष्णौ परमात्मरूपे । अवाप्य तां कर्म्ममहीमनन्ते तस्मिंल्लयं ये त्वमलाः प्रयान्ति । जानीम नैतत् क्व वयं विलीने स्वर्गप्रदे कर्म्मणि देहबन्धम् । प्राप्स्यामो धन्याः खलु ते मनुष्या ये भारते नेन्द्रियविप्रहीणाः । नववर्षन्तु मैत्रेय ! जम्बूद्वीपमिदं मया । लक्षयोजनविस्तारं संक्षेपात् कथितं तव । जम्बूद्वीपं समावृत्य लक्षयोजनविस्तृतः । मैत्रेय ! वलयाकारः स्थितः क्षारोदधिर्बहिः"।

भाग० ५ । १६ अ० तद्वर्णनमन्यथोक्तम् यथा

"यो वा अयं द्वीपः कुवलयकमलकोशाभ्यन्तरकोशो नियुतयोजनविशालः समवर्त्तुलो यथा पुष्करपत्रम् ॥ ६ ॥ यस्मिन्नव वर्षाणि नवयोजनसहस्रायामानि अष्टभिर्म्मर्यादागिरिभिः सुविभक्तानि ॥७॥ एषां मध्ये इलावृतं नामाभ्यन्तरवर्षं यस्य नाभ्यामवस्थितः सर्व्वतः सौवर्णः कुलगिरिराजो मेरुर्द्वीपायामसमुन्नाहः कर्णिकाभूतः कुवलयकमलस्य मूर्द्धनि द्वात्रिंशत्सहस्रयोजनविततो मूले षोडशसहस्रं तावतान्तर्भूम्यां प्रविष्टः ॥ ८ ॥ उत्तरोत्तरेणेलावृतं नीलः श्वेतः शृङ्गवानिति त्रयो रम्यकहिरण्मयकुरूणां मर्य्यादागिरयः प्रागायता उभयतः क्षारोदावधयो द्विसहस्रपृथव एकैकशः पूर्वस्मात् पूर्वस्मादुत्तरेण दशांशाधिकांशेन दैर्घ्य एव ह्रसन्ति ॥ ९ ॥ एवं दक्षिणेनेलावृतं निषधो हेमकूटो हिमालय इति प्रागायता यथा नीलादयः । अयुतयोजनोत्सेधा हरिवर्षकिंपुरुषभारतानां यथासंख्यम् ॥१०॥ तथैवेलावृतमपरेण पूर्व्वेण च माल्यवद्गन्धमादनावानीलनिषधायतौ द्विसहस्रं पप्रथतुः केतुमालभद्राश्वयोः सीमानं विदधाते ॥ ११ ॥ मन्दरो मेरुमन्दरः सुपार्श्वः कुमुद इत्ययुतयोजनविस्तारोन्नाहा मेरोश्चतुर्दिशमवष्टम्भगिरय उपक्लृप्ताः ॥१२॥ चतुर्ष्वेतेषु चूतजम्बूकदम्बन्यग्रोधाश्चत्वारः पादपप्रवराः पर्वतकेतव इवाधिसहस्रयोजनोन्नाहास्तावद्विटपविततयः शतयोजनपरिणाहाः॥१३॥ ह्रदाश्चत्वारः पयोमध्विक्षुरसमृष्टजलाः। यदुपस्पर्शिन उपदेवगणा योगैश्वर्य्याणि स्वाभाविकानि भरतर्षभ ! धारयन्ति । देवोद्यानानि च भवन्ति चत्वारि नन्दनं चैत्ररथं वैभ्राजकं सर्वतोभद्रमिति ॥१४॥ येष्वमरपरिवृढाः सह सुरललनाललामयूथपतय उपदेवगणैरुपगीयमानमहिमानः किल विहरन्ति ॥१५॥ मन्दरोत्सङ्ग एकादशशतयोजनोत्तुङ्गदेवचूतशिरसो गिरिशिखरस्थूलानि फलान्यमृतकल्पानि पतन्ति ॥१६॥ तेषां विशीर्य्यमाणानामतिमधुरसुरभिसुगन्धिबहुलारुणरसोदेनारुणोदा नाम नदी मन्दरगिरिशिखरान्निपतन्ती पूर्व्वेणेलावृतमुपप्लावयति ॥१७॥ यदुपजोषणाद्भवान्या अनुचरीणां पुण्यजनवधूनामवयवस्पर्शसुगन्धवातो दशयोजनं समन्तादनुवासयति ॥ १८॥ एवं जम्बूफलानामत्युच्चनिपातविशीर्णानामनस्थिप्रायाणामिभकायनिभानां रसेन नदी जम्बू नाम नदी मेरुमन्दरशिखरादयुतयोजनादवनितले निपतन्ती दक्षिणेनात्मानं यावदिलावृतमुपस्यन्दति ॥१९॥ तावदुभयोरपि रोधसो या मृत्तिका तद्रसेनानुविध्यमाना वाय्वर्कसंयोगविपाकेन सदामरलोकाभरणं जाम्बूनदं नाम सुवर्णं भवति ॥२०॥ यद्दु ह वाव विबुधादयः सह युवतिभिर्मुकुटकटककटिसूत्रकुण्डलाद्याभरणरूपेण खलु धारयन्ति ॥२१॥ यस्तु महाकदम्बः सुपार्श्वपार्श्वनिरूढ़स्तस्य कोटरेभ्यो विनिःसृताः पञ्चायामपरिणाहाः पञ्च मधुधाराः सुपार्श्वशिखरात् पतन्त्योऽपरेणात्मानमिलावृतमनुमोदयन्ति । या ह्युपयुञ्जानानां मुखनिर्व्वासितो वायुः समन्ताच्छतयोजनमनुवासयति ॥२२॥ एवं कुमुदनिरूढ़ोयः शतवल्शो नाम वटस्तस्य स्कन्धेभ्यो नीचीनाः पयोदधिमधुघृतगुड़ान्ना-

द्याम्बरशय्यासनाभरणादयः सर्व एव कामदुघा नदाः कुमुदाग्रात् पतन्तस्तमुत्तरेणेलावृतमुपयोजयन्ति । यानुपजुषाणानां न कदाचिदपि प्रजानां वलीपलितक्लमस्वेददौर्गन्ध्यजरामयापमृत्युशीतोष्णवैवर्ण्योपसर्गादयस्तापविशेषा भवन्ति । यावज्जीवं सुखं निरतिशयमेव कुरङ्गकुररकुसुम्भवैकङ्कत्रिकूटशिशिरपतङ्गरुचकनिषधशितिवासःकपिलशङ्खवैदूर्यजारुधिहंसर्षभनागकुञ्जरनीरदादयो गिरयो मेरोः कर्णिकाया इव केशरभूता मूलदेशे परित उपक्लृप्ताः ॥ २२ ॥ जठरदेवकूटौ मेरुं पूर्वेणाष्टादशयोजनसहस्रमुदगायतौ द्विसहस्रं पृथुतुङ्गौ भवतः । एवमपरेण पवनपारिपात्रौ दक्षिणेन कैलासकरवीरौ प्रागायतौ । एवमुत्तरतः त्रिशृङ्गमकरौ अष्टाभिरेभिः परिस्कृतोऽग्निरिव परितश्चकास्ति काञ्चनगिरिः । मेरोर्मूर्द्धनि भगवत आत्मयोनेर्मध्यत उपक्लृप्तां पुरीमयुतयोजनसाहस्रीं समचतुरस्रां शातकौम्भीं वदन्ति ॥ २४ ॥ तामनुपरितो लोकपालानामष्टानां यथादिशं यथारूपं तुरीयमानेन पुरोऽष्टावुपक्लृप्ताः" ॥ २५ ॥ १६अ०

"तत्र चतुर्द्धा विभज्यमाना चतुर्भिर्नामभिश्चतुर्दिशमभिस्यन्दन्ती नदनदीपतिमेवाभिनिविशति । सीताऽलकनन्दा चक्षुर्भद्रेति ॥७॥ सीता तु ब्रह्मसदनात् केशराचलादिशिखरेभ्योऽधोऽधः प्रस्रवन्ती गन्धमादनमूर्द्धसु पतित्वान्तरेण भद्राश्वं वर्षं प्राच्यां दिशि क्षारसमुद्रमभिप्रविशति ॥८॥ एवं माल्यवच्छिखरान्निष्पतन्ती तत उपरतवेगा केतुमालमभि वङ्क्षुः प्रतीच्यां दिशि सरित्पतिं प्रविशति ॥९॥ भद्रा चोत्तरतो मेरुशिरसो निपतिता गिरिशिखराद्गिरिशिखरमतिहाय शृङ्गवतः शृङ्गादवस्यन्दमाना उत्तरांस्तु कुरूनभित उदीच्यां दिशि लवणार्णवं प्रविशति ॥१०॥ तथैवालकनन्दा दक्षिणेन ब्रह्मसदनाद्बहूनि गिरिकूटानि अतिक्रम्य हेमकूटहिमकूटान्यतिरभसतररंहसा लुठन्ती भारतमभि वर्षं दक्षिणस्यां दिशि लवणजलधिमभिप्रविशति ॥११॥ अन्ये च नदानद्यश्च वर्षे वर्षे सन्ति बहुशो मेर्वादिगिरिदुहितरः शतशः । "अत्रापि भारतमेव वर्षं कर्मक्षेत्रम् ॥१२॥ अन्यान्यष्टवर्षाणि स्वर्गिणां पुण्यशेषोपभोगस्थानानि भौमस्वर्गपदानि व्यपदिशन्ति" ॥ १३ ॥ १७अ०

"भारतेऽप्यस्मिन्वर्षे सरिच्छैलाः सन्ति बहवः ॥ १६ ॥ मलयो मङ्गलप्रस्थो मैनाकस्त्रिकूट ऋषभः कूटकः कोल्लः सह्यो देवगिरिर्ऋष्यमूकः श्रीशैलो वेङ्कटो महेन्द्रो वारिधारो विन्ध्यः शुक्तिमानृक्षगिरिः पारिपात्रो द्रोणश्चित्रकूटो गोवर्द्धनो रैवतः ककुभो नीलो गोकामुख इन्द्रकीलः कामगिरिरिति चान्ये च शतसहस्रशः शैलास्तेषां नितम्बप्रभवा नदा नद्यश्च सन्त्यसंख्याताः ॥१७॥ एतासामपो भारत्यः प्रजा नामभिरेव पुनन्तीनामात्मानं चोपस्पृशन्ति । चन्द्रवशा ताम्रपर्णी अवटोदा कृतमाला वैहायसी कावेरी वेणा पयस्विनी शर्करावर्त्ताऽतुङ्गभद्रा कृष्णवेणा भीमरथी गोदावरी निर्विन्ध्या पयोष्णी तापी रेवा सुरसा नर्मदा चर्मण्वती अन्धः शोणश्च नदौ महानदी वेदस्मृतिः ऋषिकुल्या त्रिसामा कौशिकी मन्दाकिनी यमुना सरस्वती दृषद्वती गोमती सरयूरोघवती सप्तवती सुषमा शतद्रूश्चन्द्रभागा मरुद्वृधा वितस्ता असिक्नीविश्वेति महानद्यः ॥१८॥ अस्मिन्नेव वर्षे पुरुषैर्लब्धजन्मभिः शुक्ललोहितकृष्णवर्णेन स्वारब्धेन कर्मणा दिव्यमानुषनारकगतयो बह्व्य आत्मन आनुपूर्व्येण सर्वा ह्येव सर्वेषां विधीयन्ते । यथावर्णविधानमपवर्गश्च भवति" ॥२०॥ १९अ०

"जम्बुद्वीपस्य च राजन्नुपद्वीपानष्टौ हैके उपदिशन्ति । सगरात्मजाश्वान्वेषण इमां महीं परितो निखनद्भिरुपकल्पितान् । तद्यथा स्वर्णप्रस्थश्चन्द्रशुक्ल आवर्त्तनो रमणको मन्दहरिणः पाञ्चजन्यसिंहलोलङ्केति" २०अ०। अतश्च जनपदाश्च जनपदशब्दे उक्ता । भा० भी० ९ अ० । जम्बुद्वीपस्य नदीभेदा उक्ता यथा ।

"आर्य्या म्लेच्छाश्च कौरव्य ! तैर्मिश्राः पुरुषा विभो ! । नदीं पिबन्ति विपुलां गङ्गां सिन्धुं सरस्वतीम् । गोदावरीं नर्मदाञ्च बाहुदां च महानदीम् । शतद्रूं चन्द्रभागाञ्च यमुनाञ्च महानदीम् । दृषद्वतीं विपाशाञ्च विपापां स्थूलवालुकाम् । नदीं वेत्रवतीञ्चैव कृष्णवेणाञ्च निम्नगाम् । इरावतीं वितस्ताञ्च पयोष्णीं देविकामपि । वेदस्मृतां वेदवतीं त्रिदिवामिक्षुमालवीम् । करीषिणीं चित्रवहां चित्रसेनाञ्च निम्नगाम् । गोमतीं धूतपापाञ्च गण्डकीञ्च महानदीम् । कौशिकीं निश्चितां कृत्यां निचितां लोहतारिणीम् । सरयूञ्च रहस्यां च शतकुम्भां तथैव च । चर्मण्वतीं चन्द्रभागां हस्तिसोमां दिशं तथा । शरावतीं पयोष्णीञ्च परां भीमरथीमपि । कावेरीं चुलकाञ्चापि वेणां शतबलामपि । नीवारां महिताञ्चापि सुपयोगां जनाधिप ! । पवित्रां कुण्डलां सिन्धुं राजनीं पुरमालिनीम् । पूर्वाभिरामां वीराञ्च भीमामोघवतीं तथा । पलाशिनीं पापहरां महेन्द्रां पाट-

लावतीम् । करीषिणीमसिक्नीञ्च कुशचीरां महानदीम् । मकरीं प्रवरां मेनां हेमां घृतवतीं तथा । पुरावतीमनुष्णाञ्च शैब्यां तापीञ्च भारत ! । सदानीरामधृष्याञ्च कुशधारां महानदीम् । सदाकान्तां शिवाञ्चैव तथा वीरवतीमपि । वास्तुं सुवास्तुं गौरीञ्च कम्पनां सहिरण्वतीम् । वरां वीरङ्कराञ्चापि पञ्चमीञ्च महानदीम् । रथचित्रां ज्योतिरथां विश्वामित्रां कपिञ्जलाम् । उपेन्द्रां बहुलाञ्चैव कुचीरां मधुवाहिनीम् । विनदीं पिञ्जलां वेणां तुङ्गवेणां महानदीम् । विदिशां कृष्णवेणाञ्च ताम्राञ्च कपिलामपि । शेलुं सुवामां वेदाश्वां हरिदश्वां महोपमाम् । शीघ्राञ्च पिच्छलाञ्चैव भारद्वाजीञ्च निम्नगाम् । कौशिकीं निम्नगां शोणां बाहुदामथ चन्द्रमाम् । दुर्गामन्त्रशिलाञ्चैव ब्रह्मबोध्यां बृहद्वतीम् । यवक्षामथ रोहीञ्च तथा जाम्बूनदीमपि । सुनसां तमसां दासीं वसाञ्च वरणामसीम् । नालां धृतिमतीञ्चैव पूर्णाशाञ्च महानदीम् । तामसीं वृषभाञ्चैव ब्रह्ममेध्यां बृहद्वतीम् । एताश्चान्याश्च बहुधा महानद्यो जनाधिप ! । सदानिरामयां कृष्णां मन्दगां मन्दवाहिनीम् । ब्राह्मणीञ्च महागौरीं दुर्गामपि च भारत ! । चित्रोपलां चित्ररथां मञ्जुलां वाहिनीं तथा । मन्दाकिनीं वैतरणीं कोशां चापि महानदीम् । शुक्तिमतीं मनिङ्गाञ्च पुष्पवेणूत्पलावतीम् । लौहित्यां करतोयाञ्च तथैव वृषकाह्वयाम् । कुमारीमृषिकुल्याञ्च मारिषाञ्च सरस्वतीम् । मन्दाकिनीन्तु पुण्याञ्च सर्वगङ्गाञ्च भारत ! । विश्वस्य मातरः सर्व्वाः सर्व्वाश्चैव महाफलाः । तथा नद्यस्त्वप्रकाशाः शतशोऽथ सहस्रशः । इत्येताः सरितो राजन् ! समाख्याता यथास्मृति” । अन्याः काश्चित् नद्यः कालिकापुराणोक्तास्तच्छब्दे २०१२ पृ० दर्शिताः । जम्बुद्वीपस्था जनपदाश्च भा०भी०७अ० उक्ताः जनपदशब्दे २०२०पृ०दर्शिताः । कूर्म्मविभागशब्दे च तत्स्थानञ्चोक्तम् । २जम्बु(म्बू)द्वीपाकारसंनिवेशयुक्ते दातव्यद्रव्यभेदे तद्विधानादि हेमा० दा० ख० ब्रह्माण्डपु०

“शृणु देवि ! महादानं जम्बु(म्बू)द्वीपाह्वयन्तु तत् । यथाह भगवानद्य पद्मयोनिर्जनार्द्दनः । पुण्येऽह्नि पुण्यनक्षत्रे पुण्यकाले तु सर्व्वतः । विषुवत्ययनादौ च ग्रहणे चन्द्रसूर्य्ययोः । व्यतीपातेऽथ वा कुर्य्याज्जन्मर्क्षे वा विशेषतः । अष्टम्यां पञ्चदश्यां वा नित्यं वा दानमाचरेत् । पुण्यदेशेषु सर्व्वेषु नदीदेवालयादिषु । दानं स्वगृहे वा दातव्यं श्रद्धा वा यत्र जायते । विप्रन्तु वेदविद्वांसं गुरुं सम्पूज्य यत्नतः । भूलेपनादि यत्कार्य्यं सर्व्वं विप्रेण कारयेत् । विलेपयेत्सर्व्वभूमिं गोमयेन सवारिणा । तत्र विंशतिहस्तन्तु लेपयेत्परिमण्डलम् । लवणेनोदधिं तत्र परितः परिकल्पयेत् । प्रादेशमात्रं विस्तारादष्टद्रोणेन पार्व्वति ! । तत्राक्षतान्निर्व्विकिरेत् श्वेतपुष्पैः समन्ततः । तन्मध्ये कारयेन्मेरुं धान्यभारत्रयेण वै । मेरुर्म्महाव्रीहिमयस्तु मध्ये सुवर्णकल्पद्रुमसंयुतः स्यात् । पूर्व्वेण मुक्ताफलवज्रयुक्तो याम्येन गोमेदकपुष्परागैः । पश्चाच्च गारुत्मतनीलरत्नैः सौम्येन वैदूर्य्यसरोजरागैः । श्रीखण्डखण्डैरभितः प्रवाललतान्वितः शुक्तिशिलातलः स्यात् । शुक्लाम्बराण्यम्बुधरावली स्यात् पूर्व्वेण पीतानि च दक्षिणे तु । वासांसि पश्चादथ कर्व्वुराणि रक्तानि चैवोत्तरतोघनाली । ब्रह्मा तु मध्ये कमलासनस्थश्चतुर्म्मुखः काञ्चननिर्म्मिताङ्गः । चतुर्भुजश्चात्र निवेशनीयो दधत् स्रुचं चात्र कमण्डलुञ्च । तथाक्षसूत्रं जपसाधनञ्च कृष्णाजिनं चोपवीतं च बिभ्रत् । गङ्गां चतुर्द्धा पतितां निधाय चतुर्दिशं चोदकपूर्णरूपाम् । रौप्यान्महेन्द्रप्रभृतीनथाष्टौ संस्थाप्य लोकाधिपतीन् क्रमेण । नानाद्विजौघानि च राजतानि मृगाश्च सर्व्वत्र निवेशनीयाः । पूर्व्वेण मन्दरगिरिर्यवतण्डुलाभ्याम् शुक्लाम्बरेण परितः परिवेष्टितान्तः । मूर्द्धेण काञ्चनमयेन वृषेण तद्वद्रौप्येण हंसमृगपक्षियुतो विधेयः । याम्येन गन्धमदनोऽत्र गिरिस्तु कार्य्यो मुद्गैश्च जम्बुतरुणा च हिरण्मयेन । हैमेन यक्षपतिना च विराजमानः पीताम्बरेण परितः परिवेष्टितश्च । पश्चात्तिलाचलमथोपरि कर्व्वुराभम् वासः सपिप्पलहिरण्मयहंसयुक्तम् । आकारयेद्विपुलमत्रसुगन्धपुष्पम् रौप्येण शक्तिघटितेन विराजमानम् । संस्थाप्य तं विपुलशैलमथोत्तरेण शैलं सुपार्श्वमपि माषमयं सुवस्त्रम् । न्यग्रोधवृक्षमपि हेममयं सधेनुम् रौप्यैश्च शक्तिघटितैश्च शुभं विधाय । मेरोश्च पुष्पाभरणञ्च कार्य्यम् घृतोदकं प्रस्रवणञ्च दिक्षु । क्षीराज्यदध्ना मधुना सरांसि प्रागादि तेषां च यथाक्रमेण । हेमाद्रिकूटनिषधौ क्रमशश्च याम्ये सौम्ये च नीलसितशृङ्गयुतौ क्रमेण । प्रादेशमात्रं परिनिःसृतास्ते प्रागायताश्चोपरि वस्त्रयुताश्च सर्व्वे । प्रत्येकमत्र वसनच्छदपर्व्वतानाम् भारेण धान्यपरिमाणमुशन्ति सन्तः । शक्र्या च रौप्यक्षतपक्षियुताश्च सर्व्वे सौगन्धिपुष्पफलवस्त्रयुता विधेयाः ।

आनीलनिषधायामौ माल्यवद्गन्धमादनौ । तेषां मध्यगतो मेरुस्तौ च धान्यविनिर्मित । निषधः पारियात्रश्च मर्य्यादापर्वताविमौ । मेरोः पश्चिमभागेन यथा तौ गन्धमादनौ । गन्धमादनशैलोऽसौ पूर्वपश्चाद्यथाविधौ । श्वेततण्डुलनिर्माणौ दक्षिणोत्तरतः स्थितौ । सितान्तःप्रमुखाः सर्वे दक्षिणे ककुभादयः । शङ्खकूटादयश्चैव उत्तरे परिकीर्त्तिताः । तांस्तान् केशरशैलांश्च कृत्वा धान्यमयान् शुभान् । वस्त्रैरावेष्ट्य शैलेन्द्रं मेरुमन्यांश्च वेष्टयेत् । दक्षिणं भारतं वर्षं तत् किंपुरुषसंज्ञकम् । हरिवर्षं ततः प्रोक्तं मेरोर्दक्षिणतस्ततः । इलावृतं इतं मेरोश्चतुर्थं वृषभं तथा । रम्यं हिरण्मयं तस्मात् कुरवश्चेति चोत्तराः । भद्राश्वः केतुमालश्च पूर्वपश्चिमतः स्थितौ । प्रोक्तानि नव वर्षाणि जम्बुद्वीपे तु नामतः । हिमाद्रिमध्ये देवेशं श्रियञ्च विनिवेशयेत् । प्रसादाभिमुखावेतौ काञ्चनेन विनिर्मितौ । शङ्ख-चक्र-गदापाणिं पीतवाससमच्युतम् । किरीट-केयूर-धरं श्रीवत्साङ्कितवक्षसम् । पद्मासने समासीनां पद्महस्तां सुलोचनाम् । प्रसन्नवदनां देवीं तस्य दक्षिणतोन्यसेत् । कैलासमध्यतो माञ्च त्वां चैव विनिवेशयेत् । मां च शङ्करनामानं त्वां च गौरीं वरानने ! । चतुर्भुजं वृषस्थञ्च जटिलं चन्द्रमौलिनम् । खट्वाङ्गशूल-वरदाभय-हस्तञ्च मां न्यसेत् । मदुत्सङ्गगतां त्वां च दर्पणेन्दीवरान्विताम् । भद्रासने भगवन्तं हयरूपमुखं हरिम् । सौवर्णं स्थापयेद्देवं भारते कूर्म्मरूपिणम् । वाराहं केतुमाले वै मत्स्यं कुरुषु चोत्तरे । सौवर्णानथ वा रौप्यान् स्थापयेत्तु यथाक्रमम् । एवं जम्ब्वाह्वयं द्वीपं कृत्वा चैव यथाविधि । अर्घ्यपाद्यासनं स्नानं यथावत् स्थापनं क्रमात् । ब्रह्मादयस्तथा देवाः शैलाः कल्पद्रुमास्तथा । स्वनाममन्त्रैः पूजार्हा नमस्कारान्तदीपितैः । गन्ध-पुष्प-नमस्कार-धूप दीप-फलैस्तथा । तथोपहरणाद्यैश्च पूजयित्वा प्रयत्नतः । भद्राश्ववर्षे होमन्तु सर्पिषा च समाचरेत् । स्वनाममन्त्रैर्होतव्यं स्वाहाकारसमायुतैः । द्व्योत्तरशतं हुत्वा ब्रह्मणे मेरवे तथा । इतरेषाञ्च सर्वेषामष्टोत्तरशताहुतीः । स्नानार्थं यजमानस्य पुरतः कलसन्न्यसेत् । आद्रकोदरपूर्णन्तु सकूर्चं वस्त्रवेष्टितम् । सन्त्याः सुमनसस्तस्य कुशाग्रान्विनिवेशयेत् । आप श्रेयो विधास्यन्ति तास्तासावाहयेत्ततः । गङ्गाद्याः सरितः सर्व्वाः समुद्रांश्च सरांसि च । आयान्तु यजमानस्य दुरितक्षयकारकाः । इत्यावाह्य ततस्तस्य कलसं विमलोदकम् । अभ्यर्च्य गन्धपुष्पाद्यैः स्थापयेत् प्रीतिपूर्वकम् । स्नापयेत् प्राङ्मुखं तत्र दातारं कलसोदकैः । ऋग्भिर्वरुणदेवीभिः पावमानीभिरेव च । दानकाले च शक्ताग्रे दाता नारी नरोऽथवा । स्नापितो गुरुणा तेन सार्द्धं दानं समाचरेत् । त्रिः प्रदक्षिणमावृत्य गृहीतकुसुमाञ्जलिः । प्रत्येकं पर्व्वतान् सर्व्वान् प्रणिपातपुरःसरम् । मध्यमं गुरवे दद्यादिमं मन्त्रमुदीरयेत् । अन्यस्मै वा प्रदातव्यं तस्यानुज्ञामवाप्य च । यथा च भूरादिसमस्तलोकास्त्वयि स्थिता भूधरराज ! नित्यम् । अमी सुरासुरा लोकनाथा ब्रह्मादयो देवगणाश्च नित्यम् । त्वत्सम्प्रदानादहमप्यशेषैः पापैर्विमुक्तस्तु यथा भवेयम् । श्रेयस्तथा पर्वतराज ! मह्यं कुरु प्रभो ! देववरैश्च सार्द्धम् । इतीदमुक्त्वा प्रददेत्तु मेरुं सकाञ्चनं राजतवस्त्रयुग्मम् । प्रत्येकमेकं द्विजपुङ्गवानाम् प्रागादि दद्यादितरान् क्रमेण । सुरासुराणामकृतार्थकृत्यैः त्वया कृतं मन्दरशैल ! सत्य ! । तथा च मां रक्ष च सर्वतस्त्वं तव प्रसादाद्विरजा यथाहम् । गन्धाद्रिमादन इतीरितभूधरेन्द्र ! वेदोदितस्य गरुड़ाय नमोऽस्तु तुभ्यम् । त्वत्सम्प्रदानहतपापसमस्तदोषं छायाविशैलवर रक्ष च मामजस्रम् । देवालयाय विपुलाय नमोऽचलाय हंसाय वेदपुरुषाय नमोऽच्युताय । युष्मत्प्रदाननिहताखिलपापराशिं हंसेन सार्द्धममराचल ! पाहि मां त्वम् । वन्दे सुपार्श्वममराचलमप्रमेयन्धेनुञ्च देवसुरभिं प्रणतोऽस्मि नित्यम् । त्वद्दानभक्तियुतसत्क्रियया हमद्य त्वामेव यामि शरणार्थमवेहि मां त्वम् । श्रीवत्सवक्ष-मनादिमजं समस्तलोकाधिपं सकलकारणमच्युतञ्च । नारायणं शरणमेमि धराधरेन्द्रैः सार्द्धं श्रिया हिमवतः स्थितिकारिमीडे । देवाय देवगणपूजितपादपद्मयुग्माय भक्तजनदुःखविनाशनाय । कैलासशैलनिलयाय भवाय नित्यं गौरीप्रियाय वरदाय नमः शिवाय । यश्चा त्वनादिनिधनः शरणागतं माम् भद्राश्वनामनि गतो हरिरच्युतोऽसौ । आस्ते घनाघनवपुः सनकादियोगिपूगैरभिष्टुतपुरातनकीर्त्तियुक्तः । मध्ये महार्णवहिमाचलयोर्निषण्णं कूर्म्माकृतिं शरणमेमि भवाभवाय । पारावरं मथितमत्र सदा दधाति यस्त्वं नमामि सुरपूजितमप्रमेयम् । वाराहरूपिणमनन्तमनन्तकेतुम् लोकस्वरूपिणमनेकशिरोक्षिपादम् । वन्दे महीधरसमेत-

मपारकीर्त्तिं यस्तं प्रणमेमि शरणं हरमीशितारम् । देवस्थोत्तरकुरुष्वपि नित्यमास्ते सत्प्रात्रः सुरेन्द्रगणपूजितपादपद्मः । रत्नत्रयेषजगतां पतिरच्युतोऽसौ संसारदुःखचलितं शरणागतं माम् । उक्त्वैवमात्मधनानामदानमन्नं प्रत्येकमेकं द्विजपुङ्गवानाम् । भुक्त्वा शुभानि मनसेच्छति यानि वासौ गच्छेद्व यत्र न निवर्त्तयतीह मर्त्त्यः । गुरवे दक्षिणां दद्यात् सुवर्णञ्चैव वाससी । यागोपकरणं सर्वं गुरवे विनिवेदयेत् । इत्याह भगवान् प्रीतः पार्व्वत्याः परमेश्वरः । अहमप्यत्र वं सर्वं युष्माकं मुनिसत्तमाः ! ।"

**जम्बूनदी** स्त्री जम्बूफलरसजाता नदी ।१जम्बूफलरसजाते नदीभेदे जम्बूद्वीपशब्दे २०४२ पृ० विवृतिः। २ब्रह्मलोकात् प्रवर्त्तमानासु समस्त नदीषु मध्ये नदीभेदे च "ब्रह्मलोकादपक्रान्ता सप्तधा प्रतिपद्यते । वस्वोकसारा१ नलिनी२ पावनी च सरस्वती३। जम्बूनदी४ च सीता५ च गङ्गा६ सिन्धुश्च७ सप्तमी" भा० भी० ६अ० ।

**जम्बूमार्ग** न० पुष्करस्थे तीर्थभेदे पुष्करोपक्रमे "प्रदक्षिणमुपावृत्य जम्बूमार्गं समाविशेत् । जम्बूमार्गं समाविश्य देवर्षिपितृसेवितम् । अश्वमेधमवाप्नोति सर्व्वकामसमन्वितः । तत्रोष्य रजनीः पञ्च पूतात्मा जायते नरः । न दुर्गतिमवाप्नोति सिद्धिं प्राप्नोति चोत्तमाम् । जम्बूमार्गादुपावृत्य गच्छेत्तण्डुलिकाश्रमम्" भा० व० ८२ अ० । "जम्बूमार्गे त्रिभिर्मासैः संयतः सुसमाहितः"भा०अनु० २५अ०। "जम्बूमार्गं गमिष्यामि जम्बूमार्गं वसाम्यहम् । एवं सङ्कल्पयानोऽपि रुद्रलोके महीयते" हरिवं० १४१अ० ।

**जम्बूल** पु० जम्बूं तत्फलं लाति ला—क । १जम्बूवृक्षे २केतकवृक्षे च मेदि० । "जम्बूजम्बूलदत्वाढ्यं कदुकन्दकभूषितम्" हरिवं० ९७अ०। ३वरकन्यापक्षयोः परिहासवचने न० नीलकण्ठः।

**जम्बूलमालिका** स्त्री ६त० । १वरकन्यापक्षयोः परिहासवचनसमूहे । "आशीर्भिर्वर्द्धयित्वा च देवर्षिः क्षणमब्रवीत् । अनिरुद्धस्य वीर्य्यास्तो विवाहः क्रियतां विभो ! । जम्बूलमालिकां द्रष्टुं श्रद्धा हि मम जायते । ततः प्रहसिताः सर्वे नारदस्य वचःश्रवात्" हरिवं० १८८अ० । "जम्बूलमालिका कन्यावरयोस्तु चन्द्रिका" हारावल्युक्तार्थकतया उद्धा०त०व्याख्यानात् २तमार्थे च ।

**जम्बू(म्बु)वनज** न० जम्बुवन इव जायते जन—ड ७त० । श्वेतजवापुष्पे । "पारिभद्रं पाटला च बकुलं गिरिशालिनी । तिलकं जम्बुवनजं पीतकं तगरस्त्वपि । एतानि हि प्रशस्तानि कुसुमान्यच्युतार्च्चने" वामन पु० जम्बूवृक्ष पु० कर्म० । जम्बूनामके (जामनाख) वृक्षे स च बृहत्क्षुद्रभेदेन द्विविधः यथाह भाव०प्र०

"फलेन्द्रा कथिता नन्दी राजजम्बूर्महाफला । तथा सुरभिपत्रा च महाजम्बूरपि स्मृता । राजजम्बूफलं स्वादु विष्टम्भि गुरु रोचनम् । क्षुद्रजम्बूः सूक्ष्मपत्रा नादेयी जलजम्बुका । जम्बूः संग्राहिणी रूक्षा कफपित्तास्रदाहजित्" ।

**जभ** पु० जम—अच्—नुम् । १दैत्यभेदे । करणे घञ् । २दन्ते कर्म्मणि घञ् । ३जम्बीरे । भावे घञ् ।४भक्षणे मेदि० । कर्म्मणि घञ् । ५अंशे । करणे घञ् । ६तूणे ७हनौ च हेमच० । जभदैत्यस्य महिषासुरपिता । स च इन्द्रात् पराजयमाशाद्य महादेवं प्रसाद्य त्रैलोक्यविजयिपुत्ररूपवरप्राप्तौ स्वगृहे गमनात् प्रागेव नारदोपदेशात् इन्द्रेण युद्धायाहूतः स्नानच्छलेन सरोऽवगाहकाले महिषीं दृष्ट्वा तस्यां गर्भमाधाय इन्द्रेण युद्धं कृतवान् तेन निपातितश्च तत्कथा मार्कं० पु० दृश्या । कालिकापु० ६१अ० तस्य रम्भेतिनामेति भेदः। अन्योऽपि तन्नामाऽसुरो विष्णुनाहतो यथोक्तं भा० व० १०२ अ० । "असुरश्च महेष्वासो जम्भ इत्यभिविश्रुतः । यज्ञक्षिद्रकरक्रूरस्तस्यैव विनिपातितः" हरिं प्रति देवानामुक्तिः । ७रावणानुचरभेदे "पर्वणः पतनो जम्भः खरः क्रोधवशो हरिः । प्रहसनारुजश्चैव प्रघसश्चैवमादयः । ततोऽभिपततां तेषामदृश्यानां दुरात्मनाम् । अन्तर्धानवधं तज्ज्ञश्चकार स विभीषणः"भा०व० २८४ अ० । ८मत्स्ये सि०कौ० । तत्र भक्षणे "इति ते कथयन्ति स्म ब्राह्मणा जम्भसाधकाः"भा०उ०६२अ०। दन्ते "इमं जम्भसुतं पिबः" ऋ० ८।९१।२ । "जम्भसुतं दन्तैरभिषुतम्"भा० सुजम्भा- हरितजम्भा । अभि—जृम्भायां भावे घञ् । ९जृम्भायाम् । "जम्भा सुहरितटणसोमेभ्यः" पा० बहुव्रीहौ अनिच् समा० । सुजम्भा हरितजम्भा तृणं जम्भो भक्ष्यं यस्य तृणजम्भा सोमजम्भा । स्वार्थे क । जम्भक तमार्थे जभ—ण्वुल् । जम्भक भक्षके त्रि० । [अभिधायात ।

**जम्भका** स्त्री जम्भेव स्वार्थे क । जृम्भायां राजनि० । पक्षे

**जम्भभाग** पु० जम्भाय भक्षणाय भजति भज—ण । रावणभेदे । "देवा गन्धावग्रा वाता मन्ववीपृषरोऽसुराः । जराः

सर्पाः सुपर्णाश्च तरवो जम्भगाः खगाः" तर्पणमन्त्रः ।

**जम्भद्विष्** पु० जम्भमसुरं द्वेष्टि द्विष–क्विप् । इन्द्रे हेमच० ।

**जम्भभेदिन्** पु० जम्भमसुरं भिनत्ति भिद–णिनि इत० । इन्द्रे अमरः जम्भरिपुप्रभृतयोऽप्यत्र । मार्क० पु० तन्मूलं दृश्यम् ।

**जम्भर** पु० जम्भं भक्षणरुचिं राति ददाति रा–क । १जम्बीरे शब्दच० । वा रस्य नः । जम्भल १तदर्थे २बुद्धभेदे च मेदि० । ३राक्षसीभेदे स्त्री । "समुद्रस्योत्तरे तीरे जम्भला नाम राक्षसी । तस्याः स्मरणमात्रेण विशल्या गर्भिणी भवेत्" ज्यो० त० ।

**जम्भा** स्त्री जभि–जृम्भायां भावे अ । जृम्भायां राजनि० ।

**जम्भारि** पु० जम्भस्य भक्ष्यस्य असुरभेदस्य वा अरिः । १वह्नौ २वज्रे च विश्वः ३इन्द्रे च । "जम्भारिदम्भोलयः" नैष० ।

**जम्भिन्** पु० जभ–णिनि नुम् । १जम्बीरे शब्दच० तदर्थे न० हेमच० । २जृम्भायुक्ते त्रि० । [२मरुवके भरतः ।

**जम्भीर** पु० जभ–गम्भीरा०ईरन् नुम् च । १जम्बीरे अमरः

**जम्भ्य** पु० जम्भ एव स्वार्थे यत् जभ–कर्मणि ण्यत् वा दन्ते । "यस्तद्दर्शपूर्णमासयोर्विद्यस्मादिमाः प्रजा अदन्तका जायन्ते यस्मादासां जायन्ते यस्मादासां प्रभिद्यन्ते यस्मादासां संतिष्ठन्ते यस्मादासां पुनरुत्तमे वयसि सर्व एव प्रभिद्यन्ते यस्मादधर एवाग्रे जायन्तेऽथोत्तरे यस्मादणीयांस एवाधरे प्रथीयांस उत्तरे यस्माद्दंष्ट्रा वर्षीयसी यस्मात् समा एव जम्भ्याः" शत० ब्रा० ११।४।१।५। "दंष्ट्राभ्यां मलिम्लून् जम्भ्यैस्तस्करान्" यजु० ११।७८ "दन्ता जम्भ्याः जम्भावर्तिमाश्रिता जम्भ्याः" २वेददीपोक्तार्थे च ।

**जय** पु० जि–भावे अच् । परापेक्षया १उत्कर्षलाभे (जित हओया) २वशीकरणे इन्द्रियजयः । "मौनं सदासनजयः स्थैर्यं प्राणजयः शनैः" भाग० ३।२८।६ । ३शत्रुपराङ्मुखीकरणे ४संग्रामादिजये । "सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः । विभागः संप्रयोगश्च सत्प्रतिग्रह एव च" मनुना तस्य धर्म्यत्वहेतुत्वमुक्तं तच्च क्षत्रियस्यैव "स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितं निर्विष्टं वैश्यशूद्रयोरिति" गौतमस्मृतेः । "जयो रन्ध्रप्रहारिणाम्" रघुः । "समदुःखसुखे कृत्वा लाभालाभौ जयाजयौ" गीता । जि–कर्त्तरि अच् । ५परमेश्वरे पु० तस्य सर्वभूतजयित्वात् तथात्वं "भयो जयः सत्यसन्धो दाशार्हः सात्वतां पतिः" विष्णुस० । ६जयन्ते इन्द्रपुत्रे असुरजयात्तस्य तथात्वम् ७युधिष्ठिरे क्रोधजयात् गुप्ततन्नामकत्वाद्वा तस्य तथात्वम् । विराटनगरे छद्मवेशेन स्थायिनः युधिष्ठिरस्य यथा गुप्तं तन्नाम तथोक्तं "जयोजयन्तो विजयो जयत्सेनो जयद्बलः। इति गुप्तानि नामानि तेषां चक्रे युधिष्ठिरः" भा० वि० ५ अ० । ८अग्निमन्थवृक्षे रोगजयात्तस्य तथात्वम् । ९दानवभेदे "जयो निकुम्भः कुपथश्च दानवो दरच्छुरेते दृढदानवाधिपम्" हरिवं० २४२ अ० । १०विश्वामित्रसुतभेदे । "मधुच्छन्दा जयश्चैव देवलश्च तथाष्टकः । कच्छपो हारितश्चैव विश्वामित्रस्य ते सुताः" २७ अ० । ११सोमवंश्ये सृञ्जयनृपपुत्रभेदे "ऐलपुत्रा बभूवुस्ते सप्त देवसुतोपमाः । दिविजाता महात्मान आयुर्धीमानमावसुः" इत्युपक्रमे "आयोः पुत्रास्तथा पञ्च सर्वे वीरा महारथाः । स्वर्भानुतनयायाञ्च प्रभायां जज्ञिरे नृप ।। नहुषः प्रथमं यज्ञे वृद्धधर्म्मा ततः परम् । रम्भो रजिरनेनाश्च त्रिषु लोकेषु विश्रुतः" इति आयुपुत्रभेदानुक्त्वा "अनेनसः सुतो राजा प्रतिक्षत्रो महायशाः । प्रतिक्षत्रसुतस्यापि सृञ्जयो नाम विश्रुतः । सृञ्जयस्य जयः पुत्रो विजयस्तस्य चात्मजः" हरिवं० २९ अ० । ऐलस्योर्वशीगर्भजाते १२सुतभेदे । "ऐलस्य चोर्वशीगर्भात् षडासन्नात्मजा नृप ।। आयुः श्रुतायुः सत्यायू रयो ह विजयो जयः" भाग० ९।१५।१ । दशमे ब्रह्मसावर्णिमन्वन्तरे १३द्विजभेदे "दशमो ब्रह्मसावर्णिरुपश्लोकसुतो महान् । तत्सुता भूरिषेणाद्या हविष्मत्प्रमुखा द्विजाः । हविष्मान् सुकृतः सत्यो जयो मूर्त्तिस्तदा द्विजाः" भाग० ८।१३।१० । १४जनकवंश्ये मैथिले नृपभेदे । "जन्मना जनकः सोऽभूत् वैदेहस्तु विदेहजः । मिथिलो मथनाज्जातो मिथिला येन निर्म्मिता" इत्युपक्रमे "श्रुतस्ततो जयस्तस्माद्विजयोऽस्मादृतः सुतः" भाग० ९।१३।१६ । सोमवंश्ये १५सृञ्जयसुते १६सङ्कृतिनृपसुते च । "कुशात् प्रतिक्षत्रस्तस्मात् सृञ्जयस्तत्सुतो जयः ; ततः सुतः कृतस्तस्यापि जज्ञे हर्य्यश्ववान् नृपः । सहदेवस्ततोऽहीनो जयत्सेनस्तु तत्सुतः । सङ्कृतिस्तस्य च जयः क्षत्रधर्म्मा महारथः" भाग० ९।१७।१० । अत्र जयस्य द्विधा कीर्त्तनात् तद्वंशे द्वौ जयौ । १७इक्ष्वाकुवंश्ये विजननन्दननृपभेदे हेम० । १८विष्णुदौवारिकभेदे । जयविजयौ हि विष्णुद्वारपौ भगवद्दिदृक्षया वैकुण्ठगतान् नग्नान् सनकादीन् भगवदन्तरे गमनाय निवार्य्य वेत्रेण ताड़यन्तौ तैरभिशप्तौ हिरण्याक्षाद्यसुरभावेन जातौ तत्कथा भाग० ३।१६ अ० ।

“मानसात्मसुता युष्मत्पूर्वजाः सनकादयः । चेरुर्विहायसा लोकान् लोकेषु विगतस्पृहाः । त एकदा भगवतो वैकुण्ठस्यामलात्मनः। ययुर्वैकुण्ठनिलयं सर्वलोकनमस्कृतम्” इत्युपक्रमे ।

“तस्मिन्नतीत्य मुनयः षडसज्जमानाः कक्षाः समानवयसावथ सप्तमायाम् । देवावचक्षत गृहीतगदौ परार्द्ध्यकेयूरकुण्डलकिरीटविटङ्कवेशौ । मत्तद्विरेफवनमालिकया निवीतौ विन्यस्तया सितचतुष्टयबाहुमध्ये । वक्त्रं भ्रुवा कुटिलया स्फुटनिर्गमाभ्यां रक्तेक्षणेन च मनाग्रभसं दधानौ । द्वार्य्येतयोर्निविविशुर्मिषतोरपृष्ट्वा पूर्वा यथा पुरटवज्रकपाटिकायाः । सर्वत्र तेऽविषमया मुनयः स्वदृष्ट्या ये संचरन्त्यविहता विगताभिशङ्काः । तान् वीक्ष्य वातरसनांश्चतुरः कुमारान् वृद्धान् दशार्द्धवयसो विदितात्मतत्त्वान् । वेत्रेण चास्खलयतामतदर्हणांस्तौ तेजो विहस्य भगवत्प्रतिकूलशीलौ । ताभ्यां मिषत्स्वनिमिषेषु निषिध्यमानाः स्वर्हत्तमा अपि हरेः प्रतिहारपाभ्याम् । ऊचुः सुहृत्तमदिदृक्षितभङ्ग ईषत्कामानुजेन सहसा त उपप्लुताक्षाः । श्रीमुनय ऊचुः । कोवामिहैत्य भगवत्परिचर्य्ययोच्चैस्तद्धर्म्मिणां निवसतां विषमस्वभावः । तस्मिन् प्रशान्तपुरुषे गतविग्रहे वां कोवात्मवत्कुहकयोः परिशङ्कनीयः । नह्यन्तरं भगवतीह समस्तकुक्षावात्मानमात्मनि नभो नभसीव धीराः । पश्यन्ति यत्र युवयोः सुरलिङ्गिनोः किं व्युत्पादितं ह्युदरभेदि भयं यतोऽस्य । यद्वा मनुष्यपरमस्य विकुण्ठभर्त्तुः कर्त्तुं प्रकृष्टमिह धीमहि मन्दधीभ्याम् । लोकानितो व्रजतमन्तरभावदृष्ट्या पापीयसस्त्रय इमे रिपवोऽस्य यत्र । तेषामितीरितमुभाववधार्य्य घोरं तं ब्रह्मदण्डमनिवारणमस्त्रपूगैः । सद्यो हरेरनुचरावुरु बिभ्यतस्तत्पादग्रहावपततामतिकातरेण । भूयादघोनि भगवद्भिरकारि दण्डो यो नौ हरेत सुरहेलनमप्यशेषम् । माधोऽनुतापकलया भगवत्स्मृतिघ्नो मोहो भवेदिह तु नौ व्रजतोरधोधः । एवं तदैव भगवानरविन्दनाभः स्वानां विबुध्य सदतिक्रममार्य्यहृद्यः । तस्मिन् ययौ परमहंसमहामुनीनामन्वेषणीयचरणौ चलयन् सहश्रीः” । ततः कुमारैः भगवन्तं दृष्ट्वा कृतां तत्स्तुतिमुपवर्ण्योक्तम् ।

“इति तद्गृणतां तेषां मुनीनां योगधर्म्मिणाम् । प्रतिनन्द्य जगादेदं वैकुण्ठनिलयो विभुः । श्रीभगवानुवाच । एतौ तौ पार्षदौ मह्यं जयो विजय एव च । कदर्थीकृत्य मां यद्वो बह्वक्रातामतिक्रमम् । यस्त्वेतयोर्धृतो दण्डो भवद्भिर्मामनुव्रतैः । स एवानुमतोऽस्माभिर्मुनयो ! देवहेलनात्”। ततः कथाशेषो यथा

“श्रीभगवानुवाच । एतौ सुरेतरगतिं प्रतिपद्य सद्यः संरम्भसम्भृतसमाध्यनुबद्धयोगौ । भूयः सकाशमुपयास्यत आशु यो वः शापो मयैव निमितस्तदवैत विप्राः ! । श्रीब्रह्मोवाच । अथ ते मुनयो दृष्ट्वा नयनानन्दभाजनम् । वैकुण्ठं तदधिष्ठानं विकुण्ठञ्च स्वयंप्रभम् । भगवन्तं परिक्रम्य प्रणिपत्यानुमान्य च । प्रतिजग्मुः प्रमुदिताः शंसन्तो वैष्णवीं श्रियम् । भगवाननुगावाह यातं मा भैष्टमस्तु शम् । ब्रह्मतेजः समर्थोऽपि हन्तुं नेच्छे मतन्तु मे । मयि संरम्भयोगेन निस्तीर्य्य ब्रह्महेलनम् । प्रत्येष्यतं निकाशं मे कालेनाल्पीयसा पुनः । द्वाःस्थावादिश्य भगवान् विमानश्रेणिभूषणम् । सर्वातिशयया लक्ष्म्या जुष्टं स्वन्धिष्ण्यमाविशत् । तौ तु गीर्वाणऋषभौ दुस्तराद्धरिलोकतः । हतश्रियौ ब्रह्मशापादभूतां विगतस्मयौ । तदा विकुण्ठधिष्ण्यात्तयोर्निपतमानयोः । हाहाकारो महानासीद्विमानाग्र्येषु पुत्रकाः ! । तावेव ह्यधुना प्राप्तौ पार्षदप्रवरौ हरेः । दितेर्जठरनिर्विष्टं काश्यपं तेज उल्बणम् । तयोरसुरयोरद्य तेजसा यमयोर्हि वः । आक्षिप्तं तेज एतर्हि भगवांस्तद्विधित्सति” ।

भाग० ३।१२ अ०—१६ अ० । जयति संसारमनेन । जि-करणे अच् । १८भारतादौ ग्रन्थभेदे । “ब्रह्मचारिकाण्डे भविष्यपुराणम् “अष्टादश पुराणानि रामस्य चरितं तथा । विष्णुधर्म्मादिशास्त्राणि शिवधर्म्माश्च भारत ! । कार्ष्णं च पञ्चमो वेदो यन्महाभारतं स्मृतम् । सौराश्च धर्म्मा राजेन्द्र ! मानवोक्ता महीपते ! । जयेति नाम एतेषां प्रवदन्ति मनीषिणः” इति “नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् । देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत्”सर्वपुराणारम्भे पाठ्यश्लोकः। २०दक्षिणद्वारे गृहे शब्दार्थचि०। षष्टिवर्षमध्ये अष्टाविंशतितमे २१वत्सरे । तत्फलं यथा“क्षत्रियाश्च तथा वैश्याः शूद्राश्च नटनर्त्तकाः। पीड़िताास्ते वरारोहे ! जये सर्वे न संशयः” ज्यो०त० । जये कुशलः आकर्षा० कन् । जयक जयकुशले त्रि० । २२कुमारानुचरनागभेदे । “प्रह्रादावह्निपुत्रस्य महापारि-

घटायुभौ। अयं महाजयश्चैव नागौ ज्वलनसूनवे" भा०श०४६अ०। २१द्रुपदराजपुत्रभेदे "जघान सुरथं नाम द्रुपदस्य सुतं विभुः। पुनः शत्रुञ्जयं नाम सुरथस्यानुजं रणे। रथानीकं जयानीकं जयञ्चात निजघ्निवान्" भा० द्रो० १५६ अ०। २४अर्जुने "यदि नोत्तिष्ठति जयः पिता मे नरसत्तमः। अद्यैवेह रणोद्देशे शोषयिष्ये कलेवरम्" भा०आश्व० ८०अ०। मातरं प्रति बभ्रुवाहनोक्तिः। "इत्युक्त्वा सोऽब्रवीत् प्रश्नं मणिपूरपतिं जयः" ८१अ०। २५धृतराष्ट्रपुत्रभेदे। "दुर्योधनप्रभृतयो युयुत्सुः कारणात्तया। ततो दुःशासनश्चैव दुःसहश्चैव भारत!। दुर्मर्षणो विकर्णश्च चित्रसेनोविविंशतिः। जयः सत्यव्रतश्चैव पुरुमित्रश्च भारत!। वैश्यापुत्रो युयुत्सुश्च एकादश महारथाः" भा० आ० ६३ अ०।

जयकोलाहल पु० जयस्य कोलाहलो यस्मिन्। १पाशकक्रीड़ाभेदे शब्दच०। ६त०। २जयध्वनौ।

जयढक्का स्त्री जयसूचिका ढक्का। वाद्यभेदे।

जयतीर्थ न० तीर्थभेदे शिवपु०।

जयत्सेन पु०१विराटनगरे छद्मवेशिनि नकुले पाण्डवे। जयशब्दे दृश्यम्। जयन्ती सेनाऽस्य। २विक्रान्तसैन्यके नृपे। ३मागधनृपभेदे। "मगधेषु जयत्सेनस्तेषामासीत् स पार्थिवः। अष्टानां प्रवरास्तेषां कालेयानां महासुराः" भा० आ० ६७ अ०। ४पुरुवंश्ये सार्वभौमाख्यनृपपुत्रे। "अहंयातिः खलु कृतवीर्यदुहितरमुपयेमे भानुमतीं नाम तस्यामस्य जज्ञे सार्वभौमः। सार्वभौमः खलु जित्वा जहार कैकेयीं सुनन्दां नाम तामुपयेमे तस्यामस्य जज्ञे जयत्सेनो नाम। जयत्सेनः खलु वैदर्भीमुपयेमे सुश्रुतां नाम तस्यामस्य जज्ञे अवाचीनः" भा० आ० ९५ अ०। ५सोमवंश्ये अहीनन्नृपपुत्रे च। जयशब्दे मूलं दृश्यम्।

जयदत्त पु० इन्द्रपुत्रे जयन्ते हेमच०।

जयदुर्गा स्त्री दुर्गामूर्त्तिभेदे तन्मूर्त्तिलक्षणं तन्त्रसारे "कालाभ्राभां कटाक्षैररिकुलभयदां मौलिबद्धेन्दुरेखां शङ्खं चक्रं कृपाणं त्रिशिखमपि (त्रिशूलम्) करैरुद्वहन्तीं त्रिनेत्राम्। सिंहस्कन्धाधिरूढ़ां त्रिभुवनमखिलं तेजसा पूरयन्तीं ध्यायेद् दुर्गां जयाख्यां त्रिदशपरिवृतां सेवितां सिद्धिकामैः"। अस्याः मन्त्रप्रयोगादिकं तत्रैव दृश्यम्।

जयदेव पु० गीतगोविन्दकाव्यकारके केन्दुविल्वग्रामवासिनि कविभेदे "भावं शृङ्गारसारस्वतमथजयदेवस्य विष्वग्वचांसि" गीतगो० [शब्दे दृश्यम्।

जयद्बल पु० विराटावासे छद्मवेशिनि पाण्डवे सहदेवे जयजयद्रथ पु० १पौरवे वृहन्मनसो नृपस्य यशोदेव्यां जाते पुत्रभेदे। तदुत्पत्तिकथा "वृहद्भसुतो दस्तु राजा नाम्ना वृहन्मनाः। तस्य पत्नीद्वयञ्चासीद्‌चैद्यस्यैतेसुते शुभे। यशोदेवी च सत्या च ताभ्यां वंशस्तु भिद्यते। जयद्रथस्तु राजेन्द्र! यशोदेव्यां व्यजायत" हरिवं० ३१अ०। सिन्धुदेशाधिपवृद्धक्षत्रसुते २राजभेदे। स च धृतराष्ट्रकन्यां दुःशलामुपयेमे। स च सौवीरदेशाधिपः "जयद्रथो नाम यदि श्रुतस्ते सौवीरराजः सुभगे! स एषः" भा०व०२६४ स च द्रौपदीं हृत्वा पलायमानो विजित्य भीमेन गृहीतो युधिष्ठिराज्ञया मुक्तश्च। ततो निर्वेदमासाद्य तपसा तोषितात् रुद्रतो वरं लेभे तत्कथा यथा

"जयद्रथस्तु संप्रेक्ष्य भ्रातरावुद्यतायुधौ। प्राधावत्तूर्णमव्यग्रो जीवितेप्सुः सुदुःखितः। तं भीमसेनो धावन्तमवतीर्य रथाद्बली। अभिद्रुत्य निजग्राह केशपक्षे ह्यमर्षणः। समुद्यम्य च तं भीमो निष्पिपेष महीतले। शिरो गृहीत्वा राजानं ताडयामास चैव ह। पुनः सञ्जीवमानस्य तस्योत्पतितुमिच्छतः। पदा मूर्ध्नि महाबाहुः प्राहरद्विलपिष्यतः। तस्य जानु ददौ भीमो जघ्ने चैनमरत्निना। स मोहमगमद्राजा प्रहारवरपीडितः। सरोषं भीमसेनं तु वारयामास फाल्गुनः। दुःशलायाः कृते राजा यत्तदाहेति कौरवः। भीम उवाच। नायं पापसमाचारो मत्तो जीवितुमर्हति। कृष्णायास्तदनर्हायाः परिक्लेष्टा नराधमः। किन्नु शक्यं मया कर्त्तुं यद्राजा सततं घृणी। त्वञ्च बालिशया बुद्ध्या सदैवास्मान् प्रबाधसे। एवमुक्त्वा सटास्तस्य पञ्च चक्रे वृकोदरः। अर्द्धचन्द्रेण बाणेन किञ्चिदब्रुवतस्तदा। विकत्थयित्वा राजानं ततः प्राह वृकोदरः। जीवितुञ्चेच्छसे मूढ़! हेतुं मे गदतः शृणु। दासोऽस्मीति त्वया वाच्यं संसत्सु च सभासु च। एवं ते जीवितं दद्यामेष युद्धजितो विधिः। एवमस्त्विति तं राजा कृच्छ्रमाणो जयद्रथः। प्रोवाच पुरुषव्याघ्रं भीममाहवशोभिनम्। तत एनं विचेष्टन्तं बद्ध्वा पार्थौ वृकोदरः। रथमारोपयामास विसंज्ञं पांशुगुण्ठितम्। ततस्तं रथमास्थाय भीमः पार्थानुगस्तदा। अभ्येत्याश्रममध्यस्थमभ्यगच्छद्युधिष्ठिरम्। दर्शयामास भीमस्तु तदवस्थं जयद्रथम्।

तं राजा प्राहसद्दृष्ट्वा मुच्यतामिति चाब्रवीत्। राजानञ्चाब्रवीद्भीमो द्रौपद्याः कथ्यतामिति। दासभावं गतो ह्येष पाण्डूनां पापचेतनः। तमुवाच ततो ज्येष्ठो भ्राता सप्रणयं वचः। मुञ्चैनमधमाचारं प्रमाणं यदि ते वयम्। द्रौपदी चाब्रवीद्भीममभिवीक्ष्य युधिष्ठिरम्। दासोऽयं मुच्यतां राज्ञस्त्वया पञ्चसटः कृतः। स मुक्तोऽभ्येत्य राजानमभिवाद्य युधिष्ठिरम्। ववन्दे विह्वलो राजंस्तांश्च दृष्ट्वा मुनींस्तदा। तमुवाच घृणी राजा धर्मपुत्त्रो युधिष्ठिरः। तथा जयद्रथं दृष्ट्वा गृहीतं सव्यसाचिना। अदासो गच्छ मुक्तोऽसि मैवं कार्षीः पुनः पुनः। स्त्रीकामश्च धिगस्तु त्वां क्षुद्रः क्षुद्रसहायवान्। एवंविधं हि कः कुर्य्यात्त्वदन्यः पुरुषाधमः। गतसत्त्वमिव ज्ञात्वा कर्त्तारमशुभस्य तम्। संप्रेक्ष्य भरतश्रेष्ठः कृपाञ्चक्रे नराधिपः। धर्म्मे ते वर्द्धतां बुद्धिर्मा चाधर्म्मे मनः कृथाः। साश्वः सरथ पादातः स्वस्ति गच्छ जयद्रथ!। एवमुक्तस्तु सव्रीडस्तूष्णीं किञ्चिदवाङ्मुखः। जगाम राजा दुःखार्त्तो गङ्गाद्वाराय भारत। स देवं शरणं गत्वा विरूपाक्षमुमापतिम्। तपश्चचार विपुलं तस्य प्रीतो वृषध्वजः। बलिं स्वयं प्रत्यगृह्णात् प्रीयमाणस्त्रिलोचनः। वरञ्चास्मै ददौ देवः स जग्राह च तच्छृणु। जयद्रथ उवाच। समस्तान् सरथान् पञ्च जयेयं युधि पाण्डवान्। इति राजाब्रवीद्देवं नेति देवस्तमब्रवीत्। महेश्वर उवाच। अजय्यांश्चाप्यवध्यांश्च वारयिष्यसि तान् युधि। ऋतेऽर्ज्जुनं महाबाहुं नरं नाम सुरेश्वरम्। वदर्य्यां तप्ततपसं नारायणसहायकम्। अजितं सर्व्वलोकानां देवैरपि दुरासदम्। मया दत्तं पाशुपतम् दिव्यमप्रतिमं शरम्। अवाप लोकपालेभ्यो वज्रादीन् स महाशरान्”।

“प्रधानं शस्त्रविदुषां तेन कृष्णेन रक्ष्यते। सहायः पुण्डरीकाक्षः श्रीमानतुलविक्रमः। समानस्यन्दने पार्थमास्थाय परवीरहा। न शक्यते तेन जेतुं त्रिदशैरपि दुःसहः। कः पुनर्म्मानुषो भावो रणे पार्थं विजेष्यते। तमेकं वर्ज्जयित्वा तु सर्व्वं यौधिष्ठिरं बलम्। चतुरः पाण्डवान् राजन्! दिनैकं जेष्यसे रिपून्”। स च भारतयुद्धकाले द्रोणरचितचक्रव्यूहद्वारे स्थित्वाऽर्ज्जुनमृते युधिष्ठिरादीन् चतुरो भ्रातॄन् जिगाय। अभिमन्युञ्च जघान। तद्वधकुपितेनार्ज्जुनेन श्वः सूर्य्यास्तमयात् प्रागेव त्वां हन्ता तथा त्वामहत्वा स्वयं वा मर्त्तेति प्रतिज्ञाय स निहतः तच्छिरश्च अन्यत्र तपस्यतस्तत्पितुर्वृद्धक्षत्रस्याञ्जलौ शरपरम्परया पातितं तेन च तस्य शिरसो भूमौ पातनेन स्वपितुः शतधाभूतं तत्कथा यथा भा० द्रो० १४४ अ०।

“एतस्मिन्नेव काले तु द्रुतं गच्छति भास्करे। अब्रवीत् पाण्डवं राजंस्त्वरमाणो जनार्द्दनः। एष मध्ये कृतः षड्भिः पार्थ! वीरैर्महारथैः। जीवितेप्सुर्महाबाहो! भीतस्तिष्ठति सैन्धवः। एताननिर्ज्जित्य रणे षड्रथान् पुरुषर्षभ!। न शक्यः सैन्धवो हन्तुं यतो निर्व्याजमर्ज्जुन। योगमत्र विधास्यामि सूर्य्यस्यावरणं प्रति। अस्तं गत इति व्यक्तं प्रेक्ष्यत्येकः स सिन्धुराट्। हर्षेण जीविताकाङ्क्षी विनाशार्थं तव प्रभो!। न गोपयिष्यति दुराचारः स आत्मानं कथञ्चन। तत्र छिद्रे प्रहर्त्तव्यं त्वयास्य कुरुसत्तम। व्यपेक्षा नैव कर्त्तव्या गतोऽस्तमिति भास्करः। एवमस्त्विति बीभत्सुः केशवं प्रत्यभाषत। ततोऽसृजत्तमः कृष्णः सूर्य्यस्यावरणं प्रति। योगी योगेन संयुक्तो योगिनामीश्वरो हरिः। सृष्टे तमसि कृष्णेन गतोऽस्तमिति भास्करः। त्वदीया जहृषुर्योधाः पार्थनाशान्नराधिप!। ते प्रहृष्टा रणे राजन्नापश्यन् सैनिका रविम्। उन्नाम्य वक्त्राणि तदा स च राजा जयद्रथः। वीक्षमाणे ततस्तस्मिन् सिन्धुराजे दिवाकरम्। पुनरेवाब्रवीत् कृष्णो धनञ्जयमिदं वचः। पश्य सिन्धुपतिं वीरं प्रेक्षमाणं दिवाकरम्। भयं विपुलमुत्सृज्य त्वत्तो भरतसत्तम। अयं कालो महाबाहो! वधायास्य दुरात्मनः। इत्येवं केशवेनोक्तः पाण्डुपुत्त्रः प्रतापवान्। न्यवधीत्तावकं सैन्यं शरैरर्काग्निसन्निभैः”।

“एवं तान् व्याकुलीकृत्य त्वदीयान् स महारथान्। उज्जहार शरं घोरं पाण्डवोऽनलसन्निभम्। इन्द्राशनिसमप्रख्यं दिव्यमन्त्राभिमन्त्रितम्। सर्व्वभारसहं शश्वद्गन्धमाल्यार्च्चितं महत्। वज्रेणास्त्रेण संयोज्य विधिवत् कुरुनन्दनः। समादधन्महाबाहुर्गाण्डीवे क्षिप्रमर्ज्जुनः। तस्मिन् सन्धीयमाने तु शरे ज्वलनतेजसि। अन्तरीक्षे महानादो भूतानामभवन्नृपः। अब्रवीच्च पुनस्तत्र त्वरमाणो जनार्द्दनः। धनञ्जय! शिरश्छिन्धि सैन्धवस्य दुरात्मनः। अस्तं महीधरश्रेष्ठं वियास्यति दिवाकरः। शृणुष्वैतच्च कार्य्यं मे

जयद्रथवधं प्रति । वृद्धक्षत्रः सैन्धवस्य पिता जगति विश्रुतः । स कालेनेह महता सैन्धवं प्राप्तवान् सुतम् । जयद्रथममित्रघ्न ! तञ्चोवाच तदा न्टपम् । अन्तर्हिता पुरा वाणी मेघदुन्दुभिनिस्वना । तवात्मजो मनुष्येन्द्र ! कुलशीलदमादिभिः। गुणैर्भविष्यति विभो ! सदृशो वंशयोर्द्वयोः । क्षत्रियप्रवरो लोके नित्यं शूराभिसत्कृतः । शत्रुभिर्युध्यमानस्य संग्रामे त्वस्य धन्विनः । शिरश्छेत्स्यति संक्रुद्धः शत्रुरालक्षितो भुवि । तच्छ्रुत्वा सिन्धुराजस्तु ध्यात्वा चिरमरिन्दमः । ज्ञातीन् सर्वानुवाचेदं पुत्रस्नेहाभिनोदितः । संग्रामे युध्यमानस्य वहतो महतीं धुरम् । धरण्यां मम पुत्रस्य पातयिष्यति यः शिरः । तस्यापि शतधा मूर्द्धा फलिष्यति न संशयः । एवमुक्त्वा ततो राज्ये स्थापयित्वा जयद्रथम् । वृद्धक्षत्रो वनं यातस्तपश्चोग्रं समास्थितः । स तप्यते च तेजस्वी तपो घोरं दुरासदम् । समन्तपञ्चकादस्माद्बहिर्वानरकेतन ! । तस्माज्जयद्रथस्य त्वं शिरश्छित्त्वा महाहवे । दिव्येनास्त्रेण रिपुहन् ! घोरेणाद्भुतकर्मणा । सकुण्डलं सिन्धुपतेः प्रभञ्जनसुतानुज ! । उत्सङ्गे पातयाश्वाशु वृद्धक्षत्रस्य भारत ! । अथ त्वमस्य मूर्द्धानं पातयिष्यसि भूतले । तवापि शतधा मूर्द्धा फलिष्यति न संशयः । यथा चेदं न जानीयात् स राजा तपसि स्थितः । तथा कुरु कुरुश्रेष्ठ ! दिव्यमस्त्रमुपाश्रितः । न ह्यसाध्यमकार्य्यं वा विद्यते तव किञ्चन । समस्तेष्वपि लोकेषु त्रिषु वासवनन्दन ! । एतच्छ्रुत्वा तु वचनं सृक्कणी परिसंलिहन् । इन्द्राशनिसमस्पर्शं दिव्यमन्त्राभिमन्त्रितम् । सर्वभारसहं शश्वद्गन्धमाल्यार्च्चितं शरम् । विससर्ज्जार्जुनस्तूर्णं सैन्धवस्य वधे वृतम् । ततो धनञ्जयः शीघ्रं शरं तं भास्करत्विषम् । उज्जिहीर्षुः शिरः कायात् सैन्धवस्य महात्मनः । स पार्थभुजनिर्मुक्तः शरः श्येन इवाशुगः । छित्त्वा शिरः सिन्धुपतेरुत्पपात विहायसि । तच्छिरः सिन्धुराजस्य शरैरूर्द्ध्वमवाहयत् । दुर्हृदामप्रहर्षाय सुहृदां हर्षणाय च । शरैः कदम्बकीकृत्य काले तस्मिंस्तु पाण्डवः । योधयामास तांश्चैव पाण्डवः षण्महारथान् । ततः सुमहदाश्चर्य्यं तत्रापश्याम भारत । समन्तपञ्चकाद्बाह्यं शिरो यद्व्यहरत्ततः । एतस्मिन्नेव काले तु वृद्धक्षत्रो महीपतिः । सन्ध्यामुपास्ते तेजस्वी सम्बन्धी तव मारिष ! । उपासीनस्य तस्याथ कृष्णकेशं सकुण्डलम् । सिन्धुराजस्य मूर्द्धानमुत्सङ्गे समपातयत् । तस्योत्सङ्गे निपतितम् शिरस्तच्चारुकुण्डलम् । वृद्धक्षत्रस्य न्टपतेरलक्षितमरिन्दम ! । ततोभीतस्य तस्याथ वृद्धक्षत्रस्य भारत ! उत्तिष्ठतस्तत् सहसा शिरोऽगच्छद्धरातलम् । ततस्तस्य नरेन्द्रस्य पुत्रमूर्द्धनि भूतलम् । गते तस्यापि शतधा मूर्द्धागच्छदरिन्दम ! ततः सर्व्वेषु सैन्यानि विस्मयं जग्मुरुत्तमम् । वासुदेवं सबीभत्सुं प्रशशंसुर्महारथम् । ततो विनिहते राजन् ! सिन्धुराजे किरीटिना । तमस्तद्वासुदेवेन संहृतं भरतर्षभ ! । पश्चाज्ज्ञातं महीपाल ! तव पुत्रैः सहानुगैः । वासुदेवप्रयुक्तेयं मायेति न्टपसत्तम ! ।”

“जयद्रथवधे राजन् ! दुर्य्योधनधनञ्जयौ । सवितारं निरीक्षेते प्रौढा बाला वधूरिव” उद्भटः ।

**जयद्रथवध** पु० जयद्रथस्य वधमधिकृत्य कृतो ग्रन्थः अण् तस्य आख्यायिकायां लुपि व्यक्तिवचनत्वात् पुंस्त्वम् । भारतद्रोणपर्व्वान्तर्गते अवान्तरपर्व्वभेदे तच्च द्रोणपर्व्वणि ८५ अध्यायादि १५२ अध्यायपर्य्यन्तम् “जयद्रथवधः पर्व्व घटोत्कचवधस्ततः” भा० आ० १ अ० अवान्तरपर्व्वोक्तौ ।

**जयद्रथविमोक्षण** न० जयद्रथस्य विमोक्षणमधिकृत्य कृतो ग्रन्थः अण् तस्य आख्यायिकायां लुपि व्यक्तिवचनत्वात् क्लीवता । भारतवनपर्व्वान्तर्गते अवान्तरपर्व्वभेदे तच्च पर्व्व वनपर्व्वणि २७ अध्यायात्मकम् । “द्रौपदीहरणं तत्र जयद्रथविमोक्षणम्” भा० आ० १ अ० अवान्तरपर्व्वोक्तौ ।

**जयधर्म्मन्** पु० कुरुसेनानीभेदे । “कमलाक्षः परक्राथी जयधर्म्मा सुदर्शनः । एते त्वामनुयास्यन्ति पत्तीनामयुतानि षट्” भा० द्रो० ११३ अ० ।

**जयध्वज** पु० कार्त्तवीर्य्यार्ज्जुनस्य तनये आवन्त्ये न्टपभेदे “शूरसेनश्च शूरश्च धृष्टोक्तः कृष्ण एव च । जयध्वजश्च नाम्नासीदावन्त्यो न्टपतिर्महान् । कार्त्तवीर्य्यस्य तनया वीर्य्यवन्तो महाबलाः । जयध्वजस्य पुत्रस्तु तालजङ्घो महाबलः” हरिवं० ३४ अ० ।

**जयन** न० जि–करणे ल्युट् । १हयादिसन्नाहे “तुरङ्गमो जयनयुजश्च वाजिनः” माघः । भावे ल्युट् । २जये मेदि० ।

**जयनी** स्त्री इन्द्रकन्यायाम् त्रिका० ।

**जयन्त** पु० जि–झ । १इन्द्रपुत्रे अमरः २शिवे ३चन्द्रे च त्रिका० । विराटावासे छद्मवेशिनि ४भीमे तस्य तथागुप्तनामता जयशब्दे दृश्या । ५विष्णौ “जयन्तः सर्वविज्जयी” विष्णुस० । ६रुद्रभेदे “अजैकपादहिर्बुध्नो विरूपाक्षोऽथ रैवतः । हरश्च बहुरूपश्च त्र्यम्बकश्च

सुरेश्वरः। सावित्रश्च जयन्तश्च पिनाकी चापराजितः" भा० शा० २०८ अ०। रुद्रोक्तौ "अजैकपादहिर्बुध्नो विरूपाक्षश्च रैवतः। हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः। रुद्रा एकादश प्रोक्ता जयन्तश्चापराजितः" विष्णुध० "यथा जयन्तेन शचीपुरन्दरौ" "त्रिविष्टपस्येव पतिं जयन्तः" इति च रघुः। ७तालभेदे "आदिताले जयन्तः स्यात् शृङ्गाररससंयुतः। रुद्रसंख्या शरपद आयुर्वृद्धिकरः परः" सङ्गीतदामोदरः।

**जयन्ती** स्त्री जि—झ गौरा० ङीष्। १दुर्गाशक्तिभेदे "जयन्ती मङ्गला काली भद्रकाली कपालिनी। दुर्गा शिवा क्षमा धात्री स्वहा स्वधा नमोऽस्तुते" कालिपु०। २जयन्तभगिन्यां शक्रपुत्र्यां ३पताकायां च मेदि०। ४स्वनामख्याते वृक्षभेदे सा च नवपत्रिकान्तर्गता "कदली दाड़िमी धान्यं हरिद्रा मानकं कचुः। बिल्वोऽशोको जयन्ती च विज्ञेया नव पत्रिकाः" दुर्गार्चापद्धत्युक्तेः। तदधिष्ठात्री देवता च कार्त्तिको मूलं तत्रैव दृश्यम्। "जयन्ती मदगन्धाढ्या तिक्ता चैव कटूष्णका। क्रिमिमूत्रामजित् ख्याता कण्ठशोषणकृन्मता। कृष्णा रसायनी तत्र सैव सर्वत्र पूज्यते" राजनि०। "तच्छाकं विषदोषघ्नं चक्षुष्यं मधुरं हिमम्" राजव० "जयं पुण्यञ्च कुरुते जयन्तीमिति तां विदुः। रोहिणीसहिता कृष्णा मासे च श्रावणेऽष्टमी। अर्द्धरात्रादधश्चोर्द्ध्वं कलयापि यदा भवेत्। जयन्ती नाम सा प्रोक्ता सर्वपापप्रणाशिनी" ति० त० स्कान्दोक्ते ५श्रावणकृष्णाष्टमी रोहिणीयोगे कृष्णाष्टमीशब्दे २२२१ पृ० विवृतिः। "अभिजिन्नाम नक्षत्रं जयन्ती नाम शर्वरी। मुहूर्त्तोविजयो नाम यत्र जातो जनार्द्दनः" हरिवं० ६०अ०। "यत्र स्वोच्चगतश्चन्द्रो लग्नादेकादशे स्थितः। जयन्तो नाम योगोऽयं शत्रुपक्षविनाशकृत्" ज्योतिषोक्ते ६यात्रायोगविशेषे पु०। "प्रभावनीके तनवै जयन्तीः" माघः। स्वार्थे क। जयन्तिका तत्रार्थे संज्ञायां कन्। हरिद्रायां राजनि०। दुर्गासखीभेदे च। तद्भेदाश्च काशी०४७अ० दर्शिता यथा। "यथा जया च विजया यथा चैव जयन्तिका। शुभानन्दा सुनन्दा च कौमुदी च यथोर्मिला। यथा चम्पकमाला च यथा मलयवासिनी। कर्पूरलतिका यद्वद्गन्धधारा यथा शुभा। अशोका च विशोका च यथा कमलगन्धिनी। यथा च मन्दनिःश्वासा यथा मृगमदोत्तमा। यथा च कोकिलालापा यथा मयूरभाषिणी। गन्धपद्मनिविर्यद्वदनुत्तमा यथा च सा। दृगम्बुलेङ्गितज्ञा च यथा कृतमनोरथा। प्राणचित्तहरा यद्वत्तथा स्वेषा सुलक्षणा"।

**जयपत्र** न० जयसूचकं पत्रम्। राज्ञा दत्ते जयसूचके पत्ररूपे राजकीयलेख्यभेदे। राजलेख्यं पत्रं च चतुर्विधं यथाह वशिष्ठः "राज्ञः स्वहस्तसंयुक्तं समुद्राचिह्नितं तथा। राजकीयं स्मृतं लेख्यं सर्वेष्वर्थेषु साक्षिमत्। शासनं प्रथमं ज्ञेयं जयपत्रं तथाऽपरम्। आज्ञाप्रज्ञापनापत्रं राजकीयं चतुर्विधम्"। जयपत्रलक्षणभेदादिकं वीरमि० दर्शितं तत्राह व्यासः

"व्यवहारान् स्वयं दृष्ट्वा श्रुत्वा वा प्राड्विवाकतः। जयपत्रन्ततो दद्यात् परिज्ञानाय पार्थिवः। जङ्गमं स्थावरं येन प्रमाणेनात्मसात्कृतम्। भागाभिशापसन्दिग्धे यः सम्यग्विजयी भवेत्। तस्मै राज्ञा प्रदातव्यं जयपत्रं सुनिश्चितम्। पूर्व्वोत्तरक्रियापादं तत्प्रमाणपरीक्षणम्। निगदस्मृतिवाक्यञ्च यथासत्यं विनिश्चितम्। एतत्सर्वं समासेन जयपत्रेऽभिलेखयेदिति"। प्रमाणस्य पृथगुपादानात् क्रियापादेन प्रत्याकलितमत्र उच्यते। परिज्ञानाय प्राड्न्यायस्य बोधनाय। भागेऽभिशापे वा सन्दिग्धे। विवादपदमात्रोपलक्षणम्। तेन विवादविषयो यो यत्र विवादे स तत्र लेखनीयः। जयपत्रं राजमुद्राङ्कितं कार्य्यमित्याह वृद्धवशिष्ठः "यथोपन्यस्तसाध्यार्थं संयुक्तं सोत्तरक्रियम्। सावधारणकञ्चैव जयपत्रकमुच्यते। प्राड्विवाकादिहस्ताङ्कं मुद्रितं राजमुद्रया"। अत्र च राज्ञः सभ्यानाञ्च स्वहस्तोऽप्यपेक्षितः इत्याह कात्यायनः "सिद्धेनार्थेन संयोज्यो वादी सत्कारपूर्वकम्। लेख्यं स्वहस्तसंयुक्तं तस्मै दद्यात्तु पार्थिवः। सभासदश्च ये तत्र स्मृतिशास्त्रविदः स्थिताः। यथा लेख्यविधौ तत्र स्वहस्तन्दद्युरेव ते"। क्वचित्पश्चात्काराख्योऽपि जयपत्रभेद उक्तस्तेनैव "अनेन विधिना लेख्यं पश्चात्कारं विदुर्बुधाः। निरस्ता तु क्रिया यत्र प्रमाणेनैव वादिना। पश्चात्कारो भवेत्तत्र न सर्वासु विधीयते। अन्यवादादिहीनेभ्य इतरेषां प्रदीयते। वृत्तानुवादसंसिद्धन्तच्च स्याज्जयपत्रकमिति।"

**जयपाल** पु० जयं पालयति पालि—अण् उप०स०। १विधौ २विष्णौ ३भूपाले च शब्दच० (जमालगोटा) ४स्वनामख्याते वृक्षभेदे। "जयपालः कटुः पाके उष्णश्चैव विरेचनः। क्रिमिश्लेष्मामजठरामयहृत् दीपनोमतः" राजनि०।

**जयपुत्रक** पु० पुत्र इव पुत्रकः जयसूचकः पुत्रकः। पाशकभेदे शब्दर०।

**जयप्रिय** पु० विराटनृपभ्रातृभेदे। “गजानीकः श्रुतानीको वीरभद्रः सुदर्शनः। श्रुतध्वजो बलानीको जयानीको जयप्रियः। विजयो लब्धलक्ष्यश्च जयाश्वो रथवाहनः। चन्द्रोदयः कामरूपो विराटभ्रातरः शुभाः” भा० द्रो० १५८ अ०। २कुमारानुचरमातृभेदे स्त्री “कच्चाऽम्बिका निकुटिका वामा चत्वरवासिनी। सुमङ्गला स्वस्तिमती वृद्धिकामा जयप्रिया” भा० शल्य० ४७ अ०।

**जयमङ्गल** पु० जयेन मङ्गलमस्मात्। १राजवाह्ये हस्तिभेदे शब्दरत्ना०। “चतुर्विंशतिवर्णाढ्यः कथितो जयमङ्गलः। शृङ्गारवीरयोरेव ताले चाचपुटे च सः” सङ्गीतदा० उक्ते २ध्रुवकभेदे च।

**जयमङ्गलरस** पु० जयेन रोगजयेन मङ्गलं यस्मात् तादृशो रसः। वैद्यकोक्ते सर्वज्वरनाशके औषधभेदे। “हिङ्गुलसम्भवं सूतं गन्धकं टङ्कणं तथा। ताम्रं वङ्गं माक्षिकञ्च सैन्धवं मरिचं तथा। समं सर्वं समाहृत्य द्विगुणं स्वर्णभस्मकम्। तदर्द्धं कान्तलौहञ्च रूप्यभस्मापि तत्समम्। एतत् सर्वं विचूर्ण्याथ भावयेत् कनकद्रवैः। शेफालीदलजैश्चापि दशमूलरसेन च। किराततिक्तककाथैस्त्रिवारं भावयेत् सुधीः। भावयित्वा तु तत्कार्य्या गुञ्जाद्वयमिता वटी। अनुपानं प्रयोक्तव्यं जीरकं मधुसंयुतम्। जीर्णज्वरं महाघोरं चिरकालसमुद्भवम्। ज्वरमष्टविधं हन्ति साध्यासाध्यमथापि वा। पृथगदोषांश्च विविधान् समस्तान् विषमज्वरान्। १मेदोगतं २मांसगतमस्थि३मज्जा४गतं तथा। ५अन्तर्गतं महाघोरं ६वहिःस्थञ्च विशेषतः। ७नानादोषोद्भवञ्चैव ज्वरं ८शुक्रगतं तथा। निखिलं ज्वरनामानं हन्ति श्रीशिवशासनात्। जयमङ्गलनामायं रसः श्रीशिवनिर्म्मितः। बलपुष्टिकरश्चैव सर्वरोगनिवर्हणः” भैषज्यरत्नावली। अत्र द्विगुणं स्वर्णभस्मकमित्यत्र सर्वेषां समस्तानां यन्मानं ततो द्विगुणं स्वर्णमिति मुख्यः कल्पः। प्रत्येकापेक्षया द्विगुणमिति कनिष्ठः कल्पः।

**जयरात** पु० कलिङ्गराजसुतभेदे। कलिङ्गसुतयुद्धोपक्रमे “जयरातरथम्प्राप्य सुद्धः सिंह इवानदत्। जयरातमथाक्षिप्यानदत् सव्येन पाणिना” भा० द्रो० १५५ अ०।

**जयवाराहतीर्थ** न० तीर्थभेदे शिवपु०।

**जयवाहिनी** स्त्री जयस्य जयन्तस्य वाहिनी। १शच्याम् २इन्द्राण्याम् हेमच०। “चारुधारा महेन्द्राणी चेन्द्राणी जयवादिनीति” पाठान्तरम्। कर्म्म०। २जययुक्तसैन्ये स्त्री शब्दार्थचि०।

**जयशब्द** पु० जयसूचकः शब्दः शाक०त०। १जयध्वनौ। “उद्घुष्टनैकजयशब्दविराविताशाम्” इह० १० अ०।

**जयसिंह** पु० जयपुराधीश्वरे जयसिंहकल्पद्रुमाख्यस्मृतिनिबन्धकारके नृपभेदे।

**जयसेन** पु० जययुक्ता सेनाऽस्य। १मागधे नृपभेदे “श्रुतायुधश्च कालिङ्गो जयसेनश्च मागधः” भा० स० ४अ०। आयुन्वयवंश्ये २अहीनसुते नृपभेदे। “सहदेवस्ततोऽहीनो जयसेनस्तु तत्सुतः” भाग० ९।१७।१०।

**जयस्तम्भ** पु० जयसूचकः स्तम्भः। देशान्तरजयानन्तरं स्वकीर्त्तिख्यापनाय राज्ञा कृते जयसूचके स्तम्भे। “त्रिकूटमेव तत्रोच्चैर्जयस्तम्भं चकार सः” “निचखान जयस्तम्भान् गङ्गास्रोतोऽन्तरेषु सः” रघुः।

**जयस्वामिन्** पु० कात्यायनकल्पसूत्रव्याख्यातृभेदे। “तत्र शिरः कर्णौ चाप्राप्तौ तद्व्यतिरिक्तं सर्वं शरीरमाच्छादनीयमिति जयस्वामिनः” कात्या० श्रौ० १०.६।२ सूत्रभाष्ये कर्कः।

**जया** स्त्री जि—अच्। १जयन्तीवृक्षे अमरः। रोगजयात् तस्यास्तथात्वम्। २दुर्गासहचरीभेदे। जयन्तिकाशब्दे दृश्यम्। “नन्दा भद्रा जया रिक्ता पूर्णा च प्रतिपत्क्रमात्” ज्यो०उक्ते उभयपक्षीयतृतीयाष्टमीत्रयोदशीरूपे ३तिथिभेदे ४हरीतक्यां मेदि०। ५विजयायां (भाङ्ग) ६नीलदूर्वायाम्। ७अग्निमन्थवृक्षे राजनि०। ८पताकाभेदे युक्तिकल्पतरुः। “जयः कल्याणवचन आकारो दातृवाचकः। जयं ददाति सा नित्यं सा जया परिकीर्त्तिता” ब्रह्मवै० उक्तनिरुक्तियुक्तायां ९दुर्गायाम्। “जया त्वं विजया चैव संग्रामे च जयप्रदा। ममापि विजयं देहि वरदा त्वञ्च साम्प्रतम्” भा० वि० ६अ० दुर्गास्तुतिः। सा च गौर्य्यादिषु षोडशसु मातृषु अन्यतमा। यथाह छन्दःपरिशिष्टम् “गौरी पद्मा शची मेधा सावित्री विजया जया। देवसेना स्वधा स्वाहा मातरो लोकमातरः। शान्तिः पुष्टिर्धृतिस्तुष्टिरात्मदेवतया सह। आदौ विनायकः पूज्यो ह्यन्ते च कुलदेवता”।

**जयादित्य** पु० व्याकरणग्रन्थकारके विद्वद्भेदे।

**जयानीक** पु० १द्रुपदपुत्रभेदे जयशब्दे दृश्यम्। २विराटभ्रातृभेदे जयप्रियशब्दे दृश्यम्।

**जयावती** स्त्री जय—अस्त्यर्थे मतुप् मस्य वः संज्ञायां दीर्घः

ङीप्। कुमारानुचरमातृभेदे। "जयावती मालतिका ध्रुवरत्ना भयङ्करी" भा० श० ४७ अ०। कुमारानुचरमातृगणोक्तौ।

**जयावहा** स्त्री जयं रोगजयमावहति आ+वह—अच्। भद्रदन्तीवृक्षे राजनि०। [राजनि०।

**जयाश्रया** स्त्री जयमाश्रयति आ+श्रि—अच्। जरडीतृणे

**जयाश्वः** पु० विराटभ्रातरि जयप्रियशब्दे दृश्यम्।

**जयाह्वा** स्त्री जयस्याह्वा आह्वा यस्याः। भद्रदन्तीवृक्षे राजनि०

**जयिन्** त्रि० जि—शीलार्थे इनि। जयशीले। "उद्याता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः" काव्यप्र० "जगति जयिनस्ते ते भावा नवेन्दुकलादयः" सा० द०। "पौरस्त्यानेवमाक्रामन् तांस्तान् जनपदान् जयी" रघुः स्त्रियां ङीप्।

**जयिष्णु** त्रि० जि—वा० इष्णुच्। १जयशीले। "आहवेषु यथा वीरा दुराराजयिष्णवः" भा० द्रो० ३३ अ०।

**जयुस्** त्रि० जि—उसि। जयशीले। "वि जयुषा रथ्या यातमद्रिम्" ऋ० ६।६२।७ "वि जयुषा ययथुः सान्वद्रेः" १।११७।१६ "जयुषा जयशीलेन" भा०।

**जय्य** त्रि० जेतुं शक्यः जि—यत् "क्षय्यजय्यौ" तदर्थे पा०नि०। जेतुं शक्ये अकरः। "सोऽयं मनुष्यलोकः पुत्रेणैव जय्योनान्येन कर्मणा" शत० ब्रा० १४ ४३।२४।

**जर** पु० जॄ—भावे अप्। १जरायां वयोहानौ "द्वादशारं नहि तज्जराय वर्वर्त्ति चक्रम्" ऋ० १।१६४।११। २विनाशने च। "विन्नं जराय जुरतामदाभ्याः" ऋ०२।३४।१०। "जराय विनाशनाय" भा०।

**जरठ** त्रि० जॄ—वा० अठ। १कर्कशे कठिने २पाण्डुरूपे पु० मेदि०। ३जीर्णे त्रि०हेम० ४जरायां विश्वः। "नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदानलग्रन्थयः" सा० द०। "अयमतिजरठाः प्रकामगुर्वीः" माघः। ५परिणते च। "जरठकमलकन्दच्छेदगौरैर्मयूखैः" माघः।

**जरडी** स्त्री जॄ—वा अड गौरा० ङीष्। गर्मोटिकायां तृणभेदे राजनि०। "जरडी मधुरा शीता सारिका रुचिकारिणी। दाहरक्तदोषहृत् सा पशूनां दुग्धदायिनी" राजनि०।

**जरण** त्रि० जॄ—ल्यु। १जीर्णे २जीरके ३कृष्णजीरके ४सौवर्चलवणे च पु० शब्दर०। ५हिङ्गुनि ६कुष्ठौषधौ न०। ७कासमर्दे पु० राजनि०। ८कृष्णजीरके स्त्री राजनि०। "भद्रं जीवन्तो जरणामशीमहि" ऋ० १०।३७।६। ९जरायां स्त्री "विप्रस्य जरणामुपेयुषः" १०।३९।८ "प्रातर्जरेथे जरणेव कापया" १०।४०।३। स्तुत्यर्थक—जरते—युच्। १०स्तुतौ "वक्ता जरणा अनाकृतः" ऋ०१।१४१।७। "जरणा स्तुतिः" भा०।

**जरणाद्रुम** पु० नित्यक०। अश्वकर्णवृक्षे।

**जरणि** त्रि० जॄ—अनि। स्तोतरि। "सनि मृधो जरणिप्रा कभ्र्याः" ऋ०१०।१०।१०। "जरणिप्राः स्तोतॄणां पूरयितारः"

**जरण्या** स्त्री जरणमर्हति "अन्यावस्था छन्दसि च" पा०यत्। जरायाम्। "युवं वन्दनं निरृतं जरण्यया" ऋ०१।११९।७। "जरण्यया जरया" भा० तत्र उक्तैव व्युत्पत्तिर्दर्शिता। जरण्येति शब्दकल्पनं प्रामादिकमेव।

**जरण्यु** त्रि०जरणं स्तुतिमिच्छति क्यच्—उन्। आत्मनः स्तवनेच्छौ "सरत्सरण्युः कारवे जरण्युः" ऋ० १०।६१।२२ जरण्युः स्तुतिमिच्छन्" भा०।

**जरत्** त्रि० जॄ—अतृ। १जीर्णे २वृद्धे जरन्नैयायिकः जरन्मीमांसकः जरद्गवः। स्त्रियां ङीप् जरती अर्द्धजरती।

**जरत्कर्ण** पु०ऋषिभेदे "अग्निहत्यं जरतः कर्णमावाग्निः" ऋ० १०।८०।३। "जरतः कर्णं जरत्कर्णनामानमृषिम्" भा०।

**जरत्कारु** पु० १मुनिभेदे तत्पत्न्यां २मनसादेव्यामास्तीकमातरि च। तत्कथा "सौतिरुवाच। एतत् श्रुत्वा जरत्कारुर्भृशं शोकपरायणः। उवाच तान् पितॄन् दुःखाद्बाष्पसन्दिग्धया गिरा। जरत्कारुरुवाच। मम पूर्वे भवन्तो वै पितरः सपितामहाः। तद्ब्रूत यन्मया कार्य्यं भवतां प्रियकाम्यया। अयमेव जरत्कारुः किल्बिषी भवतां सुतः। ते दण्डं धारयत मे दुष्कृतेरकृतात्मनः। पितर ऊचुः। पुत्र! दिष्ट्यासि संप्राप्त इमं देशं यदृच्छया। किमर्थञ्च त्वया ब्रह्मन्! न कृतो दारसंग्रहः। जरत्कारुरुवाच। ममायं पितरो! नित्यं हृद्यर्थः परिवर्त्तते। ऊर्द्ध्वरेताः शरीरं वै प्रापयेयममुत्र वै। न दारान् वै करिष्येऽहमिति मे भावितं मनः। एवं दृष्ट्वा तु भवतः शकुन्तानिव लम्बतः। मया निवर्त्तिता बुद्धिर्ब्रह्मचर्य्यात् पितामहाः!। करिष्ये वः प्रियं कामं निवेक्ष्येऽहमसंशयम्। सनाम्नीं यद्यहं कन्यामुपलप्स्ये कदाचन। भविष्यति च या काचिद् भैक्ष्यवत् स्वयमुद्यता। प्रतीग्रहीता तामस्मि न भरेयञ्च यामहम्। एवंविधमहं कुर्य्यां निवेशं प्राप्नुयां यदि। अन्यथा न करिष्येऽहं सत्यमेतत् पितामहाः!। तत्र चोत्पत्स्यते जन्तुर्भवतां तारणाय वै। शाश्वता स्थाव-

याश्चैव तिष्ठन्तु पितरो मम। सूत उवाच। एवमुक्त्वा तु स पितॄंश्चचार पृथिवीं मुनिः। न च स्म लभते भार्य्यां वृद्धोऽयमिति शौनक!। यदा निर्वेदमापन्नः पितृभिश्चोदितस्तथा। तदारण्यं स गत्वोच्चैश्चुक्रोश भृशदुःखितः। स त्वरण्यगतः प्राज्ञः पितॄणां हितकाम्यया। उवाच कन्यां याचामि तिस्रोवाचः शनैरिमाः। यानि भूतानि सन्तीह स्थावराणि चराणि च। अन्तर्हितानि वा यानि तानि शृण्वन्तु मे वचः। उग्रे तपसि वर्त्तन्तं पितरश्चोदयन्ति माम्। निर्विशस्वेति दुःखार्त्ताः सन्तानस्य चिकीर्षया। निर्वेशायाखिलां भूमिं कन्याभैक्ष्यं चरामि भोः। दरिद्रो दुःखशीलश्च पितृभिः सन्नियोजितः। यस्य कन्यास्ति भूतस्य ये मयेह प्रकीर्त्तिताः। ते मे कन्यां प्रयच्छन्तु चरतः सर्वतो दिशम्। मम कन्या सनाम्नी या भैक्ष्यवच्चोद्यता भवेत्। भरेयञ्चैव यां नाहं तां मे कन्यां प्रयच्छत। ततस्ते पन्नगा ये वै जरत्कारौ समाहिताः। तामादाय प्रवृत्तिन्ते वासुकेः प्रत्यवेदयन्। तेषां श्रुत्वा स नागेन्द्रस्तां कन्यां समलङ्कृताम्। प्रगृह्यारण्यमगमत् समीपं तस्य पन्नगः"। भा०आ० ४६ अ० इतः परमास्तीकशब्दे ८६२ पृ० दृश्यम्। "यो जरत्कारुणा जातो जरत्कारौ महायशाः" तत्रैव। [शब्दर०।

**जरत्कारुप्रिया** स्त्री ६त०। मनसादेव्यामास्तीकमातरि

**जरतिन्** जॄ—अतच् जरतः ततः अस्त्यर्थे इनि। जरायुक्ते ततःशुभ्रा०अपत्ये ढक्। जारतिनेय तदपत्ये पुंस्त्री०।

**जरद्गव** पु० कर्म्म० टच् समा०। १वृद्धवृषे अमरः जरन् गौरिव टच्समा०।२पक्षिविशेषे "अज्ञातकुलशीलस्य वासो देयो न कस्यचित्। मार्ज्जारस्य हि दोषेण हतो गृध्रो जरद्गवः" हितो०। जरन् क्षीयमाणो गौर्धर्मवृषः। शास्त्रप्रतिपादिते क्षीयमाणे ३धर्मरूपवृषे। "नैतस्येह यथास्माकं शश्वच्छास्त्रं जरद्गवः। अलसः क्षुत्परो मूर्खस्तेन पीवान् शुना सह" भा० अनु० १२ अ०। "शास्त्रं तत्प्रतिपादितः जरन् क्षीयमाणो धर्म्मः" नीलक०। आकाशस्थे ४वीथिभेदे स्त्री ङीप्। "नागगजैरावतवृषभगोजरद्गवमृगाजदहनाख्या" इत्युपक्रमे "जरद्गव्यां श्रवणात् त्रिभं मृगाख्या तिभञ्च मैत्राद्यम्" वृ०सं०६अ०।

**जरद्विष्** त्रि० जरतो वृद्धान् वेवेष्टि विष—क ६त०। जरत् विषं जलं यस्माद्वा। १जीर्णशुष्कवृक्षव्यापके २जीर्णोदकके वह्नौ।"त्वामग्ने अतिथिं पूर्व्यम् सुयम्भावं स्वरसं जरद्विषम्" ऋ०५।८।२ "जरद्विषं जरतां वृक्षाणां विषं व्यापकं जीर्णोदकं वा" भा०। [त्रिका०।

**जरन्त** पुंस्त्री जॄ—झच् १महिषे स्त्रियां ङीष्। २वृद्धे त्रि०

**जरमान** पु० ऋषिभेदे ततो गर्गा० गोत्रे यञ्। जारमान्य तद्गोत्रापत्ये पुंस्त्री स्त्रियां ङीप् यलोपः। जारमानी।

**जरसान** पु० जॄ—असानच्। पुरुषे उज्ज्वलदत्तः।

**जरा** स्त्री जॄ—अङ् गुणः। १वयःकृतश्लथमांसाद्यवस्थाविशेषे "कृष्णवर्त्मनि गुणान् गणयन्ती जीवनेषु लभतेऽत्यनुरागम्। आगता वत जरेव हिमानी सेव्यतां सुरतरङ्गिणी" उद्भटः "मदेकपुत्रा जननी जरातुरा" नैष० २जराहेतौ "या हृष्टमनसा नित्यं स्थानमानविचक्षणा। भर्त्तुःप्रीतिकरी नित्यं सा भार्य्या ह्रीतरा जरा" ३जराधिष्ठातृदेवताभेदे। सा तु कालकन्या। यथा "कालकन्या जरा साक्षात् लोकस्तां नाभिनन्दति। स्वसारं जगृहे मृत्युः क्षयाय जगतामिह" भागवतम्। जरातिक्रमोपायाश्च दर्शिता यथा "मृत्यू रोगाः सुताश्चैव जरा तस्य च कन्यका। जरा च भ्रातृभिः सार्द्धं शश्वद्भ्रमति भूतलम्। एते चोपायवेत्तारं न गच्छन्ति च साम्प्रतम्। पलायन्ते च तं दृष्ट्वा वैनतेयमिवोरगाः। चक्षुर्जलञ्च व्यायामः पादाधस्तैलसेवनम्। कर्णे तैलं मूर्द्धि तैलं जराव्याधिविनाशनम्। वसन्ते भ्रमणं वह्निसेवा ऽस्वप्नं करोति यः। बालाञ्च सेवते काले जरा तं नोपगच्छति। स्वातशीतोदकस्नायी सेवते चन्दनद्रवम्। नोपयाति जरा तञ्च निदाघेऽनिलसेविनम्। प्रावृड्ष्णोदकस्नायी घनतोयं न सेवते। समये च समाहारी जरा तं नोपगच्छति। शरद्रौद्रं न गृह्णाति भ्रमणं तत्र वर्जयेत्। स्वातस्नायी समाहारी जरा तं नोपतिष्ठते। स्वातस्नायी च हेमन्ते काले वह्निं निषेवते। भुङ्क्ते नवान्नमुष्णञ्च जरा तं नोपगच्छति। शिशिरेऽशुकवह्निं च नवोष्णान्नञ्च सेवते। य एवोष्णोदकस्नायी जरा तं नोपगच्छति। सद्योमांसं नवान्नञ्च बालस्त्रीं क्षीरभोजनम्। घृतञ्च सेवते योहि जरा तं नोपगच्छति। भुङ्क्ते सदन्नं क्षुत्काले तृष्णायां पीयते जलम्। नित्यं भुङ्क्ते च ताम्बूलं जरा तं नोपगच्छति। दधि हैयङ्गवीनञ्च नवनीतं तथा-गुडम्। नित्यं भुङ्क्ते संयमी यो जरा तं नैव गच्छति। शुष्कमांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि। तं सेवन्ते

जरा याति पश्चात्ता भ्रातृभिः सह। रात्रौ ये दुर्घ सेवन्ते पुंश्चलीश्च रजस्वलाम्। तमुपैति जरा हृष्टा भ्रातृभिः सह सुन्दरि! इतिब्रह्मवै॰पु॰ब्रह्मख॰। ४राक्षसीभेदे जरासन्धशब्दे दृश्यम्। ५स्तोतरि स्तोत्रे च शब्द-च॰।६स्तुतौ निरु॰।"जराबोध! तद्विविड्ढि"ऋ॰१।२७।१० इत्यस्यास्यैव निरुक्ते ४।८।२। "जरा स्तुतिर्जरतेः स्तुतिकर्मणः" इत्युक्तम्।

अजादौ प्रत्यये परे मुख्ये गौणे च वा जराया जरस्। जरसौ जरे जरया जरसा।"न ह्यस्या अपरं चन जरसा मरते पतिः"निरु॰११।२८ "भृता च्यक "हृद्धत्वं जरसा विना" "स्वर्गौजर्यं जरसोपदिष्टम्" रघुः गौणे "वीतजन्म जरसं परं शुचिः" किरा॰ निर्जरसम् निर्जरम्। "कजरांसि च वस्त्राणि धारयन्ति गतक्लमाः" भा॰अनु॰ १२२अ॰। अव्ययीभावसमासे नित्यम् अच् जरस् च भा॰ जरायाः अभावः कजरसम्। सह जरया सजरसम्। ७निषादभेदे। "जरानामनिषादानां प्रभुः सर्वधनुष्मताम्" हरिवं॰ १६२ अ॰। जरेति नाम येषां तेषां निषादानाम् इत्यर्थः। तत्र स्तुतौ "तासां जरां प्रमुञ्चतेति"। ऋ॰ ०।१४०।८"अच्छावदा तना गिरा जरायै ब्रह्मणस्पतिम्"। १।३८।१३। [ जरातुरा" नैष॰।

**जरातुर** त्रि॰ ३त॰। १जीर्णे २जरायस्ते शब्दर॰ "जननी

**जरापुष्ट** पु॰ ३त॰। जरासन्धे नृपे शब्दर॰।

**जराबोध** पु॰जरया स्तुत्या बुध्यति बुध–अच्। स्तुत्याबोधमानाग्नौ "जराबोध तद्विड्ढिविशे विश यज्ञियाय" ऋ॰ १।२७।५। "जरया स्तुत्या बोधमानाग्नेः" भा॰ तत्र जराबोधेत्यस्यामृचि भवः छ। जराबोधीय जराबोधेत्यस्यामृचि गीयमाने सामभेदे"अग्नेः युङ्क्ष्वा ह्रियेत चेति जराबोधीयमग्निष्टोमसाम कार्यम्" ताण्ड्य॰ ४।२।१५।

**जराभीरु** पु॰ जरातो भीरुः ५त॰। १कामदेवे हेमच॰। तस्य जीर्णवयसि हीयमानत्वात् तथात्वम्। २जरातो भयशीले त्रि॰।

**जरासिंगा** पु॰ जरया राक्षस्या अपत्यं तया पाल्यत्वात् वा॰ फ। जरासन्धे मागधे नृपे शब्दर॰।

**जरायु** पु॰ जरामेति इ–ञुण्। १गर्भावरणचर्मणि २गर्भाशये, "जरायुणा मुखे छन्ने कण्ठे च कफवेष्टिते। वायोर्मार्गनिरोधाच्च न गर्भस्थः प्ररोदिति" सुश्रु॰। "या तु चर्माकृतिः सूक्ष्मा जरायुः सा निगद्यते" देवीभाग॰। ३जटायौ पक्षिणि च मेदि॰। ४अग्निजारवृक्षे राजनि॰। ५कुमारानुचरमातृभेदे। "पत्रालिका मत्कुणिका जरायुर्ज्जर्जरानना" भा॰ श॰ ४७ अ॰।

**जरायुज** त्रि॰ जरायौ जायते जन–ड ७त॰। जरायुमध्यजाते मनुष्यादौ अमरः। जरायुजभेदाश्च मनुना दर्शिता यथा "पशवश्च मृगाश्चैव व्यालाश्चोभयतोदतः। रक्षांसि च पिशाचाश्च मनुष्याश्च जरायुजाः" "पशवः गवाद्याः मृगा हरिणाद्या व्यालाः सिंहाद्याः" कुल्लू॰ "नैषि स्थानानि भूतानां चतुर्थं नोपपद्यते। स्थलमापस्तथाकाशं जन्म चापि चतुर्विधम्। अण्डजोद्भिज्जसंस्वेदजरायुजमथापि वा। चतुर्द्धा जन्म इत्येतद्भूतग्रामस्य लक्षणम्" इत्युपक्रमे "द्विपादबहुपादानि तिर्य्यग्गतियुतानि च। जरायुजानि भूतानि" भा॰ आनु॰४२अ॰। संक्षेपेणोक्ताः।"या तु चर्माकृतिः सूक्ष्मा जरायुः सा निगद्यते। शुक्रशोणितयोर्योगस्तस्मिन् संजायते यतः। तत्र गर्भो भवेद्यस्मात्तेन प्रोक्तो जरायुजः" इति देवीभाग॰।

**जरासन्ध** पु॰ जरया राक्षस्या सन्धा देहयोजनमस्य। वृहद्रथभूपसुते मागधे नृपे तस्योत्पत्तिकथा यथा। "राजा वृहद्रथो नाम मगधाधिपतिर्बली" इत्युपक्रमे।

"नाससाद नृपश्रेष्ठः पुत्रं कुलविवर्द्धनम्। अथ काक्षीवतः पुत्रं गौतमस्य महात्मनः। शुश्राव तपसि श्रान्तमुदारं चण्डकौशिकम्। यदृच्छयागतं तन्तु वृक्षमूलमुपाश्रितम्। पत्नीभ्यां सहितो राजा स च रत्नैरतोषयत्। तमब्रवीत्सत्यधृतिः सत्यवाङ्मृषिसत्तमः। परितुष्टोऽस्मि राजेन्द्र! वरं वरय सुव्रत!। ततः सभार्यः प्रणतस्तमुवाच वृहद्रथः। पुत्रदर्शननैराश्याद्बाष्पसंदिग्धया गिरा। राजोवाच। भगवन्राज्यमुत्सृज्य प्रस्थितोऽहं तपोवनम्। किं वरेणाल्पभाग्यस्य किं राज्येनाप्रजस्य मे। कृष्णउवाच। एतत् श्रुत्वा मुनिर्ध्यानमगमत् क्षुभितेन्द्रियः। तस्यैव चाम्रवृक्षस्य छायायां समुपाविशत्। तस्योपविष्टस्य मुनेरुत्सङ्गे निपपात ह। अवातमशुकादष्टमेकमाम्रफलं किल। तत् प्रगृह्य मुनिश्रेष्ठो हृदयेनाभिमन्त्र्य च। राज्ञे ददावप्रतिमं पुत्रसंप्राप्तिकारणम्। उवाच च महाप्राज्ञस्तं राजानं महामुनिः। गच्छ राजन्! कृतार्थोऽसि निवर्त्तस्व नराधिप!। एतत् श्रुत्वा मुनेर्वाक्यं शिरसा प्रणिपत्य च। मुनेः पादौ महाप्राज्ञः स नृपः स्वगृहं गतः। यथा समयमाज्ञाय तदा स

ततस्तमजितं जेतुं जरासन्धं वृकोदरः। संरब्धं बलिनां श्रेष्ठो जग्राह कुरुनन्दनः। भीमसेनस्ततः कृष्णमुवाच यदुनन्दनम्। बुद्धिमास्थाय विपुलां जरासन्धवधेप्सया। नायं पापो मया कृष्ण! युक्तः स्यादनुरोधितुम्। प्राणेन यदुशार्दूल! बद्धकक्षेण वाससा। एवमुक्तस्ततः कृष्णः प्रत्युवाच वृकोदरम्। त्वरयन् पुरुषव्याघ्र! जरासन्धवधेप्सया। यत्ते दैवं परं सत्त्वं यच्च ते मातरिश्वनः। बलं भीम! जरासन्धे दर्शयाशु तदद्य वै। एवमुक्तस्तदा भीमो जरासन्धमरिन्दमः। उत्क्षिप्य भ्रामयामास बलवन्तं महाबलः। भ्रामयित्वा शतगुणं जानुभ्यां भरतर्षभ!। बभञ्ज पृष्ठं संक्षिप्य निष्पिष्य विननाद च। करे गृहीत्वा चरणं द्वेधा चक्रे महाबलः। तस्य निष्पिष्यमाणस्य पाण्डवस्य च गर्जतः। अभवत्तुमुलो नादः सर्वप्राणिभयङ्करः। वित्रेसुर्मागधाः सर्वे स्त्रीणां गर्भाश्च सुस्रुवुः। भीमसेनस्य नादेन जरासन्धस्य चैव ह। किं नु स्विद्धिमवान् भिन्नः किं नु स्विद्दीर्यते मही। इति वै मागधा जज्ञुर्भीमसेनस्य निःस्वनात्। ततो राज्ञः कुलद्वारि प्रसुप्तमिव तं नृपम्। रात्रौ गतासुमुत्सृज्य निश्चक्रमुररिन्दमाः। जरासन्धरथं कृष्णो योजयित्वा पताकिनम्। आरोप्य भ्रातरौ चैव मोक्षयामास बान्धवान्।"

**जरित** त्रि० जरा जाताऽस्य तारका० इतच्। १जातजरे वृद्धे मन्दपालर्षिकलत्रे २पक्षिणीभेदे तत्कथा

"तच्छ्रुत्वा मन्दपालस्तु वचस्तेषां दिवौकसाम्। क्व नु शीघ्रमपत्यं स्याद्बहुलं चेत्यचिन्तयत्। स चिन्तयन्नभ्यगच्छत् सुबहुप्रसवान् खगान्। शार्ङ्गिकां शार्ङ्गको भूत्वा जरितां समुपेयवान्। तस्यां पुत्रानजनयच्चतुरो ब्रह्मवादिनः। तानपास्य स तत्रैव जगाम लपितां प्रति। बालान् सुतानण्डगतान् सह मात्रा मुनिर्वने। तस्मिन् गते महाभागे लपितां प्रति भारत!। अपत्यस्नेहसंयुक्ता जरिता बह्वचिन्तयत्" "तेन त्यक्तानसन्त्याज्यानृषीनण्डगतान्वने। न जहौ पुत्रशोकार्त्ता जरिता खाण्डवे सुतान्" भा० आ० १२९ अ०।

**जरितृ** त्रि० जॄ—तृच्। १स्तोतरि निघण्टुः "इमा ब्रह्माणि जरिता वो अर्चत्" ऋ० १।१६५।१४ "अभीषु णः सखीनामविता जरितॄणाम्" ४।३१। २जीर्णे च स्त्रियां ङीप्।

**जरितारि** पु०१जरितायां जाते मन्दपालर्षेः ज्येष्ठपुत्रे "जरितारी कुलं ह्येतत् ज्येष्ठत्वेन प्रतिष्ठितम्" भा०आ०२६·।

**जरिन्** त्रि० जराऽस्त्यस्य इनि। १वृद्धे जरायुक्ते हेमच० स्त्रियां ङीप्।

**जरिमन्** पु० जॄ—भावे इमनिच्। जरायाम्। "नभो न रूपं जरिमा मिनाति" ऋ० १।७१।१० | "अस्तमिवेत् जरिमाणं जगम्याम्" १।११६।२५।

**जरूथ** पु० जॄ—ऊथन् १मांसे त्रिका०। २जरणीये च। गॄ—बा० ऊथन् गृणो०। ३परुषभाषिणि। "जरूथं हन्यक्षि राये पुरन्धिम्" ऋ० ७।९।६। "जरूथं परुषभाषिणं जरणीयं वा रक्षोगणम्" भा०। इणगात्त्वमभिकृत्य निरु० ६।१७। उक्तं "जरूथं गरूथं गृणातेः"।"विश्वा अग्नेऽपदहारातीर्येभिस्तपोभिरदहो जरूथम्" ऋ०७।१।७ "येभिर्यैस्तपोभिर्जरूथं परुषशब्दकारिणं राक्षसम्" भा०

**जर्च(र्छ)** उक्तौ तु० प० सक० सेट्। जर्चति (र्छ)ति अजर्चीत्(र्छी)त्। जजर्च(र्छ)। [जजर्ज जर्जरः।

**जर्ज** उक्तौ भर्त्सने च तु० प०सक० सेट्। जर्जति अजर्जीत्

**जर्जर** पु० जर्ज—बा० अर। १शैलजे २शक्रध्वजे ३जीर्णे त्रि० मेदि०। "जर्जरं चास्य विषयं कुर्वन्ति प्रतिरूपकैः" भा० शा० ५६अ०। "लघु जर्जरं दधिनिभं हृद्धिषं स्थानमपि हैमम्" वृ०८अ०।४खण्डिते च "कृत्वा पुंवत् पातमुच्चैर्भृगुभ्यो मूर्द्धि ग्राव्णां जर्जरा निर्झरौघाः" माघः।

**जर्जरानना** स्त्री कुमारानुचरमातृभेदे। "पृथुवक्त्रा मधुलिका मधुकुम्भा तथैव च। पक्षालिका मत्कुणिका जरायुर्जर्जरानना" भा० श० ४७ अ०।

**जर्जरित** त्रि० जर्जरं करोति जर्ज+णिच्—कर्मणि क्त। १जीर्णीकृते २शकलीकृते। "कृष्णो जर्जरिताङ्गस्य कुञ्जरस्यार्त्तचेतसः" हरि० ८६ अ०। "जराजर्जरितं पतिम्" भा०व० १२१ अ०। [२जरातुरे च मेदि०।

**जर्जरीक** त्रि० जर्ज—ईक फर्फरीका० नि०। १बहुच्छिद्रद्रव्ये

**जर्झ** उक्तौ भर्त्सने च तु० पर० सक० सेट्। जर्झति अजर्झीत् जजर्झ। [हेमच०

**जर्ण** पु० जॄ—नन्। १चन्द्रे २वृक्षे च मेदि०। ३जीर्णे त्रि०

**जर्त्तिक** जॄ—बा० तिक। १वाहीकदेशे। सोऽभिजनोऽस्य वास बहुषु जनपदे लुप्। २तद्देशवासिषु ब० व०। "जर्त्तिका नाम वाहीकास्तेषां वृत्तं सुनिन्दितम्" भा०क०४४अ०।

**जर्त्तिल** पु० जॄ—विच् नित्यक०। १आरण्यतिले "जर्त्तिलः कथ्यते सद्भिररण्यप्रभवस्तिलः" शब्दार्थचि०। "जर्त्तिलैर्जुहोति" शत० ब्रा० ९।१।१।३। "जर्त्तिला अरण्यतिलाः" भा० "जर्त्तिलमिश्रान् गवेधुकासक्तून् कृत्वा-

नृपसत्तमः। ताभ्यामेकं फलं प्रादात् पत्नीभ्यां भरतर्षभ!। ते तदाम्रं द्विधा कृत्वा भक्षयामासतुः शुभे। भावित्वादपि चार्थस्य सत्यवाक्यतया मुनेः। तयोः समभवद्गर्भः फलप्राशनसम्भवः। ते च दृष्ट्वा स नृपतिः परां मुदमवाप ह। अथ काले महाप्राज्ञ! यथा समयमागते। प्राजायेतामुभे राजन्! शरीरशकले तदा। एकाक्षिबाहुचरणे अर्द्धोदरमुखस्फिचे। दृष्ट्वा शरीरशकले प्रवेपतुरुभे भृशम्। उद्विग्ने सह संमन्त्र्य ते भगिन्यौ तदाऽबले। सजीवे प्राणिशकले तत्यजाते सुदुःखिते। तयोर्धात्र्यौ सुसंवीते ते कृत्वा गर्भसंप्लवे। निर्गम्यान्तःपुरद्वारात् समुत्सृज्याभिजग्मतुः। ते चतुष्पथनिःक्षिप्ते जरा नामाथ राक्षसी। जग्राह मनुजव्याघ्र! मांसशोणितभोजना। कर्त्तुकामा सुखवहे शकले सा तु राक्षसी। संयोजयामास तदा विधानबलनोदिता। ते समानीतमात्रे तु शकले पुरुषर्षभ!। एकमूर्त्तिधरो वीरः कुमारः समपद्यत। ततः सा राक्षसी राजन्! विस्मयोत्फुल्ललोचना। न शशाक समुद्वोढुं वज्रसारमयं शिशुम्। बालस्ताम्रतलं मुष्टिं कृत्वा चास्ये निधाय सः। प्राक्रोशदतिसंरब्धः सतोय इव तोयदः। तेन शब्देन सम्भ्रान्तः सहसान्तःपुरे जनः। निर्जगाम नरव्याघ्र! राज्ञा सह परन्तप!। ते चाबले परिम्लाने पयःपूर्णपयोधरे। निराशे पुत्रलाभाय सहसैवाभ्यगच्छताम्। ते तु दृष्ट्वा तथाभूते राजानञ्चेष्टसन्ततिम्। तञ्च बालं प्रबलिनं चिन्तयामास राक्षसी। नार्हामि विषये राज्ञो वसन्ती पुत्रगृद्धिनः। बालं पुत्रमिमं हन्तुं धार्मिकस्य महात्मनः। सा तं बालमुपादाय मेघलेखेव भास्करम्। कृत्वा च मानुषं रूपमुवाच वसुधाधिपम्। राक्षस्युवाच। बृहद्रथ! सुतस्तेऽयं मया दत्तः प्रगृह्यताम्। तव पत्नीद्वये जातो द्विजातिवरशासनात्। धात्रीजनपरित्यक्तो मयायं परिरक्षितः। कृष्ण उवाच। ततस्ते भरतश्रेष्ठ! काशिराजसुते शुभे। तं बालमभिपद्याशु प्रस्रवैरभ्यषिञ्चताम्। ततः स राजा संहृष्टः सर्वं तदुपलभ्य च। अपृच्छद्धेमगर्भाभां राक्षसीं तामराक्षसीम्। राजोवाच। का त्वं कमलगर्भाभे! मम पुत्रप्रदायिनी। काम्यया ब्रूहि कल्याणि! देवता प्रतिभासि मे।"

राक्षस्युवाच। जरा नामास्मि भद्रन्ते राक्षसी कामरूपिणी। तव वेश्मनि राजेन्द्र! पूजिता न्यवसं सुखम्। गृहे गृहे मनुष्याणां नित्यं तिष्ठामि राक्षसी। गृहदेवीति नाम्ना वै पुरा सृष्टा स्वयम्भुवा। दानवानां विनाशाय स्थापिता दिव्यरूपिणी। यो मां भक्त्या लिखेत् कुड्ये सपुत्रां यौवनान्विताम्। गृहे तस्य भवेदृद्धिरन्यथा क्षयमाप्नुयात्। त्वद्गृहे तिष्ठमाना तु पूजिताहं सदा विभो!। लिखिता चैव कुड्येषु पुत्रैर्बहुभिरावृता। गन्धपुष्पैस्तथा धूपैर्भक्ष्यभोज्यैः सुपूजिता। साहं प्रत्युपकारार्थं चिन्तयाम्यनिशं तव। तवेमे पुत्रशकले दृष्टवत्यस्मि धार्मिक!। संश्लेषिते मया दैवात् कुमारः समपद्यत। तव भाग्यान्महाराज! हेतुमात्रमहं त्विह। मेरुं वा खादितुं शक्ता किं पुनस्तव बालकम्। गृहे सम्पूजनात् तुष्ट्या मया प्रत्यर्पितस्तव। कृष्ण उवाच। एवमुक्त्वा तु सा राजंस्तत्रैवान्तरधीयत। स संगृह्य कुमारं तं प्रविवेश गृहं नृपः। तस्य बालस्य यत् कृत्यं तच्चकार नृपस्तदा। आज्ञापयच्च राक्षस्या मगधेषु महोत्सवः। तस्य नामाकरोच्चैव पितामहसमः पिता। जरया सन्धितो यस्माज्जरासन्धो भवत्ययम्। सोऽवर्द्धत महातेजा मगधाधिपतेः सुतः। प्रमाणबलसम्पन्नो हुताहुतिरिवानलः। मातापित्रोर्नन्दिकरः शुक्लपक्षे यथा शशी" भा० स० १७।१८ अ०।

**जरासन्धवध** पु० जरासन्धस्य वधमधिकृत्य कृतो ग्रन्थः अण् आख्यायिकायां तस्य लुपि व्यक्तिवचनत्वात् पुंस्त्वम्। भारतसभापर्वान्तर्गते अवान्तरपर्वभेदे तच्च पर्व सभापर्वणि १९अध्यायावधि २७अध्यायपर्यन्तम्। "जरासन्धवधः पर्व तथा दिग्विजयस्ततः" भा० आ० १ अ०

**जरासन्धजित्** पु० जरासन्धं जितवान् जि–क्विप् ६त०। भीमे पाण्डवे तज्जयकथा भा० स० २३अ०

"कार्त्तिकस्य तु मासस्य प्रवृत्तं प्रथमेऽहनि। अनाहारं दिवारात्रमविश्रान्तमवर्त्तत। तद्वृत्तं तु त्रयोदश्यां समवेतं महात्मनोः। चतुर्दश्यां निशायान्तु निवृत्तो मागधः क्लमात्। तं राजानं तथा क्लान्तं दृष्ट्वा राजन्! जनार्दनः। उवाच भीमकर्माणं भीमं सम्बोधयन्निव। क्लान्तः शत्रुर्न कौन्तेय! लभ्यः पीड़यितुं रणे। पीड्यमानो हि कार्त्स्न्येन जह्याज्जीवितमात्मनः। तस्मात्तेनैव कौन्तेय! पीड़नीयो जनाधिपः। सममेतेन युध्यस्व बाहुभ्यां भरतर्षभ!। एवमुक्तः स कृष्णेन पाण्डवः परवीरहा। जरासन्धस्य तद्रूपं ज्ञात्वा चक्रे मतिं वधे।

चीरसेके" काव्या० औ० १८।११। कर्केण तदर्थकतया व्याख्यातम्।

**जत्तु** पु० जन–"जनेस्तु रश्च" उणा०५।४६ सू० तु रश्चान्तादेशः। १योनौ तस्यां देहस्य जायमानत्वात् तथात्वम्। २हस्तिनि च उणादिकोषः अत्र शब्दकल्पद्रुमे जर्त्तीति अकारान्तशब्दकल्पनं प्रामादिकमेव। संक्षिप्तसारे च लिपिकरप्रमादकृतमेवाकारान्तत्वम्। [अजर्त्तीत्। जजर्त।

**जर्त्स** भर्त्सने उक्तौ रक्षणे च भ्वा०पर० सक० सेट्। जर्त्सति

**जर्भरि** त्रि० जृभ–गात्रविनाशे क्रिर, भृ–यङ्लुक् इः पृषो० वस्य जः। १गात्रविनाशककर्त्तरि २भर्त्तरि च। स्त्रियां वा ङीप्। "सृण्येव जर्भरी तुर्फरी तु" ऋ० १०।१०६।६। भाष्ये तथैव व्युत्पादितम् निरु० परि०१।५ "इमामृचमधिकृत्य"द्विविधा सृणिः जर्भरि भर्त्ता च हन्ता च तयाश्विनौ चापि भर्त्तारौ जर्भरी भर्त्तारौ" १। इमामृचमधिकृत्य चार्वाकैरुपहसितम् "त्रयो वेदस्य कर्त्तारो भण्डधूर्त्तनिशाचराः जर्भरीतुर्फरीत्यादि पण्डितानां वचः स्मृतम्" सर्वद० चार्वाकदर्शने। स्त्रियां वा ङीप्।

**जर्हिल** पु०जर्त्तिल+पृषो०। जर्त्तिले आरण्यतिले राजनि०।

**जल** आच्छादने चुरा० उभ० सक० सेट्। जालयति ते अजीजलत् त।

**जल** तीक्ष्णीभवने जीवनोपयोगिक्रियायां च अक०भ्वा०पर०सेट्। जलति अजालीत् जजाल जेलतुः। ज्वलादि जलः जालः।

**जल** त्रि० जल–अच् डस्य लो वा। १जडे। २उदके, ३ह्रीवेरे गन्धद्रव्ये, ज्योतिषोक्ते लग्नावधिके ४चतुर्थस्थाने, ५पूर्वाषाढ़ानक्षत्रे च न०शब्दार्थचि०। जलञ्च पञ्चभूतान्तर्गतभूतभेदः तच्च दगुणादिकं सुश्रुतोक्तं अम्बुशब्दे ३२६३० पृष्ठे दर्शितम् घनशब्दे २७८६ पृष्ठे च तस्य विवृतिः। "अपां शैत्यं तथा क्लेदो द्रवत्वं स्नेहसौम्यता। जिह्वाभिष्यन्दनञ्चापि भौमानां अपसां तथा। चतुर्थमापो विज्ञेयं जिह्वाख्यात्म प्रचक्षते। अधिभूतं रसास्तत्र सोमस्तत्राधिदैवतम्" भा० आश्व०क०। "तदङ्गनिष्यन्दजलेन लोचने" "जलाभिलाषी जलमाददानाम्" रघुः। "न तज्जलं यन्न सुचारुपङ्कजम्" भट्टिः।

"तृषिताय रोगिणेऽपि जलं देयं तथा च "पानीयं प्राणिनां प्राणास्तदायत्तं हि जीवनम्। तस्मात् सर्वास्ववस्थासु न क्वचित् वारि वार्यते। अन्नेनापि विना जन्तुः प्राणान् धारयते चिरम्। तोयाभावे पिपासार्त्तः क्षणात् प्राणैर्विमुच्यते। तृषितो मोहमायाति मोहात् प्राणान् विमुञ्चति। तस्माज्जलमयत्नं हि दातव्यं भेषजैः सममिति" राजवल्लभः। "पाद्ेन घटसुत्थाप्य भाजने परिवेष्य जलम्। तज्जलं मदिरातुल्यं भाण्डस्य सुरया समम्" इति कर्मलोचनः तस्य दानमाहात्म्यं यथा। "अन्ने दत्ते नरेणेह प्राणा दत्ता भवन्त्युत। प्राणदानाद्धि परमं न दानमिह विद्यते। अन्नं चापि प्रभवति पानीयात् कुरुसत्तम!। नीरजातेन हि विना न किञ्चित् संप्रवर्त्तते। अन्नौषध्यो महाराज! वीरुधश्च जलोद्भवाः। यतः प्राणभृतां प्राणाः सम्भवन्ति विशाम्पते!। तस्मात् पानीयदानाद्धि न परं विद्यते क्वचित्। तच्च दद्यान्नरो नित्यं यदीच्छेद्भूतिमात्मनः। धन्यं यशस्यमायुष्यं जलदानमिहोच्यते। शत्रूंश्चाप्यधि कौन्तेय! सदा तिष्ठति तोयदः। सर्वकामानवाप्नोति कीर्त्तिञ्चैवेह शाश्वतीम्। प्रेत्य चानन्त्यमश्नाति पापेभ्यश्च प्रमुच्यते। तोयदो मनुजव्याघ्र! स्वर्गं गत्वा महाद्युते!। अक्षयान् समवाप्नोति लोकानित्यब्रवीन् मनुः" भा० शा० दा० ध० हेमाद्रौ दा० खण्डे विशेषो दृश्यः"पानीयं प्राणिनः प्राणाः पानीयं पावनं महत्। पानीयस्य प्रदानेन तृप्तिर्भवति शाश्वती" जलदानमन्त्रः जलवर्षणज्ञानाय वर्षाद्यधिपराजाद्यानयनं तत्फलञ्च कृषिसंग्रहे दर्शितं यथा

"वृष्टिमूला कृषिः सर्वा वृष्टिमूलञ्च जीवनम्। तस्मादादौ प्रयत्नेन वृष्टिज्ञानं समाचरेत्। ततो वर्षस्य राजानं मन्त्रिणं मेघमेव च। आढ़कं सलिलञ्चापि वृष्टिज्ञानाय शोधयेत्। शाकं त्रिगुणितं कृत्वा द्वियुतं मुनिना (७) हरेत्। भागशिष्टो नृपोज्ञेयो नृपान्मन्त्री चतुर्थकः।" अथ नृपादिफलम्। "चित्तलार्के नृपे दृष्टिर्दिव्या निशापतौ। वृष्टिर्मन्दा सदा भौमे चन्द्रजे वृष्टिरुत्तमा। गुरौ च शोभना वृष्टिर्भार्गवे वृष्टिरुत्तमा। पृथिवी धूलिसम्पूर्णा वृष्टिहीना शनौ नृपे। यस्मिन् संवत्सरे चैव अर्को राजा भविष्यति। शस्यहानिर्भवेत्तत्र नित्यं रोगश्च जायते। यस्मिन्नब्दे विधुराजा शस्यपूर्णा च मेदिनी। नैरुज्यञ्च सुवृष्टिश्च सुभिक्षं क्षितिमण्डले। यस्मिन्नब्दे कुजो राजा सस्यशून्या च मेदिनी। नैरुज्यं विनिवृत्तिश्च दुर्भिक्षं क्षितिमण्डले। यत्राब्दे चन्द्रजो राजा सर्वशस्या च भूर्भवेत्। धर्मो स्थितिर्मनःस्थैर्यं वृष्टिकारणमुत्तमम्। यत्राब्दे च गुरूराजा सर्वा रसवती मही। नृपाणां वर्द्धनं नित्यं धनधान्यादिकं

फलम्। राजा दैत्यगुरुः कुर्य्यात् सर्व्वशस्यं धरातलम्। संग्रामो वातवृष्टिश्च रोगोपद्रव एव च। मन्दा वृष्टिः यदा यातो राजा संवत्सरे शनिः। शाकस्य काल त्रिगुणीकृतञ्च द्विवाणवस्वब्धिसमन्वितञ्च। राजा च मन्त्री च जनाधिपश्च शस्याधिपः स्यान्मुनिभाजितेन। (शाकस्य कालं त्रिगुणीकृतञ्च पक्षेण युक्तं मुनिना हरेच्च। सूर्य्यादि वर्षाधिपतिश्च शेषो मन्त्री चतुर्थो भवति प्रसिद्धः।) पाठान्तरम्। यथा वृष्टिफलं प्रोक्तं वत्सरे यत्र भूपतौ। तथा वृष्टिफलं ज्ञेयं विज्ञैर्वत्सरमन्त्रिणि।" अथ मेघानयनम्। "शाकं वह्निसमायुक्तं वेदेन भागमाहरेत्। शेषं मेघं विजानीयादावर्त्तादि यथाक्रमम्। आवर्त्तश्चैव संवर्त्तः पुष्करो द्रोण एव च। चत्वारो जलदाः प्रोक्ता आवर्त्ताद्या मनीषिभिः। एकदेशेन चावर्त्ते संवर्त्ते सर्वतो जलम्। पुष्करे दुष्करं वारि द्रोणे बहुजला मही।" अथ जलाढ्कनिर्णयः। "शतयोजनविस्तीर्णे त्रिंशद्योजनमुच्छ्रितम्। आढ्कस्य भवेन्मानं मुनिभिः परिकीर्त्तितम्। युग्माऽजगोमीनगते शशाङ्के रविर्यदा कर्कटकं प्रयाति। शताढ्कं के हरिकार्मुकेऽर्द्धं वदन्ति कन्यामृगयोरशीतिम्। कुलीरकुम्भालितुलाभिधाने जलाढ्कं षस्वर्तिं वदन्ति। अनेन मानेन तु वत्सरस्य निरूप्य नीरं कृषिकर्म्म कार्य्यम्"। एतत्सर्वं विंशत्या हरणीयम्। समुद्रे दश भागांश्च षड्भागानपि पर्वते। पृथिव्यां चतुरोभागान् सदा वर्षति वासवः।" अथ पौषादिमासीयवृष्टिलक्षणम्। "सार्द्धं दिनद्वयं मानं कृत्वा पौषादिना बुधः। गणयेन्मासिकीं वृष्टिमवृष्टिं वानिलक्रमात्। सौम्यवारुणयोर्वृष्टिरवृष्टिः पूर्व्वयाम्ययोः। निर्व्वाते वृष्टिहानिः स्यात् सङ्कुले सङ्कुलं जलम्। एकैकं पञ्चदण्डेन मासस्य दिवसो मतः। पूर्वार्द्धे वासरी वृष्टिरूत्तरार्द्धे च नैशिकी। दत्त्वा दण्डे पताकान्तु वातस्यानुक्रमेण च। विज्ञेया मासिकी वृष्टिर्दृष्ट्वा वातं दिवानिशम्। धूलीभिरेव शवलीकृतमन्तरीक्षं विद्युच्छटाच्छुरितवारुणदिग्विभागम्। पौषे यदा भवति मासि सिते च पक्षे तोयेन तत्र सकला स्रवते धरित्री। पौषे मासि यदा वृष्टिः कुज्झटिर्व्वा यदा भवेत्। तदादौ सप्तमे मासि तां तिथिं प्लाव्यते मही। अथ माघादिफलम्।

माघस्य सितसप्तम्यां वृष्टिर्व्वा मेघदर्शनम्। तदा संवत्सरो धन्यः सर्वशस्यफलप्रदः। सप्तम्यां स्वातियोगे यदि पतति जलं माघपक्षेऽन्धकारे वायुर्व्वा चण्डवेगः सजलजलधरो गर्ज्जितो वासरे वा। विद्युन्मालाकुलं वा यदि भवति नभो नष्टचन्द्रार्कतारं तावद्वर्षन्ति मेघाः प्लुतधरणितले यावदाकार्त्तिकान्तम्। माघे बहुलसप्तम्यां तथैव फाल्गुनस्य च। चैत्र शुक्लतृतीयायां वैशाखे प्रथमेऽहनि। एतासु चण्डवातो वा तड़िद्वृष्टिरथापि वा। तदा स्यात् शोभना प्रावृट् भवेत् शस्यवती क्षितिः। धनुर्मकरकुम्भेषु यदा वर्षति वासवः। तदादि सप्तमे मासि वारिपूर्णा भवेन्मही।"

अथ चैत्रलक्षणम्। प्रतिपदि मधुमासे भानुवारः सितायां यदि भवति तदा स्याच्छिन्नता वृष्टिरव्दे। अविरलपृथुधारासान्द्रवृष्टिप्रवाहैर्धरणितलमशेषं प्लाव्यते सोमवारे। अवनितनयवारे नास्ति वृष्टिर्न शस्यं कविगुरुबुधजानां वासरे शस्यपूर्णिः। जलनिधिरपि शोषं याति वारेण शौरेर्भवति खलु धरित्री धूलिजालैरदृश्या। चैत्राद्यभागे चित्रायां भवेच्छिन्नता क्षितिः। शेषेऽपि चैव चार्य्यर्क्षं स्वामध्ये बहुवर्षिणी।

अथ वैशाखलक्षणम्। प्रवाहयुक्तनद्यान्तु दण्डं न्यस्य जले निशि। वैशाखशुक्लप्रतिपन्निशौ वृष्टिं निरूपयेत्। ओं सिद्धिरिति मन्त्रेण मन्त्रयित्वा शतद्वयम्। अङ्कयित्वा तु तं दण्डमङ्गुल्ये जले क्षिपेत्। प्रातरुत्थाय सहसा तदङ्कन्तु निरूपयेत्। समं चैवाधिकं न्यूनं भविष्यज्जलकाङ्क्षया। गतवत्सरवद्वारि वन्या चैव समे भवेत्। हीने हीनं भवेद्वारि भवेद्वन्या च तादृशी। अङ्काधिक्ये च द्विगुणा वृष्टिर्वन्या च जायते। इदं पराशरेणोक्तं भविष्यद्वृष्टिलक्षणम्। सूर्य्योदये विषुवतो जगतां विपत्तिर्मध्यं गते दिनकरे बहुशस्यहानिः। अस्तं गते दिनकरे तु तदर्द्धशस्यमैश्वर्य्यभोगमतुलं खलु चार्द्धरात्रौ। तदा संवत्सरो धन्यो बहुशस्यफलप्रदः।

अथ ज्यैष्ठलक्षणम्। ज्यैष्ठादौ च सिते पक्षे आर्द्रादौ दशऋक्षके। सजला निर्जला यान्ति निर्जलाः सजला इव। रेखात्रयं समुल्लिख्य ताभिस्तास्त्रिवर्द्धयेत्। त्रिशृङ्गं सर्वकोणेषु पर्वतं तत्र दापयेत्। ईशानादि दक्षिणाद्यान् संलिखेदनलादितः। येन येनाजसंक्रान्तिस्तेन प्रावृट्फलं भवेत्। अनिवृष्टिः समुद्रे स्यादनावृष्टिस्तु पर्वते। कक्षयोश्चित्तला वृष्टिः सुवृष्टिः शैलसन्धिषु। (मतान्तरे। रेखात्रयं कसमुल्लिख्य ताड़ितं वेदसप्तभिः। ईशानदक्षिणे शृङ्गं लिखेदनलभादितः। येन

येनाजसंक्रान्तिस्तेन प्रावृट्फलं वदेत् । अश्विन्यादौ समुद्रेषु नक्षत्रस्य द्वयं द्वयम् । कक्षपर्वततीरेषु एकैकं परिकीर्त्तितम् ।”) “चित्रास्वातिविशाखासु ज्यैष्ठे मासि निरभ्रता । तास्वेव श्रावणे मासि यदि वर्षति, वर्षति ।” अथ आषाढ़लक्षणम् । “आषाढ्यां पौर्णमास्यां सुरपतिककुभं वाति वातः, सुवृष्टिः शस्यध्वंसं प्रकुर्य्याद्दहनदिशि गते, मन्दवृष्टिर्यमेन । नैरृत्यां शस्यहानिं, वरुणदिशि जलं, वायुना वायुकोपः, कौवेर्य्यां शस्यपूर्णां प्रथयति नियतं मेदिनीं, शम्भुमीशे । आषाढ़स्य सिते पक्षे नवम्यां यदि वर्षति । वर्षत्येव तदा देवस्तत्राष्टौ कुतो जलम् । शुक्लाषाढ़ीनवम्यामुदयगिरितटीं निर्मलत्वं प्रयाते स्तोयं कालं विधत्ते खरतरकिरणो मण्डलाकारमस्त्यम् । जीमूतैर्वेष्टितोऽसौ यदि भवति रविर्गम्यमानेऽस्तशैले तावत् पर्य्यन्तमेव प्रवदति जलदो यावदस्तं तुलायाः ।”

अथ श्रावणलक्षणम् । “रोहिण्यां श्रावणे मासि यदि वर्षति वासवः । तदा वृष्टिर्भवेत्तावद्यावत्तोत्तिष्ठते हरिः । कर्कटे रोहिणीऋक्षे यदि वृष्टिर्न जायते । तदा पराशरः प्राह हाहा लोकस्य का गतिः । श्रावणे मासि रोहिण्यां न भवेद्वर्षणं यदि । विफलारम्भसंक्लेशास्तदा स्युः कृषिदृत्तयः ।”

अथ भाद्रलक्षणम् । सिंहे च भौमवारे च पूर्वफल्गुनिऋक्षके । व्यतीपाते च नन्दायां तुलायां वर्षयेद्रविः ।” अथ सद्योवृष्टिज्ञानम् । जलहस्तो जलस्थो वा निकटेऽथ जलस्य वा । दृष्टा पृच्छति दृष्ट्यर्थं वृष्टिः संजायतेऽचिरात् । अकस्मादण्डमादाय उत्तिष्ठन्ति पिपीलिकाः । भेकः शब्दायतेऽकस्मात्तदा वृष्टिर्भवेद्ध्रुवम् । विड़ाला नकुलाः सर्पा ये चान्ये वा बिलेशयाः । धावन्ति शरभा मत्ताः सद्यो वृष्टिर्भवेद्ध्रुवम् । कुर्वन्ति बालका मार्गे धूलीभिः सेतुबन्धनम् । मयूराश्चैव नृत्यन्ति सद्यो वृष्टिः प्रजायते । अवातवातदुष्टानां न्टणामङ्गव्यथा यदि । वृक्षाद्यारोहणश्चाहेः सद्यो वर्षणलक्षणम् । पक्षयोः शोषणं रौद्रे खगानामम्बुचारिणाम् । झिल्लीरवस्तथाकाशे सद्यो वृष्टिः प्रजायते ।”

अथ ग्रहसञ्चारे वृष्टिलक्षणम् । “चलत्यङ्गारके वृष्टिर्भुवा वृष्टिः शनैश्चरे । वारिपूर्णां महीं कृत्वा पश्चात् सञ्चरते गुरुः । ग्रहाणामुदये चास्ते तथा वक्रातिचारयोः । प्रायो वर्षन्ति जलदा न्टपाणामुद्यमेऽपि च । चित्रामध्यगते जीवे भिन्नभाण्डमिव स्रवेत् । ततः स्वातीं समासाद्य महामेघं न मुञ्चति । प्रायेणोपचितान्मेघान् स्वातिरेकाऽप्यपोहति । श्रवणे जनितं वर्षं रेवत्याञ्च विमुञ्चति ।”

अथ अनावृष्टिलक्षणम् । “ध्रुवे च वैष्णवे हस्ते मूले शक्रे चरन् कुजः । सद्यः करोत्यनावृष्टिं कृत्तिकासु मघासु च । कुजपृष्ठगतो भानुर्भानुपृष्ठगतः कुजः । सूर्य्येण च युतो भौमः समुद्रमपि शोषयेत् । सद्यो निकृन्तयेद्वृष्टिं चित्रामध्यगतो भृगुः । अङ्गारको यदा सिंहे तदङ्गारमयी मही । स एव रविणा युक्तः समुद्रमपि शोषयेत् ।” ज्यो° त° कश्चिद्विशेष उक्तो यथा

“भुजबलभीमे व्रजति यदि कुजः पतङ्गमार्गे घट इव भिन्नतलो जलं ददाति । अथ भवति दिवाकराग्रतश्चेत् प्रलयघनानपि शोषयत्यवश्यम् । यावन्मासं पङ्क्तिमनुसरति धनुरथो मन्मथं मीनकन्ये तावद्दुर्भिक्षपीड़ा भवति च मरणं क्षुत्पिपासादिघोरम् । उर्व्वीं निष्कूय शष्पा शवशिरपटलैर्न्संयन्ते पिशाचाः ग्रामाः शून्या भवेयुर्नरपतिरहिता हन्ति कङ्कालमाला । वक्रं करोति रविजो धरणीसुतो वा मूलर्क्षहस्तमघरेवतिमैत्रभेषु । छत्रोपभङ्गपतनादि च सैनिकानां सर्व्वत्र लोकमरणं जलधौतदेशः । यदा च शौरिः सुरराजमन्त्रिणा समेत्य तिष्ठेत् क्वचिदृक्षमण्डले । तदाङ्गवङ्गान्ध्रककोशलेषु त्रिभागशेषां कुरुते वसुन्धराम् । तिष्ठेतां यावदेकर्क्षे वाक्पत्यवनिजौ । पदे तावत् क्षुद्रोगसंग्रामात् प्रजानां क्षयमादिशेत्” । “आरभ्य शुक्लप्रतिपत्तिथिं मार्गात् चैत्रकं गर्भनीहारैर्जलदैरिति प्रावृट्परीक्षणम् । यन्नक्षत्रं गतवति विधौ जायते तत्र गर्भः पश्चात्तस्मान्नवतिशतके १९५ चाह्नि तस्य प्रसूतिः” । गर्भशब्दे च २५५१ अम्बुगर्भो वृहत्संहितोक्तो दर्शितः । वर्षणसूचकनिमित्तानि वृ°सं° २४ अ° उक्तानि यथा

“ज्यैष्ठ्यां समतीतायां पूर्वाषाढ़ादिसम्प्रवृष्टेन । शुभमशुभं वा वाच्यं परिमाणं चाम्भसस्तज्ज्ञैः । हस्तविशालं कुण्डकमधिकृत्याम्बुप्रमाणनिर्द्देशः । पञ्चाशत्पलमाढ़कमनेन मिनुयाज्जलं पतितम् । येन धरित्रीमुद्रा जनिता वा विन्दवस्तृणाग्रेषु । वृष्टेन तेन वाच्यं परिमाणं वारिणः प्रथमम् । केचिद्यथाभिवृष्टं दशयोजनमण्डलं वदन्त्यन्ये । गर्गवशिष्ठपराशरमतमेतद्द्वादशाच्च परम् । येषु च भेष्वभिवृष्टं भूयस्तेष्वेव वर्षति प्रायः । यदि नाप्या(२०)दिषु वृष्टं सर्वेषु तदा त्वनावृष्टिः ।

हस्ताप्य१०सौम्य५चित्रापौष्ण१७धनिष्ठासु षोडश द्रोणाः। शतभिषगैन्द्र१८स्वातिषु चत्वारः कृत्तिकासु दश। श्रवणे मघानुराधाभरणीमूलेषु दश चतुर्युक्ताः। फल्गुन्यां पञ्चकृतिः २५ पुनर्वसौ विंशतिर्द्रोणाः। ऐन्द्राग्न्याख्य१६ वैश्वे२१ च विंशतिः सार्पभे दश त्र्यधिकाः। २५ अहिर्बुध्न्यार्यम्ण१४प्राजापत्येषु पञ्चकृति२५। पञ्चदशाजे४ पुष्ये च कीर्त्तिता वाजिभे दश द्वौ च। रौद्रे ६ऽष्टादश कथिता द्रोणा निरुपद्रवेष्वेषु। रविरविसुतकेतुपीडिते भे क्षितितनयत्रिविधाद्भुताहते च। भवति हि न शिवं न चापि वृष्टिः शुभसहिते निरुपद्रुते शिवं च।”

“वर्षाप्रश्ने जलवर्षणनिर्णयः तत्रैव २८ अ० यथा “वर्षाप्रश्ने सलिलनिलयं राशिमाश्रित्य चन्द्रो लग्नं यातो भवति यदि वा केन्द्रगः शुक्लपक्षे। सौम्यैर्दृष्टः प्रचुरमुदकं पापदृष्टोऽल्पमम्भः प्रावृट्काले सृजति न चिराच्चन्द्रवद्भार्गवोऽपि। आर्द्रं द्रव्यं स्पृशति यदि वा वारि तत्सञ्ज्ञकं वा तोयासन्नो भवति यदि वा तोयकार्य्योन्मुखो वा। प्रष्टा, वाच्यं सलिलमचिरादस्ति निःसंशयेन पृच्छाकाले सलिलमिति वा श्रूयते यत्र शब्दः”।

अथ सद्यः वृष्टिनिमित्तम् “उदयशिखरिसंस्थो दुर्निरीक्ष्योऽतिदीप्त्या द्रुतकनकनिकाशः स्निग्धवैदूर्यकान्तिः। तदहनि कुरुतेऽम्भस्तोयकाले विवस्वान् प्रतपति यदि चोच्चैः खं गतोऽतीव तीक्ष्णम्। विरसमुदकं गोनेत्राभं वियद्विमला दिशो लवणविकृतिः काकाण्डाभं यदा च भवेन्नभः। पवननिगमः पोप्लूयन्ते झषाः स्थलगामिनो रसनमसकृन्मण्डूकानां जलागमहेतवः। मार्जारा भृशमवनिं नखैर्लिखन्तो लोहानां मलनिचयः सविस्रगन्धः। रथ्यायां शिशुनिचिताश्च सेतुबन्धाः सम्प्राप्तं जलमचिरान्निवेदयन्ति। गिरयोऽञ्जनपुञ्जसन्निभा यदि वा बाष्पनिरुद्धकन्दराः। कृकवाकुविलोचनोपमाः परिवेषाः शशिनश्च वृष्टिदाः। विनोपघातेन पिपीलिकानामण्डोपसंक्रान्तिरहिव्यवायः। द्रुमाधिरोहश्च भुजङ्गमानां वृष्टेर्निमित्तानि गवां प्लुतं च। तरुशिखरोपगताः कृकलासा गगनतलस्थितदृष्टिनिपाताः। यदि च गवां रविवीक्षणमूर्द्ध्वं निपतति वारि तदा नचिरेण। नेच्छन्ति विनिर्गमं गृहाद्धुन्वन्ति श्रवणान् खुरानपि। पशवः पशुवच्च कुक्कुरा यदि चाम्भः पततीति निर्दिशेत्। यदा स्थिता गृहपटलेषु कुक्कुरा भवन्ति वा यदि विततं दिवोन्मुखाः। तथा तडिद्यदि च पिनाकिदिक्भवा तदा क्षमा भवति समातिवारिणा। शुककपोतविलोचनसन्निभो मधुनिभश्च यदा हिमदीधितिः। प्रतिशशी च यदा दिवि राजते पतति वारि तदा नचिराद्दिवः। स्तनितं निशि विद्युतो दिवा, रुधिरनिभा यदि दण्डवत् स्थिताः। पवनः पुरतश्च शीतलो यदि सलिलस्य तदागमो भवेत्। वल्लीनां गगनतलोन्मुखाः प्रवालाः स्नायन्ते यदि जलपांशुभिर्विहङ्गाः। सेवन्ते यदि च सरीसृपास्तृणाग्राण्यासन्नो भवति तदा जलस्य पातः। मयूरशुकचाषचातकसमानवर्णा यदा, जपाकुसुमपङ्कजद्युतिमुषश्च सन्ध्याघनाः। जलोर्मिनगनक्रकच्छपवराहमीनोपमाः प्रभूतपटसञ्चया न तु चिरेण यच्छन्त्यपः। पर्यन्तेषु सुधाशशाङ्कधवला मध्येऽञ्जनालित्विषः स्निग्धा नैकपुटाः क्षरज्जलकणाः सोपानविच्छेदिनः। माहेन्द्रीप्रभवाः प्रयान्त्यपरतः प्राक् चाम्बुपाशेद्भवा ये ते वारिमुचस्त्यजन्ति नचिरादम्भः प्रभूतं भुवि। शक्रचापपरिघप्रतिसूर्या रोहितोऽथ तडितः परिवेषाः। उद्गमास्तसमये यदि भानोरादिशेत् प्रचुरमम्बु तदाशु। यदि तित्तिरिपत्रनिभं गगनं मुदिताः प्रवदन्ति च पक्षिगणाः। उदयास्तमये सवितुर्द्युनिशं विसृजन्ति घना न चिरेण जलम्। यद्यमोघकिरणाः सहस्रगोरस्तभूधरकरा इवोच्छ्रिताः। भूसमं च रसते यदाम्बुदस्तन्महद्भवति वृष्टिलक्षणम्। प्रावृषि शीतकरो भृगुपुत्रात् सप्तमराशिगतः शुभदृष्टः। सूर्यसुतान्नवपञ्चमगो वा सप्तमगश्च जलागमनाय। प्रायो ग्रहाणामुदयास्तकाले समागमे मण्डलसंक्रमे च। पक्षक्षये तीक्ष्णकरायनान्ते वृष्टिर्गतेऽर्के नियमेन चार्द्राम्। समागमे पतति जलं ज्ञशुक्रयोर्ज्ञजीवयोर्गुरुसितयोश्च सङ्गमे। यमारयोः पवनहुताशजं भयं न दृष्टयोरसहितयोश्च सद्ग्रहैः। अग्रतः पृष्ठतो वापि ग्रहाः सूर्य्यावलम्बिनः। यदा तदा प्रकुर्वन्ति महीमेकार्णवामिव”

कृषौ केदाराज्जलमोचनकाल उक्तो यथा “नैरुत्यार्थं हि धान्यानां जलं भाद्रे विमोचयेत्। मूलमात्रन्तु संस्थाप्य कारयेज्जलमोक्षणम्। भाद्रे च जलसम्पूर्णं धान्यं विविधबाधकैः। प्रपीडितं कृषाणानां न धत्ते फलमुत्तमम्”। कृषिपराशरः। [हारा०।

**जलकण्टक** पु० जले कण्टक इव। १शृङ्गाटके २कुम्भीरे च

**जलकपि** पु० जले कपिरिव। शिशुमारे जलजन्तुभेदे (शोषक) हारा०।

**जलकपोत** पु॰ जलजातः कपोतः । जलपारावते राजनि॰।

**जलकरङ्क** पु॰ जलस्य करङ्क इवाधारः । १नारिकेले, २मेघे च । जलस्य करङ्क इव ।३पद्मे च मेदि॰ ।

**जलकल्क** पु॰ जलेन कल्क इव । जम्बाले हारा॰ ।

**जलकाक** पुंस्त्री जले काक इव कृष्णत्वात् । (पानकौडी) पक्षिभेदे । राजनि॰ । स्त्रियां जातित्वात् ङीष् ।

**जलकाङ्क्ष** पुंस्त्री जलं काङ्क्षति काङ्क्ष–अण् उप॰ स॰ । १हस्तिनि त्रिका॰ स्त्रियां जातित्वात् ङीष् । २जलाभिलाषिणि त्रि॰ । पा॰ स्त्रियां टाप् मुग्धबो॰ मते ईप् ।

**जलकाङ्क्षिन्** पु॰ जलं काङ्क्षति काङ्क्ष–णिनि । १हस्तिनि हारा॰ । २जलाभिलाषिणि त्रि॰ । स्त्रियां ङीप् ।

**जलकान्तार** पु॰ जलमेव कान्तारो दुर्गमवर्त्म यस्य । वरुणे हेम च॰ । [ भिलापुके त्रि॰ ।

**जलकामुक** पु॰ ६त॰ । १कुटुम्बिनीवृक्षे राजनि॰ । १जला-

**जलकिराट** पुंस्त्री जले किराट इव । ग्राहे (हाङ्गोर) । हारा॰ । स्त्रियां जातित्वात् ङीष् ।

**जलकुक्कुट** पुंस्त्री जले कुक्कुट इव । (गाङ्गचिल) पक्षिभेदे हारा॰ । "भद्रराजैस्तथा हंसैर्दात्यूहैर्जलकुक्कुटैः" भा॰ व॰ १०८ अ॰ "कादम्बैश्चक्रवाकैश्च कुररैर्जलकुक्कुटैः। १५८ अ॰ स्त्रियां जातित्वात् ङीष् ।

**जलकुक्कुभ** पुंस्त्री जले कुक्कुभ इव । कोयष्टिखगे (कोडा पाखि) हेम॰ स्त्रियां जातित्वात् ङीष् । [शब्दार्थचि॰।

**जलकुन्तल** पु॰ जलस्य कुन्तलः केश इव । जलकेशे शैवाले ।

**जलकुब्जक** पु॰ जले कुब्ज इव कायति कै–क । पङ्गारे शब्दार्थचि॰ । [ मेदि॰ ।

**जलकूपी** स्त्री जलेन कूपीव । १कूपगर्त्ते २पुष्करिण्यां च

**जलकूर्म** पुंस्त्री जले कूर्म इव । शिशुमारे त्रिका॰ । स्त्रियां जातित्वात् ङीष् ।

**जलकेश** पु॰ जलस्य केश इव । शैवाले हारा॰ ।

**जलकेतु** पु॰ "जलकेतुरपि पश्चात् स्निग्धः शिखया परेण चोन्नतया" वृ॰स॰ ११ अ॰उक्ते केतुभेदे ।

**जलक्रिया** स्त्री जलसाध्या क्रिया । पित्रादीनां तर्पणे "कालिन्द्यां विधिवत् स्नात्वा कृतपुण्यजलक्रियः" भाग॰ ६।१६।१४ "कृत्वा वर्ज्या जलक्रिया" स्मा॰ त॰ ।

**जलक्रीड़ा** स्त्री ३त॰ । नद्यादौ सखिभिः परस्परं जलसेचनरूपक्रीड़ायाम् । "सहिताः भ्रातरः सर्वे जलक्रीड़ामवाप्नुमः" । "ततस्ते सहिताः सर्वे जलक्रीड़ामकुर्वत" भा॰ आ॰ १२८ अ॰ ।

**जलखग** पुंस्त्री॰ ६त॰ । जलचरविहगे स्त्रियां जातित्वात् ङीष् । "दुर्दिनो विलासिनीनां जलखगनखविक्षतेषु रम्येषु" वृ॰ स॰ ४८ अ॰ ।

**जलगर्भ** पु॰ जलसूचको गर्भः । वृ॰ सं॰ उक्ते मेघनिःसृष्टजलसूचके निमित्तभेदे गर्भशब्दे २५५१ पृ॰विवृतिः ।

**जलगुल्म** पु॰ जलस्य गुल्म इव । १जलावर्त्ते (घुरणो) २कमठे ३जलचत्वरे च (चातर जल) मेदि॰ ।

**जलङ्ग** पु॰जलं गच्छति गम–ड नि॰ मुम् । महाकाले ओषधिभेदे राजनि॰ । [भरतः ।

**जलङ्गम** पु॰ जलं गमयति स्पर्शात् गामि–बा॰ ख । चण्डाले

**जलचत्वर** न॰ जलेन चत्वरम् । (चातरजल) स्वल्पसलिलयुक्ते देशे मेदि॰ ।

**जलचर** त्रि॰जले चरति चर–टक् ७त॰ । ग्राहादिषु जलजन्तुषु ।"अशीतास्तरवो माघ—चैत्रे जलचराः सर्वे" चाणक्य॰ । "वात्स्येन वीजजलचरकाननहा वह्निभयदश्च" वृ॰ स॰ ४अ॰ "गोष्ठप्रजलचरकर्षकशिलोच्चयैश्वर्यसम्पन्नाः" १५ अ॰ ।

**जलचारिन्** पु॰ जले चरति चर–णिनि ७त॰ । १मत्स्ये २जलचरमात्रे त्रि॰स्त्रियां ङीप् ।"सरांसि च मनोज्ञानि समन्तात् जलचारिभिः" भा॰व॰१६८अ॰ ।

**जलज** न॰ जले जायते जन–ड । १पद्मे २शङ्खे च मेदि॰। ३सारभेदे राजनि॰ । ४मत्स्ये पुंस्त्री॰ शब्दच॰ । ५हिज्जलवृक्षे पु॰ ( जलवेत ) ६वानीरवेते ७शैवाले च पु॰ राजनि॰ । ८कुम्भौ भावप्र॰ ९जलजौ कर्कटमीनौ मकरान्त्यार्द्धञ्च शिशमते कुम्भः" ज्यो॰ उक्तेषु १०कर्कटादिराशिषु । ११जलजातमात्रे कुम्भीरादौ त्रि॰ "जलजानां पद्मानां स्थलानाञ्चैव सर्वशः" भा॰ स॰ ३अ॰ । "जलजैः प्राणिभिः कीर्णाम्" "जलजैर्भूषितां गुणैः" । "जलजैः कुसुमैश्चित्राम्"जलजैर्ह्रतोदकाम्" हरिवं॰ ६८अ॰ तत्र पद्मे "वाचस्पतिरुवाचेदं प्राञ्जलिर्जलजासनम्" कुमा॰ । शङ्खे "निवेश्य दध्मौ जलजं कुमारः" "जलजासिगदाशार्ङ्ग चक्रलाञ्छितमूर्त्तिभिः" रघुः। मत्स्यादौ "न तथा बलवन्तः स्युर्जलजा वा स्थलाहृताः । स्वदेशे निचिता दोषा अन्यस्मिन् कोपमागताः" सुश्रु॰ । "निषेव्यमाणो जलजैश्च सत्त्वैः"हरिवं॰२४३अ॰। ११अब्जे चन्द्रे च तस्य सलिलमयत्वात् समुद्रजातत्वाद्वा तथात्वम् । [ अमरः ।

**जलजन्तु** पु॰ जलजातो जन्तुः । दार्दसि जलजाते प्राणिनि

**जलजन्तुका** स्त्री जलजन्तु+संज्ञायां कन्। जलौकायां भरतः।

**जलजन्मन्** न० जले जन्म यस्य। पद्मे हेमच०। "निलयः श्रियः सततमेतदिति प्रथितं यदेव जलजन्मतया" माघः।

**जलजम्बूका** स्त्री जलजाता जम्बूका। क्षुद्रजाम्ब्वाम् शब्दचि०

**जलजाजीव** पु० जलं जलजमत्स्यवधविक्रयादिकमाजीवति आ+जीव—अण्। जलचरघातके (जेले) शब्दार्थचि०। [ हारा०।

**जलजिह्व** पु० जला जड़ा खादे असमर्था जिह्वाऽस्य। नक्रे

**जलजीविन्** पु० जलेन तज्जातमत्स्यादिना जीवति जीव—णिनि। (जेले) मत्स्योपजीविनि। "सूक्ष्मजालैर्यथा मत्स्यान् बध्नन्ति जलजीविनः" भा० शा० १०३अ०।

**जलडिम्ब** पु० जले डिम्ब इव। शम्बूके। (शामुक) हारा०

**जलतण्डुलीय** पु० जलजातस्तण्डुलीयः। कञ्चटे शाकभेदे शब्दार्थचि०।

**जलतापिन्** पु० जलतां स्वेदरूपजलमयतामाप्नोति पाककाले आप+णिनि। (इलिश) मत्स्यभेदे शब्दर०। स्वार्थे क। जलतापिक तत्रार्थे। संज्ञायां कन्। काकमाचीवृक्षे च शब्दर०। [(इलिश) मत्स्यभेदे शब्दर०।

**जलताल** पु० जलतायै अलति पर्य्याप्नोति अल—अच्।

**जलतिक्तिका** स्त्री स्वल्पं तिक्ता कन् तिक्तिका जलप्रधाना तिक्तिका। शल्लकीवृक्षे राजनि०।

**जलत्रा** स्त्री जलात् त्रायते त्रै—क। १छत्रे २जङ्गमकुटयाञ्च हारा०।

**जलत्रास** पु० जलात् तद्दर्शनात् त्रासः, सोऽस्य वा। दंष्ट्रिणा दंशनोत्तरं जलं दृष्ट्वा १त्रासे २तद्युक्ते त्रि०। "येन चापि भवेद्दष्टस्तस्य चेष्टारुतं नरः। बहुशः प्रतिकुर्वाणः क्रियाहीनो विनश्यति। दंष्ट्रिणा येन दष्टश्च तद्रूपं यदि पश्यति। अप्सु वा यदि वाऽऽदर्शे रिष्टं तस्य विनिर्दिशेत्। त्रस्यत्यकस्माद्योऽभीक्ष्णं श्रुत्वा दृष्ट्वापि वा जलम्। जलत्रासस्तु विद्यात्तं रिष्टं तदपि कीर्त्तितम्। अदष्टो वा जलत्रासी न कथञ्चन सिध्यति। प्रसुप्तोऽथोत्थितो वापि स्वस्थोऽस्वस्थो न सिध्यति" सुश्रु०

**जलद** पु० जलं ददाति दा—क। १मेघे, २कर्पूरे च ३जलदातरि त्रि० मेदि०। "अनतिचिरोज्झितस्य जलदेन चिरस्थितबहुबुद्बुदस्य पयसोऽनुकृतिम्"। "प्रौढ़ध्वान्तं दिनमिह जलदाः" माघः "सन्देशं मे तदनु जलद! श्रोष्यसि श्रोत्रपेयम्" मेघ०।

**जलदकाल** पु० ६त०। वर्षाकाले "जलदकालमबोधकृतं दिशाम्" माघः।

**जलदक्षय** पु० जलदानां क्षयोऽत्र। १शरत्काले "सर्वाणि तनुतां यान्ति जलानि जलदक्षये" हरिवं० ७३अ०।

**जलदर्दुर** पु० जलं दर्दुर इव। जलरूपे दर्दुरवाद्यभेदे (तालिदया जलवाजान) "अवादयंस्ता जलदर्दुरांश्च वाद्यानुरूपं जगुरेव हृष्टाः" हरिवं० १४८ अ०।

**जलदागम** पु० जलदानां मेघानामागमो यत्र। वर्षाकाले।

**जलदाशन** पु० जलदैरश्यते अश—भोजने कर्म्मणि ल्युट्। शालवृक्षे शब्दच०। तत्पत्राणां मेघैर्भोजनस्य लोकप्रसिद्धेस्तस्य तथात्वम्।

**जलदुर्ग** न० जलवेष्टितं दुर्गम्। दुर्गभेदे। दुर्गशब्दे विवृतिः।

**जलदेव** पु० जलं देवः अधिष्ठात्रीदेवता अस्य। १पूर्वाषाढ़ानक्षत्रे तस्य जलदैवतत्वम् अस्य शाशब्दे ४९७ पृ० दृश्यम्। "मृतेऽब्धनदूकपतिर्जलदेवे काशिपोमरणमेति" वृ० ११अ० केतुमहाक्रान्तनक्षत्रभेदे फलोक्तौ। "दृष्टानन्दकलत्रो वीरो दृढ़सौहृदश्च जलदेवे" वृ० स०१०१ अ० वैवाहिकनक्षत्रफलोक्तौ। ७त०। २जलस्थिते देवे च। जलदेवताप्यत्र "अन्वीयमानो जलदेवताभिर्निषेव्यमाणो जलजैश्च सत्त्वैः" हरिवं० २४३ अ०।

**जलद्राक्षा** स्त्री जले द्राक्षेव। शालिञ्चशाके शब्दार्थचि०।

**जलद्रोणी** स्त्री जलस्य जलसेचनार्थं द्रोणीव। नौकाया जलसेचनपात्रे शब्दार्थचि०।

**जलद्वीप** पु० जलप्रधानो द्वीपः। द्वीपभेदे।

"गिरिभिर्ये च गम्यन्ते प्लवनेन प्लवेन च। यत्नवन्तो जलद्वीपं सप्तराज्योपशोभितम्। सुवर्णरूप्यकद्वीपं सुवर्णाकरमण्डितम्। जलद्वीपमतिक्रम्य शिशिरो नाम पर्वतः। दिवं स्पृशति शृङ्गेण देवदानवसेवितः। एतेषां गिरिदुर्गेषु प्रपातेषु वनेषु च। मार्गध्वं सहिताः सर्वे रामपत्नीं यशस्विनीम्" रामा० कि० ४० अ०। क्वचित् पुस्तके यवद्वीप इति पाठः।

**जलधर** पु० जलं धरति धृ—अच्। १मेघे २मुस्तके च अमरः ३समुद्रे हेमच०। ४तिनिशवृक्षे राजनि०। तस्य रसरूपजलाधिक्यात्तथात्वम् ४जलधारकमात्रे त्रि०। "नभो जलधरैर्हीनं साङ्गारक इवांशुमान्" भा० व० १३४अ० "अप्यन्यस्मिन् जलधर! महाकालमासाद्य काले" मेघ०।

**जलधरमाला** न० ६त०। १मेघपङ्क्तौ द्वादशाक्षरपादके २छन्दोभेदे च। "अब्धग्रष्टाभिर्जलधरमाला म्भौ स्मौ" वृ०

र० "या भक्तानां कलिदुरितोत्तप्तानां तापच्छेदे जलधरमाला नव्या। भव्याकारा दिनकरपुत्रीकूले केलिलोला हरितनुरव्यात् सा वः" छन्दोम०।

**जलधार** पु० जलं धारयति धारि—अण् उप०स०। १शाकद्वीपस्थे गिरिभेदे। शाकद्वीपोपक्रमे "तथैव पर्वता राजन्! सप्तात्र मणिभूषिताः। रत्नाकरास्तथा नद्यस्तेषां नामानि मे शृणु। अतीव गुणवत् सर्वं तत्र पुण्यं जनाधिप!। देवर्षिगन्धर्वयुतः प्रथमो मेरुरुच्यते। प्रागायतो महाराज! मलयो नाम पर्वतः। यतो मेघाः प्रवर्त्तन्ते प्रभवन्ति च सर्वशः। ततः परेण कौरव्य! जलधारो महागिरिः। यत्र नित्यमुपादत्ते वासवः परमं जलम्" भा०भी०११अ०।२जलधारके त्रि०। ६त०।२जलसन्ततौ स्त्री।

**जलधि** पु० जलं धीयतेऽत्र धा—आधारे कि उप० स०। १समुद्रे "छायेव या स्वर्जलधेर्जलेषु" "आत्मानमेव जलधेः प्रतिबिम्बिताङ्गः" माघः। "एकदशशतसहस्रायुतलक्षप्रयुतकोटयः क्रमशः। अर्बुदमब्जं खर्वनिखर्वमहापद्मशङ्कवस्तस्मात्। जलधिश्चान्त्यं मध्यं परार्द्धमिति दशगुणोत्तराः संख्या" लीलावत्युक्ते २संख्याभेदे। ४ चतुःसंख्यायां च।

**जलधिगा** स्त्री जलधिं गच्छति गम—ड। १नदीमात्रे हेमच० सर्वासां नदीनां साक्षात् परम्परया समुद्रगामित्वात्तथात्वम् अतएवोक्तं "सर्वा नद्यः समुद्रगाः" इति साक्षात् समुद्रगामिन्यां २गङ्गादिनद्याञ्च। समुद्रगादयोऽप्यत्र।

**जलधिज** पु० जलधौ जायते जन—ड। १चन्द्रे। २लक्ष्म्यां स्त्री त्रिका०। ३समुद्रजातमात्रे त्रि०।

**जलधेनु** स्त्री दानार्थकल्पितायां जलादिनिर्मितायां धेन्वां सा च नानाविधा तद्विधिः हेमा० दा० उक्तो यथा

"जलधेनुं प्रवक्ष्यामि प्रीयते दत्तया यया। देवदेवो हृषीकेशः सर्वगः सर्वभावनः। जलकुम्भं नरव्याघ्र! सुवर्णरजतान्वितम्। रत्नगर्भमशेषैस्तु ग्राम्यैर्धान्यैः समन्वितम्। सितवस्त्रयुगच्छन्नं दूर्वापल्लवशोभितम्। कुष्ठमांसीमुरोशीरवालकामलकैर्युतम्। प्रियङ्गुपत्रसहितं सितवस्त्रोपवीतिनम्। सच्छत्रं सोपानत्कं च दर्भविष्टरसंस्थितम्। चतुर्भिः संवृतं भूप! तिलपात्रैश्चतुर्दिशम्। स्थापितं दधिपात्रेण घृतक्षौद्रवता मुखे। उपोषितः समभ्यर्च्य वासुदेवं जलेश्वरम्। पुष्पधूपोपहारैस्तु यथाविभवमादृतः। सङ्कल्प्य जलधेनुञ्च कुम्भं त्वमभिपूज्य च। पूजयेद्वत्सकन्तद्वत् कुम्भं जलमयं बुधः। एवं संपूज्य गोविन्दं जलधेनुं सवत्सिकाम्। सितवस्त्रधरः शान्तो वीतरागो विमत्सरः। दद्यात् द्विजाय राजेन्द्र! प्रीत्यर्थं जलशायिनः। जलशायी जगद्योनिः प्रीयतां मम केशवः। इति चोच्चार्य भूनाथ! विप्राय प्रतिपाद्य ताम्। अपक्वान्नाशिना स्थेयमहोरात्रमतः-परम्"। जलकुम्भमित्यादि, कुम्भोऽत्र कलसः। सुवर्णरजतयोरनियतपरिमाणतया यथाशक्ति 'विधानं पञ्चरत्नानि धान्यानि च परिभाषायामुक्तानि अत्र यद्यपि सामान्येनोपदेशः तथापि तत्सामान्यादितरेषु तथात्वमितिन्यायादितरधेनुवदविरुद्धधर्म्मानुष्ठानं वेदितव्यं ततश्च सुवर्णस्य शृङ्गाकृतित्वं रजतस्य खुराकृतित्वं, तिलपात्राणां ताम्रपात्रमयत्वं, दधिपात्रस्य कांस्यपात्रमयत्वं, चानुसन्धेयं तथा धान्यानि पार्श्वद्वये, कुशादीनि प्राणदेशे, पियङ्गुपत्रं श्रवणे, यज्ञोपवीतं शिरःस्थाने स्थापयेत्। वत्सोऽपि चतुर्थांशेन धेनुवत् कार्य्यः। कश्चित्तु "पूजयेद्वत्सकं तद्वत् कुम्भं घृतमयं बुधः" इति पाठात् घृतजलयोर्विकल्पोऽवगम्यते, दानवाक्यन्तु पूर्ववत् दक्षिणा चात्र यथाशक्ति सुवर्णमिति। "अनेन विधिना दत्त्वा जलधेनुं नराधिप!। सर्व्वान् कामानवाप्नोति ये दिव्या ये च मानुषाः। शरीरारोग्यमाबाधोपशमः सार्वकालिकः। नृणां भवति दत्तायां जलधेन्वां न संशयः"। इति विष्णुधर्म्मोक्तो जलधेनुदानविधिः।

"भानुरुवाच। जलधेनुं प्रवक्ष्यामि प्रीयते दत्तया यया। देवदेवो मयूखेशः सर्वगः सर्वभावनः"। जलकुम्भं समानीयेत्यादि विष्णुधर्मतुल्यार्थं, विशेषस्तु "ततः संपूज्य चादित्यं जलधेनुं सवत्सिकाम्। दद्याद्विप्राय देवाग्रे प्रीत्यर्थं मिहिरस्य तु। आदित्यः स जगद्योनिः प्रीयतां मिहिरः सदा। इति चोच्चार्य्य तां गान्तु विप्राय प्रतिपादयेत्। अनेन विधिना यस्तु जलधेनुं महामुने!। सर्व्वाह्लादानवाप्नोति यांश्च ध्यायति मानवः। सर्वपापविनिर्मुक्तः पितरं सपितामहम्। प्रपितामहं यथापूर्वपुरुषाणां चतुष्टयम्। आत्मानं ससुतं पौत्रं तदधस्ताच्चतुष्टयम्। तारयेत् स मुनीन्द्रेह जलधेनुप्रदो-नरः। यश्च गृह्णाति विधिवत् तस्याप्येवंविधाः कुले। चतुर्दश तथा चैव ददतश्चानुमोदतः। दीयमानां प्रपश्यन्ति जलधेनुं च ये नराः। तेऽप्यशेषाघनिर्मुक्ताः प्रयान्ति परमां गतिम्"। इति आदित्यपुराणोक्तो जलधेनुदानविधिः। तोयधेनुरप्यत्र।

"अगस्त्य उवाच। तोयधेनुं शृणु वत्स ! यथा देवी प्रसीदति। कुम्भं तोयसुसंपूर्णं रत्नवस्त्रयुगान्वितम्। समस्तबीजसंयुक्तं दूर्वापल्लवशोभितम्"। समस्तबीजानि, सर्वधान्यानि। "दूर्वाक्षतदधिशङ्खकृष्णामलकचन्दनैः। माल्यच्छत्रसमायुक्तं तिलपात्रैश्च संयुतम्। दधिक्षीरघृतं पात्रं विधानेनोपकल्पयेत्। वत्सकं कल्पयेत्तस्यास्तत्तु रौप्यमयं बुधः। देवीमभ्यर्च्य विधिवत् सोपवासोऽथ नक्तवान्। देवीभक्तं प्रदद्याद्यः सर्वान् कामानवाप्नुयात्। जये! अरिसूदनि! देवि! देवानां भयनाशिनि! वेदमातर्वरे! दुर्गे! सर्वगे! सुभगे! नमः। अनेन वत्स! मन्त्रेण नन्दानाम्नाभिमन्त्रयेत्। देवी मे प्रीयतां नित्यं वयोऽदनफला शिवा" इति देवीपुराणोक्तो तोयधेनुदानविधिः।

**जलनकुल** पु० जले नकुल इव। उद्रे (धाड़िया) (उद्बिड़ाल) ख्याते जलजन्तुभेदे त्रिका०।

**जलनिधि** पु० निधीयतेऽस्मिन् नि+धा+आधारे कि उप० स०। समुद्रे अमरः। "तत्रासौ भगवान् देवः स्वपन् जलनिधौ तदा" भा० व० २७१अ०। २चतुःसंख्यायाम् "वारे १शीतकरं तिथौ जलनिधिं४ भेऽग्निनुर३ योगे द्वयम्" वृत्तरत्नावली "जलनिधिरशनायाः स्वामितां याति भूमेः" वृ० सं० १२अ०।

**जलनिर्गम** पु० जलानां निर्गमः। १नद्यादेर्जलनिर्गमने, अधःस्थितस्य २जलस्योर्द्ध्वगतौ, जलनिःसरणे च अमरभरतौ।

**जलनीली** स्त्री जलं नीलयति नील+तत्करोति णिच्-अण् उप०स० गौरा ङीष्। शैवाले अमरः स्वार्थे क। जलनीलिकाप्यत्र।

**जलन्धम** पु० जलं धमति ध्मा-खश्। दानवभेदे "अष्टदंष्ट्रश्चतुर्दंष्ट्रो मेघनादो जलन्धमः" हरिवं० २४० अ०। सत्यभामायां कृष्णाज्जाते २कन्याभेदे स्त्री "जज्ञिरे सत्यभामायां भानुर्भीमरथः क्षुपः। रोहितो दीप्तिमांश्चैव ताम्रजाक्षो जलान्तकः। भानुर्भौमरिका चैव ताम्रपक्षा जलन्धमा। चतस्रो जज्ञिरे तेषां स्वसारो गरुडध्वजात्" हरिवं१६२ अ०।

**जलन्धर** पु० जलं धरति धा०ख मुम्। १ऋषिभेदे तस्य गोत्रापत्यं नडा०फक्। जालन्धरायण तद्गोत्रापत्ये पुंस्त्री। २असुरभेदे तस्योत्पत्तिकथा पाद्मोत्तरखण्डे दृश्या। ३योगाङ्गे बन्धभेदे तल्लक्षणादिकं काशीख० ४१ अ० उक्तं यथा "बध्नाति च शिराजालमधोगामि न भोजनम्। एष जलन्धरो बन्धः कण्ठे दुःखौघनाशनः। जलन्धरे कृते बन्धे कण्ठसङ्कोचलक्षणे। न पीयूषं पतत्यग्नौ न च वायुः प्रधावति" "महामुद्रां नभोमुद्रामुड्डीयानं जलन्धरम्। मूलबन्धञ्च यो वेत्ति स योगी योगसिद्धिभाक्" तत्रैवाध्याये।

**जलपक्षिन्** पु० जलस्थितः पक्षी। जलचरखगे।

**जलपति** पु० ६त०। १वरुणे। ३ेमच०। तस्य जलपतित्वकथा काशीख० १२ अ० यथा

"ततस्तं तनयः दृष्ट्वा पितरं प्रणिपत्य च। जगाम तूर्णं तपसे श्रीमहाराणसीं पुरीम्। तत्र तप्त्वा तपो घोरं लिङ्गं संस्थाप्य शाम्भवम्। पञ्च वर्षसहस्राणि स्थितः पाषाणनिश्चलः। आविरासीन्महादेवस्तुष्टस्तु तपसा ततः। उवाच कार्ष्णि मे! ब्रूहि कं ददामि वरोत्तमम्। कार्ष्णिरुवाच। यदि नाथ! प्रसन्नोऽसि भक्तानामनुकम्पन!। सर्वासामाधिपत्यं मे देह्यपां यादसामपि। इति श्रुत्वा महेशानः सर्वचिन्तितदः प्रभुः। अभ्यषिञ्चत् ततस्तञ्च वारुणे परमे पदे। रत्नानामब्धिजातानामस्त्राणां सरितामपि। सरसां पल्वलानाञ्च वाप्यम्बुस्रोतसां पुनः। जलाशयानां सर्वेषां प्रतीच्याश्चैव मे दिशः। अधीश्वरः पाशपाणिर्भव सर्वामरप्रियः" २समुद्रे जलं पतिरस्य। ३पूर्वाषाढ़ानक्षत्रे च जलनाथादयोऽप्यत्र।

**जलपथ** पु० जलमेव पन्थाः अच् समा०। १जलमार्गे "यादोनाथः शिवजलपथा कर्मणे नौचराणाम्" रघुः। ६त०। २प्रणाल्यां जलनिर्गममार्गे च।

**जलपारावत** पुंस्त्री जले पारावत इव। जलकपोते (पानकौड़ि) पक्षिभेदे राजनि०। स्त्रियां ङीष्।

**जलपित्त** न० जलस्य पित्तमिव। १अग्निपित्ते अग्नौ शब्दर० तस्य जलहेतुत्वात् तथात्वम्।

**जलपिप्पली** स्त्री जलजाता पिप्पली। (जलपिपुली) पिप्पलीभेदे "जलपिप्पल्यभिहिता शारदी शकुलादनी। मत्स्यादनी मत्स्यगन्धा लाङ्गलीत्यपि कीर्त्तिता। जलपिप्पलिका हृद्या चक्षुष्या शुक्रला लघुः। संग्राहिणी हिमा रूक्षा रक्तदाहव्रणापहा। कटुपाका रसा रूच्या कषाया वह्निवर्द्धिनी" भावप्र०।

**जलपुष्प** न० जलजातं पुष्पम्। कमलादौ।

**जलपूर** पु० ६त०। जलसमूहे। "वृन्दावनविपिने परिसरपरिगतयमुनाजलपूरे विहरति" गीत०।

**जलपृष्ठजा** स्त्री जलस्य पृष्ठे उपरि जायते जन–ड ७त०। शैवाले शब्दच०। [जलदाने तर्पणे।

**जलप्रदान** न० प्रेतादिभ्यः जलस्य प्रदानम्। प्रेताद्युद्देशेन

**जलप्रदानिक** न० जलप्रदानं युद्धहतानां प्रेतानामुद्देशेन जलप्रदानं प्रतिपाद्यतयाऽस्त्यस्य ठन्। भारतस्त्रीपर्व्वान्तर्गते अवान्तरपर्व्वणि तत्र स्त्रीपर्व्वणि प्रथमावधि १५ अध्यायपर्य्यन्तं "जलप्रदानिकं पर्व स्त्रीविलापस्ततः परम्" भा० आ० २अ०।

**जलप्रपा** स्त्री जलस्य जलदानार्थं प्रपा। जलदानार्थं शालायाम् (जलसत्र)। "यात्रोद्वाहजलप्रपाशिशुसंस्कारव्रतश्राद्धका" शु०चि० टी० धृतवाक्यम्।

**जलप्रान्त** पु० ६त०। जलसमीपस्थाने। [अमरः।

**जलप्राय** न० जलं प्रायं यत्र। जलबहुले देशे अनूपदेशे

**जलप्रिय** पुंस्त्री ६त०। १चातकखगे शब्दर०। २मत्स्ये शब्दच० स्त्रियां जातित्वेऽपि योपधत्वात् टाप्। ३जलप्रियमात्रे त्रि०। [जन्तुभेदे। स्त्रियां जातित्वात् ङीष्।

**जलप्लव** पुंस्त्री जले प्लवते प्लु–अच्। (उद्बिड़ाल) जल-

**जलफल** न० जलजातं फलम्। शृङ्गाटके भावप्र०।

"शृङ्गाटकं जलफलं त्रिकोणफलमित्यपि। शृङ्गाटकं हिमं स्वादु गुरु वृष्यं कषायकम्। ग्राहिशुक्रानिलश्लेष्मप्रदं पित्तप्रदाहनुत्"।

**जलबन्ध** पु० जलं बध्नाति बन्ध–ण्वुल्। जलस्रोतोनिरोधके दारुशिलामये १सेतौ शब्दर०। भावे घञ् ६त०। २जलस्य बन्धे च। [विना तस्य जीवनाभावेन तथात्वम्।

**जलबन्धु** पु० जलं बन्धुर्यस्य। मत्स्ये शब्दर० जलं

**जलबालक** पु० जलं बाल इव यस्य कप्। विन्ध्यपर्वते हेम०। जलस्य बालिकेव। १विद्युति स्त्री हेम०।

**जलबिम्ब** पुंन० ६त०। जलस्य बुद्बुदे मध्यावकाशयुक्ते शिथिलसंयोगेन छत्राकारे तोयांशभेदे मेदि०। "जम्बूवज्जलबिम्बवज्जलजवज्जम्बालवज्जालवत्" उद्भटः।

**जलबि(वि)ल्व** पु० जलप्रधानो बिल्वइव। १कर्कटे। बिल–भेदने क। २जलचत्वरे (चातरजल) ३स्वल्पजलदेशे हारा०।

**जलबुद्बुद** न० ६त०। जलबिम्बे। "मानुष्ये कदलीस्तम्भनिःसारे सारमार्गणम्। यः करोति स वै मूढो जलबुद्बुदसन्निभे" शब्दार्थचि०धृतवाक्यम्।

**जलब्राह्मी** स्त्री जले ब्राह्मीव। हिलमोच्यां त्रिका०।

**जलभू** पु० भवत्यस्मात् भू–अपादाने क्विप् ६त०। १मेघे २तन्नामनामके कर्पूरे च जलं भूरुत्पत्तिस्थानमस्य। ३कच्छटे शब्दच०। ६त०। ४जलाधारभूमौ स्त्री।

**जलभृत्** पु० जलं बिभर्त्ति भृ–क्विप् ६त०। १मेघे २तन्नामनामके कर्पूरे च ३तोयधारकमात्रे घटादौ त्रि०।

**जलमक्षिका** स्त्री जलजाता मक्षिका। तोयजकृमौ त्रिका०

**जलमण्डुक** न० जलं मण्डुकमिव। मण्डूकवाद्यतुल्ये करतलेन तद्वद्ध्वनिकारके जलदर्दुरे "जग्मुर्जलानि जलमण्डुकवाद्यवल्गु" माघः। "जलमेव पाणिना स्थापितमपरेण ताडितं मण्डुकवत् ध्वनतीति लोकप्रसिद्धम्" मल्लि०। [मत्स्यरङ्कविहगे हारा०।

**जलमद्गु** पु०जले मद्गुरिव निरन्तरमज्जनोन्मज्जनकारित्वात्।

**जलमधूक** पु० जलसन्निकृष्टजातो मधूकः। जलान्तिकजाते मधूकभेदे मधूलके भावप्र०।

"मधुको गुड़पुष्पः स्यात् मधुवृक्षो मधुस्रवः। वानप्रस्थो मधुष्ठीलो जलजोऽत्र मधूलकः। मधूकपुष्पं मधुरं शीतलं गुरु बृंहणम्। फलं शीतं गुरु स्वादु शुक्रलं वातपित्तनुत्। अहृद्यं हन्ति तृष्णास्रदाहश्वासक्षतक्षयान्"।

**जलमय** त्रि० जलात्मकः जल+मयट्। १जलात्मके चन्द्रादौ "सलिलमये शशिनि रवेर्दीधितयः" वृ०स० तस्य तथात्वमुक्तम्। २तल्लोकस्थे कर्म्मिणामप्मये देहे च। स्त्रियां ङीप्। "उभे एव क्षमे वोढुमुभयोर्वीजमाहितम्। सा वा शम्भोस्तदीया वा मूर्त्तिर्जलमयी मम" कुमा० शम्भोः क्षित्याद्यष्टमूर्त्तिकत्वेन तन्मूर्त्तेर्जलमयत्वम्। जलस्य ब्रह्मवीजाधारत्वं च मनुनोक्तं यथा "अप एव ससर्जादौ तासु वीजमवासृजत्"।

**जलमसि** पु० जलं स्वस्थितं तोयं मस्यति छिनत्ति सूक्ष्मांशतया भिनत्ति मस–इन् ६त०। १मेघे हारा०। २तन्नामनामके कर्पूरे च।

**जलमार्ग** पु०जलस्य तद्वाहस्य मार्गः।१प्रणाल्याम् (पयनाला) हेम०। जलमेव मार्गः। २जलस्थे मार्गे च (जलपथ)।

**जलमार्ज्जार** पुंस्त्री जलनकुले त्रिका०स्त्रियां जातित्वात् ङीष्

**जलमातृका** स्त्री जलस्थिता मातृका। जलस्थिते मातृकाभेदे तद्भेदाः सप्त विधानपा० उक्ता यथा "मत्सी कूर्मी वराही च दर्दुरी मकरी तथा। जलूका जन्तुका चैव सप्तैता जलमातृकाः"।

**जलमुच्** पु० जलानि मुञ्चति मुच–क्विप्। १मेघे अमरः तन्नामनामके २कर्पूरे च। "शङ्कास्पृष्टा इव जलमुचस्त्वादृशा यत्र जालैः" मेघ०। ३जलमोचनकर्त्तरि त्रि० "नात्यम्बुदा जलमुचोऽचलसन्निकाशाः" वृ०१९।

**जलमूर्त्ति** पु० जलं मूर्त्तिरस्य । शिवे । अष्टमूर्त्तिशब्दे ५२० पृ० दृश्यम् ।

**जलमूर्त्तिका** स्त्री० जलस्य मूर्त्तिः घनीभावो यत्र कप् । करकायाम् उष्णवातसंयोगजाते घनीभूते जले शब्दच० । तस्य च तथात्वम् करकशब्दे १६८७ पृ० दृश्यम् ।

**जलमोद** न० जलेन जलयोगेन मोदयति सेविनं मुद–णिच्–अण् उप० स० । उशीरे (वेणारमूल) राजनि० ।

**जलयन्त्र** न० जलस्थानात्तदुत्क्षेपणार्थं यन्त्रम् । (फोहारा) ख्याते १धारायन्त्रे २कूपादितस्तोयोत्थापकयन्त्रभेदे "विचित्रगात्रा जलयन्त्रहस्ताः" हरिवं० १४८ अ० । जलेन तदाकर्षणेन यन्त्रं घटीयन्त्रम् । ३कालज्ञापके घटीयन्त्रभेदे घटीयन्त्रशब्दे २७८९ दृश्यम् । स्वार्थे क । तत्रार्थे "हस्तप्रमुक्तैर्जलयन्त्रकैश्च प्रहृष्टरूपाः सिषिचुस्तदानीम्" हरिवं० १४८ अ० ।

**जलयन्त्रगृह** न० जलयन्त्रं तन्मध्य इव स्थितम् गृहम् । चतुःपार्श्वे जलयुक्ते जलमध्ये निर्म्मिते गृहे (जलटुङ्गि) जलयन्त्रमन्दिरादयोऽप्यत्र हारा०।६त०। (फोहाराघर) २जलयन्त्रयुक्ते गृहे ।

**जलयात्रा** स्त्री जलस्य तदाहरणार्थं यात्रा । शुभकर्मसम्पादनाय जलाहरणाय यात्रायाम् । तद्विधानादिकमाह वि०प्रा० वशिष्ठः "शान्तिकं पौष्टिकं वापि जलयात्रां विना बुधः । कुरुते यदि वा मोहात् कर्म तस्य च निष्फलम् । तड़ागादिप्रतिष्ठासु देवतायतनादिषु । लक्षहोमेकोटिहोमेऽयुतहोमे तथैव च । व्रतोत्सर्गमहादाने यज्ञे या वितते शुभे" । व्रतोत्सर्गे व्रतोद्यापने इत्यर्थः ।"जलयात्रां पुरा कृत्वा श्रेष्ठं कर्म समाचरेत् । अथातः संप्रवक्ष्यामि जलयात्राविधिं शुभम् । यज्ञशालामतिक्रम्य ऋत्विग्भिर्ब्राह्मणैः सह । यजमानः सपत्नीकः सुहृद्बन्धुजनैर्युतः । अश्वारूढो गजारूढो वस्त्रालङ्कारभूषितः । गृहीत्वोपस्करं सर्वं गन्धपुष्पाक्षतादिकम् । जलाशयन्ततो गच्छेद्गीतवादित्रनिस्वनैः । अगाधं च हृदं गच्छेन्नदीं वाथ समुद्रगाम् । सुवासिन्योऽग्रतः कार्य्याः सर्व्वालङ्कारभूषिताः । हैमराजतताम्रान् वा मृण्मयान् कलशांश्छुभान् । गृहीत्वा गन्धपुष्पाद्यैरर्च्चितान् सुदृढान् नवान् । जलाशयं समासाद्य तीरे गोमयलेपिते । चतुरस्रीकृते क्षेत्रे तत्र स्वस्तिकमालिखेत् । यवैर्वा तण्डुलैर्वापि पद्ममष्टदलं लिखेदित्यादि" । विस्तरस्तत्र दृश्यः ।

**जलयान** न० जले यायते गम्यतेऽनेन या–करणे ल्युट् ७त० । जलेगमनसाधने नौकादौ । "व्यसनार्णवमभ्येति जलयानैर्यथार्णवम्" भाग० ३।१४।१६ ।

**जलरङ्क** पुंस्त्री जले रङ्क इव । वकपक्षिणि हेमच० स्त्रियां जातित्वात् ङीष् ।

**जलरङ्कु** पु० जले रङ्कुरिव । दात्यूहखगे हारा० ।

**जलरञ्ज** पुंस्त्री जले रजति रन्ज–अच् । वकखगे हेमच० स्त्रियां जतित्वात् ङीष् ।

**जलर(रु)ण्ड** पु० जलस्य र(रु)ण्ड इव ।१जलावर्त्ते २तोयरेणौ ३भुजङ्गमे पुंस्त्री हेमच०स्त्रियां जातित्वात् ङीष् उकारयुक्तमध्यः मेदि० ।

**जलरस** पु० जलप्रधानो रसोऽस्य जलजातो वा रसः । १लवणे हारा०लवणस्य जलविशेषपाकेन जातत्वात् तथात्वम् । अतएव तस्य जलमध्ये निक्षेपे स्वप्रकृतिजलरूपत्वं भवतीति लोकवेदयोः प्रसिद्धम् ।६त०। २तोयस्य रसे च ।

**जलराक्षसी** स्त्री जलस्थिता राक्षसी । सिंहिकानाम्न्यां छायां गृहीत्वाऽऽकर्षिण्यां लवणाम्भसि स्थितायां राक्षस्याम् "शतयोजनविस्तीर्णं निहत्य जलराक्षसीम्" भा० व० २८१अ० । सा हि हनूमता यथा हता तथा रामा० सु० १अ० उक्तम् ।

"प्लवमानन्तु तं दृष्ट्वा सिंहिका नाम राक्षसी । मनसा चिन्तयामास प्रवृद्धा कामरूपिणी । अद्य दीर्घस्य कालस्य भविष्याम्यहमाशिता । इदं मम महासत्त्वं चिरस्य वशमागतम् । इति संचिन्त्य मनसा छायामस्य समाक्षिपत् । छायायां गृह्यमाणायां चिन्तयामास वानरः । समाक्षिप्तोऽस्मि सहसा पङ्गूकृतपराक्रमः । प्रतिलोमेन वातेन महानौरिव सागरे । तिर्य्यगूर्द्ध्वमधश्चैव वीक्षमाणस्तदा कपिः । ददर्श स महासत्त्वमुत्थितं लवणाम्भसि । तद्दृष्ट्वा चिन्तयामास मारुतिर्विकृताननम् । कपिराज्ञा यथाख्यातं सत्वमद्भुतदर्शनम् । छायाग्राहि महावीर्य्यं तदिदन्नात्र संशयः । स तां बुद्ध्वार्थतत्त्वेन सिंहिकां मतिमान् कपिः। व्यवर्द्धत महाकायः प्रावृषीव वलाहकः । तस्य सा कायमुद्वीक्ष्य वर्द्धमानं महाकपेः । वक्त्रं प्रसारयामास पातालाम्बरसन्निभम् । घनराजीव गर्ज्जन्ती वानरं समभिद्रवत । स ददर्श ततस्तस्या विकृतं सुमहन्मुखम् । कायमात्रञ्च मेधावी मर्माणि च महाकपिः । स तस्या विकृते वक्त्रे वज्रसंहननः कपिः । संक्षिप्य मुहुरात्मानं निपपात महाकपिः । आस्ये तस्यानिमज्ज

नन्दद्गुः सिद्धचारणाः। ग्रस्यमानं यथा चन्द्रं पूर्वं पर्वणि राहुणा। ततस्तस्य नखैस्तीक्ष्णैर्मर्माण्युत्कृत्य वानरः। उत्पपाताथ वेगेन मनःसम्पातविक्रमः"।

**जलराशि** पु० ६त०। १जलसमूहे जलानां राशिरत्र। २समुद्रे च "समातलं व्रजजलराशिरानशे" माघः।

**जलरुह्** न० जले रोहति रुह–क्विप् ७त०। १पद्मे हेमच०। क। जलरुहमप्यत्र हेमच० "जलं तच्छुशुभे कद्वं फुल्लैर्जलरुहैस्तथा" भा०आ०१२८अ०। २तोयरोहिमात्रे त्रि०।

**जलरूप** पुंस्त्री जलस्य रूपमिव रूपमस्य शुभ्रत्वात्। १मकरे त्रि० स्त्रियां जातित्वात् ङीष्। ६त०।२तोयस्य रूपे न०।

**जललता** स्त्री जलस्य लतेव सन्ततिमत्त्वात्। तरङ्गलेखायां हारा०। [व्रणभेदे। हारा०।

**जलवरण्ट** पु० जलप्रधानो वरण्टः। (पानिवसन्त) वसन्त-

**जलवल्कल** पु० जलानां वल्कल इव। कुम्भिकायाम्। (पाना) हारा०।

**जलवल्ली** स्त्री जलजाता वल्ली। शृङ्गाटकलतायां राजनि०।

**जलवाद्य** न०जलं वाद्यमिव। पाणिताड़ने वाद्यतुल्यध्वनियुक्ते जले "आकाशगङ्गाजलवाद्यतज्ज्ञाः" हरिवं० २४८अ०।

**जलवानीर** पु०जलजातो वानीरः। अम्बुवेतसे शब्दार्थचि०

**जलवायस** पुंस्त्री जले वायस इव कृष्णत्वात्। (पानिकौड़ो) मद्गुखगे। स्त्रियां जातित्वात् ङीष्।

**जलवास** न० जलेन वास्यते सुरभीक्रियते वासि–कर्म्मणि अच्। १उशीरे राजनि०। तस्य जलसेचनेन सौरभोत्पादात्तथात्वम्। ७त०। २तोये वासे। "स चिन्तयामास मुनिर्ज्जलवासे कदाचन" भा० शा० २६२ अ०। जलं वासयति सुरभीकरोति वासि अण् उप० स०। ३विष्णुकन्दे राजनि०।

**जलवाह** पु० जलं वहति वह–अण् उप०स०। १वारिवाहे मेघे हेमच० तन्नामनायके २कर्पूरे च "साद्रिजलधिजलवाहपथम्" किरा०। ३जलवाहकमात्रे त्रि० "जलवाहास्तथा मेघाः वायवस्तनयित्नवः" भा० स० ७अ०।

**जलविडाल** पुंस्त्री जले विड़ाल इव। (उद्बिड़ाल) जलनकुले हारा०। स्त्रियां जातित्वात् ङीष्।

**जलविन्दुजा** स्त्री जलविन्दुभ्यो जायते जन–ड। यावनालीशर्कराभेदे राजनि०। २तोयविन्दुजातमात्रे त्रि०।

**जलविषुव(त्)** न० जलप्रधानं विषुवं(त्)। राशिचक्रस्थे तुलाराशिरूपे स्थानभेदे "भचक्रनाभौ विषुवद्द्वितयं समसूत्रगम्" सू० सि० "भचक्रनाभौ भगोलस्य ध्रुवद्वयाभ्यां तुल्यान्तरेण मध्यभागे विषुवद्द्वितयं विषुवद्द्वयं समसूत्रगं परस्परं व्यासतुल्यान्तरितं ध्रुवमध्ये विषुवद्वृत्तस्थानात् तद्वृत्ते क्रान्तिवृत्तभागौ यौ लग्नौ तौ क्रमेण पूर्वापरौ विषुवत्संज्ञौ मेषतुलाख्यौ चेत्यर्थः" रङ्ग०। २विषुवन्तु समाख्यातं तुलामेषभयोस्तथा" ज्यो० उक्ते २तत्र रवेः संक्रमे च। संक्रान्तिश्च चलस्थिरभेदाभ्यां द्विविधा अयनसंक्रान्तिशब्दे ३१८ दर्शिता। जलविषुवसंक्रान्तिनक्षत्रतः स्थानविशेषे स्तनचलपाते तत्फलज्ञानार्थं जलविषुवचक्रं ज्यो० उक्तं यथा। "षड्मूर्ध्नि, वदने पञ्च, चत्वारि, हृदये, तथा। त्रितयं करयोरेषु" पयोविषुवभक्रमात्" त्रितयं त्रितयमिति करयादेषु द्वादश इति २७ नक्षत्राणि स्थाप्यानि तत्र स्थानभेदे फलञ्चोक्तं "मानं वैरं बहुसुखलाभं भोगं त्रासं जलविषुवेषु" ज्यो०। पयोविषुवादयोऽप्यत्र।

**जलवृश्चिक** पु०जले वृश्चिक इव। (चिङ्गाड़)मत्स्ये त्रिका०।

**जलवेतस** पु०जलजातो वेतसः। अम्बुवेतसे वेतसभेदे राजनि०

**जलवैकृत** न० विकृतस्य भावः अण् ६त०। दुर्निमित्तसूचके नद्यादीनां जलविकारभेदे तत्फलादिकमुक्तं वृ० स० ४६अ० यथा।

"अपसर्पणं नदीनां नगरादचिरेण शून्यतां कुरुते। शोषश्चाशोष्याणामन्येषां वा ह्रदादीनाम्। स्नेहासृङ्मांसवहाः सङ्कुलकलुषाः प्रतीपगाश्चापि। परचक्रस्यागमनं सद्यः कथयन्ति षण्मासात्। ज्वालाधूमक्वाथा रुदितोत्क्रुष्टानि चैव कूपानाम्। गीतप्रजल्पितानि च जनमरकाय प्रदिष्टानि। तोयोत्पत्तिरखाते गन्धरसविपर्यये च तोयानाम्। सलिलाशयविकृतौ वा महद्भयं तत्र शान्तिरियम्। सलिलविकारे कुर्य्यात् पूजां वरुणस्य वारुणैर्मन्त्रैः। तैरेव च जपहोमं शममेवं पापमुपयाति"। [त्रिका०।

**जलव्यध** पु० जलं विध्यति व्यध–अच्। कङ्कलोटमत्स्ये

**जलव्याल** पु०जलस्थो व्यालो हिंस्रः।(ढोड़ा)१सर्पभेदे,अमरः। स्त्रियां जातित्वात् ङीष्। क्रूरकर्म्मणि २जन्तौ च।

**जलशय** पु० जले शेते शी–अच् ७त०। विष्णौ हेमच० सप्तम्या वा अलुकि। जलेशयोऽप्यत्र।

**जलशयन** पु० जलं शयनमस्य। विष्णौ हला०।

**जलशायिन्** पु० जले समुद्रजले शेते शी–णिनि। नारायणे।"एकार्णवेऽहिशयने योगनिद्रामुपागतः। आसी-

र्थंशेषमभजत् कल्पान्ते भगवान् प्रभुः" देवीभा० ।

**जलशुक्ति** स्त्री जलस्य शुक्तिरिव । शम्बूके अमरः ।

**जलशूक** न० जलस्य शूकमग्रमिव । शैवाले हेमच० । "क्षीर-शुक्ताजलशूकमधुरवर्गे प्रतिवाप तैलं वा पाचयित्वा स्वनुगुप्तं निदध्यात्" सुश्रुतः ।

**जलशूकर** पु० जलस्य शूकर इव । कुम्भीरे हेमच० ।

**जलसन्ध** पु० धृतराष्ट्रभेदे । "विविंशतिर्विकर्णश्च जलसन्धः सुलोचनः" भा०आ०६७० । तत्पुत्रोक्तौ ।

**जलसमुद्र** पु० जलमयः समुद्रः । लवणादिषु सप्तसु समुद्रेषु शेषसमुद्रे "लवणजलधिरादौ दुग्धसिन्धुश्च तस्मात्" इत्यु-पक्रमे दध्नो घृतस्येक्षुरसस्य तस्मात् मद्यस्य च स्वादु-जलस्य चान्त्यः" सि०शि० । [ सरोभेदे ।

**जलसरस** न० नित्यस० सरस्+संज्ञायाम् अच् समा० ।

**जलसर्पिणी** स्त्री जले सर्पति सृप-णिनि । जलौकायाम् (जोंक) हेमच० ।

**जलसूचि** स्त्री जलस्या सूचिरिव । १कङ्कलोटमत्स्ये २शृङ्गाटके ३शिशुमारे ४जलौकायां च मेदि० ५काके पुंस्त्री हेमच० ।

**जलस्तम्भ** न० जलं स्तभ्यतेऽनेन स्तम्भ-करणे ल्युट् । १जल-स्तम्भनसाधने मन्त्रादौ । भावे ल्युट् । जलस्य २स्तम्भने च जलस्तम्भनविद्या च दुर्योधनविदिता तया द्वैपायनह्रद-जलं संस्तभ्य स सुष्वाप तत्कथा भा०शा०३०अ० । "एवमुक्त्वा महाराज ! प्राविशत्तं महाह्रदम् । अस्तम्भयत तोयञ्च मायया मनुजाधिपः" इत्यादिका ।

**जलस्था** स्त्री जले तत्समीपे तिष्ठति स्था-क । १गण्डदूर्वायां राजनि० २जलस्थितमात्रे त्रि० । [ त्रिका० ।

**जलह** न० जलेन हन्यते-हन-बा० ड ३त० । स्वल्पजलयन्त्रगृहे

**जलहरण** न० ६त० । तोयस्य स्थानान्तरनयने "लघुगुरुकनि-यमगतमिह फणिपतिमतमवगतमतिसुखनिगदपदम् दश-वसुभुवनैर्यतिरिह यदि भवति हि रसिकजनहृदय-विहितमदम् । वसुविमलचतुष्कलगणकृतगुणिगण-चरणविरामाहितसगणम् क्वचिदपि गुरुरहितं भवति कविविहितं छन्दः सुन्दरि! जलहरणम्" इत्युक्तलक्षणे २मात्रावृत्तभेदे । [ भेदे । हेमच० ।

**जलहस्तिन्** पु० जले हस्तीव ७त० । जलस्थे हस्तिरूपे जन्तु-

**जलहार** त्रि० जलं हरति हृ-अण् उप० स० । जलहारके जलवाहके (भारि) शब्दार्थे स्त्रियां टाप् पा०मुग्धबो०मते ङीप् । "त्रिरामा घृतकुम्भाभिर्बद्धैरगस्तनाम्बरैः । यमुना तीरमार्गेषु जलहारीभिरावृतम्" हरिवं० ६१ अ० । अत्र पा०गौरा० ङीष् ।

**जलहारिन्** त्रि० जलं हरति हृ-णिनि । जलवाहके । स्त्रियां ङीप् । "याभिरिदं शरीरमाराम इव जल-हारिणीभिः केदार इव च कुल्याभिरुपस्निह्यतेऽनुगृह्य-ते च" सुश्रुतः । [फेने च । त्रिका० ।

**जलहास** पु० जलानां हास इव शुभ्रत्वात् । १फेने, २समुद्र-

**जलहोम** पु० जले क्षिप्तः होमः ७त० । जले चेप्रव्ये वैश्व-देवादिहोमभेदे तद्विधिः सं०त० दर्शितो यथा "लौकिके वैदिके चैव हुतोच्छिष्टं जले क्षितौ । वैश्वदेवश्च कर्त्तव्यः पञ्चसूनापनुत्तये" ।

**जलह्रद** पु० जलप्रचुरो ह्रदः शा० त० । जलबहुले ह्रदे जलह्रदस्येदं तत्र भवो वा शिवा० अण् । जालह्रद तत्सम्बन्धिनि तत्र भवे च त्रि० स्त्रियां ङीप् ।

**जलाका** स्त्री जले आकायति प्रकाशते आ+कै-क । जलौ-कायां शब्दर० ।

**जलाकाश** पु० जलप्रतिविम्बितः जलावच्छिन्नो वा आकाशः शा० त० । जलप्रतिविम्बिते २जलावच्छिन्ने वा आकाशे "जलावच्छिन्नखे नीरं यत्, तत्र प्रतिविम्बितः । साभ्र-नक्षत्रआकाशो जलाकाश उदीर्यते" शब्दार्थचि० । नीरूपस्याकाशस्य प्रतिविम्बासम्भवेन साभनत्वेति विशे-षणम् । एतच्च प्रतिविम्बवादे नीरूपस्य प्रतिबिम्बासम्भ-वमभिप्रेत्य विवरणाचार्यैरवच्छिन्नवादोऽङ्गीकृतः । तन्मते जलावच्छिन्नआकाश एव जलाकाश इति भेदः । अव-च्छिन्नवादशब्दे ४२० पृ० दृश्यम् ।

**जलाखी** स्त्री जलमश्नोति व्याप्नोति कारणतया अश-अच् गौरा० ङीष् । जलपिप्पल्यां शब्दर० ।

**जलाखु** पु० जले आखुरिव । जलनकुले त्रिका० ।

**जलाञ्चल** न० जलमञ्चति अन्च-बा० अलच् ६त० । १शैवाले जलस्याञ्चलमिव । २स्रतो वारिनिर्गमे (स्रतो निर्गच्छद्वा-रिणि) मेदि० ।

**जलाञ्जलि** पु० जलपूर्णोऽञ्जलिः । १जलपूर्णाञ्जलौ अञ्जलि-पूर्णवारिणि उपचारात् २तद्दानरूपायां पितृणां तर्पण-क्रियायाम् । "कुपतमासाद्य कुतो जलाञ्जलिः" चाण० ।

**जलाटन** पुंस्त्री जले अटति अट-ल्यु । १कङ्कपक्षिणि स्त्रियां जातित्वात् ङीष् । २जलौकायां स्त्री मेदि० तत्र गौरा० ङीष् । [ हारा० स्त्रियां जातित्वात् ङीष् ।

**जलाटक** पुंस्त्री जले अटति अट-ण्वुल् पृषो० । नक्रराजे

**जलाण्डक** न० जले अण्ड इव कायति कै–क। प्रोताधाने क्षुद्रे मत्स्याण्डसंघाते जले अणुरिव कायति कैः क। जलाणुक इति पाठान्तरम् तत्रार्थे हेमच०।

**जलात्मक** त्रि० जलमेवात्माऽस्य कप्। १जलमये।२जलौकायां स्त्री शब्दरत्ना० कापि अत इत्त्वम्। [नामपगमे च।

**जलात्यय** पु० जलस्यात्ययो यत्र। १शरत्काले ६त०। २जला-

**जलाधार** पु० ६त०। जलानामाधारे तडागादौ अमरः। "आकाशमेकं हि यथा घटादिषु पृथक् भवेत्। तथात्मैकोऽप्यनेकस्तु जलाधारेष्विवांशुमान्" याज्ञ०।

**जलाधिदैवत** पुंन० ६त०। १वरुणे हलायुधः लिपिकर-प्रमादकृतपाठदर्शनात् पुंस्त्वोक्तिः प्रमादिकी परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः पा० तत्पुरुषे परलिङ्गस्यैव विधानेन पुंक्लीवत्वस्यैवौचित्यात्। जलमधिदैवतमस्य।२पूर्वाषाढ़ा-नक्षत्रे न०।

**जलाधिप** पु० ६त०। १वरुणे।"नाशक्नोद्यतः स्थातुं विप्र-चित्तेर्जलाधिपः"हरिवं०२५२अ०। जलाधीशादयोऽप्यत्र। वत्सरभेदे २जलपतौ रव्यादिग्रहे च जलशब्दे कृषि-पराशरवाक्यम् दृश्यम् वत्सरभेदेन जलाधिपतिभेदानयनं तत्फलञ्च ज्यो० त० उक्तं यथा"जीवार्कबुधमन्दारकाव्य-चन्द्रमसः क्रमात्। राजा मन्त्री जलाधीशः शस्यपोऽद्रि-७हृतात् शकात्"। सप्तहृतशकाङ्के एकशेषे जीवो राजा अर्को मन्त्री बुधो जलाधिपः शनिः शस्याधिपः। द्व्यवशेषे रव्यादिः। त्र्यवशेषे बुधादिः। चतुरवशेषे मन्दादि। पञ्चावशेषे भौमादि। षड़वशेषे काव्यादि। सप्तावशेषे चन्द्रादि। मालान्यायेन पुनः जीवादीनां ग्रहणम्।

**जलान्तक** पु० जलमेवान्तो भूमण्डलस्य सीमा यत्र कप्। सप्तसमुद्रान्तर्गते स्वादूदके समुद्रे तदुत्तरं द्वीपान्तरा-भावेन तस्य भूमण्डलस्यान्तसीमात्वम्। "लवणेक्षुसुरा-सर्पिर्दधिदुग्धजलान्तकाः" त्रिका०। वासुदेवस्य सत्य-भामायां पत्न्यां जाते २पुत्रभेदे "जज्ञिरे सत्यभामाया-मित्युपक्रमे "रोहितो दीप्तिमांश्चैव ताम्रजाक्षो जला-न्तकः" हरिवं० १६२ अ०।

**जलाम्बिका** स्त्री जलस्याम्बिकेव। कूपे हारा०।

**जलायुका** स्त्री जलमायुरस्याः कप् पृषो०। जलौकायां (जोंक) शब्दरत्ना० तद्भेदलक्षणादिकं सुश्रुते उक्तं यथा। "अथ जलायुका वक्ष्यन्ते। जलमासामायुरिति जलायुका जलमासामोक इति जलौकसः। ता द्वादश तासां सविषाः षट्, तावत्य एव निर्विषाः। तत्र सविषाः कृष्णा कर्वुरा अलगर्द्दा इन्द्रायुधा सामुद्रिका गोचन्दना चेति। तास्वञ्जनचूर्णवर्णा पृथुशिराः कृष्णा। वर्म्मि-मत्स्यवदायता छिन्नोन्नतकुक्षिः कर्वुरा। रोमशा महा-पार्श्वा कृष्णमुख्यलगर्द्दा। इन्द्रायुधवदूर्द्ध्वराजिभिश्चित्रिता इन्द्रायुधा। ईषदसितपीतिका विचित्रपुष्पाकृतिचित्रा सामुद्रिका। गोवृषणवदधोभागे द्विधाभूताकृतिरणु-मुखी गोचन्दनेति। ताभिर्दष्टे पुरुषे दंशे श्वयथुरति-मात्रं कण्डूर्मूर्च्छा ज्वरो दाहश्छर्दिर्मदः सदनमिति लिङ्गानि भवन्ति। तत्र महागदः पानालेपननस्य-कर्मादिषूपयोज्यः। इन्द्रायुधादष्टमसाध्यमित्येताः सविषाः सचिकित्सिता व्याख्याताः। अथ निर्विषाः। कपिला पिङ्गला शङ्कुमुखी मूषिका पुण्डरीकमुखी सावरिका चेति। तत्र मनःशिलारञ्जिताभ्यामिव पार्श्वाभ्यां पृष्ठे स्निग्धमुद्गवर्णा कपिला। किञ्चिद्रक्ता वृत्तकाया पिङ्गाऽऽशुगा च पिङ्गला। यकृद्वर्णा शीघ्र-पायिनी दीर्घतीक्ष्णमुखी शङ्कुमुखी। मूषिकाकृति-वर्णाऽनिष्टगन्धा च मूषिका। मुद्गवर्णा पुण्डरीकतुल्य-वक्त्रा पुण्डरीकमुखी। स्निग्धा पद्मपत्रवर्णाष्टादशा-ङ्गुलप्रमाणा सावरिका सा च पश्वर्थे इत्येता अविषा व्याख्याताः। तासां यवनपाण्ड्रसह्यपौतनादीनि क्षेत्राणि। तेषु महाशरीरा बलवत्यः शीघ्रपायिन्यो महाशना निर्विषाश्च विशेषेण भवन्ति। तत्र सविष-मत्स्यकीटदर्दुरमूत्रपुरीषकोथजाताः कलुषेष्वम्भःसु च सविषाः। पद्मोत्पलनलिनकुमुदसौगन्धिककुवलयपुण्ड-रीकशैवालकोथजाता विमलेष्वम्भःसु च निर्विषाः। भवति चात्र। क्षेत्रेषु विचरन्त्येताः सलिलेषु सुग-न्धिषु। न च सङ्कीर्णचारिण्यो न च पङ्कशयाः सुखाः। तासां ग्रहणमार्द्रचर्मणान्यैर्वा प्रयोगैर्गृह्णी-यात्। अथैनां नवे महति घटे सरस्तडागोदकपङ्कमावाप्य निदध्यात् भक्ष्यार्थं चासामुपहरेच्छैवलं वल्लूरमौदकांश्च कन्दांश्चूर्णीकृत्य शय्यार्थं तृण मौदकानि च पत्राणि। त्र्यहात्त्र्यहाच्चान्यज्जलं भक्ष्यं च दद्यात् सप्तरात्रात्स-प्तरात्राच्च घटमन्यं संक्रामयेत्। भवति चात्र। स्थूल-मध्याः परिक्लिष्टाः पृथ्व्यो मन्दचेष्टिताः। अग्रा-हिण्योऽल्पपायिन्यः सविषाश्च न पूजिताः। अथ जलौ-कोऽवसेकसाध्यव्याधितमुपवेश्य संवेश्य वा विरूक्ष्य चास्य तमवकाशं मृद्गोमयचूर्णैर्यद्यरुजः स्यात्। गृहीताश्च ताः सर्षपरजनीकल्कोदकप्रदिग्धगात्रीः सलिलसरक-

मध्ये मुहूर्त्तस्थिता विगतक्लमा स्नात्वा ताभीरोगं ग्राहयेत्। स्वच्छशुक्लार्द्रपिचुप्लोतावच्छन्नां कृत्वा मुखमपावृणुयादगृह्णत्यै क्षीरविन्दुं वा दद्याच्छस्त्रपदानि वा कुर्वीत यद्येवमपि न गृह्णीयात्तदान्यां ग्राहयेत्। यदा च निविशतेऽश्वखुरवदाननं कृत्वोन्नम्य च स्कन्धं तदा जानीयाद्गृह्णातीति गृह्णतीं चार्द्रवस्त्रावच्छन्नां धारयेत् सेचयेच्च। दंशे तोदकण्डूप्रादुर्भावैर्जानीयाच्छुद्धमियमाददातीति शुद्धमाददानामपनयेत्। अथ शोणितगन्धेन न मुञ्चेन्मुखमस्याः सैन्धवचूर्णेनावकिरेत्। अथ पतितां तण्डुलकण्डनप्रदिग्धगात्रीं तैललवणाभ्यक्तमुखीं वामहस्ताङ्गुष्ठाङ्गुलीभ्यां गृहीतपुच्छां दक्षिणहस्ताङ्गुष्ठाङ्गुलिभ्यां शनैरनुलोममनुमार्जयेदामुखाद्वामयेत्तावद्यावत् सम्यग्वान्तलिङ्गानीति। सम्यग् वान्ता सलिलसरकन्यस्ता भोक्तुकामा सती चरेत्। या सीदति न चेष्टते सा दुर्वान्ता तां पुनः सम्यग्वामयेत्। दुर्वान्ताया व्याधिरसाध्य इन्द्रमदो नाम भवति। अथ सुवान्तां पूर्ववत्संनिदध्यात् शोणितस्य च योगायोगानवेक्ष्य जलौकोव्रणान्मधुनावघट्टयेच्छीताभिरद्भिश्च परिषेचयेद्बध्नीत वा व्रणं कषायमधुरस्निग्धशीतैश्च प्रदेहैः प्रदिह्यादिति। भवति चात्र। क्षेत्राणि ग्रहणं जातीः पोषणं सावचारणम्। जलौकसाञ्च यो वेत्ति तत्साध्यान् स जयेद्गदान्”।

**जलार्क** पु० जलप्रतिविम्बितोऽर्कः। जलप्रतिविम्बितसूर्य्ये “प्रकृतिस्थोऽपि पुरुषो नाज्यते प्राकृतैर्गुणैः। अविकारादकर्त्तृत्वात् निर्गुणत्वात् जलार्कवत्” भाग० ३।२।१।

**जलार्णव** पु० जलमयः अर्णवः। अन्त्ये स्वादूदके समुद्रे।

**जलार्द्रा** स्त्री जलेनार्द्रा। आर्द्रतालवृन्ते “भुवित्रं तालवृन्तं स्यात् तद्वदुत्क्षेपणञ्च तत्। जलेनार्द्रं जलार्द्रा स्यात्” वैज० २जलार्द्रवस्त्रे न० हारा० ३जलेनार्द्रे च त्रि०। “पुष्पासारैः स्नपयतु भवान् व्योमगङ्गाजलार्द्रैः” मेघ०।

**जलालु** पु० जलजात आलुः शा०त०। (पाणिया आलु) आलुकभेदे राजनि०। [शालूके राजनि०।

**जलालुक** न० जलस्यालुरिव कायति कै—क। पद्मकन्दे

**जलालुका** स्त्री जले अलति गच्छति अल—गत्यादौ बा० उक। जलौकायां शब्दर०। [जलौकायां भरतः।

**जलालोका** स्त्री जले आलोक्यते आ+लोक—कर्म्मणि घञ्।

**जलावर्त्त** पु० आ+वृत—णिच्—भावे अच् ६त०। जलस्य स्रतो भ्रमणे जटाधरः।

**जलाशय** पु० जले तत्समीपे आशेते आ+शी—अच्। १उशीरे अमरः २नामज्जके गन्धद्रव्यभेदे राजनि०। आ+शी—आधारे अच् ६त०। ३समुद्रे हेमच०। ४जलाधारे तडागादौ “कुशेशयैरत्र जलाशयोषिताः” माघः। “न वासोभिः सहाजस्रं नाविज्ञाते जलाशये” “तेनैव सार्द्धं प्राश्येयुः स्नात्वा पुण्यजलाशये” मनुः। तद्भेदादि जलाशयोत्सर्गशब्दे दृश्यम्। जलमाशय आधारो यस्य। ५शृङ्गाटके राजनि०। ६गुण्डालीवृक्षे स्त्री राजनि०।

**जलाशयोत्सर्ग** पु० ६त०। कूपादेर्जलाशयस्य प्रतिष्ठाकर्मे उत्सर्गे जलाशयोत्सर्गतत्त्वे तस्य भेदलक्षणादिकमुक्तं यथा “अथ जलाशयाः। ते च खननसाध्याश्चत्वारः। कूपवापीपुष्करिणीतडागरूपाः। तथाच मत्स्यपुराणम्। “एवमेव पुराणेषु तडागविधिरुच्यते। कूपवापीतडागेषु तथा पुष्करिणीषु च”। कूपोऽद्वारकोगर्त्तविशेषः बहुसोपानकोऽयं वापीति द्वैतनिर्णयः। वस्तुतो वापीलक्षणं वक्ष्यते। पुष्करिणीतडागावाह वशिष्ठसंहितायाम् “चतुर्विंशाङ्गुलोहस्तोधनुस्तच्चतुरुत्तरः। शतधन्वन्तरश्चैव तावत् पुष्करिणी मता। एतत्पञ्चगुणः प्रोक्तस्तडागइति निश्चयः”। धनुर्हस्तचतुष्टयं चतुरुत्तरचतुर्गुणहस्तोयस्तद्धनुः तथाच विष्णुधर्मोत्तरे प्रथमकाण्डम् “द्वादशाङ्गुलिकः शङ्कुस्तद्द्वयञ्च शतः स्मृतः। तच्चतुष्कं धनुः प्रोक्तं क्रोशोधनुःसहस्रकः”। कापिले “चतुर्विंशाङ्गुलोहस्तश्चतुर्भिश्च करैर्धनुः”। शयोहस्तस्तेन खातचतुर्दिक्षु विंशतिहस्तान्यूनतायां चतुःशतहस्तान्यूनान्तरत्वेन पुष्करिणी। चतुर्दिक्षु पञ्चचत्वारिंशद्धस्तान्यूनतायां सहस्रद्वितयहस्तान्यूनान्तरत्वेन तडागः। एतत्तु जलाधारपरं नतूपरितटपरम्। नव्यवर्द्धमानधृतोवशिष्ठः “शतेन धनुर्भिः पुष्करिणी त्रिभिः शतैर्दीर्घिका। चतुर्भिर्द्रोणः पञ्चभिस्तडागः। द्रोणाद्दशगुणा वापी” इति संहितायामन्तरपदश्रुतेरत्रापि तथावगम्यते। तेन चतुर्दिक्षु पञ्चत्रिंशद्धस्तान्यूनतायां द्वादशशतहस्तान्तरान्यूनत्वे स दीर्घिका। चतुर्दिक्षु चत्वारिंशद्धस्तान्यूनतायां षोडशशतहस्तान्तरान्यूनत्वे द्रोणः। चतुर्दिक्षु त्रिंशदधिकशतहस्तान्यूनतायां षोडशसहस्रहस्तान्तरान्यूनत्वेन वापी। करोऽत्र कफोण्युपक्रममध्यमाङ्गुल्यग्रपर्य्यन्तः तथाच कल्पतरुरत्नाकरयोः “मध्याङ्गुलिकूर्परयोर्मध्यः प्रामाणिकः करः”। तत्करणफलमाहादित्यपुराणम् “सेतुबन्धरता ये च तीर्थ-

शौचरताश्च ये। तडागकूपकर्त्तारोमुच्यन्ते ते तृषाभयात्"। सेतुर्जलधारणहेतुर्बन्धः। तीर्थशौचं घट्टकपरिष्कारः; तेन सेतुबन्धघट्टपरिष्कारतडागादीनां करणे प्रत्येकं तृड्भयमोचनं फलम्। विष्णुः "अथ कूपकर्त्तुस्तत्प्रवृत्ते पानीये दुष्कृतार्द्धं विनश्यतीति"। तत्प्रवृत्ते कूपादुत्थिते। विष्णुधर्म्मोत्तरे "तडागकूपकर्त्तारस्तथा कन्याप्रदायिनः। छत्रोपानहदातारस्ते नराः स्वर्गगामिनः"। तोयं विना सङ्कुचितप्राणिदेशे तु नन्दिपुराणम् "योवापीमथवा कूपं देशे तोयविवर्ज्जिते। खानयेत् स दिवं याति विन्दौविन्दौ शतं समाः"। ततश्च वाप्यादिखनने प्रत्येकजलविन्दुसमसंख्यशतवर्षावच्छिन्नस्वर्गप्राप्तिः फलम्। एतत्सङ्कल्पानन्तरं वास्तुयागसङ्कल्पः कार्य्यः। विष्णुः "कूपारामतड़ागेषु देवतायतनेषु च। पुनः संस्कारकर्त्ता तु लभते मौलिकं फलम्"। संस्कारविधौ तु "अजले जलमुत्पाद्य" इति वक्ष्यमाणवचनात् जलशून्यदेशखनन एव प्रतिष्ठा नतु पङ्कोद्धारमात्रे। मत्स्यपुराणे "प्रासादभवनादीनां विशेषं विस्तरादद। कुर्यात् केन विधानेन कश्च वास्तुरुदाहृतः" इत्युपक्रम्य वाप्यादीनामनभिधानात् आदिपदात् कूपादेर्ग्रहणम्। "प्रासादेऽप्येवमेव स्यात् कूपवापीषु शस्यते" इत्यभिधानाच्च, तेन वाप्यादिकरणेऽपि वास्तुयागः। महाकपिलपञ्चरात्रे "जलाधारमहार्थञ्च यजेद्वास्तुम् विशेषतः। ब्रह्माद्यदितिपर्य्यन्ताः पञ्चाशत्त्रयसंयुताः! सर्व्वेषां कुलवास्तूनां नायकाः परिकीर्त्तिताः। असंपूज्य हि तान् सर्व्वान् प्रासादादीन्न कारयेत्। अनिष्पत्तिर्विनाशः स्यादुभयो धर्म्मधर्म्मिणोः"। ब्रह्माद्यदितिपर्य्यन्ता इति कल्पान्तरम्। देवीपुराणोक्तशादिकल्पोव्यवह्रियते। धर्म्मधर्म्मिणोस्तडागादितत्कर्त्रोः। तद्दिने तदकरणे उत्सर्गदिनेऽपि वाप्यादौ तत्करणम्। "प्रासादभवनोद्यानप्रारम्भपरिवर्त्तने। पुरवेश्मप्रवेशे च सर्व्वदोषापनुत्तये। इति वास्तूपशमनं कृत्वा सूत्रेण वेष्टयेत्। वास्तुयागमकुर्व्वाणस्तवाहारो भविष्यति"। इति मत्स्यपुराणवचने पुरवेश्मप्रवेशे वास्तुयागप्राप्तेः पूर्व्वोक्तवचनेन प्रासादधर्म्मातिदेशात्तत्रापि प्रासादप्रतिष्ठावत् वाप्यादिप्रतिष्ठादिने वास्तुयागकरणम्। तदारम्भकालो दीपिकायामुक्तो यथा "पुष्यामैत्रकरोत्तराश्विवरुणब्रह्माम्बुपित्रेन्दुभैः शस्तेऽर्के शुभयोगवारतिथिषु क्रूरेष्ववीर्य्येषु च। पुष्टेन्दौ जलराशिगे दशमगे शुक्रे शुभांशोदये प्रारम्भः सलिलाशयस्य शुभदो जीवेन्दुपुत्रोदये"। पुष्यानुराधाहस्तोत्तरात्रयाश्विनीशतभिषारोहिणीपूर्व्वाषाढ़ामघामृगशिरोभिः। मात्स्ये "चन्द्रादित्यबलं लब्ध्वा लग्नं शुभनिरीक्षितम्। स्तम्भोच्छ्रायादि कर्त्तव्यमन्यत्र परिवर्ज्जयेत्। अश्विनीरोहिणीमूलमुत्तरात्रयमैन्द्रवम्। स्वाती हस्तानुराधा च गृहारम्भे प्रशस्यते। वज्रव्याघातशूले च व्यतीपातातिगण्डयोः। विष्कुम्भगण्डपरिघवर्ज्जं योगेषु कारयेत्। आदित्यभौमवर्ज्जन्तु सर्व्वे वाराः शुभावहाः। प्रासादेऽप्येवमेव स्यात् कूपवापीषु चैव हि"। तदुत्सर्गफलम्।

"संक्षेपात् प्रवक्ष्यामि जलदानफलं शृणु। पुष्करिण्यादिदानेन विष्णुः प्रीणाति विश्वदृक्"। जलाशयकरणार्थं भूमिदाने फलमाह चित्रगुप्तः "जलाशयार्थं यो दद्यात् वारुणं लोकमाप्नुयात्"। भूमिमिति शेषः। कालमाह मत्स्यपुराणे "शृणु राजन्! प्रवक्ष्यामि तड़ागादिषु यो विधिः। चैत्रे वा फाल्गुने वापि ज्यैष्ठे वा माधवे तथा। माघे वा सर्व्वदेवानां प्रतिष्ठा शुभदा भवेत्। प्राप्य पक्षं शुभं शुक्लमतीते चोत्तरायणे। पुण्येऽह्नि विप्रकथिते कृत्वा ब्राह्मणवाचनम्"। अतीते प्रवृत्ते तथा च प्रतिष्ठासमुच्चये "माघे च फाल्गुने चैव चैत्रवैशाखयोरपि। ज्यैष्ठाषाढ़कयोर्वापि प्रवृत्ते चोत्तरायणे"। पुण्येऽह्नि अष्टमचन्द्रादिशून्ये ब्राह्मणवाचनं पुण्याहस्वस्त्यृद्धिवाचनम्। "पञ्चमी च द्वितीया च तृतीया सप्तमी तथा। दशमी पौर्णमासी च तथा श्रेष्ठा त्रयोदशी। आसु प्रतिष्ठा विधिवत् कृता शुभफला भवेत्"। मात्स्ये "आषाढ़े द्वे तथा मूलमुत्तरात्रयमेव च। ज्येष्ठाश्रवणरोहिण्यः पूर्वभाद्रपदा तथा। हस्ताश्विनी रेवती च पुष्योमृगशिरस्तथा। अनुराधा तथा स्वाती प्रतिष्ठादिषु शस्यते। बुधो बृहस्पतिः शुक्रस्त्रय एते शुभावहाः। एतन्निरीक्षितं लग्नं नक्षत्रञ्च प्रशस्यते। ग्रहताराबलं लब्ध्वा ग्रहपूजां विधाय च। निमित्तं शकुनं ज्ञात्वा वर्जयित्वा तथाऽशुभम्। शुभयोगे शुभे लग्ने क्रूरग्रहविवर्जिते। लग्ने ऋक्षे च कुर्वीत प्रतिष्ठादिकमुत्तमम्। अयने विषुवे तद्वत् षड़शीतिमुखे तथा। "सुराणां स्थापनं कार्य्यं विधिदृष्टेन कर्म्मणा"। भविष्ये "प्रतिपच्च द्वितीया च तृतीया पञ्चमी तथा। दशमी त्रयोदशी चैव पौर्णमासी च कीर्त्तिता। सोमो बृहस्पतिश्चैव शुक्रश्चैव तथा बुधः। एते सौम्यग्रहाः

मोक्ताः प्रतिष्ठायागकर्मणि”। प्रतिष्ठाधिकारे व्यवहारसमुच्चयः “कृष्णपक्षे च पञ्चम्यामष्टम्यामपि शस्यते”। दीपिकायां “पुष्याश्विशक्रभगदैवतवासवेषु सौम्यानिलेशमघरोहिणिमूलहस्तम्। पौष्णानुराधहरिभेषु पुनर्वसौ च कार्याभिषेकतरुकूपरथप्रतिष्ठा”। वसवो धनिष्ठा ईश आर्द्रा। “आर्द्रायाञ्चैव सौभाग्यमिति” प्रतिष्ठासमुच्चयात्। वापीटानादीनां पूर्त्तत्वात् स्त्रीशूद्राधिकारे मार्कण्डेयः “वापीकूपतडागादिदेवतायतनेषु च। अन्नप्रदानमारामाः पूर्त्तमित्यभिधीयते। अग्निहोत्रं तपः सत्यं वेदानामनुपालनम्। आतिथ्यं वैश्वदेवञ्च इष्टमित्यभिधीयते। ग्रहोपरागे यद्दानं पूर्त्तमित्यभिधीयते। इष्टापूर्त्तं द्विजातीनां धर्मः सामान्य उच्यते। अधिकारी भवेच्छूद्रः पूर्त्तधर्मे न वैदिके”। वैदिके वेदाध्ययनसाध्येऽग्निहोत्रादाविति रत्नाकरः। एवं स्त्रीणामपि पूर्त्ताधिकारः। यथा नारीत्यनुवृत्तौ हहस्पतिः “पितृव्यगुरुदौहित्रान् भर्त्तुः स्वस्रीयमातुलान्। पूजयेत् कव्यपूर्त्ताभ्यां वृद्धानाथातिथीन् स्त्रियः” एतेन जलाशयोत्सर्गादौ गोरथतारणानुमन्त्रणयोर्यजमानकर्त्तृकोमन्त्रपाठः। तत्रामन्त्रकतया स्त्रीशूद्रयोरनधिकारेण तद्वत्ति त्यागेऽप्यनधिकारः विशेषोपदेशविरहादिति द्वैतनिर्णयोक्तं निरस्तम्। मन्त्रपाठस्तु ब्राह्मणद्वारा “अमन्त्रस्य तु शूद्रस्य विप्रोमन्त्रेण गृह्यते” इति वराहपुराणात्। अमन्त्रस्येति परिभाषया स्त्रीणामप्यधिकारः। अस्य पूर्त्तत्वाद् द्विमाढ़मध्यादौ कर्त्तव्यम्। यथा गोभिलः “इष्टिः पूर्त्तेषु युग्मानाशयेत् प्रदक्षिणमुपचारः यवस्तिलार्थ इति”। हयशीर्षपञ्चरात्रे “वापीकूपतडागानां पश्चिमे यागमण्डपम्। कुर्य्याद्यथाक्रमेणैव कन्यसं मध्यमोत्तमम्। कन्यसं दशहस्तन्तु कूपे शस्तं तथा नव। द्विषट्कं कारयेद्वाप्यां पुष्करिण्यां चतुर्द्दश। द्विरष्टहस्तं कुर्वीत तडागमण्डपं शुभम्”। कन्यसङ्कनीयांसम्। सङ्कल्पविधिस्तु भविष्ये “गृहीत्वौडुम्बरं पात्रं वारिपूर्णमुदङ्मुखः। दर्भत्रयं साग्रमूलं फलपुष्पतिलान्वितम्। जलाशयारामकूपे सङ्कल्पे पूर्वदिङ्मुखः साधारणे। चोत्तरास्य ऐशान्यां तज्जलं क्षिपेत्”। मत्स्यपुराणे “प्रागुदक्प्लवने देशे तडागस्य समीपतः। चतुर्हस्तां शुभां वेदीं चतुरस्रां चतुर्मुखीम्”। कारयेदिति शेषः। तथा “सर्वतः समवर्णाः स्युः पताकाध्वजसंयुताः”। समवर्णा वक्ष्यमाणलोकपालवर्णाः। “अश्वत्थोडुम्बरप्लक्षवटशाखाकृतानि च। मण्डपस्य प्रतिदिशं द्वाराण्येतानि कारयेत्”। तथा “कुलशीलसमापन्नः स्थापकः स्याद्द्विजोत्तमः”। स्थापक आचार्य्य इति रत्नाकरः। तथा “सौवर्णौ कूर्ममकरौ राजतौ मत्स्यडुण्डुभौ। ताम्रौ कुलीरमण्डूकावायसः शिशुमारकः। एवमासाद्य तान् सर्वानादौ चैव विशाम्पते!। शुक्लमाल्याम्बरधरः शुक्लगन्धानुलेपनः। सर्वौषध्युदकस्नानस्नापितोवेदपुङ्गवैः। यजमानः सपत्नीकः पुत्रपौत्रसमन्वितः। पश्चिमं द्वारमाश्रित्य प्रविशेद्यागमण्डपम्। ततोमङ्गलशब्देन भेरीणाञ्च स्वनेन च। रजसा मण्डलं कुर्यात् पञ्चवर्णेन तत्त्ववित्। षोड़शारं भवेच्चक्रं पद्मगर्भं चतुर्मुखम्। चतुरस्रन्तु परितोवृत्तं मध्ये सुशोभनम्। वेद्याश्चोपरि तत्कृत्वा ग्रहाल्लोकपतींस्तथा। विन्यसेन्मन्त्रतः सर्वान् प्रतिदिक्षु विचक्षणः। झषादीन् स्थापयेन्मध्ये वारुणं मन्त्रमाश्रितः” झषादीन्। कूर्मादीन्। “ब्रह्माणञ्च शिवं विष्णुं तत्रैव स्थापयेद्बुधः। विनायकन्तु विन्यस्य कमलामम्बिकान्तथा”। पूजयेदिति शेषः। मत्स्यपुराणम् “नवग्रहमखं कृत्वा ततः कर्म समारभेत्। अन्यथा फलदं पुंसां न काम्यं प्राप्यते क्वचित्”। ततः कर्मशेषस्तत्रैव द्रष्टव्यः।

“जलाशयोत्सर्गस्य सर्वभूतोद्देशकत्वेन प्रकृष्टचेतनोद्देशकत्ववदप्रकृष्टचेतनोद्देशकत्वागत्वमपि ततश्च कीटादेर्ममेदमिति स्वीकारयोग्यत्वेन वेदमेयोद्देश्यगतस्वत्वाजनकत्यागरूपत्वादस्य यागत्वम्। अतएव जलाशयोत्सर्गमुपक्रम्य मत्स्यपुराणेऽपि “प्राप्नोति तद्यागवलेन भूय” इति यागत्वेनाभिहितं ततश्च तज्जलं स्वस्वत्वदूरीकरणेन नद्यादिवत् साधारणीकरणम् अतएव ‘सामान्यं सर्वभूतेभ्यो मया दत्तमिदं जलम्। रमन्तु सर्वभूतानि स्नानपानावगाहनैः’ इति मन्त्रलिङ्गेनोपादानं विना कस्यापि स्वत्वमिति। ततश्चान्ययागवदुत्तरप्रतिपत्तेरश्रुतत्वात् साधारणजलस्य परिग्रहमात्रेण गोतमोक्तेन दातुः स्वामित्वश्रुतेर्यजमानस्यापि तथात्वेन स्वामित्वात्तत्र स्नानादावदोषः। तथाच गोतमः ‘स्वामी ऋक्थक्रयसंविभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितं निर्विष्टं वैश्यशूद्रयोः” इति परिग्रहोऽनन्यपूर्वस्य जलतृणकाष्ठादेः स्वीकार इति मिताक्षरा’।

**जलाश्रय** पु० जलमाश्रयोऽस्य। १वृत्तगुण्डाख्ये राजनि० २वलाकायां ३स्थूलोच्चये स्त्री हारा०

**जलाष** न० जायते जल—ड जः लाषोऽभिलाषो यत्र । १सुखे निघ० अन्येच्छानधीनेच्छाविषयत्वात् तस्य तथात्वम् । कस्यर्थे अर्श०अच् ।२तद्वति त्रि० "यो अस्ति भेषजो जलाषः" ऋ०२।३३।७ "जलाषः सर्वेषां सुखकरः" भा० "गतिमेधपतिं रुद्रं जलाषभेषजम्" ऋ० ४६।४ । ३जले निघ० ।

**जलाषाह्** त्रि०जलं सहते सह—ख्वि—पूर्वपददीर्घः सुषामादि० षत्वम् । जलसोढ़रि । सुषामादिगणे अमन्ततयैव पाठादत्नत न षत्वम् । जलासाहौ । स्वादौ भति तु "षाड़ेः षः" षाड्रूपत्वे षत्वम् जलाषाट् जलाषाड्भ्यामित्यादि ।

**जलाष्ठीला** स्त्री जलेनाष्ठीला । पुष्करिण्याम् हारा०।

**जलासुका** स्त्री जलमेवासवोऽस्याः कप् ।१जलौकायाम् अमरः

**जलाह्वय** पु० जले आह्वयः शोभमानतया कीर्त्तनमस्य । उत्पले राजनि० । [ भरतः ।

**जलिका** स्त्री जलसुद्भवस्थानत्वेनास्त्यस्याः ठन् । जलौकायां

**जलुका** स्त्री जल—उक । जलौकायां शब्दर०।

**जलूका** स्त्री जलमोको यस्याः पृषो० ।१जलौकायाम् हेमच० "न जलूकादिवत् संक्रमणमिहोपदिश्यते" तैत्ति० भा० ।

**जलेचर** पुंस्त्री जले चरति चर—ट वा अलुक् स०। हंसादौ स्त्रियां टित्त्वात् ङीप् । "यद्योऽहमस्मि भद्रं ते नास्मि पक्षी जलेचरः" भा० व० २११अ० । स तमादाय कौन्तेयो विस्फुरन्तं जलेचरम्" भा० आ० २१अ०

**जलेच्छया** स्त्री जलमेति इ—क्विप् जलेति शेते शी—अच् । जलोमेतस्थानरोहिणि हस्तिशुण्डाख्ये शब्दर० ।

**जलेज** न० जले जायते जन—ड वा अलुक् समा० । वारिजे १पद्मे । "उद्भासीनि जलेजानि दुन्वन्त्यर्दयितं जनम्" भट्टिः । २जले जातमात्रे त्रि० ।

**जलेजात** न० ७त०। १पद्मे शब्दरत्ना०। २वारिजातमात्रे त्रि०।

**जलेन्द्र** पु० ६त० । १वरुणे २महादेवे जम्भलाख्ये ३पूर्व्वयक्षे भेदि० ।

**जलेन्धन** पु०जलान्येवेन्धनानि यस्य । १वाड़वानले वाड़वानलशब्दे दृश्यम् । २सौरविद्युदादितेजसि शब्दार्थचि० ।

**जलेभ** पुंस्त्री जलजात इभः । जलहस्तिनि स्त्रियां जातित्वात् ङीष् । "मस्फुरत्तिमिजलेभजिह्मगः" ह०१२स०

**जलेयु** पु० पूरुवंश्ये रौद्राश्वत्पघृताप्सरोजाते पुत्रभेदे "रौद्राश्वस्य महेष्वासा दशाप्सरसि सूनवः" इत्युपक्रमे "स्थण्डिलेयुर्वनेयुश्च जलेयुश्च महायशाः" भा० आ० ६४ अ० ।

**जलेरुहा** स्त्री जले रोहति—रुह—क—अलुक् स० । १कुटुम्बिनीवृक्षे राजनि०। २जलरोहिणि पद्मादौ त्रि० ।

**जलेला** स्त्री कुमारानुचरमातृभेदे "उत्क्राथिनी जलेला च महावेगाथ कङ्कणा" भा० श० ४७ अ० ।

**जलेवाह** पु० जले तोयाभ्यन्तरे वाहो गतिरस्य । (डुबारि) ख्याते जलमज्जनेन तत्स्थपदार्थोत्तोलके पुरुषभेदे । "जलेवाहानथाहूय बहूंस्तत्र न्ययोजयत् । ते कृत्वा परमं यत्नमापुराभरणं न तत्" पाद्मे पा० ख० ।

**जलेश** पु० ६त० ।१वरुणे २समुद्रे च "कालं गतिं तेऽखिलदेवतात्मनो दिशश्च कर्णौ रसनं जलेशम्" भाग० ८।७।२० विराड्रूपोक्तौ "पातयामास सेनायां जलेशश्च स दानवः" हरिवं-२५२अ०। जलेश्वरादयोऽप्यत्र । "भीमोऽक्षुणं प्रति नले च जलेश्वरे च" नैष० । "यमकुवेरजलेश्वरवज्रिणाम्" रघुः । २वर्षभेदे जलाधिपे रव्यादौ च ।

**जलेशय** पु० जले शेते शी—अच् अलुक् समा० । १विष्णौ "सप्रसामोपगीतं त्वां सप्तार्णवजलेशयम्" रघुः । तस्य तथात्वं जलशायिशब्दे दृश्यम् । २जलस्थायिमात्रे त्रि० "यस्य इङ्गितशब्देन कूर्मोऽप्यन्तर्जलेशयः" भा० आ० २६ अ० । ३मत्स्ये पुंस्त्री त्रिका० । शोपधत्वात् स्त्रियां टाप् ।

**जलो(लौ)का** स्त्री जलमोकोऽस्य पृषो०। (जोंक) १जलस्थे सरीसृपभेदे भरतोऽस्तु द्विधा पपाठ ।

**जलोच्छ्वास** पु०जलान्युच्छ्वसन्त्येभिः उद्+श्वस—घञ् ।१प्रवृद्धजलस्य निर्गममार्गे २परीवाहे अमरः। भावे घञ् ६त०। ३अधिकजलस्य सर्वतोवहने च । (छयलापि) ।

**जलोदर** न०जलप्रधानमुदरं यस्मात् ५ब०। उदरामयरोगभेदे। "यः स्नेहपीतोऽप्यनुवासितो वा वान्तो विविक्तोऽप्यथ वा निरूढः। पिबेज्जलं शीतलमाशु तस्य स्रोतांसि दुष्यन्ति हि तद्वहानि । स्नेहोपलिप्तेष्वथ वापि तेषु दकोदरम् पूर्व्ववदभ्युपैति। स्निग्धं महत्तत् परिवृत्तनाभिसमाततं पूर्णमिवाम्बुना च । यथा दृतिः क्षुभ्यति कम्पते च शब्दायते चापि दकोदरन्तत् । जन्मनैवोदरं सर्वं प्रायः कृच्छ्रतमं मतम् । बलिनस्तदजाताम्बु यत्नसाध्यं नवोत्थितम्" माधवकरस्तन्निदानाद्यारम्भ ।

**जलोद्धतगति** स्त्री "रसैर्जसजसा जलोद्धतगतिः" वृ०र०उक्ते द्वादशाक्षरपादके १छन्दोभेदे । जलेन उद्धता गतिरस्य । २जलेनोद्धतगतिके त्रि० "यदीयहलतो विलोक्य विपटं कलिन्दतनया जलोद्धतगतिः" छन्दोम० ।

**जलोद्भव** त्रि० जले उद्भवोऽस्य । १जलजाते २गुण्डालाख्ये ३लघुब्राह्मीभेदे स्त्री राजनि० जलसुद्भवत्यस्मात् भू अपादाने

अप्। १हिमालयस्थे देशभेदे। "ततो हिमवतः पार्श्वं समभ्येत्य जलोद्भवम्। सर्वमल्पेन कालेन देशं चक्रे वशं बली" भा० स० २८अ०। २जलजाते त्रि० "गङ्गकौन्तु समासाद्य सर्वतीर्थजलोद्भवाम्" भा०व० ८४अ०। ३लघुब्राह्म्याम् राजनि०।

**जलोद्भूत** त्रि०जले उद्भूतः।१जलभवे २क्षुपभेदे स्त्री राजनि०

**जलोरगा** स्त्री जले उरगीव दीर्घत्वात् विषवत्त्वाच्च पृषो०। जलौकायां शारसुन्दरी।

**जलौकस्** स्त्री ब०व० जलमोको वसतिरासाम्। (जोंक) ख्यातायां रक्तपायाम् अमरः। अस्य बहुवचनत्वं प्रायिकम्। "जलोरगा जलौका तु जलोका च जलौकसीति" संसारावर्त्तोक्तेः। "अभिहितो जलौकसः" इति सुश्रुतोक्तेश्च।२जलस्थानके जन्तुमात्रे त्रि० "जलौकसां स सत्वानां बभूव प्रियदर्शनः" भा० अनु० ५०अ०।

**जलौकस** पुंस्त्री जलमोकः स्थानमस्यस्याः—अच्। जलौकायां रायमुकुटः।

**जल्प** वाग्विशेषे उक्तौ च भ्वा०पर०सक०सेट्। जल्पति अजल्पीत्। जजल्प तत्र कथाभेदे "मयि जल्पति कल्पनाधिनाथे रघुनाथे मनुतां तदन्यथैव" इति अनुमानचिरोमणिः। कथामात्रे "अनागमः प्रजानाञ्च प्रमादादिव जल्पतः" भा०स०२१ अ० "हसते जल्पते वैरी एकपात्रे च भुञ्जते" हरिवं०२०अ० अत्र आर्षत्वात् पदव्यत्ययः, भुञ्जते इत्यत्र गणव्यत्ययश्च।

अनु+कथनोत्तरकथने पश्चात् कथने तुल्यरूपकथने च "अनल्पन्त्यामनुजल्पति" भाग० ४।२५।५८। [ आर० १अ०।

अभि+आभिमुख्येन कथने "अन्योन्यमभिजल्पन्तः" रामा०

प्रति+प्रत्युत्तरकथने प्रतिरूपकथने च। "न चैवोक्ता नवाऽनुक्ता हीनतः परुषा गिरः। भारत ! प्रतिजल्पन्ति सदा तूत्तमपूरुषाः" भा० स० ७०अ०।

वि+अति+अन्योन्यकथने शब्दकर्मकत्वात् व्यतिहारे न तङ्। व्यतिजल्पति" सि० कौ०।

**जल्प** पु० जल्प—भावे घञ्। १कथने। "इति प्रियां वल्गुविचित्रजल्पैः" भाग० १।७।१८। आर्षेऽस्य क्लीवतापि। "तूष्णींभव न ते जल्पमिदं कार्य्यं कथञ्चन" भा० आ० १२९अ० "कैकेय्यां संश्रितं जल्पं नेदानीं प्रतिभाति मे" रामा०अयो०६०अ०। उभयत्र जल्प्यमिति पाठस्तु सम्यक्। परमतनिराकरणपूर्वकस्वमतस्थापनरूपे विजिगीषोः २कथाभेदे च। तल्लक्षणं गौतमेनोक्तं यथा "यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः" गौत० सू०। व्याख्यातञ्चैतत् विश्वनाथेन।

"यथोक्तेषु यदुपपन्नं तेनोपपन्न इत्यर्थः। मध्यपद० लोपी समासः। तथा च प्रमाणतर्कसाधनोपालम्भः पक्षप्रतिपक्षपरिग्रह इत्यस्य योग्यतया परामर्शः अन्यथा जल्पस्य वादविशेषत्वापत्तिः प्रमाणतर्काभ्यां तद्रूपेण ज्ञाताभ्यां न तु ज्ञानेऽनाहार्य्यत्वं विवक्षितम् आरोपितप्रमाणभावेनाभासेऽपि जल्पनिर्वाहात्। यद्यपि छलादिभिरुपालम्भ एव न तु साधनं तथापि साधनस्य परकीयानुमानस्योपालम्भो यत्रेत्यर्थान्न दोषः। परपक्षदूषणे सति स्वपक्षसिद्धिरित्यतः साधने तदुपयोग इत्यन्ये। उभयपक्षस्थापनावत्त्वेन च विशेषणीयमतो वितण्डायामव्याप्तिः "स प्रतिपक्षस्थापनाहीनः" इत्युत्तरसूत्रात् प्रकृते उभयपक्षस्थापनावत्त्वादेव च पञ्चावयवनियमोऽपि लभ्यत इति वदन्ति। अत्र च छलादिभिः सर्वैरुपालम्भो न विशेषेण व्याप्तिरपि तु तद्योग्यतयैव, योग्यतावच्छेदकन्तु वादभिन्नकथात्वमेव तत्र चोक्तवादत्वावच्छिन्नभेदरूपकथाद्भेदो वा विशेषणमिति छलेत्यादिना विजिगीषुकथात्वं बोध्यते विजिगीषुर्हि छलादिकं करोति तथाचोभयपक्षस्थापनावती विजिगीषुकथा जल्प इत्यर्थः इत्यपि वदन्ति। अत्र चायं क्रमः वादिना स्वपक्षसाधनं प्रयुज्य नायं हेत्वाभासस्तल्लक्षणायोगादिति सामान्यतो न्यायसिद्ध इत्यादि विशेषतो वा। प्रतिवादिना स्वस्याज्ञानादिनिरासाय परोक्तसमस्तवादेन लाभे उच्यमानग्राह्याणामप्राप्तकालार्थान्तरनिरर्थकानामलाभे उक्तग्राह्याणां प्रतिज्ञाहानिप्रतिज्ञान्तरप्रतिज्ञाविरोधप्रतिज्ञासंन्यासहेत्वन्तराविज्ञातार्थविक्षेपमतानुज्ञान्यूनाधिकपुनरुक्तनिरनुयोज्यानुयोगापसिद्धान्तानामलाभे पर्य्यनुयोज्योपेक्षणस्य मध्यस्थोद्भाव्यत्वा देवानुपन्यासार्हतया यथासम्भवहेत्वाभासेन परोक्तं दूषयित्वा स्वपक्ष उपन्यसनीयः। ततो वादिना तृतीयकक्षाश्रितेन परोक्तमनूद्य स्वपक्षदूषणमुद्धृत्यानुक्तग्राह्योच्यमानग्राह्यहेत्वाभासातिरिक्तोक्तग्राह्याणामलाभे हेत्वाभासेन यथासम्भवं प्रतिपक्षवादिनः स्थापना दूषणीया। अन्यथा क्रमविपर्य्यासेऽप्राप्तकालं चानवसरे दूषणीयेन च निरनुयोज्यानुयोगः यथा त्वद्धसि चेत् प्रतिज्ञाहानिविशेषदति चेद्धेत्वन्तरमित्यादिप्रतिज्ञाहान्यादिवद्धेत्वाभासानामुद्भाव्यत्वाविशेषेऽपि अर्थदोषत्वेनाप्रधानत्वाच्चरमसम्प्रदानमिति"। उक्ष्यादि०अस्यान्तोदात्तता।

**जल्पन** त्रि० जल्प—नन्द्या० ल्यु। १कथके। भावे ल्युट्।

२कथने न०। "अनिमित्तभङ्गचलनस्वेदाश्रुनिपातजल्पना- द्यानिः" वृ० सं० ४६ अ०।

**जल्पाक** त्रि० जल्प—षाक। १वाचाले बहुकुत्सितवादिनि अमरः। २कथकमात्रे च स्त्रियां षित्वात् ङीष्। "जल्पा- कीभिः सहासीनः स्त्रीभिः प्रजविना त्वया" भट्टिः।

**जल्पित** त्रि० जल्प—कर्म्मणि क्त। १कथिते अमरः भावे क्त। २कथने न०।

**जल्हु** पु०दह—बा० छु पृषो०। १अग्नौ "न पापासो मनामहे नारायासो न जल्हवः" ऋ० ८।५।१।११। "न जल्हवः अनग्नयः" भा०।

**जव** पु० सौ० जु—भावे अप्। १वेगे। "जवेन पीठादुदतिष्ठ- दच्युतः" "जवेन कराठं सभयाः प्रपेदिरे" माघः। "जवेऽपि मानेऽपि च पौरुषाधिकम्" नैष०। कर्त्तरि अच्। २तद्वति त्रि० अमरः।

**जवन** न०जु—भावे ल्युट्। १वेगे अमरः। "तं मन्ये मेघपुष्पस्य जवने सदृशं हयम्" भा०वि०४५अ०। कर्त्तरि ल्यु। २जव- युक्ते त्रि० "आरुह्य जवनानश्वान् नियन्तुमुपचक्रमे" हरिवं०११७अ०। ततः दृढा०भावे इमनिच्। ३जवनिमन् जवे पु०। ४वेगयुक्ते देशभेदे पारस्यदेशे च हेमच०। सो- ऽभिजनोऽस्य अण्। ५जावन तद्देशवासिनि त्रि० बहुत्वे अणो लुक्। ६तद्देशवासिषु ब० व०। ७स्त्रीकारीमृगे द्वोटकमात्रे च पुंस्त्री राजनि०।८स्त्रेच्छजातिभेदे यव- नजातौ पुंस्त्री स्त्रियां जातित्वात् ङीष्।"जवनी नव- नीत कोमलाङ्गी शयनीये यदि नीयते कथञ्चित्" उद्भटः। रघुनन्दनमतेऽयं तालव्यादिः। जवनदेशभव- त्वादस्य तथात्वम्।

**जवनाल** न० जवनायालति पर्य्याप्नोति अल—अच्। (जनार) फलभेदे। "जवनालं स्मृतं स्वादु शीतं वायुकरं मतम्। कफपित्तविनाशि स्यात्" राजवल्लभः।

**जवनिका** स्त्री सौ०जु—करणे ल्युट् संज्ञायां कन्। (कानात्) (चिक) प्रभृतौ व्यवधायकवस्त्रादौ अमरः। "रेजु- र्जवनिकाक्षेपैः सपक्षा इव खे नगाः" हरिवं० ८६अ०। "सतां जवनिकानिकामसुखिनाम्" माघः।

**जवनी** स्त्री जु—करणे ल्युट् ङीप्। (कानात) १जवनिका- याम् २ओषधिभेदे च हेमच०। ३जवनजातिस्त्रियाञ्च।

**जवस्** पु० सौ० जु—असुन्। १वेगे। "आ स्येनस्य जवसा" ऋ०१।११८।११। "जवसा वेगेन" भा०।

**जवस** न० सौ० जु—कर्म्मणि असच्। घासे शब्दरत्ना०।

**जवा** स्त्री सौ० जु—अच्। १स्वनामख्याते वृक्षे अमरः। "जवा कटूष्णेन्द्रलुप्तनाशकृत् भिषजां मता। विच्छर्द्दिकृद्रेच- निका सूर्य्यस्याराधने हिता" राजव०। पाटला० पुष्पे- ऽपि स्त्री "अरुणो गरुड़भ्राता जवापुष्पसमप्रभः" हरिवं० २२७ अ०। "जवाकुसुमसङ्काशं काश्यपेयं महाद्यु- तिम्" सूर्य्यनतिमन्त्रः। "पारिजातवनैश्चैव जवाशोक- वनैस्तथा भा० व० २३० अ०।

**जवादि** न० "जवादि नीरसं स्निग्धमीषत् पिङ्गं सुगन्धिदम्। च्यातपे बहुलामोदं राज्ञां योग्यञ्च तन्मतम्" इत्युक्तलक्षणे मृगचर्म्मजाते कृत्रिमे गन्धद्रव्यभेदे राजनि०।

**जवाधिक** पु० जवेनाधिकः। १अधिकजवयुक्ते ऽश्वे अमरः। २अधिकवेगयुक्ते त्रि०।

**जविन्** त्रि० जव+अस्त्यर्थे इनि। १वेगयुक्ते हेमच०। "सम- कालमिषुं क्षिप्तमानीयान्यो जवी नरः" याज्ञ०। स्त्रियां ङीप्। "अजवसो जविनीभिर्विवृश्चन्" ऋ० २।१५।६।

**जविन** पु० जव—बा० इनन्। कोकड़वृक्षे राजनि०।

**जवीयस्** त्रि०अतिशयेन जववान् ईयसुन् मतोर्लुक्। अति- शयितवेगयुक्ते "अनेजदेकं मनसो जवीयो नैनद्देवा आ- प्नुवन् मार्षत्" यजु०४०।४। स्त्रियां ङीप्। इष्ठन् जवि- ष्ठोऽप्यत्र। "कृतस्य न्यमन्ये मनसा जविष्ठ" ऋ० ४।२।१।

**जष** बधे भ्वा० उभ० सक० सेट्। जषति ते अजाषीत् अज- षीत् अजषिष्ट। जजाष जेषतुः जेषे।

**जस** मोक्षणे दिवा० पर० सक० सेट्। जस्यति इरित् अज- सत् अजासीत् अजसीत् जजास जेसतुः अजस्रम्। उदित् जसित्वा जस्त्वा। जस्तः। [नि अजीजसत् त।

**जस** बधे अनादरे च चुरा० उभ० सक० सेट्। जासयति उद्+हिंसने। एतद्योगे कर्म्मणि षष्ठी। "निजौजसो- ज्जासयितुं जगद्द्रुहाम्" माघः। "हत्वा नाथस्य वैदेहि! मन्योरुज्जासयात्मनः" भट्टिः।

**जस** गतौ निघण्टुः भ्वा० पर० सक० सेट्। जसति अजा- (ज)सीत्। जसिस्ताडने उपक्षये च माधवः। जसुरिः।

**जस** रक्षणे चु० उभ० सक० सेट् इदित्। जंसयति ते अज जंसत् त।

**जसु** पु० जस—उन्। आयुधे "यदा वलस्य पीयतो जसुम्" ऋ० १०।६८।६। "जसुमायुधम्" भा०।

**जसुरि** पु०जस—उरिन्। १वज्रे उज्ज्वलदत्तः २व्याधिते त्रि० "वि या जानाति जसुरिम्" ऋ०५।६१।७। "जसुरिं व्यथितम्" "जसिस्ताडनकर्म्मोपक्षयकर्म्मा वा" भा०। ३उपक्षययुक्ते च।

**जस्वन्** त्रि० जस–उपक्षये वनिप्। उपक्षयकर्त्तरि “मा स्वजने वृषभ !” ऋ०६।४०।११। “जस्वने उपक्षयित्रे” भा०।

**जहक** त्रि० हा–कुन् द्वित्वञ्च । १बाले २त्यागिनि च उज्ज्वल०। ३काले त्रिका०। ४निर्म्मोके संक्षिप्तसा० तस्य त्याज्यत्वात् तथात्वम्। ५गात्रसङ्कोचन्यां स्त्री। “इतरजनाय जहका वैष्णवी” यजु० २४।३६। “जहका गात्रसङ्कोचनी” वेददी०।

**जहत्स्वार्था** स्त्री जहत् स्वार्थो यया। १लक्षणाभेदे, यथा आयुर्घृतम् आयुर्घृतमित्यत्र आयुःसाधनस्य बोधनात् स्वार्थस्यायुषस्त्यागात् तथात्वम्। “जहत्स्वार्थाजहत्स्वार्थे द्वे वृत्ती ते पुनस्त्रिधा” हरिका० वैयाकरणभूषणे तु जहति पदानि स्वार्थं यस्यामिति विग्रहो दर्शितः।

**जहदजहल्लक्षणा** स्त्री जहच्च अजहच्च स्वार्थो यां तादृशी लक्षणा। वाच्यार्थैकदेशत्यागेनैकदेशवृत्तौ लक्षणायाम् यथा सोऽयं देवदत्त इत्यत्र तत्कालैतत्कालरूपार्थत्यागेन केवलदेवदत्तमात्रार्थबोधनात् वाच्यार्थैकदेशवृत्तिता। एवं “तत्त्वमसि श्वेतकेतो !” छा०उ०वाक्ये विरुद्ध सर्वज्ञत्वाल्पज्ञत्वार्थत्यागेन चैतन्यमात्रबोधनात् तथात्वम्।

**जहल्लक्षणा** स्त्री जहत् स्वार्थो यया उत्तरपदलोपे कर्म०। जहत्स्वार्थायां लक्षणायाम्। यथा आयुर्घृतम्। लक्षणाभेदोदाहरणादिकं वेदान्तपरिभाषायां दर्शितं यथा

“प्रकारान्तरेण लक्षणा त्रिधा जहल्लक्षणा अजहल्लक्षणा जहदजहल्लक्षणा चेति तत्र शक्यार्थमनन्तर्भाव्य यत्रार्थान्तरस्य प्रतीतिस्तत्र जहल्लक्षणा यथा विषं भुङ्क्ष्वेत्यत्र स्वार्थं विहाय शत्रुगृहे भोजननिवृत्तिर्लक्ष्यते। यत्र शक्यार्थमन्तर्भाव्यैव अर्थान्तरप्रतीतिः तत्राजहल्लक्षणा यथा शुक्लः पट इति अत्र हि शुक्लशब्दः स्वार्थं शुक्लगुणमन्तर्भाव्यैव तद्वति द्रव्ये लक्षणया वर्त्तते। यत्र हि विशिष्टवाचकः शब्दः एकदेशं विहाय एकदेशे वर्त्तते तत्र जहदजहल्लक्षणा यथा सोऽयं देवदत्त इति अत्र हि पदद्वयवाच्ययोर्विशिष्टयोरैक्यानुपपत्त्या पदद्वयस्य विशेष्यमात्रपरत्वं यथा वा तत्त्वमसीत्यादौ तत्पदवाच्यसर्वज्ञत्वादिविशिष्टस्य त्वंपदवाच्येनान्तःकरणविशिष्टेनैक्यायोगात् ऐक्यसिद्ध्यर्थं स्वरूपे लक्षणेति साम्प्रदायिकाः। वयन्तु ब्रूमः सोऽयं देवदत्तः तत्त्वमसीत्यादौ विशिष्टवाचकानां पदानामेकदेशपरत्वेऽपि न लक्षणा शक्त्युपस्थितविशिष्टयोरभेदान्वयानुपपत्तावपि विशेष्ययोः शक्त्युपस्थितयोरेवान्वयबोधाविरोधात् यथा घटोऽनित्य इत्यत्र घटपदवाच्यैकदेशघटत्वस्यानित्यत्वायोग्यत्वेऽपि योग्यघटव्यक्त्या सहानित्यत्वान्वयः। यत्र पदार्थैकदेशस्य विशेषणतयैवोपस्थितिस्तत्रैव स्वातन्त्र्येणोपस्थितये लक्षणाभ्युपगमः यथा नित्यो घट इत्यत्र घटपदाद्घटत्वस्य शक्त्या स्वातन्त्र्येणानुपस्थित्या तादृशोपस्थित्यर्थं घटपदस्य घटत्वे लक्षणा एवमेव तत्त्वमस्यादिवाक्येऽपि न लक्षणा शक्त्या स्वातन्त्र्येणोपस्थितयोस्तत्त्वंपदार्थयोरभेदान्वये बाधकाभावात्। अन्यथा गेहे घटः घटे रूपं घटमानय इत्यादौ घटत्वगेहत्वादेरभिमतान्वयबोधायोग्यतया तत्रापि घटादिपदानां विशेष्यमात्रपरत्वे लक्षणा च स्यात्। तस्मात्तत्त्वमस्यादिवाक्येषु आचार्य्याणां लक्षणोक्तिरभ्युपगमवादेन बोध्या। जहदजहल्लक्षणोदाहरणन्तु काकेभ्यो दधि रक्ष्यतामित्यादिकमेव। तत्र शक्यकाकत्वपरित्यागेनाशक्यदध्युपघातकत्वपुरस्कारेण काके काकशब्दप्रवृत्तेः”।

**जह्ना** स्त्री जहाति हा–बा०श। सुषिक्तिकायां (सुषिण्डरी) शब्दच०। [हेमच०।

**जहानक** पु० हा–शोकार्थे शानच् संज्ञायां कन्। प्रलये

**जहिजोड़** अव्य० जहि जोड़ इत्युच्यते यस्यां क्रियायाम् मयूर०स०। त्यागजोड़ार्थनियोगक्रियायाम्।

**जहिस्तम्ब** अव्य० जहि स्तम्ब इत्युच्यते यस्यां क्रियायाम् मयू० स०। त्यागस्तम्बननियोगक्रियायाम्।

**जहु** पु० हा+उन् नि० द्वित्वम्। १अपत्ये “क्रतानुसङ्ग आसनशयनाटनस्नानाशनादिषु सह मृगजहुना” भाग० ५।८।१२। “मृगजहुना मृगापत्येन” श्रीधरः। २कुरुवंश्ये पुष्पवतोऽपत्ये राजभेदे “जज्ञे सत्यवतोऽपत्यं पुष्पवांस्तत्सुतो जहुः” भाग० ९।२२।५।

**जह्नु** पु० भरतवंश्ये आजमीढ़नृपपुत्रे १नृपभेदे। “भरतस्यान्वये चैवाजमीढ़ो नाम पार्थिवः। तस्य पुत्रो महानासीज्जह्नुर्नाम नरेश्वरः। दुहितृत्वमनुप्राप्ता गङ्गा यस्य महात्मनः” भा०अनु० ४अ०। गङ्गायास्तद्दुहितृत्वकथा रामा० आदि० ४३ अ०।

“यतो भगीरथो राजा ततो गङ्गा यशस्विनी। जगाम सरितां श्रेष्ठा सर्वपापप्रणाशिनी। यतो हि यजमानस्य जह्नोरद्भुतकर्म्मणः। गङ्गा संप्लावयामास यज्ञवाटं महात्मनः। तस्यावलेपनं ज्ञात्वा क्रुद्धो जह्नुश्च राघव !। अपिबत् जलं सर्वं गङ्गायाः परमाद्भुतम्। ततो देवाः सगन्धर्वा ऋषयश्च सुविस्मिताः। पूजयन्ति महात्मानं जह्नुं पुरुषसत्तमम्। गङ्गां चापि नयन्ति स्म

दुहितृत्वे महात्मनः। ततस्तुष्टो महातेजाः श्रोत्राभ्यामसृजत् प्रभुः। तस्माज्जह्नुसुता गङ्गा प्रोच्यते जाह्नवीति च"। जह्नोरपत्यमण् ङीप्। जाह्नवी गङ्गायाम्। "जाह्नवीतीरसम्भूतां स्फटं मूर्द्ध्नि बिभर्त्ति यः" प्रा॰ त॰। जह्नोरियं अण् वेदे पृषो॰ ह्रस्वाकारविपर्ययौ। जह्नावी जह्नुसम्बन्धिन्यां प्रजायाम्। "आ जह्नावीं समनसो पराजैः" ऋ॰ १।११६।१९। "जह्नावी जह्नोर्महर्षेः सम्बन्धिनी प्रजा" भा॰।२विष्णौ च "सत्कर्त्ता सत्कृतः साधुर्जह्नुर्नारायणो नरः" विष्णुस॰। "जनान् संसारादपह्नुते अपनयतीति जह्नुः जहात्य विदुषः स्वभक्तान्नयति परं पदमिति वा" भा॰ तत्र व्युत्पत्तिर्दर्शिता पृषो॰ साधु।

**जह्नुकन्या** स्त्री ६त॰।१गङ्गायाम्। "जह्नोः कन्यां सगरतनयस्वर्गसोपानपङ्क्तिम्" मेघ॰ "जलनिधिमनुरूपं जह्नुकन्यावतीर्णा" रघुः। जह्नुतनयादयोऽप्यत्र।

**जह्नुसप्तमी** स्त्री वैशाखशुक्लसप्तम्याम्। "वैशाखशुक्लसप्तम्यां जह्नुना मुनिना पुरा। क्रोधात् पीता पुनस्त्यक्ता कर्णरन्ध्रात्तु दक्षिणात्। तस्यां समर्चयेद्देवीं गङ्गां भुवनमेखलाम्। स्नात्वा सम्यग् विधानेन स धन्यः सुकृती नरः। तस्यां सन्तर्पयेत् देवान् पितॄन् मर्त्यान् यथाविधि। साक्षात् पश्यन्ति ते गङ्गास्नातकं गतपातकम्" वराहपु॰।

**जह्मन्** न॰ हा–मनिन् पृषो॰ द्वित्वान्त्यलोपौ। उदके निघ॰ उदकनामसु तत्र जम्मेति पाठान्तरम्।

**जा** स्त्री जन–बा॰ड।१मातरि २देवरपत्न्याम् एकाक्षरको॰। ४जननकर्त्तरि त्रि॰ गवादौ उपपदे जन–विट् ङा। गोजा गविजाते त्रि॰।

**जागत** त्रि॰ जगती छन्दोऽस्य अण्। जगतीच्छन्दस्के मन्त्रादौ। जगत्यां भवः उत्सा॰ अञ्। २जगतीच्छन्दसि भवे सामभेदे न॰। ३ जगत्यां पृथिव्यां भवे च त्रि॰।

**जागर** पु॰ जागृ–भावे घञ् गुणः। १निद्राक्षये (जागा) अमरः "त्रयोदशसमास्तीर्णा जागरेण सुदुःखिताः" भा॰ क॰ ८६ अ॰। "रात्रिजागरपरो दिवाशयः" रघुः। २अन्तःकरणस्य तत्त्वतत्त्ववस्तुप्रकाशात्मके २वृत्तिभेदे।

**जागरक** त्रि॰ जागृ–ण्वुल् गुणः। निद्रारहिते।

**जागरण** न॰ जागृ–भावे ल्युट्। १निद्राराहित्ये।

**जागरित** न॰ जागृ–भावे क्त गुणः। १जागरणे निद्राभावे २इन्द्रियैरर्थज्ञाने स्वप्नदर्शनहेतुकर्म्मक्षये च जागरितमागच्छन् स्वोपाध्यन्तःकरणेन्द्रियसचिवस्तत्तदिन्द्रियविषयाननुमेयांश्च स्थूलान् व्यवहारिकान् सर्वाननुभवति यत्रावस्थायां तत् जागरितमित्युच्यते वेदान्तमतम्

**जागरितस्थान** पु॰ जागरितं स्थानमस्य। वेदान्तिमतसिद्धे वैश्वानरे आत्मनि। तत्स्वरूपादिकं मुण्डकोपनिषदि तद्भाष्ये च दर्शितम्।

"जागरितस्थानो बहिःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमः पादः" मुण्डकोप॰

"जागरितं स्थानमस्येति जागरितस्थानः। बहिः स्वात्मव्यतिरिक्ते विषये प्रज्ञा यस्य स बहिःप्रज्ञो बहिर्विषयेषु प्रज्ञाऽविद्याकृताऽवभासत इत्यर्थः। तथा सप्ताङ्गान्यस्य "तस्य ह वैतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो वस्तिरेव रयिः पृथिव्येव पादौ" अग्निहोत्रकल्पनाशेषत्वेनाग्निर्मुखत्वेनाहवनीय उक्त इत्येवं सप्ताङ्गानि यस्य स सप्ताङ्गः। तथैकोनविंशतिर्मुखान्यस्य बुद्धीन्द्रियाणि च दश वायवश्च प्राणादयः पञ्च मनो बुद्धिरहङ्कारश्चित्तमिति मुखानीव मुखानि तान्युपलब्धिद्वाराणीत्यर्थः। स एवं विशिष्टो वैश्वानरो यथोक्तैर्द्वारैः शब्दादीन् स्थूलान् विषयान् भुङ्क्त इति स्थूलभुक्। विश्वेषां नराणामनेकधा नयनाद्विश्वानरः। यद्वा विश्वश्चासौ नरश्चेति विश्वानरः विश्वानर एव वैश्वानरः। सर्वपिण्डात्मानन्यत्वात् स प्रथमः पादः" भा॰।

**जागरितान्त** पु॰जागरितस्यान्तः तत्र विज्ञेयः। जागरितमध्ये तत्र विज्ञेये "स्वप्नान्तं जागरितान्तञ्चोभौ येनानुपश्यति" कठोप॰ "स्वप्नान्तं स्वप्नमध्यं स्वप्नविज्ञेयमित्यर्थः। तथा जागरितान्तं जागरितमध्यं जागरितविज्ञेयं चोभौ स्वप्नजागरितान्तौ येनात्मनानुपश्यति लोकः" भा॰।

**जागरितृ** त्रि॰जागृ–शीलार्थे तृच्। जागरणशीले अमरः।

**जागरिन्** त्रि॰ जागृ–शीलार्थे णिनि गुणः। जागरणशीले हेमच॰ स्त्रियां ङीप्।

**जागरूक** त्रि॰ जागृ–ऊक। जागरणशीले अमरः "स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव" रघुः। २स्वकर्त्तव्ये सावधाने अभक्ते च "वर्णाश्रमावेक्षणजागरूकः" रघुः।

**जागर्त्ति** स्त्री जागृ–भावे क्तिन्। जागरणे रायमु॰।

**जागर्य्या** स्त्री जागृ–भावे क्यप् गुणः। जागरणे। अ। जागराप्यत्र स्त्री अमरः।

**जागुड** पु॰१देशभेदे सोऽभिजनोऽस्य अण्। २तद्देशवासिनि त्रि॰

"जागुड़ान् रामठान् हूणान् स्त्रीराज्यानथ तङ्गणान्" भा० । व० प० । तत्र भवः अण् । ३तद्देशभवे त्रि० । ४कुङ्कुमे न० ।"अर्चनिं जागुड़कुङ्कुमाभिताम्राम्" माघः ।

**जागृ** निद्राभावे अदा० पर० अक० सेट् जक्षा० । जागर्त्ति जाग्रति अजागरीत् । जागराम्–बभूव आस चकार जजागार । अस्य णपि वृद्धिः तद्भिन्ने ञिति णिति च गुणः विनृभिन्ने सर्व्वत्र आर्द्धधातुके गुणः । जागर्य्यते अजागरि जागरयति कर्म्मणि अजागरि अजागारि इति भेदः "कुसुमशरसुज्जागरयति" उद्भटः । जागरूकः । जागृविः "जागर्त्ति लोको ज्वलति प्रदीपः" उद्भटः । इन्द्रियादिना बोधे प्रबोधे च । "या निशा सर्व्वभूतानां तस्यां जागर्त्ति संयमी । यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः" गीता ।"पन्नगगवीगुम्फेषु चाजागरीत्" मल्लि० ।

**जागृवि** पु० जागृ–क्विन् न गुणः । १नृपे उज्ज्वल० तस्य स्वकार्य्येऽप्रमत्तत्वात् तथात्वम् । २अग्नौ हेम० ३जागरणशीले त्रि० "समानमजमन् पर्य्येति जागृविः" ताण्ड्य० ब्रा०१।७।६ । "जागृविः जागरूकः" भा० "विभीदको जागृविर्मह्यमच्छान्" ऋ०१०।३४।१ ।"जनस्य गोपा अजनिष्ट जागृविरग्निः" ऋ० ५।११।१ ।

**जाग्रत्** त्रि० जागृ–शतृ । १जागरणकर्त्तरि २सावधाने अप्रमत्ते ३प्रकाशमाने च ।"जाग्रत्कलङ्केरवध्वंसं हस्तयते च या सुमनसामुल्लासिनी मानसं" चन्द्रालोकः । स्त्रियां ङीप् । जीवानां श्रोत्रादिभिः ४शब्दादिविषयज्ञानावस्थाभेदे सा च त्रिधा "प्रमितिर्जागरे जाग्रद्भ्रमः स्वप्नोऽथ मूढ़ता । पानादिजन्या सुप्तिः स्यादेवं जागरणं त्रिधा" शब्दार्थचि० धृतवाक्यम् ।"एवं स जाग्रत्स्वप्नाभ्यामिदं सर्वं चराचरम्" मनुः । "जाग्रत्स्वप्नः सङ्कल्पः पापः" ऋ० १०।१६४।५ । "जाग्रत्स्वप्नावस्थयोः सम्बन्धी पापः" भा० । "जाग्रत् स्वप्नसुषुप्तिधामरहितः प्राप्तः प्रबोधोदयः" प्रबो० । [ रायमुकुटः ।

**जाग्रिया** स्त्री जागृ–भावे यक् शः रिङादेशः । जागरणे

**जाघनी** स्त्री जघनस्य समीपं शैषिकोऽण् ङीप् । १ऊरौ त्रिका० जघनस्यार्द्धे जघनैकदेशे भवः अण् ङीप् । २पुच्छकाण्डे "अथ जाघन्या पत्नीः संयाजयन्ति जघनार्द्धं जाघनी जघनार्द्धाद्धि योषायै प्रजाः प्रजायन्ते" शत० ब्रा० १।८।५।६। "जाघनी वालदण्डः" भा०। "वनिष्ठु जाघनि चावद्यति" कात्या० श्रौ० ६।७।१० तत्र जाघनीशब्दस्य मतभेदेन कर्कोण नानार्थतोक्ता यथा "जाघनी जघनप्रदेशे भवा पुच्छदण्ड इत्यर्थः जाघनी पशोः पुच्छमिति हरिस्वामिना । जाघनी वालदण्ड इति माधवाचार्य्याः। "जाघनी येन मशकानपनयतीति धूर्त्तस्वामिनः। जाघनी वालधिरुच्यत इति ज्ञानदीपिकाकारः। क्षुधार्त्तश्चात्तुमभ्यगाद्विश्वामित्रः श्वजाघनीम् । चण्डालहस्तादादाय धर्माधर्मविचक्षणः" (मनुः) इत्यत्र श्वजाघनीम् श्वपुच्छमिति स्मृतिचन्द्रिकाकारो व्याख्यातवान् । जाघनी पशोः पुच्छमित्यधिकरणमालायाम् तृतीयेऽध्याये । जाघनी चैकदेशत्वादित्यधिकरणे जाघनी कटी इति पितृभूतिहरिहरौ तदयुक्तम् कटिशब्दस्य श्रोणिपर्य्यायत्वात् श्रोण्योश्च प्रागुक्तत्वादिति अतः पुच्छकाण्डमेव जाघनीशब्देनोच्यते इति । विश्वामित्रस्य जाघनीहरणकथा प्रसङ्गादुच्यते ।

"विश्वामित्रोऽथ भगवान् महर्षिरनिकेतनः । क्षुधापरिगतो धीमान् समन्तात् पर्य्यधावत । त्यक्त्वा दारांश्च पुत्रांश्च कस्मिंश्चित् जनसंसदि । भक्ष्याभक्ष्यसमो भूत्वा निरग्निरनिकेतनः" इत्युपक्रमे "स ददर्श श्वमांसस्य कुतन्त्रीं विततां मुनिः । चाण्डालस्य गृहे राजन् ! सद्यः शस्त्रहतस्य वै । स चिन्तयामास तदा स्तैन्यं कार्य्यमितो मया । न हीदानीमुपायो मे विद्यते प्राणधारणे । आपत्सु विहितं स्तैन्यं विशिष्टस्य महीयसः । विप्रेण प्राणरक्षार्थं कर्त्तव्यमिति निश्चयः । हीनादादेयमादौ स्यात् समानात्तदनन्तरम् । असम्भवे त्वाददीत विशिष्टादपि धार्मिकात् । सोऽहमन्त्यावसानाय हराम्येनां प्रतिग्रहात् । न स्तैन्यदोषं पश्यामि हरिष्यामि श्वजाघनीम्" । इति निश्चित्य तां हर्त्तुमुपक्रान्तस्य चण्डालेन सह संवादो यथा "विश्वामित्रस्तु मातङ्गमुवाच परिसान्त्वयन् । क्षुधितोऽहं गतप्राणो हरिष्यामि श्वजाघनीम् । क्षुधितः कलुषं यातो नास्ति ह्रीरशनार्थिनः । क्षुच्च मां दूषयत्यत्र हरिष्यामि श्वजाघनीम् । अवसीदन्ति मे प्राणाः श्रुतिर्मे नश्यति क्षुधा । दुर्बलो नष्टसंज्ञश्च भक्ष्याभक्ष्यविवर्ज्जितः । सोऽधर्मं बुध्यमानोऽपि हरिष्यामि श्वजाघनीम् । अटन् भैक्षं न विन्दामि यदा युष्माकमालये । तदा बुद्धिः कृता पापे हरिष्यामि श्वजाघनीम्" भा० शा० १४१ अ० । कथाशेषस्तत्र दृश्यः

**जाङ्गल** पु० जङ्गले भवः जङ्गलप्रायो वा अण् । १वनप्राये २जङ्गलस्थपशुमांसे तत्रत्ये ३उदके च शब्दार्थचि० । "अल्पोदकतृणो यस्तु प्रवातः प्रचुरातपः । स ज्ञेयो

जाङ्गलो देशो बहुधान्यादिसंयुतः” कुल्लू० धृतवाक्योक्त-लक्षणे ४देशभेदे पु०। भावप्र० अन्यथा तल्लक्षणमुक्तं यथा “आकाशशुभ्र उच्चश्च स्वल्पपानीयपादपः। शमी-करीरविल्वार्कपीलुकर्कन्धुसङ्कुलः। हरिणैणर्ष्यपृषत गोकर्णखरसङ्कुलः। सुस्वादुफलवान् देशो वातलो जाङ्गलः स्मृतः”।

“बहूदकनगोऽनूपः कफमारुतरोगवान्। जाङ्गलो-ऽल्पाम्बुशाखी च पित्तासृङ्मारुतोत्तरः” तद्देशगुणा-स्तत्रोक्ता जाङ्गलानां पशूनां विशेषः तन्मांस गुणाश्च तत्रैवोक्ता यथा “हरिणैणकुरङ्गर्ष्य पृषतन्यङ्कुशंबराः। राजीवोऽपि च मुण्डी चेत्याद्याः जाङ्गलसंज्ञकाः। हरिणस्ताम्रवर्णः स्यादेणः कृष्णः प्रकीर्त्तितः। कुरङ्ग ईषत्ताम्रः स्यादेणतुल्याकृतिर्म-हान्। ऋष्यो नीलाङ्गको लोके मारोह इति की-र्त्तितः। पृषतश्चन्द्रविन्दुः स्याद् हरिणात् किञ्चिद-ल्पकः। न्यङ्कुर्बहुविषाणोऽथ शंवरो गवयो महान्। राजीवस्तु मृगो ज्ञेयो राजिभिः परितोवृतः। यो मृगः शृङ्गहीनः स्यात् स मुण्डीति निगद्यते। जाङ्गलाः प्रायशः सर्वे पित्तश्लेष्महराः स्मृताः। किञ्चिद्वातकराश्चापि लघवो बलवर्द्धनाः”। “तत्रेमे कुरुपाञ्चालाः शाल्वा माद्रेयजाङ्गलाः” भा० भी० ९अ०। ५कपिञ्जलखगे पुंस्त्री० मेदि० स्त्रियां जातित्वात् ङीष्।

**जाङ्गलपथिक** त्रि० जङ्गलस्थः पन्थाः अच् समा०। तेना-हृतं तेन गच्छति वा ठञ्। १जङ्गलपथेनाहृते २तेन गन्तरि च।

**जाङ्गल** न० गम–यङ् लुक् बा० डुल पृषो० दीर्घः। १विषे तस्य कुटिलगतित्वात् तथात्वं २जालिनीफले शब्दरत्ना०।

**जाङ्गुलि** पु० गम–यङ् लुक् बा० डुलि।१विषवैद्ये शब्दरत्ना०। “परीक्षितं समन्त्रोयात् जाङ्गुलिभिर्मिश्रगद्गतः” वैद्यकम्।

**जाङ्गुलिक** पु० जाङ्गुली विषविद्या तामधीते वेद वा तया दीव्यति वा ठञ्। विषवैद्ये अमरः। [हेमच०।

**जाङ्गुली** स्त्री जाङ्गुलस्य विषस्येयम् अण्। विषविद्यायाम्

**जाङ्घि** त्रि० जङ्घायां भवः तस्य इदं वा बाह्वादेराकृति-गणत्वात् इञ्। १जङ्घाभवे २तत्सम्बन्धिनि च।

**जाङ्घिक** त्रि० जङ्घाभ्यां जीवति वेतना० ठञ्। १धावके (धाओड़े) २उष्ट्रे पुंस्त्री० ३मृगीकारीटचे पु०राजनि०।

**जाजलि** पु० ऋषिभेदे तस्य तपश्चरणकथादिकं भा०शा०२६२अ० दृश्यम् “वने वनचरः कश्चिज्जाजलिर्नाम वै द्विजः” इत्यादि। स च प्रवरप्रवर्त्तकः हेमा० व्र० दृश्यम्।

**जाजिन्** त्रि० जज–योधे–ताच्छील्ये णिनि। योधशीले। “जजौजाजाजिजिज्जाजी” माघः।

**जाझा(ट)लि** पु० जञ्(झ)ट–संघाते घञ्। तं लाति ला–बा० डि। वृक्षभेदे अमरः।

**जाटालिका** स्त्री कुमारानुचरमातृभेदे “जाटालिका काम-चरी दीर्घजिह्वा बलोत्कटा” भा० शा० ४७ अ०।

**जाटासुरि** पु० जटासुरस्यापत्यम् इञ्। जटासुरापत्ये “जाटा-सुरिर्भैमसेनिं नानाशस्त्रैरवाकिरत्” भा०द्रो०१७५ अ०।

**जाटिलिक** पुंस्त्री जटिलिकाया अपत्यं शिवा०अण्। जटिलिकाया अपत्ये स्त्रियां ङीप्।

**जाठर** पु० जठरे भवः अण्। जठरस्थिते १वह्नौ “जाठरो भगवानग्निरीश्वरोऽन्नस्य पाचकः” सुश्रु०। २कुमारानु-चरभेदे “विद्युताक्षो धनुर्वक्त्रो जाठरो मारुताशनः” भा० श० ४६अ०। तस्येदमण्। ३जठरसम्बन्धिनि त्रि० स्त्रियां ङीप्। “नानाशनः स्यान्न महाशनः स्यादलोलुपः साधु-भिरागतः स्यात्। यात्रार्थमाहारमिहाददीत तथास्य स्याज्जाठरी धारणाग्निः” भा० शा० २७० अ०।

**जाठर्य** त्रि० जठरे भवः बा० ञ्य। जठरभवे रोगादौ “एतद्वायसमेतेन जाठर्यं न भवति यत्नोऽग्निराप्या-यते” सुश्रु०।

**जाडार** पुंस्त्री जडस्यापत्यम् वा आरक्। जडस्यापत्ये।

**जाड्य** न०जडस्य भावः ष्यञ्।१जडतायां २मौर्ख्ये च हेमच० “आलस्यश्रमगर्भाद्यैर्जाड्यं जृम्भासिताद्विकृत्” सा०द०। “इदं जाड्यमिदं मौढ्यमिदमत्यद्भुतं वचः” हरिवं०३०९अ०।

**जाड्यारि** पु० ६त०। जम्बीरे राजनि०।

**जात** त्रि० जन–कर्त्तरि क्त।१उत्पन्ने २व्यक्ते च भावे क्त। ४जन्मनि ५समूहे च मेदि०। तत्र उत्पन्ने “तस्मात् कुमारं जातं घृतं वैवाग्रे प्रतिलेहयन्ति स्तनं वानुधापयन्ति” शत०ब्रा०१४ ४।२।४ “सुबीजं चैव सुक्षेत्रे जातं संपद्यते यथा” मनुः संघे “निःशेषविश्राणितकोशजातम्” रघुः। “चतुर्विधस्थूलशरीरजातम्” वेदान्तः। “सर्वेषां धन-जातानामाददीताग्र्यमग्रजः” मनुः।

**जातक** त्रि० जात+स्वार्थे क। १उत्पन्ने “उभौ तौ नाहतो भागं जारजातककामजौ” मनुः। जातं जन्म तदधिकृत्य कृतो ग्रन्थः अण् संज्ञायां कन्। २होरातन्त्रे। तच्च नानाज्योतिर्विद्भिर्नानाविधं रचितं तत्र बृहज्जातकस्यैव अतिप्रामाणिकत्वात् तच्छास्त्रप्रतिपाद्यविषया ग्रन्थकृता

२५ अ० वराहमिहिरेणोक्ताः प्रदर्श्यन्ते । "राशिप्रभेदो ग्रहयोनिभेदो वियोनिजन्माथ निषेककालः । जन्माथ सद्योमरणं तथायुर्दशाविपाकोऽष्टकवर्गसंज्ञः । कर्माजीवो राजयोगाः खयोगाश्चान्द्रा योगा द्विग्रहाद्याश्च योगाः । प्रव्रज्याख्यो राशिशीलानि दृष्टिर्भावस्तस्मादाश्रयोऽथ प्रकीर्णः । नेष्टायोगा जातकं कामिनीनां निर्याणं स्यान्नष्टजन्मद्रिकाणः । अत्राध्याया विंशतिः पञ्चयुक्ता जन्मन्येतद्यात्रिकं चाभिधास्ये" ।

"राशिप्रभेदः प्रथमेऽध्याये । ग्रहयोनिभेदः द्वितीये वियोनिजन्म तृतीये । निषेककालश्चतुर्थे । जन्मविधिः पञ्चमे । सद्योमरणं षष्ठे । आयुर्विभागः सप्तमे । दशाविभागोऽष्टमे । अष्टकवर्गो नवमे । कर्माजीवो दशमे । राजयोगा एकादशे । खयोगाः (नाभसयोगाः) द्वादशे । चान्द्रयोगाः सुनफाद्याश्चन्द्रयोगास्त्रयोदशे द्विग्रहत्रिग्रहयोगाश्चतुर्दशे । प्रव्रज्यायोगा पञ्चदशे । राशिशीलम् षोड़शे । दृष्टिफलं सप्तदशे । भावफलमष्टादशे । आश्रय एकोनविंशतितमे । प्रकीर्णफलम् विंशतितमे । अनिष्टयोगा एकविंशे । कामिनीनां (स्त्रीणां) जातकं द्वाविंशे । निर्याणं (मरणं) तन्निरूपणं त्रयोविंशे । नष्टजातकं चतुर्विंशे । द्रेक्काणस्वरूपादि पञ्चविंशे । एवं पञ्चयुक्ताध्यायानां विंशतिर्जन्मनि जातके कथिता एतज्जातके उक्ताः।

जन्मफलं पञ्चमे उक्तं यथा

"पितुर्जातः परोक्षस्य लग्नमिन्दावपश्यति । विदेशस्थस्य चरभे मध्याद्भ्रष्टे दिवाकरे । उदयस्थेऽपि वा मन्दे कुजे वास्तं७ समागते । स्थिते वान्तःक्षपानाथे शशाङ्कसुतशुक्रयोः। शशाङ्के पापलग्ने वा वृश्चिकेऽशत्रिभागगे । शुभैः स्वायस्थितैर्जातः सर्पस्तद्वेष्टितोऽपि वा । चतुष्पदगते भानौ शेषैर्वीर्यसमन्वितैः । द्वितनुस्थैश्च यमलौ भवतः कोशवेष्टितौ । छागसिंहवृषैर्लग्ने तत्स्थे सौरेऽथवा कुजे । राश्यंशसदृशे गात्रे जायते नालवेष्टितः । न लग्नमिन्दुञ्च गुरुर्निरीक्षते न वा शशाङ्कं रविणा समागतम् । सपापकोऽर्केण युतोऽथवा शशी परेण जातं प्रवदन्ति निश्चयात् । क्रूरर्क्षगतावशोभनौ सूर्याद्द्यूननवात्मजस्थितौ । बद्धस्तु पिता विदेशगः स्वे वा राशिवशादथो पथि । पूर्णे शशिनि स्वराशिगे सौम्ये लग्नगते शुभे सुखे४ । लग्ने जलजेऽस्तगेऽपि वा चन्द्रे पोतगता प्रसूयते । आप्योदयमाप्यगः शशी संपूर्णः समवेक्षतेऽथ वा । मेषूरणबन्धुलग्नगः स्यात् सूतिः सलिले न संशयः । उदयोडुपयोर्व्ययस्थिते गुप्त्यां पापनिरीक्षिते यमे । अलिकर्कियुते विलग्नगे सारे शीतकरेक्षितेऽवटे । मन्देऽब्जगते विलग्नगे बुधसूर्येन्दुनिरीक्षिते क्रमात् । क्रीडाभवने सुरालये सोषरभूमिषु च प्रसूयते । नृलग्नगं प्रेक्ष्य कुजः श्मशाने रम्ये सितेन्दू गुरुरग्निहोत्रे । रविर्नरेन्द्रामरगोकुलेषु शिल्पालये ज्ञः प्रसवं करोति । राश्यंशसमानगोचरे मार्गे जन्म चरे स्थिरे गृहे । स्वर्क्षांशगते स्वमन्दिरे बलयोगात् फलमंशकर्क्षयोः । आरार्कजयोस्त्रिकोणगे चन्द्रेऽस्ते च विसृज्यतेऽम्बया । दृष्टेऽमरराजमन्त्रिणा दीर्घायुः सुखभाक् च स स्मृतः। पापेक्षिते तुहिनगावुदये कुजेऽस्ते त्यक्तो विनश्यति कुजार्कजयोस्तथाये । सौम्येऽपि पश्यति तथाविधहस्तमेति सौम्येतरेषु परहस्तगतोऽप्यनायुः । पितृमातृगृहेषु तद्बलात्तरुशालादिषु नीचगैः शुभैः । यदि नैकगतौ तु वीक्षितौ लग्नेन्दू विजने प्रसूयते । मन्दर्क्षांशे शशिनि हिबुके मन्ददृष्टेऽब्जगे वा तद्युक्ते वा तमसि शयने नीचसंस्थैश्च भूमौ । यद्वद्राशिं व्रजति हरिजं गर्भमोक्षस्तु तद्वत् पापैश्चन्द्रात् स्मरसुखगतैः क्लेशमाहुर्जनन्याः । स्नेहः शशाङ्कादुदयाच्च वर्तिर्दीपोऽर्कयुक्तर्क्षवशाच्चराद्यः । द्वारं च तद्वास्तुनि केन्द्रसंस्थैर्ज्ञेयं ग्रहैर्वीर्यसमन्वितैर्वा । जीर्णं संस्कृतमर्कजे क्षितिसुते दग्धं नवं शीतगौ काष्ठाढ्यं न दृढं रवौ शशिसुते तच्चैकशिल्प्युद्भवम् । रम्यं चित्रयुतं नवं च भृगुजे जीवे दृढं मन्दिरं चक्रस्थैश्च यथोपदेशरचनां सामन्तपूर्वां वदेत् । मेषकुलीरतुलालिघटैः प्रागुत्तरतो गुरुसौम्यगृहेषु । पश्चिमतश्च वृषेण निवासो दक्षिणभागकरौ मृगसिंहौ । प्राच्यादिगृहक्रियादयो द्वौ द्वौ कोणगता द्विमूर्त्तयः । शय्यास्वपि वास्तुवद्वदेत् त्र्याद्यैः षट्त्रिनवान्त्यसंस्थितैः । चन्द्रलग्नान्तरगतैर्ग्रहैः स्युरुपसूतिकाः । बहिरन्तश्च चक्रार्द्धे दृश्यादृश्येऽन्यथा परे । लग्ननवांशपतुल्यतनुः स्याद्वीर्ययुतग्रहतुल्यतनुर्वा । चन्द्रसमेतनवांशपवर्णः कादिविलग्नविभक्तभगात्रः । कं दृक्श्रोत्रनसाकपोलहनवो वक्त्रञ्च होरादयस्ते कण्ठांसकबाहुपार्श्वहृदयं क्रोड़ानि नाभिस्ततः । वस्तिः शिश्नगुदे ततश्च वृषणावूरू ततो जानुनी । जङ्घाङ्घ्री ह्युभयत्र वाममुदितैर्द्रेक्काणभागैस्त्रिधा । तस्मिन् पापयुते व्रणं शुभयुते दृष्टे च लक्ष्मादिशेत् स्वर्क्षांशे स्थिरसंयुते च सहजः स्यादन्यथाऽऽगन्तुकः । मन्देऽश्मानिलजोऽग्निशस्त्रविषजो भौमे बुधे भूभवः सूर्ये काष्ठचतुष्पदेषु हिमगौ

स्वक्षत्रजोऽन्यैः शुभम्। समनुपतिता यस्मिन् भागे त्रयः षड्वा यहा भवति नियमात्तस्यावाप्तिः शुभेष्वशुभेषु वा। व्रणकृदशुभः षष्ठे देहे तनोर्भसमाश्रिते तिलकमशकृद्दृष्टः सौम्यैर्युतश्च स लक्ष्मवान्" इत्य० अष्टवर्गफलमुक्तं तच्चाष्टवर्गशब्दे ५२०पृ०दर्शितम्। नाभसादियोगास्तच्छब्दे वक्ष्यन्ते।

तत्रोनविंशोरिष्टाध्यायो यथा

"लग्नात्पुत्रकलत्रभे शुभपतिप्राप्तेऽथ वाऽऽलोकिते चन्द्राद्वा यदि सम्पदस्ति हि तयोर्ज्ञेयोऽन्यथासम्भवः। पाथोनोदयगे रवौ रविसुतो मीनस्थितोदारहा पुत्रस्थानगतश्च पुत्रमरणं पुत्रोऽवनेर्यच्छति। उग्रग्रहैः सितचतुरस्रसंस्थितैर्मध्यस्थिते भृगुतनयेऽथवोग्रयोः। सौम्यग्रहैरसहितसंनिरीक्षिते जायावधो दहननिपातपाशजः। लग्नाद्व्ययारिगतयोः शशितिग्मरश्म्योः पत्न्या सहैकनयनस्य वदन्ति जन्म। द्यूनस्थयोर्नवमपञ्चमसंस्थयोर्वा शुक्रार्कयोर्विकलदारमुशन्ति जातम्। कोणोदये भृगुतनयेऽस्तचक्रसन्धौ वन्ध्यापतिर्यदि न सुतर्क्षमिष्टयुक्तम्। पापग्रहैर्व्ययमदलग्नराशिसंस्थैः क्षीणे शशिन्यसुतकलत्रजन्मधीस्थे। असितकुजयोर्वर्गेऽस्तस्थे सिते तदवेक्षिते परयुवतिगस्तौ चेत् सेन्दू स्त्रिया सह पुंश्चलः। भृगुजशशिनोरस्तेऽभार्यो नरो विसुतोऽपि वा परिणततनू नृस्त्रीदृष्टौ शुभैः प्रमदापती। वंशच्छेत्ता खमदसुखगैश्चन्द्रदैत्येज्यपापैः शिल्पी त्र्यंशे शशिसुतयुते केन्द्रसंस्थार्किदृष्टे। दास्यां जातो दितिसुतगुरौ रिष्फगे सौरभागे नीचेऽर्के वा मदनगतयोर्दृष्टयोः सूर्यजेन। पापाऽऽलोकितयोः सितावनिजयोरस्तस्थयोर्वाध्यरुक् चन्द्रे कर्कटवृश्चिकांशकगते पापैर्युते गुह्यरुक्। श्वित्री रिष्फधनस्थयोरशुभयोश्चन्द्रोदयेऽस्ते रवौ चन्द्रे खेऽवनिजेऽष्टगे च विकलो यद्यर्कजो वेशिगः। अन्तःशशिन्यशुभयोर्मृगगे पतङ्गे श्वासक्षयप्लिहकविद्रधिगुल्मभाजः। शोषी परस्परगृहांशगयोरवीन्द्वोः क्षेत्रेऽथवा युगपदेकगयोः कृशो वा। चन्द्रेऽश्विमध्यभषकर्किमृगाजभागे कुष्ठी समन्दरुधिरे तदवेक्षिते वा। यातैस्त्रिकोणमलिकर्किवृषैर्मृगे च कुष्ठी च पापसहितैरवलोकितैर्वा। निधनारिधनव्ययस्थिता रविचन्द्रारयमा यथा तथा। बलवद्ग्रहदोषकारणैर्मनुजानां जनयन्त्यनेत्रताम्। नवमायतृतीयधीयुता न च सौम्यैरशुभा निरीक्षिताः। नियमाच्छ्रवणोपघातदा रदवैकृत्यकराश्च सप्तमे। उदयत्युडुपे सुरास्यगे सपिशाचोऽशुभयोस्त्रिकोणयोः। तमसोपप्लवमण्डले रवावुदयस्थे नयनोपवर्जितः। संसृष्टः पवनेन मन्दगयुते द्यूने विलग्ने हरौ सोन्मादोऽवनिजे स्थितेऽस्तभवने जीवे विलग्नाश्रिते। तद्वत्सूर्यसुतोदयेऽवनिसुते धर्मात्मजद्यूनगे जाते वा ससहस्ररश्मितनये क्षीणे व्यये शीतगौ। राश्यंशपोष्णकरशीतकरामरेज्यैर्नीचाधिपांशकगतैररिभागगैर्वा। एभ्योऽल्पमध्यबहुभिः क्रमशः प्रसूताज्ञेयाः स्युरभ्युपगमक्रयगर्भदासाः। विकृतदशनः पापैर्दृष्टे वृषाजहयोदये खलतिरशुभक्षेत्रे लग्ने हये वृषभेऽपि वा। नवमसुतगे पापैर्दृष्टे रवावदृढेक्षणो दिनकरसुतेऽनेकव्याधिः कुजे विकलः पुमान्। व्ययसुतधनधर्मगैरसौम्यैर्भवनसमाननिबन्धनं विकल्प्यम्। भुजगनिगडपाशभृद्दृकाणैर्बलवदसौम्यनिरीक्षितैश्च तद्वत्। परुषवचनोऽपस्मारार्तः क्षयी च निशापतौ सरवितनये वक्रालोकं गते परिवेषगे। रवियमकुजैः सौम्यादृष्टैर्नभःस्थलमाश्रितैर्भृतकमनुजः पूर्वोद्दिष्टैर्वराधममध्यमाः।"

चान्द्रयोगास्तु १३अ० उक्ता यथा।

"अधमसमवरिष्ठान्यर्ककेन्द्रादिसंस्थे शशिनि विनयवित्तज्ञानधीनैपुणानि। अहनि निशि च चन्द्रे स्वाधिमित्रांशके वा सुरगुरुसितदृष्टे वित्तवान् स्यात् सुखी च। सौम्यैः स्मरारिनिधनेष्वधियोग इन्दोस्तस्मिंश्चमूपसचिवक्षितिपालजन्मा सम्पन्नसौख्यविभवा हतशत्रवश्च दीर्घायुषो विगतरोगभयाश्च जाताः। हित्वार्कं सुनफाऽनफा दुरुधुरा स्वान्त्योभयस्थैर्ग्रहैः शीतांशोः कथितोऽन्यथा तु बहुभिः केमद्रुमोऽन्यैस्त्वसौ। केन्द्रे शीतकरेऽथवा ग्रहयुते केमद्रुमो नेष्यते केचित् केन्द्रनवांशकेषु च वदन्त्युक्तिः प्रसिद्धा न तु। त्रिंशत्सरूपाः सुनफाऽनफाख्याः षष्टित्रयं दौरुधुरे प्रभेदाः। इच्छाविकल्पैः क्रमशोऽभिनीय नीते निवृत्तिः पुनरन्यनीतिः। स्वयमधिगतवित्तः पार्थिवस्तत्समो वा भवति हि सुनफायां धीधनख्यातिमांश्च। प्रभुरगदशरीरः शीलवान् ख्यातकीर्तिर्विषयसुखसुवेषो निर्वृतश्चानफायाम्। उत्पन्नभोगसुखभुग्धनवाहनाढ्यस्त्यागान्वितो दुरुधुराप्रभवः सुभृत्यः। केमद्रुमे मलिनदुःखितनीचनिःस्वाः प्रेष्याः खलाश्च नृपतेरपि वंशजाताः। उत्साहशौर्यधनसाहसवान् महीजः सौम्यः पटुः सुवचनो निपुणः कलासु। जीवोऽर्थधर्मसुखभुङ्नृपपूजितश्च कामी भृगुर्बहुधनो विषयोपभोक्ता। परविभवपरिच्छदोपभोक्ता रवितनयो बहुकार्यकृद्गणेशः। अशुभकृदुडुपोऽह्नि दृश्यमूर्तिर्गलिततनुश्च शुभोऽन्यथान्यदूह्यम्।

सम्वादतीव वसुमान् वसुमांश्चशशाङ्कात्सौम्यग्रहैरुपचयोपगतैः समस्तैः। द्वाभ्यां समोऽल्पवसुमांश्च तदूनतायामन्येष्वसत्स्वपि फलेष्विदमुत्कटेन”।

द्विग्रहादियोगास्तु १२ अ० उक्ता यथा

“तिग्मांशुर्जनयत्युशेशसहितो यन्त्राश्मकारं नरं भौमेनाघरतं बुधेन निपुणं धीकीर्त्तिसौख्यान्वितम्। क्रूरं वाक्पतिनान्यकार्यनिरतं शुक्रेण रङ्गायुधैर्लब्धस्वम् रविजेन धातुकुशलं भाण्डप्रकारेषु वा। कूटस्त्र्यासवकुम्भपण्यमशिवं मातुः सवक्रः शशी सज्ज्ञः प्रश्रितवाक्यमर्थनिपुणं सौभाग्यकीर्त्यान्वितम्। विक्रान्तं कुलमुख्यमस्थिरमतिं वित्तेश्वरं साङ्गिरा वस्त्राणां ससितः क्रयादिकुशलं सार्किः पुनर्भूसुतम्। मूलादिस्नेहकूटैर्व्यवहरति वणिग्बाहुयोद्धा ससौम्ये पुर्यध्यक्षः सजीवे भवति नरपतिः प्राप्तवित्तो द्विजो वा। गोपो मल्लोऽथ दक्षः परयुवतिरतो द्यूतकृत् सासुरेज्ये दुःखार्त्तोऽसत्यसन्धः ससवितृतनये भूमिजे निन्दितश्च। सौम्ये रङ्गचरो बृहस्पतियुते गीतप्रियो नृत्यविद्वाग्मी भूगणपः सितेन मृदुना मायापटुर्लङ्घकः। सद्विद्यो धनदारवान् बहुगुणः शुक्रेण युक्ते गुरौ। ज्ञेयः श्मश्रुकरोऽसितेन घटकृज्जातोऽन्नकारोऽपि वा। अमितसितसमागमेऽल्पचक्षुर्युवतिसमाश्रयसंप्रवृद्धवित्तः। भवति च लिपिपुस्तचित्रवेत्ता कथितफलैः परतो विकल्पनीयाः”।

अथ नक्षत्रभेदे जन्मफलम् वृहज्जातके १६ अ०।

“प्रियभूषणः सुरूपः सुभगो दक्षोऽश्विनीषु मतिमांश्च। कृतनिश्चयः सत्यवाग् दक्षः सुखितश्च भरणीषु। बहुभुक्परदाररतस्तेजस्वी कृत्तिकासु विख्यातः। रोहिण्यां सत्यशुचिः प्रियंवदः स्थिरमतिः सुरूपश्च। चपलश्चतुरो भीरुः पटुरुत्साही धनी मृगे भोगी। शठगर्वितः कृतघ्नो हिंस्रः पापश्च रौद्रर्क्षे ६। दान्तः सुखी सुशीलो दुर्मेधो रोगभाक् पिपासुश्च। अल्पेन च सन्तुष्टः पुनर्वसौ जायते मनुजः। शान्तात्मा सुभगः पण्डितो धनी धर्मसंश्रितः पुष्ये। शठसर्वभक्षः पापः कृतघ्नधूर्त्तश्च भौजङ्गे ९। बहुभृत्यधनोभोगी पितृभक्तो महोद्यमः पित्र्ये १०। प्रियवाग् दाता द्युतिमानटनो नृपसेवको भाग्ये ११। सुभगो विद्याप्तधनो भोगी सुखभाग् द्वितीयफाल्गुन्याम्। उत्साही धृष्टः पानपोऽघृणी तस्करो हस्ते। चित्राम्बरमाल्यधरः सुलोचनाङ्गश्च भवति चित्रायाम्। दान्तो वणिक् कृपालुः प्रियवाग् धर्माश्रितः स्वातौ। ईर्ष्युर्लुब्धो द्युतिमान् वचनपटुः कलहकृद्विशाखासु। आढ्यो विदेशवासी क्षुधालुरटनोऽनुराधासु। ज्येष्ठासु न बहुमित्रः सन्तुष्टो धर्मकृत् प्रचुरकोपः। मूले मानी धनवान् सुखी न हिंस्रः स्थिरो भोगी। इष्टानन्दकलत्रो मानी दृढ़सौहृदश्च जलदेवे २०। वैश्वे २१ विनीतधार्मिकबहुमित्रः कृतज्ञसुभगश्च। श्रीमान् श्रवणे श्रुतवानुदारो धनान्वितः ख्यातः। दाताऽऽढ्यः शूरः गीतप्रियो धनिष्ठासु धनलुब्धः। स्फुटवाग् व्यसनी रिपुहा साहसिकः शतभिषजि दुर्ग्राह्यः। भाद्रपदासूद्विग्नः स्त्रीजितधनी पटुरदाता च। वक्ता सुखी प्रजावान् जितशत्रुर्धार्मिको द्वितीयासु। सम्पूर्णाङ्गः सुभगः शूरः शुचिरर्थवान् पौष्णे” २७।

जन्मराशिफलम् तत्रैव १७ अ०।

“वृत्ताताम्रदृगुष्णशाकलघुभुक् क्षिप्रप्रसादोऽटनः कामी दुर्बलजानुरस्थिरधनः शूरोऽङ्गनावल्लभः। सेवाज्ञः कुनखी व्रणाङ्कितशिरोमानी सहोत्थाग्रजः शक्त्या पाणितलेऽङ्कितोऽतिचपलस्तोये च भीरुः क्रिये १। कान्तः खेलगतिः पृथूरुवदनः पृष्ठास्यपार्श्वेऽङ्कितस्त्यागी क्लेशसहः प्रभुः ककुदवान् कन्याप्रजः श्लेष्मजः। पूर्वैर्बन्धुधनात्मजैर्विरहितः सौभाग्ययुक्तः क्षमी दीप्ताग्निः प्रमदाप्रियः स्थिरसुहृन्मध्यान्त्यसौख्ये गवि २। स्त्रीलोलः सुरतोपचारकुशलस्ताम्रेक्षणः शास्त्रविद्दूतः कुञ्चितमूर्द्धजः पटुमतिर्हास्येङ्गितद्यूतवित्। चार्वङ्गः प्रियवाक् प्रभक्षणरुचिर्गीतिप्रियो नृत्यवित् क्लीवैर्याति रतिं समुन्नतनसश्चन्द्रे तृतीयर्क्षगे ३। आवक्रद्रुतगः समुन्नतकटिः स्त्रीनिर्जितः सत्सुहृद्दैवज्ञः प्रचुरालयः क्षयधनैः संयुज्यते चन्द्रवत्। ह्रस्वः पीनगलः समेति च वशं साम्ना सुहृद्वत्सलस्तोयोद्यानरतः स्ववेश्मसहिते जातः शशाङ्के नरः ४। तीक्ष्णः स्थूलहनुर्विशालवदनः पिङ्गेक्षणोऽल्पात्मजः स्त्रीद्वेषी प्रियमांसकाननगः कुप्यत्यकार्ये चिरम्। क्षुत्तृष्णोदरदन्तमानसरुजासंपीडितस्त्यागवान् विक्रान्तः स्थिरधीः सुगर्वितमना मातुर्विधेयोऽर्कभे ५। व्रीडामन्थरचारुवीक्षणगतिः स्रस्तांसबाहुः सुखी श्लक्ष्णः सत्यरतः कलासु निपुणः शास्त्रार्थविद्धार्मिकः। मेधावी सुरतप्रियः परगृहैर्वित्तैश्च संयुज्यते कन्यायां ६ परदेशगः प्रियवचाः कन्याप्रजोऽल्पात्मजः। देवब्राह्मणसाधुपूजनरतः प्राज्ञः शुचिः स्त्रीजितः प्रांशुश्चोन्नतनासिकः कृशचलद्गात्रोऽटनोऽर्थान्वितः। हीनाङ्गः क्रयविक्रयेषु कुशलो देवद्वि-

नाभा सरुग्बन्धूनामुपकारकृद्विरूपितश्चक्षुस्तु तैः सप्तमे७। पृथुलनयनवक्त्रो नतजङ्घोरुजानुर्जनकगुरुवियुक्तः शैशवे व्याधितश्च। नरपतिकुलपूज्यः पिङ्गलः क्रूरचेष्टो झषकुलिशखगाङ्कच्छन्नपापोऽलिजातः ८। व्यादीर्घास्यशिरोधरः पितृधनत्यागी कविर्वीर्यवान् वक्ता स्थूलरदश्रवोऽधरनसः कर्मोद्यतः शिल्पवित्। कुब्जांसः कुनखी समांसलभुजः प्रागल्भ्यवान् धर्मविद्बन्धुद्विट् न बलात् समेति च वशं साम्नैकसाध्योऽश्वजः९। नित्यं लालयति स्वदारतनयान् धर्मध्वजोऽधःकृशः स्वक्षः क्षामकटिर्गृहीतवचनः सौभाग्ययुक्तोऽलसः। शीतालुर्मनुजोऽटनश्च मकरे १० सत्त्वाधिकः काव्यकृल्लुब्धो गम्यजराङ्गनासु निरतः संत्यक्तलज्जोऽघृणश्च। करभगलशिरालुः खररोमशदीर्घतनुः पृथुचरणोरुपृष्ठजघनास्यकटीजठरः। परवनितार्थपापनिरतः क्षयवृद्धियुतः प्रियकुसुमानुलेपनसुहृत् घटजो११ऽध्वसहः। परजनधनभोक्ता दारवासोऽनुरक्तः समरुचिरशरीरस्तुङ्गनासो बृहत्कः। अभिभवति सपत्नान् स्त्रीजितश्चारुदृष्टिर्द्युतिनिधिधनभोगी पण्डितश्चान्त्यराशौ१२। बलवति राशौ तदधिपतौ च स्वबलयुतः स्यादिदु हिनांशुः। कथितफलानामधिकफलदाता शशिवदतोऽन्येष्वनुपरिचिन्त्याः"।

सूर्यादेः स्थितराशिफलम् तत्रैव १८अ० उक्तं यथा

"प्रथितश्चतुरोऽटनोऽल्पवित्तः क्रियगे१ त्वायुधभृद्धितुङ्गभागे। गवि२ वस्त्रसुगन्धपण्यजीवी वनिताद्विट् कुशलश्च गेयवाद्ये। विद्याज्योतिषवित्तवान् मिथुनगे३ भानौ कुलीरे४ स्थिते तीक्ष्णोऽस्वः परकार्यकृच्छ्रमपरः क्लेशैश्च संयुज्यते। सिंहस्थे५ वनशैलगोकुलरतिर्वीर्यान्वितोऽज्ञः पुमान्, कन्यास्थे६ लिपिलेख्यकाव्यगणितज्ञानान्वितः स्त्रीवपुः। जातस्तौलिनि ७गे शौण्डिकोऽध्वनिरतो हैरण्यको नीचकृत् क्रूरः साहसिको विषार्जितधनः शस्त्रान्तगोऽलिस्थिते८। सत्पूज्यो धनवान् धनुर्धरगते९ तीक्ष्णो भिषक्कारुको नीचोऽज्ञः कुवणिङ्मृगे१०ऽल्पधनवाँल्लुब्धोऽन्यभाग्ये रतः। नीचो घटे११ तनयभाग्यपरिच्युतोऽस्वस्तोयोत्थपण्यविभवो वनिताहृतोऽन्त्ये१२। सू०। नक्षत्रमानवतनुप्रतिमे विभागे लक्ष्म्यादिशेत्तुहिनरश्मिदिनेशयुक्ते। नरपतिसत्कृतोऽटनश्चमूपवणिक्सधनाः क्षततनुचोरभूरिविषयांश्च कुजः स्वगृहे १।८। युवतिजितान् सुहृत्सु विषमान् परदाररतान् कुहकसुवेषभीरुपरुषान् सितभे२।७ जनयेत्। बौधे३।६ऽसहस्तनयवान् विसुहृत् कृतज्ञो गान्धर्वयुद्धकुशलः कृपणोऽभयोऽर्थी। चान्द्रे४ऽर्थवान् सलिलयानसमर्जितस्वः प्राज्ञश्च भूमितनये विकलः खलश्च। निःस्वः क्लेशसहो वनान्तरचरः सिंहे५ऽल्पदारात्मजो जैवे९।१२ऽनेकरिपुर्नरेन्द्रसचिवः ख्यातोऽभयोऽल्पात्मजः। दुःखार्तो विधनोऽटनोऽनृतरतस्तीक्ष्णश्च कुम्भे ११ स्थिते भौमे भूरिधनात्मजो मृग १० गते भूपोऽथवा तत्समः। म०। द्यूतर्णपानरतनास्तिकचौरनिःस्वाः कुस्त्रीककूटकृदसत्यरताः कुजर्क्षे १।८। आचार्यभूरिसुतदारधनार्जनेष्टाः शौक्रे २।७ वदान्यगुरुभक्तिरताश्च सौम्ये। विकत्थनः शास्त्रकलाविदग्धः प्रियंवदः सौख्यरतस्तृतीये३ जलार्जितस्वः स्वजनस्य शत्रुः शशाङ्कजे शीतकरर्क्ष४युक्ते। स्त्रीद्वेष्यो विधनसुखात्मजोऽटनोऽज्ञः स्त्रीलोलः सुपरिभवोऽर्क५राशिगे ज्ञे। त्यागी ज्ञः प्रचुरगुणः सुखी क्षमावान् युक्तिज्ञो विगतभयश्च षष्ठराशौ ६। परकर्मकृदस्वः शिल्पबुद्धिर्ऋणवान् विष्टिकरो बुधेऽर्कजर्क्षे १०।११। नृपसत्कृतपण्डिताप्तवाक्यो नवमे९।१२ऽन्त्ये जितसेवकोऽन्त्यशिल्पः" बु०। सेनानीर्बहुवित्तदारतनयो दाता सुभृत्यः क्षमी तेजोदारगुणान्वितः सुरगुरौ ख्यातः पुमान् कौजभे१।८। कल्याङ्गः ससुखोऽर्थमित्रतनयस्त्यागी प्रियः शौक्रभे २।७। बौधे ३।६ भूरिपरिच्छदात्मजसुहृत्साचिव्ययुक्तः सुखी। चान्द्रे ४ रत्नसुतस्वदारविभवः प्रज्ञासुखैरन्वितः सिंहे स्याद् बलनायकः सुरगुरौ प्रोक्तश्च यच्चन्द्रभे। स्वर्क्षे ९।१२ माण्डलिको नरेन्द्रसचिवः सेनापतिर्वा धनी कुम्भे ११ कर्कटवत् फलानि मकरे १० नीचोऽल्पवित्तोऽसुखी। वृ०। परयुवतिरतस्तदर्थवादैर्हृतविभवः कुलपांसनः कुजर्क्षे १।८। स्वबलमतिधनो नरेन्द्रपूज्यः स्वजनविभुः प्रथितोऽभयः सिते स्वे २।७। नृपकृत्यकरोऽर्थवान् कलाविन्मिथुने ३ षष्ठगते६ऽतिनीचकर्मा। रविजर्क्षे१०।११ गतेऽमरारिपूज्ये सुभगः स्त्रीविजितो रतः कुनार्याम्। द्विभार्योऽर्थी भीरुः प्रबलमदशोकश्च शशिभे ४ हरौ योषाप्तार्थः प्रवरयुवतिर्मन्दतनयः। गुणैः पूज्यः सस्वस्तुरग९सहिते दानवगुरौ झषे १२ विद्वानाढ्यो नृपजनितपूजोऽतिसुभगः। शु०। मूर्खोऽटनः कपटवान् विसुहृद्यमेऽजे१ कीटे ८ तु बन्धवधभाक् चपलोऽघृणश्च। निर्ह्रीसुखार्थतनयः स्खलितश्च लेख्ये रक्षापतिर्भवति मुख्यपतिश्च बौधे३।६। वर्ज्यस्त्रीष्टो न बहुविभवो भूरिभार्यो वृषस्थे२ ख्यातः स्वोच्चे७ गणपुरबलग्रामपूज्योऽर्थवांश्च। ४कर्किटस्थो-

ऽविकलदृग्मनो मातृहीनोऽसुतोऽज्ञः सिंहे५ऽनार्यो विलग्ननयो विशिष्टात् सूर्यपुत्रे । ख्यातःप्रत्ययितो नरेन्द्रभवने सत्पुत्रजायाधनो जीवक्षेत्र९।१२गतेऽर्कजे पुरबलग्रामाग्रनेताऽथ वा । अन्यस्त्रीधनवञ्चितः पुरबलग्रामाग्रणीर्मन्ददृक्स्वक्षेत्रे१० ११। मलिनस्थिरार्थविभवो भोक्ता च जातः पुमान् । श० । शिशिरकरसमानमीक्षणानां सदृशफलं प्रवदन्ति लग्नजातम् । फलमधिकमिदं यदत्र तत्तद्भवननाथगुणैर्विचिन्तनीयम्" ।

लग्नतदंशयोर्दृष्टिफलम् १९अ० तत्रैवोक्तं यथा

"चन्द्रे भूदबुधौ नृपोपमगुणी स्तेनोऽधनश्चाजगे निःस्वः स्तेन नृमान्यभूपधनिनः प्रेष्यः कुजाद्यैर्गवि२ । नृस्थे३ऽयोव्यवहारिपार्थिवबुधाभोस्तन्तुवायो धनी स्वर्क्षे४ योद्धृकविज्ञभूमिपतयोऽयोजीविदृग्रोगिणौ । ज्योतिर्ज्ञाढ्यनरेन्द्रनापितनृपक्ष्मेशा बुधाद्यैर्हरौ५ तद्वद्भूपचमूपनैपुणयुताः षष्ठे६ शुभैस्त्र्याश्रयः । जूके७भूपसुवर्णकारवणिजः शेषेक्षिते नैकृती, कीटे८ युग्मपिता नतश्च रजकोऽव्यङ्गोऽधनो भूपतिः । ज्यात्युर्वीशजनाश्रयश्च तुरगे९ पापैः शठश्चाप्युर्वीशनरेन्द्रपण्डितधनी द्रव्योनभूपो मृगे१० । भूपो भूपसमोऽन्यदारनिरतः शेषैश्च कुम्भस्थिते११ हास्यज्ञो नृपतिर्बुधश्च झषगे१२ पापश्च पापेक्षिते । होरेशर्क्षदलाश्रितैः शुभकरो दृष्टः शशी तद्गतस्त्र्यंशे तत्पतिभिः सुहृद्भवनगैर्वा वीक्षितः शस्यते । यत् प्रोक्तं प्रतिराशिवीक्षणफलं तद्द्वादशांशे स्मृतं सूर्याद्यैरवलोकितेऽपि शशिनि ज्ञेयं नवांशेष्वतः । आरक्षिको वधरुचिः कुशलो नियुद्धे भूपोऽर्थवान् कलहकृत् क्षितिजांशसंस्थे । मूर्खोऽन्यदारनिरतः सुकविः सितांशे सत्काव्यकृत् सुखपरोऽन्यकलत्रगश्च । बौधे हि रङ्गचरचौरकवीन्द्रमन्त्री गेयज्ञशिल्पनिपुणः शशिनि स्थितेऽंशे । स्वांशेऽल्पगात्रधनलुब्धतपस्विमुख्यः स्त्रीपोष्यकृत्यनिरतश्च निरीक्ष्यमाणे । सक्रोधो नरपतिसंमतो निधीशः सिंहांशे प्रभुरसुतोऽतिहिंस्रकर्मा । जीवांशे प्रथितबलो रणोपदेष्टा हास्यज्ञः सचिवविकामवृद्धशीलः । अल्पापत्यो दुःखितः सत्यपि स्वे मानासक्तः कर्मणि स्वेऽनुरक्तः । दुष्टस्त्रीष्टः कार्पणश्चार्किभागे चन्द्रे भानौ तद्वदिन्द्वादिदृष्टे । वर्गोत्तमस्वपरगेषु शुभं यदुक्तं तत्पुष्टमध्यलघुताशुभमुत्क्रमेण । वीर्यान्वितोऽंशकपतिर्निरुणद्धि पूर्वं राशीक्षणस्य फलमंशफलं ददाति" ।

जन्मादिद्वादशभावस्थसूर्यादिग्रहफलम् तत्रैव२०अ०उक्तं यथा

"शूरस्तब्धो विकलनयनो निर्घृणोऽर्के तनुस्थे मेषे सस्वस्तिमिरनयनः सिंहसंस्थे निशान्धः । नीचे७ऽन्धोऽस्वः शशिगृह४गते बुद्बुदाक्षः पतङ्गे भूरिद्रव्यो नृपहृतधनो वक्त्ररोगी द्वितीये२ । मतिविक्रमवान् तृतीय३गेऽर्के विसुखः पीडितमानसश्चतुर्थे४ । असुतो धनवर्जितस्त्रिकोणे५ बलवाञ्छत्रुजितश्च शत्रु६याते । स्त्रीभिर्गतः परिभवं मदगे७ पतङ्गे स्वल्पात्मजो निधनगे८ विकलेक्षणश्च । धर्मे९ सुतार्थसुखभाक् सुतशौर्यभाक् खे१० लाभे११ प्रभूतधनवान् पतितस्तु रिष्फे१२ । सू० । मूकोन्मत्तजडान्धहीनबधिरप्रेष्याः शशाङ्कोदये१ स्वर्क्षाजोच्चगते धनी बहुसुतः सस्वः कुटुम्बी धने२ । हिंस्रो भ्रातृ३गते सुखे सतनये५ तत्प्रोक्तभावान्वितो नैकारिर्मृदुकायवह्निमदनस्तीक्ष्णोऽलसश्चारिगे६ । ईर्षुस्तीव्रमदो मदे७ बहुमतिर्व्याध्यर्दितश्चाष्टमे८ सौभाग्यात्मजमित्रबन्धुधनभाक् धर्मे९स्थिते शीतगौ । निष्पत्तिं समुपैति धर्मधनधीशौर्यैर्युतः कर्मगे१० ख्यातो भावगुणान्विते भव११गते क्षुद्रोऽङ्गहीनो व्यये१२ । च० । "लग्ने१ कुजे क्षततनुर्धनगे२ कदन्नो धर्मे९ऽघवान् खरकरप्रतिमोऽन्यसंस्थः । म० । विद्वान् धनी प्रबलपण्डितमन्त्रशत्रुर्धर्मज्ञविश्रुतगुणः परतोऽर्कवज्ज्ञे । बु० । विद्वान् सुवाक्यः नृपणः सुखी च धीमानशत्रुः पितृतोऽधिकश्च । नीचस्तपस्वी सधनः सलाभः खलश्च जीवे क्रमशो विलग्नात् । वृ० स्मरनिपुणः सुखितश्च विलग्ने प्रियकलहोऽस्त७गते सुरतेप्सुः । तनय५गते सुखितो भृगुपुत्रे गुरुवदतोऽन्यगृहे द्रविणी स्यात् । शु० । अदृष्टार्थो रोगी मदनवशगोऽत्यन्तमलिनः शिशुत्वे पीडार्त्तः सवितृसुतलग्नेऽलसवाक् । गुरु९।१२-ख१०।११द्यून७स्थे नृपतिसदृशो ग्रामपुरपः सुविद्वांश्चार्वङ्गो दिनकरसमोऽन्यत्र कथितः । श० । सुहृदरिपरकीयस्वर्क्षतुङ्गस्थितानां फलमनु परिचिन्त्य लग्नदेहादिभावैः । समुपचयविपत्ती सौम्यपापेषु सत्यः कथयति विपरीतं रिष्फषष्ठाष्टमेषु । उच्चत्रिकोणस्वसुहृच्छत्रुनीचगृहार्कगैः शुभं संपूर्णपादोनदलपादाल्पनिःफलम्" ।

आश्रयफलं तत्रैव २१अ० उक्तं यथा ।

"कुलसमकुलमुख्यबन्धुपूज्या धनिसुखिभोगिनृपाः स्वभैकवृद्ध्या । परभवनसुहृत्स्वबन्धुपोष्या गणपबलेश नृपाश्च मित्रभेषु । जनयति नृपमेकोऽप्युच्चगो मित्रदृष्टः प्रचुरधनसमेतं मित्रयोगाच्च सिद्धम् । विधनविसुखमूढव्याधितो बन्धतप्तो वधदुरितसमेतः शत्रुनीचर्क्षगेषु । न

कुम्भलग्नं शुभमाह सत्यो न भागभेदाद् यवना वदन्ति । कस्यांशभेदो न तथास्ति राशेरतिप्रसङ्गस्त्विति विष्णुगुप्तः ॥ यातेष्वथत्स्वसमभेषु दिनेशहोरां ख्यातो महोद्यमबलार्थयुतोऽतितेजाः । चान्द्रीं शुभेषु युजि मार्दवकान्तिसौख्यसौभाग्यधीमधुरवाक्ययुतः प्रजातः । तास्वेव होरास्वपरर्क्षगेषु ज्ञेया नराः पूर्वगुणेषु मध्याः । व्यत्यस्तहोराभवनस्थितेषु मर्त्या भवन्त्युक्तगुणैर्विहीनाः । कल्याणरूपगुणमात्मसुहृद्दृकाणे चन्द्रोऽन्यगस्तदधिनाथगुणं करोति । व्यालोद्यतायुधचतुश्चरणाण्डजेषु तीक्ष्णोऽतिहिंस्रगुरुतल्परतोऽटनश्च । स्वे नो भोक्ता पण्डिताढ्यो नरेन्द्रः क्लीवः क्रूरो विश्लिष्टहासवृत्तिः । पापो हिंस्रोऽभीश्च वर्गोत्तमांशेष्वेषामीशाराशिवद्द्वादशांशैः ॥ जायान्वितो बलविभूषणसत्त्वयुक्तस्तेजोऽतिसाहसयुतश्च कुजे स्वभागे । रोगी स्वतस्वयुवतिर्विषमोऽन्यदारो दुःखी परिच्छदयुतो मलिनोऽर्कपुत्रे । स्वांशे गुरौ धनयशःसुखबुद्धियुक्तास्तेजस्विपूज्यनिरुगुद्यमभोगवन्तः । मेधाकलाकपटकाव्यविवादशिल्पशास्त्रार्थसाहसयुताः शशिजेऽतिमान्याः ॥ स्वे त्रिंशांशे बहुसुतसुखारोग्यभाग्यार्थरूपः, शुक्रे तीक्ष्णः सुललितवपुः सुप्रकीर्णेन्द्रियश्च । शूरस्तब्धौ विषमवधकौ सद्गुणाढ्यौ सुखिज्ञौ चार्वङ्गेष्टौ रविशशियुतेष्वारपूर्वांशकेषु" प्रकीर्णकफलं तत्रैव २३अ० उक्तं यथा

"स्वर्क्षतुङ्गमूलत्रिकोणगाः कण्टकेषु यावन्त आश्रिताः । सर्व एव तेऽन्योन्यकारकाः कर्मगस्तु तेषां विशेषतः । कर्कटोदयगते यथोडुपे स्वोच्चगाः कुजयमार्कसूरयः । कारका निगदिताः परस्परं लग्नगस्य सकलोऽम्बराम्बुगः । स्वत्रिकोणोच्चगो हेतुरन्योन्यं यदि कर्मगः । सुहृत्तद्गुणसम्पन्नः कारकश्चापि स स्मृतः । शुभं वर्गोत्तमे जन्म वेशिस्थाने च सद्ग्रहे । अशून्येषु च केन्द्रेषु कारकाख्यग्रहेषु च । मध्ये वयसः सुखप्रदाः केन्द्रस्था गुरुजन्मलग्नपाः । पृष्ठोभयकोदयर्क्षगास्त्वन्तेऽन्तःप्रथमेषु पाकदाः । दिनकररुधिरौ प्रवेशकाले गुरुभृगुजौ भवनस्य मध्ययातौ । रविसुतशशिनौ विनिर्गमस्थौ शशितनयः फलदस्तु सर्वकालम्" ।

स्त्रीजन्मनि विशेषस्तत्रैवोक्तः २४ अ० यथा

"यद्यत्फलं नरभवेऽक्षममङ्गनानान्तत्तद्वदेत् पतिषु वा सकलं विधेयम् । तासां तु भर्तृमरणं निधने वपुस्तु लग्नेन्दुगे सुभगताऽस्तमये पतिश्च । युग्मेषु लग्नशशिनोः प्रकृतिस्थिता स्त्री सच्छीलभूषणयुता शुभदृष्टयोश्च । ओजस्थयोश्च पुरुषाकृतिशीलयुक्ता पापा च पापयुतवीक्षितयोर्गुणोना । कन्यैव दुष्टा व्रजतीह दास्यं साध्वी समाया कुचरित्रयुक्ता । भूम्यात्मजर्क्षे क्रमशोऽंशकेषु वक्रार्किजीवेन्दुजभार्गवाणाम् । दुष्टा पुनर्भूः सगुणा कलाज्ञा ख्याता गुणैश्चासुरपूजितर्क्षे । स्यात् कापटी क्लीबसमा सती च बौधे गुणाढ्या प्रविकीर्णकामा । स्वच्छन्दा पतिघातिनी बहुगुणा शिल्पिन्यसाध्वीन्दुभेऽनाचारा कुलटार्कभे नृपवधूः पुंश्चेष्टिताऽगम्यगा । जैवे(९।१२)नैकगुणाल्परत्यतिगुणा विज्ञानयुक्ता सती । दासी नीचरतार्किभे(१०।११)पतिरता दुष्टप्रजा स्वांशकैः । शशिलग्नसमायुक्तैः फलं त्रिंशांशकैरिदम् । बलाबलविकल्पेन तयोरुक्तं विचिन्तयेत् । दृक्संस्थावसितसितौ परस्परांशे शौक्रे वा यदि घटराशिसम्भवोंऽशः । स्त्रीभिः स्त्री मदनविषानलं प्रदीप्तं संशान्तिं नयति नराकृतिस्थिताभिः । शून्ये कापुरुषोऽबलेऽस्तभवने सौम्यग्रहावीक्षिते क्लीबोऽस्ते बुधमन्दयोश्चरगृहे नित्यं प्रवासान्वितः । उत्सृष्टा रविणा कुजेन विधवा बाल्येऽस्तराशिस्थिते कन्यैवाशुभवीक्षितेऽर्कतनये द्यूने जरां गच्छति । आग्नेयैर्विधवाऽस्तराशिसहितैर्मिश्रैः पुनर्भूर्भवेत् क्रूरे हीनबलेऽस्तगे स्वपतिना सौम्ये स्थिते प्रोज्झिता । अन्योन्यांशगयोः सितावनिजयोरन्यप्रसक्ताङ्गना द्यूने वा यदि शीतरश्मिसहितौ भर्तुस्तदानुज्ञया । सौरारर्क्षे लग्नगे सेन्दुशुक्रे मात्रा सार्द्धं बन्धकी पापदृष्टे । कौजेऽस्तांशे सौरिणा व्याधियोनिश्चारुश्रोणी वल्लभा सद्ग्रहांशे । वृद्धो मूर्खः सूर्यजर्क्षेंऽशके वा स्त्रीलोलः स्यात् क्रोधनश्चावनेये । शौक्रे कान्तोऽतीव सौभाग्ययुक्तो विद्वान् भर्त्ता नैपुणज्ञश्च बौधे । मदनवशगतो मृदुश्च चान्द्रे त्रिदशगुरौ गुणवान् जितेन्द्रियश्च । अतिमृदुरतिकर्मकृच्च सौर्ये भवति गृहेऽस्तमयस्थितेंऽशके वा । ईर्षान्विता सुखपरा शशिशुक्रलग्ने ज्ञेन्दोः कलासु निपुणा सुखिता गुणाढ्या । शुक्रज्ञयोस्तु रुचिरा सुभगा कलाज्ञा त्रिष्वप्यनेकवसुसौख्यगुणा शुभेषु । क्रूरेऽष्टमे विधवता निधनेश्वरोंऽशे यस्य स्थितो वयसि तस्य समे प्रदिष्टा । सत्स्वर्थगेषु मरणं स्वयमेव तस्याः कन्यालिगोहरिषु चाल्पसुतत्वमिन्दौ । सौरे मध्यबले बलेन रहितैः शीतांशुशुक्रेन्दुजैः शेषैर्वीर्यसमन्वितैः पुरुषिणी यद्योजराश्युद्गमः । जीवारास्फुजिदैन्दवेषु बलिषु प्राग्लग्नराशौ समे विख्याता भुवि नैकशास्त्र-

निगुणा स्त्री ब्रह्मादिष्वपि । पादेऽस्ते नवमगतग्रहस्य तुल्यां प्रव्रज्यां युवतिरुपैयसंशयेन । उद्वाहे वरणविधौ प्रदानकाले चिन्तायामपि सकलं विलेयमेतत्” । जातकपद्धत्यादौ विस्तरो दृश्यः । ५सुन्दरे त्रि० चतुर्जातकम् ।

**जातकचक्रम्** ज्यो० उक्ते जातस्य शुभाशुभसूचके चक्रभेदे तच्च चक्रं ज्यो० त० उक्तं यथा

“युद्धजयार्णवे यस्मिन् चे स्थितोभानुस्तदादित्रीणि मस्तके । मुखे त्रीणि तथा द्वे मे स्कन्धयोर्भुजयोरुभे । द्वे हस्तयोः पञ्च हृदि नाभावेकं तथा गुह्ये । तथा जानुयुगे द्वे द्वे पादयोर्जन्मधिष्ण्य न्यसेत् । चरणक्षे तु यो जातः सोऽल्पायुर्भवति प्रिये ! । जानुनोर्भ्रमणाशक्तो गुह्ये स्यात् पारदारिकः । नाभौ स्वल्पधनो देवि ! हृदये स्यान्महाधनः । पाण्योर्जातो भवेच्चौरो भुजयोर्दुःखभाजनम् । स्कन्धयोर्भोगभोगी च मुखे धर्मरतो धनी । मूर्ध्नि राजा भवेद्देवि ! बालानां जन्मतोवदेत्” । स्वरोदये । “मुखे शीर्षे शतं वर्षं नवतिः स्कन्धयोर्द्वयोः । पञ्चाशीतिर्हृदि प्रोक्ता हस्तयोः सप्ततिः क्रमात् । बाह्वोः षट्षष्टिवर्षाणि गुह्ये षट्षष्टिका क्रमात् । पश्चाशत् जङ्घयोः पादे निर्द्धनश्चाल्पजीवनः” ।

**जातकर्मन्** न० जाते कर्म । पुत्रजन्मनिमित्ते पितृकर्त्तव्ये पुत्रसंस्कारभेदे । तच्च आश्व० गृ० १।१५।१ दर्शितं यथा ।

“कुमारं जातं पुराऽन्यैरालम्भात् सर्पिर्मधुनी हिरण्यनिकाषं हिरण्येन प्राशयेत् “प्र ते ददामि मधुनी घृतस्य वेदं सवित्रा प्रसूतं मघोनाम् । आयुष्मान् गुप्तो देवताभिः शतं जीव शरदो लोके अस्मिन्निति” । वृ० । “इदं जातकर्म । कुमारग्रहणं कुमारीनिवृत्त्यर्थम् । ननु कुमार्या अपि भवत्येव जातकर्म । कुतः । वक्ष्यति “आवृतैव कुमार्याः” इति, उच्यते । प्रसादागतस्य विहितं कर्माहता भवति न जातकर्म अनन्तरत्वात् । एवमेके अन्ये पुनरावृतैव कुमार्या इत्येतदुभयार्थमिति वदन्ति । तेन कुमार्या अपि जातकर्म भवति । मनुनाप्युक्तम् “अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः” इति । तर्हि कुमारग्रहणं किमर्थम् ? अधिकारार्थम् । “अष्टमे वर्षे ब्राह्मणमुपनयेदित्युपनयनं कुमारस्यैव यथा स्यात् न कुमार्या इति । ननु ब्राह्मणमिति पुंलिङ्गनिर्देशादेव न भविष्यति । न जातिनिर्देशे लिङ्गमविवक्षितम् । यथा ब्राह्मणो न हन्तव्य इति ब्राह्मण्यपि न हन्यते एवमत्रापि स्त्रियाः प्रसज्यते तन्निवृत्त्यर्थं कुमारग्रहणमिति । जातग्रहणमर्थाधिकारार्थम् । “गोदानं षोड़शे वर्षे” इति जन्मतः प्रभृति षोड़शोयथा स्यात् उपनयनप्रभृति मा भूदिति । पुरा पूर्वमित्यर्थः अन्यग्रहणमनधिकृतालम्भनात् प्राक् कर्म कर्त्तव्यमित्येवमर्थम् । सर्पिर्मधुनी हिरण्येन निकाषयति । ते हिरण्यसंसृष्टे हिरण्येन प्राशयेत् मातुरुपस्थ आसीनं “प्र ते ददामीति” मन्त्रेण नारा० वृ० ।

“कर्णयोरुपनिधाय मेधाजननं जपति । “मेधान्ते देवः सविता मेधां देवी सरस्वती । मेधान्ते अश्विनौ देवावाधत्तां पुष्करस्रजौ” । वृ० “अस्य कर्णयोः हिरण्यं निधाय मेधाजननं जपति मेधान्त इति । उपपद्य हृष्यं तस्य मुखसमीपे आत्मनोमुखं निधाय जपार्थं मेधाजननमित्यस्य मन्त्रस्याख्या स्वकमन्त्रः । पर्यायेणोपनिधानमित्येके । अन्ये मन्त्रावृत्तिमिच्छन्ति” नारा० “गर्भैर्होमैर्जातकर्मचौड़मौञ्जीनिबन्धनैः । प्राङ्नाभिवर्द्धनात् पुंसो जातकर्म विधीयते” मनुः । “नाभिवर्द्धनात् नाभिसम्बन्धात् नाड़ीच्छेदनात् । वैजवापिः “जन्मनोऽनन्तरं कार्यं जातकर्म यथाविधि । दैवादतीतः कालश्चेत् अतीते सूतके भवेत्” । एवञ्च, “मृदुध्रुवचरक्षिप्रभेष्वेवाशुद्धेऽपि वा । गुरौ शुक्रेऽथ वा केन्द्रे जातकर्म च नाम च” इति ज्योतिःशास्त्रोक्तं दैवात् कालोत्कर्षे वेदितव्यम् । अनुत्कर्षेऽपि नक्षत्रादिनियमो न, नैमित्तिकस्य निमित्तानन्तरभावित्वेन निरवकाशत्वात् ज्यो० त० ।

**जातमात्र** त्रि० जात एव । सद्योजाते । “जातमात्रं न यः शत्रुं रोगं च प्रशमं नयेत्” पञ्चत० ।

**जातरूप** न० जातं प्रशस्तं जात+प्राशस्त्ये रूपप् । १स्वर्णे २धुस्तूरवृक्षे पु० अमरः । ३उत्पन्नरूपे त्रि० । “न जातरूपच्छदजातरूपता” नैष० । “कमण्डलुमुपादाय जातरूपमयान् शुभान्” भा० स० ४७ अ० ।

**जातविद्या** स्त्री जाते निष्पन्ने होमादौ विद्या विद्यतेऽनया विद्या प्रायः तज्ज्ञापिका वाक् । होमादिनिष्पत्त्यन० … प्रसवोधके वाक्यभेदे “ब्रह्मा त्वो वदति जातविद्याम्” ऋ० १०,७१।११ । “जाते जाते कर्त्तव्ये प्रायश्चित्तादौ विद्यां वेदयित्रीं वाचं वदति ब्रह्मा हि सर्वं वेदितुं योग्यो भवति खलु” भा० ।

**जातवेदस्** पु० जातं सद्योजातं विन्दति प्राप्नोति विद—

लाभे असुन्। १वह्नौ अमरः तस्य तथात्वञ्च ऋ० ३।१।२० उक्तं "जन्मन् जन्मन् निहितो जातवेदाः" "जन्मन् जन्मन् सर्वेषु मनुष्येषु निहतो जातवेदाः" भा०। जातमात्रस्य जाठरानलसम्पर्कात्तस्य तथात्वम्। २जातानां वेत्तरि च "आदाव जातवेदः" ऋ० १।४४।१ हे जातवेदः जातानां वेदितः" भा० निरुक्ते ७।१९। तस्य बहुधा व्युत्पत्तिर्दर्शिता यथा

"जातवेदाः कस्माज्जातानि वेद जानाति वैनं विदुर्जाते जाते विद्यत इति वा जातवित्तो वा जातधनो जातविद्यो वा जातप्रज्ञानो यत्तज्जातः पशूनविन्दतेति तज्जातवेदसो जातवेदस्त्वमिति ब्राह्मणम्। तस्मात् सर्वानृतून् पशवोऽग्निमभिसर्पन्तीति च" ३जातप्रज्ञे ४जातधने ५सूर्य्ये च "उदु त्यं जातवेदसं देवं वहन्ति केतवः" ऋ० १।५०।१। "जातवेदसः जातानां प्राणिनां वेदितारं जातप्रज्ञं जातधनं वा" भा० "पञ्चमः पञ्चतपसां तपनो जातवेदसाम्" "विद्युते बाडवजातवेदसाम्" माघः। जातवेदस इदं स देवताऽस्य वा अण्। जातवेदस तत्सम्बन्धिनि त्रि०। "प्र नूनं जातवेदसमश्वम्" निरु० ७।२० धृता ऋक्। तद्देवताके सामभेदे मन्त्रे तृचे च तत्रैव निरुक्ते "तदेकमेव जातवेदसं गायत्रं तृचं दशतयीषु विद्यते यत्तु किञ्चिदाग्नेयं तज्जातवेदसां स्थाने युज्यते" इत्युपक्रमे "उत्तरे ज्योतिषी जातवेदसी उच्येते" भा०।

**जातायन** पुंस्त्री जातस्य गोत्रापत्यम् अश्वा० फञ्। जातस्य गोत्रापत्ये स्त्रियास्तु जातायाः अपत्यम् ढक्। जातेय जाताया अपत्ये पुंस्त्री।

**जाति** स्त्री जन–क्तिन्। १जन्मनि, २अनुगतैकाकारबुद्धिजननसमर्थे,अवयवव्यङ्ग्ये सकृदुपदेशव्यङ्ग्ये च ३धर्मभेदे, व्याकरणोक्ते पौत्राद्यपत्यात्मके ४गोत्रे, ५वेदशाखाभेदे च। न्यायोक्ते साधर्म्म्यवैधर्म्म्याभ्यां व्याप्तिनिरपेक्षाभ्यां वादिवाक्येषु ६दूषणदानरूपे वाक्ये, ७षड्जादिषु सप्तसु स्वरेषु, ८अलङ्कारभेदे, ९चूक्राम्, शब्दार्थचि०। आमलक्यां, १०जातिफले, ११मालत्यां, (चामेली) पुष्पप्रधानवृक्षे च मेदि० १२काम्पिल्ले विश्वः।

तत्र व्याकरणोक्तं जातिलक्षणं यथा

"चाकृतिग्रहणा जातिर्लिङ्गानाञ्च न सर्वभाक्। सकृदाख्यातनिर्ग्राह्या गोत्रञ्च चरणैः सह" भा०। अस्यार्थः। आक्रियते व्यज्यतेऽनयेति आकृतिः संस्थानम्। गृह्यतेइति ग्रहणं ज्ञानम्। आकृत्या ग्रहणं यस्याः सा आकृतिग्रहणा। जातिराकृतिग्रहणा संस्थानव्यङ्ग्येत्यर्थः। तेन मनुष्यगोमृगहंसादीनां पृथक् पृथक्संस्थानैर्व्यज्यमानत्वात् मनुष्यत्वगोत्वमृगत्वहंसत्वादिर्जातिः। एवं ब्राह्मणक्षत्रियवैश्यशूद्राणां पृथक् संस्थानाभावात् ब्राह्मणत्वादेर्जातित्वं न स्यादिति लक्षणान्तरमाह लिङ्गानाञ्च न सर्वभागिति। या सर्वाणि लिङ्गानि न भजते सा च जातिरित्यर्थः। स्त्रीपुंसयोरपत्यन्ताद्विचतुःषट्पदोरगाः। जातिभेदाः पुमानाख्या"इत्यमरसिंहेन जातिभेदानां स्त्रीपुंसयोरेवेति नियमेन ब्राह्मणादीनां सर्वलिङ्गभागित्वाभावाज्जातित्वम्। किन्तु अज्ञातहंसस्य जनस्य हंसं दृष्टवतोऽपि तस्य संस्थानेन हंसत्वं व्यञ्जितुं न शक्यते इति हंसत्वस्यापि जातित्वं न स्यादिति पूर्वलक्षणस्य दोषः। एवं देवदत्तादिसंज्ञाशब्दस्यापि सर्वलिङ्गभागित्वाभावाज्जातित्वापत्तिरिति द्वितीयलक्षणस्य दोषः इति दोषद्वयमपाकर्त्तुं द्वयोर्लक्षणयोर्विशेषणमाह सकृदाख्यातनिर्ग्राह्येति। सकृदेकवारमाख्यातेन उपदेशेन निश्चयेन ग्राह्या ग्रहीतुं शक्या इत्यर्थः। तेन ईदृशो हंसइत्युपदेशे हंसं दृष्टवतस्तस्य संस्थानेन हंसत्वं व्यञ्जितुं शक्यत एवेति पूर्वलक्षणस्य न दोषः। एवं देवदत्तादिसंज्ञाशब्दस्यैकस्मिन्नुपदेशेऽपि अन्यस्मिन् ज्ञानाभावात् जातित्वं न स्यादिति परलक्षणस्यापि न दोषः। गार्ग्यः पुरुषः गार्गी स्त्री गार्ग्यं कुलमिति सर्वलिङ्गभागित्वात् संस्थानव्यङ्ग्यत्वाभावाच्च गार्ग्यादीनां जातित्वानुपपत्तौ तृतीयलक्षणमाह। गोत्रञ्चेति। पुत्रपौत्रप्रभृतिकमपत्यं गोत्रमिति पूर्व्वाचार्य्यपरिभाषितं गोत्रमिह गृह्यते गार्गी वात्सीत्यादि। चतुर्थलक्षणमाह चरणैः सहेति चरणञ्च जातिरित्यर्थः। चरणशब्दो वेदैकदेशवाची कठादिरूपः स च अध्ययनक्रियासम्बन्धेन प्रवृत्तत्वात् क्रियावाचक एव न तु जातिवाचकः। तेनास्य जातिसंज्ञार्थं चरणैः सहेत्युक्तम्। गार्ग्यादीनां यञश्चेति ङीपि सिद्धेऽपि जातिसंज्ञाफलन्तु स्वरार्थम् तथा गार्गी भार्य्या यस्यासौ गार्गीभार्य्य इत्यादौ "जातेश्चेति" पुंवद्भावनिषेधः। गार्गी चासौ भार्य्या चेति गार्ग्यभार्य्या इत्यादौ "पुंवत् कर्मधारयेति" पुनः पुंवद्भावः" "प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद् गुणैः। असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः" इति महाभाष्ये लक्षणान्तरमुक्तम्।

ईदृशान्यतमार्थकशब्दानां जातिशब्दत्वेन व्याकरणे व्यवह्रियते उदा० दृश्यते चोपरिष्टात्।

अनुगतधर्मरूपजातेर्ब्रह्मरूपत्वम्। हरिणोक्तं यथा "सम्बन्धिभेदात् सत्तैव भिद्यमाना गवादिषु। जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः। तां प्रातिपदिकार्थञ्च धात्वर्थञ्च प्रचक्षते। सा नित्या सा महानात्मा तामाहुस्त्वतलादयः" इति। प्रतिपादिता च तेनैव अनेकव्यक्तीनामनित्यतया जातेरैकरूप्यात् स्फोटात्मशब्दवाच्यता यथा "अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता। कैश्चिद्व्यक्तय एवास्या ध्वनित्वेन प्रकल्पिताः" इति। अत्र च जातिस्फोटयोः सामानाधिकरण्यनिर्द्देशात् वाच्यवाचकयोरभेद इति बोध्यम्। वैशेषिकमतसिद्धेषु षट्सु भावेषु मध्ये अनुगतबुद्धिनियामकधर्मभेदरूपभावपदार्थसामान्यलक्षणभेदादिकं कणा० सू० वृत्तौ दर्शितं यथा

"सामान्यं विशेष इति बुद्ध्यपेक्षम्"। सू०

"पदार्थत्रयोद्देशलक्षणानन्तरमिदानीमुद्दिष्टस्य सामान्यपदार्थस्य लक्षणमाह सामान्यं द्विविधं परमपरञ्च परं सत्ता अपरं सत्ताव्याप्यं द्रव्यत्वादि तत्र सामान्यस्य तद्विशेषस्य च लक्षणं बुद्धिरेव। अनुवृत्तबुद्धिः सामान्यस्य, व्यावृत्तबुद्धिर्विशेषस्य इतिना द्वयमवच्छिद्य परामृश्यते तेन बुद्ध्यपेक्षमिति नपुंसकनिर्द्देशः। वृत्तिकारस्तु विशेषान्वयमाह परन्तु "नपुंसकमनपुंसके-नैकवच्चास्यान्यतरस्याम्" पा० इत्यनेनैकवद्भावो नपुंसकता चेत्याह। बुद्धिरपेक्षा लिङ्गं लक्षणं वा यस्य तद्बुद्ध्यपेक्षं तत्र नित्यमनेकव्यक्तिवृत्ति सामान्यं नित्यत्वे सति स्वाश्रयान्योन्याभावसमानाधिकरणं वा परमपि सामान्यमपरमपि तथा। परन्तु सामान्यं विशेषसंज्ञामपि लभते तथा द्रव्यमिदं द्रव्यमदमित्यनुवृत्तप्रत्यये सत्येव नायं गुणो नेदं कर्मेति विशेषप्रत्ययः। तथा च द्रव्यत्वादीनां सामान्यानामेव विशेषत्वम्। ननु विधिरूपं सामान्यं नास्त्येव अनुगतमतेरतद्व्यावृत्त्यैवोपपत्तेः भवति हि गौरयमिति-प्रतीतेरगोव्यावृत्तोऽयमिति विषयः जातिवादिनाऽपि गोत्वादिविशिष्टप्रत्ययस्य तद्विषयत्वाभ्युपगमात् नहि वैशिष्ट्यमतद्व्यावृत्तेरन्यत्, गवादिपदप्रवृत्तिनिमित्तमप्यगोव्यावृत्त्यादिरेव। किञ्च गोत्वं कुत्र वर्त्तते न तावद्गवि गोत्ववृत्तेः पूर्वं तस्याभावात् नाप्यगवि, विरोधात् यत्र गोपिण्ड उत्पद्यते तत्र कुत आगत्य गोत्वं वर्त्तते न तावत्तत्रासीत् देशस्यापि तस्य गोत्वापत्तेः नापि गोत्वमपि तदानीमेवोत्पन्नं नित्यत्वाभ्युपगमात् नाप्यन्यत आगतं निष्क्रियत्वाभ्युपगमात् नच एकस्यैव नित्यस्य नानाव्यक्तिवृत्तित्वं कार्त्स्न्यैकदेशविकल्पानुपपत्तेः। नहि कृत्स्नमेकत्रैव वर्त्तते अन्यत्र तद्विशिष्टप्रत्ययानुदयप्रसङ्गात्। नाप्येकदेशेन जातेरेकदेशस्याभावात्। तदुक्तं "न याति नच तत्रासीन्नचोत्पन्नं नचांशवत्। जहाति पूर्वं नाधारमहो व्यसनसन्ततिः" इति। सामान्यमस्ति तच्च संस्थानमात्रव्यङ्ग्यं गोत्वघटत्वादिवत् न तु गुणकर्मगतमपीति सगोत्रकलहः। अत्रोच्यते सामान्यं नित्यं व्यापकञ्च व्यासकत्वमपि स्वरूपतः सर्वदेशसम्बद्धत्वं न देशानां गोव्यवहारापत्तिः समवायेन तद्व्यवहारस्याभ्युपगमात् काले रूपादिमत्त्वेऽपि कालो रूपवानित्यप्रतीतिव्यवहारवत् नच कालो नास्त्येव पञ्चस्कन्धसंज्ञाभेदमात्रमित्यभ्युपगमादिति वाच्यं कालस्य साधयिष्यमाणत्वात्। तथाच यत्र पिण्ड उत्पद्यते तत्रस्थमेव गोत्वं तेन सम्बध्यते जातः सम्बद्धश्चेत्येकः काल इत्यभ्युपगमात्। एतेन कीदृशाश्रये वर्त्तते इत्यत्र यत्र प्रतीयते इत्युत्तरम्, कुत्र प्रतीयते इत्यत्र यत्र वर्त्तते इत्युत्तरम्। गोत्ववृत्तेः पूर्वं स पिण्डः कीदृगासीदित्यत्र नासीदित्येवोत्तरम्। एवञ्च "न याति नच तत्रासीत् इत्यादिकं परिदेवनमात्रम्, अतद्व्यावृत्तिरेव गोत्वमित्यस्य गौरयमिति विधिमुखः प्रत्यय एव बाधकः। नह्यनुभवोऽपि व्याख्यायते तदुक्तं "विधिजः प्रत्ययोऽन्योऽयं व्यतिरेकासमर्थकः" इति न हि गौरयमिति प्रत्ययेऽगोव्यावृत्तिरपि भासते। कार्त्स्न्यैकदेशविकल्पस्तदाभवेत् यद्येकस्य सामानस्य कार्त्स्न्यं भवेदेकदेशो वा कृत्स्नता ह्यनेकाशेषता। सा चैकस्मिन्नोपपन्ना गौरयमित्यनुभव एवासद्विषयो न वस्तुव्यवस्थापनक्षम इत्यत्रोत्तरं वक्ष्यते। प्राभाकरास्तु संस्थानमात्रव्यङ्ग्यं सामान्यमाचक्षते तद्यद्यनुगतप्रतीतिसाक्षिकं तदा किमपराद्धं गुणकर्मगतैः सामान्यैः, भवति हि रूपरसाद्यनुगतधीः सा च जातिव्यवस्थापिकैव बाधकाभात् रूपत्वादिजातिषु न तत्वद्व्यक्त्यभेदो बाधकः आकाशत्वादिवत्, रूपरसादिव्यक्तीनामनेकत्वात् नापि बुद्धित्वज्ञानत्वादिवत् घटत्वकलशत्वादिवद्वा तुल्यत्वं बाधकं तच्चान्यूनानतिरिक्तव्यक्तिकत्वं गुणत्वापेक्षया न्यूनव्यक्तिकत्वात् नीलत्वाद्यपेक्षया चाधिकव्यक्तिकत्वात् स्वतएव न सङ्करः भूतत्वमूर्त्त-

त्ववत्, परस्पराव्यन्ताभावसामानाधिकरण्ये सति जात्यन्तरेण सामानाधिकरण्याभावात् नाप्यनवस्था रूपत्वादिगतसामान्यान्तरानभ्युपगमात् नापि रूपहानिर्विशेषत्ववत् यदि विशेषाः द्रव्याश्रितत्वे सति जातिमन्तः स्युः गुणाः कर्माणि वा स्युः विभुवृत्तित्वे सति यदि जातिमन्तः स्युर्गुणाः स्युरिति यथा विशेषपदार्थस्वरूपहानिस्तथा प्रकृतेऽभावात् नापि समवायत्ववदसम्बन्धः समवाये समवायाभ्युपगमेऽनवस्थाभयात्तथास्तु, प्रकृते तु समवायस्यैव सम्बन्धस्याभ्युपगमात्। यद्यपि समवायत्वजातिबाधकोव्यक्त्यभेदएव तथापि यन्मते उत्पादविनाशशीलाः बहवः समवायास्तन्मते द्रष्टव्यम्। अभावत्वादजात्यभ्युपगमे वा बाधकमेतत्, (व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः। रूपहानिरसम्बन्धो जातिबाधकसंग्रहः)। विवादपदमनुगतबुद्धिः अनुगतनिमित्तसाध्या अबाधितानुगतमतित्वात् दामकुसुमबुद्धिवत् इति जातौ मानमिति वृत्तिकारास्तच्चिन्त्यम्"। उप० वृत्तिः।

"भावोऽनुवृत्तेरेव हेतुत्वात् सामान्यमेव"। सू०

"सामान्यं विशेष इति द्वैविध्यं तदुपपादयन्नाह। भावः सत्ता अनुवृत्तेरेव हेतुः न तु व्यावृत्तेरपि हेतुः तथा च विशेषसंज्ञां लभते"। उप० वृत्तिः

"द्रव्यत्वं गुणत्वं कर्मत्वञ्च सामान्यानि विशेषाश्च"। सू०

"केषां सामान्यानां विशेषसंज्ञेत्यपेक्षायामाह। चकारः पृथिवीत्वादीनि द्रव्यगतजातीः रूपत्वादीनि गुणगतजातीः उत्क्षेपणत्वादीनि कर्मगतजातीः समुच्चिनोति। द्रव्यत्वमित्यादावसमासः परस्परं व्याप्यव्यापकभावाभावसूचनार्थम् सामान्यानि विशेषाश्चेत्यत्रासमासः सामान्यत्वे सत्येव विशेषत्वं यथा ज्ञायेत तदर्थम्, अन्यथा सामान्यविशेषा इति षष्ठीसमासभ्रमः स्यात् तथाच सामान्यत्वे सति विशेषत्वं न प्रतीयते। ननु द्रव्याकारानुगतमतिसाक्षिकं न द्रव्यत्वम्, पृथिव्यादौ कथञ्चित्, तत्सत्त्वेऽपि वाय्वाकाशादौ तदसम्भवात् नच गुणत्वावच्छिन्नकार्य्यसमवायिकारणतावच्छेदकतया तत्सिद्धिः नित्यानित्यवृत्तितया गुणत्वस्य कार्य्यतानवच्छेदकत्वात् गुणत्वाद्यंशेऽपि पर्य्यनुयोगस्य तादवस्थ्यात्, नैवं संयोगत्वावच्छिन्नकार्य्यसमवायिकारणतावच्छेदकतया द्रव्यत्वसिद्धेः सा हि न पृथिवीत्वाद्यवच्छेद्या न्यूनवृत्तित्वात् नापि सत्तावच्छेद्या ऽतिवृत्तित्वात् अवश्यं ह्यवच्छेदकेन भवितव्यम् अन्यथाकस्मिकतापत्तेः तत्र परमाणुषु द्व्यणुकासमवायिकारणवत्तया द्व्यणुकेषु त्र्यणुकासमवायिकारणवत्तया विभुचतुष्टयस्य सर्व्वमूर्त्तसंयोगितयैव सिद्धेः मनसि इन्द्रियमनःसंयोगाधारतया वायौ तृणादिनोदनाश्रयतया प्रत्यक्षद्रव्येषु प्रत्यक्षतयैव संयोगाभ्युपगमस्यावश्यकत्वात् अजस्तु संयोगो नास्त्येव येन संयोगत्वस्यापि कार्य्याकार्य्यवृत्तितया कार्य्यतावच्छेदकता न स्यात् एवं विभागसमवायिकारणतावच्छेदकतयाऽपि द्रव्यत्वसिद्धेः सुप्रतिपदत्वात्। गुणत्वन्तु संयोगविभागसमवायिकारणत्वासमवायिकारणत्वशून्ये सामान्यवति यत्कारणत्वं तदवच्छेदकतयैव सिद्धमित्युक्तत्वात् कर्मत्वमपि प्रत्यक्षद्रव्येषु चलतीति-प्रत्ययसाक्षिकम्, अन्यत्र तु संयोगविभागानुमेयं संयोगविभागोभयासमवायिकारणतावच्छेदकतयाऽपि कर्मत्वसिद्धेरावश्यकत्वात्"। उप० वृत्तिः

१२ ब्राह्मणादिवर्णे वर्णरूपजातिश्च द्विविधा शुद्धा सङ्कीर्णा च तत्र शुद्धाजातयः ब्राह्मणादयः। सङ्कीर्णजातयश्च मूर्द्धावसिक्तादयः नाना तदेतत् मनुना १०अ० उक्तं यथा

"ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः। चतुर्थ एकजातिस्तु शूद्रो नास्ति तु पञ्चमः। सर्व्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु। आनुलोम्येन सम्भूता जात्या ज्ञेयास्त एव ते। स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान् सुतान्। सदृशानेव तानाहुर्मातृदोषविगर्हितान्। अनन्तरासु जातानां विधिरेव सनातनः। द्व्येकान्तरासु जातानां धर्म्म्यं विद्यादिमं विधिम्। ब्राह्मणाद्वैश्यकन्यायामम्बष्ठो नाम जायते। निषादः शूद्रकन्यायां यः पारशव उच्यते। क्षत्रियाच्छूद्रकन्यायां क्रूराचारविहारवान्। क्षत्रशूद्रवपुर्जन्तुरुग्रो नाम प्रजायते। विप्रस्य त्रिषु वर्णेषु नृपतेर्वर्णयोर्द्वयोः। वैश्यस्य वर्णे चैकस्मिन् षडेतेऽपसदाः स्मृताः। क्षत्रियाद्विप्रकन्यायां सूतो भवति जातितः। वैश्यान्मागधवैदेहौ राजविप्राङ्गनासुतौ। शूद्रादायोगवः क्षत्ता चाण्डालश्चाधमो नृणाम्। वैश्यराजन्यविप्रासु जायन्ते वर्णसङ्कराः। एकान्तरे त्वानुलोम्यादम्बष्ठोग्रौ यथा स्मृतौ। क्षत्तृवैदेहकौ तद्वत्प्रातिलोम्येऽपि जन्मनि। एता येऽनन्तरस्त्रीजाः क्रमेणोक्ता द्विजन्मनाम्। ताननन्तरनाम्नस्तु मातृदोषात् प्रचक्षते। ब्राह्मणादुग्रकन्यायामावृतो नाम जायते। आभीरोऽम्बष्ठकन्यायामायोगव्यान्तु धिग्वणः। आयोगवश्च क्षत्ता च चाण्डालश्चाधमो नृणाम्। प्राति-

लोम्येन जायन्ते शूद्रादपसदास्त्रयः । वैश्यान्मागधवैदेहौ क्षत्त्रियात्सूत एव तु । प्रतीपमेते जायन्ते परेऽप्यपसदास्त्रयः । जातो निषादाच्छूद्रायां जात्या भवति पुक्कशः । शूद्राज्जातो निषाद्यान्तु स वै कुक्कुटकः स्मृतः । क्षत्तुर्जातस्तथोग्रायां श्वपाक इति कीर्त्त्यते । वैदेहकेन त्वम्बष्ठ्यामुत्पन्नो वेण उच्यते । द्विजातयः सवर्णासु जनयन्त्यव्रतांस्तु यान् । तान् सावित्रीपरिभ्रष्टान् व्रात्या इति विनिर्दिशेत् । व्रात्यात्तु जायते विप्रात् पापात्मा भूर्जकण्टकः । आवन्त्यवाटधानौ च पुष्पधः शैख एव च । झल्लो मल्लश्च राजन्याद्व्रात्यान्निच्छिविरेव च । नटश्च करणश्चैव खसो द्रविड एव च । वैश्यात्तु जायते व्रात्यात् सुधन्वाचार्य्य एव च । कारुषश्च विजन्मा च मैत्रः सात्वत एव च । व्यभिचारेण वर्णानामवेद्यावेदनेन च । स्वकर्मणाञ्च त्यागेन जायन्ते वर्णसङ्कराः । सङ्कीर्णयोनयो ये तु प्रतिलोमानुलोमजाः । अन्योन्यव्यतिषक्ताश्च तान् प्रवक्ष्याम्यशेषतः । सूतो वैदेहकश्चैव चण्डालश्च नराधमः । मागधः क्षत्तृजातिश्च तथाऽयोगव एव च । एते षट् सदृशान् वर्णान् जनयन्ति स्वयोनिषु । मातृजात्यां प्रसूयन्ते प्रवरासु च योनिषु । यथा त्रयाणां वर्णानां द्वयोरात्मास्य जायते । आनन्तर्य्यात् स्वयोन्यान्तु तथा वाह्येष्वपि क्रमात् । ते चापि वाह्यान् सुबहूंस्ततोऽप्यधिकदूषितान् । परस्परस्य दारेषु जनयन्ति विगर्हितान् । यथैव शूद्रो ब्राह्मण्यां वाह्यं जन्तुं प्रसूयते । तथा वाह्यतरं वाह्यश्चातुर्वर्ण्ये प्रसूयते । प्रतिकूलं वर्त्तमाना वाह्या वाह्यतरान् पुनः । हीना हीनात् प्रसूयन्ते वर्णान् पञ्चदशैव तु । प्रसाधनोपचारज्ञमदासं दासजीवनम् । सैरिन्ध्रं वागुरावृत्तिं सूते दस्युरयोगवे । मैत्रेयकन्तु वैदेहो माधुकं सम्प्रसूयते । नॄन् प्रशंसत्यजस्रं यो घण्टाताड़ोऽरुणोदये । निषादो भार्गवं सूते दासं नौकर्म्मजीविनम् । कैवर्त्तमिति यं प्राहुरार्य्यावर्त्तनिवासिनः । मृतवस्त्रभृत्नारीषु गर्हितान्नाशनासु च । भवन्त्यायोगवीष्वेते जातिहीनाः पृथक् त्रयः । कारावरो निषादात्तु चर्म्मकारः प्रसूयते । वैदेहकादन्ध्रमेदौ वहिर्ग्रामप्रतिश्रयौ । चण्डालात् पाण्डुसोपाकस्त्वक्सारव्यवहारवान् । आहिण्डिको निषादेन वैदेह्यामेव जायते । चण्डालेन तु सोपाको मूलव्यसनवृत्तिमान् । पुक्कस्यां जायते पापः सदा सज्जनगर्हितः । निषादस्त्री तु चण्डालात् पुत्रमन्त्यावसायिनम् । श्मशानगोचरं सूते वाह्यानामपि गर्हितम् । सङ्करे जातयस्त्वेताः पितृमातृप्रदर्शिताः । प्रच्छन्ना वा प्रकाशा वा वेदितव्याः स्वकर्मभिः । सजातिजानन्तरजाः षट् सुता द्विजधर्म्मिणः । शूद्राणान्तु सधर्म्माणः सर्वेऽपध्वंसजाः स्मृताः । तपोवीजप्रभावैस्तु ते गच्छन्ति युगे युगे । उत्कर्षञ्चापकर्षञ्च मनुष्येष्विह जन्मतः । शनकैस्तु क्रियालोपादिमाः क्षत्त्रियजातयः । वृषलत्वं गता लोके ब्राह्मणादर्शनेन च । पौण्ड्रकाश्चौड्रद्रविड़ाः काम्बोजा जवनाः शकाः । पारदाः पह्नवाश्चीनाः किराता दरदाः खसाः । मुखबाहूरुपज्जानां या लोके जातयो वहिः । म्लेच्छवाचश्चार्य्यवाचः सर्वे ते दस्यवः स्मृताः । ये द्विजानामपसदा ये चापध्वंसजाः स्मृताः । ते निन्दितैर्वर्त्तयेयुर्द्विजानामेव कर्म्मभिः । सूतानामश्वसारथ्यमम्बष्ठानां चिकित्सितम् । वैदेहकानां स्त्रीकार्य्यं मागधानां वणिक्पथः । मत्स्यघातो निषादानां त्वष्टिस्त्वायोगवस्य च । मेदान्ध्रचुञ्चुमद्गूनामारण्यपशुहिंसनम् । क्षत्तुग्रपुक्कसानान्तु बिलौकोवधबन्धनम् । धिग्वणानां चर्म्मकार्य्यं वेणानां भाण्डवादनम् । चैत्यद्रुमश्मशानेषु शैलेषूपवनेषु च । वसेयुरेते विज्ञाता वर्त्तयन्तः स्वकर्मभिः । चण्डालश्वपचानान्तु वहिर्ग्रामात् प्रतिश्रयः । अपपात्राश्च कर्त्तव्या धनमेषां श्वगर्दभम् । वासांसि मृतचेलानि भिन्नभाण्डेषु भोजनम् । कार्ष्णायसमलङ्कारः परिव्रज्या च नित्यशः । न तैः समयमन्विच्छेत् पुरुषो धर्म्ममाचरन् । व्यवहारो मिथस्तेषां विवाहः सदृशैः सह । अन्नमेषां पराधीनं देयं स्याद्भिन्नभाजने । रात्रौ न विचरेयुस्ते ग्रामेषु नगरेषु च । दिवा चरेयुः कार्य्यार्थं चिह्निता राजशासनैः । अवान्धवं शवञ्चैव निर्हरेयुरिति स्थितिः । वध्यांश्च हन्युः सततं यथाशास्त्रं नृपाज्ञया । वध्यवासांसि गृह्णीयुः शय्याश्चाभरणानि च । वर्णापेतमविज्ञातं नरं कलुषयोनिजम् । आर्य्यरूपमिवानार्य्यं कर्म्मभिः स्वैर्विभावयेत् । अनार्य्यता निष्ठुरता क्रूरता निष्क्रियात्मता । पुरुषं व्यञ्जयन्तीह लोके कलुषयोनिजम् । पित्र्यं वा भजते शीलं मातुर्वोभयमेव वा । न कथञ्चन दुर्य्योनिः प्रकृतिं स्वां नियच्छति । कुले मुख्येऽपि जातस्य यस्य स्याद्योनिसङ्करः । संश्रयत्येव तच्छीलं नरोऽल्पमपि वा बहु । यत्र त्वेते परिध्वंसा जायन्ते वर्णदूषकाः । राष्ट्रिकैः सह तद्राष्ट्रं क्षिप्रमेव विनश्यति । ब्राह्मणार्थे गवार्थे वा देहत्यागोऽनुपस्कृतः ।

स्त्रीबालाभ्युपपत्तौ च बाह्यानां सिद्धिकारणम् । अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः । एतं सामासिकं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः । शूद्रायां ब्राह्मणाज्जातः श्रेयसा चेत् प्रजायते । अश्रेयान् श्रेयसीं जातिं गच्छत्यासप्तमाद्युगात् । शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम् । क्षत्रियाज्जातमेवन्तु विद्याद्वैश्यात्तथैव च । अनार्य्यायां समुत्पन्नो ब्राह्मणात्तु यदृच्छया । ब्राह्मण्यामप्यनार्य्यात्तु श्रेयस्त्वं क्वेति चेद्भवेत् । जातोनार्य्यामनार्य्यायामार्य्यादार्य्यो भवेद्गुणैः । जातोऽप्यनार्य्यादार्य्यायामनार्य्य इति निश्चयः । तावुभावप्यसंस्कार्य्याविति धर्म्मो व्यवस्थितः । वैगुण्याज्जन्मनः पूर्व्व उत्तरः प्रतिलोमतः । सुबीजञ्चैव सुक्षेत्रे जातं सम्पद्यते यथा । तथार्य्याज्जात आर्य्यायां सर्व्वं संस्कारमर्हति । बीजमेके प्रशंसन्ति क्षेत्रमन्ये मनीषिणः । बीजक्षेत्रे तथैवान्ये तत्रेयन्तु व्यवस्थितिः । अक्षेत्रे बीजमुत्सृष्टमन्तरैव विनश्यति । अबीजकमपि क्षेत्रं केवलं स्थण्डिलं भवेत् । यस्माद्बीजप्रभावेण तिर्य्यग्जा ऋषयोऽभवन् । पूजिताश्च प्रशस्ताश्च तस्माद्बीजं प्रशस्यते । अनार्य्यमार्य्यकर्म्माणमार्य्यं चानार्य्यकर्म्मिणम् । सम्प्रधार्य्याब्रवीद्धाता न समौ नासमाविति ।"

जातिभेदा वृद्धहारीतेनाप्युक्ता यथा

"ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वर्णा यथाक्रमम् । आद्यास्त्रयो द्विजाः प्रोक्तास्तेषां वै मन्त्रसत्क्रियाः । सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः । तेषां सङ्करयोगाच्च प्रतिलोमानुलोमजाः । विप्रान् मूर्द्धावसिक्तस्तु क्षत्रियायामजायत । वैश्यायान्तु तथाम्बष्ठो निषादः शूद्रया तथा । राजन्याद्वैश्याशूद्र्योस्तु माहिष्योग्रौ तु तौ स्मृतौ । शूद्र्यां वैश्यात्तु करणस्त्रिधैवतेऽनुलोमजाः । विप्रायां क्षत्रियात् सूतः वैश्याद्वैदेहकस्तथा । चण्डालस्तु तथा शूद्रात्सर्व्वकर्म्मसु गर्हितः । मागधः क्षत्रियायां वै वैश्यात्, क्षत्ता शूद्रतः । शूद्रादयोगवं वैश्या जनयामास वै सुतम् । रथकारः करण्यान्तु माहिष्येण प्रजायते । असत्सन्ततयो ज्ञेयाः प्रतिलोमानुलोमजाः । प्रतिलोमास्तु वै जाता गर्हिताः सर्व्वकर्म्मसु" ।

उशनसाऽप्युक्ता यथा

"अतः परं प्रवक्ष्यामि जातिवृत्तिविधानकम् । अनुलोमविधानञ्च प्रतिलोमविधिं तथा । सान्तरालकसंयुक्तं सर्व्वं संक्षिप्य चोच्यते । नृपाद्ब्राह्मणकन्यायां विवाहेषु समन्वयात् । जातः सुतोऽत्र निर्द्दिष्टः प्रतिलोमविधिर्द्विजः । वेदानर्हस्तथा चैषां धर्म्माणामनुबोधकः । सूताद्विप्रप्रसूतायां सूतो वेणुक उच्यते । नृपायामेव तस्यैव जातो यश्चर्म्मकारकः । ब्राह्मण्यां क्षत्रियाच्चौर्य्याद्रथकारः प्रजायते । वृत्तञ्च शूद्रवत्तस्य द्विजत्वं प्रतिषिध्यते । यानानां ये च वोढारस्तेषाञ्च परिचारकाः । शूद्रवृत्त्या तु जीवन्ति न क्षात्रं धर्म्ममाचरेत् । ब्राह्मण्यां वैश्यसंसर्गाज्जातो मागध उच्यते । वन्दित्वं ब्राह्मणानाञ्च क्षत्रियाणां विशेषतः । प्रशंसावृत्तिको जीवेद्वैश्यप्रेष्यकरस्तथा । ब्राह्मण्यां शूद्रसंसर्गाज्जातश्चाण्डाल उच्यते । सीसमाभरणं तस्य कार्ष्णायसमथापि वा । वर्ध्रीं कण्ठे समाबध्य झल्लरीं कक्षतोऽपि वा । मलापकर्षणं ग्रामे पूर्व्वाह्णे परिशुद्धिकम् । नापराह्णे प्रविष्टोऽपि बहिर्ग्रामाच्च नैर्ऋते । पिण्डीभूता भवन्त्यत्र नो चेद्वध्या विशेषतः । चाण्डालाद्वैश्यकन्यायां जातः श्वपच उच्यते । श्वमांसभक्षणं तेषां श्वान एव च तद्बलम् । नृपायां वैश्यसंसर्गादायोगव इति स्मृतः । तन्तुवाया भवन्त्येव वसुकांस्योपजीविनः । शीलिकाः केचिदत्रैव जीवनं वस्त्रनिर्म्मिते । आयोगवेन विप्रायां जातास्ताम्रोपजीविनः । तस्यैव नृपकन्यायां जातः सूनिक उच्यते । सूनिकस्य नृपायान्तु जाता उद्बन्धकाः स्मृताः । निर्णेजयेयुर्वस्त्राणि अस्पृश्याश्च भवन्त्यतः । नृपायां वैश्यतश्चौर्य्यात् पुलिन्दः परिकीर्त्तितः । पशुवृत्तिर्भवेत्तस्य हन्युस्तान् दुष्टसत्त्वकान् । नृपायां शूद्रसंसर्गाज्जातः पुक्कश उच्यते । सुरावृत्तिं समारुह्य मधुविक्रयकर्म्मणा । कृतकानां सुराणाञ्च विक्रेता पाचको भवेत् । पुक्कशाद्वैश्यकन्यायां जातो रजक उच्यते । नृपायां शूद्रतश्चौर्य्याज्जातो रञ्जक उच्यते । वैश्यायां रञ्जकाज्जातो नर्त्तको गायको भवेत् । वैश्यायां शूद्रसंसर्गाज्जातो वैदेहकः स्मृतः । अजानां पालनं कुर्य्यान्महिषीणां गवामपि । दधिक्षीराज्यतक्राणां विक्रयाज्जीवनं भवेत् । वैदेहकात्तु विप्रायां जाताश्चर्म्मोपजीविनः । नृपायामेव तस्यैव कुचिकः पाचकः स्मृतः । वैश्यायां शूद्रतश्चौर्य्याज्जातश्चक्री स उच्यते । तैलपिष्टकजीवी तु लवणं भावयन् पुनः । विधिना ब्राह्मणः प्राप्य नृपायान्तु समन्त्रकम् । जातः सुवर्ण इत्युक्तः सानुलोमद्विजः स्मृतः । अथ वर्णक्रियां कुर्व्व-

च्चित्यनैमित्तिकीं क्रियाम् । अश्वं रथं हस्तिनं वा वाहयेद्वा नृपाज्ञया । सैनापत्यञ्च भैषज्यं कुर्य्याज्जीवेत्तु वृत्तिषु । नृपायां विप्रतश्चौर्य्यात् संजातो यो भिषक् स्मृतः । अभिषिक्तनृपस्याज्ञां परिपाल्य स वैद्यकम् । आयुर्वेदमथाष्टाङ्गं तन्त्रोक्तं धर्म्ममाचरेत् । ज्योतिषं गणितं वापि कायिकीं वृत्तिमाचरेत् । नृपायां विधिना विप्राज्जातो नृप इति स्मृतः । नृपायां नृपसंसर्गात् प्रमादाद्‌ गूढ़जातकः । सोऽपि क्षत्त्रिय एव स्यादभिषेकं च वर्जितः । अभिषेकं विना प्राप्तो गोज इत्यभिधानकम् । सर्वन्तु राजवत्तस्य शस्यते पदवन्दनम् । पुनर्भूकरणे राज्ञां नृपकालीन एव च । वैश्यायां विधिना विप्राज्जातो ह्यम्बष्ट उच्यते । कृष्याजीवो भवेत्तस्य तथैवाग्नेयवृत्तिकः । ध्वजिनी जीविका वापि अम्बष्ठाः शस्त्रजीविनः । वैश्यायां विप्रतश्चौर्य्यात् कुम्भकारः स उच्यते । कुलालवृत्त्या जीवेत्तु नापिता वा भवन्त्यतः । सूतके प्रेतके वापि दीक्षाकालेऽथ वापनम् । नाभेरूर्द्धन्तु वपनं तस्मान्नापित उच्यते । कायस्थ इति जीवेत्तु विचरेच्च इतस्ततः । काकाल्लौल्यं यमात् क्रौर्य्यं स्थपतेरथ कृन्तनम् । आद्याक्षराणि संगृह्य कायस्थ इति कीर्त्तितः । शूद्रायां विधिना विप्राज्जातः पारशवो मतः । भद्रकादीन् समाश्रित्य जीवेयुः पूजकाः स्मृताः । शिवाद्यागमविद्याद्यैस्तथामण्डलवृत्तिभिः । तस्यां वै चौरिकावृत्त्या निषादो जात उच्यते । वने दुष्टमृगान् हत्वा जीवनं मांसविक्रयम् । नृपाज्जातोऽथ वैश्यायां गृह्यायां विधिना सुतः । वैश्यवृत्त्या तु जीवेत्तु क्षात्रधर्मं न चाचरेत् । तस्यां तस्यैव चौरेण मणिकारः प्रजायते । मणीनां रचनां कुर्य्यान्मुक्तानां वेधनक्रियाम् । प्रवालानाञ्च सूत्रित्वं शङ्खानां वलयक्रियाम् । शूद्रायां विप्रसंसर्गाज्जात उग्र इति स्मृतः । नृपस्य दण्डधारः स्याद्दण्डं दण्ड्येषु सञ्चरेत् । तस्यैव चौरवृत्त्या जातः शुण्डिक उच्यते । जातिदुष्टान् समारोप्य शुण्डाकर्मणि योजयेत् । शूद्रायां वैश्यसंसर्गाद्विधिना सूचकः स्मृतः । सूचकाद्विप्रकन्यायां जातस्तक्षक उच्यते । शिल्पकर्म्माणि चान्यानि प्रासादलक्षणं तथा । नृपायामेव तस्यैव जातो यो मत्स्यबन्धकः । शूद्रायां वैश्यतश्चौर्य्यात् कटकार इति स्मृतः । वशिष्ठशापात्त्रेतायां केचित् पारशवास्तथा । वैखानसेन केचित्तु केचिद्भागवतेन च । वेदशास्त्रावलम्बास्ते भविष्यन्ति कलौ युगे । कटकारास्ततः पश्चान्नारायणगणाः स्मृताः । शाखा वैखानसेनोक्ता तन्त्रमार्गविधिक्रियाः । निषेकाद्याः श्मशानान्ताः क्रियाः पूजाङ्गसूचिकाः । पञ्चरात्रेण वा प्राप्तं प्रोक्तं धर्मं समाचरेत् । शूद्रादेव तु शूद्रायां जातः शूद्र इति स्मृतः । द्विजशुश्रूषणपरः पाकयज्ञपरान्वितः । सच्छूद्रं तं विजानीयादसच्छूद्रस्ततोऽन्यथा । चौर्य्यात् काकवचो ज्ञेयस्त्वश्वानां तृणवाहकः । एतत् संक्षेपतः प्रोक्तं जातिवृत्तिविभागशः । जात्यन्तराणि दृश्यन्ते संकल्पादित एव तु ।” पराशरोक्तादाशौचजातयस्तत्कल्पे दृश्याः अन्या अपि जातयो ब्रह्मवै० ब्र०ख०१०अ० दर्शिता यथा

“बभुवुर्ब्रह्मणो वक्त्रादन्या ब्राह्मणजातयः । ब्रह्मणो बाहुदेशाच्च जाताः क्षत्त्रियजातयः । ऊरुदेशाच्च वैश्याश्च पादतः शूद्रजातयः । तासां सङ्करजातेन बभूवुर्वर्णसङ्कराः । गोपनापिततौलाश्च तथा मोदकमूलवौ । ताम्बूलिपर्णकारौ च तथा बणिजजातयः । इत्येवमाद्या विप्रेन्द्र ! सच्छूद्राः परिकीर्त्तिताः । शूद्राविशोस्तु करणोऽम्बष्ठो वैश्याद्विजन्मनोः । विश्वकर्म्मा च शूद्रायां वीर्य्याधानं चकार सः । ततो बभूवुः पुत्राश्च नवैते शिल्पकारिणः । मालाकारः कर्मकारः शङ्खकारः कुविन्दकः । कुम्भकारः कंसकारः षडेते शिल्पिनां वराः । सूत्रधारश्चित्रकरः स्वर्णकारस्तथैव च । पतितास्ते ब्रह्मशापाद्याज्या वर्णसङ्कराः । स्वर्णकारः स्वर्णचौर्य्यात् ब्राह्मणानां द्विजोत्तम ! । बभूव सद्यः पतितो ब्रह्मशापेन कर्मणा । सूत्रधारो द्विजातीनां शापेन पतितो भुवि । शीघ्रञ्च यज्ञकाष्ठञ्च न ददौ तेन हेतुना । व्यतिक्रमेण चित्राणां सद्यश्चित्रकरस्तथा । पतितो ब्रह्मशापेन ब्राह्मणानाञ्च कोपतः । कश्चिद्‌ बणिक्‌विशेषश्च संसर्गात् स्वर्णकारिणः । स्वर्णचौर्य्यादिदोषेण पतितो ब्रह्मशापतः । कुलटायाञ्च शूद्रायां चित्रकारस्य वीर्य्यतः । बभूवाट्टालिकाकारः पतितो जारदोषतः । अट्टालिकाकारवीर्य्यात् कुम्भकारस्य योषिति । बभूव कोटिकः सद्यः पतितो गृहकारकः । कुम्भकारस्य वीर्य्येण सद्यः कोटिकयोषिति । बभूव तैलकारश्च कुटिलः पतितो भुवि । सद्यः क्षत्त्रियवीर्य्येण राजपुत्रस्य योषिति । बभूव तीवरश्चैव पतितो जारदोषतः । तीवरस्य तु वीर्य्येण तैलकारस्य योषिति । बभूव पतितो दस्युर्लेटश्च परिकीर्त्तितः । लेटस्तीवरकन्यायां जनयामास षण्नरान् । मल्लं मल्लं माठरञ्च भड़ं कोलञ्च कन्दरम् । ब्राह्मण्यां शूद्रवीर्य्येण पतितो

जारदोषतः । सद्यो बभूव चाण्डालः सर्व्वस्मादधमोऽशुचिः । तीवरेणैव चाण्डाल्यां चर्म्मकारो बभूव ह । चर्म्मकार्य्याञ्च चाण्डालात् मांसच्छेदी बभूव ह । मांसच्छेद्यां तीवरेण कोँचश्च परिकीर्त्तितः । कोँचस्त्रियान्तु कैवर्त्तात् कार्त्तारः परिकीर्त्तितः । सद्यश्चाण्डालकन्यायां लेटवीर्य्येण शौनक ! । बभूवतुस्तु द्वौ पुत्रौ हड्डिकशौण्डिकौ तथा । क्रमेण हड्डिकन्यायां सद्यश्चाण्डालवीर्य्यतः । बभूवुः पञ्च पुत्राश्च दुष्टा वनचराश्च ते । लेटात्तीवरकन्यायां गङ्गातीरे च शौनक ! । बभूव सद्यो यो बालो गङ्गापुत्रः प्रकीर्त्तितः । गङ्गापुत्रस्य कन्यायां वीर्य्येण वेशधारिणः । बभूव वेशधारी च पुत्रो युङ्गी प्रकीर्त्तितः । वैश्यात्तीवरकन्यायां सद्यः शुण्डी बभूव ह । शुण्डीयोषिति वैश्यात्तु पौण्ड्रकश्च प्रकीर्त्तितः । क्षत्रात् करणकन्यायां राजपुत्रो बभूव ह । राजपुत्र्यान्तु करणादागरीति प्रकीर्त्तितः । क्षत्रवीर्य्येण वैश्यायां कैवर्त्तः परिकीर्त्तितः । कलौ तीवरसंसर्गाद्धीवरश्च प्रकीर्त्तितः । तीवर्य्यां धीवरात् पुत्रो बभूव रजकः स्मृतः । रजक्यां तीवराच्चापि कोयाली च बभूव ह । नापिताद्गोपकन्यायां सर्व्वस्वी तस्य योषिति । क्षत्राद्बभूव व्याधश्च बलवान् मृगहिंसकः । तीवरात् शुण्डिकन्यायां बभूवुः सप्तपुत्रकाः । ते कलौ हड्डिसंसर्गाद्बभूवुर्दस्यवः सदा । ब्राह्मण्यामृषिवीर्य्येण ऋतोः प्रथमवासरे । कुत्सितस्योदरे जातः कूदरस्तेन कीर्त्तितः । तदशौचं विप्रतुल्यं पतितोह्यृतुदोषतः । सद्यः कोटिकसंसर्गादधमो जगतीतले । क्षत्रवीर्य्येण वैश्यायामृतोः प्रथमवासरे । जातः पुत्रो महादस्युर्बलवांश्च धनुर्द्धरः । चकार वागतीतञ्च क्षत्रियो वारितस्तया । तेन जात्या स पुत्रश्च वागतीतः प्रकीर्त्तितः । क्षत्रवीर्य्येण शूद्रायामृतुदोषेण पापतः । बलवन्तो दुरन्ताश्च बभूवुर्म्लेच्छजातयः । अविद्धकर्णाः क्रूरा निर्भया रणदुर्ज्जयाः । शौचाचारविहीनाश्च दुर्द्धर्षा धर्म्मवर्ज्जिताः । म्लेच्छात् कुविन्दकन्यायां शराकः परिकीर्त्तितः । वर्णसङ्करदोषेण बह्व्यश्च शठजातयः । तासां नामानि संख्याश्च को वा वक्तुं द्विज ! क्षमः । वैद्योऽश्विनीकुमारेण जातश्च विप्रयोषिति । वैद्यवीर्य्येण शूद्रायां बभूवुर्बहवो जनाः । ते च ग्राम्यगुणज्ञाश्च मन्त्रौषधिपरायणाः । तेभ्यश्च जाताः शूद्रायां ते व्यालग्राहिणो भुवि"।

षोड़शपदार्थमध्ये जातिरूपपदार्थभेदश्च गौ॰ सू॰ उक्तो यथा "साधर्म्म्यवैधर्म्म्याभ्यां प्रत्यवस्थानं जातिः" सू॰। विवृतञ्चैतत् विश्वनाथेन । "क्रमप्राप्तां जातिं लक्षयति । साधर्म्म्यवैधर्म्म्याभ्यामिति सावधारणो निर्द्देशस्तेन व्याप्तिनिरपेक्षाभ्यां साधर्म्म्यवैधर्म्म्याभ्यां प्रत्यवस्थानं दूषणाभिधानं जातिरित्यर्थः यद्यप्युभाभ्यां प्रत्यवस्थानस्य प्रत्येकप्रत्यवस्थानेऽव्याप्तिरेकप्रत्यवस्थानस्य लक्षणत्वे परप्रत्यवस्थानेऽव्याप्तिर्न्नवान्यतरप्रत्यवस्थानं नियतं सर्व्वत्र जात्यभावात्तथापि व्याप्तिनिरपेक्षतया दूषणाभिधानमित्येव वाच्यं तेन च सन्दर्भेण दूषणासमर्थत्वं स्वव्याघातकत्वं वा दर्शितं तथा च छलादिभिन्नदूषणासमर्थमुत्तरं स्वव्याघातकमुत्तरं वा जातिरिति सूचितं साधर्म्म्यसमादिचतुर्विंशत्यन्यान्यत्वं तदर्थ इत्यपि वदन्ति"।

तद्भेदाश्चतुर्विंशतिस्ते च गौतमेन दर्शिता यथा

"साधर्म्म्यवैधर्म्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्य्यसमाः" सू॰

"तत्र च विशेषलक्षणार्थं जातिं विभजते" वृ॰ ।

अत्र च साधर्म्म्यादीनां कार्य्यान्तानां द्वन्द्वे तैः समा इत्यर्थात् साधर्म्म्यसमादयश्चतुर्विंशतिर्जातय इत्यर्थः अत्र च जातेर्विशेष्यत्वात् समाशब्दं मन्यन्ते भाष्यवार्त्तिकादौ समाशब्दः अग्रिमसूत्रेषु तु समशब्दो निर्विवाद एव तत्र जातिशब्दस्य स्त्रीलिङ्गतया यद्यपि नान्वयस्तथापि प्रतिषेधो विशेष्य इति भाष्यादयः । वयन्तु तद्विकल्पादिति सूत्रस्थविकल्पस्यैव विशेष्यत्वं विविधः कल्पः प्रकारो विकल्पः तथा चैते साधर्म्म्यसमादयो जातिविकल्पा एवमग्रिमसूत्रेष्वपि । इत्यञ्च जातिविशेषत्वे साधर्म्म्यसमेत्यपीति ब्रूमः समीकरणार्थं प्रयोगः सम इति वार्त्तिकं यद्यपि नैतावता समीकरणं तथापि समीकरणोद्देश्यकत्वमस्त्येव अथ वा साधर्म्म्येण समं यत्र स साधर्म्म्यसमः एकत्र व्याप्तेराधिक्येऽपि साधर्म्म्यं सममेवेति भावः" वृत्तिः

"साधर्म्म्यवैधर्म्म्याभ्यामुपसंहारे तद्धर्म्मविपर्य्ययोपपत्तेः साधर्म्म्यवैधर्म्म्यसमौ" ॥२ सू॰ ।

"साधर्म्म्यवैधर्म्म्यसमौ लक्षयति । उपसंहारे साध्यस्योपसंहरणे वादिना कृते तद्धर्म्मस्य साध्यरूपधर्म्मस्य यो विपर्य्ययो व्यतिरेकस्तस्य साधर्म्म्यवैधर्म्म्याभ्यां केवलाभ्यां व्याप्त्यनपेक्षाभ्यां यदुपपादनं ततो हेतोः साधर्म्म्यवैधर्म्म्यसमावुच्येते तदयमर्थः वादिना अन्वयेन व्यतिरेकेण वा साध्ये साधिते प्रतिवादिनः साधर्म्म्यमात्रप्रवृत्ते

तदभावापादनं साधर्म्यसमा१ वैधर्म्यमात्रप्रवृत्तहेतुना तदभावापादनं वैधर्म्यसमा२। तत्र साधर्म्यसमा यथा शब्दोऽनित्यः कृतकत्वाद्घटवत् व्यतिरेकेण वा व्योमवदित्युपसंहृते नैतदेवं यद्यनित्यघटसाधर्म्यान्नित्याकाशवैधर्म्याद्वाऽनित्यः स्यान्नित्याकाशसाधर्म्यादमूर्त्तत्वान्नित्यः स्याद्विशेषो वा वक्तव्यः वैधर्म्यसमा यथा शब्दोऽनित्यः कृतकत्वाद्घटवत् आकाशवद्वेति स्थापनायाम् अनित्यघटवैधर्म्यादमूर्त्तत्वान्नित्यः स्याद्विशेषो वा वक्तव्य इति अत्र साधर्म्यत्वमात्रं वैधर्म्यत्वमात्रं वा गमकतौपयिकमित्यभिमानात् सत्प्रतिपक्षदेशनाभासे चेमे अनैकान्तिकदेशनाभासे इति वार्त्तिके त्वनैकान्तिकपदं योगात्सत्प्रतिपक्षपरं एकान्ततः साध्यसाधकत्वाभावात्" वृत्तिः।

"गोत्वाद्गोसिद्धिवत् तत्सिद्धिः" सू०।

"अनयोरसदुत्तरत्वे बीजमाह। गोत्वात् गोसिद्धिर्गौर्व्यवहार इति सम्प्रदायः वयन्तु गोत्वमितरासमवेतत्वे सति गोसमवेतात्मासाद्यादितः, एतेन व्याप्तिपक्षधर्म्मत्वे दर्शिते गोर्गोत्वस्य तादात्म्येन गोरेव वा सिद्धिर्यथा तथैव कृतकत्वादपि व्याप्तिपक्षधर्म्मतासहितादनित्यत्वसिद्धिर्नतु व्याप्तिपक्षधर्मतारहितात् साधर्म्यमात्रात्, तथा सति अदूषकसाधर्म्यात्प्रमेयत्वादितस्तद्वचनमप्यदूषकं स्यादित्ययं विशेषः" वृत्तिः।

"साध्यदृष्टान्तयोर्धर्म्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः" ३।४।५।६।७।८ सू०

"क्रमप्राप्तं जातिषट्कं निरूपयति। उत्कर्षेण सम उत्कर्षसमः३एवमपकर्षसमोऽपि४ वर्ण्यावर्ण्यसाध्येति भावप्रधानो निर्देशः वर्ण्यत्वादिना समो वर्ण्यसमादिः ५।६।७।८। अविद्यमानधर्म्मारोप उत्कर्षः विद्यमानधर्म्मापचयोऽपकर्षः वर्ण्यत्वं वर्णनीयत्वं तच्च सन्दिग्धसाध्यकत्वादि तदभावोऽवर्ण्यत्वं विकल्पो द्वैविध्यं साध्यत्वं पञ्चावयवसाधनीयत्वं साध्यदृष्टान्तयोधर्मविकल्पादिति पञ्चानामुत्थानबीजम् उभयसाध्यत्वादिति षष्ठस्य। तदयमर्थः साध्यतेऽत्रेति साध्यं पक्षः तथा च साध्यदृष्टान्तयोरित्यस्य पक्षदृष्टान्तयोरन्यतरस्मिन्नित्यर्थः धर्मविकल्पो धर्म्मस्य वैचित्र्यं तच्च क्वचित्सत्त्वं क्वचिदसत्त्वं प्रकृते साध्यसाधनान्यतररूपस्य धर्मस्य विकल्पात्सत्त्वाद्योऽविद्यमानधर्म्मारोपः स उत्कर्षसमः व्याप्तिमपुरस्कृत्य पक्षदृष्टान्तान्यतरस्मिन् साध्यसाधनान्यतरेणाविद्यमानधर्मप्रसञ्जनं उत्कर्षसमः३ इति फलितार्थः। यथा शब्दोऽनित्यः कृतकत्वादिति स्थापनायाम् अनित्यत्वं कृतकत्वं घटे रूपसहचरितमतः शब्दोऽपि रूपवान् स्यात् तथा च विवक्षितविपरीतसाधनाद्विशेषविरुद्धो हेत्वाभासा चेयम्। एवं श्रावणशब्दसाधर्म्यात् कृतकत्वाद्घटोऽपि श्रावणः स्यादविशेषात्। वस्तुतस्तु घटे श्रावणत्वापादनेऽर्थान्तरमत उक्तलक्षणे दृष्टान्तपदं साध्यपदञ्च न देयम्। अपकर्षसमायान्तु धर्मविकल्पः धर्मस्य सहचरितधर्मस्य विकल्पोऽसत्त्वं ततः अपकर्षः साध्यसाधनान्यतरस्याभावप्रसञ्जनं तथा च पक्षदृष्टान्तान्यतरस्मिन् व्याप्तिमपुरस्कृत्य सहचरितधर्म्माभावेन हेतुसाध्यान्यतराभावप्रसञ्जनमपकर्षसमः४ यथा शब्दोऽनित्यः कृतकत्वादित्यत्र यद्यनित्यसहचरितघटधर्म्मात् कृतकत्वादनित्यः शब्दस्तदा कृतकत्वानित्यत्वसहचरितघटधर्मरूपवत्त्वव्यावृत्त्या शब्दे कृतकत्वस्यानित्यत्वस्य च व्यावृत्तिः स्यात्। आद्येऽसिद्धिदेशना द्वितीये बाधदेशना, एवं शब्दे कृतकत्वसहचरितश्रावणत्वस्य संयोगादावनित्यत्वकृतकत्वसहचरितगुणत्वस्य च व्यावृत्त्या घटेऽनित्यत्वं कृतकत्वञ्च व्यावर्त्तेतेति दृष्टान्ते साध्यसाधनवैकल्यदेशनाभासाऽपीयम्। यत्तु वार्त्तिके शब्दो नीरूप इति घटोऽपि नीरूपः स्यादित्यपकर्ष इति, तदसत् घटे नीरूपत्वापादनस्यार्थान्तरत्वात् आचार्य्यस्वरसोऽप्येवं यत्तु वैधर्म्यसमाया अत्रैवान्तर्भावः स्यादिति तन्न उपधेयसङ्करेऽप्युपाधेरसङ्करात् वर्ण्यसमायान्तु साध्यः सिद्धाभाववान् सन्दिग्धसाध्यकादिर्वा तस्य धर्मः सन्दिग्धसाध्यकादिवृत्तिहेतुस्तस्य विकल्पात्सत्त्वात् दृष्टान्ते वर्ण्यत्वस्य सन्दिग्धसाध्यकत्वस्यापादनं वर्ण्यसमः५। तदयमर्थः पक्षवृत्तिहेतुर्हि गमकः पक्षश्च सन्दिग्धसाध्यकस्तथा च सन्दिग्धसाध्यकवृत्तिर्हेतुस्तथा दृष्टान्तेऽपि स्वीकार्य्यः तथा च दृष्टान्तस्यापि सन्दिग्धसाध्यकत्वात् सपक्षवृत्तित्वानिश्चयादसाधारणो हेतुस्तद्देशनाभासा चेयम्। हेतुः सन्दिग्धसाध्यकवृत्तिर्यदि न दृष्टान्ते तदा गमकहेत्वभावात् साधनविकल्पो दृष्टान्तः स्यादिति भावः। अवर्ण्यसमायान्तु दृष्टान्ते सिद्धसाध्यके यो धर्म्मो हेतुस्तस्य सत्त्वात् पक्षे शब्दादावसन्दिग्धसाध्यकत्वापादनमवर्ण्यसमा६ दृष्टान्ते हेतोर्यादृशत्वं तादृशो हेतुरेव गमक इत्यभिमानेन एवमापादनं दृष्टान्ते यो हेतुः सिद्धसाध्यकवृत्तिः स चेन्न पक्षे तदा गमकहेत्वभावात् स्वरूपासिद्धिः स्यादतस्तादृशो हेतुरवश्यं पक्षत्वाभिमते स्वीकार्य्यः तथा च सन्दिग्धसाध्यकत्वलक्षणपक्षत्वाभावा-

टान्वयासिद्धिः असिद्धिदेशनाभासा चेयम् । विकल्पसमायान्तु पक्षे दृष्टान्ते च यो धर्मस्तस्य विकल्पो विरुद्धः कल्पो व्यभिचारित्वम् उपलक्षणं चैतत् अन्यवृत्तिधर्मस्यापि बोध्यं व्यभिचारोऽपि हेतोर्धर्मान्तरं प्रति धर्मान्तरस्य साध्यं प्रति धर्मान्तरस्य धर्मान्तरं प्रति वा तथा च कस्यचिद्धर्मस्य क्वचिद्व्यभिचारदर्शनेन धर्मत्वाविशेषात् प्रकृतहेतोः प्रकृतसाध्यं प्रति व्यभिचारापादनं विकल्पसमा७ यथा शब्दोऽनित्यः कृतकत्वादित्यत्र कृतकत्वस्य गुरुत्वव्यभिचारदर्शनाद्गुरुत्वस्यानित्यत्वव्यभिचारदर्शनादनित्यत्वस्य मूर्त्तत्वव्यभिचारदर्शनाद्धर्मत्वाविशेषात् कृतकत्वमप्यनित्यत्वं व्यभिचरेदित्यनैकान्तिकदेशनाभासा चेयम् । पक्षदृष्टान्तादेः प्रकृतसाध्यतुल्यतापादनं स साध्यसमा८ तत्रायमाशयः एतत्प्रयोगसाध्यस्यैवानुमितिविषयत्वं तथा च पक्षादेरनुमितिविषयत्वात् साध्यवदेतत्प्रयोगसाध्यत्वम् अतः साध्यसमा । तथा हि पक्षादेः पूर्वं सिद्धत्वे एतत्प्रयोगसाध्यत्वाभावान्नानुमितिविषयत्वं पूर्वमसिद्धत्वे पक्षादेरज्ञानादाश्रयासिद्ध्यादयस्तद्देशनाभासा चेयम् । सूत्रे हेतु उभयसाध्यत्वात् उभयं पक्षदृष्टान्तौ तद्धर्मौ हेत्वादिः तत्साध्यत्वं तद्धर्मानानुमितिविषयत्वं साध्यस्येव पक्षादेरपीति तुल्यतापादनमिति 'लक्षणापहृतभानमते लिङ्गस्याप्यनुमितिविषयत्वात् साध्यसमत्वं हेतोश्च साध्यत्वे हेतुमान्दृष्टान्तोऽपि साध्य इत्याशयः" वृत्तिः ।

"किञ्चित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः" सू०।

"एतासामसदुत्तरत्वे बीजमाह किञ्चित्साधर्म्यात् साधर्म्यविशेषात् व्याप्तिसहितात् उपसंहारसिद्धेः साध्यसिद्धेः वैधर्म्यात्तद्विपरीतात् व्याप्तिनिरपेक्षात् साधर्म्यमात्रात् भवता कृतः प्रतिषेधो न सम्भवतीत्यर्थः । अन्यथा प्रमेयत्वरूपासाधकसाधर्म्यात् तद्दूषणमप्यसम्यक् स्यादिति भावः । तथा चायं क्रमः अनित्यत्वव्याप्यात् कृतकत्वात् शब्देऽनित्यत्वमुपसंहरामो न तु कृतकत्वं रूपस्यापि व्याप्यं येन तेन रूपमप्यापादनीयं शब्दे, एवं अनित्यत्वं न रूपव्याप्यं येन रूपाभावादनित्यत्वाभावः शब्दे स्यात् एवं वर्ण्यसमेऽपि किञ्चित्साधर्म्यात् व्याप्यतावच्छेदकावच्छिन्नाद्धेतोः साध्यसिद्धिः तादृशहेतुमत्त्वञ्च दृष्टान्तताप्रयोजकं न तु पक्षे यावद्विशेषणावच्छिन्नो हेतुस्तावदवच्छिन्नहेतुमत्त्वम् अन्यथा त्वयाऽपि दूषणीयो दृष्टान्तो कर्त्तव्यः सोऽपि न स्यात् एवमवर्ण्यसमेऽपि व्याप्यतावच्छेदकावच्छिन्नस्य दृष्टान्तदृष्टस्य पक्षे सत्त्वात्साध्यसिद्धिर्न तु दृष्टान्तवृत्तियावद्धर्मावच्छिन्नस्य पक्षे सत्त्वम् । एवं विकल्पसमेऽपि प्रकृतसाध्यव्याप्यात् प्रकृतहेतोः साध्यसिद्धिस्तद्वैधर्म्यात् यत्किञ्चिद्व्यभिचारात् कृतः प्रतिषेधो न सम्भवति नहि यत्किञ्चिद्व्यभिचारादेव प्रकृतहेतोः प्रकृतसाध्यासाधकत्वमतिप्रसङ्गात् । एवं साध्यसमेऽपि व्याप्याद्धेतोः सिद्धे पक्षे साध्यसिद्धिर्न तु पक्षदृष्टान्तादेरप्यनेन साध्यत्वे तथा सति क्वचिदपि साध्यसिद्धिर्न स्यात् त्वदीयदूषणमपि विलीयेत" वृत्तिः ।

"साध्यातिदेशाच्च दृष्टान्तोपपत्तेः" सू०।

"वर्ण्यावर्ण्यसाध्यसमासु समाधानान्तरमप्याह दृष्टान्तोपपत्तिर्दृष्टान्ततोपपत्तिः साध्यातिदेशात् दृष्टान्ते हि साध्यमतिदिश्यते तावतैव दृष्टान्तत्वमुपपद्यते न त्वशेषो धर्मः पक्षदृष्टान्तयोरभेदापत्तेः पक्षादेरपि साध्यसमत्वमतेन प्रत्युक्तं दृष्टेऽन्तो दृष्टान्तः पक्षः तस्माद्वह्निमानित्यतः पक्षोत्कीर्त्तनात्तथा च साध्यस्यातिदेशात् साधनात् पक्ष इत्युच्यते न तु पक्षोऽपि साध्यतेऽतिप्रसङ्गादिति भावः" वृत्तिः ।

"प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्या अविशिष्टत्वादप्राप्त्या असाधकत्वाच्च प्राप्त्यप्राप्तिसमौ" ५।१।७ सू० ।

"क्रमप्राप्तौ प्राप्त्यप्राप्तिसमौ लक्षयति । हेतोरिति साधकत्वमिति शेषः प्राप्तिपक्षे दूषणमाह प्राप्त्या अविशिष्टत्वा इति द्वयोरपि प्राप्तत्वाविशेषे तु किं कस्य साधकं अप्राप्तिपक्षे दोषमाह अप्राप्त्या इति अप्राप्तस्य साधकत्वेऽतिप्रसङ्गात् साधकत्वञ्चात्र कारकज्ञापकसाधारणम् एवञ्च कारकज्ञापकलक्षणं साधनं कार्यज्ञाप्यलक्षणेन साध्येन सम्बद्धं सत्साधकं चेत्तदा सत्त्वाविशेषान्न कार्यकारणभावः तत्सम्बन्धस्य प्रागेव ज्ञातत्वान्न ज्ञाप्यज्ञापकभावः प्राप्तयोर्न जन्यजनकभावः प्राप्तत्वेन लवणोदकयोरिवाभेदादित्याशय इत्यन्ये । तथा च प्राप्त्या अविशेषादनिष्टापादनेन प्रत्यवस्थानं प्राप्तिसमा९ । यदि चाप्राप्तं लिङ्गं साध्यबुद्धिं जनयति साध्याभावबुद्धिमेव किन्तेन न जनयेत् अप्राप्तत्वाविशेषात् तथा चाप्राप्त्या असाधकत्वादनिष्टापादनमप्राप्तिसमा१० प्रतिकूलतर्कदेशनाभासे चेमे" वृत्तिः ।

"घटादिनिष्पत्तिदर्शनात् पीड़ने चाभिचारादप्रतिषेधः" सू०।

"अनयोरसदुत्तरत्वे बीजमाह । दण्डादितो घटादिनिष्पत्तेर्दर्शनात् सर्वलोकप्रत्यक्षसिद्धत्वादभिचारात् श्येनादितः शत्रुपीड़ने च व्यभिचाराच्च त्वदुक्तः प्रतिषेधः

सम्भवति न हि कार्यं दण्डादि प्रागेव घटादिना सम्बद्धमपि तु मृदादिना, श्येनादिरप्युद्देश्यतया पीडां जनयति अन्यथा लोकवेदसिद्धकार्यकारणभावोच्छेदे त्वदुक्तो हेतुरप्यसाधकः स्यादिति" वृत्तिः ।

"दृष्टान्तस्य कारणानपदेशात् प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ" ११।१२ सू० ।

"क्रमप्राप्ते प्रसङ्गप्रतिदृष्टान्तसमे जातौ लक्षयति। दृष्टान्तस्य कारणं प्रमाणं तदनपदेशोऽनभिधानम् अभिधानं चानतिप्रयोजनकं तथा च दृष्टान्तस्य साध्यकत्वे प्रमाणाभावात् प्रत्यवस्थानमर्थः यद्यपीदं सदुत्तरमेव तथापि दृष्टान्ते प्रमाणं वाच्यं तत्रापि प्रमाणान्तरमित्यनवस्थायाः प्रत्यवस्थाने तात्पर्यं तदुक्तमाचार्यैः "अनवस्थाभासप्रसङ्गः प्रसङ्गसमः" इति एतन्मते हेतोर्हेत्वन्तरमित्यनवस्थायामपि प्रसङ्गसमा एव। परमते तु हेत्वनवस्थादिकं तस्याकृतिगणत्वेनान्तर्भूतमिति विशेषः। अनवस्थादेशनाभासा चेयम्। प्रतिदृष्टान्तसमः प्रत्येतव्यः प्रतिदृष्टान्तेन प्रत्यवस्थानात् प्रतिदृष्टान्तसमः१२ एतच्च सावधारणं तेन प्रतिदृष्टान्तमात्रबलेन प्रत्यवस्थानमर्थः तेन साधर्म्यसमाव्युदासः यदि घटदृष्टान्तबलेनानित्यः शब्दः आकाशदृष्टान्तबलेन नित्य एव स्यात् नित्यः किं न स्यादिति बाधः प्रतिरोधापादनीयः हेतुरनङ्गं दृष्टान्तमात्रबलादेव साध्यसिद्धिरित्यभिमानः बाधप्रतिरोधान्यतरदेशनाभासा चेयम्" वृत्तिः ।

"प्रदीपादानप्रसङ्गनिवृत्तिवत्तद्विनिवृत्तिः" सू० ।

"प्रसङ्गसमे प्रत्युत्तरमाह। दृष्टान्तो हि निदर्शनस्थानत्वेन साध्यनिश्चयार्थमपेक्ष्यते न तु दृष्टान्तदृष्टान्ताद्यनवस्थितपरम्परा लोकसिद्धा युक्तिसिद्धा वा। अन्यथा घटादिप्रत्ययाय प्रदीप इव प्रादीपप्रत्ययार्थमनवस्थितप्रदीपपरम्परा प्रसज्येत त्वदीयसाधनमपि व्याहन्येत" वृत्तिः।

"प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टान्तः" सू० ।

"प्रतिदृष्टान्तसमे प्रत्युत्तरमाह। अत्रायमुत्तरक्रमः प्रतिदृष्टान्तस्त्वया किमर्थमुपादीयते मदीयहेतोर्बाधार्थं सत्प्रतिपक्षितत्वार्थं वा नाद्यः यतः प्रतिदृष्टान्तस्य हेतुत्वे स्वार्थसाधकत्वे मदीयो दृष्टान्तो नाहेतुः नासाधकस्तथा चातुल्यबलत्वान्न बाधः न वा द्वितीयोऽपि यतः प्रतिदृष्टान्तस्य स्वार्थसाधकत्वे उच्यमाने नाहेतुर्दृष्टान्तः मदीयो दृष्टान्तस्तु सहेतुकत्वादधिकबलः वस्तुतो हेतुं विना दृष्टान्तमात्रेण न सत्प्रतिपक्षसम्भावना तदभावव्याप्यवत्ताज्ञानाभावात् हेतूपादाने तु सदुत्तरत्वमेवेति भावः इति" वृत्तिः ।

"प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः" १३ सू० ।

"क्रमप्राप्तमनुत्पत्तिसमं लक्षयति। प्रागुत्पत्तेरिति साधनाङ्गस्येति शेषः कारणाभावात् हेत्वभावात् तथा च साधनाङ्गपक्षहेतुदृष्टान्तानामुत्पत्तेः प्राक् हेत्वभाव इत्यनुत्पत्त्या प्रत्यवस्थानमनुत्पत्तिसमः१३ यथा घटो रूपवान् गन्धात् पटवदित्युक्ते घटोत्पत्तेर्गन्धोत्पत्तेश्च पूर्वं हेत्वभावादसिद्धिः पटे च गन्धोत्पत्तेः पूर्वं हेत्वभावेन दृष्टान्तासिद्धिः एवं आद्यक्षणे रूपाभावाद्बाधश्च अनुत्पत्त्या प्रत्यवस्थानस्य तत्रापि सत्त्वात् उत्पत्तेः पूर्वं हेत्वाद्यभावेन प्रत्यवस्थानस्यैव लक्षणत्वात् जातित्वे सतीति च विशेषणीयं तेनोत्पत्तिकालावच्छिन्नो घटो गन्धवानित्यत्र बाधेन प्रत्यवस्थाने नातिव्याप्तिः असिद्ध्यादिदेशनाभासा चेयम्" वृत्तिः ।

"तथाभावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेधः" सू०

"अत्रोत्तरमाह। उत्पन्नस्य तथाभावात् घटाद्यात्मकत्वात् तत्र कारणस्य हेतोरुपपत्तेः सत्त्वात् कथं कारणप्रतिषेधः। अयमाशयः पक्षे हेत्वभावाऽसिद्धिः नत्वनुत्पन्ने हेत्वभावः सम्भवति अधिकरणाभावात् न हि हेत्वभावमात्रासिद्धिः त्वदीयहेतोरपि क्वचिदभावसत्त्वात् एतेन दृष्टान्तासिद्धिर्व्याख्याता यदा कदाचिद्धेतुसत्त्वेनैव दृष्टान्तत्वोपपत्तेः एवं हेत्वादीनां यदा कदाचित्पक्षे सत्त्वादेव हेत्वादिभावो न तु सार्वत्रिकी तदपेक्षेति" वृत्तिः ।

"सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात् संशयसमः" १४ सू० ।

"क्रमप्राप्तं संशयसमं लक्षयति। नित्यानित्यसाधर्म्यादिति संशयकारणोपलक्षणं तेन समानधर्मदर्शनादियत्किञ्चित्संशयकारणबलात् संशयेन प्रत्यवस्थानं संशयसमः१४ अधिकमुदाहरणपरं तथा हि शब्दोऽनित्यः कार्यत्वाद्घटवदित्युक्ते सामान्ये गोत्वादौ दृष्टान्ते घटे ऐन्द्रियकत्वं तुल्यं यथा कार्यत्वान्निर्णायकादनित्यत्वं निर्णीयते तथा ऐन्द्रियकत्वात् संशयकारणादनित्यत्वं सन्दिह्यताम् एवं शब्दत्वाद्यसाधर्म्यदर्शनादपि संशयो बोध्यः तथा च हेतुज्ञानेऽप्रामाण्यशङ्काधानद्वारा साध्यसंशयात् सत्प्रतिपक्षदेशनाभासेयम्" वृत्तिः ।

"साधर्म्यात् संशये न संशयो वैधर्म्यादुभयथा वा संशयोऽत्यन्तसंशयप्रसङ्गो नित्यत्वानभ्युपगमाच्च सामान्यस्या-

प्रतिषेधः" गौतमसूत्रस्य पञ्चमाध्याये आह्निकस्थसूत्रम्।

"अत्रोत्तरम्। साधर्म्यात्साधर्म्यदर्शनात् संशय आपाद्यमानेऽपि न संशयो वैधर्म्याद्वैधर्म्यदर्शनात् यदि च कार्य्यत्वरूपविशेषदर्शनेऽपि संशयस्तदाऽत्यन्तसंशयप्रसङ्गः संशयानुच्छेदप्रसङ्गः न च तथाऽभ्युपगन्तुं शक्यमित्याह नित्यत्वेति समान्यस्य सामानधर्मदर्शनस्य नित्यत्वानभ्युपगमात् नित्यसंशयजनकत्वानभ्युपगमात्तथा सति त्वदीयहेतुरपि न परपक्षप्रतिषेधकः स्यादिति भावः। सामान्यस्य गोत्वादेर्नित्यत्वानभ्युपगमात् नित्यत्वानभ्युपगमप्रसङ्गात् तत्रापि साधारणधर्मप्रमेयत्वादिना संशय एव स्यादिति केचित्" वृत्तिः।

"उभयसाधर्म्यात् प्रक्रियासिद्धेः प्रकरणसमः१५" सू०।

"क्रमप्राप्तं प्रकरणसमं लक्षयति। उभयसाधर्म्यात् प्रकर्षेण क्रिया अन्वयसहचाराद्व्यतिरेकसहचाराद्वा प्रक्रिया तत्साधनं विपरीतसाधनमिति फलितार्थः तत्सिद्धेस्तस्य पूर्वमेव सिद्धेः तथाचाधिकबलत्वेनारोपितप्रमाणान्तरेण बाधेन प्रत्यवस्थानं प्रकरणसमः १५ यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते नैतदेवं श्रावणत्वेन नित्यत्वसाधकेन बाधात् बाधदेशनाभासा चेयम्" वृत्तिः।

"प्रतिपक्षात् प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः" सू०।

"अत्रोत्तरमाह। प्रतिपक्षाद्विपरीतसाध्यसाधकत्वेनाभिमताच्छ्रावणत्वादितः प्रकरणसिद्धिद्वारा मदीयसाध्यस्य यः प्रतिषेधः त्वया क्रियते तस्यानुपपत्तिः कुतः प्रतिपक्षोपपत्तेः त्वत्पक्षापेक्षया प्रतिपक्षस्य मदीयपक्षस्योपपत्तेः साधनात्। अयमाशयः श्रावणत्वेन पूर्वं नित्यत्वस्य साधनाद्यो बाध उच्यते स नोपपद्यते पूर्वं साधितस्य बलवत्त्वाभावात् कदाचित्कृतकत्वेनानित्यत्वस्यापि पूर्वं साधनादिति त्वत्पक्षप्रतिषेधोऽपि स्यात्" वृत्तिः।

"त्रैकाल्यासिद्धेर्हेतोरहेतुसमः१६" सू०।

"क्रमप्राप्तमहेतुसमं लक्षयति। त्रैकाल्यं कार्य्यकालतत्पूर्वापरकालाः तेन हेतोरसिद्धेः हेतुत्वासिद्धेः। अयमर्थः दण्डादिकं घटादेर्न पूर्ववर्त्तितया कारणं तदानीं घटादेरभावात् कस्य कारणं स्यात् अतएव न घटाद्युत्तरकालवर्त्तितयाऽपि नवा समानकालवर्त्तितया तुल्यकालवर्त्तिनोः सव्येतरविषाणयोर्विवाविनिगमनापत्तेः तथा च कालसम्बन्धखण्डनेनाहेतुतया प्रत्यवस्थानमहेतुसमः १६ कारणमात्रखण्डनेन स्वाभिप्रहेतोरपि खण्डनान्न तदसंग्रहं प्रतिकूलतर्कदेशनाभासा चेयम्" वृत्तिः।

"न हेतुतः साध्यसिद्धेस्त्रैकाल्यासिद्धिः" सू०।

"अत्रोत्तरमाह। त्रैकाल्यासिद्धिस्त्रैकाल्येन याऽसिद्धिरुक्ता सा न, कुतः हेतुतः साध्यसिद्धेः त्वयाऽप्यभ्युपगमात्" वृत्तिः।

"प्रतिषेधानुपपत्तेः प्रतिषेद्धव्याप्रतिषेधः" सू०।

"पूर्ववर्त्तितामात्रेणैव हेतुतासम्भवात् अन्यथा त्वदीयहेतोरपि साध्यं न सिध्येदित्याह हेतुफलभावखण्डने प्रतिषेधस्याप्यनुपपत्तेः प्रतिषेद्धव्यस्य परकीयहेतोर्न प्रतिषेध इत्यर्थः" वृत्तिः।

"अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः१७" सू०।

"क्रमप्राप्तमर्थापत्तिसमं लक्षयति। अर्थापत्तिरर्थापत्त्याभासः तथा चार्थापत्त्याभासेन प्रतिपक्षसाधनाय प्रत्यवस्थानमर्थापत्तिसमः १७। अयमाशयः अर्थापत्तिर्हि उक्तेनानुक्तमाक्षिपति यथा शब्दोऽनित्य इत्युक्तेऽर्थादापाद्यतेऽन्यत् नित्यं तथा च दृष्टान्तासिद्धिः विरोधश्च कृतकत्वादनित्य इत्युक्तेऽर्थादापन्नम् अन्यस्माद्धेतोर्बाधः सत्प्रतिपक्षो वा अनुमानादनित्य इत्युक्ते प्रत्यक्षान्नित्य इति च बाधः विशेषविधेः शेषनिषेधफलकत्वमित्यभिमानः सर्वदेशनाभासा चेयम्" वृत्तिः।

"अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तिरनुक्तत्वादनैकान्तिकत्वाच्चार्थापत्तेः" सू०।

"अत्रोत्तरम्। किमुक्तेन अनुक्तं यत्किञ्चिदेवार्थादापाद्यते उक्तोपपादकं वा आद्ये त्वत्पक्षहानिरप्यापाद्यतां त्वयानुक्तत्वात् अन्त्ये अस्या अर्थापत्तेरनैकान्तिकत्वम् ऐकान्तिकत्वस्य एकपक्षसाधकत्वे बलं तन्नास्ति न हि अनित्य इत्यस्योपपादकं नित्यत्वमिति न हि विशेषविधिमात्रं शेषनिषेधफलकम्, अपि तु सति तात्पर्ये क्वचित् न हि नीलो घट इत्युक्ते सर्वमन्यदनीलमिति कश्चित्प्रतिपद्यते" वृत्तिः।

"एकधर्म्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात् सद्भावोपपत्तेरविशेषसमः" १८ सू०।

"अविशेषसमं लक्षयति। एकस्य धर्मस्य कृतकत्वादेः शब्दे घटे चोपपत्तेः सत्त्वात् यदि शब्दघटयोरनित्यत्वेनाविशेषः उच्यते तदा सर्वेषामविशेषप्रसङ्गः, कुतः सद्भावोपपत्तेः सतः सन्मात्रस्य ये भावाधर्माः सत्त्वप्रमे-

यत्वादयस्तेषामुपपत्तेः सत्त्वात् तथा च सर्वेषामभेदे पचाद्यविभागः सर्वेषामेकजातीयत्वेऽवान्तरजात्युच्छेदः सर्वेषामनित्यत्वे जात्यादिविलयइत्यादि तथा च सत्त्वा- त्वदृत्तिधर्मेणाविशेषापादनमविशेषसममिति १८ फलितम् अत्र चाविशेषसम इति लक्ष्यनिर्देशः सद्भावोपपत्तेः सर्वाविशेषप्रसङ्गादिति लक्षणं शेषं व्युत्पादकम् । प्रति- कूलतर्कदेशनाभासा चेयम्"वृत्तिः ।

"क्वचिद्धर्म्मानुपपत्तेः क्वचिच्चोपपत्तेः प्रतिषेधाभावः" सू०

"अत्रोत्तरमाह । तद्धर्मस्तस्य हेतोर्धर्मोव्याप्त्यादि- स्तस्य क्वचित् कृतकत्वादौ उपपत्तेः सत्त्वात् क्वचित् सत्त्वादौ अनुपपत्तेः अभावात् त्वदुक्तस्य प्रतिषेधस्या- भावोऽसम्भव इत्यर्थः" वृत्तिः ।

"उभयकारणोपपत्तेरुपपत्तिसमः" १९सू० ।

"उपपत्तिसमं लक्षयति । उभयं पक्षप्रतिपक्षौ तयोः कारणस्य प्रमाणस्य उपपत्तेः सत्त्वात् तथा च व्याप्ति- मपुरस्कृत्य यत्किञ्चिद्धर्मेण परपक्षदृष्टान्तेन स्वपक्षसा- धनेन प्रत्यवस्थानम् उपपत्तिसमः१९ यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते यथा त्वत्पक्षेऽनित्यत्वे प्रमाणमस्ति तथा मत्पक्षोऽपि सप्रमाणकः त्वत्पक्षमत्पक्षान्यतरत्वात् तथाच बाधः प्रतिरोधो वा । तद्देशनाभासा चेयम्"वृ०।

"उपपत्तिकारणाभ्यनुज्ञानादप्रतिषेधः" सू० ।

अत्रोत्तरमाह । अयं त्वदुक्तप्रतिषेधो न सम्भवति- कुतः मत्पक्षे उपपत्तिकारणस्य मत्पक्षसाधकप्रमाणस्य त्वयाऽभ्यनुज्ञानात् त्वया हि मत्पक्षस्य दृष्टान्तीकरणेन सप्रमाणकत्वमनुज्ञातमतः कथं तत्प्रतिषेधः शक्यते कर्त्तुम् अनुज्ञातस्यापि प्रतिषेधे स्वपक्ष एव किं न प्रतिषिध्यते" वृत्तिः ।

"निर्द्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः"२०सू०।

"उपलब्धिसमं लक्षयति। वादिना निर्दिष्टस्य कारणस्य साधनस्याभावेऽपि साध्यस्योपलम्भात् प्रत्यव- स्थानमनुपलब्धिसमः२० इत्यर्थः। तथा हि पर्वतो वह्निमान् धूमादित्यादिकं वह्न्यवधारणार्थमुच्यते न च तत्सम्भवति धूमं विना आलोकादितोऽपि वह्निसिद्धेः तथा च न तस्य साधकत्वमिति प्रतिकूलतर्कः न वा धूमाद्वह्निमाने- वेत्यवधारणं द्रव्यत्वादेरपि धूमेन साधनात् न वा पर्वत एव वह्निमानेवेत्यादिकम् अवधारयितुं शक्यते महा- नसादेरपि वह्निमत्त्वादन्यथा दृष्टान्तासिद्धिः स्यात् एवं वह्निशून्यपर्वतस्यापि सत्त्वाद्बाध इत्यादि तद्देशना- भासा चेयम्" अस्य विश्वनाथविरचिता वृत्तिः ।

"कारणान्तरादपि तद्धर्म्मोपपत्तेरप्रतिषेधः" सू० ।

"अत्रोत्तरमाह । कारणान्तरात् साधनान्तरादालो- कादितोऽपि तस्य धर्मस्य साध्यस्योपलब्धेस्त्वदुक्तः प्रति- षेधो न सम्भवति । अयमाशयः न हि वयमवधारणार्थं वह्निमान् धूमादित्यादिकं प्रयुञ्ज्महे अपि तु सन्दि- ग्धस्य वह्नेः सिद्ध्यर्थम् अन्यथा त्वदुक्तमसाधकतासाधन- मपि न स्यादसाधकतासाधकान्तरस्यापि सत्त्वात्"वृत्तिः।

"तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेर- नुपलब्धिसमः२१"सू० ।

"अनुपलब्धिसमं लक्षयति । यद्यपि चेयं द्वितीया- ध्याये दर्शिता दूषिता च तथाप्यनुपलब्धिसमा२१जातिरेव- मिति तत्रानुक्तेरत्र क्रमप्राप्तोऽभिधीयते तत्रायं क्रमः नैयायिकैस्तावच्छब्दो नित्यत्वमेव साध्यते यदि शब्दो नित्यः स्यादुच्चारणात् प्राक् कुतोनोपलभ्यते न हि घटा- द्यावरणकुड्यादिवच्छब्दस्यावरणमस्ति तदनुपलब्धेरिति तत्रैव जातिवादी प्रत्यवतिष्ठते यद्यावरणानुपलब्धे रावरणाभावः सिध्यति तदा आवरणानुपलब्धेरप्यनुपल- म्भादावरणानुपलब्धेरप्यभावः सिध्येत् तथाचावरणानु- पलब्धिप्रमाणक आवरणाभावो न स्यादपि त्वावरणोप- पत्तिरेव स्यादिति शब्दनित्यत्वे नोक्तं बाधकं युक्तं नन्वनुपलब्धेरनुपलब्ध्यन्तरानपेक्षणात् कथमेवमिति चेत् इत्थम् अनुपलब्धेरनुपलब्ध्यन्तरानपेक्षणे स्वयमेव स्वस्मिन्ननुपलब्धिरूपेति वाच्यं तथा च तथैवानुपल- ब्ध्यानुपलब्धत्वसम्भवात्तदभावासिद्धेः स्वात्मन्यनुपलब्धिरूप- त्वाभावेऽनुपलब्धित्वमेव न स्यात् अनुपलब्धेरनुपलब्ध्यन्त- रापेक्षणेऽनवस्था स्पष्टैव इत्युभयरूपेण प्रत्यवस्था- नमनुपलब्धिसमः२१ इत्यर्थः प्रतिकूलतर्कदेशनाभासा चेयम्" वृत्तिः ।

"अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः" सू०।

"अत्रोत्तरमाह । अनुपलब्धिः आत्मन्यनुपलब्धिरिति कोऽर्थः स्वयमनुपलब्धिरूपेति चेद्भवत्येव स्वविषयिण्य- नुपलब्धिरिति चेन्नेदं प्रसक्तं अनुपलब्धेरनुपलम्भात्म- कत्वात् उपलम्भाभावात्मकत्वात् अभावस्य च निर्विषयक- त्वात् स्वात्मन्यनुपलब्धित्वाभावेऽनुपलब्धित्वमेव कथमस्या इति चेत् कुतो विरोधः नहि घटः स्वविषयो न भव- तीति नायं घटः स्वविषयो न भवतीति । नायं घटः आवरणाभावः कथमनुपलब्धिविषय इति चेत् क एव-

माह किन्त्वनुपलब्धिसहकृतेन्द्रियग्राह्यत्वादनुपलब्धिग्राह्य इत्युपचर्य्यते अतस्तदनुपलब्धेरनुपलम्भादित्यादिकमहेतुः अन्यथा, त्वत्साधनमपि दोषानुपलब्धेरनुपलम्भात् सदोषमेव स्यादिति" इत्तिः।

"ज्ञानविकल्पानाञ्च भावाभावसंवेदनादध्यात्मम्" सू०।

"ननूपलब्धेः क्वचिदनुपलब्धित्वाभावेऽनुपलब्धिरपि केन सिध्येदतआह अध्यात्मम् आत्मन्यधि ज्ञानविकल्पानां ज्ञानविशेषाणां भावाभावयोर्मनसा संवेदनात् घटं साक्षात्करोमि वह्निमनुमिनोमि नानुमिनोमीत्येवं ज्ञानविशेषतदभावानां मनसैव सुग्रहत्वादिति भावः" इत्तिः।

"साधर्म्यात्तुल्यधर्म्मोपपत्तेः सर्व्वानित्यत्वप्रसङ्गादनित्यसमः २२" सू०

"अनित्यसमं लक्षयति। यदि दृष्टान्तघटसाधर्म्यात् कृतकत्वात्तेन सह तुल्यधर्मतोपपद्यते शब्देऽनित्यत्वं साध्यते तदा सर्व्वस्यैवानित्यत्वं स्यात् सत्त्वादिरूपसाधर्म्यसम्भवात् नचेदमर्थान्तरग्रस्तमिति वाच्यं सर्व्वस्यानित्यत्वे व्यतिरेकाग्रहादनुमानदूषणे तात्पर्य्यात् परस्यान्वयव्यतिरेकिण एवानुमानत्वादित्याशयः तथा च व्याप्तिमपुरस्कृत्य यत्किञ्चिद्दृष्टान्तसाधर्म्येण सर्व्वस्य साध्यवत्त्वापादनमनित्यसमा २२ साध्यभेदादविशेषसमातोऽस्य भेदस्तत्र सर्व्वाविशेष एवापाद्यते नतु सर्व्वस्य साध्यवत्त्वम्। यत्तु अनित्यत्वेन समाऽनित्यसमेति भावप्रधानो निर्देशस्तथा च अन्वर्थलक्ष्यमेव लक्षणमिति तन्न वह्निमान् धूमादित्यादौ महानससाधर्म्यस्य सत्त्वात्सर्व्वस्य वह्निमत्त्वं स्यादित्यस्य जात्यन्तरत्वापत्तेः। आचार्य्यास्तु साधर्म्यं वैधर्म्यस्याप्युपलक्षकं यथाकाशवैधर्म्यात् कृतकत्वाच्छब्दोऽनित्यस्तथाकाशवैधर्म्यादाकाशभिन्नत्वादितः सर्व्वमेवानित्यं स्यादित्यत्र लक्षणे यत्किञ्चिद्धर्म्मेणेत्येव वाच्यमित्याहुः। अत्र च वैधर्म्यस्य विपक्षावृत्तित्वान्न सर्व्वस्य साध्यवत्त्वापादनं किन्त्वात्मादीनामप्यनित्यत्वं स्यादिति तत्र चार्थान्तरमित्यवधेयं प्रतिकूलतर्कदेशनाभासा चेयम्" इत्तिः।

"साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसाधर्म्याच्च" सू०

"अत्रोत्तरमाह। यदि यत्किञ्चित्साधर्म्यात्सर्व्वस्य साध्यवत्त्वमापादयतस्तव साधर्म्यस्यासाधकत्वमभिमतं तदा त्वत्कृतप्रतिषेधस्याप्यसिद्धिः तस्यापि प्रतिषेध्यसाधर्म्येण प्रवृत्तत्वात्त्वया ह्येवं साध्यते कृतकत्वं न साधकं दृष्टान्तसाधर्म्यरूपत्वात्सत्त्वादिवत् अत्र च त्वदीयहेतुस्तत्प्रतिषेध्येन मदीयहेतुना कृतकत्वेन सत्त्वेन च सह साधर्म्यरूपस्तथा चायमपि न साधकः स्यात्" इत्तिः।

"दृष्टान्ते च साध्यसाधनभावेन प्रज्ञातस्य धर्म्मस्य हेतुत्वात्तस्य चोभयथाभावान्नाविशेषः" सू०

"यदि च साधर्म्यमात्रं न साधकमपि तु व्याप्तिसहितमित्यभिमतं तदा कृतकत्वे तदस्ति नतु सत्त्व इति विशेष इत्याह। साध्यसाधनभावेन व्याप्यव्यापकभावेन दृष्टान्ते प्रज्ञातस्य प्रमितस्य तस्य हेतुत्वात् साधकत्वात् तत्र हेतुत्वस्य उभयथा अन्वयेन व्यतिरेकेण च भावात् मदीयहेतौ सत्त्वात्साधने सत्त्वादिति नाऽविशेष इति यदुक्तं तन्न भवति" इत्तिः।

"नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः २३" सू०

"नित्यसमं लक्षयति। अनित्यस्य भावः अनित्यत्वं तस्य नित्यं सर्व्वकालं स्वीकारे अनित्ये शब्दे नित्यत्वं स्यादित्यापादनं नित्यसमा २३। अयमाशयः अनित्यत्वस्य नित्यमस्वीकारेऽनित्यत्वाभावदशायां तस्यानित्यत्वं न, तस्यापि नित्यत्वापत्तिः नहि दण्डाभावदशायां दण्डीत्युच्यते अतोऽनित्यत्वस्य नित्यमेव स्वीकार इत्यभ्युपगन्तव्यं तथा च शब्दस्यापि नित्यत्वापत्तिः तेन बाधः सत्प्रतिपक्षो वा तद्देशनाभासा चेयम्। एवमनित्यत्वं यदि नित्यं कथं शब्दस्यानित्यतां कुर्य्यात् नहि रक्तं महारजनं परस्य नीलतां सम्पादयति अथाऽनित्यं तदा तदभावदशायां अनित्यत्वं न स्यादित्यादिकमूह्यम्। एतदनुसारेण लक्षणमपि कार्य्यमित्याचार्य्याः। वयन्तु अनित्यस्य भावो धर्मस्तस्य नित्यमभ्युपगमेऽनित्यत्वेनाभ्युपगतस्य नित्यत्वं स्यात् यथा क्षितिः सकर्तृकेत्यत्र अनित्यक्षितेर्धर्मः सकर्तृकत्वं त्वया क्षितौ नित्यमुपेयते न वा न चेत् तदा साध्याभावादंशतोबाधः अथ क्षितौ नित्यमेव सकर्तृकत्वं विरुद्धं तद्देशनाभासा चेयमिति ब्रूमः" इत्तिः।

"प्रतिषेध्ये नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेः प्रतिषेधाभावः" सू०

"अत्रोत्तरमाह। प्रतिषेध्ये मत्पक्षे शब्दे सर्व्वदा अनित्यभावात् अनित्यत्वात् अनित्ये शब्दे अनित्यत्वमुपपद्यते न हि सम्भवति अनित्यत्वं नित्यमस्ति अथ च तन्नित्यमिति व्याघातात् नच नित्यमिति सर्व्वकालमित्यर्थः तथा च शब्दस्यानित्यत्वे कथं सर्व्वकालमनित्यत्वसम्बन्ध

इति वाच्यं सर्वकालमित्यस्य यावत्सत्त्वमित्यर्थात् अतः त्वदुक्तः प्रतिषेधो न सम्भवति मतान्तरे तु अनित्येऽनित्यत्वोपपत्तेः हेतोस्तपायः प्रतिषेधः कृतः स च सम्भवतीत्यर्थः" इत्तिः।

"प्रयत्नकार्य्यानेकत्वात् कार्य्यसमः२४" सू०।

"कार्य्यसमं लक्षयति। प्रयत्नकार्य्यस्य प्रयत्नसम्पादनीयस्यानेकत्वात् अनेकविधत्वात्। अयमर्थः शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वादित्युक्ते प्रयत्नानन्तरीयकत्वं प्रयत्नकार्य्ये घटादौ प्रयत्नानन्तरोपलभ्यमाने कीलकादावपि दृष्टन्तत्र द्वितीयं न तज्जन्यत्वसाधकं आद्ये तु असिद्धं तथा च सामान्यत उक्ते हेतोरनभिमतविशिष्टनिराकरणेन प्रत्यवस्थानं कार्य्यसमा२४असिद्धदेशनाभासा चेयम्। अथ वा प्रयत्नकार्य्याणां प्रयत्नकर्त्तव्यानां कर्त्तव्यप्रयत्नानामिति यावत् तादृशानां अनेकविधत्वात्-युक्तान्यस्य व्याघातकमुत्तरं कार्य्यसमा तथा चास्या आकृतिगणत्वात् सूत्रानुपदर्शितानामपि परिग्रहः यथा त्वत्पक्षे किञ्चिद्दूषणं भविष्यतीति शङ्काऽपि शङ्का समा कार्य्यकारणभावस्योपकारनियतत्वे ऽनवस्थेत्यनुपकारसमा इत्यादिः" इत्तिः।

"कार्य्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः"सू०।

"अत्रोत्तरम्। शब्दस्य कार्य्यान्यत्वेऽकार्य्यत्वे प्रयत्नस्य वक्तृप्रयत्नस्य अहेतुत्वम् अकारणत्वम् इदञ्च तदा स्यात् यद्यनुपलब्धिकारणमावरणादिकमुपपद्यते न च तच्छब्देऽस्तीत्यर्थः। आकृतिगणपक्षे तु कार्य्याणां जातीनामन्यत्वे नानाविधत्वे इदमुत्तरं प्रयत्नस्य त्वदीयदूषणप्रयत्नस्य अहेतुत्वं असाधकत्वाभावः उपलब्धेः कारणस्य प्रमाणस्य निर्दोषवाक्यस्य या उपपत्तिः निर्दोषवाक्याधीनोपपादनं तदभावात् तद्वाक्यस्य स्वव्याघातकत्वादित्यर्थः" इत्तिः।

१४स्वभावे जातिवैरम् जातिसुन्दरम्। जातिश्च प्रकारविशेष्यतया वा शब्दशक्तिज्ञानविषयः। तत्र प्राभाकरमते आकृतिव्यङ्ग्याया एव जातित्वं न गुणत्वादीनां नैयायिकमते तु अनुगतैकबुद्धिनियामकत्वात् नित्यत्वे सति अनेकसमवेतत्वरूपलक्षणयोगाच्च गुणत्वादीनामपि जातित्वमस्त्येव। "समानप्रसवात्मिका जाति गौ०सूत्रभाष्ययोस्तथैवोक्तेश्च। जातिशक्तिवादशब्दे च तद्भाष्यं दृश्यम्। अतएव "द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते। परभिन्ना तु या जातिः सैवापरतयोच्यते। द्रव्यत्वादिकजातिस्तु परापरतयोच्यते"भाषायामुक्तम्। छन्दोभेदश्च। "पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा। वृत्तमक्षरसंख्यातं जातिर्मात्राकृता भवेत्" छन्दोमञ्जर्य्युक्तेः मात्राकृतं छन्दः। "इयमचतुरलीलाढ्या मदृष्टा जातिशालिनी"छन्दोम०। दृष्टजातिशेषजातिविशेषजातिप्रभृतयश्च प्राचीनानामिष्टकर्मसंज्ञाभेदा लीलावत्यादौ इष्टकर्मप्रकरणे दृश्याः। "सङ्केतो गृह्यते जातौ गुणद्रव्यक्रियासु च"काव्यप्र०। "असम्भाद्यतः कश्चिदर्थं जातिक्रियागुणैः" माघः। ब्राह्मणादिजातौ "जात्या काममवध्योऽसि चरणं त्विदमुद्धृतम्"वेणीसं०"ब्राह्मणस्य ब्राह्मणयोर्ब्राह्मणानाञ्च संबधे। प्रायश्चित्तस्य चैकत्वं जातिमाश्रित्य लक्ष्यते" प्रा०त०। जन्मनि "आचार्य्यस्त्वस्य यां जातिं विधिवद्वेदपारगः। उत्पादयति सावित्र्या सा नित्या साऽजराऽमरा" मनुः। आकारव्यङ्ग्ये "त्वच्चर्म मणिसूत्राय:काष्ठवल्कलवाससाम्। अजातौ जातिकरणे विक्रेयाष्टगुणोदमः" याज्ञ०। १५जातिवाचकशब्दे च "पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्वष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्त्तैर्जातिः" "क्रत्यतुल्याख्या अजात्या" "जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्"(ब्राह्मणाः पूज्याः ब्राह्मणः पूज्यः) "जातेरस्त्रीविषयादयोपधात्" इति च पा०।

**जातिकोश(ष)** पु० न० जातेः जातीफलस्य कोशमिव। (जायफल) जातीफले भावप्र० "जातीफलं जातिकोशः मालतीफलमित्यपि। जातिफलं रसे तिक्तं तीक्ष्णोष्णं रोचनं लघु। कटुकं दीपनं ग्राहि स्वर्य्यं श्लेष्मानिलापहम्। निहन्ति मुखवैरस्यमलदौर्गन्ध्यकृष्णताः। कृमिकासवमिश्वासशोषपीनसहृद्रुजः" भावप्र०। हेमचन्द्रे अयं मूर्द्धन्यवान् दीर्घमध्यश्च पठितः।

**जाति(ती)कोषी** स्त्री जातिं जातिफलं कुष्णाति कुष—नि-कर्षे—अण् उप०स०गौरा० ङीष्। जातीफले राजनि०।

**जातिधर्म्म** पु० ६त०। ब्राह्मणादीनां धर्मभेदे। स च भा० शा० ६० अ० दर्शितो यथा

"ब्राह्मणस्य तु यो धर्मस्तन्ते वक्ष्यामि केवलम्। दममेव महाराज! धर्ममाहुः पुरातनम्। स्वाध्यायाभ्यसनञ्चैव तत्र कर्म समाप्यते। तञ्चेद्वित्तमुपागच्छेद्वर्त्तमानं स्वकर्मणि। अकुर्वाणं विकर्म्माणि शान्तं प्रज्ञानतर्पितम्। कुर्वीतापत्यसन्तानमथो दद्याद्यजेत च। संविभज्य हि भोक्तव्यं धनं सद्भिरितीर्य्यते। परिनिष्ठितकार्य्यस्तु

स्वाध्यायेनैव ब्राह्मणः। कुर्य्यादन्यन्न वा कुर्य्यान्मैत्रो ब्राह्मण उच्यते। क्षत्त्रियस्यापि यो धर्मस्तन्ते वक्ष्यामि भारत!। दद्याद्राजन्न याचेत यजेत न च याजयेत्। नाध्यापयेदधीयीत प्रजाश्च परिपालयेत्। नित्योद्युक्तो दस्युवधे रणे कुर्य्यात् पराक्रमम्। ये तु क्रतुभिरीजानाः श्रुतवन्तश्च भूमिपाः। य एवाहवजेतारस्त एषां लोकजित्तमाः। अविक्षतेन देहेन समराद्यो निवर्त्तते। क्षत्त्रियो नास्य तत् कर्म प्रशंसन्ति पुराविदः। एवं हि क्षत्त्रबन्धूनां मार्गमाहुः प्रधानतः। नास्य कृत्यतमं किञ्चिदन्यद्दस्युनिवर्हणात्। दानमध्ययनं यज्ञो राज्ञां क्षेमं विधीयते। तस्माद्राज्ञा विशेषेण योद्धव्यं धर्ममीप्सता। स्वेषु धर्मेष्ववस्थाप्य प्रजाः सर्व्वा महीपतिः। धर्मेण सर्वकृत्यानि शमनिष्ठानि कारयेत्। परिनिष्ठितकार्य्यस्तु नृपतिः परिपालनात्। कुर्य्यादन्यन्न वा कुर्य्यादैन्द्रो राजन्य उच्यते। वैश्यस्यापि हि यो धर्मस्तन्ते वक्ष्यामि शाश्वतम्। दानमध्ययनं यज्ञः शौचेन धनसञ्चयः। पितृवत् पालयेद्वैश्यो युक्तः सर्व्वान् पशूनिह। विकर्म तद्भवेदन्यत् कर्म यत् स समाचरेत्। रक्षया स हि तेषां वै महत् सुखमवाप्नुयात्। प्रजापतिर्हि वैश्याय सृष्ट्वा परिददौ पशून्। ब्राह्मणाय च राज्ञे च सर्वाः परिददे प्रजाः। तस्य वृत्तिं प्रवक्ष्यामि यच्च तस्योपजीवनम्। षण्णामेकां पिबेद्धेनुं शताच्च मिथुनं हरेत्। लब्धाच्च सप्तमं भागं तथाऽष्टक्ते कलाऽखुरे। शस्यानि सर्वबीजानामेषा सांवत्सरी भृतिः। न च वैश्यस्य कामः स्यान्न रक्षेयं पशूनिति। वैश्ये चेच्छति नान्येन रक्षितव्याः कथञ्चन। शूद्रस्यापि हि यो धर्मस्तन्ते वक्ष्यामि भारत!। प्रजापतिर्हि वर्णानां दासं शूद्रमकल्पयत्। तस्माच्छूद्रस्य वर्णानां परिचर्य्या विधीयते। तेषां शुश्रूषणाच्चैव महत् सुखमवाप्नुयात्। शूद्र एतान् परिचरेत्त्रीन् वर्णाननुपूर्वशः। सञ्चयांश्च न कुर्व्वीत जातु शूद्रः कथञ्चन। पापीयान् हि धनं लब्ध्वा वशे कुर्य्याद्गरीयसः। राज्ञा वा समनुज्ञातः कामं कुर्वीत धार्मिकः। तस्य वृत्तिं प्रवक्ष्यामि यच्च तस्योपजीवनम्। अवश्यभरणीयो हि वर्णानां शूद्र उच्यते। छत्रं वेष्टनमौशीरमुपानद्व्यजनानि च। यातयामानि देयानि शूद्राय परिचारिणे। अधार्य्याणि विशीर्णानि वसनानि द्विजातिभिः। शूद्रायैव प्रदेयानि तस्य धर्मधनं हि तत्। यश्च कश्चिद्द्विजातीनां शूद्रः शुश्रूषुराव्रजेत्। कल्प्यां तस्य तु तेनाहुर्वृत्तिं धर्मविदो जनाः। देयः पिण्डोऽनपत्याय भर्त्तव्यौ वृद्धदुर्बलौ। शूद्रेण तु न हातव्यो भर्त्ता कस्याञ्चिदापदि। अतिरेकेण भर्त्तव्यो भर्त्ता द्रव्यपरिक्षये। न हि स्वमस्ति शूद्रस्य भर्तृहार्य्यधनो हि सः। उक्तस्त्रयाणां वर्णानां यज्ञस्तस्य च भारत!। स्वाहाकारवषट्कारौ मन्त्रः शूद्रे न विद्यते। तस्माच्छूद्रः पाकयज्ञैर्यजेताव्रतवान् स्वयम्। पूर्णपात्रमयीमाहुः पाकयज्ञस्य दक्षिणाम्। शूद्रः पैजवनो नाम सहस्राणां शतं ददौ। ऐन्द्राग्न्येन विधानेन दक्षिणामिति नः श्रुतम्। यथा हि सर्ववर्णानां यज्ञस्तस्यैव भारत!। अग्राः सर्वेषु यज्ञेषु श्रद्धायज्ञो विधीयते। दैवतं हि महच्छ्रद्धा पवित्रं यजताञ्च यत्। दैवतं हि परं विप्राः स्वेन स्वेन परस्परम्। अयजन्निह सत्रैस्तैस्तैः कामैः समाहितैः। संसृष्टा ब्राह्मणैरेव त्रिषु वर्णेषु सृष्टयः। देवानामपि ये देवा यद्ब्रूयुस्ते परं हितम्। तस्माद्वर्णैः सर्वयज्ञाः संसृज्यन्ते न काम्यया। ऋग्यजुःसामवित्पूज्यो नित्यं स्याद्देववद्द्विजः।”

सङ्कीर्णजातिधर्म्मस्तु मन्वाद्युक्तो जातिशब्दे दर्शितः “उत्साद्यन्ते जातिधर्म्माः कुलधर्म्माश्च शाश्वताः” गीता।

**जाति(ती)पत्नी** स्त्री जातेः(त्याः) जातीफलस्य पत्नी गौरा० ङीष्। (जायत्री) ख्याते गन्धद्रव्यभेदे “जातीफलस्य त्वक् प्रोक्ता जाति(ती) पत्नी भिषग्वरैः। जाति(ती) पत्नी लघुः स्वादुः कटूष्णा रुचिवर्णकृत्। कफकासवमिश्वासतृष्णाकृमिविषापहा” भावप्र०।

**जाति(ती)फल** न० जातिः(ती) तन्नामकं फलं, ६त० वा। (जायफल) गन्धद्रव्यभेदे हेमच०।

**जातिबाधक** त्रि० ६त०। जातेर्बाधके प्राचीननैयायिकोक्ते व्यक्तेरभेदादौ स च जातिशब्दे दर्शितः।

**जातिब्राह्मण** पु० जात्या जन्मना ब्राह्मणः। तपःस्वाध्यायरहिते ब्राह्मणे। “तपः श्रुतञ्च योनिश्च त्रयं ब्राह्मण्यकारणम्। तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः” शब्दार्थचि० धृतवाक्यम्।

**जातिभ्रंश** न० पापभेदे। तत्स्वरूपप्रायश्चित्ते मनूक्ते प्रा० वि० व्यवस्थापिते च यथा।

“तत्र मनुः ‘ब्राह्मणस्य रुजः कृत्या घ्रातिरघ्रेयमद्ययोः। जैह्म्यञ्च मैथुनं पुंसि जातिभ्रंशकरं स्मृतम्’। “जातिभ्रंशकरं कर्म्म कृत्वान्यतमभिच्छया। चरेत् सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छया”। रुजः कृत्या पीडाकरणम्। अघ्रेयं

लशुनादि जैह्म्य' मिति जटिलत्वं पुंसि मैथुनं पुरुषे याप्य धर्मकरणम्। अत्र कामतः सान्तपनं तत्र धेनुद्वयम्। अकामतः प्राजापत्यं तत्र धेनुरेका। एतत्त्वाख्याने बोद्धव्यम्। रुजः करणे तत्र विशेषमाह मनुः "अवगूर्य्य चरेत् कृच्छ्रमतिकृच्छ्रं निपातने। कृच्छ्रातिकृच्छ्रं कुर्वीत विप्रस्योत्पाद्य शोणितम्"। तथा याज्ञवल्क्यः "विप्रदण्डोद्यमे कृच्छ्रमतिकृच्छ्रं निपातने। कृच्छ्रातिकृच्छ्रोऽसृक्पाते कार्य्योऽभ्यन्तरशोणिते"। अत्र दण्डशब्दः शस्त्रमपि लक्षयति। अतिकृच्छ्रे धेनुत्रयं कृच्छ्रातिकृच्छ्रे धेनुपञ्चकम्। यमः "कृच्छ्रातिकृच्छ्रं कुर्वीत चान्द्रायणमथाचरेत्। दश संख्याश्च गा दद्यादङ्गच्छेदो यदा भवेत्"। अत्र द्विजाङ्गच्छेदे व्रतद्वयस्य गोदानानाञ्च समुच्चयः। विशेषमाह बृहस्पतिः, "काष्ठादिना ताड़यित्वा त्वग्भेदे कृच्छ्रमाचरेत्। अस्थिभेदेऽतिकृच्छ्रन्तु पराकं चाङ्गकर्त्तने"।

**जातिमात्र** न० जातिरेव जाति+एवार्थे मात्रच्। स्वाध्यायादिहीने जन्ममात्रे "जातिमात्रेण किं कश्चिद्धन्यते पूज्यते क्वचित्" हितो०। "जातिमात्रोपजीवी वा कामं स्यात् ब्राह्मणब्रुवः"। "अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम्। नैषां प्रतिग्रहो देयो न शिला तारयेच्छिलाम्" मनुः।

**जातिमाला** जातिविशेषज्ञापके ग्रन्थभेदे।

**जातिवैर** न० जात्या स्वभावेन वैरम्। स्वभाववैरे यथा अहिनकुलयोः उपयमशब्दे योनिकूटप्रकरणे १२५० पृ० दृश्यम्।

**जातिशक्तिवाद** पु० जातौ शक्तेर्वादः। शब्दानां जातौ शक्तिसमर्थके कथाभेदे स च वादः शब्दशक्तिप्र० पूर्वपक्ष विधया दर्शितो यथा

"ननु गामानयेत्यादौ गोत्वादिकर्मताकत्वेनैवानयनादेरन्वयधीर्गोत्वादिशक्तत्वेन पदज्ञानस्य गोत्वाद्यन्वयबुद्धिं प्रत्येव हेतुत्वात् सुवर्थकर्मत्वादौ स्वाश्रयवृत्तित्वसम्बन्धेनैव प्रकृत्यर्थस्य गोत्वादेः साकाङ्क्षत्वात् गवादिकर्मताकत्वेन बोधस्य त्तरकालमाक्षेपात् कर्मत्वं गोवृत्ति गोत्वनिष्ठकर्मतात्वात्, आनयनं गोवृत्तिकर्मताकं गोत्ववृत्तिकर्मताकत्वादित्याद्यनुमानसाम्राज्यात्। न च वस्तुगत्या यद्गोत्वशक्तत्वं तज्ज्ञानस्य हेतुत्वे गोपदं जातिशक्तमित्येवंभ्रमादपि शुद्धगोत्वस्यान्वयबोधापत्तिः गोत्वत्वावच्छिन्नशक्तत्वप्रकारकज्ञानत्वेन तथात्वे च लाघवाद्गोत्वावच्छिन्नशक्तताप्रकारकज्ञानत्वेनैव हेतुत्वं गोत्वत्वाद्यप्रवेशादितिवाच्यं गोपदं गोत्वशक्तमित्याकारकज्ञानत्वेन हेतुतायां शुद्धस्येव गोत्वस्य विषयतासम्बन्धेन शक्यांशे विशेषणत्वेन गोत्वत्वादिप्रवेशगौरवस्यायोगात्। न हि समवायान्यसम्बन्धेन जातेः प्रकारतायां धर्मावच्छिन्नत्वनियमे मानाभावात् अयं गौरित्यादिव्यवसायोत्तरमिमं गोत्वेन जानामीत्याकारे तस्य ज्ञाततालिङ्गकानुमानेऽनुव्यवसाये वा व्यभिचाराच्च प्रागनुपस्थित्या गोत्वत्वादेस्तत्रोपनययोगात्। एतेन जातेर्निरवच्छिन्नप्रकारत्वस्य समवायसंसर्गावच्छिन्नत्वनियमात् केवलस्य गोत्वादेः शक्यांशे विषयतया सुवर्थकर्मत्वांशे च परम्परया प्रकारत्वायोग इत्यपि प्रत्युक्तम्, उक्तस्थल एव व्यभिचारात्। न चैवं कालो गौः पदं गौरित्यादिप्रत्ययोऽपि प्रमा स्यात् कालिकादिसम्बन्धेन गोत्वादिमति तत्प्रकारकत्वादिति वाच्यं कालिकादिसम्बन्धेन गोत्वादेः प्रामाण्यस्य गोत्वत्वाद्यवच्छिन्नप्रकारतागर्भत्वेन तादृशमतेः प्रमात्वायोगात् अन्यथा घटत्वादिजातेः संस्थानसमवेतत्वमते संयोगो घट इत्यादिप्रतीतेः समवायेन प्रमात्वस्य दुर्वारतापत्तेः शाब्दस्येव प्रत्यक्षस्यापि कालो गौरित्यादिबोधस्य नियमतोऽगवाद्यभेदावगाहित्वेनैवाप्रमात्वसम्भवाच्चेति भट्टमतानुवर्त्तिनः।"

जातिशक्तिवादिप्रभाकरमतं च तत्रैवोक्तं यथा

"प्राभाकरास्तु गोत्वशक्तत्वेन ज्ञातं पदं तादृप्येण गोशाब्दत्वावच्छिन्नं प्रत्येव हेतुरतो गोत्वशक्तिभ्रमाच्च गोत्वेन गवयादेः न वा द्रव्यत्वादिना गोरन्वयधियोऽतिप्रसङ्गः। नचैवं जातेरिव व्यक्तेरपि शक्यत्वमावश्यकं न हि गवादिपदस्य शक्यत्वं जन्यत्वमपि तु जन्यशाब्दधीविषयत्वं तच्च गोत्वस्येव गोरप्यविशिष्टमिति वाच्यं गवादिपदधर्मिकस्वशक्तताज्ञानत्वावच्छिन्नशाब्दधीजनकतावच्छेदकत्वेन गोत्वादेरेव गवादिपदशक्यत्वात् गोत्वशक्ततापेक्षया गोशक्तत्वस्य गुरुतया तज्ज्ञानत्वस्य गोशाब्दं प्रति जनकतानवच्छेदकत्वात्। अतएवान्यलब्धेरात्मत्वाकाशत्वाद्यवगाहित्वेऽपि न तेषां पदशक्यत्वम्। अस्तु वा गोत्वादिशक्तत्वेन ज्ञातं पदं गोत्वादिशाब्दत्वावच्छिन्नं प्रत्येव हेतुविशेष्यतया तादृशशाब्दं प्रति समवायेन गोत्वस्य नियामकत्वकल्पनाच्च नातिप्रसङ्गः गोत्वादिना गवादेरिव गवादेर्गोत्वादिनान्वयबोधत्वावच्छिन्नं प्रत्यपि विनिगमकाभावेन गोत्वादिशक्तिज्ञानत्वेन हेतुत्वमपेक्ष्य गोत्वशाब्दत्वावच्छिन्नं प्रत्येव गोत्वस्य तच्छक्तत्वज्ञानस्य च द्वयोः कारणतायामेव लाघवात्, वस्तुतो गोत्वशाब्दं प्रति गोत्वशक्तिज्ञानमेव हेतुर्न तु गोत्वमपि जातिव्यक्त्योस्तुल्य-

वित्तिवेद्यत्वनियमादेव गोव्यक्तौ नान्तर्विषयत्वसिद्धेः प्रमाणविरहादेव गोत्वादिना गवयादिविषयत्वस्य तत्त्वासिद्धेश्च । यद्यपि जातेर्विषयत्वं तत्समवायिव्यक्तिविषयतानिरूपितमिति न व्याप्तिर्गोत्वाद्यालोचने कालो गोत्ववानित्यादिबोधे च व्यभिचारात् नापि जातेर्निरवच्छिन्नप्रकारतायास्तथात्वनियमः गौरयमित्यादिज्ञानस्य प्रत्यक्षे गोत्वेनेमं जानामीत्याकारे तथात्वात् तथाप्यन्वयबोधस्य निरवच्छिन्नगोत्वादिप्रकारत्वं गवादिविशेष्यतानिरूपितमेवेति व्याप्तिस्तादृशविशेष्यताकत्वं विना शुद्धस्य गोत्वादेरन्वयबोधेनास्पर्शनात् गुरूणां गोत्वेन गवयादिबोधस्यालीकत्वात् । अत एव गवाद्यंशे गोत्वादिप्रकारकोबोधः समवायेनेव सम्बन्धान्तरेणापि तत्प्रकारकः स्याद्गोत्वशक्तिज्ञानस्य तदीयसम्बन्धभानं प्रत्युदासीनत्वादित्यपि प्रत्युक्तं शाब्दमतेः शुद्धगोत्वप्रकारतायां गोविशेष्यताकत्वस्येव समवायावच्छिन्नत्वस्यापि व्याप्तिबलेन सिद्धावपि सम्बन्धान्तरावच्छिन्नत्वस्य प्रमाणविरहेणासिद्धेः । एवञ्च गोत्वादिशक्तिज्ञानत्वेन जनकतायां विषयतयावच्छेदकत्वाद्गोत्वादिरेव गवादिपदस्यार्थः गवादौ तद्व्यवहारस्तु तादृशावच्छेदकधर्मवत्त्वप्रयुक्तो गौणः । नचैवं गम्यादिधातोरपि गत्यादौ शक्तिर्न स्याद्गतित्वादिशक्तिज्ञानादेव तादृप्ये च गत्यादेर्गम्यादिधातुतोबोधसम्भवादिति वाच्यं गुरूणां गतित्वादेः संस्थानाव्यङ्ग्यत्वेन जातित्वासम्भवात् उत्तरसंयोगाद्यवच्छिन्नक्रियात्वाद्युपाधिरूपे च तत्र स्वरूपतः शक्तिग्रहायोगात् सखण्डस्य निरवच्छिन्नप्रकारत्वाभावात् निरुक्तक्रियात्वतावच्छिन्नशक्तताज्ञानत्वेन हेतुतामपेक्ष्य लघुतया तादृशक्रियातावच्छिन्नशक्तिमत्त्वज्ञानत्वेनैव तथात्वौचित्यात् गुरुत्वादिप्रयोज्यस्य पतनत्वादेरखण्डत्वे पत्यादिधातूनामत्र शक्तत्वेऽपि क्षत्यभावाच्च । पश्वादिपदानामपि लोमवल्लाङ्गूलादिपर्यवसिते पशुत्वादिमात्रे न शक्तिस्तत्र-वृत्तिग्रहोत्तरं तन्मात्रस्यैवानुभवेन तदाश्रयस्यालाभात् लोमादीनां स्वाश्रयतत्त्वविवित्तिवेद्यत्वस्य लोमवल्लाङ्गूलवान् देश इत्याद्यनुभवे व्यभिचारादित्याहुः ।”

नैयायिकास्तु तदेतन्मतं पूर्वपक्षविषया व्यक्त्यादीनां केवलानां शब्दवाच्यतां निराकृत्य जातिविशिष्टस्यैव शक्यत्वं व्यवस्थापितं यथा गौ० सूत्रे तद्भाष्ये च ।

“तदर्थे व्यक्त्याकृतिजातिसन्निधावुपचारात् संशयः ।” सू०

“अविनाभाववृत्तिः सन्निधिः अविनाभावेन वर्त्तमानासु व्यक्त्याकृतिजातिषु गौरिति प्रयुज्यते तत्र न ज्ञायते किमन्यतमः पदार्थः उत सर्व इति । शब्दस्य प्रयोगसामर्थ्यात् पदार्थावधारणम् न स्यात्” भाष्यम् ।

“याशब्दसमूहत्यागपरिग्रहसंख्यावृद्ध्यपचयवर्णसमासानुबन्धानां व्यक्तावुपचाराद्व्यक्तिः” सू०

“व्यक्तिः पदार्थः कस्मात् याशब्दप्रभृतीनां व्यक्तावुपचारादुपचारः प्रयोगः । या गौस्तिष्ठति या गौर्निषण्णेति नेदं वाक्यं जातेरभिधायकमभेदात् द्रव्याभिधायकम्, गवां समूह इत्यभेदात् द्रव्याभिधानं न जातेरभेदात्, वैद्याय गां ददातीति द्रव्यस्य त्यागो न जातेरमूर्त्तत्वात् प्रतिक्रमानुक्रमानुपपत्तेश्च । परिग्रहः स्वत्वेनाभिसम्बन्धः, कौण्डिन्यस्य गौ ब्राह्मणस्य गौरिति द्रव्याभिधाने द्रव्यभेदात् सम्बन्धभेद इति उपपन्नमभिन्ना तु जातिरिति, सङ्ख्या दश गावो विंशतिर्गाव इति भिन्नं द्रव्यं सङ्ख्यायते न जातिरभेदादिति, वृद्धिः कारणवतो द्रव्यस्यावयवोपचयः अवर्द्धत गौरिति निरवयवा तु जातिरिति, एतेनापचयो व्याख्यातः। वर्णः शुक्ला गौः कपिला गौरिति द्रव्यस्य शुक्लादियोगो न सामान्यस्य, समासः गोहितं गोसुखमिति द्रव्यस्य सुखादियोगो न जातेरिति । अनुबन्धः सरूपप्रजननसन्तानो गौ गां जनयतीति तदुत्पत्तिधर्मत्वाद्द्रव्ये युक्तं न जातौ विपर्ययादिति । द्रव्यं व्यक्तिरिति हि नार्थान्तरम्, तस्य प्रतिषेधः।” भा० “न तदनवस्थानात्” सू०

“न व्यक्तिः पदार्थः । कस्मादनवस्थानात् याशब्दप्रभृतिभिर्यो विशेष्यते स गोशब्दार्थो या गौस्तिष्ठति या गौर्निषण्णेति न द्रव्यमात्रमविशिष्टं जात्या विनाऽभिधीयते, किन्तर्हि जातिविशिष्टं, तस्मान्न व्यक्तिः पदार्थः एवं समूहादिषु द्रष्टव्यम् । यदि न व्यक्तिः पदार्थः कथं तर्हि व्यक्तावुपचार इति । निमित्तादतद्भावेऽपि तदुपचारो दृश्यते खलु” भा० ।

“सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशाटकान्नपुरुषेष्वतद्भावेऽपि तदुपचारः” सू०

“अतद्भावेऽपि तदुपचार इत्यतच्छब्दस्य तेन शब्देनाभिधानमिति, सहचरणात् यष्टिकां भोजयेति यष्टिकासहचरितो ब्राह्मणोऽभिधीयेत इति, स्थानात् मञ्चाः क्रोशन्तीति मञ्चस्थाः पुरुषा अभिधीयन्ते, तादर्थ्यात् कटार्थेषु वीरणेषु व्यूह्यमानेषु कटङ्करोतीति, वृत्तात् यमो राजा कुबेरो राजेति तद्वद्वर्त्तत इति, मानात् आढकेन मिताः सक्तवः आढकसक्तव इति धारणात् तुलया धृतं चन्दनं

तुलाचन्दनमिति, सामीप्यात् गङ्गायां गावश्चरन्तीति सन्निकृष्टोदेशोऽभिधीयते योगात् कृष्णेन रागेण युक्तः शाटकः कृष्ण इत्यभिधीयते, साधनात् अन्नं प्राणा इति। आधिपत्यात् अयं पुरुषः कुलं अयं गोत्रमिति तत्रायं सहचरणाद्योगाद्वा जातिशब्दो व्यक्तौ प्रयुज्यत इति यदि गौरित्यस्य पदस्य न व्यक्तिरर्थोऽस्तु तर्हि।" भा०

"आकृतिस्तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः" सू०

"आकृतिः पदार्थः कस्मात् तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः। सत्त्वावयवानां तदवयवानाञ्च नियतो व्यूह आकृतिः तस्यां गृह्यमाणायां सत्त्वव्यवस्थानं सिध्यति अयं गौरयमश्व इति नागृह्यमाणायाम्, यस्य ग्रहणात् सत्त्वव्यवस्थानं सिध्यति तं शब्दोऽभिधातुमर्हति सोऽस्यार्थ इति नैतदुपपद्यते तस्य जात्या योगस्तदत्र जातिविशिष्टमभिधीयते गौरिति। न चावयवव्यूहस्य जात्या योगः, कस्य तर्हि नियतावयवव्यूहस्य द्रव्यस्य, तस्मान्नाकृतिः पदार्थः। अस्तु तर्हि जातिः पदार्थः" भा०

"व्यक्त्याकृतियुक्तेऽप्यप्रसङ्गात्प्रोक्षणादीनां मृद्गवके जातिः" सू०

"जातिः पदार्थः, कस्मात् व्यक्त्याकृतियुक्तेऽपि मृद्गवके प्रोक्षणादीनामप्रसङ्गादिति। गां प्रोक्षय गामानय गां देहीति नैतानि मृद्गवके प्रयुज्यन्ते कस्मात् जातेरभावात्। अस्ति हि तत्र व्यक्तिरस्त्याकृतिः यदभावात् तत्रासम्प्रत्ययः स पदार्थ इति।" भा०

"नाकृतिव्यक्त्यपेक्षत्वाज्जात्यभिव्यक्तेः" सू०

"जातेरभिव्यक्तिराकृतिव्यक्ती अपेक्षते नागृह्यमाणायामाकृतौ व्यक्तौ जातिमात्रं शुद्धं गृह्यते तस्मान्न जातिः पदार्थः इति। न वै पदार्थेन न भवितुं शक्यम् कः खल्विदानीं पदार्थ इति" भा०

"व्यक्त्याकृतिजातयस्तु पदार्थः" सू०

"तुशब्दो विशेषणार्थः। किं विशिष्यते प्रधानाङ्गभावस्यानियमेन पदार्थत्वमिति। यदा हि भेदविवक्षा विशेषगतिश्च तदा व्यक्तिः प्रधानमङ्गन्तु जात्याकृती। यदा तु भेदोऽविवक्षितः सामान्यगतिश्च तदा जातिः प्रधानमङ्गन्तु व्यक्त्याकृती स्वीकृते तदेतद्बहुलं प्रयोगेष्वाकृतेस्तु प्रधानभाव उत्प्रेक्षितव्यः। कथं पुनर्ज्ञायन्ते नानाव्यक्त्याकृतिजातय इति लक्षणभेदात् तत्र तावत्" भा०

"व्यक्तिर्गुणविशेषाश्रयो मूर्त्तिः" सू०

"व्यज्यत इति व्यक्तिरिन्द्रियग्राह्येति न सर्वं द्रव्यं व्यक्तिः। यो गुणविशेषाणां स्पर्शान्तानां गुरुत्वघनत्वद्रवत्वसंस्काराणामव्यापिनः परिमाणस्याश्रयो यथासम्भवं तद्द्रव्यम्, मूर्त्तिः मूर्च्छितावयवत्वादि" भा०

"आकृतिर्जातिलिङ्गाख्या" सू०

"यया जातिर्जातिलिङ्गानि च प्रख्यायन्ते तामाकृतिं विद्यात्। सा च नान्या सत्त्वानां तदवयवानाञ्च नियत व्यूहादिति नियतावयवव्यूहाः खलु सत्त्वावयवा जातिलिङ्गं शिरसा पादेन न गामनुमिन्वन्ति। नियते तु सत्त्वावयवानां व्यूहे सति गोत्वं प्रख्यायत इति। अनाकृतिव्यङ्ग्यायां जातौ मृत्सुवर्णं रजतमित्येवमादिष्वाकृतिर्निवर्त्तते जहाति पदार्थत्वमिति" भ०

"समानप्रसवात्मिका जातिः" सू०

"या समानां बुद्धिं प्रसूते भिन्नेष्वधिकरणेषु यया बहूनीतरेतरतो न व्यावर्त्तन्ते योऽर्थोऽनेकत्र प्रत्ययानुवृत्तिनिमित्तं तत् सामान्यम्। यच्च केषाञ्चिद्भेदं कुतश्चिद्भेदं करोति तत् सामान्यविशेषो जातिरिति" भा०

शब्दशक्तिप्रकाशिकायामपि तदेतन्मतं समर्थितं यथा

"जात्यवच्छिन्नसङ्केतवती नैमित्तिकी मता। जातिमात्रे हि सङ्केतात्तद्व्यक्तेर्भानं सुदुष्करम्" "यन्नाम जात्यवच्छिन्नसङ्केतवत् सा नैमित्तिकी संज्ञा यथा गोचैत्राः सा हि गोत्वचैत्रत्वादिजात्यवच्छिन्नमेव गवादिकमभिधत्ते न तु गोत्वादिजातिमात्रं गोपदं गोत्वे सङ्केतितमित्याकारकग्रहाद्गामानयेत्यादौ गोत्वादिना गवादेरन्वयानुपपत्तेः एकशक्तत्वग्रहस्यान्यानुभावकत्वेऽतिप्रसङ्गात्"

ततःपरं प्राक्दर्शितं भट्टमतं प्रदर्श्य दूषितं यथा

"विनाप्याक्षेपं गामानयेत्यादितोगवादिकर्मताकत्वेनानयनादेरन्वयबोधस्यानुभविकत्वात् गौर्गच्छतीत्यादौ शुद्धगोत्वे गतिमत्त्वाद्यन्वयस्यानुभवेनासमर्थनात् गोत्वत्वाद्यनुपस्थित्या च गोत्वं गच्छतीत्याद्यनुभवस्यासम्भवात् स्वाश्रयवृत्तित्वसम्बन्धेन गतिमत्त्वादिहेतुना गवादौ साक्षात्सम्बन्धेन गतिमत्त्वाद्याक्षेपस्य व्यभिचारादिदोषेण दुःशकत्वाच्च। एतेन कर्मत्वादौ गोत्वादेः स्वाश्रयवृत्तित्वसम्बन्धेनान्वयबोधोत्तरं कर्मत्वस्य गोत्ववृत्तित्वं गोवृत्तित्वं विनानुपपन्नमित्यनुपपत्तिधीसहकृतेन गामित्यादिवाक्येनैव कर्मत्वं गवीयमित्यौपादानिकोगवादिव्यक्तेर्बोध इति श्रीकरमतमप्यनादेयं मिथोविरुद्धाभ्यां शाब्दत्वार्थापत्तित्वाभ्यामवच्छिन्नबोधस्यालीकत्वेन शब्दानुपपत्तिभ्यां सम्भूय तथाविधौपादानिकबोधस्य जनना-

योगाच्च। यत्तु गौर्ज्ञायते गौर्नश्यति सर्वत्र गोत्वादि-जातिशक्तेनैव गवादिपदेन लक्षणया गोत्वादिविशिष्टा व्यक्तिर्बोध्यते व्यक्तीनां बहुत्वेनानन्यलभ्यत्वेन च तत्र शक्तेरकल्पनात् तात्पर्य्यानुपपत्तेरपि लक्षणाया वीजत्वात् यदाहुर्मण्डनाचार्य्याः "जातेरस्तित्वनास्तित्वे न हि कश्चिद्विवक्षति। नित्यत्वाल्लक्षणीयाया व्यक्तेस्ते हि विशेषणे" इति तदपि तुच्छं व्यक्तिविनाशतायां गोत्वादि-जातौ गवादिपदस्य मुख्यप्रयोगाभावेन तन्मात्रस्याशक्यत्वे तद्वति गवादौ लक्षणाया वक्तुमशक्यत्वात् शक्यसम्बन्धस्यैव लक्षणात्वात्। न च गोरन्यो महिष इत्यादौ पञ्चम्यर्थेऽवधित्वे प्रतियोगित्वे वा स्वावच्छेद्यत्वसम्बन्धेन शुद्धस्य गोत्वादेरन्वयात्तथाविधस्थल एव जातौ मुख्यप्रयोगः तत्र पञ्चम्याः स्वार्थेऽवधित्वादौ स्वनिष्ठगोत्वावच्छेद्यत्वसंसर्गेण प्रकृत्यर्थस्य गवादेरन्वयबोधकत्वात् अन्यथा गोगोत्वयोर्भक्तिशक्तिभ्यां गोपदेन बोधने वृत्तिद्वययौगपद्यापत्तेः वस्तुतः शुद्धस्य गोत्वादेः शाब्दधीप्रकारतायाः समवायावच्छिन्नत्वनियमात्तस्यावधित्वादौ स्वावच्छेद्यत्वादिसम्बन्धेनान्वयोदुर्घटः एवं द्रव्यं घट इत्यादिप्रतीतेः समवायेन प्रमात्वानुरोधाद्घटत्वजातेर्नानात्वोपगमादिति"।

ततः परं प्रागुपदर्शितं प्राभाकरमतमुत्थाप्य दूषितं यथा

"शाब्दमतेर्गवादिव्यक्त्यवगाहित्वमवश्यङ्कारणप्रयोज्यं अन्वयधीविषयतायास्तत्प्रयोज्यत्वनियमादन्यथा पक्षधर्मिक साध्यावगाहित्वादेरपि परामर्शादिप्रयोज्यता न स्यादनुमित्यादि सामान्यं प्रत्येव ज्ञानत्वादिना हेतुत्वस्य लाघवेनौचित्यात् पक्षतादिसहकृतपरामर्शाद्युत्तरज्ञानस्य तत् प्रकारस्यैव वा पक्षे साध्यावगाहित्वनियमादेवानुमित्यादेः प्रतिनियतपक्षाद्यवगाहित्वसिद्धेः। किञ्च गोत्वशक्यत्वं न गोत्वसमर्थत्वं यस्य धीरन्वयधीहेतुरप्रसिद्धत्वात् नापि तद्गोचरमभिधानामकं पदार्थान्तरं तत्र मानाभावात् न वा गोत्वानुभवजनकत्वं पटादिपदस्यापि गोत्वशक्यत्वापत्तेस्तस्यापि गवादिपदाकाङ्क्षादिसाचिव्येन गोत्वानुभवजनकत्वात् न च गोत्वानुभवसामान्यं प्रति हेतुत्वन्तथा गवादिपदेऽप्यसत्त्वात् नापि गोत्वानुभवजनकत्वप्रकारकनित्यसङ्केतवत्त्वं तादृशसङ्केतवत्त्वमात्रं वा गोत्वशक्तत्वमिति साम्प्रतं, गोपदं गोत्वेन गवानुभवस्य जनकतया न सङ्केतितमित्यादिग्रहेऽपि तस्य ग्रहाद्गोत्वेन गोरन्वयधीप्रसङ्गात् किन्तु गोत्वेन गवानुभवस्य जनकतया सङ्केतितत्वं तथा, तथा च पदधर्मिकतज्ज्ञानत्वेन गोत्वप्रकारकशाब्दं प्रति हेतुतायां गोत्वस्यैव तद्विशिष्टस्य गोरपि विषयविधयावच्छेदकत्वादवश्यं गोत्वादिविशिष्टो गवादिर्गवादिपदस्यार्थः"।

**जातिशब्द** पु० जातिवाचकः शब्दः। प्रकारविधया विशेष्यविधया वा जातिवाचके शब्दे हंसमृगादिशब्दादौ। "चिह्नैर्व्यक्तैर्भवेद्व्यक्तो जातिशब्दोऽपि वाचकः" हेमच०।

**जातिशस्य** न० ६त०। (जायफल) सुगन्धद्रव्यभेदे शब्दार्थचि०

**जातिसङ्कर** पु० जात्योर्विरुद्धयोः सङ्करः। परस्परविरुद्धयोः (परस्पराभावसमानाधिकरणयोः) १जात्योरेकत्र समावेशे स च जातिशब्दे जातिबाधकतया वैशेषिकसूत्रोपस्कारे प्रदर्शितः। २वर्णसङ्करे विभिन्नजातिकाभ्यां मातापितृभ्यां सङ्कीर्णवर्णे च यथा मूर्द्धावसिक्ताम्बष्ठादि।

**जातिसार** न० ६त०। (जायफल) ख्याते पदार्थे राजनि०।

**जातिस्फोट** पु० व्याकरणमतसिद्धे स्फोटभेदे वैयाकरणभूषणसारे हि वर्णस्फोटः पदस्फोटः वाक्यस्फोटः अखण्डपदवाक्यस्फोटौ इति व्यक्तिस्फोटाः पञ्च वर्णपदवाक्यभेदेन जातिस्फोटास्त्रय इत्यष्टौ स्फोटा उक्ताः। तत्र जातिस्फोटत्रयं क्रमेण हरिणा दर्शितं यथा

"शक्यत्व इव शक्तत्वे जातेर्लाघवमीक्ष्यताम्। औपाधिको वा भेदोऽस्तु वर्णानां तारमन्द्रवत्" अयं भावः। वर्णास्तावदावश्यकाः उक्तरीत्या च सोऽयं गकार इति वत् योऽयं गकारः स्मृतः सोऽयं हकार इत्यपि स्यात् स्फोटस्यैकत्वात् गकारोऽयं न हकार इत्यनापत्तेश्च। किञ्च स्फोटे गत्वाद्यभ्युपेयं न वा आद्ये तदेव गकारोऽस्तु वर्णनित्यतावादिभिरतिरिक्तगत्वानङ्गीकारात्। तथा चातिरिक्तस्फोटकल्पन एव गौरवम्। अन्त्ये गकारादिप्रतीतिविरोधः। वायुसंयोगवृत्ति ध्वनिवृत्ति वा वैजात्यमारोप्य तथा प्रत्यय इति चेन्न प्रतीतेर्विना बाधकं भ्रमत्वासम्भवात् अस्तु वा वायुसंयोग एव गकारोऽपि तस्यातीन्द्रियत्वं दोष इति चेद्धर्मवदुपपत्तेरिति कृतं स्फोटेन। तस्मात्सन्त्येव वर्णाः। परन्तु न वाचकाः गौरवात्। आकृत्यधिकरणन्यायेन जातेरेव वाच्यत्ववद्वाचकत्वस्यापि युक्तत्वाच्च। इदं हरिपदमित्यनुगतप्रतीत्या हर्य्युपस्थितित्वावच्छेदेन हरिपदज्ञानत्वेन हेतुत्वात्तदवच्छेदकतया च जाति विशेषस्यावश्यकल्प्यत्वात्। न च वर्णानुपूर्व्यैव प्रतीत्यवच्छेदकत्वयोर्निर्वाहः घटघटत्वादेरपि संयोगविशिष्ट-

मृदा आकारादिभिश्चान्यथासिद्धत्वापत्तेः। तस्मात्ता जातिरेव वाचिका तादात्म्येनावच्छेदिका चेति। ननु सरोरस इत्यादौ जात्योः सत्त्वादर्थभेदबोधो न स्यादित्यत आह औपाधिको वेति। वा त्वर्थे उपाधिरानुपूर्वी सैव जातिविशेषाभिव्यञ्जकेति भेदः कारणीभूतज्ञानस्येति नातिप्रसङ्ग इति भावः। उपाधिप्रयुक्तज्ञानवैलक्षण्ये दृष्टान्तमाह वर्णानामिति। ननु जातेः प्रत्येकं वर्णेष्वपि सत्त्वात् प्रत्येकादर्थबोधः स्यादित्यत आह। "अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता। कैश्चिद्व्यक्तय एवास्या ध्वनित्वेन प्रकल्पिताः।" अनेकाभिर्वर्णव्यक्तिभिरभिव्यङ्ग्यैव जातिः स्फोट इति स्मृता योगार्थतया बोधिकेति यावत्। एतेन स्फोटस्य नित्यत्वात्सर्वार्थबोधापत्तिरित्यपास्तम्। अयं भावः यद्यपि वर्णस्फोटपक्षे कथितदोषोऽस्ति तथापि पदवाक्यपक्षयोर्न, तत्र तस्या व्यापकत्वेऽनित्यस्य धर्मियाङ्क्रमानसिद्धत्वादिति। कैश्चिद्व्यक्तयोध्वनय एव ध्वनिवर्णयोर्भेदाभावादित्यभ्युपेयन्ते इति शेषार्थः। उक्तं हि काव्यप्रकाशे "बुधैर्वैयाकरणैः प्रधानीभूतस्फोटरूपव्यङ्ग्यव्यञ्जकशब्दस्य ध्वनिरिति व्यवहारः कृतः" इति।

ननु का सा जातिस्तत्राह। "सत्यासत्यौ तु यौ भागौ प्रतिभावं व्यवस्थितौ। सत्यं यत्तत्र सा जातिरसत्या व्यक्तयोमताः।" प्रतिभावम् प्रतिपदार्थम्। सत्यांशो जातिः असत्या व्यक्तयः। तत्तद्व्यक्तिविशिष्टं ब्रह्मैव जातिरिति भावः। उक्तञ्च कैयटेन "असत्योपाध्यवच्छिन्नं ब्रह्मतत्त्वं द्रव्यशब्दवाच्यमित्यर्थ इति"। "ब्रह्मतत्त्वमेव शब्दस्वरूपतया भातीति" च। कथं तर्हि ब्रह्मदर्शने च गोत्वादिजातेरप्यसत्त्वादनित्यत्वम्, "आत्मैवेदं सर्वमिति श्रुतिवचनादिति कैयटः सङ्गच्छताम् अविद्या आविद्यिको धर्मविशेषोवेति पक्षान्तरमादायेति द्रष्टव्यम्"।

**जातिस्मर** पु॰ जातिः अर्य्यतेऽत्र स्नानादिना स्मृ—आधारे बा॰ अप्। १तीर्थभेदे "ततो देवह्रदेऽरण्ये कृष्णवेनाजलोद्भवे। जातिस्मरह्रदे स्नात्वा भवेज्जातिस्मरो नरः" भा॰ व॰ ८५ अ॰। जातिं पूर्वजन्मवृत्तान्तं स्मरति स्मृ—अच्। २पूर्वजन्मवृत्तान्तस्मारके त्रि॰। तत् स्मरणहेतुकर्म च मनूक्तं यथा "वेदाभ्यासेन सततं शौचेन तपसैव च। अद्रोहेण च भूतानां जातिं स्मरति पौर्व्विकीम्"। "शुभेन कर्म्मणा तेन जाता जातिस्मरा मृगाः। त्रासादनुत्पादय्य संविग्नाश्च्ये कालञ्जरे गिरौ" हरिवं॰ २१ अ॰।

**जाती** स्त्री जन—क्तिच् वा ङीप्। मालत्यां पुष्पप्रधानवृक्षे अमरः। पुष्पेऽपि स्त्री "पुष्पे जातीप्रभृतयः स्वलिङ्गाः" इत्यमरोक्तेः। "जातिर्जाती च सुमना मालती राजपुत्रिका। चेतिका हृद्यगन्धा च सा पीता स्वर्णजातिका। जातीयुगं च तिक्तोष्णं तुवरं लघु दोषजित्। शिरोक्षिमुखदन्तार्त्तिविषकुष्ठानिलास्रजित्" भावप्र॰। "तत् कुड्मलं नेत्ररोगव्रणविस्फोटकुष्ठहृत्" राजनि॰।

**जातीय** त्रि॰ जातौ भवः छ। जातिभवे। अस्य किञ्चिदुपपदादेव प्रयोगः सजातीयः विजातीयः तुल्यजातीयः।

**जातु** अव्य॰ जै—क्षये जन—वा बा॰ क्तुन्। १कदाचिदित्यर्थे अमरः। "मनस्तु यं नोज्झति जातु यातु मनोरथः कण्ठपथं कथं सः" नैष॰। "न जातु वैनायकमेकमुद्धृतम्" माघः। "न जातु कामः कामानामुपभोगेन शाम्यति" मनुः। २सम्भावनायां ३गर्हायाञ्च शब्दर॰। गर्हार्थकेन जातुशब्देन योगे अन्यलकारबाधेन सर्वत्र लट्। "जातु निन्दसि गोविन्दमपि निन्दसि शङ्करम्" मुग्ध॰। "जातु तत्रभवान् वृषलं याजयति"।

**जातुक** न॰ जातु गर्हितं कं जलमस्मात्। हिङ्गुनि शब्दच॰

**जातुधान** न॰ जातु गर्हितं धानमभिधानमस्य। यातुधाने राक्षसे अमरटीकायां रमानाथः।

**जातुष** त्रि॰ जतुनो विकारः अण् सुक् च। जतुनिर्मिते। "यदाऽऽशौषं जातुषाद्दह्यमानस्तान्" भा॰ आ॰ १२ अ॰।

**जातू** पु॰ जन-ड जान् तूर्व्वति हिनस्ति तूर्व—क्विप् पूर्वपददीर्घः। वज्रे। "स जातूभर्मा श्रद्दधानः" ऋ॰ १।१०३।२। "जातू इत्यशनिमाचक्षते" भा॰। व्युत्पत्तिस्तथैवोक्ता।

**जातूकर्ण** पु॰ ऋषिभेदे। स च अष्टाविंशतितमे द्वापरयुगे जातः यथोक्तं हरिवं॰ ४२अ॰ "नवमे द्वापरे विष्णोरष्टाविंशे पुराऽभवत्। वेदव्यासस्तथा जज्ञे जातूकर्ण पुरःसरः" स च उपस्मृतिकर्त्ता यथोक्तं हेमा॰ दा॰ ख॰ अङ्गिरसा "जाबालिर्नाचिकेतश्च स्कन्दो लौगाक्षिकश्यपौ। व्यासः सनत्कुमारश्च शतगुर्जनकस्तथा। व्याघ्रः कात्यायनश्चैव जातूकर्ण्यः कपिञ्जलः। बौधायनः कणादश्च विश्वामित्रस्तथैव च। उपस्मृतय इत्येताः प्रवदन्ति मनीषिणः"। ततो गर्गा॰ अपत्ये यञ्। जातूकर्ण्यं तदपत्ये पुंस्त्री। स्त्रियां ङीप् यलोपौ। जातूकर्णी।

**जातूष्ठिर** त्रि॰ जातु कदाचित् स्थिरः वेदे बा॰ सत्वं पृषो॰ दीर्घश्च। सर्वदास्थिरे। "जातूष्ठिरस्य प्रवयः सहस्वतः"

क्र० २।१।३।११। "जातूष्ठिरस्य सर्वं दास्थिरस्य" भा० ।

जातेष्टि स्त्री जाते पुत्रजनने इष्टिः। पुत्रजन्मोत्तरं श्रुतिविहिते वैश्वानराख्ये इष्टिभेदे ।

जातेष्टिन्याय पु० जैमिनिप्रदर्शिते पितृकृतेष्ट्या पुत्रगतफलसूचके एकस्य काम्यत्वनैमित्तिकत्वसूचके न्यायभेदे स च न्यायो जै० प्रथमस्य चतुर्थे पादे यथा ।

काम्येष्टिकाण्डे श्रूयते । "वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते यदष्टाकपालो भवति गायत्र्यैवेनं ब्रह्मवर्चसेन पुनाति यन्नवकपालस्त्रिवृतैवास्मिंस्तेजो दधाति यद्दशकपालो विराजैवास्मिन्नन्नाद्यं, यदेकादशपालस्त्रिष्टुभैवास्मिन्निन्द्रियमादधाति यद्द्वादशकपालो जगत्यैवास्मिन् पशून् दधाति यस्मिन् जाते एतामिष्टिं निर्वपति स एव पूतो बलवान् तेजस्वो अन्नाद इन्द्रियावी पशुमान् भवतीति"। अष्टाष्टादिसंख्यासामान्यात् पुरोडाशादीनां गायत्र्यादिरूपताकल्पना कृता द्वादशकपालेषु या संख्या तस्यामष्टत्वादिसंख्यानामन्तर्भावात् संख्यां निमित्तीकृत्याग्निहोत्रादिशब्दवत् अष्टाकपालादिशब्दाः कर्म्मनामधेयानीत्येकः पक्षः ।

अयमनुपपन्नः तथा हि द्वादशकपालादिशब्दा न संख्यापराः किन्तु पुरडाशद्रव्यपराः द्वादशकपालेषु संस्कृत इति व्युत्पत्तेः एवमष्टाकपालादिशब्दादयोऽपि तथा सति नामधेयस्य निमित्तत्वं नास्तीति चेत् पुरोडाशद्रव्यरूपगुणो विधीयतां न च द्वादशकपालं निर्वपेदित्युत्पत्तिविधिगिष्टद्वादशपुरोडाशविरुद्धत्वादष्टाकपालादेरनवकाश इति वाच्यं ब्रह्मवर्चसादिविशेषफलाय तद्विधेनावसरपत्तेरित्यपरः पक्षः ।

अयमपि पक्षोऽनुपपन्नः अनेकगुणविधौ वाक्यभेदापत्तेः न च भिद्यन्त्येव वाक्यानि, द्वादशकपालं निर्वपेदिति विहितयागस्य यस्मिन् जाते एतामित्युपसंहारेण एकवाक्यत्वावगमात् द्वादशकपाल इतीष्टेर्नामधेयमिष्टिरंगी अष्टाकपालादिभिरंशैः स्तूयत इति सिद्धान्तः पक्षः। अत्र च पुत्रजन्मनिश्चयः, पुत्रस्य पूतत्वादिफलकामना चेति संवलिताधिकारः काम्यनैमित्तिकत्वात् अतः केवलपुत्रजन्मरूपनिमित्तनिश्चयवतः केवलपुत्रपूतत्वादिकामनावतो वा नाधिकार इति सुधीभिर्विभावनीयम्" तत्त्वबो० ।

अनेन न्यायेन अन्यकृतकर्म्मणा अन्यस्य फलसाधनताऽपि सूचिता यथा पुत्रकृतश्राद्धेन पितुः स्वर्गादि फलं जन्यते एवं पितृकृतेष्ट्या पुत्रगतपूतत्वादिफलसिद्धिः । अतएव हेमाद्रिणा श्राद्धकल्पे अयमेव न्यायः पुत्रकृतश्राद्धेन पितुरुपकारकत्वे दृष्टान्ततयोक्तः ।

जातोक्ष पु० जातः प्राप्तदस्यावस्थः उक्षा टच्समा०। युवर्षभे इह जातत्वं प्राप्तबलीवर्द्दभावत्वं प्राप्तदस्यावस्थत्वमिति यावत्

जात्य त्रि० जातौ भवः यत् । १कुलीने, २श्रेष्ठे, ३कान्ते च मेदि०। ४सुन्दरे जटाधरः "किं वा जात्याः स्वामिनो ह्रेपयन्ति" माघः । "जात्यस्तेनाभिजातेन शूरः शौर्य्यवता कुशः" रघुः । "सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु । आनुलोम्येन संभूता जात्या ज्ञातास्त एव ते" मनुः ।

जात्यन्ध त्रि० जातौ जन्मन्येवान्धः । जन्मान्धे "अनंशौ क्लीवपतितौ जात्यन्धबधिरौ तथा । उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः" मनुः ।

जात्यासन न० "अथ जात्यासनं वक्ष्ये येन जातिस्मरो भवेत् । हस्ताङ्घ्रियुग्मं भूमौ च गमनागमनं ततः" रुद्रयामलोक्ते आसनभेदे ।

जात्युत्तर न० जात्या व्याप्तिविधुरसाधर्म्यवैधर्म्यादिना उत्तरम्। न्यायोक्ते असदुत्तरे तच्च चतुर्विंशतिविधं जातिशब्दे दर्शितम् ।

जान पु० जन–भावे घञ् वेदे वृद्धिः। १उत्पत्तौ "को वेद जानमेषाम्" ५।५३।१। "जानमुत्पत्तिम्" भा०। जनस्येदमण्। २जनसम्बन्धिनि त्रि०। "महते जानराज्यायेन्द्रस्येन्द्रियाय" यजु० ९।४०। स्त्रियां ङीप् ।

जानक त्रि० जनकस्य पितुः तन्नामन्टपस्येदं वा अण् ।१पितृसम्बन्धिनि २जनकन्टपसम्बन्धिनि च स्त्रियां ङीप्। सा च ३रामपत्न्यां सीतायाम् "मुमोच जानन्नपि जानकीं न यः" माघः ।

जानकि पु० जनकस्यापत्यम् इञ्। भारतप्रसिद्धे न्टपभेदे । "विनाशनस्तु चन्द्रस्य य आख्यातो महासुरः। जानकिर्नाम विख्यातः सोऽभवन्मनुजाधिपः" भा० आ० ६७अ०। "जानकिश्च सुशर्म्मा च मणिमान् पोतिमत्सकः" भा०उ०३अ०।

जानन्ति पु० ऋग्वेदिभिस्तर्पणीये ऋषिभेदे । "जानन्तिबाहविगार्ग्य गौतमशाकल्यबाभ्रव्यमाण्डव्यमार्कण्डेयाः" इत्युपक्रमे "ते सर्वे तृप्यन्त्विति" आश्व०गृ०३।४।४।

जानपद पु० जानेन उत्पत्त्या पद्यते पद–अच् । १जने लोकमात्रे "कृतप्रज्ञस्य मेधावी बुधो जानपदः शुचिः" भा० शा० ८३अ० । जनपद एव स्वार्थे अण् । २देशे च मेदि०। जनपदादागतः जनपदे भवो वा अण् । जनपदादागते ३कारादौ "स यथा महाराजो जान-

पदान् गृहीत्वा स्वे जनपदे यथाकामं परिवर्त्तते" शत० ब्रा० १४।५।१।२०। ४देशभवे च "देयं चौरहृतं द्रव्यं राज्ञा जानपदाय तु" याज्ञ०। ५वृत्तौ स्त्री ङीष् जानपदी अन्यत्र ङीप्। स्वरे भेदः। नियमपक्षे टाप् इति भेदः। परगा० बहुत्वे अणो लुक्। जनपदाः।

**जानश्रुतेय** पु० जनश्रुतेः ऋषेरपत्यम् "इतश्चानिञः" पा० ढक्। जनश्रुतेरपत्ये औपविनामके राजर्षिभेदे "औपविनैव जानश्रुतेयेन प्रत्यवरोढम्" शत०ब्रा० ५।५।१।१।५।

**जानायन** पुंस्त्री जनस्य तन्नामकर्षेः गोत्रापत्यम् अश्वा०फञ्। जननामकर्षेगोत्रापत्ये।

**जानु** न० जन–ञुण्। ऊरुजङ्घयोर्मध्यभागे (हाँटु) स्वार्थे क अत्रैवार्थे अमरः। "निम्नहा पारीसुभयेन जानुनोः" माघः। "ऊरू अरत्नी जानुनी विशोमेऽङ्गानि सर्वतः" यजु० २७८ "जानुकपिच्छे चतुरङ्गुले च" इ०स०५८अ०

**जानुकारक** पु० रविपार्श्वगभेदे शब्दार्थचि०।

**जानुजङ्घ** पु० नृपभेदे। "अनरण्यो नरपतिर्जानुजङ्घस्तथैव च" भा० अनु० १६५ अ०।

**जानुप्रहृतिक** न० जानुना प्रहृतं प्रहारस्तेन निर्वृत्तम् अक्षद्यूता० ठक्। जानुप्रहारनिर्वृत्ते मल्लयुद्धभेदे।

**जानुविजानु** न० खड्गयुद्धप्रकारभेदे तत्प्रकाराश्च द्वात्रिंशत् हरिवं० २१६ दर्शिता यथा

तत्र तावसिना युद्धं चक्रतुर्युद्धलालसौ। भ्रान्तमुद्भ्रान्तमाविद्धं प्रविद्धं बहुनिःसृतम्। आकरं विकरं भिन्नं निर्म्मर्यादमभानुषम्। सङ्कुचितं कुलचितं सव्यं जानुविजानु च। आच्छितं चित्रकं चित्रं कुद्रवं लवणं हृतम्। सर्वबाहुर्विनिर्बाहुः सव्येतरमथोत्तरम्। विबाहुन्नुन्नबाहु च सव्योन्नतमुदासि च। पृष्ठतः पृथितञ्चैव यौधिकं पृथितं तथा। इति प्रकारान् द्वात्रिंशच्चक्रतुः खड्गयोधिनौ"।

**जानुच्छित** त्रि० जनैः छितं परिकल्पितम् पृषो०। जनपरिकल्पिते। "एतद्धि वा अस्य जानुच्छितं प्रज्ञातमवसानं यद्गतुष्पथम्" शत० ब्रा० २।६।२।७। "जानुच्छितं जनैः परिकल्पितम्" भा०। [एव च" हरिवं २६ अ०।

**जान्य** पु० ऋषिभेदे। गार्ग्यः पृथुस्तथैवाग्ने जान्यो वामन

**जाप** पु० जप–घञ्। जपे मन्त्रोच्चारणे कर्म्मण्युपपदे अण्। मन्त्रजापादयः मन्त्रादिजपकर्त्तरि त्रि०। [भरणिः।

**जापन** न०। चु० जप–भावे ल्युट्। १निरसने २निवर्त्तने च

**जाबाल** पु० जबालाया अपत्यम् अण्। सत्यकामे ऋषिभेदे जबालशब्दे उदा०। तेन दृष्टं साम अण्। २सामवेदीये उपनिषद्भेदे च उपनिषच्छब्दे १२२२ पृ० दृश्यम्। एतस्मिन् परे कर्मधारये महच्छब्दस्य प्रकृतिस्वरः महाजाबालः। महच्छब्दस्यान्तोदात्तः। तदीयस्वर एव न समासस्वरः।

**जाबालि** पु० जबालस्यापत्यम् इञ्। ऋषिभेदे स च उपस्मृतिकर्त्ता। जातूकर्णशब्दे प्रमाणं दृश्यम्।

**जामदग्न्य** पु० जमदग्नेरपत्यम् गर्गा० यञ्। जमदग्नेः ऋषेरपत्ये परशुरामादौ। "तेजोभिर्गतवीर्य्यत्वात् जामदग्न्यो जड़ीकृतः" रामा० बा० ७७।१२। कण्वा० ततोऽण् यलोपः। जामदग्न तच्छात्रे।

**जामदग्नेय** पु० जमदग्नेरपत्यं प्रत्ययविधौ तदन्तग्रहणस्य प्रतिषेधेऽपि आर्षत्वात् "अग्निकलिभ्याम्" पा० ढक्। परशुरामे "भार्गवं जामदग्नेयं राजा राजविमर्द्दनम्" रामा० बा० ७४ अ०। [दृश्यम्।

**जामल** न०आगमशास्त्रभेदे। तस्य वर्ण्यादित्वमपि रुद्रजामले

**जामा** स्त्री जम–अदने बा० अण् स्त्रीत्वम्। दुहितरि। "अन्यत्र जामया सार्द्धं प्रजानां पुत्र ईहते। दुहितान्यत्र जातेन पुत्रेणापि विशिष्यते" भा० अनु०४५ अ०। "जामया कन्यया सार्द्धं पुत्रः पितरं धनमीहते" इत्यर्थः नीलक०।

**जामातृ** पु० जायां माति मिनोति मिमीते वा निपा०।१दुहितृपतौ, अमरः। २सूर्य्यावर्त्ते, स्वामिनि च मेदि० उणादिषु निपातनसिद्धत्वेन तृजन्तत्वाभावात् सर्वनामस्थाने परे न वृद्धिः। जामातरौ जामातरः इत्यादिः "ऋत्विक्स्वस्रियजामातृयाज्यश्वशुरमातुलाः" याज्ञ०। "विष्णुं जामातरं मन्ये"।

**जामि(मी)** स्त्री जम-इन् नि० वृद्धिः। १भगिन्यां २कुलस्त्रियां,अमरः ३दुहितरि, ४स्नुषायां, ५सन्निहितसपिण्डस्त्रियाम्, शब्दार्थचि० "जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः" "शोचन्ति जामयो यत्र विनश्यन्त्याशु तत्कुलम्। शोचन्ति तु न यत्रैता वर्द्धते तद्धि सर्वदेति" मनुः। "गृहपतिसंवर्द्धनीयसन्निहितसपिण्डस्त्रियो जामय इति" कुल्लू० वा ङीप्। तत्रार्थे शब्दर०। "मातापितृभ्यां जामीभिर्भ्रात्रा पुत्रेण भार्य्यया। दुहित्रा दासवर्गेण विवादं न समाचरेत्" भा० शा० २४३अ०। स्त्री ब० व०। ६उदके ७अङ्गुलौ निघण्टुः।

**जा(या)मित्र** न० "जा(य)मित्रं सप्तमं स्थानम्" ज्योतिषपरिभाषिते लग्नात् सप्तमे स्थाने। "तिथौ च जा(या)

मित्रगुणान्वितायाम्” कुमा०। उपचारात् तिथेस्तत्साहित्यम्

**जा(या)मित्रवेध** पापात् सप्तमस्थानस्थचन्द्ररूपे योगभेदे। उपयमशब्दे दृश्यम्। “मूलत्रिकोणनिजमन्दिरगोऽथ पूर्णो मित्रर्क्षसौम्यग्टहगोऽथ तदीक्षितो वा जा(या)मित्रवेधविहितानपहृत्य दोषान् दोषाकरः शुभमनेकविधं विधत्ते” ज्यो० त०।

**जामिवत्** न० उदके निघण्टुः जामीत्यत्र पाठान्तरम्।

**जामेय** त्रि० जाम्या भगिन्या अपत्यम् ढक्। भागिनेये हेम०।

**जाम्बव** न० जम्ब्वाः फलं अण् तस्य वा न लुप्। जम्ब्वाः फले जाम्बवेन निर्वृत्तम् अरीहणा० वुञ्। जाम्बवक तन्निर्वृत्ते त्रि०।

**जाम्बवत्** पु० रामायणप्रसिद्धे ऋक्षराजभेदे। तस्यापत्यं स्त्री अण् ङीप्। १तद्दुहितरि श्रीकृष्णपत्नीभेदे “वासुदेवस्तु निर्जित्य जाम्बवन्तं महाबलम्। लेभे जाम्बवतीं कन्यामृक्षराजस्य सम्मताम्” हरिवं० ३८ अ० “जाम्बवतीनर्पहितं चारुसङ्गायमब्रवीत्” भट्टिः।

“ऋक्षराजस्य पुत्रोऽत्र महाप्रज्ञः सुदुर्जयः। पितामहसुतश्चापि जाम्बवानिति दुर्जयः” रामा०। जाम्बवं तदाकारोऽस्त्यस्याः मतुप् मस्य वः पृषो० वलोपः ङीप्। २नागदमन्यां स्त्री राजनि०। [नागदमन्याम् राजनि०।

**जाम्बवी** स्त्री जाम्बवं तदाकारोऽस्त्यस्याः अण् ङीप्।

**जाम्बवौष्ठ** न० जाम्बवमिव ओष्ठोऽस्य। सुश्रुतोक्ते व्रणादिदहनोपकरणभेदे “अथेमानि दहनोपकरणानि तद्यथा पिप्पल्यजाशकृद्गोदन्तशरशलाकाजाम्बवौष्ठेतरलौहा, क्षौद्रगुडस्नेहाश्च। तत्र पिप्पल्यजाशकृद्गोदन्तशरशलाकास्त्वग्गतानाम्। जाम्बवौष्ठेतरलौहानि मांसगतानाम्। जम्ब्वोष्ठमपत्र “जम्ब्वोष्ठेनाग्निवर्णेन तप्तया वा शलाकया” “जम्ब्वोष्ठेनाग्निवर्णेन पश्चाच्छेद्यं दहेद् भिषक्” सुश्रु०।

**जाम्बीर(ल)** न० जम्बीरस्य फलं अण् वेदे रस्य वा लः। १जम्बीरफले तदाकारे २जानुमध्यभागे च। “जाम्बीलेनारण्यम्” यजु० २५।३। “जाम्बीरं जम्बीरतरो, फलं रलयोरभेदः। तदाकारेण जानुमध्यभागो जाम्बीलस्तेनारण्यदेवं प्रीणामीति” वेददी०।

**जाम्बुवत्** पु० जाम्बवत्+पृषो०। ऋक्षराजे द्विरूपको०।

**जाम्बूनद** न० जम्बूनद्यां भवम् अण्। १स्वर्णे तन्नामनामके २कनकाह्वये धुस्तुरे च राजनि०।

जम्बूनद्यां तदुत्पत्तिकथा जम्बूद्वीपशब्दे २०४५ पृ० भाग० च दृश्यम्। “दक्षिणेन तु नीलस्य निषधस्योत्तरेण तु। सुदर्शनो नाम महान् जम्बूवृक्षः सनातनः। सर्वकामफलः पुण्यः सिद्धचारणसेवितः। तस्य नाम्ना समाख्यातो जम्बूद्वीपः सनातनः। योजनानां सहस्रञ्च शतञ्च भरतर्षभ!। उत्सेधो वृक्षराजस्तु दिवस्पृक् मनुजेश्वर!। अरत्नीनां सहस्रञ्च शतानि दश पञ्च च। परिणाहस्तु वृक्षस्य फलानां रसभेदिनाम्। पतमानानि तान्युर्व्यां कुर्वन्ति विपुलं स्वनम्। मुञ्चन्ति च रसं राजन्! तस्मिन्रजतसन्निभम्। तस्याः जम्ब्वाः फलरसो नदी भूत्वा जनाधिप!। मेरुं प्रदक्षिणं कृत्वा सम्प्रयात्युत्तरान् कुरून्। तत्र तेषां मनः शान्तिर्न पिपासा जनाधिप!। तस्मिन् फलरसे पीते न जरा बाधते च तान्। तत्र जाम्बूनदं नाम कनकं देवभूषणम्” भा० भी० ७अ०। “दधद्भिरभितस्तटौ विकचवारिजाम्बूनदैर्विनोदितदिनक्लमाः कृतरुचश्च जाम्बूनदैः” माघः “यदिदं निर्गतं तस्यास्तप्तजाम्बूनदप्रभम्। काञ्चनं धरणीं प्राप्तं हिरण्यमभवत्तदा” रामा० बा० ३८ अ०।

**जाम्बूनदेश्वरी** स्त्री १देवीभेदे २तदीयस्थाने च शब्दार्थचि०

**जायक** न० जयति गन्धान्तरं जि—ण्वुल्। पीतवर्णे सुगन्धिकाष्ठरूपे गन्धद्रव्यभेदे अमरः।

**जाया** स्त्री जायतेऽस्यां जनेर्यक् आत्वञ्च। १पत्न्यां विधिनोढायाम् अमरः। “पतिर्भार्य्यां संप्रविश्य गर्भो भूत्वेह जायते। जायायास्तद्धि जायात्वं यदस्यां जायते पुनः” मनुः “पतिः शुक्ररूपेण भार्य्यां संप्रविश्य गर्भतामापद्य तस्यां भार्य्यायां पुत्ररूपेण जायते। तथा च श्रुतिः “आत्मा वै पुत्रनामासीति। जायायास्तदेव जायात्वं यतोऽस्यां पतिः पुनर्जायते। तथाच बह्वृच ब्राह्मणम्, “पतिर्जायां प्रविशति गर्भो भूत्वेह मातरम्। तस्यां पुनर्नवो भूत्वा दशमे मासि जायते। तज्जाया भवति यदस्यां जायते पुनः। तत्रयासौ रक्षणीयेत्येतदर्थं नाम निर्वचनम्” कुल्लू०। “अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्याम्” रघु। “कः सन्नद्धे विरहविधुरां त्वय्युपेक्षेत जायाम्” मेघः। २ज्योतिषोक्ते लग्नावधिकसप्तमस्थाने। तत्र स्थाने जायायाः शुभाशुभचिन्तनीयत्वात् तथात्वम्। बहुव्री० जायाशब्दस्य निङ्। युवती जायास्य युवजानिः “युवजानिर्धनुष्पाणिः” भट्टिः। पतिशब्देन द्वन्द्वे तस्याः जम् दम् वा भवति। जम्पती दम्पती वा पक्षे जायापती।

**जायाघ्न** पु॰ जायां हन्ति "लक्षणे जायापत्योष्टक्" पा॰ लक्षणे टक्। हन-टक्। जायाहननसूचकलक्षणयुक्ते भर्त्तरि। "अमनुष्यकर्तृके च" पा॰ टक्। २तिलकालके सि॰ कौ॰ तस्य जायाहननसूचकत्वात् तथात्वम्। एवं ज्योतिषोक्ते ३योगभेदे च "यावत्तः सम्पद्योग्यमदनसदनमास्तात्रकोनां विरामः" इत्युक्तयोगस्य जायानाशसूचकत्वात् तथात्वम्।

**जायाजीव** पु॰ जायया तत्सम्भोगेन जीवति—अच्। नटे अमरः। [१नटे २बकपक्षे च मेदि॰।

**जायानुजीविन्** पु॰ जायया अनुजीवति अनु+जीव-णिनि।

**जायिन्** त्रि॰ जि-णिनि। १जययुक्ते "अफलं जन्म तस्याहं मन्ये दुर्जातजायिनः" भा॰व॰ ३५अ॰ "जायीतनाम्ना ध्रुवको द्वाविंशत्यक्षरान्वितः। संपातेन तालेन शृङ्गारेऽद्भुतेऽपि रसे" सङ्गीतदा॰उक्ते २ध्रुवकभेदे पु॰। तत्र जायीति पाठान्तरम्। शीलार्थे तु इनि जयीत्येव।

**जायु** पु॰ जयति रोगान् जि-उण्। १ औषधे अमरः। २जयशीले त्रि॰। "मखायुर्मतो जायवोरणे" ऋ॰१।११९।२। "व्रतेषु जायुर्मर्त्तेषु" ऋ॰ १।६७।१।

**जाये(या)न्य** पु॰ जि-बा॰ ए (आ) न्यण्। जयशीले "यो हरिमा जायान्योऽङ्गभेदो विसल्पकः" अथ॰१९।४४।२। तैत्तिरीये तु जायेन्य इति पाठः।

**जार** पु॰ जीर्यत्यनेन जॄ-करणे घञ्। १उपपतौ अमरः। "शूद्रो यदर्य्यै जारो न पोषमनुमन्यते" यजु॰२३।३१। "जारं चौरेत्यभिवदन् दाप्यः पञ्चशतं दमम्" याज्ञ॰। बा॰ कर्त्तरि घञ्। २जारके च। "स्वसारं जारो अभ्येति पश्चात्" ऋ॰१०।३।३। "जारो जरयिता" भा॰।

**जारज** पुंस्त्री जारात् उपपतेर्जायते जन-ड। अनियुक्तायां स्त्रियां १उपपतिजाते (वेजन्मा) पुत्रे २तथाभूतकन्यायां स्त्री "अमृते जारजः कुण्डः मृते भर्त्तरि गोलकः" अमरः। जन-क्त ५त॰। जारजातादयोऽप्यत्र। "अनियुक्तासुतश्चैव पुत्रिण्याप्तश्च देवरात्। उभौ तौ नार्हतो भागं जारजातककामजौ" मनुः।

**जारजयोग** पु॰ जारजस्य सूचको योगः। ज्योतिषोक्ते योगभेदे। "न लग्नमिन्दुञ्च गुरुर्निरीक्षते न वा शशाङ्कं रविणा समायुतम्। सपापकोऽर्केण युतोऽथवा शशी परेण जातं प्रवदन्ति निश्चयात्। अस्तपादस्य संयोगात् द्वितीया द्वादशी यदि। सप्तमी चार्कमन्दारे जायते जारजो ध्रुवम्"। अन्योऽपि योगः बृहज्जातकोक्तः जातकशब्दे ३०८६ पृ॰ दृश्यः।

**जारण** पु॰ जारयति जॄ-णिच्-ल्यु। जारके १द्रव्यभेदे। जार्य्यतेऽनेन जॄ-णिच् करणे ल्युट्। २जारणसाधने द्रव्यभेदे। कर्त्तरि ल्यु। ३जीरके स्त्री ङीप् राजनि॰। भावे-ल्युट्। ४जीर्णतासम्पादने न॰।

**जारतिनेय** पुंस्त्री जरत्या अपत्यम् ढक् कल्याण्या॰इनङ्। १जरत्या अपत्ये। जरतिनोऽपत्यं शुभ्रा॰ढक्। २जरतिनोऽपत्ये च। [पौत्रके।

**जारभर** पु॰ जारं बिभर्त्ति पोषयति भृ-पचा॰ अच्। जार-

**जारित** त्रि॰ जॄ-णिच्-क्त। १शोधिते २मारिते धात्वादौ।

**जारी** स्त्री जॄ-णिच्-अच् गौरा॰ ङीष्। (जाड़ी) ख्याते क्षौषधभेदे मेदि॰।

**जारु** पु॰ जॄ-उण्। १जरायौ। "बीजानीतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि च उद्भिज्जानि" ऐत॰ उ॰। "जारुजानि जरायुजानि मनुष्यादीनि" भाष्यम्। २जारके त्रि॰।

**जारुधि** पुं॰ जारुजातिको द्रव्यभेदो धीयतेऽस्मिन् धा-आधारे कि उप॰स॰। सुमेरोः कर्णिकाकेशरभूते पर्वतभेदे। "कुरङ्ग कुरर कुसुम्भ वैकङ्क त्रिकूट शिशिर पतङ्ग रुचक निषध शिनिवास कपिल शङ्ख वैदूर्य जारुधि हंसऋषभ नाग कालञ्जर नारदादयो गिरयो मेरोः कर्णिकाया इव केशरभूता मूलदेशे परित उपक्लृप्ताः" भाग॰५।१६।२२।

**जारूथी** स्त्री जरूथेन असुरविशेषेण निर्वृत्ता अण् ङीप्। नगरीभेदे "जारूथ्यामाहुतिः क्राथः शिशुपालोजनैः सह" भा॰व॰२२अ॰। "जारूथ्यां नगर्य्याम्" नीलक॰ "जारूथ्यामाहुतिः क्राथः शिशुपालश्च निर्जितः" हरिवं॰१६ अ॰।

**जारूथ्य** त्रि॰ जरूथं मांसं स्तोत्रं वा तदर्हति अञ्। १मांसदानयुक्ते २स्तोत्रार्हे च "दशाश्वमेधानाजह्रुः जारूथ्यान् स निरर्गलान्" भा॰व॰१६अ॰। "जारूथ्यान् त्रिगुणदक्षिणान् इत्यर्जुनमिश्रः" तच्चिन्त्यं जरूथ्यामर्थ्यन्यथा इष्टये जयनि जरूथं मांसमिति याज्ञिकाः तथा च मांसमयान् मांसादिदानप्रधानान् पुष्टानित्यर्थः। जरूथोऽसुरविशेषः इति वेदभाष्यम्। अत्र जरतेः स्तुत्यर्थस्य शङ्खाह्वयादयो विरोधाच्च जरूथं स्तोत्रमुच्यत इति जारूथ्यान् स्तोत्राहानित्यर्थः" नीलक॰। जारूथ्यशब्दकल्पनं प्रामादिकमेव।

**जाल** पुं॰न॰ जल-घाते ज्वला॰ ण, चु॰ जल-संवरणे कर्त्तरि अच् वा। १शणसूत्रनिर्मिते स्वनामख्याते पदार्थे अमरः "अभ्याययुश्च तं देशं निषादा जालकर्मिणः। व्याधं ते

योजयामासुर्निःशेषेण जनाधिप !” भा० अनु० ५०अ० । २मत्स्यादिबन्धने ३समूहे च अस्फुटफलादौ ४जारके (जालि) । ५दम्भे मेदि० गवाक्षो गवाक्षच्छिद्रं तत्र “गवाक्षजालैरभिनिष्पतन्त्यः” भट्टिः समूहे “नीहारजालमलिनः पुनरुत्पन्नस्तु चन्द्राः” “करजालमस्तसमयेऽपि सताम्” माघः “गवाक्षसौधजालपतितां रविभासः” किरा० ६इन्द्रजाले हेम०।७कदम्बवृक्षे पु० मेदिनिः ।

**जालक** पु० जालमिव कायति कै–क । १गवाक्षे हेमच० । स्वार्थे क ।२जालशब्दार्थे । “मक्षिकाः मशकान् कीटान् जालकानिव पश्यति” सुश्रु० ३जारके पुंस्त्री स्त्रियां ङीप् शब्दार्थचि० । ४जालतुल्ये मेघलोम्नि च ।

**जालकारक** पु० कृ–ण्वुल् ६त० । जालस्य मक्षिकादिपातनाय जालाकारस्य कारके-मर्कटे (माकड़सा) हेमच० मात्येन कृत्रिमस्य २कर्त्तरि त्रि० । मात्येन कृतपदार्थस्य स्वरूपाच्छादकत्वेन जालतुल्यकरणात्तस्य तथात्वम् ।

**जालकि** पु० त्रिगर्त्तषष्ठान्तर्गते आयुधजीविभेदे । “आहुस्त्रिगर्त्तषष्ठांस्तु कौण्डोपरथदाण्डकिः । क्रौष्टुकिर्जालमानिश्च ब्रह्मगुप्तोऽथ जालकिः” सि०कौ० ततः स्वार्थे छ । जालकीय तदर्थे । बहुषु लुक् । जालकय इत्येव ।

**जालकिनी** जालमिव कायति कै–क जालकं देहलोमतदस्त्यस्याः इनि ङीप् । १मेष्यां त्रिका० २मेषे पु० ।

**जालकीट** पु० जाले पतितः कीटोऽस्य । मर्कटे लूतायां (माकड़सा) तदीयजाले मशकादीनां पतनात्तस्य तथात्वम् । जालकीटे भवः पक्षा० अण् । २तद्भवे त्रि० ।

**जालचौर्य्य** न० जाले जालके चोरं तत्र साधु यत् । चोरविषे स्थावरभेदे । स्थावरविषोपक्रमे “कुमुदघ्नी स्नुही जालचौर्य्यीणि त्रीणि चोरविषाणि” सुश्रुतः ।

**जालगर्द्दभ** पु० क्षुद्ररोगभेदे । क्षुद्ररोगशब्दे२३८२पृ०दृश्यम् ।

**जालगोणिका** जालमिव गोणो यत्र कप् ह्रस्वः । दधिमन्थनभाण्डे त्रिका० ।

**जालन्धर** पु० दैत्यभेदे “पुरा जालन्धरं दैत्यं ममापि परिकम्पनम् । पादाङ्गुष्ठस्य रेखातश्चक्रं कृत्वा हरोऽहरत् । तच्च चक्रं मया लब्धं नेत्रपद्मार्चनात् विभोः । सुदर्शनाख्यं वै चक्रं दैत्यचक्रप्रमर्दनम्” काशी० २१अ० ध्रुवं प्रति विष्णोरुक्तिः । २त्रिगर्त्तदेशे पु० तद्देशस्य तेन कृतत्वात् तथात्वम् । सोऽभिजनोऽस्य अण् । पित्रादिपरम्परया ३तद्देशवासिनि । बहुषु तस्य लुक् ।४ऋषिभेदे पु० ततः नडा० गोत्रापत्ये फक् । जालन्धरायण तद्गोत्रापत्ये पुंस्त्री० । जालन्धरायणस्य विषयो देशः राजन्या० वुञ् । जालन्धरायणक तस्य परिशीलिते देशे पु० ।

**जालपाद्** पु० जालमिव पादोऽस्य हस्त्यादि० नान्त्यलोपः । १हंसे । “जालपादभुजौ तौ तु पादयोश्चक्रलक्षणौ” (नरनारायणौ) भा० शा० ३१४५ श्लो० । “प्लुदान् जालपादांश्च कोयष्टिनखविष्किरान्” मनुः “जालपादान् खञ्जरीटानज्ञातांश्च मृगद्विजान्” याज्ञ० तन्मांसभक्षणं निषिद्धवान् । स्त्रियां कुम्भपद्या० अन्त्यलोपे ङीप् पादः पच्च । जालपदी हंसाम् वरणादिगणे जालपदीत्यत्र जालपदीति पाठान्तरे जालपद्या अदूरभवो देशः वरणा० अण् । जालपद तस्या अदूरभवदेशे त्रि० । पृषो० अन्त्य लोपः । जालपाद् हंसे त्रिका० ।

**जालप्राया** स्त्री जालस्य प्रायो बाहुल्यं यस्याम् । लौहमयाङ्गरक्षिण्यां (साजोया) हेमच० ।

**जालमालि** पु० आयुधजीविभेदे । ततः स्वार्थे छ । तदर्थे जालकिशब्दे दृश्यम् ।

**जालवर्वुरक** पु० जालाकारो वर्वुरकः । (काँटाबावला) वृक्षभेदे । “जालवर्वुरको रूक्षो वातरोगकफापहः । पित्तदाहकरश्चोष्णः कषायश्च प्रकीर्त्तितः” राजनि० ।

**जालसरस** न० नित्यक० अच् समा० । सरोवरभेदे ।

**जालह्रद** त्रि० जलप्रचुरो ह्रदः तत्र भवः तस्येदं वा शिवा० अण् ।१जलप्रचुरह्रदभवे २तत्सम्बन्धिनि च स्त्रियां ङीप् ।

**जालाक्ष** पु०जालमिवाक्षि पच् समा० । गवाक्षे “हेमजालाक्षनिर्गच्छद्धूमेनागुरुगन्धिना” भाग० ८।१५।१८ ।

**जालाष** न०. भेषजभेदे “जालाषेणाभिषिञ्चत जालाषेणोपसिञ्चत । जालाषमुग्रं भेषजं तेन नो मृड जीवसे” अथ० ६।५७।२ ।

**जालिक** पु० जालेन चरति पर्प० ष्ठन् । जालेन जीवति वेतना० ठञ् वा । १जालजीविनि जालेन २चारिणि वा ३कैवर्त्ते त्रिका० ४मर्कटे हेमच० । ५जालजीविनि वागुरिके मृगबन्धनार्थं जालपातिनि मृगयुभेदे अमरः। ष्वित् स्त्रियां ङीष् इति भेदः । जालमस्त्यस्य ठन् । ६जालोपजीविनि ग्रामजालिनि च त्रि० हेमच० ।

**जालिका** स्त्री जाल+अस्त्यर्थे ठन् । १वस्त्रभेदे स्त्रीणां मुखावरणवस्त्रे २गिरिसारे ३जलौकायां ४विधवायां योधानामङ्गरचिताङ्गरक्षण्यां (साजोया) च मेदि० । (जालि) ५जारके शब्दार्थ० ।

**जालिनी** स्त्री जाल+अस्त्यर्थे इनि ।१चित्रशालायां हेमच०

१कोषातकीवृक्षे राजनि०। घोषातक्यां रत्नमा०। ४प्रमेह-रोगिणां पिड़कभेदे सुश्रु०। "तत्र वसामेदोभ्यामभिपन्नशरीरस्य त्रिभिर्दोषैरनुगतधातोः प्रमेहिणो दश पिड़का जायन्ते। तद्यथा शराविका सर्षपिका कच्छपिका जालिनी विनता पुत्रिणी मसूरिका अलजी विदारिका विद्रधिका चेति। शरावमाना तद्रूपा निम्नमध्या शराविका१। गौरसर्षपसंस्थाना तत्प्रमाणा च सर्षपी२। सदाहा कूर्मसंस्थाना ज्ञेया कच्छपिका३ बुधैः। जालिनी४ तीव्रदाहा तु मांसजालसमावृता। महती पीड़का नीला पिड़का विनता५ स्मृता। महत्यल्पाचिता ज्ञेया पिड़का सा तु पुत्रिणी६। मसूरसमसंस्थाना ज्ञेया सा तु मसूरिका७। रक्ता सिता स्फोटवती दारुणा त्वलजी८ भवेत्। विदारीकन्दवद्वृत्ता कठिना च विदारिका९। विद्रधेर्लक्षणैर्युक्ता ज्ञेया विद्रधिका१० बुधैः" सुश्रुतः।

**जाली** स्त्री जालमस्त्यस्याः अच् गौरा० ङीष्। १ज्योत्स्नायां (झिङ्गा) अमरः२पटोले राजनि०; (जालि)३जालके च।

**जाल्म** त्रि० दु०जल—वा०म। १पामरे२क्रूरे ३असमीक्ष्यकारिणि च मेदि० "त्वयि पूजनं जगति जाल्म!" माघः "चर्म विश्राम्यतां जाल्म! स्कन्धस्ते यदि बाधति। न तथा बाधते स्कन्धो यथा बाधति बाधते" उद्भटः। "जनान् योऽभिभवत्यन्यान् कर्मणा हि स वै पुमान्। नत्वेव-जाल्मीं कापालीं वृत्तिमेषितुमर्हसि" भा०शा०१२२अ० स्वार्थे क। तत्रार्थे "नित्यब्रह्मगुरुद्वेषी जाल्मकः सुविगर्हितः" भा० द्रो० १९३ अ०।

**जाल्य** पु० जल—ण्यत्। शिवे "मत्स्यो जलचरो जाल्योऽकलः केलिकलः कलिः" भा०शा०२८६अ० शिवस्तुतौ।

**जावन्य** न० जवनस्य भावः दृढा० वा ष्यञ्। वेगे। पक्षे इमनिच् जवनिमन् पु०, तल् जवनता स्त्री, त्व जवनत्व न० तत्रार्थे। [देशादौ।

**जावायनि** त्रि० जव+चतुरर्थ्यां कर्णा० फिञ्। जवयुक्त-

**जाषक** न० जाषक+स्वार्थे०। जाषके कालीयनामगन्धद्रव्ये अमरटीकायां संसारहन्तरी।

**जाष्कमद** पुंस्त्री पक्षिभेदे। "अनिक्लाय जाष्कमदा स्कन्धाः श्येनाः पतत्रिणः" यजु०११।९।१।

**जास्पति** पु० जायते जन—ड+जायाः दुहितुः पतिः वेदे नि०। जामातरि "सदं सम्जास्पतिं वा" ऋ०१।१८५।८। "जाः पुत्र्यः तासां पतिं जामातरम्" भा०।

**जास्पत्य** न० जाया च पतिश्च जायापती तयोर्भावः कर्म वा ष्यञ् पृषो०। जायापत्योः १कर्मणि "सं जास्पत्यं सुयममा" ऋ०५।२८।३ "जास्पत्यं जायापत्योः कर्म" भा०। २तद्भावे च।

**जाहक** पु० दह—ण्वुल् पृषो०। (घोङ्गु) इति ख्याते १खगे, २मार्ज्जारे, ३खट्वायां ४कारण्डिकायां मेदि०। ५विलेशये जन्तुभेदे राजनि० "जाहकाहिशशक्रोडगोधानां कीर्त्तनं शुभम्" वृहत्सं० ८५ अ०।

**जाहुष** पु० राजभेदे "परिविष्टं जाहुषं विश्वतः" ऋ० १।११६।२०। "जाहुषः कश्चित् राजा" भा०।

**जाह्नवी** स्त्री जह्नु+अण् ङीप्। "जानुद्वारा पुरादानीं जह्नुः संपीय कोपतः। तस्य कन्यास्वरूपा च जाह्नवी तेन कीर्त्तिता" इत्युक्तनिर्वचनायां गङ्गायाम्। जह्नुशब्दे ३०८१पृ० दृश्यम् "ज्यैष्ठे मासि क्षितिसुतदिने शुक्लपक्षे दशम्यां हस्ते शैलाविरगमदियं जाह्नवी मर्त्त्यलोकम्" ति०त० गङ्गः तस्यां तिथिविशेषे स्नानफलं यथा "सामान्यदिवसस्नानसङ्कल्पं शृणु सुन्दरि!। पुण्यं दशगुणञ्चैव मौषलस्नानतः परम्। ततस्त्रिंशद्गुणं पुण्यं रविसंक्रमणे दिने। अमायाञ्चापि तत्तुल्यं द्विगुणं दक्षिणायने। ततो दशगुणं पुण्यं नराणाञ्चोत्तरायणे। चातुर्मास्यां पौर्णमास्यामनन्तं पुण्यमेव च। अक्षयायाञ्च तत्तुल्यमेतद्वेदनिरूपितम्। असंख्यपुण्यफलदमेतेषु स्नानदानकम्। सामान्यदिवसस्नानात् दानात् शतगुणं भवेत्। मन्वन्तरायां देवेशि! युगाद्यायां तथैव च। माघस्य सितसप्तम्यां भीष्माष्टम्यां तथैव च। ततोऽपि द्विगुणं पुण्यं नन्दायां भवदुर्लभे!। दशहरादशम्याञ्च युगाद्यादिसमं फलम्। नन्दासमञ्च वारुण्यां महत्पूर्वे चतुर्गुणम्। ततश्चतुर्गुणं पुण्यं द्विमहत्पूर्वके सति!। पुण्यं कोटिगुणञ्चैव सामान्यस्नानतो हि यत्। चन्द्रोपरागसमये सूर्य्ये दशगुणं ततः। पुण्येऽर्द्धोदये काले ततः शतगुणं फलम्। सर्वेषामेव सङ्कल्पं वैष्णवानां विपर्य्ययः" इति ब्रह्मवै० प्रकृतिख०। "अपूरयत्सा जलधिञ्च जाह्नवी" माघः।

**जि** जये अभिभवे भ्वा० पर० सक० अनिट्। जयति अजैषीत् जिगाय जिग्यतुः जिगयिथ जिगेथ। जेता जीयात् जेष्यति। जापयति-ते अजीजपत्-त। जिगीषति। जेता जयी जितः जयः। "जयत्यतिबलो रामो लक्ष्मणश्च महाबलः। राजा जयति सुग्रीवो राघवेणानुपालितः" रामा० बहुलतः प्रयोगः। "सर्वद्रव्याणि कुप्यञ्च यो यज्जयति तस्य तत्" मनुः। "दुर्य्योधनो द्रौपदि! त्वामजै-

षीत्" भा० स० ६५ अ० । "जगाय तत्र फलारं स रामः सार्वलौकिकः" भट्टिः "गर्जितानन्तरां दृष्टिं सौभाग्येन जिगाय सा" कुमा० । "जीयात् पशुपतिगवैपर्वतपविः शौरोपदेवकविः" मुग्धबो० कस्य तुबन्तुस्थाने तिबन्तौ । जयति जयन्ति । "जयति जयति देवः" नाटकेषु बहुस्थाने कञ्चुकाद्युक्तिः । "नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति" काव्यप्र० । अयञ्च सर्वेभ्य उत्कर्षस्तेन स्वापेक्षयाप्युत्कर्षबोधनात् तस्य नमस्कारव्यञ्जकता यथाह काव्या० "जयत्यर्थेन च नमस्कार आक्षिप्यते इति तार्किकप्रवाद इति" । अभिभवपूर्वकप्राप्तौ अयं द्विक० । दुहाच पजदण्ड रुधि प्रच्छि चिञ् शासु जिमथ्य मुषाम् । कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम्" इत्युक्तेः । शतं जयति देवदत्तम्" सि० कौ० "इन्द्रं वाजं जापयत" यजु० ९।११। "यद त्वष्ट्रयेव वाजिं जापयेयुः" आश्व० ९ ८ । "इमाञ्च पृथ्वीं कृत्स्नामेकाह्न स व्यजीजयत्" भा० द्रो० ७३ अ० स्वार्थे णिच् । व्यजीजयत् इति पाठे प्रमाण आर्षः । "न तं जिगीषतः मादौ बद्धोऽसि कामिकाम्" भाग० २।१०।२५ । "अगाहताहादमतां जिगीषया" नैष० । जेगीयते । कर्मणि अजीयत अजायि । "आगजीयत कृष्णा ततो मही" रघुः

अति+अतिशयेन जये "विराटियं धुतजा अत्यजैषीत्" अथ० १४।२।७४ । [धैर्यं तस्य गच्छतः" भट्टिः

वि+अति परस्परजये आत्म० । "व्यतिजिग्ये समुद्रोऽपि न

अधि+आधिक्येन जये "सपत्नांश्चाधिजीयास्म" भट्टिः ।

अनु+अनुरूपजये पश्चाज्जये च । "कौशल्योऽन्वजयत् महान्" भा० स० ३२ अ० ।

अभि+आभिमुख्येन जये । "ते चान्द्रमसमेव लोकमभिजयन्ति" प्रश्नो० उ० १ अभिगमे च "वेदश्रुतिभिराख्यामैरर्थैर्विजिगीषति" भा० शा० ८४६५ ।

अव+अवरोधेन जये । "शरैर्विध्वस्य तांश्चौरानवजित्य च तद्धनम्" भा० आ० ७७६ । "अवजित्य सुयन्नाथ धनं चादाय सर्वशः" भा० वि० ३ अ० ।

परा+पराक्रमपूर्वकजये आत्म० । पराजयते । "स्वं पराजयमानोऽसावुद्बन्ध्या पवनात्मजम्" भट्टिः । "पराजितेनापि कृतौ हरस्य" कुमा० । ग्लानौ अक० तत्र "पराजेरसोढः" पा० सस्यार्थस्यापादानता । "अध्ययनात् पराजयते ग्लायतीत्यर्थः सि० कौ० "तां पराजयमानां स प्रीते रक्षां दानवात्मनाम्" भट्टिः ।

प्रति+प्रतिरूपजये । "इत्यादिकं मायया प्रत्यजैषीत्" भा० द्रो० १२५७ श्लो० । "अयं प्रतिजिगीषन्तस्तान् समभिद्रुताः" ४२७६ श्लो० ।

वि+विशेषेण जये आत्म० विजयते । "येन देवान् मनुष्यांश्च पार्थो विजयते मृधे" भा० वि० १२४५ श्लो० । "जगादाद्रि- जिगीषवः । "दैत्यं कुलं विजित्य" भट्टिः ।

जि त्रि० ज्या+रा० कि । १जयशीले २पिशाचे पु० एकाक्षरको० ।

जिकन पु० स्मृतिनिबन्धकारके विद्वद्भेदे ।

जिगत्नु पु० गम–क्नु सन्वच्च । प्राणवायौ उज्ज्वल० ।

जिगर्त्ति पु० गॄ–बा० ति द्वित्वञ्च । आच्छादके । "जिगर्त्ति-मिन्द्रो अपजर्गुराणः" ऋ० ५।२९।४ "जिगर्त्ति" सर्वमाच्छादयन्तम्" भा० ।

जिगीषा स्त्री जि–सन् भावे अ । १जयेच्छायां २प्रकर्षे, ३उद्यमे च मेदि० । "वत्सत जिगीषया" रघुः । "अगाहताहादमतां जिगीषया" नैष० ।

जिघत्नु पु० जिघांसु+पृषो० । जिघांसौ । "यो नः सनुत्य उत वा जिघत्नुः" ऋ० २।३०।९ "जिघत्नु जिघांसुः" भा० ।

जिघत्सा स्त्री अत्तुमिच्छा अद–सन् घसादेशः भावे अ । १भोजनेच्छायां २क्षुधायां हेमच० । [अमरः ।

जिघत्सु त्रि० अत्तुमिच्छति अद–सन्–घसादेशे उ । क्षुधिते

जिघांसु त्रि० हन–सन्–उ । हननेच्छौ "प्रयान्तदेह हरिवं जिघांसुः" भा० २रिपौ पु० हेमच० ।

जिघृक्षा स्त्री ग्रह–सन् भावे अ । ग्रहणेच्छायां "पटुरपि प्रियकण्ठजिघृक्षया" रघुः ।

जिघ्र त्रि० घ्रा–कर्त्तरि श जिघ्रादेशः । घ्राणकर्त्तरि "स्वामी निश्वसितेऽप्यसूयति मनोजिघ्रः सपत्नीजनः" सा० द० "आजिघ्रैः पुष्पगन्धानां पतङ्गैर्गलपिता वयम्" भट्टिः ।

जिङ्गिनी स्त्री जिगि–गतौ णिनि (झिङ्गी) लतायां भावप्र० "जिङ्गिनी मधुरोष्णा च कषाया योनिशोधिनी । कटुका व्रणहृद्रोगवातातीसारहृत् पटुः" भावप्र० [अमरः ।

जिङ्गी स्त्री जिगि–गतौ अच् गौरा० ङीष् । मञ्जिष्ठायाम्

जिज्ञासा स्त्री ज्ञा–भावे अ । १ज्ञातुमिच्छायां २तदर्थविचारे च । "अथातो धर्मजिज्ञासा" जै० सू० । "अथातो ब्रह्मजिज्ञासा" शा० सू० । उभयत्र विचारार्थकताकरे दृष्टा "दुःखत्रयाभिघातात् जिज्ञासा तदपघातके हेतौ" सां० का० ।

जिज्ञासु त्रि० ज्ञातुमिच्छुः ज्ञा–सन्–उ । १ज्ञातुमिच्छौ २मुमुक्षौ च "चतुर्विधा भजन्ते माम्–"आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ !" गीता ।

|3|"



**जिज्ञास्थि** न० अस्थ्यः जिज्ञासा राजद० परनि० सालोपश्च। अस्थिजिज्ञासायाम्।

**जित्** त्रि० जि—क्विप्। जेतरि। "मारजित् लोकजित् जिनः" अमरः "स्वर्जिता यजेत" "विश्वजिता यजेत" स्मृतिः। "यजेत वाश्वमेधेन स्वर्जिता गोषवेन वा" मनुः

**जित** त्रि०जि—कर्म्मणि क्त। १पराजिते २पराभते। भावे क्त। ३जये न०। तदस्यास्ति अच्। ४अर्हदुपासकभेदे पु० हेमच०।

**जितकाशि** पु० जितः अभ्यासपटुतया दृढ़ीकृतः काशिः मुष्टिर्येन। दृढ़मुष्टौ योधभेदे नीलकण्ठः।

**जितकाशिन्** त्रि० जितेन जयेन काशते प्रकाशते काश—णिनि। १जिताहवे, जयिनि हेमच०। "अनिरुद्धो रणे बाणो जितकाशी महाबलैः" हरिवं० १७७ अ०।

**जितक्रोध** त्रि० जितः क्रोधो येन। १क्रोधशून्ये २विष्णौ पु०। "मनोहरो जितक्रोधो वीरबाहुर्विदारणः" विष्णुसं० "वेदमर्य्यादां स्थापयन् असुरान् हन्ति न तु कोपवशात्" भाष्योक्तेः तस्यासुरहननाय न कोपः किन्तु वेदमर्य्यादारक्षार्थं एवेति न तस्य कोपशालितेति बोध्यम्। जितमन्युरप्युभयत्र। "अनन्तरूपोऽनन्तश्रीर्जितमन्युर्भयापहः" विष्णुस०।

**जितनेमि** पु० जिता नेमिरत्र। आश्वत्थदण्डे हेमच०

**जितलोक** त्रि० जितः आयत्तीकृतः कर्म्मादिद्वारा लोकः स्वर्गादिर्येन। इष्टापूर्त्तादिकर्म्मभिः आयत्तीकृतस्वर्गादिलोके धार्म्मिके "स एकः पितृणां जितलोकानामानन्दः अथ ये शतं पितृणां जितलोकानामानन्दः" शत० ब्रा० १४।७।१।३३। "पितृणां दक्षिणमार्गानुयायिनाम् श्राद्धपिण्डपितृयज्ञादिकर्मभिः पितृतोषणद्वारा जितो लोको यैस्ते यद्वा जिता लोका येषामिति जितलोकाः" भा०। २अभिभूतलोके त्रि०।

**जितवत्** त्रि० जि+क्तवतु। १कृतजये स्त्रियां ङीप् सा च उशीनरनृपस्य २कन्यायाम्। "अस्ति मे मानुषे लोके नरदेवात्मजा सखी। नाम्ना जितवती नाम रूपयौवनशालिनी। उशीनरस्य राजर्षेः सत्यसन्धस्य धीमतः। दुहिता कथिता लोके मानुषे रूपसम्पदा" भा०आ०६६अ०।

**जितव्रत** त्रि० जितमायत्तीकृतं व्रतं येन। १आयत्तीकृतव्रते पृथुवंश्ये २हविर्द्धानपुत्रभेदे पु० "हविर्धानाद्धविर्धानी विदूरासूत षट् सुतान्। बर्हिषदं गयं शुक्लं कृष्णं सत्यं जितव्रतम्" भाग० ४।२४।८।

**जितशत्रु** पु० जितः शत्रुर्येन। १पराजितरिपुके रिपुजयकर्त्तरि। २अर्हतां पितृभेदे पु० हेमच०।

**जिताक्षर** त्रि० जितानि आयत्तीकृतानि अक्षराणि शीघ्रं तद्वाचनपाठवादि येन। दृष्टिमात्रेण वक्षरवाचनशक्तियुक्ते।

**जितात्मन्** त्रि०जितो वशीकृत आत्मा इन्द्रियं मनो वा येन। १जितेन्द्रिये। २श्राद्धभागार्हे देवभेदे पु० कौर्म्मिमच्छन्दे २०६।१पृ० दृश्यम्।

**जितामित्र** त्रि० जितः अमित्रो येन। १शत्रुपराजयकर्त्तरि २जितकामादिरिपुके च। ३विष्णौ पु०यज्ञरत्ना० "अजो महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः" विष्णुस० "जिता अमित्रा आभ्यन्तरा रागद्वेषादयो बाह्या रावणादयश्च येनासौ जितामित्रः" भा०।

**जितारि** पु० जिता अरयो आभ्यन्तरा रागादयो बाह्याश्च रिपवो येन। १बुद्धे त्रिका० २इत्वाकुनृपितरि हेमच० ३जितशत्रौ शत्रुजयकारिणि ४कामादिरिपुजयकर्त्तरि च त्रि० ५अविक्षितो नृपस्य पुत्रभेदे पु० "अविक्षितः परिक्षित्तु शबलाश्वश्च वीर्य्यवान्। आदिराजो विराजश्च शाल्मलिश्च महाबलः। उच्चैःश्रवा भङ्गकारो जितारिश्चाष्टमः स्मृतः" भा० आ० ६४ अ०।

**जिताष्टमी** स्त्री आश्विनकृष्णाष्टम्यां जीमूतवाहनपूजाद्यङ्गभूतायां जीमूताष्टम्यां तत्र कर्त्तव्यमुक्तं चमत्कारचि० भविष्योत्तरे "इषेमास्यसिते पक्षे अष्टमी या तिथिर्भवेत्। पुत्रसौभाग्यदा स्त्रीणां ख्याता सा जीवपुत्रिका। शालिवाहनराजस्य पुत्रो जीमूतवाहनः। तस्यां पूज्यः स नारीभिः पुत्रसौभाग्यलिप्सया। प्रदोषसमये स्त्रीभिः पूज्यो जीमूतवाहनः। पुष्करिणीं विधायाथ प्राङ्गणे चतुरस्त्रिकाम्"। विष्णुधर्म्मोत्तरे "पूर्वेद्युर परेद्युर्वा प्रदोषे यत्र चाष्टमी। तत्र पूज्यः सदा स्त्रीभिः राजा जीमूतवाहनः"। तथा च यद्दिने प्रदोषव्यापिनी अष्टमी तत्रैव व्रतम्। उभयदिने चेत् परदिने त्रिसन्ध्यव्यापित्वात्। उभयदिने प्रदोषाव्याप्तौ उदयगामिन्यां तदुक्तं निर्णयामृतसिन्धौ "लक्ष्मीव्रतं चाभ्युदिते शशाङ्के यत्राष्टमी चाश्विनकृष्णपक्षे। तत्रोदयं वै कुरुते दिनेशः! तदा भवेज्जीवितपुत्रिका सा" इति अस्यामष्टम्यां स्त्रीभिर्न भोक्तव्यम् "आश्विनस्यासिताष्टम्यां याः स्त्रियोऽन्नं हि भुञ्जते। मृतवत्सा भवेयुस्ता वैधव्यञ्च भवेद्ध्रुवम्" वचनात्।

**जिताहव** पु० जितः शत्रुराहवे येन । जितकाशिनि हेम० ।

**जितेन्द्रिय** त्रि० जितानि वशीकृतानीन्द्रियाणि येन । यथेष्टमिन्द्रियप्रचारप्रतिरोधिनि १वशीकृतेन्द्रिये "श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः । न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः" मनूक्ते हर्षविषादशून्ये २शान्ते जने । इन्द्रियजयस्य शौचकार्य्यः आत्मदर्शनयोग्यत्वे च हेतुः । यथोक्तं पात० सू० भा० "सत्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च" पात०सू० । "भवन्तीति वाक्यशेषः शुचेः सत्वशुद्धिस्ततः सौमनस्यं तत ऐकाग्र्यं तत इन्द्रियजयस्ततश्चात्मदर्शनयोग्यत्वं बुद्धिसत्वस्य भवतीति । एतच्छौचस्थैर्य्यादधिगम्यत इति" भा० । ३कामदहिकृत्त्वे पु० शब्दार्थचि० ।

**जितु(त्त)म** मिथुनराशौ "क्रियतावुरि जितु(त्त)म कुलीरलेय-पाथेय-यूककौर्पाख्याः । तौक्षिकआकोकेरो हृद्रोगश्चान्त्यभं चेत्थम्" ज्योत० मेषादिसंज्ञोक्तौ । अतिशयेन जित् जित्तम २अतिशयजययुक्ते त्रि० । [काष्ठमयपदार्थभेदे

**जित्या** स्त्री जि–क्यप् । हलहले हलयूमिसमीकरणार्थे

**जित्वन्** त्रि० जि–क्वनिप् । जयशीले । ततः कार्णा०चतुरर्थ्यां फिञ् । जैत्वनायनि जित्वनोऽदूरदेशादौ ।

**जित्वर** त्रि०जि–क्वरप् । जयशीले "सुराध्वरे सम्भरजित्वरेण" "गर्भ्वाणुप्रायमंस्त जित्वराणि" भट्टिः "करदीकृतभूपालो भ्रातृभिर्जित्वरैर्दिशाम्" माघः । क्वरपः टिड्ढाण जित्वादि" पा० सूत्रे पाठात् स्त्रियां ङीप् । मुग्ध० मते क्वरप् पित्त्वात् ईप् इति भेदः । सा च २काशीपुर्य्यां त्रिका० ।

**जिन** पु०जि–नक् । १बुद्धे अमरः २अर्हत्नामबौद्धभेदे ३विष्णौ च हेमच० । ४अतिवृद्धे उणा० । ५जित्वरे त्रि०मेदि० । तस्येदमण् । जैन जिनसम्बन्धिनि त्रि० "हस्तिना पीड्यमानोऽपि न गच्छेज्जैनमन्दिरम्" । तदीयमते च तच्च अर्हच्छब्दे ३८० पृ० दर्शितम् ।

**जिनसद्मन्** न० ६त० । जिनगृहे चैत्ये विहारे हेमच० ।

**जिनेन्द्र** पु०जिनानामिन्द्रः जिन इन्द्र इव वा । १बुद्धे कला० २व्याकरणकारके विद्वद्भेदे च । स्वार्थे अण् । तदर्थे "पाणिन्यमरजैनेन्द्राः जयन्त्यष्टादिशाब्दिकाः" कविकल्पद्रुमः ।

**जिनेश्वर** पु० ६त० । बुद्धे हेमच० ।

**जिम** भक्षे भ्वा० पर०सक०सेट् । जेमति अजेमीत् । उदित् जेमित्वा जान्त्वा जितः । "जेमनं लेप आहारः" अमरः

**जिरि** हिंसायां स्वा०पर०सक०सेट् । जिरिणोति अजिरायीत् । अयं वैदिकः ।

**जिल्लिक** पु० दक्षिणस्थे देशभेदे, सोऽभिजनोऽस्य अण् । तस्य राजा वा अण् । जैल्लिक पित्रादिक्रमेण तद्देशवासिनि तद्भूपे च बहुषु तस्य लुक् । तद्देशवासिषु तद्भूपेषु च ब० व० । "जिल्लिकाः कुन्तलाश्चैव सौहृदानलकाननाः" भा० स० ६अ० ।

**जिव** प्रीणने भ्वा० पर० सक० सेट् इदित् । जिन्वति अजिन्वीत् जिजिन्व इदित्त्वात् नोपधालोपः जिन्व्यते । "भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः" ऋ० १।१६४।५१ "इन्द्रेण जिन्विता मरुतागमन्" अथ० ६।३१।७। "रश्मिरसि क्षयस्य त्वयं जिन्व सवितृप्रसूती" ताण्ड्य०ब्रा०१।६ । "अपो रेतांसि जिन्वति" ऋ० ८।४४।१६ । "यदा त्वं प्राण ! जिन्वसि" ११।४।१४ । इट्ठौ च अक० । वेदे अस्य क्वचित् आत्म० "स जिन्वते जठरेषु प्रजज्ञीरन्" ऋ० ३।२।११। "जिन्वते वर्द्धते" भा० । वेदे तमध्यस्यैव प्रयोगात् शब्दकल्पद्रुमे अन्त्यस्थवान्तस्यैते तस्य निवेशनात् जिन्वतीति प्रयोगदर्शनाच्च श्रोष्ठ्यत्वभ्रान्त्या मतृकृतशब्दस्तोममहानिधौ जिन्वतीति ओष्ठ्यान्ततया रूपप्रदर्शनं प्रामादिकमेव । कविकल्पद्रुमे अन्तःस्थवान्तमध्य पाठात् धिविवातोरिव न मध्यलब्धोचितत्वात् ।

**जिवाजिव** पुंस्त्री जीवजीव+पृषो० । चकोरखगे शब्दर० जातित्वात् स्त्रियां ङीप् ।

**जिव्रि** पु०जॄ–रिक् ह्रस्वः । १समये २खगे च सि० कौ० ।

**जिष** सेके भ्वा० पर० सक० सेट् । जेषति अजेषीत् । उदित् जेषित्वा जिष्ट्वा । जिष्टः ।

**जिष्णु** पु० जिष–गस्नु । १विष्णौ हेमच० २इन्द्रे ३अर्जुने च ४जेतरि त्रि० मेदि० । तत्रार्जुने जयशीले च । "यमुनाह्रदोपरिगह्वसमण्डलद्युतिजिष्णु जिष्णुरस्तोष्णवारणम्" "भुजस्य परलोकजिष्णवः" माघः "अहं दुरापो दुर्द्धर्षो दमनः पाकशासनिः । तेन देवमनुष्येषु जिष्णुनामाऽस्मि विश्रुतः" भा० वि० ४४अ० । इन्द्रे "जयंश्च जिष्णुश्चामित्रं । जयतामिन्द्रमेदिनौ" अथ० ११।६।१८ । विष्णौ "विष्णुर्विक्रमणाद्देवो जयनात् जिष्णुरुच्यते" भा०उ०६९ अ० । जिष्णुनामनिरुक्तौ ।

**जिह्म** त्रि०हा–मन् सन्वत् आलोपश्च । १कुटिले २मन्दे ३तगरवृक्षे न० मेदि० । "मर्षितजिह्मवीक्षितैः" कुतसं० ।

"जिह्मं त्यजेयुर्निर्लोभमशक्तोऽन्येन कारयेत्" याज्ञ०। 'सुहृदर्थमीहितमजिह्मधियाम्" माघः४कपटे न०।"तदाशु कर्त्तुं त्वयि जिह्ममुद्यते" किरा० "जिह्मं कपटम्" मल्लि०। ५पिहिते त्रि०"जिह्मवारमपोर्णुते"ऋ०८।४।५। "जिह्मवारं पिहितद्वारम्" भा०। ६अधस्ताद्वर्त्तमाने च। "उच्चाबुध्नं चक्रतुर्जिह्मवारम्"ऋ० १।११६।११। "जिह्ममधस्ताद्वर्त्तमानम्"भा०। ७अप्रसन्ने च। "विधिसमयनियोगाद्दीप्तिसंहारजिह्मम्" किरा० "जिह्ममप्रसन्नम्" मल्लि०।

**जिह्मग** पुंस्त्री जिह्मं कुटिलं मन्दं वा गच्छति गम–ड। १सर्पे स्त्रियां जातित्वात् ङीप्। २मन्दगे त्रि० मेदि० स्त्रियां टाप्। "व्रतं चक्रे विनाशाय जिह्मगानां धृतव्रतः" "स दृष्ट्वा जिह्मगान् सर्वांस्तीव्रकोपसमन्वितः" भा० आ० ८ अ०। [ग्रहम्र० स्त्रियां जातित्वात् ङीप्।

**जिह्ममेहन** पुंस्त्री जिह्मं मन्दं मेहति मिह–ल्यु। भेके

**जिह्मशल्य** पु०जिह्मं कुटिलं शल्यमस्मात्। खदिरवृक्षे जटा०

**जिह्माशिन्** त्रि० जिह्मं मन्दमश्नाति अश–णिनि। मन्दभोजिनि ततः अपत्ये शुभ्रा० ढक्। जैह्माशिनेय तदपत्ये पु० स्त्री०।

**जिह्वल** त्रि० ह्वल–अच् बा० सम्वत्र जिह्वं जिह्वाव्यापारं लाति ला–क वा। भोजनलोलुपे। "श्राद्धं कृत्वा परश्राद्धे भुञ्जते ये च जिह्वलाः। पतन्ति नरके घोरे लुप्तपिण्डोदकक्रियाः" श्रा० त०।

**जिह्वा** स्त्री लेढ्यनया लिह–स्वादे व"शेवयह्वजिह्वेत्यादिना" नि०। १रसास्वादकरणे इन्द्रियभेदे २तदधिष्ठाने गोलके (जिव) ख्याते पदार्थे च। तदिन्द्रियस्य जलीयत्वं सि० मु० समर्थितं यथा "रसनं जलीयं गन्धाद्यव्यञ्जकत्वे सति रसव्यञ्जकत्वात् सक्तुरसव्यञ्जकोदकवत् रसनसन्निकर्षे व्यभिचारवारणाय द्रव्यत्वे सतीति विशेषणीयम्। तस्याधिष्ठातृदेवता च प्रचेताः "दिग्वातार्कप्रचेतोऽश्वीत्यादि" भा० त्रि० उक्तेः। अग्नेर्जिह्वाश्च सप्त तन्नामानि "काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा। स्फुलिङ्गिनी विश्वरुपी च देवी लोलायमाना इति सप्त जिह्वाः" मुण्डकोप०।"तस्याः कफादिदोषात् लक्षणादिकं भाव०प्र० दर्शितं यथा "शाकपत्रप्रभा रूक्षा स्फुटिता रसनाऽनिलात्। रक्ता श्यामा भवेत् पित्ताल्लिप्तार्द्रा धवला कफात्। परिदग्धा खरस्पर्शा कृष्णा दोषत्रयेऽधिके। सैव दोषद्वयाधिक्ये दोषद्वितयलक्षणा"

यस्य क्लीवत्वं भरत आह स्म। जिह्वलः। इन्द्रियपरत्वे तथात्वमिति तु युक्तम्। ३वाक्ये निघण्टुः

**जिह्वाजप** पु० जिह्वया जपः। "जिह्वाजपः स विज्ञेयो केवलं जिह्वया बुधैः"तन्त्रसारोक्ते जपभेदे।"उच्चैर्जपाद्विशिष्टः स्यादुपांशुर्दशभिर्गुणैः। जिह्वाजपः शतगुणः साहस्रो मानसः स्मृतः" तन्त्रसा० तत्फलमुक्तम्।

**जिह्वानिर्लेखन** न० जिह्वा निर्लिख्यतेऽनेन निर्+लिख–करणे ल्युट्। (जिव आचड़ान) द्रव्यभेदे तल्लक्षणं यथा "जिह्वानिर्लेखनं हैमं राजतं ताम्रजं तथा। पाटितं मृदु तत्काष्ठं मृदुपत्रमयं तथा। तत्काष्ठं दन्तधावनयोग्यकाष्ठम्। दशाङ्गुलं मृदु स्निग्धं तेन जिह्वां लिखेत् सुखम्। तज्जिह्वामलवैरस्यदौर्गन्ध्यजड़ताहरम्" भाव० प्र०।

**जिह्वाप** पुंस्त्री जिह्वया पिबति पा–क। १कुक्कुरे २व्याघ्रे ३बिड़ाले ४भल्लूके च शब्दरत्नावली ५चित्रकव्याघ्रे विश्वः। स्त्रियां जातित्वात् सर्वत्र ङीप्।

**जिह्वामल** ६त०। जिह्वास्थितमले कुलुके त्रिका०।

**जिह्वामूल** न० ६त०। जिह्वाया मूले। तत्र भवः छ। जिह्वामूलीय अयोगवाहान्तर्गतवर्णभेदे। "जिह्वामूलीयस्य जिह्वामूलम्" सि०कौ०। स च कखयोः परयोः विसर्गस्थाने जातः। कवर्गे च"जिह्वामूले तु कुः प्रोक्तः" शिक्षायां कवर्गस्य जिह्वामूलस्थानत्वोक्तेस्तथात्वम्।

**जिह्वारद** पुंस्त्री० जिह्वा रद इव यस्य। पक्षिणि हारा० तस्य जिह्वाया एव दन्तकार्य्यकारित्वात्तथात्वम्। स्त्रियां जातित्वात् ङीप्।

**जिह्वारोग** पु० मुखरोगान्तर्गतजिह्वागतरोगभेदे। तल्लक्षणादि भावप्र० उक्तं यथा।

"वातजः पित्तजश्चापि कफजोऽलाससंज्ञकः। उपजिह्विका च गदा जिह्वायां पञ्च कीर्त्तिताः। तत्र वातजस्य लक्षणमाह। जिह्वाऽनिलेन स्फुटिता प्रसुप्ता भवेच्च शाकच्छदनप्रकाशा। स्फुटिता मनाग्विदीर्णा। प्रसुप्ता रसानभिज्ञतया सुप्तेव। शाकच्छदनप्रकाशा शाको मरुभूमिजातो द्रुमः तद्वत् कण्टकाचिता। पित्तजमाह। पित्तात् सदाहैरुपचीयते च दीर्घैः सरक्तैरपि कण्टकैश्च। कफजमाह। कफेन गुर्वी बहुलाचिता च मांसोच्छ्रयैः शाल्मलिकण्टकाभैः। बहुला स्थूला। मांसोच्छ्रयैः मांसजकण्टकैः। अलासमाह। जिह्वास्थले यः श्वयथुः प्रगाढ़ः सोऽलाससंज्ञः कफरक्तमूर्त्तिः। जिह्वां सरक

स्तम्भयति प्रवृद्धो मूले च जिह्वा भृशमेति पाकम्। प्रगाढ़ः प्रकर्षेण गाढ़ो दारुणः। कफरक्तमूर्त्तिः कफरक्ताभ्यां मूर्त्तिर्यस्य स कफरक्तज इत्यर्थः। जिह्वास्तम्भेन वायुरत्र बोद्धव्यः। भृशं पाकेनेति पित्तस्य अतस्त्रिदोषजोऽयम्। असाध्यत्वञ्चास्य। उपजिह्विकामाह। जिह्वाग्ररूपः श्वयथुश्च जिह्वामुन्नाम्य जातः कफरक्तयोनिः। प्रसेककण्डूपरिदाहयुक्तः प्रकथ्यतेऽसावुपजिह्विकेति। जिह्वाग्ररूपः जिह्वाग्राकृतिः" भावप्र०। "पक्वान्नहरणाच्चैव जिह्वारोगः प्रजायते" शातात०।

**जिह्वाशल्य** पु० जिह्वायाः शल्यमिवास्यस्य अच्। खदिरवृक्षे राजनि०।

**जिह्वावत्** पु० यजुर्वेदीयवंशान्तगतर्षिभेदे। "अथ वंश" इत्युपक्रमे। "जिह्वावतो बाध्योगाज्जिह्वावाँ बाध्योगः" शत०ब्रा०१४।८।४।२३। २जिह्वायुक्ते त्रि०। स्त्रियां ङीप्।

**जिह्वास्वाद** पु० जिह्वया स्वादः। लेहने (चाटा) हेमच०।

**जीति** स्त्री जि–क्तिन् वेदे दीर्घः। जये "अजीतयेऽहतये परस्य स्वस्तये" ऋ० ८।८६।४। "अजीतये अजयाय" भा०। लोके तु ज्या–क्तिन् सम्प्रसारणे "अचः" इति पा० सम्प्रसारणस्य दीर्घः। २हानौ स्त्री।

**जीन** त्रि० ज्या–क्त सम्प्रसा० दीर्घः। जीर्णे अमरः "जीनकार्मुकवस्त्रादीन् पृथक् दद्यात् विशुद्धये" मनुः।

**जीमूत** पु० जयति नभः, जीयतेऽनिलेन वा। जि–क्त। "जेमुट् चोदात्तः दीर्घश्च"। जीवनस्योदकस्य मूतं बन्धो यस्येति वा जीवनं जलं मूतं बद्धमनेन। मूङ् बन्धने कर्म्मणि क्तः पृषोदरादित्वात् साधु। ज्यानं जीर्णं ज्या–सं० क्विप्, जिया वयोहान्या मूतो बद्ध इति वा जीवनं मुञ्चति वा पृषो०। १पर्वते २मेघे ३मुस्तायां ४देवताड़वृक्षे च अमरः ५इन्द्रे ६भृतिकरे ७घोषकलतायां च हेम०। मेघे "यथा जीमूतशब्देन स्त्रीणां त्रासोऽभिजायते" दुन्दुभिपूजामन्त्रः। "जीमूतैरपिहितसानुरिन्द्रकीलः" किरा०। "जीमूतस्येव भवति प्रतीकम्" ऋ० ६।७५।१ "प्रतिचरणविवृद्धरेफाः स्युरर्णार्णवव्यालजीमूतलीलाकरोद्दामशङ्खादयः" वृ० र० उक्ते दण्डकभेदे तथा च एकादशभीरगणैः रचितो जीमूताख्यो दण्डकः। स्वार्थे क। जीमूतक तेष्वर्थेषु।

**जीमूतकूट** पु० जीमूतो मेघः कूटेऽस्य। पर्वते हारा०।

**जीमूतकेतु** पु० विद्याधरपतौ राजभेदे जीमूतवाहनपितरि। नागानन्दे दृश्यम्।

**जीमूतमूल** पु०जीमूतस्य मुस्तकस्य मूलमिव मूलमस्य। शठ्यां शब्दरत्ना०।

**जीमूतवाहन** पु० जीमूतो मेघो वाहनमस्य। मेघवाहने १इन्द्रे शालिवाहनपुत्रे २नृपभेदे जिताष्टमीशब्दे दृश्यम्। जीमूतकेतोः विद्याधरस्य ३पुत्रे च तत्कथा नागानन्दे दृश्या।

**जीमूतवाहिन्** पु० जीमूतं मेघमुद्दिश्य वहति ऊर्द्ध्वं गच्छति वह–णिनि। धूमे हेमच०। मेघानां धूमादेराविर्भावात् तस्य तथात्वम्।

**जीर** पु०ज्या–रक् संप्र०दीर्घः। १जीरके, २खड्गे,३अणौ च। मेदि०जोरी रक् च" उणा०सौ०ज़ु–रप्रत्ययः ईश्चान्तादेशः।४जवशीले ५क्षिप्रे च उज्ज्वल०जीरदानुः। "उत नः सुद्योत्मा जीराश्वः" ऋ०१।१४१।१२। "जीराश्वः क्षिप्राश्वः" भा०। संज्ञायां कन्। (जीर) ख्याते पदार्थे मेदिनि०। मदनपालनिघण्टौ तस्य क्लीवता तद्भेदा गुणाश्चोक्ता यथा "जीरकं दीर्घकं शुक्लमजाजीकणजीरकम्। जीरकं जरणं कृष्णं वर्षकाली सुगन्धिकम्। कालिका वाष्पिका कुञ्चिकारवी चोपकुञ्चिका। पृथ्वीका सुखवी पृथ्वी स्थूलजाप्युपकालिका। जीरकत्रितयं रूक्षं कटूष्णं दीपनं लघु। संग्राहि पित्तलं मेध्यं गर्भाशयविशुद्धिकृत्। चक्षुष्यं पवनाध्मानगुल्मच्छर्दिबलासजित्" मदनपालः।

**जीरण** पु० जीरक+पृषो०। जीरके राजनि०।

**जीरदानु** पु०जीरं क्षिप्रं जवशीलं वा ददाति दा–नु।१जवशीलदाने, २क्षिप्रदातरि च "विद्यामेषं वृजनं जीरदानुम्" ऋ० १।१६६।१५ "जीरदानुं जयशीलदानम्" भा० "जीरदानूरेतो दध्यन्वोषधीषु गर्भम्" ५।८३।१ "जीरदानुः क्षिप्रदानः" भा०।

**जीरि** पु० जीर्य्यति जॄ–बा०रिक्। १मनुष्ये "रक्षन्ति जीरयो वनानि" ऋ०४।५१।६ "जीर्य्यन्ति इति जीरयो मनुष्याः" भा० जॄ–अन्तर्भूतण्यर्थे रिक्। २जारके ३अभिभावके च त्रि० "प्रजीरयः सिस्रते सध्य्रक् पृथक्" ऋ० २।१७।२ "जीरयो जरयितारः" भा०।

**जीर्ण** त्रि० जॄ–क्त।१जरायुक्ते२पुरातने च अमरः "वासांसि जीर्णानि यथा विहाय" गीता। "जीर्णमन्नं प्रशंसीयात् शस्यञ्च गृहमागतम्" चाणक्यः। २शैलजे न० राजनि०। ३उदराग्निना कृतपाके त्रि०। "अजीर्णे भेषजं वारि जीर्णे वारि बलप्रदम्" वैद्यकम्।

द्रव्यभेदे जीर्णतासाधनद्रव्यभेदा जीर्णमञ्जर्य्यामुक्ता यथा "नारीकेलफलेषु तण्डुलमथ क्षीरं रसाले हितं जम्बीरोत्थरसो घृते समुचितः सर्पिस्तु मोचाफले। गोधूमेषु च कर्कटी हिततमा मांसात्यये काञ्जिकं नारङ्गे गुड़भक्षणञ्च कथितं पिण्डारके कोद्रवः। पिष्टान्ने सलिलं पियालफलजे पथ्या सिता माषजे खण्डं क्षीरभवे तु तक्रमुचितं कोष्णाम्बु कोलम्बजे। मत्स्ये चूतफलं त्वजीर्णशमनं मध्वम्बुपानात्यये तैलं पौष्करजे कटुप्रशमनं शेषांस्तु बुद्ध्या जयेत्। पनसे कदलं कदले च घृतं घृतपाकविधावपि जम्बुरसः। तदुपद्रवशान्तिकरं लवणं लवणेषु च तण्डुलवारि वरम्। नारिकेलफलतालबीजयोः पाचनं य इह तण्डुलं विदुः। ते वदन्ति मुनयोऽथ तण्डुलान् क्षीरवारि परिपाचयत्यपि। दाड़िमामलकतालतिन्दुकीबीजपूरलवलीफलान्यपि। बाकुलेन च फलेन पाचयेत् पाकमेति बकुलं स्वमूलतः। मधूकमालूरमधूकपादनानां पक्वखर्ज्जूरकपित्थकानाम्। पाकाय पेयं पिचुमर्द्दबीजं घृतेऽपि तक्रं प्रवदन्ति पथ्यम्। गोधूममाषहरिमन्थसतीनमुद्गपाको भवेदिति च मातुलपत्रकेण। खर्ज्जूरिका विसकशेरुसितासु शस्तं शृङ्गाटके मधुफलेष्वपि भद्रमुस्तम्। पिशितपनसयोः स्यादाम्रबीजेन पाकः क्षयरमहिषयोर्वित्क्षीरयोः सैन्धवेन। चिपिटपरिणतिः स्यात् पिप्पलीदीपकाभ्यामपहरति तुषाम्भो वैदलानामजीर्णम्। कर्पूरपूगीफलनागवल्लीकाश्मीरजातीफलजातिकोषम्। कस्तूरिकाछिन्नकनारिकेलजलं पचत्याशु समुद्रफेनः। श्यामाकनीवारकुलत्थषष्टिनिष्पावकङ्गूदधिमस्तकस्तु। चित्राकुलत्थौ तिलतैलयोगात् जटाञ्जनादस्य निहन्त्यथाम्लम्। कशेरुशृङ्गाटमृणालमुद्गी खर्ज्जूरखण्डा अपि नागरेण। पलाशभस्माम्बु तथार्द्रजो वा रसो निहन्यादृसनिम्बुजातम्। अम्लेन केनाप्यथ व्योषकेन कोष्णाम्बुना वा घृतमेति पाकम्। तिलादितैलान्यपि काञ्जिकेन सर्ज्जस्य मज्जा पनसामलक्यौ। किमत्र चित्रं बहुमांसमत्स्यभोजी सुखी स्यात् परिपीय शुक्तम्। दध्यद्भुतं केवलवह्निपक्कमांसेन मत्स्यं परिपाकमेति। कपोतपारावतनीलकण्ठकपिञ्जलानां पिशितानि जग्ध्वा। काकस्य मूलं परिपेयकृष्णं सुखी भवेन्ना बहुशो न भूतम्। व्योषैः रसाला सुरभीयवक्षुभक्तेन कोष्णेन विपाकमेति। शङ्खस्य चूर्णेन हयारिगारीपयोदधिक्षीरमुपैति पाकम्। वटो वेसवाराल्लवङ्गेन फेनी शमं पर्पटः शिग्रुबीजेन याति। कणामूलतो लड्डुका पूपकादेर्विपाको भवेच्छष्कुलीमण्डयोश्च। श्वाविद्गोधाखड्गकाशिल्लतैलाद् यावत् क्षारात् कोलकूर्म्मादयोऽपि। जीर्य्यन्त्येवं पायसो मुद्गयूषात् मस्तुक्राद्यारनालं सुखाय। तप्तं तप्तं हेम वा तारमग्नौ तोये क्षिप्तं सप्तकृत्वस्तदम्भः। पीत्वाकण्ठं दीर्घकालोपपन्नमम्भो जीर्णं शीघ्रमेव जहाति। पालङ्किकाकेमुककारवेल्ली वार्त्ताकुवंशाङ्कुरमूलकानाम्। उपोदकालाबुपटोलकानां सिद्धार्थको केवलस्य पक्ता। शुण्ठीसतीनस्य च नागरङ्गजम्बीरयोः कोद्रवको निहन्ता। जराभिरागे रक्तचन्दनाम्भ्यामभ्येति शीघ्रं बहुशो न भूतम्। पटोलवंशाङ्कुरकारवेल्लीफलान्यलाबूनि बहूनि जग्ध्वा। क्षारोदकं ब्रह्मतरोर्निपीय भोक्तुं पुनर्वाञ्छति तावदेव। विपच्यते शूरणको गुड़ेन तथालुकं तण्डुलतोयपानात्। जम्बीरनीरेण निशारसेन सुखेन तूर्णं परिपाकमेति। चञ्चूकसिद्धार्थकवास्तुकानां गायत्रिसारक्वथितेन पाकः। शाकानि सर्व्वाण्युपयान्ति पाकं क्षारेण सद्यस्तिलनालजेन। आम्रातकोदुम्बरपिप्पलीनां फलानि च प्लक्षवटादिकानाम्। स्युः, शमनं पर्य्युषितोदकेन पियालमज्जा च कटुष्णकेन। स्नेहाजीर्णं रोगिणां मुद्गचूर्णं ज्वालां मुस्तो हन्ति वैरेचकानाम्। माषो भूयान्निम्बमूलेन पाकं शिग्रा मज्जयस्त्वतां चूर्णयोगात्। उष्णेन शीतं शिशिरेण चोष्णमम्लेन च क्षारगणो गुणाय। स्नेहेन तीक्ष्णं वमनातियोगे सिता हिता स्यादिति काशिराजः। ताम्बूलमध्यस्थितचूर्णकेन संदह्यते यस्य मुखं नरस्य। तैलेन वा केवलकाञ्जिकेन। सुखाय गण्डूषमसौ विदध्यात्। शीतोदकं नस्यजरोगहारि नारीपयश्चाञ्जनरुग्विनाशि। एलोदकं धूमगदे प्रशस्तं धात्रीप्रलेपोऽतिविरेचनेषु। मृगस्य मांसं श्रमजेऽनुकूलं प्रवातसुप्तिः सुरतावसाने। क्षीरोषणा सैन्धवसाधितन्तु छागाण्डमुक्तं सुरतातिरेके। श्रवणपूरणजे तिलतैलतः श्रवणपूरणमेव सुखं विदुः। कवलजेषु गदेष्वथ कारयेत् कवलमार्द्रकजद्रवजं पुनः"।

**जीर्णक** त्रि॰ जीर्णप्रकारः स्थूला॰ कन्। जीर्णप्रकारे।

**जीर्णज्वर** पु॰ कर्म्मधा॰। द्वादशाहाधिककालोत्पन्ने ज्वरे तल्लक्षणादिकं भावप्र॰ उक्तं यथा।

"यो द्वादशभ्यो दिवसेभ्यः ऊर्द्धं दोषत्रयेभ्यो द्विगुणेभ्य ऊर्द्धम्। नृणां तनौ तिष्ठति मन्दवेगो भिषग्भिरुक्तो ज्वर एष जीर्णः"। जीर्णज्वरस्यैव विशेषं वातबलासकमाह। नित्यं मन्दज्वरो रूक्षः शूनः कृच्छ्रेण सिध्यति। स्तब्धाङ्गः श्लेष्मभूयिष्ठो नरो वातबलासकी। वातबलासकी नर ईदृग्भवेत्। शूनः शोथी। श्लेष्मभूयिष्ठो बहुश्लेष्मकः। जीर्णज्वरी नरः कुर्य्यान्नोपवासं कदाचन। लङ्घनात् स भवेत् क्षीणो ज्वरस्तु स्यात्ततो यतः। पुराणेऽपि ज्वरे दोषा यद्यपथ्यैः पुनस्तथा। लङ्घयेत् तत्र तत्पश्चात् पूर्वामेवाचरेत् क्रियाम्" तथा पूर्ववत्।

**जीर्णदारु** पु० नित्यक०। वृद्धदारकवृक्षे (विधारा) राजनि०

**जीर्णपत्र** पु० जीर्णं पत्रमस्य। पट्टिकालोध्रे शब्दार्थ०। २जीर्णपत्रयुक्ते त्रि०। बहु० कप् कापि अत इत्त्वम्। जीर्णपत्रिका २वंशपत्रीतृणे स्त्री राजनि०।

**जीर्णपर्ण** पु० जीर्णानि पर्णान्यस्य। १कदम्बे। २पुरातनपत्रयुक्ते त्रि०। कर्म०। ३पुरातनपत्रे न०। ४पुरातनताम्बूले च। "पर्णमूले भवेद्व्याधिः पर्णाग्रे पापसम्भवः। जीर्णपर्णं हरेदायुः शिरा बुद्धिप्रणाशिनी" वैद्यकम्।

**जीर्णफञ्जी** स्त्री नित्यक०। वृद्धदारके वृक्षे (विधारा) राजनि०।

**जीर्णबुध्न** पु० जीर्णं बुध्नं मूलमस्य। पट्टिकालोध्रे राजनि० तदिव कायति कै—क। जीर्णबुध्नक। (केओटा सुया) ख्याते मुस्तकभेदे। [ राजनि०।

**जीर्णवज्र** न० जीर्णं पुरातनं वज्रं हीरकमिव। वैक्रान्तमणौ

**जीर्णवस्त्र** न० कर्म०। पुरातनवस्त्रे पटच्चरे अमरः।

**जीर्णा** स्त्री जॄ—क्त। स्थूलजीरके राजनि०।

**जीर्णास्थिमृत्तिका** स्त्री। कृत्रिममृत्तिकाभेदे।

"अथ वक्ष्ये तु जीर्णास्थिमृत्तिकाकरणं प्रिये!। शिलाजतुस्थले कुर्य्याद् दीर्घं गर्त्तं मनोहरम्। निःक्षिपेत् तत्र नानास्थिसञ्चयं द्विचतुष्पदाम्। सर्जिक्षारं महाक्षारं स्फटिक्षारं लवणानि च। गन्धकोष्णजलं क्षेप्यं नानामूत्राणि तत्र च। एवं कृत्वा मासषट्कं दद्यात् पाषाणमृत्तिकाम्। कङ्कास्थ्यूर्द्धं तदूर्द्धन्तु कुर्य्याद्दृढां शुभाम्। त्रिवर्षाज्जायते सर्वमेकीभूतं दृषत्समम्। ततो निष्कास्य तच्चूर्णं कृत्वा पात्राणि निर्भमेत्। प्रशस्तं भोजनं तत्र सूचयेद्विषदूषणम्। महाविषस्य संयोगात् तस्य भङ्गः प्रजायते। दूषीविषादिसंयोगात् पात्रे स्फोटा भवन्ति हि। तत्र क्षिप्तं क्षुद्रविषं पात्रं कृष्णं प्रजायते। एवं ज्ञात्वा तत्र दद्याच्च कदाचिद्विषादिकर्मिति रावणः" शब्दार्थचिन्तामणिः।

**जीर्णि** स्त्री जॄ—क्तिन्। जीर्णतायाम्। अमरः।

**जीर्णोद्धार** पु० जीर्णस्य पूर्वप्रतिष्ठापितलिङ्गादेरुद्धारः। १पूर्वप्रतिष्ठापितलिङ्गादेः भग्नतादौ स्वस्थानादुद्धारे तद्विधानम् अग्निपु० ६७ अ० उक्तं यथा।

"भगवान् उवाच। जीर्णोद्धारविधिं वक्ष्ये भूषितां स्नपयेद् गुरुः। अचलां विन्यसेद् गेहे अतिजीर्णां परित्यजेत्। व्यङ्गां भग्नां च शैलाढ्यां न्यसेदन्यां च पूर्ववत्। संहारविधिना तत्र तत्त्वान् संहृत्य देशिकः। सहस्रं नरसिंहेन हुत्वा तामुद्धरेद् गुरुः। दारवीं दाहयेद्वह्नौ शैलजां प्रक्षिपेज्जले। धातुजां रत्नजां वापि अगाधे वा जलेऽम्बुधौ। यानमारोप्य जीर्णाङ्गं छाद्य वस्त्रादिना नयेत्। वादित्रैः प्रक्षिपेत्तोये गुरवे दक्षिणां ददेत्। यत्प्रमाणा च यद्द्रव्या तन्मानां स्थापयेत् पुनः। कूपवापीतडागादेर्जीर्णोद्धारे महाफलम्" नि०सि०विशेषो यथा

"अथ जीर्णोद्धारः स च लिङ्गादौ दग्धे भग्ने चलिते वा कार्य्यः। अयं चानादिसिद्धप्रतिष्ठितलिङ्गादौ भङ्गादिदुष्टेऽपि न कार्य्यः। तत्र तु महाभिषेकं कुर्य्यादिति त्रिविक्रमः। कर्त्ताऽमुकदेवस्य जीर्णोद्धारं करिष्ये इत्युक्त्वा पुण्याहं वाचयित्वा आचार्य्यमृत्विजश्च वृत्वा लिङ्गे ओं व्यापकेश्वरहृदयाय नमः ओं व्यापकेश्वरशिरसे स्वाहेत्येवं षडङ्गं कृत्वाऽघोरमन्त्रं शतं जप्त्वाऽग्निं प्रतिष्ठाप्याघोरेण घृतसर्षपैः सहस्रं हुत्वा इन्द्रादिभ्यो नाम्ना बलिं दत्त्वा जीर्णदेवं प्रणवेन संपूज्य ब्रह्मादिमण्डलदेवतानां होमं पूर्वोक्तं कृत्वा देवं प्रार्थयेत। "जीर्णभग्नमिदं चैव सर्वदोषावहं नृणाम्। अस्योद्धारे कृते शान्तिः शास्त्रेऽस्मिन् कथिता त्वया। जीर्णोद्धारविधानञ्च नृपराष्ट्रहितावहम्। तदधिष्ठितां देव! प्रहराणि तवाज्ञयेति"। ततः क्षीराज्यमधुदूर्वाभिः समिद्भिश्चाष्टोत्तरसहस्रं शतं वा देवमन्त्रेण हुत्वाऽङ्गानां दशांशेन लिङ्गचालनार्थं सहस्रं शतं वा पायसेन हुत्वा लिङ्गं प्रार्थयेत। "लिङ्गरूपं समागत्य येनेदं समधिष्ठितम्। यायास्त्वं रुचितं स्थानं सन्त्यज्यैव शिवाज्ञया। अत्र स्थाने च या विद्या सर्वविद्येश्वरैर्युता। शिवेन सह संतिष्ठेति" मन्त्रितजलेनाभिषिच्य विसर्जयेत्। ततोऽस्त्रमन्त्रितेन खनित्रेण खात्वा लिङ्गमानीय नद्यादौ वामदेवेन लिङ्गं प्रणवेन मूर्त्तिं क्षिपेत्। दारुजन्तु मधुनाऽभ्यज्याघोरेण दहेत्। हेमरत्नादिमयन्तु दग्धं चलितं

वा पुनस्तत्रैव स्थापयेत। ततः शान्त्यै अघोरेण तिलैः सहस्रं हुत्वा प्रार्थयेत। "भगवान् भूतभव्येश! लोकनाथ! जगत्पते!। जीर्णलिङ्गस्योद्धारः कृतस्त्वाज्ञया मया। अग्निना दारुजं दग्धं क्षिप्तं शैलादिकं जले। प्रायश्चित्ताय देवेश! अघोरास्त्रेण तर्पितम्। ज्ञानतोऽज्ञानतो वापि यथोक्तं न कृतं यदि। तत्सर्वं पूर्णमेवास्तु त्वत्प्रसादान्महेश्वरेति"। ततो यजमानः प्रार्थयेत। "गोविप्रशिल्पिभूतानामाचार्य्यस्य च यज्वनः। शान्तिर्भवतु देवेश! अच्छिद्रं जायतामिदम्"। मूर्त्तौ तु विशेषः। "त्वत्प्रसादेन निर्विघ्नं देह निर्माणयत्नतो। वासं कुरु सुरश्रेष्ठ! तावत्त्वं चाल्पके गृहे। वसन् क्लेशं सहित्वेह मूर्त्तिं वै तव पूर्ववत्। यावत् कारयेत् भक्तः कुरु तस्य च वाञ्छितमिति"। ततो नवां मूर्त्तिं लिङ्गं वा कृत्वोक्तविधिना स्थापयेत्।

भग्नमन्दिरादेः २संस्कारे च स च विष्णुधर्मोत्तरे तृतीयकाण्डे उक्तो यथा "यस्य राज्ञस्तु विषये देववेश्म विशीर्य्यते। तस्य सीदति तद्राज्यं देववेश्म यथा तथा। कृत्वा जीर्णस्य संस्कारं तथा देवेशवेश्मनि। द्विगुणं फलमाप्नोति नात्र कार्य्या विचारणा"। विष्णुरहस्ये "पतितस्य च यः कर्त्ता पतमानस्य रक्षिता। विष्णोरायतनस्येह स नरो विष्णुलोकभाक्" अग्निपुराणे "पतितं पतमानन्तु तदार्द्धस्फुटितं नरः। समुद्धृत्य हरेर्धाम द्विगुणं फलमाप्नुयात्" देवीपुराणे "मूलाच्छतगुणं पुण्यं प्राप्नुयाज्जीर्णकारकः। तस्मात् सर्वप्रयत्नेन जीर्णस्योद्धारमाचरेत्"। हयशीर्षपञ्चरात्रे "वापीकूपतड़ागानां सुरधाम्नां तथानघ!। प्रतिमानां श्मशानाञ्च संस्कर्त्ता यो नरो भुवि। पुण्यं शतगुणं तस्य भवेन्मूलान्न संशयः। प्रतिष्ठाया विधिः कार्य्यस्तथा मन्दिरनिर्मिते। प्रायः श्रीहयशीर्षोक्तेरनुसारेण वैष्णवैः। देवालयप्रतिष्ठा च ख्याता तल्लिखनेन किम्। श्रीमूर्त्तिस्थापनेनैव संपूर्णा सा विशेषतः। देवगृहं देवतायाः प्रतिष्ठाविधिना सदा। संस्कार्य्यं मनुजानान्तु समुदायोऽस्य कर्म्मणा" हरिभक्ति०२० विलासः।

**जीवि** पु० ज्या—क्विन्। कुठारे उज्ज्वलदत्तः।

**जीव** प्राणने असुधारणे भ्वा०अक०प०सेट्। जीवति अजीवीत् जिजीव। ऋदित् अजिजीवत् त जीवितं जीवनम् जीवः जीविका। "संशयं पुनरारुह्य यदि जीवति पश्यति" हितो० "यातः परमपि जीवेज्जीवितनाथो भवेत्तस्याः" सा०द० "ज्योग् जीवति" छा० उ०। "शतं जीवन्तु शरदः" ऋ०१०।१८।१। प्राणधारणञ्च प्राणधारणोपयोगोपष्टम्भधारणमपि "नक्षत्रैर्यश्च जीवति" मनुः। करणे सक०। "जीवेद्वैश्यस्य जीविकाम्" मनुः। जीवेत् कुर्य्यात् [रघुः।

अति+अतिक्रम्य जीवने सक०। "अत्यजीवदमराल्लकेश्वरौ"

अनु+पश्चाज्जीवने अनुरूपजीवने च सक०। "जीवन्तं त्वानुजीवन्तु प्रजाः सर्वा युधिष्ठिर!" भा० उ० ४५,२५ श्लो० "यां तां श्रियमसूयामः पुरा दृष्ट्वा युधिष्ठिरे। अद्य तामनुजीवामः" भा० द्रो० ४११ श्लो०।

आ+वृत्तिकरणे उपभोगे च सक०। "आजीवन् स्वेच्छया दण्ड्यो दाप्यस्तञ्चापि सोदयम्" याज्ञ०। "आजीवनुपभुञ्जानः" मिता०। "यथाजीवन्ति पुरुषं सर्वभूतानि सञ्जय!" भा०उ०१२२अ०।

उद्+उच्छ्वासने अक०। "उदजीवत् सुमित्राभूर्भीताऽस्निग्धत्तमायतम्" भट्टिः।

प्रति+उद्+प्रतिरूपोज्जीवने।

उप+आश्रित्य वर्त्तने सक०। "पूर्ववयसे पुत्राः पितरमुपजीवन्ति उत्तरवयसे पुत्रान् पिता" शत० ब्रा० १२।२।३।१। "शेषास्तमुपजीवेयुर्यथैव पितरं तथा" मनुः। उपजीवी उपजीव्यः।

**जीव** पु० जीव—कर्त्तरि क। १प्राणिनि २जीवन्तीवृक्षे ३वृहस्पतौ च मेदि०। ४कर्णे ५वेतसे त्रिका०। भावे घञ्। ६असुधारणे अमरः करणे घञ्। ७वृत्तौ आजीविकायां मेदि०। मनुष्यादिकीटपर्यन्ते ८प्राणिमात्रे ९कार्य्यकारणसङ्घाते। अनेकान्तवादिनां जीवास्तिकायसंज्ञया परिभाषिते १०पदार्थभेदे। त्रिविधश्चासौ अनादिसिद्धमुक्तबद्धभेदात्। अत्रानादिसिद्धोऽर्हन् जीवास्तिकायाख्यः। व्यपेतमोहादिबन्धो मुक्तः। मोहाद्यावृतस्तु बद्ध इति। ११उपाधिप्रविष्टे वाङ्मनःप्राणकरणग्रामानुप्रविष्टे ब्रह्मणि। घटावच्छिन्नाकाशवत्शरीरत्रितयावच्छिन्ने १२चैतन्ये। दर्पणस्थमुखप्रतिबिम्बवद् बुद्धिस्थे १३चैतन्यप्रतिबिम्बे।१४साभासाहङ्कारे चित्प्रतिबिम्बे। प्राणादिकलापस्य १५धारयितरि "प्राणान् धारयन् जीव उच्यते" इत्यभियुक्तोक्तेः १६लिङ्गदेहे। "एवं पञ्चविधं लिङ्गं त्रिवृत् षोड़श विस्तृतम्। एष चेतनया युक्तो जीव इत्यभिधीयते" इति श्रीभागवतम्। पञ्चविधं पञ्चतन्मात्रात्मकम्। त्रिवृत् त्रिगुणम्। षोड़श विकारात्मना विस्तृतमित्यनाद्यभिमानित्वेन इहलोक

परलोकगामी व्यवहारिको जीव उच्यते ।"बालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते" श्रुतिः । "बालाग्रशतशोभागः कल्पितस्तु सहस्रधा । तस्यापि शतशोभागो जीवः सूक्ष्म उदाहृतः" शङ्खः । "जीवो नाम देहादिव्यतिरिक्तस्तत्साक्षी त्वम्पदार्थो योऽयं विज्ञानमयः योऽयं संसरति योऽयं संसारी न तु देहादिर्जीवः तस्य दृश्यस्य द्रष्टृत्वानुपपत्तेः । "अस्ति देवि ! परं ब्रह्मस्वरूपी निष्कलः शिवः । सर्वज्ञः सर्वकर्त्ता च सर्वेशो निर्मलोऽव्ययः । स्वयं ज्योतिरनाद्यन्तो निर्विकारः परात्परः । निर्गुणः सच्चिदानन्दस्तदंशा जीवसंज्ञकाः । अनाद्यविद्योपहिता यथाग्नौ विस्फुलिङ्गकाः । देहाद्युपाधिसम्भिन्नास्ते कर्मभिरनादिभिः । सुखदुःखप्रदैः पुण्यपापरूपैर्नियन्त्रिताः । तत्तज्जातियुतं देहमायुर्भोगञ्च कर्मजम् । प्रतिजन्म प्रपद्यन्ते तेषामप्यपरं पुनः । सूक्ष्मं लिङ्गशरीरं तदामोक्षादक्षयं प्रिये !"कुलार्ण० । १७विष्णौ, "जीवो विनयिता साक्षी मुकुन्दोऽमितविक्रमः" विष्णु०सह० । तत्र बृहस्पतौ "जीवः सप्तनवद्विपञ्चमगतः" "जीवार्किभानुज्ञ्यज्ञानां क्षेत्राणि स्युरजादयः" ज्योति० ।१८पुष्यनक्षत्रे च । तस्य जीवाधिष्ठातृकत्वात् तथात्वम् अश्लेषाशब्दे ४९८ पृ० दृश्यम् घटसंवृत आकाशे नीयमाने यथा घटे । घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः" । आर्हतमतसिद्धजीवभेदाश्च अर्हच्छब्दे ३८४ पृ० दृश्याः । स च जीवो विभुरिति साङ्ख्यनैयायिकवैशेषिकपातञ्जलवेदान्तिनः । अणुपरिमाण इति रामानुजादयः । मध्यमपरिमाणः इति माध्यमिकाः । आत्मशब्दे ६७२पृ०दृश्यम् "हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" छा० उ० । "भावनाख्यस्तु संस्कारो जीववृत्ती त्विमौ गुणौ" भाषा० जीव-क । १९जीवनयुक्ते त्रि० "अन्तो लाङ्गलैः पुंसो घ्नन्ति भूमिशयान् बहून् । जीवानन्यांश्च सुबहूंस्तत्र किं प्रतिभाति ते । धान्यबीजानि यान्याहुर्व्रीह्यादीनि द्विजोत्तम ! । सर्वाण्येतानि जीवानि तत्र किं प्रतिभाति ते । अध्याक्रम्य पशूंश्चापि घ्नन्ति वै भक्षयन्ति च । वृक्षांस्तथौषधीश्चापि छिन्दन्ति पुरुषा द्विज ! । जीवा हि बहवो ब्रह्मन् ! वृक्षेषु च फलेषु च । उदके बहवश्चापि तत्र किं प्रतिभाति ते । सर्वं व्याप्तमिदं ब्रह्मन् प्राणिभिर्जीवनान्वितैः । मत्स्या ग्रसन्ते मत्स्यांश्च तत्र किं प्रतिभाति ते । सत्त्वैः सत्त्वानि जीवन्ति बहुधा द्विजसत्तम ! । प्राणिनोऽन्योन्यभक्षाश्च तत्र किं प्रतिभाति ते । चंक्रम्यमाणा जीवांश्च धरणीसंश्रितान् बहून् । पद्भ्यां घ्नन्ति नरा विप्र ! तत्र किं प्रतिभाति ते । उपविष्टाः शयानाश्च घ्नन्ति जीवाननेकशः । ज्ञानविज्ञानवन्तश्च तत्र किं प्रतिभाति ते । जीवैर्ग्रस्तमिदं सर्वमाकाशं पृथिवी तथा । अविज्ञानाच्च हिंसन्ति तत्र किं प्रतिभाति ते । अहिंसेति यदुक्तं हि पुरुषैर्विस्मितैः पुरा । के न हिंसन्ति । जीवान् वै लोकेऽस्मिन् द्विजसत्तम ! ।" भा० व० २०७अ० । अत्र जीवस्य हिंसा देहवियोजनम् ।

**जीवक** पु० जीवयति जीव+णिच्—ण्वुल् । १अष्टवर्गान्तर्गते १ओषधिभेदे "जीवकर्षभकौ ज्ञेयौ हिमाद्रिशिखरोद्भवौ । रसोनकन्दवत्कन्दौ निःसारौ सूक्ष्मपत्रकौ । जीवकः कूर्चकाकार ऋषभो वृषशृङ्गवत्" तदभावे विदारीमूलं प्रतिनिधितया देयमिति" । "जीवकर्षभकौ बल्यौ शीतौ शुक्रकफप्रदौ । मधुरौ पित्तदाहार्शःकार्श्यवातक्षयापहौ" भावप्र० २पीतसालवृक्षे ३क्षपणके च पु० । जीव—ण्वुल् । ४प्राणधारके त्रि० मेदि० । ५सेवके ६वृद्ध्याजीविनि त्रि० ७अहितुण्डिके पु० मेदि० ।

**जीवकाद्यतैल** न० चक्रदत्तोक्ते तैलभेदे । तच्च तैलं द्विविधं लघुवृहद्भेदात् यदाह तत्रैव "जीवकर्षभकौ द्राक्षा सिता यष्टी बलोत्पलैः । तैलं नस्यं पयः पक्वं वातपित्तशिरोगदे" । लघु । "जीवकर्षभकौ द्राक्षा मधूकं मधुकं बला । नीलोत्पलं चन्दनञ्च विदारी शर्करा तथा । तैलप्रस्थं पचेदेभिः शनैः पयसि षड्गुणैः । जाङ्गलस्य तु मांसस्य तुलार्द्धस्य रसेन तु । सिद्धमेतद्भवेन्नस्यं तैलमद्भुतविशेषकम् । बाधिर्यं कर्णशूलञ्च तिमिरं गलशुण्डिकाम् । वातिकं पैत्तिकञ्चैव शीर्षरोगं नियच्छति दन्तचालं शिरःशूलम् [illegible]" बृहत् चक्रद० ।

**जीवघन** पु० जीव एव घनो मूर्त्तिरस्य । [illegible] हिरण्यगर्भे तस्य सर्वजीवसमष्टिरूपत्वात् तथात्वं यथा [illegible] प०भा० । ओम् शब्दे २५६० पृ० तद्वाक्यम् दृश्यम् [illegible] स एतस्माज्जीवघनात् परात् परम्" ।

**जीवजीव** पुंस्त्री जीवञ्जीव+पृषो० । [illegible] शब्दर० स्त्रियां जातित्वात् ङीष् । स्वार्थे [illegible] । "हत्वा रक्तानि वासांसि जायते जीवजीव[illegible] ।

**जीवञ्जीव** पुंस्त्री जीवं जीवय[illegible] जीव—बा० खच् । चकोरपक्षिणि अमरः । स्त्रियां जातित्वात् ङीष् । "जीवञ्जीवककङ्काश्चाप्यनुगच्छन्ति [illegible]" भा० उ०

**जीवत्तोका** स्त्री जीवत् तोकं यस्याः । जीवत्पुत्रिकायां स्त्रियां । (जेयों त् पोयाती) हेमच० ।

**जीवत्पति** स्त्री जीवन् पतिर्यस्याः कपूर्वत्वात् वा न ङीपौ । सधवायां स्त्रियाम् । हेमच० ।

**जीवत्पितृक** पु० जीवन् पिता यस्य कप् । विद्यमानपितृके जने । "अमावास्यां गयाश्राद्धं दक्षिणायनभोजनम् । न जीवत्पितृकः कुर्य्यात् कृते तु पितृहा भवेत्" ति० त० । तत्र जीवत्पितृकस्य श्राद्धविशेषेऽधिकारः निर्णयसिन्धौ व्यवस्थापितो यथा ।

"जीवत्पितृकस्य साग्नेरेव वृद्धिश्राद्धेऽधिकारः न तु निरग्नेः "न जीवत्पितृकः कुर्य्याच्छ्राद्धमग्निमृते द्विजः । येभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निकः । पितामहेऽप्येवमेव कुर्य्याज्जीवति साग्निकः । साग्निकोऽपि न कुर्वीत जीवति प्रपितामहे" इति चन्द्रिकायां सुमन्तूक्तेरित्याहुः प्रयोगपारिजातेऽप्यनाहिताग्निर्न कुर्य्यादितीदं व्याख्यातम् तत्र "अनग्निकोऽपि कुर्वीत जन्मादौ वृद्धिकर्मणि । येभ्य एव पिता दद्यात्तानेवोद्दिश्य तर्पयेदिति" हारीतोक्तेः सोमलवन्तु वृद्धिश्राद्धभिन्नश्राद्धपरमित्युक्तं मदनरत्ने । श्राद्धपदं पिण्डपितृयज्ञपरमिति पृथ्वीचन्द्रोदयः । निर्णयामृते तु हारीतीयेऽनग्निकोनाहिताग्निरभिप्रेतः पूर्ववचने तु साग्निः श्रौताग्निः स्मार्त्ताग्निर्वोच्यते । तेनोभयाग्निहीनस्य नेत्युक्तं तन्न पूर्वोक्तदिशा गतिसम्भवेनाग्निपदस्य स्मार्त्ताग्निपरत्वे मानाभावात् वक्ष्यमाणनित्यानित्यसंयोगविरोधात् "पितरो जनकस्येष्या यावद्व्रतमनाहितम् । समाहितव्रतः पश्चात् स्नात् यजेत पितामहानिति, पृथ्वीचन्द्रोदये यमवचो विरोधाच्च । अपरार्केऽपि समावर्त्तने ब्रह्मचारी स्वयमेव नान्दीश्राद्धं कुर्य्यादित्याहुः अतः पूर्वमेव साधु वोपदेवोऽप्येवमाह । यत्तु मतं जीवत्पितृकस्य पुत्रनामकर्म्मादौ न वृद्धिश्राद्धम् हारीतीये जन्मादावित्यादिशब्देन तत्प्राप्तावपि "उद्वाहे पुत्रजनने पुत्रेष्ट्यां सौमिके मखे । तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुरिति" मैत्रपरिशिष्टे उद्वाह एव तस्योपसंहारात् एवं यत्र तु संस्कारादिपदं तदप्युद्वाहादिपरमेवेति तन्न उद्वाहपदस्य स्वविवाहपरत्वस्यापि सम्भवात् पुत्रविवाहपरत्वे मानाभावात् "नामकर्मणि बालानां चूडाकर्म्मादिके तथा" इत्यादिभिर्नित्यश्राद्धस्य चौलाद्यङ्गत्वावगतौ नित्यानित्यसंयोगविरोधाच्च अतो जन्मादावित्ति सर्वसंस्कारसंग्रहः ।

तथा च कात्यायनः "स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्म्मसु । पिण्डानोद्वाहनात्तेषां तस्याभावे तु तत्क्रमात्" । सुतानां चौलादिसंस्कारेषु पिता स्वपितृभ्यः पिण्डान् श्राद्धम् । "पिण्डदोऽंशहरश्चैषामिति" दर्शनात् आोद्वहनाद्विवाहपर्य्यन्तं दद्यात् विवाहस्य प्रथमः "नान्दीश्राद्धं पिता कुर्य्यादाद्ये पाणिग्रहे बुधः । अत ऊर्द्धं प्रकुर्वीत स्वयमेव तु नान्दिकमिति" स्मृतेः तस्य पितुरभावे तत्क्रमात् "असंस्कृतास्तु संस्कार्य्या भ्रातृभिः पूर्वसंस्कृतैरिति" यः कर्तृक्रमः तेन क्रमेण ज्येष्ठभ्रात्रादिर्दद्यादिति चन्द्रिकादयः । हेमाद्रिस्तु तस्य पितुरभावे यः पितृव्यमातुलादिः संस्कुर्य्यात् स तत्क्रमात् संस्कार्य्यपितृक्रमाद्दद्यात्तत्र स्वपितृभ्य इति व्याचख्यौ । समावर्त्तनस्यापि विवाहप्राचीनसुतसंस्कारत्वात्पितैव नान्दीश्राद्धं कुर्य्यात् तदभावे ज्येष्ठभ्रात्रादिः तदभावे स्वयमेव कुर्य्यात् । उपनयनेन कर्म्माधिकारस्य जातत्वात् एवमाद्यविवाहेऽपीति पृथ्वीचन्द्रोदयचन्द्रिकादयः । मदनरत्नेऽप्येवम् । यदा तु पितरि संन्यस्ते प्रोषिते पतिते वा धर्म्मार्थं तत्पुत्रमन्यः संस्कुर्य्यात्तदा संस्कार्य्यपितुः पित्रादिभ्यो दद्यात् "पितरो जनकस्येष्या यावद्व्रतमनाहितम् । समाहितव्रतः पश्चात्स्नात् यजेत पितामहानिति" पृथ्वीचन्द्रोदये यमोक्तेः जीवत्पितृकस्य विशेषमाह कात्यायनः "दृष्टौ तीर्थे च संन्यस्ते ताते च पतिते सति । येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः" इति । तीर्थ इव प्रायश्चित्ताङ्गश्राद्धेऽपि तस्याधिकारः ।

"पितरि जीवति यः श्राद्धं कुर्य्यात् स येषां पिता कुर्य्यात्तेषां कुर्य्यात् । पितरि पितामहे च जीवति येषां पितामहः कुर्य्यात् तेषां कुर्य्यात् त्रिषु जीवत्सु नैव कुर्य्यात्" विष्णु०स० "जीवत्पितृकोऽपि" कात्या० श्रौ० सू० पिण्डपितृयज्ञेऽधिक्रियते च । "जीवान्तर्हितेऽपि" कर्कस्तु० "जीवपितृकस्य जीवेन पित्रादिना अन्तर्हितेऽपि व्यवहितेऽपि पितामहादेः पिण्डदानं भवति सोमादाविव "येभ्य एव पिता दद्यात्तेभ्यो दद्यात्तथा सुतः" इति कर्कस्मृतेः । "जीवपितृकस्य होमान्तमनारम्भो वा" सू० । "जीवपितृकस्य यजमानस्य होमान्तमेव पिण्डपितृयज्ञसंज्ञं कर्म भवति अथवाऽनारम्भ एव पिण्डपितृयज्ञस्य वाशब्दः पूर्वपक्षनिरासार्थः । अनानारम्भपक्ष एव युक्तः यतः पिण्डदानं प्रधानम् । तदभावे होमस्याङ्गभूतस्यानुष्ठानं न घटते । एवं जीवान्तर्हितेऽपीति पक्षं दूष-

पित्वा जीवत्पितृकस्य होमान्तमित्यत्रोपपत्तिमाह" कर्कः। "न व्यवेते जातूकर्ण्यौ न जीवन्तमति ददातीति" सू०। "जीवपितृकस्य होमान्तकर्म्म कुर्वतः यतोजातूकर्ण्य आचार्य्यौ न व्यवेते जीवता पित्रा व्यवहिते पितामहादौ पिण्डदानं न भवतीत्याह कुतो न भवतीत्यत्र हेतुः "न जीवन्तमति ददातीति" शाखान्तरे श्रवणात् अतःप्रधाने पिण्डदाने जीवत्पितृकस्य निषिद्धे अनारम्भ एव घटते न होमान्तता। आपस्तम्बः "यदि जीवत्पिता न दद्यादा होमात् कृत्वा विरमेदिति" मानवे च "यदि दद्याद्येभ्य एव पिता दद्यात्तेभ्यो दद्यादिति" काठके "पितापुत्रौ चेदाहिताग्नी स्यातां येभ्यः पिता तेभ्यः पुत्रो दद्यात् पिता प्रेतः स्यात् पितामहो जीवेत् पित्रे पिण्डं निधाय पितामहात्परराभ्यां द्वाभ्यां दद्यादिति" कर्क० जीवपुत्रोऽप्यत्र। समासान्तविधेरनित्यत्वात् न कप्। जीवपितृ इत्यपि तत्रार्थे।

**जीवथ** पु० जीव–अथ। १कूर्मे २प्राणे ३मयूरे ४मेघे च ५चिरायुष्के ६धार्म्मिके च ७जीवनवति त्रि०। उणादिको०

**जीवद** पु० जीवं जीवनं ददाति द्यति वा दा–दो–वा क। १वैद्ये २रिपौ ३धन्विपर्वभेदे च मेदि० ४जीवनदातरि त्रि०। ५जीवन्तीवृक्षे स्त्री राजनि०।

**जीवदातृ** त्रि० जीवं ददाति दा–तृच्। १जीवनदायिनि स्त्रियां ङीप् सा च २ऋद्धिनामौषधौ ३जीवन्तीवृक्षे च राजनि०।

**जीवदानु** त्रि० जीवं ददाति दा–बा० नु। १जीवनदातरि "विरिप्शन्नुदादाय पृथिवीं जीवदानुम्" यजु० १।२८।

**जीवदृष्टा** स्त्री जीवाय जीवनाय दृष्टा। जीवन्तीवृक्षे राजनि०

**जीवधन** न० जीव एव धनम्। गवादिजन्तुरूपे धने त्रिका०

**जीवधानी** स्त्री जीवा धीयन्तेऽस्याम् धा+अधि–करणे ल्युट् ङीप्। पृथिव्याम्। "ददर्श गां तत्र सुषुप्सुरग्रे यां जीवधानीं स्वयमभ्यधत्त" भाग० २।१३।२। "जीवधानीं सर्वजीवाधारभूतां महीम्" श्रीधरः।

**जीवन** न० जीव–भावे ल्युट्। १वृत्तौ २प्राणधारणे। करणे ल्युट्। ३जले मेदि०। जलं विना प्राणधारणासम्भवात्तस्य जीवनकरणत्वम् अत एव "अन्नमयं हि सौम्य! मन आपोमयः प्राणः" छान्दोग्ये प्राणाना जलमयत्वमुक्त्वा तस्य तथात्वं समर्थितं यथा।

"आपः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति यो मध्यमस्तल्लोहितं योऽणिष्ठः स प्राणः" "अपां सौम्य! पीयमानानां योऽणिमा स ऊर्द्ध्वः समुदीषति स प्राणो भवति" "षोड़शकलः सौम्य! पुरुषः पञ्चदशाहानि माशीः काममपः पिबापोमयः प्राणो, न पिबतो विच्छेत्स्यते" इति छा०उ०।४जीवनसाधने त्रि० "सर्वोऽर्थो जीवनः प्राता" मुग्धबो०।५हैयङ्गवीने शब्दच०। सद्योहतस्यायुर्वृद्धिकरत्वेन जीवनहेतुत्वात् तथात्वम्। ६मज्जनि राजनि०७वाते८जीवकौषधौ च पु०राजनि०। ९क्षुद्रफलवृक्षे पु० शब्दच०। १०पुत्रे पु०हेमच०। जीवयति जीव–णिच्–कर्त्तरि–ल्यु। ११परमेश्वरे पु० "वीरहा रक्षणः सन्तो जीवनः पर्य्यवस्थितः" विष्णुस०। "सर्वाः प्रजाः प्राणरूपेण जीवयन् जीवनः" भा०। "प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम्" भाषा० "जीवनं जीवनं हन्ति प्राणान् हन्ति समीरणः। किमाश्चर्य्यं शारदेशे प्राणदा यमदूतिका" उद्भटः। वृत्तौ १२जीविकायाम्। "कृषिः शिल्पं भृतिर्विद्या कुसीदं शकटं गिरिः। सेवा ऽनूपं नृपो भैक्ष्यमापत्तौ जीवनानि तु" याज्ञ० "विद्या शिल्पं भृतिः सेवा गोरक्ष्यं विपणिः कृषिः। धृतिर्भैक्ष्यं कुसीदञ्च दश जीवनहेतवः" मनुः। १३जीवदातरि "शीतलश्च ववौ वायुः सुगन्धिं जीवनः शुचिः" भा० व० १६८ अ०।

**जीवनक** न० जीवन+संज्ञायां कन्। अन्ने हेमच०। अन्नो प्राणस्यावनतत्त्वोक्त्या तस्य तथात्वम्।

**जीवनयोनि** स्त्री ६त०। न्यायोक्ते देहे प्राणसञ्चारकारणे अतीन्द्रिये १यत्नभेदे। "यत्नो जीवनयोनिस्तु सर्वदातीन्द्रियो भवेत्। शरीरे प्राणसञ्चारकारणं परिकीर्त्तितम्" भाषापरि०। "जीवनयोनिर्यत्नो यावज्जीवनमनुवर्त्तते स चातीन्द्रियः। तत्र प्रमाणमाह शरीरे प्राणसञ्चारकारणं परिकीर्त्तितमिति। प्राणसञ्चारो हि अधिकः श्वासादिः प्रयत्नतः साध्यः। इत्थञ्च प्राणसञ्चारस्य यत्नसाध्यत्वानुमानात् प्रत्यक्षयत्नस्य बाधाच्चातीन्द्रिययत्नसिद्धिः। स एव जीवनयोनिप्रयत्नः" मुक्ता०

**जीवना** स्त्री जीवयति जीव–णिच्–ल्यु। १मेदौषधौ मेदि०।

**जीवनाघात** न० जीवनस्याघातो यस्मात्। विषे शब्दच०।

**जीवनावास** पु० जीवनं जलमावासोऽस्य। वरुणे शब्दच०। ६त०। २प्राणायतने देहे च।

**जीवनी** स्त्री जीवत्यनेन जीव–करणे ल्युट् ङीप्। १काकोल्यां २डोड्यां ३मेदायां ४महामेदायां ५जीवन्त्याञ्च

राजनि०। ६यूथ्यां शब्दच०। संज्ञायां कन्। जीवनिका हरितक्याम् राजनि०।

**जीवनीय** न० जीव—बा० करणे अनीयर्। १जले हेमच०। २जीवन्तीवृक्षे स्त्री अमरः। कर्मणि अनीयर्। ३उपजीव्ये त्रि०। भावे अनीयर्। वर्त्तनीये। ४विद्याशिल्पमित्यादिमनुव्याख्यायाम्। "एभिर्दशभिरापदि जीवनीयम्" कुल्लू क०।

**जीवनीयगण** पु० औषधभेदे "अष्टवर्गश्च पर्णिन्यौ जीवन्ती मधुकं तथा। जीवनीयगणः प्रोक्तो जीवनन्तु पुनस्तथा" वैद्यकम्। [राजनि०

**जीवनेत्री** स्त्री जीवं नयति नी—तृच् ङीप्। सैंहल्याम्।

**जीवनौषध** न० जीवनस्य म्रियमाणप्रायस्य रक्षणार्थमौषधम्। जीवातौ म्रियमाणस्य प्राणरक्षके औषधे अमरः।

**जीवन्त** पु०जीव—कर्त्तरि झ। १प्राणे, २आयुर्विशिष्टे त्रि०। जीव-णिच्—झ। ३औषधे च उणा०।

**जीवन्तिका** स्त्री जीव—जीव-णिच्—वा झ—संज्ञायां कन्। १वन्दायां वृक्षोपरिजातलतायां २गुडूच्यां ३जीवाख्यशाके मेदि० ४जीवन्त्यां ६हरीतक्यां च राजनि०।

**जीवन्ती** स्त्री जीव—झ गौरा० ङीष्। (जीवइ) ख्याते (जियाता) ख्याते १वृक्षे। "जीवन्ती शीतला स्वादुः स्निग्धा दोषत्रयापहा। रसायनी बलकरी चक्षुष्या ग्राहिणी लघुः। जीवन्त्याः कोमलं पत्रं स्निग्धं तक्रसुभर्ज्जितम्। हिङ्गुना संयुते तैले तक्रं क्षिप्त्वा प्रलेहयेत्" भावप्र०। "कशेरुकाय जीवन्त्या हविर्ध्येय च सर्वशः" भा० व० ४अ०। (षोड़ी) ख्याते गुर्ज्जरदेशप्रसिद्धे २लताभेदे ३शम्यां ४गुडूच्यां ५वन्दायां ६डोड्यां ७हरितक्याम् राजनि०। सा च "हरितकी जीवन्ती सर्वर्षिणी" इत्युक्तलक्षणा।

**जीवन्त्याद्यघृत** न०चक्रदत्तोक्ते पक्वघृतभेदे "जीवन्तीं मधुकं द्राक्षां फलानि कुटजस्य च। शटीं पुष्करमूलञ्च व्याघ्रीं गोक्षुरकं बलाम्। नीलोत्पलं चामलकीं त्रायमाणां दुरालभाम्। पिप्पलीञ्च समं पिष्ट्वा घृतं वैद्यो विपाचयेत्। एतद्व्याधिसमूहस्य रोगे शस्तमसुत्थितम्। रूपमेकादशविधं सर्पिरग्र्यं व्यपोहति"।

**जीवन्मुक्त** त्रि०जीवन्नेव मुक्तः जीवत्वेवात्मज्ञानेन बन्धरहिते "जीवन्मुक्तो नाम स्वस्वरूपाखण्डब्रह्मज्ञानेन तदज्ञानबाधनद्वारा स्वस्वरूपाखण्डब्रह्मणि साक्षात्कृते अज्ञानकार्यसञ्चितकर्मसंशयविपर्ययादीनामपि बाधितत्वादखिलबन्धरहितो ब्रह्मनिष्ठ" इति वेदान्तसा०। नन्वु जीवन्मुक्तो व्यवहरति न वा। आद्ये तस्य बद्धात् विलक्षणता, द्वितीये देहस्यानुपयोगात् सद्यः पातप्रसङ्ग इत्यत आह। "अयन्तु व्युत्थानसमये मांसशोणितमूत्रपुरीषादिभाजनेन शरीरेण आन्ध्यमान्द्यापटुत्वादिभाजनेनेन्द्रियग्रामेण अशनायापिपासाशोकमोहादिभाजनेन चान्तःकरणेन पूर्वपूर्ववासनया क्रियमाणानि कर्माणि भुज्यमानानि ज्ञानाविरुद्धान्यारब्धफलानि च पश्यन्नपि बाधितत्वात् परमार्थतो न पश्यतीति" वे०सा०। दृष्टान्तेनोक्तमर्थं स्पष्टयति। "यथेन्द्रजालमिति ज्ञानवान् तदिदमिन्द्रजालं पश्यन्नपि परमार्थमिदमिति" न पश्यति। उक्तञ्च "सुषुप्तिवज्जाग्रति यो न पश्यति द्वयन्तु पश्यन्नपि चाऽद्वयत्वतः। तथा च कुर्वन्नपि निष्क्रियश्च यः स आत्मविन्नान्य इतीह निश्चयः" इति वेदान्तसा०। "वेदविद्याव्रतं स्नात्वा देशिकस्य मुखात् स्वयम्। अष्टोत्तरशतं ये पठन्ति द्विजोत्तमाः। प्रारब्धक्षयपर्य्यन्तं जीवन्मुक्ता भवन्ति ते" तन्नाम्। अष्टोत्तरशतमुपनिषदाम्। २कौलिके च "वन्धमोक्षेश्वराः सार्वभौमत्वाभिमानशालिनः। अपरिमाणमात्रेण जीवन्मुक्ता भवन्ति हि। महानन्दप्रभावेण कुलाचारप्रभावतः। ये चाचारा निर्विकल्पा जीवन्मुक्ता हि कौलिकाः" तन्त्रशास्त्रम्। "योऽन्तर्बहिर्भवद्बन्धः स जीवन्मुक्त उच्यते" कुलार्णवे।

वेदान्तपरिभाषायां विशेष उक्तो यथा।

"निर्गुणब्रह्मसाक्षात्कारवतस्तु न लोकान्तरगमनं "न तस्य प्राणा उत्क्रामन्तीति श्रुतेः किन्तु यावत्प्रारब्धकर्मक्षयं सुखदुःखे अनुभूय पश्चादपवृज्यते। ननु "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इत्यादिश्रुत्या "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुनेत्यादि" स्मृत्या च ज्ञानस्य सकलकर्मक्षयहेतुत्वनिश्चये सति प्रारब्धकर्मावस्थानमनुपपन्नमिति चेन्न तस्य "तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये कैवल्येनेत्यादि" श्रुत्या "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपीत्यादि" स्मृत्या च उत्पादितकार्यकर्मव्यतिरिक्तानां सञ्चितकर्मणामेव ज्ञानविनाश्यत्वावगमात्। सञ्चितं द्विविधं सुकृतं दुष्कृतञ्च। तथाच श्रुतिः "तस्य पुत्रादायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामिति"। ननु ब्रह्मज्ञानान्मूलाज्ञाननिवृत्तौ तत्कार्यप्रारब्धकर्मणोऽपि निवृत्तेः कथं ज्ञानिनां देहधारणमुपपद्यत इति चेन्न अप्रतिबद्धज्ञानस्यैवाज्ञाननिवर्त्तकतया प्रारब्धकर्मरूपप्रतिबन्धसद्भावादज्ञाननिवृत्ते-

रनङ्गीकारात्। "नन्वेवमपि तत्त्वज्ञानादेकमुक्तौ सर्व्वमुक्तिः स्यात् अविद्याया एकत्वेनैतन्निवृत्तौ कस्यचिदपि संसारायोगादिति चेन्न इष्टापत्तेरित्येके। अपरे त्वेतद्दोषपरीहारायैव "इन्द्रो मायाभिरिति" बहुवचनश्रुत्यनुगृहीतमविद्यानानात्वमङ्गीकर्त्तव्यमित्याहुः। अन्ये त्वेकैवाविद्या तस्याश्चाविद्याया जीवभेदेन ब्रह्मस्वरूपावरणशक्तयो नाना तथा च यस्य ब्रह्मज्ञानं तस्य ब्रह्मस्वरूपावरणशक्तिविशिष्टाविद्यानाशः न त्वन्यं प्रति ब्रह्मस्वरूपावरणशक्तिविशिष्टाविद्यानाश इत्यभ्युपगमान्नैकमुक्तौ सर्वमुक्तिः। अतएव "यावदधिकारमवस्थितिराधिकारिकाणाम्" इत्यस्मिन्नधिकरणे अधिकारिपुरुषाणामुत्पन्नतत्त्वज्ञानानामिन्द्रादीनां देहधारणानुपपत्तिमाशङ्क्य अधिकारापादकप्रारब्धकर्म्मसमाप्त्यनन्तरं विदेहकैवल्यमिति सिद्धान्तितम्। तदुक्तमाचार्य्यवाचस्पतिमिश्रैः "उपासनादिसंसिद्धितोषितेश्वरचोदितम्। अधिकारं समाप्यैते प्रविशन्ति परम्पदमिति"। एतच्चैकमुक्तौ सर्व्वमुक्तिरिति पक्षे नोपपद्यते। तस्मादेकाविद्यापक्षेऽपि प्रतिजीवमावरणभेदोपगमेन व्यवस्थोपपादनीया"।

शा० सू० भाष्ययोश्च जाततत्त्वज्ञानानामपि यावत् प्रारब्धकर्मसमाप्तिस्तावद्देहादिसम्बन्धः समर्थितो यथा "यावदधिकारमवस्थितिराधिकारिकाणाम्" ३।३।३२ सू०। "विदुषो वर्त्तमानदेहपातानन्तरं देहान्तरमुत्पद्यते न वेति चिन्त्यते। ननु विद्यायाः साधनभूतायाः सम्पत्तौ कैवल्यनिर्वृत्तिः स्यान्न वेति नेयं चिन्तोपपद्यते। न हि पाकसाधनसम्पत्तावोदनो भवेत् न वेति चिन्ता सम्भवति, नापि भुञ्जानस्तृप्येत् न वेति चिन्त्यते। उपपन्ना त्वियं चिन्ता, ब्रह्मविदामपि केषाञ्चित् इतिहासपुराणयोर्देहान्तरोत्पत्तिदर्शनात्। तथा ह्यपान्तरतमा नाम वेदाचार्य्यः पुराणर्षिर्विष्णुनियोगात् कलिद्वापरयोः सन्धौ कृष्णद्वैपायनः सम्बभूवेति स्मरणं, वसिष्ठश्च ब्रह्मणो मानसः पुत्रः सन्निमिशापादपगतपूर्वदेहः पुनर्ब्रह्मादेशात् मित्रावरुणाभ्यां सम्बभूवेति। भृग्वादीनामपि ब्रह्मण एव मानसानां पुत्राणां वरुणे यज्ञे पुनरुत्पत्तिः स्मर्यते। सनत्कुमारोऽपि ब्रह्मण एव मानसः पुत्रः स्वयं रुद्राय वरप्रदानात् स्कन्दत्वेन प्रादुर्बभूव। एवमेव दक्षनारदप्रभृतीनामपि भूयसी देहान्तरोत्पत्तिकथा तेन तेन निमित्तेन भवति स्मृतौ श्रुतावपि मन्त्रार्थवादयोः प्रायेणोपलभ्यते। ते च केचित् पतिते पूर्वदेहे देहान्तरमाददते केचित्तु स्थित एव तस्मिन् योगैश्वर्य्यवशादनेकदेहादानन्यायेन, सर्वे चैते समधिगतसकलवेदार्थाः स्मर्यन्ते। तदेतेषां देहान्तरोत्पत्तिदर्शनात् प्राप्तं ब्रह्मविद्यायाः पाक्षिकं मोक्षहेतुत्वमहेतुत्वं वेत्यत उत्तरमुच्यते। न, तेषामपान्तरतमःप्रभृतीनां वेदप्रवर्त्तनादिषु लोकस्थितिहेतुष्वधिकारेषु नियुक्तानां अधिकारतन्त्रत्वात् स्थितेः। यथासौ भगवान् सविता सहस्रयुगपर्य्यन्तं जगतोऽधिकारं चरित्वा तदवसाने उदयास्तमयवर्जितं कैवल्यमनुभवति, "अथ तत ऊर्द्ध्वं उदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता" इति श्रुतेः। यथा च वर्त्तमाना ब्रह्मविदः प्रारब्धभोगक्षये कैवल्यमनुभवन्ति "तस्य तावदेव चिरं यावत् न विमोक्ष्येऽथ सम्पत्स्ये" इति श्रुतेः। एवमपान्तरतमःप्रभृतयोऽपीश्वराः परमेश्वरेण तेषु तेष्वधिकारेषु नियुक्ताः सन्तः सत्यपि सम्यग्दर्शने कैवल्यहेतावक्षीणकर्माणो यावदधिकारमवतिष्ठन्ते तदवसाने चापवृज्यन्त इत्यविरुद्धम्। सकृत्प्रवृत्तमेव हि तेऽधिकारफलदानाय कर्माशयमतिवाहयन्तः स्वातन्त्र्येण गृहादिव गृहान्तरमन्यमन्यं देहं सञ्चरन्तः स्वाधिकारनिर्वर्त्तनायापरिमुषितस्मृतय एव देहेन्द्रियप्रकृतिवशित्वात् निर्म्माय देहान् युगपत्क्रमेण वाधितिष्ठन्ति। न चैते जातिस्मरा इत्युच्यन्ते, त एव ते, इति स्मृतिप्रसिद्धेः। यथा "सुलभा ब्रह्मवादिनी जनकेन विवदितुकामा व्युदस्य स्वं देहं जानकं देहमाविश्य व्युद्य तेन पश्चात् स्वमाविवेश" इति स्मर्यते। यदि ह्युपयुक्ते सकृत्प्रवृत्ते कर्मणि कर्मान्तरं देहान्तरारम्भकारणमाविर्भवेत् ततोऽन्यदप्यदग्धबीजं कर्मान्तरं तद्वदेव प्रसज्येतेति ब्रह्मविद्यायाः पाक्षिकं मोक्षहेतुत्वमहेतुत्वं वा शङ्क्येत, न त्वियमाशङ्का युक्ता ज्ञानात् कर्मबीजदाहस्य श्रुतिस्मृतिप्रसिद्धत्वात्। तथा च श्रुतिः— "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इति "स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः। इति चैवमाद्या। स्मृतिरपि 'यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन!। ज्ञानाग्निः सर्वकर्म्माणि भस्मसात् कुरुते तथा"। इति "बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः। ज्ञानदग्धैस्तथा क्लेशैर्नात्मा सम्पद्यते पुनः" इति—चैवमाद्या। न चाविद्यादिक्लेशदाहे सति क्लेशबीजस्य कर्म्माशयस्यैकदेशदाह एकदेशप्ररोहश्चेत्युपपद्यते, न

ह्यग्निदग्धस्य शालिबीजस्यैकदेशप्ररोहो दृश्यते । प्रवृत्तफलस्य तु कर्माशयस्य मुक्तेषोरिव वेगक्षयात् निवृत्तिः "तस्य तावदेव चिरम्" इति शरीरपातक्षेपकरणात् । तस्मादुपपन्ना यावदधिकारमाधिकारिकाणामवस्थितिः,न च ज्ञानफलस्यानैकान्तिकता । तथा च श्रुतिरविशेषेणैव सर्वेषां ज्ञानान्मोक्षं दर्शयति 'तद्यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्' इति । ज्ञानान्तरेषु चैश्वर्यादिफलेष्वासक्ताः स्युर्महर्षयः ते पश्चादैश्वर्यक्षयदर्शनेन निर्विण्णाः परमात्मज्ञाने परिनिष्ठाय कैवल्यं ययुरित्युपपद्यते । 'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्" इति स्मरणात् । प्रत्यक्षफलत्वाच्च ज्ञानस्य फलविरहाशङ्कानुपपत्तिः । कर्मफले हि स्वर्गादावनुभवानारूढे स्यादपि कदाचिदाशङ्का भवेद्वा न वेति, अनुभवारूढन्तु ज्ञानफलं "यत्साक्षादपरोक्षाद्ब्रह्म" इति श्रुतेः,"तत्त्वमसि" इति च सिद्धवदुपदेशात् । न हि "तत्त्वमसि" इत्यस्य वाक्यस्यार्थः तत्त्वं मृतो भविष्यसि इत्येवं शक्यः परिणेतुम् । "तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च" इति सम्यग्दर्शनकालमेव तत्फलं सर्वात्मत्वं दर्शयति । तस्मादैकान्तिकी विदुषः कैवल्यसिद्धिः" भा० । ४।१पादे च ।

"तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्" १३सू० ।

"गतस्तृतीयशेषः, अथेदानीं ब्रह्मविद्याफलं प्रति चिन्ता प्रजायते, ब्रह्माधिगमे सति तद्विपरीतफलं दुरितं क्षीयते न वा क्षीयत इति संशयः । किं तावत् प्राप्तं फलार्थत्वात् कर्मणः फलमदत्त्वा न सम्भाव्यते क्षयः । फलदायिनी ह्यस्य शक्तिः श्रुत्या समधिगता । यदि तदन्तरेणैव फलोपभोगमुपक्षयेत श्रुतिः कदर्थिता स्यात् । स्मरन्ति च 'न हि कर्माणि क्षीयन्ते' [म०भा०] इति । नन्वेवं सति प्रायश्चित्तोपदेशोऽनर्थकः प्राप्नोति । नैष दोषः, प्रायश्चित्तानां नैमित्तिकत्वोपपत्तेर्गृहदाहेष्ट्यादिवत् । अपि च प्रायश्चित्तानां दोषसंयोगेन विधानात् भवेदपि दोषक्षपणार्थता, नत्वेवं ब्रह्मविद्याया विधानमस्ति । नन्वनभ्युपगम्यमाने ब्रह्मविदः कर्मक्षये तत्फलस्यावश्यभोक्तव्यत्वादनिर्मोक्षः स्यात् । नेत्युच्यते देशकालनिमित्तापेक्षो मोक्षः कर्मफलवद्भविष्यति । तस्मात् न ब्रह्मविद्याधिगमे दुरितनिवृत्तिरित्येवं प्राप्ते ब्रूमः तदधिगमे ब्रह्माधिगमे सत्युत्तरपूर्वाघयोरश्लेषविनाशौ भवतः, उत्तरस्याश्लेषः, पूर्वस्य विनाशः । कस्मात्, तद्व्यपदेशात् तथा हि ब्रह्मविद्याप्रक्रियायां सम्भाव्यमानसम्बन्धस्यागामिनो दुरितस्यानभिसम्बन्धं विदुषो व्यपदिशति "यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते" इति । तथा विनाशमपि पूर्वोपचितस्य दुरितस्य व्यपदिशति "तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इति । अयमपरः कर्मक्षयव्यपदेशो भवति । "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इति । यदुक्तमनुपभुक्तफलस्य कर्मणः क्षयकल्पनायां शास्त्रं कदर्थितं स्यादिति । नैष दोषः, न हि वयं कर्मणः फलदायिनीं शक्तिमवजानीमहे, विद्यत एव सा, सा तु विद्यादिना कारणान्तरेण प्रतिबध्यत इति वदामः । शक्तिसद्भावमात्रे च शास्त्रं व्याप्रियते न प्रतिबन्धाप्रतिबन्धयोरपि । न हि कर्म क्षीयत इत्येतदपि स्मरणमौत्सर्गिकं न हि भोगादृते कर्म क्षीयते तदर्थत्वादिति, इष्यत एव प्रायश्चित्तादिना दुरितस्य क्षयः "सर्वं पाप्मानं तरति" "तरति ब्रह्महत्यां योऽश्वमेधेन यजते" । य उचैनमेवं वेद" इत्यादि श्रुतिस्मृतिभ्यः । यत्तूक्तं नैमित्तिकानि प्रायश्चित्तानि भविष्यन्ति इति । तदसत्, दोषसंयोगेन चोद्यमानानामेषां दोषनिष्कृतिफलसम्भवे फलान्तरकल्पनानुपपत्तेः । यत्पुनरेतदुक्तं न प्रायश्चित्तवद्दोषक्षयोद्देशेन विद्याविधानमस्तीति अत्र ब्रूमः । सगुणासु तावद्विद्यासु विद्यत एव विधानं, तासु च वाक्यशेषे ऐश्वर्यप्राप्तिः पापनिवृत्तिश्च विद्यावत उच्यते, तयोश्चाविवक्षाकारणं नास्तीत्यतः पाप्मप्रहाणपूर्वकैश्वर्यप्राप्तिस्तासां फलमिति निश्चीयते । निर्गुणायान्तु विद्यायां यद्यपि विधानं नास्ति तथाप्यकर्त्रात्मत्वबोधात् कर्मप्रदाहसिद्धिः । अश्लेष इति चागामिषु कर्मसु कर्तृत्वमेव न प्रतिपद्यते ब्रह्मविदिति दर्शयति । अतिक्रान्तेषु तु यद्यपि मिथ्याज्ञानात् कर्तृत्वं प्रतिपेदे इव तथापि विद्यासामर्थ्यात् मिथ्याज्ञाननिवृत्तेस्तान्यपि प्रलीयन्त इत्याह विनाश इति । पूर्वसिद्धकर्तृत्वभोक्तृत्वस्वरूपविपरीतं हि त्रिष्वपि कालेष्वकर्तृत्वाभोक्तृत्वस्वरूपं ब्रह्माहमस्मि नेतः पूर्वमपि कर्त्ता भोक्ता वाऽहमासं नेदानीं नापि भविष्यामि काले इति ब्रह्मविदवगच्छति । एवमेव च मोक्ष उपपद्यते, अन्यथा

ह्यनादिकालप्रवृत्तानां कर्म्मणां क्षयाभावे मोक्षाभावः स्यात् । न च देशकालनिमित्तापेक्षो मोक्षः कर्मफलवत् भवितुमर्हति, अनित्यत्वप्रसङ्गात् परोक्षत्वानुपपत्तेश्च ज्ञानफलस्य । तस्मात् ब्रह्माधिगमे दुरितक्षय इति स्थितम्" । भा०

"इतरस्याप्येवमसंश्लेषः पाते तु" ४।१।१४ सू०

"पूर्वस्मिन्नधिकरणे बन्धहेतोरघस्य स्वाभाविकस्याश्लेषविनाशौ ज्ञाननिमित्तौ शास्त्रव्यपदेशान्निरूपितौ, धर्मस्य पुनः शास्त्रीयत्वात् शास्त्रीयेण ज्ञानेनाविरोध इत्याशङ्क्य तन्निराकरणाय पूर्वाधिकरणन्यायातिदेशः क्रियते । इतरस्याऽपि पुण्यस्य कर्मण एवमघवदसंश्लेषो विनाशश्च ज्ञानवतो भवतः । कुतः, तस्याऽपि स्वफलहेतुत्वेन ज्ञानफलप्रतिबन्धित्वप्रसङ्गात् । "उभे उ हैवैष एतेन तरति' इत्यादिश्रुतिषु दुष्कृतवत् सुकृतस्याऽपि प्रणाशव्यपदेशात् अकर्त्रात्मबोधनिमित्तस्य च कर्मक्षयस्य सुकृतदुष्कृतयोस्तुल्यत्वात् "क्षीयन्ते चास्य कर्माणि" इति चाविशेषश्रुतेः । यत्रापि केवल एव पाप्मशब्दः पठ्यते तत्रापि तेनैव पुण्यमप्याकलितमिति द्रष्टव्यं, ज्ञानापेक्षया निकृष्टफलत्वात् । अस्ति च श्रुतौ पुण्येऽपि पाप्मशब्दः 'नैनं सेतुमहोरात्रे तरतः' इत्यत्र सह दुष्कृतेन सुकृतमप्यनुक्रम्य "सर्वे पाप्मानोऽतो निवर्त्तन्ते" इत्यविशेषेणैव प्रकृतेषु पाप्मशब्दप्रयोगात् । पाते त्विति । तुशब्दोऽवधारणार्थः । एवं धर्म्माधर्म्मयोर्बन्धहेत्वोर्विद्यासामर्थ्यादश्लेषविनाशसिद्धेरवश्यम्भाविनी विदुषः शरीरपाते मुक्तिरित्यवधारयति ।" भा०

"अनारब्धकार्य्ये एव तु पूर्वे तदवधेः ।" ४।१।१५ सू०

"पूर्वयोरधिकरणयोर्ज्ञाननिमित्तः सुकृतदुष्कृतयोर्विनाशोऽवधारितः, स किमविशेषेणारब्धकार्य्ययोरनारब्धकार्य्ययोश्च भवत्युत विशेषेणानारब्धकार्य्ययोरेवेति विचार्य्यते । तत्र "उभे उ हैवैष एतेन तरति" इत्येवमादिश्रुतिष्वविशेषश्रवणादविशेषेणैव क्षय इत्येवं प्राप्ते प्रत्याह अनारब्धकार्य्ये एव त्विति । अप्रवृत्ते फले एव पूर्वे जन्मान्तरसञ्चिते अस्मिन्नपि च जन्मनि प्राक् ज्ञानोत्पत्तेः सञ्चिते सुकृतदुष्कृते ज्ञानाधिगमात् क्षीयेते नत्वारब्धकार्य्ये सामिभुक्तफले याभ्यामेतत् ब्रह्मज्ञानायतनं जन्म निर्मितम् । कुत एतत्, "तस्य तावदेव चिरं यावन्न विमोक्ष्ये" इति शरीरपातावधिकरणात् क्षेमप्राप्तेः, इतरथा हि ज्ञानादशेषकर्मक्षये सति स्थितिहेत्वभावात् ज्ञानप्राप्त्यनन्तरमेव क्षेममश्नुवीत तत्र शरीरपातप्रतीक्षां नाचक्षीत । ननु वस्तुबलेनैवायमकर्त्रात्मत्वबोधः कर्म्माणि क्षपयन् कथं कानिचित् क्षपयेत् कानिचिच्चोपेक्षेत, न हि समानेऽग्निबीजसम्पर्के केषाञ्चिद्बीजशक्तिः क्षीयते केषाञ्चिन्न क्षीयते इति शक्यमङ्गीकर्त्तुमिति । उच्यते, न तावदनाश्रित्यारब्धकार्य्यं कर्म्माशयं ज्ञानोत्पत्तिरुपपद्यते, आश्रिते च तस्मिन् कुलालचक्रवत् प्रवृत्तवेगस्याऽन्तराले प्रतिबन्धासम्भवाद्भवति वेगक्षयप्रतिपालनम्, अकर्त्रात्मत्वबोधोऽपि हि मिथ्याज्ञानबाधनेन कर्माण्युच्छिनत्ति, बाधितमपि मिथ्याज्ञानं द्विचन्द्रादिज्ञानवत् संस्कारवशात् कञ्चित् कालमनुवर्तत एव । अपि च नैवात्र विवदितव्यं ब्रह्मविदः कञ्चित् कालं शरीरं ध्रियते न ध्रियत इति । कथं ह्येकस्य स्वहृदयप्रत्ययं ब्रह्मवेदनं देहधारणञ्चापरेण प्रतिक्षेप्तुं शक्येत । श्रुतिस्मृतिषु च स्थितप्रज्ञलक्षणनिर्देशेनैतदेव निरुच्यते । तस्मादनारब्धकार्य्ययोरेव सुकृतदुष्कृतयोर्विद्यासामर्थ्यात् क्षय इति निर्णयः ।" भा०

"भोगेन त्वितरे क्षपयित्वा सम्पद्यते" ४।१।१९ सू०

"अनारब्धकार्य्ययोः पुण्यपापयोर्विद्यासामर्थ्यात् क्षय उक्तः, इतरे त्वारब्धकार्य्ये पुण्यपापे उपभोगेन क्षपयित्वा ब्रह्म सम्पद्यते "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति "ब्रह्मैव सन् ब्रह्माप्येति" इति चैवमादिश्रुतिभ्यः । ननु सत्यपि सम्यग्दर्शने यथा प्राग्देहपाताद्भेददर्शनं द्विचन्द्रदर्शनन्यायेनानुवृत्तमेवं पश्चादप्यनुवर्तेत । न, निमित्ताभावात् । उपभोगशेषक्षपणं हि तत्रानुवृत्तिनिमित्तं, न च तादृशमत्र किञ्चिदस्ति । नन्वपरः कर्माशयोऽभिनवमुपभोगमारप्स्यते । न, तस्य दग्धबीजत्वात् । मिथ्याज्ञानावष्टम्भं हि कर्म्मान्तरं देहपाते उपभोगान्तरमारभते, तच्च मिथ्याज्ञानं सम्यग्ज्ञानेन दग्धमित्यतः साध्वेतदारब्धकार्य्यक्षये विदुषः कैवल्यमवश्यम्भावीति ।"४।१ भा०

"यत्तु सञ्चितं कर्म्मान्तरं तन्न निमित्तं फलस्य दग्धमूलत्वात् । अविद्यादयो हि क्लेशाः कर्मणस्तत्फलस्य च मूलम् । तदुक्तं योगशास्त्रे "क्लेशमूलः कर्म्माशयः सति मूले तद्विपाकः" इति तच्च मूलं ज्ञानाग्निना दग्धमिति कुत पुनः संसारः तस्माद्देहपाते कैवल्यमिति सिद्धम्" आ०गि०

सांख्यकारिकायां तत्त्वकौमुद्यामत्रविशेषो उक्तो यथा

"सम्यग्ज्ञानाधिगमाद्धर्मादीनामकारणप्राप्तौ । तिष्ठति

संस्कारवशाच्चक्रभ्रमिवद्धृतशरीरः।" साङ्ख्यकारिका। "तत्त्वसाक्षात्कारोदयादेवानादिरप्यनियतविपाककालोऽपि कर्म्माशयप्रचयोदग्धबीजभावतया न जात्याद्युपभोगलक्षणाय फलाय कल्पते। क्लेशसलिलावसिक्तायां हि बुद्धिभूमौ कर्मबीजान्यङ्कुरं प्रसुवते तत्त्वज्ञाननिदाघनिपीतसकलक्लेशसलिलायामूषरायां कुतः कर्मबीजानामङ्कुरप्रसवः। तदिदमुक्तं धर्म्मादीनामकारणप्राप्ताविति अकारणत्वप्राप्तावित्यर्थः। उत्पन्नतत्त्वज्ञानेऽपि च संस्कारवशात्तिष्ठति। यथोपरतेऽपि कुलालव्यापारे चक्रं वेगाख्यसंस्कारवशाद्भ्रमत्तिष्ठति। कालपरिपाकवशादुपरते संस्कारे निष्क्रियं भवति। शरीरस्थितौ च प्रारब्धपरिपाकौ धर्म्माधर्म्मौ संस्कारौ। तथाच श्रूयते "भोगेन त्वितरे क्षपयित्वाथ सम्पद्यत" इति "तावदेवास्य चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इति। प्रक्षीयमाणाविद्याविशेषस्य संस्कारसहयात्तत्सामर्थ्याद्धृतशरीरस्तिष्ठति" तत्त्वकौ०।

सा०सू० भाष्येऽप्युक्तं यथा

"बाधितानुवृत्त्या मध्यविवेकतोऽप्युपभोगः" सू०। "सतत्त्वसम्प्रज्ञातयोगेनात्मसाक्षात्कारोत्तरं मध्यविवेकावस्थो मध्यमविवेकेऽपि सति पुरुषे बाधितानामपि दुःखादीनां प्रारब्धवशात् प्रतिबिम्बरूपेण पुरुषेऽनुवृत्त्या भोगो भवतीत्यर्थः। विवेकनिष्पत्तिस्त्वपुनरुत्थानादसम्प्रज्ञातादेव भवतीत्यतस्तस्यां सत्यां न भोगोऽस्तीति प्रतिपादयितुं मध्यविवेकत इत्युक्तम्। मन्दविवेकस्तु साक्षात्कारात् पूर्वं श्रवणमननध्यानमात्ररूप इति विभागः" भा०।

जीवन्मुक्तश्च सू०।

"जीवन्मुक्तोऽपि मध्यविवेकावस्थ एव भवतीत्यर्थः। जीवन्मुक्ते प्रमाणमाह" भा०।

"उपदेश्योपदेष्टृत्वात् तत्सिद्धिः" सू०।

"शास्त्रेषु विवेकविषये गुरुशिष्यभावश्रवणाज्जीवन्मुक्तसिद्धिरित्यर्थः। जीवन्मुक्तस्यैवोपदेष्टृत्वसम्भवादिति" भा०।

"श्रुतिश्च" सू०।

"श्रुतिश्च जीवन्मुक्तेऽस्ति "दीक्षयैव नरो मुच्येत् तिष्ठेन्मुक्तोऽपि विग्रहे। कुलालचक्रमध्यस्थो विच्छिन्नोऽपि भ्रमेद्घटः"। "ब्रह्मैव सन् ब्रह्माप्येतीत्यादि" रिति। नारदीयस्मृतिरपि "पूर्वाभ्यासबलात् कार्य्यं न लोको न च वैदिकः। अपुण्यपापः सर्वात्मा जीवन्मुक्तः स उच्यते"। इति। ननु श्रवणमात्रेणाप्युपदेष्टृत्वं स्यात् तत्राह" साङ्ख्यप्रवचनभाष्यम्।

"इतरथान्धपरम्परा"। सू०।

"इतरथा मन्दविवेकस्याप्युपदेष्टृत्वेऽन्धपरम्परापत्तिरित्यर्थः। सामग्र्येणाज्ञाततत्त्वमज्ञात्वा चेदुपदिशेत् कश्चित् क्वचिदंशे सम्भ्रमेण शिष्यमपि भ्रान्तीकुर्यात् सोऽप्यन्यं सोऽप्यन्यमित्येवमन्धपरम्परेति। ननु ज्ञानेन कर्मक्षये सति कथं जीवनं स्यात् तत्राह" भा०

"चक्रभ्रमणवद्धृतशरीरः"। सू०

"कुलालकर्मनिवृत्तावपि पूर्वकर्मवेगात् स्वयमेव यथा कियत्कालं चक्रं भ्रमति। एवं ज्ञानोत्तरं कर्मानुत्पत्तावपि प्रारब्धकर्मवेगेन चेष्टमानं शरीरं धृत्वा जीवन्मुक्तस्तिष्ठतीत्यर्थः। ननु ज्ञानहेतुसम्प्रज्ञातयोगेन भोगादिवासनाक्षये कथं शरीरधारणम्। न च योगस्य संस्काराभिभावकत्वे किं मानमिति वाच्यम्। "व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधपरिणाम" इति योगसूत्रतस्तत्सिद्धेः। चिरकालीनस्य विषयान्तरावेशस्य विषयान्तरसंस्काराभिभावकतया लोकेऽप्यनुभवाच्चेति तत्राह।" भा०

"संस्कारलेशतस्तत्सिद्धिः।" सू०

"शरीरधारणहेतवो ये विषयसंस्कारास्तेषामल्पावशेषात् तस्य शरीरधारणस्य सिद्धिरित्यर्थः। अत्र चाविद्यासंस्कारलेशस्य सत्ता नापेक्ष्यते अविद्याया जन्मादिरूपकर्मविपाकारम्भमात्रे हेतुत्वात्। योगभाष्ये व्यासैस्तथा व्याख्याततत्वात्। "वीतरागजन्मादर्शनादिति" न्यायाच्च। न तु प्रारब्धफलककर्मभोगेऽपीति। यत्र च नियमेनाविद्यापेक्ष्यते स प्रयासविशेषरूपो भोगो मूढेष्वेवास्ति जीवन्मुक्तानां तु भोगाभास एवेति प्रागुक्तम्। यत् तु कश्चिदविद्यासंस्कारलेशोऽपि जीवन्मुक्तस्य तिष्ठतीत्याह तन्न धर्म्माधर्म्मोत्पत्तिप्रसङ्गात्। अन्धपरम्पराप्रसङ्गात्। अविद्यासंस्कारलेशसत्ताकल्पने प्रयोजनाभावाच्च। एतच्च ब्रह्ममीमांसाभाष्ये प्रपञ्चितमिति" भा०।

**जीवन्मुक्ति** स्त्री जीवतो मुक्तिः। जीवतो बन्धनिवृत्तौ जीवतः पुरुषस्य कर्तृत्वभोक्तृत्वनिबन्धनसुखदुःखविशेषक्लेशादिरूपस्य निवृत्तौ। तस्या उपायास्तु श्रवणमननयोगाभ्यासादयः तन्त्रोक्तकुलाचाराश्च। "जीवन्मुक्तावुपायस्तु कुलमार्गो हि नापरः" इति तन्त्रोक्तेः।

**जीवन्मृत** त्रि० जीवन्नेव मृतः मृततुल्यः। जीवता कर्त्तव्यकार्य्यस्याकरणात् मृतसमे आत्मम्भरौ स हि जीवन्नपि वैश्वदेवातिथिभोजनाद्यन्तरेण आत्मनः पोषणेन नित्यका-

ण्यीकरणात् मृतसमः। अतएवाह दक्षः “जीवन्तो मृतकास्त्वन्ये य आत्मम्भरयो नराः” ।

**जीवपति** स्त्री जीवः जीवन् पतिरस्याः सपूर्व्वत्वात् वा न न ङीपौ जीवद्भर्त्तृकायां सधवायां “स्त्रीचैतदास्थाय लभेत सौभगं श्रियं प्रजां जीवपतिर्यशोगुणम्” भाग० ६।१८।२० वा कप् जीवपतिकादयोऽप्यत्र ।

**जीवपत्नी** स्त्री जीवः जीवन् पतिर्यस्याः सपूर्व्वत्वात् नः ङीप् च । जीवत्पतिकायां सधवायाम् “ब्राह्मण्याश्च वृद्धायाः जीवपत्न्याः जीवप्रजाया अगारे एतां रात्रिं वसेत्” । “वाचं विसृजेत् जीवपत्नीं प्रजां विन्देयेति” आश्व० गृ० १।७।२१।२१ । “तमेतमवेक्षितकर्णं वीरमूर्जस्वल्नः जीवपत्नीति ब्राह्मण्यो मङ्गल्यादिभिर्वाग्भिरुपासीरन्” सं०त० गोभिलः ।

**जीवपत्रप्रचायिका** न० जीवस्य जीवपुत्रकस्य पत्राणि प्रचीयन्तेऽस्याम् “नित्यं क्रीड़ाजीविकयोः” पा० स० । क्रीड़ायां प्र+चि–भावे ण्वुल् । उदीचां क्रीड़ाभेदे । “जीवपत्रप्रचायिका उदीचां क्रीड़ा” सि०कौ० । प्राचां क्रीड़ायां तु पा०सूत्रे प्राचामिति विशेषणात् न पूर्व्वपदस्याद्युदात्तता किन्तु तत्पुरुषे प्रकृतिस्वरः ।

**जीवपुत्र** पु०जीवः जीवकः पुत्र इव हर्षहेतुत्वात् ।(जियाँपोती) १वृक्षभेदे । जीवः जीवन् पुत्रो यस्याः । २जीवत्सुतायां स्त्रियां “सा जीवपुत्रा सुभगा भवत्यमरवर्णिनी” हरिवं० १२८अ०। जीववत्सादयोऽप्यत्र। “काकवन्ध्या च या नारी मृतवत्सा च या भवेत् । बहुपत्या जीववत्सा सा भवेन्नात्र संशयः” कालीस्तवः। “मृतप्रजा जीवपुत्रा धनेश्वरी” भाग० ६।१८।२१ । ३तादृशपुरुषे पु० “कच्चित् पुत्रा जीवपुत्राः सुसभ्यक्” भाग० उ० २८ ।

**जीवपुत्रक** पु० जीवयतीति जीव–क जीवः पुत्र इव हर्षहेतुत्वात् इवार्थे कन् ।(जिँआपोती) वृक्षभेदे । शब्दर०।

**जीवपुष्पा** स्त्री जीवयतीति जीव–णिच् अच्–जीवं जीवकं पुष्पं यस्याः । वृहज्जीवन्तीवृक्षे राजनि० । जीवः जन्तुः पुष्पमिव ।२जन्तुरूपपुष्पे न०। “अस्माकं शिविरे तावन्निशिताः शस्त्रपाणयः । शत्रूणां जीवपुष्पाणि विचिन्वन्तु नगेष्विव” रामा० सु०४२अ० ।

**जीवप्रिया** स्त्री जीवं प्रीणाति प्री–क ६त०।१हरीतक्याम् । राजनि०। ६त०। २जीववल्लभे त्रि० ।

**जीवभद्र** स्त्री जीवानां भद्रं यस्याः ५ब० । जीवन्तीलतायां राजनि० । ६त० । जीवकुशले न० ।

**जीवमन्दिर** न० ६त० । शरीरे राजनि० तस्य जीवभोगायतनत्वात्तथात्वं जीवगृहादयोऽप्यत्र ।

**जीवमातृका** स्त्री ६त०। “कुमारी धनदा नन्दा विमला मङ्गला बला । पद्मा चेति च विख्याताः सप्तैता जीवमातृकाः” विधानपारिजातोक्ते कुमार्य्यादौ मातृकासप्तके ।

**जीवयाज** पु० जीवैः पशुभिर्याजः याजनम् यज–णिच् भावे अच् । पशुभिर्याजने । “जीवयाजं यजते सोमपादिवः” ऋ०१।३१।१५। अस्य भाष्ये “याजयतेर्घञ् णेरनिटीति णिलोपस्याचः परस्मिन्निति स्थानिवद्भावात् चजोः कुघिण्ण्यतोरिति कुत्वाभाव इति” यदुक्तं तत् प्रामादिकं याजयतेर्हलन्तत्वाभावात् घञोऽप्रसक्तेः “एरच्” पा० इवर्णान्तादचः एव प्रसक्तेश्च ।

**जीवयोनि** स्त्री जीवा जीवनवती योनिः । सजीवजन्तौ “तिर्य्यङ्मनुष्यविबुधादिषु जीवयोनिषु” भाग०३।८।२०

**जीवरक्त** न०जीवोत्पादकं रक्तम् शाक०त० । स्त्रीणामार्त्तवे शोणिते तस्य गर्भोत्पादकत्वेन तत्रस्थजीवोत्पादकत्वं यथाह सुश्रुतः “आर्त्तवं शोणितं त्वाग्नेयमग्नीषोमीयत्वाद् गर्भस्य,पाञ्चभौतिकञ्चापि जीवरक्तमाहुराचार्य्याः विस्रता द्रवता रागः स्पन्दनं लघुता तथा । भूम्यादीनां गुणाह्येते दृश्यन्ते चात्र शोणिते” ।

**जीवला** स्त्री जीवं जीवनं लाति सेवनात् ला–क । सैंहलीलतायां राजनि० ।

**जीवलोक** पु० जीवानां लोकः भोगसाधनम् । १संसारे “माता पिता गुरुजनः स्वजनो ममेति मायोपमे जगति कस्य भवेत् प्रतिज्ञा । एको यतो व्रजति कर्म पुरःसरोऽयं विश्रामवृक्षसदृशः खलु जीवलोकः । सायं सायं वासवृक्षं समेताः प्रातः प्रातस्तेन तेन प्रयान्ति । त्यक्त्वान्योन्यं तञ्च वृक्षं विहङ्गास्तद्वत् तद्वज्ज्ञातयो ज्ञातयश्चेति”। “ममैवांशो जीवलोके जीवभूतः सनातनः” गीता । “जीवलोके संसारोपभोगार्थम्” श्रीधरः । कर्म०। २जीवरूपे जने च “महागुणं हरति हि पौरुषेण तदा वीरोजीवति जीवलोके” भा०व०३४अ०। “आलोकमर्कादिव जीवलोकः” रघुः ।

**जीववल्ली** स्त्री जीवयतीति जीव–णिच्–अच् कर्म० । क्षीरकाकोल्याम् राजनि० ।

**जीववृत्ति** स्त्री जीव एव वृत्तिः । पाशुपाल्ये हेमच० । तत्र जीवरक्षादिना वैश्यादेर्वृत्तिरिति तस्य तथात्वम् । जीवे वृत्तिः स्थितिरस्य । २जीवनिष्ठे गुणादौ त्रि०

"जीवन्ती त्रिमो गुणो" भाषापरिच्छेदकारिका ।

**जीवशाक** पु० कर्म्म० । मालवदेशप्रसिद्धे शाकभेदे । "जीवशाकः सुमधुरः ईषद्रूक्षो बलसाधकः । दीपनः पाचनो बल्यो हृद्यः पित्तापहारकः" राजनि० ।

**जीवशुक्ला** स्त्री जीवतीति जीवा जीवन्त्येव शुक्ला क्षीरकाकोल्याम् राजनि० । अन्यस्य पक्वतायामेव शुक्लत्वमस्याः पुनर्जीवन्त्या एव तथात्वमिति तन्नामता । [राजनि० ।

**जीवश्रेष्ठा** स्त्री जीवाय जीवनाय श्रेष्ठा । ऋद्धिनामौषधौ

**जीवसंज्ञ** पु० जीव इति संज्ञाऽस्य । कामवृद्धिवृक्षे राजनि०

**जीवसाधन** न० जीवस्य जीवनस्य साधनम् । धान्ये राजनि०

**जीवसू** स्त्री जीवं जीवन्तं सूते सू—क्विप् । जीवत्पतिकायां स्त्रियां हेमच० । "जीवसूर्वीरसूर्भद्रे ! बहुसौख्यसमन्विता" भा० आ० १९८ अ० ।

**जीवस्थान** न० ६त० । मर्म्मणि हला० ।

**जीवहीन** पु० "षड्चरो जीवहीनः" विश्वसारतन्त्रोक्ते षड्चरे मन्त्रे कुमारशब्दे २१०६ पृ० दृश्यम् ।

**जीवा** स्त्री जीव—अच् जीवयतेरच् वा टाप् ज्या—क्विप् संप्रसारणे दीर्घः वा अस्यस्य व । १धनुषो गुणे ज्यायां २जीवन्तिकायामौषधौ, ३वचायां, ४शिञ्जिते, ५भूमौ ६जीवनोपाये च मेदि० जीव—भावे अ टाप् । ७जीवने जटा० । धनुराकारक्षेत्रस्य वृत्तस्योभयरेखाद्वृत्तसंलग्ने क्षेत्रभेदे तन्मानानयनादिकं लीला० दर्शितं तच्च क्षेत्रशब्दे २४०२ पृ० दर्शितम् । ग्रहस्पष्टगत्याद्युपयोगिनी राशिकल्पक्षेत्रस्य जीवा तु क्रमज्याशब्दे २२०१पृ०उक्ता अधिकं ज्याशब्दे वक्ष्यते ज्योत्पत्तिप्रकारः सि० शि० उक्तो यथा

"इष्टाङ्गुलव्यासदलेन वृत्तं कार्यं दिगङ्कं भलवाङ्कितं च । ज्यासंख्यया नवतेर्लवा ये तदाद्यजीवा धनुरेतदेव । द्वित्र्यादिनिघ्नं तदनन्तराणां चापे तु दत्त्वोभयतो दिगङ्कात् । सूत्रं तदग्रद्वयबद्धरज्जोरर्धं ज्यकार्धं निखिलानि चैवम् । यथान्यथा वा गणितेन वच्मि ज्यार्धानि तान्येव परिस्फुटानि । त्रिज्याकृतिर्दोर्गुणवर्गहीना मूलं तदीयं खलु कोटिजीवा । दोःकोटिजीवारहिते त्रिभज्ये वक्ष्येषके कोटिभुजोत्क्रमज्ये । ज्याचापमध्ये खलु योऽत्र बाणः सैवोत्क्रमज्या सुधियात्र वेद्या । त्रिज्यार्धं राशिज्या तत्कोटिज्या च षष्टिभागानाम् । त्रिज्यावर्गार्धपदं शरवेदांशज्यका भवति । त्रिज्याकृतीषुघातात् त्रिज्याकृतिवर्गपञ्चघातस्य । मूलोनादष्टहृतान्मूलं षट्त्रिंशदंशज्या । गजहयगजेषु ५८७८ निघ्नी त्रिभजीवा वा ऽयुतेन१०००० संभक्ता । षट्त्रिंशदंशजीवा तत्कोटिज्याकृतेर्दलाम् । त्रिज्याकृतीषुघातान्मूलं त्रिज्योनितं चतुर्भक्तम् । अष्टादशभागानां जीवा स्पष्टा भवत्येवम् । क्रमोत्क्रमज्याकृतियोगमूलाद्दलं तदर्धांशकशिञ्जिनी स्यात् । त्रिज्योत्क्रमज्यानिहतेर्दलस्य मूलं तदर्धांशकशिञ्जिनी वा । तस्याः पुनस्तद्दलभागकानां कोटेश्च कोट्यग्रदलस्य चैवम् । अन्यज्ज्यकासाधनमुक्तमेवं पूर्वैः प्रवक्ष्येऽथ विशिष्टमस्मात् । त्रिज्याभुजज्याहतिहीनयुक्ता त्रिज्याकृती तद्दलयोः पदे स्तः । भुजोनयुक्तत्रिभखण्डयोर्ज्ये कोटिं भुजज्यां परिकल्प्य चैवम् । यद्दोर्ज्ययोरन्तरमिष्टयोस्तत्कोटिज्ययोस्तद्वृतियोगमूलम् । दलीकृतं स्याद्भुजयोर्वियोगखण्डस्य जीवैवमनेकधा वा । दोःकोटिजीवाविवरस्य वर्गो दलीकृतस्तस्य पदेन तुल्या । स्यात् कोटिदोर्ज्याविवरार्धजीवा वक्ष्येऽथ मूलग्रहणं विनापि । दोर्ज्याकृतिर्व्यासदलार्धभक्ता लब्धत्रिमौर्व्याविवरेण तुल्या । दोःकोटिभागान्तरशिञ्जिनी स्याज्ज्यार्धानि वा कानिचिदेवमत्र । खगोऽङ्कबाणाङ्केन(१५९८)वर्जिता भुजशिञ्जिनी । कोटिज्या दशभिः क्षुण्णा त्रिशरेषु(५७३)विभाजिता । तदैक्यमग्रजीवा स्यादन्तरं पूर्वशिञ्जिनी । प्रथमज्या भवेदेवं परिरन्यास्ततस्ततः । व्यासार्धेऽष्टगुणाभ्यग्नितुल्ये स्युर्नवतिज्यकाः । कोटिजीवा शताभ्यस्ता गोदस्रतिथि (१५२९)भाजिता । दोर्ज्या स्याद्रसवेदांश (४६७)हीना तद्योगसंमिता । तदग्रज्या तयोश्चापि विवरं पूर्वशिञ्जिनी । तत्पदस्था २२५नगांशोना एवमत्राद्यशिञ्जिनी । ज्यापरम्परयैव वा चतुर्विंशतिमौर्विकाः । चापयोरिष्टयोर्दोर्ज्ये मिथः-कोटिज्यकाहते । त्रिज्याभक्ते तयोरैक्यं स्याच्चापैक्यस्य दोर्ज्यका । चापान्तरस्य जीवा स्यात् तयोरन्तरसंमिता । अन्यज्ज्यासाधने सम्यगियं ज्याभावनोदिता । समासभावना चैका तथान्यान्तरभावना । आद्यज्याचापभागानां प्रतिभागज्यकाविधिः । या ज्यानुपाततः सेष्टव्यासार्धे परिणाम्यते । आद्यदोःकोटिजीवाभ्यामेव कार्या ततो मुहुः । भावना सुहृदग्रज्या इष्टे व्यासदले स्फुटाः । स्थूलं ज्यानयनं पाट्यामिह तस्योदितं मया । उक्ता संक्षेपतः पूर्वं ज्योत्पत्तिः सुगमा च सा । सविशेषाधुना तत्र विशेषादिष्यते"। तत्र तावदाचार्य्याणां पदवीमित्यादि श्लोकपञ्चकं

सुगमम्। अत्र गणितेन ज्यासाधनार्थं मूलभूतज्याचतुष्कसिद्धप्रकारमेवाह। तत्प्रकारो हि बीजगणितक्रियया। त्रिज्यार्धं राशिज्येत्यादि। त्रिज्यार्धेन १७१९ तुल्या त्रिंशदंशानां ज्या भवति। सैव तस्याः कोटिज्या षष्टिभागानाम्। त्रिज्यावर्गार्धपदं पञ्चचत्वारिंशदंशानां ज्या भवति। अथ त्रिज्यावर्गात् पञ्चगुणात् त्रिज्याकृतिवर्गपञ्चघातस्य मूलेन हीनात् ८ हृतात् पदं षट्त्रिंशदंशानां ज्या। अथ वा गजहयगजेषु ५८७८ निघ्नी त्रिज्याऽयुतेन १००००भक्ता षट्त्रिंशदंशानां ज्या स्यात्। इति गणितलाघवम्। तत्कोटिज्याऽर्धचतुष्पञ्चाशदंशानां ज्या। तथा त्रिज्यावर्गस्य पञ्चगुणस्य मूलं त्रिज्याहीनं चतुर्भक्तं अष्टादशभागानां ज्या भवति। तत्कोटिज्याऽर्धात् द्विसप्ततिभागानाम्। अतोऽन्यथा साधनमाह। क्रमोत्क्रमज्येत्यादि। कोटिज्योना त्रिज्याभुजस्योत्क्रमज्या स्यात्। भुजज्योना त्रिज्याकोट्युत्क्रमज्या स्यात्। भुजक्रमज्योत्क्रमज्ययोश्च वर्गयोगपददलं भुजांशानामर्धस्य ज्या स्यात्। अथवा त्रिज्योत्क्रमज्याघातदलस्य मूलं तदर्धांशकशिञ्जिनी स्यादिति क्रियालाघवम्। एवमुत्पन्नज्याया अपि कोटिज्या सा तत्कोटिभागानाम्। ततः पुनरेवमन्यास्तदर्धांशकज्याः साध्याः। कोटेश्चैवमन्याः। तद्यथा। यत्र चतुर्विंशतिज्यास्तत्र त्रिज्यार्धमष्टमं ज्यार्धम्। तत्कोटिज्या तु षोडशम्। शरवेदांशज्या द्वादशम्। अथाष्टमात् तदर्धांशप्रकारेण चतुर्थम्। ४। तत्कोटिज्या विंशम्। २०। एवं चतुर्थात् द्वितीयं २ द्वाविंशं च। २२। द्वितीयादाद्यं १ त्रयोविंशं च २३। विंशतितमाद्दशमं १० चतुर्दशं च १४। दशमात् पञ्चमम् ५ एकोनविंशं च १९। द्वाविंशादेकादशं ११ त्रयोदशं च १३। चतुर्दशात् सप्तमं ७ सप्तदशं च १७। अथ द्वादशात् षष्ठं ६ मष्टादशं च १८। षष्ठात् तृतीयं ३ मेकविंशं च २१। अष्टादशान्नवमं ९ पञ्चदशं च १५। त्रिज्या चतुर्विंशमिति। एवं किल पूर्वैरन्यज्यासाधनमुक्तम्! इदानीं विनाप्युत्क्रमज्ययाभिनवप्रकारेणाह। त्रिज्याभुजज्याहतीत्यादि। त्रिज्याभुजज्याघातेन त्रिज्याकृतिरेकत्रोनान्यत्र युता। द्वे चाधिते। तयोर्मूले। आद्यं भुजोनखाङ्कांशानां दलस्य ज्या। द्वितीयं भुजाढ्यखाङ्कांशानां दलस्य। एवमतोऽप्यन्याः। तद्यथा। अष्टमात् षोडशं १६ ज्यार्धम्। षोडशाच्चतुर्थं ४ विंशं च २०। चतुर्थाद्दशमं १०। चतुर्दशं च १४। एवं सर्वाण्यपि। प्रकारान्तरमाह। यद्दोर्ज्ययोरन्तरमित्यादि। इष्टदोर्ज्ययोर्यदन्तरं कोटिज्ययोश्च यत् तयोर्वर्गैक्यमूलस्य दलं भुजयोरन्तरार्धस्य ज्या भवति। एवमन्ययोरन्यान्याः। यथैका किल चतुर्थी ४। अन्याष्टमी ८ दोर्ज्या। ताभ्यां द्वितीया सिध्यति। द्वितीयाचतुर्थीभ्यां प्रथमेत्यादि। तथा दोःकोटिज्ययोरन्तरवर्गदलस्य मूलं दोःकोटिभागान्तरार्धस्य ज्या स्यात्। तथाष्टमी ८ दोर्ज्या। षोडशी १६ कोटिज्या। ताभ्यां चतुर्थी ४ स्यादित्यादि। अथ मूलग्रहणक्रियया विनापि दोःकोटिभागान्तरज्यानयनमाह। दोर्ज्याकृतिरित्यादि। दोर्ज्यावर्गस्त्रिज्यार्धेन भक्तः। तस्य त्रिज्यायाश्च विवरं दोःकोट्यन्तरस्य ज्या स्यात्। कानिचिदेवमत्र ज्यार्धानि साध्यानि। तद्यथा। यत्र किल त्रिंशज्ज्यार्धानि तत्र त्रिज्यार्धं दशमम्। १०। तत्कोटिज्या विंशतितमम्। शरवेदांशज्या पञ्चदशम्। षट्त्रिंशज्ज्या द्वादशम्। तत्कोटिज्याष्टादशं ज्यार्धम्। अष्टादशभागानां ज्या षष्ठम्। ६। तत्कोटिज्या चतुर्विंशमिति। क्रमोत्क्रमज्याकृतियोगमूलादित्यादिना पूर्वोक्तप्रकारेण दशमात् पञ्चमम्। तत्कोटिज्या पञ्चविंशम्। एवं द्वादशात् षष्ठं चतुर्विंशं च। षष्ठात् तृतीयं सप्तविंशं च। अष्टादशान्नवममेकविंशं च। एतान्येवानेन प्रकारेण सिध्यन्ति नान्यानि। अत उक्तं कानिचिदेवमत्रेति। यद्दोर्ज्ययोरन्तरमित्यादिप्रकारेण। अतोऽत्र पञ्चममेका दोर्ज्या। नवममन्या। आभ्यां यद्दोर्ज्ययोरन्तरमित्यादिना प्रकारेण भुजयोरन्तरार्धस्य ज्योत्पद्यते। तच्च द्वितीयं ज्यार्धम्। तत्कोटिज्याऽष्टाविंशम्। आभ्यां क्रमोत्क्रमज्याकृतियोगमूलाद्दलमित्यादिप्रकारेणाद्यं चतुर्दशं च। एवमन्याश्चतुर्दश सिध्यन्ति। अथ ज्याभावना। सा च द्वेधा। एका समासभावना। अन्यान्तरभावना। तदर्थमाह। खगोऽङ्कैर्दुषड्भिर्नेत्यादि। यत्र किल वसुत्रिवेदाग्नि ३४३८ तुल्या त्रिज्या नवतिश्च ज्यार्धानि तत्र साधुच्यते। तत्र मूलभूतज्यानां मध्ये काचनेष्टा भुजज्या तत्कोटिज्या च पृथक् स्थाप्या। भुजज्या खनवषड्गुरस ६५९० विभागेन रहिता कार्या। कोटिज्या तु दशगुणा त्रिसप्तपञ्चभिर्भाज्या। तयोरैक्यं तदग्रज्या। अन्तरं पूर्वज्या स्यात्। यथा त्रिज्यार्धं त्रिंशत्संख्याकं ३० ज्यार्धम्। ततः समासभावनयैकत्रिंशत्संख्यम्।

तस्माद्द्वात्रिंशत्संख्यमित्यादि। अन्तरभावनया त्वेकोनत्रिंशमष्टाविंशमित्यादि। पूर्णं दोर्ज्यां कोटिज्यां त्रिज्यां च प्रकल्प्य प्रथमं खण्डमेव षष्टिः ६० स्यात्। अथ यदि सैव त्रिज्या चतुर्विंशतिज्यार्धानि तदर्थमाह। कोटिजीवाशताभ्यस्तेत्यादि। अत्रापि त्रिज्यार्धमष्टमं ज्यार्धं सा भुजज्या। षोडशं कोटिज्या सा कोटिज्या शतगुणा षोडशतिथि(१५२८) भाजिता। या तु दोर्ज्या सा तु निजेन सप्ताङ्कवेदांशेन४६७हीना कार्य्या। यदि तयोरैक्यं क्रियते तदा नवमं ज्यार्धं भवति। यद्यन्तरं तदा सप्तमं स्यात्। एवं समासभावनया नवमाद्दशमं दशमादेकादशमित्यादि। तथान्तरभावनया सप्तमात् षष्ठं षष्ठात् पञ्चममित्यादि। एवं प्रथमं सप्तांशोनं तत्त्वदस्र२२५मितं भवति। अथवा पूर्णं ० दोर्ज्यां त्रिज्यां च कोटिज्यां प्रकल्प्य साध्यते तथापि तदेव। ततः समासभावनया द्वितीयादीन्यखिलानि भवन्ति। अथ वा त्रिज्यां दोर्ज्यां प्रकल्प्य पूर्णं कोटिज्यां च प्रकल्प्य साध्यते तदा त्वयोर्विंशमुत्पद्यते तस्मादन्तरभावनया द्वाविंशम् २२। ततोऽप्येकविंशम् २१। एवमखिलान्यपि निष्पद्यन्ते। अथ भावनामाह। चापयोरिष्टयोरित्यादि। इष्टयोश्चापयोर्ये दोर्ज्ये ते कर्णभूमौ स्थाप्ये। तयोरधस्तात् कोटिज्ये च। ततः प्रथमकोटिज्या द्वितीयदोर्ज्यया गुण्या। ततो द्वितीयकोटिज्या प्रथमदोर्ज्यया गुण्या। द्वे अपि त्रिज्ययाभाज्ये। फलयोः समासश्चापैक्यभुजस्य ज्या भवति। अन्तरं चापान्तरस्य ज्या भवति। इयं सिद्धज्यातोऽन्यज्यासाधने भावना। तद्यथा। तुल्यभावनया प्रथमज्यार्धस्य प्रथमज्यार्धेन सह समासभावनया द्वितीयं, द्वितीयस्य द्वितीयेनैवं चतुर्थमित्यादि। अथातुल्यभावनया द्वितीयतृतीययोः समासभावनया पञ्चमम्। अन्तरभावनया प्रथमं स्यादित्यादि। अथेष्टव्यासार्धे ज्याज्ञानार्थमाह। आद्यज्याचापभागानामित्यादि। यावद्भिरंशैरेका ज्या लभ्यते ते आद्यज्याचापांशाः। प्रतिभागज्यकाविधिरिति। त्रिसप्तपञ्चभि ५७३ र्भक्तांत्यादिना प्रागुक्तप्रकारेणैकभागस्य ज्यामानीय तद्भावनातो भागद्वयस्यैवं तेषां भागानां ज्या साध्या साभीष्टत्रिज्यया हता वस्वनलाब्धिवह्निभि ३४३८ र्भक्ता प्रथमज्या स्यात्। तस्यास्तयैव सह भावनया द्वितीयाद्याः सिध्यन्ति” प्रमिताक्षरा।

**जीवातु** पु॰ जीवयति जीव–णिच्–कर्मणि आतु, जीवत्यनेन जीव–करणे वा आतु। १अन्ने २जीवनौषधे ३मृतसंजीवनौषधे च भावे आतु।४जीवने। मेदि॰“रे हस्त! दक्षिण! मृतस्य शिशोर्द्विजस्य जीवातवे विसृज शूद्रमुनौ कृपाणम्” उत्तरच॰। “आर्त्तया पुनर्जीवातवे न मर्त्तवे” ताण्ड्य॰ब्रा॰१।५।१८। जीवितुमिति भाष्योक्तेः तवेप्रत्ययान्तमित्यन्ये तथा च जीव–तुमर्थे तवे वा॰ दीर्घः। न मर्त्तवे इति साहचर्य्यात् जीवितुमित्यर्थकता तच्च तवेप्रत्ययान्ततयैव सिध्यतीति बोध्यम्।

**जीवातुमत्** पु॰ जीवातु+मतुप्। आयुष्कामेष्टौ देवताभेदे “आयुष्कामेष्ट्यां जीवातुमन्तौ” आश्व॰श्रौ॰ २।१०। २। “जीवातुमन्तौ सव्योपर्य्युपस्या” २।१८।१६।

**जीवात्मन्** पु॰ जीवति जीव–अच् कर्म॰। प्राणसञ्चारयुक्ते आत्मनि प्राणिनि। “संयोगो योग इत्युक्तो जीवात्मपरात्मनोः” योगशा॰। “जीवात्मन्! पश्य भद्रं ते मातरं पितरञ्च ते” भाग॰ ६।१६।२।

**जीवादान** न॰ ६त॰। “अयोगस्तूभयोराध्मानं परिकर्त्तिका परिस्रावाः प्रवाहिका हृदयोपसरणमप्रग्रहोऽभियोगो जीवादानमिति नव व्यापदो वैद्यनिमित्ता भवन्तीति” सुश्रुतोक्ते वैद्यनिमित्ते व्यापद्भेदे तच्च वमनविरेचनव्यापद्भेदः यथोक्तं तत्रैव

“अथातो वमनविरेचनव्यापच्चिकित्सितं व्याख्यास्यामः। वैद्यातुरनिमित्तं वमनं च पञ्चदशधा व्यापद्यते तत्र वमनस्याधोगतिरूर्द्ध्वं विरेचनस्येति पृथक्। सामान्यमुभयोः सावशेषौषधत्वं जीर्णौषधत्वं हीनाधिदोषापहृतत्वं वातशूलमयोगातियोगौ जीवादानमाध्मानं परिकर्त्तिका परिस्रावः प्रवाहिकाहृदयोपसरणं विबन्ध”इति।

**जीवाधार** पु॰ ६त॰। हृदये हेमच॰। “हृदयं तस्माद्धृदयम्” छा॰ उ॰ जीवस्य हृदयाधारत्वोक्तेस्तथात्वम्।

**जीवान्तक** पु॰जीवमन्तयति अन्ति–नामधा॰ण्वुल्। जीवनाशे १प्राणिनाशके शाकुनिके अमरः २प्राणिनाशकमात्रे त्रि॰।

**जीवार्द्धपिण्डक** पु॰सूर्यसि॰परिभाषिते चक्रस्थराशिकलानां १८०॰ शतानामष्टमे भागे २२५ यथाह सू॰ सि॰ “राशिलिप्ताष्टमो भागः प्रथमं ज्यार्द्धमुच्यते” तत्तद्विभक्तं लब्धोनमिश्रितं तद् द्वितीयकम्। आद्येनैवं क्रमात् पिण्डान् भक्त्वा लब्धोनसंयुताः। खण्डकाः स्युश्चतुर्विंशज्ज्यार्द्धपिण्डाः क्रमादमी”। “एकराशिकलानामष्टादशशतानामष्टमोऽंशस्तत्त्वाश्विमितः२२५ प्रथममाद्यं ज्यार्द्धं सम्पूर्णजीवार्द्धपिण्डकः कथ्यते तदभिज्ञैः” रङ्ग॰। अत्र

जन्ममरणशब्दौ दर्शयति। जातकर्मादिविधानमपि देहप्रादुर्भावापेक्षमेव द्रष्टव्यम्, अभावाज्जीवप्रादुर्भावस्य। जीवस्य परस्मादात्मनः उत्पत्तिर्वियदादीनामिवास्ति नास्ति वेत्येतदुत्तरेण सूत्रेण वक्ष्यति। देहाश्रयौ तावज्जीवस्य स्थूलावुत्पत्तिप्रलयौ न स्तः इत्येतदनेन सूत्रेणावोच्यते" भा०।

"नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः" सू०।

"अस्त्यात्मा जीवाख्यः शरीरेन्द्रियपञ्जराध्यक्षः कर्मफलसम्बन्धी, स किं व्योमादिवदेवोत्पद्यते ब्रह्मण आहोस्विद्ब्रह्मवदेव नोत्पद्यते इति श्रुतिविप्रतिपत्तेर्विशयः कासुचिच्छ्रुतिष्वग्निविस्फुलिङ्गादिनिदर्शनैर्जीवात्मनः परस्मात् ब्रह्मण उत्पत्तिराम्नायते कासुचित्त्वविकृतस्यैव परस्य ब्रह्मणः कार्यप्रवेशेन जीवभावो विज्ञायते न चोत्पत्तिराम्नायत इति। तत्र प्राप्तं तावदुत्पद्यते जीव इति, कुतः प्रतिज्ञानुपरोधात्। (एकस्मिन् विदिते सर्वमिदं विदितम्) इतीयं प्रतिज्ञा सर्वस्य वस्तुजातस्य ब्रह्मप्रभवत्वे सति नोपरुध्येत, तत्त्वान्तरत्वे तु जीवस्य प्रतिज्ञेयमुपरुध्येत। न चाविकृतः परमात्मैव जीव इति शक्यते विज्ञातुं, लक्षणभेदात्। अपहतपाप्मत्वादिधर्मको हि परमात्मा, तद्विपरीतो हि जीवः, विभागाच्चास्य विकारत्वसिद्धिः। यावान् हि आकाशादिः प्रविभक्तः सर्वो विकारः, तस्य चाकाशादेरुत्पत्तिः समधिगता जीवात्मापि पुण्यापुण्यकर्मा सुखदुःखभाक् प्रतिशरीरं विभक्त इति तस्यापि प्रपञ्चोत्पत्त्यवसरे उत्पत्तिर्भवितुमर्हति" भा०।

अपि च "यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः" इति प्राणादेर्भोग्यजातस्य सृष्टिं शिष्ट्वा सर्वे एते आत्मानो व्युच्चरन्तीति भोक्तॄणामात्मनां पृथक् सृष्टिं शास्ति। "यथा सुदीप्तात् पावकात् विस्फुलिङ्गाः सहस्रशः प्रभवन्ति सरूपास्तथाक्षराद्विविधाः सोम्य! भावाः प्रजायन्ते तत्र चैवापियन्ति" इति च जीवात्मनामुत्पत्तिप्रलयावुच्येते सरूपवचनात्। जीवात्मानो हि परमात्मना सरूपा भवन्ति चैतन्ययोगात्। न च क्वचिदश्रवणमन्यत्र श्रुतं वारयितुमर्हति, श्रुत्यन्तरगतस्यापि अविरुद्धस्याधिकस्यार्थस्य सर्वत्रोपसंहर्त्तव्यत्वात्। प्रवेशश्रुतिरप्येवं सति विकारभावापत्त्यैव व्याख्यातव्या "तदात्मानं स्वयमकुरुत" इत्यादिवत् तस्मादुत्पद्यते जीव इत्येवं प्राप्ते ब्रूमः, नात्मा जीव उत्पद्यत इति कस्मादश्रुतेः, न ह्यस्योत्पत्तिप्रकरणे श्रवणमस्ति भूयस्सु प्रदेशेषु। ननु क्वचिदश्रवणमन्यत्र श्रुतं न वारयतीत्युक्तं, सत्यमुक्तं उत्पत्तिरेव त्वस्य न सम्भवतीति वदामः। कस्मात् नित्यत्वाच्च ताभ्यः। चशब्दादजत्वादिभ्यश्च। नित्यत्वं ह्यस्य श्रुतिभ्योऽधिगम्यते, तथाजत्वमविकारित्वमविकृतस्यैव ब्रह्मणो जीवात्मनावस्थानं ब्रह्मात्मता चेति। न चैवंरूपस्योत्पत्तिरुपपद्यते, ताः काः श्रुतयः "न जीवो म्रियते" "स वा एष महानजः" "आत्माऽजरोऽमृतोऽभयो ब्रह्म" "न जायते म्रियते वा विपश्चित्" "अजो नित्यः शाश्वतोऽयं पुराणः" "तत् सृष्ट्वा तदेवानुप्राविशत्" "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" "स एष इह प्रविष्ट आनखाग्रेभ्यः" "तत्त्वमसि" "अहं ब्रह्मास्मि" "अयमात्मा ब्रह्म सर्वानुभूः" इत्येवमाद्या नित्यत्ववादिन्यः सत्यो जीवस्योत्पत्तिं प्रतिबध्नन्ति। ननु प्रविभक्तत्वाद्विकारो विकारत्वाच्चोत्पद्यते इत्युक्तं अत्रोच्यते, नास्य प्रविभागः स्वतोऽस्ति, "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा" इति श्रुतेः, बुद्ध्याद्युपाधिनिमित्तं त्वस्य प्रविभागप्रतिभानमाकाशस्येव घटादिसम्बन्धनिमित्तम्। तथा च शास्त्रम् "स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः" इत्येवमादि ब्रह्मण एवाविकृतस्य सतोऽस्यैकानेकबुद्ध्यादिमयत्वं दर्शयति। तन्मयत्वञ्चास्य तद्विविक्तस्वरूपानभिव्यक्त्या तदुपरक्तस्वरूपत्वं स्त्रीमयो जाल्म इत्यादिवद्द्रष्टव्यम्। यदपि क्वचिदस्योत्पत्तिप्रलयश्रवणं तदप्यत एवोपाधिसम्बन्धान्नेतव्यम्, उपाध्युत्पत्तौ चास्योत्पत्तिस्तत्प्रलये च प्रलय इति। तथा च दर्शयति "प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति" इति। तथोपाधिप्रलय एवायं नात्मप्रलय इत्येतदपि, अत्रैव "मा भगवान्मोहमापीपदन्न वा अहमिमं विजानामि न प्रेत्य संज्ञास्ति" इति प्रश्नपूर्वकं प्रतिपादयति, "न वा अरे अहं ब्रवीम्यविनाशी वा अरेऽयमात्मानुच्छित्तिधर्मा मात्रासंसर्गस्त्वस्य भवति" इति। प्रतिज्ञानुपरोधोऽप्यविकृतस्यैव ब्रह्मणो जीवभावाभ्युपगमात्। लक्षणभेदोऽप्यनयोरुपाधिनिमित्त एव। अत ऊर्द्ध्वं विमोक्षायैव ब्रूहीति च प्रकृतस्यैव विज्ञानमयस्यात्मनः सर्वसंसारधर्मप्रत्याख्यानेन परमात्मभावप्रतिपादनात्। यस्मान्नैवोत्पद्यते प्रवि-

जीयते वेति" शारीरकसूत्रभाष्ये शङ्कराचार्यः।

**जीवोपाधि** पु० ६त०। १स्वप्नसुषुप्तिजाग्रदवस्थासु। तयो-र्हि जीवस्योपाधयः। तत्र सुषुप्तौ बुद्ध्यादिसंस्कार-वासितमज्ञानमात्रमुपाधिः। स्वप्ने जाग्रद्वासनामयं लिङ्गशरीरमुपाधिः। जाग्रदवस्थायां सूक्ष्मशरीरसं-सृष्टं स्थूलशरीरमुपाधिरिति तत्तदुपाध्युपलक्षितसुषु-प्त्यादेरप्युपाधित्वम्। "कार्योपाधिरयं जीवः कारणो-पाधिरीश्वर" इत्युक्तेः अज्ञानस्य २व्यष्टिशक्तिभेदे च तस्यास्तु समष्ट्यज्ञानकार्यत्वात् तदभिप्रायेणैव "मायो-पाधिरयं जीवोऽविद्योपाधिरीश्वरः" इत्यादौ मायावि-द्ययोरभेदेऽपि भेदनिर्देशः।

**जीवोर्णा** स्त्री ६त०। जीवतो मेषादेरोमणि "पवित्रम-स्मिन् करोति शुक्लं जीवोर्णानाम्" कात्या० श्रौ० ८।२।१६। "जीवन्मेषरोमनिर्मितसूत्रनिर्मितम्" कर्कः।

**जीव्या** स्त्री जीवाय हिता यत्। १हरीतक्याम् २जीवन्त्यां ३गोक्षुरदुग्धायाञ्च राजनि०। ४जीवनोपाये त्रि० जीव्यो-पायं तु भगवान् मम किञ्चित् करोतु सः" हरिवं० २६३अ०।

**जु** रंहसि भ्वा० पर० अक० अनिट्। जवति। अजौषीत्। जुजाव। जवः जवनः। णिचि जावयति ते अजी-जवत् त ततः सनि० जिजावयिषति। अस्य परस्मैपदित्वं गतिकर्मत्वञ्च निघण्टूक्तम् "जयति जवति" इत्युप-क्रमे इत्येते गतिकर्माण इत्युक्तेः। वेदे गणव्यत्यासः "इष्टिं वे विश्वे मरुतो जुनन्ति" ऋ० ५।५८।२। "येन न पातमर्पा जुनास" १।१८६।५। अयं धातुः ऋ० भाष्ये सौत्र इति माधवः। दीर्घान्तोऽपि। "वातो न जूतः स्तनयद्भि रभ्रैः" ऋ०४।१७।१२।

**जु** गतौ सौ० आत्म० सक० अनिट्। जवते। अजोष्ट। जुजुवे। "यद्धि मनसा जवते तद्वाचा वदति" तैत्ति० स०६।१।७।२।

**जुग** त्यागे भ्वा०पर० सक० सेट् इदित्। जुङ्गति। अजुङ्गीत् जुजङ्ग। कर्मणि इदित्त्वात् जुङ्ग्यते।

**जुगुप्सन** न० गुप-निन्दायां स्वार्थे सन्-भावे ल्युट्। १निन्दने अमरः। कर्त्तरि युच्। २निन्दाशीले त्रि०।

**जुगुप्सा** स्त्री गुप-निन्दायां स्वार्थे सन्-भावे अ टाप्। निन्दायाम् अमरः। सा च वीभत्सरसस्य स्थायिभावः शान्तरसव्यभिचारिभावश्च। यथोक्तं सा० द० "अवि-रुद्धा विरुद्धा वा यं तिरोधातुमक्षमाः। आस्वादाङ्कुर-कन्दोऽसौ भावः स्थायीति सम्मतः। रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा। जुगुप्सा विस्मयश्चेत्थ-मष्टौ प्रोक्ताः शमोऽपि च" रसभेदे स्थायिभावभेदानुक्त्वा "दोषेक्षणादिभिर्गर्हा जुगुप्सा विषयोद्भवा" तां लक्ष-यित्वा "शृङ्गारवीरयोर्हासो वीरे क्रोधस्तथा मतः। शान्ते जुगुप्सा कथिता व्यभिचारितया पुनः" देहजुगुप्सा च शौचकार्यं यथोक्तं पात० सू० भा० "शौचात् स्वाङ्गजुगुप्सा परैरसंसर्गः" सू० "स्वाङ्गे जुगुप्सायां शौचमारभमाणः कायावद्यदर्शी कायानभि-ष्वङ्गी भवति किञ्च परैरसंसर्गः कायस्वभावावलोकी स्वमपि कायं जिहासुर्मृज्जलादिभिराक्षालयन्नपि काय-शुद्धिमपश्यन् कथं परकायैरत्यन्तमेवाप्रयतैः संसृज्यते" भा०। देहे जुगुप्सायां वैराग्यं भवति। तस्य निन्द-नीयत्वे हेतुः विवेकचूडामणावुक्तो यथा "मज्जास्थिमेदः-पलरक्तचर्मत्वगाह्वयैर्धातुभिरेभिरन्वितम्। पादोरुवक्षो-भुजपृष्ठमस्तकैरङ्गैरुपाङ्गैरुपयुक्तमेतत्"। याज्ञवल्क्येन तु देहसंस्थितिमुपवर्ण्य "इत्येतदस्थिरं वर्ष्म यस्य मोक्षाय कल्पते" इत्युक्तं व्याख्यातं च मिता० "इतीदृशमस्थिरमाद्याद्यारब्धमेतदशुचिनिधानं वर्ष्मास्थि-रमिति यस्य बुद्धिरसौ कृती पण्डितो मोक्षाय समर्थो भवति वैराग्यस्य नित्यानित्यविवेकयोर्मोक्षोपायत्वात् अस्थिमूत्रपुरीषादिप्राचुर्यज्ञानस्य वैराग्यहेतुत्वात् अत एव व्यासः "सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिनः। शरीरकस्यापि कृते मूढाः पापानि कुर्वते। यदि नामास्य कायस्य यदन्तस्तद्बहिर्भवेत्। दण्डमादाय लोकोऽयं शुनः काकांश्च वारयेदिति"। तस्मादीदृगकुत्सितशरीर-स्यात्यन्तिकनिवृत्त्यर्थमात्मोपासने प्रयतितव्यम्"।

**जुगुर्वणि** त्रि० गॄ-स्तुतौ यङ्लुकि क्विपि वेदे नि० वन-संभक्तौ इन्-णत्वम् ६त०। स्तोतॄणां संभक्तरि। "मन्द्र-जिह्वा जुगुर्वणी" ऋ० १।१४२।८। [तत्रार्थे पु० राजनि०।

**जुङ्ग** पु० जुगि-अच्। वृद्धदारकवृक्षे अमरः। स्वार्थे कन्। जुङ्गक

**जुङ्गा** स्त्री जुगि-अच्। वृद्धदारकवृक्षे रमानाथः।

**जुटक** न० जट-संहतौ अच् संज्ञायां कन् पृषो०। जटायां शब्दर०। [ख्याते शिखाभेदे शब्दर०।

**जुटिका** स्त्री जट-संहतौ बा० कुन् पृषो०। (झुँटी)

**जुड** प्रेरणे चु० उभ० सक० सेट्। जोडयति ते अजूजुडत् त।

**जुड** बन्धे (जोड़ादेओया)। तुदा० कुटा० पर० सेट्। जुडति

अजूडीत् जुजोड । घञि जुडः । [ चञि जोडः ।

**जुड** गतौ तु० पर० सक०सेट् । जुडति अजोडीत् । जुजोट ।

**जुत** दीप्तौ भ्वा० आत्म० अक० सेट् । जोतते अजोतिष्ट । जुजुते । ऋदित् अजुजोतत् ।

**जुन** गतौ तु० पर०सक०सेट् । जुनति अजोनीत् । जुजोन ।

**जुम्बक** पु० वरुणे "पृथिवीं त्वचा जुम्बकाय स्वाहा" यजु० २५।९। "जुम्बकाय वरुणाय" वेददी० "प्रत्येव तिष्ठति जुम्बकाय स्वाहेत्यवभृथ उत्तमामाहुतिं जुहोति वरुणो वै जुम्बकः" शत० ब्रा० १२।१।६।५।

**जुर्व** पु० वधे भ्वा० पर० सक० सेट् । जूर्वति अजूर्वीत् । जूर्णः जूर्तिः । क्विपि जूः ।

**जुल** पेषणे चु० उभ०सक०सेट् । जोलयति ते अजूजुलत् त

**जुवस** त्रि० सो०जु–वा० असुन् किच्च । वेगवति । "आ नः सोमः सहो जुवो रूपम्" ऋ० ८।६५।१८ ।

**जुष** तृप्तौ अक०तर्के सक० वा चु० उभ०पक्षे भ्वा० पर०सेट् । जोषयति ते जोषति अजूजुषत् त अजोषीत् ।

**जुष** प्रीतौ अक० सेवायां सक० तुदा० आ० सेट् । जुषते अजोषिष्ट जुजुषे जुषमाणः । ईदित् । जुष्टः । ञीत् वर्त्तमाने क्त । जुष्टः । "पौलस्त्योऽजुषत शुचं विपन्नबन्धुः" भट्टिः "यत्र देवासो अजुषन्त विश्वे" यजु० ४।१। "इन्द्र ! जुषस्व प्रवह" अथ० २।५।१। "अजामेकाम्–अजोह्येको जुषमाणोऽनुशेते" श्वेताश्वतरोप०। "एषैव बुद्धिर्जुषतां सदात्मनाम्" भा० व०१०५८६ श्लो० । "सत्त्वं जुषाणाय भवाय देहिनाम्" भाग० ८।५।२२ । "परजुष्टनयाद्विवर्त्तमानः" दीधितिः । आर्षे गणव्यत्ययात् अदादित्वम् । "देवा नाम्नइषानाद्धि हविर्जुषन्ति" भा०व०१२७३। आर्षत्वात् पदव्यत्ययः। "पारिजातगुणान् मर्त्या जुषन्ति यदि नारद ! । देवानां मानुषाणां च न विशेषो भविष्यति" हरिवं० ७२७२ । लेटि जोजिषत् "सुमेधसस्करति जोजिषद्धि" ऋ० २।३५।१ "जुषी प्रीतिसेवनयोः लेट्यडागमः । विकरणः सिप् । इडागमश्च" भा० । प्राद्युपसर्गपूर्वकस्य प्रादिशब्दोक्ततत्तदर्थयुक्ते सेवनादौ ।

**जुष्क** पु० जुष–कक् ततः संज्ञायां कन् । यूषे शब्दच० ।

**जुष्ट** न० जुष–कर्म्मणि क्त ।१उच्छिष्टे । २सेविते त्रि० मेदि० "परजुष्टनयाद्विवर्त्तमानः" दीधितिः। "जुष्टो महाब्रह्मसमूहजुष्टः" भट्टिः । [सेवने न० ।

**जुष्य** त्रि० जुष–कर्म्मणि क्यप् । १सेव्ये भावे क्यप् ।२सवस्य-

**जुहुराण** पु० । ह्वृच्छ–सन्–आनच् सनो लुक् हलोपश्च । १चन्द्रे पु० उज्ज्वल० । २कौटिल्यकारिणि त्रि० । "युयोध्यस्मज्जुहुराणमेनः" ह० उ० । "जुहुराणं कुटिलकारिणम्" भाष्यम् ।

**जुहुवान** पु० हु–कर्म्मणि कानच् । १अग्नौ २वृक्षे च । संक्षिप्तसारे कठिनहृदये इत्युक्तिः रमध्यस्येव तदर्थता ह्वृर्च्छेस्तद्रूपसिद्धेस्तदर्थतौचित्यात् अतस्तत्र लिपिकरप्रमादात् जुहुवान इत्यपपाठः जुहुराण इत्येव पाठः समुचितः ।

**जुहू** स्त्री जुहोत्यनया हु–क्विप् नि० द्वित्वं दीर्घश्च । यज्ञिये स्रुगाख्ये पात्रभेदे सा च पलाशघटिता" "पालाशी जुहूः" कात्या० श्रौ० १।३।३४ । "जुहोत्यनया जुहूः स्रुक् सा च पालाशी पलाशवृक्षकाष्ठनिर्म्मिता" कर्कः । "यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" श्रुतिः । "पर्णमयी पलाशकाष्ठमयीत्यर्थः"। एषा चानारभ्याधीताऽपि प्रकृत्यर्था यथोक्तं ताण्ड्य० ब्रा० ।

"अनारभ्याधीतानां प्रकृतिगामित्वमिति न्यायेन क्रत्वङ्गत्वावगमात् । स च न्यायस्तृतीयाध्याये षष्ठपादस्य प्रथमाधिकरणे पर्णतोदाहरणेनाभिहितः । "प्रकृतौ विकृतौ वा द्वाद्यस्य पर्णेतिमौ विधिः । प्रकृतेरेव वा तुल्याद्वचनादुभयोरसौ । जुहूमाश्रित्य पर्णत्वविधिः प्रकृतिमात्रगः । चोदकेनोभयप्राप्तेर्विकृतौ विधिनात्र किम्"। अनारभ्य श्रूयते"यस्य पर्णमयी जुहूर्भवति न स पापश्लोकं शृणोतीति" । तत्राव्यभिचरितक्रतुसम्बन्धवतीं जुहूमाश्रित्य तद्धेतुः पर्णत्वो वाक्येन विधीयते । या जुहूः सा पर्णमयीति वाक्यस्य प्रकृतिविकृत्योस्तुल्यमेव प्रवृत्तेः । उभयत्राप्यङ्गभूताया जुह्वाः सत्त्वात् । तस्मात् प्रकृतिविकृत्योरुभयोरप्ययं विधिरिति प्राप्ते, ब्रूमः किमयं विधिर्विकृतौ चोदकात् पूर्वम्प्रविशते पश्चाद्वा । नाद्यः, अङ्गभूताया जुह्वाः चोदकमन्तरेणासम्भवात् । द्वितीये तु पर्णत्वमपि जुह्वा सहैव चोदकेनातिदिश्यते, तत्र पुनर्विधिवैयर्थ्यादयं विधिः प्रकृतिमात्रगः"। जुहोत्यस्यां दिशि–आधारे क्विप् । २प्राग्देशे प्राङ्मुखतयैव होमकरणात् तस्यास्तथात्वम् ।

**जुहूरा(वा)ण** पु०जुहूं र(व)णति र(वण–अण् ।१अध्वर्यौ । २अग्नौ । ३चन्द्रे विश्वः । [वः । अग्नौ शब्दर० ।

**जुहूवत्** पु० जुहूणाव होमोद्देश्यत्वनास्त्यस्य मतुप् वा० मस्य

**जुहोति** स्त्री जु–ष चर्यनिर्द्देशे श्तिप् । होमभेदे "यजति

जुहोतीनां कोविशेषः" कात्या० श्रौ० १।२।५। इति प्रश्ने यजतिलक्षणमुक्त्वा "उपविष्टहोमाः स्वाहाकारप्रदाना जुहोतयः" १।२।७इति लक्षितम्। "उपविष्टेन कर्त्रा होमो येषु त उपविष्टहोमाः स्वाहाकारेण प्रदानं येषु ते स्वाहाकारप्रदानाः य उपविष्टहोमाः स्वाहाकारप्रदानाश्च ते जुहोतयः इत्युच्यन्ते" कर्कः अतोऽस्य पुंस्त्वमेव स्त्रीत्वोक्तिः प्रामादिकी। "क्षरन्ति सर्वा वैदिक्यो जुहोतियजतिक्रियाः" मनुः।

**जुह्वास्य** पु० जुहूरास्यमिवास्य। होमीयवह्नौ। "हव्यवाहो जुह्वास्यः" ऋ० १।१२।६। [जूतः।

**जू** गतौ सौत्र० सक० प० सेट्। जवति अजावीत् जुजाव।

**जू** स्त्री सौ०जू–गतौ यथायथं कर्त्तृं भावादौ क्विप्। १आकाशे २सरस्वत्यां ३पिशाच्यां च ४जवने शब्दरत्ना० ५जवयुक्ते त्रि० विश्वः। ६त्वरागमने ७गमने च स्त्री मेदि०।

**जूट** पु०जट–संहतौ अच्–पृषो०।१जटासंहतौ बन्धे २जटायाम् शब्दार्थचि०। "जटाजूटसमायुक्तामर्द्धेन्दुकृतशेखराम्" दुर्गाध्यानम्। "भूतेशस्य भुजङ्गवल्लिवलयस्रङ्नद्धजूटाजटाः" मालतीमा०। स्वार्थे क तत्रार्थे।

**जूत** त्रि० सौ०जू–क्त। १गते २आकृष्टे च। "रथो ह वा भूतजात्यभिजूतः" ऋ० २।५८।८। "अभिजूतः स्तोतृभिराकृष्टः" भा०। ३दत्ते च "युवं श्वेतं पेदव इन्द्रजूतम्" ऋ०१।११८।९। "इन्द्रजूतं इन्द्रेण जूतं दत्तम्" भा०।

**जूति** स्त्री जु–संहसि भावे क्तिन् ऊतियूतीत्यादिना नि०। १वेगे अमरः। "उत स्मास्य पनयन्ति जना जूतिं कृष्टिप्रो अभिभूतिमाशोः" ऋ० ४।३८।९ "मनो जूतिर्जुषता माज्यस्य" यजु०२।१६। "जूतिः जवतेर्गतिकर्मणः" वेददी०। अत्र मनो ज्योतिः इति पाठः प्रामादिकः। मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः" ऐ० उ० "जूतिश्चेतसो रुजादिदुःखित्वाभावः"२भाष्योक्तार्थे च।

**जूतिका** स्त्री जूत्या कायति कै–क। कर्पूरभेदे राजनि०।

**जूर** वयोहानौ अक० वधे सक० दिवा० आत्म० सेट्। जूर्य्यते अजूरिष्ट। ईदित्। जूर्णः। कोपे च "इच्छाविभङ्गाकुलमानसत्वात् भर्त्रे नखेभ्यश्च चिरं जुजूरे" भट्टिः।

**जूर्ण** पु० जूर–क्त। (उलुखड़) तृणभेदे रत्नमालायां जूर्णाख्येति तत्पर्य्याये निर्द्देशात् तस्य तथात्वम्। जूर्णेति आख्या यस्य जूर्णाख्योऽप्यत्र।

**जूर्णाह्वय** पु० जूर्णमाह्वयते कान्तेन स्पर्द्धते आ+ह्वे–बा० श। देवधान्ये (देधान) हेमच०।

**जूर्णि** स्त्री ज्वर–रोगे नि०ऊठ् जूर–वेगे वा नि०।१स्त्रीरोगे २वेगे।३आदित्ये ४देहे ५ब्रह्मणि च संक्षि०उणा०। जूर कोपे नि०। ६क्रोधे निघण्टुः निरुक्ते ६।४।२। "अस्यानिरुक्तिरन्या दर्शिता "जूर्णिर्जवतेर्वा द्रवतेर्वा दुनोतेर्वा" तत्र पृषो०। तेन ७वेगयुते ८द्रवयुते ९तापके च। "क्षिप्रा जूर्णिर्न वक्षति" ऋ०१।१२९।८। "जूर्णिर्वेगवती सेना" भा०। १०स्तुतिकुशले च। "स्पृधो जूर्णिर्होत्र ऋषूणाम्" ऋ०१.१०७,१०। "जूर्णिः स्तुतिकुशलः" भा०।

**जूर्त्ति** स्त्री ज्वर–भावे क्तिन् ऊठ्। ज्वरे।

**जूर्य्य** त्रि० जूर–कर्त्तरि बा०ण्यत्। १जीर्णे "रथः पुरीव जूर्यः" ऋ० ६।२।७। "जूर्यः जीर्णः" भा० २दृद्धे च।

**जूष** वधे भ्वा० उभ०सक०सेट्। जूषति ते अजूषीत् अजूषिष्ट जुजूष षे। जूषः।

**जूष** पुंन० यूष+पृषो०। मुद्गादिक्वाथे भरतः।

**जूषण** न० जूष–ल्यु। वृक्षभेदे (धाइफुल) शब्दच०।

**जॄ** न्यक्कारे भ्वा० पर० सक० अनिट्। जरति अजार्षीत्। जजार।

**जृभ** जृम्भे (हाइतोला) गात्रशैथिल्ये च भ्वा० आत्म०अक० सेट् इदित्। जृम्भते अजृम्भिष्ट। जजृम्भे। "आत्मानमाधाय मधुर्जजृम्भे" कुमा० जृम्भा जृम्भः। जृम्भितः। "जृम्भते सुकुमारासीना बाला गर्भभरालसा" सा० द०।

**जृभ** जृम्भणे भ्वा० आ० अक० सेट्। जृभते अजृभिष्ट जजृभे। ईदित्। जृब्धः।

**जृम्भ** पुंन०जृभि–भावे घञ् अर्द्धर्चा०(हाइतोला)१गात्रशैथिल्यापादके २मुखविकाशकारके च व्यापारभेदे। भावे अ। तत्रार्थे स्त्री। जृम्भा च श्रमगर्भादिजनितजाड्यकार्य्यं यथाह सा०द०"आलस्यं श्रमगर्भाद्यैर्जाड्यं जृम्भासितादिकृत्" तत्कारकवायुश्च देवदत्तः। "विजृम्भणे देवदत्तः शुद्धस्फटिकसन्निभः" पदार्थादर्शे योगार्णवः। "जृतोत्पन्नजृम्भासु जीवोच्छिष्टाङ्गुलिध्वनिः। गुरोरपि च कर्त्तव्यमन्यथा ब्रह्महा भवेत्" तिथित०। ३विकाशे ४विस्तारे च पु० शब्दच०। "पीत्वैकं श्वासमनिलः पुनस्त्यजति वेगवान्। आलस्यनिद्रायुक्तस्य स जृम्भ इति कथ्यते" "जृम्भात्यर्थं समीरणात्। जृम्भावेगे समुत्पन्ने शोभने शयने नरम्। स्वापयेत् तेन नियमात् जृम्भावेगः प्रशाम्यति। जृम्भावेगक्षयं याति कटुतैलेन मर्द्दनात्। भोजमात् स्वादुभोज्यानां तथा ताम्बूलभक्षणात्" वैद्यकम्।

**जृम्भक** त्रि० जृम्भ–ण्वुल्। १जृम्भाकारके २रुद्रगणभेदे पु०

"पृष्ठतोऽनुययौ यान्तं वरदं वृषभध्वजम्। जृम्भकैर्यक्षरक्षोभिः स्रग्विभिः समलङ्कृतैः। यात्यसौ महायक्षो दक्षिणं पक्षमाश्रितः" भा० व० २३०अ०। जृम्भयति जृम्भि—ण्वुल्। २कृशाश्वसुतनये ४तदधिष्ठिते अस्त्रभेदे च "कृशाश्वतनयरूपाण्यस्त्राणि विश्वामित्रेण रामाय दत्तानि तत्कथा रामा० बा० २८अ०।

"संहारान् व्याजहाराथ धृतिमान् सुव्रतः शुचिः। सत्यवन्तं सत्यकीर्त्तिं धृष्टं रभसमेव च। प्रतिहारतरं नाम पराङ्मुखमवाङ्मुखम्। लक्ष्यालक्ष्याविमौ चैव दृढनाभसुनाभकौ। दशाक्षशतवक्त्रौ च दशशीर्षशतोदरौ। पद्मनाभौ महानाभौ दुन्दुनाभसुनाभकौ। ज्योतिषं शकुनञ्चैव नैराश्यविमलावुभौ। यौगन्धरविनिद्रौ च दैत्यप्रमथनौ तथा। शुचिबाहुर्महाबाहुर्निष्कलिर्विरुचस्तथा। सार्चिमाली धृतिमाली वृत्तिमान् रुचिरस्तथा। पित्र्यः सौमनसश्चैव विधूतमकरावुभौ। करवीरं रतिश्चैव धनधान्यौ च राघव!। कामरूपं कामरुचिं मोहमावरणं तथा। जृम्भकं सर्पनाथं च पन्थानवरुणौ तथा। कृशाश्वतनयान् राम! भास्वरान् कामरूपिणः। प्रतीच्छ मम भद्रन्ते पात्रभूतोऽसि राघव!। बाढमित्येव काकुत्स्थः प्रहृष्टेनान्तरात्मना। दिव्यभास्वरदेहाश्च मूर्त्तिमन्तः सुखप्रदाः। केचिदङ्गारसदृशाः केचिद्धूमोपमास्तथा। चन्द्रार्कसदृशाः केचित् प्रह्वाञ्जलिपुटास्तथा। रामं प्राञ्जलयो भूत्वाऽब्रुवन् मधुरभाषिणः। इमे स्म नरशार्दूल! शाधि किङ्करवाम ते। गम्यतामिति तानाह यथेष्टं रघुनन्दनः। मानसा कार्यकालेषु साहाय्यं मे करिष्यथ। अथ ते राममामन्त्र्य कृत्वा चापि प्रदक्षिणम्। एवमस्त्विति काकुत्स्थमुक्त्वा जग्मुर्यथागतम्" २८अ०। स्वार्थे क अत इत्त्वम्। ४जृम्भायां स्त्री(हाइतोला)सा च इन्द्रवृत्रयोर्युद्धे इन्द्रे वृत्रग्रस्ते देवैः सृष्टा ततः प्रभृति लोकप्राणवायुसंस्था यथाह भा०उ० ८अ० "ततो जगाह देवेन्द्रं वृत्रो वीरः शतक्रतुम्। अपावृत्याक्षिपद्वक्त्रे शक्रं कोपसमन्वितः। ग्रस्ते वृत्रेण शक्रे तु सम्भ्रान्तास्त्रिदिवेश्वराः। असृजंस्ते महासत्त्वाजृम्भिकां वृत्रनाशिनीम्। विजृम्भमाणस्य ततो वृत्रस्यास्यादपावृतात्। स्वान्यङ्गान्यभिसङ्क्षिप्य निष्क्रान्तो बलनाशनः। ततः प्रभृति लोकस्य जृम्भिका प्राणसंश्रिता"।

**जृम्भण** न० जृभि—भावे ल्युट्। (हाइतोला) १गात्रशैथिल्यापादके २सुखविकाशकारके च व्यापारभेदे। "मुहुर्मुहुर्जृम्भणतत्पराणि—"अङ्गान्यनङ्गः प्रमदाजनस्य करोति लावण्यरसोत्सुकानि" ऋतुसं० "जगद्ग्रस्तद्विदृष्टां तां जृम्भणाख्यां ननु प्रभोः" भाग०३।२०।४२। जृभि—णिच्—ल्यु। २जृम्भणकारिणि ३जृम्भकास्त्रे च "जृम्भणं नाम सोऽप्यस्त्रं जग्राह पुरुषोत्तमः। इदं स जृम्भयामास क्षिप्रकारी महाबलः" हरिवं०१८७ अ०। "जृम्भणं पातनञ्चैव त्वाष्ट्रञ्चापि सुदारुणम्" २३४ अ०।

**जृम्भिणी** स्त्री जृभि—णिनि। एलापर्ण्याम् शब्दच०।

**जृम्भित** त्रि०जृभि—क्त।१चेष्टिते२प्रवृद्धे च भावे क्त।३जृम्भायां ४स्फुटने हेमच० स्त्रीणां ५करणभेदे न० मेदि०।

**जॄ** जरायां दिवा० पर० अक० सेट्। जीर्य्यति इरित्। अजरत् अजारीत्। जीर्णः। षित्। जरा। घटादि०। जरयति। "या न जीर्य्यति जीर्य्यतः" नीतिमा० जीर्य्यते स्तवन्। जरन्। जजार। जरीता जीर्णः। "जरितॄणां सतां भुवः स्तवये" वामदेव्यगानमन्त्रः।

**जॄ** जरायां वा चुरा० उभ० पक्षे क्र्यादि०प्वादि० अक० सेट्। घटा०। जरयति ते अजीजरत् त। जृणाति। इरित् अजरत्-अजारीत्।

**जेतृ** त्रि० जि—तृच्। जयशीले। "जेता नृभिः इन्द्रः पृत्सु" ऋ० १।१७८।३। "जेतारं लोकपालानां स्वमुखैरर्चितेश्वरम्" रघुः। स्त्रियां ङीप्। २विष्णौ पु०। "अनघो विजयो जेता" विष्णुस०। जयत्यतिशेते सर्वभूतानि" इति जेता" भा०।

**जेतव्य** त्रि०जि—कर्मणि तव्य। जेये "जय्यो यः शक्यते जेतुं जेयो जेतव्यमात्रके" अमरः।

**जेत्व** त्रि० जि—क्वनिप् वेदे नि० दीर्घस्यापि तुक्। जेतव्ये। "अस्मामाते जयत जेत्वानि" ऋ०।४७।२६। "जेत्वानि जेतव्यानि" भा०।

**जेन्ताक** न०स्वेदसेवनार्थं गृहभेदे (भापराओयार घर) तन्निर्मितिप्रकारोऽभिहितश्चरके यथा

"अथ जेन्ताकं चिकीर्षुर्भूमिं परीक्षेत। तत्र पूर्वस्यां दिश्युत्तरस्यां वा गुणवति प्रशस्ते भूमिभागे कृष्णमृत्तिके सुवर्णमृत्तिके वा परीवापपुष्करिण्यादीनां जलाशयानामन्यतमस्य कूले दक्षिणे पश्चिमे वा सूपतीर्थे समसुविभक्तभूमिभागे सप्ताष्टौ वा अरत्नीनुपक्रम्योदकात् प्राङ्मुखमुदङ्मुखं वाभिमुखतीर्थं कूटागारं कारयेत्। उत्सेधविस्तारतः परमरत्नीः षोडश समन्तात् सुवृत्तं मृत्-

कर्म सम्यगमनेकवातायनम् । अस्य कूटागारस्यान्तः समन्ततो भित्तिमरत्निविस्तारोत्सेधां पिण्डिकां कारयेत् कपाटवर्जम् । मध्ये चास्य कूटागारस्य चतुष्किष्कुमात्रपुरुषप्रमाणं मृण्मयं कन्दुसंस्थानं बहुसूक्ष्मच्छिद्रमङ्गारकोष्ठकस्तम्भं सपिधानं कारयेत् । तञ्च खादिराणामाश्वकर्णादीनां वा काष्ठानां पूरयित्वा प्रदीपयेत् । स यदा जानीयात् साधुदग्धानि काष्ठानि गतधूमानि अवतप्तञ्च केवलमग्निना तदग्निगृहं स्वेदयोग्येन चोष्मणा युक्तमिति तत्रैनं पुरुषं वातहराभ्यक्तगात्रं वस्त्रावच्छन्नं प्रवेशयेत् प्रवेशयंश्चैनमनुशिष्यात् । सौम्य! प्रविश कल्याणायारोग्याय चेति । प्रविश्य चैनां पिण्डिकामधिरुह्य पार्श्वापरपार्श्वाभ्यां यथासुखं शयीथाः न च त्वया स्वेदमूर्च्छापरीतेनापि सता पिण्डिकैषा विमोक्तव्या आ प्राणोच्छ्वासात् । भ्रश्यमाने ह्यतः पिण्डिकावकाशात् द्वारमनधिगच्छन् स्वेदमूर्च्छापरीततया सद्यः प्राणान् जह्याः तस्मात् पिण्डिकामेनां न कथञ्चन मुञ्चेथाः त्वं यदा जानीयाः विगताभिष्यन्दमात्मानं सम्यक्प्रस्रुतस्वेदपिच्छं सर्वस्रोतोविमुक्तं लघुभूतमपगतविबन्धस्तम्भसुप्तिवेदनागौरवमिति । ततस्तां पिण्डिकामनुसरन् द्वारं प्रपद्येथाः । निष्क्रम्य च न सहसा चक्षुषोः परिपालनार्थं शीतोदकमुपस्पृशेथाः । अपगतसन्तापक्लमस्तु मुहूर्त्तात् सुखोष्णेन वारिणा यथान्यायं परिषिक्तोऽश्नीथाः” अस्य स्वेदार्थकता शब्दकल्पद्रुमे उक्ता चिन्त्या“भूगृहेषु च जेन्ताके कूपगर्भगृहेषु च । विधूमाङ्गारतप्तेष्वभ्यक्तः स्विद्यति ना सुखम्” इति आधारस्वरूपगृहादिसाहचर्यात् गृहभेदस्यैवोपक्रमात् । उपसंहारे च इति जेन्ताकस्वेद इति कीर्त्तनं सप्तमीतत्पुरुषपरम् । इति जेन्ताकः स्वेद इति सविसर्गपाठोऽनाकरः ।

**जेन्य** त्रि॰जि–जन+णिच्–वा बा॰डेन्य । १जयशीले“अग्निर्यज्ञेषु जेन्यो न विश्पतिः”ऋ॰१।१२८।७ ।“जेन्यः जयशीलः” भा॰ । २उत्पाद्ये च “जनिष्ट हि जेन्यो अग्रे अह्नाम्”ऋ॰५।१।५। “जेन्य उत्पाद्यः” भा॰ ३जेतव्ये च“दुग्धं पयो वृषणा जेन्यावसू”ऋ॰७।७४।२ । “जेन्यं वसु धनं ययोः । वेदे पूर्वपददीर्घः । “जेन्यावसू जेतव्यधनौ”भा॰ ।“गतं देवेभिर्जेन्यावसू” ऋ॰ ८।२८।७ ।

**जेमन्** त्रि॰जि–मनिन् ।१जयशीले“उदन्यजेव जेमना मदेरू” ऋ॰ १०।१०६।६। “जेमना जयशीलौ औत्स्थाने आच् छान्दसो दीर्घाभावः । लोके तु जेमा जेमानौ इत्येव । जेतुर्भावः इमनिच् तृणो लोपः । २जेतुर्भावे जये च ३जयसामर्थ्ये पु॰।“जेमा च महिमा च मे”यजु॰ १८।४।

**जेमन** न॰जिम–भावे ल्युट् । भक्षणे अमरः ।

**जेय** त्रि॰ जि–कर्म्मणि यत् । जेतव्यमात्रे अमरः । “देवैरजेया निर्ज्जितास्त्वार्जुनेन । तदा नाशंसे विजयाय सञ्जय !” भा॰ आ॰ १अ॰ “विजह्य शत्रून् कौन्तेय ! जेयः क्षितिपतिस्तदा” भा॰ आश्व॰ ६अ॰ ।

**जेष** गतौ भ्वा॰ आत्म॰ सक॰ सेट् । जेषते अजेषिष्ट ऋदित् अजिजेषत् त । “अपां तोकस्य तनयस्य जेषे” ऋ॰ १।११०।११ ।

**जेह** यत्ने भ्वा॰ आत्म॰ अक॰ सेट् । जेहते अजेहिष्ट । ऋदित् अजिजेहत् त । “पात्रस्थभवो जेहमानम्” ऋ॰ १।११०।५ “जेहमानं प्रयतमानम्” भा॰ । निरुक्ते अस्य गतिकर्मतोक्ता “दृढशामपवेर्जेहमानस्य” ऋ॰ १०।३।६ । क्वचित् व्याप्त्यर्थताऽपि “सुगेभिररेणुभिर्जेहमानं पतत्रि” ऋ॰१।१६३।६। “जेहमानं यज्ञदेशं व्याप्नुवत्”भा॰। गत्यर्थकधातोः प्राप्त्यर्थकत्वात् प्राप्त्यर्थतापि । “ये तातृषुर्देवत्रा जेहमानाः” ऋ॰१०।१५।९ । “जेहमानाः प्राप्ताः” भा॰ । [ ओदित् जानः ।

**जै** क्षये भ्वा॰ पर॰ अक॰ अनिट् । जयति । अजासीत् ।

**जैगीषव्य** पु॰ जिगीषोरपत्यं गर्गा॰ यञ् । योगविदि मुनिभेदे तत्कथा भा॰ श॰ ५१ अध्याये शा॰ पर्वणि च २३५ अ॰दृश्या ।“असितो देवलश्चैव जैगीषव्यश्च तत्त्ववित्”भा॰ शा॰ ११ अ॰ । स्त्रियां लोहिता॰ नित्यं ष्फ षित्त्वात् ङीष् । जैगीषव्यायणी ।

**जैत्र** त्रि॰ जेतैव जेतृ+प्रज्ञादि॰ अण् । १जयशीले अमरः । २पारदे पु॰ ३औषधे न॰ राजनि॰ । “रणाय जैत्रः प्रदिशन्निव त्वराम्” किरा॰ “शरीरिणा जैत्रशरेण यत्र” माघः। “देवस्तुतभुजालम्बी जैत्रमध्यास्त राघवः” रघुः । ततश्चतुरर्थ्यां कर्णा॰ फञ् । जैत्रायणि जैत्रादूरदेशादौ त्रि॰।

**जैत्ररथ** त्रि॰ जैत्रो रथोऽस्य । जयशीले हला॰ ।

**जैत्री** स्त्री जेत्र्येव जेतृ+स्वार्थे अण् ङीप् । जयन्तीवृक्षे । शब्दर॰ । [ दुपासके च ।

**जैन** पु॰जिन एव, जिनो देवतास्य वा अण् । १अर्हति २अर्ह-

**जैपाल** पु॰ जयपाल+पृषो॰ । जयपालवृक्षे द्विरूपकोषः

**जैमिनि** पु॰ मुनिभेदे स च सामवेदे वेदव्यासशिष्यः यथाह भाग॰ १२।६।९ । “साम्नां जैमिनये प्राह तथा छन्दो-

गसंहिताम्” स च धर्म्ममीमांसां प्रणीतवान्। तच्च शास्त्रं द्वादशाध्यायात्मकम्। तत्प्रतिपाद्यविषयाश्चाधिकरणमालायां माधवाचार्य्येण संगृहीता यथा

“धर्म्मो द्वादशलक्षण्या व्युत्पाद्यस्तत्र लक्षणैः। प्रमाणभेदशेषत्वप्रयुक्तिक्रमसंज्ञकाः। अधिकारोऽतिदेशश्च सामान्येन विशेषतः। ऊहोऽबाधश्च तन्त्रं च प्रसङ्गश्चोदिताः क्रमात्”। “लक्षणान्यध्यायाः। द्वादशानां लक्षणानां समाहारो द्वादशलक्षणी। तादृशस्य द्वादशाध्यायोपेतस्य शास्त्रस्य धर्म्मो विषयः। प्रमाणादयः प्रसङ्गान्ता द्वादश पदार्थाः क्रमाद्द्वादशानामध्यायानां विषयाः। तत्र प्रथमेऽध्याये विध्यर्थवादादिरूपं धर्म्मे प्रमाणं निरूपितम्। द्वितीये यागदानादिकर्म्मभेदः। तृतीये प्रयाजादीनां दर्शपूर्णमासाद्यर्थत्वेन तच्छेषत्वम्। चतुर्थे गोदोहनस्य पुरुषार्थत्वप्रयुक्तत्वानुष्ठानम् न तु क्रत्वर्थत्वप्रयुक्तत्वमित्येवमादयः। पञ्चमे क्रमनियतिविधेयत्वादयः। षष्ठे कर्त्तुरधिकारो नान्धादेरित्यादयः। सप्तमे समानमितरच्छ्येनेनेत्यादिप्रत्यक्षवचनेनाग्निहोत्रादिनाम्नानुमितवचनेन च सामान्यतोऽतिदेशः। अष्टमे सौर्य्यं चरुं निर्वपेदित्यत्र निर्वापश्रुतिलिङ्गेन देवतानिर्द्देश एकदेवतात्वमौषधद्रव्यकत्वमित्यादिलिङ्गेनाग्नेयपुरोडाशेतिकर्त्तव्यतैव नान्यस्येत्येवमादिविशेषतोऽतिदेशः। नवमे प्रकृतावग्नये जुष्टं निर्वपामीति पठिते मन्त्रे विकृतौ सौर्य्यचरावग्निपदपरित्यागेन सूर्य्यपदप्रक्षेपेण च सूर्य्याय त्वा जुष्टं निर्वपामीत्येवमादूहः। दशमे कृष्णलेषु चोदकप्राप्तस्यावघातस्य वितुषीकरणासम्भवेन लोप इत्येवमादिर्बाधः। एकादशे बहूनामाग्नेयादीनां प्रधानानां सकृदनुष्ठितेन प्रयाजाद्यङ्गेनोपकार इत्यादि तन्त्रम्। द्वादशे प्रधानस्य पशोरुपकारायानुष्ठितेन प्रयाजाद्यङ्गेन पशुपुरोडाशेऽप्युपकार इत्यादिः प्रसङ्गः। पादानामसाधारणं विषयं दर्शयति” “विध्यर्थवादस्तुतयो नाम चेति चतुर्व्विधम्। प्रथमाध्यायगैः पादैश्चतुर्भिर्मानमीरितम्” “प्रथमे पादे विधिरूपं मानमीरितम्। द्वितीयेऽर्थवादरूपम्। अर्थवादो मन्त्रस्याप्युपलक्षणम्। तृतीये स्मृतिरूपम्। स्मृतिराचारमप्युपलक्षयति। चतुर्थे उद्भिदादिनामरूपम्” “उपोद्घातः कर्म्मभेदमात्रं तत्प्रापवादगौः। प्रयोगभेद इत्येते द्वितीयाध्यायपादगाः”।

द्वितीयाध्यायस्य प्रथमे पादे आख्यातमेवापूर्व्वबोधकमपूर्व्वसद्भाव इत्यादिकः कर्म्मभेदचिन्तोपयुक्त उपोद्घातो वर्णितः। द्वितीये धातुभेदपुनरुक्त्यादिभिः कर्म्मभेदः। तृतीये रथन्तरादीनां कर्म्मभेदप्रामाण्यापवादः। चतुर्थे नित्यकाम्ययोः प्रयोगयोर्भेदः”। “श्रुतिर्लिङ्गं च वाक्यादि विरोधप्रतिपत्तयः। अनारभ्योक्तिबह्वर्थस्वाम्यर्थाः अष्टपादगाः”। “तृतीयाध्यायस्य प्रथमे पादे शेषत्वबोधकानां श्रुतिलिङ्गादीनां मध्ये श्रुतिर्विचारिता। द्वितीये लिङ्गम्। तृतीये वाक्यप्रकरणादि। चतुर्थे निवीतोपवीतादिष्वर्थवादत्वविधित्वादिनिर्णयहेतुः श्रुत्यादेः परस्परविरोधसदसद्भावः। पञ्चमे प्रतिपत्तिकर्म्माणि। षष्ठेऽनारभ्याधीतानि। सप्तमे बहुप्रधानोपकारकप्रयाजादीनि। अष्टमे याजमानानि”। “प्रधानस्य प्रयोक्तृत्वमप्रधानप्रयोक्तृता। फलचिन्ता जघन्याङ्गचिन्तेत्येते चतुर्थगाः”। चतुर्थाध्यायस्य प्रथमे पादे प्रधानभूतामिक्षा दध्यानयनस्य प्रयोजिकेत्यादिप्रधानप्रयोक्तृत्वं विचारितम्। द्वितीये त्वप्रधानं वत्सापाकरणं शाखाच्छेदे प्रयोजकमित्याद्यप्रधानप्रयोक्तृत्वम्। तृतीये जुहूपर्णमयीत्वादेरपापश्लोकश्रवणादिफलभावाभावचिन्ता। चतुर्थे राजसूयगतजघन्याङ्गाक्षद्यूतादिचिन्ता”। “श्रुत्यादिभिः क्रमस्तस्य विशेषो वृद्ध्यवर्द्धने। श्रुत्यादेर्बलता चेति पञ्चमाध्यायपादगाः”। “पञ्चमाध्यायस्य प्रथमे पादे श्रुत्यर्थपाठादिभिः क्रमो निरूपितः। द्वितीये वाजपेयगतेषु सप्तदशसु पशुष्वेकैकधर्म्मसमापनमित्यादि क्रमविशेषः। तृतीये पञ्चप्रयाजादीनामावर्त्तनेनैकैकस्य[illegible]मित्यादिवृद्धिः। [illegible]नाष्टत्त्विरित्यादि वृद्ध्यभावः। चतुर्थे क्रमनियामकानां श्रुत्यर्थपाठादीनां प्रबलदुर्ब्बलभावः। “अधिकारी तस्य धर्म्माः प्रतिनिध्यर्थलोपने। दीक्षा सत्रं देयवह्नी षष्ठे पादेष्वमी स्थिताः”। षष्ठाध्यायस्य प्रथमे पादे कर्म्माधिकारः कर्त्तुरस्त्यन्धादेर्नास्ति स्त्रिया अस्ति सोऽस्ति स च पत्न्या सहेत्येवमादिनाधिकारी निरूपितः। द्वितीये सत्त्राधिकारिणां प्रत्येकं कृत्स्नं फलम्। दर्शपूर्णमासयोः कर्त्तृनियमः। काम्यकर्म्म समापनीयमित्येवमादयोऽधिकारिधर्म्मा उक्ताः। तृतीये द्रव्यस्य प्रतिनिधिरस्ति। देवादीनामग्न्यादीनामधिकारिणश्च स नास्तीत्यादिना निरूपणम्। चतुर्थे पदार्थलोपनं विचारितम्। अवदानाभावे आज्येन यजेत। इडाद्यर्थनाशे सति शेषाद् [illegible]दिकम्। पञ्चमे कालापराधेन चन्द्रोदये [illegible] प्रायश्चित्तम्।

ज्योतिष्टोमस्यैकादयो दीक्षाः। द्वादशाहस्य द्वादशदीक्षा इत्यादि निरूपितम्। षष्ठे सत्राधिकारिणस्तुल्यकल्पा एव। सत्त्रं विप्रस्यैवेत्येवमादिकं चिन्तितम्। सप्तमे पुत्रादिकं न देयम् महाभूमिर्न देयेत्येवमादिदेयविचारः। अष्टमे लौकिकाग्नावुपनयनहोमः, स्थपतीष्टिस्तथैवेत्येवमाद्यग्निविचारः कृतः"। "प्रत्यक्षोक्तातिदेशोऽस्य शेषः सामनिरूपणम्। नामलिङ्गातिदेशौ द्वौ सप्तमाध्यायपादगाः"। "सप्तमाध्यायस्य प्रथमे पादे समानमितरच्छ्येनेनेत्यादि प्रत्यक्षवचनातिदेशः। द्वितीये रथन्तरशब्देन गानमात्राभिधायिना गानस्यैवातिदेशस्तत्त्वमित्येतादृशः पूर्वोक्तातिदेशस्य शेषो विचारितः। तृतीयेऽग्निहोत्रनामातिदेशः। चतुर्थे निर्वापौषधद्रव्यादिलिङ्गातिदेशः"। "स्पष्टलिङ्गादयास्पष्टात् प्रबलादप्रबलादतः। अतिदेशविशेषाः स्युरष्टमाध्यायपादगाः"। "अष्टमाध्यायस्य प्रथमे पादे स्पष्टेन लिङ्गेनातिदेशविशेषः। तद्यथा सौर्यचरावतिदेशकानि निर्वापस्तद्धितेन देवतानिर्देश एकदेवतात्वमौषधद्रव्यकत्वमित्यादीनि स्पष्टान्याग्नेयलिङ्गानि। द्वितीये त्वस्पष्टैर्लिङ्गैरतिदेशः। तद्यथा वाजिने हविःसामान्येन लिङ्गेन पयोविध्यन्तोऽतिदिश्यते। तत्र लिङ्गमस्पष्टम् शीघ्रं तद्बुद्ध्यनुत्पादनात्। तृतीये प्रबलेन लिङ्गेनातिदेशः। तद्यथा अभिचारिकेष्टावाग्नावैष्णवसारस्वतबार्हस्पत्येषु हविःषु त्रित्वेन लिङ्गेन यथाक्रममाग्नेयादिविध्यन्तो प्राप्ते द्विदैवत्यत्वेन लिङ्गेन प्रथम आग्नावैष्णवे तृतीयस्याग्नीषोमीयस्य विध्यन्तोऽतिदिष्टः। प्रबलं च द्विदेवत्यत्वम् शब्दोच्चारणमात्रेण सहसा प्रतिभासात् क्रमस्तु विलम्बितप्रतीत्या दुर्बलः चतुर्थे दर्विहोमेष्वतिदेशोऽपोद्यते"।

"ऊहारम्भोऽथ सामोहो मन्त्रोहस्तत्प्रसङ्गतः। नवमाध्यायपादेषु चतुर्ष्वेते प्रकीर्त्तिताः"। "नवमाध्यायस्य प्रथमे पादे उपोद्घातपूर्वकमूहविचारप्रारम्भः। तत्र प्रयाजादयो धर्मा अपूर्वप्रयुक्ताः। अवघातमन्त्रादिष्वविवक्षितं व्रीह्यग्न्यादिस्वरूपं साधनविशेषत्वमात्रं विवक्षितमित्यादिरुपोद्घातः। सवितृप्रभृतिशब्दानां विकृतिषु नास्त्यूहः। अग्निशब्दस्यास्त्यूह इत्यादिकऊहविचारारम्भः। द्वितीये सपरिकरः सामोहः। तृतीये मन्त्रोहः। चतुर्थे मन्त्रोहप्रसङ्गापतितो विचारः"। "द्वारलोपोऽस्य विस्तारः कार्यैकत्वं समुच्चयः। ग्रहसामप्रकीर्णानि नञर्थश्चाष्टपादगाः" "दशमाध्यायस्य प्रथमे पादे बाधहेतुर्द्वारलोपो निरूपितः। तद्यथा स्वयंकृता वेदिर्भवतीत्यत्र वेदिनिष्पादनरूपस्य द्वारस्य लोपेन निष्पादकानामुद्धननादीनां बाधः। कृष्णलेषु वितुषीकरणरूपस्य द्वारस्य लोपेनावघातस्य बाधः। द्वितीये संक्षेपेणोक्तस्य द्वारलोपस्य बहुभिरुदाहरणैर्विस्तारः। तृतीये बाधकारणं कार्यैकत्वम्। तद्यथा प्रकृतौ गवाश्वादिदक्षिणाया ऋत्विक्परिक्रयः कार्यः। तथा विकृतिरूपे भूताभ्यर्काख्ये धेनुरूपायास्तदेव कार्यम्। ततो धेन्वा गवाश्वादि दक्षिणा विकृतौ चोदकप्राप्ता बाध्यते। चतुर्थे नक्षत्रेष्टिविहिता उपहोमाश्चोदकप्राप्तैर्नारिष्टहोमैः सह समुच्चीयन्त इत्यादि समुच्चयः। पञ्चमे षोडशिग्रहः प्रकृतिगामी। स चाग्रयणपात्रादेव ग्रहीतव्य इत्यादिर्बाधप्रसङ्गागतो ग्रहादिविचारः। षष्ठे साम तृचे गेयमित्यादिर्बाध प्रसङ्गागतः सामविचारः। सप्तमे पश्वङ्गेषु हविर्भेदः। गृहमेधीयमपूर्वकर्मेत्यादिर्बाध प्रसङ्गागतः प्रकीर्णविचारः। अष्टमे नानुयाजेष्विति पर्युदासो न सोम इत्यर्थवादो नातिरात्रे इति प्रतिषेध इत्यादिर्बाधोपयुक्तो नञर्थविचारः"।

"उपोद्घातस्तथा तन्त्रावापौ तन्त्रस्य विस्तृतिः। आवाप विस्तृतिश्चैकादशाध्यायस्य पादगाः"। एकादशाध्यायस्य प्रथमे पादे तन्त्रस्योपोद्घातो वर्णितः। द्वितीये तन्त्रावापौ संक्षेपेणोक्तौ। तृतीये तन्त्रमुदाहरणबाहुल्येन प्रपञ्चितम्। चतुर्थे तथैवावापः प्रपञ्चितः"। "प्रसङ्गस्तन्त्रिनिर्णीतिः समुच्चयविकल्पने। द्वादशाध्यायपादार्था इति पादार्थसंग्रहः"। द्वादशाध्यायस्य प्रथमे पादे पशुधर्माणां पशुपुरोडाशे प्रसङ्गः सौमिकवेदेरुत्तरकालीनदर्शेषु प्रसङ्ग इत्यादि विचारः। द्वितीये सवनीयपशोस्तन्त्रित्वम् न तु सवनीयपुरोडाशानाम्। विकृतिस्तन्त्रिणी न प्रकृतिः अन्वारम्भणीया विकृतिष्वपि स्यात् न तु प्रकृतावेवेत्यादिविचारः। तृतीये त्वनयोः समुच्चयः। आघारगतानृजुत्वसन्ततत्वादीनां समुच्चय इत्यादिकं प्राधान्येन यवव्रीह्योर्विकल्प इत्यादिकं समुच्चयापवादत्वेनेत्युभयं चिन्तितम्। चतुर्थे चैन्द्राबार्हस्पत्ययाज्यानुवाक्यायुगलयोर्विकल्प इत्यादिकं प्राधान्येन याज्यानुवाक्ययोः समु-

ख्य इत्यादिकं विकल्पापवादत्वेनेत्युभयं चिन्तितम्। तदेवं द्वादशाध्यायगतेषु षष्टिसंख्यकेषु पादेषु प्रतिपाद्या अर्थाः संगृहीताः। ननु यथोक्तेभ्यः पादार्थेभ्योऽन्ये-ऽप्यर्था बहवस्तत्तत्पादेषु विचार्यन्ते तेषां कथं तत्तत्पादान्तर्भाव इत्याशङ्क्याह"। "उपोद्घातापवादाभ्यां प्रसङ्गानुप्रसङ्गतः। तत्तत्पादगतत्वेन विचारान्तरसङ्ग्रहेत्" "यथोक्तपादप्रतिपाद्यादन्येष्वर्थेषु यथोचितं कश्चिदुपोद्घातः कश्चिदपवादः कश्चित् प्रसङ्गपतितः कश्चिदनुप्रसङ्गपतित इत्येवं पादान्तर्भाव उन्नेयः"। जैमिनिश्च भारतान्तरं चकार तस्य जैमिनिभारतेति संज्ञा तन्नामस्मरणे च वज्रपातभयवारणं यथा "जैमिनिश्च सुमन्तुश्च वैशम्पायन एव च। पुलस्त्यः पुलहश्चैव पञ्चैते वज्रवारकाः" शब्दकल्पद्रुमधृतपुराणवाक्यात् "मुनेः कल्याणमित्रस्य जैमिनेश्चापि कीर्त्तनात्। विद्युदग्निभयं नास्ति पठिते च गृहोदरे" इत्युक्तेरपि तत्कीर्त्तनस्य विद्युदग्निभयनिवारकता। तत इदमर्थे छ। जैमिनीय जैमिनिप्रणीतशास्त्रादौ। "जैमिनीये च वैयासे विरुद्धांशो न कश्चन" सांख्यप्रवचनभाष्यधृतपराशरोपपु०। "जैमिनीयन्यायमाला श्लोकैः संगृह्यते स्फुटम्" माधवः।

जैव त्रि०जीवस्येदम् अण्। १आत्मसम्बन्धिनि २वृहस्पतिसम्बन्धिनि ३तदुच्चेत्रे धनूराशौ मीनराशौ तदधिदेवताके ४पुष्यनक्षत्रे। ५तदीये माते च "क्षताद्रिचन्द्राः जैवस्य विखाङ्गाश्च भगोत्तया" सू० सि०।

जैवन्तायन पुंस्त्री जीवन्तस्य गोत्रापत्यं वा फञ्। जीवन्तर्षेः गोत्रापत्ये। स च यजुर्वेदप्रचारकवंशान्तर्गतः। यथाह "जैवन्तायनाच्च रैभ्याच्च रैभ्यः" शत० ब्रा० १४।७।३।२६ पक्षे इञ्। जैवन्ति तत्रार्थे स्त्रियां ङीप्।

जैवन्तायनि त्रि० जीवन्तस्यादूरदेशादि कर्णा० चतुरर्थ्यां फिञ्। जीवन्तस्यादूरदेशादौ।

जैवलि पु० जीवलस्य राज्ञोऽपत्यम् इञ्। जीवलनृपापत्ये प्रवाहणे "तं ह प्रवाहणो जैवलिरुवाचात्रवद्वै किल ते पालावत्य! साम" छा० उ०।

जैवातृक पु० जीवयत्यनेन लोकं जीयति वा आतृ—कन्—वृद्धिश्च। १चन्द्रे २कर्पूरे अमरः। ३पुत्रे संक्षिप्तसा०। ४औषधे हेम० ५दीर्घायुष्के त्रि० मेदि०। "जैवातृक! ननु श्रूयते पतिरस्याः मिथिलायां प्रहारवर्मा-सीत्" दशकु०। [जीवस्यादूरदेशादौ।

जैवि त्रि० जीवस्यादूरदेशादि सुतङ्गमा० चतुरर्थ्याम् ञि।

जैवेय पुंस्त्री जीवस्य गुरोरपत्यं शुभ्रा० ढक्। जीवस्यापत्ये कचनामके मुनौ। जीवाया मौर्व्याः इदम् स्त्रीत्वात् ढक्। २ज्यासम्बन्धिनि त्रि०।

जैह्माशिनेय पु०जिह्माशिनोऽपत्यं शुभ्रा० ढक् दाण्डिना० नि० टिलोपः। जिह्माशिनोऽपत्ये।

जैह्म्य न० जिह्मस्य भावः ष्यञ्। कौटिल्ये। "जैह्म्यञ्च मैथुनं पुंसि जातिभ्रंशकरं स्मृतम्" मनुः। "निषिद्धभक्षणं जैह्म्यमुत्कर्षस्य वचोऽनृतम्। रजस्वलामुखास्वादः सुरापानसमानि तु" याज्ञ०।

जोङ्ग न० जुङ्ग्यते वर्ज्यते जुगि—वर्जने कर्मणि अच् पृषो०। कालीयके गन्धद्रव्यभेदे हारा०।

जोङ्गक न० जुगि—ण्वुल् पृषो०। अगुरुचन्दने अमरः।

जोङ्गट पु० जुगि—अटन् पृषो०। गर्भिण्या अभिलाषे दोहदे (साद) हारा०।

जोटिङ्ग पु० जुट—इन् जोटिं गच्छति वा० ड खिच्च। १महादेवे २महाव्रतिनि च त्रिका०। [ त्रि० कौ०।

जोड पु० जुड—बन्धने घञ्। बन्धने। जङ्घिजोडम्

जोन्ताला स्त्री जु—णिच् तस्मान्तमाजाति आ+ला—क। देवधान्ये हेमच०।

जोष पु० जुष—भावे घञ्। १प्रीतौ २सेवने च "को वां जोष उभयोः" ऋ० ३।३२०।१। ३सुखे न० शब्दर०।

जोषण न०जुषी—प्रीतिसेवनयोः भावे ल्युट्। १प्रीतौ २सेवने च। स्वार्थे णिच्—भावे युच्। तत्रार्थे स्त्री "उत्तरे निगमाः यथेष्टं जोषणा स्तुतेः" कात्या०श्रौ०५।१२।१६।

जोषस् अव्य०जुष—बा०असु। १तूष्णीमित्यर्थे "इति जोषमवस्थितं द्विपः" माघः। २सुखे च अमरः।

जोषा स्त्री जोषयति जुष—णिच्—अच्। १योषिति शब्दर० "चन्द्रेण जुषतेः सम्प्रदायात्ययाऽयं व्युत्पादितः" उज्ज्वलदत्तः। [ २योषिति च।

जोषिका स्त्री जु—स संज्ञायां कन्। १जालिकायां शब्दर०।

जोषित् स्त्री जुष "हृसृरुहियु(षि)तुषिभ्यः" उणा० इति। स्त्रीमात्रे शब्दर०। हलन्तत्वात् वा टाप्। जोषिताऽपि तत्रार्थे शब्दर०।

जोष्टृ त्रि० जुष—तृच् वेदे बा० इडभावः। सेवके। "उभेजनस्य जोष्टारः" ऋ०४।८३।८।"जोष्टारः सेवकाः" भा०। लोके तु जोषितृ इत्येव।

जौमर न० जुमरेण निर्वृत्तः अण्। १जुमरनन्दिकृते संक्षिप्तसाराख्ये व्याकरणे २तदध्येतरि त्रि०।

**जौलायन** पु॰ जुलस्यापत्यम् इञ् तत इञन्तत्वात् यूनि फञ् । जुलस्य यून्यपत्ये । ततः ऐषुकार्य्या॰ विषयार्थे भक्तल् । जौलायनभक्त तदीयविषये त्रि॰ ।

**जौह्व** त्रि॰ जुह्वामवदाने योग्यम् जुहू—अण् । जुहूपदार्थेऽवदानयोग्येषु हृदयादिषु “हृदयं जिह्वां क्रोडं सव्यसक्थिपूर्वनडकं पार्श्वे यकृद्वृक्कौ गुदमध्यं दक्षिणा श्रोणिरिति जौह्वानि” कात्या॰ श्रौ॰ ६।७।६। “जुह्वामवदानयोग्यानि प्रधानयागसाधनानि” कर्कः ।

**ज्ञ** पु॰ ज्ञा—क । १बुधग्रहे “युगे सूर्य्यज्ञशुक्राणां खचतुष्करदार्णवाः” सू॰ सि॰। २पण्डिते “क्रियासु बाह्यान्तरमध्यमासु सम्यक् प्रयुक्तासु न कम्पते ज्ञः” प्रश्नो॰। ३ब्रह्मणि ४मङ्गलग्रहे च धरणिः । सुपि उपपदे तत्तत्पदार्थज्ञातरि त्रि॰ । “आदेशं देशकालज्ञः” रघुः “विधिज्ञो विधिमास्थाय” ति॰ त॰ । स्वार्थे क । ज्ञक ज्ञातरि त्रि॰ स्त्रियां वा अत इत्त्वम् ज्ञका ज्ञिका ।

**ज्ञप** मारणे, आलोके, निशाने, तोषणे स्तुतौ च चुरा॰ उभ॰ सक॰ सेट् घटा॰ । ज्ञपयति-ते अजिज्ञपत्-त । ज्ञाश्रम इत्यनेनैवेष्टसिद्धौ ज्ञपपाठश्चुरादिरुभयपदीति मते फलवत्कर्त्तरि परस्मैपदार्थः इति धातुप्रदीपः । वस्तुतस्तु ज्ञप्तिपदमनेनैव निष्पादितम् । तेन अनिर्दिष्टार्थतया ज्ञप्तिरिह ज्ञानम् । अतएव प्रकृतौ ज्ञ ज्ञीप्से इत्यत्र अस्यैव सनन्तस्य निष्पादितेन ज्ञीप्सशब्देन ज्ञातुमिच्छा प्रतिपाद्यते । एवं ज्ञानपर्य्याये “प्रतिपज्ज्ञप्तिचेतना इत्यमरः” इति दुर्गादासः । ज्ञप ज्ञाने च इति पाणिनिः । अधिकं ज्ञाधातौ दृश्यते ।

**ज्ञपित** त्रि॰ ज्ञप—ज्ञाने क्त नि॰ वा इट् । ज्ञाते अमरः । इड्भावे । ज्ञप्तोऽप्यत्र ।

**ज्ञप्ति** स्त्री ज्ञप—भावे क्तिन् । १बुद्धौ अमरः २मारणे ३तोषणे ४तीक्ष्णीकरणे ५स्तुतौ च ।

**ज्ञा** बोधे क्र्या॰ पर॰ सक॰ अनिट् । जानाति अज्ञासीत् । जज्ञौ । ज्ञाता ज्ञानं ज्ञातिः ज्ञातः अज्ञिवान् ।

अनु+अनुमतौ अनुमतिश्च स्वयंप्रवृत्तस्य निषेधनाभावेन स्वाभिमतत्वज्ञापनेन प्रवर्त्तनम् । “तं देवासो अनुजानन्तु कालम्” तैत्ति॰ ब्रा॰ । “अनुप्रवेशे यद्वीर कृतवांस्त्वं ममाप्रियम् । सर्वं तदनुजानामि” भा॰ आ॰ २१३अ॰

अप+निह्नवे आत्म॰ । आत्मानमपजानानः शशमात्रोऽनयद्दिनम्” भट्टिः ।

अभि+सम्यग्ज्ञाने “भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः” गीता । “अभिज्ञाश्छेदपातानाम्” कुमा॰ अभिज्ञा च आद्यज्ञानम् अनुभवात्मकम् ।

प्रति+अभि+पूर्वदृष्टस्य वस्तुनः चक्षुरादिसन्निकर्षजे पूर्वसंस्कारोत्पन्ने स्मृतिभिन्ने ज्ञानभेदे यथा सोऽयं देवदत्तः इत्यादि ज्ञानम् । “तं त्वं प्रत्यभिजानीहि स्वप्ने यं दृष्टवत्यसि” हरिवं॰ १७६ अ॰ ।

सम्+अभि+प्रत्यभिज्ञाने “इन्द्रसेनां सह भ्राता समभिज्ञाय बाहुकः” भा॰ व॰ ७५ अ॰ ।

अव+अनादरे हीनत्वेन ज्ञाने च । “अवजानासि मां यस्मात् ततस्ते न भविष्यति” रघुः । “अदेशकाले यद्दानमपात्रेभ्यश्च दीयते । असत्कृतमवज्ञातं तत्तामसमुदाहृतम्” गीता । “वसूनि देयानि विवर्त्तयिष्यन् रामं नृपः संगिरमाण एव । तयावजज्ञे” भट्टिः ।

आ+सम्यग्ज्ञाने नियोगे च “न हि मनसा ध्यायतः कश्चनाजानाति” शत॰ ब्रा॰ ४।६।७।५ । “नियोगश्च निकृष्टस्य भृत्यादेः प्रवर्त्तनम् । स्वार्थे णिच् तत्रार्थे । “आज्ञापय ज्ञातविशेष ! पुंसाम्” कुमा॰ । ज्ञा—प्रेरणे चौरादिकस्येदं रूपमित्यन्ये ।

उप+आद्यज्ञाने “उप तज्जानीत यथा वयमिहाप्यसामेति” शत॰ ब्रा॰ ६।२।३।७। “उपज्ञा ज्ञानमाद्यं स्यात्” अमरः ।

निस्+निर्+निश्चयात्मके ज्ञाने । “विद्युद्वै विद्युत्य वृष्टिमनुप्रविशति सान्तर्धीयते तां न निर्जानन्ति” ऐत॰ ब्रा॰ ।

परि+परितो ज्ञाने “इन्द्रो दक्षं परिजानादहीनम्” ऋ॰ १०। १२८।६। “अनुबन्धं परिज्ञाय देशकालौ च तत्त्वतः” मनुः ।

प्र+प्रकृष्टज्ञाने । “यया धर्ममधर्मञ्च कार्य्यञ्चाकार्य्यमेव च । अयथावत् प्रजानाति” “तस्य प्रज्ञा प्रतिष्ठिता” गीता ।

प्रति+प्रतिज्ञायां साध्यत्वेन पक्षनिर्देशे आत्मकर्त्तव्यत्वेन कथनभेदे च आत्म॰ । “साध्यनिर्देशः प्रतिज्ञा” गौत॰ सू॰ । साध्यवत्त्वेन पक्षनिर्देशः प्रतिज्ञेति तदर्थः । “प्रतिजज्ञे वधं चापि सर्वक्षत्रस्य भारत !” भा॰ व॰ ११७ अ॰ ॥ “प्रतिज्ञाय वनवासमिमं गुरोः” रामा॰ २।१०८ अ॰ । “तस्मै निशाचरैश्वर्य्यं प्रतिजज्ञे रघूत्तमः” रघुः । “कच्चिन्न पाने द्यूते वा क्रीड़ासु प्रमदासु च । प्रतिजानन्ति पूर्वाह्णे व्ययं व्यसनजं तव” भा॰ स॰ ५ अ॰ । आर्षत्वात् पर॰ ।

वि+विशेषेण ज्ञाने “ज्योतिर्वृणीत तमसो विजानन्” ऋ॰ ३।३९।७। “आत्मानं चेद्विजानीयादयमस्मीति पूरुषः” शत॰ ब्रा॰ १४।७।२।१६ । “कथमेतद् विजानीयां त्व-

मादौ प्रोक्तवानिति” गीता । शिल्पशास्त्रविषयके ज्ञाने च “मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः” अमरः। ज्ञानमात्रे क्षणिकविज्ञानमिति बौद्धाः ।

सम्+सम्यग् ज्ञाने संज्ञायां चैतन्ये च आत्म०। संजानानान् परिहरन् रावणानुचरान् बहून्” भट्टिः । “रविस्तु संज्ञापयते लोकान् रश्मिभिरुल्वणैः” भा० शा०७१२७६७ । प्रतिज्ञायाम् आत्म०। “संजानीष्व क्षमीशा” च मुग्धबोधम् । [ अजिज्ञपत् त ।

**ज्ञा** ज्ञपधात्वर्थे चुरा० उभ० सक० सेट् घटा० । ज्ञपयति ते

**ज्ञा** प्रेरणे चुरा०उभ०सक०सेट् । ज्ञापयति ते अजिज्ञपत् त । अस्यैव रूपम् आज्ञापयतीत्यादि । “आज्ञापय ज्ञातविशेष ! पुंसाम्” कुमा०।

**ज्ञात** त्रि० ज्ञा—कर्म्मणि क्त । विदिते “ज्ञाततत्त्वोऽपि “खल्वेकः सन्दिग्धे कार्य्यवस्तुनि” माघः । “ज्ञाताज्ञाताः कुले मम”वायुपु०। भावे क्त । २ज्ञाने न०। यावा० स्वार्थे कन् । ज्ञातक विदितार्थे । [ अर्हद्भेदे हेम० ।

**ज्ञातनन्दन** पु० ज्ञातेन ज्ञानेन नन्दति नन्द—ल्यु ३त० ।

**ज्ञातल** त्रि० ज्ञातं ज्ञानं लाति ला—क । ज्ञानयुक्ते तस्यापत्यं शुभ्रा०यतलेत्यत्र ज्ञातलेति पाठान्तरात् ढक् । ज्ञातलेय तदपत्ये पुंस्त्री० ।

[ न्तो अमरः ।

**ज्ञातसिद्धान्त** पु० ज्ञातः सिद्धान्तः तत्त्वार्थो येन । सिद्धा-

**ज्ञाति** पु० जानाति छिद्रं कुलस्थितिं वा संज्ञायां क्तिच् । ज्ञा—कर्त्तरि करणे वा क्तिच् । १पितरि २पितृवंश्ये सपिण्डसकुल्यसमानोदकसगोत्ररूपे एकगोत्रोत्पन्ने पितृव्यादौ अमरः।“ज्ञातिभेदो न नः कार्य्यः साक्षी त्वं मम नारद !” हरिवं०१२८अ०। ज्ञातिश्च चतुर्विधः “सप्तमपुरुषपर्य्यन्तं सपिण्डः। ततस्त्रिपुरुषपर्य्यन्तं सकुल्यः । ततश्चतुर्थपुरुषपर्य्यन्तं समानोदकः। जन्मनामस्मृतिपर्य्यन्तमपि समानोदकः । ततः परं सगोत्रजः । ज्ञातिद्रोहे दोषो यथा “यानि कानि च पापानि ब्रह्महत्यादिकानि च । ज्ञातिद्रोहस्य पापस्य कलां नार्हन्ति षोडशीम् । “भर्त्तृभ्रातृपितृज्ञातिश्वश्रूश्वशुरदेवरैः” । “ज्ञातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा” इति च याज्ञ० । “ज्ञातिभ्यो द्रविणं दत्त्वा कन्यायै चैव शक्तितः” मनुः । ततः परस्य पुत्रयज्ञस्य समासे नाद्युदात्तता ।

**ज्ञातृ** त्रि० ज्ञा—तृन् । १ज्ञानशीले २वेत्तरि च ज्ञातृभावः अण् । ज्ञात्र ज्ञातृत्वे न० “संविच्च मे ज्ञात्रं च मे” यजु० १८,७। “ज्ञात्रं विज्ञानसामर्थ्यम्” वेददी० ।

**ज्ञातेय** न० ज्ञातेर्भावः कर्म वा ढक् ।१ज्ञातित्वे २ज्ञातिकर्म्मणि च । “ज्ञातेयं कुरु सौमित्रे ! भयात्त्रायस्व राघवम्” भट्टिः

**ज्ञान** पु० विषयान् जानाति ज्ञः अनिति अनः कर्म्म०। १जीवे। भावे ल्युट् । २बोधे न० । ३विशेषेण सामान्येन चावबोधे । वेदान्तिमते ४पदार्थग्राहिकायां मनोवृत्तौ, तच्च ज्ञानं नानाविधं यथा ज्ञानं द्विधा वस्तुमात्रद्योतकं निर्विकल्पकम् । सविकल्पन्तु संज्ञादिद्योतकत्वादनेकधा । संकल्पसंशयभ्रान्तिस्मृतिसादृश्यनिश्चयाः । ऊहोऽनध्यवसायश्च तथान्येऽनुभवा अपि” । इत्यादिभेदेनानेकविधा भवन्तीत्यर्थः । ५सम्यग्बोधे । न्यायमते ६ बुद्धिमात्रे “बुद्धिस्तु द्विविधा मता । अनुभूतिः स्मृतिश्चैव” भाषा० तच्च प्रकारान्तरेण द्विविधं यथा “अप्रमा च प्रमा चेति ज्ञानं द्विविधमुच्यते, तच्छून्ये तन्मतिर्या स्यादप्रमा सा निरूपिता । तत्प्रपञ्चो विपर्य्यासः संशयोऽपि प्रकीर्त्तितः । आद्यो देहे आत्मबुद्धिः शङ्खादौ पीततामतिः । भवेन्निश्चयरूपा सा संशयोऽथ प्रदर्श्यते । किंस्विन्नरो वा स्थाणुर्वेत्यादिबुद्धिस्तु संशयः। तदभावाप्रकारा धीस्तत्प्रकारा तु निश्चयः । स संशयो भवेद्या धीरेकत्राभावभावयोः । साधारणादिधर्मस्य ज्ञानं संशयकारणम् । दोषोऽप्रमाया जनकः प्रमायास्तु गुणो भवेत् । पित्तदूरत्वादिरूपो दोषो नानाविधो मतः । प्रत्यक्षे तु विशेष्येण विशेषणवता समम् । सन्निकर्षो गुणस्तु स्यादथ त्वनुमितौ गुणः । पक्षे साध्यविशिष्टे च परामर्शो गुणो भवेत् । शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ गुणः । शाब्दबोधे योग्यतायास्तात्पर्य्यस्याथवा प्रमा। गुणः स्यात्, भ्रमभिन्नन्तु ज्ञानमत्रोच्यते प्रमा । अथ वा तत्प्रकारं यज्ज्ञानं तद्वद्विशेष्यकम् । ज्ञानं यन्निर्विकल्पाख्यं तदतीन्द्रियमिष्यते । तत् प्रमा नाऽप्रमा नापि ज्ञानं यन्निर्विकल्पकम्। प्रकारत्वादिशून्यं हि सम्बन्धानवगाहि तत्” इति भाषा० । ७बुद्धिवृत्तिनिरोधरूपे योगे “एकत्वं बुद्धिमनसोरिन्द्रियाणाञ्च सर्वशः। आत्मनो व्यापिनस्तात ! ज्ञानमेतदनुत्तमम्” इति भा०शा०मोक्षधर्मः। एकत्वं बुद्धिमात्रे णावस्थानम् बुद्धिवृत्तिनिरोध इति यावत् । ८देवताध्यानादौ ९विवेकविज्ञाने शास्त्राचार्य्योपदेशजे परमात्मविषये साक्षान्मोक्षफले १०आत्मनिश्चये तत्त्वज्ञाने वेदान्तिमते ११जीवेश्वरजगद्भेदभ्रमाधिष्ठानभूते नित्यस्वप्रकाशे सच्चिदानन्दरूपाद्वितीये परमार्थसत्ये, चैतन्ये । करणे ल्युट् । १२आत्मानात्मसर्वपदार्थाव-

बोधने विवेकसामर्थ्ये । १३अहंब्रह्मेत्युपासने । तच्चोपासनम् "ब्रह्मैवाहं समः शान्तः सच्चिदानन्दलक्षणः । नाहं देहोह्यसद्रूपो ज्ञानमित्युच्यते बुधैः । निर्विकारो निराकारो निरवद्योऽहमव्ययः । नाहं देह इत्यादि । निरामयो निराभासो निर्विकल्पोऽहमाततः । नाहमित्यादि । निर्गुणो निष्क्रियो नित्यो नित्यमुक्तोऽहमच्युतः । नाहमित्यादि । निर्मलो निश्चलोऽनन्तः शुद्धोऽहमजरोऽमरः । नाहमित्यादि । वेदान्तशास्त्रोक्तं बोध्यम् । १४शब्दयुक्तिभ्यामात्मनिश्चये । "अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् । आचार्य्योपासनं शौचं स्थैर्य्यमात्मविनिग्रहः । इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च । जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् । असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु । नित्यञ्च समचित्तत्वमिष्टानिष्टोपपत्तिषु । मयि चानन्ययोगेन भक्तिरव्यभिचारिणी । विविक्तदेशसेवित्वमरतिर्जनसंसदि । अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् । एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा" इति गीतोक्तार्थेषु १५ज्ञानसाधनेषु । तच्च सात्त्विकादिभेदात् त्रिविधम् । यथा "सर्वभूतेषु येनैकं भावमव्ययमीक्षते । अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम्" । (सात्त्विकं सर्वसंसारोच्छित्तिकारणम्) । "पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान् । वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् । यत्तु कृत्स्नवदेकस्मिन् कार्य्ये सक्तमहेतुकम् । अतत्त्वार्थवदल्पञ्च तत् तामसमुदाहृतम्" । (राजसं तामसञ्च संसारकारणम्) । आत्मनः श्रवणमननाभ्यां परिनिष्पन्ने प्रमाणजन्यचेतोवृत्त्यभिव्यक्तसच्चिद्रूपे १६परमात्मज्ञानसाधनशास्त्रादात्मतत्त्वस्यावगमे आत्मसाक्षात्कारे "लोकवासनया जन्तोः शास्त्रवासनयापि च । देहवासनया ज्ञानं यथावन्नैव जायते । ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः" "यथादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि" इति ब्रह्मसाक्षात्काररूपज्ञानहेतुरुक्तः । १७साङ्गवेदतदर्थविषयेऽवबोधे । महावाक्यजन्याखण्डाकारायां १८बुद्धिवृत्तौ १९स्वस्वरूपस्फुरणे । सांख्यमते गुणपुरुषान्यताख्यातिरूपे २०अध्यवसाये । ज्ञायतेऽनेन । ज्ञा—करणे ल्युट् । २१वेदे २२शास्त्रादौ च । तत्र प्रत्यक्षज्ञानोत्पत्तिप्रकारो मतभेदेन निरूप्यते । तत्र नैयायिकैः "आत्मा मनसा युज्यते मन इन्द्रियेण इन्द्रियं विषयेण तस्मादध्यक्षम्" इत्युक्तदिशा प्रत्यक्षं जायते । व्याप्तिज्ञानपरामर्शोत्तरमनुमितिर्जायते । वृत्तिज्ञानसहकृतपदज्ञानजन्यपदार्थोपस्थितौ शाब्दबोधो जायते । गवादौ गोसादृश्यज्ञानेन गोसदृशो गवय इत्यादिना अतिदिष्टवाक्यार्थस्य स्मृतौ गवयो गवयवाच्य इत्यादि रीत्या उपमितिज्ञानं जायते इत्यङ्गीकृतम् । केचित् बौद्धभेदाः बाह्यार्थाभावेन बुद्धेरेव तत्तदर्थाकारतयावभास इत्यङ्गीचक्रुः" यथोक्तं सर्वद० स०

"बाह्यं ग्राह्यं नोपपद्यत एव विकल्पानुपपत्तेः । अर्थो ज्ञानग्राह्यो भावादुत्पन्नो भवति अनुत्पन्नो वा, न पूर्वः उत्पन्नस्य स्थित्यभावात् नापरः अनुत्पन्नस्यासत्त्वात् । अथ मन्येथाः अतीत एवार्थो ज्ञानग्राह्यः तज्जनकत्वादिति तदपि बालभाषितं वर्त्तमानतावभासविरोधात् इन्द्रियादेरपि ग्राह्यत्वप्रसङ्गाच्च । किञ्च ग्राह्यः किं परमाणुरूपोऽर्थः अवयविरूपो वा । न चरमः कृत्स्नैकदेशविकल्पादिना तन्निराकरणात् । न प्रथमः अतीन्द्रियत्वात् षट्केन युगपद्योगस्य बाधकत्वाच्च । यथोक्तम् "षट्केन युगपद्योगात् परमाणोः षडंशता । तेषामप्येकदेशत्वे पिण्डः स्यादनुमात्रकः" इति । तस्मात् स्वव्यतिरिक्तग्राह्यविरहात् तदात्मिका बुद्धिः स्वयमेव स्वात्मरूपप्रकाशिका प्रकाशवदिति सिद्धम् । तदुक्तम् "नान्योऽनुभाव्यो बुद्ध्यास्ति तस्या नानुभवोऽपरः । ग्राह्यग्राहकवैधुर्य्यात् स्वयं सैव प्रकाशते" इति । ग्राह्यग्राहकयोरभेदश्चानुमातव्यः यद्वेद्यते येन वेदनेन, तत्ततो न भिद्यते यथा ज्ञानेनात्मा, वेद्यन्ते तैश्च नीलादयः । भेदे हि सत्यधुना अनेनार्थस्य सम्बन्धित्वं न स्यात् तादात्म्यस्य नियमहेतोरभावात् तदुत्पत्तेरनियामकत्वात् यश्चायं ग्राह्यग्राहकसंवित्तीनां पृथगवभासः स एकस्मिंश्चन्द्रमसि द्वित्वावभास इव भ्रमः । अत्राप्यनादिरविच्छिन्नप्रवाहा भेदवासनैव निमित्तम् । यथोक्तम् "सहोपलम्भनियमादभेदो नीलतद्धियोः । भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वय" इति । "अविभागोऽपि बुद्ध्यात्मा विपर्य्यासितदर्शनैः । ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते" न च रसवीर्य्यविपाकादिसमानमाशामोदकोपार्जितमोदकानां स्यादिति वेदितव्यं वस्तुतो वेद्यवेदकाकारविधुराया अपि बुद्धेर्व्यवहर्तृपरिज्ञानानुरोधेन विभिन्नग्राह्यग्राहकाकाररूपवत्तया तिमिराद्युपहताक्ष्णां केशेन्द्रनाडीज्ञानाभेदवदनाद्युपप्लववासनासामर्थ्याद्व्यवस्थोपपत्तेः पर्य्यनुयोगायोगात् । यथोक्तम् "अवेद्यवेदकाकारा यथा भ्रान्तैर्निरीक्ष्यते । विभक्तलक्षणग्राह्य-

ग्राहकाकारविप्लुता । यथा क्षतव्यक्तस्येयं केशादिज्ञानभेदवत् । यदा तदा न सञ्चोद्या ग्राह्यग्राहकलक्षणेति"। तस्माद्बुद्धिरेवानादिवासनावशादनेकाकारावभासत इति" सिद्धम् ।"

तदेतन्मतं बौद्धविशेषैर्निराकृतं तदपि तत्रैवोक्तं यथा । "अन्ये तु मन्यन्ते यथोक्तं बाह्यं वस्तुजातं नास्तीति तदयुक्तं प्रमाणाभावात् । न च सहोपलम्भनियमः प्रमाणमिति वक्तव्यं वेद्यवेदकयोरभेदसाधकत्वेनाभिमतस्य तस्याप्रयोजकत्वेन सन्दिग्धविपक्षव्यावृत्तिकत्वात् । ननु भेदे सहोपलम्भनियमात्मकं साधनं न स्यादिति चेन्न ज्ञानस्यान्तर्मुखतया भेदेन प्रतिभासमानतया एकदेशत्वैककालत्वलक्षणसहत्वनियमासम्भवाच्च नीलाद्यर्थस्य ज्ञानाकारत्वे अहमिति प्रतिभासः स्यात् नत्विदमिति प्रतिपत्तिः प्रत्ययाद्व्यतिरेकात् । अथोच्यते ज्ञानस्वरूपोऽपि नीलाकारो भ्रान्त्या बहिर्वद्भेदेन प्रतिभासत इति न च तत्राहमुल्लेख इति । यथोक्तम् "परिच्छेदान्तराद्योऽयं भागो बहिरिव स्थितः । ज्ञानस्याभेदिनो भेदप्रतिभासोऽप्युपप्लव"इति "यदन्तर्ज्ञेयतत्त्वं तद्बहिर्वदवभासत"इति च । तदयुक्तं बाह्यार्थाभावे तदुत्पत्तिरहिततया बहिर्वदित्युपमानोक्तेरयुक्तेः न हि वसुमित्रो बन्ध्यापुत्रवदवभासत इति प्रेक्षावानाचक्षीत । भेदप्रतिभासस्य भ्रान्तत्वे अभेदप्रतिभासस्य प्रामाण्यं, तत्प्रामाण्ये च भेदप्रतिभासस्य भ्रान्तत्वमिति परस्पराश्रयप्रसङ्गाच्च । अविसंवादान्नीलतादिकमेव संविदाना "बाह्यमेवोपाददते जगत्युपेक्षन्तेऽशान्तरमिति व्यवस्थादर्शनाच्च । एवञ्चायमभेदबाधको हेतुर्गौमयपायसीयन्यायवदाभासतां भजेत् अतोबहिर्वदिति वदता बाह्यं ग्राह्यमेवेति भावनीयमिति भवदीय एव बाणो भवन्तं प्रहरेत् ।"

"ननु ज्ञानाभिन्नकालस्यार्थस्य बाह्यत्वमनुपपन्नमिति चेत् तदनुपपन्नम् इन्द्रियसन्निकृष्टस्य विषयस्योत्पाद्ये ज्ञाने स्वाकारसमर्पकतया समर्पितेन चाकारेण तस्यार्थस्यानुमेयतोपपत्तेः अतएव पर्य्यनुयोगपरिहारौ समग्राहिषाताम् "भिन्नकालं कथं ग्राह्यमिति चेत् ग्राह्यतां विदुः । हेतुत्वमेव च व्यक्तेर्ज्ञानाकारार्पणक्षममिति" । तथा च यथा पुष्ट्या भोजनमनुमीयते यथा च भाषया देशः, यथा वा सम्भ्रमेण स्नेहः,तथा ज्ञानाकारेण ज्ञेयमनुमेयम् । तदुक्तम् "अर्थेन घटयत्येनां न हि मुक्त्वार्थरूपताम् । तस्मात् प्रमेयाधिगतेः प्रमाणं मेयरूपतेति" । न हि वित्तिसत्तैव तद्वेदना युक्ता तस्याः सर्वत्राविशेषात् तान्तु सारूप्यमाविशत् सरूपयितुं घटयेदिति च । तथाच बाह्यार्थसद्भावे प्रयोगः ये यस्मिन् सत्यपि कादाचित्काः ते सर्वे तदतिरिक्तसापेक्षाः यथा अविवक्षति, अजिगमिषति मयि वचनगमनप्रतिभासा विवक्षुजिगमिषुपुरुषान्तरसन्तानसापेक्षाः तथा च विवादाध्यासिताः प्रवृत्तिप्रत्ययाः सत्यप्यालयविज्ञाने कदाचिदेव नीलाद्युल्लेखना इति । तत्रालयविज्ञानं नामाहमास्पदं विज्ञानं नीलाद्युल्लेखि च प्रवृत्तिविज्ञानम् । यथोक्तम् "तत् स्यादालयविज्ञानं यद्भवेदहमास्पदम् । तत् स्यात् प्रवृत्तिविज्ञानं यन्नीलादिकमुल्लिखेदिति"। तस्मादालयविज्ञानसन्तानातिरिक्तः कादाचित्कः प्रवृत्तिविज्ञानहेतुर्बाह्योऽर्थो ग्राह्य एव न वासनापरिपाकप्रत्ययः कादाचित्कत्वात् कदाचिदुत्पाद इति वेदितव्यम् ।"

वेदान्तिमते । "बुद्धितत्स्थचिदाभासौ द्वावेतौ व्याप्नुतो घटम् । तत्राज्ञानं धिया नश्येदाभासात्तु घटः स्फुरेत्" इत्युक्तरीत्या प्रत्यक्षस्थले इन्द्रियादिप्रणाल्या अन्तःकरणस्य विषयदेशगत्या तदाकारेण परिणामरूपवृत्तौ सत्यां विषयगताज्ञाननाशे अन्तःकरणवृत्त्यवच्छिन्नचैतन्येन विषयस्फुरणरूपं पौरुषेयज्ञानं जायते । वृत्तिरूपज्ञानन्तु मनोधर्म इति भेदः । यथोक्तं वेदा० प० १परिच्छेदे "यथा तडागोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान् प्रविश्य तद्वदेव चतुष्कोणाद्याकारं भवति तथा तैजसमन्तःकरणमपि चक्षुरादिद्वारा घटादिविषयाकारेण परिणमते । स एव परिणामो वृत्तिरित्युच्यते । अनुमित्यादिस्थले तु अन्तःकरणस्य न वह्न्यादिदेशगमनं वह्न्यादेश्चक्षुराद्यसन्निकर्षात् तथा चायं घट इत्यादिप्रत्यक्षस्थले घटादेस्तदाकारवृत्तेश्च बहिरेकत्र देशे समवस्थानात् तदुभयावच्छिन्नं चैतन्यमेकमेव विभाजकयोरप्यन्तःकरणवृत्तिघटादिविषययोरेकदेशस्थितत्वेन भेदाजनकत्वात् ।"
प्रत्यक्षेऽन्तःकरणवृत्तेः फलभेदस्तत्रैव७परि०दर्शितो यथा

"सा चान्तःकरणवृत्तिरावरणाभिभवार्थेत्येकं मतम् । तथाहि अविद्योपहितचैतन्यस्य जीवत्वपक्षे घटाद्यधिष्ठानचैतन्यस्य जीवरूपतया जीवस्य सर्वदा घटादिभानप्रसक्तौ घटाद्यवच्छिन्नचैतन्यावरकमज्ञानं मूलाविद्यापरतन्त्रमवस्थापदवाच्यमभ्युपगन्तव्यम् । एवं सति न सर्वदा घटादेर्भानप्रसङ्गः अनावृतचैतन्यसम्बन्धस्यैव भानप्रयोजकत्वात् । तस्य चावरणस्य सदातनत्वे कदाचिदपि

घटभानं न स्यादिति तद्भङ्गो वक्तव्यो तद्भङ्गजनकं न चैतन्यमात्रं तद्भासकस्य तदनिवर्तकत्वात् नापि वृत्त्युपहितचैतन्यं परोक्षस्थलेऽपि तद्भिवृत्त्यापत्तेरिति परोक्षव्यावृत्तवृत्तिविशेषस्य तदुपहितचैतन्यस्य वा आवरणभञ्जकत्वमित्यावरणाभिभवार्था वृत्तिरुच्यते। सम्बन्धार्था वृत्तिरित्यपरं मतम्। तत्राविद्योपाधिकोजीवोऽपरिच्छिन्नः स च घटादिप्रदेशे विद्यमानोऽपि घटाद्याकारापरोक्षवृत्तिविरहदशायां न घटादिकमवभासयति घटादिना समं सम्बन्धाभावात् तत्तदाकारवृत्तिदशायां तु भासयति तदा सम्बन्धसत्त्वात्। ननु अविद्योपाधिकस्य जीवस्यापरिच्छिन्नस्य स्वतएव समस्तवस्तुसम्बद्धस्य वृत्तिविरहदशायां सम्बन्धाभावाभिधानमसङ्गतम्, असङ्गतत्वेच्छया सम्बन्धाभावाभिधाने च वृत्त्यनन्तरमपि सम्बन्धो न स्यादिति चेत् उच्यते न हि वृत्तिविरहदशायां जीवस्य घटादिना सह सम्बन्धसामान्यं निषेधामः किन्तर्हि घटादिभानप्रयोजकं सम्बन्धविशेषम्। स च सम्बन्धविशेषो विषयस्य जीवचैतन्यस्य च व्यङ्ग्यव्यञ्जकतालक्षणः कादाचित्कस्तत्तदाकारवृत्तिनिबन्धनः। तथा हि तैजसमन्तःकरणं स्वच्छद्रव्यत्वात् स्वतएव जीवचैतन्याभिव्यञ्जनसमर्थं, घटादिकन्तु न तथा अस्वच्छद्रव्यत्वात्। स्वाकारवृत्तिसंयोगदशायान्तु वृत्त्यभिभूतजाड्यधर्मकतया वृत्त्युत्पादितचैतन्याभिव्यञ्जनयोग्यतान्वयतया च वृत्त्युदयानन्तरं चैतन्यमभिव्यनक्ति। तदुक्तं विवरणे “अन्तःकरणं हि स्वस्मिन्निव स्वसंसर्गिण्यपि घटादौ चैतन्याभिव्यक्तियोग्यतामापादयतीति”। दृष्टञ्चास्वच्छद्रव्यस्यापि स्वच्छद्रव्यसम्बन्धदशायां प्रतिबिम्बग्राहित्वं यथा कुड्यादेर्जलादिसंयोगदशायां मुखादिप्रतिबिम्बग्राहिता। घटादेरभिव्यञ्जकत्वञ्च तत्प्रतिबिम्बग्राहित्वं चैतन्यस्याभिव्यक्तत्वञ्च तत्र प्रतिबिम्बितत्वम्। एवंविधाभिव्यञ्जकत्वसिद्ध्यर्थमेतद्वृत्तेरपरोक्षस्थले बहिर्निर्गमनाङ्गीकारः। परोक्षस्थले तु वह्न्यादेर्वृत्तिसंयोगाभावेन चैतन्यानभिव्यञ्जकतया नापरोक्षत्वम्।”

सांख्यादिमते अर्थाकारेण परिणताया बुद्धिवृत्तेश्चेतने प्रतिबिम्बनात् विषयप्रकाशरूपं ज्ञानम्। तत्र पौरुषेयबोधे वृत्तिः करणं, वृत्तिरूपज्ञाने च इन्द्रियादिकरणमिति भेदः। यथोक्तं सा॰प्र॰सू॰ भाष्ययोः।

“द्वयोरेकतरस्य वाप्यसन्निकृष्टार्थपरिच्छित्तिः प्रमा तत्साधकतमं यत् तत् त्रिविधं प्रमाणम्।” सू॰ “असन्निकृष्टः प्रमातर्यनारूढोऽनधिगत इति यावत्। एवंभूतस्यार्थस्य वस्तुनः परिच्छित्तिरवधारणं प्रमा सा च द्वयोर्बुद्धिपुरुषयोरुभयोरेव धर्मो भवतु। किं वैकतरमात्रस्योभयथैव तस्याः प्रमाया यत् साधकतमं फलायोगव्यवच्छिन्नं कारणं तत्प्रमाणं तच्च त्रिविधं वक्ष्यमाणरूपेणेत्यर्थः। स्मृतिव्यावर्त्तनायानधिगतेति। भ्रमव्यावर्त्तनाय परिच्छित्तिरिति। संशयव्यावर्त्तनाय त्ववधारणमिति। अत्र यदि प्रमारूपं फलं पुरुषनिष्ठमात्रमुच्यते तदा बुद्धिवृत्तिरेव प्रमाणम्। यदि च बुद्धिनिष्ठमात्रमुच्यते तदा तूक्तेन्द्रियसन्निकर्षादिरेव प्रमाणम्। पुरुषस्तु प्रमासाक्ष्येव न प्रमातेति। यदि च पौरुषेयबोधो बुद्धिवृत्तिश्चोभयमपि प्रमोच्यते तदा तूक्तमुभयमेव प्रमाभेदेन प्रमाणं भवति। चक्षुरादिषु तु प्रमाणव्यवहारः परम्परयैव सर्वथेति भावः। पातञ्जलभाष्ये तु व्यासदेवैः पुरुषनिष्ठो बोधः प्रमेत्युक्तः पुरुषार्थमेव करणानां प्रवृत्त्या फलस्य पुरुषनिष्ठताया एवौचित्यात्। अतोऽत्रापि स एव मुख्यः सिद्धान्तः। न च पुरुषबोधस्वरूपस्य नित्यतया कथं फलत्वमिति वाच्यम् केवलस्य नित्यत्वेऽप्यर्थोपरागस्यैव फलत्वादिति। अत्रेयं प्रक्रिया। इन्द्रियप्रणालिकयार्थसन्निकर्षेण लिङ्गज्ञानादिना वादौ बुद्धेरर्थाकारा वृत्तिर्जायते तत्र चेन्द्रियसन्निकर्षजा प्रत्यक्षा वृत्तिरिन्द्रियविशिष्टबुद्ध्याश्रिता नयनादिगतपित्तादिदोषैः पिताद्याकारवृत्त्युदयादिति विशेषः। सा च वृत्तिरर्थोपरक्ता प्रतिबिम्बरूपेण पुरुषारूढा सती भासते पुरुषस्यापरिणामितया बुद्धिवत् स्वतोऽर्थाकारत्वासम्भवात्। अर्थाकारताया एव चार्थग्रहणत्वात् अन्यस्य दुर्वचत्वादिति। तदेतदक्ष्यति “कुसुमवच्च मणिः” जपास्फटिकयोरिव नोपरागः किन्त्वभिमान इति। योगसूत्रं च “वृत्तिसारूप्यमितरत्रेति”। स्मृतिरपि। “तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः। इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः” इति। योगभाष्यञ्च “बुद्धेः प्रतिसंवेदी पुरुष” इति प्रतिध्वनिवत् प्रतिसंवेदः संवेदनप्रतिबिम्बस्तस्याश्रय इत्यर्थः। एतेन पुरुषाणां कूटस्थविभुचिद्रूपत्वेऽपि न सर्वदा सर्वावभासनप्रसङ्गः असङ्गतस्य स्वतोऽर्थाकारत्वाभावात्। अर्थाकारतां विना च संयोगमात्रेणार्थग्रहणस्यातीन्द्रियादिस्थले बुद्धावदृष्टत्वादिति। पुरुषे च स्वस्वबुद्धिवृत्तीनामेव प्रतिबिम्बार्पणसामर्थ्यमिति फलबलात् कल्प्यते। यथा रूपवतामेव जलादिषु प्रतिबिम्बनसामर्थ्यं नेतरस्येति।

रूपवत्त्वं च न सामान्यतः प्रतिविम्बप्रयोजकं शब्दस्यापि प्रतिध्वनिरूपप्रतिविम्बदर्शनात् । न च शब्दजन्यं शब्दान्तरमेव प्रतिध्वनिरिति वाच्यं स्फटिकलौहित्यादेरपि जपासन्निकर्षजन्यतापत्त्या प्रतिविम्बमिथ्यात्वसिद्धान्तक्षतेरिति । प्रतिविम्बश्च बुद्धेरेव परिणामविशेषो विम्बाकारो जलादिगत इति मन्तव्यम् । केचित् तु वृत्तौ प्रतिविम्बितं सदेव चैतन्यं वृत्तिं प्रकाशयति तथा वृत्तिगतप्रतिविम्ब एव वृत्तौ चैतन्यविषयता न तु चैतन्ये वृत्तिप्रतिविम्बोऽस्तीत्याहुः । तदसत् , उपदर्शितशास्त्रविरोधेन केवलतर्कस्याप्रयोजकत्वात् विनिगमनाविरहेण वृत्तिचैतन्ययोरन्योन्यविषयताख्यसम्बन्धरूपतयान्योन्यस्मिन्नन्योन्यप्रतिविम्बसिद्धेश्च । बाह्यस्थलेऽर्थाकारताया एव विषयतारूपत्वसिद्धाऽऽन्तरेऽपि तत्तदर्थाकारताया एव विषयतात्वौचित्याच्चेति । ये तु तार्किका ज्ञानस्य विषयतां नेच्छन्ति तन्मते ज्ञानव्यक्तीनामनुगमकधर्माभावेन घटविषयकं पटविषयकं ज्ञानमित्याद्यनुगतव्यवहारानुपपत्तिः । केचित् तु तार्किका अनयैवानुपपत्त्या विषयतामतिरिक्तपदार्थमाहुः । तदप्यसत् अनुभूयमानानामर्थाकारतां विहाय विषयतान्तरकल्पने गौरवादिति । ननु तथापि स्वस्वोपाधिवृत्तिरूपैव वृत्तिचैतन्ययोरन्योन्यविषयतास्तु स्वोपाधिवृत्तित्वेनैवानुगमादलमाकाराख्यप्रतिविम्बद्वयेनेति चेन्न प्रतिविम्बं विना स्वत्वस्यापि दुर्वचत्वात् । स्वत्वं हि स्वभुक्तवृत्तिवासनावत्त्वम् । भोगश्च ज्ञानम् । तथा च विषयतालक्षणस्य विषयसामग्रीघटितत्वेनात्माश्रयः । तस्माच्चैतन्यचैतन्ययोरन्योन्यविषयतारूपोऽन्योन्यस्मिन्नन्योन्यप्रतिविम्बः सिद्धः । अधिकन्तु योगवार्त्तिके द्रष्टव्यमिति दिक् । अत्रायं प्रमात्रादिविभागः । 'प्रमाता चेतनः शुद्धः प्रमाणं वृत्तिरेव नः । प्रमार्थाकारवृत्तीनां चेतने प्रतिविम्बनम् । प्रतिविम्बितवृत्तीनां विषयो मेय उच्यते । साक्षाद्दर्शनरूपं च साक्षित्वं वक्ष्यति स्वयम् । अतः स्यात् कारणाभावाद्दृशेः साक्ष्येव चेतनः । विप्रस्यादेः सर्वसाक्षित्वं गौणं लिङ्गाद्यभावतः ।" "ज्ञानमस्ति समस्तस्य जन्तोर्विषयगोचरे" देवीमा० । "कषाये कर्म्मभिः पक्वे ततो ज्ञानं प्रजायते"वेदा०।२४परब्रह्मणि च 'सत्यं ज्ञानमनन्तं ब्रह्म"श्रुतिः। २५विष्णौ "सर्वज्ञः ज्ञानमुत्तमम्"विष्णु स० ।

**ज्ञानकृत** त्रि० ज्ञानेन कृतम् । बुद्धिपूर्वकृते तत्र पापस्य बुद्धिपूर्वकृतत्वे विशेषः प्रा० त० उक्तो यथा "गोवधस्य बुद्धिपूर्वकत्वं तदा भवति यदि गां ज्ञात्वा एनां हन्मीतीच्छया हन्ति तदा कामनाद्वारैव ज्ञानस्य प्रवृत्त्यङ्गत्वात्" "इत्यञ्च गवयादिभ्रमेण योगोवधस्तत्र गोवधस्य न ज्ञानकृतत्वम् गोत्वेनाज्ञानात् यदि गोत्वेन ज्ञानञ्चप्यन्योद्देशेन क्षिप्तनाराचादिना गां हन्ति तदापि न ज्ञानकृतत्वं तद्विषयत्वेनेच्छारूपद्वाराभावात्" ।

**ज्ञानगम्य** पु० ज्ञानेनैव गम्यः न कर्मणा न वा ज्ञानकर्मभ्याम् । ज्ञानमात्रगम्ये परमेश्वरे । "उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः" विष्णुस० ।

**ज्ञानचक्षुस्** पु० ज्ञानं ज्ञानसाधनं वेदादिशास्त्रं चक्षुरिवास्य। शास्त्रावबोधेन सर्वार्थप्रकाशयुक्ते कर्म०। विदुषि२शास्त्ररूपे नेत्रे च "सर्वं तु समवेक्ष्येदं निखिलं ज्ञानचक्षुषा"मनुः।

**ज्ञानदग्धदेह** पु०ज्ञानेनैव दग्धो देहोऽस्य । चतुर्थाश्रमिणि भिक्षौ तस्य ज्ञानेनैव जीवतोऽपि दग्धदेहत्वात् मृतस्य न दाहान्तरं कार्य्यं यथोक्तं शौनकेन "सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च । न तस्य दहनं कार्य्यं नैव पिण्डोदकक्रिया। निदध्यात् प्रणवेनैव बिले भिक्षोः कलेवरम् । प्रोक्षणं खननञ्चापि सर्वं तेनैव कारयेत्" । [ त्रिका०।

**ज्ञानदर्पण** पु० ज्ञानं दर्पण इवास्य । पूर्वजिने मञ्जुघोषे

**ज्ञानद** त्रि० ज्ञानं ददाति दा–क । १गुरौ २उपदेष्टरि च ३सरस्वत्यां स्त्री ।

**ज्ञानदातृ** त्रि० ज्ञानस्य दाता । उपदेष्टरि गुरौ "पितुर्दश गुणा माता गौरवेणेति निश्चितम् । मातुः शतगुणः पूज्यो ज्ञानदाता गुरुः प्रभो !"तन्त्र० । २ज्ञानस्य दायकमात्रे त्रि० स्त्रियां ङीप् ।

**ज्ञाननिष्ठ** त्रि०ज्ञाने निष्ठाऽस्य । ज्ञानसाधनयुते तत्त्वविदुषि ।

**ज्ञानपति** पु० ६त० । ज्ञानस्योपदेष्टृत्वात् स्वामिनि गुरौ २परमेश्वरे च । ततः अश्वपत्या० अपत्यादौ अण् । ज्ञानपत तदपत्ये पुंस्त्री स्त्रियां ङीप् ।

**ज्ञानपावन** न० ज्ञानमिव पावनम् । तीर्थभेदे "ततो गच्छेत राजेन्द्र ! ज्ञानपावनमुत्तमम् । अग्निष्टोममवाप्नोति मुनिलोकञ्च गच्छति" भा० व० ८४ अ० ।

**ज्ञानमय** पु० ज्ञान+मयट् ।१परमेश्वरे परब्रह्मणि २शिवे च ।

**ज्ञानमुद्रा** स्त्री"तर्ज्जन्यङ्गुष्ठकौ सक्तावग्रतो विन्यसेद्धृदि । वामहस्ताम्बुजं वामजानुमूर्द्धनि विन्यसेत् । ज्ञानमुद्रा भवेदेषा रामचन्द्रस्य प्रेयसी" तन्त्रसारोक्ते रामार्चनाङ्गे मुद्राभेदे ।

**ज्ञानयज्ञ** पु॰ ज्ञानं यज्ञ इवास्य। तत्त्वज्ञे। "ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति" इति वाक्येन तत्त्वज्ञानस्य यज्ञरूपत्वमुक्तम्। अस्यार्थः। अपरे कर्मयोगिनो विलक्षणा संन्यासिनः ब्रह्म तत्पदार्थः अग्निरिव होमाधारत्वात् तस्मिन् यज्ञं प्रत्यगात्मानं त्वंपदार्थं यज्ञेनात्मनैव उपजुह्वति त्वंपदार्थाभेदेनैव तत्स्वरूपतया पश्यन्तीत्यर्थः। "श्रेयान् द्रव्यमयाद्यज्ञात् ज्ञानयज्ञः परन्तप" गीता। "अपापवतां नृणां ज्ञानयज्ञो न रोचते। प्रत्युत ज्ञानयज्ञे तु प्रद्वेषो जायते स्वतः" शब्दार्थचि॰ धृतवाक्यम्।

**ज्ञानयोग** पु॰युज्यते ब्रह्मणाऽनेन युज—करणे घञ् ज्ञानमेव योगः। ब्रह्मप्राप्तिसाधने ज्ञानार्थनिष्ठाभेदे। "लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ!। ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्" गीता।

**ज्ञानलक्षणा** स्त्री ज्ञानं ज्ञानभेदो लक्षणं स्वरूपं यस्याः। न्यायमते अलौकिकप्रत्यक्षसाधने सन्निकर्षभेदे उपनयशब्दे १२१५ पृ॰ विवृतिः। मथुरानाथेन तु अन्यथैव सामान्यलक्षणाज्ञानलक्षणयोर्भेदो दर्शितः यथा

'न च सामान्यप्रकारकज्ञानस्यैव सामान्यलक्षणात्वे ज्ञानलक्षणासामान्यलक्षणयोः कार्य्यकारणभावे को भेदः इति वाच्यं कारणतावच्छेदकभेदेन कार्य्यतावच्छेदकभेदेन च भेदात्। सामान्यलक्षणायाः कार्य्यकारणभावस्तु तत्तत्सम्बन्धावच्छिन्नघटत्वादिप्रकारिताशालिज्ञानत्वेन, स्वरूपतस्तत्सम्बन्धावच्छिन्नघटत्वादिप्रकारिताकतत्तत्सम्बन्धावच्छिन्नघटत्वाद्याश्रयताशालिमुख्यविशेष्यकप्रत्यक्षत्वेन, यावत्त्वस्य कार्य्यतावच्छेदकाघटकत्वेऽपि विनिगमनाविरहेण सकलघटभानम्। समवायसम्बन्धेन घटत्वप्रकारकज्ञानानन्तरं कालिकादिसम्बन्धेन घटत्वादिप्रकारकनिखिलघटविषयकप्रत्यक्षस्य समवायसम्बन्धेन घटत्वप्रकारेण घटत्ववतः कालादेः प्रत्यक्षस्य च वारणाय सम्बन्धान्तर्भावः। घटत्वादिप्रकारकज्ञानं विनापि द्रव्यत्वादिसामान्यलक्षणया जायमाने द्रव्यत्वादिप्रकारकघटादिमुख्यविशेष्यकप्रत्यक्षे व्यभिचारवारणाय कार्य्यतावच्छेदके घटत्वादिप्रकारिताकेति। प्रकारित्वञ्चालौकिकं ग्राह्यं तेन घटत्वादिप्रकारकज्ञानं विनापि द्रव्यत्वादिविशिष्टबुद्ध्यात्मकघटत्वादिनिर्विकल्पकोत्तरं द्रव्यत्वसामान्यलक्षणया जायमाने यावद्घटविशेष्यकप्रत्यक्षेऽलौकिकसन्निकर्षमर्य्यादया घटत्वप्रकारके न व्यभिचारः। न च तथापि कालिकादिसम्बन्धेन स्वरूपतो घटत्वादिप्रकारकबुद्ध्यात्मकगवादिविशेष्यकसमवायसंसर्गकद्रव्यत्वप्रकारकस्मरणोत्तरं द्रव्यत्वसामान्यलक्षणया जायमाने यावद्घटमुख्यविशेष्यकप्रत्यक्षे उपनयमर्य्यादया समवायसम्बन्धेन स्वरूपतो घटत्वप्रकारके व्यभिचार इति वाच्यम्। यथोक्तकार्य्यकारणभावस्यैव बाधकत्वेन तत्र समवायसम्बन्धेन घटत्वस्याप्रकारत्वात्। घटत्वप्रकारकज्ञानं विनाऽपि जातित्वरूपेण गोत्वादिजात्यन्तरप्रकारकज्ञानाद् जायमाने जातित्वरूपेण घटत्वादिनिखिलजातिप्रकारकनिखिलजात्याश्रयप्रत्यक्षे व्यभिचारवारणाय स्वरूपत इति घटत्वादिप्रकारिताविशेषणं, यथोक्तकार्यकारणभावस्यैव बाधकत्वेन तत्र कथञ्चिदपि स्वरूपतो घटत्वादेरप्रकारत्वात्। कालिकसम्बन्धेन स्वरूपतो घटत्वादिप्रकारकस्मरणादितो जायमाने विशेष्ये विशेषणमिति रीत्या समवायसम्बन्धेन घटादिप्रकारकघटवदित्याद्युपनीतभाने व्यभिचारवारणाय मुख्यविशेष्यत्वप्रवेशः। उपनीतभाने च घटो न मुख्यविशेष्यः वह्निरिन्द्रियस्यले उपनीतं विशेषणतया भासते इति नियमात्। मुख्यविशेष्यत्वमप्यलौकिकं ग्राह्यं तेन कालिकसम्बन्धेन स्वरूपतो घटत्वादिस्मरणलौकिकसन्निकर्षाभ्यां जायमाने लौकिकालौकिकोभयघटत्वप्रकारिताशाल्ययं घट इति घटमुख्यविशेष्यकलौकिकप्रत्यक्षे न व्यभिचारः। अथ तथापि कालिकसम्बन्धेन स्वरूपतो घटत्वप्रकारकस्मरणाज्जायमाने समवायसम्बन्धेन घटत्वप्रकारकमुख्यविशेष्यकमानसोपनीतभाने व्यभिचारो मानसोपनीतं विशेषणतयैव भासत इति नियमाभावात् तत्र कालिकसम्बन्धेन घटत्वप्रकारेण प्रत्यक्षं न तु समवायसम्बन्धेन घटत्वप्रकारकमित्युक्तावपि वह्निरिति घटादिस्मरणोत्तरं जायमाने परम्परासम्बन्धेन घटत्वप्रकारकमानसोपनीतभाने व्यभिचारो दुर्वारः तदनभ्युपगमे तादृशस्मरणोत्तरं निखिलघटाश्रयसाक्षात्कारानुपपत्तेः द्रव्यत्वप्रकारकज्ञानस्याऽप्रत्यासत्तित्वात् इति चेन्न लाघवात् यथोक्तरूपेण कार्यकारणभावकल्पने यथोक्तमानसे घटादिर्न मुख्यविशेष्यः किन्तु चक्रव्यूहवत् घटत्वपुटितो भवन्नेव भासत इत्येव कल्प्यते यथोक्तकार्य्यकारणभावस्यैव बाधकत्वात् तत्तदुपनीतभानान्यत्वप्रवेशे गौरवात् सर्वत्रैव मानसोपनीतभाने उपनीतं अवश्यं मुख्यविशेष्यतया भासते इति नियमाभावात्। असति बाधक एव मानसोपनीतस्य प्रकारत्वविशेष्यत्वलक्षणद्विविधविषयत्वाभ्युपगमात्। एवं स्थाणुर्वा दण्डपुरुषोभयविषयकसमूहालम्बनस्मरणानन्तरं जा-

यमाने दण्डप्रकारकदण्डाश्रयप्रत्यक्षेऽपि पुरुषो न दण्डांशे मुख्यविशेषतया भासते अपि तु चक्रव्यूहवत् दण्डपुटितः पुरुषः पुरुषपुटितश्च दण्डो भासते इति कल्प्यते। न च तथापि योगजधर्माधीनविशिष्टज्ञानं प्रति विशेषणज्ञानस्याहेतुत्वनये सामान्यज्ञानं विनाऽपि जायमाने सामान्यप्रकारकसामान्याश्रयमुख्यविशेष्यकप्रत्यक्षे व्यभिचारः। योगजविशिष्टज्ञानं प्रति विशेषणज्ञानस्य हेतुत्वनयेऽपि योगजधर्मेण सामान्यतदाश्रये उभयविषयकनिर्विकल्पकं जनयित्वा जनिते सामान्यप्रकारकसामान्याश्रयमुख्यविशेष्यकप्रत्यक्षे व्यभिचार इति वाच्यं योगजधर्मजन्यतावच्छेदकतज्जात्यवच्छिन्नान्यत्वेन प्रत्यक्षविशेषणात्। तादृशयोगजज्ञाने सामान्याश्रयमुख्यविशेष्यतया भाने मानाभावाच्च। अपि च चक्रव्यूहवत् स्वप्रकारीभूतसामान्ये प्रकारीभूयैव भासते लाघवात्तथैव कल्पनात्। अत एव कालिकादिसम्बन्धेन स्वरूपतो घटत्वस्मरणानन्तरं विशेष्ये विशेषणमिति रीत्या कालिकादिसम्बन्धेनैव घटत्वप्रकारकं घटवदित्याकारकोपनीतभानं जायते न तु समवायसम्बन्धेन घटत्वप्रकारकमित्युक्तावेव व्यभिचारवारणसम्भवात् किं ज्ञानादिसामान्यलक्षणायाः कार्यतावच्छेदके स्वरूपतः प्रकारताघटितमुख्यविशेष्यत्वप्रवेशेन। न च तथाप्यत्र घटत्वमिति घटत्वविशेष्यकस्मरणोत्तरं जायमाने विशेष्ये विशेषणमिति रीत्या घटवदिदमित्याद्युपनीतभाने व्यभिचारवारणाय तदवश्यं निवेशनीयमिति वाच्यं स्वरूपतो घटत्वविशिष्टबुद्धिं प्रति स्वरूपतो विशेषणीभूतघटत्वविषयकज्ञानस्य हेतुतया तादृशस्मरणोत्तरं तादृशोपनीतभानासम्भवात् घटत्वत्वघटकतयैव स्वरूपतो घटत्वज्ञानाभ्युपगमेन व्यभिचारस्यापि विरहादित्यस्तत्कृतत्वेपपत्तोऽपि निरस्तः। घटवदिति स्मरणोत्तरं जायमाने परम्परासम्बन्धेन घटत्वप्रकारकमानसोपनीतभाने यथोक्तरीत्या योगजधर्मजन्ये घटत्वप्रकारकघटविशेष्यकप्रत्यक्षे च व्यभिचारवारणाय तत्प्रवेशस्यावश्यकत्वात्। एतेनाभावत्वाद्यखण्डोपाधिरूपसामान्यलक्षणाया अपि कार्यकारणभावो व्याख्यातः जात्यखण्डोपाध्यतिरिक्तपदार्थज्ञानञ्च न प्रत्यासत्तिरिति सामान्यपदार्थनिर्वचनावसर एव प्रतिपादितं नन्वेवंरूपेण कार्यकारणभावे जातित्वरूपेणैकजातिमात्रप्रकारकज्ञानानन्तरं जातित्वावच्छिन्नजातिप्रकारकनिखिलजात्या एव प्रत्यक्षं कथं स्याज्जात्यन्तराश्रयस्य ज्ञानप्रकारीभूतजातिव्यक्त्याश्रयत्वाभावात् स्वरूपतो घटत्वादिप्रकारकत्वस्य कार्यतावच्छेदकत्वाच्चेति चेन्न जातित्वरूपेण जातिप्रकारकलौकिकप्रत्यक्षदशायामनन्तो निर्धर्मितावच्छेदकस्यापि परम्परासम्बन्धेन जातित्वघटकनित्यत्वादिघटकीभूताभावत्वाद्यखण्डोपाधिप्रकारकज्ञानस्यावश्यकत्वात् तत एव सामान्यज्ञानात् जातित्वावच्छिन्नजातिमत्त्वरूपेण निखिलजात्याश्रयस्य साक्षात्कारः जात्यन्तराश्रयस्यापि परम्परासम्बन्धेन तदाश्रयत्वात्। यत्र जातित्वरूपेण यत्किञ्चित् जातिप्रकारकशाब्दस्मृत्यादिर्धीस्तत्रापि मध्ये परम्परासम्बन्धेन ध्वंसत्वादिप्रकारकमानसोपनीतभानानन्तरमेव जातिमतः सर्वस्य प्रत्यक्षाभ्युपगमात् क्षणविलम्बे क्षतिविरहात्। न च परम्परासम्बन्धेन ध्वंसत्वादिकज्ञानस्यैव तत्प्रत्यासत्तित्वे ध्वंसत्ववदित्येव तज्ज्ञानं स्यात् न तु जातिमदिति सामान्यप्रकारज्ञानस्य मुख्यविशेष्ये सामान्यप्रकारकज्ञानकत्वनियमादिति वाच्यं विशेषणज्ञानार्थं जातित्वघटकसामान्यलक्षणायाः मध्ये सकलजातिविशेष्यकज्ञानस्यावश्यकत्वात् ज्ञानलक्षणयैव जातिमदिति फलस्यापि सम्भवात् द्विविधविषयस्यैवेष्टत्वात्। एवं तद्व्यक्तित्वादिरूपेण घटत्वादिज्ञानानन्तरं जायमाने तत्तद्व्यक्तित्वरूपेण घटत्वादिप्रकारकतदाश्रयप्रत्यक्षेऽपि परम्परासम्बन्धेन तद्व्यक्तित्वप्रकारकज्ञानमेव प्रत्यासत्तिरतो घटत्वादिसामान्यलक्षणायाः कार्यदेशि तदसंग्रहो न दोषाय इति भट्टाचार्यानुयायिनः"।

"ज्ञानलक्षणायाः कारणतावच्छेदकन्तु सामान्यतः संसर्गावच्छिन्नघटत्वादिविषयताशालिज्ञानत्वं घटत्वादिप्रकारकज्ञानादिव घटत्वादिविषयकज्ञानादपि घटत्वादिप्रकारकोपनीतभानोदयात्। विनश्यदवस्थलौकिकसन्निकर्षजन्यघटघटत्वादिनिर्विकल्पकानन्तरमपि घटत्वादिप्रकारकप्रत्यक्षापत्तिवारणाय संसर्गावच्छिन्नेति विषयताविशेषणम्। केचित्तु ज्ञानलक्षणायाः सप्रकारकघटघटत्वादिज्ञानत्वं कारणतावच्छेदकं न चैवं विनश्यदवस्थलौकिकसन्निकर्षजन्यद्रव्यत्वादिविशिष्टबुद्ध्यात्मकघटत्वादिनिर्विकल्पकादपि प्रत्यक्षापत्तिरितिवाच्यम् इष्टत्वात् सर्वांशे निर्विकल्पकस्यैव प्रत्यासत्तित्वानभ्युपगमादित्याहुस्तदसत् तथापि सर्वांशे निर्विकल्पकादपि इष्टापत्तेः सुकरतया कारणतावच्छेदके सप्रकारकत्वस्य उपादानस्य वैयर्थ्यात्। सविशेष्यकत्वसंसर्गकविषयतताशालित्वमादाय विनिगमनाविरहेण कार्य्यकारणभावस्यापत्तेः। ज्ञानलक्षणायाः कार्य्यतावच्छेद-

किन्तु घटत्वादिप्रकारकप्रत्यक्षत्वं घटत्वादिज्ञानं विनापि जायमाने सामान्यलक्षणाजन्यघटादिमुख्यविशेष्यकप्रत्यक्षे व्यभिचारवारणाय विषयत्वमपहाय प्रकारिताप्रवेशः । प्रकारिता चालौकिकी ग्राह्या तेन निर्विकल्पकजन्यप्राथमिकतद्विशिष्टलौकिकप्रत्यक्षे न व्यभिचारः। न चैवं ज्ञानलक्षणासन्निकर्षो लौकिकसन्निकर्षद्वयमेव यत्र वर्त्तते तत्र कीदृक् ज्ञानं स्यादिति वाच्यं तत्र लौकिकालौकिकोभयतत्प्रकारिताकज्ञानस्यैव उत्पत्तेः विषयतायाः साङ्कर्य्यस्यादोषत्वात् । न च तत्प्रकारकज्ञानं विनापि जायमाने योगजधर्मजतत्प्रकारकप्रत्यक्षे व्यभिचार इति वाच्यं योगजधर्मजन्यतदवच्छेदकतज्जात्यवच्छिन्नान्यत्वेन प्रत्यक्षविशेषणात् तत्प्रकारकज्ञानं विना योगजधर्मेणापि तत्प्रकारकप्रत्यक्षजननात् योगजधर्मस्य निर्विकल्पकाजनकत्वात् । न च चक्षुःसंयोगजन्यनिर्विकल्पकसहकारेण योगजधर्मजनिते तत्प्रकारकप्रत्यक्षे व्यभिचार इति वाच्यम् तत्र निर्विकल्पकजनकीभूतचक्षुःसंयोगादिसत्त्वे तत्प्रकारकलौकिकप्रत्यक्षस्यैव उत्पत्तेः अलौकिकप्रत्यक्षजनकयोगजधर्मसत्त्वेऽपि यथोक्तकार्य्यकारणभावस्यैव बाधकत्वेनालौकिकप्रत्यक्षस्यानुत्पत्तेः । न चैवं निर्विकल्पकोत्पत्तिकाले चक्षुःसंयोगादिनाशे तन्निर्विकल्पकसहकारेण योगजधर्म्मात्तत्प्रकारकसाक्षात्कारो न स्यादिति वाच्यम् इष्टापत्तेः । न चैवं तत्प्रकारकप्रत्यक्ष एव तज्ज्ञानस्य हेतुतया इदं रजतमिति शुक्तिविशेष्यकमानसभ्रमे शुक्तिज्ञानस्याहेतुतया शुक्तिज्ञानं विनापि तादृशभ्रमापत्तिरिति वाच्यं इदं रजतमिति शुक्तिविशेष्यकमानसभ्रमस्यापि शुक्तिज्ञानात्मकशुक्तिविशिष्टधीकारणसत्त्वेन यत्र कुत्रचिद्धर्मिणि शुक्तिप्रकारकत्वनियमात् । शुक्तिज्ञानविरहस्थले शुक्तिप्रकारकज्ञानसामान्यकारणविरहादेव तदभावात् विशेषसामग्रीसहिताया एव सामान्यसामग्र्याः फलोपधायकत्वात् । न चेदं रजतमिति शुक्तिविशेष्यकमानसभ्रमस्य न शुक्तिप्रकारकत्वनियमः शुक्तिप्रकारकज्ञानप्रतिबन्धकदोषसत्त्वे तत्र तस्याः योगाप्रकारत्वादिति वाच्यं शुक्तिमुख्यविशेष्यकतादृशमानसभ्रमस्थले तादृशदोषे मानाभावात् लाघवाद्यथोक्तरूपेण ज्ञानलक्षणायाः कार्य्यकारणभावकल्पने फलबलेन तथैव कल्पनात् । न चैवं मानसोपनीतभाने उपनीतस्य मुख्यविशेष्यतया भाने मानाभावः । मुख्यविशेष्यकत्वस्य कार्य्यतानवच्छेदकतया सामग्र्यास्तत्र मानत्वासम्भवात् इति वाच्यं मुख्यविशेष्यत्वस्य कारणानियम्यतया बाधकासत्त्व एव मुख्यविशेष्यतया भानसम्भवात्, न चैवं मानसोपनीतभानवत् बहिरिन्द्रियजोपनीतभानेऽप्युपनीतस्य प्रकारत्वमुख्यविशेष्यत्वलक्षणद्विविधविषयतापत्तिरिति वाच्यं सामान्यलक्षणालौकिकसन्निकर्षजन्यातिरिक्तस्य बहिरिन्द्रियजतत्तन्मुख्यविशेष्यकप्रत्यक्षस्यानुभवासिद्धतया अलीकतया यावद्विशेषसामग्रीबाधादेव तद्बाधात् मानसस्य तत्तदतिरिक्तस्यापि इदं रजतमित्याद्युपनीतविशेष्यकभ्रमस्य उपनीतशुक्त्यादिमुख्यविशेष्यकत्वमनुभवसिद्धमतो नालीकत्वं न च तथापि घटघटत्वादिनिर्विकल्पकोत्तरं जायमानेऽयं घट इत्यादिविशिष्टप्रत्यक्षे घटत्वादेर्मुख्यविशेष्यत्वापत्तिः लौकिकसन्निकर्षरूपविशेषसामग्रीसत्त्वादिति वाच्यम् तथाप्यसतिबाधके घटाद्यंशे घटत्वादेः प्रकारत्ववन्मुख्यविशेष्यत्वस्यापीष्टत्वादिति । केचित्तु संसर्गावच्छिन्नतद्विषयताशालिज्ञानत्वेन कारणता योगजधर्म्माजन्यसामान्यलक्षणाप्रत्यासत्त्यजन्यतद्विषयकप्रत्यक्षत्वेन कार्य्यता तद्विषयता । चालौकिकी ग्राह्या तेन तल्लौकिकप्रत्यक्षे न व्यभिचारः। एवञ्च तद्विषयकप्रत्यक्षत्वमात्रस्य कार्य्यतावच्छेदकतया इदं रजतमिति शुक्तिमुख्यविशेष्यकमानसभ्रमोऽपि न शुक्तिज्ञानं विना बहिरिन्द्रियजोपनीतभाने उपनीतस्य मुख्यविशेष्यत्वनिरासश्चोक्तक्रमेणेत्याहुरिति संक्षेपः ।”

मीमांसकवेदान्तिभिस्तु अस्याः प्रत्यासत्तित्वं नाङ्गीकृतम् । यथोक्तं वेदा०प०। “न च ज्ञानं प्रत्यासत्तिः ज्ञानस्य प्रत्यासत्तित्वे अनुमानमात्रोच्छेदप्रसङ्गः” इति । अस्यायमाशयः वह्निव्याप्यधूमवान् पर्वत इति परामर्शात्मकज्ञानस्य अनुमितिहेतुतायाः सर्वैः स्वीकारात् तज्ज्ञानस्य च वह्निविषयकत्वेन तदुत्तरं जायमानं वह्निमान् पर्वत इति ज्ञानमलौकिकप्रत्यक्षमेव स्यान्नानुमितिः न च समानविषयस्थले अनुमितिसामग्र्याः अलौकिकप्रत्यक्षसामग्र्याः प्रतिबन्धकत्वेन नालौकिकप्रत्यक्षमपि तु अनुमितिर्भविष्यतीति चेन्न तादृशप्रतिबध्यप्रतिबन्धकभावकल्पनस्याप्रामाणिकत्वात् । अतएव इदं रजतमिति ज्ञानमनिर्वचनीयरजतविषयकं न देशान्तरस्थानुभूतरजतविषयकमुपनयमर्य्यादया ज्ञानमिति स्थितम् ।

**ज्ञानवापी** स्त्री काशीस्थे वापीरूपे तीर्थभेदे तदाविर्भावादिकथा काशी० ३३ अ० ।

“घटोद्भव !, महाप्राज्ञ ! शृणु पापापनोदिनीम् ।

ज्ञानवाप्याः समुत्पत्तिं कथ्यमानां मयाऽधुना । अनादिसिद्धे संसारे पुरा देवयुगे मुने ! । प्राप्तः कुतश्चिदीशानश्चरन् स्वैरमितस्ततः । न वर्षन्ति यदाऽभ्राणि न प्रावर्त्तन्त निम्नगाः । जलाभिलाषो न यदा स्नानपानादिकर्म्मणि । क्षीरस्वाद्दूदयोरेव यदासीज्जलदर्शनम् । पृथिव्यां नरसञ्चारे वर्त्तमाने क्वचित् क्वचित् । निर्वाणकमलक्षेत्रं श्रीमदानन्दकाननम् । महाश्मशानं सर्वेषां वीजानां परमूषरम् । महाशयनसुप्तानां जन्तूनां प्रतिबोधकम् । संसारसागरावर्त्तपतज्जन्तुतरण्डकम् । यातायातातिसंखिन्नजन्तुविश्राममण्डपम् । अनेकजन्मगुणितकर्मसूत्रच्छिदक्षरम् । सच्चिदानन्दनिलयं परं ब्रह्म रसायनम् । सुखसन्तानजनकं मोक्षसाधनसिद्धिदम् । प्रविश्य क्षेत्रमेतत् स ईशानो जटिलस्तदा । लसत्त्रिशूलविमलरश्मिजालसमाकुलः । आलुलोके महालिङ्गं वैकुण्ठपरमेष्ठिनोः । महाहमहमिकायां प्रादुरास यदादितः । ज्योतिर्मयीभिर्मालाभिः परितः परिवेष्टितम् । वृन्दैर्वृन्दारकर्षीणां गणानाञ्च निरन्तरम् । सिद्धानां योगिनां स्तोमैरर्च्च्यमानं निरन्तरम् । गीयमानञ्च गन्धर्वैः स्तूयमानञ्च चारणैः । अङ्गहारैरप्सरोभिः सेव्यमानमनेकधा । नीराज्यमानं सततं नागीभिर्मणिदीपकैः । विद्याधरीकिन्नरीभिस्त्रिकालं कृतमण्डनम् । अमरीचमरीराजिवीज्यमानमितस्ततः । तस्येशानस्य तल्लिङ्गं दृष्ट्वेच्छा ह्यभवत्तदा । स्नपयामि महालिङ्गं कलसैः शीतलैर्जलैः । च खान च त्रिशूलेन दक्षिणाशोपकण्ठतः । कुण्डं प्रचण्डवेगेन रुद्रो रुद्रवपुर्धरः । पृथिव्यावरणाम्भांसि निष्क्रान्तानि तदा मुने ! । भूप्रमाणाद्दशगुणैर्यैरियं वसुधा वृता । तैर्जलैः स्नपयाञ्चक्रे दुष्पृष्टैरन्यदेहिभिः । तुषारैर्जाड्यविधुरैर्जनपङ्कौघहारिभिः । सन्मनोभिरिवात्यच्छैरनच्छैर्व्योमवर्त्मवत् । ज्योत्स्नावदुज्ज्वलच्छायैः पावनैः शम्भुनामवत् । पीयूषवत् स्वादुतरैः सुखस्पर्शैर्गवाङ्गवत् । निष्पापधीरकुम्भीरैस्तरलैः पापिशर्म्मवत् । विजिताब्जमहागन्धैः पाटलामोदमोदिभिः । अदृष्टपूर्वलोकानां मनोनयनहारिभिः । अज्ञानतापसन्तप्तप्राणिप्राणैकरक्षिभिः । पञ्चामृतानां कलसैः स्नपनातिफलप्रदैः । अश्रोपसर्गिहृदयलिङ्गलितवहेतुभिः । अज्ञानतिमिरार्कामैर्ज्ञानदाननिदानकैः । विश्वभर्त्तुरुमास्पर्शसुखातिसुखकारिभिः ।

महावभृथसुस्नातमहाशुद्धिविधायिभिः । सहस्रधारैः कलसैः स ईशानो घटोद्भव ! । सहस्रकृत्वः स्नपयामास संहृष्टमानसः । ततः प्रसन्नो भगवान् विश्वात्मा विश्वलोचनः । तमुवाच तदेशानं रुद्रं रुद्रवपुर्धरम् । तव प्रसन्नोऽस्मीशान ! कर्मणानेन सुव्रत ! । गुरुणानन्यपूर्वेण ममातिप्रीतिकारिणा । ततस्त्वं जटिलेशान वरं ब्रूहि तपोधन ! । अदेयं न तवास्त्यत्र महोद्यमपरायण । ईशान उवाच । यदि प्रसन्नो देवेश ! वरयोग्योऽस्म्यहं यदि । तदेतदतुलं तीर्थं तव नाम्नास्तु शङ्कर । श्रीविश्वेश्वर उवाच । त्रैलोक्यां यानि तीर्थानि भूर्भुवःस्वःस्थितान्यपि । तेभ्योऽखिलेभ्यस्तीर्थेभ्यः शिवतीर्थमिदं परम् । शिवो ज्ञानमितिब्रूयुः शिवशब्दार्थचिन्तकाः । तच्च ज्ञानं द्रवीभूतमिह मे महिमोदयात् । अतो ज्ञानोदनामैतत्तीर्थं त्रैलोक्यविश्रुतम् । अस्य दर्शनमात्रेण सर्वपापैः प्रमुच्यते । ज्ञानोदतीर्थसंस्पर्शादश्वमेधफलं लभेत् । स्पर्शनाचमनाभ्याञ्च राजसूयाश्वमेधयोः । फल्गुतीर्थे नरः स्नात्वा सन्तर्प्य च पितामहान् । यत् फलं समवाप्नोति तदत्र श्राद्धकर्मणा । गुरुपुष्यसिताष्टम्यां व्यतीपातो यदा भवेत् । तदात्र श्राद्धकरणाद्गयाकोटिफलं भवेत् । यत् फलं समवाप्नोति पितॄन् सन्तर्प्य पुष्करे । तत्फलं कोटिगुणितं ज्ञानतीर्थे तिलोदकैः । सन्निहत्यां कुरुक्षेत्रे तमोग्रस्ते विवस्वति । यत्फलं पिण्डदानेन तज्ज्ञानोदे दिने दिने । पिण्डनिर्वपनं येषां ज्ञानतीर्थे सुतैः कृतम् । मोदन्ते शिवलोके ते यावदाभूतसंप्लवम् । अष्टम्याञ्च चतुर्दश्यामुपवासी नरोत्तमः । प्रातः स्नात्वाऽथ पीत्वाम्भस्त्वन्तर्लिङ्गमयो भवेत् । एकादश्यामुपोष्याथ प्राश्नीयाद् यश्चुलुकत्रयम् । हृदये तस्य जायन्ते त्रीणि लिङ्गान्यसंशयम् । ईशानतीर्थे यः स्नायाद्विशेषात् सोमवासरे । सन्तर्प्य देवर्षिपितॄन् दत्त्वा दानं स्वशक्तितः । ततः समर्च्य श्रीलिङ्गं महासम्भारविस्तरैः । तत्रापि दत्त्वा नानार्थान् कृतकृत्यो भवेन्नरः । उपास्य सन्ध्यां ज्ञानोदे यत् पापं काललोपजम् । क्षणेन तदपाकृत्य ज्ञानवान् जायते नरः । शिवतीर्थमिदं प्रोक्तं ज्ञानतीर्थमिदं शुभम् । तारकाख्यमिदं तीर्थं मोक्षतीर्थमिदं स्मृतम् । स्मरणादपि पापौघो ज्ञानोदे क्षीयते ध्रुवम् । दर्शनात् स्पर्शनात् स्नानात् पानाद्धर्मादिसम्भवः । डाकिनीशाकिनीभूतप्रेतवेतालराक्षसाः । ग्रहकुष्माण्डखेटाङ्गाः

कालत्रयी शशुपदाः। ज्वरापस्मारविस्फोटलतीयकचतुर्थकाः। सर्वे प्रशममायान्ति शिवतीर्थजलोक्षणात्। ज्ञानोदतीर्थपानीयैर्लिङ्गं यः स्नपयेत् सुधीः। सर्वतीर्थोदकैस्तेन ध्रुवं संस्नपितं भवेत्। ज्ञानरूपोऽहमेवात्र द्रवमूर्त्तिं विधाय च। जाड्यविध्वंसनं कुर्य्यां कुर्य्यां ज्ञानोपदेशनम्” “इति दत्त्वा वरान् शम्भुस्तत्रैवान्तरधीयत। कृतकृत्यमिवात्मानं सोऽप्यमंस्त त्रिशूलभृत्। ईशानो जटिलो रुद्रस्तत्पीत्वा परमोदकम्। अवाप्तवान् परं ज्ञानं येन निर्वृतिमाप्तवान्”।

**ज्ञानसाधन** न०६त०। १इन्द्रिये २तत्त्वज्ञानसाधने श्रवणमननिदिध्यासनादौ च।

**ज्ञानापोह** पु०६त०। ज्ञानजसंस्कारनाशजे विस्मरणे।

**ज्ञानाभ्यास** पु० ६त०। १ज्ञानसाधनश्रवणाद्यावृत्तौ “तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम्। एतदेकपरत्वञ्च ज्ञानाभ्यासं विदुर्बुधाः” इत्युक्तलक्षणे २मननादौ च। बोधाभ्यासादयोऽप्यत्र। “सर्गादावेव नोत्पन्नं दृश्यं नास्त्येव तत्सदा। इदं जगदहञ्चेति बोधाभ्यासं विदुः परम्” वेदान्तशा०।

**ज्ञानासन** न० “अथान्यदासनं वक्ष्ये सर्वव्याधिविनाशनम्। योगाभ्यासी भवेत् क्षिप्रं ज्ञानासनप्रसादतः। दक्षपादोरुमूले तु वामपादतलं तथा। दक्षपादतलं दक्षपार्श्वे संयोज्य धारयेत्। एतज्ज्ञानासनं नाम ज्ञानविद्याप्रकाशकम्। निरन्तरं यः करोति तस्य ग्रन्थिः स्रुथा भवेत्” इति रुद्रयामलोक्ते आसनभेदे।

**ज्ञानिन्** त्रि० ज्ञानमस्त्यस्य इनि। १ज्ञानयुक्ते ब्रह्मसाक्षात्कारयुक्ते “चतुर्विधा भजन्ते माम्—आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ!”। “ज्ञानिनामपि सर्वेषां मद्गतेनान्तरात्मना” गीता २बोधयुक्तमात्रे त्रि० “ज्ञानिनो मनुजाः सत्यं किन्तु ते न हि केवलम्। यतो हि ज्ञानिनः सर्वे पशुपक्षिमृगादयः” देवीमा०। ज्ञान+अस्त्यर्थे मतुप् मस्य वः। ज्ञानवदप्यत्रार्थे “बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते” गीता। उभयत्र स्त्रियां ङीप्।

**ज्ञानेन्द्रिय** न० ज्ञायतेऽनेन ज्ञा—करणे ल्युट् ज्ञानसाधनमिन्द्रियम् कर्म०। १ज्ञानसाधने इन्द्रिये श्रोत्रादौ “ज्ञानेन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाश्च नासिका। ज्ञानेन्द्रियाणां विषयाः” शा० ति०। इन्द्रियशब्दे विवृतिः। “एतान्याकाशादीनां सात्त्विकांशेभ्यो व्यस्तेभ्यः पृथक् क्रमेणोत्पद्यन्ते यथोक्तं देवीभागवते। “पञ्चभूतस्थसत्त्वांशैः श्रोत्रादीनां समुद्भवः। ज्ञानेन्द्रियाणां राजेन्द्र! प्रत्येकमिति निश्चितम्”। क्रमशो दिग्वातार्कप्रचेतोऽश्विनो ज्ञानेन्द्रियाणां देवताः। शब्दस्पर्शरूपरसगन्धाश्च क्रमशो ज्ञानेन्द्रियाणां विषयाः।

**ज्ञापक** त्रि० ज्ञा—णिच् ल्यु। बोधके।

**ज्ञापन** न० ज्ञा—णिच्—ल्युट्। बोधने।

**ज्ञीप्सा** स्त्री ज्ञप—सन्—भावे अ। ज्ञातुमिच्छायाम्।

**ज्ञीप्समान** त्रि० ज्ञप—सन्—कर्मणि शानच्। ज्ञातुमिष्यमाणे। “श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः” पा०।

**ज्ञेय** त्रि० ज्ञा—कर्मणि यत्। बोद्धव्ये। यथा व्याकरणादि पाणिन्यादेर्ज्ञेयैकदेशार्थमपि” शा०भा०। २ज्ञातुं योग्ये ब्रह्मणि च। “ज्ञेयं यत् तत् प्रवक्ष्यामि यद् ज्ञात्वाऽमृतमश्नुते। अनादिमत् परं ब्रह्म न सत् तन्नासदुच्यते। सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम्। सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति। सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्। असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च। बहिरन्तश्च भूतानामचरं चरमेव च। सूक्ष्मत्वात् तदविज्ञेयं दूरस्थं चान्तिके च तत्। अविभक्तं विभक्तेषु विभक्तमिव च स्थितम्। भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च। ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते”। “ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य धिष्ठितम्” गीता।

**ज्या** जरायां क्र्या० प० पर० अक० अनिट्। जिनाति अज्यासीत्। जिज्यौ जिज्यतुः। जिनः।

**ज्या** स्त्री ज्या—अङ्। ज्या० यक् नि०। १धनुर्गुणे अमरः तस्य निरन्तराकर्षणेन धनुषो जराकरणात्तथात्वम्। २वसुधायां तस्याः प्रतिक्षणं जीर्यमाणत्वात् तथात्वं ३मातरि स्वप्रसवेन तस्याः वयोहानेस्तथात्वम् मेदि०। गोलक्षेत्रान्तर्गते धनुराकारक्षेत्रस्थकेन्द्रस्थानात् उभयपार्श्वसंलग्ने ४सरलरेखाभेदे। क्रमज्याशब्दे २२०२ पृ० जीवाशब्दे ३१३५ पृ० दृश्यम्। तत्र चतुर्विंशतिसंख्यिकास्तत्र क्रमज्याशब्दे उक्तावशिष्टा उत्क्रमज्यामानसंख्याश्च सू०सि० उक्ता यथा “समयोरुत्क्रमज्यान्तरसप्त का मुनीश्वराः। द्वाटकाद्रूपषड्दस्राः सागरार्थहुताशनाः। खर्तुवेदानवाद्र्यर्थादिङ्नगास्त्र्यर्थकुञ्जराः। नगाम्बरवियच्चन्द्राद्रूपभरणिशङ्कराः। शरार्णवहुताशैकाभुजङ्गाक्षिशरेन्दवः। नवरूपमहीध्रैकागजैकाङ्कनिशाकराः। गुणाश्विरूपनेत्राणि पावकाग्निगुणाश्विनः। वस्वर्णवार्थय-

मन्नाक्षुरकृतं नगाश्विनः । नवाष्टनवनेत्राश्चि पावकैकव-मान्वयः । नगाञ्चिसागरगुणा ऋतुक्रमन्त्यार्द्धपिण्डकाः”

**ज्याघातवारण** न० ज्याया आघातं वारयत्यनेन वारि-करणे ल्युट् । गोधायां ज्याघातवारणार्थे धान्विनां हस्तनिबद्धे चर्मभेदे अमरः । [ त्रि०मेदि० ।

**ज्यानि** स्त्री ज्या–नि । १वयोहानौ २तटिन्याम् ३जीर्णे

**ज्यायस्** त्रि० अतिशयेन प्रशस्यो वृद्धो वा प्रशस्य+वृद्ध+वा ईयसुन् ज्यादेशः ईयसुनि आदेरात्त्वम् । १अतिवृद्धे २जीर्णे ३प्रशस्ते च । “ज्यायान् पृथिव्या ज्यायानन्त-रीक्षाज्ज्यायानेभ्यो लोकेभ्यः” छा०उ० । स्त्रियां ङीप् । “ज्यायसी चेत् कर्मणस्ते मता बुद्धिर्जनार्द्दन !” गीता

**ज्यु** गतौ भ्वा० आत्म० सक० अनिट् । ज्यवते अज्योष्ट जुज्युवे । [ अज्युतत् अज्योतीत् । जुज्योत ।

**ज्युत** दीप्तौ भ्वा० पर० सक० सेट् । ज्योतति इरित् ।

**ज्युत** दीप्तौ भ्वा०आत्म० अक०सेट् । ज्योतते अज्योतिष्ट । जुज्युते । ऋदित् । अजुज्योतत् त । ज्योतिः ।

**ज्येष्ठ** त्रि०अतिशयेन वृद्धः प्रशस्यो वा वृद्ध+प्रशस्य+वा इष्ठन् ज्यादेशः ।१अतिवृद्धे २प्रशस्ये ३अग्रजे भ्रातरि ४अग्रज-भगिन्यां स्त्री ।५अश्विन्यादिनक्षत्रेषु अष्टादशे नक्षत्रे स्त्री तद्रूपादि अश्लेषाशब्दे ४६७ पृ० दृश्यम् । ज्येष्ठानक्षत्र-युक्ता पौर्णमासी यत्र ज्यैष्ठी तस्मिन् मासे पुनरण् संज्ञात्वात् ह्रस्वः । ६ज्येष्ठ ज्यैष्ठमासे मेदि० । गौरा० ङीष् । ७गृहगोधिकायां स्त्री शब्दरत्ना० । तस्याः दिग्भेदे स्वतफलं ति० त० उक्तं यथा “वित्तं ब्रह्मणि कार्यसिद्धिरतुला शक्रे हुताशे भयं याम्यामग्निभयं सुरद्विषि कलिर्लाभः समुद्रालये । वायव्यां वरवस्त्रगन्धसलिलं दिव्याङ्गना चोत्तरे ऐशान्यां मरणं ध्रुवं निगदितं दिग्लक्षणं खञ्जने । ज्येष्ठीरुते लुतेऽप्येवमूचुः केचिच्च कोविदाः” अधिकं गृहगोधिकाशब्दे २६५७पृ०दृश्यम् । ८मध्यमाङ्गुलौ स्त्री हेमच०।९गङ्गायां स्त्री राजनि०तस्याः पार्वत्याः प्रथमं हिमालयाज्जातत्वात् तथात्वम् । १०परिणीते भर्त्तुरधिकस्नेहभाजने नायि-काभेदे रतिमञ्जरी । लक्ष्म्याः प्रथमोत्पन्नायां ज्येष्ठभ-गिन्याम् ११अलक्ष्मीदेव्यां स्त्री । तदुत्पत्त्यादिकथा पद्मपु० उत्त०ख०उक्ता यथा “मां प्रणम्य पुनर्देवा ममन्थुः क्षीर-सागरम् । तस्मिन् प्रमथ्यमाने तु मया देवैश्च भाविनि ! । ज्येष्ठा देवी समुत्पन्ना रक्ताम्बरधरावृता । उत्पन्ना सा-ऽब्रवीद्देवान् किं कर्त्तव्यं भवेति वै । तामब्रुवंस्तदा देवीं सर्वे देवगणा भयम् । येषां गृहान्तरे नित्यं कलहं संप्रवर्त्तते । तत्र स्थानं प्रयच्छामो वासस्तव शुभानने ! । वस मेऽहं कपालास्थिभस्मकेशादिचिह्नितम् । भाषन्ते परुषं नित्यं वसन्त्यनृतवादिनः । सन्ध्याकाले च ये पापाः स्वपन्ति मलचेतसः । तेषां वेश्मनि तिष्ठ दुःखदारिद्र्यदायिनी । कपालकेशभस्मास्थि तुषाङ्गाराणि यत्र तु । तत्र ते वसतिस्थानं भविष्यति न संशयः । अकृत्वा पादयोः शौचं यस्त्वाचामति दुर्मतिः । तं भजस्व सदा देवि ! कलुषेणावृता भयम् । तुषाङ्गार कपालाश्मबालुकायसचर्मभिः । दन्तधावनकर्त्तारो भविष्यन्ति नराधमाः । रमस्व मलिना देवि ! तेषां वेश्मसु नित्यशः । तिलपिष्टञ्च नक्तञ्च कालिङ्गमपि गृञ्जनम् । क्वाकं विड्वराहञ्च बिल्वकोषातकीफलम् । अलाबुं श्रीफलं ये वै खादयन्ति नराधमाः । तेषां गृहे तव स्थानं देवि ! दारिद्र्यदे ! सदा । इत्यादिश्य सुराः सर्वे ते ज्येष्ठां कलिवल्लभाम् । पुनश्च मन्थनं चक्रुः क्षीराब्धिं सुसमाहिताः” । १२नादजातायां ब्रह्मप्रकृति-भूतायां देव्यां स्त्री “रौद्री बिन्दोस्ततो नादाज्ज्येष्ठा बीजादजायत । वामा, ताभ्यः समुत्पन्ना रुद्रब्रह्मरमा-धिपाः” शा० ति० । १३परमेश्वरे पु० “ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः” विष्णुस० । १४प्राणे “प्राणो वा ज्येष्ठश्च श्रेष्ठश्च” छा० उ० । काशीस्थे १५ गौरीभेदे स्त्री ज्येष्ठस्थानशब्दे विवृतिः ।

**ज्येष्ठतात** पु० तातस्य ज्येष्ठः राज० पूर्वनि० । पितुरग्रजे भ्रातरि (जेठा) । [राजनि०,

**ज्येष्ठबला** स्त्री ज्येष्ठं बलं यस्याः । महदेव्यां लतायां

**ज्येष्ठवर्ण** पु० वर्णानां ज्येष्ठः राजद० पूर्वनि० कर्म० वा । ब्राह्मणे तस्य सर्ववर्णश्रेष्ठत्वात् तथात्वं । २श्रेष्ठे वर्णे च । [ स्थानशब्दे विवृतिः ।

**ज्येष्ठवापी** स्त्री काशीस्थज्येष्ठस्थानस्थे वापीभेदे ज्येष्ठ-

**ज्येष्ठश्वश्रू** स्त्री ज्येष्ठा मान्या श्वश्रूरिव संज्ञात्वात् पुंव-द्भावः । पत्न्याः ज्येष्ठभगिन्यां (बड़शाली) हेमच० ।

**ज्येष्ठसामन्** न० नित्यकर्म० । सामभेदे । तच्च साम “मूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आजातम-ग्निम् । कविं सम्राजमतिथिं जनानामासन्नः, पात्रं जनयन्त देवाः” सामार्चि० १प्र० १अ० २द० ५ऋ० । इत्यस्यां गीयमानम् “वामदेव्यं बृहत्साम ज्येष्ठसाम-रथन्तरम् । तथा पुरुषसूक्तं च रुद्रसूक्तं ततः परम् ।

आज्यदोहानि सामानि साम्त्रिकं भारुण्डानि च।
पश्चिमे द्वारपालौ तु पठेतां सामगौ तथा”। इति
दानपारिजातधृतवाक्यम्।

**ज्येष्ठस्थान** न०। काशीस्थे तीर्थभेदे तत्स्थानमाहात्म्यादि
कथा काशीख० ६२ अ०।
“यमनेहसमारभ्य मन्दराद्रौ विनिर्यये। अद्रीन्द्र-
सुतया सार्द्धं रुद्रेणोचेन्द्रगामिना। तं वासरं पुर-
स्कृत्य जग्राह नियमं दृढम्। जैगीषव्यो महामेधाः
कुम्भयोने! महातपाः। विषमेक्षणपादाब्जं समीक्षिष्ये
यदा पुनः। तदाम्बुविप्रुषमपि भक्षयिष्यामि चेत्यहो।
कुतश्चित्कारणायोगादथ वा शम्भुनुग्रहात्। अनश्नन्नपिबन्
योगी जैगीषव्यः स्थितो मुने!। तं शम्भुरेव जानाति
नान्यो जानाति कश्चन। अतएव ततः प्राप्तः प्रथमं
प्रमथाधिपः। ज्येष्ठशुक्लचतुर्दश्यां सोमवारानुराधयोः।
तत्पर्वणि महायात्रा कर्त्तव्या तत्र मानवैः। ज्येष्ठ-
स्थानं ततः काश्यां तदाभूदतिपुण्यदम्। तत्र लिङ्गं
समभवत् स्वयं ज्येष्ठेश्वराभिधम्। तल्लिङ्गदर्शनात्
पुंसां पापं जन्मशतार्ज्जितम्। तमोऽर्कोदयमाप्येव तत्-
क्षणादेव नश्यति। ज्येष्ठवाप्यां नरः स्नात्वा तर्प-
यित्वा पितामहान्। ज्येष्ठेश्वरं समालोक्य न भूयो
जायते भुवि। आविरासीत् स्वयं तत्र ज्येष्ठेश्वरसमीपतः।
सर्वसिद्धिप्रदा गौरी ज्येष्ठा नाम समन्ततः। ज्यैष्ठे
मासि सिताष्टम्यां तत्र कार्य्यो महोत्सवः। रात्रौ
जागरणं कार्य्यं सर्वसम्पत्समृद्धये। ज्येष्ठां गौरीं
नमस्कृत्य ज्येष्ठवापीपरिप्लुता। सौभाग्यभाजनं भूयाद्
योषा सौभाग्यभागपि। निवासं कृतवान् शम्भुस्तस्मिन्
स्थाने यतः स्वयम्। निवासेश इति ख्यातं लिङ्गं
तत्र परं तपः। निवासेश्वरलिङ्गस्य सेवनात् सर्व-
सम्पदः। निवसन्ति गृहे नित्यं नित्यं प्रेति पदं पुनः।
कृत्वा श्राद्धं विधानेन ज्येष्ठस्थाने नरोत्तमः। ज्येष्ठां
तृप्तिं ददात्येव पितृभ्यो मधुसर्पिषा। ज्येष्ठतीर्थेश्वरे
काश्यां दत्त्वा दानानि शक्तितः। ज्येष्ठान् स्वर्गान-
वाप्नोति नरोमोक्षञ्च गच्छति। ज्येष्ठेश्वरोऽर्च्यः प्रथमं
काश्यां श्रेयोऽर्थिभिर्नरैः। ज्येष्ठा गौरी ततोऽभ्यर्च्या
सर्वज्येष्ठसमीप्सुभिः”।
तत्रत्यं ज्योतिःस्वरूपलिङ्गन्तु ज्येष्ठेश्वराभिधं महादेवस्य
नितम्बभूतम् यथोक्तं काशीख० ३२ अ०।
“सर्वेषामपि लिङ्गानां मौलित्वं कृत्तिवाससः। ओङ्का-
रेशः शिखा ज्ञेया लोचनानि त्रिलोचनः। गोकर्ण-
भारभूतेशौ तत्कर्णौ परिकीर्त्तितौ। विश्वेश्वरावि-
मुक्तौ च द्वावेतौ दक्षिणौ करौ। कर्णेशमणिकर्णीशौ
द्वौ करौ दक्षिणेतरौ। कालेश्वरकपर्द्दीशौ चरणा-
वतिनिर्मलौ। ज्येष्ठेश्वरो नितम्बश्च नाभिर्वै मध्यमेश्वरः।
कपर्द्दोऽस्य महादेवः शिरोभूषा श्रुतीश्वरः। चन्द्रेशो
हृदयन्तस्य आत्मा वीरेश्वरः परः। लिङ्गं तस्य तु
केदारः शुक्रं शुक्रेश्वरं विदुः। अन्यानि यानि लि-
ङ्गानि परःकोटिमितानि च। रोमाणि नखलोमानि
वपुषो भूषणान्यपि। यावेतौ दक्षिणौ हस्तौ नित्यं
निर्वाणदौ हि तौ। जन्तूनामभयं दत्त्वा पततां
मोहसागरे”।

**ज्येष्ठामूलीय** पु० ज्येष्ठां मूलं वा नक्षत्रमर्हति पौर्णमा-
स्याम् छ। ज्यैष्ठे मासि तन्मासीयपौर्णमास्यां हि ज्ये-
ष्ठामूलयोरन्यतरस्य योगसम्भवात्तस्य तथात्वम्। यथा च
तस्य तथात्वं तथा कार्त्तिकशब्दे १६४८ पृ० दर्शितम्।

**ज्येष्ठाम्बु** न० नि० कर्म्म०। तण्डुलप्रक्षालने जले वैद्यक०
तस्यातीव श्रेष्ठगुणत्वात्तथात्वम्।

**ज्येष्ठाश्रम** पु० ज्येष्ठ आश्रमो यस्य। “यस्मात् त्रयोऽप्या-
श्रमिणो ज्ञानेनान्नेन चान्वहम्। गृहस्थेनैव धार्य्यन्ते
तस्मात् ज्येष्ठाश्रमो गृही” मनूक्ते १गार्हस्थ्याश्रमयुक्ते
कर्म०। २गृहस्थाश्रमे च “गृहस्थो ब्रह्मचारी च वान-
प्रस्थोऽथ भिक्षुकः। चत्वारश्चाश्रमाः प्रोक्ताः सर्वे
गार्हस्थ्यमूलकाः” इत्युक्तेस्तस्य सर्वाश्रमपोषकत्वेन श्रेष्ठ-
त्वात्तथात्वम्। ततः इनि। गृहस्थाश्रमीत्यर्थ।

**ज्यैष्ठ** पु० ज्यैष्ठी पूर्णिमास्मिन् मासे अण्। ज्येष्ठानक्षत्र-
युक्तयोगार्हपौर्णमासीघटिते दर्शस्मरव्यारब्धे शुक्लप्रतिप-
दादिदर्शान्तरूपे १चान्द्रे मासे “ज्यैष्ठे मासि क्षितिसुत-
दिने जाह्नवी मर्त्यलोके” ति०त०। तथाभूतेऽर्द्धमासा-
त्मके २पक्षे। ज्येष्ठामूलानक्षत्रयोरन्यतरनक्षत्रे पर्वान्त-
काले गुरोरुदयास्तोपलक्षिते ३बार्हस्पत्ये वर्षभेदे च का-
र्त्तिकशब्दे १६४६ पृ० विवृतिः। “ज्यैष्ठे संवत्सरे चैव
ज्यैष्ठमासस्य पूर्णिमा। ज्येष्ठाभेन समायुक्ता महाज्यैष्ठी
प्रकीर्त्तिता” राजमार्त्त०। ज्यैष्ठसंवत्सरश्च। “ज्येष्ठा-
मूलोपगे जीवे वर्षं स्यात् शाक्रदैवतम्” विष्णुधर्मोत्त-
रोक्तः पाद्मः” ति०त०। दर्शस्मरविके सौरे ४मासभेदे च।

**ज्यैष्ठी** स्त्री ज्येष्ठानक्षत्रेण तत्समीपस्थमूलानक्षत्रेण वा
युक्ता पौर्णमासी अण् ङीप्। १ज्येष्ठामूलान्यतरनक्ष-

तरमक्षत्रयुक्तपौर्णमासाम् ज्येष्ठेव स्वार्थे अण् ङीप्। २गृहगोधिकायाञ्च। वल्लीशब्दे दृश्यम्।

ज्यैष्ठिनेय पुंस्त्री ज्येष्ठायाः स्त्रियाः अपत्यम् ढक् इनङ्। ज्येष्ठाया अपत्ये। "ज्येष्ठो ज्यैष्ठिनेयः स्तुवीत"ता० ब्रा०२।१।२। "क्वते कानिष्ठिनेयस्य ज्यैष्ठिनेयो विवासितः" भट्टिः।

ज्यैष्ठ्य न० ज्येष्ठस्य भावः ष्यञ्। १श्रेष्ठत्वे २वयसा अग्रजत्वे च। "विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणान्तु वीर्य्यतः। वैश्यानां धान्यधनतः शूद्राणामेव जन्मतः" मनुः

ज्यो नियमे उपनये व्रतोपदेशे च भ्वा० आत्म०सक० अनिट्। ज्यवते अज्यास्त। जुज्ये।

ज्योक् अव्य०ज्यो–बा० डकुन्। १कालभूयस्त्वे २प्रश्ने ३शीघ्रार्थे ४सम्प्रत्यर्थे शब्दार्थचि०५उज्ज्वलत्वे च "सर्वमायुरेति ज्योग् जीवति महान् प्रजया पशुभिर्भवति" छा० उ० "ज्योगुज्ज्वलं जीवति" भा०।

ज्योतिरात्मन् पु० ज्योतिरात्माऽस्य। सूर्य्यादौ "यथाह्ययं ज्योतिरात्मा विवस्वान्" श्रुतिः।

ज्योतिरादित्य पु० ज्योतिषि सावित्रे मण्डले आदित्यः। परमेश्वरे "आदित्यो ज्योतिरादित्यः" विष्णुस०

ज्योतिरिङ्ग पु० ज्योतिरिव इङ्गति इगि–गतौ अच्। खद्योते शब्दरत्ना०युच्। ज्योतिरिङ्गणोऽप्यत्र अमरः।

ज्योतिर्गणेश्वर पु० ज्योतिर्गणानामीश्वरः। १परमेश्वरे "दक्षः साङ्गः शतानन्दो नन्दिज्योतिर्गणेश्वरः"विष्णु सं०। "तमेव भान्तमनुभाति सर्वम् तस्य भासा सर्वमिदं विभाति" इति श्रुत्या तस्यैव सर्वज्योतिर्गणानामवभासनस्य प्रतिपादनात्तथात्वम्। [ग्रन्थः। ज्योतिःशास्त्रे।

ज्योतिर्ग्रन्थ पु० ज्योतिषां ग्रहनक्षत्रादीनां गत्यादिसाधनं

ज्योतिर्मय त्रि० ज्योतिरात्मकः प्राचुर्य्ये वा मयट्। १ज्योतिरात्मके ज्योतिःस्वरूपे २ज्योतिःप्रचुरे च। "क्षणेन ज्योतिर्मयान् सप्त सस्मार स्मरशासनः" कुमा० "न भौमान्येव धिष्ण्यानि हित्वा ज्योतिर्मयान्यपि" रघुः।

ज्योतिर्विद् पु०ज्योतिषां सूर्य्यादीनां गत्यादिकं वेत्ति विद्–क्विप्। ज्योतिःशास्त्राभिज्ञे। "दद्या ज्योतिर्विदो वैद्या दद्यादुगां काञ्चनं महीम्" याज्ञ०। ज्योतिर्विदाभरणम्।

ज्योतिर्विद्या स्त्री ज्योतिषां सूर्य्यादीनां गत्यादिज्ञानसाधनं विद्या। ज्योतिःशास्त्रे। [१खद्योते त्रिका०।

ज्योतिर्वीज न० ज्योतिषो गगने प्रकाशस्य वीजमिव।

ज्योतिर्लोक पु० ज्योतिषां लोकः आश्रयः। कालचक्रप्रवर्त्तकध्रुवलोके २तदधिपे परमेश्वरे च तल्लोकस्थितिवर्णनं भाग०५।२२ अ०।

"अथ तस्मात् परतस्त्रयोदशलक्षयोजनान्तरतो यत्तद्विष्णोः परमं पदमभिवदन्ति। यत्र महाभागवतो ध्रुव औत्तानपादिरग्निनेन्द्रेण प्रजापतिना कश्यपेन धर्मेण च समकालयुग्भिः सव्यवच्छमानं दक्षिणतः क्रियमाण इदानीमपि कल्पजीविनामाजोव्य उपास्ते तस्य महानुभाव उपवर्णितः। सहि सर्वेषां ज्योतिर्गणानां ग्रहनक्षत्रादीनाम् अनिमिषेणाव्यक्तरंहसा भगवता कालेन भ्राम्यमाणानां स्थाणुरिवावष्टम्भ ईश्वरेण विहितः शश्वदवभासते। यथा मेधीस्तम्भ आक्रमणपशवः संयोजितास्त्रिभिः सवनैर्यथास्थानं मण्डलानि चरन्ति। एवं भगणा ग्रहादय एतस्मिन्नन्तर्वहिर्योगेन कालचक्र आयोजिता ध्रुवमेवावलम्व्य वायुनोदीर्य्यमाणा आकल्पान्तं परितः क्रामन्ति। नभसि यथा मेघाः श्येनादयो वायुवशाः कर्मसारथयः परिवर्त्तन्ते। एवं ज्योतिर्गणाः प्रकृतिपुरुषसंयोगानुगृहीताः कर्मनिर्मितगतयो भुवि न पतन्ति। केचिदेतत् ज्योतिरनीकं शिशुमारसंस्थानेन भगवतो वासुदेवस्य योगधारणायामनुवर्णयन्ति। यस्य पुच्छाग्रेऽवाक्‌शिरसः कुण्डलीभूतदेहस्य ध्रुव उपकल्पितः तस्य लाङ्गूले प्रजापतिरग्निरिन्द्रो धर्म इति। पुच्छमूले धाता विधाता च कट्यां सप्तर्षयः यस्य दक्षिणावर्त्त कुण्डलीभूतशरीरस्य यान्युदगयनानि दक्षिणपार्श्वे नक्षत्राणि उपकल्पयन्ति। दक्षिणानि तु सव्ये यथा शिशुमारस्य कुण्डलाभोगसन्निवेशस्य पार्श्वयोरुभयोरप्यवयवाः समसंख्या भवन्ति। पृष्ठे त्वजवीथी आकाशगङ्गा चोदरतः। पुनर्वसुपुष्यौ दक्षिणवामयोः श्रोण्योरार्द्राश्लेषा च दक्षिणवामयोः पादयोरभिजिदुत्तराषाढ़े दक्षिणवामपार्श्वयोर्युञ्जीत। तथैव मृगशीर्षादीन्युदगयनानि दक्षिणपार्श्वे प्रातिलोम्येन प्रतियुञ्जीत। शतभिषाज्येष्ठे स्कन्धयोर्दक्षिणवामयोर्न्यसेत्। उत्तराहनावगस्त्यः अधराहनौ यमः मुखे चाङ्गारकः शनैश्चर उपस्थे वृहस्पतिः ककुदि वक्षस्यादित्यो हृदये नारायणो मनसि चन्द्रो नाभ्यामुशनास्तनयोरश्विनौ बुधः प्राणापानयोराङ्गले, केतवः सर्वाङ्गेषु, रोमसु सर्वे तारागणाः। एतदुहैव भगवतो विष्णोः सर्वदेवता-

मयं रूपम् अहरहः सन्ध्यायां प्रयतो वाग्यतो निरीक्ष्यमाण उपतिष्ठेत्। नमो ज्योतिर्लोकाय कालायनाय अनिमिषां पतये महापुरुषायाभिधीमहीति"।

**ज्योतिर्हस्ता** स्त्री "हस्तं शरीरमित्याहुर्हस्तञ्च गगनं तथा। ज्योतिश्च यहनक्षत्रं ज्योतिर्हस्ता ततः स्मृता" देवीपु०४५अ० उक्तनिरुक्तियुक्तायां दुर्गायाम्।

**ज्योतिश्चक्र** न० ज्योतिर्भिर्नक्षत्रैर्घटितं चक्रम्। १भचक्रे "सप्तविंशतिभैर्ज्योतिश्चक्रं स्तिमितवायुगम्। तदर्कांशो भवेद्राशिर्नवर्क्षचरणाङ्कितः" ति० त० उक्ते अश्विन्यादिभिर्नक्षत्रैर्घटिते मण्डलाकारे राशिचक्रे। स्तिमितवायुगमित्यनेन तस्य नाधःपतनमात्रं विवक्षितं न गत्यभावः प्रवहवायुना तस्य प्रतिदिनं प्रत्यग्गतेः सूर्य्यसिद्धान्तादावुक्तत्वात् खगोलशब्दे २४१६ पृष्ठादौ दृश्यम्।

**ज्योतिः(ष्(षा))शास्त्र** न० ज्योतिषां सूर्य्यादीनां गत्यादिज्ञापकं शास्त्रम् वा शत्वम्। सूर्य्यादिग्रहगत्यादिबोधके कालज्ञाने वेदाङ्गे शास्त्रभेदे। "वेदास्तावद्यज्ञकर्मप्रवृत्ता यज्ञाः प्रोक्तास्ते तु कालाश्रयेण। शास्त्रादस्मात् कालबोधो यतः स्याद् वेदाङ्गत्वं ज्योतिषस्योक्तमस्मात्। शब्दशास्त्रं मुखं ज्योतिषं चक्षुषी श्रोत्रमुक्तं निरुक्तं च कल्पः करौ। या तु शिक्षास्य वेदस्य सा नासिका पादपद्मद्वयं छन्द आद्यैर्बुधैः। वेदचक्षुः किलेदं स्मृतं ज्योतिषं मुख्यता चाङ्गमध्येऽस्य तेनोच्यते। संयुतोऽपीतरैः कर्णनासादिभिश्चक्षुषाङ्गेन हीनो न किञ्चित्करः। तस्माद्द्विजैरध्ययनीयमेतत् पुण्यं रहस्यं परमं च तत्त्वम्। यो ज्योतिषं वेत्ति नरः स सम्यग् धर्मार्थकामान् लभते यशश्च"।"ज्योतिःशास्त्रमनेकभेदविषयम्" वृ०स० १अ०। अस्य भेदादि अङ्कशब्दे ७२ पृ० दृश्यम्।

**ज्योतिष** न० ज्योतिः सूर्य्यादिगत्यादिकं प्रतिपाद्यतयाऽस्त्यस्य अच्।१ज्योतिःशास्त्रे "ज्योतिषं नयनं विदुः" शिक्षा। ज्योतिःशास्त्रशब्दे उदा०। "ज्योतिषमागमशास्त्रं विप्रतिपत्तौ न योग्यमस्माकम्" वृ०स० ७अ०। २तारायां स्त्री गौरा० ङीष्। ज्योतिषं ज्ञेयत्वेनास्त्यस्य इनि। ज्योतिषिन्। ज्योतिःशास्त्राभिज्ञे त्रि० स्त्रियां ङीप्।

**ज्योतिषिक** त्रि० ज्योतिरधीते उक्थादि० ठक् संज्ञापूर्वकविधेरनित्यात् न वृद्धिः। ज्योतिःशास्त्राध्येतरि।

**ज्योतिष्क** पु० ज्योतिरिव कायति कै—क। १चित्रकवृक्षे "एतान्येवावाप्य क्षारकल्पेन निस्रुते पालाशे क्षारे ततो विपाच्य फाणितमिव सञ्जातमवतार्य्य लेपयेत्। ज्योतिष्क फललाक्षामरिचपिप्पलीसुमनःपत्रैर्वा" सुश्रु०। २मेथिकाबीजे च राजनि०। ३गणकारिकावृक्षे रत्नमा०। ४ग्रहतारानक्षत्रादौ ब०व० "तदीशभागे तस्याद्रेः शृङ्गमादित्यसन्निभम्। यत्तत् ज्योतिष्कमित्याहुः सदा पशुपतेः प्रियम्" इत्युक्ते ५मेरोः शृङ्गभेदे न०।

**ज्योतिष्टोम** पु० ज्योतींषि त्रिवृदादयः स्तोमा यस्य षत्वम्। १स्वनामख्याते अग्निष्टोमस्वंस्थारूपे यज्ञभेदे तद्विधानादि ताण्ड्य० ब्रा० ४।१।६।
"यज्ज्योतिष्टोमो भवति यज्ञमुखन्तदारभन्ते यदुक्थो यज्ञक्रतोरनन्तरयाय यद्रात्रिः सर्वस्याप्त्यै" मू०
"अथ षोडशिकोऽयमतिरात्र इत्युक्तं, कथमो ज्योतिष्टोमोऽतिरात्रः स षोडशिक इति। अथ तद्व्यतिरिक्ताभिस्तिसृभिः संस्थाभिरयुज्यं स्तूयते। यद्यपि सर्वेषामपि ज्योतिष्टोमत्वमस्ति तथापि उक्थ्यातिरात्रसंस्थयोः पृथग्वक्ष्यमाणत्वात् अग्निष्टोमसंस्थैव ज्योतिष्टोमशब्देनोच्यते। ज्योतींषि त्रिवृदादयः स्तोमा यस्य स ज्योतिष्टोमः। तथा च तैत्तिरीयकं त्रिवृत्पञ्चदश सप्तदश एकविंश एतानि ज्योतींषि यत एतस्य स्तोमा इति। यज्ज्योतिष्टोमोऽग्निष्टोमो द्वादशस्तोत्रात्मको भवति ज्योतिष्टोमस्य हि अग्निष्टोमसंस्था मुख्या, "एष वाव प्रथमो यज्ञानामिति"श्रुतेः। तत्तेन यज्ञमुखं यज्ञानां मुखभूतमग्निष्टोमं प्राप्य आरभन्ते सत्रिणः सन्नद्धा भवन्ति तथा तस्मिन्नतिरात्रे उक्थः पञ्चदशस्तुतशस्त्रसाध्यः क्रतुरन्तर्भवतीति यत् तत् यज्ञक्रतोः संपूर्णस्य यज्ञस्य अनन्तरयाय अपरित्यागाय भवति उक्थसंस्थायां हि क्रतुः संपूर्णो भवति यथा पूर्वयोः सवनयोः पञ्चदश पञ्चदश स्तोत्राणि तथा तृतीयेऽपि स्तोत्रपञ्चकसद्भावात्। अग्निष्टोमस्त्वसंपूर्णः क्रतुः उक्तहेतोरभावात्" भा०।
तस्य च अग्निष्टोमसंस्थत्वेन ज्योतिष्टोमनामताहेतुरुक्तो यथा "यदेतानि सर्वाणि सह दुरुपापानि केतेषामुपाप्तिरिति ज्योतिष्टोम एवाग्निष्टोमेनैवाग्निष्टोमेन यजेत। तस्य वा एतस्य ज्योतिष्टोमस्याग्निष्टोमस्य त्रिवृद्बहिष्पवमानं तद्व्रतस्य शिरः, पञ्चदशसप्तदशा उत्तरौ पवमानौ तौ पक्षौ, पञ्चदशं होतुराज्यं सप्तदशं पृष्ठमेकविंशं यज्ञायज्ञियं तत् पुच्छम्" शत० ब्रा० १०।१।२।७। "अधुना प्रथमसंस्थारूपज्योतिष्टोमाग्निष्टोमं महाव्रतयज्ञात्मना स्तोतुं तत्रैवाग्निचयनादित्रयस्योपादानाद् ब्रह्मवादिप्रश्नोत्तराभ्यां दर्शयति।

सह युगपत् दुरुपापानि आप्तुमशक्यानि सर्वेषां महाव्रतयज्ञानुष्ठाने प्रयोगबाहुल्येन ऋत्विक्सम्पादनादेः दुष्करत्वेन चानधिकारात् तत्राग्निष्टोम इति पदेनाग्निस्तवनोक्तेरग्निचयनमुक्तमिति मन्तव्यम् । पक्ष्याकारस्य महाव्रतसाम्नो हि शिरःपक्षमध्यपुच्छात्मकाः पञ्चावयवाः शिरो गायत्रं, रथन्तरं दक्षिणः पक्षः बृहदुत्तरः पक्षः मध्यस्य पुच्छं राजनसाम ह्यात्मेति तत्सर्वमग्निष्टोमे सम्पादयति तस्य वा इति ऋक्त्रयात्मकमेकं सूक्तं तादृशानि त्रीणि सूक्तानि त्रिवृतोऽवयवायस्य स्तोमस्य तदिदं त्रिवृद् बहिष्पवमानम् प्रातःसवनिकं त्र्यृचं सूक्तत्रयात्मकं बहिष्पवमानं महाव्रतस्य शिरो भवति बहिष्पवमानमपि गायत्रीच्छन्दस्कत्वं चैमीतव्यम् माध्यन्दिनः पञ्चदशस्तोत्रियात्मकः पवमानः, तृतीयसवने सप्तदशस्तोत्रियात्मकः आर्भवः पवमानः पक्षस्थानीयौ होत्रानुशंसनीयं प्रथममाज्यस्तोत्रं सप्तदशस्तोत्रियात्मकं पृष्ठनामकं होतुः प्रथमं स्तोत्रम् तदुभयं मध्यात्मरूपम् । एकविंशत्यावृत्तिरूपं "यज्ञायज्ञा वो अग्नयः" इत्यत्रोत्पन्नं साम पुच्छस्थानीयम्" भा० २सोमयागे च "ज्योतिष्टोमधर्मा एकाहद्वादशाहयोस्तद्गुणदर्शनात्" कात्या० श्रौ० १२।१।१ "ज्योतिष्टोमशब्देन उपांश्वादिहारियोजनपर्यन्तो ग्रहयज्ञाभ्यासोऽभिधीयते ज्योतींषि यस्य स्तोमाः स ज्योतिष्टोमः स्तोमैर्ह्यसौ द्योत्यत इति ते च सोमयागस्य स्तोमाः तस्मात् ज्योतिष्टोमशब्देन सोमयागोऽभिधीयते" कर्कः ।

**ज्योतिष्मत्** त्रि० ज्योतिरस्त्यत्र मतुप् । १ज्योतिर्युक्ते २प्रकाशयुक्ते ३लताभेदे स्त्री । सा च (मालकाङ्गनी) इति ख्याता लता ।"ज्योतिष्मती कटुस्तिक्ता सरा कफसमीरजित् । अत्युष्णा वामनी तीक्ष्णा वह्निबुद्धिस्मृतिप्रदा" राजनि० ४रात्रौ राजनि०। ५योगशास्त्रोक्ते सत्त्वप्रधाने चित्तवृत्तिभेदे च ।"विशोका वा ज्योतिष्मती"पात०सू०। "प्रवृत्तिरुत्पन्ना चित्तस्य स्थिति-निबन्धिनीति वाक्यशेषः। ज्योतिःशब्देन सात्त्विकः परिणाम उच्यते स प्रशस्तो भूयानतिशयश्च विद्यते यस्याम्" भोजवृत्तिः "प्रसीदतु ते विशोका ज्योतिष्मती नाम चित्तवृत्तिः" महावी० "ज्योतिष्मतः पथो रक्ष धिया कृतान्" ऋ० १०।५३।६ "ज्योतिष्मतो दीप्तिमतः" भा० ६अग्निपुर्य्याम् अर्चिष्मत्यां तत्कथा अग्निलोकशब्दे ५८ पृ० दृश्यम् । योऽयमस्य यथाऽनेन प्रापि ज्योतिष्मती पुरी" काशी० ।

७सूर्य्ये प्लक्षद्वीपस्थे ८पर्वतभेदे च शब्दार्थचिन्तामणिः ।

**ज्योतिस्** पु० द्योतते द्युत्यतेऽनेन वा द्युत-इसुन् आदेर्दस्य जः ज्युत-दीप्तौ वा इसुन् । १सूर्य्ये २अग्नौ, मेदि० ३मेथिकावृक्षे राजनि० च । नेत्रकनीनिकामध्यस्थे ४दर्शनसाधने, पदार्थे, शब्दार्थचि० ५नक्षत्रे, ६प्रकाशे, शब्दच० ७स्वयंप्रकाशे, सर्वावभासके चैतन्ये च न० । ८अग्निष्टोमयागस्य संस्थाभेदे यथोक्तं ताण्ड्य०ब्रा०४।१।७ "स एतान् स्तोमानपश्यत् ज्योतिर्गौरायुरितीमे वै लोका एते स्तोमा अयमेव ज्योतिरयं मध्यमो गौरसावुत्तम आयुः" मू० । "स पूर्वोक्तः प्रजापतिः एतान् स्तोमान् स्तोमशब्देन त्रिवृदादिस्तोमवन्त्यहानि लक्ष्यन्ते । तानि ज्योतिर्गौरायुरिति एतन्नामकान्यपश्यत् । तत्र ज्योतिरग्निष्टोमसंस्थः गौरायुषी उक्थ्यसंस्थे ज्योतिष इयं स्तोमक्लृप्तिः । त्रिवृद्बहिष्पवमानं पञ्चदशान्याज्यानि पञ्चदशो माध्यन्दिनः पवमानः सप्तदशानि पृष्ठानि सप्तदश आर्भव एकविंशोऽग्नीष्टोमसामेति । अथ गोष्टोमस्य पञ्चदशो बहिष्पवमानः त्रिवृदाज्यानि सप्तदशं माध्यन्दिनं सवनमेकविंशं तृतीयसवनम् । अथायुष्टोमस्य त्रिवृद्बहिष्पवमानं पञ्चदशान्याज्यानि सप्तदशं माध्यन्दिनं सवनमेकविंशं तृतीयसवनमिति । एते उक्ताः स्तोमा इमे लोका वै भूरादिकाः खलु कः कतमो लोक इति बुभुत्सायामाह अयमेव लोको ज्योतिः । अयमध्यमः अन्तरीक्षलोको गौः असावुत्तमस्तृतीयः स्वर्लोक आयुः । स्तोमत्रयस्य लोकत्रयेण सह संख्यासाम्यात् तद्रूपता एतैः त्रिभिः स्तोमैः साधनैस्त्रीन् लोकान् प्राजनयदिति शेषः" भा० । ९विष्णौ "विहायसगतिर्ज्योतिः सर्वविद् हुतभुग् विभुः" विष्णुस० स्वयंद्योतनात् तस्य तथात्वम ।"अथ यदतः परो दिवो ज्योतिर्दीप्यते । विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु । इदं वाव तद्यदिदमन्तःपुरुषे ज्योतिः" छा० उ० । एतामधिकृत्य "ज्योतिःशब्दस्य परब्रह्मपरत्वं शा०सू० भा० व्यवस्थापितं यथा 'ज्योतिश्चरणाभिधानात्"१।१।२४सूत्रभाष्यादौ दृश्यम् ।"चक्षुर्वृत्तेर्निरोधकं शार्वरादिकं तमः। तस्या एवानुग्राहकमादित्यादिकं ज्योतिरिति" शा० भा० । १०तेजोद्रव्यमात्रे तस्य प्रकाशवत्त्वात्तथात्वं तदपि तत्रैव भाष्ये दृश्यम् । "ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते"। "ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य धिष्ठितम्। योऽन्तःसुखो-

ऽन्तरारामस्तथान्तर्ज्योतिरेव यः। स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति" गीता। "हिमक्लिष्टप्रकाशानि ज्योतींषीव मुखानि वः" "स हि देवः परं ज्योतिस्तमःपारे प्रतिष्ठितम्" कुमा०। ज्योतिःसारः ज्योतिस्तत्त्वम् ज्योतिःसिद्धान्तः।

**ज्योतीरथ** पु ज्योतिषां सूर्य्यादीनां रथ इवाधारत्वात्। ध्रुवनक्षत्रे त्रिका०। तदाधारतयैव ज्योतिश्चक्रस्य समवस्थानात् तस्य तद्रथत्वम्।

**ज्योत्स्ना** स्त्री ज्योतिरस्त्यस्याम् न उपधालोपश्च। १कौमुद्याम् चन्द्रकिरणे अमरः २रेणुकानामगन्धद्रव्ये रत्नमा०। ३दुर्गायां "प्रभा प्रसादशीलत्वात् ज्योत्स्ना चन्द्रार्कमालिनी" देवी० पु० ४५ अ०। "रौद्रायै नमो नित्यायै गौर्य्यै धात्र्यै नमो नमः। ज्योत्स्नायै चेन्दुरूपिण्यै सुखायै सततं नमः" देवीमा०। ततः मत्वर्थे अण् ज्यौत्स्न तद्युक्ते त्रि० स्त्रियां ङीप् ज्यौत्स्नी।

**ज्योत्स्नाकाली** स्त्री सोमस्य कन्यायां वरुणात्मजपुष्करपत्न्याम् "एषोऽस्य पुत्रोऽभिमतः पुष्करः पुष्करेक्षणः। रूपवान् दर्शनीयश्च सोमपुत्र्या वृतः पतिः। ज्योत्स्नाकालीति यामाहुर्द्वितीयां रूपतः श्रियम्" भा० उ० ९७ अ०

**ज्योत्स्नादि** पु० मत्वर्थे अण्प्रत्ययप्रकृतिभूते पा० ग० सू० पठिते शब्दगणे स च गणः "ज्योत्स्ना तमिस्रा कुण्डल कुतप विसर्प विपादिका"।

**ज्योत्स्नाप्रिय** पुंस्त्री ज्योत्स्ना प्रियास्य। चकोरे स्त्रियां जातित्वेऽपि योपधत्वात् टाप्।

**ज्योत्स्नावृक्ष** पु० ज्योत्स्नाया दीपप्रकाशस्याधारः वृक्षः। दीपाधारे (पिलसुज) त्रिका०।

**ज्योत्स्नी** स्त्री ज्योत्स्नाऽस्त्यस्य अण् संज्ञापूर्वकत्वे रनित्यत्वात् न वृद्धिः ङीप्। १ज्योत्स्नायुक्तरात्रौ (भिङ्गा) २पटोलिकायाञ्च अमरः। ३रेणुकानामगन्धद्रव्ये शब्दच०। स्वार्थे क। ज्योत्स्निका तत्रार्थे।

**ज्यौतिषिक** त्रि० ज्योतिषमधीते वेद वा उक्थादि० ठक्। १ज्योतिषशास्त्राभिज्ञे २तदध्येतरि च अमरः।

**ज्यौत्स्न** त्रि० ज्योत्स्ना अस्त्यस्य अण्। १ज्योत्स्नायुक्ते स्त्रियां ङीप् सा च २चन्द्रिकायुक्तरात्रौ रायमुकुटः।

**ज्रि** अभिभवे भ्वा० पर० सक० अनिट्। ज्रयति अज्रैषीत्। जिज्राय जिज्रियतु "आ भानुना पार्थिवानि ज्रयांसि महस्तोदस्य धृषता ततन्थ" ऋ० ६।६।६। "जिगादुपज्रयति गोरपीच्यं पदं यदस्य मतुथा अजीजनन्" ६।७१।५।

**ज्री** वयोहानौ वा चुरा० उभ० पक्षे क्र्या० प्वा० प० अक० अनिट्। ज्राययति ते ज्रिणाति अजिज्रयत् त अज्रैषीत्।

**ज्वर** रोगे भ्वा० पर० अक० सेट्। ज्वरति अज्वारीत्। मित्। ज्वरयति ते।

**ज्वर** पु० ज्वर+भावे घ। स्वनामख्याते रोगभेदे। ज्वरस्योद्भव निदानादि भावप्र० उक्तं यथा।

"दक्षापमानसंक्रुद्धरुद्रनिःश्वाससम्भवः। ज्वरोऽष्टधा पृथग्द्वन्द्वसङ्घातागन्तुजः स्मृतः। अस्यायमर्थः। दक्षकर्त्तृको योऽपमानस्तेन संक्रुद्धो यो रुद्रस्तस्य यो निःश्वासस्तस्मात्सम्भव उत्पत्तिर्यस्य स ज्वरः। क्रुद्धरुद्रनिःश्वाससम्भूतत्वेन ज्वरः स्वभावात्पैत्तिक इति बोध्यते। यत उक्तं चरकेण, क्रोधात्पित्तमित्यादि तेन सर्वज्वरेषु पित्तोपशमकारिणी चिकित्सा कर्तव्या अतएव वागभटः "उष्मा पित्तादृते नास्ति ज्वरो नास्त्यूष्मणा विना। तस्मात्पित्तविरुद्धानि त्यजेत्पित्ताधिकेऽधिकम्" रुद्रसम्भूतत्वेन ज्वरस्य दैवतात्मकत्वात् पूजार्हत्वं चोपदर्शितम् अतएव वैदेहः "ज्वरः संपूजनैर्वापि सहसैवोपशाम्यतीति"। मूर्त्तिरप्यस्योक्ता सुश्रुतेन "रुद्रकोपाग्निसंभूतः सर्वभूतप्रतापनः। त्रिपादस्त्रप्रहरणस्त्रिशिराः सुमहोदरः। वैयाघ्रचर्मवसनः कपिलो माल्यविग्रहः। पिङ्गेक्षणो ह्रस्वजङ्घो बीभत्सो बलवान्महान्। पुरुषो लोकनाशार्थमसौ ज्वर इति स्थितः। तैस्तैर्नामभिरन्येषां सत्त्वानां परिकीर्त्त्यते। जन्मादौ निधने चैव प्रायो विशति देहिनम्। ऋते देवमनुष्याभ्यां नान्यो विषहते हि तम्" तस्य ज्वरस्य संख्यारूपां सम्प्राप्तिमाह ज्वरोऽष्टधेति। अष्टत्वं विवृणोति पृथगिति वातिकः पैत्तिकः श्लैष्मिकश्चेति त्रयः। द्वन्द्वजाश्च त्रयः वातपैत्तिकः वातश्लैष्मिकः पित्तश्लैष्मिकश्चेति। सङ्घातजः सान्निपातिक एकः। "द्व्युल्बणैकोल्बणैः षट् स्युर्हीनमध्याधिकैश्च षट्। समश्चैको विकारास्ते सन्निपातास्त्रयोदश" इति चरके त्रयोदश सन्निपाता उक्तास्ते यथा। वातोल्बणः पित्तोल्बणः। कफोल्बणः। वातपित्तोल्बणः। वातश्लेष्मोल्बणः पित्तश्लेष्मोल्बणः। एवं षट्। अधिकवातो मध्यपित्तो हीनकफः। अधिकवातो मध्यकफो हीनपित्तः। अधिककफो मध्यपित्तो हीनवातश्चेति षट्। त्र्युल्बण एकः एवं त्रयोदश। अत्र तु त्रिदोषजत्वेन साम्यात्सान्निपातिक एक एव गणितः। आगन्तुज इति। अत्रागन्तुशब्देनाभिघातादयो हेतव उच्यन्ते।

कुत्रचिद्द्वाश्रयः कार्य्यकारणयोरभेदोपचारात् आगन्तुजा अभिघाताद्यनेककारणयोगादनेके भवन्ति । तथाप्यागन्तुजत्वेन साम्यादागन्तुजोऽप्यत्रैक एव भणितः । नन्वागन्तुजेऽपि ज्वरे वातादिलक्षणदर्शनादागन्तुजः कथं दोषजाद्भिन्नः उच्यते, उत्तरकालं दोषोत्पत्तेः । तथा च चरके "आगन्तुजो हि व्यथापूर्वं जायते पश्चाद्भिन्नैर्दोषैरनुवध्यते" इति । अथ ज्वरस्य विप्रकृष्टकारणकथनपूर्व्विकां सम्प्राप्तिमाह "मिथ्याहारविहाराभ्यां दोषा ह्यामाशयाश्रयाः। वहिर्न्निरस्य कोष्ठाग्निं ज्वरदाः स्यू रसानुगाः" । मिथ्याहारविहाराभ्यां अनुचिताहारचेष्टाभ्यां हेतुभूताभ्यां दोषाः वातपित्तकफाः आमाशयाश्रयाः आमाशयं गता रसानुगाः रसदूषकाः वहिर्निरस्य कोष्ठाग्निं कोष्ठगताग्नेरूष्माणम् न तु समस्तमग्निं तदा दोषपाकासम्भवः स्यात् । वहिः प्रक्षिप्य ज्वरदाः स्युर्ज्ज्वरकारिणो भवेयुरित्यर्थः । अथ ज्वरस्य सामान्यं विशिष्टञ्च पूर्व्वरूपमाह "श्रमोऽरतिर्विवर्णत्वं वैरस्यं नयनप्लवः । इच्छाद्वेषौ मुहुश्चापि शीतवातातपादिषु । जृम्भाऽङ्गमर्द्दो गुरुता रोमहर्षोऽरुचिस्तमः । अप्रहर्षश्च शीतञ्च भवन्त्युत्पत्स्यति ज्वरे । सामान्यतो विशेषात्तु जृम्भात्यर्थं समीरणात् । पित्तान्नयनयोर्द्दाहः कफान्नान्नाभिनन्दनम् ।" श्रमो व्यापारं विनैव, अरतिरस्वस्थचित्तत्वम् विवर्णत्वं म्लानगात्रता । वैरस्यं मुखस्याऽप्रकृतरसता । नयनप्लवः नयनयोरश्रुपूर्णत्वम् । शीतवातातपादिषु मुहुरिच्छाद्वेषौ । आदिशब्दाज्ज्वलने जले च । यत उक्तं चरकेण "ज्वलनातपवा[...]षु भक्तिद्वेषावनिश्चिताविति"। शयनादिष्वित्यन्ये । अङ्गमर्द्दोऽङ्गमोटनम् । गुरुता गात्रस्य । रोमहर्षः रोमाञ्चता । अरुचिर्भोजने, तमः तमोनग्नस्येव ज्ञानम् । अप्रहर्षः हर्षाभावः । शीतं लगति चकाराद्बलहानिः उपदेशद्वेषादयोऽपि भवन्ति । तृतीयश्लोकस्थम् सामान्यत इति पूर्व्वश्लोकाभ्यां सम्बन्धनीयम् । तेन सामान्यतो ज्वर उत्पत्स्यति भविष्यति श्रमादयः पूर्व्वमेव भवन्तीत्यर्थः । उत्पत्स्यतीत्यात्मनेपदिनोऽपि तङभाव आर्षत्वात् । विशेषात् उच्यते । समीरणात् ज्वरे उत्पत्स्यति अतिशयेन जृम्भा भवति । पित्तज्वरे उत्पत्स्यति अत्यर्थनयनयोर्द्दाहो भवति । कफज्वरे उत्पत्स्यति अत्यर्थेन नान्नाभिनन्दनम् अन्नाकाङ्क्षा न भवति । जृम्भादयो भवन्ति यतः सामान्यधर्म्माक्रान्तो विशिष्टोधर्म्मो भवति । द्वन्द्वजपूर्व्वरूपमाह, "रूपैरन्यतराभ्यां तु संसृष्टैर्द्वन्द्वजं विदुः । अन्यतराभ्यां जृम्भानेत्रदाहाभ्याम् । जृम्भान्नारुचिभ्यां नेत्रदाहान्नारुचिभ्यां वा संसृष्टैरूपैः श्रमादिभिः द्वन्द्वजं द्विदोषजं पूर्व्वरूपं विदुः । त्रिदोषजपूर्व्वरूपमाह, "सर्व्वलिङ्गसमावायः सर्व्वदोषप्रकोपजे । सर्व्वरूपजे सर्व्वरूपे सर्व्वलिङ्गसमवायः । अतिशयितजृम्भानेत्रदाहान्नारुचिसहितानां श्रमादीनां समवायो भवति । अथ ज्वरस्य सामान्यलक्षणमाह, "स्वेदावरोधः सन्तापः सर्व्वाङ्गग्रहणं तथा । युगपद्यत्र रोगे तु स ज्वरो व्यपदिश्यते । ताप इति वक्तव्ये सन्तापाभिधानं देहेन्द्रियमनसां सन्तापबोधनार्थम् । यत उक्तं चरकेण ज्वरविशेषणम् । "देहेन्द्रियमनस्तापीति"। तत्र देहसन्तापो देहेन्द्रियोष्णता । इन्द्रियसन्ताप इन्द्रियवैकल्यम् । यत उक्तम् "इन्द्रियाणां तु वैकल्यं यत्र सन्तापलक्षणम् । वैचित्त्यमरतिर्ग्लानिर्म्मनःसन्तापलक्षणम् इति"। सर्व्वाङ्गग्रहणम् सर्व्वेषामङ्गानां वेदनया ग्रहणं सर्व्वाण्यङ्गानि स्तम्भनगृहीतानीव वा भवन्ति । युगपदिति । मिलितमेतल्लक्षणम् । प्रत्येकस्य व्यभिचारात् । यथा स्वेदावरोधः कुष्ठपूर्व्वरूपे । तथा सन्तापो दाहव्याधौ । तथा सर्व्वाङ्गग्रहणं सर्व्वाङ्गरोगाख्यवातव्याधौ । प्रस्वेदानिर्गमनपक्षे कारणमाह । "हर्णाङ्क चाप्यपां धातुं यस्मात्तस्माज्ज्वरातुरः । भवत्यत्युष्णगात्रश्च स्विद्यते न च सर्व्वशः । तस्माज्ज्वरोऽत्र भवति सर्व्वशः स्विद्यते न च" ।

सुश्रुते उत्तरतन्त्रे च तत्र विशेष उक्तो यथा

"ऋते देवमनुष्येभ्यो नान्यो विषहते तु तम् । कर्म्मणा लभते यस्माद्देवत्वं मानुषादपि । पुनश्चैव च्युतः स्वर्गान्मानुष्यमनुवर्त्तते । तस्मात्ते देवभावेन सहन्ते मानुषा ज्वरम् । शेषाः सर्व्वे विपद्यन्ते तैर्य्यग्योना ज्वरार्दिताः । स्वेदावरोधः सन्तापः सर्व्वाङ्गग्रहणं तथा । विकारा युगपद्यस्मिन् ज्वरः स परिकीर्त्तितः । दोषैः पृथक् समस्तैश्च द्वन्द्वैरागन्तुरेव च । अनेककारणोत्पन्नः स्मृतस्त्वष्टविधो ज्वरः । दोषाः प्रकुपिताः स्वेषु कालेषु स्वैः प्रकोपनैः । व्याप्य देहमशेषेण ज्वरमापादयन्ति हि । दुष्टाः स्वहेतुभिर्दोषाः प्राप्यामाशयमूष्मणा । सहिता रसमागत्य रसस्वेदप्रवाहिणाम् । स्रोतसां मार्गमावृत्य मन्दीकृत्य हुताशनम् । निरस्य वहिरूष्माणं पक्तिस्थानाच्च केवलम् । शरीरं समभिव्याप्य स्वकालेषु ज्वरागमम् । जनयन्त्यथ वृद्धिञ्च स्ववर्णञ्च त्वगादिषु । मिथ्यातियुक्तैरपि च

स्नेहाद्यैः कर्मभिर्नृणाम्। विविधादभिघाताच्च रोगोत्थानात् प्रपाकतः। श्रमात् क्षयादजीर्णाच्च विषात् सात्म्यर्तुपर्ययात्। ओषधीपुष्पगन्धाच्च शोकान्नक्षत्रपीड़नात्। अभिचाराभिशापाभ्यां मनोभूताभिशङ्कया। स्त्रीणामपप्रजातानां प्रजातानां तथाऽहितैः। स्तन्यावतरणे चैव ज्वरो दोषैः प्रवर्त्तते। तैर्वेगवद्भिर्बहुधा समुद्भ्रान्तैर्विमार्गगैः। विक्षिप्यमाणोऽन्तरग्निर्भवत्याशु बहिश्चरः। रुणद्धि चाप्यपान्थानं यस्मात्तस्माज्ज्वरातुरः। भवत्यत्युष्णगात्रश्च न च स्विद्यति सर्वशः। श्रमोऽरतिर्विवर्णत्वं वैरस्यं नयनप्लवः। इच्छाद्वेषौ मुहुश्चापि शीतवातातपादिषु। जृम्भाङ्गमर्दौ गुरुता रोमहर्षोऽरुचिस्तमः। अप्रहर्षश्च शीतञ्च भवत्युत्पत्स्यति ज्वरे। सामान्यतो विशेषात्तु जृम्भात्यर्थं समीरणात्। पित्तान्नयनयोर्दाहः कफान्नान्नाभिनन्दनम्। सर्वलिङ्गसमावायः सर्वदोषप्रकोपजे। द्वयोर्द्वयोस्तु रूपेण संसृष्टं द्वन्द्वजं विदुः। वेपथुर्विषमो वेगः कण्ठौष्ठमुखशोषणम्। निद्रानाशः क्षवः स्तम्भो गात्राणां रौक्ष्यमेव च। शिरोहृद्गात्ररुग्वक्त्रवैरस्यं बद्धविट्कता। जृम्भाध्मानं तथा शूलं भवत्यनिलजे ज्वरे। वेगस्तीक्ष्णोऽतिसारश्च निद्राल्पत्वं तथा वमिः। कण्ठौष्ठमुखनासानां पाकः स्वेदश्च जायते। प्रलापः कटुता वक्त्रे मूर्च्छा दाहो मदस्तृषा। पीतविण्मूत्रनेत्रत्वं पैत्तिके भ्रम एव च। गौरवं शीतमुत्क्लेशो रोमहर्षोऽतिनिद्रता। स्रोतोरोधो रुगल्पत्वं प्रसेको मधुरास्यता। नात्युष्णगात्रता छर्दिरङ्गसादोऽविपाकता। प्रतिश्यायोऽरुचिः कासः कफजेऽक्ष्णोश्च शुक्लता। निद्रानाशो भ्रमः श्वासस्तन्द्रा सुप्ताङ्गताऽरुचिः। तृष्णा मोहो मदः स्तम्भो दाहः शीतं हृदि व्यथा। पक्तिश्चिरेण दोषाणामुन्मादः श्यावदन्तता। रसना परुषा कृष्णा सन्धिमूर्द्धास्थिजा रुजः। निर्भुग्नकलुषे नेत्रे कर्णौ शब्दरुगन्वितौ। प्रलापः स्रोतसां पाकः कूजनं चेतनाच्युतिः। स्वेदमूत्रपुरीषाणामल्पशः सुचिरात् स्रुतिः। सर्वजे सर्वलिङ्गानि विशेषञ्चात्र मे शृणु। नात्युष्णशीतोऽल्पसंज्ञो भ्रान्तप्रेक्षी हतस्वरः। खरजिह्वः शुष्ककण्ठः स्वेदविण्मूत्रवर्जितः। सास्रनिर्भुग्नहृदयो भक्तद्वेषी हतप्रभः। श्वसन् निपतितः शेते प्रलापोपद्रवैर्युतः। तमभिन्यासमित्याहुर्हतौजसमथापरे। सन्निपातज्वरं कृच्छ्रमसाध्यमपरे विदुः। निद्रोपेतमभिन्यासं क्षीणमेनं हतौजसम्। संन्यस्तगात्रं संन्यासं विद्यात्सर्वात्मके ज्वरे। ओजोविस्रंसते यस्य पित्तानिलसमुच्छ्रयात्। स गात्रस्तम्भशीताभ्यां शयने स्यादचेतनः। अपि जाग्रत् स्वपन् जन्तुस्तन्द्रालुश्च प्रलापवान्। संहृष्टरोमा स्रस्ताङ्गो मन्दसन्तापवेदनः। ओजोनिरोधजं तस्य जानीयात् कुशलो भिषक्। सप्तमे दिवसे प्राप्ते दशमे द्वादशेऽपि वा। पुनर्घोरतरो भूत्वा प्रशमं याति हन्ति वा। द्विदोषोच्छ्रायलिङ्गास्तु द्वन्द्वजास्त्रिविधाः स्मृताः। जृम्भाध्मानमदोत्कम्पपर्वभेदपरिक्षयाः। तृट्प्रलापाभितापाः स्युर्ज्वरे मारुतपैत्तिके। शूलकासकफोत्क्लेशशीतवेपथुपीनसाः। गौरवारुचिविष्टम्भा वातश्लेष्मसमुद्भवे। शीतदाहारुचिस्तम्भस्वेदमोहमदभ्रमाः। कासाङ्गसादहृल्लासा भवन्ति कफपैत्तिके। क्षामाणां ज्वरमुक्तानां मिथ्याहारविहारिणाम्। दोषः स्वल्पोऽपि संवृद्धो देहिनामनिलेरितः। सन्ततान्येद्युष्कत्र्याख्यचातुर्थान् सप्रलेपकान्। कफस्थानविभागेन यथासङ्ख्यं करोति हि। अहोरात्रादहोरात्रात् स्थानात् स्थानं प्रपद्यते। ततश्चामाशयं प्राप्य घोरं कुर्याज्ज्वरं नृणाम्। तथा प्रलेपको ज्ञेयः शोषिणां प्राणनाशनः। दुश्चिकित्स्यतमो मन्दः सुकष्टो धातुशोषकृत्। कफस्थानेषु वा दोषस्तिष्ठन् द्वित्रिचतुर्षु वा। विपर्ययाख्यान् कुरुते विषमान् कृच्छ्रसाधनान्। परो हेतुः स्वभावो वा विषमे कैश्चिदीरितः। आगन्तुश्चानुबन्धो हि प्रायशो विषमज्वरे। वाताधिकत्वात् प्रवदन्ति तज्ज्ञास्तृतीयकञ्चापि चतुर्थकञ्च। औपात्यके मद्यसमुद्भवे च हेतुं ज्वरे पित्तकृतं वदन्ति। प्रलेपकं वातबलासकञ्च कफाधिकत्वेन वदन्ति तज्ज्ञाः। मूर्च्छानुबन्धा विषमज्वरा ये प्रायेण ते द्वन्द्वसमुत्थितास्तु। त्वक्स्थौ श्लेष्मानिलौ शीतमादौ जनयतो ज्वरे। तयोः प्रशान्तयोः पित्तमन्ते दाहं करोति च। करोत्यादौ तथा पित्तं त्वक्स्थं दाहमतीव च। तस्मिन् प्रशान्ते त्वितरौ कुरुतः शीतमन्ततः। द्वावेतौ दाहशीतादी ज्वरौ संसर्गजौ स्मृतौ। दाहपूर्वस्तयोः कष्टः कृच्छ्रसाध्यतमः स्मृतः। प्रसक्ताभिघातोत्थश्चेतनाप्रभवस्तु यः। रात्र्यह्नोः षट्सु कालेषु कीर्त्तितेषु यथा पुरा। प्रसह्य विषमोऽभ्येति मानवं बहुधा ज्वरः। स चापि विषमो देहं न कदाचिद्विमुञ्चति। ग्लानिगौरवकार्श्येभ्यः स यस्माच्च प्रमुच्यते। वेगे तु समतिक्रान्ते गतोऽयमिति लक्ष्यते। धात्वन्तरस्थो लीनत्वात् सौक्ष्म्यादुपलभ्यते।

अल्पदोषेन्धनः क्षीणः क्षीणेन्धन इवानलः। दोषोऽल्पोऽनिलसंभूतो ज्वरोत्सृष्टस्य वा पुनः। धातुमन्यतमं प्राप्य करोति विषमज्वरम्। सन्ततं रसरक्तस्थः सोऽन्येद्युः पिशिताश्रितः। मेदोगतस्तृतीयेऽह्नि त्वस्थिमज्जगतः पुनः। कुर्य्याच्चातुर्थकं घोरमन्तकं रोगसङ्करम्। केचिद्भूताभिषङ्गोत्थं ब्रुवते विषमज्वरम्। सप्ताहं वा दशाहं वा द्वादशाहमथापि वा। सन्तत्या योऽविसर्गी स्यात् सन्ततः स निगद्यते। अहोरात्रे सततको द्वौ कालावनुवर्त्तते। अन्येद्युष्कस्त्वहोरात्रादेककालं प्रवर्त्तते। तृतीयकस्तृतीयेऽह्नि चतुर्थेऽह्नि चतुर्थकः। वातेनोद्धूयमानस्तु यथा पूर्य्येत सागरः। वातेनोदीरितास्तद्वद्दोषाः कुर्वन्ति वै ज्वरान्। यथा वेगागमे वेलां छादयित्वा महोदधेः। वेगहानौ तदेवाम्भस्तत्रैवान्तर्निधीयते। दोषवेगोदये तद्वदुदीर्य्येत ज्वरोऽस्य वै। वेगहानौ प्रशाम्येत यथाम्भः सागरे तथा। विविधेनाभिघातेन ज्वरो यः संप्रवर्त्तते। यथा दोषप्रकोपन्तु तथा मन्येत तं ज्वरम्। श्यावास्यता विषकृते दाहातीसारहृद्ग्रहाः। अभक्तरुक्पिपासा च तोदो मूर्च्छा बलक्षयः। ओषधीगन्धजे मूर्च्छा शिरोरुग्वमथुस्तथा। कामजे चित्तविभ्रंशस्तन्द्रालस्यमभक्तरुक्। हृदये वेदना चास्य गात्रञ्च परिशुष्यति। भयात् प्रलापः शोकाच्च भवेत्कोपाच्च वेपथुः। अभिचाराभिशापाभ्यां मोहस्तृष्णाभिजायते। भूताभिषङ्गादुद्वेगहास्यकम्पनरोदनम्। श्रमक्षयाभिघातेभ्यो देहिनां कुपितोऽनिलः। पूरयित्वाखिलं देहं ज्वरमापादयेद्भृशम्। रोगाणां तु समुत्थानाद्विदाहागन्तुतस्तथा। ज्वरोऽपरः सम्भवति तैस्तैरन्यैश्च हेतुभिः। दोषाणां स तु लिङ्गानि कदाचिन्नातिवर्त्तते। गम्भीरस्तु ज्वरो ज्ञेयो ह्यन्तर्दाहेन तृष्णया। आनद्धत्वेन चात्यर्थं श्वासकासोद्गमेन च। हतप्रभेन्द्रियं क्षामं दुरारात्मानमुपद्रुतम्। गम्भीरतीक्ष्णवेगार्त्तं ज्वरितं परिवर्जयेत्। हीनमध्याधिकैर्दोषैस्त्रिसप्तद्वादशाहिकः। ज्वरवेगो भवेत्तीव्रो यथापूर्वं सुखक्रियः। इति ज्वराः समाख्याताः कर्मेदानीं प्रवक्ष्यते"।

ज्वरभेदे क्रियाभेदः सुश्रु० उ० त० उक्तो यथा

"ज्वरस्य पूर्वरूपेषु वर्त्तमानेषु बुद्धिमान्। पाययेत घृतं स्वच्छं ततः स लभते सुखम्। विधिर्मारुतजेष्वेष पैत्तिकेषु विरेचनम्। मृदु प्रच्छर्दनं तद्वत्कफजेषु विधीयते। सर्वं द्विदोषजेषूक्तं यथादोषं विकल्पयेत्। अस्नेहनीयोऽशोध्यश्च संशोध्यो लङ्घनादिना। रूपप्राग्रूपयोर्विद्याच्चानात्वं वह्निधूमवत्। प्रव्यक्तरूपेषु हितमेकान्तेनापतर्पणम्। आमाशयस्थे दोषे तु सोत्क्लेशे वमनं परम्। आनद्धः स्तिमितैर्दोषैर्य्यावन्तं कालमातुरः। कुर्य्यादनशनं तावत्ततः संसर्गमाचरेत्। न लङ्घयेन्मारुतजे क्षयजे मानसे तथा। अलङ्घ्याश्चापि ये पूर्वं द्विव्रणीये प्रकीर्त्तिताः। अनवस्थितदोषाग्नेर्लङ्घनं दोषपाचनम्। ज्वरघ्नं दीपनं काङ्क्षारुचिलाघवकारकम्। सृष्टमारुतविण्मूत्रं क्षुत्पिपासाऽसहं लघुम्। प्रसन्नात्मेन्द्रियं क्षामं नरं विद्यात् सुलङ्घितम्। बलक्षयस्तृषा शोषस्तन्द्रानिद्राभ्रमक्लमाः। उपद्रवाश्च श्वासाद्याः सम्भवन्त्यतिलङ्घनात्। दीपनं कफविच्छेदि पित्तवातानुलोमनम्। कफवातज्वरार्त्तेभ्यो हितमुष्णाम्बु तृट्छिदम्। तद्धि मार्दवकृद्दोषस्रोतसां शीतमन्यथा। सेव्यमानेन तोयेन ज्वरः शीतेन वर्द्धते। पित्तमद्यविषोत्थेषु शीतलं तिक्तकैः शृतम्। गाङ्गेयनागरोशीरपर्पटोदीच्यचन्दनैः। दीपनी पाचनी लघ्वी ज्वरार्त्तानां ज्वरापहा। अन्नकाले हिता पेया यथास्वम्पाचनैः कृता। बहुदोषस्य मन्दाग्नेः सप्तरात्रात्परं ज्वरे। लङ्घनान्ते यवागूभिर्यदा दोषो न पच्यते। तदा तं मुखवैरस्यतृष्णारोचकनाशनैः। कषायैः पाचनैर्हृद्यैर्ज्वरघ्नैः समुपाचरेत्। पञ्चमूलीकषायन्तु पाचनं पवनज्वरे। सक्षौद्रं पैत्तिके मुस्तकटुकेन्द्रयवैः कृतम्। पिप्पल्यादिकषायन्तु कफजे परिपाचनम्। द्वन्द्वजेषु तु संसृष्टं दद्यादथ विवर्जयेत्। पीताम्बुर्लङ्घितो भुक्तो जीर्णी क्षीणः पिपासितः। मृदौ ज्वरे लघौ देहे प्रचलेषु मलेषु च। पक्वं दोषं विजानीयाज्ज्वरे देयं तदौषधम्। दोषप्रकृतिवैकृत्यादेकेषां पक्वलक्षणम्। हृदयोद्वेष्टनं तन्द्रालालास्रुतिररोचकम्। दोषाप्रवृत्तिरालस्यं विबन्धो बहुमूत्रता। गुरूदरत्वमस्वेदो न पक्तिः शकृतोऽरतिः। स्वापः स्तम्भो गुरुत्वञ्च गात्राणां वह्निमार्दवम्। मुखस्याशुद्धिरग्लानिः प्रसङ्गी बलवान् ज्वरः। लिङ्गैरेभिर्विजानीयाज्ज्वरमामं विचक्षणः। सप्तरात्रात्परं केचिन्मन्यन्ते देयमौषधम्। दशरात्रात्परं केचिद्दातव्यमिति निश्चिताः। पैत्तिके वा ज्वरे देयमल्पकालसमुत्थिते। अचिरज्वरितस्यापि देयं स्याद्दोषपाकतः। भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम्। शोधनं शमनीयन्तु करोति विषमज्वरम्। च्यवमानं ज्वरोत्क्लिष्टमुपेक्षेत मलं

सदा । अतिप्रवर्त्तमानञ्च स्तम्भयेदतिसारवत् । यदा कोष्ठानुगाः पक्वा विबद्धाः स्रोतसां मलाः । अचिरज्वरितस्यापि तदा दद्याद्विरेचनम् । पक्वोह्यनिर्हृतो दोषो देहे तिष्ठन् महात्ययम् । विषमं वा ज्वरं कुर्य्याद्बलव्यापदमेव च । तस्मान्निर्हरणं कार्य्यं दोषाणां वमनादिभिः । प्राक्कर्म्म वमनं चास्य कार्य्यमास्थापनं तथा । विरेचनं तथा कुर्य्याच्छिरसश्च विरेचनम् । क्रमेण बलिने देयं वमनं श्लैष्मिके ज्वरे । पित्तप्राये विरेकस्तु कार्य्यः प्रशिथिलाशये । सरुजेऽनिलजे कार्य्यं सोदावर्त्ते निरूहणम् । कटीपृष्ठग्रहार्त्तस्य दीप्ताग्नेरनुवासनम् । शिरोगौरवशूलघ्नमिन्द्रियप्रतिबोधनम् । कफाभिपन्ने शिरसि कार्य्यं मूर्द्धविरेचनम् । दुर्ब्बलस्य समाध्मातमुदरं सरुजं दिहेत् । दारुहैमवतीकुष्ठशताह्वाहिङ्गुसैन्धवैः । अम्लपिष्टैः सुखोष्णैश्च पवने तूर्द्ध्वमागते । रुद्धमूत्रपुरीषाय गुदे वर्त्तिं निधापयेत् । पिप्पलीपिप्पलीमूलयवानीचव्यसाधिताम् । पाययेत यवागूं वा मारुतस्यानुलोमनीम् । शुद्धस्योभयतो यस्य ज्वरः शान्तिं न गच्छति । सशेषदोषरूक्षस्य तस्य तं सर्पिषा जयेत् । लघञ्चैवाल्पदोषञ्च शमनीयैरुपाचरेत् । उपवासैर्बलस्थन्तु ज्वरे सन्तर्पणोत्थिते । क्लिन्नां यवागूं मन्दाग्निं तृषार्त्तं पाययेन्नरम् । तृट्छर्द्दिदाहघर्म्मार्त्तं मद्यपं लाजतर्पणम् । सक्षौद्रमम्भसा पश्चाज्जीर्णे यूषरसौदनम् । उपवासश्रमकृते क्षीणे वाताधिके ज्वरे । दीप्ताग्निं भोजयेत् प्राज्ञो नरं मांसरसौदनम् । मुद्गयूषौदनञ्चापि हितं कफसमुत्थिते । स एव सितया युक्तः शीतः पित्तज्वरे हितः । दाडिमामलमुद्गानां यूषश्चानिलपैत्तिके । ह्रस्वमूलकयूषेण भोजयेत्कफवातिके । पटोलनिम्बयूषस्तु पथ्यः पित्तकफात्मके । दाहच्छर्द्दियुतं क्षामं निरन्नं तृष्णयार्द्दितम् । सिताक्षौद्रयुतं लाजतर्पणं पाययेत च । कफपित्तपरीतस्य ग्रीष्मेऽम्लकपित्तिनस्तथा । मद्यनित्यस्य न हिता यवागूस्तमुपाचरेत् । यूषैरम्लैरनम्लैर्वा जाङ्गलैर्वा रसैर्हितैः । मद्यं पुराणं मन्दाग्नेर्यवान्नोपहितं हितम् । सव्योषं वितरेत्तक्रं कफारोचकपीड़िते । रूक्षोऽल्पदोषो दीनश्च नरो जीर्णज्वरार्द्दितः । विबद्धः सृष्टदोषश्च रूक्षः पित्तानिलज्वरी । पिपासार्त्तः सदाहो वा पयसा स सुखी भवेत् । तदेव तु पयः पीतं तरुणे हन्ति मानवम् । सर्व्वज्वरेषु सप्ताहं मात्रावद्भोजनं हितम् । वेगापायेऽन्यथा तद्धि ज्वरवेगाभिवर्द्धनम् । ज्वरितो हितमश्नीयाद्यद्यप्यस्यारुचिर्भवेत् । अन्नकाले ह्यभुञ्जानः क्षीयते म्रियतेऽथ वा । गुर्व्वभिष्यन्द्यकाले च ज्वरी नाद्यात्कथञ्चन । न तु तस्याहितं भुक्तमायुषे वा सुखाय वा । सततं विषमं वापि क्षीणस्य सुचिरोत्थितम् । ज्वरं संभोजनैः पथ्यैर्लघुभिः समुपाचरेत् । मुद्गान्मसूरांश्चणकान् कुलत्थान् समकुष्ठकान् । आहारकाले यूषार्थं ज्वरिताय प्रदापयेत् । लावान् कपिञ्जलानेणान् पृषतान् शरभान् शशान् । कालपुच्छान् कुरङ्गांश्च तथैव मृगमातृकाम् । मांसार्थं मांससात्म्यानां ज्वरितानां प्रदापयेत् । सारसक्रौञ्चशिखिनः कुक्कुटांस्तित्तिरींस्तथा । गुरूष्णत्वान्न शंसन्ति ज्वरे केचिच्चिकित्सकाः । ज्वरितानां प्रकोपन्तु यदा याति समीरणः । तदैतेऽपि हि शस्यन्ते मात्राकालोपपादिताः । परिषेकावगाहांश्च स्नेहान् संशोधनानि च । स्नानाभ्यङ्गदिवास्वप्नशीतव्यायामयोषितः । न भजेत ज्वरोन्मुक्तो यावन्न बलवान् भवेत् । त्यक्तस्यापि ज्वरेणाशु दुर्ब्बलस्याहितैर्ज्वरः । प्रत्यापन्नो दहेद्देहं शुष्कं वृक्षमिवानलः । तस्मात्कार्य्यः परीहारो ज्वरमुक्तेन जन्तुना । यावन्न प्रकृतिस्थः स्याद्दोषतः प्राणतस्तथा । ज्वरे प्रमोहो भवति स्वल्पैरप्यवचेष्टितैः । निषण्णं भोजयेत् तस्मान्मूत्रोच्चारौ च कारयेत् । अरोचके गात्रसादे वैवर्ण्येऽङ्गमर्द्दादिषु । शान्तज्वरोऽपि शोध्यः स्यादनुबन्धभयान्नरः । न जातु तर्पयेत् प्राज्ञः सहसा ज्वरकर्षितम् । तेन सन्दूषितो ह्यस्य पुनरेव भवेज्ज्वरः । चिकित्सेच्च ज्वरान् सर्व्वान्निमित्तानां विपर्य्ययैः । श्रमक्षयाभिघातोत्थे मूलव्याधिमुपाचरेत् । क्षीणामपप्रजातानां शान्त्यावतरणे च यः । तत्र संशमनं कुर्य्याद्यथादोषं विधानवित्" ।

अत्र विशेषो गरुड़ पुरा० १५२ अ० उक्तो यथा ।
"ज्वरोरोगपतिः पाप्मा मृत्युराजोऽशनोऽन्तकः । क्रोधाद्दक्षाध्वरध्वंसी रुद्रोर्द्ध्वनयनोद्भवः । तत्सन्तापो मोहमयः सन्तापात्माऽपचारजः । विविधैर्नामभिः क्रूरो नानायोनिषु वर्त्तते । पाकलो गजेष्वभितापो वाजिष्वलर्कः कुक्कुरेषु । इन्द्रमदो जलदेऽप्सु नीलिका ज्योतिरौषधिषु भूम्यामूषरो नाम । हृल्लासश्छर्द्दनं कासः स्तम्भः शैत्यं त्वगादिषु । अङ्गेषु शीतपिड़कामात्रो दर्द्दः कफोद्भवे । काले यथास्वं सर्व्वेषां प्रवृत्तिर्वृद्धिरेव वा । निदानोक्तानुपशयो विपरीतोपशायिता । अरुचिश्चाविपाकश्च स्तम्भमालस्यमेव च । हृद्दाहश्च विपा-

कश्च तन्द्राङ्गालस्यमेव च । वह्निर्विसर्गविबद्धा दोषाणामप्रवर्त्तनम् । लालाप्रसेको हृल्लासः क्षुन्नाशो रसदं सुखम् । यच्च स्तब्धं गुरुत्वञ्च गात्राणां बहुमूत्रता । न विजीर्णो न वा ग्लानिर्ज्वरस्यामस्य लक्षणम् । क्षुत्क्षामता लघुत्वञ्च गात्राणां ज्वरमार्दवम् । दोषप्रवृत्तिरष्टाहो निरामज्वरलक्षणम् । यथास्वलिङ्गं संसर्गे ज्वरसंसर्गजोऽपि वा । शिरोऽर्त्तिमूर्च्छावमिदेहदाहकण्ठास्यशोषारुचिपर्वभेदाः । उन्निद्रता संभ्रमरोमहर्षौ जृम्भातिवाक्त्वं पवनात् स पित्तात् । तापहान्यरुचिपर्वशिरोरुक् पीनसश्वसनकासविबन्धाः । शीतजाड्यतिमिरभ्रमितन्द्राः श्लेष्मवातजनितज्वरलिङ्गम् । शीतस्तम्भस्वेददाहव्यवस्था तृष्णाकासः श्लेष्मपित्तप्रवृत्तिः । मोहस्तन्द्रालिप्ततिक्तास्यता च श्लेयं रूपं श्लेष्मपित्तज्वरस्य । सर्वजो लक्षणैः सर्वैर्दाहोऽत्र च मुहुर्मुहुः । तद्वच्छीतं महानिद्रा दिवा जागरणं निशि । सदा वा नैव वा निद्रा महास्वेदोऽति नैव वा । गीतनर्त्तनहास्यादिप्रकृतेहाप्रवर्त्तनम् । साश्रुणी कलुषे रक्ते भग्ने लुलितपक्ष्मणी । अक्षिणी पिण्डिका पार्श्वमूर्द्धपर्व्वास्थिरुग्भ्रमः । सस्वनौ सरुजौ कर्णौ महास्वेदोऽति नैव वा । परिदग्धा खरा जिह्वा गुरुस्रस्ताङ्गसन्धिभा । रक्तपित्तकफे जिह्वा लोचने शिरसोऽतिरुट् । कोठानां श्यावरक्तानां मण्डलानाञ्च दर्शनम् । हृद्व्यथा मलसंसर्गः प्रवृत्तिरल्पशोऽति वा । स्निग्धास्यता बलभ्रंशः स्वरसादः प्रलापिता । दोषपाकश्चिरात्तन्द्रा प्रततं कण्ठकूजनम् । सन्निपातमभिन्यासं तं ब्रूयाच्च हृतौजसम् । वायुना कफरुद्धेन पित्तमन्तः सुपीडितम् । व्यवायित्वाच्च सौक्ष्म्याच्च बहिर्मार्गं प्रपद्यते । तेन हारिद्रनेत्रत्वं सन्निपातोद्भवे ज्वरे । दोषे विबद्धे नष्टेऽग्नौ सर्वसंपूर्णलक्षणः । असाध्यः सोऽन्यथा कृच्छ्रो भवेद्वैकल्यदोऽपि वा । अन्यश्च सन्निपातोत्थो यत्र पित्तं पृथक् स्थितम् । त्वचि कोष्ठे च वा दाहं विदधाति पुरोऽनु वा । तद्वद्वातकफौ शीतं दाहादिर्दुस्तरस्तयोः । शीतादौ तत्र पित्तेन कफे स्यन्दितशोषिते । शीते शान्तेऽग्रके मूर्च्छा मदस्तृष्णा च जायते । दाहादौ पुनरन्ते स्युस्तन्द्रास्वेदवमिक्लमाः । आगन्तुरभिघाताभिषङ्गशापाभिचारतः । चतुर्द्धा तु क्षतच्छेदो दाहाद्यैरभिघातजः । श्रमाच्च तस्मिन् पवनः प्रायो रक्तं प्रदूषयन् । सव्यथाशोकवैवर्ण्यं सरुजं कुरुते ज्वरम् । ग्रहावेशौषधिविषक्रोधभीशोककामजः । अभिषङ्गाद् ग्रहेणास्मिन्नकस्मात् हासरोदने । औषधीगन्धजे मूर्च्छा शिरोरुग्वमथुः क्षवः । विषात् मूर्च्छातिसाराश्यावता दाहतृड्भ्रमः । क्रोधात् कम्पः शिरोरुक् च प्रलापो भयशोकजे । कामाद्भ्रमोऽरुचिर्दाहो ह्रीनिद्राधीधृतिक्षयः । ग्रहादौ सन्निपातस्य रूपादौ मरुतस्तयोः । कोपः कोपेऽपि पित्तस्य यौ तु शापाभिचारजौ । सन्निपातज्वरौ घोरौ तावसह्यतमौ मतौ । तत्राभिचारिकैर्मन्त्रैर्हूयमानस्य तप्यते । पूर्वञ्चेतस्ततो देहस्ततो विस्फोटतृड्भ्रमैः । सदाहमूर्च्छैर्ग्रस्तस्य प्रत्यहं वर्द्धते ज्वरः । इति ज्वरोऽष्टधा दृष्टः समासाद्द्विविधस्तु सः । शारीरो मानसः सौम्यस्तीक्ष्णोऽन्तर्बहिराश्रयः । प्राकृतो वैकृतः साध्योऽसाध्यः सामो निरामकः । पूर्वं शरीरे शारीरे तापो मनसि मानसे । पवने योगवाहित्वाच्छीतं श्लेष्मयुते भवेत् । दाहः पित्तयुते मिश्रं मिश्रेऽन्तःसंश्रये पुनः । ज्वरोऽधिकं विकाराः स्युरन्तःक्षोभो मलग्रहः । बहिरेव बहिर्वेगे तापोऽपि च सुसाधितः । वर्षाशरद्वसन्तेषु वाताद्यैः प्राकृतः क्रमात् । वैकृतोऽन्यः सदुःसाध्यः प्रायश्च प्राकृतोऽनिलात् । वर्षासु मारुतो दुष्टः पित्तश्लेष्मान्वितो ज्वरम् । कुर्य्यात् पित्तञ्च शरदि तस्य चानुबलः कफः । तत्प्रकृत्या विसर्गाच्च तत्र नानशनाद्भयम् । कफो वसन्ते तमपि वातपित्तं भवेदनु । बलवत्स्वल्पदोषेषु ज्वरः साध्योऽनुपद्रवः । सर्वथा विकृतिज्ञाने प्रागसाध्य उदाहृतः । ज्वरोपद्रवतीक्ष्णत्वमग्लानिर्बहुमूत्रता । न प्रवृत्तिर्न विजीर्णो न क्षुत् सामज्वराकृतिः । ज्वरवेगोऽधिका तृष्णा प्रलापः श्वसनं भ्रमः । मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम् । जीर्णतामविपर्य्यासात् सप्तरात्रञ्च लङ्घनात् । ज्वरः पञ्चविधः प्रोक्तो मलकालबलाबलात् । प्रायशः सन्निपातेन भूयसाऽप्युपदिश्यते । सन्ततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ । धातुमूत्रशकृद्वाहिस्रोतसां व्यापिनो मलाः । तापयन्तस्तनूं सर्वां तुल्यदूष्यादिवर्द्धिताः । बलिनो गुरवस्तद्वद्विशेषेण रसान्विताः । सततं निष्प्रतिद्वन्द्वा ज्वरं कुर्य्युः सुदुःसहम् । मलं ज्वरोष्मा धातून् वा स शीघ्रं क्षपयेत्ततः । सर्व्वाकाररसादीनां शुद्ध्याऽशुद्ध्यापि वा क्रमात् । वातपित्तकफैः सप्तदशद्वादशवासरान् । प्रायोऽनुयाति मर्य्यादां मोक्षाय च वधाय च । इत्यग्निवेशस्य मतं

हारीतस्य पुनः स्मृतिः। द्विगुणा सप्तमी (चतुर्दशी) या च नवम्येकादशी तथा। एषा त्रिदोषमर्य्यादा मोक्षाय च बधाय च। शुद्ध्यशुद्धौ ज्वरः कालं दीर्घमप्यत्र वर्त्तते। कृशानां व्याधियुक्तानां मिथ्याहारादिसेविनाम्। अल्पोऽपि दोषो दुष्ट्यादेर्लब्ध्वान्यतमतो बलम्। स प्रत्यनीको विषमं यस्माद्वृद्धिक्षयान्वितः। सोऽरिपक्षो ज्वरं कुर्य्याद्विषमक्षयवृद्धिभाक्। दोषः प्रवर्त्तते तेषां स्वे काले ज्वरयन् बली। निवर्त्तते पुनश्चैव प्रत्यनीकबलाबलः। क्षीणदोषे ज्वरः सूक्ष्मो रसादिष्वेव लीयते। लीनत्वात् कार्श्यवैवर्ण्यजाड्यादीनादधाति सः। आसन्नविवृतास्यत्वात् स्रोतसां रसवाहिनाम्। आशु सर्वस्य वपुषो व्याप्तिर्दोषेण जायते। सन्ततः सततस्तेन विपरीतो विपर्य्ययात्। विषमो विषमारम्भः क्षपाकालेन सङ्गवान्। दोषो रक्ताश्रयः प्रायः करोति सन्ततं ज्वरम्। अहोरात्रस्य सन्धिः स्यात् सकृदन्येद्युराश्रितः। तस्मिन्मांसवहा नाड़ी मेदोनाड़ी तृतीयके। ग्राही पित्तानिलान् मूर्द्ध्निकस्य कफपित्ततः। स पृष्ठस्यानिलकफात् स चैकाहान्तरः स्मृतः। चतुर्थको मलैर्मेदोमज्जास्थ्न्यतरस्थिते। मज्जास्थत्वैत्यपरः प्रभावमनुदर्शयेत्। द्विविधं कफेन जङ्घाभ्यां सपूर्वं शिरसोऽनिलात्। अस्थिमज्जोभयगते चातुर्थकविपर्य्ययः। त्रिधा त्र्यहं ज्वरयति दिनमेकञ्च मुञ्चति। बलाबलेन दोषाणामनुचेष्टादिजन्मनाम्। पक्वानामविपर्य्यासात् सप्तरात्रन्तु लङ्घयेत्। ज्वरः स्यात् मनसस्तद्वत् कर्मणश्च तदा तदा। गम्भीरधातुचारित्वात् सन्निपातेन सम्भवात्। तुल्यो भूयिष्ठदोषाणां दुश्चिकित्स्यश्चतुर्थकः। सूक्ष्मात् सूक्ष्मतरास्वेषु दूराद्दूरतरेषु च। दोषो रक्तादिमार्गेषु शनैरल्पश्चिरेण यत्। याति देहस्य नाशेषं सन्तापादीन् करोत्यतः। क्रमो यत्नेन विच्छिन्नः सन्तापो लक्ष्यते ज्वरः। विषमो विषमारम्भः क्षपाकालानुसारवान्। यथोत्तरं मन्दमतिर्मन्दशक्तिर्यथायथम्। कालेनाप्नोति सदृशान् स रसादींस्तथा तथा। दोषो ज्वरयति क्रुद्धश्चिराच्चिरतरेण च। भूमौ स्थितं जलैः सिक्तं कालमेव प्रतीक्षते। अङ्कुराय यथा वीजं दोषवीजं भवेत्तथा। वेगं कृत्वा विषं यद्वदाशये नीयते बलम्। कुप्यत्याप्तबलं भूयः काले दोषविषं तथा। एवं ज्वराः प्रवर्त्तन्ते विषमाः सन्ततादयः। उत्क्लेशो गौरवं दैन्यं भङ्गोऽङ्गानां विजृम्भणम्। अरोचको वमिः श्वासः सर्वस्मिन्नसगे ज्वरे। रक्तनिष्ठीवनं तृष्णा अक्ष्णोस्तु पिड़कोद्गमः। दाहरागभ्रममदप्रलापो रक्तसंश्रिते। तृड्ग्लानिः सृष्टवर्च्चस्त्वमन्तर्दाहो भ्रमस्तथा। दौर्बल्यं गात्रविक्षेपो मांसस्थे मेदसि स्थिते। स्वेदोऽतितृष्णा वमनं दौर्गन्ध्यञ्चासहिष्णुता। प्रलापो ग्लानिररुचिरस्थिगे त्वस्थिभेदनम्। दोषप्रवृत्तिरूर्द्ध्वाधःश्वासाङ्गक्षेपकूजनम्। अन्तर्दाहो बहिःशैत्यं श्वासो हिक्का च मज्जगे। तमसो दर्शनं मर्म्मच्छेदनं स्तब्धमेढ्रता। शुक्रप्रवृत्तिर्मृत्युश्च जायते शुक्रसंश्रये। उत्तरोत्तरदुःसाध्याः पश्चान्यो ते विपर्य्यये। प्रलिम्पन्निव गात्राणि श्लेष्मणा गौरवेण च। मन्दज्वरः प्रलापस्तु स शीतः स्यात् प्रलेपकः। नित्यं मन्दज्वरो रूक्षः शीतः कृच्छ्रेण गच्छति। स्तब्धाङ्गः श्लेष्मभूयिष्ठो भवेद्वातबलासकः। हरिद्राभेदवर्णाभस्तद्वल्लेपः प्रमेहति। स वै हारिद्रको नाम ज्वरभेदोऽन्तकः स्मृतः। कफवातौ समौ यत्र हीनपित्तस्य देहिनः। तीक्ष्णोऽथ वा दिवा मन्दो जायते रात्रिजो ज्वरः। दिवाकरापीतबले व्यायामाच्च विशोषिते। शरीरे नियतस्थाता ज्वरः स्यात् पौर्वरात्रिकः। आमाशये यदा दुष्टे श्लेष्मपित्ते ह्यधःस्थिते। तदार्द्धं शीतलं देहे त्वर्द्धं चोष्णं प्रजायते। काये पित्तं यदा दुष्टं श्लेष्मा चान्ते व्यवस्थितः। उष्णत्वं तेन देहस्य शीतत्वं करपादयोः। रसरक्ताश्रयः साध्यो मांसमेदोगतश्च यः। अस्थिमज्जागतः कृच्छ्रस्तैस्तैः साङ्कैर्हतप्रभः। विसंज्ञो ज्वरवेगार्त्तः सक्रोध इव वीक्ष्यते। सदोषशब्दञ्च शकृद्द्रवं मुञ्चति वेगवत्। देहो लघ्वव्यपगतक्लममोहतापः पाको मुखे करणसौष्ठवमव्यथत्वम्। स्वेदः क्षवः प्रकृतिगामिमनोऽन्नलिप्सा कण्डूश्च मूर्ध्नि विगतज्वरलक्षणानि"।

माधवकरनिदाने वातिकादीनां लक्षणभेद उक्तस्तत्र वातिकस्य लक्षणं यथा

"वेपथुर्विषमो वेगः कण्ठौष्ठपरिशोषणम्। निद्रानाशः क्षवःस्तम्भो गात्राणां रौक्ष्यमेव च। शिरोहृद्गात्ररुग्वक्त्रवैरस्यं गाढ़विट्कता। शूलाध्माने जृम्भणञ्च भवत्यनिलजे ज्वरे।

पैत्तिकस्य लक्षणं यथा

"वेगस्तीक्ष्णोऽतिसारश्च निद्राल्पत्वं तथा वमिः। कण्ठौष्ठमुखनासानां पाकः स्वेदश्च जायते। प्रलापो वक्त्रकटुता मूर्च्छा दाहो मदस्तृषा। पीतविण्मूत्रनेत्रत्वं पैत्तिके भ्रम एव च"।

कफनिमित्तजस्य माधवकरनिदानोक्तं लक्षणं यथा
"स्तैमित्यं स्तिमितो वेग आलस्यं मधुरास्यता। शुक्ल-मूत्रपुरीषत्वं स्तम्भस्तिमिरथापि च। गौरवं शीतमुत्क्लेदो रोमहर्षोऽतिनिद्रता। प्रतिश्यायोऽरुचिः कासः कफजेऽक्ष्णोश्च शुक्लता"।
वातपैत्तिकस्य लक्षणं यथा "तृष्णा मूर्च्छा भ्रमो दाहः स्वप्ननाशः शिरोरुजा। कण्ठास्यशोषो वमथूरोमहर्षोऽरुचिस्तमः। पर्वभेदश्च जृम्भा च वातपित्तज्वराकृतिः।
वातश्लैष्मिकस्य लक्षणं यथा
"स्तैमित्यं पर्वणां भेदो निद्रा गौरवमेव च। शिरोग्रहः प्रतिश्यायः कासः स्वेदाप्रवर्त्तनम्। सन्तापो मध्यवेगश्च वातश्लेष्मज्वराकृतिः"।
पित्तश्लैष्मिकस्य लक्षणं यथा
"लिप्ततिक्तास्यता तन्द्रा मोहः कासोऽरुचिस्तृषा। मुहु-र्दाहो मुहुःशीतं पित्तश्लेष्मज्वराकृतिः"।
सान्निपातिकस्य लक्षणं यथा
"क्षणे दाहः क्षणे शीतमस्थिसन्धिशिरोरुजा। सास्रावे कलुषे रक्ते निभुग्ने चापि लोचने। सस्वनौ सरुजौ कर्णौ कण्ठः शूकैरिवावृतः। तन्द्रा मोहः प्रलापश्च कासः श्वासोऽरुचिर्भ्रमः। परिदग्धा खर-स्पर्शा जिह्वा स्रस्ताङ्गता परम्। ष्ठीवनं रक्तपित्तस्य कफेनोन्मिश्रितस्य च। शिरसो लोटनं तृष्णा निद्रा-नाशो हृदि व्यथा। स्वेदमूत्रपुरीषाणां चिराद्दर्शन-मल्पशः। कृशत्वं नातिगात्राणां सततं कण्ठकूजनम्। कोठानां श्यावरक्तानां मण्डलानाञ्च दर्शनम्। मूकत्वं स्रोतसां पाको गुरुत्वमुदरस्य च। चिरात् पाकश्च दोषाणां सन्निपातज्वराकृतिः"।
असाध्यस्य सान्निपातिकस्य तस्य लक्षणं यथा
"दोषे विबद्धे नष्टेऽग्नौ सर्वसम्पूर्णलक्षणः। सन्नि-पातज्वरोऽसाध्यः कृच्छ्रसाध्यस्ततोऽन्यथा। सप्तमे दिवसे प्राप्ते दशमे द्वादशेऽपि वा। पुनर्घोरतरोभूत्वा प्रशमं याति हन्ति वा। सप्तमी द्विगुणा (चतुर्द्दशी) चैव नवम्येकादशी तथा। एषा त्रिदोषमर्य्यादा मोक्षाय च बधाय च। सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः। शोथः संजायते तेन कश्चिदेव प्रमुच्यते"।
जीर्णस्य लक्षणं यथा
"त्रिसप्ताहव्यतीतस्तु ज्वरोयस्तनुतां गतः। प्लीहाग्नि-सादं कुरुते स जीर्ण इति उच्यते"।

आगन्तोर्लक्षणं यथा "अभिघाताभिचाराभ्यामभिषङ्गाभि-शापतः। आगन्तुर्जायते दोषैर्यथास्वं तं विभावयेत्"।
विषभक्षणजागन्तुकस्य तस्य लक्षणं यथा
"श्यावास्यता विषकृते तथातीसार एव च। भक्तारुचिः पिपासा च तोदश्च सह मूर्च्छया"।
ओषधीगन्धजस्य कामजस्य च तस्य लक्षणं यथा।
"ओषधीगन्धजे मूर्च्छा शिरोरुग्वमथुस्तथा। कामजे चित्त विभ्रंशस्तन्द्रालस्यमभोजनम्"।
भयादिजस्य लक्षणं यथा "भयात् प्रलापः शोकाच्च भवेत् कोपाच्च वेपथुः। अभिचाराभिशापाभ्यां मोह-स्तृष्णा च जायते। भूताभिषङ्गादुद्वेगो हास्यरोदन कम्पनम्। कामशोकभयाद्वायुः क्रोधात् पित्तं त्रयो-मलाः। भूताभिषङ्गात् कुप्यन्ति भूतसामान्यलक्षणाः"।
विषमज्वरस्य संप्राप्तिर्यथा
"दोषोऽल्पोऽहितसम्भूतो ज्वरोत्सृष्टस्य वा पुनः। धातु-मन्यतमं प्राप्य करोति विषमज्वरम्"।
सन्ततादिज्वराणां प्रतिनियतं धातवोदूष्यास्तथा हि
"सन्ततो रसरक्तस्थः सोऽन्येद्युः पिशिताश्रितः। मेदोगत-स्तृतीयेऽह्नि त्वस्थिमज्जगतः पुनः। कुर्य्याच्चातुर्थकं घोरमन्तकं रोगसङ्करम्। सप्ताहं वा दशाहं वा द्वाद-शाहमथापि वा। सन्तत्या योऽविसर्गी स्यात् सन्ततः स निगद्यते। अहोरात्रे सततको द्वौ कालावनुव-र्त्तते। अन्येद्युष्कस्त्वहोरात्र एककालं प्रवर्त्तते। तृतीयक-स्तृतीयेऽह्नि चतुर्थेऽह्नि चतुर्थकः। केचिद्भूताभिषङ्गोत्थं ब्रुवते विषमज्वरम्। कफपित्तात् त्रिकग्राही पृष्ठाद्वात कफात्मकः। वातपित्ताच्छिरोग्राही त्रिविधः स्यात् तृतीयकः। चतुर्थको दर्शयति प्रभावं द्विविधं ज्वरः। जङ्घाभ्यां श्लैष्मिकः पूर्वं शिरस्तोऽनिलसम्भवः। विषम-ज्वर एवान्यश्चातुर्थकविपर्य्ययः। मध्ये अहनी ज्वरय-त्याद्यावन्ते च मुञ्चति"।
वातबलासकलक्षणं
"नित्यं मन्दज्वरो रूक्षः शूनकस्तेन सीदति। स्तब्धाङ्गः श्लेष्मभूयिष्ठो नरो वातबलासकी"।
प्रलेपकलक्षणं यथा
"प्रलिम्पन्निव गात्राणि घर्म्मेण गौरवेण वा। मन्दज्वरो विलेपी च सशीतः स्यात् प्रलेपकः"।
विषमज्वरविशेषाः।
"विदग्धेऽन्नरसे देहे श्लेष्मपित्ते व्यवस्थिते। तेनार्द्धं

शीतलं देहे चान्तश्चोष्णं प्रजायते। काये दुष्टं यदा पित्तं श्लेष्मा चान्ते व्यवस्थितः। तेनोष्णत्वं शरीरस्य शीतत्वं हस्तपादयोः” अत्र मतान्तरम्। “काये श्लेष्मा यदा दुष्टः पित्तञ्चान्ते व्यवस्थितम्। शीतत्वं तेन गात्राणामुष्णत्वं हस्तपादयोः”।

शीतपूर्वोज्वरो यथा।
“त्वक्स्थौ श्लेष्मानिलौ शीतमादौ जनयतो ज्वरे। तयोः प्रशान्तयोः पित्तमन्ते दाहं करोति च”।

दाहपूर्वो ज्वरो यथा
“करोत्यादौ तथा पित्तं त्वक्स्थं दाहमतीव च। तस्मिन् प्रशान्ते त्वितरौ कुरुतः शीतमन्ततः। द्वावेतौ दाहशीतादी ज्वरौ संसर्गजौ स्मृतौ। दाहपूर्वस्तयोः कष्टः कृच्छ्रसाध्यतमश्च सः”।

वातादिज्वराणां धातुविशेषदुष्यतया रसादिगतदोषज ज्वराणां लक्षणानि
“गुरुता हृदयोत्क्लेशः सदनं छर्द्यरोचकौ। रसस्थे तु ज्वरे लिङ्गं दैन्यञ्चास्योपजायते”१। रक्तनिष्ठीवनं दाहो मोहश्छर्दनविभ्रमौ। प्रलापः पिड़का तृष्णा रक्तप्राप्ते ज्वरे नृणाम् २। पिण्डिकोद्वेष्टनं तृष्णा दुष्टमूत्रपुरीषता। ऊष्मान्तर्दाहविक्षेपौ ग्लानिः स्यान्मांसगे ज्वरे३। भृशं स्वेद स्तृषा मूर्च्छा प्रलापश्छर्दिरेव च। दौर्गन्ध्यारोचकौ ग्लानिर्मेदःस्थे चासहिष्णुता ४। भेदोऽस्थ्नां कूजनं श्वासो विरेकश्छर्दिरेव च। विक्षेपणञ्च गात्राणामेतदस्थिगते ज्वरे ५। तमः प्रवेशनं हिक्का कासः शैत्यं वमिस्तथा। अन्तर्दाहो महाश्वासो मर्मच्छेदश्च मज्जगे ६। मरणं प्राप्नुयात् तत्र शुक्रस्थानगते ज्वरे ७। शेफसः स्तब्धतामोक्षः शुक्रस्य तु विशेषतः”।

कालभेदे प्राकृतादिज्वरविशेषो यथा
“वर्षाशरद्वसन्तेषु वाताद्यैः प्राकृतः क्रमात्। वैकृतोऽन्यः स दुःसाध्यः प्राकृतश्चानिलोद्भवः। वर्षासु मारुतो दुष्टः पित्तश्लेष्मान्वितो ज्वरम्। कुर्यात् पित्तञ्च शरदि तस्य चानुबलः कफः। तत् प्रकृत्या विसर्गाच्च तत्र नानशनाद्भयम्। कफो वसन्ते तमपि वातपित्तं भवेदनु। काले यथास्वं सर्वेषां प्रवृत्तिर्वृद्धिरेव वा।

अन्तर्वेगज्वरलक्षणम्
“अन्तर्दाहोऽधिकस्तृष्णा प्रलापः श्वसनं भ्रमः। सन्ध्यस्थिशूलमस्वेदो दोषवर्च्चोविनिग्रहः। अन्तर्वेगस्य लिङ्गानि ज्वरस्यैतानि लक्षयेत्”।

बहिर्वेगज्वरलक्षणम् “सन्तापोऽभ्यधिको बाह्यस्तृष्णादीनाञ्च मार्दवम्। बहिर्वेगस्य लिङ्गानि सुखसाध्यत्वमेव च”।

आमज्वरलक्षणम्
“लालाप्रसेको हृल्लासहृदयाशुद्ध्यरोचकाः। तन्द्रालस्याविपाकास्यवैरस्यं गुरुगात्रता। क्षुन्नाशो बहुमूत्रत्वं स्तब्धता बलवान् ज्वरः। आमज्वरस्य लिङ्गानि न दद्यात् तत्र भेषजम्। भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम्।

पच्यमानज्वरस्य लक्षणं यथा
“ज्वरवेगोऽधिकस्तृष्णा प्रलापः श्वसनं भ्रमः। मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम्”।

पक्वज्वरस्य लक्षणम्
“क्षुत्क्षामता लघुत्वञ्च गात्राणां ज्वरमार्दवम्। दोषप्रवृत्तिरष्टाहो निरामज्वरलक्षणम्”।

साध्यज्वरस्य लक्षणं यथा
“बलवत्स्वल्पदोषेषु ज्वरः साध्योऽनुपद्रवः”।

असाध्यज्वरलक्षणं यथा।
“हेतुभिर्बहुभिर्जातो बलिभिर्बहुलक्षणः। ज्वरः प्राणान्तकृद्यश्च शीघ्रमिन्द्रियनाशनः। ज्वरक्षीणस्य शूनस्य गम्भीरो दैर्घ्यरात्रिकः। असाध्यो बलवान् यश्च केशसीमन्तकृज्ज्वरः”।

गम्भीरस्य लक्षणं यथा “गम्भीरस्तु ज्वरो ज्ञेयो ह्यन्तर्दाहेन तृष्णया। आनद्धत्वेन चात्यर्थं श्वासकासोद्गमेन च। आरम्भाद्विषमो यस्तु यश्च वा दैर्घ्यरात्रिकः। क्षीणस्य चातिरूक्षस्य गम्भीरोयस्य हन्ति तम्। विसंज्ञस्ताम्यते यस्तु शेते निपतितोऽपि वा। शीतार्दितोऽन्तरुष्णश्च ज्वरेण म्रियते नरः। यो हृष्टरोमा रक्ताक्षो हृदि संघातशूलवान्। वक्त्रेण चैवोच्छ्वसिति तं ज्वरो हन्ति मानवम्। हिक्काश्वासतृषायुक्तं मूढ़विभ्रान्तलोचनम्। सन्ततोच्छ्वासिनं क्षीणं नरं क्षपयति ज्वरः। हतप्रभेन्द्रियक्षाममरोचकनिपीड़ितम्। गम्भीरतीक्ष्णवेगार्त्तं ज्वरितं परिवर्जयेत्”।

ज्वरस्योपद्रवा रक्षितोक्ताः यथा
“श्वासोमूर्च्छाऽरुचिश्छर्दिस्तृष्णातीसारविड्ग्रहाः। हिक्काकासोऽङ्गभेदश्च ज्वरस्योपद्रवा दश”।

ज्वरमुक्तिपूर्वरूपम्। “दाहः स्वेदो भ्रमस्तृष्णा कम्पविड्भिरंचिता। कूजनञ्चास्यवैगन्ध्यमाकृतिर्ज्वरमोक्षणे”।
“ज्वरमुक्तलक्षणं “स्वेदो लघुत्वं शिरसः कण्डूपाकोमुखस्य च। क्षवथुश्चान्नलिप्सा च ज्वरमुक्तस्य लक्षणम्”।
सुश्रुतगारुड़ाद्युक्तादु विशेषज्ञापनाय पृथगुपन्यासः।

ज्वरितस्य वर्ज्यावर्ज्यानि भावप्र० उक्तानि यथा "सामान्यतो ज्वरी पूर्वं निवाते निलये वसेत्। निवातमायुषो वृद्धिमारोग्यं कुरुते यतः। व्यजनस्थानिलस्तृष्णास्वेदमूर्च्छाश्रमापहः। तालवृन्तभवो वातस्त्रिदोषशमनो मतः। वंशव्यजनजः सोष्णो रक्तपित्तप्रकोपनः। चामरो वस्त्रसंभूतो मायूरो वेत्रजस्तथा। एते दोषजिता वाताः स्निग्धा हृद्याः सुपूजिताः। नवज्वरी भवेद्यत्नाद्गुरूष्णवसनावृतः। यथर्तु पक्वपानीयं पिबेत् किञ्चिन्निवारयन्। विनापि भेषजैर्व्याधिः पथ्यादेव निवर्त्तते। न तु पथ्यविहीनस्य भेषजानां शतैरपि। ततो ज्वरे वर्जनीयान्याह सुश्रुतः "परिषेकान् प्रदेहांश्च स्नेहान् संशोधनानि च। दिवास्वप्नं व्यवायञ्च व्यायामं शिशिरं जलम्। क्रोधप्रवातभोज्यांश्च वर्जयेत्तरुणज्वरी"। परिषेकः स्नानादिः, प्रदेहोऽनुलेपनाभ्यङ्गादिः। परिषेकादिसेवने दोषमाह तत्रैव

"शोषं छर्दिं मदं मूर्च्छां भ्रमं तृष्णामरोचकम्। प्राप्नोत्युपद्रवानेतान् परिषेकादिसेवनात्"। आदिशब्देन प्रदेहादयो गृह्यन्ते। हारीतेन प्रत्येकं सेवने फलमुक्तञ्च "व्यायामज्वरसंवृद्धिर्व्यवायात् स्तम्भमूर्च्छनम्। क्षतिश्च स्नेहपानाद्यैर्मूर्च्छा छर्दिर्मदोऽरुचिः। गुर्वन्नभोजनात् स्वप्नाद्विष्टम्भो दोषकोपनम्। अग्निसादः खरत्वञ्च स्रोतसां च प्रवर्त्तनम्"। क्षतिरिति व्यवायादित्यत्र संबध्यते। स्वप्नात् दिवास्वापात्, ज्वरमुक्तावपि वर्ज्यमाह। "सज्वरो ज्वरमुक्तो वा विदाहीनि गुरूणि च। असात्म्यान्यन्नपानानि विरुद्धाध्यशनानि च। व्यायाममतिचेष्टां वाऽभ्यङ्गं स्नानञ्च वर्जयेत्। तेन ज्वरः शमं याति शान्तश्च न पुनर्भवेत्"। ज्वरी लङ्घनं कुर्य्यादित्याह चरको वाग्भटश्च "आमाशयस्थो हत्वाग्निं सामो मार्गान् पिधापयन्। विदधाति ज्वरं दोषस्तस्माल्लङ्घनमाचरेत्"। तथा "ज्वरादौ लङ्घनं प्रोक्तं ज्वरमध्ये तु पाचनम्। ज्वरान्ते भेषजं दद्याज्ज्वरमुक्ते विरेचनम्। त्रिविधं त्रिविधे दोषे तत्समीक्ष्य प्रयोजयेत्। दोषेऽपि लङ्घनं पथ्यं मध्ये लङ्घनपाचनम्। प्रभूते शोधनं तच्च मूलादुन्मूलयेन्मलान्"। चक्रदत्तश्च "तरुणे तु ज्वरं पूर्वं लङ्घनेन क्षयं नयेत्। आमदोषमविज्ञाय लङ्घयेत्तं यथाविधि,। अन्यच्च "वातः पचति सप्ताहात् पित्तं तु दशभिर्दिनैः। श्लेष्मा द्वादशभिर्वस्तैः पच्यते वदतां वर!।"लङ्घनं लङ्घनीयस्तु कुर्य्याद्दोषानुरूपतः। त्रिरात्रमेकरात्रं वाऽहोरात्रमथ वा ज्वरे। निवातसेवनात् स्वेदाल्लङ्घनादुष्णवारिणः। पानादामज्वरे क्षीणे पश्चादौषधमाचरेत्"। आत्रेयेणोक्तम् "ज्वरादौ लङ्घनं प्रोक्तं ज्वरमध्ये तु पाचनम्। ज्वरान्ते भेषजं दद्याज्ज्वरमुक्ते विरेचनम्। दोषशेषस्य पाकार्थमग्नेः सन्धुक्षणाय च। लङ्घितश्चाप्यदोषश्चेत् यवागूपानमाचरेत्। शालिषष्टिकमुद्गानां यूषं वा शक्तमाचरेत्। पञ्चकोलेन संसिद्धां यवागूं मध्यलङ्घने। अत्यर्थं लङ्घितं दृष्ट्वा तस्य सन्तर्पणं हितम्। द्राक्षादाड़िमखर्ज्जूरपियालैः सपरूषकैः। तर्पणार्हस्य कर्त्तव्यन्तर्पणं ज्वरशान्तये"। अत्र लङ्घनशब्देनानशनमुच्यते। यत आह सुश्रुतः "आनद्धःस्तिमितैर्दोषैर्यावन्तं कालमातुरः। तावत्त्वनशनं कुर्य्यात्ततः संसर्गमाचरेत्"। आनद्धःस्तिमितैर्दोषैः सम्बद्धः। संसर्गं औषधान्नादिप्रसङ्गम्। यत आह चरकः "चतुःप्रकारा संशुद्धिः पिपासारोधमारुतौ। पाचनान्युपवासश्च व्यायामश्चेति लङ्घनम्। चतुःप्रकारा संशुद्धिर्वमनञ्च विरेचनम्। निरूहणं च वस्तिश्च शिरोविरेचनं तथा। नत्वनुवासनं कार्य्यं तस्य बृंहणत्वात्। अत्र लङ्घनं कर्षणमित्यर्थः। तथा च सुश्रुतः "शरीरलाघवकरं यद्द्रव्यं कर्म वा पुनः। तं लङ्घनमिति ज्ञेयं बृंहणं तु पृथग्विधम्"। लङ्घनात्कर्षणादन्यत् शरीरपोषकमित्यर्थः। ननु "आनद्धः स्तिमितैर्दोषैरित्यादि पूर्वोक्तसुश्रुतवचनात्सामान्यतो ज्वरिणा यथाऽनशनरूपं लङ्घनं क्रियते। तथा चतुःप्रकारा संशुद्धिः इत्यादि चरकवचनाद्वमनादिरूपं लङ्घनं सर्वैर्ज्वरिभिः कथं न क्रियते। तत्रोच्यते वमनादिकमवस्थाविशेषेषु क्रियते न तु सर्वज्वरेषु तथा च सुश्रुतः "सोत्क्लेशे बलिने देयं वमनं श्लैष्मिकज्वरे। पित्तप्राये विरेकस्तु कार्य्यः प्रशिथिलाशये। सरुजे नीरुजे कार्य्यं सोदावर्त्ते निरूहणम्। कफाभिपन्ने शिरसि कार्य्यं मूर्द्धविरेचनम्"। अपिच सर्वज्वरिभिः पिपासानिग्रहो न कार्य्यः। यत आह हारीतः। "तृष्णा गरीयसी घोरा सद्यः प्राणविनाशिनी। तस्माद्देयं तृषार्त्ताय पानीयं प्राणधारणम्"। अतोऽवस्थाविशेष एव पिपासासहनं ज्वरिभिर्मारुतसेवनं न कार्य्यम् सुश्रुतेन प्रवातसेवनस्य सर्वथा निषिद्धत्वात्। अतो मारुतसेवनमप्यवस्थाविशेष एव युक्तम्। लङ्घनाम्बुयवागूभिर्यदा दोषो न पच्यते। तदा तु मुखवैरस्यतृष्णारोचकनाशनैः। ज्वरघ्नैः पाचनैर्हृद्यैः

कषायैः समुपाचरेत्" इत्यत्र लङ्घनपाचनयोः स्फुट एव भेदः। व्यायामोऽपि न कार्य्यस्तस्यातिनिषिद्धत्वात् अवस्थाविशेषे पुनः पार्श्वपरिवर्तनादिरूपः सोऽपि कर्त्तव्यः तस्माच्चतुःप्रकारा संशुद्धिरित्यादिश्लोके लङ्घनपदं कर्षणपर्य्यायमिति निर्णीतम्। अनशनरूपस्य लङ्घनस्य फलमाह "लङ्घनेन क्षयं नीते दोषे सन्धुक्षितेऽनले। विज्वरत्वं लघुत्वं च क्षुच्चैवास्योपजायते"। लङ्घनेन अनशनेन प्रवृद्धे दोषे क्षयन्नीते। यत आह "आहारं पचति शिखी दोषानाहारवर्जितः"। पचतीति सन्धुक्षितेऽनले आच्छादकदोषे क्षीणेऽग्नौ प्रदीप्ते यथोक्तसंप्राप्तिसामग्रीविघटनात् विज्वरत्वं शरीरस्य गौरवाभावेन लघुत्वम्। क्षुत् बुभुक्षा च जायते इत्यर्थः। अन्यच्चाह सुश्रुतः "अनवस्थितदोषाग्नेर्लङ्घनं दोषपाचनम्। ज्वरघ्नं दीपनं काङ्क्षारुचिलाघवकारणम्"। अनवस्थितदोषाग्नेः स्वस्थानादितो गतोदोषोऽग्निश्च यस्य तस्य ज्वरिणः काङ्क्षा अन्नाभिलाषः, रुचिः लङ्घनेनामपाकान्मुखशोषादिनाशे मुखस्य यत्प्रसन्नत्वं सैव रुचिः शोभा। "रुचिः स्त्री दीप्तिशोभायामभीप्सायामभिलाषयोरिति" मेदिनीकारः" सम्यक्कृतस्य लङ्घनस्य लक्षणमाह "वातमूत्रपुरीषाणां विसर्गे गात्रलाघवे। हृदयोद्गारकण्ठास्यशुद्धौ तन्द्राक्लमे गते। स्वेदे जातेऽरुचौ चापि क्षुत्पिपासासहोदये। कृतं लङ्घनमादेश्यं निर्व्यथे चान्तरात्मनि"। हृदयस्य शुद्धिरनवरोधः उद्गारशुद्धिः सधूमाम्लोद्गाराभावः। कण्ठस्य शुद्धिः कफानवलिप्तत्वम्। आस्यशुद्धिः मुखस्य प्रसन्नरसत्वम्। तन्द्राक्लमे तन्द्रा च क्लमश्च तस्मिंस्तन्द्रा निद्रा क्लमोऽत्र ग्लानिः। क्षुत्पिपासासहोदये क्षुत्पिपासयोः सह युगपदुदये, अन्तरात्मनि मनसि। एतानि लक्षणानि मिलितान्येव सम्यक्कृतं लङ्घनं बोधयन्ति नतु प्रत्येकम्। हीनस्य लङ्घनस्य लक्षणमाह "कफोत्क्लेशः सहृल्लासष्ठीवनं च मुहुर्मुहुः। कण्ठस्य हृदयाशुद्धिस्तन्द्रा स्याद्धीन लङ्घने"। उपस्थितवमनत्वमिव कफोत्क्लेशः कफस्य वमनायोपस्थितिः। हृल्लासष्ठीवनं हृदयात्कफनिर्गमः। अतिशयितस्य लङ्घनस्य लक्षणमाह "पर्वभेदोऽङ्गमर्दश्च कासः शोषो मुखस्य च। क्षुत्प्रणाशोऽरुचिस्तृष्णा दौर्बल्यं श्रोत्रनेत्रयोः। मनसः संभ्रमोऽभीक्ष्णमूर्द्ध्ववातस्तमो हृदि। देहाग्निर्बलहानिश्च लङ्घनेऽतिकृते भवेत्। अरतिर्बलहानिश्च लङ्घनेऽतिकृते भवेत्"। श्रोत्रनेत्रयोः दौर्बल्यं स्वविषयग्रहणासामर्थ्यम्। मनसः संभ्रमः भ्रान्तिः। ऊर्द्ध्ववातः उद्गारबाहुल्यम्। हृदि तमः अन्धकारप्रविष्टस्येवाज्ञानम्। बलरक्षणेन लङ्घनं कारयेदित्याह "बलाविरोधिना चैनं लङ्घनेनोपपादयेत्। बलाधिष्ठानमारोग्यं यदर्थोऽयं क्रियाक्रमः"। अयमर्थः। एनं रोगिणं बलाविरोधिना अनतिबलक्षयकारिणा लङ्घनेन उपपादयेत् कृत इति चेत्तत्राह। यदर्थमस्मै आरोग्याय अयं क्रियाक्रमः चिकित्सोपक्रमः। तत आरोग्यं बलाधिष्ठानं बलाश्रयमित्यर्थः। केषाञ्चिदनशनस्य निषेधमाह सुश्रुतः" "तद्धि मारुततृष्णाक्षुत्मुखशोषभ्रमान्वितैः। न कार्य्यं गुर्विणीबालवृद्धदुर्बलभीरुभिः। न क्षयाध्वश्रमक्रोधकामशोषचिरज्वरी"। तत् अनशनम् उल्वणमारुतयुक्तेन ज्वरिणा न कार्य्यं मारुतोऽत्र निरामोबोद्धव्यः। सामे मारुते लङ्घनं कार्य्यमेव यत आह तन्त्रान्तरे "अवश्यमेव कुर्वीत ज्वरी सामे समीरणे। लङ्घनं ह्यामपाकार्थं न तदूर्द्ध्वं यथा कफे"। तदूर्द्ध्वं आमपाकादूर्द्ध्वम्। अत एवोक्तम् "कफपित्ते द्रुतौ धातू सहेते लङ्घनं बहु। आमक्षयादूर्द्ध्वमपि वायुर्न सहते क्षणम्"। आमस्य लक्षणमाह "आहारस्य रसः सारो यो न पक्वोऽग्निलाघवात्। आमसंज्ञाञ्च लभते बहुव्याधिसमाश्रयः"। तन्त्रान्तरे तु "आममन्नरसं केचित् केचित्तु मलसञ्चयम्। प्रथमं दोषदुष्टिं वा केचिदामं प्रचक्षते। अविपक्वमसंयुक्तं दुर्गन्धं बहुपिच्छिलम्। सादनं सर्वगात्राणामाममित्यभिशब्दितः। तेनामेन समायुक्ताः दोषा दुष्याश्च तादृशाः। तदुद्भवा आमयाश्च साम इति बुधैः स्मृताः"। तत्र सामस्य वातस्य लक्षणमाह, "वायुः सामो विबन्धाग्निः सादतन्द्रान्त्रकूजनैः। वेदनाशोथनिस्तोदैः क्रमशोऽङ्गानि पीड़येत्। विचरेद्युगपच्चापि स्तम्भाति कुपितो भृशम्। स्नेहाद्यैर्वृद्धिमायाति मेघः सूर्योदये निशि"। विचरेद् युगपत् वायुरामस्यैककालं विचरेत् कुपितः सामो वायुः भृशमतिशयेन स्तम्भात्यङ्गानीत्यर्थः। वातस्य तस्यैव निरामस्य लक्षणमाह "निरामो विशदो रूक्षो निर्गन्धोऽल्पवेदनः। विपरीतगुणैः शान्तिः स्निग्धैर्यातिविशेषतः"।

अथ प्रसङ्गात्सामस्य पित्तस्य लक्षणमाह "पित्तं सामं भवेदस्रं दुर्गन्धं हरितं गुरु। अम्लिकाकण्ठहृद्दाहकरं श्यावं तथा स्थिरम्"। अम्लिका अम्लता (चुकोति)

शोके। पित्तस्य तस्य निरामस्य लक्षणमाह। "निरामं पित्तमात्राम्रमत्युष्णं कटुकं सरम्। दुर्गन्धि रुचिकृद्वह्निबलवर्द्धनमीरितम्"।

अथ सामकफस्य लक्षणमाह "आलस्यतन्द्राहृदयाविशुद्धिदोषापहन्त्या विड्मूत्रताभिः। गुरूदरत्वारुचिसुप्तताभिरामान्वितं व्याधिमुदाहरन्ति। आमक्षयेल्लङ्घनकोष्णपेयालघ्वन्नमुद्गौदनतिक्तयूषैः। विरूक्षणस्वेदनपाचनैश्च संशोधनैरूर्द्ध्वमधस्तथैव। तद्वि मारुततृष्णायां लङ्घनं कार्य्यमेव च"। तथा सुश्रुतोक्तस्य-क्षमावपि निरामयोरेव विवक्षितौ सामयोस्तु तयोर्लङ्घनं कार्य्यमेव, गुर्विणीबालवृद्धादिभिरपि निरामैरेव नैव लङ्घनं कार्य्यं सामैः पुनस्तैरपि लङ्घनं कार्य्यमेव। "क्षये धातुक्षये राजयक्ष्मणि च वातजे ज्वरे लङ्घनं न कार्य्यम्। ज्वरी लङ्घनेऽपि जलं पिबेदित्याह सुश्रुतः। "तृषितो मोहमायाति मोहात् प्राणान्विमुञ्चति। अतः सर्वास्ववस्थासु न क्वचिद्वारि वर्जयेत्"। हारीतेनोक्तम् "तृष्णा गरीयसी घोरा सद्यःप्राणविनाशिनी। तस्माद्देयं तृषार्त्ताय पानीयं प्राणधारणम्"। अवश्यं पेयमपि जलं ज्वरी किञ्चिद्वारयन् पिबेत्। यत आह सुश्रुत एव। "जीविनां जीवनं जीवो जगत्सर्वं तु तन्मयम्। अतोऽत्यन्तनिषेधेन न क्वचिद्वारि वारयेत्"। जीवनं जलं क्वचिन्न वारयेदेव तथा च, "ज्वरे नेत्रामये कुष्ठे मन्देऽग्नावुदरे तथा। अरोचके प्रतिश्याये प्रसेके श्वयथौ क्षये। व्रणे च मधुमेहे च पानीयं मन्दमाचरेत्"। मुखप्रसेके अल्पं पिबेत् मन्दमाचरेत् पिबेत्। यत आह "अतियोगेन सलिलं तृष्यतोऽपि प्रयोजितम्। प्रयाति श्लेष्मपित्तत्वं ज्वरितस्य विशेषतः"। तत्र जलं नवज्वरी शीतलं न पिबेदित्याह सुश्रुतः "नवज्वरे प्रतिश्याये पार्श्वशूले गलग्रहे। सद्यःशुद्धौ तथाऽऽध्माने व्याधौ वातकफोद्भवे। अरुचिग्रहणीगुल्मश्वासकासेषु विद्रधौ। हिक्कायां स्नेहपाने च शीतं वारि विवर्जयेत्"। अन्यच्च वर्ज्यमाह स एव "सेव्यमानेन शीतेन ज्वरस्तोयेन वर्द्धते"। अत्र शीतं जलं अक्वथितं निषिद्धम्। तथा सति क्वथितमायातम्। तत्र क्वथितस्य विधिर्गुणाश्च "क्वाथ्यमानं तु निर्वेगं निष्फेनं निर्मलं च यत्। तत्तोयं क्वथितं ज्ञेयं दोषघ्नं पाचनं लघु"। शनैः क्वथितस्य विधानमाह सुश्रुतः "वातश्लेष्मज्वरार्त्ताय हितमुष्णाम्बु तृष्यते। दीपनं स्यात्तु कफजे वातपित्तानुलोमनम्। तद्धि मार्दवकृद्दोषस्रोतसां शीतमन्यथा"। वाग्भटश्च "तृष्णायां प्राग्रमुष्णाम्बु पिबेद्वातकफज्वरे। तत्कफं विलयं नीत्वा तृष्णामाशु निवर्त्तयेत्। उदीर्य्य चाग्निं स्रोतांसि मृदूकृत्य विशोधयेत्। वातपित्तकफस्वेदशकृन्मूत्राणि सारयेत्। अथोष्णोदकस्य लक्षणं गुणाश्च "क्वाथ्यमानन्तु निर्वेगं निष्फेनं निर्मलं तथा। अर्द्धावशिष्टं यत्तोयं तदुष्णोदकमुच्यते। ज्वरकासकफश्वासपित्तवातामभेदनाम्। नाशनं पाचनञ्चैव पथ्यमुष्णोदकं सदा"।

अथर्त्तुभेदे जलस्य पाकभेदः। "त्रिपादशेषं सलिलं शीते शरदि शस्यते"। "अन्ये तु निदाघे त्वर्द्धपादोनं पादहीनन्तु शारदम्। हिमेऽर्द्धशेषं शिशिरे तथा वर्षावसन्तयोः। शिशिरे च वसन्ते च हिमे चार्द्धावशेषितम्। अष्टमांशावशेषन्तु वारि वर्षासु शस्यते।"

ज्वरविषये कश्चिद्दशावस्थादिभेदः चक्रदत्त उक्तो यथा

"ज्वरितं ज्वरमुक्तं वा दिनान्ते भोजयेल्लघु। श्लेष्मक्षये विवृद्धोष्मा बलवाननलस्तदा। गुर्वभिष्यन्दिकाले च ज्वरी नाद्यात् कथञ्चन। न हि तस्याहितं भुक्तमायुषे वा सुखाय वा। लङ्घनं स्वेदनं काले यवाग्वस्तिक्तको रसः। पाचनान्यविपक्वानां दोषाणां तरुणे ज्वरे। आसप्तरात्रं तरुणं ज्वरमाहुर्मनीषिणः। मध्यं द्वादशरात्रन्तु पुराणमत उत्तरम्। पाचनीयं शमनीयं कषायं पाययेत्तु तम्। ज्वरितं षडहेऽतीते लघ्वन्नं प्रतिभोजयेत्। सप्ताहात् परतोऽस्तब्धे सामे स्यात् पाचनं ज्वरे। निरामे शमनं स्तब्धे सामे नौषधमाचरेत्। लालाप्रसेको हृल्लासहृदयाशुद्ध्यरोचकाः। तन्द्रालस्याविपाकास्यवैरस्यं गुरुगात्रता। क्षुन्नाशो बहुमूत्रं च स्तब्धता बलवान् ज्वरः। आमज्वरस्य लिङ्गानि न दद्यात् तत्र भेषजम्। भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम्। मृदौ ज्वरे लघौ देहे प्रचलेषु मलेषु च। पक्वं दोषं विजानीयाज्ज्वरे देयं तदौषधम्"।

तेन ज्वरो नानाविधः ऐकाहिकादिः नवज्वरः जीर्णज्वरः विषमज्वरादिश्च उक्तवाक्येभ्योऽवसेयः।

नक्षत्रभेदे ज्वरोत्पत्तौ मृत्युतद्रोगकालभेदाः मुहूर्त्तचि० पी० धा० उक्ता यथा

"स्वातीन्द्रपूर्वाशिवसार्पभे मृतिर्ज्वरेऽन्त्यमैत्रे स्थिरता भवेद्रुजः। याम्यश्रवोवारुणतक्षभे शिवाघस्रा हि पक्षो द्विरधिपार्कवासवे। मूलाग्निदास्रे नव पित्र्यभे नखा बुभ्रा-

ऐन्द्रमैत्रादितिधातृभे नगाः" मासोऽजवैश्वे ऽथ यमाहि-मूलभे मिश्रे शपित्र्ये फणिदंशने मृतिः । मु० चि०

"स्वातीति । इन्द्रो ज्येष्ठा पूर्वात्रितयः शिव आर्द्रा सार्पभम् अश्लेषा । एषु भेषु ज्वरे पुंसः स्त्रियो वा ज्वरोत्पत्तौ मृतिरेव स्यात् उक्तञ्च वशिष्ठेन "पूर्वात्रयस्वातिभुजङ्गरौद्रसुरेश्वरर्क्षेषु च यस्य रोगः । स्यादृच्छितं देवचिकित्सकोऽपि चिंतामग्नः खलु रोगिणं तम्" देवचिकित्सको देववैद्यो धन्वन्तरिः । अथान्यमैत्रे रेवत्यनुराधयोर्ज्वरोत्पत्तौ दशौ रोगस्य स्थिरता भवेत् बहुकालेन रोगनिवृत्तिः स्यादित्यर्थः । तथा भरण्यादित्रयसप्तकेषु शिवा एकादश चन्द्रादिवसाः रोगस्थैर्य्यं स्यात्तदनन्तरं रोगमुक्तिरिति सर्वत्र व्याख्येयम् । इत्थिं विशाखा अर्को हस्तः वासवं धनिष्ठा एषु त्रिषु भेषु पक्षः पञ्चदश दिवसा रोगस्थैर्यं स्यात् । मूलाश्विदास्रे मूलकृत्तिकाश्विनीषु त्रिषु नव दिवसाः पित्र्यभे मघायां नखा विंशतिर्दिवसाः नामैकदेशे नामग्रहणमिति न्यायेन बुध्नोऽहिर्बुध्न्य उत्तराभाद्रपदा अर्यमोत्तराफाल्गुनी । ऐन्द्रादितिधातृभानि प्रसिद्धानि एषु पञ्चसु भेषु नगाः सप्त दिवसाः । अजवैश्वे अजोत्तराषाढयोर्द्वयोर्मासमितं दिनानि रोगस्थैर्यं ततो रोगनिवृत्तिः यदाह "अच्युतात् स्फुटं प्राप्नोति मित्रपौष्णे धिष्ण्ये च मासाद्वशिविश्वधिष्ण्ये । रोगस्य मुक्तिः पितृदेवधिष्ण्ये वारैर्भवेद्विंशतिभिश्च नूनम्" प्राप्नोति जीवतीत्यर्थः । "पक्षाद्वसुद्रोणकरेषु भेषु मूलाश्विनाग्निलितये नवाहात् । तोयेश चित्रान्तकविष्णुभेषु नैरुज्यमेकादशभिर्दिनैश्च । पुष्ये त्वहिर्बुध्न्य पुनर्वसौ च प्रजार्यमर्क्षेषु च सप्तरात्रात् ।

अत शीघ्रं रोगविमुक्तये संक्षिप्ता शान्तिरप्यभिहिता वसिष्ठेन "ऋक्षेशरूपं कनकेन कृत्वा तल्लिङ्गमन्त्रैश्च सुगन्धिपुष्पैः । वस्त्राक्षतैर्गुग्गुलुधूपदीपनैवेद्यताम्बूलफलैश्च सम्यक् । पूजां च कृत्वामयनाशनाय द्विजाय दद्यादतुलं शिवाय" आमयो रोगः । अतुलमपरिमितद्रव्यम् प्रत्येकनक्षत्रशान्तिविधा नक्षत्रशान्त्यध्याये वसिष्ठेनोक्ता सा तत एव समवधार्या" ।

भैषज्यर० अन्यथा तद्भोगकाल उक्तो यथा

"कृत्तिकायां यदा व्याधिरुत्पन्नो भवति स्वयम् । नवरात्रं भवेत् पीड़ा त्रिरात्रं रोहिणीषु च । मृगशीर्षे पञ्चरात्रमार्द्रायां मुच्यतेऽसुभिः । पुनर्वसौ तथा पुष्ये सप्तरात्रेण मोचनम् । नवरात्रं तथाऽश्लेषे श्मशानान्तं मघासु च । द्वौ मासौ पूर्वफल्गुन्यामुत्तरासु त्रिपक्षकम् । हस्ते च सप्तमे मोक्षश्चित्रायामर्द्धमासकम् । मासद्वयं तथा स्वात्यां विशाखे दिनविंशतिः । मित्रे चैव दशाहानि ज्येष्ठायामर्द्धमासकम् । मूलेन जायते मोक्षः पूर्वाषाढे त्रिपक्षकम् । उत्तरे दिनविंशत्या द्वौ मासौ श्रवणे तथा । धनिष्ठायामर्द्धमासो वारुणे च दशाहकम् । पूर्वभाद्रपदे देवि ! ऊनविंशतिवासरान् । त्रिपक्षश्चाहिर्बुध्न्ये च रेवत्यां दशरात्रकम् । अहोरात्रं तथाश्विन्यां भरण्यान्तु गतायुषः । एवं क्रमेण जानीयान्नक्षत्रेषु यथोचितम्" ।

रोगिणस्तारायुक्तिप्रयुक्तिभ्यां भोगकालभेदव्यवस्था ।

तिथिनक्षत्रवारयोगभेदे ज्वरोत्पत्तौ मु० चि मृत्युरुक्तो यथा ।

"रौद्राहिशाक्राम्बुपयाम्यपूर्वाद्विदैववस्त्रिषु पापवारे । रिक्ताहरिस्कन्ददिने च रोगे शीघ्रं भवेद्रोगिजनस्य मृत्युः" मु० चि० ।

"रौद्रादीनि भानि प्रसिद्धानि पापवाराः सूर्यभौमशनयः रिक्ताः प्रसिद्धाः हरिर्द्वादशी स्कन्ददिनं षष्ठी एतास्तिथयः एवंविधे विशिष्टयोगे यस्य रोगोत्पत्तिर्भवेत्तस्य रोगिजनस्य शीघ्रं मृत्युर्भवेत् । उक्तं च दैवज्ञमनोहरे "उरगवरुणरुद्रावासवेन्द्रत्रिपूर्वायमदहनविशाखाः पापवारेण युक्ताः । तिथिषु नवमिषष्ठीद्वादशी वा चतुर्थी सहजमरणयोगो रोगिणां कालहेतुः" इति चतुर्थीग्रहणं चतुर्दश्युपलक्षकं मत्वा मूले रिक्ताग्रहणं कृतम् अतएवाह वशिष्ठः "अश्लेषार्द्रात्रिपूर्वायमवरुणमघाशक्रतारानलाः सुहृद्दश्यां स्कन्दरिक्तातिथिषु च रविजार्कारवारेषु येषाम् । रोगः संजायते ते यमपुरमचिरात् प्राप्नुवन्त्येव चन्द्रे जन्मन्यष्टान्त्यस्थे व्ययभवनगते मृत्युलग्ने च राशाविति" पी० धा० ।

अस्य प्रतिप्रसवः "यद्यत्र चन्द्रस्तस्यैव गोचरे चाशुभप्रदः । तदा नूनं भवेन्मृत्युः शुभाशंसिकृदेहिन" । इति दीपिकाटीकाधृतवाक्यम् ।

२ज्वराधिष्ठातृदेवभेदे च रौद्रज्वरदेवस्य वैष्णवज्वरदेवेन युद्धादिकथा हरिवं० १८१ अ०

"भज्यमानेष्वनीकेषु बाणकामः समभ्ययात् । ज्वरस्त्रिपादस्त्रिशिराः षड्भुजो नवलोचनः । भस्मप्रहरणो रौद्रः कालान्तकयमोपमः । नदन्मेघसहस्रस्य तुल्यो निर्घातनिस्वनः । निश्वसन् जृम्भमाणश्च निद्रान्वितत्नुर्भृ-

शम्। नेत्राभ्यामाकुलं वक्त्रं क्रुद्धः कुर्वन् भ्रमद्भ्रुकुः। संहृष्टरोमा ग्लानाक्षः क्षिप्तचित्त इव श्वसन्। हलायुधमभिक्रुद्धः साक्षेपमिदमब्रवीत्”। तेन बलरामस्याभिभवे ततस्तस्य कृष्णेन सह युद्धे पराजयकथा १८२ अ०
“स्तत इत्यभिविज्ञाय ज्वरं शत्रुनिसूदनः। कृष्णो भुजबलात्तन्तु चिक्षेपाथ महीतले। क्षिप्तमात्रस्तु बाहुभ्यां कृष्णदेहं विवेश सः। अमुक्त्वा विग्रहन्तस्य कृष्णस्याप्रतिमौजसः। स ह्याविष्टस्तदा तेन ज्वरेणाप्रतिमौजसा। कृष्णः स्खलन्निव क्रुद्धः क्षितौ गाढ़ं व्यवर्त्तत। जृम्भते क्ष्वसते चैव स्खलते च पुनः पुनः। रोमाञ्चोत्थितगात्रस्तु निद्रया चाभिभूयते। ततः स्थैर्य्यं समालम्ब्य कृष्णः परपुरञ्जयः। विकुर्वाणो महायोगी जृम्भमाणः पुनः पुनः। ज्वराभिभूतमात्मानं विज्ञाय पुरुषोत्तमः। सोऽसृजज्ज्वरमन्यं तु पूर्वज्वरविनाशनम्। घोरं वैष्णवमत्युग्रं सर्वप्राणिभयङ्करम्। स सृष्टमात्रस्तेजस्वी बलवान् भीमविक्रमः। कृष्णज्वरो ज्वरं पूर्वं गृहीत्वा स्वेन तेजसा। कृष्णाय हृष्टः प्रायच्छत्तं तथाह ततो हरिः। ततस्तं परमक्रुद्धो वासुदेवो महाबलः। स्वगात्रात् स्वज्वरेणैव निरक्रामयत् वीर्य्यवान्। आविध्य भूतले चैनं शतधा कर्त्तुमुद्यतः। व्याघोषयज्ज्वरस्तत्र भोः परित्रातुमर्हसि। आविध्यमाने तस्मिंस्तु कृष्णेनामिततेजसा। अशरीरा ततो वाणी तमुवाचान्तरीक्षगा। कृष्ण! कृष्ण! महाबाहो! यदूनां नन्दिवर्द्धन!। मा वधीर्ज्वरमेतं तु रक्षणीयस्त्वयाऽनघ!। इत्येवमुक्ते वचने तं मुमोच हरिः स्वयम्। भूतभव्यभविष्यस्य जगतः परमो गुरुः। कृष्णस्य पादयोर्मूर्ध्ना शरणं स गतो ज्वरः। प्रणम्य च हृषीकेशं ज्वरो वाक्यमथाब्रवीत्। शृणुष्व मम गोविन्द! विज्ञाप्यं यदुनन्दन!। यो मे मनोरथो देव! तं त्वं कुरु महाभुज!। अहमेको ज्वरस्तात! नान्यो लोके ज्वरो भवेत्। त्वत्प्रसादाद्धि देवेश! वरमेतं वृणोम्यहम्। देव उवाच। एवमस्तु भद्रं ते यथा त्वं ज्वर! काङ्क्षसे। वरार्थिनां वरो देयो भवांश्च शरणागतः। एक एव ज्वरो लोके भवानस्तु यथा पुरा। योऽयं मया ज्वरः सृष्टो मय्येवैष प्रलीयताम्। वैशम्पायन उवाच। एवमुक्ते तु वचने ज्वरं प्रति महायशाः। कृष्णः प्रहरतां श्रेष्ठः पुनर्वाक्यमुवाच ह। कृष्ण उवाच। शृणुष्व ज्वर! सन्देशं यथा लोके चरिष्यसि। सर्वजातिषु विन्यस्तस्तथा स्थावरजङ्गमे। त्रिधा विभजस्व चात्मानं मत्प्रियं यदि काङ्क्षसे। चतुष्पदान् भजैकेन द्वितीयेन च स्थावरान्। तृतीयो यश्च ते भागो मानुषेषूपपत्स्यते। त्रिधाभूतं वपुः कृत्वा पक्षिषु त्वं भव ज्वर!। चतुर्थो यस्तृतीयस्य भविष्यति च ते ध्रुवम्। एकान्तरश्चतुर्भागः खोरकश्च चतुर्थकः। मानुषेष्वेकपादेन वस त्वं प्रविभज्य वै। जातिष्वथावशेषेषु निवस त्वं शृणुष्व मे। वृक्षेषु कीटरूपेण तथा सङ्कोचपत्रकः। पाण्डुपत्रश्च विख्यातः फलेष्वातुर्य्यमेव च। पद्मिनीषु हिमं भूत्वा पृथिव्यामपि चोषरः। अपान्तु नीलिकां भूयाः शिखोद्भेदश्च बर्हिणाम्। गैरिकः पर्वतेष्वेव मत्प्रसादाद्भविष्यसि। गोष्वपस्मारको भूत्वा खोरकश्च भविष्यसि। एवं विविधरूपेण भविष्यसि महीतले। दर्शनात् स्पर्शनाच्चैव प्राणिनां वधमेष्यसि। ऋते देवमनुष्यांश्च नान्यस्त्वां विषहिष्यते”।
जराश्च नानादेवसृष्टा यथोक्तं हरिवं० १६८अ० “पितामहसमुद्भूता रौद्रा रुद्राङ्गसम्भवाः। कुमारस्कन्दजाश्चैव जरा वै वैष्णवादयः” “स्वेद्यमामज्वरं प्राज्ञः कोऽम्भसा परिषिञ्चति” माघः।

**ज्वरकालकेतुरस** पु० ज्वरस्य कालकेतुरिव कर्म्म०। “रसं विषं गन्धकताम्रकञ्च मनःशिलाहिङ्गुलतालकञ्च। विमर्द्य वज्रीपयसा समांशं गजाह्वयं तत्र पुटं विदध्यात्। द्विगुञ्जमस्यैव मधुप्रयुक्तं ज्वरं निहन्त्यष्टविधं महोग्रम्। पुरा भवान्यै कथितो भवेन नृणां हिताय ज्वरकालकेतुः” भैषज्यर० उक्ते औषधभेदे।

**ज्वरकुञ्जरपारीन्द्ररस** पु० ज्वर एव कुञ्जरस्तस्य पारीन्द्रः सिंह इव हिंसकत्वात् तादृशो रसः। भैषज्यर० उक्ते ज्वरनाशके औषधभेदे। तल्लक्षणं तत्रोक्तं यथा “मूर्च्छितं रसकर्षैकं तदर्द्धं जारिताभ्रकम्। तारं ताप्यञ्च रसजं रसकं ताम्रकं तथा। मौक्तिकं विद्रुमं लौहं गिरिजं गैरिकं शिला। गन्धकं हेमसारञ्च पलार्द्धञ्च पृथक् पृथक्। क्षीराशी सुरवल्ली च शोथघ्नी गणिकारिका। भ्राटामला जयोत्पलिका च सतिक्ता तु सुदर्शना। अग्निजिह्वा पूतितैला स्थूलपर्णी प्रसारिणी। प्रत्येकस्वरसं दत्त्वा मर्द्दयेत् त्रिदिनावधि। भक्षयेत् पर्णखण्डेन चतुर्गुञ्जाप्रमाणतः। महाग्निकारको रोग सङ्करघ्नः प्रयोगराट्। सततं सन्ततान्येद्युस्तृतीयकचतुर्थकान्। ज्वरान् सर्वान् निहन्त्याशु भास्करस्तिमिरं तथा। कासं श्वासं प्रमेहञ्च सशोथं पाण्डुकामलाम्। ग्रहणीं क्षयरोगञ्च सर्वोपद्रवसंयुतम्। ज्वरकुञ्जरपारीन्द्रः प्रथितः पृथिवीतले”

**ज्वरकेशरिन्** पु० ज्वरस्य तद्रूपगजस्य केशरीव हन्तृत्वात्। "शुद्धसूतं विषं व्योषं गन्धं त्रिफलमेव च। जयपालसमं कृत्वा भृङ्गतोयेन मर्द्दयेत्। गुञ्जामाला वटी कार्य्या बालानां सर्षपाकृतिः। सितया च समं पीता पित्तज्वरविनाशिनी। मरिचेन प्रयुक्ता सा सन्निपातज्वरापहा। पिप्पलीजीरकाभ्याञ्च दाहज्वरविनाशिनी। ज्वरकेशरिनामायं रसो ज्वरविनाशनः" भैषज्यर० उक्ते औषधभेदे।

**ज्वरघ्न** पु० ज्वरं हन्ति हन—अमनुष्यकर्त्तरि टक्। १गुडूच्याम्, २वास्तूके ३ज्वरनाशके त्रि० शब्दार्थ०। ४मञ्जिष्ठायां स्त्री ङीप्। राजनि०।

**ज्वरधूमकेतुरस** पु० ज्वरस्य धूमकेतुरग्निरिव दाहकत्वात् कर्म०। "भवेत् समं सूतसमुद्रफेनं हिङ्गूलगन्धं परिमर्द्य यत्नात्। नवज्वरे वल्लमितं त्रिपक्षमार्द्राम्बुनाऽयं ज्वरधूमकेतुः" भैषज्यर० उक्ते औषधभेदे।

**ज्वरनागमयूरचूर्ण** न० ज्वर एव नागः सर्पस्तस्य मयूर इव हिंसकत्वात् कर्म०।

"लौहाभ्रटङ्कनं ताम्रं तालकं वङ्गमेव च। शुद्धसूतं गन्धकञ्च शिग्रुवीजं फलत्रिकम्। चन्दनातिविषा पाठा वचा च रजनीद्वयम्। उशीरं चित्रकं देवकाष्ठञ्च सपटोलकम्। जीवकर्षभकाजाजग्रस्तालीशं वंशलोचना। कण्टकारीफलं मूलं शटीपत्रं कटुत्रयम्। गुडूची सत्वधन्याकं कटुका क्षेत्रपर्पटी। मुस्तकं बालकं विल्वं यष्टीमधुसमं समम्। भागाच्चतुर्गुणं देयं कृष्णजीरस्य चूर्णकम्। तत्समं तालपुष्पञ्च चूर्णं दण्डोत्पलाभवम्। कैरातं तत्समं देयं तत्समं चपलाभवम्। एतच्चूर्णं समाख्यातं ज्वरनागमयूरकम्। प्रतिकर्षमितं खाद्यं युक्त्या वा रुचिवर्द्धनम्। सन्ततादिज्वरं हन्ति साध्यासाध्यं न संशयः। चयोद्भवञ्च धातुस्थं कामशोकोद्भवं ज्वरम्। भूतावेशज्वरञ्चैवमभिचारसमुद्भवम्। दाहशीतज्वरं घोरं चातुर्थ्यादिविपर्य्ययम्। जीर्णञ्च विषमं सर्वं प्लीहानमुदरं तथा। कामलां पाण्डुरोगञ्च शोथं हन्ति न संशयः। भ्रमं तृष्णाञ्च कासञ्च शूलानाहौ क्षयं तथा। यकृतं गुल्मशूलञ्च आमवातं निहन्ति च। त्रिकपृष्ठकटीजानुपार्श्वानां शूलनाशनम्। अनुपानं शीतजलं न देयमुष्णवारिणा" भैषज्यर० उक्ते औषधभेदे

**ज्वरवलि** पु० ज्वरशान्त्यै देयो बलिः शाक०। भैषज्यर० उक्ते ज्वरनाशके वलिभेदे तत्प्रकारो यथा "ज्वरामयस्टहीतस्य मुष्टिभिर्नवभिः कृतम्। तण्डुलैरोदनं तेन कुर्य्यात् पुत्तलकं शुभम्। तं हरिद्रावलिप्ताङ्गं चतुःपीतध्वजान्वितम्। हरिद्रारसपूर्णाभिः पुटिकाभिश्चतसृभिः। मण्डितं गन्धपुष्पाद्यैरवकीर्य्य विसर्जयेत्। एवं दिनत्रयं कुर्य्यात् ज्वररोगोपशान्तये" (ओदनेन पुत्तलं निर्माय वीरणचाटिकायां संस्थाप्य हरिद्राभिरवलिप्य चतुःपीतपताकाभिरलङ्कृत्य गन्धपुष्पाद्यैरवकीर्य्य हरिद्रारसपूर्णाश्चतस्रः पुटिकास्तुःकोणे संस्थाप्याः)। पुटिका अश्वत्थपत्ररचितठोङ्गा। अन्योऽपि प्रकारो विधानपारिजातादौ दृश्यः।

**ज्वरभैरवचूर्ण** न० ज्वरस्य भैरव इव विनाशकत्वात् कर्म०। "नागरं त्रायमाणा च पिचुमर्द्दौ दुरालभा। पथ्या मुस्तं वचा दारु व्याघ्री शृङ्गी शतावरी। पर्पटं पिप्पलीमूलं विशाला पुष्करं शटी। मूर्वा कृष्णा हरिद्रे द्वे लोध्रचन्दनमुत्पलकम्। कुटजस्य फलं वल्कं यष्टीमधुकचित्रकम्। शोभाञ्जनं वला चातिविषा च कटुरोहिणी। यवानी पद्मकाष्ठञ्च यमानी शालपर्णिका। मरिचामृता विल्वं वालं पङ्कस्य पर्पटी। तेजपत्रं त्वचं धात्री पृश्निपर्णी पटोलकम्। गन्धकं पारदं लौहमभ्रकञ्च मनःशिला। एतेषां समभागेन चूर्णमेव विनिर्दिशेत्। तदर्द्धं प्रक्षिपेत्तत्र चूर्णं भूनिम्बसम्भवम्। मात्रामस्य प्रयुञ्जीत दृष्ट्वा दोषवलावलम्। चूर्णं भैरवसंज्ञन्तु ज्वरान् हन्ति न संशयः। पृथग्दोषांश्च विविधान् समस्तान् विषमज्वरान्। द्वन्द्वजान् सन्निपातोत्थान् मानसानपि नाशयेत्। प्राकृतं वैकृतञ्चैव सौम्यं तीक्ष्णमथापि वा। अन्तर्गतं बहिःस्थञ्च निरामं साममेव च। ज्वरमष्टविधं हन्ति साध्यासाध्यं न संशयः। नानादेशोद्भवञ्चैव वारिदोषभवं तथा। विरुद्धभेषजभवं ज्वरमाशु व्यपोहति। अग्निमान्द्यं यकृत् प्लीहा पाण्डुरोगमरोचकम्। उदराण्यन्त्रवृद्धिञ्च रक्तपित्तं त्वगामयम्। श्वयथुञ्च शिरःशूलं वातामयरुजां जयेत्। ज्वरभैरवसंज्ञन्तु भैरवेण कृतं शुभम्" भैषज्यर० उक्ते औषधभेदे।

**ज्वरभैरवरस** पु० ज्वरे भैरव इव नाशकत्वात् कर्म०। "त्रिकटु त्रिफला टङ्कविषगन्धकपारदम्। जैपालञ्च समं मर्द्यं द्रोणपुष्पीरसैर्दिनम्। ताम्बूलेन समं खादेद्द्विगुञ्जामितां वटीम्। मुद्गयूषं शिखरिणी पथ्यं देयं प्रयत्नतः। नवज्वरं त्रिदोषोत्थं जीर्णञ्च विषमज्वरम्। दिनैकेन निहन्त्याशु रसोऽयं ज्वरभैरवः" भैषज्यर० उक्ते औषधभेदे।

**ज्वरमातङ्गकेशरिरस** पु० ज्वर एव मातङ्गो गजस्तत्र केशरीव कर्म्म० ।
"पारदं गन्धकं चैव हरितालं समाक्षिकम् । कटुत्रयं तथा पथ्या क्षारौ द्वौ सैन्धवं तथा । निम्बस्य विषमुष्टेश्च बीजं चित्रकमेव च । एषां माषमितं भागं ग्राह्यं प्रति सुसंस्कृतम् । हिमार्धं कानकफलं विषञ्चापि हिमार्धिकम् । निर्गुण्डीस्वरसेनैव शोषयेत्तु प्रयत्नतः । मार्द्र रत्तिप्रमाणेन वटी कार्य्या सुशोभना । सर्वज्वरहरी चैषा भेदिनी दीपनाशिनी । आमाजीर्णप्रशमनी कामला पाण्डुरोगहा । वह्निदीप्तिकरी चैषा जठरामयनाशिनी । उष्णोदकानुपानेन दातव्या हितकारिणी । भाषितो लोकनाथेन ज्वरमातङ्गकेशरी" भैषज्यर० उक्ते औषधभेदे ।

**ज्वरमुरारिरस** पु० ज्वरो मुर इवासुरभेदस्तस्यारिः कर्म्म० ।
"शुद्धसूतं शुद्धगन्धं विषञ्च दरदं पृथक् । कर्षप्रमाणं कर्षार्द्धं लवङ्गं मरिचं पलम् । शुद्धं कनकबीजञ्च पलद्वयमितं तथा । विष्टता कर्षमेकञ्च भावयेद्दन्तिकाद्रवैः । सप्तधा च ततः कार्य्या गुडीगुञ्जाकृता शुभा । ज्वरमुरारिनामायं रसोज्वरकुलान्तकः । अत्यन्ताजीर्णपूर्णे च ज्वरे विष्टम्भसंयुते । सर्वाङ्गव्यथणीगुल्मे चामवातेऽम्लपित्तके । कासश्वासे यक्ष्मरोगेऽप्युदरे सर्वसम्भवे । प्लीहूणां सन्निमज्जस्थे वाते शोथे च दुस्तरे । यकृति प्लीहरोगे च वातरोगे चिरोत्थिते । अष्टादश कुष्ठरोगे सिद्धो गुरुविनिर्मितः" भैषज्यर० उक्ते औषधभेदे ।

**ज्वरशूलहररस** पु० ज्वरस्य शूलं वेदनां हरति हृ-अच् कर्म० ।
"रसगन्धकयोः कृत्वा कज्जलीं भाण्डमध्यगाम् । तत्राधोवदनां ताम्रपात्रीं संरुध्य शोषयेत् । पादाङ्गुष्ठप्रमाणेन चूल्ल्यां ज्वालेन तां दहेत् । यामद्वयं ततस्तस्य रसपात्रं समाहरेत् । चूर्णयेद्दन्तियुगलं तृतीयं वा विचक्षणः । ताम्बूलीदलयोगेन दद्यात् सर्वज्वरेष्वमुम् । जीरसैन्धवसंलिप्तवस्त्राय ज्वरिणे हितम् । खेदोद्गमो भवत्येव देवि ! सर्वेषु पाप्मसु । चातुर्थकादीन् विषमान् नवमागामिनं ज्वरम् । साधारणं सन्निपातं जयत्येष न संशयः । ज्वरशूलहरो नाम रसोऽयं समुदाहृतः" भैषज्यर० उक्ते औषधभेदे ।

**ज्वरसिंहरस** पु० ज्वरस्य तद्रूपगजस्य सिंह इव हन्तृत्वात् कर्म० । भैषज्यरत्नावल्युक्ते औषधभेदे । तल्लक्षणं यथा "पारदं गन्धकं तालं भल्लातकमथैव च । वज्रीक्षीरसमायुक्तमेकत्र च विमर्दयेत् । मृत्तिकाभाजने स्थाप्य मुद्रितव्यं विचक्षणैः । अग्निं प्रज्वालयेत्तत्र प्रहरद्वय संख्यया । शीतलं खलयेत्तत्र भावना च प्रदीयते । भृङ्गराजरसैरत्र गण्डदूर्वाभवै रसैः । चित्रकस्य रसेनापि भावना दीयते पुनः । पश्चात्तच्चूर्णयेद्दु यत्नात् कूपिकायाञ्च धारयेत् । ज्वर उत्पद्यते यस्य चतुर्थे चापरे पुनः । माषैकञ्च रसं देयं तत्क्षणान्नाशयेज्ज्वरम् । ज्वरशान्तेः परं पथ्यं देयं मुद्गौदनः पयः । ज्वरसिंहरसो नाम सर्वज्वरविनाशनः" ।

**ज्वरहन्तृ** त्रि० ज्वरं हन्ति हन्-तृच् । ज्वरनाशके स्त्रियां ङीप् । सा च २मञ्जिष्ठायां राजनि० । [हारा० ।

**ज्वराग्नि** पु० ज्वरः अग्निरिव सन्तापकत्वात् । आधिमन्यौ

**ज्वराङ्कुशरस** पु० ज्वरस्य गजरूपस्य अङ्कुश इव प्रतिरोधकत्वात् कर्म० । भैषज्यर० उक्ते औषधभेदे स च नानाविधो यथा
"शुद्धं सूतं विषं गन्धं धूर्त्तबीजं त्रिभिः समम् । चतुर्णां द्विगुणं व्योषं चूर्णं गुञ्जाद्वयं हितम् । जम्बीरस्य च मज्जाभिरार्द्रकस्य रसैर्युतम् । ज्वराङ्कुशो रसो नाम्ना ज्वरान् सर्वान् निहन्ति वै । (व्योषं मिलित्वा द्विगुणम् । ) ( अयं भेदि ज्वराङ्कुशो नाम्ना ख्यातः ।) अन्योऽपि तत्रैव उक्तो यथा "रसस्य द्विगुणं गन्धं गन्धतुल्यञ्च टङ्कनम् । रसतुल्यं विषं योज्यं मरिचं पञ्चधा विषात् । कटुफलं दन्तिबीजञ्च प्रत्येकं मरिचोन्मितम् । ज्वराङ्कुशो रसोह्येष चूर्णयेदतिचिक्कणम् । माषैकेन निहन्त्याशु ज्वरं जीर्णं त्रिदोषजम्" । अत्रानुरूपमात्रां शर्करादीनां निपीय गिलित्वा किञ्चिज्जलं पिबेत् । अन्यविधोऽपि तत्रैवोक्तो यथा
"ताम्रकाद्द्विगुणं तालं मर्दयेत् सुधवीद्रवैः । प्रपुटेद् भूधरे शीते वज्रीक्षीरेण मर्दयेत् । प्रपुटेत् भूधरे पश्चात् पञ्चगुञ्जामितं भवेत् । आर्द्रकस्य रसेनैव सर्वज्वरनिकृन्तनः । ऐकाहिकम् द्व्याहिकञ्च त्र्याहिकं चातुराहिकम् । विषमञ्चापि शीताद्यं ज्वरं हन्ति ज्वराङ्कुशः" अन्यविधोऽपि तत्रैव "शुद्धसूतं तथा गन्धं कर्षमानं नयेद् बुधः । महौषधं टङ्कनञ्च हरितालं तथा विषम् । रसार्द्धं मर्दयेत् खल्ले भृङ्गराजरसेन तु । त्रिदिनं भावनां दत्त्वा चतुर्थे वटिकां ततः । कुर्याच्चणकमानाञ्च पिप्पलीमधुसंयुताम् । एष ज्वराङ्कुशो नाम विषम-

ज्वरनाशनः" महौषधादीनां चतुर्णां प्रत्येकं रसाङ्कम्। अन्यविधोऽपि "मरिचं टङ्कनं शङ्खचूर्णं पारदगन्धकम्। शोधितं ब्रह्मपुत्रस्य भागमेकं विनिःक्षिपेत्। गुञ्जामात्रा प्रदातव्या नागवल्लीदलैः सह। ज्वराङ्कुशो रसोह्येष ज्वरमष्टविधं जयेत्" अन्यविधोऽपि "त्रिभागतालेन हृतस्य ताम्रं रसस्य गन्धस्य समीनमायुः। विषं समं तद्द्विगुणस्य ताम्रं त्रिसप्तवारस्य दिवाकरातपे। संमर्द्य निम्बुस्वरसेन चूर्णं गुञ्जाप्रमाणं सितया समेतम्। ज्वराङ्कुशोऽयं विविधप्रभावो ज्वरं निहन्त्यष्टविधं समस्तम्" मीनमायुः मत्स्यपित्तम्। [राजनि०।

**ज्वराङ्गी** स्त्री ज्वरस्तद्बाधनमङ्गमस्याः ङीष्। भद्रदन्तिकायां

**ज्वरातिसार** पु०। ज्वरयुक्तोऽतिसारः। ज्वरयुक्ते अतिसाररोगे तद्रूपादि भैषज्यर०उक्तो यथा।"पित्तज्वरे पित्तभवोऽतिसारस्तथातिसारे यदि वा ज्वरः स्यात्। दोषस्य दुष्यस्य समानभावाज्ज्वरातिसारः कथितो भिषग्भिः"।"ज्वरातिसारयोरुक्तमन्योन्यं भेषजं पृथक्। न तन्मिलितयोः कुर्यादन्योन्यं वर्द्धयेद् यतः। प्रायोज्वरहरं भेदि, स्तम्भनन्त्वतिसारहृत्। अतोऽन्योन्यविरुद्धत्वाद् वर्द्धनं तत्परस्परम्। ज्वरातिसारिणामादौ कुर्यात् लङ्घनपाचने। प्रायस्तावामसम्बन्धं विना न भवतो यतः। ज्वरातिसारे पेयादिक्रमः स्याल्लङ्घिते हितः। ज्वरातिसारी पेयां वा पिबेत् साम्लां शृतां नरः"।

**ज्वरान्तक** पु० ज्वरस्यान्तक इव ज्वरमन्तयति वा अन्त-ण्वुल् वा हृत०कर्म्म०। आरग्वधे नेपालनिम्बे (सोंदाल) राजनि०। ज्वरान्तकरसः।

**ज्वरान्तकरस** पु० ज्वरस्यान्तकः कर्म०।

"भास्कररोगगन्धकः सर्जो देवी विहङ्गतीक्ष्णकम्। शोधितं गगनञ्चैव पुष्करञ्च महेश्वरम्। भूनिम्बादिगणैर्भाव्यं मधुना गुडिका दृढा। चातुर्थकं तृतीयञ्च ज्वरं सन्ततकं तथा। आमज्वरं भूतकृतं सर्वज्वरमपोहति" भैषज्यर० उक्ते औषधभेदे। अत्र सर्जोरसः, देवी सौराष्ट्रमृत्तिका, विहङ्गं स्वर्णमाक्षिकं, पुष्करं रसाञ्जनं, महेश्वरं सुवर्णम् अन्यत् सुगमम्। ताम्रादीनां समभागचूर्णं भूनिम्बादिक्वाथेन भावयेत्। भूनिम्बाद्यष्टादशद्रव्याणि सर्वद्रव्यतुल्यानि अष्टावशिष्टं क्वाथं कृत्वा दिनत्रयं विभाव्य विशोष्य मधुना विमर्द्य अनुरूपं लिहेत्"

**ज्वरापहा** स्त्री०ज्वरमपहन्ति अप+हन—ड हृत०। (बेलशुंठ) १बिल्वशुण्ठ्याम्, २बिल्वपत्र्याञ्च। ३ज्वरनाशके त्रि०। शब्दच०।

**ज्वरारिअभ्र** पु० ज्वरस्यारिः कर्म्म०।

"अभ्रं ताम्रं रसं गन्धं विषञ्चेति समं समम्। द्विगुणं घूर्त्तबीजञ्च व्योषं पञ्चगुणं मतम्। जलेन वटिकां कुर्याद् यथा दोषानुसारतः। अभ्रं ज्वरारिनामेदं सर्वज्वरविनाशनम्। वातिकान् पैत्तिकांश्चैव श्लैष्मिकान् सान्निपातिकान्। विषमाख्यान् द्वन्द्वजांश्च धातुस्थान् विषमज्वरान्। नाशयेन्नात्र सन्देहो वज्रमिन्द्राशनिर्यथा। प्लीहानं यकृतं गुल्ममग्निमान्द्यं सशोथकम्। कासं श्वासं तृषां कम्पं दाहं शीतं वमिं भ्रमिम्" भैषज्यर० उक्ते औषधभेदे।

**ज्वरारिरस** न० ज्वरस्यारिः कर्म्म०।

"दरदवलिरसानां शुल्वनागाभ्रकाणाम् शुभविटकशिलानां सर्वमेकत्र योज्यम्। विपिनजपदलोत्थैर्भावितं शोषयेत्तम् दिवसदशसमाप्तौ रक्तिकैकाञ्च कुर्यात्। एकैकां भक्षयेदस्य चार्द्रकस्य रसैर्युताम्। दत्तमात्रं ज्वरं हन्ति ज्वरारिः स निगद्यते। सर्वशूलविनाशी च कफपित्तविनाशनः"। भैषज्यर० उक्ते औषधभेदे। सर्वं (सोंदाली) पत्ररसेन दशदिनं भावयित्वा गुञ्जाप्रमाणमार्द्रकरसेन देयम्"।

**ज्वराशनिरस** पु० ज्वरस्याशनिरिव नाशकत्वात् कर्म०।

"रसं गन्धं सैन्धवञ्च विषं ताम्रं समं भजेत्। सर्वचूर्णसमं लौहं तत्समं चूर्णमभ्रकम्। लौहे च लौहदण्डे च निर्गुण्ड्याः स्वरसेन च। मर्दयेत् यत्नतः पश्चान्मरिचं सूततुल्यकम्। पर्णेन सह दातव्यो रसो रक्तिकसम्मितः। कासं श्वासं महाघोरं विभ्रमाख्यं ज्वरं वमिम्। धातुस्थं प्रबलं दाहं ज्वरदोषं चिरोद्भवम्। यकृद्गुल्मोदरप्लीहश्वयथुञ्च विनाशयेत्" भैषज्यर०उक्ते औषधभेदे। [ज्वरशब्दे उदा०।

**ज्वरित** त्रि०ज्वरः संजातोऽस्य तारका० इतच्। १ज्वरयुक्ते

**ज्वरिन्** त्रि० ज्वरोऽस्त्यस्य इनि। ज्वरयुक्ते स्त्रियां ङीप्।

**ज्वल** दीप्तौ चलने च भ्वा० पर० अक० सेट्। ज्वलति अज्वालीत्। घटा० ज्वलयति। ज्वला० ज्वलः ज्वालः। "जज्वाल लोकस्थितये स राजा" भट्टिः। "जागर्त्ति लोको ज्वलति प्रदीपः सखीगणः पश्यति कौतुकेन। मुहूर्त्तमात्रं कुरु नाथ! धैर्यं बुभुक्षितः किं द्विकरेण भुङ्क्ते" उद्भटः।

उदादिपूर्वकस्य तत्तदुपसर्गद्योत्यार्थयुक्तदीप्तौ । उज्ज्वलः ।

**ज्वल** त्रि० ज्वल–दीप्तौ वा अच् । दीप्तिविशिष्टे । [हेम० ।

**ज्वलका** स्त्री ज्वलतीति ज्वल–बा० वुन् । अग्निशिखायां

**ज्वलति** पु० ज्वल–भावे श्तिप् । ज्वलनक्रियायाम् । "भ्राजते" इत्याद्युपक्रम्य एकादश ज्वलतिकर्माणः निघ० २।१६। उक्तम् ।

**ज्वलन** त्रि० ज्वल–ताच्छील्यादौ युच् । १दीप्तिशीले, २वह्नौ ३चित्रकवृक्षे च पु० अमरः ।

**ज्वलनाश्मन्** पु० नित्यकर्म० । सूर्यकान्तमणौ राजनि० ।

**ज्वलित** त्रि० ज्वल–क्त । १दग्धे २दीप्ते च ।

**ज्वलिनी** स्त्री ज्वल–बा० इनि ङीप् । मूर्वालतायां राजनि०

**ज्वाल** पुंस्त्री ज्वल–ण । १अग्निशिखायाम् अमरः । २दीप्तियुक्ते त्रि० । ३दग्धान्ने स्त्री शब्दच० । भावे घञ् । ४ दीप्तौ पु० ।

**ज्वालखरगद** पु० ज्वालगर्दभाख्ये रोगे राजनि० । जालगर्दभशब्दे दृश्यम् ज्वालागर्दभामयोऽप्यत्र राजनि० ।

**ज्वालाजिह्व** पु० ज्वाला शिखैव जिह्वा यस्य दाह्यवस्तुलेहनसाधनत्वात् । १वह्नौ हेम० तन्नामनामके चित्रके च ।

**ज्वालामालिनी** स्त्री ज्वालानां शिखानां मालाऽस्त्यस्य इनि ङीप् । देवीभेदे। तन्मन्त्रादिकं तन्त्रसारे उक्तं यथा "ओं नमो भगवति ! ज्वालामालिनि ! गृध्रगणपरिवृते ! हुं फट् स्वाहा", तत्राङ्गन्यासः । "ओं नमो हृदयं प्रोक्तं भगवतीति शिरः स्मृतम् । ज्वालामालिनीति च शिखा गृध्रगणपरिवृते ततः । वर्म स्वाहास्त्रमित्युक्तं जातियुक्तं न्यसेत्ततौ । प्रयोगस्तु ओं नमो हृदयाय नम इत्यादि "अभुक्तो नियतश्चैव जपेन्मन्त्रं जपाज्जयी । जपेदष्टसहस्रन्तु त्रयोविंशतिवासरान् । प्रत्यहं साधने सिद्धिमाददाति न संशयः । स्मृतिमात्रेण वै मन्त्री रिपून् सर्वान् विनाशयेत्" ।

**ज्वालामुखी** स्त्री पीठस्थानभेदे । "ज्वालामुख्यां महाजिह्वा देव ! उन्मत्तभैरवः । अम्बिका सिद्धिदानाम्नी स्तनौ जालन्धरे ममेति" तन्त्रम् । २विद्याभेदे "ज्वालामुखीक्रमं वक्ष्ये सा पूज्या मध्यतः शुभे । नित्यारुणा मदनान्तरा मदमोहापलग्रसिः । कमला श्रीभारती च आकर्षणी महेन्द्र्यपि । ब्रह्माणी चैव माहेशी कौमारी वैष्णवी तथा । वाराही चैव माहेन्द्री चामुण्डेति च पूजयेत् । विजया चाजिता चैव मोहिनी चापराजिता । स्तम्भनी जवनी पूज्या कालिका पद्मवाहृतः । ज्वालामुखी च संपूज्या विषादिहरणं भवेत्' । गारुड० पु० । २०४ अ० ।

**ज्वालावक्त्र** पु० ज्वालेव वक्त्रमस्य । शिवे ब्रह्मपु० ।

**ज्वालिन्** पु० ज्वल–णिनि । १शिवे "शिखी मुण्डी जटी ज्वाली मूर्त्तिजो मूर्द्धगो बली" भा० अनु० १७ अ० । २शिखायुक्तमात्रे ३दीप्तियुक्ते च त्रि० स्त्रियां ङीप् ।

**ज्वालेश्वर** पु० मत्स्यपु० उक्ते तीर्थभेदे ।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यनिर्म्मिते वाचस्पत्ये जकारादिशब्दार्थसङ्कलनम् ।

---

## झ

झकारो व्यञ्जनवर्णभेदोऽर्द्धमात्राकालोच्चार्य्यस्तस्योच्चारणस्थानं तालु आभ्यन्तरप्रयत्नः जिह्वामध्येन तालुनः स्पर्शः। बाह्यप्रयत्नाः संवारनादघोषमहाप्राणाश्च। मातृकान्यासेऽस्य वामकराङ्गुलीमूले न्यस्यता। अस्य ध्येयरूपं कामधेनुतन्त्रे उक्तं यथा “झकारं परमेशानि! कुण्डलीं मोक्षरूपिणीम्। रक्तविद्युल्लताकारं सदा त्रिगुणसंयुतम्। पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं सदा। त्रिविन्दुसहितं वर्णं त्रिशक्तिसहितं तथा” वर्णोद्धारतन्त्रे तदधिष्ठातृदेवतारूपं यथा “ध्यानमस्य प्रवक्ष्यामि शृणुष्व कमलानने!। सन्तप्तहेमवर्णाभां रक्ताम्बरविभूषिताम्। रक्तचन्दनलिप्ताङ्गीं रक्तमाल्यविभूषिताम्। चतुर्दशभुजां देवीं रत्नहारोज्ज्वलां पराम्। ध्यात्वा ब्रह्मस्वरूपां तां तन्मन्त्रं दशधा जपेत्”। तस्य वाचकशब्दाः वर्णाभिधानतन्त्रे उक्ता यथा “झो झङ्कारी गुहो भार्गी झर्झरो वायुः स्वनः। अजेशो द्राविणी नादः पाशी जिह्वा जलं स्थितिः। विराजेन्द्रो धनुर्हस्तः कर्कशः नादजः कुहुः(कुजः)। दीर्घबाहुरथोरूपं ह्याकम्पितकुचस्वनम्। दुर्मुखो नष्ट आत्मवान् विकटा कुचमण्ड(ण्ड)लः। कलहंसप्रिया वामा वामाङ्गुलमूलपर्वकः। दक्षहालोऽट्टहासश्च पाशात्मा व्यञ्जनस्वरः” मात्राढत्ते तस्य प्रथमविन्यासे फलमुक्तं इ०र०टी० “प्रीतिं जो मित्रलाभं भयमरणकरौ झञौ ठठौ खेददुःखे”।

झ पु० झट–संहतौ ड। १झञ्झावाते २नष्टे ३जलवर्षणे शब्दर० ४झिण्टीशे ५देवगुरौ ६दैत्यराजे ७ध्वनिभेदे ८उञ्झवाते च मेदि०। [परमेशानि!”कामधेनुत०।

झकार पु० झ+स्वार्थे कारप्रत्ययः। झस्वरूपे वर्णे “झकारं

झगझगायमान त्रि० झगझग+अभूततद्भावे भ्रशा० क्यङ् शानच्। देदीप्यमाने। “मयूरवरगामिनीं स्फुरदशुद्धवर्णोत्कटां रणत्कणितघण्टिकां निशितशक्तिहस्तोद्यताम्। प्रभानिकररश्मिभिर्झगझगायमानांशुकां नमामि गुहसम्भवां त्रिदशशत्रुनिर्णाशिनीम्” देवी० पु०।

झगिति अव्य० झटिति+पृषो०। शीघ्रार्थे शब्दार्थचि०।

झङ्कार पु० झमित्यव्यक्तशब्दस्य कारः कृ–घञ्। १भ्रमरादिशब्दे। “मन्दं ध्वनितपांशुलः परिपतन् झङ्कार-झङ्कारवत्” अमरुश०। ततः तार० इतच्। झङ्कारित तच्छब्दयुक्ते त्रि०। २जलकणवर्षणे च शब्दर०।

झङ्कारिणी स्त्री ङीप्। गङ्गायां झिण्टीशशब्दे उदा०।

झङ्कृता स्त्री तारादेवतायां “झर्झरी झङ्कृता भिल्ली झरी झर्झरिका तथा” तारासहस्रनाम।

झङ्कृति स्त्री झम् इत्यव्यक्तशब्दस्य कृतिः कृ–क्तिन्। कांस्यादेर्ध्वनौ शब्दार्थचि०।

झञ्झा स्त्री झमिति कृत्वा झटति झट–ड। १ध्वनिभेदे, तथाध्वनियुक्ते २प्रचण्डानिले च शब्दर०।

झञ्झानिल पु० झञ्झायुक्तोऽनिलः। प्राहषिजातवाते त्रिका० झञ्झामरुदादयोऽप्यत्र झङ्कारशब्दे उदा०।

झट संहतौ भ्वा० पर० अक० सेट्। झटति अझाटीत्–अझटीत्। जझाट।

झटा स्त्री झट–अच्। १शीघ्रे। २भूम्यामलक्यां शब्दार्थचि०

झटि पु० झट–इन्। क्षुद्रतृणभेदे। (झाँटि) शब्दार्थर०।

झटिति अव्य० झट क्विप् झट् इण–क्तिन् ६त० स्वरादि। १शीघ्रे अमरः। “त्यक्त्वा गेहं झटिति यमुनामञ्जुकुञ्जं जगाम” पदाङ्कदूतम्।

“झटित्यन्वयमात्रेण तदा दोषो न विद्यते” “मनः सान्द्रानन्दं स्पृशति झटिति ब्रह्म परमम्” सा० द०।

झडक पुंस्त्री अन्त्यजवर्णभेदे “प्रपाखरण्ये झडकस्य कूपे द्रोण्यां जलं कोषविनिर्गतञ्च” अत्रिसं०।

झणझणा अव्य० झणत् डाच् द्वित्व पूर्वपदटिलोपः। १अव्यक्तशब्दभेदे २तच्छब्दयुक्ते “सर्वं झणझणाभूतमासीत्तालवनेऽपिव” भा०भी०१८अ०।३झणत्कारशब्दभेदे च।

झण(न)त्कार पु० झन(ण)दित्यव्यक्तशब्दस्य कारः कृ–घञ्। कङ्कणादिध्वनौ। “उद्वेलद्भुजवल्लिकङ्कणझण(न)त्कारः क्षणं वार्य्यताम्” कालिदासः। “उद्वेजयति दरिद्रं परमुद्रायाणझणत्कारः” उद्भटः।

झम भक्षे भ्वा० पर० सक० सेट्। झमति अझमीत्। जझाम। उदित् झमित्वा-झान्त्वा। झान्तः।

झम्प पु० लम्फ+पृषो०।(झाँपदिया पड़ा) लम्फे स्वेच्छाधीने संपातपतने जटाधरः। भावे वा। तत्रार्थे स्त्री “पुच्छास्फोटदलत्पृषत्सुदृविवरैः पातालझम्पाश्च ताः” महावीर०

झम्पाक पुंस्त्री झम्पेन आकायति आ+कै+क। १वानरे शब्दच०। स्त्रियां जातित्वात् ङीष्।

झम्पाशिन् पु० झम्पेन जले स्वेच्छया पतनेनाश्नाति अश–णिनि। मत्स्यरङ्गपक्षिणि जटाधरः स्त्रियां ङीप्।

**झम्पिन्** पु० झम्प+अस्त्यर्थे इनि। वानरे शब्दर०।

**झर** पु० झृ—अच्। निर्झरे उच्चाद्विनिर्गते जलप्रवाहे। "स तदुच्चकुचौ भवन् प्रभाझरचक्रभ्रमिमातनोति यत्" नैष०। तस्य स्त्रीत्वं भरत आह ततः टाप् गौरा० ङीष् वा। "विपुलपुलिनाः कल्लोलिन्यो नितान्तपतज्झरामलस्खलितशिलाः शैलाः सान्द्रद्रुमा वनराजयः" प्रबोधच०। २तारिण्यां स्त्री ङीष् झङ्कृताशब्दे उदा०।

**झर्च** उक्तौ भर्त्सने च तुदा० पर० सक० सेट्। झर्चति अझर्चीत्। जझर्च।

**झर्छ** उक्तौ भर्त्सने च तुदा० पर० सक० सेट्। झर्छति अझर्छीत्। जझर्छ। [अझर्झीत्। जझर्झ।

**झर्झ** उक्तौ भर्त्सने च तुदा० पर० सक० सेट्। झर्झति

**झर्झर** पु० झर्झ—करच्। (झाँज) इति ख्याते १वाद्यभेदे २पटहे, ३कलियुगे, ४नदभेदे च। ५वाद्यभेदे स्त्री ङीप् मेदि०। ६वेत्रनिर्मितदण्डभेदे पु० "काञ्चनोष्णीषिणस्तत्र वेत्रझर्झरपाणयः" भा०भी०९८ अ०। ७वेश्यायां स्त्री त्रिका०टाप्। ८तारादेव्यां स्त्री झङ्कृताशब्दे उदा०। ९वाद्यभेदे स्त्रीशब्दर०गौरा०ङीष्।१०पाकसाधने लौहमये (झाझरा) इति ख्याते पदार्थे पु० रत्नमा०। झर्झरः तद्वाद्यं शिल्पमस्य वा ठक्। झार्झरिक तद्वादनशीले त्रि० पक्षे अण्। झार्झर तत्रार्थे त्रि०स्वार्थे क। झर्झरिका तारिण्यां झङ्कृताशब्दे उदा०।

**झर्झरक** पु० झर्झर+संज्ञायां कन्। कलियुगे त्रिका०।

**झर्झरावती** स्त्री झर्झरः शब्दभेदोऽस्त्यस्य मतुप् मस्य वः संज्ञायां पूर्वपददीर्घः। गङ्गायां झिण्टीशशब्दे उदा०।

**झर्झरिन्** पु० झर्झरोऽस्त्यस्य इनि। शिवे "त्वं गदी त्वं शरी चापी खट्वाङ्गी झर्झरी तथा" भा० शा०२८६अ०।

**झर्झरीक** पु० झर्झ—ईकन् फर्फरीका० नि०। शरीरे उज्ज्वलद०। [ वाँस्फालने शब्दार्थचि०

**झलज्झला** स्त्री ज्वलनं ज्वलति अच् पृषो०। हस्तिक-

**झला** स्त्री झरा—पृषो०।१कन्यायाम् २आतपोर्म्मौ च मेदि०

**झल्ल** पुंस्त्री झर्छ क्विप् तं लाति ला—क रस्य लः। "झल्लो-मल्लश्च राजन्याद् व्रात्यान्निच्छिविरेव च" मनूक्ते सवर्णायां व्रात्यक्षत्रियाज्जाते जातिभेदे। "झल्लामल्लानटाश्चैव पुरुषा शस्त्रवृत्तयः। द्यूतपानप्रसक्ताश्च जघन्या राजसी गतिः"। मनुना तस्य शस्त्रवृत्तित्व (नेटाली) उक्तम् "तत्र झल्ला यष्टिप्रहरणाः" कुल्लूक०। "तत्र मल्लानटा झल्लाः सूता वैतालिकास्तथा" भा०स०४अ०।

**झल्लक** न० झर्छ—क्विप् तं लाति ला—क संज्ञायां रस्य लः। वाद्यभेदे कांस्यनिर्मितकरताले "शिवागारे झल्लकञ्च सूर्य्यागारे च शङ्खकम्। दुर्गागारे वंशिवाद्यं मधुरीं च न वादयेत्" ति० त०। तत्रार्थे स्त्री शब्दार्थचि०। गौरा० ङीष्।

**झल्लकण्ठ** पु०स्त्री झल्लस्तत्स्वरः इव कण्ठः कण्ठस्वरोऽस्य। पारावते हारा० स्त्रियां जातित्वात् ङीष्।

**झल्लरी** स्त्री झर्झति झर्ज—अरन् पृषो०। १झर्झरवाद्ये वाद्यभेदे २हुडुक्के ३बालककेशे मेदि०४शुद्धे, ५क्लेदे च अजयपालः। गौरा०ङीष्। झल्लरीत्यप्यत्रार्थे।

**झल्लिका** स्त्री झर्झ—ण्वुल् पृषो०१उद्वर्त्तनमले २द्योते ३दीप्तौ च शब्दार्थचि०।

**झल्लीषक** न० हल्लीषक+पृषो०। नृत्यभेदे "झल्लीषकन्तु स्वयमेव कृष्णः सुवंशघोषं नरदेव! पार्थ!" हरिवं०१४८अ०।

**झल्लोल** पु० झर्छ—क्विप् तथा सन् लोलः पृषो०। तर्कुलासके (टेकुयार बाँटुल) हारा०। [जझाष झषः।

**झष** बधे भ्वा०पर० सक० सेट्। झषति अझाषीत् अझषीत्।

**झष** ग्रहणे पिधाने च भ्वा० उभ० सक० सेट्। झषति—ते अझाषीत् अझषीत् अझषिष्ट। जझाष जझषे।

**झष** पु०स्त्री झष—कर्मणि घ। मत्स्ये, अमरः स्त्रियां जातित्वात् ङीष् "वंशीकलेन वडिशेन झषीरिवाश्वान्" आनन्दवृन्दावनचम्पूः २मकरे जलजन्तुभेदे "झषानां मकरश्चास्मि" गीता ३मीनराशौ च "कार्मुकमौलिकन्या युग्मलग्ने झषगे वा" मु०चि०। ४मकरराशौ "कार्मुकं तु परित्यज्य झषं संक्रमते रविः" मल०त०। भावे क।५तापे। कर्त्तरि अच्। ६खिले, ७वने च न०। ८नागबलायां स्त्री शब्दार्थचि०। [शब्दार्थचि० झषकेतनादयोऽप्यत्र।

**झषकेतु** पु० झषो मीनो मकरो वा केतुर्यस्य। मदने

**झषाङ्क** पु० झषोऽङ्कोऽस्य। १कन्दर्पे उपचारात् २तत्पुत्रे अनिरुद्धे च हेम०। [स्त्रियां जातित्वात् ङीष्।

**झषाशन** पुंस्त्री० झषमश्नाति अश—ल्यु। शिशुमारे त्रिका०

**झषोदरी** स्त्री झषस्योदरं जन्मस्थानतयास्त्यस्या अच् गौरा० ङीष्। मत्स्यगन्धायां व्यासमातरि सत्यवत्याम् त्रिकाण्डशेषः। सा च उपरिचरन्टपस्य शुक्रेण ब्रह्मणः शापेन मत्स्ययोनिमाप्तायामद्रिकायाप्सरोभेदस्य गर्भाज्जाता तत्कथा भा० आ० ६३ अ०।

"मत्प्रियार्थमिदं सौम्य! शुक्रं मम गृहं नय। गिरिकायाः प्रयच्छाशु तस्या ह्यार्त्तवमद्य वै"। "गृहीत्वा तु

तदा श्येनस्तूर्णमुत्पत्य वेगवान्। जवं परममास्थाय प्रदुद्राव विहङ्गमः। तमपश्यदथायान्तं श्येनं श्येनस्तथापरः। अभ्यद्रवच्च तं सद्यो दृष्ट्वैवामिषशङ्कया। तुण्डयुद्धमथाकाशे तावुभौ संप्रचक्रतुः। युध्यतोरपतद्रेतस्तच्चापि यमुनाम्भसि। तत्राद्रिकेति विख्याता ब्रह्मशापाद्वराप्सराः। मीनभावमनुप्राप्ता बभूव यमुनाचरी। श्येनपादपरिभ्रष्टं तद्वीर्य्यमथ वासवम्। जग्राह तरसोत्पत्य साद्रिका मत्स्यरूपिणी। कदाचिदथ मत्स्यीं तां बबन्धुर्म्मत्स्यजीविनः। मासे च दशमे प्राप्ते तदा भरतसत्तम!। उज्जह्रुरुदरात्तस्याः स्त्रीं पुमांसञ्च मानुषौ। आश्चर्य्यभूतं तज्ज्ञात्वा राज्ञेऽथ प्रत्यवेदयन्। काये मत्स्या इमौ राजन्! संभूतौ मानुषाविति। तयोः पुमांसं जग्राह राजोपरिचरस्तदा। स मत्स्यो नाम राजासीद्धार्म्मिकः सत्यसङ्गरः। साप्सरा मुक्तशापा च क्षणेन समपद्यत। पुरोक्ता सा भगवता तिर्य्यग्योनिगता शुभे!। मानुषौ जनयित्वा त्वं शापमोक्षमवाप्स्यसि। ततः सा जनयित्वा तौ विशस्ता मत्स्यघातिना। सन्त्यज्य मत्स्यरूपं तत् दिव्यरूपमवाप्य च। सिद्धर्षिचारणपथं जगामाथ वराप्सराः। या कन्या दुहिता तस्या मत्स्या मत्स्यसगन्धिनी। राज्ञा दत्ता च दाशाय कन्येयन्ते भवत्विति। रूपसत्त्वसमायुक्ता सर्वैः समुदिता गुणैः। सा तु सत्यवती नाम मत्स्यघात्यभिसंश्रयात्। आसीत् सा मत्स्यगन्धैव किञ्चित्कालं शुचिस्मिता"।

**झाङ्कृत** पु॰ झामित्यव्यक्तशब्दः कृतो येन। ध्वारभेदे धरणिः। तत्रार्थे झाङ्कित इति पाठः प्रामादिकः।

**झाट** पु॰ झट-णिच्-अच्। १निकुञ्जे, २कान्तारे, ३व्रणादीनां मार्जने च मेदि॰ ३भूम्यामलक्याम् स्त्री अमरः ४यूथिकायाञ्च शब्दच॰।

**झाटल** पु॰ झट-णिच् अलच्। घण्टापारुलौ अमरः।

**झाटामला** स्त्री झट-अच् न मला अमला कर्म॰। भूम्यामलक्याम् "झ(झा)टामला झटा ताली" इत्यत्र झाटामलेत्येकपदमिति केचित् अतएव "झाटामला ज्योत्स्निका च सतिक्ता तु सुदर्शना" भैषज्यर॰ उक्तम्।

**झाटिका** स्त्री झाटा स्वार्थे क। भूम्यामलक्याम् शब्दच॰।

**झामक** न॰ झम-कर्मणि ण्वुल्। (झामा) अतिशयपक्वेष्टकायाम् शब्दार्थचि॰। [शब्दर॰।

**झामर** पु॰ झम-भावे घञ् तं राति रा-क। तक्षुशाणे।

**झालि** पु॰ "आम्रमामफलं पिष्टं राजिकालवणान्वितम्। भृष्टं हिङ्गुयुतं पूतं घोलितं झालिरुच्यते। झालिर्हरति जिह्वायाः कुण्ठत्वं कण्ठशोधिनी। मन्दं मन्दं निपीता सा रोचनी वह्निरोधिनी" भावप्र॰ उक्ते पदार्थे

**झावु** पु॰ झा-इति वाति गच्छति वा-डु। (झाउ) वृक्षभेदे अमरः स्वार्थे क। तत्रार्थे शब्दर॰। [शब्दार्थचि॰

**झिङ्गाक** न॰ झिगि-आकन् पृषो॰। (झिङ्गा) फलभेदे।

**झिङ्गिनी** स्त्री झिगि-णिनि पृषो॰। १जिङ्गिनीवृक्षे भावप्र॰ २उल्कायाञ्च शब्दर॰। [भावप्र॰

**झिङ्गी** स्त्री॰लिगि-अच् गौरा॰ङीष्। जिङ्गिनीवृक्षे (झिङ्गा)

**झिञ्झी** स्त्री॰ झिञ्झा अस्त्यस्याः अच् गौरा॰ ङीष्। झिल्लयाम् (झिँझिपोँका) शब्दार्थचि॰।

**झिण्टी** स्त्री झिमिति रटति अच् पृषो॰ गौ॰ ङीष्। (झाँटि) पुष्पप्रधानवृक्षे अमरः।

**झिण्टीश** पु॰ शिवे "झिण्टीशचन्द्रा झङ्कारकारिणी झर्झरावती" काशीपु॰ गङ्गास्तवः।

**झिरि** स्त्री झिरित्यव्यक्तशब्दोऽस्त्यस्याः वा॰ इन्। चिल्ल्यां वा ङीप्। तत्रार्थे शब्दर॰। [झिल्लयाम् शब्दर॰।

**झिरिका** स्त्री॰ झिरीति कायति शब्दायते कै-क।

**झिलि** पु॰ झिरितिशब्दं लिशति वा॰ डि। वाद्यभेदे "घण्टाशब्दस्तथा भेरी मृदङ्गो झिल्लिरेव च। पञ्चानां पूज्यते वाद्यं देवताराधनेषु च" शब्दार्थचि॰ धृतवाक्यम्।

**झिल्ली** स्त्री॰ चिल्लति चिल-अच् पृषो॰ गौरा॰ ङीष्। (झिँझिपोँका) कीटभेदे। संज्ञायां क। २आतपरुचौ ३वर्त्त्याञ्च मेदि॰। ४तारिण्यां च झङ्कृताशब्दे उदा॰।

**झिल्लीकण्ठ** पु॰स्त्री झिल्ली तद्रव इव कण्ठः कण्ठस्वरोऽस्य। गृहकपोते त्रिका॰ स्त्रियां जातित्वात् ङीष्।

**झीरुका** स्त्री झिरित्यव्यक्तं रौति वा॰रु-कक्। झिल्ल्याम् शब्दरत्ना॰। [च शब्दक॰।

**झुण्ट** पु॰लुण्ट-अच्-पृषो॰। अकाण्डे १द्रुमे,२स्तम्बे,३गुल्मे

**झुमरि** स्त्री रागिणीभेदे "प्रायः शृङ्गारबहुला माध्वीकमधुरा मृदुः। एकैव झुमरिर्लोके वर्णादिनियमोज्झिता। अतो लक्षणमेतस्या नोदाहारि विशेषतः। इदं हि शालिगं स्वतं प्रसिद्धं नृपरञ्जनम्" सङ्गीत॰दा॰

**झूलि** पु॰१क्रमुकभेदे २दुष्टदैवस्तुतौ च मेदि॰। [जझार झरः।

**झॄ** वयोहानौ दिवा॰पर॰अक॰सेट्। झीर्य्यति अझारीत्

**झोड** पु॰ गुवाकभेदे भूरिप्र॰। [जुझुरवे।

**झ्यु** गतौ भ्वा॰ आत्म॰ सक॰ अनिट्। झ्यवते अझ्योष्ट।

इति वाचस्पत्ये झकारादिशब्दार्थसङ्कलनम्।

## ञ

"ञकारोव्यञ्जनवर्णभेदः अर्द्धमात्राकालेनोच्चार्य्यः तस्योत्पत्तिस्थानं नासिकानुगततालुस्थानम् तस्योच्चारणे जिह्वामध्येन तालुमध्यस्य स्पर्शः आभ्यन्तरप्रयत्नः। संवारनादघोषा अल्पप्राणश्च वाह्यप्रयत्नाः। मातृकान्यासेऽस्य वामहस्ताङ्गुल्यग्रे न्यासता। वर्णाभिधानेऽस्य वाचकशब्दा उक्ता यथा
"ञकारो बोधनी विश्वा कुण्डली मस्तदोर्वियत्। कौमारी नागविज्ञानी सव्याङ्गुलनखो वकः। सर्वेशश्चूर्णितोबुद्धिः स्वगोत्मा घर्घरध्वनिः। धर्मैकपादः सुमुखो विरजा चन्द्रनेश्वरी। गायनः पुष्पधन्वा च वागात्मा च विरञ्चिणी"। एतदधिष्ठातृदेवीध्येयरूपं यथा "चतुर्भुजां धूम्रवर्णां कृष्णाम्बरविभूषिताम्। नानालङ्कारसंयुक्तां जटामुकुटराजिताम्। ईषद्धास्यमुखीं नित्यां वरदां भक्तवत्सलाम्। एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत्" वर्णोद्धारतन्त्रम्। अस्यस्वरूपं यथा"सदा ईश्वर संयुक्तं ञकारं शृणु सुन्दरि! रक्तविद्युल्लताकारं या स्वयं परकुण्डली। पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं सदा। त्रिशक्तिसहितं वर्णं त्रिविन्दुसहितं सदा" कामधेनुतन्त्रम्। तस्य मात्रावृत्ते प्रथमोपन्यासे मरणं फलम् भगबन्दे प्रमाणं द्रष्टव्यम्। [५वाममतौ च मेदि०।

**ञ** पु० १ गायने २ घर्घरध्वनौ एकाक्षरको०। ३वृषे ४शुक्रे

**ञकार** पु० ञ+स्वरूपे कारप्रत्ययः। ञस्वरूपे वर्णे "ञकारो बोधनी विश्वा" वर्णाभिधानम्।

**इति वाचस्पत्ये ञकारादिशब्दार्थसङ्कलनम्।**

**इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यविरचिते वाचस्पत्ये चवर्गादिशब्दार्थ-सङ्कलनं समाप्तम्।**

---

## ट

टकारोव्यञ्जनवर्णभेदः अर्द्धमात्राकालेनोच्चार्य्यः अस्योच्चारणस्थानं मूर्द्धा। अस्योच्चारणे मूर्द्धस्थानेन जिह्वामध्यस्य स्पर्शः आभ्यन्तरप्रयत्नः। विवारश्वासाघोषा वाह्यप्रयत्नाः। मातृकान्यासेऽस्य दक्षिणस्फिचि न्यासता वर्णाभिधाने अस्य वाचकशब्दा उक्ता यथा "टकारश्च कपाली च सोमेशः खेचरी ध्वनिः। मुकुन्दो विनदा पृथ्वी वैष्णवी वारुणी नरः। दक्षस्फिगर्द्धचन्द्रश्च जवा भूतिः पुनर्भवः। वृहस्पतिर्धनुश्चित्तः प्रमोदा विमला कटिः। राजगिरिर्महाधनुर्प्राणात्मा सुमुखी मरुत्"। अस्य स्वरूपं यथा "टकारं चञ्चलापाङ्गि! स्वयं परमकुण्डली। कोटिविद्युल्लताकारं पञ्चदेवमयं सदा। पञ्चप्राणयुतं वर्णं गुणत्रयसमन्वितम्। त्रिशक्तिसहितं वर्णं त्रिविन्दुसहितं वरं सदा" कामधेनुतन्त्रम्। एतदधिष्ठातृदेवतारूपं यथा "ध्यानमस्य प्रवक्ष्यामि शृणुष्व वरवर्णिनि!। मालतीपुष्पवर्णाभां पूर्णचन्द्रनिभेक्षणाम्। दशवाहुसमायुक्तां सर्वालङ्कारसंयुताम्। परमोक्षप्रदां नित्यं सदा कोरमुखीं पराम्। एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत्" वर्णोद्धारतन्त्रम्। मात्रावृत्तेऽस्य प्रथमोपन्यासे खेदः फलम्। भगबद्दे प्रमाणं द्रष्टव्यम्।

**ट** पु० टल—ड। १वामने २पादे ३निःस्वने च मेदि०।

**टक** बन्धे चु० उभ० सक० सेट् इदित्। टङ्कयति—ते अटटङ्कत्—त। "टङ्कितेनोऽतिपाटने" काशी० गङ्गास्तवः। "नाक्रष्टं न च टङ्कितम् न नमितम् नोत्थापितम् स्थानतः" महाना०। उद्+उल्लेखे। उट्टङ्कितम्।

**टकार** पु० ट+स्वरूपे कारप्रत्ययः। टस्वरूपे वर्णे टकारश्च कपाली च" वर्णाभिधानम्।

**टक्क** पु० टकि—बा० कक् पृषो० उपधालोपश्च। देशभेदे।

**टक्कदेशीय** पु० टक्कदेशे भवः छ। १वास्तूकशाके त्रिका०। २तद्देशभवमात्रे त्रि०।

**टगण** पु० मात्रावृत्ते षाण्मात्रिकस्य त्रयोदशभेदात्मके गणभेदे तेषामाकाराधिदेवाश्च छन्दोमञ्जर्य्यामुक्ता यथा "(ऽऽऽ) १ शिवः ॥ऽऽ शशी २ (।ऽ।ऽ दिनपतिः) ३ (ऽ।।ऽ सुरपतिः) ४ (।।।।ऽ शेषः) ५ (।ऽऽ। अहिः) ६ (ऽ।ऽ। सरोजम्) ७ (।।ऽ। धाता) ८ (ऽऽ।। कलिः) ९

(।।ऽ।। चन्द्रः) १० (।ऽ।।। ध्रुवः) ११ (ऽ।। ।। धर्मः) १२ (।।।।। शालिकरः) १३।

**टगर** पु० टः टङ्कनो गर इव। टङ्कनक्षारे (सोहागा) २हेलाविलासविभ्रमे ३केकराक्षे च त्रि० मेदि०।

**टङ्क** पु० टकि—घञ्—अच् वा। १कोपे, २कोषे, ३खड्गे ४पाषाणभेदनेऽस्त्रे च।५जङ्घायां मेदि०। ६चतुर्माषक-रूपे परिमाणे वैद्य० ७नीलकपित्थे, ८खनित्रे, ९दर्पे च पु०न० हेमच० १०परशौ ११राजास्त्रे च शब्दार्थचि० "दार्य्यतां चैव टङ्कौघैः खनित्रैश्च पुरी द्रुतम्" हरिवं० ९०अ०। "टङ्कैर्मनःशिलगुहेव विदार्य्यमाणा" मृच्छ०। "हिमाद्रिटङ्कादिव भान्ति यस्याम्" भट्टिः। "रुरोध रामं शृङ्गीव टङ्कच्छिन्नमनःशिलः" रघुः। [ वारसुन्दरी।

**टङ्कक** पु० टङ्क्यते घञ् संज्ञायां क। (तङ्का) रजतमुद्रायाम्

**टङ्कपति** पु० ६त०। रूपकाध्यक्षे (टाँकशालेर अध्यक्ष) वारसुन्दरी। [ म्लेच्छे वारसुन्दरी।

**टङ्कशाला** स्त्री ६त०। (टाँकशाल) ख्याते रूप्यकनिर्माण

**टङ्कटीक** पु० टङ्क इव टीकते टीक—क। शिवे त्रिका०।

**टङ्कण(न)** न० टकि—ल्यु पृषो० वा णत्वम्। (सोहागा) ख्याते स्वर्णद्रावके १उपरसभेदे। उपरसभेदाश्च भाव०प्र० उक्ता यथा "गन्धो हिङ्गुलमभ्रतालकशिलाः स्रोतोऽञ्जनं टङ्क(न)णम्। राजावर्त्तकचुम्बकौ स्फटिकया शङ्खः खटी गैरिकम्। कासीसं रसकं कपर्दसिकताबोलाश्च कङ्कुष्ठकम् सौराष्ट्री च मता अमी उपरसाः सूतस्य किञ्चिद्गुणैः"। "तद्यथा लवणेन सुवर्णम्" छा० उ० भाष्ये "लवणेन क्षारेण टङ्कनादिना, खरेषु मृदुत्व-करं हि तत्" भा०। "टङ्कणं वह्निकृद्रूक्षं कफ-वातिकपित्तहृत्" भावप्र०। भावे ल्युट्। (टाँकादेओया पानिदिया झाला)२धातूनां योजनभेदे। दन्त्यान्तः ३अश्व-भेदे पु०स्त्री "टङ्कनखरनखरखण्डितहरितालपांशुलेन" काद० मूर्द्धन्यान्तः ४देशभेदे स च देशः वृ०सं० १४अ०। कूर्मविभागे दक्षिणस्यासुक्तः।"अथ दक्षिणेन लङ्का" इत्यु-पक्रमे "कङ्कटटङ्कनवनवासिशिविकफणिकारकोङ्कणा-भीराः" इत्युक्तेः।

**टङ्कवत्** पु० टङ्क+अस्त्यर्थे मतुप् मस्य वः। १पर्वतभेदे "टङ्क-वन्तं शिखरिणं वन्दे प्रस्रवणं गिरिम्" रामा०३।५५अ०

**टङ्का** स्त्री टकि—अच्। १जङ्घायां मेदि०। २तारादेव्यां टङ्कारकारिणीशब्दे दृश्यम्।

**टङ्कानक** पु० टङ्कं कोपमानयति उद्दीपयति आ+न—णिच् ण्वुल्। १अक्षोटवृक्षे (वामनगाछा) शब्दच०।

**टङ्कार** पु० टमित्यव्यक्तशब्दस्य कारः कृ—घञ्। १ध्वनिभेदे धनुर्ज्याकर्षणजे शब्दे २विस्मयहेतुके शब्दे च।३शिञ्जिनी-ध्वनौ प्रसिद्धे च मेदि०। कृ—णिनि। टङ्कारिन् १टङ्कारयुक्ते त्रि०। स्त्रियां ङीप् सा च २तारादेव्याम् टङ्कारकारिणीशब्दे दृश्यम्।

**टङ्कारकारिणी** स्त्री०कृ—णिनि ङीप् ६त०। तारादेव्याम् "ट-ङ्कारकारिणी टीका टङ्का टङ्कारिणी तथा तारासहस्रनाम।

**टङ्कारी** पु० स्त्री टङ्कमृच्छति ऋ—अण् गौरा०। (टकारी) वृक्षभेदे "टङ्कारी वातसंघ्नी शोफोदररुजापहा। तिक्ता च दीपनी लघ्वी भिषग्भिः परिकीर्त्तिता" राजनि०।

**टङ्ग** पु०न० टङ्क+पृषो०। १खनित्रे (टाँगि) २परशुभेदे च ३जङ्घायां मेदि०। (सोहागा) ४टङ्कने शब्दच०।५चतु-र्माषकमाने वैद्य०।

**टङ्गण** पु०न० टङ्कण+पृषो० (सोहागा) टङ्कणे।

**टङ्गिनी** स्त्री टकि—णिनि पृषो०। (आकनादी) पाठायाम्। शब्दच०। [ज्येष्ठाम् त्रिका०।

**टट्टनी** स्त्री टट्टेति शब्दं नयति नी—ड गौरा० ङीष्।

**टट्टरी** स्त्री टट्टेति शब्दं राति रा—क गौरा० ङीष्।१पटह-वाद्ये २लम्बावाद्ये ३मृषावादे च मेदि०।

**टट्टर** पु० भेरीशब्दे हेमच०।

**टल** विप्लवे (टला) भ्वा० पर० अक० सेट्। टलति अटा-लीत् टटाल टेलतुः। ज्वला० टलः टालः।

**टवर्ग** पु० ट+प्रातिशाख्योक्तः वर्गप्रत्ययः। ट ठ ड ढ ण रूपेषु वर्णेषु। ततो भवार्थे छ। टवर्गीय टादौ वर्णे।

**टा** स्त्री टल—ड। पृथिव्याम् एकाक्षरकोषः।

**टाङ्क** न० टङ्केन तद्रसेन निर्वृत्तम्। टङ्करूपनीलकपित्थ-रसेन निर्वृत्ते मद्यभेदे। "पानसं द्राक्षमाधूकं खार्जूरं तालमैक्षवम्। माध्वीकं टाङ्कं माद्वीकमैरेयं नारिके-लजम्। सामान्यानि द्विजातीनां मद्यान्येकादशैव च। द्वादशन्तु सुरा मद्यं सर्वेषामधमं स्मृतम्"। पुलस्त्येन तत्पानं निषिद्धम्। अस्तूयत इति आसवो मद्यानाम-वस्थाविशेषः सद्यःकृतसन्धानेन सञ्जातमद्यभावः यम-धिकृत्य इदं पुलस्त्योक्तं प्रायश्चित्तम्। "द्राक्षेक्षुटङ्क-खर्ज्जूरपनसादेश्च यो रसः। सद्योजातन्तु पीत्वा तं त्र्यहाच्छुध्येद् द्विजोत्तमः"।[नागवीटे वृक्षभेदे त्रिका०।

**टाङ्कर** पु०टाङ्कं तत्तुल्यरसं राति रा—क टाङ्क+कुञ्जा० र वा।

**टार** पुंस्त्री० टां पृथ्वीमृच्छति ऋ—अण् उप० स०। घोटके

स्त्रियां जातित्वात् ङीष् । २रक्ते ३खञ्जे च हेमच० ।

**टिक** गतौ भ्वा० आ० सक० सेट् । टेकते अटेकिष्ट टिटिके । ऋदित् अटिटेकत् त ।

**टिटिभ** पुंस्त्री० टिटीति अव्यक्तशब्दं भणति भण–ड । को यष्टिके(टिटिरि)स्त्रियां ङीष् स्वार्थे क तत्रार्थे अमरः ।

**टिट्टिभ** पुंस्त्री० टिट्टीत्यव्यक्तं शब्दं भणति भण–ड ।(टिटिरि) कोयष्टिके खगे अमरः स्त्रियां ङीष् । "अनिर्द्दिष्टां-श्चैकशफांष्टिट्टिभांश्च विवर्जयेत्" मनुना तन्मांसभक्षणं निषिद्धम् । "टिट्टिभं तदुपेत राज्यध्यानमिवातुरः" भा० शा० १११अ० । कोयष्टिकशब्दे २२६६ पृ० तन्मांस-गुणा उक्ताः । टिट्टिभक स्वार्थे क । तत्रार्थे पुंस्त्री० ।

**टिण्टिनिका** स्त्री अम्बुशिरीषिकायां (जँाक) भावप्र० ।

**टिण्डिश** पु० रोमशफले (ढाँडश) ख्याते वृक्षभेदे राजनि० । "टिण्डिशो रुचिकृत् भेदी पित्तश्लेष्माश्मरीप्रणुत् । सुशीता वातला रूक्षा मूत्रला च प्रकीर्त्तिता" भावप्र० ।

**टिप** नोदने चुरा०उभ०सक०सेट् । टेपयति-ते अटीटिपत्-त ।

**टिप्पनी** स्त्री टिप-क्विप् टिपा पन्यते स्तूयते पन–घञर्थे क गौरा०ङीष् । टीकायाम् । सा च टीकाव्याख्यारूप-तयैव व्यवह्रियते यथा चिन्तामणिटीकाया दीधितिव्या-ख्यायाः टीका जगदीशकृता गदाधरकृता च । यथा शारीरिकसूत्रभाष्यव्याख्या पञ्चपादिका भामती च । महाभाष्यव्याख्या कैयटकृता इत्यादि । प्रथमव्याख्याया-मपि क्वचित् प्रयुज्यते यथा "श्रीमद्गजाननं नत्वा-लीलावत्याः सुटिप्पनी । भवेशेन सुबोधार्थं क्रियते यद्गुरोः श्रुतम्" "टिप्पनी दायभागस्य श्रीनाथेन विधीयते" । [ ऋदित् । अटिटीकत् त ।

**टीक** गतौ भ्वा० आत्म० सक० सेट् । टीकते अटीकिष्ट ।

**टीका** स्त्री टीक्यते गम्यते ग्रन्थार्थोऽनया । टीक–करणे घञ् घञर्थे क वा । विषमपदव्याख्यारूपे ग्रन्थभेदे । "अपटीको जडो माघे भृशं जाड्येन ताड्यते । स च किञ्चित्तरत्येव कण्ठसंलग्नवल्लभः" उद्भटः । "नत्वा भगवतीं दुर्गां टीकां दुर्गार्थबुद्धये । कुरुते दायभागस्य भट्टाचार्य्यमहेश्वरः" "करोति टीकामिह दायभागग्रन्थावबोधाय सदेकरध्याम्" श्रीकृष्णतर्का० ।

**टुण्टुक** पु० स्त्री टुण्टु इत्यव्यक्तं कायति कै–क । (टुण्टुनि) १पक्षिभेदे शब्दर० । स्त्रियां जातित्वात् ङीष् । २शोणा-कवृक्षे अमरः । ३कृष्णखदिरे शब्दच० । तयोः तत्खग-प्रियत्वात् तथात्वम् । ४कल्पे त्रि० मेदि० । ५क्रूरे त्रि० विश्वः । ६टङ्कनीवृक्षे स्त्री शब्दच० ।

**टुनाका** स्त्री तालमूलीवृक्षे शब्दच० ।

**टेरक** त्रि० केकर+पृषो० । (टेँरा) केकरनेत्रे । शब्दार्थचि० ।

**टोट** त्रि० स्तोट+पृषो० । १अल्पे २हीने च । स्त्रियां गौरादिपाठात् ङीष् ।

**टोडलतन्त्र** न० तन्त्रभेदे । [ डुलः टालः ।

**टुल** विप्लवे भ्वा० पर० अक० सेट् । टुलति अटुलीत् ज्वला०

इति वाचस्पत्ये टकारादिशब्दार्थसङ्कलनम् ।

---

# ठ

ठकारो व्यञ्जनवर्णभेदः । टवर्गीयः मूर्द्धन्यः अर्द्धमात्रा-कालोच्चार्य्यः । तस्योच्चारणे जिह्वामध्येन मूर्द्धस्थानस्य स्पर्शः आभ्यन्तरप्रयत्नः । विवारश्वासाघोषा महाप्राणश्च बाह्यप्रयत्नाः । मातृन्यासेऽस्य दक्षजान्वनि न्यस्यता वर्णा-भिधानेऽस्य वाचकशब्दा उक्ता यथा "ठः शून्यो मञ्जरी जीवः पाणिनी लाङ्गलं क्षमा । वनजो नन्दनो जिह्वा सुनन्दाघूर्णकः सदा । वर्त्तुलः कुण्डलो वह्निरमृतं चन्द्र-मण्डलः । दक्षजानूद्भवश्च देवभक्षो बृहद्ध्वनिः । एकपादो विभूतिश्च ललाटं सर्वमित्रकः । वृषघ्नो नलिनी विष्णुर्महेशो ग्रामणीः शशी" । एतदधिष्ठातृदेवतारूपं यथा "ध्यानमस्य प्रवक्ष्यामि शृणुष्व कमलानने ! । पूर्णचन्द्रप्रभां देवीं विकसत्पङ्कजेक्षणाम् । सुन्दरीं षोडशभुजां धर्मकामार्थमोक्षदाम् । एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत्" वर्णोद्धारतन्त्रम् । अस्य ध्येयरूपं यथा "ठकारं चञ्चलापाङ्गि, कुण्डली मोक्षरूपिणी । पीतविद्युल्लताकारं सदा त्रिगुण-संयुतम् । पञ्चदेवात्मकं वर्णं पञ्चप्राणमयं सदा । त्रिविन्दुसहितं वर्णं त्रिशक्तिसहितं सदा" इति काम-धेनुतन्त्रम् । मातृकान्तेऽस्य प्रथमोपन्यासे दुःखं फलम् भशब्दे प्रमाणं दृश्यम् ।

**ठ** पु॰ ट+पृषो॰। शिवे २महाध्वनौ ३चन्द्रमण्डले एकाक्षरकोषः। ४मण्डले ५शून्ये ६लोकगोचरे च मेदि॰। शून्यस्थाने बिन्दुरूपवर्णभेदः। "स्मितमुखि! तदधष्ठद्वयम् योजयित्वा" कर्पूरस्तवः(ठद्वयं स्वाहा)। "द्विठमेव चेत्यस्य व्याख्यायां द्विठं विसर्गस्तस्य बिन्दुद्वयात्मकत्वात् विसर्गशब्देन च लक्षितलक्षणया स्वाहाकारो लक्ष्यते स्वाहाशब्देनैव वह्नौ त्यागात् त्यागस्य च विसर्गपर्य्यायत्वात्" इत्येवं रघुनन्दनादिसम्प्रदायविदः। [कामधेनुत॰।

**ठकार** पु॰ठ+कार। ठस्वरूपे वर्णे "ठकारं चञ्चलापाङ्गि!"

**ठक्कुर** पु॰१देवप्रतिमायां,२द्विजोपाधिभेदे च। यथा गोविन्दठक्कुरः काव्यप्रदीपकर्त्ता। ३देवतायाञ्च। "सुदामा नाम गोपालः श्रीमान् सुन्दरठक्कुरः" अनन्तसंहिता।

## इति वाचस्पत्ये ठकारादिशब्दार्थसङ्कलनम्।

---

## ड

डकारो व्यञ्जनवर्णभेदः मूर्द्धन्यः अर्द्धमात्राकालोच्चार्य्यः टवर्गीयः। तस्योच्चारणे जिह्वामध्येन मूर्द्धस्थानस्य स्पर्शः आभ्यन्तरयत्नः। संवारनादघोषा अल्पप्राणश्च बाह्यप्रयत्नाः। मातृकान्यासेऽस्य दक्षपादगुल्फे न्यस्यता। अस्य वाचकशब्दा यथा "डः स्मृतिर्दारुका नन्दिरूपिणी योगिनीप्रियः। कौमारी शङ्करस्त्रासस्त्रिवक्त्रो व्यापकोध्वनिः। दुरूहो जटिली भीमा द्विजिह्वः पृथिवी सती। कोलगिरिः क्षमा शान्तिर्नाभिः स्वाती च लोचनम्" वर्णाभिधानम्। तदधिष्ठातृदेवतारूपं यथा "ध्यानमस्य प्रवक्ष्यामि शृणु स्वावहिता मम। जवासिन्दूरसङ्काशां वराभयकरापराम्। त्रिनेत्रां वरदां नित्यां परमोक्षप्रदायिनीम्। एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत्" इति वर्णोद्धारतन्त्रम्। अस्य ध्येयरूपं यथा "डकारं चञ्चलापाङ्गि! सदा त्रिगुणसंयुतम्। पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा। त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं सदा। चतुर्ज्ञानमयं वर्णमात्मादितत्त्वसंयुतम्। पीतविद्युल्लताकारं डकारं प्रणमाम्यहम्" इति कामधेनुतन्त्रम्। तस्य मात्रावृत्ते प्रथमोपन्यासे शोभा फलम् "डः शोभां ढो विशोभां भ्रमणमथ च णस्तनु खं थस्तु युद्धम्" इ॰ र॰ टी॰धृतवाक्योक्तेः।

**ड** पु॰ डी—ड। १शिवे २शब्दे ३त्रासे च एका॰ को॰। ४वाडवाग्नौ ५डाकिन्यां स्त्री मेदि॰।

**डकार** पु॰ ड+कारप्रत्ययः। डस्वरूपे वर्णे।

**डगण** पु॰ छन्दोग्रन्थोक्ते चतुर्मात्रिकप्रस्तावे पञ्चभेदभिन्ने गणभेदे तत्स्वरूपादिकं यथा (ऽऽ गजः१) (।।ऽ रथः२) (।ऽ।तुरङ्गमः ३) (ऽ।।पदातिः ४) (।।।।पत्तिः ५) इति।

**डङ्गरी** स्त्री डं त्रासं गिरति गॄ—अच् पृषो॰ गौरा॰ङीष्। दीर्घकर्कट्याम्(काँकड़ी)राजनि॰अण्। डाङ्गरीत्यप्यत्रार्थे।

**डप** संघाते (राशीकरणे) चु॰आत्म॰अक॰सक॰सेट्। डापयते अडीडपत। चुरादित्वेऽपि ङित्करणादफलवत्कर्त्तर्य्यपि आत्म॰। तेनास्य ञित्करणसामर्थ्यात् पाक्षिकचुरादित्वम् पक्षे भ्वादित्वम्। डपते अडपिष्ट।

**डप** संहतौ उक्तौ डपवत् इदित्। डम्पयते अडिडम्पत। पक्षे भ्वा॰ डम्पते अडम्पिष्ट।

**डब** लोकने चुरा॰ उभ॰ सक॰ सेट्। डम्बयति अडडम्बत् शब्दस्तोमे अस्य वा चुरादित्वोक्तिः प्रामादिकी। [त।

**डभ** संघे चुरा॰इदित् उभ॰ सेट्। डम्भयति ते अडडम्भत्

**डम** पु॰ डं त्रासं माति मा—क। चाण्डाल्यां नेटाज्जाते सङ्कीर्णजातिभेदे (डोम) ब्रह्मपु॰। स्त्रियां—जातित्वात् ङीष्। [पलायने हारा॰।

**डमर** पु॰ डमेति शब्दं राति रा—घञर्थे क। भीत्या

**डमरु** पु॰डमिति शब्दमृच्छति ऋ—मृगय्वा॰ कु॰नि॰।१वाद्यभेदे क्षीणमध्ये प्रान्ते दीर्घे, पुटिकाद्वयलम्बिते कापालिकयोगिवाद्ये अमरः। स्वार्थे हारा॰न॰। "दत्त्वा डमड्डमरुडाङ्कृतिहृतभूतवर्गान्तु भर्गच्छिरणि रुधिरैर्धिनोमि" प्रबोधच॰। (डमत् डमेति शब्दं कुर्वत्)।

**डमरुका** स्त्री "मुष्टिञ्च शिथिलां बद्ध्वा ईषदुज्झितमध्यमम्। दक्षिणां तर्द्धमुत्तम कर्णदेशे प्रधारयेत्। एषा मुद्रा डमरुका सर्वविघ्नविनाशिनी" तन्त्र॰ उक्ते मुद्राभेदे।

**डम्बर** पु॰डपि—संहतौ वा॰अरन्।१समूहे आडम्बरे २आयोजने "अजायुद्धे ऋषिश्राद्धे प्रभाते मेघडम्बरः" चाणक्यः।

३धातदत्ते कुमारानुचरभेदे। "डम्बराडम्बरौ चैव ददौ धाता महात्मने" भा० श० ४७ अ०।

**डयन** न० डी–भावे ल्युट्। खगानां नभोगतौ (ओड़ा) करणे ल्युट्। २कर्णीरथे हेमच०।

**डल्लक** न० वंशनिर्मितपात्रभेदे (डाला) "त्रिशतञ्च षष्ट्यधिकं डल्लकं वस्त्रसंयुतम्। सभोज्यं सोपवीतञ्च सोपहारं मनोहरम्" ब्रह्मवै०।

**डवित्थ** पु०"डित्थः काष्ठमयो हस्ती डवित्थस्तन्मयो मृगः"। सुपद्मोक्ते काष्ठमये १मृगे २द्रव्यवाचिसंज्ञाशब्दभेदे च "द्रव्यशब्दाः एकव्यक्तिवाचिनो हरिहरडित्थडवित्थादयः" सा०द०। शब्दकल्पद्रु मेऽयं वर्ण्यमध्यतया निवेशितस्तन्मूलं चिन्त्यम्।

**डहु(हू)** पु० दह उ वा जङ् मृगय्वादि० नि०। लकुचे (मान्दार) "डहुर्गुरु विष्टम्भी त्रिदोषशुक्रदोषहृत्" भावप्र० तद्वृयोक्तिः शब्दरत्नावलग्रामयं दीर्घान्ततया तदर्थे पठितः।

**डाकिनी** स्त्री डस्य त्रासार्थम् अकति अक–वक्रगतौ णिनि ङीप्। १देव्या अनुचरीभेदे। "शार्ङ्गञ्च डाकिनीनां च विकटानां त्रिकोटिभिः"ब्रह्मपु०। (डान) इति ख्याते दर्शनमात्रेण २उपद्रवकारिस्त्रीजनभेदे। "डाकिनी शाकिनी भूतप्रेतवेतालराक्षसाः काशीख० ३० अ०।

**डाङ्गरी** स्त्री डङ्गरी पृषो०।दीर्घकर्कट्याम् (काँकड़ी) राजनि०

**डामर** पु० शिवप्रोक्ते तन्त्रशास्त्रविशेषे तच्च षड्विधं तेषां मानादिकं वाराहीतन्त्रे उक्तं यथा

"डामरः षड्विधो ज्ञेयः प्रथमो योगडामरः१। श्लोकास्तत्र त्रयस्त्रिंशत् तथा पञ्च शतानि च। त्रिविंशतिःसहस्राणि श्लोकास्त्वेव हि संख्यया। एकादशसहस्राणि सङ्ख्याताः शिवडामरे२। श्लोकाः सप्तैव निश्चित्य ईश्वरेणैव भाषिताः। तावच्छ्लोकसहस्राणि पञ्च श्लोकशतानि च। गुणोत्तराणि दुर्गाया डामरे३ कथितानि च। नव श्लोकसहस्राणि नव श्लोकशतानि च। सारस्वते४ तथा श्लोकाः पञ्चैव परिकीर्त्तिताः। शरसंख्यसहस्राणि श्लोकानां ब्रह्मडामरे५। पञ्चोत्तरशतान्यत्र संख्यानि शिवेन तु षष्टिः। श्लोकसहस्राणि गान्धर्वे६ डामरोत्तमे। श्लोकाश्च षष्टिसंख्याता ब्रह्मणाऽव्यक्तयोनिनेति"।

**डालिम** पु० दाडिम्ब+पृषो०। स्वनामख्याते फलप्रधाने वृक्षे भरतः।

**डाहन** पु० त्रिपुरदेशे त्रिका०।

**डाहूक** पुंस्त्री०डेति ह्वयते ह्वे–बा०ऊक पृषो०। दात्यूहखगे जटा० स्त्रियां जातित्वात् ङीष्।

**डिङ्गर** पु० डङ्गर+पृषो०। १डङ्गरशब्दार्थे २क्षेपे ३वने ४धूर्त्ते ५सेवके च शब्दर०।

**डिडिका** स्त्री यौवनकालजाते पलिततासूचके रोगभेदे। "यौवने डिडिकास्वेव विशेषाच्छर्दनम् हितम्" सुश्रु०।

**डिडिमा** पु० स्त्री सुश्रुतोक्ते प्रतुदे खगभेदे स्त्रियां जातित्वात् ङीष्। प्रतुदशब्दे तद्भेदा दृश्याः।

**डिण्डिम** पु० डिण्डेतिशब्दं माति। १वाद्यभेदे (ढेँडरा) अमरः। "आर्यबालचरितप्रस्तावनाडिण्डिमः" वीरच० "भेरीशङ्खस्वनान् हृष्टा डिण्डिमांश्च सहस्रशः"भा०द्रो० १९६ अ०। २अप्रपाकफले पानीयामलके शब्दच०।

**डिण्डिमेश्वर** पु० शिवपु० उक्ते तीर्थभेदे। [हेमच०।

**डिण्डिर** पु० हिडि–बा० किरच् आदेर्हस्य डः। समुद्रफेने

**डिण्डिरमोदक** न० डिण्डिर इव मोदकः मोदयति मोदि–ण्वुल्। ग्टञ्जने (गाँजा) ख्याते मादक द्रव्यभेदे राजनि०।

**डिण्डिश** पु० डिण्डिक+पृषो०। (टाँडश) इति ख्याते रोमशफले वृक्षभेदे। "डिण्डिशो रुचिकृद्भेदी पित्तश्लेष्मापहः स्मृतः। सुशीतो वातलो रूक्षो मूत्रलश्चाश्मरीहरः। निःशेषबीजं स्वतिदन्तखण्डं सचिक्कणम् प्रोज्झितचण्डगन्धम्। स्नेहप्रतप्तं चलदर्दखण्डं रुचिप्रदं डिण्डिशकं सपिण्डम्" वैद्यक०।

**डिण्डीर** पु० हिडि–ईरच् आदेर्हस्य डः। समुद्रफेने हेमच०।

**डित्थ** पु० डवित्थशब्दोक्ते काष्ठमये १हस्तिनि एकव्यक्तिमात्रबोधके २संज्ञाशब्दभेदे तत्प्रतिपाद्ये ३अर्थभेदे च।

**डिप** संहतौ बा चुरा० उभ० पक्षे भ्वा० आत्म० अक० सेट्। डेपयति–ते डेपते इदित् अडिडेपत् त।

**डिप** प्रेरणे वा चु० उभ० पक्षे तुदा० पर० सक० सेट्। डेपयति–ते अडीडिपत्–त कुटा० डिपति अडिपीत्। दिवादित्वमपीच्छन्ति डिप्यति इरित् अडिपत् अडेपीत्।

**डिप** संहतौ वा चुरा०उ०पक्षे भ्वा०आत्म०अक०सेट् इदित्। डिम्पयति–ते डिम्पते। अडिडिम्पत्–त अडिम्पिष्ट।

**डिब** संघे प्रेरणे च वा चु० उभ० पक्षे भ्वा०पर० सक० सेट् इदित्। डिम्बयति–ते अडिडिम्बत् डिम्बति अडिम्बीत्।

**डिभ** हिंसे संहतौ वा चुरा०उभ०पक्षे भ्वा०पर०सक० सेट्। इदित्। डिम्भयति–ते अडिडिम्भत्–त डिम्भति अडिम्भीत्।

**डिम** हिंसने भ्वा० पर० सक० सेट्। डेमति अडेमीत्।

**डिम** पु० डिम-क । दृश्यकाव्यरूपनाटकभेदे । "मायेन्द्रजाल-संग्रामक्रोधोद्भ्रान्तादिचेष्टितैः । उपरागैश्च भूयिष्ठो डिमः ख्यातोऽतिवृत्तकः" सा० द० तल्लक्षणमुक्तम् ।

**डिम्ब** पु० डिबि–घञ् अच् वा । १भये, २कलले, ३फुप्फुसे च हारा० ४डमरे, अमरः ५भयध्वनौ ६अण्डे, ७प्लीहनि, ८विप्लवे च मेदि० ।

**डिम्बाहव** न० डिम्बं भयध्वनियुक्तमाहवम् युद्धम् । युद्धभेदे तस्य नृपतिशून्यतया भययुक्तध्वनिमत्त्वात् तथात्वम् । "डिम्बाहवहतानां च विहितं पार्थिवेन च" मनुना तद्युद्धहतस्य सद्यःशौचमुक्तम् । जटाधरे पुंस्त्वपाठः प्रामादिकः आहवशब्दान्तत्वात् द्वन्द्वतत्पुरुषयोः परवल्लिङ्गताविधानात् क्लीवत्वौचित्यात् । "डिम्बाहवार्दितानाञ्च असुराणां परायणम्" भा०आ०२१ अ० ।

**डिम्बिका** स्त्री डिबि–ण्वुल् । १कामुक्यां २जलविम्बे ३शोणाकवृक्षे च शब्दरत्ना० । अच् गौरा० ङीष् । डिम्बीत्यप्यत्र ।

**डिम्भ** त्रि० डिभि–अच् । १शिशौ अमरः २मूर्खे मेदि० ।

**डिम्भक** पु० डिम्भ+स्वार्थे क । १बालके शब्दर०२शाल्वदेशपति ब्रह्मदत्तसुतभेदे । तत्कथा हरिवं० २८५ अध्यायादौ दृश्या "हंसो ज्येष्ठो नृपसुतो डिम्भकोऽनन्तरोऽभवत्" "हंसश्च डिम्भकश्चैव तत्सुतौ महामते !" ।

**डिम्भचक्र** न० स्वरोदयोक्ते शुभाशुभसूचके चक्रभेदे चक्रशब्दे २८३० पृ० दृश्यम् ।

**डी** नभोगतौ (ओड़ा) भ्वा०आ०अक०सेट् । डयते अडयिष्ट डिड्ये डीनः । प्राद्युपसर्गभेदे खगगतिभेदाः खगगतिशब्दे २४१४ पृ०दृश्याः ।
गतौ दिवा० आ० सक० निघण्टुः । डीयते ।

**डीतर** त्रि०डी–क्विप् ततस्तरप् । नभोगतियुक्ततरे "तस्मादिमा अजा अरा डीतरा आक्रममाणा इव यन्ति" शत० ब्रा०४।५।५।५ ।

**डीन** न० डी–भावे क्त । पक्षिगतिभेदे जटा० । खगगतिशब्दे २४१४पृ० दृश्यम् । २आगमशास्त्रविशेषे च यथा "डामरं डमरं डीनं श्रुतं कालीविलासकम् । सप्तकोटिमिता ग्रन्था मम वक्त्रात् विनिर्गताः" मुण्ड० त० ।

**डीनडीनक** न० पक्षिगतिभेदे खगगतिशब्दे २४१४ पृ० दृश्यम् । [ दृश्यम् ।

**डीनावडीनक** न० खगगतिभेदे खगगतिशब्दे २४१४ पृ०

**डुण्डुभ** पुंस्त्री० डुण्डु इत्यनुकरणशब्दं भणति तेन भाति वा भण-भा-वा ड । (ढोँड़ा) इति ख्याते सर्पभेदे अमरः । स्त्रियां जातित्वात् ङीष् ।"शयानं तत्र चापश्यत् डुण्डुभं वयसान्वितम्" भा० आ०९अ० । पृषो० अन्त्यलोपे डुण्डुरपि तत्रार्थे पुंस्त्री० त्रिका० ।

**डुण्डुल** पुंस्त्री डुण्डु इति शब्दं लाति ला–क । क्षुद्रपेचके राजनि० स्त्रियां जातित्वात् ङीष् ।

**डुल** पु० डु इति शब्दं लाति ला–क । पेचकभेदे ततः वराहा० चतुरर्थ्यां य । डुल्य तत्सन्निकृष्टदेशादौ त्रि० ।

**डुलि** स्त्री दुलि+पृषो० । कमठ्याम् दुलौ रायमुकुटः ।

**डुलिका** स्त्री डुलिरिव कायति कै–क । खञ्जनाकारे खगभेदे जटाधरः ।

**डोडिका** स्त्री (करेङ्गा) इति प्रसिद्धे फलशाकविशेषे । "डोडिका पुष्टिदा हृद्या रुच्या वह्निप्रदा लघुः । हन्ति पित्तकफार्शांसि क्रिमिगुल्मविषामयान्" । "बल्यं डोडीफलमविकलं खिन्नमीषच्च तोये स्नेहे हिङ्गुप्रणयिनि ततो वेसवारेण सिद्धम् । गव्यं तक्रं कथितनिहितं साधितं रामठेन खादन् खादन् निभृतमसृतं निन्दितं भोक्तुमिच्छेत् । सम्भूय शुष्कं तरणेः प्रतापात् प्रतप्तमाज्येन च डोडिशाकम् । ससैन्धवं रामठदत्तवासं खादन्नरो निन्दति व्यञ्जनानि । डोडिका वातला रूक्षा शीता गुर्वी विषापहा । सुस्निग्धा रोचना हृद्या कथिता कण्ठकर्चरी" शब्दार्थचि० धृतवाक्यम् । [ दृश्यम् ।

**डोडी** स्त्री डोडिकायां क्षुपभेदे राजनि० । डोडिकाशब्दे

**डोम** पु० स्त्री स्वनामख्याते सङ्कीर्णजातिभेदे स्त्रियां ङीष् । तद्यास्पृश्यत्वमुक्तं मत्स्यसूक्ततन्त्रे ३८ पटले "चण्डालस्यैव डोमस्य स्नानकस्य तथा यतिः । दण्डीरस्यैव भण्डीरो भूपण्डस्य तथाश्मी । तथा सुखी लिङ्गधारी समा एते यशस्विनि ! । स्पृष्ट्वा प्रमादतः स्नात्वा गायत्र्यष्टशतं जपेदिति" ।

**डोर** न० दोष्+रा–ड पृषो० । हस्तबाह्वादौ बन्धनसूत्रे "कोऽनन्त इत्युदीर्यैव धृत्वा तत्कल्पसूत्रम् । हस्ताट्टाकृष्य तड्डोरं छिन्नवान् पावकोपरि" भविष्य० पु० स्वार्थे क तत्रार्थे न० । तत्रैव "चतुर्दशग्रन्थियुक्तं कुङ्कुमाक्तं सुडोरकम् । स्त्रियश्च पुरुषश्चैव बध्नीयात् वामदक्षिणे" । [राजनि० ।

**डोरडी** स्त्री डोरमिव डयते डी–ड गौरा०ङीष् । वृहत्याम्

**डुल** मिश्रीकरणे चु० उभ० सक० सेट् । डोलयति ते अडि-

ञ्जुलत् त। कात्या० श्रौ० १६।१२० सूत्रभाष्ये "मिश्रयति आडालयतीत्यर्थः" कर्कः। "मिश्रयतिराडालनार्थः" कात्या० श्रौ०१०।४।७। कर्कः "पार्श्वनाज्यं वसां च मिश्रयत्याडालयति" ५।८।१८। कर्कः।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्यप्रविरचिते वाचस्पत्ये डकारादिशब्दार्थसङ्कलनम्।

---

## ढ

ढकारो व्यञ्जनवर्णभेदोऽर्द्धमात्राकालोच्चार्य्यः मूर्द्धन्यः टवर्गीयः। तस्योच्चारणे जिह्वामध्यभागेन मूर्द्धः स्पर्शः आभ्यन्तरप्रयत्नः। संवारनादघोषा महाप्राणश्च बाह्यप्रयत्नाः। मातृकान्यासेऽस्य दक्षपादाङ्गुलिमूले न्यस्यता। वर्णाभिधाने अस्य वाचकशब्दा उक्ता यथा "ढो ढक्का निर्गुणः शूरो यक्षेशो धनदेश्वरः। अर्द्धनारीश्वरस्तोयमोऽश्वरस्त्रिशिखो नरः। दक्षपादाङ्गुलीमूलं विघ्निट्खड्गो विनायकः। प्रहासस्त्रिपुरा सन्धिर्निर्गुणो निधनो धनी। विघ्नेशः पाणिनी तद्धारिणी क्रोड़पुच्छकः। एलापुरं च दुर्गाता विशाखा श्रामणोरतिः"। एतदधिष्ठातृदेवताध्यानं वर्णोद्धारतन्त्रे उक्तं यथा। "रक्तोत्पलनिभां रम्यां रक्तपङ्कजलोचनाम्। अष्टादशभुजां भीमां महामोक्षप्रदायिनीम्। एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत्"। अस्य स्वरूपं कामधेनुतन्त्रे उक्तं यथा

"ढकारः परमाराध्यो या स्वयं कुण्डली परा। पञ्चदेवात्मकं वर्णं पञ्चप्राणमयं सदा। सदा त्रिगुणसंयुक्तं आत्मादितत्त्वसंयुतम्। रक्तविद्युल्लताकारं ढकारं प्रणमाम्यहम्"। मात्रावृत्तेऽस्य प्रथमोपन्यासे विशोभा फलम् डशब्दे प्रमाणं दृश्यम्।

**ढ** पु० १ढक्कायां २शुनि ३श्वलाङ्गूले च मेदि०। तस्य तदाकृतित्वात् तथात्वम्। ४निर्गुणे ५ध्वनौ च एकाक्षरको०

**ढकार** पु० ढ+स्वरूपे कारप्रत्ययः। ढस्वरूपे वर्णे "ढकारं प्रणमाम्यहम्" कामधेनुत० "ढकारस्य ढकारे परे लोपः" सि० कौ०।

**ढक्का** स्त्री ढगिति कायति कै—क। यशःपटहे (ढाक) ख्याते वाद्यभेदे अमरः। "न ते डुडुक्केन न सोऽपि ढक्कया न मर्द्दलैः सापि न तेऽपि ढक्कया" नैषधम्।

**ढक्कानादचलज्जला** स्त्री ढक्काया नाद इव चलज्जलं तद्रवो यस्याः। गङ्गायाम्। "ढक्कानादचलज्जला" काशी० गङ्गास्तवः।

**ढक्कारवा** स्त्री ढक्काया रव इव रवो यस्याः। तारिणीदेव्याम् "ढक्कारवा च ढक्कारी" तारासहस्रनाम।

**ढक्कारी** स्त्री ढगिति शब्दं करोति कृ—अण् उपप०स० गौरा० ङीष्। तारिणीदेव्याम् "ढक्कारवा च ढक्कारी ढक्कारवरवाढ्यका" तारासहस्रनाम।

**ढगण** पु० मात्रावृत्ते त्रिमात्रिकप्रस्तावभेदे तद्भेदाश्च त्रयः "तत्स्वरूपादिकं यथा (ऽ।) १ ध्वजः। (।ऽ) २तालः। (।।।) ३ ताण्डवम्।

**ढण्टी** स्त्री वाद्यभेदे "ढण्टीवाद्यस्वरूपा च ढकाराक्षररूपिणी" रुद्रया० अन्नपूर्णासहस्रनाम।

**ढामरा** स्त्री हंस्याम् शब्दार्थचि०।

**ढाल** न० स्वनामख्याते चर्म्ममयादौ फलके तद्विद्यतेऽस्य इनि ढालिन् तद्युक्ते त्रि०। "ढालिपत्त्रजयकरी ढकारवर्णरूपिणी" अन्नपूर्णास्तवः। स्त्रियां ङीप्।

**ढुण्ढ** अन्वेषणे भ्वा० सक० पर० सेट्। ढुण्ढति अढुण्ढीत्। डुढुण्ढ। ढुण्ढिः।

**ढुण्ढि** पु० ढुण्ढ—इन्। काशीस्थे गणेशभेदे तन्नामनिरुक्त्यादिकं काशीख० ५७अ०उक्तं यथा "अन्वेषणे ढुण्ढिरयं प्रथितोऽस्ति धातुः सर्वार्थढुण्ढिततया तव ढुण्ढिनामा। काशीप्रवेशमपि को लभतेऽत्र देही तोषं विना तव विनायक! ढुण्ढिराज!" तन्माहात्म्यं तत्रैव यथा "ढुण्ढे प्रणम्य पुरतस्तव पादपद्मं यो मां नमस्यति पुमानिह काशिवासी। तत्कर्णमूलमधिगम्य पुरा दिशामि तत्किञ्चिदत्र न पुनर्भवतास्ति येन। यः प्रत्यहं नमति ढुण्ढिविनायकं त्वां काश्यां प्रगे प्रतिहताखिलविघ्नसंघः। नो तस्य जातु जगतीतलवर्त्तिनस्तु दुष्प्रापमत्र च परत्र च किञ्चनापि। प्रथमं ढुण्ढिराजोऽसि मम दक्षिणतोऽनघ। आढुण्ढ्य सर्वभक्तेभ्यः सर्वार्थान् संप्रयच्छसि"। तस्य यात्राविधानमुक्तं तत्रैव यथा "माघशुक्लचतुर्थ्यान्तु नक्तव्रतपरायणाः। ये त्वां ढुण्ढेऽर्चयिष्यन्ति तेऽर्च्याः सुरासुरैरिह। विधाय वार्षिकीं यात्रां चतुर्थीं प्राप्य तापसीम्। शुक्लां शुक्लतिलैर्लड्डून् प्राश्नीयाल्लड्डुकान्

व्रती। कार्य्या यात्रा प्रयत्नेन चोत्सवैर्विविधैर्नृभिः। तस्यां चतुर्थ्यां त्वत्प्रीत्यै ढुण्ढे! सर्वोपसर्गहृत्। तां यात्रां नात्र यः कुर्य्यान्निवेद्य तिललड्डुकान्। उपवास सहस्रन्तु स कृत्वाखिलान् ममाज्ञया। होमं तिलाज्यद्रव्येण यः करिष्यति भक्तितः। तस्यां चतुर्थ्यां मन्त्रस्तस्य मन्त्रः प्रसेत्स्यति"।

**ढोल** पु॰ गले दोलायमानतया वादनीये स्वनामख्याते वाद्यभेदे। "ढक्काढोलप्रिया नित्या ढोलवाद्यप्रमोदिनी। ढोलरूपा ढोलधरा ढोलशब्दस्वरूपिणी" इति रुद्रयामले अन्नपूर्णासहस्रनामस्तोत्रम्।

**ढक्काढोलप्रिया** स्त्री ढक्काढोलौ तच्छब्दः प्रियोऽस्याः। अन्नपूर्णायाम् ढोलशब्दे दृश्यम् ढोलरूपादयोऽप्यत्र।

**ढौक** प्रेरणे गत्याञ्च भ्वा॰ आत्म॰ सक॰ सेट्। ढौकते अढौकिष्ट डुढौके। "तं विप्रदर्शं कृतघातयत्ना यान्तं वने रात्रिचरी डुढौके" भट्टिः। "शकुन्तला यत्र ढौकते" शकु॰। णिचि ढौकयति ते "राक्षसोऽनर्जयत् सूतं पुनश्चाढौकयद्रथम्" भट्टिः। ऋदित् अडुढौकत् त।

इति वाचस्पत्ये ढकारादिशब्दार्थसङ्कलनम्।

---

## ण

णकारो व्यञ्जनवर्णभेदोऽर्द्धमात्राकालोच्चार्य्यः मूर्द्धन्यः टवर्गीयः। अस्योच्चारणे जिह्वामध्येन मूर्द्धुः स्पर्शः नासिकायत्नप्रभेदश्च आभ्यन्तरप्रयत्नः। संवारनादघोषाः अल्पप्राणश्च वाह्यप्रयत्नाः। मातृकान्यासेऽस्य दक्षपादाङ्गुल्यग्रे न्यस्यता। अस्य वाचकशब्दाः वर्णाभिधाने उक्ता यथा "णो निर्गुणं रतिर्ज्ञानं जम्भलः पक्षिवाहनः। जया शम्भो नरकजित् निष्कलो योगिनीप्रियः। द्विमुखं कोटवी श्रोत्रं समृद्धिर्बोधनी मता। त्रिनेत्रो मानुषी व्योम दक्षपादाङ्गुलीमुखम्। माधवः शङ्खिनी वीरो नारायणश्च निर्णयः"। एतदधिष्ठातृदेवताध्यानं वर्णोद्धारतन्त्रोक्तं यथा "ध्यानमस्य णकारस्य प्रवक्ष्यामि च तत् शृणु। द्विभुजां वरदां रम्यां भक्ताभीष्टप्रदायिनीम्। राजीवलोचनां नित्यां धर्मकामार्थमोक्षदाम्। एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत्"। एतत्स्वरूपं कामधेनुतन्त्रोक्तं यथा "णकारः परमेशानि! या स्वयं परकुण्डली। पीतविद्युल्लताकारः पञ्चदेवमयः सदा। पञ्चप्राणमयं देवि! सदा त्रिगुणसंयुतम्। आत्मादितत्त्वसंयुक्तं। महामोहप्रदायकम्"। मातृवृत्तेऽस्य प्रथमोपन्यासे मरणं फलम् मूलं डशब्दे दृश्यम्।

**ण** पु॰ णख—गतौ ड पृषो॰ णत्वम्। १विन्दुदेवे, २भूषणे, ३गुणवर्ज्जिते, ४पानीयनिलये मेदि॰। ५निर्णये, ६ज्ञाने च न॰ एकाक्षरको॰।

**णख** गतौ भ्वा॰पर॰सक॰सेट्। णोपदेशत्वात् सति निमित्ते णत्वम्। नखति प्रणखति। अनखीत्—अनाखीत्। ननाख नेखतुः। एवं णादिधातूनां गणपाठे णादित्वं प्रयोगे नादित्वं सति निमित्ते णत्वमिति बोध्यम्।

**णट** नृत्ये साभिनये नटकार्य्ये हिंसायामयं न णोपदेशी भ्वा॰ पर॰ अक॰ सेट्। नटति प्रणटति अनाटीत् अनटीत्। ननाट नेटतुः। हिंसायात् प्रनटति। नटः नाट्यम्।

**णट** नटकृत्ये भ्वा॰पर॰अक॰सेट्। नटति प्रणटति अनाटीत्-अनटीत् ननाट नेटतुः घटा॰। नटयति अनीनटत्।

"णट नृत्ये। इत्यमेव पूर्वमपि पठितम्। तत्रायं विवेकः। पूर्वपठितस्य नाट्यमर्थो यत्कारिषु नटव्यपदेशो वाक्यार्थाभिनयो नाट्यम्। घटादौ तु नृत्तं नृत्यं चार्थो यत्कारिषु नर्त्तकव्यपदेशः पदार्थाभिनयो नृत्यम् गात्रविक्षेपमात्रं नृत्तम्। केचित्तु घटादौ णट नतावित पठन्ति। गतावित्यन्ये। णोपदेशपर्य्युदासवाक्ये भाष्यकृता नाटीति दीर्घपाठात् घटादिर्णोपदेश एव" सि॰कौ॰

**णद** अव्यक्तशब्दे भ्वा॰ पर॰ अक॰ सेट्। नदति प्रणदति अनादीत् अनदीत्। ननाद नेदतुः नदः। नादः नदन् नदितम्। सति निमित्ते एतत्पूर्ववर्त्तिनः न्युपसर्गस्य णत्वम्। प्रणिनदति परिणिनदति।

"वासवश्चानदद्घोरम् रुधिरञ्चाभ्यवर्षत" हरिवं॰१८१अ॰। "नदति मही गम्भीरम्" वृ॰स॰ ५४अ॰। "शब्दं घोरं नदन्ति" भा॰व॰२६७अ॰ "शिवाश्चैवाशिवाश्चादाश्नदन्" हरिवं॰१८१अ॰। आर्षस्तङ्। णिचि नादयति "नदय-

न्नेति पृथिवीमुत द्याम्” ऋ०१।६७।१२। “आ सानु-शुष्मैर्नदयन् पृथिव्याः” ऋ०७।७।२। छान्दसो ह्रस्वः। लोके तु न ह्रस्वः। “नादयन्नुग्रघोषेण सर्वाः सविदिशो दिशः” भा०व० २५२२ श्लो०। अन्तर्भूतण्यर्थे तु अस्य सकर्मकता “नृत्यावसाने नटराजराजो ननाद ढक्कां नव पञ्च वारान्” शब्देन्दुशेखरधृतवाक्यम्।

अनु+नादेनानुकरणे सक०। “तथा च तेषां रुदतां महात्मनां दिशं च खञ्चानुननाद निस्वनः” रामा०२।१११अ०।

अभि+आभिमुख्येन शब्दकरणे। “पुत्रेति तन्मयतया तरवोऽभिनेदुः” भाग० १।२।२।

उद्+उच्चैःशब्दकरणे। “कालमेघइवोन्नदन्” भा०द्रो०६८१४

प्रति+प्रतिशब्देन अनुकरणे सक०। “वयं प्रति नदन्तस्तान्” भा० भी०४५।१८।

**णद** भाषे चु० उभ० सक० सेट्। नादयति ते प्रणादयति अनीनदत्-त। ननाद नेदतुः।

**णभ** हिंसे भ्वा० आत्म० सक० सेट्। नभते प्रणभते ऌदित् अनभत् अनभिष्ट। नेभे। “नभन्तामन्यकेषां ज्याका अधिधन्वसु” ऋ०१०।१३३। १। “नभन्तां हिंसयन्ताम्” भा० आपस्तङ् “नाभाकस्य प्रशस्तिभिः” निरुक्तधृता ऋक्। वेदेऽस्य क्वचित् नुम्। “उन्नम्भय पृथिवीं भिन्धीदं दिव्यं नभः” तैत्ति०स०२।४।८।२।

**णभ** हिंसे दिवा० क्र्या० च पर० सक० सेट्। नभ्यति प्रणभ्यति नभ्नाति। अनाभीत्-अनभीत्। ननाभ नेभतुः।

**णम** शब्दे अक० नतौ सक० भ्वा० पर० अनिट्। नमति प्रणमति अनंसीत्। ननाम नेमतुः नेमिथ ननन्थ। नतः नतिः नामः नत्वा नन्ता नम्यः आनाम्यः। अस्य अमन्तत्वेन घटादित्वे प्राप्तेऽपि अनुपसर्गाद्वेति नियमात् वा तथात्वम्। नमयति नामयति उपसर्गात्तु उन्नमयतीत्येव। नतिश्च स्वाकर्षबोधकव्यापारभेदः स च करशिरःसंयोगादिः स्वापकर्षबोधशालिनः कर्मता। नमति गुरुम् दुःखढशब्दे उदा०। न्यग्भावे (नोया) अकर्म०। ततः कर्मकर्त्तरि न यक्चिणौ नमते अनंस्त। “द्युम्नेभिरस्मे वसवो नमध्वम्” ऋ० ७।५६।१७। “एते द्यूने युवतयोऽनमन्त” १०।३०।६। न्यग्भावे “अनंसीद्भूर्भरेणास्य” भट्टिः। “उन्नमति नमति वर्षति गर्ज्जति मेघः करोति तिमिरौघम्। प्रथमश्रीरिव पुरुषः करोति रूपाण्यनेकानि” मृच्छ०“नतभ्रुवो नव्यजनापनेयः” उद्भटः “पुष्पभारनता लता” रामा० २।९६ अ०। “नताभिधानाद्व्यथते नतानन:” किरा०। यङि नंनम्यते। “नंनम्यमाना फलदित्सयेव” भट्टिः।

अभि+आभिमुख्येन नमने। “देवान् वै यज्ञो नाभ्यनमत्”

अव+न्यग्भावे अधोभवने (नीचे नोओया) अक०। “त्वय्यादातुं जलमवनते” मेघ०। णिच् अवनमयति “अवनामितमेढ्रस्य मेढ्रे” सुश्रु०। “शिरः सुलग्नो जग्राह स्वहस्तेनावनाम्य च” हरिवं० ९८ अ०। केचिच्छराक्षेपभयाच्छिरांस्यवननामिरे” भा०आ०१२४अ०। आर्षो न ह्रस्वः आत्वभावश्चार्षः।

उद्+ऊर्द्ध्वगतौ उच्चभवने उत्थाने च अक०। “उत्पद्योत्पद्य तत्रैव दरिद्राणां मनोरथाः। हृदयेषु विलीयन्ते विधवास्त्रीस्तनाविव” पञ्चत०। “स्थितः सर्वोन्नतेनोर्वीम्” रघुः

अभि+उद्+आभिमुख्येनोन्नतौ अक०। “अभ्युन्नताङ्गुष्ठनखप्रभाभिः” कुमा०। “अभ्युन्नता पुरस्तादवगाढा जघनगौरवात् पश्चात्” शकु०।

उप+प्राप्तौ सक० स्वयमुपस्थितौ अक०। “यं सविता दीर्घोपनमेत”। “अभ्याशो ह यदेनं साधवो धर्मा आ च गच्छेयुरुप च नमेयुः” छा०उ०। “यदा तु परबाधयान्ध आत्मने नोपनमति” भाग० ५।१४।१४ श्लो०। “मत्संयोगः कथमुपनमेत् स्वप्नजोऽपि प्रियायाः” मेघ०। “परलोकोपनतं जलाञ्जलिम्” कुमा०।

परि+तुल्यरूपसत्तया वस्तुनोऽन्यथाभवने अक० आत्म०। यथा दुग्धपरिणामः दधि मृत्परिणामः घटादिः। “तथा तैजसमन्तःकरणमपि चक्षुरादिद्वारा घटादिविषयदेशं गत्वा घटादिविषयाकारेण परिणमते” “समसत्ताककार्य्योत्पादः परिणामः इति” वेदा०प०। कर्मकर्त्तरि आत्मनेपदमित्यन्ये “परिणामस्वभावा हि गुणा नापरिणम्य क्षणमवतिष्ठन्ते” सा०त०कौ०। गजानां तिर्य्यग्दन्तप्रहारे सक०। “विष्के नागः पर्य्यणंसीत् स एव” माघः। पर्य्यणंसीत् तिर्य्यक् प्रजहारेत्यर्थः। “तिर्य्यग्दन्तप्रहारैस्तु गजः परिणतो मतः” वैजयन्ती। शेषताप्राप्तौ अक०। “दिवसाः परिणामरमणीयाः” शकु०। “ता एवौषधयः कालपरिणामात् परिणतवीर्य्या भवन्ति” सुश्रु०। परिपाके च “आहारस्य सम्यक्परिणतस्य” सुश्रु० सम्यक्नमने सक०। “यस्तं परिणमेच्च तत्” भा० उ० ११०७।

प्र+प्रकर्षेण नतौ। “प्रणनेद्दण्डवद्भूमौ” भाग० ६।१९।९। “प्रणेमुर्भुवि मूर्द्धभिः” भाग० ३। ३।२८। “उरसा शिरसा दृष्ट्या वचसा मनसा तथा। पद्भ्यां कराभ्यां

जानुभ्यां प्रणामोऽष्टाङ्ग इष्यते" न्वर्थिंङ् पु० उक्तो नतिभेदे च ।
प्रति+प्रतीपनतौ ।
वि+विशेषेण नतौ ।
वि+परि+भावस्य विकारभेदे अक० आत्म० "षड्भावविकारा भवन्तीति वार्ष्यायणिः । जायतेऽस्ति विपरिणमते वर्द्धते अपक्षीयते नश्यतीति, जायत इति पूर्वभावस्यादिमाचष्टे नापरभावमाचष्टे नो प्रतिषेधति । अस्तीत्युत्पन्नस्य सत्त्वस्यावधारणं, विपरिणमत इत्यप्रच्यवमानस्य तत्त्वाद्विकारं, वर्द्धत इति स्वाङ्गाभ्युच्चयं,सांयौगिकानां वाङ्गानां, वर्द्धते विजयेनेति वा, वर्द्धते शरीरेणेति वा । अपक्षीयत इत्येतेनैव व्याख्यातः प्रतिलोमं, विनश्यतीत्यपरभावस्यादिमाचष्टे न पूर्वभावमाचष्टे न प्रतिषेधति"निरु०१।२। अन्यविभक्त्यन्ततया श्रुतस्य शब्दस्य अन्यविभक्त्यन्ततया परिकल्पने "कर्त्तरि शविस्यतः कर्त्रग्रहणमनुवर्तते । तच्च प्रथमया विपरिणस्यते" पा० सू० व्याख्या । "अर्थवशात् विभक्तेर्विपरिणामः" परिभाषा ।
सम्+सम्यग्नतौ । "धीरः संनमेत बलीयसे" भा० उ० ११३० । "संनताः फलभारेण पुष्पभारेण च द्रुमाः" रामा०आ०३।१६अ० [अनयीत् । ननाय नेयतुः ।
णय गतौ रक्षणे च भ्वा० पर० सक० सेट् । नयति प्रणयति
णर्द शब्दे भ्वा० पर० अक० सेट् । नर्दति अनर्दीत । ननर्द प्रणर्दति । नर्दनम् नर्दतः ।
"दुःशासनस्य रुधिरं यदा पास्यति पाण्डवः । आनर्द नर्दतः सम्यक् तदा स्मत्यं भविष्यति" भा० उ० १४०अ०। "उदपानाश्च नर्दन्ति यथा गोवृषभास्तथा" १४२ अ० । "नर्दमानो महानादं प्रावृषीव बलाहकः" भा० भी० १०१ अ० । "मत्ता नर्दन्तु कुञ्जराः" रामा० २।१०५ अ०।
णल बन्धे भ्वा० पर० सक० सेट् । नलति प्रणलति । अनालीत् । ज्वला० नलः नालः ।
णश अदर्शने ध्वंसे च दिवा०पर०अक०सेट् । नश्यति प्रणश्यति अनेशत् पा० अन्यमते नशत् अशान्तत्वे न णत्वम् प्रनष्टः ।"फलभोग्यो न नश्यति" "प्रनष्टस्वामिकं द्रव्यम्" याज्ञ०।"चेष्टा व्यनेशन्निखिलास्तदाशाः शरेषुपातैरिवता विधूताः" नैषध० "एतेन लुङुत्तमपुरुष एव नेशादेशोक्तिश्छिन्ना "ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च" हितो० "आ पाप ! स्वयं नष्टः परानपि नाशयितुमिच्छसि" प्रबो० च० ।

णस कौटिल्ये भ्वा० आत्म० अक० सेट् । नसते प्रणसते । अनसिष्ट । नेसे
णह बन्धने दिवा० उभ० सक० अनिट् । नह्यति-ते प्रणह्यति-ते । अनात्सीत् अनद्ध ननाह नेहे । नद्धा नद्धः नद्ध्री । "यथा युगं वरत्रया नह्यन्ति" ऋ० १०।६०।८ "खर्जूरीस्कन्धनद्धानाम्" रघुः । "अमृतोत्पादने नद्धो भुजगेनेव मन्दरः" रामा० सुन्द० २४ अ० ।
अपि+धारणे वा अादेरल्लोपः । पिनह्यति अपिनह्यति । "वितत्य शार्ङ्गं कवचं पिनह्य" भट्टिः । "आमुच्य कम्बूपरिहाटके शुभे विमुच्य वेणीमपिनह्य कुण्डले" भा० वि० ११ अ० । विशेषेण बन्धने निबन्धने च । "पिनद्धां धूमजालेन प्रभामिव विभावसोः" भा०व०६८अ० "बहुधा तु पिनद्धाङ्गैर्हिमवच्छिखरैरिव" भा० आ० १८५ अ० ।
अव+समन्ताद्बन्धने । "चर्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः" मनुः ।
आ+सम्यग्बन्धने "वरत्रायां दार्व्यानह्य मानः" ऋ०१०।१०२।८ "आनद्धावरणैः कामैः" भा० भी० ११९ अ०। "आनह्यते यस्य विधूप्यते च पापच्यते क्लिद्यति चापि नाडी" सुश्रु० परि+आ+परितो बन्धे सक० । "सोमपर्य्याणहनेन पर्य्याणह्यति" शत० ब्रा० ३।३।४।६
उद्+उत्तोल्य बन्धने । "अस्थ्यवयवोऽस्थिमध्यमनुप्रविश्य मज्जानमुन्नह्यति" "शाखावदुन्नह्यति मांसपिण्डम्" सुश्रु० अतिबन्धने च ।"ते नेह शक्याः सहसा विजेतुं वीर्य्योन्नद्धाः कृतवैरास्त्वया ते" भा० भी० ८१ अ० ।
सम्+उद्+समुद्बन्धने । "वल्मीकवत् समुन्नद्धमन्तः कुर्वन्ति विद्रधिम्" सुश्रु० । पाण्डित्याभिमाने गर्वे च "अतिकृत्स्नं समुन्नद्धो पण्डितम्मन्यगर्वितौ"अमरः । तत्र पाण्डित्यमाने "अश्रुतश्च समुन्नद्धो दरिद्रश्च महामनाः"भा०उ०३२अ० । गर्वे "अर्थं महान्तमासाद्य विद्यामैश्वर्य्यमेव वा । विचरत्यसमुन्नद्धो यः स पण्डित उच्यते" भा० उ० ३२अ० । समुद्भवे च "परोक्षेण समुन्नद्धप्रणयौत्सुक्यकातरः" भाग० ११५।४
उप+उपरिबन्धने । "विन्यावयेत् छिन्नमतन्द्रितश्च शुद्धं व्रणं चाप्युपनाहयेत्तु" सुश्रु० । उपानद् क्विपि पूर्वस्वरदीर्घः ।
नि+निबन्धने । "दृषधिः पृष्ठे निनद्धः" ऋ० ६।७५।५
परि+परितो बन्धने । "न तां बध्नी परिणह्येच्छतचर्मा महातनुम्" भा० आ० २९ अ० । विस्तारे "परिणाहो

विप्रावता" अमरः। "कपाटवक्षाः परिणद्धकन्धरः" रघुः। क्विपि घञि परे वा दीर्घः परी(रि)णाहः।
सम्+सम्यगबन्धने कवचादिधारणे च।
"स्रथद्दुकूलं कबरीं च विच्युतां संनह्यतीं वामकरेण वल्गुना" भाग० ८।१२।१६। "कवचेन महार्हेण सम-नह्यद्गद्बलाम्" भा० वि० १७ अ०।

णास ध्वनौ भ्वा० आत्म० अक० सेट्। नासते प्रणासते अनासिष्ट ननासे। ऋदित् अननासत्-त।

णिक्ष चुम्बने भ्वा० पर० सक० सेट्। निक्षति प्रणिक्षति। लत्वस्य वा णत्वमिति पाणिनिः। सर्वत्र वा णत्वम् मुग्ध०
"निक्ष दर्भ सपत्नान् मे" अथ०।१९।२८।१ आर्षमणपदयो-र्वात्यागः। "याः पार्श्वे उपर्षन्त्यनुनिक्षन्ति पृष्टीः" अथ० ८।८।१५ "प्रणिक्षिष्यति नो भूयः प्रनिन्द्याघ्रा-णान् मधून्ययम्" भट्टिः। "किमीदिनं प्रत्यञ्चमर्चिषा जातवेदो विनिक्ष्व" अथ० ८।३।२५
वि+नाशने "शिशीते श्रृङ्गे रक्षसे विनिक्षे" ऋ० ५।२।८ "विनिक्षे नाशाय" भा० आर्षस्तङ्।

णिज शोधने अदा० आत्म० सक० सेट् इदित्। निङ्क्ते प्रणिङ्क्ते अनिञ्जिष्ट निनिञ्जे। शुद्धौ अक०।
"अहं राष्ट्रस्याभीवर्गे निजो भूयासमुत्तमः" अथ०। ३।५।२।(निजः शुद्धः)"यस्य नास्ति निजा प्रज्ञा केवलं तु बहुश्रुतः" भा० स० ५४ अ०। "बुद्धिः सततमन्वेति छायेव पुरुषं निजा" भा० व० ३० अ०। "भुज-ग्नानस्य निजेन तेजसा" रघुः। निजेन शुद्धेन।

णिज शोधने जुहो० शुद्धौ अक० जु० उभ० अनिट्। नेनेक्ति प्रणेनेक्ति। नेनिजानि नेनिक्ते अनेनेक् अनेनिजम् अनेनिक्त इरित् अनिजत् अनैक्षीत् अनिक्त।
"शाल्मली फलके श्लक्ष्णे नेनिज्याद्वे जकः शनैः" मनुः "सूरो निनिक्त रश्मिभिः ऋ० १०।१३२।६
अव+समन्तात् जलप्रोक्षणेन शोधने। "यद्वास्यै क्रूरमभूत् तद्वास्या एतदाहार्यीतस्मात् पाणी अवनेनिक्ते"। शत० ब्रा० १।२।५।२३।
"अथोदपात्रमादायावनेजयति। असाववनेनिक्ष्वेत्येव यजमानस्य पितरमसाववनेनिक्ष्वेति पितामहमसाव-वनेनिक्ष्वेति प्रपितामहं तद्यथा शिष्यतेऽभिषिञ्चेदेवं तत्" शत०ब्रा०२।४।२।१६।"अवनेनिक्ष्व दाश्वमानं पिण्ड भोक्तुमात्मीयौ पाणी शोधयेति" भा०। पिण्डदानार्थ-मास्तृतकुशे जलप्रोक्षणे तत् प्रकारः श्रा० त० उक्तो यथा
"प्रागग्रेष्वथ दर्भेषु आद्यामामन्त्र्य पूर्ववत्। अपः क्षिपेन्मूलदेशेऽवनेनिक्ष्वेति निक्षिलाः द्वितीयञ्च तृतीयञ्च मध्यदेशाग्रदेशयोः" इत्याभ्युदयिकप्रकरणीयछन्दोग-परिशिष्टवचनेन आभ्युदयिके निक्षिलत्वाभिधानेनान्यत्र सतिलत्वप्रतीतेः पुष्पयुक्तत्वञ्च। "सपुष्पं जलमादाय तेषां पृष्ठे पृथक् पृथक्। अप्रदक्षिणं नेनिज्याद्गोत्र-नामानुमन्त्रितम्" इति ब्रह्मपुराणवचनात् "अपसव्यवि पितृतीर्थेन प्रदेशिन्यङ्गुष्ठयोरन्तरा अपसव्यवि "अप-सव्यं वा तेन पितृभ्यो निदधातीति" भट्टभाष्यधृतगृह्या-न्तरात् अपसव्यशब्देन पितृतीर्थमुच्यते अस्मादेव वचनात् तथा च मनुः प्राचीनावीतिना सम्यगपसव्य-मतन्द्रिणा" इत्यादि तत्र तु मण्डलोपरि असाविति सम्बोधनविभक्त्या सर्वत्र नामनिर्देश इति भट्टभाष्यम् अतएव प्रागुक्तछन्दोगपरिशिष्टे आद्यामामन्त्र्य पूर्व-वदित्युक्तं आद्यं पितरं पूर्ववत् "गोत्रनामभिरामन्त्र्य पितॄनर्घ्यं प्रदापयेत्" इतिवत्। पितुरवनेजनं मूलदेशे पितामहप्रपितामहयोस्तु अवनेजनमध्यदेशाग्रदेशयोः द्वितीयञ्च तृतीयञ्च मध्यदेशाग्रदेशयोः" इति छन्दोग-परिशिष्टात् मातामहादीनामप्येवम्। "मातामह-प्रभृतींस्तु एतेषामेव वामतः" इति छन्दोगपरिशिष्टात्। एतेषां पितॄणां वामत इत्याभ्युदयिकपरम्। अन्यत्र तु दक्षिणतः कर्त्तुर्वामोपचारत्वात्। अतएव पार्वणे प्रागुक्तब्रह्मपुराणे "अप्रदक्षिणं नेनिज्यादित्युक्तम्। तेन सतिलपुष्पोदकपात्रं वामहस्ताद्दक्षिणहस्तेन वामान्वा-रब्धेन गृहीत्वा अमुकगोत्र! पितरमुकदेवशर्मन्नव-नेनिक्ष्व ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधा" इति पितृतीर्थेनावनेजयेत्। "अप उपस्पृश्य जलं स्पृष्ट्वा एवं पूर्वोक्तरीत्या पितामहाय प्रपितामहाय पिण्ड-दानस्थानं जलस्पर्शनस्थलञ्च पूर्ववत् व्याख्येयम्"। पिण्ड-पितृयज्ञे तत्प्रकारः कात्या० श्रौ० ४।१।१०। उक्तो यथा "उदपात्रेणावनेजयत्यपसव्यं सव्येन मोद्धरणात्प्रभृतीन् दक्षवनेनिक्ष्वेति यजमानस्य पितृप्रभृति त्रीन्" सू०। "उदकस्य पात्रमुदपात्रं पूर्णपात्रादि तेनाध्वर्युः यजमानस्य पितृप्रभृति पितुरारभ्य त्रीन् पुरुषान् पितृपितामहप्रपितामहान् अपसव्यं यथा स्यात्तस्य मध्यप्रदेशाद्दक्षिणैकदेशेनोदकनिनयनं यथा स्यात् तथाङ्गुष्ठप्रदेशिन्योरन्तरालेन अवनेजयति अवनि-क्तान् शुचीन् करोति पिण्डदानाय। असाविति

तच्च ब्रह्मगोत्रनामादेशपूर्वकम् अमुकगोत्र ! यजमानस्य पितरमुकशर्मन्नवनेनिक्ष्वेति रेखायामूलमध्यायप्रदेशेषु दक्षिणसंस्थमवनेजनं कार्य्यम्। अपो च देवानां प्रोक्षः कनिष्ठिकाप्रदेशेन मनुष्याणाम्, उद्धरणं परिवेषणापरपर्य्यायम् अङ्गुष्ठप्रदेशिन्योरन्तरालमेव पितृणां परिशिष्यते अत इदमाह अपसव्यमिति” कर्कः। “अवनेज्य पूर्ववन्नीविं विस्रंस्य नमो व इत्यञ्जलिं करोति” कात्या० श्रौ० १५। निजेः शुद्ध्यर्थकस्य णिचि अवनेजयतीति। अवनेज्येति प्रयोग इति बोध्यम्। शोधनपरत्वे नेनिज्यादिति अवनेजने च न तन्त्रता यथाह छन्दोगप० “अर्घ्ये ऽक्षय्योदके चैव पिण्डदानेऽवनेजने। तन्त्रस्य विनिवृत्तिः स्यात् स्वधावाचन एव च” अवनेजनशब्दे ४२८ पृ० कल्प प्रदीपोक्तं मातृपक्षीयावनेजनविधानं छन्दोगेतरविषयम् अन्वष्टकादिनामाभ्युदयिकादिविषयञ्चेति बोध्यम्।

निर्+निःशेषेण क्षालनेन शोधने “पात्राणि निर्णेनिजानि” शत० ब्रा० १।१।१।२ “पात्राणि निर्णेनिक्ते” तैत्ति० सं०। “अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते” मनुः “तोयनिर्णिक्तपाणिः” रघुः “तेषामेतद्दृष्णानां निर्णिक्तानां शुभात्मनाम्” भा० शा० २७१ अ०।

**णिद** अवधाने अक० निन्दने सक० भ्वा० उभ० सेट्। नेदति-ते प्रणेदति-ते। अनेदीत् अनेदिष्ट निनेद निनिदे।

**णिद** कुत्सने भ्वा० पर० सक० सेट् इदित्। निन्दति प्रणिन्दति अनिन्दीत्। लत्व वा णत्वमिति पाणिनिः। सर्वत्र वा णत्वम् मुग्ध०

“निनिन्द रूपं हृदयेन पार्वती” कुमा०। “निन्दन्तस्तव सामर्थ्यम्” गीता। “अनिन्द्यं निन्दते यो हि” भा० व० २५२ अ०। आर्षत्वात्। “न निन्दा निन्द्यं निन्दति किन्तु विधेयं स्तौति” मीमांसा।

**णिल** दुर्बोधे तुदा० पर० सक० सेट्। निलति प्रणिलति। अनेलीत् निनेल।

**णिव** सेके भ्वा० पर० सक० सेट्। इदित्। निन्वति। अनिन्वीत्। निनिन्व। [अनेवीत् निनेव।

**णिश** समाधौ भ्वा० पर० सक० सेट्। नेशति प्रणेशति

**णिष** सेके भ्वा० पर० सक० सेट्। नेषति प्रणेषति अनेषीत्। निनेष।

**णिस** चुम्बने अदा० आत्म० सक० सेट् इदित्। निंस्ते प्रणिंस्ते अनिंसिष्ट निनिंसे। लत्व वा णत्वमिति पाणिनिः। सर्वत्र वा णत्वम् मुग्ध०। निंस्ते दन्तच्छदं न व” भट्टिः।

“अभि स्रुचः क्रमते दक्षिणावृतो या अस्य धाम प्रथमं ह निंसते” ऋ० १।१४४।१ “अभि स्वरन्ति बहवो मनीषिणो राजानमस्य भुवनस्य निंसते” ६।८५।३

**णी** प्रापणे भ्वा० उभ० द्विक० अनिट्। नयति प्रणयति अनैषीत्। प्रधाने कर्म्मणि लादयः। अजा ग्रामं नीयते। अनेष्ट निनाय निनयिथ निनेथ निन्ये नेता न्येष्यति ते नेतव्यः। नेयः नीतः नीतिः नीत्वा विनीय।

“सर्वांश्चेष्यामि वः सदा। इजिनात्तारयिष्यामि” भा० आ० ६०५२ श्लो० “गमनाय मतिं चक्रे तामेनं निन्युरङ्गनाः” रामा० बा० ६ अ०। “नयिष्यामि च वाहिनीम्” रामा० ५।६१ अ०। आर्षं इट्। “दैवेन किलयस्यार्थः स नीतोऽपि विपद्यते” भा० वि० २० अ०। यापने च“निनाय सात्यर्थहिमोत्किरानिलाः। सहस्य रात्रीरुदवाससतत्पराः” कुमा०।

सम्मानने आत्म० “शास्त्रे नयते शास्त्रस्थं सिद्धान्तं शिष्येभ्यः प्रापयतीत्यर्थः तेन च सम्माननं फलितम्”सि०कौ० ज्ञाने निश्चये आत्म०।“तत्त्वं नयते निश्चिनोति” सि०कौ०

अति+अतिक्रम्य नयने। “न स्वर्गं लोकमतिनयेत्” छा०उ०

वि+अति अपवाहने सक०। “व्यतिनीय कालमुपसदां चतुर्थम्”आश्वा०श्रौ०१२।८।३५।“व्यतिनीय क्षपोद्य”नारा०

अनु+स्वाभीष्टप्रवेशनाय सान्त्ववाक्यादिप्रयोगे सक०। “भवतोऽनुनयाम्येवं पुत्रराज्ये ऽभिषिच्यताम्” भा० आ० ८४ अ०। “प्रणिपातेन सान्त्वेन दानेन च महायशाः। क्षत्रियोऽनुनयामास” भा० आ० २२३ अ०। आर्षं आत्मः। “अनुनीता त्वमस्माभिश्चिरं सान्त्वेन मैथिलि!” रामा० सु० २५ अ०।

अप+अपहरणे अन्यत्रनयने “यत्र संसप्तकाः पार्थमपनिन्यूरणाजिरात्” भा० आ० ५३० श्लो०।

अभि+२९२ पृ० अभिनयशब्दोक्तार्थे सक०। “गीतानि रम्याणि जगुः प्रहृष्टा कान्ताभिनीतानि मनोहराणि” हरि० ८४४८ अ०।“तदुक्तमभिनीयाभियुक्तैः” वेदा०सा० आभिमुख्येन नयने च। “द्रष्टा शरं व्यामभिनीयमानम्” भा० व० ७६६ श्लो०। प्रधाने कर्म्मणि शानच्।

अव+अधोनयने। “मन्थे सम्पातमवनयेत्” छा० उ०। “ऋवोषे अत्रिमवनीतमुन्निन्यथुः” ऋ०१।११६।८।

आ+दूरस्थस्यान्तिकप्रापणे। “दूरादिन्द्रमनयन्ना सुतेन” ऋ० ७।३३।२“रथमन्वानयत्तस्मै सुपर्णोत्कृतकेतनम्”भा०द्रो० १४७ अ०। “पुत्रीयता तेन वराङ्गनाभिरानायि विद्वान्

क्रतुषु क्रियावान्" (पुरीषप्रसङ्गः) संयोजने च "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा भवति" श्रुतिः

अभि+आ+आभिमुख्येन नयने "दक्षिणमुत्तरपरिरातपवर्षा आपो ऽभ्यानीय" ऐत॰ ब्रा॰

परि+आ+परित आनयने । "पाञ्चालराजं द्रुपदं गृहीत्वा रणमूर्द्धनि । पर्य्यानयत भद्रं वः सा स्यात् परम-दक्षिणा" भा॰ आ॰ १३८ अ॰ ।

प्रति+आ+प्रतिकूलतया आनयने गतस्य पुनरानयने "प्रत्यानेष्यति शत्रुभ्यो वन्दीमिव जयश्रियम्" कुमा॰

उद्+ऊर्द्ध्वं नयने "किं स्विदादित्यमुन्नयति" भा॰ व॰ १७२ अ॰ । "रेतोधाः पुत्र उन्नयति नरदेव ! यमक्षयात्" भा॰ आ॰ ७४ अ॰ । उन्नायने लिङ्गदर्शनेनानुमाने च "नीचासन्नमुदनयः पराहजम्" ऋ॰ २।१२।१२।

उत्सञ्जने उत्क्षेपे आत्म॰ । "दण्डमुन्नयते उत्क्षिपतीत्यर्थः" सि॰ कौ॰ ।

उप+उपस्थापने "उपनिन्ये महाभागं दुहितृत्वेन जाह्नवीम्" हरिवं॰ १४२१। "महत्या सेनया राजा दमयन्तीमुपानयत्" भा॰ व॰ २०६२ श्लो॰ । द्विजानामसाधारणे संस्कारभेदे आत्म॰ । आचार्य्यः शिष्यमुपनयते । "गर्भाष्टमेऽष्टमे वाऽब्दे ब्राह्मणस्योपनायनम्" "उपनीय ददद् वेदानाचार्य्यः स उदाहृतः" मनुः । "आचार्य्य उपनयमानो ब्रह्मचारिणम्" अथ॰ ११।५।३ "तथेति तं होपनिन्ये" शत॰ ब्रा॰ ११।५।३।१३। "समिधमाहर उप त्वा नेष्ये" छा॰ उ॰ । स च संस्कारः वेदार्हता प्रयोजकः । तस्य परगामिफलकत्वात् परस्मैपदे प्राप्ते सम्माननोत्सञ्जनाचार्य्यकरणेत्यादिना पा॰ तङ् विहितः । "न हि उपनयनमात्रेणाचार्य्यत्वं किन्तु तत्पूर्वकाध्यापनेन "उपनीय ददद् वेदान् आचार्य्यः स उदाहृतः इति स्मृतेः" इत्याशयेन उपनयनपूर्वकेणाध्यापनेन हि उपनेतरि आचार्य्यत्वं क्रियते इति" सि॰कौ॰ उक्तम् । "यस्य प्रपितामहादेर्नानुस्मर्य्यते उपनयनम्" आपस्तम्बः भृतिदानेन समीपप्रापणे आत्म॰ । "कर्म्मकरानुपनयते भृतिदानेन स्वसमीपं प्रापयतीत्यर्थः" सि॰ कौ॰ ।

नि+उत्सर्जने । "उदकं निनयेच्छेषं शनैः पिण्डान्तिके पुनः" मनुः । "निनयेत् उत्सृजेत्" कुल्लू॰ । "ओषधिभ्यो दृष्टिं निनयति" तैत्ति॰ २।४।८२३। नितरां नयने च "पूर्णपात्रमन्तर्वेदि निनयति" तैत्ति॰ १।७।५।२ "दासी कुम्भं बहिर्ग्रामान्निनयेयुः स्वबान्धवाः । पतितस्य बहिः कुर्य्युः सर्वकार्य्येषु चैव तम्" "चरितव्रत आयाते निनयेरन्नवं घटम्" याज्ञ॰ ।

निर्+निश्चये अवधारणे तदभावाप्रकारकत्वे सति तत् प्रकारके ज्ञानभेदे । "देवःपतिर्विदुषि ! नैषधराजगत्या निर्णीयते न किम्,न व्रियते भवत्या" नैष॰ "पुरावृत्तकथोद्गारैः कथं निर्णीयते परः" हितो॰ ।

परा+पुनरानयने गतस्य पुनः स्वस्थानप्रापणे "पुनः कृत्यां कृत्याकृते हस्तगृह्य पराणय" अथ॰ ५।३४।४ ।

परि+परितो नयने "तेषां वृत्तं परिणयेत् सम्यग्राष्ट्रेषु तच्चरैः" मनुः । प्रदक्षिणीकरणे "तौ दम्पती त्रिः परिणीय वह्निम्" कुमा॰। "अगृह्णां यच्च ते पाणिमग्निं पर्य्यणयं च यत्" रामा॰ अयो॰ ४२ अ॰ । विवाहरूप संस्कारभेदे च "वरयित्वा यथान्यायं मन्त्रवत् परिणीय च" भा॰ आ॰ ६१२४ श्लो॰ । "सवर्णां परिणयेत् द्विजः" स्मृतिः "परिणेष्यति पार्वतीं यदा" कुमा॰ ।

प्र+क्षेपे उपसम्पत्तौ प्रवेशने विधाने च "प्रणीतः संस्कृताग्नौ ना यज्ञपात्रान्तरे स्त्रियाम् । त्रिषु क्षिप्तोपसम्पन्नविहितेषु प्रवेशिते" मेदि॰ । तत्र क्षेपे "तेन सम्यक् प्रणीतानि शरजालानि भागशः" भा॰भी॰८७अ॰। विधाने "प्रणीय दारिद्र्यदरिद्रतां नृपः" नैष॰ । "मुकुन्दं सच्चिदानन्दं प्रणिपत्य प्रणीयते" मुग्ध॰ "स एव "धर्मो मनुना प्रणीतः" रघुः "यदि न प्रणयेद्दण्डं राजा दण्ड्येष्वतन्द्रितः" मनुः ।

अग्निसंस्कारभेदे । "अग्निप्रणयनं कृत्वा" स्मृतिः । अग्न्याधेय शब्दे दृश्यम् "महाध्वरे वह्निरभिप्रणीतः" भट्टिः। उपसम्पत्तिः स्नेहभेदः । प्रणयः । प्रणयिजनः । "प्रणयस्व यथाश्रद्धं राजन् ! किं करवाणि ते" भा॰व॰२१६॰श्लो॰। "सञ्चये च विनाशान्ते मरणान्ते च जीविते । संयोगे च वियोगान्ते को नु विप्रणयेन् मनः" भा॰ शा॰ ३८६१ श्लो॰ "भक्तिप्रीतिप्रणयसहितं मानदम्भाद्युपेतम्" उद्ध॰दू॰

प्रति+पुनः प्रापणे यतो गतिस्तत्रैव पुनर्नयने ।

"प्रतिनेतुमयोध्याम्" रामा॰ २।९० अ॰ । "तेभ्यः एनान् प्रतिनयामि बद्ध्वा" अ॰ ८।८।१० "भद्रं न सर्वमेतद्वित्तं गृहं प्रतिनेतुं युज्यते" पञ्चत॰ ।

वि+अपसारणे "अहं हि ते विनेष्यामि युद्धश्रद्धामितःपरम्" भा॰ उ॰ ३४७५ श्लो॰ । भारमेनं विनेष्यामि पाण्डवानां महात्मनाम्" भा॰ भी॰ ५॰ अ॰ । शिक्षाविशेषे "विनीतैस्तु व्रजेन्नित्यमाशुगैः" "नाविनीतैर्व्रजेद्धुर्यैः"

मनुः। "तपस्विसंसर्गविनीतसत्त्वे" (तपोवने) "वन्यान् विनेष्यन्निव दुष्टसत्वान्" रघुः। "स्वधर्माच्चलितान् राजा विनीय स्थापयेत् पथि" याज्ञ० आनुकूल्यार्थमनुनये विनयः। ऋणादेर्निर्यातने आत्म०। करं विनयते राज्ञे देयं भागं परिशोधयतीत्यर्थः" सि० कौ०। व्यये विनियोगे आत्म०। शतं विनयते धर्म्मार्थं विनियुङ्क्ते इत्यर्थः सि० कौ०। अपनयने कर्तृशरीरभिन्ने कर्मणि कर्त्तृस्थे क्रियाफले आत्म०। क्रोधं विनयते अपगमयति क्रोधापसारणफलस्य चित्तप्रसादस्य कर्त्तृस्थत्वात् "स्वरितञितः" इत्येव सिद्धे नियमार्थमिदं तेनेह न गण्डं विनयति, गण्डस्य शरीरावयवत्वात् कर्त्तृस्थत्वेऽपि न तङ्। कर्त्तृस्थे इत्युक्तेः गुरोः क्रोधं विनयतीत्येव।

सम्+संयोजने। "ब्रह्मण्यात्मानं संनयन्" भाग० ६।१०।१ "ओषधिभ्योऽध्यात्मन् समनयन्" तैत्ति०ब्रा०२।५।२।३स्थापने च "कंसे पृषदाज्यं संनीय" छान्दो०उ०६।४।२४ मिश्रणे "दधिमधुहविषा घृतं संनीय" बृह० उ० वैदिकहविः संस्कारभेदे सांनाय्यं हविः "नाशोमया संनयेत्" तैत्ति० सं०२।५।५।१।

णील नीलताकरणे भ्वा० पर० सक० सेट्। नीलति प्रणीलति अनीलीत्। निनील

णीव स्थौल्ये भ्वा० पर० सक० सेट्। नीवति प्रणीवति अनीवीत् निनीव।

णु स्तुतौ अदा० पर० सक० वेट्। नौति प्रणौति अनावीत्-अनौषीत् नुनाव नुनुविथ नुनुविव। नोता नविता नविष्यति नोष्यति नोतव्यं नवितव्यं नुतः। नुतिः नुत्वा प्रणुत्य। "येन नुवन्तमहिं सं पिणक्" ऋ० ६।१७।१०। "द्विधाप्रयुक्तेन च वाङ्मयेन सरस्वती तन्मिथुनं नुनाव" कुमा०। "सादरं नौमि तं भक्त्या श्रीगोपीजनवल्लभम्" स्क० पु०। "सैन्यं नीलं नुनाव च" भट्टिः। णिच् नावयति णिच् सन्। नुनावयिषति सन् नुनूषते यङ् नोनूयते।

आ+सम्यगस्तवने आत्म०। "पतत्त्रिणः शुभामन्द्रमानुवानास्त्वजिस्तुन्दन्" भट्टिः।

प्र+प्रकर्षेण स्तवने "एतद्देवं विद्वानचरं प्रणौति" का०उ०।

णु गतौ भ्वा० आत्म० सक० अनिट् निघण्टुः। नवते नवते इत्यादि गतिकर्मसु निरुक्तोक्तेः नवते। "अभीनवन्ते अद्रुहः प्रियमिन्द्रस्य काम्यम्" ऋ० ६।१०।१। "अभीनवन्ते अभिगच्छन्ति" भा०। "हरिं नवन्ते अवता उदन्यवः" ऋ० ८।८६।७२७ "नवन्ते गच्छन्ति" भा०। "गावो न धेनवोऽनवन्त" १०।६५।६

णुद प्रेरणे तुदा० उभ० सक० अनिट्। नुदति-ते प्रणुदति अनौत्सीत् अनुत्त। नुनोद नुनुदे नोत्ता नोत्स्यति ते नोदनम् नोत्तुम्। नुन्नः नुत्तः। "मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वाम्" मेघ०। खण्डने अपसारणे च नुनुदे तनुकण्डु पण्डितः" नैष०। अदस्त्वया नुन्नमनुत्तमं तमः" माघः। "प्रणुद्यान्मे वृजिनं देवदेवः" हरिवं १२३ अ०। "विधिना संप्रणुदितः" भा० व० १ अ०। अनुदात्तेत्त्वेऽपि इट् आर्षः। नोदं करोतीति णिच्। नोदयति नोदितः नोद्यमानः। "ते नोद्यमाना विधिवत् वाहकेन हयोत्तमाः" भा० व० ७१ अ०। "अङ्कुशाङ्कुष्ठनोदिताः" भा० १९ अ०। धातुपाठे स्वरितेत्सु णुद प्रेरणे इति पाठेऽपि पुनरत्रैवोत्तरत्र पाठः कर्त्रभिप्राये क्रियाफलेऽपि परस्मैपदार्थः" सि० कौ०।

अप+अपसारणे "जरां रोगमपनुद्य शरीरात्" सांख्या०न्द०। "आच्छाद्य च महाबाहुर्वैलात्तृणानपानुदत्" भा० आश्व० ६२अ०। "अलक्ष्मीं व्यपनोत्स्यथ" भा० व० ११५ अ०। "अभिद्रवार्जुन! क्षिप्रं कुरून् द्रोणादपानुद" भा० द्रो० १९० अ०।

परा+अपसारणे "तच्च परानुद विभो! कश्मलं मानसं महत्" भाग० ३।७।७ श्लो०।

प्र+प्रकर्षेण नोदने चालने च। "स शत्रुसैनां तरसा प्रणुद्य" भा० वि० ६४ अ०। अपसारणे "ततोऽन्धकारं प्रणुदन्नुदतिष्ठत चन्द्रमाः" भा० व० ३३ अ०।

वि+विशेषणे नोदने। "चोदयामास तानश्वान् विनुन्नाङ्गीश्च सायकैः" भा० भी० ४८४६ श्लो०। णिजन्तस्य दुःखाद्यपसारणे "लक्ष्मीर्विनोदयति येन दिगन्तलम्बी" रघुः मल्लिनाथस्तु तत्करोतीत्यर्थे नामधातुरयमित्याह। "पुष्पं फलं चार्त्तवमाहरन्त्य। विनोदयिष्यन्ति नवाभिषङ्गाद्" रघुः। "कथं वा देवी सहजत्वात् विनोद्यते" मालविकाग्नि०। "लोलं विनोदय मनः सुमनोलतासु"। सा० द०।

णू स्तुतौ तु०कु०सक०प०सेट्। नुवति प्रणुवति अनुवीत् नुनाव "समिन्द्रगर्दभं मृण नुवन्तं पापयामुया" ऋ० १।२९।५ "महामनूषत श्रुतम्" ऋ०१।६।६ "अनूषत स्तुवन्तः आर्षः इडभावः। अयं कुटादिरिति वररुचिः। नुव-

मानाश्च मर्त्ताः" ऋ० १।१६०१ नवमानास्तुवानाः" भा०
वेदे आत्म० गणव्याप्यात्यास्य।

णेद सन्निधाने दभ० सक० सेट्। नेदति-ते प्रणेदति-ते।
अनेदीत् अनेदिष्ट निनेद निनेदे।

णेष गतौ भ्वा० आत्म० सेट्। नेषते प्रणेषते। अनेषिष्ट
ऋदित् अनिनेषत् त।

एते धातवः नादिका अपि सति हेतौ णत्वार्थं गणे
णोपदेशितया पठिताः प्रयोगे तु दन्त्यनादय एव पुनः
प्रादियोगे णत्वमुपयान्ति। नन्दनाथनाधनक्ष न्वनाटिधात
वस्तु णोपदेशत्वाभावात् निमित्तेऽपि न णत्वमुपयान्तीति भेदः

ण्य पु० ब्रह्मलोकस्थे सरोवरभेदे
"अथ यदरण्यायनमित्याचक्षते ब्रह्मचर्यमेव तदरश्च ह
वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि तदैरम-
दीयम्" छा०उ०। "तत्तत्र हि ब्रह्मलोके अरश्च ह वै प्रसिद्धो
ण्यश्चार्णवौ समुद्रौ। समुद्रावपामिव सरसी तृतीयस्याम्
भुवमन्तरिक्षञ्चपेक्ष्य तृतीया द्यौस्तस्यां तृतीयस्यामितो-
ऽस्माल्लोकादारभ्य गण्यमानायां दिवि। तत्रैव चैरं
इराऽन्नं तन्मय ऐरो मण्डस्तेन पूर्णमैरं मदीयं तदुप-
योगिनां मदकरं हर्षोत्पादकं सरः" शाङ्करभा०।

इति वाचस्पत्ये णकारादिशब्दार्थसंकलनम्।

---

# त

तकारो व्यञ्जनवर्णभेदः दन्त्यः अर्द्धमात्राकालेनो-
च्चार्य्यः अस्योच्चारणे दन्तमूलेन जिह्वाग्रस्य स्पर्श आभ्य-
न्तरप्रयत्नः। विवारश्वासाघोषा बाह्यप्रयत्नाः। मातृका-
न्यासेऽस्य वामस्फिचि न्यस्तता। अस्य वाचकशब्दा वर्णा-
भिधाने उक्ता यथा "तः पूतना हरिः शुद्धिःशक्तिः
शुक्तिर्जटी ध्वजी। वामस्फिग्वामकच्यौ च कामिनी
मध्यकर्णकः। आषाढी तण्डुतभ्मश्च कामिकापृष्ठपुच्छकः।
रत्नकश्च श्यामसुखी वाराही मकरोऽरुणा। सुगतोऽर्द्ध-
सुखाबुद्धिजानुश्च क्रोष्टुपुच्छकः। गन्धो विश्वा महच्छत्र-
श्चानुराधा च सौरकः। जयन्ती पुलको भ्रान्तिरनङ्गमद-
नातुरा"। तदधिष्ठातृदेवताध्यानं वर्णोद्धारतन्त्रोक्तं यथा
"ध्यानमस्य प्रवक्ष्यामि शृणुष्व कमलानने!। चतुर्भुजां
महाशान्तां महामोक्षप्रदायिनीम्। सदा षोडशवर्षीयां
रक्ताम्बरधरां पराम्। नानालङ्कारभूषाढ्यां सर्वसिद्धि-
प्रदायिनीम्। एवं ध्यात्वा तकारन्तु तन्मन्त्रं दशधा
जपेत्"। कामधेनुतन्त्रे अस्य स्वरूपमुक्तं यथा "तकारं
चञ्चलापाङ्गि! स्वयं परमकुण्डली। पञ्चदेवात्मकं
वर्णं पञ्चप्राणमयं सदा। त्रिशक्तिसहितं वर्णम्
आत्मादितत्त्वसंयुतम्। त्रिबिन्दुसहितं वर्णं पीतविद्युत्
समप्रभम्" "तोव्योमान्तलघुर्धनापहरणम्" इति वृ०
र० टी० तस्य व्योमदेवत्वं मात्रावृत्ते प्रथमोपन्यासे
धनापहारः फलञ्चोक्तम्।

त पु० तक–हसने सहने वा ड। १चौरे २अमृते ३पुच्छे
४क्रोड़े ५म्लेच्छे च मेदि०। ६गर्भे ७शठे शब्दच०
८रत्ने ९सुगते देवे १० गौरविवर्ज्जिते ११क्रोष्टुपुच्छे
च एका० को०। १२तरणे १४पुण्ये क्ली०स्त्री० मेदि०।
त्रिवर्णप्रस्तावे आद्यगुरुद्वयके अन्त्यलघुके (ऽऽ।) १२
गणभेदे "सोऽन्तगुरुः कथितोऽन्त्यलघुस्तः" छन्दोम०।

तंसु पु० तसि–उन्। पौरवे मतिनारसुते नृपभेदे "मतिना-
रसुता राजंश्चत्वारोऽमितविक्रमाः। तंसुर्महानतिरथो
द्रुह्युश्चाप्रतिमद्युतिः। तेषां तंसुर्महावीर्य्यः पौरवं
वंशमुद्वहन्। आजहार यशो दीप्तं जिगाय च
वसुन्धराम्"। भा० आ० ६४ अ०। स च सरस्वती-
पुत्रः यथा तत्रैवोक्तम् ६५ अ०। "तंसुं सरस्वती पुत्रं
मतिनारादजायत। ईलिनं जनयामास कालिङ्ग्यां
तंसुरात्मजम्"।

तक हासे अक० सहने सक० भ्वा० पर० सेट्। तकति
अताकीत्–अतकीत्। तताक तेकतुः। निरुक्ते अयं
गतिकर्मसु पठितः। कर्मणि भावे च। यत् न गदत्।
तक्यं सहनीयम्। [क्विप् ततक्ष तङ्क्षा आतङ्का।

तक दौस्थ्ये कृच्छ्रजीवने पा०इदित् प०भ्वा०सेट्। तङ्कति अत-

तक त्रि० तं गौरववर्ज्जितं यथा तथा कायति कै–क।
१निन्दिते। "इयत्तकः कुम्भकस्तकं भिनद्म्यश्मना त्वा" ऋ०
१।१९१।१५। "तकं कुत्सितम्" भा०। तक–अच्।
२सहनशीले च। "तका वयं प्लवामहे इदं मधु" कात्या०
श्रौ० १३।३।२१सू०। ३स्खलिते च। "सुतं गायत तक-
वानस्य" ऋ०१।१२०।६। "तकवानस्य स्खलितगतेः" कर्कः।

**तकत्** अव्य० तक–बा० अति । अत्यल्पे । “तत्स्तुते मनायति तकत्सुते मनायति” ऋ० १।१३३।४ । “तकदिति मनायति अत्यल्पमिदमिति सुष्ठु मन्यते” भा० । तद्–टेर कच् । तच्छब्दार्थे त्रि० सकः तकौ तके इत्यादि रूपम्

**तकरी** स्त्री तं कुत्सितं करोति कृ–ट ङीप् । कुत्सितकारिण्यां स्त्रियां “ते भिनद्मि तकरीम्” तैत्ति० स० ३।२।१०।१

**तकार** पु० त+कार । तस्वरूपे वर्णे “एवं ध्यात्वा तकारन्तु” कामधेनुत० [१धूर्त्ते २औषधे च ३ओषधौ स्त्री उज्ज्व०।

**तकिल** पु० तकि–कृच्छ्रजीवने उणादि० इलच् नलोपश्च

**तकु** त्रि० तक–गतौ निरु० उन् । गामुके “पुरुमेधश्चित् तकवे नरं दद्त्” ऋ० ८।५७।५ “तकवे तकतिर्गतिकर्मा औणादिक उन्प्रत्ययः सोममभिगच्छते” भा० ।

**तक्मन्** न० तक–कनिन् न कित् । अपत्ये निघण्टुः ।

**तक्र** न० तनच–रक् न्यङ्क्वा० कुत्वम् । चतुर्थांशजलयोगेन दधिमन्थनजाते दधिविकारभेदे (घोल) अमरः। तद्भेदादिकं भावप्रका० उक्तं यथा

“घोलन्तु मथितं तक्रमुदश्विच्छच्छिकापि च । ससरं निर्जलं घोलं मथितन्त्वसरोदकम् । तक्रं पादजलं प्रोक्तमुदश्विदर्द्धवारिकम् । छच्छिका सारहीना स्यात् स्वच्छा प्रचुरवारिका । घोलं तु शर्करायुक्तं गुणैर्ज्ञेयं रसालवत्” । मथितं (मट्ठा) इति लोके । छच्छिका (छाछ) इति लोके । “वातपित्तहरं ह्लादि मथितं कफपित्तनुत् । तक्रं ग्राहि कषायाम्लं स्वादुपाकरसं लघु । वीर्य्योष्णं दीपनं वृष्यं प्रीणनं वातनाशनम् । ग्रहण्यादिमतां पथ्यं भवेल्लङ्घि लाघवात् । किञ्च स्वादुविपाकित्वाच्च पित्तप्रकोपणम् । कषायं दीपनं वृष्यं प्रीणनं वातनाशनम् । कषायोष्णविपाकित्वाद्रौक्ष्याच्चापि कफापहम् । न तक्रसेवी व्यथते कदाचित् न तक्रदग्धाः प्रभवन्ति रोगाः । यथा सुराणाममृतं सुखाय तथा नराणां भुवि तक्रमाहुः । उदश्वित्कफकृद्बल्यमामघ्नं परमं मतम् । छच्छिका शीतला लघ्वी पित्तश्रमतृषाहरी । वातनुत् कफकृत्सा तु दीपनी लवणान्विता ।

अथोद्धृतघृतस्तोकोद्धृतानुद्धृतघृतानां तक्राणां गुणाः “समुद्धृतघृतं तक्रं पथ्यं लघु विशेषतः । स्तोकोद्धृतघृतं तस्माद्गुरु वृष्यं कफापहम् । अनुद्धृतघृतं सान्द्रं गुरु पुष्टिकफप्रदम्”

अथ दोषविशेषे व्याधिविशेषे तक्रविशेषाः ।

“वातेऽम्लं शस्यते तक्रं शुण्ठीसैन्धवसंयुतम् । पित्ते स्वादुसितायुक्तं सव्योषमधिके कफे । हिङ्गुजीरयुतं घोलं सैन्धवेन च संयुतम् । भवेदतीव वातघ्नमर्शोऽतीसारहृत्परम् । रुचिदं पुष्टिदं बल्यं वस्तिमूलविनाशनम् । मूत्रकृच्छ्रे तु सगुडं पाण्डुरोगे सचित्रकम्” ।

अथामपक्वतक्रगुणाः

“तक्रमामं कफं कोष्ठे हन्ति कण्ठे करोति च । पीनसश्वासकासादौ पक्वमेव प्रशस्यते” ।

अथ तक्रसेवननिमित्तानि ।

“शीतकालेऽग्निमान्द्ये च तथा वातामयेषु च । अरुचौ स्रोतसां रोधे तक्रं स्यादमृतोपमम् । तत्तु हन्ति गरच्छर्दिप्रसेकविषमज्वरान् । पाण्डुमेदोग्रहण्यर्शो मूत्रग्रहभगन्दरान् । मेहं गुल्ममतीसारं शूलप्लीहोदरारुचीः । श्वित्रकोष्ठगतव्याधीन् कुष्ठशोथतृषाकृमीन्” ।

तक्रस्याविषयाः “नैव तक्रं क्षते दद्यात् नोष्णकाले न दुर्बले । न मूर्च्छाभ्रमदाहेषु न रोगे रक्तपित्तजे” ।

अथ गव्यादीनां विशिष्टाः गुणाः “यान्युक्तानि दधन्यत्र तद्गुणं तक्रमादिशेत्” । भावप्र० ।

अधिकं कृताच्छब्दे २१८५ पृ० दृश्यम् । “मन्थनादिपृथग्भूतस्नेहमर्धोदकं तु यत् । नातिसान्द्रद्रवं तक्रं स्वाद्वम्लं तुवरं रसे” सुश्रु० । “सूत्रकार्पासकिण्वानां गोमयस्य गुडस्य च । दध्नः क्षीरस्य तक्रस्य पानीयस्य तृणस्य च” मनुः । “तक्रनिस्रावबहुलं दधिमण्डार्द्रमृत्तिकम्” हरिवं० ६१ अ० । [पदार्थे ।

**तक्रकूर्चिका** स्त्री २१६७ पृ० कूर्चिकाशब्दोक्ते तक्रजाते

**तक्रपिण्ड** पु० “दध्ना तक्रेण वा दुष्टं दुग्धं बद्धं सुवाससा । द्रवभागेन हीनं यत् तक्रपिण्डः स उच्यते” इत्युक्ते (छाना) ख्याते पदार्थे । [विशेषयुक्ते मांसभेदे ।

**तक्रमांस** न० कृतान्नशब्दे २१८२ पृ० उक्ते तक्रेण पाक-

**तक्रवामन** पु० तक्रं वामयति अम्लत्वात् वाम+णिच्–ल्यु इत० । नागरङ्गे शब्दार्थचिन्ता० ।

**तक्राट** पु० तक्रार्थं तक्रोत्पादनार्थमटति अट–अच् । मन्थानदण्डे हारा० ।

**तक्रारिष्ट** पु० “यमान्यामलकं पथ्या मरिचं त्रिपलांशकम् । लवणानि पलांशानि पञ्च चैकत्र चूर्णयेत् । तत्र कंसासुतं जातं तक्रारिष्टं पिबेन्नरः । दीपनं शोथगुल्मार्शः क्रिमिमेहोदरापहम्” चक्र० उक्ते औषधभेदे ।

**तक्व** त्रि० तक–गतौ बा० व । गमनशीले । “तक्वो नेता तदिद्वपुः” ऋ० ८।६९।१२ “तक्वो गमनशीलः” भा० ।

**तक्वन्** त्रि॰ तक–गतौ वनिप्। १गतिशीले "तक्वा न भूर्णिर्वना सिषक्ति" ऋ॰ १।६६।१ तक–सहने वनिप्। २चौरे च। "निम्रुच उषसस्तक्ववीरिव" ऋ॰ १।१५।१५ "तक्ववीः तक्वा स्तेनस्तस्य वीः गतिः" भा॰।

**तक्ववी** स्त्री॰ तक्वानां चौराणाम् वीः। चौराणां गतौ। "भगमीट्टे तक्ववीये" ऋ॰ १।१३४।५। "तक्ववीये तस्कराणां यत्नविघातिनामन्यत्र गमनाय" भा॰ छान्दस इयङ् दीर्घश्च।

**तक्ष** काश्ये तनूकरणे (चाँचा छोला) व्यापारे वा भ्वा॰ पक्षे स्वा॰ प॰ सक॰ वेट्। तक्षति तक्ष्णोति तक्षन्ति तक्ष्णुवन्ति अतक्षीत् अताक्षीत् ततक्ष। तक्षिष्यति तक्ष्यति। तष्टा तक्षणम् तष्टः तक्ष्य तष्ट्वा प्रकाष्ठतट्। "दारवाणाञ्च तक्षणम्" मनुः "चषालं ये अश्वयूपाय तक्षति" ऋ॰।१।१६२।६ "बाहुग्राभकलमपतक्ष्णुवन्ति" शत॰ ब्रा॰ ३।७।१।८।

**तक्ष** त्वचो ग्रहणे संवरणे भ्वा॰ प॰ सक॰ सेट्। तक्षति कायं वर्म्मणा योधा। अतक्षीत् ततक्ष।

**तक्ष** पु॰ रामानुजस्य भरतस्य १पुत्रभेदे। "तक्षः पुष्कर इत्यास्तां भरतस्य महीपते!" भाग॰ ६।११।७। "स (भरतः) तक्षपुष्कलौ पुत्रौ राजधान्योस्तदाख्ययोः। अभिषेच्याभिषेकार्हौ रामान्तिकमगात् पुनः" रघुः। २तन्नामके राजधानीभेदे च। तक्ष भावे घञ्। ३तनूकरणे कवचादि संवरणे। "उभौ कक्षां सुपार्श्वं तु तक्षवन्तौ च शिक्षितौ" भा॰ स॰ २२ अ॰

**तक्षक** पु॰ तक्ष–ण्वुल्। १विश्वकर्मणि शब्दर॰। २द्रुमभेदे हेमच॰। "सूचकात् विप्रकन्यायां जातस्तक्षक उच्यते। उशनसोक्ते सङ्कीर्णजातिभेदे (कुतार) ३सूत्रधारे कद्रुगर्भे कश्यपात् जाते अष्टनागान्तर्गते ४नागभेदे "अनन्तो वासुकिः पद्मो महापद्मोऽथ तक्षकः। कुलीरः कर्कटः शङ्खो ह्यष्टौ नागाः प्रकीर्त्तिताः" ति॰त॰। "काद्रवेयाश्च बलिनः सहस्रममितौजसः। सुपर्णवशगा नागा जज्ञिरेऽनेकमस्तकाः। तेषां प्रधानाः सततं शेषवासुकितक्षकाः" हरिवं॰ ३अ॰। "योऽसौ वृद्धस्य तातस्य तथा कृच्छ्रगतस्य ह। स्कन्धे मृतं समासाक्षीत् पन्नगं राजकिल्बिषी। तं पापमतिसंक्रुद्धस्तक्षकः पन्नगेश्वरः। आशीविषस्तिग्मतेजा मद्वाक्यबलचोदितः। सप्तरात्रादितो नेता यमस्य सदनं प्रति। द्विजानामवमन्तारं कुरूणामयशस्करम्" भा॰ आ॰ ४१।

तेन च परीक्षितोदंशनकथा भा॰आ॰ ४२अ॰ दृश्या यथा "अथ शुश्राव गच्छन् स तक्षको जगतीपतिम्। मन्त्रैर्गदैर्विषहरैरक्ष्यमाणं प्रयत्नतः। सूत उवाच। स चिन्तयामास तदा मायायोगेन पार्थिव!। मया वञ्चयितव्योऽसौ क उपायो भवेदिति। ततस्तापसरूपेण प्राहिणोत् स भुजङ्गमान्। फलदर्भोदकं गृह्य राज्ञे नागोऽथ तक्षकः। तक्षक उवाच। गच्छध्वं यूयमव्यग्रा राजानं कार्य्यवत्तया। फलपुष्पोदकं नाम प्रतिग्राहयितुं नृपम्। सौतिरुवाच। ते तक्षकसमादिष्टास्तथा चक्रुर्भुजङ्गमाः। उपनिन्युस्तथा राज्ञे दर्भानपः फलानि च। तच्च सर्वं स राजेन्द्रः प्रतिजग्राह वीर्य्यवान्। कृत्वा तेषाञ्च कार्य्याणि गम्यतामित्युवाच तान्। गतेषु तेषु नागेषु तापसच्छद्मरूपिषु। अमात्यान् सुहृदश्चैव प्रोवाच स नराधिपः। भक्षयन्तु भवन्तो वै स्वादूनीमानि सर्वशः। तापसैरुपनीतानि फलानि सहिता मया। ततो राजा ससचिवः फलान्यादातुमैच्छत। विधिना सम्प्रयुक्तो वै ऋषिवाक्येन तेन तु। यस्मिन्नेव फले नागस्तमेवाभक्षयत् स्वयम्। ततो भक्षयतस्तस्य फलात् कृमिरभूदणुः। ह्रस्वकः कृष्णनयनस्ताम्रवर्णोऽथ शौनक!। स तं गृह्य नृपश्रेष्ठः सचिवानिदमब्रवीत्। अस्तमभ्येति सविता विषादद्य न मे भयम्। सत्यवागस्तु स मुनिः कृमिर्मां दशतामयम्। तक्षको नाम भूत्वा वै तथा परिहृतं भवेत्। ते चैनमन्ववर्त्तन्त मन्त्रिणः कालचोदिताः। एवमुक्त्वा स राजेन्द्रो ग्रीवायां संनिवेश्य ह। कृमिकं प्राहसत् तूर्णं मुमूर्षुर्नष्टचेतनः। प्रहसन्नेव भोगेन तक्षकेणाभ्यवेष्ट्यत। तस्मात् फलाद्विनिष्क्रम्य यत्तद्राज्ञे विनिवेदितम्। वेष्टयित्वा च वेगेन विनद्य च महास्वनम्। अदशत् पृथिवीपालं तक्षकः पन्नगेश्वरः" अधिकं कश्यपशब्दे उक्तम् "मसूरं निम्बपत्रञ्च योऽत्ति मेषगते रवौ। अतिरोषान्वितस्तस्य तक्षकः किं करिष्यति" ति॰ त॰।

तक्षकनागश्चेन्द्रस्य सखा खाण्डववनवासी अर्ज्जुनेन खाण्डववनस्य दाहकाले न तस्य दाहः तत्कथा "निवृत्तेष्वथ देवेषु वागुवाचाशरीरिणी। शतक्रतुं समाभाष्य महागम्भीरनिस्वना। न ते सखा स निहतस्तक्षको भुजगोत्तमः। दाहकाले खाण्डवस्य कुरुक्षेत्रं गतो ह्यसौ" भा॰ आ॰ २२८ अ॰। ५काष्ठादितक्षणकर्त्तमात्रे त्रि॰।

**तक्षकीय** त्रि॰ तक्षा अस्त्यत्र नडा॰ छ–कुक् च। तक्षविशिष्टे तस्मिन् भवः अण् बिल्वका॰ छमात्रस्य लुक् न कुको लुक्। ताक्षक तत्र भवे त्रि॰।

**तक्षण** न॰ तक्ष भावे–ल्युट्। (चाँचा) (छोला) व्यापारे "तक्षणं दारुशृङ्गास्थ्नां गोवालफलसम्भवाम्" या॰ "दारवाणाञ्च तक्षणम्" मनुः।

**तक्षणी** स्त्री तक्ष्यतेऽनया तक्ष–करणे ल्युट् ङीप्। वाश्याम् (वाइस) काष्ठतक्षणसाधने अस्त्रभेदे शब्दर॰।

**तक्षन्** पु॰ तक्ष–कनिन्। १तष्टरि, वर्द्धकौ, "आप्तेन तक्ष्णा भिषजेव तक्षणम्" माघः। "तक्षोभयथा" शा॰ सू॰। २विश्वकर्मणि, च अमरः। ३चित्रानक्षत्रे तस्य त्वष्टृदेवताकत्वात् तथात्वम् ४तक्षणकर्त्तृमात्रे त्रि॰ स्त्रियां ङीप् उपधालोपे तक्ष्णी। ततः शिवा॰ अपत्ये अण् वलन्तत्वादुपधालोपः। ताक्ष्ण तक्ष्णोऽपत्ये पुंस्त्री॰।

**तक्षशिला** स्त्री भरतपुत्रतक्षनृपस्य राजधान्यां तक्षशिलानगरी अभिजनोऽस्य तक्षशि॰ अञ्। ताक्षशिल पित्रादिक्रमेण तन्नगरवासिनि त्रि॰तक्षशिलाया अदूरभवादिः वरणा॰ चतुरर्थ्यां॰ अञो लुक्। तक्षशिला तन्नगर्य्या अदूरभवादौ ब॰ व॰। अनद्यान्तु चतुरर्थ्यां॰ मध्वा॰ मतुप् मस्य वः। तक्षशिलावत् तत्पुरस्यादूरभवादौ नदीभिन्ने देशादौ त्रि॰ स्त्रियां ङीप्।

**तक्षशिलादि** पु॰ सोऽस्याभिजन इत्यर्थे विहिताञ्प्रत्ययनिमित्ते पा॰ग॰सू॰उक्ते शब्दगणे स च गणः "तक्षशिला वत्सोद्धरण कैमेंदुरक ग्रामणी छगल क्रोष्टुकर्ण सिंहकर्ण संकुचित किन्नर काण्डधार पर्वत अवसान बर्बर कंस"।

**तग** स्खलने कम्पे च अक॰ गतौ सक॰ भ्वा॰ सक॰ सेट् इदित्। तङ्गति अतङ्गीत् ततङ्ग तङ्गनम् तङ्गा तङ्गितः।

**तगण** पु॰ छन्दोग्रन्थप्रसिद्धे अन्तलघुके आदिगुरुद्वयके त्रिवर्णात्मके गणभेदे। "सोऽन्तगुरुः कथितोऽन्तलघुस्तः" छन्दोम॰।

**तगर** पु॰ तस्य क्रोड़स्य गरः गॄ–अच्। (टगर) इति १वृक्षे शब्दर॰। २मदनवृक्षे राजनि॰। कोङ्कणप्रसिद्धे (पिण्डतगर) ख्याते, ३वृक्षे न॰रत्नमा॰।४तगरमूलजाते गन्धद्रव्ये न॰। "कालानुसार्य्यं तगरं कठिनं लघु तन्मतम्। अपरं पिण्डतगरं दण्डहस्ति च वर्हिणम्। तगरद्वयमुष्णं स्यात् स्वादु स्निग्धं लघु स्मृतम्। विषापस्मारमूर्च्छाक्षिरोगदोषत्रयापहम्" भावप्र॰ "प्रियङ्गुचन्दनाभ्याञ्च बिल्वेन तगरेण च" भा॰ अनु॰ १०४ अ॰। "तुल्यैः पत्रतुरुष्कबालतगरैर्गन्धः स्मरोद्दीपनः" वृ॰ स॰ ७७ अ॰। तगरं पण्यमस्य किसरा॰ ठन्। तगरिक तद्गन्धद्रव्यविक्रेतरि त्रि॰। ५आढक्यकवृक्षे राजनि॰।

**तगरपादिक** न॰ तगरस्य पादो मूलमस्त्यत्र गन्धद्रव्ये ठन्। नन्द्यावर्त्ते गन्धद्रव्यभेदे शब्दार्थचि॰।

**तगरपादी** स्त्री तगरं गन्धद्रव्यभेदः पादेऽमूलेऽस्याः जातित्वात् ङीष्। तगरवृक्षे शब्दार्थचि॰।

**तङ्क** पु॰ तकि–भावे अच्। १कृच्छ्रेण जीवने २प्रियचिह्ने ३तापे ४भये भरतः।। कर्मणि–घञ्। ५परिधानवसने रमानाथः।

**तङ्कन** न॰ तकि–भावे ल्युट्। कृच्छ्रेण जीवने।

**तच्छील** त्रि॰ तत् शीलं यस्य। स्वभावतः फलनिरपेक्षतया प्रवर्त्तमाने तत्स्वभावे जने। तदर्थे विहितः ठञ्। ताच्छीलिक तच्छीलार्थे पा॰विहितप्रत्यये। "आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु" पा॰।

**तज्ज** त्रि॰ ततो जायते जन–ड। तस्मात् जाते।

**तज्जलान्** त्रि॰ ततो जायते जन–ड तस्मिन् लीयते ली–ड तेनानिति अन–क्विप् द्वन्द्वात् पूर्वं श्रुतस्य तच्छब्दस्य प्रत्येकसम्बन्धेन यथायथं विभक्त्यन्ततयान्वयः। तस्माज्जाते तस्मिन् लीने तेन स्थिते पदार्थे च। "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" छा॰ उ॰। तज्जलान्, तज्जत्वात् तल्लत्वात् तदनत्वाच्चेति" शाङ्करभा॰।

**तज्वी** स्त्री तं निन्दितं जवते जु–क्विप् गौरा॰ ङीष्। हिङ्गुपत्र्यां राजनि॰। [टीत्। ततट तेटतुः। तटम्।

**तट** उच्छ्राये भ्वा॰ पर॰ सक॰ सेट्। तटति अताटीत्-अत-

**तट** आहतौ चु॰उभ॰सक॰सेट्। ताटयति–ते अतीतटत् त।

**तट** त्रि॰ तट–अच्। १कूले नद्यादेस्तीरे अमरः। तीरभूमेश्च नद्याःप्रवाहात् उच्छ्रितत्वात् तथात्वम्। "सिन्धोस्तटावोघ इव प्रवृद्धः" कुमा॰। स्त्रियां ङीप्। "मालञ्च श्मशानञ्च नद्यादीनां तटी तथा" सा॰द॰। २वप्रक्षेत्रे न॰ मेदि॰। "निःशेषच्युतचन्दनं स्तनतटं निर्म्मृष्टरागोऽधरः" सा॰ द॰। स्तनः तटमिव उप॰ स॰। ३शिवे पु॰ तस्य सर्वोच्छ्रितत्वात् तथात्वम् "नमस्तटाय तट्याय तटानां पतये नमः" भा॰शा॰२८५अ॰। ४उच्छ्रिते त्रि॰।

**तटग** पु॰ तड़ाग+पृषो॰ तडागे त्रिकाण्ड॰।

**तटस्थ** त्रि॰ तटे समीपे तिष्ठति स्था–क। १समीपस्थे २वादिप्रतिवादिभावानापन्ने उदासीने च "तटस्थः शङ्कते" जागदीश्यादौ भूरिप्रयोगः। ३लक्षणविशेषे याक्षलक्ष-

कालमनवस्थितत्वे सति इतरव्यावर्त्तके विशेषणं यथा पृथिव्या गन्धवत्त्वं तटस्थलक्षणम् उत्पत्तिकाले प्रलये च लक्ष्यस्थितावपि तत्काले गन्धस्यानवस्थानात् तथात्वम्। यथा वा ब्रह्मणो जगत्कर्तृत्वादिकम् तस्य प्रलयादौ लक्ष्यकाले अनवस्थानात् तथात्वम्। "स्वरूपं तटस्थं द्विधा लक्षणाभ्याम्। स्वरूपेऽप्रविष्टात् स्वरूपे प्रविष्टात्। यथा काकवन्तो गृहाः खं विलक्ष्य" वेदान्तका०। वेदा० प० अस्य निरुक्तिर्यथा

"तत्र लक्षणं द्विविधम् स्वरूपलक्षणं तटस्थलक्षणञ्चेति। तत्र स्वरूपमेव लक्षणं स्वरूपलक्षणम् यथा सत्यं ज्ञानमनन्तं ब्रह्मणः स्वरूपलक्षणम्। ननु स्वस्य स्ववृत्तित्वाभावेन कथं लक्षणत्वमिति चेन्न स्वस्यैव स्वापेक्षया धर्मधर्मिभावकल्पनया लक्षणत्वसम्भवात्। तदुक्तं विवरणे "आनन्दो विषयानुभवो नित्यत्वञ्चेति सन्ति धर्माः अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते इति"। तटस्थलक्षणं नाम यावल्लक्ष्यकालमनवस्थितत्वे सति यद्व्यावर्त्तकं तदेव यथा गन्धवत्त्वं पृथिवीलक्षणम्। महाप्रलये परमाणुषु उत्पत्तिकाले घटादिषु च गन्धाभावात्। प्रकृते च जगज्जन्मादिकारणत्वम्। अत्र जगत्पदेन कार्य्यजातं विवक्षितम्। कारणत्वञ्च कर्त्तृत्वम् अतोऽविद्यादौ नातिव्याप्तिः। कर्तृत्वञ्च तत्तदुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वम्। ईश्वरस्य तावदुपादानगोचरापरोक्षज्ञानसद्भावे च"यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः। तस्मादेतद्ब्रह्म नाम रूपमन्नञ्च जायते"इत्यादिश्रुतिर्मानम्। तादृशचिकीर्षासद्भावे च"सोऽकामयत बहु स्यां प्रजायेयेति" श्रुतिर्मानम्। तादृक्कृतौ च"तन्मनोऽकुरुतेत्यादि"वाक्यम्। ज्ञानेच्छाकृतीनामन्यतमगर्भं लक्षणत्रितयं विवक्षितम् अन्यथा व्यर्थविशेषणत्वापत्तेः। अतएव जन्मस्थितिध्वंसानामन्यतमस्यैव लक्षणे प्रवेशः। एवञ्च लक्षणानि नव सम्पद्यन्ते। ब्रह्मणो जगज्जन्मादिकारणत्वे च "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति, यत् प्रयन्त्यभिसंविशन्तीत्यादि"श्रुतिर्मानम्। यद्वा निखिलजगदुपादानत्वं ब्रह्मणो लक्षणम्। उपादानत्वञ्च जगदध्यासाधिष्ठानत्वं जगदाकारेण परिणममानमायाधिष्ठानत्वं वा। एतादृशमेवोपादानत्वमभिप्रेत्य "इदं सर्वं यदयमात्मा सच्चत्यच्चाभवत् बहु स्यां प्रजायेयेत्यादि श्रुतिषु ब्रह्मप्रपञ्चयोस्तादात्म्यव्यपदेशः"तटस्थिते लि०। [शब्दर०।

**तटाक** पु० तट–बा० आकन्। तडागे पद्मादियुक्तसरसि

**तटाघात** पु० तटे आघातः। दन्तादिभिः शृङ्गादिभिर्भूभागोत्खननरूपवप्रक्रीडायाम् शब्दार्णवः। "अभ्यस्यन्ति तटाघातं निर्जितैरावता गजाः" कुमा०। "कैलासतटाघातधातुधूलिपटलमिव हरवृषभम्" काद०।

**तटिनी** स्त्री तटमस्त्यस्या इनि ङीप्। नद्याम् अमरः।

**तट्य** पु० तटस्थक्ष्मायमर्हति यत्। शिवे"नमस्तटाय तट्याय" भा० शा० २८६ अ० शिवसहस्रनाम।

**तड** दीप्तौ अक० आहतौ सक० चु० उभ० सेट्। ताडयति ते अतितडत् त। "लालयेत् पञ्च वर्षाणि दश वर्षाणि ताडयेत्" चाणक्यः "शिष्टर्थं ताडयेत्ततः" मनुः ताडना। ताडनम् ताडितः। "श्रोत्रवितस्त्रीरिव ताड्यमाना" कुमा०। "दुन्दुभिस्ताडितोऽसौ" वेणीसं०।

**तड** आहतौ भ्वा० आत्म० सक० सेट् इदित्। तण्डते अततण्डिष्ट। ततण्डे।

**तडाक** पु० तड–आहतौ पिनाकादयश्च" उणा० आक। १तडागे। तड–दीप्तौ आक। २दीप्तौ स्त्री उज्ज्वलद०।

**तडाग** पु० जलैराहन्यते तड–आघाते "तडागादयश्च" उणा०नि० आग १यन्त्रकूटके शब्दार्थचि० २जलाधारभेदे पद्माकरे अमरः। अर्द्धचौ०"प्रशस्तभूमिभागस्थो बहुसंवत्सरोषितः। जलाशयस्तडागः स्यादित्याहुः शास्त्रकोविदाः" शब्दार्थचि०। ३पञ्चशतधनुःपरिमिते जलाशये च यथा "चतुर्विंशाङ्गुलो हस्तो धनुस्तच्चतुरुत्तरम्। शतधन्वन्तरञ्चैव तावत् पुष्करिणी शुभा। एतत् पञ्चगुणः प्रोक्तस्तडाग इति निर्णयः" नन्दवर्द्धमानधृतो वशिष्ठः। तदुत्सर्गविधिः मत्स्यपु०५८अ० उक्तो यथा "प्राप्य पक्षं शुभं शुक्लमतीते (प्राप्ते)चोत्तरायणे। पुण्येऽह्नि विप्रकथिते कृत्वा ब्राह्मणवाचनम्। प्रागुदक्प्रवणे देशे तडागस्य समीपतः। चतुर्हस्तां शुभां वेदिं चतुरस्रां चतुर्मुखाम्। तथा षोडशहस्तः स्यान्मण्डपश्च चतुर्मुखः। वेद्याश्च परितो गर्त्तारत्निमात्रास्तु मेखलाः। नव सप्ताथ वा पञ्च नातिरिक्ता नृपात्मज!। वितस्तिमात्रा योनिः स्यात् षट्सप्ताङ्गुलिविस्तृता। गर्त्ताश्चतस्रः स्युस्त्रिपर्वोच्छ्रितमेखलाः। सर्वतस्तु सवर्णाः (वोक्षपाकवर्णाः) स्युः पताका ध्वजसंयुताः। अश्वत्थोदुम्बरप्लक्षवटशाखाकृतानि तु। मण्डपस्य प्रतिदिशं द्वाराण्येतानि कारयेत्। शुभास्तत्राष्ट होतारो द्वारपालास्तथाष्ट वै। अष्टौ तु जापकाः कार्य्या ब्राह्मणा वेदपारगाः। सर्वलक्षणसम्पूर्णो मन्त्रविद्विजितेन्द्रियः। कुलशील-

समायुक्तः पुरोधाः स्याद्द्विजोत्तमः । प्रतिगर्त्तेषु कलशा यज्ञोपकरणानि च । व्यजनञ्चामरे शुभ्रे ताम्रपात्रे सुविस्तृते । ततस्त्वनेकवर्णाः स्युश्चरवः प्रतिदैवतम् । आचार्य्यः प्रक्षिपेद्भूमावनुमन्त्र्य विचक्षणः । त्र्यरत्निमात्रो यूपः स्यात् क्षीरवृक्षविनिर्म्मितः । यजमानप्रमाणो वा संस्थाप्यो भूतिमिच्छता । हेमालङ्कारिणः कार्य्याः पञ्चविंशती ऋत्विजः । कुण्डलानि च हैमानि केयूरकटकानि च । अङ्गुरीयं पवित्राणि वासांसि विविधानि च । पूजयेत्तु समं सर्व्वान् आचार्य्यं द्विगुणैः पुनः । दद्याच्छयनसंयुक्तमात्मनश्चापि यत् प्रियम् । सौवर्णौ कूर्म्ममकरौ राजतौ मत्स्यडुण्डुभौ । ताम्रौ कुलीरमण्डूका वायसः शिशुमारकः । एवमासाद्य तत्सर्व्वमादावेव विशाम्पते ! । शुक्लमाल्याम्बरधरः सर्व्वौषध्युदकैस्ततः । संपूर्णैः कलसैस्तत्र स्नपितो वेदपारगैः । यजमानः सपत्नीकः पुत्रपौत्रसमन्वितः । पश्चिमं द्वारमासाद्य प्रविशेद्यागमण्डपम् । ततो मङ्गलशब्देन भेरीणां निस्वनेन च । रजसा मण्डलं कुर्य्यात् पञ्चवर्णेन तत्त्ववित् । षोडशारन्ततश्चक्रं पद्मगर्भं चतुर्मुखम् । चतुरस्रञ्च परितो वृत्तं मध्ये सुशोभनम् । वेद्याश्चोपरि तत् कृत्वा ग्रहान् लोकपतींस्ततः । संन्यसेन्मन्त्रतः सर्व्वान् प्रतिदिक्षु विचक्षणः । कूर्म्मादि स्थापयेन्मध्ये वारुणं मन्त्रमाश्रितः । ब्रह्माणञ्च शिवं विष्णुं तत्रैव स्थापयेद्बुधः । विनायकञ्च विन्यस्य कमलामम्बिकां तथा । शान्त्यर्थं सर्व्वलोकानां भूतग्रामं न्यसेत्ततः । पुष्पभक्ष्यफलैर्युक्तमेवं कृत्वाधिवासनम् । कुम्भान् सजलगर्भांस्तान् वासोभिः परिवेष्टयेत् । पुष्पगन्धैरलङ्कृत्य द्वारपालान् समन्ततः । पठध्वमिति तान् ब्रूयादाचार्य्यस्त्वभिपूजयेत् । बह्वृचौ पूर्व्वतः स्थाप्यौ दक्षिणेन यजुर्व्विदौ । सामगौ पश्चिमे तद्वदुत्तरेण त्वथर्व्वणौ । उदङ्मुखो दक्षिणतो यजमान उपाविशेत् । यजध्वमिति तान् ब्रूयाद्धौत्रिकान् पुनरेव तु । उत्कृष्टान् मन्त्रजापेन तिष्ठध्वमिति जापकान् । एवमादिश्य तान् सर्व्वान् पर्य्युक्ष्याग्निं स मन्त्रवित् । जुहुयाद्वारुणैर्म्मन्त्रैराज्यं च समिधस्तथा । ऋत्विग्भिश्चाथ होतव्यं वारुणैरेव सर्व्वतः । ग्रहेभ्यो विधिवद्धुत्वा तथेन्द्रायेश्वराय च । मरुद्भ्यो लोकपालेभ्यो विधिवद्विश्वकर्म्मणे । रात्रिसूक्तञ्च रौद्रञ्च पावमानं सुमङ्गलम् । जपेयुः पौरुषं सूक्तं पूर्व्वतो बह्वृचाः पृथक् । शाक्रं रौद्रञ्च सौम्यं च कूष्माण्डं जातवेदसम् ।

सौरसूक्तं जपेन्मन्त्रं दक्षिणेन यजुर्व्विदः । वैराज्यं पौरुषं सूक्तं सौपर्णं रुद्रसंहिताम् । शैशवं पञ्च निधनं गायत्रं ज्येष्ठसाम च । वामदेव्यं बृहत्साम रौरवं सरथन्तरम् । गवां व्रतं च काण्वञ्च रक्षोघ्नं वयसस्तथा । गायेयुः सामगा राजन् ! पश्चिमं द्वारमाश्रिताः । आथर्व्वणाश्चोत्तरतः शान्तिकं पौष्टिकं तथा । जपेयुर्म्मनसा देवमाश्रित्य वरुणं प्रभुम् । पूर्व्वेद्युरभितो रात्रावेवं कृत्वाधिवासनम् । गजाश्वरथ्यावल्मीकात् सङ्गमाद्ध्रदगोकुलात् । मृदमादाय कुम्भेषु प्रक्षिपेच्चत्वरात्तथा । रोचनाञ्च ससिद्धार्थां गन्धं गुग्गुलुमेव च । स्नपनं तस्य कर्त्तव्यं पञ्चभङ्ग(पल्लव) समन्वितम् । प्रत्येकन्तु महामन्त्रैरेवं कृत्वा विधानतः । एवं क्षपामतिवाह्य विधियुक्तेन कर्म्मणा । ततः प्रभाते विमले सञ्जातेऽथ शतं गवाम् । ब्राह्मणेभ्यः प्रदातव्यमष्टषष्टिश्च वा पुनः । पञ्चाशद्वाथ षट्त्रिंशत् पञ्चविंशतिरप्यथ । ततः सांवत्सरप्रोक्ते शुभे लग्ने सुशोभने । वेदशब्दैश्च गान्धर्व्वैर्व्वाद्यैश्च विविधैः पुनः । कनकालङ्कृतां कृत्वा जले गामवतारयेत् । सामगाय च सा देया ब्राह्मणाय विशाम्पते ! । पात्रीमादाय सौवर्णीं पञ्चरत्नसमन्विताम् । ततो निःक्षिप्य मकरमत्स्यादींश्चैव सर्व्वशः । धृतां चतुर्व्विधैर्व्विप्रैर्व्वेदवेदाङ्गपारगैः । महानदीजलोपेतां दध्यक्षतसमन्विताम् । उत्तराभिमुखीं धेनुं जलमध्ये तु तारयेत् । आथर्व्वणेन स्नातां पुनर्म्मामेत्यथेति च । आपोहिष्ठेति मन्त्रेण क्षिप्त्वागत्य च मण्डपम् । पूजयित्वा सदस्यांस्तु बलिं दद्यात् समन्ततः । पुनर्दिनानि होतव्यं चत्वारि मुनिसत्तमाः ! । चतुर्थीकर्म्म कर्त्तव्यं देयं तत्रापि शक्तितः । दक्षिणा राजशार्दूल ! वरुणक्षमापणं ततः । कृत्वा तु यज्ञपात्राणि यज्ञोपकरणानि च । ऋत्विग्भ्यस्तु समं दत्त्वा मण्डपं विभजेत् पुनः । हेमपात्रीञ्च शय्याञ्च स्थापकाय निवेदयेत् । ततः सहस्रं विप्राणामथवाष्टशतं तथा । भोजनीयं यथाशक्ति पञ्चाशद्वाथ विंशतिः । एवमेष पुराणेषु तडागविधिरुच्यते । कूपवापीषु सर्व्वासु तथा पुष्करिणीषु च । एष एव विधिर्द्दिष्टः प्रतिष्ठासु तथैव । मन्त्रतस्तु विशेषः स्यात् प्रासादोद्यानभूमिषु । अयन्त्वशक्तावर्द्धेन विधिर्दृष्टः स्वयम्भुवा । अल्पेष्वेकाग्निवत् कृत्वा वित्तशाठ्यादृते नृणाम् । प्रावृट्काले स्थिते तोये अग्निष्टोमफलं स्मृतम् । शरत्काले स्थितं यत् स्यात् तदुक्तफलदाय-

कम्। वाजपेयातिरात्राभ्यां हेमन्ते शिशिरे स्थितम्। अश्वमेधसमं प्राह वसन्तसमये स्थितम्। ग्रीष्मेऽपि तत् स्थितं तोयं राजसूयाद्विशिष्यते। एतान् महाराज! विशेषधर्मान् करोति योऽप्यागमशुद्धबुद्धिः। स याति रुद्रालयमाशु पूतः कल्पाननेकान् दिवि मोदते च। अनेकलोकान् समहस्तपादीन् भुक्ता परार्द्धद्वयमङ्गनाभिः। सहैव विष्णोः परमम्पदं यत् प्राप्नोति तद्यागफलेन भूयः"।

जलाशयखननारम्भनक्षत्रादि मु॰ चि॰ पी॰ उक्तं यथा "मित्रार्कध्रुववासवाम्बुपमघातोयान्त्यपुष्येन्दुभिः पापैर्हीनबलैस्तनौ सुरगुरौ ज्ञे वा भृगौ खे विधौ। आप्ये सर्वजलाशयस्य खननम्" मु॰ चि॰।

"मित्रोऽनुराधा अर्को हस्तः ध्रुवं रोहिण्युत्तरात्रयं वासवं धनिष्ठा अम्बुपः शततारका तोयं पूर्वाषाढ़ा अन्त्यं रेवती पुष्यः इन्दुर्मृगः एतैर्नक्षत्रैस्त्रयोदशभिः सर्वेषां जलाशयानां वापीकूपतड़ागनाम्नां तोयाधाराणां खननं शुभमुक्तम् उक्तञ्च व्यवहारतत्त्वे "आप्याम्बुपान्त्यपितृमित्रवसूत्तरार्कचन्द्रेज्यभेषु खननं सलिलाश्रयाणामिति"। कः ब्रह्मा तद्देवताकत्वेनाभेदात् रोहिणी। अथ जलाशयखनने लग्नविचारः पापैः पापखगैर्बलरहितैः सद्भिः, तनौ लग्ने सुरगुरौ वृहस्पतौ ज्ञे बुधे स्थिते सतीत्यर्थः लग्नात् खे दशमस्थाने भृगौ शुक्रे,आप्ये जलचरराशौ विधौ सति जलाशयखननं हितं उक्तञ्च रत्नमालायाम् "लग्ने जीवे ज्ञेऽथ वा दुर्बलैश्च क्रूरैः शुक्रे चापि मेषूरणस्थे। आप्ये चन्द्रे सर्वतोयाश्रयाणामारम्भाः स्युःसिद्धये निर्विकल्पम्"। कश्यपेनाप्युक्तम् "गुरौ ज्ञे वा लग्नगते शुक्रे कर्मगते, विधौ। आप्यभे जलकार्य्याणामारम्भः सिद्धिदः स्मृतः" इति। दीपिकायान्तु विशेषः "पुष्ये मित्रकरोत्तरस्ववरुणब्रह्माम्बुपित्र्येन्दुभिःशस्तोऽर्के शुभवारयोगतिथिषु क्रूरेष्ववीर्य्येषु च। पुष्टेन्दौ जलराशिगे दशमगे शुक्रे शुभांशोदये प्रारम्भः सलिलाशयस्य शुभदोजीवेन्दुपुत्रोदये। स्वं धनिष्ठा। अन्ये तु वापीकूपतड़ागानामाकृतिभेदात्प्रत्येकं भिन्नानि नक्षत्राण्युक्तानि। तत्र वापीखननमाह रत्नोच्चयः "स्वात्यश्विपुष्यहस्तेषु सर्वदा च पुनर्वसौ। रेवत्यां वारुणे चैव वापीकर्म प्रशस्यते"। कूपारम्भमाह श्रीपतिः "हस्तः पुष्यो वासवं वारुणञ्च मैत्रं पित्र्यं त्रीणि चैवोत्तराणि। प्राजापत्यञ्चापि नक्षत्रमाहुः कूपारम्भे श्रेष्ठमाद्या मुनीन्द्राः"। तड़ागारम्भमाह वशिष्ठः "मैत्रेन्दुपौष्णोत्तररोहिणीषु देवेज्यवारीश्वरवारिभेषु। प्रारम्भणं सर्वजलाशयानां कार्यं सितेन्दुशक्रवारलग्ने"। अत्र वापीकूपनक्षत्राणां पार्थक्येनाभिधानात् तड़ागारम्भार्थमिदं वचनमवसीयते बहुवचनमाश्रयाभिप्रायेण सर्वशब्दोपादानं छन्दःपरिपूरणार्थं तत्र कूपतड़ागनक्षत्रेषु षट्शनक्षत्रत्यागावशिष्टानां मेलने त्रयोदश नक्षत्राणि भवन्ति तत्र संक्षेपुकामेन व्यवहारतत्त्वकर्त्रा सर्वजलाशयानामारम्भे सामान्यतो जलाशयत्वसाधर्म्यादेतानि त्रयोदश भान्युक्तानि तान्येव च ग्रन्थकर्त्रोक्तानि। तत्र वापीकूपतड़ागानां भेदो लोकप्रसिद्ध एव यत्तु पुनर्वसिष्ठेनोक्तं "शशाङ्कतोयेशकरार्यमित्रध्रुवाम्बुपित्र्ये वसु रेवतीषु। उद्यानवाप्यादितड़ागकूपकार्याणि सिद्ध्यन्ति जलं ध्रुवं स्यात्"। तज्जीर्णोद्धारविषयं प्रागुक्तवाक्ये प्रारम्भणपदोपादानाच्च नूतनखननविषयमिति पुनरुक्तिपरिहारः।" पी॰ धा॰।

अधिकं जलाशयोत्सर्गशब्दे ३०७८ पृष्ठादावुक्तम्। अत्र राहुसाम्मुख्यनिषेधः मु॰ चि॰ पी॰ उक्तो यथा"देवालये गेहविधौ जलाशये राहोर्मुखं शम्भुदिशो विलोमतः। मीनार्कसिंहार्कमृगार्कतस्त्रिभे खाते मुखात् पृष्ठविदिक् शुभा भवेत्"। मु॰ चि॰।

"देवालये इति। अत्र यथासङ्ख्यं सम्बन्धः। देवालयप्रारम्भे राहोर्मुखं मीनार्कतस्त्रिराश्यवस्थिते सूर्य्ये ऐशानीतो विलोमतो विपरीतं विदिक्षु वायव्यादिषु राहोर्मुखं स्यात् यथा मीनमेषवृषराश्यवस्थिते सूर्य्ये राहोर्मुखम् ऐशान्याम्। मिथुनकर्कटसिंहराश्यवस्थिते सूर्य्ये वायव्यां राहुमुखम्। कन्यातुलावृश्चिकस्थे सूर्य्ये नैरृत्यां राहुमुखम्। धनुर्मकरकुम्भराश्यवस्थे सूर्य्ये आग्नेय्यां राहोर्मुखम् इत्यर्थः। एवं गृहारम्भेऽपि सिंहार्कतस्त्रिराश्यवस्थितेऽर्के विलोमतः ऐशान्यां राहुमुखम्। वृश्चिकादित्रये वायव्यां कुम्भादित्रये नैरृत्याम्। वृषादित्रये आग्नेय्यां राहुमुखं स्यात्। जलाशयारम्भेऽपि मकरार्कतस्त्रिराश्यवस्थेऽर्के विलोमतः ऐशान्यां राहुमुखं स्यात्। मेषादितः त्रिभिर्वायव्याम्। कर्कादितस्त्रिभिर्नैरृत्याम्। तुलादितस्त्रिभिः आग्नेय्यां राहुमुखं स्यादित्यर्थः। फलमाह खात इति। देवालयादिविषयके खाते भूमिशोधने कर्तव्ये सति राहुमुखाक्रान्तदिशः सकाशात् पृष्ठवर्तिनी दिक् शुभा भवेत् यथा

देवालयविषये मीनादित्रिराशिस्थितसूर्य्यत्वेन ऐशान्यां राहुमुखम्। तत्पृष्ठविदिक् आग्नेयी तस्यां प्रथमखातप्रारम्भः शुभद इत्यर्थः। मिथुनादिराशित्रयस्थे सूर्ये राहुमुखं वायव्यां तत्पृष्ठविदिगैशानी तस्यां खातारम्भः शुभः। एवं सर्वत्र। तथैव गृहविधौ अपि राहुमुखं कस्यां दिश्यस्ति इत्यवधार्य्य तत्पृष्ठविदिशि खातः शुभफल इत्यर्थः। यतः। सर्पेण विदिक् व्याप्ता। यथा। ऐशान्यां मुखम्। वायव्यामुदरम्। नैरृत्यां पुच्छम् आग्नेय्यां पृष्ठम्। अतः खाते आग्नेयी सम्यक्। एवमन्यत्राप्यूहनीयम् यदाह विश्वकर्मा "ईशानतः सर्पति कालसर्पो विहाय सृष्टिं गणयेद्विदिक्षु। शेषस्य वास्तोर्मुखमध्यपुच्छं त्रयं परित्यज्य खनेच्चतुर्थम्" इति। ज्योतिश्चिन्तामणौ "वृषार्कादित्रिकं वेद्यां सिंहादि गणयेद्गृहे। देवालये च मीनादि तड़ागे मकरादिषु"। तदारम्भतदुत्सर्गौ च समयाशुद्धौ न कार्य्यौ कालाशुद्धिशब्दे तत्प्रमाणं दृश्यम् "एतेनाखानि शाखानवनिवह हरित्पर्णपूर्णद्रुमाली व्यालीढ़ोपान्तशान्तव्यथपथिकदृशां दत्तरागस्तड़ागः" नैष०।

**तड़ाघात** पु० "उच्चैः करिकराक्षेपे तड़ाघातं विदुर्बुधाः" इत्युक्ते तटाघाते वप्रक्रीड़ायाम् शब्दकल्पद्रुमः। तच्चिन्त्यं तत्र वाक्ये तटाघातमित्येव पाठः तड़ेति पाठः लिपिकरप्रमादकृतः।

**तड़ि** पु० तड-आघाते भावादौ इन्। १आघाते २तत्कर्त्तरि [त्रि०।

**तड़ित्** स्त्री ताड़यत्यभ्रम् चुरा० तड़-इति नि० ह्रस्वः। १विद्युति अमरः। "अजदास्तड़िल्ललितकान्तकार्त्तस्वराः" "घनं घनान्ते तड़ितां गुणैरिव" माघः। "योगस्तड़ित्तोयदयोरिवास्तु" रघुः।

तड़ित्सम्भवादिस्तु "सुजलजलधिमध्ये वाड़वोऽग्निः स्थितोऽस्मात् सलिलभरनिमग्नादुत्थिता धूममालाः। वियति पवननीताः सर्वतस्ता द्रवन्ति द्युमणिकिरणदीप्ताविद्युतस्तत्स्फुलिङ्गाः"। "अकस्माद्द्युतं तेजः पार्थिवांशकमिश्रितम्। वात्यावद्भ्रमदावाते प्रतिकूलानुकूलयोः। वायोस्तत् पतति प्रायो ह्यकालप्राज्यवर्षणे। यतः प्रावृषि नैवैते पांसवः प्रसरन्ति हि। तत् त्रेधा पार्थिवं चाप्यं तैजसं तड़िदुत्थितम्। ततो निर्भरदाहैश्च भूमिस्थैरनुभूयते" सि० शि० टीका। २अन्तिके निघण्टुः ३हिंसायां निघण्टुः "तडित् आखण्डनेत्युपक्रमे "त्रयस्त्रिंशत्वधकर्माणः" इति तदुक्तेः

**तड़ित्प्रभा** स्त्री तड़ितः प्रभेव प्रभा यस्याः। कुमारानुचमातृभेदे। "केशयन्त्री त्रुटिनामा क्रोशनाऽथ तड़ित्प्रभा" भा० शल्य० ४७अ० कुमारानुचरमातृगणोक्तौ। २तड़ित्तुल्यदीप्तियुते त्रि०।

**तड़ित्वत्** पु० तड़ित् विद्यतेऽस्य मतुप् मस्य वः तान्तत्वेन अपदान्तत्वात् न तस्य दः। १मेघे "चलिताचलवर्षमाणा गम्भीरविराविणस्तड़ित्वन्तः" वृ० सं० २१ अ० २मुस्तके च अमरः। ३तड़िद्विशिष्टे त्रि० स्त्रियां ङीप् "समुदितविचयेन तड़ित्वतीम्। लघयता शरदम्बुदसंहतिम्" किरा०।

**तड़िद्गर्भ** पु० तड़ितो गर्भोऽस्य। मेघे "तड़िद्गर्भ ऋतवः समुद्राः" श्वेताश्व० उप० ४ अ०।

**तड़िन्मय** त्रि तडिदात्मकः तड़ित्+मयट्। तडित्स्वरूपे "तडिन्मयैरुन्मिषितैर्विलोचनैः" कुमा०।

**तण्ड** पु० तडि-अच्। १ऋषिभेदे तस्य गोत्रापत्यम् गर्गा० यञ्। ताण्ड्य तद्गोत्रापत्ये पुंस्त्री०। यूनि फक्। ताण्ड्यायन तदीये यून्यपत्ये पुंस्त्री०। तण्डशब्दस्य वतण्डशब्देन समं द्वन्द्वे कौर्त्तकौजपा० पूर्वपदप्रकृतिस्वरः। भावे अ। २आहतौ स्त्री।

**तण्डक** पुंस्त्री० तडि-ण्वुल्। १खञ्जने, स्त्रियां ङीष्। २फेने, ३समासप्राये वाक्ये, ४गृहदारुणि,५तरुस्कन्धे च न० मेदि० ६मायाबहुले, उपघातके त्रि० परिष्कारे पुंन० शब्दार्थचि०।

**तण्डि** पु० कृतयुगोत्पन्ने ऋषिभेदे तत्कथा भा० आनु० १५ अ०। "ऋषिरासीत् कृते तात! तण्डिरित्येव विश्रुतः दश वर्षसहस्राणि तेन देवः समाधिना। आराधितोभूद्भक्तेन तस्योदर्कं निशामय" इत्यादिका। महादेववराच्च तत्सुतस्य यजुर्वेदीयताण्डिनशाखाभेदे कल्पसूत्रकर्त्तृतेति तत्रैव १६ अ०उक्तं यथा "अक्षयश्चाव्ययश्चैव भविता दुःखवर्ज्जितः। यशस्वी तेजसा युक्तो दिव्यज्ञानसमन्वितः। ऋषीणामभिगम्यश्च सूत्रकर्त्ता सुतस्तव। मत्प्रसादाद्द्विजश्रेष्ठ! भविष्यति न संशयः" "सूत्रकर्त्ता ताण्डिन इति यजुर्वेदे शाखाविशेषस्तत्र कल्पसूत्रकर्त्तेति" नीलकण्ठः। [नन्दिनौ नन्दिकेश्वरः" मल्लिनाथधृतकोषः।

**तण्डु** पु० शिवद्वारपालभेदे नन्दिकेश्वरे "नन्दी भृङ्गिरिटस्तण्डु

**तण्डुरीण** पु० तण्डुल+अस्त्यर्थे इरच् तत्र भवः ख। १कीटमात्रे २वर्वरे त्रि० तण्डुले भवः ख रस्य लः। ३तण्डुलोदके न० मेदि०।

**तण्डुल** पुंन॰ तडि–उलच्। निस्तुषधान्ये। “शस्यं क्षेत्रगतं प्रोक्तं सतुषं धान्यमुच्यते। निस्तुषस्तण्डुलः प्रोक्तः स्विन्नमन्नमुदाहृतम्” आ॰त॰। “शालितण्डुलप्रस्थस्य कुर्य्यादन्नं सुसंस्कृतम्। सूर्य्याय चरुकं दत्त्वा सप्तम्यान्तु विशेषतः। यावन्तस्तण्डुलास्तस्मिन्नैवेद्ये परिसंख्यया। तावद्वर्षसहस्राणि सूर्य्यलोके महीयते” ति॰ त॰। “तण्डुलो मेह जन्तुघ्नः स नवस्त्वतिदुर्जरः”। वैद्य॰ “भ्रष्टस्तु तण्डुलो रूक्षो सुगन्धिः कफनाशनः। पित्तकारी स विज्ञेयः” राजव॰। तस्य किण्वशब्देन समा॰ राजद॰ पूर्वनि॰। हीरकस्य २मानभेदे “सितसर्षपाष्टकं तण्डुलो भवेत् तण्डुलैस्तु विंशत्या” वृ॰ स॰ ८॰ अ॰।

**तण्डुलपरीक्षा** स्त्री तण्डुलेन परीक्षा। दिव्यभेदे तद्विधानं वीरमि॰ उक्तं यथा पितामहः
“तण्डुलानां प्रवक्ष्यामि विधिम्भक्षणचोदितम्। चौर्य्ये तु तण्डुला देया नान्यस्येति विनिश्चयः” इति। चौर्य्यग्रहणमर्थविवादप्रदर्शनार्थम् “तदर्थार्द्धस्य तण्डुलाः” इति धनविवादे कात्यायनेनोक्तत्वात्। पूर्वेद्युर्यत्कर्त्तव्यं तत् स एवाह “तण्डुलान् कारयेच्छुक्लान् शालेर्नान्यस्य कस्यचित्। मृण्मये भाजने कृत्वा आदित्यस्याग्रतः शुचिः। स्नानोदकेन सम्मिश्रान् रात्रौ तत्रैव वासयेत्। आवाहनादिपूर्वन्तु कृत्वा रात्रौ विधानतः” इति। शुचिः प्राड्विपाकः सूर्य्यस्याग्रे धर्मावाहनादिहोमान्तं सर्वदिव्यसाधारणविधिं कृत्वा आदित्यस्नानोदकेन शुक्लान् शालितण्डुलानाप्लाव्य रात्रावेवं कृत्वा तथैव प्रातःकालपर्य्यन्तं स्थापयेदित्यर्थः। स्नानोदकं देवताया इत्याह कात्यायनः “देवतास्नानपानीयं दिव्यतण्डुलभक्षणे” इति। प्रातः कर्त्तव्यमपि स एवाह “प्रभाते कारिणे देया आदित्याभिमुखाय त्विति”। कारिणे शोध्याय। देयाः तण्डुला इत्यनुषङ्गः। भक्षणञ्च सोपवासेन सूर्य्यालयमध्य एव कर्त्तव्यमित्याह वृहस्पतिः “सोपवासः सूर्य्यगेहे तण्डुलान् भक्षयेच्छुचिरिति”। शोध्यानुष्ठेयमनुवादव्याजेन दर्शयति पितामहः “प्राङ्मुखोपोषितं स्नातं शिरोरोपितपत्रकम्। तण्डुलान् भक्षयित्वा तु पत्रे निष्ठीवयेत्ततः” इति। भक्षयित्वा भक्षणं कारयित्वा हेतुमतोणिजन्तस्य भक्षेरयं प्रयोगः। पत्रे विशेषं स एवाह “भुर्जस्यैव तु नान्यस्य अभावे पिप्पलस्य त्विति”। शुद्ध्यशुद्ध्यवधारणोपायं स एवाह “शोणितं दृश्यते यस्य हनुस्तालु च शीर्य्यते। गात्रञ्च कम्पते यस्य तमशुद्धं विनिर्दिशेत्” इति। वृहस्पतिरपि “शुद्धः स्याच्छुक्लनिष्ठीवी रक्तमिश्रे तु दोषभागिति”। कात्यायनोऽपि “शुक्लनिष्ठीवनाच्छुद्धो नियम्योऽशुचिरन्यथेति”।
“अपोऽग्निरुदकञ्चैव विषञ्चोषस्तथैव च। तण्डुलाश्चैव दिव्यानि सप्तमस्तप्तमाषकः।” इति पितामहस्मृतिः। “तण्डुलाश्चैव कोषश्च शङ्काखेव न संशयः” इति मिताक्षराधृतस्मृतिः।

**तण्डुला** स्त्री ताडि–उलच् नि॰ हुट् हस्वश्च। १महासमङ्गायाम् २विडङ्गे च राजनि॰। ३तण्डुलीयशाके यवतिक्तायां स्त्री ४शशाण्डुल्याम् स्त्री राजनि॰ गौरा॰ ङीष्।

**तण्डुलाम्बु** न॰ तण्डुलक्षालितमम्बु—शा॰ त॰। तण्डुलक्षालनोदके (चेलुनि) तण्डुलोदकादयोऽप्यत्र। “जलमष्टगुणं दत्त्वा दत्त्वा पलं कण्डिततण्डुलात्। भावयित्वा ततो देयं तण्डुलोदककर्मणि” वैद्यकपरिभाषा।

**तण्डुलिकाश्रम** पु॰ न॰ तीर्थभेदे जम्बूमार्गादुपावृत्य गच्छेत्तण्डुलिकाश्रमम्। न दुर्गतिमवाप्नोति ब्रह्मलोकं च गच्छति” भा॰ व॰ ८२ अ॰। तण्डूलिकाश्रममिति दीर्घपाठः क्वाचित्कः, स च लिपिकरप्रमादकृत इत्यन्ये।

**तण्डुलीक** पु॰ तण्डुलीयक+पृषो॰ यलोपः। तण्डुलीयकशाके शब्दरत्ना॰।

**तण्डुलीय** पु॰ तण्डुलाय तत्क्षणाय हितं छ। (चुङ्गट) (चाँपानटे) १शाकभेदे २विडङ्गे च। स्वार्थे क। तण्डुलीयक उक्तशाके अमरः।
“तण्डुलीयो मेघनादः कान्दरस्तण्डुलेरकः। भण्डीरस्तण्डुलीबीजो विषघ्नश्चाल्पमारिषः। तण्डुलीयो लघुः शीतो रूक्षः पित्तकफास्रजित्। सृष्टमूत्रमलो रुच्यो दीपनो विषहारकः”। तद्भेदः जलतण्डुलीयं शाकं कञ्चटमिति प्रसिद्धम्। पानीयतण्डुलीयो यस्तत्कञ्चटमुदाहृतम्। कञ्चटं तिक्तकं रक्तपित्तानिलहरं लघु” भावप्र॰ स्वार्थे के कापि अत इत्त्वम्। तण्डुलीयिका विडङ्गे स्त्री राजनि॰। तण्डुलीबीजोऽप्युक्तशाके पु॰ भावप्र॰।

**तण्डुलु** पु॰ तण्डुल+पृषो॰। विडङ्गे शब्दर॰। [हेमच॰।

**तण्डुलेर** पु॰ तण्डुल+स्वार्थे बा॰ ढ। तण्डुलीयकशाके

**तण्डुलोत्थ** तण्डुलात् तत्क्षालनादुत्तिष्ठति उद्+स्था—क। (चेलुनि) तण्डुलाम्बुनि राजनि॰। तण्डुलाम्बुशब्दे दृश्यम्।

**तण्डुलौघ** पु० तण्डुलानामोघ इव । (वेडवाँस) १वेणुवंशे शब्दच० ६त० । २तण्डुलसमुदाये च । [परीतत् मुग्ध० ।

**तत्** त्रि० तन+क्विप् अन्त्यलोपे तुक् । विस्तारके अमरः ।

**तत** न० तन–क्त । १वीणादिवाद्ये अमरः २विस्तारिते ३व्याप्ते च त्रि० । ४वायौ पु० मेदि० । भावे क्त । ५विस्तारे ६सन्ताने च न० । तन्यते अन्वयोऽस्मात् तन्–मान्नि अपादाने कर्मणि वा क्त तक् वा । ७पितरि ८पुत्र च पु० । "कारुरहं ततो भिषक्" ऋ० ९।११२।३ तत इति सन्ताननाम तन्यतेऽस्मात् ततः पिता तन्यतेऽसौ ततः पुत्रो वा" भा० इमामृचमधिकृत्य । तत इति सन्तानस्य नाम पितुर्वा पुत्रस्य वा" निरु० । "ततततमभङ्गीनं भिन्नकीलत्य पङ्कजम्" माघः । "ततं वीणादिवाद्य वादितम्" मल्लि० । "स होवाच पितरं तत ! कस्मै मां दास्यसीति" कठो० । "हे तत! हे तात !" भा० "यस्य निश्वसितं वेदा येन सर्वमिदं ततम्" माधवः । ततं विस्तारितं व्याप्तं वेत्यर्थः ।

**ततनुष्टि** पु० ततं धर्मसन्ततिं नुदति वष्टि कामयते कामान् वा नुद-ड वश-क्विप् कर्म० शक०। १धर्मसन्ततिनोदकधर्मसन्ततिकामुके । "अपाप शकसुततनुष्टिमूहति" ऋ० ५।३४।३ ततं धर्मसन्ततिं नुदति वष्टि कामयते कामान् ततनुष्टिः" भा० निरुक्ते अन्यथा निरुक्तं यथा "शक्तिततनिम् धर्मसन्तानादपेतमलङ्करिष्णुम् ६।१९ । तेन २तदर्थे च । [कदल्याम् शब्दच० ।

**ततपत्री** स्त्री ततं पत्रं यस्याः जातित्वात् ङीष् ।

**ततम** त्रि० तेषां मध्ये एकस्य निर्द्धारणे तद्+डतमच् । तेषां मध्ये निर्द्धारिते एकस्मिन् "एतमेव पुरुषं ततममपश्यत्" ऐत० उ० । [मध्ये निर्द्धारिते एकस्मिन् ।

**ततर** त्रि० तयोर्मध्ये एकस्य निर्द्धारणे तद्+डतरच् । तयो-

**ततस्** अव्य० तद्+सार्वविभक्तिकस्तसिल् । तस्मादित्याद्यर्थे "ततस्तस्या विनियन्तुमक्षमाः" माघः । प्रथमार्थे ततो भवान् । द्वितीयार्थे ततभवन्तम् । सप्तम्यर्थे ततस्या तृतीयार्थे "यतोयतः षट्चरणोऽभिवर्त्तते ततस्ततः प्रेरितवामलोचना" शकु० । हेतुभूतयो र्द्वयोर्मध्ये एकस्यातिशये आसु तरप् च । ततस्तराम् विग्रहोक्तार्थे हेतुभूतानां बहूनां मध्ये एकस्यातिशये आसु तमप् च" ततस्तमाम् विग्रहोक्तार्थे अव्य० । [विनियन्तुमक्षमाः" माघः ।

**ततस्त्य** त्रि० ततस्तत भवः त्यप् । तत भवे "ततस्ततस्त्या

**ततामह** पु० ततस्य पितुः पिता "पितरि डामहः" इत्यत्र पितृशब्दस्यार्थपरत्वं न स्वरूपपरत्वम् । पितामहे "अस्माकं तावकाममवनतानां ततामह । तव चरणयुगलध्यानबद्ध हृदयनिगडानाम्" भाग० ६।९।३९ क्वचित् पुस्तके ततामहेत्यत्र ततत इत्येव पाठः । सोऽपि तदर्थे एव ।

**तति** स्त्री तन-क्तिन् । १श्रेण्यौ हेमच० । २समूहे च । "विश्रब्धं क्रियतां वराहततिभिः मुस्ताक्षतिः पल्वले" शकु०। "बिभर्ति अनयत्स्वयमुदमयामपायधवला वलाहकततीः" माघः । "तत्र होतिततिहूतिश्यान्ता अमात्याः" दशकुमा० तत् परिमाणं येषां इति । २तत्परिमाणे त्रि० ब० व० अयस्य षट्संज्ञकत्वात् लिङ्ग समः । "ष्णान्ताः षट्" "डति च" पा० तस्य षट्संज्ञा विहिता "षट्संज्ञकास्त्रिषु समा युष्मदस्मत्तिङव्ययाः" अमरः । "बहुगणवतु डति च संख्या" पा० अस्य संख्याकार्यातिदेशः । ततः जसः शसश्च लुक् तति पुरुषाः सन्ति तति पुरुषान् पश्य । ततः प्रकारे धाच् । ततिधा ततिप्रकारे अव्य० "तावत्तेजस्ततिधा वाजिनानि" अथ० १२।२।३।२ ।

**ततिथी** स्त्री तावतीनां पूरणी तावत्+डट् तिथुगागमः ङीप् वेदे वत्शब्दलोपः । तावतीनां पूरणीभूतस्त्रियाम् "स यतिथीं तत्समां परिदिदेश ततिथीं समां नावसृपकल्प्योपावाद्धक" शत० ब्रा० ११८।१।५ । यावतिथीं तावतिथीमिति प्राप्ते छान्दसोऽवशब्दलोपः" भा० ।

**ततुरि** त्रि० तुर्व–हिंसायाम् कि-द्वित्वं पृषो० । १हिंसके "सद्यो दाम्ना तिरते ततुरिः" ऋ० ६।६८।७ । "ततुरि हिंसकः। तृ–कि द्वित्वं पृषो०। २तारके च "दद्युर्मिता वहन्ता ततुरिम्" ४।३९।२। "ततुरिं तारकम्" भा०

**तत्कर** त्रि० तत् करोति तद्+कृ हेत्वादावपि क्वचः टः। तत्पदार्थकारके ।

**तत्काल** पु० कर्मधा० । वर्त्तमानकाले १तदात्वे अमरः । २तस्मिन् काले च। स कालो यस्य। ३तत्कालवर्त्तौ त्रि०। "शुचिस्तत्कालजीवी कर्म कुर्यात्" स्मृतिनिबन्धेषु कल्प्या श्रुतिः । "प्रतिनिधौ तत्कालात्" कात्या० श्रौ० १।४।१५ । स कालो यस्यासौ तत्कालः भावप्रधानो निर्देशः प्रतिनिधेस्तत्कालत्वादित्यर्थः । यतः प्रतिनिधेः स एव कालो यो मुख्यद्रव्यस्याभावः" कर्कः । "प्रायश्चित्तं तत्कालम्" कात्या० श्रौ० १।१।२२ ।

**तत्कालधी** त्रि० तस्मिन् उचिते काले धीर्बुद्धिर्यस्य । अनिष्टादि निवारणाय झटिति प्रत्युत्पन्नबुद्धौ जने हेमच० ।

**तत्क्रिय** त्रि० वेतनं विना स्वभावतः या क्रिया कर्म यस्य ।

कर्मकरणशीले, वेतनं विना स्वभावतः कर्मकरे अमरः।

**तत्क्षण** पु० स चासौ क्षणः कालः। सद्योऽर्थे हेमच०। "विवच्छितामर्थविदस्तत्क्षणप्रतिसंहृताम्" "आप्तेन तत्क्षणाभिषजेव तत्क्षणम्" माघः "सैकान्ते मुनिकन्याभिस्तत्क्षणोज्झितवृक्षकम्" रघुः।

**तत्त्व(त्व)** न० तस्य भावः, तन-क्विप् तुक् ततो भावो वा त्व वा तलोपः। १याथार्थ्ये, २स्वरूपे, ३ब्रह्मणि च अमरः ४अनारोपितस्वरूपे, परमात्मनि, "तदिति सर्वनाम सर्वं च ब्रह्म तस्य नाम सर्वनाम तस्य भावः। सर्वस्मिन् दृश्ये बाध्यमानेऽपि तद्बाधाधिष्ठानत्वेन स्वयमबाध्यमानमनारोपितं स्वरूपं तत्त्वमिति विवरणकाराः। ५विलम्बिते नृत्यवाद्यादौ, ६चेतसि, ७वस्तुनि, ८साङ्ख्योक्तेषु प्रकृत्यादिषु पञ्चविंशतौ पदार्थेषु त्रिका०। "वेदान्ता बहुतर्ककर्कशमतिग्रस्ताः परं मायया भाट्टाः कर्मफलाकुला हतधियो द्वैते हि वैशेषिकाः। अन्ये भेदरता विवादकलहास्ते तत्त्वतो वञ्चितास्तस्मात् सिद्धमतं स्वभावकसृतं धीरः परं संश्रयेत्"। ९सत्त्वरजस्तमःसु। तत्र याथार्थ्ये इत्यष्टाविंशतिस्थाने तत्त्वं वच्याम्मि यत्नतः" रघु०। श्रीतत्त्वचिन्तामणिः तत्त्वविवेकः। तत्त्वचूडामणिः तत्त्वदीपिका। प्रमाणप्रमेयेत्याद्युपक्रमे "तत्त्वज्ञानान्निःश्रेयसाधिगमः" गौ०सू० "कार्यं सोऽवेक्ष्य शक्तिञ्च देशकालौ च तत्त्वतः" मनुः। "सतश्च सद्भावोऽसतश्चासद्भावः। सत् 'सत्' इति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं भवति। असच्च'असत्'इति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं भवति"। वात्स्या० प्रस्तावना। प्रकृत्यादिपदार्थे। "एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम्" सां० कौ०। "तत्प्रतिषेधार्थं तत्त्वाभ्यासात्" पात० सू०। १०स्वभावे निस्तत्त्वाः निःस्वभावा इत्यर्थः प्रकृत्यादौ पुंन०केचित्। "यस्यापि देवस्य गुणान् समग्रांस्तत्त्वांश्चतुर्विंशतिमाहुरेके" हरिवं० २७६ अ०। ब्रह्मणि "वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम्। ब्रह्मेति परमात्मेति भगवानिति शब्द्यते" भाग०१।२।११ अनारोपितं तत्त्वमिति वेदान्तिनो वदन्ति। पदार्थे। "शून्यं तत्त्वं भावो विनश्यति वस्तुधर्मत्वाद्विनाशस्य" सा० सू०। मतभेदे पदार्थभेदा यथा

"सदसदुभयानुभयात्मकचतुष्कोटिविनिर्मुक्तं शून्यमेव तत्त्वमिति शून्यवादिनो बौद्धाः। पृथिव्यादीनि चत्वारि भूतानि तत्त्वानीति चार्वाका आहुः। जीवाजीवाख्ये द्वे तत्त्वे इत्यार्हताः। जीवाकाशधर्माधर्मपुद्गलास्तिकायाः पञ्चतत्त्वानीत्यार्हतैकदेशिनः। जीवाजीवास्रवबन्धसंवरनिर्जरमोक्षाः सप्त तत्त्वानीत्यपरे आर्हतैकदेशिनः। स्वतन्त्रास्वतन्त्रभेदेन द्विविधं तत्त्वमिति द्वैतवादिनः श्रीपूर्णप्रज्ञाचार्य्याः। चिदचिदीश्वरभेदेन त्रिविधं तत्त्वमिति रामानुजीयाः पतिपशुपाशभेदेन त्रिविधं तत्त्वमिति पाशुपतशास्त्रकोविदाः नकुलीशाचार्य्याः शैवाश्च। महदादीनि पञ्चविंशतिस्तत्त्वानीति सांख्याः। ईश्वराधिकानि तानि चेति, षड्विंशतिस्तत्त्वानीति पातञ्जलाः। ब्रह्मैकमेव परमार्थतत्त्वं तद्भिन्नाः मायाकल्पिता इति मायावादिनो वेदान्तिनः।

**तत्त्वज्ञान** न० ६त०। १याथार्थ्यज्ञाने, २ब्रह्मज्ञाने च। "प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः" इति गौ० सू०। ३अनारोपितवस्तुप्रत्यये। इदं सर्वं द्वैतजातमद्वितीये चिदानन्दात्मनि मायया कल्पितत्वात् सत्यैव आत्मैवैकः परमार्थसत्यः सच्चिदानन्दादयोऽहमस्मीति ४परिज्ञाने। ५यथार्थ्यज्ञाने। यथा सति घटादिवस्तुनि सदिति ज्ञानम् असति च शशशृङ्गादावसदिति ज्ञानम्। "निखिललोकविमोक्षसुखोपायं मननोपायमात्मनस्तत्त्वज्ञानमामनन्ति"। यथा आत्मा शरीरादिभ्यो भिन्न इत्याकारं ज्ञानमिति। नैयायिकाः। इतरनिवृत्तिपूर्वको ब्रह्मात्मावगम इति मायावादिनो वदन्ति। भगवद्विषयकमपरोक्षज्ञानमिति द्वैतवादिवेदान्तिन आहुः

**तत्त्वज्ञानार्थदर्शनम्** न०। तत्त्वज्ञानस्याहं ब्रह्मास्मीति साक्षात्कारस्य वेदान्तवाक्यकरणकस्यामानित्वादिसर्वसाधनपरिपाकफलस्य अर्थः प्रयोजनमविद्यातत्कार्य्यात्मकनिखिलदुःखनिवृत्तिरूपः परमानन्दावाप्तिरूपश्च मोक्षः तस्य दर्शनम् आलोचनम्। तत्त्वज्ञानार्थे आलोचने तत्त्वज्ञानफलालोचने हि तत् साधने प्रवृत्तिः स्यात् इति तदालोचनं मोक्षार्थतत्त्वज्ञानसाधनम्।

**तत्त्वन्यास** पु० तन्त्रोक्ते विष्णुपूजाङ्गे न्यासभेदे तत्प्रकारस्तन्त्रसारे यथा

"नादिकान्तानघार्य्यांश्च जीवाद्येकैकशो वदेत्। नमः परादेत्युच्चार्य्य तत्तत्त्वात्मने नमः" इति गौतमीयवचनात् सर्वत्र तत्त्वपदप्रयोगः। यथा मं नमः पराय

**तथागत** पु० तथा सत्यं गतं ज्ञानं यस्य यथा न पुनरावृत्तिर्भवति तथा तेन प्रकारेण गत इति वा तथा गतः सुप्सुपेति समासः। १बुद्धमुनौ सुगते अमरः। "यथा गतास्ते सुनयः शिवां गतिं तथागतिं सोऽपि गतस्तथागतः" सर्वद०बौद्धागमः। २पूर्वोक्तप्रकारेण गते त्रि०। "नलं दृष्ट्वा तथागतम्" भा० व० ७७ अ०। "प्रियं तथागतां दृष्ट्वा ज्वलन्तीमिव पावके" भा० स० १६ अ०।

**तथाच** अव्य० तथा च च च द्वन्द्वः। उक्तस्य दृढ़ीकरणार्थे "निरिन्द्रियाह्यमन्त्राश्च स्त्रियोऽनृतमिति स्थितिः। तथा च श्रुतयो बह्व्यो निगीता निगमेष्वपि" मनुः। "एतावानेव पुरुषो यज्जायात्मा प्रजेति ह। विप्राः प्राहुस्तथाचैतद्यो भर्त्ता सा स्मृताऽङ्गना" हितो०।

**तथात्व** न० तथा+भावे त्व। तथाभूतत्वे। "तथात्वं चेदिन्द्रियाणामुपघाते कथं स्मृतिः" भाषाप०। "स्वरूपानन्दस्य तथात्वम्" सांख्य०सू०।

**तथापि** अव्य० तथा च अपि च द्वन्द्वः। यद्यपीत्यनेनाक्षिप्तस्य समाधानार्थे "तथापि मम सर्वस्वं रामः कमललोचनः" उद्भटः। "यद्यपि का नो हानिः परस्य द्राक्षां रासभश्चरति। असमञ्जसमिति मत्वा तथापि तरलायते चेतः" उद्भटः। "सा चैवास्मि तथापि सुरतव्यापारलीलाविधौ" काव्यप्र०।

**तथाभूत** त्रि० तेन प्रकारेण भूतः भू—कर्त्तरि क्त। तादृशेन रूपेण भूते। "तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयाम्" वेणी०। "स्मरस्तथाभूतमयुग्मनेत्रम्" कुमा०।

**तथाराज** पु० तथेति राजते राज—अच्। बुद्धदेवे शब्दार्थचि०।

**तथाविध** त्रि० तथा विधा यस्य। तथाप्रकारे "तथाविधस्तावदशेषमस्तु सः" कुमा० "अतोऽभिलाषे प्रथमं तथाविधे"। "श्रुत्वा तथाविधं मृत्युं कैकेयीतनयः पितुः"। "प्राप्य चाशु जनस्थानं खरादिभ्यस्तथाविधम्" इति च रघुः "तस्य तावत्कृती सम्यग् सम्यगंशस्तथाविधः" मनुः

**तथाहि** अव्य० तथा च हि च द्व०। १निदर्शने २प्रसिद्धमेवेत्यर्थे शब्दार्थचि०। ३उक्तार्थ दृढ़ीकरणे।

**तथैव** अव्य० तथा+सादृश्ये समुच्चये वा तस्यावधारणम्। तद्वदेवेत्यर्थे तत्समुच्चयावधारणे च शब्दार्थचि० "अस्ति पुत्रो वशे यस्य भार्या भर्त्तुस्तथैव च" चाणक्यः। "यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम्। तथैवाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम्" मनुः।

**तथ्य** न० तथा+साधु यत्। १यद्वस्तु यथाभूतं तथारूपावख्याने सत्ये २तद्युते त्रि० अमरः। "कायं वाचय वा सम्प्रमन्यं वापि तथाविधम्। तथ्येनापि ब्रुवन् दाप्योदण्डं कार्षापणावरम्" मनुः। "अनन्यभाजं पतिमाप्नुहीति सा तथ्यमेवाभिहिता भवेन" कुमा०। "भूय एव तु मां तथ्यैर्वचोभिरुपबृंहय" भा० द्रो० ५६ अ०। "यदर्जुनगुणांस्तथ्यान् कीर्त्तयानं नराधम!" भा० द्रो० १५८ अ०।

**तद्** त्रि० तन—अदि डिच्च। १पूर्वोक्ते बुद्धिस्थे,२परामर्शयोग्ये ३विप्रकृष्टविषये। ४ब्रह्मणि न०। "ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" इति गीता। "अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयात्" इत्युक्ते रस्य परोक्षवाचित्वम्। बुद्धिस्थत्वोपलक्षितधर्मावच्छिन्नेऽस्य शक्तिः। बुद्धिस्थत्वं च पूर्वानुभूतसंस्कारवत्तया, तेन स्मृतिविषयत्वेन तथात्वं बोध्यम्। तदर्थ एवास्य सर्वनामता शब्दपरत्वे न तथात्वम्। अतएव "एतत्तदोः सुलोपोऽकोरनञ्समासे हलि" पा० न सर्वनामकार्यमन्यथा एततयोरिति स्यात्। सर्वनामकार्यञ्च त्यदादीनामः अमादौ शीभावादि हस्तिमात्रे पुंवद्भावादिच। स तौ ते तस्मै तस्मात् तेषां तस्मिन् इत्यादि। तस्य च टेरकच् सकः तकौ इत्यादि च। "स किं सखा साधु न शास्ति योऽधिपम्" किरा०। "तौ गुरुर्गुरुपत्नी च" रघुः। "ते सप्तर्षयः षड्दूतमाख्याय चेरुस्तीरपरिग्रहाः" "ते हिमालयमामन्त्र्य" कुमा०। "तस्मै शंभव प्रणिपत्य नन्दी" कुमा०। "तस्मिन् मघोनस्त्रिदशान् विहाय" कुमा०। तस्मात्तान्यत्र वाययेत्" स्मृतिः। हद्धसंज्ञत्वात् छ "तदीयमातङ्गघटाविघट्टितैः" माघः। ततः तत्र तर्हि तदा इत्यादि। ५हेतौ अव्य० स्वरादेराकृतिगणत्वात् स्वरादि। "सन्तप्तानां त्वमसि शरणं तत् पयोदः प्रियायाः" मेघ०। "तदङ्गमग्र्यं मघवन्! महाक्रतोः" रघुः। अहेतावपि ६सर्वनामसमानार्थे न०। "इन्द्रियदोषात् संस्काराच्चाविद्या" "तद्दुष्टज्ञानम्" का०सू० "तदित्यव्ययपदं सर्वनामसमानार्थकमविद्यां परामृशति साऽविद्या दुष्टज्ञानं व्यभिचारिज्ञानमतस्मिंस्तदभिज्ञानं व्यधिकरणप्रकारावच्छिन्नविशेष्यकम्" उप० वृत्तिः। ८ तदेत्यर्थे च "ज्यायसी चेत् कर्मणस्ते मता बुद्धिर्जनार्द्दन! तत् कर्मणि घोरे माम्। गीता ८ प्रसिद्धे त्रि० सर्वनामकार्यञ्च। "तं वेधसायां प्रसमीक्ष्य कुर्युः" कुमा०। तत्र ब्रह्मणि "तदित्यनभिसन्धाय फलं यज्ञतपःक्रियाः। दान

क्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिरिति" गीता। तदिति ब्रह्माभिधानमुच्चार्य्य अनभिसन्धाय च कर्मणः फलमित्यर्थः "तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" छा॰ उ॰। तत्पदवाच्यार्थश्च तत्पदवाच्यार्थशब्दे उक्तः शरदा॰अव्ययी॰ अच् समासान्तः। तस्य समीपम् उपतदम्।

**तदर्थ** त्रि॰ स अर्थो यस्य, तस्मै इदं वा "अर्थेन सह नित्यसमासो विशेष्यनिघ्नता चेति" वार्त्ति॰ समासो वा। १तत्प्रयोजनके २तदुद्देश्यके "अन्तेवासी वार्थांस्तदर्थेषु धर्मकृत्येषु योजयेद्द्हिताः वा" दाय॰ त॰ आपस्तम्बः। ३तस्याभिधेये ४तत्प्रयोजने च ततो भावे ष्यञ्। ताद्र्थ्य तत्प्रयोजनकत्वे। "ताद्र्थ्ये चतुर्थी" मुग्ध बो॰।

**तदनन्यत्व** न॰ तयोरनन्यत्वम्। तयोर्भेदाभावे "तदनन्यत्वमारम्भणशब्दादिभ्यः" शा॰ सू॰।

**तदन्यबाधितार्थप्रसङ्ग** पु॰ तदन्यः बाधितार्थस्य प्रसङ्गः। प्रमाणबाधितार्थस्य प्रसङ्गरूपे प्रमाणबाधितार्थप्रसङ्गापरपर्य्याये तर्कभेदे। तत्स्वरूपादि "स चायं तर्कः पञ्चविधः आत्माश्रयान्योन्याश्रयचक्रकानवस्थाप्रमाणबाधितार्थप्रसङ्गभेदात् इति" विभज्य आत्माश्रयादीन् लक्षयित्वा जगदीशेनोक्तं यथा उक्तचतुष्कान्यः प्रसङ्गः प्रमाणबाधितार्थप्रसङ्गः। सोऽपि द्विविधो व्याप्तिग्राहको विषयपरिशोधकश्च तत्राद्यो यथा धूमो यदि वह्निव्यभिचारी स्यात्तदा जन्यो न स्यादिति। द्वितीयस्तु पर्वतो यदि निर्वह्निः स्यान्निर्धूमः स्यादित्यादि"। विषयस्य व्यभिचारशङ्कानिवृत्तिद्वारा निश्चायकत्वेन परिशोधकत्वम्।

**तदर्पण** न॰ तस्य स्वस्मिन् निक्षिप्तस्यार्पणं प्रत्यर्पणम्। निक्षिप्तद्रव्यस्य निक्षेप्तुरर्पणे। ६ त॰। तस्यार्पणे च।

**तदा** अव्य॰ तस्मिन् काले तद्+दाच् विभक्तित्वात् अ। तस्मिन् काले इत्यर्थे। "तदा विधिः कुण्डलनां विधोरपि" नैष॰।

**तदात्मन्** पु॰ स आत्मा यस्य। १तत्स्वरूपे २तदभिन्ने च। तस्य भावः ष्यञ्। तादात्म्य अभेदे "क्रमिकं यत्नामयुगमेकार्थेऽन्यार्थबोधकम्। तादात्म्ये न भवेदेषः समासः कर्मधारयः" शब्द॰ प्र॰।

"अभेदस्तादात्म्यं तच्च स्ववृत्त्यसाधारणो धर्मः। असाधारणत्वं चैकमात्रवृत्तित्वम्। एकमात्रवृत्तित्वञ्च स्वसामानाधिकरण्यस्वप्रतियोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टं यत्तदन्यत्वम्। इत्येकमात्रवृत्तिधर्म एव विशेषणविभक्त्यर्थः। वृत्तिश्च तत्र प्रकृत्यर्थस्य संसर्गमर्य्यादया आधारादीनां मुख्यकालीनत्वं स्यात् एवमनुयाजमात्रस्योत्कर्षे तदूर्द्ध्वभाविनां सूक्तवाकशंवाकादीनां मुख्यकालीधर्मत्वादिना सामान्यप्रत्यासत्त्या सुज्ञेयत्वमेव। अभेदस्य संसर्गतामते चैतादृशानुगतभेदस्यैव तथात्वमुचितम्। तत्तद्वृत्तित्वावच्छिन्नभेदाभावकूटस्य विशेष्य तथात्वे घटो न नील इत्यादि वाक्यजन्यबोधे प्रतियोग्यभावान्वयीतुल्ययोगक्षेमाविति न्यायेन तादृशानुगतसम्बन्धावच्छिन्नप्रतियोगिताकाभावा एव भासेरन् नीलादिवृत्तिप्रतियोगिताकैकैकाभावः। तथा सति तादृशैकैकाभाव तात्पर्येण प्रयुक्तस्य नीलोऽपि न नील इति वाक्यस्य प्रामाण्यं स्यात्" व्युत्प॰ गदा॰ "सत्यैक्ये मिथोभेदस्तादात्म्यम् तच्च तत्सत्तातिरिक्तसत्ताकत्वाभावः" वेदा॰ प॰ "तदात्मनोऽपि निषिध्यमानत्वे तन्निषेधात्मके तदात्मनि जगत्प्रवेशात्। न हि घटः पटात्मेत्यनेन घटस्वरूपादन्यस्तदात्मा विहितः स्यात् यदि तु तादात्म्यं नामाभेदाख्यो धर्मः कश्चिदिष्यते स घटपटाद्यधिकरणतया निषिध्यते तदा संसर्गाभाव एव स्यात्। तस्माद्विशेषण तदात्मान्तर्भूतं जगदिति कोट्यन्तराभाव इति"। श्रीहर्षखण्डने अन्योन्याभावखण्डने उक्तम्।

**तदात्व** न॰ तदेत्यस्य भावः तदा+त्व। तत्काले अमरः। "तदात्वायतिसंयुक्तः सन्धिर्ज्ञेयो द्विलक्षणः। "तदात्वे चात्यिकां पीडां तदा सन्धिं समाश्रयेत् "आयत्यां गुणदोषज्ञस्तदात्वे क्षिप्रनिश्चयः" इति च मनुः।

**तदादितदन्तन्याय** पु॰ न्यायभेदे अन्तभूतस्य कर्त्तव्यत्वे शास्त्रतः प्राप्ते आदिभूतस्योत्कर्षेण विधानबोधके न्यायभेदे। स च न्यायः जैमि॰ पञ्चमस्य प्रथमे पादे दर्शितो यथा। अग्नीषोमीयपशौ श्रूयते "तिष्ठन्तं पशुं प्रयजन्तीति"। अत्र प्रकृतौ पशुमारणानन्तरं हविष्प्राशादिते पश्चात् प्रयाजादय इज्यन्ते इति विकृतावित्यापि पशुमारणानन्तरं हविष्प्राशादिते प्रयाजाः प्राप्ताः ते च तिष्ठन्तमिति वचनात् जीवत्येव पशौ अपकृष्यन्ते। तथा सवनीयपशौ अनुयाजानामुत्कर्षः श्रूयते यथा अग्निलाभादूर्द्ध्वमनुयाजैश्चरन्तीति। अत्र संशयः। प्रयाजमात्रस्योत्कर्षः प्रयाजाद्यङ्गकलापस्यापकर्षः अनुयाजाद्यङ्गकलापस्योत्कर्षो वा इति। श्रुतयोरेव प्रयाजानुयाजयोरपकर्षोत्कर्षौ नतु तदाद्यन्तकलापयोस्तदङ्गप्रयाजापूर्वभाविनामाघारसामिधेन्यादीनां तदाद्यपकर्षेऽत्यन्तव्यवहितत्वेन प्रधानकालीनत्वं न स्यात् प्रयाजमात्रापकर्षे तु

भासते। तादृशश्च धर्मस्तदग्रतित्वादिरूप एव। अपूर्वव्यक्तिनिष्ठ तादृशधर्मस्य विशेष्य ज्ञातुमशक्यत्वेऽपि एकमात्रवृत्तिमत्त्वं स्यात् एवमनुयाजमात्रोत्कर्षे तदूर्द्ध्वभाविनां सूक्तवाकशम्युवाकादीनामुत्कर्षात् प्रधानसन्निधिर्न विलुप्यते तस्मात् प्रयाजमात्रस्योत्कर्षः तथा च सूत्रम् “अङ्गानां मुख्यकालत्वात् यथोक्तमुत्कर्षः स्यात्”। अङ्गानां मुख्यकालकर्त्तव्यत्वानुरोधात् यथोक्तस्यानुयाजमात्रस्योत्कर्ष इति प्राप्ते ब्रूमः। प्रकृतियागे सक्रमपदार्थानुष्ठानस्य क्लृप्तत्वात् विकृतावपि सक्रमाणां पदार्थानामतिदेशात् क्रमरूपाङ्गबाधस्यान्याय्यत्वात् उत्तरकालकर्त्तव्यकर्मपदार्थस्यानुपस्थितत्वानुष्ठानविलोपापत्तेः तदुक्तम् पूर्वेणोपस्थितं कार्य्यमुत्तरं कर्मचोदनात्। प्राप्तं तदन्यथा भावे क्रमलोपाद्विलुप्यते”। तस्मात् प्रयाजापकर्षे तदङ्गकलापस्यापकर्षः, अनुयाजोत्कर्षे तदाद्यङ्गकलापस्योत्कर्ष”, इति तत्त्ववा०। अनया दिशा मासिकानां सक्रमाणां करणे उत्कर्षापकर्षौ कल्पनीयौ।

**तदानीम्** अव्य० तस्मिन् काले-तद्+दानीम् विभक्तित्वात् अ। तदेत्यर्थे। “तदानीमपि पार्श्ववर्त्तिनाम्” भाग० ५।८।२१। तत्र भवः ख्युल् तुट् च। तदानीन्तन तत्र भवे त्रि० स्त्रियां ङीप्।

**तदाप्रभृति** त्रि० तदा तत्कालः प्रभृतिरादिर्यस्य तदाशब्दस्य सप्तम्यर्थवृत्तेरपि कथञ्चित् प्रथमार्थवृत्तिता। तत् कालादिके “तदाप्रभृत्येव विमुक्तसङ्गः” कुमा०।

**तदासुख** त्रि० तदा सुखं यस्य। प्रारब्धे।

**तदित्** त्रि० तदेति इण—क्विप् तुक्। तद्विषयके स्तोत्रे। “वयन्तु त्वा तदिदर्थाः” ऋ० ८।२।१६ यद्विषयकं स्तोत्रं तदित् तदेवार्थः प्रयोजनं येषाम्” भा०।

**तद्गत** त्रि० तत् गतः। १तत्परे २तदासक्ते च। तद्गतेनैव मनसा” रामा० बा० २अ०। “शुचिस्तद्गतमानसः” गीता

**तद्गुण** त्रि० तस्य गुण इव गुणोऽस्य। १तत्तुल्यगुणके २अर्थालङ्कारभेदे पु० १९८ पृ० लक्षणादि दृश्यम्। ६त०। ३तस्य गुणे पु०। “तद्गुणसारत्वात्” शा० सू०। तत्र प्रधाने गुणः विशेषणम्। ४प्रधानविशेषणे तद्गुणसंविज्ञानः।

**तद्गुणसंविज्ञान** पु० तत्र बहुव्रीहौ गुणस्य गुणीभूतस्य विशेषणस्य संविज्ञानं विशेष्यपारतन्त्र्येण बोधनं यत्र। व्याकरणोक्ते बहुव्रीहिसमासभेदे। भवति च लम्बकर्णमानयेत्यादौ गुणीभूतस्य कर्णस्याप्यानयने पारतन्त्र्येणान्वयबोधः। शब्द० प्र० स्वमते तल्लक्षणादिकमुक्त्वा प्राचीनमतसिद्धमप्युक्तं यथा “तदतद्गुणसंविज्ञानौ द्वौ भेदौ तदादिमः। विग्रहस्य विशेष्यो यस्तद्विशेष्यकबोधकृत्”। तद्गुणसंविज्ञानोऽतद्गुणसंविज्ञानश्च बहुव्रीहेर्द्वौ भेदौ। तत्र विग्रहवाक्यस्य विशेष्यविधया प्रत्याय्योयोऽर्थस्तद्विशेष्यकबोधकृद्बहुव्रीहिः तयोरादिमस्तद्गुणसंविज्ञानस्तस्य स्वार्थगुणीभूतस्य सम्यग्विशेष्यविधया विज्ञानं यस्मादिति व्युत्पत्त्या सान्वयसंज्ञकत्वात्। तद्भिन्नश्चातद्गुणसंविज्ञानश्चरमः इत्यर्थाद्गम्यते। घटस्वरूपः पदार्थः इत्यादितो हि घटः स्वरूपं यस्येति विग्रहस्थले स्वस्वरूपाभिन्नघटसम्बन्धित्वेन घटाभिन्नस्वस्वरूपसम्बन्धित्वेन वा विग्रहविशेष्यं कलसमेव विशेष्यविधया बोध्यते घटस्य स्वरूपं यस्मादिति विग्रहे च विग्रहस्य यद्विशेष्यं ततोऽन्यदेव स्वजन्यस्वरूपाभिन्नघटसम्बन्धित्वेन। कुटादिर्गण इत्यादिरपि कुट आदिर्यस्येति व्युत्पत्त्या कुटाभिन्नस्य स्वधर्मिकव्यवस्थाधर्मिणः सम्बन्धित्वेन धात्वन्तरमिव कुटमपि बोधयंस्तद्गुणसंविज्ञान एव बहुव्रीहिः। प्राचां मतेन तद्गुणसंविज्ञानबहुव्रीहिमन्यथा निर्वक्ति। “यः स्वार्थघटकार्थस्य स्वार्थान्वयिनि बोधने। अनुकूलो बहुव्रीहिः स तयोरयमादिमः”। यो बहुव्रीहिः स्वार्थस्यान्वयिनि स्वार्थघटकस्याप्यर्थस्यान्वयबोधने समर्थः स तयोस्तदतद्गुणसंविज्ञानयोरादिमः। लम्बकर्णमानय हारग्रीवं पश्येत्यादौ हि बहुव्रीहिर्लम्बस्वकर्णसम्बन्धिनः स्वग्रीवावृत्तिहारसम्बन्धिनश्च स्वार्थस्यान्वयिनि कर्मत्वादौ स्वार्थघटकीभूतस्य तादृशकर्णहारादेरपि व्युत्पत्तिवैचित्र्येणान्वयबोधने समर्थ इत्येवंविध एव तद्गुणसंविज्ञानस्तद्भिन्न एव चार्थादतद्गुणसंविज्ञानः। यथा दृष्टसागरमानय इत्यादाविति

**तद्दिन** न० कर्म०। “तस्मिन् दिने। तद्दिनं स्यादनध्यायं व्रतं तत्र न कारयेत्” मल० त०। १दिनमध्ये २प्रतिदिने च मान्तम् अव्य० शब्दार्थ चि०।

**तद्धन** त्रि० तदेव धनं यस्य। १कृपणे हेमच० स हि सर्वमेव धनमपर्य्याप्ततयावधार्य्य आत्मनि तद्धनत्वमेवाभिमन्यते कर्म०। २तस्मिन् धने न०।

**तद्धर्मन्** त्रि० स धर्मो यस्य अनिच् समा०। तथाभूतधर्मयुक्ते। “आकेस्तच्छीलतद्धर्म तत्साधुकारिषु” पा०

**तद्धित** त्रि॰ तस्मै हितम् । १तस्मै हिते । २व्याकरणोक्ते प्रत्ययभेदे पुंन॰ । "तद्धिताः ४।१।७६ पा॰ सूत्रमधिकृत्य "यूनस्तिः" इत्यादिना पञ्चमाध्यायसमाप्तिं यावद्ये प्रत्यया विहितास्ते तद्धितसंज्ञकाः ।

शब्द॰ प्रका॰ तल्लक्षणादिकमुक्तं यथा "विभक्त्यादिभिन्नकादन्यः प्रत्ययस्तद्धितं मतम् । नामप्रकृतिको नैवमतिव्याप्त्यादिदोषतः" । "विभक्तिधात्वंशजाद्भ्योऽन्यः प्रत्ययस्तद्धितः । इत्यक इत्यादौ सुखाद्यर्थकः कादिरपि तद्धितमेवेति । तदन्यत्वेनापि प्रत्ययं विशेषयन्त्यन्ये । नामप्रकृतिकप्रत्ययत्वन्तु न तद्धितस्य लक्षणं विभक्तौ क्यजादौ चातिव्याप्तेः पचतितरामित्यादौ तरामाद्यव्याप्तेश्च" । विभजते । "तस्यापत्यं तद्विशेषस्तद्वद्धेण युतेन्दुमान् । कालस्तथा तेन रक्तं तस्य व्यूहोऽथ वेत्ति तत् । अधीते वा देवताऽस्य सैवमादीन् यथायथम् । बोधयद्विविधानर्थांस्तद्धितं स्यादनेकधा" तेनास्य क्लीवत्वमपि "तद्धितस्यासर्वनामादेः" । "तद्धितश्चासर्वविभक्तिः" पा॰ । "समासतद्धितज्ञतां यत्किञ्चिदुपदर्शकम् । गुणप्रधानभावे च तस्य दृष्टो विपर्ययः" हरिकारिका । स च तद्धितो द्विविधः प्रकृत्यर्थभिन्नार्थकः स्वार्थिकश्चेति भेदात् ।

**तद्बल** पु॰ तस्मिन् बलं यस्मात् । १वाणभेदे "क्षुरप्रतद्बलार्द्धेन्दुताराशुख्याश्च तद्भिदः" हेम॰ । अस्य क्लीवोक्तिः प्रामादिकी "पुमान्" इत्यधिकारे "देवासुरात्मस्वर्गगिरिसमुद्रनखकेश दन्त स्तन भुज कण्ठ खड्ग शरपङ्काभिधानानि" पा॰ "पुंस्त्वे सभेदानुचराः सपर्यायाः सुरासुराः । स्वर्गयागाद्रिमेघाब्धिद्रुकालासिशरारयः" अम॰च पुंस्त्वोक्तेः

**तद्भाव** पु॰ तस्य भावः असाधारणधर्मः प्राप्तिर्वा । १तदसाधारणे धर्मे यथा घटे घटत्वम् । गोगौत्वम् । २तद्रूपप्राप्तौ च "अभूततद्भावे च्विः" "पयसस्तद्भावात्" कात्या॰ श्रौ॰ ४।१।२२ सू॰ । ७त॰ तस्मिन् भावः तद्विषयकचिन्तने "सदा तद्भावभावितः" गीता ।

**तद्राज** पु॰ तस्य राजा टच् । १तस्य न्टपतौ २तदर्थविहिते तद्धितप्रत्ययभेदे च । "ते तद्राजाः" पा॰ ते अञादयस्तद्राजसंज्ञकाः स्युः "ञ्यादयस्तद्राजाः" पा॰ "पूगात् ञ्य इत्यारभ्य उक्ताः तद्राजसंज्ञका स्युः" सि॰ कौ॰। तद्राजस्य बहुषु अस्त्रियाम् लुक् ।

**तद्र** अवसादे मोहे च सौ॰ पर॰ अक॰ सेट् इदित् । तन्द्रति अतन्द्रीत् । तन्द्रा

**तद्र्यञ्च(च्)** त्रि॰ तदञ्चति गच्छति पूजयति वा—अन्च्—गतौ पूजायां वा क्विप् टेरद्र्यादेशः पूजार्थत्वे न नलोपः । १तद्गामिनि २तत्पूजके च ।

**तद्वत्** अव्य॰ तेन तुल्यं या तस्या सा चेत् क्रियेत्यर्थे वति । १तत्सदृशक्रियावति । तस्येव तस्मेव वा इत्यर्थे वति । २तत्तुल्येऽर्थे यथा तद्वत् शिवस्य विभुता, तद्वत् शिवे भक्तिरित्यादि । "तद्वत्तादृशि च स्थितम्" स्वाङ्गलक्षणम् । "चित्रं यथाश्रयमृते स्थाख्वादिभ्यो विना यथा छाया । तद्वद्विना विशेषैर्न तिष्ठते निराश्रयं लिङ्गम्" "पुरुषस्य मोक्षार्थं प्रवर्त्तते तद्वदव्यक्तम्" सा॰ का॰ । "यत्पूर्वेद्दिष्टो तद्वत् प्रातिलोम्येऽपि जन्मनि" मनुः । तद् अस्त्यर्थे मतुप् मस्य वः । ३तद्विशिष्टे त्रि॰ "तद्वानपोहो वा शब्दार्थः" काव्य॰ प्र॰ "द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये" । "अथ वा तत्प्रकारं यज्ज्ञानं तद्विशेष्यकम्" भाषाप॰ स्त्रियां ङीप् । तस्य भावःतल् । तद्वत्ता तद्विशिष्टत्वे स्त्री"पदार्थे तत्र तद्वत्ता योग्यता परिकीर्त्तिता"भाषा॰।

**तद्विध** त्रि॰ सा विधा प्रकारो यस्य । तत्प्रकारे "धर्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा" मनुः । "क तद्विधात्वं क च पुण्यलक्षणा" कुमा॰ ।

**तन** विस्तृतौ तना॰उभ॰सक॰ सेट् । तनोति तनुते अतानीत् अतनीत् अतत-अतनिष्ट ततान तेनतुः तेने । उदित् तनित्वा तान्त्वा । ततः वितानः । "तनोति भानोः परिवेषकैतवात्" नैष॰ । "आचार्य्यस्तनुते विवृतिमिमां दायभागस्य" । दायभागटीका "ततान सोपानपरम्परामिव" रघुः । "यस्य तस्य विना यर्थौ तेनेति करणं विना" उद्भटः । "तेनिरेऽभिरुचितेषु तरुण्यः" माघः "स ततौ तमोभिरभिगम्य तताम्" माघः "तम्यता प्रथमतादृशि रागम्" माघः ।

अति+अतिशयविस्तारे । अतितत् । "तन्वतोऽतिततातितत्" माघः ।

वि+अति+व्यतिहारेण विस्तारे आत्म॰ "वियति व्यत्यतन्वातां मूर्त्ती हरिपयोनिधी" भट्टिः । [५।१।५।७ सू॰ ।

अधि+आरोप्य विस्तारे । "धनुरधितनोति" शत॰ ब्रा॰

अनु+सन्ततविस्तारे पश्चाद्विस्तारे च "परिपाल्यानुतनुयाद्देशधर्मः सनातनः" भा॰ शा॰ ११२ अ॰ ।

अप+अधोविस्तारे । अपतानकः ।

अव+सन्ततविस्तारे "विशालमूलावततं पवनामोदधारिणम्" हरिवं॰ ८८ अ॰ ।

आ+दीर्घतया विस्तारे । आतानः (टाना देओया) सम्यक्-

विस्तारे च "मौर्वी धनुषि चातता" रघुः। यद्गत पुनरात्मानुस्मृतिमोषणं मायामयभोगैश्वर्यमेवातनुत" भाग० ५।२४।२२ "इदं ते लोभान्धस्य चेष्टितं चेतसि चमत्कारमातनोति" प्रबोध० च०। [किरणावली।

वि+आ+विशेषेण विस्तारे। "व्यातेने किरणावलीमुदयनः"

उद्+ऊर्द्ध्वतो विस्तारे उत्तानः।

प्र+प्रकर्षेण विस्तारे। "फलं प्रकल्प्य पूर्वं हि ततो यज्ञः प्रतायते" भा० शा० ८६१२ श्लो०। "तदुरीकृत्य कृतिभिर्वाचस्पत्यं प्रतायते" माघः। पक्षे प्रतन्यते।

वि+विशेषेण विस्तारे वितानः (चड्राण देओया) "यथा लूता आतानवितानाभ्यामिति" वेदान्तप्र०।

सम्+सम्यग्विस्तारे सन्तानः सन्ततिः सन्ततम् "सन्तता शुशुभे भूमिः" रामा० कि० १४ अ०।

**तन** उपकारे श्रद्धायां आघाते च वा०चुरा० उभ० पक्षे भ्वा० सक० शब्दे अक० सेट्। तानयति ते तनति अतीतनत् त अतानीत् अतनीत्। वि+उपसर्गात् दैर्घ्ये अक० दीर्घीकरणे सक०। वितानयति दीर्घो भवति दीर्घं करोति वा। "वितानयति यः कीर्त्तिं वितनत्यमलं यशः" कविरहस्यम् "अयं वेदे गणव्यात्ययात् दिवा०"घोषा घोषादिन्द्राय तन्यति ब्रुवाणः" ऋ० ६।१८।२। "तन्यति शब्दं करोति" भा०। चौरादिकस्य अदन्तत्वमिति तनयित्नुशब्दार्थे माधवः तनयित्नुशब्दे दृश्यम्।

**तनय** पुंस्त्री० तनोति कुलम् तन–कयन्। १पुत्रे। २दुहितरि, ३चक्रकुल्यायां, (चाकुलिया) लतायां, ४पृतकुमार्य्याञ्च स्त्री टाप्। "अथैनमद्रेस्तनया शुशोच" कुमा०। तनयाशब्दस्य प्रियादिषु पाठात् पूर्वपदस्य न पुंवत्। तनया जाता अस्य तनयाजातः इत्यादिः।

५लग्नावधिकपञ्चमस्थाने पु०। "जनयति तनयभवनमुपगतः" वृ० स०।

**तनयित्नु** पु० चु० स्तन–शब्दे इत्नु पृषो० सलोपः अदन्तचुरा० तन–शब्दे इत्नु माधवः। १अशनौ "अग्निं पुरा तनयित्नोरचित्तात्" ऋ० ४।३।१ "तनयित्नुरशनिः" भा० २मेघे च "एकपात्तनयित्नुरर्णवः"ऋ०१०।६६।११। "तनयित्नुर्मेघः" भा०।

**तनस्** पु० तनोति वंशम् तन–असुन्। पौत्रादौ "मा शेषसा मा तनसा" ऋ० ५।७०।४। "तनसा पौत्रादिना" भा०

**तना** स्त्री तन–अच् टाप्। धने निघण्टुः।

**तनादि** पु० पा० धातुपाठोक्ते धातुगणे। स च धातुपाठे वोपदेवेन तत्सूचकं द इत्यनुबन्धयुक्ततया पठितः। "तनादिकृञ्भ्य उः"। "तनादिभ्यस्तथासोः" पा०। तनादौ गणे पठितः ठक्। तानादिक तद्गुणपठिते धातौ।

**तनिका** स्त्री तन्यते धातूनामनेकार्थत्वात् बध्यते अनया करणे इन् संज्ञायां कन् कापि अतइत्त्वम्। बन्धनरज्जौ शब्दार्थचि०।

**तनिमन्** पु० तनोर्भावः तनु+इमनिच्। १तनुत्वे, २कार्श्ये च। "विरलातपस्तनिमानमभजत" काद०। तनयति तनुं करोति तनु+णिच् इमनिच् डिद्वद्भावे टिलोपः। ३यकृति। "अथ पार्श्वयोरथ तनिम्नोऽथ वृक्कयोः" शत० ब्रा० १२।८।३।१७। "तनिम्नः यकृतः" भा० तस्य तनूकरणात् तथात्वम्।

**तनिष्ठ** त्रि० अयमनयोरतिशयेन तनुः तनु+इष्ठन् डिद्वद्भावः। द्वयोर्मध्ये एकस्मिन् अतिशयेन तनौ। वेदे बहुभ्यो निर्द्धारणेऽपि इष्ठन्। २बहूनां मध्ये एकस्मिन्, अतिशयेन तनौ च "एतेषां लोकानां अन्तरिक्षलोकस्तनिष्ठः" शत० ब्रा० ७।१।२।२०। लोके तु तन्वर्थे ईयसुन् तनीयानित्येव।

**तनीयस्** त्रि० बहूनां मध्येऽयमतिशयेन तनुः ईयसुन् डिद्वत्। बहूनां मध्ये एकस्मिन् अतिशयेन तनौ "पक्षपुच्छानि तनीयांसीव" शत० ब्रा० ८।७।२।१ स्त्रियां ङीप्।

**तनु** स्त्री तनोति कर्म्म कार्श्यं वा तन–उन्। शरीरे अमरः २त्वचि राजनि०। "तनुभिरवतुवस्ताभिरष्टाभिरीशः" शकु०। "तनौ ममुस्तत्र न कैटभद्विषः" "बभार वाष्पैर्द्विगुणीकृतं तनुः" माघः। वा ऊङ्। तनूः इत्यपि तन्वर्थे तनूजः। ३कृशे ४अल्पे ५विरले च त्रि०मेदि०। "तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत् स्त्रियम्" मनुः। स्त्रियां वा ङीप् तन्वी। "तव तन्वि! कुचावेतौ नियतं चक्रवर्त्तिनौ" उद्भटः। सा च ६कृष्णभार्य्याभेदे "शैब्यस्य च सुतां तन्वीं रूपेणाप्सरसां समाम्" हरिवं० ११८ अ०। "भूतसुमीनैर्यतिरिह भतनामतभौ भतनास्व यदि भवति तन्वी" वृ०र० उक्ते चतुर्विंशत्यक्षरपादके ७छन्दोभेदे च तनोर्भावः तल् तनुता कार्श्ये स्त्री "तनुतां दुःखमनङ्ग मोच्यति" कुमा० "सर्वाणि तनुतां यान्ति जलानि जलदक्षये" हरिवं० १८२५। त्व तनुत्व तन्वर्थे न०। योगशास्त्रोक्तेषु दग्धबीजभावेषु अप्ररोहापन्नेषु दर्शनितादिषु "अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम्" पात० सू०। "दग्धबी-

कानामप्ररोहस्ततनुत्वमुच्यते प्रतिपक्षभावनोपहताः क्लेशास्तनवो भवन्ति" भा०। तेन प्रतिपक्षभावनया अस्मितादिक्लेशानां तनुत्वात् तनुसंज्ञेति तदर्थः। ज्योतिषोक्ते स्त्री लग्नस्थाने स्त्री०। "तनुनिधनखभेशाः केन्द्रकोणे त्रिलाभे" जातकाल०। स्वार्थे क। तनुक तनुशब्दार्थे।

**तनुक्षीर** पु० तनु अल्पं क्षीरं निर्यासोऽस्य। आम्रातके राजनि०

**तनुच्छद** पु० तनुं देहं छादयति छादेः हस्वश्च। १कवचे वर्मणि। "तरुपलाशसवर्णतनुच्छदः" "मातलिस्तस्य माहेन्द्रमामुमोच तनुच्छदम्" रघुः।

**तनुच्छाय** पु० तन्वी स्वल्पाच्छाया यस्य। १बर्बुरवृक्षे राजनि०। ६त०। २देहच्छायायां स्त्री। तन्वी अल्पा छाया यस्य। ३अल्पच्छायायुक्ते त्रि०। तन्वी छाया कर्म०। ४अल्पच्छायायां स्त्री।

**तनुज** पुंस्त्री० तनोर्देहात् जायते जन–ड ५त०। पुत्रे हलायुधः २कन्यायां स्त्री ३लग्नावधिकपञ्चमस्थाने ज्यो०

**तनुत्र** न० तनुं त्रायते त्रै–क। वर्मणि "काण्डीरः खाड्गिकः शार्ङ्गी रचन् चिप्रांस्तनुत्रवान्" भट्टिः। "अचिताराश्च विव्याध द्विषतः स तनुत्रिणः" माघः।

**तनुत्राण** न० तनुस्त्रायतेऽनेन त्रै–करणे ल्युट्। वर्मणि हारा०

**तनुत्वच्** स्त्री तन्वी त्वग् वल्कलं यस्याः। क्षुद्राग्निमन्थे राजनि०। २सूक्ष्मत्वग्युक्ते त्रि०।

**तनुपत्र** पु० तनूनि क्षयानि पत्राणि यस्य। १इङ्गुदीवृक्षे राजनि०। २स्वल्पपत्रयुक्तवृक्षमात्रे त्रि०।

**तनुभव** पु० तनोर्भवति भू–अच् ५त०। १पुत्रे "इष्यते तनुभवः शिशिरांशो" इ०सं० १७ अ०। २दुहितरि स्त्री

**तनुभस्त्रा** स्त्री तनोर्देहस्य भस्त्रेव। १नासिकायाम् शब्दरत्ना०। कर्म०। क्षुद्रभस्त्रायाम्।

**तनुभृत्** त्रि० तनुं बिभर्त्ति भृ–क्विप् ६त०। देहधारिणि "छायाफलं तनुभृतां सुखमादधाति" इ० स० ६८ अ०।

**तनुमध्या** स्त्री तनु कृशं मध्यं यस्याः। १कृशमध्यायां स्त्रियां २षडक्षरपादके छन्दोभेदे च। "तौ चेत् तनुमध्या"। "मूर्त्तिर्मुरशत्रोरत्यद्भुतरूपा। आस्तां मम चित्ते नित्यं तनुमध्या" छन्दोम०। ३अल्पमध्यके त्रि०।

**तनुरस** पु० तनो रस इव। घर्मे हारा०।

**तनु(नू)रुह्** न० तनौ तन्वां वा रोहति रुह–क्विप् ७त०। लोमनि शब्दर०। [लोमनि शब्दर०।

**तनु(नू)रुह** न० तनौ तन्वां वा रोहति रुह–क ७त०।

**तनुल** त्रि० तन–उलच्। विस्तृते संक्षिप्तसा०। [वातस्थाने त्रि०।

**तनुवात** पु० तनुरल्पो वातोऽत्र। १नरकभेदे हेमच०। २अल्प-

**तनुवार** न०तनुं देहं वृणोति वृ-अच् उपस०। कवचे वाचस्पत्ये शब्दार्थचि०। [राजनि० २स्वल्पबीजयुक्ते त्रि०।

**तनुबीज** पु० तनूनि कृशानि बीजानि यस्य। १बीजवदरे।

**तनुव्रण** पु० तनुरल्पो व्रणो यतः। वल्मीकरोगे शब्दर०।

**तनुस्** न० तन-उसि। देहे उणादिको०।

**तनुसञ्चारिणी** स्त्री तनु अल्पं सञ्चरति सम्+चर–णिनि ङीप्। १बालिकायां शब्दार्थचि०। २अल्पसञ्चारयुक्ते त्रि०।

**तनुसर** पु० तनोः सरति सृ–अच् ५त०। स्वेदे घर्मे शब्दार्थचि०।

**तनुह्रद** पु० तनो-र्ह्रद इव। पायौ त्रिका०।

**तनू** पु० तनोति कुलं तन–ऊ। १पुत्रे। "ता वां विश्वको हुवते तनूकृथे" ऋ० ८।८६।१॥ "तनोति कुलं तनूः पुत्रः" भा० तनोति कर्म उन् ऊङ्। २शरीरे अमरः। ३प्रजापतौ ४गवि ५अप्सु च तनूनपाच्छब्दे दृश्यम्।

**तनूक्र** अतनुं तनुं करोति तनु+अभूततद्भावे च्वि कृञोऽनु० प्रयोगः अल्पीकरणे तनूकरोति "लज्जां तनूकृत्य नरेन्द्र-कन्या" रघुः। "समाधिभावनार्थः क्लेशतनूकरणार्थश्च" पातं०सू०। "तनूकृतोऽपि प्रमतिश्च कारवे" ऋ०१।३१।८

**तनूकृत** त्रि० तनूकृ–कर्मणि क्त।१तष्टे २अल्पीकृते च अमरः।

**तनूज** पु० तन्वाः देहात् जायते जन–ड ५त०। १पुत्रे २कन्यायां स्त्री। "समादिदेश प्रयतां तनूजाम्" कुमा० तनूजनि तनूजात तनूजन्मादयोऽप्यत्रार्थे यथायथं पुंस्त्री

**तनूद्भव** पु० तनोरुद्भवति उद्+भू–अच् ५त०। १पुत्रे २दुहितरि स्त्री। "पञ्चभूतपरित्यक्तं शावं तं स्वतनूद्भवम्" हरिवं० २० अ०। [तनूनपात्।

**तनूनप** न० तन्वा ऊनं कृशं पाति–पा–क। घृते शब्दच०

**तनूनपात्(द्)** पु० तनूं न पातयति पत-णिच्-क्विप् नभ्राडित्यादिना नञोन नलोपः। तनूनं पाति रक्षति पा-शतृ, तन्वा ऊनं कृशं पाति तनूनपं घृतं तदत्ति अद्-क्विप् वा। अग्नौ, जठरस्थितस्य भुक्ताद्यादिपाचनादस्य देहापालकत्वम्। शतृपक्षे तनूनपान्तौ इत्यादि क्विप्पक्षे तनूनपादौ इत्यादि भेदः। २घृते न०६त०। ३प्रजापतिपौत्रे।"नराशंसः प्रतिधूरोमिमानस्तनूनपात् प्रतियज्ञस्य धाम" यजु० २०।३७ तनूनपात् तनोति विस्तारयति सृष्टिं तनूः प्रजापतिः मरीचिस्तस्य नपात् पौत्रः कश्यपात्मज इत्यर्थः यद्वा तनूं शरीरं न पातयति रक्षति जाठराग्निरूपेणेति

तनूनपात् अग्निः यद्वा तनोति भोगानिति तनूः गौस्तस्या नपात् पौत्रं घृतम् गोः पयो जायते पयस आज्यमिति घृतं तनूनपाद्वा” वेददी० निरुक्ते अस्य निरुक्तिर्दर्शिता यथा “तनूनपादाज्यं भवति नपादित्यनन्तरायाः प्रजाया नामधेयं भवति गौरत्र तनूरुच्यते तता अस्यां भोगास्तस्याः पयो जायते, पयस आज्यं जायते। अग्निरिति शाकपूणिरापोऽत्र तन्व उच्यन्ते तता अन्तरिक्षे, ताभ्य ओषधिवनस्पतयो जायन्त ओषधिवनस्पतिभ्य एष जायते। तस्यैषा भवति। “तनूनपात् पथ ऋतस्य यानान् मध्वा समञ्जन्स्वदया सुजिह्व” निरु० ८।६। अन्यु ३ स्यके ४प्रयाजभेदे च।

तनूनपाद्यागश्च वसिष्ठशुनकात्रिवध्र्यश्वराजन्यभिन्नानां प्रयाजेषु द्वितीयः वसिष्ठादीनां तु नराशंसो द्वितीय इति भेदः यथोक्तं आश्व०श्रौ० १।५।६ “प्रयाजैश्चरन्ति” “पञ्च ते भवन्ति” पञ्चवचनं नराशंसः तनूनपाद्वा द्व्यामुष्यायणाश्चापि पञ्चैव भवन्ति न षडेकेत्येवमर्थम्। एत इति वचनम् अत्र पठिता एवैते तनूनपान्नराशंसयोरन्यतरेण सह पञ्च भवन्ति नापठितेन षडेकेत्येवमर्थम्” नारा०। ते यजान्ते प्रत्युपक्रमे “समिधः अग्न आज्यस्य व्यन्तु २ वौश्वन्निति वषट्कारः १५ सू०। “इति प्रथमः” १६ सू०। “अयं प्रथमः प्रयाजः” नारा० “तनूनपादग्न आज्यस्य वेत्विति द्वितीयोऽन्यत्र वसिष्ठशुनकात्रिवध्र्यश्वराजन्येभ्यः”। २१सू०। “नराशंसो अग्न आज्यस्य वेत्विति तेषाम्” २२। सू० “वसिष्ठादीनामयं द्वितीयः” नारा० “इडो अग्न आज्यस्य व्यन्त्विति तृतीयः”। २३ सू०। “सर्वेषामिति शेषः” नारा० “बर्हिरग्न आज्यस्य वेत्विति चतुर्थ आग्नेयं पञ्चमे स्वाहाग्निं स्वाहाग्निमिति”२४सू० इत्यादि। वसिष्ठादिभिन्नानां समिद्यागतनूनपाद्यागः इडोयागः बर्हिर्यागः स्वाहाकारयाग इत्येते पञ्चैव प्रयाजा इत्यवधेयम्। वसिष्ठादीनां तनूनपात्स्थाने नराशंस इति भेदः। अतएव श्रुतौ “समिधो यजति तनूनपातं यजति इडो यजति बर्हिर्यजति स्वाहाकारं यजतीत्येव पञ्च पठिताः वसिष्ठादिभिन्नपरतया व्यवस्थाप्याः।“बभार वाष्पैर्द्विगुणी कृतं तनूस्तनूनपाद् धूमवितानमाधिजाः” माघः। “तनूं न पातयति जाठररूपेण धारयतीति” मल्लि०।

**तनूनप्तृ** न पातयति नप्ता इत०। वायौ तनोति तनूः परमात्मा आकाशस्तस्य पुत्रो वायुस्तस्य नप्ता पौत्रः वायुर्हि आत्मजाताकाशजातत्वात् ब्रह्मपौत्रः “तस्माद्वा एतस्मादात्मन आकाशः सम्भूत, आकाशाद्वायुः” इति श्रुतेस्तस्य तथात्वम्। “तनूनप्तुरेव शाक्वरस्येति यो वा अयं पवत एष तनूनपाच्छाक्वरः सोऽयं प्रजानामुपद्रष्टा प्रविष्टस्ताविमौ प्राणोदानौ” शत० ब्रा० ३।४।२।५ “तन्वा देहस्य नपातयिता रक्षको देवस्तनूनप्ता अथवा सर्वतनूरात्मा प्रजापतिः तस्याकाशः पुत्रः तत् पुत्रो वायुरिति तनूनप्ता वायुः स च शाक्वरः शक्तः सर्वं कर्तुम्” । भा०

**तनूपा** पु० तनूं पाति पा—क्विप्। इत०। जठराग्नौ जठरानले “तनूपा अग्नेऽसि तन्वं मे पाहि” यजु० ३।१७ जठरानलेन भुक्तान्ने जीर्णे रसवीर्यादिपाके सति देहपालनं भवतीति तस्य तथात्वम्। तन्वमिति छान्दसः प्रयोगः। २देहपालकमात्रे च “अमस्य उग्रोऽविता तनूपाः” ऋ० ४।१६।२० “तनूपाः इन्द्रः” भा०

**तनूरुह** न० तनौ रोहति रुह क। १लोमनि २पक्षिणां पक्षे च मेदि०। “तनुस्तनूरुहलुतलक्ष्मीकृतामिति” नैषधम्। ३पुत्रे ४गरुति ५लोमनि च पु० हेमच०। “कुक्कुटस्तनूरुहाकृतिः” सु० स० ६३ अ०। “तस्य तद्वचनं श्रुत्वा सम्प्रहृष्टतनूरुहः” भा० आ० १००अ०। “वक्राकाञ्जननिभं वराहकतनूरुहम्” हरिवं० ४३ अ०।

**तनूर्ज** पु० मनुभेदोत्तमपुत्रे ऋषभेदे। “औत्तमेयान् महाराज! दश पुत्रान् मनोरमान्। इष ऊर्जस्तनूर्जश्च मधुर्माधव एव च” हरिवं०७अ०।

**तनूहविस्** न० वैदिकेषु तनूरूपेषु हविःषु। “द्वादशाहान्ते तनूहवींषि निर्वपति” कात्या० श्रौ० ४।१०।७। “तनूहवींषि अग्नये पवमानायेत्यादीनि निर्वपति” कर्कः तानि च “अग्नये पवमानाय प्रथमा” ८ सू० “अग्नये पावकायाग्नये शुचये च द्वितीया” ९ सू० “अदित्यै चरुस्तृतीया” १०। इत्युक्तानि

**तनच** गतौ भ्वा० पर० सक० सेट्। तञ्चति अतञ्चीत्। ततञ्च ततञ्चतुः तञ्चः। तञ्च्यते। उदित्। तञ्चित्वा तक्त्वा।

**तनच** सङ्कोचे रुधा० पर० सक० सेट्। पाणिनीयमते अनज साहचर्यादयं वेट्केव वोपदेवमते उदित्करणं प्रामादिकम् किन्तु उदिदेव। तनक्ति अतञ्चीत् अताङ्क्षीत्। ततञ्च। “तनच्मि व्योम विस्तृतम्” भट्टिः।

आ+आतञ्चनशब्दोक्तार्थेषु (दम्बलदेकोया)“इन्द्रस्य त्वा भागं सोमेनातनच्मि” यजु० १।४। “उद्वासयातनक्ति प्रागधनप्रभेणेन्द्रस्य त्वेति”कात्या०श्रौ०४।२।२३“तां दुग्धस्यादौ

रत उद्वास्य प्रागघृतशेषेण पूर्वदिने कृताग्निहोत्रशेषेण दध्ना दुग्धमातनक्ति अवशिष्टं दधि दुग्धमध्ये प्रक्षिपति दधित्वसम्पत्त्यर्थम्” कर्क्कः। १भयहेतुकसङ्कोचे च न्यङ्कु० कुत्वम् आतङ्कः। आतङ्कम्।

**तन्ज** सङ्कोचे रुधा० पर० सक०। पाणिनीयगणे (तञ्चू) इत्यत्र तन्ज् इति पाठान्तरम् अयमूदित्त्वात् वेड्वे। तनक्ति अतङ्क्षीत् अताङ्क्षीत्। ततङ्क्ष।क्षीत् अतन्तसीत्।

**तन्त्स्** दुःखे कण्ड्वा० अक० पर० सेट्। तन्त्सयति अतन्त-

**तन्ति** स्त्री तन–कर्मणि क्तिच् वेदे दीर्घनलोपाभावौ। १दीर्घप्रसारितायां रज्ज्वाम्। “वत्सानां न तन्तयस्त इन्द्र”। ऋ० ६।२४।४। “तन्तिर्नाम दीर्घप्रसारिता रज्जुः” भा० लोके तु ततिः तातिरित्येव क्वचिदार्षेऽपि तथा। “साऽसज्जत शिवसतन्त्यां महिषी कालयन्त्रिता” भाग० ७।२।५२। २गवां मातरि च तन्तिपालः। वा ङीप् तन्ती गवां मातरि “तन्तीं प्रसाय्यमाणां वद्धवत्सां चानुमन्त्रयेतेयं तन्ती गवां मातेति गोपथब्रा० १।६।७

**तन्तिपाल** पु० तन्तिं गोमातरं पालयति पालि–अण् उप० स०। २गोमातृपालके। अस्य “गोतन्तियवं पाले” पा० आद्युदात्तता। २सहदेवे च “तेषां गोसंख्य आसं वै तन्तिपालेति मां विदुः” भा० वि० १० अ०। अत्र तन्तिपालेति पाठान्तरं तदभिप्रायेण तन्तिं वशीभूततां पालयतीति विग्रहेण तन्तिपालं वचनकरमिति नीलकण्ठेनोक्तम् “तन्तिपाल इति ख्यात नाम्नाऽहं विदितस्तथा” भा० वि० १६ अ० इत्यत्र तथैव पाठः।

**तन्तु** पु० तन–तुन्। १सूत्रे अमरः तन्तुवायः। तन्तुदामनपर्वणोः” नरसिं०पु० “तस्मिन्नोतमिदं प्रोतं विश्वं शाटीव तन्तुषु” भाग० ८।८।७। “तिरश्चि यन्ते क्रमितन्तुजालैः” रघुः। २ग्राहे हेम०। ३सन्ताने “तेषामुत्पन्नतन्तूनामपत्यं दायमर्हति” मनुः। “संवेष्टमानं बहुभिर्मोहात्तन्तुभिरात्मजैः। कोषकार इवात्मानं वेष्टयन्नावबुध्यसे” भा० शा०३३१अ०। [गौरा० ङीष्।

**तन्तुक** पु० तन्तुरिव कायति कै–क। १सर्षपे २नाड्यां स्त्री

**तन्तुकाष्ठ** न० तन्तुयुक्तं काष्ठम्। (ताँतेर काटि) तन्तुवायोपकरणे तन्तुकाष्ठभेदे शब्दर०। [जटाधरः।

**तन्तुकीट** पु० तन्तोः तन्त्वर्थं कीटः। (गुटीपोका) कीटभेदे

**तन्तुन** पु० तन–वा० तुनन्। १ग्राहे (हाङोर) ख्याते जलजन्तुभेदे हेम०।

**तन्तुनाग** पु० तन्तुर्नाग इव। इहद्ग्राहे त्रिका०।

**तन्तुनाभ** पु०तन्तुर्नाभावस्य अच् समा०।(माकड़सा) लूतायाम्

**तन्तुनिर्य्यास** पु० तन्तुरिव निर्य्यासो यस्य। तालवृक्षे। शब्दर०।

**तन्तुपर्वन्** न० तन्तोः यज्ञोपवीतसूत्रस्य दानरूपं पर्व यत्र। चान्द्रश्रावणपौर्णमास्याम् तद्दिने हि वामनाय यज्ञोपवीतदानोत्सवः स्मृतौ विहितः। राघवभट्टधृतनारसिंहवचनम्। “शिष्यस्विजन्मदिवसे संक्रान्तौ विषुवायने। सत्तीर्थेऽर्कविधुग्रासे तन्तुदामनपर्वणोः। मन्त्रदीक्षां प्रकुर्वाणो मासर्क्षादीन्न शोधयेत्”। तन्तुपर्व परमेश्वरोपवीतदानतिथिः श्रावणी पूर्णिमा” रघुनन्दनः।

इयं तिथिः रक्षासूत्रबन्धरूपोत्सवदिनत्वात्तथोक्तापि तथा च तस्यां रक्षासूत्रबन्धनप्रकारः निर्णयसि० दर्शितो यथा “अत्रैव रक्षाबन्धनमुक्तं हेमाद्रौ भविष्ये “संप्राप्ते श्रावणस्यान्ते पौर्णमास्यां दिनोदये। स्नानं कुर्वीत मतिमान् श्रुतिस्मृतिविधानतः। उपाकर्मादिकं प्रोक्तमृषीणां चैव तर्पणम्। शूद्राणां मन्त्ररहितं स्नानं दानं च शस्यते। उपाकर्मणि कर्तव्यमृषीणां चैव पूजनम्। ततोऽपराह्णसमये रक्षापोटलिकां शुभाम्। कारयेदक्षतैः शस्तैः सिद्धार्थैर्हेमभूषितैरिति” अत्रोपाकर्मानन्तर्यस्य पूर्णमासीतिथौ वार्षिकस्यानुवादो न तु विधिः गौरवात् प्रयोगविधिभेदे च क्रमायोगात् शूद्रादौ तदयोगाच्च। तेन परेद्युरुपाकरणे पूर्वेद्युरपराह्णे तत्करणं सिद्धम्। इदं भद्रायां न कार्यम् “भद्रायां द्वे न कर्त्तव्ये श्रावणी फाल्गुनी तथा। श्रावणी नृपतिं हन्ति ग्रामं दहति फाल्गुनीति” संग्रहोक्तेः तत्सत्त्वे तु रात्रावपि तदन्ते कुर्य्यादिति निर्णयामृते। इदं प्रतिपद्युतायां न कार्यम् “नन्दायादर्शने रक्षाबलिदानं दशासु च। भद्रायां गोकुलक्रीडा देशनाशाय जायते” इति मदनरत्ने ब्रह्मवैवर्तात् भविष्ये “उपलिप्ते गृहमध्ये दत्तचतुष्के न्यसेत् कुम्भम्। पीठे तत्रोपविशेद्राजामात्यैर्युतस्य सुमुहूर्ते। तदनु पुरोधा नृपते रक्षां बध्नीत मन्त्रेण”। इदं रक्षाबन्धनं नियतकालत्वात् भद्रावर्जं ग्रहणदिनेऽपि कार्यं होलिकावत्। ग्रहसंक्रान्त्यादौ रक्षानिषेधाभावात् “सर्वेषामेव वर्णानां सूतकं राहुदर्शने” इति तत्कालीनकर्मपरमेव न त्वन्यत्र। अन्यथा होलिकायां का गतिः। अतएव “नित्ये नैमित्तिके जप्ये होमयज्ञक्रियासु च। उपाकर्मणि चोत्सर्गे ग्रहवेधो न विद्यते” इति नियतकालीने तदभाव इति दिक्। उपाकर्मणीति तद्दिनभिन्नपरं तत्तन्निषेधादिस्तुक्तं प्राक्। मन्त्रस्तु

"येन बद्धो बलीराजा दानवेन्द्रो महाबलः। तेन त्वामपि बध्नामि रक्षे! मा चल मा चल"। "ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैरन्यैश्च मानवैः कर्तव्यो रक्षणाचारो द्विजान् संपूज्य शक्तितः" इति।

**तन्तुभ** पु॰ तन्तुना सन्तत्या भाति भा—क। १सर्षपे २वत्से च जटाधरः। "मरीचं पिप्पलं कोषं जीरकन्तन्तुभं तथा। संस्कारे च समत्ते च महादेव्यै निवेदयेत्" कालि॰ पु॰। "तन्तुभं सर्षपम्" रघुनन्दन।

**तन्तुवर्द्धन** त्रि॰ तन्तुं सन्तानं संसारं वा वर्द्धयति छिनत्ति वा वृध—वृद्धौ णिच् ल्यु वर्द्धि छेदने ल्यु वा। १तन्तुवर्द्धके २तन्तुच्छेदके च। ३परमेश्वरे पु॰। "शुभाङ्गो लोकसारङ्गः सुतन्तुस्तन्तुवर्द्धनः" विष्णु स॰। "तन्तुं सन्ततिं संसारं वर्द्धयति छेदयति वा ज्ञानदानेन" भा॰।

**तन्तु(र)ल** न॰ तन्तुर्विद्यतेऽस्य र-लच् वा। मृणाले। हेमच॰

**तन्तुवाप** त्रि॰ तन्तून् वपति वप-अण् उप॰स॰। (ताँति) तन्तुवाये जटाधरः।

**तन्तुवाय** त्रि॰ तन्तून् वयति वे—अण् उप॰ स॰। १तन्तुवयनकर्त्तरि (ताँति) २लूतायां कीटभेदे च अमरः। ३सङ्कीर्णजातिभेदे पुंस्त्री। स्त्रियां जातित्वात् ङीष्। सा च जातिस्तद्वृत्तिश्च मानवोक्ता यथा "नृपायां वैश्यसंसर्गादायोगव इति स्मृतः। तन्तुवाया भवन्त्येव वसुकांस्योपजीविनः। शीलकाः केचित्तत्रैव जीवनं वस्त्रनिर्मितौ" "तन्तुवायो दशपलं दद्यादेकपलाधिकम्" मनुः।

**तन्तुवायदण्ड** पु॰ तन्तोर्वायस्य दण्डः ६त॰ वायते अनेन करणे—घञ् वा कर्म॰। वेमनि तन्तुवायसाधने दण्डे। (नराज)

**तन्तुविग्रहा** स्त्री तन्तवो विग्रहे यस्याः। कदल्याम् त्रिका॰। तत्त्वचि हि बहुसूत्राणि प्रादुर्भवन्ति।

**तन्तुशाला** स्त्री तन्तूनां वयनाय शाला। (ताँतघर) तन्तुवयनगृहे हेम॰। [(सिञोयान) अमरः।

**तन्तुसन्तत** त्रि॰ तन्तुभिः सन्ततं व्याप्तम्। स्यूतवस्त्रे।

**तन्तुसार** पु॰तन्तव इव सारो मज्जास्य। गुवाकवृक्षे। त्रिका॰

**तन्त्र** न॰ तन्यते तनोति वा कर्त्रादौ यथायथं ष्ट्रन् तन्त्रि-कुटम्बभरणे घञ् वा। १कटुम्बभरणादिकृत्ये २सिद्धान्ते ३औषधे ४प्रधाने ५परिच्छदे ६वेदशाखाभेदे ७हेतौ उभयार्थकप्रयोगे। ८इतिकर्त्तव्यतायाञ्च मेदि॰। १०तन्तुवाये शब्दमाला ११राष्ट्रे १२परच्छन्दानुगमने १३स्वराष्ट्रचिन्तायाम् हेमच॰। १४प्रबन्धे शब्दरत्ना॰ १५शपथे, धरणिः १६धने १७गृहे १८वयनसाधने (ताँत) १९ कुले च नानार्थमञ्जरी। २०शिवादुक्तशास्त्रभेदे तल्लक्षणभेदादिकं यथा "सर्गश्च प्रतिसर्गश्च मन्त्रनिर्णय एव च। देवतानाञ्च संस्थानं तीर्थानाञ्चैव वर्णनम्। तथैवाश्रमधर्मश्च विप्रसंस्थानमेव च। संस्थानञ्चैव भूतानां यन्त्राणाञ्चैव निर्णयः। उत्पत्तिर्विबुधानाञ्च तरूणां कल्पसंज्ञितम्। संस्थानं ज्योतिषाञ्चैव पुराणाख्यानमेव च। कोषस्य कथनञ्चैव व्रतानां परिभाषणम्। शौचाशौचस्य चाख्यानं नरकाणाञ्च वर्णनम्। हरचक्रस्य चाख्यानं स्त्रीपुंसोश्चैव लक्षणम्। राजधर्मो दानधर्मो युगधर्मस्तथैव च। व्यवहारः कथ्यते च तथा चाध्यात्मवर्णनम्। इत्यादिलक्षणैर्युक्तं तन्त्रमित्यभिधीयते"। तस्य प्रशंसा। "विष्णुर्वरिष्ठो देवानां ह्रदानामुदधिर्यथा। नदीनाञ्च यथा गङ्गा पर्वतानां हिमालयः। अश्वत्थः सर्ववृक्षाणां राज्ञामिन्द्रो यथा वरः। देवीनाञ्च यथा दुर्गा वर्णानां ब्राह्मणो यथा। तथा समस्तशास्त्राणां तन्त्रशास्त्रमनुत्तमम्। सर्वकामप्रदं पुण्यं तन्त्रं वै वेदसम्मितम्। कीर्त्तनं देवदेवस्य हरस्य मतमेव च। पावनं श्रद्दधानानामिह लोके परत्र च"। तस्य श्लोकसंख्या यथा "न शक्यं विस्तराद्वक्तुमपि वर्षशतैरपि। संक्षेपाद्धि प्रवक्ष्यामि लोककल्पोक्तवर्त्मना। दिवि देवि! नवलक्षं पाताले ब्रह्मशासने। लक्षमात्रं भारते च क्षितौ तन्त्राणि यानि च। आगमं विविधं प्रोक्तं चतुर्थमैश्वरं स्मृतम्। कल्पश्चतुर्विधः प्रोक्त आगमो डामरस्तथा। यामलञ्च तथा तन्त्रं तेषां भेदाः पृथक् पृथक्। सुक्ताख्यं सप्रपञ्चम् सारदाख्यञ्च नारदम्। महार्णवश्च कपिलो योगः कल्पः कपिञ्जलः। अमृत शुद्धिर्वीरश्च सिद्धसंवरणस्तथा। प्रथमोऽष्टसहस्रन्तु श्लोका दश प्रकीर्त्तिताः। द्वितीयोक्तकल्पस्य षट्सहस्राणि संख्यया। श्लोकाः शतार्द्धसंख्यातास्तृतीयस्त्रिसहस्रकः। शतद्वयं साधिकञ्च श्लोकानां पञ्चविंशतिः। त्रिंशोत्तरसहस्राणि श्लोकानां भानुसंख्यया। प्रपञ्चः प्रथमे तन्त्रे द्वितीये वसुसंख्यया। सहस्राणि तथा श्लोकाः सप्तविंशतिसंख्यया। भूतनेत्रसहस्राणि तृतीयेऽब्धिसहस्रकम्। शतद्वयं पङ्क्ति १० श्लोकाः प्रपञ्चः कथितस्त्रिधा। कला १६संख्या सहस्राणि सारदायाः प्रकीर्त्तिताः। पञ्चविंशाधिकाः श्लोका वसुश्लोकाश्च नारदे। विंशतिश्च सहस्राणि षट्सहस्राणि संख्यया। वसुश्लोकाश्च कथिताः

कपिलः श्लोकसंख्यया । त्रयोदश सहस्राणि कलोत्तर शतत्रयम् । श्लोकसंख्या समुद्दिष्टा योगे कल्पे च संख्यया । वाणसंख्या सहस्राणि श्लोका नवतिः कीर्त्तिताः । श्लोकानान्तु सहस्राणि अष्टाविंशतिसंख्यया । श्लोकाश्च भानु १२ संख्याता स्तन्त्रेऽपि च कपिञ्जले । अष्टत्रिंशौ सहस्राणि पञ्चश्लोकाधिकानि च । पञ्चैव कथिता नेत्र संख्यातानि यथार्थतः । वीरागमे षडधिकानि शतानि परिसंख्यया । सहस्राणि च तावन्ति श्लोकानान्तु यथार्थतः । पञ्चाधिकसहस्राणि श्लोकानामृतुसंख्यया । सिद्धसंवरणोक्तानि ईश्वरेण यथा पुरा । डामरःषड्विधो ज्ञेयः प्रथमो योगडामरः । श्लोकास्तत्र त्रयस्त्रिंशत् तथा पञ्च शतानि च । त्रिविंशतिसहस्राणि श्लोकानि चेह संख्यया । एकादश सहस्राणि संख्यया शिवडामरे । श्लोकाःसप्तैव निश्चित्य ईश्वरेणैव भाषिताः । तावच्छ्लोकसहस्राणि पञ्च श्लोकशतानि च । गुणोत्तराणि दुर्गाया डामरे कथितानि च । नव श्लोकसहस्राणि नव श्लोकशतानि च । सारस्वते तथा श्लोकाः पञ्चैव परिकीर्त्तिताः । स्वर७संख्यसहस्राणि श्लोकानां ब्रह्मडामरे । पञ्चोत्तरशतान्यत्र संख्यातानि शिवेन तु । षष्टिः श्लोकसहस्राणि गन्धर्वडामरोत्तरे । श्लोकाश्च षष्टिसंख्याता ब्रह्मणाऽव्यक्तयोनिना । यामलाः षट् समाख्यातास्तत्रादावादियामले । द्वात्रिंशच्च सहस्राणि त्रयस्त्रिंशत् शतानि च । द्वितीये ब्रह्मसंज्ञे तु द्वाविंशतिश्च संख्यया । सहस्राणि शतान्यत्र तान्येव कथितानि च । तावत्संख्यसहस्राणि शतानि परिसंख्यया । विंशतिश्च तथा संख्या श्लोकाश्च विष्णुयामले । कालसंख्यसहस्राणि वेदसंख्यशतानि च । पञ्चषष्टिस्तथा श्लोका कनिष्ठे रुद्रयामले । नव श्लोकसहस्राणि त्रयोदश शतानि च । द्वात्रिंशतिस्तथा श्लोका गणेशयामलोत्तमे । रविसंख्यसहस्राणि आदित्याख्ये तु यामले । तन्त्रे नीलपताकायां सहस्राणि च पञ्च च । पञ्चविंशतिः श्लोकाश्च कथिता वामकेश्वरे । त्रयोदश सहस्राणि द्वे शते विंशतिस्तथा । श्लोका मृत्युञ्जये तन्त्रे संख्यातास्तन्त्रवेदिभिः । गजसंख्यसहस्राणि त्रिकसंख्याशतानि च । सप्त श्लोकास्तथैवात्र तन्त्रयोगार्णवोत्तमे । दश श्लोकसहस्राणि तावन्त्येव शतानि च । मायाख्ये च महातन्त्रे यथार्थतः प्रकीर्त्तिताः । पञ्च श्लोकसहस्राणि तावन्त्येव शतानि च । शतार्द्धसंख्यया श्लोका दक्षिणामूर्त्तितन्त्रके । दश श्लोकसहस्राणि तावन्त्येव शतानि च । त्रयोदश तथा श्लोकाः कालिकाख्ये च तन्त्रके । कालेश्वर्यास्तन्त्रवरे सहस्रत्रितयं महत् । श्लोकानां संख्यया चात्र तन्त्रराजे च संख्यया । नव श्लोकसहस्राणि नव श्लोकशतानि च । द्वाविंशतिः सहस्राणि हरगौर्याख्यतन्त्रके । तथा च विंशतिः श्लोकास्तन्त्रेऽस्मिन् परिकीर्त्तिताः । अर्कसंख्यसहस्राणि द्वितीये तन्त्रवेदिभिः । अष्टाविंशतिश्च श्लोकाः संख्यातास्तन्त्रनिर्णये । कुब्जिकाख्ये महातन्त्रे श्लोकाश्च दशसंख्यया । सहस्राणि तथा सप्त संख्यातानि मनीषिभिः । द्वितीये षट्सहस्राणि तदर्द्धञ्च कनिष्ठके । अर्कसंख्यसहस्राणि तथाष्टशतानि च । तावद्देव्या महातन्त्रे संख्यातानि द्विजोत्तमैः । द्वाविंशतिः सहस्राणि द्वाविंशतिः शतानि च । कात्यायन्यास्तु तन्त्रस्य संख्यातानि मनीषिभिः । वसुश्लोकसहस्राणि तावन्त्येव शतानि च । प्रत्यङ्गिरायास्तन्त्रे च निश्चितानि यथार्थतः । भूतसंख्या सहस्राणि तथा तावच्छतानि च । महालक्ष्म्या स्तन्त्रराजे पञ्च श्लोकाश्च कीर्त्तिताः । गजसंख्यसहस्राणि श्लोकका सप्तसंख्यया । त्रिपुरार्णवे महातन्त्रे लिखिताः परमर्षिभिः । सरस्वत्याः सहस्रे द्वे द्वे शते संख्यया कृते । पञ्च श्लोकास्तथैवात्र विज्ञातव्या द्विजातिभिः । द्वाविंशतिः सहस्राणि आद्ये तन्त्रोत्तमोत्तरे । अङ्कसंख्या शतान्यत्र श्लोकाः पञ्चदशैव तु । द्वाविंशतिः सहस्राणि तथा नव शतानि च । द्वात्रिंशच्च तथा श्लोका योगिन्यास्तन्त्रराजके । द्वितीये षट् सहस्राणि तथा च त्रिशतानि च । त्रयः श्लोकास्तथैवात्र वाराह्यास्तन्त्र उत्तमे । ऊर्म्मिसंख्यासहस्राणि तत्त्वसंख्यशतानि च । गवाक्षे तन्त्रराजेऽस्मिन् श्लोकाश्च तत्त्वसंख्यया । वर्णसंख्यसहस्राणि द्वे शते परिनिश्चिते । श्लोकास्त्रयश्च संख्यातास्तन्त्रे नारायणीयके । वेदसंख्यसहस्राणि तान्येव च शतानि च । श्लोका नवतिःसंख्याता मृडानीतन्त्रराजके । तृतीये त्रिसहस्राणि त्रिशतानि कनिष्ठके । त्रिंशत् श्लोकाश्च संख्याताश्चातव्यास्तन्त्रवेदिभिः" । वाराहीत०

उपतन्त्राणि यथा "सैद्धोक्तान्युपतन्त्राणि कपिलोक्तानि यानि च । अद्भुतानि च एतानि जैमिन्युक्तानि यानि च । वशिष्ठः कपिलश्चैव नारदो गर्ग एव च । पुलस्त्यो भार्गवः सिद्धो याज्ञवल्क्योभृगुस्तथा । शुक्रो बृहस्पतिश्चैव अन्ये ये मुनिसत्तमाः । एभिः प्रणीतान्यन्यानि उपतन्त्राणि यानि च । विसंख्यातानि तान्यत्र धर्मविद्भि-

महात्मभिः। सारात् सारतराण्येव संख्यातानि निबोधत"। वाराहीत०।
शिवोक्तं चतुःषष्टिसङ्ख्यकं तन्त्रं यथा "सिद्धीश्वरं महातन्त्रं कालीतन्त्रं कुलार्णवम्। ज्ञानार्णवं नीलतन्त्रं फेत्कारीतन्त्रमुत्तमम्। देव्यागमं उत्तराख्यं श्रीक्रमं सिद्धियामलम्। मत्स्यसूक्तं सिद्धसारं सिद्धिसारस्वतं तथा वाराहीतन्त्रं देवेशि! योगिनीतन्त्रमुत्तमम्। गणेशविमर्शिनीतन्त्रं नित्यातन्त्रं शिवागमम्। चामुण्डाख्यं महेशानि! मुण्डमालाख्यतन्त्रकम्। हंसमाहेश्वरं तन्त्रं निरुत्तरमनुत्तमम्। कुलप्रकाशकं देवि! कल्पं गान्धर्वकं शिवे!। क्रियासारं निबन्धाख्यं स्वतन्त्रं तन्त्रमुत्तमम्। सम्मोहनं तन्त्रराजं ललिताख्यं तथा शिवे!। राधाख्यं मालिनीतन्त्रं रुद्रयामलमुत्तमम्। बृहच्छ्रीक्रमं तन्त्रं गवाक्षं सुकुमुद्दिनि!। विशुद्धेश्वरतन्त्रञ्च मालिनीविजयं तथा। समयाचारतन्त्रञ्च भैरवीतन्त्रमुत्तमम्। योगिनीहृदयं तन्त्रं भैरवं परमेश्वरि!। सनत्कुमारकं तन्त्रं योनितन्त्रं प्रकीर्त्तितम्। तन्त्रान्तरञ्च देवेशि! नवरत्नेश्वरं तथा। कुलचूड़ामणितन्त्रं भावचूड़ामणीयकम्। तन्त्रदेवप्रकाशञ्च कामाख्यानामकं तथा। कामधेनुकुमारी च भूतडामरसंज्ञकम्। मालिनीविजयं तन्त्रं यामलं ब्रह्मयामलम्। विश्वसारं महातन्त्रं महाकालं कुलामृतम्। कुलोड्डीशं कुब्जिकाख्यं तन्त्रचिन्तामणीयकम्। एतानि तन्त्ररत्नानि सकलानि युगे युगे। कालीविलासकादीनि तन्त्राणि परमेश्वरि!। कालकल्पे सुसिद्धानि अश्वक्रान्तासु भूमिषु। महाचीनादितन्त्राणि कलिकल्पे महेश्वरि!। सुसिद्धानि वरारोहे! रथक्रान्तासु भूमिषु" इति महासिद्धसारतन्त्रम्। "चतुःषष्टिश्च तन्त्राणि यामलादीनि पार्वति। सकलानीह वाराहे विष्णुक्रान्तासु भूमिषु। कल्पभेदेन तन्त्राणि कथितानि च यानि च। पाषण्डमोहनायैव विफलानीह सुन्दरि!" विश्वसारतन्त्रम्। अन्यत्र च "दैत्यानां मोहनार्थं तु तन्त्रशास्त्रं शिवोदितम्" तत्र पराङ्गचिन्तायां औषधे च "तन्त्रावापविदा योगैः" माघः। शास्त्रे "इदानीं तत्प्रवक्ष्यामि तन्त्रमुत्तरमुत्तमम्" सुश्रुतः अनेकोद्देशेन सकृत्प्रयोगे "द्वौ दैवे प्राक् त्रयः पित्र्ये उदगेकैकमेव वा। मातामहानामप्येवं तन्त्रं वा वैश्वदेविकम्" याज्ञ०। "पितृश्राद्धे मातामहश्राद्धे च वैश्वदेविकं तन्त्रेण कार्यमिति" मिता०। २१विश्रान्ते अङ्गसमुदाये "दर्शपौर्णमासौ तु पूर्वं व्याख्यास्यामस्तन्त्रस्य तत्राम्नातत्वात्" आश्व० श्रौ० १।१।२। तन्त्रमङ्गसंहतिः विश्रान्त इत्यर्थः स चावस्थामादिसंस्थाजपान्तः प्रधानस्य तन्त्रणात् तन्त्रमित्युच्यते" कर्कः। तन्त्रलक्षणादिकं कात्या० श्रौ० उक्तं यथा "कर्मणां युगपद्भावस्तन्त्रम्" कात्या० श्रौ० १।७।१

"यत्र प्रधानकर्मणां युगपद्भावः सह प्रयोगः तत्रारादुपकारकाणामङ्गानां तन्त्रं सकृदनुष्ठानं भवति। न प्रतिप्रधानं पृथक् पृथक् यद्धि सकृत् कृतं बहूनामुपकरोति तत्तन्त्रमित्युच्यते यथा बहूनां मध्ये कृतः प्रदीपः। कुतस्तन्त्रमिति हेत्वाकाङ्क्षायां त्रीन् हेतूनाह" कर्कः। "शक्यपुरुषार्थकृतत्वैकार्थसमवायश्रुतिभ्यः" २सू०। "प्रधानकर्मणां सह प्रयोगे सति तदङ्गानां सकृदनुष्ठानमुक्तम्। तत् कुतः शक्यत्वात् सकृदनुष्ठितैरारादुपकारकैरङ्गैर्बहूनामपि प्राधानानामुपकारस्य कर्त्तुं शक्यत्वात् शक्नुवन्ति ह्यारादुपकारकाणि बहूनामुपकर्त्तुम्, अन्टज्ञमाणविशेषत्वात् प्रदीपवत् यथा एक एव प्रदीपो बहूनां मध्ये कृतः सन् सर्वेषामुपकरोति एवमेतान्यपीति। यद्यप्यङ्गानां प्रत्येकमेव विनियोगस्तथापि विधिना तावदनुष्ठानं सकृदेवोपकारकं भवति यथैव हि षट्सु भावनासु लिङ्पदेनैव कथम्भावमपेक्षमाणास्वपि सकृदाम्नाता एवाङ्गविषयः तासामपि प्रत्येकमङ्गानि समर्पयन्ति सत्यपि च कस्यचित् प्रधानोत्पत्तिविधिसन्निधौ प्रकरणवशेन संनिधिर्बाध्यते तथैव संहतानां प्रधानानां फलसाधनत्वात् कर्त्तृदेशकालैक्याच्च युगपत् सर्वेष्वनुष्ठातुं प्रारब्धेषु सकृत्कृतमेवाङ्गं सर्वचिकीर्षया कृतत्वात् सन्तमपि केनचित् संनिधिं बाधित्वा प्रकरणवशेन सर्वार्थं भवति। किं च पौर्णमास्यां यजेतेति त्रयाणां युगपदनुष्ठानमवगतं पृथक् पृथक् साङ्गेष्वनुष्ठीयमानेषु बाध्यते तस्मात् सकृदेवाङ्गानामनुष्ठानम्। तथा पुरुषार्थकृतत्वाच्च यतः सकृदनुष्ठितैरप्यङ्गैः पुरुषार्थः कृत एव भवति पुरुषार्थः पुरुषस्याभीष्टं फलम् तद्धि आग्नेयादिभिरङ्गोपकृतैः क्रियते आरादुपकारकाणि चाङ्गान्यनेकघटादिप्रकाशकप्रदीपवत् सर्वेषां सहैवोपकुर्वन्ति सकृत्कृतैरपि पुरुषार्थः कृतएव भवति। तथा एकार्थसमवायश्रुतेश्चाङ्गानां तन्त्रं भवति एकोऽर्थो यस्य एकार्थ एकफलो यः प्रधानानां समवायः समूहः स एकार्थसमवायः तत्र एकार्थे समवाये एकफले

प्रधानसमूहे अङ्गानां तन्त्रश्रुतेः अङ्गानां सकृदनुष्ठानं श्रूयते यतः। तथाहि "ता एकविंशतिराहुतयो द्वावाघारौ पञ्च प्रयाजा द्वावाज्यभागावाग्नेयः पुरोडाशस्तूष्णीमग्नीषोमीय उपांशुयाजोऽग्नीषोमीयः पुरोडाशोऽग्निः स्विष्टकृदिडा त्रयोऽनुयाजाः सूक्तवाकश्च शंय्योर्वाक् स्वाय यदेवाद्‌ः पत्नीसंयाजेषु समष्टयजूंषि समिष्टयजुश्चेति तत्राग्नेयोपांशुयाजाग्नीषोमीयलक्षण एकफले प्रधानसमवाये आहुतीनामेकविंशतिसंख्या श्रूयते सा चाङ्गानां सकृत्करणपक्ष एवोपपद्यते न प्रतिप्रधानं पृथगनुष्ठानपक्षे। तस्मात् प्रधानानां सहप्रयोगे सकृदेवारादुपकारिका क्रिया सन्निपत्योपकारकाणां प्रतिप्रधानमावृत्तिरिति तु प्रागुक्तमेव। अथ प्रधानानां सहप्रयोगे कारणान्याह" कर्कः। "फलकर्मदेशकालद्रव्यदेवतागुणसामान्ये" ३सू०। यत्रैकेन वाक्येन बहूनि प्रधानकर्माणि एकफलसाधनत्वेन विधीयन्ते तत्र तेषामितरेतरापेक्षाणां साधनत्वेन विधानात् सहप्रयोगः तद्यथा मित्रविन्दां श्रीराष्ट्रमित्रायुष्कामस्येति वैश्वदेवेन प्रजाकामं याजयेदिति अत्र मित्रविन्दाशब्देन समुदायवचनेन दशानां हविषां सहप्रयोगः वैश्वदेवशब्देन च समुदायवचनेनाष्टानां हविषाम्। सूत्रार्थस्तु सामान्यशब्दः प्रत्येकं सम्बध्यते फलसामान्ये कर्मसामान्ये देशसामान्ये कालसामान्ये द्रव्यसामान्ये देवतागुणयोः सामान्ये इति एकवाक्येनैकफलसाधनत्वेन विधानेऽपि फलादिसामान्ये सत्येव प्रधानानां सहप्रयोगो भवति फलं स्वर्गादि कर्म पञ्चप्रयाजता त्र्यनुयाजतेत्यादि। देशः समप्राचीनप्रवणादिः। कालः पूर्वाह्णापराह्णादिः। द्रव्यं दक्षिणाद्रव्यम् न तु हविर्द्रव्यम् अनेकेषु प्रधानकर्मसु तद्भेदस्यावश्यम्भावात् देवता प्रजापतीन्द्रादिः। तद्गुण उपांशुत्वाम्नाव्यत्वादिः तस्मिन् सति प्रधानमपि सहैव भवति न पृथक्" कर्कः "तद्भेदे भेदः" ४सू०। तेषां फलादीनां भेदस्तद्भेदः तद्भेदे तेषां फलादीनां सहप्रयोगकारणानां भेदे सति प्रधानानां प्रयोगभेदो भवति तत्र प्रयोगवचनभेदान्मित्रविन्दाप्रीतिकामाग्नेययोर्न सहप्रयोगः फलभेदाच्च श्रीकामराष्ट्रकाममित्रकामायुष्काममित्रविन्दानां पृथक् प्रयोगः। कर्मभेदेऽपि प्रयोगभेदो भवति तद्यथा कस्यचित् पञ्चप्रयाजता कस्यचिन्नवप्रयाजता यथा च क्रैडिनीया महाहविषोस्तन्त्रसहत्वे इतरेतरस्य विगुणत्वं भवति।

देशभेदेऽपि तन्त्रभेदो भवति यथा वरुणप्रघासेषु मारुत्याः क्रैडिनीमहाहविषोश्च क्रैडिन्याः समदेशः महाहविषस्तु प्राचीनप्रवणः। कालभेदेऽपि सहप्रयोगो न भवति यथा दर्शस्य पौर्णमासस्य च "पौर्णमास्यां पौर्णमास्या यजेतामावास्यायाममावास्यया यजेतेति वचनेन कालभेदेन तयोर्विधानात्। यथा वा आनीकवतीसान्तपनीययोः पूर्वाह्णमध्याह्नरूपकालभेदात्तन्त्रभेदः। दक्षिणाद्रव्यैक्ये सति सहप्रयोगो यथा राजसूये त्रयाणां त्रिषंयुक्तानां येषां मते च त्रिषंयुक्तानां त्रयाणामप्येकस्मिन्नेवाह्न्यनुष्ठानम् तेषां दक्षिणाद्रव्यभेदेन त्रयाणां त्रयाणां पृथगनुष्ठानम् न सर्वेषां सहप्रयोगः दक्षिणाभेदश्च त्रयाणां वामनः त्रयाणां श्यामः त्रयाणां बभ्रुरिति तत्र दक्षिणाभेदाद्दानतिभेदः तद्भेदात्तत्कृतस्य स्वरूपस्य भेदः वामनानतैर्हि पूर्वं कर्म कर्त्तव्यम् श्यामानतैरुत्तरम् तन्त्रत्वे तूभाभ्यामानता उभयं कुर्युः। तत्र दक्षिणाव्यवस्था गम्यमाना बाध्येत। तस्मात् प्रतिदक्षिणं तन्त्रभेदः। अत्र एकवाक्येनैकफलार्थमेव विधाने देशकालकर्मैक्ये सत्यपि दक्षिणाभेदात्तन्त्रभेदः। देवताया देवतागुणस्य च सामान्ये सति उच्चारणमपि तस्या देवताया आवाहनत्यागादौ तन्त्रेण भवति यथा सप्तदशप्राजापत्येषु राजपेये प्रजापतेर्देवतायाः समानत्वाद्गुणस्योपांशुत्वस्य च समानत्वादनुवचनादौ तन्त्रेणोच्चारणं भवति यागोऽपि तन्त्रेणैव भवति। तथा च प्राजापत्यान् प्रकृत्य श्रूयते एकानुवाक्या भवत्येकयाज्यैकदेवत्या हि प्राजापत्या इत्युपांशुत्वाच्छागानां हविषोऽनूब्रूहीति अत्रानुवाक्याद्येकत्वे एकदेवतत्वं हेतुं ब्रुवन्ती एकदेवताकानां सिद्धं तन्त्रोच्चारणं दर्शयति। दर्शपूर्णमासयोरेव द्रव्यभेदेऽपि दध्नः पयसश्च देवताया इन्द्रस्य तद्गुणस्य चाम्नाव्यत्वस्य समानत्वात्तन्त्रेणैव याग उच्चारणं भवति। देवतायां समानायामपि देवतागुणस्योपांशुत्वादेर्भेदे सति सहोच्चारणं न भवति यथा प्रकृतावेवोपांशुयाजाग्नीषोमयोः पुरोडाशाग्नीषोमयोश्च। इह देवतातद्गुणयोः सामान्ये यागस्य तन्त्रेणानुष्ठानमुच्यते अत्र सिद्धमेव देवतागुणसामान्ये तन्त्रेण यागानुष्ठानमुपजीव्य भेदो यागस्य भेदेनानुष्ठानपूर्वं निषिद्धः न द्रव्यभेदे गुणयोगादिति वा तस्य इति न पुनरुक्तिदोषादि।" कर्कः।

तल्लक्षणविषयादिकं जैमिनिना एकादशाध्याये न्यरूपि तत एवावगन्तव्यं संक्षेपतश्च जैमिनिशब्दे माधवेनोक्तं ३१४१ पृ० दर्शितम्। तत्र शास्त्रे "आसुरिरपि पञ्चशिखाय तेन बहुधा कृतं तन्त्रम्" "सप्तत्यां किल येऽर्थास्तेऽर्थाः षष्टितन्त्रस्य" सा० का०। २२गील्ययवे। "तन्त्रैः पञ्चभिरेतच्चकार मनोरमं शास्त्रम्" पञ्चत०। तदवयवाश्च मित्रभेदमित्रप्राप्तिकाकोलूकीयलब्धप्रणाशपरीक्षितकारकाख्याः। तन्त्रं वेत्ति ठक्। तान्त्रिक तन्त्रवेत्तरि त्रि०। तन्त्रे विहितः ठक्। तान्त्रिक तन्त्रविहिते त्रि० स्त्रियां ङीप् "वैदिकी तान्त्रिकी सन्ध्या यथानुक्रमयोगत" तन्त्रसा० तान्त्रिकी दीक्षा २३वशे च स्वतन्त्रः परतन्त्रः।

**तन्त्रक** त्रि० तन्त्रात् अचिराहृतम् कन्। अभिनवे वस्त्रे अमरः पटे पु० शाद्यां स्त्री इति भेदः। "वसानस्तन्त्रकनिभे सर्वाङ्गीणे तरुत्वचौ" भट्टिः।

**तन्त्रकाष्ठ** न० तन्त्रस्य काष्ठम्। तन्त्रस्थे काष्ठभेदे (ताँतेर काटि) प्रभृतौ त्रिका०।

**तन्त्रता** स्त्री तन्त्रस्य भावः तल्। अनेकोद्देशेन सकृत्प्रवृत्तौ यथा तर्पणपूजनाद्यनेककर्मोद्देशेन सकृत्स्नाने कृते सर्वकर्माङ्गस्नानसिद्धिः। तद्विषयोदाहरणं प्रा० त०उक्तं यथा "आग्नेयाष्टकपालैन्द्रदध्यैन्द्रपयोयागानां त्रयाणामाग्नेयाष्टकपालोपांशुयागाग्नीषोमीयैकादशकपालयागानां त्रयाणां सकृत् सकृदनुष्ठितेन प्रयाजाद्यङ्गेनोपकारः सिद्ध्यति तथा नानाब्रह्मवधसत्त्वे सर्वोद्देशेन सकृत् प्रायश्चित्ते कृते सर्वब्रह्मवधजन्यपापनाशः। तन्त्रतायाहेतुश्च अदृष्टार्थैकजातीयकर्मणः कालदेशकर्त्रादीनां प्रयोगानुबन्धिवैधहेतुभूतानामभेदे उद्देश्यविशेषापहः" इति। एवञ्च "स्नातोऽधिकारी भवति दैवे पैत्रे च कर्मणि। पवित्राणां तथा जाप्ये दाने च विधिदर्शिते" इति विष्णूक्तम् "अस्नात्वा नाचरेत् कर्म जपहोमादि किञ्चनेति" दक्षोक्तञ्च, क्रियाङ्गस्नानं कर्तृसंस्कारद्वारैव तद्दिनकर्त्तव्याशेषकर्मार्थमेकमेव न तु प्रतिकर्म कर्त्तव्यम्" इति रघुनन्दनः अधिकं तन्त्रशब्दे दृश्यम्।

**तन्त्रधारक** पु० तन्त्रं कर्मज्ञापकपद्धतिग्रन्थं धारयति धारि–ण्वुल् ६त०। "एकस्तत्र नियुक्तः स्यादपरस्तन्त्रधारकः। तृतीयं प्रश्नकं ब्रूयात् ततः कर्म समाचरेत्" गृह्यपरिशिष्टोक्ते कर्मस्वरूपज्ञापकपुस्तकवाचके। "तन्त्रधारकः पुस्तकधारकः" सं० त० रघुनन्दनः।

**तन्त्रयुक्ति** स्त्री तन्त्रोक्ता आयुर्वेदशास्त्रोक्ता युक्तिः। सुश्रुतोक्ते द्वात्रिंशद्भेदके युक्तिभेदे। तास्च यथा "अथातस्तन्त्रयुक्तिनामाध्यायं व्याख्यास्यामः। द्वात्रिंशत्तन्त्रयुक्तयो भवन्ति। तद्यथा। अधिकरणं योगः पदार्थो हेत्वर्थ उद्देशो निर्द्देश उपदेशः प्रदेशोऽतिदेशोऽपवर्गो वाक्यशेषोऽर्थापत्तिर्विपर्य्ययः प्रसङ्ग एकान्तोऽनेकान्तः पूर्वपक्षो निर्णयोऽनुमतं विधानमनागतावेक्षणम् अतिक्रान्तावेक्षणम्। संशयो व्याख्यानं स्वसंज्ञा उदाहरणं निर्वचनं निदर्शनं नियोगो विकल्पः समुच्चय ऊह्यमिति अत्रासां तन्त्रयुक्तीनां किं प्रयोजनमित्युच्यते। वाक्ययोजनमर्थयोजनञ्च। भवन्ति चात्र श्लोकाः। असद्वादिप्रयुक्तानां वाक्यानां प्रतिषेधनम्। स्ववाक्यानां सिद्धिरपि क्रियते तन्त्रयुक्तितः। व्यक्ता नोक्तास्च ये ह्यर्था लीना ये चाप्यनिर्मलाः। लेशोक्ता ये क्वचित्तन्त्रे तेषाञ्चापि प्रसाधनम्। यथाम्बुजवनस्यार्कः प्रदीपो वेश्मनो यथा। प्रबोधस्य प्रकाशार्थास्तथा तन्त्रस्य युक्तयः। यमर्थमधिकृत्योच्यते तदधिकरणं १यथा रसं दोषं वा। येन वाक्यं युज्यते स योगः २। यथा तैलं पिबेच्चामृतवल्लिनिम्बहिंस्राभयावृक्षकपिप्पलीभिः। सिद्धं बलाभ्याञ्च सदेवदारु हितञ्च नित्यं गलगण्डरोगी"। सिद्धं पिबेदिति प्रथमं वक्तव्ये तृतीयपादे सिद्धं प्रयुक्तमेवं दूरस्थानामपि पदानामेकीकरणं योगः। योऽर्थोऽभिहितः सूत्रे पदे वा स पदार्थः ३। अपरिमिताश्च पदार्थाः। यथा स्नेहस्वेदाञ्जनेषु निर्दिष्टेषु द्वयोस्त्रयाणामर्थानामुपपत्तिर्दृश्यते तत्र योऽर्थः पूर्वापरयोगसिद्धो भवति स ग्रहीतव्यो यथा। वेदोत्पत्तिं व्याख्यास्याम इत्युक्ते सन्दिह्यते बुद्धिः। कतमस्य वेदस्यायमुत्पत्तिं विवक्षुरिति। ऋग्वेदादयस्त्रयो वेदास्तत्र पूर्वापरयोगमुपलभ्य विद–विचारणे विन्दत्येतयोश्च धात्वोरनेकार्थयोः प्रयोग इति पश्चात्प्रतिपत्तिर्भवति। आयुर्वेदोत्पत्तिमयं विवक्षुरित्येवं पदार्थः। यदन्यदुक्तमन्यार्थसाधकं भवति स हेत्वर्थः४। यथा मृत्पिण्डोऽद्भिः प्रक्लिद्यते यथा माषदुग्धप्रभृतिभिर्व्रणः प्रक्लिद्यत इति। समासकथनमुद्देशः५। यथा शल्यमिति। विस्तरवचनं निर्द्देशः६। यथा। शारीरमागन्तुकं चेति। एवमित्युपदेशः७। यथा "तथा न जागृयाद्रात्रौ दिवा स्वप्नञ्च वर्जयेत्" अनेन कारणेनेत्युपदेशः। यथोपदिश्यते मधुरेण श्लेष्माभिवर्द्धत इति। प्रकृतस्यातिक्रान्तेन साधनं प्रदेशः८। यथा देवदत्तस्यानेन शल्य-

सुश्रुतं तस्मादुपसदन्तस्याप्ययमेवोद्धरिष्यतीति। प्रकृतस्यानागतेन साधनमतिदेशः९। यथानेनास्य वायुरूर्द्ध्वमुपतिष्ठते तेनोदावर्त्तः स्यादिति। अभिव्याप्यापकर्षणमपवर्गः१०। यथा स्वेद्या विषापसृष्टा अन्यत्र कीटविषादिति। येन पदेनानुक्तेन वाक्यं समाप्यते स वाक्यशेषः११। यथा शिरःपाणिपादपार्श्वपृष्ठोदरोरसामित्युक्ते पुरुषग्रहणमपि मन्यते पुरुष एवोक्त इति। यदकीर्त्तितमर्थादापद्यते सार्थापत्तिः१२। यथौदनं भक्ष्ये इत्युक्तेऽर्थादापन्नं भवति नायं पिपासुर्यवागूमिति। यद्यत्राभिहितं तस्य प्रातिलोम्यं विपर्य्ययः१३। यथा कृशाल्पप्राणभीरवो दुश्चिकित्स्या इत्युक्ते विपरीतं गृह्यते दृढादयः सुचिकित्स्या इति। प्रकरणान्तरेण समापनं प्रसङ्गः१४। यथा प्रकरणान्तरितोयमर्थोऽसकृदुक्तः समाप्यते स प्रसङ्गः महाभूतशरीरसमवायः पुरुषस्तस्मिन् क्रिया सोऽधिष्ठानमिति वेदोत्पत्तावभिधाय भूतविद्यायां पुनरुक्तं यतोऽभिहितं पञ्चमहाभूतशरीरसमवायः पुरुष इति स खल्वेवं कर्मपुरुषश्चिकित्सायामधिकृतः सर्व्वत्र। यदवधारणेणोच्यते स एकान्तः१५।

“यथा त्रिवृद्विरेचयति मदनफलं वामयतीति। क्वचित्तथा क्वचिदन्यथेति यः सोऽनेकान्तः१६। यथा केचिदाचार्य्या ब्रुवते द्रव्यं प्रधानं केचिद्रसं केचिद्वीर्य्यं केचिद्विपाकमिति। आक्षेपपूर्ब्बकः प्रश्नः पूर्ब्बपक्षः१७ यथा कफवातनिमित्तास्तत्वारः प्रमेहा असाध्या भवन्तीति। तस्योत्तरं निर्णयः१८। यथा शरीरं प्रपीड्य पश्चादधोगत्वा वसामेदोमज्जानुविद्धं मूत्रं प्रसृजति वात एवमसाध्या वातजा इति। तथाचोक्तम् “कृत्स्नं शरीरं निष्पीड्य मेदोमज्जवसायुतः। अधः प्रकुप्यते वायुस्तेनासाध्यास्तु वातजाः”। परमतमप्रतिषिद्धमनुमतम्१९। यथान्यो ब्रूयात्सप्त रसा इति। प्रकरणानुपूर्व्याभिहितं विधानम्२०। यथा सक्थिमर्म्माण्येकादशप्रकरणानुपूर्व्याभिहितानि। एवं वक्ष्यतीत्यनागतावेक्षणम्२१। यथा श्लोकस्थाने ब्रूयाच्चिकित्सितेषु वक्ष्यामीति। यत्पूर्व्वमुक्तं तदतिक्रान्तावेक्षणम्२२। यथा चिकित्सितेषु ब्रूयात् श्लोकस्थाने यदीरितमिति। उभयहेतुदर्शनं संशयः२३। यथा तलहृदयाभिघातः प्राणहरः पाणिपादच्छेदनं प्राणहरमिति। तत्रातिशयोपवर्णनं व्याख्यानम्२४। यथेह पञ्चविंशतिकः पुरुषोऽत्र व्याख्यायते। अन्ये त्वायुर्वेदतन्त्रेषु भूतादिमारभ्यचिन्ता। अन्यशास्त्रासामान्या स्वसंज्ञा२५। यथा मिथुनमिति मधुसर्पिषोर्ग्रहणम्। लोके प्रथितमुदाहरणम्२६। यथोष्णभयाच्छीतमनुधावति। निश्चितं वचनं निर्वचनम्२७। यथायुर्विद्यतेऽस्मिन्ननेन वायुर्विन्दतीत्यायुर्वेदः। दृष्टान्तेनार्थः प्रसाध्यते यत्र तन्निदर्शनम्२८। यथाग्निर्वायुना सहितः कोष्ठे वृद्धिं गच्छति तथा वातपित्तकफजो दुष्टव्रण इति। इदमेव कर्त्तव्यमिति नियोगः२९। यथा पथ्यमेव भोक्तव्यमिति। इदं वेति विकल्पः३०। यथा रसौदनः सहता यवागूर्व्वा इदञ्चेदञ्चेति समुच्चयः३१। यथा मांसवर्गे ऐणहारिणलावतित्तिरिसारङ्गाः प्रधानमिति। यदनिर्दिष्टं बुद्धिमता तदूह्यम्३२। यथाभिहितमन्नपानविधौ चतुर्विधञ्चान्नमुपदिश्यते। भक्ष्यं भोज्यं लेह्यं पेयमेवञ्चतुर्विधे वक्तव्ये द्विविधमतिहितमतोह्यमिति। अन्नपाने विशिष्य द्वयोर्ग्रहणे कृते चतुर्णामपि ग्रहणं भवति किन्त्वान्यत्। अन्नेन भक्ष्यमवरुद्धं तत्साधर्म्यात्। पेयेन लेह्यं द्रवसाधर्म्यात्। चतुर्विधश्चाहारः प्रायेण द्विविधः प्रसिद्ध इति। द्वात्रिंशद्युक्तयो ह्येतास्तन्त्रसारगवेषणे। मया सम्यग्विनिर्दिष्टाः शब्दन्यायार्थसंयुताः। योऽह्येता विधिवद्वेत्ति दीपीभूतास्तु बुद्धिमान्। स पूजार्हो भिषक् श्रेष्ठ इति धन्वन्तरेर्मतम्।”

**तन्त्रवाय(प)** पु० तन्यते तन—कर्म्मणि ष्ट्रन् तन्त्रं सूत्रं वयति वपति वा वे-वप-वा अण् उप० स०। (ताँति) ख्याते १सङ्कीर्णजातिभेदे स्त्रियां जातित्वात् ङीष् योपधस्य तु टाप् इति भेदः। तदुत्पत्तिः पराशरपद्धतावुक्ता यथा “ताम्रकूट्टाच्छूद्रकार्य्यां मणिकारश्च जायते। मणिकारात् ताम्रकुट्ट्र्यां मणिबन्धोऽस्य जायते मणिबन्धान्मणिकार्य्यां तन्त्रवायाश्च जज्ञिरे”। मनक्कस्त्वाक्षिकः। आधारे घञ् ६त०। २तन्त्रे (ताँत) पुंन० शब्दरत्ना०।

**तन्त्रहोम** पु० तन्त्रेण होमः। परिसमूहनबर्हिरास्तरणयुक्ते होमे क्षिप्रहोमशब्दे दृश्यम्। तन्त्रमध्यत्र।
“अङ्गहोमसमित्तन्त्रं शोषन्त्याख्येषु कर्मसु” छन्दोगप०

**तन्त्रा** स्त्री तत्रि—भावे अ। ईषन्निद्रायां तन्द्रायां हिरूपको०।

**तन्त्रायिन्** पु० तन्त्रे कालचक्रे एति गच्छति णिनि ७त०। कालचक्रगामिनि सूर्य्यादौ। “तन्त्रायिणे नमोद्यावापृथिवीभ्याम्” यजु० ३८।१२ तन्यतेऽनेन तन्त्रं पटरचनाय शलाकायुक्तं यन्त्रभेदः तद्वत् नभसि कालचक्रमपि तन्त्रमुच्यते” वेददी०।

**तन्त्रिका** स्त्री तन्त्रयते तन्त्रि+ई ततः स्वार्थे क पूर्वोस्यो ह्रस्वः । गुडूच्याम् । अमरः ।

**तन्त्रि** स्त्री तन्त्रि–इ । १तन्त्र्याम् २तन्द्रायां च "अपेततन्त्रि धर्मात्मा यज्ञात्मा सत्त्वमयाश्रितः" भा० आनु० १४२अ० ।

**तन्त्रित** त्रि० तन्त्रा तन्द्रा जाताऽस्य तार० इतच् । आलस्ययुक्ते "धार्मिको नित्यभक्तश्च पितुर्नित्यमतन्त्रितः" भा० शा० १२७।१ । "मध्यं दीर्घेण कालेन युक्तेनातन्त्रितेन च"भा० आनु० १६२ अ० । "अतन्त्रिता सा स्वयमेव वृक्षकान्" कुमा० ।

**तन्त्रिपाल** पु० सहदेवे तन्तिपालशब्दे दृश्यम् ।

**तन्त्रिपालक** पु० जयद्रथराजे शब्दम० ।

**तन्त्री** स्त्री तन्त्रि+ई । १वीणागुणे २गुडूच्यां ३देहशिरायां मेदि० । "स ददर्श स्वमांसस्य कृतन्त्रीं विततां मुनिः" भा०शा०१४अ० ।४नदीभेदे ५रज्ज्वां ६युवतीभेदे शब्दर० । अस्य ङीबन्तत्वाभावेन बहुव्रीहौ स्वाङ्गे नाडीतन्त्र्योः पा० न कप् तदभावेऽपि न ह्रस्वः । बहुतन्त्रीर्ग्रीवा बहुतन्त्रीर्धमनी"सि०कौ० । स्वाङ्ग इत्युक्तेः बहुतन्त्रीका वीणेतादौ कप् । "सप्ततन्त्री प्रथिता चैव वीणा" भा० व० १३४अ० । अस्वाङ्गत्वेऽपि आर्षत्वात् न कप् । ७रज्जौ"न लङ्घयेत् वत्सतन्त्रीं"मनुः"यस्य वाचा प्रजाः सर्वा गावस्तन्त्र्येव यन्त्रिताः" भाग० ३।१५।८ । ८वीणायाञ्च "कण्डूयमानः सततं लोकानटति चञ्चलः । यद्यानो नरेन्द्राणां तन्त्रीर्विराणि चैव ह" हरिवं०५७अ० ।

**तन्त्वग्र** न० ६त० । तन्तूनामग्रे ततोगह्ना० छ । तन्त्वग्रीय तन्तुवादौ त्रि० ।

**तन्थी(स्थी)** अव्य० तन–वा थी । उर्य्यादिगणे तस्थीत्यत्र पाठान्तरम् ग्रप्रो० । स्वीकारे अभ्युपगमे । गतिसंज्ञकत्वात् समासे तन्थी(स्थी)कृत्य ।

**तन्द्रा** स्त्री तद्रि-भावे अ । १दैन्यनिद्रायाम् २आलस्ये च हेमच० "तमोवातकफात्तन्द्रा" इति वैद्यकम् तल्लक्षणञ्च "इन्द्रियार्थेष्वसंवित्तिर्गौरवं जृम्भणं क्लमः । निद्रार्त्तस्येव यस्येहा तस्य तन्द्रां विनिर्दिशेत्" माधवः "शुचिर्दक्षवचोदक्षस्तन्द्रानिद्राविवर्जितः" "विषयेन्द्रियसंयोगस्तन्द्रालस्यविवर्जनम्" याज्ञ० । निद्रायां प्रबुद्धस्य क्लमाभावः । तन्द्रायां तु प्रबुद्धस्यापि क्लम इत्यनयोर्भेदः । तन्द्रा च दुःखस्य भार्य्या निद्रायाः कन्या प्रीतेर्भगिनी यथाह "निद्राकन्या च तन्द्रा सा प्रीतिरन्या सुखप्रिये । याभ्यां व्याप्तं जगत्सर्वम्" शब्दार्थचि० भूतवाक्यम् ३पङ्क्तिच्छन्दसि न० । "तन्द्रं छन्दः" यजु० १५।५ । तद्रि श्रादे मोहे च तन्द्रति सीदति स्थानसंकोचेनेति तन्द्रं श्रोत्री "पङ्क्तिर्वै तन्द्रं छन्दः" इति श्रुतेः" वेददी० ।

**तन्द्रयु** त्रि० तन्द्रामालस्यं याति या–कु पृषो० । आलस्ययुक्ते "मो षु ब्रह्मेव तन्द्रयुर्भुवो वाजानाम्" ऋ० ८।९२।३० "तन्द्रयुरालस्ययुक्तः" भा० ।

**तन्द्रवाप** पु० तन्त्रवाप+पृषो० । तन्त्रवाये शब्दार्थचि० ।

**तन्द्रालु** त्रि० सौ० तद्रि–आलुच् । १दैन्यनिद्रायुक्ते २आलस्ययुक्ते च जटाधरः ।

**तन्द्रि** स्त्री सौ० तद्रि–क्रिन् । १दैन्यनिद्रायाम् २आलस्ये च उणादिकोः"विभक्तनक्तन्दिवमस्ततन्द्रिणा"किरा०।तद्रि–ई तन्द्रीत्यपि तत्रार्थे अयं न ङीबन्तस्तेन न सुलोपः। तन्द्रीश्च अत्यन्तक्रमादिना सर्वाङ्गेन्द्रियाप्रगुणत्वम् । सर्वाङ्गेन्द्रियविलीकमापादकत्वात् तथात्वम् । "क्षुधा च तन्द्र्या च विपन्नतां गतः" रामा० अयो० ८० अ० । "गततन्द्रीक्लमौ वापि सर्वेनैतौ महारथौ" २८८अ० । जिततन्द्रीः गततन्द्रीः इत्यादौ ङीबन्तत्वाभावात् ह्रस्वः न वा कप् ।

**तन्द्रिज** पु० यदुवंश्ये कनवकरुपपुत्रभेदे "तन्द्रिजस्तन्द्रिपालश्च सुतौ कनवकस्य तु" हरिवं० ३५ अ० ।

**तन्द्रित** त्रि० तन्द्रा जाताऽस्य तार० इतच् । जातालस्ये "य इदं धारयिष्यन्ति धर्मशास्त्रमतन्द्रिताः" "अतन्द्रिता सा स्वयमेव वृक्षकान्" कुमा० । अतन्त्रितेति पाठान्तरम् ।

**तन्द्रिपाल** पु० यदुवंश्ये कनवकरुपपुत्रभेदे तन्द्रिजशब्दे दृश्यम् ।

**तन्नि** स्त्री तन्नयति नी–बा० डि । (चाकुल्या) चक्रकुल्यायां रत्नमाला । तन्विरित्यपि पाठः । पृषो० ।

**तन्वी** स्त्री तनुः कृशा स्त्री गुणवचनोदन्तत्वात् वा ङीष् । १कृशाङ्ग्यां स्त्रियां तनुशब्दे उदा० "अप्रभूतमतनीयसि तन्वी" माघः । २शालपर्ण्यां (शालपान) राजनि० ।

**तन्मय** त्रि० तदात्मकम् तद्+मयट् । तदात्मके "तन्मयं विद्धि मां विप्र ! इतोऽहं येन्मया च ते" हरिवं १६९ अ० ।

**तन्मात्र** न० तदेव एवार्थे मात्रच् सा मात्रा यस्य वा । सांख्यादिसिद्धेषु शब्दादिषु नतेषां शान्तादिविशेषोऽस्ति । यथोक्तं विष्णुपुराणे "तस्मिं तस्मिंस्तु तन्मात्रास्तेन तन्मात्रता स्मृता । तन्मात्राण्यविशेषाणि अविशेषास्ततो हि ते । न शान्ता नापि घोरास्ते न मूढाश्चाविशेषिणः" इति । "तन्मात्राण्यविशेषास्तेभ्यो भूतानि पञ्च पञ्चभ्यः । एते स्मृता विशेषाः शान्ता घोराश्च मूढाश्च" सा० का० ।

**तन्यतु** पु॰ तनोति शब्दं तमो वा तन-यतुच्। १वायौ २रात्रौ च उज्ज्वल॰। स्तन—शब्दे बा॰ यतुच् सलोपश्च। ३गर्जिते ४अशनौ च माधवः। "न वेपसा न तन्यतेन्द्रम्" ऋ॰१।८०।१२ भाष्ये उक्तैव व्युत्पत्तिः। तन्यता गर्जितेन क्वान्दस एत आच्। "आविष्कृणोमि तन्यतुर्ऽ्टिम्" ह॰ उ॰। "तन्यतुः पर्जन्यः" भा॰।

**तन्यु** त्रि॰ तन+बा॰ ल्यु न अनादेशः। विस्तृते "रजांसि चित्रा वि चरन्ति तन्यवः" ऋ॰ ५।६३।५।

**तन्विन्** पु॰ तामसमनोरपत्यभेदे। "तपोरतिरकल्माषस्तन्वो धन्वी परन्तपः" हरिवं॰ ७ अ॰।

**तप** उपतापे सक॰ऐश्वर्ये अक॰दि॰आ॰अनिट्। तप्यते अतप्त। तेपे तप्ता तप्स्यते तप्तः तप्तिः।

अव—अधस्तापे। "अवतप्ते नकुलस्थितम्" सि॰ कौ॰।

आ+सम्यक्तापे। "आतप्तजाम्बूनदभूषिताङ्गः" हरिवं ८अ॰

अनु+सन्तततापे अनुशोचने च। "अनुतप्ये भृशं तात! तव घोरेण कर्मणा" भा॰ व॰ १२७२० श्लो॰। "अन्वतप्यत धर्मात्मा पुत्रं संचिन्त्य तापसम्" रामा॰ अयो॰ ४ अ॰। "वनं प्रस्थाप्य दुष्टात्मा नान्वतप्यत दुर्मतिः" भा॰व॰२७अ॰

**तप** दाहे चु॰ उभ॰ सक॰ सेट्। तपयति-ते अतीतपत्-त। "संप्रत्ययोग्यस्थितिरेष देशः करा हिमांशोरपि तापयन्ति" उद्भटः। "न हि तापयितुं शक्यं सागराम्भस्तृणोल्कया" हितो॰ "कोऽत्र भूमिवलये जनान् मुधा तापयन् सुचिरमेति सम्पदम्" माघः।

अव+अधोभागे तापने "अथावताप्य पृथिवीं पूषा दिवससंचये। जगामास्तं सहस्रांशुः" भा॰ उ॰ १८० अ॰।

**तप** दाहे भ्वा॰ उभ॰ सक॰ सेट्। ज्वलने निरु॰ तपति-ते अतापोत्-अतपीत् अतप्त। तताप तेपे तपिष्यति ते "वर्षते तपते कोऽन्यो ज्वलते तेजसा च कः" भा॰ अनु॰ १४ अ॰। "त्वमेकैकस्तपसे जातवेदाः" भा॰ आ॰ २३२ अ॰ "तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च" गीता "तमस्तपति घर्मांशौ" शकु॰। तपःकर्मकत्वेऽस्य कर्त्तर्य्यपि यक् तङ् च तप्यते तपस्तापसः।

अभि+पर्य्यालोचने "पृथिवीमन्तरिक्षं दिवं तान्लोकानभ्यतपत्" ऐत॰ ब्रा॰ अभ्यतपत् पर्य्यालोचितवान्।

उद्+दीप्तौ अक॰ आत्म॰ स्वाङ्गकर्मकत्वे सक॰ आत्म॰ "उत्तपते दीप्यते इत्यर्थः" सि॰ कौ॰। पाणिमुत्तपते। स्वाङ्गेत्युक्तेः प॰ "मैत्रस्य पाणिमुत्तपति" अन्यकर्मणि तु प॰। उत्तपति सुवर्णं विलापयतीत्यर्थः" सि॰ कौ॰।

"तीव्रमुत्तपमानोऽयमशक्यः सोढुमातपः" भट्टिः।

"करणं कुसुमेषुरुत्तपति यद्विशिखः" माघः।

उप+पीडाजन्यतापे "व्याहिताग्निश्चेदुपतपेत्" आश्व॰ श्र॰ ४।१।१। उपतपेत् व्याधिभिरुत्पीड्येतेत्यर्थः।

नि+नितरां तापे। "तदाङ्गनिशोचति नितपति वर्षिष्यति वा" श्रा॰ उ॰।

निस्+निःशेषेण तापे पौनः पुन्ये न तापे षत्वम्। "दग्धैकदेशा बहवो निष्टप्ताश्च तथापरे" भा॰ आ॰ २२६ अ॰। निष्टपति सुवर्णम् आसेवने तु नष त्वं निस्तपति सुवर्णं सुवर्णकारः। "यस्तु सूर्य्येण निष्टप्तं गाङ्गेयं पिबते जलम्" भा॰अनु॰ २२६ अ॰। तत्वे उभयत्रका षत्वम्।

प्र+प्रकर्षेण तापे विक्रमहेतुके तापे च "भासस्तवोग्राः प्रतपन्ति विष्णो!" गीता "सूर्य्यः प्रतपतां श्रेष्ठः" भा॰ वि॰ ४२ श्लो॰ "भास्करात् प्रतपिष्यतः" भा॰ व॰ १८० अ॰ "द्वितीयस्येव सूर्य्यस्य युगान्ते प्रतपिष्यतः" भा॰ व॰ २२ अ॰।

वि+उत्तापवत् सर्वम्। "रविर्वितपतेऽत्यर्थम्" भट्टिः दीप्यते इत्यर्थः पाणिं वितपते मैत्रस्य पाणिं वितपति सुवर्णं वितपतीत्यादि। "वितपन्नरातिम्" अथ॰ १२।२।४५

सम्+सम्यक्तापे। "दत्त्वापि च धनं काले सन्तप्स्यत्युपकारिणे" भा॰ शा॰ १६४ अ॰।

**तप** पु॰ तप-अच्। १ग्रीष्मे ज्यैष्ठाषाढात्मके ऋतौ अमरः। "तपेन वर्षाः शरदा हिमागमः" माघः। "तपर्त्तुपूर्त्तावपि मेदसाम्भराः" नैष॰ "तपात्यये वारिभिरुक्षिता नवैः" कुमा॰। किञ्चित् कर्म्मोपपदे तापेः खच् मुमश्च २सत्तापके परन्तपः भावे अप्। ३तपसि च "अप्रमत्ता निरशना दशपञ्चतपा द्रुमे" हरिवं ४६ अ॰।

**तपः(स्क)कर** त्रि॰ तपः करोति अच् वा विसर्गस्य सः। १तपःकारके (तपसी) २मत्स्यभेदे पुंस्त्री शब्दरत्ना॰। स्त्रियां जातित्वात् ङीष्।

**तपःक्लेशसह** त्रि॰ तपसः क्लेशं सहते सह—अच्। इन्द्रियसंयमादिकारके तपस्विनि अमरः।

**तपःस्थली** स्त्री ६त॰। १काश्यां त्रिका॰। २तपस्यास्थलमात्रे च

**तपती** स्त्री। सूर्य्यस्य कन्यायां संवरणन्टपस्य भार्य्यायां कुरुराजमातरि। "ततः संवरणात् सौरी तपती सुषुवे कुरुम्" भा॰ आ॰ ६४ अ॰। "संवरणः खलु वैवस्वतीं तपतीं नामोपयेमे तस्यामस्य जज्ञे कुरुः" ६५अ॰। १७१ अ॰। तत्कथा "अर्जुन उवाच तापत्य इति यद्वाक्यमुक्तवा-

मपि मामिह । तदहं ज्ञातुमिच्छामि तापत्यार्थविनिश्चयम् । तपती नाम का चैषा तापत्या यत्कृते वयम् । कौन्तेया हि वयं साधो ! तत्त्वमिच्छामि वेदितुम् । वैशम्पायन उवाच । एवमुक्तः स गन्धर्वः कुन्तीपुत्रं धनञ्जयम् । विश्रुतां त्रिषु लोकेषु श्रावयामास वै कथाम् । गन्धर्व उवाच । हन्त ते कथयिष्यामि कथामेतां मनोरमाम् । यथावदखिलां पार्थ ! सर्वबुद्धिमतांवर ! । उक्तवानस्मि येन त्वां तापत्य इति यद्वचः" ।

"य एष दिवि धिष्ण्येन नाकं व्याप्नोति तेजसा । एतस्य तपती नाम बभूव सदृशी सुता । विवस्वतो वै देवस्य सावित्र्यवरजा विभोः । विश्रुता त्रिषु लोकेषु तपती तपसा युता । न देवी नासुरी चैव न यक्षी न च राक्षसी । नाप्सरा न च गन्धर्वी तथा रूपेण काचन । सुविभक्तानवद्याङ्गी स्वसितायतलोचना । स्वाचारा चैव साध्वी च सुवेषा चैव भामिनी । न तस्याः सदृशं किञ्चित् त्रिषु लोकेषु भारत ! । भर्त्तारं सविता मेने रूपशीलगुणश्रुतैः । सम्प्राप्तयौवनां पश्यन् देयां दुहितरन्तु ताम् । नोपलेभे ततः शान्तिं सम्प्रदानं विचिन्तयन् । अथर्क्षपुत्रः कौन्तेय ! कुरूणामृषभो बली । सूर्य्यमाराधयामास नृपः संवरणस्तदा । अर्घ्यमाल्योपहाराद्यैर्गन्धैश्च नियतः शुचिः । नियमैरुपवासैश्च तपोभिर्विविधैरपि । शुश्रूषुरनहंवादी शुचिः पौरवनन्दनः । अंशुमन्तं समुद्यन्तं पूजयामास भक्तिमान् । ततः कृतज्ञं धर्मज्ञं रूपेण सदृशं भुवि । तपत्याः सदृशं मेने सूर्य्यः संवरणं पतिम् । दातुमैच्छत्ततः कन्यां तस्मै संवरणाय ताम् । नृपोत्तमाय कौरव्य ! विश्रुताभिजनाय च" । भा० आ० १७१ अ० ।

**तपन** पु० तप—ल्यु । १सूर्य्ये २भल्लातकवृक्षे । ३अग्न्यादौ दाहयुक्ते नरकभेदे ४ग्रीष्मे च हेम० । ५अर्कवृक्षे ६क्षुद्राग्निमन्थवृक्षे ७सूर्य्यकान्तमणौ च राजनि० । "पञ्चमः पञ्चतपसां तपनो जातवेदसाम्" माघः । स्त्रीणां यौवने ८सत्त्वजातालङ्कारभेदे म० सा० द० । "यौवने सत्त्वजास्तासामष्टाविंशतिसंख्यकाः । अलङ्काराः" इत्युपक्रमे "विक्षतं तपनं मौग्ध्यम्" इत्यादिना विभज्य "तपनं प्रियविच्छेदे स्मरावेगोऽस्य चेष्टितमिति" लक्षितम् । ९अग्निभेदे पु० "ते जातवेदसः सर्वे कल्माषः कुसुमस्तथा । दहनः शोषणश्चैव तपनश्च महाबलः । स्वाहाकारस्य विषये विख्याताः पञ्च वह्नयः" हरिवं १८० अ० । १०शिवे पु० । "यज्ञवाहाय दान्ताय तप्याय तपनाय च" भा० शा० २८६ अ० शिवस्तुतिः भावे ल्युट् । ११तापने० धरणिः ।

**तपच्छद** पु० तपनप्रियः छदोऽस्य । दमनकवृक्षे राजनि०

**तपनतनय** पु० ६त० । १यमे २यमुनायां, ३शमीवृक्षे च स्त्री राजनि० । ४कर्णे ५सुग्रीवे च पु० तपनसुतादयोऽप्यत्र ।

**तपनमणि** पु० तपनतेजस्को मणिः । सूर्य्यकान्तमणौ राजनि०

**तपनात्मजा** स्त्री ६त० । १गोदावरीनद्यां हेम० । २यमुनायां च । ३यमे ४कर्णे ५सुग्रीवे च पु० । [नद्यां हेमच० ।

**तपनी** स्त्री तप्यते पापमनया तप—ल्युट् ङीप् । गोदावर्य्यां

**तपनीय** न० तप-अनीयर् । १स्वर्णे कनकधुस्तूरे च अमरः । "भव्यानि हु तपनीयसंक्रमस्य" माघः । "असंस्पृशन्तौ तपनीयपीठम्" रघुः । स्वार्थे क । तपनीयक सुवर्णे राजनि० ।

**तपनेष्ट** न० ६त० । ताम्रे धातौ राजनि० । तद्धातोः सूर्य्यप्रियत्वात् तथात्वम् ।

**तपस्** न० तप—असुन् । १आलोचनात्मके ईश्वरज्ञानभेदे अन्तर्य्यामिब्राह्मणभाष्ये दृश्यम् । २लग्नावधिकनवमस्थाने ज्यो० ३स्वाश्रमविहितकर्मणि ४वैधक्लेशजनके कर्मणि । "तपोनानशनात्परम्" । ५क्षुत्पिपासाशीतोष्णादिद्वन्द्वसहने । ६चित्तप्रसादहेतुभूते व्रतनियमोपासनादिकर्मणि । ७मौनादिव्रते" ८कायेन्द्रियमनसां समाधाने ९शास्त्रीयमार्गेण कायेन्द्रियमनसां शोषणे । १०कृच्छ्रचान्द्रायणप्राजापत्यादिरूपे प्रायश्चित्ते । ११शास्त्रविहिततप्तशिलारोहणादौ । १२वानप्रस्थस्यासाधारणधर्मे । तपश्च शारीरादिभेदात् त्रिविधम् यथाह "देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् । ब्रह्मचर्य्यमहिंसा च शारीरं तप उच्यते । अनुद्वेगकरं वाक्यं सत्यं प्रियहितञ्च यत् । स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते । मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः । भावसंशुद्धिरित्येतत् तपोमानसमुच्यते" गीता । तदपि सात्त्विकादि भेदात् त्रिविधम् यथाह "श्रद्धया परया तप्तं तपस्तत् त्रिविधं नरैः । अफलाकाङ्क्षिभिर्युक्तं सात्त्विकं परिचक्षते । सत्कारमानपूजार्थं तपोदम्भेन चैव यत् । क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् । मूढग्राहेणात्मनो यत् पीड़या क्रियते तपः । परस्योत्सादनार्थं वा तत् तामसमुदाहृतमिति" गीता । १३मनइन्द्रियाणामैकाग्र्ये "मनसश्चेन्द्रियाणाञ्च ह्यैकाग्र्यं परमन्तपः" इत्युक्तेः १४जनोलोकादूर्द्ध्वस्थे लोकभेदे । "तस्योपरि तपो-

लोकस्तेजोमय उदाहृतः। वैराजा यत्र ते देवा वसेयुर्दे॑व पूजिताः। वासुदेवे मनो येषां वासुदेवाऽर्पितक्रियाः। तपसातोष्य गोविन्दमभिलाषविवर्जिताः। ते तपोलोकमासाद्य वसन्ति विजितेन्द्रियाः। शिलोञ्छवृत्तयो ये वै दन्तोलूखलिकाश्च ये। येऽश्मकुट्टाश्च मुनयः शीर्णपर्णाशिनश्च ये। ग्रीष्मे पञ्चाग्नितपसो वर्षासु स्थण्डिलेशयाः। हेमन्ते शिशिरे वा वै त्यजन्ति सलिले त्यपाः। कुशाग्रनीरबिन्दूंश्च तृषिता यतयोऽपिबन्। वाताशिनोऽतिक्षुधिताः पादाङ्गुष्ठाग्रभूस्पृशः। ऊर्द्ध्वं कृत्वा रविदृशस्त्वेकाचित्स्थाननिश्चलाः। ये वै दिवा निरुच्छ्वासा मासोच्छ्वासाश्च ये परे। मासोपवासं कुर्वन्ति चातुर्मास्यव्रताश्च ये। ऋत्वन्ते तोयपाना ये ये षण्मासोपवासकाः। ये च वर्षनिमेषा वै वर्षधाराम्बुतर्पकाः। स्थाणुसाम्योपसंप्राप्ता म्टगकण्डूतिसौख्यदाः। जटाटवीकोटरान्तःकृतनीडाण्डजाश्च ये। प्ररूढवल्मीकाङ्गाश्च स्नायुनद्धास्थिसञ्चयाः। लताप्रतानैः परितो वेष्टितावयवाश्च ये। शस्यानि च प्ररूढानि यदङ्गेषु महीपते। इत्येतैर्नियमैर्ये तु क्लिष्टात्मानस्तपोधनाः। ब्रह्मायुषस्तपोलोके ते वसन्त्यकुतोभयाः”। १५माघे मासि “तपाश्च तपस्यश्च शैशिरावृतू” यजु० २७।२४ “तपसे त्वा” यजुः ७।३०। तपसे माघाय। तपति सूर्यो यत्र असुन् तपाः” वेददी०। तत्र हि उत्तरायणप्रवृत्तौ रवेः प्रखरकरता अतएवाह “मकरे प्रखरो रविः”। १६धर्मे “विनाप्यस्मदलं भूष्णुरिज्याय तपसः सुतः” माघः १७नियमे “समाधिमास्थाय तपोभिरात्मनः” निशम्य चैनां तपसे कृतोद्यमाम्” “तपः क्व वत्से क्व च तावकं वपुः” कुमा० “तपसा किल्विषं हन्ति विद्ययाऽमृतमश्नुते” वेदान्तप०। “तमेतं ब्राह्मणा विविदिषन्ति वेदानुवचनेन यज्ञेन तपसा नाशकेन” श्रुतिः। “ब्राह्मणस्य तपो ज्ञानं तपःक्षत्रस्य रक्षणम्। वैश्यस्य तु तपोवार्त्ता तपः शूद्रस्य सेवनम्” मनुः तपश्च योगसाधनं क्रियायोगभेदः यथोक्तं पात०सू० भाष्यविवरणेषु “तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः” सू०। “नातपस्विनो योगः सिद्ध्यति अनादिकर्मक्लेशवासनाचिता प्रत्युपस्थितविषयजाला चाशुद्धिः नान्तरेण तपःसम्भेदमापद्यते इति तपस उपादानं तच्चित्तप्रसादनमबाधमानमनेनासेव्यमिति मन्यते” भा०। “व्यतिरेकमुखेन तपस उपायत्वमाह नातपस्विन इति तपसोऽन्तरव्यापारमुपायोपयोगिनं दर्शयति अनादिकर्मेति। अनादिभ्यां कर्मक्लेशवासनाभ्यां चिता अतएव प्रत्युपस्थितमुपनतं विषयजालं यस्यां सा तथोक्ता। अशुद्धीरजस्तमःसमुद्रेको नान्तरेण तपःसम्भेदमापद्यते सान्द्रस्य नितान्तविरलता सम्भेदः ननूपादीयमानमपि तपो धातुवैषम्यहेतुतया योगप्रतिपक्ष इति कथं तदुपाय इति। अत आह। तच्चेति तावन्मात्रमेव तपश्चरणीयं न यावता धातुवैषम्यमापद्यतइत्यर्थः” विवरणम्। १८अग्नौ तपोजाः।

**तपस** पु० तप—असच्। १सूर्य्ये २चन्द्रे त्रिका०। ३खगे मि०कौ०

**तपसोमूर्त्ति** पु० चतुर्थमन्वन्तरे आङ्गिरसे सप्तर्षिभेदे तपोधृतिशब्दे दृश्यम्। [तस्य इतरतपस्याद्वेषित्वात् तथात्वम्।

**तपस्तक्ष** पु० तपस्तक्षति तक्ष—अण् उप० स०। इन्द्रे हेमच०।

**तपस्य** तपः करोति तपस्+कृतौ क्यच् अक० सेट्। तपस्यति अतपस्यीत् अतपसीत् तपस्या। “स्थाणुं तपस्यन्तमधित्यकायाम्” कुमा०।

**तपस्य** पु० तपसि साधु यत्। १फाल्गुने मासि अमरः। “तपाश्च तपस्यश्च शैशिरावृतू: यजु० १५।५७ “तपस्याय त्वा” ७।३०। २अर्जुने तस्य फाल्गुननामकत्वात् तथात्वम्। भावे अ। तपस्या। ३तपश्चर्य्यायां स्त्री। तपसि भवः यत्। ४तपोभवे त्रि० “स्विद्याच्चेत् तपस्याभ्योऽद्भ्यः स्वाहा” कात्या० श्रौ० २५।११।२८। तपस्—भावे घञ्। ५तपश्चरणे पु०। “अथास्य बुद्धिरभवत्तपस्ये भरतर्षभ”। भा० आनु० ६अ०। तामसस्य मनोः ६पुत्रभेदे पु० “पुत्रांश्चैव प्रवक्ष्यामि तामसस्य मनोर्नृप। ऊत्रिस्तपस्यः सुतपास्तपोमूलस्तपोऽशनः। तपोरतिरकल्माषस्तन्वी धन्वी परन्तपः” हरिवं० ७अ०

**तपस्यामत्स्य** पुं०स्त्री (तपसी)। मत्स्यभेदे शब्दर०।

**तपस्विन्** त्रि० तपस्+अस्त्यर्थे विनि। १तापसे, २चान्द्रायणादिव्रतधारिणि, ३अनुकम्प्ये, ४दीने ५प्रशस्ततपोयुक्ते च। स्त्रियां ङीप् “किं किं व्यवस्यति न वेद्मि तपस्विनी सा” सा० द०। “नयप्रस्थितवैरटा तपस्विनी” नैष०। “कस्तपस्विविशिखेषु चादरः” किरा०। “पर्य्यमाणमहश्याग्निप्रत्युद्यातैस्तपस्विभिः” रघुः “तपस्विभ्योऽधिको योगी” गीता ६नारदे पु० शब्दरत्ना० ७तपस्यामत्स्यभेदे शब्दर०। ८घृतकरञ्जवृक्षे पु० ९चटके पुंस्त्री राजनि०। स्त्रियां जातित्वात् ङीष्। १०जटामांस्यां ११कटुरोहिण्यां स्त्री हेमच० गौ० ङीप्। १२महाश्रावणिकायाः स्त्री भावप्र० हरिवंशोक्ते चतुर्थमन्वन्तरे काश्यपे १३ऋषिभेदे तपोधृतिशब्दे प्रमाणं दृश्यम्।

भागवतोक्ते द्वादशमन्वन्तरे १४सप्तर्षिभेदे तपोमूर्त्तिशब्दे प्रमाणं दृश्यम् ।

**तपस्विपत्र** पु० तपस्विप्रियं पत्रमस्य । दमनकवृक्षे राजनि० ।

**तपात्यय** पु० तपस्य ग्रीष्मस्यात्ययोऽवसानं यत्र काले । १वर्षाकाले "तपात्यये वारिभिरुक्षिता नवैः" । कुमा० । "तपात्यये पुष्पफलैरुपेतं महावनं राष्ट्रपतिर्ददर्श" भा० व० २४ अ० । ६त० । २ग्रीष्मस्यावसाने च ।

**तपान्त** पु० तपस्यान्तो यत्र । १वर्षाकाले "ववर्ष शरवर्षेण तपान्ते जलदो यथा" भा० भी० ५४ अ० । ६त० । २ग्रीष्मस्यावसाने च ।

**तपित** त्रि० भ्वा० तप—दाहे क्त । तप्ते द्विरूपकोषः ।

**तपिनी** स्त्री नदीभेदे शब्दार्थचि० ।

**तपिष्ठ** त्रि० अतिशयेन तप्ता तप्तृ+इष्ठन् तृणोलोपः । अतिशयेन तापके । "तपिष्ठेन शोचिषा यः सुराधाः" ऋ० ४।५।४।

**तपिष्णु** त्रि० तप—बा० इष्णुच् । तापकर्त्तरि तपने । "महता तपसा देवस्तपिष्णुः सेवितो मया । प्रीतेन चाहं विभुना सूर्य्येणोक्तस्तथाऽनघ !" भा० शा० २२० अ० ।

**तपीयस्** त्रि० अतिशयेन तप्ता तप्तृ+ईयसुन् तृणोलोपः । १भृशं तप्तरि २तपस्याकारके "अतप्यताखिन् किल लोकतापनं तपस्तपीयांस्तपतां समाहितः" भाग० २।६।६।

**तपु** त्रि० तप—उन् । १तापके "तपोष्वग्निं विततं दिवस्पदे" ऋ० ६।८।४।२ "तपोः शत्रूणां तापकस्य" भा० । २तापयुक्ते ३तप्ते च । "तपुर्युयुस्तु चरुरग्निवाँ इव" ऋ० ७।१०४।२ तपुस्तप्तः" भा०

**तपुषि** त्रि० तप—उषिन् वेदे नेकारस्य इत् । तापके । "ब्रह्मद्विषे तपुषिं हेतिमस्य" ऋ० ३।३०।१७;६।५२।३। "तपुषिस्तपतेर्हेतिर्हन्तेः" निरु० ६।२ स्त्रियां कृदिकारान्तत्वात् वा ङीप् । २क्रोधे स्त्री निघण्टुः । क्रोधस्य चित्ततापकत्वात् तथात्वम् ।

**तपुस्** पु० तप-उषि । १सूर्य्ये २अग्नौ च उणा० । ३तापयुक्ते ४तापये च त्रि० । "तपुर्जम्भ ! यो अस्मभुक्" ऋ० १।३६।१६ हे तपुर्जम्भ ! तप्यमानरश्मियुक्त ! अग्ने !" भा० "तपुरग्राभिरृष्टिभिः । १०।८७।२३। "तपुरग्राभिस्तपनशीलाग्राभिः" भा० "तपूंषि तस्मै वृजिनानि सन्तु" ऋ० ६।५२।२

**तपोज** त्रि० तपसः तपस्यातः अग्नेर्वा जायते जन—ड । १तपस्याजाते २अग्निजाते अस्त्रप्सु स्त्री । "ऋषीं स्तपसतो यम तपोजा अपि गच्छतात्" ऋ० १०।१५४।५ "वाचो बन्धुस्तपोजाः" यजु० १०।६ "वाचो बन्धुः वाचया बन्धुभूताः "यावद्धे प्राणेष्वापो भवन्ति तावद्वाचा वदतीति" श्रुतेः "आपोमयी वागिति" सामश्रुतेश्च । तथा तपोजा तपःशब्देनात्राग्निरुच्यते तपसोऽग्नेर्जातास्तपोजाः अग्नेर्वै धूमो जायते धूमादभ्रमभ्राद्वृष्टिरग्नेर्वा एता जायन्ते तस्मादाह तपोजाः" इति श्रुतेः "वायोरग्निरग्नेराप" इति शत०ब्रा० ५।३।५।१७। श्रुत्यन्तरात्" वेददी०

**तपोदान** न० तप इव दानमत्र । तीर्थभेदे । "पुण्यतीर्थेषु कलितं कुरुक्षेत्रं प्रकीर्त्तितम् । सिन्धूत्तमस्तपोदानं जम्बुमार्गमथापि च" भा० आनु० १६५ अ० ।

**तपोधन** त्रि० तपोधनं यस्य । तपोमात्रकारके १तपस्विनि । "तपोधनाभ्यागमसम्भवामुदः" माघः तत्प्रियत्वात् २दमनकवृक्षे पु० राजनि० । ३मुण्डीरीवृक्षे स्त्री मेदि० । तप एव धनम् । ४तपोरूपधने न० । "अस्तु तावदतिक्रान्तं धर्म्महारं तपोधनम्" । भा०आनु०५२अ० । तपोधनं मूल्यं यस्य । ५तपसा लभ्ये स्वर्गादौ त्रि० "सर्वरत्नवरः स्वर्गे पारिजातस्तपोधनः" हरिवं० १२८ अ० ।

**तपोधृति** पु० तपसि धृतिःसन्तोषो यस्य । १तपोरते तपस्विनि चतुर्थमन्वन्तरे २भार्गवे सप्तर्षिभेदे "चतुर्थे चैव सावर्णे ऋषीन् सप्त निबोध मे" इत्युपक्रमे "द्युतिर्वसिष्ठपुत्रश्च आत्रेयः सुतपास्तथा । आङ्गिरास्तपसोमूर्त्तिस्तपस्वी काश्यपस्तथा । तपोऽशनश्च पौलस्त्यः पौलहश्च तपोरविः । भार्गवः सप्तमस्तेषां विज्ञेयस्तु तपोधृतिः" हरिवं० ७ अ० ।

**तपोनिधि** पु० तपो निधीयतेऽस्मिन् नि+धा—आधारे कि उप० स० तपोनिधिरिव यस्य वा । तपोधने तपस्विनि "विधेः सायन्तनस्यान्ते स ददर्श तपोनिधिम्" रघुः । "पततृपतङ्गप्रतिमस्तपोनिधिः" माघः ।

**तपोभृत्** त्रि० तपो बिभर्त्ति भृ—क्विप् तुक् च ६त० । तपोधारके "स्वर्गे तपोभृतां राजन् ! फलं पुण्यस्य कर्म्मणः" हरिवं० ८अ० ।

**तपोमय** त्रि० तपःप्रचुरः तपःस्रष्टव्यपदार्थालोचनं तदात्मको वा तपस्+मयट् । १तपःप्रचुरे २स्रष्टव्यपदार्थालोचनात्मके परमेश्वरे पु० । "त्रयीत्रयीधर्म्ममयस्तपोमयः" भाग० २।४।१९। स्त्रियां ङीप् । "प्रविश्य बदरीं पुण्यां मुनिजुष्टां तपोमयीम्" हरिवं० २६४ अ० । "उपर्य्युपरि तत्रापि गतिस्तत्र तपोमयी" ७६ अ० ।

लोकस्तेजोमय उदाहृतः। वैराजा यत्र ते देवा वसेयुर्द्दैव पूजिताः। वासुदेवे मनो येषां वासुदेवार्पितक्रियाः। तपसातोष्य गोविन्दमभिलाषविवर्जिताः। ते तपोलोकमासाद्य वसन्ति विजितेन्द्रियाः। शिलोञ्छवृत्तयो ये वै दन्तोलूखलिकाश्च ये। येऽश्मकुट्टाश्च मुनयः शीर्णपर्णाशिनश्च ये। ग्रीष्मे पञ्चाग्नितपसो वर्षासु स्थण्डिलेशयाः। हेमन्ते शिशिरे वा वै जपन्ति सलिले जपाः। कुशाग्रनीरविन्दूंश्च तृषिता यतयोऽपिबन्। वाताशिनोऽतिक्षुधिताः पादाङ्गुष्ठाग्रभूस्पृशः। ऊर्द्ध्वहस्ता रविदृशस्त्वेकाङ्घ्रिस्थाननिश्चलाः। ये वै दिवा निरुच्छ्वासा मासोच्छ्वासाश्च ये परे। मासोपवासं कुर्वन्ति चातुर्म्मास्यव्रताश्च ये। ऋत्वन्ते तोयपाना ये ये षण्मासोपवासकाः। ये च वर्षानिमेषा वै वर्षधाराम्बुतर्षकाः। स्थाणुसाम्योपसंप्राप्ता मृगकण्डूतिसौख्यदाः। जटाटवीकोटरान्तःकृतनीडाण्डजाश्च ये। प्ररूढ़वल्मीकाङ्गाश्च स्नायुनद्धास्थिसञ्चयाः। लताप्रतानैः परितो वेष्टितावयवाश्च ये। शस्यानि च प्ररूढ़ानि यदङ्गेषु महीपते। इत्येतैर्नियमैर्ये तु क्लिष्टात्मानस्तपोधनाः। ब्रह्मायुषस्तपोलोके ते वसन्त्यकुतोभयाः”। १५माघे मासि “तपाश्च तपस्यश्च शैशिरावृतू” यजु० २७।२४ “तपसे त्वा” यजुः ७।३०। तपसे माघाय। तपति सूर्यो यत्र इस्तु तपाः” वेददी०। तत्र हि उत्तरायणप्रवृत्तौ रवेः प्रखरकरता अतएवोक्तं “मकरे प्रखरो रविः”। १६धर्मे “दिनात्ययस्यदलं भृगुरिज्याये तपसः सुतः” माघः १७नियमे “समाधिमास्थाय तपोभिरात्मनः” निशम्य चैनां तपसे कृतोद्यमाम्” “तपः क्व वत्से क्व च तावकं वपुः” कुमा० “तपसा किल्विषं हन्ति विद्ययाऽमृतमश्नुते” वेदान्तप०। “तमेतं ब्राह्मणा विविदिषन्ति वेदानुवचनेन यज्ञेन तपसा नाशकेन” श्रुतिः। “ब्राह्मणस्य तपो ज्ञानं तपः क्षत्रस्य रक्षणम्। वैश्यस्य तु तपो वार्त्ता तपः शूद्रस्य सेवनम्” मनुः तपश्च योगसाधनं क्रियायोगभेदः यथोक्तं पात०सू० भाष्यविवरणेच “तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः” सू०। “नातपस्विनो योगः सिद्ध्यति अनादिकर्मक्लेशवासनाचिता प्रत्युपस्थितविषयजाला चाशुद्धिः नान्तरेण तपःसम्भेदमापद्यते इति तपस उपादानं तच्चित्तप्रसादनमबाधमानमनेनासेव्यमिति मन्यते” भा०। “व्यतिरेकमुखेन तपस उपायत्वमाह नातपस्विन इति तपसोऽवान्तरव्यापारमुपायोपयोगिनं दर्शयति अनादि कर्म्मेति। अनादिभ्यां कर्म्मक्लेशवासनाभ्यां चिता अतएव प्रत्युपस्थितमुपनतं विषयजालं यस्यां सा तथोक्ता। अशुद्धीरजस्तमःसमुद्रेको नान्तरेण तपःसम्भेदमापद्यते सान्द्रस्य नितान्तविरलता सम्भेदः ननूपादीयमानमपि तपो धातुवैषम्यहेतुतया योगप्रतिपक्ष इति कथं तदुपाय इति। अत आह। तच्चेति तावन्मात्रमेव तपश्चरणीयं न यावता धातुवैषम्यमापद्यतइत्यर्थः” विवरणम्। १८अग्नौ तपोजाः।

**तपस** पु० तप–असच्। १सूर्य्ये २चन्द्रे त्रिका०। ३खगे सि०कौ०

**तपसोमूर्त्ति** पु० चतुर्थमन्वन्तरे आङ्गिरसे सप्तर्षिभेदे तपोधृतिशब्दे दृश्यम्। [तस्य इतरतपस्याद्वेषित्वात् तथात्वम्।

**तपस्तक्ष** पु० तपस्तक्षति तक्ष–अण् उप० स०। इन्द्रे हेमच०।

**तपस्य** तपः करोति तपस्+कृतौ क्यच् अक० सेट्। तपस्यति अतपस्यीत् अतपसीत् तपस्या। “स्थाणुं तपस्यन्तमधित्यकायाम्” कुमा०।

**तपस्य** पु० तपसि साधु यत्। १फाल्गुने मासि अमरः। “तपाश्च तपस्यश्च शैशिरावृतू: यजु०१५।५७ “तपस्याय त्वा” ७।३०। २अर्ज्जुने तस्य फाल्गुननामकत्वात् तथात्वम्। भावे अ। तपस्या। ३तपश्चर्य्यायां स्त्री। तपसि भवः यत्। ४तपोभवे त्रि० “स्विद्याश्चेत् तपस्याभ्योऽद्भ्यः स्वाहा” कात्या० श्रौ० २५।११।२८। तपस्य–भावे घञ्। ५तपश्चरणे पु०। “अथास्य बुद्धिरभवत्तपस्ये भरतर्षभ”। भा० आनु० ६अ०। तामसस्य मनोः ६पुत्रभेदे पु० “पुत्रांश्चैव प्रवक्ष्यामि तामसस्य मनोर्नृप! ऊतिस्तपस्यः सुतपास्तपोमूलस्तपोऽशनः। तपोरतिरकल्माषस्तन्वी धन्वी परन्तपः” हरिवं० ७अ०

**तपस्यामत्स्य** पु०स्त्री (तपसी)। मत्स्यभेदे शब्दर०।

**तपस्विन्** त्रि० तपस्+अस्त्यर्थे विनि। १तापसे, २चान्द्रायणादिव्रतधारिणि, ३अनुकम्प्ये, ४दीने ५प्रशस्ततपोयुक्ते च। स्त्रियां ङीप् “किं किं व्यवस्यति न वेद्मि तपस्विनी सा” सा० द०। “नयप्रसृतिर्वरटा तपस्विनी” नैष०। “कस्तपस्विविशिखेषु चादरः” किरा०। “पर्य्याणमद्भ्याग्निप्रत्युद्यातैस्तपस्विभिः” रघुः तपस्विभ्योऽधिको योगी” गीता ६नारदे पु० शब्दरत्ना० ७तपस्यामत्स्यभेदे शब्दर०। ८घृतकरञ्जवृक्षे पु० ९चटके पुंस्त्री राजनि० स्त्रियां जातित्वात् ङीष्। १०जटामांस्यां ११कटुरोहिण्यां स्त्री हेमच० गौ० ङीष्। १२महाश्रावणिकायाः स्त्री भावप्र० हरिवंशोक्ते चतुर्थमन्वन्तरे काश्यपे १३ऋषिभेदे तपोधृतिशब्दे प्रमाणं दृश्यम्।

भागवतोक्ते द्वादशमन्वन्तरे १४सप्तर्षिभेदे तपोमूर्त्तिशब्दे प्रमाणं दृश्यम् ।

**तपस्विपत्र** पु० तपस्विप्रियं पत्रमस्य । दमनकवृक्षे राजनि० ।

**तपात्यय** पु० तपस्य ग्रीष्मस्यात्ययोऽवसानं यत्र काले । १वर्षाकाले "तपात्यये वारिभिरुच्चिता नवैः" । कुमा० । "तपात्यये पुष्पफलैरुपेतं महावनं राष्ट्रपतिर्ददर्श" भा० व० २४ अ० । ६त० । २ग्रीष्मस्यावसाने च ।

**तपान्त** पु० तपस्यान्तो यत्र । १वर्षाकाले "ववर्ष शरवर्षेण तपान्ते जलदो यथा" भा० भी० ५४ अ० । ६त० । २ग्रीष्मस्यावसाने च ।

**तपित** त्रि० भ्वा० तप–दाहे क्त । तप्ते द्विरूपकोषः ।

**तपिनी** स्त्री नदीभेदे शब्दार्थचि० ।

**तपिष्ठ** त्रि० अतिशयेन तप्ता तपृ+इष्ठन् तृणोलोपः । अतिशयेन तापके । "तपिष्ठेन शोचिषा यः सुराधाः" ऋ० ४।५।४।

**तपिष्णु** त्रि० तप–बा० इष्णुच् । तापकर्त्तरि तपने । "महता तपसा देवस्तपिष्णुः सेवितो मया । प्रीतेन चाहं विभुना सूर्य्येणोक्तस्तथाऽनघ !" भा० शा० ३२० अ० ।

**तपीयस्** त्रि० अतिशयेन तप्ता तपृ+ईयसुन् तृणोलोपः । १श्रयां तप्तरि २तपस्याकारके "अतप्यतास्मिन् किल लोकतापनं तपस्तपीयांस्तपतां समाहितः" भाग० २।६।६।

**तपु** त्रि० तप–उन् । १तापके "तपोष्वग्निं विततं दिवस्पदे" ऋ० ६।८३।२ "तपोः शतृणां तापकस्य" भा० । २तापयुक्ते ३तप्ते च । "तपुर्युस्तु चरुरग्नि र्वां इव" ऋ० ७।१०४।२ तपुस्तप्तः" भा०

**तपुषि** त्रि० तप–उषिन् वेदे नेकारस्य इत् । तापके । "ब्रह्मद्विषे तपुषिं हेतिमस्य" ऋ० ३।३०।१७;६।५२।३। "तपुषिस्तपतेर्हेतिर्हन्तेः" निरु० ६।२ स्त्रियां कृदिकान्तत्वात् वा ङीप् । २क्रोधे स्त्री निघण्टुः । क्रोधस्य चित्ततापकत्वात् तथात्वम् ।

**तपुस्** पु० तप–उसि । १सूर्य्ये २अग्नौ च उणा० । ३तापयुक्ते ४तापये च त्रि० । "तपुर्जम्भ ! यो अस्मभुक्" ऋ० १। ३६।१६ हे तपुर्जम्भ ! तप्यमानरश्मियुक्त ! अग्ने !" भा० "तपुरग्राभिर्ऋष्टिभिः । १०।८७।२३। "तपुरग्राभिस्तपनशीलाग्राभिः" भा० "तपूंषि तस्मै वृजिनानि सन्तु" ऋ० ६।५२।२

**तपोज** त्रि० तपसः तपस्यातः अग्नेर्वा जायते जन–ड । १तपस्याजाते २अग्निजाते अस्पप्सु स्त्री । "शूर्णीस्तपसतो मम तपोजा अपि गच्छतात्" ऋ० १०।१५४।५ "वाचो बन्धुस्तपोजाः" यजु० १०।६ "वाचो बन्धुः वाचया बन्धुभूताः "यावद्वै प्राणेभ्यापो भवन्ति तावद्वाचा वदतीति" श्रुतेः "आपोमयी वागिति" श्रामश्रुतेश्च । तथा तपोजा तपःशब्देनात्राग्निरुच्यते तपसोऽग्नेर्जातास्तपोजाः अग्नेर्वै धूमो जायते धूमादभ्रमभ्राद्वृष्टिरग्नेर्वा एता जायन्ते तस्मादाह तपोजाः" इति श्रुतेः "वायोरग्निरग्नेराप" इति शत०ब्रा० ५।३।५।१७। श्रुत्यन्तरात्" वेददी०

**तपोदान** न० तप इव दानमत्र । तीर्थभेदे । "पुण्यतीर्थेषु कलिङ्गं कुरुक्षेत्रं प्रकीर्त्तितम् । सिन्धूत्तमस्तपोदानं जम्बूमार्गमथापि च" भा० आनु० १६५ अ० ।

**तपोधन** त्रि० तपोधनं यस्य । तपोमात्रकारके १तपस्विनि । "तपोधनाभ्यागमसम्भवामुदः" माघः तत्प्रियत्वात् २दमनकवृक्षे पु० राजनि० । ३मुण्डीरीवृक्षे स्त्री मेदि० । तप एव धनम् । ४तपोरूपधने न० । "अस्तु तावदतिक्रान्तं धर्म्महारं तपोधनम्" । भा०आनु०५२अ० । तपोधनं मूल्यं यस्य । ५तपसा लभ्ये स्वर्गादौ त्रि० "सर्वरत्नवरः स्वर्गे पारिजातस्तपोधनः" हरिवं० १२८ अ० ।

**तपोधृति** पु० तपसि धृतिःसन्तोषो यस्य । १तपोरते तपस्विनि चतुर्थमन्वन्तरे २भार्गवे सप्तर्षिभेदे "चतुर्थे चैव सावर्ण्ये ऋषीन् सप्त निबोध मे" इत्युपक्रमे "द्युतिर्वसिष्ठपुत्रश्च आत्रेयः सुतपास्तथा । आङ्गिरास्तपसोमूर्त्तिस्तपस्वी काश्यपस्तथा । तपोऽशनश्च पौलस्त्यः पौलहश्च तपोरविः । भार्गवः सप्तमस्तेषां विज्ञेयस्तु तपोधृतिः" हरिवं० ७ अ० ।

**तपोनिधि** पु० तपो निधीयतेऽस्मिन् नि+धा–आधारे कि उप० स० तपोनिधिरिव यस्य वा । तपोधने तपस्विनि "विधेः सायन्तनस्यान्ते स ददर्श तपोनिधिम्" रघुः । "पततपतङ्गप्रतिमस्तपोनिधिः" माघः ।

**तपोभृत्** त्रि० तपो बिभर्त्ति भृ–क्विप् तुक् च ६त० । तपोधारके "स्वर्गे तपोभृतां राजन् ! फलं पुण्यस्य कर्मणः" हरिवं० ८अ० ।

**तपोमय** त्रि० तपःप्रचुरः तपःस्रष्टव्यपदार्थालोचनं तदात्मको वा तपस्+मयट् । १तपःप्रचुरे २स्रष्टव्यपदार्थालोचनात्मके परमेश्वरे पु० । "त्रयीत्रयीधर्म्ममयस्तपोमयः" भाग० २।४।१६। स्त्रियां ङीप् । "प्रविश्य वदरीं पुण्यां मुनिजुष्टां तपोमयीम्" हरिवं० २६४ अ० । "उपर्य्युपरि तत्रापि गतिस्तत्र तपोमयी" ७६ अ० ।

**तपोमूर्त्ति** पु॰ तपः आलोचनभेद एव मूर्त्तिरस्य, तपःप्रधाना मूर्त्तिरस्य वा। १परमेश्वरे २तपस्विनि च। रुद्रसावर्णिरूपत्रयोदशमन्वन्तरे सप्तर्षिमध्ये ३ऋषिभेदे च "ऋषयस्तु तपोमूर्त्तिस्तपस्व्यग्नीध्रकादयः" भाग॰८।१३।१२

**तपोमूल** त्रि॰ तपो मूलमस्य। १तपोहेतुके स्वर्गादौ तामसस्य मनोः २पुत्रभेदे पु॰ तपस्यशब्दे दृश्यम्।

**तपोरति** त्रि॰ तपसि रतिरस्य। १तपःपरायणे तामसमनोः पुत्रभेदे पु॰ तपस्यशब्दे दृश्यम्।

**तपोरवि** पु॰ तपसा रविरिव। १सूर्य्यतुल्यतेजोयुक्ततपस्के चतुर्थमन्वन्तरे पौलहे सप्तर्षिभेदे तपोधृतिशब्दे दृश्यम्।

**तपोलोक** पु॰ तपोनाम लोकः। ऊर्द्ध्वस्थेषु सप्तसु लोकेषु भुवनभेदे तपःशब्दे दृश्यम्। स च भूमेस्तत्त्वकोटि योजनोपरि वर्त्तते। "चतुःकोटिप्रमाणं तु तपोलोकोऽस्ति भूतलात्। उपरिष्टात् क्षितेरष्टौ कोटयः सत्यमीरितम्" काशीख॰ २१ अ॰ उक्तेः। स च विराट्पुरुषस्य स्तनद्वयरूपेण कल्पितः यथाह भाग॰ २।५।३८। "भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभितः। हृदा स्वर्लोक उरसा महर्लोको महात्मनः। ग्रीवायां जनलोकोऽस्य तपोलोकः स्तनद्वयात्। मूर्द्धभिः सत्यलोकस्तु ब्रह्मलोकः सनातनः"।

**तपोऽवट** पु॰ तपसोऽवट इव। ब्रह्मावर्त्तदेशे त्रिका॰।

**तपोवन** न॰ ६त॰। १तापससेव्ये वनभेदे, "वधूर्भक्तिमती चैनामर्च्चितामातपोवनात्" तपोवनावृत्तिपथं गताभ्याम्" रघुः। २तन्नामके तीर्थभेदे च।

**तपोऽशन** पु॰ चतुर्थमन्वन्तरे सप्तर्षिमध्ये पौलस्त्ये १ऋषिभेदे तपोधृतिशब्दे दृश्यम्। २तामसस्य मनोः पुत्रभेदे तपस्यशब्दे दृश्यम्।

**तप्त** त्रि॰ तप—क्त। १दग्धे २तापयुक्ते च हेमच॰। "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा भवति" श्रुतिः। "स तप्तकार्त्तस्वरभास्वराम्बरः" माघः।

**तप्तकाञ्चन** न॰ कर्म॰। अग्निसंयोगभेदेन विमले काञ्चने। "तप्तकाञ्चनवर्णाभां सुप्रतिष्ठां सुलोचनाम्" दुर्गाध्यानम्।

**तप्तकुम्भ** पु॰ तप्तः कुम्भो यत्र। नरकभेदे तत्स्वरूपं यथा "अतःपरं भीमतरं तप्तकुम्भं निबोध मे। समन्ततस्तप्तकुम्भो वह्निज्वालासमावृतः। ज्वलदग्निचयोद्वृत्त तैलायस्चूर्णपूरितः" मार्क॰ पु॰।

**तप्तकृच्छ्र** न॰ "षट्पलन्तु पिबेदम्भस्त्रिपलन्तु पयः पिबेत्। पलमेकं पिबेत् सर्पिस्तप्तकृच्छ्रं विधीयते" इत्युक्ते व्रतभेदे, "पयोघृतमुदकं वायुं तप्तं प्रतित्र्यहं पिबेत् स तप्तकृच्छ्र इति गौतमोक्तेः पुंस्त्वमपि।

"तप्तकृच्छ्रं चरन् विप्रो जलक्षीरघृतानिलान्। प्रतित्र्यहं पिबेदुष्णान् सकृत्स्नायी समाहितः" मनुः। तप्तानिलपानन्तु तप्तक्षीरवाष्पपानम्। एतद्द्वादशाहसाध्यम्। जलादिपरिमाणमुक्तं ब्रह्मपुराणे "तप्तकृच्छ्रं व्रतं कुर्वन् त्र्यहं सायं पिबेच्छुचिः। षट्पलानि सुतप्तस्य तोयस्य सुसमाहितः। प्रभाते त्रीणि दुग्धस्य सुतप्तस्य पिबेत् त्र्यहम्। पानं घृतस्य तप्तस्य मध्याह्ने त्रिदिनं पिबेत्। वायुभक्षस्त्र्यहं चान्यं निर्दहेत् पातकं द्विजः" याज्ञवल्क्यः। "तप्तक्षीरघृताम्बूनामेकैकं प्रत्यहं पिबेत्। एकरात्रोपवासस्तु तप्तकृच्छ्रस्तु साधनः" एतच्चतुरहसाध्यं तप्तकृच्छ्रम् प्रा॰ वि॰।

**तप्तपाषाणकुण्ड** पु॰ नरकभेदे नरकशब्दे दृश्यम्।

**तप्तमाष** पु॰ तप्तं माषमितं सुवर्णादिकं यत्र। दिव्यभेदे। तद्विधिः वीरमित्रोदये दर्शितो यथा तत्र पितामहः "तप्तमाषस्य वक्ष्यामि विधिमुद्धरणे शुभम्। कारयेदायसम्पात्रं ताम्रं वा षोडशाङ्गुलम्। चतुरङ्गुलखातन्तु मृण्मयं वापि मण्डलम्"। कर्षषोडशांशप्रमितं मण्डलं सूर्य्यमण्डलाकारं वर्त्तुलमिति यावत्। एतादृशं पात्रं घृततैलाभ्यां पूरयेदित्याह स एव "पूरयेद्घृततैलाभ्यां पलैर्विंशतिभिस्तु तत्। सुवर्णं माषकन्तस्मिन् सुतप्ते निःक्षिपेत्ततः। अङ्गुष्ठाङ्गुलिमूलेन तप्तमाषकमुद्धरेत्" इति। सुवर्णमाषकर्षषोडशांशप्रमाणम्। सुवर्णग्रहणं रूप्यमाषनिवृत्त्यर्थम्। तन्माषपरिमितं हिरण्यं ताम्रं वा पिण्डीकृत्य निःक्षिपेत्। अङ्गुष्ठाङ्गुलिमूलेन अङ्गुष्ठतर्जनीमध्यमाभिरित्यर्थः। इदञ्च तप्तमाषोद्धरणम् प्राड्विवाकेन घृततैलयोस्तापे समारब्धे धर्मावाहनादिशोध्यशिरःपत्रारोपणान्तं सर्वसाधारणं कर्म विधाय "त्वमग्ने। वेदाश्चत्वारः" इत्यादिना अग्निदिव्यप्रकरणोक्तेन मन्त्रेणाभिमन्त्र्य कारयितव्यम् शोध्यस्तु याज्ञवल्क्योक्तेन "त्वमग्ने! सर्वभूतानामित्यादि" मन्त्रेणाभिमन्त्र्य तप्तमाषमुद्धरेत्। अतएव वृहस्पतिः "समुद्धरेत्तैलघृतात् सुतप्तात्तप्तमाषकमिति"। कल्पान्तरमाह स एव "सौवर्णे राजते ताम्रे वायसे मृण्मयेऽपि वा। गव्यं घृतमुपादाय तदग्नौ तापयेच्छुचिः। सौवर्णीं राजतीं ताम्रीमायसीं वा सुशोभनाम्। सलिलेन सकृद्धौतां प्रक्षिपे-

त्तत्र मुद्रिकाम्। भ्रमहोचितरङ्गाद्यै ध्यानस्वसर्गगोचरे। परीक्षेदार्द्रपर्णेन चटत्कारसघोषकमिति"। ततः प्राड्विवाको धर्मावाहनादिपत्नारोपणान्तं साधारणं कर्म कृत्वा घृतमभिमन्त्रयेत्। मन्त्रस्तु तेनैव दर्शितः "तत-स्थानेन मन्त्रेण सकृत्तदभिमन्त्रयेत्। परं पवित्रममृतं घृत! त्वं यज्ञकर्मसु। दह पावक! पापं त्वं हिमशीतो भवेति च"। ततः प्राड्विवाकः शोध्येन "त्वमग्ने! सर्वभूतानामित्यादि मन्त्रेणाभिमन्त्रणं कारयित्वा मुद्रिकां ग्राहयेदित्याह स एव "उपोषितस्ततः स्नात-आर्द्रवासाःसमाहितम्। ग्राहयेन्मुद्रिकान्तान्तु घृतमध्यग-तान्तथा। प्रदेशिनीं च तस्याथ परीक्षेयुः परीक्षकाः" इति। अत्र तर्जन्यैव मुद्रिकोद्धरणं कार्यं तस्याः परीक्षाभिधानात् पक्षद्वयेऽपि शुद्ध्यवधारणोपायं बृहस्पतिराह "कराग्रं येन धुनुयात् विस्फोटो वा न जायते। शुद्धो भवति धर्मेण पितामहवचो यथेति"। कालिकापुराणेऽपि "न धुनेयुः कराग्रन्तु यस्य रक्तं न जायते। विस्फोटाद्यैस्तथा दोषैः स शुद्धो यस्य नोद्धृतमिति"। रक्तं रक्तवर्णम्। यस्य कराग्रं विस्फोटाद्यैर्नोद्धृतमित्यन्वयः। पितामहोऽपि "यस्य विस्फोटका न स्युः शुद्धोऽसावन्यथाऽशुचिरिति"।

तण्डुलपरीक्षाशब्दे अधिकं दृश्यम्।

**तप्तमुद्रा** स्त्री वैष्णवैः शरीरधार्य्येऽग्नितप्तधातुमयमुद्राङ्कितभगवदायुधचिह्ने तद्विधिः हरिभक्तिविलासे १५ विलासे। "आषाढ्शुक्लद्वादश्यां हरौ शिशयिषौ सति। वैष्णवः पारणं कृत्वा तप्तमुद्राश्च धारयेत्। ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैकान्तितद्वये। कुर्वन्नात्मार्पणं तप्तमुद्राभि-र्देहमङ्कयेत्"। तप्तमुद्राधारणं वाराहे तप्तमुद्राप्रसङ्गे "चक्रादिधारणं पुंसां परं सम्बन्धवेदनम्। पातिव्रत्य-निमित्तं हि वलयादिविभूषणमिति"। तप्तमुद्रा-धारणफलं वायुपुराणे "अग्निनैव च सन्तप्तं चक्रमादाय वैष्णवः। धारयेत् सर्ववर्णानां हरिसालोक्यसिद्धये"। ब्रह्माण्डे "कृत्वा धातुमयीं मुद्रां तापयित्वा स्विकां तनूम्। चक्रादिचिह्नितां भूप धारयेद्वैष्णवो नरः"। नारदीयपञ्चरात्रे "द्वादशारन्तु षट्कोणं वलयत्रय-संयुतम्। हरेः सुदर्शनं तप्तं धारयेत्तु विचक्षणः। सौपर्णे च श्रीभगवद्गरुडसंवादे तप्तमुद्राप्रकरणे "गरुत्मन्नविशेषेण सर्ववर्णेष्वयं विधिः। विप्रो वा क्षत्रियो वापि वैश्यः शूद्रस्तथैव च"। पाद्मे "अग्निहोत्रं यथा नित्यं वेदस्याध्ययनं यथा। ब्राह्मणस्य तथैवेदं तप्तचक्रादिधारणम्"। किञ्च तत्रैवोत्तरखण्डे श्रीशिवोमासंवादे "शङ्खचक्राङ्कनं कुर्य्याद्ब्राह्मणो बाहु-मूलयोः। हुताग्निनैव सन्तप्य सर्वपापापनुत्तये"। "चक्रं वा शङ्खचक्रे वा तथा पञ्चायुधानि वा। धारयित्वैव विधिवद्ब्रह्मकर्म समारभेत्"। तदकरणे निन्दा तत्रैव "अधृत्वा विधिना चक्रं ब्राह्मणः प्राकृतो भवेत्। न तस्य किञ्चिदश्नीयादपि क्रतुसहस्रिणः। सर्ववेदविदो वापि सर्वशास्त्रविशारदः। अधृत्वा विधिना चक्रं ब्राह्मणः पतितो भवेत्। तप्ते-नैवाङ्कनं कार्य्यं ब्राह्मणस्य विधानतः। श्रौतस्मार्त्तादिसिद्ध्यर्थं मन्त्रसिद्ध्यै तथैव च। हरेः पूजाधिकारार्थं चक्रं धार्य्यं विधानतः। वैष्णवत्वस्य सिद्ध्यर्थं भक्तिसिद्ध्यै विशेषतः। उपवीतादिवद्धार्य्याः शङ्ख-चक्रादयस्तथा। ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषतः"। श्रुतयश्च "यो ह वै सुगोक्तमौलेर्धर्मानतुतिष्ठमानोऽग्निना चक्रं धत्ते। अग्निर्वै सहस्रारः सहस्रारो नेमिर्न्नेमिना तप्ततनुः सायुज्यं सलोकतामाप्नोतीति"। "चक्रं बिभर्त्ति वपुषाभितप्तं बलं देवानाममृतस्य विष्णोः। स एति नाकं दुरितं विधूय विशन्ति यद्यतयो वीतरागाः" इति। ऋक्परिशिष्टे "अतप्ततनुर्न तदामो अश्नुतेऽश्नुता सह इहहन्तस्तत् समासतेति" यजुषि ऋग्वेदीयाश्वलायन शाखायाञ्च। "प्रतद्विष्णोरत्तचक्रे हुतप्ते जन्माम्भोधिं वर्त्तते चर्षणीन्द्राः। मूले बाह्वोर्दधतेऽन्ये पुराणालिङ्गा-न्यन्ये तप्तान्यायुधान्यर्पयन्ते" इति। छन्दोगपरि-शिष्टे "सहोवाच याज्ञवल्क्यस्तत् सुमानात्महिताय प्रेमृणा हरिं भजेत्। सुगोक्तमं मौलेर्धर्माद्यङ्केष्वग्नि-माधत्ते" इति। शतपथी श्रुतिः अथर्वपरिशिष्टे तप्तचक्रादिप्रकरणे "देवासो येनैतेन बाहुना सुदर्शनेन प्रयताः स्वर्गमायन्"। "येनाङ्किता मनवो लोकसृष्टिं वितन्वते ब्राह्मणास्तद्वह-न्तीति"। पाद्मे तप्तमुद्राप्रसङ्गे "विष्णुचक्राङ्कितं विप्रं पूजयेत् सर्वकर्मणि। विष्णुचक्रविहीनन्तु प्रयत्नेन विवर्जयेत्"। नारदीये "तप्तमुद्राप्रसङ्गे "श्रीकृष्णचक्राङ्कविहीनगात्रः श्मशानतुल्यः पुरुषोऽथ नारी,। दृष्ट्वा नरस्तं नृपते! सवासाः स्नात्वा समर्चेद्धरिमङ्ग सद्यः" इति। बहुत्र च वेङ्कटाचार्य्यपादप्रभृतिभिर्बुधैः। श्रुतयः स्मृतयोह्यत्र विख्याता

लिखिताः पराः। अतएव तदनादरे दोषाः पाद्मे “तप्तचक्राङ्कितं दृष्ट्वा ये निन्दन्ति नराधमाः। अवलोक्य मुखं तेषां आदित्यमवलोकयेत्”। अग्निपुराणे च दशरथं प्रति हतपुत्रविप्रविलापे। “शिलाबुद्धिः कृता किंवा प्रतिमायां हरेर्मया। किं मया पथि दृष्टस्य विष्णुभक्तस्य कर्हिचित्। तन्मुद्राङ्कितदेहस्य चेतसा नादरः कृतः। येन कर्मविपाकेन पुत्रशोको ममेदृशः”। अथ तप्तमुद्राधारणमाहात्म्यं सौपर्णे “अशुचिर्वाप्यनाचारः सर्वधर्मबहिष्कृतः। तप्तशङ्खचक्राभ्यामङ्कितः पङ्क्तिपावनः”। वाराहे तप्तमुद्राधारणप्रसङ्गे “म्लेच्छदेशे शुभे वापि चक्राङ्को यत्र तिष्ठति। योजनानि तथा त्रीणि मम क्षेत्रं वसुन्धरे!”। ब्रह्माण्डे “आयुधैर्वैष्णवैः सर्वैस्तापितैः सततं यदि। चिह्नयेद्वैष्णवो यस्तु स याति परमां गतिम्”। पाद्मे च “अग्नितप्तं पवित्रञ्च धृत्वा तु बाहुमूलयोः। त्यक्त्वा यमपुरं घोरं याति विष्णोः परं पदम्। हुताग्नितप्तचक्रेण शरीरं यस्य चिह्नितम्। तेन तीर्थानि यज्ञाश्च लभ्यन्ते नात्र संशयः। अग्नितप्तेन चक्रेण ब्राह्मणो बाहुमूलयोः। अङ्कयित्वा जपन्मन्त्रं संसारान्मोक्षभाग्भवेत्। अग्नितप्तेन चक्रेण बाहुमूलेषु लाञ्छिताः। ते सर्वे पापनिर्मुक्ता यान्ति विष्णोः परं पदम्”।

किञ्च “अप्राकृता महात्मानो विष्णुचक्रेण लाञ्छिताः। विष्णुचिह्नविहीनास्तु प्राकृताः पतिताः स्मृताः”। इति अत्र निषेधवचनं निर्मूलं सद्भिरनादृतम्। समूलं यच्च तत् सम्यग्विध्यभावादिना कृततत्परम्। अथ तद्धारणप्रकारः “तप्तमुद्राधारणार्थमुपचारैस्तु पञ्चभिः। कृष्णमभ्यर्च्य संपूज्य चक्रशङ्खौ तथा नमेत्। तत्र मन्त्रः “सुदर्शन! नमस्तेऽस्तु पाञ्चजन्य! नमोऽस्तु ते इति। अग्निमभ्यर्च्य मूलेन हुत्वा चाज्याहुतीः कृती। चक्रशङ्खगदादीनि शस्त्राण्यग्नौ प्रतापयेत्। तत्तन्मन्त्रैर्यथावाह्य तान्यभ्यर्च्य प्रणम्य च। गुरुं कृष्णञ्च संवन्द्य भक्त्या विज्ञापयेदिदम्। उच्छिष्टो भोजनादेश्च किङ्करः शरणागतः। तप्तचक्रगदादीनि तवाङ्गानीश धारये” इति। अथ चक्रादीनामावाहनादिमन्त्रः। ओं नमो भगवते वासुदेवाय निर्णाशितसकलरिपुध्वजाय भगवन्नारायणकराम्भोरुहस्पर्शदुर्ल्ललिताय। “एह्येहि त्वं सहस्रार चक्रराज! सुदर्शन!। यज्ञभागं प्रगृह्णस्व पूजाञ्चैव नमो नमः। ओं नमो भगवते पाञ्चजन्याय विष्णुशङ्खाय गम्भीरघोरध्वन्याकुलीकृतकौरववाहिनीनाथाय निरेखादक्षिणावर्त्ताय निम्नशस्ताय। एह्येहि पाञ्चजन्य! त्वं नारायणकरस्थित!। यज्ञभागं प्रगृह्णस्व पूजाञ्चैव नमो नमः। ओं रं यं मं वं पाञ्चजन्याय नमः। ओं भगवते खड्गाय नन्दकाय त्रैलोक्यपवित्राय जयिने सकलसुरासुरसुन्दरीनेत्रोत्पलार्च्चिताय। एह्येहि खड्गरत्न! त्वं नन्दकाख्य सुरार्च्चित। यज्ञभागं प्रगृह्णस्व पूजाञ्चैव नमो नमः। ओं खड्गाय नमः। ओं नमो भगवत्यै कौमोदक्यै भगवद्भट्टारकवासुदेवलालितायै। एह्येहि त्वं गदे! देवि! कौमोदक्यायुधेश्वरि!। यज्ञभागं प्रगृह्णस्व पूजाञ्चैव नमोनमः। सशराय शार्ङ्गाय नमः। इति। अथ धारणमन्त्रः। सुदर्शन! महाज्वाल! सूर्य्यकोटिसमप्रभ!। अज्ञानान्धस्य मे नित्यं विष्णोर्मार्गं प्रदर्शय। तथा। पाञ्चजन्य! निजध्वानध्वस्तपातकसञ्चय!। पाहि मां पापिनं घोरं संसारार्णवपातिनम्। इत्युच्चारयन् मन्त्रं दक्षिणादिक्रमेण तु। भुजयोश्चक्रपूर्वाणि कृष्णशस्त्राणि धारयेत् कलत्रादिपरीवारान् निजान् सर्वांश्च वैष्णवः। भगवत्यर्पयन् तप्तमुद्राभिस्ताभिरङ्कयेत्”। तथा च वाराहे। “अङ्कये तप्तचक्राद्यैरात्मनोबाहुमूलयोः। कलत्रापत्यभृत्येषु पश्वादिषु च सम्पदे” “किञ्च आयसं विधिवत् कृत्वा पञ्चायुधविधानतः। तत्तन्मन्त्रेण मन्त्रज्ञः प्रतिष्ठाप्य पृथक् पृथक्। ललाटे च गदा धार्य्या मूर्ध्नि चापं शरस्तथा। नन्दकञ्चैव हृन्मध्ये शङ्खचक्रे भुजद्वये”। किञ्च। “दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम्। सव्ये च शङ्खं बिभृयादिति ब्रह्मविदो विदुः”। अथ चक्रादिप्रतिकृति द्रव्यम्। नवप्रश्नपञ्चरात्रे “सौवर्णं रजतं ताम्रं कांस्यमायसमेव वा। चक्रं कृत्वा तु मेधावी धारयेत् सुविचक्षणः इति। एवमेव प्रबोधन्यां द्वादश्यां भगवत्परैः। तप्तमुद्रा ध्रुवं धार्य्या द्वारकायां विशेषतः”

तन्निषेधकवाक्यानि वैष्णवेतरविषयाणीति वैष्णवा मन्यन्ते आर्त्तास्तु श्रुतिस्मृतिविरुद्धत्वात् एतत् नानुतिष्ठन्ति विस्तरभयात् तन्निषेधवाक्यानि नोद्धृतानि।

**तप्तवालुक** पु० तप्ता वालुका यत्र नरकभेदे नरकशब्दे दृश्यम्।

**तप्तरहस** न० कर्म्म० अच् समा०। तप्ते रहःस्थानभेदे।

**तप्तरूपक** न० नित्यकर्म० शुद्धरजते राजनि०।

**तप्तशूर्मिकुण्ड** पु० तप्ता शूर्म्मिः लौहप्रतिमा यत्र

तादृशः कुण्डो यत्र। नरकभेदे नरकशब्दे दृश्यम्।

**तप्तशूर्मी** पु० नरकभेदे तत्प्राप्तिहेतुरुक्तः भाग०५।२६। यथा "यस्त्विह वा अगम्यां स्त्रियं पुरुषोऽगम्यं वा पुरुषं योषिदभिगच्छति । तावमुत्र कशया ताड़यन्तस्तिग्मया सूर्म्या लोहमय्या पुरुषमालिङ्गयन्ति । स्त्रियं च पुरुषरूपया सूर्म्या" २६ तिग्मया तप्तया सूर्म्या प्रतिमया" श्रीधरः

**तप्तसुराकुण्ड** पु० नरकभेदे ७त०। नरकशब्दे दृश्यम्।

**तप्तायनी** स्त्री तप्तेन अयतेऽत्र अय—आधारे ल्युट् ङीप्। भूमिभेदे "तप्तायनी मेऽसि" यजु०५।८। तप्तं पुरुषमयति प्राप्नोतीति तप्तायनी। यो हि दरिद्रः क्षेमरहितोऽहमिति सन्तप्यते तं तापोपशान्त्यर्थं प्राप्नोषि इत्यर्थः। यद्वा तप्तः सञ्चरो यस्यामयति सा तप्तायनी मगासि" वेददी०

**तप्यतु** त्रि० तप—यतुन्। तापके सूर्यादौ। "सूर्यस्तपति तप्यतुर्वृथा" ऋ० २।२४।८।

**तम** खेदे अक० इच्छायां सक० दिवा० शमा० पर० सेट्। ताम्यति। इरित् अतमत्-अतमीत्। ततास तेमतुः उदित्। तमित्वा तान्त्वा तान्तः। "यस्ताम्यति विसंज्ञश्च शेते" सुश्रु०। "ताम्येयुः प्रच्युताः पृथ्व्या यथा पूर्णां नदीं नराः। अवगाढ़ाह्यविद्वांसः" भा० शा० ८०२० श्लो०। "यदा वै तान्तः प्राणं लभतेऽथ स जिह्रीते" शत० ब्रा० ४।२।२।११। "न मा तमन्न श्रमोत तन्द्रत्" ऋ० २।३०।७ लुङि रूपम्।

उद्+उत्कर्षेण खेदे। "तस्योत्ताम्यतो बाष्पमुज्जहार बलादहम्" रामा० अयो० ६५ अ०।

नि+अतिशयार्थे अक०। नितान्तम्। "नितान्तदीर्घैर्जनिता तपोभिः" "गोरोचनाक्षेपनितान्तगौरे" कुमा०।

परि+भृशं खेदे। "संतप्तवक्षाः सोऽत्यर्थं दूयनात् परिताम्यति" सुश्रु०।

**तम** न०ताम्यत्यनेन तम—करणे घञर्थे संज्ञायां घ।१अन्धकारे शब्दरत्ना०। २पादाग्रे शब्दच०। ३तमोगुणे राजनि० ४राहौ पु० ज्यो० ५तमालवृक्षे पु० शब्दच०।

**तमक** पु० ताम्यत्यत्र तम बा—वुन्। श्वासरोगभेदे "तद्खेदवमथुप्रायः कण्ठघुर्घुरिकान्वितः। विशेषाद्दुर्दिने ताम्येत् श्वासः स्यात्तमकोमतः" सुश्रुतः। "क्षुद्रः साध्यतमस्तेषां तमकः कृच्छ्र उच्यते। त्रयः श्वासा न सिध्यन्ति तमको दुर्बलस्य च" सुश्रुतः।

**तमत** त्रि० तम—काङ्क्षायाम् अतच्। तृष्णापरे उज्ज्वल०।

**तमस्** न०तम—करणादौ—असुन्। त्रिगुणात्मकप्रधानस्य गुणभेदे "सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैः" भाग० १।४। भा० आश्वमेधिकपर्वणि तस्य कार्यभेदादिकमुक्तं यथा "ब्रह्मोवाच। तदव्यक्तमनुद्रिक्तं सर्वव्यापि ध्रुवं स्थिरम्। नवद्वारं पुरं विद्यात् त्रिगुणं पञ्चधातुकम्। एकादशपरिक्षेपं मनोव्याकरणात्मकम्। बुद्धिस्वामिकमित्येतत्पुरमेकादशं भवेत्। त्रीणि स्रोतांसि यान्यस्मिन्नाप्यायन्ते पुनः पुनः। प्रणाड्यस्तिस्र एवैताः प्रवर्त्तन्ते गुणात्मिकाः। तमो रजस्तथा सत्त्वं गुणानेतान् प्रचक्षते। अन्योन्यमिथुनाः सर्वे तथाऽन्योन्यानुजीविनः। अन्योन्यापाश्रयाश्चापि तथाऽन्योन्यानुवर्त्तिनः। अन्योन्यव्यतिषक्ताश्च त्रिगुणाः पञ्च धातवः। तमसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः। रजसश्चापि सत्त्वं स्यात् सत्त्वस्य मिथुनं तमः। नियम्यते तमो यत्र रजस्तत्र प्रवर्त्तते। नियम्यते रजो यत्र सत्त्वं तत्र प्रवर्तते। नैशात्मकं तमो विद्यात् त्रिगुणं मोहसंज्ञितम्। अधर्मलक्षणञ्चैव नियतं पापकर्मसु। प्रवृत्त्यात्मकमेवाहुः रजः पर्यायकारकम्। प्रवृत्तं सर्वभूतेषु दृश्यमुत्पत्तिलक्षणम्। प्रकाशः सर्वभूतेषु लाघवं श्रद्दधानता। सात्त्विकं रूपमेवन्तु लाघवं साधुसम्मितम्। एतेषां गुणतत्त्वानि वक्ष्यन्ते तत्त्वहेतुभिः। समासव्याससयुक्तानि तत्त्वतस्तान्निबोधत। संमोहोऽज्ञानमत्यागः कर्मणामविनिर्णयः। स्वप्नः स्तम्भो भयं लोभः शोकः सुकृतदूषणम्। अस्मृतिश्चाविपाकश्च नास्तिक्यं भिन्नवृत्तिता। निर्विशेषत्वमन्धत्वं जघन्यगुणवृत्तिता। अकृते कृतमानित्वमज्ञाने ज्ञानमानिता। अमैत्री विकृतीभावो ह्यश्रद्धा मूढ़भावना। अनार्ज्जवमसञ्ज्ञत्वं कर्म पापमचेतना। गुरुत्वं सन्नभावत्वमवशित्वमवाग्गतिः। सर्व एते गुणाः प्रोक्तास्तामसाः संप्रकीर्तिताः। ये चान्ये विहिताभावा लोकेऽस्मिन् भावसंज्ञिताः। तत्र तत्र नियम्यन्ते सर्वे ते तामसा गुणाः। परिवादकथा नित्यं नित्यं ब्राह्मण निन्दकाः। अत्यागश्चाभिमानश्च मोहो मन्युस्तथाऽक्षमा। मत्सरश्चैव भूतेषु तामसं वृत्तमिष्यते। वृथारम्भा हि ये केचिद्वृथादानानि यानि च। वृथा भक्षणमित्येतत् तामसं वृत्तमिष्यते। अतिवादोऽतितिक्षा च मात्सर्यमतिमानिता। अश्रद्दधानताचैव तामसं वृत्तमिष्यते। एवंविधाश्च ये केचिल्लोकेऽस्मिन् पापकर्मिणः। मनुष्या भिन्नमर्यादास्ते सर्वे

तामसाः स्मृताः। तेषां योनिं प्रवक्ष्यामि नियताः पापकर्म्मिणाम्। अवाङ्निरयभावाय तिर्य्यङ्निरयगामिनः। स्थावराणि च भूतानि पशवो वाहनानि च। क्रव्यादा दन्दशूकाश्च क्रमिकीटविहङ्गमाः। अण्डजा जन्तवश्चैव सर्वे चापि चतुष्पदाः। उन्मत्ता वधिरामूका ये चान्ये पापरोगिणः। मग्नास्तमसि दुर्वृत्ताः स्वकर्म्मकृतलक्षणाः। अवाक्स्रोतस इत्येते मग्नास्तमसि तामसाः। तेषामुत्कर्षमुद्रेकं वक्ष्याम्यहमतः परम्। यथा ते सुकृतान् लोकान् लभन्ते पुण्यकर्म्मिणः। अन्यथा प्रतिपन्नास्तु विवृद्धा ये च कर्म्मिणः। स्वकर्मनिरतानाञ्च ब्राह्मणानां शुभैषिणाम्। संस्कारेणोर्द्ध्वमायान्ति यतमानाः सलोकताम्। स्वर्गं गच्छन्ति देवानामित्येषा वैदिकी श्रुतिः। अन्यथा प्रतिपन्नास्ते विवुद्धाः स्वेषु कर्मसु। पुनरावृत्तिधर्म्माणस्ते भवन्तीह मानुषाः। पापयोनिं समापन्नाश्चाण्डालामूकचूचुकाः। वर्णान् पर्य्यायशश्चापि प्राप्नुवन्त्युत्तरोत्तरम्। शूद्रयोनिमतिक्रम्य ये चान्ये तामसा गुणाः। स्रोतोमध्ये समागम्य वर्त्तन्ते तामसे गुणे। अभिषङ्गस्तु कामेषु महामोह इति स्मृतः। ऋषयो मुनयो देवामुह्यन्त्यत्र सुखेप्सवः। तमो मोहो महामोहस्तामिस्रः क्रोधसंज्ञितः। मरणं त्वन्धतामिस्रस्तामिस्रः क्रोध उच्यते। वर्णतो गुणतश्चैव योनितश्चैव तत्त्वतः। सर्व्वमेतत्तमो विप्राः! कीर्त्तितं वो यथाविधि"।

सांख्ये अधर्म्माज्ञानावैराग्यानैश्वर्य्याख्यास्तस्य धर्मा उक्ता यथा "अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्य्यम्। सात्त्विकमेतद्रूपं तामसमस्मात् विपर्य्यस्तम्" सा० का० "रजस्तु चलतया परितस्त्रैगुण्यं चालयद् गुरुणा वृण्वता च तमसा तत्र तत्र प्रवृत्तिप्रतिवन्धकेन क्वचिदेव प्रवर्त्त्यते इति ततस्ततो व्यावर्त्त्य तमोनियामकमुक्तं गुरु वरणकमेव तमः" सां० कौ०। अयमर्थः तयोगुणास्त्रैगुण्यं सत्वादीनि परितः स्वकर्म्म करणाय चालयत् प्रवर्त्तयत् रजः गुरुणा गौरयान्वितेन वृण्वता यत्र यत्र कार्य्यं जननाय तस्य प्रवृत्तिस्तत्र तत्र प्रतिवन्धकेन तमसा क्वचिदेव कार्य्ये प्रवर्त्त्यते कर्मत्वम् क्रियते इति। तथा च तस्मात् तस्मात् कार्य्यात् व्यावर्त्त्य रजसः प्रवृत्तिं रोधयित्वा तमो नियामकमिति। अन्योऽपि विशेषस्तत्रोक्तो यथा "प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः। अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः" "गुणा इति परार्थाः सत्त्वं लघुः प्रकाशकमित्यत्र च सत्त्वादयः क्रमेण निर्द्दिश्यन्ते। तदनागतावेक्षणेन तन्त्रयुक्त्या वा प्रीत्यादीनां यथासंख्यं वेदितव्यम्। एतदुक्तं भवति प्रीतिः सुखं प्रीत्यात्मकः सत्वगुणः, अप्रीतिर्दुःखं अप्रीत्यात्मको रजोगुणः, विषादो मोहः विषादात्मकस्तमोगुण इति। ये तु मन्यन्ते न प्रीतिर्दुःखाभावादतिरिच्यते एवं दुःखमपि न प्रीत्यभावादन्यदिति तान् प्रत्यात्मग्रहणम्। नेतरेतराभावाः सुखादयः अपि तु भावाः आत्मशब्दस्य भाववचनत्वात् प्रीतिरात्मा भावो येषां ते प्रीत्यात्मानः एवमन्यदपि व्याख्येयम्। भावरूपता चैषामनुभवसिद्धा परस्पराभावात्मकत्वे तु परस्पराश्रयापत्तेरेकस्याप्यसिद्धेरुभयासिद्धिरिति भावः। स्वरूपमेषामुक्त्वा प्रयोजनमाह प्रकाशप्रवृत्तिनियमार्थाः अत्रापि यथासंख्यमेव। रजः प्रवर्त्तकत्वात्सर्वत्र लघु सत्वं प्रवर्त्तयेत् यदि तमसा गुरुणा न नियम्येत। तमोनियतन्तु क्वचिदेव प्रवर्त्तयति इति भवति तमोनियामकम्। प्रयोजनमुक्त्वा क्रियामाह अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च इतिः क्रिया सा च प्रत्येकमभिसम्बध्यते। अन्योन्याभिभववृत्तयः एषामन्यतमेनार्थवशादुद्भूतेनान्यदभिभूयते। तथाहि सत्त्वं रजस्तमसी अभिभूय शान्तामात्मनो वृत्तिं प्रतिलभते एवं रजः सत्त्वतमसी अभिभूय घोराम्, एवं तमः सत्त्वरजसी अभिभूय मूढामिति। अन्योन्याश्रयवृत्तयः। यद्यप्याधाराधेयभावेन नाश्रयार्थो घटते तथापि यदपेक्षया यस्य क्रिया स तस्याश्रयः तथाहि सत्त्वं प्रवृत्तिनियमावाश्रित्य रजस्तमसी प्रकाशेनोपकरोति, रजः प्रकाशनियमावाश्रित्य प्रवृत्तमितरयोः, तमः प्रकाशप्रवृत्ती आश्रित्य नियमेनेतरयोरिति। अन्योन्यजननवृत्तयः अन्यतमोऽन्यतमं जनयति जननञ्च परिणामः स च गुणानां सदृशरूपः अतएव न हेतुमत्त्वं तत्त्वान्तरस्य हेतोरभावात्। नाप्यनित्यत्वं तत्त्वान्तरे लयाभावात्। अन्योन्यमिथुनवृत्तयः अन्योन्यसहचराः अविनाभाववर्त्तिन इति यावत् चः समुच्चये भवति चात्रागमः "अन्योन्यमिथुनाः सर्वे सर्वे सर्वत्र गामिनः। रजसोमिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः। तमसश्चापि मिथुने ते सत्त्वरजसी उभे। उभयोः सत्वरजसोर्मिथुनं तम उच्यते। नैषामादिः संप्रयोगो वियोगो वोपलभ्यत" इति। सां० त० कौ०

“गुरुवरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः”। “ऊर्द्धं सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः”। सा० का०। ‘‘सत्त्वं ज्ञानं तमोऽज्ञानं रागद्वेषौ रजः स्मृतम्”। मनुः। चक्षुर्वृत्तिनिरोधके शार्वरादिके अन्धकारे “अदस्त्वयानुन्नमनुत्तमं तमः” “आसादितस्य तमसा नियतेर्नियोगात्” माघः। तच्च स्वपरप्रकाशकतेजः सामान्याभावरूपमिति नैयायिकाः अन्धकारशब्दे २०६६पृष्ठम्। कणादा अपि तथैवाङ्गीचक्रुस्तच्च औलुक्यशब्दे १५८८पृ० दर्शितम्। वेदान्तिनस्तु भावरूपं प्रतिपेदिरे यथा विवरणोपन्यासे। तमः प्रकाशयद्दिरुद्धस्वभावयोरिति”शा० भाष्यव्याख्याने “ननु तमः प्रकाशदृष्टान्ते भावाभावरूपत्वमुपाधिः। आलोकाभावस्तम इति नैयायिकाः। रूपदर्शनाभावस्तम इति प्राभाकरा इति चेत् नैवं उपचयाऽपचयाद्यवस्थाभेदवत्त्वेनोपलभ्यमानत्वेनाभावत्वायोगात् नीलरूपवत्त्वेन द्रव्यत्वाच्च। ननु भावत्वपक्षे बहुला लोकवति देशे निमीलितनयनस्य कथं तमःप्रतीतिः बहुलालोकेन निरुत्यङ्गीकारात् मध्यावस्थानं तु मन्दालोकेनैव पूर्वमुक्तमिति चेत् न गोलकान्तर्वर्त्ति तमसः प्रतीत्युपपत्तेः नच नेत्रस्थान्तर्वर्त्ति वस्तुग्राहकत्वासम्भवः पिहितकर्णस्यान्तरशब्दग्राहकत्वदर्शनात्। न चैवं गोलकान्तरस्याञ्जनादेरपि निमीलितनयनेन ग्रहणप्रसङ्गः। तमोव्यतिरिक्तरूपिण आलोकसहितचक्षुर्ग्राह्यत्वनियमात्। अथ मतं द्रव्यत्वे सति तमसः आलोकविनाशितस्यालोकापगमे झटिति नोत्पत्तिः कार्य्यद्रव्याणां द्व्यणुकादिक्रमेणैवारम्भादिति तन्न विवर्त्तवादिनां क्रमानपेक्षणात् कारणं तु मूलाविद्यैव। अथापि तमो न रूपवद्द्रव्यं स्पर्शशून्यत्वादाकाशवदिति चेत् न वायुर्न स्पर्शवान् रूपशून्यत्वादाकाशवदित्याभाससमानयोगक्षेमत्वात् प्रत्यक्षविरोधस्य तुल्यत्वात्। अथालोकाभावे समारोपितं नीलं रूपं गोचरयतीति तमःप्रत्यक्षस्यान्यथा गतिरुच्येत एवमपि हेतुरनैकान्तिकः रूपवद्द्रव्यस्यैव धूमस्य चक्षुःप्रदेशादन्यत्र स्पर्शशून्यत्वात्। तत्र विद्यमान एव धूमस्पर्शोऽनुद्भूत इति चेत् तर्हि तमःस्पर्शोऽपि सन्नेव सर्वत्रानुद्भूत इति हेत्वसिद्धिः स्यात्। नच सतः सर्वत्रानुद्भवोऽसम्भावितः। आकरजे सुवर्णादौ सत एव स्वपरप्रकाशकभास्वररूपस्योष्णस्पर्शस्य च सर्वत्रानुद्भवदर्शनात्तदेवं भावरूपतमोवादे न कोऽपि दोषः। नन्वभाववादेऽपि तथा उपचयाऽपचयाद्यवस्थानां प्रतियोग्यालोकोपाधिकत्वात् नीलरूपस्य चारोपितत्वादिति चेत् नैवं दुर्निरूपत्वात् तथाहि किमालोकमात्राभावस्तमः उत नैकालिकाऽभावः सर्वालोकाभावो वा प्रथमद्वितीययपक्षयोः प्रागभाव इतरेतराभावः प्रध्वंसाभासो वा तम इति दुर्भणं सवितृकिरणसन्तते देशे प्रदीपजन्मनः प्राग् जाते वा प्रदीपे दीपनाशे वा। तमोवुद्ध्यभावात्। तृतीये सर्वालोकसन्निधानमन्तरेण न निवर्त्तते। रूपदर्शनाभावस्तम इत्ययुक्तं बहुलान्धकारसंवृतापवरकमध्यस्थितस्य चक्षौरूपदर्शनात्तमोदर्शनयोर्युगपदेव भावात्। तमआभावस्तम इति दृष्टान्ते नास्त्युक्तोपाधिः”। २२तमोवदावरके अज्ञाने अविद्यायां “अहि देवः परं ज्योतिः तमः पारे प्रतिष्ठितम्” कुमा०। “आदित्यवर्णं तमसः परस्तात्” श्रुतिः। “आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्” “महाभूतादि वृत्तौजाः प्रादुरासीत् तमोनुदः” मनुः। सांख्योक्ते अविद्याया २३अष्टविधे भेदे च। “भेदस्तमसोऽष्टविधः” सां० का०। “तमसोऽविद्याख्याया अष्टविधो भेदः। अष्टासु विधाः अव्यक्तमहदहङ्कारपञ्चतन्मात्रेषु अनात्मसु आत्मबुद्धिरविद्या तस्या अष्टविधविषयत्वादष्टविधत्वम्” सा० तत्त्वकौ०। २४राहौ पु० न०। तस्य भूच्छायारूपत्वात् तथात्वम्। अगुशब्दे दृश्यम्। “तमोहस्ते चेत् सुयहा तनुस्था” नील० ता०। २५विशेषदर्शनविरोधिदोषे २६कार्य्याकार्य्याविवेके च म० शब्दार्थचि०। समस्तार्थकाण्डशब्दे परे कस्का० विसर्गस्य सः। तमकाण्डः ‘‘कपातमस्काण्ड मलीमसं नभः” माघः। “अवसमन्धेभ्यस्तमसः” पा० अच् समा०। अवतमसं सन्तमसम् अन्धतमसम्। तृतीयान्तेनानेन क्तान्तस्य समासे तृतीयाया अलुक्। तमसाकृतः तमसाच्छन्न इत्यादि। तमसाकृतस्खेदं अण्। तामसाकृत तमःसम्बन्धिनि त्रि० स्त्रियां ङीप्।

**तमस** पु० तम—असच्। १कूपे २अन्धकारे च संक्षिप्तसारः ३अन्धकारे ४नगरे न० त्रिका०। ५नदीभेदे स्त्री ‘‘संप्राप्य तीरं तमसापगाया गङ्गाम्बुसम्पर्कविशुद्धिभाजः”। “विगाहितं यामुनमम्बु पुण्यम्” भट्टिः। “यस्याः स्मरणात् नश्यति पापं सा तमसा” जयमङ्गलः। गङ्गाम्बुसम्पर्केत्युक्तेः सा गङ्गासङ्गता यमुना चास्याः सान्निध-

ष्स्था। सेयं वाल्मीकमुनेराश्रमनिकटस्था यथाह रामा० आदि० २६ अ० "जगाम तमसातीरं जाह्नव्यास्त्वविदूरतः"। "स तु तीरं समासाद्य तमसाया मुनिस्तदा। शिष्यमाह स्थितं पार्श्वे दृष्ट्वा तीर्थमकर्दमम्। अकर्दममिदं तीर्थं भरद्वाज! निशामय। रमणीयं प्रसन्नाम्बु सन्मनुष्य-मनो यथा। न्यस्यतां कलसस्तात! दीयतां वल्कलं मम। इदमेवावगाहिष्ये तमसातीर्थमुत्तमम्"। "दृष्ट्वा तमसा तत्र वारयन्तीव राघवम्। ततः सुमन्त्रोऽपि रथाद्विमुच्य श्रान्तान् हयान् संपरिवर्त्य शीघ्रम्। पीतोदकांस्तोयपरिप्लुताङ्गांस्तानचारयद्वै तमसाविदूरे" रामा० अर० ४५ अ०। "ततस्तु तमसातीरं रम्यमाश्रित्य राघवः" ४६ अ०।

**तमस्काण्ड** पु० ६त०। काण्डा० विसर्गस्य सः। तमःसमूहे "अपानमस्काण्डमलीमसं नभः" माघः।

**तमस्तति** स्त्री ६त०। अन्धकारसमूहे।

**तमस्वत्** त्रि० तमस्+अस्त्यर्थे मतुप् मस्य वः सान्तत्वात् मत्वर्थे न विसर्गः। तमोयुते स्त्रियां ङीप् सा च २रात्रौ स्त्री निघण्टुः ३हरिद्रायाञ्च।

**तमस्विन्** त्रि० तमोऽस्तीति विनि सान्तत्वात् मत्वर्थे न विसर्गः। १तमोयुक्ते स्त्रियां ङीप्। सा च २रात्रौ ३हरिद्रायाञ्च अमरः। "अदृश्यमानस्तस्याद्य तमस्विन्यामनिन्दिते"। भा० वि० २२ अ०।

**तमाल** पु० तम–कालन्। स्वनामख्याते वृक्षभेदे अमरः। "तमालो मधुरो बल्यो वृष्यश्च शिशिरो गुरुः। कफपित्ततृषादाहश्रमभ्रान्तिहरश्च सः" राजनि०। तत्पत्राकृतित्वात् २तिलके ३खड्गभेदे ४वरुणवृक्षे च मेदि०। ५कृष्णखदिरे शब्दच० ६वंशत्वचि भरतः"। ७पत्रके (तेजपात) राजनि०। "यत्रत्तालतमालशालसरलव्यालोलवल्लीलता" गङ्गास्तवः "अनन्तानेकतमालतालम्" "तेनोपमीयेत तमालनीलम्" माघः। "एकाकिन्यपि यामि सत्वरमतः स्रोतस्तमालाकुलम्" सा० द०। तमालदले तु पर्युषितत्वदोषो नास्ति यथोक्तं आ० त० योगिनीतन्त्रे "बिल्वपत्रं च माघ्यञ्च तमालामलकीदलम्। कह्लारं तुलसी चैव पद्मकं मुनिपुष्पकम्। एतत् पर्युषितं न स्यात् यच्चान्यत् कलिकात्मकम्"। स्वार्थे क। तमालक तत्रार्थे वंशत्वचि च तमालवृक्षे पु० म० शब्दरत्ना०।

**तमालपत्र** न० तमालपत्रस्येवाकारोऽस्त्यस्य अच्। १तिलके अमरः २पत्रके (तेजपात) ३तमालवृक्षे च पु० मेदि०। ६त० ४तमालवृक्षपत्रे न०। "तमालपत्रास्तरणासु रन्तुम्" रघुः।

**तमालिका** स्त्री तम–कालन् संज्ञायां कन् कापि अत इत्त्वम्। १ताम्रवल्ल्यां २भूम्यामलक्यां च राजनि०। (तमलुक) ३देशभेदे त्रिका०।

**तमालिनी** स्त्री तमालवृक्षाः बहवः सन्त्यत्र पुष्करा० देशे इनि ङीप्। १तमोलिप्तदेशे (तमलुक) हेम०। तमालाकृतियुक्तपत्रत्वात् २भूम्यामलक्यां राजनि०।

**तमाली** स्त्री तम–कालन् गौरा० ङीप्। १ताम्रवल्ल्यां (पान) २वरुणवृक्षे च राजनि०।

**तमि(मी)** स्त्री० तम–इन् वा ङीप्। २रात्रौ अमरः। "स तमीं तमोभिरधिगम्य तताम्" माघः। २मोहे च तमिषीचिः।

**तमिषीचि** स्त्री तमिं मोहं सिञ्चति सिच–इन् संज्ञायां षत्वं पृषो० दीर्घः। १अप्सरोभेदे। "याः क्रन्दास्तमिषीचयोऽक्षकामा मनोमुहः। ताभ्यो गन्धर्वपत्नीभ्योऽप्सरोभ्योऽकरं नमः" अथ० २।२।५ २बलवति त्रि० "निरवसन् तमिषीचीरभैषुः" ऋ० ८।४८।११। "तमिषीचीबलवत्यः" भा०। छान्दसः जसः शस्।

**तमिस्र** न० तमोऽस्त्यत्र ज्योत्स्नेत्यादि० नि० तमिस्रा रात्रिरात्रयत्वेनास्त्यस्य अच् वा। १अन्धकारे २क्रोधे च मेदि०। ३तमःप्रधानरात्रौ स्त्री अमरः ४दर्शरात्रौ वाचस्पतिः। ५अन्धकारततौ स्त्री मेदि०। "सूर्य्ये तपत्यावरणाय दृष्टेः कल्पेत लोकस्य कथं तमिस्रा" रघुः। "घनभिन्नास्तमिस्राणां दुर्दिनेष्वभिसारिकाः" कुमा० "हजभ्रतो युचमिवाशु तमिस्रा" किरा०।

**तमिस्रपक्ष** पु० तमिस्राऽस्त्यस्य अच् तादृशः पक्षः। कृष्णपक्षे "तमिस्रपक्षत्रुटिकूटभक्षितम्" नैष०। "तमिस्रपक्षस्य तिथौ भृगोः सुतः" वृ० स० ९अ०। "प्राजेशमाषाढ तमिस्रपक्षे क्षपाकरेणोपगतं समीक्ष्य" २४अ०। [सूक्तभेदे।

**तमुष्टुहीय** न० तमु ष्टुहि इत्यादिकर्चमधिकृत्य प्रवृत्तः गह० छ।

**तमेरु** त्रि० ताम्यति तम–एरु। १ग्लानियुक्ते "अतमेरुर्यज्ञो-ऽतमेरुर्यजमानस्य प्रजा भूयात्" यजु० ।१।२३ "यज्ञो यागहेतुः पुरोडाशः अतमेरुर्भूयात्। तसु ग्लानौ ताम्यतीति तमेरुः औणादिक एरु प्रत्ययः न तमेरुः अतमेरुः। भस्माच्छादनेन ग्लानिरहितो भवतु। यजमानस्य प्रजा पुत्रपौत्रादिः अतमेरुर्ग्लानिरहिता भूयात् यजमानस्य प्रजायाः कदापि दुःखं माभूदित्यर्थः" वेददी०।

**तमोघ्न** पु॰ तमोऽन्धकारं मोहमज्ञानं वा हन्ति हन–टक्। १सूर्य्ये, २वह्नौ, ३चन्द्रे, ४बोधे, ५विष्णौ, ६शिवे च मेदि॰। मनुष्यकर्त्तृके तु न टक् किन्तु अण्। तमोघात अमनुष्ये तमोनाशके त्रि॰ तत्र सूर्य्ये "आशुगामी तमोघ्नश्च हरिदश्च कीर्त्यसे" भा॰ व॰ ३ अ॰। "यथा तमांस्यभ्युदितस्तमोघ्नः पूर्वां प्रतिज्ञां समवाप्य वीरः" भा॰ द्रो॰ १४६ अ॰। [कीटे शब्दरत्ना॰।

**तमोज्योतिस्** पु॰ तमसि अन्धकारे ज्योतिरस्य। खद्योते

**तमोनुद्** पु॰ तमो नुदति अपसारयति नुद–क्विप्। १सूर्य्ये २चन्द्रे ३वह्नौ ४दीपे च शब्दरत्ना॰ ५अन्धकारनाशके त्रि॰ "एवमुक्तस्तदाऽविर्नै तमोनुदभवच्छ्रयी" भा॰आ॰ १५६अ॰।

**तमोनुद** त्रि॰ तमोऽज्ञानमन्धकारं वा नुदति नुद–क। १अन्धकारनाशके २अज्ञाननाशके ३ईश्वरे पु॰। "वायोरपि विकुर्वाणात् विरोचिष्णु तमोनुदम्" महाभूतादि वृत्तौजाः प्रादुरासीत्तमोनुदः" मनुः।

**तमोऽपह** पु॰ तमोऽपहन्ति अप+हन–ड। १सूर्य्ये २चन्द्रे ३वह्नौ ४बोधे च मेदि॰।५तमोनाशकमात्रे प्रदीपादौ त्रि॰ "यसते हि तमोऽपहं सुहृः" माघः। "पुत्रं तमोऽपहं लेभे नक्तं ज्योतिरिवौषधिः" रघुः। ६मोहनाशके "आगमादिव तमोऽपहादितः" किरा॰। ब्रह्मज्ञाननाशकत्वात् तथात्वम् "तत्ताज्ञानं धिया नश्येत्" वेदान्तका॰।

**तमोभिद्** पु॰ तमो भिनत्ति भिद–क्विप्। १शार्वरतमोभेदके खद्योते शब्दर॰ २तमोभेदकमात्रे त्रि॰ क। तमोभिदोऽप्युक्तार्थे त्रि॰।

**तमोमणि** पु॰ तमसि मणिरिव। १खद्योते त्रिका॰। २गोमेदके मणौ राजनि॰।

**तमोमय** त्रि॰ तमआत्मकम् तमःप्रचुरं वा तमस्+मयट्। १अन्धकारात्मके २अज्ञानात्मके ३तमःप्रचुरे च। ४राहौ पु॰ "तमोमयं सैंहिकेयाख्यम्" सू॰ स॰ ५अ॰। राहोश्च यथा तमोरूपत्वं तथा अगुशब्दे ४८पृ॰ उक्तम्। "विसृसर्जात्मनः कायं नाभिनन्दंस्तमोमयम्" भाग॰ ३। २०।२२। तमोमयमन्धकारप्रचुरं रात्रिरूपं कायमित्यर्थः।

**तमोऽरि** पु॰ ६त॰। १सूर्य्ये २चन्द्रे ३वह्नौ ४ज्ञाने च "तमोऽरिविम्बप्रतिविम्बधारी रुराव कान्ते। पवनाशनाशः" सुन्दरसमस्यापूरणम्। तमःशब्दे अनयोऽन्यत्र।

**तमोलिप्ती** स्त्री तमसाऽलं लिप्यते स्म कर्मणोपपदे लिप–क्त उप॰ स॰ ङीप्। देशभेदे। (तमलुक) शब्दरत्ना॰।

**तमोविकार** पु॰ ६त॰। तमसो विकारे निद्रालस्यादौ तमःशब्दे दृश्यम्। तमसैव विकारो यत्र। २रोगे राजनि॰। ३तमिस्रारात्रौ शब्दार्थचि॰।

**तमोवृध** त्रि॰ तमसि शार्व्वरे, तमसा आवरकेणाज्ञानेन वा वर्द्धते वृध–क्विप् ७त॰ ३त॰ वा। १तमसि रात्रौ वर्द्धमाने प्रचुरसञ्चारिणि राक्षसादौ। "न्यर्पयतं वृषणा तमोवृधः" ऋ॰ ७।१४०।१। २अज्ञानवृद्धे च।

**तमोहन्** त्रि॰ तमोहन्ति हन–क्विप्। अज्ञाननाशके "ज्योतीरथं शुक्रवर्णं तमोहनम्" ऋ॰ १।१४०।१। तमोहन्तरि २सूर्य्ये ३चन्द्रे च "तमोहा यदि पापेन तमसैव हि वीक्षितः" ज्यो॰ त॰।

**तमोहर** त्रि॰ तमोहरति हृ–अच् ६त॰। १अन्धकारनाशके २अज्ञाननाशके च ३सूर्य्ये ४चन्द्रे च पु॰शब्दर॰ "निर्गुणं वाममार्गे च सव्यमार्गेऽङ्कुता निजा। मध्ये नाथ स्वयं ज्योतिस्तज्ज्योतिर्मे तमोहरम्" शब्दार्थचि॰ धृतवाक्यम्

**तम्पा(म्बा)** तम्ब–अच् पृषो॰ वा। सौरभेय्याम् हेमच॰।

**तम्ब** गतौ भ्वा॰ पर॰ सक॰ सेट्। तम्बति अतम्बीत्। ततम्ब

**तम्बिका** स्त्री तम्ब–ण्वुल् टाप् कापि अत इत्त्वम्। सौरभेय्यां हेमच॰।

**तम्बीर** पु॰ तम्ब–बा॰ ईरन्। "वज्री राज्यलगोऽम्बरगामी दीप्तांशकैर्युतः। दत्तेऽम्बरे कार्य्यकरस्तम्बीरोबन्नकार्य्ययोः" नी॰ ता॰ उक्ते योगभेदे।

**तम्र** त्रि॰ ताम्यत्यनेन तम–करणे र। ग्लानिसाधने "प्रतम्रा अवपत्तमांसि" ऋ॰ १०।७३।५। [तिये।

**तय** गतौ रक्षणे च भ्वा॰ आ॰ सक॰ सेट्। तयते अतयिष्ट-

**तर** पु॰ तॄ–भावे अप्। १तरणे "पणं यानं तरे दाप्यं पौरुषोऽर्द्धपणं तरे" "ब्राह्मणालिङ्गिनश्चैव न दाप्यास्तरिकं तरे" मनुः कर्त्तरि अच्। ३अग्नौ पु॰ मेदि॰। तरत्यनेन करणे अप्। ४आतरे पण्यादौ। "दीर्घाध्वनि यथादेशं यथाकालं तरो भवेत्" मनुः।

**तरक्षु** पु॰ तरं गतिं मार्गं वा क्षिणोति मितद्रु॰ डु। मृगादने क्षुद्रव्याघ्रे अमरः। "श्वा कृष्णकर्णौ गर्दभस्तरक्षुस्ते रक्षसामिन्द्राय" यजु॰ २४।४०। अश्वमेधे राक्षसेन्द्रदेवताकपशुकथनम्। "तरक्षून्ऋक्षवानरान्" हरिवं॰ १६५ अ॰।

**तरङ्ग** पु॰ तॄ–अङ्गच्। (ढेउ) ऊर्म्मौ वायुना जलस्य सञ्चालनेन तिर्य्यग्गर्त्तादिप्लवने अमरः। "समीरणोत्थेव तरङ्गलेखा" रघुः २वस्त्रे ३हयादीनां प्लुतकाले उत्थादि॰। ततः तारका॰ इतच् तरङ्गित जाततरङ्गे त्रि॰। "साग-

रप्रतिमं घोरं वाहनोर्मितरङ्गितम्" भा० भी० ८८अ० । पुष्करा० देशे इनि ङीप् तरङ्गिन् तरङ्गयुक्तदेशे त्रि० । नद्यां स्त्री ङीप् ।

**तरङ्गिणी** स्त्री तरङ्ग+पुष्करा० नदी रूपदेशे इनि ङीप् । नद्याम् अमरः । "तरङ्गिणीवेविषिरिवायता भुवः" माघः । "गजवाजिमनुष्याणां शोणितानां तरङ्गिणी" भा० भी० ९४ अ० ।

**तरङ्गित** त्रि० तरङ्गः संजातोऽस्य तार० इतच् । १जाततरङ्गे २चञ्चले च । तरङ्गशब्दे उदा० दृश्यम् ।

**तरण** पु० तॄ—करणे कर्मणि भावे वा ल्युट् । १प्लवे (भेला) २स्वर्गे । ३प्लवने ४देशान्तरगमने ५पारगमने च न० शब्दार्थचि० "भवति भवार्णवतरणे नौका" मोहमुद्गरः । "स्वप्ननदीतरणावर्षणामेध्यदर्शनप्रयाणेषु तु तत्कालद्रव्यं कार्यत्वात्" कात्या० श्रौ० १।७।१२

**तरणि** पु० तॄ—अनि । १सूर्य्ये, २भेलके, ३अर्कवृक्षे, च अमरः ४किरणे हेमच० ५ताम्रे च । ७नौकायां, ८घृतकुमार्य्याम् स्त्री मेदि० । वा ङीप् नौकायां ९तारके १०शीघ्रगन्तरि त्रि० । "येवा भूयं तरणीन् यो वहन्ति" ऋ० ७।६७।८। "तरणींस्तारकान् शीघ्रगन्तॄन् वा" भा० ११शब्दानुतीर्य्ये वर्त्तमाने "घृतस्य तरणिर्नावा" ऋ० १।४८।२ शब्दानुत्तीर्य्यं वर्त्तते इति तरणिः" भा० "सोऽयं व्याकरणार्णवैकतरणिः" वोपदेवः ।

**तरणिपोत** पु० तरणेः पोत इव । काष्ठाम्बुवाहिन्यां जटा० ।

**तरणिरत्न** न० तरणिप्रियं रत्नम् । सूर्यप्रिये १माणिक्ये राजनि० तरणिमणिप्रभृतयोऽप्यत्र पद्मरागशब्दे २७६३पृ० दृश्याम्

**तरणी** स्त्री तरत्यऽनया तॄ-करणे ल्युट् ङीप् । १नौकायां शब्दरत्ना० २पद्मचारिणीलतायां शब्दच० । ३घृतकुमार्य्यां राजनि० ।

**तरण्ड** पु०न० । तॄ-अण्डच् । १वडिशीसूत्रबन्धनकाष्ठे,(छिप) २प्लवे पु० । ३नौकायां स्त्री मेदि० स्त्रीत्वपक्षे गौ० ङीष् । ४कुम्भतुम्बीरम्भादिकृतप्लवे शब्दरत्ना० ५देशभेदे पु० शब्दर० ।

**तरण्डक** न० तरण्ड+संज्ञायां कन् । तीर्थभेदे "ततो गच्छेत राजेन्द्र ! द्वारपालं तरण्डकम् । तत्र तीर्थं सरस्वत्यां यक्षेन्द्रस्य महात्मनः" भा० व० ८३ अ० । २वडिशसूत्रमध्यबद्धलघुकाष्ठभेदे (फाता) न० । "संसारसागरावर्त्त पतज्जन्तुतरण्डकम्" काशीख० ३३ अ० । ३नौकायां स्त्री गौरा० ङीष शब्दरत्ना० ।

**तरण्डपादा** स्त्री तरण्ड एव पादः इव तरणहेतुत्वात् यस्याः । नौकाभेदे शब्दरत्ना० ।

**तरण्य** तरण गतौ कण्ड्वा० यक् भ्वा० प० सक० सेट् । तरण्यति अतरणीत् अतरण्यीत् ।

**तरत्सम** त्रि० तरत्समेत्यादि ऋचः सन्त्यत्र अच् । पावमानसूक्तान्तर्गते सूक्तभेदे तरत्समन्दीयशब्दे दृश्यम् । "शुद्धवत्योऽथ कुष्माण्ड्यः पावमान्यस्तरत्समाः" हेमाद्रि श्राद्धकल्पधृतवाक्यम् ।

**तरत्समन्दीय** न० पावमानसूक्तान्तर्गते सूक्तभेदे । "जपं स्तरत्समन्दीयं पूयते मानवस्त्र्यहात्" मनुः । "तरत्समन्दीदीवतीत्येताः चतस्र ऋचोजपन्" कुल्लू० । तास्र ऋचः ऋ० ९।५८।१ प्रभृतयस्तत्रः ।

**तरतम** त्रि० तरति तमीति प्रत्ययार्थौ बोध्यतयाऽस्त्यत्र अच् । न्यूनाधिकभावेन वर्त्तमाने तरतमौ हि प्रत्ययौ न्यूनाधिकभावबोधकाविति तदर्थकत्वादस्य तथात्वम् । "तरतमयोगयुक्तांश्च भावानतिरुक्षानतिस्निग्धानत्युष्णानतिशीतानिलवेषमादीन् विवर्जयेत्" सुश्रु० । तस्य भावः ष्यञ् । तारतम्य न्यूनाधिकभावे न० "तारतम्येन वर्त्तमानः" शा० भा० ।

**तरद** स्त्री तॄ—करणे अदि । १प्लवे भेलके । कर्त्तरि अदि । २कारण्डवखगे च मेदि० ।

**तरदी** स्त्री तरेण तरणेन दीयते खण्ड्यते दो—खण्डने घञर्थे क गौरा० ङीष् । कण्टकयुक्तवृक्षभेदे । राजनि० । "तरदी मधुरा तिक्ता गुर्वी बल्या कफापहा" राजनि० । टाप् तरदाप्यत्र तरटीति पाठान्तरम् ।

**तरहटी** स्त्री पक्वान्नभेदे "घृतेन मर्दितां दध्ना फेनिकां मेलयेत्ततः । विधाय वटिकास्तस्या घृते मन्दाग्निना पचेत् । प्रलिप्ताः खण्डपाकेन कर्पूरेण विमिश्रयेत् । तत एताः समरिचास्तरहट्यस्तु ताः स्मृताः । बल्या पुष्टीकरी हृद्या हृष्या पित्तानिलापहा । सुस्निग्धा कफदा उत्यर्थं किञ्चित् सन्धानकञ्जिता" शब्दार्थचि० वाक्यम् ।

**तरन्त** पु० तॄ-भच् । १समुद्रे, २प्लवे, ३भक्ते, ४राक्षसे च ५नौकायां स्त्री गौरा० ङीष् । उणादिको० ।

**तरन्तुक** न० कुरुक्षेत्रस्थानभेदे । "तरन्तुकारन्तुकयोर्यदन्तरं रामह्रदानां च मचक्रुकस्य च । एतत् कुरुक्षेत्रसमन्तपञ्चकं पितामहस्योत्तरवेदिरुच्यते" भा० व० ८३ अ० ।

**तरपण्य** न० तरस्य नद्यादिपारयानस्य पण्यं शुल्कम् । नद्यादेः पारयानार्थं देये शुल्के आतरे (भाड़ा) अमरः ।

**तरवालिका** स्त्री करपालिका+पृषो०। खड्गभेदे हेमच०।

**तरम्बुज** न० मध्यजलके फलभेदे कालिङ्गशब्दे २९७ पृ० तद्गुणादि दृश्यम्।
"ज्यैष्ठे मासि महेशानि! पौर्णमास्यां निशार्द्धके। तृष्णातुरा महाकाली भ्रमन्ती पितृकानने। तत्रागत्य ब्रह्मणा तस्यै फलं दत्तं तरम्बुजम्। तत्फलभक्षणात् तृप्ता वरदापि हरप्रिया। यो मे दद्यात् फलं रम्यं स चिरायुश्चतुर्युगम्"। उत्तरकामाख्यातन्त्रम्।

**तरल** पु० तॄ—अलच्। १हारमध्यस्थे मणौ, अमरः २हारे,। ३तले मेदि०। ४चपले, ५कामुके, ६विस्तीर्णे, ७भास्वरे, ८मध्यशून्ये-द्रव्ये, ९द्रवीभूते पदार्थे च त्रि० हेमच०। १२हीरके रत्ने १०यवाग्वाम्, ११सुरायाञ्च स्त्री धरणिः तत्र भास्वरे "ताराविताननरला इव यामवत्यः" किरा० "व्याघ्रानुसार्यमाणतरलतारामृगा" काद०। "उत्कण्ठितासि! तरले" सा० द०। "तारापतिस्तरलविद्युदिवाभ्रवृन्दम्" रघुः। "वैराग्रितारास्तरलाः" माघः। हारमध्यमणौ "प्रवालमुक्तास्तरलाश्च हाराः" भा० क० ९४अ० १४ अ०। "हारांस्तरलविद्धांश्च स्वर्णभासा विभूषिताः" हरिवं० १५२ अ०। भृशा० अभूततद्भावे क्यङ्। तरलायते "तथापि तरलायते चेतः" उद्भटः।

**तरललोचना** स्त्री तरलं चञ्चलं लोचनं यस्याः। चञ्चलनयनायां स्त्रियां हेमच० २चञ्चलनेत्रयुक्तमात्रे त्रि० कर्म०। ३चञ्चले नेत्रे न०।

**तरलित** त्रि० तरल इवाचरति तरलं करोति तरल+क्विप्-णिच् वा क्त। १आन्दोलिते, २कम्पिते, ३धूते, ४लुलिते च हेम०।

**तरवारि** पु० तरं शत्रूणां गतिं वारयति वृ-णिच्—इन्। खड्गभेदे। (तरवार) इति भाषा। हेमच० असिशब्दे ५५१पृ० तल्लक्षणादिकमुक्तं युक्तिकल्पतरावत्र विशेष उक्तो यथा "अङ्गं रूपं तथा जातिर्नेत्रारिष्टे च भूमिका। ध्वनिर्मानमिति प्रोक्तं खड्गज्ञानाष्टकं शुभम्। अभिन्ने दृश्यते यादृक् विभिन्ने घटिते तथा। यदेव दृश्यते चिह्नं तदङ्गं संप्रचक्षते। नीलकृष्णादिकं खड्गे रूपमित्यभिधीयते। तेनैव यत् प्रतीतं स्यात् तज्जातिरिति गद्यते। अङ्गातिरिक्तं यज्जातिस्तन्माहात्म्योपसूचकम्। तन्नेत्रमिति जानीयात् खड्गे खड्गविशारदाः। अङ्गातिरिक्तं खड्गादि यच्छुभत्वोपसूचकम्। तदरिष्टमिति प्राहुर्भूमिरङ्गादिधारणम्। यः खड्गे जायते शब्दो दण्डदन्तादिना हते। स ध्वनिस्तुलना मानं ज्ञानमष्टविधन्त्विदम्। पद्माद्या निपुणैः खड्गे सम्भाव्यन्तेऽपि कृत्रिमाः। अन्त्यावकृत्रिमौ ज्ञेयौ तावेव सहजाविति। शतमङ्गानि चत्वारि रूपाणि जातयस्तथा। त्रिंशन्नेत्राणि जानीयादरिष्टानां तथैव च। भूमिश्च द्विविधा ज्ञेया ध्वनिरष्टविधो मतः। मानन्तु द्विविधं प्रोक्तमित्येषां संग्रहो मतः"। खड्गस्य शताङ्गनामानि लौहार्णवे "रूप्यस्वर्णगजोरुकूटमनस्थूलाङ्गकृष्णारुणश्वेताम्भोजगदातिलाननकणाग्रन्थिस्थिरातैत्तिराः। मालाजीवकषट्पदोर्द्ध्वमरिचव्यालाश्वहंसाञ्जनक्षौद्रक्षुद्रकमक्षिकातुषयवव्रीहिक्षुमासर्षपाः। सिंहीतण्डुलगोशिराशिवनखश्याहाक्षिकोशोपलद्रोणीकाककपालपत्रतुवरीविम्बीफलीसर्षपाः। नीलीरक्तवचारसोनसुमनाजिह्वीशमीरोहितप्रोष्ठीमारिषभार्गवीसुरताड़न्मेथाद्रिगुञ्जाधराः। दूर्वाविल्वमसूरटुण्टुकमठीमार्ज्जारिकाकेतकीभूर्जावजकलायचम्पककलाम्बष्ठोधवंशासनाः। ज्येष्ठीजालपीपिलिकामलरजःकुष्माण्डरोमद्रुहीकर्कन्धूबकुलारनालमहिषखर्जुवक्रा इति। प्रोक्ता लौहविशारदेन मुनिना खड्गस्य भेदाः क्रमात्"। तस्य चत्वारि रूपाणि। "नीलः कृष्णश्च पिङ्गश्च धूम्रश्चेति चतुर्विधः। वर्णप्रकर्षः खड्गानां कथितो मुनिपुङ्गवैः"। चतस्रो जातयः। "ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चेति चतुर्विधः। जातिभेदे विनिर्दिष्टः खड्गानां मुनिपुङ्गवैः"। त्रिंशन्नेत्राणि। "चक्रं पद्मं गदा शङ्खो डमरुर्द्धनुरङ्कुशः। छत्रं पताका वीणा च मत्स्यलिङ्गध्वजेन्द्रवः। कुम्भः शूलश्च शार्दूलः सिंहः सिंहासनं गजः। हंसो मयूरो जिह्वा च दशनः खड्ग एव च। पुत्रिका चामरं शैलः पुष्पमाला भुजङ्गमः। त्रिंशदेतानि नेत्राणां खड्गानां कथितानि वै"। त्रिंशदरिष्टानि "छिद्रं काकपदं रेखाभिन्नं भेकश्च मूषिकः। विड़ालः शर्करा नीली मशको भृङ्गसूचिके। त्रिविन्दुः कालिका दारी कपोतः काक एव च। खर्परः शकली क्रोड़ी कुशपत्रकजालिके। करालकङ्कखर्जूरश्वङ्गपुच्छखनित्रकम्। लाङ्गूलं वड़िशाख्यञ्च मुनिना तत्त्ववेदिना। प्रोक्तान्येतान्यरिष्टानि खड्गानां त्रिंशदेव हि"। द्विविधा भूमिः "दिव्यभौमविभागेन भूमिस्तु द्विविधा भवेत्"। अष्टधा ध्वनिः। "हंसकांस्याभ्रढक्कानां काकतन्त्रीखराश्मनाम्। ध्वनयोऽष्टविधाः प्रोक्ता नागार्जुन

सुनेर्मताः"। द्विविधं मानम्। "उत्तमाधमभेदेन मानं तद्द्विविधं भवेत्। इति प्रोक्तानि सूत्राणि खड्गानां ज्ञानहेतवे। एतानि तत्त्वतो ज्ञात्वा भवेन्नृपतिपूजितः" सूत्राध्यायः। "तत्र प्रथमतोऽङ्गानां लक्षणानि निबोधत"। लौहदीपे "कृष्यपत्रसमा भूमिरङ्गं श्वेतं प्रतीयते। ऋज्वङ्गं तत्तु महामूल्यं कृष्यवज्रमुशन्ति तम्। एष खड्गवरो दद्याल्लक्ष्मीमायुर्यशो बलम् १। स्वर्णरेखावली तन्वी यद्भूमौ निकषोपमा। स्वर्णवज्रमिति प्राहुरायुर्लक्ष्मीजयप्रदम् २। गजशुण्डाकृतिर्भूमौ कृष्णायामङ्गसम्भवः। गजवज्रमिति प्राहुरक्तस्पर्शं तु तद्विशेत्। ज्वरादिव्याधिशमनं तस्य प्रक्षालनाम्भसा। अपि क्षीणोपि भूपालस्तद्वीर्यात् साधयेन्महीम् ३। एरण्डबीजप्रतिममङ्गं भूमिः सितेतरा। उर्वारुकमिदं नाम्ना शत्रुदर्पक्षयङ्करः। एतस्य स्पर्शमात्रेण नरः सम्यग्विमुच्यते। महिषाख्यमिदं वज्रं केचिदाहुर्मनीषिणः ४। अङ्गं दमनपत्राभं खड्गे यस्मिन् प्रतीयते। विद्याद्दमनवज्रञ्च तज्ज्ञेयं द्विविधं बुधैः। नीला शुभ्रा भवेद्भूमिस्तत्र नीला गरीयसी। तस्मिन् पर्युषितं तोयं गन्धे दमनकोपमम्। तत्प्रभावान्महीपालः कृत्स्नां पृथ्वीं हि साधयेत्" ५। शार्ङ्गधरीये "एका स्थूला सिता रेखा भूमिर्नीला दृढा यदि। स्थूलाङ्गमङ्गं वज्रं तद्विद्याल्लक्ष्मीयशःप्रदम्। एतत्क्षते भवेच्छोथः स्थूलश्चिरतरस्थितिः। एतं महान्तमपरे वदन्ति खड्गकोविदाः ६। दृष्टायां दृश्यते भूमौ अङ्कञ्च प्रतिविम्बितम्। अङ्कवज्रं भवेत्तस्य द्विधा भूमिः सिताऽसिता ७। लौहप्रदीपे "निरङ्गं कृष्यपत्राभमीषन्मणिनिभञ्च यत्। दुर्लभं तन्महामूल्यं कान्तलौहं प्रचक्षते। कृष्णा भूमिर्भवेत् स्वच्छा पीता वज्राङ्कसंकुला। कृष्णवज्रमिति प्राहुस्तत्क्षते मोह उच्यते। कृष्णा भूमिः सुवर्णाभमीषच्छ्लाङ्गसङ्गतम्। डाकुलीवज्रकं विद्यात् कालसंज्ञमथापरे ८। अरुणं सूक्ष्ममूर्द्धञ्चेदङ्गं भूमिः सितेतरा। अरुणाख्यमिदं वज्रं शत्रुदर्पनिसूदनम्। सूर्यांशुस्पर्शमात्रेण वह्निरूपां वहेत् शिखाम्। तस्य स्पर्शनमात्रेण यद्यकोपः स्फुटेच्छिशि। दुर्लभं तन्मनुष्याणां भाग्यैः कुत्रापि लभ्यते। तद्योजनसहस्रस्थारिष्टं नाशयति ध्रुवम् ९। श्वेतास्तिस्रो यदा रेखा आमूलादुपलक्षिताः। श्वेताङ्कमिति तद्विद्याद्यशोलक्ष्मीबलप्रदम् १०। अम्भोजदलसङ्काशमङ्गं भूमिः सितेतरा। अम्भोजवज्रं तज्ज्ञेयं कथितं मुनिपुङ्गवैः ११। अङ्गं यस्य गदाकारं भूमिश्चैव सितेतरा। गदावज्रमिदं ब्रूयात् तत्क्षते शूलसम्भवः १२। अङ्गं कृष्णतिलाकारं भूमिश्चैव सिताऽसिता। तिलवज्रमिदं ज्ञेयं लक्ष्मीजयशःप्रदम्। तत्क्षते तिलतैलाभा वसा प्रच्यवतेऽधिकम् १३। धूम्रवर्णा भवेद्भूमिरङ्गं वह्निशिखोपमम्। अग्निवज्रमिदं ज्ञेयं शत्रूणां दाहकारकम्। यत्र शीतोदकं न्यस्तं तप्तं भवति च क्षणात्। शाणे यङ्कं घर्षेद् यस्तु तथा सूर्यांशुसङ्गमात्। तत्क्षते बलवान् दाहो दग्धवच्च व्रणो भवेत्। एतत् परमभाग्येन लभ्यते धरणीतले १४। भूमिः सिताऽसिता वापि अङ्कञ्चेत् पिप्पलीप्रभम्। कणावज्रमिदं ज्ञेयमन्तर्दाहस्तु तत्क्षते १५। कृष्णा भूमिर्यदीयाङ्के दृश्यते ग्रन्थिसञ्चयः। ग्रन्थिवज्रमिदं ज्ञेयं वैरिपक्षविनाशनम्। तत्क्षते बलवान् दाहस्तृषा च ज्वर एव च १६। शालपर्णीदलाकारमङ्गं कृष्णाविपुलिका। स्थिरावज्रमिदं प्राहुस्तत्क्षते वेपथुर्भवेत् १७। यदा तित्तिरिपक्षाभमङ्गं भूमिः सितेतरा। एतत्तित्तिरिवज्रं स्यात् तत्क्षते बहुधर्मकम् १८। वनमालासमा यस्मिन् माला खड्गे प्रदृश्यते। मालाङ्कवज्रं तद्विद्यात्तत्तोयं गन्धवद्भवेत्। अत्र तप्तोदकं न्यस्तं शीतं भवति तत्क्षणात्। एष दाहपरीतानामतिपित्तहतात्मनाम्। भवेत् परमभैषज्यं भाग्यैनैतद्धि लभ्यते १९। यदा जीवकसङ्काशमङ्गं भूमिः सिताऽसिता। एतज्जीवकवज्रं स्यात् तत्क्षते तत्क्षणाज्ज्वरः २०। भूमिः सिताऽसिता चेत्र स्यादङ्गं भृङ्गाभमिष्यते। तत्र चेन्मधु विन्यस्तं शोषमाप्नोति केवलम्। एतद्भ्रमरवज्रं स्यात्तत्क्षते स्याद्विसूचिका २१। ऊर्द्धगं कपिलाभासमङ्गं यस्मिन् प्रतीयते। ऊर्द्धवज्रमिदं प्राहुर्विषवेगनिसूदनम्"। लौहप्रदीपे "ऊर्द्धगं कपिलाभासमङ्गं यस्मिन् प्रतीयते। लाङ्गलाङ्कन्तु तद्विद्यात् स्पर्शं तस्याऽहिनाशनम् २२। अङ्गं मरीचसङ्काशं भवेद्भूमिः सितेतरा। मरिचाङ्कमिदं वज्रं तत्क्षते कटुरक्तता। तत्प्रक्षालनतोयेन नश्यन्ति पीनसादयः २३। यदा सर्पफणाकारमङ्गं भूमिस्तु निर्मला। भुजङ्गवज्रं तद्विद्यात्तत्क्षते विषवद्रुजा।

तस्य स्पर्शनमात्रेण भेकः प्राणैर्विमुच्यते। एकस्यास्य प्रसादेन कृत्स्नां शास्ति महीं नृपः २४। यदाऽश्वखुरसङ्काशमङ्गं भूमिस्तु निर्मला। अश्वाङ्कमिति तं विद्यात् खड्गं परमदुर्लभम्। तस्य संयोगमात्रेण वाजी-मन्दोऽपि धावति। तस्य क्षालनतोयेन हयानां रोगनाशनम्। एतत्क्षते भवेत् मूर्च्छा दाहश्च भ्रम एव च २५। मयूरपिच्छसदृशमङ्गं भूमिः सितेतरा। बर्हाङ्कमिति तं विद्यात्तत्क्षते वान्तिरिष्यते। सर्पाणामिह सर्वेषामस्य स्पर्शासहिष्णुता। एतदेव नृपतिभिर्भोग्यैः कुत्रापि लभ्यते २६। भूमिरञ्जनसङ्काशा धारा चास्य सिता भवेत्। अञ्जनाख्यमिदं प्रायः सर्वदेशोपलभ्यते"। लौहप्रदीपे "धारा शुभ्रा भवेद्यस्य भूमिः कज्जलसन्निभा। कृष्णमङ्कैर्सितं वापि विद्यात् कज्जलवज्रकम्। मधुवर्णसमा भूमिरङ्गं वा मधुविन्दुवत्। क्षौद्राख्यमिति जानीयात् जयलक्ष्मीयशःप्रदम्"। शार्ङ्गधरीये "निम्नकक्षो भवेद् यत्र रात्रिन्दिवविलेपितः। मधुरो मधुवर्णाभः स खड्गो देववल्लभः। विशेषात्तत्र रज्यन्ति सततं मक्षिकादयः"। "आसीमकोषिका यस्य क्षुद्राङ्कं कुण्डलीकृतम्। क्षुद्रवज्रकनामानं प्राह नागार्जुनो मुनिः। इदं कुण्डलवज्रञ्च प्राह लौहार्णवे मुनिः। अस्य क्षतेषु बलवान् दाहो मदविशेषितः २९। यदङ्गं मक्षिकाकारं भूमिश्चैव सिताऽसिता। स्नेहं गृध्यति चैवात्र मक्षिकाङ्कं समादिशेत् ३०। अङ्गं यदा तुषाकारं या च भूमिः सिताऽसिता। तुषवज्रमिदं ख्यातं प्राह नागार्जुनो मुनिः ३१। अङ्गं यवफलाकारं भूमिः कृष्णा सिता तथा। यवाङ्कमिति तं विद्यात्तत्स्पर्शे कण्डुसम्भवः। एष खड्गाधमस्त्याज्यो यदीच्छेद्भूतिमात्मनः ३२। अङ्गं व्रीहिप्रसूनाभं भूमिर्धूम्रा क्षते ऽतिरुक्। तद्व्रीहिवज्रं जानीयाच्छत्रूणां भयवर्द्धनम् ३३। अतसीफलसङ्काशमङ्गं भूमिः सिताऽसिता। अतसीवज्रमाख्यातं तत्क्षते शिरसोरुजा ३४। यदा सर्षपवीजाभमङ्गं भूमिः सिताऽसिता। खरधारः खरस्पर्शः सर्षपाङ्कः सदुर्लभः ३५। सिंहाकारं भवेद्यस्य भूमिर्यस्य सिताऽसिता। सिंहीवज्रन्तु तद्विद्यात्तत्क्षते प्रलमेश्वरः। एतद्धावनतोयेन कासरोगापनाशनम् ३६। अङ्गं तण्डुलसङ्काशं भूमिर्धूम्रा सिताऽसिता। तण्डुलाङ्कमिमं विद्याद्यशःश्रीबलवर्द्धनम्। एतत्पर्युषितं तोयं तण्डुलोदकसन्निभम्। अस्य प्रभावान्मनुजोभ्रष्टां हि लभते श्रियम् ३७। अङ्गञ्चेद्गोक्षुराकारं भूमिराघातनिःसहा। खड्गाधममिदं विद्याद्गोवज्रं नाम नामतः ३८। स्थूला दीर्घाः सिराः कृष्णा भूमिश्चैव सिताऽसिता। सिराङ्कमिति तं ब्रूयादेनं खड्गाधमं बुधाः ३९। शिवलिङ्गाकृतिश्चाङ्के धारा-चैव सिताऽथवा। शिवाङ्कमिति तं ब्रूयाच्छत्रुपक्ष-निसूदनम् ४०। यदा व्याघ्रनखाकारमङ्गं भूमिस्तु पिङ्गला। नखवज्रमिदं विद्यात् तत्क्षते श्वयथुर्भवेत्। एतदामिषसंस्पर्शात् प्रविशेत् स्वयमेव हि ४१। ग्राहपुच्छोपमन्त्वङ्गं भूमिर्धूम्रा खराकृतिः। ग्राहाङ्कमिति जानीयाच्छत्रुसंशोषनाशनम्। अस्य स्पर्शनमात्रेण जीवन्मत्स्या जहत्यसून् ४२। यदा मनुजनेत्राभमङ्गं भूमिः सिताऽसिता। नेत्राङ्कमिति जानीयात् संग्रामे विजयप्रदम्। एतद्धावनतोयेन नूनमन्धोऽपि पश्यति ४३। अङ्गं केशसमं यस्य भूमिर्धूम्रा सिताऽसिता। केशाङ्कमिति जानीयात् क्लेशदुःखभयावहम् ४४। निरङ्गं स्थूलप्रकृतिस्तुपलाङ्गं विदुर्बुधाः। एतद्धि प्रायशो लोके दृश्यते द्विजसत्तम" ४५। पद्मपुराणे "निरङ्गा निशिता धारा शाणे वह्निं वमत्यपि। स्त्रीणीवज्रमिदं ज्ञेयं पृथिव्यां नातिदुर्लभम् ४६। अङ्गं काकपदाकारं भूमिराघातनिःसहा। एष खड्गाधमस्त्याज्यो काकाद्यो भूतिमिच्छता ४७। यदा कपालमङ्गेषु दृश्यते स्पर्शतः खरम्। एतद्धि दुःखजनकं कपालाङ्कं बुधस्त्यजेत् ४८। तन्वी पत्रा वलीतुल्या सुवर्णाङ्काऽसिपुत्रिका। पत्रवज्रकमाङ्कस्तमायुर्वेदविदो जनाः"। लौहार्णवे "सुपर्णसन्निभा भूमिरङ्गं कालं प्रतीयते। तत् पत्रवज्रं काकस्य सुपर्णमुपजायते ४९। तुवरीदलसङ्काशमङ्गं यस्मिन् प्रतीयते। तुवरीवज्रमाख्यातं तत्क्षते शिरसो भ्रमः। एष खड्गाधमस्त्याज्यो यदीच्छेज्जीवनं निजम् ५० विम्बीदलसमा भूमिरङ्गं विम्बीफलोपमम्। विम्बीवज्रन्तु तद्विद्यात्तज्जलं मित्रमुच्यते। पित्तघ्रुमिकाराणां प्रशमाय प्रयुज्यते ५१। प्रियङ्गुसदृशन्त्वङ्गं भूमिश्च कपिलाकृतिः। फलीवज्रमिदं प्रोक्तं शाणे धूम्रं वमत्यपि ५२। अङ्गं सर्षपपुष्पाभं भूमिस्सैव सिताऽसिता। एतत् सर्षपवज्रं स्यात् शाणे वह्निं वमत्यपि।

अपि कुण्डलिकां याति एतदत्यन्तकोमलम् । एतत्प्रसादात् क्षितिपः कृत्स्नां साधयते महीम् ५३ । नीलीरससमा भूमिरङ्गं नीलीतरङ्गवत् । नीलीवज्रमिदं दृष्टं शाणे वह्निशिखां वमेत् । एष खड्गवरो नृणामरिष्टभयनाशनः ५४ । रक्तालिप्तो महारेखा भूमिश्चैव सिताऽसिता । रक्ताङ्गमिति जानीयाद्वैरिपक्षविनाशनम् । शाणेन यस्तु रक्तां वा नीलां वा वमते शिखाम् । रक्तस्पर्शनमात्रेण स्वयमेव निकृन्तति । क्षतेऽस्य रक्तश्वयथुस्तृषा दाहश्च जायते ५५ । खड्गं पद्मादलसमं भूमिश्चैव सिताऽसिता । पद्मावज्रमिदं ज्ञेयं तत्क्षताद्विषनाशनम् । एष खड्गवरो राज्ञा साधनीयः प्रयत्नतः ५६ । रसोनादुत्तमं खड्गं भूमिस्तस्य दलोपमा । रसोनवज्रं जानीयात् शाणे वह्निं वमत्यपि । अस्य धावनतोयेन आमवातविनाशनम् ५७ । निरङ्गा निर्मला भूमिर्धारा तीक्ष्णा खरः स्वरः । सुमना वज्रमेतत् स्याद्भुवि नात्यन्तदुर्लभम् ५८ । जिह्निनी सदृशी दीर्घा यस्या रेखा सुविस्तरा । जिह्वीवज्रमिदं नाम सर्वकामार्थसाधनम् ५९ । खड्गं शमीपत्रसमं भूमिर्धूम्रा सिताऽसिता । शमीवज्रमिदं ज्ञेयं शनैश्चरसुखावहम् । शाणेषु वमते वह्निं सहते वह्निपीडनम् ६० । रोहितमत्स्यसदृशमङ्गं भूमिः सिताऽसिता वापि । धूम्रा गम्भीरस्वरयुक्ता धारा तीक्ष्णाऽसिता भवेद्रेखा । रोहिताख्यमिदं वज्रं सर्वारिष्टविनाशनम् । वह्निसंस्पर्शमात्रेण किञ्चिच्चिमिचिमायते । इत्ययं दुर्लभः खड्गो देवानामपि कथ्यते ६१ । शफरीवल्कलाकारमङ्गं भूमिः सिताऽसिता । प्रोष्ठीवज्रमिदं प्रोक्तं न्यस्तं तरति वारिणि । एष खड्गोत्तमो राज्ञां विपक्षकुलनाशकः । कदाचिल्लभ्यते भाग्यैर्लभ्यते तेन वै मही ६२ । खड्गं मारिषपत्राभं भूमिः स्याद्विषमच्छविः । इत्ययं मारिषाङ्गः स्यात् पृथिव्यां नातिदुर्लभः ६३ । भृङ्गराजस्य पुष्पाभमङ्गं भूमिर्दलप्रभा । आघातं सहते नैव एष खड्गाधमो मतः ६४ । धारा तीक्ष्णा क्षुराकारा भूमिरङ्गविवर्जिता । आघातं सहते घोरं शाणे वह्निं वमत्यपि । क्षुराङ्गमिति जानीयात् पृथिव्यां नातिदुर्लभम् ६५ । निर्मला सरला भूमिर्भवेच्चैव कदा कदा । मन्दा तीव्रा भवेद्धारा तडिद्वज्रस्य लक्षणम् ६६ । नीलाञ्जनसमा भूमिरङ्गं जलतरङ्गवत् । मेघाङ्गमिति जानीयाच्छाणे शीतं भवत्यपि । एष खड्गाधमस्त्याज्यो यदीच्छेद्भूतिमात्मनः । भर्त्तुः प्रतापं शमयेद्रविबिम्बं यथा घनः ६७ । मन्दा धारा स्वरं गाढ़ा भूमिरङ्गविवर्जिता । पर्वताङ्गमिदं नाम सर्वत्रैवोपलभ्यते ६८ । खड्गं गुञ्जाफलसमं भूमिर्मीनदलोपमा । गुञ्जावज्रमिदं घृष्टं तप्तं भवति घर्षणे । शाणे सिन्दूरसङ्काशं रजो वमति चासकृत् । एष खड्गवरो राज्ञा भाग्यादेवोपलभ्यते । अस्य प्रभावात्तन्नास्ति यन्न साधयते नृपः ६९ । खड्गं तनु शराकारं भूमिश्चैव सिताऽसिता । धारा तीक्ष्णा च वमति शाणे वह्निसमाः शिखाः । शरवज्रमिदं ज्ञेयं राज्ञां वाञ्छितसिद्धये ७० । दूर्व्वादलनिभा भूमिर्धारा तीक्ष्णा खरः स्वरः । शाणेन वमते वह्निं दूर्व्वावज्रं सुदुर्लभम् ७१ । खड्गं विल्वदलाकारं भूमिश्चैव सिताऽसिता । विल्ववज्रमिदं शाणे नीलपीते वमेच्छिखे । एष खड्गवरः प्रोक्तः शत्रूणां कुलनाशनः ७२ । मसूरदलसङ्काशा भूमिरङ्गं मसूरवत् । मसूराङ्गमिदं शाणे रजो वमति चारुणम् ७३ । शणपुष्पनिभा रेखा दीर्घा भूमिः सितेतरा । शणाङ्गमिति जानीयात् खड्गं परमदुर्लभम् ७४ । शटीदलसमा भूमिरङ्गं तत्कुसुमोपमम् । शटीवज्रमिदं प्रायो लभ्यते गुणवत्तरम् ७५ । मार्जाररोमसदृशमङ्गं भूमिः सितेतरा । मार्जाराङ्गमिदं नाम्ना रोगशोकभयावहम् । एष खड्गाधमस्त्याज्यो यदीच्छेद्भूतिमात्मनः ७६ । केतकीपत्रसदृशमङ्गं यस्मिन् प्रतीयते । विद्यात् केतकवज्रं तत् वाराणससमुद्भवम्" ७७ । लौहप्रदीपे "अङ्गं सूत्रतन्तुनिभं भूमिर्मूर्वादलच्छविः । शाणेन वमते शुक्लां शिखां मौर्वी भवेत्ततः । मौर्व्यङ्गमिदमुत्कृष्टं यशःकीर्त्तिबलावहम् ७८ । लिङ्गं तीक्ष्णं खरं गाढं शाणे वह्नेर्वमेत् कणम् । छिनत्त्यन्यविधं लौहं वज्राङ्गमिति तद्वदेत् ७९ । कलायपुष्पसदृशमङ्गं भूमिः सिताऽसिता । कलायवज्रं जानीयात् तत्क्षते पाक इष्यते ८० । खड्गं चम्पकपुष्पाभं भूमिः कृष्णा तथा सिता । शिखां शाणे वमेच्छीतं तिक्तं तस्य जलं भवेत् । इदं चम्पकवज्रं स्यात् सर्वत्र विजयप्रदम् ८१ । खड्गं वलादलसमं भूमिः शुक्ला तथेतरा । वलावज्रमिदं ज्ञेयं नानाभावं भवेद्द्रुतम् । इत्ययं वातरोगाणां नाशने परमौषधम् ८२ । खड्गं वटारोहसमं भूमिर्वटदलच्छविः । वटवज्रमिदं ज्ञेयं खरं खड्गाधमं बुधैः ।

एतस्य स्पर्शमात्रेण नरोमुच्येत सम्पदा ८३ । वंशनीली समा भूमिः खरधारा सिताकृतिः । वंशाङ्कमिति जानीयाद्वंशवृद्धिकरं परम् ८४ । भूमिःसालदलाकारा व्यङ्गं लघु सितासितम् । सालाङ्क एष खड्गः स्यात् पूज्यः सर्व्वार्थदायकः । अयं शाणे वमेद्वह्निं धारा चाप्यथ वा भवेत् ८५ । भूमिः सिताऽसिता वापि व्यङ्गं ज्येष्ठीसमं लघु । ज्येष्ठीवज्रमिदं निन्द्यं न स्पृश्यं वा हितेच्छुभिः ८६ । पुराणजालसदृशमङ्गं भूमिः सिताऽसिता । जालवज्रमिदं पूज्यं शत्रुसम्पत्तिनाशनम् । यदि शाणे वमेन्नीलां शिखां वह्निं वमेन्न वा । तदैष दुर्लभः खड्गो ह्यन्यथा भयहेतुकः ८७ । व्यङ्गं पिपीलिकाकारं भूमिर्धूम्रा तथा सिता । पिपीलिकाङ्क इत्येष तत्क्षते कण्डुसम्भवः । स्वयं यदि भवेद्भूम्रः शाणे पूज्यतमस्तदा ८८ । नलपत्रसमा भूमिरङ्कन्तत्कुसुमोपमम् । नलाङ्कमिति जानीयाद्भर्त्तुः सर्व्वार्थसाधकः ८९ । निरङ्का निर्म्मला भूमिर्दृष्टं दृष्टं वमेद्रजः । दृढा धारा भृशं स्थूला आघातं सहते न च । रजोवज्रमिदं निन्द्यं शत्रूणां विजयावहम् ९० । कुष्माण्डवीजसदृशमङ्कं भूमिः सिताऽसिता । कुष्माण्डवज्रं जानीयात्तत्क्षते वेगनिग्रहः ९१ । अङ्कं न्टरोमसदृशं भूमिर्धूम्रा सितासिता । रोमाङ्कमिति जानीयात्तत्क्षते पिड़कोद्गमः ९२ । भूमिः स्नुहीदलाकारा व्यङ्गं तत्कण्टकोपमम् । धारा तीक्ष्णा-रवस्तीक्ष्णो लघु मानं खरा स्पृशा । स्नुह्यङ्कः खड्ग इत्येष तत्क्षते दाहदद्भ्रमः । मुखाक्षिकर्णनासानां दाहः पाकश्च जायते । अयं यदि च सर्पाणां फणास्पुपरि विध्यते । फणा विदारमाप्नोति सर्पोलोटयते शिरः । अस्य धावनतोयेन कुष्ठरोगविनाशनम् ९३ । कर्कन्धू-दलपृष्ठाभा भूमिरङ्कन्तु तत्समम् । कर्कन्धूवज्रं जानीयात् तत्क्षते दाहनाशनम् । एष खड्गाधमस्त्याज्यो जेतव्या यदि विद्विषः ९४ । व्यङ्गं बकुलपुष्पाभं भूमिस्तत्फलसन्निभा । बकुलाङ्कमिदं पुण्यं शाणे सुरभिगन्धवत् । तन्नास्ति जगतीमध्ये यदनेन न साध्यते ९५ । व्यङ्गं सम्मिश्रितं यस्मिन् किञ्चिद्व्यक्तमीक्ष्यते । सर्व्वेषां दर्शनं वापि तीक्ष्णा धारा खरः स्वरः । एष काञ्चिकवज्रः स्याद्यत्नाद्देवोपलभ्यते । नैनं प्राप्यापि वर्द्धन्ते शेषास्त्रिबादयोपि च ९६ । भूमिः कृष्णा निरङ्का चेद्धारा तीक्ष्णा दृढापि च । आघातं सहते घोरं रक्तं स्पर्शेन या विशेत् । शाणेन वह्निं वमति ध्रुवं वाप्यतिघर्षणात् वा महिषाङ्कः स वै खड्गः पृथिव्यां नातिदुर्लभः ९७ । अत्यन्तनिर्म्मला भूमिः शरीरं प्रतिविम्बितम् । धारा तीक्ष्णा स्वरस्तीक्ष्णः स्वच्छाङ्कं तद्विनिर्द्दिशेत् ९८ । तस्मिन् यदा भवेद्रेखा ऋज्वी ऋज्वाख्यकं तदा ९९ । अस्मिन्नपि भवेद्वक्रा रेखा वक्राभिधन्तु तत् १०० । एतच्छतकमुद्दिष्टं खड्गानां प्रवरं बुधैः । प्रायशो लभ्यते लोके यदि सर्व्वगुणावहम् । इतीदं निखिलं प्रोक्तं वज्राणां लक्षणं मया । प्रयत्नैर्लिखितं व्यक्तं सर्व्वेषां हितकाम्यया । इतः परन्तु लौहानां लक्षणं यत्न लभ्यते । तस्य दासो भवाम्येष प्रतिज्ञेति कृता मया । द्विलिङ्गमिश्रमालोक्य मिश्राङ्कमिति निर्द्दिशेत् । सर्व्वत्र मङ्गमालोक्य सर्व्वाङ्कमिति निर्द्दिशेत्” । अङ्काध्यायः । खड्गस्य रूपाणि यथा । “नीलीकलायकुसुमच्छविमङ्ग-माभा या चेन्द्रनीलमणिकाचमणिप्रभा च । भूमिश्च या मरकतप्रतिमावभासा खड्गस्य नीलमिति रूपमिदं वदन्ति । तत्र चेन्निन्दितान्यङ्गान्यरिष्टानि बहून्यपि । दृश्यन्ते बहुदोषाश्च तथापि गुणवत्तरम् १ । या कालकाम्बुदमसीरसकालसर्पगाढ़ान्धकारकचभा-रसमा विभाति । भूमिश्च या भ्रमरवन्धुसमा-वभासा खड्गस्य कृष्णमिति रूपमिदं वदन्ति । अत्र नेत्राणि सम्पत्त्यै अरिष्टान्यशुभाय च । साधारणमिदं रूपं प्राह नागार्जुनो मुनिः २ । या प्राष्टषेण्यनवभेकसमानवर्णा गोमेदरत्नसदृशी च तु यस्य भूमिः । खड्गस्य पिङ्गमिति रूपमिदं वदन्ति भर्त्तुर्यशोबलधनक्षयकारणाय ३ । या मन्दधूमसदृशी च शिरीषपुष्पतुल्या विभाति मलिनापि च खड्गभूमिः । नागार्जुनो वदति धूम्रमिदं हि रूपं भर्त्तुर्यशोबलधनावलिवर्द्धनाय ४ । द्विरूपं मिश्रितं कृत्वा सङ्करं प्रवदेद्बुधः । त्रिभीरूपैः समेतन्तु खड्गं त्रिपुरसंज्ञितम् । रूपैश्चतुर्भिः संयुक्तं चतुरं खड्गमुत्तमम्” । रूपाध्यायः “जातिश्चतुर्विधा प्रोक्ता खड्गानां या पुरा मया । सम्प्रत्यपि प्रयत्नेन तासां लक्षणमुच्यते । शुद्धाङ्कः शुक्लवर्णश्च सुनेत्रः सुस्वरश्च यः । मृदुस्पर्शः सुसन्धेयस्तीक्ष्णधारो महागुणः । खड्गं ब्राह्मणजातिं तं प्राह नागार्जुनो मुनिः । अस्य क्षते भवेच्छोथो घोरः सर्व्वाङ्गगोचरः । मूर्च्छा पिपासा दाहश्च ज्वरो मृत्युश्च जायते । अदृष्टं त्रिफलाकल्कमर्द्दरात्रिन्दिवोषि-

तम् । मलिनत्वं न सम्प्राप्ते निर्मलं कुरुते परम् । तरुणादित्यकिरणस्पर्शादेव क्षणे स्थितः । दहेत् सर्वं न तु करं पुरुषस्य हि धारिणः । गायत्र्युच्चारमात्रेण खरतां व्रजति स्फुटम् । एष खड्गवरः सर्वमरिष्टं नाशयेद्ध्रुवम् । अस्य प्रसादात् पुरुषस्त्रिलोकमपि साधयेत् । तस्मादेष मनुष्याणां सुलभो न हि भूतले । दृश्यते प्रायशः स्वर्गे कुशद्वीपे हिमालये १ । धूम्रवर्णं महाकारं तीक्ष्णधारं खरस्वरम् । सर्वाघातसहं सर्वनेत्रवर्णस्वराकरम् । खड्गं क्षत्त्रियजातिं तं जानीयात् खड्गकोविदः । अस्य क्षते भवेद्दाहस्तृषा दाहो ज्वरो भ्रमः । मृत्युश्च जायते शाणे वमेद्वह्निकणान् बहून् । संस्कारे चाप्यसंस्कारे नैर्मल्यं तस्य लक्ष्यते । शाणेऽप्यशाणे खरता मूर्द्ध्नि चात्यन्ततीक्ष्णता । रक्तस्पर्शनमात्रेण विशेदन्तरमन्तरम् । अयं खड्गवरः पूज्यो मनुष्यैरपि लभ्यते २ । नीलवर्णः कृष्णवर्णः संस्कारे निर्मलो भवेत् । शाणेन खरता चास्य खातस्तुल्यं निकृन्तति । वैश्यजातिरयं खड्गः क्षते त्वङ्मात्रदर्शनम् । नात्युत्कृष्टो नातिहीनः सर्वत्रैवोपलभ्यते ३ । सजलाम्भोदसङ्काशः स्थूलधारो मृदुस्वरः । संस्कारे चैव मलिनः शाणे चापि खरेतरः । शूद्रजातिरयं खड्गः क्षते नाल्पाऽपि वेदना । दूरादेशोऽधमस्त्याज्यो यदीच्छेद्धितमात्मनः । प्रायशः सर्वलोकेषु ह्ययमेवोपदृश्यते ४। द्वयोर्लक्षणमालोक्य जारजं खड्गमादिशेत् । त्रयाणां लक्षणेनैव त्रिजातिं खड्गमादिशेत् । चतुर्णां लक्षणेनैव जातिसङ्कर उच्यते"। अथ त्रिंशन्नेत्राणां लक्षणानि "चक्राकारं यदा नेत्रं खड्गस्याङ्गे प्रदृश्यते । तं चक्रनेत्रं जानीयात् भर्त्तुः सर्वार्थसाधनम् । अनेनैकेन खड्गेन कृत्स्नां साधयते महीम् १ । प्रफुल्लपद्मसङ्काशं नेत्रं पद्मदलोपमम् । यदि वा दृश्यते खड्गे पद्मनेत्रं समादिशेत् । अयं खड्गवरो यत्र तत्रैव कमलालया २। ऊर्द्ध्वा स्थूला यदा रेखा गदाकारा प्रतीयते । गदानेत्रमिदं विद्धि सर्वशत्रुनिसूदनम् ३ । शङ्खाकारं यदा नेत्रं खड्गमध्येऽभिदृश्यते । शङ्खनेत्रमिदं सर्वदेवानामपि दुर्लभम् ४। डमरुप्रतिमं नेत्रं यस्य भूमौ प्रतीयते । सर्व्वार्थसाधकं खड्गं तं विद्याद्विजयप्रदम् ५ । धनुःस्वरूपं यन्नेत्रं धनुर्नेत्रमुशन्ति तम्। तस्य स्पर्शनमात्रेण मन्दोऽपि प्रमुखायते । अयं निशीथे विजने खड्गो झनझनायते ६ । यन्नेत्रमङ्कुशाकारं तं विद्याद्गुणवत्तरम् । खड्गमङ्कुशनेत्राख्यं भर्त्तुः सर्वार्थसाधकम् । अलक्ष्मीपापरक्षोघ्नं कृत्याग्रहनिवारणम् ७ । छत्राकारं यदा नेत्रं छत्रनेत्रं वदन्ति तम् । अस्य प्रभावात् क्षीणोऽपि सार्व्वभौमो भवेन्नृपः । दीनोऽपि च सुखी भूयात् सुखी भूयान्महेश्वरः । महेश्वरोऽपि सचिवः सचिवो मण्डलेश्वरः । मण्डलेशश्चक्रवर्त्ती भवेदत्र न संशयः ८ । पताकाकृति नेत्रञ्चेत् सर्वसम्पत्तिकारकम् । पताकानेत्रमाख्यातं संग्रामविजयप्रदम् ९ । नेत्रं वीणाकृति यदा वीणानेत्रमुशन्ति तम् । निशीथे विजने खड्गो वीणावत् स्वनमावहेत् । अस्य प्रभावात् सर्वेशत्रा अपि वशगा भवन्ति हि १० । मत्स्याकृति यदा नेत्रं मत्स्यनेत्रमिमं विदुः । अस्य प्रभावात् क्षितिपः कृत्स्नां साधयते महीम् ११ । शिवलिङ्गसमं नेत्रं लिङ्गनेत्रमिमं विदुः । भर्त्तुः सर्वार्थसंसिद्ध्यै शत्रूणां नाशनाय च । वामपार्श्वे तु यात्रायां धर्त्तव्योऽयं तथा रणे १२। ध्वजाकारं तु यन्नेत्रं ध्वजनेत्रं वदन्ति तम् । अस्य प्रभावात् भूपालः समग्रां लभते श्रियम् १३ । यस्याङ्गे चन्द्रप्रतिमं नेत्रं स त्वर्द्धचन्द्रदृक् । तस्य धारणतो भूपोधरां कृत्स्नां लभते वै १४ । यन्नेत्रं कलसाकारं कलसाख्यं तमादिशेत् । तस्य प्रभावात् सकलां भूमिं भूपो लभेत वै १५। शूलाकृति यदा नेत्रं शूलनेत्रं वदन्ति तम् । सर्वार्थसाधकः सर्वारिष्टाऽनिष्टप्रणाशनः १६ । शार्दूलनेत्रं तं विद्यात् शार्दूलाकृतिनेत्रतः । शत्रुश्रेणीविनाशाय संग्रामे विजयाय च १७ । सिंहाकृति यदा नेत्रं सिंहनेत्रमिमं विदुः । अस्य प्रभावात् क्षीणोऽपि कृत्स्नां साधयते महीम् १८ । तत् सिंहासननेत्रं स्यात् नेत्रे सिंहासनोपमे । अस्य प्रभावात् क्षितिपः कृत्स्नां साधयते महीम् १९ । गजाकृति यदा नेत्रं गजनेत्रं वदन्ति तम् । अस्य प्रभावात् क्षोणोऽपि लभते राजसम्पदम् २० । नेत्रं हंसाकृति यदा हंसनेत्रं वदन्ति तम् । अस्य प्रभावात् भूपालो यशः प्राप्नोत्यनुत्तमम् २१ । मयूराकृतिके नेत्रे तन्नेत्रमिति निर्दिशेत् । अस्य प्रभावान् मनुजः सर्पदर्पान्निसूदयेत् २२ । जिह्वाकारं यदा नेत्रं जिह्वानेत्रं वदन्ति तम् । संग्रामखर्परैश्चैवं पिबेद्वैरिशिरोरजः २३ । दन्ताकारं यदा नेत्रं दन्तनेत्रं वदन्ति तम् । अयं रिपुगणं मूर्द्ध्नि चर्वयत्यति

भैरवम् २४। खड्गाकारं यदा नेत्रं खड्गनेत्रं वदन्ति तम्। अस्य प्रभावात्मनुजस्त्रिलोकीं वशयेदपि २५। मनुष्यपुत्तलिकाकारं पुत्तलिकानेत्रमुच्यते। अयं सशैलां सद्वीपां कृत्स्नां साधयते क्षितिम्। न चेयं पुत्तलिका किन्तु जयलक्ष्मीरिह स्वयम्। तस्माच्चायं मनुष्याणामल्पभाग्येन लभ्यते २६। चामराकृतिनेत्रत्वात्तन्नेत्रमिति निर्दिशेत्। अस्य प्रभावात् जायन्ते चामरोद्धृतसम्पदः २७। एकाऽनेकशिखे शैलनेत्रे तन्नेत्रसंज्ञकम्। अपि राष्ट्रभये युद्धे विषमे वैरिसङ्कटे। स्थिरीकरोति धरणीं धरणीं पर्वतो यथा २८। पुष्पमालासमं नेत्रं पुष्पनेत्रं वदन्ति तम्। अस्य प्रभावात्तुष्यन्ति ग्रहाः सर्वाश्च देवताः २९। भुजङ्गसमे नेत्रे सर्पनेत्रमिदं मतम्। अयं शत्रूगणं हन्ति यथा मर्त्यं भुजङ्गमः ३०। सवर्णमसवर्णञ्च तत् सर्वं द्विविधं भवेत्। सवर्णं शान्तिसम्पत्त्यै रिपुनाशे तथा परम्। द्वयोरेकत्र दृष्टे च तत् पुनः द्विविधं भवेत्। एकं लोके सुखं, नेत्रं ददाति द्विविधं द्वयोः। मूलमध्याग्रसंस्थानात् तत् पुनस्त्रिविधं मतम्। अग्रे चाग्रफलं ज्ञेयं मध्ये मध्यफलं मतम्। मूले फलं जघन्यं स्यात् प्राह नागार्जुनो मुनिः। एकं द्वे त्रीणि नेत्राणि नात्र संख्याव्यतिक्रमः। एकं धर्मं, स्वर्गकामौ द्वे. त्रीणि च त्रिवर्गकम्। तत् फलानि प्रयच्छन्ति प्राह नागार्जुनो मुनिः। द्विनेत्रमिति जानीयात् स्वसंज्ञां नेत्रयोर्द्वयोः। त्रिनेत्रञ्च त्रिभिर्ज्ञेयं बहुनेत्रमतः परम्। यथोत्तरं गुणवहं खड्गमाहुरनुत्तमम्। दिङ्मात्रमिति निर्दिष्टं नेत्राणां शुभदायिनाम्। तीव्राणां मङ्गलानाञ्च दर्शनञ्च शुभावहम्। यथा नेत्रस्य संस्थानं तथाऽरिष्टस्य लक्षयेत्। नेत्रेषु स्थाननियमो नारिष्टे स्थाननिर्णयः। प्रशस्ताङ्गोऽपि यः खड्गोऽरिष्टेनैकेन निन्दितः"। अथ त्रिंशदरिष्टानां लक्षणानि "छिद्रवद्दृश्यते खड्गे स्वभावेन च लक्ष्यते। छिद्रारिष्टमिदं विद्धि भर्त्तुर्वीर्य्यबलापहम् १। यदा काकपदाकारमरिष्टं दृश्यते क्वचित्। अयं काकपदारिष्टः सर्व्वाभीष्टविनाशनः २। रेखाकारं यदारिष्टमूर्द्धं वा तिर्य्यगेव वा। रेखारिष्टमिदं विद्धि भर्त्तुर्वीर्य्यबलापहम् ३। भिन्नभ्रान्तिकरं पापं भिन्नारिष्टमिदं विदुः। भर्त्तुः कुलं यशो राष्ट्रं नाहत्वा न व्रजेत् स्वयम् ४। यदा भेकशिरोरूपमरिष्टं दृश्यते क्वचित्। भेकारिष्टमिदं नाम्ना संग्रामे भयदायकम् ५। अरिष्टे मुषिकाकारे मुषिकारिष्टमुच्यते। अयं खड्गाधमः कुर्य्यात् पत्युः पातालसङ्गमम् ६। विड़ालनयनाकारो विन्दुरेकोऽतिविस्तरः। विड़ालारिष्टमेतत् स्यात् भर्त्तुः सर्वार्थनाशनम् ७। अरिष्टं शर्कराकारं यदा स्पर्शेन बुध्यते। शर्करारिष्टमेतत् स्यान्नृपबुद्धिविनाशनम् ८। यदा नीलीरसाभासमरिष्टं दृश्यते क्वचित्। नील्यरिष्टमिदं ज्ञेयं यशोलक्ष्मीविनाशनम् ९। अरिष्टे मशकाकारे मशकारिष्टमुच्यते। भर्त्तुः कुलं यशो बुद्धिं धृतिं प्रीतिञ्च नाशयेत् १०। भृङ्गप्रतिमो विन्दुरेकोऽनेकोऽथ वा यदा। भृङ्गारिष्ट इत्येष धृतिस्मृतिविनाशनः ११। सूचीरूपमरिष्टञ्चेदूर्द्धं वा तिर्य्यगेव वा। सूच्यरिष्टमिदं नाम भर्त्तुः कुलविनाशनम् १२। त्रयश्चेद्विन्दवो राजन्! पङ्क्त्यो विषमेण वा। उपर्य्युपरि वाधोऽवस्त्रिविन्द्वाख्यमरिष्टकम्। तस्य स्पर्शनमात्रेण सचेलः स्नानमाचरेत् १३। कालिकारिष्टमित्येतद्धि धीधृतिस्मृतिनाशनम् १४। एकत्र यदि नष्टेष प्रयत्नेनापि संहतः। दारीनाममहारिष्टं सर्वाभीष्टविनाशनम्। अनेकगुणसम्पन्नः खड्गो लोकैर्निन्द्यते १५। कपोतपक्षप्रतिममरिष्टञ्चेत्तदाश्रयम्। भर्त्तुः कुलं यशो विद्यां बलं बुद्धिञ्च नाशयेत् १६। काकाकृति यदा रिष्टं काकारिष्टं तदोच्यते। अनेन भर्त्तुः संग्रामे भङ्ग एवोपजायते १७। अरिष्टे खर्पराकारे खर्परारिष्टमुच्यते। भर्त्तुर्यशो बलं वीर्य्यं बुद्धिं प्रीतिञ्च नाशयेत् १८। यदान्यस्लोहशकलं लग्नं स्यादिव लक्ष्यते। शकलीति स वै खड्गः सर्वाभीष्टनिसूदनः १९। क्रोड़ीमुखसमाकारं यस्यारिष्टं प्रदृश्यते। क्रोड्यरिष्टमिदं नाम भर्त्तुः सर्वार्थनाशनम् २०। कुशपत्रसमाकारं यत्रारिष्टं तु लक्ष्यते। कुशपत्रारिष्टमिदं भर्त्तुर्दुःखाय कीर्त्तितम् २१। यच्छिन्नमिवाभाति मध्ये वा दृश्यते क्वचित्। जलारिष्टमिदं नाम भर्त्तुः कुलधनापहम् २२। एकैकरेखा दीर्घाग्रा यदा पल्लविनी भवेत्। स्पर्शे नखे करेऽखेदं करालारिष्टमुच्यते। अयं हि क्षितिपालानां दृष्टियोग्यो भवेन्न हि। दर्शनादेव नश्यन्ति यशोलक्ष्मीजयादयः २३। अरिष्टे कङ्कपत्राभे कङ्कारिष्टं तदुच्यते। अस्य स्पर्शनमात्रेण नश्यत्यायुर्यशो बलम् २४। खर्ज्जूरदलप्रतिमं यदाऽरिष्टन्तु लक्ष्यते। खर्ज्जूरारिष्ट-

मेतत् स्याद्भर्त्तुः कुलधनापहम् २५। गोशृङ्गाभमरिष्टञ्चेत् शृङ्गारिष्टं तदोच्यते। अनेन भर्त्तुर्नश्यन्ति लक्ष्मीबलकुलादयः २६। गोपुच्छाकृति चेत् खड्गे अरिष्टं संप्रवीच्यते। पुच्छारिष्टमिदं नाम भर्त्तुः सर्व्वार्थनाशनम् २७। खनित्राभमरिष्टञ्चेत् खनित्रारिष्टमुच्यते। सुराणामपि संग्रामे भङ्गमेतत् प्रयच्छति २८। अरिष्टे लाङ्गलाकारे लाङ्गलारिष्टमुच्यते। अयं पापात् पापतरः प्रेक्षणीयो न भूभुजा। अयमायुः श्रियं हन्ति विद्यां बलमशेषतः २९। अरिष्टं वडिशाकारं वडिशारिष्टमुच्यते। करोति कुटिलं सर्व्वं भर्त्तुः कुलनिकृन्तनम् ३०। इत्यरिष्टानि प्रोक्तानि नानातन्त्रात् प्रयत्नतः। विचार्य्यैतानि मतिमान् खड्गं कोषे निधापयेत्। दिङ्मात्रमिदमुद्दिष्टमरिष्टानां हिताप्तनाम्। अमङ्गलानां मन्दानां दर्शनञ्चाशुभावहम्। अरिष्टमेकमेव स्याद्द्विररिष्टं शुभावहम्। अन्योन्यमशुभं हन्याद्विषस्य हि विषं यथा। एकमारभ्य सप्तान्तमरिष्टं प्राह मान्यथा। यथोत्तरं द्विगुणितं फलमाहुर्मनीषिणः। इत्यरिष्टाध्यायः। अथ द्विविधभूमिः। "दिव्यभौमविभागेन सभूमिर्या द्विविधा मता। दिव्या दिवि समुद्भूता भौमा भूमिसमुद्भवा। तल्लक्षणमशेषेण लिख्यते तन्निबोधत। देवदानवयोर्मध्ये खड्गसृष्टिरभूत् पुरा। ते खड्गाः पुण्यदेशेषु केषु केषु प्रतिष्ठिताः"। दिव्यलक्षणं यथा "ये खड्गाः स्थूलधारा भृशमतिलघवो निर्म्मलाङ्गाः सुनेत्रा येऽरिष्टान्यस्वरूपाः सुविमलतनवश्चाप्यसंस्कारयोगात्। दुर्भेद्या दुर्घटाश्च ध्वनिगुणगुरवो यत्नतो दाहपाकौ ते दिव्याः कुर्व्वतेऽमी कुलधनविजयश्रीयशो बुद्धिमायुः" १। अथ भौमलक्षणम्। इन्द्रहारीते "पूर्व्वं मन्देशेन विषाणि यानि भुक्तानि तेषां पतितास्तु विन्दवः। पुराम्तं क्षीरसमुद्रमध्यादुत्पाद्य संन्तप्य पपुः सुरेन्द्राः। तद्विन्दवो यत्र निपेतुरेव शुद्धायसाकरतां जगाम। ये विपोल्था भृशं कालाः खराङ्गाः सम्भवन्ति हि। मूर्च्छादाहज्वरानाहशोकहिक्कावमीकराः। येऽमृतोत्थाः कर्व्वुराङ्गा मन्दाङ्गाः सम्भवन्ति च। बलीपलितमालिन्यजराव्याधिविनाशनाः। यत्रैव पतितं यत्तु तत्तदाकरतां गताः"। तद्यथा "वाराणसीमगधसिंहलभूमिभागे नेपालभूमिषु तथाङ्गकलिङ्गदेशे। सौराष्ट्रिकेऽप्यतमधन्यमहीविभागे शुद्धायसां

कृतिवराः प्रवदन्ति जन्म"। तथा। "वाराणसेयाः सुस्निग्धाः तीक्ष्णधाराः सदङ्गिनः। लघवः सुखसम्भेद्या श्रेयासाभेद्याशालिनः। मागधाः कर्कशाः स्थूलधारा गूढतराङ्गिनः। गुरवो दुःखसम्भेद्याः खड्गा ज्ञेया विचक्षणैः। नेपालदेशप्रभवा निरङ्गा निस्तलाश्च ये। ज्ञेयाः सदङ्गा मलिना लघवः स्थूलधारिणः। कालिङ्गा गुरवः स्वच्छा व्यक्ताङ्गास्तनुहेतवः। सौराष्ट्रा निर्म्मलाः स्निग्धाः सुव्यक्ताङ्गा भृशं खराः। सिंहलद्वीपजातानां चतुर्द्धा भेद उच्यते। केचित् सदङ्गा गुरवः कर्कशाः स्निग्धधारिणः। केचित् सदङ्गा लघवः सुस्निग्धा स्थूलधारिणः। एषां रूपेण मिश्रेण ज्ञेया हि द्विजजातयः। सामान्यात् द्विगुणश्चौड्रं कलिर्दशगुणस्ततः। कलेः शतगुणं भद्रं भद्राद्वज्रं सहस्रधा। वज्रात् षष्टिगुणः पाखिर्निरविर्दशभिर्गुणैः। ततः कोटिसहस्रेण श्रायस्कान्तः प्रशस्यते। श्वासान्तु लौहजातीनां वज्रं खड्गाय युज्यते। ये खड्गास्तीक्ष्णधारा भृशमतिगुरवः षड्गुणाढ्याः सुभेद्याः केचित् साङ्गा निरङ्गाः कतिचन समला निर्म्मलाः केचिदेव। ते भौमाः कुर्व्वतेऽमी धनविजयबलं षड्गुणा निर्गुणा ये ते दुःखं शोकरूपं दधति बलकुलश्रीयशोनाशनास्ते"। अथाष्टधा ध्वनिः। "ध्वनिरष्टविधः प्रोक्तो यः पूर्व्वं खङ्गसंग्रहे। तेषामपि लिखाम्यत्र सगुणं लक्षणाष्टकम्"। तद्यथा। "पूर्व्वं चत्वारः शुभदाः परे निन्द्यास्तदास्तथा। विचार्य्य खड्गमानञ्च कर्त्तव्यं खड्गकोविदैः। धीरस्तार इति ख्यातो द्विविधः खड्गकोविदैः। घोरः स्यात् सुखसम्पत्त्यै तार उच्चाटने मतः। यत्र हंसरवस्येव खड्गे सञ्जहते ध्वनिः। हंसध्वनिरयं खड्गः सकलार्थप्रसाधनः १। कांस्यशब्द इवाभाति यस्मिन् खड्गे हते ध्वनिः। कांस्यध्वनिरयं खड्गः प्राह नागार्जुनो मुनिः २। मेघशब्द इवाभाति यत्र खड्गे हते ध्वनिः। अभ्रध्वनिरयं खड्गो भर्त्तुः सौभाग्यदायकः। ढक्काशब्द इवाभाति यस्मिन् खड्गे हते ध्वनिः। ढक्काध्वनिरयं खड्गः सर्व्वशत्रुनिसूदनः ४। काकस्वर इवाभाति यस्मिन् खड्गे हते ध्वनिः। काकस्वरोऽयं खड्गः स्यात् श्रीयशःकुलनाशनः ५। तन्त्रीस्वरसमो यस्मिन् भवेत् खड्गे हते ध्वनिः। तन्त्रीध्वनिरयं खड्गः कुलश्रीधननाशनः ६। खरस्येव ध्वनिर्यत

खरध्वनिरयं मतः। स्त्रीयशोज्ञानविज्ञानजयतेजोविनाशनः ७। प्रस्तरस्येव यस्येह स्वतस्य ध्वनिरुद्भवेत्। प्रस्तरध्वनिनामायं स निन्द्यः खड्गलक्षणे ८। गभीरतारध्वनिता खड्गस्याशुभलक्षणम्। उत्तानमन्द्रध्वनिता खड्गस्य शुभलक्षणम्। अप्यङ्गेनैव हीनोऽपि खड्गः सुध्वनिरुत्तमः। अन्धः कुरूपो मनुजो यथा भुवि सुगायनः। सर्वलक्षणसम्पन्नः खड्गो यो ध्वनिवर्जितः। स निन्द्यः सुन्दराङ्गोऽपि यथा वाक्यविवर्जितः। नखेन वाऽथ दन्तेन तथा लौहशलाकया। लोष्टेन शर्कराभिर्वा ध्वनिविज्ञानमुच्यते"। अथ द्विविधमानम्। "यन्मानं द्विविधं प्रोक्तं तस्य लक्षणमुच्यते। उत्तमाधमभेदेन भेदो हि द्विविधो मतः। उत्तमं यद्विशालं स्यात्सुमानं प्रकीर्त्तितम् १। अधमं तत्र यत् खर्वं गुरुमानं प्रकीर्त्तितम् २। तत् पुनस्त्रिविधं प्रोक्तमादिमध्यान्तभेदतः। यो मुष्टिविंशतिसमायततीव्रधारो भर्त्तुर्भवेत् प्रसरतोऽपि षडङ्गुलीभिः। मानेन चाष्टपलिकः स हि खड्गमध्ये नातिप्रकृष्टमतिकष्टफलं ददाति। यो द्वादशाष्टनवमुष्टिभिरायतः स्यात् मन्दो भवेत् प्रसरतोऽपि चतुर्थभागः। तावत् पलैः परिमितस्तु ततोऽधिको वा खड्गाधमो धनयशःकुलनाशनाय"। नागार्जुनोऽपि "यावत्यो मुष्टयो दैर्घ्ये तदङ्गुल्यो यदा। प्रसरे तच्चतुर्थांशमिति वै मानमुत्तमम्। यावत्यो मुष्टयो दैर्घ्ये प्रसरे तत्त्रिभागिकः। पलैस्तदर्द्धैस्तुलितः स खड्गो मध्य उच्यते। यावत्यो मुष्टयो दैर्घ्ये तुर्यांशः प्रसरे तु तत्। अधमः कीर्त्तितः खड्गस्तत्समो वाधिकः पलैः। भौमानामिदमुद्दिष्टं दिव्यास्तु समतो मताः"। भोजस्तु "दीर्घता लघुता चैव खड्गविस्तीर्णता तथा। दुर्भेद्यता सुघटता खड्गानां गुणसंग्रहः। खर्वता गुरुता चैव मन्दता तनुता तथा। सुभेद्यता दुर्घटता खड्गानां दोषसंग्रहः। इति निखिलमुदारशक्रमत्र वस्तुतत्त्वेषु निरूप्य खड्गयष्टेः। नृपतिरिति विचिन्त्य यो विधत्ते स चिरतरं श्रियमुच्छ्रितां लभेत" युक्तिकल्पतरुः।

**तरस्** न॰ तॄ-करणादौ यथायथम् असुन्। १बले २वेगे, ३तीरे, ४वानरे च। ५रोगे शब्दार्थचि॰। "वव्राय चिच्छिदुरिभास्तरसात्मनैव" "कुचयोर्युगेन तरसा कलिताम्" "तरसाकृष्य करोति काश्चन" इति च माघः। "कैलासनाथं तरसा जिगीषुः" रघुः।

**तरस** न॰ तॄ-असच्। मांसे अमरः। "तरसमयाः पूर्वोक्तभागाः" कात्या॰ श्रौ॰ २४।५।२०। "तरसमयाः मांसमयाः" कर्कः। तरस्+अस्त्यर्थे अच्। २वेगयुक्ते त्रि॰

**तरसत्** पुंस्त्री॰ तरस इवाचरति तरस+क्विप् शतृ। मृगभेदे स्त्रियां ङीप्। "अपश्यमत्तरसन्तीं न भुज्युः" ऋ॰ १०।९५।८। "तरसन्तामस्तगतस्य पत्नी" भा॰।

**तरसान** पु॰ तरत्यनेन तॄ-आनच् सुट् च। नौकायां उज्ज्वलद॰

**तरस्थान** न॰६त॰। आतर(पारेर भाड़ा)ग्रहणस्थाने जटा॰

**तरस्वत्** त्रि॰ तरोऽस्त्यत्र वा मतुप् मस्य वः मत्वर्थे। सान्तत्वात् १वेगयुक्ते भत्वम् २रोगिणि च। स्त्रियां ङीप्। ३चतुर्थमनोः पुत्रभेदे। "तरङ्गभीरुर्वप्रश्च तरस्वानुग्र एव च" हरिवं॰ ७अ॰।

**तरस्विन्** पु॰ तरस्+अस्त्यर्थे विनि सान्तत्वात् भत्वम्। १वायौ २गरुडे राजनि॰ ३वेगवति, ४शूरे च त्रि॰ अमरः। "असकृदेकरथेन तरस्विना" "निर्जितेषु तरसा तरस्विना" रघुः। स्त्रियां ङीप्। "कौमोदकी विष्णुगदा तरस्विनी" भाग॰ ८।१०।२२। [वहित्रे त्रिका॰।

**तराम्बु** पु॰ तरे तरणे अम्बुरिव गभीरत्वात्। नौकाभेदे

**तरालु** पु॰ तराय तरणाय अलति पर्य्याप्नोति अल-उन्। नौकाभेदे हारा॰।

**तरि(री)** स्त्री तॄ-करणे इ। १नौकायाम्, २वसनपेटके, ३धूमनद्यायाञ्च हेमच॰। "जीर्णा तरिः सरिदतीव गभीरनीरा" उद्भटः। "संसारसागरखावर्त्ततरिकाबाय विष्णवे" भा॰ अनु॰ ४७अ॰। वा ङीप्। "तरीषु तत्रत्यमफल्गु भाण्डम्" माघः।

**तरिक** पु॰ तराय तरणाय हितः बा॰ ठन्। १प्लवे त्रिका॰ २नौकायां स्त्री हारा॰। तरे तरणार्थं देयशुल्कग्रहणेऽधिकृतः ठन्। ३तरणशुल्कग्रहणाधिकारिणि। "तरिकः स्थलजं शुल्कं गृह्णन् दाप्यः पणान् दश" याज्ञ॰। "तीर्य्यतेऽनेन तरो नावादिस्तज्जन्यम् शुल्कं तद्ग्रहणेऽधिकृतस्तरिकः" मिता॰।

**तरिणी** स्त्री तरस्तरणं कार्य्यं तयास्त्यस्याः इनि ङीप्। नौकायाम् हेमच॰।

**तरिण्य** तरिण+गतौ कण्ड्वा॰ यक् प॰ सक॰ सेट्। तरिण्यति अतरण्यी(णी)त्।

**तरिता** स्त्री तरो जातोऽस्याः तारका॰ इतच्। १तर्जन्यां शब्दच॰। २चञ्चने। (गाँजा) तन्त्रम् "संविदा कालकूटञ्च ताम्रकूटञ्च धुस्तुरम्। अहिफेनं खर्जुरसस्ताडिका तरिता तथा" कुलार्णवतन्त्रम्।

**तरित्र** न० तरत्यनेन तॄ—इत्र । तरणसाधने नौकादौ । "अतरित्रानिव जले बाहुभिर्मामका रणे । पश्यन्तस्ते परांस्तत्र" भा० उ० ६२ अ० ।

**तरिरथ** पु० तरेः रथ इव चालकत्वात् । अरित्रे हारा० ।

**तरी** स्त्री तरि+ङीप् । १तरिशब्दार्थे २धूमे च त्रिका० ३द्रोण्यां जटाधरः । ४वस्त्रदशायां मेदि० ।

**तरीयस्** त्रि० अतिशयेन तरीता ईयसुन् तृणो लोपः । अतिशयेन तारके "स नभस्तरीयानिषरः परिज्मा" ऋ० ५।४१।१२ । स्त्रियां ङीप् इष्ठन् । तरिष्ठोऽप्युक्तार्थे त्रि० ।

**तरीष** पुंन० । तॄ—ईषन् ।१शुष्कगोमये २नौकायाञ्च उज्ज्वलद० ३शोभनाकारे भेले ४व्यवसाये उणा० ५समुद्रे ६समर्थे च संक्षिप्तसा० । ७स्वर्गे पु० ८इन्द्रकन्यायां स्त्री मेदि० ।

**तरीषन्** पु० तॄ—ईषन् छन्दसि नकारस्य नेत्त्वम् । तरणे "विश्वा आशास्तरीषणि" ऋ० ५।१०।६ "तरीषणि तरणे" भा० "बहुलवचनात्नानोऽल्लोपः" माधवः ।

**तरु** पु० तरन्त्यनेन नरकमारोपकाः तॄ—उन् । १वृक्षे अमरः । "तरवोऽभिनेदुः" भाग० १।२।२ "तुनिवनतरुच्छायां देव्या तया सह शिश्रिये" रघुः । "तरुषु षुषुवरुच्चैः पक्षिणस्तानुकूलाः" भट्टिः । "उपरिजतरुजानि याचमानाः" माघः । २तारके त्रि० "भूर्भुवःस्वस्तरुस्तारः" विष्णुस० भूर्भुवःस्वस्तरुः लोकत्रयतारकः" भा० ३तरुविकारे च । "संजर्भुराणस्तरुभिः सुते गृभम्" ऋ०५।४४।५ "तरुभिस्तरुविकारैर्यज्ञैः" ।

**तरुकूणि** पु० तरौ कूणयति कूणि—इन् ७त० । वागुद खगे त्रिका० ।

**तरुक्ष** त्रि० तॄ—बा०उक्षन् । १तारके २गवाश्वादीनां पालनाधिकृते च । "विप्रस्तरुक्ष आददे" ऋ०८।४६।३२ । "तरुक्षे गवाश्वादीनां तारके गवाद्यधिकृते वा" भा० ।

**तरु(ष)खण्ड** पु०तरूणां समूहः तरु+ख(ष)ण्ड । वृक्षसमूहे एवं वृक्षख(ष)ण्डादयोप्यत्र । "द्रुम(ष)खण्डवनं दृष्ट्वा रामः सुग्रीवमब्रवीत् । एष मेघ इवाकाशो वृक्षख(ष)ण्डः प्रकाशते" रामा० कि० १२ अ० । "तरुख(ष)ण्डमध्ये" पञ्चत० । कदलीख (ष)ण्डः । भा० वा०

**तरुजीवन** न० जीव्यतेऽनेन जीव—करणे ल्युट् ६त० । वृक्षमूले शब्दच० ।

**तरुण** न० तॄ—उनन् । १कुब्जपुष्पे (सेओति) मेदि० २स्थूलजीरके ३एरण्डवृक्षे पु० राजनि० । ४यूनि ५नवे च त्रि० मेदि० "स चचार गदापाणिर्वृद्धोऽपि तरुणो यथा" भा०वि०३३अ० । "तरुणं सर्षपशाकं नवोदनं पिच्छिलानि च दधीनि" छन्दोम० । "वासो वसाना तरुणार्करागम्" कुमा० । "मृताऽपि तरुणातपं करुणया हरन्ती नृणाम्" रसगङ्गा० । "तरुणशकलमिन्दोर्बिभ्रती शुभ्रकान्तिः" सरस्वतीध्यानम् । तरुणस्य भावः इमनिच् । तरुणिमन् तरुणभावे पु० । "वतेन्दुवदनातनौ तरुणिमोद्गमो मेदते" काव्यप्र० । त्व तरुणत्व न० । तल् तरुणता स्त्री ष्यञ् तारुण्य न० तदर्थे । "तारुण्यस्य विलासः" सा० द० ।

**तरुणज्वर** पु० कर्म० । "आसप्तरात्रं तरुणं ज्वरमाहुर्मनीषिणः" इति चक्रद० उक्ते सप्तरात्रमध्यजाते ज्वरे ।

**तरुणदधि** न० कर्म० । सद्योजाते दधनि । "शुष्कं मांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि । प्रभाते मैथुनं निद्रा सद्यःप्राणहराणि षट्" चाणक्यम् ।

**तरुणाय** अतरुणस्तरुणो भवति भृशा० अभूततद्भावे क्यङ् अतरुणस्य तरुणताप्राप्तौ अक० आत्म० सेट् । तरुणायते अतरुणायिष्ट । "उडुम्बररसं पीत्वा वृद्धोऽपि तरुणायते" सुश्रुतः । "वसुदेवो जरां त्यक्त्वा वृद्धोऽपि तरुणायते" हरिवं० २७ अ० ।

**तरुणी** स्त्री तरुण+मध्यमवयोवाचित्वात् ङीप् । १युवत्यां स्त्रियां "व्याकीर्णमाल्यकबरां कबरीं तरुण्याः" । "स्तनौ तरुण्यः परिवव्रुरेनम्" माघः । २घृतकुमार्यां ३दन्तीवृक्षे ४चिडानामगन्धद्रव्ये ५कुब्जवृक्षे (सेउती) च राजनि० ।

**तरुणीकटाक्षमाल** पु० तरुणीनां कटाक्षाणां माला यत्र प्रियत्वात् । १तिलकवृक्षे राजनि० । ६त० । २तरुणीकटाक्षाणां श्रेणौ च स्त्री ।

**तरुतल** न० ६त० । १वृक्षमूले । "नोच्चैर्यदा तरुतलेषु मरुत्सदानीम्" माघः । २तरुस्वरूपे च ।

**तरु(रू)त्र** त्रि० तॄ—त्रच् "असितस्कभितेत्यादिना" पा० नि० उट् ऊट् वा । तारके । "महावालं तरुतारं रथानाम्" "तरुतारं तारयितारम्" निरु० १०। ८ । "यो विप्रैर्वाजं तरुता" १।१२९।२ ।

**तरुतु(तू)लिका** स्त्री तरौ तोलयति दोलयति वा तनुम्, तुल—उन्मितौ दुल—उत्क्षेपे वा ण्वुल् टाप् कापि अत इत्त्वम् पृषो० । (वादुड) खगभेदे हारा० । तस्य वृक्षे स्वदेहस्य तो(दो)लनात् तथात्वम् ।

**तरुल** त्रि० तॄ—बा० उल । तारके । "साह्वास्तरुलो

अत्यन्तिकृष्टोः" ऋ० ४।२१।२ "तरुत्रस्तारकः" भा०।

**तरुनख** पु० तरोर्नख इव क्षतसाधनत्वात्। कण्टके हारा०

**तरुभुज्** पु० तरुं भुङ्क्ते भुज–क्विप् ६त०। (परगाछा) वन्दाके राजनि०।

**तरुमृग** पु०स्त्री तरौ मृग इव तत्र धावकत्वात्। वानरे शब्दच० स्त्रियां जातित्वात् ङीष्। [हारा०।

**तरुराग** न० तरूणां रागो रक्तता यस्मात् ५ब०। नवपल्लवे

**तरुराज** पु० तरूणां राजा श्रेष्ठत्वात् टच् समा०। १तालवृक्षे राजनि०। २तरुश्रेष्ठमात्रे च। "देवोपभोग्यमेतद्धि तरुराजसमुद्भवम्" हरिवं० १२६ अ०। आर्षे क्वचित् न टच्। "पारिजातस्य भद्रं ते तरुराज्ञोमहात्मनः" हरिवं० १२६ अ०।

**तरुरुहा** स्त्री तरुषु रोहति रुह–क। १वन्दाके (परगाछा) राजनि०। २वृक्षरोहिमात्रे त्रि०।

**तरुरोहिणी** स्त्री तरौ रोहति रुह–णिनि ङीप्। १वन्दाके २वृक्षरोहिमात्रे त्रि०। स्त्रियां ङीप्।

**तरुवल्ली** स्त्री तरोर्वल्लीव। वन्दाके राजनि०। [शब्दार्थचि०।

**तरुविलासिनी** स्त्री तरोर्विलासिनीव। नवमल्लिकायाम्।

**तरुश** त्रि० तरुः अस्त्यत्र लोमा० श। तरुयुक्ते [स्त्रियां ङीप्

**तरुशायिन्** त्रि० तरौ शेते शी–णिनि। खगमात्रे हारा०

**तरुष** त्रि० तॄ–बा० उषन्। तारके। "भूयिंः पतस्यान्तरस्य तरुषः" ऋ० ६।१५।१ "तरुषस्तरीता" भा०।

**तरुष** हिंसायां बधकर्म्मसु "वनुष्यति तरुष्यति" निघण्टूक्तेः दिवा० प० सक० सेट्। तरुष्यति अतरुषीत्। "त्वं तुर्य्य तरुष्यतः" ८।८८।५। "तरुष्यतो बाधकान्" भा०। "वनुष्यतिः हन्तिकर्म्मा तरुष्यतिरप्येवंकर्मा" निरु० ५।२ "इन्द्रेण युजा तरुषेम वृत्तमित्यपि निगमो भवति" निरुक्तोक्तश्रुतिः वेदे गणव्यत्ययः।

**तरुष्** न० तरुष्यति हिनस्त्यत्र तरुष–आधारे क्विप्। युद्धे "तनूरुचा तरुषि यत् कृण्वैते" ऋ० ६।२५।४ "तरुषि युद्धे" भा०। [ऋ० ३।२।२ "तरुषस्तारकः" भा०

**तरुस्** त्रि० तॄ–उषि। तारके। "कृत्वा दक्षस्य तरुषः"

**तरुसार** पु० ६त०। १कर्पूरे हारा०। ६त० २वृक्षसारमात्रे च। "सुवर्णरजतताम्रायोरीतिदन्तशृङ्गमणितरुसारमयाणि" सुश्रु०। [राजनि०।

**तरुस्था** स्त्री तरौ तिष्ठति स्था–क। वन्दाके (परगाछा)

**तरूट** पु० तरोः उट इव। उत्पलकन्दे "तरूटो गुरुविष्टम्भी शीतलश्च मतो बुधैः" राजवल्लभः।

**तरूषस्** त्रि० तॄ–बा० असच्। १तरणकुशले २आपदुद्धारके च। "त्वं न इन्द्र राया तरूषसोग्रम्" ऋ० १।१२९।१० "तरूषसा तरणकुशलेनात्मानापद्भ्य उत्तारयितुं शक्तेन" भा०।

**तर्क** दीप्तौ अक० आकाङ्क्षायाञ्च वितर्के सक० चुरा० उभ० सेट्। तर्कयति ते अततर्कत् त "एतत्तर्कय चक्रवाकहृदयाश्वासाय" प्रसन्नरा०। "तथा तर्कयामि यथानेनाचिरप्रव्रजितेन भवितव्यम्" मृच्छ०। "दक्षिणेनाथ वामेन कतरेण स्विदस्यति। इति मां सङ्गताः सर्वे तर्कयिष्यन्ति मानवः" भा० वि० ६१ अ०।

वि+उत्प्रेक्षायां "तनूनं मृत्युमाप्स्यतीति वितर्कयामि" पञ्चत०।

**तर्क** पु० तर्क–भावे अच्। १आकाङ्क्षायां २व्यभिचारशङ्कानिवर्त्तके ऊहभेदे अविज्ञातेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थे ऊहे ३व्याप्यारोपात् व्यापकप्रसञ्जने। ४आगमाविरोधिन्याये ५आगमार्थपरीक्षणे ६मीमांसारूपविचारे। ७मानसज्ञानभेदे। ८सदसद्युक्तोहमात्रे "अचिन्त्याः खलु ये भावाः न तांस्तर्केण योजयेत्। नाऽप्रतिष्ठिततर्केण गम्भीरार्थस्य निश्चयः" वेदान्तप्र०। "आर्षं धर्मोपदेशञ्च धर्मशास्त्राविरोधिना। यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः" मनुः "तर्काप्रतिष्ठानात्" शा०सू०। करणे घञ्। ९न्यायशास्त्रे "प्रायस्तर्कमधीते तनुते कुतर्कैरनल्पमल्पम्" दीधितिः "सुहृदस्तर्काः समस्ताः स्म मे" कुसु०। "यत्काव्यं मधु वर्षिधर्षितपरास्तर्केषु यस्योक्तयः" नैष०। "तर्के वा भयकर्कशे मम समं लीलायते भारती" प्रसन्नरा०। "गदाधरविनिर्म्मिता विषमदुर्गतर्काटवी" गदा० ९मीमांसाशास्त्रे १०अर्थवादे कर्कः। "अक्ताः शर्करा उपदधातीति विधिः श्रूयते। तत्राञ्जनसाधनं घृतं तैलं वा तन्मध्ये केनाक्ता इति संशये तेजो वै घृतमित्यर्थवादात् घृतेनाक्ता इति निर्णीयते। अतस्तर्कोऽर्थवादः। तर्कौ मीमांसेति कल्पतरुकारः तर्कलक्षणं गौ० सू० भाष्ये उक्तं यथा "अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः" गौ० सू०।

"अविज्ञायमानतत्त्वेऽर्थे जिज्ञासा तावज्जायते जानीयेममर्थमिति, अथ जिज्ञासितस्य वस्तुनो व्याहतौ धर्मौ विभागेन विमृशति किं स्विदित्थमाहो स्विन्नेत्थमिति विमृश्यमानयोर्धर्मयोरेकं कारणोपपत्त्याऽनुजानाति सम्भवत्यस्मिन् कारणं प्रमाणं हेतुरिति, कारणोपपत्त्या स्यादेवमेतन्नेतरदिति तत्र निदर्शनम् योऽयं ज्ञाता

ज्ञातव्यमर्थं जानीते तञ्च भो जानीयेति जिज्ञासा, स किमुत्पत्तिधर्मकोऽनुत्पत्तिधर्मक इति विमर्शः, विमृश्यमानेऽविज्ञाततत्त्वेऽर्थे यस्य धर्मस्याभ्यनुज्ञाकारणमुपपद्यते तमनुजानाति, यद्ययमनुत्पत्तिधर्मकस्ततः स्वकृतस्य कर्मणः फलमनुभवति ज्ञाता, दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरमुत्तरं पूर्वस्य पूर्वस्य कारणमुत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति स्यातां संसारापवर्गौ, उत्पत्तिधर्मके ज्ञातरि पुनर्न स्याताम्, उत्पन्नः खलु ज्ञाता देहेन्द्रियबुद्धिवेदनाभिः सम्बध्यत इति नास्येदं स्वकृतस्य कर्मणः फलम् उत्पन्नश्च भूत्वा न भवतीति तस्याविद्यमानस्य निरुद्धस्य वा स्वकृतकर्मणः फलोपभोगो नास्ति, तदेवमेकस्यानेकशरीरयोगः शरीरादिवियोगश्चात्यन्तं न स्यादिति । यत्र कारणमनुपपद्यमानं पश्यति तन्नानुजानाति, सोऽयमेवंलक्षण ऊहस्तर्क इत्युच्यते । कथं पुनरयं तत्त्वज्ञानार्थो न तत्त्वज्ञानमेवेति अनवधारणात् अनुजानात्ययमेकतरं धर्मं कारणोपपत्त्या न त्ववधारयति न व्यवस्यति न निश्चिनोति एवमेवेदमिति । कथं तत्त्वज्ञानार्थ इति, तत्त्वज्ञानविषयाभ्यनुज्ञालक्षणादूहाद्भावितात् प्रसन्नादनन्तरप्रमाणसामर्थ्यात् तत्त्वज्ञानमुत्पद्यत इत्येव तत्त्वज्ञानार्थ इति । सोऽयं तर्कः प्रमाणानि प्रतिसन्दधानः प्रमाणाभ्यनुज्ञानात् प्रमाणसहितो वादे उपदिष्ट इत्यविज्ञाततत्त्वमनुजानातीति यथा सोऽर्थो भवति तस्य यथाभावस्तत्त्वमविपर्यय यथातथ्यम्" वात्स्यायनभाष्यम् ।

विश्वनाथवृत्तौ चान्यथा सूत्रमिदं व्याख्यातं यथा

"तर्क इति लक्ष्यनिर्देशः कारणोपपत्तित ऊह इति लक्षणम् अविज्ञाततत्त्वेऽर्थे तत्त्वज्ञानार्थमिति प्रयोजनकथनम् कारणं व्याप्यं तस्योपपत्तिरारोपस्तस्मात् ऊह आरोपः अर्थाद्व्यापकस्य, तथाच व्यापकाभाववत्त्वेन निर्णीते व्याप्यस्याहार्य्यारोपाद्यो व्यापकस्याहार्य्यारोपः स तर्कः । यथा निर्वह्नित्वारोपान्निर्धूमत्वारोपः निर्वह्निः स्यान्निर्धूमः स्यादित्यादिः । ह्रदो निर्वह्निः स्यान्निर्धूमः स्यादित्यादिवारणाय व्यापकाभाववत्त्वेन निर्णीते इति । निर्वह्निः स्यात् अद्रव्यं स्यादित्यादिवारणाय व्याप्यस्येति तद्व्याप्यारोपाधीनस्तदारोप इत्यर्थलाभाय व्यापकेति । न चानुमानादितोऽर्थसिद्धेस्तर्कोव्यर्थ इति वाच्यम् अप्रयोजकत्वादिशङ्काकलङ्कितेन हेतुनार्थस्य साधयितुमशक्यत्वात्तदेतदुक्तमविज्ञाततत्त्वेऽर्थे तत्त्वज्ञानार्थमिति तत्त्वनिर्णयार्थमित्यर्थः । यत्र नाप्रयोजकत्वाद्याशङ्का तत्र नापेक्ष्य एवेति भावः । परे तु ऊह इत्येव लक्षणं ऊहत्वञ्च मानसत्वव्याप्यो जातिविशेषस्तर्कयामीत्यनुभवसिद्धः । तर्कः किं स्वत एव निर्णायकः परम्परया वेत्यत आह कारणेति कारणस्य व्याप्तिज्ञानादेरुपपादनद्वारेणेत्यर्थः तथा च धूमो यदि वह्निव्यभिचारी स्यात् वह्निजन्यो न स्यादित्यनेन व्यभिचारशङ्कानिरासे निरङ्कुशेन व्याप्तिज्ञानेनानुमितिरिति परम्परयैवास्योपयोग इत्याहुः । स चायं पञ्चविधः आत्माश्रयान्योन्याश्रयचक्रकानवस्थातदन्यबाधितार्थप्रसङ्गभेदात् । स्वस्य स्वापेक्षित्वेऽनिष्टप्रसङ्ग आत्माश्रयः स च उत्पत्तिस्थितिज्ञप्तिद्वारा त्रिधा यथा यद्ययं घट एतद्घटजन्यः स्यात्तदैतद्घटानधिकरणक्षणोत्तरवर्त्ती न स्यात्, यद्ययं घट एतद्घटवृत्तिः स्यात् एतद्घटव्याप्यो न स्यात् यद्ययं घट एतद्घटज्ञानाभिन्नः स्यात् ज्ञानसामग्रीजन्यः स्यात् एतद्घटभिन्नः स्यादिति वा सर्वत्रापाद्यम् तदपेक्षापेक्षित्वनिबन्धनोऽनिष्टप्रसङ्गोऽन्योन्याश्रयः सोऽपि पूर्ववत्त्रेधा । तदपेक्षापेक्षापेक्षित्वनिबन्धनोऽनिष्टप्रसङ्गश्चक्रकं चतुःकक्षादावपि स्वस्य स्वापेक्षापेक्षापेक्षित्वसत्त्वान्नाधिक्यम् । अस्यापि पूर्ववत्त्रैविध्यम् । अव्यवस्थितपरम्परारोपाधीनानिष्टप्रसङ्गोऽनवस्था यथा यदि घटत्वं घटजन्यत्वव्याप्यं स्यात् कपालसमवेतत्वव्याप्यं न स्यात् । तदन्यबाधितार्थप्रसङ्गस्तु धूमो यदि वह्निव्यभिचारी स्याद्वह्निजन्यो न स्यादित्यादिः । प्रथमोपस्थितत्वोत्सर्गविनिगमनाविरहलाघवगौरवादिकन्तु प्रसङ्गानात्मकत्वात् न तर्कः किन्तु प्रमाणसहकारित्वरूपसाधर्म्यात्तथा व्यवहार इति संक्षेपः" ।

तर्कग्रन्थे जगदीशोक्तं तर्कविभागलक्षणादिकं यथा ।

"स चायं तर्कः पञ्चविधः आत्माश्रयान्योऽन्याश्रयचक्रकानवस्थाप्रमाणबाधितार्थकप्रसङ्गभेदादित्याचार्य्याः । तत्र स्वापेक्षापादकः प्रसङ्ग आत्माश्रयः । अपेक्षा च ज्ञप्तावुत्पत्तौ स्थितौ च ग्राह्या तत्राद्या, यथा एतद्घटज्ञानं यद्येतद्घटज्ञानजन्यं स्यादेतद्घटज्ञानभिन्नं स्यादिति । द्वितीया घटोऽयं यद्येतद्घटजनकः स्यात् एतद्घटभिन्नः स्यादिति तृतीया चायं घटो यद्येतद्घटवृत्तिः स्यात्तथात्वेनोपलभ्येतेति स्वापेक्षापेक्षितत्वनिबन्धनः प्रसङ्गोऽन्यान्याश्रयः यथा चायं घटो यद्येतद्घटजन्यः स्यादेतद्घटभिन्नः स्यात् इति उत्पत्तौ स्थितौ च स्वयमुदाहार्य्यम् । स्वापेक्षणीयापेक्षितसापेक्षत्वनिबन्धनः

प्रसङ्गस्यैकः पूर्वोक्त एवापादको जन्यपदान्तरमन्तर्भाव्योदाहरणम्। अपेक्षा त्वत्र साक्षात्परम्परासाधारणी ग्राह्या। अनवस्था पुनरप्रामाणिकी न तु प्रवाहमूलकप्रसङ्गः। यथा घटत्वं यदि यावद्घटहेतुवृत्ति स्यात् घटजन्यवृत्ति न स्यादित्यर्थः। उक्तचतुष्कान्यः प्रसङ्गः प्रमाणबाधितार्थकप्रसङ्गः सोऽपि द्विविधो व्याप्तिग्राहको विषयपरिशोधकश्च तत्राद्यो यथा धूमो यदि वह्निव्यभिचारी स्यात्तदा वह्निजन्यो न स्यादिति द्वितीयस्तु पर्वतो यदि निर्वह्निः स्यान्निर्धूमः स्यादित्यादिः।”

धूमादेर्व्यभिचारशङ्कानिवृत्तिद्वारा विषयस्य वह्न्यादेः निश्चायकत्वेन परिशोधकत्वमित्यवधेयम्।

सोऽयं तर्क एकादशविध इति प्राचीननैयायिकाः स्वीचक्रुः तदनुसारेण सर्व० सं०उक्तम् “स चैकादशविधः व्याघातात्माश्रयेतरेतराश्रयचक्रकानवस्थाप्रतिबन्दिकल्पनालाघवकल्पनागौरवोत्सर्गापवादवैजात्यभेदात्” इति व्याघातादीनामप्रसङ्गरूपत्वात् न तर्करूपत्वमिति किन्तु पञ्चविधत्वमिति नव्याः। एतन्मतानुसारेणैव वृत्तौ इतरेषां मुख्यतर्कत्वनिरासेन भाक्ततर्कत्वमुक्तम् द्रष्टव्यम्।

तर्कस्य च व्यभिचारशङ्कानिवर्त्तकतयानुमानाङ्गत्वं तच्च खण्डनखण्डखाद्ये निराकृतं यथा

“नापि विपक्षे बाधकस्तर्को वाच्यः तर्कस्य व्याप्तिमूलत्वाभ्युपगमे अनवस्थाप्रसङ्गात्। तदनभ्युपगमे मूलशैथिल्येन तर्काभासत्वापातात्। अथ ब्रूषे न शक्यमिदं वक्तुं तथा ह्यग्निधूमव्यभिचारशङ्कायां बाधकस्तर्कोऽयमभिधीयते यदि धूमोऽग्निं व्यभिचरेदकारणकः सन्नित्यः स्यात् न स्यादेव वा स चायमनुत्तरस्तर्कः तत्र शङ्कायां व्याघातापत्तेः। तदेव ह्याशङ्क्यते यस्मिन्नाशङ्क्यमाने स्वक्रियाव्याघातादयो दोषा नावतरन्तीति लोकमर्यादा एवं सर्वत्रानुत्तरस्तर्को बाधकोऽभिधेय इति चेत् नैवम् किमित्येवं शङ्कितव्यं तद्धेतुफलभाव एव न भविष्यति। एवं तु शङ्कितव्यम् अग्निं विहायान्यस्मादपि हेतोरयमुदेष्यतीति। न च वाच्यमेवं हि सति धूमस्यैकजातित्वं न स्यादिति क्वचिदिन्द्रियजन्यत्वे क्वचिदनुमानादिजन्यत्वेऽपि ज्ञानैकजात्यवत्तदुपपत्तेः। तत्रेन्द्रियादीनामवान्तरसामान्ये साक्षात्कारित्वादौ प्रयोजकत्वं न ज्ञानतायामिति चेन्न ज्ञानत्वस्याकस्मिकत्वपरिहारार्थं तत्कारणस्यानुगतस्य भवतावश्यं वक्तव्यत्वात्। धूमेऽपि वह्नेर्विशेष एव प्रयोजकत्वस्य तद्वच्छङ्कितुं शक्यत्वात्। न दृश्यते तावदग्निप्रयोज्यो धूमे विशेष इति च न वाच्यम् एवं हि सति तद्दर्शनस्यापाततो हेत्वन्तरप्रयोज्यावान्तरजात्यदर्शनेनायोग्यतया विकल्पयत्वादुपपत्तेः। यदा तु हेत्वन्तरप्रयोज्यो धूमस्य विशेषो दृश्यते तदासौ विकल्पिष्यत इति सम्भावनाया दुर्निवारत्वात्। अस्त्यात्ममनोयोगोऽनुगतं कारणं ज्ञानोत्पत्ताविति चेन्न यद्यात्ममनोयोगादुत्पद्यमानं ज्ञानं स्यादिच्छादयोऽपि ज्ञानं प्रसज्येरन्। यदि त्वदृष्टविशेषो वा शक्तिभेदो वा ज्ञानत्वजातिर्वा ज्ञानप्रागभावो वा तत्रानुगतं कारणमुच्यते तदा तदितरत्रापि वह्निव्यभिचारे धूमस्यैकजात्यप्रयोजकतया शक्यत एव शङ्कितुम् दृष्टे व्यभिचारे युक्तमदृष्टादेरैकजात्यपरिकल्पनमिति चेत् अस्तु दृष्टे तन्निश्चयः अत्रापि व्यभिचारो न दृश्यत इत्यत्र नियामकाभावात् शङ्क्यते एवं शङ्कमानस्य भवतो न क्वचिदनुमानं स्यादिति प्रतिवाद्यात्माद्यनुमानाद्व्यतिरेकेण कथायामेव प्रवृत्त्यनुपपत्त्या स्वयं स्वीकर्तव्येष्वनुमानेष्वेतादृशशङ्काक्रमणात् स एव व्याघात इति चेन्न धूमवद्वह्नेरपि वह्निकारणविशेषानुमानस्यैव सति सदनुमानत्वप्रसङ्गात् सामग्रीसाम्येन प्रमाऽप्रमावैचित्र्यानुपपत्तेः। साधारणधर्मदर्शनविशेषादर्शनानां सत्यपि शङ्कायाश्चानुदये सामग्र्यां सत्यामपि कार्यानुदयात्परप्रतिपत्त्युत्पादनार्थं वचनादिरूपां प्रतिपत्तिसामग्रीमुत्पादयितुं यतमानस्य भवतोऽपि स्वक्रियाव्याघातस्तुल्यः। व्याघातस्यैव विशेषत्वात् तद्दर्शनेन शङ्कासामग्र्येव नास्ति प्रत्युत कुतो व्याघातसाम्यमिति चेन्न तद्धि न तावत् आहार्यादिकारणाज्जायमानमेष्टव्यं कूटविषयस्य तस्यातिप्रसञ्जकत्वात्। कूटभिन्नः प्रसञ्जकः प्रमितस्यैव स्यादिति चेन्न तस्य तर्कावसरे निरस्तत्वात्। तस्माद्यदेतद्व्याघातरूपस्य विशेषस्य दर्शनं शङ्काप्रतिपक्षभूतमुच्यते तत् किं ? प्रमाणात् कुतश्चिदुपजायमानं वक्तव्यम् तर्काद्वा। यदि प्रथमः शङ्कास्तित्वमपि तेनैव प्रमाणेनोपेयं शङ्कायां सत्यां व्याघातात् यदि च शङ्कां विनापि व्याघातः तदा शङ्कमानाशङ्कमानयोर्व्याघातस्य साम्यं सिद्धमेव। भवतु शङ्कायामपि तत्प्रमाणं किमेतावता प्रथमोपजातशङ्कामवलम्ब्यावस्थितस्य व्याघातरूपस्य विशेषस्य दर्शनात्तु शङ्कान्तरं नोत्पद्यत इति चेन्न व्याघातसत्त्वकाले तदवलम्बिकया शङ्कयैव शङ्कमानव्यभिचारता तस्याः शङ्कायाव्युपरमे च तदवलम्बिनो व्याघातरूपस्य

विशेषस्याभावात् कः शङ्कान्तरोत्पत्तेर्वारयितेति वक्तव्यम् मा नामास्तु तदा व्याघातात्मा विशेषस्तदवगमस्तदाहितो वा संस्कारस्तावदस्ति। विशेषावगमतत्संस्कारौ च शङ्काविरोधिनौ। ननु स्वरूपेण क्वचिदपि विशेषस्यानवस्थानं तथेति चेन्न अयावदाश्रयभाविनो विशेषस्य पूर्वस्थितस्य यद्दर्शनं तदाहितो वा संस्कारः तस्य कालान्तरे तत्प्रतिधर्मसंशयविरोधित्वे अवयविपाकपक्षे कुम्भस्य परमाणुपाकपक्षे परम्परया तदारम्भकस्य परमाणोः पूर्वं श्यामतया ज्ञातस्य कालान्तरे सम्भावितया कस्य पाकजन्यरूपविशेषवत्तायां संशयो न स्यात्। यदि च शङ्कायां व्याघातस्तदा शङ्काश्रयस्य विशेषरूपस्य व्याघातस्य दर्शनाच्छङ्कायां शङ्कान्तरं मा भूत्। यदि तु व्यभिचाराश्रयस्तदा व्यभिचारः स्यादेव व्याघाताश्रयस्य व्यभिचारस्यापि प्रमित्यापत्तेः। अनादिसिद्धव्याप्तिकास्ते तर्का इति चेन्न तद्बुद्धेः प्रमितित्वासिद्धेः शरीरे स्वात्मप्रत्ययस्य तादृशस्याप्रमात्वोपगमात् अनादित्वासिद्धेश्चोभयत्राविशेषात्। नापि यद्यत्र व्यभिचारः शङ्क्येत तदा व्याघातः स्यादित्येवं रूपात्तर्काद्व्याघातावगमः व्याघातप्रतिपादकस्य तर्कस्य कूटशैथिल्ये तर्काभासत्वापातात् तादृशस्यापि व्याघातोपनायकत्वे व्याघातापत्तेश्च साम्यं शक्यत एव तर्काभासाद्भवतोऽपि व्याघात उपनेतुम्। अथ तर्कस्य व्याप्तिर्मूलभूताभ्युपगम्यते तत्रापि व्यभिचारशङ्कायां पुनरनवस्थैव तत्रापि व्याघातापादने पुनरित्यनवस्थैव। "तस्मादस्माभिरप्यस्मिन्नर्थे न खलु दुष्पठा। त्वद्गाथैवान्यथाकारमक्षराणि कियन्त्यपि। व्याघातो यदि शङ्कास्ति न चेच्छङ्का ततस्तराम्। व्याघातावधिराशङ्का तर्कः शङ्कावधिः कुतः।" अव्यभिचारस्यैकपरित्यागव्यवच्छेदेनापरान्वयः समकालदृष्टे नष्टेऽदृष्टः शङ्क्यत इत्याहुः"।

तर्कस्य यथा व्याप्तिनिश्चयोपयोगिता तथा अनु० चि० पूर्वपक्षोक्तस्य न्यरूपि यथा

"अथोच्यते व्यभिचारज्ञानविरहसहकृतं सहचारदर्शनं व्याप्तिग्राहकम्, ज्ञानं च निश्चयः शङ्का च सा च क्वचिदुपाधिसन्देहात् क्वचिद्विशेषादर्शनसहितसाधारणधर्मदर्शनात् तद्विरहश्च क्वचिद्विपक्षबाधकतर्कात् क्वचित् स्वतः सिद्ध एव। तर्कस्य व्याप्तिग्रहमूलकत्वेनानवस्थेति चेत् न यावदाशङ्कं तर्कानुसरणात् यत्र च व्याघातेन शङ्कैव नावतरति तत्र तर्कं विनैव व्याप्तिग्रहः तथाहि धूमो यदि वह्न्यसमवहिताजन्यत्वे सति वह्निसमवहिताजन्यः स्यान्नोत्पन्नः स्यादित्यत्र किं धूमोऽवह्नेरेव भविष्यति क्वचिद्वह्निं विनापि भविष्यति अहेतुक एव वोत्पत्स्यत इति शङ्का स्यात् सैव स्वक्रियाव्याघातः स्यात् यदि हि गृहीतान्वयव्यतिरेकं हेतुं विना कार्योत्पत्तिं शङ्केत तदा स्वयमेव धूमार्थं वह्नेः, तृप्त्यर्थं भोजनस्य, परप्रतिपत्त्यर्थं शब्दस्य चोपादानं नियमतः कथं कुर्यात् तेन विनापि तत्सम्भवात् तस्मात्तदुपादानमेव तादृशशङ्काप्रतिबन्धकं, शङ्कायां न नियतोपादानं, नियतोपादाने च न शङ्का तदिदमुक्तं "तदेव ह्याशङ्क्यते यस्मिन्नाशङ्क्यमाने स्वक्रियाव्याघातो न भवतीति" नहि सम्भवति स्वयं वह्न्यादिकं धूमादिकार्यार्थं नियमत उपादत्ते तत् कारणं तन्नेत्याशङ्क्यते चेति एतेन व्याघातो विरोधः स च सहानवस्थाननियत इति तत्राप्यनवस्थेति निरस्तं स्वक्रियाया एव शङ्काप्रतिबन्धकत्वात् अतएव "व्याघातो यदि शङ्कास्ति न चेच्छङ्का ततस्तराम्। व्याघातावधिराशङ्का तर्कः शङ्कावधिः कुतः" इति खण्डनकारमतमप्यपास्तम्। नहि व्याघातः शङ्काश्रितः किन्तु स्वक्रियैव शङ्काप्रतिबन्धिकेति न वा विशेषदर्शनात् क्वचित् शङ्कानिवृत्तिरेव स्यात् न चैतादृशतर्कावतारो भूयोदर्शनं विनेति भूयोदर्शनादरः नतु स स्वतएव प्रयोजकः अतएव न तदाहितसंस्कारो न मानान्तरं तर्कस्याप्रमात्वात् तच्च न प्रत्यक्षं व्याप्तिज्ञाने हेतुः तदभावेऽपि शब्दानुमानाभ्यां तदुपग्रहात्। ननु सहचारदर्शनव्यभिचारादर्शनवद्व्यभिचारशङ्काविरहस्यानुकूलतर्कयोर्ज्ञानं व्यभिचारिसाधारणमिति न ततोऽपि व्याप्तिनिश्चयः इति चेन्न स्वरूपसतोरेव तयोर्व्याप्तिग्राहकत्वात् सत्तर्काद्व्याप्तिप्रमा तदाभासात्तदप्रमा विशेषदर्शनसत्यत्वासत्यत्वाभ्यां पुरुषज्ञानमिव। अपरे तु यत्र तर्के व्याप्त्यनुभवो मूलं तत्र तर्कान्तरापेक्षा यत्र तु व्याप्तिस्मरणं हेतुः तत्र न तर्कान्तरापेक्षेति नानवस्था अस्ति च जातमात्राणामिष्टानिष्टसाधनतानुमितिहेतुव्याप्तिस्मरणं तदानीं व्याप्त्यनुभावकाभावात् तन्मूलानुभवमूला चाद्येऽपि व्याप्तिस्मरणपरम्परेति। यत्त्वनादिसिद्धकार्यकारणभावविरोधादिमूलाः केचित्तर्का इति तन्न तत्र प्रमाणानुपयोगेऽनुमान एव पर्य्यवसानात्। नच व्याप्तिग्रहान्यथानुपपत्त्यैव तर्कस्यानादिसिद्धव्याप्तिकत्वज्ञानमिति वाच्यम् अनुपपत्तेरप्यनुमानत्वात्। अन्ये तु विपक्षबाधकतर्कादनौपाधिकत्वग्रह एव तदधीनो

व्याप्तिग्रह इति तदपि न तर्कस्याप्रमाणत्वात्। व्यभिचारादिशङ्कानिरासद्वारा प्रत्यक्षादिसहकारी स इति चेन्न अनवस्थाभयेन तर्कं विना व्याघातात् यत्र शङ्काविरहस्तत्र व्याप्तिग्रहे तर्कस्य व्यभिचारात्। यत्तु योग्यानामुपाधीनां योग्यानुपलब्ध्याभावग्रहः अयोग्यानान्तु साध्याव्याप्यत्वसाधनव्यापकत्वसाधनादभावग्रह इत्यनौपाधिकत्वं सुग्रहमिति तदुक्तम् अनुमानेन तत्साधनेऽनवस्थानात् प्रमाणान्तरस्याभावात्। ये चानुकूलतर्कं विनैव सहचारादिदर्शनमात्रेण व्याप्तिग्रहं वदन्ति तेषां पक्षेतरत्वस्य साध्यव्यापकत्वग्रहेऽनुमानमात्रमुच्छिद्येत अनुमानमात्रोच्छेदकत्वादेव पक्षेतरोनोपाधिरिति चेत् भ्रान्तोऽसि नहि वयमुपाधित्वेन तस्य दोषत्वमाचक्ष्महे साध्यव्यापकत्वेन तद्व्यतिरेकात् पक्षे साध्याभावतर्कतया व्यापकव्यतिरेके व्याप्यव्यतिरेकस्य वज्रलेपात्। अपि च करवह्निसंयोगः प्रत्यक्षविरिक्तातीन्द्रियधर्मसमवायी जनकत्वादित्यत्राप्रयोजकत्वाच्च साधकं तत्र व्याप्तस्य पक्षधर्मत्वे किमप्रयोजकं नाम? तस्माद्विपक्षबाधकतर्काभावाच्च तत्र व्याप्तिग्रह इत्यप्रयोजकत्वमिति"। तर्कं वेत्त्यधीते वा ठञ्। तार्किक तर्कवेत्तरि तर्कशास्त्राध्येतरि च। "तार्किकशिरोमणिस्तनुते" दीधितिः।

**तर्कक** त्रि० तर्क—ण्वुल्। १तर्ककारके। २याचके हेम०। "कामैः सन्तर्पयामास कृपणांस्तर्ककानपि" भा० शा० ४५ अ०

**तर्कग्रन्थ** पु० तर्काधिकृतः ग्रन्थः शाक० त० कर्म० वा। तर्कप्रधाने ग्रन्थे "तर्कग्रन्थार्थरहितो नैव दृष्ठात्यपण्डितः" सुश्रुतः।

**तर्कण** न० तर्क—भावे ल्युट्। तर्कशब्दार्थोक्ते ऊहभेदे "परकीयात्मदोषाद्यैः शङ्कामर्षस्य तर्कणम्" सा० द०

**तर्कमुद्रा** स्त्री "तर्जन्यङ्गुष्ठयोरग्रे मिथः संयोज्य चाङ्गुलीः। प्रसार्य्य बन्धनं प्राहुस्तर्कमुद्रेति तान्त्रिकाः" इत्युक्ते मुद्राभेदे "बाहुं प्रकोष्ठेऽक्षमालामासीनं तर्कमुद्रया" भाग० ४।६।३२।

**तर्कविद्या** स्त्री ६त०। गौतमोक्तानां प्रमाणप्रमेयादीनां षोड़शानां पदार्थानां विद्यायां, कणादोक्तषट्पदार्थ्यादिविद्यायाञ्च। "आन्वीक्षकीं तर्कविद्यामनुरक्तो निरर्थिकाम्" भा० अनु० ३७ अ०।

**तर्कारी** स्त्री तर्कमृच्छति ऋ-अण् ङीप्। जयन्तीवृक्षे। अमरः।

**तर्किन(ल)** तर्क—बा० इन(ल) वा। चक्रमर्दवृक्षे रत्नमाला

**तर्किन्** त्रि० तर्क—णिनि। तर्ककारके पण्डितभेदे। "त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठकः। त्रयश्चाश्रमिणः पूर्वे परिषत् स्याद्दशावरा" मनुः। [स्वार्थे क। तर्कुक तत्रार्थे।

**तर्कु** पु० कृत-उ नि०। (टेको) इति ख्याते यन्त्रभेदे। त्रिका०।

**तर्कुट** न० कृत—छेदने बा० भावे उट पृषो०। १(काटनाकाटा) सूत्रकर्त्तनभेदे त्रिका०। करणे उट। २तर्कौ स्त्री हारा० गौरा० ङीष्।

**तर्कुपिण्ड** पु० ७त०। तर्कुस्थितमृत्पिण्डे (टेकोर वाँटुल) जटाधरः। [हारा०।

**तर्कुपीठी** स्त्री स्वल्पः पीठः ङीप् पीठी ६त०। तर्कुपिण्डे

**तर्कुलासक** पु० तर्कुं लासयति चालयति लस-णिच्-ण्वुल्। तर्कुचालके यन्त्रे (चरका)। हारा०।

**तर्कुशाण** पु० ६त०। (टेकोरशाण) सामके त्रिका०।

**तर्क्षु** पु० तरक्षु+पृषो०। मृगादने व्याघ्रभेदे शब्दरत्ना०।

**तर्क्ष्य** पु० तृक्ष—यत् बा० गुणः। यवक्षारे रत्नमा०।

**तर्ज** भर्त्सने भ्वा० पर० सक० सेट्। तर्जति अतर्जीत् ततर्ज।

**तर्ज** भर्त्सने चुरा० आ० सक० सेट्। तर्जयते अततर्जत। तर्जा तर्जना "सीतामभ्यर्थ्य तर्जितः" "तया तु तर्जिताः सर्वा सुखैर्भीमा यथागतम्"। "राक्षसोऽतर्जयत्सूतं पुनश्चाढ़ौकयद्रथम्" भट्टिः। बालं पुनर्गात्रसुखं गृह्णीयाच्च चैनं तर्जयेत्" सुश्रुतः। आर्षत्वात् पदव्यत्ययः।

**तर्जन** न० तर्ज-भावे ल्युट्। भर्त्सने "तरलताङ्गुलतर्जनविभ्रमाः" माघः। चु० तर्ज—युच्। २भर्त्सने स्त्री "यत्ना क्रमेण परिसान्त्वनतर्जनाभिः" माघः। "मधुरवचनैः सभ्रूभङ्गैः कृताङ्गुलितर्जनैः" सा० द०।

**तर्जनी** स्त्री तर्ज्यतेऽनया तर्ज—करणे ल्युट् ङीप्। प्रदेशिन्यां वृद्धाङ्गुष्ठसमीपस्थे अङ्गुलिभेदे। "तर्जन्यङ्गुष्ठयोर्मध्यं पितृतीर्थं प्रचक्षते" स्मृतिः। तर्कमुद्राशब्दे उदा०। मुद्राशब्दे भूरि उदा०।

**तर्जनीमुद्रा** स्त्री "वामहस्ते विधायाथ तर्जनीमध्यमे ततः। प्रसार्य्य तर्जनीमुद्रा निर्द्दिष्टा शूलपाणिना" तन्त्रोक्ते मुद्राभेदे।

**तर्जिक** पु० तर्जस्तर्जनमस्त्यस्य ठन्। देशभेदे हेमच०।

**तर्ण** पु० तृण-अच्। वत्से। ण्वुल्। तर्णक गोवत्से, अमरः "कृष्णसनाथा तर्णकपङ्क्तिः" छन्दोम०। सद्योजाते २शिशौ च हेम०। [२प्लवे (भेला) शब्दार्थकल्पतरुः।

**तर्णि** पु० तरत्याकाशपद्धतिं तॄ—नि करणे नि वा। १सूर्य्ये

**तर्तरीक** न० तॄ—करणे ईक फर्फरीका० नि०। २नौकाभेदे कर्त्तरि ईक। २पारगे त्रि० मेदि०।

**तर्द्** हिंसायां भ्वा० पर० सक० सेट् । तर्दति अतर्दीत् । ततर्द । "सेहे कपी रथाश्वांश्च रिपोस्ततर्द शाखिना" । "सुग्रीवः प्रवगं भेजे बह्वनामस्ततर्द च" भट्टिः ।

**तर्दू** स्त्री तर्द्-तृद्-वा ऊ । काष्ठनिर्मितायाम् दर्व्याम् अमरः ।

**तर्द्मन्** पु० तर्द्–तृद् वा मनिन् । १चषालच्छिद्रायवेधे "द्व्यङ्गुलं त्र्यङ्गुलं वा तर्द्मातिक्रान्तं यूपस्य" कात्या० श्रौ० ६।१।३०। "तर्द्मातिक्रान्तं चषालच्छिद्रायवेधादतिक्रान्तम्" कर्कः । आधारे मनिन् । २तर्दनप्रदेशे च ।
"तर्द्म समूते पश्चाङ्कवतस्तदिमावेव" शत० ब्रा० ३।२।१।२ तर्द्म समूते इति यथोभयोर्मांसप्रदेशयोः सम्बन्धो भवति यथा च तर्दनप्रदेशेषु पश्चाद्भागे जते परस्परं स्यूते भवतः तस्यैकस्योपर्यपरमास्तृणुयात्" भा०

**तर्पण** न० तृप–णिच् वा ल्युट् । १तृप्तौ २प्रीणने च अमरः ३यज्ञकाष्ठे हेमच० । स्नातकादिभिः प्रत्यहं कर्तव्ये पञ्चमहायज्ञान्तर्गते ४महायज्ञभेदे स च पितृयज्ञः । पितॄणां तृप्तिहेतुत्वादस्य तथात्वम् तत्प्रकारः आ० त० उक्तो यथा "तद्द्विविधं प्रधानमङ्गञ्च । तत्राद्यमाह शातातपः "तर्पणन्तु शुचिः कुर्यात् प्रत्यहं स्नातको द्विजः । देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रमम्" । विधवामधिकृत्य काशीखण्डम् "तर्पणं प्रत्यहं कार्यं भर्त्तुः कुशतिलोदकैः । तत्पितुस्तत्पितुश्चापि नामगोत्रादिपूर्वकम्" । द्वितीयन्तु ब्रह्माण्डपुराणीयम् "नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमिष्यते । तर्पणन्तु भवेत्तस्य अङ्गत्वेन व्यवस्थितम्" । तर्पणाकरणे दोषमाह योगियाज्ञवल्क्यः "नास्तिक्यभावाद्यश्चापि न तर्पयति वै सुतः । पिबन्ति देहरुधिरं पितरो वै जलार्थिनः" । तर्पणमधिकृत्य ब्रह्मपुराणम् "तस्मात् सदैव कर्त्तव्यमकुर्वन् महतैनसा । युज्यते ब्राह्मणः कुर्वन् विश्वमेतद्बिभर्त्ति हि" । शङ्खलिखितौ "नेष्टकारचिते स्थाने पितॄंस्तर्पयेत्" । मार्कण्डेयपुराणम् "यच्च सर्व्वाय नोत्सृष्टं यच्चाभोज्यनिपानजम् । तद्वर्ज्यं सलिलं तात ! सदैव पितृकर्मणि" । विष्णुः "स्नातश्चार्द्रवासा देवपितृतर्पणमम्भःस्थ एव कुर्यात् । परिवर्त्तितवासाश्चेत्तीर्थमुत्तीर्य" । अत्रापि तीर्थे विशेषमाह मत्स्यपुराणे "तिलोदकाञ्जलिर्देयो जलस्थैस्तीर्थवासिभिः । सदा न हस्तेनैकेन स्थले श्राद्धं समिष्यते" । अत्र जलस्थैरित्यनेन स्थलस्थानामपि जलस्थत्वं नियम्यते । ततश्च "अन्तरुदक आचान्तोऽन्तरेव पूतो भवति । बहिरुदके आचान्तो बहिरेव पूतो भवति तस्मादन्तरेकं बहिरेकञ्च पादं कृत्वा आचामेत् सर्व्वत्र शुद्धो भवति" इति पैठीनसिवचनात् जलस्थैकचरणकृताचमनेनोभयकर्म्मार्हत्वात् तर्पणकाले तीर्थे जलैकचरणेन भवितव्यम् अन्यत्र त्वनियमः । तद्रूपायां जले तर्पणमनिषिद्धमिति । स्थलस्थतर्पणे आग्नेयपुराणम् "प्रागग्रेषु सुरांस्तर्प्येन्मनुष्यांश्चैव मध्यतः । पितृंश्च दक्षिणाग्रेषु दद्यादिति जलाञ्जलीन्" । क्वचिद्देशे तु विष्णुः "यत्राशुचिस्थलं वा स्यादुदके देवतापितॄन् । तर्पयेत्तु यथाकाममप्सु सर्वं प्रतिष्ठितम्" । बृहस्पतिः "ब्रह्मयज्ञप्रसिद्ध्यर्थं विद्याञ्चाध्यात्मिकीं जपेत् । जप्त्वाथ प्रणवं वापि ततस्तर्पणमाचरेत्" । एतच्च तर्पणं ब्रह्मयज्ञानन्तरं छन्दोगेतरपरम् । तेषान्तु वैश्वदेवाय चोपलाय इत्यन्तसूत्रोपस्थानानन्तरं गोभिलेन तर्पणाभिधानात् । "आप्लवने तु संप्राप्ते तर्पणं तदनन्तरम्" । "गायत्रीञ्च जपेत् पश्चात् स्वाध्यायञ्चैव शक्तितः" । आप्लवने तु संप्राप्ते गायत्रीं जपतः पुरा । तर्पणं कुर्वतः पश्चात् स्नानमेव वृथा भवेत्" इतिगोभिलीयवचनाभ्याञ्च । दक्षः "प्रादेशमात्रमुद्धृत्य सलिलं प्राङ्मुखः सुरान् । उदङ्मनुष्यांस्तर्प्येत पितॄन् दक्षिणतस्तथा । अर्घेस्तु तर्पयेद्देवान् मनुष्यान् कुशमध्यतः । पितॄंस्तु कुशमूलाग्रे विधिः कौशो यथाक्रमम्" । एवञ्च "गोशृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत्" इति यमवचनस्थगोशृङ्गपदं प्रादेशमात्रपरम् । उद्धृतोदके तु हारीतः "पात्राद्वा जलमादाय शुभे पात्रान्तरे क्षिपेत् । जलपूर्णेऽथ वा गर्त्ते न स्थाने तु विरिञ्चिषि" । अत्र यद्वि यदुपक्रम्य श्रुतं यच्च येन समं समभिव्याहृतं तदेव तत्रैवाङ्गं नान्यदिति बोध्यं तदङ्गं इतरत्समभिव्याहारप्रकरणाभ्यामिति गोतमसूत्रात् तेन पद्मपुराणीयस्नाने तदुक्तमेव तर्पणम् । "तद्यथा ब्रह्माणं तर्पयेत् पूर्वं विष्णुं रुद्रं प्रजापतिम् । देवायक्षास्तथा नागा गन्धर्वाप्सरसोऽसुराः । क्रूराः सर्पाः सुपर्णाश्च तरवो जम्भगाः खगाः । विद्याधरा जलाधारास्तथैवाकाशगामिनः निराहाराश्च ये जीवाः पापे धर्मेरताश्च ये । तेषामाप्यायनायैतद्दीयते सलिलं मया" । एतेनैकाञ्जलिरिति सर्वेषां मतम् । "कृतोपवीती देवेभ्यो निवीती च भवेत्ततः । मनुष्यांस्तर्पयेद्भक्त्या ऋषिपुत्रानृषींस्तथा । सनकश्च सनन्दश्च

तृतीयश्च सनातनः। कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा। सर्वे ते तृप्तिमायान्तु मद्दत्तेनाम्बुना सदा। मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम्। प्रचेतसं वशिष्ठञ्च भृगुं नारदमेव च। देवान् सर्वान्ऋषीन् सर्वांस्तर्पयेदक्षतोदकैः। अपसव्यं ततः कृत्वा सव्यं जानु च भूतले। अग्निष्वात्तांस्तथा सौम्यान् हविष्मतस्तथोष्मपान्। सुकालिनो बर्हिषद आज्यपांस्तर्पयेत्ततः। तर्पयेच्च पितॄन् भक्त्या सतिलोदकचन्दनैः। दर्भपाणिस्तु विधिना हस्ताभ्यां तर्पयेत्ततः"। अत्र केचित् पितृधर्म्मातिदेशात् दिव्यपितॄणामपि अञ्जलित्रयदानम्। तदसत् "कव्यवालं नलं सौम्यं यममर्य्यमणन्तथा। अग्निष्वात्ताः सोमपाश्च बर्हिषदः स्वकृत् स्वकृत्" इति छन्दोगपरिशिष्टेन विशिष्टैकाञ्जलिविधानात्। "पित्रादीन्नामगोत्रे च तथा मातामहानपि। सन्तर्प्य भक्त्या विधिवदिमं मन्त्रमुदीरयेत्। येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः। ते तृप्तिमखिलां यान्तु ये चास्मत्तोयकाङ्क्षिणः"। अत्र ब्रह्मादिचतुर्ष्तर्पणप्रयोगाकाङ्क्षायां गोभिलयाज्ञवल्क्योक्तप्रयोगविधिर्याह्यः। स च "अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु। तृप्यतामिति वक्तव्यं नाम्ना तु प्रणवादिना"। अन्वारब्धेन पश्चाल्लग्नेन अस्मादेव वचनात् तर्पणाभिलापे प्रणवादित्वं तृप्यतामिति च लभ्यते। ततश्च ओं ब्रह्मा तृप्यतामिति प्रयोगः। देवा इत्यादि मयेत्यन्तेन मन्त्रलिङ्गादेकाञ्जलिः। तथा सनक इत्यादि सदा इत्यन्तेनैकाञ्जलिः एवं पुनरपि। "एकैकमञ्जलिं दत्त्वा द्वौ द्वौ तु सनकादयः। अर्हन्ति पितरस्त्रींस्त्रीन् स्त्रियस्त्वेकैकमञ्जलिम्" इति व्यासगोभिलसूत्रवचनात्। ननु द्वौ द्वाविति वीप्साश्रुतेः सनकादिप्रत्येक एव द्व्यञ्जलिरिति वाच्यं प्रत्येकपक्षे द्वौ द्वौ समुदायपक्षे तृप्त्यनुरोधेन तथैव युक्तत्वात्। अत्राञ्जलिपदं प्रागुक्तान्वारब्धेनेति श्रवणात्तथाविधहस्तद्वयपरम् तद्वैकल्पिकाञ्जलिपरं वा देवादिपक्षे। पितृपक्षे तु "तौ युतावञ्जलिः पुमान्" इत्येतत्परं पद्मपुराणीयतर्पणपक्षे तु पितृपक्ष एव हस्ताभ्यामिति श्रुतेस्तथैवाञ्जलिः। अन्यत्र नाञ्जलिरित्यवगम्यते। आचारमाधवीये प्रचेताः "मातृमुख्यास्तु याश्चिस्तासां दद्यात्रिरञ्जलीन्"। इति। पराशरभाष्ये सनकादिदिव्यमनुष्याणां तर्पणादिकं सामगेन प्राङ्मुखेन तदितरेणोदङ्मुखेन कर्त्तव्यं तथा च परिशिष्टधृतं सामवेदीयषट्त्रिंशद्ब्राह्मणं "मनुष्याणामेषा दिक् या च प्रतीचीति"। तथाच ज्योतिष्टोमे श्रूयते "प्राचीं देवा अभजन्त, दक्षिणां पितरः, प्रतीचीं मनुष्याः उदीचीमसुराः अपरेषामुदीचीं मनुष्याः"। यत्तु "कृतजप्योऽन्तर्जानुरुदङ्मुखः। दिव्येन तीर्थेन देवानुदकेन तर्पयेत्" इति शङ्खलिखितसूत्रं देवतर्पणे उदङ्मुखत्वविधायकं तच्छ्रुतिविरोधात् शाख्यन्तरीयम् अशक्तविषयकम्। उदकेनेतिश्रवणात् यवादीति फलाधिक्यार्थं व्यवहारोऽपि तथा। यत्तु "निवीती हन्तकारेण मनुष्यांस्तर्पयेदथ। कुशस्य मध्यदेशेन ऋतीर्थेन उदङ्मुखः" लघुविष्णुनाहन्तप्रयोगेण जलदानमुक्तं तत् सनकादित्र्येकतर्पणे यथा "सनकस्तृप्यतां तस्मै तदुदकं हन्त" इत्यादौ न तु पद्मपुराणीयमिलिततर्पणे "दत्तेनाम्बुना" अनेन दत्तस्य पुनस्त्यागासम्भवात्। ऋतीर्थेन कनिष्ठाङ्गुलिमूलेन "प्राजापत्येन तीर्थेन मनुष्यांस्तर्पयेत् पृथक्" इति विष्णुपुराणीयैकवाक्यत्वात्। मरीच्यादि ऋषितर्पणन्तु अङ्गुल्यग्रेण "अङ्गुल्यग्रमार्षम्" इति यमवचनात् एवञ्चार्षदेवतीर्थयोरङ्गुल्यग्ररूपैकदेशत्वसाधर्म्येण। मरीच्यादितर्पणे तु दिगाद्याकाङ्क्षायां देववदिति। अतएव योगियाज्ञवल्क्यवचने सनकानित्यत्र मनुष्यानिति विशेषणं दत्तम्। ब्रह्माद्यानित्यत्र देवानिति विशेषणं दत्तमिति व्यवहारोऽपि तथा। मरीचिः "सौवर्णेन तु पात्रेण ताम्ररूप्यमयेण वा। औडुम्बरेण खड्गेन पितॄणां दत्तमक्षयम्। विना रूप्यसुवर्णेन विना ताम्रमयेण वा। विना तिलैश्च दर्भैश्च पितॄणां नोपतिष्ठते"। एतच्च समग्राभावे बोध्यं नतु एकस्याभावे शङ्खः। "सौवर्णेन तु पात्रेण राजतेनौडुम्बरेण च। खड्गपात्रेण शङ्कुना वाप्युदकं पितृतीर्थं स्पृशन् दद्यात्"। शङ्कुः सुवर्णकीलकः। "अक्षतोदकैर्यवाद्भिस्तर्पयेद्देवान् सतिलाभिः पितॄंस्तथा" इति छन्दोगपरिशिष्टेनापि पितृपक्षे तिलोदकमात्रविधानात्। पद्मपुराणे चन्दनविधानं फलाधिक्यार्थम्। अपसव्यं प्राचीनावीतित्वम्। उपवीतित्वम् प्राचीनावीतित्वञ्चाह गोभिलः "दक्षिणं बाहुमुद्धृत्य शिरोऽवधाय सव्येऽंसे प्रतिष्ठापयति दक्षिणं कक्षमवलम्बनं भवति एवं यज्ञोपवीती भवति। सव्यं बाहुमुद्धृत्य शिरोऽवधाय दक्षिणेऽंसे प्रतिष्ठापयति सव्यकक्षमवलम्बनं

भवति एवं प्राचीनावीती भवति” इति। प्रतिष्ठापयति यज्ञोपवीतमिति शेषः। तथाचामरसिंहोऽपि “उपवीतं यज्ञसूत्रं प्रोद्धृते दक्षिणे करे। प्राचीनावीतमन्यस्मिन्निवीतं कण्ठलम्बितम्” इति। “सावित्री ग्रन्थिसंयुक्तं उपवीतं तवाच्युत” इति ब्रह्मपुराणीय पूजादर्शनात्। गायत्रीमन्त्रेण उपवीतं कर्त्तव्यमिति प्रतीयते। लौकिकास्तु सावित्रीग्रन्थिरिति वदन्ति प्रवरसंख्यया वेष्टितग्रन्थिरिति लौकिकव्यवहारः। विद्याकरधृतं “यथा यज्ञोपवीतम्”। इत्यादिवाक्यात् उत्तरीयमपि यज्ञोपवीतवत् सव्यापसव्यत्वादिना धार्य्यं विवृतं शुद्धितत्त्वे। पित्रादीत्यादिना मातामहादि त्रयपरिग्रहः। तथाच विष्णुपुराणे “त्रिरपः प्रीणनार्थाय देवानामपवर्जयेत्। ऋषीणाञ्च यथान्यायं सकृच्चापि प्रजापतेः। पितृणां प्रीणनार्थाय त्रिरपः पृथिवीपते!। पितामहेभ्यश्च तथा प्रीणयेत् प्रपितामहान्। मातामहाय तत् पित्रे तत्पित्रे च समाहितः। दद्यात् पित्रेण तीर्थेन काम्यञ्चान्यत् शृणुष्व मे”। स्मृतिसारे धृतम् “वामहस्ते तिलान् दत्त्वा जलमध्ये तु तर्पयेत्। स्नानशाट्यञ्चले पात्रे रोमकूपे न कर्हिचित्”! जलतर्पणे रोमरहितप्रदेशे वामबाहौ वस्त्राच्छादिते तिलान् संस्थाप्य मुद्रारहितदक्षिणहस्ततर्ज्जन्यङ्गुष्ठयोरन्यतरेण तिलान् गृहीत्वा वामहस्ततलेन स्थापयित्वा तर्पयेदिति मदनपारिजातः। अतएव मरीचिः “मुक्तहस्तञ्च दातव्यं न मुद्रां दर्शयेत् क्वचित्। वामहस्ते तिला ग्राह्या मुक्तहस्तञ्च दक्षिणम्”। मुक्तहस्तं प्रसारितहस्तं यथा स्यात्! एवं मुद्रा प्रदेशिन्यङ्गुष्ठयोगे सन्दंशरूपः। मुक्तहस्तञ्च दक्षिणम्” इति दक्षिणहस्तं तिलरहितं कुर्य्यात् इति नैयतकालीनकल्पतरुः। तथाच नारदीये “अङ्गुष्ठानामिकाभ्यान्तु दक्षिणस्येतरस्थितान्। तिलान् गृहीत्वा पात्रस्थान् ध्यात्वा संतर्पयेत् पितॄन्”। देवलः। “रोमसंस्थान् तिलान् कृत्वा यस्तु संतर्पयेत् पितॄन्। पितरस्तर्पितास्तेन रुधिरेण मलेन च”। वृष्टिजलसम्पर्के तर्पणनिषेधमाह वायुपुराणम् “मेघे वर्षति यः कुर्य्यात् तर्पणं ज्ञानदुर्बलः। पितृणां नरके घोरे गतिस्तस्य भवेद्ध्रुवम्”। तथा “शूद्रोदकैर्न कुर्य्यात्तथा मेघादिभिःस्रुतैः”। इति मेघादि दर्शनादिति कौमुदी। योगियाज्ञवल्क्यः “यद्युद्धृतं जलञ्चेत्तु तिलान् संमिश्रयेज्जले। अतोऽन्यथा तु सव्येन तिला ग्राह्या विचक्षणैः”। अत्र शेषार्द्धं मदनपारिजाते लिखितम्। “अन्यथा वामहस्तेन” ततस्तर्पणमाचरेदिति”। वायुपुराणम्। “तिलदर्भैस्तु संयुक्तं श्रद्धया यत् प्रदीयते। तत्सर्वममृतं भूत्वा पितॄणामुपतिष्ठते”। स्मृतिः “रविशुक्रदिने चैव द्वादश्यां श्राद्धवासरे। सप्तम्यां जन्मदिवसे न कुर्य्यात्तिलतर्पणम्”। मत्स्यपुराणे “संक्रान्त्यां निशि सप्तम्यां रविशुक्रदिने तथा। श्राद्धे जन्मदिने चैव न कुर्य्यात्तिलतर्पणम्”। श्राद्धे अमावास्यातिरिक्तश्राद्धे “नीलषण्डविमोक्षेण अमावास्यां तिलोदकैः। वर्षासु दीपदानेन पितॄणामनृणो भवेत्। अमावास्यान्तु ये मर्त्याः प्रयच्छन्ति तिलोदकम्। पात्रमौडुम्बरं प्राप्य मधुमिश्रं तपोधनाः!। कृतं भवति तत् श्राद्धं रहस्यञ्च सदा भवेत्। विशेषतश्च जाह्नव्यां सर्वदा तर्पयेत् पितॄन्। न कालनियमस्तत्र क्रियते सर्वकर्मसु”। बौधायनः “न जीवत्पितृकः कृष्णैस्तिलैस्तर्पणमाचरेत्। सप्तम्यां रविवारे च जन्मर्क्षदिवसेषु च”। स्मृतिः “निषिद्धदिनमासाद्य यः कुर्य्यात्तिलतर्पणम्। रुधिरं तद्भवेत्तोयं दाता च नरकं व्रजेत्”। प्रतिप्रसवमाह स्मृतिः “अयने विषुवे चैव संक्रान्त्यां ग्रहणेषु च। उपाकर्म्मणि चोत्सर्गे युगादौ मृतवासरे। सूर्य्यशुक्रादिवारेऽपि न दोषस्तिलतर्पणे। तीर्थे तिथिविशेषे च कार्य्यं प्रेते च सर्वदा”। स्कन्दपुराणम् “तीर्थमात्रे तु कर्त्तव्यं तर्पणं सतिलोदकैः। योऽन्यथा तर्पयेन्मूढ़ः स विष्ठायां भवेत् कृमिः। विशेषतस्तु जाह्नव्यां सर्वदा तर्पयेत् पितॄन्”। एतत्तु निषिद्धदिनतर्पणविधायकम्। “तीर्थे तिथिविशेषे च गङ्गायां प्रेतपक्षके। निषिद्धेऽपि दिने कुर्य्यात्तर्पणं तिलमिश्रितम्” इति मदनपारिजातविद्याकरराजमार्त्तण्डधृतमरीचिवचनात्। तिलाभावे पितृतीर्थेन प्रतिनिधिना तर्पणम् “तिलानामप्यभावे तु सुवर्णरजतान्वितम्। तदभावे निषिञ्चेत्तु दर्भैस्तोयैर्न चान्यथा” इति याज्ञवल्क्यात्। सुवर्णरजतान्वितं सुवर्णरजतस्पृष्टम्। अतएव “सुलभं सकलं पुण्यं यज्ञदानादिजं फलम्। गङ्गातोयैश्च सतिलैर्दुर्लभं पितृतर्पणम्” इति भविष्यपुराणे गङ्गातोयस्य दुर्लभत्वमुक्तम् न च तदभावात्तर्पणाभावः शातातपः “पितॄणां पितृतीर्थेन जलं सिञ्चेद्यथो-

विधि । दक्षिणेनाथ गृह्णीयात् पितृतीर्थे समीपतः” । गोभिलः “गोत्रं स्वरान्तं सर्व्वत्र गोत्रस्याक्षय्यकर्म्मणि । गोत्रस्तु तर्पणे प्रोक्तः कर्त्ता एवं न मुह्यति । सर्व्वत्रैव पितः प्रोक्तः पिता तर्पणकर्म्मणि । पितुरक्षय्यकाले तु अक्षयां तृप्तिमिच्छता । शर्म्मन्नर्घ्यादिके कार्य्यं शर्म्मा तर्पणकर्म्मणि । शर्म्मणोऽक्षय्यकाले तु पितॄणां दत्तमक्षयम्” । कार्ष्णाजिनिः “नाभिमात्रे जले स्थित्वा चिन्तयेदूर्द्ध्वमानसः । आगच्छन्तु मे पितर इमं गृह्णन्त्वपोऽञ्जलिम्” । योगियाज्ञवल्क्यः “नामगोत्रस्वधाकारैस्तर्प्याः स्युरनुपूर्व्वशः” । तेन अमुकगोत्रः पिता अमुकदेवशर्म्मा तृप्यतामेतत्तिलोदकं तस्मै स्वधेति प्रयोगः सिध्यति । एवं मातामहादौ । एष चासम्बुद्धिप्रयोगो वाजसनेयीतरपरः । तेषान्तु सम्बुद्ध्यन्ततामाह ब्राह्मणसर्व्वस्वे जातूकर्ण्यः “प्रमीतपितृकस्तु मन्त्रस्त्वेत्यावाह्य नामगोत्रमुदाहृत्य यावता पितृकार्य्यमथावेतत्ते उदकमिति पितॄन् पितामहान् प्रपितामहान् । एकैकस्मै त्रींस्त्रीन्दद्यात्” । अत्र चाथावेति नाम गृह्णातीति कात्यायनोक्तस्य नाम्नः ते इति युष्मत्प्रयोगात् सम्बुद्ध्यन्तता प्रतीयते तस्य सम्बुद्ध्यमानात्मवाचित्वात् । असम्बुद्धिप्रथमान्तत्वेऽन्वयापत्तेः । ततश्चामुकगोत्र ! पितरमुकदेवशर्म्मन् तृप्यस्वैतत्ते तिलोदकं स्वधेति प्रयोगः सिध्यति । एवं मातामहानामपि । ततो मात्रादीनां षण्णां तर्पणानि । द्वादशानां मध्ये यो जीवति तं विहाय वृद्धप्रपितामहादीन् गृहीत्वा पूरयेत् । एवं प्रव्रजिते पतिते च । ततो विमातृज्येष्ठभ्रातृपितृव्यमातुलादींस्तर्पयेत् । यमः “बान्धवानां कृत्वा सुहृदां तर्पयेत्” सुहृदो मित्रादयः । मित्रायाप्यसवर्णाय जलं न देयम् । “सवर्णेभ्यो जलं देयं नान्यवर्णेभ्य एव च” इति याज्ञवल्कीयात् । भीष्मायासवर्णायापि भीष्माष्टम्यां तर्पणं कार्य्यम् “ब्राह्मणाद्यास्तु ये वर्णा दद्युर्भीष्माय नो जलम् । संवत्सरकृतं तेषां पुण्यं नश्यति सत्तम !” इत्यादि वचनात् । मन्त्रस्तु “वैयाघ्रपद्यगोत्राय इत्यादि । ब्राह्मणेनैतत् पितृतर्पणानन्तरं कार्य्यम् अन्येन पितृतर्पणात् पूर्व्वम् । अत्र वीजं वर्णज्यैष्ठ्यमिति हलायुधः । अपसव्येन दक्षिणामुखेन सतिलोदकेन सकृत् कर्त्तव्यम् । ततः कृताञ्जलिः” “भीष्मः शान्तनवो वीर” इत्यादि पठेत् । ततो येऽबान्धवा बान्धवा वा इत्यादिना एकाञ्जलिर्देयः । योगियाज्ञवल्क्यः “निष्पीड़यति यः पूर्व्वं स्नानवस्त्रन्तु तर्पणात् । निराशाः पितरस्तस्य यान्ति देवाः सहर्षिभिः । तथा “अन्नप्रकरवत्तस्य अपसव्येन पीड़नम् । अन्नप्रकरवत् श्राद्धोच्छिष्टसमीपान्नविकिरणवत् तस्याधोवस्त्रस्य “स्नानशाट्यान्तु दातव्या मृदस्तस्मै विशुद्धये” इति वशिष्ठवचने अधोवस्त्रस्य दुष्टस्यैव शुद्धये मृद्दानं प्रतीयते । योगियाज्ञवल्क्यः “वस्त्रनिष्पीड़ितं तोयं स्नातस्योच्छिष्टभागिनः । भागधेयं श्रुतिः प्राह तस्मान्निष्पीड़येत् स्थले” । अत्र मन्त्रमाह गोभिलः “ये चास्माकं कुले जाता अपुत्रा गोत्रिणो मृताः । ते तृप्यन्तु मया दत्तं वस्त्रनिष्पीड़नोदकम्” । अशक्तौ यमः । “आब्रह्मस्तम्बपर्य्यन्तं जगत्तृप्यत्विति क्रमात् । अञ्जलित्रितयं दद्यात् एतत्संक्षेपतर्पणम्” । “आब्रह्मस्तम्बपर्यन्तं देवर्षिपितृमानवाः । तृप्यन्तु सर्व्वे पितरो मातृमातामहादयः । अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् । आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम्” ।

जन्माष्टम्यां तर्पणस्य फलं यथा “तस्यां तिथौ वारिमात्रं पितॄणां यः प्रयच्छति । गयाश्राद्धं कृतं तेन शताब्दं नात्र संशयः” ब्रह्म०वै० श्रीकृष्णजन्मखण्डः । तर्पणञ्च देवर्षिपितृमनुष्याणां जलाञ्जलिदानेन तृप्तिसम्पादनम् । यथा “एवं स्नात्वा पितॄन् देवान् मनुष्यांस्तर्पयेन्नरः । नाभिमात्रे जले स्थित्वा चिन्तयेदूर्द्ध्वमानसः । आगच्छन्तु मे पितर इमं गृह्णन्त्वपोऽञ्जलिम् । त्रींस्त्रीञ्जलाञ्जलीन् दद्यादाकाशे दक्षिणे तथा । वसित्वा वसनं शुष्कं स्थले चास्तीर्णवर्हिषि । विधिज्ञस्तर्पणं कुर्य्यान्न पात्रे तु कदाचन । यदपां क्रूरमध्यं तु यदमेध्यन्तु किञ्चन । अशान्तं मलिनं यच्च तत्सर्व्वमपगच्छतु । गृहीत्वानेन मन्त्रेण तोयं सव्येन पाणिना । प्रक्षिपेद्दिशि नैरृत्यां रक्षोपहतये द्रुतम् । अनाह्निकन्तु यद्भुक्तं पापाद्यच्च प्रतिग्रहम् । दुष्कृतं यच्च मे किञ्चिद्वाङ्मनःकायकर्म्मभिः । पुनातु मे तदिन्द्रस्तु वरुणः स बृहस्पतिः । सविता च भगश्चैव मुनयः सनकादयः । आब्रह्म स्तम्बपर्य्यन्तं जगत् तृप्यत्विति ब्रुवन् । क्षिपेदपोऽञ्जलींस्त्रींस्तु कुर्व्वन् सङ्क्षेपतर्पणम्” गारुड़े २१५ अ० । तर्पणविशेषस्तु गारुड़े २१८ अ० वह्निपुराणे नित्याह्निकस्नानविधाननामाध्याये च द्रष्टव्यः । जीवत्पितृकस्य

तर्पणनिषेधो यथा "दर्शस्नानं गयाश्राद्धं तिलैस्तर्पणमेव च। न जीवत्पितृको भूप! कुर्य्यात् सत्वाघमाप्नुयात्" कालिका० पु० ८८ अ०।
कर्त्तरि ल्यु। ५तृप्तिकारके त्रि०। "सुरभिर्घ्राणतर्पणः" अमरः। "सत्तर्पणो नाकसदां वरेण्यः" भट्टिः।

**तर्पणी** स्त्री तृप–णिच्–करणे ल्युट् ङीप्। गुरुस्कन्दवृक्षे शब्दमा०।

**तर्पणेच्छु** पु० तर्पणमिच्छति इष उ० नि० २त०। १भीष्मे शब्दर०। २तर्पणेच्छुमात्रे त्रि०।

**तर्पिन्** त्रि० तृप–णिच्–णिनि। १तर्पके प्रीणयितरि स्त्रियां ङीप् सा च २पद्मचारिणीलतायाम् स्त्री शब्दच०।

**तर्पिलो** स्त्री तृप–बा० इल गौरा० ङीष्। पद्मचकारिण्याम्। कपिलका० रस्य वा लः। तल्पिलीतिरूपान्तरं तत्रार्थे। स्वार्थे क। तर्पिलिका तत्रार्थे। तत्रापि वा रस्य लः। तल्पिलिकापि तत्रार्थे।

**तर्ब** गतौ भ्वा० पर० सक० सेट्। तर्बति अतर्बीत्। ततर्ब।

**तर्बट** पु० तर्बति सततं गच्छति तर्ब–अटन्। १वत्सरे २चक्रमर्द्दवृक्षे च राजनि०।

**तर्मन्** न० तृ–मनिन्। यूपाग्रभागे अमरः।

**तर्य** पु० ऋषिभेदे। "सदापृणो यजतो वि द्विषो वधीद्बाहुवृक्तः श्रुतवित्तर्य्यः" ऋ० ५।४४।१२ "सदापृणादयः पञ्चर्षयः" इति भाष्योक्तेः।

**तर्ष** पु० तृष–भावे घञ्। १अभिलाषे २तृष्णायाञ्च अमरः। "निवृत्ततर्षैरुपगीयमानात्" भाग०१।८ तर्षच्छेदो न भवति पुरुषस्येह कल्मषात्। निवर्त्तते तदा तर्षः पापमन्तर्गतं यदा" भा० शा० २०४ अ०। तृ–कर्मणि करणे–वा स। ३समुद्रे ४भेलके च उज्ज्वल०।

**तर्षण** न० तृष–भावे ल्युट्। पिपासायां जटाधरः। [त्रिका०।

**तर्षित** त्रि० तर्षो जातोऽस्य तार० इतच्। तृषिते पिपासौ

**तर्षुल** त्रि० तृष–बा० उलच्। तृष्णायुक्ते "ज्ञानेन्द्रियाणीन्द्रियार्थान् नोपसर्पन्त्यतर्षुलम्" भा० २११ अ०।

**तर्ष्यावत्** त्रि० तृषावत् वेदे पृषो०। तृष्णायुक्ते। "निरुद्धचित्तान्निपिसस्तर्ष्यावान् गोधा" १०।२८।१०। "तर्ष्यावान् तृषावान्" भा०।

**तर्हि** अव्य० तद्+र्हिल्। तस्मिन् काले इत्यर्थे। "रक्षांसि वा एनं तर्ह्यालभन्ते यर्हि न जायते" ऐत० ब्रा०। "यर्हि याव वो मयार्यो भविता तर्ह्येव वोऽहं पुनरागन्तास्मि" तै० स०।

**तल** प्रतिष्ठायां वा चुरा० उभ० पक्षे भ्वा० पर० अक० सेट्। तालयति ते तलति। अतीतलत् त अतालीत्। तालयाम् बभूव आस चकार। ततालं तेलतुः तलम्।

**तल** पु०न० तल–अच्। स्वरूपे "शैलेयनद्धेषु शिलातलेषु" कुमा०। "हिमधाम्नि दर्पणतले च मुक्तः" माघः। "विदाङ्कुर्वन्तु महतस्तलं विद्विषदम्भसः" "तलं स्वरूपं प्रमाणं वेति" मल्लिना०। २ज्याघातवारणे। ३कानने ४कार्य्यबीजे न० मेदि०। ५गर्त्ते पु०त्रिका०। ६पादतलस्य मध्ये हेमच०। "इदं रसातलं नाम सप्तमं पृथिवी तलम्" भा० वि० ९६० अ०। "भुवस्तलमिव व्योम कुर्वन् व्योमेव भूतलम्" रघुः। ७तालवृक्षे पु० ८चपेटे (चड़) ९त्सरौ १०खड्गमुष्टौ ११मध्यहस्ते न तन्त्रीवादने पु० मेदि०। १२गोधायां पु० हेमच०।

**तलक** न० तल–बा०वुन्। पुष्करिण्याम् (तलाओ) हारा०।

**तलकीट** पु० वृक्षभेदे "तलकोटस्य बीजेषु पचेदुत्कारिकां शुभाम्" सुश्रुते श्वासचिकित्सायाम्।

**तलताल** पु० तलेन करतलेन ताड्यते ताड–कर्मणि घञ् डस्य लः। करतलेन वाद्यमाने वाद्यभेदे "आस्फोटयन् खेलयंश्च तलतालं च वादयन्" भा० व० १७८ अ०।

**तलत्राण** न० तलं करतलं त्रायते त्रै–ल्यु करणे ल्युट् वा। करतलत्राणकारके करतलरक्षके चर्ममये गोधाभेदे "यतैत सतलत्राणाः सुयोधनपुरोगमाः" भा० द्रो०११६ अ०। "विबद्धासितलत्राणः क्षात्त्रधर्ममनुव्रतः" भा० व० ६७ अ०।

**तलप्रहार** पु०तलेन चपेटेन प्रहारः प्र+हृ-घञ् ३त०।(चापड़मारा) चपेटाघाते। "तलप्रहारमपतनेः सदृशं भीमनिस्वनम्" रामा० ल० ७६ अ०। [तलमीने अमरे पाठान्तरम्।

**तलमीन** पु० तले जलनिम्ने स्थितो मीनः। (चिङ्गड़ि)

**तलयुद्ध** न० तलस्य चपेटस्याघातेन युद्धम्। चपेटाघातेन युद्धे (चड़ाचड़ि) "बालानां तलयुद्धे संग्रामः सतृयुद्धे वा" वृ० स० ४७अ० तलशब्दे इति पाठान्तरम्।

**तललोक** पु०तलस्थो निम्नस्थः भूमेस्तलस्थो लोकः। पाताले "स्वर्लोकपालान् खगलोकपालान् लोकपालांस्तललोकपालान्" भाग० २।४६।४२ अ०।

**तलव** त्रि० तलं हस्तादितलं वाति निहन्ति ताडयति वा–गतिहिंसनयोः क। तलवाद्यवादके। "तान्नायानन्दाय तलवम्" यजु० ३०।२०। "तलवं तलवाद्यवादनम्" वेददी०।

**तलवकार** पु० सामवेदशाखाभेदे "छान्दोग्या तवलकारा-(तलवकारा) दिशाखाभेदेषु विलक्षणागीतिष्वेतवोऽध्वर-विकारादय आम्नायन्ते" सा० स० भाष्यम्। तस्योपनिषत् "केनेषितं पततीत्यादि"।

**तलवारण** न० तले बाहुतले वारयति ज्याघातम् वारि-ल्यु। ज्याघातवारणार्थे हस्ततले बद्धे (चामाटी)चर्मभेदे

**तलसारक** न० तले वक्षःस्थलाधोभागे सारोबलं यस्मात् कप्। अश्वस्य वक्षोऽधोभागे बद्धरज्जुभेदे (तङ्) हेमच०।

**तलहृदय** न० तलस्य हृदयमिव। पादतलस्य मध्यस्थाने हेम०

**तला** स्त्री तलं ज्याघातवारणार्थत्वेनास्त्यस्याः अच्। १ज्याघातवारणार्थे हस्तबद्धे चर्ममये पदार्थे (चामाटी) अमरे पाठान्तरम् तलाऽस्त्यस्य इनि। २गोधायुक्ते त्रि०। "ततः कवचधारी च तली खड्गी शरासनी" भा० उद्यो० १५७ अ०।

**तलाची** स्त्री तलमञ्चति अनुच-क्विप् ङीप् अञ्चतेरल्लोपे पूर्वाणो दीर्घः। नलनिर्म्मितकटे (टहमा) हारा०।

**तलातल** न० सप्तसु अधोभुवनेषु पातालभेदे "ततोऽधस्ता-त्तलातले मयोनाम दानवेन्द्रस्त्रिपुराधिपतिर्भगवता पुरा-रिणा त्रिलोक्याः शंचिकीर्षुणा निर्दग्धस्वपुरत्रयस्तत् प्रसादाल्लब्धपदो मायाविनामाचार्य्यो महादेवेन परि-रक्षितो विगतसुदर्शनभयो महीयते" भाग० ५।२४।२८ "अतलं वितलं सुतलं तलातलं महातलं रसा-तलं पातालमिति" भाग० ५।२४।११। पातालकथने।

**तलिका** स्त्री तलं वक्षःस्थलतलं बन्धनस्थानत्वेनास्त्यस्य बा० ठन्। अश्वहृदयस्थरज्जुभेदे(तङ)हेमच०।

**तलित्** स्त्री तडित्+डस्य लः। विद्युति शब्दार्थचि०।

**तलित** न०तल+तारका० इतच्। भृष्टमांसभेदे। यथा"शुद्ध-मांसविधानेन मांसं सम्यक् प्रसाधितम्। पुनस्तदाज्ये संभृष्टं तलितं प्रोच्यते बुधैः। अस्य गुणाः। "तलितं बलमेधाग्निमांसौजःशुक्रवृद्धिकृत्। तर्पणं लघु सु-स्निग्धं रोचनं दृढ़ताकरम्" भा०प्र०।

**तलिन** न० तल-इनन्। १शय्यायां हारा०। २विरले ३स्तोके ४स्वच्छे त्रि० मेदि० ५दुर्बले त्रि० हेम०।

**तलिम** न० तल-बा० इमन्। १कुट्टिमे (छात) २शय्यायां ३खड्गे ४वितानके च मेदि०।

**तलुन** पु० तल-उनन्। १वायौ २यूनि त्रि० स्त्रियां ङीप्।

**तलेक्षण** पुंस्त्री तले ईक्षणमस्य। शूकरे शब्दार्थकल्प० स्त्रियां जातित्वात् ङीष्।

**तलोदरी** स्त्री तलं निम्नमुदरमस्याः बहुव्रीहित्वेऽपि नासिकोदरेत्यादिविशेषोक्तेः ङीष्। कृशोदर्य्यां भार्य्यायां शब्दार्थकल्पतरुः। [ हारा०।

**तलोदा** स्त्री तले उदकं यस्याः उदकस्य उदादेशः। नद्यां

**तल्क** न० तल-बा० कन् न कित्त्वम्। वने त्रिका०।

**तल्प** पुंन० तल-पक्। १शय्यायाम्, २अट्टालिकायां, ३दारेषु च अमरः। "स्वगृहिणं तल्प आसीनमर्च्चयेत् प्रथमं गवा" मनुः।"औदुम्बरस्तल्पो भवति"तैत्ति० १।२।६।५ "सपदि विगतनिद्रस्तल्पमुज्झाञ्चकार" रघुः। "यत्नातमे दातु-मिवाधितल्पम्" माघः। "सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं विदुः"। "गुरुतल्पोऽभिभाष्यैनस्तप्ते स्वप्यादयोमये"मनुः। "गुरोस्तल्पं तल्पं कलत्रं यस्य" प्राय०वि०। "आचार्य्याणीं स्वां च सुतां गच्छंस्तु गुरु-तल्पगः" याज्ञ०। "पितृव्यदारगमने भ्रातृभार्य्यागमे तथा। गुरुतल्पव्रतं कुर्य्यान्नान्या निष्कृतिरुच्यते" संवर्त्तः "स ग्टहे गूढ़ उत्पन्नस्तस्य स्याद्यस्य तल्पजः" "यस्तल्पजं प्रमीतस्य क्लीवस्य व्याधितस्य वा" मनुः। तल्पे भवः यत् तल्प्य रुद्रभेदे पु० "नमस्तल्प्याय गेह्याय" यजु०१६।४४। तल्पे साधुः यत्। तल्प्य शय्यासाधौ त्रि० "शतं तल्प्या राजपुत्रा याशापालाः" शत ब्रा० १३।१।६।२।

**तल्पकीट** पु० तल्पे खट्टायां जातः कीटः शा० त०। (छार-पोका) कीटभेदे शब्दार्थचि०।

**तल्पक** पु० तल्पे तत्संस्कारेऽधिकृतः बा० कन्। शय्या-रचनायामधिकृते दासभेदे। "सूपव्यञ्जनकर्त्तारस्तल्पका व्यजकास्तथा। प्रसाधका भोजकाश्च गात्रसंवाहका अपि" कामन्दकीयनीतौ चरभेदकथने।

**तल्पन** न० तल्पं इवाचरति, तल्प+क्विप्-कर्त्तरि ल्यु। १करिपृष्ठे २पृष्ठवंशस्य मांसे च हारा०।

**तल्पल** न० तल्पं तथाकारं लाति ला-क। करिपृष्ठवंशे "सान्द्रत्वकतल्पलास्थिष्टकक्षाः" माघः "तल्पलाः पृष्ठवंशाः" मल्लि० हारावल्यां तल्पनेत्यत्र तल्पलेति वा पाठः माघे तल्पनेति वा पाठः। अन्यतरपाठः लिपिकर-प्रमादकृत इत्यवधेयम्।

**तल्ल** त्रि० तस्मिन् लीयते ली-ड। १तस्मिन् लीने "तज्जला-निति शान्त उपासीत छान्दोग्योप० तज्जानित्यस्य भाष्ये "तज्जत्वात् तल्लत्वात् तदनत्वाच्चेत्युक्तम् २विले त्रिका० ३जलाधारविशेषे (तलाओ हिन्दिभाषा) मेदि०।

**तल्लज** पु० तत् प्रसिद्धं यथा तथा लजति लज-कान्तौ अच्।

प्रशस्ते अयन्तु उत्तरपदस्थः "प्रशंसावचनैश्च" पा० कर्म्म-सप्तमीत्यं समस्तः अजहल्लिङ्गश्च कुमारीतल्लज इत्यादि।

**तल्लिका** स्त्री तस्मिन् लीयते ली—ड संज्ञायां कन् कापि अत इत्त्वम् (ताली) कुञ्चिकायां शब्दार्थचि०।

**तल्ली** स्त्री तत् प्रसिद्धं यथा तथा लसति लस—ड गौरा० ङीष्। १तरुणयाम् मेदि०।

**तल्वकार** पु० सामवेदस्य शाखाभेदे तलवकारशब्दे दृश्यम्।

**तवक्षीर** न० तु—अच् नित्यकर्म्म०। (तिखुर) ख्याते पदार्थे "तवक्षीरन्तु मधुरं शिशिरं दाहपित्तहृत्। क्षयकासकफश्वासास्रदोषं हन्ति सेवनात्" २गन्धलतायां स्त्री राजनि०। [ यवासशर्कराभेदे राजनि०।

**तवराज** पु० तु—अच् तवः पूर्णः सन् राजते राज—अच्।

**तवराजोद्भव** पु० तवराजादुद्भवति उद्+भू—अच्। यवासशर्कराजाते खण्डभेदे। "तवराजोद्भवः खण्डो दाहतृष्णाविनाशनः। मूर्च्छामोहस्य तापस्य श्वासस्य च निवारकः। इन्द्रियतर्पणः शीतः सदा मधुर एव च" राजनि०।

**तवर्ग** पु० त+वर्ग। त थ द ध न इत्येषु वर्णेषु। तत्र भवः वर्गान्तत्वात् छ। तवर्गीय तत्र भवे वर्णे।

**तवस्** न० तु—असुन्। १वृद्धे २महति ३बले च निघण्टुः। "त्वष्टादचित्त तवसा जघन्थ" ऋ०१।२०।८ "तवसा बलेन" भा०। "तवस्तमस्तवसां वज्रबाहो!" ऋ० २।३३।३। "प्रवाहिनां तवसं जम्म रथाम्" ऋ० १०।२८।७। तवसे बलाय हितं—यत्। तवस्य बलहिते बलसाधने च त्रि० "तवसो तवस्यमनुदाति" ऋ०१।२०।८। तवोऽस्त्यस्य मतुप् मस्य वः मान्तत्वात् मत्वर्थे न विसर्गः। तवस्वत् बलयुक्ते त्रि० "वीर उग्रते तवस्वान्" ऋ० ६।६७।४६। पक्षे विनि तवस्विन् तत्रार्थे त्रि०उभयत्र स्त्रियां ङीप्।

**तवागा** त्रि० तवसा बलेन गीयते गै—कर्म्मणि क्विप् पृषो०। प्रवृद्धबलयुक्ते "स्तुहि: स सुव स्थविरं तवागाम्" ऋ० ४।१८।१० "तवागाम् प्रवृद्धबलम्" भा०।

**तविपुला** स्त्री चतुर्थवर्णात् परं तगणपूर्वकं विपुलाछन्दोभेदे "तोऽब्धेस्तत्पूर्वान्या भवेत्" वृ०र०। अब्धेश्चतुर्थाक्षरात् परं तगणश्चेत् तपूर्वा तविपुलानाम छन्दः इति तदर्थः।

**तविष** पुंस्त्री०तव—"तविषिद्दा" उणा० टिषच्। १स्वर्गे २समुद्रे च "तविषताविषावक्ष्यं त्रिदिव चाहतुः काश्चन्"। "३देवकन्यायां ४भूमौ ५नद्याञ्च स्त्री उज्ज्व० टित्त्वात् ङीप्। ६वृद्धे ७महति त्रि० निघण्टुः। ८शक्तौ ६व्यवसाये पु० सि०कौ० १०बलवति च त्रि०। "घनो वृत्राणां तविषो बभूव" ऋ०८।६६।१८ "तविषः प्रवृद्धो बलवान्वा" भा० "अहं स्तुवन्तविषस्तुविष्मान्" ।१।१६५।६ मेदिन्यां तवीषेति दीर्घमध्यपाठो लिपिकरप्रमादकृतः ह्रस्वमध्यपाठस्यैव प्रयोगदर्शनात् उणादिसूत्रे तथैव व्युत्पादितत्वाच्च। [४गुणिते च।

**तष्ट** त्रि० तक्ष—क्त। १तनूकृते २द्विधाकृते, च। ३ताडिते

**तष्टि** स्त्री तक्ष—क्तिच्। तक्षणे।

**तष्टृ** पु० तक्ष—तृच्। १त्वष्टरि (कुनार) २जातिभेदे ३विश्वकर्म्मणि ४आदित्यभेदे च रमानाथः।

**तस** अलङ्कारे वा चुरा० उभ० पक्षे भ्वा० पर० सक० सेट् इदित्। तंसयति ते तंसति अततंसत्-त अतंसीत्। ततंस "प्रतिजानामीति ते पिता गर्भे सुष्टिमतंसयत्"यजु० २३।७४ अवतंसः उत्तंसः। भ्वादित्वपक्षे अस्य आत्मनेपदित्वं केचिदिच्छन्ति तंसते अतंसिष्ट।

**तस** उत्क्षेपे दिवा० पर० सक० सेट्। तस्यति इरित् अतसत् अतसीत् अतासीत्। ततास तेसतुः। उदित् तसित्वा तस्त्वा। तस्तः "यस्य तस्य विना यष्टी तेनेति करणं विना" उद्भटः।

**तसर** पु० तन्—असरन्।(गुटिपोकार सुता) सूत्रभेदे उणा०

**तस्कर** त्रि० तत् करोति कृ—ट "तद्बृहतोः करपत्योः" पा० सुट् दलोपश्च। १चौरे २प्रकाशाके (पिड़िङ्) शाकभेदे पु० रत्नमा०। ३मदनवृक्षे पु० जटा० ४श्रवणे "व्यावृत्ता यत् परस्वेभ्यः श्रुतौ तस्करता स्थिता" रघुः "तस्करः कर्णचौरयोरिति" रघुटीकाधृतकोषान्तरं मल्लिनाथेन तु अस्य न कर्णार्थकता स्वीचकार किन्तु तस्य श्लोकस्यार्थान्तरमाह स्म यथा "तस्करता चौर्य्यं परस्वेभ्यः परधनेभ्यः अविषयभूतेभ्यः व्यावृत्ता सती श्रुतौ वाचकशब्दे स्थिता प्रवृत्ता अपहर्त्र्यभावात् तस्करशब्द एव अपहृतः इत्यर्थः"। ५कोपनायां नार्य्यां स्त्री शब्दार्थकल्प० टित्त्वात् ङीप्।

**तस्करस्नायु** पु० तस्करस्य प्रकाशाकस्येव स्नायुरिव नाड़िका यस्याः। काकनासालतायाम् राजनि०।

**तस्थिवस्** त्रि० स्था—क्वसु। स्थितवति "स पाटलायां गवि तस्थिवांसम्" "तस्मिन्नात्मचतुर्भागे प्राङ्नाकमधितस्थुषि" रघुः।

**तस्थु** त्रि० स्था—बा० कु द्वित्वञ्च। स्थावरे "देहश्च सर्वसंघातो जगत् तस्थुरिति द्विधा" भाग० ७।७२।श्लो०।

**तस्युस्** पु० व० व० स्था–बा० कुसि द्वित्वञ्च। मानवे निघण्टुः।

**ताच्चण्य** पुंस्त्री तच्चणोऽपत्यं कारित्वात् यञ्। तच्चणोऽपत्ये। पक्षे "तच्चणोऽण उपसंख्यानम्" पा० अण् अपूर्वत्वादनोऽल्लोपः। ताच्चण तत्रार्थे पुंस्त्री०।

**ताच्छीलिक** पु० तच्छीलार्थे विहितः ठञ्। तच्छीलार्थविहिते प्रत्यये। "ताच्छीलिकेषु वा सरूपविधिर्नास्ति" पा० "ताच्छीलिकेष्वेऽण् कृतानि भवन्ति" व्या०प०। [स्वभावे।

**ताच्छील्य** न० तत् शीलमस्य तस्य भावः ष्यञ्। नियततत्‌-

**ताज(जि)क** न० नीलकण्ठादिप्रणीते वर्षलग्नमासादिनिरूपके ज्योतिषग्रन्थभेदे। "न स्याच्छुभं क्वचन ताज(जि)कशास्त्रगीतम्" नील० ता०। [ग्रीष्मे निघण्टुः।

**ताजत्** त्रि० तनुज–सङ्कोचे बा० अदि इत्त्विन्लोपौ।

**ताट(ड)ङ्क** पु० ताड्यते ताडः घृणो० वा डस्य टः तथाभूतोऽङ्कः चिह्नं यस्य शक०। कर्णभूषणभेदे हिरूपको०।

**ताटस्थ्य** न० तटस्थस्य भावः ष्यञ्। १औदासीन्ये २नैकट्ये च

**ताड** पु० चु० तड–भावे अच्। १ताड़ने २गुणने च कर्म्मणि अच्। ३शब्दे ४मुष्टिमेयतृणादौ मेदि० ५पर्वते हेमच०।

**ता(ट)ड़का** स्त्री। राक्षसीभेदे। तस्या उत्पत्तिकथा रामा० बा० २५ अ०।

"पूर्वमासीन् महायक्षः सुकेतुर्नाम वीर्य्यवान्। अनपत्यः शुभाचारः स च तेपे महत्तपः। पितामहस्तु सुप्रीतस्तस्य यक्षपतेस्तदा। कन्यारत्नं ददौ राम! ताड़(ट)कां नाम नामतः। ददौ नागसहस्रस्य बलं चास्याः पितामहः। न त्वेव पुत्रं यक्षाय ददौ चासौ महायशाः। तान्तु बालां विवर्द्धन्तीं रूपयौवनशालिनीम्। जम्भपुत्राय सुन्दाय ददौ भार्य्यां यशस्विनीम्। कस्यचित्त्वथ कालस्य यक्षी पुत्रं व्यजायत। मारीचं नाम दुर्द्धर्षं यः शापाद्राक्षसोऽभवत्। सुन्दे तु निहते राम! अगस्त्यऋषिसत्तमम्। ता(ट)ड़का सह पुत्रेण प्रधर्षयितुमैच्छत। भक्षार्थं जातसंरम्भा गर्जन्ती साभ्यधावत। आपतन्तीं तु तां दृष्ट्वा अगस्त्यो भगवानृषिः। राक्षसत्वं भजस्वेति मारीचं व्याजहार सः। अगस्त्यः परमामर्षस्ता(ट)ड़कामपि शप्तवान्। पुरुषादी महायक्षी विकृता विकृतानना। इदं रूपं विहायाशु दारुणं रूपमस्तु ते। सैषा शापकृताऽमर्षा ता(ट)ड़का क्रोधमूर्च्छिता। देशमुत्सादयत्येनमगस्त्याचरितं शुभम्। एनां राघव! दुर्वृत्तां यक्षीं परमदारुणाम्। गोब्राह्मणहितार्थाय जहि दुष्टपराक्रमाम्"। "ताड़का चलकपालकुण्डला" रघुः।

"तां ताड़काख्यां निजघान रामः" भट्टिः। [रत्नमा०।

**ताड़काफल** न० तारकेव फलमस्याः रस्य डः। इन्द्रदेलायां

**ताड़कारि** पु० ६त०। रामचन्द्रे तस्य ताड़काहननकथा। रामा० अयो० २६ अ०। "तामापतन्तीं वेगेन विक्रान्तामशनीमिव। शरेणोरसि विव्याध पपात च ममार च"।

**ताड़केय** पु० ताड़काया अपत्यम् ढक्। मारीचे "मारीचः सुन्दपुत्रस्तु ताड़कायां व्यजायत" हरिवं० ३ अ०।

**ताड़कायन** पु० विश्वामित्रपुत्रभेदे। "महान्दिषस्तु कपिलकाथर्दिस्ताड़कायनः" भा० आनु० ४ अ०। विश्वामित्रपुत्रकथने।

**ताड़घ** पु० तालं हन्ति हन+टक् नि० उप० स०। तालवादके शिल्पिभेदे अर्शिल्पिनि तु अण्। ताड़घात इत्येव।

**ताड़न** न० चु० तड–भावे ल्युट्। १आघाते। "लालने बहवो दोषास्ताड़ने बहवो गुणाः" चाणक्यम्। "अवतंसोत्पलताड़नानि वा" कुमा०। २दीक्षाङ्गे दीक्षणीयमन्त्रसंस्कारभेदे च। "मन्त्रवर्णान् समालिख्य ताड़येच्चन्दनाम्भसा। प्रत्येकं वायुना मन्त्री ताड़नं तदुदाहृतम्" शार०ति०। वायुना यंबीजेन। ३गुणने च।

**ताड़नी** स्त्री ताड्यतेऽनया ताड़ि–करणे ल्युट् ङीप्। अश्वादेस्ताड़नसाधने कशायां (चावुक) अमरः।

**ताड़पत्र** न० तालस्य पत्रमिव लस्य डः। कर्णभूषणभेदे ताड़ङ्के हेमच०।

**ताड़ाग** त्रि० तड़ागे भवम् अण्। तड़ागभवे जलादौ अप्सु स्त्री "ताड़ागं वातलं स्वादु कषायं कटुपाकि च। हेमन्ते शारदं ताड़ागं वा सेवेत" सुश्रुतः।

**ताड़ि** स्त्री चु० तड़ इन्। (ताड़ियात) १पत्रप्रधाने इक्षो भरतः वङीप् तत्रार्थे स्त्री मेदि०। २आभरणभेदे दुर्गसिंहः। "प्रक्रीड़ितचपलकपिलकपिकुलकरतलताड़नतरलिततताड़ीपुटैः" काद०।

**ताडुल** पु० चु०तड़–उल। ताड़के संक्षिप्तसा०।

**ताड्यमान** त्रि० चु० तड़–कर्मणि शानच्। १ताडनकर्मणि "श्रोतुर्वितन्त्रीरिव ताड्यमाना" कुमा०। २पटहे पु० त्रिका०। [ताण्डवशब्दे दृश्यम्।

**ताण्ड** न० तण्डुना मुनिना कृतम् अण्। नृत्यशास्त्रे

**ताण्डव** न० तण्डिकृतं ताण्डं नृत्यशास्त्रं तत् प्रतिपादकतयास्त्यस्य व, तण्डुना (नन्दिना) प्रोक्तम् अण् इति क्षीरस्वामी। नृत्ये अमरः "पुंन्नृत्यं ताण्डवं प्रोक्तं

स्त्रीन्वयं लाय्यमुच्यते” शब्दार्थचि० धृतवाक्योक्तौ २पु-न्नये च “गण्डोड्डीनालिमालामुखरितककुभस्ताण्डवे भूलपाणेः” मालतीमा०।२उद्धतनृत्ये ३तृणभेदे च मेदि०।

**ताण्डवतालिक** पु० ताण्डवे तालस्तद्दानं शिल्पमस्य ठञ्। शिवद्वारपालके नन्दीश्वरे त्रिका०। [प्रियमाले त्रि०।

**ताण्डवप्रिय** पु०ताण्डवं प्रियमस्य। १शिवे शब्दमा० २नृत्य-

**ताण्डवित** त्रि० ताण्डव+करोतौ णिच् कर्म्मणि क्त। नर्त्तिते। “अतिप्रांशुवंशकाण्डताण्डवितधौतसितसूक्ष्माम्बरसहस्रम्” “विकटललाटतटताण्डवितभ्रूकुटिना क्रुद्धेन महामोहेन” प्रबोधच०।

**ताण्डिन्** पु० ब० व०। ताण्ड्येन प्रोक्तमधीयते वैशम्पायनान्तेवासित्वात् इनि—यलोपः। तण्डिमुनिपुत्रताण्ड्यप्रोक्तशाखाध्यायिषु। तस्य कालः अण् संयोगपूर्वकेनो न टिलोपः। ताण्डिन तस्य काले। स च यजुर्वेदस्य कल्पसूत्रकर्त्ता तण्डिशब्दे ३२०७ पृ० दृश्यम्।

**ताण्ड्य** पु० तण्डिमुनेरपत्यम् गर्गा० यञ्। तण्डिमुनेरपत्ये स्त्रियां ङीप् यलोपः। ताण्डी।

**तात** पु० तन—क्त दीर्घश्च। पितरि अमरः। “द्रुपदीपदनधीतविद्यया तातमात्मसुदमाविवर्द्धयन्” कुसुमाञ्जलौ हरिदासः “हा तातेति क्रन्दितमाकर्ण्य विषण्णः”रघुः। २अनुकम्प्ये मेदि०।“नाहं म्लास्यामि वत्स तात! इत्यनीर्वाच-कृपान्विताः” भा० आ० १७६ अ०। “स तात इति विप्रर्षिं वशिष्ठं प्रत्यभाषत। मातुः समक्षं कौन्तेय! अपश्यन्त्याः परन्तप!। तातेति परिपूर्णार्थं तस्य तन्मधुरं वचः। अपश्यन्त्यश्रुपूर्णाक्षी शृण्वती तमुवाच ह। मा तात! तात! तातेति न्यूह्येनं पितरं पितुः। रक्षसा भक्षितस्तात! तव तातो वनान्तरे। मन्यसे यन्तु तातेति नैष तातस्तवानघ!। आर्य्य एष पिता तस्य पितुस्तव यशस्विनः” भा० आ०१७८अ० “ज्येष्ठस्तातो भवति वै ज्येष्ठो मुञ्चति कृच्छ्रतः” भा० आ० २२२ अ०। ३पूज्ये त्रि० शब्दरत्ना०।“तस्मान्मुच्ये यथा तात! संविधातुं तथार्हसि”रघुः। पूज्यं वशिष्ठं प्रति दिलीपसम्बोधनम्।

**तातगु** पु० तातस्येव गौर्वाचकशब्दो यस्य गवान्तत्वात् गौण्ये ह्रस्वः। पितुर्भ्रातरि पितृव्ये। २जनकहिते शब्दार्थचि० त्रि०।

**ताततुल्य** पु० ३त०। पितृसमाने हेमच०। तातसमादयोऽप्यत्र

**तातन** पुंस्त्री तातं प्रशस्तं नृत्यति नृत—ड। खञ्जनखगे त्रिकाण्डशेषः स्त्रियां जातित्वात् ङीष् तातनी।

**तातल** पु० तापं लाति ला—क पृषो०। १रोगे २पाके ३लौहकूटे ४मनोजवे च ०मेदि०। ५तप्तमात्रे त्रि०अजयपालः।

**ताति** पु० ताय—क्तिच्।१पुत्रे जटाधरः। ताय—भावे क्तिन्। २वृद्धौ स्त्री“तदस्मभ्यता निम्नाशिर्षा काममरिष्टतातिम् आशास्महे” वी० च०। तातिल्प्रत्ययान्तः अरिष्टताति शब्दइत्यन्ये।

**तात्कालिक** त्रि० तस्मिन् काले भवः काश्या० आपदादिपूर्वकात्कालान्तात् ठञ् ञिठ् वा। तत्कालभवे तत्र ठञि स्त्रियां ङीप् ञिठि टाप् इति भेदः “कर्त्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः” शु०त० शङ्खः। “भवेत् तात्कालिको ग्रहः” ज्यो०। तात्कालिकस्वरचक्रम् चक्रशब्दे दृश्यम् “अहर्गणोत्पन्नग्रहस्य तात्कालिकत्वात्” सू० सि० रङ्गना०।

**तात्पर्य्य** न० तत्परस्य भावः ष्यञ्। १वक्तुरिच्छायाम्, २अभिप्राये ३तत्परतायाञ्च। तात्पर्य्यं शब्दार्थनिरूपणेन तात्पर्य्यज्ञानस्य शाब्दबोधजनकत्वमनुमानचि० समर्थितं यथा “तात्पर्य्याधीनं शब्दप्रामाण्यम्। तत्र तत्परत्वं न तत्साध्यकत्वम्। पदार्थतत्संसर्गयोः शब्दासाध्यत्वात्। अथ तद्गोचरप्रवृत्तिनिवृत्तिसाध्यकत्वं तत्परत्वं तच्च भव्यार्थस्य साक्षात्, भूतार्थस्य तु प्रशंसानिन्दावाक्यस्य प्रशस्तनिन्दितस्वार्थप्रतिपादनद्वारा लाक्षणिकस्य लक्षणीयविषयप्रवृत्तिनिवृत्तिजनकत्वेन तत्परत्वमिति चेत् न तत्परत्वेऽङ्गीकृते तज्ज्ञानं जनयित्वा तत्र प्रवर्त्तकत्वं तत्प्रवर्त्तकत्वे च तत्परत्वमिति परस्पराश्रयात् लाक्षणिकस्याननुभावकत्वेऽपि लक्षणीयपरत्वात् काव्यादेः स्वरूपाख्यानमात्रपर्य्यवसानाच्च। ननु तद्बुद्धिजनकत्वं तत्परत्वं प्रशंसानिन्दावाक्यमपि प्रशस्तनिन्दितस्वार्थधीहेतुत्वेन तत्परार्थकं तच्च ज्ञानं प्रशस्ते सर्वः प्रवर्त्तते निन्दिताच्च निवर्त्तत इति स्वविषये प्रवृत्तिनिवृत्ती जनयतीति तत्परमुच्यत इति चेत् न गौणलाक्षणिकयोरननुभावकत्वात्। तद्बुद्धिजनने तत्परत्वमित्यन्योन्याश्रयाच्च तज्जननयोग्यत्वमिति चेत् तथैकत्रोच्चारणेन नानार्थे नानार्थपरत्वं लक्षणायाञ्च तुल्यार्थपरत्वं स्यात् योग्यतासत्त्वात् नापि तत्प्रतिपदाद्यकत्वं तात्पर्य्यं विना न तथेत्यन्योन्याश्रयात् प्रशंसादिवाक्यस्य प्रवृत्त्याद्यप्रतिपादकत्वात् लाक्षणिकस्याप्रतिपादकत्वाच्च। अथ गङ्गापदं स्वार्थाविनाभावे तीरं प्रतिपादयत् तत्पर-

मिति चेत् न मञ्चाः क्रोशन्तीत्यत्र तेन विनापि पुरुषे तात्पर्य्यात् गङ्गादिपदं मत्स्यादिपरं मुख्यतीरपरञ्च स्यात् अविनाभावस्य तदेव स्यात् मुख्ये बाधके सतीति चेत्। तर्हि मुख्यार्थपरतैव न स्यात्। नापि गच्छ गच्छसीत्यत्र गमनाभावपरत्वम्। उच्यते। तत्प्रयोजनकत्वं तत्परत्वं तदर्थप्रतीतिः प्रवृत्तिनिवृत्ती च। प्रयोजनत्वञ्च न साध्यत्वं अन्योन्याश्रयात् नापि प्रतिपाद्ये स्वविषयत्वं यस्य यदिच्छाविषयत्वं प्रति तत्परत्वापत्तेः तदर्थसाध्यसाधनत्वेनेच्छानियम इति चेत्। न इह घूम इत्यत्र अन्यसाध्यभेदेन साध्यस्य वस्तुभेदतया वाक्यभेदप्रसङ्गात् पुनिच्छाया नियन्तुमशक्यत्वात्। किन्तु प्रतिपादकेच्छाविषयत्वं तत्परत्वं यः शब्दो वक्त्रा यदिच्छया प्रयुक्तः स तत्परः सा च प्रतिपाद्यधीः प्रवृत्तिनिवृत्तिविषययोः तत्परत्वं नानार्थात् श्लिष्टादनेकपदार्थान्वितैकक्रियापरात् व्युत्पत्तिकपदादनावृत्त्या क्रमेणानेकार्थज्ञानं, न त्वेकदैव सकृदर्थपरत्वनियमेनैकशोच्चारणेऽनेकपरत्वाभावादिति सकलतात्त्विकैकवाक्यतया वदन्ति तन्न ब्रूमः। अनेकार्थप्रतीतीच्छयैकसुच्चारणं भवत्येव पुनिच्छाया नियन्तुमशक्यत्वात् यदि तदुच्चारणमेकार्थपरं तदा आवृत्तिरपि न स्यात् तात्पर्य्यनिर्वाहार्थमावृत्तिकल्पनात्। अन्यथैकपरेऽपि तदापत्तेः। अतएव तदुच्चारणस्योभयपरतायामावृत्तिकल्पनं, तस्मात् युगपदनेकार्थोपस्थितौ तात्पर्य्यादिसाम्ये युगपदनेकान्वयबोधो भवत्येव सामग्र्यास्तुल्यत्वात् प्रथममेकस्यान्वयबोधो न तदन्यस्येति नियन्तुमशक्यत्वाच्च"।

"आकाङ्क्षा वक्तुरिच्छा तु तात्पर्य्यं परिकीर्त्तितम्" भाषा० "तात्पर्य्यं निर्वक्ति वक्तुरिच्छेति। यदि तात्पर्य्यज्ञानं कारणं न स्यात् तदा सैन्धवमानयेत्यादौ कचिदश्वस्य कचिल्लवणस्य बोधो न स्यात्। न च तात्पर्य्यग्राहकप्रकरणादीनामेव शाब्दबोधे कारणत्वमस्त्विति। तात्पर्य्यज्ञानजनकत्वेन तेषामनुगमे तु तात्पर्य्यज्ञानमेव लाघवात् कारणमस्तु। इत्यञ्च वेदस्थलेऽपि तात्पर्य्यज्ञानार्थमीश्वरः कल्प्यते। न च तत्राध्यापकतात्पर्य्यज्ञानं कारणमिति वाच्यम् सर्गादावध्यापकाभावात् न च प्रलय एव नास्तीति कुतः सर्गादिरिति वाच्यम् प्रलयस्यागमप्रतिपाद्यत्वात्। इत्थञ्च शुकवाक्येऽपि ईश्वरीयतात्पर्य्यज्ञानं कारणम्। विसंवादिशुकवाक्ये तु शिक्षयितुरेव तात्पर्य्यस्य ज्ञानं कारणम्। अन्ये तु नानार्थादौ क्वचिदेव तात्पर्य्यज्ञानं कारणम्। तथा च शुकवाक्ये विनैव तात्पर्य्यज्ञानं शाब्दबोधः। वेदे तु अनादिमीमांसापरिशोधिततर्कैरर्थावधारणमित्याहुः। मुक्ता० "ननु माभूदाप्तोक्तत्वस्य निश्चयानुरोधेन सिद्धसाधनं तात्पर्य्यस्य तु स्यात् तन्निश्चयस्यान्वयधीहेतुत्वात् अन्यथा घटकर्म्मत्वादिपरत्वाभावस्य घटकर्म्मत्वाद्यन्यमात्रपरत्वस्य वा निश्चयेऽपि घटमित्यादिवाक्यात् कर्म्मत्वं घटीयमित्याद्यन्वयबोधापत्तेरिति चेन्न कर्म्मताधर्म्मिकघटाद्यन्वयधीपरत्वाभावनिश्चयदशायां प्रमेयत्वादिप्रकारेण घटकर्म्मत्वादिपरत्वस्य निश्चयेऽपि घटीयं कर्म्मत्वमित्यन्वयमतेरनुत्पत्त्या कर्म्मताधर्म्मिकघटान्वयबोधपरत्वप्रकारकनिश्चयत्वेनैव तात्पर्य्यधियस्तस्यां कारणत्वेन वाक्यार्थस्य तत्रानिवेशात्। वस्तुतः समानानुपूर्व्वीकस्यैव वाक्यान्तरस्य तस्यैव वा कालान्तरमन्तर्भाव्य घटीयकर्म्मत्वादिपरत्वनिश्चयसत्त्वेऽपि श्रूयमाणवाक्यव्यक्ताविदानीमन्तर्भावेण तत्परत्वस्यानिश्चयेऽभावे वा घटीयं कर्म्मत्वमित्याद्यन्वयमतेरनुत्पादाद्विशिष्यैव तत्तद्वाक्यव्यक्तिधर्म्मिकस्य घटकर्म्मत्वादिपरत्वनिश्चयस्य तत्तदन्वयबोधहेतुत्वमुपेयं तथा च तत्तद्धेतुभूतानां प्रकरणज्ञानाभिधानामिव विज्ञानव्यक्तीनान्तथात्वमुचितम् अवश्यं क्लृप्तपूर्व्ववर्त्तिताकत्वात्। अतएव सैन्धवमानय इत्यादावपि लवणपरत्वधीर्न लवणाद्यन्वयबुद्धौ हेतुः किन्तु तद्जनकत्वेनाभिमतं भोजनादिप्रकरणस्य प्रतिसन्धानमिति न्यायसिद्धान्तः" शब्द० प्र०।

**तादर्थ्य** न० तदर्थ+चतुर्थ० ष्यञ्। तदुद्देश्यकत्वे।

**तादात्म्य** न०तदात्मनोभावः ष्यञ्। अभेदे तदात्मशब्दे दृश्यम्।

**तादीत्ना** अव्य० तदानीम्+पृषो०। तदानीमित्यर्थे "आतस्थुर्व्यं जनयत् द्यामुषासं तादीत्ना शत्रुम्" ऋ० १।३२।४ "तादीत्ना तदानीमित्यस्य पृषोदरादित्वाद्वर्णविपर्य्ययः।

**तादृक्ष** त्रि० तस्येव दर्शनमस्य तद्+दृश—क्स सर्वनाम्नष्टेरत्वम् उप० स०। तत्तुल्यदर्शने।

**तादृश** त्रि० तस्येव दर्शनमस्य तद्+दृश—ट उप० स०। तत्तुल्यदर्शने "क्व तद्विधं प्रेम पतिश्च तादृशः" कुमा० "निजुह्नुवे तादृशमेव हिंहितम्" माघः। स्त्रियां ङीप्। "यादृशी भावना यस्य सिद्धिर्भवति तादृशी" उद्भटः।

**तादृश्** त्रि० तस्येव दर्शनमस्य तद्+दृश—क्विप् उप०स०। तत्तुल्ये "तादृग्गुणा सा भवति समुद्रेणेव निम्नगा"

"तादृशोहति तत्तस्मिन् बीजं स्वैर्व्यञ्जितं गुणैः" मनुः।

**तान** पु० तन–घञ्। १विस्तारे अवतानः सन्तानः। "मूर्वी गुडूचीतानैराबीव्येत्" सुश्रुतः।२ज्ञानविषये शब्दार्थकल्प० ३गानाङ्गभेदे। "विस्तार्य्यन्ते प्रयोगा ये मूर्च्छना शेष-संश्रयाः। तानास्तेऽप्यूनपञ्चाशत् सप्तस्वरसमुद्भवाः। तेभ्य एव भवन्त्यन्ये कूटतानाः पृथक् पृथक्। ते स्युः पञ्च सहस्राणि त्रयस्त्रिंशत् शतानि च" सङ्गी० दा० "तानप्रदायित्वमिवोपगन्तुम्" कुमा०। "गाता यं यं स्वरं गच्छेत् तं तं वंशेन तानयेत्" मल्लिनाथधृतम्। "गायन्ति दिव्यतानैस्ते भा०स०४अ०।

**तानव** न० तनोर्भावः पृथ्वा० पक्षे अण्। तनुत्वे "तानवं तनुता गात्रे दौर्बल्यभ्रमणादिकृत्" उज्ज्वलमणिः "अङ्गानामतितानवं कथमिदं कम्पश्च कस्मात् कुतः" अमरः।

**तानव्य** पुंस्त्री तनोरपत्यं गर्गा० यञ्। तनोरपत्ये स्त्रियां लोहि० ष्फ षित्त्वात् ङीष्। तानव्यायनी।

**तानूनप्त्र** न० तानूनप्ता देवताऽस्य अण्। तनूनप्तृदेवताके पृषदाज्ये "तानूनप्त्रं गृह्णामि कांस्ये चमसे वा" मानवसू०। "तानूनप्त्रमेतत्" कात्या० श्रौ० ८।१।२४। "एतदाज्यं तानूनप्त्रसंज्ञं भवति" कर्कः। "तदेतत्तानूनप्त्रं निदानेन" शत० ब्रा० ३।४।२।८ "तानूनप्ता च प्रजापतिः वायुर्वा" तनूनप्तृशब्दे दृश्यम्। [त्रिका०।

**तानूर** पु० तन–बा० ऊरण्। पयसां स्वतोभ्रमे आवर्त्ते

**तान्त** त्रि० तम–क्त। १म्लाने २क्लान्ते च। शब्दार्थकल्प०। "मृदुलतान्तलतान्तमलोकयत्" "रतिरभसविलासाभ्यासतान्तं न यावत्" माघः। "अलसतान्ततारकेण" दश-कुमा०।

**तान्तव** न० तन्तोर्विकारः अञ्। वस्त्रे "मणिमुक्ताप्रवालानां लोहानां तान्तवस्य च" "सर्वञ्च तान्तवं रक्तं शाणक्षौमाविकानि च" मनुः।

**तान्तव्य** पुंस्त्री तन्तोः सन्तानस्यापत्यं गर्गा० यञ्। तन्तोरपत्ये स्त्रियां लोहिता० ष्फ षित्त्वात् ङीष्। तान्तव्यायनी।

**तान्तुवायि** पुंस्त्री तन्तुवायस्यापत्यं "उदीचामिञ्" पा० इञ्। तन्तुवायस्यापत्ये। अन्यमते सेनान्तलक्षणकारिभ्यः" पा० ण्य। तान्तवाय्य तदर्थे।

**तान्त्रिक** त्रि० तन्त्रं सिद्धान्तं वेत्ति शास्त्रमधीते वा उक्था० ठक्। १ज्ञातसिद्धान्ते २शास्त्राभिज्ञे च "एवं प्रयत्नवैविध्यं तान्त्रिकैः परिकीर्त्तितम्" भाषा० तन्त्रे विहितः ठक्। ३तन्त्रविहिते त्रि० स्त्रियां ङीप् "वैदिकी तान्त्रिकी सन्ध्या यथानुक्रमयोगतः" तन्त्रम्। इदमर्थे ठञ्। ४शास्त्रसम्बन्धिनि च। अथातो धर्मं व्याख्यास्यामः श्रुतिप्रमाणको धर्मः श्रुतिश्च द्विविधा वैदिकी तान्त्रिकी च" हारीतः।

**तान्दूर** न०तन्दूरेण पाकयन्त्रभेदेन निर्वृत्तम् अण्। तन्दूरपक्वे मांसभेदे तत्पाकविधिः शब्दार्थचि० धृतवाक्ये यथा "अङ्गारपूर्णगर्त्ते यदलग्नमवलम्बितम्। संस्कृतं पिहितं मांसं पक्वं तान्दूरमुच्यते" सुस्वादु तान्दूरन्तु। "पचेद्गर्त्तेऽन्तरीक्षस्थं लम्बि सम्भारसम्भृतम्। चतुर्दिङ्मण्डलाकारं पार्श्वप्रज्वलितानले। विपक्वं सुरभि स्वादु तान्दूरमिति कीर्त्तितम्। अन्यच्च। "कोष्ठिकायां सुसम्भारमलग्नमवलम्बितम्। मांसं पिधाय बाह्याग्निज्वालया स्वेदितम् वरम्। तान्दूरं रुचिदं बल्यं मृदु पथ्यतमं स्मृतम्। सद्योहृतं नवं स्थूलमन्यथा दोषकारणमिति"।

**तान्व** पु० तन्वाः प्राणाधिष्ठितत्वात् प्राणवत्या अयम् "प्राणिरजतादिभ्योऽञ्"पा० अञ् संज्ञापूर्वकविधेरनित्यत्वात् वेदे न गुणः। तनूजे पुत्रे। "न जामये तान्वारिक्थम्" ऋ० ३।३१।२। तनुनामकस्य ऋषेरपत्यम् प्राणित्वात् अञ् पूर्ववद्गुणाभावः। २ऋषिभेदे। "सद्यो चिदिष्ट तान्वः" ऋ० १०।९४।१५। तान्वो नामर्षिः" भा०। तनु दशापवित्रवस्त्रम् तस्येदम् अण् पूर्ववद्गुणाभावः। ३दशापवित्रवस्त्रसम्बन्धिनि "जहद्वर्म्माणि तान्वा" ऋ० ९।१४।४। "तान्वा तान्वानि छान्दस आच्" भा०। स्वार्थे अण्। ४दशापवित्रवस्त्रे च। "स्तभ्नाति रिप्र निरस्य तान्वा" ऋ०९।७८। "तान्वा स्वकीयेन वस्त्रेण" भा० पूर्ववत् तृतीयास्थाने आच्।

**ताप** पु० तप–घञ्। क्लेशजनके उष्णादिस्पर्शजन्ये १सन्तापे २कृच्छ्रे च मेदि०। "निदाघकालोल्वणतापयेव" कुमा०। "करम्भवालुकातापान् कुम्भीपाकांश्च दारुणान्" मनुः।

**तापक** त्रि०तापयति तापि–ण्वुल्। १तापकारके २ज्वरे पु० शब्दर०। ३रजोगुणे च तथ्यं सत्त्वं तापकं रजः सा० शास्त्रे प्रसिद्धम्। "सत्त्वं तथ्यं बुद्धिभावेन वृत्तं भावावे वा राजसात्तापकास्ते। तप्ता भेदग्राहिणी तामसी या वृत्तिस्तस्यां तथ्य इत्युक्त आत्मेति" सर्वद०।

**तापत्य** पुंस्त्री तपत्याः सूर्यकन्यायाः अपत्यम् ऋषित्वात्

गय। कौरवे तपत्यपत्ये तपतीशब्दे दृश्यम्। तपत्या उपाख्यानं घञ्। २तपत्युपाख्याने न०। तापत्यमथ वासिष्ठमौर्वं चाख्यानमुत्तमम्” भा० आ० १अ०। तदाख्यानं च भा०आ० चैत्ररथपर्वणि १७२ अध्याये दृश्यम्।

**तापत्रय** न० ६त०। आध्यात्मिकाधिदैविकाधिभौतिकरूपे दुःखत्रये। “आध्यात्मिकादि मैत्रेय! ज्ञात्वा तापत्रयं बुधः। उत्पन्नज्ञानवैराग्यः प्राप्नोत्यात्यन्तिकं फलम्” विष्णु पु०।

**तापदुःख** न० तापरूपं दुःखम्। “पातञ्जलोक्ते दुःखभेदे “परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः” सू०। “ते जन्मायुर्भोगाः पुण्यहेतुकाः सुखफलाः, अपुण्यहेतुकाः दुःखफला इति। यथा चेदं दुःखं प्रतिकूलात्मकं एवं विषयसुखकालेऽपि दुःखमस्त्येव प्रतिकूलात्मकं योगिनः। कथं तदुपपद्यते”। “अथ का तापदुःखता सर्वस्य द्वेषानुविद्धश्चेतनाचेतनसाधनाधीनस्तापानुभव इति। तत्रास्ति द्वेषजः कर्माशयः सुखसाधनानि च प्रार्थयानः कायेन वाचा मनसा च परिस्पन्दते ततः परमनुगृह्णात्युपहन्ति चेति परानुग्रहपीड़ाभ्यां धर्माधर्मावुपचिनोति स कर्माशयो लोभान्मोहाच्च भवतीत्येषा तापदुःखतोच्यते” भा०। “ते जन्मायुर्भोगा इति यद्यपि जन्मायुषोरेव ह्लादपरितापपूर्वभावितया तत्फलत्वं न तु भोगस्य ह्लादपरितापोदयानन्तरभाविनस्तदनुभवात्मनस्तथाप्यनुभाव्यतया भोग्यतया भोगकर्मतामापन्नेन भोगफलत्वमिति मन्तव्यं मन्यपुण्यहेतुका जात्यायुर्भोगाः परितापफला भवन्तु द्वेष्याः प्रतिकूलवेदनीयत्वात्। कस्मात्? पुनः पुण्यहेतवस्त्वज्यन्ते सुखफलाः अनुकूलवेदनीयत्वात्, न चैषां प्रत्यात्मवेदनीयानुकूलता शक्या सहस्रेणाप्यनुमानागमैरपाकर्तुं, न च ह्लादपरितापौ परस्पराविनाभूतौ यतो ह्लाद उपादीयमानेनैव परितापोऽप्यवर्जनीयतयापतेत् तयोर्भिन्नहेतुकत्वाद्भिन्नरूपत्वात् चेत्यत आह यथाचेदमिति” विवरणम्।

**तापन** न० तप–णिच्–भावे ल्युट्। (तापान) १तापकरणे हेमच०। तापि–कर्त्तरि ल्यु। २सूर्य्ये ३कामशरभेदे पु० जटाध०। ४सूर्य्यकान्तमणौ राजनि०। ५अर्कनामकवृक्षे अर्कवृक्षे च। ६तापके त्रि०। “ततोऽम्बराच्चिन्तितमात्रमागतं महाप्रभं चक्रममित्रतापनम्” भा० आ० १९अ०। “ततस्तु राजानममित्रतापनं समीक्षते तस्य नृपस्य मन्त्रिणः” ४४ अ०।

**तापनीय** न० उपनिषद्भेदे। उपनिषच्छब्दे १२२२पृ० दृश्यम्। गोपालतापनीयः नृसिंहतापनीयः। तपनीयस्य स्वर्णस्य विकारः अण्। २स्वर्णमये त्रि० “तापनीये तथा घटे कक्षोपरिविलम्बिते” हरिवं० ८७ अ०। जातरूपेभ्यः परिमाणे अण्। ३स्वर्णनिष्कपरिमाणे सुवर्णे न०।

**तापश्चित** न० तपसि चीयते चि–क्त स्वार्थे अण्। सत्त्रभेदे तद्विधानादि कात्या० श्रौ० २४।५।१। यथा “तापश्चितम् दीक्षाः संवत्सरमुपसदश्च तथा सुत्याः” सू० “तापश्चितमिति सत्त्रनाम तत्र दीक्षाः संवत्सरं भवन्ति उपसदः सुत्याश्च” इदानीमह्नाम्याह अत्र सुत्या आह”कर्कः ‘गवामयनेनेयुः’’ २सू०। गवामयनमेव कर्त्तव्यमित्यर्थः।“अग्निष्टोमेन वा” ३सू० “ईयुः अपूर्वत्वादग्निष्टोमः नैकाह्निको न द्वादशाहिकः संस्थामात्रोपदेशात्। अग्निष्टोमसंस्थेन ज्योतिष्टोमेन पूरणं कर्त्तव्यम्” कर्कः। शत०ब्रा०१०।२।५।२ तन्निरुक्तिर्दर्शिता यथा “एतदुह यत्ते तपः। यदुपसदस्तपो वा उपसदस्तद्यत्तपसि चीयते तस्मात् तापश्चितस्तद्वै यावदेवोपसद्भिश्चरन्ति तावत् प्रवर्ग्येण संवत्सरमेवोपसद्भिश्चरन्ति संवत्सरमवर्ग्येण” “यावतीरुपसदः कुर्यात्तावद्भिः प्रवर्ग्यैश्चरिमश्यम् उपसदः तापश्चिते चयने संवत्सरसंमिताः” भा०।

**तापस** त्रि० तपश्चरणं शीलमस्य छत्रा०ण। १तपश्चरणशीले स्त्रियां टाप्। तपोऽस्त्यस्य “अण् च”पा० अण्। तपोविशिष्टे त्रि०। “तापसेष्वेव विप्रेषु यात्रिकं भैक्षमाचरेत्” मनुः। “सीदन्ति तापसकुलानि सगोकुलानि” इ० स० १९ अ०। स्त्रियां ङीप् “अजयीव चरामीति कस्य त्वं दुष्टतापसि” भा० आ० ७४ अ०।

**तापसतरु** पु० तापसहितस्तरुः शा० त०। इङ्गुदीवृक्षे अमरः। तापसद्रुमादयोऽप्यत्र।

**तापसद्रुमसन्निभा** स्त्री तापसद्रुमेण तुल्या निभा० नि० स०। गर्भदात्रीक्षुपभेदे राजनि०।

**तापसपत्री** स्त्री तापसप्रियं पत्रमस्याः जातित्वात् ङीप्। दमनकवृक्षे राजनि०।

**तापसप्रिय** पु० तापसानां प्रियः छायाप्रदत्वात्। १पियालवृक्षे राजनि०। २तापसप्रियमात्रे त्रि०।

**तापसेष्टा** स्त्री तापसेन इष्टा। १द्राक्षायां राजनि०। २तापसाभिलषिते त्रि०।

**तापस्य** न० तापसस्य धर्म्मः ष्यञ्। तापसधर्म्मे “स्त्रीधर्मयोग तापस्यं मोक्षं संन्यासमेव च। राज्ञश्च धर्म्मसकलं

कार्य्याणां च विनिर्णयः" मनुः। "पुरा रामभयादेव तापसं समुपाश्रितः" भा० व० २७६ अ०।

**तापहर** त्रि० तापं हरति हृ—ट। तापनाशके। स्त्रियां ङीप् ङीबन्तः। २व्यञ्जनभेदे (ताहरी) भाव० प्र० "घृते हरिद्रासंयुक्ता मांसानां भर्जयेद्वटीः। तण्डुलांश्चापि निर्धौतान् घृतेन परिभर्जयेत्। सिद्धियोग्यं जलं तत्र प्रक्षिप्य कुशलः पचेत्। लवणार्द्रकहिङ्गूनि मात्रया तत्र निःक्षिपेत्। एषा सिद्धिं समायाता प्रोक्ता तापहरी बुधैः"। अस्या गुणाः। "भवेत् तापहरी बल्या हृद्या श्लेष्माणमाहरेत्। बृंहणी तर्पणी रुच्या गुर्वी तत्र गुणाः स्मृताः"

**तापिक** त्रि० तापे तापकाले भवं ठञ्। ग्रीष्मभवे जलादौ न०।

**तापिच्छ(ञ्ज)** पु० तापिनं छादयति जयति वा छद+जि-वा ड पृषो०। १तमालवृक्षे अमरः। "अक्ष्णोर्निक्षिपदञ्जनं श्रवणयोस्तापिच्छगुच्छावलीम्" गी०गो०। "प्रफुल्लतापिञ्छनिभैरभीषुभिः" माघः। २धातुमाक्षिके राजनि०

**तापिन्** त्रि० तापयति तापि—णिनि। १तापके तप—णिनि। २तापयुक्ते त्रि० स्त्रियां वा ङीप्। ३बुद्धदेवे पु०त्रिका०

**तापी** स्त्री तापयति तप् अच् गौरा० ङीष्। विन्ध्याचलस्थे पश्चिमवाहिनदीभेदे राजनि०। सा च माक्षिकधातुद्रवसन्निभजलाढ्या। २यमुनायां त्रिका०।

**तापीज** पु० ताप्या नद्याः समीपे आकरभेदे जायते जन—ड। माक्षिकधातौ "एवञ्च माक्षिकं धातु तापीजममृतोपमम्। मधुरं काञ्चनाभासमम्लं वा रजतप्रभम्। पिबन् हन्ति जराकुष्ठमेहानाहामयक्षयान्" सुश्रुतः तापीसमुद्भवताप्यताप्युद्भवादयोऽप्यत्र।

**तापीश्वर** पु० तीर्थभेदे हेम० शि० पु०।

**ताम** पु० ताम्यत्यनेन तम—करणे घञ्। १भीषणे २दोषे च अजयपालः।३ग्लानिकारणे त्रि०भावे घञ्।४ग्लानौ पु०

**तामर** न० तामं ग्लानिं रवते हिनस्ति रुङ—वधे वा० ड १जले २घृते च भरतधृतरुद्रः।

**तामरस** न० तामरे जले सरति सृ—ड। १पद्मे, ताम्यतेऽनेन रस्यते इति रसम् कर्म०। २स्वर्णे ३ताम्रे च मेदि०। ४धुस्तूरे,अमरः "इह वद तामरसं मजजायः" इ० र० उक्ते ५द्वादशाक्षरपादके छन्दोभेदे च। "तामरसतामरसान्तराभाम्" "स्तनवता नयतामरसाननः" "विकचतामरसा गृहदीर्घिकाः" रघुः। "नवरतमन्दरागतामरसदृशः" माघः। ५पद्मिन्यां स्त्री ङीप्। "यथा गजस्तामरसीं मदोत्कटः" भारते विराटपर्वणि ७ अ०।

**तामलकी** स्त्री तम णिच्—क्विप् तान् कर्म०। भूम्यामलक्याम्। अमरः। "कटुकेन्द्रयवोशीरसिंहीतामलकीघनैः" सुश्रुतः

**तामलिप्त** पु० (तमलुक) देशभेदे त्रिका०। स्वार्थे क। तत्रार्थे। स च देशः इ०स० १४ अ० कूर्मविभागे प्राच्यामुक्तः "अथ पूर्वस्याम्" इत्युपक्रमे "एकपादतामलिप्तककोशलकावर्द्धमानश्च"। गौरा० ङीष् तत्रार्थे स्त्री।

**तामस** त्रि० तमोऽस्त्यस्य तमः, प्रधानत्वेनास्त्यस्य वा अण्। १तमोगुणयुक्ते २तमःप्रधानगुणके स्त्रियां ङीप्। ३सर्पे पुंस्त्री० जातित्वात् ङीष्। ४खले त्रि० मेदि० ५उलूके पुंस्त्री राजनि० स्त्रियां ङीष्।६चतुर्थे मनौ पु० "सत्या देवगणाश्चैव तामसस्यान्तरे मनोः। पुत्रांश्चैव प्रवक्ष्यामि तामसस्य मनोर्नृप!। द्युतिस्तपस्यः सुतपास्तपोमूलस्तपोऽशनः। तपोरतिरकल्माषस्तन्वी धन्वी परन्तपः। तामसस्य मनोरेते दश पुत्रा महाबलाः" हरिवं० ७अ०। "चतुर्थ उत्तमभ्राता मनुर्नाम्ना च तामसः। पृथुः ख्यातिर्नरः केतुरित्याद्या दश तत्सुताः। सत्यका हरयो धीरा देवास्त्रिशिखईश्वरः। ज्योतिर्धामादयः सप्त ऋषयस्तामसेऽन्तरे। देवा वैधृतयो नाम विधृतेस्तनया नृप!। नष्टाः कालेन यैर्वेदा विधृताः स्वेन तेजसा। भाग० ८।१।२४। भागवते अन्यथोक्तं कल्पभेदादविरुद्धम्। तमोऽधिकृत्य प्रवृत्तम् अण् तमसा कृता वा अण्। ७तमोगुणाधिकारेण प्रवृत्ते शास्त्रे ८तमसाकृते च स्त्रियां ङीप्। तामसशास्त्राणि च पद्मपुराणे पार्वतीं प्रतीश्वरवाक्येनोक्तानि यथा

"शृणु देवि! प्रवक्ष्यामि तामसानि यथाक्रमम्। येषां श्रवणमात्रेण पातित्यं ज्ञानिनामपि। प्रथमं हि मयैवोक्तं शैवं पाशुपताभिधम्। मच्छक्त्यावेशितैर्विप्रैः संप्रोक्तानि ततःपरम्। कणादेन तु संप्रोक्तं शास्त्रं वैशेषिकं महत्। गौतमेन तथा न्यायं साङ्ख्यन्तु कपिलेन वै। द्विजन्मना जैमिनिना पूर्वं वेदमयार्थतः। निरीश्वरेण वादेन कृतं शास्त्रं महत्तरम्। धिषणेन च संप्रोक्तं चार्वाकमतिगर्हितम्। दैत्यानां नाशनार्थाय विष्णुना बुद्धरूपिणा। बौद्धशास्त्रमसत् प्रोक्तं नग्ननीलपटादिकम्। मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमेव च। मयैव कथितं देवि! कलौ ब्राह्मणरूपिणा। अपार्थं श्रुतिवाक्यानां दर्शयल्लोकगर्हितम्। कर्मस्वरूपत्याज्यत्वमत्र च प्रतिपाद्यते। सर्वकर्मपरिभ्रंशान्नैष्कर्म्यं तत्र

चोच्यते । परात्मजीवयोरैक्यं मयात्र प्रतिपाद्यते । ब्रह्मणोऽस्य परं रूपं निर्गुणं दर्शितं मया । सर्व्वस्य जगतोऽप्यस्य नाशनार्थं कलौ युगे । वेदार्थवन्महाशास्त्रं मायावादमवैदिकम् । मयैव कथितं देवि ! जगतां नाशकारणात्”

कूर्म्मपुराणे केषाञ्चित्तन्त्राणां तामसत्वमुक्तं यथा “यानि शास्त्राणि दृश्यन्ते लोकेऽस्मिन् विविधानि च । श्रुतिस्मृतिविरुद्धानि निष्ठा तेषां तु तामसी । करालभैरवञ्चापि यामलं वाममार्श्रितम् । एवंविधानि चान्यानि मोहनार्थानि तानि तु । मया सृष्टानि चान्यानि मोहायैषां भवार्णवे” । तामस पुराणानि यथा । “मात्स्यं कौर्म्मं तथा लैङ्गं शैवं स्कान्दं तथैव च । आग्नेयञ्च षडेतानि तामसानि निबोधत” । सात्त्विक पुराणानि यथा । “वैष्णवं नारदीयञ्च तथा भागवतं शुभम् । गारुड़ञ्च तथा पाद्मं वाराहं शुभदर्शने ! । सात्त्विकानि पुराणानि विज्ञेयानि शुभानि वै” । राजस पुराणानि यथा “ब्रह्माण्डं ब्रह्मवैवर्त्तं मार्कण्डेयं तथैव च । भविष्यं वामनं ब्राह्मं राजसानि शुभानने !” पद्म० उ० ख० ४२ अ० । “सङ्कीर्णेषु सरस्वत्याः पितृणां व्यहिरुच्यते । अग्नेः शिवस्य माहात्म्यं तामसेषु दिवाकरे । राजसेषु च माहात्म्यमधिकं ब्रह्मणः स्मृतम् । यस्मिन् कल्पे तु यत् प्रोक्तं पुराणं ब्रह्मणा पुरा । तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते । सात्त्विकेष्वधिकं तद्वद्विष्णोर्माहात्म्यमुत्तमम् । तद्वेव योगसंसिद्धा गमिष्यन्ति परां गतिम्” मत्स्य पु० ।

तामसमुनयः पद्मपु० उ० उक्ता यथा । “कणादो गौतमः शक्तिरुपमन्युश्च जैमिनिः । दुर्व्वासाश्च मृकण्डुश्च भार्गवश्च बृहस्पतिः । जमदग्निश्च इत्येते मुनयस्तामसाः स्मृताः” । तामसस्मृतयस्तत्रैवोक्ता यथा “बार्हस्पत्या गौतमी च सांवर्त्ती यमनिर्म्मिता । शाङ्खी चौशनसी चैव तामस्यः स्मृतयः स्मृताः” । तामसश्रद्धादिकं गीतायां १७अ० उक्तं यथा ।

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा । सात्त्विकीराजसी चैव तामसी चेति तां शृणु । यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः । प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः” । तामसाहारादिकमपि भा० १७ अ० उक्तं यथा “यातयामं गतरसं पूति पर्य्युषितञ्च यत् । उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम्” । “विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् । श्रद्धाविरहितं यज्ञं तामसं परिचक्षते” । “मूढ़ग्राहेणात्मनो यत् पीड़या क्रियते तपः । परस्योत्सादनार्थं वा तत्तामसमुदाहृतम्” । “अदेशकाले यद्दानमपात्रेभ्यश्च दीयते । असत्कृतमवज्ञातं तत्तामसमुदाहृतम्” । किञ्च “नियतस्य तु संन्यासः कर्म्मणो नोपपद्यते । मोहात्तस्य परित्यागस्तामसः परिकीर्त्तितः” । “यत्तु कृत्स्नवदेकस्मिन् कार्य्ये सक्तमहेतुकम् । अतत्त्वार्थवदल्पञ्च तत्तामसमुदाहृतम् । अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् । मोहादारभ्यते कर्म यत्तत्तामसमुच्यते” । “अयुक्तः प्राकृतस्तब्धः शठो नैष्कृतिकोऽलसः । विषादी दीर्घसूत्री च कर्त्ता तामस उच्यते । अधर्म्मं धर्म्ममिति या मन्यते तमसावृता । सर्व्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ ! तामसी” । “यया स्वप्नं भयं शोकं विषादं मदमेव च । न विमुञ्चति दुर्म्मेधा धृतिः सा तामसी मता” । “यदग्रे चानुबन्धे च सुखं मोहनमात्मनः । निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम्” १८अ० । राजसतामसकर्म्माणि यथा “यत् शैवं दैवतं पैत्रं वौपदेवं तथाध्वरम् । शाक्तं शैवं गाणपत्यं यागहोमादिकं तथा । पौरहित्यं याजनञ्च देवल्यं ग्रामयाजनम् । विष्णुसेवापराधश्च तथा नामापराधकः । असत्प्रतिग्रहो देवि ! सङ्कल्प आभिचारिकः । पशुजीवादिहननं पातकञ्चोपपातकम् । अतिपापं महापापमनुपातकमेव च । लोभो मोहो ह्यहङ्कारः कामः क्रोधः मदस्तथा । एतद्यदपरं कर्म गर्हितञ्च वरानने ! । राजसं तामसं प्रोक्तं मया च मुनिभिः सदा” पद्म० उ० ख० ।

हारीतः “तामसेन तु द्रव्येण ऋत्विग्भिस्तामसैस्तथा । तामसं भावमास्थाय तामसो यज्ञ उच्यते । तामसेन तु यज्ञेन दानेन तपसा तथा । निरये जन्म चेदाप्नुर्वन्ति विद्यान्न तामसीम्” । “तामसी हृदिस्ले च्छाधिपत्य रूपा” इति रत्नाकरः । तमसो राहोरपत्यम् अण् । ८ राहुसुते तामसकीलः ।

**तामसकील** पु० तामसः राहुसुतः कील इव । वृ० स० ३अ० उक्ते राहुसुते केतुभेदे । तच्चिमित्तोत्पातभेदस्तत्रोक्तो यथा “तामसकीलकसञ्ज्ञा राहुसुताः केतवस्त्रयस्त्रिंशत् । वर्णस्थानाकारैस्तान्दृष्ट्वार्के फलं ब्रूयात् । ते चार्कमण्डलगताः पापफलाश्चन्द्रमण्डले सौम्याः । ध्वाङ्क्षाकबन्धप्रहरणरूपाः पापाः शशाङ्केऽपि । तेषामुदये रूपाण्यम्भः कलुषं रजोवृतं व्योम । नगतरुशिख-

र्विमर्दी सशर्करो मारुतश्चण्डः। ऋतुविपरीतास्तरवो दीप्ता मृगपक्षिणो दिशां दाहः। निर्घातमहीकम्पादयो भवन्त्यत्र चोत्पाताः। न पृथक् फलानि तेषां शिखिकीलकराहुदर्शनानि यदि। तदुदयकारणमेषां केत्वादीनां फलं ब्रूयात्"। "यस्मिन् यस्मिन् देशे दर्शनमायान्ति सूर्यबिम्बस्थाः। तस्मिंस्तस्मिन् व्यसनं महीपतीनां परिज्ञेयम्। क्षुत्प्रम्लानशरीरा मुनयोऽप्युत्सृष्टधर्मसञ्चरिताः। निर्मांसबालहस्ताः कष्टेनायान्ति परदेशम्। तस्करविलुप्तवित्ताः प्रदीर्घनिःश्वासाकुञ्चिताक्षिपुटाः। सन्तः सन्नशरीराः शोकोद्भववाष्परुद्धदृशः। क्षामा जुगुप्समानाः स्वनृपतिपरचक्रपीडिता मनुजाः। स्वनृपतिचरितं कर्म च पराकृतं प्रब्रुवन्त्यन्ये। गर्भेष्वपि निष्पन्ना वारिमुचो न प्रभूतवारिमुचः। सरितो यान्ति तनुत्वं क्वचित् क्वचिज्जायते सस्यम्। दण्डे नरेन्द्रमृत्युर्व्याधिभयं स्यात् कबन्धसंस्थाने। ध्वाङ्क्षे च तस्करभयं दुर्भिक्षं कीलकेऽर्कस्थे। राजोपकरणरूपैश्छत्रध्वजचामरादिभिर्विद्धः। राजान्यत्वकृदर्कः स्फुलिङ्गधूमादिभिर्जनहा। एको दुर्भिक्षकरो द्व्याद्याः स्युर्नरपतेर्विनाशाय। सितरक्तपीतकृष्णैस्तैर्विद्धोऽर्कोऽनुवर्णघ्नः। दृश्यन्ते च यतस्ते रविबिम्बस्योत्थिता महोत्पाताः। आगच्छति लोकानां तेनैव भयं प्रदेशेन"।

स्वार्थे क तत्रार्थे। त्रिंशत्त्रधिकाराहोस्ते तामसकीलका इति ख्याताः वृ० स० ११ अ०।

**तामसध्यान** न० वटुकभैरवस्य ध्येयरूपभेदे। "तस्य ध्यानं त्रिधा प्रोक्तं सात्त्विकादिप्रभेदतः" इत्युपक्रमे सात्त्विकराजसे उक्त्वा तामसध्यानमुक्तं तन्त्रसारे यथा

"ध्यायेन्नीलाद्रिकान्तं शशिशकलधरं मुण्डमालं महेशं दिग्वस्त्रं पिङ्गलाभं डमरुमथ सृणिं खड्गशूला-भयानि। नागं घण्टां कपालं करसरसिरुहैर्बिभ्रतं भीमदंष्ट्रं सर्पाकल्पं त्रिनेत्रं मणिमयविलसत्किङ्किणीनूपुराढ्यम्" "तामसं शत्रुशमनं कृत्याभूतगदापहम्" तन्त्रसा०।

**तामसिक** त्रि० तमसा निर्वृत्तं ठञ्। तमोगुणकार्य्ये त्रि०

**तामसी** स्त्री तमांसि भूम्ना सन्त्यस्यां प्रज्ञा० अण् ङीप्। १अन्धकारबहुलायां रात्रौ २महाकाल्यां मेदि०। ३जटामांस्यां राजनि०। ४तमोगुणवत्यां स्त्रियाञ्च।

**तामालेय** त्रि० तामालवृक्षस्यादूरदेशादि सख्या० ठञ्। तमालवृक्षस्या-दूरदेशादौ।

**तामिस्र** पु० तमिस्रा तमस्ततिरस्त्यत्र अण्। नरकभेदे। "तामिस्रो ह्यन्धतामिस्र इत्युपक्रमे। तन्निदानरूपादि भाग० ५।२६ उक्तं यथा "यस्तु परवित्तापत्यकलत्राण्यपहरति स हि कालपाशबद्धो यमपुरुषैरतिभयानकैस्तामिस्रे नरके बलान्निपात्यते" "स पर्य्यायेण यातीमान् नरकानेकविंशतिम्। तामिस्रमन्धतामिस्रं महारौरवरौरवौ। नरकं कालसूत्रञ्च महानरकमेव च। सञ्जीवनं महावीचिं तपनं सम्प्रतापनम्। संघातञ्च सकाकोलं कुड्मलं पूतिमृत्तिकम्। लोहशङ्कुमृजीषञ्च पन्थानं शाल्मलीं नदीम्। असिपत्रवनञ्चैव लोहदारकमेव च" मनुः अत्रोपक्रमे यातीति क्रियासम्बन्धापेक्षतया पन्थानं शाल्मलीं नदीमित्युत्तरत्र स्पष्टं द्वितीयाश्रवणाच्च तामिस्रादिशब्दानां द्वितीयान्ततैव नरकविशेषवाचित्वात्तस्य पुंस्त्वात्। शब्दकल्पद्रुमे क्लीवतोक्तिः मनुवचने द्वितीयान्ततामिस्रशब्दे प्रथमान्तत्वभ्रान्त्यैवेति बोध्यम्। तमिस्रया साध्यमण्। २द्वेषे। "भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः। तामिस्रोऽष्टदशधा" सा० का०। "तामिस्रो द्वेषोऽष्टादशधा शब्दादयो दशविषया रञ्जनीयाः स्वरूपतः, ऐश्वर्य्यमणिमादिकं न स्वरूपतो रञ्जनं किन्तु रञ्जनीयशब्दाद्युपायाः। ते च शब्दादय उपस्थिताः परस्परेणोपहन्यमानास्तदुपायाश्चाणिमादयः स्वरूपेणैव कोपनीया भवन्तीति। शब्दादिभिर्दशभिः सहाणिमाद्यष्टादशधेति तद्विषयो द्वेषस्तामिस्रोऽष्टादशविषयत्वादष्टादशधेति" तत्त्वकौ० द्वेषमूलत्वात् भोगेच्छाप्रतिघातरूपे ३क्रोधे भाग० टी० श्रीधरः।

**तामु** त्रि० तम–उण्। स्तोतरि निघण्टुः।

**ताम्बली** स्त्री ताम्बूली+पृषो०। (पान) ताम्बूल्यां "शुक्लकाशताम्बल्यारसानाः" गोप० ब्रा० १।१०।७।

**ताम्बूल** न० तम–अलच् बुगागमः दीर्घश्च गौ० ङीप् तस्याः फलमण्। (पान) ख्याते १नागवल्लीदले। २क्रमुके च मेदि०। "ताम्बूलं कटुतिक्तमुष्णमधुरं क्षारं कषायान्वितं वातघ्नं कृमिनाशनं कफहरं दुर्गन्धनिर्नाशनम्। वक्त्रस्याभरणं विशुद्धिकरणं कामाग्निसन्दीपनं ताम्बूलस्य सखे! त्रयोदश गुणाः स्वर्गेऽपि ते दुर्लभाः" अपि चाहुः "ताम्बूलं विशदं रुच्यं तीक्ष्णोष्णं तुवरं सरम्। वश्यं तिक्तं कटु क्षारं रक्तपित्तकरं लघु। बल्यं श्लेष्मास्यदौर्गन्ध्यमलवातश्रमापहम्" भाव० प्र०। "अनिधाय मुखे पर्णं पूगं

खादयते नरः। मतिभ्रंशो दरिद्रः स्यादन्ते न स्मरेत् हरिम्" राजनि०। भावप्र० दिनचर्य्यायामुक्तं यथा "धूमेनापोह्य हृद्यैर्वा कषायकटुतिक्तकैः। पूगकर्पूरकस्तूरीलवङ्गसुमनःफलैः। फलैः कटुकषायैर्वा मुखवैशद्यकारिभिः। ताम्बूलपत्रसहितैः सुगन्धैर्वा विचक्षणः। धूमेन अगुर्वादिधूमेन। अपोह्य कफं दूरीकृत्य कषायकटुतिक्तकैः फलैः कर्पूरकस्तूरीलवङ्गादिभिः पूगैः क्रमुकैः सुमनःफलैः जातीफलैः एलाहरीतक्यादिफलैः। रात्रौ सुप्तोत्थिते स्नाते भुक्ते वान्ते च सङ्गरे। सभायां विदुषां राज्ञां कुर्य्यात्ताम्बूलचर्वणम्। ताम्बूलमुक्तं तीक्ष्णोष्णं रोचनन्तु परं सरम्। तिक्तं क्षारोषणं कामरक्तपित्तकरं लघु। वश्यं श्लेष्मास्यदौर्गन्ध्यमलवातश्रमापहम्। मुखवैशद्यसौगन्ध्यकान्तिसौष्ठवकारकम्। हनुदन्तमलध्वंसि जिह्वेन्द्रियविशोधनम्। मुखप्रसेकशमनं गलामयविनाशनम्। नवं तदेव मधुरं कषायानुरसं गुरु। वलासजननं प्रायः पत्रशाकगुणं स्मृतम्। वङ्गदेशोद्भवं पर्णं परं कटुरसं सरम्। पाचनं पित्तजनकमुष्णं कफहरं स्मृतम्। पर्णं पुरातनकटु मुखकान्तु पाण्डुरम्। विशेषाद् गुणवद्दोषमल्पहीनगुणं स्मृतम्। खदिरः कफपित्तघ्नश्चूर्णं वातबलापहृत्। संयोगत स्त्रिदोषघ्नं सौमनस्यं करोति च। मुखवैशद्यसौगन्ध्यकान्तिसौष्ठवकारकम्। प्रभाते पूगमधिकं मध्याह्ने खदिरं तथा। निशासु चूर्णमधिकं ताम्बूलं भक्षयेत् सदा। आयुरग्रे यशो मूले लक्ष्मीर्मध्ये व्यवस्थिता। तस्मादग्रं तथा मूलं मध्यं पर्णस्य वर्जयेत्। पर्णमूले भवेद्व्याधिः पर्णाग्रे पापसम्भवः। जीर्णं पर्णं हरत्यायुः सिरा बुद्धिविनाशिनी। आद्यं विषोपमं पीतं द्वितीयं भेदि दुर्जरम्। तृतीयादन्तु पातव्यं सुधातुल्यं रसायनम्। ताम्बूलं नातिसेवेत न विरिक्तो बुभुक्षितः। देहदृक्केशदन्ताग्निश्रोत्रवर्णबलक्षयः। शोषः पित्तानिलास्रं स्यादतिताम्बूलचर्वणात्। विषमूर्च्छामदार्त्तानां क्षयिणां रक्तपित्तिनाम्।

"विना पर्णं मुखे दत्त्वा गुवाकं भक्षयेद्यदि। तावद्भवति चण्डालो यावद्गङ्गां न गच्छति" कर्मलोचनम्। "ताम्बूलं विधवास्त्रीणां यतीनां ब्रह्मचारिणाम्। तपस्विनाञ्च विप्रेन्द्र! गोमांससदृशं ध्रुवम्" इति ब्रह्मवै० प्र० ख०। मार्कण्डेयः "भूयोऽप्याचम्य कर्तव्यं ततस्ताम्बूलभक्षणम्" वशिष्ठः "सुपूगञ्च सुपर्णञ्च सुचूर्णेन समन्वितम्। अदत्त्वा द्विजदेवेभ्यस्ताम्बूलं वर्जयेद्बुधः" "ताम्बूलद्वयमासनञ्च लभते यः कान्यकुब्जेश्वरात्" नैष० "ताम्बूलाक्तं दशनमसकृद्दर्शयन्तीह चेटी" सा० द०। २पर्णघट्टे स्त्री गौरा० ङीष्। "ताम्बूलीनां दलैस्तत्र रचिताः पानभूमयः" रघुः। [हेमच०।

**ताम्बूलकरङ्क** पु० ६त०। (पानडिया) ताम्बूलपात्रभेदे

**ताम्बूलद** त्रि० ताम्बूलं ददाति दा—क। १राज्ञां ताम्बूलदाने अधिकृते दासभेदे २विप्रादिभ्यो ताम्बूलदातरि च स्त्रु ल्। ताम्बूलदायकोऽप्युभयत्र "जलताम्बूलकुसुमगन्धमाल्यादिदायकाः" कामन्दकीये।

**ताम्बूलपत्र** पु० ताम्बूलमिव पत्रमस्य। पिण्डालौ राजनि०। कर्म्म०। ताम्बूलीपत्रे न०।

**ताम्बूलपेटिका** स्त्री ६त०। ताम्बूलकरङ्के

**ताम्बूलराग** पु० ताम्बूलकृतो रागः शाक० त०। (पानेर बोल) १ताम्बूलजनिते रागे ताम्बूलस्य राग इव रागो रक्तता यस्य। २मसूरे हारा०।

**ताम्बूलवल्ली** स्त्री ताम्बूलाख्या वल्ली। (पान) नागवल्ल्याम् अमरः। स्वार्थे क अत्र वार्थे।

**ताम्बूलिक** त्रि० ताम्बूलं तद्रचनं शिल्पमस्य। ताम्बूलरचनाधिकृते "आदिशब्दात् मालाकाररजकताम्बूलिकगान्धिकादयः" सा० द०।

**ताम्बूलिन्** त्रि० ताम्बूलं पण्यतयाऽस्त्यस्य इनि। १ताम्बूलविक्रेतरि (तामुलि)ख्याते २जातिभेदे पुंस्त्री स्त्रियां ङीप्।

**ताम्र** न० तम—रक् दीर्घः।१धातुभेदे (ताँवा) अमरः २कुष्ठभेदे कर्म्मविपाकः। ३रक्तवर्णे हेमच०। ४तद्वति त्रि०। धातुभेदस्योत्पत्तिकारणगुणादि भावप्र० उक्तं यथा "अथ ताम्रस्य उत्पत्तिर्नामलक्षणगुणाश्च। "शुक्रं यत् कार्त्तिकेयस्य पतितं धरणीतले। तस्मात्ताम्रं समुत्पन्नमिदमाहुः पुराविदः। ताम्रमौदुम्बरं शुल्वमुदुम्बरमपि स्मृतम्। रविप्रियं म्लेच्छमुखं सूर्य्यपर्य्यायनामकम्। जपाकुसुमसङ्काशं स्निग्धं मृदुघनक्षमम्। लोहनागोज्झितं ताम्रं मारणाय प्रशस्यते। कृष्णं रूक्षमतिस्तब्धं श्वेतञ्चापि घनासहम्। लोहनागयुतञ्चेति शुल्वं दुष्टं प्रकीर्त्तितम्। एको दोषो विषे ताम्रे त्वसम्यग्मारिते पुनः। दाहः स्वेदो रुचिर्मूर्च्छा क्लेदो रेको वमिर्भ्रमः" (रेकः विरेकः)तस्य मारणविधिस्तत्रोक्तो यथा

"सूक्ष्माणि ताम्रपत्राणि कृत्वा संस्वेदयेद्बुधः। वास-रत्नयमम्लेन ततः खाते विनिःक्षिपेत्। पादांशं सूतकं दत्त्वा याममम्लेन मर्द्दयेत्। तत उद्धृत्य पत्राणि लेपये-द्द्विगुणेन च। गन्धकेनाम्लवेष्टेन तस्य कुर्य्याच्च गोल-कम्। ततः पिष्ट्वा च मीनाक्षीं चाङ्गेरीं वा पुनर्न-वाम् (चाङ्गेरी चतुष्पत्राम्ललोनिकाभेदः।) तत्कल्केन बहिर्गोलं लेपयेद्द्व्यङ्गुलोन्मितम्। धृत्वा तद्गोलकं भाण्डे शरावेण च रोधयेत्। वालुकाभिः प्रपूर्य्याथ विभूति लवणाम्बुभिः। दत्त्वा भाण्डमुखे मुद्रां ततश्चूल्ल्यां विपा-चयेत्। क्रमवृद्धाग्निना सम्यग्यावद्यामचतुष्टयम्। स्वाङ्गशीतं समुद्धृत्य मर्द्दयेच्छूरणद्रवैः। यामैकं गोलकं तच्च निःक्षिपेच्छूरणोदरे। मृदा लेपस्तु कर्त्तव्यः सर्वतोऽङ्गुष्ठमात्रकः। पाच्यं गजपुटे क्षिप्रं मृतं भवति निश्चितम्। वमनं च विरेकं च भ्रमं श्वासमथाक्-चिम्। विदाहं स्वेदमुत्क्लेदं न करोति कदाचन। एवं मारितस्य ताम्रस्य गुणा ताम्रं कषायं मधुरं च तिक्तमम्लञ्च पाके कटु सारकञ्च। पित्तापहं श्लेष्महरञ्च शीतं तद्रोपणं स्याल्लघु लेखनञ्च। पाण्डूदराशोंज्वर कुष्ठकासश्वासक्षयान् पीनसमम्लपित्तम्। शोथं क्रमिं शूलमपाकरोति प्राहुर्बुधा वृंहणमल्पमेतत्"।

"ताम्रमम्लेन शुद्ध्यति" मनुः। ताम्रपत्रशब्दे भोजननि-षेधः इतेतरोद्धृतसारगव्यभोजननिषेधश्च वक्ष्यते। रक्त-वर्णविशिष्टे "ताम्रौष्ठपर्य्यस्तरुचः स्मितस्य" "तपस्विने ताम्ररुचा करेण" कुमा० "प्रचक्रमे पल्लवरागताम्रा" रघुः। ५ द्वीपभेदे पु०। स्वार्थे क। तत्रार्थे अमरः।

**ताम्रकर्ण** त्रि० ताम्रौ कर्णौ यस्य। १रक्तकर्णयुक्ते स्त्रियां ङीष्। ङीषन्तः २पश्चिमदिग्हस्तिन्याम् अमरः।

**ताम्रकार** पुंस्त्री० ताम्रं ताम्रपात्रादिकं करोति कृ-अण् उप० स०। ताम्रोपजीविनि सङ्कीर्णजातिभेदे। "आ योगवेन विप्रायां जातास्ताम्रोपजोविनः" कंसकार-शब्दे दृश्यम्। स्त्रियां जातित्वात् ङीष्।

**ताम्रकुट्ट** पुंस्त्री० ताम्रं कुट्टयति कुट्ट-अण् उप० स०। ताम्रकारे (काँसारि) संकीर्णजातिभेदे। ण्वुल्। ता-म्रकुट्टक तत्रार्थे अमरः।

**ताम्रकुण्ड** न० कुण-ड कित्त्व ताम्रमयं कुण्डम्। ताम्रमये देवजलाधारे पात्रभेदे "देवतान्यजलाधारः कुण्डं कुण्ड-मुखा स्मृताः" "शाश्वतः उपचारात् ताम्रकुण्डम्" उज्ज्व०

**ताम्रकूट** पुंन० ताम्रस्य कूटमिव। रक्तवर्णनिर्यासके (ता-माक) क्षुपभेदे "संविदा कालकूटं च ताम्रकूटं च धुस्तुरम्। अहिफेनं खर्जूरसस्ताडिका तरिता तथा। इत्यष्टौ सिद्धिद्रव्याणि यथा सूर्य्याष्टकं तथा" कुला० त०।

**ताम्रक्रमि** पु० कर्म्म०। इन्द्रगोपकीटे शब्दा०।

**ताम्रगर्भ** न० ताम्रं गर्भं इवोत्पत्तिस्थानमस्य। तुत्थे (तुँते) राजनि०। तस्य ताम्रोद्भवत्वं तुत्थशब्दे दृश्यम्।

**ताम्रचूड** पुंस्त्री० ताम्रा रक्ता चूड़ा यस्य। १कुक्कुटे (कुकड़ा) ख्याते खगे अमरः। स्त्रियां ङीष्। तद्दृनविशेषफलं वृ०सं० ८८अ० यथा "भीता रुवन्ति कुक्कुकिति ताम्रचूडास्त्यक्त्वा रुतानि भयदान्यपराणि रात्रौ"। कुक्कुटश्च द्विविधः नारि-केलाकृतिः प्राच्यवाटः, वलाकाकृतिश्च प्रतीच्यवाटः। तत्र प्राच्यवाटः बलाधिकः। तथैव वर्णितं दशकुमारे ताम्र-चूड़युद्धाधिकारे। "कथमिव नारिकेलजातेः प्राच्य-वाटकुक्कुटस्य प्रतीच्यवाटः पुरुषैरसमीक्ष्य बलाका-जातिस्ताम्रचूड़ो बलप्रमाणाधिकस्तैर्वं प्रति विसृष्ट इति। "प्रायुध्यत चातिसंरब्धमनुप्रहारप्रवृत्तस्वपक्षसत्त्वकण्ठी-रवरवं विहङ्गमद्वयम्। जितश्चासौ प्रतीच्यवाट कुक्कुटः" दशकु०। २कुक्कुरद्रुमे (कुकसिमा) राजनि०। तस्य रक्त-शिखत्वात्तथात्वम्। "द्वाभ्यां स्टहीत्वा पाणिभ्यां शक्तिं चान्येन पाणिना। अपरेणाग्निदायादस्ताम्रचूडं भुजेन सः। महाकायसपश्लिष्टं कुक्कुटं बलिनां वरम्" भा०व० २२४अ० तत्रैव "अरुणस्ताम्रचूडञ्च प्रददौ चरणायुधम्"। ३कुमारानुचरमातृगणभेदे स्त्री "सुभगा लम्बिनी लम्बा ताम्रचूडाविकाशिनी" भा० श० ४७ अ०। मातृगणोक्तौ ४रक्तशिखायुक्ते त्रि० ताम्रचूडभैरवः।

**ताम्रजात** पु० सत्यभामायां कृष्णाज्जाते पुत्रभेदे। "जज्ञिरे सत्यभामायां भीमो भीमरथः क्षुपः। रोहितो दीप्तिमां-श्चैव ताम्रजाक्षो जलान्तकः। आन्ध्रभीमिरिका चैव ताम्र-पक्षा जलन्धमा। चतस्रो जज्ञिरे तेषां स्वसारो गरु-ड़ध्वजात्" हरिवं० १६२ अ०।

**ताम्रत्रपुज** पु० ताम्रञ्च त्रपु च ताभ्यां जायते जन-ड। कांस्ये भावप्र०। तस्योभयधातुजन्यत्वात् तथात्वम्।

**ताम्रदुग्धा** स्त्री ताम्रं रक्तं दुग्धं निर्यासोऽस्याः। गोरक्ष दुग्धायां राजनि०।

**ताम्रद्वीप** पुंन०। कर्म्म०। दक्षिणदेशस्थे द्वीपभेदे। "द्वीपं ताम्राह्वयञ्चैव पर्वतं रामकं तथा। तिमिङ्गिलञ्च स न्टपं वशे कृत्वा महामतिः" भा० स० ३० अ०। सह-देवदक्षिणदिग्विजये।

**ताम्रपत्त्रा** स्त्री सत्यभामासुतायां ताम्रजाक्षशब्दे दृश्यम् ।

**ताम्रपट्ट** न० ताम्रनिर्म्मितं पट्टम् । ताम्रमये लेखनपत्रभेदे "दत्त्वा भूमिं निबन्धं वा कृत्वा लेख्यन्तु कारयेत् । आगामिभद्रनृपतिपरिज्ञानाय पार्थिवः । पटे वा ताम्रपट्टे वा स्वमुद्रोपरिचिह्नितम् । अभिलेख्यात्मनो वंश्यानात्मानञ्च महीपतिः । प्रतिग्रहपरीमाणं दानाच्छेदोपवर्णनम् । स्वहस्तकालसम्पन्नं शासनं कारयेत् स्थिरम्" याज्ञ० ।

**ताम्रपत्र** पु० ताम्रं रक्तं पत्त्रमस्य । १जीवशाके राजनि० । २रक्तवर्णपत्रके वृक्षमात्रे च । कर्म्म० । ३ताम्रमये लेखनपत्रे । ४रक्ते दले नवपल्लवे च न० ।

**ताम्रपर्णी** स्त्री दक्षिणदेशस्थे नदीभेदे । "ताम्रपर्णीन्तु कौन्तेय ! कीर्त्तयिष्यामि तां शृणु यत्र देवैस्तपस्तप्तं महदिच्छद्भिराश्रमे । गोकर्ण इति विख्यातस्त्रिषु लोकेषु विश्रुतः । शीततोयो बहुजलः पुण्यस्तात ! शिवः शुभः । ह्रदः परमदुष्प्रापो मानुषैरकृतात्मभिः । तत्र वृक्षतृणाद्यैश्च सम्पन्नफलमूलवान् । आश्रमोऽगस्त्यशिष्यस्य पुण्यो देवसमो गिरिः । वैदूर्य्यपर्वतस्तत्र श्रीमान् मणिमयः शिवः । अगस्त्यस्याश्रमश्चैव बहुमूलफलोदकः" भा०व०८८अ० । तस्याः सिन्धुसङ्गमस्थाने मुक्ताजन्म यथोक्तं "ताम्रपर्णीसमेतस्य मुक्तासारं महोदधेः । ते निपत्य ददुस्तस्मै यशः स्वमिव सञ्चितम्" रघुः "सिंहलकपारलौकिकमौराष्ट्रकताम्रपर्णीकपारशराः" कौवेरपाण्ड्यवाटकहैमा इत्याकरा ह्यष्टौ" वृ० सं० ८१ अ० मुक्ताकरोक्तौ । २शिलाभेदे च । "ताम्रपर्णी शिला राजन् ! श्रीमान् मलयपर्वतः" भा० भी० ६ अ० ।

**ताम्रपल्लव** पु० ताम्राणि पल्लवानि यस्य । १अशोकवृक्षे राजनि० । २रक्तपल्लवयुक्ते वृक्षमात्रे च । कर्म्म० । ३रक्ते पल्लवे कस्त्री ।

**ताम्रपाकिन्** पु० पच्यते पाकः फलपुष्पादि ताम्रः पाकः अस्त्यस्य इनि । गर्दभाण्डवृक्षे । रत्नमा० ।

**ताम्रपात्र** न० ताम्रस्य विकारः अण् कर्म० । ताम्रमये पात्रे तत्र तर्पणविधिस्तर्पणशब्दे उक्तः । "गृहीत्वौदुम्बरं पात्रम्" इत्यादि स्मृत्या तस्य संकल्पपात्रतोक्ता तत्र भोजननिषेधो मनुनोक्तो यथा "ताम्रपात्रे न भुञ्जीत भिन्नकांस्ये मलाविले । पलाशपद्मपत्रेषु गृही भुक्त्वैन्दवं चरेत्" । तत्र इतेतरोद्धृतसारगव्यादिभोजननिषेधमाह स्मृतिसागरे स्मृतिः "नारिकेलजलं कांस्ये ताम्रपात्रे स्थितं मधु । गव्यञ्च ताम्रपात्रस्थं मद्यतुल्यं घृतं विना । ताम्रपात्रस्थितं मांसं यच्च गव्यं घृतेतरत् । आमिषन्तु गवां मांसं दधि मद्यं पयो रजः । द्रव्यान्तरयुतं मांसं पयसा संयुतं दधि । पयोऽनुद्धृतसारञ्च ताम्रपात्रे न दुष्यति" उत्तरार्द्धानुसारात् "तत्र संस्कृते वह्नौ गोक्षीरेण चरुं पचेत् । अस्त्रेण क्षालिते पात्रे नवे ताम्रमयादिके" शारदाति० वाक्यम् अनुद्धृतसारक्षीरविषयम् उद्धृतसारस्यैव तत्र स्थितत्वे निषेधात् पानपात्रं च ताम्रपात्रं प्रशस्तं यथाह सुश्रुतः "दद्यात् ताम्रमये पात्रे सुशीतं सुशृतं पयः" । "जलपात्रं तु ताम्रस्य तदभावे मृदो हितम्" भावप्र० ।

**ताम्रपादी** स्त्री ताम्रः रक्तः पादो मूलमस्याः ङीष् । हंसपद्याम् राजनि० । तस्या हंसस्येव रक्तमूलत्वात्तथात्वम् ।

**ताम्रपुष्प** पु० ताम्रं पुष्पं यस्य । १रक्तकाञ्चने जटा० २भूमिचम्पके शब्दच० । ३रक्तपुष्पयुक्तमात्रे त्रि० । "ताम्रपुष्पैश्च शिखरैर्दीप्यमानः सुतेजसा" हरिवं० २१७ अ० । कर्म्म० । ४रक्ते पुष्पे न० ।

**ताम्रपुष्पिका** स्त्री ताम्रं पुष्पं यस्याः कप् कापि अत इत्वम् । रक्तत्रिवृति (लालतेउड़ि) राजनि० ।

**ताम्रपुष्पी** स्त्री ताम्रं रक्तं पुष्पं यस्याः ङीष् । १धातकी वृक्षे २पाटलावृक्षे च राजनि० ।

**ताम्रफल** पु० ताम्रं रक्तं फलमस्य । १अङ्कोटवृक्षे । राजनि० । २रक्तफलयुक्ते वृक्षमात्रे त्रि० कर्म्म० । ३रक्ते फले न० ।

**ताम्रमूला** स्त्री ताम्रं रक्तं मूलं यस्याः अजादेराकृतिगणत्वात् टाप् । १दुरालभायां २लज्जालौ च राजनि० । ३कच्छुराहवृक्षे (खिराइ) रत्नमाला । ४रक्तमूलके वृक्षमात्रे त्रि० । कर्म्म० । ५रक्ते मूले न० ।

**ताम्रयोग** पु० चक्रदत्तोक्ते औषधभेदे तद्विधानादि तत्रोक्तं यथा "स्थाल्यां संमर्द्य दातव्यौ माषिकौ रसगन्धकौ । नखच्छस्य तदुपरि तण्डुलीयं द्विमाषिकम् । ततो नेपालताम्रादि पिधाय सुकरालितम् । पांशुना पूरयेदूर्द्ध्वं सर्व्वां स्थालीं ततोऽनलः । स्थाल्यधो ज्वालिकां यावद्द्वयस्तेन स्रुतस्य च । ताम्रो ताम्रस्य रक्त्यैका त्रिफलाचूर्णरक्तिका । त्र्यूषणस्य च रक्त्यैका विडङ्गस्य च तन्मधु । घृतेनालोड्य लेढव्यं प्रथमे दिवसे ततः । रक्तिवृद्धिः प्रतिदिनं कार्य्या ताम्रादिषु त्रिषु । स्थिरा विडङ्गरक्तिस्तु यदा भेदो विवर्जितः । तदा

विड़ङ्गन्त्वधिकं दद्याद्गिरित्रयं पुनः। द्वादशाङ्गं योगवृद्धिस्ततो ह्रासक्रमोऽप्ययम्। यकृत्प्लीहाम्लपित्तञ्च क्षयं शूलञ्च सर्वदा। ताम्रयोगो जयत्येष बलवर्णाग्निवर्द्धनः"।

**ताम्रसायनी** स्त्री ताम्रसस्य रक्तनिर्यासस्यायनी। गोरक्तदुग्धायां जटाधरः।

**ताम्रलिप्त** पु० देशभेदे। सोऽभिजनोऽस्य तस्य राजा वा अण्। तद्देशवासिनि तद्रूपे च बहुषु अणो लुक्। स च देशः प्राचीस्थः। "ताम्रलिप्तश्च राजानं कर्वटाधिपतिं तथा" भा० स० २९ अ०। भीमप्राचीदिग्विजये। "वङ्गाः कलिङ्गा मगधास्ताम्रलिप्ताः सपुण्ड्रकाः" भा० स०५१अ०। स्वार्थे क। तत्रार्थे "किराताः कर्बराः सिद्धाः वैदेहास्ताम्रलिप्तकाः" भा०भी० ७ अ०। जनपदोक्तौ।

**ताम्रवर्ण** पु० ताम्रो रक्तो वर्णोऽस्य। १पञ्जिवाहवृक्षे वृक्षभेदे राजनि०। २जटायां स्त्री शब्दच०। ३ताम्रवर्णयुतमात्रे त्रि०। कर्म्म०। ४रक्ते वर्णे पु०।

**ताम्रवल्ली** स्त्री कर्म्म०। १मञ्जिष्ठायाम् शब्दच०। २चित्रकूटदेशप्रसिद्धे लताभेदे राजनि०। ३रक्तलतामात्रे च।

**ताम्रवीज** पु०ताम्रं वीजं यस्य। १कुलत्थे राजनि०। २रक्तवीजके वृक्षमात्रे त्रि०। कर्म०।३रक्ते वीजे न०। ४कुलत्थिकायां स्त्री शब्दार्थचि०। [१रक्तवर्णके वृक्षे पु०।

**ताम्रवृक्ष** पु० कर्म्म०। १रक्तचन्दनवृक्षे २कुलत्थे च रत्नमा०

**ताम्रवृन्त** पु० ताम्रं वृन्तमस्य। १कुलत्थे, स्त्रीत्वमपि टाप् त्रिका०। २रक्तवृन्तके वृक्षमात्रे त्रि०। कर्म्म०। ३रक्ते वृन्ते न०।

**ताम्रशिखिन्** पु० ताम्रा रक्ता शिखास्त्यस्य इनि। कुक्कुटे जटाधरः। ब० व०। ताम्रशिख इत्यपि तत्र। ताम्रशिखायुक्ते च त्रि०।

**ताम्रसार** न० ताम्रं रक्तं सारमस्य। १रक्तचन्दनवृक्षे। रत्नमाला। २रक्तसारके वृक्षमात्रे त्रि०। कर्म्म०। ३रक्ते सारे पुंन०।

**ताम्रसारक** पु० ताम्रो रक्तः सारोऽस्य कप्। १खदिरे राजनि०।२रक्तचन्दनवृक्षे च। ३तत्काष्ठे न० शब्दार्थचि०।

**ताम्रसारिक** पु० ताम्रः सारोऽस्त्यस्य ठन्। १रक्तखदिरे, २रक्तचन्दने च शब्दार्थचि०।

**ताम्रा** स्त्री ताम्र+टाप्। १सैंहिल्यां २ताम्रवल्ल्यां शब्दमा०।

**ताम्राख्य** पु० उपद्वीपभेदे शब्दमाला। ताम्रद्वीपे।

**ताम्राक्ष** पुंस्त्री ताम्रे अक्षिणी यस्य षच् समा०। १कोकिले त्रिका० स्त्रियां षित्त्वात् जातित्वाच्च ङीष्। २रक्तचक्षुर्युक्ते त्रि० स्त्रियां षित्त्वात् ङीष्। ३विशाला यत्र ताम्राक्षैः पूर्णचन्द्रनिभाननैः। वर्षाभूः कीर्त्यते" भा० क० ४६ अ०।

**ताम्राभ** न० ताम्रस्य आभेवाभा यस्य। १रक्तचन्दने शब्दच०। ताम्रा रक्ता आभा यस्य। २रक्तवर्णाभायुक्ते त्रि० "रुधिरोक्षितसर्वाङ्गैस्तैस्तदायोधनं बभौ। कवचैः संवृतं सर्वं ताम्राभैः स्वमिवावृतम्" भा० द्रो० ११९ अ०।

**ताम्रारुण** न० तीर्थभेदे "ताम्रारुणं समासाद्य ब्रह्मचारी समाहितः। अश्वमेधमवाप्नोति ब्रह्मलोकञ्च गच्छति" भा० व० ८४ अ०।

**ताम्रार्द्ध** पु० ताम्रस्यार्द्धोऽंशभेद इत्यादिकोऽस्य। कांस्ये त्रिका०

**ताम्रावती** स्त्री ताम्रमाधेयत्वेनास्त्यस्य मतुप् मस्य वः संज्ञायां दीर्घः। ताम्राकरे नदीभेदे "ताम्रावती वेत्रवती नद्यस्तिस्रोऽथ कौशिकी" भा० व० २२१ अ०।

**ताम्राश्मन्** पु० नि० कर्म्म०। पद्मरागे "ताम्राश्मरश्मिच्छुरितैर्नखाग्रैः" माघः। "ताम्राश्मनां पद्मरागाणाम्" मल्लिना०।

**ताम्रिक** त्रि० ताम्रं तत्पात्रादिनिर्माणं शिल्पमस्य ताम्रस्येदं वा ठञ्। १कांस्यकारे २सङ्कीर्णजातिभेदे पुंस्त्री० स्त्रियां ङीप्। ३ताम्रसम्बन्धिनि त्रि०। "कार्षिके ताम्रिके पणः" अमरः। "कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः" मनुः। "निष्काः सुवर्णाश्चत्वारः कार्षिकस्ताम्रिकः पणः" मात्स्य०। ४गुञ्जायां स्त्री टाप् राजनि०। ५वाद्यभेदे शब्दार०

**ताम्री** स्त्री ताम्रस्य विकारः अण् ङीप्। वाद्यभेदे त्रिका०।

**ताय** पालने विस्तारे च भ्वा० आत्म० सक० सेट्। तायते अतायि-अतायिष्ट। तताये। ऋदित्। णिच् अततायत्-त। तायितः तातिः "उभौ मायां व्याताय्येताम्" भट्टिः। "सरसि संताय्यमाने" यजु० २९।५। घञ्। तायः वृषा० आद्युदात्तः। ल्युट्–तायनम् "वृत्तिसर्गतायनेषु क्रमः" पा०।

**तायिक** त्रि०ताये वृद्धौ साधु ठञ्। तज्जिकाभिधदेशे हेमच०

**तायु** पु० ताय–उण्। चौरे स्तेने निघण्टुः "अपत्ये तायवो यथा नक्षत्रा" ऋ० १।५०।२।

**तार** पु० तारयति स्वजापकान् संसारार्णवात् तॄ–णिच्–अच् तार्य्यतेऽनेन वा तॄ–णिच् करणे अच्, तॄ–णिच्–भावे अच् वा। १प्रणवे ओङ्कारे "तारयेद्यद्भवाम्भोधेः स्वजपासक्तमानसम्। ततस्तार इति ख्यातो यस्तं ब्रह्मा व्यलोकयत्" काशीख० ७३ अ०। २वानरभेदे ३शुद्धमौक्तिके ४मुक्ताविशुद्धौ मेदि० ५देवीप्रणवे कूर्चवीजे (ह्रीँ) तन्त्रसा० ६तारणे विश्वः ७महादेवे "काश्यां विश्वेश्वरोऽहं गिरि-

पतितनयासंयुतो वामभागे शुण्डादण्डेन दक्षे त्रिपथगतटिनीतीरशुद्धाम्बुभागे। मायाबीजस्य कर्णे सुरमुनिसहितो ध्यानयुक्तं वदामि प्रीत्या लोकस्य तस्मात् सुरमुनिगणकैरुच्यते तारनामेति” शब्दार्थचि० धृतवाक्यम् ८रूप्ये न० राजनि०। ६नक्षत्रे न०स्त्री०मेदि०“विपत्तारे गुडं दद्यात्” ताराबलादिन्दुरथेन्दुवीर्य्यात्” ज्योति० त०सां० त० उक्ते अध्ययनरूपे प्रथमे १०गौणसिद्धिभेदे। “ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः। दानञ्च सिद्धयोऽष्टौ सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः” सा० का०। “विहन्यमानस्य दुःखस्य त्रित्वात् तद्विघातास्त्रय इति इमा मुख्याः तिस्रः सिद्धयस्तदुपायतया त्वितरा गौण्यः पञ्च सिद्धयस्तत्रापि हेतुमत्तया तिस्रः हेतुतया पञ्च व्यवस्थिताः। तास्वाद्या अध्ययनादिलक्षणा सिद्धयो हेतवः मुख्यास्तु हेतुमत्यः। विधिवद्गुरुमुखादध्यात्मविद्यानामक्षरस्वरूपग्रहणमध्ययनं प्रथमसिद्धिस्तारमुच्यते” त०कौ० ११विष्णौ पु० “अशोकस्तारणस्तारः शूरः शौरिर्जनेश्वरः” भा० अनु० १४९अ० सहस्रनामकथने। १२उच्चशब्दे पु०। १३तद्वति त्रि० मेदि०। १४स्फुरितकिरणे १५निर्मले त्रि० धर०। दिक्शब्दात् परस् तीरस्य तारादेशः। १६तीरे। दक्षिणतारं दक्षिणतीरमित्यर्थः १७उच्चैस्तरे त्रि० १८नेत्रकनीनिकायां न० स्त्री० “मत्तयेव घूर्णितमन्दतारया” काद०। “तारैर्बभूवे परभागलाभतः” माघः शुद्धमुक्ताफले। “तारहेममहारत्नविमानशतशोभितम्” भाग० ४।६।२७। प्रणवे “तारो मायारमायोगो मनोदीपनमुच्यते”। (ओं श्रीं ह्रीँ) टी० त० “तारं व्योमाग्निमनुयुग्दण्डो ज्योतिर्मनुर्मतः” टी० त०। “हारममलं तरलतारमुरसि दधतम्” जयदेवः। “उरसि निहिततारो हारः” अमरुः। “तारलोलवलयेन करेण” सा० द०।

**तारक** त्रि० तारयति तॄ–णिच्–ण्वुल्। १तारयितरि। “तत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे” जाबालोप०। स्त्रियां कापि अत इत्त्वम्। २दैत्यभेदे तत्कथा शिवपुराणे दृश्या। ३कर्णे ४भेलके च मेदि०। तारैव स्वार्थे क। “तारका ज्योतिषि” पा० अजादि० टाप् न अत इत्त्वम्। तारका। ५नेत्रकनीनिकायां स्त्री। ६चक्षुषि न०स्त्री० मेदि०। “तस्मिन् विप्रकृताः काले तारकेण दिवौकसः” कुमा०। “अभिभाव्यतारकमहर्हिमद्युतिबिम्बमस्तमितभानु नभः” माघः “कुमारस्तुतिषु तारकोद्धरणम्” काद०। न दण्ड्यानां नेत्रोत्पाटनमिति ध्वन्यर्थः। “पतनं तारकादीनाम्” सुश्रु० “तनुप्रकाशेन विचेयतारका” रघुः। “तारकावर्षमिव धर्म्मविनाशपिशुनम्”। “क्वापि विहृत्य दिवावसाने लोहिततारका” काद०। “त्र्यधिकदशयतिर्ननौ रौ भवेतां ररौ तारका, इत्युक्तलक्षणे वृत्तरत्नाकरोक्ते अष्टादशाक्षरपादके ७छन्दोभेदे च। [तत्कथा शिवपु० दृश्या।

**तारकजित्** पु० तारकं दैत्यं जयति जि–क्विप्। कार्त्तिकेये

**तारकाक्ष** पु० तारकासुरस्य ताराक्षापरपर्य्याये पुत्रभेदे “निर्जितेषु च दैत्येषु तारकस्य सुतास्त्रयः। ताराक्षः कमलाक्षश्च विद्युन्माली च पार्थिव!” इत्युपक्रमे “काञ्चनं तारकाक्षस्य चित्रमासीन्महात्मनः। राजतं कमलाक्षस्य विद्युन्मालिन आयसम्” भा० क० ३३अ०। २कुमारानुचरभेदे “महाजठरपादाङ्गास्तारकाक्षाश्च भारत!” भा० श० ४६ अ०।

**तारकब्रह्म** न० कर्म्म०। रामस्य (ओं रामाय नमः) षडक्षरे मन्त्रे। “षडक्षरं महामन्त्रं तारकब्रह्म उच्यते। रामाय नम इत्येतत् प्रणवादि षडक्षरम्” इति अन्योऽपि मन्त्रः पद्मपुर० उक्तो यथा। “मुमूर्षोर्मणिकर्ण्यान्तु अर्द्धोदकनिवासिनः। अहं दिशामि ते मन्त्रं तारकं ब्रह्मवाचकम्। ओँ श्रीरामरामेत्येतन्मन्त्रं तारकमुच्यते। अतस्त्वं जानकीनाथ! परं ब्रह्म विनिश्चितम्”।

**तारकादि** संजातार्थे इतच्प्रत्ययनिमित्ते पा० गण सू० उक्ते शब्दगणे स च गणो यथा “तारका, पुष्प, कर्णक, मञ्जरी, ऋजीष, क्षण, सूत्र मूत्र, निष्क्रमण, पुरीष, उच्चार, प्रचार, विचार, कुड्मल, कण्टक, मुसल, मुकुल, कुसुम, कुतूहल, स्तवक, किसलय, पल्लव, खण्ड, वेग, निद्रा, मुद्रा, बुभुक्षा, धेनुष्या, पिपासा, श्रद्धा, अभ्र, पुलक, अङ्गारक, वर्णक, द्रोह, दोह, सुख, दुःख, उत्कण्ठा, भर, व्याधि. वर्मन्, व्रण, गौरव, शास्त्र, तरङ्ग, तिलक, चन्द्रक, अन्धकार, गर्व, मुकुर, हर्ष, उत्कर्ष, रण, कुवलय, गर्ध, क्षुध्, सीमन्त, ज्वर, गर, रोग, रोमाञ्च, पण्डा, कज्जल, तृष्, कोरक, कल्लोल, स्थपुट, फल, कञ्चुक, शृङ्गार, अङ्कुर, शैवाल, बकुल, श्वभ्र, आराल, कलङ्क, कर्दम, कन्दल, मूर्च्छा, अङ्गार, हस्तक, प्रतिबिम्ब, विघ्न, तन्त्र, प्रत्यय, दीक्षा, गर्ज, (गर्भादप्राणिनि”) “तदस्य

संजातं तारकादिभ्य इतच्" पा० इतच् तारकित अस्य आकृतिगणत्वात् अन्येऽपि शब्दा यथाप्रयोगमवावधेयाः।

**तारकायण** पु० विश्वामित्रपुत्रभेदे "औदुम्बरा ह्यविज्ञाता-स्तारकायणचञ्चुलाः" हरिवं० २७ अ०। विश्वामित्र-पुत्रकथने। [तयोऽप्यत्र।

**तारकारि** पु० ६त०। कार्त्तिकेये हेमच०। तारकगत् प्रभृ-

**तारकित** न० तारका संजाता अस्य तार० इतच्। नक्षत्रयुक्ते आकाशे "सितनिशादर्शादि स्फुटनिपतत्कणगणाधिकतारकिताम्बरः" नैष०।

**तारकिणी** स्त्री तारकाः सन्त्यत्र इनि ङीप्। १नक्षत्रयुक्तायां रात्रौ राजनि० २तारकायुक्ते त्रि० स्त्रियां ङीप्।

**तारकोपनिषद्** स्त्री तारयति ज्ञानदानेन तारि-ण्वुल्। तारिका उपनिषत्। उपनिषद्भेदे उपनिषच्छब्दे दृश्यम्।

**तारक्षिति** पु० तारा उच्चा क्षितिर्यत्र। देशभेदे स च देशः वृ० स० १४ अ० प्रतीच्यामुक्तः "अपरस्यां मणिमान्" इत्युपक्रमे "पञ्चनदरमठपारावततारक्षितिशृङ्गवैश्यकनकशकाः" कूर्म्म०। २उच्चभूमौ स्त्री।

**तारण** पु०तारयत्यनेन ल्युट्। १भेलके रत्ना०। कर्त्तरि ल्यु। २तारयितरि त्रि० ३विष्णौ पु०। "अशोकस्तारणस्तारः" विष्णुस०। ४भावे ल्युट्। ५तारणकरणे ६उद्धारणे च न० "तत्र चोत्पद्यते जन्तुर्भवतां तारणाय वै" भा० अ० १३अ०। भावे युच्। तारणा ७तरणप्रापणे स्त्री "तारणा पारणं चैव तद्व्रतं सर्वकामिकम्" हरिवं०१४० अ०। षष्टिवर्षमध्ये अष्टादशे ८वर्षभेदे। "अति-वृष्टिश्च जायेत धान्यश्चाघ प्रपीड़नम्। शस्यं भवति सामान्यं तारणे सुरवन्दिते !" ज्यो० त०। "तारणं तदनु भूरिवारिदं शस्यवृद्धिमुदितञ्च पार्थिवम्" वृ० स० ८अ०

**तारणि(णी)** स्त्री तार्य्यतेऽनया तॄ-णिच्-अनि। १नौकायां हारा० वा ङीप्। ङीबन्तः २काश्यपपत्नीभेदे याजोप याजयोर्ऋष्योर्मातरि तस्या अपत्यम् ढक्। तारणेय तदपत्ये। "तथैव च महाभागः सोऽपश्यच्छंसितव्रतौ। याजोपयाजौ ब्रह्मर्षी शाम्यन्तौ परमेष्ठिनौ। संहिता-ध्ययने युक्तौ गोत्रतश्चापि काश्यपौ। तारणेयौ युक्त-रूपौ ब्राह्मणावतिसत्तमौ" भा० आ० १६७ अ०।

**तारतण्डुल** पु०तारः शुद्धमौक्तिकमिव शुभ्रस्तण्डुलोऽस्य। धवलयवनाले राजनि०।

**तारतम्य** न० तरतमयोर्भावः ष्यञ्। १न्यूनाधिकत्वे "निर्धनं निधनमेतयोर्द्वयोस्तारतम्यविधिसक्तचेतसाम्। बोधनाय विधिना विनिर्म्मिता रेफ एव जयवैजयन्तिका" इत्युद्भटः। "अहो तारतम्यं नराणाम्" स्वच्छ०ंतरतमशब्दे उदा०।

**तारतार** न० तारयतीति तारं तत्प्रकारः प्रकारे द्वित्वम्। सां० त० उक्ते गौणतृतीयसिद्धिभेदे तारशब्ददर्शिते "ऊहः शब्दोऽध्ययनम्" इत्यादिवाक्ये "ऊहस्तर्कः आगमावि-रोधिन्यायेनागमार्थपरीक्षणम् संशयपूर्वपक्षनिराकरणे-नोत्तरपक्षव्यवस्थापनं तदिदं मननमाचक्षते आगमिनः। सा तृतीया सिद्धिस्तारतारमुच्यते" त० कौ०।

**तारटी** स्त्री तरट्येव स्वार्थे अण् ङीप्। तरटीवृक्षे राजनि० तारटीति पाठान्तरं तत्रार्थे। [राजनि०।

**तारपुष्प** पु० तारं रजतमिव पुष्पमस्य। कुन्दवृक्षे।

**तारमाक्षिक** न० तारं रूप्यमिव माक्षिकम् उपधातुभेदः। रजततुल्ये उपधातुभेदे। "तारमाक्षिममन्यत्तु तद्भवे-द्रजतोपमम्। किञ्चिद्रजतसाहित्यात् तारमाक्षिकमी-रितम्। अनुकल्पतया तस्य ततो हीनगुणाः स्मृताः। न केवलं रूप्यगुणावर्त्तन्ते तारमाक्षिके। द्रव्यान्तरस्य संसर्गात् सन्त्यन्येऽपि गुणा यतः। स्यात् तारमाक्षिकं स्वादु तिक्तं वृष्यं रसायनम्। चाक्षुष्यं वस्तिरुक्कुष्ठ-पाण्डुमेहविषोदरम्। अर्शः शोथं क्षयं कण्डूं त्रि-दोषमपि नाशयेत्। मन्दानलत्वं बलहानिमुग्रां विष्ट-म्भितां नेत्रगदान् सकुष्ठान्। तथैव मालां व्रणपूर्विकाञ्च करोत्यशुद्धं रजताख्यमाक्षिकम्"। शोधनन्तु। "कर्कोटी मेषशृङ्ग्युत्थैर्द्रवैर्जम्बीरजैर्दिनम्। भावयेदातपे तीव्रे विमला शुद्ध्यति ध्रुवम्। विमला तारमाक्षिकम्। मार-णन्तु "कुलत्थस्य कषायेण घृष्टा तैलेन वा पुटेत्। तैलेन वाऽजमूत्रेण म्रियते तारमाक्षिकम्" भावप्र०।

**तारल** पु० तरल एव अण्। १तरले २विटे च शब्दार्थचि०।

**तारवायु** पु० कर्म्म०। अत्युच्चशब्दयुक्ते पवने।

**तारविमला** स्त्री तारो रजतमिव विमला। तारमाक्षिके उपधातुभेदे शब्दार्थचि०।

**तारशुद्धिकर** न० तारस्य रजतस्य शुद्धिं धात्वन्तरयोगात् जातमलशुद्धिं करोति कृ-ट। सीसके तत्सम्पर्काद्धि रजतस्य मलशुद्धिर्लोकसिद्धा राजनि०।

**तारसार** पु० उपनिषद्भेदे उपनिषच्छब्दे दृश्यम्।

**तारहार** पु० तारनिर्म्मितो हारः। १स्थूलमुक्ताहारे "संव-र्द्धितोरःस्थलतारहारः" रघुः।

**तारा** स्त्री तारयति संसारार्णवात् भक्तान् तॄ-णिच्-अच्। १दशमहाविद्यान्तर्गते द्वितीयमहाविद्याभेदे। २नक्षत्रे च

तत्र नक्षत्रादीनां लिङ्गभेदा यथा "हस्ता स्वाती श्रवणा अक्लीबे मृगशिरो नपुंसि स्यात्। पुंसि पुनर्वसुपुष्यौ मूलं त्वस्तो स्त्रियः शेषाः" अधिकनक्षत्रशब्दे १४००पृ० दृश्यम्। "काली तारा महाविद्या षोड़शी भुवनेश्वरी" इत्यादि तन्त्रसा० "तारकत्वात् सदा तारा सुखमोक्षप्रदायिनी। उग्रापत्तारिणी यस्मादुग्रतारा तत· स्मृता" तन्त्रसा० तन्नामनिरुक्तिः। ३बुद्धदेवताभेदे ४बृहस्पतिभार्य्यायाम् मेदि०। ५सुषेणवानरकन्यायां वालिभार्य्यायाञ्च ६चिड़ानामगन्धद्रव्ये ७मुक्तायाञ्च राजनि०। "बृहस्पतेः स वै भार्य्यां तारां नाम यशस्विनीम्। जहार तरसा सर्वानवमत्याङ्गिरःसुतान्। स (चन्द्रः) याच्यमानो देवैश्च तथा देवर्षिभिः सह। नैव व्यसर्जयत् तारां तस्मायाङ्गिरसे तदा" "ददावङ्गिरसे तारां स्वयमेव पितामहः। तामन्तःप्रसवां दृष्ट्वा तारां प्राह बृहस्पतिः। मदीयायां न ते योनौ गर्भो धार्य्यः कथञ्चन। अयोनावुत्सृजत्तं वै कुमारं दस्युहन्तमम्। ईषीकास्तम्बमासाद्य ज्वलन्तमिव पावकम्। जातमात्रः स भगवान् देवानामक्षिपद्वपुः। ततः संशयमापन्नास्तारामूचुः सुरोत्तमाः। सत्यं ब्रूहि सुतः कस्य सोमस्याथ बृहस्पतेः। पृच्छ्यमाना यदा देवैर्नाह सा साध्वसाधु वा। तदा तां शप्तुमारब्धः कुमारो दस्युहन्तमः। तं निवार्य्य ततो ब्रह्मा तारां पप्रच्छ संशयम्। यदत्र तथ्यं तद् ब्रूहि तारे! कस्य सुतो ह्ययम्। सा प्राञ्जलिरुवाचेदं ब्रह्माणं वरदं शनैः। सोमस्येति महात्मानं कुमारं दस्युहन्तमम्" हरिवं० २५ अ०। "सुषेणदुहिता चेयमर्थसूक्ष्मविनिश्चये। औत्पातिके च विविधे सर्वतः परिनिष्ठिता। यदेषा साध्विति ब्रूयात् कार्य्यं तन्मुक्तसंशयम्। न हि तारा मतं किञ्चिदन्यथा परिवर्त्तते" रामा० कि० २२ अ०। सा च पश्चात् वालिनो मरणानन्तरं सुग्रीवभार्य्या "तारया सहितः कामी सक्तः कपिवृषस्तदा" ३१अ० "अहल्या द्रौपदी कुन्ती तारा मन्दोदरी तथा। पञ्च कन्याः स्मरेन्नित्यं महापातकनाशनम्" तत्र मुक्तायां "तारावलीविकरणैर्व्यरुचत् निवासाः" माघः कनीनिकायां "लुलितनयनताराः क्षामवक्त्रेन्दुबिम्बाः" माघः।

ताराश्च अश्विनादयः। ज्यो० त० ताः तद्विशेषादिकञ्चोक्तं यथा

"अश्विनी भरणी चैव कृत्तिका रोहिणी तथा। मृगशीर्षं तथा चार्द्रा पुनर्वसुकपुष्यकौ। अश्लेषा च मघा पूर्वफल्गुन्युत्तरफल्गुनी। हस्ता चित्रा तथा स्वाती विशाखा चानुराधिका। ज्येष्ठा मूलं तथाषाढ़े पूर्वोत्तरपदादिके। श्रवणा च धनिष्ठा च शतभिषाद्यभाद्रिका। उत्तरादिभाद्रपदा रेवती भानि च क्रमात्"। "अश्वियमदहनकमलजशशिशूलभृददितिजीवफणिपितरः। योन्यर्य्यमदिनकृत्त्वष्टृपवनशक्राग्निमित्राः। शक्रो निरृतिस्तोयं विश्वविरञ्चौ हरिर्वसुर्वरुणः। अजपादोऽहिर्बुध्नः पूषा चेतीश्वरा भानाम्" विशाखायाः शक्राग्न्योर्मिलितदैवतत्वम् अभिजितोभिन्नत्वेन अष्टाविंशतिरिति तत्र वक्ष्यते इति नक्षत्राधिपाः "उग्राः पूर्वमघान्तका ध्रुवगणस्त्रीण्युत्तराणि स्वभं वातादित्यहरित्रयं चरगणः पुष्याश्विहस्ता लघुः। चित्रा नित्ररगान्त्यभं मृदुगणस्तीक्ष्णोऽहिरुद्रेन्द्रयुक्। मिश्रोऽग्निः सविशाखभः शुभकराः इत्थं स्वकृत्ये गणाः।" "शशाङ्कतारयोः शुद्धिर्विचार्य्या सर्वकर्म्मसु। ग्रहाणामपि सर्वेषां तच्छुद्धौ फलदाहृता"। श्रीपतिसमुच्चये "ताराचन्द्रबले प्राप्ते दोषाश्चान्ये भवन्ति ये। ते सर्वे विलयं यान्ति सिंहं दृष्ट्वा गजा इव। जन्मसम्पत् विपत्क्षेमं प्रत्यरिः साधको वधः। मित्रं परममित्रञ्च जन्मभाच्च पुनःपुनः। सर्वमङ्गलकार्य्याणि त्रिषु जन्मसु कारयेत्। विवादश्राद्धभैषज्ययात्राक्षौरादि वर्जयेत्। यात्रायां पथि बन्धनं कृषिविधौ सर्वस्य नाशो भवेत्। भैषज्ये मरणं तथा सुनियतं दाहो गृहारम्भणे। क्षौरे रोगसमागमो बहुविधः श्राद्धेऽर्थनाशस्तथा वादे बुद्धिविनाशनं युधि भयं प्राप्नोत्ययं जन्मभे। पापाख्या तु त्रिविधा पञ्चचतुर्दशविंशतिस्त्रियुता। सिद्धिफला वृद्धिकरी विनाशसंज्ञा क्रमात् कथिता"। "जन्माद्यं कर्म्म ततोऽपि दशमं सांघातिकं षोड़शकम्। समुदयमष्टादशभं विनाशसंज्ञं त्रयोविंशम्। आद्यात्तु पञ्चविंशम् मानसमेवं नरः षड्भः स्यात्। नवनक्षत्रोऽवनिपतिः स्वजातिदेशाभिषेकर्क्षैः"। जात्यर्क्षन्तु। "पूर्वात्रयं सानलमग्रजानां राज्ञान्तु पौष्णेन सहोत्तराणि। सपौष्णमित्रं पितृदैवतञ्च प्रजापतेर्भञ्च कृषीवलानाम्। आदित्यहस्ताभिजिदश्विभानि नाम्यन्त्यजातेः प्रभविष्णुतायाम्"। (देशभं देशनामर्क्षम्)। नाड़ीनक्षत्राणि। "देहाद्देहार्थहानिः स्याज्जन्मर्क्षे उपतापिते। कर्म्मर्क्षे कर्म्मणां हानिः पीड़ा मनसि मानसे। मूर्च्छिद्रविणबन्धूनां हानिः सांघातिके तथा। संतप्ते सामुदयिके

मित्रभ्यश्चार्थसंचयः। वैनाशिके विनाशः स्यात् देहद्रविणसम्पदाम्”। नाडीनक्षत्रफलम्। “जातिभे कुलनाशः स्याद्वन्धनञ्चाभिषेकभे। देशभे देशभङ्गः स्यात् क्रूरैरेवं शुभैः शुभम्। यस्मिन्राजाभिषिक्तोभवति तदाभिषेचनिकभम् अ इ उ ए कृत्तिका ओ व वि वु रोहिणीत्यादिदेशभम् (चक्रशब्दे १२४८पृ०शतपदचक्रं दृश्यम्)। उग्रादिगणादिकार्य्यभेदः मु० चि० उक्तो यथा

“उत्तरात्रयरोहिण्यो भास्करश्च ध्रुवं स्थिरम्। तत्र स्थिरं वीजगेहशान्त्यारामादिसिद्धये। स्वात्यादित्ये श्रुतेस्त्रीणि चन्द्रश्चापि चरं चलम्। तस्मिन् गजादिकारोहो वाटिकागमनादिकम्। पूर्वात्रय याम्यमघे उग्रं क्रूरं कुजस्तथा। तस्मिन् घाताग्निशाठ्यानि विषशस्त्रादिसिध्यति। विशाखाग्नेयभे सौम्यो मिश्रं साधारणं स्मृतम्। तत्राग्निकार्य्यमिश्रं च वृषोत्सर्गादिसिद्धये। हस्ताश्विपुष्याभिजितः क्षिप्रं लघु गुरुस्तथा। तस्मिन् पण्यरतिज्ञानं भूषाशिल्पकलादिकम्। मृगान्त्यचित्रामित्रर्क्षं मृदु मैत्रं भृगुस्तथा। तत्र गीताम्बरं क्रीड़ा मित्रकार्य्यं विभूषणम्। मूलेन्द्रार्द्राहिभं सौरिस्तीक्ष्णं दारुणसंज्ञकम्। तत्राभिचारघातोग्रभेदाः पशुदमादिकम्। मूलाहिमिश्रोग्रमधोमुखं भवेदूर्द्धास्यमार्द्रेज्यहरित्रयं ध्रुवम्। तिर्य्यङ्मुखं मैत्रकरानिलादितिज्येष्ठाश्विनानीदृशकत्रयमेषु”।

**ताराकूट** न० दम्पत्योर्विवाहशुभाशुभज्ञापके कूटभेदे उपयमशब्दे १२४८ पृ० दृश्यम्। “वर्णो वश्यस्तथा तारा योनिश्च ग्रहमैत्रकम्। गणमैत्रं भकूटञ्च नाडी चैते गुणाधिकाः” मुहू० चि०। [भेदे तारकाक्षशब्दे दृश्यम्।

**ताराक्ष** पु० तारकाक्षापरपर्य्यायके तारकासुरस्य पुत्रे दैत्य-

**ताराचक्र** न०तन्त्रोक्ते दीक्षणीयमन्त्रशुभाशुभज्ञानार्थे चक्रभेदे तत्स्वरूपादि चक्रशब्दे २८०६पृ०नक्षत्रचक्रे दृश्यम्।

**ताराचमन** न० तारायाः पूजाद्यङ्गमाचमनम्” शा० त०। तारादेवीपूजाद्यङ्गे आचमनभेदे तच्च भैरवतन्त्रे उक्तं यथा “ताराभेदैस्त्रिभिः पीत्वा मायया क्षालयेत् करम्। ॐ ओष्ठौ तु द्विरुन्मृज्य फट्कारैः क्षालयेत् करम्। आस्यं नासे दृशौ श्रोत्रे नाभिवक्षःशिरोभुजान्। वैरोचनादिभिः स्पृष्ट्वा सर्वपापैः प्रमुच्यते। आचम्य भैरवो भूत्वा वत्सरात्तां प्रपश्यति”। ताराभेदैरिति। उग्रतारैकजटानीलसरस्वतीभेदैः। वैरोचनादयस्तु। वैरोचन, शङ्ख, पाण्डर, पद्मनाभ नामक, मामक, पाण्डर, तारकाऽसिताङ्ग, यमान्तक, विघ्नान्तक, नरान्तकाः, सचतुर्थीप्रणवादिनमोऽन्तकाः” कृष्णानन्दतन्त्रसा०।

**ताराधिप** पु० ६त०। १चन्द्रे २शिवे ३वृहस्पतौ ४वालिवानरे ५सुग्रीवे च। “ततार ताराधिपखण्डधारी” कुमा०। “ताराधिपे बलिनि लग्नगतेऽथ वास्मिन्” ज्यो०त०। तारापतितारानाथादयोऽप्यत्र। “कठोरतारापतिलाञ्छनच्छविः” माघः। ६नक्षत्राधिपेषु अश्विनीकुमारादिषु ताराशब्दे दृश्यम्।

**तारापथ** पु० ताराणां पन्थाः अच् समा०। आकाशे हला०

**तारापीड़** पु० ताराणामापीड़ः भूषणमिव। चन्द्रे त्रिका०।

**ताराप्रमाण** न० अश्विन्यादिनक्षत्राणां स्वरूपावेदकसंख्याविशेषे स च वृ० सं० ६८ अ० सप्रयोजनमुक्तो यथा

“शिखिगुणरसेन्द्रियानलशशिविषयगुणर्तुपञ्चवसुपक्षाः। विषयैकचन्द्रभूतार्णवाग्निरुद्राश्विवसुदहनाः। भूतशतपक्षवसवो द्वात्रिंशच्चेति तारकामानम्। क्रमशोऽश्व्यादीनां कालस्तारप्रमाणेन। नक्षत्रजमुद्वाहे फलमब्दैस्तारकामितैः सदसत्। दिवसैर्ज्वरस्य नाशो व्याधेरन्यस्य वा वाच्यः”।

**ताराभूषा** स्त्री तारा भूषा यस्याः। रात्रौ राजनि०।

**ताराभ्र** पु० तारो निर्मलः जलशून्यः अभ्रो मेघ इव शुभ्रत्वात्। कर्पूरे राजनि०।

**तारामण्डल** न० ताराणां मौक्तिकानां मण्डलं यत्र। ईश्वरमण्डपभेदे शब्दरत्ना०। ६त०। २नक्षत्रमण्डले च।

**तारामृग** पु० तारारूपः मृगः मृगशिरः। मृगशिरोनक्षत्रे “अन्वधावत् मृगं रामो रुद्रस्तारामृगं यथा” भा०व०२७७ अ० “तारारूपं मृगम् तारामृगं० प्रजापतिः स्वां दुहितरं मृगो भूत्वा जगाम तस्य रुद्रः शिरोऽच्छिनत् तदेव मृगशिरो नक्षत्रम्” नीलक०। “एष चैव मृगः श्रीमान् यश्च दिव्यो नभश्चरः। उभावेतौ मृगौ दिव्यौ तारामृगमहीमृगौ” रामा० अर० ४३।२।स०।

**तारारि** पु० ६त०। विटमाक्षिके उपधातुभेदे हेमच०।

**तारावती** स्त्री ककुत्स्थराजभार्य्यायां मनोन्मथिन्यां जातायां दुर्गावतारभूतायां कन्यायां शिवावतारचन्द्रशेखरपत्न्याम्। तत्कथा कालिकापु० ४७ अ० यथा।

“काकुत्स्थो भार्य्यया सार्द्धमत्यन्तमुदितोऽभवत्। सहजेनाथ हारेण भूषिता सा ककुत्स्थजा। ववृधे मन्दिरे तस्य वर्षास्विव सुरापगा। तेनैव हारचिह्नेन तस्यास्तारावतीति वै, नामाकरोत् पिता काले यथोक्तं नृपसत्तम!”। “पतिं पूर्ववरं पुत्री राज्ञस्तारावती सती। स्वयं सा पार्वती देवी वव्रे च चन्द्रशेखरम्। वैवाहि-

केन विधिना स राजा चन्द्रशेखरः। तारावतीं तदा भार्य्यां ककुत्स्थनृपतेः सुताम्। संकल्प्य स्नापयामास देवेभ्यो वैदिकैर्मखैः”

**ताराषोढ़ा** स्त्री ६त०। तारापूराङ्के षोढ़ान्यासभेदे तन्त्रसारे ताराक्र० दृश्यम्। “इति षोढ़ा च कथिता तारायाः सर्वसिद्धिदा” तन्त्रसा०। [ताड़िकाशब्दे दृश्यम्।

**तारिका** स्त्री ताड़िका डस्य रः। तालरसजाते मद्यभेदे।

**तारिन्** त्रि० तारयति तॄ—णिच्—णिनि। १तारके। स्त्रियां ङीप्। सा च दशसु महाविद्यासु २द्वितीयविद्यायाम् तद्भेदाः तन्त्रसारे उक्ता यथा “तारा चोग्रा महोग्रा च वज्रा काली सरस्वती। कामेश्वरी च चामुण्डा इत्यष्टौ तारिणी गणाः। अथ भेदान् प्रवक्ष्यामि तारिण्याः सर्वसिद्धिदान्। येषां विज्ञानमात्रेण जीवन्मुक्तो हि साधकः” इत्युपक्रमे तासामभिधानम्। ३बुद्धदेवताभेदे त्रिका०।

**तारुक्ष्य** पु० तरुक्षस्यर्षेरपत्यं गर्गा० यञ्। तरुक्षर्षेरपत्ये। स्त्रियां लोहिता० ष्फ। तारुक्ष्यायणी। यूनि तु तारुक्ष्यायण फक्। यूनि तदपत्ये स च गोत्रप्रवरान्तर्गतः। [स्त्रियां ङीप्।

**तारुण** पुंस्त्री तरुणस्यापत्यम् उत्सा० अञ्। तरुणस्यापत्ये

**तारुण्य** न० तरुणस्य भावः ष्यञ्। यौवने अमरः। “कान्ता गाढ़तारुण्याः समस्तरतकोविदाः” सा० द०। “ततः स राजा तारुण्यादौरसेन बलेन च” भा०शा०१२५ अ०।

**तारेय** पु० ताराया अपत्यम् ढक्। अङ्गदे १वालिपुत्रे। “करिष्यत्येष तारेयस्तेजस्वी तरुणोऽङ्गदः” रामा० कि०२२सर्गः। २बृहस्पतिभार्य्यायास्तारायाश्चन्द्रजे पुत्रे बुधे च।

**तार्कव** त्रि० तर्क्वोर्विकारः कोपधत्वात् अण्। तर्क्वुविकारे सि० कौ०। [२तर्कशास्त्राभिज्ञे च।

**तार्किक** त्रि० तर्कं वेत्ति तच्छास्त्रमधीते वा ठञ्। १तर्कवेत्तरि

**तार्क्ष** पु० तृक्ष एव स्वार्थे अण्। कश्यपे ऋषौ। “प्रमथ्य तरसा राज्ञः शाल्वादींश्चैद्यपक्षगान्। पश्यतां सर्वलोकानां तार्क्षपुत्रः सुधामिव” भाग०। २ पातालगरुड़लतायां स्त्री राजनि० गौरा० ङीष्।

**तार्क्ष्य** पु० तृक्षस्य गोत्रापत्यं गर्गा० दृत्वेत्यत्र तृक्षेति पाठान्तरात् यञ्। १तृक्षस्य गोत्रापत्ये स्त्रियां लोहि० ष्फ। तार्क्ष्यायणी। २गरुड़ाग्रजे अरुणे ३गरुड़े ४अश्वे ५सर्पे पुंस्त्री० ६रसाञ्जने च मेदि०। ७शालवृक्षे ८स्वर्णे च शब्दर० ९अश्वकर्णवृक्षे १०स्यन्दने हेमच०। ११पर्वतभेदे १२विहगमात्रे। “अयमुत्तरात् संयद्वसुस्तस्य तार्क्ष्यारिष्टनेमिश्च सेनानीग्रामण्यौ” यजु० १५।१८। “तीक्ष्णेऽन्तरीक्षे क्षिपति पक्षौ तार्क्ष्यः” वेददी० धृषो०। तत्र गरुडे “आरुह्य तार्क्ष्यं नभसीव भूतले” माघः “भवन्ति निर्विषाः सर्पाः यथा तार्क्ष्यस्य दर्शनात्” पञ्चत०। “त्रस्तेन तार्क्ष्यात् किल कालियेन” रघुः। “दशरात्रमुपयुज्य सर्वं तरति किल्बिषं तार्क्ष्यदर्शनमुपपद्यते” सुश्रुतः। तार्क्ष्यस्येव दर्शनं दूरात् दर्शनमित्यर्थः। सर्पे “त्रिपदाः शिखिनस्तार्क्ष्याश्चतुर्द्दंष्ट्राः विषाग्निनः” भा०भी० ९ अ०। [शब्दार्थचि०।

**तार्क्ष्यज** न० तार्क्ष्ये पर्वते जायते जन—ड। रसाञ्जने

**तार्क्ष्यध्वज** पु० तार्क्ष्यो ध्वजोऽस्य। गरुड़ध्वजे विष्णौ हेमच० तार्क्ष्यकेतनादयोऽप्यत्र।

**तार्क्ष्यनायक** पु० ६त०। गरुडे राजनि० तार्क्ष्यनाथादयोऽप्यत्र

**तार्क्ष्यप्रसव** पु० तार्क्ष्यः शैलः प्रसवोऽस्य। अश्वकर्णवृक्षे राजनि०

**तार्क्ष्यशैल** न० तार्क्ष्यशैले भवम् अण्। रसाञ्जने राजनि० “सिन्धूद्भूतं चक्रमर्दस्य बीजमित्युद्भूतं केशरं तार्क्ष्यशैलम्”। “लौहं चूर्णं मागधी तार्क्ष्यशैलं तुल्याः कार्य्याः कृष्णवर्णास्तिलाश्च” सुश्रुतः।

**तार्क्ष्यसामन्** न० सामभेदे लाट्या०१।६।१८।

**तार्क्ष्यायण** पुंस्त्री० तृक्षस्य ऋषेरपत्यं युवा गर्गा० दृत्वेत्यत्र तृक्षेति पाठान्तरात् यञ् यूनि फक् अनातीत्युक्तेरापत्यस्य यस्य लोपो न। तृक्षर्षेर्यून्यपत्ये। [शब्दरत्ना०।

**तार्क्षी** स्त्री तार्क्ष्यस्य खगस्य प्रिया अण्। वनलताभेदे

**तार्ण** त्रि० तृणस्येदं शिवा० अण्। १तृणसम्बन्धिनि २तृणजन्ये वह्नौ पु०। “तार्णातार्णाभयं नास्तीत्यत्र तार्णत्वमतार्णत्वञ्च वह्नित्वव्याप्यौ जातिभेदः इति नव्य नैयायिकाः। तृणात् तद्विक्रयात् स्थानादागतः आयस्थानत्वात् शुण्डिका० अण्। ३तृणविक्रयरूपार्थस्थानजे करे त्रि०।

**तार्णक** त्रि० तृणानि सन्त्यस्मिन् कण् कुक् च तार्णकीयास्तस्मिन् भवः बिल्वका० छमात्रस्य लुक्। तृणयुक्तदेशभवे।

**तार्णकर्ण** पुंस्त्री० तृणकर्णस्यापत्यं शिवा० अण्। तृणकर्णस्यर्षेरपत्ये। [नामकर्षेर्गोत्रापत्ये।

**तार्णायन** पुंस्त्री तृणस्यर्षेर्गोत्रापत्यम् नडा० फक्। तृण-

**तार्त्तीय** त्रि० तृतीय एव स्वार्थे अण्। तृतीये “प्रथमस्य तूत्तरस्याङ्गस्तार्त्तीयं तृतीयं सवनम्” आश्व० श्रौ० १।१।४

**तार्त्तीयीक** त्रि० तृतीय एव तृतीय+स्वार्थे ईकक्। तृतीये “तार्त्तीयीकं पुरारेस्तदवतु मदनप्लोषणं लोचनं वः” मालतीमाधवम्।

**तार्य्य** त्रि० तॄ—कर्मणि ण्यत्। तरणीये। "नौतार्य्यां तां नदीं तरेत्" भा० शा० १२४६ श्लो० "नाव्यं त्रिलिङ्गं नौतार्य्यम्" अमरः। तरे देयम् ष्यञ्। २तरणार्थे देये शुल्के च। "भाण्डपूर्णानि यानानि तार्य्यं दाप्यानि सारतः" मनुः।

**ताल** पु० तल एव अण्। १करतले शब्दार्थचि०। ताड्यते तड—आघाते कर्मणि अच् डस्य लः। १हरिताले २तालीशपत्रे न० राजनि० ३दुर्गासिंहासने न० हेमच० तालस्येदम् अण् तस्य लुक्। ४तालफले न०। अङ्गुष्ठमध्यमाभ्यां मिते ५परिमाणे ६करास्फालने ७कांस्यनिर्मितवाद्यभेदे (करताल) ८त्सरौ खड्गमुष्टौ च पु० मेदि० ९स्वनामख्याते वृक्षभेदे भावप्र०।

"पक्वं तालफलं पित्तरक्तश्लेष्मविवर्द्धनम्। दुर्जरं बहुमूत्रञ्च तन्द्राऽभिष्यन्दशुक्रदम्। तालमज्जा तु तरुणः किञ्चिन्मदकरो लघुः। श्लेष्मलो वातपित्तघ्नः सस्नेहो मधुरः सरः। तालमज्जा तालफलवीजमज्जा। तालजं तरुणं तोयमतीव मदकृन्मतम्। अम्लीभूतं तदा तत् स्यात् पित्तकृद्वातदोषहृत्" भावप्र०। "तालो द्वादशभिर्जानुपरिणाहपरिभ्रमैरिति" उक्ते १०मानविशेषे। हस्तेन जानुमण्डलपरिभ्रमणं यावत्याकालमात्रया क्रियते तावतीभिर्द्वादशभिस्तालाख्यः कालांशो ज्ञेयः इत्यर्थः। ११गीतकालक्रियामाने। "इयं स्वर इयत्कालं गेयः इयत्कालं विलम्बित इयत्कालं द्रुतम् इयत्कालं मध्यमिति बोधयितुं देहगैर्हस्तैरङ्गुल्याकुञ्चनप्रसारणाक्रियाभिर्नर्त्तितव्यं गातव्यञ्चेति कालक्रिययोः प्रमाणं तालः। इदमियत्कालं गेयमिति कालेनाङ्गुल्याद्याकुञ्चनादिक्रियामानं ताल इति यावत्। "कालस्य एकद्वित्रिमात्राद्युच्चारणनियमितस्य क्रियायाः परिस्पन्दात्मिकायाः परिच्छेदहेतुस्तालम्" इति मधुसू०। "कालेन नर्त्तनगलवादनक्रियाणां मानं तालः ताराद्येककालमेषां विरामस्ताल इत्यन्ये" इत्यमरटीकायां भरतः। तन्निरुक्तिस्तु गौरीहरयोर्नृत्येन तालो बभूव। तथा हि। हरनृत्यस्य ताण्डवं गौर्य्यानृत्यस्य लास्यम् इति संज्ञा पुरुषनृत्यस्य ताण्डवं नार्य्यानृत्यस्य लास्यमिति नियमात्। ताण्डवस्याद्याक्षरेण लास्यस्याद्याक्षरेण च मिलित्वा ताल इति संज्ञा जाता इति" संगीतशास्त्रे तस्य भेदा यथा "चर्चत्पुट १ चाचपुटः २ ३षट्पितापुत्रकस्तथा। ४उद्घट्टकः ५सन्निपातः ६कङ्कणः ७कोकिलारवः। ८राजकोलाहलो ९रङ्गविद्याधर१०शचीप्रियौ। ११पार्वतीलोचनो १२राजचूडामणि १३जयश्रियौ १४वादकाकल १५कन्दर्प १६नलकूवर १७दर्पणाः। १८रतिलीलो १९मोक्षपतिः २०श्रीरङ्गः २१सिंहविक्रमः। २२दीपको २३मल्लिकामोदो २४गजलीलश्च २५चर्च्चरी। २६कुहक्को २७विजयानन्दो २७वीरविक्रम २८टेङ्किकौ। २९रङ्गाभरण ३०श्रीकीर्त्ति ३१वनमालि३२चतुर्मुखाः। ३३सिंहनन्दन ३४नन्दीश ३५चन्द्रविम्ब ३६द्वितीयकाः। ३७जयमङ्गल ३८गन्धर्व ३९मकरन्द ४०त्रिभङ्गयः। ४१रतितालो ४२वसन्तश्च ४३जगझम्पो ४४ऽथ मारुतिः। ४५ कविशेखर ४६घोषौ च ४७हरवल्लभ४८भैरवौ४९। गतप्रत्यागतो ५०मल्लतालो ५१भैरवमस्तकः ५२। सरस्वतीकण्ठाभरणः ५३क्रीड़ा ५४निःसारुरेव च ।५५मुक्तावली ५६रङ्गराज५७भरतानन्दा५८ऽऽदितालकाः५९। सम्पक्वेष्टक६० इत्यादि ताला भरतसंमताः। संक्षेपतो निगदिता अथैषां लक्षणं तथा। अर्द्धमात्रं द्रुतं ज्ञेयमेकमात्रं लघु स्मृतम्। द्विमात्रन्तु गुरु ज्ञेयं त्रिमात्रन्तु प्लुतं मतम्। ताले चर्च्चत्पुटे ज्ञेयं गुरु द्वन्द्वं लघुः प्लुतः १। गुरुर्लघुः प्लुतश्चैव भवेच्चाचपुटाभिधे २। गलागलगलाश्चैव षट्पिता पुत्रके मताः३। उद्घट्टके तु गमनाः४ सन्निपाते गुरुर्मतः५। चतुर्विधः परिज्ञेयस्तालः कङ्कणनामकः ६। पूर्णः खण्डः समश्चैव विषमश्चैव कथ्यते। लचतुष्कं गणौ पूर्णे खण्डे विन्दुद्वयं गुरुः। यगणस्तु समे ज्ञेय स्तगणो विषमे भवेत्। खचतुष्कं सयत्यन्तं गुरुर्विन्दुचतुष्टयम्। सयत्यन्तं लघुश्चैव तालोऽयं कोकिलारवः ७ लचतुष्कं सयत्यन्तं खत्रयं खत्रयं लघुः। लघुर्विन्दुद्वयञ्चेति राजकोलाहलाभिधे ८। खद्वयं द्वौ प्लुतौ यत्र रङ्गविद्याधरः स तु ९। लघूनि त्रीणि यत्र स्युर्गुरूणि त्रीणि यत्र वै। प्लुतद्वयञ्च यत्रास्ति स तालः स्याच्छचीप्रियः १०। खद्वयं गुरुलौ विन्दुर्गौ प्लुतौ गौ प्लुतौ पुनः। यत्र तालः स विज्ञेयः पार्वतीलोचनाभिधः११। राजचूड़ामणौ विन्दुर्लश्च विन्दुर्लगौ मतौ१२। रगणोनो गुरुश्चैव जयश्रीरिति कथ्यते १३। प्लुतौ लघुचतुष्कञ्च मौ नौ द्रुतयुगं लघुः। लचतुष्कं विना शब्दं तालः स्याद्वादकाकलः १४। द्रुतद्वयं यकारश्च कन्दर्पोऽपि प्रकीर्त्तितः१५। चत्वारो गुरवो यत्र चत्वारः प्लुतका अपि। लघ्वक्षराणि चत्वारि तालोऽयं नलकू-

वरः १६ । बिन्दुद्वयं गुरुश्चैव भवेद्यत्र स दर्पणः १७ । रतिलीले विधातव्यं लघुद्वन्द्वं गुरुद्वयम् १८ । आदौ षोड़श गुरवो द्वात्रिंशल्लघवस्ततः । चतुःषष्टिद्रुता यत्र सोऽयं मोक्षपतिर्मतः १९। श्रीरङ्गसंज्ञके ताले सगणाल्लः प्लुतौ मतौ२० । सिंहविक्रमताले तु सगणो नखगाः खगौ २१। प्लुतो नश्च प्लुतश्चैव ताले दीपकनामनि २२ ताले स्यात्मल्लिकामोदे लद्वयं खचतुष्टयम् २३। लचतुष्कं विरामान्तं गजलीले प्रकीर्त्तितम्२४ । अष्टतालस्तु चर्च्चर्यां विरामान्तौ द्रुतौ लघुः २५ । द्रुतद्वन्द्वं भवेत्ताले क्रुड-क्काख्ये लघुद्वयम्२६। भवेच्च विजयानन्दे लत्रयञ्च लघुत्र-यम्२७। वीरविक्रमताले तु द्रुतौ लगौ ततः प्लुतः २८। टेङ्किका रगणेन स्यादेतेनैव कृतास्पदे २९ । भगणो ग प्लुतौ स्यातां रङ्गाभरणनामके ३०। श्रीकीर्त्तिसंज्ञके ताले गुरुद्वन्द्वं लघुद्वयम् ३१ । चतुर्द्रुता लघू द्वौ तु द्रुतो गो वनमालिनि३२। चतुर्मखाभिधे ताले यगणानन्तरं प्लुतः। ३३ । भश्च प्लुतो लगौ बिन्दुद्वयं गौ नः प्लुतस्तथा । लघुः प्लुतो द्रुतश्चैको लघुद्वयमथापि च । निःशब्दं च चतुष्कञ्च ताले स्यात् सिंहनन्दने ३४। गो लघुर्गौ लघुः प्लुतस्ताले नन्दीश्वरे मतः ३५ । गो द्रुतौ नौ प्लुतद्वन्द्वं चन्द्रबिम्बे प्रकीर्त्तितम् ३६ । द्रुतद्वन्द्वं लघुश्चैकस्ताले स्यात्तु द्वितीयके ३७ । सकारश्च यकारश्च जयमङ्गल-नामनि ३८। चत्वारो गुरवो बिन्दवश्चत्वारश्च प्लुता अपि । बिन्दवो दश षट् लाश्च ताले गान्धर्वसंज्ञके ३९। मकरन्दे द्रुतद्वन्द्वं लघुद्वन्द्वमथो गुरुः ४० । गुरुर्लघुः प्लुतश्चैव त्रिभङ्गिः परिकीर्त्तिता ४१ । गुरुद्वयं लघुद्वन्द्वं रतिताले प्रकीर्त्तितम्४२ । वसन्तताले कर्त्तव्यो नगणो मगण स्तथा४३ । जगणश्च गुरुश्चैको विरामान्तञ्च खद्वयम् ४४ । गप्लुतौ लौ द्रुतौ लश्च प्लुतो मारुतिनामनि४५। कविशे-खरे प्लुतः शून्यं नगौ लश्च ततो लघुः४६। खचतुष्कं विना शब्दं यत्र बोधः स उच्यते ४७। हरवल्लभताले च प्लुतो लो गौ च खद्वयम्४८ । भगणः प्लुतौ गणौ गयौ प्लुतौ लघुश्च भैरवे४९। गतप्रत्यागते ताले लो मौ गौ नौ प्रकीर्त्तितौ५०। चतुर्लघु मल्लताले विरामान्तं द्रुतद्वयम्५१। लगौ गौ मो नगौ गश्च खद्वयं लद्वयं पुनः । नचतुष्कं विना शब्दं ताले भैरवमस्तके५२। सरस्वतीकण्ठाभरणे गौ लघुश्च द्रुतद्वयम् ५३ । एक एव प्लुतो यत्र क्रीड़ातालः स उच्यते ५४ । द्रुतद्वयं विरामान्तं ताले निःसारके मतम् ५५ । खत्रयं सविरामान्तं नौ पुनः खत्रय-न्तथा । प्लुतौ गः खयुगं गश्च यत्र मुक्तावली तु सा५६ । लगौ बिन्दुयुगं गौ लौ रङ्गराजे प्रकीर्त्तितः ५७। खद्वयं सविरामान्तं गुरुः प्लुतद्वयं लघुः । यत्र ताले स विज्ञेयो भरतानन्दसंज्ञकः ५८। आदिताले लघुश्चैक इत्याह भरतो मुनिः ५९ । सगणश्च प्लुताद्यन्तःसंपक्वे-ष्टकतालके ६०। एकाधिकशते ताले षट्पर्श्वस्तमा इमे"।

अथ प्लुतादिमात्राभेदेन तालघातनम् । "ताले निष्पात-हस्तः प्लुतमनुघटयेद्घातमेकं सशब्दं तत्पश्चात् द्वौ च घातौ निनदविरहितौ दर्शयेदूर्द्ध्वतोऽधः। शुन्यत्वात् पक्वता-लाविति जगति पुनः स्वल्पसङ्गौ सनन्दा विल्वं घातत्रयं तत् त्रिफलततुवहिर्वर्द्धयेद्दुर्लकारम । एको घातः स-शब्दो द्विकल इह गुरौ शब्दहीनस्तथान्यः सोऽप्यूर्द्ध्वं याति बीलावलयवलयितोत्तानहस्ताङ्गुलीभिः । किञ्चो-च्चैकैकमात्रा सशुदयिनि लघौ घात एको निनादी घात्यो मात्रार्द्धभाजि द्रुतवपुषि लघोरर्द्धनादेन घातः" । संगी० दा० १स्तवकः ।

"आदावष्टस्तथा रुद्रो ब्रह्म इन्द्रश्चतुर्दशः। दशावतारवम्बा-दिक्त्यनाट्यं ततः परम् ।"

अथाष्टतालभेदाः । "आड़ः१ दोजः२ ज्योतिः३ चन्द्रशेखर४ गञ्जनं५ पञ्चतालः६ रूपकं७ समतालः८।"

तत्र रुद्रतालस्य भेदाः । वीरविक्रमः१ । विषमवसन्तः२ धरणं३ वीरदशकः४मण्डूकः५ कन्दर्पः६ डाँशपाहिड़ः७ ध्रुवचरणं८ दशकोषी९ गजेन्द्रगुरुः१० कुटका११।"

अथ ब्रह्मतालभेदाः"ब्रह्मा१ विरामब्रह्म२ षट्कला३ सप्तमात्रा४"

अथेन्द्रतालभेदाः।"देवसारः१ देयचाली२मदनदोला३ गुरु-गन्धर्वः४ पञ्चाली५ इन्द्रभाषः६ ।"

अथ चतुर्द्दशतालभेदाः ।"चिङ्गतालः१चन्द्रमाला२ देवमाला३ अर्द्धज्योतिः४ स्वर्णसारः५ चमाष्टः६ धराधारा७ वस-न्तवाक८ काककला९ कीरशब्दा१० तालवी११ हर्षधारिका१२ भाषा१३ अर्द्धमाला१४ ।"

क्रमेणैषां लक्षणादि तत्रापि अष्ट तालभेदस्य लक्षणानि यथा "एकतालस्ततः शून्यं युगलं तालिका परे । सङ्गीते प्रथमः चार आड़तालः प्रकीर्त्तितः१ । एकतालञ्च शून्यञ्च क्रमेणापि त्रिधा भवेत् । शेषश्शून्यं कलाभेदे दोजाख्यश्च भवेत् पृथक् २ । प्रथमं युगलं तालं एक एकस्तथा परे । कलाभेदे मानमेवं ज्योतिश्च परिकीर्त्तितम् ३ । चन्द्रश्चन्द्रस्तथा युग्मं तथा चन्द्र-स्तथा परे । षट् तालानि भवन्त्येवं चन्द्रशेखर-

भाषितः ४। एकतालो भवेत् स्पष्टः क्रमेणापि चतुष्टयम् । शेषमून्यं गजनञ्च सर्वतो मुनिभाषितम्५ । प्रथमं युगलञ्चैव तत्परं तालमेककम् । शेषे युग्मं तथा शून्यं पञ्चतालं प्रकीर्त्तितम् ६ । युगलं प्रथमं तालं तत्परन्त्वेकशून्यकम् । शेषे च युगलं तालं रूपकं परिकीर्त्तितम्७। एकतालं तथा शून्यं क्रमेण द्विविधं भवेत् । शेषे युगलतालञ्च समतालं भवेत् परम् ८।"

रुद्रतालभेदलक्षणादि "एकतालं तथा शून्यं क्रमेण त्रिविधं भवेत् । तत्परं युगलं ताल इत्येव वीरविक्रमः१। युग्मतालं तथा शून्यं तत्परं हयतालकम् । शेषे च युगलं तालं समुद्रविषमं स्मृतम् २ । युग्मतालञ्च शून्यञ्च एकतालञ्च तत्परे । शेषैकञ्च त्रिशून्यञ्च विषमं चरणं भवेत् ३ । एकतालं तथा शून्यं क्रमेणापि त्रिधा भवेत् । युगलं युगलं पश्चात् स वीरदशकः स्मृतः ४ । प्रथममेकतालञ्च तत्परं शून्यमेककम् । शेषैकञ्च त्रितालञ्च मण्डूकस्य गतिर्यथा ५ । समतालं यथा दृष्टं तथा कन्दर्पसंज्ञितम् । समताले भवेत् शून्यं कन्दर्पे नास्ति, तत्पुनः ६ । पञ्चतालात् परं शून्यं ङाघपाहिडुमुत्तमम् । अत्यूर्द्धञ्च भवेत् लस्तं संग्रामस्य यथा गतिः ७। एकतालं तथा शून्यं क्रमेणापि द्विधा भवेत् । शेषैकञ्च त्रितालञ्च ध्रुवचरणभाषितम् ८ । एकतालं एकशून्यमित्येवञ्च भवेत् क्रमात् । विरामे एकतालञ्च रागभेदे दशकोषिका ९। युगलं युगलं पश्चात् तदन्त्येकतालकम् । शेषे च युग्मं शून्यञ्च गजेन्द्रगुरुभाषितम् १० युग्मशून्यं विरामे च एकतालं भवेत् क्रमे । कुडकाख्यानकं धीरं सङ्गीतपरिनिष्ठितम्११ ।"

ब्रह्मतालभेदलक्षणानि । "युगञ्च लस्तं प्रथमैकतालं किञ्चिद्विरामे पुनरेकतालम् । ब्रह्माख्यतालञ्च सुगीतमध्ये यथा कपोती हि करोति शब्दम् १ । युग्मतालं भवेदुलस्तं एकतालञ्च तत्परे । शेषे द्वितीयशून्ये च विरामब्रह्मतालकम् २। प्रथमञ्चैकतालञ्च युग्मशून्यं तथा परे । शेषैकञ्च त्रितालेति षट्कला खलु कथ्यते ३। आदौ युग्मं तथा युग्मं त्रितालञ्च तथा परे । सप्तमात्रा भवत्येषा ब्रह्मतालान्तरे शुभे४।"

इन्द्रतालभेदलक्षणानि "सविरामं त्रितालञ्च एकशून्यन्तथापरे । शेषे लस्तं त्रितालञ्च देवसार इतीर्यते१। द्वितीयशून्यं विरामे भवति ततश्च त्रितालानि । शेषेण द्विशून्यमित्येवं देवचाली २ । प्रथममेव युग्मताल्लं तत्पश्चादेकशून्यविरामे । शेषे त्रितयतालं भवतीति मदनदोलेति । युग्मतालं समारभ्य पञ्चतालं भवेत्तथा । अत्यूर्द्धञ्च तथा लस्तं गुरु गन्धर्व ईरितः ४ । श्रावणस्य यथा धारा तथा तालो भवेद्धनः । पञ्चतालान्तराणीति पञ्चालीति प्रकीर्त्तिता ५ सविरामं चतुस्तालं त्रितालं शून्यमन्ततः । मेघारम्भे यथा केका ध्वयन्ते इन्द्रभाषितः ६ ।"

चतुर्दशतालभेदलक्षणानि "एकतालञ्च शून्यञ्च क्रमेण त्रितयं ततः। शेषे चतुष्टयं लस्तं चित्रताल इतीर्य्यते१ । एकचन्द्रस्तथा युग्मं तालं प्रत्येकतस्त्रयम् । शेषे त्रीणि च शून्यानि चन्द्रमाला भवेत्परा २ । प्रथमं षट्कतालञ्च अत्यूर्द्धन्तु भवेत् क्रमात् । शेषे युग्मं तथा शून्यं देवमाला च कीर्त्त्यते३। चन्द्रशून्यं त्रितालञ्च विरामेण क्रमेण तु । अत्यूर्द्धन्तु भवत्येवसर्वज्योतिरिति स्थितिः ४। एकैकतालान्तरयुग्मतालात् शून्यत्रयं तत्परमेकतालम् । कलाभिदा शून्यभिदा समाख्या स खगसाराख्यनवीनतालः ५। युग्मशून्यं विरामेण देवतालमिति क्रमात् । समाष्टाख्योऽन्तरे शून्यमिति सर्वत्र भाषितम् ६। नवाब्दे रासिनि शीघ्रयानं तथा सुसंवद्धसुतानधानम् । युग्मं सलस्तं क्रमतश्च तालं शेषे त्रितालञ्च पराधराख्या ७ । एकतालञ्च शून्यञ्च क्रमेणापि चतुष्टयम् । क्रमात्तालत्रयञ्चैव वसन्तशागुदाहृता ८ । सविरामं द्वयं तालं युग्मतालं तथा परे । शेषैकञ्च त्रितालञ्च भवेत् काककलेति सा ९ । त्रितालञ्च भवेदु लस्तं तत्परं त्वेकतालकम् । शेषेऽपि च त्रितालञ्चेव् कोरयन्द्रा प्रपद्यते१०। युग्मं युग्मं तथा युग्मं तालन्त्वेकं भवेत् क्रमात् । शेषे शून्यं कलाभेदे तालवीति भवेत् पृथक् ११ । सविरामं द्वयं तालं युग्मशून्यञ्च तत्परम् । शेषोर्द्धन्तु त्रितालञ्च हर्षधारा प्रकीर्त्तिता १२। चन्द्रशून्यं विरामेण द्वयं तालं भवेत् क्रमात् । अत्यूर्द्धन्तु भवेदु लस्तं भाषाख्यं तालमुत्तमम् १३। अत्यूर्द्धन्तु त्रितालञ्च द्वयं तालं विरामकम् । इत्यर्द्धमाला विज्ञेया सङ्गीता भुवि सर्वतः"१४ सङ्गीतदामोदरे ४स्तवकम्"।

तालस्येदम् तस्या० अञ् । "पानसं द्राक्षमाधुकं खार्जूरं तालमैक्षवम्" प्रा० त्रि० पुलस्त्योक्ते ११ मद्यभेदे न०

**तालक** न० चु० तड–घञ् संज्ञायां क डस्य लः । १हरिताले राजनि० २द्वारकपाटरोधमयन्त्रे ( ताला ) हेमच० । ३तुवरिकायां(अरहर)शब्दर०। स्वार्थे क ।४ताले वृक्षादौ

**ताल(लि)कट** पु० देशभेदे स च देशः वृ० स० १४ अ० कूर्मविभागे दक्षिणस्यामुक्तः। अथ दक्षिणेनेत्युपक्रमे "काख्याजिनसौरिकीर्णताल(लि)कटाः"।

**तालकन्द** न० तालस्येव कन्दमस्य। तालमूल्याम् "कसेरु कोविदारस्य तालकन्दं तथाविधम्" प्रा० त० वायुपु०। "तालकन्दं तालमूलीति प्रसिद्धम्" रघु०।

**तालकाभ** पु० तालकस्येवाभा यस्य। १हरितवर्णे हेम० २तद्वति त्रि०।

**तालकी** स्त्री तालकस्येयम् अण् ङीप्। तालजमद्यभेदे(ताड़ी)

**तालकेतु** पु० तालस्तालचिह्नितः केतुरस्य। भीष्मे। "तासां प्रमुखतो भीष्मस्तालकेतुर्व्यरोचत" भा० उ० १४६ अ०।

**तालक्षीर** पु०तालजातं क्षीरमिव शुभ्रत्वात्। (तालेर चिनि) शर्कराभेदे राजनि०। स्वार्थे क। तालक्षीरक। तत्रार्थे।

**तालगर्भ** पु० ६त०। (तालेर मेति) तालमज्जनि। "अथ पित्तक्षगाश्वस्तदुग्धैः करिहस्तच्छिद्ये सतालगर्भैः" वृ० स० ५० अ०।

**तालङ्क** पु० ताड़ङ्क+डस्य लः। ताड़ङ्के भूषणे शब्दार्थचि०।

**तालचर** पु० १देशभेदे २तद्देशवासिषु ३तन्नृपेषु ब० व०। "अस्मास्तालचरावेव चुचुपा वेणुपास्तथा" भा० उ० १३६ अ०।

**तालजङ्घ** पु० ताल इव जङ्घा यस्य। १देशभेदे २तद्देशवासिषु ३तन्नृपेषु च ब०व०। "स हैहयान् समुत्साद्य तालजङ्घांश्च भारत!" भा० व० १०६ अ०। "हैहयानामुदावर्त्तो नीपानां जनमेजय!। बहुलस्तालजङ्घानां कथानामुद्गतो वहुः" भा० उ० ७२ अ०। "तालजङ्घं महाबलमौर्वेयैकेन नाशितम्"भा० अनु० १५२ अ०। ४राक्षसभेदे "निर्मांशास्तालजङ्घाश्च व्यादितास्याः भयङ्कराः" इत्युपक्रमे "एते यक्षाश्च सततं रक्षन्तु मम सर्वतः" हरिवं० १६८ अ०। "कण्ठपृष्ठग्रीवाजङ्घस्य" पा० अस्याद्युदात्तता। [तालप्रलम्बे शब्दार्थचि०।

**तालजटा** स्त्री तालस्य जटेव। तालवृक्षस्य जटाकारे पदार्थे

**तालध्वज** पु० तालः ध्वजोऽस्य। बलदेवे "सरस्वत्यास्तटे जातं नगं तालध्वजो बली" भा० श० ३८ अ०। "नातिदूरं ततो गत्वा नगं तालध्वजो बली" ५५ अ०। "अस्ति तालध्वजा नाम नगरी त्रिदिवोपमेति" पद्मपु० क्रियायोगसारोक्ते २पुरीभेदे स्त्री।

**तालनवमी** स्त्री तालोपहारा नवमी शा० त०। भाद्रशुक्लनवम्यां "मासि भाद्रपदे या स्यान्नवमी बहुलेतरा। तस्यां संपूज्य वै दुर्गामश्वमेधफलं लभेत्"। संवत्सरकौ० धृतगरुड़पुराणवचनम् इयमेव तालनवमी ख्याता

**तालपत्र** न० तालस्य पत्रमिव। १कर्णभूषणभेदे ताड़ङ्के। अमरः। ६त०। २तालस्य पत्रे च। "क्वचित् विधवयेव उन्मुक्ततालपत्रया" काद०।

**तालपत्रिका** स्त्री तालस्य पत्रमिव पत्रमस्याः ङीप् संज्ञायां कन् ह्रस्वः। तालमूलीवृक्षे राजनि०।

**तालपत्री** स्त्री तालस्य पत्रमिव पत्रमस्याः ङीप्। मूषिकपर्ण्याम् राजनि०। "अपामार्गोऽश्वगन्धा च तालपत्री सुवर्चला" सुश्रु०

**तालपर्णी** न०स्त्री० ताल इव खड्गमुष्टिरिव पर्णमस्य। १मुरानामद्रव्ये शब्दच०। स्त्रीत्वपक्षे पाककर्णेति ङीप्। सा च २मधुरिकायां जटाधरः।

**तालपुष्पक** न० तालः खड्गमुष्टिरिव पुष्पमस्य कप्। १प्रपौण्डरीके शब्दर०। ६त०। २तालवृक्षकुसुमे च।

**तालप्रलम्ब** न० ताले वृक्षे प्रलम्बते प्र+लम्ब–अच्। तालवृक्षस्य जटायाम् राजनि०। तथा "तालप्रलम्बस्तु मधुरतरजापहम्" राजनि०। [बलदेवे त्रिका०।

**तालभृत्** पु० तालं ध्वजरूपेण बिभर्त्ति भृ–क्विप् ६त०।

**तालमर्द्दल** पु०तालस्य तालार्थं मर्द्दल इव। १वाद्यभेदे हारा०

**तालमूली** स्त्री०तालस्य मूलमिव मूलमस्याः ङीप्। मुषल्याम्। स्वार्थे क। तालमूलिका २दीर्घकन्दायायाम्। मुषल्याम्। "तालमूली तु विद्वद्भिर्मुषलीति निगद्यते। मुषली मधुरा वृष्या वीर्योष्णा वृंहणी गुरुः। तिक्ता रसायनी हन्ति गुदजान्यनिलं तथा" "क्रौञ्चोदुम्बराभास्थोनि श्वदंष्ट्रातालमूलिका। अजमोदा कदम्बस्य मूलं नागरमेव च" सुश्रु०।

**तालयन्त्र** न० सुश्रुतोक्ते शल्योद्धारणार्थे यन्त्रभेदे। "तालयन्त्रे द्वादशाङ्गुले मत्स्यतालवदेकताल[ द्वि]तालके कर्णनासानाडीशल्यानामाहरणार्थम्" सुश्रु०।

**तालरेचनक** पु०तालेन रेचयति चु० रिच–ल्यु स्वार्थे क। नटे शब्दर०। तालरेचनकेति तत्र पाठान्तरम् तत्रार्थे।

**ताललक्षण** पु० तालो लक्षणं ध्वजोऽस्य। बलरामे हेमच०

**तालवन** न० ६त०। वृन्दावनस्थे तालप्रचुरे वनभेदे "गोवर्द्धनस्योत्तरतो यमुनातीरमाश्रितम्। ददृशाते ततो वीरौ रम्यं तालवनं महत्" हरिवं०७०अ०। २तालानां वने च। "सुसृष्टतालवनानीव स चकार रथव्रजान्" भा० भी० ११७ अ०।

**तालवृन्त** न० ताले करतले वृन्तं बन्धनमस्य, तालस्येव वृन्त-

मस्य वा। व्यजने हेमच०(पाखा) "तालवृन्तेन किं कार्य्यं लब्धे मलयमारुते" उद्भटः। अस्य वायोर्गुणा यथा। "त्रिदोषशमनो वायुर्लघुरः प्रकीर्त्तितः" भावप्र० "तालवृन्तभवो वायुस्त्रिदोषजयनो लघुः" राजनि०। "न वाति वायुस्तत्पार्श्वे तालवृन्तानिलाधिकम्" कुमा०। स्वार्थे क व० व०कप् वा। तालवृन्तक तत्रार्थे अमरः।

**तालव्य** त्रि० तालुनि भवः देहावयवत्वात् यत्। तालूच्चार्य्येषु "इचुयशानां तालु" इत्युक्तेषु वर्णभेदेषु।

**तालाकट** पु० दक्षिणस्थे देशभेदे। तालाकटस्य राजा अण् सोऽभिजनोऽस्य वाऽण्। २तद्देशवासिजने ३तस्य नृपे च बहुषु अणो लुक्। "ततः शूर्पारकं चैव तालाकटमथापि वा। वशेचक्रे महातेजा दण्डकांश्च महाबलम्" भा० स० ३०। सहदेवदक्षिणदिग्विजये। अयमेव देशः तालकटत्वेन वृ०स० १४ अ० उक्तः तालकटशब्दे दृश्यः।

**तालाख्या** स्त्री तालं तत्पत्रमिवाख्यायते आ+ख्या कर्मणि क। सुरानामगन्धद्रव्ये शब्दच०। [अमरः।

**तालाङ्क** पु० तालस्तालचिह्नितः अङ्कः ध्वजोऽस्य। बलदेवे।

**तालादि** पु० "तालादिभ्योऽण् वा" पा० विकारार्थे अण्प्रत्ययनिमित्ते शब्दसमूहे। स च गणः पा०गणसू०उक्तो यथा (तालाद्धनुषि) वार्हिण इन्द्रालिश इन्द्रादृश इन्द्रायुध चय, श्यामाक पीयूक्षा"। तालं धनुः पक्षे अञ्मयटौ। तालं तालमयं वा मद्यम्।

**तालावचर** पु०तालेनावचरति अव+चर—अच्। नटे त्रिका०

**तालि** स्त्री तल—प्रतिष्ठायां णिच्—इन्। भूम्यामलक्यां वा ङीप्। तत्रार्थे (ताड़ियात्) २स्थाते वृक्षे भरतः। "वर्म्मभिः पवनोद्धूतराजतालीवनध्वनिः" रघुः।

**तालिक** पु० तालेन करतलेन निर्वृत्तः ठक्। चपेटे (चापड़) (हाततालि)। ताली+स्वार्थे क। २तालमूल्याम् स्त्री हेमच०। ३लिखितस्य निबन्धने च शब्दर०। ४चपेटे स्त्री शब्दर०। ५ताम्रवल्ल्यां स्त्री राजनि०। "स्वैरं हसन्त्यस्य विधाय तालिकाम्" काशी० ५ अ०। "उच्चाटनीयः करतालिकानां दानादिदानीं भवतीभिरेषः" नैषधम्। [भाषके शुष्के च कलयणाखः।

**तालित** न० चुरा० तड़—क्त डस्य लः। १तुलितपटे २वाद्य-

**तालिन्** पु० ब० व०। तलेनर्षिणा प्रोक्तमधीयते शौनका० णिनि। तलोक्ताध्येतृषु। तालो वाद्यत्वेनास्त्यस्य इनि। ३दत्तताले त्रि० ४शिवे पु० "वैणवी पणवी ताली खली कालकटः कटः" भा० अनु० १७। शिवनामोक्तौ।

**तालिश** न० पु० तल—श न शित्त्वम्। पर्वते उणादिको०।

**ताली** स्त्री तालेन तन्निर्यासेन निर्वृत्ता अण्। (ताड़ी) १तालजातसुरायाम्। तल—ण्यन्तात् अच् गौरा०ङीष्। (ताड़ियात्) २वृक्षभेदे, अमरः। ३तालमूल्याम्, (भूइआमला) ४वृक्षभेदे राजनि०। ५आढ़क्याम्, (अहर) शब्दरत्ना०। ६तालीशपत्राख्ये वृक्षे, रत्नमाला। ७तालकोद्घाटनयन्त्रे (काटि) कुञ्चिकायाञ्च। हेमच०। ८ताम्रवल्ल्यां ६चतुरक्षरपादके छन्दोभेदे यथा "ताली सा निर्दिष्टा। उद्दिष्टो मो यत्र" यथा "मानी ते जानीते। साकूयं वैरूप्यम्" छन्दोमञ्जर्याम्। अस्य नारीत्यपि संज्ञोक्ता।

**तालीपत्र** न० ताल्या इव पत्रमस्य। तालीशपत्रे राजनि०।

**तालीश** न० तालीव रोगान् श्यति शो—ड। स्वनामख्याते वृक्षे राजनि० "तालीशं लघु तिक्तोष्णं श्वासकासकफानिलान्। निहन्त्यरुचिगुल्मामवह्निमान्द्यक्षयामयान्" भावप्र० २भूम्यामलक्यां मेदि०।

**तालीशपत्र** न०तालीशं रोगनाशकं पत्रं यस्य। १स्वनामख्याते वृक्षे, २भूम्यामलक्याञ्च राजनि०।

**तालीशाद्यमोदक** पु०चक्रदत्तोक्ते मोदकभेदे यथा "तालीशपत्रं मरिचं नागरं पिप्पली शुभा। यथोत्तरंभागवृद्धा त्वगेले चार्द्धभागिके। पिप्पल्यष्टगुणा चात्र प्रदेया सितशर्करा। श्वासकासारुचिहरं तर्पणं दीपनं परम्। हृत्पाण्डुग्रहणीरोगप्लीहशोषज्वरापहम्। छर्द्यतीसारकासघ्नं मूढवातानुलोमनम्। कल्पयेद् गुड़िकां चैतच्चूर्णं पक्वासितोपलाम्। गुड़िका ह्यग्निसंयोगाच्चूर्णाल्लघुतरा मता। पैत्तिके याष्ट्यन्ये वै शुभाय पंथलोचनम्"।

**तालु** न० तरन्त्यनेन वर्णाः तॄ—ञुण् रस्य लः। जिह्वेन्द्रियाधिष्ठाने (तेलो) स्थानभेदे। "मुखतस्तालु निर्भिन्नं जिह्वा तत्रोपजायते। ततो नानारसो जज्ञे जिह्वया योऽधिगम्यते" भाग०। "निर्भिन्नं तालु वरुणो लोकपालोऽविशद्धरेः। जिह्वयांशेन च रसान् ययासौ प्रतिपद्यते" भाग० ३।६।१४श्लो० तालुनि चैकमस्थि तच्च कपालाकारं यथोक्तं सुश्रुते अस्थीनीत्युपक्रमे "एतानि पञ्चविधानि भवन्ति। तद्यथा कपालरुचकतरुणवलयनलकसंज्ञानि। तेषां जानुनितम्बांसगण्डतालुशङ्खशिरःसु कपालानि" अस्थिसंख्यामेदोक्तौ च तत्रैव। तालुनि चैकमित्युक्तम्। "तृषा महत्या परिशुष्कतालवः" ऋतुसं०। स्वार्थे यावा०कन्। तालुकमप्यत्र अमरः।

**तालव्य** पुंस्त्री० तलुन्यर्षेगौत्रापत्यं गर्गा० यञ्। तलुन्य-र्षेरपत्ये स्त्रियां लोहि० ष्फ षित्वात् ङीष्। तालु-व्यायणी।

**तालुजिह्व** पुंस्त्री तालु एव जिह्वा यस्य। १कुम्भीरे हेम०। तस्य जिह्वाशून्यत्वेऽपि तालुनैव रसास्वादनात्तथात्वम्। स्त्रियां टाप्।

**तालुपाक** पु० सुश्रुतोक्ते तालुगते रोगभेदे। तालुगतास्तु गलशुण्डिका तुण्डिकेर्य्यऽध्रुषो मांसकच्छ-पोऽर्बुदं मांससङ्घातस्तालुपुप्पुटस्तालुशोषस्तालुपाक इति। "श्लेष्मासृग्भ्यां तालुमूलात्प्रवृत्तो दीर्घः शोफो ध्मातवस्तिप्रकाशः। तृष्णाकासश्वासकृत् सम्प्रदिष्टो व्याधि-र्वैद्यैः कण्ठशुण्डीति नाम्ना। शोफः स्थूलस्तोददाहप्र-पाकी प्रागुक्ताभ्यां तुण्डिकेरी मता तु। शोफः स्तब्धो लोहितस्तालुदेशे रक्ताज्ज्ञेयः सोऽध्रुषोरुग्ज्वराढ्यः। कूर्म्मोत्सन्नोऽवेदनोऽशीघ्रजन्मा रक्तो ज्ञेयः कच्छपः श्लेष्मणा स्यात्। पद्माकारं तालुमध्ये तु शोफं विद्या-द्रक्तादर्बुदं प्रोक्तलिङ्गम्। दुष्टं मांसं श्लेष्मणा नीरु-जञ्च तालुन्यस्थं मांससङ्घातमाहुः। नीरुक् स्थायी कोल-मात्रः कफात्स्यान्मेदोयुक्तात्पुप्पुटस्तालुदेशे। शोषोऽ-त्यर्थं दीर्य्यते चापि तालु श्वासो वातात्तालुशोषः स पित्तात्। पित्तं कुर्य्यात्पाकमत्यर्थघोरं तालुन्येनं तालुपाकं वदन्ति" तेषां लक्षणान्युक्तानि। [दृश्यम्।

**तालुपुप्पुट** पु० सुश्रुतोक्ते तालुगतरोगभेदे तालुपाकशब्दे

**तालुशोष** पु०सुश्रुतोक्ते तालुरोगभेदे तालुपाकशब्दे दृश्यम्।

**तालूर** पु० चु० तल-बा० ऊर। आवर्त्ते हेमच०।

**तालूषक** न० तल-बा० ऊषक। तालुनि। "अक्षतालूषके श्रोणीफलके च विनिर्दिशेत्" याज्ञ० "तालूषकं ककु-दम्" मिता०।

**तावक** त्रि०तवेदम् युष्मद्+अण् एकवचने तवकादेशः। त्वत्-सम्बन्धिनि स्त्रियां ङीप्। "भूगं तत्ते तावकेभ्यो रथेभ्यः" ऋ० १।९४।१४। "तपः क्व वत्से! क्व च तावकं वपुः"कुमा०। [त्वत्सम्बन्धिनि।

**तावकीन** त्रि० तवेदम् युष्मद्+खञ् एकवचने तवकादेशः।

**तावच्छस्** अव्य० तावत्+संख्यावाचकत्वात् वीप्सार्थे+शस्। तावत्तावत्प्रकारे "यावच्छो वै रसः शिक्तस्य त्वष्टा रूपाणि विकरोति तावच्छो वै तत्प्रजायते" तै० स०।

**तावत्** अव्य० तद्+बा० डावत्। १साकल्ये २अवधौ ३माने ४अवधारणे अमरः ५प्रशंसायाम् ६पक्षान्तरे शब्दरत्ना० ७संग्रामे ८अधिकारे च मेदि०। ९तदेत्यर्थे शब्दार्थचि०। "भर्त्तापि तावत् क्रथकौशिकानाम्" रघुः तावत् तदेत्यर्थः। साकल्ये "तावत्प्रकीर्णाभिनवोपचारम्" अवधौ "वलयं न सम्भावित एव तावत्" रघुः "तावत् आलोकमार्ग-प्राप्तिपर्य्यन्तम्" मल्लि०। मानार्थे "स्वमेव तावत् परि-चिन्तय स्वयम्" कुमा० तावत् इति मानार्थे "यावन्मात्र विचारणीयं तावन्मात्रमित्यर्थः" मल्लि०। अवधारणे "इन्द्रप्रस्थगमस्तावत् कारि मा सन्तु चेदयः" माघः। "मा कारि तावत् न क्रियतामेवेत्यर्थः" मल्लि०। तत्-परिमाणमस्य तद्+वतुप् "आ सर्वनाम्नः" पा०। आ। १०तत्-परिमाणविशिष्टे त्रि०। "यावानर्थ उदपाने सर्वतः संप्लुतोदके। तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजा-नतः" गीता "जम्बुद्वीपोऽयं तावत्प्रमाणविस्तार-स्तावता क्षीरोदधिना वेष्टितः" भाग० ५।२०।२। क्रियाविशेषणत्वे न०। "पुरोऽस्य यावन्न भुवि व्यलीयत। गिरेस्तडित्वानिव तावदुच्चकैः" माघः। स्त्रियां ङीप् "यावती संभवेद्वृत्तिस्तावती दातुमर्हति" मनुः। अस्य वतन्तत्वात् संख्यावत् कार्य्यं तावत्कः ता-वत्कः तावतिकः।

**तावतिक** त्रि० तावता क्रीतः संख्यात्वात् कन् "वतोरिड् वा" पा० वा इट्। तत्परिमाणवता क्रीते। पक्षे इडभावे तावत्क तत्रार्थे।

**तावतिथ** त्रि० तावतां पूरणः डट्। "वतोरिथुक्" पा० इथुक्। तावतां पूरणे। "यावत् सामिधेनि वेदेदमहं तावतिथेन वर्जेयेति" कात्या० श्रौ० ३।१।८।

**ताविष** पु० "तवेर्णिद्वा"उणा०टिषच्। स्वर्गादौ तविषशब्दार्थे तविषशब्दे दृश्यम्।

**तावुरि** पु० वृषराशौ कौर्पशब्दे २२७८ पृ० दृश्यम्।

**तासुन** पु० तस-बा० उनण्। शणवृक्षे। तस्येदम् अण्। तासुन तत्सम्बन्धिनि स्त्रियां ङीप्। "मुञ्जकाशतासुन्यो रसनाः" ज्यो० त० गोभिलः। "मुञ्जः शरः तासुनः शणस्तद्भवा रसना मेखला तासुनी"।

**ति** अव्य० इति+वेदे पृषो०। इतिशब्दार्थे। "बह्वीयाचा-स्तीह प्रायश्चित्तिरित्यस्तीति का ति पिता ते वेदेति" शत० ब्रा० ११।६।१।१। का प्रायश्चित्तिरिति इति प्रश्नः।

**तिक** गतौ भ्वा० आत्म० सक०सेट्। तेकते अतेकिष्ट ऋदित् णिच् अतितेकत् त। तितेके। [अतेकीत्। तितेक।

**तिक** आस्कन्दे वधे च भ्वा० पर० सक० सेट्। तिक्नोति

**तिक** पु० तिक–क। ऋषिभेदे। तस्य गोत्रापत्यम् तिका० फिञ्। तैकायनि तद्गोत्रापत्ये पुंस्त्री०। तस्य तिककितवादित्वात् द्वन्द्वे गोत्रप्रत्ययस्य लुक् बहुत्वार्थे। तिककितवाः तिककितवयोर्गोत्रापत्येषु। उत्कर्षा० चतुरर्थ्यां छ। तिकीय तत्सन्निकृष्टदेशादौ त्रि०।

**तिककितवादि** पु० "तिककितवादिभ्यो द्वन्द्वे" पा० उक्ते द्वन्द्वे बहुत्वे गोत्रप्रत्ययलुगनिमित्ते शब्दगणे। स च गणः पा०गणसू०उक्तो यथा "तिककितवा वङ्खरभण्डीरथाः। उपकलमकाः। पफकनरकाः वकनखगुदपरिणद्धाः उब्जककुभाः लङ्कशान्तमुखाः उत्तरशलङ्कटा कृष्णाजिनकृष्णसुन्दराः भ्राष्टककपिष्ठलाः अग्निवेशदशेरुकाः"।

**तिकादि** पु० गोत्रे फिञ् प्रत्ययनिमित्ते शब्दसमूहे स च गणः पा०ग०सू०उक्तो यथा "तिक, कित, संज्ञा, बाला, शिखा, उरस्, शाठ्य, सैन्धव, यमुना, रूप्य, ग्राम्य, नील, अमित्र, गौकक्ष्य, कुरु, देवरथ, तैतल, औरस, कौरव्य, भौरिकि, भौलिकि, चौपयत, चैटयत, शीकयत, चैतयत, धाजवत, चन्द्रमस्, शुभ, गङ्गा, वरेण्य, सुपामन्, आरद्ध, वह्यका, खल्यका, वृष, लोमक, उदञ्च, यज्ञ"। "तिकादिभ्यः फिञ्" पा०उक्ते "तिक इत्येवमादिभ्योऽपत्येऽर्थे फिङ् स्यात् तैकायनिः कैतवायनिः।

**तिक्त** पु० तेजयति तिज–बा० कर्त्तरि क्त। १रसभेदे (तेत) अमरः। २पर्पटकौषधौ न० हेमच०। ३सुगन्धे मेदि०। ४कुटजवृक्षे पु० शब्दच०। ५वरुणवृक्षे शब्दमाला। एतेषां तिक्तरसाधिक्यात्तथात्वम्। ६तिक्तरसयुक्ते अमरः। "षड्विधस्तु रसस्तत्र" भाषोक्तेर्यद्यपि तिक्तस्य पार्थिवगुणत्वं तथापि वायोरुपष्टम्भवशादेव पार्थिवे तिक्तरसस्य सम्भवः तदेतत् सुश्रुते व्यक्तमपि यथा "आकाशपवनदहनतोयभूमिषु यथासङ्ख्यमेकोत्तरपरिवृद्धाः शब्दस्पर्शरूपरसगन्धाः तस्मादाप्यो रसः परस्परसंसर्गात्परस्परानुग्रहात् परस्परानुप्रवेशाच्च सर्वेषु सर्वेषां सान्निध्यमस्त्युत्कर्षापकर्षौ तु ग्रहणम्। स खल्वाप्यो रसः शेषभूतसंसर्गाद्विदग्धः षोढा विभज्यते। तद्यथा। मधुरोऽम्लो लवणः कटुकस्तिक्तः कषाय इति। ते च भूयःपरस्परसंसर्गात्त्रिषष्टिधा भिद्यन्ते। तत्र भूम्यम्बुगुणबाहुल्यान्मधुरः। भूम्यग्निगुणबाहुल्यादम्लः। तोयाग्निगुणबाहुल्याल्लवणः। वाय्वग्निगुणबाहुल्यात्कटुकः वाय्वाकाशगुणबाहुल्यात्तिक्तः। पृथिव्यनिलगुणबाहुल्यात्कषाय इति। तत्र मधुराम्ललवणा वातघ्नाः। मधुरतिक्तकषायाः पित्तघ्नाः। कटुतिक्तकषायाः श्लेष्मघ्नाः। तत्र वायुरात्मनैवात्मा पित्तमाग्नेयं श्लेष्मा सौम्य इति त एव रसाः स्वयोनिवर्द्धना अन्ययोनिप्रशमनाश्च। केचिदाहुरग्नीषोमीयत्वाज्जगतो रसा द्विविधाः सौम्या आग्नेयाश्च तत्र मधुरतिक्तकषायाः सौम्याः। कट्वम्ललवणा आग्नेयाः। मधुराम्ललवणाः स्निग्धा गुरवश्च। कटुतिक्तकषाया रूक्षा लघवश्च। सौम्याः शीता आग्नेयास्तूष्णाः"।

"सूक्ष्मरूक्षखरशिशिरलघुविशदं स्पर्शबहुलमीषत्तिक्तं विशेषतः कषायमिति वायवीयं तद्वैशद्यलाघवग्लपनविरूक्षणविचारणकरमिति"।

तिक्तरसलक्षणं तत्रोक्तं यथा "यो गले चोषमुत्पादयति मुखवैशद्यं जनयति भक्तरुचिं चापादयति हर्षश्च स तिक्तः। "तिक्तः शीतस्तृषामूर्च्छाज्वरपित्तकफान् जयेत्। रुच्यः स्वयमरोचिष्णुः कण्ठस्तन्याशुशोधनः। वातलोऽग्निकरो नासाशोषणो रूक्षणो लघुः"। रुच्यः अन्येषु वस्तुषु रुचिमुत्पादयति। स्वयमरोचिष्णुः यथा निम्बः स्वयन्न रोचते। अन्येषु रुचिं करोति (अतियुक्तस्य तिक्तस्य गुणाः) सोऽतियुक्तः शिरः शूलमन्यास्तम्भभ्रमार्त्तिकृत्। कम्पमूर्च्छातृषाकारी बलशुक्रक्षयप्रदः" भावप्र० "तिक्तः पित्तकफच्छेदी विषकुष्ठज्वरापहः। दीपनः पाचनो रुच्यः कण्डुक्रिमिहरो लघुः" आह्निकत०। "पित्तेन दूने रसने सितापि तिक्तायते हंसकुलावतंस!" नैष० सुगन्धे। "नादात्मनन्यकरिसुक्तमदाम्बुतिक्तम्" रघुः तिक्तं सुरभि "कटुतिक्तकषायास्तु सौरभेऽपि प्रकीर्तिताः" केशवः मल्लि० "चूताङ्कुरस्वादकषायकण्ठः" मधुरकण्ठ इत्यर्थः। "तस्यास्तिक्तैर्वनगजमदैर्वासितं वान्तवृष्टिः" मेघ०। "तिक्तैः सुगन्धिभिस्तिक्तरसवद्भिश्च" मल्लि०। "तोयक्रीड़ानिरतयुवती स्नानतिक्तैर्मरुद्भिः" मेघ०।

**तिक्तक** पु० तिक्त+संज्ञायां कन्। १पटोले अमरः २चिरतिक्ते (चिराता) शब्दर०। ३कृष्णखदिरे शब्दमा०। ४इङ्गुदीवृक्षे भावप्र०। एतेषां तिक्तरसत्वात्तथात्वम् स्वार्थे क। तिक्तरसे पु०तद्वति त्रि०स्त्रियां कापि अत इत्त्वम् तिक्तिका

**तिक्तकन्दिका** स्त्री तिक्तः कन्दोऽस्याः कप् कापि अतइत्त्वम्। गन्धपत्रायां राजनि०। [शब्दार्थचि०।

**तिक्तका** स्त्री तिक्तेन रसेन कायति कै–क। कटुतुम्ब्यां

**तिक्तगन्धिका** स्त्री तिक्तो गन्धो लेशोऽपि यस्याः। वराह-

कान्तायाम् अमरः। तस्याः सर्वत्र तिक्तत्वात् तथात्वम्।

**तिक्तगुञ्जा** स्त्री गुञ्जेव तिक्ता राजदन्ता०। करञ्जे हारा०

**तिक्तघृत** न० सुश्रुतोक्ते घृतभेदे तत्पाकविधिस्तत्रोक्तो यथा "त्रिफलापटोलपिचुमर्द्दाटरूषककटुरोहिणीदुरालभात्राय माणापर्पटकास्त्रैतेषां द्विपलिकान् भागान् जलद्रोणे प्रक्षिप्य पादावशेषं कषायमादाय कल्कपेष्याणीमानि भेषजान्यर्द्ध पलिकानि त्रायमाणामुस्तेन्द्रयवचन्दनकि-राततिक्तानि पिप्पल्यश्चैतानि घृतप्रस्थे समावाप्य विपचेदेतत्तिक्तकं नाम सर्पिः कुष्ठविषमज्वरगुल्मार्शो-ग्रहणीदोषशोफपाण्डु रोगविसर्पषाण्ढ्यशमनं चेति।" "त्र्यहात् त्र्यहाच्चाप्यपतर्पणान्ते प्रातस्तयोस्तिक्त-घृतं प्रशस्तम्" सुश्रु०। तिक्तसर्पिरादयोऽप्यत्र न०।

**तितक्तण्डुला** स्त्री तिक्तस्तण्डुलोऽन्तःशस्यं यस्याः। पिप्प-ल्याम् राजनि०।

**तिक्ततुण्डी** स्त्री कर्म०। कटुतुम्बीलतायां राजनि०।

**तिक्ततुम्बी** स्त्री कर्म०। कटुतुम्ब्याम् (तितलाउ) रत्नमा०।

**तिक्तदुग्धा** स्त्री तिक्तं दुग्धं निर्यासो यस्याः। १क्षीरिण्याम्, राजनि०। २स्वर्णक्षीर्याम् जटा०।

**तिक्तधातु** पु० कर्म०। पित्ते धातौ राजनि०।

**तिक्तपत्र** पु० तिक्तं पत्रमस्य। (काकरोल) १कर्कोटके। २तिक्त-पत्रके द्रव्यमात्रे त्रि० कर्म०। ३तिक्ते पत्रे न०।

**तिक्तपर्वन्** स्त्री तिक्तं पर्व ग्रन्थिर्यस्याः। १ग्रन्थिदूर्वायाम् जटा०। २हिलमोच्यां ३गुडूच्यां ४यष्टिमधुलतायाञ्च मेदि०।

**तिक्तपुष्पा** स्त्री तिक्तानि पुष्पाण्यस्याः। (आकनादी) १पाठा-याम् राजनि०। २तिक्तपुष्पके द्रव्यमात्रे त्रि०। कर्म०। ३तिक्ते पुष्पे न०।

**तिक्तफल** पु० तिक्तानि फलानि अस्य। १कतकवृक्षे (निर्माल्य) राजनि०। २यवतिक्तायां शब्दार्थचि० ३तिक्तफलके द्रव्य-मात्रे त्रि०। ४ वार्त्ताक्यां ५षड्भुजायाञ्च स्त्री टाप् राजनि०। कर्म०। ६तिक्ते फले न०।

**तिक्तभद्रक** पु० भद्रं करोति णिच्—ण्वुल् तिक्तोऽपि भद्रकः कर्म०। पटोले शब्दच०।

**तिक्तमरिच** पु० तिक्तः मरिच इव। कतकवृक्षे राजनि०।

**तिक्तयवा** स्त्री तिक्तः यव इन्द्रयवरसोऽस्यत्र अच्। शङ्खिन्यां पारस्करगृह्यम्।

**तिक्तरोहिणी** स्त्री तिक्ता सती रोहति रुह—णिनि कर्म०। कटुकायाम् (कटकी) स्वार्थे क ह्रस्वः। तिक्तरोहिणिका। तत्रार्थे राजनि०।

**तिक्तवल्ली** स्त्री कर्म०। १मूर्वालतायाम् रत्नमा०। २तिक्ते लतामात्रे च।

**तिक्तबीजा** स्त्री तिक्तानि बीजानि यस्याः। १कटुतुम्ब्याम् राजनि०। २तिक्तबीजके द्रव्यमात्रे त्रि०। कर्म०। ३तिक्ते बीजे न०।

**तिक्तशाक** पु० तिक्तः शाकोऽस्य। १वरुणद्रुमे, २खदिरवृक्षे ३पत्रसुन्दरवृक्षे च मेदि०। कर्म०। ४तिक्ते शाके न०।

**तिक्तसार** पु० तिक्तः सारो निर्यासोऽस्य। १खदिरे रत्नमा०। २दीर्घरोहिषतृणे न० रत्नमा०। ३तिक्तसारके द्रव्यमात्रे त्रि०। कर्म०। ४तिक्ते सारे अस्त्री।

**तिक्ता** स्त्री तिक्तो रसोऽस्त्यस्य अच्। १कटुरोहिण्यां मेदि० २पाठायां रत्नमा० ३यवतिक्तालतायां ४षड्भुजायां राजनि० ५छिक्कन्यां भावप्र०।

**तिक्ताख्या** स्त्री तिक्तेति आख्या यस्याः। कटुतुम्ब्र्यां राजनि० तिक्ताङ्गयेत्यत्र। [याम् राजनि०।

**तिक्ताङ्गा** स्त्री तिक्तमङ्गमस्त्यस्य अच्। पातालगरुडीलता-

**तिक्तिका** स्त्री तिक्ता स्वार्थे संज्ञायां वा क ह्रस्वे अत इत्वम्। कटुतुम्ब्याम् शब्दार्थचि०।

**तिग** हिंसायाम् आस्कन्दे च स्वा०पर०सक० सेट्। तिग्नोति अतेगीत्। तितेग। "अग्निं जंभैस्तिगितैरत्ति" ऋ० १।१४३।५। "तिगितैर्निशितैः" भा०।

**तिग्म** न०तिज—मक् जस्य गः। १तीक्ष्णे स्पर्शे २तद्वति त्रि०। अमरः। ३ वज्रे निघण्टुः। "तिग्मवीर्यं विषाह्येते दन्दशूका महाबलाः" भा० आ० २० अ०।

**तिग्मकर** पु० तिग्मः करः किरणो राजग्राह्यो वाऽस्य। २सूर्य्ये त्रिका०। ३उग्रराजग्राह्यके नृपे च। कर्म०। ४तिग्मे करे पु०।

**तिग्मदीधिति** पु० तिग्मा दीधितिरस्य। तिग्मांशौ सूर्य्ये।

**तिग्ममन्यु** त्रि० तिग्मो मन्युरस्य। १उग्रक्रोधके। २शिवे पु० "अहश्चरो नक्तचरस्तिग्ममन्युः सुवर्चसः" भा० अनु० १७ अ०।

**तिग्मरश्मि** पु० तिग्मारश्मयोऽस्य। १सूर्य्ये। २खररश्मिके त्रि०। कर्म०। ३खरे रश्मौ पु०।

**तिग्मांशु** पु० तिग्मा अंशवो यस्य। १सूर्य्ये जटाधरः "तिग्मांशुरस्तंगतः" जयदेव०। "तिग्मांशुरश्मिच्छ रि-तान्यदूरात्" भट्टिः। २खरकिरणके त्रि०। कर्म०। ३खरे किरणे पु०। [तितेघ।

**तिघ** घातने स्वा० पर० सक० सेट्। तिघ्नोति अतेघीत्।

**तिज** तीक्ष्णीकरणे, चुरा० उभ० सक० सेट् । तेजयति ते अतीतिजत् त । "कुसुमचापमतेजयदंशुभिर्हिमकरः" रघुः "तेजयित्वा तु तत्सैन्यम्" रामा० अर० ३१ स० । "तेजिता बलदर्पाभ्याम्" हरिवं०५२०८ । "सा मयोक्तेन तेजिता" ८६४४ श्लो० । तेजः ।

**तिज** शान्तौ क्षमायां स्वार्थे सन् निशाने न सन् भ्वा०आत्म० सक० सेट् । तितिक्षते तेजते । अतितिक्षिष्ट अतेजिष्ट । "आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत!" गीता "छिन्नं पूर्वं तितिक्षिष्यते" शत० ब्रा० ३।१।२।१४ । "अतिवादांस्तितिक्षेत" मनुः "आपस्ते पादं तितिक्षन्त्वा-मलमापस्तितिक्षितुम्" भा० शा० ८१७० श्लो० "तिति-क्षन्ते अभिशस्तिं जना नाम" ऋ० ३।३०।१ ।

**तिजिन** पु० तिज–इनच् किच्च । चन्द्रे उणा० ।

**तिणिश** पु तिलकवृक्षे लोध्रद्रुमे । "न्यग्रोधाश्वत्थतिल्वक-हरिद्रुमयोः" कात्या० श्रौ० सूत्रे "तिल्वकस्तिणिशः" कर्कः ।

**तिण्टी** स्त्री विहृति (तेओड़ो) शब्दच० ।

**तितउ** पु० तन–डउ सन्वच्च डउ इति निर्देशात् न सन्धिः । १चालन्याम् अमरः । २छत्रे न० उज्ज्वलदत्तः । "क्षुद्रच्छिद्र-समोपेतं चालनं तितउ स्मृतमित्युक्तोरस्य क्लीवत्वमपि । "सक्तुमिव तितउना पुनन्तः" ऋ० १०।७१।२। "इमामच-मधिक्रत्य" निरु० ४।९। "तितउ परिपवनं भवति तत-वद्वा तुन्नवद्वातिलमात्रतुन्नमिति वा" अन्यथा निरुक्तिरुक्ता क्लीवत्वञ्चोक्तम् ।

**तितिक्ष** त्रि० तिज–स्वार्थे सन्–अच् । १शीतोष्णादिद्वन्द्वसो-ढरि २ऋषिभेदे पु० तस्य गोत्रापत्यं गर्गा० यञ् । तै-तिक्ष्य तद्गोत्रापत्ये यून्यपत्ये यञन्तत्वात् फक् । तैति-क्षायण तद्गोत्रजे यून्यपत्ये पुंस्त्री० ।

**तितिक्षा** स्त्री तिज–स्वार्थे सन् भावे अ । १क्षमायां शीतो-ष्णादिद्वन्द्वसहने "सहनं सर्वदुःखानामप्रतीकारपूर्वकम् । चिन्ताविलापरहितं सा तितिक्षा निगद्यते" विवेकचू० । २सा संज्ञाताऽस्य तार० इतच् । तितिक्षित शान्ते सोढरि जटाधरः ।

**तितिक्षु** त्रि० तिज–स्वार्थे सन्–उ । तितिक्षाशीले । "शान्तो दान्त उपरतस्तितिक्षुः श्रद्धावान् समाहितो भूत्वा आत्म-न्यात्मानमवलोकयेत्" वेदा० सा० धृता श्रुतिः । "अक्रोधनः क्रोधनेभ्यो विशिष्टस्तथा तितिक्षुरतितिक्षोर्विशिष्टः" भा० आ० ८७ अ० ।

**तितिभ** पु०तितीति भणति भण–ड। इन्द्रगोपकीटे खद्योते हेमच० । [स्त्रियां जातित्व तृ ङीप् ।

**तितिर** पुंस्त्री० तित्तिरि+पृषो० । तित्तिरिखगे राजनि०

**तितिल** न० तिल–क बा० द्वित्वञ्च । १नन्दके (नान्दा) मृण्मये पात्रभेदे २तैलिलकरणे ३तिलपिष्टे च अजयपालः

**तित्तिर** पुंस्त्री तित्ति इति शब्दं रौति रु–बा० ड । (तितिर) खगभेदे शब्दर० । स्त्रियां जातित्वात् ङीप् । "कपिञ्जलांस्तित्तिरांश्च कलविङ्कांश्च सर्वशः" "तस्मादक्रा-द्विनिष्क्रान्तास्तित्तिरास्तस्य पाण्डव !" भा० उ० ८अ० ।

**तित्तिरि** पु० तित्ति इति शब्दं रौति रु–बा० डि ।(तितिर) खगभेदे अमरः । स्त्रियाममनुष्यजातित्वात् "इतोऽमनु-ष्यजातेः" पा० ङीप् । तित्तिरिः कृष्णवर्णः स्यात् स तु गौरः कपिञ्जलः । तित्तिरिर्वर्णदो ग्राही हिक्का-दोषत्रयापहः । श्वासकासज्वरहरस्तस्माद्गौरोऽधिको गुणैः" भाव०प्र० । तित्तिरिरूपधारणेन याज्ञवल्क्य-वान्तयजुर्ग्राहिणि मुनिभेदे तत्कथा "वैशम्पायनशिष्या वै चरकाध्वर्यवोऽभवन् । यच्चेरुर्ब्रह्महत्यांऽहःक्षपणं स्वगुरोर्व्रतम् । याज्ञवल्क्यश्च तच्छिष्य आहाहो भगवन् ! कियत् । चरितेनाल्पसाराणां चरिष्येऽहं सुदुश्चरम् । इत्युक्तो गुरुरप्याह कुपितो याह्यलं त्वया । विप्राव-मन्ता शिष्येण मदधीतं त्यजाश्विति । देवरातसुतः सोऽपि छर्दित्वा यजुषां गणम् । ततो गतोऽथ मुनयो ददृशुस्तान् यजुर्गणान् । यजूंषि तित्तिरा भूत्वा तल्लो-लुपतयाऽऽददुः । तैत्तिरीया इति यजुःशाखा आसन् सुपेशलाः । भाग० १२।६५८।

तित्तिरिणा प्रोक्तमधीयते छण् । तैत्तिरीय तित्तिरिप्रोक्त-च्छन्दोग्रन्थाध्येतृषु ब० व० । तित्तिरिणा अधीता अण्, ङीप् । तैत्तिरी कृष्णयजुःशाखायां स्त्री ।

**तित्तिरीक** न०तित्तिरेः पक्षदाहेन जातम् बा०ईक । तित्ति-रिपक्षदाहेन जाते अञ्जनभेदे । "अञ्जनं तित्तिरीकञ्च नलदं पत्रमुत्पलम्" सुश्रु० । अत्र तिन्तिड़ीकमिति पाठा-न्तरम् । दग्धतिन्तिड़ीकजातेऽञ्जने इति तदर्थः ।

**तिथ** पु० तिज–थक् नि० जलोपः । १वह्नौ २कामे च सि०कौ० ३काले त्रिका० । ४प्रावृट्काले संक्षिप्तसा० ।

**तिथि(थी)** पुंस्त्री० अत–इथिन् पृषो० वा ङीप् । १पञ्चदशसु चन्द्रकलाक्रियारूपासु प्रतिपदादिषु, अमरः २पञ्चदश-संख्यायाञ्च । अस्य निरुक्त्यादिकं कालमाधवीये उक्तं यथा "अथ तिथयोनिर्णीयन्ते । तत्र तिथिशब्दस्तनोतेर्द्धा-

च्चिप्रत्ययः । तनोति विस्तारयति वर्द्धमानां चीयमाणां वा चन्द्रकलामेकां यः कालविशेषः सा तिथिः । यद्वा यथोक्तकलया तन्यत इति तिथिः । तदुक्तं सिद्धान्तशिरोमणौ "तन्यते कलया यस्मात्तस्मात्तास्तिथयः स्मृताः" इति । एतदेवाभिप्रेत्य स्कान्दे पठ्यते "अमाषोडशभागेन देवि ! प्रोक्ता महाकला । संस्थिता परमा माया देहिनां देहधारिणी । अमादिपौर्णमास्यन्ता या एव शशिनः कलाः । तिथयस्ताः समाख्याताः षोडशैव वरानने !" इति । अयमर्थः । या महामाया आधाररूपा देहिनां देहधारिणी संस्थिता या सा चन्द्रमण्डलस्य षोडशभागेन परिमिता चन्द्रदेहधारिण्यमानाम्नी महाकलेति प्रोक्ता क्षयोदयरहिता नित्या तिथिसंज्ञिकैव । इतरा अपि पञ्चदश कला दिवसव्यवहारोपयोगिन्यः क्षयोदयवत्यः पञ्चदश तिथयो भवन्तीति तिथयः षोडशैवेत्यविरुद्धं वचनमिति । स्मृतितत्त्वे चार्थे पक्षनिर्णय एवोदाहृतः । "तस्य रात्रयः पञ्चदश कला ध्रुवैवास्य षोडशी कलेति" । एवं सत्यत्र सामान्यविशेषरूपेण तिथिद्वैविध्यमुक्तं भवति । तत्र येयममेत्युक्ता क्षयोदयवर्जिता ध्रुवा षोडशी कला तद्युक्तः कालस्तिथिसामान्यम् । यास्त्ववशिष्टा वृद्धिक्षयोपेताः पञ्चदश कलास्ताभिर्विशिष्टाः कालविभागास्तिथिविशेषाः । तासां पञ्चदशानामेकैकां कलां वह्न्यादयः प्रजापत्यन्ताः पञ्चदश देवताः क्रमेण पिबन्ति । तत्र वह्निना कला प्रथमं पीयत इति प्रथमेत्युच्यते । तया युक्तः कालविशेषः प्राथम्यवाचिना प्रतिपच्छब्देनाभिधीयते । एवं द्वितीयादीनां पञ्चदशान्तानां तिथीनां नामान्यवगन्तव्यानि । ता एताः कृष्णपक्षतिथयो भवन्ति । पुनश्च ताः पीताः कला अनेनैव क्रमेण तत्तत्पात्रवह्न्यादिदेवताभ्यो निर्गत्य चन्द्रमण्डलं पूरयन्ति । ताभिर्युक्ताः कालविशेषाः शुक्लपक्षगताः प्रतिपदाद्यास्तिथयो भवन्ति । वह्न्यादिदेवतानां कलापानं सोमोत्पत्तौ पठ्यते । तथाहि "प्रथमां पिबते वह्निर्द्वितीयां पिबते रविः । विश्वे देवास्तृतीयान्तु चतुर्थीं सलिलाधिपः । पञ्चमीं तु वषट्कारः षष्ठीं पिबति वासवः । सप्तमीमृषयो दिव्या अष्टमीमजएकपात् । नवमीं कृष्णपक्षस्य यमः प्राश्नाति वै कलाम् । दशमीं पिबते वायुः पिबत्येकादशीमुमा । द्वादशीं पितरः सर्वे समं प्राश्नन्ति भागशः । त्रयोदशीं धनाध्यक्षः कुबेरः पिबते कलाम् । चतुर्दशीं पशुपतिः पञ्चदशीं प्रजापतिः । निपीतः कलया शेषश्चन्द्रमा न प्रकाशते । कला षोडशिका या सा त्वपः प्रविशते सदा । अमायान्तु सदा सोम ओषधीः प्रतिपद्यते । तमोषधिगतं गावः पिबन्त्यम्बुगतञ्च यत् । तत्क्षीरममृतं भूत्वा मन्त्रपूतं द्विजातिभिः । हुतमग्निषु यज्ञेषु पुनराप्यायते शशी । दिने दिने कलावृद्धिः पौर्णमास्यान्तु पूर्यते" । ज्योतिःशास्त्रे तु सिद्धान्तशिरोमणिकारेण तिथिरेवं प्रदर्शिता । "अर्काद्विनिःसृतः प्राचीं यद्यात्यहरहः शशी । तच्चान्द्रमानमंशैस्तु ज्ञेया द्वादशभिस्तिथिरिति" । अयमर्थः । सूर्यमण्डलस्य अधःप्रदेशवर्त्ती शीघ्रगामी चन्द्र ऊर्द्धप्रदेशवर्त्ती मन्दगामी सूर्यस्तथा सति तयोर्गतिविशेषवशात् दर्शे चन्द्रमण्डलमन्यूनमनतिरिक्तं सूर्यमण्डलस्याधोभागे व्यवस्थितं भवति तदा सूर्यरश्मिभिः साकल्येनाभिभूतत्वाच्चन्द्रमण्डलमीषदपि न दृश्यते । उपरितने शीघ्रगत्या सूर्याद्विनिःसृतः शशी प्राचीं याति । त्रिंशदंशोपेतराशौ द्वादशभिरंशैः सूर्यमुल्लङ्घ्य गच्छति । तदा चन्द्रस्य पञ्चदशसु भागेषु प्रथमभागो दर्शनयोग्यो भवति । सोऽयं भागः प्रथमकलेत्यभिधीयते । तत्कलानिष्पत्तिपरिमितः कालः प्रतिपत्तिथिर्भवति । एवं द्वितीयादितिथिष्ववगन्तव्यमिति । तदेतद्विष्णुधर्म्मोत्तरे विस्तरेणाभिहितम् "चन्द्रार्कगत्या कालस्य परिच्छेदो यदा भवेत् । तदा तयोः प्रवक्ष्यामि गतिमाश्रित्य निर्णयम् । भगणेन समग्रेण ज्ञेया द्वादश राशयः । त्रिंशांशश्च तथा राशेर्भाग इत्यभिधीयते । आदित्याद्विप्रकृष्टस्तु भागद्वादशकं यदा । चन्द्रमाः स्यात्तदा राम ! तिथिरित्यभिधीयते" इति । सेयं द्वादशभिर्भागैः सूर्यमुल्लङ्घितवती प्रथमा चन्द्रकला शृङ्गद्वयोपेतसूक्ष्मरेखाकारा शौक्ल्यमीषदुपयाति । उत्तरोत्तरदिनेषु सूर्यमण्डलविप्रकर्षतारतम्यानुसारेण शौक्ल्यमुपचीयते । अनयैव रीत्या सन्निकर्षतारतम्येन मेचकत्वमुपचीयते । तदेतदुक्तं सिद्धान्तशिरोमणौ "उपचयमुपयाति शौक्ल्यमिन्दोस्त्यजत इनं व्रजतश्च मेचकत्वम् । जलमयमण्डलस्य गोलकत्वात् प्रभवति तीक्ष्णविषाणरूपताऽस्येति" । सूर्याचन्द्रमसोर्यौ सन्निकर्षविप्रकर्षौ तयोरवसानं दर्शपूर्णिमयोः सम्पद्यते । तदाह गोभिलः "यः परो विप्रकर्षः सूर्याचन्द्रमसोः सा पौर्णमासी । यः परः सन्निकर्षः साऽमावास्येति" नन्वत्र चन्द्रकलानां

सूर्य्ये प्रवेशनिर्गमौ प्रतीयेते सोमोत्पत्तौ तु वह्न्यादिदेवतासु। नायं दोषः अस्मदादिदर्शनापेक्षया ज्योतिःशास्त्रस्य प्रवृत्तत्वात्। सोमोत्पत्तौ तु वह्न्यादिदेवतानां तत्तत्कलाप्रयुक्ता तृप्तिर्विवक्षिता। यदि सूर्य्ये प्रवेशनिर्गमौ यदि वा वह्न्यादिदेवतासु, सर्वथापि कलाप्रयुक्ता एव प्रतिपदादितिथयः। ननु सावनदिनेषु सौरदिवसेषु च निर्णयमुपेक्ष्य चान्द्रतिथिष्वेव कुतो निर्णयोद्यम इति चेत्। सन्देहसद्भावादिति ब्रूमः। न खलु सौरसावनादिदिवसयोः सन्देहसद्भावोऽस्ति नियतपरिमाणत्वात्। तच्च ब्रह्मसिद्धान्तेऽभिहितम् "सावनं स्यादहोरात्रमुदयादोदयाद्रवेः। रवेस्त्रिंशत्तु राश्यंशस्तिथिसम्भोग ऐन्दवमिति"। एकस्मिन् राशौ यावन्तं कालं रविर्वर्त्तते तावतः कालस्य त्रिंशो योऽयमंशः स सौरो दिवसः तिथिरेका कला तत्सम्भोग इन्द्योर्यावता कालेन निष्पद्यते तदैन्दवं दिनम्। न चात्र सौरसावनयोरिव चान्द्रेऽपि दिने सन्देहाभावः शङ्कनीयः ह्रासवृद्धिवशेन सन्देहसद्भावात्। ह्रासवृद्धी च गर्गेण दर्शिते "खर्वो दर्पस्तथा हिंस्रस्त्रिविधं तिथिलक्षणम्। धर्माधर्मवशादेवं तिथिस्त्रेधा विवक्षितेति"। खर्वा समतिथिः। दर्पा वृद्धियुक्ता हिंस्रा क्षययुक्ता। तस्यैतस्य त्रैविध्यस्य विपरिवर्तनविशेषेण तिथिः संपूर्णा खण्डा चेति द्वैविध्यमापद्यते। तत्र संपूर्णा स्कन्दपुराणे दर्शिता "प्रतिपत्प्रभृतयः सर्वा उदयादोदयाद्रवेः। संपूर्णा इति विख्याता हरिवासरवर्जिताः" इति। हरिवासर एकादशी। या तु नोक्तलक्षणा सा खण्डतिथिः। तत्र संपूर्णायां विधिनिषेधयोर्नास्ति सन्देहः। खण्डतिथौ तु विधिनिषेधव्यवस्थामाह गार्ग्यः। "निमित्तं कालमादाय वृत्तिर्विधिनिषेधयोः। विधिःपूज्यतिथौ तत्र निषेधः कालमात्रके। तिथीनां पूज्यता नाम कर्मानुष्ठानयोग्यता। निषेधस्तु निवृत्त्यात्मा कालमात्रमपेक्षते" इति। एवञ्च सति खण्डतिथौ पूज्यत्वं निर्णेतव्यं भवति। तत्र प्रतिपदमारभ्य पञ्चदशान्तास्तिथयः क्रमेण निर्णीयन्ते।"

कालमाधवीयग्रन्थे विस्तरोद्रष्टव्यः। कारिकाभिश्च माधवेन तत्तत्तिथिभेदेषु खण्डविशेषग्राह्यता प्रसङ्गागतमासादिनिरूपणपूर्वकं दर्शिता यथा

"व्याख्याय माधवाचार्यो धर्मान् पाराशरानथ। तदनुष्ठानकालस्य निर्णयं वक्तुमुद्यतः। अथोऽनुक्रम्यते श्लोकैरखिलो निर्णनीषितः। सावत्तैवानुतिष्ठासुर्निःसन्देहं प्रवर्त्तताम्। ततो मीमांसुचित्तस्य समाधानाय तत् पुनः। विवरिष्ये यथान्यायं श्रुतिस्मृतिवचोबलात्। पञ्च प्रकरणान्यत्र तेषूपोद्घातवत्सरौ। प्रतिपच्छिष्टतिथयो नक्षत्रादिरिति क्रमः। १उपोद्घाते कालसत्त्वं तस्य निर्णययोग्यता। ईश्वरो नित्यकालात्मा चिन्तनीयः स कर्मसु। जन्यकालेऽब्दमुख्यत्र सूक्ष्ममेतच्चतुष्टयम्। अब्दायनर्त्तुमासाश्च पक्षः प्रकरणान्तरे २। अब्दः पञ्चविधश्चान्द्रो व्रतादौ तिलकादिके। सुजन्मादिव्रते सौरो गोसत्रादिषु सावनः। त्रयोऽप्याचार्य्यसेवादौ विकल्प्यन्ते निजेच्छया। आयुर्दाये तु नाक्षत्रो वार्हस्पत्योऽधिवत्सरः। चान्द्राणां प्रभवादीनां पञ्चके पञ्चके युगम्। संपरीदादन्वित्येच्छब्दपूर्वास्तु वत्सराः। तिलो यवो वस्त्रधान्ये रजतं दीयतेऽत्र तु। उभे कर्म्मणि शान्ते च स्तोऽयने दक्षिणोत्तरे। वसन्ताद्यृतवो द्वेधा चान्द्राः सौराश्च चान्द्रकाः। चैत्राद्या अथ मीनाद्या मेषाद्या वा विवस्वतः। तेष्वाधानादयस्तद्वत् यथामूर्त्ति व्रतपूजनम्। मासास्तु सावनः सौरश्चान्द्रो नाक्षत्र इत्यमी। दर्शान्तः पूर्णिमान्तो वा चान्द्रोऽसौ विप्रवैश्ययोः। सौरो राज्ञः सावनस्तु यज्ञे ज्यौतिषिके परः। माघादिमासभेदेषु तिलदानादयः स्मृताः। चान्द्रोऽधिमासोऽसंक्रान्तः सोऽन्तर्भवति चोत्तरे। असंक्रान्तावेकवर्षे द्वौ चेत्स्युर्पूर्वआदिमः। क्षयमासो द्विसंक्रान्तः स चांहस्पतिसंज्ञकः। एतौ त्याज्यौ विवाहादौ संसर्पांहस्पती उभौ। शुद्धो श्रौते तथा स्मार्त्ते मलमासो विविच्यते। काम्यारम्भं तत्समाप्तिं मलमासे विवर्जयेत्। आरब्धं मलमासात् प्राक्कृच्छ्रसत्रादिकं च यत्। तत्समाप्यं सावनस्य मासस्यानतिलङ्घनात्। आरम्भस्य समाप्तेश्च मध्ये चेत् स्यात् मलिम्लुचः। प्रवृत्तमखिलं काम्यं तदानुष्ठेयमेव तु। कारीर्यादि तु यत् काम्यं तस्यारम्भसमापने। कार्य्यकालविलम्बस्य प्रतीक्षाया असम्भवात्। अनन्यगतिकं नित्यमग्निहोत्रादि न त्यजेत्। गत्यन्तरयुतं नित्यं सोमयागादि वर्जयेत्। अगति ग्रहणस्नानं जातेष्टि,रतिसंयुतम्। इयं नैमित्तिकं तस्य व्यवस्था नित्यवन्मता। शुद्धमासमृतानां स्यान्मलिने प्रथमाब्दिकम्। मलमासमृतानान्तु मले स्यादाब्दिकान्तरम्। दैवे मुख्यः शुक्लपक्षः कृष्णः पित्र्ये विधीयते। तृतीये तु ३ प्रकरणे

वर्णिता प्रतिपत्तिथिः । प्रतिपन्नाम विज्ञेया चन्द्रस्य प्रथमा कला । शुक्लपक्षे विशेच्चन्द्रं कृष्णपक्षे विनिःसरेत् । शुद्धा विद्धा तिथिः शुद्धा हीनातिथ्यान्ययाहनि । उदये पूर्वया तिथ्या विध्यते त्रिमुहूर्त्तकैः । सायन्तूत्तरया तद्वत्न्यूनया तु न विध्यते । वेध्यापि त्रिमुहूर्त्तैव न न्यूना वेधमर्हति । शुद्धायां नास्ति सन्देहो दैवे पित्र्ये च कर्म्मणि । उपवासश्चैकभक्तं नक्तं चायाचितं व्रतम् । दानञ्च षड्विधं दैवं क्रमादत्र विविच्यते । एकोद्दिष्टं पार्व्वणञ्च पित्र्यं द्विविधमीर्यते । शुक्लपक्षे दर्शविद्धा कृष्णे विद्धा द्वितीयया । उपोष्या प्रतिपच्छुक्ले मुख्या स्यादापराह्णिकी । तदभावे तु सायाह्णव्यापिनी परिगृह्यताम् । प्रातःसङ्गवमध्याह्नापराह्णाः सायमित्यमी । अत्राह्नां पञ्चमा भागो मुख्यो द्वित्र्यादिभागतः । अभावेऽपि प्रतिपदः संकल्पः प्रातरिष्यते । तिथिस्त्रियामतोऽर्व्वाक् चेत् तिथ्यन्ते पारणं भवेत् । वह्न्युत्सवं च पूर्व्वेद्युरुपवासवदाचरेत् । मुख्यतिथ्यन्तराये तु तिथियोगोऽपि गृह्यताम् । शुद्धाऽधिका तु कृष्णापि पूर्व्वा संपूर्त्तिसंभवात् । गृहीतव्या त्वेकभक्ते मध्याह्नव्यापिनी तिथिः । परेद्युरेव पूर्व्वेद्युरेव व्याप्तिर्दिनद्वये । नोभयत्रोभयत्रांशे साम्यं वैषम्यमित्यमी । षट् पक्षास्तेषु चैकैकव्याप्तौ सैवात्र गृह्यताम् । दिनद्वयेऽपि तद्व्याप्त्यव्याप्तौ चैकदेशतः । समव्याप्तौ च पूर्व्वैव वैषम्ये त्वधिकेष्यताम् । अन्याह्णस्यैकभक्तस्य कालस्त्वह्न्यनुसारतः । उपवासप्रतिनिधेस्तिथिः स्यादुपवासवत् । प्रदोषव्यापिनी नक्ते तिथिर्व्याप्तिर्दिनद्वये । अव्याप्तिर्वापि वांशेन व्याप्तिः स्यात् सर्व्वथोत्तरा । सौरनक्ते तु सायाह्नव्यापिनी न प्रदोषगा । अयाचिते तु तिथयः स्वीकार्य्याः उपवासवत् । सोदयत्रिमुहूर्त्तायां कुर्य्याद्दानं व्रतानि च । उभयत्र तथात्वे तु पूर्व्वेद्युस्तदनुष्ठितिः । परत्रैव तथात्वं चेत् पर्व्वा ग्राह्या तिथिक्षये । तिथेः साम्ये च वृद्धौ च गृह्यतां तिथिरुत्तरा । अस्पर्शे चैकदेशस्य व्याप्तौ पूर्व्वैव गृह्यताम् । एकोद्दिष्टे तु मध्याह्नयुक्ता स्यादेकभक्तवत् । एकदेशे समव्याप्तौ क्षये पूर्व्वाऽन्यथोत्तरा । कुतपाद्यपराह्णस्य व्याप्तिरावृद्दिक उत्तमा । तदभावेऽपराह्णस्य व्यापिका गृह्यतां तिथिः । क्षये पूर्व्वोत्तरा वृद्धौ व्याप्तिश्चेदपराह्णयोः । न ग्राह्यातिथिगौ वृद्धिक्षयावूर्द्ध्वं तिथेस्तु तौ । साम्ये त्वर्द्धतिथेर्ग्राह्या परविद्धैव वृद्धिवत् । न स्पृशत्यपराह्णौ चेत् पूर्व्वा स्यात् कुतपो यथा । वैषम्ये चैकदेशस्य व्याप्तौ ग्राह्या महत्त्वतः । साम्येन चेत् क्षये पूर्व्वा परा स्याद्वृद्धिसाम्ययोः । वृद्धिसाम्यक्षया ग्राह्य तिथिगा नोर्द्ध्वगा इह । ४द्वितीयाद्यास्तु पर्व्वान्तास्तुर्य्यप्रकरणोदिताः । सञ्चारणीयः सामान्यतिथिषु प्रतिपच्चयः । क्वचित् क्वचिद्विशेषोऽस्ति सोऽयमत्राभिधीयते । पूर्व्वेद्युरसती प्रातः परेद्युस्त्रिमुहूर्त्तगा । सा द्वितीया परोपोष्या पूर्व्वविद्धा ततोऽन्यथा । रम्भाहृतीया पूर्व्वा स्यादुत्तरा स्याद् व्रतान्तरे । परेऽह्नि नास्ति चेत् पूर्व्वविद्धाप्यस्तु व्रतान्तरे । मुहूर्त्तमात्रसत्त्वेऽपि दिने गौरीव्रतं परे । शुद्धाधिकायामप्येवं गणयोगप्रशंसनात् । चतुर्थी तु परोपोष्या गणनाथव्रतस्य तु । मध्याह्नव्यापिनी पूज्या तद्वन्नागचतुर्थ्यपि । परेद्युरेव मध्याह्नव्याप्तौ विघ्नस्य सोत्तरा । अन्यथा पूर्व्वविद्धैव मातृयोगप्रशस्तितः । पूर्व्वेद्युरेव तद्व्याप्तौ पूर्व्वा सर्पप्रिया तिथिः । नो चेत् सर्पस्य पञ्चम्या योगेऽत्यन्तं प्रशस्यते । गौर्य्याः शुद्धाजयायुक्ता, नागविद्धा निषिध्यते । सर्व्वत्र पञ्चमी पूर्व्वा ग्राह्या स्कन्दव्रते परा । नागविद्धा स्कन्दषष्ठी सा निषिद्धा मतान्तरे । उत्तरस्या अलाभे तु नागविद्धापि गृह्यताम् । विनाग्राह्या परेऽभावात् नागविद्धा न दोषकृत् । सप्तमी पूर्व्वविद्धैव व्रतेषु निखिलेष्वपि । अलाभे पूर्व्वविद्धायाः परविद्धापि गृह्यताम् । व्रतमात्रेऽष्टमी कृष्णा पूर्व्वा शुक्लाष्टमी परा । दूर्व्वाष्टमी तु शुक्लापि पूर्व्वविद्धा विधीयते । पक्षद्वयेऽप्युत्तरैव शिवशक्तिमहोत्सवे । ज्येष्ठर्क्षयोगे पूर्व्वैव ग्राह्या ज्येष्ठाव्रते तिथिः । मध्याह्नादूर्द्ध्वमृक्षं चेत् परेद्युः सा प्रशस्यते । ज्येष्ठर्क्षभानुवाराभ्यां युक्ताष्टम्यतिदुर्लभा । जयन्त्याख्यं व्रतं भिन्नं कृष्णजन्माष्टमीव्रतात् । शुद्धा च सप्तमी विद्धेत्येवं जन्माष्टमी द्विधा । सप्तमी चेन्निशीथात्प्राग्विद्धा शुद्धान्यथा भवेत् । शुद्धायां नास्ति सन्देहो विद्धा च त्रिविधेष्यते । निशीथयोगः पूर्व्वेद्युः परेद्युर्वा द्वयोरुत । पूर्व्वैव प्रथमे पक्षे परैवोत्तरपक्षयोः । अष्टमी रोहिणी शुद्धा जयन्ती सा चतुर्व्विधा । शुद्धा शुद्धाधिकेत्येवं विद्धाविद्धाधिकेति च । शुद्धायामपि विद्धायां न सम्भाव्योत्तरा तिथिः । शुद्धाधिकायां योगः स्यादेकस्मिन्वा दिनद्वये । नैकयोगेऽस्ति सन्देहो द्वियोगे प्रथमं दिनम् । सदा निशीथे पश्चाद्वेत्युत्तमो मध्यमोऽधमः । योगस्त्रिधापि पूर्व्वेद्युः सम्पूर्णत्वादुपोषणम् । विद्धाधिकायामप्येकदिनयोगे स गृह्यताम् । द्वयोर्य्योगस्त्रिधा भिन्नो निशीथे वृत्तिभेदतः । तद्वृत्ति-

र्दिने एकस्मिन्नुभयोर्नैभयोरिति। एकस्मिंश्चेत् तद्दिनं स्यात् पक्षयोरन्त्ययोः परा। बुधे सोमे जयन्ती चेद्वारे सातिफलप्रदा। तिथ्यृक्षयोर्द्वयोरन्ते उत्तमं पारणं भवेत्। एकस्यान्ते मध्यमं स्यादुभयान्तेऽधमं स्मृतम्। यस्मिन् वर्षे जयन्त्याख्यो योगो जन्माष्टमी तदा। अन्तर्भूता जयन्त्यां स्यादृक्षयोगप्रशस्तितः।
नवमी पूर्व्वविद्धैव पक्षयोरुभयोरपि। मध्याह्ने रामनवमी पुनर्व्वसुसमन्विता। ग्राह्या नैवाष्टमीयुक्ता सनक्षत्रापि वैष्णवैः। कृष्णा पूर्व्वोत्तरा शुक्ला दशम्येव व्यवस्थिता। जयन्तीव्रतवर्ज्जन्तु काम्यं चैकादशीव्रतम्। अरुणोदयवेधोऽत्र वेधः सूर्य्योदये तथा। उक्तौ द्वौ दशमीवेधौ वैष्णवस्मार्त्तयोः क्रमात्। कलाकाष्ठादिवेधोऽपि ग्राह्योऽत्र त्रिमुहूर्त्तवत्। वैखानसाद्यागमोक्तदीक्षां प्राप्तो हि वैष्णवः। विद्धा त्याज्या वैष्णवेन शुद्धाप्याधिक्यसम्भवे। एकादशी द्वादशी वाधिका चेत्त्यज्यतां दिनम्। पूर्व्वं त्याज्यमुत्तरं स्यादिति वैष्णवनिर्णयः। एकादशी द्वादशी चेदुभयं वर्द्धते यदा। तदा पूर्व्वदिनं त्याज्यं स्मार्त्तैर्ग्राह्यं परं दिनम्। एकादशीमात्रवृद्धौ गृहियत्योर्व्यवस्थितिः। उपोष्या गृहिभिः पूर्व्वा यतिभिस्तूत्तरा तिथिः। द्वादशीमात्रवृद्धौ तु शुद्धाविद्धे व्यवस्थिते। शुद्धा पूर्व्वोत्तरा विद्धा स्मार्त्तनिर्णय ईदृशः। श्रवणेन युता चेत् स्याद्द्वादशी सा हि वैष्णवैः। स्मार्त्तैश्चोपोषणीया स्यात्त्यजेदेकादशीं तदा। उपवासव्रतादन्यव्रते सार्द्धमुहूर्त्तकैः। सप्तभिर्दशमीविद्धामेतामेकादशीं त्यजेत्। द्वादशी पूर्व्वविद्धैव निखिलेषु व्रतेष्वपि। शुक्लत्रयोदशी पूर्व्वा परा कृष्णत्रयोदशी। अलाभे सापि पूर्व्वैव पराऽनङ्गत्रयोदशी। या शुक्ला गृह्यते पूर्व्वा गृह्यतां सापराह्णिकी। चतुर्द्दश्युत्तरा शुक्ला पूर्व्वा कृष्णचतुर्द्दशी। उदये द्विमुहूर्त्तापि ग्राह्यानन्तव्रते तिथिः। शुक्लापि रात्रियुक्ता स्याच्चैत्रश्रावणमासयोः। शुक्ला सर्व्वापि पूर्व्वैव यदि स्यादापराह्णिकी। प्रदोषे वा निशीथे वा द्वयोर्व्वा यास्ति सा भवेत्। शिवरात्रिव्रते तत्र द्वयोः सत्ता प्रशस्यते। तदभावे निशीथैकव्याप्तापि परिगृह्यताम्। तस्यास्त्वसम्भवे ग्राह्या प्रदोषव्यापिनी तिथिः। तिथ्यन्ते पारणं यामत्रयादर्व्वाक् समापने। अन्यथा पारणं प्रातरन्यतिथ्युपवासवत्। पूर्व्वविद्धैव सावित्रीव्रते पञ्चदशी तिथिः। नाड्योऽष्टादश भूतस्य स्युश्च तत्र परेऽहनि। व्रतान्तराणि सर्व्वाणि परेऽहन्येव सर्व्वदा। श्राद्धेऽपराह्णकालीनो दर्शश्चाब्दिकवन्मतः। दिनद्वयेऽप्येकदेशव्याप्तौ ग्राह्यो महत्त्वतः। तुल्यत्वं चेदेकदेशत्वये पूर्व्वोऽन्यथोत्तराः। कृत्स्नव्याप्तौ द्वयोरह्नोरुत्तरस्तिथिवृद्धितः। साग्न्यनग्निव्यवस्था स्याच्च चेत् स्यादपराह्णयोः। पूर्व्वेद्युः साग्निकः कुर्य्यादुत्तरेद्युर्निरग्निकः। पर्व्वप्रतिपदोः सन्धिर्मध्याह्ने वा ततः पुरा। अन्वाधानं पूर्व्वदिने यागः सन्धिदिने भवेत्॥ ऊर्द्ध्वं मध्याह्नतः सन्धावन्वाधानं तु तद्दिने। इष्टिं परदिने कुर्य्यादन्यो वाजसनेयिनः। यस्तु वाजसनेयी स्यात्तस्य सन्धिदिनात् पुरा। न काप्यन्वाहितिः किन्तु सदा सन्धिदिने हि सा। सन्धिश्चेत् सङ्गवादूर्द्ध्वं प्राक्चेदावर्त्तनाद्रवेः। सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिः। वृद्धिः प्रतिपदो यास्ति तदूर्द्ध्वं पर्व्वणि क्षियेत्। क्षयस्यार्द्धं तथा हित्वा सन्धिर्निश्चीयतां तदा। बौधायनमते दर्शश्राद्धं चेदिष्टिर्विशिष्यते। द्वितीया त्रिमुहूर्त्ता चेत् प्रतिपच्चापराह्णिकी। अन्वाधानं चतुर्द्दश्यां दर्शस्यान्तेऽपि वर्त्तयेत्। दर्शश्राद्धं तथा कार्य्यमिति बौधायनोदितम्। इष्ट्यादिविकृतिः सर्व्वा पर्व्वण्येवेति निर्णयः।” प्रकरणे नक्षत्रनिर्णयो विस्तरभयान्न दर्शितः।

दर्शादिश्राद्धेऽन्यत्र चोक्तं यथा
“दर्शो यत्रापराह्णं स्पृशति स दिवसः श्राद्धकालो द्वयोश्चेद्व्याप्त्यो यदासौ यदि भवति समः क्षीयमाणे तु पूर्व्वः। वृद्धौ साग्न्येत्वनग्नेर्युवतिदृषलयोश्च स्व एवाहिताग्नेः पूर्व्वो न क्वापराह्णं स्पृशति कुतपसंस्पर्शितोऽयं विधिः स्यात्। सायन्त्वन्यपरत्र चेन्मृततिथिः सैवाब्दिके मासिके ग्राह्या सा द्व्यपराह्णयोर्यदि तदा यत्राधिका सा मता। तुल्या चेदुभयापराह्णसमये पूर्व्वा न चेत् सङ्क्षये पूर्व्वैव त्रिमुहूर्त्तगास्तसमये नो चेत् परैवोचिता”।
तिथिविशेषकृत्ये स्वस्वतिथिविशेषशब्दे तत्तच्छब्दे उक्तं वक्ष्यते च। तिथितत्त्वादौ दृश्यम्।
प्रतिपदादितिथिविशेषाणामुभयदिनव्याप्त्यादौ निर्णयः निर्णयसिन्धौ दर्शितो यथा
“शुक्लप्रतिपदपराह्णव्यापित्वे पूर्व्वा ग्राह्या युग्मवाक्यात् प्रतिपत्सम्मुखी कार्य्या या भवेदापराह्णिकीति” स्कान्दोक्तेः “शुक्ला स्यात् प्रतिपत्तिथिः प्रथमतश्चेत् सापराह्णे भवेदिति” दीपिकोक्तेश्च। अपराह्णश्च पञ्चधा भक्ते दिने चतुर्थो भागः। तदभावे सायाह्नव्या-

पिनी ग्राह्या “तदभावे तु सायाह्नव्यापिनी परिगृह्यता-मिति” माधवोक्तेः कृष्णा तु परा “कृष्णा तूत्तरतोऽखिलेति” दीपिकोक्तेः कृष्णापि पूर्वैवेत्यनन्तभट्टाः।

द्वितीया तु कृष्णा पूर्वा शुक्लोत्तरा इति हेमाद्रिः कृष्णा द्वितीयादिमा “पूर्वाह्णे यदि सा सिता तु परतः सर्वा” इति दीपिकोक्तेः माधवानन्तभट्टमते तु सर्वापि द्वितीया परा तथा च माधवः “पर्वेन्दुग्रसनी प्रातः परेद्युस्त्रिमुहूर्त्तगा। सा द्वितीया परोपोष्या पूर्वविद्धा ततोऽन्यथा” इति

तृतीया तु सर्वमते रम्भाव्यतिरिक्ता परैव तेन युग्मवाक्यं रम्भाव्रतविषयम् “रम्भाख्यां वर्जयित्वा तु तृतीयां द्विजसत्तम! अन्येषु सर्वकार्य्येषु गणयुक्ता प्रशस्यते इति ब्रह्मवैवर्तात् गौरीव्रते तु विशेषमाह माधवः “मुहूर्त्तमात्रसत्त्वेऽपि दिने गौरीव्रतं परे। शुद्धाधिकायामप्येवं गणयोगप्रशंसनादिति”।

चतुर्थ्यपि सर्वमते गणेशव्रतातिरिक्ता परैव युग्मवाक्यात् “एकादशी तथा षष्ठी अमावास्या चतुर्थिका। उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः” इति माधवीये वृद्धवसिष्ठोक्तेश्च

नागचतुर्थी तु मध्याह्नव्यापिनी पञ्चमीयुता च ग्राह्या इति निर्णयामृते माधवीये चोक्तम् “युगं मध्यंदिने यत्र तत्रोपोष्य फणीश्वरान्। क्षीरेणाप्याय्य पञ्चम्यां पूजयेत् प्रयतो नरः। विषाणि तस्य नश्यन्ति न तान् हिंसन्ति पन्नगाः” इति माधवीये देवलोक्तेः युगं चतुर्थी। सर्वत्र मध्याह्नव्याप्तौ पूर्वा अन्यपक्षेषु परैव पञ्चम्यां पूजोक्तेः गणेशव्रते तृतीयायुतैव चतुर्थी “चतुर्थी तु तृतीयायां महापुण्यफलप्रदा। कर्त्तव्या व्रतिभिर्वत्स! गणनाथसुतोषिणी” इति हेमाद्रौ ब्रह्मवैवर्त्तात्। माधवीये तु गणेशव्रते “मध्याह्नव्यापिनी मुख्या” चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते। मध्याह्नव्यापिनी चेत् स्यात् परतश्चेत् परेऽहनि” इति वृहस्पतिवचनात् “प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने पूजयेन्नृप!” इति “तत्काले ऽभिधानाच्च तेन परदिने तद्व्याप्तौ परा अन्यथा पूर्वेत्युक्तम् वस्तुतस्तु यत्र भाद्रशुक्लचतुर्थ्यादौ गणेशव्रतविशेषे मध्याह्नपूजोक्ता तद्विषयाण्येव प्रागुक्तवचनानि न तु सार्वत्रिकाणि। संकष्टचतुर्थ्यादौ बहूनां कर्मकालानां बाधापत्तेः तेन सर्वत्र गणेशव्रते पूर्वेति सिद्धम्। संकष्टचतुर्थी तु चन्द्रोदयव्यापिनी ग्राह्या दिनद्वये तद्व्याप्तौ स तृतीयोगस्य सत्त्वात् पूर्वेति केचित्। अन्ये तु मुहूर्त्तत्रयादिरूपस्य तृतीयायोगस्याभावात्परदिने माधवोक्तमध्याह्नव्यापित्वात् संपूर्णत्वाच्च परेत्याचक्षते। दिनद्वये तदभावे तु परैव। गौरीव्रते तु पूर्वैव। “गणेशगौरीबहुलाव्यतिरिक्ताः प्रकीर्त्तिताः। चतुर्थ्यः पञ्चमीविद्धा देवतान्तरयोगतः” इति मदनरत्ने ब्रह्मवैवर्त्तात्

पञ्चमी तु माधवमते सर्वापि पूर्वा “चतुर्थीसंयुता कार्य्या पञ्चमी परया न तु। दैवे कर्मणि पित्र्ये च शुक्लपक्षे तथा सितेति” हारीतोक्तेः हेमाद्रिमते तु कृष्णा पूर्वा सिता परा “कृष्णा पूर्वयुता सिता परयुता स्यात् पञ्चमी” इति दीपिकोक्तेः वस्तुतस्तु हारीतोक्तिरुपवासविषया “प्रतिपत्पञ्चमी चैव सावित्री भूतपूर्णिमा। नवमी दशमी चैव नोपोष्याः परसंयुताः” इति ब्रह्मवैवर्त्तात् यत्तु “पञ्चमी तु प्रकर्त्तव्या षष्ठ्या युक्ता तु नारद!” इत्यापस्तम्बीयम् तत् स्कन्दव्रतपरम् “स्कन्दोपवासे स्वीकार्या पञ्चमी परसंयुता” इति वाक्यशेषादिति माधवः तन्नागपूजाविषयमित्यनन्तभट्टनिर्णयामृतादयः। चमत्कारचिन्तामणौ च “पञ्चमी नागपूजायां कार्य्या षष्ठीसमन्विता। तस्यान्तु तुषिता नागा इतरा सचतुर्थिका” इति तेन नागपूजादौ परैव। यत्तु मदनरत्नदिवोदासीययोः श्रावणपञ्चम्यतिरिक्ता पूर्वेत्युक्तं “श्रावणे पञ्चमी शुक्ला संप्रोक्ता नागपञ्चमी। तां परित्यज्य पञ्चम्यश्चतुर्थीसहिता हिताः” इति संग्रहोक्तेः, “गणेशस्कन्दयोगाभ्यां क्रमाद्योगः शुभाशुभः। मित्रामित्रे तयोः पत्रे नागानामाखुवर्हिणौ” इति षट्त्रिंशन्मताच्च श्रावणपञ्चम्यतिरिक्तायाः नागपञ्चम्याश्चतुर्थीयुतत्वमुक्तं तदुपवासादिविषयम्। पत्रे वाहने।

षष्ठी सर्वमते स्कन्दव्रतातिरिक्ता परैव युग्मवाक्यात् “नागविद्धा न कर्त्तव्या षष्ठी चैव कदाचन” इति स्कान्दाच्च निर्णयामृते “षष्ठी च सप्तमी चैव वारश्चेदंशुमालिनः। योगोऽयं पद्मको नाम सूर्य्यकोटिग्रहैः समः”।

सप्तमी पूर्वैव युग्मवाक्यात् “षष्ठ्या युता सप्तमी च कर्त्तव्या तात! सर्वदा” इति स्कान्दाच्च।

अष्टमी तु सर्वमते कृष्णा पूर्वा सिता परा “व्रतमात्रेऽष्टमी कृष्णा पूर्वा शुक्लाष्टमी परा” इति माधवोक्तेः “परयुक् शुक्लाष्टमी पूर्वयुक् कृष्णा” इति दीपिकोक्तेश्च शिवशक्त्युत्सवे तु कृष्णाप्युत्तरा “पक्षद्वयेऽप्युत्तरैव शिवशक्तिमहोत्सवः” इति माधवोक्तेः दिवोदासीये भविष्ये “यदा यदा सिताष्टम्या

बुधवारो भवेत् क्वचित्। तदा तदा हि सा ग्राह्या एकभक्ताशने नृप !। सन्ध्याकाले तथा चैव पञ्चम्यां च जनार्दने। बुधाष्टमी न कर्तव्या हन्ति पुण्यं पुरातनम्” अन्त्यं पद्यं हेमाद्रौ न धृतम्।

नवमी तु सर्वमते पूर्वा युग्मवाक्यात् “न कुर्य्यान्नवमीं तात ! दशम्या तु कदाचन” इति स्कान्दाच्च।

दशमी पूर्वा परा वेति हेमाद्रिः “कृष्णा पूर्वोत्तरा शुक्ला दशम्येवं व्यवस्थिता” इति माधवः वस्तुतस्तु तुल्या नवमीयुतैव ग्राह्या “दशमी तु प्रकर्तव्या सदुर्गा द्विजसत्तम !” इत्यापस्तम्बोक्तेः यत्तु “संपूर्णा दशमी कार्य्या पूर्वया परयाऽथ वा” इत्यङ्गिरसोक्तं तन्नवमीयुक्ताऽलाभे औदयिकी ग्राह्येत्येवं नेयम्”।

एकादशीनिर्णयस्तु कालमाधवीयानुसारेण एकादशीशब्दे १४८८ पृ० उक्तः। महाद्वादश्यादिनिर्णयः नि० सि० यथा “अथाष्टौ महाद्वादश्यः तत्र शुद्धाधिकैकादशीयुक्ता द्वादशी उन्मीलिनी१ संज्ञा द्वादश्येव शुद्धाधिका वर्द्धते चेत्सा वञ्जुली२ वासरत्रयस्पर्शिनी त्रिस्पृशा३ अथ पर्वणः संपूर्णाधिकत्वे पक्षवर्द्धिनी४। पुष्यर्क्षयुता जया५ श्रवणयुता विजया६ पुनर्वसुयुता जयन्ती७ रोहिणीयुता पापनाशिनी८ एताः पापक्षयमुक्तिकाम उपवसेत्। अत्र मूलं हेमाद्रौ ज्ञेयम्। एकादशीद्वादश्योरेकाहे तन्त्रेणोपवासः, पार्थक्ये तु शक्तस्योपवासद्वयम् “एकादशीमुपोष्यैव द्वादशीं समुपोषयेदिति विष्णुरहस्यात् अशक्तौ तु द्वादश्यामेव “एवमेकादशीं त्यक्त्वा द्वादशीं समुपोषयेत्। पूर्ववासरजं पुण्यं सर्वं प्राप्नोत्यसंशयमिति” तत्रैवोक्तेः। यदा त्वल्पा द्वादशी तदोक्तं मात्स्ये “यदा भवति स्वल्पापि द्वादशी पारणादिने। उषःकाले द्वयं कुर्य्यात्प्रातर्माध्याह्निकं तदा। नारदीयेऽपि “अल्पायामथ विप्रेन्द्र ! द्वादश्यामरुणोदये। स्नानार्चनक्रियाः कार्य्या दानहोमादिसंयुताः” इति सङ्कटे तु माधवीये देवलः “सङ्कटे विषमे प्राप्ते द्वादश्यां पारयेत् कथम्। अद्भिस्तु पारणात् कुर्य्यात् पुनर्भुक्तं न दोषकृदिति”। सङ्कटे त्रयोदशीश्राद्धप्रदोषादौ। अत्र केचिदाहुः अपकर्षवाक्यान्यनाहिताग्निविषयाणि अग्निहोत्रादीनां श्रौतत्वेनापकर्षायोगादिति। द्वादश्यां च प्रथमपादमतिक्रम्य पारणं कार्य्यम् “द्वादश्याः प्रथमः पादो हरिवासरसंज्ञितः। तमतिक्रम्य कुर्वीत पारणं विष्णुतत्परः” इति निर्णयामृते मदनरत्ने च विष्णुधर्मोक्तेः। अत्र केचित् सङ्किरन्ते यदा भूयसी द्वादशी तदापि प्रातर्मुहूर्त्तत्रये पारणं कार्य्यम् “सर्वेषामुपवासानां प्रातरेव हि पारणमिति” वचनादिति। अस्मद्गुरवस्तु बहूनां कर्म्मकालानां विना कारणं बाधापत्तेः प्रागुदाहृतवचनैश्च अल्पद्वादश्यामेवापकर्षविधानादपराह्ण एव कार्य्यम्। प्रातःशब्दस्तु “सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितमिति” वदपराह्णवाचित्वेऽप्युपपन्नः न च वाक्यवैयर्थ्यं पुनर्भोजनसायंपारणनिवृत्त्यर्थत्वात्तस्येत्याहुः। प्रमादेन एकादश्युपवासातिक्रमे अपरार्के वाराहे “एकादशी विलुप्ता चेद्द्वादशीपरतः स्थिता। उपोष्या द्वादशी तत्र यदीच्छेत्परमं पदमिति” केचित्तु वैष्णवं पदमिति पठितम् अत्राविरोधिनो नियमाः सर्वव्रतेषु बोद्धव्याः। अन्ये च नवरात्रे वक्ष्यन्त इति दिक्।

द्वादशी तु पूर्वैव युग्मवाक्यात् द्वादशी तु प्रकर्त्तव्या एकादश्या युता प्रभो !” इति स्कान्दाच्च।

त्रयोदशी तु सर्वमते शुक्ला पूर्वा, कृष्णोत्तरा “त्रयोदशीतिथिः पूर्वः सितोऽथाऽसितः पश्चादिति” दीपिकोक्तेः “शुक्ला त्रयोदशी पूर्वा परा कृष्णा त्रयोदशीति” माधवीयाच्च

चतुर्दशी सर्वमते कृष्णा पूर्वा, शुक्लोत्तरा, उपवासे तु द्व्यपि परेति मदनरत्ने।

पौर्णमास्यमावास्ये तु सावित्रीव्रतं विना परे ग्राह्ये “भूतविद्धे न कर्त्तव्ये दर्शपूर्णे कदाचन। वर्जयित्वा मुनिश्रेष्ठ ! सावित्रीव्रतमुत्तममिति” ब्रह्मवैवर्त्तात् “अमायां योगविशेषमाह्वाऽपरार्के शातातपः “अमावस्यां भवेद्वारो यदा भूमिसुतस्य वै। जाह्नवीस्नानमात्रेण गोसहस्रफलं लभेत्”।

“अमा वै सोमवारेण रविवारेण सप्तमी। चतुर्थी भौमवारेण विषुवत्सदृशं फलम्” तत्रैव व्यासः “सिनीवाली कुहूर्वापि यदि सोमदिने भवेत्। गोसहस्रफलं दद्यात् स्नानं वै मौनिना कृतम्”। हेमाद्रौ वृहन्मनुः “श्रवणाश्वि धनिष्ठार्द्रानागदैवतमस्तके। यद्यमा रविवारेण व्यतीपातः स उच्यते”। नागदैवतम् अश्लेषा मस्तको मृगशिरः। प्रथमपाद इत्यन्ये स च सर्वेषाम्”।

सर्वतिथिषु वर्ज्यान्याह मुहूर्त्तदीपिकायाम् “कुष्माण्डं वृहतीफलानि लवणं वर्ज्यं तिलाम्लं तथा तैलं चामलकं दिवं प्रवसता शीर्षं कपालान्त्रकम्। निष्पावांश्च मसूरिकान् फलमथो वृन्ताकसंज्ञं मधु द्यूतं स्त्रीगमनं क्रमात् प्रतिपद दिष्ववमाषोड़शात्” “शीर्षं नारिकेलम्, कपालम् अलावु, अन्त्रं पटोलकम्” भूपालः “कुष्माण्ड

बृहतीच्चारं मूलकं पनसं फलम् । धात्री शिरः कपालान्त्रं नखचर्म्मतिलानि च । क्षुरकर्माङ्गनासेवां प्रतिपत्प्रभृति त्यजेत् । नखं शिम्बी चर्म मसूरिका प्रतिपदादितिथिषु कुष्माण्डादिभक्षणफलं चोक्तं तिथितत्त्वे स्मृत्या यथा

"कुष्माण्डे चार्थहानिः स्याद्बृहत्यां न स्मरेद्धरिम् । बहुशत्रुः पटोले स्याद् धनहानिस्तु मूलके । कलङ्की जायते बिल्वे तिर्य्यग्योनिश्च निम्बके । ताले शरीरनाशः स्यात् नारिकेले च मूर्खता । तुम्बी गोमांसतुल्या स्यात् कलम्बी गोवधात्मिका । शिम्बी पापकरी प्रोक्ता पतिका ब्रह्मघातिका । वार्त्ताकौ सुतहानिः स्यात् चिररोगी च माषके । महापापकरं मांसं प्रतिपदादिषु वर्जयेत्" ।

प्रसङ्गात्तिथिसाधनप्रकारः सि० शि० उक्तो दर्श्यते यथा "रवि १२ रसै ६ र्विरवीन्दुलवाहृताः फलमितास्तिथयः करणानि च । क्रूरहितानि च तानि बवादितः शकुनितोऽसितभूतदलादनु । ग्रहकलाः खरवीन्दुकला हृताः खखगजै ८०० र्भयोगमितिः क्रमात् । अथ हृता खगतैष्यविलिप्तिकाः स्वगतिभिश्च गतागतनाड़िकाः" मू० । "व्यर्केन्दोर्भागा द्विधाः । एकत्र रवि१२भिर्भाज्यास्तत्र फलं गतास्तिथयः । अन्यत्र रसै६र्भाज्याः । फलं गतकरणानि । तानि त्वेकोनानि बवादितो भवन्ति । कृष्णचतुर्द्दश्यर्द्धादुपरि यान्यवशिष्यन्ते त्रीणि चतुर्थं प्रतिपत्प्रथमार्द्धे च । एतानि चत्वारि शकुनितः । शकुनिचतुष्पादनागकिन्तु(किंस्तु)घ्नानीति शेषः । यस्य ग्रहस्य नक्षत्रं ज्ञातुमिष्यते तस्य कलाः कार्य्याः । तथा चन्द्रार्कयोगस्य कलाः कार्य्याः । उभयत्र शताष्टकेन ८०० हृते प्रथमस्थाने गतभानि द्वितीयस्थाने गतयोगाः । अथ यान्यवशिष्टानि तानि गतानि । तानि खखाष्टच्युतानि गम्यानि स्युः । तेषां गतानां गम्यानाञ्च विकलाः स्वस्वगतिभिर्भाज्याः । यल्लभ्यते ता गतघटिका भवन्ति । यद्गम्यानां विकला भक्तास्तदैष्या घटिका भवन्ति । अत्रोपपत्तिः । यदि व्यर्केन्दोश्चक्रांशै ३६० स्त्रिंशत् तिथयो लभ्यन्ते तदैभिः किमिति । अत्र त्रिंशतापवर्तिते हरे जातो द्वादश हरः । अथ यदि चक्रांशैः ३६० षष्टिः ६० करणानि लभ्यन्ते तदैभिः किमिति । अत्रापि षष्ट्यावर्तिते जातो हरः षण्मितः । अथ यदि चक्रकलाभिः २१६०० सप्तविंशतिर्भानि लभ्यन्ते योगा वा तदैभिः किमिति । अत्रापि सप्तविंशत्यापवर्तने कृते जातोऽष्टशती हर उभयत्र । अथ घटीकरणार्थमनुपातः । यदि गतिकलाभिः षष्टिघटिका लभ्यन्ते तदा गतैष्याभिः कलाभिः किमिति फलं गतैष्या घटिकाः । अथ कलाः षष्ट्या गुणिता विकलाः स्युरित्यतः उक्तम् अथ हृताः स्वगतैष्यविलिप्तिका इति सर्वमुपपन्नम्" प्रमि० ।

सू० सि० तिथ्याद्यानयनप्रकार उक्तो यथा "भभोगोऽष्टशतीलिप्ताः खाश्विशैलास्तथा तिथेः । ग्रहलिप्ता भभोगाप्ता भानि भुक्त्या दिनादिकम्" सू० सि० । "अष्टशतमिताः कला नक्षत्रभोगः । प्रसङ्गात् तिथिभोगमाह । खाश्विशैला इति । तिथेर्विंशत्यधिकसप्तशतमिताः ७२० कलास्तथा भोग इत्यर्थः । यस्य ग्रहस्य नक्षत्रज्ञानमिष्टं तस्य ग्रहस्य राश्यादिग्रहं गत्या अंशा योज्यास्ते षष्टिगुणिताः कला योज्या इति परिभाषया कला नक्षत्रभोगभक्ताः फलं ग्रहस्य गतनक्षत्राणि शेषं वर्तमाननक्षत्रस्य गतकलास्तस्मात् तस्य गतदिनाद्यानयनमाह भुक्त्येति । ग्रहस्य कलात्मिकया गत्या शेषदिनादिकं गतं भागहरणेन साध्यमेवं शेषोनाङ्गोगान्तरितकला भागेनैष्यदिनादिकं साध्यम् । अत्रोपपत्तिः । भचक्रभोगेण सप्तविंशतिनक्षत्राण्यश्विन्यादीनि ग्रहो भुनक्त्यतः सप्तविंशतिनक्षत्राणां चक्रकलाः षट्शतयुतैकविंशतिसहस्रमिता २१६०० भोगस्तदैकनक्षत्रस्य क इत्यनुपातेनाष्टशतकलाभोगः । एवं तिथेश्चान्द्रमासत्रिंशांशाच्चान्द्रमासस्य सूर्य्यचन्द्रान्तरैकभगणसिद्धत्वाच्च । त्रिंशत्तिथीनां चक्रकलाभोगस्तदैकतिथेः क इत्यनुपातेन विंशत्यधिकसप्तशतकलाभोगः ७२० । यद्याष्टशतकलाभिरेकं नक्षत्रं तदा ग्रहकलाभिः किमित्यनुपातेन फलमश्विन्यादीनि ग्रहभुक्तानि शेषकला ग्रहाधिष्ठितनक्षत्रस्य गतं भोगाद्धीनं तस्यैष्यम् । यदि ग्रहगत्यैकं दिनं तदाभीष्टकलाभिः किमित्यनुपातेन तस्य गतैष्यप्रदिवसाद्यं भवति । एवं चन्द्राद्दिननक्षत्रं ज्ञेयम्" रङ्गना० । "रवीन्दुयोगलिप्ताभ्यो योगा भभोगभाजिताः । गता गम्याश्च षष्टिघ्ना भुक्तियोगाप्तनाड़िकाः" सू० सि० "सूर्य्यचन्द्रयोगस्य राश्यादिकस्य परिभाषया याः कलास्ताभ्यो योगा विष्कम्भादयो भभोगभाजिता भभोगेन पूर्वोक्तेन विभक्ता भवन्ति । एकैकयोगस्य भभोगमितो भोगः स प्रत्येकं ताभ्योऽपनीय यन्मिताः शुद्धास्तन्मिता योगा गताः । यस्य भोगो

न शुद्ध्यति स वर्त्तमान इत्यर्थः। कला भभोगभक्ता गता योगास्तदग्रिमो वर्त्तमान इति तात्पर्य्यम्। तस्य शेषं गतं भोगात् पतितशेषञ्च ताभ्यां घटिकाद्यानयनमाह। गता इति। गता एष्याः। चः समुच्चये। कलाः षष्टिगुणिताः कार्य्यास्ताभ्यो भुक्तियोगाप्तनाड़िका रविचन्द्रकलात्मकगत्योर्योगेन भजनाल्लब्धा घटिका गतैष्या भवन्ति। अत्रोपपत्तिः। सूर्य्यचन्द्रयोगभितस्य चक्रस्य नक्षत्राणि विष्कम्भादिसञ्ज्ञानि योगा-स्तत्त्वाद्योगा इतस्तदानयनं पूर्वोक्तवत्। अतएव सूर्य्यचन्द्रगतियोगतुल्यतद्गत्या षष्टिमितघटिकास्तदा गतैष्याः कलाभिः का इत्यनुपातेन गतैष्यघटिकानयनं युक्तमुक्तम्” रङ्गना०। “अर्कोनचन्द्रलिप्ताभ्यस्तिथयो भोगभाजिताः। गता गम्याश्च षष्टिघ्ना नाड्यो भुक्त्य-न्तरोद्धृताः” सू० सि०। “पूर्वार्धव्याख्यानं पूर्वश्लोक-पूर्वार्द्धरीत्या ज्ञेयमुत्तरार्द्धं स्पष्टम्। अत्रोपपत्तिः। “तिथिभोगकलाभिरेका तिथिस्तदा सूर्य्योनचन्द्रकलाभिः का इत्यनुपातेन फलं गततिथयो वर्त्तमानतिथेर्गतैष्य-शेषशेषोनभोगकले ताभ्यां गत्यन्तरकलाभिरनुपातेन गतै-ष्यघटिकाः पूर्ववत्” रङ्गना०।

कल्पे तिथिमानमुक्तं सि० शि० यथा

“विधिदिने दिनकृद्दिवसाः करेन्द्रियशरेषुभयोऽम्बुद संगुणाः। नवनगाङ्ककराभ्ररसेन्दवः प्रयुतसंगुणिता विधुवासराः” १६०२९९९०००००००। अत्रोपपत्तिः, रवि-वर्षाणि दिनीकृतानीति सुगमम्। चन्द्रार्कयोर्यावन्तः कल्पे योगास्तावन्तः किल शशिमासाः। ते तु योगा भगणान्तरतुल्याः स्युः। उभयोरपि प्रागगमनात्। अतो भगणान्तरतुल्याः शशिमासा भवन्ति। ते त्रिंश-द्गुणाः शशिदिवसा भवन्तीत्युपपन्नम्।

युगे तिथिसंख्या सू० सि० उक्ता यथा।

युग इत्युपक्रमे चान्द्रदिनप्रमाणमाह

“चान्द्राः खाष्टखखव्योमखाग्निखर्त्तुनिशाकराः” सू० सि०। “अष्टाश्विगजसप्तभूगोनगसप्तपञ्चभूमिता युगे सूर्य्यसा-वनदिवसाः। चान्द्रा दिवसा तुर्गातिथय इत्यर्थः। अशी-तिशून्यचतुष्कारिखल्पा एते त्रिंशद्भाजिताश्चान्द्रमासा उक्ताप्रायाः। अनेनैव चान्द्रदिवसानामुपपत्तिः सूर्य्य-चन्द्रयोर्भगणयोरन्तररूपचान्द्रमासास्त्रिंशद्गुणिता इति स्पष्टीकृताः” रङ्गना०।

तिथिभेदे देवभेदपूजा पीयू० धा० धृतवाक्येनोक्ता यथा तत्र नारदः “यद्दिनं यस्य देवस्य तद्दिने तस्य संस्थितिः” अग्निपुराणेऽपि “प्रतिपद्यग्निपूजा स्यात् द्वितीयायाश्च वेधसः। दशम्यामन्तकस्यापि षष्ठ्यां पूजा गुहस्य च। चतुर्थ्यां गणनाथस्य गौर्य्यास्तत्पूर्ववासरे। सरस्वत्या नव-म्यान्तु। सप्तम्यां भास्करस्य च अष्टम्यान्तु चतुर्द्दश्यामेका-दश्यां शिवस्य च। द्वादश्यान्तु त्रयोदश्यां हरेश्च मदनस्य च। शेषादीनां फणीशानां पञ्चम्यां पूजनं भवेत्। पर्व्वणी-न्दोस्तिथिस्वासु पञ्चदशगतास्वपीति”।

पञ्चदशसंख्यायां सू० सि० टी०।

स्त्रीत्वे “वैवाहिकीं तिथिं पृष्टास्तत्क्षणं हरबन्धुना” कुमा०। पुंस्त्वे “निष्क्रिलाग्निभिः पर्णिमा तिथीनुपतस्थे-ऽतिथयेऽश्विका तिथिः” नैष०।

**तिथिकृत्य** न० ७त०। तिथिविहिते कार्य्ये “तिथिकृत्ये च क्षयादिवृत्ते शुक्लादिरेव च। विवाहादौ स्मृतः सौरः शेषेषु सावनो मतः” मल० त०। तिथिविशेषे कृत्यानि च तिथितत्त्वे कालमाधवीयनिर्णयसिन्धुग्रन्थप्रभृतिनिब-न्धेषु दृश्यानि।

तिथिभेदेषु कृत्याकृत्यानि पी० धा० वसिष्ठोक्तानि यथा “मोद्वाहयात्रोपनयप्रतिष्ठासीमन्तचौलाखिलवास्तुकर्म्म। गृहप्रवेशाखिलमङ्गलाद्यं कार्य्यं हि मासाद्यतिथौ कदाचित्”। मासाद्यतिथौ शुक्लपक्षप्रतिपदि अतए कृष्णपक्षप्रतिपद्येतानि कर्म्माणि सुखेन भवन्तीत्यर्थः यद्येषोऽभिप्रायोऽसम्मतः स्यात्तदा पक्षाद्यतिथाविति ब्रूयात्। “सप्ताङ्गचिह्नानि नृपस्य वास्तुव्रतप्रतिष्ठाखिल-मङ्गलानि। यात्राविवाहाखिलभूषणाद्यं कार्य्यं द्विती-यादिवसे सदैव। सङ्गीतविद्याखिलशिल्पकर्म्मसीमन्त-चौलान्नगृहप्रवेशम्। कार्य्यं द्वितीयादिवसे यदुक्तं सदा तृतीयादिवसेऽपि कार्य्यम्। रिक्तासु विद्युद्वधबन्धशस्त्र-विषाग्निघातादि च याति सिद्धिम्। यन्मङ्गलन्तासु कृतं विमूढैर्विनाशमायाति तदाशु नूनम्”। रिक्तासु चतुर्थीन-वमीचतुर्दशीषु ४।९।१४। “शुभानि कार्य्याणि चरस्थिराणि चोक्तान्यनुक्तान्यपि यानि तानि। सिद्धिं प्रयान्त्याशु कृष्ण-प्रदानं विनाशदं नागतिथौ विधेयम्। अभ्यङ्गयात्रा-पितृकर्म्मदन्तकाष्ठं विना पौष्टिकमङ्गलानि। षष्ठ्यां विधेयानि रणोपयोग्यशिल्पानि वस्त्राम्बरभूषणानि। द्वितीयायां तृतीयायां पञ्चम्यां कथितान्यपि। तानि सिध्यन्ति कार्य्याणि सप्तम्यां निखिलान्यपि। संग्रामयो-ग्याखिलवास्तुशिल्पनृपप्रमोदाखिललेखनानि स्त्रीरत्न-

कार्य्याण्यखिलभूषणानि कार्य्याणि कार्य्याणि महेशतिथ्याम्। द्वितीयायां तृतीयायां पञ्चम्यां सप्तमीतिथौ। उक्तानि यानि सिध्यन्ति दशम्यां तानि सर्वदा। व्रतोपवासाऽखिलधर्मकृत्यं सुरोत्सवाद्याऽखिलवास्तुकर्म्म। संग्रामयोग्याखिलवास्तुकर्म्म विश्वे तिथौ सिध्यति शिल्पकर्म्म। पृथिव्यां यानि कर्म्माणि धर्म्मपुष्टिः शुभानि च। चरस्थिराणि द्वादश्यां यात्रां नवगृहं विना। विधातृगौरीभुजगभान्वन्तकर्दिनेषु च। उक्तानि तानि सिध्यन्ति त्रयोदश्यां विशेषतः। यत्नक्रियापौष्टिकमङ्गलानि संग्रामयोग्याखिलवास्तुकर्म्म। उद्वाहशिल्पाऽखिलभूषणाद्यं कार्य्यं प्रतिष्ठा खलु पौर्णमास्याम्। सदैव दर्शे पितृकर्म्म मुक्त्वा नान्यद्विधेयं शुभपौष्टिकाद्यम्। मठैः कृतं तत्र शुभोत्सवाद्यं विनाशमायात्यचिरादृभृशं तत्" पी॰धा॰ वशिष्ठवचनम्।

**तिथिक्षय** पु॰तिथीनां तिथ्युपलक्षितचन्द्रकलानां क्षयः क्षयारम्भो यस्मिन्। दर्शे अमावास्यायाम् शब्दार्थकल्प॰। हेत॰। तिथीनां नाशे अवमे अवमशब्दे ४३१ पृ॰दृश्यम् दिनक्षयादयोऽप्यत्र। "कौर्मे पाद्मेऽपि "द्वौ तिथ्यन्तावेकवारे यत्र स स्याद्दिनक्षयः" वशिष्ठः "एकस्मिन् सावने त्वह्नि तिथीनां त्रितयं यदा। तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलम्"। साहस्रिकं फलमिति माङ्गल्येतरवैदिककर्मपरम्। "अधिमासे दिनपाते धनुषि रवौ भानुलङ्घिते मासि। चक्रिणि सुप्ते कुर्य्यान्नो माङ्गल्यं विवाहञ्च"इति भीमपराक्रमात् दिनपाते दिनक्षये रघु॰ तिथिक्षयानयनञ्च सू॰ सि॰ उक्तं यथा

"सावनाहानि चान्द्रेभ्यो द्युभ्यः प्रोज्झ्य तिथिक्षयाः" सू॰ सि॰। "चान्द्रेभ्यो द्युभ्यो वक्ष्यमाणचान्द्रदिवसेभ्यः सकाशादित्यर्थः। तिथिषु चान्द्रदिनेषु सावनदिनानामवशेषतुल्यः क्षयो न्यूनत्वम्। यद्वा तिथिशब्देन सावनो दिवसस्तस्य चान्द्रदिवसात् क्षय इति स्वरूपमेव वक्ष्यमाणोपयोगात् परिभाषितम्" रङ्गना॰। युगे तत्संख्या सू॰ सि॰ उक्ता यथा युग इत्युपक्रमे "तिथिक्षया यमार्थाश्विद्व्यष्टव्योमशराश्विनः" २५०८२२५२ एतन्मिता इत्यर्थः।

**तिथिपति** पु॰ तिथिविशेषाणां पतयः। तिथीनामधिपतौ स च मु॰ चि॰ उक्तो यथा

"तिथीशावह्निकौ गौरी गणेशोऽहिर्गुहोरविः। शिवोदुर्गान्तको विश्वे हरिः कामः शिवः शशी" मु॰ चि॰ एतन्मूलं पीयूषधारायां धृतवशिष्ठवचनं यथा

"वह्निर्विधाताद्रिसुता गणेशः सर्पो विशाखोऽदितिजो महेशः। दुर्गा यमो विश्वहरिश्च कामः शर्वो निशेशश्च पुराणदृष्टाः इति स्वामिन इति शेषः"।

तिथिपतयश्च ह॰ सं॰ ९९ अ॰ अन्यथोक्ता यथा "कमलजविधातृहरियमशशाङ्कषड्वक्त्रशक्रवसुभुजगाः। धर्मेशसवितृमन्मथकलयो विश्वे च तिथिपतयः। पितरोऽमावास्यायां संज्ञासदृशाश्च तैः क्रियाः कार्य्याः। नन्दा भद्रा जया रिक्ता पूर्णा च तास्त्रिविधाः। यत्र कार्य्यं नक्षत्रे तद्दैवत्यासु तिथिषु तत्कार्य्यम्"। वशिष्ठवराहवचनाभ्यामुक्तदेवानां तत्तिथिषु पत्नेति न विरोधः।

**तिथिप्रणी** पु॰ तिथिं प्रणयति प्र+नी—क्विप्। चन्द्रे त्रिका॰

**तिथियुग्म** न॰तिथ्योस्तिथिविशेषयोर्युग्मम्। द्वितीयादितिथिसप्तकयोगरूपे युग्मे तानि च सप्त युगमानि निगमे उक्तानि यथा"युग्माग्नियुगभूतानां षण्मुन्योर्वसुरन्ध्रयोः। रुद्रेण द्वादशीयुक्ता चतुर्दशी च पूर्णिमा। प्रतिपदाप्यमावास्या तिथ्योर्युग्मं महाफलम्। एतद्व्यस्तं महादोषं हन्ति पुण्यं पुराकृतमिति"। युग्मं द्वितीया। अग्निस्तृतीया। युगं चतुर्थी। भूतं पञ्चमी। षड् षष्ठी। मुनिः सप्तमी। वसुरष्टमी। रन्ध्रं नवमी। रुद्र एकादशी। अत्र युग्माग्न्यादिषु सप्तसु युग्मेषु पूर्वतिथिरुत्तरविद्धा ग्राह्या उत्तरा तु पूर्वविद्धेत्युक्तं भवति। वेधश्चात्र त्रिमूर्त्तयोरेव तदुक्तं कालमा॰ "अत्र तिथीनां वेधः पैठीनसिना दर्शितः। "पक्षद्वयेऽपि तिथयस्तिथिं पूर्वां तथोत्तराम्। त्रिभिर्मुहूर्त्तैर्विध्यन्ति सामान्योऽयं विधिः स्मृतः"इति पूर्वेद्युरुदयानन्तरममावास्या त्रिमुहूर्त्ता चेत् सा प्रतिपदं विध्यति। परेद्युरस्तमयात् प्राक् द्वितीया त्रिमुहूर्त्ता चेत् सापि पूर्वां प्रतिपदं विध्यति त्रिमुहूर्त्तव्याप्तिः स्कन्दपुराणे दर्शिता। "यां तिथिं समनुप्राप्य यात्यस्तं पद्मिनीप्रियः। सा तिथिस्तद्दिने प्रोक्ता त्रिमुहूर्त्ता च या भवेदिति"। शिवरहस्यसौरपुराणयोरपि "या प्राप्यास्तमुपैत्यर्कः सा चेत् स्यात् त्रिमुहूर्त्तिका। धर्मकृत्येषु सर्वेषु संपूर्णान्तां विदुर्बुधाः" इति। वृहद्वसिष्ठोऽपि "यस्यां तिथावस्तमियात् सूर्य्यस्तु त्रिमुहूर्त्तकैः। यागदानजपादिभ्यस्तामेवोपक्रमेत्तिथिमिति"। एवं पैठीनस्यादिवाक्ये त्रिमुहूर्त्तत्वेनैव वेधस्थितेः वङ्गानां योगमात्रेणैव वेधोक्तिः साहसमात्रम्। वेधकतिथेस्त्रिमुहूर्त्तत्वेऽपि विद्धतिथेर्मुहूर्त्ता-

दिव्यापित्वेऽपि ग्राह्यता कालमाधवीये निर्णीता यथा। "देवलः "यां तिथिं समनुप्राप्य उदयं याति भास्करः। सा तिथिः सकला ज्ञेया स्नानदानजपादिष्विति"। व्यासोऽपि "उदयन्नेव सविता यां तिथिं प्रतिपद्यते। सा तिथिः सकला ज्ञेया दानाध्ययनकर्मस्विति"। भविष्योत्तरपुराणेऽपि "व्रतोपवासनियमे घटिकैका यदा भवेत्। सा तिथिः सकला ज्ञेया पित्रर्थे चाऽपराह्णिकीति" पद्मपुराणेऽपि "व्रतोपवासनियमे घटिकैका यदा भवेत्। उदये सा तिथिस्तत्र विपरीता तु पैतृके" इति स्कन्दपुराणेऽपि "व्रतोपवासस्नानादौ घटिकैका यदा भवेत्। उदये सा तिथिर्ग्राह्या विपरीता तु पैतृके" इति विष्णुधर्म्मोत्तरेऽपि "व्रतोपवासस्नानादौ घटिकैका यदा भवेत्। उदये सा तिथिर्ग्राह्या श्राद्धादावस्तगामिनीति" बौधायनोऽपि "आदित्योदयवेलायां याल्पापि च तिथिर्भवेत्। पूर्णा इत्येव मन्तव्या प्रभूता नोदयं विनेति" नन्वस्त्वेवं तत्तद्दिवसाभ्यनुज्ञा तथाप्युत्तरविद्धायास्तिथेर्ग्रहणे कियत्परिमाणमुदये अपेक्षणीयमिति विवेचनीयम्। तत्र बौधायनेनाल्पापीत्यभिधानात् निमेषमात्रं प्रतिभाति तथा व्यासवाक्येऽपि प्रतिभाति "उदयन्नेवे"त्यभिधानात्। भविष्योत्तरपुराणादिवचनेषु घटिकामात्रं प्रतीयते। वचनान्तरे तु विष्णुधर्म्मोत्तरबौधायनप्रोक्ते घटिकाचतुष्टयं भासते। तथा च पठ्यते "उदिते दैवतं भानौ पित्र्यं चास्तमिते रवौ। द्विमुहूर्त्तं त्रिरह्नश्च सा तिथिर्हव्यकव्ययोरिति"। अस्यार्थः। भानावुदिते सत्युत्तरकालेऽह्नो मुहूर्त्तद्वयं दैवतम्। तस्मिंश्चास्तमिते ततः पूर्वकालीनमह्नो मुहूर्त्तत्रयं पितृदैवत्यम्। अतस्तावत्कालव्यापिनी या तिथिर्भवति सैव क्रमेण हव्यकव्ययोर्ग्राह्या। अत्रोच्यते। पौर्वाह्णिकी इति वचनेन दैवे पूर्वाह्णव्याप्त्यभिधानात्। पूर्वाह्णस्य पञ्चधा विभक्तस्य मुख्यत्वादुदिते भानौ त्रिमुहूर्त्ता तिथिर्ग्रहीतव्या। यत्तु दक्षेणोक्तम्। त्रिमुहूर्त्ता न कर्त्तव्या या तिथिः क्षयगामिनी "द्विमुहूर्त्तापि कर्त्तव्या या तिथिर्वृद्धिगामिनीति"। तच्च त्रिमुहूर्त्तव्याप्तेर्बाधकं प्रत्युतोपोद्बलकमेव। तथा हि प्रतिषेधः सर्वत्र प्रसक्तिपूर्वकः प्रसक्तिश्चात्र यथोक्तरीत्या पौर्वाह्णिकवाक्यात् त्रिमुहूर्त्तविधायिपैठीनसिवाक्याद्वा भवति। तत्र प्रसक्तं त्रिमुहूर्त्तत्वं समतिथौ बाधकाभावात्तथैव व्यवतिष्ठते। तिथिक्षये त्वधिकव्याप्तिविधित्सया प्रतिषिध्यते। अतस्तत्र चतुर्मुहूर्त्तस्पर्शिनी तिथिर्ग्राह्या। तिथिसाम्यवत्तिथिवृद्धावपि मुहूर्त्तत्रयमेव मुख्यम्। मुहूर्त्तद्वयं त्वनुकल्पः। अतएवं सूचयितुं द्विमुहूर्त्तापीत्यपिशब्दः पठ्यते।" अत्राप्येकमुहूर्त्तव्याप्तिर्निकृष्टेत्यर्थसिद्धम्

"द्वितीयादिकयुग्मानां पूज्यता नियमादिषु" व्यासः। अत्र प्रतिप्रसवः। "भगवत्याः प्रवेशादिविसर्गान्ताश्च याः क्रियाः। रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता"। "युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया। रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता" ति॰ त॰।

**तिथिसन्धि** पु॰ तिथ्योः सन्धिः। तिथ्योः पूर्वापरयोः सन्धौ तन्मानानयनं सि॰ शि॰ यथा "शशितनुविकलाभ्यश्चन्द्रभुक्त्येन्दुभान्वोर्गतिविवरकलाभिर्भूश्च एताभिरेव। पृथगथ गतियुक्त्या नाडिका सन्धिराप्ता तिथिकरणयोगानां फलं तत्र मिश्रम्"।

एवं शशिबिम्बकलाभ्यो या घटिका उत्पद्यन्ते ता भतिथिकरणयोगानां सन्धिघटिकाः स्युः। सन्धौ मिश्रफलमित्यर्थः। अत्र सन्धिरुभयतोऽपि बिम्बस्य स्थितत्वात्। उपपत्तिरप्यत्र सुगमा"। प्रमिता॰

**तिथ्यर्द्ध** न॰ ६त॰। करणे। करणशब्दे १६८० पृ॰ दृश्यम्।

**तिनाशक** पु॰ तिनिश+पृषो॰। तिनिशवृक्षे शब्दरत्ना॰।

**तिनिश** पु॰ अतिशयेन नेशति अति+निश—क पृषो॰ अतेरकारलोपः। (सादन) ख्याते वृक्षे अमरः। "तिनिशः श्लेष्मपित्तास्रमेदःकुष्ठप्रमेहजित्। तुवरः श्वित्रदाहघ्नो व्रणपाण्डुकृमिप्रणुत्" भावप्र॰। [२दैत्यभेदे पु॰ हेमच॰।

**तिन्तिड** पु॰ तिन्तिड़ी+पृषो॰। १वृक्षाम्ले (तेँतुल) विश्वः

**तिन्तिड़ी** स्त्री तिन्तिड़ीक+पृषो॰। (तेंतुल) वृक्षभेदे राजनि॰ स्वार्थे क। तिन्तिड़िका तत्रार्थे शब्दरत्ना॰। "अम्लिका चुक्रिकाम्ली च चुक्रा दन्तशठापि च। अम्ला च विचिका चिञ्चा तिन्तिड़ीका च तिन्तिड़ी। अम्लिकाऽम्ला गुरुर्वातहरी पित्तकफास्रकृत्। पक्वा तु दीपनी रूक्षा सरोष्णा कफवातनुत्" भावप्र॰। "अम्लिकायाः फलं पक्वं मर्दितं वारिणा दृढम्। शर्करामरिचोन्मिश्रं लवङ्गेन्दुसुवासितम्। अम्लिकाफलसंभूतं पानकं वातनाशनम्। पित्तश्लेष्मकरं किञ्चित् सुरुच्यं वह्निबोधकम्" भावप्र॰। [अमरः।

**तिन्तिड़ीक** पु॰ तिम—ईक अनीका॰ नि॰। (तेँतुल)वृक्षभेदे

**तिन्तिड़ीद्यूत** न० तिन्तिड्या तद्वीजेन द्यूतम्। तिन्तिड़ीवीजेन क्रीड़ने (काँइवोजेरखेला) त्रिका०।

**तिन्तिड़ि(लि)का** स्त्री तिन्तिड़ोः+स्वार्थे क ह्रस्वः वा डस्य लः। (तेँतुल) तिन्तिड्याम् शब्दमा०। काभावे तिन्तिलीत्यप्यत्र।

**तिन्दिश** पु० ढिण्डिशवृक्षे (ढाँड़श) राजनि०।

**तिन्दु** पु० तिज—कु—स्मगयुादि० नि०। (तेँदु)१ख्याते वृक्षे संज्ञायां कन्। तिन्दुक (गाव)इति ख्याते २वृक्षे पुंस्त्री शब्दरत्ना०। स्त्रीत्वे गौ०ङीष्। ३कर्षमात्रे वैद्यकपरिभाषा पुंन०। "स्वादाम्लं तिन्दुकं ग्राहि वातलं शीतलं लघु। पक्वं पित्तप्रमेहास्रश्लेष्मघ्नं मधुरं गुरु। तत्सारं तु भवेद्‌ हृद्यं कर्षुलं चिररोगजित्। विश्वतिन्दुकमप्येवं विशेषात् ग्राहि शीतलम्" राजनि०।

**तिन्दुकि** स्त्री तिन्दुकी+पृषो० ह्रस्वः। तिन्दुके वृक्षे शब्दर०

**तिन्दुकिनी** स्त्री तिन्दुकस्तदाकारः फलेऽस्त्यस्या इनि ङीप्। आवर्त्तक्याम् राजनि० ८२८ दृश्यम्।

**तिन्दुल** पु०तिन्दुक+पृषो० कस्य लः। तिन्दुकवृक्षे शब्दर०

**तिप** रक्षणे भ्वा० आत्म० सक०सेट्। तेपते अतेपिष्ट अतिप्त। तितेपे। ऋदित् अतितेपत्-त। [तितेम।

**तिम** आर्द्रीभावे भ्वा० पर० अक० सेट्। तेमति अतेमीत्।

**तिम** आर्द्रीकरणे दिवा०पर० सक० सेट्। तिम्यति अतेमीत्। तितेम। "वानरान् तिम्यतोऽवलोक्य" हितो० "तिमितास्ताभवन् सर्वे तत्र ते हरियूथपाः" रामा० सुन्द० १ स०। "नद्यश्च तिमितोदकाः" रामा० अर० ५४स०। तेमनम्।

**तिमि** पु० तिम—इन्—तम—इन्—इच्च वा। १समुद्रे त्रिका०। तद्भवे २मत्स्यभेदे पुंस्त्री० स्त्रियां वा ङीप्। "अस्ति मत्स्यस्तिमिर्नाम शतयोजनविस्तृतः" भरतधृतवाक्यम्। "अस्ति मत्स्यस्तिमिर्नाम तथा चास्ति तिमिङ्गिलः। तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति लद्भवः" शब्दार्थचि०धृतरामा० वाक्यम्। "अमी शिरोभिस्तिमयः सरन्ध्रैरूर्द्ध्वं वितन्वन्ति जलप्रवाहान्" रघुः। "अत्र नानाविधाकारास्तिमयोनैकरूपिणः" भा० उ० ९८ अ०। शब्दकल्पद्रुमेऽस्य स्त्रीत्वोक्तिः प्रामादिकी अमी तिमय इति नैकरूपिण इति पुंस्त्वेव प्रयोगात् इदिकारान्तत्वात् वा स्त्रियां ङीप्। २तज्जातिस्त्रियां स्त्री भेदः।

**तिमिकोष** पु० तिमेः कोष इव। समुद्रे त्रिका०।

**तिमिङ्गिल** पु० गिरति—गृ—मूलवि० क रस्य लः "गिलेऽगिलस्य" वा०मुम्। महामत्स्यभेदे। तिमिशब्दे उदा०दृश्यम्। "तिमिङ्गिलाः कच्छपाश्च तथा तिमितिमिङ्गिलाः" भा०व० १६६ अ०।

**तिमिङ्गिलगिल** पु० तिमिङ्गिलं गिलति गृ—मूल० क रस्य लः अगिलस्येति पर्युदासात् न मुम्। अतिबृहन्मत्स्यभेदे तिमिशब्दे उदा०।

**तिमिङ्गिलाशन** पु०तिमिङ्गिलो भक्ष्यः अश्यते यत्र अश—आधारे ल्युट्। दक्षिणस्थे देशभेदे "बलदेवपट्टनं दण्डकावनतिमिङ्गिलाशनाभद्राः" बृ०स० १४अ० कूर्मविभागे दक्षिणस्यदेशोक्तौ। सोऽभिजनोऽस्य तस्य राजा वा अण्। तस्य बहुषु लुक्। २तद्देशवासिषु ३तन्नृपेषु च ब० व०। एकवचने तु तैमिङ्गिलाशन इति भेदः।

**तिमिज** न० तिमितो जायते जन—ड ५त०। मुक्ताभेदे "तिमिजं मत्स्याक्षिनिभं बृहत्पवित्रं बहुगुणञ्च" बृ०स० ८१ अ०। मुक्ताभेदकथने।

**तिमित** त्रि० तिम—कर्त्तरि क्त। १निश्चले, धरणौ। २क्लिन्ने (भिजे) अमरः। "ह्रद इव तिमितागसंवृतः स्तिमिततजलोर्मिशिशुशर्करः" रामा० अयो० ८१ स०।

**तिमिर** पुंन०तिम—किरच् अर्द्धर्चा०। १अन्धकारे २नेत्ररोगभेदे च। "तिमिराख्यः स वै दोषश्चतुर्थपटलं गतः। रुणद्धि सर्वतो दृष्टिं लिङ्गनाशमतःपरम्" माधवः अक्षिपटलशब्दे ४३पृ० दृश्यम्। "सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः"। "पतिते पतङ्गमृगराजि निजप्रतिविम्वरोषित इवाम्बुनिधौ। अथ नागयूथमलिनानि जगत्परितस्तमांसि परितस्तरिरे" माघः। "पतिते घनतिमिरसूचिः" माघः।

**तिमिरनुद्** पु० तिमिरं नुदति खण्डयति नुद—क्विप् ६त०। सूर्ये "तिमिरनुदो मण्डलं यदि स लेढ़ः" बृ०स०५अ०। तिमिरभिदादयोऽप्यत्र। २अन्धकारनाशके त्रि०।

**तिमिररिपु** पु० ६त०। १सूर्ये हला०। तिमिरारिप्रभृतयोऽप्यत्र "तिमिरारिस्तमोहन्ति प्रातःखलवभीरवः। वयं काका वयं काका इति जल्पन्ति वायसाः" उद्भटः। २अन्धकारनाशके त्रि०।

**तिमिरि** पु० तिमीति शब्दं वाचकत्वेन राति रा—बा० डि। तिमिमत्स्ये राजनि०।

**तिमिष** पु०तिम—इषक्।१शास्यकर्कट्याम्, त्रिका० २नाटाम्रे च शब्दार्थचि०। [स्त्रियाम्।

**तिरश्ची** स्त्री तिर्यक् जातिः स्त्री ङीप्। पशुपक्ष्यादि

**तिरश्चीन** त्रि० तिर्यगेव स्वार्थे ख। तिर्यग्भूते। "गतं तिरश्चीनमनूरुसारथेः" माघः "तिरश्चीनो विततो

रश्मिरेषामध:" ऋ० १०।१२९।५। २वक्रे च "ईक्षमाणः पादेन तिरश्चीनेन चक्षुषा" भाग० ७।८।४।

**तिरस्** अव्य० तॄ-असुन् स्वरादि। १अन्तर्द्धाने २तिर्य्यगर्थे च अमरः। ३तिरस्कारे चौरस्वामी। अस्य कृञि वा उप० सं०। तिरस्कृत्य तिरः कृत्वेति "तिरस्कृत्योच्चरेत् काष्ठेत्यादि मनुः" "तिरस्क्रियन्ते कृमितन्तुजालैः" माघः। तिरस्करोति णिच्-सलोपः। तिरयति आच्छादयतीत्यर्थः। "मुरारिमुखाम्बुजद्युतिरयं तिरयन्नपि वेदनाम्" जयदेवः।

**तिरस्कर** त्रि० तिरःकरोति कृ-ट। आच्छादके। स्त्रियां ङीप्। "अहो बत स्वर्यशसस्तिरस्करी कुशस्थली पुण्ययशस्करी भुवः" भाग० १।१०।२८।

**तिरस्करिणी** स्त्री तिरः करोति कृ-णिनि संज्ञापूर्व्वकविधेरनित्यत्वात् वृद्ध्यभावः ङीप्।(परदा) (कानात)। पटमये आच्छादकपदार्थे अमरः। "तिरस्करिण्यो जलदा भवन्ति" कुमा०। २आच्छादकमात्रे त्रि० "सोऽत्याससाद तद्वेश्म तिरस्करिणमन्तरा" रामा० अयो० १५ स०।

**तिरस्कार** पु० तिरस्+कृ-भावे घञ्। १अनादरे हला०। कर्त्तरि अण्। २अवज्ञाकारके त्रि०। "लौहस्तिरस्कार इवात्तमन्युः" किराता०।

**तिरस्कारिन्** त्रि०तिरः करोति कृ-णिनि वृत०। १आच्छादके (कानात) २पटभेदे स्त्री ङीप्। ३अवज्ञाकारके त्रि०

**तिरस्कृत** त्रि०तिरस्+कृ-कर्म्मणि क्त। १अवज्ञाते अनादृते २आच्छादिते च अमरः "अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद् ध्वनौ। अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम्" काव्यप्र०। ४तन्त्रसारोक्ते मन्त्रभेदे पु० "यस्य मध्ये दकारोऽस्ति कवचं मूर्द्धनि द्विधा। अस्त्रं तिष्ठति मन्त्रः स तिरस्कृत उदीर्य्यते"।

**तिरस्क्रिया** स्त्री तिरस्+कृ-भावे श। १अनादरे २तिरस्कारे अमरः २आच्छादने च "अप्रकटीकृतशक्तिः शक्तोऽपि जनात्तिरस्क्रियां लभते" पञ्चत०। "द्विषद्विषः प्रत्युत सा तिरस्क्रिया" माघ०। [तिरस्यति अतिरस(स्री)त्।

**तिरस्य** पु० तिरस्+कण्ड्वा० यक् अन्तर्द्धाने सक० सेट्।

**तिरिट** पु० तॄ-बा० इटक्। इक्षुगन्धौ शब्दमा०।

**तिरिम** पु० तॄ-बा० इमक्। शालिभेदे राजनि०।

**तिरिष** पु० तॄ-बा० इषक्। शालिभेदे राजनि०।

**तिरीट** न० तॄ-ईटक्। लोध्रवृक्षे उज्ज्वलद०।

**तिरीटक** पु० तिरीट+संज्ञायां कन्। लोध्रे अमरः।

**तिरोधान** न० तिर+धा-भावे ल्युट्। १अन्तर्द्धाने भावे अङ्। तिरोधाप्यत्र स्त्री।

**तिरोभाव** पु० तिरस्+भू-भावे घञ्। १गुप्तभावे २अन्तर्द्धाने।

**तिरोहित** त्रि० तिरस्+धा-क्त।१अन्तर्हिते गुप्ते २आच्छादिते च "अतिरोहितमन्यत्" तत्त्वकौ० "एष ह वै पुरोहितो य एवं वेदाथ स तिरोहितो य एवं न वेद" ऐत०ब्रा० "न चासारं न च न्यूनं न दूरे न तिरोहितम्" मनुः

**तिर्य्यक्पातिन्** त्रि० तिर्य्यक् पतति पत-णिनि। वक्रप्रसारिते कुटिलवृत्तौ शब्दार्थचि०।

**तिर्य्यक्प्रमाण** न० कर्म्म०। विस्तारप्रमाणे।

**तिर्य्यक्स्रोतस** पु० तिर्य्यक् स्रोतो आहारसञ्चारो यस्य। पशुपक्ष्यादौ तेषामशिताऽन्नस्य तिर्य्यक्तया उदरे सञ्चारात् तथात्वम्। तद्भेदाभाग०। ३।१०।२१

"तिरश्चामष्टमः सर्गः सोऽष्टाविंशद्विधोमतः। अविदो भूरितमसो घ्राणज्ञा हृद्यवेदिनः। गौरजो महिषः कृष्णः सूकरो गवयो रुरुः। द्विशफाः पशवश्चेमे अविरुष्ट्रश्च सत्तम!। खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा। एते चैकशफाः क्षत्तः! शृणु पञ्चनखान् पशून्। श्वा सृगालो वृको व्याघ्रो मार्ज्जारः शशशल्लकौ। सिंहः कपिर्गजः कूर्म्मो गोधा च मकरादयः। कङ्कगृध्रवकश्येनभासभल्लूकवर्हिणः। हंससारसचक्राह्वकाकोलूकादयः खगाः।"

"तिर्य्यक्स्रोतसां सर्गमाह तिरश्चामिति। स चाष्टाविंशतिभेदः। तिरश्चां लक्षणम् अविदः श्वस्तनादिज्ञानशून्याः। भूरितमसः आहारादिमात्रनिष्ठाः। घ्राणज्ञाः घ्राणेनैवेष्टमर्थं जानन्ति हृदि अवेदिनः दीर्घानुसन्धानशून्याः। तथा च श्रुतिः "अथेतरेषां पशूनाम् अशनापिपासे एवाभिविज्ञानं न विज्ञातं वदन्ति न विज्ञातं पश्यन्ति न विदुः श्वस्तनं न लोकालोकाविति"। अष्टाविंशतिभेदानाह गवादय उष्ट्रान्ताः द्विशफाः द्विखुरा नव गवादयः चमर्य्यन्ता एकशफाः षट्। श्वादयो गोधान्ताः पञ्चनखा द्वादश। एवमेते भूचराः सप्तविंशतिः, मकरादयो जलचराः कङ्कादयश्च खगाः। अभूचरत्वेनैकीकृत्य गृहीताः। तदेवमष्टाविंशतिभेदान् वदन्ति। तेषु कृष्णरुरुगौराः मृगविशेषाः अन्येषामपि तिर्य्यक्प्राणिनामेतेष्वेव यथायथमन्तर्भावः।"

**तिर्य्यग्योनि** स्त्री तिरश्चां योनिः पशुपक्ष्यादिजातौ "स लिङ्गिनां हरत्येनस्तिर्य्यग्योनौ च जायते" मनुः।

"अवध्याश्च स्त्रियं प्राहुस्तिर्य्यग्योनिगतामपि" ति० त०।

**तिल** गतौ भ्वा०पर०सक०सेट्। तेलति अतेलीत्। तितेल।

**तिल** स्नेहे तु० पर० अक० अनिट्। तिलति अतेलीत्। तितेल। [ तिलत् त।

**तिल** स्नेहे चुरा० उभ० अक० सेट्। तेलयति ते अती-

**तिल** पु०तिल—क। स्वनामख्याते शस्यभेदे। भावप्र०तद्गुणाद्युक्तं यथा "तिलः कृष्णः सितो रक्तः सवर्ण्योऽल्पतिलः स्मृतः। तिलो रसे कटुस्तिक्तो मधुरस्तुवरो गुरुः। विपाके कटुकः स्वादुः स्निग्धोष्णः कफपित्तनुत्। बल्यः केश्यो हिमस्पर्शस्त्वच्यस्तन्योव्रणे हितः। दन्त्योऽल्पमूत्रकृद्ग्राही वातघ्नोऽग्निमतिप्रदः। कृष्णः श्रेष्ठतमस्तेषु शुक्लो मध्यमः सितः। अन्ये हीनतराः प्रोक्तास्तज्ज्ञै रक्तादयस्तिलाः"।

तिलप्रतिग्रहनिषेधमाह ब्रह्मपुराणम् "ब्राह्मणः प्रतिगृह्णीयात् वृत्त्यर्थं साधुतस्तथा। अव्ययमपि मातङ्गतिललौहांश्च वर्जयेत्" तिलदाने फलमाह विष्णुः। "तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम्"। महाभारते "कल्यमुत्थाय यो विप्र स्नातः शुक्लेन वाससा। तिलपात्रं प्रयच्छन् वै सर्वपापैः प्रमुच्यते"। शु० त० स्मृतिः "प्रेतमुद्दिश्य यो दद्यात् हेमगर्भांस्तिलान्नृप!। यावन्तस्ते तिलाः स्वर्गे तावत्कालं स मोदते"। सप्तम्यादिवर्जं तिलैः सदा स्नानं कर्त्तव्यमाह मार्कण्डेयः "सर्वकालं तिलैः स्नानं पुण्यं व्यासोऽब्रवीन्मुनिः। श्रीकामः सर्वदा स्नानं कुर्वीतामलकैर्नरः। सप्तमीं नवमीं चैव पर्वकालञ्च वर्जयेत्" जन्मतिथौ तिलनिष्पाद्याः षड्व्यापाराः कार्य्याः यथाह ति० त० "तिलोद्वर्त्ती तिलस्नायी तिलहोमी तिलप्रदः। तिलभुक् तिलवापी च षट्तिली नावसीदति" कालविशेषे तिलतर्पणनिषेधः गङ्गादौ च सर्वदा निषिद्धदिनेऽपि तिलतर्पणकार्य्यता च तर्पणशब्दे ३०५८ पृ० उक्ता। रात्रौ तिलसंबद्धवस्तुमात्रस्याभक्ष्यता "सर्वञ्च तिलसंबद्धं नाद्यादस्तमिते रवौ" काशी० "तिलाश्चम्पकसंश्लेषात् प्राप्नुवन्त्यधिवासताम्" कामन्दकी० "विक्रीणाति तिलैस्तिलान्" पञ्चत०। २तिलतुल्ये स्वल्पप्रमाणे च 'तिलं तिलं समादाय रत्नानां यद्विनिर्मिता। तिलोत्तमेति तत्तस्या नाम चक्रे पितामहः" भा० आ० ७६६६ श्लो०। ३तिलाकारे देहस्थे (तिल) ख्याते तिलकालके च "देवगुरुप्रसादेन जिह्वाग्रे मे सरस्वती। तेनाहं नृप! जानामि भानुमत्यास्तिलं यथा" कालिदासः।

तिलस्य विकारः अण्। तैल तिलनिर्य्यासे तिलस्नेहे तिलसदृशवस्तुजाते स्नेहे च "अदुष्टं सार्षपं तैलं यच्चैव पुष्पवासितम्। अदुष्टं पक्वतैलञ्च स्नानाभ्यङ्गेषु नित्यशः" तिथित०। पर्वणि तन्निषेधमाह "स्त्रीतैलमांससंभोगी- विण्मूत्रनरकं व्रजेत्" ति०त० एवमन्यदिनेऽपि तैलनिषेधः स्मृतौ दृश्यः।

**तिलक** न० तिल—क्वुन् तिल+इवार्थे स्वल्पे वा कन् वा। १क्लोमनि २कृष्णसौवर्चले अमरः ३सौवर्चले मेदि०। ४तिलवृक्षे, पु० राजनि०। ५अश्वभेदे, पुंस्त्री० मेदि०। ६रोगभेदे, अमरः। ७मरुवके च हेमच०। स्वनामख्याते भाषादौ धार्य्ये दवन्दनादिविशेषके पुंन०। तस्य धारणप्रकारो यथा "द्वादशाङ्गे ललाटादौ तिलकं हरिमन्दिरम्। स्नानान्ते वैष्णवः कुर्य्यात् प्रत्येकं कृष्णनामभिः। वामे वक्षसि नेत्रान्ते गरुडेऽंसे शङ्खचिह्नितम्। तथैव दक्षिणे कुर्य्याद्धरेश्चक्राङ्कितं सुने!। ललाटे केशवं विद्यात् कण्ठे श्रीपुरुषोत्तमम्। वामबाहौ वासुदेवं सव्ये दामोदरन्तथा। नाभौ नारायणञ्चैव माधवं हृदये तथा। गोविन्दं दक्षिणे पार्श्वे वामे चैव त्रिविक्रमम्। विष्णुं सव्ये कर्णमूले दक्षिणे मधुसूदनम्। शिरोमध्ये हृषीकेशं पद्मनाभञ्च पृष्ठतः। हरेर्द्वादशनामानि पठित्वा तिलकानि तु। यः कुर्य्याद्वैष्णवो नित्यं स प्रेमभक्तिमाप्नुयात्। ये कण्ठलग्नतुलसीभवकाष्ठमाला ये द्वादशाङ्गहरिनामकृतोर्द्ध्वपुण्ड्राः। ये कृष्णभक्तिसुदृढा धृतशङ्खचक्रास्ते वैष्णवा भुवनमाशु पवित्रयन्ति। तिलकन्तूर्द्ध्वपुण्ड्राख्यं मध्यच्छिद्रं हि नारद!। यदि कुर्य्याल्ललाटे तद्विज्ञेयं हरिमन्दिरम्। नासासूलमारभ्य शिरोमध्यगतं सुने!। हरिपादाकृतं नासामूलमारभ्य यत्नतः। हरिमन्दिरवत् सर्वं तद्राधावल्लभीयकम्। श्रीराधावल्लभीयं यत्तिलकं सुमनोहरम्। यौगलं तत्तु विज्ञेयं यदि मध्यसुरञ्जितम्। यदूर्द्ध्वपुण्ड्रं तिलकं शोभनं तन्मनोहरम्। तन्मध्ये पीतरेखञ्च श्रीमद्रामानुजं विदुः। श्रीरामोपासना यस्य तिलकं तदूर्द्ध्वपुण्ड्रकम्। भ्रुवोर्मध्ये सविन्दु स्याद्यदि विप्र! मनोहरम्। हरेः सर्वावताराणां मत्स्यादीनां विशेषतः। उपासकानां तिलकं केवलं हरिमन्दिरम्। ऊर्द्ध्वपुण्ड्रं द्विजः कुर्य्यात् क्षत्रियाणां तथैव च। वैश्यानान्तु तथा विप्र! शूद्रादेर्मण्डलाकृति। अच्छिद्रमूर्द्ध्वपुण्ड्रन्तु ये कुर्वन्ति जनाधमाः। तेषां ललाटे सततं

शुनः पादो न संशयः । दृष्ट्वा भाले द्विजातीनामच्छिद्रमूर्द्ध्वपुण्ड्रकम् । कार्ष्णीः कृष्णस्मृतिं कृत्वा वस्त्रेणाच्छादयेन्मुखम् । ललाटदक्षिणे ब्रह्मा वसेद्वामे महेश्वरः । मध्ये विष्णुर्वसेन्नित्यं तस्मात् मध्यं न लेपयेत् । वर्त्तुलं तिर्य्यगच्छिद्रं ह्रस्वं दीर्घं ततं नतम् । षडलक्षणसंयुक्तं तिलकं यन्निरर्थकम् । खनित्रयष्टिकुक्कुरत्रिशूलमुकुराकृति । त्रिपुण्ड्रमर्द्धचन्द्रञ्च तिलकं यन्निरर्थकम् । प्रमाणमूर्द्ध्वपुण्ड्रस्य दीर्घं स्यात् कलिवर्द्धनम् । नासामूलमारभ्य ब्रह्मरन्ध्रगतं यदि । शूद्रस्यैकाङ्गुलं प्रोक्तमायतं द्व्यङ्गुलं विशि । क्षत्रिये त्र्यङ्गुलं तद्वद्ब्राह्मणे चतुरङ्गुलम् । नासिकायास्त्रिभागैको भागोमानेन यो भवेत् । भ्रुवोर्मध्यादधः स्थानं मूलमाङ्गर्मणीषिणः । ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा । कुर्य्यात् यदूर्द्ध्वपुण्ड्रं तद्वैष्णवो हरिमन्दिरम् । वैष्णवा विप्रा भूपाश्चेत् वैश्यशूद्रान्त्यजाश्रमाः । यदूर्द्ध्वपुण्ड्रं विश्वयुक्तदेव हरिमन्दिरम् । नरोवाप्यथ वा नारी यदि कृष्णपथं लभेत् । यत्नतस्तुलसीमाला सम्भार्य्या हरिमन्दिरम् । मध्यच्छिद्रं न कुर्य्यात् यस्तिलकं यदि वैष्णवः । श्वपदं तच्चितातुल्यं भवेन्नारद ! नान्यथा । दण्डाकारं द्विरेखं यत्तिलकं मूलकोणकम् । मध्यच्छिद्रन्तु तत्प्राहुरूर्द्ध्वपुण्ड्रं मनोहरम् । अधोमुखाब्जकलिकाकारं तिलकमुत्तमम् । मध्यच्छिद्रं युग्मरेखमूर्द्ध्वपुण्ड्रं प्रकीर्त्तितम् । तीर्थमृद् यज्ञकाष्ठञ्च विल्वोमलयसम्भवम् । अश्वत्थतुलसीमूलमृत्तिका गोष्पदस्य च । जाह्नवी मृन्महानिम्बतुलसीकाष्ठमेव च । कस्तूरीकुङ्कुमं फलगुसिन्दूरं रक्तचन्दनम् । गोरोचना गन्धकाष्ठं जलं चागुरु गोमयम् । धात्रीमूलस्य मृद्गन्धो हरिद्रा गोष्ठहस्य च । स्नानान्ते सर्ववर्णानामाश्रमाणान्तथैव च । एतानि तिलकान्याहुः सन्ध्यादिसर्वकर्म्मसु” । “गङ्गामृत्तुलसीमूलमृत्तिकामलयोद्भवम् । साधोश्चरणसंलग्नं रजोमृद्गोष्पदस्य च । याऽश्वत्थमूलमृद्गोपीचन्दनं तीर्थमृत्तिका । कुङ्कुमं तुलसीकाष्ठं वैष्णवाहृतमृत्तिका । गोरोचना च कस्तूरी हरिद्रागुरुचन्दनम् । वल्मीकमृत्तिकागन्धः पद्मकं हरिचन्दनम् । गन्धकाष्ठं महानिम्बो यमुनातीरमृत्तिका । गुरुपादरजो वारिसुसाध्वङ्घ्रिरजो जले । कृत्वा प्रतिदिनं स्नानमेतैर्गन्धमृदादिभिः । चारु यत्तिलकं गाहन्त्यं तन्नाम्ना वैष्णवैर्ध्रुवम् । काम्यं नैमित्तिकं नित्यं यत् किञ्चित् कर्म्म नारद ! । वर्णाश्रमाणां तन्नास्ति स्नानान्ते तिलकं विना । कर्म्म वर्णाश्रमाणां स्यात् दैवं पैत्रं न तत्फलम् । स्नानं सन्ध्यां पञ्च यज्ञान् पैत्रं होमादिकर्म्म यः । विना तिलकदर्भाभ्यां कुर्य्यात्तन्निष्फलं भवेत्” । इति पद्मोत्तरखण्डम् ‘‘वीक्ष्यादर्शे जले वापि यो विदध्यात् प्रयत्नतः । ऊर्द्ध्वपुण्ड्रं महाभागः स याति परमाङ्गतिम्” पाद्मे पातालखण्डे ‘‘शिवागमे दीक्षितैस्तु धार्य्यं तिर्य्यक् त्रिपुण्ड्रकम् । विष्णागमे दीक्षितस्तु ऊर्द्ध्वपुण्ड्रं विधारयेत्” । इति नागोजीभट्टधृतस्मृतसंहिता । पद्मपुराणे उत्तरखण्डे “ललाटे केशवं ध्यायेन्नारायणमथोदरे । वक्षःस्थले माधवन्तु गोविन्दं कण्ठकूपके । विष्णुञ्च दक्षिणे कुक्षौ वामे च मधुसूदनम् । त्रिविक्रमं कन्धरे तु वामनं वामपार्श्वके । श्रीधरं वामबाहौ तु हृषीकेशन्तु कन्धरे । पृष्ठे तु पद्मनाभञ्च कट्यां दामोदरं न्यसेत् । तत्प्रक्षालनतोयन्तु वासुदेवेति मूर्द्धनि” । किञ्च “ऊर्द्ध्वपुण्ड्रं ललाटे तु सर्वेषां प्रथमं स्मृतम् । ललाटादिक्रमेणैव धारणन्तु विधीयते” इति “एवं न्यासं समाचार्य्य सम्प्रदायानुसारतः । न्यसेत् किरीटमन्त्रञ्च मूर्द्ध्नि सर्वार्थसिद्धये” अथ किरीटमन्त्रः ‘‘ओम् श्रीकिरीटकेयूरहारमकरकुण्डलचक्रशङ्खगदापद्महस्तपीताम्बरधरश्रीवत्साङ्कितवक्षःस्थलश्रीभूमिसहितस्वात्मज्योतिर्दीप्तिकराय सहस्रादित्यतेजसे नमो नमः” हरिभक्तिविलासे ४विलासः । ऊर्द्ध्वपुण्ड्रशब्दे अधिकं द्रष्टव्यम् । ९ध्रुवकभेदे यथा “पञ्चविंशतिवर्णाङ्घ्रिस्तिलको ध्रुवको भवेत् । दृष्टश्चञ्चत्पुटे ताले रसे वीरे ऽद्भुतेऽपि वा” सङ्गीतदा० । ‘‘मुखे मधुश्रीस्तिलकं प्रकाश्य” कुमा० । तिलक इव उत्तरपटस्थः १०श्रेष्ठे ‘‘श्रियं त्रिलोकी तिलकः स एव” । ‘‘लोध्रचूर्णतिलकाकृतिः” माघः । स्वार्थे क । ११तिलवृक्षे राजनि० । “न तिलकस्तिलकः प्रमदामिव” रघुः ।

**तिलकट** न० तिलस्य रजः कटच् । तिलरजसि ।

**तिलकल्क** पु० तिलस्य कल्कः । १पिण्याके (खलि) अमरः ‘‘कषायेण स्रोतेनोदकमादाय तिलकल्कमधुसर्पिःप्रगाढ़ामौषधयुतां वर्त्तिं प्रणिदध्यात्” ‘‘तिलकल्कः समधुको घृताक्तो व्रणरोपणः” सुश्रु० ।

**तिलका** स्त्री तिलं तिलपुष्पमिव कायति कै—क । हारभेदे जटा० ‘‘सगणद्वितयं भवतीह यदा रसवर्त्मपदा तिलकेति तदा” उक्तलक्षणके द्वादशाक्षरपादके२छन्दोभेदे च ।

**तिलकालक** पु० तिल इव कालकः कृष्णः । १देहस्थे २तिला·

कारे चिह्ने, २रोगभेदे च अमरः "कृष्णानि तिलमात्राणि नीरुजानि समानि च। वातपित्तकफोद्रेकात् तान् विद्यात् तिलकालकान्" सुश्रु०।

**तिलकाश्रय** पु० ६त०। ललाटे शब्दार्थक०।

**तिलकिट्ट** न० ६त०। तिलपिण्याके "तिलकिट्टं तु रूक्षं स्यात् ग्लपनं दृष्टिदोषकृत्। विष्टम्भकारणं तद्धि भिषग्भिः परिकीर्त्तितम्" भावप्र०।

**तिलकिन्** त्रि० तिलक+अस्त्यर्थे इनि। तिलकधारिणि "शिखी तिलकी कर्म कुर्यात्" इति तिनिबद्धे कल्पद्रुस्मृतिः।

**तिलचित्रपत्रक** पु० तिलस्येव चित्रं पत्रमस्य कप्। तैलकन्दे वृक्षभेदे राजनि०।

**तिलचूर्ण** न० ६त०। चूर्णीकृततिले (तिलकुटा) १खाद्यभेदे। २तिलकल्के च राजनि०।

**तिलतण्डुलक** पु० तिलस्य तण्डुल इव कायति कै—क। १आलिङ्गने शब्दमा०आलिङ्गनस्य तिलतण्डुलवत् संश्लेषयुक्तत्वात् तथात्वम्। ६त०। २तिलस्य तण्डुले निस्तुषतिले पु० (माजातिल)।

**तिलतेजा** स्त्री तिल इव तेजयति चुरा० तिज—अच्। लताभेदे "कफजे तिलतेजाह्वा दन्तीस्वर्जिकचित्रकाः" सुश्रु०

**तिलन्तुद** त्रि०तिलं तुदति तुद—खश् मुम्। तैलिके तिलपीडके। [दशीभेदे वृतशब्दे दृश्यम्।

**तिलद्वादशी** स्त्री तिलभोजनादिनियमयुक्ता द्वादशी। द्वा-

**तिलधेनु** स्त्री० तिलनिर्म्मिता धेनुः शा०त०। विधानेन दानार्थं तिलकृतायां धेनौ। तद्विधानं यथा।

"विधानं तिलधेनोस्त्वं ब्रूहि शीघ्रं द्विजोत्तम!। मुनिः प्राह विधानं यत् तच्छृणुष्व नराधिप!। षोड़शाढ़ककैर्धेनुश्चतुर्भिर्वत्सको भवेत्। इक्षुदण्डमयाः पादादन्ताः पुष्पमया शुभाः। नासा गन्धमयी तस्या जिह्वा गुड़मयी तथा। स्थितां कृष्णाजिने धेनुं वस्त्रोभिर्वासितां शुभाम्। स्रग्भिश्च वासितां कृत्वा पञ्चरत्नसमन्विताम्। सर्वौषधिसमायुक्तां मन्त्रपूतान्तु दापयेत्। अन्नं मे जायतां सद्यः पानं सर्व्व रसास्तथा। कामं सम्पादयास्माकं तिलधेनुमुपार्ज्जिताम्। गृह्णामि त्वां देवि! भक्त्या कुटुम्बार्थे विशेषतः। कुटुम्बकामं कुरुतां तिलोधेनो! नमोऽस्तु ते। एवंविधां नरोदत्त्वा तिलधेनुं नृपोत्तम!। सर्वकामसमाप्तिं च कुरुते नात्र संशयः" प०पु० सृ०ख०।

**तिलपर्ण** पु०तिलस्येव पर्णमस्य। १श्रीवेष्टे वृक्षे राजनि०। २चन्दने न० राजनि०। ६त०। तिलवृक्षस्य ३पत्रे न०।

**तिलपर्णी** स्त्री तिलस्येव पर्णान्यस्याः ङीप्। १रक्तचन्दने। अमरः २नदीभेदे स्त्री शब्दार्थचि०। तिलपर्णीनदी आकरत्वेनास्त्यस्या अच् गौरा० ङीष्। ३सिह्लके गन्धद्रव्यभेदे स्त्री हेमच०। स्वार्थे क। तिलपर्णिका रक्तचन्दने हेमच०।

**तिलपिञ्ज** पु० पु० निष्फलतिलः तिल+पिञ्ज। निष्फलतिले "वत्सोरर्जुनकाण्डस्य यवस्य ते पलाल्या तिलस्य तिलपिञ्ज्या" अथ० २।८।३।

**तिलपुष्पक** पु०तिलस्येव पुष्पमस्य कप्। विभीतकवृक्षे पारस्करनै०। त०। ६त०। २तिलस्य पुष्पे च तत्सादृश्यात् ३नासिकायाम् तन्त्रशा०।

"पद्मं इह्रा तथा बिम्बं खञ्जनं शिखरन्तथा। चामरं रविबिम्बञ्च तिलपुष्पं सरोरुहम्। त्रिशूलं वीक्ष्य जप्त्वा च शतशः शुद्धभावतः।" पद्मं मुखं बिम्बमधरं खञ्जनश्चक्षुः शिखरं मस्तकं चामरं केशं रविबिम्बं सिन्दूरं तिलपुष्पं नासिकां सरोरुहम् नाभिं त्रिशूलं त्रिवलीम्"। तन्त्रसारः।

**तिलपेज** पु०निष्फलतिलः तिल+पेज। निस्फले तिले अम०।

**तिलभार** पु० देशभेदे "तिलभाराः समीराश्च मधुमन्ताः सुकन्दकाः। भा० भी० ६३ अ०।

**तिलमय** त्रि०तिलस्य विकारः तिल+असंज्ञायां मयट्। तिलविकारे संज्ञायां तु अण्। तैलमित्येव।

**तिलमयूर** पुंस्त्री० तिलपुष्पचिह्नितः मयूरः शा० त०। (तिलेमयूर) मयूरभेदे त्रिका० स्त्रियां जातित्वात् ङीष्।

**तिलरस** पु० ६त०। तिलतैले।

**तिलशस्** अव्य० तिलं तिलं तत्परिमितं करोतीति मानार्थत्वात् वीप्सायां कारकार्थे शस्। तिलं तिलं कृत्वेत्येवमाद्यर्थे। "तिलशस्तद्रथं चक्रे साश्वध्वजपताकिनम्" हरिवं० १८६ अ०।

**तिलशैल** पु० दानार्थं कल्पिते दशसु अचलेषु अचलभेदे। तिलाचलादयोऽप्यत्र। तिलाचलश्च द्विविधः तिलमयप्रधानमेरुः, धान्यशैलस्य पश्चात् कल्पितः तिलमयविष्कम्भगिरिश्च। तत्र मेरुरूपतिलशैलदानविधिर्यथा

"प्रथमो धान्यशैलः स्यात् द्वितीयो लवणाचलः। गुड़ाचलस्तृतीयस्तु चतुर्थो हेमपर्वतः। पञ्चमस्तिलशैलः स्यात् षष्ठः कार्पासपर्वतः। सप्तमो घृतशैलश्च रत्नशैलस्तथाष्टमः। राजतो नवमस्तद्वद्दशमः शर्कराचलः। वक्ष्ये विधानमेतेषां यथावदनुपूर्वशः। अयने विषुवे पुण्ये

व्यतीपाते दिनक्षये। शुक्लपक्षे तृतीयायामुपरागे शशिक्षये। विवाहोत्सवयज्ञेषु द्वादश्यामथ वा पुनः। शुक्लायां पञ्चदश्यां वा पुण्यर्क्षे वा विधानतः। धान्यशैलादयोऽपि देयाः शास्त्रं विजानता" इत्युपक्रमे। "अतःपरं प्रवक्ष्यामि तिलशैलं विधानतः। यत्प्रदानान्नरोयाति विष्णुलोकं सनातनम्। उत्तमो दशभिर्द्रोणैर्मध्यमः पञ्चभिः स्मृतः। त्रिभिः कनिष्ठो विप्रेन्द्र! तिलशैलः प्रकीर्त्तितः। पूर्ववच्चापरान् सर्वान् विष्कम्भानमितोगिरीन्। दानमन्त्रान् प्रवक्ष्यामि यथावन्मुनिपुङ्गव!। यस्मात् मधुवधे विष्णोर्देहस्वेदसमुद्भवाः। तिलाः कुशाश्च माषाश्च तस्माच्छन्नो भवत्विह। हव्ये कव्ये च यस्माच्च तिला एवाभिरक्षणम्। भवादुद्धर शैलेन्द्र! तिलाचल! नमोऽस्तु ते"। इत्यामन्त्र्य च यो दद्यात् तिलाचलमनुत्तमम्। स वैष्णवं पदं याति पुनरावृत्तिदुर्लभम्। दीर्घायुष्यं समाप्नोति पुत्रपौत्रैश्च मोदते। पितृभिर्देवगन्धर्वैः पूज्यमानो दिवं व्रजेत्" मत्स्यपु० ८६अ०। विष्कम्भरूपतिलाचलस्तु यथा।"पश्चात्तिलाचलमनेकसुगन्धिपुष्पसौवर्णपिप्पलहिरण्मयहंसयुक्तम्। आकारयेद्रजतपुष्पवनेन तद्वद्वस्त्रान्वितं दधिसितोदसरस्तथाग्रे" मत्०पु० ८२ अ०।

**तिलस्नेह** पु० इत०। तैले शब्दार्थक०। [राजनि०।

**तिलाङ्कितदल** पु० तिलैनाङ्कितं दलमस्य। तैलकन्दे

**तिलान्न** न०तिलमिश्रितमन्नं शा०त०। तिलमिश्रितेऽन्ने कृशरे हेम०। [जीरके शब्दार्थचि०।

**तिलापत्या** स्त्री तिलस्येव क्षुद्रः अपत्यं बीजमस्याः। कृष्ण-

**तिलित्स** पु० तैलनं तिलिर्गतिस्तं त्सरति छद्मना गच्छति त्सर—ड। अजगरे सर्पभेदे अमरः स्त्रियां जातित्वात् ङीष्

**तिलोत्तमा** स्त्री अप्सरोभेदे "तिलोत्तमा नाम पुरा ब्रह्मणो योषिदुत्तमा। तिलं तिलं समुद्धृत्य रत्नानां निर्मिता शुभा" भा०अनु० १४१अ०। तस्यास्तथानामकरणं यथा "तिलं तिलं समानीय रत्नानां यद्विनिर्मिता। तिलोत्तमेति तत्तस्या नाम चक्रे पितामहः" भा० आ० २११ अ०।

**तिलोदक** न० तिलमिश्रितमुदकम् शा० त०। तिलमिश्रिते उदके "तेषां दत्त्वा तु हस्तेषु सपवित्रं तिलोदकम्" मनुः "बलिं भिक्षां तथाऽर्घ्यञ्च पितॄणाञ्च तिलोदकम्" भा० अनु० १२६ अ०। "आवाहयिष्ये तान् सर्वान् दर्भपृष्ठे तिलोदकैः" वायुपु०।

**नतिलौद** पुंन० तिलमिश्रितः ओदनः। कृशरे हारा०।

"दुहिता मे पण्डिता जायेत सर्वमायुरियादिति तिलौदनं पाचयित्वा" शत०ब्रा० १४।८।४।१६। "तिलमिश्रमोदनं कृशरमित्यर्थः" भा०।

**तिल्पिञ्ज** पु० तिल+पिञ्ज—वेदे डिच्। वन्ध्यतिले "इषीकां जरतीमिष्ट्वा तिल्पिञ्जं दण्डनं नडम्" अथ० १२।२।५४।

**तिल्य** न०तिलानां भवनं क्षेत्रम् यत्।१तिलभवनयोग्ये क्षेत्रे तिलाय हितं यत्। २तिलहिते त्रि०।

**तिल्ल** गतौ भ्वा०पर०सक०सेट्। तिल्लति अतिल्लीत्। तितिल्ल।

**तिल्व** पु० तिल—क्वन् "उल्वादयश्चेति" उणा० नि०। १लोध्रे अमरः २श्वेतलोध्रे सुभूतिः ३रक्तलोध्रे क्षीरस्वामी स्वार्थे क। तत्रार्थे राजनि०। "न्यग्रोधाश्वत्थतिल्वकहरिद्रुस्रुग्जविभीतकपापनामभ्यश्च" कात्या०श्रौ०२१।३।२०"तिल्वकः तिरिटः"कर्कः।

**तिल्विल** त्रि०तिल—क्विलच् बा०कु तिलुः स्निग्धा इला भूमिर्यस्मिन्। देवयजने स्थाने "भद्रे क्षेत्रे निमिता तिल्विले वा"ऋ०५।६२।७ "इव तिष्ठ निमिता तिल्विलास्तामिरावतीं मध्ये पोषस्य तिष्ठन्तीम्" आ० गृ० ३।८८। "तिल्विलायध्वमुषसो विभातीर्यूयं पात स्वस्तिभिः सदा नः" ऋ० ७।७८।५।"तिल्विलायध्वं तिलुरिला भूमिर्यस्य तत् कुरुत" भा०।

**तिष्ठद्गु** अव्य०तिष्ठन्त्यो गावो यस्मिन् काले तिष्ठद्गुप्रभृतित्वात् नि० अव्ययीभावः। दोहनकाले "आ तिष्ठद्गु जपन् सन्ध्यां प्रक्रान्तामायतीगवम्" भट्टिः।

**तिष्ठद्गुप्रभृति** न० अव्ययीभावे निपातनाद्गुशब्दसमूहे स च गणः पा० गणसू० उक्तो यथा "तिष्ठद्गु वहद्गु आयतीगवम् खलेयवम् खलेबुसम् लूनयवम् लूयमानयवम् पूतयवम् पूयमानयवम् संहृतयवम् संह्रियमाणयवम्। संहृतबुसम् संह्रियमाणबुसम् समभूमि समपदाति सुषमम् विषमम्। दुःषमम् निःषमम् अपसमम् आयतीसमम् प्रौढम् पापसमम् पुण्यसमम् प्राह्णम् प्ररथम् प्रमृगम् प्रदक्षिणम् अपरदक्षिणम् सम्प्रति असम्प्रति इच्प्रत्ययः समासान्तः"।

**तिष्ठद्धोम** स्त्री तिष्ठता होमो यत्र। यजतिरूपे यागभेदे "यजतिजुहोतीनां को विशेषः" कात्या०श्रौ० १।२।५ "यजतीनां यागानां जुहोतीनां होमानां च परस्परं को विशेषः को भेद इति प्रश्नः। तत्र यजतीनां विशेषमाह" कर्कः "तिष्ठद्धोमा वषट्कारप्रदाना याज्यापुरोऽनुवाक्यावन्तो यजतयः"६। उच्यन्त इति शेषः।"तिष्ठता

होमो येषु ते तिष्ठद्धोमाः वषट्कारेण प्रदानं येषु ते वषट्कारप्रदानाः तथा याज्यावन्तः पुरोऽनुवाक्यावन्तश्च ये ते यजतय उच्यन्ते” कर्कः ।

**तिष्य** पु० तुष्यन्त्यस्मिन् तुष–क्यप् नि०। १पुष्यनक्षत्रे। त्विष–दीप्तौ यक् अप्रत्यादि०नि०। २कलियुगे न०। तिष्ये नक्षत्रे जातः अण् तस्य लुक्। ३पुष्यनक्षत्रजाते त्रि०। तिष्यं नक्षत्रमस्त्यत्र पौर्णमास्याम् अच्। ४पौषमासे शब्दरत्ना०। स्वार्थे क। पौषमासे शब्दा०। तत्र पुष्यनक्षत्रे। “यदा सूर्य्यश्च चन्द्रश्च तथा तिष्यबृहस्पती। एकराशौ समेष्यन्ति प्रवत्स्यति तदा कृतम्”। भा० व० १९० ८८ श्लो० कलियुगे “ततस्तिष्येऽथ संप्राप्ते युगे कलिपुरस्कृते। एकपादस्थितो धर्मो यत्र तिष्ये भविष्यति” भा० शा०३४० अ०। “सत्सम्प्रदायप्रथनाय तिष्ये शिष्यैश्चतुर्भिः सह योऽवतीर्णः। उक्तो हरतत्सङ्गमतन्त्रराजे श्रीशङ्कराचार्य्यगुरुं तमीडे। “तपस्तादृक् क्व वा तिष्ये तिष्ये योगः क्व तादृशः। क्व वा व्रतं क्व वा दानं तिष्ये मोक्षस्ततः कुतः” काशीख०३५ अ०। ५माङ्गल्ये त्रि०। [शब्दर०।

**तिष्यपुष्पा** स्त्री० तिष्यं माङ्गल्यं पुष्पं यस्याः। आमलक्याम्

**तिष्यफला** स्त्री तिष्यं माङ्गल्यं फलमस्याः। आमलक्याम् अमरः। “नित्यमामलके लक्ष्मीः” स्मृतेस्तत्फलस्य मङ्गलहेतुत्वात् तथात्वम्। [क्याम् शब्दरत्ना०।

**तिष्या** स्त्री तिष्यं मङ्गलं हेतुत्वेनास्त्यस्या अच्। आमल-

**तिसृधन्व** न० तिसृभिरिषुभिर्युतं धन्व धनुः वेदे अच् समासान्तः अविभक्तावपि वेदे तिस्रादेशः। तिसृभिरिषुभिर्युक्ते धनुषि “तिसृधन्वं दक्षिणां ददाति” शत० ब्रा० ११।२।५।१०। “स तिसृधन्वमादायापचक्राम” १४।१।१।७। [४सद्भावे च संक्षिप्तसारः।

**तिहन्** पु०तुह–अर्दने कनिन् नि०। १व्याधौ २व्रीहौ ३धनुषि

**तीक** गतौ भ्वा० पर० सक० सेट्। तीकते अतीकिष्ट तितीके ऋदित् अतितीकत् त। शब्दस्तोमे याचनार्थतोक्तिः प्रामादिकी पा०गणपाठे तस्य गत्यर्थतयैवोक्तेः।

**तीक्ष्ण** न०तिज–क्स्न दीर्घश्च। १खरे स्पर्शे २विषे ३लौहभेदे (इस्पात)४युद्धे अमरः ५मरणे ६शस्त्रे ७शीघ्रे इति सारसु०। ८सामुद्रलवणे ९मुष्कके मेदि० १०चव्यके राजनि०। ११मरके हेमच०। १२तीक्ष्णतायुक्ते त्रि० “तीक्ष्णश्चैव मृदुश्च स्यात् कार्य्यं वीक्ष्य महीपतिः” मनुः। “तीक्ष्णा नारुन्तुदा बुद्धिः कर्म शान्तं प्रतापवत्” माघः “शक्तिं चोभयतस्तीक्ष्णाम्” मनुः। “प्रतिभायां हीरके कटाक्षे दुर्व्वाक्ये नखे लवणे रविकरे” इति कविकल्पलतायां तीक्ष्णत्वमुक्तम्। १३यवक्षारे पु० मेदि०। १४श्वेतकुशे १५ कुन्दुरुके राजनि०। नक्षत्रविशेषगणे न० यथा “शक्राहिशिवमूलाश्च मन्दाहस्तीक्ष्णदारुणे” ज्योतिषम्।१६आत्मत्यागिनि त्रि० मेदि०।१७निरालस्ये सुबुद्धौ त्रि० धरणी० १८योगिनि पु० अजयपालः। [राजनि०।

**तीक्ष्णक** पु० तीक्ष्ण+संज्ञायां कन्। १गौरसर्षपे, २मुष्कके च

**तीक्ष्णकण्टक** पु० तीक्ष्णः कण्टकोऽस्य। १धुस्तूरे २बर्बुरे, ३इङ्गुदीवृक्षे, ४वंशे च जटाध०।५कन्यारीवृक्षे स्त्री टाप्। राजनि०। ६तीक्ष्णकण्टकयुक्ते त्रि०। कर्म्म०। ७तीक्ष्णे कण्टके पुंन०।

**तीक्ष्णकन्द** पु० तीक्ष्णः कन्दो मूलमस्य। पलाण्डौ राजनि०

**तीक्ष्णकर्म्मन्** त्रि० तीक्ष्णं कर्मास्य। १तीव्रकार्य्यकरे आयःस्थूलिके त्रिका०। कर्म्म०। २तीव्रे कर्म्मणि न०।

**तीक्ष्णकल्क** पु० तीक्ष्णः कल्कोऽस्य। तुम्बुरुवृक्षे राजनि०।

**तीक्ष्णकान्ता** स्त्री नि०कर्म्म०। तारादेव्याम् उग्रतारायाम्। “पीठे दिक्करवासिन्या द्विरूपा वसते शिवा। तीक्ष्णकान्ताह्वया त्वेका योग्रतारा प्रकीर्त्तिता”। “पुरा ललितकान्ताख्या या श्रीमङ्गलचण्डिका। तस्यास्तु सततं रूपं तीक्ष्णकान्ताह्वयं शृणु!। कृष्णा लम्बोदरी या तु सा स्यादेकजटा शिवा। तेन रूपेण तां देवीं सततं परिपूजयेत्” कालि०पु० ८२ अ०।

**तीक्ष्णगन्ध** पु० तीक्ष्णः गन्धोऽस्य। १शोभाञ्जनवृक्षे जटा०। वा कप्। अत्रैवार्थे राजनि०। २रक्ततुलस्याम् शब्दा० कुन्दरुनामगन्धद्रव्ये अमरः।

**तीक्ष्णगन्धा** स्त्री तीक्ष्णः गन्धोऽस्याः। १वचायां, २राजिकायाम्, ३कन्थार्य्यां, राजनि०। ५जीवन्त्याञ्च शब्दच०। ६श्वेतवचायां मेदि० ७सूक्ष्मैलायाम्,रत्नमा०। [रत्नमा०।

**तीक्ष्णतण्डुला** स्त्री० तीक्ष्णास्तण्डुला यस्याः। पिप्पल्याम्

**तीक्ष्णतैल** न० तीक्ष्णस्य स्नेहः तैलच्। १स्नुहीक्षीरे, २सर्जरसे, ३मद्ये च शब्दरत्ना०।

**तीक्ष्णदंष्ट्र** पुंस्त्री तीक्ष्णा दंष्ट्रास्य। १व्याघ्रे राजनि० स्त्रियां ङीष् कर्म्म०। तीक्ष्णायां दंष्ट्रायाम् स्त्री। “सुतीक्ष्णदंष्ट्राः समाश्च शुभाः” वृ० स० ६७ अ०।

**तीक्ष्णधार** पु० तीक्ष्णा धारास्य। १खड्गे “असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः। श्रीगर्भो विजयश्चैव धर्मपालो नमोऽस्तु ते। इत्यष्टौ तव नामानि” खड्गपूजा-

मन्वः। २तीक्ष्णधारायुक्तमात्रे त्रि०। "नवनीतं हृदयं ब्राह्मणस्य वाचि क्षुरो निशितस्तीक्ष्णधारः। तदुभयमेतद्विपरीतं क्षत्रियस्य वाङ्नवनीतं हृदयं तीक्ष्णधारमिति" भा० आदि० ३ अ०।

**तीक्ष्णपत्र** पु० तीक्ष्णानि पत्राण्यस्य। १तुम्बुरुवृक्षे राजनि०। २तीव्रपत्रयुक्ते त्रि० कर्म्म०। ३तीक्ष्णे पत्रे न०।

**तीक्ष्णपुष्प** न० तीक्ष्णं पुष्पमस्य। १लवङ्गे। २केतक्यां स्त्री टाप्। राजनि०। ३तिग्मपुष्पयुक्ते त्रि०। कर्म्म०। ४तिग्मपत्रे न०।

**तीक्ष्णफल** पु० तीक्ष्णं फलमस्य। १तुम्बुरुवृक्षे राजनि०। २तिग्मफलयुक्ते त्रि० कर्म्म०। ३तिग्मे फले न०।

**तीक्ष्णमूल** पु० तीक्ष्णं मूलमस्य। १शोभाञ्जने २कुलञ्जने च राजनि०। ३तिग्ममूलके त्रि०। कर्म्म०। ४तिग्मे मूले न०।

**तीक्ष्णरश्मि** पु० तीक्ष्णा रश्मयोऽस्य। तिग्मांशौ १सूर्य्ये "शरत्प्रज्वलितं तेजस्तीक्ष्णरश्मिर्विशोषयन्" हरिवं० ७३०अ०।२तिग्मरश्मियुक्ते त्रि०। कर्म०।३तिग्मे रश्मौ पु०

**तीक्ष्णरस** पु० तीक्ष्णो रसोऽस्य। १यवक्षारे रत्नमा०। २तिग्मरसयुक्ते त्रि०। कर्म्म०। ३तिग्मे रसे पु०।

**तीक्ष्णलोह** न० नि० कर्म्म०। (इस्पात) लौहभेदे।

**तीक्ष्णशूक** पु०तीक्ष्णः शूकोऽग्रं यस्य। १यवे। २खरशूकयुक्ते त्रि०। कर्म्म०। ३खरे शूके पु० न०।

**तीक्ष्णसारा** स्त्री तीक्ष्णः कठिनः सारोऽस्याः। १शिंशपायाम् (शिशु) राजनि०। २तिग्मसारयुक्ते त्रि० कर्म्म०। ३खरे सारे पुंन०।

**तीक्ष्णा** स्त्री तीक्ष्ण+टाप्। १वचायां २सर्पकङ्कालिकायाम् रत्नमा०३कपिकच्छ्वां ४महाज्योतिष्मत्याम्५अत्यम्लपर्ण्याम् जटा०। ६तारादेव्याम् च। उग्रतारोपक्रमे "हे भगवत्येकजटे विद्महे पद्मन्नतः। विकटदंष्ट्रे धीमहि तन्नस्तारा प्रचोदयात्। एषा तु तीक्ष्णा गायत्री पीठदेव्याः प्रकीर्त्तिता"। "पानेषु मदिरा शस्ता नरो बलिषु पार्थिव!। मोदको नारिकेलञ्च मांसं व्यञ्जनमेव च। नैवेद्येषु प्रियकरास्तीक्ष्णायाः परिकीर्त्तिताः"॥ कालि०पु० ८२ अ०।

**तीक्ष्णायस** न० नि० कर्म्म० अच् समा०। लौहभेदे (इस्पात) राजनि०। [तितीम।

**तीम** क्लेदने दिवा० पर० अक० सेट्। तीम्यति अतीमीत्।

**तीर** पारगतौ कर्म्मसमाप्तौ च अद० चुरा० उभ० अक० सेट्। तीरयति ते अतितीरत् त।

**तीर** न० तीर—अच्। नद्यादेः १कूले। २सीसके पु० अमरः। ४वाणे पु० त्रिका०। ५त्रपुणि पु० मेदि०। "सार्द्धहस्तशतं यावत् गर्भतस्तीरमुच्यते; भाद्रकृष्णचतुर्द्दश्यां यावदाक्रमते जलम्। तावद्गर्भं विजानीयात् तदन्यत्तीरमुच्यते" प्रा० त० उक्ते ६गङ्गाकूलभेदे न० "गङ्गातीरतरङ्गसङ्गतजलैः स्नात्वा चरो नार्चितः" शा० द०। "अनून्यतीरां मुनिसन्निवेशैः" रघुः। "अवकाशेषु चोक्षेषु नदीतीरेषु चैव हि" मनुः।

**तीरग्रह** पु० देशभेदे "तीरग्रहाः शूरसेनाः ईजकाः कन्यकाः गुहाः" भा० भी० ९ अ० जनपदोक्तौ।

**तीरभुक्ति** पु० (त्रिहोत) देशभेदे त्रिका०।

**तीरु** पु० तॄ—वा० कु। शिवे "नमस्तेऽभीरुभृत्याय तीरुभीरुहराय च" हरिवं० २७८ अ०। शिवस्तुतौ।

**तीर्ण** त्रि० तॄ—क्त। १ उत्तीर्णे, २अभिभूते, ३आप्लुते च। "तीर्णो हि तदा भवति" श्रुतिः "तीर्णाः पूर्णाः कति न सरितो लङ्घिताः के न शैलाः नाक्रान्ता वा कति वनभुवः क्रूरसञ्चारघोराः। पापैरेतैः किमिव दुरितं कारितो नास्मि कष्टं यद्दृष्टास्ते धनमदमलीमसानवक्त्रा दुरीशाः"।

**तीर्णपदी** स्त्री तरतेः कर्त्तरि क्तः। तीर्णः पादो मूलमस्याः अन्त्यलोपः कुम्भपद्या०ङीषि पद्भावः। तालमूल्याम् शब्दच०

**तीर्णा** स्त्री प्रतिष्ठाख्यवृत्तिविशेषे यथा "यस्मिन् वृत्ते कर्णः कर्णः वेदैर्वर्णैः सा स्यात् तीर्णा" अस्याः कन्येत्यपि संज्ञा। "ग्मौ चेत् कन्येति" लक्षणात्।

**तीर्थ** न०तॄ—थक्। १शास्त्रे २यज्ञे ३क्षेत्रे ४उपाये ५नारीरजसि ६अवतारे ७ऋषिजुष्टजले ८पात्रे ९उपाध्याये १०मन्त्रिणि च मेदि०।११योनौ १२दर्शने १३घट्टे हेमच०। १४विप्रे १५ आगमे १६निदाने १७वह्नौ च शब्दरत्ना०। तीर्थं त्रिविधम् जङ्गमं१ मानसं२ स्थावरं३ च। तत्र हि "ब्राह्मणा जङ्गमं तीर्थं निर्मलं सार्वकामिकम्। येषां वाक्योदकेनैव शुद्धान्ति मलिनाजनाः। अगस्तिरुवाच। शृणु तीर्थानि गदतो मानसानि ममानघे!। येषु सम्यक् नरः स्नात्वा प्रयाति परमां गतिम्। सत्यं तीर्थं क्षमा तीर्थं तीर्थमिन्द्रियनिग्रहः। सर्वभूतदयातीर्थं सर्वत्रार्जवमेव च। दानं तीर्थं दमस्तीर्थं सन्तोषस्तीर्थमुच्यते। ब्रह्मचर्य्यं परं तीर्थं तीर्थञ्च प्रियवादिता। ज्ञानं तीर्थं धृतिस्तीर्थं पुण्यं तीर्थमुदाहृतम्। तीर्थानामपि तत्तीर्थं विशुद्धिर्मनसः परा। एतत्ते कथितं देवि! मानसं तीर्थलक्षणम्।

भौमानामपि तीर्थानां पुण्यत्वे कारणं शृणु। यथा शरीरस्योद्देशाः केचिन्मेध्यतमाः स्मृताः। तथा पृथिव्यामुद्देशाः केचित् पुण्यतमाः स्मृताः। प्रभावादद्भुताद्भूमेः सलिलस्य च तेजसा। परिग्रहात् मुनीनाञ्च तीर्थानां पुण्यता स्मृता। तस्माद्भौमेषु तीर्थेषु मानसेषु च नित्यशः। उभयेष्वपि यः स्नाति स याति परमां गतिम्" तीर्थभेदा ब्रह्मपुराणे उक्ता यथा मुनय ऊचुः। "पृथिव्यां यानि तीर्थानि वनान्यायतनानि च। वक्तुमर्हसि धर्म्मज्ञ! श्रोतुं नो वर्त्तते मनः। रोमहर्षण उवाच। यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम्। विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते। मनो विशुद्धं पुरुषस्य तीर्थं वाचांयमश्चेन्द्रियनिग्रहस्तपः। एतानि तीर्थानि शरीरजानि स्वर्गस्य मार्गं प्रतिबोधयन्ति। चित्तमन्तर्गतं दुष्टं तीर्थस्नानं न शुध्यति। शतशोऽथ जलैर्धौतं सुराभाण्डमिवाशुचि। न तीर्थानि न दानानि न व्रतानि न चाश्रमाः। दुष्टाशयं दम्भरुचिं पुनन्ति व्ययितेन्द्रियम्। इन्द्रियाणि वशे कृत्वा यत्र यत्र वसेन्नरः। तत्र तस्य कुरुक्षेत्रं प्रयागं पुष्करं तथा। तस्माच्छृणुध्वं वक्ष्यामि तीर्थान्यायतनानि च। संक्षेपेण मुनिश्रेष्ठाः। पृथिव्यां यानि कानि च। विस्तरेण न शक्यन्ते वक्तुं वर्षशतैरपि। प्रथमं पुष्करं तीर्थं नैमिषारण्यमेव च। प्रयागञ्च प्रवक्ष्यामि धर्म्मारण्यं द्विजोत्तमाः!। धेनुकाचम्पकारण्यं सैन्धवारण्यमेव च। गया प्रयागं श्रीतीर्थं दिव्यं कनखलन्तथा। भृगुतुङ्गं हिरण्याक्षं भीमारण्यं कुशस्थली। लोहार्गलं सकेदारं मन्दरारण्यमेव च। महाप्रभं कुरुक्षेत्रं सर्वपापहरन्तथा। रूपतीर्थं सूकरञ्च चक्रतीर्थं महाफलम्। योगतीर्थं सोमतीर्थं तीर्थं शाखोटकं तथा। तीर्थं कोकामुखं पुण्यं वदरीशैलमेव च। सोमतीर्थं तुङ्गकूटं तीर्थं स्कन्दाश्रमन्तथा। स्वर्णप्रभं रामतीर्थं सप्तसामुद्रकं तथा। धर्मोद्भवं कोटितीर्थं तीर्थञ्चाघप्रणाशनम्। गङ्गाद्वारं पञ्चकूटं मध्यकेशवमेव च। चक्रप्रभं मतङ्गञ्च कुशदण्डञ्च विश्रुतम्। दंष्ट्राकुण्डं विष्णुतीर्थं सर्वकामिकमेव च। तीर्थं सुमलिनञ्चैव वदरीसुप्रभं तथा। ब्रह्मकुण्डं वह्निकुण्डं तीर्थं सत्यपदन्तथा। चतुःस्रोतश्चतुःशृङ्गं शैलं द्वादशधारकम्। मानसं स्थूलशृङ्गञ्च स्थूलदण्डं तथोर्वशी। लोकपालो मनुवरं सोमाद्रिशैलमेव च। सदाप्रभं मेरुकुण्डं तीर्थं सोमाभिषेचनम्। महाशोभं कोचवकं पञ्चधारं त्रिधारकम्। सप्तधारैकतीर्थञ्च तीर्थञ्चामरकण्टकम्। शालग्रामं चक्रतीर्थं कोटिद्रुममनुत्तमम्। विन्दुप्रभं देवह्रदं तीर्थं विष्णुप्रभन्तथा। शङ्खप्रभं दारुकुण्डं तीर्थं वज्रायुधं तथा। अग्निप्रभं सुपुन्नागं देवप्रभमनुत्तमम्। विद्याधरं सगन्धर्वं श्रीतीर्थं ब्रह्मणा कृतम्। तीर्थञ्च लोकपालाख्यं पुण्यं पिण्डारकं तथा। वस्त्रापदं दारुवनं छायारोहणमेव च। वटावटं भद्रवटं कोशाम्बी च दिवाकरा। द्वीपं सरस्वती चैव विजयं कामजन्तथा। सारवं गोप्रतारञ्च गोचरं वटमूलकम्। स्नानकुण्डं प्रयागञ्च गुह्यं विष्णुपदन्तथा। कन्याश्रमं विष्णुपदं जम्बुमार्गं तथोत्तमम्। गभस्तितीर्थञ्च तथा ययातिपतनं शुचि। कोटितीर्थं भद्रवटं महाकालवनं तथा। नर्मदातीर्थपरमं तीर्थं वर्षं तथार्बुदम्। पिङ्गतीर्थं सावशिष्टं तीर्थञ्च प्रियसङ्गमम्। तीर्थं दौवारिकं नाम तथा पिञ्जरकं शुभम्। ऋषितीर्थं ब्रह्मकुण्डं वसुतीर्थं कुमारिका। शक्रतीर्थं शापनदं रेणुकातीर्थमेव च। पैतामहञ्च विमलं रुद्रपादं तथोत्तरम्। मणिमन्तञ्च कामाख्यं कृष्णतीर्थं कुमारिणम्। यजनं याजनञ्चैव तथैव ब्रह्मवालकम्। पुष्पाश्रमं पुण्डरीकं मणिपूरं तथोत्तरम्। दीर्घसत्रं हंसपदं तीर्थञ्चानशनन्तथा। गङ्गोद्भेदं शिवोद्भेदं नर्मदोद्भेदमेव च। वज्रकोटि शङ्कुमानं तीर्थं शक्रावनामितम्। समन्तपञ्चकं तीर्थं ब्रह्मतीर्थं सुदर्शनम्। सततं पृथिवीतीर्थं पञ्चप्लवपृथूदकौ। दशाश्वमेधिकं तीर्थं सर्पिदं विषयान्तिकम्। कोटितीर्थं पञ्चनदं वाराहं यक्षिणीह्रदम्। पुण्डरीकं सोमतीर्थं मञ्जुवाटं तथोत्तमम्। वदरीवनमासीनं रत्नमूलकमेव च। लोकद्वारं पञ्चतीर्थं कपिलातीर्थमेव च। सूर्य्यतीर्थं शङ्खिनी च धराभवनमेव च। तीर्थं च यक्षराजस्य ब्रह्मावर्त्तं सुतीर्थकम्। कामेश्वरं मातृतीर्थं तीर्थं शीतवनं तथा। स्नानलोमायनञ्चैव मांसमशनकं तथा। दशाश्वमेधं केदारं ब्रह्मोडुम्बरमेव च। सप्तर्षिकुण्डञ्च तथा तीर्थं देव्याः सुजम्बुकम्। दृढासदं कोटिकूटं किन्नरं किंजपं तथा। कारण्डवञ्च विन्ध्यञ्च त्रिपिष्टपमथापरम्। पाणिखातं मिश्रकञ्च मधुवटमनोजवौ। कौशिकी देवतीर्थञ्च तीर्थञ्च ऋणमोचनम्। दिव्यञ्च तृणमूलाख्यं तीर्थं विष्णुपदन्तथा।

श्रीकुण्डं शान्तितीर्थञ्च नैमिषेयञ्च विश्रुतम्। ब्रह्मस्थानं सोमतीर्थं कन्यतीर्थं तथोत्तरम्। ब्रह्मतीर्थं मनस्तीर्थं तीर्थञ्चैलावनन्तथा। सौगन्धिकवनञ्चैव मणितीर्थं सरस्वती। ईशानतीर्थं प्रवरं पावनं पाञ्चयज्ञिकम्। त्रिशूलधारा माहेन्द्रं देवस्थानं कृतालयम्। शाकम्भरी देवतीर्थं स्वर्णाख्यं कालियं ह्रदम्। क्षीरेश्वरं विरूपाक्षं भृगुतीर्थं कुशोद्भवम्। ब्रह्मतीर्थं ब्रह्मयोनिं नीलपर्वतमेव च। कुब्जाम्बकं भद्रवटं वशिष्ठपदमेव च। धूमावर्त्तं तथा मेकं वारुणं कपिलञ्च यत्। स्वर्गद्वारं प्रजाद्वारं कालिकाश्रममेव च। रुद्रावर्त्तं सुगन्धाश्वं कपिलावनमेव च। भद्रकर्णह्रदञ्चैव शङ्कुकं ह्रदकं तथा। सप्तसारस्वतञ्चैव तीर्थं औशनसं तथा। कपालमोचनञ्चैव नरकञ्चैव काम्यकम्। तत्र सामुद्रिकञ्चैव शतिकञ्च सहस्रिकम्। रेणुकं पञ्चवटकं विमोचनमथौजसम्। विश्वेश्वरं वामनकं कलं नारायणाश्रमम्। गङ्गाह्रदं वटञ्चैव वदरीपचनन्तथा। ऐन्द्रमार्गमेकरात्रं क्षीरिकाराममेव च। सोमतीर्थं दशरथञ्च श्रुततीर्थञ्च भो द्विजा!। कन्याश्रमं सन्निहितं कोटितीर्थञ्च पुष्पदी। कोटितीर्थस्थलीञ्चैव भद्रकालीह्रदन्तथा। अरुन्धतीवनञ्चैव ब्रह्मावर्त्तन्तथोत्तमम्। अश्ववेदी कुब्जवनं यमुनाप्रभवं तथा। वीरप्रमोक्षं सिन्धूत्थं शमीकुल्या सकृत्तिका। उर्वशीक्रमणञ्चैव मायाविद्योद्भवन्तथा। महाश्रमो वेतसिकारूपं सुन्दरिकाश्रमम्। ब्रह्मतीर्थन्तु वैश्वासं गङ्गोद्भेदं सरस्वती। अरुणोदं तथा चान्द्रं शक्रतीर्थं सवालुकम्। तीर्थञ्चैवाविमुक्ताख्यं नीलकण्ठह्रदन्तथा। स्वर्गद्वारं किम्पुलिका तीर्थकोटिस्तथैव च। पिशाचमोचनञ्चैव सुभद्राह्रदमेव च। कुण्डं विमलदं तस्मात् तीर्थं चण्डेश्वरस्य च। अष्टस्थानह्रदञ्चैव हरिकेशवनं तथा। अजामुखवनञ्चैव घण्टाकर्णह्रदन्तथा। पुण्डरीकह्रदञ्चैव दार्पाकर्कोटिकन्तथा। कुण्डं घर्घरिकायाश्च श्यामाकं पञ्चपुष्पटम्। श्मशानशुम्भकुण्डञ्च विनायकह्रदन्तथा। कूपं सिद्धभवञ्चैव पुण्यं ब्रह्मसरन्तथा। रुद्रावासं तथा तीर्थं नागतीर्थं सुलोमकम्। भक्ततीर्थं महातीर्थं श्रेष्ठा चैव महानदी। दिव्यं ब्रह्मसरः पुण्यं गयाशीर्षाक्षयं वटम्। दक्षिणञ्चोत्तरञ्चैव गोमयं रूपशान्तिकम्। कपिह्रदं गृध्रकूटं सावित्रीह्रदमेव च। प्रभासनं शीतवनं योनिद्वारञ्च धेनुकम्। रम्यकं कोकिलाख्यञ्च मतङ्गह्रदमेव च। पितृकूपं रुद्रतीर्थं शक्रतीर्थं सुमालिनम्। ब्रह्मस्थानं सप्तकुण्डं मणिरत्नह्रदन्तथा। मुद्गलस्याश्रमञ्चैव मुद्गल्याह्रदमेव च। तीर्थं जनककूपाख्यं वैश्यं विनशनन्तथा। आद्यं विनाशतीर्थञ्च धारा माहेश्वरी तथा। देवपुष्करिणी रम्या पर्य्यङ्ककूपमेव च। जातिस्मरं वामनकं वटेश्वरह्रदन्तथा। कौशाख्यं भरतञ्चैव तीर्थं श्रेष्ठात्मिका तथा। विश्वेश्वरं कल्पगतं कन्यासायुज्यमेव च। वाराहकं कोटितीर्थं कुमारं सर्वतीर्थकम्। वीराश्रमं ब्रह्मसरो वीरवीरा च तापिनी। कुमारधारा श्रीधारा गौरीशिखरमेव च। कुम्भकर्णपटञ्चैव कौशिकीह्रदमेव च। धर्मतीर्थं कामतीर्थं तीर्थमुद्दालकं तथा। दण्डा विमालिनी तीर्थं तीर्थञ्चैव नरेभिका। सन्ध्यातीर्थं कारतोयं कपिला लोहितार्णवम्। सोमोद्भवं वंशगुल्मसृषभं कालतीर्थकम्। पुण्यतीर्थह्रदं तीर्थं तीर्थं वदरिकाश्रमम्। रामतीर्थं सिन्धुवनं विरजातीर्थमेव च। मार्कण्डेयवनञ्चैव कृष्णतीर्थं तथा वटम्। ध्रुवं स्वरूपं प्रवरमिन्द्रद्युम्नसरश्च यत्। सानुगर्त्तं समाहेन्द्रं श्रीतीर्थं श्रीवनन्तथा। इषुतीर्थञ्चर्षभञ्च कावेरीतीर्थमेव च। कन्यातीर्थञ्च गोतीर्थं गोमतीस्थानमेव च। संवर्त्तस्थापिनी स्थानं सप्तगोदावरीह्रदम्। वदरीह्रदमन्यच्च ब्रह्मतृष्णाविकर्त्तनम्। जातिह्रदं वेदह्रदं कुशप्रवणमेव च। सर्वदेवव्रतञ्चैव कन्याश्रमह्रदन्तथा। तथान्यत् वालिखिल्यानां सप्तर्षीणां तथा परम्। तथान्यच्च महर्षीणामखण्डितह्रदन्तथा। तीर्थेष्वेतेषु विधिवत् सम्यक् श्रद्धासमन्वितः। स्नानं करोति यो मर्त्यः सर्वपापैः प्रमुच्यते। अथवाद्य देवतास्तत्र स्थित्वा च रजनीत्रयम्। पृथक् पृथक् फलं तेषु प्रतितिष्ठंश्च भो द्विजाः!। प्राप्नोति हयमेधस्य फलं प्राप्नोत्यसंशयम्। यस्त्विदं शृणुयान्नित्यं तीर्थमाहात्म्यमुत्तमम्। पठेच्च श्रावयेद्वापि सर्वपापैः प्रमुच्यते”।

पद्मपुराणे श्राद्धे प्रशस्ततीर्थानि उक्तानि यथा

भीष्म उवाच। “कस्मिन् वासरभागे तु श्राद्धं श्राद्धी समाचरेत्। तीर्थेषु केषु वै श्राद्धं कृतं बहुफलं भवेत्। पुलस्त्य उवाच। तीर्थन्तु पुष्करं नाम पुण्यं श्रेष्ठतरं स्मृतम्। सर्वेषां द्विजमुख्यानां मनोरथस्थितं तथा। यत्र दत्तं हुतं सर्वमनन्तं मुनिरब्रवीत्।

पितॄणां वल्लभं नित्यमृषीणां परमं प्रियम् । नन्दुर्ललिता तद्वत्तीर्थं मायापुरी तथा । शुभं मित्रपदं राजंस्ततः केदारमुत्तमम् । गङ्गासागरमित्याहुः सर्वतीर्थमयं शुभम् । तीर्थं ब्रह्मसरस्तद्वत् शतद्रुः सलिलाह्रदः । तीर्थन्तु नैमिषञ्चैव सर्वतीर्थफलप्रदम् । गङ्गोद्भेदस्तु गोमत्यां यत्रोद्भूतः सनातनः । तथा यज्ञवराहस्तु देवदेवश्च शूलधृक् । यत्र तत् काञ्चनद्वारमष्टादशभुजो हरः । नेमिस्तु धर्म्मचक्रस्य शीर्णा यत्राभवत् पुरा । तदेतन्नैमिषारण्यं सर्वतीर्थनिषेवितम् । देवदेवस्य तत्रापि वराहस्य च दर्शनम् । यः प्रयाति स पूतात्मा नारायणपुरं व्रजेत् । कोकामुखं परं तीर्थं ब्रह्मणोऽव्यक्तजन्मनः । पुष्करारण्यसंस्थोऽसौ यत्र देवः पितामहः । विरिञ्चिदर्शनं श्रेष्ठं त्वपवर्गफलप्रदम् । कृतं तेन महापुण्यं सर्वपापनिसूदनम् । यत्राद्यो नरसिंहस्तु स्वयमेव जनार्द्दनः । तीर्थमिक्षुमती नाम पितॄणां वल्लभा सदा । तुष्यन्ति पितरो नित्यं गङ्गायमुनसङ्गमे । कुरुक्षेत्रं महापुण्यं यत्र मार्गोऽपि लक्ष्यते । अद्यापि पितृतीर्थं तत् सर्वकामफलप्रदम् । नीलकण्ठमिति ख्यातं पितृतीर्थं नराधिप ! । तथा भद्रसरः पुण्यं सरोमानसमेव च । मन्दाकिनी तथाच्छोदा विपाशाथ सरस्वती । पूर्वमित्रपदं तद्वद्वैद्यनाथं महाफलम् । गोदावरी तथा पुण्या तथा कालञ्जरं शुभम् । वंशोद्भेदं हरोद्भेदं गङ्गोद्भेदं महालयम् । भद्रेश्वरं विष्णुपदं नर्म्मदाद्वारमेव च । गयापिण्डप्रदानेन समान्याहुर्महर्षयः । एतानि पितृतीर्थानि सर्वपापहराणि च । स्मरणादपि लोकानां किमु श्राद्धप्रदायिनाम् । ओङ्कार पितृतीर्थन्तु कावेरी कपिलोदकम् । कुरुक्षेत्राच्छतगुणम् तस्मिन् स्नानादिकम्भवेत् । शक्रतीर्थन्तु विख्यातं तीर्थं सोमेश्वरं स्मृतम् । सर्वव्याधिहरं पुण्यं फलं कोटिशताधिकम् । श्राद्धे दाने तथा होमे स्वाध्याये जपसन्निधौ । छायारोहणं नाम देवदेवस्य शूलिनः । अवतारं रोचयानो ब्राह्मणावसथे शुभे । जातं तत् सुमहापुण्यं तथा चर्म्मण्वती नदी । नदी च वरणा तद्वत्तीर्थं हौताशनं परम् । भैरवं भृगुतुङ्गञ्च गौरीतीर्थमनुत्तमम् । तीर्थं वैनायकं नाम वस्त्रेश्वरमनुत्तमम् । तथा पापहरं नाम पुण्या वेत्रवती नदी । शूलतापी पयोष्णी च पयोष्णीसङ्गमस्तथा । महाबोधी पदेनापि नागतीर्थमवन्तिका । तथा वेण्वा नदी पुण्या महाशालस्तथैव च । महारुद्रो महालिङ्गो दशार्णा च महानदी । शतरुद्रा गता वापि तथा पितृपदं परम् । युद्धःवाराहिकं तद्वन्नदौ द्वौ शोणघर्घरौ । कालिका च नदी पुण्यं पितरा च नदी तथा । एतानि पितृतीर्थानि शस्यन्ते स्नानदानयोः । श्राद्धमेतेषु यद्दत्तं तदनन्तफलं स्मृतम् । शनीचाटनदीधारा शवच्चीरनदी तथा । द्वारका कृष्णतीर्थञ्च तथाप्युत सरस्वती । नदी मणिमती नाम तथा च गिरिकर्णिका । धुतपापं तथा तीर्थं समुद्रे दक्षिणे तथा । गोकर्णो गणकर्णश्च तथा च पुरुषोत्तमः । श्रीशैलं शाकतीर्थञ्च नारसिंहमतः परम् । महेन्द्रश्च तथा पुण्यः पुण्या चापि महानदी । एतेष्वपि सदा श्राद्धमनन्तफलमश्नुते । दर्शनादपि पुण्यानि सद्यः पापहराणि च । तुङ्गभद्रा नदी पुण्या तथा भीम नदी सरित् । भीमेश्वरं कृष्णवेण्वा कावेरी वञ्जुरा नदी । नदी गोदावरी पुण्या त्रिसन्ध्या तीर्थमुत्तमम् । तीर्थं त्रैयम्बकं नाम सर्वतीर्थनमस्कृतम् । यत्रास्ते भगवान् भीमः स्वयमेव त्रिलोचनः । श्राद्धमेतेषु तीर्थेषु दत्तं शतगुणं भवेत् । स्मरणादपि पापानि व्रजन्ति शतधा नृप ! । श्रीपर्णी च नदी पुण्या व्यासतीर्थमनुत्तमम् । तथा मत्स्यनदीधारा शिवधारा तथैव च । भवतीर्थञ्च विख्यातं पुण्यतीर्थञ्च शाश्वतम् । पुण्यं रामेश्वरं तद्वदेलापुरमनुत्तमम् । अङ्गारभक्तं विख्यातमात्मदर्शमनायुधम् । तीर्थं वृतेश्वरं तद्वत्तथा कोकामुखं परम् । गोवर्द्धनं हरिश्चन्द्रं पृथुचन्द्रं पृथूदकम् । सहस्राक्षं हिरण्याक्षं तथा च कदली नदी । नामाधिपापि च तथा तथा सौमित्रसङ्गतम् । इन्द्रनीलं महानादं तथा च प्रियमेलकम् । एतान्यपि सदा श्राद्धे प्रशस्तान्यधिकानि च । एतेषु सर्वदेवानां सान्निध्यं पठ्यते यतः । दानमेतेषु सर्वेषु भवेत् कोटिशताधिकम् । बाहुदा च नदी पुण्या तथा सिद्धवनं शुभम् । तीर्थं पाशुपतञ्चैव नदी पर्पटिका तथा । श्राद्धमेतेषु सर्वेषु दत्तं कोटिशताधिकम् । तथैव पर्वतीर्थञ्च त्रिपुरं खाण्डवं नदी । धुता लिङ्गसहस्रेण सव्येतरजलावहा । जामदग्न्यस्य सत्तीर्थं वेदायतनमुत्तमम् । प्रतीकस्याभया सिद्धा यदा गोदावरी नदी । तीर्थं तद्ध्व्यकव्यानामप्सरोगणसंयुतम् । श्राद्धादिदानकार्य्यञ्च तद्वत् कोटिशताधिकम् । तथा सहस्रलिङ्गञ्च राघवेश्वरमुत्तमम् । सेन्द्रफला नदी पुण्या यत्र दुःखाद्धृतः पुरम् । निमेश्च

प्रहृतिमित्वं तपसा स्वर्गमाप्नुयात्। तत्र दत्तं नरैः श्राद्धमनन्तफलदं भवेत्। पुष्करं नाम वै तीर्थं शालग्रामं तथैव च। शौनपातश्च विख्यातो यत्र वैश्वानरालयः। तीर्थं सारस्वतं नाम स्वामितीर्थं तथैव च। मनन्दुरा नदी पुण्या कौशिकी चन्द्रिका तथा। विदर्भा चाप्यवेणाथ पयोष्णी प्राङ्मुखी परा। कावेरी चोत्तरागा च तथा जालन्धरो गिरिः। एतेषु श्राद्धतीर्थेषु श्राद्धमानन्त्यमश्नुते। लौहदण्डं तथा दण्डं चित्रकूटस्तथैव च। दिव्यं सर्वत्र गङ्गायास्तथा नदीतटं शुभम्। कुब्जाम्रञ्च तथा तीर्थमुर्वशीपुलिनं तथा। संसारमोचनं तीर्थं तथैव ऋणमोचनम्। एतेषु पितृतीर्थेषु श्राद्धमानन्त्यमश्नुते। अट्टहासं तथा तीर्थं गौतमेश्वरमेव च। तथा वशिष्ठतीर्थञ्च भारतञ्च ततः परम्। ब्रह्मावर्त्तं कुशावर्त्तं हंसतीर्थं तथैव च। पिण्डारकञ्च विख्यातं शङ्खोद्धारं तथैव च। खाण्डेश्वरं बिल्वकञ्च नीलपर्वतमेव च। तथा च बदरीतीर्थं रामतीर्थन्तथैव च। जयन्तं विजयञ्चैव शुक्रतीर्थं तथैव च। एतेषु श्राद्धदातारः प्रयान्ति परमं पदम्। तीर्थं मातृगृहं नाम करवीरपुरं तथा। सप्तगोदावरीतीर्थं सर्वतीर्थेश्वरेश्वरम्। तत्र श्राद्धं प्रदातव्यमनन्तफलमिच्छुभिः। कीकटेषु गया पुण्या पुण्यं राजगृहं वनम्। च्यवनस्याश्रमं पुण्यं नदी पुण्या पुनःपुना। यत्र गाथा विचरति ब्रह्मणा परिकीर्त्तिता। एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्। यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्। एषा गाथा विचरति तीर्थेष्वायतनेषु च। सर्वे मनुष्या राजेन्द्र! कीर्त्तयन्तः समागताः। किमस्माकं कुले कश्चिद्गयां यास्यति मत्सुतः। प्रीणयिष्यति ताञ्छ्रुत्वा सप्त पूर्वांस्तथाऽवरान्। मातामहानामप्येवं श्रुतिरेषा चिरन्तनी। गङ्गायाञ्चास्थिनिचयं गत्वा क्षेप्स्यति मत्सुतः। तिलैः सप्ताष्टभिर्वापि दास्यते च जलाञ्जलिम्। अरण्यत्रितये चापि पिण्डदानं करिष्यति। प्रथमं पुष्करारण्यं नैमिषन्तदनन्तरम्। धर्मारण्यं ततः प्राप्य श्राद्धं भक्त्या प्रदास्यति। गयायां धर्म्मपृष्ठे वा सरसि ब्रह्मणस्तथा। गयाशीर्षे वटे चैव पितॄणां दत्तमक्षयम्। व्रतं कुर्यान्नरो यस्तु अध्वानं परिसर्पति। नरकस्थान् पितॄंस्तद्वत् स्वर्गं नयति सत्वरः। कुले तस्य न राजेन्द्र! प्रेतो भवति कश्चन। प्रेतत्वमोक्षभावञ्च पिण्डदानाच्च गच्छति। गयायां पिण्डदानस्य नान्यत्स्नानं विशिष्यते। एकेन पिण्डदानेन तृप्तास्ते मोक्षगामिनः। धान्यप्रदानं प्रवरं वदन्ति वस्त्रप्रदानञ्च तथा मुनीन्द्राः। तोयञ्च तीर्थेषु नरैः प्रदत्तं तद्धर्महेतुं प्रवरं प्रदिष्टम्। सर्वौघहा सुरुचिरा महाबला महानदी। ये तु पश्यन्ति तां गत्वा मानसे दक्षिणोत्तरे। प्रणम्य द्विजमुख्येभ्यः प्राप्तं तैर्जन्मनः फलम्। यद्यदिच्छति वै मर्त्यस्तत्तत् प्राप्नोत्यसंशयम्। एष तूद्देशतः प्रोक्तस्तीर्थानां संग्रहो मया। वागीशोऽपि न शक्नोति विस्तरात् किमु मानुषाः" पुराणसर्व्वस्वे।

श्राद्धे तीर्थभेदस्य प्राशस्त्यं विष्णुसंहितायामुक्तं यथा

"अथ पुष्करेषु श्राद्धम् जप्यहोमतपांसि च। पुष्करे स्नानमात्रतः सर्वपापेभ्यः पूतो भवति। एवमेव गयाशीर्षे अक्षयवटे अमरकण्टकपर्वते वराहपर्वते यत्र क्वचन नर्मदातीरे गङ्गायां विशेषतः, कुशावर्त्ते बिल्वके नीलपर्वते कनखले कुब्जाम्रे भृगुतुङ्गे केदारे महालये नडन्तिकायां सुगन्धायां शाकम्भर्यां फल्गुतीर्थे महागङ्गायां त्रिशालिकाश्रमे कुमारधारायां प्रभासे यत्र क्वचन सरस्वत्यां विशेषतः। गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे। सततं नैमिषारण्ये वाराणस्यां विशेषतः। अगस्त्याश्रमे कौशिक्यां सरयूतीरे शोणस्य ज्योतिषायाश्च सङ्गमे। श्रीपर्वते कालोदके उत्तरमानसे वड़वायां मतङ्गवाप्यां सप्तर्षे विष्णुपदे स्वर्गमार्गपदे गोदावर्य्यां गोमत्यां वेत्रावत्यां विपाशायां वितस्तायां शतद्रुतीरे चन्द्रभागायाम् इरावत्यां सिन्धोस्तीरे दक्षिणे पञ्चनदे औशनसे। एवमादिष्वथान्येषु तीर्थेषु सरिद्वरासु सर्वेष्वपि स्वभावेषु पुलिनेषु प्रस्रवणेषु पर्वतेषु निकुञ्जेषु वनेषूपवनेषु गोमयोपलिप्तेषु मनोज्ञेषु"

तीर्थागमने दोषो यथा "अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च। अदत्त्वा काञ्चनं गाञ्च दरिद्रो नाम जायते" प्रा० त०। तीर्थगमने फलं यथा

"अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणैः। न तत् फलमाप्नोति तीर्थाभिगमनेन यत्। तीर्थान्यनुस्मरन् धीरः श्रद्दधानः समाहितः। कृतपापो विशुध्येत किं पुनः शुद्धकर्मकृत्। तिर्य्यग्योनिं न वै गच्छेत् कुदेशे न च जायते। न दुःखी स्यात् स्वर्गभाक् च मोक्षोपायञ्च विन्दति" ब्रह्मवै०पु०।

तीर्थसम्यक्फलभागिनो यथा "यस्य हस्तौ च पादौ

च मनसैव सुसंयतम् । विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते । प्रतिग्रहादुपावृत्तः सन्तुष्टो येन केनचित् । अहङ्कारविमुक्तश्च स तीर्थफलमश्नुते । अदाम्भिको निरारम्भो लघ्वाहारो जितेन्द्रियः । विमुक्तः सर्व्वसङ्गैर्यः स तीर्थफलमश्नुते । अकोपनोऽमलमतिः सत्यवादी दृढव्रतः । आत्मोपमश्च भूतेषु स तीर्थफलमश्नुते । अश्रद्दधानः पापात्मा नास्तिकोऽच्छिन्नसंशयः । हेतुनिष्ठश्च पञ्चैते न तीर्थफलभागिनः । इति काशीखण्डम् । प्रा०त० । तीर्थप्रतिग्रहे दोषो यथा ।

"तीर्थे न प्रतिगृह्णीयात् संक्रान्त्यादिषु च तथा । स्वकार्य्ये पितृकार्य्येऽपि देवताभ्यर्च्चनेऽपि वा । निष्फलं तस्य तत्तीर्थं यावत्तद्धनमश्नुते" । "तत्र नारायणक्षेत्रे कुरुक्षेत्रे हरेः पदे । वाराणस्यां वदर्य्याञ्च गङ्गासागरसङ्गमे । पुष्करे भास्करक्षेत्रे प्रभासे रासमण्डले । हरिद्वारे च केदारे सोमे वदरपाचने । सरस्वतीनदीतीरे पुण्ये वृन्दावने वने । गोदावर्य्याञ्च कौशिक्यां त्रिवेण्याञ्च हिमालये । एतेष्वन्येषु यो दानं प्रतिगृह्णाति कामतः । स च तीर्थप्रतिग्राही कुम्भीपाकं प्रयाति च" इति ब्रह्मवै०प्र०ख० । शङ्खः "तीर्थं प्राप्यानुषङ्गेन स्नानं तीर्थे समाचरन् । स्नानजं फलमाप्नोति तीर्थयात्राफलं न तु" । तथा यस्य पादौ च हस्तौ च मनश्चैव सुसंयुतम् । विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते । नृणां पापकृतां तीर्थे भवेत् पापस्य संक्षयः । यथोक्तफलदं तीर्थं भवेच्छुद्धात्मनां नृणाम्" । हस्तसंयमोऽत्र निन्दितप्रतिग्रहादिनिवृत्तिः । पादसंयमस्तु अगम्यदेशादिगमननिवृत्तिः । मनःसंयमः कामक्रोधादिनिवृत्तिः, विद्या तत्तत्तीर्थफलबोधकसच्छास्त्रवेदाद्यधिगमरूपा । तपः आमिषादिनिवृत्तिः । कीर्त्तिः धर्मार्थतीर्थगमने धार्म्मिकत्वादिना प्रसिद्धिः । फलं सम्यगिति शेषः । एतच्च हस्तसंयमनादितीर्थयात्राङ्गं महाभारते तीर्थयात्रासप्रकरणाभिधानात् तीर्थस्नानादिकर्माङ्गञ्च, शङ्खेन यात्राप्रकरणमन्तरेणैव सतीर्थफलमश्नुते इति सामान्याभिधानात् । इति कल्पतरुः । अतएव पैठीनसिः "षोड़शांशं स लभते यः परार्थेन गच्छति । अर्द्धं तीर्थफलं तस्य यः प्रसङ्गेन गच्छति" । परार्थेन वेतनादिना, प्रसङ्गेन उद्देश्यान्तरप्रसङ्गेन । "तथा प्रतिकृतिं कृत्वा तीर्थवारिणि मज्जयेत् । मज्जयेत्तु यमुद्दिश्य अष्टभागं लभेत सः" ।

तीर्थयात्राविधानं यथा "यो यः कश्चित्तीर्थयात्रान्तु गच्छेत् । सुसंयतः स च पूर्व्वं गृहे स्वे । कृतोपवासः शुचिरप्रमत्तः संपूजयेद्भक्तिनम्रो गणेशम् । देवान् पितॄन् ब्राह्मणांश्चैव साधून् धीमान् प्रीणयन् वित्तशक्त्या प्रयत्नात् । प्रत्यागतश्चापि पुनस्तथैव देवान् पितॄन् ब्राह्मणान् पूजयेच्च । एवं कुर्व्वतस्तस्य तीर्थे यदुक्तं फलं तत् स्यान्नात्र सन्देह एव" इति ब्रह्मपुराणम् । एतदधिकारे प्रा०त० ।

"सुसंयतः पूर्व्वदिने कृतैकभक्तादिनियमः । तदुत्तरदिने कृतोपवासस्तदुत्तरदिने गणेशं ग्रहानिष्टदेवताश्च संपूज्य वृद्धिश्राद्धं कृत्वा ब्राह्मणान् भोजयेत् । ततः शुभलग्ने यात्रां कुर्य्यात् तीर्थयात्रान्तु गच्छेदित्युपक्रमादुपवासदिने मुण्डनमपि । "प्रयागे तीर्थयात्रायां पितृमातृवियोगतः । कचानां वपनं कार्य्यं न वृथा विकचो भवेत्" इति विष्णुपुराणवचनात् । प्रवेशेऽपि तीर्थयात्रायामिति वक्तव्यम् । "गच्छन् देशान्तरं यस्तु श्राद्धं कुर्य्यात्तु सर्पिषा । यात्रार्थमिति तत् प्रोक्तं प्रवेशे च न संशयः" इति भविष्यपुराणादिति गङ्गावाक्यावली । वस्तुतस्तु तीर्थप्रत्यागमनोत्तरस्वगृहप्रवेशे इत्येव वक्तव्यम् । यात्राप्रत्यागमनोत्तरस्वगृहप्रवेशयोर्भेदात् प्रत्यागमनोत्तरलाभस्तु प्रत्यागतश्चापीति प्रागुक्तत्वात् व्यक्तमाह हलायुधधृतं कूर्मपुराणवचनम् "तीर्थयात्रासमारम्भे तीर्थात् प्रत्यागमेऽपि च । वृद्धिश्राद्धं प्रकुर्व्वीत बहुसर्पिःसमन्वितम्" । ततश्च प्रवेशे चेति चकारेण श्राद्धमात्रं समुच्चितम् । नतु तस्य यात्रार्थत्वमपीति । एवं देवान् पितॄनित्यभिधानात् तत्पूजनमेव पुनः कार्य्यं नतूपवासादिकमपि अन्यथा देवानित्यादिकं व्यर्थं स्यात् । मत्स्यपुराणम् "तिलोदकाञ्जलिर्देयो जलस्थैस्तीर्थवासिभिः । सदा न हस्तेनैकेन गृहे श्राद्धं समिष्यते" । अत्र जलस्थैरित्यनेन स्थलस्थानामपि जलस्थत्वं नियम्यते । तथा हि "अन्तरुदके आचान्तो अन्तरेव शुद्धो भवति । तस्मादन्तरेकं वहिरेकञ्च पादं कृत्वा आचामेत् सर्व्वत्र शुद्धो भवति" इति पैठीनस्युक्तेन जलैकचरणकृताचमनेन उभयत्र कर्म्मार्हत्वात् तर्पणकाले तीर्थे जलैकचरणत्वं प्रतीयते । अन्यत्र त्वनियमः । तद्रूपाणां जले च तर्पणमविरुद्धमिति । गृह इति स्थलोपलक्षणम् । देवीपुराणे । "अकालेऽप्यथ वा काले तीर्थश्राद्धं तथा नरैः । प्राप्तैरेव सदा कार्य्यं कर्त्तव्यं

पितृतर्पणम्। पिण्डदानं ततः शस्तं पितृणाञ्चातिदुर्लभम्। विलम्बो नैव कर्त्तव्यो न च विघ्नं समाचरेत्। श्राद्धं तत्र तु कर्त्तव्यमर्घ्यावाहनवर्जितम्। श्वध्वाङ्क्षगृध्रकाकानां नैव दृष्टिहतञ्च यत्"। ध्वाङ्क्षोद्रण्डकाकः। अत्राकाल इति न रात्र्यादाविति पर्य्युदासप्रतिप्रसवः। तथात्वे तद्बाधापत्तेः। किन्तु पर्य्युदस्तेतराप्रशस्तकालपरम्। "तत् सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः" इत्यनुसारात्। काल इति प्रशस्तापराह्णादिकालपरम्। अत्र शुचेः प्राप्त्यनन्तरविहितप्रथमदिन एव श्राद्धं तेन पूर्वदिने राक्षसीवेलादावागमनेऽपि परदिने श्राद्धमविरुद्धम्। तथा च हलायुधधृतम् "गत्वैव तीर्थं कर्त्तव्यं श्राद्धं तत्प्राप्तिहेतुकम्। पूर्वाह्णेऽथ वा प्रातर्देशे स्यात् पूर्वदक्षिणे"। पूर्वाह्णे सङ्गवे पूर्वदक्षिणे अग्निकोणे। पिण्डदानमिति श्राद्धासम्भवे केवलपिण्डदानमिति न पौनरुक्त्यम्। तीर्थे पिण्डप्रतिपत्तिमाह मत्स्यपुराणम् "पिण्डांस्तु गोऽजविप्रेभ्योदद्यादग्नौ जलेऽपि वा। तीर्थश्राद्धे सदा पिण्डान् क्षिपेत्तीर्थे विचक्षणः"।

वायुपु० "उद्यतश्चेद्गयां गन्तुं श्राद्धं कृत्वा विधानतः। विधाय कर्पटीवेशं कृत्वा ग्रामं प्रदक्षिणम्। ततो ग्रामान्तरं गत्वा श्राद्धशेषस्य भोजनम्" इत्युक्तं गयाभिन्नुपलक्षणादन्यत्रापि तथा। अन्यत् मत्कृतगयाश्राद्धादिपद्धतौ दृश्यम्।

कूर्मपुराणम् "ऐश्वर्यलोभमाहात्म्यात् गच्छेद्यानेन यो नरः। निष्फलं तस्य तत्तीर्थं तस्माद्यानं विवर्जयेत्" इति मत्स्यपुराणम् "संवत्सरं द्विमासोनं पुनस्तीर्थं व्रजेद्यदि। मुण्डनञ्चोपवासञ्च तदा यत्नेन कारयेत्" इति गङ्गावाक्याव०। तीर्थप्राप्त्यनन्तरविधानं यथा।

"न परीक्ष्यो द्विजस्तीर्थेष्वन्नार्थी भोज्य एव हि। सक्तुभिः पिण्डदानञ्च चरुणा पायसेन च। कर्त्तव्यमृषिभिर्दृष्टं पिण्याकेन गुड़ेन च। श्राद्धं तत्र तु कर्त्तव्यमर्घ्यावाहनवर्जितम्। अकालेऽप्यथवा काले तीर्थश्राद्धन्तु तर्पणम्। अविलम्बेन कर्त्तव्यं नैव विघ्नं समाचरेत्। यदह्नि तीर्थप्राप्तिः स्यात्ततोऽह्नः पूर्ववासरे। उपवासश्च कर्त्तव्यः प्राप्तेऽह्नि श्राद्धदो भवेत्। तीर्थोपवासः कर्त्तव्यः शिरसो मुण्डनं तथा। शिरोगतानि पापानि यान्ति मुण्डनतो यतः। तीर्थं प्राप्य प्रसङ्गेन स्नानं तीर्थे समाचरेत्। स्नानजं फलमाप्नोति तीर्थयात्राश्रितं न तु" इति काशीखण्डम्। "मुण्डनञ्चोपवासश्च सर्वतीर्थेष्वयं विधिः। वर्जयित्वा गयां गङ्गां विशालां विरजान्तथा" इति स्कान्दम् "स्नापयेत् स्निग्धमित्रादीन् ज्ञातीं स्तीर्थे नरोत्तमः। अन्यथापहरन्त्येते बलात्तीर्थभवं फलम्" इति स्कान्दम् "मातरं पितरं जायां भ्रातरं सुहृदं गुरुम्। यमुद्दिश्य निमज्जेत अष्टभागं लभेत सः" इति प्रा०त०मार्क०पु०।

कलौ तीर्थानां पृथिव्यां स्थितिकालो यथा "सरस्वती पुण्यक्षेत्रमाजगाम च भारतम्। गङ्गाशापेन कलया स्वयं तस्थौ हरेः पदे। पश्चाद्भगीरथानीता-सरिच्छ्रेष्ठा शुभा। समाजगाम कलया वाणीशापेन नारद!। पद्माजगाम कलया सा च पद्मावती नदी। भारतं भारतीशापात् स्वयं तस्थौ हरेः पदे। कलेः पञ्चसहस्रञ्च वर्षान् स्थित्वा च भारते। जग्मुस्ताश्च सरिद्रूपं विहाय श्रीहरेः पदम्। यानि सर्वाणि तीर्थानि काशीं वृन्दावनं विना। यास्यन्ति ताभिः सार्द्धञ्च वैकुण्ठमाज्ञया हरेः"।

"यानादिना गमनदोषो यथा "पुण्यार्द्धं हरते याने तदर्द्धं तत्र पादुके। तदर्द्धं तैलमांसाभ्यां सर्वं हरति मैथुने" इति कर्मलोचनम्।

तत्र उपाये षष्ठे च "कृततीर्थः पयसामिवाशयः" किरा० शास्त्रे तीर्थकरः। पात्रे। "ब्रह्मचारी धनदायी मेधावी श्रोत्रियः प्रियः। विद्यया विद्यं यः प्राह तानि तीर्थानि षण्मम" विद्यावाक्यम्। १८चात्वालोत्करयोरन्तराले देशे "दक्षिणेनाहृत्य तीर्थेन पूर्वेण वेदिमपरेण वा" कात्या०श्रौ०५।५।११। "तीर्थेन चात्वालोत्करावन्तरेण प्रवेश्य वेदिचात्वालयोरन्तरालेन पूर्वेणोत्तरवेदिं दक्षिणेनाग्नेः पुरस्तादाहृत्य अथवा तीर्थेन प्रवेशनानन्तरमुत्तरां वेदिमपरेण चानीय वेद्योरन्तरालेन दक्षिणस्याग्नेः पुरस्तादानीय जुहोति" "तेनान्तरेण प्रतिपद्यन्ते चात्वालं चैतद्वै देवानां तीर्थम्" षड्विं०ब्रा०। कराङ्गुलिमूलेषु ब्राह्मादितीर्थता यथाह मनुः "ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत्। कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन। अङ्गुष्ठमूलस्य तले ब्राह्मं तीर्थं प्रचक्षते। कायमङ्गुलिमूलेऽग्रे दैवं पित्र्यं तयोरधः" शास्त्रानुज्ञाविषये। "अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः" छा०उ०तीर्थं शास्त्रानुज्ञाविषयः" भाष्यम्। १९मन्त्र्याद्यष्टादशसु। "कच्चिदष्टादशान्येषु स्वपक्षे दश पञ्च च। त्रिभिस्त्रिभिर-

विज्ञातैर्वेत्ति तीर्थानि चारकैः” भा० स० ५ अ०। “तीर्थानि मन्त्रिप्रभृतीन्यष्टादश यान्यवगाह्य राजा कृतकृत्यो भवति तानि चोक्तानि नीतिशास्त्रे “मन्त्री१ पुरोहितश्चैव२ युवराजश्च३ भूपतिः४ पञ्चमो द्वारपालश्च५ षष्ठोऽन्तर्वेशिकस्तथा६। कारागाराधिकारी७ च द्रव्यसञ्चयकृत्तथा८। कृत्याकृत्येषु चार्थानां नवमो विनियोजकः९। प्रदेष्टा१० नगराध्यक्षः११ कार्य्यनिर्माणकृत्तथा१२। धर्माध्यक्षः१३ सभाध्यक्षो१४ दण्डपालस्त्रिपञ्चमः१५। षोड़शो दुर्गपालश्च१६ तथा राष्ट्रान्तपालकः१७। अटवीपालकान्तानि१८ तीर्थान्यष्टादशैव तु। चारान् विचारयेत्तीर्थेष्वात्मनश्च परस्य च। पाषण्डादीनविज्ञातानन्योन्यमितरेष्वपि। मन्त्रिणं युवराजञ्च हित्वा स्वेषु पुरोहितमिति” एषां तीर्थशब्दवाच्यत्वे हलायुधः “योनौ जलावतारे च मन्त्र्याद्यष्टादशस्वपि। पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद्दर्शनेष्वपि”। इति परेषामष्टादशसु स्वस्य मन्त्रिपुरोहितयुवराजवर्जं पञ्चदशसु च तीर्थेषु चारानन्यैः परस्परं चाविज्ञातांस्त्रींस्त्रीन् प्रयुज्य तत्रत्यां वार्त्तां सर्वचारसंवादे तथ्यां जानीयात्” नी० क०।

२ जलाशयादरत्निमात्रदेशे आदित्यपुराणे “अरत्निमात्रं जलं त्यक्त्वा कुर्य्याच्छौचमनुद्धृते। पश्चाच्च शोधयेत्तीर्थमन्यथा न शुचिर्भवेत्”। तस्मिन् देशे शौचं न कर्त्तव्यं यस्मादरत्निमात्रव्यवहितजलात् तत् स्थलमेव तीर्थं जलसमीपत्वात्” आ० त०।

“तीर्थाश्रमवनारण्यगिरिपर्वतसागराः। सरस्वती भारती च पुरीति दश कीर्तिताः” महानि० तन्त्रोक्ते २सन्न्यासिनामुपाधि भेदे। तल्लक्षणं तत्रैव “त्रिवेणीसङ्गमे तीर्थे तत्त्वमस्यादिलक्षणे। स्नायात्तत्त्वार्थभावेन तीर्थनामा स उच्यते”। अन्यानि च भौमतीर्थानि भारततीर्थयात्रापर्वादौ पुराणान्तरेषु प्रसिद्धानि। “अन्यानि यानि तीर्थानि काशीप्राप्तिकराणि च। काशीं प्राप्यैव मोक्षन्ते नान्यथा कल्पकोटिभिः” नीलकण्ठधृतवाक्यम्।

**तीर्थंकर** पु० तीर्थं शास्त्रं करोति कृ–ट। १जिने हेमच०। २शास्त्रकरे त्रि०। ३विष्णौ पु०। “मनोजवस्तीर्थकरः” विष्णु स०। “चतुर्दशविद्यानां बाह्यसमयानां च प्रणेता प्रवक्ता चेति तीर्थकरः हयग्रीवरूपेण मधुकैटभौ हत्वा विरिञ्चये सर्गादौ सर्वाः श्रुतीरन्याश्च विद्या उपादिशत् बाह्यविद्याः सुरवैरिणां वञ्चनाय चोपादिशदिति पौराणिकाः कथयन्ति” भाष्यम्।

**तीर्थकाक** पु० तीर्थे काक इव लोलुपत्वात्। तीर्थे काकसदृशव्यवहारिणि लोलुपे। तीर्थध्वाङ्क्षादयोऽप्यत्र।

**तीर्थकृत्** पु० तीर्थं करोति कृ–क्विप् ६त०। १जिनदेवे हेमच०। २शास्त्रकरे त्रि०। [हेमच०।

**तीर्थङ्कर** पु० तीर्थं शास्त्रं करोति कृ–ख मुम् च। जिनदेवे

**तीर्थदेव** पु० तीर्थमिव श्रेष्ठः देवः तीर्थे दीव्यति वा दिव–अच् वा। शिवे शिवसहस्रनाम।

**तीर्थमहाह्रद** पु० तीर्थरूपो महाह्रदः। स्वनामख्याते तीर्थभेदे “नन्दा चापरनन्दा च तथा तीर्थमहाह्रदः” भा० अनु० १६५ अ०। नानातीर्थोक्तौ।

**तीर्थयात्रा** स्त्री तीर्थमुद्दिश्य यात्रा। १तीर्थोद्देशेन यात्रायाम्। तद्विधिः मत्कृतमयाश्राद्धादिपद्धतौ दृश्यः। भारतान्तर्गते २वनपर्वोऽवान्तरपर्वभेदे। “तीर्थयात्रा ततः पर्व कुरुराजस्य धीमतः” भा०व० १अ०। तच्च वनपर्वणि ८०अध्यायावधि १५६अध्यायान्तम्। [तीर्थराजिशब्दे उदा०

**तीर्थराज** पु० तीर्थानां राजा षच्समा०। प्रयागे तीर्थे।

**तीर्थराजि(जी)** स्त्री तीर्थानां राजिरत्र। अविमुक्ते काश्यां त्रिका० वा ङीप्। नितान्तमत्राष्टषष्टितीर्थानामानयनात्तथात्वम्। यथोक्तं काशी० ६८ अ०। “सर्वरत्नमया रम्या साष्टषष्टिरभूदिह। भूर्भुवःस्वस्तले यानि शुभान्यायतनानि हि। मुक्तिदान्यपि तानीह मयाऽऽनीतानि सर्वतः। यतो यच्च समानीतं यत्र यच्च कृतास्पदम्। कथयिष्याम्यहं नाथ! श्रुणु तदवधीयताम्। स्थाणुर्नाम महालिङ्गं देवदेवस्य मोक्षदम्। कुरुक्षेत्रादिहोद्धृतं कलांशेनोऽस्ति तत्र वै। तदग्रे सन्निहित्याख्या महापुष्करिणी शुभा। लोलार्कपश्चिमे भागे कुरुक्षेत्रस्थली तु सा। तत्र स्नातं कृतं जप्तं तप्तं दत्तं शुभार्थिभिः। कुरुक्षेत्राद्भवेत् सत्यं कोटिकोटिगुणाधिकम्। नैमिषाद्देव देवोऽत्र ब्रह्मावर्त्तेन संयुतः। तत्रांशमात्रं संस्थाप्य काश्यामाविरभूद्विभो!। ढुण्ढिराजोत्तरे भागे सिद्धिसाधकस्य वै। लिङ्गं वै देवदेवाख्यं तदग्रे कूप उत्तमः। ब्रह्मावर्त्त इति ख्यातः पुनरावृत्तिकृन्तनाम्। तत्कूपाद्भिः कृतस्नानो देवदेवं समर्च्य च। तत्पुण्याच्चैमिषारण्यात् कोटिकोटिगुणं स्मृतम्। गोकर्णायतनादत्र स्वयमाविरभून्महत्। लिङ्गं महाबलं नाम शाम्बादित्यसमीपतः। दर्शनात् स्पर्शनाद्यस्य क्षणादेनो महाबलम्। वाताहतस्तूलराशिरिव विद्राति दूरतः। कपालमोचनपुरो दृष्ट्वा लिङ्गं महाबलम्। महाबल-

मवाप्नोति निर्वाणनगरं व्रजेत्। ऋणमोचनतः प्राच्यां प्रभासात् क्षेत्रसम्भवात्। शशिभूषणसंज्ञं तु लिङ्गमत्र प्रतिष्ठितम्। तल्लिङ्गं सेवनान्मर्त्त्यः शशिभूषणतां व्रजेत्। प्रभासक्षेत्रयात्रायाः पुण्यं प्राप्नोति कोटिकृत्। उज्जयिन्या महाकालः स्वयमत्रागतो विभुः। यन्नामस्मरणादेव न भयं कलिकालतः। प्रणवाख्यान्महालिङ्गात् प्राच्यां कलुषनाशनम्। महाकालाभिधं लिङ्गं दर्शनान्मोक्षदं परम्। योगक्षेमेश्वरलिङ्गं पुष्करात्तीर्थसम्भवात्। आविरासीदिह महत् पुष्करेण सदैव तु। मत्स्योदर्य्युत्तरे भागे दृष्ट्वाऽयोगक्षेममुत्तमम्। स्नात्वाऽयोगक्षेमकुण्डे तु भवात्तारयते पितॄन्। महानादेश्वरं लिङ्गमट्टहासादिहागतम्। त्रिलोचनादुदीच्यान्तु तद्दृष्टिर्मुक्तये सताम्। महोत्कटेश्वरं लिङ्गं मरुत्कोटादिहागतम्। कामेश्वरोत्तरे भागे दृष्टं विमलसिद्धिदम्। विश्वस्थानादिहायातं लिङ्गं वै विमलेश्वरम्। स्वर्लीनात् पश्चिमे भागे दृष्टं विमलसिद्धिदम्। महाव्रतं महालिङ्गं महेन्द्रादिह संस्थितम्। स्कन्देश्वरसमीपे तु महाव्रतफलप्रदम्। वृन्दारकर्षिवृन्दानां स्तुवतां प्रथमे युगे। उत्पन्नं यन्महालिङ्गं भूमिं भित्त्वा सुदुर्भिदाम्। महादेवेति तैरुक्तं यन्मनोरथपूरणात्। वाराणस्यां महादेवस्तदारभ्याभवच्च यत्। कृत्तिचेलं कृतं येन महालिङ्गेन काशिका। अविमुक्ते महादेवं यो दृष्ट्वा त्यत्र मानवः। शम्भुलोके गमस्तस्य यत्र तत्र मृतस्य हि। अविमुक्तं प्रयत्नेन तत् संसेव्यं मुमुक्षुभिः। कल्पान्तरेऽपि न त्यक्तं कदाप्यानन्दकाननम्। येन लिङ्गस्वरूपेण महादेवेन सर्वथा। तत्प्रसादोऽयमतुलः सर्वरत्नमयः शुभः। हिरण्यगर्भतीर्थाच्च प्रतीच्यां क्षेत्ररक्षिका। वाराणस्यामधिष्ठात्री देवता साभिलाषदा। महादेवेति संज्ञा वै सर्वलिङ्गस्वरूपिणी। वाराणस्यां महादेवो दृष्टो यैर्लिङ्गरूपधृक्। तेन त्रैलोक्यलिङ्गानि दृष्टानीह न संशयः। वाराणस्यां महादेवं समभ्यर्च्य भक्तनरः। आहूतसंप्लवं यावच्छिवलोके वसेन्मुदा। पवित्रपर्वणि सदा श्रावणे मासि यत्नतः। लिङ्गे पवित्रमारोप्य महादेवे न गर्भभाक्। पितामहेश्वरं लिङ्गं गयातीर्थादिहागतम्। फल्गुप्रभृतिभिस्तीर्थैः सार्द्धं कोट्यष्टसम्मितैः। धर्म्मेण यत्र वै तप्तं युगानामयुतं शतम्। साक्षीकृत्य महालिङ्गं श्रीमद्धर्म्मेश्वराभिधम्। पितामहेश्वरं लिङ्गं तत्राभ्यर्च्य नरः सदा। त्रिःसप्त-

कुलसंयुक्तो मुच्यते नात्र संशयः। प्रयागतीर्थराजस्य शूलटङ्को महेश्वरः। तीर्थराजेन सहितः स्थित आगत्य वै स्वयम्। निर्वाणमण्डपाद्रम्यादवाच्यामतिनिर्मलः। प्रासादो मेरुणा यस्य स्पर्द्धते काञ्चनोज्ज्वलः। देवेनैव वरो दत्तो तत्र पूर्वयुगान्तरे। पूज्यो महेश्वरः काश्यां प्रथमं कलुषापहः। यः प्रयाग इह स्नातो नमस्यति महेश्वरम्। समभ्यर्च्य विधानेन महासम्भारविस्तरैः। प्रयागस्नानजात् पुण्यं शूलटङ्कविलोकनात्। स प्राप्नुयान्न सन्देहः पुण्यं कोटिगुणोत्तरम्। शङ्कुकर्णान्महाक्षेत्रात् महातेज इतीरितम्। लिङ्गमाविरभूदत्र महातेजोभिष्टसिद्धिदम्। महातेजोनिधेस्तस्य प्रासादोऽतीव निर्मलः। ज्वालाजटिलिताकाशो माणिक्यैरेव निर्मितः। तल्लिङ्गदर्शनात् स्पर्शात् स्तवनाच्च समर्च्चनात्। प्राप्यते तत् परं धाम यत्र गत्वा न शोचते। विनायकेश्वरात् पूर्व्वे महातेजःसमर्च्चनात्। तेजोमयेन यानेन याति माहेश्वरं पदम्। रुद्रकोटिसमाख्यातात्तीर्थात् परमपावनात्। महायोगेश्वरं लिङ्गमायिसक्के स्वयं परम्। पार्वतीश्वरलिङ्गस्य समीपे सर्वसिद्धिकृत्। तल्लिङ्गदर्शनात् पुंसां कोटिलिङ्गफलं लभेत्। तत्प्रासादस्य परितो रुद्राणां कोटिसम्मिता। प्रासादरम्यसंस्थाना निर्मिता रुद्रमूर्त्तिभिः। काश्यां रुद्रस्थली सा तु पठ्यते वेदवादिभिः। रुद्रस्थल्यां मृता ये वै कृमिकीटपतङ्गकाः। पशुपक्षिमृगा मर्त्त्या म्लेच्छा वाऽप्यथ दीक्षिताः। तेषां तु रुद्रीभूतानां पुनरावृत्तिरत्र न। जन्मान्तरसहस्रेषु यत् पापं समुपार्जितम्। रुद्रस्थलीं प्रविष्टस्य तत् सर्वं व्रजति क्षयम्। अकामो वा सकामो वा तिर्य्यग्योनिगतोऽपि वा। रुद्रस्थल्यां त्यजन् प्राणान् परं निर्वाणमाप्नुयात्। स्वयमेकाम्बरात् क्षेत्रात् कृत्तिवासा इहागतः। कृत्तिवाससि लिङ्गेऽत्र स्वयमेव व्यवस्थितः। अस्मिन् लिङ्गे स्वभक्तानां साम्बः सर्षिगणो विभुः। स्वयञ्चोपदिशेद्ब्रह्म श्रुतौ श्रुतिभिरीरितम्। क्षेत्रेऽत्र सिद्धिदे प्राप्य चण्डीशो मरुजाङ्गलात्। प्रचण्डपापसंघातं खण्डयेच्छतधेक्षणात्। पाशपाणिगणाध्यक्षसमीपे यः प्रपश्यति। चण्डीश्वरं महालिङ्गं स याति परमां गतिम्। कालञ्जरान्नीलकण्ठस्तिष्ठत्यत्र स्वयं विभुः। गणेशात् कूटदन्ताख्यात् समीपे भवनाशनः। नीलकण्ठेश्वरं लिङ्गं काश्यां यैः परिपूजितम्। नीलकण्ठास्तएव सुस्तएव

ऋषिभूषणाः। काश्मीरादिह संप्राप्तं लिङ्गं विजयसंज्ञितम्। सदा विजयदं पुंसां विजयेशः समर्चनात्। ऊर्द्ध्वरेतास्त्रिदण्डायाः संप्राप्तोऽत्र स्वयंविभुः। कुष्माण्डकं गणाध्यक्षं पुरस्कृत्वा व्यवस्थितः। ऊर्द्ध्वां गतिमवाप्नोति वीक्षणादूर्द्ध्वरेतसः। ऊर्द्ध्वरेतसि ये भक्ता न हि तेषामधोगतिः। मण्डलेश्वरतः क्षेत्रात्लिङ्गं श्रीकण्ठसंज्ञितम्। विनायकान्मुण्डसंज्ञादुत्तरस्यां दिशि स्थितम्। श्रीकण्ठस्य तु ये भक्ताः श्रीकण्ठा एव ते नराः। नेह श्रिया वियुज्यन्ते न परत्र कदाचन। छागलाण्डान्महातीर्थात् कपर्द्दीश्वरसंज्ञितः। पिशाचमोचने तीर्थे स्वयमाविरभूद्विभुः। कपर्द्दीशं समभ्यर्च्य न नरो निरयं व्रजेत्। न पिशाचत्वमाप्नोति कृत्वाऽप्यवद्यमुत्तमम्। आषाढ़केश्वरात् क्षेत्रात् लिङ्गं सूक्ष्मेशसंज्ञितम्। स्वयमभ्यागतं चात्र क्षेत्रे वै श्रेयसां पदे। विकटद्विजसंज्ञस्य गणेशस्य समीपतः। दृष्ट्वा लिङ्गेश्वरं लिङ्गं गतिं शुभामवाप्नुयात्। संप्राप्तमिह देवेशं जयन्तं मधुकेशवात्। लम्बोदराद्गणपतेः पुरस्तात्पश्चिमस्थितम्। जयन्तेश्वरमालोक्य स्नात्वा गङ्गाजले शुभे। प्राप्नुयाद्वाञ्छितां सिद्धिं सर्वत्र विजयी भवेत्। प्रादुश्चकार देवेशः श्रीशैलात्त्रिपुरान्तकः श्रीशैलशिखरं दृष्ट्वा यत् फलं समुदीरितम्। त्रिपुरान्तकमालोक्य तत्फलं हेलयाप्यते। विश्वेशात् पश्चिमे भागे त्रिपुरान्तकमीश्वरम्। संपूज्य परया भक्त्या न नरो गर्भमाविशेत्। सोमस्थानादिहायातो भगवान् कुक्कुटेश्वरः। वक्रतुण्डगणाध्यक्षसमीपे सोऽयतिष्ठते। तद्दर्शनादर्च्चनाच्च करस्थाः सर्वसिद्धयः। जलेश्वराच्चिमुक्तो च स्वयमीशः समागतः। एकदन्तोत्तरे भागे सोऽर्च्चितः सर्वकामदः। त्रिसन्ध्याच्छ्वेततो देवस्त्र्यम्बकोऽस्ति समागतः। त्रिमुखात् पूर्वदिग्भागे पूजितस्त्र्यम्बकत्वकृत्। हरेश्वरो हरिश्चन्द्रात्क्षेत्रादत्र समागतः। हरिश्चन्द्रेश्वरपुरः पूजितो जयदः सदा। इह सर्वः समायातः स्थानात् मध्यमकेश्वरात्। चतुर्वेदेश्वरं लिङ्गं पुरो वायव्यसंस्थितम्। सर्वलिङ्गं समभ्यर्च्य काश्यां परमसिद्धिकृत्। न जातु जन्तुपदवीं प्राप्नुयात् कापि मानवः। स्थलेश्वरान्महालिङ्गं प्रादुर्भूतं परन्त्विह। यत्र यज्ञेश्वरं लिङ्गं सर्वयज्ञफलप्रदम्। महालिङ्गं समभ्यर्च्य महाश्रद्धासमन्वितः। महतीं श्रियमाप्नोति लोकेऽत्र च परत्र च। इह लिङ्गं सहस्राख्यं सुवर्णाख्यात् समागतम्। यस्य संदर्शनात् पुंसां ज्ञानचक्षुः प्रजायते। शैलेश्वरादवाच्यान्तु सहस्राक्षेश्वरं विभुम्। दृष्ट्वा जन्मसहस्राणां शतानां पातकं त्यजेत्। हर्षितात्हर्षितं चात्र प्रादुरासीत्तमोहरम्। लिङ्गं हर्षदं पुंसां दर्शनात् स्पर्शनादपि। महेन्द्रेश्वरसमीपे तु प्रासादो हर्षितेशितुः। तद्विलोकनतः पुंसां नित्यं हर्षपरम्परा। इह स्वयं समायातो रुद्रो रुद्रमहालयात्। यस्य दर्शनतो यान्ति रुद्रलोके नराः स्फुटम्। यैस्तु रुद्रेश्वरं लिङ्गं काश्यामत्र समर्च्चितम्। ते रुद्ररूपिणो मर्त्या विज्ञेया नात्र संशयः। त्रिपुरेशसमीपे तु दृष्ट्वा रुद्रेश्वरं विभुम्। रुद्रास्त एव विज्ञेया जीवन्तोऽपि मृता अपि। व्यागादिह महादेवो वृषेशो वृषभध्वजात्। वाणेश्वरस्य लिङ्गस्य समीपे वृषदः सदा। इहागतं तु केदारादीशानेश्वरसंज्ञितम्। तत् द्रष्टव्यं प्रतीच्यां च लिङ्गं प्रह्लादकेश्वरात्। ईशानेशं समभ्यर्च्य स्नात्वा तु वरणाम्भसि। वसेदीशाननगरे ईशानसदृशप्रभः। भैरवाद्भैरवीमूर्त्तिरत्रायाता मनोहरा। संहारभैरवो नाम द्रष्टव्यः स प्रयत्नतः। पूजनात् सर्वसिद्ध्यै स प्राच्यां स्वर्यविनायकात्। संहारभैरवः काश्यां संहरेदघसन्ततिम्। उग्रः कनखलात्तीर्थादाविरासीत् सुसिद्धिदः। तद्विलोकनतो नृणामुग्रं पापं विनश्यति। उग्रं लिङ्गं सदा सेव्यं प्राच्या खर्वविनायकात्। अन्या अपि नश्येयुरुपसर्गास्तदर्चनात्। वस्त्रापथान्महाकोलाहलो नाम स्वयं विभुः। प्राच्यां दण्डीश्वरः पूज्यः सदेहलिविनायकात्। तस्यार्च्चनेन मर्त्यानां न पुनर्भव ईक्ष्यते। भीमचण्डीसमीपे तु प्रादुरासीदिह प्रभुः। भवेश्वरं समभ्यर्च्य भवे नाविर्भवेन्नरः। प्रभुर्भवति सर्वेषां राज्ञामाज्ञाकृतामिह। देवदारुवनाद्दण्डी दण्डयन् पातकावलीः। वाराणस्यां समागत्य स्थितो लिङ्गाकृतिर्भवः। प्राच्यां दण्डीश्वरः पूज्यः स देहलिविनायकात्। तस्यार्च्चनेन मर्त्यानां न पुनर्भव ईक्ष्यते। भद्रकर्णहृदाद्रुदण्डो भद्रकर्णहृदान्वितः। शिवः साक्षादिहायातः सर्वेषां शिवदोऽर्च्चितः। उद्दण्डाख्याद्गणपतेः प्राच्यां तत्तीर्थमुत्तमम्। भद्रकर्णहृदे स्नात्वाऽभ्यर्च्य लिङ्गं शिवाह्वयम्। सर्वत्र शिवमाप्नोति भद्रं भवविनाशकम्। शृणुयात् सर्वभूतानां भद्रं पश्यति चाक्षिभिः। शङ्करस्य हरिश्चन्द्रात् स्वत्पुरः प्रतिभासते। तत्पूजनाज्जनानां न जननीजठरे जनिः। यमलिङ्गान्महातीर्थात् काललिङ्ग-

मिह स्थितम् । कलशेश इति ख्यातं चन्द्रेशात् पश्चिमेन तु । यमतीर्थे नरः स्नात्वा मित्रावरुणदक्षिणे । काललिङ्गं समालोक्य कलिकालभयं कुतः । तत्र भौम चतुर्दश्यां यस्तु यात्रां करिष्यति । अपि पातकयुक्तश्च यमयात्रां न यास्यति । नेपालाच्च महाक्षेत्रादायात् पशुपतिस्त्विह । यत्र पाशुपतो योग उपदिष्टः पिनाकिना । महता देवदेवेन ब्रह्मादिभ्यो विमुक्तये । तस्य संदर्शनादेव पशुपाशैर्वियुज्यते । करवीरकतीर्थाच्च कपालीश इहागतः । कपालमोचने तीर्थे द्रष्टव्यः स प्रयत्नतः । तद्विलोकनमात्रेण ब्रह्महत्या विलीयते । उमापतिर्देविकाया इहागत्य व्यवस्थितः । दृष्टः पशुपतेः प्राच्यां हरेत् पापं चिरार्जितम् । लिङ्गं महेश्वरक्षेत्रादिह दीप्तेशसंज्ञितम् । उपोमापति तिष्ठेत्तु दीप्त्यै चेह परत्र च । भुक्तिमुक्तिप्रदं लिङ्गं दीप्तेशं काशिमध्यगम् । कायारोहणतः क्षेत्रादायातो नकुलीश्वरः । शिष्यैः परिवृतस्तिष्ठेन्महापाशुपतव्रतैः । दक्षिणे हि महादेवात् दृष्टो ज्ञानं प्रयच्छति । अज्ञान नाशयेत् क्षिप्रं गर्भसंसृतिहेतुकम् । गङ्गासागरतस्त्वागादमरेशइतीरितम् । लिङ्गं यद्दर्शनादेव नामरत्वं हि दुर्लभम् । सप्तगोदावरीतीर्थाद्देवोभीमेश्वरः प्रभुः । प्रकाशते लिङ्गरूपी भुक्त्यै मुक्त्यै नृणामिह । नकुलीशात् पुरोभागे दृष्ट्वा भीमेश्वरं प्रभुम् । महाभीमानि पापानि प्रणश्यन्ति हि तत्क्षणात् । भूतेश्वरात् भस्मगात्रः प्रादुरासीदिह स्वयम् । भीमेशाद्दक्षिणे भागे तदभ्यर्च्य प्रयत्नतः । सम्यक् पाशुपताद्योगादभ्यस्ताच्च समाः शतम् । यत्प्राप्नोति फलं तस्माद्भस्मगात्रविलोकनात् । नकुलीश्वरतो देवः स्वयम्भुरिति विश्रुतः । आत्मना प्रकटीभूतः काश्यां लिङ्गाकृतिर्हरः । स्वयम्भुलिङ्गं संपूज्य स्नात्वा सिद्धिह्रदे नरः । महालक्ष्मीश्वरपुरो न भूयो जन्मभाग्भवेत् । प्रयागतीर्थे निकषा प्रासादो विद्रुमः प्रभुः । वाराहस्य महानेष वरुणो नाम एव हि । विन्ध्यपर्वे ततः प्राप्तो देवं श्रुत्वा समागतम् । सगणं सर्षिदेवञ्च मन्दराद्रत्नकन्दरात् । काश्यां वरणि वाराहोद्रष्टव्यः स प्रयत्नतः । आपत्समुद्रसंमग्नमुद्धरेच्छरणागतम् । कर्णिकाराद्गणाध्यक्षः कर्णिकार मस्तनरुक् । समक्षोऽयं गदाहस्त उपसर्गसहस्रहृत् । तस्माद्वरणिवाराहात् प्रतीच्यां दिशि संस्थितम् । पूजयित्वा गणाध्यक्षं गाणपत्यपदं लभेत् । हेमकूटाद्विरूपाक्षं लिङ्गमत्राविरास ह । महेश्वराद्वायव्यां तु दृष्टं संसारतारकम् । गङ्गाद्वाराद्विमस्थेशं लिङ्गं हिमसमप्रभम् । ब्रह्मनालात् प्रतीच्यां च द्रष्टव्यमिहसिद्धिदम् । गणाधिपश्च कैलासात् गणा अन्ये महाबलाः । कैलासाद्रेः समायाताः सप्तकोटिमिताः प्रभो ! । दुर्गाणि तैः कृतानीह सप्त स्वर्गसमानि च । सद्वाराणि सयन्त्राणि सकपाटनिभानि च । कोटिकोटिभटाढ्यानि सर्वर्द्धिसहितानि च । सुवर्णरूप्यताम्रैश्च कांस्यरीतिकसीसकैः । अयस्कान्तेन कान्तानि रत्नान्यग्निहान्यपि । ततः शैलं महादुर्गं तैः काशी परितः कृतम् । परिखापि कृता निम्ना मत्स्योदर्या जलाविला । मत्स्योदरी द्विधा जाता वहिरन्तश्चरी पुनः । तच्च तीर्थं महाख्यातं मिलितं गाङ्गवारिभिः । यदा संहारमार्गेण गङ्गाम्भः प्रसरेदिह । तदा मत्स्योदरी तीर्थं लभते पुण्यगौरवात् । सूर्याचन्द्रमसोः पर्वतदा कोटिगुणं शतम् । सर्वपर्वाणि तत्रैव सर्वतीर्थानि तत्र वै । तत्रैव सर्वलिङ्गानि गङ्गा मत्स्योदरी यतः । मत्स्योदर्यां हि ये स्नाता यत्र कुत्रापि मानवाः । कृतपिण्डप्रदानास्ते न मातुरुदरेशयाः । अविमुक्तमिदं क्षेत्रं मत्स्याकारत्वमाप्नुयात् । परितः स्वर्धुनीवारिसंसारो परि वीक्ष्यते । मत्स्योदर्यां कृतस्नाना ये नरास्ते नरोत्तमाः । कृत्वापि बहुपापानि नेक्षन्ते भास्करेः पुरीम् । किं स्नात्वा बहुतीर्थेषु किं तप्त्वा दुष्करं तपः । यदि मत्स्योदरीस्नाताः कुतो गर्भभयं ततः । यत्र यत्र हि लिङ्गानि न्टदेवर्षिकृतान्यपि । तत्र मत्स्योदरीं प्राप्य सुस्नातो मोक्षभाजनम् । सन्ति तीर्थान्यनेकानि भूर्भुवः स्वर्गतान्यपि । न समानि परन्तानि कोट्यंशेनापि निश्चितम् । इत्थं तीर्थं कृतं तेन विभो ! । कैलासवासिनः । गणाधिपेन सुमहत्सु महोदरकर्मणा । भूर्भुवःसंज्ञकं लिङ्गं पर्वताद्धस्त्यमादनात् । स्वयमाविरभूदत्र तस्मात् प्राच्यां गणाधिपात् । विलोक्य भूर्भुवं लिङ्गं भूर्भुवःस्वर्महः परे । निवसन्ति जनाः पुण्याः सुचिरं दिव्यभोगिनः । हाटकेशं महालिङ्गं भोगवत्या समायुतम् । सप्तपातालतलत इहायातं स्वयं विभो ! । शेषवासुकिमुख्यैश्च तत्प्रासादो महानिह । मणिमाणिक्यरत्नौघैर्निरमायि प्रयत्नतः । तल्लिङ्गं हाटकमयं रत्नमालाभिरर्चितम् । ईशानेश्वरतः प्राच्यां पूजनीयं प्रयत्नतः । भक्तितोऽभ्यर्च्य तल्लिङ्गं नरः स्वः सम्मृद्धिमान् । त्वा भोगभुजनसंख्या-

तानन्ते निर्वाणमृच्छति । आकाशात्तारकं लिङ्गं ज्योतीरूपमिहागतम् । स्नानवाप्याः पुरोभागे तल्लिङ्गं तारकेश्वरम् । तारकज्ञानमभ्येति तल्लिङ्गस्य समर्चनात् । स्नानवाप्यां नरः स्नात्वा तारकेशं विलोक्य च । कृतसन्ध्यादिनियमः परितर्प्य पितामहान् । कृतमौनव्रतो धीमान् यावल्लिङ्गविलोकनम् । मुच्यते सर्वपापेभ्यः पुण्यं प्राप्नोति शाश्वतम् । प्रान्ते च तारकं ज्ञानं यस्मात् स्नानाद्विमुच्यते । किरातात् किरातेश इह चाविर्बभूव ह । किरातरूपो भगवान् यत्र देवोऽभवत् पुरा । तत्किरातेश्वरं लिङ्गं भारभूतेश्वरादनु । नमस्कृत्वा नरो जातु न मातुरुदरेशयः। लङ्कापूर्य्याः समागच्छन्नङ्कनेश्वरसंज्ञकम् । पौलस्त्यलाघवात् पश्चात् पूजितं सर्वदुःखहृत् । पुण्यं जलप्रियं लिङ्गं जललिङ्गस्थलादपि । आयातं तच्च गङ्गाया जलमध्ये व्यवस्थितम् । तत्प्रासादोऽद्भुततरो मध्येगङ्गं निरीक्ष्यते । सर्वधातुमयः श्रेष्ठः सर्वरत्नमयः शुभः । अद्यापि दृश्यते कैश्चित् पुण्यसम्भारगौरवात् । श्रेष्ठं लिङ्गमिहायातं तीर्थात्कोटीश्वरादपि । कोटिलिङ्गार्च्चनपुण्यं तल्लिङ्गस्य निरीक्षणात् । श्रेष्ठं श्रेष्ठेश्वरात्स्थानात् श्रेष्ठसिद्धिप्रदायकम् । वडवास्यात् समुद्भुतं लिङ्गमात्रानलेश्वरम् । नलेश्वरपुरोभागे पूजितं सर्वसिद्धिदम् । आगत्य पिरजस्तीर्थाद्देवदेवस्त्रिलोचनः । लिङ्गे त्वनादिसंसिद्धे ह्यवतस्थे त्रिपिष्टपे । पुण्ये पिलिप्पिले तीर्थे सर्वेषां तारकप्रदे । आविरासीत् स्वयं देव ओङ्कारेऽमरकण्टकात् । तदाद्यं तारकक्षेत्रं यदा गङ्गा न चागता । तदैवाविरभूत् काशी त्रैलोक्योद्धरणाय वै । तदोङ्कृति महल्लिङ्गं स्वयमाविरभूत्ततः । महिमानं न तस्यान्यः परिवेत्ति विभोर्ऋते । एतान्यायतनानीश ! आनिनाय महान्ति च । शोधयित्वांशमात्रस्य तस्मिन् क्षेत्रे निजे निजे । इहायातानि पुण्यानि सर्वभावेन नान्यथा । प्रासादाः सर्वतः श्रेष्ठा रम्या अभ्रंलिहा विभो !। बहुधातुमयाश्चित्राः सर्वरत्नमहोज्ज्वलाः। येषां कलसमात्रस्य दर्शनान्मुक्तिराप्यते । श्रुत्वा च नामधेयेषां लिङ्गानां सुरसत्तम ! अपि जन्मसहस्रोत्थाः क्षीयन्ते पापराशयः । इदानीं को निदेशोऽत्र मयानुष्ठेय ईशितः ! । प्रसादीक्रियतां सोऽपि शिवो मन्तव्य एव हि । श्रीस्कन्द उवाच । श्रुत्वेति नन्दिनो वाक्यं देवदेवेश्वरो हरः । मुदा प्रसाद्य शैलादिमिदं प्रोवाच कुम्भज ! । श्रीदेवदेव उवाच । साधु कृतं त्वया नन्दिन् ! सदानन्दविधायक ! । विधेहि मे निदेशं च चपरीव्यापारयाधुना । नव कोट्यस्तु चामुण्डायाश्चात्र निवसन्ति हि । सदैव ताभिः सहिताः भूतवेतालभैरवैः । ताः पुरीरक्षणार्थाय सवाहनबलायुधाः । प्रतिदुर्गं दुर्गरूपाः परितः परिवासय । श्रीस्कन्द उवाच । नन्दिनं स निदेश्यापि मृड़ान्या सहितो मृड़ः । ययौ त्रैपिष्टपं क्षेत्रं मुक्तिबीजप्ररोहणम् । शिलादतनयोऽप्यैशीं मूर्द्धन्याज्ञां विधाय च । आहूय सर्वास्ता दुर्गाः प्रतिदुर्गं न्यवेशयत् । निशम्याध्यायमेतञ्च पुण्यायतनगर्भितम् । नरः स्वर्गापवर्गौ च प्राप्नुयात् श्रद्धया क्रमात् । श्रुत्वाष्टषष्टिमेतां वै महायतनसंभवाम् । न जातु प्रविशेन्मर्त्यो जनन्या जठरीदरीम्"। [प्रशंसनीयत्वात् । केशे हेमच०।

**तीर्थवाक** पु० तीर्थस्येव वाको वचनमस्य उत्ताङ्कस्थित्या

**तीर्थशौच** न० तीर्थस्य घट्टस्य शौचं परिष्कारः । घट्टादिपरिष्कारे । "सेतुबन्धरता ये च तीर्थशौचरताश्च ये । तड़ागकूपकर्त्तारो मुच्यन्ते ते तृषाभयात्" । आदित्यपु० तीर्थशौचं घट्टपरिष्कारः" रघु० ।

**तीर्थसेनि** स्त्री कुमारानुचरमातृभेदे ।"माधवी शुभवक्त्रा च तीर्थसेनिश्च भारत !" भा० शल्य० ४७ अ० ।

**तीर्थसेविन्** पुंस्त्री० तीर्थं जलप्रान्तं सेवते मत्स्याहारार्थं सेव–णिनि ।१वके राजनि०स्त्रियां ङीप् ।२तीर्थसेवके त्रि०।

**तीर्थ्य** पु० तीर्थे भवः यत् । रुद्रभेदे । "नमस्तीर्थ्याय च कुल्याय च" यजु० १६।४२ । समानतीर्थे वसति यत् । सतीर्थ्य एकगुरुके अमरः । [तितीव ।

**तीव** स्थौल्ये भ्वा० पर० अक० सेट् । तीवति अतीवीत् ।

**तीवर** पु० तृ–ष्वरजन्तः नि०।१समुद्रे, २व्याधे, ३वर्णसङ्करजातिभेदे(तेओर)पुंस्त्री० जातिशब्दे दृश्यम्। स्त्रियां ङीष् ।

**तीव्र** न० तीव–रक् तिज–वन् दीर्घः जस्य वो वा । १अतिशये २तद्वति त्रि० अमरः । ३तीक्ष्णे ४लौहभेदे (इस्पात) ५तीरे ६त्रपुणि च उणा० ७लौहमात्रे राजनि० । ८अत्युष्णे ९कटौ १०नितान्ते च त्रि० उणा० । ११शिवे पु०शब्दर०।"विलङ्घिताधोरणतीव्रयत्नाः" रघुः । "तीव्रोत्थितास्तावदसह्यरंहसः" "तीव्रं महाव्रतमिवात्र चरन्ति वप्राः" माघः । वैराग्यस्य उपायस्य च तीव्रत्वं पात० सू० भाष्ये विवरणे च दर्शितं यथा "ते खलु नव योगिनोमृदुमध्याधिमात्रोपाया भवन्ति । तद्यथा, मृदूपायोमध्योपायोऽधिमात्रोपाय इति । तत्र मृदूपायोऽपि त्रिविधः मृदुसंवेगोमध्यसंवेगस्तीव्रसंवेग

इति । तथा मध्योपायस्तथाधिमात्रोपाय इति, तत्राधिमात्रोपायानाम्" भा० "तीव्रसंवेगानामासन्नतमः" पात० सू०। "समाधिलाभः समाधिफलञ्च भवतीति" भाष्यम् ननु श्रद्धादयश्चेद्योगोपायास्तर्हि सर्वेषामविशेषेण समाधितत्फले स्यातां दृश्यते तु कस्यचित्सिद्धिः कस्यचिदसिद्धिः कस्यचिच्चिरेण सिद्धिः कस्यचिच्चिरतरेण सिद्धिः कस्यचित्क्षिप्रमित्यत आह, "ते खलु नवयोगिन" इति । उपायाः श्रद्धादयो मृदुमध्याधिमात्राः प्राग्भवीयसंस्कारादृष्टवशाद्येषां ते तथोक्ताः संवेगो वैराग्यं तस्यापि मृदुमध्यतीव्रता प्रागभवीयवासनादृष्टवशादेवेति तेषु यादृशां क्षेपीयसी सिद्धिस्तान् दर्शयति सूत्रेण, "तीव्रसंवेगानामासन्नतमः इति सूत्रम्" विव०।

**तीव्रकण्ठ** पु० तीव्रः कण्ठो यस्मात् ५ ब० । सेवनेन कण्ठपीडके १सूरणे (ओल)ख्याते तस्य सेवने हि कण्ठोद्वेजिता लोकप्रसिद्धा ।

**तीव्रकन्द** पु० तीव्रः कन्दोऽस्य । सूरणे राजनि० ।

**तीव्रगन्धा** स्त्री तीव्रो गन्धो यस्याः । यवान्यां राजनि० । २तीव्रगन्धयुक्ते त्रि० । कर्म० । ३तीव्रे गन्धे पु० ।

**तीव्रज्वाला** स्त्री तीव्रं यथा तथा ज्वालयति उद्वेजयति सेविनम् ज्वल–णिच्–अच् । १धातक्याम् राजनि० । तत्स्पर्शने हि गात्रे व्रणजन्म लोकप्रसिद्धमिति तस्यास्तथात्वम् २तीव्रज्वालायुक्ते त्रि० । कर्म० । ३तीव्रायां ज्वालायां स्त्री ।

**तीव्रदारु** न० कर्म० । १तीव्रे दारुणि । तस्य विकारः रजता० अञ् । तैव्रदारव तद्विकारे त्रि० स्त्रियां ङीप् ।

**तीव्रबन्ध** पु० तीव्रो बन्धो यस्मात् । तामसगुणे "दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता" गीतायां तामसकार्य्यासुरसम्पदो बन्धहेतुत्वोक्तेस्तथात्वम् ।

**तीव्रवेदना** स्त्री कर्म० । घोरायां यातनायाम् अमरः ।

**तीव्रसंवेग** पु० कर्म० । तीव्रवैराग्ये तीव्रशब्दे दृश्यम् ।

**तीव्रा** स्त्री तीव्र+टाप् ।१गण्डदूर्वायां २कटुरोहिण्यां ३राजिकायां (राइसरिषा) मेदि० । ४नदीभेदे शब्दर० । ५महाज्योतिष्मत्यां ६तरदीवृक्षे ७तुलस्याञ्च राजनि० । ८तीव्रवेगयुक्तस्त्रीमात्रे च ।

**तीव्रानन्द** तीव्र आनन्दोऽस्य । शिवे शिवसहस्रनाम ।

**तु** वृत्तौ (वृद्धौ पा०)अक० हिंसायां पूर्त्तौ च सक०अदा०पर० अनिट् । तौति तवीति । अतौषीत् । अत्र "नाभ्यस्तस्याचि पिति सार्वधातुके" ७।३।८७। "उतः सार्वधातुके इत्यस्यानुवृत्तिसम्भवेऽपि "तुरुस्तुशम्यमः सार्वधातुके" ७।३।९५ पा० सूत्रे "पुनः सार्वधातुकग्रहणमपिदर्थमिति" सि० कौ०। तेन "उतो वृद्धिर्लुकि हलि" ७।३।८९पा० सूत्रात् हलीत्यस्य "नाभ्यस्त" ७।३।८७पा० सूत्रात् "ईटः यङो वा" सू० वेत्यस्य चानुवृत्तिः न पितीत्यस्य तेन तवीतः तुतः तवीथः तुथः। अपि तु न । तुवन्ति । मुग्धबोधकृत्तु हलीत्यस्यानुवृत्तिवत् पितीत्यस्यानुवृत्तिरिति बभ्राम" तेन तन्मते तुत इत्येव इति भेदः। तुताव । वेदे तुजादि० अभ्यासदीर्घः। "स तूताव नैनमश्नोत्यंहतिरग्ने !" ऋ० १।९४।२ "ब्रह्मा तूतोदिन्द्रो गातुमिष्णन्" ऋ०२।२०।५। तु इद्धावित्यस्य बाहि बहुलं छन्दसि विकरणस्य लुः । अभ्यासस्याभावश्च"भा० ।

**तु** अव्य० तुद–मितद्रु० डु । १पादपूरणार्थे निरर्थके । "निरर्थकं तुहीत्यादि पूरणैकप्रयोजनम्" चन्द्रालोकः । २भेदे ३अवधारणे अमरः। ४समुच्चये ५पक्षान्तरे ६नियोगे ७प्रशंसायां८विनिग्रहे शब्दर० तत्र पक्षान्तरे "आचारेण तु संयुक्तः संपूर्णफलभाक् भवेत्" मनुः। समुच्चये "उष्ट्रयानं समारुह्य खरयानं तु कामतः । स्नात्वा तु विप्रो दिग्वासाः प्राणायामेन शुध्यति" मनुः । पूजायामेतद्योगे "तुपश्यपश्यताहैः पूजायाम्" पा० तिङन्तं न निहन्यते" आदह सुधाम तु पुनर्गर्भत्वमेरिरे" सि० कौ० धृता श्रुतिः ।

**तुकाक्षीरी** स्त्री तुगाक्षीरी+पृषो० । वंशरोचनायाम् हेम० ।

**तुक्त** त्रि० तुप–बा० क्त । तोषयुक्ते ततः पक्षा० चतुरर्थ्यां फक् । तौक्तायन तत्सन्निकृष्टदेशादौ त्रि० ।

**तुखा(षा)र** पु० विन्ध्यपर्वतस्थे जातिभेदे । "ये चान्ये विन्ध्यनिलयास्तुखा(षा)रास्तुम्बरास्तथा। अधर्म्मबहुलास्तान् विद्धि तान् वै नाशमुपागतान्" हरिवं० ५अ० ।

**तुगा** स्त्री तुज–बा० घ किच्च । वंशरोचनायां राजनि० ।

**तुगाक्षीरी** स्त्री तुगेव क्षीरी । वंशरोचनायाम् राजनि० ।

**तुग्र** न० तुज–रक् न्यङ्क्वा० जस्य गः । अश्विनीकुमारयोः शिष्ये राजर्षिभेदे । "तुग्रो ह भुज्युमश्विनोदमेघे रयिं न कश्चिन् ममृवाँ अवाहाः" ऋ०१।११६।३ । अत्रेयमाख्यायिका। "तुग्रो नामाश्विनोः प्रियः कश्चिद्राजर्षिः । स च द्वीपान्तरवर्त्तिभिः शत्रुभिरत्यन्तमुपद्रुतः सन् तेषां जयाय स्वपुत्रं भुज्युं सेनया सह नावा प्राहैषीत् । सा च नौर्मध्ये समुद्रमतिदूरं गता वायुवशेन भिन्नासीत् । तदानीं स भुज्युः शीघ्रमश्विनौ तुष्टाव" भा० । "ता भुज्युं विभिरद्भ्यः समुद्रात् तुग्रस्य सूनुमूहथूरजोभि" ऋ०६।६२।६। "ता तौ अश्विनौ युवां

तुग्रस्य सूनुं भुज्युं भुज्युनामकं समुद्रमध्ये अमज्जयत्" भा०

**तुग्र्या** स्त्री तुज–रक् न्यङ्क्वा० कुः स्वार्थे यत्। १जले निघण्टुः। "आवः शमं वृषभं तुग्र्यासु" ऋ० १।३३।१५। "तुग्र्यासु जलेषु" भा०। निघण्टौ वुसं तुग्र्यमिति पाठान्तरात्। जले न०। तदनुसारेण "पिब स्वधैनवानामुत यस्तुग्र्ये सचा" ८।३२।२०। "वुसं तुग्र्यमित्युदकनामसु पाठात्" भा०। वस्तुतस्तु निघण्टौ वुसं तुग्रं तुग्र्यावृधमित्येव पाठः मुद्रितपुस्तके तुग्र्यमिति पतितम्। तुग्रस्य राजर्षेरपत्यं वा० यत्। तुग्रपुत्रे भुज्यौ पु०। "अस्तं वयो न तुग्र्यम्" ऋ० ८।३।२३ "तुग्र्यं तुग्रपुत्रम्" भा०।

**तुग्वन्** त्रि० तुज-बा० क्वनिप् न्यङ्क्वा० जस्य गः। १हिंसके। "सुवास्त्वा अधि तुग्वनि" ऋ० ८।१६।३७।

**तुङ्ग** पु० तुजि–हिंसायां घञ् न्यङ्क्वा० कुः। १पुन्नागवृक्षे २पर्वते ३बुधग्रहे हेमच०। ४नारिकेले ५गण्डके राजनि०। ६उच्चे त्रि०। ७ग्रहविशेषस्य राशिभेदे पु०। उच्चशब्दे १५८१ पृ० दृश्यम् "अजवृषभमृगाङ्गनाकुलीरा झषवणिजौ च दिवाकरादितुङ्गाः। दशशिखिमनुयुक्तिथीन्द्रियांशैस्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः"। "सूर्यादुच्चान् क्रियवृषमृगकन्याकुलीरान्त्ययूके दिग्वह्नीन्द्रद्वयतिथिशरान् सप्तविंशांश्च विंशान्। अंशानेतान् वदति यवनश्चान्त्य तुङ्गांस्तुतुङ्गांस्तानेवांशान् मदनभवनेभ्यश्च नीचान् सुनीचानिति"।

तुङ्गस्थग्रहभेदफलम् "तुङ्गेऽर्कः शुभसंयुतः शुभकरैर्मित्रैश्च दृष्टो यदा दैवात् पश्यति सोऽपि वा शुभकरानेकं द्विकं वा त्रिकम्। वित्तेशः प्रथितो विमर्द्दितरिपुः क्षोणीशमान्योऽथवा क्ष्मापालार्च्चितपादपद्मयुगलो राजा त्रिकोणे यदा"। र०। "तुङ्गे चन्द्रमसि प्रसन्नवपुषि प्रह्लादनष्टद्युतौ प्रख्यातोऽरिविमर्दकोऽगदतनू राजेश्वरो रूपवान्। क्ष्मापालार्च्चितपादपद्मयुगलो वा धर्मशीलो महान् सौख्यैरेव युतोऽथ वा प्रियतमैरिष्टे त्रिकोणेऽपि च"। च०। "यदि भवति कुजस्थो भूमिपुत्रस्तदा वै न दिनकरमयूखादुद्भ्रष्टरश्मिर्नरेन्द्रः। अगदतनुरभीतः शत्रुदर्पापहारी प्रणतरिपुनरेन्द्रः स्वात्त्रिकोणेऽपि जातः"। म०। "कन्यास्थः शशलाञ्छनस्य तनयस्तिग्मांशकैः संयुतो दृष्टो वा यदि संयुतः शुभकरैर्ज्जातस्तदा भूपतिः। यात्रायां तुरगोद्भमत्तकरिणां यानैर्मही कम्पते स क्ष्माभृद्धरणीरुहाग्निगलिता यान्ति त्रिकोणेऽपि च"। बु०। "तुङ्गे गुरौ मित्रखगेन दृष्टो राजा भवेदिन्द्रसमानमूर्त्तिः। गजाश्वनौकार्थसपूर्णलक्ष्मीः पृथ्वीपतिः स्वस्य त्रिकोणगोऽपि"। वृ। "तुङ्गे भृगौ शुभग्रहयुतयुते च दृष्टे दैवात् पुनः स यदि पश्यति मित्रसंघान्। भूपाधिपो भवति कीर्त्तिकरः प्रधानो दीर्घायुरुग्रसुखभुग्भृगुजे त्रिकोणे"। शु। "तुङ्गे शनौ मित्रखगेन दृष्टे प्रचण्डदण्डो नृपतिप्रधानः। न दृश्यते दिग्गमने च गुर्वी त्रिकोणगे चापि नरेन्द्रमूर्त्तिः"। श। "भवति धरणीपालो नीचवृत्तिः प्रतापी हयगजधनपूर्णो जातिवर्गे विरक्तः। कुटिलमतिरनीतो भूरिभाण्डारयुक्तस्तमसि मिथुनसंस्थे जायते मानवेन्द्रः"। रा। "मृगपतिवृषकन्याकर्कटस्थे च राहौ भवति विपुललक्ष्मी राजराजाधिपो वा। हयगजनरनौकामण्डितः सार्वभौमो नृपतिरमरपूज्यो राहुतुङ्गी चिरायुः"। रा। "अरिनिधनव्ययतुङ्गे कीर्त्तितमेतत्फलं व्यर्थं केन्द्रे त्रिकोणे लाभे वा तुङ्गफलं यथोद्दिष्टम्" इति कोष्ठीप्र०। ८किञ्जल्के न० शब्दार्थचि०। १०उच्चे ११प्रधाने १२उन्नते त्रि० शब्दर०। "तुङ्गत्वमितरा नाद्रौ नेदं सिन्धावगाधता" माघः। १३शिवे पु० तुङ्गबीजशब्दे दृश्यम्।

**तुङ्गक** पु० तुङ्ग+स्वार्थे क संज्ञायां कन् वा। १पुन्नागवृक्षे शब्दरत्ना० २तुङ्गशब्दार्थे ३अरण्यरूपे तीर्थभेदे न०। "तुङ्गकारण्यमासाद्य ब्रह्मचारी जितेन्द्रियः। वेदानध्यापयत्तत्र ऋषिः सारस्वतः पुरा। तत्र वेदेषु नष्टेषु मुनेरङ्गिरसः सुतः। ऋषीणामुत्तरीयेषु उपविष्टो यथासुखम्। ओङ्कारेण यथान्यायं सम्यगुच्चारितेन ह। येन यत्पूर्वमभ्यस्तं तत्सर्वं समुपस्थितम्। ऋषयस्तत्र देवाश्च वरुणोऽग्निः प्रजापतिः। हरिर्नारायणस्तत्र महादेवस्तथैव च। पितामहश्च भगवान् देवैः सह महाद्युतिः। भृगुं नियोजयामास याजनार्थं महाद्युतिम्। ततः स चक्रे भगवान् ऋषीणां विधिवत्तदा। सर्वेषां पुनराधानं विधिदृष्टेन कर्मणा। आज्यभागेन तत्राग्निं तर्पयित्वा यथाविधि। देवाः स्वभवनं याता ऋषयश्च यथागतम्। तदरण्यं प्रविष्टस्य तुङ्गकं राजसत्तम!। पापं प्रणश्यत्यखिलं स्त्रिया वा पुरुषस्य वा" भा० व० ८५ अ०। तत्कथा दृश्या

**तुङ्गकूट** पु० तुङ्गं कूटमस्य। उच्चशृङ्गे पर्वतभेदे।

**तुङ्गनाभ** पु० तुङ्गो नाभिरस्य। कीटभेदे। तुङ्गीनासशब्दे दृश्यम्। [दृश्यम्। तुङ्गराश्यादयोऽप्यत्र।

**तुङ्गभ** न० कर्म०। सूर्यादीनामुच्चराशौ मेषादौ तुङ्गशब्दे

**तुङ्गभद्र** पु० तुङ्गोऽपि भद्रः । १मदोत्कटकरिणि दन्तिवाख्ये २नदीभेदे स्त्री मेदि० । "शर्करावर्त्ता तुङ्गभद्रा कृष्णवेणे-त्यादि" भाग० ५।१९।१८ श्लो० भारतस्थनदीकथने । "तुङ्गभद्राजलं स्वादु स्निग्धं प्रोक्तं तथा गुरु ! । कण्डूपित्तास्रदं प्रायः सान्द्रं मेधाकरं मतम्" राजनि० तज्जलगुणा उक्ताः ।

**तुङ्गवीज** न० तुङ्गस्य शिवस्य वीजम् । १पारदे । "तुङ्गवीज-समायुक्तं गोलयन्त्रं प्रसाधयेत्" रस० सि० "तुङ्गो महादेव-स्तस्य वीजं वीर्य्यं पारद इत्यर्थः" रत्नना० ।

**तुङ्गवेणा** स्त्री नदीभेदे "तुङ्गवेणा कृष्णवेणा कपिला शोण एव च" भा० व० २२१ अ० । "विनदीं पिङ्गलां वेणां तुङ्गवेणां महानदीम्" भा० भी० ९अ० ।

**तुङ्गरस** पु० तुङ्गः श्रेष्ठो रसोऽस्य । गन्धद्रव्यभेदे "कालागुरुविमिश्रेण तथा तुङ्गरसेन च" भा० आ० १२७ अ० ।

**तुङ्गशेखर** पु० तुङ्गमुच्चशेखरमस्य ।१पर्वते शब्दमा० ।२उच्चशेखरयुक्ते त्रि० ।कर्म्म० ।३उच्चे शेखरे न० ।

**तुङ्गा** स्त्री तुङ्ग+टाप् ।१वंशलोचनायां २शम्याञ्च राजनि० ।

**तुङ्गिन्** त्रि० तुङ्गं मेषादिकं स्थानमाश्रयत्वेनास्त्यस्य इनि । उच्चस्थिते ग्रहे २महाशतावर्य्यां स्त्री ङीप् राजनि० । ४प्रधानस्थानस्थे त्रि० । [३रात्रौ शब्दार्थचि० ।

**तुङ्गी** स्त्री तुङ्ग+गौरा० ङीष् ।१हरिद्रायां २वर्वरायां मेदि० ।

**तुङ्गीनास** पु० तुङ्गी हरिद्रेव पीता नासाऽस्य । १कीटभेदे । "तुङ्गीनासो विचिलकस्तालको वाहकस्तथा । कोष्ठागारी क्रिमिकरो यश्च मण्डलपुच्छकः । तुङ्गनाभः सर्षपिकोऽवल्गुली शम्बुकस्तथा । अग्निकीटश्च घोराः सु-र्द्दोटश्च प्राणनाशनाः" सुश्रु० ।

**तुङ्गीपति** पु० तुङ्ग्याः रात्रेः पतिः । निशापतौ चन्द्रे त्रिका० ।

**तुङ्गीश** पु० कर्म्म० । १शिवे २कृष्णे ३सूर्य्ये च शब्दर० तेषां प्रधानस्थानस्थित्या तथात्वम् ।६त० ।रात्रीशे ४चन्द्रे ।

**तुच्** पु० त्वच—क्विप् बा० संप्रसा० तुज—क्विप् वा पृषो० जस्य चः । १अपत्ये निघण्टुः । "तुचे तनाय तत्सु" ऋ० ८।१८।१८ । "तुचे पुत्राय" भा० । "तुचे तु नो भवन्तु" ८।२७।१४। "तोजयति पितुर्दुःखादिकमिति तुच् पुत्रः तस्मै" भा० । पृषो० जस्य चः इति भेदः । हेमचन्द्रे तु जान्ततयाऽयं पठितः वेदे तु सर्वत्र चान्तत्वेनैव प्रयोगः ।

**तुच्छ** न० तुद—सम्प० क्विप् तुदा व्यथया छ्यति छो—क । १पुलाके (तुष) २हीने, उणा० । ३शून्ये अमरः ४अल्पे हेमच० । ५शून्ये च त्रि० । "किमेतै रात्मनस्तुच्छैः सह देहेन नश्वरैः । अनर्थैरर्थसङ्काशैर्नित्यानन्दरसोदधेः" भाग० ७।७।३८।८५ नीलीवृक्षे ६तुत्थायाञ्च भावप्र० ।७मन्दे अलीके च त्रि०

**तुच्छद्रु** पु० कर्म्म० । एरण्डवृक्षे शब्दच० ।

**तुच्छधान्यक** न० कर्म्म० । (भुसी) पुलाके अमरः ।

**तुच्छ्य** न० तुच्छ—वेदे स्वार्थे इवार्थे वा यत् ।१तुच्छशब्दार्थे २तुच्छकल्पे च "तम आसीत्तमसा गूढमग्रेऽप्रकेतं सलिलं सर्वमा इदम् । तुच्छ्येनाभ्वपिहितं यदासीत्तपसस्तन्महिना जायतैकम्" । ऋ० १०।१२९।३ अयमर्थः । ननूक्तप्रकारेण यदि पूर्वमिदं जगन्नासीत् कथं तर्हि तस्य जन्म ? जायमानस्य जनिक्रियायां कर्तृत्वेन कारकत्वात् कारकं च कारणान्तरविशेष इति कारकस्य सतो नियतपूर्वक्षणवर्त्तित्वस्यावश्यम्भावात् । अथैतद्दोषपरि जिहीर्षया जनिक्रियायाः प्रागपि तद्विद्यत इत्युच्यते कथं तस्य जन्म ? अत आह । तमसा गूढमग्रे सृष्टेः, प्राक् प्रलयदशायां भूतभौतिकं सर्वं जगत्तमसा गूढम् । यथा नैशं तमः सर्वपदार्थजातमावृणोति तद्वत् आत्मतत्त्वस्यावरकत्वात् मायापरसं र्च भावरूपाज्ञानमत्र तम इत्युच्यते । तेन तमसा निगूढं संवृतं कारणभूतेन तेनाच्छादितं भवति । छादकात्तस्मात्तमसो नामरूपाभ्यां यदाऽविर्भवनं तदेव तस्य जन्मेत्युच्यते । एतेन कारणावस्थायामसदेव कार्य्यमुत्पद्यत इत्यसद्वादिनोऽसत्कार्य्यवादिनो ये मन्यन्ते ते प्रत्याख्याताः । ननु कारणे तमसि तज्जगदात्मकं कार्य्यं विद्यते चेत् कथं नासीद्रज इत्यादि निषेधः । तत्राह तम आसीदिति । तमोभावरूपाज्ञानं मूलकारणं तद्रूपता तदात्मनाम् । यतः सर्वं जगत् प्राक् तम आसीदतो निषिध्यत इत्यर्थः । नन्वावरकत्वादावरकं तमः कर्तृ आवार्य्यत्वाज्जगत् कर्म्म । कथं तयोः कर्म्मकर्त्रोस्तादात्म्यम् । तत्राह अप्रकेतमिति । अप्रकेतमप्रज्ञायमानम् । अयमर्थः । यद्यपि जगतस्तमसश्च कर्म्मकर्तृभावोयौक्तिको न विद्यते तथापि व्यवहारदशायामिव तस्यां दशायां नामरूपाभ्यां विस्पष्टं न ज्ञायत इति तादात्म्यवर्णनम् । अतएव मनुना स्मर्यते "आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्यमनिर्देश्यं प्रसुप्तमिव सर्वतः" इति । कुतो वा न प्रज्ञायते तत्राह सलिलम् । सल—गतौ । औणादिक इलच् । इदं दृश्यमानं सर्वं जगत् सलिलं कारणेन संगतमविभागापन्नम् आसीत् । अस्तेर्लङि तिपि बहुलं छन्दसीतीडभावे हल्ङ्याब्भ्य इति

तिलोपे तिप्यनस्तेः पा० इति पर्युदासादिकाराभावः । यद्वा सलिलमिति लुप्तोपमम् । सलिलमिव ! यथा क्षीरेणाविभागापन्नं नीरं दुर्विज्ञानं तथा तमसाऽविभागापन्नं जगद् शक्यं विज्ञातुमित्यर्थः। ननु विविधविचित्र० रूपभूयसः प्रपञ्चस्य कथमतितुच्छेन तमसा क्षीरेण नीरस्येवाभिभवः । तथा तमोऽपि क्षीरवद्बहलवदित्युच्यते । तर्हि दुर्बलस्य जगतः सर्गसमयेऽपि नोद्भवस्तत्र दृश्यत आह तुच्छ्येनेति । आसमन्नाद्भवतीत्याभु तुच्छ्येन । छन्दसो यकारोपजनः । तुच्छ्येन तुच्छकल्पेन सदसद्विलक्षणेन भावरूपाज्ञानेनापिहितं छादितमासीत्" भाष्यम् ।

**तुज** दीप्तौ चुरा० उभ० अक० सेट् इदित् । तुञ्जयति-ते अतुतुञ्जत् । तुञ्जयते ।

**तुज** प्रापणे हिंसायाञ्च भ्वा० पर० सक० बले अक० सेट् इदित् । तुञ्जति अतुञ्जीत् । तुतुञ्ज तुतुञ्जतुः । "तुञ्जे तुञ्जे य उत्तरे स्तोमाः" ऋ०१।७।७ । इमामृचमधिकृत्य "तुञ्जतेर्दानकर्मणः तुञ्जे तुञ्जे दाने दाने" इति ६।१७ निरुक्तोक्तेः । दाने च ।

**तुज** हिंसायां भ्वा० पर० सक० सेट् । तोजति अतोजीत् । तुतोज । वेदे तुजादि० अभ्यासस्य दीर्घः । तूतुजानः । प्रेरणे च "आ याँ तोके तनये तूतुजानाः" ऋ०७।६७। ६ । "प्रायत्तोके तनये तूतुजाना" ७।८४।५ ।"तूतुजानाःप्रेर्यमाणाः"भा०।"अस्मा इस प्रभया तूतुजानः" निरु०६।२० धृता चाक् ।

**तुञ्ज** पु० तुजि—बले अच् । वज्रे निघण्टुः ।

**तुट** कलहे तुद० कुटा० पर० अक० सेट् । तुटति अतुटीत् तुतोट । [च" हरिवं० २७७ अ० ।

**तुटितुट** पु० शिवे । "नमस्तुण्डाय तुण्डाय नमस्तुटितुटाय

**तुटम** पुंस्त्री० तुट--बा०उम । उन्दुरौ त्रिका० ।

**तुड** भेदे तु० कुटा०पर०सक० सेट् । तुडति अतुडीत् तुतोड ।

**तुड** निष्पीड़ने भ्वा० आ० सक० सेट् इदित् । तुण्डते अतुण्डिष्ट । तुतुण्डे । तुण्ड्यते ।

**तुड** द्विधाकरणे भ्वा० पर० सक० सेट् । तोडति अतोडीत् ऋदित् । अतुतोडत्-त ।

**तुडि** स्त्री तुड—इन् किञ्च । तोड़ने ।

**तुड्ड** अनादरे भ्वा० पर० सक० सेट् । तुड्डति अतुड्डीत् । अयं दोपध इत्यन्ये तन्मते क्विपि तुट्—डोपधत्वे तुड् इति भेदः ।

**तुण** कुटिलीकरणे तु० पर० सक० सेट् । तुणति अतोणीत् । तुतोण ।

**तु(ढ)णि** पु० तुण+सङ्कोचे इन् बा० पृषो० । १कुणिरोगे अमरटीकायां क्षीरस्वामी २नन्दिवृक्षे राजनि०।"तूणीवृक्षः कटुः पाके कषायो मधुरो लघुः । तिक्तो ग्राही हिमो वृष्यो व्रणकुष्ठास्रपित्तहृत्" भावप्र० ।

**तणिक** पु० तुणि—स्वार्थे क । नन्दिवृक्षे राजनि० ।

**तुण्ड** न० तुडि—तोड़ने अच् । १मुखे अमरः । "अयस्तुण्डैःखलुखलैः" हरिवं० २४५ अ० । "स तेन पतगेन्द्रेण पक्षतुण्डनखक्षतः" भा० आ० ३२ अ० । "दीर्घनखश्च दीर्घदन्त्यो दीर्घतुण्डाश्च भारत !" भा० श० ४७ । २शिवे पु०तुटितुटशब्दे दृश्यम् । ३राक्षसभेदे । "तुण्डेन च नलस्तत्र पटुशः पनसेन च" भा० व० २८५ अ० ।

**तुण्ड(ण्डि)केरी** स्त्री प्रशस्तं तुण्डं(ण्डिः) कन् तद्-ईरयति ईर्तेर्वा ईर—अण् १कार्पास्याम् तस्याः फलस्य विदारे हि विस्तीर्णमुखत्वेनतुकार्पासोत्पत्तिः । २विम्बिकायाम् (तेलाकुचा) तस्याः फलेन हि मुखाकृष्टोष्ठसादृश्यदानात् तथात्वम् । स्वार्थे क ह्रस्वः । तुण्ड(ण्डि)केरिकाप्यत्र अमरः । संज्ञायां कन् । विम्बिकायां राजनि० ।

**तुण्डदेव** पु० तुण्डरूपो देवः तुण्डेन दीव्यति दिव—अच् वा । नृपभेदे तस्य विषयो देशः ऐषुका० भक्तल् । तुण्डदेवभक्त तदीये विषये देशे पु० ।

**तुण्डि** पु० तुण्ड—इन् । १मुखे, २चञ्चौ च । ३विम्बिकायां, ४वन्दायां, उणा० । ५नाभौ स्त्री शब्दरत्ना० वा ङीप् । स्वार्थे कन् उक्तार्थेषु ।६तुन्दौ माधवः तुण्डिभशब्दे दृश्यम् ।

**तुण्डिका** स्त्री तुण्डम् तदवयवाधरसादृश्यमस्त्यस्याः ठन् । १विम्बिकायां तत्फलस्यास्यावयवाधरसादृश्यात्तथात्वम् । स्वार्थे क । नाभौ शब्दरत्ना० ।

**तुण्डि(ण्ड)केशी** स्त्री तुण्डे (ण्डौ) मुखे कायति कै—क तुण्डि(ण्ड)कः ओष्ठः तत्र ईषे तत्तुल्यशोभाधारणात् ईश—अच् गौरा०ङीष् । विम्बिकायाम्(तेलाकुचा) । शब्दच० ।

**तुण्डिभ(ल)** त्रि० तुण्डि+भ सिध्मा० लच् वा । १तुन्दिले (भुँड़ि)युक्ते । अमरः ।"तुन्दि(ण्डि) वलिवटेर्भः" पा०सू० । मूर्द्धन्योपधोऽयमिति माधवः । वाग्मी २मुखरे उणादि० ।

**तुण्डिल** पु० गर्भोपद्रावके असुरभेदे ।"उपेपन्तंमुदुम्बलं तुण्डेलमुत शालुडम्" अथ० ८।६।१७ ।

तुतात पु॰ मीमांसकभेदे । तेन प्रोक्तं ठक् । तौतातिक तत्-प्रोक्तमीमांसादर्शने । तन्मतञ्च दिङ्मात्रम् अर्हच्छब्दे ३८० पृ॰ दर्शितम् । "नैरात्म्यापि गुरोर्मतं न विदितं तौतातिकं दर्शनम्" सा॰ द॰ ।

तुतुर्वणि पु॰ तूर्णोत्वनिर्भञ्जनमस्य वेदे पृषो॰ । १तूर्णभजने । "यत्नायत्नायः समानं तुतुर्वणिः" ऋ॰१।१६।१। "तुतुर्वणिः त्वरमाणः संभजमानः" भा॰ । [ त्वत्-त ।

तुथ स्तुतौ अद॰ चु॰ उभ॰ सक॰ सेट् । तुथयति ते अतुतु-

तुथ पु॰ तुद-थक् । १अग्नौ उज्ज्वा॰ । २अग्नौ संक्षिप्तसा॰ । (तुंते) ३अञ्जनभेदे न॰ । ४नीलाम्, ५सूक्ष्मैलायाञ्च स्त्री हेमच॰ । स्वार्थे क । तत्रार्थे । रत्नाञ्जनस्य गुणादिकं भावप्र॰ उक्तं यथा

"तुत्थं ताम्रोपधातुर्हि किञ्चित्ताम्रेण तद्भवेत् । किञ्चित्ताम्रगुणं तस्मात् वक्ष्यमाणगुणञ्च तत् । तुत्थकं कटुकं क्षारं कषायं वामकं लघु । लेखनं भेदनं शीतं चक्षुष्यं कफपित्तहृत् । विषाश्मकुष्ठकण्डूघ्नं खर्पर-ञ्चापि तद्गुणम्"भावप्र॰ अस्य शोधनम् "विष्ठायां मर्दये-त्तुत्थं मार्जारककपोतयोः । दशांशं टङ्कनं दत्त्वा पचेत् लघुपुटे ततः । पुटं दध्ना पुटं क्षौद्रैर्देयं तुत्थविशुद्धये" भावप्र॰ "कासीसं रोचनां तुत्थं हरितालं मनः-शिलाम्"सुश्रुतः । [ २मयूरकण्ठे च राजनि॰ ।

तुथाञ्जन न॰ कर्म॰ । १अञ्जनभेदे (तुंते) । तद्वर्णत्वात्

तुथ पु॰ तु-थक् तुद-बधे थक् पृषो॰ वा । १जननकर्त्तरि "तुथोऽसि जनधायो नभोऽसि" ताण्ड्यब्रा॰१।४।१। "तुद्यतेर्बंधकर्म्मणः तुथः रजःप्रभृतीनां हन्ता" भा॰। २ब्रह्मणि । "तुथोऽसि विश्ववेदाः" यजु॰ ५।२१ । "हे ब्राह्मणाच्छंसिन् त्वं तुथो विश्ववेदाश्चासि । ब्रह्म वै तुथः"इति श्रुतेः । ब्रह्मरूपोऽसि । विश्वं वेत्ति विश्व-वेदाः सर्वज्ञः । यद्वा तुथशब्देन देवान् प्रति दक्षिणानां विभागकर्त्ता पुरुष उच्यते तदाह तित्तिरिः "तुथो ह स्म वै विश्ववेदा देवानां दक्षिणा विभजतीति" । "ब्रह्म वै तुथः" शत॰ ब्रा॰ ४।३।४।१६ । श्रुतेः। ३दक्षिणावि-भाजके ब्रह्मरूपे ऋत्विग्भेदे ।

"तुथो वै विश्ववेदा विभजत्विति ब्रह्म वै तुथस्तदेना ब्रह्मणा विभजति । ब्रह्मा वै दक्षिणीयं चादक्षिणीयं च वेद तुथो ह्यस्यैता दक्षिणीयायैव दत्त्वा भजति नाद-क्षिणीयाय" । "रूपेण वो रूपमभ्यां तुथो वो विश्ववेदा विभजतु" । यजु॰ ७ ४५ "किं च तुथो ब्रह्म-रूपः प्रजापति र्वो युष्मान् विभजतु यथायोग्यमृत्विग्भ्यो विभज्य ददातु "ब्रह्म वै तुथ इति श्रुतेः" वेददी॰।

तुद व्यथने तुदा॰उभ॰ सक॰अनिट् । तुदति ते अतौत्सीत् । अतुत्त तुतोद तुतुदे "तुतुदे गदयाचचारीन्"। "अतौत्-सीत् गदयाङ्गदम्" भट्टिः। "इषुभिरिव मानसं कामिनां तुदति कुसुमचापः" ऋतु॰ । "यथा तुदति मर्म्माणि" भा॰अ॰२५२० ।

तुदादि पु॰शप्रत्ययनिमित्ते धातुसमुदाये स च गणः कविकल्प-द्रुमोक्तक्रमेण पठितः । "तुदादिभ्यः शः" पा॰ ।

आ+अभ्यागव्यथने । "प्रतोदेनातुदन् अश्वम्" मनुः । "धनुः कोट्याऽतुदत् कर्णेन वीरम्" भा॰ का॰ ? अ॰ ।

निस्+निष्पीड़ने । "सूचिभिरिव निस्तुद्यते दश्यत इव पिपीलिकाभिः" । [इय तदपत्ये पुंस्त्री॰।

तुद त्रि॰ तुद-क । व्यथके । तस्यापत्यं शुभ्रा॰ ढक् । तौ-

तुन्द न॰ तुन्द अर्दने अदा॰ नि॰ । उदरे अमरः ।

तुन्दकूपी स्त्री हस्वः कूपः कूपी तुन्दस्य कूपीव । १नाभौ त्रिका॰ । स्वार्थे क । २तुन्दकूपिकाप्यत्र हेमच॰ ।

तुन्दपरिमृज पु॰ तुन्दं परिमार्ष्टि परि+मृज-क इत॰ । १अलसे २मन्दे । अण् । तुन्दपरिमार्जोऽप्यत्र रमानाथः।

तुन्दमृज त्रि॰ तुन्दमुदरं मार्ष्टि मृज-क । १अलसे २मन्दे च हेमच॰ ।

तुन्दादि पु॰ "तुन्दादिभ्य इलच्"पा॰ मत्वर्थे इलच्प्रत्यय-निमित्ते शब्दसमूहे स च गणः । पा॰ग॰सू॰ उक्तो यथा "तुन्द उदर पिचण्ड यवब्रीहि(स्वाङ्गाद्विवृद्धौ) विवृद्धौ कर्णौ यस्य सः कर्णिलः" । चादिनिठनौ मतुप् च । "तुन्दिलः तुन्दी तुन्दिकः तुन्दवान्" सि॰ कौ॰ ।

तुन्दिक(ल)(भ) त्रि॰ तुन्दं विद्यतेऽस्य ठन् । तुन्दि+भ तुन्द+इलच् वा । तुन्दियुक्ते (भुँड़ि) युक्ते ।

तुन्दिकर पु॰तुन्दिं करोति कृ-अच्। (भुँड़ि) युक्ते तुन्दिले त्रिका॰ । [स्त्रियां ङीप् ।

तुन्दिन् त्रि॰ तुन्दोऽस्त्यस्य इनि । तुन्दयुक्ते (भुँड़ि)युक्ते

तुन्दिलफला स्त्री तुन्दिलं हृहत्फलमस्याः । त्रपुण्याम् (शशा) राजनि॰ ।

तुन्न पु॰ तुद-क्त । १नन्दिवृक्षे (तुंद) अमरः । २व्यथिते, ३छिन्ने च त्रि॰ । स्वार्थे क । अत्रैवार्थे ।

तुन्नवाय पु॰ तुन्नं छिन्नं वयति वे-अण् । १सौचिके, २सूच्याजीविनि (दरजी) अमरः । "शैलूषतुन्नवायान्न कृतघ्नस्यान्नमेव च" मनुना तदन्नभक्षणं निषिद्धम् ।

**तुन्नसेवनी** स्त्री तुन्नं छिन्नं सीव्यतेऽनया सिव–करणे ल्युट् ङीप्। सूचीभेदे “प्रवेश्य तुन्नसेवन्या सूक्ष्मौ सीव्येत् ततः परम्” सुश्रुतः। [तुतुम्पतुः तुतुम्पिथ।

**तुन्प** बधे भ्वा० सक०पर० सेट्। तुम्पति अतुम्पीत्। तुतुम्प

**तुन्प** बधे सक० क्लेशे अक० तु० पर० सेट्। तुपति-तुम्पति अतु(पी)म्पीत्। तुतु(प)म्प तुतु(प)म्पतुः तुतुपिथ तुतुम्पिथ

**तुन्फ** बधे भ्वा० पर० सक० सेट्। तुम्फति अतुम्फीत्। तुतुम्फ तुतुफ(म्फ)तुः। तुतुम्फिथ।

**तुन्फ** बधे सक० क्लेशे अक० तुदा० पर० सेट्। तुफति तुम्फति अतु(तु)म्फीत्। तुतु(तु)म्फ तुतुफ(म्फ)तुः तुतुफिथ तुतुम्फिथ।

**तुप** बधे भ्वा० पर० सक०सेट्। तोपति अतोपीत्। तुतोप।

**तुप** बधे सक० क्लेशे अक०तुदा० मुचादि०पर० सेट्। तुम्पति अतोपीत्। तुतोप। पारस्क० सुट्। प्रस्तुम्पति।

**तुप** अर्द्दने चुरा० उभ० सक० सेट् इदित्। तुम्पयति ते अतुतुम्पत्-त। तुम्प्यते। [अतोफीत्। तुतोफ।

**तुफ** बधे सक० क्लेशे अक० तु० मुचा० पर० सेट्। तुम्फति

**तुफ** बधे भ्वा० पर०सक०सेट्। तोफति अतोफीत्। तुतोफ।

**तुब** अर्द्दने वा चुरा० उभ० सक० पक्षे भ्वा० पर० सेट् इदित्। तुम्बयति-ते तुम्बति अतुतुम्बत्-त अतुम्बीत्। [लृदित्। अतुभत् अतोभिष्ट। तुतुभे।

**तुभ** हिंसे भ्वा० आत्म० द्युति० उभ० सक० सेट्। तोभते।

**तुभ** हिंसायां दिवा० क्र्या० च पर० सक० सेट्। तुभ्यति तुभ्नाति अतोभीत्। तुतोभ “संक्रुद्धो सर्दितात्मा॰द-क्रुदोऽतु मत्तोदरम्” “कश्चात् विभीषणोऽतुभ्नात्” भट्टिः।

**तुम** प्रेरणे आहनने च तुम्रशब्दे माधवः। सक० भ्वा० पर० सेट्। तोमति अतोमीत् तुतोम तुम्रः। तोमरः।

**तुमुर** न० तुमुल+लस्य रः। तुमुले अमरटीका।

**तुमुल** पुंन० स्रौ० तु–मुलच्। १परस्परसंघातेन सङ्कुले युद्धे २कलिद्रुमे मेदि० ३व्याकुलयुक्ते न० त्रिका०। “बभूव युद्धं तुमुलं जयैषिणोः” रघुः ४सङ्कुलमात्रे त्रि०। “उभयोरपि पार्श्ववर्त्तिनां तुमुलेनार्त्तरवेण वेजिताः” रघुः

**तुम्ब** पुंस्त्री०तुम्बति रुचिं तुबि–अर्द्दने अच्। १अलाबाम् भरतः। २इङ्गुदफलायाम्, राजनि०। ३आमलक्यां, ४गवि च स्त्री। स्वार्थे क तत्रार्थे शब्दरत्ना०। स्त्रीगव्यां अलाव्वां स्त्री त्रिका०। टाप्।

**तुम्बर** न०तुम्बं तदाकारं राति–रा आदाने क। (तानपूरा) १वाद्यभेदे तुम्बरचक्रम्। २तुम्बुरुगन्धर्वे च।

**तुम्बरचक्र** न० नरपतिजयचर्य्योक्ते चक्रभेदे चक्रशब्दे २८२४ पृ० दृश्यम्।

**तुम्बरु** पु० गन्धर्वभेदे। “सुप्रिया चातिबाहुश्च विख्यातौ च हाहाहूहूः। तुम्बरुश्चेति चत्वारः स्मृता गन्धर्वसत्तमाः” भा० आ० ६५ अ०।

**तुम्ब(ष)वन** न० देशभेदे स च देशः वृ० सं० दक्षिणस्यामुक्तः “अथ दक्षिणेन लङ्कोज्जयिकमे तुम्ब(ष)वनकार्मणेयक या-म्योदधितापसाश्रमा ऋषिकाः” १४ अ०।

**तुम्बि(म्बी)** स्त्री तबि–इन्। १अलाबवां (लाउ) शब्दरत्ना० वा ङीप् तत्रार्थे अमरः। “तुम्बी गोमांसतुल्या स्यात्” ति० त० नवम्यां तद्भक्षणनिषेधः। स्वार्थे क। तुम्बिका तत्रार्थे कटुतुम्ब्यां च राजनि०।

**तुम्बिनी** तुबि–णिनि ङीप्। कटुतुम्ब्यां राजनि०।

**तुम्बिपुष्प** न० तुम्बेरिव पुष्पमस्याः। लताम्बुजे हारा० ६त०। अलाबुपुष्पे च।

**तुम्बुक** न० तुबि उक। अलाबूफले उज्ज्वलदत्तः।

**तुम्बुर** पु० विन्ध्यपर्वतस्थे जातिभेदे। “ये चान्ये विन्ध्यनिल-यास्तु(म्बु)म्बुरास्तुम्बुरास्तथा” हरिवं०५अ०। [मेदि०।

**तुम्बुरी** स्त्री तुबि+बा०उर गौरा०ङीप् ।१धन्यां २धन्याके च

**तुम्बुरु** पु० १गन्धर्वभेदे जटा०। २अर्हदुपासकभेदे हेम०। “गन्धर्वैः सहितः श्रीमान् प्रागायत च तुम्बुरुः” भा० आ० १२२अ०।३वृक्षभेदे। “तुम्बुरुः सौरभः सौरोवनजः सानुजोऽन्धकः। तुम्बरु प्रथितं तिक्तं कटु पाकेऽपि तत् कटु। रूक्षोष्णं दीपनं तीक्ष्णं रुच्यं लघु विदाहि च। वातश्लेष्माक्षिकर्णौष्ठशिरोरुक्गुरुतानमीन्। कुष्ठशूला रुचिश्वासप्लीहकृत्क्षाणि नाशयेत्” भावप्र०।

**तुम्र** त्रि०तुम–प्रेरणे आहनने च रक्।१प्रेरके २हिंसके च “सत्राहणं दाधृषिं तुम्रमिन्द्रम्” ऋ० ४।१७।८। “तुम्रं प्रेरकम्” भा० “आगत्या तुम्रो वृषभो मरुत्वान्” ऋ० १।५०।१। तुम्रः आहन्ता तुमिराहननार्थः” भा०।

**तुर** त्वरणे जुहो० पर० सक० सेट्। तुतोर्त्ति अतोरीत्। तुतोर। वैदिकोऽयम् धातुः। “अपामिवेदूर्मयस्तर्तुराणाः” ऋ०६।४७।३। ताच्छील्ये चानश्। अभ्यासस्यातोऽत्त्वं च “मंहिष्ठे तुरतस्तुरस्य” ऋ०६।१८।४। “अर्को वा यत्तुरते” तै० सं०२।२।१२।४। वेदे गणव्यत्ययः पदव्यत्ययश्च। अस्मादन्त-चुरादित्वमपि। तुरयति।“तुरयन्तु जिग्यः” ऋ०४।२८।७।

**तुर** त्रि० तुर–क। वेगवति।“प्र तव्यसो नम उक्तिं तुरस्या-हम्” ऋ० ५।४३।६ “नहि त्वा शूरो न तुरो न धृ०

न्तु न" ऋ०६।२५।५। घञर्थे भावे क वा।२वेगे तुरगः।

**तुरग** पुंस्त्री तुरेण वेगेन गच्छति गम–ड। घोटके अमरः स्त्रियां जातित्वात् ङीष्।"तुरगशताकुलस्य परमेकतुरङ्गजन्मनः"। "उच्चकैर्जग्मुः तुरगास्तदीयः" माघः २चित्ते मेदिनिः। मुग्धबोधे तुरां वेगं गच्छतीति वाक्यम्।

**तुरगगन्धा** स्त्री तुरगस्येव गन्धोऽस्याः। अश्वगन्धायां राजनि० ६त०। अश्वस्यगन्धे पु०। तुरङ्गगन्धादयोऽप्यत्र रत्नमा०।

**तुरगदानव** ६० तुरगाकारो दानवः शा०त०। केशिदानवे। "यस्यास्ते स हि दुष्टात्मा केशी तुरगदानवः" "हतं तुरगदैत्येन सर्वान् गोपान् जिघांसता" हरिवं० ८१अ०।

**तुरगब्रह्मचर्य्य** न० तुरगस्येव ब्रह्मचर्य्यम्। स्त्रिया अलाभे तत्त्वागरूपे व्रतभेदे त्रिका०।[संगीतदा० उक्ते तालभेदे।

**तुरगलीलक** पु० "द्रुतं द्वयं विरामान्तं लघुस्तुरगलीलके"

**तुरगातु** त्रि० तुरेण गातुः गम–वेदे वा० डातु। १त्वरया गमनकारके।२तूर्णगमने च "अनश्वो जे तुरगातु जीवमेजद्ध्रुवम्" ऋ० १।१६४।३०। "तुरगातु स्वव्यापाराय गमनम्" भा०।

**तुरगानन** पु०तुरगस्याननमिवाननमस्य। १किन्नरभेदे तुरङ्गवदने। देशभेदे स च देशः वृ० सं० १४ अ० उत्तरस्यामुक्तः। "उत्तरतः कैलासः" इत्युपक्रमे "त्रिगर्त्ततुरगाननाश्वमुखाः"।

**तुरगिन्** त्रि० तुरगो वाहनत्वेनास्त्यस्य इनि। अश्वारोहिणि हे मच०। तुरङ्गिन् प्रभृतयोऽप्यत्र "तुरङ्गिभिर्यत्ननिरुद्धवेगाः" माघः।

**तुरगी** स्त्री तुरगस्यगन्धोऽस्त्यस्या अच् गौरा०ङीष्। १अश्वगन्धायाम् मेदि०। तुरग+जातौ ङीष्।२तुरगजातिस्त्रियाञ्च।

**तुरङ्ग** पुंस्त्री० तुरेण गच्छति गम–ख मुम् वा डिच्च।१घोटके स्त्रियां जातित्वात् ङीष्। २चित्ते न० शब्दरत्ना०। "नियोज्य तं होमतुरङ्गरक्षणे" रघुः। तुरगशब्दे उदा०।

**तुरङ्गक** पु० तुरङ्ग इव कायति कै–क। १हस्तिघोषावृक्षे रत्नमाला०। स्वार्थे क।२घोटके।[महिषघ्नां राजनि०।

**तुरङ्गद्विषणी** स्त्री तुरङ्गोद्विष्यतेऽनया वा० क्यु–ङीप्।

**तुरङ्गप्रिय** पु० ६त०। यवे राजनि०।

**तुरङ्गम** पुंस्त्री०तुरं गच्छति गम–खच् मुम्। १घोटके अमरः स्त्रियां जातित्वात् ङीष्। "अवेहि मां प्रीतमृते तुरङ्गमात्" रघुः।"रसातलं संक्रमिते तुरङ्गमे" रघुः।

**तुरङ्गवक्त्र** पु० तुरङ्गस्येव वक्त्रमस्य। अश्वाकारमुखे किन्नरे जटाधरः तुरङ्गवदनादयोऽप्यत्र अमरहेमचन्द्रौ।

**तुरङ्गारि** पु० ६त० सेवनेऽश्वनाशके १करवीरे वृक्षे, जात्या तद्वद्वैरिणि २महिषे च रत्नमा०। [लतायाम् राजनि०।

**तुरङ्गिका** स्त्री तुरङ्गः तदाकारोऽस्त्यस्याः ठन्। देवदाली-

**तुरङ्गी** स्त्री तुरङ्गस्तद्गन्धोऽस्त्यस्याः अच् गौरा०ङीष्।१अश्वगन्धायां रत्नमा० तुरङ्ग+जातौ ङीष्।२घोटकजातिस्त्रियाञ्च। [ घी(ग्री)त्।

**तुरण** त्वरायां कण्ड्वा० पर० अक० सेट्। तुरण्यति अतुर-

**तुरण** न० जु० तुर–वा० भावे क्यु। क्षिप्रगमने "तुरेतस्तुरणे तुरण्यु:" ऋ०१।१२१।५। "तुरणे क्षिप्रगमने" भा०।

**तुरण्य** पु०तरण्य--कण्ड्वा०भावे घञ्। त्वरायाम्।"उपस्तुरण्यत्" ऋ० ४।४०।२। "तुरण्यग्रसदुत्वरया सीदतीति" भा०।

**तुरण्यु** त्रि०कण्ड्वा०तरण्य–उन्। त्वरायुक्ते।"तुभ्यं शुक्रास स्तुरण्यवः" ऋ०१।१३४।५।"तुरण्यवः त्वरायुक्ताः"भा०

**तुरम्** अव्य० अद० चु० तुर–वा० अमु। त्वरायाम्। "तुरं यतीषु तुरयन्नृजिप्यः" ऋ० ४।३८।७।

**तुरस्** न० अद० चुरा० तुर–असुन्। त्वरायाम्। "आयसस्तुरसे वे" १०।८६।८।

**तुरायण** न० तुर–क तस्यायनं "पूर्वपदात् संज्ञायाम्" पा० णत्वम्। १यज्ञभेदे सि०कौ०।२असङ्गे अमरः त्वरितस्य हि गमनमसङ्गवत्त्वरतीति तस्य तथात्वम्। ३व्रतभेदे "तुरायणं वैशाखशुक्लपञ्चम्याम्" "चैत्रस्य वा" कात्या० २४।८।१।२। "तुरायणं सत्त्रनाम" कर्कः तद्विधानं तत्रैव उत्तरतो दृश्यम्। "अत ऊर्द्धमिष्ट्ययनानि" आ० श्रौ० २।१४।१। उपक्रमे। "सांवत्सरिकाणि" २सू०। "इष्ट्ययनानि संवत्सरेण संवत्सरैर्वा साध्यानि" नारा०। तुरायणम् ४सू०। तद्विहितं इष्टिभिरयनं "तुरायणं हि व्रतमयष्टव्यमकृधनोऽकरवं लिङ्गतोऽवदान्" भा० आनु०१०२ अ०। तुरायणं यज्ञभेदमावर्त्तयति ठञ्। तौरायणिक तद्यज्ञकारके।

**तुरासाह्** पु० तुरं त्वरितं साहयति अभिभवति चु० साहेः क्विप् पूर्वपददीर्घः। १इन्द्रे अमरः अस्य हलादौ सुपि हस्य ढत्वे षत्वम्। तुराषाट्–अजादौ तु न षत्वं तुरासाहमित्यादि "तुरासाहं पुरोधाय धाम स्वायम्भुवं ययुः" कुमा०। "कालेनारिवधात् प्रीतः तुराषाडिव शार्ङ्गिणम्" रघुः"तुराषाट् विश्वमूर्त्ते सुरायज!"हरिवं० २५८ अ०। इन्द्रसुतौ।

**तुरि(री)** स्त्री तुर–इन् "इगुधात् कित्" उणा° किच्च वा ङीप्। तन्तुवायस्य काष्ठादिनिर्मिते वयनसाधने (माकु) द्रव्ये "तद्भटचातुरीतुरीति"नैष°तुरीतन्तुसंयोगः जगदीशः २त्वरायुक्तमात्रे। "त्वचा न्टपतीव तुर्य्यै" ऋ°१०।१०६। "तुर्य्यै त्वरमाणायै संभ्रमवत्यै जनतायै" भा°।

**तुरीप** त्रि° तूर्णमाप्नोति व्याप्नोति तूर्ण+आप–क पृषो°। तूर्णं व्यापके। "त्वष्टा तुष्टा तुरीपोऽद्भुत इन्द्राग्नी पुष्टिवर्द्धनी" यजु° २१।२०। तुरीपः तूर्णमाप्नोति तुरीपः" वेददी°। "तन्नस्तुरीपमद्भुतम्" १।१४२।१ "तुरीपं तूर्णं व्यापि" भा° मुद्रितपुस्तके तुरीयमिति पाठः मुद्राद्दोषात् भाष्यव्याख्यादर्शनात् तुरीपपाठस्यैवोचितत्वात्।[अतुरीयीत्।

**तुरीय** गतौ म्वा°सक°सेट् गतिकर्म्मसु निघण्टुः। तुरीयति

**तुरीय** त्रि° तुरीय–अच् चतुर्णां पूरणः चतुर्+छ आद्यलोपश्च। १गतियुक्ते २चतुर्णां पूरणे च। ३तारके। "तनस्तुरीयमध पोषयित्नु:" ऋ°२।४।८। "तुरीयं तारकम्" भा°। "गुहा त्रीणि निहितानेङ्गयन्ति" "तुरीयं वाचो मनुष्या वदन्ति" ऋ°१।१६४।४५। अस्यार्थः भाष्ये बहुधा मतभेदेन दर्शितः किन्तु वैखरीरूपा वाक् चतुर्थीति निष्कृष्टार्थः तथा हि

"परा पश्यन्ती मध्यमा वैखरीति चत्वारि। एकैव नादात्मिका वाक् मूलाधारादुदिता सती परेत्युच्यते। नादस्य च सूक्ष्मत्वेन दुर्निरूपत्वात् सैव हृदयगामिनी पश्यन्तीत्युच्यते योगिभिर्द्रष्टुं शक्यत्वात्। सैव बुद्धिं गता विवक्षां प्राप्ता मध्यमेत्युच्यते मध्ये हृदयाख्ये उदीयमानत्वात् मध्यमायाः। अथ यदा सैव वक्त्रे स्थिता तात्वोष्ठादिव्यापारेण बहिर्निर्गच्छति तदा वैखरीत्युच्यते एवं चत्वारि वाचः पदानि परिमितानि। मनीषिणो मनसः स्वामिनः स्वाधीनमनस्का ब्राह्मणा वाचोऽस्य शब्दब्रह्मणोऽधिगन्तारो योगिनः पदानि चत्वारि पदानि विदुः। जानन्ति। तेषु मध्ये त्रीणि परादीनि गुहानिहितानि हृदयान्तर्वर्त्तित्वात्। तुरीयं तु पदं वैखरीसंज्ञकं मनुष्याः सर्वे वदन्ति। ४सर्वाधारभूतेऽनुपहितचैतन्ये परब्रह्मणि "घनतज्जलतदवच्छिन्नाकाशयोर्जलाशयजलतद्गतप्रतिविम्बाकाशयोर्वा आधारानुपहिताकाशवदनयोरज्ञानतदुपहितचैतन्ययोराधारभूतं यदनुपहितचैतन्यं तत् तुरीयमित्युच्यते"वेदान्तसा°। आधारश्चासौ अनुपहितश्चासौ आकाशश्च स तथा तद्वदिति यावत्। यद्यप्याकाशस्य घनाश्रयत्वं जलाश्रयत्वं वा नास्ति तदनारम्भकत्वात् तथाप्याकाशमन्तरेण तयोः स्थित्यनुपपत्तेस्तदाधारत्ववचनमिति द्रष्टव्यम्। अस्य चैतन्यस्य तुरीयत्वं विश्वतैजसप्राज्ञापेक्षया द्रष्टव्यम्। "शिवमद्वैतं तुरीयं मन्यन्ते" वेदान्त सारधृता श्रुतिः

"तुरीयो यज्ञो यत्र हव्यमिति"। यजु°१७। ५७ तुरीयः चतुर्थः "आदौ यजुर्जपः ततो होतुः ऋचां पठनम् ब्रह्मणोऽप्रतिरथजपः एवं च तुरीयो होमः तथा च श्रुतिः "अध्वर्युः पुरस्ताद्यजूंषि जपति होता पश्चादृचोऽन्वाह ब्रह्मा दक्षिणतोऽप्रतिरथं जपत्येष एव तुरीयो यज्ञ" इति वेददी°। "तुरीयः ब्रह्महत्यायाः क्षत्रियस्य बधे स्थितः" मनुः स्वार्थे क। तत्रार्थे। "भगिन्यश्च निजादंशात् दत्त्वांशन्तु तुरीयकम्" याज्ञ°।

**तुरीयवर्ण** पु° कर्म°। शूद्रे हला°।

**तुरुष्क** पु° तुर–उसिक् स्वार्थे क इणुसोरिति षत्वम्। १गन्धद्रव्यभेदे (शिलारस) अमरः।२म्लेच्छजातिभेदे मेदि° ३पारस्यभाषाभेदे च हेमच° ४श्रीवासवृक्षे विश्वः।

**तुर्फरी** त्रि° तृफ–हिंसायाम् बा° अरि। हन्तरि।
"सृण्येव जर्भरी तुर्फरीतू नैतोशेव तुर्फरी पर्फरीका" ऋ° १०।१०६।६ "तृफ तृम्फ हिंसायाम्। अस्मात् जन्तस्य तुर्फरीतारावित्यस्य पृषोदरादित्वाद्वर्णविकारः। यद्वास्मादुणादिकोऽरीतुप्रत्ययः। उक्तं चात्र नि° १३।५। "द्विविधा सृणिर्भवति भर्त्ता च हन्ता च तथा श्विनौ चापि भर्त्तारौ जर्भरी भर्त्तारावित्यर्थस्तुर्फरीतू हन्तारावित्यादि। जर्भरिशब्दे ३०६२ पृ° दृश्यम्।

**तुर्फरीतु** त्रि° तृफ–बा° अरीतु पृषो°। हन्तरि तुर्फरीशब्दे दृश्यम्।

**तुर्य्य** त्रि° चतुर्+पूरणे यत् च भागस्य लोपः। चतुर्थे।
"एक एवेश्वरस्तुर्य्यः भगवान् स्वाश्रयः परः"भाग°६।५।१०।
"तुर्य्यशब्दस्य वा एकदेशिसमासः तुर्य्यं भिक्षायाः तुर्य्यभिक्षा पक्षे षष्ठीसमासः भिक्षातुर्य्यम्।

**तुर्य्यगोल** पु° सि°। "दलीकृतं चक्रमुशन्ति चापं कोदण्डखण्डं खलु तुर्य्यगोलम्" सि°उक्ते कालज्ञानार्थे यन्त्रभेदे

**तुर्य्यवाह्** पु° तुर्य्यं चतुर्थं वर्षं वहति वह–ण्वि। चतुर्वर्षे पशौ। "तुर्य्यवाट् वयोऽनुष्टुप्छन्दः" यजु°१४।१८ "तुर्य्यवाट् तुर्य्यं चतुर्थं वर्षं वहतीति पशुः अनुष्टुप्छन्दो भूत्वोत्क्रान्तं तुर्य्यवाहं पशुं प्रजापतिर्वयसाऽयहीत्। तुर्य्यवाहं वयसाप्नोदनुष्टुप्भूत्वा तुर्य्यवाहुच्चक्रमुरिति" शत° ब्रा° ८।२।४।१५ श्रुतेः" वेददी°।

**तुर्व** हिंसायां भ्वा० पर०सक०सेट् । तुर्वति अतुर्वीत् । तुतूर्वतुः "हत्वं यादिन्द्र तूर्वसि" ऋ० ८।८८।६ । "तूर्वणे सहस्तच्छ्रेष्ठमश्विनोरवः" ऋ० ८।६।१२ । तूर्वणे । हिंसने" भा० ।

**तुर्वणि** त्रि० तूर्वं वनुते वन संभक्तौ इन् पृषो० । तूर्ण-संभक्तरि "तुर्वणिरहा विश्वेव तुर्वणिः" ऋ०१।१२०।६ । "तुर्वणिस्तूर्णवनिः क्षिप्रं संभक्ता तुर्वणिस्तूर्णवनिरिति निरुक्तम् (६।१४।) भा० ।

**तुर्वश** पु० नृपभेदे । "त्वमाविथ नर्यं तुर्वशं यदुम्" ऋ० १।५४।६ । "नर्यादीन् हि राज्ञः" भा० । "उत त्या तुर्वशायदू अस्नातारा शचीपतिः" ऋ० ४।३०।१७।

**तुर्वशे** अव्य० अन्तिके निकटे निघण्टुः ।

**तुर्वसु** पु० ययातिनृपपुत्रभेदे । "अन्ववायात् प्रजां सर्वां ययातिरपराजितः । तस्य पुत्रा महेष्वासाः सर्वे समुदिता गुणैः । देवयान्यां महाराज ! शर्म्मिष्ठायाश्च जज्ञिरे । देवयान्यामजायेतां यदुस्तुर्वसुरेव च । द्रुह्युश्चानुश्च पूरुश्च शर्म्मिष्ठायां प्रजज्ञिरे" भा०आ०७५ अ० तस्मै ययातिशापकथा यथा । "तुर्वसो ! प्रतिपद्यस्व पाप्मानं जरया सह । यौवनेन चरेयं वै विषयांस्तव पुत्रक ! । पूर्णे वर्षसहस्रे तु पुनर्दास्यामि यौवनम् । स्वञ्चैव प्रतिपत्स्यामि पाप्मानं जरया सह । तुर्वसुरुवाच । न कामये जरां तात ! कामभोगप्रणाशिनीम् । बलरूपान्तकरणीं बुद्धिप्राणप्रणाशिनीम् । ययातिरुवाच । यत्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि । तस्मात् प्रजासमुच्छेदं तुर्वसो ! तव यास्यति । सङ्कीर्णाचारधर्म्मेषु प्रतिलोमचरेषु च । पिशिताशिषु चान्त्येषु मूढ ! राजा भविष्यसि । गुरुदारप्रसक्तेषु तिर्य्यग्योनिगतेषु च । पशुधर्म्मिषु पापेषु म्लेच्छेषु त्वं भविष्यसि" ८४ अ० । [ऋ०१।२६।१८

**तुर्वीति** पु० राजर्षिभेदे । "दृहद्रथं तुर्वीतिं दस्यवे सहः" ।

**तुल** उन्माने वा चुरा० उभ० पक्षे भ्वा० पर० सक० सेट् । तोलयति ते तोलति अतूतुलत् त । "पतिष्यति क्षितौ-भानुः पृथिवीं तोलयिष्यते" भट्टिः । तुलयतीति तु तुला-शब्दात् णिच् । "अन्तःसारं घनतुलयितुं नानिलः शक्ष्यति त्वाम्" "अन्तस्तोयं मणिमयभुवस्तुङ्गमभ्रंलिहाग्राः प्रासादास्त्वां घन ! तुलयितुमलं यत्र तैस्तैर्विशेषैः" मेघ० । 'तुलयति स्म विलोचनतारकाः" माघः । "नक्तन्दिनैस्तुलितनक्तिमभक्तिशोभाः" रघुः ।

उद्+उत्क्षिप्य तोलने । उत्तोलयति ।

**तुलभ** पु० तुरेण वेगेन भाति भा—ड रस्य लः । आयुधजीवीसंघभेदे । ततः दामन्या० स्वार्थे छ । तुलभीय तदर्थे ।

**तुलसारिणी** स्त्री तुरेण वेगेन सरति सृ—णिनि ङीप् । तूणे शब्दमा० ।

**तुलसी** स्त्री तुलां सादृश्यं स्यति सो—क गौरा० ङीष् शकन्ध्वा० । स्वनामख्याते वृक्षभेदे । "यस्या देव्यास्तुला नास्ति विश्वेषु चाखिलेषु च । तुलसी तेन विख्याता" शब्दार्थचि० देवीभाग० उक्तनिरुक्तेस्तस्यास्तथात्वम् । "तुलसी कटुका तिक्ता हृद्योष्णा दाहपित्तकृत् । दीपनी कुष्ठकृच्छ्रास्रपार्श्वरुक्कफवातजित् । शुक्ला कृष्णा च तुलसी गुणैस्तुल्या प्रकीर्त्तिता" भावप्र० तद्गुणा उक्ताः तुलस्यामाहात्म्यं यथा । "ब्रह्मोवाच । तुलस्याः शृणु माहात्म्यं पापघ्नं सर्वकामदम् । यत्पुरा विष्णुना प्रोक्तं तत्ते वक्ष्याम्यशेषतः । सम्प्राप्तं कार्त्तिकं दृष्ट्वा नियमेन जनार्दनः । पूजनीयो महद्भिश्च कोमलैस्तुलसीदलैः१ । दृष्टा२ स्पृष्टा३ तथा ध्याता४ कार्त्तिके नमिता५ऽर्च्चिता६ । रोपिता७ सेचिता८ नित्यं पापं हन्ति युगार्जितम् । अष्टधा तुलसी यैस्तु सेविता द्विजसत्तम ! । युगकोटिसहस्राणि ते वसन्ति हरेर्गृहे । रोपिता तुलसी यावत् कुरुते मूलविस्तृतिम् । तावद्युगसहस्राणि तनोति सुकृतं हरिः । तुलसीदलपुष्पाणि योदद्याद्धरये मुने ! । कार्त्तिके सकलं पापं सोऽत्र जन्मार्जितं दहेत् । रोपिता तुलसी यावत् वर्द्धते वसुधातले । तावत्कल्पसहस्राणि विष्णुलोके महीयते । यत्फलं सर्वपुष्पैश्च सर्वपत्रेण यत्फलम् । तुलस्यास्तद्दलार्द्धेन पुण्यं स्याद्विष्णुपूजने । तुलसीगन्धमादाय यत्र गच्छति मारुतः । दिशोदश पुनात्याशु भूतग्रामांश्चतुर्विधान् । तुलसीकाननोद्भूता छाया यत्र भवेन्मुने ! । तत्र श्राद्धं प्रदातव्यं पितॄणां तृप्तिहेतवे । तुलसीबीजनिकरो यस्मिन् पतति वै मुने ! । तत् स्थानं परमं ज्ञेयं पितॄणां प्रीतिवर्द्धनम् । यस्मिन् गृहे द्विजश्रेष्ठ ! तुलसीतलमृत्तिका । तत्रैव नोपसर्पन्ति भूतले यमकिङ्कराः । तुलसीमृत्तिकालिप्तो यदि प्राणान् परित्यजेत् । यमेन नेक्षितुं शक्तो मुक्तः पापशतैरपि । तुलसीमृत्तिकालिप्तं ललाटं यस्य दृश्यते । कुलं स्पृशति नो तस्य कलिर्मुनिवरोत्तम ! । यः कश्चित्तुलसीमूले कार्त्तिके केशवप्रियः । दीपं ददाति विप्रेन्द्र ! स लभेद्वैष्णवं पदम् । तुलसीकाननञ्चैव गृहे यस्यावतिष्ठते । तद्गृहं तीर्थभूतं हि नायान्ति यमकिङ्कराः ।

दर्शनं नर्मदायास्तु गङ्गास्नानं तथैव च । तुलसीवनसंसर्गं सममेतत्त्रयं स्मृतम् । रोपणात् पालनात् सेकाद्दर्शनात् स्पर्शनान्नृणाम् । तुलसी दहते पापं वाङ्मनःकायसञ्चितम् । तुलसीमञ्जरीभिर्यः कुर्य्याद्धरिहरार्च्चनम् । न स गर्भगृहं याति मुक्तिभागी भवेन्नरः । पुष्कराद्यानि तीर्थानि गङ्गाद्याः सरितस्तथा । वासुदेवादयो देवा वसन्ति तुलसीदले । तुलसीमञ्जरीयुक्तो यस्तु प्राणान् विमुञ्चति । यमोन वीक्षितुं शक्तो युक्तं पापशतैरपि” पाद्मोत्तरख० । “यत्रैकस्तुलसीवृक्षस्तिष्ठति द्विजसत्तम ! । तत्रैव त्रिदशाः सर्वे ब्रह्मविष्णुशिवादयः । केशवः पत्रमध्येषु पत्राग्रेषु प्रजापतिः । पत्रवृन्ते शिवस्तिष्ठेत् तुलस्याः सर्व्वदैव हि । लक्ष्मीः सरस्वती चैव गायत्री चण्डिका तथा । शची चान्या देवपत्न्यस्तत्पुष्पेषु वसन्ति वै । इन्द्रोऽग्निः शमनश्चैव नैर्ऋतो वरुणस्तथा । पवनश्च कुवेरश्च तच्छाखायां वसन्त्यमी । आदित्यादिग्रहाः सर्वे विश्वे देवाश्च सर्व्वदा । वसवो मनवश्चैव तथा देवर्षयोऽखिलाः । विद्याधराश्च गन्धर्वाः सिद्धाश्चाप्सरसस्तथा । तुलसीपत्रमाश्रित्य सर्व्वदा निवसन्ति वै । चिन्वन्ति तृणजातानि तुलसीमूलजानि वै । तद्देहस्था ब्रह्महत्यां सिनोति तत्क्षणाद्धरिः । ग्रीष्मकाले द्विजश्रेष्ठ ! सुगन्धैः शीतलैर्जलैः । तुलसीसेचनं कृत्वा नरो निर्वाणमाप्नुयात् । चन्द्रातपं वा छत्रं वा तुलस्यै यस्तु यच्छति । विशेषतः निदाघेषु स मुक्तः सर्व्वपातकैः । वैशाखेऽव्यतधाराभिरद्भिर्यस्तुलसीं जनः । सेचयेत् सोऽश्वमेधस्य फलं प्राप्नोति नित्यशः । कदाचित्तुलसीं दुग्धैः सेचयेद्यो नरोत्तमः । तस्य वेश्मनि विप्रर्षे ! लक्ष्मीर्भवति निश्चला । गोमयैस्तुलसीमूले यः कुर्य्यादनुलेपनम् । सम्मार्ज्जनञ्च कुरुते तस्य पुण्यफलं शृणु । रजांसि तस्य यावन्ति दूरीभूतानि जैमिने ! । तावत्कल्पसहस्राणि मोदते ब्रह्मणा सह । यद्धर्म्मकर्म्म कुरुते मनुजः पृथिव्यां नारायणप्रियतमां तुलसीं विना च । तत्सर्व्वमेव विफलं भवति द्विजेन्द्र ! पद्मेक्षणोऽपि न हि तुष्यति देवदेवः । यस्य स्यात्तुलसीपत्रं मुखे शिरसि कर्णयोः । मृत्युकाले द्विजश्रेष्ठ ! तत्र स्वामी न भास्करिः” पाद्मे क्रियायोगसारः । “स स्नातः सर्व्वतीर्थेषु सर्व्वयज्ञेषु दीक्षितः तुलसीपत्रतोये च योऽभिषेकं समाचरेत् । गवामयुतदानेन यत्फलं लभते नरः । तुलसीपत्रदानेन तत्फलं कार्त्तिके सति ! । तुलसीतोयकर्णिकां मृत्युकाले च यो लभेत् । रत्नयानं समारुह्य वैकुण्ठं स प्रयाति च । त्रिकालं तुलसीपत्रं शुष्कं पर्य्युषितं सति ! । श्राद्धे व्रते वा दाने वा प्रतिष्ठायां सुरार्च्चने । भूगतं तोयपतितं यद्दत्तं विष्णवे सति ! । शुद्धन्तु तुलसीपत्रं क्षालनादन्यकर्म्मणि” पार्व्वतीं प्रति शिववाक्यम् । तुलसीचयननिषेधकालो यथा । “पूर्णिमायाममायाञ्च द्वादश्यां रविसंक्रमे । तैलाभ्यङ्गे चास्नाते न मध्याह्ने निशि सन्ध्ययोः । अशौचेऽशुचिकाले च रात्रिवासान्वितेऽपि वा । तुलसीं ये च चिन्वन्ति ते छिन्दन्ति हरेः शिरः”। हरिभ० । तुलसीस्पर्शनेन मिथ्याप्रतिज्ञायां मिथ्याशपथे च दोषो यथा ।“तुलसीं स्वकरे कृत्वा स्वीकारं यो न रक्षति । स याति कालसूत्रञ्च यावच्चन्द्रदिवाकरौ । करोति मिथ्याशपथं तुलस्या यो हि मानवः । स याति कुम्भीपाकञ्च यावदिन्द्राश्चतुर्दश” ब्रह्मवैवर्त्ते प्रकृतिखण्डम् । तुलसीपत्रचयने मन्त्रो यथा । “मातस्तुलसि ! गोविन्दहृदयानन्दकारिणि ! । नारायणस्य पूजार्थं चिनोमि त्वां नमोऽस्तु ते । कुसुमैः पारिजाताद्यैः सुगन्धैरपि केशवः । त्वया विना नैव तृप्तिं चिनोमि त्वामतः शुभे ! । त्वया विना महाभागे ! समस्तं कर्म निष्फलम् । अतस्तुलसि ! देवि ! त्वां चिनोमि वरदा भव । चयनोद्भवदुःखं यद्देवि ! ते हृदि वर्त्तते । तत् क्षमस्व जगन्मातस्तुलसि ! त्वां नमाम्यहम् । कृताञ्जलिरिमान् मन्त्रान् पठित्वा वैष्णवो जनः । करतालत्रयं दत्त्वा चिनुयात्तुलसीदलम् । शनैः शनैस्तथाकारैश्चीयते तुलसीदलम् । यथा न कम्पते शाखा तुलस्या द्विजसत्तम ! । पत्राणां चयने विप्र ! भग्नशाखा यथा भवेत् । तथा हृदि व्यथा विष्णोर्दीयते तुलसीपतेः” । पाद्मे क्रियायोगसारः ।

तुलसीकाष्ठमालामाहात्म्यं यथा । “तुलसीकाष्ठनिर्माणमालां गृह्णाति यो नरः । पदेपदेऽश्वमेधानां लभते निश्चितं फलम्” ब्रह्मवैवर्त्ते प्रकृ० । “सात्त्वतैस्तुलसीकाष्ठमाला कुम्भसमुद्भवा । धार्य्या नित्यं प्रयत्नेन त्वेतद्भक्तस्य लक्षणम्” । हरिभक्तस्य तुलसीकुम्भकाष्ठसमुद्भवा । चिह्नार्थमात्मनो माला पुरा कृष्णेन दर्शिता” पाद्मोत्तरखण्डम् “काष्ठमालाधरं विप्रं यतिनं यानरोहिणम् । सद्यस्त्रां विधवां दृष्ट्वा सचेलं जलमाविशेत्” इति वचनस्य साकरत्वे तुलसीकाष्ठेतरकाष्ठविषयत्वमिति वैष्णवाः । स्मार्त्तास्तु विप्रेतरपरत्वं पाद्मोत्तरखण्डवाक्यस्य वर्णयन्ति । तन्मूलञ्च “तुलसीपत्रजातेन

माल्येन भव भूषितः। विप्र! त्वं न च तत्काष्ठमालां गलगतां कुरु” इति वाक्यमालोच्य तथा व्यवस्थापयन्ति। अन्ये तु विष्णुदीक्षाविहीनविप्रस्य तत्काष्ठमालाधारणनिषेधः। विधिस्तु वैष्णवस्येति वर्णयन्ति। गणेशपूजने तुलसीनिषेधो यथा तुलसीं प्रति गणेशवाक्यम् “पुष्पाणां सारभूता त्वं भविष्यसि मनोरमे!। कलांशेन महाभागे! स्वयं नारायणप्रिया। प्रिया त्वं सर्वदेवानां कृष्णस्य च विशेषतः। पूजा विमुक्तिदा नृणां मम त्याज्या च सर्वदा” ब्रह्मवैवर्त्ते गणेशखण्डम्। “अक्षतैर्नार्च्चयेद्विष्णुं न तुलस्या विनायकम्। न दूर्वया यजेद्दुर्गां धुस्तुरेण न भास्करम्” राघवभट्टधृतम्।

तुलसीग्रहणविधिः वायुपुराणे। “अस्नात्वा तुलसीं छित्त्वा यः पूजां कुरुते नरः। सोऽपराधी भवेत् सत्यं तत् सर्वं निष्फलं भवेत्”। तच्चयने मन्त्रान्तरं स्कान्दे “तुलस्यमृतजन्मासि सदा त्वं केशवप्रिया। केशवार्थं चिनोमि त्वां वरदा भव शोभने”। “त्वदङ्गसम्भवैः पत्रैः पूजयामि यथा हरिम्। तथा कुरु पवित्राङ्गि! कलौ मलविनाशिनि”। गारुड़े च। मोक्षैकहेतो! धरणीप्रशस्ते। विष्णोः समस्तस्य गुरोः प्रियेति। आराधनार्थं वरमञ्जरीकं लुनामि पत्रं तुलसि! क्षमस्व। इत्युक्त्वा तुलसीं नत्वा चित्वा दक्षिणपाणिना। पत्राण्येकैकशोऽन्यस्येत् सत्पात्रे मञ्जरीरपि। तन्माहात्म्यञ्च स्कान्दे। “मन्त्रेणानेन यः कुर्यात् गृहीत्वा तुलसीदलम्। पूजनं वासुदेवस्य लक्षकोटिफलं लभेत्”। किञ्च “शालग्रामशिलार्थं प्रत्यहं तुलसीक्षितौ। तुलसीं ये विचिन्वन्ति धन्यास्ते करपल्लवाः”। इति। संक्रान्त्यादौ निषिद्धेऽपि तुलस्यवचयः स्मृतौ। परं श्रीविष्णुभक्तैस्तु द्वादश्यामेव नेष्यते” हरिभ० तुलस्यवचयनिषेधकालः। विष्णुधर्म्मोत्तरे “नोच्छिन्द्यात् तुलसीं विप्रा द्वादश्यां वैष्णवः क्वचित्”। गारुड़े “भानुवारं विना दूर्वां तुलसीं द्वादशीं विना। जीवितस्याविनाशाय न विचिन्वीत धर्म्मवित्”। पाद्मे च श्रीकृष्णसत्यासंवादीयकार्त्तिकमाहात्म्ये “द्वादश्यां तुलसीपत्रं धात्रीपत्रञ्च कार्त्तिके। लुनाति स नरो गच्छेन्निरयानतिगर्हितान्”। अतएवोक्तम्। “देवार्थे तुलसीच्छेदो होमार्थे समिधान्तथा। इन्दुक्षये न दुष्येत गवार्थे तु तृणस्य च”। “एवं कृत्वा महापूजामङ्गोपाङ्गादिकं प्रभोः। क्रमाद् यथा सम्प्रदायं तत्तत् स्थानेषु पूजयेत्”। हरिभक्तिविलासे ७विलासे।

तुलसीविवाहप्रतिष्ठाविधिः “श्रीवशिष्ठ उवाच। विवाहं सम्प्रवक्ष्यामि तुलस्यास्तु यथाविधि। यथोक्तं पञ्चरात्रे वै ब्रह्मणा भाषितं पुरा”। “आदावेव वने वाथ तुलसीं स्वगृहेऽपि वा। वर्षत्रयेण पूर्णेन ततो यजनमारभेत्। सौम्यायने प्रकर्त्तव्यं गुरुशुक्रोदये तथा। अथ वा कार्त्तिके मासि भीष्मपञ्चदिनेषु च। वैवाहिकेषु ऋक्षेषु पूर्णिमायां विशेषतः। मण्डपं कारयेत्तत्र कुण्डवेदी तथा पुनः। शान्तिकञ्च प्रकर्त्तव्यं मातृणां स्थापनं तथा। मातृश्राद्धादिकं सर्वं विवाहवत् समाचरेत्। ब्राह्मणांश्च शुचिः स्नातान् वेदवेदाङ्गपारगान्। ब्रह्मा चादेशकश्चैव चत्वारश्च तथर्त्विजः। वैष्णवेन विधानेन वर्द्धनीकलसं यजेत्। मण्डपं कारयेत्तत्र लक्ष्मीनारायणं शुभम्। ग्रहयज्ञं पुरः कृत्वा मातृणां यजनं तथा। कृत्वा नान्दीमुखं श्राद्धं सौवर्णं स्थापयेद्धरिम्। कृत्वारोप्य च तुलसीं लग्ने त्वस्तमिते रवौ। वासःशतेन मन्त्रेण वस्त्रयुग्मेन वेष्टयेत्। यदा वध्नेति मन्त्रेण कङ्कणं पाणिपल्लवे। कोऽदादिति च मन्त्रेण पाणिग्राहो विधीयते। ततः कुण्डे समागत्य आचार्य्यः सह सा द्विजैः। आचार्य्यो वेदिकाकुण्डे जुहुयाच्च नवाहुतीः। विवाहकर्म्मवत् सर्वं वैष्णवं देशिकोत्तमैः। कर्त्तव्यञ्च ततो होमोविशेषाद्विधिपूर्व्वकम्”। “यजमानः सपत्नीको ह्यन्ये ये गोत्रबान्धवाः। प्रदक्षिणाश्च कर्त्तव्याश्चत्वारो विष्णुना सह। तुलस्याः पाणिग्रहणे वेदिकायां विभावसौ। शातकुम्भं जपेत् सूक्तं पावमानीं विशेषतः। तथैव शान्तिकाध्यायम्। नवसूक्तीं तथैव च। जीवसूक्तं पुनर्जप्त्वा तथा वैष्णवसंहिताम्। शङ्खभल्लरिनिर्घोषैर्भेरीतूर्य्यस्य निस्वनैः। गायन्ति मङ्गलान्नार्य्यो माङ्गल्यं विधिमाचरेत्। दद्यात् पूर्णाहुतिं पश्चादभिषेकविधिं ततः। ब्रह्मणे वृषभं दद्यादाचार्य्यं परिधाप्य च। गां पटञ्च तथा शय्यामाचार्य्याय प्रदापयेत्। ऋत्विग्भ्यो दापयेद् वस्त्राण्येषां दद्याच्च दक्षिणाम्। एवं प्रतिष्ठिता देवी विष्णुना च समर्च्चिता आजन्मोपार्जितं पापं दर्शनेन प्रणश्यति। रोपयेत्तुलसीं यस्तु सेचयेच्च प्रयत्नतः। प्रतिष्ठाप्य यथोक्तेन विष्णुना सह मानवः। स मोक्षं लभते जन्तुर्विष्णुलोकं तथा धनम्। प्राप्नोति विपुलान् भोगान् विष्णुना सह

मोदते" हरिभक्तिविलासे। "तुलसी घ्राणमात्रेण रुष्टा भवति सुन्दरी" तन्त्रसा०। [अण्। बर्व्वर्य्यां (बावुइ) रत्नमा०

**तुलसीद्वेषा** स्त्री तुलसीं द्वेष्टि तुल्यगन्धत्वात् स्पर्द्धते द्विष–

**तुला** स्त्री तुल–भिदा० अङ्। १सादृश्ये २माने च रत्नमाला। ३दारुबन्धनार्थपीठिकायां ४पलशतमाने ५भाण्डे च मेदि०। राशिचक्रस्य द्वादशधा विभक्तस्य ६सप्तमे राशौ स च ३६० अंशात्मकराशिचक्रस्य १८१ अंशावधि २१० पर्य्यन्तः चित्राशेषार्द्धस्वातिविशाखान्तिमपादत्रयात्मकः। अस्याधिष्ठाता तुलाधरः पुरुषः। अस्य योगतारादिकम् अश्लेषाशब्दे उक्तनक्षत्रशब्दे च विशेष उक्तः। "तौलीना कथितस्तुलाधटधरः" जातकपद्धतिः। "पुमांश्चरस्त्रितत्त्वमोदयोऽसितः प्रत्यक् मरुत् स्निग्धरवोऽथ वन्यः। स्वल्पप्रजासङ्गमभूद् उग्रस्तुला द्युशीर्ष्यो द्विपदः समानः" जातकपद्धत्युक्तस्वभावः। वादिप्रतिवादिनोर्लौकिकप्रमाणाभावे दिव्यपरीक्षया अर्थनिर्णये कर्त्तव्ये धटापरनामके ७परीक्षाभेदे। सा च परीक्षा दिव्यशब्दोक्तसामान्यविधिपूर्वकं सर्वं कृत्वा कर्त्तव्या। तद्विधिश्च वीरमित्रोदये दर्शितो यथा

पितामहः "विशालासुच्छ्रितां शुभ्रां धटशालान्तु कारयेत्। यत्रस्थो नोपहन्येत श्वभिश्चाण्डालवायसैः। कपाटबीजसंयुक्तां परिचारकरक्षिताम्। पानीयादिसमायुक्तामस्पून्यां कारयेन्नृपः" इति। बीजानि यवव्रीह्यादीनि। धटार्थानि काष्ठानि नारद आह "खादिरं कारयेत्तत्र निर्व्रणं शुष्कवर्जितम्। शांशपन्तदभावे वा सालं वा कोटरैर्विना। "अर्जुनस्तिन्दुकी सारस्त्रिणिशो रक्तचन्दनम्। एवंविधानि काष्ठानि धटार्थं परिकल्पयेत्। अर्जुनस्तिलकः शाकस्त्रिणिशो रक्तचन्दनम्" इति। माधवीये पाठः। शांशपमिति शिंशपावृक्षसम्बन्धि। "देविकाशिंशपेति" पाणिनिकृदर्णादिकारस्याकारः। एवंविधानीत्यन्यस्याप्योदुम्बरादेर्यज्ञियस्य काष्ठस्य ससारस्य ग्रहणम्"। अतएव पितामहः "छित्त्वा तु यज्ञियं काष्ठं यूपवन्मन्त्रपूर्वकम्। प्रणम्य लोकपालेभ्यस्तुला कार्य्या मनीषिभिः। मन्त्रः सौम्यो वानस्पत्यः छेदने जप्य एव चेति"। यूपवन्मन्त्रपूर्वकमित्यनेन ओँ ओषधे त्रायस्वैनमित्यादिच्छेदनमन्त्रप्रयोगादिकमुक्तम्। वानस्पत्यः "वनस्पते शतवल्शो विरोहेति" मन्त्रः। छेदने कृते इति शेषः। वानस्पत्यच्छेदनानन्तरं प्रयोगे यूपवदित्यतिदेशात्सिद्धेऽपि पुनर्विधानम् औपदेशिकस्य सोमदैवत्येनातिदेशिकस्य तस्य बाधनिवृत्त्यर्थम्। अत्र जप्य एव चेति चशब्दस्य वानस्पत्येत्यनेनान्वयात् तस्य च समुच्चयद्योतकत्वात्समुच्चय इति केचित् सौम्यवानस्पत्ययोरेकार्थत्वात्। "तुल्यार्थास्तु विकल्पेरन्नित्यनेन "माषेणैव व्रीहियवादिभ्यः" इत्यपरे। पितामहः "प्राङ्मुखो निश्चलः कार्य्यः शुचौ देशे धटः सदा। इन्द्रस्थाने सभायां वा धर्मस्थाने चतुष्पथे" इति। धटनिर्माणप्रकारन्तत्प्रमाणञ्चाह पितामहः, "चतुर्हस्ता तुला कार्य्या पादौ कार्य्यौ तथाविधौ। अन्तरन्तु तयोर्हस्तौ भवेदध्यर्द्धमेव चेति"। पादौ तुलाधारकाक्षनामककाष्ठधारणाख्यौ स्तम्भौ तथाविधौ चतुर्हस्तौ। अन्तरं मध्यम्। अध्यर्द्धं सार्द्धहस्तद्वयम्। अक्षकाष्ठस्य प्रमाणम्पादस्तम्भमध्यप्रमाणाभिधानेनैव सूचितमिति न पृथगुपन्यस्तम्। अन्तरालप्रमाणपर्य्यालोचनया ततः किञ्चिदधिकमक्षकाष्ठं कर्त्तव्यम्। पादस्तम्भयोर्मस्तकप्रदेशाद्यथा वहिर्न निःसरति तथा अक्षकाष्ठङ्कार्य्यमिति स्मृतिचन्द्रिकायाम्। अत्र निखातभागपरित्यागेन पादस्तम्भयोश्चतुर्हस्तत्वाभिधानं ज्ञेयम्। अतएव पितामहः "हस्तद्वयं निखेयन्तु प्रोक्तं सुखण्डकयोर्द्वयोः। षड्हस्तन्तु तयोः प्रोक्तं प्रमाणं परिमाणतः" इति सुखण्डकौ पादस्तम्भौ। हस्तप्रमाणन्दर्शितं कालिकापुराणे "यवानान्तण्डुलैरेकमङ्गुलञ्चाष्टभिर्भवेत्। अदीर्घयोजितैर्हस्तश्चतुर्विंशतिरङ्गुलैः"। इति स्मृत्यन्तरेऽपि "तिर्य्यग्यवोदराण्यष्टावूर्द्ध्वा वा व्रीहयस्त्रयः। प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुलः"। शारदातिलके "चतुर्विंशत्यङ्गुलाढ्यं हस्तन्तन्त्वविदो विदुः। यवानामष्टभिः क्लृप्तं मानाङ्गुलमितीरितमिति"। हस्तो वितस्तिद्वितयं चतुर्विंशत्यङ्गुलो हस्त इत्यर्थः। यवानां यवतण्डुलानामित्यर्थः। "यवानान्तण्डुलैरिति" स्मरणात्। तुलाया विशेषान्तरमाह पितामहः "चतुरस्रा तुला कार्य्या दृढा ऋज्वी तथैव च। कटकानि च देयानि त्रिषु स्थानेषु यत्नतः" इति। कटकानि लोहमयानि वलयानि। त्रिषु स्थानेषु अन्त्ययोर्मध्ये। कटकग्रहणं लोहकीलादीनामुपयुक्तानामुपलक्षणम्। नारदोऽपि "ऋज्वी धटतुला कार्य्या खादिरी तैन्दुकी तथा। चतुरस्रा त्रिभिः स्थानैर्धटकर्कटकादिभिरिति"। धटो धटमध्यम्। कर्कटकौ अन्त्यौ। पादस्तम्भादीनां स्थूलता तु विशेषानभिधानात् यावति

स्थौल्ये दार्ढ्यं भवति तावत्येव कार्य्या । शिष्टाचाराद्विशेषो ज्ञेयः । पादस्तम्भावुदग्दक्षिणसंस्थानौ कृत्वा तुला प्राग्भारा कार्य्या । "पश्चिमे तोलयेत्कर्त्तॄन् अन्यस्मिन् मृत्तिकां शुभामिति" पितामहस्मरणात् । पूर्वपश्चिमसंस्थानौ कृत्वोदग्भारा वा कार्य्या । "धारयेदुत्तरे पार्श्वे पुरुषं दक्षिणे शिलामिति" नारदस्मरणात् । घटाङ्गत्वेन तोरणादिकं कार्य्यमित्याह पितामहः "तोरणे तु तथा कार्य्ये पार्श्वयोरुभयोरपि । घटादुच्चतरे स्यातां नित्यं दशभिरङ्गुलैः । अवलम्बौ तु कर्त्तव्यौ तोरणाभ्यामधोमुखौ । मृण्मयौ सूत्रसम्बद्धौ घटमस्तकचुम्बिनाविति" । घटारोहणमाह नारदः "शिक्यद्वयं समासज्य घटकर्कटयोर्दृढम् । एकशिक्ये तु पुरुषमन्यत्र तोलयेच्छिलाम्" । "धारयेदुत्तरे पार्श्वे पुरुषन्दक्षिणे शिलाम् । पिटकम्पूरयेत्तस्मिन्निष्टकापांशुलोष्टकैरिति" । इष्टकाभिर्ग्रावभिः पांशुभिर्लोष्टैर्वेत्यर्थः । साधराशिभिरपि पिटकम्पूरयेत् । "साधराशिमथापि वेति" स्मृत्यन्तरवचनात् । पितामहोऽपि "शिक्यद्वयं समासज्य पार्श्वयोरुभयोरपि । प्राग्ग्रान् कल्पयेद्दर्भांस्तत्र विप्रः समाहितः । पश्चिमे तोलयेत्कर्त्तॄनन्यस्मिन् मृत्तिकां शुभाम् । इष्टकाभस्मपाषाणकपालास्थिविवर्जितामिति" । अत्र इष्टकापाषाणयोर्वर्ज्यत्वोक्तिः समुच्चयनिराकरणार्था न तु विकल्पनिराकरणार्था पूर्वोदाहृतनारदवचने तयोरपि विधानात् । "एतेन मृत्तिकापाषाणादीनां सम्भूय तोलनकर्त्तृत्वमिति मतमपास्तम् । मृत्तिकाशिलेष्टकादीनामेकार्थत्वात् "तुल्यार्थास्तु विकल्पेरन्निति" न्यायेन विकल्प इति मिताक्षरायाम् । विष्णुरपि "अत्रैकशिक्ये पुरुषमारोपयेत् द्वितीये प्रतिमानं शिलादीति" । सत्यानिरीक्षणार्थं राज्ञा तद्विदो नियोक्तव्याः । तथा च पितामहः "परीक्षका नियोक्तव्यास्तुलामानविशारदाः । वणिजो हेमकाराश्च कांस्यकारास्तथैव चेति" । नियुक्ताश्च निरीक्षेरन्नित्याह नारदः । "सुवर्णकारा वणिजः कुशलाः कांस्यकारकाः । तान्तुलामवेक्षेरन् तुलाधारणकोविदाः इति" । निरीक्षणं प्रत्याह पितामहः "कार्य्यः परीक्षकैर्नित्यमवलम्बत्र समो घटः । उदकञ्च प्रदातव्यं घटस्योपरि पण्डितैः । यस्मिन्न प्लवते तोयं स विज्ञेयः समो घट" इति । अवलम्बसमः तोरणयोर्लम्बमानौ यौ मृन्मयावलम्बौ तयोः समः । नारदोऽपि "प्रथमारोहणे ग्राह्यं प्रमाणं निपुणैः सह । तुलाशिरोभ्यां तुल्यं तु तोरणाभ्यन्तलक्षणमिति" । तोलनानन्तरं कर्त्तव्यम्पितामह आह "तोलयित्वा नरं पूर्वं पश्चात्तमवतार्य्य तु । घटं तु कारयेन्नित्यं पताकाध्वजशोभितम्" । तत आवाहयेद्देवान्विधिनानेन मन्त्रवित् । वादित्रतूर्य्यनिर्घोषैर्गन्धमाल्यानुलेपनैः । प्राङ्मुखः प्राञ्जलिर्भूत्वा प्राड्विवेकस्ततो वदेत्" इति । विवादानुरूपं प्रश्नम्पृच्छतीति प्राट् तद्विवेचयतीति विवेकः प्राट् चासौ विवेकश्च प्राड्विवेकः । ततोऽभियुक्तं तोलयित्वाऽवतार्य्य धर्म्मावाहनादारभ्याभियुक्तशिरसि पत्त्रबन्धनान्तं साधारणविधिं कुर्य्यात् । घटपूजायाङ्गन्धादिविशेषन्नारद आह "रक्तैर्गन्धैश्च माल्यैश्च दध्यपूपाक्षतादिभिः । अर्च्चयेत्तु घटं पूर्वं ततः शिष्टांस्तु पूजयेदिति" । शिष्टा अवशिष्टानिन्द्रादीन् । पत्त्रबन्धनानन्तरं मन्त्रयेत् प्राड्विवेक इत्याह पितामहः "घटमामन्त्रयेच्चैव विधिनानेन शास्त्रवित्" । विधिना मन्त्रेण शास्त्रवित्प्राड्विवेकः । मन्त्रश्च तेनैव दर्शितः" "त्वं घट ! ब्रह्मणा सृष्टः परीक्षार्थं दुरात्मनाम् । धकाराद्धर्म्ममूर्त्तिस्त्वं टकारात् कुटिलं नरम् । धृतो धारयसे यस्माद्घटस्तेनाभिधीयसे । त्वं वेत्सि सर्व्वभूतानां पापानि सुकृतानि च । त्वमेव देव ! जानीषे न विदुर्य्यानि मानवाः । व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छतीति" । शोध्यस्याभिमन्त्रणञ्चाह याज्ञवल्क्यः "तुलाधारणविद्वद्भिरभियुक्तस्तुलाश्रितः । प्रतिमानसमीभूतो रेखां कृत्वाऽवतारितः । त्वन्तुले ! सत्यधामासि पुरा देवैर्विनिर्म्मिता । तत्सत्यं वद कल्याणि ! संशयान्मां विमोचय । यद्यस्मि पापकृन्मातस्ततो मां त्वमधो नय । शुद्धश्चेद्गमयोर्द्ध्वं मां तुलामित्यभिमन्त्रयेदिति" । तुलाश्रितः तुलामारूढः । प्रतिमानसमीभूतः प्रतिमानेन मृदादिना समीकृतः । रेखां कृत्वावतारणे साम्यचिह्नं कृत्वा अभिमन्त्रणेनावतारणानन्तरं कार्य्यम् अवतारित इति दर्शनात्ततः प्राड्विवेकः तुलाधारकं शपथैर्नियम्य शिरोगतपत्त्रकं पुनर्घटमारोपयेत् । अतएव नारदः "समयैः परिदृह्याथ पुनरारोपयेन्नरम् । निवाते दृष्टिरहिते शिरस्यारोप्य पत्त्रकमिति" । समयैः शपथैः परिदृह्य नियम्य । ते च विष्णुना दर्शिताः । "ब्रह्मघ्नो ये स्मृता लोकाः ये लोकाः कूटसाक्षिणः । तुलाधारस्य ते लोकास्तुलान्धारयतो मृषेति" पुनरारोहणकालेऽभि-

मन्त्रणमाह नारदः “त्वं वेत्सि सर्वभूतानां पापानि सुकृतानि च। त्वमेव देवि! जानीषे न विदुर्यानि मानवाः। व्यवहाराभिशस्तोऽयं मानवस्तोल्यते त्वयि। तदेनं संशयारूढं धर्मतस्त्रातुमर्हसि। देवासुरमनुष्याणां सत्ये त्वमभिषिच्यसे। सत्यज्ञोऽसि भगवन्! शुभाशुभविभावने। आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च। अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तमिति”। मन्त्रोच्चारणानन्तरकर्त्तव्यं पितामह आह “ज्योतिर्विद्ब्राह्मणश्रेष्ठः कुर्य्यात्कालपरीक्षणम्। विनाड्यः पञ्च विज्ञेयाः परीक्षाकालकोविदैः। साक्षिणो ब्राह्मणाः श्रेष्ठाः यथादृष्टार्थवादिनः। ज्ञानिनः शुचयोऽलुब्धा नियोक्तव्या नृपेण तु। शंसन्ति साक्षिणः श्रेष्ठाः शुद्ध्यशुद्धी नृपे तदा” इति।

कानि पुनर्जयपराजयचिह्नानीत्यपेक्षायामाह नारदः “तुलितो यदि वर्द्धेत विशुद्धः स्यान्न संशयः। समो वा हीयमानो वा न विशुद्धो भवेन्नरः” इति वर्द्धेत उपरि गच्छेत्। हीयमानः अधो गच्छेत्। यत्पुनरुक्तं पितामहेन “तुलितो यदि वर्द्धेत शुद्धो भवति धर्मतः। हीयमानो न शुद्धः स्यादेकेषान्तु समोऽशुचिः। अल्पपापः समो ज्ञेयो बहुपापस्तु हीयते” इति। अल्पत्वं व्यभिचारे समालिङ्गनादिना” चौर्य्ये तद्देशगमनादिना तत्र एकेषामिति पूजार्थं न तु स्वमते समस्य शुचित्वद्योतनार्थम् अल्पपापिनोऽप्यशुचित्वात्। तेन हीयमानसमयोर्न कश्चिद्विशेषः। दण्डप्रायश्चित्ते पापविशेषस्तयोर्दोषानुसारित्वात्। यत्तु केचिदेकेषां तु समोऽशुचिरिति वचनम्। “अल्पपापः समो ज्ञेयः”इति वचनं साम्ये संशयपरमेवेत्युक्तन्तत्क्लिष्टकल्पनया वाक्यानार्जवेनैरुपेक्षणीयम्। यन्तूक्तम्, बृहस्पतिना “घटेऽभियुक्तस्तुलितो हीनश्चेच्छुद्धिमाप्नुयात्। तत्समस्तु पुनस्तोल्यो वर्द्धितो विजयी भवेदिति” अयमर्थः पुनर्देवतावाहनाद्यसहितं सर्वं कर्म विधायोत्तोलनीय इति समस्याशुचित्वनिश्चयो न प्रथमतोलनपर्य्याये कार्य्यः। किन्तु पुनस्तोल्यमानस्य समतैव यदि भवति तदा अशुद्धिरवधारणीयेत्यर्थः इति स्मृतिचन्द्रिकायाम्। यत्तु कैश्चित्तस्मिन्नेव प्रयोगे तोलनमुक्तं तन्मन्दं प्रधानावृत्तावङ्गावृत्तिरिति न्यायेन तोलनस्य फलसम्बन्धेन प्रधानत्वात् तदावृत्तौ देवतावाहनाद्यङ्गानामप्यावृत्तेरेवोचितत्वात्। शिक्यादिच्छेदेऽपि पुनः समीकृत्य तोलनीय इत्याह कात्यायनः “शिक्यच्छेदे तुलाभङ्गे तथा चापि गुणस्य वा। शुद्धेस्तु संशये चैनं परीक्षेत पुनर्नरमिति” शुद्धिसंशयकारीण्याह नारदः “तुलाशिरोभ्यासुद्भ्रान्तं विचलं न्यस्तलक्षणम्। यदा वायुप्रणुन्नं वा तदा नैकतरं वदेत्” इति। अयमर्थः। यदा तुलान्तौ तिर्य्यक्चलितौ यदा च समतास्थानार्थन्यस्तं चिह्नमपैति यदा च वायुना प्रेरिता तुला ऊर्द्ध्वमधश्च कम्पते तदा जयं पराजयं च न वदेदिति। व्यासोऽपि “कक्षच्छेदे तुलाभङ्गे धटकर्कटयोस्तथा। रज्जुच्छेदेऽक्षभङ्गे वा दद्याच्छुद्धिं पुनर्नृपः” इति। कक्षं शिक्यतलं कर्कटौ तुलोपान्तस्थौ शिक्याधारावीषद्वक्रौ कर्कटशृङ्गसन्निभौ लोहकीलकौ। अक्षः पादस्तम्भयोरुपरिनिहितस्तुलाधारपट्ट इति मिताक्षरा। दार्ढ्यप्रयोजकः कीलक इति हलायुधः। यत्तु बृहस्पतिवचनम् “कक्षच्छेदे तुलाभङ्गे धटकर्कटयोस्तथा। रज्जुच्छेदेऽक्षभङ्गे च तथैवाशुद्धिमाप्नुयादिति” तदाऽऽकस्मिककक्षच्छेदादिविषयम्। कात्यायनवचनन्तु दृश्यमानकारणकशिक्यच्छेदादिविषयमिति विज्ञानेश्वराचार्य्यादयः” वीरमि०। तुलापुरुषाख्यतुला तु हेमाद्रौ दा० खण्डे दृश्या। मत्कृततत्तुलादानादिपद्धतौ च विस्तरेण दृश्या।

५तोलने मिता०। “तुलाः स्त्रियां पलशतं भारः स्याद्विंशतिस्तुला इत्यमरोक्तेः पलशतमानं तुला। तत्र सादृश्ये “तुलां यदा रोहति दन्तवाससा,” कुमा० “कामयानसमस्यया तुलाम्” रघुः। तुलोपमाशब्दयोगे षष्ठ्येव साधु न तु तृतीया“अतुलोपमाभ्याम्”पा० तृतीयाविधाने तयोः पर्य्युदासात् तृतीयाप्रयोगस्तु सहार्थशब्दाध्याहारेण तद्योगे इति मल्लि०। तुलाराशौ। “कन्यार्के च तुलार्के च पितृणां श्राद्धमिष्यते” स्मृतिः“तुलायां लोलया सह” ति०त०। “सहभागस्तुलया”ज्यो०त०। तोलनदण्डात्मके माने “अथ स दक्षिणादूरोरुत्कृत्य स्वमांसपेशीं तुलया धारयन् गुरुतर एव कपोत आसीत्” भा०व०१९६ अ०। “तुलामानं प्रतीमानं सर्वञ्च स्यात् सुलक्षितम्। षट्सु षट्सु च मासेषु पुनरेव परीक्षयेत्”मनुः“तुलामानं सुवर्णादीनां परिच्छेदार्थं यत् क्रियते प्रतीमानं प्रस्थद्रोणादि तत्सर्वं स्वनिरूपितं यथा स्यात् षट्सु षट्सु मासेषु गतेषु पुनस्तत्सर्वं सभ्यपुरुषैर्नृपतिः परीक्षयेत्” कुल्लू० “आषाढ्यां तुलया बीजतोलने भाविशस्यहानिवृद्धिज्ञापनम् वृ० स० २६ अ० उक्तं तत्र अभिवासनाङ्गतुलानिर्माणप्रकारस्तत्रैवोक्तो यथा

"आषाढ्यां समतुलिताधिवासितानाम् अन्येद्युर्यदधिकतामुपैति वीजम् । तद्वृद्धिर्भवति न जायते यदूनं मन्त्रोऽस्मिन् भवति तुलाभिमन्त्रणाय । स्रोतव्या मन्त्रयोगेन सत्या देवी सरस्वती । दर्शयिष्यसि यत्सत्यं सत्ये सत्यव्रता ह्यसि । येन सत्येन चन्द्रार्कौ ग्रहा ज्योतिर्गणास्तथा । उत्तिष्ठन्तीह पूर्वेण पश्चादस्तं व्रजन्ति च । यत्सत्यं सर्ववेदेषु यत्सत्यं ब्रह्मवादिषु । यत्सत्यं त्रिषु लोकेषु तत्सत्यमिह दृश्यताम् । ब्रह्मणो दुहिता चासि त्वमादित्येति कीर्तिता । काश्यपी गोत्रतश्चैव नामतो विश्रुता तुला । क्षौमं चतुःसूत्रकसन्निवद्धं षडङ्गुलं शिक्यकवस्त्रमस्याः । सूत्रप्रमाणं च दशाङ्गुलानि षडेव कक्षोभयशिक्यमध्ये । याम्ये शिक्ये काञ्चनं सन्निवेश्य शेषद्रव्याण्युत्तरेऽस्मिन् चैवम् । तोयैः कौप्यैः स्यन्दिभिः सारसैश्च वृष्टिर्हीना मध्यमा चोत्तमा च । दन्तैर्नागा गोहयाद्याश्च लोम्ना हेम्ना भूपाः सिक्थकेन द्विजाद्याः । तद्वद्देशा वर्षमासा दिशश्च शेषद्रव्याण्येवमुक्तोपस्थितानि । हैमी प्रधाना रजतेन मध्या तयोरलाभे खदिरेण कार्या । विद्धः पुमान् येन शरेण सा वा तुला प्रमाणेन भवेद्वितस्तिः । हीनस्य नाशोऽभ्यधिकस्य वृद्धिस्तुल्येन तुल्यं तुलितं तुलायाम् । एतत्तुलाकोशरहस्यमुक्तं प्राजेशयोगेऽपि नरो विदध्यात्" ।

**तुलाकूट** न० ६त० तुलामानस्य कूटे १प्रकृतमानापेक्षया न्यूनतापादने । तुलायां कूटं यस्य । २तत्कारिणि पुरुषे च "मानकूटं तुलाकूटं कण्टमोषं निपीड्य" काशी०८अ० स्वकिङ्करं प्रति यमवाक्यम् ।

**तुलाकोटि(टी)** स्त्री तुलया तुलां वा कोटयति कुट—परितापे-इन् वा ङीप् । नूपुरे, "तुलाकोटिक्वाणैः कुसुमशरमुज्जागरयति" उद्भटः । "स्खलत्तुलाकोटिनिनादकोमलः" माघः ।

**तुलाकोश** पु० तुला कोश इव । तुलायां भाविशस्यहानिवृद्धिज्ञापनार्थतुलारूपे मानदण्डभेदे ह०सं०वाक्यं तुलाशब्दे दृश्यम् । २तुलया परीक्षणे च मिता० ।

**तुलादान** न० तुलया स्वदेहमानेन दानम् । तुलापुरुषसंज्ञके महादाने मत्स्यतत्तुलादानादिपद्धतौ तत्प्रयोगो दृश्यः ।

**तुलाधट** पु० तुलायै तोलनाय धटः । तुलाधारदण्डे त्रिका० ।

**तुलाधर** त्रि० तुलाया मानदण्डस्य धरः धृ-अच् । १वाणिजके, २तुलाराशौ, ३तुलादण्डधारके त्रि० मेदि० ।

**तुलापुरुष** पु० षोड़शसु महादानेषु आद्ये महादाने तत्प्रकारः मत्स्यपु० २७४अ० उक्तो यथा "अथातः सम्प्रवक्ष्यामि महादानानुकीर्तनम्" इत्युपक्रमे । "आद्यन्तु सर्वदानानां तुलापुरुषसंज्ञकम्" महादानानि विभज्य उक्तं यथा "मत्स्य उवाच । यानि नोक्तानि गुह्यानि महादानानि षोड़श । तानि ते कथयिष्यामि यथावदनुपूर्वशः । तुलापुरुषयागोऽयं येषामादौ विधीयते । अयने विषुवे पुण्ये व्यतीपाते दिनक्षये । युगादिषूपरागेषु तथा मन्वन्तरादिषु । सङ्क्रान्तौ वैधृतिदिने चतुर्दश्यष्टमीषु च । सितपञ्चदशीपर्वद्वादशीष्वष्टकासु च । यज्ञोत्सवविवाहेषु दुःस्वप्नाद्भुतदर्शने । द्रव्यब्राह्मणलाभे वा श्रद्धा वा यत्र जायते । तीर्थे वायतने वापि तड़ागे रुचिरे तथा । महादानानि देयानि संसारभयभीरुणा । अनित्यं जीवितं यस्मात् वसु चातीव चञ्चलम् । केशेष्वेव गृहीतः सन् मृत्युना धर्ममाचरेत् । पुण्यां तिथिमथासाद्य कृत्वा ब्राह्मणवाचनम् । षोड़शारत्निमात्रन्तु दश द्वादश वा करान् । मण्डपं कारयेद्विद्वान् चतुर्भद्राननं बुधः । सप्तहस्ता भवेद्वेदी मध्ये पञ्चकरा तथा । तन्मध्ये तोरणं कुर्यात् सारदारुमयं बुधः । कुर्यात् कुण्डानि चत्वारि चतुर्दिक्षु विचक्षणः । समेखलायोनियुतानि कुर्यात् सम्पूर्णकुम्भानि सहासनानि । स्रुताज्यपात्रद्वयसंयुतानि सयज्ञपात्राणि सुविष्टराणि । हस्तप्रमाणानि तिलाज्यधूपपुष्पोपहाराणि सुशोभनानि । पूर्वोत्तरे हस्तमिताथ वेदी ग्रहादिदेवेश्वरपूजनाय । तत्रार्चनं ब्रह्मशिवाच्युतानां तत्रैव कार्यं फलमाल्यवस्त्रैः । लोकेशवर्णाः परितः पताकामध्ये ध्वजः किङ्किणिकायुतः स्यात् । द्वारेषु कार्याणि च तोरणानि चत्वार्यपि क्षीरवनस्पतीनाम् । द्वारेषु कुम्भद्वयमत्र कार्यं स्रग्गन्धधूपाम्बररत्नयुक्तम् । शालेङ्गुदी चन्दनदेवदारुश्रीपर्णिविल्वप्रियकाञ्चनोत्थम् । स्तम्भद्वयं हस्तयुगावखातं कृत्वा दृढं पञ्चकरोच्छ्रितञ्च । तदन्तरं हस्तचतुष्टयं स्यात्तयोत्तराङ्गञ्च तदङ्गमेव । समानजातिश्च तुलावलग्ना हैमेन मध्ये पुरुषेण युक्ता । दैर्घ्येण सा हस्तचतुष्टयं स्यात् पृथुत्वमस्यास्तु दशाङ्गुलानि । सुवर्णपट्टाभरणा तु कार्या सा लोहपाशद्वयशृङ्खलाभिः । युता सुवर्णेन तु रत्नमालाविभूषिता माल्यविलेपनाभ्याम् । चक्रं लिखेद्वारिजगर्भयुक्तं नानारजोभिर्भुवि पुष्पकीर्णम् । वितानकञ्चोपरि पञ्चवर्णं संस्थापयेत् पुष्पफलोपशोभम् । अथर्त्विजो वेदविदश्च कार्याः सुरूपवे-

शान्वयशीलयुक्ताः । विधानदक्षाः पटवोऽनुकूला ये चार्य्यदेशप्रभवा द्विजेन्द्राः । गुरुश्च वेदान्तविदार्य्यवंशसमुद्भवः शीलकुलाभिरूपः । पुराणशास्त्राभिरतोऽतिदक्षः प्रसन्नगम्भीरसरस्वतीकः । सिताम्बरः कुण्डलहेमसूत्रकेयूरकण्ठाभरणाभिरामः । पूर्वेण ऋग्वेदविदावथास्तां यजुर्विदौ दक्षिणतश्च शस्तौ । स्थाप्यौ द्विजौ सामविदौ तु पश्चादाथर्व्वणावुत्तरतस्तु कार्य्यौ । विनायकादिग्रहलोकपालवस्वष्टकादित्यमरुद्गणानाम् । ब्रह्माच्युतेशार्कवनस्पतीनां स्वमन्त्रतो होमचतुष्टयं स्यात् । जप्यानि सूक्तानि तथैव चैषामनुक्रमेणापि यथास्वरूपम् । होमावसाने कृततूर्य्यनादो गुरुर्गृहीत्वा बलिपुष्पधूपम् । आवाहयेल्लोकपतीन् क्रमेण मन्त्रैरमीभिर्यजमानयुक्तः । एह्येहि सर्वामरसिद्धसाध्यैरभिष्टुतो वज्रधराऽमरेश ! । संवीज्यमानोऽप्सरसाङ्गणेन रक्षाध्वरन्नो भगवन्नमस्ते (इन्द्रस्य)। एह्येहि सर्वामरहव्यवाह ! मुनिप्रवीरैरभितोऽभिजुष्ट ! । तेजस्विना लोकगणेन सार्द्धं ममाध्वरं रक्ष कवे ! नमस्ते" (अग्नेः) । एह्येहि वैवस्वत ! धर्म्मराज ! सर्वामरैरर्चितदिव्यमूर्त्ते ! । शुभाशुभानन्दशुचामधीश । शिवाय नः पाहि मखं नमस्ते" (यमस्य) । एह्येहि रक्षोगणनायकस्त्वं सर्वैस्तु वेतालपिशाचसङ्घैः । ममाध्वरं पाहि शुभाधिनाथ ! लोकेश्वरस्त्वं भगवन्नमस्ते (नैर्ऋतस्य) । एह्येहि यादोगणवारिधीनाङ्गणेन पर्जन्यमहाप्सरोभिः । विद्याधरेन्द्रामरगीयमान ! पाहि त्वमस्मान् भगवन्नमस्ते (वरुणस्य) । एह्येहि यज्ञे मम रक्षणाय मृगाधिरूढः सह सिद्धसङ्घैः । प्राणाधिपः कालकवेः सहायः गृहाण पूजां भगवन्नमस्ते (वायोः) । एह्येहि यज्ञेश्वर! यज्ञरक्षां विधत्स्व नक्षत्रगणेन सार्द्धम् । सर्वौषधीभिः पितृभिः सहैव गृहाण पूजां भगवन्नमस्ते (सोमस्य) । एह्येहि विश्वेश्वर ! नस्त्रिशूलकपालखट्वाङ्गधरेण सार्द्धम् । लोकेश ! यज्ञेश्वर ! यज्ञसिद्ध्यै गृहाण पूजां भगवन्नमस्ते (ईशस्य) । एह्येहि पातालधराधरेन्द्र ! नागाङ्गनाकिन्नरगीयमान ! । यक्षोरगेन्द्रामरलोकसङ्घैरनन्त ! रक्षाध्वरमस्मदीयम्" । (अनन्तस्य) एह्येहि विश्वाधिपते ! मुनीन्द्र लोकेन सार्द्धं पितृदेवताभिः । सर्वस्य धातास्यमितप्रभाव ! विशाध्वरन्नो भगवन्नमस्ते (ब्रह्मणः)। त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च । ब्रह्मविष्णुशिवैः सार्द्धं रक्षां कुर्व्वन्तु तानि मे । देवदानवगन्धर्वा यक्षराक्षसपन्नगाः । ऋषयो मनवो गावो देवमातर एव च । सर्वे ममाध्वरे रक्षां प्रकुर्व्वन्तु मुदान्विताः । इत्यावाह्य सुरान् दद्यादृत्विग्भ्यो हेमभूषणम् । कुण्डलानि च हैमानि सूत्राणि कटकानि च । अङ्गुलीयपवित्राणि वासांसि शयनानि च । द्विगुणं गुरवे दद्याद्भूषणाच्छादनानि च । जपेयुः शान्तिकाध्यायं जापकाः सर्वतोदिशम् । ततोषितास्तु ते सर्वे कृत्वैवमधिवासनम् । आदावन्ते च मध्ये च कुर्य्याद्ब्राह्मणवाचनम् । ततो मङ्गलशब्देन स्नापितो वेदपुङ्गवैः । त्रिःप्रदक्षिणमावर्त्य गृहीतकुसुमाञ्जलिः । शुक्लमाल्याम्बरोभूत्वा तां तुलामभिमन्त्रयेत् । नमस्ते सर्वदेवानां शक्तिस्त्वं सत्यमास्थिता । साक्षिभूता जगद्धात्री निर्म्मिता विश्वयोनिना । एकतः सर्वसत्यानि तथानृतशतानि च । धर्म्माधर्म्मकृतां मध्ये स्थापितासि जगद्धिते ! । त्वं तुले ! सर्वभूतानां प्रमाणमिह कीर्त्तिता । मां तोलयन्ती संसारादुद्धरस्व नमोऽस्तु ते । योऽसौ तत्त्वाधिपोदेवः पुरुषः पञ्चविंशकः । स एकोऽधिष्ठितो देवि ! त्वयि तस्मान्नमोनमः । नमोनमस्ते गोविन्द ! तुलापुरुषसंज्ञक ! । त्वं हरे ! तारयस्वास्मानस्मात्संसारकर्दमात् । पुण्यकालं समासाद्य कृत्वैवमधिवासनम् । पुनः प्रदक्षिणं कृत्वा तुलामारोहयेद्बुधः । सखड्गचर्म्मकवचः सर्वाभरणभूषितः । धर्म्मराजमथादाय हैमं सूर्य्येण संयुतम् । कराभ्यां बद्धमुष्टिभ्यामास्ते पश्यन् हरेर्मुखम् । ततोऽपरे तुलाभागे न्यसेयुर्द्विजपुङ्गवाः । समादभ्यधिकं यावत् काञ्चनं चातिनिर्म्मलम् । पुष्टिकामस्तु कुर्वीत भूमिसंस्थं नरेश्वरः । क्षणमात्रं ततः स्थित्वा पुनरेवमुदीरयेत् । नमस्ते सर्वभूतानां साक्षिभूते ! सनातनि ! । पितामहेन देवि ! त्वं निर्म्मिता परमेष्ठिना । त्वया धृतं जगत्सर्वं सहस्थावरजङ्गमम् । सर्वभूतात्मभूतस्थे ! नमस्ते विश्वधारिणि ! । ततोऽवतीर्य्य गुरवे पूर्व्वमर्द्धं निवेदयेत् । ऋत्विग्भ्योऽपरमर्द्धन्तु दद्यादुदकपूर्व्वकम् । गुरवे ग्रामरत्नानि ऋत्विग्भ्यश्च निवेदयेत् । प्राप्य तेषामनुज्ञां तु तथान्येभ्योऽपि दापयेत् । दीनानाथविशिष्टादीन् पूजयेद्ब्राह्मणैः सह । न चिरं धारयेद्गेहे सुवर्णं प्रोक्षितं बुधः । तिष्ठद्भयावहं यस्माच्छोकव्याधिकरं नृणाम् । शीघ्रं परस्वीकरणाच्छ्रेयः प्राप्नोति मानवः । अनेन विधिना यस्तु तुलापुरुषमाचरेत् । प्रतिलोकाधिपस्थाने प्रतिमन्वन्तरं वसेत् । विमानेनार्कवर्णेन किङ्किणीजाल-

मानिना। पूज्यमानोऽप्सरोभिश्च ततो विष्णुपुरं व्रजेत्। कल्पकोटिशतं यावत्तस्मिन् लोके महीयते। कर्म्मचयादिह पुनर्भुवि राजराजो भूपालमौलिमणिरञ्जितपादपीठः। श्रद्धान्वितो भवति यज्ञसहस्रयाजी दीप्तप्रतापजितसर्वमहीपलोकः। यो दीयमानमपि पश्यति भक्तियुक्तः कालान्तरे स्मरति वाचयतीह लोके। यो वा शृणोति पठतीन्द्रसमानरूपः प्राप्नोति धाम सपुरन्दरदेवजुष्टम्"। अन्यविधानं हेमा० दा० दृश्यम् एतत् प्रयोगस्तु मत्कृततुलादानादिपद्धतौ दृश्यः।

२व्रतभेदे। तच्च व्रतं पञ्चदशदिनसाध्यमेकविंशतिदिनसाध्यञ्च यथा।

"पिण्याकाचामतक्रोदकसक्तूनामुपवासान्तरितोऽभ्यवहारास्तुलापुरुषः"। विष्णु० सं०। 'पिण्याकाचामतक्राम्बुसक्तूनां प्रतिवासरम्। एकरात्रोपवासश्च कृच्छ्रः सौम्योऽयमुच्यते" इत्युपक्रमे "एषां त्रिरात्रमभ्यासादेकैकस्य यथाविधि। तुलापुरुष इत्येष ज्ञेयः पञ्चदशाह्निकः"। एषां पिण्याकादीनां पञ्चानां क्रमेणैकैकस्य त्रिरात्राभ्यासेन पञ्चदशाहव्यापी तुलापुरुषाख्यः कृच्छ्रो वेदितव्यः। अत्र पञ्चदशाह्निकत्वविधानादुपवासस्य निवृत्तिः। यमेन त्वेकविंशतिरात्रिकस्तुलापुरुष उक्तः "आचाममथ पिण्याकं तक्रञ्चोदकसक्तुकान्। त्र्यहं त्र्यहञ्चाप्युञ्जानो वायुभक्षस्त्र्यहद्वयम्। एकविंशतिरात्रन्तु तुलापुरुष उच्यते इति"।

**तुलाप्रग्(ग्रा)ह** पु०प्र+ग्रह वा अच् पक्षे अप् इत०।१तुलासूत्रे सि० कौ०। [ल्युट्। १तुलादण्डे शब्दार्थचि०।

**तुलामान** न०तुलार्थं तोलनार्थं मानं मीयतेऽनेन मा—करणे

**तुलायष्टि** स्त्री ६त०। १तुलादण्डे। "स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम्। अहो सुसदृशी चेष्टा तुलायष्टेः खलस्य च" पञ्चत०।

**तुलाबीज** न० तुलायाः तोलनस्य बीजं मूलम्। १गुञ्जायाम् तदारभ्यैव हि मानं शास्त्रे दर्शितं यथा "दृश्यार्द्रगुञ्ज प्रवदन्ति माषमिति"लीला०[दण्डस्थितसूत्रे प्रग्रहे अमरः।

**तुलासूत्र** न० तुलायै तोलनार्थं सूत्रम्। तोलनार्थं तुला-

**तुलि तूली** स्त्री तुरि(री)+रस्य लः। तुर्य्यां शब्दरत्ना०।

**तुलिका** स्त्री तुल—बा० क्वुन्। खञ्जनिकायां त्रिका०।

**तुलित** त्रि० तुलां करोति णिच्—कर्मणि क्त। १परिमिते "येऽपीन्द्रपाणितुलितायुधलूनपक्षाः" माघः। २सदृशीकृते

**तु(तू)लिनी** स्त्री तूलं विद्यते फलेऽस्याः इनि ङीप् वा पृषो० ह्रस्वः। १शाल्मलिवृक्षे रत्नमाला।

**तु(तू)लिफला** स्त्री तुलि तूलयुक्तं फलमस्याः वा पृषो०। १शाल्मलीवृक्षे रत्नमाला।

**तुल्य** त्रि० तुलया सम्मितं यत्। १सदृशे अमरः। "सकामां दूषयंस्तुल्यो न वधं प्राप्नुयान्नरः"। "सकामां दूषयं स्तुल्योनाङ्गुलिच्छेदमाप्नुयात् मनुः"। "कुम्भकर्णः कपीन्द्रेण तुल्यावस्थः स्वसुःकृतः" रघुः। [बहुभिरेकत्र पाने अमरः।

**तुल्यपान** न० तुल्येन सजातीयेन सह पानम्। सजातीयै-

**तुल्ययोगिता** स्त्री अर्थालङ्कारभेदे अलङ्कारभेदे अलङ्कारशब्दे ३८८पृ० दृश्यम्। ["बिम्बौलोष्ठाञ्च तुल्यशः" सुश्रु०।

**तुल्यशस्** अव्य० तुल्य+वीप्सार्थे शस्। तुल्यं तुल्यमित्यर्थे।

**तुल्वल** पु० ऋषिभेदे। तौल्वलिशब्दे दृश्यम्।

**तुवर** पु० तवति हिनस्ति रोगान् सौ० तु—ष्वरच् नि० गुणाभावः। १धान्यभेदे २कषायरसे च ३तद्वति त्रि० ४आढ़क्याम् ५सौराष्ट्रमृत्तिकायाञ्च स्त्री षित्त्वात् ङीष् स्वार्थे क तुवरिकाप्यत्रैव। रसभेदे पुंस्त्री तद्वति त्रि० अमरः। ६श्मश्रुहीने नरे उणा०।

**तुवरयावनाल** पु० कर्म० धान्यभेदे राजनि०। "तुवरो यावनालस्तु कषायोष्णो विरेचकः। संग्राही वातशमनो विदाही शोषकारकः" राजनि०।

**तुवरिका** स्त्री० तुवरोऽस्त्यस्याः ठन्। १सौराष्ट्रमृत्तिकायां (फटकिरि) अमरः। २आढक्यां (अरहर) भरतः।

**तुवरी** स्त्री तु+ष्वरच् षित्त्वात् ङीष्। १आढक्यां २सौराष्ट्रमृत्तिकायाञ्च (फिटकरि) राजनि०। (तोरी) इति ३धान्यभेदे भावप्र० तद्गुणास्तत्रोक्ता यथा। "तुवरी ग्राहिणी शीता लघ्वी कफविषास्रजित्। तीक्ष्णोष्णा वह्निदा कण्डूकुष्ठकोठक्रिमिप्रणुत्"। [चक्रमर्दने शब्दच०।

**तुवरीशिम्ब** पु० तुवर्य्याः आढ़क्या इव शिम्बा यस्य। रक्त-

**तुवि** स्त्री० तुम्बी+पृषो०। १तुम्ब्याम्। तु—पूर्त्तौ इन् किच्च। २बहुशब्दार्थे निघण्टुः। "तुविकूर्म्मिरृघावान्" ऋ० १।३०।३। ऋ—मि वेदे गुणे अकारस्योत्त्वम् "तुविग्राभं तुविकूर्मिं रभोदाम्" ऋ० ६।२२।५। "ग्रहेरण। तुविग्राभं बहुग्राहकम्" भा० "तुविग्रीव। तुविक्रतो!" ऋ०८।६८।२वा ङीप्। "मरुत्सु तुवीमघ!" ऋ० १।२९।१। तुवीमघ कथञ्चन" "प्र इद्रासं तुवीरवम्" ऋ०१०।९९।६।

**तुविस्** न० तु—वृद्धौ पूर्त्तौ वा इसि किच्च। १वृद्धौ २प्रज्ञायां ३बले च। "यः शम्बरमस्तृद्भपस्तुविष्मान्" ऋ० २।१२।

१।''तुविष्मान् वृद्धिमान् बलवान् वा''भा०। ''भीमस्तुविष्मान् चर्षणिभ्यः'' १।५५।१। ''तुविष्मान् प्रज्ञावान् बलवान् वा''भा०। बलेन प्रज्ञया च वृद्धेः पूर्वं च सम्भवात् बलप्रज्ञयोस्तथात्वम्।

**तुवीरवत्** त्रि० तुवी मत्वर्थीयोरः ततो मतुप् मस्य वः। बहुस्तोत्रयुक्ते। ''रथा कविस्तुवीरवान्'' ऋ० १०।१६४।४।''तुवीरवान् बहुस्तोत्रयुक्तो भवति। मत्वर्थीयप्रत्ययावृत्तिः। यद्वा तुविशब्दस्य रो मत्वर्थीयः। बाहुल्ययुक्तदेवैः सहितो भवति'' भा०।

**तुश** बधे भ्वा० आ० सक० सेट्। तोशते अतोशिष्ट तुतुशे। ''इन्दुरिन्द्राय तोशते नितोशते'' ऋ०८।१०८।२२ ''इन्दुः सोम इन्द्रायेन्द्रार्थं तोशते तोशते हन्यते अभिषूयते। नितोशते नितरामभिषूयते। तोशतिर्वधकर्मा'' भा० कर्मकर्त्तरि तङ्। यगभावश्छान्दसः। ''सत्वात्वं पुरुष्टुत एको वृत्राणि तोशसे''। ऋ०८।१५।११। तोशसे हिनस्सि'' भा०।

**तुष** तोषे आनन्दभेदे दि० प० लृदित् अक० सेट्। तुष्यति अतुषत्। तुतोष। औदित् वर्त्तमाने क्तः तुष्टः। तुष्टिः। तोषः ''तुष्य द्रौपदि! मा क्रुध'' भा० व० ११०६ श्लो० ''तुष्यन्ति च रमन्ति च'' भा० आनु० १२७६ श्लो० ''ततोष पश्यन् वितृषामलराजाः'' भट्टिः।

**तुष** पु०तुष–क। १विभीतकवृक्षे (वयड़ा)२धान्यत्वचि स्वनामख्याते द्रव्ये च अमरः। ''कौकोन् जिह्वाषति सितोत्तमतण्डुलाद्यान् को नाम भोक्तुमकणोपहितान् हिताथी'' प्रबो० च०। ''तुषेणापि परित्यक्ता न प्ररोहन्ति तण्डुलाः''हितो०। ''सतुषं धान्यमुच्यते''स्मा०त०।

**तुषग्रह** पु०तुषेण गृह्यते ग्रह–कर्मणि अप्। वह्नौ त्रिका०

**तुषज** त्रि० तुषे जायते जन–ड। तुषजाते वह्न्यादौ। अस्य ''दीर्घकाशतुषभ्राष्ट्र जे'' पा० आद्युदात्तता।

**तुषधान्य** न० तुषावृतं धान्यं शा०त०। तुषावृते सतुषे धान्ये। ''तुषधान्यतोक्षणमन्त्राभिचारजेतालकर्मज्ञाः''।''परधनहरणाभिरतास्तुषधान्यं सर्वभिषजश्च''।वृ०स०१५अ०।

**तुषसार** पु०तुषं सरति अनुसरति सृ–अण्। वह्नौ शब्दमा०

**तुषानल** पु० तुषस्यानलः। तुषजाते अग्नौ। तुषाग्न्यादयोऽप्यत्र।

**तुषाम्बु** न० तुषोदकशब्दार्थे ''तुषाम्बु दीपनं पाण्डुकृमिरोगगदापहम्। तीक्ष्णोष्णं पाचनं पित्तरक्तकृद्वस्ति शूलहृद्'' भावप्र०।

**तुषार** पु० तोषयति तुष–अन्तर्भूतण्यर्थात् आरन् किच्च। १देशभेदे। (तुखार) शब्दे दृश्यम् तत्र तुखारा इत्यत्र तुषारा इति पाठान्तरम्। २हिमकणभेदे नीहारे हेमच०। ३शीतलस्पर्शे अमरः ४तद्वति त्रि०। ''अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारा'' नैष० ''प्रपतत् तुषारो हेमन्तकालः'' ऋतुसं० ५कर्पूरभेदे राजनि०। ''जनस्तुषाराञ्जनपर्वतानिव'' ''स्नपनवारितुषारभृतस्तनाः'' माघः। ''आचचाम सतुषारशीकरः'' रघुः। ''पदं तुषारस्रुतिधौतरक्तम्'' कुमा०। ''लघुतुषारतुषारजलश्च्युतम्'' किरा०।

**तुषारकर** पु० तुषारो हिमः करोऽस्य। १हिमकरे चन्द्रे तुषारकिरणादयोऽप्यत्र। ''कलया तुषारकिरणस्य पुरः'' माघः। २कर्पूरे च।

**तुषारगिरि** पु० ६त०। १हिमालये ''तुषारगिरिकूटाभं सिताभ्रशिखरोपमम्'' भा० अनु० १४ अ०। तुषाराचलादयोऽप्यत्र।

**तुषित** पु० तुष–बा० कितच् तुष–कर्म० क्विप् ततः तारका० इतच् वा। १गणदेवताभेदे ते च द्वादश। किन्तु मन्वन्तरभेदे भिन्ननामानः यथा ''चाक्षुषस्यान्तरे पूर्वमासन् ये तुषिताः सुराः। वैवस्वतेऽन्तरे ते वै आदित्या द्वादश स्मृताः'' हरिवं० ३अ०। तथा च आदित्यरूपा द्वादश१२ ''प्राणापानावुदानश्च समानो व्यान एव च। चक्षुः श्रोत्ररसघ्राणस्पर्शं बुद्धिर्मनस्तथा। द्वादशैते तु तुषिताः देवाः स्वारोचिषेऽन्तरे'' सारसुन्दरीधृतवाक्योक्ता द्वादश१२ ''तोषः प्रतोषः सन्तोषो भद्रः शान्तिरिडस्पतिः। इध्मः कविर्विभुः स्वाहा सुदेवो रोचनो द्विषट्१२। तुषिता नाम ते देवा आसन् स्वायम्भुवेऽन्तरे'' शब्दार्थचि० धृतवाक्योक्ता द्वादश इति षट्त्रिंशत्। ये च द्वादशेति मन्यन्ते ते एकैकमन्वन्तरापेक्षया द्वादशेति वर्णयन्ति। समष्ट्यभिप्रायेण षट्त्रिंशदिति विवेकः। तदभिप्रायेणैव ''षट्त्रिंशत्तुषिता मताः'' इत्युक्तम्। २विष्णौ पु०। ''तुषित! महातुषितेत्यादि''भा०शा०३४अ०। विष्णुस्तुतौ।

**तुषोत्थ** न० तुषादुत्तिष्ठति उद्+स्था–क ५त०। १तुषोदके राजनि०।

**तुषोदक** न० तुषमिश्रितमुदकं शा० त०। १काञ्जिकभेदे हारा०। तत्करणप्रकारो भावप्र० उक्तो यथा ''तुषोदकं यवैरामैः सतुषैः शकलीकृतैः''। यवैरुदकसहितैः सन्धानवर्गोक्तत्वात्''। तुषाम्बुशब्दे तद्गुणादि दृश्यम्।

**तुष्ट** त्रि॰ तुष–कर्त्तरि क्त। १सन्तोषयुक्ते। "तस्मिंस्तुष्टे जगत्तुष्टं प्रीणिते प्रीणितं जगत्" पुरा॰। २विष्णौ पु॰ "परर्द्धिः परमस्पष्टस्तुष्टः पुष्टः शुभेक्षणः" विष्णुस॰ "परानन्दैकरूपत्वात्तुष्टः" भा॰। तस्यानन्दरूपत्वेऽपि आनन्दाश्रयत्वं कल्पितम् अतएव विवरणे "आनन्दो विषयानुभवो नित्यत्वञ्च सन्ति धर्मा अपृथक्त्वेऽपि पृथगिवावभासन्ते" इत्युक्तम्। न्यायनये तु दुःखाभावस्यैवानन्दरूपत्वात् तस्य तदाश्रयत्वमस्त्येवेति भेदः।

**तुष्टि** स्त्री तुष–भावे क्तिन्। १तोषे २भोगेष्वेतावतालमिति बुद्धौ ३अधिगतार्थादन्यत्र तुच्छत्वबुद्धौ "तुष्टिर्नु रकृतार्थस्य कृतार्थोऽस्मीति या मतिः" इत्युक्ते ४बुद्धिभेदे सा च नवविधा इति सांख्याचार्य्याः यथोक्तं सा॰ का॰ त॰ कौ॰ च।

"तुष्टिर्नवधेत्युक्तं ताः परिगणयति। "आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः। बाह्याविषयोपरमात् पञ्च नव तुष्टयोऽभिमताः" का॰।

"प्रकृतिव्यतिरिक्त आत्मास्तीति प्रतिपद्य ततोऽस्य श्रवणमननादिना विवेकसाक्षात्काराय त्वसदुपदेशतुष्टो यो न प्रयतते तस्य चतस्र आध्यात्मिक्यस्तुष्टयो भवन्ति प्रकृतिव्यतिरिक्तमात्मानमधिकृत्य यस्मात्तास्तुष्टयस्तस्मादाध्यात्मिक्यः, कास्ता इत्यत आह प्रकृत्युपादानकालभाग्याख्याः प्रकृत्यादिराख्या यासां तास्तथोक्ताः। तत्र प्रकृत्याख्या तुष्टिर्यथा कस्यचिदुपदेशः (विवेकसाक्षात्कारो हि प्रकृतिपरिणामभेदः तञ्च प्रकृतिरेव करोतीति कृतं ते ध्यानाभ्यासेन, तस्मादेवमेवास्स्वेति)। सेयमुपदेष्टव्यस्य शिष्यस्य प्रकृतौ तुष्टिः प्रकृत्याख्या तुष्टिः अम्भ इत्युच्यते। "या च प्रकृत्यविवेकख्यातिर्न सा प्रकृतिमात्राद्भवति मा भूत्सर्वस्य सर्वदा तन्मात्रस्य सर्वान् प्रत्यविशेषात् प्रव्रज्यायास्तु सा भवति तस्मात्प्रव्रज्यामुपाददीथाः कृतं ते ध्यानाभ्यासेनायुष्मन्नित्युपदेशे या तुष्टिः सोपादानाख्या सलिलमुच्यते। 'या तु प्रव्रज्यापि न सद्यो निर्वाणदेति सैव कालपरिपाकमपेक्ष्य सिद्धिन्ते विधास्यति अलमुत्तप्ततया तवेत्युपदेशे या तुष्टिः सा कालाख्या मेघ उच्यते। "या तु न कालात् नाप्युपादानाद्विवेकख्यातिरपि तु भाग्यादेव अतएव मदालसापत्यानि अतिबालानि मातुरुपदेशमात्रादेव विवेकख्यातिमन्ति मुक्तानि बभूवुः तत्र भाग्यमेव हेतुर्नान्यदित्युपदेशे या तुष्टिः सा भाग्याख्या तुष्टिरुच्यते। बाह्या दर्शयति बाह्यास्तुष्टयोविषयोपरमात् पञ्च. याः खल्वनात्मनः प्रकृतिमहदहङ्कारादीनात्मत्वभिमन्यमानस्य वैराग्ये सति तुष्टयस्ता बाह्याः आत्मज्ञानाभावेऽनात्मानमधिकृत्य प्रवृत्तेरिति। ताश्च वैराग्ये सति सम्भवन्ति तुष्टय इति वैराग्यहेतुपञ्चविधत्वाद्वैराग्याण्यपि पञ्च, तत्पञ्चकत्वात् तुष्टयः पञ्चेति, उपरम्यतेऽनेनेत्युपरमो वैराग्यं विषयादुपरमो विषयोपरमः। विषया भोग्याः शब्दादयः पञ्च, उपरमा अपि पञ्च। तथा च अर्ज्जनरक्षणक्षयभोगहिंसादोषदर्शनहेतुजन्मान उपरमाः पञ्च भवन्ति। तथा हि सेवादयो धनोपार्जनोपायास्ते च सेवकादीन् दुःखा कुर्वन्ति। दुष्प्रदुरीश्वरद्वाःस्थदण्डचण्डवाग्वज्रजां वेदनां भावयन् प्राज्ञः कः सेवासु प्रसज्जते। एवमन्येऽप्यर्जनोपाया दुःखा इति विषयोपरमे या तुष्टिः सैषा पारमुच्यते। तथार्जितं धनं राजकागारिकाग्निजलौघादिभ्यो विनङ्क्ष्यतीति तद्रक्षणे महद्दुःखमिति भावयतो विषयोपरमे या तुष्टिः द्वितीया सुपारमुच्यते। तथा महतायासेनार्जितं धनं भुज्यमानं क्षीयते इति तत्प्रक्षयं भावयतो विषयोपरमे या तुष्टिः सा तृतीया पारपारमुच्यते। एवं शब्दादिभोगाभ्यासाद्वर्द्धन्ते कामास्ते च विषयाप्राप्तौ कामिनं दुःखयन्तीति भोगदोषं भावयतो विषयोपरमे या तुष्टिः सा चतुर्थी अनुत्तमाम्भ उच्यते। एवं नानुपहत्य भूतानि विषयोपभोगः सम्भवतीति हिंसादोषदर्शनाद्विषयोपरमे या तुष्टिः सा पञ्चमी उत्तमाम्भ उच्यते। एवमाध्यात्मिकीभिश्चतसृभिर्बाह्याभिश्च पञ्चभिर्नव तुष्टयोऽभिमताः"। भाष्यकृता अन्यथा तुष्टिभेदा दर्शिता यथा "तुष्टिर्नवधा" सा सू॰ "आध्यात्मिक्यादिभेदान्नवधा तुष्टिः" भा॰। "इदं सूत्रं कारिकया व्याख्यातम्। आध्यात्मिक्य इत्यादि अस्यायमर्थः। आत्मानं तुष्टिमतः सङ्घातमधिकृत्य वर्त्तन्त इत्याध्यात्मिक्यस्तुष्टयश्चतस्रः। तत्र प्रकृत्याख्या तुष्टिर्यथा। साक्षात्कारपर्य्यन्तः परिणामः सर्वोऽपि प्रकृतेरेव तं च प्रकृतिरेव करोत्यहं तु कूटस्थः पूर्ण इत्यात्मभावनात् परितोषः। इयं तुष्टिरम्भ इत्युच्यते। ततश्च प्रव्रज्योपादानेन या तुष्टिः सोपादानाख्या सलिलमित्युच्यते। ततश्च प्रव्रज्यायां बहुकालं समाध्यनुष्ठानेन या तुष्टिः सा कालाख्या तुष्टिर्मेघ इत्युच्यते। ततश्च प्रज्ञानपरमकाष्ठारूपे धर्ममेघसमाधौ सति या तुष्टिः सा जलाख्या तुष्टिरित्युच्यत इति चतस्र आध्यात्मिक्यः।

बाह्याः पञ्च तुष्टयो बाह्यविषयेषु पञ्चसु शब्दादिष्वर्जनरक्षणक्षयभोगहिंसादिदोषनिमित्तकोपरमाज्जायन्ते । ताश्च तुष्टयो यथाक्रमं पारं सुपारं पारापारमनुत्तमाम्भ उत्तमाम्भ इति परिभाषिता इति । कश्चित् त्विमां कारिकामन्यथा व्याख्यातवान् । तद्यथा विवेकसाक्षात्कारोऽपि प्रकृतिपरिणाम एवेत्यलं ध्यानाभ्यासेनेत्येवं दृष्ट्या या ध्यानादिनिवृत्तौ तुष्टिः सा प्रकृत्याख्या । प्रव्रज्योपादानेनैव मोक्षो भविष्यति किं ध्यानादिनेति या तुष्टिः सोपादानाख्या । कृतसद्ग्रासस्यापि कालेनैव मोक्षो भविष्यत्यलमुद्वेगेनेति या तुष्टिः सा कालाख्या । भाग्यादेव मोक्षो भविष्यति न मोक्षशास्त्रोक्तसाधनैरेवं कुतर्के वा तुष्टिः सा भाग्याख्येत्यादिरर्थ इति तन्न । तद्व्याख्यातत्तुष्टीनामभावस्य ज्ञानाद्यनुकूलत्वेनाशक्तिपरिभाषानौचित्यादिति" ।

तुष—कर्त्तरि क्तिच् । ५गौर्य्यादिषु षोड़शसु मातृषु मध्ये मातृभेदे । कुलदेवताशब्दे २१३० पृ० दृश्यम् । ६अनन्तदेवपत्न्याञ्च । "अनन्तपत्नी तुष्टिश्च पूजिता वन्दिताऽभवत् । यया विना न सन्तुष्टाः सर्वे लोकाश्च सर्वतः" देवीभा० । "या देवी सर्वभूतेषु तुष्टिरूपेण संस्थिता" देवीमाहा० । "आचारश्चैव साधूनामात्मनस्तुष्टिरेव च" मनुः ।

**तुष्टिमत्** त्रि० तुष्टिरस्त्यस्य मतुप् । तोषयुक्ते । स्त्रियां ङीप् । २उग्रसेनात्मजे कंसभ्रातरि पु० "कंसः सुनामा न्यग्रोधः कङ्कः शङ्कुः सुहूस्तथा । राष्ट्रपालोऽथ सृष्टिश्च तुष्टिमानुग्रसेनजाः" भाग० ९।२४।१४ ।

**तुष्ट्** पु० तुष—बा० तक् । कर्णस्थमणौ शब्दच० ।

**तुष्य** पु० तुष—कर्त्तरि क्यप् । १महादेवे तुटितुटशब्दे दृश्यम्

**तुस** ध्वनौ भ्वा० पर० सक० सेट् । तोसति अतोसीत् । तुतोस ।

**तुस** पु० तुष+पृषो० । तुषे धान्यत्वचि रमानाथः ।

**तुस्त** न० तुस—क्त बा० इड़भावः । १रेणौ अमरे तुस्तेत्यत्र तुस्तेति पाठं मत्वा सारसुन्दर्यां व्याख्यातम् ।

**तुह** अर्द्दने बधे भ्वा० पर० सक० सेट् । तोहति । इरित् अतुहत् अतोहीत् । । तुतोह ।

**तुह(हा)र** पु०तुह—बा० करन् कारन् वा । कुमारपारिषद्भेदे । "तुहरश्च तुहारश्च चित्रदेवश्च वीर्य्यवान्" भा० स० ४६ अ० । कुमारपारिषदोक्तौ ।

**तुहिन** न० तुह्यतेऽनेन तुह—इनन् ह्रस्वश्च । १हिमे अमरः २चन्द्रतेजसि उज्ज्वल० "दृष्यान्तलग्नैस्तुहिनैः पतद्भिः" कुलस० "सान्द्रतुहिनान्तरित:" प्रबोधच० ।

**तुहिनकर** पु० तुहिनं करोत्यस्य । १चन्द्रे तुहिनांशुप्रभृतयोऽप्यत्र ।२कर्पूरे च ।

**तहिनांशुतैल** न० ६त० । कर्पूरतैले राजनि० ।

**तुहिनाचल** पु० ६त० । हिमालये तुहिनाद्रिप्रभृतयोऽप्यत्र ।

**तुहुण्ड** पु० दनुवंश्ये दानवभेदे । "अश्वग्रीवश्च सूक्ष्मश्च तुहुण्डश्च महाबलः । एकपादेकचक्रश्च विरूपाक्षमहोदरौ । निचन्द्रश्च निकुम्भश्च कुपटः कपटस्तथा । शरभः शलभश्चैव सूर्य्यचन्द्रमसौ तथा । एते ख्याता दनोर्वंशे दानवाः परिकीर्त्तिताः" भा० आ० ६५ अ० । २धृतराष्ट्रपुत्रभेदे "नन्दको बाहुशाली च तुहुण्डोविकटस्तथा" १८६ अ० ।

**तूड** अनादरे भ्वा० पर० सक० सेट् । तूडयति अतूडीत् । तुतूड । ऋदित् । णिच् अतुतूड़त् त ।

**तूण** सङ्कोचे अद० चुरा० उभ० सक० सेट् । तूणयति ते । अतुतूणत् त ।

**तूण** सङ्कोचे चु० उभ०सक०सेट् । तूणयति ते अतूतुणत् त ।

**तूण** पूरणे चु० आ० सक० सेट् । तूणयते, अतूतुणत् त ।

**तूण** पु० तूण्यते पूर्य्यते वाणैः तूण--पूरणे कर्म्मणि घञ् । इषुधौ वाणाधारे अमरः ।

**तूणक** न० "तूणकं भवेदिदं रजौ रजौ ततश्च रः" वृ० र० टीकोक्ते पञ्चादशाक्षरपादके छन्दोभेदे ।

**तूणधार** पु० तूणं धारयति धारि--अण् उप० स० । तूणधारिणि धानुष्के । अस्य नियुक्तत्वात् "अणि नियुक्ते"पा० न आद्युदात्तत्वम् । किन्तु तत्पुरुषस्वरः ।

**तूणव** पु०तूणस्तदाकारोऽस्त्यस्य केशा०व तूणं तदाकारं वाति वा—क वा । तूणाकारे वाद्यभेदे । "सैषा वाग् वनस्पतिषु वदति या दुन्दुभौ या तूणवे या वीणायाम्" तै० स० ६।१।४।१ । "वीणावाद क्रोशाय तूणवध्ममवरस्पराय" यजु० ३०।१९ । "तूणवं वाद्यभेदं धमति तथाभूतम्" वेददी० । "वीणावादं पाणिघ्नं तूणवध्मं तानूत्तायानन्दाय" यजु० ३०।२० ।

**तूणवत्** त्रि० तूण+अस्त्यर्थे मतुप् मस्य वः । १तूणयुक्ते धानुष्के "सायुधा बद्धनिस्त्रिंशास्तूणवन्तः समागताः" भा० व० ९अ० । ठन् । तूणिक इनि तूणिन् तत्रार्थे त्रि० इन्यन्तस्य स्त्रियां ङीप् । तूणिन् । नन्दिवृक्षे पु० राजनि० ।

**तूणी** स्त्री तूण्यते पूर्य्यते शरैः तूण–पूरणे घञ् गौरा° ङीष् । १इषुधौ २तूणे ३नील्यां शब्दार्थचि° । ४तूणे स्त्री टाप् शब्दार्थचि° ।

**तूणीक** पु° तूणीव कायति कै–क । नन्दिवृक्षे राजनि° ।

**तूणीर** पु° तूण्यते पूर्य्यते शरैः तूण–पूरणे बा° ईरन् । १तूणे इषुधौ अमरः ।

**तूतक** न° तुत्थ+पृषो° । तुत्थे (तुँतिया) शब्दच° ।

**तूतुजान** पु° तुजि–बले कानच् तुजा° अभ्यासदीर्घः बा° नलोपः । १क्षिप्रे निघण्टुः ।२प्रेर्य्यमाणे च तुजधातौ दृश्यम् ।

**तूतुजि** स्त्री तुजि–बले दाने वा कि द्वित्वे तुजा° अभ्यासदीर्घः नलोपः । १क्षिप्रे निघण्टुः २दातरि च । "जज्ञेऽन्तूतुजिं चित्तूतुजिरशिश्नत्" ऋ° ७,२८।३ । "तूतुजिर्दाता" भा° ।

**तूतुज्यमानास** पु°तुजि–बले कर्मणि शानच् द्वित्वम् अभ्यासदीर्घः बा° नलोपः तथाभूतः असति दीप्यते अस–दीप्तौ अच् कर्म्म° । क्षिप्रे निघण्टुः ।

**तूतुम** त्रि° तुज–अच् द्वित्वे अभ्यासदीर्घः पृषो° । १तूर्णे माधवः "सवना तूतुमा कृषे" ऋ° १०।५०।५ । "एता विश्वा सवना तूतुमा कृषे" ऋ°१०।५०।६। "तूतुमा तूर्णानि" भा° ।

**तूद** पु° तुद–घञर्थे कर्म्मणि क पृषो°।१तूलवृक्षे राजनि°। अश्वत्थाकारे (पार्श्वपिप्पल) ख्याते वृक्षे भावप्र° "तूदं पक्वं गुरु स्निग्धं हिमं पित्तानिलापहम् । तदेवामं सुमधुरं संशोधि रक्तपित्तहृत्" ।

**तूदी** स्त्री देशभेदे । तूदी अभिजनोऽस्य ढक् । तौदेय पित्रादिक्रमेण तूदीदेशवासिनि त्रि° ।

**तूपर** पु° शृङ्गहीने १पशौ । स्त्रियां टाप् । तस्य शृङ्गहीनत्वकारणं यथा

"तासान्त्वेव वाऽश्रुवत्तासामहा एवमौ द्वादशौ मासौ सं संवत्सरमापयामेति तासां द्वादशसु मास्सु शृङ्गाणि प्रावर्त्तन्त ताः सर्वमन्नाद्यमाप्नुवंस्ता एतस्तूपरास्तस्मात्ताः सर्वान् द्वादशमासः प्रेरते सर्वं हिता अन्नाद्यमाप्नुवन्" ताण्ड्य°ब्रा°४।१।२।"तुशब्दो वैलक्षण्यद्योतनार्थः,तासां गवां मध्ये काश्चिदब्रुवन् किमित्युच्यते, यौ द्वादशौ द्वादशसंख्यापूरकावेव शिष्टावेकादशद्वादशौ मासौ इमौ आसामहा एवं अनुष्ठायैवं अनुष्ठाय प्रारब्धं संवत्सरसाध्यं समापयामेति व्यवहितास्येति समित्यस्य व्यवहितेन सम्बन्धः, तासां गवां जातानि शृङ्गाणि द्वादशसु मास्सु मासेषु पूर्णेषु प्रावर्त्तन्त प्रापतन् दशभिर्मासैः शृङ्गप्राप्तिलक्षणफले सिद्धेऽपि पुनरश्रद्धया यतो मासद्वयमन्वतिष्ठन् अतो जातानामपि शृङ्गाणां पुनः पतनमित्यभिप्रायः, तथा चैतरेयकम् "अथ समापयिषन्त्यामः संवत्सरमित्यासत तासामश्रद्धया शृङ्गाणि प्रावर्त्तन्तेति" । एतास्तूपरा इति ताः पतितशृङ्गाः गावः सर्वत्तुं भवमन्नाद्यमदनीयमन्नं प्राप्नुवन् ता गावस्तूपराः शृङ्गहीनाः दृश्यन्ते तस्मात्ताः सर्वान् द्वादश मासौ मासान् प्रेरते प्रगच्छन्ति ईर गतौ शीतवातातपेषु सर्वदा पुष्टाङ्गा एव यथायथं गच्छन्ति शृङ्गिणो महिषादयस्तु कृशा भवन्ति, तस्मादित्युक्तं कस्मादित्याह हि यस्मात्ता गावः सर्वमन्नाद्यमाप्नुवन् तस्मात् सर्वर्त्तुषु पुष्टाङ्गा भवन्ति तथा चैतरेयकम् "ऊर्ज्जमसमन्वत तस्माद् ताः सर्वभूतान्तरसुत्तिष्ठन्तीति" भा° । "प्राजापत्यांश्च सप्तदश शृङ्गामतूपरान् वत्सान्" कात्या° श्रौ° १४।२।१२ "अश्वस्तूपरो गोमृगस्ते प्राजापत्याः" यजु° ।२४।१ ।

**तूवर** पुंस्त्री° सौ° तु+क्विप् तूः वृ–वृत्यौ अच् कर्म्म° । तूपर+पृषो° पस्य वो वा ।१तूपरे कालेऽजातशृङ्गे पशौ २कालेऽजातश्मश्रुके पुरुषे ३अव्यक्तपुरुषलक्षणे च "जहि तूवरकं क्षिप्रं कर्णस्य बलमाद्रवत्" भा° द्रो° १३३अ° "तत्र तूवरकं बालं बह्वाशिनमविद्यकम्" भा° ए° १५८ अ° । २कषाये रसे पु° ३तद्वति त्रि° । ४आढक्यां ५सौराष्ट्रमृत्तिकायां स्त्री गौरा° ङीष् ।

**तूय** न° तोय+पृषो° । १जले निघण्टुः । तू–भावे सम्प° क्विप् तां याति या–क वा । २क्षिप्रे न° "देव हरिभिर्याहि तूयम्" ऋ° ३।४३।२ "तूयं क्षिप्रम्" भा° । ३क्षिप्रतायुक्ते त्रि°।"अद्रिवा ते मन्दिन इन्द्र ! तूयान्" ऋ° १०।२८।२ । "तूयानविलम्बितान्" भा° ।

**तूर** हिंसे, सक° वेगे अक° दिवा° आत्म° सेट् । तूर्य्यति अतूरिष्ट । तुतूरे ।

**तूर्** त्रि° तुर–कर्त्तरि क्विप् ।१वेगयुक्ते । भावे सम्प° क्विप् । २वेगे स्त्री "पूर्भिर्मयेन विहिताभिरदृश्यतूर्भिः" भा° २। ७।३८। "अदृश्यतूर्भिः अलक्ष्यवेगाभिः" श्रीधरः ।

**तूर** न°तूर्य्यते ताड्यते सुखमारुतेन तुर–घञर्थे कर्मणि क । १वाद्यभेदे (सानाइ) हेमच° । २ताड्यमाने पटहादौ शब्दार्थचि° । [ धूस्तुरे भावप्र° ।

**तूरी** स्त्री तूरं तदाकारोऽस्त्यस्याः अच् गौरा° ङीष् ।

**तूर्ण** न० त्वर—संभ्रमे भावे क्त पक्षे इड़भावः ऊठ् तस्य नः। १शीघ्रे कर्त्तरि क्त। २त्वरायुक्ते त्रि०अमरः। "अभ्याजतोऽभ्यागततूर्णतर्णकान्" माघः। "चूर्णमानीयतां तूर्णं पूर्णचन्द्रनिभानने !"। पर्णानि स्वर्णवर्णानि सीदन्त्याकर्णलोचने !" उद्भटः।

**तूर्णाश** न० तूर्णमश्नुते अश—अच्। १उदके। "प्रतिश्रुताया वो धृषत्तूर्णाशं न गिरेरधि" ऋ० ८।३२।४। "तूर्णाशमुदकं भवति तूर्णमश्नुते" निरु० भा०।

**तूर्णि** पु०त्वर—नि नि० ऊठ्। १मनसि उज्ज्वलदत्तः शब्दकल्पद्रुमे मलार्थतोक्तिः नकारस्थाने लकारभ्रमात्। भावेनि। २त्वरायां हेमच०। ३स्रोके संक्षिप्तसारे उणा० ४क्षिप्रे निघण्टुः। ५तद्वति त्रि०। "प्र यततस्तोता जरिता तूर्णयर्थः" ऋ० ३,५,२।५। "तूर्णयर्थः त्वरितगमनाः" भा० "विगाहं तूर्णिं तविषीभिरावृतम्" ऋ० १।१।५। "तूर्णिं क्षिप्रगामिनम्" भा०।

**तूर्त** न० त्वर—क्त ऊठ् वेदे न तस्य नः। १क्षिप्रे "यद्वै क्षिप्रं तत्तूर्तमथ यत् क्षिप्रात् क्षेपीयस्तत्प्रतूर्त्तम्" शत० ब्रा० ६।१।२।२।

**तूर्य** न० तूर्यते ताड्यते तूर—यत्। वाद्यभेदे "होमावसाने कृततूर्यनादः" मत्पु० तुलापुरुषदानविधौ "तत्र भुक्त्वा पुनः किञ्चित्तूर्यघोषैः प्रहर्षितः" मनुः। एतत्परस्य मानस्य गिरिनद्या० न णत्वम् तूर्यमानम् "सतूर्यमेनां स्नपयाम्बभूवुः" कुमा०।

**तूर्यखण्ड** पु० ६त०। वाद्यभेदे डगड़वाद्ये हारा०।

**तूर्व** न०तुर्व अच्—रेफे पूर्वस्य दीर्घः। १क्षिप्रे तूर्णे "तूर्वयाणो गूर्त्तवचस्तमः" ऋ० १०।६१।२। "तूर्ययाणस्तूर्णगमनः" भा०। "रक्षो अग्निमशुषं तूर्वयाणम्" ऋ० १।१७४।३। [ऋ० ८।४२।२।

**तूर्वि** न० तुर्व—इन् दीर्घः। १क्षिप्रे "वाहधानाय तूर्वये"

**तूल** पूरणे चुरा० आ० सक० सेट्। तूलयते अतूतुलत।

**तूल** इयत्तापरिच्छेदे निष्काशने भ्वा० पर० सक० सेट्। तूलति अतूलीत्। तुतूल।

**तूल** न० तूलयति पूरयति तूल्यते वा तूल -अच्। १सर्वव्यापके आकाशे मेदि० २अश्वत्थाकारे तूदे वृक्षे भावप्र० तूदशब्दे दृश्यम्। कार्पासादिबीजजाते(तूला)। ख्याते पदार्थे। "सर्वं दहति गङ्गाम्भस्तूलराशिमिवानलः" प्रा० त०। अव्ययीभावेऽस्य "कूलतीरतूलेत्यादिना" पा०आद्युदात्तता उपतूलम्। तूलशब्दे परे ईषिकाशब्दस्य षष्ठी तत्पुरुषे ह्रस्वः। ईषिकतूलं मुञ्जषीकातूलम्। "कञ्चुकं तूलगर्भञ्च तूलिकाम् सूपवीतिकां मञ्जिष्ठाद्युपवासांसि तथा तूलवतीं पटीम्। ऊर्णामयानि वासांसि यतिभ्योऽपि प्रदापयेत्" काशी० ४ अ०।

**तूलक** न० तूल—स्वार्थे क। तूले हेमच०।

**तूलकार्मुक** न० तूलस्य स्फोटनार्थं कार्मुकम्। तूलस्फोटनार्थे धनुषि (धुनखरा) तूलचापादयोऽप्यत्र शब्दच०।

**तूलनालि(ली** स्त्री० तूलनिर्म्मिता नाली। पिञ्जिकायाम् (पाइज) स्वार्थे क। अत्रैवार्थे स्त्री लिका०।

**तूलपिचु** पु० पिच—मर्दने कुन् तूलप्रधानः पिचुः। तूलवृक्षे (तुलारगाछ) भरतः। [राजनि०।

**तूलवृक्ष** पु० तूलसाधनं वृक्षः शाक०त०। शाल्मलिवृक्षे।

**तूलशर्करा** स्त्री तूलस्य शर्करेव। कार्पासबीजे रत्ना०।

**तूलसेवन** न० ६त०। तूलसूत्रकर्त्तने (काटनाकाटा) शब्दमा० तूलसेचनेति चमध्यपाठः प्रमादिकः।

**तूलि(ली)** स्त्री तूल-इन् वा ङीप्। चित्रसाधने स्वनामख्याते पदार्थे सि० कौ०।

**तूलिका** स्त्री तूली स्वार्थे क। १नील्यां २वर्त्तौ च शब्दर०। तूलीशब्दार्थे ३लेख्यकूर्च्चिकायां ४वीरणादिशलाकायाम्। ५आवर्त्तितसुवर्णादेर्द्रवाधारपात्रभेदे(मुचि), तूल अस्त्यस्य ठन् कापि अत इत्त्वम्। ६(तोषक्) शय्याभेदे तूलशब्दे उदा०। "उन्मीलितं तूलिकयेव चित्रम्" कुमा०। "तूलिका कथिता लेख्यकूर्चिका तूलशय्ययोः" विश्वः। तूलपूरितशय्या च तूलशय्येत्यर्थः।

**तूलिनी** स्त्री तूलोऽस्त्यस्या इनि ङीप्। शाल्मलीवृक्षे भावप्र०। २लक्ष्मणाकन्दे राजनि०। ३तूलयुक्ते त्रि० स्त्रियां ङीप् तूलिफला। [रत्नमा०।

**तूलिफला** स्त्री तूलि तूलवत् फलं यस्याः। १शाल्मलीवृक्षे

**तूवर** पु० सौ०तु—बा० वरच् दीर्घश्च। १तूपरशब्दार्थे २कषाये रसे अमरः। ३तद्वति त्रि० अमरः।

**तूवरिका** स्त्री सौ० तु—बा० वरच् दीर्घः संज्ञायां कन् कापि अत इत्त्वम्। १आढक्याम् (अड़हड़) २सौराष्ट्रमृत्तिकायाञ्च भरतः। [कायाञ्च (फिट्किरि) भरतः।

**तूवरी** स्त्री तूवर+गौरा०ङीष् ।१आढक्याम् २सौराष्ट्रमृत्ति-

**तूष** तुष्टौ भ्वा० पर०सक०सेट्। तूषति अतूषीत्। तुतूष।

**तूष्णींशील:** त्रि० तूष्णीं शीलं यस्य। १मौनावलम्बिनि।

**तूष्णीक** त्रि० तूष्णीं शीलं यस्य शीलेऽर्थे कन् मलोपश्च। मौनावलम्बिनि अमरः।

**तूष्णीकाम्** अव्य० तूष्णीम्+अकच्प्रकरणे तूष्णीमः काम् वक्तव्यः” वार्त्ति० काम् मित्त्वादन्त्यादचः परः। तूष्णीं शब्दार्थे। “तूष्णीकामास्ते” सि०कौ०।

**तूष्णीङ्गङ्ग** अव्य० तूष्णीं गङ्गा यत्र “अन्यपदार्थे च संज्ञायाम्” पा० बहुव्रीह्यर्थे अव्ययी०। १देशभेदे। “अपांह्रदं च पुण्याख्यं भृगुतुङ्गं च पर्वतम्। तूष्णीङ्गङ्गं च कौन्तेय! सामान्यः समुपस्पृश” भा०व० ११५अ०। तूष्णीङ्गङ्गे इत्यत्र सप्तम्या वा न अम।

**तूष्णीम्** अव्य०तूष वा०नीम् स्वरादि। १मौने(चुपकरा)अमरः। “यत्किञ्चित् दश वर्षाणि सन्निधौ प्रेक्षते धनी। भुज्यमानं परैस्तूष्णीं न स तल्लब्धुमर्हति” मनुः “परैर्वा कीर्त्यमानेषु तूष्णीमास्ते पराङ्मुखः”भा०शा०१०३अ०। तूष्णींशब्दे उपपदे “तूष्णीमि भुवः”क्त्वाणमुलौ तूष्णींभूय तूष्णीं भावम्।“तूष्णींभूय भयादासाञ्चक्रिरे सगपत्त्विणः”भट्टिः। क्त्वा च इति”पा०वा समासाभावेतूष्णीं भूत्वा।

**तूष्णीभाव** पु० तूष्णीम्+भू–घञ्। तूष्णीम्भवने मौनावलम्बने“अनिमिषनयननिरीक्षणे तूष्णींभावादयस्तत्र”सा० द० “तूष्णींभावेऽपि विज्ञेयं न चेद्भवति कारणम्” भा० शा०१०३अ०।

**तूस्त** न० तुस–वा० तन् दीर्घश्च। १रेणौ। २जटायाञ्च मेदि० ३पापे ४स्तन्ते च शब्दच०।

वि+तूस्त–णिच्। तूस्तस्य हनने। वितूस्तयति तूस्तं केशं इत्येके जटीभूताः केशा इत्यन्ये पापमित्यपरे सि०कौ०।

**तृंहण** न०तृहि–भावे ल्युट्। हिंसने। [या तत्र पाठः तत्रार्थे।

**तृक्वन्** पु०स्तेने निघण्टुः रिक्वेत्यत्र पाठान्तरम् तृक्वा तिक्वेति

**तृक्ष** गतौ भ्वा० पर०सक० सेट्। तृक्षति अतृक्षीत् ततृक्ष।

**तृक्ष** पु० तृक्ष–अच्। काश्यपे ऋषौ तस्यापत्यं गर्गा० यञ्। तार्क्ष्य गरुड़े अश्वे विहगमात्रे च तार्क्ष्यशब्दे दृश्यम्

**तृक्षाक** पु०तृक्ष–आकन्। ऋषिभेदे ततोऽपत्ये शिवा० अण्। तार्क्षाक तदपत्ये।

**तृक्षि** पु० तृक्ष–इन्। त्रसदस्योः पुत्रे ऋषिभेदे। “येभिस्तृक्षिं वृषणा त्रासदस्यवम्” ऋ० ८।२२।७। “त्रासदस्यवं त्रसदस्योः पुत्रं तृक्षिमेतन्नामकम्” भा०।

**तृख** न० तृष–क पृषो०। जातीफले।

**तृ(त्रृ)च** न० तिसृणामृचां समाहारः तिस्र ऋचो यत्र वा अच्समा० वा सम्प्रसारणम्।१समानदेवताकानां समानच्छन्दस्कानामृचां त्रये २तद्युक्ते अनुवाकसूक्तादौ त्रि०। “मधुवाता तृचं जपेत्” हेमाद्रिश्राद्धकल्पः। “याश्चोषघोरिति तृचेनैवपत्युदपात्रवत्” कात्या० श्रौ० १७।३।८। सूक्तपरत्वे न० “गायत्रं तृचं दश तयीषु विद्यते” निरु० १।२।४०। वा संप्रसारणाभावे त्र्यचमप्यत्र।

**तृण** अदने तना० उभ० सक० सेट्। तृणोति तर्णोति तृणुते-तर्णुते। अतर्णीत् अतर्णिष्ट। उदित् तर्णित्वा-तृण्ट्वा।

**तृण** न० तृह–नक् हलोपश्च। १नडादौ, खटे (खड़)। अमरः। “तृणेन वात्येव तयाऽनुगम्यते” नैष०। “लघुर्भवतृणं नरः” माघः। तृणसायं शिवा० अण्। तार्ण तृणजन्ये वह्नौ पु० “तार्णतार्णभयं नास्तीति” जगदीशः। तृणसम्बन्धिमात्रे त्रि०। घोषादि० उत्तरपदस्थे तृणशब्दे पूर्वपदमाद्युदात्तम्। ग्रामतृणमित्यादि। समूहार्थे पाशा० य। तृण्या तृणसमूहे स्त्री तत्र भवः। उत्करा० मत्वर्थे छ नडा० कुक् च। तृणकीय तृणभवे त्रि०।

स्वल्पं तृणं कन्। तृणक स्वल्पतृणे “क्रोधाग्नेतास्तृणकेनापि राजन्!”भा०आ०८१अ०। स्वार्थे क। तत्रार्थे।

**तृणकर्ण** पु० तृणमिव कर्णोऽस्य। ऋषिभेदे ततः शिवा० अपत्यादौ अण्। तार्णकर्ण तद्गोत्रापत्ये। यस्का०बहुषु अणो लुक्। तृणकर्णास्तद्गोत्रापत्येषु ब० व०।

**तृणकाण्ड** न० तृणानां समूहः दूर्वा० काण्डच्। तृणसमूहे

**तृणकुङ्कुम** न० तृणजातं कुङ्कुमम्। सुगन्धद्रव्यभेदे राजनि०। “तृणकुङ्कुमं कटूष्णं कफपित्तविनाशनम्। वातशोकपामकण्डूकुष्ठामदोषनाशनम्। परमं भास्वरं तत्तु भिषग्भिः परिकीर्त्तितम्” राजनि० तद्गुणा उक्ताः।

**तृणकुटी** स्त्री तृणाच्छादिता कुटी शा०त०। तृणाच्छादिते गृहे त्रिका०। तृणकुटीरादयोऽप्यत्र (कुड़ेघर)।

**तृणकूर्म्म** पु० तृणमयः कूर्म्मः। तुम्बुर्यां शब्दमा०।

**तृणकेतु** पु०तृणेषु केतुरिव श्रेष्ठत्वात् असारत्वाद्वा।१वंशवृक्षे, २तालवृक्षे, तृणद्रुमतृणध्वजावप्यत्र। राजनि०। स्वार्थे क। तत्रार्थे।

**तृणगण्ड** पु० तृणमिव गण्डोऽस्य। उच्चिङ्कटे (उच्चिङ्गड़ा) कीटभेदे मेदि०। [२तृणजलौकायाञ्च।

**तृणगोधा** स्त्री तृणमिव गोधा। १गोधाजातकलासे मेदि०

**तृणगौर** न० तृणमिव गौरं पीतम्। तृणकुङ्कुमे राजनि०।

**तृणग्रन्थि** स्त्री तृणमिव ग्रन्थिरस्य। स्वर्णजीवन्याम् राज०

**तृणग्राहिन्** पु० तृणं गृह्णाति ग्रह–णिनि ६त०। नीलमणौ राजनि०।

**तृणचर** पु० तृणेषु चरति चर--अच् । १गोमेदमणौ २तृणचारिमात्रे त्रि० ।

**तृणजम्भन्** त्रि० तृणं जम्भो भक्ष्यमस्य तृणमिव जम्भोदन्तोऽस्य "जम्भा सुहरित तृणसोमेभ्यः" पा० कृतसमासान्तः नि०। तृणभक्षके तृणतुल्यदन्तयुक्ते च । शब्दकल्पद्रुमे अदन्तोक्तिः प्रामादिकी पा० सू० नान्ततयैव निपातनात् ।

**तृणजलायूका** स्त्री० तृणाकारा तृणजाता वा जलायूका जलौकाभेदे । "तद्यथा तृणजलायूका तृणस्यान्तं गत्वात्मानमुपसंहरत्येवमेवायं पुरुष इदं शरीरं निहत्याविद्यां गमयित्वात्मानमुपसंहरति" शत० ब्रा० १४।७ २।४। तृणजलूकादयोऽप्यत्र स्त्री "यथा तृणजलूकेयं नापयात्यपयाति च" भाग० ४।२६।७६।

**तृणजलौकान्याय** तृणजलौकायाः यथा अपरदेशसंयोगानन्तरं पूर्वदेशवियोगस्तत्तुल्ये जीवस्यापरदेहसंयोगेन पूर्वदेहपरित्यागरूपे न्याये । स च नैयायिकानां तृणजलूकाशब्दे दर्शितश्रुत्या कल्पितः । तदेतन्मतं शा०भा० आशङ्क्य तन्मूलश्रुतेरन्यार्थत्व प्रदर्श्य दूषयित्वा छा० उ० पञ्चाग्निविद्युक्तोश्रुतेः अन्यविध एव संसरणप्रकार उक्तः। यथा "नन्वन्या श्रुतिः तृणजलौकावत् पूर्वदेहं न मुञ्चति यावन्न देहान्तरमाक्रमतीति दर्शयति । इति। तद्यथा तृणजलायूकेति, (तृणजलायूकाशब्दे दर्शिता) तत्राप्यपरिवेष्टितस्यैव जीवस्य कर्मोपस्थापितप्रतिपत्तव्यदेहविषयभावनादीर्घीभावमात्रं तृणजलूकयोपमीयत इत्यविरोधः । एवं श्रुत्युक्ते देहान्तरप्रतिपत्तिप्रकारे सति याः पुरुषमतिप्रभवाः कल्पनाः" इत्युपक्रमे 'ताः सर्वा एवानादर्तव्याः श्रुतिविरोधात्"। "नन्वेतद्देहं त्यक्त्वाऽद्भिः सहगतस्य पश्चाद्देहान्तरप्राप्तिरित्ययुक्तम् । यथा तृणजलायूका तृणान्तरं गृहीत्वा पूर्वतृणं त्यजति तथा जीवो देहान्तरं गृहीत्वा पूर्वदेहं त्यजतीति श्रुतिविरोधा'दिति शङ्कते नन्विति । इहैव कर्म्मायत्तभाविदेहं देहोऽहमित्यादिभावनया गृहीत्वा पूर्वदेहं त्यजतीति श्रुत्यर्थः । अतो न विरोधः, इति समाधत्ते, तत्रापीति भावनाया दीर्घभावो भाविदेहविषयत्वम् । घटाकाशवदुपहितो जीवः सूक्ष्मोपाधिगत्या लोकान्तरं गच्छतीति पञ्चाग्निश्रुत्युक्तः प्रकारस्तद्विरोधादन्याः कल्पनाः अनादर्तव्या इत्यन्वयः" रत्नप्र० ।

**तृणजाति** स्त्री तृणमेव जातिः । उलपादौ (खड़) ।

**तृणज्योतिस्** न० तृणेषु मध्ये ज्योतिः ज्योतिष्मतः । रात्रौ प्रकाशवत्यां ज्योतिष्मत्यां लतायाम् शब्दार्थचि० ।

**तृणता** स्त्री तृणमिव तायते ताय--क्विप् । १धनुषि तृणस्य भावः तल् । २तृणत्वे च मेदि० ।

**तृणद्रुम** पु०तृणमिव द्रुमः असारत्वात् । १नारिकेले, २ताले, ३गुवाके, ४ताल्यां, ५केतक्यां, ६खर्ज्जूरे, ७हिन्ताले, ८खर्ज्जूर्य्यां च । "फलमुद्गमेते च हिन्तालसहितास्त्रयः (तालनारिकेलगुवाकाः) खर्ज्जूरः केतकी ताली खर्ज्जूरी च तृणद्रुमाः" अमरः ।

**तृणधान्य** न० तृणमिव धान्यं अकृष्टोत्पन्नत्वात् शाक० त०। १नीवारे, अमरः २श्यामाकादौ च ।

**तृणध्वज** पु०तृणेषु ध्वज इव ।१तालवृक्षे २वंशवृक्षे च अमरः

**तृणनिम्ब** पु० तृणाकारः निम्बः । नेपालनिम्बे किराततिक्ते (चिराता) राजनि० ।

**तृणप** पु० तृणं पाति -पा क । गन्धर्वभेदे । "युगपस्तृणपः कार्ष्णिर्नन्दिश्चित्ररथस्तथा" भा०आ०१२३अ०। गन्धर्वोक्तौ ।

**तृणपञ्चमूल** न० तृणरूपाणां पञ्चानां मूलम् । कशेरुशरदर्भकाशेक्षुवालुकादिकात्मके पञ्चमूले वैद्यकम् । [राजनि० ।

**तृणपत्रिका** स्त्री तृणस्येव पत्रमस्त्यस्याः ठन् । इक्षुदर्भायां

**तृणपत्री** स्त्री तृणमिव पत्रमस्याः गौरा० ङीष् । गुण्डासिन्यां राजनि० ।

**तृणपदी** स्त्री तृणस्येव पादोऽस्याः अन्त्यलोपः कुम्भप० ङीपि पद्भावः । तृणतुल्यमूलयुक्तायां लतायाम् ।

**तृणपीड** न० तृणस्येव पीड़ा यत्र । युद्धभेदे "तृणपीड़ं यथाकामं पूर्णयोगं सहस्तिकम् । एवमादीनि युद्धानि प्रकुर्वन्तौ परस्परम्" भा० स० २३अ० ।

**तृणपुष्प** न० तृणजातं पुष्पम् । तृणकुङ्कुमे १गन्धद्रव्यभेदे राजनि०। तृणमिव पुष्पमस्याः ङीप् । २सिन्दूरपुष्पीवृक्षे स्त्री राजनि०। [स्वार्थे क। तृणपुष्पिकाऽप्यत्र स्त्री मेदि०।

**तृणपूली** स्त्री तृणनिर्मिता पूली । चञ्चायां (चाँच) हारा०

**तृणमणि** पु० तृणग्राहको मणिः शा० त० । तृणग्राहिणि मणिभेदे हारा० ।

**तृणमत्कुण** पु० प्रतिभुवि (जामिन्) त्रिका० ।

**तृणमय** त्रि० तृणस्य विकारः शरा० मयट् । तृणविकारे "कुर्य्यात् तृणमयं चापं शयीत मृगशायिकाम्" भा० आ० १४५ अ० । स्त्रियां ङीप् । [तालवृक्षे अमरः ।

**तृणराज** पु० तृणेषु राजते राज--अच् ६त० टच् समा०वा ।

**तृणवल्लजा** स्त्री तृणरूपा वल्वजा । वल्वजायां राजनि० ।

**तृणविन्दु** ऋषिभेदे "जयद्रथेन पापेन यत् कृष्णा क्लेशिता

वने। यातेषु मृगयाञ्चैव तृणविन्दोराश्रमम्" भा० श० ६२अ०।"तृणविन्दुप्रसादाच्च धौम्यस्य च महात्मनः" भा० वि० १२ अ०। "द्रौपदीमाश्रमे न्यस्य तृणविन्दो-रनुज्ञया" भा० व० २६३ अ०। "चरतः किल दुश्चरं तपः तृणविन्दोः प्रतिशङ्कितः पुरा" रघुः।

तृणविन्दुसरः ६त०। तृणविन्दोः ऋषेः सरोरूपे तीर्थे तत्-स्थानं भारते उक्तं यथा "मरुभूमेः शिरः स्थानं तृण-विन्दुसरः प्रति" भा० द० २५७ अ०।

तृणवीज न० ६त०। श्यामाके धान्ये रत्नमा०।

तृणशीत न० तृणेषु शीतम्। १कत्तृणे गन्धतृणे रत्नमा०। २जलपिप्पल्यां स्त्री राजनि०।

तृणशून्य न०१तृणमिव शून्यं फलरहितम्। केतकीपुष्पे २म-ल्लिकायाञ्च मेदि० तयोः फलरहितत्वात्तथात्वम्। तृणेन शून्यम्। ३तृणरहिते त्रि०।

तृणशूली स्त्री तृणं शूलमिव तीक्ष्णाग्रं यस्याः गौरा०ङीष्। लताभेदे। "कुरण्टास्तृणशूल्याश्च सिन्धुवारस्य यानि च" (पुष्पाणि) सुश्रु०।

तृणशोषक पुंस्त्री तृणमपि शोषयति शुष-णिच्--अण् उप० स०। राजिमत्सर्पभेदे। अहिशब्दे ५८१ पृष्ठे दृश्यम्

तृणशौण्डिका स्त्री तृणेषु शौण्डिका। लघुकेतकीवृक्षे। पारस्करनिघण्टुः। [हारा०।

तृणषट्पद पु० तृणमिव षट्पदः। (बोलता) वरोले

तृणसारा स्त्री तृणस्येव सारोऽस्याः। १कदल्याम् हारा०। तस्याः सर्वथाऽसारत्वात्तथात्वम्।

तृणसिंह पु० तृणे-सिंह इव। कुठारे शब्दार्थक०।

तृणसोमाङ्गिरस पु०दक्षिणदिक्स्थिते धर्मराजस्य ऋत्विग्भेदे "उन्मुचुः प्रमुचुश्चैव स्वस्त्यात्रेयश्च वीर्य्यवान्। दृढव्य श्चोर्द्ध्वबाहुश्च तृणसोमाङ्गिरास्तथा। मित्रावरुणयोः पुत्रस्तथाऽगस्त्यः प्रतापवान्। धर्मराजर्त्विजः सप्त-दक्षिणां दिशमास्थिताः भा० अनु० १५० अ०।

तृणस्कन्द तृणमिव स्कन्दति स्कन्द-अच्। तृणवच्चलन-स्वभावे "तृणस्कन्दस्य नु विशः" ऋ० १।१७२।३।

तृणहर्म्य पुंन०तृणव्याप्तो हर्म्यः। तृणव्याप्ते हर्म्ये हारा०

तृणाङ्क्षिप पु०तृणरूपोऽङ्घ्रिपः। मन्थानतृणे राजनि०।

तृणाग्नि पु० तृणजातोऽग्निः शा० त०। तार्णे वह्नौ त्रिका०। "ब्राह्मणस्त्वनधीयानस्तृणाग्निरिव शाम्यति" मनुः।

तृणाञ्जन पु० तृणमिवाञ्जनः। कृकलासे त्रिका०।

तृणाटवी स्त्री तृणप्रचुराटवी। तृणमये वने हेम०।

तृणाढ्य न० तृणेषु आढ्यम्। पर्वतजाते तृणे राजनि०।

तृणादि पु० चतुरर्थ्यां सप्रत्ययनिमित्ते शब्दगणे स च गणः पा० ग० सू० उक्तो यथा "तृण, नड, मूल, वन, पर्ण वर्ण, वराण, विल, पुल, फल, अर्जुन, अर्ण, सुवर्ण, वल, चरण, वस."।

तृणाम्ल न० तृणेषु अम्लम्। तृणजलवणे राजनि०।

तृणारणिन्याय पु० तृणस्यारण्योश्च वह्निजनने यथा परस्पर-निरपेक्षतया कारणत्वमेवं स्वातन्त्र्येण कारणतासूचके न्यायभेदे।

तृणावर्त्त पु०तृणमावर्त्तयति भ्रमयति आ+वृत-णिच्-अण्। १वात्यारूपे वातसमूहे(घूर्णा)२तद्रूपधारकाभासके असुरभेदे पु०

तृणासृज न०तृणेषु असृगिव रक्तत्वात्। तृणकुङ्कुमे राजनि०

तृणेक्षु पु० तृणमिक्षुरिव मधुररसत्वात्। वल्वजायां राजनि०।

तृणेन्द्र पु० तृणमिन्द्र इव। तृणराजे ताले वृक्षे। "हली-बल इति ख्याता भविष्यति धराधरः। त्रिशिरास्तस्य देवस्य शातकुम्भमयोद्गमः। ध्वजस्तृणेन्द्रो देवस्य भवि-ष्यति रथाश्रितः" भा० अनु० १४७ अ०।

तृणोत्तम पु० तृणेषु उत्तमः। उर्व्वाले तृणे राजनि०।

तृणोद्भव पु० तृणेभ्य उद्भवति उद्+भू-अच्। १नीवारे धान्यभेदे राजनि०। २तृणजाते वह्नौ च ३तज्जातमात्रे त्रि०।

तृणोल्का स्त्री तृणजाता उल्का। तृणजातायामुल्कायाम् "न हि तापयितुं शक्यं सागराम्भस्तृणोल्कया"हितो० "तृणोल्कया ज्ञायते जातरूपं वृत्तेन भद्रो व्यवहारेण साधुः" भा० उ० ३४ अ०। (घर)। हेमच०।

तृणौकस् न० तृणनिर्मितमोकः। तृणनिर्मिते गृहे (खडेर

तृणौषध न० तृणात्मकमौषधम्। एलवालुकाख्ये गन्धद्रव्ये शब्दच०।

तृण्या स्त्री तृणानां समूहः पाशा० य। तृणसमूहे।

तृतीय त्रि०त्रयाणां पूरणः त्रि+तीयत् संप्रसारणञ्च। त्रयाणां पूरणे। "वाग्दण्डं प्रथमं कुर्यात् धिग्दण्डं तदनन्त-रम्। तृतीयं धनदण्डं तु वधदण्डमतःपरम्" "मातुः प्रथमतः पिण्डं निर्वपेत् पुत्रिकासुतः। द्वितीयन्तु पितु-स्तस्यास्तृतीयं तत्पितुः पितुः" मनुः।

तृतीयक पु० तृतीयेऽह्नि भवः रोगः कन्। तृतीयदिनभवे ज्वरभेदे स च "दिनमेकमतिक्रम्य यो भवेत् स तृती-यकः" इत्युक्तलक्षणः।"वाताधिकत्वात् प्रवदन्ति तज्ज्ञा-स्तृतीयकञ्चापि चतुर्थकञ्च" सुश्रुतः।

तृतीयप्रकृति स्त्री तृतीया प्रकृतिः प्रकारः। स्त्रीपुरुषा-

पेक्षया तृतीये प्रकारे नपुंसके अमरः। तत्र तृतीयाप्रकृतिरिति व्यस्तं पदं समस्तत्वे तृतीयप्रकृतिरित्येव स्यात् व्यस्तपाठं दृष्ट्वा शब्दकल्पद्रुमे तृतीयाप्रकृतिशब्दकल्पनं प्रामादिकम्।

**तृतीययुगपर्य्यय** पु॰ तृतीयस्य युगस्य द्वापररूपस्य पर्य्ययः परिवर्त्तो यत्र काले। द्वापरयुगस्य परिवर्त्ताधारे कलिसन्धिरूपे काले "द्वापरे समनुप्राप्ते तृतीययुगपर्य्यये" भाग॰ १।४।१५ श्लो॰। इतः परं किं भविष्यतीति द्वापरे सन्देहे जाते इत्यर्थः तेन न विरोधः।

**तृतीयसवन** न॰ सूयते सोमोऽस्मिन् कर्म्म॰। कालत्रये सवनत्रयोपेताग्निष्टोमादेः तृतीये सवने। तद्विधानादि ताण्ड्य॰ ब्रा॰ १।६।१७ भाष्ये उक्तं यथा "तृतीयसवनारम्भमादित्यग्रहमाचरेत्। आर्भवेण स्तुगीताथ पञ्चकैः प्रचरत्यथ। सावित्रवैश्वदेवाख्यौ ग्रहौ सौम्यचरुस्तथा। पात्नीवतग्रहादूर्द्ध्वं यज्ञायज्ञायसंस्तवः। अग्निमारुतशस्त्रं स्यात् गृह्णीयात् हारियोजनम्। समाप्ते सवने पश्चात् कुर्य्यादवभृथं ततः। कुर्य्यादुदयनीयेष्टिमनूबन्ध्यां यजेत गाम्। देविकानिर्वपेद्देवसुवामपि यजूंष्यथ। उपोष्य वेदिमाग्नेयमिष्टाग्निष्टोमसंस्थितिः" "प्रातः सवने नोच्चैः कर्माणि" कात्या॰ श्रौ॰ ८।६।१८ "प्रातः सवने यान्युच्चैः कर्माणि प्रैषोच्चारणादीनि तान्यपि प्रथमस्वरेणैव कार्य्याणि "मन्द्रं प्रातः सवने चरन्तीति" शाखान्तरात्। अतश्चाग्नीदग्नीन्विहरेत्यादयः प्रैषा आश्रावणादयश्च प्रथमस्वरेणैव प्रयोज्याः" कर्कः। "मध्यमेन माध्यन्दिने" १९सू॰ "माध्यन्दिने सवने यानि कर्माणि नीचैर्यानि चोच्चैस्तान्युभयान्यपि मध्यमेन स्वरेण कार्य्याणि शाखान्तरे तथा श्रवणात्" कर्कः। "उत्तमेन तृतीयसवने" २०सू॰ "तृतीयसवने यानि नीचैर्य्यानि च मध्यमेन स्वरेण प्राप्नुवन्ति तानि सर्वाण्युत्तमेन तृतीयेनैव स्वरेण कार्य्याणि तथैव शाखान्तरे श्रुतत्वात्" कर्कः।

**तृतीया** स्त्री तृतीय+टाप्। १चन्द्रमण्डलस्य तृतीयकलाक्रियायां २तदुपलक्षिते कालभेदे च तत्र व्रतादिकालव्यवस्थादि तिथिशब्दे ३२९॰ पृ॰दर्शितम्। जन्मनक्षत्रापेक्षया ३तृतीयद्वादशैकविंशात्मकनक्षत्ररूपविपत्तारायाञ्च।

**तृतीयाकृत** त्रि॰ तृतीय+डाच्+कृ—क्त। १त्रिगुणं कृष्टे त्रिवारकृष्टे क्षेत्रादौ।

**तृतीयाश्रम** पुंन॰ कर्म्म॰। वानप्रस्थाश्रमे। "उषित्वैवं गृहे विप्रो द्वितीयादाश्रमात् परम्। वलीपलितसंयुक्तस्तृतीयन्तु समाश्रयेत्" संवर्त्तस॰।

**तृतीयिन्** त्रि॰ तृतीय+अस्त्यर्थे इनि। तृतीयभागार्हे। "सर्वेषामर्द्धिनो मुख्यास्तदर्द्धेनार्द्धिनोऽपरे। तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्च पादिनः" मनुः। दक्षिणागोशतविभागे।

**तृत्सु** त्रि॰ तृद—बा॰ सुक्। हिंसके। "गव्या तृत्सुभ्यो अजगन्युधा नृन्" ऋ॰७।१८,७। "तृत्सुभ्यो हिंसकेभ्य"। भा॰ २राजर्षिभेदे "व्यानवस्य तृत्सवे गयम्" ऋ॰ ७।१८।१३। तृत्सुं राजर्षिभेदम्" भा॰। [प्रतर्द्दनः।

**तृद** हिंसायां भ्वा॰ प॰सक॰ सेट्। तर्द्दति अतर्दीत् ततर्द्द।

**तृद** अनादरे रु॰उभ॰सक॰सेट्। तृणत्ति तृन्ते। इरित् अतर्दीत् अतृदत् अतर्द्दिष्ट। उदित् तर्दित्वा-तृत्त्वा। "भूतिं तृणद्मि यज्वानाम्" भट्टिः "अतस्य लोको बधिरा ततर्द" रघु॰ ४।२३।८ "ततर्द तरसा विष्णुर्वाणैः शत्रुबलार्द्दनः" हरिवं॰ १२४ अ॰। "सेहे कपीरयाश्चांश्च रिपोस्ततर्द शाखिना" "अतर्दीच्चैव शूलेन कुम्भकर्णः प्लवङ्गमान्" भट्टिः।

**तृदिल** त्रि॰ तृद-बा॰किलच्।१भेदके २भिन्ने च। "तृदिला अतृदिलासः" ऋ॰ १०।९४।११। "तृदिला भेदकाः अतृदिला अभिन्नाः" भा॰।

**तृन्प(म्प)** प्रीणने तु॰ पर॰ सक॰ सेट्। तृपति तृम्पति अतृम्पीत् अतृपीत्। ततृम्प ततृप।

**तृन्फ(म्फ)** प्रीणने तु॰ प॰ सक॰ सेट्। तृफति तृम्फति अतृम्फीत् अतृफीत् ततृम्फ ततृफ।

**तृन्ह** हिंसे तु॰ प॰ सक॰सेट् क्त्वा वेट्। तृंहति तृदिन् अतृहत्। ततृंह ततृहतुः ततृंहतुः।

**तृप** प्रीणने स्वा॰पर॰सक॰सेट्। तृप्नोति अतर्पीत्। ततर्प।

**तृप** सन्दीपने प्रीणने च वा चुरा॰ उभ॰ पक्षे भ्वा॰ पर॰ सक॰सेट्। तर्पयति ते तर्पति अततर्पत् त अतीतृपत् त। अतर्पीत्। ततर्प ततर्पिथ।

**तृप** प्रीणने दि॰पर॰ सक॰वेट् इरित्। तृप्यति अतर्पीत् अत्राप्सीत्-अतार्प्सीत्-अतृपत्। ततर्प।

**तृप** प्रीणने तु॰ पर॰ सक॰ सेट्। तृपति अतर्पीत्। "तृपत्सोमं पाहि" ऋ॰ २।११।१५।

**तृपत** पु॰ तृप। चन्द्रे उणादि॰। [संक्षिप्तसा॰।

**तृपाना** स्त्री तृप--कानच्। १लतायाम् २उषा॰।

**तृपल** न॰तृप—कलच्। १उपले प्रस्तरे। "अपां तमन्युस्तृपलप-

भर्मा" ऋ० १०।८८।५ । तृपलप्रभर्मा पाषाणादिभिः क्षिप्रप्रहारी" भा० । २त्रिफलायाञ्च।

**तृप्त** त्रि० तृप--क्त । १तृप्तियुक्ते । "नित्यं तृप्ता गृहेयस्य देवायज्ञस्य धर्म्मतः" भा०व०५८अ०। "स्वागतेनाग्नयस्तृप्ता आसनेन शतक्रतुः।पितरः पादशौचेन खिन्नानेन गृही यतिः" पु० ।

**तृप्ति** स्त्री० तृप--क्तिन् । भोजनादिना आकाङ्क्षितानिवृत्तौ "वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी" मनुः "तथा-लमेषा क्षुधितस्य तृप्त्यै" रघुः।

**तृप्तिमत्** त्रि०तृप्ति+अस्त्यर्थे इनि तृप्तमनेन इष्टादि० इनि वा। १तृप्तियुक्ते स्त्रियां ङीप् । २उदके निघण्टुः ।

**तृप्नु** त्रि० तृप--क्नु । तृप्तिशीले ।

**तृप्र** पु०तृप--रक् । १पुरोडाशे उज्ज्वलद०। २तर्पके त्रि० "न यं युक्तो न दुराशीर्न तृप्राः" ऋ० ८।२।५ "तृप्रास्तर्पकाः" भा० ३दुःखे न० ततः असहने आलु। तृप्रालु तदसहने। "तृप्रं दुःखमिति माधवः" सि०कौ० । ४घृते न० उणादि० ।

**तृफ** प्रीणने तुदा० पर० सक० सेट् । तृफति अतर्फीत् । ततर्फ । तृफतेरपि कलच् इत्युज्ज्वलदत्तः । दुर्गादासस्तु अयं मुचादित्वभ्रान्त्या तृम्फतीत्युदाजहार । तच्चिन्त्यं पा० मुचादिमध्ये तृफधातोरनुत्कीर्त्तनात् उज्ज्वलदत्तेन तृफते रिति निर्द्देशाच्च। मुचादयश्च सि०कौ०१५६१ आदौ दृश्याः । तृम्फादिशब्दे दृश्यः ।

**तृफला** स्त्री तृफ--कलच् । त्रिफलायाम् उज्ज्वलद०।

**तृफू** स्त्री तृफ--कू । कर्पजातौ उणादि० ।

**तृम्फादि** "तृम्फ तुम्फ तृम्फ दृम्फ ऋम्फ गुम्फ उम्फ शुम्फ" पा० धातुपाठोक्ते धातुगणभेदे ।

**तृष** तृष्णायां दिवा०पर०सक०सेट् । तृष्यति इरित् अतृषत् अतर्षीत् । ततर्ष ।"तृषित्वेवाशिषं स्वादु पिबन्तं सरितां पयः" । "समूर्च्छुर्वमूरन्तं ततृषुश्चोभये भटाः" "रक्ष-मश्नोलिषुः क्षुस्राः क्षताश्च कपयोऽतृषन्" भट्टिः ।

**तृष्(षा)** स्त्री तृष--सम्प०क्विप् वा टाप् । १आकाङ्क्षायां २पि-पासायां ३कामकन्यायाञ्च शब्दर०। ४लाङ्गलीवृक्षे शब्दच० "लोभो जनयते तृषां तृषार्त्तो दुःखमाप्नोति" हितोप० । "तृपा हि मे सुमहती त्वां दृष्ट्वा तृट्समाश्रितम्" भा० आश्व०५५ अ०।"न हन्ति मण्डूककुलं तृषाकुलः" ऋतु० ।

**तृषाभू** स्त्री ६त०। तृष्णाधारे क्लोमनि शब्दच०तृष्णाशब्दे चरकवाक्ये क्लोम्नस्तृष्णास्थानत्वं दृश्यम्।। [(गौरी)स्त्री शब्दच०

**तृषाहृ** न० तृषां हन्ति हन--ड । १जले २मधुरिकायां

**तृषित** त्रि०तृषा जातास्य तार०इतच् । १तृष्णान्विते हेमच० "तृषितान्याहवे भोक्तुं नृपमांसानि वै भृशम्" हरिवं० ९२अ० । [शब्दच० ।

**तृषितोत्तरा** स्त्री तृषित उत्तरः यस्याः । अशनपर्ण्याम्

**तृषु** न० तृ--तुर--वा सुक् पृषो० । १क्षिप्रे निघण्टुः। २तद्वति त्रि० स्त्रियामुदन्तगुणवचनत्वात् ङीप् । "तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि" ऋ० ४।४।१ ।"तृष्विति क्षिप्र-नाम भरतेर्वा त्वरतेर्वा निरु०" भा० । "तृषु यदन्ना तृषुणा" ऋ० ४।७।११ ।

**तृष्ट** त्रि० तृष--क्त वेदे वा० इड़भावः । १दाहजनके "तृष्टमेतत् कटुकमेतत्" ऋ० १०।८५।३४ । "तृष्टं दाह-जनकम्" भा० ।

**तृष्टामा** स्त्री तृष्टं दाहमामयति गमयति अम णिच्--अच् १नद्याम् "तृष्टामया प्रथमं यातवे" ऋ०१०।७५।६ । "तृष्टामया नद्या" भा० ।

**तृष्णज्** त्रि० तृष नजिङ् । १लुब्धे अमरः । "असिञ्चन्नुत्सं गोतमाय तृष्णजे" ऋ० १।८५।११ ।

**तृष्णा** स्त्री०तृष न किच्च । १पिपासायां, २लोभे, ३अप्राप्ताभि-लाषे च अमरः ४रोगभेदे । तन्निदानादि भावप्र० उक्तं यथा

"भयश्रमाभ्यां बलसङ्क्षयाद्वा ऊर्द्ध्वं चितं पित्तविवर्द्धनैश्च । पित्तं सवातं कुपितं नराणां तालुप्रपन्नं जनयेत् पिपासाम् । स्रोतःस्वपांवाहिषु दूषितेषु दोषैश्च तृट् सम्भवतीह जन्तोः । तिस्रः स्मृतास्ताः क्षतजा चतुर्थी क्षया-त्तथान्यामसमुद्भवा च । भुक्तोद्भवा सप्तमिकेति तासां निबोध लिङ्गान्यनुपूर्वशस्तु" । नराणां चितं स्वस्थान एव सञ्चितं पित्तं सवातं पित्तविवर्द्धनैः कट्वम्लोष्णादिभिः कुपितम् । भयश्रमाभ्यां बलसङ्क्षयादुपवासादेश्च वातः कुपितः । तद्द्वयं ऊर्द्ध्वं प्रसरत् तालुप्रपन्नं सत् पिपासां जनयेत् । न केवलं तालुन्येव दूषिते तृष्णा भवति किन्तु जलवाहिस्रोतःस्वपि । अत आह । स्रोतः स्वित्यादि । नन्वत्र बहुवचनमयुक्तम् । यतो जलवहे द्वे स्रोतसी सुश्रुतेनोक्ते । उच्यते । तयोरेवानेकप्रता-नयोगाच्च दोषः । अपांवाहिषु स्रोतःस्विति जिह्वादे-रप्युपलक्षणम् । यत आह चरकः । "दशवाहिनीश्च धमनीर्जिह्वाहृदयगलतालुक्लोम च । संशोष्य नृणां देहे कुरुतस्तृष्णामतिबलौ पित्तानिलाविति"। सङ्ग्रामाह तिस्र इत्यादि । तृष्णायाः सामान्यं लक्षणमाह ।

"सततं यः पिबेत्तोयं न तृप्तिमधिगच्छति। मुहुः काङ्क्षति तोयन्तु तं तृष्णार्दितमादिशेत्। वातजायालक्षणमाह। क्षामास्यता मारुतसम्भवायां तोदस्तदा शङ्खशिरःसु चापि। स्रोतोनिरोधो विरसञ्च वक्त्रं शीताभिरद्भिश्च विवृद्धिमेति"। शङ्खशिरःसु शङ्खयोः शिरसि च। स्रोतो निरोधः। पित्तजामाह "मूर्च्छान्नविद्वेषविलापदाहरक्तेक्षणत्वं प्रततश्च शोषः। शीताभिनन्दो मुखतिक्तता च पित्तात्मिकायां परिधूपनञ्च"। विलाप प्रलापः प्रततश्च शोषः अविरतश्च शोषः। शीताभिनन्दः शीतेच्छा। परिधूपनं कण्ठाद्धूमनिर्गम इव। कफजामाह। "वाष्पावरोधात् कफसंवृतेऽग्नौ तृष्णा बलासेन भवेन्नरस्य। निद्रागुरुत्वं मधुरास्यता च तयार्दितः शुष्यति चातिमात्रम्"। अग्नौ जठराग्नौ। कफसंवृते स्वकारणकुपितेन कफेनोपरिष्टादाच्छादिते। वाष्पावरोधात् अग्नेरूष्मावरोधात्। अवरुद्धानलोष्मणाम्बुवहस्रोतःशोषणात् बलासेन कफेन नरस्य तृष्णा भवेत्। तया तृष्णया अर्दितः पीड़ितः शुष्यति कृशो भवति। क्षतजामाह। "क्षतस्य रुक्शोणितनिर्गमाभ्यां तृष्णा चतुर्थी क्षतजा मता तु"। क्षतस्य शस्त्रादिक्षतयुक्तस्य। रुक् पीड़ा। क्षयजामाह। "रसक्षयाद्या क्षयसम्भवा सा तयाभिभूतस्तु निशादिनेषु। पेपीयतेऽम्भः स सुखं न याति तां सन्निपातादिति केचिदाहुः। रसक्षयोक्तानि च लक्षणानि तस्यामशेषेण भिषग् व्यवस्येत्"। रसक्षयलक्षणानि सुश्रुतेनोक्तानि "रसक्षये हृत्पीड़ा कम्पः शोषः शून्यता तृष्णा चेति"। व्यवस्येत् जानीयात्। आमजामाह। 'त्रिदोषलिङ्गामसमुद्भवा च हृच्छूलनिष्ठीवनसादकर्त्री'। भक्तोद्भवामाह। "स्निग्धं तथाम्लं लवणञ्च भक्तं गुर्वन्नमेवाशु तृषां करोति"। लवणञ्चेति चकारात् कटु च। उपसर्गजामाह "क्षीणस्वरः प्रताम्यं दीनाननहृदयशुष्कगलतालुः। भवति खलु सोपसर्गात् तृष्णा सा शोषिणी कष्टा"। शोषिणी धातुशोषिणी। उपसर्गमाह। "ज्वरमोह क्षयः श्वासो बाधिर्य्यं कास एव च। बहिर्निर्गतजिह्वत्वं सप्तैते तदुपद्रवाः"। तद्युक्तायां अरिष्टत्वञ्चाह "ज्वरमोहक्षयकासश्वासाद्युपसृष्टदेहिनाम्। सर्वास्त्वतिप्रसक्तारोग कृशानां वमिप्रसक्तानाम्। घोरोपद्रवयुक्तास्तृष्णा मरणाय विज्ञेयाः"। आदिशब्दादतीसारादीनां ग्रहणम्। अतिप्रसक्ताः निरन्तराः। घोरोपद्रवयुक्ताः अतीव मुखशोषादियुताः।

तृष्णाशब्दस्य वल्लीशब्देन द्वन्द्वे उभयपदे प्रकृतिस्वरः।

**तृष्णाक्षय** पु० तृष्णायाः क्षयो यत्र। १शान्तिगुणे हेमच० ६त०। २पिपासानाशे च।

**तृष्णारि** पु० ६त०। १पर्पटे राजनि०। २तृष्णानाशके च।

**तृष्णालु** त्रि० तृष्णा+अस्त्यर्थे आलु। तृष्णायुक्ते। "तृष्णालुर्भवति पूतनाग्रहीतः" सुश्रु०।

**तृष्य** त्रि० तृष—ऋदुपधत्वात् क्यप्। १लोभ्ये २एषणीये। भावे क्यप्। ३लोभे न०। तृष्यमस्त्यस्य मतुपि वेदे दीर्घः। तृष्यावत्। तृष्णायुक्ते। "अभ्यवर्षीत् तृष्यावतः प्राहृष्यागतायाम्" ऋ०७।१०३।३। तृष्यावतस्तृष्णायतः" भा०।

**तृह** हिंसे तु० पर० सक० वेट्। तृहति अतर्हीत् अतृक्षत्।

**तृंह** हिंसे वा चु० उ० पक्षे रुधा० पर० सक० वेट्। तर्हयति ते तृणेढि अततर्हत् त अतीतृहत् त अतर्हीत् अतृक्षत्। "तृणेढु रामः सह लक्ष्मणेन" भट्टिः।

**तॄ** तरणे प्लवने अभिभवे च भ्वा० प० सक० सेट्। तरति अतारीत्। ततार। "तरति ब्रह्महत्यां योऽश्वमेधेन यजते" "तरति शोकमात्मवित्" श्रुतिः शत०ब्रा०१४।७।१।२२ "ततार ताराधिपखण्डधारी" कुमा० "क्रमेण तस्मिन्नथ तीर्णहक्पथे" नैष०। तेरतुः। तरीरिता तरि(री)ष्यति। तीर्य्यात्। तरीतुं तरितुं तीर्त्त्वा तीर्य्यते। तारयति तितीर्षति। "तितीर्षुर्दुस्तरं मोहात्" रघुः। "ताश्च ततुं प्रयच्छामीमित्यत्रार्षः ह्रस्वभावः।

अति+अतिक्रम्य गमने। "स्वर्गान्नतितरन्ति ते" श्रुतौ०। "न यस्य कश्चातितितर्त्ति मायाम्" भाग०८।५।३०। यङ्लुङोरूपम्।

वि+अति+विशेषेण अतिक्रमे। "यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति" गीता। [नीम्" भा० द्रो० २८०।

अभि+उल्लङ्घने। "कथं नाभ्यतरामस्तां पाण्डवानामनीकि-

अव+अवनमने। "अथोरुदेशादवतार्य्य पादम्" कुमा०। अवतारः। "अवतरतः सिद्धिपथं शब्दस्य मनोरथस्य वा" मालविकाग्नि०।

उद्+उत्थाने अक०। "सपल्वलोत्तीर्णवराहयूथम्" रघुः। उल्लङ्घने सक०। "उदतारीदुदन्वन्तम्" "उदतारिषुरम्भोधिम्" भट्टिः। [१५५६६ श्लो०।

निस्+निःशेषेण तरणे। "कथञ्च निस्तरेयाश्वात्" भा०व०।

वि+दाने। "तड़िल्लेखालक्ष्मीर्वितरति पताकावलिरियम्" "ज्योत्स्ना शङ्कामिह वितरति" १ किरा०।

सम्+सम्यक् तरणे (साँतार देओया)।

**ते** अव्य० तन–वा० डे । १त्वयेत्यर्थे त्रिका०। २गौर्य्यां तेनशब्दे दृश्यम्

**तेगा** स्त्री तिज–पुंसि च जस्य गः। अप्रसिद्धदेवताभेदे। "शादं दद्भिरवकां दन्तमूलैर्मृदं वर्स्वैस्तेगां दंष्ट्राभ्याम्" यजु० २५।१। "इमां देवतां शादादयोऽप्रसिद्धा देवाः आदित्यादयः प्रसिद्धाः देवाः" वेददीपः। [अतेजीत् । तितेज ।

**तेज** निशाने पालने च भ्वा० पर० सक० सेट् । तेजति

**तेजःफल** न० तेजसे फलमस्य तेजः फलति–फल अच् वा । (तेजवल) वृक्षभेदे "तेजःफलः कटुस्तीक्ष्णः सुगन्धिर्दीपनो मतः । वातश्लेष्मारुचिघ्नश्च बालरक्षाकरः स्मृत इति" भावप्र० ।

**तेजन** पु० तेजयति शस्त्रमग्निं वा तिज–णिच्–ल्यु । १वंशे २मुञ्जे च अमरः संज्ञायां कन् । ३शराभिधे तृणे, करणे ल्युट् । ङीष् । ४मूर्वायां, ५ज्योतिष्मत्याञ्च स्त्री ङीष् । राजनि०। ६शरे अमरः ।

**तेजपत्र** न० तेजयति तिज–णिच्–अच् तेजं पत्रमस्य।(तेजपात) ख्याते वृक्षभेदे । "तेजपत्रं वराङ्गं स्यात् त्वचं चोच तथोत्कटम् । त्वचं लघूष्णं कटुकं स्वादु तिक्तञ्च रूक्षकम् । पित्तलं कफवातघ्नं कण्डूमारुचिनाशनम् । हृद्बस्तिरोगवातार्शःकृमिपीनसशुक्रहृत्" भावप्र० ।

**तेजल** पु० तिज–करणे कलच् । कपिञ्जलपक्षिणि राजनि० ।

**तेजस्** न० तिज–भावे करणादौ असुन् । १दीप्तौ २प्रभावे ३पराक्रमे ४रेतसि च मेदि०। ५देहजकान्तौ ६नवनीते ७वह्नौ च हेमच०। ८सुवर्णे ९मज्जनि १०पित्ते च राजनि० । सा०द०उक्ते सात्त्विके अधिक्षेपापमानादेरसहनरूपे ११नायकगुणभेदे यथा

"शोभा विलासो माधुर्यं गाम्भीर्यं धैर्यतेजसी । ललितौदार्यमित्यष्टौ सत्वजाः पौरुषा गुणाः" इत्युद्दिश्य "अधिक्षेपापमानादेः प्रयुक्तस्य परेण यत् । प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतम्" सा०द० लक्षितम् । १२सारे "रसादीनां शुक्रान्तानां धातूनां यत्परं तेजस्तत् खल्वोजस्तदेव बलमित्युच्यते" सुश्रु०। १३प्रागल्भ्ये १४पराभिभवसामर्थ्ये । १५परैरनभिभाव्यत्वे । १६अप्रतिहताज्ञत्वे । १७चैतन्यात्मके ज्योतिषि । १८स्त्रीबालकादिभिर्मूढैरनभिभाव्यत्वे । १९सत्वगुणजाते लिङ्गदेहे । २०हयवेगे ।

"तेजोनाम दर्पापरनामा सत्त्वगुणविकारः प्रकाशकोऽन्तःसारविशेषः । यथाह भोजराजः "तेजोनिसर्गजं सत्त्वं वाजिनां स्फुरणं रजः । क्रोधस्तम इति ज्ञेयास्त्रयोऽपि सहजा गुणाः" । तच्च द्विविधम् । सततोत्थितं भयोत्थितञ्चेति । यथाह स एव "धारासु योजितानाञ्च निसर्गात् प्रेरणं विना । अवच्छिन्नमिवाभाति तत् तेजःसततोत्थितम् । कशापादादिघातैर्यत् साध्वसात् स्फुरितन्तु तदिति"। शब्दस्पर्शतन्मात्रसहिताद्रूपतन्मात्रादुत्पन्ने शब्दस्पर्शरूपगुणे २१तृतीये महाभूते । यथा "तृतीयं ज्योतिरित्याहुश्चक्षुरध्यात्ममुच्यते । अधिभूतं ततो रूपं सूर्यस्तत्राधिदैवतम्" भा०आश्व० उष्णस्पर्शवत्तेजः। "तद्द्विविधम् । नित्यमनित्यञ्च । नित्यं परमाणुरूपम् । अनित्यं कार्य्यरूपम् । पुनस्त्रिविधम् । शरीरेन्द्रियविषयभेदात्। शरीरमादित्यलोके । इन्द्रियं रूपग्राहकं चक्षुः कृष्णताराग्रवर्त्ति विषयश्चतुर्विधः। भौमदिव्यौदर्य्याकरजभेदात् । भौमं वह्न्यादिकम् । अविन्धनं दिव्यं विद्युदादि । भुक्तस्य परिणामहेतुरौदर्यम् । आकरजं सुवर्णादि" तर्कसंग्रहः "स्पर्श उष्णस्तेजसस्तु स्याद्रूपं शुक्लभास्वरम् । नैमित्तिकं द्रवत्वन्तु नित्यतादि च पूर्ववत् । इन्द्रियं नयनं वह्निस्वर्णादिर्विषयोमतः" इति भाषाप० ।

उपचारात् २२तेजस्विनि च । "नैव तेजांसि नोच्छिष्ट आलभेत कदाचन" "अग्निं गां ब्राह्मणं चैव" भा० आनु०५०१७ श्लो० । स्वपरप्रकाशकं तेजः अन्धकारविरोधि तल्लक्षणञ्च शुक्लभास्वररूपसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वम् । तेजसो गुणादिकमग्निशब्दे ४८ पृ० दृश्यम् । "सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः" माघः । भुक्ततेजसः कार्यञ्च छा० उ० दर्शितं "तेजोऽशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तदस्थि भवति यो मध्यमः स मज्जा योऽणिष्ठः सा वाक्" "अन्नमयं हि सौम्य ! मन आपोमयः प्राणस्तेजोमयी वागिति च" तेजोभूतञ्च वायुकार्य्यमपां कारणञ्च । यथोक्तं "अद्भिः सौम्य ! शुङ्गेन तेजोमूलमन्विच्छ" छा० श्रुतिः २३रजोगुणे तैजसशब्दे दृश्यम् तेजसा निर्वृत्तः अण् तेजोजन्ये त्रि०। तेजस्+अस्त्यर्थे विनि । तेजस्विन् मतुप् मस्य वः तेजस्वत् । तेजोविशिष्टे त्रि० स्त्रियां सर्वत्र ङीप् । तेजसी तेजस्विनी तेजस्वती । २४ वीर्य्ये च । [द्रव्ये स्त्रियां ङीप् ।

**तेजस्कर** त्रि० तेजः करोति कृ–हेत्वादौ ट । तेजोहेतौ

**तेजस्य** त्रि० तेजसि साधु यत् । तेजःसाधने "यावामिन्द्रावरुणा सहस्या रक्षस्या तेजस्या तनूः" तै०स०२।३।१३।१ ।

**तेजस्वत्** त्रि० तेजस्+अस्त्यर्थे मतुप् मस्य वः । तेजोयुक्ते

"तेजस्वदस्तु सख्यम्" तैत्ति० १।७।७।३। स्त्रियां ङीप्। सा च २गजपिप्पल्यां शब्दरत्ना० ३चविकायां रत्नमाला ४महाज्योतिष्मत्यां राजनि०। अत्र संज्ञात्वेन सान्तत्वात् भस्य पदत्वाभावे तेजोवतीत्यपि तत्रार्थे।

**तेजस्विन्** त्रि० तेजस्+अस्त्यर्थे विनि। तेजोयुक्ते "तेजस्विमध्ये तेजस्वी दवीयानपि गण्यते" माघः। स्त्रियां ङीप्। सा च २ज्योतिष्मतीलतायां शब्दर०। ३महाज्योतिष्मतीलतायाम् राजनि०। "तेजस्विनी कफश्वासकासाऽऽस्यामयवातहृत्। पाचन्युष्णा कटुस्तिक्ता रुचिवह्निप्रदीपनी" भावप्र०।

**तेजित** त्रि० तिज–णिच्–क्त। शाणिते तीक्ष्णीकृते अमरः

**तेजिष्ठ** त्रि० तेजस्विन्+अतिशये इष्ठन् विनेर्लुकि टिलोपः। अतिशयेन तेजस्विनि। "तेजिष्ठया तिग्मस्य वर्तनी" ऋ० १।५३।८।

**तेजीयस्** त्रि० तेजस्विन्+अतिशये ईयसुन् विनेर्लुकि टिलोपः। अतितेजस्विनि। "तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा" भाग० १०।३३।२९। स्त्रियां ङीप्।

**तेजेयु** पु० रौद्राश्वनृपस्य पुत्रभेदे। "रौद्राश्वस्य महेष्वासा दशाप्सरसि सूनवः" इत्युपक्रमे। "तेजेयुर्बलवान् धीमान् सत्येयुश्चेन्द्रविक्रमः" भा० आ० ९४ अ०।

**तेजोनाथ** तीर्थभेदे शिवपु० दृश्यम्। [रत्नमा०।

**तेजोमन्थ** पु० तेजो मथ्नाति मन्थ–अण्। गणिकारिकायाम्।

**तेजोमय** त्रि० तेजस्+प्रचुरार्थे विकारे वा मयट्। १तेजःप्रचुरे २तेजोविकारे ३ज्योतिर्मये च। स्त्रियां ङीप्। "तेजोमयी वाक्" इति छा० उ० श्रुतिः। "तस्य तेजोमया लोका भवन्ति ब्रह्मवादिनः" मनुः।

**तेजोमात्रा** स्त्री तेजसां सत्त्वगुणानां मात्रांऽशः। इन्द्रियेषु भूतानां सात्त्विकांशेभ्य एव तेषामुत्पत्तिः सांख्यसिद्धा।

**तेजोमूर्त्ति** पु० तेजस्तेजस्वती मूर्त्तिर्यस्य। १सूर्ये २तेजआत्मके ३तेजःप्रचुरे च त्रि०। "स गच्छति परं स्थानं तेजोमूर्त्तिः पथर्जुना" मनुः।

**तेजोरूप** न० तेजः सर्वप्रकाशकं चैतन्यं रूपं स्वरूपं यस्य। ज्योतीरूपे प्रकाशात्मके ब्रह्मणि "अशरीरं विग्रहवदिन्द्रियवदतीन्द्रियम्। यत्साक्षि सर्वसाक्षि तेजोरूपं नमाम्यहम्" ब्रह्मवै० पु०। इत०। २तेजसो रूपे च अग्निशब्दे तद्रूपं दर्शितम्।

**तेजोवत्** त्रि० तेजस्+अस्त्यर्थे मतुप् मस्य वः बा० न पदत्वम्। तेजोयुक्ते स्त्रियां ङीप्। सा च (तेजस्वत्)शब्दोक्तार्थेषु।

"तेजोवता लोकगणेन सार्द्धम्" मत्स्यपु०। अग्न्यावाहनमन्त्रः।

**तेजोविन्दु** पु० उपनिषद्भेदे उपनिषच्छब्दे दृश्यम्। [राजनि०।

**तेजोवृक्ष** पु० तेजोयुक्तः वृक्षः शा० त०। क्षुद्राग्निमन्थवृक्षे

**तेजोवृत्त** न० तेजसः वीर्य्यस्यानुरूपं वृत्तम्। वीर्यानुरूपचरिते। "इन्द्रस्यार्कस्य वायोश्च यमस्य वरुणस्य च। चन्द्रस्याग्नेः पृथिव्याश्च तेजोवृत्तं नृपश्चरेत्" मनुः।

**तेजोह्वा** स्त्री तेजः ह्वयते स्पर्द्धते ह्वे–क। तेजस्विन्यां लतायाम् भावप्र०। "काम्पिल्लकं सचिन्दूरं तेजोह्वा हस्तिकाह्वये" सुश्रु०। [२। "तेद्नीं देवतां प्रीणामि" वेददी०।

**तेद्नी** स्त्री देवताभेदे "तेद्नीमथरकराटे नापः" यजु० २५।

**तेन** अ० तद्+बा० एन। १तद्धेतुनेत्यर्थे भरतः। ते इति न इति शब्दौ यत्र। २गानाङ्गभेदे पु०। "तेनेति शब्दस्तेनः स्यान्मङ्गलानां प्रदर्शकः। तेशब्देनोच्यते गौरी नशब्देनोच्यते हरः। तेन माङ्गलिकश्चायं शब्दस्तेन इति स्मृतः" सङ्गी० दा०।

**तेप** कम्पे, च्युतौ च भ्वा० आ० अक० सेट्। तेपते अतेपिष्ट। तितेपे। ऋदित्। अतितेपत् त।

**तेम** पु० तिम–घञ्। आर्द्रीभावे। अमरः।

**तेमन** न० तिम–ल्युट्। १आर्द्रीकरणे। कर्मणि ल्युट्। २व्यञ्जने। अमरः। आधारे ल्युट् ङीप्। ३चुल्लीभेदे हेमच०।

**तेलु** पु० नृपभेदे ततः राजन्या० विषये देशे वुञ्। तैलवक तेलुनृपविषये देशे। [तितेवे। ऋदित् अतितेवत् त।

**तेव** क्रीड़ने भ्वा० आ० अक० सेट्। तेवते अतेविष्ट।

**तेवन** न० तेव–भावे ल्युट्। १क्रीड़ायाम्। आधारे ल्युट्। २केलिकानने हेमच०।

**तैङ** पु० तिङां व्याख्यानः ग्रन्थः अञ्। तिङां व्याख्याने ग्रन्थे

**तैजस** न० तेजसो विकारः अण्। १घृते, २धातुद्रव्यमात्रे च। साङ्ख्योक्ते ३रजोगुणोत्पन्ने त्रि०। "वैकारः सात्त्विको नाम तैजसः राजसः स्मृतः। भूतादिस्तामसस्तेऽपि पृथक् तत्त्वान्यवासृजन्" पदार्थादर्शधृतवाक्यम्।

"सात्त्विक एकादशकः प्रवर्त्तते वैकृतादहङ्कारात्। भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम्" सां० का०। "ननु यदि सत्त्वतमोभ्यामेव सर्वं कार्य्यं जन्यते तदा कृतमकिञ्चित्करेण रजसेत्यत आह तैजसादुभयं तैजसात् राजसादुभयं गणद्वयं भवति। यद्यपि रजसो न कार्यान्तरमस्ति तथापि सत्त्वतमसी स्वयं क्रियासमर्थे अपि न स्वस्वकार्य्यं कुरुतः रजस्तु चलतया ते यदा चालयति तदा स्वस्वकार्य्यं कुरुत इति तदुभयस्मिन्नपि कार्य्ये सत्त्वतमसोः

क्रियोत्पादनद्वारेणास्ति रजसः कारणत्वमिति न व्यर्थं रजः” इति तत्त्वकौ०। तिज निशाने इत्यस्मादसुन् तेन तेजसा कृतः तैजसः रजसश्च सत्वतमसोः स्वस्वतेजकार्य्यसमर्थत्वकरणरूपतैक्ष्ण्यकरणगुणयोगात् तेजःपदाभिधेयता इति तदाशयः “तैजसादिन्द्रियाण्याहुः” शा०ति०। सत्त्वगुणस्य प्रकाशकत्वात् “तैजसमन्तःकरणमिति” वेदान्तप०। ४तीर्थभेदे न०। “तैजसं नाम तत्तीर्थं यत्र तीर्थस्थानां पतिः। अभिषिक्तः सुरगणैर्वरुणो भरतर्षभ!” भा०श०४७ अ०। एतद्धृत्त्युपहितं चैतन्यं तैजसो भवति। तेजोमयान्तःकरणोपहितत्वात्” वेदान्तसारोक्ते ५चैतन्यभेदे पु०।

**तैजसावर्त्तनी** स्त्री तैजसं धातुद्रव्यमावर्त्त्यतेऽत्र आ+वृत णिच्–आधारे ल्युट् ङीप्। मूषायाम्।(मुची) अमरः

**तैतल** पु० ऋषिभेदे ततः तिका० अपत्ये फिञ्। तैतलायनि तदपत्ये पुंस्त्री।

**तैतिक्ष** त्रि०तितिक्षा शीलमस्य छत्रादि० ण। तितिक्षाशीले।

**तैतिक्ष्य** पुंस्त्री० तितिक्षस्य ऋषिभेदस्य गोत्रापत्यं गर्गा० यञ्। तितिक्षर्षिगोत्रापत्ये तस्य छात्राः कण्वा० अणि यञो लोपः। तैतिक्षाः तैतिक्ष्यस्य छात्रेषु ब०व०।

**तैतिर** पुंस्त्री० तैत्तिर शब्दो०। (तितिर) खगे राजनि०। स्त्रियां ङीप्।

**तैतिल** पु० १गण्डकपशौ। २ववादितस्तृतीये करणे न० मेदि०। ३देवे च। “प्रक्षिसदयेन दानेनावाधितधरणीतलतैतिलगणः” दशकु०। तैतिलशब्दस्य कद्रूशब्देन समासे पूर्वपदप्रकृतिस्वरः।

**तैतिलिन्** पु० गोत्रप्रवर्त्तकर्षिगणस्यप्रवरभेदे।

**तैत्तिर** न० तित्तिरीणां समूहः अण्। तित्तिरखगसमूहे। तित्तिर+स्वार्थे अण्।(तितिर)खगभेदे पुंस्त्री राजनि०। गण्डकपशौ च मेदि०।

**तैत्तिरि** पु० कुकुरवंश्यन्टपभेदे। “कुकुरस्य सुतो धृष्णुर्धृष्णोऽस्तु तनयस्तथा। “कपोतरोमा तस्याथ तैत्तिरिस्तनयोऽभवत्”। हरिवं० ३८अ०। २ऋषिभेदे। “आद्यः कठस्तैत्तिरिश्च वैशम्पायनपूर्वजः” भा० शा० ३३८ अ०। २कृष्णयजुःप्रवर्त्तके ऋषिभेदे।

**तैत्तिरीय** पु०ब०व०तित्तिरिणा प्रोक्तमधीयते छण्। १तित्तिरिप्रोक्तशाखाध्येतृषु स्वार्थे क। तैत्तिरीयकाप्यत्रार्थे। यजुःशाखाभेदे। तन्नामनिरुक्तिः यथा।

“देवरातसुतः सोऽपि छर्दित्वा यजुषां गणम्। ततो गतोऽथ मुनयो ददृशुस्तान् यजुर्गणान्। यजूंषि तित्तिराभूत्वा तल्लोलुपतया ददुः। तैत्तिरीया इति यजुःशाखा आसन् सुपेशलाः” भाग० १२।

**तैन्तिडीक** त्रि० तिन्तीडिकेन संस्कृतम् कोपधत्वात् अण्। तिन्तिडीकसंस्कृतव्यञ्जनादौ। तस्य विकारः कोपधत्वात् अण्। २तिन्तिडीकविकारे च।

**तैमिर** तिमिरमेव अण्। नेत्ररोगभेदे “एभिः हन्यात्मनः क्षाव्यकाचान् नीलीरोगं तैमिराञ्जनेन” सुश्रु०। तैमिरो रोगोऽस्यस्य ठन् तैमिरिकः। तिमिररोगयुक्ते। “न वामयेत्तैमिरिकोर्द्ध्ववातगुल्मोदरप्लीहकृमिश्रमार्त्तान्” सुश्रु०। “तैमिरिका इवादूरदर्शिनम्” काद०।

**तैर** न० तीरे भवः अण्। कूलत्थे राजनि०।

**तैरणी** स्त्री तीरे नमति नम–बा०ड ततः स्वार्थे अण् गौरा० ङीष्। कुनील्यां राजद्रे क्षुपभेदे।[तिर्य्यग्जातिसम्बन्धिनि

**तैरश्च** त्रि०तिरश्चामिदम् तिर्य्यच् अण्+भत्वात् तिरश्चादेशः।

**तैर्थ** त्रि० तीर्थे दीयते कार्य्यं वा व्युष्टा० अण्। १तीर्थे देये २तीर्थकार्य्ये च तीर्थात् आयस्थानादागतः शुण्डिका० अण्। तीर्थरूपायस्थानादागते द्रव्यादौ च।

**तैर्थक** त्रि० तीर्थे देशे भवः धूमा० वुञ्। तीर्थदेशभवे।

**तैर्थिक** त्रि० तीर्थं सिद्धान्तनिश्चयं नित्यमर्हति छेदा० ठञ्। १तीर्थसिद्धान्ताभिज्ञे शास्त्रकरे कपिलकणादादौ तीर्थं वेत्ति ठञ् वा। २सिद्धाभिज्ञे। तीर्थे भवः ठञ्। ३तीर्थभवे। “तैर्थिकाभुञ्जते यस्तु भक्तिनागम्य” भा०व०८५ श्लो०।

**तैर्थ्य** त्रि० तीर्थ+चतुरर्थ्यां० सङ्का० ण्य। तीर्थसमीपादौ।

**तैर्य्यगयनिक** त्रि० तिरश्चामयनं सत्रभेदः तदेव ठञ्। सत्रभेदे। “अष्टादशभिर्ज्योयानादित्यः संवत्सर एव तैर्य्यगयनिको भवति। आदित्यः खलु शश्वदेकदा षण्मासानुदङ्डेति नव चाहानि तथा दक्षिणा” श्रुतिः।

**तैर्य्यग्योन** त्रि० तिर्य्यग्योनेरिदम्+अण्। तिर्य्यग्योनीनां पश्वादीनां सम्बन्धिनि सर्गभेदे।

“अष्टविकल्पो दैवस्तैर्य्यग्योनश्च पञ्चधा भवति। मानुष्यश्चैकविधः समासतो भौतिकः सर्गः” सा० का० तैर्य्यग्योनश्च पञ्चधा भवति पशुमृगपक्षिसरीसृपस्थावरात्मकः” त० कौ०। तत्र भवः अण्। तद्योनिभवे। “निन्दन्त्यवमता मन्त्रं तैर्य्यग्योनास्तथैव च” मनुः।

**तैल** न०तिलस्य तत्सदृशस्य वा विकारः अञ्। तिलसर्षपादिजनिते स्नेहद्रव्यभेदे। तल्लक्षणादिकं भावप्र० उक्तं यथा “तिलादिस्निग्धवस्तूनां स्नेहस्तैलमुदाहृतम्। तत्तु वातहरं सर्वं विशेषात्तिलसम्भवम्। अथ तिलतैलगुणाः

"तिलतैलं गुरु स्थैर्य्यबलवर्णकरं सरम्। वृष्यं विकाशि विशदं मधुरं रसपाकयोः। सूक्ष्मं कषायानुरसं तिक्तं वातकफापहम्। वीर्य्येणोष्णं हिमं स्पर्शे वृंहणं रक्तपित्तकृत्। लेखनं बद्धविण्मूत्रं गर्भाशयविशोधनम्। दीपनं बुद्धिदं मेध्यं व्यवायि व्रणमेहनुत्। श्रोत्रयोनिशिरःशूलनाशनं लघुताकरम्। त्वच्यं केश्यञ्च चक्षुष्यमभ्यङ्गे भोजनेऽन्यथा। छिन्नभिन्नच्युतोत्पिष्टमथितक्षतपिच्चिटे। भग्नस्फुटितविद्धाग्निदग्धविश्लिष्टदारिते। तथाभिहतनिर्भुग्ने मृगव्याघ्रादिविक्षते। वस्तौ पानेऽन्नसंस्कारे नस्ये कर्णाक्षिपूरणे। सेकाभ्यङ्गावगाहेषु तिलतैलं प्रशस्यते"। ननु वृंहण लेखनयोः कथं सामानाधिकरण्यमित्यत आह। "कृशादिदुष्टः पवनः स्रोतः सङ्कोचयेद्यदा। रसोऽसम्यग्वहन् कार्श्यं कुर्य्यादूक्षाद्यवर्द्धयन्। तेषु प्रवेष्टुं सरता सौक्ष्म्यस्निग्धत्वमार्दवैः। तैलं क्षमं रसं नेतुं कृशानां तेन वृंहणम्। व्यवायि सूक्ष्मतीक्ष्णोष्णसरत्वैर्मेदसः क्षयम्। शनैः प्रकुरुते तैलं तेन लेखनमीरितम्। द्रुतं पुरीषं बध्नाति स्खलितं तत्प्रवर्त्तयेत्। ग्राहकं सारकञ्चापि तेन तैलमुदीरितम्। हतमद्दशात्परं पक्वं हीनवीर्य्यं प्रजायते। तैलं पक्वमपक्वं वा चिरस्थायि गुणाधिकम्"। सर्षपतैलगुणाः। "दीपनं सार्षपं तैलं कटुपाकरसं लघु। लेखनं स्पर्शवीर्य्योष्णं तीक्ष्णं पित्तास्रदूषकम्। कफमेदोऽनिलार्शोघ्नं शिरःकर्णामयापहम्। कण्डूकुष्ठकृमिश्वित्रकोठदुष्टकृमिप्रणुत्"।

राजिकातैलगुणाः "तद्वद्राजिकयोस्तैलं विशेषान्मूत्रकृच्छ्रकृत्"। राजिकयो (कृष्णाराई) (आरक्तराई) द्वयोः। तुवरी(तोरी)तैलगुणाः "तीक्ष्णोष्णं तुवरीतैलं लघु ग्राहि कफास्रजित्। वह्निकृद्विषनुत्कण्डूकुष्ठकोठकृमिप्रणुत्। मेदोदोषापहञ्चापि व्रणशोथहरं परम्"। अतसीतैलगुणाः "अतसीतैलमाग्नेयं स्निग्धोष्णं कफपित्तकृत्। कटुपाकमचक्षुष्यं बल्यं वातहरं गुरु। मलकृद्रसतः स्वादु ग्राहि त्वग्दोषनुद्घनम्। वस्तौ पाने तथाभ्यङ्गे नस्ये कर्णस्य पूरणे। अनुपानविधौ चापि प्रयोज्यं वातशान्तये। वररोः तैलगुणाः "कुसुम्भतैलमम्लं स्यादुष्णं गुरुविदाहि च। चक्षुष्यमहितं बल्यं रक्तपित्तकफप्रदम्। अथ (खास्खस) बीजतैलस्य गुणाः। "तैलं तु खसबीजानां बल्यं वृष्यं गुरु स्मृतम्। वातहृत्कफहृच्छीतं स्वादुपाकरसं च तत्"। एरण्डतैलगुणाः "एरण्डतैलं तीक्ष्णोष्णं दीपनं पिच्छिलं गुरु। वृष्यं त्वच्यं वयःस्थापि मेधाकान्तिबलप्रदम्। कषायानुरसं सूक्ष्मं योनिशुक्रविशोधनम्। विस्रं स्वादु रसे पाके सतिक्तं कटुकं सरम्। विषमज्वरहृद्रोगपृष्ठगुह्यादिशूलनुत्। हन्ति वातोदरानाहगुल्माष्ठीलाकटीग्रहान्। वातशोणितविड्बन्धब्रध्नशोथामविद्रधीन्। आमवातगजेन्द्रस्य शरीरवनचारिणः। एक एव निहन्तायमेरण्डस्नेहकेशरी"। शालतैलगुणाः "तैलं सर्जरसोद्भूतं विस्फोटव्रणनाशनम्। कुष्ठपामक्रिमिहरं वातश्लेष्मामयापहम्"। सर्वतैलगुणाः "तैलं स्वयोनिगुणकृद्वाग्भटेनाखिलं मतम्। अतःशेषस्य तैलस्य गुणास्तेयास्वयोनिवत्"। "प्रातः स्नाने व्रते श्राद्धे द्वादश्यां ग्रहणे तथा। मद्यलेपसमं तैलं तस्मात्तैलं विवर्जयेत्" कर्म्मलोचन०। "घृतञ्च सार्षपं तैलं यत्तैलं पुष्पवासितम्। अदुष्टं पक्वतैलञ्च तैलाभ्यङ्गे च नित्यशः" तिथ्या० त० वारविशेषे तैलग्रहणफलं यथा।

"अर्के नूनं दहति हृदयं कीर्त्तिलाभश्च सोमे भौमे मृत्युर्भवति नियतं चन्द्रजे पुत्रलाभः। अर्थग्लानिर्भवति च गुरौ भार्गवे शोकयुक्तस्तैलाभ्यङ्गात्तनयमरणं सूर्य्यजे दीर्घमायुः" ज्यो०त०। "घृतादष्टगुणं तैलं मर्दयेन्न तु खादयेत्" वैद्यक०। अल्पे कन्। तैलक स्वल्पतैले न०।

**तैलकन्द** पु० तिलस्यायम् अण् तैलः तिलसम्बन्धी कन्द इव कन्दोऽस्य। तिलचित्तपत्रके वृक्षभेदे "तैलकन्दः कटूष्णश्च लौहद्रावकरोमतः। मारुतापस्मारविषशोफनाशकरश्च सः। रसस्य बन्धकारी च देहशुद्धिकरस्तथा" राजनि०

**तैलकल्कज** पु० तैलात् तिलसम्बन्धिनः कल्काज्जायते जन–ड। तिलकल्कजाते (तैलेर काट) तैलकिट्टे राजनि०।

**तैलकार** पु० तैलं करोति कृ–अण् (तेली) (कलु) इति प्रसिद्धे वर्णसङ्करे चाक्रिके तैलिनि। स च कोटकस्त्रीगर्भे कुम्भकाराज्जातः सङ्कीर्णजातिभेदः ब्रह्मवै०ब्रह्मख०

**तैलकिट्ट** न० ६त०। तैलमले (काट) इति ख्याते।

**तैलकीट** पु० कीटभेदे राजनि०।

**तैलक्य** न० तिलकस्य भावादौ पुरोहि० यक्। तिलकभावे।

**तैलङ्ग** पु० "श्रीशैलं तु समारभ्य चोलेशान्मध्यभागतः। तैलङ्गदेशो देवेशि युक्तो १देशे। २तत्रस्थे जने ब०व०। शब्दरत्ना०

**तैलचौरिका** स्त्री तैलं चोरयति चुर–ण्वुल् पृषो०। तैलपायिकायाम् (तेलापोका)। पृषो०। तैलचौरिकाप्यत्र।

**तैलद्रोणी** तैलपूर्णा द्रोणी शा०त०। "कण्ठपर्य्यन्तमज्जनार्थे

तैलपूर्णे काष्ठादिनिर्मिते पात्रविशेषे। अत्रावस्थितिगुणाः। वातरोगव्याधिकुष्ठरोगपङ्गुवाधिर्य्यमिन्मिनगद्गदत्वक्कुस्तम्भपृष्ठप्रचलितपवनमात्रकम्पकपाटीग्रीवाभङ्गापतन्त्रवायुरुधिरभवमूत्रकृच्छ्रबस्तिरोगेषु हितत्वमिति" राजवल्लभः।

**तैलधान्य** न० तैलोपयोगि धान्यं मध्य० समास। "तिलोऽतसी च तोरी (डी) च विविधश्चापि सर्षपः। द्विधा राजी खसश्चैव बीजं कौसुम्भसम्भवम्। एतानि तैलधान्यानीत्युक्तेषु तिलादिषु।

**तैलपक** पु० तैलं पिबति पा—क स्वार्थे क। तैलपायिकाख्ये पक्षयुक्ते कीटे। तैलकरणे तज्जातिप्राप्तिर्मनुनोक्ता यथा "मांसं गृध्रोवपां मद्गुस्तैलं तैलपकः खगः" [भावप्र०।

**तैलपर्णक** पु० तैलाक्तमिव पर्णमस्य कप्। ग्रन्थिपर्णवृक्षे

**तैलपर्णिक** न० तैलपर्णौ गिरिभेदे उत्पत्तिस्थानत्वेनास्त्यस्य ठन् तैलाक्तं पर्णमस्त्यस्य ठन् वा। १हरिचन्दने अमरः। तिलपर्णः इव उत्पत्तिस्थानत्वेनास्त्यस्य ठन्। २चन्दनभेदे।

**तैलपर्णी** स्त्री तिलपर्णो गिरिस्तत्र भवः अण् ङीप्। १चन्दने २श्रीवासे ३सिह्लके च मेदि०। स्वार्थे क। तैलपर्णिका तत्रार्थे। "कालियकादुकूलाश्च हिङ्गवस्तैलपर्णिकाः" हरिवं० २३१अ०। [राजनि०।

**तैलपा** स्त्री तैलं पिबति पा—क। (तेलापोका) कीटभेदे।

**तैलपायिका** स्त्री पा—ण्वुल् ङ्त०। (तेलापोका) (आरसुला) कीटभेदे अमरः।

**तैलपायिन्** पु० तैलं पिबति पा—णिनि। तैलपायिकाख्ये पक्षयुक्ते कीटभेदे। "तैलहृत् तैलपायी स्यात्" याज्ञ०।

**तैलपिपीलिका** स्त्री तैलाक्तेव पिपीलिका। पिपीलिकाभेदे

**तैलपीत** त्रि० पीतं तैलं येन आहि०परनि०। पीततैलके।

**तैलफल** पु० तैलं फले यस्य। इङ्गुदोवृक्षे राजनि०।

**तैलभाविनी** स्त्री तैलं भावयति वासयति भू—णिनि ङीप्। तैलवासके जातीपुष्पवृक्षे राजनि०।

**तैलमाली** स्त्री तैलेन मालः सम्बन्धो यस्याः गौरा० ङीष्। वर्त्तिकायां दीपदशायां शब्दमाला।

**तैलम्पाता** स्त्री तिलस्य पातोऽत्र ञ नि०मुम् च। १स्वधायाम्, २तदुपलक्षिते श्राद्धे च अमरः।

**तैलयन्त्र** पु० तैलमर्दूनार्थं यन्त्रम्। तिलादिनिष्पीड़नार्थे यन्त्रभेदे (कलुरघाणि) "असौमांस्यानि शौचानि तैलयन्त्रेक्षुयन्त्रयोः" स्मृतिः "रविरथचक्रं च तैलयन्त्रचक्रवत् भ्रमत्" भागवते ५।२१।१९ श्लोकः।

**तैलवक** पु० तेलुन्वस्य विषयो देशः राजन्या० वुञ्। तैलुन्वविषये देशे। [रत्नि०।

**तैलवल्ली** स्त्री तैलाक्तेव वल्ली। लघुशतावर्य्यां पारस्क०

**तैलसाधन** न० तैलं साधयति सुरभीकरोति सिध—णिच् साधि—ल्यु। कङ्कोले गन्धद्रव्ये शब्दच०। [मिदे हेमच०।

**तैलस्फटिक** पु० तैलाक्तः स्फटिक इव। तृणमणौ गो-

**तैलस्यन्दा** स्त्री तैलमिव स्यन्दति स्यन्द—अच्। १श्वेतगोकर्ण्यां २काकोल्यां पारस्करनिघण्टुः।

**तैलागुरु** पु० तैलाक्तमिवागुरु। दाहागुरौ राजनि०।

**तैलाटी** स्त्री अटति अट् तैलेनाटं विषमस्याः गौरा० ङीप्। वरटायां तैलस्पर्शे तद्विषनाशात् तस्याः तथात्वम्।

**तैलाम्बुका** स्त्री तैलमम्बु इव मेयमस्याः। तैलपायिकाख्ये कीटे जटा०।

**तैलिक** त्रि० तैलं पण्यं यस्य तैलं शिल्पमस्य वा ठक्। १तैलार्थं तिलनिष्पीड़ने (कलु) "खलमलिननीचतैलिकविहीनसत्त्वोपकृतयुक्त्वा" वृ०स०१६अ०। २तैलविक्रेतरि च "समुद्रगामी वन्दी च तैलिकः कूटकारकः" मनुः तिलविक्रेतुरपाङ्क्तेयमुक्तम्।

**तैलिन्** त्रि० तैलं निष्पाद्यत्वेनास्त्यस्य इनि। १तैलकारे हेमच०।२तैलयुक्ते त्रि०। स्त्रियां ङीप् ङीवत्तः। ३तैलकीटे राजनि० ४दशायां वर्त्तौ शब्दमा०। [हेम०।

**तैलिशाला** स्त्री ६त०। तैलनिष्पीड़नार्थे गृहे (घानिघर)

**तैलीन** तिलानां भवनं क्षेत्रं खञ्। तिलभवनयोग्ये क्षेत्रे अमरः। [तत्सम्बन्धिनि स्त्रियां ङीप्।

**तैव्रदारव** त्रि० तीव्रदारुणइदम् रजता० अञ्। तीव्रदा-

**तैष** पु० तिष्यनक्षत्रयुक्ता पौर्णमासी अणि यलोपे ङीप्। तैषी सास्मिन् मासे अण्। १पौषे मासि धनुःस्थरव्यारब्धे शुक्लप्रतिपदादिदर्शान्ते चान्द्रे मासि अमरः तदीय पूर्णिमायामेव तद्योगसम्भवः। तिष्यशब्देन तत्समीपनक्षत्रस्यापि ग्रहणात् कदाचित् तत्सम्बन्धाभावेऽपि न क्षतिः २तदीयपौर्णमास्यां स्त्री "सास्मिन् पौर्णमासी" पा० नक्षत्रयुक्तकालस्य पूर्णिमायामेव तद्योगे साधुत्वेन पौर्णमासीपरत्वमेवेति बोध्यम्। "तैष्या नधीतपूर्वायाम्" आश्व० श्रौ० ८।१४।२२।

**तोक** न० मौ० तु—क तस्य नेत्त्वम्। १अपत्ये पुत्रे, दुहितरि च अमरः। "नित्ये तोके दीदिवांसम्" २।२।११ "प्रश्ने तोकाय तनयाय जीवसे" ऋ० १०।३५।१२ "तोकेन

जीवहरणं यदुलूकिकायास्तै मासिकस्य च यदा शक-टोऽपहृतः" भाग० २।७।२८ ।

**तोक्म** पु० तक म पृषो० अत ओत्त्वम् । हरिद्वर्णे अपक-यवे अमरः । २हरिद्वर्णे हेमच० । ३कर्णमले न० हेम० । ४मेघे पु० अजयपालः । ५नवप्ररूढे यवे यवाङ्कुरे न० । "प्रायणीयस्य तोक्मानि" यजु० १९।१३। "तोक्मानि नव-प्ररूढयवाः" वेददी० । "पत्रपुष्पफलच्छायामूलवल्कलदा-रुभिः । गन्धनिर्यासभस्मास्थितोक्मैः कामान् वितन्वते भाग०१०।२२।२५"तोक्माः पल्लवाद्यङ्कुराः"श्रीधरः तेन हृतदर्थेऽपि च ।

**तोक्मन्** न० तक-मनिन् पृषो० अत ओत्त्वम् । नवविरूढयवे २अपत्ये न० निघण्टुः । "भेषजं तोक्मभिः" यजु० २१।३० । "तोक्मभिर्लाजैर्महःस्वन्तः" यजु० २१।४२।

**तोटक** न० द्वादशाक्षरपादके छन्दोभेदे । "इह तोटकमम्बु-धिसैः प्रथितम्" छ०र० । [कृदित् । णिच् अतुतोडत् त ।

**तोड** अनादरे भ्वा० पर० सक० सेट् । तोडति अतोडीत् ।

**तोड्ल** न० तन्त्रभेदे ।

**तोतस्** अव्य० तु—बा० तसि । १कलते २त्वयीत्यर्थे च । "मा वयं रायस्पोषेणवियौष्म तोतो रायः"यजु०४।२२। तोतः शब्दः कलत्रवाची अव्ययम् । तोतः कलत्रे रायो धनानि पशवो वा पदरूपेण तिष्ठन्तु । यद्वाऽव्ययानामने-कार्थत्वात्तोतः शब्दो युष्मत्पर्य्यायः । तोतः त्वयि रायः सन्तु" वेददी० ।

**तोड़न** न० तुड—भावे ल्युट् । १भेदने २दारणे ३हिंसने च ।

**तोड़ो(री)** स्त्री तुड़—अच् गौरा० ङीष् वा डस्य रः । ख्यातनामख्याते तैलसाधने धान्यभेदे । [अमरः ।

**तोत्र** न०तुद्यतेऽनेन तुद-करणे ष्ट्रन् । गवादिताड़ने दण्डे

**तोद** पु० तुद—भावे घञ् । व्यथायां रत्नमाला । "हीनदग्धे तोदकण्डूजाड्यानि व्याधिवृद्धिश्च" सुश्रु० । "दंशे तोद-कण्डूपादर्भावैर्जानीयात्"सुश्रु०। कर्त्तरि अच् । २व्यथके त्रि० ।"तोदो यातस्य हर्य्योरीशानः" ऋ० ४।१६।११ । "तोदस्तोदकः" भा० ।

**तोदन** न०तुद्यतेऽनेन करणे ल्युट् ।१तुण्डे सुखे अमरः। भावे ल्युट् । २व्यथायाम् मेदि०। कर्त्तरि ल्यु ।३व्यथके त्रि०।"क-षायं मधुरं रूक्षं तोदनं कफवातजित्"सुश्रु० ४चौरिवृक्षभेदे पु०। "चौरवृक्षफनजाम्बवराजादनतोदनतिन्दुकवकुलधन्व-नाश्मन्तकाश्वकर्णफल्गुपरुषकगाङ्गेरुकीपुष्करवर्त्ति विल्व-बिम्बीप्रभृतीनि । फलान्येतानि शीतानि कफपित्तहराणि च । संग्राहकाणि रूक्षाणि कषायमधुराणि च" सुश्रु० ।

**तोदपर्णी** स्त्री तोदं तोदकं पर्णमस्याः गौरा० ङीष् । कुत्-सिते धान्यभेदे ।

"कोरदूषकश्यामाकनीवारशान्तनुतुवरकोद्दालकप्रियङ्गुम-धूलिकानान्दीमुखकुरुविन्दगवेधुकवरुकतोदपर्णी मुकुन्द-कवेणुयवप्रभृतयः कुधान्यविशेषाः" सुश्रु० ।

**तोमर** पुंन० तु—विच् तौगतौ म्रियतेऽनेन मृ—करणे अप् । १हस्तक्षेप्ये शल्याये दण्डाकारेऽस्त्रभेदे (सावल्ँगा) अमरः । तोमरलक्षणं हेमा०प०लक्षणसमुच्चये उक्तं यथा । औशनसधनुर्वेदे । "शुक्रो भगवानुवाच जमदग्निं प्रति वत्स ! निबोध यथाप्रश्नमुच्यमानम् तत्र दण्डान्वितं सर्वलौहं वेति तोमरं द्विविधं भवति । तत्र तोमरं सदण्डं लक्ष्यायतं भवेत् तोमरं सर्वायसं तल्लार्थे प्रयोजयेत् । तत्र निकृष्टमध्यमोत्तमं भूयस्त्रिविधं प्रमा-णतो भवति तत्र चतुर्हस्तप्रमाणं निकृष्टं सार्द्धचतुर्हस्तं मध्यमं पञ्चहस्तप्रमाणं तूत्तमं भवति । तथा कलनायां चाद्यं द्वितीयं तृतीयं चेति त्रिधा द्व्यङ्गुलमध्ये द्व्यङ्गुल-कलितमेकं स्यान्मध्यात्पूर्वं त्र्यङ्गुलकलितं द्वितीयं स्यात् । मध्यात्पूर्वं षडङ्गुलकलितस्थानकलनया तृतीयं स्यात् । सार्द्धमेकं निकृष्टं, तयोमध्यमं षडुत्तमं कलनायास्तथा तोमरास्तस्य परिणाहः परः षडङ्गुलो भवति सार्द्धप-ञ्चाङ्गुलो मध्यमः पञ्चाङ्गुलः कनिष्ठ इति । तथाषां देशानां त्रयः छन्दाः । स्यादेतास्तथा आवन्त्यो मागधो दाक्षि-णात्यश्चेति । तत्रावन्त्यतोमरं तक्षणसंस्थानं भवति मागधं तोमरं योनिसंस्थानं भवति दाक्षिणात्यं तोमरं हत्तं भवति । तेषां सुखानि तद्देशाच्छन्दतः इति इत्यादि । २नवाक्षरपादके छन्दोभेदे "प्रथमं सकं विनिधाय जगणद्वयञ्च निधाय । कुरु तोमरं सुखकारि फणिराज-वक्त्रविहारि" तल्लक्षणम् । [मरास्त्रग्राहिणि ।

**तोमरग्रह** पु० तोमरं गृह्णाति ग्रह—अच् न अण् । तो-

**तोमरधर** पु० तोमरमस्त्रं धरति धृ-अच् । वह्नौ शब्दार्थक०

**तोमरिका** स्त्री तोमर+संज्ञायां कन् । आढक्याम् शब्दर०

**तोय** न० सौ०तु—विच् तवे पूर्त्यै याति या क । १जले २पूर्वा-षाढ़ानक्षत्रे च । "जहृत्य मेघैस्ततः एव तोयम्"माघः। "मृत्तोयैः शुध्यते शोध्यं नदीवेगेन शुध्यति" मनुः । पूर्वाषाढ़ानक्षत्रस्य जलदैवतत्वात् तथात्वम् । ३लग्ना-वधिचतुर्थस्थाने च ज्यो० त० । तत्र जलस्य चिन्त-नीयत्वात् तथात्वम् ।

**तोयकर्म्मन्** न॰ तोयेन कर्म्म। तर्पणे "तोयकर्म्मणि चारब्धे राज्ञामुदकदानिके" भा॰आ॰१अ॰।

**तोयकाम** पु॰ तोयं कामयते कम-अण्। १जलवेतसे जटाधरः। २जलाभिलाषुके त्रि॰।

**तोयकुम्भ** पु॰ तोयस्य कुम्भ इव। शैवाले पारस्करनिघण्टुः।

**तोयकृच्छ्र** न॰ जलमात्रपानरूपे मासमाध्ये व्रतभेदे। "यदा तु बिल्वानि फलानि प्रत्येकं क्वथितानि मासम्पीयन्ते तदा फलकृच्छ्रादिव्यपदेशं लभते। यथाह मार्कण्डेयः "फलैर्मासेन कथितः फलकृच्छ्रो मनीषिभिः। श्रीकृच्छ्रः श्रीफलैः प्रोक्तः पद्माक्षैरपरस्तथा। मासेनामलकैरेवं श्रीकृच्छ्रमपरं स्मृतम्। पत्रैर्मतः पत्रकृच्छ्रः पर्णैस्तत्कृच्छ्र उच्यते। मूलकृच्छ्रः स्मृतो मूलैस्तोयकृच्छ्रो जलेन तु" इति।"इति पर्णकृच्छ्रमेकादशविधम्" मिता॰।

**तोयडिम्ब** पु॰ तोयस्य डिम्ब इव। १मेघोपले करकायां हारा॰।

**तोयद** पु॰ तोयं ददाति दा+क। १मेघे, २मुस्तके च। ३घृते न॰ मेदि॰। ४विधिना जलदातरि त्रि॰। "तोयदस्तृप्तिमाप्नोति" पुरा॰। तद्दानमाहात्म्यं भा॰ शा॰ दानधर्म्मे यथा

"अन्ने दत्ते नरेणेह प्राणा दत्ता भवन्त्युत। प्राणदानाद्धि परमं न दानमिह विद्यते। अन्नं वापि प्रभवति पानीयात् कुरुसत्तम!। नीरजातेन हि विना न किञ्चित् संप्रवर्त्तते। अन्नौषध्यो महाराज! वीरुधश्च जलोद्भवाः। यतः प्राणभृतां प्राणाः सम्भवन्ति विशाम्पते!। तस्मात् पानीयदानाद्धि न परं विद्यते क्वचित्। तच्च दद्यान्नरोनित्यं यदीच्छेद् भूतिमात्मनः। धन्यं यशस्यमायुष्यं जलदानमिहोच्यते। शत्रूंश्चाप्यधि कौन्तेय! सदा तिष्ठति तोयदः। सर्वकामानवाप्नोति कीर्त्तिञ्चैवेह शाश्वतीम्। प्रेत्य चानन्त्यमश्नाति पापेभ्यश्च प्रमुच्यते। तोयदो मनुजव्याघ्र! स्वर्गं गत्वा महाद्युते!। अक्षयान् समवाप्नोति लोकानित्यब्रवीन् मनुरिति"।

**तोयधर** पु॰ तोयं धरति धृ-अच्। १मेघे मेदि॰ २मुस्तके च "नीला इवातपात्यये तोयं तोयधरा घनाः" रामा॰ वा॰ ६३ अ॰।

**तोयधार** पु॰ तोयानां धारा यत्र। १मेघे २मुस्तके च। धारि-भावे अच्। तोयस्य धारः वर्षणम्। ३जलवर्षणे पु॰ "घनवत्तोयधारेण ववर्ष कनकाम्बुभिः" हरिवं॰ ११२अ॰। ६त॰। ४जलसन्ततौ स्त्री। "शरान् व्यसृजतां घोरं तोयधारा घना इव" भा॰वि॰ ३२अ॰। "गिरिः प्रस्रवण इव तोयधारा" रामा॰ आ॰ २५ स॰।

**तोयधि** पु॰ तोयानि धीयन्तेऽत्र धा-कि उप॰स॰। १समुद्रे जलधिप्रभृतयोऽप्यत्र। २चतुःसंख्यायाञ्च। "समन्तान्मेरुमध्यात् तु तुल्योभागेषु तोयधेः" सू॰ सि॰।

**तोयधिप्रिय** न॰ तोयधिं प्रीणाति प्री-क। १लवङ्गे शब्दच॰।

**तोयनिधि** पु॰ तोयं निधीयतेऽस्मिन् नि+धा-कि उप॰स॰। १समुद्रे २चतुःसंख्यायाञ्च। "पूर्वापरौ तोयनिधी वगाह्य" कुमा॰।

**तोयनिवी** स्त्री तोयं समुद्रोदकं नीवीव यस्याः स्वार्थे न कप्। १पृथिव्यां "तोयनीव्याः पतिं भूमेरभ्यषिञ्चद्रजा-ज्ञया" भाग॰ ३।१५।२८। लोके तु कप् तोयनीविका तत्रार्थे। [लाङ्गल्याम् अमरः।

**तोयपिप्पली** स्त्री तोये पिप्पलीव। (काँचड़ा) शाकभेदे

**तोयपुष्पी** स्त्री तोयेन बहुजलदानेन पुष्पाण्यस्याः। १पाटलावृक्षे शब्दमाला।

**तोयप्रसादन** पु॰ तोयं प्रसादयति फलयोगेन प्र+सद-णिच्-ल्यु। १कतके (निर्म्मालि)। फलपरत्वे न॰ रत्नमाला "तोयप्रसादकाम्बुप्रसादकादयोऽप्यत्र "फलं कतकवृक्षस्य यद्यम्बुप्रसादकम्" मनुः।

**तोयफला** स्त्री तोयप्रधानं फलं यस्याः। १इर्वारौ कर्कटीभेदे राजनि॰। [२मुस्तके च।

**तोयमुच्** पु॰ तोयं मुञ्चति मुच-क्विप् ६त॰। १जलमुचि मेघे

**तोययन्त्र** न॰ सू॰ सि॰ उक्ते कालज्ञानार्थे घटीयन्त्रभेदे घटीयन्त्रशब्दे २७८१ पृ॰ दृश्यम्। (फोआरा) इति ख्याते २जलयन्त्रभेदे च।

**तोयराज्** पु॰तोयेषु राजते राज-क्विप्। १समुद्रे "यदीच्छेत् सागरः किञ्चिदुत्स्रष्टुमिह तोयराट्" हरिवं॰२२६अ॰। २वरुणे च

**तोयराशि** पु॰ तोयानां राशिरिव। १समुद्रे। ६त॰। २जलसमूहे च "तोयराशिसम्भवापि तृष्णां संवर्द्धयति" काद॰। [रत्नमा॰। स्वार्थे क। तोयवल्लिकाप्यत्र।

**तोयवल्ली** स्त्री तोयसन्निहितस्थाने वल्ली। १कारवेल्ले (उच्छे)

**तोयशुक्तिका** स्त्री तोयजाता शुक्तिका शा॰त॰। जलशुक्तिकायां राजनि॰।

**तोयशूक** पु॰ तोयस्य शूक इव। शैवाले पार॰ नि॰।

**तोयसूचक** पुंस्त्री॰ तोयं तोयवर्षं सूचयति रवेण सूच-ण्वुल्। १भेके शब्दार्थक॰। स्त्रियां जातित्वात् ङीष्। २जलवर्षणसूचके योगभेदे त्रि॰। जलभञ्ज्ञे २०६५ पृ॰ दृश्यम्।

**तोयविम्ब** न० तोयोत्थितं विम्बम् अर्द्धडिम्बाकारं वस्तु । जलविम्बे जलोपरिभासमाने अर्द्धगोलाकारे पदार्थे । अयं शब्दः तोयवल्लीशब्दात् परं पाठ्यः ।

**तोयात्मन्** पु० तोयमात्मा स्वरूपं यस्य तत्प्रकृतित्वात् । १परमेश्वरे „यस्य केशेषु जीमूताः । नद्यः सर्वाङ्गसन्धिषु कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नमः" विष्णुस्तुतिः ।

**तोयाधार** पु० ६त० । १जलाशये । जलाशयोत्सर्गशब्दे ३०७५ पृ० तद्भेदादि दृश्यम् ।"तोयाधारपथाश्च वल्कलशिखा-निष्यन्दरेखाङ्किताः" शकु० ।

**तोयाधिवासिनी** स्त्री तोयं तोयार्द्रं देशमधिवसति अधि+वस-णिनि ङीप् । पाटलावृक्षे रत्नमाला ।

**तोयेश** पु० ६त० । १वरुणे तदधिदेवताके २शतभिषानक्षत्रे च । तोयं जलमधिदेवोऽस्य । ३पूर्वाषाढ़ानक्षत्रे न० ।

**तोरण** पु'न० । तुर-युच आधारे ल्युट् तोलयत्यनेन तुल-उन्माने करणे-ल्युट् लस्य रो वा । बहिः स्थिते १द्वारे । "अर्घ्याञ्चकैस्तोरणमङ्गभङ्गैति" "गणो नृपाणामथ तोरणाद्बहिः" माघः । "भासोज्ज्वलत्काञ्चन-तोरणानाम्" कुमा० । तत्र द्वाराके निखातस्तम्भोपरिनिबद्धो धनुराकारः ( फटक् ) इति ख्यातः पदार्थः । यागादौ मण्डपाद्बहिर्द्वारेरूपस्य तोरणस्य काष्ठविशेषप्रमाणादिकं मण्डपशब्दे दृश्यं मत्कृततुलादा-नादिपद्धतौ विस्तरो दृश्यः । २कण्ठरायां न० हारा० ।

**तोरश्रवस** पु० अङ्गिरोमुनौ ।

**तोल** पु'न० । च० तुल-कर्म्मणि अच् । अशीतिरत्तिका-माने १कर्षे । "एकतोलं द्वितोलं वा त्रितोलं वेदतोल-कम् । इतोऽधिकं नरः कृत्वा प्रायश्चित्तीयते ध्रुवम्" आगमः । स्वार्थे क । तत्रार्थे "पलं तु लौकिकैर्मानैः साष्टरक्तिद्विमाषकम् । तोलकद्वितयं ज्ञेयम्" तिथित० ।

**तोल्य** त्रि० तुल+उन्माने कर्म्मणि-यत् ।१तोलनीये । भावे यत् । २तोलने न० । "जीवानां वयसां मौल्ये तोल्ये वर्णस्य हेमनि" लीला० ।

**तोश** पु० तुश--वधे भावे घञ् । १हिंसायाम् । कर्त्तरि अच् । २हिंसके "त्वे राय इन्द्र ! तोशतमाः" ऋ० १।१६९।५। "तोशतिर्वधकर्मा नितोशयति निवर्हयतीति तन्नामसु पाठात् तोशतमाः नाशयितृतमाः" भा० । "तोशा वृत्रहणा हुवे" ऋ० ३।१२।४ । 'तोशा बाधकौ" भा० । ञौस्याने आच् । [भा० उ० ३९अ० ।

**तोष** पु० तुष--भावे घञ् । सन्तोषे । "तोषपरो हि लाभः" 

**तोषण** न० तुष-भावे ल्युट् । १सन्तोषे । तुष-णिच् भावे ल्युट् । २सन्तोषोत्पादने । "एतावदेव पुरुषैः कार्य्यं हृद-यतोषणम्" भा० स० १६ अ० । कर्त्तरि ल्यु । ३सन्तोषजनके त्रि० "पश्मून् हृदयतोषणान्" भा० उ० ८३ अ० । करणे ल्युट् । ४तोषसाधने स्त्रियां ङीप् तोषणी ।

**तोषल** न० तोष लुनाति लू--बा० ड । अस्त्रभेदे १मुषलेऽस्त्रे "कृष्णस्तोषलमुद्यम्य गिरिकूटोपमं बली" हरिवं० ८७अ० ।

**तौक्षिक** पु० धनूराशौ दीपिका कौर्प्यशब्दे २२०८पृ० दृश्यम् ।

**तौतातिक** न० तुतातभट्टेन निर्वृत्तम् ठञ् । तुतात-भट्टकृतशास्त्रे "नैवाश्रावि गुरोर्मतं न विदितं तौतातिकं दर्शनम्" प्रबोधच० ।

**तौतिक** न० १मुक्तायां २शुक्तौ च राजनि० ।

**तौटी** स्त्री विघ्ननाशके औषधिभेदे घृतकुमार्याम् ।" तौटी नामासि कन्या घृताची वा असि" अथ० १९।४।४२।

**तौम्बुरविन्** पु० व०व० । तुम्बुरुणा कलापान्तेवासिना प्रोक्त-मधीयते इनि । कलापान्तेवासिना तुम्बुरुणा प्रोक्त-शाखाध्येतृषु ।

**तौर** न० यागभेदे ।"संवत्सरमङ्गरहस्तौरेण यजेत" लाट्या० श्रौ० १०।२०।१ । "दार्षद्वततौरयोर्व्रतानि" १०।१८।१० । तत्रैव ।

**तौरयान** न० तूर्णं यानमस्य पृषो० । तूर्णगमनयुक्ते । "स तौरयान उपयाहि यज्ञम्" निरुक्ते ५।२५। श्रुतिः तौरयानः तूर्णयानः "तौरयान इत्यपि निगमो भवति"

**तौरश्रवस** न०तोरश्रवसाऽङ्गिरसा दृष्टं साम अण् । सामभेदे "तौरश्रवसे माध्यन्दिने पवमाने तदावपनश्रुतेः" कात्या० श्रौ० २५।१४।१४ । "तौरश्रवसे सामनी" कर्कः ।

**तौर्य्य** न० तूर्ये मुरजादौ वाद्ये भवम् अण् । मुरजादि-ध्वनौ ।

**तौर्य्यत्रिक** न० त्रयः परिमाणमस्य कन् तौर्य्योपलक्षितं त्रिकम् । समुदितेषु नृत्यगीतवाद्येषु अमरः । "वनेऽपि तौर्य्यत्रिकमाररार्ध तम्" नैषधम् । "तौर्य्यत्रिकं वृथाट्या कामजो दशको गणः" मनुः ।

**तौल** न० तुलैव तुला+स्वार्थे अण् स्वार्थिका अपि प्रत्ययाः क्वचित्प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते इत्युक्तेः देवता-दिवत् क्लीवता । मानभेदे १तुलायाम् २उन्मानदण्डे ३तुलाराशौ च ज्यो० ।

**तौलिक** पु०तूल्या जीवति तूली+ठक् । चित्रकरे शब्दमाला ।

**तौलिकिक** पु० तूलिकया जीवति ठक् । चित्रकरे हेमच० ।

**तौलिन्** पु० तुलैव तौलं तत् विद्यतेऽस्य इनि । तुलाराशौ "तौलिनि चित्रान्त्यार्द्धं स्वातिः पादत्रयं विशाखायाः" वृ०सं०१०३अ०। अस्य क्लीवत्वमपि"शक्रे तौलि हुताशनेऽनिधनगो यास्ये मृगो नैर्ऋते" ज्यो०राशिलग्ननिर्णयः ।

**तौल्य** त्रि० तुलया परिच्छिन्नम् यञ् । तुलया परिच्छिन्ने त्रिका० । तुल्यमेव स्वार्थेऽण् । २तुल्ये न० ।

**तौल्वलि** पु०तुल्वलस्यापत्यम् इञ् । तुल्वलर्षेरपत्ये "सर्वेभ्य एव निपृणीयादिति तौल्वलिः क्रियागुणत्वात्" आश्व० श्रौ० २।६।१७ "अभक्षणमितरेषां तौल्वलिः क्रतार्थत्वात्" ५।६।२४ । ततः इञन्तत्वात् यूनि फक् तौल्वल्यादित्वात् युवप्रत्ययस्य न लुक् । तौल्वलायन—यूनि तदपत्ये ।

**तौल्वल्यादि** पु० "न तौल्वलिभ्यः" पा० सूत्रोक्ते युवप्रत्ययस्य लुकि पर्युदस्ते शब्दगणे स च गणः पा०ग०सू० उक्तो यथा

"तौल्वलि, धारणि, पारणि, रावणि, दैलीपि, दैवति, वार्कलि, नैवकि, दैवमति, दैवयज्ञि, चाफट्टकि, वैल्वकि, वैद्कि, आनुराहति, पौष्करसादि, आनुरोहति, आनति, प्रादोहनि, नैमिश्रि, प्राडाहति, वान्धकि, वैशीति, आसिनासि, आहिंसि, आसुरि, नैमिषि, आसिबन्धकि, पौष्करेणुपालि, वैकर्णि, वैरकि, वैहति ।

**तौवरक** त्रि० तुवर्य्या इदम् अण् स्वार्थे क । तुवरीसम्बन्धिनि १स्नेहादौ "कृते भल्लातकस्नेहात् स्नेहात्तौवरकात्तथा" सुश्रुतः । स्वार्थे अण् । ततः स्वार्थे क । २तुवरके । "आयुष्करं तौवरकं कषायं कटुपाकिकम् । उष्णं कृमिज्वरानाहमेहावर्त्तविनाशनम्" सुश्रुतः ।

**तौविलिका** स्त्री ओषधिभेदे । तौविलिके ! ऽवेलयावायमैलब ऐलयीत्" अथ० ६।१६।३ ।

**तौषायण** त्रि० तुषस्यादूरदेशादि पक्षा० चतुरर्थ्यां फक् । तुषस्यादूरदेशादौ ।

**तौषार** त्रि० तुषारस्येदमण् । तुषारसम्बन्धिनि जले राजनि० "तत्रान्तरिक्षं धारं कारं तौषारं हैममिति" आन्तरिक्षजलविभागे सुश्रुतः । भावप्र० तल्लक्षणादि उक्तं यथा "अपि नद्याः समुद्रान्ते वह्निरापस्य तद्भवाः । धूमावयवनिर्मुक्तास्तौषाराख्यास्तु ताः स्मृताः । अपथ्याः प्राणिनां प्रायो भूरुहाणान्तु ता हिताः । तुषाराम्बु हिमं रूक्षं स्याद्वातलमपित्तलम् । कफोरुस्तम्भकण्ठाग्निमेदोगण्डादिरोगनुत्" । नदीमारभ्य समुद्रपर्य्यन्तं वह्निरास्ते तद्भवा वह्निभवाः धूमावयवनिर्मुक्ताः धूमांशरहिता आपः तौषाराख्या इत्यर्थः ।

**त्मन्** पु० आत्मन्+आलोपः । आत्मनि "त्मनमूर्जं न विश्वध क्षरध्यै" ऋ० १।६३।८ । त्मनमात्मानम् । "आङोऽन्यत्रापि छन्दसि दृश्यते" पा० इत्यात्मन आकारलोपः संज्ञापूर्वकस्य विधेरनित्यत्वादुपधादीर्घाभावः" भा० । "त्मने तोकाय तनयाय मृड" ऋ० १।११४।६ । "उप त्मन्या वनस्पते" ऋ० १।१८८।१०। 'त्मन्या आत्मना" भा० । तृतीयास्थाने या । "अश्वो घृतेन त्मन्या" यजु० २९।१०। "वनस्पतिरवसृष्टो न पाशैः त्मन्या" २०।४५ ।

**त्यक्त** त्रि० त्यज—कर्मणि क्त । कृतत्यागे उत्सृष्टे समुज्झिते अमरः "अदृष्टार्थत्यक्तद्रव्यस्वीकारः प्रतिग्रहः" शूलपाणिः त्यजधातौ उदा०।२त्यक्तुमुद्यते च"मदर्थे त्यक्तजीविताः" गीता "इत्युक्तः करुणं वाक्यं वानरैस्त्यक्तजीवितैः, रामा० कि० ५४ अ० ।

**त्यज** हानौ दाने च भ्वा० सक० पर० अनिट् । त्यजति अत्याक्षीत् तत्याज । त्यक्तव्यं त्याज्यम् त्यागः त्यक्तं त्यक्ता त्यागी । "त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् । ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्" चाणक्यः "योऽत्याक्षीत् संयुगं भयात्" भा० द्रो० ८५ अ० "तं तत्याजाहितं पुत्रम्" रामा० २।३६अ० । "नैव नीतिविरोधेन कदाचित् त्यज्यते"पञ्चत०। (शूराः) "मदर्थे त्यक्तजीविताः" गीता "प्रतिरोद्धा गुरोर्यैव त्यक्ताग्निर्वाद्धुपिस्तथा" मनुः "न माता न पिता न स्त्री न पुत्रस्त्यागमर्हति"मनुः"त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः । यज्ञदानतपः कर्म न त्याज्यमिति चापरे" गीता"ज्ञातिसम्बन्धिभिस्त्वेते त्यक्तव्याः कृतलक्षणाः"मनुः "चतुष्पदाः स्वयूथेभ्यस्त्यक्तव्याः परभूमिषु"वृ०सं०६०अ० । वेदे तु लिट्। णलि तित्याज"यस्तित्याज सचि विदं सखायम्"ऋ०१०।७१।६। त्यागश्च स्वत्वध्वंसानुकूलव्यापारः न ममेदमित्याकारः। स च मूर्त्तद्रव्याणामेव भवति अमूर्त्तजीवनादेर्वियोजनरूपः । उपसर्गपूर्वकस्य तत्तदुपसर्गद्योत्यार्थयुक्तत्यागे इति भेदः ।

**त्यजस्** पु०त्यज—भावेऽसुन् । १त्यागे "इन्द्रस्य न त्यजसा विह्रुणाति"ऋ०१।१६६।१२।"त्यजसा त्यागेन" भा०कर्त्तरि—असुन् ।२त्यागकर्त्तरि त्रि०।"चिद्वारयातेमहि ! त्यजः"ऋ०

१०।१४४।६। त्यजो दुःखस्य वर्जयितृ भा० "न तं तिग्मं चन त्यजो न" ऋ०८।४७।७। करणे असुन्। ३क्रोधे च क्रोधात् प्रयुज्यमानमायुधं मुच्यते इति तस्य तथात्वम्।

**त्यद्** त्रि० त्यज–"त्यजितनियजिभ्यो डित्" उ० अदि डिच्च।१प्रसिद्धे। अस्य सर्वनामतया त्यदादिकार्य्यम्, स्यः त्यौ त्ये त्यस्मै त्यस्मात् त्येषां त्यस्मिन्। स्त्रियां स्या त्ये त्याः। क्लीवे त्यद् त्ये त्यानीति भेदः। २सर्वदा परोक्षाभिधानार्हे वस्तुनि।

"द्वे वाव ब्रह्मणो रूपे मूर्त्तञ्चैवामूर्त्तञ्च मर्त्यञ्चामृतञ्च स्थितञ्च यच्च सच्च त्यच्च। तदेतन्मूर्तं यदन्यद्वायोश्चान्तरीक्षाच्चैतन्मर्त्यमेतत् स्थितमेतत् तस्यैतस्य मूर्त्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो य एष तपति सतो ह्येष रसः। अथामूर्तं वायुश्चान्तरिक्षं चैतदमृतमेतद्यदेतत्त्यत्तस्यैतस्यामूर्त्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो य एष एतस्मिन्मण्डले पुरुषस्तस्य ह्येष रस इत्यधिदैवतम्" बृ० उ०। "ते एते द्वे वाव वावशब्दोऽवधारणार्थः। द्वे एवेत्यर्थः। ब्रह्मणो परमात्मनो रूपे रूप्यते याभ्यामरूपं परमब्रह्माविद्याध्यारोपणाभ्यां के ते द्वे। मूर्तञ्च एव मूर्तमेव च। तथा अमूर्त्तञ्च एवामूर्तमेव चेत्यर्थः। अन्तर्नीतस्वात्मविशेषणे मूर्त्तामूर्ते द्वे एवेत्यवधार्य्यते। कानि पुनस्तानि विशेषणानि मूर्त्तामूर्तयोरित्युच्यन्ते। मर्त्यं मरणधर्म्यमृतञ्च तद्विपरीतम्। स्थितं परिच्छिन्नं गतिपूर्वकं यत् स्यान्न। यच्च यातीति यद्व्याप्यपरिच्छिन्नं स्थितविपरीतम्। सच्च सदित्यन्येभ्यो विशेष्यमाणासाधारणधर्मविशेषवत्। तच्च तद्विपरीतं त्यदित्येव सर्वदा परोक्षाभिधानार्हम्। अथामूर्तमथाधुनाऽमूर्तमुच्यते। वायुश्चान्तरिक्षञ्च यत्परिशेषितं भूतद्वयं एतदमृतममूर्तत्वादस्थितमतोऽविरुध्यमानं केनचिदमृतममरणधर्मि तद्यत् स्थितविपरीतं व्याप्यपरिच्छिन्नं यस्माद्यदेतदन्येभ्योऽप्रविभज्यमानविशेषमतस्त्यदित्यदिति परोक्षाभिधानार्हमेव पूर्ववत्। तस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्य चतुष्टयविशेषणस्यामूर्तस्यैव रसः। कोऽसौ। य एष एतस्मिन्मण्डले पुरुषः करणात्मको हिरण्यगर्भः प्राण इत्यभिधीयते। यः स एषः अमूर्तस्य भूतद्वयस्य रसः पूर्ववत् सारिष्ठः, एतत्पुरुषसारञ्चामूर्तं भूतद्वयं हैरण्यगर्भलिङ्गारम्भाय हि भूतद्वयाभिव्यक्तिरव्याकृतात्तस्मात्तादर्थ्यात्तत् सारं भूतद्वयम्। त्यस्य ह्येष रसो यस्माद्यो मण्डलस्थः पुरुषो मण्डलवन्न गृह्यमाणस्य भूतद्वयस्य च साधर्म्यम्। तस्माद्युक्तं प्रसिद्धवद्धेतूपादानं त्यस्य ह्येष रस इति" पा० भाष्यम् "सूतो वा सूतपुत्रो वा यो वा स्यो वा भवाम्यहम्" वेणी०। अव्ययीभावे शदरा० अच् समासान्तः। उपत्यदम्।

**त्यदादि** पु० पा० गणसूत्रोक्ते शब्दसमूहे। स च गणः "त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवत् किम्" "त्यदादीनामः" पा० अत्र अत्त्वविधौ द्विपर्य्यन्तस्यैव ग्रहणमिति भाष्यकारेष्टिः।

**त्याग** पु० त्यज–भावे घञ्। १उत्सर्गे मूर्तद्रव्यस्य स्वत्वध्वंसानुकूलव्यापारे न ममेदमित्याकारे। "न माता न पिता न स्त्री न पुत्रस्त्यागमर्हति" "उन्मत्तं पतितं क्लीवमवीरं पापरोगिणम्। न त्यागोऽस्ति द्विषन्त्याश्च न च दायापवर्तनम्" मनुः अमूर्तद्रव्यस्य २वियोगमात्रे च। त्यागश्च सात्त्विकादिभेदात् त्रिविधः। यथाह गीता "नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते। मोहात्तस्य परित्यागस्तामसः परिकीर्तितः। दुःखमित्येव यत् कर्म कायक्लेशभयात् त्यजेत्। स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत्। कार्य्यमित्येव यत् कर्म नियतं क्रियतेऽर्जुन!। सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः"। विशेषणाभावात् विशेष्याभावात् उभयाभावाच्च पुनरपि सात्त्विकस्त्यागः त्रिविधः तथा हि फलाभिसन्धिपूर्वककर्मत्यागः सत्यपि कर्मणि फलाभिसन्धित्यागादेकः। स च सात्त्विकत्वादाद्यः। सत्यपि फलाभिसन्धौ कर्मत्यागात् द्वितीयः। स च दुःखबुद्ध्या कृतो राजसः विपर्य्यासेन कृतस्तामसः इति भेदः। द्विविधोऽपि हेयो भवति। फलाभिसन्धेः कर्मणश्च त्यागात् तृतीयः। स च कर्मानधिकारिकर्तृको नैर्गुण्यरूपः। सोऽपि साधनफलभेदेन द्विविधः। तत्र सात्त्विकेन फलाभिसन्धित्यागपूर्वककर्मानुष्ठानरूपेण त्यागेन शुद्धान्तःकरणस्योत्पन्नविविदिषस्य आत्मज्ञानसाधनश्रवणाख्यं वेदान्तविचाराय फलाभिसन्धिरहितस्यान्तःकरणशुद्धौ सत्यां तत्साधनस्य परित्यागः स एकः साधनभूतो विविदिषासन्न्यास उच्यते। जन्मान्तरकृतसाधनाभ्यासपरिपाकादस्मिन् जन्मनि आदावेवोत्पन्नात्मबोधस्य कृतकृत्यस्य स्वत एव फलाभिसन्धेः कर्मणश्च परित्यागः फलभूतः स विद्वत्सन्न्यास इत्युच्यते। "त्यागप्रपञ्चरूपस्य चिदात्मत्वावलोकनात्। त्यागो

हि महतां पूज्यः सद्यो मोक्षमयो यतः। त्यागेन युक्ता दिवमुत्पतन्ति त्यागेन हीना नरकं व्रजन्ति। न त्यागिनां दुष्करमस्ति किञ्चित् त्यागो हि सर्वव्यसनानि हन्ति" शब्दार्थचि॰ धृतवाक्यम्।

**त्यागिन्** त्रि॰ त्यज-घिणुन्। १ दातरि, २शूरे, ३वर्ज्जनशीले, ४कर्मफलत्यागिनि च "न द्वेष्ट्यकुशलं कर्म कुशलेनानुषज्जते। त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः। न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः। यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते" गीता "आत्मनस्त्यागिनां चैव निवर्त्तेतोदकक्रिया" मनुः।

**त्यागिमन्** त्रि॰ त्यागेन निष्पन्नं त्याग+इमन्। त्यागेन निर्वृत्ते।

**त्याज्य** त्रि॰ त्यज+ण्यत् कुत्वाभावः। १वर्ज्जनीये "तीरे प्रतिग्रहस्त्याज्यस्त्याज्यो धर्मस्य विक्रयः" प्रा॰ त॰। २दातुं योग्ये च।"त्याज्यो दृष्टः प्रियोऽप्यासीदङ्गुलीवोरगक्षता" रघुः। "सा त्वयाप्यन्यतो गर्भं त्याज्या भवति पापिनी। महापातकदुष्टा च पतिगर्भविनाशिनी" व्यासस॰।

**त्रक** गतौ भ्वा॰ आत्म॰सक॰सेट्। त्रकते अत्रकिष्ट। तत्रके।

**त्रख** गतौ भ्वा॰ पर॰ सक॰ सेट् धातुपाठः। त्रखति अत्रखीत् अत्राखीत्। तत्राख। [अत्रङ्खीत्। तत्रङ्ख।

**त्रख** गतौ भ्वा॰ पर॰ सक॰ सेट् इदित् धातुपाठः। त्रङ्खति

**त्रग** गतौ भ्वा॰ पर॰सक॰सेट् इदित्। त्रङ्गति अत्रङ्गीत्। तत्रङ्ग। अयं दिवा॰ धातुपाठः। त्रङ्ग्यति।

**त्रङ्ग** पुंस्त्री त्रगि-अच्। पुरभेदे हरिश्चन्द्रपुरे सौभे उद्रङ्गे प्रतिमार्गके त्रिका॰।

**त्रट** चेष्टायां भ्वा॰ पर॰ अक॰ सेट् इदित्। त्रन्टति अत्रन्टीत्। तत्रन्ट।

**त्रप** लज्जायां भ्वा॰आ॰ अक॰ वेट्। त्रपते अत्रपिष्ट अत्रप्त त्रेपे। णिच् वा घ॰। त्रपयति त्रापयति। षित् त्रपा। "कान्तया कान्तसंयोगे किमकारि नवोढ्या। अत्रापि च क्रिया प्रश्नोत्तरा गुप्ता न बुध्यते" विदग्धमुख॰। "अपेक्षाभिद्यायामपि किमपि चेतस्त्रपयति" शान्तिश॰। अप-अन्यतो लज्जायाम् "तस्माद्वन्नैरपत्रेपे" भट्टिः। "लज्जा सापत्रपान्यतः" अमरः।

**त्रपा** स्त्री त्रप-भावे अङ्। १लज्जायाम् अमरः। कर्त्तरि अच्। २सलज्जे त्रि॰। ३कुलटायां स्त्री मेदि॰। ४कुले ५कीर्त्तौ च शब्दच॰।

**त्रपाक** पुंस्त्री॰ त्रप-आक। म्लेच्छजातिभेदे उणादि॰।

**त्रपारण्डा** स्त्री त्रपायां रण्डा। लज्जाहीनायां वेश्यायां जटा॰ शब्दक॰ वस्तुतः त्रपारण्डेति नामद्वयं मेदिनौ त्रपाशब्दस्य वेश्यार्थकत्वोक्तेः रण्डाशब्दस्य च तदर्थप्रसिद्धेस्तत्समानार्थकत्वौचित्यात्।

**त्रपिष्ठ** त्रि॰ अतिशयेन तृप्रः अतिशायने इष्ठन् प्रियादि॰ त्रपादेशः। तृप्रतरे। [स्त्रियां ङीप्।

**त्रपीयस्** त्रि॰ अतिशयेन तृप्रः ईयसुन् त्रपादेशः। तृप्रतमे

**त्रपु** न॰ अग्निं दृष्ट्वा त्रपते लज्जते इव त्रप-उन्। १सीसके २रङ्गे च मेदि॰ तस्य विकारः अण् "त्रपुजतुनोः षुक् च" पा॰ षुक् च। त्रापुष तद्विकारे त्रि॰। "ताम्रायःकांस्यरैत्यानां त्रपुणः सीसकस्य च" मनुः। "सुवर्णस्य मलं रूप्यं रूप्यस्यापि मलं त्रपु। ज्ञेयं त्रपुमलं सीसं सीसस्यापि मलं मलम्" मा॰उ॰ ३८ अ॰। [लताभेदे।

**त्रपुकर्कटी** स्त्री त्रपु इव शुभा कर्कटी। (ससा) इति ख्याते

**त्रपुटी** स्त्री त्रप-बा॰-उटक् गौरा॰ ङीष्। सूक्ष्मैलायाम्। रत्नमाला।

**त्रपुल** न॰ त्रप-बा॰ उल। रङ्गे हिरूपकोषः।

**त्रपुष(स)**न॰ त्रपुस्याः(ष्याः)फलम् अण् फले तस्य लुप्। त्रपुषी(सी)फले। 'त्रपुसं(षं) लघु नीलञ्च नवं तटक्रमदाहजित्। स्वादु पित्तापहं शीतं रक्तपित्तहरं परम्। तत्पक्वमम्लमुष्णं स्यात् पित्तलं कफवातनुत्। तद्बीजमृत्वलं शीतं रूक्षं पित्तास्रकृच्छ्रजित्" भावप्र॰।

**त्रपु(ष)स** न॰त्रप-बा॰उस(ष)। १रङ्गे हिरूपकोषः। गौरा॰ ङीष् २माहेन्द्रवारुण्यां कर्कटीभेदे (ससा) लताभेदे। सा च पीतपीष्पा काण्डालुः बहुफला तुन्दिलफला कण्टकफला सुधावासा च।

**त्रप्सा** स्त्री घनीभूतस्नेहादौ। "कृमिकीटपतङ्गैर्दूषिता यत्र मेदिनी। त्रप्सया कर्दमैः क्षिप्रा वान्तैर्वा दूरतां व्रजेत्। नखदन्तनजलकतुषपांशुरजोमलैः। अमृपङ्कपुरीषैर्वापि प्रच्छन्ना मलिना भवेत्" "त्रप्सा घनीभूतस्नेह इति" शु॰त॰।

**त्रप्स्य** न॰ घनेतरदधनि अमरटीकायां विद्याविनोदः।

**त्रय** न॰स्त्री त्रयाणामवयवम् अयच्। त्रितये १त्रित्वसंख्यायाम् "वेदत्रयं निरदुहत् भूर्भुवः स्वरितीति च" मनुः। स्त्रीत्वपक्षे ङीप्। "व्याप्नोति स्म सभावेद्यामसौ नरशिखित्रयी" माघः त्रयोऽवयवा अस्य अयच्। २त्रित्वसंख्यान्विते त्रि॰ स्त्रियां ङीप्। "प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमम्। त्रयं सुविदितं कार्य्यं धर्म॰

शुद्धिमभीप्सता:" मनुः ङीप्लः "ऋग्यजुःसामरूपे ३वेदत्रये त्रित्वसंख्यान्वितेषु ऋगादिवेदेषु अमरः "एतद्विदन्तोविद्वांसस्त्रयीनिष्कर्षमन्वहम्" "त्रैविद्येभ्यस्त्रयीं विद्यादृण्डनीतिञ्च शाश्वतीम्" मनुः। "ब्रह्माऽथ पुरुषो रुद्रस्त्रयमेतत् त्रयीमयम्। सर्गादाहङ्मयो ब्रह्मा स्थितौ विष्णुर्यजुर्मयः। रुद्रः साममयोऽन्ताय तस्मात् तस्याशुचिर्ध्वनिः" मनुः।४पुरन्ध्र्यां ५सुमतौ स्त्रयां विश्वः ६सोमराजीवल्ले स्त्री शब्दच०। ७भवान्याम् दुर्गायाम्। यथा "ऋग्यजुःसामभागेन साङ्गवेदगतापि या। त्रयीति पद्यते लोके दृष्टा दृष्टार्थसाधिनीति" देवीपु०।

**त्रयःपञ्चाशत्** स्त्री त्र्यधिका पञ्चाशत् त्रिशब्दस्य त्रय आदेशः। (तिपान्न)१त्र्यधिकपञ्चाशत्संख्यायां २तत्संख्यान्विते च बहुत्वेऽप्येकत्वम्। एवं त्रयोदशत्रयोविंशतित्रयस्त्रिंशत् त्रयश्चत्वारिंशत् प्रभृतयः त्र्यधिकदशादिसंख्यायां तत्संख्ये ये च। द्वयोस्तु भेदेः अशीतिभिन्ने चत्वारिंशदादौ वा त्रय आदेशः। तेन पक्षे त्रिचत्वारिंशादित्यादि तत्रार्थे अशीतौ नेति त्र्यशीतिः।

**त्रययाय्य** पु० त्रयं जन्मत्रयं याति या—बा० आय्य। जन्मत्रयप्राप्ते "स्तुर्न त्रययाय्यः" ऋ० ६।२।७। "त्रययाय्यो जन्मत्रयं प्राप्तः। जन्मत्रयं स्मर्यते। मातुरग्रेऽधिजननात् द्वितीयं मौञ्जिबन्धनात्। तृतीयं यज्ञदीक्षाया इति जन्मत्रयं स्मर्तमिति" तादृशः पुत्र इति भा०।

**त्रयस्त्रिंश** त्रि० त्रयस्त्रिंशत्+पूरणे डट्। त्र्यधिकत्रिंशत्संख्यापूरणे स्त्रियां ङीप्।

**त्रयस्त्रिंशत्पति** पु० त्रयस्त्रिंशतो देवानां पतिः। १इन्द्रे हेमच०। २प्रजापतौ च तयोः त्र्यधिकत्रिंशतो देवानां पतित्वात् तथात्वम्। देवानां त्रयस्त्रिंशत्त्वं तु

"अष्टौ वसवः एकादश रुद्रा द्वादशादित्या इमे एव द्यावा पृथिवी त्रयस्त्रिंश्यौ त्रयस्त्रिंशद्वै देवाः प्रजापतिश्चतुस्त्रिंशस्तदेनं प्रजापतिम्" शत० ब्रा० ४।५।६।२। "कतमे ते त्रयस्त्रिंशदित्यष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त एकत्रिंशत् इन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशाविति" शत० ब्रा० ११।६।३।५। तु अन्यथोक्ता अस्मिन् पक्षे निर्द्धारणसप्तम्यासमासात् इन्द्रप्रजापतिपरत्वम् तयोस्तेषां मध्ये श्रेष्ठत्वेन पतित्वात्तथात्वमिति बोध्यम्। "आदित्यांश्च वसूंश्चैव रुद्रांश्चैवाश्विनावपि" रामा० ३।१०। अन्यथा संख्योक्ता।

**त्रयस्त्रिंशस्तोम** पु० त्रयस्त्रिंशत् स्तोमा अस्य पृषो०। यज्ञभेदे। "त्रयस्त्रिंशस्तोमेन शोणः सात्रासाहः पाञ्चालो राजा। तदेतद्गाथयाऽभिगीतम् "सात्रासाहे यजमाने अश्वमेधेन तौर्वशाः। उदीरते त्रयस्त्रिंशाः षट् सहस्राणि वर्मिणाम्" शत० ब्रा० १३।५।४।१६।

**त्रयस्त्रिंशिन्** न० त्रयस्त्रिंशत् ऋचः सन्त्यस्मिन् इनि डित्। त्रयस्त्रिंशदृग्भिर्गीयमाने सामभेदे। "त्रयस्त्रिंशि नाम साम माध्यन्दिने पवमाने भवति" तैत्ति० १।२।७।४

**त्रयीतनु** पु० त्रयी वेदा एव तनुरस्य। १सूर्ये शब्दा०। "स्वर्गद्वारं त्रय्या विद्यया भगवन्तं त्रयीमयं सूर्यमात्मानं यजन्ते" भाग०५।२०।७। तस्य त्रयीमयत्वोक्तात्तथात्वम्।

**त्रयीधर्म्म** पु० त्रय्या वेदत्रयेण विधीयमानो धर्मः शाक०। वैदिके धर्मे ज्योतिष्टोमादौ अमरः।

**त्रयीमय** पु० त्रय्यात्मकः मयट्। १सूर्ये त्रयीतनुशब्दे दृश्य० २त्रयीधर्म्मात्मके त्रि०। "एवं मुहूर्त्तेन चतुस्त्रिंशल्लक्षयोजनान्यष्टशताधिकानि सौरो रथस्त्रयीमयोऽसौ चतसृषु परिवर्त्तते पुरीषु" भाग० ५।२१।१७। "त्रयीमयं रूपमिदञ्च सौकरम्" इत्युक्ते वाराहे ३रूपे न०तद्रूपवित्वतिस्तत्रैव "स उत्कृतस्त आसीत् सुवर्दश! नासयोर्गिरो दरे चमसाः कर्णरन्ध्रे। प्राशित्रमास्ये ग्रसने ग्रहास्तु ते यच्चर्वणं ते भगवन्नग्निहोत्रम्। दीक्षानुजन्मोपसदः शिरोधरं त्वं प्रायणीयोदयणीयदंष्ट्रः जिह्वाप्रवर्ग्यस्तव शीर्षकं क्रतोः सत्यावसथ्यं चितयोऽसवो हि ते। सोमस्तु रेतः सवनान्यवस्थितिः संस्थाविभेदास्तव देव! धातवः। सत्राणि सर्वाणि शरीरसन्धयस्त्वं सर्वयज्ञक्रतुरिष्टिबन्धनः। नमो नमस्तेऽखिलमन्त्रदेवताद्रव्याय सर्वक्रतवे क्रियात्मने" भाग० ३।१३।४०। ४परमेश्वरे च पु०। "स एष आत्मात्मवतामधीश्वरस्त्रयीमयो धर्ममयस्तपोमयः" भाग०२।४।१६।

**त्रयीमुख** पु० त्रयी मुखेऽस्य। विप्रे हेमच०।

**त्रयोदशन्** त्रि०त्रयश्च दश च० त्र्यधिका वा दश शाक० त्रय आदेशः। १त्र्यधिकदशसङ्ख्यायां २तत्संख्यान्विते च। "क्वचित् द्वादश मासाः संवत्सराः क्वचित् त्रयोदश मासाः" श्रुतिः म०त०। ततः पूरणे डट्। त्रयोदश तत्पूरणे त्रि० "ज्यैष्ठे ज्येष्ठस्य कुर्वीत त्रयोदशदिनात् परम्" ज्यो० स्त्रियां ङीप्। सा च चन्द्रस्य त्रयोदशकलाक्रियात्मके तिथिभेदे सा च कामतिथिः तत्रैव तस्योत्पत्तेः। "त्रयोदशी पञ्चदशी च माघे" मन्वादिकथने "वरुणेन समायुक्ता मधौ कृष्णा त्रयोदशी" वारुणीकथने च ति०त०।

**त्रय्यारुण** पु० साम्नातृवंश्ये त्रिधर्मणः सुते नृपभेदे "राज-

स्त्विधर्मणश्चासीत् विद्वांस्त्य्यारुणः सुतः” हरिवं०१२अ०।

**त्रस** गतौ ग्रहे निषेधे च चुरा० उभ० सक० सेट् । त्रासयति ते अतित्रसत् त ।

**त्रस** भासे वा चुरा० उभ० पक्षे भ्वा० पर० अक० सेट् इदित् । त्रंसयति ते त्रंसति अतत्रंसत् त अत्रंसीत् ।

**त्रस** भये वा दिवा० पक्षे भ्वा०पर०अक०सेट् । त्रसति अत्रासीत् अत्रसीत् तत्रास फणा० त्रेसतुः तत्रसतुः । ईदित् त्रस्तः । तस्य दिवादित्वे सार्वधातुके श्यन् । त्रस्यति । “त्रस्यन्ती चलशफरीविघट्टितोरूः” माघः “त्रसत्तु राद्रिसुतासंभ्रमस्वयंग्रहाश्लेषसुखेन निष्क्रियाम्” “सुखरत्रसद्भिरपि यत्र गौरवात्” माघ। “त्रस्यन् वै जायमानेभ्यः” भट्टिः । “ततो रामेति चक्रन्दुस्त्रेसुः परिदिदेविरे” भट्टिः “कपेरत्रासिषुर्नादात् मृगाः सिंहध्वनेरिव” भट्टिः। “राक्षसस्य न चात्रासीत् प्रनष्टुमयतिष्ट च” भट्टिः ।

उद्+उत्कटत्रासे । “बालानुदत्रासयन्ति च” हरिवं०२२७७।

**त्रस** त्रि० त्रस–भये आधारे घञर्थे क ।१वने त्रिका०। त्रस–गतौ अच् । २जङ्गमे त्रि० अमरः । त्रसरेणुः ।

**त्रसद्दस्यु** पु० मान्धातृपौत्रभेदे । “तस्याकुत्पादयामास मान्धाता द्वौ सुतौ नृप ! । पुरुकुत्सञ्च धर्मज्ञं मुचुकुन्दञ्च धार्मिकम् । पुरुकुत्ससुतस्त्वासीत् त्रसद्दस्युर्महीपतिः” हरिवं० १२ अ० । [१त्रासयुक्ते त्रि०।

**त्रसन** न० त्रस–भावे ल्युट् । १भये २उद्वेगे कर्त्तरि ल्यु ।

**त्रसर** पु०त्रस–अरन् । तन्तुवायोपकरणभेदे (तासनी) अमरः

**त्रसरेणु** पु० त्रसः चलो रेणुः कर्म० । “जालान्तरगते भानौ सूक्ष्मं यद्दृश्यते रजः । प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते” मनूक्ते गवाक्षान्तर्गतसूर्य्यकिरणेषु १दोधूयमाने रजसि २परमाणुषट्कात्मके द्व्यणुकत्रयात्मके रजसि “परमाणुद्वयेनाणुस्त्रसरेणुस्तु ते त्रयः” ब्रह्मवै०। “जालान्तरगते सूर्य्यकरे ध्वंसी विलोक्यते । त्रसरेणुस्तु विज्ञेयः त्रिंशता परमाणुभिः” इति वैद्यकपरिभाषया ३त्रिंशत्परमाणुरूपे रजसि च । ४सूर्य्यपत्नीभेदे स्त्री त्रिका० ।

**त्रसुर** त्रि० त्रस–उरच् । भीरौ संक्षिप्तसारः ।

**त्रस्त** त्रि० त्रस–क्त । १भीते २चकिते । ३शीघ्रे न०। “त्रस्तौ समासन्नकरेणुसूत्कात्” “त्रस्तः समस्तजनहासकरः करेणुः” माघः “त्रस्तोपात्तानमत्रस्तः” रघुः ।

**त्रस्नु** त्रि० त्रस–क्नु । भीरौ त्रासशीले अमरः । “सीतां सौमित्रिणा त्यक्तां स प्रोचौ त्रस्नुमेकिकाम्” भट्टिः “अत्र त्रस्नुभिर्युक्तधुरं तुरङ्गैः” रघुवंशकाव्यम् ।

**त्रा** पालने अदा० आ० सक० अनिट् क्रमदीश्वरः । त्राति अत्रात । “कान्तारे ब्राह्मणान् गाश्च यः परित्राति कौशिकः !” भा०अनु०७२अ० । आर्षत्वात् पदव्यत्ययः ।

**त्राण** न०त्रै–पालने भावे ल्युट् भावे क्त तस्य नो वा ।१रक्षणे । कर्म्मणि क्त वा तस्य नः।२रक्षिते त्रि० ३त्रायमाणालतायां न० मेदि० तत्रार्थे स्त्री राजनि०। “न कुर्यादात्मनस्त्राणं गोरकृत्वा तु शक्तितः” मनुः। [भावे क्त । १रक्षणे न०।

**त्रात** त्रि० त्रै–कर्म्मणि क्त वा तस्य नत्वाभावः। २रक्षिते

**त्रापुष** त्रि०त्रपुणा निर्वृत्तम् अण् षुक् च । रङ्गमये पात्रादौ ।

**त्रामन्** त्रि०त्रै–पालने मनिन् ।१रक्षके “तव त्रामभिरिन्द्र ! तूर्वयानम्” ऋ० १।५३।१० ।

**त्रायन्ती** स्त्री त्रै–सम्प० भावे क्विप् त्राः तामयति गच्छति भ्वा० इ गतौ शतृ- ङीप् । त्रायमाणालतायाम् अमरः। “त्रायन्ती तुवरा तिक्ता सरा पित्तकफापहा । ज्वरहृद्रोगगुल्मास्रभ्रमशूलविषप्रणुत्” भावप्र० । “कलसी हलती द्राक्षा त्रायन्ती निम्बगोक्षुरीः” सुश्रु० । स्वार्थे क । त्रायन्तिका तत्रार्थे “प्रियङ्ग्वनन्तायूथिका पद्मात्रायन्तिकालोहितिकाम्बष्ठादाडिमत्वक्शालपर्णीपद्मतुङ्गकेशरधातकीबकुलशाल्मलीश्रीवेष्टकमोचरसेष्वरिष्टानयस्कृतीर्लेहानासवान् कुर्वीत” सुश्रु० ।

**त्रायमाण** त्रि० त्रायते त्रै–कर्म्मणि शानच् । १रक्ष्यमाणायां (बाला)ख्यातायां २लतायाम् अमरः। स्वार्थे क । तत्रार्थे स्त्री राजनि० । [ दशीभवं ।

**त्रायोदश** त्रि० त्रयोदश्यां भवं सन्धिवेला० अण् । त्रयो-

**त्रास** पु०त्रस-भावे घञ् । १भये “त्रासाकुलः परिपतन् परितो निकेतान्” माघ० ।२मणिदोषभेदे च मेदि० ।

**त्रासन** न०त्रस–णिच् भावे ल्युट् । १भयोत्पादने कर्त्तरि ल्यु । २भयोत्पादके त्रि० ।

**त्रि** त्रि० ब० व० तृ–ड्रि । त्रित्वसंख्याविशिष्टे । “इति वेदास्त्रयस्त्रयी” अमरः ‘त्र्यायैस्त्रिभिरुदीरणम्” कुमा० “त्रिभ्य एव तु वेदेभ्यः पादत्रयमदूदुहत्” मनुः । स्त्रियां गौणत्वे मुख्ये च विभक्तौ परतः तिस्रादेशः । तिस्रः अतितिस्रा कैश्चित्तु प्रियतिसेत्युदाहृतम् तच्चिन्त्यम् “तिसृभिस्त्वमवस्थाभिर्महिमानमुदीरयन्” कुमा० । त्रयाणां वेदे तु क्वचित् त्रीणामिति रूपं “महि ! त्रीणामवोऽस्तु द्युक्षं मित्रस्यार्यम्णः” ऋ०१०।१८५।१ ।

**त्रिंश** त्रि० त्रिंशत्+पूरणे डट् । त्रिंशत्पूरणे, त्रिंशत्तमे

"त्रिंशांशकस्तथा राशेर्भाग इत्यभिधीयते" सू० सि०।

**त्रिंशक** त्रि० त्रिंशता क्रीतः वुन् डिच्च। त्रिंशत्संख्यान्वितद्रव्येण क्रीते वस्तुनि।

**त्रिंशत्** त्रि० त्रयोदशतः परिमाणमस्य नि०। १त्रिदशकसंख्यायां २तत्संख्यान्विते च। तत्संख्येये "निमेषा दश चाष्टौ च काष्ठाः त्रिंशत्तु ताः कलाः। त्रिंशत् कला मुहूर्तः स्यादहोरात्रन्तु तावतः" "त्रिंशद्वर्षो वहेत् कन्यां हृद्यां द्वादशवार्षिकीम्" मनुः "संख्यायां "तत्त्रिंशता भवेन्मासः" सू० सि०।

**त्रिंशत्क** त्रि० त्रिंशत्परिमाणमस्य कन्। १त्रिंशत्परिमाणे अवयवे कन्। २तत्संख्यायाम् "अमावास्याः पृथक् तेषां त्रिंशत्कं परिचक्षते" कामन्द०।

**त्रिंशति** स्त्री त्रिंशत्+पृषो०। १त्रिंशत्संख्यायां २तत्संख्येये च। "पञ्चकं मण्डलं जय्यं त्रिंशत्याञ्च मनीषिभिः" काम०

**त्रिंशत्तम** त्रि० त्रिंशतः पूरणः तमप्। १त्रिंशत्संख्यापूरणे स्त्रियां ङीप्। "ततस्त्रिंशत्तमे व्यूहे पङ्क्तिष्वतिष्ठन्" शत० ब्रा० १०।४।२।२२।

**त्रिंशत्पत्र** न० त्रिंशत्संख्यानि पत्राणि दलानि प्रतिपुष्पमस्य। १कुमुदे शब्दमाला।

**त्रिंशांश** पु० त्रिंशतस्त्रिंशत्पूरणोऽंशः। राशेस्त्रिंशत्पूरणे भागे षष्टिकलात्मके भागे षड्वर्गान्तर्गतानां राशिभेदे तेषामंशविशेषाणामधिपतयः ज्यो० उक्ता यथा

"पञ्च पञ्चाष्टसप्ताक्षा विषमे त्रिंशदंशकाः। माहेयशनिजीवज्ञशुक्राणां व्युत्क्रमात् समे"। विषमराशौ कुजशनिगुरुबुधशुक्राणां पञ्च पञ्चाष्टसप्तपञ्चमितास्त्रिंशांशकाः क्रमात् ज्ञेयाः। समे राशौ व्युत्क्रमात् तेषां विपर्य्ययेण त्रिंशांशा ज्ञेयाः। यथा मेषो विषमराशिः तत्र प्रथमावधिपञ्चांशा भौमस्य। षष्ठांशमारभ्य दशमांशपर्य्यन्तं पञ्चांशाः शनेः। एकादशांशमारभ्याष्टादशांशपर्य्यन्तमष्टांशा गुरोः। ऊनविंशांशमारभ्य पञ्चविंशांशपर्य्यन्तं सप्तांशा बुधस्य। ततः षड्विंशांशमारभ्य त्रिंशांशपर्य्यन्तं पञ्चांशाः शुक्रस्य त्रिंशांशाः क्रमात् ज्ञेयाः। मिथुनसिंहतुलाधनुःकुम्भेष्वप्येवम्। समराशौ व्युत्क्रमाद्यथा। वृषे प्रथमांशमारभ्य पञ्चांशा भृगोः। ततो द्वादशांशपर्य्यन्तं सप्तांशा बुधस्य, ततो विंशांशपर्य्यन्तमष्टांशा गुरोः। ततः पञ्चविंशांशपर्यन्तं पञ्चांशाः कुजस्य त्रिंशांशाः। एवं कर्कन्यावृश्चिकमकरमीनेष्वपि बोध्याः। त्रिंशदंशका इत्यत्र वृत्तौ त्रिभागवत् पूरणार्थता

**त्रिंशिन्** त्रि० त्रिंशत् प्रमाणमस्य इनि डिच्च। त्रिंशत्प्रमाणे स्त्रियां ङीप्।

**त्रिक** न० त्रयाणां संघः कन्। १त्रित्वसङ्ख्यायाम् २पृष्ठवंशाधोभागे, ३कटिभागे, ४त्रिफलायाम् (हरितक्यामलकीवयस्याफलत्रये) ५त्रिकटुनि, (शुण्ठीपिप्पलीमरिचत्रये)। वातादिषु मिलितेषु त्रिषु कायति कै-क। ६गोक्षुरे पु० अमरः। ७त्रिपथसंस्थाने हेम०। ८त्रिमदे "गुडूचीसारसंयुक्तात् त्रिकत्रयसमन्वयात्। वातरक्तं निहन्त्याशु सर्वरोगहरस्त्वयः" सुखबोधः त्रिकत्रयं त्रिकटुत्रिमदम् त्रिफलम् चेति त्रयमित्यर्थः। "युगं सत्कारविवर्त्तितत्रिकः" माघः। "व्यपोढपार्श्वैरपवर्त्तितत्रिका" किरा०। "त्रिफला तु फलत्रिकम्" "कश्चिद्विवृत्तत्रिकभिन्नहारः" रघुः। "एकं द्विकं त्रिकं चैव चतुष्कं पञ्चकं तथा" हरिका०। तृतीयेण रूपेण ग्रहणं यस्य कन् पूरणप्रत्ययस्य वा लुक्। ९तृतीयके त्रि०। त्रयः अधिकाः शुल्कं लाभो वृद्धिर्वा यत्र शतादौ १०त्र्यधिकलाभादियुक्ते शतादौ। "द्विकं त्रिकं चतुष्कञ्च पञ्चकञ्च शतं समम्। मासस्य वृद्धिं गृह्णीयात् वर्णानामनुपूर्वशः" मनुः। (शतकरा तिनटाका सुद) "स्कन्धास्थ्नोः पृष्ठवंशास्थ्नोर्यः सन्धिस्तत्त्रिकं स्मृतम्" इत्युक्ते ११सन्धिभेदे न०।

**त्रिककुद्** पु० त्रीणि ककुदतुल्यानि शृङ्गाण्यस्य ककुदस्य अन्त्यलोपः समा०। त्रिकूटाख्ये पर्वतभेदे अमरः। पर्वत एवास्य अन्त्यलोपः नान्यत्र। वत् त्रिककुद तद्युक्ते त्रि०। २विष्णावपि पु० वा अन्त्यलोपः। "तथैवासं त्रिककुदो वाराहं रूपमास्थितः। त्रिककुत् तेन विख्यातः शरीरस्य प्रमापणात्" भा० शा० ३४४ अ०। ३दशरात्रसाध्ये यज्ञभेदेऽपि वा अन्त्यलोपः। "त्रिककुद्वा एष यज्ञो यद्दशरात्रः ककुत् पञ्चदशः ककुदेकविंशः ककुत्त्रयस्त्रिंशो य एवं विद्वान् दशरात्रेण यजते त्रिककुद एव समानानाम्" तै०स०७।२।५।२। "चतुष्टोमात् समूढात् त्रिककुदः शस्त्रम् अथ महात्रिककुदस्य, छन्दोमत्रिककुदस्य" सा० श्रौ० १६।२६।१४। "यत्र वा इन्द्रो वृत्रमहंस्तस्य यदक्ष्यासीत्तं गिरिं त्रिककुदमकरोत्" शत० ब्रा० ३।१।३।१२। "वर्षिष्ठः पर्वतानां त्रिककुन्नाम ते पिता" अथ० ४।९।८।

**त्रिककुभ्** पु० त्रेधा कं पीतमुदकं स्कुभ्नाति स्कुन्भ क्विप् छान्दसः मलोपः। १उदाने वायौ "उदानो वै त्रिककुप्छन्दः" शत० ब्रा० ८।५।२।४। २नवरात्रसाध्ये यज्ञ-

भेदे। त्रिककुभोऽप्यत्र। त्रिककुब्व्यूढः पृष्ठ्यः। महात्रिककुप् व्यूढो नवरात्रः। समूढत्रिककुप्समूढः” आश्वा० श्रौ० १०। ३।२१ नवरात्र इत्यनुवर्त्तते, नारा० “चतुष्टोम त्रिककुब्वनध्यर्द्धोऽभिप्लवः एतैश्चतुर्भिः स्थानां श्रैष्ठ्यकामो यजेत। २२ एतैस्त्रिककुम्महात्रिककुप्समूढत्रिककुप्चतुष्टोमत्रिककुब्भिः स्थानां श्रैष्ठ्यकामो यजेत। एतेषां दशमो वैश्वानर एव भवति। कामश्चैतेषामेकैकेन सम्बध्यते” नारा०।

**त्रिककुब्धामन्** पु० मूर्द्धोरोमध्याभेदेन त्रिसृणां ककुभां दिशां समाहारः त्रिककुब् तत् धाम आश्रयो यस्य। विष्णौ विष्णु स०। [गोक्षुरवृक्षे शब्दर०।

**त्रिकट** पु० त्रीन् वातादिदोषान् कटति आवृणोति अच्।

**त्रिकटु** न० त्रयाणां कटुरसानां समाहारः। मिलितेषु शुण्ठीपिप्पलीमरिचेषु हेम०। “विश्वोपकुल्यामरिचं त्रयं त्रिकटु कथ्यते। त्र्यूषणं दीपनं हन्ति श्वासकासत्वगामयान्। गुल्ममेहकफस्थौल्यमेदःश्लीपदपीनसान्” भावप्र०।

**त्रिकण्ट** पु० त्रयः कण्टाः कण्टका अस्य। १गोक्षुरे २क्षुद्रगोक्षुरे, च रत्नमा० (टेङ्गरा) ३मत्स्यभेदे शब्दर०। ४पत्रगुप्ते शब्दच०। इत्यग्निदमनीदुःस्पर्शात्मके ५द्रव्ये राजनि०।

**त्रिकण्टक** पु० स्त्री लघुगर्गमत्स्ये त्रिका० समा० द्वि०। २कण्टकत्रये स्त्री। ततः परिमाणे रजता०अञ्। त्रैकण्टक तत्परिमाणे। त्रयः कण्टका अस्य। ३गोक्षुरकवृक्षे पु० हेमच०। ४कण्टकत्रयान्विते त्रि०।

**त्रिकद्रुक** पु० ज्योतिर्गौरायुरित्येतन्नामके “अभिप्लवाह्निके “अभिप्लवत्र्यहं पूर्वं त्रिकद्रुका इत्याचक्षते” आश्व० श्रौ० ११। ३।११त्रिकद्रुकेषु पाहि सोममिन्द्र!” ऋ० २।११।१७ “त्रिकद्रुकेषु ज्योतिर्गौरायुरित्येतन्नामकेषु आभिप्लविकेष्वहःसु” भा० “त्र्यहार्थे ज्योतिर्गौरायुरिति त्रिकद्रुकाः” कात्या० श्रौ० २४।१।८ त्रिकद्रुक इति ज्योतिरादीनां समुदितानां संज्ञा सव्यवहारार्था” कर्कः “त्रिकद्रुकाः पृष्ठावलम्ब्य इति पशुकामस्य” आश्व० श्रौ० ।१०।२।१६।

**त्रिकर्म्मन्** पु० त्रीणि कर्म्माण्यस्य। यजनं याजनञ्चैव तथा दानप्रतिग्रहौ। अध्यापनञ्चाध्ययनं षट्कर्मा धर्मभाग् द्विजः” भा० अनु० १२१ अ०। उक्तेषु षट्सु कर्मसु मध्ये इत्यर्थयाजनप्रतिग्रहाध्यापनभिन्नात्यर्थदानेज्याध्ययनरूपकर्मकारिणि द्विजे। “त्रैविद्यो ब्राह्मणो विद्वान् न चाध्ययनजीवकः। त्रिकर्मा त्रिपरिक्रान्तो मैत्र एव स्मृतः द्विजः” भा० अनु० १४१ अ०।

**त्रिकश** न० त्रिसृणां कशानां तदाघातानां समाहारः। कशाघातत्रये। कशाघातत्रिकञ्च कशशब्दे १८२४पृ० दर्शितम्।

**त्रिकशूल** न० ६त०। वातजन्ये त्रिकस्थे व्यथाभेदे। “स्फिगस्थ्नोः पृष्ठवंशास्थ्नोर्यः सन्धिस्तत्त्रिकं स्मृतम्। तत्र वातेन या पीडा त्रिकशूलं तदुच्यते” भावप्र०।

**त्रिका** स्त्री त्रिधा कायति कै—क। कूपसमीपस्थे जलोद्धारके त्रिदारुमये यन्त्रभेदे चीरस्वामी।

**त्रिकाण्ड** पु० त्रीणि काण्डान्यस्य। स्वर्गवर्गादिकाण्डभूमिवर्गादिकाण्डसामान्यकाण्डरूपात्मके नामलिङ्गानुशासने अमरसिंहकृते १कोषभेदे तस्यैव शेषभूतस्त्रिकाण्डशेषः पुरुषोत्तमकृतः यथाह तदुपोद्घाते “अलौकिकत्वादमरः स्वकोषे न यानि नामानि समुल्लिलेख। विलोक्य तैरप्यधुना प्रचारमयं प्रयत्नः पुरुषोत्तमस्य”। २निरुक्ते तदपि त्रिकाण्डं तच्चानुक्रमणिकाभाष्ये दर्शितम् यथा “आद्यं नैघण्टुकं काण्डं द्वितीयं नैगमं तथा। तृतीयं दैवतं चेति समाम्नायस्त्रिधा मतः”। त्रयाणां काण्डानां समाहारः ङीप्। त्रिकाण्डी ३काण्डत्रये स्त्री। त्रीणि काण्डानि प्रमाणमस्य मात्रच् द्विगोस्तस्य लुकि चेत्परत्वे ङीप् त्रिकाण्डी चेत्यभक्तिः। त्रिकाण्डमिते रज्ज्वादौ स्त्री टाप्।

**त्रिकाय** पु० त्रयः काया अस्य त्रिकं दुःखत्रिकमित्यस्मात् इ—अपादाने अच् वा। बुद्धदेवे हेमच०।

**त्रिकार्षिक** न० कर्षाय हितम् ठक् त्रयाणां वातपित्तकफानां कार्षिकम्। नागरातिविषामुस्तारूपे मिलिते औषधभेदे राजनि०।

**त्रिकाल** न० त्रयाणां कार्य्यकालभूतभविष्यत्कालानां समाहारः। १भूतभविष्यद्वर्तमानकालत्रये २प्रातर्मध्याह्नरूपकालत्रये च। “त्रिकालं पूजयेद्देवीम्” इति तन्त्रम्। त्रिकालज्ञः। त्रयः काला अस्य। ३कालत्रयवर्त्तिनि त्रि०। साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम्” सां० का०। करणस्य मनसः त्रिकालबुद्ध्यादिसाधनत्वं यथा “नदीपूरभेदादभूद्वृष्टिः, अस्ति धूमादग्निरिह नगनिकुञ्जे, असत्युपघातके पिपीलिकाण्डसञ्चरणाद्भविष्यति वृष्टिरिति। तदनुरूपाश्च सङ्कल्पाभिमानाध्यवसाया भवन्ति” सां० कौ०।

**त्रिकालज्ञ** पु० त्रिकालवर्त्तिपदार्थान् जानाति ज्ञा—क। १सर्वज्ञे त्रिकालविदादयोऽप्यत्र। २भूतभविष्यद्वर्त्तमानकालाभिज्ञे त्रि०। “युद्धं यथा यदा वा भविष्यदादिश्यते त्रिकालज्ञैः” वृ०सं० १७ अ०। त्रिकालवेत्ताप्यत्र।

**त्रिकालदर्शिन्** पु॰ त्रिकालं तद्वर्त्तिवस्तु पश्यति दृश–णिनि। १ऋषौ हारा॰। २त्रिकालज्ञे त्रि॰ “प्रश्न इत्यपि काले त्रिकालदर्शी कलौ भवति” बृ॰ सं॰ २१ अ॰।

**त्रिकूट** पु॰ त्रीणि कूटानि शृङ्गाण्यस्य। लवणसमुद्रमध्यस्थे लङ्कापुराधारे पर्वतभेदे अमरः। “तैरुद्धे केशरिक्रान्त-त्रिकूटशिखरोपमा” माघः “स सागरमनाधृष्यमतिक्रम्य महाबलः। त्रिकूटस्य तटे लङ्कां स्थितः स्वस्थो ददर्श ह” रामा॰ सु॰ २ अ॰। स आकरत्वेनास्त्यस्य अच्। २तद्भवे सामुद्रलवणे न॰। ३सुमेरुसुते क्षीरोदसमुद्रतीरस्थे पर्वते च तत्कथा वामनपु॰ “सर्वरत्नमयः श्रीमान् त्रिकूटो नाम पर्वतः। सुतः पर्वतराजस्य सुमेरोर्भास्कर द्युतेः। क्षीरोदजलवीच्या यो धौतामलशिलातलः। उत्थितः सागरं भित्त्वा देवर्षिगणसेवितः” इत्युपक्रमे “तस्यैकं काञ्चनं शृङ्गं सेवते यद्दिवाकरः। नानापुष्प-समायुक्तं नानागन्धाधिवासितम्। द्वितीयं राजतं शृङ्गं सेवते यन्निशाकरः। पाण्डुराम्बुदसंकाशं तुषारचयसन्निभम्। वज्रेन्द्रनीलवैदूर्य्यतेजोभिर्भासयन् दिशः। तृतीयं ब्रह्मसदनं प्रकृष्टं शृङ्गमुत्तमम्। न तत् कृतघ्नाः पश्यन्ति न नृशंसा न नास्तिकाः। नातप्त-तपसो लोका ये च पापकृतो जनाः। तस्य सानुमतः पृष्ठे सरः काञ्चनपङ्कजम्। कारण्डवसमाकीर्णं राजहं-सोपशोभितम्। गजोऽह्यचलसंकाशो मदाञ्चितलो-चनः। तृषितः पातुकामोऽसाववतीर्णश्च तज्जलम्। संलीनः पङ्कजवने यूथमध्यगतश्चरन्। गृहीतस्तेन रौद्रेण ग्राहेणाव्यक्तमूर्त्तिना। गरुडस्थो जगन्नाथो लोका-धारस्तपोधन !। ग्राहग्रस्तं गजेन्द्रं तं तञ्च ग्राहं जलाशयात्। उज्जहाराप्रमेयात्मा तरसा मधुसूदनः। स्थलस्थं दारयामास ग्राहं चक्रेण माधवः। मोक्षया-मास नागेन्द्रं पाशेभ्यः शरणागतम्”।

**त्रिकूटलवण** न॰ त्रिकूटं सामुद्रमिव लवणम्। द्रोणी-लवणे राजनि॰।

**त्रिकूटवत्** पु॰ त्रीणि कूटानि सन्त्यस्य मतुप् मस्य वः। १त्रि-कूटपर्वते। “हिमवान् पारिपात्रश्च सह्यः शुक्लस्त्रिकूट-वान्” भा॰ आश्वमेधिकप॰ श्रेष्ठपर्वतकथने” ४३ अ॰।

**त्रिकूटा** स्त्री भैरवीभेदे तन्त्रसा॰।

**त्रिकूर्चक** न॰ सुश्रुतोक्ते शस्त्रभेदे कर्द्धधारशब्दे २७५ पृ॰ दृश्यम्; “विशेषेण बालवृद्धकुमारभीरुनारीणां राज्ञां राजपुत्राणाञ्च त्रिकूर्चकेन विस्रावयेत्” सुश्रु॰।

**त्रिकोण** त्रि॰ त्रयः कोणा यस्य। त्रिकोटियुक्ते १पदार्थे “विन्दुत्रिकोणवसुकोणदशारयुग्मम्” तन्त्रे श्रीचक्रोक्तौ। ज्योतिषोक्ते लग्नात् २नवमपञ्चमस्थाने न॰। “त्रिकोणं नवपञ्चमम्” दीपि॰। “त्रिकोणगान् गुरुश्चैव पश्यन् पूर्ण-फलप्रदः” ज्यो॰ त॰। ३मोक्षे शब्दकल्पतरुः। ४त्रिभुजे क्षेत्रभेदे न॰। क्षेत्रशब्दे २३८१ पृ॰ समत्रिकोणविषमत्रिको-णादिस्वरूपादिकमुक्तम्। ५कामरूपपीठभेदे “करतोयां समा-रभ्य यावद्दिक्करवासिनीम्। शतयोजनविस्तारं त्रिकोणं सर्वसिद्धिदम्” कामाख्यातन्त्रम्। त्रिकोणपदार्थाश्च कतिचित् कविकल्पलतायां संक्षिप्य दर्शिताः। “हल-हरनेत्रकामाख्यावह्निमण्डलैकारवज्रशृङ्गाटशकटयोनि-रूपाः”।

**त्रिकोणफल** न॰ त्रिकोणं फलमस्य। १शृङ्गाटके भावप्र॰। ६त॰। त्रिभुजक्षेत्रफले “लम्बगुणं भूम्यर्द्धं स्पष्टं त्रिभुजे फलं भवति” लीला॰। [कान्तारपथचारटङ्कणचारेषु।

**त्रिक्षार** न॰ त्रयाणां क्षाराणां समाहारः। मिलिते सर्जि-

**त्रिक्षुर** पु॰ त्रीणि क्षुराणीवाग्राण्यस्य। कोकिलाख्यवृक्षे रत्ना॰।

**त्रिख** न॰ त्रिधा खमाकाशोऽवकाशः फलेऽस्य। त्रपुषे शब्दच॰।

**त्रिखट्व** न॰ त्रिसृणां खट्वानां समाहारः। खट्वात्रये। ततः वा ङीप्। तत्रार्थे स्त्री अमरः।

**त्रिखर्व** पु॰ सामवेदशाखाभेदाध्यायिनि “तामेतान्त्रिखर्वा उपा-सते तस्मात्ते सर्द्धमाना न वीयन्ते” ताण्ड्यब्रा॰ २।८।३। “तामेतां दशसप्ताख्यां विष्टुतिं त्रिखर्वाः शाखिन उपा-सते प्रयुञ्जते” भाष्यम्।

**त्रिगङ्ग** अव्य॰ तिस्रो गङ्गा नद्यो यत्र बहुव्रीह्यर्थे “नदी-भिश्च” पा॰ अव्ययी॰। १तीर्थभेदे। “सप्तगङ्गे त्रिगङ्गे च इन्द्रमार्गे च तर्पयन्। सुधां चैव लभेत् भोक्तुं यो नरो जायते पुनः” भा॰ अनु॰ २५ अ॰।

**त्रिगण** त्रि॰ ६त॰। १त्रिवर्गे अमरटीकायां नीलकण्ठः “न वाधतेऽस्य त्रिगणः परस्परम्” किरा॰।

**त्रिगन्धक** न॰ त्रयाणां गन्धकद्रव्याणां समाहारः। १त्रि-जातके त्रि॰ नैघण्टुपारस्करः। त्रिसुगन्धिकमप्यत्र। त्रिजातकशब्दे दृश्यम्।

**त्रिगम्भीर** पु॰ त्रिभिर्गम्भीरः। स्वरेण सत्त्वनाभिभ्यां त्रिगम्भीरः शिशुः शुभः” काशी॰ ११ अ॰ उक्ते शुभलक्षणयुक्ते “त्रिषु विपुलो गम्भीरस्त्रिष्वेव षडुन्नतश्चतुर्ह्रस्वः” इत्युप-क्रमे “नाभिः स्वरः सत्त्वमिति प्रदिष्टं गम्भीरमेतत् त्रितयं नराणाम्” बृ॰ सं॰ ६८ अ॰।

**त्रिगर्त्त** पु० त्रीणि गर्त्तानि यत्र। १जालन्धरे देशे हेमच०। स च देशः वृ०स०१४अ० कूर्मविभागे उत्तरस्यामुक्तः "उत्तरतः कैलासः" इत्युपक्रमे "आदर्शान्तर्द्वीपित्रिगर्त्ततुरगाननाश्वमुखाः" सोऽस्याभिजनः, तस्य राजा वा अण्। त्रैगर्त्त पित्रादिक्रमेण तद्देशवासिनि तद्भूपे च बहुषु अणो लुक्। २तत्रार्थे बव०। "द्रविड़ाम्बष्ठत्रिगर्त्तसौराष्ट्रान्" भा० स० ६अ०। "सुशर्मा च नरव्याघ्र! त्रिगर्त्तः प्रस्थलाधिपः" भा० द्रो० १७अ०। आर्षत्वात् एकत्वेऽपि अणो लुक्। "मद्रराजस्य बलवान् त्रिगर्त्तानामधीश्वरः" हरिवं०८१ अ०। स्वार्थे क। तत्रार्थे त्रिका०।

**त्रिगर्त्तषष्ठ** पु० ब० व० त्रिगर्त्तः षष्ठो वर्गो यस्य। १आयुधजीविसंघभेदे स च संघः सि० कौ० उक्तो यथा "आह्लत्रिगर्त्तषष्ठांस्तु कौण्डोपरथदाण्डकी। क्रौष्टुकिर्जालमानिश्च ब्रह्मगुप्तोऽथ जालकिः" "दामन्यादित्रिगर्त्तषष्ठाच्छः" पा० स्वार्थे तेभ्यः छ। कौण्डोपरथीय इत्यादि।

**त्रिगर्त्ता** स्त्री त्रयो योनिस्था गर्त्ताः अस्याः। कामुकाङ्गनायां मेदि०। एकयोनिकाया अपि तस्या मैथुनाचरणे त्रियोनिकतुल्यत्वात्तथात्वम्।

**त्रिगुण** न० त्रयाणां सत्त्वरजस्तमसां गुणानां समाहारः। समाहृता वा त्रयो गुणाः त्रयोगुणा अस्य वा। सांख्यमतसिद्धे साम्यावस्थापन्नगुणत्रयात्मके १प्रधाने। "त्रिगुणमविवेकिविषयं सामान्यमचेतनं प्रसवधर्मि" सा० कौ० "त्रिगुणं त्रयो गुणाः सुखदुःखमोहा अस्येति त्रिगुणं तदनेन सुखादीनामात्मगुणत्वं पराभिमतमपाकृतम्" त०कौ० "शब्दस्पर्शविहीनं तद्रूपादिभिरसंयुतम्। त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम्" विष्णुपु० "सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः प्रकृतेर्महान्महतोऽहङ्कारोऽहङ्कारात् पञ्च तन्मात्राण्युभयमिन्द्रियं तन्मात्रेभ्यः स्थूलभूतानि पुरुष इति पञ्चविंशतिर्गणः" सा० सू० "सत्त्वादीनि द्रव्याणि न वैशेषिकवद्गुणाः संयोगवत्त्वात्, लघुत्वचलत्वगुरुत्वादिधर्मकत्वाच्च। तेषु शास्त्रे श्रुत्यादौ च गुणशब्दः पुरुषोपकरणत्वात्पुरुषपशुबन्धकत्रिगुणात्मकमहदादिरज्जुनिर्मातृत्वाच्च प्रयुज्यते। तेषां सत्त्वादिद्रव्याणां या साम्यावस्था न्यूनानतिरिक्तावस्था न्यूनाधिकभावेनासंहतावस्थेति यावत्। अकार्यावस्थेति निष्कर्षः। अकार्यावस्थोपलक्षितं गुणसामान्यं प्रकृतिरित्यर्थः। यथाश्रुते वैषम्यावस्थायां प्रकृतिनाशप्रसङ्गात् "सत्त्वं रजस्तम इति एषैव प्रकृतिः सदा। एषैव संसृतिर्जन्तोरस्याः पारे परं पदम्" इत्यादिस्मृतिभिर्गुणमात्रस्यैव प्रकृतित्ववचनाच्च। सत्त्वादीनामनुगमाय साम्यान्येति। पुरुषव्यावर्त्तनाय गुणेति। महदादिव्यावर्त्तनाय चोपलक्षितान्तमिति। महदादयोऽपि हि कार्य्यसत्त्वादिरूपाः पुरुषोपकरणतया गुणाश्च भवन्तीति। तदुत्र प्रकृतेः स्वरूपमेवोक्तम्" भाष्यम् २सत्त्वादिगुणयुक्ते त्रि० "महान्तमेव चात्मानं सर्वाणि त्रिगुणानि च। विषयाणां ग्रहीतॄणि शनैः पञ्चेन्द्रियाणि च" मनुः। त्रिभिर्गुण्यते गुण—घञर्थे क। ३त्रिभिर्गुणिते त्रि० "सप्त व्यतीयुस्त्रिगुणानि तस्य दिनानि दीनोद्धरणोचितस्य" रघुः "व्रताय मौञ्जीं त्रिगुणां बभार याम्" कुमा० "एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम्। त्रिगुणं स्याद्वनस्थानां यतीनान्तु चतुर्गुणम्" मनुः। त्रयोगुणा अस्याः। ४मायायां स्त्री ५तन्नामके (ह्रीँ) बीजभेदे च "वेदाद्यां त्रिगुणां रमामथ वदेत् कामेन संसेविताम्" तन्त्रसा० श्रीविद्यामन्त्रभेदोक्तौ ६त्रिशिखे त्रिशूले "त्रिगुणपरिवारप्रहरणः" किरा०। "त्रिगुणः त्रिशिखः परिवार आकारो यस्य" मल्लि०। कर्णशब्दे परेऽस्य लक्षणपरत्वे दीर्घत्वम् त्रिगुणाकर्णौ अस्य। त्रिगुणाकर्ण तथा लक्षणयुक्ते त्रि०। "पदैस्त्रिभिस्त्रिभिर्बद्धो रागादि त्रिपदाय वा। उत्पत्तिस्थितिनाशेषु रजादित्रिगुणा मता" देवीपु० ४५ अ० उक्तेः ७ दुर्गायां स्त्री।

**त्रिगुणाकृत** त्रि० त्रिगुणं कृतं कृषं डाच् कृ—क्त। त्रिधाहलेन कृष्टे क्षेत्रादौ अमरः।

**त्रिगुणात्मक** न० त्रयो गुणाः तेजोबन्नरूपा आत्मानोऽस्य। अज्ञाने। "गुणाश्च लोहितशुक्लकृष्णाः अज्ञानकार्य्येषु तेजोबन्नेष्ववान्तरप्रकृतिषु श्रुतिप्रसिद्धाः। तथा च कार्य्यगतत्रिरूपेण कारणमप्यज्ञानमव्यक्तात्मकं त्रिगुणात्मकम्। यद्वा रजःसत्त्वतमोलक्षणास्त्रयोगुणास्तद्युक्तमज्ञानं गुणगुणिनोरभेदविवक्षया त्रिगुणात्मकं भवति।

**त्रिगुणित** त्रि० त्रिभिर्गुणितः। त्रिरावृत्ते।

**त्रिगुणी** स्त्री त्रयो गुणाः पत्रेऽस्याः गौरा०। बिल्ववृक्षे तस्य पत्रस्य त्रिगुणात्मकत्वात्तथात्वम्। "मूलं धार्य्यं त्रिगुणाद्याः सवितरि विगुणे, चोरिकामूलमिन्दौ" ज्यो० "त्रिगुणी श्रीफलवृक्षः" प्रमिता०।

**त्रिचक्र** पु० त्रीणि चक्राण्यस्य। अश्विनीकुमारयोः रथे। "अर्वाङ् त्रिचक्रो मधुवाहनो रथो जीराश्वो अश्विनोर्यातु सुष्टुतः" ऋ०१।१५७।३।

**त्रिचक्षुस्** पु० त्रीणि चक्षूंष्यस्य । त्रिनेत्रे शिवे "त्रिचक्षुः शम्भुरेकस्त्वं विभुर्दामोदरोऽपि च" भा० शा० ४३ अ० ।

**त्रिचतुर** त्रि० । त्रयो वा चत्वारो वा विकल्पार्थे बहु० डच् समा०। विकल्पेन त्रित्वचतुष्कसंख्यान्विते(तिन या चार) अर्थे । "सद्यः पुरीपरिसरे च शिरीषमृद्वी गत्वा जवात् त्रिचतुराणि पदानि सीता" सा०द० ।

**त्रिचित्** पु० त्रीन्+अग्नीन् चिनोति स चि–भूते क्विप् । अतीताग्नित्रयचयनकर्त्तरि ।

**त्रिचित** पु० त्रिभागोत्सेधाभिरिष्टकाभिः चितः । गार्हपत्येऽग्निभेदे । "त्रिचितमित्येके" कात्या० श्रौ० १७। १।२२ । "गार्हपत्यं कुर्वन्ति तत्र च त्रिभागोत्सेधा इष्टका इति सम्प्रदायः। अस्मिंश्च पक्षे प्रथमचितिः लोकंपृणानां पूरणं स्मृयम्" कर्कः । "उपर्येव चितित्रयात्मकं चिनोति । अथ यो गार्हपत्येऽग्निः सोऽस्यायाङ् प्राणाः तं हैके त्रिचितं चिन्वन्ति" शत०ब्रा० ७।१।२।१५ ।

**त्रिजगत्** न० त्रिगुणितं जगत् संज्ञात्वात् कर्मधारयः । स्वर्गमर्त्यपातालरूपे लोकत्रये "तस्यां भिवस्त्रिजगतो जनको जनन्याः" भाग० ८।८।१८ श्लो० । त्रिजगत्यत्र स्त्री "अन्तराल एव त्रिजगत्यास्तु दक्षिणस्याम्" भाग० ५।२६।६ श्लो० ।

**त्रिजटा** स्त्री तिस्रो जटा यस्याः ।१रावणालयस्थे सीतापरिचारिकाराक्षसीभेदे "सीतां ताभिरनार्याभिर्दृष्ट्वा संतर्जितां तदा । राक्षसी त्रिजटा वृद्धा प्रबुद्धा वाक्यमब्रवीत्" । "एवमुक्तास्त्रिजटया राक्षस्यः क्रोधमूर्च्छिताः" रामा०२७ अ०"हनुमानपि विक्रान्तः सर्वं शुश्राव तत्त्वतः । सीतायास्त्रिजटायाश्च राक्षसानाञ्च गर्ज्जितम्" ३० अ० । "सीतां मायेति शंसन्ती त्रिजटा समजीवयत्" रघुः । २शिवे पु० । "त्रिजटाय त्रिशीर्षाय त्रिशूलायुधधारिणे । त्र्यम्बकाय त्रिनेत्राय त्रिपुरघ्नाय वै नमः" भा० अनु० २८६ । ३बिल्ववृक्षे पु० । "शृणु देवि ! प्रवक्ष्यामि रहस्यं त्रिजटोत्तमम् । पत्रं ब्रह्ममयं देवि ! अद्भुतं वरवर्णिनि ! । श्रीशैलशिखरे जातः श्रीफलः श्रीनिकेतनः । विष्णुप्रीतिकरश्चैव मम प्रीतिकरः सदा । ब्रह्मविष्णुशिवाः पत्रे वृन्ते च शक्तिरूपिणी । वृन्तमूले तु वज्रं स्यात् पत्रं ब्रह्म त्विदं प्रिये ! । एवञ्च त्रिजटापत्रैर्हरं वा हरिमर्चयेत् । कैवल्यं तस्य तेनैव शक्तिपूजा विशेषतः" प्राणभैरवीतन्त्रे ५प० ।

**त्रिजात** न० त्रिगुणितं जातं सुगन्धिद्रव्यरूपं सुन्दरद्रव्यं संज्ञात्वात् कर्म० । १तुल्यभागे त्वगेलापत्ररूपे मिलितेसुगन्धिद्रव्यभेदे । स्वार्थे क । त्रिजातक तत्रार्थे "त्वगेलापत्रकैस्तुल्यैस्त्रिसुगन्धि त्रिजातकम् । नागकेशरसंयुक्तं चतुर्जातकमुच्यते" राजनि०।"एलादिभिः समुद्दिष्टं त्रिजातं त्रिसुगन्धिकम् । चतुर्जातं समागञ्च हृद्यं वातकफापहम्" "शीतं त्रिजाताक्तमथो विमृद्य योगानुरूपा गुटिकाः प्रयोज्याः" "व्योषं त्रिजातकं मुस्ता विडङ्गामलके तथा" सुश्रु० ।

**त्रिजीवा** स्त्री त्रिषु राशिषु जीवा । त्रयाणां राशीनां ज्या-३४३८ संख्यारूपे ज्यार्द्धरूपे पदार्थे "लम्बज्याघ्नत्रिजीवाप्तः स्फुटो भूपरिधिः स्वकः" सू० सि० ।"त्रिज्या गजाग्निवेदराम ३४३८ मितया भक्तः" रङ्गना० । त्रिज्यादयोऽप्यत्र । "तच्छेषं विवरेणाथ हन्यात् त्रिज्यान्त्यकर्णयोः" सू० सि० "त्रिज्यान्त्यकर्णयोस्त्रिराशिज्याद्वितीयशीघ्रकर्णयोः"रङ्गना०।

**त्रिण** न० तृण+पृषो० । तृणशब्दार्थे शब्दरत्ना० । तृणशब्दस्य तृपकृतौ रेफेकारसंयुक्तमप्युपपन्नशब्दान्तरमस्तीति उज्ज्वलद० । "उर्वृत्तिमन्निषपत्रप्रांशुविहगः सौम्यस्वनः पूजितः" वराहः ।

**त्रिणता** स्त्री त्रिषु स्थानेषु नता संज्ञात्वात् पूर्वपदात् णत्वम् । १धनुषि त्रिका० । २त्रिषु स्थानेषु नते त्रि० । असंज्ञायां न णत्वमिति भेदः । "स्वगुणैराफलप्राप्तेराकृष्य गणिका इव । कामुकानिव नालीकांस्त्रिणताः सहसाऽमुचन्" माघः । वेश्यानां मध्यस्थूप त्रिषु स्थानेषु नतत्वात् त्रिणतत्वं श्लेषे णनकारयोरभेद इत्यालङ्कारिकाः । त्रिणस्य भावः तल् । ३तृणभावे तृणत्वे च स्त्री ।

**त्रिणव** पु० त्रिरावृत्तानव डच्समा० संज्ञात्वात् णत्वम् । सप्तविंशावृत्ते सामस्तोमभेदे । "त्रिणवत्रयस्त्रिंशौ स्तोमौ हेमन्तशिशिरावृतू" यजु० १०।१४ । "त्रिणवस्तोम एव माम्नातः "नवभ्यो हिंकरोति स तिसृभिः स पञ्चभिः स एकया" नवभ्यो हिङ्करोति स एकया स तिसृभिः स पञ्चभि, नवभ्यो हिङ्करोति स पञ्चभिः स एकया स तिसृभिर्वज्रो वै त्रिणव इति" श्रुतिः । "प्रथमपर्याये प्रथमां त्रिर्गायेत् मध्यमां पञ्चकृत्वः उत्तमां सकृत्, द्वितीयपर्याये प्रथमां सकृद्गायेन्मध्यमां त्रि,रुत्तमां पञ्चकृत्वः तृतीयपर्याये प्रथमां पञ्चकृत्वो, मध्यमां सकृ,दुत्तमां त्रिर्गायेत् सोऽयं त्रिरावृत्तनवसंख्योपेतत्वात् त्रिणवको वज्रसमानः स्तोमः" वेददी० । "त्रिणवान्युक्थानेकविंशानि पृष्ठानि पट-

त्रिंशाः” शतपथब्राह्मणे १३।५।४।२० । अध्यायादि ।

**त्रिणाचिकेत** पु० त्रिःकृत्वश्चितो नाचिकेतोऽग्निर्येन पृषो० संज्ञात्वात् णत्वम् । अध्वर्यु भेदे “कायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः” इति श्रुतिः “त्रिणाचिकेतः पञ्चाग्निस्त्रिसुपर्णः षडङ्गवित्” मनुः ।

**त्रित** पु० १४६६।१६७ पृ०एकतशब्दोक्ते आप्ये १देवभेदे ब्रह्मणो मानसपुत्ररूपे २ऋषिभेदे च त्रिषु त्रित्वादिस्थानेषु तायमानः ताय–ड । त्रिषु विस्तीर्णतमे ३प्रख्यातकीर्त्तौ च त्रि०।“यस्य त्रितो व्योजसा हत्वं विपर्वमर्द्दयत्” ऋ० १। १८७।१। [त्रक्णां त्रितये । स्त्रीत्वे वा ङीप् ।

**त्रितक्ष** न० स्त्री त्रयाणां तक्ष्णां समाहारः अच् समा०

**त्रितय** न०स्त्री त्रयाणामवयवः त्रयोऽवयवा येषाम् वा तयप् ॥ त्रयशब्दार्थे १त्रित्वसंख्यायाम् “ब्रह्महत्याव्रतं वापि वत्सरत्रितयं चरेत्” याज्ञ० “उद्दूरलोकत्रितयेन साम्प्रतम्” माघः । “वरमाप स दिष्टपिष्टपत्रितयानन्यसदृग्गुणोदयाम्” नैष० । स्त्रियां ङीप् । २तत्संख्यान्विते त्रि० । “पतिश्वशुरता ज्येष्ठे पतिदेवरतानुजे । इतरेषु च पाञ्चाल्याः त्रितयं त्रितयं त्रिषु” एङ्कटः । “त्रितयं ज्ञानमयेन चक्षुषा” रघुः । “प्रणवव्याहृतिभ्यां च गायत्र्या त्रितयेन च । उपास्यं परमं ब्रह्म आत्मा यत्र प्रतिष्ठितः” योग्याज्ञ० । [धिभौतिकाधिदैविकरूपे दुःखत्रये ।

**त्रिताप** न० त्रयाणां तापानां समाहारः । आध्यात्मिका-

**त्रिदण्ड** न० त्रयाणां दण्डानां समाहारः । १चतुरङ्गुलगोवालवेष्टनादन्योन्यसंबद्धे यतेर्दण्डत्रये । २वाङ्मनःकायदण्डत्रये च । तदस्यास्तीति अच् । ३संन्यासाश्रमे पु० । त्रिदण्डिशब्दे दृश्यम् । ‘यस्त्वसंहृतषड् वर्गः प्रचण्डेन्द्रियसारथिः । ज्ञानवैराग्यरहितस्त्रिदण्डमुपजीवति” भाग०

**त्रिदण्डिन्** पु० त्रिदण्डमस्त्यस्य इनि । सन्न्यासाश्रमे । “वाग्दण्डोऽथ मनोदण्डः कायदण्डस्तथैव च । यस्यैते निहिता बुद्धौ त्रिदण्डीति स उच्यते । त्रिदण्डमेतन्निक्षिप्य सर्वभूतेषु मानवः । कामक्रोधौ तु संयम्य ततः सिद्धिं नियच्छति” मनुः । “त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते । अहन्येकादशे प्राप्ते पार्वणन्तु विधीयते” लिखि०सं० तस्यापि पार्वणं श्राद्धं विहितम् ।

**त्रिदला** स्त्री त्रीणि त्रीणि दलानि प्रतिपत्रं यस्याः । (गोलालिया) १गोधापदीलतायाम् जटा० ।२बिल्ववृक्षे पु०।

**त्रिदलिका** स्त्री त्रीणि दलानि प्रतिपत्रेऽस्याः कप् कापि अत इत्त्वम् । चर्मकशालतायां शब्दच० ।

**त्रिदश** पु० तिस्रो दशा जन्मसत्ताविनाशाख्या न तु वृद्धिपरिणामक्षया मर्त्यानामिव यस्य । त्रीन् तापान् दशति वा दश–घञर्थे संज्ञायां कर्त्तरि को वा । १देवे अमरः। अथ वा त्र्यधिकास्त्रिरावृत्तास्त्र दश परिमाणमेषां डच् समा० शाक० अधिकावृत्तशब्दलोपः एकस्यैव त्रिशब्दस्य तन्त्रतयोच्चारणात् उभयार्थपरत्वम् । त्रयस्त्रिंशन्मुख्यगणवत्सु २देवेषु अयमेव पक्षः श्रुत्यनुगुणःतौ च दश चेति छान्दोग्येऽभिहितत्वात् त्र्यधिकावृत्तपरताद्योतनतार्थं तौ चेति द्विवचनान्ततया निर्द्देशः । ते च देवाः “अर्का द्वादश, रुद्रा एकादश, वसवोऽष्टौ, अश्विनौ द्वाविति । अश्विनीकुमारौ विहाय इन्द्रः प्रजापतिश्चेति वा द्वाभ्यां पक्षान्तरे संख्यापूरणं त्रयस्त्रिंशत्शब्दे मूलं दृश्यम् ‘तस्मिन् मघोनस्त्रिदशान् विहाय” कुमा० । “त्रिदशैर्द्दिशे नमः” माघः। तिस्रो दशा जाग्रदाद्यवस्था यस्य । ३जीवे त्रिदशाध्यक्षशब्दे दृश्यम् ।

**त्रिदशगुरु** पु०६त०। वृहस्पतौ । “धूमाभेऽनावृष्टिस्त्रिदशगुरौ नृपवधो दिवा दृष्टे” वृ० स० ८ अ० ।

**त्रिदशगोप** पु० त्रिदशो देवभेद इन्द्रः गोपो रक्षकोऽस्य तस्य वर्षाभवत्वात् । इन्द्रगोपकीटे “अद्रुभे त्रिदशगोपमात्रके” रघुः । [ष्यादयोऽप्यत्र ।

**त्रिदशदीर्घिका** स्त्री ६त० । गङ्गायां हेमच० । त्रिदशवा-

**त्रिदशपति** पु० ६त० । इन्द्रे त्रिदशेश्वरादयोऽप्यत्र ।

**त्रिदशमञ्जरी** स्त्री त्रिदशप्रिया मञ्जरी यस्य संज्ञात्वात् न कप् । तुलस्याम् राजनि० ।

**त्रिदशवधू** स्त्री ६त० । अप्सरःसु त्रिदशवनितादयोऽप्यत्र “कैलासस्य त्रिदशवनितादर्पणस्यातिथिः स्याः” मेघ० ।

**त्रिदशवर्त्मन्** न०६त०। नभसि शब्दार्थचि०। [नैष०पारस्कर:

**त्रिदशसर्षप** पु० त्रिदशप्रियः सर्षपः । १देवसर्षपे सर्षपभेदे

**त्रिदशाङ्कुश** पु० ६त० वज्रे शब्दार्थचिन्तामणिः ।

**त्रिदशाचार्य्य** पु० ६त० । वृहस्पतौ हलायु० ।

**त्रिदशाधिप** पु० ६त० । शक्रे ।

**त्रिदशाध्यक्ष** पु० विष्णौ “त्रिपदस्त्रिदशाध्यक्षः”विष्णुस० । अस्य व्युत्पत्तिर्भाष्ये दर्शिता यथा“गुणावेशेन संजातास्तिस्रो दशा अवस्थाजाग्रदादयस्तासामध्यक्ष इति त्रिदशाध्यक्षः। त्रिदशानां वाऽध्यक्षः स्वामी” ।

**त्रिदशायन** पु०त्रिदशानामयनं यत्र । विष्णौ “नारायणायात्मभवायनाय लोकायनाय त्रिदशायनाय”हरिवं०।५४अ०।

**त्रिदशायुध** न० ६त०। १वज्रे त्रिकाण्ड० । २इन्द्रधनुषि च ।

"अथ नभस्य इव त्रिदशायुधम् कनकपिङ्गतडिद्गुणसंयुतम्" रघुः।

**त्रिदशारि** ६त०। असुरे शब्दरत्ना०।

**त्रिदशालय** पु० ६त०। १स्वर्गे अमरः। २सुमेरुपर्वते हलायु०

**त्रिदशावास** पु० ६त०। १स्वर्गे हला०। २सुमेरुपर्वते च।

**त्रिदशाहार** ६त०। अमृते सुधायां हलायु०।

**त्रिदशेश्वर** पु० ६त०। १इन्द्रे २दुर्गायां स्त्री ङीप्। "सुराश्चास्त्रिदशा देवा नन्दिनी दुन्दुभिर्मता। तेषाञ्च नन्दिनी नन्दी ईशत्वात् त्रिदशेश्वरी" देवीपु० ४५ अ०।

**त्रिदिनस्पृश्** पु० त्रिदिनं स्पृशति स्पृश–क्विन्। १त्र्यहस्पर्शे क्षयाहे अवमदिनभेदे यथा "तिथ्यन्तद्वयमेको दिनवारः स्पृशति यत्र तद्व्यत्ययमदिनम्। त्रिदिनस्पृक् दिनत्रयस्पर्शनादह्नः" इति ज्यो० त०। अयनशब्दे ४२१ पृ० तदानयनादि दृश्यम्। अस्य क्विन्नन्तत्वात् झलि पदान्ते च कुत्वम्।

**त्रिदिव** पु० त्रयो ब्रह्मादयो दीव्यन्त्यत्र घञर्थे आधारे क, त्रिधा सत्त्वादिभेदेन दीव्यन्ति प्रकाशन्तेऽत्र दिव–क वा तृतीया द्यौः वृत्तिविषये संख्याशब्दस्य पूरणार्थत्वात् पृषो०। लोकात् पुंस्त्वम्। १स्वर्गे, अमरः २आकाशे, हेमच०। ३नभसि ४सुखे न० शब्दार्थचि०। ५नदीभेदे स्त्री मेदि०। "न ह्यीप्सितस्य त्रिदिवेऽपि भूपतेः"। "त्रिदिवस्थेष्वपि निस्पृहोऽभवत्"। "देवादिनाम त्रिदिवेऽपि यस्य" रघुः। "अमूं किल त्वं त्रिदिवादवातरः" माघः।

**त्रिदिवाधीश** पु० ६त०। १इन्द्रे हेम० २देवमात्रे च। त्रिदिवेश्वरादयोऽप्यत्र।

**त्रिदिवेश** पु० ६त०। १देवे अमरः।

**त्रिदिवोद्भवा** स्त्री त्रिदिवे उद्भवो यस्याः। १स्थूलैलायां राजनि०। २गङ्गायाञ्च। ३स्वर्गभवमात्रे त्रि०।

**त्रिदिवौकस्** पु० त्रिदिवं ओको यस्य। १देवे अमरः। "यस्यास्येन सदाश्नन्ति हव्यानि त्रिदिवौकसः" मनुः पृषो० त्रिदिवौकसोऽपि तत्रार्थे।

**त्रिदृश्** पु० तिस्रः दृशोऽस्य त्रीणि भूतादीनि पश्यति वा दृश–कर्त्तरि क्विप् वा। १त्रिनयने शिवे हेमच०।

**त्रिदोष** न० त्रयाणां दोषाणां वातपित्तकफजानां समाहारः। १वातपित्तकफजदोषत्रये त्रयो दोषा हेतुत्वेन यत्र। २त्रिदोषजे रोगभेदे त्रिदोषजशब्दे दृश्यम्।

**त्रिदोषज** त्रि० त्रिदोषात् जायते जन–ड। दोषत्रयजाते वातादिसन्निपातजे रोगभेदे "चिरज्वरे वातकफोल्बणे वा त्रिदोषजे वा दशमूलमिश्रः। किराततिक्तादिगणः प्रयोज्यः शुद्ध्यर्थिने वा त्रिवृताविमिश्रः" चक्रद०। अस्य पूर्वरूपं "सर्वलिङ्गसमवायः" भावप्र०। ज्वरशब्दे दृश्यम्।

**त्रिधन्वन्** पु० सुधन्वनः पुत्रभेदे "सुधन्वनः सुतस्त्वासीत् त्रिधन्वा रिपुमर्दनः। राज्ञस्त्रिधन्वणस्त्वासीद्विद्वांस्त्रय्यारुणः सुतः" हरिवं० १२ अ०।

**त्रिधा** अव्य० त्रि+प्रकारे धाच्। त्रिप्रकारे। "एकैव मूर्त्तिर्बिभिदे त्रिधा सा" कुमा०। "ज्ञानं कर्म च कर्त्ता च त्रिधैव गुणभेदतः" गीता।

**त्रिधातु** पु० त्रीन् धर्मार्थकामान् दधाति पुष्णाति धा–तुन्। १गणेशे त्रिका०। समा० द्विगुः। २धातुत्रये न०।

**त्रिधामन्** पु० त्रीणि धामानि भूरादीनि स्थानानि, तेजांसि सत्त्वादीनि वा यस्य। १शिवे, २विष्णौ, ३अग्नौ च। शब्दार्थकल्पतरुः। समाहारद्विगुः। ४धामत्रये न० स्त्रीत्वपक्षे वा ङीप्। "स एवोक्तश्चक्रमिदं त्रिनाभिसप्ताश्वयुक्तं वहते वै त्रिधाम" भा० आनु० १५८ अ०। "त्रिधामानं जपंस्तत्र स्मरन् विष्णुं सनातनम्" हरिवं० २७१अ०। ६त०। ५त्रिसंख्यान्विते त्रि० तानि च कतिचित् संक्षिप्य "त्रिगुणीकृतसर्वाङ्गी चिद्रूपा शिवगेहिनी। प्रसूते" इत्युपक्रमे "त्रिपुष्करं स्वरान् देवीर्ब्रह्मादीनां त्रयं त्रयम्। वह्निकालत्रयं शक्तित्रयं वृत्तित्रयं महत्। नाडीत्रयं त्रिवर्गं सा यद्यदन्यत् त्रिधाम तत्" शा० ति० उक्तानि। अन्यान्यपि त्रित्वसंख्यान्वितानि एकादिशब्दे दृश्यानि।

**त्रिधामूर्त्ति** पु० त्रिधा मूर्त्तिरस्य। ब्रह्मविष्णुमहेशरूपमूर्त्तित्रयान्विते परमेश्वरे।

**त्रिधार** त्रि० तिस्रो धारा अस्याणि, त्रिषु स्थानेषु वा धाराः प्रवाहा अस्य अस्या वा। १धारात्रयान्विते २गङ्गायां स्त्री तस्याः स्वर्गमर्त्यपातालेषु धारासत्त्वात् तथात्वम् ३स्नुहीवृक्षे च शब्दार्थचि०। तस्य अग्रत्रयवत्त्वात् तथात्वम्।

**त्रिधारक** पु० तिस्रो धारा अग्राण्यस्य कप् संज्ञायां कन् वा। गुण्डतृणे राजनि०।

**त्रिधारस्नुही** स्त्री त्रिषु भागेषु धारा यस्याः कर्म०। (तेकांटासिजु) स्नुहीभेदे राजनि०।

**त्रिधाविशेष:** पु० त्रिधा त्रिप्रकारो विशेषः। सूक्ष्मादित्रयरूपे विशेषे "सूक्ष्मा मातापितृजाः सह प्रभूतैस्त्रिधा विशेषाः स्युः" सांका०। "सूक्ष्मशरीरमेकः मातापितृजो द्वितीयः महाभूतानि तृतीयो विशेषः। तेषां

मध्ये सूक्ष्मानियताः मातापितृजा निवर्तन्ते कीटान्ता वा भस्मान्ता वा विड्न्ता वेति" त० कौ०।

**त्रिधासर्ग** पु० त्रिकारः सर्गः। १भूतादिसर्गे। "अष्टविकल्पो दैवस्तैर्य्यग्योनश्च पञ्चधा भवति | मानुषश्चैकविधः समासतोऽयं त्रिधासर्गः" सां०का०।"ब्राह्मः प्राजापत्यः ऐन्द्रः पैत्रः गान्धर्वः याक्षः राक्षसः पैशाच इत्यष्टविकल्पो दैवः सर्गः। पशुमृगपक्षिसरीसृपस्थावरा इति पञ्चविधस्तैर्य्यग्योनः सर्गः। मानुष्यश्चैकविधः ब्राह्मणाद्यवान्तरजातिभेदाविवक्षया संस्थानस्य चतुर्ष्वपि वर्णेष्वविशेषात्" सा०त०कौ०।

**त्रिनयन** पु० त्रीणि नयनानि यस्य "पूर्वपदात् संज्ञायामगः" पा० णत्वे प्राप्ते क्षुभ्ना० पाठात् न णत्वम्। १महादेवे "योग्यस्य त्रिनयनलोचनार्च्चिः" "शोभां शुभ्रत्रिनयनदृष्टोत्खातपङ्कोपमेयाम्" माघः। २पार्वत्यां स्त्री "लोचनत्रयसंयुक्तां पूर्णेन्दुसदृशाननाम्" तन्त्रध्याने तस्या नेत्रत्रयोक्तेः।३लोचनत्रययुक्ते त्रि०"बिभ्राणां विशदप्रभां त्रिनयनां वाग्देवतामाश्रये" शारदातिलकसरस्वतीध्यानम्। त्रिनेत्रत्रिलोचनादयोऽप्यत्र। इयांस्तु भेदः त्रिनेत्रशब्दस्य महादेवपरत्वे संज्ञात्वात् पूर्वपदात् णत्वे प्राप्ते गिरिनद्या० वा नत्वम्। अन्यत्र न णत्वमिति। शिवस्य तृतीयनेत्राविर्भावकथा भा० अनु० १४० अ०। यथा

"सेवन्ती हिमवत्पार्श्वे हरपार्श्वमुपागमत्। ततः स्मयन्ती पाणिभ्यां नर्म्मार्थं चारुदर्शना। हरनेत्रे शुभे देवी सहसा सा समावृणोत्। संवृताभ्यान्तु नेत्राभ्यां तमो भूतमचेतनम्। निर्होमं निर्वषट्कारं जगद्वै सहसाऽभवत्। जनश्च विमनाः सर्वो भयत्राससमन्वितः। निमीलिते भूतपतौ नष्टसूर्य्य इवाभवत्। ततो वितिमिरो लोकः क्षणेन समपद्यत। ज्वाला च महती दीप्ता ललाटात्तस्य निःसृता। तृतीयञ्चास्य सम्भूतं नेत्रमादित्यसन्निभम्" इत्युपक्रमे उमोवाच "भगवन् सर्वभूतेश! शूलपाणे! महाव्रत! संशयो मे महान् जातस्तन्मे व्याख्यातुमर्हसि। किमर्थं ते ललाटे वै तृतीयं नेत्रमुत्थितम्। किमर्थञ्च गिरिर्दग्धः सपक्षिगणकाननः। किमर्थञ्च पुनर्देव! प्रकृतिस्थस्त्वया कृतः। तथैव द्रुमसंच्छन्नः कृतोऽयं तु पिता मम" महेश्वर उवाच।"नेत्रे मे संवृते देवि! त्वया बाल्यादनिन्दिते। नष्टालोकस्तथा लोकः क्षणेन समपद्यत। नष्टादित्ये तथा लोके तमोभूते नगात्मजे!। तृतीयं लोचनं दीप्तं सृष्टं मे रक्षता प्रजाः। तस्य चाक्ष्णो महत्तेजो येनायं मथितो गिरिः। त्वत्प्रियार्थञ्च मे देवि! प्रकृतिस्थः पुनः कृतः"। दुर्गायाः त्रिनयनाशब्दवाच्यत्वे हेतुर्देवीपु० ४५ अ० उक्तो यथा

"पक्षिणां चोत्तरं लोकं तथा ब्रह्मायनं परम्। नयं सन्मार्गधर्मत्वं दृष्टौ त्रिनयना मता" देवीपु० ४५ अ०। "पञ्चवक्त्रं त्रिनेत्रम्" शिवध्यानम्। "निजत्रिनेत्रत्वावतरत्वबोधिकाम्" नैष०। साध्यगणभेदानां त्रिनेत्रत्वं मत्स्यपु० उक्तं यथा "ततः साध्यगणानीशस्त्रिनेत्रानसृजत् पुनः। कोटयश्चतुरशीतिर्जरामरणवर्जिताः। कामं सृजस्व मर्त्यांस्तान् ब्रह्मणा विनिवारितः। नैवं विधा भवेत् सृष्टिर्जरामरणवर्जिता"।

**त्रिनवति** स्त्री त्र्यधिका नवतिः शा० त०। १त्र्यधिकनवतिसंख्यायां २तत्संख्येये च। ततः पूरणे डट्। त्रिनवत तत्संख्यापूरणे त्रि० तमप् वा। त्रिनवतितम तत्संख्यापूरणे त्रि० स्त्रियामुभयतो ङीप्। पक्षे त्रयआदेशे त्रयोनवत्यादयोऽप्यत्र। तत्रायं भेदः "संख्या"पा० त्रिनवत्यादौ पूर्वपदे प्रकृतिस्वरः। त्रय आदेशोऽन्तोदात्त इति।

**त्रिनाक** पु० नास्ति अकं दुःखं यस्मिन् नाकं पुण्यलोकः। तृतीयं नाकं वृत्तिविषये संख्याशब्दस्य पूरणार्थत्वात्। १तृतीये नाके २उत्तमस्थाने च। "यत्रानुकामं चरणं त्रिनाके" ऋ० ८।११।३८। "तावत्त्रिनाकं नहुषः शशास" भाग० ६।१३।१३ श्लोकः।

**त्रिनाभ** पु० त्रयो लोका नाभौ यस्य अच् समा०। विष्णौ "त्रिनाभाय त्रिपृष्ठाय शिपिविष्टाय विष्णवे" भा० द० १७। ०। विष्णुस्तुतौ।

**त्रिनिष्क** त्रि० त्रिभिर्निष्कैः क्रीतम् ठञ् तस्य वा लुक्। त्रिभिर्निष्कैः क्रीते लुगभावे ठञि उत्तरपदस्य वृद्धिः। त्रैनैष्किक तत्रार्थे त्रि०।

**त्रिनेत्रचूड़ामणि** पु० ६त०। चन्द्रे त्रिका०।

**त्रिपक्ष** पु० तृतीयः पक्षः संख्याशब्दस्य वृत्तौ पूरणार्थत्वात्। तृतीये पक्षे "षष्ठे मासि त्रिपक्षे वा" स्मा० त०।

**त्रिपञ्च** त्रि० ब० व०। त्रिगुणिताः पञ्च। पञ्चदशसंख्यान्विते "त्रिपञ्चारे पीठे" कर्पूरस्तवः।

**त्रिपञ्चाङ्ग** पु० त्रिपञ्च पञ्चादशाङ्गान्यस्य। समाधिभेदे तदङ्गानि च"यमो हि नियमस्त्यागो मौनं देशः सुकालता। आसनं मूलबन्धश्च देहसाम्यञ्च दृकस्थितिः। प्राणसंयमनञ्चैव प्रत्याहारश्च धारणा। आत्मध्यानं समाधिश्च प्रोक्तान्यङ्गानि वै क्रमात्" शब्दार्थचि० धृतवाक्योक्तानि।

**त्रिपञ्चाशत्** स्त्री त्र्यधिका पञ्चाशत् शा०त०। १त्र्यधिकपञ्चाशत्संख्यायां २तत्संख्यान्विते च। ततः पूरणे डट्। ३त्रिपञ्चाश तत्संख्यापूरणे त्रि०। पक्षे तमप्। त्रिपञ्चाशत्तम तस्मिन्नर्थे स्त्रियामुभयतो ङीप्। पक्षे त्रय आदेशे। त्रयःपञ्चाशदादयोऽपि उक्तार्थेषु।

**त्रिपट्** पु० काचे पारस्करनिघण्टुः।

**त्रिपताक** न०तिस्रः पताका इव यस्मिन्। पताकाकारवलित्रयान्विते १ललाटे, हारा० मध्यमानामिकासङ्कोचेनावशिष्टाङ्गुलित्रयोन्नतत्वेन २त्रिपताकाकारिते करे पु०। "त्रिपताकं करं कृत्वा" इत्यादि सा० द० जनान्तिकशब्दनिर्वचने स्थितम्।

**त्रिपत्र** पु० त्रीणि त्रीणि पत्राणि प्रतिपत्रं यस्य सप्तच्छदवत् संख्याशब्दस्य वृत्तौ वीप्सार्थत्वम्। १बिल्ववृक्षे। तदीयपत्रेषु ब्रह्मादीनां स्थितिरुक्ता यथा "ऊर्द्धपत्रं हरो ज्ञेयः पत्रं वामं विधिः स्वयम्। अहं दक्षिणपत्रं च त्रिपत्रदलमित्युत" वृहद्धर्मपु० ११ अ०। २पत्त्रत्रययुक्ते त्रि०। समा० द्विगुः। ३पत्रत्रये न०।

**त्रिपत्रक** पु० त्रिपत्र+संज्ञायां कन्। १पलाशवृक्षे राजनि०। त्रयाणां पत्राणां समाहारः संज्ञायां कन्। "तुलसी कुन्दमालूरपत्राण्याञ्जस्त्रिपत्रकम्" देवीपु० उक्ते २तुलस्यादिपत्रत्रये न०।

**त्रिपथ** न० त्रयाणां पथां समाहारः अच् समा०। "पथः संख्याव्ययादेः" पा०क्लीवता। १मार्गाणां त्रितये। त्रयः पन्थानो यत्र अच् समा०। २त्रिमार्गयुक्ते (तेमाथा पथ) इति ख्याते स्थाने। "शून्यागारे श्मशाने वा निर्जने वा चतुष्पथे। बिल्वशालोद्भवस्थाने त्रिपथे वा भजेन्निशि। स भवेत् सर्वसिद्धीशः सर्ववेदविदां वरः" गुप्तसाधनतन्त्रम्।

**त्रिपथगा** स्त्री त्रयाणां पथां समाहारः अच् समा० तेन गच्छति गम–ड। गङ्गायाम्। त्रिमार्गगादयोऽप्यत्र "गङ्गा त्रिपथगा नाम दिव्या भागीरथीति च। त्रीन् पथो भावयन्तीति तस्मात् त्रिपथगा स्मृता" रामा० बा० ४४ अ० "तराम सरितां श्रेष्ठां पुण्यां त्रिपथगां नदीम्" ४५ अ० "तन्वी भरत्त्रिपथगा पुलिने कपोलौ लोले दृशौ रुचिरचञ्चलखञ्जरीटौ" अमरुशत० "त्रिशिखां भ्रुकुटिञ्चास्य ददृशुर्दानवा रणे। ललाटस्थां त्रिकूटस्थां गङ्गां त्रिपथगामिव" हरिवं० २३५ अ०। "त्रीन् पथो हेतुना केन प्लावयेल्लोकपावनी। कथं गङ्गा त्रिपथगा विश्रुता सरिदुत्तमा। त्रिषु लोकेषु धर्मज्ञ! कर्मभिः कैः समन्विता" इत्युपक्रमे रामप्रश्ने विश्वामित्रस्योत्तरम् रामा० आ० ३६अ० वाक्यं गङ्गाशब्दे दृश्यम्। णिनि ङीप्। त्रिपथगामिन्यादयोऽप्यत्र।

**त्रिपदी** स्त्री त्रयः पादा अस्याः अन्त्यलोपः समा०ङीपि पद्भावः। १त्रिपादयुक्तायां स्त्रियां २गायत्रीच्छन्दसि च तस्या अष्टाक्षरपादत्वेन चतुर्विंशत्यक्षरायास्त्रिपादत्वात् तथात्वम्। यथा "इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पांसुरे" ऋ० १।२२।१७। "गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि न हि पद्यसे" शत० ब्रा०१४।८।१५।१०। ३हस्तिनां पादबन्धनार्थरज्जुभेदे "नाससत्करिणां ग्रैवं त्रिपदीच्छेदिनामपि" रघुः ४अव्यांधारपात्रभेदे(तेपाइ)तन्त्रसा०५गोधापदीलतायां रत्नमा०। स्वार्थे क त्रिपदिकापि तत्रार्थे। भाषाकवितायां ६छन्दोभेदे तल्लक्षणं यथा "पजफटिकान्ता यदि यमकान्ता द्वादशपरिणतमात्रा किन्नरगीतिस्तदिति नीवितिः सार्द्धसमाक्षरगात्रा। (ख:पदान्तः)। येषा सङ्गीतके नित्यं निवीतिः किन्नराख्यिका। सैव स्यात् प्राकृते गाने त्रिपदीति परिस्नुता" इति काव्योदयः। "टाड्चि" पा० टापि भत्वात् पद्भावः। त्रिपद ७गायत्र्यामृचि ऋग्भेदे स्त्री तच्छन्दस्के ८छन्दमात्रे स्त्री "त्रिपदा चैव सावित्री विज्ञेयं ब्रह्मणो मुखम्" मनुः। "द्विपदा याश्चतुष्पदास्त्रिपदा याश्च षट्पदाः" यजु० २३।३४। "त्रीणि पदानि पादा अस्याः "इतिपदशब्देन समासः" वेददी०। त्रिविक्रमे ८परमेश्वरे पु० त्रीणि पदानि विचक्रमे इति श्रुतेस्तथात्वम्। "त्रिपदस्त्रिदशाध्यक्षो महाशृङ्गः कृतान्तकृत्" विष्णु स०। ९अरत्नेर्दशमभागरूपपदत्रययुक्ते प्रक्रमे पु० यथा। "पञ्चारत्निः पुरुषो दशपदो द्वादशाङ्गुलं पदं प्रक्रमस्त्रिपदः समविभक्तस्य" कात्या० श्रौ० १६।८।२१ "पञ्चारत्नयो यस्य सः पञ्चभिररत्निभिः पुरुषः दशभिः पदैः पुरुषो द्वादशभिरङ्गुलैः पदम् इत्येवमर्थो न भवति इतः प्रागरत्न्यादीनां लक्षणस्यानुक्तत्वेनासिद्धत्वात् अतश्चैवम् पुरुषस्य समविभक्तस्य यः पञ्चमो भागः सोऽरत्निः तस्य दशमो भागः पदम् पदस्य द्वादशो भागोऽङ्गुलम् त्रिभिः पदैरेकः प्रक्रमः" कर्कः।

**त्रिपरिक्रान्त** पु०त्रिषु इत्यर्थं कर्मसु परिक्रान्तः चेष्टमानः। याजनाध्यापनप्रतिग्रहरूपजीविकात्रयनिरते ब्राह्मणे। "त्रैविद्यो ब्राह्मणो विद्वान् न चाध्ययनजीवकः। त्रि-

कर्म्मा त्रिपरिक्रान्तो मैत्र एष स्तुतो द्विजः” भा॰ अनु॰ १४१ अ॰ ।

**त्रिपर्ण** पु॰ त्रीणि त्रीणि प्रतिपत्रं पर्णान्यस्याः । १किंशुके । २वनकार्पास्यां स्त्री राजनि॰ टाप् ङीप् वा । ३शालपर्ण्याम्, लतायां ४पृश्निपर्णीभेदे च स्त्री ङीप् भावप्र॰ । संज्ञायां कन् । त्रिपर्णिका कन्दालौ “त्रिपर्णी मधुरा शीता श्वासकासविषव्रणान् । विनाशयति सा नित्यं पित्तकोपप्रशान्तिकृत्”राजनि॰। समा॰ द्विगुः । ५ पर्णत्रये स्त्री ङीप् ।

**त्रिपाठ** पु॰ ६त॰ । त्रयाणां पदक्रमसंहितानां पाठे ।

**त्रिपाठिन्** पु॰ त्रीन् पदक्रमसंहिताद्रूपग्रन्थान् पठति पठ–णिनि । वेदानां पदक्रमसंहिताद्रूपग्रन्थाध्यायिनि ।

**त्रिपाण** न॰ त्रिःकृत्वः पानं उदकपानं यस्य वृत्तौ सुचो लोपः संज्ञात्वात् णत्वम् । त्रिःकृत्वःपायिते १सूत्रभेदे २वल्कले च “तार्प्यं परिधापयति” कात्या॰ श्रौ॰ १५।४।७। “तार्प्यशब्दं स्वयमेव व्याकरोति “क्षौमम्” ८। क्षुमा अतसी तस्य विकारः । “त्रिपाणम्” ९ । त्रिःकृत्वः पायितं वा सक्तदिति विकल्पः । वयनकाले उदकेन विस्तर्पयित्वा यदूयते सूत्रम् तत्तृप्यम् तस्य विकारस्तार्प्यम् त्रिः पायितैस्तन्तुभिर्व्यूतमित्यर्थः । केचित्त्रिपाणं वल्कलमित्याहुः”कर्कः।

**त्रिपाद्** पु॰ त्रयः पादा अस्य संख्यापूर्वत्वेऽपि समासान्तविधेरनित्यत्वान्नान्त्यलोपः । १परमेश्वरे “पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि” छा॰ उ॰ । भाष्यकारस्तु “त्रिपात् अस्यामृतः दिवीति” छित्त्वा त्रिपाद्द त्रयः पादा अस्य सोऽयं त्रिपादिति व्याख्यानमाह । “नमो द्विशीर्ष्णे त्रिपदे चतुःशृङ्गाय तन्तवे” भाग॰ ८।१६।२६ । भत्वात् पादस्य पद्भावः । २ज्वरे च “ज्वरस्त्रिपादस्त्रिशिराः षड्भुजो नवलोचनः”हरिवं॰१८२अ॰

**त्रिपाद्** पु॰त्रयः पादा अस्य संख्यापूर्वत्वादन्त्यलोपः।१त्रिविक्रमे २विष्णौ तस्य तथात्वकथा यथा “भूयश्चैवाब्रवीदेनं वामनं वटुरूपिणम् । स्वल्पैः स्वल्पमते ! किन्ते पादैस्त्रिभिरनुत्तमम् ; कृत्स्नां ददामि ते विप्र ! पृथिवीं सागरैर्वृताम्” वामन उवाच “न पृथ्वीं कामये कृत्स्नां सन्तुष्टोऽस्मि पदैस्त्रिभिः । एष एव रुचिघ्नो मे वरो दानवसत्तम !” वैशम्पायन उवाच “तथाऽस्त्विति बलिः प्रोच्य स्पर्शयामास दानवः । पदानि त्रीणि देवाय विष्णवेऽमिततेजसे । तोये तु पतिते हस्ते वामनोऽभूदवामनः । सर्वदेवमयं रूपं दर्शयामास वै प्रभुः। भूः पादौ द्यौः शिरश्चास्य चन्द्रादित्यौ च चक्षुषी । पादाङ्गुल्यः पिशाचाश्च हस्ताङ्गुल्यश्च गुह्यकाः” हरिवं॰ २६२ अ॰ “तस्य विक्रमतो भूमिं चन्द्रादित्यौ स्तनान्तरे । नभः प्रक्रममाणस्य पादमूले व्यवस्थितौ । विष्णोरमितवीर्य्यस्य वदन्त्येवं द्विजातयः” २६३ अ॰ “क्षितिं पदैकेन बलेर्विचक्रमे नभः शरीरेण दिशश्च बाहुभिः । पदं द्वितीयं क्रमतस्त्रिपिष्टपं न वै तृतीयाय तदीयमण्वपि । उरुक्रमस्याङ्घ्रिरुपर्य्युपर्य्यथो महर्जनाभ्यां तपसः परङ्गतः” भाग॰ ८।२०।२६ “बलिरुवाच “यद्युत्तमश्लोक ! भवन् ममेरितं वचो व्यलीकं सुरवर्य्य ! मन्यते । करोम्यृतं तन्न भवेत् प्रलम्भनं पदं तृतीयं कुरु शीर्ष्णि मे निजम्” ८।२२।२। “इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांसुरे” ऋ॰ १।२२।१७। ३परमेश्वरे च त्रिपादशब्दे छा॰ उ॰ वाक्यं दृश्यम् । ४त्रेतायुगधर्मरूपे वृषे “राघवः शिथिलं तस्थौ भुवि धर्मस्त्रिपादिव” रघु॰ ।

**त्रिपादिका** स्त्री त्रयः पदाः मूलान्यस्याः कप् टाप् । हंसपदीलतायां राजनि॰ ।

**त्रिपिण्ड** न॰ त्रीणि पिण्डानि देयान्यत्र । पित्रादित्रयोद्देशेन कर्त्तव्ये १पार्वणश्राद्धे “ततः प्रभृति संक्रान्तावुपरागादिपर्वसु । त्रिपिण्डमाचरेत् श्राद्धमेकोद्दिष्टं मृताहनि” श्रा॰ त॰ मत्स्यपु॰ । समाहारद्विगुः ङीप् । २पित्राद्युद्देशेन पिण्डत्रये स्त्री ।

**त्रिपिब** पु॰ त्रिभिः कर्णाभ्यां जिह्वया च पिबति स्पृशति जलं पा–क । वार्ध्रीणसे लम्बकर्णे छागभेदे यथाह निगमे “त्रिपिबन्त्विन्द्रियक्षीणं श्वेत वृद्धमजापतिम् । वार्ध्रीणसन्तु तं प्राहुर्याज्ञिकाः पितृकर्मणि”।“नद्यादौ पयः पिबतो यस्य त्रीणि जलं स्पृशन्ति कर्णौ जिह्वा च त्रिभिः पिबतीति त्रिपिबः” कुल्लू॰ ।

**त्रिपि(वि)ष्टप** न॰ मर्त्यपातालापेक्षया तृतीयं पि(वि)ष्टपं भुवनम् वृत्तौ त्रिशब्दस्य त्रिभागवत् पूरणार्थता । १स्वर्गे अमरः “तत् त्रिपिष्टपसङ्काशमिन्द्रप्रस्थं व्यरोचत” भा॰ आ॰ २०६ अ॰ । २आकाशे शब्दर॰ । [हला॰ ।

**त्रिपिष्टप(व)सद्** पु॰त्रिपिष्टपे(वे) सीदति सद–क्विप् । देवे

**त्रिपु** पु॰स्त्रे ने निषाठुः । त्रपुरित्यत्र पाठान्तरम् ।

**त्रिपुट** पु॰ त्रीणि पुटान्यस्य । (खेसारी) १कलायभेदे २शरे, ३तालकयन्त्रे, ४हस्तभेदे शब्दर॰ । ५तीरे ६गोक्षुरवृक्षे

रत्नमा०। ७मल्लिकायां ८सूक्ष्मैलायां ९त्रिवृति (तेओड़ि) च स्त्री मेदि०। १०कर्णस्फोटलतायां ११स्थूलैलायां १२रक्तत्रिवृति च स्त्री राजनि०। १३देवीभेदे च स्त्री "ऋषिः सम्मोहनश्छन्दो गायत्री देवता पुनः। त्रिपुटाख्या हिरुक्तैस्तैर्बीजैरङ्गानि षट् क्रमात्" तन्त्रसा० तस्याध्यानादिकं तत्रैव दृश्यम् १४त्रिवृति एरण्डे वा ङीप्। त्रयाणां पुटानां समाहारः। १५ पुटत्रये स्त्री ङीप्। त्रीणि पुटानि यस्य कप्।१६व्रणाकारभेदे "तत्रायश्चतुरस्रो वृत्तस्त्रिपुटक इति सर्वव्रणसमासः" सुश्रुतः। त्रिपुट+स्वार्थे क संज्ञायां कन् वा। त्रिवृति वैदले "मुद्गवनमुद्गकलायमकुष्ठमसूरमङ्गल्यचणकसतीनत्रिपुटकहरेणवाढ़कीप्रभृतयो वैदलाः" सुश्रु०।

**त्रिपुटिन्** पु० त्रीणि पुटानि सन्त्यस्य इनि। एरण्डवृक्षे शब्दमा०

**त्रिपुटी** स्त्री त्रीणि पुटानि सन्त्यस्याः अच् गौरा० ङीष्। त्रिवृति भरतः।

**त्रिपुटीफल** पु० त्रिपुटी पुटत्रयं फलेऽस्य। एरण्डवृक्षे हारा०

**त्रिपुण्ड्र** न० त्रयाणां पुण्ड्राणां दण्डवदाकाराणां समाहारः। १ललाटस्थे तिर्य्यग् रेखात्रयात्मके, "वक्राः ललाटगास्तिस्रो भस्मरेखास्त्रिपुण्ड्रकम्" इत्युक्ते तिलकभेदे "विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालया। पूजितोऽपि महादेवो न स्यात्तस्य फलप्रदः। तस्मान्मृदापि कर्तव्यं ललाटेऽपि त्रिपुण्ड्रकम्" इति त० ब्रह्माण्डपुराणम्। "ऊर्द्ध्वपुण्ड्रं मृदा कुर्य्यात् त्रिपुण्ड्रं भस्मना सदा। तिलकं वै द्विजः कुर्य्यात् चन्दनेन यदृच्छया। ऊर्द्ध्वपुण्ड्रं द्विजः कुर्य्यात् क्षत्रियश्च त्रिपुण्ड्रकम्। अर्द्धचन्द्रञ्च वैश्यश्च वर्त्तुलं शूद्रयोनिजः" आ० त०। "शिवागमे दीक्षितस्तु धार्य्यं तिर्य्यक् त्रिपुण्ड्रकम्। विष्णवागमे दीक्षितस्तु ऊर्द्ध्वपुण्ड्रं विधारयेत्" इति नागोजीभट्टधृतस्मृतसंहिता "मृत्स्नया भस्मना वापि त्रिपुण्ड्रं बिन्दुसंयुतम्। ललाटे तिलकं कुर्य्याद्वायवाग्बद्धकुन्तलः" इति महानिर्वाणतन्त्रम् "येषां वपुर्मनुष्याणां त्रिपुण्ड्रेण विना स्थितम्। श्मशानसदृशं तत् स्यान्न प्रेक्ष्यं पुण्यकृज्जनैरिति" देवीभाग०। अपि च तत्रैव नारदं प्रति नारायणवाक्यम् "त्रिपुण्ड्रं ये विनिन्दन्ति निन्दन्ति शिवमेव ते। धारयन्ति च ये भक्त्या धारयन्ति तमेव ते। तिर्य्यग्रेखाः प्रदृश्यन्ते ललाटे सर्वदेहिनाम्। तथापि मानवा मूढा न कुर्वन्ति त्रिपुण्ड्रकमिति"।

**त्रिपुर्** स्त्री त्रिगुणिताः पुरः समासान्तविधेरनित्यत्वात् आर्षे न अच् समा०। पुराणां त्रये त्रिपुरशब्दे च पुरत्रयं दृश्यम्। "ददाह तेन दुर्भेद्या हरोऽथ त्रिपुरो नृप!" भाग० ७।१०।५४।

**त्रिपुर** न० त्रयाणां पुराणां समाहारः। असुराणां १पुरत्रये। तत्पुरकथा भा० क० प० ३३ अ०।
"ततस्ते सहिता राजन्! संप्रधार्य्यासकृद्बहु। सर्वलोकेश्वरं वाक्यं प्रणम्येदमथाब्रुवन्। अस्माकं त्वं वरं देव! प्रयच्छेमं पितामह!। वयं पुराणि त्रीण्येव समास्थाय महीमिमाम्। विचरिष्याम लोकेऽस्मिंस्त्वत्प्रसादपुरस्कृताः। ततो वर्षसहस्रे तु समेष्यामः परस्परम्। एकीभावं गमिष्यन्ति पुराण्येतानि चानघ। समागतानि चैतानि यो हन्याद्भगवंस्तदा। एकेषुणा देववरः स नो मृत्युर्भविष्यति। एवमस्त्विति तान्देवः प्रत्युक्त्वा प्राविशद्दिवम्। ते तु लब्धवराः प्रीताः संप्रधार्य्य परस्परम्। पुरत्रयविसृष्ट्यर्थं मयं वव्रुर्महासुरम्। विश्वकर्म्माणमजरं दैत्यदानवपूजितम्। ततो मयः स्वतपसा चक्रे धीमान् पुराणि च। त्रीणि काञ्चनमेकं वै रौप्यं कार्ष्णायसं तथा। काञ्चनं दिवि तत्रासीदन्तरीक्षे च राजतम्। आयसञ्चाभवद्भौमं चक्रस्थं पृथिवीपते!। एकैकं योजनशतं विस्तारायामसम्मितम्। गृहाट्टालकसंयुक्तं बृहत्प्राकारतोरणम्। गृहप्रवरसंबाधमसम्बाधमहापथम्। प्रासादैर्विविधैश्चैव द्वारैश्चाप्युपशोभितम्। पुरेषु चाभवन् राजन्! राजानो वै पृथक् पृथक्। काञ्चनं तारकाक्षस्य चित्रमासीन्महात्मनः। राजतं कमलाक्षस्य विद्युन्मालिन आयसम्। त्रयस्ते दैत्यराजानस्त्रीँल्लोकानाशु तेजसा। आक्रम्य तस्थुर्वचुश्च कश्च नाम प्रजापतिः। तेषां दानवमुख्यानां प्रयुतान्यर्बुदानि च। कोट्यश्चाप्रतिवीराणां समाजग्मुस्ततस्ततः। मांसाशाश्च सुदृप्ताश्च सुरैर्विनिकृताः पुरा। महदैश्वर्य्यमिच्छन्तस्त्रिपुरं दुर्गमाश्रिताः। सर्वेषाञ्च पुनस्तेषां सर्वयोगवहो मयः। तमाश्रित्य हि ते सर्वे वर्त्तयन्त्यकुतोभयाः। यो हि यं मनसा कामं दध्यात् त्रिपुरसंश्रयः। तस्मै कामं मयस्तं तं विदधे मायया तदा। तारकाक्षसुतो वीरो हरिर्नाम महाबलः। तपस्तेपे परमकं येनातुष्यत् पितामहः। सन्तुष्टमवदद्देवं वापी भवतु नः पुरे। शस्त्रैर्विनिहता यत्र क्षिप्ताः स्युर्बलवत्तराः। स तु लब्ध्वा वरं वीरस्तारकाक्षसुतो हरिः। ससृजे

तत्र वापीं तां मृतसञ्जीवनीं प्रभो ! । येन रूपेण दैत्यास्तु येन योगेन चैव ह । मृतास्तस्यां परिक्षिप्तास्तादृशेनैव जज्ञिरे । तां प्राप्य ते पुनस्तांस्तु सर्व्वान् लोकान् बबाधिरे । महता तपसा सिद्धाः सुराणां भयवर्द्धनाः । न तेषामभवद्राजन् क्षयो युद्धे कथञ्चन" । "संगीयमानस्त्रिपुरावदानः" कुमा० । "गङ्गेव त्रिपुरद्विषः" रघुः "त्रिपुरदाहसमापतिसेविनः" किरा० । त्रीणि पुराणि येषाम् । ४तारकासुरतनयत्रयादिषु असुरभेदे पु०ब०व० । त्रीन् धर्म्मार्थकामान् पिपर्त्ति पॄ—क । ५देवीभेदे स्त्री । "भैरव्याः मन्त्रमुख्येषु त्रिपुरायास्ततः शृणु" तन्त्रसारः । "शृणु त्वं त्रिपुरामूर्त्तेः कामाख्यायास्तु पूजनम्" कालिकापु० ६२ अ० । ६चेदिनगर्य्यां त्रिपुराख्यदेशभेदे स्त्री ङीप् हेमच० ।

**त्रिपुरघ्न** पु० त्रिपुरं हन्ति हन—टक् । १महादेवे तस्य त्रिपुरहननकथा भा० क० ३४ अ० ।

"मूर्त्तिं सर्व्वां समाधाय त्रैलोक्यस्य ततस्ततः । रथं ते कल्पयिष्यामो देवेश्वर ! महौजसम् । तथैव बुद्ध्या विहितं विश्वकर्म्मकृतं महत् । ततो विबुधशार्दूलास्तं रथं समकल्पयन् । विष्णुं सोमं हुताशञ्च तस्येषुं समकल्पयन् । शृङ्गमग्निर्बभूवास्य भल्लः सोमो विशाम्पते ! । कुड्मलञ्चाभवद्विष्णुस्तस्मिन्निषुवरे तदा । बन्धुरं पृथिवीं देवीं विशालपुरमालिनीम् । सपर्व्वतवनद्वीपां चक्रुर्भूतधरां तदा । मन्दरः पर्व्वतश्चाक्षं जङ्घा तस्य महानदी । दिशश्च प्रदिशश्चैव परिवारो रथस्य ह । ईषा नक्षत्रवंशश्च युगः कृतयुगोऽभवत् । कूबरश्च रथस्यासीद्वासुकिर्भुजगोत्तमः । अपस्करमधिष्ठानं हिमवान् विन्ध्यपर्व्वतः । उदयास्तावधिष्ठाने गिरी चक्रुः सुरोत्तमाः । समुद्रमक्षमसृजन् दानवालयमुत्तमम् । सप्तर्षिमण्डलञ्चैव रथस्यासीत् परिष्करः । गङ्गा सरस्वती सिन्धुर्धुरमाकाशमेव च । उपस्करो रथस्यासन्नापः सर्व्वाश्च निम्नगाः । अहोरात्राः कलाश्चैव काष्ठाश्च ऋतवस्तदा । अनुकर्षं ग्रहा दीप्ता वरूथञ्चापि तारकाः । धर्म्मार्थकामसंयुक्तं त्रिवेणुं दारुबन्धुरम् । ओषधीर्वीरुधस्तत्र नानापुष्पफलोपगाः । सूर्य्याचन्द्रमसौ कृत्वा चक्रे रथवरोत्तमे । पक्षौ पूर्व्वापरौ तत्र कृते रात्र्यहनी शुभे । दश नागपतीनीषां धृतराष्ट्रमुखान् दृढान् । द्यां युगं युगचर्म्माणि संवर्त्तकबलाहकान् । सन्ध्यां धृतिञ्च मेधाञ्च स्थितिं सन्नतिमेव च । ग्रहनक्षत्रताराभिश्चर्म्म चित्रं नभस्तलम् । सुराम्बुप्रेतवित्तानां पतीँल्लोकेश्वरान् हयान् । काद्रवेयोऽथ नहुषः कर्कोटकधनञ्जयौ । इतरे चाभवन्नागा हयानां बालबन्धनाः । दिशश्च प्रदिशश्चैव रश्मयो रथवाजिनाम् । वषट्कारः प्रतोदोऽभूत् गायत्री शीर्षबन्धनी । सिनीवालीमनुमतिं कुहूं राकाञ्च सुव्रताम् । योक्त्राणि चक्रुर्वाहानां रोहकांस्तत्र कण्टकान् । कर्म्म सत्यं तपोऽर्थश्च विहितास्तत्र रश्मयः । अधिष्ठानं मनश्चासीत् परिरथ्या सरस्वती । नानावर्णाश्च चित्राश्च पताकाः पवनेरिताः । विद्युदिन्द्रधनुर्नद्धं रथं दीप्तं व्यदीपयन् । यो यज्ञे विहितः पूर्व्वमीशानस्य महात्मनः । संवत्सरो धनुस्तद्वै सावित्री ज्या महास्वना । दिव्यञ्च वर्म्म विहितं महार्हं रत्नभूषितम् । अभेद्यं विरजस्कं वै कालचक्रबहिष्कृतम् । ध्वजयष्टिरभून्मेरुः श्रीमान् कनकपर्व्वतः । पताकाश्चाभवन्मेघास्तडिद्भिः समलङ्कृताः । रेजुरध्वर्य्युमध्यस्था ज्वलन्त इव पावकाः । क्लृप्तन्तु तं रथं दृष्ट्वा विस्मिता देवताभवन् । सर्व्वलोकस्य तेजांसि दृष्ट्वैकस्थानि मारिष ! । युक्तं निवेदयामासुर्देवास्तस्मै महात्मने । एवं तस्मिन् महाराज ! कल्पिते रथसत्तमे । देवैर्म्मनुजशार्दूल ! द्विषतामभिमर्द्दने । स्वान्यायुधानि दिव्यानि न्यदधात् शङ्करो रथे । ध्वजयष्टिं वियत् कृत्वा स्थापयामास गोवृषम् । ब्रह्मदण्डः कालदण्डो रुद्रदण्डस्तथा ज्वरः । परिष्कन्दा रथस्यासन् सर्व्वतोदिशमुद्यताः । अथर्व्वाङ्गिरसावास्तां चक्ररक्षौ महात्मनः । ऋग्वेदः सामवेदश्च पुराणञ्च पुरःसराः । इतिहासधनुर्व्वेदौ पृष्ठरक्षौ बभूवतुः । दिव्या वाचश्च दिव्याश्च परिपार्श्वचराः स्थिताः । क्रोशादयश्च राजेन्द्र ! वषट्कारस्तथैव च । ओँकारश्च मुखे राजन्नति शोभाकरोऽभवत् । विचित्रमृतुभिः षड्भिः कृत्वा संवत्सरं धनुः । छायामेवात्मनश्चक्रे धनुर्ज्यामक्षयां रणे । कालो हि भगवान् रुद्रस्तस्य संवत्सरो धनुः । तस्माद्रौद्रीं कालरात्रिं ज्यां कृत्वा धनुषोऽजराम् । इषुश्चाप्यभवद्विष्णुर्ज्वलनः सोम एव च । अग्नीषोमं जगत् कृत्स्नं वैष्णवञ्चोच्यते जगत् । विष्णुश्चात्मा भगवतो भवस्यामिततेजसः । तस्माद्धनुर्ज्यासंस्पर्शं न विषेहुर्हरस्य ते । तस्मिन् शरे तिग्ममन्युर्मुमोचाविषहं प्रभुः । भृग्वङ्गिरोमन्युभवं क्रोधाग्निमतिदुःसहम् । स नीललोहितो धूम्रः कृत्तिवासा भयङ्करः । आदित्यायुतसङ्काशस्तेजा-

ज्वालाहतोऽज्वलत्। दुस्त्रासस्त्रासनो जेता हन्ता ब्रह्मद्विषां हरः। नित्यं त्राता च हन्ता च धर्माधर्माश्रितान्नरान्। प्रमाथिभिर्भीमबलैर्भीमरूपैर्मनोजवैः। विभाति भगवान् स्थाणुस्तैरेवात्मगुणैर्युतः तस्याङ्गानि समाश्रित्य स्थितं विश्वमिदं जगत्। जङ्गमाजङ्गमं राजन्! शुशुभेऽद्भुतदर्शनम्। दृष्ट्वा तन्तु रथं युक्तं कवची स शरासनी। बाणमादाय तं दिव्यं सोमविष्ण्वग्निसम्भवम्। तस्य राजंस्तदा देवाः कल्पयाञ्चक्रिरे प्रभोः। पुण्यगन्धवहं राजन्! श्वसनं देवसत्तमम्। तमास्थाय महादेवस्त्रासयन् दैवतान्यपि। आरुरोह तदा यत्तः कम्पयन्निव मेदिनीम्। तमारुरुक्षुं देवेशं तुष्टुवुः परमर्षयः। गन्धर्वा देवसंघाश्च तथैवाप्सरसाङ्गणाः। ब्रह्मर्षिभिःस्तूयमानो वन्द्यमानश्च वन्दिभिः। तथैवाप्सरसांवृन्दैर्नृत्यद्भिर्नृत्यकोविदैः। स शोभमानो वरदः खड्गी बाणी शरासनी। हसन्निवाब्रवीद्देवान् सारथिः को भविष्यति। तमब्रुवन् देवगणा यं भवान् संनियोक्ष्यते। स भविष्यति देवेश! सारथिस्ते न संशयः। तानब्रवीत् पुनर्देवो मत्तः श्रेष्ठतरो हि यः। तं सारथिं कुरुध्वं मे स्वयं सञ्चिन्त्य मा चिरम्। एतच्छ्रुत्वा ततो देवा वाक्यमुक्तं महात्मना। गत्वा पितामहं देवाः प्रसाद्येदं वचोऽब्रुवन्। यथा तत् कथितं देव! त्रिदशारिविनिग्रहे। तथा च कृतमस्माभिः प्रसन्नो नो वृषध्वजः। रथश्च विहितोऽस्माभिर्विचित्रायुधसंवृतः। सारथिञ्च न जानीमः कः स्यात्तस्मिन् रथोत्तमे। तस्माद्विधीयतां कश्चित् सारथिर्देवसत्तम!। सफलां तां गिरं देव! कर्त्तुमर्हसि। नो विभो! एवमस्मासु हि पुरा भगवन्नुक्तवानसि। हितं कर्त्तास्मि भवतामिति तत् कर्त्तुमर्हसि। स देवयुक्तो रथसत्तमो नो दुरावरो द्रावणः शात्रवाणाम्। पिनाकपाणिर्विहितोऽत्र योद्धा विभीषयन् दानवानुद्यतोऽसौ। तथैव वेदाश्चतुरो हयाग्र्या धरा सशैला च रथो महात्मनः। नक्षत्रवंशानुगतो वरूथी हरो हि योद्धा सारथिर्नाभिलक्ष्यः। तत्र सारथिरेष्टव्यः सर्वैरेतैर्विशेषवान्। तत्प्रतिष्ठो रथो देव! हरो योद्धा तथैव च। कवचानि सशस्त्राणि कार्मुकञ्च पितामह!। त्वामृते सारथिं तत्र नान्यं पश्यामहे वयम्। त्वं हि सर्वगुणैर्युक्तो देवतेभ्योऽधिकः प्रभो!। स रथं तूर्णमारुह्य संयच्छ परमान् हयान्। जयाय त्रिदशेशानां बधाय त्रिदशद्विषाम्। इति ते शिरसा नत्वा त्रिलोकेशं पितामहम्। देवाः प्रसादयामासुः सारथ्यायेति नः श्रुतम्"। पितामह उवाच। "नात्र किञ्चिन्मृषा वाक्यं यदुक्तं त्रिदिवौकसः। संयच्छामि हयानेष युध्यतो वै कपर्दिनः"।

इत्युपक्रमे "तान् सोऽसुरगणान् दग्ध्वा प्राक्षिपत् पश्चिमार्णवे। एवन्तु त्रिपुरं दग्धं दानवाश्चाप्यशेषतः। महेश्वरेण क्रुद्धेन त्रैलोक्यस्य हितैषिणा" भा०क०३४अ०। भा० द्रो० २०० अ० किञ्चिदन्यथोक्तं यथा

"गन्धमादनविन्ध्यौ च कृत्वा वंशध्वजौ हरः। पृथ्वीं ससागरवनां रथं कृत्वा तु शङ्करः। अक्षं कृत्वा तु नागेन्द्रं शेषं नाम त्रिलोचनः। चक्रे कृत्वा तु चन्द्रार्कौ देवदेवः पिनाकधृक्। अणी कृत्वैलपत्रञ्च पुष्पदन्तञ्च त्र्यम्बकः। युगं कृत्वा तु मलयमवनाहञ्च तक्षकम्। योक्त्राङ्गानि च सत्त्वानि कृत्वा शर्वः प्रतापवान्। वेदान् कृत्वाथ चतुरश्चतुरोऽश्वान्महेश्वरः। उपवेदान् खलीनांश्च कृत्वा लोकत्रयेश्वरः। गायत्रीं प्रग्रहं कृत्वा सावित्रीञ्च महेश्वरः। कृत्वोङ्कारं प्रतोदञ्च ब्रह्माणञ्चैव सारथिम्। गाण्डीवं मन्दरं कृत्वा गुणं कृत्वा च वासुकिम्। विष्णुं शरोत्तमं कृत्वा शल्यमग्निं तथैव च। वायुं कृत्वाथ वाजाभ्यां पुङ्खे वैवस्वतं यमम्। विद्युत् कृत्वाथ निश्राणं मेरुं कृत्वाथ वै ध्वजम्। आरुह्य स रथं दिव्यं सर्वदेवमयं शिवः। त्रिपुरस्य बधार्थाय स्थाणुः प्रहरतां वरः। असुराणामन्तककरः श्रीमानतुलविक्रमः। स्तूयमानः सुरैः पार्थ! ऋषिभिश्च तपोधनैः। स्थानं माहेश्वरं कृत्वा दिव्यमप्रतिमं प्रभुः। अतिष्ठत् स्थाणुभूतः स सहस्रं परिवत्सरान्। यदा त्रीणि समेतानि अन्तरीक्षे पुराणि च। त्रिपर्वणा त्रिशल्येन तदा तानि बिभेद सः। पुराणि न च तं शेकुर्दानवाः प्रतिवीक्षितुम्। शरं कालाग्निसंयुक्तं विष्णुसोमसमायुतम्। पुराणि दग्धवन्तं तं देवा याता प्रवीक्षितुम्"।

त्रिपुरदहनादयोऽप्यत्र।

**त्रिपुरभैरवी** स्त्री त्रिपुरा भैरवी कर्म्म०। त्रिपुराख्यदेवीभेदे "आद्यं त्रिपुरभैरव्याः वीजकाद्यं प्रकीर्त्तितम्" इति "चिन्तयेद्वरदां देवीमेवं त्रिपुरभैरवीम्" इति च तन्त्रसा०

**त्रिपुरमल्लिका** स्त्री त्रीणि पुराणीव पूर्य्याणि यस्याः कर्म०। त्रिपुरमाल्लिकापुष्पवृक्षभेदे त्रिका०।

**त्रिपुरान्तक** पु॰ त्रिपुरस्यान्तं करोति अन्त–णिच्–ण्वुल्। शिवे अमरः।

**त्रिपुरारि** पु॰ ६त॰। शिवे "त्रिपुरारिशिरश्चारि" गङ्गास्तवः।

**त्रिपुरुष** न॰ त्रयाणां पुरुषाणां समाहारः। १पित्रादिपुरुषत्रये। "क्रमात्त्रिपुरुषागता" स्मृतिः। त्रयः पुरुषाः पित्रादयो भोक्तारो यस्य। २भोगभेदे पु॰। त्रिपूरुषादयोऽप्यत्र। व्यासः "प्रपितामहेन यद्भुक्तं तत् पुत्रेण विना च तम्। तौ विना यस्य भोगः स्यात् स विज्ञेयः त्रिपूरुषः। पिता पितामहो यस्य जीवेच्च प्रपितामहः। त्रयाणां जीवतां भोगो विज्ञेयस्त्वेकपुरुषः" व्यव॰त॰। त्रयः पुरुषाः परिमाणमस्याः ठन् तस्य लुक्। ३पुरुषत्रयपरिमिते त्रि॰ "अथ त्रिपुरुषां रज्जुं मिमीते" शत॰ब्रा॰१०।२।१२। वा ङीप्। त्रिपुरुषीत्यप्यत्र।

**त्रिपुषा** स्त्री त्रीन् वातादिदोषान् पुष्णाति पुष–क। कृष्णत्रिवृति (कालतेओड़ि) शब्दच॰।

**त्रिपुष्कर** न॰ त्रयाणां पुष्कराणां समाहारः। १पुष्करत्रये ब्रह्मकृततीर्थभेदे २ज्येष्ठमध्यमकनिष्ठभेदेषु त्रिषु पुष्कराभिधह्रदेषु। ३नक्षत्रतिथिवारयोगभेदे पु॰। "वाराः क्रूरास्तिथिर्भद्रा नक्षत्रं भग्नपादकम्। जातेऽत्र जारजो योगो मरणेऽत्र त्रिपुष्करः" ज्यो॰त॰। स्वार्थे न अण्। त्रैपुष्करोऽप्यत्र पु॰ "भद्रातिथौ रविजभूतनयार्कवारे द्वीशार्यमाजचरणादितिवह्निवैश्वे। त्रैपुष्करो भवति मृत्युविनाशवृद्धौ त्रैगुण्यदो द्विगुणकृद्वसुतक्षचान्द्रे" मु॰ चि॰।

"अथ त्रिपुष्करयोगं सफलं वसन्ततिलकयाह भद्रेति भद्रासंज्ञिका तिथिः द्वितीया सप्तमी द्वादशी तथा शनिभौमसूर्यवारेषु तथाद्वीशं विशाखा अर्यमोत्तराफाल्गुनी अजचरणः पूर्वभाद्रपदा अदितिः पुनर्वसुः वह्निः कृत्तिका विश्वमुत्तराषाढ़ा एषु षट्सु नक्षत्रेषु उक्ततिथिवारनक्षत्ररूपे विशिष्टयोगे सति त्रिपुष्कर एव त्रैपुष्करः प्रज्ञादिभ्यश्चेति स्वार्थेऽण्। त्रिपुष्करयोगो भवतीत्यर्थः कीदृशः। मृत्युविनाशवृद्धौ त्रैगुण्यदः तद्दिने यदि कश्चित् म्रियेत तदा तद्दोषात्तत् सहितास्त्रयो म्रियेरन् यदि किञ्चिद्वस्तु विनष्टं तदा तस्य वस्तुत्रयनाशः तथा किञ्चिद्वस्तु लब्धं तदा त्रिगुणतद्वस्तुलाभः इत्यर्थः उक्तञ्च वसिष्ठेन। "रविरविजभौमवारे भद्रायां विषमपादनक्षत्रे चेत्। त्रैपुष्कराख्ययोगः त्रिगुणफलो यमलभैर्द्विगुणः"। नारदेनापि। "अर्कार्किभौमवारे चेद्भद्रायां विषमाङ्घ्रिभम्। त्रिपुष्करः त्रिगुणदो द्विगुणो यमलाङ्घ्रिभे"। अत्र यस्मिन्नक्षत्रे प्रथमपादान्ते तृतीयपादान्ते वा राशिसमाप्तिर्विषमपादनक्षत्रमुच्यते तदेव स्पष्टं द्वीशार्यमेत्यादिनोपनिबद्धम् अथ वासवोधनिष्ठा तक्षा चित्रा चान्द्रं मृगः एतानि भानि भद्रास्तिथयः रविजभूतनयार्कवाराश्च अत्रापि विशिष्टयोगे सति द्विपुष्करनामा योगो भवति तत्फलं मृत्युविनाशवृद्धौ द्वैगुण्यकृत् मृते नष्टे वृद्धौ द्विगुणतां करोतीत्यर्थः "द्विगुणो यमलाङ्घ्रिभे" इत्युक्तेः यन्नक्षत्रे द्वितीयचरणान्ते राशिसमाप्तिस्तद्यमलाङ्घ्रिभं तच्च मृगचित्राधनिष्ठारूपमेव। अथ दैवात्त्रिपुष्करादिके तिथिवारनक्षत्रात्मके विशिष्टयोगे सति कस्यचिन्मरणसम्भवस्तदा तद्दोषशान्त्यर्थं दानं विधेयं यथाह वसिष्ठः "त्रितयं गवां हि दद्याद्दोषस्यापनुत्तये विद्वान्। द्वितयं द्विपुष्करेऽपि च तिलपिष्टैर्विप्रमुख्येभ्यः"। द्वितयं गवामिति शेषः अत्र तिथिवाराभावे केवलं विषमाङ्घ्रिभे यमलाङ्घ्रिभे वा मरणसम्भवे दोषो नास्तीत्यर्थः। अमुमर्थं स्पष्टमाह नारदः "तद्दोषनाशाय गात्रयं मूल्यमेव वा। त्रिपुष्करे द्वय दद्यात् दोषस्त्वृक्षमात्रतः" इति। अत्र त्रिपुष्करयोगे कश्चिद्दृष्टहस्तनिवारोऽप्युक्तः यथाह कश्यपः "भद्रा तिथिः शनाज्यारवारे चेद्विषमाङ्घ्रिभम्। त्रिपुष्करं त्रिगुणदं द्विगुणं द्व्यङ्घ्रिभे मृतादिति" इदमेव दृष्ट्वा श्रीपतिनाप्युक्तम्। "विषमचरणं धिष्ण्यं भद्रा तिथिर्यदि जायते सुरगुरुशशिज्ञापुत्राणां कथञ्चन वासरे। मुनिभिरुदितः सोऽयं योगः त्रिपुष्करसंज्ञितः त्रिगुणफलदो वृद्धौ नष्टे हृते च मृतेऽपि वा"। अस्य पूर्वोक्तवाक्यैः चैकवाक्यतां देवाः कर्तुमर्हन्ति। कश्यपवाक्ये मृतादिति पदोपादानान्मरण एवायं विचारो न तु नष्टे वृद्धौ च यदुक्तं ब्रह्मपुराणेऽपि "धनिष्ठापञ्चके जीवो मृतो यदि कथञ्चन। त्रिपुष्करे याम्यके च कुलजान्मारयेत् ध्रुवम्। तदानिष्टविनाशार्थं विधानं सम्यगीरितम्" पी॰ धा॰।

**त्रिपुष्ट** पु॰ त्रयः धर्मार्थकामाः पुष्टा अस्य। प्राजापत्ये राजभेदे हेमच॰। [ स्थिते सत्यलोके हेमच॰।

**त्रिपृष्ठ** न॰ त्रयाणां लोकानां पृष्ठः समाहारः। त्रिपृष्ठ-

**त्रिपौरुष** त्रि॰ त्रीन् पित्रादीन् पुरुषान् व्याप्नोति अण् उत्तरपदवृद्धिः। पित्रादिक्रमेण पुरुषत्रयव्यापके भोगादौ। त्रिपुरुषशब्दे दृश्यम्। स्त्रियां ङीप्

यस्य वेदश्च वेदी च छिद्यत्ता त्रिपौरुषी स वै दुर्ब्राह्मणः" कात्या० श्रौ०८।२।१६ सूत्रे कर्कः।

**त्रिप्रश्न** पु० त्रयाणां दिग्देशकालानां प्रश्नः। १दिग्देशकालानां प्रश्ने २तन्मूलके दिगादिनिरूपणे च। तदधिकारेण सि० शि० उक्तं यथा "जगुर्विदोऽदः किल कालतत्त्वं दिग्देशकालावगमोऽत्र यस्मिन्। त्रिप्रश्ननाम्नि प्रचुरोक्तिधाम्नि"। सू० सि० "शिलातलेऽम्बुसंशुद्धे" इत्यादिनोक्ता "इति त्रिप्रश्नाधिकारः" इत्युक्तम् "दिग्देशकालानां प्रतिपादनमिदं परिपूर्त्तिमाप्तमित्यर्थः। दिशां साधनं शिलातल इत्यादि नियतं, तत्सम्बन्धेन समकोणयाम्योत्तरशङ्कूनां साधनान्यपि दिगन्तर्गतान्यनियतानि। पलभालम्बाक्षादिसाधनं देशनिरूपणं नियतम्। अग्राचरादिसाधनमनियतम्। कालसाधनं तद्च्छायादिसाधनं च कालनिरूपणमिति विवेकः" रङ्गना०।

**त्रिप्रस्नुत** पु० त्रिषु स्थानेषु प्रस्नुतः मेढ्रकपोलनेत्रेषु त्रिषु स्थानेषु च्चरितमदे मत्तगजे "गजानां तु प्रभिन्नानां त्रिधा प्रस्रवतां मदम्" भा० आ० २२१ अ०। "त्रिप्रस्नुतमदः शुष्मी षष्टिवर्षो मतङ्गराट्" १५१ अ०। "करात् कटाभ्यां मेढ्राच्च नेत्राभ्यां च मदस्रुतिः"। पालकाव्ये तु मदप्रस्रावस्य सप्तस्थानत्वोक्तेरिह प्राधान्यात् त्रिस्थानत्वं बोध्यम्।

**त्रिप्लक्ष** पु० देशभेदे तद्देशस्थितिः। "अवभृथमभ्यवयन्ति यमुनां त्रिप्लक्षावहरणं प्रति" कात्या० श्रौ० २४।६।३८। "यथा त्रिप्लक्षावहरणस्थाद्योत्येन यमुनामवभृथमभ्युपैति तत्र च यमुनां प्राप्य त्रिप्लक्षहरणे देशे त्रिप्लक्षं नाम जनपदं प्राप्य तत्रैव यमुनायामवभृथमभ्युपैति तत्रैव हि देशे दृषद्वती मनुष्येभ्यस्तिरोभवति। बहूदकापि सती तत्रैवान्तर्हिता भवतीत्यर्थः" कर्कः।

**त्रिफला** स्त्री त्रयाणां फलानां समाहारः अजा० टाप्। "पथ्या विभीतधात्रीणां फलैः स्यात् त्रिफला समा" इत्युक्ते हरीतक्यादित्रये। तद्गुणा भावप्र० उक्ता यथा "फलत्रिकञ्च त्रिफला सा वरा च प्रकीर्त्तिता। त्रिफला कफपित्तघ्नी मेहकुष्ठहरा सरा। चक्षुष्या दीपनी रुच्या विषमज्वरनाशिनी"।

**त्रिफलाघृत** न० त्रिफलानां रसेन युक्तं घृतम् शा० त०। चक्रदत्तोक्ते घृतभेदे तच्च नानाविधं तत्रैवोक्तं यथा "त्रिफलाभृङ्गमहौषधमध्वाज्यच्छागपयसि गोमूत्रे। नागं सप्तनिषिक्तं करोति गरुड़ोपमञ्चक्षुः" अन्यदपि "त्रिफलाक्वाथकल्काभ्यां सपयस्कं शृतं घृतम्। तिमिराण्यचिराद्धन्ति पीतमेतन्निशामुखे"।

**त्रिफलादिलौह** न० भैषज्यरत्नावल्युक्ते लौहभेदे यथा "त्रिफला मुस्तकं व्योषं विड़ङ्गं पुष्करं वचा। चित्रकं मधुकञ्चैव पलांशं सूक्ष्मचूर्णितम्। अयश्चूर्णपलान्यष्टौ गुग्गुलोस्तावदेव हि। आलोड्य मधुनोपेतं पलद्वादशकेन च। प्रातर्विलिह्य भुञ्जानो जीर्णे तस्मिन् जयेद्रुजः। दुःसाध्यमामवातञ्च पाण्डुरोगं हलीमकम्। जीर्णाग्निसम्भवं शूलं श्वयथुं विषमज्वरम्"

**त्रिफलाद्यघृत** न० चक्रदत्तोक्ते घृतभेदे तदपि लघुमहद्भेदेन द्विविधं तत्र लघु यथा

"फलत्रिकं भीरुकषायसिद्धं कल्केन यष्टीमधुकस्य युक्तम्। सर्पिः समं क्षौद्रचतुर्थभागं हन्यात् त्रिदोषं तिमिरं प्रवृद्धम्" महत् यथा

"त्रिफलाया रसप्रस्थं प्रस्थं भृङ्गरसस्य च। वृषभस्य रसप्रस्थं शतावर्य्याश्च तत्समम्। अजाक्षीरं गुडूच्याश्च आमलक्यारसस्तथा। प्रस्थं प्रस्थं समाहृत्य सर्वैरभिर्घृतं पचेत्। कल्कः कणा सिता द्राक्षा त्रिफला नीलमुत्पलम्। मधुकं क्षीरकाकोली मधुपर्णी निदिग्धिका। तत्साधुसिद्धं विज्ञाय शुभे भाण्डे निधापयेत्। ऊर्द्ध्वपानमधःपानं मध्यपानञ्च शस्यते। यावन्तो नेत्ररोगास्तान् पानादेवापकर्षति। सरक्ते रक्तदुष्टे च रक्ते चातिस्रुतेऽपि च। नक्तान्ध्ये तिमिरे काचे नीलिकापटलार्बुदे। अभिष्यन्देऽधिमन्थे च पक्ष्मकोपे सुदारुणे। नेत्ररोगेषु सर्वेषु वातपित्तकफेषु च। अदृष्टिं मन्ददृष्टिञ्च कफवातप्रदूषिताम्। स्रवतो वातपित्ताभ्यां सकण्ड्वासन्नदूरदृक्। गृध्रदृष्टिकरं सद्यो बलवर्णाग्निवर्द्धनम्। सर्वनेत्रामयं हन्यात्त्रिफलाद्यं महद्घृतम्"।

**त्रिःफलीकृत** त्रि० त्रिः त्रिवारं फलीकृतः वितुषीकृतः। त्रिधा वितुषीकृते तण्डुलादौ। "दक्षिणोत्तराभ्यां पाणिभ्यां त्रिःफलीकृतांस्तण्डुलांस्त्रिर्देवताभ्यः प्रक्षालयेत्" गोभिलः "त्रिःफलीकृतान् त्रिधा वितुषीकृतान्" सं० त० रघुनन्दनः।

**त्रिबन्धन** पु० हर्य्यश्वपौत्रे नृपभेदे। "हर्य्यश्वस्तत्सुतस्तस्मात् सोऽरुणोऽथ त्रिबन्धनः" भाग०९।७।४। त्रीणि बन्धनानि यस्य। २जाग्रदाद्यवस्थात्रययुक्ते जीवे पु०।

**त्रिवली(लि)** स्त्री त्रिगुणिता व(ली)वलिः। १उदरस्थे वलीत्रये “त्रिवलीवलयोपेतां भ्रुकुटीभीषणाननाम्” दुर्गाध्यानम्। तिसृणां वलीनां समाहारः। २त्रिवलि तत्रार्थे न० उज्ज्वलदत्तः। त्रिस्र वलीत्रयवत्त्वात्तथात्वम्।

**त्रिवलीक** न० तिस्रो वल्यो यत्र कप्। पायौ हेम०।

**त्रिबाहु** पु० त्रयो बाहवोऽस्य। १रुद्रानुचरभेदे “त्रिबाहु पञ्चबाहुश्च व्याघ्रवक्त्रः सिताननः” हरिवं० २७७ अ० २असियुद्धाकारभेदे। “त्रिबाहुस्तुङ्गबाहुश्च” हरिवं० ६१६ अ०। खड्गशब्दे २४६० दृश्यम्।

**त्रिभ** न० त्रयाणां भानां राशीनां समाहारः। १लग्नादिराशित्रये। “त्रिभं त्रिभं लग्नभतः क्रमेण स्त्रीणां नृणां रात्रिदिनेषु तेषु” नील०ता०। २राशित्रयमाने च। “हृत्रिभघ्नहृज्ज्ञाग्निभागघ्नाः क्षेपलिप्तिकाः” सू०सि०। त्रीणि भानि नक्षत्राणि यत्र। ३नक्षत्रत्रययुक्ते “कार्त्तिक्यादिषु संयोगे कृत्तिकादि द्वयं द्वयम्। अन्त्योपान्त्यौ पञ्चमश्च त्रिभं मासत्रयं स्मृतम्” सू०सि०। “अत्र कार्त्तिकमासादित्वेन यद्यादन्त्य आश्विनः उपान्त्यः भाद्रः पञ्चमः फाल्गुनः। मासत्रयं त्रिभः स्मृतम्। रेवत्यश्विनीभरणीतिनक्षत्रत्रयसम्बन्धादाश्विनः। शततारापूर्वोत्तराभाद्रपदेति नक्षत्रत्रयसम्बन्धाद्भाद्रपदः पूर्वोत्तरफाल्गुनीहस्तेति नक्षत्रत्रययोगात् फाल्गुनः” रङ्गना०।

**त्रिभङ्गी** स्त्री “प्रथमं यदि दशमं वदति विरामं तदनु निकामं वसुकम्। वसुविमलतुरङ्गममतिहृदयङ्गमहृषितभुजङ्गमन्दर्पतिलकम्। त्रिंशद्विकलासुविहितनिवासं सततविलासं हृदयमुदेतिमदनुदितभुजङ्गी मोहनरङ्गी वदति त्रिभङ्गीवृत्तमदः” इत्युक्ते मात्रावृत्ते छन्दोभेदे।

**त्रिभजीवा** स्त्री ६त० राशित्रयधनुराकारक्षेत्रस्य जीवायाम् त्रिज्यायां त्रिज्याशब्दे दृश्यम्। “शङ्कुः सत्रिभजीवाघ्नः” सू० सि०। त्रिभज्याप्यत्र। “त्रिभज्यया भवेच्छङ्कुस्तद्वर्गं परिशोधयेत्” सू० सि०।

**त्रिभण्डी** स्त्री त्रीन् वातादिदोषान् भण्डति भण्ड—परिभाषणे अण्। त्रिवृति (तेओड़ि) अमरः।

**त्रिभद्र** न० त्रिषु दन्तक्षतालिङ्गनमर्द्दनेष्वपि भद्रं यत्र। सुरते त्रिका०।

**त्रिभाग** प० तृतीयो भागः वृत्तौ संख्याशब्दस्य पूरणार्थत्वम्। तृतीये भागे “त्रिभागशेषासु निशासु च क्षणम्” कुमा०। “अश्वयुक्कृष्णपक्षे तु श्राद्धं कुर्य्यात् दिने दिने। त्रिभागहीनं पक्षं वा त्रिभागं त्वर्द्धमेव वा” ११४० ब्रह्मपु०।

**त्रिभानु** पु० तुर्वसुवंश्ये नृपभेदे। “तुर्वसोस्तु सुतो वह्निर्वह्नेर्भर्गोऽथ भानुमान्। त्रिभानुस्तत्सुतोऽस्यापि करन्धम उदारधीः” भाग० ९।२३।४।

**त्रिभाव** पु० त्रिषु कालेषु भावोऽस्य। त्रैकालिके पदार्थे तस्य भावः कर्म वा ब्राह्मणा० ष्यञ्। त्रैभाव्य तद्भावादौ न०।

**त्रिभुक्ति** पु० त्रिषु भुक्तिरस्य। (तीरहुत) देशभेदे त्रिका०।

**त्रिभुज** न० त्रयो भुजा यत्र। त्रिबाहुके त्रिकोणे क्षेत्रभेदे क्षेत्रशब्दे दृश्यम्। “त्रिभुजे भुजयोर्योगस्तदन्तरगुणो भुवा हृतो लब्ध्या” “स्पष्टं त्रिभुजे फलं भवति” लीला०। “योनिं कृत्वा त्रिभुजं शयानः” श्रय० ८।६। अत्र योनिं त्रिभुजमिव कृत्वेत्यर्थः तेन न स्त्रीत्वम्। अतः त्रिभुज् इति शब्दान्तरकल्पनं प्रामादिकम्।

**त्रिभुवन** न० त्रयाणां भुवनानां लोकानां समाहारः पात्रा० न ङीप्। त्रिलोक्यां मिलितेषु स्वर्गमर्त्यपातालेषु। “त्रिभुवनजये सा पञ्चेषोः करोति सहायताम्” सा०द०। “त्रिभुवनगुरोर्धाम चण्डीश्वरस्य” मेघ०।

**त्रिभूम** पु० तिस्रो भूमयः ऊर्द्ध्वाधोमध्यस्था यस्य अच्समा०। (तेताला) प्रासादभेदे।

**त्रिमण्डला** स्त्री लूताभेदे “लूतास्तु द्विविधाः स्मृताः” “तासामष्टौ कृच्छ्रसाध्यावर्ज्यास्तावत्य एव तु। त्रिमण्डला तथा श्वेता कपिला पिटिका तथा। आलमूत्रविषा रक्ता कमला चाष्टमी स्मृता। ताभिर्दष्टे शिरो दुःखं कण्डूर्दंशे च वेदना। भवन्ति च विशेषेण गदाः श्लैष्मिकवातिकाः”। “त्रिमण्डलया दष्टेऽसृक् कृष्णं स्रवति दीर्य्यते” इति च सुश्रु०।

**त्रिमद** पु० त्रिगुणितो मदः संज्ञात्वात् कर्म०। “विद्यामदो धनमदस्तथैवाभिजनो मदः। एते मदा मदान्धानां त एव हि सतां दमाः” १इत्युक्ते गर्वत्रये “नूनं नृपाणां त्रिमदोत्-पथानां महीं मुहुश्चालयतां चमूभिः” भाग० २।१।४२। २मुस्ताचित्रकविडङ्गेषु च वैद्यकम्।

**त्रिमधु** न० त्रिगुणितं मधु संज्ञात्वात् कर्म०। “दुग्धं सिता माक्षिकञ्च विज्ञेयं मधुरत्रयम्” इत्युक्ते १दुग्धादित्रये। २ऋग्वेदैकदेशे पु०। ३तद्व्रतभेदे तदाचरणेन ४तद्वेदाध्यायिनि पु०त्रिला०। “मधुवाता इति त्र्यृचः मधुमन्त्रा यत्र। मधुवाता इत्यादिके ५ऋक्त्रये पु०। “वेदार्थवित् ज्येष्ठसामा त्रिमधुस्त्रिसुपर्णकः” याज्ञ०। “त्रिणाचिकेतः स्त्रिमधुस्त्रिसुपर्णः षडङ्गवित्” मनुः। ६मधुशब्दत्रये च

"गायत्रीं त्रिः सकृद्वापि जपेद्व्याहृतिपूर्विकाम्। मधुवाता इति त्र्यृचं मध्वित्येतत् त्रिकं जपेत्" इति पारस्करः। ७अत्यन्तमसितात्वये न० "कमलैश्च त्रिमध्वक्तैर्जुहुयान्नेदष्टोत्तरं शतम्" तन्त्र०।

**त्रिमधुर** न० त्रिगुणितं मधुरं संज्ञात्वात् कर्म०। दुग्धसितामाक्षिकरूपे मधुरत्रये त्रिमधुशब्दे दृश्यम्। "त्रिमधुरेणाध्यर्च्चयेन्नागान्" वृह० ४८ अ०।

**त्रिमातृ** त्रि० त्रयाणां लोकानां माता निर्माता। लोकत्रयनिर्मातरि "उत त्रिमाता विदथेषु सम्राट्" ऋ० २५६५ अ०।

**त्रिमात्र** पु० तिस्रः मात्रा उच्चारणकालोऽस्य। प्लुतस्वरे "एकमात्रो भवेद् ह्रस्वो द्विमात्रो दीर्घ उच्यते। त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्द्धमात्रकम्" शिक्षा० "प्रणवस्य ऋषिर्ब्रह्मा देवोऽग्निस्तस्य कथ्यते। गायत्रञ्च भवेच्छन्दो नियोगः सर्वकर्मसु। त्रिमात्रस्तु प्रयोक्तव्यः प्रारम्भे सर्वकर्मणाम्" संवर्त्तः। भोजदेवेन तु तस्य सार्द्धत्रिमात्रकतोक्ता यथा "तज्जपस्तदर्थभावनम्" पा० सू० "तस्य सार्द्धत्रिमात्रिकस्य प्रणवस्य जपः" वृत्तिः। युक्तञ्चैतत् ओकारस्य प्लुतत्वेन त्रिमात्रत्वेऽपि तदुत्तरमकारस्य व्यञ्जनत्वादर्द्धमात्रत्वेन सार्द्धत्रिमात्रत्वं संवर्तवचने त्रिमात्रपदं सार्द्धत्रिमात्रे लाक्षणिकमिति बोध्यम्। वस्तुतः मकारान्तत्वे सार्द्धत्रिमात्रत्वम् अनुस्वरान्तत्वे त्रिमात्रत्वमिति भेदः। तदभिप्रायेणैव तस्य त्रिमात्रतया जपफलं प्रश्नोपनिषदुक्तं तच्च ओम् शब्दे १५६० पृ० दर्शितम्।

**त्रिमार्गगा** स्त्री त्रिभिर्मार्गैर्गच्छति गम–ड। १गङ्गायां हेमच०। "त्रिमार्गगावीचिविमर्दशीतः" रघुः। "अन्वर्थसंज्ञैव परं त्रिमार्गगा" माघः। गम–णिनि। त्रिमार्गगामिन्यादयोऽप्यत्र।

**त्रिमार्गा** स्त्री त्रयो मार्गा अस्याः। १गङ्गायां "त्रिमार्गयेव त्रिदिवस्य मार्गः" कुमा०। (तेमाता) २पथि। "त्रयाणां मार्गाणां समाहारः। ३मार्गत्रये स्त्री ङीप्। [हेमच०।

**त्रिमुकुट** पु० त्रीणि मुकुटानीव शृङ्गाणि यस्य। त्रिकूटपर्वते

**त्रिमुख** पु० त्रीणि मुखानि अस्य। १शाक्यमुनौ त्रिका०। गायत्रीजपाङ्गे चतुर्विंशतिमुद्रान्तर्गते मुद्राभेदे तल्लक्षणं विधानपारिजाते उक्तं यथा "संमुखाससक्तयोः पाण्योः कनिष्ठाद्वययोगतः। शेषाङ्गुलीनां वैरल्यात् मुद्राः स्युर्द्विमुख.दयः" "संमुखासक्तपाण्योः कनिष्ठाद्वययोगेन शेषाङ्गुलीनां विरलत्वेनाङ्गुष्ठद्वयमारभ्यानामिकान्तं यावत् द्विमुखत्रिमुखचतुर्मुखपञ्चमुखाः मुद्राः स्युः" तद्व्याख्या। तथा चाङ्गुष्ठतर्जनीनां वैरल्ये त्रिमुखमुद्रा। २बुद्धदेवीभेदे मायादेव्यां स्त्री त्रिका०।

**त्रिमुनि** न० त्रयाणां मुनीनां समाहारः। पाणिनिकात्यायनपतञ्जलिरूपे मुनित्रये। त्रयो मुनयो वंश्याः "संख्या वंश्येन" पा० स०। पाणिन्यादिमुनित्रयप्रणीते व्याकरणे विद्यातद्वतामभेदविवक्षया तस्य तथात्वम् "वंशश्च जन्मना विद्यया वा तत्र भवः वंश्यः" इति सि०कौ०।

**त्रिमूर्त्ति** पु० तिस्रो मूर्त्तयोऽस्य। ब्रह्मविष्णुशिवरूपमूर्त्तित्रययुक्ते परमेश्वरे। "नमस्त्रिमूर्त्तये तुभ्यं प्राक्सृष्टेः केवलात्मने" कुमा०। त्रिमूर्त्तिर्यः सर्गस्थितिविलयकर्माणि तनुते" चिन्तामणिः २ब्रह्मशक्तिभेदे स्त्री। "एकमूर्त्तिरपि भिन्नरूपिणी या जगज्जननपालनक्षये। काव्युतेश्वरतया विवर्त्तते ब्रह्मशक्तिमहमानतोऽस्मि ताम्" शब्दार्थचि० धृ० वाक्यम्। ३बुद्धदेवीभेदे स्त्री त्रिका०।

**त्रिमूर्द्ध** पु० त्रयो मूर्द्धानोऽस्य ष समा०। मूर्द्धत्रययुक्ते। "बहुमूर्द्धा द्विमूर्द्धा च त्रिमूर्द्धा चाहृतां वधे" भट्टिः।

**त्रियम्बक** पु० त्रीण्यम्बकानि दृष्टयो यस्य। "छन्दसि भयथा" पा० वा इयङ्। त्रिनेत्रे। क्वचिल्लोकेऽपि इयङ् "त्रियम्बकं संयमिनं ददर्श" कुमा० तद्व्याख्यायां मल्लिनाथेन महाकविप्रयोग एव तत्र मूलतयोक्तः।

**त्रियव** न० त्रयो यवाः परिमाणमस्य। कृष्णले "सर्षपाः षट् यवो मध्यस्त्रियवं त्वेककृष्णलम्" मनुः।

**त्रियष्टि** स्त्री त्रिषु वातादिषु यष्टिरिव विद्रावकत्वात्। (क्षेतपापड़ा) १क्षुपभेदे रत्नमा०। तिस्रो यष्टयो यस्य। २त्रिगुच्छे हारभेदे पु०। [ण्वुल्। पापे शब्दमा०।

**त्रियामक** न० त्रिषु कालेषु यमयति अन्तर्भूतण्यर्थे यम–

**त्रियामा** स्त्री त्रयो यामा अस्याः आद्यान्त्ययोरर्द्धयामयोश्चेष्टाकालत्वेन दिनप्रायत्वात्। १निशायाम् अमरः "त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टयम्। नाड़ीनां, तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते" ति० त०। "संक्षिप्येत क्षणमिव कथं दीर्घयामा त्रियामा" मेघ०। "क्वचित्समेतपरिच्छदस्त्रियामाम्" रघुः। "ज्योतिर्भिरुद्यद्भिरिव त्रियामा" कुमा० २हरिद्रायाम् अमरः। कृष्णत्वात् ३यमुनायां ४नील्यां ५कृष्णत्रिवृति च उणादिको०।

**त्रियुग** पु० त्रीणि युगानि आविर्भावकालोऽस्य। १यज्ञपुरुषे तस्य कृतयुगे आविर्भावाभावात् कलौ छन्नत्वात् वा। "इत्थं नृतिर्यगृषिदेवझषावतारैर्लोकान् विभावयसि

हंसि जगत् प्रतीपान् । धर्मं महापुरुष ! पासि युगा-नुवृत्तं छन्नः कलौ यदभवस्त्रियुगोऽथ स त्वम्” भाग० ७।९।३८ “कलौ तु तन्न करोषि यतस्तदा त्वं छन्नोऽभवः यतस्त्रिष्वेव युगेष्वाविर्भावात् स एवम्भूतस्त्वं त्रियुग इति प्रसिद्धः” श्रीधरस्वामी । २वसन्तादिकालत्रये । “या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा” यजु० १२।७५ “युगशब्दः कालवाची त्रयाणां युगानां समाहारस्त्रियुगं त्रिकालं वसन्ते प्रावृषि शरदि च । वेददी० ।

**त्रियुह** पुंस्त्री कपिलाश्वे हेमच० स्त्रियां ङीप् ।

**त्रिरात्र** न० त्रिसृणां रात्रीणां समाहारः अच् समा० । “अह्नाह्नान्ताः क्लीबेऽदाः रात्रान्ताः प्रागसंख्यकाः” इत्यमरोक्तेः संख्यापूर्वत्वात् क्लीवता । १रात्रित्रये २तदुपलक्षिते दिनत्रये च । “उपाकर्मणि चोत्सर्गे त्रिरात्रं क्षपणं स्मृतम्” “अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत्” मनुः । त्रिभिः रात्रिभिः निर्वृत्तम् ठञ् तस्य लुक् । तद्धितार्थद्विगुत्वात् अच् समा० । ३दिनत्रयोपवाससाध्ये व्रतभेदे न० । “एकरात्रं त्रिरात्रं वा षड्रात्रं वा विधीयते” प्रा० वि० धृतवचनम् । रात्रित्रयसाध्ये ४गर्गवेदादौ यज्ञभेदे पु० । “सहस्रदक्षिणे त्रिरात्रे” कात्या० श्रौ० १२।४।१५ । गर्गत्रिरात्रशब्दे २५४१पृ० दृश्यम् । [ शब्दे दृश्यम् ।

**त्रिरूप** पु० त्रीणि रूपाण्यस्य । अश्वमेधीये अश्वभेदे अश्वमेध-

**त्रिरेख** पु० तिस्रो रेखा यत्र । १शङ्खे हेमच० । समा० द्वि० । २रेखात्रये न० । [“त्रिलोकेऽशौ” इ० र० ।

**त्रिल** पु० त्रयो लाः लघुवर्णा यत्र । लघुत्रययुक्ते नगणे

**त्रिलघु** त्रि० त्रयो लघवः यत्र । छन्दोग्रन्थप्रसिद्धे नगणे “त्रिलघुश्च नकारः” छन्दोम० । त्रिभिर्लघुः । २शुभलक्षणभेदान्विते स्थानत्रयह्रस्वे पुरुषे “त्रिपृथुलघुगम्भीर” इत्युद्दिश्य “ग्रीवाजङ्घामेहनैश्च त्रिभिर्ह्रस्वोऽयमीडितः” काशी० ११अ० । ह०सं०६८अ०तु चतुर्ह्रस्वस्यैव शुभत्वमुक्तं यथा “ह्रस्वानि चत्वारि च लिङ्गपृष्ठं ग्रीवा च जङ्घे च हितप्रदानि” तत्र ह्रस्वे पृष्ठाधिक्यमिति भेदः ।

**त्रिलवण** न० त्रयाणां लवणानां समाहारः पात्रा० न ङीप् त्रिगुणितं लवणं वा संज्ञात्वात् कर्म० वा । “सैन्धवञ्च विड़ञ्चैव रुचकं च तृतीयकम् । मिलितैतत् त्रिलवणम्” इत्युक्ते लवणत्रये राजनि० ।

**त्रिलिङ्ग** त्रि० त्रीणि लिङ्गान्यस्य । १पुंस्त्र्यादिलिङ्गत्रययुक्ते शब्दे । समा० द्वि० ङीप् । २लिङ्गत्रये स्त्री “त्रिलिङ्ग्यां त्रिष्विति पदम्” अमरः । त्रीणि सत्वादीनि लिङ्गानि अनुमापकान्यस्य । ३अहङ्कारादौ त्रि० “रजःप्रधानान्महतस्त्रिलिङ्गो दैवनोदितात् जातः ससर्ज्ज भूतादिर्वियदादीनि पञ्चशः” भाग०३।२०।१४ । ४वातादित्रिधातुदोषजे रोगे च त्रि० सुश्रुतः ।

**त्रिलोकभृत्** पु० त्रयाणां लोकानां भृत् भर्त्तारस्य, भृ—सम्प० भावे क्विप् उत्तरपदद्विगुः । लोकत्रयस्यापतनात्कुलप्रयत्नविशेषद्धयधारणशालिनि परमेश्वरे “लोकस्वामी त्रिलोकभृत्” विष्णुस० ।

**त्रिलोकनाथ** पु० त्रयाणां लोकानां नाथः उत्तरपदद्विगुघटितस्तत्पुरुषः । त्रयाणां लोकानां नाथे परमेश्वरादौ । “त्रिलोकनाथेन सतां मखद्विषः” रघुः । “त्रिलोकनाथः पितृसद्मगोचरः” कुमा० । त्रिलोकपत्यादयोऽप्यत्र ।

**त्रिलोकात्मन्** पु० त्रयो लोकाः आत्मानः स्वरूपाणि यस्य कार्य्यकारणयोरभेदात् उत्तरपदद्विगुघटितस्तत्पुरुषो वा । १परमेश्वरे “त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः” विष्णुपु० ।

**त्रिलोकी** स्त्री त्रयाणां लोकानां समाहारः ङीप् । स्वर्गमर्त्यपातालरूपे लोकत्रये “यदि त्रिलोकी गणनापरा स्यात्” नैष० । “श्रियं त्रिलोकीतिलकः स एव” माघः ।

**त्रिलोकेश** पु० त्रयाणां लोकानामीशः उत्तरपदद्विगुघटितस्तत्पुरुषः । १परमेश्वरे “त्रिलोकात्मा त्रिलोकेशः” विष्णु० । २सूर्य्ये शब्दच० । त्रिलोकेश्वरादयोऽप्यत्र ।

**त्रिलोचन** पु० त्रीणि लोचनानि यस्य । १शिवे “त्रिलोचनैकांशतया दुरासदः” रघुः । “त्रिलोचनस्तासुपचक्रमे च” कुमा० । २काशीस्थे चतुर्दशमहालिङ्गान्तर्गते लिङ्गभेदे न० । “द्वितीयं च त्रिलोचनम्” ७५ अ० । तन्माहात्म्यं च तत्रैव दृश्यम् । ३लोचनत्रययुक्ते त्रि० “सुखेन पूर्णेन्दुनिभस्त्रिलोचनः” माघः । ४दुर्गायां स्त्री । “लोचनत्रयसंयुक्ताम्” दुर्गाध्यानोक्तेः ।

**त्रिलोचनाष्टमी** स्त्री गौणचान्द्रज्यैष्ठकृष्णाष्टम्याम् “ज्यैष्ठे-मासि त्वष्टम्येव ! कृष्णाष्टम्यां त्रिलोचनम् । यः पूजयति देवेशमीशलोकं स गच्छति” संवत्सरकौमुदीधृतभविष्यपुराणम् । “ज्यैष्ठे मास्यसिते पक्षे अष्टम्याञ्च महेश्वरि ! । त्रिराद्धे च तल्लोक लभते नात्र संशयः” उत्तरकामाख्यातन्त्रे ११ पटले ।

**त्रिलोहक** त्रि० त्रीणि लौहानि धातवो यत्र कप्संज्ञायां कन् वा । सुवर्णरजतताम्रमये पात्रादौ ।

**त्रिलौही** स्त्री त्रीणि लौहानि साधनत्वेनास्त्यस्याः गौरा० ङीष्। सुवर्णरजतताम्रपरिमाणभेदेन निर्मिते मुद्राभेदे "अथ मन्त्रिणां हितार्थाय त्रिलौही मुद्रा निरूप्यते। सोमसूर्य्याग्निरूपाः सुवर्णं लौहत्रयं तथा। रौप्यमिन्दुः स्मृतो हेम सूर्य्यस्ताम्रो हुताशनः। लौहभागाः समुद्दिष्टाः स्वराद्यक्षरसंख्यया। तैर्लौहैः कारयेन्मुद्रामसङ्कुलितसङ्गताम्। षड् स्वराः स्मृताः सौम्याः स्पर्शाः सौराः शुभोदयाः। आग्नेया व्यापकाः सर्वे सोमसूर्य्याग्निदेवताः। स्वराः षोड़श विख्याताः स्पर्शाः स्युः पञ्चविंशतिः। व्यापका दश ते कामधनधर्मप्रदायिनः। साष्टं सहस्रं संजप्य स्पृष्ट्वा तां जुहुयात्ततः। तस्यां सम्पातयेन्मन्त्री सर्पिषा पूर्वसंख्यया। निःक्षिप्य कुम्भे तां मुद्रामभिषेकोक्तवर्त्मना। आवाह्य पूजयेद्देवीमुपचारैर्विधानतः। अभिषिच्य विनीताय दद्यात्तां मुद्रिकां गुरुः। इयं मुद्रा क्षुद्ररोगविषमज्वरनाशिनी। व्यालचौरमृगादिभ्यो रक्षां कुर्य्याद्विशेषतः। युद्धे विजयमाप्नोति धारयन् मनुजेश्वरः। मन्त्रसिद्धिकरी पुंसां चतुर्वर्गफलप्रदा। धारयन् मनुजो नित्यं देवतुल्यो भवेद्भुवि" तन्त्रसा०।

**त्रिवत्स** पु०। त्रयो वत्सा वत्सरा वयोयस्य पृषो०। त्रिवर्षवयस्के वृषे। स्त्रियां तु टाप् त्रिवत्सा। "त्रिवत्सश्च मे त्रिवत्सा च मे" यजु०१८।२६। "वत्सो वत्सरः त्रयो वत्सा यस्य स त्रिवत्सः त्रिवर्षो वृषः तादृशी गौस्त्रिवत्सा" वेददी०। "सोमक्रयणस्त्रिवत्सः साण्डः" कात्या० श्रौ० २२।२।४०। "त्रिवत्सस्त्रिवर्षः साण्डः अण्डसंयुक्त ऋषभः" कर्कः।

**त्रिवर्ग** पु० त्रयाणां धर्म्मार्थकामानां वर्गः। १धर्म्मार्थकामरूपेषु पुरुषार्थेषु, अमरः २त्रिफलायां, ३कटुत्रिके, मेदिनि० माङ्गुरोक्ते ४सत्त्वरजस्तमोरूपगुणत्रये। "क्षयःस्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम्" अमरोक्ते राज्ञामायव्ययवृद्धिरूपेषु ५पदार्थेषु च। "त्रिवर्गपारीणमसौ भवन्तम्" भट्टिः। "धर्म्मार्थावुच्यते श्रेयः कामार्थौ धर्मएव च। अर्थ एवेह तु श्रेयस्त्रिवर्ग इति तु स्थितिः"। "तं राजा प्रणयन् सम्यक् त्रिवर्गेणाभिवर्द्धते" मनुः।

**त्रिवर्णक** न० त्रयो वर्णाः पुष्पेष्वस्य कप्। १गोक्षुरे। २त्रिफलायां, ३त्रिकटौ। समा० द्वि० पात्रा० स्वार्थे कन्। ४ब्राह्मणक्षत्रियवैश्यरूपे द्विजातिवर्णत्रये न० मेदि०। ५श्यामरक्तपीतात्मके वर्णत्रये च।

**त्रिवर्त्तु** न० त्रिषु वसन्तादिषु ऋतुषु वर्त्तते वृत–तुन्। वसन्तादिके ऋतुत्रये प्रातरादिकाले अतिशयेन वर्त्तमाने आदित्यतेजसि। "त्रीणि वा आदित्यस्य तेजांसि वसन्ते प्रातर्ग्रीष्मे मध्यन्दिने शरद्यपराह्णे" इति श्रुतेस्तस्य वसन्तादिषु प्रातरादिकालभेदेऽतिशयेन वर्त्तमानत्वात् तथात्वम्" "त्रिवर्त्तु ज्योतिःस्वभिष्टये" ऋ०७।१०१।२ "त्रिवर्त्तु त्रिष्वृतुष्वतिशयेन वर्त्तमानम्" भा०।

**त्रिवर्त्मन्** पु० त्रीणि वर्त्मान्यस्य। देवयानपितृयानदक्षिणायानरूपमार्गत्रययुक्ते जीवे "स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा प्राणाधिपः स करोति स्वकर्मभिः" श्वेता० ५।७। त्रीणि वर्त्मानि देवयानाद्यो मार्गभेदा अस्येति त्रिवर्त्मा धर्म्माधर्मज्ञानमार्गभेदान् अर्हति वा" भा० २गङ्गायां स्त्री। त्रिगुणितं वर्त्म। ३स्वर्गमर्त्यपातालस्थे मार्गे "ऊर्द्ध्वावर्तां महापुण्यां मधुमतीं त्रिवर्त्मगाम्"। भा०आनु० २६अ०।

**त्रिवर्ष** त्रि० त्रयो वर्षा वयोऽस्य। त्रिवर्षवयस्के १प्राणिनि। "न त्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया" मनुः।२त्रिहायण्यां गवि स्त्री "त्रिहायणी त्रिवर्षा गौः" अमरः। स्वार्थे क। त्रिवर्षिका तत्रार्थे। त्रिगुणितो वर्षः शा०त०। ३वर्षत्रये पु० न० "न सिद्ध्यत्यहितं वाढं त्रिवर्षं वपनस्य च" सुश्रुतः।

**त्रिवर्षीय** त्रि० त्रिवर्षे भवः गहा० छ। त्रिवर्षभवे "एकैकं वै त्रिवर्षीयं तेन पीवान् शुना सह" भा० आनु० ८३अ०

**त्रिवार** त्रि०त्रयो वारा अस्य।१वारत्रययुक्ते।२गरुड़ात्मजभेदे पु०। "त्रिवारः सप्तवारश्च वाल्मीकिर्दीपकस्तथा" भा० उ० १०० अ० गरुड़ात्मजोक्तौ।

**त्रिविक्रम** पु० त्रयो विक्रमाः पादन्यासा अस्य। १विष्णौ अमरः त्रिक्रमशब्दे दृश्यम्। "आनन्दो नन्दनानन्दः सत्यधर्मस्त्रिविक्रमः" विष्णुस०। "त्रयो विक्रमास्त्रिषु लोकेषु विक्रमः क्रान्तं यस्य स त्रिविक्रमः "त्रीणि पदानि विचक्रमे" श्रुतेः त्रयो लोका विक्रमाः क्रान्ता येनेति वा। "त्रिरित्येवं त्रयो लोकाः कीर्तिता मुनिसत्तमैः। क्रमते तांस्तथा सर्वांस्त्रिविक्रमो जनार्द्दन!" विष्णुसं० भाष्यधृतहरिवं०वाक्ये तन्नाम निरुक्तिर्दर्शिता। हेम०। २लोकत्रयक्रमणे पु० "त्रिविक्रमे यथा विष्णुः सर्वदैत्यवधे पुरा" रामा० ल० ७८ अ०।

**त्रिविद्य** पु०तिस्रो विद्याऽस्य। त्रिवेदज्ञे द्विजे।

**त्रिविध** त्रि० तिस्रो विधा अस्य। त्रिप्रकारे "अथ त्रिविध-

दुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः” सां० सू० । “त्रिविधदुःखञ्चाध्यात्मिकाधिभौतिकाधिदैविकरूपम् । “देवत्वं सात्त्विकं यान्ति मनुष्यत्वञ्च राजसाः । तिर्य्यक्त्वं तामसा नित्यमित्येषा त्रिविधा गतिः” मनुः । परद्रव्येष्वभिध्यानं मनसाऽनिष्टचिन्तनम् । वितथाभिनिवेशश्च त्रिविधं कर्म मानसम्” मनुः । नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमिष्यते” दक्षसं० । सात्त्विकादिभेदेन श्रद्धादित्रैविध्यं गीतायामुक्तं यथा

“त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा । सात्त्विकी राजसी चैव तामसी चेति तां शृणु । सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत । श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः । यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः । भूतान् प्रेतगणांश्चान्ये यजन्ते तामसा जनाः । अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः । दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः । कर्षयन्तः शरीरस्थं भूतग्राममचेतसः । मां चैवान्तःशरीरस्थं तान् विद्ध्यासुरनिश्चयान् । आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः । यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु । आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्द्धनाः । रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः । कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः । आहारा राजसस्येष्टा दुःखशोकामयप्रदाः । यातयामं गतरसं पूतिपर्य्युषितं च यत् । उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् । अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते । यष्टव्यमेवेति मनः समाधाय स सात्त्विकः । अभिसन्धाय तु फलं दम्भार्थमपि चैव यत् । इज्यते भरतश्रेष्ठ ! तं यज्ञं विद्धि राजसम् । विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् । श्रद्धाविरहितं यज्ञं तामसं परिचक्षते । देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् । ब्रह्मचर्य्यमहिंसा च शारीरं तप उच्यते । अनुद्वेगकरं वाक्यं सत्यं प्रियहितञ्च यत् । स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते । मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः । भावसंशुद्धिरित्येतत्तपो मानसमुच्यते । श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः । अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते । सत्कारमानपूजार्थं तपो दम्भेन चैव यत् । क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् । मूढग्राहेणात्मनो यत् पीड़या क्रियते तपः । परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् । दातव्यमिति यद्दानं दीयतेऽनुपकारिणे । देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् । यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः । दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् । अदेशकाले यद्दानमपात्रेभ्यश्च दीयते । असत्कृतमवज्ञातं तत्तामसमुदाहृतम् । ओँ तत्सदिति निर्द्देशो ब्रह्मणस्त्रिविधः स्मृतः । ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा । तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः । प्रवर्त्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् । तदित्यनभिसन्धाय फलं यज्ञतपःक्रियाः । दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः । सद्भावे साधुभावे च सदित्येतत् प्रयुज्यते । प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ ! युज्यते । यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते । कर्म चैव तदर्थीयं सदित्येवाभिधीयते । अश्रद्धया हुतं दत्तं तपस्तप्तं कृतञ्च यत् । असदित्युच्यते पार्थ ! न च तत् प्रेत्य नो इह” १७अ० ।

“सन्न्यासस्य महाबाहो ! तत्त्वमिच्छामि वेदितुम् । त्यागस्य च हृषीकेश ! पृथक् केशिनिसूदन !। भगवानुवाच । काम्यानां कर्मणां न्यासं सन्न्यासं कवयो विदुः । सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः । त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः । यज्ञदानतपः कर्म न त्याज्यमिति चापरे । निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ! । त्यागो हि पुरुषव्याघ्र ! त्रिविधः संप्रकीर्त्तितः । यज्ञदानतपःकर्म न त्याज्यं कार्य्यमेव तत् । यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् । एतान्यपि तु कर्म्माणि सङ्गं त्यक्त्वा फलानि च । कर्त्तव्यानीति मे पार्थ ! निश्चितं मतमुत्तमम् । नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते । मोहात्तस्य परित्यागस्तामसः परिकीर्त्तितः । दुःखमित्येव यत् कर्म कायक्लेशभयात्त्यजेत् । स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् । कार्य्यमित्येव यत् कर्म नियतं क्रियतेऽर्जुन ! । सङ्गं त्यक्त्वा फलञ्चैव स त्यागः सात्त्विको मतः । न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते । त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः । न हि देहभृता शक्यं त्यक्तुं कर्म्माण्यशेषतः । यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते । अनिष्टमिष्टं मिश्रञ्च त्रिविधं कर्मणः फलम् । भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् । पञ्चैमानि महाबाहो ! कारणानि निबोध मे । सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ।

अधिष्ठानं तथा कर्त्ता करणञ्च पृथग्विधम्। विविधाश्च पृथक् चेष्टा दैवं चैवात्र पञ्चमम्। शरीरवाङ्मनोभिर्यत् कर्म प्रारभते नरः। न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः। तत्रैवं सति कर्त्तारमात्मानं केवलन्तु यः। पश्यत्यकृतबुद्धित्वान्न पश्यति स दुर्मतिः। यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते। हत्वापि स इमांल्लोकान् न हन्ति न निबध्यते। ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना। करणं कर्म कर्त्तेति त्रिविधः कर्मसंग्रहः। ज्ञानं कर्म च कर्त्ता च त्रिधैव गुणभेदतः। प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि। सर्वभूतेषु येनैकं भावमव्ययमीक्षते। अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम्। पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान्। वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम्। यत्तु कृत्स्नवदेकस्मिन् कार्य्ये सक्तमहैतुकम्। अतत्त्वार्थवदल्पञ्च तत्तामसमिति स्मृतम्। नियतं सङ्गरहितमरागद्वेषतः कृतम्। अफलप्रेप्सुना कर्म यत्तत् सात्त्विकमुच्यते। यत्तु कामेप्सुना कर्म साहङ्कारेण वा पुनः। क्रियते बहुलायासं तद्राजसमुदाहृतम्। अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम्। मोहादारभ्यते कर्म यत्तत्तामसमुच्यते। मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः। सिद्ध्यसिद्ध्योर्निर्विकारः कर्त्ता सात्त्विक उच्यते। रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः। हर्षशोकान्वितः कर्त्ता राजसः परिकीर्त्तितः। अयुक्तः प्राकृतः स्तब्धः शठो नैकृतिकोऽलसः। विषादी दीर्घसूत्री च कर्त्ता तामस उच्यते। बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु। प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय!। प्रवृत्तिञ्च निवृत्तिञ्च कार्य्याकार्य्ये भयाभये। बन्धं मोक्षञ्च या वेत्ति बुद्धिः सा पार्थ! सात्त्विकी। यया धर्ममधर्मञ्च कार्य्यञ्चाकार्य्यमेव च। अयथावत् प्रजानाति बुद्धिः सा पार्थ! राजसी। अधर्मं धर्ममिति या मन्यते तमसावृता। सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ! तामसी। धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः। योगेनाव्यभिचारिण्या धृतिः सा पार्थ! सात्त्विकी। यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन!। प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ! राजसी। यया स्वप्नं भयं शोकं विषादं मदमेव च। न विमुञ्चति दुर्मेधा धृतिः सा पार्थ! तामसी। सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ!। अभ्यासाद्रमते यत्र दुःखान्तञ्च निगच्छति। यत्तदग्रे विषमिव परिणामेऽमृतोपमम्। तत् सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम्। विषयेन्द्रियसंयोगात् यत्तदग्रेऽमृतोपमम्। परिणामे विषमिव तत् सुखं राजसं स्मृतम्। यदग्रे चानुबन्धे च सुखं मोहनमात्मनः। निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम्। न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः। सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः" १८अ०। त्रिविधार्थश्च विवृतोऽर्थशब्दे २६७ पृ० उक्तः। अन्यस्य त्रैविध्यं यथायथं यथास्थाने उक्तं वक्ष्यते च। उत्पातशब्दे उत्पातत्रैविध्यमुक्तम्। तस्य भावः ष्यञ्। त्रैविध्य त्रिप्रकारत्वे "एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते" भाषा०। "त्रैविध्यादियमर्थानां प्रत्येकं त्रिविधा मता" सा० द०।

**त्रिविष्टप** न० विशन्त्यस्मिन् सुकृतिनः विश—कपन् तुट् च त्वञ्च। "विटपविष्टपविशिपोलपाः" उणा० उज्ज्वलदत्तेन विष्टपेत्यत्र पिष्टपेति पठितम्। अन्ये तत्र दन्त्योष्ठ्यादितया पेठुः। "तत्र प्रमाणस्य विष्टपमित्यादिप्रयोगात् "विष्टपं भुवनं जगत्" अमरग्रन्थे विष्टपेति पाठस्य क्षीरस्वामिप्रभृतिसम्मतत्वाच्च। तृतीयं विष्टपम् वृत्तौ त्रिभागवत् संख्याशब्दस्य पूरणार्थत्वम्। १स्वर्गे अमरटीकायां स्वामी। "त्रिविष्टपस्येव पतिं जयन्तः" रघुः। "स्वर्गं त्रिविष्टपं प्राप्य धर्मराजो युधिष्ठिरः" भा० स्व० १अ०। समा० द्वि०। २त्रिभुवने न०

**त्रिविष्टपसद्** पु० त्रिविष्टपे स्वर्गे सीदति सद—क्विप्। देवे हला०।

**त्रिविष्टब्ध** न० त्रीणि विष्टब्धानि यत्र। त्रिदण्डरूपे अयष्टमलये "य इमां कुण्डिकां भिन्द्यात्त्रिविष्टब्धं च यो हरेत्। वासश्चापहरेत् तस्मिन् कथं ते मानसं भवेत्"। "त्रयीञ्च नाम वार्त्ताञ्च त्यक्त्वा पुत्रान् व्रजन्ति ये। त्रिविष्टब्धञ्च वासश्च प्रतिगृह्णन्त्यबुद्धयः" भा० शा० १८ अ०।

**त्रिविस्त** त्रि० त्रीणि विस्तानि स्वर्णकर्षमूल्यान्यर्हति ठक् तस्य वा लुक्। स्वर्णकर्षत्रयमूल्यार्हे। लुगभावे त्रैविस्तिक तत्रार्थे त्रि०।

**त्रिविस्तीर्ण** पु० त्रिभिः विस्तीर्णः। शुभलक्षणभेदान्विते पुरुषे। "त्रिपृथुर्गुणगम्भीरो द्वात्रिंशल्लक्षणान्वित" उपक्रमे "ललाटकटिवक्षोभिस्त्रिविस्तीर्णो यथाह्यादौ। सर्वतेजोऽतितिमैश्वर्यं तथा प्राप्स्यति नान्यथा" काशी० ११अ०। त्रिपृथुशब्दोऽप्यत्र दृ० स० ६८ अ० तु "चरो

ललाटं यदनञ्च पुंसां विस्तीर्णमेतत्त्रितयं प्रशस्तम्” विस्तीर्णचतुष्कप्रशस्ततयोक्तमिति भेदः।[माके राजनि०।

**त्रिवीज** पु० त्रीणि त्रीणि वीजानि प्रतिफलं यस्य। श्यामा-

**त्रिवृत्(ता)** पु० त्रीन् अवयवान् वृणोति वृ—क्विप् त्रिभिरवयवैर्वृता वा। १(तेओड़ि) ओषधिभेदे, अमरः “श्वेता त्रिवृद्रोचनी स्यात् स्वादुरुष्णा समीरहृत्। रूक्षा पित्तज्वरश्लेष्मपित्तशोथोदरापहा। श्वेतकृष्णप्रभेदेन द्विविधा त्रिवृदुच्यते। श्यामा त्रिवृत्ततो हीनगुणा तीव्रा विरेचिका। मूर्च्छादाहमदभ्रान्तिकण्ठोत्कर्षणकारिणी” भावप्र०। वर्त्तनं वृत् त्रिः तिस्रः वृतो यत्र। एकस्य त्रिशब्दस्य त्रिवारे त्रिसंख्यान्विते च वृत्तिः तन्त्रोच्चारणात्। २त्रिधात्रिगुणिते त्रि० “विप्रस्योर्द्ध्ववृतं त्रिवृत्” इति मनुः त्रिगुणितसूत्रत्रयस्यैवोपवीतरूपत्वात्तथार्थता। त्रिर्वर्त्तते वृत-क्विप्। मिश्रितेषु ३तेजोजलान्नेषु च। “तासां त्रिवृतं त्रिवृतमेकैकां करवाणि” छा०उ० ४त्रिगुणिते “यजेत वाश्वमेधेन स्वर्जिता गोसवेन वा। अभिजिद्विश्वजिद्भ्यां वा त्रिवृतार्ग्निष्टुतापि वा” मनुः। त्रिभिर्ऋग्यजुःसामभिर्वर्त्तते वृत—कर्त्तरि क्विप्। ५यज्ञे पु०। “यः सुपर्णो यजुर्नाम छन्दोगात्रस्त्रिवृच्छिराः” भा० शा० ४७ अ०। “त्रिवृत् यज्ञः शिरोऽस्य” नीलक० त्रिस्त्रिर्वर्त्तते भुजगभस्य त्रिशब्दस्य वीप्सार्थत्वम्। ६ऋग्विशेषाणां नवके। यथोक्तं सामसंहिताभाष्ये

“लौकिको वाक्यशेषार्थस्त्रिवृदादेः समत्वतः। उभौ विध्यर्थवाक्यैकवाक्यत्वादर्थवादानिमः। “त्रिवृद्वहिष्पवमानम्” इति श्रुतौ त्रिवृच्छब्दस्य त्रैगुण्यं लोकसिद्धोऽर्थः वाक्यशेषादृक्-त्रयात्मकेषु सूक्तेष्ववस्थितानां वहिष्पवमानात्मक-स्तोत्र-निष्पादन-क्षमाणाम् “उपास्मै गायता नरः (उ १प्र०१२, १सू०) इत्यादीनामृचां नवकमर्थः तत्र धर्मनिर्णये वेदस्य प्रबलत्वेऽपि पद-पदार्थनिर्णये लोकवेदयोः समान-बलवत्त्वात् उभावर्थौ विकल्पेन ग्रहीतव्यौ, इति चेत्—नैवम्, लौकिकार्थ-स्वीकार पक्षे विधिवाक्ये त्रैगुण्यमर्थः, अर्थवाद-वाक्ये स्तोत्रियाणामृचां नवकम्, इत्येवं विध्यर्थवादयोर्वैयधिकरण्यादेकवाक्यत्वं न स्यात्, अतः एकवाक्यत्वाय स्तोत्रियाणां नवकमेव विधिवाक्ये नियतोऽर्थः”।

**त्रिवृत्करण** न० ६त०। तेजो जलान्नानां त्र्यात्मककरणे तत्प्रकारश्च छा० उ० भाष्ये दर्शितो यथा

“तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति सेयं देवतेमास्तिस्रो देवता अनेनैव जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत्। तासां त्रिवृतं त्रिवृतमेकैकामकरोद्यथा नु खलु सोम्येमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति। यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां,यत्कृष्णं तदन्नस्यापागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्। यदादित्यस्य रोहितं रूपं तेजसस्तद्रूपं, यच्छुक्लं तदपां, यत्कृष्णं तदन्नस्यापागादादित्यादादित्यत्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्। यच्चन्द्रमसो रोहितं रूपं, तेजसस्तद्रूपं यच्छुक्लं तदपां, यत्कृष्णं तदन्नस्यापागाच्चन्द्राच्चन्द्रत्व वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्। यद्विद्युतो रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागाद्विद्युतो विद्युत्त्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्।

“सेयं तिस्रो देवता अनुप्रविश्य स्वात्मावस्थे वीजभूतेऽव्याकृते नामरूपे व्याकरवाणीतीक्षित्वा तासाञ्च तिसृणां देवतानामेकैकां त्रिवृतं त्रिवृतं करवाणि एकैकस्याः त्रिवित्करणे एकैकस्याः प्राधान्यं द्वयोर्द्वयोर्गुणभावोऽन्यथा हि रज्ज्वा इवैकमेव त्रिवृत्करणं स्यात्। न तु तिसृणां पृथक् त्रिवृत्करणमिति। एवं हि तेजोबन्नानां पृथङ्नामप्रत्ययलाभः स्यात्तेज इदमिमा आपोऽन्नमिदमिति च। पृथङ्नामप्रत्ययलाभे देवातानां सम्यग्व्यवहारस्य प्रसिद्धिः प्रयोजनं स्यात्। एवमीक्षित्वा सेयं देवतेमास्तिस्रो देवता अनेनैव यथोक्तेनैव जीवेन सूर्य्यविम्बवदन्तः प्रविश्य वैराजं पिण्डं प्रथमं देवतादीनां च पिण्डाननुप्रविश्य यथासङ्कल्पमेव नामरूपे व्याकरोदसौनामायमिदंरूप इति तासाञ्च देवतानां गुणप्रधानभावेन त्रिवृतं त्रिवृतमेकैकामकरोत् कृतवती देवता। तिष्ठतु तावद्देवतादिपिण्डानां नामरूपाभ्यां व्याकृतानां, तेजोबन्नमयत्वेन त्रिधात्वं यथा तु खलु बहिरिमाः पिण्डेभ्यस्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति तन्मे मम निगदतो विजानीहि विस्पष्टमवधारयोदाहरणतः। यत्तद्देवतानां त्रिवृत्करणमुक्तं तस्यैवोदाहरणमुच्यते। उदाहरणं नामैकदेशप्रसिद्ध्याशेषप्रसिद्ध्यर्थमुदाह्रियत इति। तदेतदाह यदग्नेः त्रिवृत्कृतस्य रोहितं रूपं प्रसिद्धं लोके तदत्रिवृत्कृतस्य तेजसो रूपमिति विद्धि। तथा च यच्छुक्लं रूपमग्नेरेव तदपामत्रिवृत्कृतानाम्

यत्कृष्णं तस्यैवाग्ने रूपं तदन्नस्य पृथिव्या अतिवृत्कृताया इति विद्धि। तत्रैवं सति रूपत्रयव्यतिरेकेणाग्निरिति यन्मन्यसे त्वं तस्याग्नेरग्नित्वमिदानीमपागादपगतम्। प्राक् प्रत्ययविवेकविज्ञानाद्याग्निबुद्धिरासीत्ते जसाग्निबुद्धिरपगताग्निशब्दश्चेत्यर्थः। यथा दृश्यमान रक्तोपधानसंयुक्तः स्फटिको गृह्यमाणः पद्मरागोऽयमिति शब्दबुद्ध्योः प्रयोजको भवति प्रागुपधानस्फटिकयोर्विवेकविज्ञानात्, तद्विवेकविज्ञाने तु पद्मरागशब्दबुद्धी निवर्त्तेते तद्विवेकविज्ञातुस्तद्वत्। ननु किमत्र बुद्धिशब्दकल्पनया क्रियते प्राक् प्रत्ययविवेककरणादग्निरेवासीत्तदग्नेरग्नित्वं रोहितादिरूपविवेककरणादपागादिति युक्तम्। यथा तन्त्वपकर्षणे पटाभावः। नैवं बुद्धिशब्दमात्रमेव ह्यग्निर्यत आह वाचारम्भणमग्निर्नाम विकारो नामधेयं नाममात्रमित्यर्थोऽतोऽग्निबुद्धिरपि मृषैव। तर्हि किं तत् सत्यं? त्रीणि रूपाणीत्येव सत्यं नाणुमात्रमपि रूपत्रयव्यतिरेकेण सत्यमस्तीत्यवधारणार्थः। तथा यदादित्यस्य यच्चन्द्रमसो यद्विद्युत इत्यादि समानम्। ननु यथा तु खलु सोम्येमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीत्युक्ता तेजस एव चतुर्भिरप्युदाहरणैरग्न्यादिभिस्त्रिवृत्करणं दर्शितं नावन्नयोरुदाहरणं दर्शितं त्रिवृत्करणे। नैष दोषः। अबन्नविषयाण्यप्युदाहरणान्येवमेव च द्रष्टव्यानीति मन्यते श्रुतिः। तेजस उदाहरणमुपलक्षणार्थम्, रूपवत्त्वात् स्पष्टार्थत्वोपपत्तेश्च। गन्धरसयोरनुदाहरणं त्रयाणामसम्भवात् न हि गन्धरसौ तेजसि स्तः। स्पर्शशब्दयोरनुदाहरणं विभागेन दर्शयितुमशक्यत्वात्। यदि सर्वं जगत्त्रिवृत्कृतमित्यग्न्यादिवत्त्रीणि रूपाणीत्येव सत्यमग्नेरग्नित्ववदपागाज्जगतो जगत्त्वम्। तथाऽन्नस्यापि अप्शुङ्गत्वादाप इत्येव सत्यं वाचारम्भणमात्रमन्नम्। तथापामपि तेजःशुङ्गत्वाद्वाचारम्भणत्वे तेज इत्येव सत्यम्। तेजसोऽपि सच्छुङ्गत्वाद्वाचारम्भणत्वं, सदित्येव सत्यमित्येषोऽर्थो विवक्षितः। ननु वाय्वन्तरिक्षे त्वत्रिवृत्कृते तेजःप्रभृतिष्वनन्तर्भूतत्वादविशिष्येते। एवं गन्धरसशब्दस्पर्शाश्चावशिष्टा इति। कथं? सतो विज्ञानेन सर्वमन्यदविज्ञातं भवेत्तद्विज्ञाने वा प्रकारान्तरं वाच्यम्। नैष दोषो रूपवद्द्रव्ये सर्वस्य दर्शनात्। कथं, तेजसि तावद्रूपवति शब्दस्पर्शयोरप्युपलम्भाद्वाय्वन्तरिक्षयोस्तत्र स्पर्शशब्दगुणवतोः सद्भावोऽनुमीयते। तथावन्नयो रूपवतो रसगन्धान्तर्भाव इति। रूपवतां त्रयाणां तेजोऽबन्नानां त्रिवृत्करणप्रदर्शनेन सर्वं तदन्तर्भूतं सद्विकारत्वात्त्रीण्येव रूपाणि विज्ञातं मन्यते श्रुतिः। न हि मूर्त्तं रूपवत् द्रव्यं प्रत्याख्याय वाय्वाकाशयोस्तद्गुणयोर्गन्धरसयोर्वा ग्रहणमस्ति। अथ वा रूपवतामपि त्रिवृत्करणं प्रदर्शनार्थमेव मन्यते श्रुतिः यथा तु त्रिवृत्कृते त्रीण्येव रूपाणीत्येव सत्यं तथा पञ्चीकरणेऽपि समानो न्याय इत्यतः सर्वस्य सद्विकारत्वात्सतो विज्ञानेन सर्वमिदं विज्ञातं स्यात्सदेकमेवाद्वितीयं सत्यमिति सिद्धमेव भवति” भाष्यम्। क्षित्यादित्रयाणां प्रत्येकं द्वेधा विभागे द्वितीयार्द्धस्य पुनर्द्वेधा विभागे च एकैकस्मिन् स्वस्वेतरद्वितीयांशार्द्धयोजनरूपं पञ्चीकरणवत् त्रिवृत्करणम् “द्विधा विधाय चैकैकं द्विधा च प्रथमं पुनः। स्वस्वेतरद्वितीयांशैर्योजनात् त्र्यात्मकाश्च ते” इत्युक्तरीत्या कल्प्यम्।

**त्रिवृत्पर्णी** स्त्री त्रिषु दोषेषु वर्त्तते नाशनाय त्रिवृत् त्रिदोषघ्नम् पर्णमस्याः। (हेलञ्चा) हिलमोचिकायाम् शब्दच०।

**त्रिवृत्ता** स्त्री त्रिरावृत्ता। १त्रिवृति अमरः। २त्रिरावृत्ते त्रिगुणे त्रि० “त्रिवृत्ता (मेखला) ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा” मनुः।

**त्रिवृत्तिका** स्त्री तिस्रः वृत्तयोऽस्याः कप्। १त्रिवृति राजनि०। २त्रिधावृत्तियुक्ते त्रि०।

**त्रिवृद्वेद** पु० ऋगाद्यात्मना त्रिवर्त्तते त्रिवृत् कर्म्म०। १त्रय्यां वेदत्रये तदुत्पन्ने २प्रणवे च। “ऋचो यजूंषि चान्यानि सामानि विविधानि च। एष (प्रणवः) ज्ञेयस्त्रिवृद्वेदो यो वेदैनं स वेदवित्। आद्यं यत् त्र्यक्षरं ब्रह्म त्रयी यस्मिन् प्रतिष्ठिता। स गुह्योऽन्यस्त्रिवृद्वेदो यस्तं वेद स वेदवित्” मनुः।

**त्रिवे(णि)णी** स्त्री तिस्रः वेणयः प्रवाहाः विच्छिन्नाः संयुक्ता वा यत्र ततः इदन्तत्वात् वा ङीप्। गङ्गायमुनासरस्वतीनां विच्छिन्नप्रवाहे १दक्षिणप्रयागे युक्तप्रवाहे २प्रयागे तीर्थभेदे च दक्षिणप्रयागसीमा च यथा “प्रद्युम्नस्य ह्रदात् याम्ये सरस्वत्यास्तथोत्तरे। तद्दक्षिणप्रयागन्तु गङ्गातो यमुना गता” प्रा० त०। त्रिवेण्या इदम् शिवा० अण्। त्रैवेण। तदीये त्रि०।

**त्रिवेणु** पु० त्रयो वेणवो यत्र। रथमुखस्थेऽवयवभेदे शब्दार्थचि०। “अश्वांस्त्रिवेणुं तल्पञ्च तिलशोव्यधमच्छरैः” भा० व० २४१अ०।

**त्रिवेद** पु० त्रीन् वेदान् वेत्ति विद्—अण् उप० स० त्रयो वेदा

अधीतत्वेन सन्त्यस्य कच् वा। १वेदत्रयवेत्तरि। "नाय न्द्रितस्त्रिवेदोऽपि सर्वाशी सर्वविक्रयी" मनुः ततः स्वार्थे ब्राह्म० ष्यञ्। त्रैवेद्य तदर्थे "त्रैवेद्याः शुचयोदान्ताः" गीता। त्रिगुणितो वेदः श०त०। २वेदत्रये ३तद्विहितकर्मणि च "त्रिवेदसंयोगाच्च" कात्या० श्रौ० २५।१४।३७। "वेदत्रयविहितकर्मयोगो ब्राह्मणः"कर्कः।

त्रिवेला स्त्री तिस्रो वेला सीमानोऽस्याम्। त्रिवृत्ति (तेओड़ि) राजनि०।

त्रिशक्ति स्त्री त्रिगुणिता शक्तिः। १कालीतारात्रिपुराकृपे तन्त्रोक्ते देवीत्रये "त्रिशक्तिविषये देवि! क्रमदीक्षा प्रकीर्तिता" तन्त्रसा० इच्छाज्ञानक्रियारूपे ऐश्वरे २शक्तित्रये प्रभावोत्साहमन्त्रजे राज्ञां ३शक्तित्रये। ब० श्रौ०। ४त्रिगुणात्मके प्रधाने च।[१परमेश्वरे २विजिगीषुरूपे च।

त्रिशक्तिधृत् पु०त्रिशक्तिं इच्छादिशक्तित्रयं धरति धृ—क्विप्।

त्रिशङ्कु पु० त्रयः शङ्कव इव यत्र। १मार्ज्जारे २शलभे मेदि०। ३चातकखगे शब्दच०। ४खद्योते शब्दमा०। ५सूर्यवंश्ये नृपभेदे। तस्य नामनिरुक्तिः हरिवं०१३अ० दर्शिता यथा

"अविद्यमाने मांसे तु वशिष्ठस्य महात्मनः। सर्वकामदुघान्दोग्ध्रीं ददर्श स नृपात्मजः। तां वै क्रोधाच्च मोहाच्च श्रमाच्चैव क्षुधार्दितः। दशधर्मगतो राजा जघान जनमेजय!। मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः। त्वरमाणश्च भीरुश्च लुब्धः कामी च ते दश। तच्च मांसं स्वयञ्चैव विश्वामित्रस्य चात्मजान्। भोजयामास तच्छ्रुत्वा वशिष्ठोऽप्यस्य चुक्रुधे। क्रुद्धस्तु भगवान् वाक्यमिदमाह नृपात्मजम्। वशिष्ठ उवाच। पातयेयमहं क्रूर! तव शङ्कुमसंशयम्। यदि ते द्वाविमौ शङ्कू न स्यातां वै पुनः कृतौ। पितुश्चापरितोषेण गुरोर्दोग्ध्रीवधेन च। अप्रोक्षितोपयोगाच्च त्रिविधस्ते व्यतिक्रमः। वैशम्पायन उवाच। एवं त्रीणस्य शङ्कूनि तानि दृष्ट्वा महातपाः। त्रिशङ्कुरिति होवाच त्रिशङ्कुस्तेन स स्मृतः"। तस्य सशरीरस्वर्गयानकथा रामा०बा०५७अ०

"सोऽभिगम्य महात्मानः सर्वानेव गुरोः सुतान्। अभिवाद्यानुपूर्व्येण ह्रिया किञ्चिदवाङ्मुखः। अब्रवीत् स महात्मानः सर्वानेव कृताञ्जलिः। शरणं वः प्रपन्नोऽहं शरण्यान् शरणं गतः। प्रत्याख्यातो हि भद्रं वो वशिष्ठेन महात्मना। यष्टुकामो महायज्ञं तदनुज्ञातुमर्हथ। गुरुपुत्त्रानहं सर्वान्नमस्कृत्य प्रसादये। शिरसा प्रणतो याचे ब्राह्मणान् तपसि स्थितान्। ते मां भवन्तः सिद्ध्यर्थं याजयन्तु समाहिताः। सशरीरो यथाहं वै देवलोकमवाप्नुयाम्। प्रत्याख्यातो वशिष्ठेन गतिमन्यां तपोधनाः!। गुरुपुत्त्रानृते सर्वान्नाहं पश्यामि काञ्चन। इक्ष्वाकूणां हि सर्वेषां पुरोधाः परमा गतिः। तस्मादनन्तरं सर्वे भवन्तो दैवतं मम"।

"ततस्त्रिशङ्कोर्वचनं श्रुत्वा क्रोधसमन्वितम्। ऋषिपुत्त्रशतं राम! राजानमिदमब्रवीत्। प्रत्याख्यातोऽसि दुर्बुद्धे! गुरुणा सत्यवादिना। तं कथं समतिक्रम्य शाखान्तरमुपेयिवान्। इक्ष्वाकूणां हि सर्वेषां पुरोधाः परमा गतिः। न चातिक्रमितुं शक्यं वचनं सत्यवादिनः। अशक्यमिति होवाच वशिष्ठो भगवानृषिः। तं वयं वै समाहर्तुं क्रतुं शक्ताः कथञ्चन। बालिशस्त्वं नरश्रेष्ठ! गम्यतां स्वपुरं पुनः। याजने भगवान् शक्तस्त्रैलोक्यस्यापि पार्थिव!। अवमानं कथं कर्तुं तस्य शक्ष्यामहे वयम्। तेषां तद्वचनं श्रुत्वा क्रोधपर्याकुलाक्षरम्। स राजा पुनरेवैतानिदं वचनमब्रवीत्। प्रत्याख्यातो भगवता गुरुपुत्त्रैस्तथैव हि। अन्यां गतिं गमिष्यामि स्वस्ति वोऽस्तु तपोधनाः!। ऋषिपुत्त्रास्तु तच्छ्रुत्वा वाक्यं घोराभिसंहितम्। शेपुः परमसंक्रुद्धाश्चण्डालत्वं गमिष्यसि। इत्युक्त्वा ते महात्मानो विविशुः स्वं स्वमाश्रमम्। अथ रात्र्यां व्यतीतायां राजा चण्डालतां गतः। नीलवस्त्रधरो नीलः परुषो ध्वस्तमूर्द्धजः। चितामाल्याङ्गरागश्च आयसाभरणोऽभवत्। तं दृष्ट्वा मन्त्रिणः सर्वे त्यज्य चण्डालरूपिणम्। प्राद्रवन् सहिता राम! पौरा येऽस्यानुगामिनः। एको हि राजा काकुत्स्थ! जगाम परमात्मवान्। दह्यमानो दिवारात्रं विश्वामित्रं तपोधनम्। विश्वामित्रस्तु तं दृष्ट्वा राजानं विफलीकृतम्। चण्डालरूपिणं राम! मुनिः कारुण्यमागतः। कारुण्यात् स महातेजा वाक्यं परमधार्म्मिकः!। इदं जगाद भद्रन्ते राजानं घोरदर्शनम्। किमागमनकार्य्यन्ते राजपुत्र! महाबल!। अयोध्याधिपते! वीर! शापाच्चण्डालतां गतः। अथ तद्वाक्यमाकर्ण्य राजा चण्डालतां गतः। अब्रवीत् प्राञ्जलिर्वाक्यं वाक्यज्ञो वाक्यकोविदम्। प्रत्याख्यातोऽस्मि गुरुणा गुरुपुत्त्रैस्तथैव च। अनवाप्यैव तं कामं मया प्राप्तो विपर्य्ययः। सशरीरो दिवं यायामिति मे सौम्यदर्शन!। मया चेष्टं क्रतुशतं तथा नावाप्यते फलम्। अनृतं

नोक्तपूर्वं मे न च वक्ष्ये कदाचन। कृच्छ्रेष्वपि गतः सौम्य! क्षत्रधर्मेण ते शपे। यज्ञैर्बहुविधैरिष्टं प्रजाधर्मेण पालिताः। गुरवश्च महात्मानः शीलवृत्तेन तोषिताः। धर्मे प्रयतमानस्य यज्ञं चाहर्त्तुमिच्छतः। परितोषं न गच्छन्ति गुरवो मुनिपुङ्गव!। दैवमेव परं मन्ये पौरुषं तु निरर्थकम्। दैवेनाक्रम्यते सर्वं दैवं हि परमा गतिः। तस्य मे परमार्त्तस्य प्रसादमभिकाङ्क्षतः। कर्त्तुमर्हसि भद्रन्ते दैवोपहतकर्म्मणः। नान्यं गतिं गमिष्यामि नान्यच्छरणमस्ति मे। दैवं पुरुषकारेण निवर्त्तयितुमर्हसि"५८ स०।

"उक्तवाक्यं तु राजानं कृपया कुशिकात्मजः! अब्रवीत् मधुरं वाक्यं साक्षाच्चण्डालताङ्गतम्। इक्ष्वाको! स्वागतं वत्स! जानामि त्वां सुधार्म्मिकम्। शरणं ते प्रदास्यामि मा भैषीर्नृपपुङ्गव!। अहमामन्त्रये सर्व्वान्महर्षीन् पुण्यकर्म्मणः। यज्ञसाह्यकरान् राजंस्ततो यक्ष्यसि निर्वृतः। गुरुशापकृतं रूपं यदिदं त्वयि वर्त्तते। अनेन सह रूपेण सशरीरो गमिष्यसि। हस्तप्राप्तमहं मन्ये स्वर्गं तव नराधिप!। यस्त्वं कौशिकमागम्य शरण्यं शरणागतः। एवमुक्त्वा महातेजाः पुत्रान् परमधार्म्मिकान्। व्यादिदेश महाप्राज्ञान् यज्ञसम्भारकारणात्। सर्व्वान् शिष्यान् स चाहूय वाक्यमेतदुवाच ह। सर्वान्ऋषीन् सवाशिष्ठानानयध्वं ममाज्ञया। सशिष्यान् सुहृदश्चैव सर्त्विजः सुबहुश्रुतान्। यदन्यो वचनं ब्रूयान्मद्वाक्यबलनोदितः। तत्सर्वमखिलेनोक्तं ममाख्येयमनादृतम्। तस्य तद्वचनं श्रुत्वा दिशो जग्मुस्तदाज्ञया। आजग्मुरथ देशेभ्यः सर्वेभ्यो ब्रह्मवादिनः। ते च शिष्याः समागम्य मुनिं ज्वलिततेजसम्। ऊचुश्च वचनं सर्वं सर्वेषां ब्रह्मवादिनाम्। श्रुत्वा ते वचनं सर्वे समायान्ति द्विजातयः। सर्वदेशेभ्य आगच्छन् वर्जयित्वा महोदयम्। वाशिष्ठं यच्छतं सर्वं क्रोधपर्य्याकुलाक्षरम्। यथाह वचनं सर्वं शृणु त्वं मुनिपुङ्गव!। क्षत्रियो याजको यस्य चण्डालस्य विशेषतः। कथं सदसि भोक्तारो हविस्तस्य सुरर्षयः। ब्राह्मणा वा महात्मानो भुक्त्वा चण्डालभोजनम्। कथं स्वर्गं गमिष्यन्ति विश्वामित्रेण पालिताः। एतद्वचनं नैष्ठुर्यमूचुः संरक्तलोचनाः। वाशिष्ठा मुनिशार्दूल! सर्वे सहमहोदयाः। तेषां तद्वचनं श्रुत्वा सर्वेषां मुनिपुङ्गवः। क्रोधसंरक्तनयनः सरोषमिदमब्रवीत्। यद्दूषयन्त्यदुष्टं मां तप उग्रं समास्थितम्। भस्मीभूता दुरात्मानो भविष्यन्ति न संशयः। अद्य ते कालपाशेन नीता वैवस्वतक्षयम्। सप्त जातिशतान्येव मृतपाः सम्भवन्तु ते। श्वमांसनियताहारा मुष्टिका नाम निर्घृणाः। विक्रियाश्च विरूपाश्च लोकाननुचरन्त्वमी। महोदयश्च दुर्बुद्धिर्मामदुष्यं ह्यदूषयत्। दूषितः सर्वलोकेषु निषादत्वं गमिष्यति। प्राणातिपातनिरतो निरनुक्रोशताङ्गतः। दीर्घकालं मम क्रोधात् दुर्गतिं वर्त्तयिष्यति। एतावदुक्त्वा वचनं विश्वामित्रो महातपाः। विरराम महातेजा ऋषिमध्ये महामुनिः" ५९ स०।

"तपोबलहतान् ज्ञात्वा वाशिष्ठान् समहोदयान्। ऋषिमध्ये महातेजा विश्वामित्रोऽभ्यभाषत। अयमिक्ष्वाकुदायादस्त्रिशङ्कुरिति विश्रुतः। धर्मिष्ठश्च वदान्यश्च मां चैव शरणं गतः। स्वेनानेन शरीरेण देवलोकजिगीषया। यथायं स्वशरीरेण देवलोकं गमिष्यति। तथा प्रवर्त्यतां यज्ञो भवद्भिश्च मया सह। विश्वामित्रवचः श्रुत्वा सर्व एव महर्षयः। ऊचुः समेताः सहसा धर्मज्ञा धर्मसंहितम्। अयं कुशिकदायादो मुनिः परमकोपनः। यदाह वचनं सम्यगेतत् कार्य्यं न संशयः। अग्निकल्पो हि भगवान् शापं दास्यति रोषतः। तस्मात् प्रवर्त्यतां यज्ञः सशरीरो यथा दिवि। गच्छेदिक्ष्वाकुदायादो विश्वामित्रस्य तेजसा। ततः प्रवर्त्यतां यज्ञः सर्वे समभितिष्ठत। एवमुक्त्वा च ऋषयः संजह्रुस्ताः क्रियास्तदा। याजकश्च महातेजा विश्वामित्रोऽभवत् क्रतौ। ऋत्विजश्चानुपूर्वेण मन्त्रवन्मन्त्रकोविदाः। चक्रुः सर्वाणि कर्माणि यथाकल्पं यथाविधि। ततः कालेन महता विश्वामित्रो महातपाः। चकारावाहनं तत्र भागार्थं सर्वदेवताः। नाभ्यागमंस्तदा तत्र भागार्थं तास्र देवताः। ततः कोपसमाविष्टो विश्वामित्रो महामुनिः। स्रुवमुद्यम्य सक्रोधस्त्रिशङ्कुमिदमब्रवीत्। पश्य मे तपसो वीर्य्यं स्वार्जितस्य नरेश्वर!। एष त्वां स्वशरीरेण नयामि स्वर्गमोजसा। दुष्प्रापं स्वशरीरेण स्वर्गं गच्छ नरेश्वर!। स्वार्जितं किञ्चिदप्यस्ति मया हि तपसः फलम्। राजंस्त्वं तेजसा तस्य सशरीरो दिवं व्रज। उक्तवाक्ये मुनौ तस्मिन् सशरीरो नरेश्वरः। दिवं जगाम काकुत्स्थ! मुनीनां पश्यतां तदा। स्वर्गलोकं गतं दृष्ट्वा त्रिशङ्कुं पाकशासनः। सह सर्वैः सुरगणै-

रिदं वचनमब्रवीत्। त्रिशङ्को! गच्छ भूयस्त्वं नास्ति स्वर्गकृतालयः। गुरुशापहतो मूढ! पत भूमिमवाक्शिराः। एवमुक्तो महेन्द्रेण त्रिशङ्कुरपतत् पुनः। विक्रोशमानस्त्राहीति विश्वामित्रं तपोधनम्। तच्छ्रुत्वा वचनं तस्य क्रोशमानस्य कौशिकः। रोषमाहारयत् तीव्रं तिष्ठ तिष्ठेति चाब्रवीत्। ऋषिमध्ये स तेजस्वी प्रजापतिरिवापरः। सृजन् दक्षिणमार्गस्थान् सप्तर्षीनपरान् पुनः। नक्षत्रवंशमपरमसृजत् क्रोधमूर्च्छितः। दक्षिणां दिशमास्थाय ऋषिमध्ये महायशाः। सृष्ट्वा नक्षत्रवंशञ्च क्रोधेन कलुषीकृतः। अन्यमिन्द्रं करिष्यामि लोको वा स्यादनिन्द्रकः। दैवतान्यपि स क्रोधात् स्रष्टुं समुपचक्रमे। ततः परमसम्भ्रान्ताः सर्षिसङ्घाः सुरासुराः। विश्वामित्रं महात्मानमूचुः सानुनयं वचः। अयं राजा महाभाग! गुरुशापपरिक्षतः। सशरीरो दिवं यातुं नार्हत्येव तपोधन!। तेषां तद्वचनं श्रुत्वा देवानां मुनिपुङ्गवः। अब्रवीत् सुमहद्वाक्यं कौशिकः सर्वदेवताः। सशरीरस्य भद्रं वस्त्रिशङ्कोरस्य भूपतेः। आरोहणं प्रतिज्ञातं नानृतं कर्त्तुमुत्सहे। स्वर्गोऽस्तु सशरीरस्य त्रिशङ्कोरस्य शाश्वतः। नक्षत्राणि च सर्वाणि मामकानि ध्रुवाण्युत। यावल्लोका धरिष्यन्ति तिष्ठन्त्वेतानि सर्वशः। मत्कृतानि सुराः सर्वे तदनुज्ञातुमर्हथ। एवमुक्ताः सुराः सर्वे प्रत्यूचुर्मुनिपुङ्गवम्। एवं भवतु भद्रन्ते तिष्ठन्त्वेतानि सर्वशः। गगने तान्यनेकानि वैश्वानरपथाद्बहिः। नक्षत्राणि मुनिश्रेष्ठ! तेषु ज्योतिःषु जाज्वलन्। अवाक्शिरास्त्रिशङ्कुश्च तिष्ठत्वमरसन्निभः। अनुयास्यन्ति चैतानि ज्योतींषि नृपसत्तमम्। कृतार्थं कीर्त्तिमन्तञ्च स्वर्गलोकगतं यथा। विश्वामित्रस्तु धर्म्मात्मा सर्वदेवैरभिष्टुतः। ऋषिमध्ये महातेजा वाढमित्येव देवताः। ततो देवा महात्मान ऋषयश्च तपोधनाः। जग्मुर्यथागतं सर्वे यज्ञस्यान्ते नरोत्तम!।" ६० स०

त्रिशङ्कोरपत्यम् अण्। त्रैशङ्कव हरिश्चन्द्रे "तस्य (त्रिशङ्कोः) सत्यरथा नाम पत्नी कैकयवंशजा। कुमारं जनयामास हरिश्चन्द्रमकल्मषम्। स वै राजा हरिश्चन्द्रस्त्रैशङ्कव इति स्मृतः" हरिवं० १२अ०। (हेमच० त्रिशङ्कुशब्दे दृश्यम्।

**त्रिशङ्कुज** पु० त्रिशङ्कोर्जायते जन—ड। हरिश्चन्द्रे नृपे

**त्रिशङ्कुयाजिन्** पु० त्रिशङ्कुं याजयति यज—णिनि। विश्वामित्रे हेमच० त्रिशङ्कुशब्दे दृश्यम्।

**त्रिशत** न० त्रिगुणितं शतम् शा० त०। त्रिगुणिते शते; "चतुर्विंशतिसंयुक्तं मण्डलं त्रिशतं स्मृतम्" कामन्दकी। "नरकं त्रिशतं प्राप्य स विष्ठामुपजीवति" भा० अनु० १०१ अ०। समा० द्वि० ङीप्। २शतत्रये स्त्री।

**त्रिशरण** न० त्रीणि शरणान्यस्य। बुद्धदेवे त्रिका०।

**त्रिशर्करा** स्त्री त्रिगुणिता शर्करा शा० त०। मिलितगुडोत्पन्नाहिमोत्था मधुरेति मधुरत्रिके राजनि०।

**त्रिशला** स्त्री अर्हन्मातृभेदे हेमच०।

**त्रिशाख** त्रि० तिस्रः शाखा अग्राणि यस्य। शिखाकारावयवयुते। "कृत्वा त्रिशाखां भ्रुकुटीं ललाटे" भा० कर्ण० ८५अ०। [बिल्वे राजनि०।

**त्रिशाखपत्र** पु० तिस्रः शाखा अस्य तादृशं पत्रं यस्य।

**त्रिशाण** त्रि० त्रयः शाणाः परिमाणमस्य तैः क्रीतं वा अण् तस्य वा लुक्। १त्रिशाणपरिमिते २तत्क्रीते च। पक्षे न लुक्। त्रैशाण तत्रार्थे पक्षे यत् त्रिशाण्य तत्रार्थे एवं द्विशाणद्विशाण्य द्वैशाण द्विशाणक्रीते तत्परिमिते त्रि०

**त्रिशालक** न० तिस्रः शाला यत्र वा कप्। हिरण्यनाभाख्ये वास्तुभेदे तत्फलादिकं वृ० स० ५३ उक्तं यथा "उत्तरशालाहीनं हिरण्यनाभं त्रिशालकं धन्यम्। प्राक्शालया वियुक्तं सुक्षेत्रं वृद्धिदं वास्तु। याम्याहीनं चुल्ली त्रिशालकं वित्तनाशकरमेतत्। पक्षघ्नमपरयावर्जितम् सुतध्वंसवैरकरम्"।

**त्रिशिख** न० तिस्रः शिखा अस्य। १त्रिशूले अस्त्रभेदे २किरीटे च हेमच०। ३शिखात्रययुक्ते त्रि०। "त्रिशिखां भ्रुकुटिञ्चास्य ददृशुर्दानवा रणे" हरिवं० २२५ अ०। "त्रिशिखां भ्रुकुटीं कृत्वा सन्दश्य दशनच्छदम्" भा० आ० १६२अ०। ४रावणपुत्रे राक्षसभेदे पु०

**त्रिशिखिदला** स्त्री तिस्रः शिखाः सन्त्यत्र इनि तादृशं दलमस्य। मालाकन्दे राजनि०।

**त्रिशिरस्** पु० त्रीणि शिरांस्यस्य। १कुबेरे हेमच०। २रावणपुत्रभेदे ३खरसेनापतिभेदे च। त्रिशिरस्के ४ज्वरे च। "त्रिशिरस्ते प्रसन्नोऽहं व्येतु ते मज्ज्वराद्भयम्" भा.ग.१० अ० बाणयुद्धे। अस्य अदन्तत्वमपि "सर्वे सान्ता अदन्ताः स्युः" इत्युक्तेः "खरत्रिशिरदूषणमुख्यबन्धून्" भाग० ९।१०।१० "ज्वरस्त्रिपादस्त्रिशिराः षड्भुजो नवलोचनः" हरिवं० १८१ अ०। त्रयो वेदाः शिरांसीव यस्य। ५जैत्रे रथे पु०। "सबन्धुरस्तस्य रथस्त्रिचक्रस्त्रिवृच्छिरास्त्रिशिराश्च त्रिनाभिः" भा० आनु० १९८ अ०। नील-

कण्ठस्तु "वृहच्छिराश्चतुरश्वश्चिनाभिः" इति पठित्वा "चतुरश्वः कालादण्डेश्वरेच्छाखसंकल्पाश्चत्वारोऽश्वा अस्येति"व्याचख्यौ। "अतीव हि त्रिशिरसं समुच्छिन्द्यात् क्षतत्वरः" कामन्दकी। त्रिशीर्षकादयोऽप्यत्र। तत्र त्रिशूले न० हेमच०।

**त्रिशुच्** पु० तिस्रः शुचो दीप्तयः शोका वाऽस्य। स्वर्गान्तरिक्षपृथिवीष्वदीप्तित्रययुते घर्मे। "घर्मस्त्रिशुक् विराजति विराजा" यजु०३८।२७। "ताः शुचश्च तत्रैव १८ मन्त्रे उक्ता यथा "या ते घर्म! दिव्या शुग्या गायत्र्यां हविर्धाने। सा त आप्यायतां निष्ट्यायतां तस्यै ते स्वाहा। या ते घर्मान्तरिक्षे तस्याः त्रिष्टुभ्याग्नीध्रे सा त आप्यायतामित्यादि या ते घर्म पृथिव्यां तस्या जगत्यां सदस्या। सा त आप्यायताम्" इत्यादि। २आध्यात्मिकादिशोकत्रययुक्ते च।

**त्रिशूल** न० त्रीणि शूलानीव अग्राणि यस्य। स्वनामख्याते अस्त्रभेदे हेमच०। "त्रिशूलं दक्षिणे हस्ते खड्गं चक्रं क्रमादधः" दुर्गाध्यानम् "त्रिशूलडमरुकरं व्याघ्रकृत्तिवसानम्" शिवध्यानम्।

**त्रिशूलखात** न० त्रिशूलेन खातम्। तीर्थभेदे "त्रिशूलखातं तत्रैव तीर्थमासाद्य भारत!। तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः। गाणपत्यञ्च लभते देहं त्यक्त्वा न संशयः" भा० भ० ८४ अ०।

**त्रिशूलमुद्रा** स्त्री त्रिशूलमाकारत्वेनास्त्यस्याः कर्म०। मुद्राभेदे "अङ्गुष्ठेन कनिष्ठान्तु बद्ध्वा शिष्टाङ्गुलीत्रयम्। प्रसारयेत्त्रिशूलाख्या मुद्रैषा परिकीर्तिता" तन्त्र० तल्लक्षणमुक्तम्

**त्रिशूलिन्** पु० त्रिशूलमस्त्यस्य इनि। शिवे "त्र्यक्षोऽभेद्यस्त्रिशूली च वृषकेतुर्महाबलः" स्कन्दपु० शिवस्तवः। २दुर्गायां स्त्री ङीप्। "त्रिशूलिनीं नमस्यामि महिषासुरघातिनीम्" हरिवं० १६६ अ०।

**त्रिशृङ्ग** पु० त्रीणि शृङ्गाण्यस्य। त्रिकूटपर्वते शब्दरत्ना०। "त्रिशृङ्गः पर्वतश्चैव कुमारी च सरिद्वरा" हरिवं०२२७ अ०। २त्रिकोणे। "कुरङ्गेण हीनस्त्रिशृङ्गस्तदन्तः" सारसमुच्चयः। [ मत्स्ये शब्दार्थकल्पतरुः।

**त्रिशृङ्गिन्** पु० त्रीणि शृङ्गाणि सन्त्यस्य इनि। रोहित-

**त्रिशोक** पु० त्रयः आध्यात्मिकादयः शोका अस्य। १जीवे २कण्वपुत्रे ऋषिभेदे च। "अनु त्रिशोकः शतमावहन्नॄन्" ऋ०१०।२९।२। त्रिशोको नामर्षिः" भा०। "याभिस्त्रिशोक उस्रिया" ऋ० १।११२।१२ "कण्वपुत्रस्त्रिशोक ऋषिः" भा०।

**त्रिषंयुक्त** त्रि० त्रिभिर्हविर्भिः संयुक्तं वेति छन्दसीति चानुवृत्तौ "पूर्वपदात्" पा० वा वेदे षत्वम्। त्रिभिर्हविर्भिः संयुक्ते इष्टिभेदे। "ऐन्द्रावैष्णवं चरुं, वैष्णवं त्रिकपालं वा पुरोडाशं चरुं वा तेन त्रिषंयुक्तेन यजते" शत० ब्रा० ५।२।५।१। "त्रिषंयुक्तेषु" कात्या० श्रौ०१५।२।११। "त्रिभिर्हविर्भिः संयुक्तं कर्म त्रिषंयुक्तम्" संग्र० व्याख्या। २त्रिभिः संयुतमात्रे त्रि०। "दक्षिणेऽग्नौ पावयन्ति पवित्राभिस्त्रिषंयुक्ताभिः" शत० ब्रा० १२।६।२१।१२१। लोके तु न षत्वम्।

**त्रिषंवत्सर** न० त्रयः संवत्सराः साधनकाला अस्य वेदे वा षत्वम्। त्रिवर्षसाध्ये सत्त्रभेदे। "त्रिषंवत्सरं षष्टिदीक्षम्" कात्या० श्रौ० २५।५।३।१२ "त्रिषंवत्सरं सत्रं तत्र षष्टिदीक्षं भवति" सं० व्या०त्रिगुणितः संवत्सरः। २त्रिवर्षे च। "महातापश्चितं त्रिषंवत्सरोपसत्कम्" कात्या० श्रौ० २५।५।६। "त्रयः संवत्सरा उपसदो दत्र" कर्कः। लोके तु न षत्वम्। ३त्रिवर्षसाध्ये वस्तुनि त्रि०।

**त्रिषन्धि** त्रि०त्रयः सन्धयोऽस्य वेदे वा षत्वम्। १त्रिसन्धियुक्ते "चातुर्मास्यानि त्रिषन्धीनि द्विसमस्तानि तस्मादिमानि पुरुषस्याङ्गानि त्रिषन्धीनि द्विसमस्तानि" शत०ब्रा० ११।५।२।७। "त्रयः सन्धयोऽन्तरालकालाश्चत्वारश्चत्वारो मासा येषां तानि त्रिषन्धीनि द्विसमस्तानि शुनासीरीयवैश्वदेवयोः फाल्गुनस्य शुक्लचतुर्दश्यां पौर्णमास्यां वा पौर्वापर्येणाव्यवहितानुष्ठानात् द्वाभ्यां पर्वभ्यां समस्तानि संश्लिष्टानि पादतलादधस्तनोपरितनसन्ध्योरुभयोः प्रत्यासन्नत्वाद्द्विसमस्तत्वम्" भा०। [ पाठान्तरम्।

**त्रि(ह)षम** त्रि० ह्रस्वे निघण्टुः मायुरेत्यत्र तथा,हषमेति च

**त्रिषवण** न०सूयते सोमोऽत्र सु—आधारे ल्युट् "पूर्वपदात्" पा० वा षत्वम्। त्रिकाले प्रातर्मध्याह्नसायाह्नरूपे काले "उपस्पृशंस्त्रिषवणं पितॄन् देवांश्च तर्पयेत्। दान्तस्त्रिषवणस्नायी निवृत्तश्च प्रतिग्रहात्" "कुर्य्यात् त्रिषवणस्नायी कृच्छ्रं चान्द्रायणं तथा" याज्ञ०। षत्वाभावे लोके च त्रिसवनमप्यत्र

**त्रिषष्टि** स्त्री बहुत्वेऽपि एकव०त्र्यधिका षष्टिः शा०त०। १त्र्यधिकषष्टिसंख्यायां २तत्संख्येये च। "चतुःषष्टिस्त्रिषष्टिर्वा वर्णाः सम्भवतो मताः" शिक्षा। पक्षे त्रय आदेशे त्रयःषष्टिरप्यत्र। त्रयश्च षष्टिश्च इति विग्रहेऽपि तदर्थे। "संख्याः" पा० त० पक्षे पूर्वपदप्रकृतिस्वर इति भेदः। इयांस्तु भेदः त्रय आदेशे अन्तोदात्तः। त्रिषष्ट्या युतं शतादि ड। त्रिषष्ट त्रिषष्टियुतशतादौ त्रि०। ततः पूरणे तमप्।

त्रिषष्टितम त्रयःषष्टितम तत्संख्यापूरणे त्रि०। स्त्रियां ङीप्। पूरणे डट्। त्रिषष्ट त्रयःषष्ट त्रिषष्टिपूरणे त्रि०। स्त्रियां ङीप्।

**त्रिषु(सु)पर्ण** पु० त्रयः सुपर्णाख्यदाचकाशब्दा यत्र। १ऋक्चतुर्वेदभागभेदे त्रिसौपर्णशब्दे दृश्यं २तद्व्रते च तद्योगात् ३तद्व्रतधारिणि पुरुषे "त्रिणाचिकेतः पञ्चाग्निस्त्रिसु(षु)पर्णः षडङ्गवित्" मनुः। वा कप्। तत्रार्थे "वेदार्थवित् ज्येष्ठसामा त्रिमधुस्त्रिसुपर्णकः" याज्ञ०।

**त्रिष्टुभ्** स्त्री त्रिषु स्थानेषु स्तुभ्यते स्तुभ–क्विप् षत्वम्। एकादशाक्षरपादके वर्णवृत्ते छन्दोभेदे "गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च। त्रिष्टुप् च जगती चैव" वृ० र०। प्रस्तारे तस्याः २०४८ भेदाः। "एकादशाक्षरा वै त्रिष्टुप् गायत्री क्षत्रं त्रिष्टुप्" शत०ब्रा०१।३।५।५। "तथैव माध्यन्दिनं सवनमतन्वत" इत्युपक्रमे "एकादशाक्षरा त्रिष्टुभ् तस्मादाहुस्त्रैष्टुभं माध्यन्दिनं सवनमिति" शत०ब्रा० ४।१।१।८। २तच्छन्दोऽभिमानिदेवतायाञ्च। "इन्द्र एकादशाक्षरेण त्रिष्टुभमुदजयत्" यजु० ६।३०। "इन्द्रो देवः एकादशाक्षरेण छन्दसा त्रिष्टुभं त्रिष्टुप्छन्दोऽभिमानिनीं देवतामुदजयत्" वेददीपः। प्रसङ्गात् छन्दोऽभिमानिदेवताः सर्वानुक्रमणिकायां ४ अ० उक्ताः प्रदर्श्यन्ते। "अथातश्छन्दोदेवता गायत्र्या अग्निरुष्णिहः सवितानुष्टुभः सोमो बृहत्या बृहस्पतिः, पङ्क्तेर्वरुणस्त्रिष्टुभ इन्द्रो जगत्या विश्वे देवा विराजो मित्रः, स्वराजो वरुणोऽतिच्छन्दसः प्रजापतिर्विच्छन्दसो वायुर्द्विपदायाः पुरुष एकपदाया ब्रह्मा। सर्वा ऋचः आग्नेय्यः सर्वाणि यजूंषि वायव्यानि सर्वाणि सामानि सौराणि सर्वाणि ब्राह्मणानि च। स्वाहाकारस्याग्निर्वषट्कारस्य विश्वे देवाः। कर्मारम्भे मन्त्राणां देवता वेदितव्याः संन्यस्य मनसि देवतां ततो हविर्विसृज्यते देवतामविज्ञाय यो जुहोति देवास्तस्य हविर्न जुषन्ते। स्वाध्यायमपि योऽधीते मन्त्रदैवतज्ञः सोऽमुष्मिन् लोके देवैरपीज्यते। तस्माच्च देवता वेद्या मन्त्रे मन्त्रे प्रयत्नतः। मन्त्राणां देवताज्ञानान्मन्त्रार्थमधिगच्छति"। शब्दब्रह्मात्मनः मांसात् तस्या उत्पत्तिः भाग०३।१२।२८ श्लो० उक्ता यथा "तस्योष्णिगासील्लोमभ्यो गायत्री च त्वचो विभोः। त्रिष्टुम्मांसात् स्नुतोऽनुष्टुजगत्यस्थ्नः प्रजापतेः। मज्जातः पङ्क्तिरुत्पन्ना बृहती प्राणतोऽभवत्"।

**त्रिष्टोम** पु० त्रयः स्तोमा यत्र षत्वम्। चतुर्ष्टतियज्ञस्य उभयतः कर्त्तव्ये यज्ञभेदे। "चतुष्टतिः" कात्या०श्रौ०१५।८। २४ सू० "तस्योभयतः एके त्रिष्टोमज्योतिष्टोमौ" २५ सू०। "एके तं चतुष्टतिमुभयतः त्रिष्टोमज्योतिष्टोमौ कुर्वन्ति" सं० व्या०।

**त्रिष्ठ** पु० त्रिषु चक्रेषु तिष्ठति स्था–क अम्बाम्बेत्यादिना षत्वम्। चक्रत्रयस्थिते रथे। "त्रिष्ठं वां सूरे दुहिताऽऽरुहद्रथम्" ऋ० १।३४।५। "त्रिष्ठं चक्रत्रयेऽवस्थितं रथम्" भा०।

**त्रिष्ठिन्** त्रि० त्रिषु विद्याटानयज्ञेषु तिष्ठति स्था–बा० इनि सुषामा० षत्वम्। विद्यादिशीलयुक्ते। "उत कुलनिःकुलेभ्यस्त्रिष्ठिनम्" यजु० ३०।१४। "त्रिषु विद्यादिषु स्थितं शीलवन्तम्" वेददी०।

**त्रिस्** अव्य० त्रि+वारे सुच्। त्रिवारे "येन त्रिःसप्तकृत्वो नृपवहुलवसामांसस्त्रिग्धपङ्के ति" प्रबोधच०। "अनेन विधिना श्राद्धं त्रिरब्दस्य हि निर्वपेत्" मनुः। "त्रिर्जपेदघमर्षणम्" स्मृतिः।

**त्रिसन्धि** स्त्री त्रयः सन्धयोऽन्तरकाला विकाशेऽस्याः। (फागनिया) १पुष्पभेदे राजनि०। सा त्रिविधा सिताऽसिता रक्ता च। समा०द्वि०। २पूर्वापरमध्यसन्धौ न०।

**त्रिसन्ध्य** न० समाहारद्वि०। प्राह्णपराह्णमध्याह्नरूपे सन्ध्यात्रये। "सान्निध्यं पुष्करे येषां त्रिसन्ध्यं कुरुनन्दन" भा० व० ८२ अ०। "करैस्त्रिसन्ध्यं त्रिदशैर्दिशे नमः" माघः। "त्रिसन्ध्यव्यापिनी या तु सैव पूज्या सदा तिथिः। न तत्र युग्मादरणमन्यत्र हरिवासरात्" नि०सि० पराशरः। कुसुमे (फागनिया) राजनि०।

**त्रिसन्ध्यकुसुमा** स्त्री त्रिसन्ध्यं कुसुमं यस्याः। त्रिसन्धि।

**त्रिसप्तति** स्त्री एकव०त्र्यधिका सप्ततिः शा०त०त्रयश्च सप्ततिश्च द्वन्द्व०वा। १त्र्यधिकसप्ततिसंख्यायां २तत्संख्येये च पक्षे वा त्रयआदेशे त्रयःसप्तति तत्रार्थे। तत्र त० पूर्वप्रकृतिस्वरः त्रय आदेशे अन्तोदात्त इति भेदः। ततः पूरणे तमप्। त्रिसप्ततितम त्रयःसप्ततितम तत्पूरणे त्रि०स्त्रियां ङीप्। पूरणे डट्। त्रिसप्तत तत्रार्थे त्रि० स्त्रियां ङीप्। "भीमसेनं त्रिसप्तत्या नकुलं सप्तभिः शरैः" भा०ग०२२अ०। त्रिसप्तत्या युतं शतादि ड। त्रिसप्तत तद्युते शतादौ त्रि०।

**त्रिसप्तन्** त्रि० व०व०त्रिगुणिताः सप्त। १एकविंशतिसंख्यायाम् २तत्संख्येये च। "विद्धा चैनं त्रिसप्तभिः भा०ग०१३अ०। "त्रिसप्तकृत्वः पृथिवीं योजिगाय भृगूत्तमः" हरिवं०२०४अ०।

**त्रिसम** न० त्रयः समा यत्र । समहरीतकीनागरगुडरूपे पदार्थे राजनि० । समा० द्वि० । २त्रर्षत्रये न० ।

**त्रिसर** पु० त्रसर+पृषो० । त्रसरे हेमच० ।

**त्रिसरक** न० त्रिवारं सरकम्, त्रयाणां सरकाणां शीधुपानानां समाहारः पात्रा०न ङीप् वा । त्रिवारे मधुपाने "प्रातिभं त्रिसरकेण गतानाम्" माघः ।

**त्रिसर्ग** पु० त्रयाणां सत्त्वरजस्तमसां सर्गः । सत्त्वरजस्तमसां सर्गे । "यत्र त्रिसर्गो मृषा" भा० १।१।१ ।

**त्रिसामन्** पु० त्रीणि सामानि स्तुतिसाधनानि यस्य । १परमेश्वरे । "त्रिसामा सामगः साम निर्वाणं भेषजं भिषक्" विष्णु सं० । "त्रीणि वेदव्रतसामाख्यानि तैस्त्रिसामभिः स्तुतस्त्रिसामा" भा० वेदव्रतसामानि च । "अधिपताद् मित्र ! पताद् सुरपताद्" इत्येवमादीनि त्रीणि सामानि ।२महेन्द्राद्रेः प्रवन्त्यां नद्याम् स्त्री टाप् शब्दार्थचि० । "ऋषिकुल्या त्रिसामा कौशिकी इत्यादि" भाग० ५।१९।१८ । भारतवर्षमहानद्युक्तौ ।

**त्रिसाहस्र** त्रि० त्रीणि सहस्राणि परिमाणमस्य अण् उत्तरपदवृद्धिः । त्रिभिः सहस्रैः १परिमिते । स्त्रियां ङीप् । "त्रिसाहस्रा समा" कात्या० श्रौ० १७।७२३। "उत्तमा चितिः त्रिसाहस्री लोकम्पृणानां भवति" कर्कः।

**त्रिसिता** स्त्री त्रिगुणिता सिता शा० त० । त्रिशर्कराशब्दार्थे राजनि० । [सीतया क्लृप्तेति अमरः ।

**त्रिसीत्य** न० त्रिवारं सीतया समितम् यत् । त्रि:कृत्वः

**त्रिसुगन्धि** न० त्रयाणां सुगन्धिद्रव्याणां समाहारः । "त्वगेलापत्रकैस्तुल्यैस्त्रिसुगन्धि त्रिजातकम्" इत्युक्ते तुल्यभागे एलादित्रिके राजनि० । "पिबेद्रसं पुष्पफलोद्भवं वा सितामधूकत्रिसुगन्धियुक्तम्" सुश्रुतः ।

**त्रिसुवर्चक** पु० आङ्गिरसे च्यवनरूपे वह्नौ "अग्निराङ्गिरसश्चैव च्यवनस्त्रिसुवर्चकः" भा० व० २१९ अ० ।

**त्रिसौपर्ण** न० त्रिः सुपर्णेन ऋषिणा कृतमण् इत्तौ त्रिशब्दस्य सुजर्थता उत्तरपदवृद्धिः । सुपर्णर्षिणा चरिते व्रतभेदे ।

"सुपर्णो नाम तमृषिः प्राप्तवान् पुरुषोत्तमात् । तपसा वै सुतप्तेन दमेन नियमेन च । त्रिः परिक्रान्तवानेतत् सुपर्णो धर्मसुत्तमम् । यस्मात्तस्माद्व्रतं ह्येतत् त्रिसौपर्णमिहोच्यते । ऋग्वेदपाठपठितं व्रतमेतद्धि दुश्चरम् । सुपर्णाच्चाप्यधिगतो धर्म एष सनातनः । वायुना द्विपदां श्रेष्ठः कथितो जलदायुधा । वायोः सकाशात् प्राप्तश्च ऋषिभिर्विघसाशिभिः । ततो महोदधिश्चैव प्राप्तवान् धर्मसुत्तमम् । अन्तर्दधे ततो भूयो नारायणसमाहितः" भा० शा० ३५० अ० । सुपर्णा एव स्वार्थे अण् त्रयः सौपर्णा यत्र । ऋग्वेदे १० । ११४ । ३ । ४ । ५ । मन्त्रत्रिके । ते च मन्त्राः "चतुष्कपर्दा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते । तस्यां सुपर्णा वृषणा निषेदतुर्यत्र देवा दधिरे भागधेयम्" । २ "एकः सुपर्णः स समुद्रमाविवेश स इदं विश्वं भुवनं विचष्टे । तं पाकेन मनसा पश्यमन्तितस्तं माता रेह्लि स उ रेह्लि मातरम्"।४ "सुपर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति । छन्दांसि च दधतो अध्वरेषु ग्रहान्त्सोमस्य मिमते द्वादश"।५ सुपर्णपदघटिते मन्त्रे विदितं अण् उत्तरपदवृद्धिः ।२परमेश्वरनामभेदे "त्रिसौपर्णं तथा ब्रह्म यजुषां शतरुद्रियम्"भा०शा०२८६अ०।"त्रिसौपर्णं विदितं नाम त्रिसौपर्णमिति तदर्थः" श्रीधरः । त्रिसौपर्णेति पाठः लिपिकरप्रमादात् ।

**त्रिस्कन्ध** न० त्रयः स्कन्धा इवावयवा अस्य । ज्योतिःशास्त्रे । बृ० स० १ अ० तस्य स्कन्धत्रययुक्तं यथा "ज्योतिःशास्त्रमनेकभेदविषयं स्कन्धत्रयाधिष्ठितम् तत्कार्त्स्न्योपनयस्य नाम मुनिभिः सङ्कीर्त्यते संहिता । स्कन्धेऽस्मिन् गणितेन या ग्रहगतिस्तन्त्राभिधानस्त्वसौ होराऽन्योऽङ्गविनिश्चयश्च कथितः स्कन्धस्तृतीयोऽपरः" । तेन तन्त्रहोराङ्गनिर्णयाख्यास्तस्य त्रयः स्कन्धाः ।

**त्रिस्तन** न० त्रयःस्तना दोह्यायत्र । तन्त्रसाध्ये यज्ञे प्रथमायास्तुपसदि दोह्यत्रिस्तनरूपे १व्रतभेदे "त्रिस्तनं प्रथमायां दोहयति" कात्या० श्रौ० ८।२।१ त्रयःस्तना अस्या ङीप् । स्तनत्रययुक्ते २राक्षसीभेदे स्त्री "त्रिस्तनीमेकपादाञ्च त्रिजटामेकलोचनाम्" भा० व० २७९ अ० ।

**त्रिस्तावा** स्त्री त्रिगुणिता तावती वेदिः । "द्विस्तावा त्रिस्तावा वेदिः" पा० अच् समा० टिलोपः समासश्च निपात्यते । प्रकृतौ यावती वेदिः ततस्त्रिगुणेऽश्वमेधाद्युक्ते वेदिभेदे । वेदिभिन्ने तु त्रिस्तावती रज्जुः" इत्येव सि० कौ० ।

**त्रिस्थली** स्त्री त्रयाणां गयाकाशीप्रयागरूपस्थलानां समाहारद्वि० । काशीगयाप्रयागरूपस्थलत्रिके । तदधिकृत्यैव त्रिस्थलीसेतुनामा ग्रन्थः अनन्तभट्टेन कृतः ।

**त्रिस्थान** त्रि० त्रीणि स्थानान्यस्य । १स्वर्गमर्त्यपातालस्थे परमेश्वरे २जाग्रदाद्यवस्थात्रयसाक्षिणि जीवे च ।

**त्रिस्रोतस्** स्त्री त्रिषु लोकेषु स्रोतो यस्याः। गङ्गायाम् "त्रिस्रोतसः कान्तिमतीत्य तस्थौ" कुमा०। "कृताभिषेकै-र्दिव्यायां त्रिस्रोतसि च सप्तभिः" रघुः।

**त्रिस्रोतसी** स्त्री त्रीणि स्रोतांसि सन्त्यस्याम् अच् गौरा० ङीष्। स्रोतस्त्रययुक्ते नदीभेदे "तथा समुद्राश्चत्वारः। नदी भागीरथी च या" इत्युपक्रमे "लवन्ती गोमती चैव सन्ध्या त्रिस्रोतसी तथा" भा० स० ९अ०। वरुण-सभास्यतीर्थभूतनद्यादिकथने।

**त्रिस्पृशा** स्त्री त्रीणि चान्द्रदिनानि एकस्मिन् सावने दिने स्पृशति स्पृश—क। एकादशीभेदे "यदा पूर्वदिने दशमी परदिने चैकादशी स्थित्वा ततो द्वादशी रात्रिशेषे त्रयोदशी सा चैकादशी त्रिस्पृशा" रघु० "एकादशी द्वादशी च रात्रिशेषे त्रयोदशी। तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारयेत्" एका० त० धृत वचनम्। "एकादशी द्वादशी च रात्रिशेषे त्रयोदशी। त्रिस्पृशा नाम सा ज्ञेया ब्रह्महत्यां व्यपोहति" संवर्त्त-वचनम्। अष्टसु महाद्वादशीषु वासरत्रयस्पर्शिन्यां २द्वादश्याञ्च द्वादशीशब्दे दृश्यम्।

**त्रिस्थान** न० त्रिषु कालेषु स्नानमत्र। त्रिकालस्नानाङ्गे व्रतभेदे। तच्च वानप्रस्थाङ्गं प्रायश्चित्ताङ्गञ्च। तत्राद्यं कामन्दकीनीतिशास्त्रे उक्तं यथा "वनवासः पयो-मूलनीवारफलवृत्तिता। प्रतिग्रहनिवृत्तिश्च त्रिस्नानं व्रतचारिता। देवातिथीनां पूजा च धर्मोऽयं वन-वासिनः" द्वितीयन्तु त्रिषवणशब्दे दर्शितम्। [त्रेते अमरः

**त्रिहल्य** न० त्रिः हलेन कृष्टं क्षेत्रम्। त्रिवारं हलेन कृष्टे

**त्रिहायण** त्रि० त्रयो हायना वयोऽस्य णत्वम्। त्रिवर्षे गवादौ "अथ संस्कारणं कृत्वा लक्षयित्वा त्रिहायणान्" भा० व० २२१ अ०। स्त्रियान्तु ङीप्। "त्रिहायणी त्रिवर्षा गौः" अमरः। "वत्सतर्यस्त्रिहायण्योऽभीताः पञ्चवर्णा राजीवचक्षुषो नवनीतचक्षुषोऽरुणाः पिशङ्गाः सारङ्गाः" कात्या० श्रौ० २२।८।१२। २द्रौपद्यां वह्निपु० "कृते युगे वेदवती त्रेतायां जनकात्मजा। द्वापरे द्रौप-दी च्छाया तेन कृष्णा त्रिहायणी" जन्मखण्डम्।

**त्रीषु** त्रि० त्रय इषवः परिमाणमस्य कन् तस्य लुक्। १इषुत्रय-मिते स्थाने। त्रयः इषवो यत्र कप्। २वाणत्रययुक्ते धनुषि न०। "त्रीषुकं धनुर्दक्षिणा" कात्या० श्रौ० २५।४। ४७। अस्यां त्रिर्हविष्कायामिष्टौ त्रिभिरिषुभिरुपेतं धनुर्द-क्षिणेत्यर्थः" सं० व्याख्या।

**त्रीष्टक** पु० तिस्रः ऋगादिरूपा इष्टका यस्य। अग्नि-भेदे "स एष त्रीष्टको ऽग्निः ऋगेका यजुरेका सामैका तद्यां कां चानचोपदधाति ऋक्स एव तस्या आयतन-मथ यां यजुषा पुरुष एव तस्या आयतनमथ यां साम्ना पुष्करपर्णमेव तस्या आयतनमेवं त्रीष्टकम्" शत० ब्रा० १०।५।२।२१।

**त्रुट** छेदने वा दिवा० पक्षे तुदा० कु० पर० अक० सेट्। त्रुट्यति त्रुटति अत्रु(त्रो)टीत्। तुत्रोट। छेदश्चात्र अवयवद्विधा-भाव मात्रम् "यावन्मे दन्ता न त्रुट्यन्ति" हितो० "त्रुटित पयोधरतटे हारं पुनर्योजय" सा० द०। "त्रुटित इव मुक्तामणिसरः" उत्तर०।

वि+विश्लेषीकरणे सक०। "कण्टकैरेना वित्रुटेयुः" कात्या० श्रौ० २२।३।२२। "वित्रुटेयुः विलुञ्चेयुः" सं० व्याख्या।

**त्रुट** छेदने चुरा० आ० सक० सेट्। त्रोटयते अतुत्रुटत।

**त्रुटि(टी)** स्त्री कुटा० त्रुट—इन् वा ङीप्। १सूक्ष्मैलायां २अल्पे ३संशये ४कालभेदे च अमरः स च "योऽक्ष्णोर्निमेषस्य खराम१०भागः स तत्परस्त-च्छतभाग उक्ता। त्रुटिर्निमेषैर्धृति१८भिश्च काष्ठा तत्त्रिं-शता सद्गणकैः कलोक्ता" सि० शि० उक्तेः तत्परस्य शतभागकालरूपः। "क्षणद्वयात्मकः कालस्त्रुटिरिति' 'भरतः तन्मूल्यं मन्यम्। तदपेक्षया क्षणस्य भाग० अधिककालतोक्तेः तस्यामूर्तत्वात् क्षणस्य मूर्तत्वाच्च तथा हि "प्राणादिः कथितो मूर्त्तस्त्रुट्याद्योऽमूर्त्तसंज्ञकः" सू० सि० "त्रुटिराद्या यस्य तादृशः कालः एकमात्रा-त्मर्गतत्रुटितत्परादिकोऽमूर्त्तसंज्ञकः व्यवहारायोग्यत्वे-नास्यामूर्त्तत्वम्। भाग० ३।११।५, ६। अन्यथा मानमुक्तं यथा "अणू द्वौ परमाणुः स्यात् त्रसरेणुस्त्रयः स्मृतः। ज्वालार्करश्म्यवगतः खमेवानुपतन्नगात्। त्रसरेणुत्रयं भुङ्क्ते यः कालः सः त्रुटिः स्मृता। शतभागस्तु वेधः स्यात्तैस्त्रिभिस्तु लवः स्मृतः। निमेषस्त्रिलवो ज्ञेय आम्नातस्ते त्रयः क्षणः"। "मरुतः सह पर्जन्याः कलात्रुटिलवक्षणाः" हरिवं० १६८अ०। "शुक्लस्त्वं बहुलस्त्वञ्च कला काष्ठा त्रुटिस्तथा" भा० आ० २५ अ०। "प्राय-त्रुटिवृत्तवयवाद्यकालस्य चेतस्य च वेत्ता" इ० सं० २अ०। २कुमारानुचरमातृभेदे "केशयन्त्री त्रुटिर्माम क्रोशना तु तडित्प्रभा" भा० श० ४३० मातृगणोक्तौ। भावे इन्। ३अवयवादिच्छिन्नतायाम्।

**त्रुटिवीज** पु० त्रुटिरल्पं वीजमस्य। कचौ मूलभेदे शब्दमा०।

**त्रुटिशस्** अव्य० त्रुटि+वीप्सार्थे शस्। त्रुटिस्त्रुटिरित्यार्थे। "त्रुटिशोलवशश्चापि गण्यते कालनिश्चयः" भा० व० ११८ अ०।

**त्रुन्प(म्प)** बधे भ्वा०पर०सक० सेट्। त्रुम्पति अत्रुम्पीत्। नोपधत्वे क्विपि त्रुप् त्रुपौ नोपधत्वे त्रुन् त्रुम्पौ इति भेदः।

**त्रुन्फ(म्फ)** बधे भ्वा० पर० सक० सेट्। त्रुम्फति अत्रुम्फीत्। नोपधत्वे क्विपि त्रुप् त्रुफौ नोपधत्वे त्रुन् त्रुम्फौ इति भेदः। [ (फी)त्। तलोप (फ)

**त्रुप(फ)** बधे भ्वा० पर० सक० सेट्। त्रोप(फ)ति अत्रोपी-

**त्रेता** स्त्री त्रित्वमिता पृषो०। दक्षिणाग्निगार्हपत्याहवनीयात्मके समुदिते १अग्नित्रये, सत्ययुगानन्तरवर्त्तिनि युगभेदे, द्यूतक्रीडासाधनस्याक्षस्य यस्मिन् पार्श्वे त्रयोऽङ्कास्तस्य पार्श्वस्य उत्तानतया ३पतने, द्यूतविशेषे वराटकानां मध्ये त्रयाणामुत्तानतया ४पतने च "त्रेतया ऋतसर्वस्वः" इति मृच्छकटिका। अयमब्दे २२४पृ०दृश्यम्

"त्रेतायुगमानञ्च दिव्यमानेन ३००० वर्षाः आदौ सन्ध्या ३००। अन्ते सन्ध्यांशः ३०० मिलिताः ३६००। वर्षाः मानुषमानेन ३६० गुणिता १२९६००० वर्षाः। यथाह मनुः "चत्वार्याहुः सहस्राणि वर्षाणान्तु कृतं युगम्। तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः। इतरेषु ससन्ध्येषु ससन्ध्यांशेषु च त्रिषु। एकापायेन वर्त्तन्ते सहस्राणि शतानि च"। सि० शि० "खखाभ्रदन्तसागरैर्युगाङ्घ्रियुग्मभूगुणैः। क्रमेण सूर्य्यवत्सरैः कृतादयोयुगाङ्घ्रयः। स्वसन्ध्यकातदंशकैर्निजार्क१२भागसम्मितैः। युताश्च तद्युता युगं रदाब्धयोऽयुताहताः"। खखाभ्रदन्तसागरैः ४३२०००अङ्कैस्त्रिभिर्गुणितैस्तन्मिता वर्षा त्रेतामानं तत्रापि त्रेतादौ सन्ध्यामानं १०८००० त्रेतामानं १०८०००० वर्षाः। त्रेतान्ते सन्ध्यांशमानम् १०८०००। मिलित्वा १२९६००० वर्षाः त्रेतामानम्। स्पष्टमुक्तं ब्रह्मवै० प्र० ख० "द्विषट्लक्षपरिमितं षण्णवतिसहस्रकम्। त्रेतायुगं परिमितं कालविद्भिः प्रकीर्त्तितम्"।

"दण्डनीत्यां यदा राजा त्रीनंशाननुवर्त्तते। चतुर्थमंशमुत्सृज्य तदा त्रेता प्रवर्त्तते। अशुभस्य चतुर्थांशस्त्रीनंशाननुवर्त्तते। कृष्टपच्यैव पृथिवी भवन्त्योषधयस्तथा"। "राजा कृतयुगस्रष्टा त्रेताया द्वापरस्य च। युगस्य च चतुर्थस्य राजा भवति कारणम्। कृतस्य कारणाद्राजा स्वर्गमत्यन्तमश्नुते। त्रेतायाः कारणाद्राजा स्वर्गं नात्यन्तमश्नुते" भा०शा०६९अ०। तद्धर्माश्च "त्रेतायुगे समायाते धर्मः पादोनतां गतः। अल्पक्लेशान्विता लोकाः केचित्, केचिद्दयापराः। विष्णुध्यानरता लोका यज्ञदानपरायणाः। वर्णाश्रमाचाररताः सुखिनः सुस्थचेतसः। चत्वा भूमिस्पृशः शूद्राः सर्वे ब्राह्मणसेविनः। ब्राह्मणाश्च महात्मानो वेदवेदाङ्गपारगाः। प्रतिग्रहनिष्टत्ताश्च सत्यसन्धा जितेन्द्रियाः। तपोव्रतपरा नित्यं दातारो विष्णुसेविनः। कालवर्षी तडित्वांश्च स्त्रियः सर्वाः पतिव्रताः। वसुन्धरा च शस्याढ्या पुत्राश्च पितृसेविनः" इति पाद्मे क्रियायोगसारोक्ताः।

"सदाशिवाद्या भगवती जीवानां निष्कृतिं यथा। कृते व्यतीते त्रेतायां दृष्टा धर्मव्यतिक्रमम्। वेदोक्तकर्मभिर्मर्त्त्या न शक्ताः स्वेष्टसाधने। बहुक्लेशकरं कर्म वैदिकं भूरिसाधनम्। कर्तुं न योग्यामनुजाश्चिन्ताव्याकुलमानसाः। त्यक्तुं कर्तुं न चार्हन्ति सदा कातरचेतसः। वेदार्थयुक्तशास्त्राणि स्मृतिरूपाणि भूतले। तदा त्वं प्रकटीकृत्य तपःस्वाध्यायदुर्बलान्। लोकानतारयः पापात् दुःखशोकमयप्रदात्। त्वां विना कोऽस्ति जीवानां घोरसंसारसागरे। भर्त्ता पाता समुद्धर्त्ता पितृवत् प्रियकृत् प्रभुः" इति श्रीमहानिर्वाणतन्त्रे जीवोद्धारणहेतवे सदाशिवं प्रति जगन्मातुः वाक्यम्। तस्मिन् युगे पुरुषायुषकालस्त्रिशतवर्षो मनुनोक्तो यथा "चतुष्पात् सकलो धर्मः सत्यञ्चैव कृते युगे। नाधर्मेणागमः कश्चिन्मनुष्यान् प्रतिवर्त्तते। इतरेष्वागमाद्धर्मः पादशस्त्ववरोपितः। चौरिकान्टतमायाभिर्धर्मश्चापैति पादशः। अरोगाः सर्वसिद्धार्थाश्चतुर्वर्षशतायुषः। कृते त्रेतादिषु ह्येषामायुर्ह्रसति पादशः। वेदोक्तमायुर्मर्त्त्यानामाशिषश्चैव कर्मणाम्। फलन्त्यनुयुगं लोके प्रभावश्च शरीरिणाम्"।

पुराणान्तरे अयुतवर्षस्तत्काल उक्तः अतएव "दशवर्षसहस्राणि रामो राज्यमकारयत्" इत्यादि सङ्गच्छते। तपसा आयुःकालाधिक्यमिति न मनूक्तिविरोधः इति तु न्यायम्।

"धर्मादौ हि यथा त्रेता वह्निस्त्रेता तथैव च। तथैव पुत्रपौत्राणां स्वर्गस्त्रेता किलाक्षयः" भा० आश्व० ९० अ०। अग्नित्रयस्य त्रेतानामनिरुक्तिर्यथा "त्रिधा प्रणीतो ज्वलनो मुनिभिर्वेदपारगैः। अतस्त्रेतात्वमा-

पत्नी यदेकस्त्रिविधः क्रतः" हरिवंशे २१२ अध्याये ।

**त्रेताय** पु॰ त्रेतानामकोऽयः । द्यूतभेदे कृतायशब्दे दृश्यम् ।

**त्रेतिनी** स्त्री त्रेता अस्त्यत्र इनि ङीप् । त्रेताग्निसाध्यक्रियायाम् "ऊर्द्ध्वा यत्ते त्रेतिनी भूत्" ऋ॰ १०।१०५।८।

**त्रेधा** अव्य॰ त्रि+प्रकारे एधाच् । त्रिप्रकारे "इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्" ऋ॰ १।२२।१७ "एकस्त्रेधा विहितो जातवेदाः" अथ॰ १८।४।११। "तुभ्यं त्रेधा स्थितात्मने" कुमा॰ ।

**त्रै** पालने भ्वा॰आ॰ सक॰ अनिट् । त्रायते अत्रास्त । त्राणः त्रातः । "मृत्योरात्मानं त्रायते" शत॰ ब्रा॰ २।२।४।७ । "गायन्तं त्रायते यस्मात् गायत्री तेन कीर्त्तिता" स्मृतिः "पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः" मनुः । "त्रातेयं कुरु सौमित्रे ! भयात् त्रायस्व राघवम्" भट्टिः । [ त्रिंशदध्यायपरिमिते ब्राह्मणभेदे ।

**त्रैंश** न॰ त्रिंशदध्यायाः परिमाणमस्य ब्राह्मणस्य ड ।

**त्रैककुद** न॰ त्रिककुद् नाम पर्वतः तत्र भवः अण् । सौराञ्जने । "इतस्येत्यक्ष्यावनक्ति त्रैककुदाञ्जनेनाभावेऽन्यद्दुर्द्दिक्षिणं त्रिरुत्तरं शराकमलतृणसन्मन्त्रः शरेषीकया सापया" कात्या॰ श्रौ॰ ७।२।२४ । "अध्वर्युः सापया शरेषीकया शरस्यापशलाकया त्रैककुदाञ्जनेन सौवीराञ्जनेन यजमानस्य अक्ष्यौ चक्षुषी अक्षिणी पराक् अनाहतमनक्तिनेतथाप्युतस्य तत्र दक्षिणं चक्षुर्द्विरनक्ति उत्तरं त्रिवारम् । तत्राञ्जनमन्त्रः सकृत् सकृत्पठनीयः । त्रिककुत् पर्वतस्तत्र भवमञ्जनं त्रैककुदं सौवीरमिति यत् प्रसिद्धम् । त्रैककुदाभावेऽन्यत् लोकप्रसिद्धं यत् कज्जलादि । आपस्तम्बः "वृत्रस्य कनीनिकासीति त्रैककुदेनाञ्जनेनाङ्क्ते यदि त्रैककुदं नाधिगच्छेद्येनैव केनाञ्जनेनाङ्क्तेति" कर्कः । "त्रैककुदं भवति । यत्र वा इन्द्रो वृत्रमहंस्तस्य यदक्ष्यासीत्तं गिरिं त्रिककुदमकरोत्तद्यत्त्रैककुदं भवति चक्षुष्येवैतच्चक्षुर्दधाति तस्मात्त्रैककुदं भवति यदि त्रैककुदं न विन्देदप्यत्रैककुदमेव स्यात् समानी ह्येवाञ्जनस्य बन्धुता" शत॰ ब्रा॰ ३।१।३।१२ ।

**त्रैकालिक** त्रि॰ त्रिकाले भवः ठञ् । १भूतभविष्यद्वर्त्तमानकालवर्त्तिनि "त्रैकालिकमिदं ज्ञानं प्रादुर्भूतं तवोपस्थितम्" भा॰ शा॰ २४२ अ॰ । २त्रिसन्ध्याव्यापके च ।

**त्रैकाल्य** न॰ त्रिकाल+स्वार्थे ष्यञ् । भूतादिषु त्रिषु कालेषु । "नमोऽस्त्वाय काशाय कालाय त्रैकाल्यमेव च" हरिवं॰ ४१ अ॰ । "त्रैकाल्यसन्ध्याकरणात् तत् सर्वं विप्रणश्यति" याज्ञ॰ ।

**त्रैगर्त्तक** त्रि॰ त्रिगर्त्तस्य देशभेदस्यादूरदेशादि चतुरर्थ्यां वरीहणा॰ वुञ् । त्रिगर्त्तदेशस्यादूरदेशादौ ।

**त्रैगुणिक** त्रि॰ त्रिगुणार्थं द्रव्यमेकगुणं प्रयच्छति । "तत् प्रयच्छति गर्ह्यम्" पा॰ठक् । त्रिगुणमादातुमेकगुणद्रव्यप्रयोक्तरि वार्द्धुषिकभेदे ।

**त्रैगुण्य** न॰ त्रिगुणानां भावः कर्म वा स्वार्थे ष्यञ् तेन निर्वृत्तं वा । १सत्त्वादिगुणत्रये २तद्भावे ३तत्साध्ये संसारे च "त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन !" गीता । "अविवेक्यादेः सिद्धिस्त्रैगुण्यात्तद्विपर्य्ययेऽभावात्" "पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्य्ययाच्चैव" सा॰ का॰ ।

**त्रैत** पु॰ त्रीन् वत्सान् तनोति युगपत् तन—बा॰ ड त्रितो गर्भभेदस्तत्र भवः अण् । युगपज्जन्माधायकगर्भजाते पशौ । "रूपे सैषावरुद्धे सौमापौष्णं त्रैतमालभेत पशुकामो द्वौ वा अजायै स्तनौ नानैव द्वावभिजायेते ऊर्जं पुष्टिं तृतीयः" तै॰ सं॰ २।१।१।६ "त्रयाणां वत्सानां युगपज्जातानां तः समुदायस्त्रितः तत्र भवस्त्रैतः तेषामन्यतमः इत्यर्थः। त्रयाणामुत्पत्तौ प्रयोजनमेवमुच्यते यस्मादजायास्तावद्द्वौ स्तनौ प्रसिद्धौ तौ नानैव पृथगेव पातुं द्वौ वत्सौ जायेते मातृरूपायामजायां येयमूर्क् पयःसारं या च शरीरगता पुष्टिस्तदुभयं स्थापयितुं तृतीयो वत्स उत्पन्नः द्वावेव हि सर्वत्र जायेते तृतीयस्तु क्वचिदेव तथा सति यस्यां तृतीयो जातस्तस्याः शरीरे वीर्य्याधिक्यं पुष्ट्याधिक्यञ्चास्तीति लक्षयितुं शक्यते" भा॰ अत्र भाष्ये वत्सेत्यस्मिन् इत्याधारे अपि च गर्भपरतेति बोध्यम् ।

**त्रैतन** पु॰ अत्यन्तनिर्द्दये दासभेदे । "शिरो यदस्य त्रैतनो वितक्षत् स्वयं दासः" ऋ॰ १।१५८।५ । "त्रैतन एतन्नामको दासोऽत्यन्तनिर्द्दयः" भा॰ ।

**त्रैदशिक** न॰ त्रिदशा देवता अस्य ठञ् । दैवे अङ्गुल्यग्ररूपे तीर्थे । "ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत् । कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन" मनुः ।

**त्रैधम्** अव्य॰ त्रि+प्रकारे धमुञ् । त्रिप्रकारे "व्रताशक्तौ वा त्रैधं तण्डुलान् विभज्य" कात्या॰ श्रौ॰ २५।४।४० "सर्वमेव कृतैनैव दैवेनैव वदन्त्युत । पुंसः प्रयत्नजं किञ्चित्त्रैधमेतद्विरुच्यते" भा॰ व॰ ३२ अ॰ ।

**त्रैधर्म्य** न॰ त्रयाणां वेदानां धर्मान् हौत्राध्वर्य्यवौद्गात्रान-

र्हति घञ् । ऋगादिवेदत्रयविहिताध्वर्य्यवौद्गात्रार्हे ज्योतिष्टोमादौ काम्यकर्म्मणि ।

**त्रैधातवी** स्त्री उदवसानीयाख्ये इष्टिभेदे "तस्य योनिराशय आस । तमनु पराकृत्य संनच्याक्रिनत् सेयेष्टिरभवत् तद्यदेतस्मिन्नाशये त्रिधातुरिवैषाविद्यामेत तस्मात्त्रैधातवी नाम" शत० ब्रा० ५।५।५।६। "सर्वा इष्टीरपि दर्विहोमान्यो राजसूयेन यजते देवसृष्टो वा एषेष्टिर्यत्त्रैधातवी" ११ । "त्रैधातव्युदवसानीयासावेव बन्धुः" शत० ब्रा० १२।६।२।७ । "त्रैधातव्युदवसानीया भवति" कात्या० श्रौ० १२।४।८ ।

**त्रैधातवीय** न० त्रिधातवी+गहा० छ । इष्टिभेदाङ्गकर्म्मभेदे "सर्वो वा एष यज्ञो यत्त्रैधातवीयम्" तैत्ति०स०२।४।११।२।

**त्रैधातुक** त्रि० त्रिभिः धातुभिः स्वर्णरौप्यताम्रैः निर्वृत्तः ठञ् । स्वर्णादिधातुत्रयनिष्पाद्ये ।

**त्रैनिष्किक** त्रि० त्रिभिः निष्कैः क्रीतम् ठक् । त्रिनिष्कक्रीते । तस्य वा लुक् । त्रिनिष्क अप्यत्र ।

**त्रैपारायणिक** त्रि० त्रिः पारायणमावर्त्तयति ठञ् । त्रिवारं वेदपारायणकारके ।

**त्रैपुर** पु० त्रिपुर+स्वार्थे अण् । १त्रिपुरदेशे हेमच० । त्रिपुरोऽभिजनोऽस्य तस्य राजा वा अण् । २पित्रादिक्रमेण तद्वासिनि ३त्रिपुराधीशे च बहुषु अणो लुक् । "मेलकैस्त्रैपुरैश्चैव चिक्कलैश्च समन्वितः" भा० भी० ८८ अ० । आर्षत्वात् बहुषु अणो न लुक् । त्रिपुरं पुरत्रयमस्त्यस्य अण् । त्रिपुरस्वामिषु ४असुरभेदेषु त्रिपुरशब्दे दृश्यम् । "येनोद्धृतास्त्रैपुरा मायिनो वै दग्धाश्चोरेण वितथान्ताः शरेण" हरिवं० १२१ अ० ।

**त्रैपुरुष** त्रि० त्रीन् पुरुषान् व्याप्नोति अण् आर्षे पूर्वपदवृद्धिः । त्रिपुरुषव्यापके । "ब्राह्मणानिन्दिता राजन् ! हन्युस्त्रैपुरुषं कुलम्" भा० आनु० ६० अ० । लोके तु उत्तरपदवृद्धिः त्रिपौरुष इत्येव ।

**त्रैफल** न० त्रिफलानां तदाद्यद्रव्याणामिदम् अण् । चक्रदत्तोक्ते घृतभेदे । यथा "त्रिफलां त्र्यूषणां द्राक्षां मधुकं कटुरोहिणीम् । प्रपौण्डरीकं सूक्ष्मैलां विडङ्गं नागकेसरम् । नीलोत्पलं शारिवे द्वे चन्दनं रजनीद्वयम् । कार्षिकं पयसा तुल्यं त्रिगुणं त्रिफलारसम् । घृतप्रस्थं पचेदेतत् सर्वनेत्ररुजापहम् । तिमिरं दोषमास्रावं कामलां काचमर्बुदम् । वीसर्पं प्रदरं कण्डूं रक्तं श्वयथुमेव च । खालित्यं पलितञ्चैव केशानां पतनन्तथा । विषमज्वरमर्माणि शुक्रञ्चाशु व्यपोहति । अन्ये च बहवो रोगा नेत्रजा ये च वर्त्मजाः । तान् सर्वान् नाशयत्याशु भास्करस्तिमिरं यथा । न चैतस्मात् परं किञ्चिद्दृषिभिः काश्यपादिभिः । दृष्टिप्रसादनं दृष्टं यथा स्यात् त्रैफलं घृतम्" ।

**त्रैबलि** पु० ऋषिभेदे "दामोष्णीषस्त्रैबलिश्च पर्णादो वरजानुकः । मौञ्जायनो वायुभक्षः पाराशर्य्यश्च सारिकः" भा० स० ४ अ० ।

**त्रैमातुर** पु० तिसृणां मातॄणामपत्यम् अण् मातुरुत् । तिसृणां कौशल्याकैकयीसुमित्राणां स्नेहभाजनत्वेन तदीयांशपायसभोजनेन जनिते लक्ष्मणे "त्रैमातुरः कृतसजिताम्बघस्वः" भट्टिः । "सहि सुमित्रया, स्वांशपिण्डद्वयप्रदानात्ताभ्याञ्च जनितः" जयम० । तत्कथा रामायणे दर्शिता यथा "पायसं प्रतिगृह्णीयाः पुत्रीयं त्विदमात्मनः । कौशल्यायै नरपतिः पायसार्द्धं ददौ तदा । अर्द्धादर्द्धं ददौ चापि सुमित्रायै नराधिपः । कैकेय्यै चावशिष्टार्द्धन्ददौ पुत्रार्थकारणात् । प्रददौ चावशिष्टार्द्धं पायसस्यामृतोपमम् । अनुचिन्त्य सुमित्रायै पुनरेव महामतिः । एवन्तासां ददौ राजा भार्य्याणां पायसं पृथक् । तास्त्वेव पायसं प्राप्य नरेन्द्रस्योत्तमाः स्त्रियः । सम्मानं मेनिरे सर्वाः प्रहर्षोदितचेतसः । ततस्तु ताः प्राश्य तमुत्तमस्त्रियो महीपतेरुत्तमपायसं पृथक् । हुताशनादित्यसमानतेजसोऽचिरेण गर्भान् प्रतिपेदिरे तदा" आ० १६ स० ।

**त्रैमासिक** त्रि० त्रिमासं तृतीयमासं भूतः स्वयन्तया प्राप्तः "तमधीष्टो भृतो भावी" पा० ठञ् हत्तौ त्रिशब्दस्य पूरणार्थत्वेन संख्यावाचकत्वाभावात् न द्विगुत्वं तेन "द्विगोर्लुगनपत्ये" पा० न लुक् । स्वयन्तया जन्मतस्तृतीयमासव्यापके त्रिमासवयस्के "तोकेन जीवहरणं यदुलूकिकायास्त्रैमासिकस्य च पदा शकटोऽपवृत्तः" भाग० २।७।२८ । २त्रिमासभवे च ।

**त्रैमास्य** न० त्रिमास+स्वार्थे ष्यञ् । त्रिमासे "अर्द्धमासमासत्रैमास्यषाण्मास्ये चैके" का० श्रौ० २०।३।६ ।

**त्रैयम्बक** त्रि० त्रियम्बको देवता अस्य । "त्र्यम्बकदेवताके १पशुभेदे । "पृषन्तस्त्रैयम्बकाः" यजु० २४।१८ । "त्रैयम्बका त्रियम्बकदेवताकाः पृषन्तः" वेददी० । २होमभेदे पु० "त्रैयम्बकान् वक्ष्यामि" इत्युपक्रमे कात्या० श्रौ० २।१०।१० । "निर्वपति रौद्रानित्यादिना ते होमाः दर्शिताः

रुद्रदेवताके २ धनुर्विद्याभेदे च । "वेदं षडङ्गं वेदाङ्ग-मर्थविद्याञ्च मानवीम् । त्रैयम्बकमथेष्वस्त्रमस्त्राणि विविधानि च" भा० द्रो० १७ अ० । ३रुद्रदेवताके बल्यादौ त्रि० "निशायां नैत्यिकं चेरुर्नैशं त्रैयम्बकं बलिम्" भा० द्रो० ७९ अ० ।

**त्रैयाहावक** त्रि० त्र्याहावे देशभेदे भवः धूमा० वुञ् । "न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्" पा० इति निषेधात् ऐच् । त्र्याहावदेशभवे ।

**त्रैराशिक** त्रि० त्रीन् राशीन् अधिकृत्य प्रवृत्तम् ठञ् । लीलावत्युक्ते राशित्रयाधिकारेण अनुपातरूपे गणित-भेदे तत्प्रकारश्च क्रमव्यस्तभेदसहितो लीला० उक्तो यथा "त्रैराशिके करणसूत्रं वृत्तम् । प्रमाणमिच्छा च समानजाती आद्यन्तयोस्तः फलमन्यजाति । मध्ये, तदिच्छाहतमाद्यहृत् स्यादिच्छाफलं व्यस्तविधिर्विलोमे । उदाहरणम् । कुङ्कुमस्य सदलं पलद्वयं निष्कसप्त-मलवैस्त्रिभिर्यदि । प्राप्यते सपदि मे वणिग्वर ! ब्रूहि निष्कनवकेन तत्कियत् । न्यासः २/७ । ५/२ । ९/१ । लब्धानि कुङ्कुमपलानि । ५२ । कर्षौ । २ । अपि च प्रकटकर्पूरपलत्रिसप्त्या चेल्लभ्यते निष्कचतुष्क-युक्तम् । शतं तदा द्वादशभिः सपादैः पलैः किमाचक्ष्व सखे ! विचिन्त्य । न्यासः ६३/१ १०४/१ ४९/४ । इच्छागुणितफलम् । ५०९६/४ । छेदभक्तम् । १२७४ । आद्येन । ६३ । हृतं लब्धा निष्काः । २० । शेषम् । १४ । षोड़शगुणितम् । २२४ । आद्येन भक्तं जा-ताद्रम्माः । ३ । एवं पणाः । ८ । काकिण्यः । २ । वराटकाः । ११ । भागाश्च १/९ । पुनश्च । द्रम्मद्वयेन साष्टांशा शालितण्डुलखारिका । लभ्या चेत् पणसप्तत्या तत्किं सपदि कथ्यताम् । अत्र प्रमाणेच्छयोः सजातीयकरणार्थं द्रम्मद्वयस्य पणीकृतस्य न्यासः ३२/१ । ९/८ । ७०/१ । लब्धं खार्यौ । २ । द्रोणाः । ३ । आढ़काः । १ । प्रस्थौ । २ । इति क्रमत्रैराशिकम् । अथ व्यस्तं त्रैराशिकम् । इच्छावृद्धौ फले ह्रासो ह्रासे वृद्धिश्च जायते । व्यस्तं त्रैराशिकं तत्र ज्ञेयं गणित-कोविदैः । यत्र इच्छावृद्धौ फले ह्रासः ह्रासे वा फले वृद्धिस्तत्र व्यस्तं त्रैराशिकं स्यात् । तद्यथा । जीवानां वयसोर्मौल्ये तौल्ये वर्णस्य हैमनि । भागहारे च राशीनां व्यस्तं त्रैराशिकं भवेत् । जीववयोमूल्ये उदाहरणम् । प्राप्नोति चेत् षोड़शवत्सरा स्त्री द्वात्रिं-शतं विंशतिवत्सरा किम् । द्विधूर्वहो निष्कचतुष्कमुक्षा प्राप्नोति धूःषट्कवहस्तदा किम् । न्यासः । १६ । ३२ । २० । लब्धं २५/३/५ । द्वितीयन्यासः । २ । ४ । ६ । लब्धं २/२/२ । वर्णोऽयसुवर्णतौल्ये उदाहरणम् । दशवर्णं सुवर्णं चेद्गद्याणकमवाप्यते । निष्केण तिथिवर्णन्तु तदा वद कियन्मितम् । न्यासः १०।१। १५ । लब्धं २१/२/३। राशिभागहरणे उदाहरणम् । सप्ताढ़केन मानेन राशौ सस्यस्य मापिते । यदि मानशतं जातं तदा पञ्चाढ़केन किम् । न्यासः ७।१००। ५ । लब्धम् १४० ।"

"अस्ति त्रैराशिकं बीजं पाटी च विमला मतिः ।
किमज्ञातं सुबुद्धीनामतो मन्दार्थमुच्यते" लीला० ।

**त्रैरूप्य** न० त्रिरूपस्य भावः ष्यञ् । त्रिधारूपे "चात् यत् तेन त्रैरूप्यम्" सि० कौ० ।

**त्रैलिङ्ग** न० त्रीणि सत्वरजस्तमांसि पुंस्त्रीक्लीबरूपाणि वा लिङ्गान्यस्य, तस्येदम् वा अण् । त्रिलिङ्गप्रधानकार्य्ये । "पुमांश्चैवाऽपुमांश्चैव त्रैलिङ्गं प्राकृतं स्मृतम् । न वा-ऽपुमान् पुमांश्चैव त्रैलिङ्गीत्यभिधीयते" भा० शा० ३०७ अ० ।

**त्रैलोक्य** न० त्रिलोक्येव स्वार्थे ष्यञ् । स्वर्गमर्त्यपाताल-लोके । "तपसैव प्रपश्यन्ति त्रैलोक्यं सचराचरम्" मनुः । "त्रैलोक्ये यानि रत्नानि साम्प्रतं भान्ति ते गृहे" देवीमा० । "प्रहृतिं चकमे तस्मिन् त्रैलोक्यप्रभवोऽपि यत्" रघुः । आर्षे तु क्वचित् स्वार्थे अण् । त्रैलोक तत्रार्थे । "तत् प्रेक्ष्य तादृशं रूपं त्रैलोकेनापि दुर्जयम्" भा० शा० २८२ अ० ।

**त्रैलोक्यमोहन** न० त्रैलोक्यं मोहयति मुह–णिच्–ल्यु । तन्त्रोक्ते ताराकवचभेदे । "तारापूजा श्रुता नाथ ! विद्याश्च सकलास्ततः । साम्प्रतं श्रोतुमिच्छामि कवचं मन्त्र-विग्रहम् । त्रैलोक्यमोहनं नाम सर्वापद्विनिवारकम् । पुरैव सूचितं नाथ ! कृपया मे प्रकाशय" भैरव उवाच "देवदानवविद्याढ्यपूजिते ! प्राणवल्लभे ! । त्रैलोक्यमो-हनं नाम कवचं श्रूयतां वरम्" । इत्युपक्रम्य दर्शितम् ।

**त्रैलोक्यविजया** स्त्री त्रैलोक्यं विजयते सेवने स्वाधीनं करोति वि+जि–अच् । भङ्गायाम् (भाङ) शब्दच० ।

**त्रैवण** त्रि० त्रिवणस्य वनत्रयस्येदम् शिवा० अण् त्रिवणसम्ब-न्धिनि सोऽस्यास्तीति उत्करा० छ । त्रैवणीय तद्युक्ते त्रि० ।

**त्रैवणि** स्त्री त्रिवणस्य ऋषेरपत्यम् इञ् । त्रिवणर्षेर-पत्ये । "त्रैवणेस्त्रैवणिः" शत० ब्रा० १४।५।५।२१ ।

**त्रैवर्गिक** त्रि० त्रिवर्गाय हितं वा० ठञ् । १धर्मार्थकाम-

साधने कर्म्मादौ। "संख्यां विज्ञाय संन्यस्य कर्म्म त्रैवर्गिकञ्च यत्" भाग० २।४।५। स्त्रियां ङीप्। "त्रिवर्गिकी यतः" भाग० ३।१४।१५। त्रिवर्गे प्रसृतः ठञ्। २त्रिवर्गरते। "त्रैवर्गिकास्ते पुरुषा विमुखा हरिमेधसः" भाग० ३।३२।१४।

**त्रैवर्ग्य** त्रि० त्रिवर्गे साधुः ष्यञ्। त्रिवर्गसाधने धनादौ "त्रैवर्ग्यार्थो यतो नित्यं कृतान्तभयसंयुतः" भाग० ४।२।१२२।

**त्रैवर्णिक** त्रि० त्रिषु वर्णेषु विहितः ठञ्। १ब्राह्मणादित्रयरूपद्विजातिधर्म्मे। स्वार्थे ठञ्। २द्विजातौ च "त्रैवर्णिकानामराजकेषु राष्ट्रेषु परराष्ट्रपरचक्रागमनादिजनिते क्षोभसङ्करादौ प्राप्ते" कुल्लू०। "त्रैवर्णिकानामधिकारः" कर्कः।

**त्रैवर्षिक** त्रि० त्रिवर्षं भविष्यति ठञ्। "वर्षस्याभविष्यति" पा०नोत्तरपदवृद्धिः। त्रिवर्षं भविष्यति वस्तुनि "त्रैवर्षिकं तापयितं तस्य सौम्यं संवत्सरः" आश्व० श्रौ० १२।५।१२। अभविष्यति तु त्रैवार्षिक इत्येव।

**त्रैवार्षिक** त्रि० त्रिवर्षे भूतो भवति वा ठञ् अभविष्यत्वात् उत्तरपदवृद्धिः। १त्रिवर्षभूते २तत्र भवति वा। "यस्य त्रैवार्षिकं भक्तं पर्य्याप्तं भृत्यवृत्तये" मनुः। "त्रैवार्षिकाधिकान्नोयः स तु सोमं पिबेत् द्विजः" याज्ञ०।

**त्रैविक्रम** त्रिविक्रमस्येदम् अण्। १त्रिविक्रमसम्बन्धिनि। "त्रैविक्रमं पादमिवेन्द्रशत्रुः" रघुः २त्रिविक्रमावतारे च। "वर्द्धयस्व महाबाहो! पुरा त्रैविक्रमे यथा" हरिवं० ५६ अ०।

**त्रैविद्य** पु० तिस्रो विद्याः समाहृताः ऋग्यजुःसामरूपास्त्रिविद्यं तदधीते वेद वा अण्। १वेदत्रयाभिज्ञे। "त्रैविद्यो हेतुकस्तर्की नैरुक्तो धर्म्मपाठकः। त्रयश्चाश्रमिणः पूर्व्वे परिषत् स्याद्दशावरा" व्यव० त० नारदः। "चत्वारो वेदधर्म्मज्ञाः पर्षद् त्रैविद्यमेव वा" "राजा कृत्वा पुरे स्थानं ब्राह्मणान्न्यस्य तत्र तु। त्रैविद्यं वृत्तिमद्ब्रूयात् स्वधर्मः पाल्यतामिति" याज्ञ०। तिसृणां विद्यानां समाहारः त्रिविद्यं स्वार्थे अण्। २तिसृषु विद्यासु। "धर्म्मं भागवतं शुद्धं त्रैविद्यं च गुणाश्रयम्" भाग०६।२।२४। तासु तिस्रो नानारूपाः"ऋचो यजूंषि सामानि त्रैविद्यं तत्र तिष्ठति" सा०व्या०। "स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः। महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः" मनुः "कर्मकाण्डं कर्मिष्ठं त्रि

पमयं विपश्चितोविनाम्। गावोऽस्माकं परा हत्तिरेतत् त्रैविद्यमुच्यते" हरिवं० ७३अ० "त्रयोऽन्नयस्त्रयो वेदास्त्रैविद्यं कौस्तुभो मणिः" हरिवं० १६८ अ० "त्रयो लोकास्त्रयो वेदास्त्रैविद्यं पावकत्रयम्" मार्कण्डेयपु०।

**त्रैवि(पि)ष्टप** पु० त्रिविष्टपे वसति अण्। देवे शब्दार्थचि०। "त्रैविष्टपानामपि दूरदर्शनम्" भाग० ११।७।

**त्रैविष्टपेय** पु० त्रिविष्टपे वसति वा० ढक्। देवे "गन्धर्वसिद्धासुरयक्षचारणत्रैपिष्टपेयादिषु नानुविन्दत" भाग० ८।८।१२।

**त्रैवृष्ण** पु० त्रिवृष्णस्यापत्यं वा० अण्। राजभेदे "त्रैवृष्णो अग्ने दशभिः सहस्रैर्वैश्वानर! त्र्यरुणश्चिकेत" ऋ०५।२७।१।

**त्रैवेदिक** त्रि० त्रिषु वेदेषु तदध्ययनार्थं विहितः ठक्। वेदत्रयाध्ययनार्थे व्रतादौ। "षट्त्रिंशदाब्दिकं चर्य्यं गुरौ त्रैवेदिकं व्रतम्" मनुः। [शब्दे दृश्यम्।

**त्रैशङ्कव** पु० त्रिशङ्कोरपत्यम् अण्। हरिश्चन्द्रे त्रिशङ्कु-

**त्रैशोक** न० त्रिशोकेन ऋषिणा दृष्टं साम। "त्रिशापूतना," इत्यादिकायामृचि गेये ब्रह्मस्तोत्रके सामभेदे।

**त्रैसानु** पु० तुर्वसुवंश्ये गोभानुसुते नृपभेदे "गोभानोस्तु सुतो राजा त्रैसानुरपराजितः। करन्धमस्तु त्रैसानोर्मरुत्तस्तस्य चात्मजः" हरिवं०३२ अ०।

**त्रैस्वर्य्य** न० त्रिस्वर+चतुर्व० स्वार्थे ष्यञ्। उदात्तानुदात्तस्वरितरूपस्वरत्रिके। तत्र यत्र यः स्वरः तत् उदात्तानुदात्तशब्दयोरुक्तं स्वरितशब्दे वक्ष्यते च तस्यापवादः एकश्रुतिशब्दे १४८४पृ० उक्तः।

**त्रैहायण** त्रि०त्रिहायणस्येदम् हायनान्तत्वात् अण्। १त्रिवर्षसम्बन्धिनि। स्त्रियां ङीप्। भावे अण्। २तद्भावे न०।

**त्रोटक** त्रि० त्रोटयति चु० त्रुट-ण्वुल्। १छेदके। "सप्ताष्टनवपञ्चाङ्कं दिव्यमानुषसंश्रयम्। त्रोटकं नाम तत् प्राहुः प्रत्यङ्कं सविदूषकम्" सा० द० उक्ते २दृश्यकाव्यभेदे प्रत्यङ्कं सविदूषकत्वात् शृङ्गारोऽत्राङ्गीति बोध्यम्। तत्र सप्ताङ्कं स्तम्भितरम्भम्। पञ्चाङ्कं विक्रमोर्वशी।

**त्रोटि(टी)** स्त्री चु० त्रुट–इ वा ङीप्। १कट्फले, २चञ्चुाम्, (पाखिर ठोंट) ३पक्षिभेदे ४मत्स्यभेदे च मेदिनि०। [स्वगे शब्दच०। स्त्रियां जातित्वात् ङीप्।

**त्रोटिहस्त** पुं स्त्री त्रोटिर्हस्त इव ग्रहणसाधनं यस्य।

**त्रोतल** न० १ऋोडकृतस्के (तोतला) २स्खलद्वाक्ये त्रि०।

**त्रोत्र** न० त्रायतेऽनेन त्रै–त्रन्। प्राजने तोदने गवादेः

शब्दो वेदलक्षणो यस्येति वा, अम्बनम् अम्बः शब्दः। त्रयोऽकारोकारमकाराः अम्बाः शब्दाः प्रतिपादकाः वाचका वा अस्येति वा, त्रीणि पृथिव्यन्तरीक्षद्युलोकाख्यानि अम्बकानि स्थानानि यस्येति वा। १शिवे अमरः "त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्" यजु० ३।६० "जङ्घीकृतस्त्र्यम्बकवीक्षणेन" महेश्वरस्त्र्यम्बक एव नापरः" रघुः। २दुर्गायां स्त्री "सोमसूर्य्यानलाक्षित्वात् त्र्यम्बका सा स्मृता बुधैः" देवीपुरा०।

**त्र्यम्बकसख** पु० ६त० टच् समा०। कुवेरे अमरः कुवेरशब्दे तस्य तथात्वम् दृश्यम्। [क्यादिकं दृश्यम्।

**त्र्यरुण** पु० त्रिष्णपुत्रे राजर्षिभेदे त्रैष्णशब्दे ऋ० वा-

**त्र्यरुषि** त्रि० त्रीणि अरुषीणि रोचमानानि शुभ्राणि ककुत्पृष्ठपार्श्वस्थानानि यस्य। रोचमानशुभ्रपृष्ठादित्रययुक्ते गवादौ। "त्र्यरुषीणां दश गवां सहस्रा" ऋ० ८।४६।२२।

**त्र्यवि** पु० षण्मासात्मकः कालः अविः त्रिसंख्योऽव्योऽस्य। अष्टादशमासवयस्के पशौ। "त्र्यविर्वयस्त्रिष्टुप्छन्दः" यजु० १४।१०। त्रीन् लोकान् अवति अव—रक्षणादिषु इन्। वेददी०। "तस्मौ त्र्यविं रेरिहाणा" ऋ० ३।५५।१४। "त्र्यविं सार्द्धसंवत्सरवयस्को वत्सस्त्र्यविरुच्यते तत् प्रमाणमादित्यम् त्रीन् लोकानवति स्वतेजसा व्याप्नोतीति वा" भा० उक्तेः २त्रैलोक्यव्यापके च।

**त्र्यब्द** न० समा० द्वि० पात्रा०। १वर्षत्रये "त्र्यब्दं चरेद्वा नियतो जटी ब्रह्महणो व्रतम्" मनुः। त्रयोऽब्दावयोमानं यस्य तद्धितार्थद्विगुः आर्हीयष्ठञ् अध्यर्द्धेत्यादि पा० तस्य लुक्। २त्रिवर्षवयस्के त्रि०।

**त्र्यशीति** स्त्री त्र्यधिकाऽशीतिः शाक० त० त्रयश्च अशीतिश्च समा० द्व० वा। (तिराशी) १त्र्यधिकाशीतिसंख्यायां २तत्संख्येये च। ततः पूरणे डट्। त्र्यशीत तत्पूरणे त्रि०। स्त्रियां ङीप् तमप्। त्र्यशीतितम तत्पूरणे त्रि०। त्र्यशीत्या युतं शतादि ड। त्र्यशीत तद्युतशतादौ।

**त्र्यष्टक** न० सुश्रुतोक्ते जलनिक्षेपणस्थानभेदे। पञ्च निक्षेपणानि भवन्ति। तद्यथा फलकं त्र्यष्टकं सङ्कवलय उदकमञ्चिका शिक्यञ्चेति" सुश्रु०।

**त्र्यष्टन्** त्रि० त्रिगुणिताः अष्ट। १चतुर्विंशतिसंख्यायां २तत्संख्येये च। "त्र्यष्टवर्षोऽष्टवर्षीयां धर्म्मे सीदति सत्वरः" मनुः।

**त्र्यस्र** न० तिस्रः अस्रयः कोणा यस्य अच् समा०। १त्रिकोणे राजनि०। "प्रथमत्र्यस्रे द्वितीयत्र्यस्रे इत्यादि" कालीपूजापद्धतिः।

**त्र्यह** पु० त्रयाणामह्नां समाहारः टच् समाहारद्विगुत्वात् नाह्नादेशः। "अह्नाह्नाः पुंसि" पा० पुंस्त्वम्। दिनत्रये। उत्तरपदद्विगौ तु अह्नादेशः त्र्यह्नप्रिय इत्यादि। "त्र्यहं न कीर्त्तयेत् ब्रह्म राज्ञो राहोश्च सूतके" "त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम्। त्र्यहं परञ्च नाश्नीयात् प्राजापत्यं चरन् द्विजः" मनुः।

**त्र्यहस्पर्श** पु० त्र्यहं चान्द्रदिनत्रयं स्पृशति स्पृश—अण्। १तिथित्रयस्पर्शिन्येकसावनदिने त्र्यहस्पर्शिनि २दिनक्षये च

**त्र्यहस्पृश** पु० "एकं दिनं यत्र तिथित्रयं च स्पृशेत्तमाहुस्त्र्यहस्पृशं नयोऽवमाख्यम्। एका तिथिस्त्रीणि दिनानि यत्र स्पृशेत्तदाहुस्त्रिदिनस्पृशन्तु" इत्युक्ते सावनदिनत्रयस्पर्शिनि एकस्मिन् तिथौ "त्र्यहस्पृशं नाम यदेतदुक्तं तत्र प्रयत्नः कृतिभिर्विधेयः। विवाहयात्राशुभपुष्टिकर्म्मः सर्वं न कार्य्यं त्रिदिनस्पृशं तु" ज्यो० त०। क्विन्। त्र्यहस्पृश् क्विन्नन्तत्वात् भाषि पदान्ते च कुः। तत्रार्थे "तिथिवारत्रये चैका त्र्यहस्पृक् समुदाहृता"। "एकादशी द्वादशी च रात्रिशेषे त्रयोदशी। त्र्यहस्पृक् तदहो रात्रमुपोष्या सा सदा तिथिः" स्मृतिः। [क्रतुभेदे।

**त्र्यहीन** पु० त्रिभिरहोभिः निर्वृत्तः ख। त्रिदिनसाध्ये

**त्र्यहैहिक** त्रि० ईहा चेष्टा तस्यां भवं ठञ् ऐहिकम् धनादि त्र्यहपर्य्याप्तमैहिकं धनं यस्य। दिनत्रयनिर्वाहोचितधनशालिनि। "त्र्यहैहिको वापि भवेदश्वस्तनिक एव वा" मनुः।

**त्र्याक्षायण** पु० त्र्यक्षस्य युवाऽपत्यम् फञ् ऐक्षकारिगणे "द्व्याक्षायण त्र्याक्षायणेति निर्देशात् "न य्वाभ्यां पदान्ताभ्यां पूर्वौ ताभ्यामैच्" पा० सूत्रोक्तं कार्य्यं न। त्र्यक्षस्य शिशुपालहरादेर्यूनपत्ये। तस्य विषयो देशः ऐषुका० भक्तल्। त्र्याक्षायणभक्त तदीये विषये।

**त्र्यायुष** न० त्रयाणां बाल्ययौवनस्थाविराणामायुषां समाहारः वेदे अच् समा०। बाल्याद्यायुस्त्रये। "त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम्" यजु० ३।६२।

**त्र्यार्षेय** पु० त्रयः आर्षेयाः ऋषयः यत्र। त्रिप्रवरे १गोत्रभेदे आर्षेयशब्दे दृश्यम्। ऋषेरयम् ढक् आर्षेयः ऋषिधर्म्मः त्रयः आर्षेया धर्म्मायेषाम्। २अन्धबधिरमूकेषु तेषाञ्च यथा ऋषिधर्म्मवत्त्वं तथा समर्थितं तत्त्वबोधिन्याम् यथा "एतच्चान्यायमूलक एव तिर्य्यक्पङ्क्त्यार्षेयदेवतानां यागेषु नाधिकार इति प्रवादः। त्र्यार्षेयास्त्रय ऋषि-

धर्मा अन्धत्वबधिरत्वमूकत्वानि येषां ते ऋषीणां हि परद्रव्यदर्शनेन तत्र रागोत्पत्तिसम्भावनया चक्षुर्निमीलनेनान्धत्वं, परनिन्दाश्रवणशङ्कया श्रोत्रनिग्रहेण बधिरत्वं मिथ्याकथनशङ्कया वाक्यसंयमनान्मौक्यम्"। अन्धादीनां कर्मानधिकारे हेतुश्च "मनुष्याणां वा आरम्भसामर्थ्यात्"४ "अङ्गहीनाश्रोत्रियषण्ढशूद्रवर्जम्"कात्या० श्रौ० १।१।५। सूत्राभ्यां निरूपितः अत्र कर्कव्याख्या "अङ्गहीनाश्रोत्रियषण्ढशूद्रान् वर्जयित्वा मनुष्याणामधिकारः कर्मसु भवति। मनुष्या अपि ये अङ्गहीना अङ्गेन चक्षुरादिना हीना अन्धपङ्गुमूकबधिरादयः अश्रोत्रिया अनधीतवेदाः षण्ढा नपुंसकाः शूद्राश्च नैतेषामधिकार इत्यर्थः। आरम्भसामर्थ्यादित्यत्राप्यनुवर्त्तते न चैतेऽङ्गहीनादयो यथाश्रुतं कर्मारब्धुं कर्तुं शक्नुवन्ति तद्यथा न ह्यन्ध आज्यावेक्षणं कर्तुं शक्नोति मूकश्च मन्त्रोच्चारणम्, पङ्गुश्च विष्णुक्रमम्। बधिरश्च प्रैषश्रवणम् अनधीतवेदोऽश्रोत्रिय इत्युच्यते स च किमपि मन्त्रसाध्यं कर्तुं न शक्नोति षण्ढो नपुंसकः तस्याप्यनधीतवेदत्वादद्रव्यत्वादशुचित्वाच्च नाधिकारः शूद्रस्य चानधीतवेदत्वादनधिकारः। आज्यावेक्षणादिभिश्च विना कर्मणो वैगुण्यं भवत्येव। ननूक्तम् अशक्याङ्गरहितकर्मानुष्ठानादधिकारो भविष्यतीति। अत्रोच्यते। भवेदेवं यदि आज्यमवेक्षेत इत्यादीन्यङ्गवाक्यानि स्वातन्त्र्येण पुरुषैः सम्बध्येरन् प्रधानवाक्यशेषत्वात्तेषाम्, तदङ्गयुक्तेन प्रधानवाक्येन तदङ्गयुक्तः क्रतुः पुरुषैः सम्बध्यमानोऽसमर्थान् परित्यज्य समर्थान् प्रतिपद्यते तेनान्धस्य क्रतुरेवाविहितो न त्वाज्यावेक्षणमेवाविहितमितरच्च विहितमिति मन्तव्यम्। न च प्रधानवाक्यविरोधः सर्वाधिकारानिश्चयात् विशेषाभावाद्धि सर्वाधिकारः स्यात् अस्ति च विशेषः आरम्भसामर्थ्यम् अतः समर्थानामेवाधिकारः। यत्र तु प्रधानवाक्यविरोधो यावज्जीवं यजेतेत्यादौ तत्र यथाशक्तिप्रयोगादपि फलं भवति तदविरोधे तु सर्वाङ्गयुक्तकर्मानुष्ठानादेव फलम्। ननु आरम्भसामर्थ्यादित्यनेनैव षण्ढादीनामिवान्धादीनामप्यधिकाराभावसिद्धेः किमर्थं पुनरङ्गहीनादिवर्जमित्युक्तम् उच्यते नियमार्थम् एतेषामेवानधिकारो न निर्धनस्य तस्य चाधिकारो भवत्येव न त्वारम्भसामर्थ्याभावादनधिकारः अतो निर्धनोऽपि क्रत्वर्थं धनमर्जनादिना सम्पाद्यावश्यं यजेतेति। एवमन्धादिरपि यद्योषधिशस्त्रादिनान्धत्वादिकं स्फोटयितुं शक्नोति तस्याप्यधिकारो भवत्येव पूर्वमनङ्गहीनत्वावस्थायामाहिताग्निश्चेत् पश्चाद्रोगादिनाङ्गवैकल्ये जाते काम्येष्वधिकारो न भवति नित्येषु तु यथाशक्ति कुर्वन्नधिक्रियत एव अङ्गवैकल्ये सति अन्याधेयं न भवत्येव" त्रीणि आर्षेयाणि यस्य। २त्रिगोत्रोत्पन्ने माधवः। अत्रेदमभिधीयते तत्त्वबोधिन्याम् त्र्यार्षेयशब्दस्यान्धादिपरत्वकल्पनं सूत्रभाष्यविरुद्धम्। तथाहि "अङ्गहीनश्च तद्धर्मा"६।१।४१। जै० सू०। "अग्निहोत्रादिषु एवाङ्गहीनं प्रति सन्देहः किम् असावधिक्रियते, उत न इति। तत्राप्यधिकरणातिदेशः। असमर्थः इति कृत्वा पूर्वः पक्षः शक्तेर्विद्यमानत्वात् उत्तरः। तदिदम् अभिधीयते अङ्गहीनश्च तद्धर्मा। किंधर्मा अद्रव्यधर्मा" शब०भा०। "उत्पत्तौ नित्यसंयोगात्" जै०६।१।४२ "यस्य तु अप्रतिसमाधेयमङ्गवैकल्यं तं प्रति विचारः किं अधिक्रियते न, इति पूर्वाधिकरणेन अधिक्रियते इति प्राप्ते ब्रूमः न अधिक्रियते इति। कुतः? शक्त्यभावात् न असौ केनचित् अपि प्रकारेण शक्नोति यष्टुम्, तस्मात् तस्य अधिकारो न गम्यते। ननु यत् शक्नोति तत्र अधिक्रियते इति चक्षुर्विकलो विना आज्यावेक्षणेन, विना विष्णुक्रमैः पङ्गुः, विना प्रैषादिश्रवणेन च बधिरः, एतान् पदार्थान् प्रति चक्षुर्विकलादीनामनधिकारः इति यदि हि तं प्रति निर्दिश्येत ततो विकलोऽप्यधिक्रियते क्रतुम् प्रति। एषाम् उपदेशः प्रकरणाविशेषात् पुरुषस्य च आख्यातेन अनभिधानात् इति उक्तमेतत्। "विधिर्वा संयोगान्तरात् (२।४।१२) इत्यत्र। तेन विना विगुणं कर्म प्रयुक्तमपि न फलं साधयेत्। तस्मात् तस्य अनधिकारः"भा०। "अत्रार्षेयस्य स न स्यात्"जै०६।१।४३ "दर्शपूर्णमासयोः श्रूयते, "आर्षेयं वृणीते एकं वृणीते द्वौ वृणीते त्रीन् वृणीते न चतुरो वृणीते पञ्चाति वृणीते इति। तत्र सन्देहः किम् अत्र्यार्षेयस्य अधिकारः उत न इति किं प्राप्तम्। अत्र्यार्षेयोऽप्यधिक्रियते" इति कुतः आर्षेयं वृणीते इति सामान्यवचनम् तस्मात् एकं परिचष्टे द्वौ वा तच्च दर्शयति एकं वृणीते इति तथा प्रतिषेधति न चतुरो वृणीते इति। न हि अप्राप्तस्य प्रतिषेधोऽवकल्पते। तस्मात् अत्र्यार्षेयोऽप्यधिक्रियेत।

एवं प्राप्ते ब्रूमः यो न त्र्यार्षेयः स न अधिक्रियते।

कुतः ? त्रीन् वृणीते इति विशेषवचनात् विधिश्च अप्राप्तत्वात् । ननु एकं वृणीते इत्यपि विशेषवचनमस्ति । न इत्युच्यते, विधायिकाया विभक्तेरभावात् । ननु स्तुत्या विधास्यन्ते यथा त्रीन् वृणीत इति । उच्यते त्र्यार्षेयाणामेव स्तुतिः सा त्रित्वं विधास्यति । एकं वृणीते इत्ययमनुवादोऽयं त्र्यार्षेयाणामेव, तत्रापि त्रित्वमेव श्रूयते विधातुम् । एवम् एकवाक्येन विधानं भविष्यति इति । न चतुरो वृणीते न पञ्चातिवृणीते इति नित्यानुवादो भविष्यति । तस्मात् त्र्यार्षेयस्य अधिकारो नान्यस्य इति" शब०भा०। न्यायमालायां माधवस्तु "ऋषिर्गोत्रप्रवर्त्तकः कश्यपभरद्वाजादिस्तस्य सम्बन्धि आर्षेयस्तं वृणीते उच्चारयति कश्यपगोत्रोऽहं भरद्वाजगोत्रोऽहमिति एवम् उपमन्युवशिष्ठगोत्रोऽहमिति द्विगोत्रोच्चारणम् । आङ्गिरसबार्हस्पत्यभरद्वाजगोत्रोऽहमिति त्रिगोत्रोच्चारणम्" । एवञ्च स्तवभाष्यादिग्रन्थेषु त्र्यार्षेयशब्दस्य अन्यार्थपरत्वात् जात्यन्तरैः स्थलान्तरेण अनधिकारस्य प्रतिपादनात् त्र्यार्षेयशब्दस्य न ब्राह्मणादिपरत्वमिति सुधीभिर्भाव्यम् ।

**त्र्याशिर्** त्रिस्रः दधितक्रपयोरूपा आशिरः अधिश्रयणसाधनभूता यस्य । सोमे इ° यमेदे । "यस्य मा परुषाः शतमुद्धर्षयन्त्युक्षणः । अश्वमेधस्य दानाः सोमा इव त्र्याशिरः" ऋ०५।२७।५ ।

**त्र्याहण** पुंस्त्री त्रिभिः चञ्चुपादैराहन्ति आ+हन—अच् पूर्वपदात् संज्ञात्वात् णत्वम् । विष्किरे पक्षिभेदे ।"चकोरकलविङ्कमयूरक्रकरोपचक्रकुक्कुटवारङ्गशतपत्रकतित्तिरिकुररवाङ्कयवलप्रभृतयस्त्र्याहणाविष्किरालघवः शीतमधुराः कषायादोषशमनाश्च" सुश्रुतः ।

**त्र्याहाव** पु° देशभेदे तत्र भवः वुञ् । त्रैयाहावक तत्रार्थे

**त्र्याहिक** त्रि° त्र्यहे भवः ठञ् । आर्षत्वात् त्र्याह्वायणेति निर्देशाद्वा व्याभ्यां पूर्वं न ऐच् । त्र्यहभवे ज्वरादौ । "ऐकाहिको द्व्याहिकश्च त्र्याहिकश्चातुर्थिकोत्वादि अपराजितास्तोत्रे । त्र्यहपर्य्याप्तं धनं यस्य त्र्याहम् तदस्यास्ति ठन् । त्र्यहपर्य्याप्तधनयुक्ते त्रि°। "कुसूलकुम्भीधान्योवा त्र्याहिकोऽश्वस्तनोऽपि वा" याज्ञ०। लोके तु व्याभ्यां पूर्वमैजेव त्रैयाहिक इत्येव त्र्यहभवे वस्तुनि ।

**त्र्युदय** न° त्रिषु सवनेषु उदयो गतिरस्य । सोमाख्ये द्रव्ये । "त्र्युदयं देवहितं यथा वः" ऋ० ४।३७।३ ।

**त्र्युधन्** पु° त्रिभिः वत्सतरजे सन्नैः ऊधभिर्वोऽस्य अनङ् हुस्वश्च । वत्सन्तादिरूपोधोयुक्ते वत्सररूपे वृषभे । "उत त्र्युधा पुरुध प्रजावान्" ऋ० ३।५६।३ ।

**त्र्यु(त्र्यू)षण** न° त्रयाणामुषणानां समाहारः पृषो° वा दीर्घः । मिलितशुण्ठीपिप्पलीमरिचत्रिके अमरः भरतस्तु दीर्घमध्यं पपाठ ।

**त्र्यृच** न° त्रिसृणामृचां समाहारः अच् समा° । ऋक्त्रये । "उदित्र्यृचा वा वारुण्या त्र्यृचेनाब्दैवतेन वा" "अथ त्र्यृचं जपेदब्दम्" मनुः । पक्षे संप्रसारणे तृचमप्यत्र ।

**त्र्येणी** स्त्री त्रीणि एतान्यस्य सि°कौ° त्रिषु स्थानेषु एतः कर्वुरो यस्याः ब°व°माधवः।"वर्णादनुदात्तात्"पा° ङीप् तस्य नश्च णत्वम् । त्रिषु स्थानेषु कर्वुरायां स्त्रियाम् । "तस्त्र्येणी शलली भवति लोहः क्षुरः सा या त्र्येणी शलली सा तस्यै विद्यायै रूपं लोहः क्षुरो ब्रह्मणो रूपमग्निर्हि ब्रह्मणो छित इव ह्यग्निस्तस्माल्लोहः क्षुरो भवति" शत° ब्रा° २।६।४।५ । "त्र्येणीति त्रिषु स्थानेषु एतः श्वेतः वर्णो यस्याः सा त्र्येणी" भा° । "अथास्यै युग्मेन शलाटुग्लप्सेन त्र्येण्या च शलल्या" आश्व° गृ° १।१४।४ । त्रीण्येतानि यस्याः सेयं त्र्येणी शलली । एतः शुक्ल इत्यर्थः" नारा०

**त्व** त्रि° तन—विच् अनश्च वः । १भिन्ने अन्यार्थे सर्वनामकार्य्ये सर्वनामगणे त्वत्वसमसिमेति पठित्वा "त्वत्वे इति द्वावप्यदन्तौ अन्यपर्य्यायौ एक उदात्तोऽपरोऽनुदात्त इत्येके । एकस्तान्त इत्यपरे" सि° कौ° उक्तेः तान्तत्वमपि तच्च क्विपि तुकि रूपमिति विवेकः । "ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्वरीषु । ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उ त्वः" ऋ° १०।७१।११ त्वशब्दः सर्वनामसु पठितः एकशब्दपर्य्यायः भा°उक्तेः २एकशब्दार्थे माधवः । "प्रजायै त्वस्यै यदयिच्च इन्द्र !" ऋ° १०।५४।१ । "त्वस्यै एकस्यै प्रजायै" भा° । "उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् । उतो त्वस्मै तन्वं वि सस्रे जायेव पत्य उशती सुवासाः" ऋ° १०।७१।४। "त्वशब्द एकवाची । एकः । उतशब्दोऽप्यर्थे । पश्यन्नपि मनसा पर्य्यालोचयन्नपि वाचं न ददर्श दर्शनफलाभावाच्च पश्यति । त्व एकः शृण्वन्नप्येनां वाचं न शृणोति श्रवणफलाभावात् । इत्यनेनार्द्धेनाविद्वानभिहितः । तृतीयपादेन विदित-

वेदार्थमाह। त्वसा एकसा अपि तन्वमाकीर्यं शरीरं विसृज्ये, स्वयं वाग्विविधं गमयति" भा०। यस्मा एव ऋचामर्थव्याख्याने ऋग्वेदोपद्घाते माधवः त्वचष्ठ्य अन्यार्थेतामभिप्रेत्याह, यथा "त्वः अन्यः कश्चिदर्थज्ञानाय व्याकरणाद्यङ्गानि शृण्वन्नपि मीमांसादिह्लादेनां वेदरूपां वाचं न सम्यक् शृणोति" अत उभयार्थता "विश्वं सुमनस्यीमभिरूपां विराजं पश्यन्ति त्वे न त्वे पश्यन्त्येनाम्" अथ० ८।९।९ ।सर्वनामत्वात् जसः सीभावः

**त्वक्कण्डुर** पु० त्वचः कण्डुं राति रा–क। व्रणे हारा०।

**त्वक्क्षीरा** स्त्री त्वचः वंशत्वचः क्षीरमस्यस्याः आकरत्वेन अच्।१वंशरोचनायां।२तत्रार्थे गौरा० ङीष् राजनि०। "सिताजगन्धा त्वक्क्षीरी विदारी लिहता समा" सुश्रु०

**त्वक्कुट** पु० त्वगेव कटोऽस्य। क्षीरीवृक्षे (क्षीरकञ्चुकी) प्रसिद्धे वृक्षे रत्नमा०।

**त्वक्तरङ्ग** पु०त्वचस्तरङ्ग इव। कण्डुपदार्थे पार०निघण्टुः।

**त्वक्पञ्चक** न० त्वचां पञ्चकम्। "न्यग्रोधोदुम्बराश्वत्थशिरीषप्लक्षपादपाः। पञ्चैते क्षीरिणो वृक्षास्तेषां त्वक्पञ्चकं मतम्" इत्युक्ते न्यग्रोधादित्वक्कले। केचित्तु शिरीषस्थाने वेतसं परे पारिसम् वदन्तीति भेदः "त्वक्पञ्चकं हिमं ग्राहि व्रणशोथविसर्पजित्। विस्मा-ध्मानजित् तिक्तं कषायं लघु लेखनम्" भावप्र०।

**त्वक्पत्र** न० त्वगिव पत्रमस्य। १गुड़त्वचि (दारचिनि) २तेजपत्रे च अमरभरतौ। "चन्दनागुरुसख्यानि त्वक्पत्राणां वनानि च" भा० शा०१७०अ०। ३हिङ्गुपत्र्याम् स्त्री गौरा० ङीष् अमरः।

**त्वक्पाक** पु० त्वचः पाको यत्र। "शूकदोषनिमित्ता दश चाष्टौ च व्याधयो जायन्ते" इत्युपक्रमे "त्वक्पाकः शोणितार्बुदम्" इत्यादिना च तान् विभज्य "पित्तरक्तकृतो ज्ञेयस्त्वक्पाको ज्वरदाहवान्" सुश्रुतोक्ते शूकदोषनिमित्ते व्याधिभेदे।

**त्वक्पारुष्य** न० त्वचः पारुष्यं कठोरता। त्वचः काठिन्ये "तस्य पूर्वरूपाणि त्वक्पारुष्यमकस्मात् रोमहर्षः" सुश्रुतः।

**त्वक्पुष्प** न० त्वचः पुष्पमिव। १रोमाञ्चे त्रिका० २किलासे (कुली) ख्याते हेमच०। त्वचि पुष्पं यस्याः गौरा० ङीष्। ३किलासे स्त्री जटा० स्वार्थे क। त्वक्पुष्पिका किलासे त्रिका०।

**त्वच** तनूकरणे भ्वा०पर०सक० सेट् त्वचति अत्वचीत्। "त्वष्टा तृणमश्नुते इति नैरुक्तास्त्विषेर्वा स्यात् त्वक्षतेर्वा स्यात्" निरुक्ते ८।१२ उक्तत्वात् तथा धातुरस्तीति गम्यते। "प्रतत्वक्षो अतिविश्वा महांसि" ऋ०१०।४४।१। "प्रत्वक्षाणः प्रकर्षेण तनूकर्तॄन्" भा०।

**त्वक्षस्** न० त्वक्ष्यतेऽनेन त्वच–करणे असुन्। बले निघण्टुः। "सप्रविक्षा त्वक्षसा स्वो दिवस्य" ऋ० १।१००।१५। "त्वक्षसा बलेन" भा०।

**त्वक्षीयस्** त्रि० अतिशयेन त्वक्षिता ईयसुन् तृचो लोपः। दीप्ते "मरुत्वान् त्वक्षीयसा वयसा नाधमानम्" ऋ० २।३३।६। "त्वक्षीयसा दीप्तेन" भा०।

**त्वक्सार** पु० त्वचि सारोऽस्य। १वंशे अमरः। त्वगेव सारोऽस्य। २गुड़त्वचि (दारचिनि) ख्याते पदार्थे शब्दच०। ३शोणकवृक्षे ४रक्तप्रधानवंशे (तलतावांश) राजनि०। "त्वक्साररन्ध्रपरिपूरणलब्धगीतिः" माघः। "चण्डालात् पाण्डुसोपाकस्त्वक्सारव्यवहारवान्" मनुः। "शिशूनां शस्त्रभीरूणां शस्त्राभावे च योजयेत्। त्वक्सारादिचतुर्वर्गं छेदे भेदे च बुद्धिमान्" सुश्रु०। त्वक्सारः उत्पत्तिस्थानत्वेनास्त्यस्याः अच्। ५वंशरोचनायां स्त्री राजनि०। ङीप्। क्षुद्रचञ्चुवृक्षे राजनि०।

**त्वक्सारभेदिनी** स्त्री त्वचः सारं भिनत्ति भिद–णिनि

**त्वक्सुगन्ध** पु० त्वचि फलत्वचि सुगन्धोऽस्य। नारङ्गे (नेबु) भेदे भावप्र०। २एलवालुकाख्यगन्धद्रव्ये स्त्री शब्दार्थचि०। [त्वचि शब्दार्थचि०।

**त्वक्स्वादी** स्त्री त्वचि स्वाद्वी। (दारचिनि) ख्याते गुड़-

**त्वग** गतौ भ्वा० सक० पर० सेट् इदित्। त्वङ्गति अत्वङ्गीत् तत्वङ्ग।

**त्वगङ्कुर** पु० त्वचः अङ्कुर इव। रोमाञ्चे हारा०।

**त्वगाक्षीरी** स्त्री त्वचः आक्षीरं स्वल्पक्षीरं यस्याः गौरा० ङीष्। वंशरोचनायाम् जटा०।

**त्वग्गन्ध** पु० त्वचि फलत्वचि गन्धोऽस्य। नागरङ्गे राजनि०

**त्वग्ज** न० त्वचो जायते जन–ड। १रोमणि २रुधिरे च राजनि०।

**त्वग्दोष** पु० त्वचं दूषयति दुष–णिच्–अण्। कोठरोगे राजनि० "श्वयथुं पाण्डुरोगञ्च त्वग्दोषमविपाचिताम्" सुश्रु०। "प्रियः प्रजानामपि स त्वग्दोषेण प्रदूषितः" भा० उ०१४८अ०। ततः अस्त्यर्थे इनि तद्युक्ते त्रि०। "देवापिस्तु महातेजास्त्वग्दोषी राजसत्तमः!" भा०उ० १४८अ०।

**त्वग्दोषापहा** स्त्री त्वग्दोषमपहन्ति अप+हन–ड। वाकुचयाम् राजनि०।

**त्वग्दोषारि** पु० ६त०। हस्तिकन्दे राजनि० त्वग्दोषान्तोऽप्यत्र। [ अत्वचीत्। तत्वाच। त्वक्।

**त्वच** संवरणे तु० पर० सक० सेट्। त्वचति अत्वाचीत्

**त्वच्(चा)** स्त्री त्वच्यते संव्रियते देहोऽनया त्वचति संवृणोति वा देहम् त्वच–क्विप्। १गुडत्वचि (दारचिनि) २वल्कले ३चर्मणि च मेदि०। ४स्पर्शग्राहके बाह्येन्द्रियभेदे सा च देहव्यापिनी त्वचिस्थिता स्वच्छा-वायोः सत्त्वांशेनोत्पन्ना वाताधिष्ठातृदेवताका" वेदा० सा० दृश्यम्। तत्र "उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च त्वचः। रूपान्यच्चक्षुषो योग्यं रूपमत्रापि कारणम्। द्रव्याध्यक्षे, त्वचो योगो मनसा ज्ञानकारणम्" भाषा० चर्मन् शब्दे २८०२ पृ० दृश्यम्।

चर्मणि "त्वचं समेध्यां परिधाय रौरवीम्" रघुः "आयूंषि त्वचु निर्भिद्य प्राभञ्जनिरमोचयत्" भट्टिः। "त्वगुत्तरासङ्गवतीमधीतिनीम्" कुमा०। वल्कले "भूर्जत्वचः कुञ्जरबिन्दुशोणाः" कुमा०। गुडत्वचि "त्वगेलापत्रकैस्तुल्यैः त्रिसुगन्धि त्रिजातकम्" राजनि०। हलन्तत्वात् वा टाप्। तत्रार्थे शब्दरत्ना० त्वचापत्रम्। "शुक्लत्वच इवोरगः" भा० शा० २५०अ०। "श्रीवत्साङ्कोऽरविन्दाक्ष ऊर्द्ध्वरोमा महत्त्वचः" हरिवं० १७६ अ०।

**त्वच** न० त्वच–अच्। वल्कले "त्वचवेष्टितमस्थिपञ्जरम्" उज्ज्वलद०। गुडत्वचम् इत्यादि। प्रशस्ता त्वगस्त्यस्य अच्। २त्वक्पत्रे न०। "त्वचं लघूष्णं कटुकं स्वादु तिक्तञ्च रूक्षकम्। पित्तलं कफवातघ्नं कण्डूमारुचिनाशनम्। हृद्वस्तिरोगवातार्शःकृमिपीनसशुक्रहृदिति"। [त्वचयति।

**त्वच** त्वचं करोति सत्यपाशेत्यादि० पा० स्वार्थे–णिच् नामधातुः।

**त्वचस्** न० त्वच–असुन्। त्वचि। त्वचसि हितम् यत्। त्वगिन्द्रियहिते "यत्त्वं त्वचस्यं ते वयम्" अथ० २।३३।७।

**त्वचापत्र** न० त्वचा त्वक् पत्रमिवास्य। (दारचिनि) त्वक्-पत्रे शब्दार्थचि०।

**त्वचिष्ठ** त्रि० अतिशयेन त्वग्वान् इष्ठन् मतुपो लुकि न पदान्तकार्यम्। अतिशयत्वग्युक्ते। ईयसुन् त्वचीयस् तत्रार्थे त्रि० स्त्रियां ङीप्।

**त्वचिसार** पु० त्वचि सारोऽस्य हलन्तत्वात् वा सप्तम्या न लुक्। वंशे अमरः। [जायाम् हारा०।

**त्वचिसुगन्धा** स्त्री त्वचि सुगन्धोऽस्याः अलुक् समा०। क्षुद्रै-

**त्वच्य** त्रि० त्वचि हितं यत् भत्वात् न पदान्तकार्यम्। त्वचिहिते। "त्वच्यं हृद्यं मधुरविपाकम्" सुश्रु०।

**त्वत्** त्रि० तन–क्विप् अतो वः तुक् च। अन्यार्थे सर्वनामायम्। त्वशब्दे दृश्यम्। सर्वनामत्वात् टेरकच् त्वकत् इति बोध्यम्। [काशादित्वाद्यर्थे "त्वत्तः सर्वं प्रवर्त्तते"।

**त्वत्तस्** अव्य० एकार्थवृत्तेः युष्मदः तसिल् त्वदादेशः। त्वत्स-

**त्वदीय** त्रि० तव इदम् त्यदादित्वेन वृद्धत्वात् छ त्वदादेशः। एकवचनार्थवृत्तियुष्मदर्थसम्बन्धिनि। "पितुस्त्वदीयस्य मयाऽपहारितः" रघुः।

**त्वन्च** गतौ भ्वा० पर० सक० सेट्। त्वञ्चति अत्वञ्चीत्। तत्वञ्च। उदित्। त्वञ्चित्वा त्वक्त्वा। त्वक्तः

**त्वन्च** सङ्कोचे रुधा० पर० सक० वेट्। त्वनक्ति अत्वाङ्क्षीत् मतान्तरे उदित्। क्त्वा वेट्। अन्यत्र सेट्। त्वक्तः।

**त्वद्विध** त्रि० तवेव विधा प्रकारो यस्य। त्वत्सदृशे।

**त्वम्पदलक्ष्यार्थ** पु० त्वमिति पदस्य लक्ष्योऽर्थः। अज्ञानादिव्यष्ट्युपाध्युपहिताधारभूते अनुपहितप्रत्यगानन्दरूपे तुरीयचैतन्ये। [जीवस्तु त्वम्पदाभिधः" वेदान्तप्र०।

**त्वम्पदवाच्य** त्रि० ६त०। त्वम्पदाभिधे। "देहादिभिः परिच्छिन्नो

**त्वम्पदवाच्यार्थ** त्रि० त्वम्शब्दार्थे अज्ञानादिव्यष्टिः एतदुपहितालपज्ञत्वादिविशिष्टं चैतन्यम् एतदनुपहितचैतन्यञ्च। एतत्त्रयं तप्तायःपिण्डवदेकत्वेनावभासमानः त्वम्पदवाच्यार्थो भवति" वेदान्तसा०।

**त्वम्पदाभिध** पु० त्वम्पदमभिधा यस्य। त्वम्पदवाच्ये जीवे "आलम्बनतया भाति योऽस्मत्प्रत्ययशब्दयोः। अन्तःकरणसम्भिन्नबोधः स त्वम्पदाभिधः" इत्युक्तेः।

**त्वयता** स्त्री त्वया दत्तम् पृषो०। त्वया दत्ते इत्यर्थे "मन इन्द्र! त्वयताया इषे" ऋ० ७।२०।२०। "त्वयतायै इषे त्वया दत्तायै इषे अन्नाय" भा० अन्नाय अन्नं भोक्तुमित्यर्थः।

**त्वर** वेगे भ्वा० आत्म० अक० सेट्। त्वरते अत्वरिष्ट। घटा०। णिच्–त्वरयति। षित् त्वरा। ञीत् त्वरितोऽस्ति। "गच्छावः सहितौ तत्र ममापि त्वरते मनः" रामा० आर० ७८ स०। "यस्य वा त्वरते बुद्धिः" भा० स० १५५ श्लो० "दूता हि त्वरयन्ति माम्" रामा० बा० "अतत्वरच्च तान् योद्धुम्" भट्टिः।

**त्वरा** स्त्री त्वर–अङ्। १वेगे, २अभीष्टलाभार्थं विलम्बासहने च "औत्सुक्येन कृतत्वरा सहभुवा व्यावर्त्तमाना ह्रिया" रत्नावली।

**त्वरायण** त्रि० त्वरा अयनमस्य णत्वम्। त्वरासक्ते अमरः

**त्वरायस्** त्वरणे कण्ड्वा० आकृतिगणः पर० अक० सेट्। त्वरायस्यति।

**त्वरि** स्त्री त्वर–वेगे भावे इन्। त्वरायां हेमचन्द्रकोषः।

**त्वरित** न० त्वर–क्त। १शीघ्रे। २तद्वति त्रि०। "पयोऽभिसस्रुस्त्वरितं चमूचराः"माघः "त्वरितगतिर्व्रजयुवतिः" छन्दोम०। ३देवीभेदे स्त्री "अथाभिधास्ये त्वरितां त्वरितं फलदायिनीम्"इत्युपक्रमे तन्त्रसा० तद्ध्यानादिकमुक्तं दृश्यम्।

**त्वरितक** पु० त्वरितं कायति प्रकाशते जायते कै–क। व्रीहिभेदे ( तोरी ) कृष्णव्रीहीत्याद्युपक्रमे "त्वरितककुक्कुटाण्डकेत्यादि" सुश्रु०।

**त्वरितगति** स्त्री "त्वरितगतिश्च नजनगैः" छ० म० उक्ते दशाक्षरपादके वर्णवृत्तभेदे। [ वचसि अमरः।

**त्वरितोदित** न० त्वरितमुदितम्। शीघ्रोच्चारिते निरक्ते

**त्वलग** पु० जलग+पृषो०। जलसर्पे पारस्करनि०।

**त्वष्ट** त्रि० त्वक्ष–तनूकरणे क्त। तनूकृते तष्टशब्दार्थे अमरः

**त्वष्टि** पु० "मत्स्याघातो निषादानां त्वष्टिस्त्वायोगवस्य च" मनूक्ते सङ्कीर्णजातिभेदे।

**त्वष्टीमती** स्त्री त्वष्टा तदनुग्रहोऽस्त्यस्याः मतुप् पृषो०। त्वष्टृरनुग्रहोपेतायां स्त्रियाम् "स्त्रीपुरुषमिथुनरूपाणां पशुमनुष्यादीनां शरीरनिर्माता त्वष्टा तथा च अन्वग्–पस्थानप्र० श्रूयते "यावन्तो वै रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति तावन्तो वै तत् प्रजायते" तादृशस्य त्वष्टुरनुग्रहोपेता" भा०।

**त्वष्टृ** पु० त्वक्ष–तृच्। "एकादशस्तथा त्वष्टा द्वादशो विष्णुरुच्यते" भा० आ० ६५ अ० उक्ते १द्वादशादित्यमध्ये १आदित्यभेदे। "निर्भिन्ने अक्षिणी त्वष्टा लोकपालोऽविशत् विभोः। चक्षुषांशेन रूपाणां प्रतिपत्तिर्यतो दृशाम्"भाग०३।६।१४श्लो०। उक्तेस्तस्य नेत्रोपकारकतया नेत्राधिष्ठातृत्वम् ।२देवशिल्पिभेदे अमरः"विश्वकर्मा च त्वष्टा च चक्राते ह्यायुधं बहु" हरिवं० ३१६ अ०। "आह्वये विश्वकर्माणमहं त्वष्टारमेव च" रामा० बा० ६१ स०। "त्वष्टा तथैवोर्जितविश्वकर्मा" हरिवं० २४३ अ० इत्यादिषु तयोर्भेदेन निर्देशात् न पर्यायता। ३ तद्देवताके चित्रानक्षत्रे। ४ सूत्रधरे तक्षकि वर्णसङ्करभेदे च। ५तक्षणकर्तरि त्रि० स्त्रियां ङीप्।६पशुमनुष्यादीनां गर्भान्तःस्थरेतोरूपविकारकारके देवभेदे त्वष्टीमतीशब्दे दृश्यम्।

**त्वष्टृमत्** त्रि०त्वष्टृ+अस्त्यर्थे मतुप्। वीर्याधिष्ठातृदेवभेदयुक्ते "त्वष्टृमन्तस्त्वा सपेम"यजु०३७।२०। "त्वष्टा रेतसामधिष्ठाता तत्सहिताः। मैथुनार्थोपसर्पे वीर्याधिष्ठाताऽपेक्षितोऽत एतद्युताः" वेददी०।

**त्वाम्कामा** स्त्री त्वां कामयते कम–णिङ् अण् वेदे द्वितीयायाः न लुक्। त्वामभिलषन्त्याम्। "अग्ने! त्वांकामया गिरा" ऋ० ८।११।७। लोके तु त्वत्काम इत्येव।

**त्वायु** त्रि० त्वामात्मन इच्छति क्यच् युष्मदस्मदादेशे क्याच्छन्दसि" पा० उ। आत्मनः त्वां मन्यमाने। "सुता इमे त्वायवः" ऋ० १।२।४।

**त्वावत्** त्रि० तवेव दर्शनमस्य युष्मद्+वतुप्प्रकरणे "युष्मदस्मद्भ्यां छन्दसि सादृश्ये उपसंख्यानम्" उक्तेः सादृश्ये वतुप् त्वादेशः "आ सर्वनाम्नः" पा० आ। त्वत्सदृशे "आ घ त्वावान् त्मनाप्तः" ऋ० १।३०।१४।

**त्वावसु** पु० त्वं वहुव्यापकोऽस्य त्वादेशः वेदे पृषो० आ। त्वया व्याप्ते। लोके तु त्वद्वसुः इत्येव।

**त्वाष्टी** स्त्री दुर्गायाम्। "त्वष त्वष्टौ स्मृतो धातुस्तस्य त्वष्टीनिपातने। सृजत्येषा प्रजास्त्वष्टी त्वाष्टी तेन प्रकीर्तिता" देवीपु० ४५ अ०।

**त्वाष्ट्र** त्रि०त्वष्टा देवता अस्य अण्। त्वष्टृदेवताके १आज्यादौ २चित्रानक्षत्रे स्त्री। त्वष्टुः आदित्यभेदस्य अपत्यम् अण्। ३विश्वरूपे ४वृत्रासुरे च। "त्वाष्ट्रस्य चिद्विश्वरूपस्य गोनामाचक्राणः त्रीणि शीर्षाणि परावर्के"ऋ०१०।८।९। "विवस्वानर्यमा पूषा त्वष्टाथ सविता तथा"इत्युपक्रमे विवस्वदादीनां वंशमभिधाय। "त्वष्टुर्दैत्यात्मजा भार्या रोचना नाम कन्यका। सन्निवेशस्तयोर्जज्ञे विश्वरूपश्च वीर्यवान्। तं वव्रिरे सुरगणाः स्वस्रीयं द्विषतामपि" भाग०६।१६अ० ३२श्लो० इति विश्वरूपोत्पत्तिकथा। वृत्रासुरोत्पत्तिकथा च "हतपुत्रस्ततस्त्वष्टा जुहावेन्द्राय शत्रवे। इन्द्रशत्रो! विवर्द्धस्व मा चिरं जहि विद्विषम्" इत्युपक्रमे तदुत्पत्तिमुपवर्ण्य "येनावृता इमे लोकास्तमसा त्वाष्ट्रमूर्तिना। स वै वृत्र इति प्रोक्तः पापः परमदारुणः" भाग० ६।९ अ०टीका। त्वष्टुः स्त्र्यपत्यम् अण् ङीप्। संज्ञानामनि ४सूर्यपत्न्यां स्त्री शब्दरत्ना०। छायाशब्दे २९८५ पृ० दृश्यम्। ५क्षुद्ररथे त्रिका०। ६सामभेदे। "इन्द्रो वृत्रात्त्रिभ्यद्रां प्राविशत् तं त्वाष्ट्रेऽन्वभवन् जनयामेति तमेतैः सामभिरजनयन्" पञ्चवींशब्रा०।

**त्विष** दीप्तौ भ्वा० उभ० सक० अनिट्। त्विषति ते। अत्विक्षत् अत्विक्षत। तित्वेष तित्वषे। त्विक्षीष्ट। "ओजस्तदस्य तित्विषे" ऋ० ८।६।५। "समचक्रन्त इजनाति

त्विषन यत्" ऋ० ५।५४।१२। "अग्निरिव मन्यो! त्विषितः सहस्व" ऋ० १०।८४।२।

**त्विष(षा)** स्त्री त्विष–सम्प०भावे क्विप्। दीप्तौ। "निशीथदीपाः सहसा हतत्विषः" रघुः। "रुचिधाम्नि भर्त्तरि परलोकमभ्युपगते विविशुः। ज्वलनं त्विषः कथमिवेतरथा" "चयस्त्विषामित्यवधारितं पुरः" माघः। हलन्तत्वात वा टाप्। तन्नार्थे शब्दरत्ना०।

**त्विषामीश** पु० ६त० अलुक् समा०। १सूर्य्ये हेमच० २अर्कवृक्षे च। [वृक्षे च।

**त्विषाम्पति** पु० ६त० अलुक् स०। १सूर्य्ये अमरः २अर्क-

**त्विषि** पु० त्विष–इन्। किरणे हेमच०।

**त्विषित** त्रि० त्विठ् जातास्य तार० इतच्। ज्वलिते। "अग्निरिव मन्यो त्विषितः" ऋ० १०।८४।२।

**त्वेषथ** त्रि० तिष–अथच्। दीप्ते। "सूरस्येव त्वेषथा दीषते वयः" ऋ० १।१४१।८। [त्वनः" ऋ० १।६१।११

**त्वेषस्** त्रि० त्विष–असुन्। दीप्ते "अस्येदु त्वेषसारन्त सि-

**त्वै** अव्य० त्वच–बा० डै। १विशेषे २वितर्के च शब्दार्थचि०।

**त्वोत** त्रि० त्वया ऊतः वेदे नि०। त्वया रक्षिते इत्यर्थे। "त्वोतासो न्यर्वता" ऋ० १।८।२। लोके तु त्वदूत इत्येव

**त्सर** छद्मगतौ भ्वा० पर० सक० सेट्। त्सरति अत्सारीत्। "यस्त्वा स्वपन्तीं त्सरति यस्त्वा दिप्सति जाग्रतीम्" अथ० ८।६।८। "नो हैनं पाप्मा मायया त्सरति न हैनं सोऽभिभवति" शत० ब्रा० ११।१।६।१०।

**त्सरु** पु० त्सर–उन्। खड्गमुष्टौ। "मा मां पद्येन रपसा विदत् त्सरुः" ऋ० ७।५०।१। "खड्गं च कनकत्सरुम्" भा० व० १५२७ श्लो०। "गृहीतखड्गचर्माणस्तता भूयः प्रहारिणः। त्सरुमार्गान् यथोद्दिष्टांश्चेरुः सर्वेषु भागेषु" भा० आ० ५७४३ श्लो०।

**त्सारुक** त्रि० त्सरौ तद्युद्धे निपुणः आकर्षा० कन् ततः स्वार्थे अण्। असियुद्धनिपुणे। "तथाऽतिप्रख्यातान्त्सारुकौ यमजावुभौ" भा० आ० १३२-अ०।

**त्र्यद्रस्पृश्** पु० त्र्यब्दं जैत्रवर्षत्रयं स्पृशति स्पृश क्विन्। जैत्रवर्षत्रययुक्ते लुप्तसंवत्सरे सौरवर्षभेदे। "एकस्मिन् रविवर्षे सौरवर्षद्वयावसानं चेत्। त्र्यब्दस्पृगेवमिमं विलुप्तवत्सरं प्राहुः" यशोधरजतन्त्रम्। "गुरुवर्षयुग्मवत्सरा गदिता सा ननु मृत्युसंज्ञिता" ज्योतिर्विदाभरणम्।

इति वाचस्पत्ये तकारादिशब्दार्थसङ्कलनम्।

---

# थ

थकारः तवर्गीयद्वितीयवर्णो व्यञ्जनवर्णविशेषः अस्योच्चारणस्थानम् दन्तमूलं तदुच्चारणे दन्तमूलेन सह जिह्वाग्रस्पर्शः आभ्यन्तरप्रयत्नः,अतएवास्य स्पर्शवर्णता। बाह्यप्रयत्नास्तु विवारश्वासाघोषमहाप्राणाश्च। अस्य वाचकशब्दा वर्णाभिधाने उक्ता यथा

थ स्थिरवासी महाग्रन्थिर्ग्रन्थिग्राहो भयानकः। शिलो शिरसिजो दन्ती भद्रकाली शिलोच्चयः। कृष्णो बुद्धिर्विकर्णा च दक्षिणाधिपोऽमरः। वरदा भोगदा केशो वामजङ्घाऽलकोऽनलः। नोज्जयिनी पृथुर्गुह्यः शरच्चन्द्रो विदारकः"। मातृकान्यासे अस्य वामजङ्घायां न्यासः। अस्याधिष्ठातृदेवीध्येयरूपं यथा "नीलवर्णां त्रिनयनां षड्भुजां वरदां पराम्। पीतवस्त्रपरीधानां सदा सिद्धिप्रदायिनीम्। एवं ध्यात्वा थकारन्तु तन्मन्त्रं दशधा जपेत्। पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा। तरुणादित्यसङ्काशं थकारं प्रणमाम्यहम्" अस्य स्वरूपं यथा "थकारं चञ्चलापाङ्गि! कुण्डली मोक्षरूपिणी। त्रिशक्तिसहितं वर्णं त्रिविन्दुसहितं सदा। पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं सदा। तरुणादित्यसङ्काशं थकारं प्रणमाम्यहम्" कामधेनुतन्त्रम्। काव्यादौ अस्य प्राक्प्रयोगे युद्धं फलम् "थस्तु युद्धम्" वृ० र० टीको क्तेः।

**थ** पु० थुड़–थुर्व वा ड। १पर्व्वते २भयत्रायके त्रि० ३मङ्गले ४भये रक्षणे न० मेदि०। [पाङ्गि!" कामधेनुत०।

**थकार** पु० थ+स्वरूपे कार। थस्वरूपे वर्णे "थकारं चञ्चला-

**थर्व्व** चरणे भ्वा० पर० सक० सेट्। थर्वति अथर्वीत्। तथर्व "अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः" निघण्टुधृता श्रुतिः "अथर्वाणोऽथर्वणवन्तः थर्वतिश्चरतिकर्मा तत्प्रतिषेधः" निरु० ११.८। लोकेऽपि गतिशून्ये (अथर्व इति) प्रसिद्धिः।

**थुड** संवृतौ तु० कु० पर० सक० सेट्। थुडति अथुडीत्। तुथोड़। [करणे शब्दभेदे।

**थुत्कार** पु० थुत् इत्यव्यक्तशब्दस्य कारः। निष्ठीवनत्यागानु-

**थुथूक्ल** थुथु इत्यव्यक्त शब्दात् निष्ठीवनत्यागानुकरणशब्दात् च्वि–कृञोऽनुप्रयोगः। थुथूकरोति। "थुथूकृत्य वमद्भिरध्वगजनैः" सूक्तिकर्णामृतम्।

**थुथूकृत्** स्त्री थुथु इत्यव्यक्तशब्दं करोत्यस्याम् कृ–बा० आधारे क्विप्। ष्ठीवाकायां पारस्करनिघ०।

थुर्व्व वधे भ्वा० पर० सक० सेट्। थुर्वति अथूर्वीत्। तुथूर्व।
थैथै अव्य० थै–थै इत्यव्यक्तशब्दानुकरणशब्दभेदे संगीतदामो०।
थो(थु)डन न० थुड्–भावे ल्युट् कुटादित्वेऽपि बा० गुणः। संवरणे। वस्तुतः थुडनमित्येव तदर्थे साधु शब्दकल्प द्रुमे थोडनशब्दकल्पनं प्रामादिकमेव। [शब्दार्थचि०।
थौणेय त्रि० स्थूणायां हितादि ढक् पृषो०। स्थूणाहितादौ

इति वाचस्पत्ये थकारादिशब्दार्थसङ्कलनम्।

---

# द

दकारः तवर्गीयतृतीयवर्णः व्यञ्जनवर्णभेदः अस्योच्चारणस्थानं दन्तमूलम्। दन्तमूलेन सह जिह्वाग्रेण स्पर्शनादस्य उच्चार्यत्वात् स्पर्शवर्णता। अस्योच्चारणे बाह्यप्रयत्नाः संवारनादघोषा अल्पप्राणश्च। तस्य वाचकशब्दा वर्णाभिधानोक्ता यथा।

"दोऽद्रीशोधातकि धाता दाता त्रासः कलत्रकम्। दीनं ज्ञानञ्च दानञ्च भक्तिरावहनी धरा। कुण्डमुण्डा योगिनी सद्यःकुन्तलो वामगुल्फकः। कात्यायनी शिवा दुर्गा नन्दनामा त्रिकण्टकी। खङ्गिकः कुटिलाक्षपः कृष्णः श्यामा जितेन्द्रियः। धर्मब्रह्मामदेवश्च अमरेशः सुचञ्चला। हरिद्रापुरवेदौ च दन्तपार्श्विरेखकः" अस्याधिष्ठातृदेवता ध्यानादि यथा "ध्यानमस्य दकारस्य वक्ष्यते शृणु पार्वति!। चतुर्भुजां पीतवस्त्रां नवयौवनसंस्थिताम्। अनेकरत्नघटितहारनूपुरशोभिताम्। एवं ध्यात्वा दकारन्तु तन्मन्त्रं दशधा जपेत्। त्रिशक्तिसहितं देवि! त्रिबिन्दुसहितं तथा। आत्मादितत्त्वसंयुक्तं दकारं प्रणमाम्यहम्" वर्णोद्धारतन्त्रम्। अस्य स्वरूपं यथा "दकारं शृणु चार्वङ्गि! चतुर्वर्गप्रदायकम्। पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा। त्रिशक्तिसहितं देवि! त्रिबिन्दुसहितं सदा। आत्मादितत्त्वसंयुक्तं स्वयं परमकुण्डली। रक्तविद्युल्लताकारं दकारं हृदि भावयेत्" कामधेनुतन्त्रम्। काव्यादौ अस्य प्रयोगे सौख्यं फलम्। "दोधः सौख्यं मुदं नः" वृत्त० र० टी० उक्तेः। मातृकान्यासेऽस्य वामगुल्फे न्यासः।

द पु० दैप्–शुद्धौ दा–दाने दो–खण्डने वा क दद–दाने बा० ड वा। १पर्वते २दत्ते ३दातरि च मेदि०। ४कलत्रे न० एकाक्षरकोषः। दो–खण्डने सम्प० भावे क्विप्। ५खण्डने ६रक्षणे च स्त्री मेदि०। "दाददोदुद्ददुद्दादीदादादोदूददीददोः। दुद्दादं दददे दुद्दे ददाददददोऽददः" माघः अस्य मल्लिनाथव्याख्यायामर्थ विशेषा बोध्याः। "अरपापविदां सरस्वतीम्" कुमा० "करिणां मुदे सनलदा नलदाः" किरा०। "स्वादस्वादलदं विना न दहने तापस्य कोऽपि क्षमः" "दे! वःपतिविदुषि नैषधराजगत्याः" नैषधम्। हे विदुषिदे विद्वज्जने दाति! यो वक्तव्यः इति वक्तव्यपक्षे च्छेदः।
दंश पु० दन्श–अच् भावे घञ् वा। (डाश) प्रसिद्धे कीटभेदे १मस्त्रदहने (वर्मणि) २दंशने च मेदि०। ४दोषे ५सर्पक्षते च विश्वः करणे घञ्। ७दन्ते पु० हेमच० "सर्वञ्च दंशमशकं स्थावरञ्च पृथग्विधम्" "स्वेदजा दंशमशकं यूकामक्षिकमत्कुणम्" मनुः। "कण्डूयनैर्दंशनिवारणैश्च" रघुः। गौरा० ङीष् क्षुद्रो दंशः अल्पार्थे ङीष् वा। दक्षुद्रदंशे (मशक) भेदे स्त्री अमरः।
दंशक पु० दन्श–ण्वुल्। (डाश) १मक्षिकाभेदे त्रारा०। २दंशनकर्त्तरि त्रि०।
दंशन न० दन्श–भावे ल्युट्। (कामडान) (कुलवधान) १दन्तादिना खण्डने "दष्टाश्च दंशनैः कान्तं दासीकुर्वन्ति योषितः" सा० द० २वर्मणि न०। "दृष्टदुष्टमकृता तु न विभोर्ज्यांसि दंशनम्" भा० क० ५७ अ०।
दंशनाशिनी स्त्री दंशं नाशयति नाशि–णिनि–ङीप्। तैलकीटभेदे राजनि०।
दंशभीरु पु० दंशात् भीरुः। महिषे हेमच०।
दंशमूल पु० दंश्यते कर्मणि घञ् दंशं मूलमस्य। शिग्रौ (सजिना) राजनि०।
दंशित त्रि० दंशः वर्म संजातोऽस्य तार० इतच्। १कृतसन्नाहे धृतवर्मणि "सूर्या यत्र च सौवर्णास्तयो भासन्ति दंशिताः। तेजसा प्रज्वलन्तो हि कस्यैतद्भुज्यतमम्" भा० वि० ४२ अ० "छत्राणि च विराजन्ते दंशितानि सितानि च" हरिवं ५४५४ श्लो०।
दंशूक त्रि० दन्श बा० ऊक। दंशनशीले। "तस्मात् स्त्रीवाः दन्दशूका दंशुकाः" तैत्ति० आ० १।७।८।२।
दंष्ट्रा स्त्री दंश–ष्ट्रन् गौरादिषु मातामहशब्दस्य पाठात् सिद्ध्वात् ङीषोऽनित्यत्वात् टाप्। १स्थूलदन्तभेदे। दन्त-

पङ्क्तिद्वयप्रान्ते चत्वारो दन्तभेदा दंष्ट्रा इति प्रसिद्धिः। द्विगुणाकृतदन्तावलिरित्येके "दंष्ट्राकरालानि च ते मुखानि" गीता। "दंष्ट्रायां धरणिर्नखे दितिसुताधीशः पदे रोदसी" सा० द०। "दंष्ट्रामयूखैः शकलानि कुर्वन्" रघुः

**दंष्ट्रानखविष** पु० दंष्ट्रायां नखे च विषं यस्य। मार्ज्जारादौ यथाह सुश्रुतः। "तत्र दृष्टिनिश्वासदंष्ट्रानखमूत्रपुरीषशुक्रलालार्त्तवमुखसन्दंशविशर्द्धितगुदास्थिपित्तशूकशवनानीति" विषस्थानोपक्रमे "मार्जारश्ववानरमकरमण्डूकपाकमत्स्यगोधाशम्बूकप्रचलाककृकलासगोधिकाचतुष्पादकीटास्तथान्ये दंष्ट्रानखविषाः"।

**दंष्ट्राल** त्रि० दंष्ट्रा+अस्त्यर्थे चूडा० ल। दंष्ट्रायुक्ते "धूम्रकेशो हरिश्मश्रुर्दंष्ट्रालो मृत्युराननः" हरिवं० ४७ अ०।

**दंष्ट्राविष** पु० दंष्ट्रायां विषमस्य। १भौमे सर्पे "भौमास्तु दंष्ट्राविषाः" सुश्रुतः २ लूताभेदे स्त्री। यथाह सुश्रुतः "विषन्तु लालानखमूत्रदंष्ट्रारजःपुरीषैरथ चेन्द्रियेण। सप्तप्रकारं विसृजन्ति लूतास्तदुग्रमध्यावरवीर्य्ययुक्तम्। सकण्डूकोठं स्थिरमल्पमूलं लालाकृतं मन्दरुजं वदन्ति। शोफश्च कण्डूश्च पुलाकिका च धूमायनं चैव नखाग्रदंशे। दंशन्तु मूत्रेण सकृष्णमध्यं सरक्तपर्य्यन्तमवेहि दीर्णम्। दंष्ट्राभिदष्टं कठिनं विवर्णं जानीहि दंशं स्थिरमण्डलञ्च"। लालाविषादयोऽप्यत्र। [युधादयोऽप्यत्र

**दंष्ट्रास्त्र** पुंस्त्री दंष्ट्रास्त्रमिवास्य। वराहे शब्दार्थचि०। दंष्ट्रा-

**दंष्ट्रिका** स्त्री दंष्ट्रा स्वार्थे क कापि ह्रस्वे अत इत्वम्। दाढ़िकायां दंष्ट्राशब्दार्थे। दंष्ट्रा+व्रीह्या० वा ठन्। दंष्ट्रायुक्ते त्रि०।

**दंष्ट्रिन्** पु० दंष्ट्रा अस्त्यर्थे व्रीह्या० इनि। शूकरे अमरः २सर्पे शब्दर०। ३दंष्ट्रायुक्ते त्रि०। "दंष्ट्रिभिः शृङ्गिभिर्वापि हतास्त्वेच्छैश्च तस्करैः" शु० त० वह्निपु०।

**दंसना** स्त्री चु०दन्स–भावे युच्। १कर्म्मणि निरुक्ते दंसस् इति शब्दस्य कर्मपर्य्यायतोक्तेस्तथार्थत्वम्। "तव क्रत्वा तव तद्दंसनाभिः" ऋ० ६।१७।६। "दंसनाभिः कर्मभिः" भा०। "शची वस्तव दंसना" ऋ० १।१२६।२।

**दंसस्** न० दन्स–असुन्। कर्म्मणि निघण्टुः "चारुतममस्ति दंसः" ऋ० १।६२।६। "अवर्द्धयो वलिनो अस्य दंससा" १०।१२८। "दंससा कर्म्मणा" भा०। "सजोषावश्विना दंसोभिः" यजु० १२।७४।

**दंसि** पु० दन्स–इन्। कर्म्मणि। "कुत्साय मन्मन्नह्यश्च दंसयः" ऋ० १०।१२८।१। "दंसयः कर्माणि" भा० "दंसयः कर्माणि दंसयत्येनानि" निरुक्ते ४।२५।

**दंसिष्ठ** त्रि० दन्स–तृन् दंसयिता अतिशयेन सः इष्ठन् तृणो लुकि णिलोपः। १अत्यन्तकर्मकर्त्तरि। "दस्रा दंसिष्ठा रथ्या रथीतमा" ऋ० १।१८२।२। "दंसिष्ठा अतिशयितकर्माणौ" भा० औस्थाने आच्। २दर्शनीयतमे ३अतिशयेन शत्रुहिंसके च। "येना दंसिष्ठ!' कृत्वने" ऋ०८।२४।२५। "हे दंसिष्ठ! दर्शनीयतम! यद्वा शत्रूणां क्षपयितः!" भा०। अत्र द्वयोः दंसे वौ धातोरूपं दृष्टो०।

**दक** न० उदक+पृषो० दैप्–शोधे क ततः संज्ञायां कन् वा। जले त्रिका० दकोदरम्। दकार्गलम्।

**दकोदर** न० दकं जलस्फीतमुदरं यत्र। सुश्रुतोक्ते जलोदरापरनामके उदररोगभेदे यथा "यः स्नेहपीतोऽप्यनुवासितो वा वान्तो विरिक्तोऽप्यथ वा निरूढः। पिबेज्जलं शीतलमाशु तस्य स्रोतांसि दुष्यन्ति हि तद्वहानि। स्नेहोपलिप्तेष्वथ वापि तेषु दकोदरं पूर्ववदभ्युपैति। स्निग्धं महत्तत्परिवृत्तनाभि समुन्नतं पूर्णमिवाम्बुना च। यथा दृतिः क्षुभ्यति कम्पते च शब्दायते चापि दकोदरं तत्। "नाभेरधश्चतुरङ्गुले वामपार्श्वे दकोदरे" "वेध्याः सिरा बहुविधा मूत्रवृद्धिदकोदरम्" सुश्रु०।

**दक्ष** वृद्धौ शीघ्रार्थे च भ्वा० आत्म० अक० सेट्। दक्षते अदक्षिष्ट। ददक्षे। दक्षः। "त्वमिनो शर्ताक्रमासि दक्षसे" ऋ० २।१।११।

**दक्ष** हन्त्यर्थे (गतौ वधे च) भ्वा० आत्म० सक० सेट्। दक्षते अदक्षिष्ट ददक्षे। मित् तत्करणसामर्थ्यात् अनुपधाया अपि दीर्घे णिचि कदाचित् अदक्षि अदाक्षि दक्षं दक्षम् दाक्षं दाक्षमिति रूपं मित् भावे ण। दक्षः।

**दक्ष** पु० दक्ष–कर्त्तरि अच्। १ताम्रचूडे दक्षसंहिताकर्त्तरि २मुनिभेदे ३शिववृषभे ४हरभेदे ५वह्नौ च विश्वः। ६महेश्वरे शब्दरत्ना०। ब्रह्मणो दक्षिणाङ्गुष्ठजाते ७प्रजापतिभेदे। दक्षतरे दृष्टेयेषु कर्त्तव्येषु चोपस्थितेषु सद्य एव ज्ञातं कर्तुं च समर्थे पटौ त्रि० मेदि०।

"दक्षस्तु जायताङ्गुष्ठाद्दक्षिणाद्भगवान् ऋषिः। ब्रह्मणः पृथिवीपाल! शान्तात्मा सुमहातपाः। वामादजायताङ्गुष्ठाद्भार्य्या तस्य महात्मनः। तस्यां पञ्चाशतं कन्याः स एवाजनयन् मुनिः। ताः सर्वास्त्वनवद्याङ्ग्यः कन्याः कमललोचनाः। पुत्रिकाः स्थापयामास नष्टपुत्रः प्रजा-

पतिः” भा० आ० ६६ अ० तस्य पुत्रनाशकथा दक्षसुतशब्दे दृश्यम् हरिवंशे २अ० तु तस्य प्राचेतसत्वमुक्तं यथा

“उपगम्याब्रवीदेतानथ सोमः प्रजापतीन्। कोपं यच्छत राजानः! सर्वे प्राचीनबर्हिषः!। वृक्षशून्या कृता पृथ्वी शाम्येतामग्निमारुतौ। रत्नभूता च कन्येयं वृक्षाणां वरवर्णिनी। भविष्यं जानता तत्त्वं धृता गर्भेण वै मया। मारिषा नाम कन्येयं वृक्षाणामिति निर्मिता। भार्य्या वोऽस्तु महाभागा सोमवंशविवर्द्धिनी। युष्माकं तेजसोऽर्द्धेन मम चार्द्धेन तेजसः। अस्यामुत्पत्स्यते पुत्रो दक्षो नाम प्रजापतिः। स इमां दग्धभूयिष्ठां युष्मत्तेजोमयेन वै। अग्निनाऽग्निसमो भूत्वा प्रजाः संवर्द्धयिष्यति। ततः सोमस्य वचनाज्जगृहुस्ते प्रचेतसः। संहृत्य कोपं वृक्षेभ्यः पत्नीं धर्मेण मारिषाम्। मारिषायां ततस्ते तु मनसा गर्भमादधुः। दशभ्यस्तु प्रचेतोभ्यो मारिषायां प्रजापतिः। दक्षोजज्ञे महातेजाः सोमस्यांशेन भारत!। पुत्रानुत्पादयामास सोमवंशविवर्द्धनान्। अचरांश्च चरांश्चैव द्विपदोऽथ चतुष्पदः। स सृष्ट्वा मनसा दक्षः पश्चादसृजत् स्त्रियः। ददौ स दश धर्माय कश्यपाय त्रयोदश। शिष्टाः सोमाय राज्ञेऽथ नक्षत्राख्या ददौ प्रभुः। तासु देवाः खगा गावो नागा दितिजदानवाः। गन्धर्वाप्सरसश्चैव जज्ञिरेऽन्याश्च जातयः। ततः प्रभृति राजेन्द्र! प्रजा मैथुनसम्भवाः। सङ्कल्पाद्दर्शनात् स्पर्शात् पूर्वेषां प्रोच्यते प्रजा”।

अनयोर्विरोधमाशङ्क्य कल्पभेदादविरोधः भक्त्या तत्रैव समाहितो यथा

“जनमेजय उवाच। देवानां दानवानाञ्च गन्धर्वोरगरक्षसाम्। सम्भवः कथितः पूर्वं दक्षस्य च महात्मनः। अङ्गुष्ठाद्ब्रह्मणो जातो दक्षः प्रोक्तस्त्वयाऽनघ!। वामाङ्गुष्ठात्तथा चैव तस्य पत्नी व्यजायत। कथं प्राचेतसत्वं स पुनर्लेभे महातपाः। एतन्मे संशयं विप्र! सम्यगाख्यातुमर्हसि। दौहित्रश्चैव सोमस्य कथं श्वशुरताङ्गतः”। वैशम्पायन उवाच। “उत्पत्तिश्च निरोधश्च नित्यौ भूतेषु पार्थिव!। ऋषयोऽत्र न मुह्यन्ति विद्वांसश्चैव ये जनाः। युगे युगे भवन्त्येते सर्वे दक्षादयो नृपाः। पुनश्चैव निरुध्यन्ते विद्वांस्तत्र न मुह्यति। ज्यैष्ठ्यं कानिष्ठ्यमप्येषां पूर्वं नासीज्जनाधिप!। तप एव गरीयोऽभूत् प्रभावश्चैव कारणम्” हरिवं० २अ०। ८औशीनरपुत्रनृपभेदे “शिविर्वरः कृमिर्दक्षश्चत्वारौशीनरात्मजाः” भाग० ९। २३।४। ९दक्षिणभागे “वामतो जानकी यस्य दक्षभागे च लक्ष्मणः। मारुतिः पुरतो यस्य” रामकवचम्। १०विष्णौ “उग्रः संवत्सरो दक्षः” विष्णुस०। “जगद्रूपेण वर्द्धमानत्वात् सर्वकर्माणि क्षिप्रं करोतीति वा दक्षः” भा०। तत्र कुशले “दक्षमिष्टमधुवासरसारम्” “उपवनपवनानुपातदक्षैः” माघः “रक्षान्वेषणदक्षाणां द्विषामामिषतां ययौ” रघुः। “मेरौ स्थिते दोग्धरि दोहदक्षे” कुमा०। दक्ष-हिंसे करणे घञ्। ११बले निघण्टुः।

“स दक्षाणां दक्षपतिर्बभूव” ऋ० १।९५।६। दक्षाणां बलानाम् मध्ये यदतिशयितं बलं तस्याधिपतिः” भा०। १२वीर्य्ये न० “सदैर्दक्षैर्दक्षपितेह सीद देवानाम्” यजु० १४।३। “सदैर्दक्षैः वीर्य्यैः सामर्थ्यैः सह, दक्षशब्दोऽत्र वीर्य्यार्थः। दक्षपिता दक्षं वीर्य्यं पातीति पालयिता” वेददी०।

**दक्षकन्या** स्त्री ६त०। दक्षस्य सुतासु ताश्च षष्टिः। यथाह मत्स्यपु० ५ अ०।

“ततस्तेषु विनष्टेषु षष्टिं कन्याः प्रजापतिः। वैरिण्यां जनयामास दक्षः प्राचेतसस्तथा। प्रादात् स दश धर्माय कश्यपाय त्रयोदश। सप्तविंशतिं सोमाय चतस्रोऽरिष्टनेमये। द्वे चैव भृगुपुत्राय द्वे कृशाश्वाय धीमते। द्वे चैवाङ्गिरसे तद्वत्तासान्नामानि विस्तरात्”। “तांश्चैव नष्टान् विज्ञाय पुत्रान् दक्षः प्रजापतिः। षष्टिं ततोऽसृजत् कन्यां वैरिण्यामिति नः श्रुतम्। तास्तदा प्रतिजग्राह भार्य्यार्थं कश्यपः प्रभुः। सोमो धर्मश्च कौरव्य! तथैवान्ये महर्षयः। ददौ स दश धर्माय कश्यपाय त्रयोदश। सप्तविंशतिं सोमाय चतस्रोऽरिष्टनेमिने। द्वे चैव बहुपुत्राय द्वे चैवाङ्गिरसे तथा। द्वे कृशाश्वाय विदुषे तासां नामानि मे शृणु” हरिवं० ३ अ०। २सतीनाम्न्यां भवपत्न्यां दुर्गायाञ्च तत्कथा “प्रसूतिं मानवीं दक्ष उपयेमे ह्यजात्मजः। तस्यां ससर्ज्ज दुहितॄः षोड़शामललोचनाः। त्रयोदशाऽदाद्धर्माय तथैकामग्नये विभुः। पितृभ्य एकां युक्तेभ्यो भवायैकां भवच्छिदे” भाग० ४।१। “अथावमानेन पितुः प्रयुक्ता दक्षस्य कन्या भवपूर्वपत्नी। सती सती योगविसृष्टदेहा” कुमा० दक्षसुतादयोऽप्यत्र।

**दक्षक्रतु** पु० ६त०। दक्षप्रजापतिकृते निरीश्वरभागे यज्ञभेदे। तद्यज्ञकथा काशी० ८७ अ० यथा

“अहं यियक्षुर्यूयं मे यज्ञसाहाय्यकारिणः। भवन्तु यज्ञसम्भारानानयन्तु त्वरान्विताः। श्वेतद्वीपमथो गत्वा

चक्रे चक्रिणमच्युतम्। महाक्रतुपदेष्टारं यज्ञपुरुषमेव च। तस्यर्त्विजोऽभवन् सर्वे ऋषयो ब्रह्मवादिनः। प्रावर्त्तत ततस्तस्य दक्षस्य च महाध्वरः। दूरादेव निकायाश्च तस्मिन् दक्षमहाध्वरे। धनीश्वरास्ततो येधा व्याजं कृत्वा गृहं ययौ। दधीचिरथ संवीक्ष्य सर्वांस्त्रैलोक्यवासिनः। दक्षयज्ञे समेयातान् सतीश्वरविवर्जितान्। प्राप्तसम्मानसम्भारान् वासोऽलङ्कृतिपूर्वकम्" इत्युपक्रमे तत्र दधीचिना सह दक्षस्य उक्तिप्रत्युक्ती यथा "तं विदन्ति वशिष्ठाद्यास्तवार्त्विज्यं भजन्ति ये। एको रुद्रो न द्वितीयः संविदानाश्चपीति हि। प्रावर्त्तन्तर्षयोऽन्येऽपि गौरवात्तव च क्रतौ। यदि मे ब्राह्मणस्यैकं शृणोषि वचनं हितम्। तदा क्रतुफलाधीशं विश्वेशं तं समाहूय। विना तेन क्रतुरसौ कृतोऽप्यकृत एव हि। सति तस्मिन् महादेवे विश्वकर्मैकसाक्षिणि। तत्रापि चैषां सर्वेषां फलिष्यति मनोरथः। यथा जड़ानि बीजानि न फलन्ति स्वयं तथा। जड़ानि सर्वकर्माणि न फलन्तीश्वरं विना। अर्थहीना यथा वाणी धर्महीना यथा तनूः। पतिहीना यथा नारी शिवहीना तथा क्रिया। गङ्गाहीना यथा देशाः पुत्रहीना यथा गृहाः दानहीना यथा सम्पत् शिवहीना तथा क्रिया। मन्त्रहीनं यथा राज्यं श्रुतिहीना यथा द्विजाः। योषाहीनं यथा सौख्यं शिवहीना तथा क्रिया। दर्भहीना यथा सन्ध्या तिलहीनं तु तर्पणम्। हविर्हीनो यथा होमः शिवहीना तथा क्रिया। इत्थं दधीचिनाख्यातं जग्राह वचनं न तत्। दक्षो दक्षोऽपि तत्रैव शम्भोर्मायाविमोहितः। प्रोवाच च भृशं क्रुद्धः का चिन्ता तव मे क्रतोः। क्रतुमुख्यानि सर्वाणि यानि कर्माणि सर्वशः। तानि सिध्यन्ति नियतं यथार्थकरणादिह। अयथार्थविधानेन सिद्ध्येत् कर्मापि नेशितुः। स्वकर्मसिद्धये साध सर्व एव हि चेश्वरः। ईश्वरः कर्मणां साक्षी यत् त्वयापीति भाषितम्। तत्तथास्तु परं साक्षी नार्थं दद्याच्च कुत्रचित्। जड़ानि सर्वकर्माणि न फलन्तीश्वरं विना। यदुक्तं भवता तत्राप्यहो दृष्टान्तयाम्यहम्। जड़ान्यपि च बीजानि कालं संप्राप्य चात्मना। अङ्कुरयन्ति काखाश्च पुष्पन्ति च फलन्ति च। विनाऽपीशं यथा कर्म स्वयं काले फलत्यहो। किमीश्वरेण तेनात्र महाऽमङ्गलमूर्त्तिना। दधीचिरुवाच। यथार्थकरणात् सिद्धमपि कार्यं कदाचन। ईश्वरप्रातिकूल्याच्च सिद्धमेवाशु नश्यति। ईश्वरेच्छाबलात् कर्म कृतमप्यविधानतः। संसिध्येत्तदधीनाश्च कथं सर्वे इहेश्वराः। सामान्यसाक्षिरूपेशः सर्वेषां सर्वकर्मणाम्। साक्षी भवेदसन्दिग्धं फलस्य प्रतिभूरपि। भूजलादिस्वरूपेण विदध्यादङ्कुरोदयम्। यत् त्वयोक्तं विनापीशं काले कर्म फलेत् स्वयम्। स एव कालो भगवान् सर्वकर्त्ता महेशिता। अन्यच्च भवता प्रोक्तं यदेवं तथ्यमेव तत्। किमीश्वरेण तेनात्र महामङ्गलमूर्त्तिना। ये महान्तो भवन्त्यत्र ये च मङ्गलमूर्त्तयः। ईश्वराख्याश्च ये सन्ति किन्तैरत्र तवान्तिके। उत्तरादुत्तरञ्चेति प्रत्युत्तरयति द्विजे। दधीचौ चुकुपेऽत्यन्तं दक्षो गर्वी हतान्वया। आदिदेश समीपस्थानालोक्य परितस्त्विति। ब्राह्मणापसदं चामुं परिदूरयताशु वै। अमुष्मादध्वरस्त्रेष्ठादनादिष्टात्मनाऽऽगतम्। इत्थं दधीचिराकर्ण्य प्रोवाच प्रहसन्निव। किं मां दूरयसे मूढ़! दूरीभूतो भवानपि। सर्वेभ्यो मङ्गलेभ्यश्च सर्वैरेभिः समं ध्रुवम्। अकाण्डे क्रोधजो दण्डस्तव मूर्ध्नि पतिष्यति। महेशितुस्त्रिजगतीपुरीशास्तुः प्रजापते!। इत्युक्त्वा निर्जगामाशु यज्ञवाटात् ततो द्विजः। तस्मिन्निर्याति निर्यातो दुर्वासाश्च्यवनो महान्। उत्तङ्क उपमन्युश्च कचोत्तोद्दालकावपि। माण्डव्यो वामदेवश्च गालवो गर्गगौतमौ। शिवतत्त्वविदोऽन्येऽपि दक्षयज्ञाद्विनिर्ययुः"। दक्षयज्ञादयोऽप्यत्र। दक्षाः कुशलाः क्रतवः संकल्पा येषाम्। २चक्षुरादीन्द्रियरूपेषु प्राणेषु "ये देवा मनोजाता मनोयुजो दक्षक्रतवस्ते नोऽवन्तु" यजु०४।११। "ये देवा देहस्थाः दीव्यन्ति द्योतन्ते इति देवाश्चक्षुरादीन्द्रियरूपाः प्राणाः। "इमे वै प्राणाः वागेवाग्निः प्राणोदानौ मित्रावरुणौ चक्षुरादित्यः श्रोत्रं विश्वे देवा इति" शत० ब्रा० ३।२।२।१२ श्रुत्युक्ताः। किम्भूताः मनोजाताः दर्शनश्रवणादीच्छारूपान्मनस उत्पन्नाः इच्छोत्पत्तौ तेषां प्रवर्त्तमानत्वात्। तथा मनोयुजः रूपादिदर्शनकालेऽपि मनसा युक्ता एव वर्त्तन्ते अन्यमनस्कस्य रूपादिप्रतिभासाभावात्। यद्वा स्वप्नावस्थायां मनसा युज्यन्ते ते मनोयुजः। तथा दक्षक्रतवः दक्षाः कुशलाः क्रतवः संकल्पाः येषां ते सङ्कल्पितार्थकारिण इत्यर्थः। ते देवा नोऽस्मानवन्तु यज्ञानुष्ठानविघ्नपरिहारेण पालयन्तु तेभ्यः प्राणरूपेभ्यः स्वाहा इदं क्षीरं हुतमस्तु" वेददी०।

**दक्षक्रतुध्वंसिन्** पु० दक्षक्रतुं ध्वंसयति ध्वन्स–णिच्–

गिणि । १महादेवे तदंशाविर्भूते २वीरभद्रे च तत्कथा क्रतुध्वंसिन् शब्दे २२८४ पृ० दृश्यम् ।

**दक्षजा** स्त्री दक्षात् जायते जन–ड । सतीरूपायां १ दक्षकन्यायां महेशकलत्रे दुर्गायाम् २अश्विन्यादौ च । दक्षजातादयोऽप्यत्र ।

**दक्षजापति** पु० ६त० । १शिवे २चन्द्रे च हेमच० ।

**दक्षतनया** स्त्री ६त० । दक्षप्रजापतेर्दुहितरि १अश्विन्यादौ २दुर्गायाम् । ३वेदिरूपायां भूमौ च ।“अदितिर्ह्यजनिष्ट दक्ष ! या दुहिता तव” ऋ० १०।७२।५ । दक्षस्य भूमिजत्वेऽपि तज्जनकत्वासम्भवमाशङ्क्य निरु० ११।२२ । समाहितं यथा ‘‘अदितेर्दक्षो अजायत” ‘‘दक्षाद्दितिः परीति”च तत्कथमुपपद्येत ? समानजन्मानौ स्यातामिति अपि वा देवधर्मेणेतरेतरजन्मानौ वेतरेतरप्रकृती” । पृषो० दक्षतनाप्यत्र‘‘दक्षस्य पितरं तना” ऋ०१।२७।६ ‘‘दक्षस्य दक्षप्रजापतेस्तना तनया”भा० ।

**दक्षपितृ** पु० दक्षः दक्षप्रजापतिः पिता उत्पादकोऽस्य समासान्तविधेरनित्यत्वात् न कप् । दक्षप्रजापतिजातमात्राभिमानिदेवे ‘‘ये देवा मनोजाता मनोयुजः सुदक्षाः दक्षपितारस्ते नः पान्तु”तैत्ति०१।२।३।१। दक्षपितार इत्यत्र गौणत्वात् दीर्घः। चक्षुरादिप्राणाभिमानिनो ये देवाः सन्ति तेऽस्मान् पयःपानरूपव्रतानुष्ठायिनोऽन्तर्बहिश्च गुप्तिसम्पादनेन पालयन्तु । कीदृशा देवाः । उत्पत्तिकाले मनसा सहोत्पन्नाः । व्यवहारकालेऽपि मनसा युज्यन्ते । अन्यमनस्कस्य चक्षुरादिभिः सन्निहितविषयाज्ञानप्यनवगमात् । सति तु मनःसाहाय्ये स्वस्वविषयेषु सुदक्षाः कुशलाः। दक्षः प्रजापतिरुत्पादको येषां ते दक्षपितारः” भा० । लोके तु कप् । दक्षपितृका अश्विन्यादिषु स्त्री । दक्षस्य वीर्यस्य पिता पालक ! २वीर्योत्पादके दक्षशब्दार्थे उदा० दृश्यम् ।

**दक्षविहिता** स्त्री १गीतिकाभेदे । “ऋग्गाथा पाणिका दक्षविहिता ब्रह्मगीतिका । गेयमेतत्तदभ्यासकरणान्मोक्षसंज्ञितम्”या०स्मृ० । “ऋग्गाथाद्यास्ततो गीतिकाः” मिता० । २दक्षकृते त्रि० ।

**दक्षस्** न० दक्ष–करणे असुन् । बले । “दृपणा दक्षसे यज्ञः” ऋ० २।२६।८।२ । “दक्षसे बलाय” भा० ।

**दक्षसावर्णि** पु० मनुभेदे नवमे मनौ । “नवमो दक्षसावर्णिर्मनुर्वरुणसम्भवः । धृष्टकेतुर्दीप्तिकेतुरित्याद्यास्तत्सुता नृप । परे मरीचिगर्भाद्या देवा इन्द्रः स्मृतः स्मृतः । द्युतिमत्प्रमुखाः सप्त भविष्यन्त्यृषयस्ततः । आयुष्मतोऽम्बुधारायामृषभो भगवान् किल । भविता येन संराद्धां त्रिलोकीं भोक्ष्यते ऽद्भुतः” भाग० ८।१३।१८ ।“८सावर्णि ९र्दक्षसावर्णि १०र्ब्रह्मसावर्णिकस्ततः । ११धर्मसावर्णिको१२ रुद्रपुत्रो१३ रौच्यश्च १४भौत्यकः” पुराणान्तरम् । हरिवंशे तु नवमस्य रोहितत्वमुक्तं यथा ।“च्यवनश्चैव वाशिष्ठ आत्रेयो हव्यवाहनः । पौलहः सप्त इत्येते मुनयो रोहितेऽन्तरे । देवतानां गणास्तत्र त्रय एव नराधिप ! । दक्षपुत्रस्य पुत्रास्ते रोहितस्य प्रजापतेः । मनोः पुत्रो धृष्टकेतुः पञ्चहोत्रो निराकृतिः । पृथुश्रवा भूरिधामा ऋचीकोऽबृहतो गयः । प्रथमस्य तु सावर्णेर्नव पुत्रा महौजसः” ७ अ० । कल्पभेदादविरोधः ।

**दक्षसुत** पु० ६त० । १देवे शब्दार्थचि० ।
देवस्य दक्षसृष्टत्वात् नष्टपुत्रेण दक्षेण पुत्रिकाधर्मेण दक्षायामादितावुत्पन्नत्वेन तस्य पुत्रिकापुत्रत्वाच्च तत्सुतत्वम् यथाह हरिवं० ३ अ० ।
‘‘प्रजाः सृजेति व्यादिष्टः पूर्वं दक्षः स्वयम्भुवा । यथा ससर्ज भूतानि तथा शृणु महीपते ! । मनसा चैव भूतानि पूर्वमेवासृजत् प्रभुः । ऋषीन् देवान् सगन्धर्वानसुरानथ राक्षसान्” । २हर्यश्वादिषु तत्कथा “दक्षस्य पुत्रा हर्यश्वा विवर्द्धयिषवः प्रजाः । समागता महावीर्या नारदस्तानुवाच ह । बालिशा वत यूयं वै नास्या जानीथ वै भुवः । प्रमाणं स्रष्टुकामा वै प्रजाः प्राचेतसात्मजाः । अन्तरूर्द्धमधश्चैव कथं स्रक्ष्यथ वै प्रजाः । ते तु तद्वचनं श्रुत्वा प्रयाताः सर्वतोदिशः । अद्यापि न निवर्त्तन्ते समुद्रेभ्य इवापगाः । हर्यश्वेष्वथ नष्टेषु दक्षः प्राचेतसः पुनः । वैरण्यामेव पुत्राणां सहस्रमसृजत् प्रभुः । विवर्द्धयिषवस्ते तु शवलाश्वाः प्रजास्तदा । पूर्वोक्तं वचनं तात ! नारदेनैव चोदिताः । अन्योन्यमूचुस्ते सर्वे सम्यगाह महामुनिः । भ्रातृणां पदवीं ज्ञातुं गन्तव्यं नात्र संशयः । ज्ञात्वा प्रमाणं पृथ्व्याश्च सुखं स्रक्ष्यामहे प्रजाः । एकाग्राः स्वस्थमनसो यथावदनुपूर्वशः । तेऽपि तेनैव मार्गेण प्रयाताः सर्वतो दिशम् । अद्यापि न निवर्त्तन्ते समुद्रेभ्य इवापगाः । नष्टेषु शवलाश्वेषु दक्षः क्रुद्धोऽब्रवीद्वचः । नारदं नाशमेहीति गर्भवासं वसेति च । तदा प्रभृति वै भ्राता भ्रातुरन्वेषणे नृप ! । प्रयातो नश्यति क्षिप्रं तन्न कार्यं विपश्चिता । तांश्चैव नष्टान् विज्ञाय पुत्रान् दक्षः

प्रजापतिः। यदि ततोऽसृजत् कन्यां वैरव्यामिति न श्रुतम्"।

२अश्विन्यादौ च स्त्री"तमोऽपहं दक्षसुता इवाभुः" रघुः।

**दक्षाध्वरध्वंसक** दक्षस्याध्वरं ध्वंसयति ध्वन्स–णिच्–ण्वुल्। १शिवे २वीरभद्रे च दक्षाध्वरनाशकादयोऽप्यत्र।

**दक्षाय्य** पु० दक्ष–आय्य। १गरुडे २गृध्रखगे च उणादिवृत्तौ सि०कौ०। दक्ष–वृद्धौ अन्तर्भू तण्यर्थे ण्वुल्। ३वर्द्धके त्रि०।"मित्रो दक्षाय्यो अर्य्यमेवासि सोम!" ऋ०२।६२।२। "दक्षाय्यः सर्वेषां वर्द्धकः" भा०।

**दक्षिण** त्रि० दक्ष–इनन्। १परच्छन्दानुवर्त्तिनि पराभिप्रायानुवर्त्तिनि २सरले। ३दक्षभागस्थे च मेदि०। ४अवामे अपसव्ये देहभागभेदे (डाहिन) ख्याते भागे हेमच०। "एषु त्वनेकमहिलासु समरागो दक्षिणः कथितः" सा० द० उक्ते ५नायकभेदे यथा "स्नाता तिष्ठति कुन्तलेश्वरसुता वारोऽङ्गराजस्वसुर्द्यूते रात्रिरियं जिता कमलया,देवी प्रसाद्याद्य च। इत्यन्तः पुरसुन्दरीः प्रति मया विज्ञाय विज्ञापिते देवेनाऽप्रतिपत्तिमूढमनसा द्वित्राः स्थितं नाडिकाः"। स्त्रीमेखया मेरुगिरितो विप्रकृष्टायां ६दिशि स्त्री ७वहत्तिनि त्रि०। ८यज्ञदानान्ते दाने ८प्रतिष्ठायां स्त्री यथा"अन्तर्दक्षिणानामनिष्पत्तिः" शत० ब्रा० २।२।२।२ "स एष यज्ञो हतो न ददक्षे। तं देवा दक्षिणाभिरदक्षयंस्तद्यदेनं दक्षिणाभिरदक्षयंस्तस्माद्दक्षिणा नाम तद्यदेवात्र यज्ञस्य हतस्य व्यथते तदस्यैतद्दक्षिणाभिर्दक्षयत्यथ समृद्ध एव यज्ञो भवति तस्माद्दक्षिणा ददाति"। दक्षिणाविशेषनिर्णयः हेमा० दा० यथा

भविष्यपुराणे "अदत्तदक्षिणं दानं व्रतञ्चैव नृपोत्तम!। विफलं तद्विजानीयाद्भस्मनीव हुतं हविः"। वह्निपुराणात् "श्रद्धायुक्तः शुचिर्दान्तो दानं दद्यात् सदक्षिणम्। अदक्षिणन्तु यद्दानं तत् सर्वं निष्फलं भवेत्"। मैत्रायणीयपरिशिष्टम् "दक्षिणालाभे फलानां अक्षायां ददाति न त्वेवं यजेत्"। तथा शतपथश्रुतिः "तस्मात्दक्षिणं हविः स्यादिति"। भविष्योत्तरे "काम्यं यद्दीयते किञ्चित्तत्प्रमयं सुखावहम्। असमग्रन्तु दोषाय भवतीह परत्र च। तस्माद् दक्षिणाहीनं विधानविकलं न च। देयं दानं महाराज! समग्रफलकाङ्क्षया। अन्यथा दीयमानं तदपकाराय केवलम्। प्रत्यवायार्थहानिर्न च तत् फलदं भवेत्"। आह भगवान् व्यासः "सुवर्णं परमं दानं सुवर्णं दक्षिणा परा। सर्वेषामेव दानानां सुवर्णं दक्षिणेष्यते।" एतच्च, विशेषविहितगोवस्त्रादिदक्षिणकदानवर्जं सामान्यविहितदक्षिणेषु दानेषु व्यवतिष्ठते तत्रापि परा श्रेष्ठतमेति प्राशस्त्यं दर्शयति न त्वन्यां दक्षिणां निराचष्टे आनन्त्यार्थत्वाद्दक्षिणायाः सुवर्णस्य प्रकृष्टत्वात् सर्वदानेषु सुवर्णं दक्षिणेतिवचनार्थः, अन्यदपि कुरुमस्याहारौपयिकं तण्डुलादिकं दक्षिणार्थेन योज्यं यत्तु श्रूयते "अन्येषाञ्चैव दानानां सुवर्णं दक्षिणा स्मृता। सुवर्णे दीयमाने तु रजतं दक्षिणेष्यते" इति तदेतच्छ्रौतस्त्रैन्यं परित्याज्य श्रद्धातव्यम्। "सुवर्णं रजतं ताम्रं तण्डुला धान्यमेव च। नित्यश्राद्धं देवपूजा सर्वमेव सदक्षिणम्"। स्कन्दपुराणे। "देवद्रव्यतृतीयांशं दक्षिणां परिकल्पयेत्। अनुक्तदक्षिणे दाने दशांशं वापि शक्तितः"। तुलापुरुषादिदानानि अधिकृत्य लिङ्गपुराणे "दक्षिणा च शतस्यार्द्धं तदर्द्धं वा प्रदापयेत्। ऋत्विजाञ्चैव सर्वेषां दश निष्कान् प्रदापयेत्"। भविष्योत्तरे "स्वेयं निष्कशतं पार्थ! दानेषु विधिरुत्तमः। मध्यमस्तु तदर्द्धेन तदर्द्धेनाधमः स्मृतः। मेरुप्राज्ञ कालपुरुषे तथान्येषु महत्स्वपि। एवं हस्ते तथा हे च धेनोः कृष्णाजिनस्य च। असमर्थस्यापि सुप्रोऽयं पञ्चसौवर्णिको विधिः। अतोऽप्यल्पेन यो दद्यात्परदाराव नराधमः। प्रतिष्ठा हाति वा तस्य दुःखशोकावहं भवेत्"। जयाभिषेकमुदाहृत्य लिङ्गपुराणे "अष्टषष्टिपलोन्मानं दद्याद्वै दक्षिणां गुरोः। होतृणाञ्चैव सर्वेषां विंशत्पलमुदाहृतम्। अध्येतृणां तदर्द्धेन द्वारपानां तदर्द्धतः"। एतेनान्यत्रापि, गुरोरर्द्धम्, ऋत्विजां तदर्द्धं, जापकानां तदर्द्धं द्वारपालानां तदर्द्धमिति दक्षिणाविभागोऽवगन्तव्यः।" अन्या अपि दक्षिणाः तत्र तत्रोक्ता वेदितव्याः। यज्ञभेदे दक्षिणाभेदः कात्या० श्रौ०सू० उक्ताः कातीयशब्दे दर्शितप्रायः विशेषतोद्रष्ट्व्यः। सवन दक्षिणाया अदाने कालविलम्बभेदे च दोषा दक्षिणानामनिष्पत्तिसहिता उक्ता यथा। "कार्त्तिक्यां पूर्णिमायान्तु रासे राधामहोत्सवे। आविर्भूता दक्षिणांशात् कृष्णस्य तेन दक्षिणा"। यज्ञो दक्षिणया सार्द्धं पुत्रेण च फलेन च। कर्मिणां फलदाता चेत्येवं वेदविदो विदुः। कृत्वा कर्म च तस्यैव तूर्णं दद्याच्च दक्षिणाम्। तत् कर्मफलमाप्नोति वेदैरुक्तमिदं मुने!।

कर्त्ता कर्मणि पूर्णे च तत्क्षणं यदि दक्षिणाम्। न दद्याद्ब्राह्मणेभ्यश्च दैवेनाज्ञानतोऽथ वा। मुहूर्त्ते समतीते तु द्विगुणा सा भवेद्ध्रुवम्। एकरात्रे व्यतीते तु भवेत् शतगुणा च सा। त्रिरात्रे तद्दशगुणा सप्ताहे द्विगुणा ततः। मासे लक्षगुणा प्रोक्ता ब्राह्मणानाञ्च वर्द्धते। संवत्सरे व्यतीते तु सा त्रिकोटीगुणा भवेत्। कर्म तद्यजमानानां सर्वञ्च निष्फलं भवेत्। स च ब्रह्मस्वापहारी न कर्मार्होऽशुचिर्नरः। दरिद्रो व्याधियुक्तश्च तेन पापेन पातकी। तद्गृहाद्याति लक्ष्मीश्च शापं दत्त्वा सुदारुणम्। पितरो नैव गृह्णन्ति तद्दत्तं श्राद्धतर्पणम्। एवं सुराश्च तत्पूजां तद्दत्ताम्निराहुतिम्। दाता न दीयते दानं ग्रहीता च न याचते। उभौ तौ नरकं यातश्छिन्नरज्जुर्यथा घटः। नार्पयेद्यजमानश्चेद्याचितश्च च दक्षिणाम्। भवेद्ब्रह्मस्वापहारी कुम्भीपाकं व्रजेद्ध्रुवम्। वर्षलक्षं वसेत्तत्र यमदूतेन ताड़ितः। ततो भवेत् स चाण्डालो व्याधियुक्तो दरिद्रकः। पातयेत् पुरुषान् सप्त पूर्वांश्च सप्तजन्मतः" ब्रह्मवैवर्त्ते प्रकृतिखण्डे। प्राणिरूपदक्षिणाद्रव्यग्रहणे मन्त्रभेदेनाभिमन्त्रणम् अप्राणिद्रव्यग्रहणे तु अभिमर्शनमात्रम् यथाह आश्व० श्रौ० सू० ५।१३।१५। "क इदं कस्मा अदात् कामायादात् कामो दाता कामः प्रतिग्रहीता कामं समुद्रमाविश कामेन त्वा प्रतिगृह्णामि कामैतत्ते वृष्टिरसि द्यौस्त्वा ददातु पृथिवी प्रतिगृह्णात्वित्यतीतास्वनुमन्त्रयेत् प्राणि"। सू० "विहारदेशमतीत्य नीतेषु दक्षिणाद्रव्येषु तन्मध्ये यत् प्राणिद्रव्यं तदेतेनानुमन्त्रयत" नारा०। "अभिमृशेदप्राणि" सू० "तन्मध्ये यदप्राणि तदभिमृशेत् नारा०। सा च यज्ञपत्नी तथाह "दक्षिणा यज्ञपत्नी च दीक्षा सर्वत्र पूजिता। यया विनापि विश्वस्य सर्वं कर्म तु निष्फलम्" भाग० २६।२।२।२८। १० नायिकाभेदे स्त्री यथा "या गौरवं भयं प्रेम सद्भावं पूर्वनायके। न मुञ्चत्यन्यसक्तापि सा ज्ञेया दक्षिणा बुधैः" इति विष्णुपु० टीकायां स्वामी" ११विष्णौ पु०। "अक्रूरः पेशलो दक्षो दक्षिणः दक्षिणाम्बरः" विष्णु स०। अस्य दिग्देशादिव्यवस्थायामेव सर्वनामता तेन दक्षिणे गायकाः अन्यत्र दक्षिणाः(कुशलाः)इत्येव। "दिशः सपत्नी भव दक्षिणस्याः" रघुः "दक्षिणीयमवगम्य पङ्क्तिशः पङ्क्तिपावनमथ द्विजव्रजम्। दक्षिणः क्षितिपतिर्व्यशिश्रयद्दक्षिणाः सदसि राजसूयकीः" माघः। अन्त्रादौ दक्षिणकर्णस्पर्शनं पराशरो विधत्ते। "क्षुते निष्ठीवने चैव दन्तोच्छिष्टे तथाऽनृते। पतितानाञ्च सम्भाषे दक्षिणं श्रवणं स्पृशेत्। ब्रह्मा विष्णुश्च रुद्रश्च सोमः सूर्य्योऽनलस्तथा। ते सर्वे चापि तिष्ठन्ति कर्णे विप्रस्य दक्षिणे"। १२आचारभेदे दक्षिणाचारशब्दे दृश्यम्। १३दक्षिणाग्नौ पु० "दक्षिणपश्चिमे दक्षिणम् आश्व० गृ० ४।२।३।

**दक्षिणकालिका** स्त्री दक्षिणा कालिका। १शिवहृदये न्यस्तदक्षिणपादायां कालिकायाम्।

**दक्षिणगोल** पु० कर्म०। विषुवरेखातो दक्षिणस्थिते तुलादिराशिषट्के यथाह सि० शि० "सौम्योऽयगोलो भदलं यदाद्यं याम्योऽपरं सायनभागभानोः" दक्षिणायनशब्दे रङ्गनाथ व्याख्या दृश्या।

**दक्षिणतस्** अव्य० दक्षिणा–तसिल् सर्वनाम्नोवृत्तिमात्रे पुंवद्भावः।१दक्षिणस्यां दिशि। २दक्षिणभागे च "पितृभ्यो बलिशेषन्तु सर्वं दक्षिणतो हरेत्" मनुः।

**दक्षिणतस्कपर्द्द** त्रि० दक्षिणतः शिरसो दक्षिणभागे कपर्दश्चूड़ा यस्य। दक्षिणभागचूड़ायुक्ते "श्वित्यञ्चो मा दक्षिणतस्कपर्दाः" ऋ० ७।३३।२। चूड़ाकर्मणि दक्षिणतो वशिष्ठानामिति स्मर्य्यते" भा०। [दक्षिणस्यतीरे।

**दक्षिणतीर** न० कर्म० तीरस्य तारभावः। नद्यादे

**दक्षिणत्रा** स्त्री दक्षिण+वेदे नि० त्रा। दक्षिणभागादौ। "धिष्व वज्रं हस्त आ दक्षिणत्राभिः" ऋ० ६।२८।६।

**दक्षिणदिक्** स्त्री दक्षिणा दिक्। स्वापेक्षया मेरुतो विप्रकृष्टदिशि। तदधिपः भौमः यथाह "सूर्यः सोमः क्षमापुत्रः सैंहिकेयः शनिः शशी। सौम्यस्त्रिदशमन्त्री च प्राच्यादिदिगधीश्वराः" ज्यो०त०। तत्र बलिनौ ग्रहौ भास्करभूमिजौ यथाह तत्रैव "प्राच्यां सौम्यसुराचार्य्यौ याम्यां भास्करभूमिजौ। प्रत्यक् सौरिरुदीच्यां तु सितेन्दू दिग्बलान्वितौ" तद्दिक्पतिः शक्रः "इन्द्रो वह्निः पितृपतिर्नैरृतो वरुणो मरुत्। कुवेर ईशः पतयः पूर्वादीनां दिशां क्रमात्" इत्युक्तेः। तद्दिग्बलिनो राशयश्च अजवृषमृगसिंहाः। "ऐन्द्रे मानुषराशयस्तु पशवो याम्ये सवीर्य्याश्चलिवारुण्यां बलयुक् तथैव बलिनः पानीयजाश्चोत्तरे" ज्यो० त० उक्तेः। तद्दिक्पतिराशयः वृषकन्यामकरराशयः यथाह ज्यो० त० "प्रागादिककुभां नाथा यथासंख्यं

प्रदक्षिणम्। मेषाद्याराशयो चोर्यास्तिराष्ट्रया परिभ्रमात्"॥ तद्दिङ्मुखनक्षत्राणि च मघादिसप्तकम्। "कृत्तिकाद्यास्तु पूर्वादौ सप्त सप्तोदिताः क्रमात्" ज्यो॰ त॰ उक्तेः। दक्षिणदिग्भागस्था देशाश्च कूर्म्मविभागशब्दे वृ॰सं॰ १४अ॰ उक्ताः "अथ दक्षिणेन लङ्का" इत्युपक्रमे दर्शिताः।

**दक्षिणपश्चात्** अव्य॰ दक्षिणस्याः परायाश्च दिशः अन्तराला दिक् बहु॰ आति परस्य पश्चादेशः। प्रथमापञ्चमी सप्तम्यर्थवृत्तौ दक्षिणपश्चिमाशब्दार्थे नैर्ऋतकोणे।

**दक्षिणपश्चिमा** स्त्री दक्षिणस्याः पश्चिमाया दिशोऽन्तरालादिक्। "दिङ्नामान्यन्तराले" पा॰ बहु॰ पुंवत्। १नैर्ऋते कोणे। "जम्बुभरतशार्दूल! दिशं दक्षिणपश्चिमाम्" भा॰ महाप्र॰ १अ॰। २तद्देशवर्त्तिनि त्रि॰ "दक्षिणपश्चिमे दक्षिणम्" आश्व॰ गृ॰ १।२।१२।

**दक्षिणपूर्वा** स्त्री दक्षिणस्याः पूर्वस्या दिशोऽन्तराला दिक् बहु॰ पुंवत्। १अग्निकोणे २तद्दिग्भागस्थे त्रि॰ "दक्षिणपूर्वे उद्धृतान् आहवनीयं निदधाति" आश्व॰गृ॰४।२।१

**दक्षिणमानस** न॰ गयास्थिते तीर्थभेदे "तस्य दक्षिणभागे तु तीर्थं दक्षिणमानसम्। दक्षिणे मानसे चैव तीर्थत्रयमुदाहृतम्" वायुपु॰ गयामा॰।

**दक्षिणमार्ग** पु॰ १तन्त्रोक्ते आचारभेदे २पितृयाणे मार्गभेदे "निर्विण्णोऽहं दक्षिणमार्गेण गतागतलक्षणेन" ईशोपनिषद् भाष्यम्। [लवणाम्बुधौ।

**दक्षिणसमुद्र** पु॰ कर्म्म॰। दक्षिणदिक्स्थे समुद्रे

**दक्षिणस्थ** त्रि॰ दक्षिणे भागे तिष्ठति स्था—क ७त॰। १दक्षिणभागस्थिते २सारथौ पु॰ अमरः।

**दक्षिणा** अ॰ दक्षिणा+प्रथमापञ्चमीसप्तम्यर्थे आच्। प्रथमाद्यर्थवृत्तिके दक्षिणाशब्दार्थे दक्षिणा वसति आगच्छति रमणीयं वा "कथं दक्षिणा विश्वकर्मा" यजु॰ २३।५५

**दक्षिणांसव्रणिन्** पु॰ दक्षिणांसे दक्षस्कन्धे व्रणोऽस्त्यस्य इनि। दक्षिणस्कन्धस्थव्रणयुक्ते "पितृस्वसभिगमनात् दक्षिणांसव्रणी भवेत्। तेनापि निष्कृतिः कार्य्या अजादानेन शक्तितः" पराशरः।

**दक्षिणाग्नि** पु॰दक्षिणोऽग्निः। अन्वाहार्य्यपचनाख्ये यज्ञाग्निमध्येऽग्निभेदे। "अन्वाहार्य्यं दक्षिणाग्नावधिश्रयति" कात्या॰ श्रौ॰ ७।५।२७ "हीनं यत्सम्पन्नाहरतीत्यन्वाहार्य्यः अध्वर्युरन्वाहार्य्यसंज्ञकं दक्षिणार्थं तण्डुलरूपमोदनं दक्षिणाग्नावधिश्रयति चतुर्णामृत्विजां तृप्तिर्यावता सम्भाव्यते तत्परिमाणं ततोऽधिकं वान्वाहार्य्यमोदनं कुर्य्यात्" कर्कः।

"उत्सर्गेऽपराह्णे गार्हपत्यं प्रज्वाल्य दक्षिणाग्निमानीय विट्कुलादिवित्तवतो वैश्ययोनय इत्येके भ्रियमाणं वा प्रज्वाल्यारणिमन्तं वा मथित्वा गार्हपत्यादाहवनीयं ज्वलन्तमुद्धरेत्" आश्व॰ श्रौ॰ २।२।१ "उत्सर्गं अजस्रोत्सर्गं अग्निहोत्रहोमार्थं विहरेत् नाजस्रेषु। होमस्त्वजस्रेष्वपि भवतीत्युक्तम्, एवं स्थिते विहरणसहितमग्निहोत्रहोमप्रयोगं वक्तुकाम उत्सर्ग इत्युक्तवान्। अत्रापराह्णशब्देन अह्नश्चतुर्थभागो गृह्यते। विहरणकाले गार्हपत्यं प्रादुष्कृत्य प्रज्वाल्य च दक्षिणाग्निं वैश्यगृहादानयेत्। चतुर्णां वर्णानामन्यतमस्य द्रव्यवतो वा गृहात्, गार्हपत्याद्वा। धार्य्यं चेत् प्रज्वलयेत्। काले काले यदि निर्मन्थ्यः तदा मन्थेत्। एषां प्रकाराणामुत्पत्तिवशाद्व्यवस्था। तेषामन्यतमप्रकारेण दक्षिणाग्निं साधयित्वा ततो गार्हपत्यात् ज्वलन्तमग्निमाहवनीयार्थमुद्धरेत् पात्रान्तरेण पृथक् कुर्य्यादित्यर्थः" नारा॰। तस्य स्थापनञ्च नैर्ऋतकोणे "दक्षिणपश्चिमे दक्षिणम्" आश्व॰ गृ॰ ४।१३। उक्तेः।

**दक्षिणाग्र** पु॰ दक्षिणस्यामग्रमस्य। दक्षिणदिग्भागस्थाग्रे कुशादौ "अथ यान्यमून्युदीचीनाग्राणि तृणानि भवन्ति दक्षिणाग्राणि तानि करोति पितृदैवत्यमेवैनत्तत्करोति" शत॰ ब्रा॰ १२।५।१।१२। "उदगग्रान् दक्षिणाग्रान् करोतीति श्रुतेः" कात्या॰ श्रौ॰ ४।१०।१५।

**दक्षिणाचल** पु॰ दक्षिणस्थितोऽचलः। मलयपर्वते हेमच॰ दक्षिणपर्वतादयोऽप्यत्र।

**दक्षिणाचार** पु॰ कर्म॰ १तन्त्रोक्ते आचारभेदे। "स्वधर्मनिरतो भत्वा पञ्चतत्त्वेन पूजयेत्। स एव दक्षिणाचारः शिवो भूत्वा शिवं यजेत्" आचारभेदतन्त्रम्। इयांस्तु तत्र भेदः मद्यस्थाने विजयारसः। "चतुर्मकाराः सन्त्येव पञ्चमो विजयारसः" इत्युक्तेः। दक्षिणा दक्षिणस्यां चारो गतिरस्य। २दक्षिणदिग्गतिशालिनि त्रि॰। "दक्षिणां दक्षिणाचारो दिशं येनाजयत् प्रभुः" भा॰ वि॰ ५अ॰।

**दक्षिणाज्योतिस्** पु॰ दक्षिणा दक्षिणस्यां ज्योतिरस्य। पञ्चौदने छागभेदे। "योऽजं पञ्चौदनं दक्षिणाज्योतिषं ददाति" अथ॰ ९।५।२२।२३।२४।२५।२६। तद्दानफलमुक्तम्।

**दक्षिणात्** अव्य॰ दक्षिण+प्रथमापञ्चमीसप्तम्यर्थे आति। प्रथमाद्यर्थवृत्तौ दक्षिणशब्दार्थे दक्षिणात् रमणीयम् आगच्छति वसति वा।

**दक्षिणान्तिका** स्त्री "षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नोनिरन्तराः। न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः" इत्युपक्रमे "तृतीययुग्दक्षिणान्तिका समस्तपादेषु द्वितीयलः" छ॰ र॰ उक्तलक्षणे वैतालीयभेदे मात्रावृत्तभेदे। "समस्तपादेषु द्वितीयलः यदि तृतीययुक् द्वितीयमात्रातृतीयमात्राभ्यामेको गुरुश्चेत् शेषं वैतालीयवत् तदा दक्षिणान्तिका नाम छन्द इत्यर्थः।

**दक्षिणापथ** पु॰ दक्षिणा (आजन्तः) पन्थाः अच् समा॰। देशभेदे तद्देशवर्णनं भा॰ व॰ ६१ अ॰ यथा "एते गच्छन्ति बहवः पन्थानो दक्षिणापथम्। अवन्तीमृक्षवन्तञ्च समतिक्रम्य पर्वतम्। एष विन्ध्यो महाशैलः पयोष्णी च समुद्रगा। आश्रमाश्च महर्षीणां बहुमूलफलान्विताः। एष पन्था विदर्भाणामयं गच्छति कोशलान्। अतः परञ्च देशोऽयं दक्षिणे दक्षिणापथः"। "दक्षिणापथजन्मानः सर्वे नरवरान्ध्रकाः। गुहाः पुलिन्दाः शबराश्चुचुका मद्रकैः सह" भा॰ शा॰ २०७ अ॰। "युयुधे पाण्ड्यराजेन दिवसं नकुलानुजः। तं जित्वा स महाबाहुः प्रययौ दक्षिणापथम्" भा॰ स॰ ३० अ॰। "तथापरे जनपदा दक्षिणापथवासिनः। पाण्ड्याश्च केरलाश्चैव चोलाः कुल्यास्तथैव च। सेतुका मूषिकाश्चैव कुपथावारवासिकाः। नवराष्ट्रा माहिषकाः कलिङ्गाश्चैव सर्वशः। कावेराश्च सहैषीकैराटव्याः शबरास्तथा। पुलिन्दा विन्ध्यमूषिका वैदर्भा दण्डकैः सह। कुलीयाश्च सिरालाश्च रूपसास्तापसैः सह। तथा तैत्तिरकाश्चैव सर्वे कारस्करास्तथा। नासिकाद्याश्च ये चान्ये ये चैवान्तरनर्मदाः। भानुकच्छाः समाहेयाः सह सारस्वतैस्तथा। कच्छीयाश्च सुराष्ट्राश्च आनर्त्ताश्चार्बुदैः सह" मत्स्यपु॰। २दक्षिणास्थितमार्गमात्रे पु॰। "कृष्णाजिनानि धुन्वन्तः स्वयमेव दक्षिणापथं यान्ति" आश्व॰ श्रौ॰ ५।१३।१२। दक्षिणापथोऽस्त्यस्य स्वामित्वेन वासत्वेन सम्बन्धित्वेन वा ठन्। दक्षिणापथिक तद्देशस्वामिनि तत्र वासिनि तत्सम्बन्धे च। "एते चान्ये च बहवो दक्षिणापथिकान् पथः" हरिवं॰ ११॰अ॰।

**दक्षिणापरा** स्त्री दक्षिणाया अपराया दिशोऽन्तराला दिक् नैर्ऋतकोणे "दक्षिणपूर्वस्यां दिशि दक्षिणपरस्यां वा" आश्व॰ गृ॰ ४।१।६। २तत्संस्थिते त्रि॰ "पुनर्दक्षिणापरेऽभ्ययुः पूर्वोत्तरे यजमानः" कात्या॰ श्रौ॰ ८।५।१८। दक्षिणायां परः। ३यज्ञपूर्त्यर्थद्रव्यदानरूपदक्षिणा तत्परे त्रि॰।

**दक्षिणाप्रवण** त्रि॰ दक्षिणा (आजन्तः) दक्षिणस्यां प्रवणं निम्नम्। उत्तरापेक्षया दक्षिणतो निम्ने श्राद्धादिदेशे "दक्षिणाप्रवणम्" कात्या॰ श्रौ॰ २२।३।६। "दक्षिणाप्रवणं देवयजनं भवति" कर्कः "शुचिदेशं विविक्तं च गोमयेनोपलेपयेत्। दक्षिणाप्रवणं चैव प्रयत्नेनोपपादयेत्" मनुः। "दक्षिणाप्लवनमथवा परिस्रुते शुचौ देशे दक्षिणाप्लवने तथा" याज्ञ॰ श्राद्धदेशोक्तौ।

**दक्षिणाप्रष्टि** पु॰ धुर्यापेक्षया प्रकृष्टं देशमश्नोति प्र+अश-क्तिच् पृषो॰ दक्षिणा दक्षिणभागे प्रष्टिः वाह्यः। धुर्यमध्ये दक्षिणस्थे पृष्ठाङ्गे प्रकृष्टदेशस्थे वा अश्वभेदे "दक्षिणाप्रष्टिं जवो यस्य इति" कात्या॰ श्रौ॰ १४।३।८। "रथे तृतीयमश्वं युनक्ति धुर्यापेक्षया प्रकृष्टं देशमश्नोतीति प्रष्टिर्वाह्यो युग्यः" सं॰ व्या॰। दक्षिणस्यां च इव इति विग्रहे २दक्षिणस्थे प्रष्टिसदृशेऽश्वे च। "अथ दक्षिणा प्रष्टिं युनक्ति सव्यप्रष्टिं वा" शत॰ ब्रा॰ ५।१।४।८। "प्रष्टिर्नाम पादत्रयोपेतो भोजनपात्रादिकाधारः" (तेपाइ) भा॰।

**दक्षिणाबन्ध** पु॰ दक्षिणायां बन्धः अनुबन्धः। स्वह्रस्वादीनां दक्षिणानुबन्धभेदे यथा "दक्षिणाबन्धो नाम ब्रह्मस्वब्रह्मचारिभिक्षुवैखानसानां काममोहोपहतचेतसामभिमानपूर्विकां दक्षिणां प्रयच्छतां दक्षिणाबन्ध इत्युच्यते" तन्त्रसारः।

**दक्षिणाभिमुख** त्रि॰ दक्षिणा दक्षिणस्यामभिमुखमस्य। दक्षिणदिङ्मुखे। "दक्षिणाभिमुखो रात्रौ सन्ध्ययोश्च यथा दिवा" याज्ञ॰ त॰। दक्षिणामुखादयोऽप्यत्र। "आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः"। "उदक्तेनैव विधिना निर्वपेत् दक्षिणामुखः" मनुः। "यद्वेष्टितशिरा भुङ्क्ते यच्च भुङ्क्ते दक्षिणामुखः" मनुना मातृजीवविप्रस्य तथा भोजनं निषिद्धम्। दक्षिणा दक्षिणस्यां मुखम्। दक्षिणदिकस्थे मुखे न॰। "अमावास्याश्राद्धं गयाश्राद्धं दक्षिणामुखभोजनम्। न जीवत्पितृकः कुर्यात् कृते च पितृहा भवेत्" ति॰ त॰।

**दक्षिणामूर्त्ति(क)** पु॰ दक्षिणा अनुकूला मूर्त्तिरस्य वा कप् संज्ञात्वात् न पुंवत्। शिवमूर्त्तिभेदे तन्मन्त्रादिकं

यथा "प्रोद्यच्छाखमहावटद्रुमतले योगासनस्थं प्रभुं प्रत्यक्तत्त्वबुभुत्सुभिः प्रतिदिशं प्रोद्वीक्ष्यमाणाननम्। मुद्रां तर्कमयीं दधानममलं कर्पूरगौरं शिवं चूडान्तः कलये स्फुरन्तमनिशं श्रीदक्षिणामूर्त्तिकम्"। "नित्यशो दक्षिणामूर्त्तिं ध्यायेत् साधकसत्तमः। शास्त्रव्याख्यानसामर्थ्यं लभन्ते वत्सरान्तरे" तन्मन्त्रादिकं तन्त्रे दृश्यम्।

ध्यानान्तरं ध्यानशब्दे दृश्यम्।

**दक्षिणायन** न॰ दक्षिणा दक्षिणस्यां दक्षिणे गोले वाऽयनं रवेः। रवेः स्वाधिष्ठितस्थानापेक्षया १दक्षिणदिग्गमने २दक्षिणगोलरूपतुलादिराशिषट्के गमने तदुपलक्षिते ऋतुत्रयात्मके ३कालभेदे च तत्राद्यार्थे "ऋतुत्रयञ्चाप्ययनं द्वे अयने वर्षसंज्ञिते। कर्कटादिस्थिते भानौ दक्षिणायनमुच्यते" मल॰ त॰ विष्णुपु॰। द्वितीयार्थे "दैवे रात्र्यहनी वर्षं प्रविभागस्तयोः पुनः। अहस्तत्रोदगयनं रात्रिः स्याद्दक्षिणायनम्" मनुः। अयनशब्दे ३५२ पृ॰ उत्तरायणशब्दे ११०४ पृ॰ खगोलशब्दे च दक्षिणायनशब्दार्थस्योक्तप्रायत्वेऽपि दक्षिणायनव्यवस्थार्थमधिकमत्रोच्यते यद्यपि चन्द्रस्यापि स्वाधिष्ठितस्थानापेक्षया दक्षिणस्यां दक्षिणगोले च गतिः सम्भवति तथापि सूर्य्यस्यैव गतिभेदे तदुपलक्षितकाले च दक्षिणायनशब्दव्यवहारः। "सौरेण द्युनिशोर्मानं षडशीतिमुखानि च। अयनं विषुवं चैव संक्रान्तेः पुण्यकालता" सू॰ सि॰ अयनस्य सौरत्वोक्तेः "यान् मासान् दक्षिणा आदित्य एति यान् मासानुत्तरादित्य एति" वाजसनेयिनां पञ्चाग्निविद्यायां दक्षिणोत्तरमार्गयोः पाठात् "तस्मादादित्यः षण्मासान् दक्षिणेनैति षण्मासानुत्तरेणैतीति तैत्तिरीयश्रुतेश्चादित्यगतिसम्पर्कोव्यैवायनशब्दप्रवृत्तेश्च। तेनादित्यगतिनिबन्धनत्वात्तस्य सौरत्वम्। उभयविधदक्षिणायनस्य किमवधिकस्य सतः कृत्यत्वं तदभिधीयते। तत्र "मेषादौ देवभागस्थो देवानां याति दर्शनम्। असुराणां तुलादौ तु सूर्यस्तद्भागसञ्चरः" सू॰सि॰।

"जम्बुद्वीपलवणसमुद्रसन्धौ परिधिवृत्तं भूगोलमध्ये तत्समसूत्रेणाकाशे वृत्तं विषुवद्वृत्तं तत्र क्रान्तिवृत्तं षड्भान्तरेण स्थानद्वये लग्नं तन्मेषतुलास्थानं प्रवहवायुना विषुवद्वृत्तमार्गे भ्रमति मेषस्थानात् कर्कादिस्थानं विषुवद्वृत्ताच्चतुर्विंशत्यंशान्तर उत्तरतः। मकरादिस्थानं विषुवद्वृत्ताच्चतुर्विंशत्यंशान्तरे दक्षिणतः। तत् स्वस्थाने प्रवहवायुना भ्रमति। एवं क्रान्तिवृत्तप्रदेशाः स्वस्वस्थाने प्रवहवायुना भ्रमन्ति। तत्र मेषादौ देवभागस्थः "जम्बुद्वीपं च तत्रापि देवासुरविभागकृदिति" पूर्वोक्तेः। तत्सम्बद्धा मेषादिकन्यान्ता राशय उत्तरगोलः। तत्स्थः सूर्यस्तु मेषादौ मेषादिप्रदेशे देवानां मेरोरुत्तराग्रवर्त्तिनां दर्शनं षण्मासानन्तरं प्रथमदर्शनं याति गच्छति प्राप्नोतीत्यर्थः विषुवद्वृत्तस्य तत्क्षितिजत्वात्। एवं दैत्यानां मेरोर्दक्षिणाग्रवर्त्तिनामित्यसुराणामित्युक्तेनैवोक्तम्। तद्भागसञ्चरो दैत्यभागे समुद्रादिदक्षिणविभागस्थास्तुलादिमीनान्ता राशयो दक्षिणगोलस्तत्र सञ्चरो गमनं यस्येत्येतादृशसूर्यस्तुलादिप्रदेशे तदाकारादर्शनानन्तरं प्रथमदर्शनं प्राप्नोतीत्यर्थः तेषामपि विषुवद्वृत्तक्षितिजत्वात्" रङ्गना॰। "देवासुरा विषुवति क्षितिजस्थं दिवाकरम्। पश्यन्त्यन्योन्यमेतेषां वामसव्ये दिनक्षपे" सू॰ सि॰।

"विषुवति काले देवदैत्याः सूर्यं क्षितिजस्थं पश्यन्ति विषुवद्वृत्तस्य तयोः स्वस्थानाद्भूगोलमध्यस्थत्वेन क्षितिजत्वात्। एतेषां देवदैत्यानामन्योन्यं परस्परं ये वामसव्ये अपसव्यसव्ये ते क्रमेण दिनक्षपे दिवसरात्री भवतः। अयं भावः देवानां भूमेरुत्तरभागः स्वकीयत्वात् सव्यमतो दैत्यानामपसव्यं स्वकीयत्वाभावात्। एवं दैत्यानां भूमेर्दक्षिणभागः स्वकीयत्वात् सव्यं देवानां स्वकीयत्वाभावादपसव्यमतो दैत्यानां वामसव्यगावुत्तरदक्षिणगोलौ देवानां क्रमेण दिनरात्री। देवानां वामसव्यभागौ दक्षिणोत्तरगोलौ दैत्यानां दिनरात्री। अन्यथाऽन्योन्यं वामसव्ये इत्यनयोः सङ्गतार्थानुपपत्तेः। अतएव पूर्वं मेषादावित्याद्युक्तमिति" रङ्गना॰। अथ पूर्वश्लोकोत्तरार्धस्य सन्दिग्धत्वशङ्कया दिनपूर्वापरार्धकथनच्छलेन तदर्थं श्लोकाभ्यां विशदयति।

"मेषादावुदितः सूर्यस्त्रीन् राशीनुदगुत्तरम्। सञ्चरन् प्रागहर्मध्यं पूरयेन्मेरुवासिनाम्। कर्कादीन् सञ्चरंस्तद्वदह्नः पश्चार्धमेव सः। तुलादींस्त्रीन्मृगादींश्च तद्वदेव सुरद्विषाम्" सू॰ सि॰।

"मेषादौ विषुवद्वृत्तस्थक्रान्तिवृत्तभागे रेवत्यासन्न उदितो दर्शनतां प्राप्तः सूर्य उत्तरं यथोत्तरं क्रमेणेति यावत् त्रीन् राशीनुदगुत्तरभागस्थान् मेषवृषमिथुनान् सञ्चरन्नतिक्रामन् सन् मेरुस्थानां देवानां प्रागहर्मध्यं प्रथमं दिनस्यार्धं पूरयेत् पूर्णं करोतीत्यर्थः। मिथुनान्ते सूर्ये मेरुस्थानां मध्याह्नं स्यादिति फलितार्थः। कर्कादीन् त्रीन्

राशीन् कर्कसिंहकन्यास्तद्वत् क्रमेणेत्यर्थः। अतिक्रामन् सन् स सूर्यो दिवसस्य पश्चार्धमपरदलम्। एवकारोऽन्ययोगव्यवच्छेदार्थः। पूरयेत्। कन्यान्ते सूर्ये मेरस्थानां सूर्यास्तो भवतीति फलितार्थः। अथ दैत्यानामाह। तुलादीनिति। सुरद्विषां मेरोर्दक्षिणायवर्त्तिनां दैत्याना मित्यर्थः। तुलादींस्त्रीन् राशींस्तुलावृश्चिकधनुराख्यान् मृगादींस्त्रीन् राशीन् मकरकुम्भमीनांस्तद्वत् क्रमेणातिक्रामन् सूर्यः। चकारस्तुलामृगादिक्रमेण पूर्वापरार्धमित्यर्थकः। एवकार उक्तातिरिक्तव्यवच्छेदार्थः। दिनं पूरयतीत्यर्थः। धनुरन्ते सूर्ये दैत्यानां मध्याह्नं मीनान्ते सूर्ये सूर्यास्तो भवतीति फलितार्थः" रङ्गना०।

"अतो दिनक्षपे तेषामन्योन्यं हि विपर्ययात्। अहोरात्रप्रमाणं च भानोर्भगणपूरणात्। दिनक्षपार्धमेतेषामयनान्ते विपर्ययात्। उपर्यात्मानमन्योन्यं कल्पयन्ति सुरासुराः" सू० सि०।

"एतेषां देवदैत्यानामयनान्ते ऽयनसन्धौ विपर्ययाद्वत्यासाद्दिनक्षपार्धं दिनार्धं रात्र्यर्धं च भवति। यत्र देवानां मध्याह्नं रात्र्यर्धं च तत्र दैत्यानां क्रमेण रात्र्यर्धमध्याह्ने यत्र च दैत्यानां मध्याह्नरात्र्यर्धे तत्र देवानां क्रमेण रात्र्यर्धमध्याह्ने इति फलितार्थः। अत्र हेतुमाह। उपरीति। देवदैत्या मेरोरुत्तरदक्षिणाग्रवर्तिनोऽन्योन्यमात्मानं स्वस्वपरिभाग ऊर्द्धभागे कल्पयन्त्यङ्गीकुर्वन्ति। वस्तुतो भूमेर्गोलत्वेन सर्वत्र तुल्यत्वान्निरपेक्षोर्ध्वाधोभागयोरनुपपत्तेः। तथा च देवा दैत्यापेक्षयोर्ध्वस्थत्वं मन्यमाना दैत्यानधःस्थानङ्गीकुर्वन्ति। दैत्याश्च देवस्थानापेक्षयार्ध्वस्थं मन्यमाना देवानधः कुर्वन्तीति तात्पर्यार्थः। एवं च देवदैत्ययोर्विपरीतावस्थानाद्दिनरात्र्योर्वैपरीत्यं युक्तमेवेति भावः" रङ्गना०।

ततश्च उत्तरगोलस्थमेषादिराशिषट्कस्थरविककालस्य देवानां दिनत्वे दक्षिणगोलस्थतुलादिराशिषट्कस्थरविककालस्य रात्रित्वे स्थितेऽपि मकरादिकानां देवानां दिनरात्रिकालतोक्तिः श्रौतस्मार्त्तकर्मोपयोगिनी रवेः स्वाविष्ठितस्थानापेक्षया दक्षिणोत्तरतो गत्या वा तथा व्यवह्रियते इति बोध्यम् अतएव सि० शि० उक्तं यथा "दिनं दिनेशस्य यतोऽत्र दर्शने तमो तमोहन्तुरदर्शने खलु। कुहुष्टमानां द्युनिशं यथा न्वणां तथा पितृणां शशिपृष्ठवासिनाम्"। इदानीं संहितोक्ताभिप्रायमाह। "दिनं सुराणामयनं यदुत्तरं निशेतरत् संहितिकैः प्रकीर्तितम्। दिनोन्मुखेऽर्कें दिनमेव तन्मतं निशा तथा तत्फलकीर्तनाय तत्। इन्द्रानलमारोहति यैः क्रमेण तैरेव हस्तैरवरोहतीनः। यत्रैव दृष्टः प्रथमं स देवैस्तत्रैव तिष्ठन् न विलोक्यते किम्?"। "संहितिकानां न चेदयमभिप्रायस्तर्हि मेषादेरर्द्धं मिथुनान्तं यावद्धै हस्तैरेवारोहणं कुर्वन्नपि देवैर्दृष्टस्तैरेव पुनरवरोहणं कुर्वन् किं न दृश्यत इति" प्रमिता०।

एतदभिप्रायेणैव श्रीपत्युक्तं यथा

"मृगादिराशिद्वयभानुभोगात् षट्कर्त्तवः स्युः शिशिरो वसन्तः। ग्रीष्मश्च वर्षा च शरच्च तद्वद्धेमन्तनामा कथितोऽत्र षष्ठः॥ शिशिरपूर्वमृतुत्रयमुत्तरं ह्ययनमाहुरहश्च तदामरम्। भवति दक्षिणमन्यदृतुत्रयं निगदिता रजनी मरुतां च सा। मखगृहप्रवेशत्रिदशप्रतिष्ठाविवाहचौलव्रतबन्धपूर्वम्। सौम्यायने कर्म शुभं विधेयं यद्गर्हितं तत् खलु दक्षिणे च"।

एतदभिप्रायेणैव च मत्स्यव्रतः—"देवतारामवाप्यादिप्रतिष्ठोदङ्मुखे रवौ। दक्षिणाभिमुखे कुर्वन् न तत्फलमवाप्नुयात्" सूर्यस्य दक्षिणोत्तराभिमुख्येनैव प्रतिष्ठादौ विधिनिषेधावाह। अतएव सू० सि० "भानोर्मकरसंक्रान्तेः षण्मासा उत्तरायणम्। कर्कादेस्तु तथैव स्यात् षण्मासा दक्षिणायनम्" इत्युक्तम्। अतः स्वापेक्षया दक्षिणोत्तरगमनादेव दक्षिणोत्तरायणव्यवहारो भाक्तो दक्षिणोत्तरगोलयोगेन्या तु मुख्य इत्यवधेयम्। तेन भाक्ते दक्षिणायन एव प्रतिष्ठादिनिषेधः न मुख्ये" प्रागुक्तमत्स्यव्रतवाक्यैकवाक्यत्वात्। विवाहव्रतबन्धादिचूडासंस्कारदीक्षणम्। गृहप्रवेशादिदानाद्येनप्रतिष्ठनम्। पुण्यानि यानि कर्माणि वर्जयेद्दक्षिणायने" म०त०भविष्यपु०। तत्रापवादः कालमा० वैखानससंहितायां यथा "मातृभैरववाराहनरसिंहत्रिविक्रमाः। महिषासुरहन्त्री च स्थाप्या वै दक्षिणायने"

४तदभिमानिदेवताभेदे च "धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्" गीता। "आतिवाहिकास्तल्लिङ्गात्" शा० भा० धूमादीनां तदभिमानिदेवतापरत्वसमर्थनात्। ५दक्षिणभागस्थे प्राणे च "दक्षिणस्थो यदा प्राणस्तदा स्यात् दक्षिणायनम्। पञ्चभूतात्मकास्तत्र सुखाः पञ्चोदयन्ति वै" पदार्थादर्श धृतप्रयोगसारवाक्यम्।

दक्षिणारण्य न० दक्षिणस्यमरण्यम्। अरण्यभेदे।

**दक्षिणारुस्** पु० दक्षिणे भागे अरुर्व्रणमस्य । व्याधकृतदक्षिणाङ्के मृगे अमरः । [ऋत्विजि ।

**दक्षिणार्ह** पु० दक्षिणामर्हति अर्ह–अण् उप०स०। दक्षिण्ये

**दक्षिणावत्** त्रि० दक्षिणा+अस्त्यर्थे मतुप् मस्य वः । दक्षिणायुक्ते अन्वाहार्य्यशब्दे २२० पृ० दृश्यम् ।

**दक्षिणावर्त्त** त्रि० दक्षिणे आवर्त्तते आ+वृत–अच् । १दक्षिणे आवर्त्तयुक्ते । "सुतकुम्भवालुकारम्भपिधानरचनेच्छया । दक्षिणावर्त्तशङ्खोऽयं हन्त चूर्णीकृतो मया" सा० द० । दक्षिणा दक्षिणस्यां वर्त्तते वृत–अच् । २दक्षिणदिक्स्थे त्रि० । "दक्षिणावर्त्त आदित्य एतन्मे मनसि स्थितम्" भा० भी० १२० अ० ।

**दक्षिणावर्त्तकी** स्त्री दक्षिणावर्त्त इव कायति कै–क गौरा० ङीष् । वृश्चिकाल्यां राजनि० । [दक्षिणानिले ।

**दक्षिणावह** पु० दक्षिणा दक्षिणदिक्तो वहति वह–अच् ।

**दक्षिणावृत्** त्रि० दक्षिणा आवर्त्तते वृत-क्विप् । दक्षिणावर्त्ते । "तस्मादिमं लोकं दक्षिणावृत् समुद्रः पर्य्येति" शत० ब्रा० ७।१।१।१२ ।

**दक्षिणाशापति** पु० ६त० । १यमराजे २भौमे ग्रहे च ।

**दक्षिणाहि** अव्य० दक्षिण+आहि दूरे । दूरस्थे दक्षिणभागे

**दक्षिणित्** अव्य० दक्षिणात्+वेदे पृषो० । दक्षिणस्यामित्यर्थे । "प्रदक्षिणिद्धरिवो मा वि वेनः" ऋ०५।३६।४।

**दक्षिणीय** पु० दक्षिणामर्हति छ । दक्षिणार्हे ऋत्विजि । "ऋतवः संप्रवर्त्तन्तां दक्षिणीयैर्हि जातिभिः । दक्षिणाश्चोपवर्त्तन्तां यथार्थं सत्रयाजिनाम्" हरिवं० ४६ अ०।

**दक्षिणेन** अव्य० दक्षिण+एनप् । सप्तम्यर्थवृत्तौ १दक्षिणस्यां दिशि २दक्षिणदेशे च । एनपा योगे पञ्चमीबाधिका द्वितीया । "तत्रागारं धनपतिगृहात् दक्षिणेनास्मदीयम्" मेघ०। "जग्मतुर्दण्डकारण्यं दक्षिणेन परन्तपौ" भा० व० २७८ अ० ।

**दक्षिणेर्म्मन्** पु० दक्षिणे ईर्म्म व्रणं यस्य नि० अनिच् । व्याधकृतव्रणयुक्तदक्षिणाङ्के मृगे अमरः । "मृगयुमिव मृगोऽथ दक्षिणेर्म्मा" भट्टिः ।

**दक्षिण्य** त्रि० दक्षिणामर्हति यत् । दक्षिणार्हे ऋत्विगादौ "दक्षिण्यदिष्टं क्रतुमार्त्विजीनैः" भट्टिः ।

**दक्षेश्वर** न०काशीस्थे दक्षप्रजापतिस्थापिते लिङ्गभेदे तत्कथा "यत्त्वया स्थापितं लिङ्गमेतद्दक्षेश्वराभिधम् । अस्य संसेवनात् पुंसामपराधसहस्रकम् । क्षमिष्येऽहं न सन्देहस्तस्मात् पूज्यमिदं जनैः" काशीख०८९अ० ।

**दगा(का)र्गल** न० दकस्य जलद्वाररोधस्यार्गलमिव समध्यपाठे पृषो०कमध्यपाठस्तु सम्यक् । ५४ अ० वराहसंहितोक्ते निर्जलदेशे जलोपलब्धिसाधने उपायभेदे । यथा

"धर्म्यं यशस्यं च वदाम्यतोऽहं दगा(का)र्गलं येन जलोपलब्धिः । पुंसां यथाङ्गेषु शिरास्तथैव क्षितावपि प्रोन्नतनिम्नसंस्थाः । एकेन वर्णेन रसेन चाम्भश्च्युतं नभस्तो वसुधाविशेषात् । नानारसत्वं बहुवर्णतां च गतं परीक्ष्यं क्षितितुल्यमेव । पुरुहूतानलयमनिरृतिवरुणपवनेन्दुशङ्करा देवाः । विज्ञातव्याः क्रमशः प्राच्यादीनां दिशां पतयः । दिक्पतिसंज्ञाश्च शिरा नवमी मध्ये महाशिरानाम्नी । एताभ्योऽन्याः शतशो विनिःसृता नामभिः प्रथिताः । पातालादूर्द्ध्वशिराः शुभाश्चतुर्दिक्षु संस्थिता याश्च । कोणदिगुत्था न शुभाः शिरानिमित्तान्यतो वक्ष्ये । यदि वेतसोऽम्बुरहिते देशे हस्तैस्त्रिभिस्ततः पश्चात् । सार्द्धे पुरुषे तोयं वहति शिरा पश्चिमा तत्र । चिह्नमपि चार्द्धपुरुषे मण्डूकः पाण्डुरोऽथ मृत् पीता । पुटभेदकश्च तस्मिन् पाषाणो भवति तोयमधः । जम्ब्वाश्चोदग्धस्तैस्त्रिभिः शिराधो नरद्वये पूर्वा । मृल्लोहगन्धिका पाण्डुराथ पुरुषेऽत्र मण्डूकः । जम्बूवृक्षस्य प्राग्वल्मीको यदि भवेत् समीपस्थः । तस्माद्दक्षिणपार्श्वे सलिलं पुरुषद्वये स्वादु । अर्द्धपुरुषे च मत्स्यः पारावतसन्निभश्च पाषाणः । मृद्भवति चात्र नीला दीर्घं कालं बहु च तोयम् । पश्चादुदुम्बरस्य त्रिभिरेव करैर्नरद्वये सार्द्धे । पुरुषे सितोऽहिरश्माञ्जनोपमोऽधः शिरा सुजला । उदगर्जुनस्य दृश्यो वल्मीको यदि ततोऽर्जुनाद्धस्तैः । त्रिभिरम्बु भवति पुरुषैस्त्रिभिरर्द्धसमन्वितैः पश्चात् । श्वेता गोधार्द्धनरे पुरुषे मृद् धूसरा ततः कृष्णा । पीता सिता ससिकता ततो जलं निर्दिशेदमितम् । वल्मीकोपचितायां निर्गुण्ड्यां दक्षिणेन कथितकरैः । पुरुषद्वये सपादे स्वादु जलं भवति चाशोष्यम् । रोहितमत्स्योऽर्द्धनरे मृत् कपिला पाण्डुरा ततः परतः । सिकता सशर्करा च क्रमेण परतो भवत्यम्भः । पूर्वेण यदि बदर्या वल्मीको दृश्यते जलं पश्चात् । पुरुषैस्त्रिभिरादेश्यं श्वेता गृहगोधिकार्द्धनरे । सपलाशा बदरी चेद्दिश्यपरस्यां ततो जलं भवति । पुरुषत्रये सपादे पुरुषेऽत्र च दुन्दुभिश्चिह्नम् । बिल्वोदुम्बरयोगे विहाय हस्तत्रयं तु याम्येन । पुरुषैस्त्रिभिरम्बु भवेत् कृष्णो

ऽर्द्धनरे च मण्डूकः। काकोडुम्बरिकायां वल्मीको दृश्यते सिरा तस्मिन्। पुरुषत्रये सपादे पश्चिमदिक्स्था वहति सा च। आपाण्डुपीतिका मृद् गौरससवर्णश्च भवति पाषाणः। पुरुषार्द्धे कुमुदनिभो दृष्टिपथं मूषिको याति। जलपरिहीने देशे वृक्षः कम्पिल्लको यदा दृश्यः। प्राच्यां हस्तत्रितये वहति सिरा दक्षिणा प्रथमम्। मृन्नीलोत्पलवर्णा कापोता चैव दृश्यते तस्मिन्। हस्तेऽजगन्धिमत्स्यो भवति पयोऽल्पं च सक्षारम्। शोणाकतरोरपरोत्तरे सिरा द्वौ करावतिक्रम्य। कुमुदा नाम सिरा सा पुरुषत्रयवाहिनी भवति। आसन्नो वल्मीको दक्षिणपार्श्वे विभीतकस्य यदि। अध्यर्द्धे तस्य सिरा पुरुषे ज्ञेया दिशि प्राच्याम्। तस्यैव पश्चिमायां दिशि वल्मीको यदा भवेद्धस्ते। तत्रोदग्भवति सिरा चतुर्भिरर्द्धाधिकैः पुरुषैः। श्वेतो विश्वम्भरकः प्रथमे पुरुषे तु कुङ्कुमाभोऽश्मा। अपरस्यां दिशि च सिरा नश्यति वर्षत्रयेऽतीते। सकुशासित ऐशान्यां वल्मीको यत्र कोविदारस्य। मध्ये तयोर्नरैरर्द्धपञ्चमै स्तोयमक्षोभ्यम्। प्रथमे पुरुषे भुजगः कमलोदरसन्निभो मही रक्ता। कुरुविन्दः पाषाणश्चिह्नान्येतानि वाच्यानि। यदि भवति सप्तपर्णो वल्मीकवृतस्तदुत्तरे तोयम्। वाच्यं पुरुषैः पञ्चभिरत्रापि भवन्ति चिह्नानि। पुरुषार्द्धे मण्डूको हरितो हरितालसन्निभा भूश्च। पाषाणोऽभ्रनिकाशः सौम्या च सिरा शुभाम्बुवहा। सर्वेषां वृक्षाणामधःस्थितो दर्दुरो यदा दृश्यः। तस्माद्धस्ते तोयं चतुर्भिरर्द्धाधिकैः पुरुषैः। पुरुषे तु भवति नकुलो नीला मृत् पीतिका ततः श्वेता। दर्दुरसमानरूपः पाषाणो दृश्यते चात्र। यद्यहिनिलयो दृश्यो दक्षिणतः संस्थितः करञ्जस्य। हस्तद्वये तु याम्ये पुरुषत्रितये तु सिरा सार्द्धे। कच्छपकः पुरुषार्द्धे प्रथमं चोद्भिद्यते सिरा पूर्वा। उदगन्या स्वादुजला हरितोऽश्माधस्ततस्तोयम्। उत्तरतश्च मधूकादहिनिलयः पश्चिमे तरोस्तोयम्। परिहृत्य पञ्च हस्तान् अर्द्धाष्टमपौरुषे प्रथमम्। अहिराजः पुरुषेऽस्मिन् धूम्रा धात्री कुलत्थवर्णोऽश्मा। माहेन्द्री भवति सिरा वहति सफेनं सदा तोयम्। वल्मीकः स्निग्धो दक्षिणेन तिलकस्य सकुशदूर्वश्चेत्। पुरुषैः पञ्चभिरम्भो दिशि वारुण्यां सिरा पूर्वा। सर्पावासः पश्चाद् यदा कदम्बस्य दक्षिणेन जलम्। परतो हस्तत्रितयात् षड्भिः पुरुषैस्तुरीयोनैः। कौबेरी चात्र सिरा वहति जलं लोहगन्धि चाक्षोभ्यम्। कनकनिभो मण्डूको नरमात्रे मृत्तिका पीता। वल्मीकसंवृतो यदि तालो वा भवति नारिकेलो वा। पश्चात् षड्भिर्हस्तैर्नरैश्चतुर्भिः सिरा याम्या। याम्येन कपित्थस्याहिसंश्रयश्चेदुदग्जलं वाच्यम्। सप्त परित्यज्य करान् खात्वा पुरुषान् जलं पञ्च। कर्बुरकोऽहिः पुरुषे कृष्णा मृत् पुटभिदपि च पाषाणः। श्वेता मृत् पश्चिमतः सिरा ततश्चोत्तरा भवति। अश्मन्तकस्य वामे बदरी वा दृश्यतेऽहिनिलयो वा। षड्भिरुदक् तस्य करैः सार्द्धे पुरुषत्रये तोयम्। कूर्मः प्रथमे पुरुषे पाषाणो धूसरः ससिकता मृत्। आदौ सिरा च याम्या पूर्वोत्तरतो द्वितीया च। वामेन हरिद्रतरोर्वल्मीकश्चेत्ततो जलं पूर्वे। हस्तत्रितये पुरुषैः सत्र्यंशैः पञ्चभिर्भवति। नीलो भुजगः पुरुषे मृत् पीता मरकतोपमश्चाश्मा। कृष्णा भूः प्रथमं वारुणी सिरा दक्षिणेनान्या। जलपरिहीने देशे दृश्यन्तेऽनूपजानि चिह्नानि। वीरणदूर्वा मृदवश्च यत्र तस्मिन् जलं पुरुषे। भार्गी त्रिवृता दन्ती सूकरपादी च लक्ष्मणा चैव। नवमालिका च हस्तद्वयेऽम्बु याम्ये त्रिभिः पुरुषैः। स्निग्धाः प्रलम्बशाखा वामनविटपद्रुमाः समीपजलाः। सुषिरा जर्जरपत्रा रूक्षाश्च जलेन सन्त्यक्ताः। तिलकाम्रातकवरुणकभल्लातकबिल्वतिन्दुकाङ्कोलाः। पिण्डारशिरीषाञ्जनपरूषकावञ्जुलातिबलाः। एते यदि सुस्निग्धा वल्मीकैः परिवृतास्ततस्तोयम्। हस्तैस्त्रिभिरुत्तरतश्चतुर्भिरर्द्धेन च नरस्य। अतृणे सतृणा यस्मिन् सतृणे तृणवर्जिता मही यत्र। तस्मिन् सिरा प्रदिष्टा वक्तव्यं वा धनं तस्मिन्। कण्टक्यकण्टकानां व्यत्यासेऽम्भस्त्रिभिः करैः पश्चात्। खात्वा पुरुषत्रितयं त्रिभागयुक्तं धनं वा स्यात्। नदति मही गम्भीरं यस्मिंश्चरणाहता जलं तस्मिन्। सार्द्धैस्त्रिभिर्मनुष्यैः कौबेरी तत्र च सिरा स्यात्। वृक्षस्यैका शाखा यदि विनता भवति पाण्डुरा वा स्यात्। विज्ञातव्यं शाखातले जलं त्रिपुरुषं खात्वा। फलकुसुमविकारो यस्य तस्य पूर्वे सिरा त्रिभिर्हस्तैः। भवति पुरुषैश्चतुर्भिः पाषाणोऽधः क्षितिः पीता। यदि कण्टकारिका तु कण्टकैर्विना दृश्यते सितैः कुसुमैः। तस्यास्तलेऽम्बु वाच्यं त्रिभिर्नरैरर्द्धपुरुषे च। खर्जूरी द्विशिरस्का यत्र भवेज्जलविवर्जिते देशे। तस्याः पश्चिमभागे निर्देश्यं त्रिपुरुषे वारि।

यदि भवति कर्णिकारः सितकुसुमः स्यात् पलाशवृक्षो वा । सव्येन तत्र हस्तद्वयेऽम्बु पुरुषत्रये भवति । ऊष्मा यस्यां धात्र्यां धूमो वा तत्र वारि नरयुग्मे । निर्देष्टव्या च सिरा महता तोयप्रवाहेण । यस्मिन् क्षेत्रोद्देशे जातं सस्यं विनाशमुपयाति । स्निग्धमतिपाण्डुरं वा महासिरा नरयुगे तत्र । मरुदेशे भवति सिरा यथा तथातः परं प्रवक्ष्यामि । ग्रीवा करभाणामिव भूतलसंस्थाः सिरा यान्ति । पूर्वोत्तरेण पीलोर्यदि वल्मीको जलं भवति पश्चात् । उत्तरगमना च सिरा विज्ञेया पञ्चभिः पुरुषैः । चिह्नं दर्दुर आदौ मृत् कपिलातः परं भवेद्धरिता । भवति च पुरुषेऽधोऽश्मा तस्य तले वारि निर्देश्यम् । पीलोरेव प्राच्यां वल्मीकोऽतोऽर्द्धपञ्चमैर्हस्तैः । दिशि याम्यायां तोयं वक्तव्यं सप्तभिः पुरुषैः । प्रथमे पुरुषे भुजगः सितासितो हस्तमात्रमूर्त्तिश्च । दक्षिणतो वहति सिरा सक्षारं भूरि पानीयम् । उत्तरतश्च करीरादहिनिलये दक्षिणे जलं स्वादु । दशभिः पुरुषैर्ज्ञेयं पुरुषे पीतोऽत्र मण्डूकः । रोहीतकस्य पश्चादहिवासश्चेत्त्रिभिः करैर्याम्ये । द्वादश पुरुषान् खात्वा सक्षारा पश्चिमेन सिरा । इन्द्रतरोर्वल्मीकः प्राग्दृश्यः पश्चिमे सिरा हस्ते । खात्वा चतुर्दश नरान् कपिला गोधा नरे प्रथमे । यदि वा सुवर्णनाम्नस्तरोर्भवेद्वामतो भुजङ्गगृहम् । हस्तद्वये तु याम्ये पञ्चदशनरावसानेऽम्बु । क्षारं पयोऽत्र नकुलोऽर्द्धमानवे ताम्रसन्निभश्चाश्मा । रक्ता च भवति वसुधा वहति सिरा दक्षिणा तत्र । बदरीरोहितवृक्षौ सम्पृक्तौ चेद्विनापि वल्मीकम् । हस्तत्रयेऽम्बु पश्चात् षोड़शभिर्मानवैर्भवति । सुरसं जलमादौ दक्षिणा सिरा वहति चोत्तरेणान्या । पिष्टनिभः पाषाणो मृच्छ्वेता वृश्चिकोऽर्द्धनरे । सकरीरा चेद्बदरी त्रिभिः करैः पश्चिमेन तत्राम्भः । अष्टादशभिः पुरुषैरैशानी बहुजला च सिरा । पीलुसमेता बदरी हस्तत्रयसम्मिते दिशि प्राच्याम् । विंशत्या पुरुषाणामशोष्यमम्भोऽत्र सक्षारम् । ककुभकरीरावेकत्र संयुतौ यत्र ककुभविल्वौ वा । हस्तद्वयेऽम्बु पश्चान्नरैर्भवेत्पञ्चविंशत्या । वल्मीकमूर्द्धनि यदा दूर्वा कुशाश्च पाण्डुराः सन्ति । कूपो मध्ये देयो जलमत्र नरैकविंशत्या । भूमिः कदम्बकयुता वल्मीके यत्र दृश्यते दूर्वा । हस्तत्रयेण याम्ये नरैर्जलं पञ्चविंशत्या । वल्मीकत्रयमध्ये रोहीतकपादपो यदा भवति । नानावृक्षैः सहितस्त्रिभिर्जलं तत्र वक्तव्यम् । हस्तचतुष्के मध्यात् षोड़शभिश्चाङ्गुलैरुदग्वारि । चत्वारिंशत्पुरुषान् खात्वाश्मातः सिरा भवति । ग्रन्थिप्रचुरा यस्मिञ्छमी भवेदुत्तरेण वल्मीकः । पश्चात्पञ्चकरान्ते शतार्द्धसङ्ख्यैर्नरैः सलिलम् । एकस्थाः पञ्च यदा वल्मीका मध्यमो भवेच्छ्वेतः । तस्मिन् सिरा प्रदिष्टा नरषष्ट्या पञ्चवर्जितया । सपलाशा यत्र शमी पश्चिमभागेऽम्बु मानवैः षष्ट्या । अर्द्धनरेऽहिः प्रथमं सवालुका पीतमृत् परतः । वल्मीकेन परिवृतः श्वेतो रोहीतको भवेद्यस्मिन् । पूर्वेण हस्तमात्रे सप्तत्या मानवैरम्बु । श्वेता कण्टकबहुला यत्र शमी दक्षिणेन तत्र पयः । नरपञ्चकसंयुतया सप्तत्याहिर्नरार्द्धे च । मरुदेशे यच्चिह्नं न जाङ्गले तैर्जलं विनिर्देश्यम् । जम्बूवेतसपूर्वे ये पुरुषास्ते मरौ द्विगुणाः । जम्बूस्त्रिवृता मूर्वा शिशुमारी सारिवा शिवा श्यामा । वीरुधयो वाराही ज्योतिष्मती च गरुड़वेगा । सूकरिकामाषपर्ण्यौ व्याघ्रपदाश्चेति यद्यहेर्निलये । वल्मीकादुत्तरतस्त्रिभिः करैस्त्रिपुरुषे तोयम् । एतदनूपे वाच्यं जाङ्गलभूमौ तु पञ्चभिः पुरुषैः । एतैरेव निमित्तैर्मरुदेशे सप्तभिः कथयेत् । एकनिभा यत्र मही तृणतरुवल्मीकगुल्मपरिहीना । तस्यां यत्र विकारो भवति धरित्र्यां जलं तत्र । यत्र स्निग्धा निम्ना सवालुका सानुनादिनी वा स्यात् । तत्रार्द्धपञ्चमैर्वारि मानवैः पञ्चभिर्यदि वा । स्निग्धतरूणां याम्ये नरैश्चतुर्भिर्जलं प्रभूतं च । तरुगहनेऽपि हि विकृतो यस्तस्मात्तद्वदेव वदेत् । नमते यत्र धरित्री सार्द्धे पुरुषेऽम्बु जाङ्गलानूपे । कीटा वा यत्र विनालयेन बहवोऽम्बु तत्रापि । उष्णा शीता च मही शीतोष्णाम्भस्त्रिभिर्नरैः सार्द्धैः । इन्द्रधनुर्मत्स्यो वा वल्मीको वा चतुर्हस्तात् । वल्मीकानां पङ्क्त्यां यद्येकोऽभ्युच्छ्रितः सिरा तदधः । शुष्यति न रोहते वा सस्यं यस्यां च तत्राम्भः । न्यग्रोधपलाशोदुम्बरैः समेतैस्त्रिभिर्जलं तदधः । वटपिप्पलसमवाये तद्वद्वाच्यं सिरा चोदक् । आग्नेये यदि कोणे ग्रामस्य पुरस्य वा भवति कूपः । नित्यं स करोति भयं दाहं च समानुषं प्रायः । नैर्ऋतकोणे बालक्षयं वनिताभयं च वायव्ये । दिक्त्रयमेतत्त्यक्त्वा शेषासु शुभावहाः कूपाः । सारस्वतेन मुनिना दगा(का)र्गलं यत्कृतं तदवलोक्य । आर्याभिः कृतमेतद् वृत्तैरपि

मानवं वक्ष्ये। स्निग्धा यतः पादपगुल्मवल्ल्यो निश्छिद्रपत्राश्च ततः सिरास्ति। पद्मक्षुरोशीरकुलाः सगुण्ड्राः काशाः कुशा वा नलिका नलो वा। खर्जूरजम्ब्वर्जुनवेतसाः स्युः क्षीरान्विता वा द्रुमगुल्मवल्ल्यः। छत्रेभनागाः शतपत्रनीपाः स्युर्नक्तमालाश्च ससिन्धुवाराः। विभीतको वा मदयन्तिका वा यत्रास्ति तस्मिन् पुरुषत्रयेऽम्बः। स्यात्पर्वतस्योपरि पर्वतोऽन्यस्तत्रापि मूले पुरुषत्रयेऽम्बः। या मौञ्जकैः काशकुशैश्च युक्ता नीला च मृद् यत्र सशर्करा च। तस्यां प्रभूतं सुरसं च तोयं कृष्णाथवा यत्र च रक्तमृद्वा। सशर्करा ताम्रमही कषायं क्षारं धरित्री कपिला करोति। आपाण्डुरायां लवणं प्रदिष्टं मिष्टं पयो नीलवसुन्धरायाम्। शाकाश्वकर्णार्जुनबिल्वसर्जाः श्रीपर्ण्यरिष्टाधवशिंशपाश्च। छिद्रैश्च पर्णैर्द्रुमगुल्मवल्ल्यो रूक्षाश्च दूरेऽम्बु निवेदयन्ति। सूर्याग्निभस्मोष्ट्रखरानुवर्णा या निर्जला सा वसुधा प्रदिष्टा। रक्ताङ्कुराः क्षीरयुताः करीरा रक्ता धरा चेज्जलमश्मनोऽधः। वैदूर्यमुद्गाम्बुदमेचकाभा पाकोन्मुखोदुम्बरसन्निभा वा। भृङ्गाञ्जनाभा कपिलाथ वा या ज्ञेया शिला भूरिसमीपतोया। पारावतक्षौद्रघृतोपमा वा क्षौमस्य वस्त्रस्य च तुल्यवर्णा। या सोमवल्ल्याश्च समानरूपा साप्याशु तोयं कुरुतेऽक्षयं च। ताम्रैः समेता पृषतैर्विचित्रैरापाण्डुभस्मोष्ट्रखरानुरूपा। भृङ्गोपमाङ्गुष्ठिकपुष्पिका वा सूर्याग्निवर्णा च शिला वितोया। चन्द्रातपस्फटिकमौक्तिकहेमरूपा याश्चेन्द्रनीलमणिहिङ्गुलकाञ्जनाभाः। सूर्योदयांशुहरितालनिभाश्च याः स्युस्ताः शोभना मुनिवचोऽत्र च वृत्तमेतत्। एता ह्यभेद्याश्च शिलाः शिवाश्च यक्षैश्च नागैश्च सदाभिजुष्टाः। येषां च राष्ट्रेषु भवन्ति राज्ञां तेषामवृष्टिर्न भवेत्कदाचित्। भेदं यदा नैति शिला तदानीं पालाशकाष्ठैः सह तिन्दुकानाम्। प्रज्वालयित्वानलमग्निवर्णा सुधाम्बुसिक्ता प्रविदारमेति। तोयं शृतं मोक्षकभस्मना वा यत्सप्तकृत्वः परिषेचनं तत्। कार्यं शरक्षारयुतं शिलायाः प्रस्फोटनं वह्निवितापितायाः। तक्रकाञ्जिकसुराः सकुलत्था योजितानि बदराणि च तस्मिन्। सप्तरात्रमुषितान्यभितप्तां दारयन्ति हि शिलां परिषेकैः। नैम्बं पत्रं त्वक् च नालं तिलानां सापामार्गं तिन्दुकं स्याद्गुडूची। गोमूत्रेण स्रावितः क्षार एषां षट्कृत्वोऽतस्तापितो भिद्यतेऽश्मा। आर्कं पयो हुडुविषाणमषीसमेतं पारावताखुशकृता च युतं प्रलेपः। टङ्कस्य तैलमथितस्य ततोऽस्य पानं पश्चाच्छितस्य न शिलासु भवेद्विघातः। क्षारे कदल्या मथितेन युक्ते दिनोषिते पायितमायसं यत्। सम्यक् शितं चाश्मनि नैति भङ्गं न चान्यलोहेष्वपि तस्य कौण्ठ्यम्। पाली प्रागपरायताम्बु सुचिरं धत्ते न याम्योत्तरा कल्लोलैरवदारमेति मरुता सा प्रायशः प्रेरितैः। तां चेदिच्छति सारदारुभिरपां सम्पातमावारयेत् पाषाणादिभिरेव वा प्रतिचयं क्षुण्णं द्विपाश्वादिभिः। ककुभवटाम्रप्लक्षकदम्बैः सनिचुलजम्बूवेतसनीपैः। कुरवकतालाशोकमधूकैर्बकुलविमिश्रैश्चावृततीराम्। द्वारं च नैर्वाहिकमेकदेशे कार्यं शिलासञ्चितवारिमार्गम्। कोशस्थितं निर्विवरं कपाटं कृत्वा ततः पांशुभिरावपेत्तम्। अञ्जनमुस्तोशीरैः सराजकोशातकामलकचूर्णैः। कतकफलसमायुक्तैर्योगः कूपे प्रदातव्यः। कलुषं कटुकं लवणं विरसं सलिलं यदि वाशुभगन्धि भवेत्। तदनेन भवत्यमलं सुरसं सुसुगन्धि गुणैरपरैश्च युतम्। हस्तो मघानुराधापुष्यधनिष्ठोत्तराणि रोहिण्यः। शतभिषगित्यारम्भे कूपानां शस्यते भगणः। कृत्वा वरुणस्य बलिं वटवेतसकीलकं सिरास्थाने। कुसुमैर्गन्धैर्धूपैः संपूज्य निधापयेत् प्रथमम्। मेघोद्भवं प्रथममेव मया प्रदिष्टं ज्येष्ठामतीत्य बलदेवमतादि दृष्ट्वा। भौमं दगा(का)र्गलमिदं कथितं द्वितीयं सम्यग्वराहमिहिरेण मुनिप्रसादात्"।

दग्ध त्रि॰ दह–क्त। कृतदाहे भस्मीकृते "दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः" सा॰ द॰। "सर्वं स्याद् दग्धमामिषम्" कर्मलोचनम्। देहस्याग्निदाहभेदाः सुश्रुते उक्ता यथा

"अत ऊर्द्ध्वमितरथा दग्धलक्षणं वक्ष्यामः। तत्र स्निग्धं रूक्षं वा श्रित्य द्रव्यमग्निर्दहति। अग्निसन्तप्तो हि स्नेहः सूक्ष्मसिरानुसारित्वात्त्वगादीननुप्रविश्याशु दहति। तस्मात् स्नेहदग्धेऽधिका रुजो भवन्ति। तत्र प्लुष्टं दुर्दग्धं सम्यग्दग्धमतिदग्धञ्चेति चतुर्विधमग्निदग्धम्। तत्र यद्विवर्णं प्लुष्यतेऽतिमात्रं तत्प्लुष्टम्। यत्रोत्तिष्ठन्ति स्फोटास्तीव्राश्चोषदाहरागपाकवेदनाश्चिराच्चोपशाम्यन्ति तद्दुर्दग्धम्। सम्यग्दग्धमनवगाढं तालफलवर्णं सुसंस्थितं पूर्वलक्षणयुक्तञ्च। अतिदग्धे मांसावलम्बनं गात्रविश्लेषः सिरास्नायुसन्ध्यस्थिव्यापादनमतिमात्रं ज्वरदाहपिपासामूर्च्छाश्चोपद्रवा भवन्ति व्रणश्चास्य चिरेण रोहति रूढश्च विवर्णो भवति। तदेतच्चतुर्विध-

अग्निदग्धलक्षणमात्मकर्मप्रसाधकं भवति । भवति चात्र । अग्निना कोपितं रक्तं भृशं जन्तोः प्रकुप्यति । ततस्तेनैव वेगेन पित्तमस्याभ्युदीर्य्यते । तुल्यवीर्य्ये उभे ह्येते रसतो द्रव्यतस्तथा । तेनास्य वेदनास्तीव्राः प्रकृत्या च विदह्यते । स्फोटाः शीघ्रं प्रजायन्ते ज्वरस्तृष्णा च वर्द्धते” सुश्रु० ।

तिथिभेदेन युक्ते २चन्द्राश्रितराशौ पु० । “मृगसिंहौ तृतीयायां प्रथमायां तुलामृगौ । पञ्चम्यां बुधराशी द्वौ सप्तम्यां चापचन्द्रभे । नवम्यां सिंहकीटाख्यावेकादश्यां गुरोर्गृहे । वृषमीनौ त्रयोदश्यां दग्धसंज्ञास्त्वमी स्मृताः । दग्धसद्मनि यत् कर्म कृतं सर्वं विनश्यति” ज्यो० त० । ३वारभेदेन युक्ते नक्षत्रभेदे न० । “याम्यं त्वाष्ट्रं वैश्वदेवं धनिष्ठार्य्यमणं ज्येष्ठान्त्यं रवेर्दग्धभं स्यात्” ज्यो०त० । ४वारभेदयुक्ते तिथिभेदे स्त्री “एकादशी चेन्दुवारे द्वादशी चार्कवासरे । षष्ठी बृहस्पतेर्वारे तृतीया बुधवासरे । अष्टमी शुक्रवारे च नवमी शनिवासरे । पञ्चमी भौमवारे च दग्धयोगाः प्रकीर्त्तिताः” नारदः । “द्वादश्येकादशी नागगौरीस्कन्दवसुष्वपि नवम्यां दग्धयोगाख्या भानुवारादितः क्रमात्” वसिष्ठः । ५सूर्य्यचन्द्राक्रान्तराशिभेदेन युक्ते तिथिभेदे स्त्री राजमार्त्तण्डे “द्वितीया मीनधनुषोश्चतुर्थी वृषकुम्भयोः । मेषकर्कटयोः षष्ठी कन्यामिथुनकेऽष्टमी । दशमी वृश्चिके सिंहे द्वादशी मकरे तुले । आद्या धनुःषु शफरीषु परा द्वितीया एकान्तरे दिनकरे तिथयः प्रदग्धाः । कार्मुके च तथा कुम्भे मेषे युग्मे हरौ घटे । एषु शुक्ला द्वितीयाद्याः दग्धाः कृष्णा झषादिषु । राश्योश्चन्द्रस्य च रवेः स्थित्या वाच्यं फलं बुधैः । याः प्रोक्तास्तिथयो दग्धाः मेषादिषु च राशिषु । शुक्लास्ता विषमे राशौ समे कृष्णाः प्रकीर्त्तिताः । एभिर्जातो न जीवेत यदि शक्रसमो भवेत् । विवाहे विधवा नारी यात्रायां मरणं भवेत् । निष्फलं कृषिवाणिज्यं विद्यारम्भे च मूर्खता । गृहप्रवेशे भङ्गः स्याच्चूडायां मरणं ध्रुवम् । ऋणदाने फलं नास्ति व्रतदाने च निष्फले । शुभकर्माणि सर्वाणि नैव कुर्य्याद्विचक्षणः” । उत्तरराशिषु चन्द्रस्थित्या दग्धायां व्यक्तत्वं यथा “षष्ठी मेषकुलीरयोर्हिमकरे कन्यायुगे चाष्टमी सिंहे वृश्चिकराशिगे च दशमी तौलौ मृगे द्वादशी । चापे चाथ झषे द्विका यदि वृषे कुम्भे चतुर्थी यदा दग्धाख्यास्तिथयो वदन्ति मुनयस्त्याज्या सदा कर्मसु” ज्यो० त० ।

दग्धादिवस्त्राद्यंशभेदे फलभेदः मु० चि० उक्तो यथा “वस्त्राणां नवभागकेषु च चतुष्कोणेऽमरा राक्षसा मध्यत्र्यंशगता नरास्तु सदृशे पार्श्वे च मध्यांशयोः । दग्धे वा स्फुटितेऽम्बरे नवतरे पङ्कादिलिप्ते न सद्रक्षोऽंशे, नृसुरांशयोः शुभमसत् सर्वांशके प्रान्ततः” तदुक्तं श्रीपतिना “कर्दमकज्जलगोमयलिप्ते वाससि दग्धवति स्फुटिते वा । चिन्त्यमिदं नवधाभिहितेऽस्मिन्निष्टमनिष्टफलञ्च सुधीभिः । निवसन्त्यमरा हि वस्त्रकोणे मनुजाः पार्श्वदशान्तमध्ययोश्च । अपरेऽपि च रक्षसां त्रयोऽंशे शयने चासनपादुकासु चैवम् । भोगप्राप्तिर्देवतांशे, नरांशे पुत्राप्तिः, स्याद्राक्षसांशे च मृत्युः । प्रान्ते सर्वांशेष्वनिष्टं तथा स्यात् प्लुष्टे वस्त्रे नूतने साध्वसाधु” । ६सूर्य्याधिष्ठितदिशि स्त्री । ७दग्धरुहायां वृक्षे च स्त्री टसंतप्ते त्रि० । [स्त्रियां जातित्वात् ङीष् ।

**दग्धकाक** पुंस्त्री० दग्ध इव काकः । द्रोणकाके हेमच० ।

**दग्धमन्त्र** पु० नित्यकर्म्म० । “वह्निवायुसमायुक्तो यस्य मन्त्रस्य मूर्द्धनि । सप्तधा दृश्यते तन्तु दग्धमन्त्रं प्रचक्षते” तन्त्रसारोक्ते मन्त्रभेदे । [२८४६ पृ० तद्वचदाहकथा दृश्या ।

**दग्धरथ** पु० दग्धो रथोऽस्य । चित्ररथगन्धर्वे चित्ररथशब्दे

**दग्धरुह** पु० दग्धोऽपि रोहति रुह-क । १तिलकवृक्षे, २भस्मरोहायाञ्च स्त्री राजनि० ।

**दग्धिका** स्त्री कुत्सिता दग्धा कुत्सिते कन् । (पोड़ाभात) १दग्धान्ने भरतः । दग्ध+स्वार्थे क । अतइत्त्वम् । २दग्धरुहावृक्षे राजनि० ।

**दग्धेष्टका** स्त्री कर्म्म० । झामके (झामा) हारा० ।

**दघ** त्यागे पालने च भ्वा० पर० सक० सेट् इदित् । दङ्घति अदङ्घीत् । ददङ्घ ।

**दघ** घातने स्वा० पर० सक० सेट् । दघ्नोति अदाघीत्-अदघीत् । ददाघ देघतुः । गतौ दिवा०निघण्टुः । दघ्यति इति भेदः । “पश्चा स दघ्या यो अघस्य” ऋ० १।१२३।५। “दघ्याः गच्छतु पुरुषव्यत्ययः” भा० । “पश्चाद्दघ्य-रथ्यो विभागे” ऋ० ७।५६।२१ ।

**दण्ड** दण्डपातने दमने च अद०चुरा०उभ०सक०सेट् । दण्डयति ते अददण्डत्-त । दण्डः दण्ड्यः दण्डनीयः दण्डितः । यथाक्रमपूर्वकशासने द्विक० । “प्रजाः शतं दण्डयति राजा । दुहा० गौणे कर्म्मणि लकारादयः । गर्गाः शतं दण्ड्यन्ते । दण्डशब्दे उदा० “अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन्” मनुः ।

दण्ड पुंन० दण्ड—अच् कर्म्मणि पुंसि घ वा दमेर्ड्डो वा। १लगुड़े (लाठि) ख्याते पदार्थे २विप्रदण्डोद्यमे „क्रोध मतिक्रम्य निपातने। “परस्य दण्डं नोद्यच्छेत् क्रुद्धो नैव निपातयेत्” मनुः। दण्डधारणगुणाः “स्खलतः संप्रतिष्ठानं शत्रूणाञ्च निषेधनम्। अवष्टम्भनमायुष्यं भयघ्नं दण्डधारणम्” वैद्यकम्।

भिन्दिपालाद्यङ्गदण्डलक्षणं हेमा० प० लक्षणसमुच्चयोक्तं भिन्दिपालशब्दे वक्ष्यते तदनुसारेणान्योऽपि दण्डो विधेयः। छत्राङ्गदण्डस्तु “समवृत्तदण्डयुक्तम्” वृ० सं० ७३ अ० उक्तः। चामराङ्गदण्डस्तु तत्रैव ७२अ० उक्तो यथा “अध्यर्द्धहस्तप्रमितोऽस्य दण्डो हस्तोऽथ वा रत्निसमोऽथवान्यः। काष्ठाच्छुभात् काञ्चनरूप्यगुप्ताद् रत्नैर्विचित्रैश्च हिताय राज्ञाम्”।

ब्रह्मचारिधार्य्ये काष्ठमये लगुड़ाकारे ३पदार्थे, वर्णभेदेन तत्प्रमाणादि मनूक्तं यथा “ब्राह्मणो वैल्वपालाशौ क्षत्रियो वाटखादिरौ। पैलवौदुम्बरौ वैश्यो दण्डानर्हन्ति धर्मतः। केशान्तिको ब्राह्मणस्य दण्डः कार्य्यः प्रमाणतः। ललाटसम्मितो राज्ञः स्यात्तु नासान्तिको विशः। ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्शनाः। अनुद्वेगकरा नृणां सत्वचो नाग्निदूषिताः। प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम्। प्रदक्षिणं परीत्याग्निं चरेद्भैक्षं यथाविधि”।

संन्यासिनां दण्डधारणे विशेषादि नि० सि० उक्तो यथा “हारीतः “कुटीचको बहूदको हंसश्चैव तृतीयकः। चतुर्थः परमो हंसो यो यः पश्चात् स उत्तमः”। आद्यः पुत्रादिना कुटिं कारयित्वा तत्र गृहे वा वसन् काषायवासाः शिखोपवीतत्रिदण्डवान् बन्धुषु स्वगृहे वा भुञ्जान आत्मज्ञो भवेत् एतदल्पन्यासक्तपरम् द्वितीयस्तु बन्धून् हित्वा सप्तागाराणि भैक्षं चरन् पूर्वोक्तवेषः स्यात्। हंसस्तु पूर्वोक्तवेषोऽप्येकदण्डः “एकन्तु वैणवं दण्डं धारयेन्नित्यमादरादिति” स्कान्दात् विष्णुरपि “यज्ञोपवीतं दण्डं च वस्त्रं जन्तुनिवारणम्। तावान् परिग्रहः प्रोक्तो नान्यो हंसपरिग्रहः”। चतुर्थोऽपि स्कान्दे “परहंसस्त्रिदण्डं च रज्जुं गोवालनिर्मिताम्। शिखां यज्ञोपवीतं च नित्यं कर्म परित्यजेत्। अयमप्येकदण्डः एव। ये तु शिखोपवीतादित्यागनिषेधास्ते कुटीचकादिपराः। यत्तु मेधातिथिः “यावच्च सुस्थयो दण्डास्तावदेकेन वर्त्तयेदिति” तदपि तत्परमेव। यच्चात्रिः “चतुर्था भिक्षवः प्रोक्ताः सर्वे चैव त्रिदण्डिनः” इति तद्वाग्दण्डादिपरं न यष्टिपरम् “वाग्दण्डोऽथ मनोदण्डः कायदण्डस्तथैव च। यस्यैते नियता दण्डाः स त्रिदण्डीति चोच्यते” मनूक्तेः। तस्मात् परमहंसस्यैकदण्ड एव। सोऽप्यविदुषः विदुषस्तु सोऽपि नास्ति “न दण्डं न शिखां नाच्छादनं न भैक्षं चरति परमहंस” इति महोपनिषदुक्तेः “ज्ञानमेवास्य दण्ड” इति वाक्यशेषाच्च यत्तु यमः “काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः। स याति नरकान् घोरान् महारौरवसंज्ञकानिति” तद्वैराग्यं विना जीवनाद्यर्थकृतसन्यासपरम् “एकदण्डं समाश्रित्य जीवन्ति बहवो नराः। नरके रौरवे घोरे कर्मत्यागात् पतन्ति ते” इति स्मृतेः यच्चाश्वमेधिके “एकदण्डी त्रिदण्डी वा शिखामुण्डित एव वा। काषायमात्रसारोऽपि यतिः पूज्यो युधिष्ठिरेति” तस्यापि पूर्वोक्तव्यवस्था ज्ञेया”।

भावे अच्। ३दमने “वाग्दण्डश्च मनोदण्डः कायदण्डस्तथैव च” मनुः। “शरणागतसंत्राणं भूतानामप्यहिंसनम्। बहिर्वेदि च दानञ्च दण्डमित्यभिधीयते” भा० मोक्षधर्मोक्ते ४शरणागतत्राणादित्रिके। दण्ड इवाचरति दण्ड+क्विप् ततो भावे घञ्। ५दण्डतुल्यस्थितौ (दाँड़ान) सारसुन्दरी दण्ड—यथायथं कर्मभावकरणादौ अच्। ६प्रकाण्डे ७अश्वे ८कोणे ९मन्थने १०सैन्ये ११भूमिमानभेदे (काठा) “हस्तैश्चतुर्भिर्भवतीह दण्डः” लीला०। गोचर्म्मशब्दे २६८५पृ० दृश्यम् “दशहस्तेन दण्डेन” इति पाठान्तरम्। १२सूर्य्यपारिषद्भेदे १३यमे १४अभिमाने च मेदि०। १५दण्डाकारे ग्रहभेदे हेमच०ग्रहशृङ्गाटकशब्दे २७६८ पृ० दृश्यम्। १६इक्ष्वाकुवंश्यपुत्रभेदे। तत्कथा जनस्थानशब्दे ३०२४पृ० दृश्या। स्वार्थे क। तत्रार्थे। “धृष्णुकश्चाम्बरीषश्च दण्डकश्चेति ते त्रयः। यश्चकार महात्मा वै दण्डकारण्यमुत्तमम्” हरिवं०१०अ०।

षष्टिपलात्मके दिनषष्टिभागरूपे घटिकापरपर्य्याये १७कालभेदे तज्ज्ञानोपायश्च घटीयन्त्रशब्दे उक्तप्रायः। श्रीपतिनाप्युक्तो यथा

“शुल्वस्य दिग्भिर्विहितं पलैर्यत् षडङ्गुलोच्चं द्विगुणायतास्यम्। तदम्भसा षष्टिपलैः प्रपूर्यं पात्रं घटार्द्धप्रतिमं घटी स्यात्। सत्र्यंशमाषत्रयनिर्मिता या हेम्नः शलाका चतुरङ्गुला स्यात्। विद्धं तया प्राक्तनमत्र पात्रं प्रपूर्य्यते नाडिकयाम्बुना तत्” “षष्टिदण्डात्मिका-

याश्च तिर्य्यङ्निष्क्रमणं परे"। "दण्डैकरञ्जनीयोगः" ति॰त॰। १८व्यूहभेदे तल्लक्षणभेदादि अग्निपु॰२४१ अ॰ यथा

"मण्डलासंहतौ भोगो दण्डाख्ये बहुधा शृणु। तिर्य्यग्वृत्तिस्तु दण्डः स्यात् भोगोऽन्या वृत्तिरेव च। मण्डलः सर्वतो वृत्तिः पृथग्वृत्तिरसंहतः। प्रदरो दृढकोऽसह्यः चापो वैकुक्षिरेव च। प्रतिष्ठः सुप्रतिष्ठश्च श्येनो विजयसञ्जयौ। विशालो विजयः सूची स्थूणाकर्णचमूमुखौ। सर्पास्यो वलयश्चैव दण्डभेदाश्च दुर्जयाः। अतिक्रान्तः प्रतिक्रान्तः कक्षाभ्याञ्चैकपक्षतः। अतिक्रान्तस्तु पक्षाभ्यां त्रयोऽन्ये तद्विपर्य्यये। पक्षोरस्यैरतिक्रान्तः प्रतिष्ठोऽन्यो विपर्य्ययः। स्थूणापक्षो धनुःपक्षो द्विस्थूणो दण्ड ऊर्द्धगः। द्विगुणोऽयन्त्वतिक्रान्तपक्षोऽन्यस्य विपर्य्ययः। द्विचतुर्दण्ड इत्येते ज्ञेया लक्षणतः क्रमात्। गोमूत्रिका हि सञ्चारी शकटो मकरस्तथा"

१९राजाद्युपायभेदे चतुर्थोपाये। ते चोपायाः सामदानभेददण्डाः सर्वत्र प्रसिद्धाः तु अग्निपु॰ २४० अ॰। अन्येऽप्युपायाः सामादिप्रयोगविषयाश्चोक्ता यथा

"साम दानं च भेदश्च दण्डोपेक्षेन्द्रजालकम्। मायोपायाः सप्त परे निक्षिपेत् साधनाय तान्। चतुर्विधं स्मृतं साम उपकारानुकीर्त्तनात्। मिथः सम्बन्धकथनं मृदुपूर्वं च भाषणम्। आयाते दर्शनं वाचा तवाहमिति चार्पणम्। यः सम्प्राप्तधनोत्सर्ग उत्तमाधममध्यमः। प्रतिदानं तदा तस्य गृहीतस्यानुमोदनम्। द्रव्यदानमपूर्वं च स्वयंग्राहप्रवर्त्तनम्। देयस्य प्रतिमोक्षश्च दानं पञ्चविधं स्मृतम्। स्नेहरागापनयनं संहर्षोत्पादनं तथा। मिथो भेदश्च भेदज्ञैर्भेदश्च त्रिविधः स्मृतः। वधोऽर्थहरणं चैव परिक्लेशस्त्रिधा दमः। प्रकाशश्चाप्रकाशश्च लोकद्विष्टान् प्रकाशतः"। "दण्डस्य दर्शनाद्दुष्टान्,पुत्रश्चालादि, सामतः। दानभेदैश्च मुख्यान् योधान् जनपदादिकान्। सामन्ताटविकान् भेददण्डाभ्यामपराद्धकान्। देवताप्रतिमानान्तु पूजयान्तर्गतैर्नरैः। पुमान् स्त्रीवस्त्रसंवीतो निशि चाद्भुतदर्शनः। वेतालोल्कापिशाचानां शिवानां च स्वरूपिता। कामतो रूपधारित्वं शस्त्राग्न्यश्माम्बुवर्षणम्। तमोऽनिलोऽनलो मेघ इति माया ह्यमानुषी। जघान कीचकं भीम आस्थितः स्त्रीस्वरूपताम्। अन्याये व्यसने युद्धे प्रवृत्तस्यानिवारणम्। उपेक्षेयं स्मृता भ्रातोपेक्षितश्च हिडिम्बया। मेघान्धकारवृष्ट्यग्निपर्वताद्भुतदर्शनम्। दूरस्थानां च सैन्यानां दर्शनं ध्वजशालिनाम्। छिन्नपाटितभिन्नानां संसृतानां च दर्शनम्। इतीन्द्रजालं द्विषतां भीत्यर्थमुपकल्पयेत्"। २०विष्णौ पु॰ "धनुर्द्धरो धनुर्वेदो दण्डो दमयिता दमः" विष्णु सं॰। २१शिवे "शत्रुन्दमाय दण्डाय पर्णचीरपटाय च" भा॰ शा॰ २८६ अ॰। २२दण्डाकारे रुजौ सूर्य्यपरिवेषभेदे "परिघिस्तु प्रतिसूर्य्योर्दण्डस्त्वृजुरिन्द्रचापनिभः" वृ॰ स॰ १८ अ॰। २३दण्डवत्स्थिते रविकरादेः संघाते "रविकिरणजलदमरुतां सङ्घातो दण्डवत्स्थितो दण्डः। स विदिक्स्थितो नृपाणामशुभो दिक्षु द्विजातीनाम्। शस्त्रभयातङ्ककरो दृष्टः प्राङ्मध्यसन्धिषु दिनस्य। शुक्लाद्यो विप्रादीन् यदभिमुखस्तां निहन्ति दिशम्" ३० अ॰।

२४राज्ञः प्रजाशासनभेदे तत्स्वरूपादि भा॰शा॰१२१ अ॰

"शृणु कौरव्य! यो दण्डो व्यवहारो यथा च सः। यस्मिन् हि सर्वमायत्तं स दण्ड इह केवलः। धर्मसंस्था महाराज! व्यवहार इतीर्य्यते। तस्य लोपः कथं न स्याल्लोकेष्ववहितात्मनः। इत्येवं व्यवहारस्य व्यवहारत्वमिष्यते। अपि चैतत् पुरा राजन्! मनुना प्रोक्तमादितः। सुप्रणीतेन दण्डेन प्रियाप्रियसमात्मना। प्रजा रक्षति यः सम्यक् धर्म्म एव स केवलः। यथोक्तमेतद्वचनं प्रागेव मनुना पुरा। यन्मयोक्तं मनुष्येन्द्र! ब्रह्मणो वचनं महत्। प्रागिदं वचनं प्रोक्तमतः प्राग्वचनं विदुः। व्यवहारस्य चाख्यानाद्व्यवहार इहोच्यते। दण्डे त्रिवर्गः सततं सुप्रणीते प्रवर्त्तते। दैवं हि परमो दण्डो रूपतोऽग्निरिवोत्थितः। नीलोत्पलदलश्यामश्चतुर्दंष्ट्रश्चतुर्भुजः। अष्टपान्नैकनयनः शङ्कुकर्णोर्द्ध्वरोमवान्। जटी द्विजिह्वस्ताम्रास्यो मृगराजतनुच्छदः। एतद्रूपं बिभर्त्युग्रं दण्डो नित्यं दुराधरः। असिर्धनुर्गदा शक्तिस्त्रिशूलं मुद्गरः शरः। मुषलं परशुश्चक्रं पाशो दण्डर्ष्टितोमराः। सर्वप्रहरणीयानि सन्ति यानीह कानिचित्। दण्ड एव स सर्वात्मा लोके चरति मूर्त्तिमान्। भिन्दन् छिन्दन् रुजन् कृन्तन् दारयन् पाटयंस्तथा। घातयन्नभिधावंश्च दण्ड एव चरत्युत। असिर्विशसनो धर्मस्तीक्ष्णवर्त्मा दुराधरः। श्रीगर्भो विजयः शास्ता व्यवहारः सनातनः। शास्त्रं ब्राह्मणमन्त्राश्च शास्ता प्राग्वदतां वर!। धर्मपालोऽक्षरो देवः सत्यगो नित्यगोऽग्रजः। असङ्गो रुद्रतनयो मनुर्ज्येष्ठः शिवङ्करः। नामान्येतानि दण्डस्य कीर्त्तितानि

युधिष्ठिर ! । दण्डो हि भगवान् विष्णुर्दण्डो नारायणः प्रभुः । शश्वद्रूपं महद्बिभ्रन्महापुरुष उच्यते । तथोक्ता ब्रह्मकन्येति लक्ष्मीर्वृत्तिः सरस्वती । दण्डनीतिर्जगद्धात्री दण्डो हि बहुविग्रहः । अर्थानर्थौ सुखं दुःखं धर्माधर्मौ बलाबले । दौर्भाग्यं भागधेयञ्च पुण्यापुण्ये गुणागुणौ । कामाकामावृतुर्मासः शर्वरी दिवसः क्षणः । अप्रमादः प्रमादश्च हर्षक्रोधौ शमोदमः । दैवं पुरुषकारश्च मोक्षामोक्षौ भयाभये । हिंसाहिंसे तपो यज्ञः संयमोऽथ विषाविषम् । अन्तश्चादिश्च मध्यञ्च कृत्यानाञ्च प्रपञ्चनम् । मदः प्रमादो दर्पश्च दम्भो धैर्यं नयानयौ । अशक्तिः शक्तिरित्येवं मानस्तम्भौ व्ययाव्ययौ । विनयश्च विसर्गश्च कालाकालौ च भारत ! । अनृतं ज्ञानिता सत्यं श्रद्धाश्रद्धे तथैव च । क्लीवता व्यवसायश्च लाभालाभौ जयाजयौ । तीक्ष्णता मृदुता मृत्युरागमानागमौ तथा । विरोधश्चाविरोधश्च कार्याकार्ये बलाबले । असूया चानसूया च धर्माधर्मौ तथैव च । अपत्रपानपत्रपे ह्रीश्च सम्पद्विपत्पदम् । तेजः कर्माणि पाण्डित्यं वाक्शक्तिस्तत्त्वबुद्धिता । एवं दण्डस्य कौरव्य ! लोकेऽस्मिन् बहुरूपता । न स्यादादीह दण्डो वै प्रमथेयुः परस्परम् । भयाद्दण्डस्य नान्योन्यं घ्नन्ति चैव युधिष्ठिर ! । दण्डेन रक्ष्यमाणा हि राजन्नहरहः प्रजाः । राजानं वर्द्धयन्तीह तस्माद्दण्डः परायणम् । व्यवस्थापयति क्षिप्रमिमं लोकं नरेश्वर ! । सत्ये व्यवस्थितो धर्मो ब्राह्मणेष्ववतिष्ठते । धर्मयुक्ता द्विजश्रेष्ठा वेदयुक्ता भवन्ति च । बभूव यज्ञो वेदेभ्यो यज्ञः प्रीणाति देवताः । प्रीताश्च देवता नित्यमिन्द्रे परिवदन्त्यपि । अन्नं ददाति शक्रश्चाप्यनुगृह्णन्निमाः प्रजाः । प्राणाश्च सर्वभूतानां नित्यमन्ने प्रतिष्ठिताः । तस्मात् प्रजाः प्रतिष्ठन्ते दण्डो जागर्त्ति तासु च । एवंप्रयोजनश्चैव दण्डः क्षत्रियतां गतः । रक्षन् प्रजाः स जागर्त्ति नित्यं सुव्यहितोऽक्षरः । ईश्वरः पुरुषः प्राणः सत्त्वं चित्तं प्रजापतिः । भूतात्मा जीव इत्येवं नामभिः प्रोच्यतेऽष्टभिः । अददद्दण्डमेवास्मै प्रभुरैश्वर्य्यमेव च । बलेन यस्य संयुक्तः सदा पञ्चविधात्मकः । कुलं बहुधनामात्याः प्राज्ञाः प्रोक्ता बलानि तु । आहार्य्यमष्टकैर्द्रव्यैर्बलमन्यद्युधिष्ठिर ! । हस्तिनोऽश्वा रथाः पत्तिर्नावो विष्टिस्तथैव च । दैशिकाश्चाविकाश्चैव तदष्टाङ्गं बलं स्मृतम् । अथ वाङ्गस्य युक्तस्य रथिनो हस्तियायिनः । अश्वारोहाः पदाताश्च मन्त्रिणो रसदाश्च ये । भिक्षुकाः प्राड्विवाकाश्च मौहूर्त्ता दैवचिन्तकाः । कोषो मित्राणि धान्यञ्च सर्वोपकरणानि च । सप्तप्रकृति चाष्टाङ्गं शरीरमिह यद्विदुः । राज्यस्य दण्डमेवाङ्गं दण्डः प्रभव एव च । ईश्वरेण प्रयत्नेन कारणात् क्षत्रियस्य च । दण्डो दत्तः समानात्मा दण्डो हीदं सनातनम् । राज्ञां पूज्यतमो नान्यो यथा धर्मः प्रदर्शितः । ब्रह्मणा लोकरक्षार्थं स्वधर्मस्थापनाय च । भर्त्तृप्रत्यय उत्पन्नो व्यवहारस्तथाऽपरः । तस्माद्यः सहितो दृष्टो भर्त्तृप्रत्ययलक्षणः । व्यवहारस्तु वेदात्मा वेदप्रत्यय उच्यते । मौलश्च नरशार्दूल ! शास्त्रोक्तश्च तथाऽपरः । उक्तो यश्चापि दण्डोऽसौ भर्त्तृप्रत्ययलक्षणः । ज्ञेयो नः स नरेन्द्रस्थो दण्डप्रत्ययलक्षणः । दण्डप्रत्ययदृष्टोऽपि व्यवहारात्मकः स्मृतः । व्यवहारः स्मृतो यश्च स वेदविषयात्मकः । यश्च वेदप्रसूतात्मा स धर्मो गुणदर्शनः । धर्मप्रत्यय उद्दिष्टो यथाधर्मं कृतात्मभिः । व्यवहारः प्रजागोप्ता ब्रह्मदिष्टो युधिष्ठिर ! । त्रीन् धारयति लोकान् वै सत्यात्मा भूतिवर्द्धनः । यश्च दण्डः स दृष्टो नो व्यवहारः सनातनः । व्यवहारश्च दृष्टो यः स वेद इति निश्चितम् । यश्च वेदः स वै धर्मो यश्च धर्मः स सत्पथः । ब्रह्मा पितामहः पूर्वं बभूवाथ प्रजापतिः । लोकानां स हि सर्वेषां ससुरासुररक्षसाम् । समनुष्योरगवतां कर्त्ता चैव स भूतकृत् । ततोऽन्यव्यवहारोऽयं भर्त्तृप्रत्ययलक्षणः । तस्मादिदमथोवाच व्यवहारनिदर्शनम् । माता पिता च भ्राता च भार्य्या चैव पुरोहितः । नादण्ड्यो विद्यते राज्ञो यः स धर्मेण तिष्ठति ।” तत्रैव १५ अ० ।

“दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति । दण्डः सुप्तेषु जागर्त्ति दण्डं धर्मं विदुर्बुधाः । धर्मं संरक्षते दण्डस्तथैवार्थं जनाधिप ! । कामं संरक्षते दण्डस्त्रिवर्गो दण्ड उच्यते । दण्डेन रक्ष्यते धान्यं धनं दण्डेन रक्ष्यते । एवंविद्वन्नुपादत्स्व भावं पश्यस्व लौकिकम् । राजदण्डभयादेके पापाः पापं न कुर्वते । यमदण्डभयादेके परलोकभयादपि । परस्परभयादेके पापाः पापं न कुर्वते । एवं सांसिद्धिके लोके सर्वं दण्डे प्रतिष्ठितम् । दण्डस्यैव भयादेके न खादन्ति परस्परम् । अन्धे तमसि मज्जेयुर्यदि दण्डो न पालयेत् । यस्माददान्तान्दमयत्यशिष्टान्दण्डयत्यपि । दम-

नाद्दण्डनाच्चैव तस्माद्दण्डं विदुर्बुधाः। वाचा दण्डो ब्राह्मणानां क्षत्रियाणां भुजार्पणम्। दानदण्डाः स्मृता वैश्या निर्दण्डः शूद्र उच्यते। असंमोहाय मर्त्यानामर्थसंरक्षणाय च। मर्य्यादा स्थापिता लोके दण्डसंज्ञा विशाम्पते!। यत्र श्यामो लोहिताक्षो दण्डश्चरति सूद्यतः। प्रजास्तत्र न मुह्यन्ते नेता चेत् साधु पश्यति। ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः। दण्डस्यैव भयादेते मनुष्या वर्त्मनि स्थिताः। नाभीतो यजते राजन्! नाभीतो दातुमिच्छति। नाभीतः पुरुषः कश्चित्समये स्थातुमिच्छति। नाच्छित्त्वा परमर्माणि नाकृत्वा कर्म दुष्करम्। नाहत्वा मत्स्यघातीव प्राप्नोति महतीं श्रियम्। नाघ्नतः कीर्त्तिरस्तीह न वित्तं न पुनः प्रजाः। इन्द्रो वृत्रवधेनैव महेन्द्रः समपद्यत। य एव देवा हन्तारस्तान् लोकोऽर्चयते भृशम्। हन्ता रुद्रस्तथा स्कन्दः शक्रोऽग्निर्वरुणो यमः। हन्ता कालस्तथा मृत्युर्वायुर्वैश्रवणो रविः। वसवो मरुतः साध्या विश्वे देवाश्च भारत!। एतान्देवान्नमस्यन्ति प्रतापप्रणता जनाः। न ब्रह्माणं न धातारं न पूषाणं कथञ्चन। मध्यस्थान् सर्वभूतेषु दान्तान् शमपरायणान्। यजन्ते मानवाः केचित् प्रशान्ताः सर्वकर्मसु। न हि पश्यामि जीवन्तं लोके कञ्चिदहिंसया। सत्त्वैः सत्त्वा हि जीवन्ति दुर्बलैर्बलवत्तराः। नकुलो मूषिकानत्ति विड़ालो नकुलं तथा। विड़ालमत्ति श्वा राजन् श्वानं व्यालमृगस्तथा। तानत्ति पुरुषः सर्वान् पश्य कालो यथागतः। प्राणस्यान्नमिदं सर्वं जङ्गमं स्थावरञ्च यत्। विधानं दैवविहितं तत्र विद्वान्न मुह्यति। यथा सृष्टोऽसि राजेन्द्र! तथा भवितुमर्हसि। विनीतक्रोधहर्षा हि मन्दा वनमुपाश्रिताः। विना वधं न कुर्वन्ति तापसाः प्राणयापनम्। उदके बहवः प्राणाः पृथिव्यां च फलेषु च। न च कश्चिन्न तान् हन्ति किमन्यत् प्राणयापनात्। सूक्ष्मयोनीनि भूतानि तर्कागम्यानि कानिचित्। पक्ष्मणोऽपि निपातेन येषां स्यात् स्कन्धपर्य्ययः। ग्रामान्निष्क्रम्य मुनयो विगतक्रोधमत्सराः। वने कुटुम्बधर्माणो दृश्यन्ते परिमोहिताः। भूमिं भित्त्वौषधीश्छित्त्वा वृक्षादीनण्डजान् पशून्। मनुष्यास्तन्वते यज्ञांस्ते स्वर्गं प्राप्नुवन्ति च। दण्डनीत्यां प्रणीतायां सर्वे सिध्यन्त्युपक्रमाः। कौन्तेय! सर्वभूतानां तत्र मे नास्ति संशयः। दण्डश्चेन्न भवेल्लोके विनश्येयुरिमाः प्रजाः। शूले मत्स्यानिवापक्ष्यन् दुर्बलान् बलवत्तराः। सत्यं चेदं ब्रह्मणा पूर्वमुक्तं दण्डः प्रजा रक्षति साधुनीतः। पश्याग्नयश्च प्रतिशाम्य भीताः सन्तर्ज्जिता दण्डभयाज्ज्वलन्ति। अन्धन्तम इवेदं स्यान्न प्राज्ञायेत किञ्चन। दण्डश्चेन्न भवेल्लोके विभजन् साध्वसाधुनी। येऽपि सम्भिन्नमर्य्यादा नास्तिका वेदनिन्दकाः। तेऽपि भोगाय कल्पन्ते दण्डेनाशु निपीड़िताः। सर्वो दण्डजितो लोके दुर्लभो हि शुचिर्जनः। दण्डस्य हि भयाद्भीतो भोगायैव प्रवर्त्तते। चातुर्वर्ण्यप्रमोदाय सुनीतिनयनाय च। दण्डो विधात्रा विहितो धर्मार्थावभिरक्षितुम्। यदि दण्डान्न बिभ्येयुर्वयांसि श्वापदानि च। अद्युः पशून्मनुष्यांश्च यज्ञार्थानि हवींषि च। न ब्रह्म चाप्यधीयीत कल्याणी न दुहेत गाम्। न कन्योद्वहनं गच्छेद्यदि दण्डो न पालयेत्। विश्वलोपः प्रवर्त्तेत भिद्येरन् सर्वसेतवः। ममत्वं न प्रजानीयुर्यदि दण्डो न पालयेत्। न संवत्सरसत्राणि तिष्ठेयुरकुतोभयाः। विधिवद्दक्षिणावन्ति यदि दण्डो न पालयेत्। चरेयुर्नाश्रमे धर्मं यथोक्तं विधिमाश्रिताः। न विद्यां प्राप्नुयात् कश्चित् यदि दण्डो न पालयेत्। न चोष्ट्रा न बलीवर्दा नाश्वाश्वतरगर्दभाः। युक्ता वहेयुर्यानानि यदि दण्डं न पालयेत्। न प्रेष्या वचनं कुर्य्युर्न बाला जातु कर्हिचित्। तिष्ठेत्पितृमतो धर्म्मे यदि दण्डो न पालयेत्। दण्डे स्थिताः प्रजाः सर्वा दण्डे सर्वं विदुर्बुधाः। दण्डे स्वर्गो मनुष्याणां लोकोऽयञ्च प्रतिष्ठितः। न तत्र कूटं पापं वा वञ्चना वाऽपि दृश्यते। यत्र दण्डः सुविहितश्चरत्यरिविनाशनः। हविः श्वाऽपि लिहेद्दृष्ट्वा दण्डश्चेदोद्यतो भवेत्। हरेत्काकः पुरोडाशं यदि दण्डो न पालयेत्।"

मनुनाप्युक्तं यथा "दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति। दण्डः सुप्तेषु जागर्त्ति दण्डं धर्मं विदुर्बुधाः। समीक्ष्य स धृतः सम्यक् सर्वा रञ्जयति प्रजाः। असमीक्ष्य प्रणीतस्तु विनाशयति सर्वतः। यदि न प्रणयेद्राजा दण्डं दण्ड्येष्वतन्द्रितः। शूले मत्स्यानिवापक्ष्यन् दुर्बलान् बलवत्तराः। अद्यात् काकः पुरोडाशं श्वाऽवलिह्याद्धविस्तथा। स्वाम्यञ्च न स्यात् कस्मिंश्चित् प्रवर्त्तेताधरोत्तरम्। सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्नरः। दण्डस्य हि भयात् सर्वं जगद्भोगाय कल्पते।

देवदानवगन्धर्वा रक्षांसि पतगोरगाः। तेऽपि भोगाय कल्पन्ते दण्डेनैव निपीड़िताः। दुष्येयुः सर्ववर्णाश्च भिद्येरन् सर्व्वसेतवः। सर्व्वलोकप्रकोपश्च भवेद्दण्डस्य विभ्रमात्। यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा। प्रजास्तत्र न मुह्यन्ति नेता चेत् साधु पश्यति। तस्याहुः सम्प्रणेतारं राजानं सत्यवादिनम्। समीक्ष्यकारिणं प्राज्ञं धर्म्मकामार्थकोविदम्। तं राजा प्रणयन् सम्यक् त्रिवर्गेणाभिवर्द्धते। कामात्मा विषमः क्षुद्रो दण्डेनैव निहन्यते। दण्डो हि सुमहत्तेजो दुर्द्धरश्चाकृतात्मभिः। धर्म्माद्विचलितं हन्ति नृपमेव सबान्धवम्।" तस्य स्थानानि च मनूक्तानि

"दश स्थानानि दण्डस्य मनुः स्वायम्भुवोऽब्रवीत्। त्रिषु वर्णेषु यानि स्युरक्षतो ब्राह्मणो व्रजेत्। उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम्। चक्षुर्नासा च कर्णौ च धनं देहस्तथैव च। अनुबन्धं परिज्ञाय देशकालौ च तत्त्वतः। सारापराधौ चालोक्य दण्डं दण्ड्येषु पातयेत्। अधर्म्मदण्डनं लोके यशोघ्नं कीर्त्तिनाशनम्। अस्वर्ग्यञ्च परत्रापि तस्मात्तत् परिवर्जयेत्। अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन्। अयशो महदाप्नोति नरकञ्चैव गच्छति। वाग्दण्डं प्रथमं कुर्य्यात् धिग्दण्डं तदनन्तरम्। तृतीयं धनदण्डन्तु वधदण्डमतः परम्। वधेनापि यदा त्वेतान्निग्रहीतुं न शक्नुयात्। तदैषु सर्व्वमप्येतत् प्रयुञ्जीत चतुष्टयम्।"

तस्योत्तमाधममध्यमभेदेन परिमाणभेदा मनूक्ता यथा "पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः। मध्यमः पञ्च विज्ञेयः सहस्रन्त्वेव चोत्तमः"।

विवादभेदे तद्भेदाः स्मृत्युक्ताः क्रमशो दर्श्यन्ते।

तत्र ऋणादाने प्रतिवादिनो निह्नवे निह्नुतद्रव्यतुल्यम्। वादिना मिथ्याभियोगे अभियोगविषयधनात् द्विगुणं धनं वादिनो दमः। "निह्नवे भावितो दद्यात् धनं राज्ञे च तत्समम्। मिथ्याभियोगी द्विगुणमभियोगात् धनं हरेत्" याज्ञ०। मनुनात्र विशेष उक्तः यथा

"ऋणे देये प्रतिज्ञाते पञ्चकं शतमर्हति। अपह्नवे तद्द्विगुणं तन्मनोरनुशासनम्"।

"यः साधयन्तं छन्देन वेदयेत् धनिकं नृपे। स राज्ञा तच्चतुर्भागं दाप्यस्तस्य च तद्धनम्" मनुः।

प्रतिपन्नार्थस्य राज्ञा दापने अधमर्णस्य निह्नवाभावे दशकं शतं साधितद्रव्यस्य दशमभागो दमः। "राज्ञाऽधमर्णिको दाप्यः साधिताद्दशकं शतम्" याज्ञ०।

उपनिधिनिक्षेपादौ नाशभेदे दमभेदो याज्ञ० उक्तो यथा

"भक्षयेत् मार्गितेऽदत्ते दाप्यो दण्डं च तत्समम्" आजीवन् स्वेच्छया दण्ड्यो दाप्यस्तञ्चापि सोदयम्। याचितान्वाहितन्यासनिःक्षेपादिकेष्वयं विधिः"।

अत्र विशेषो मनुनोक्तो यथा "यो निक्षेपं नार्पयति यश्चानिक्षिप्य याचते। तावुभौ चौरवच्छास्यौ दाप्यौ वा तत्समं दमम्। निक्षेपस्यापहर्त्तारं तत्समं दापयेद्दमम्। तथोपनिधिहर्त्तारमविशेषेण पार्थिवः"।

छद्मना उत्कोचग्रहणे मनुनोक्तो यथा "उपधाभिश्च यः कश्चित् परद्रव्यं हरेन्नरः। ससहायः सहन्तव्यः प्रकाशं विविधैर्वधैः"। "करचरणशिरश्छेदादिभिर्नानाविधैः वधोपायैः स हन्यः" कुल्लू०।

कौटसाक्ष्ये मनुनोक्तो दमो यथा

"लोभान्मोहाद्भयात् मैत्रात् कामात् क्रोधात्तथैव च। अज्ञानाद्बालभावाच्च साक्ष्यं वितथमुच्यते। एषामन्यतमे स्थाने यः साक्ष्यमनृतं वदेत्। तस्य दण्डविशेषांस्तु प्रवक्ष्याम्यनुपूर्व्वशः। लोभात् सहस्रं दण्ड्यस्तु मोहात् पूर्व्वन्तु साहसम्। भयाद् द्वौ मध्यमौ दण्डौ मैत्रात् पूर्व्वं चतुर्गुणम्। कामाद्दशगुणं पूर्व्वं क्रोधात्तु त्रिगुणं परम्। अज्ञानात् द्वे शते पूर्णे बालिश्याच्छतमेव तु। एतानाहुः कौटसाक्ष्ये प्रोक्तान् दण्डान् मनीषिभिः। धर्म्मस्याव्यभिचारार्थमधर्म्मनियमाय च। कौटसाक्ष्यन्तु कुर्व्वाणान् त्रीन् वर्णान् धार्म्मिको नृपः। प्रवासयेद्दण्डयित्वा ब्राह्मणन्तु विवासयेत्"। अत्र विशेषमाह याज्ञ० "यः साक्ष्यं श्रावितोऽन्येभ्यो निह्नुते तत्तमोवृतः। स दाप्योऽष्टगुणं दण्डं ब्राह्मणन्तु विवासयेत्"।

साक्ष्यादाने दममाह याज्ञ०। "अब्रुवन् हि नरः साक्ष्यमृणं स दशबन्धकम्। राज्ञा सर्व्वं प्रदाप्यः स्यात् षट्चत्वारिंशकेऽहनि। न ददाति च यः साक्ष्यं जानन्नपि नराधमः। स कूटसाक्षिणां पापैस्तुल्यो दण्डेन चैव हि"।

नष्टस्वामिकद्रव्यविषये दमो मनुनोक्तो यथा "ममेदमिति यो ब्रूयात् सोऽनुयोज्यो यथाविधि। संवाद्य रूपसंख्यादीन् स्वामी तद्द्रव्यमर्हति। अवेदयानो नष्टस्य देशं कालञ्च तत्त्वतः। वर्णं रूपं प्रमाणञ्च तत्समं दण्डमर्हति"। "हृतं प्रनष्टं यो द्रव्यं परहस्तादवाप्नुयात्। अनि-

वेद्य न्टपे दण्ड्यः स तु षस्रवतिं पणान्" मनुः। "आगमेनोपभोगेन नष्टं भाव्यमतोऽन्यथा। पञ्चबन्धो दमस्तत्र राज्ञे तेनाविभाविते" याज्ञ०। "पञ्चबन्धः पञ्चमांशः" मिता०।

अस्वामिविक्रये मनुनोक्तो दमो यथा "अवहार्य्यो भवेच्चैव सान्वयः षट्शतं दमम्। निरन्वयोऽनपसरः प्राप्तः स्याच्चौरकिल्विषम्"। "एष परस्वविक्रयी यदि स्वामिनो भ्रात्रादिरूपत्वेन सान्वयः सम्बन्धी भवति तदा षट् पणशतानि अवहार्य्यो दमनीयः यदि पुनः स्वामिनः सम्बन्धो न भवति अनपसरश्च स्यात् अपसरत्यनेनास्मात् सकाशाद्धनमित्यपसरः प्रतिग्रहक्रयादिः स यस्य स्वामिसम्बन्धिपुत्रादेः सकाशात् नास्ति तदा चौरसम्बन्धि पापं तद्वद्दमनीय इत्यर्थः" कुल्लू० "नान्यदन्येन संसृष्टरूपं विक्रयमर्हति। न चासारं न च न्यूनं न दूरे न तिरोहितम्" मनुः। "कुङ्कुमादिद्रव्यं कुसुम्भादिना मिश्रीकृत्य न विक्रेतव्यं न चासारं सारमित्यभिधाय न च तुलादिना न्यूनं न च परोक्षावस्थितं न च रागादिनाच्छादितरूपम् अत्रास्वामिविक्रयसादृश्यादस्वामिविक्रयदम एव स्यात्" कुल्लू०।

दोषविशिष्टकन्यादाने दमो यथा। "यस्तु दोषवतीं कन्यामनाख्याय प्रयच्छति। तस्य कुर्य्यान् न्टपो दण्डं स्वयं षस्रवतिं पणान्। अकन्येति च यः कन्यां ब्रूयाद्द्वेषेण मानवः। स शतं प्राप्नुयाद्दण्डं तस्या दोषमदर्शयन्"।

दत्ताप्रदानिके नारदेनोक्तो दमो यथा "दत्त्वाप्यदेयं यो लोभाद्यश्चादेयं प्रयच्छति। अदेयदायको दण्ड्यस्तथाऽदत्तप्रतीच्छकः"। तत्समामित्यर्थः।

अभ्युपेत्याशुश्रूषायां "शिक्षयन्तमसन्दुष्टं य आचार्य्यं परित्यजेत्। बलाद्वासयितव्यः स्यात् बधबन्धौ च सोऽर्हति" नारदः। "बधोऽत्र ताड़ना दोषस्याल्पत्वात्" मिता०।

संविद्व्यतिक्रमादौ "गणद्रव्यं हरेद्यस्तु संविदं यश्च लङ्घयेत्। सर्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेत्" याज्ञ०। "अयञ्च दण्डोऽनुबन्धाद्यतिशये द्रष्टव्यः। अनुबन्धाद्यल्पत्वे तु "यो ग्रामदेशसङ्घानां कृत्वा सत्येन संविदम्। विसंवदेन्नरो लोभात्तं राष्ट्राद्विप्रवासयेत्। निगृह्य दापयेदेनं समयव्यभिचारिणम्। चतुःसुवर्णं षण्निष्कं शतमानञ्च राजतमिति" मनूक्त निर्वासनचतुःसुवर्णनिष्कशतमानानां चतुर्णामन्यतमो जातिशक्त्याद्यपेक्षया कल्पनीयः" मिता०।

वेतनादाने "भृत्यो नार्त्तो न कुर्य्याद्यो दर्पात् कर्म यथोदितम्। स दण्ड्यः कृष्णलान्यष्टौ न देयं तस्य वेतनम्" मनुः।

द्यूतसमाह्वये "राज्ञा सचिह्नं निर्वास्याः कूटाक्षोपधिदेविनः" याज्ञ० "कूटाक्षदेविनः पापान् राजा राष्ट्राद्विवासयेत्। कण्ठेऽक्षमालामासज्य स ह्येषां विनयः स्मृतः" नारदः यानि च मनुवचनानि द्यूतनिषेधपराणि। "द्यूतं समाह्वयञ्चैव यः कुर्य्यात् कारयेत् वा। तान् सर्वान् घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः" इत्यादीनि तान्यपि कूटाक्षदेवनविषयतया राजाध्यक्षरहितद्यूतविषयतया च योज्यानि" मिता०।

स्वामिपालविवादे मिताक्षरोक्ता दमा यथा "माषानष्टौ तु महिषी सस्यघातस्य कारिणी। दण्डनीया तदर्द्धं तु गौस्तदर्द्धमजाविकम्" याज्ञ०। परसस्यविनाशकारिणी महिषी अष्टौ माषान् दण्डनीया। गौस्तदर्द्धं चतुरो माषान् अजामेषञ्च माषद्वयं दण्डनीयम्। महिष्यादीनां धनसम्बन्धाभावात्तत्स्वामी पुरुषो लक्ष्यते। माषश्चात्र ताम्रिकपणस्य विंशतितमो भागः "माषो विंशतिमो भागः पणस्य परिकीर्त्तितः" इति नारदस्मरणात्। एतच्चाज्ञानविषयम्। ज्ञानपूर्वं तु "पणस्य पादौ द्वौ गां तु द्विगुणं महिषीं तथा। तथाऽजाविकवत्सानामादो दण्डः प्रकीर्त्तितः" इति स्मृत्यन्तरोक्तं द्रष्टव्यम्। यत् पुनर्नारदेनोक्तम् "माषङ्गान्दापयेद्दण्डं द्वौ माषौ महिषीं तथा। तथाजाविकवत्सानां दण्डः स्यादर्द्धमाषिकः" इति। तत्पुनः प्ररोहयोग्यमूलावशेषभक्षणविषयम्। अपराधातिशयेन क्वचिद्दण्डद्वैगुण्यमाह "भक्षयित्वोपविष्टानां यथोक्ताद्द्विगुणो दमः" याज्ञ०। 'यदि पशवः परक्षेत्रे सस्यम्भक्षयित्वा तत्रैवानिवारिताः शेरते। तदा यथोक्ताद्दण्डाद्द्विगुणो दण्डो वेदितव्यः। "वसतां द्विगुणः प्रोक्तः सवत्सानाञ्चतुर्गुणः" इति वचनात्। क्षेत्रान्तरे पश्वन्तरे चातिदेशमाह "सममेषां विवीतेऽपि खरोष्ट्रं महिषीसमम्" याज्ञ०। विवीतः प्रचुरतृणकाष्ठो रक्ष्यमाणः परगृहीतो भूप्रदेशस्तदुपघातेऽपीतरक्षेत्रदण्डसमं दण्डमेषां महिष्यादीनां विद्यात्। खराश्चोष्ट्राश्च खरोष्ट्रं तन्महिषीसमं महिषी यत्र यादृशेन दण्डेन दण्ड्यते तत्र तादृशेनैव दण्डेन खरोष्ट्रमपि प्रत्येकं दण्डनीयम्। सस्योपरोधकत्वे खरोष्ट्रयोः प्रत्येकं महिषीतुल्यत्वाद्दमस्य चापराधानुसारित्वात् खरोष्ट्रमिति समाहारो न विवक्षितः। परस्वनाशे

गोस्वामिनो दण्ड उक्त इदानीं क्षेत्रस्वामिने फलमप्यसौ दापनीय इत्याह "यावत्सस्यं विनश्येत्तु तावत् स्यात् क्षेत्रिणः फलम्। गोपस्ताड्यस्तु गोमी तु पूर्वोक्तं दण्डमर्हति" याज्ञ०। सस्यग्रहणं क्षेत्रोपचयोपलक्षणार्थम्। यस्मिन् क्षेत्रे यावत्पलालधान्यादिकं गवादिभिर्विनाशितं तावत्क्षेत्रफलमेतावति क्षेत्रे एतावद्भवतीति सामन्तैः परिकल्पितं तत्क्षेत्रस्वामिने गोमी दापनीयः। गोपस्तु ताड़नीय एव न फलं दापनीयः। गोपस्य ताड़नं पूर्वोक्तधनदण्डसहितमेव पालदोषेण सस्यस्य नाशे द्रष्टव्यः। "या नष्टा पालदोषेण गौस्तु सस्यानि नाशयेत्। न तत्र गोमिनो दण्डः पालस्तद्दण्डमर्हतीति" वचनात्। गोमी पुनः स्वापराधेन सस्यनाशं पूर्वोक्तं दण्डमेवार्हतीति न ताड़नम्। फलदानं पुनः सर्वत्र गोमिन एव तत्फलपुष्टमहिष्यादिक्षीरोपभोग द्वारेण तत्क्षेत्रफलभोगत्वात्।

"क्षेत्रविशेषेऽपवादमाह "पथि ग्रामविवीतान्ते क्षेत्रे दोषो न विद्यते। अकामतः कामचारे चौरवद्दण्डमर्हति" याज्ञ०। पथि मार्गसमीपवर्त्तिनि क्षेत्रे ग्रामविवीतसमीपवर्त्तिनि च क्षेत्रेऽकामतो गोभिर्भक्षिते गोपगोमिनोर्द्वयोरप्यदोषः। दोषाभावप्रतिपादनं च दण्डाभावार्थं विनष्टसस्यमौल्यदानप्रतिषेधार्थं च। कामचारे कामतश्चारे चौरवत् चौरस्य यादृशो दण्डः तादृशं दण्डमर्हति। एतच्चानावृतक्षेत्रविषयम्। "तत्रापरिवृतं धान्यं विहिंस्युः पशवो यदि। न तत्र प्रणयेद्दण्डं नृपतिः पशुरक्षिणामिति" दण्डाभावस्यानावृतक्षेत्रविषयत्वेन मनुनोक्तत्वात्। आवृते पुनर्मार्गादिक्षेत्रेऽपि दोषोऽस्त्येव। वृतिकरणञ्च तेनैवोक्तम् "वृतिञ्च तत्र कुर्वीत यामुष्ट्रो नावलोकयेत्। छिद्रं निवारयेत्सर्वं श्वशूकरमुखानुगमिति"। पशुविशेषेऽपि दण्डाभावमाह "महोक्षोत्सृष्टपशवः सूतिकागन्तुकादयः। पालो येषां न, ते मोच्या दैवराजपरिप्लुताः" याज्ञ०। "महांश्चासावुक्षा च महोक्षः वृषः सेक्ता। उत्सृष्टपशवः वृषोत्सर्गविधानेन देवतोद्देशेन त्यक्ताः। सूतिका प्रसूता अनिर्दशाहा। आगन्तुकः स्वयूथात्परिभ्रष्टो देशान्तरादागतः। एते मोच्याः। परसस्यभक्षणेऽपि न दण्ड्याः। येषां च पालो न विद्यते तेऽपि दैवराजपरिप्लुताः दैवराजोपहृताः सस्यनाशकारिणो न दण्ड्याः। आदिग्रहणात् हस्त्यश्वादयो गृह्यन्ते। ते चोशनसोक्ताः "अदण्ड्या हस्तिनोऽश्वाः प्रजापाला हि ते स्मृताः। अदण्ड्यौ काणकुब्जौ च ये शश्वत्कृतलक्षणाः। अदण्ड्यागन्तुकी गौश्च सूतिका चाभिसारिणी। अदण्ड्याश्चोत्सवे गावः श्राद्धकाले तथैव चेति"। अत्रोत्सृष्टपशूनामस्वामिकत्वेन दण्ड्यत्वासम्भवात् दृष्टान्तार्थमुपादानं यथोत्सृष्टपशवो न दण्ड्या एवं महोक्षादय इति" मिता०।

"पथि क्षेत्रे परिवृते ग्रामान्तीयेऽथवा पुनः। सपालः शतदण्डार्हो विपालान् वारयेत् पशून्" मनुः।

क्षेत्रादिसीमाविवादे मनूक्तो दमो यथा। "क्षेत्रकूपतड़ागानामारामस्य गृहस्य च। सामन्तप्रत्ययो ज्ञेयः सीमासेतुविनिर्णयः। सामन्ताश्चेन्मृषा ब्रूयुः सेतौ विवदतां नृणाम्। सर्वे पृथक् पृथग्दण्ड्या राज्ञा मध्यमसाहसम्"। "मर्य्यादायाः प्रभेदे तु सीमातिक्रमणे तथा। क्षेत्रस्य हरणे दण्डा अधमोत्तममध्यमाः" याज्ञ०। "अनेकक्षेत्र व्यवच्छेदिका साधारणी भूमर्य्यादा तस्याः प्रकर्षेण भेदने सीमातिक्रमणे सीमामतिलङ्घ्य कर्षणे क्षेत्रस्य च भयादिप्रदर्शनेन हरणे यथाक्रमेणाधमोत्तममध्यमदमा वेदितव्याः। क्षेत्रग्रहणञ्च गृहारामाद्युपलक्षणार्थम्। यदा पुनः स्वीयभ्रान्त्या क्षेत्रादिकमपहरति तदा द्विशतो दमो वेदितव्यः। "गृहं तड़ागमारामं क्षेत्रं वा भीषया हरन्। शतानि पञ्च दण्ड्यः स्यादज्ञानाद्विशतो दमः" मनूक्तेः। अपह्रियमाणक्षेत्रादिभूयस्त्वपर्य्यालोचनया कदाचिदुत्तमोऽपि दण्डः प्रयोक्तव्यः। अतएवाह "बधसर्वस्वहरणं पुरान्निर्वासनाङ्कने। तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहस इति" मिता०।

वाक्पारुष्ये दमो मनूक्तो यथा "शतं ब्राह्मणमाक्रुश्य क्षत्त्रियो दण्डमर्हति। वैश्योऽप्यर्द्धशतं द्वे वा शूद्रस्तु बधमर्हति। पञ्चाशद्ब्राह्मणो दण्ड्यः क्षत्त्रियस्याभिशंसने। वैश्ये स्यादर्द्धपञ्चाशच्छूद्रे द्वादशको दमः। समवर्णे द्विजातीनां द्वादशैव व्यतिक्रमे। वादेष्ववचनीयेषु तदेव द्विगुणं भवेत्। एकजातिर्द्विजातींस्तु वाचा दारुणया क्षिपन्। जिह्वायाः प्राप्नुयाच्छेदं जघन्यप्रभवो हि सः। नामजातिग्रहन्त्वेषामभिद्रोहेण कुर्वतः। निःक्षेप्योऽयोमयः शङ्कुर्ज्वलन्नास्ये दशाङ्गुलः। धर्म्मोपदेशं दर्पेण विप्राणामस्य कुर्वतः। तप्तमासेचयेत्तैलं वक्त्रे श्रोत्रे च पार्थिवः। श्रुतं देशञ्च जातिञ्च कर्म शारीरमेव च। वितथेन ब्रुवन् दर्पा-

दाप्यः स्याद्द्विशतं दमम्। काणं वाप्यथ वा खञ्जमन्यं वापि तथाविधम्। तथ्येनापि ब्रुवन् दाप्यो दण्डं कार्षापणावरम्। मातरं पितरं जायां भ्रातरं तनयं गुरुम्। आक्षारयन् शतं दाप्यः पन्थानं चाददद्गुरोः। ब्राह्मणक्षत्रियाभ्यान्तु दण्डः कार्य्यो विजानता। ब्राह्मणे साहसः पूर्वः क्षत्रिये त्वेव मध्यमः। विट्शूद्रयोरेवमेव स्वजातिं प्रति तत्त्वतः। छेदवर्जं प्रणयनं दण्डस्येति विनिश्चयः।”

“सत्यासत्यान्यथास्तोत्रैर्न्यूनाङ्गेन्द्रियरोगिणाम्। क्षेपं करोति चेद्दण्ड्यः पणानर्द्धत्रयोदश। अभिगन्तास्मि भगिनीं मातरं वा तवेति च। शपन्तं दापयेद्राजा पञ्चविंशतिकं दमम्। अर्द्धोऽधमेषु द्विगुणः परस्त्रीषूत्तमेषु च। दण्डप्रणयनं कार्य्यं वर्णजात्युत्तराधरैः। प्रातिलोम्यापवादेषु द्विगुणास्त्रिगुणा दमाः। वर्णानामानुलोम्येन तस्मादेवार्द्धहानितः। बाहुग्रीवानेत्रसक्थिविनाशे वाचिके दमः। शत्यस्तदर्द्धिकः पादनासाकर्णकरादिषु। अशक्तस्तु वदन्नेवं दण्डनीयः पणान् दश। तथा शक्तः प्रतिभुवं दाप्यः क्षेमाय तस्य तु। पतनीये कृते क्षेपे दण्डो मध्यमसाहसः। उपपातकयुक्ते तु दाप्यः प्रथमसाहसः। त्रैविद्यनृपदेवानां क्षेप उत्तमसाहसः। मध्यमो जातिपूगानां प्रथमो ग्रामदेशयोः” याज्ञ०।

दण्डपारुष्ये दण्डा मनूक्ता यथा “येन केनचिदङ्गेन हिंस्याच्चेत् श्रेष्ठमन्त्यजः। छेत्तव्यं तत्तदेवास्य तन्मनोरनुशासनम्। पाणिमुद्यम्य दण्डं वा पाणिच्छेदनमर्हति। पादेन प्रहरन् कोपात् पादच्छेदनमर्हति। सहासनमभिप्रेप्सुरुत्कृष्टस्यापकृष्टजः। कट्यां कृताङ्को निर्वास्यः स्फिचं वास्यावकर्त्तयेत्। अवनिष्ठीवतो दर्पात् द्वावोष्ठौ छेदयेन्नृपः। अवमूत्रयतो मेढ्रमवशर्द्धयतो गुदम्। केशेषु गृह्णतो हस्तौ छेदयेदविचारयन्। पादयोर्दाढिकायान्तु ग्रीवायां वृषणेषु च। त्वग्भेदकः शतं दण्ड्यो लोहितस्य तु दर्शकः। मांसभेत्ता तु षण्णिष्कान् प्रवास्यस्त्वस्थिभेदकः। वनस्पतीनां सर्वेषामुपभोगो यथा यथा। तथा तथा दमः कार्य्यो हिंसायामिति धारणा। मनुष्याणां पशूनाञ्च दुःखाय प्रहृते सति। यथा यथा महद्दुःखं दण्डं कुर्य्यात्तथा तथा। अङ्गावपीडनायाञ्च व्रणशोणितयोस्तथा। समुत्थानव्ययं दाप्यः सर्वं दण्डमथापि वा। द्रव्याणि हिंस्यात् यो यस्य ज्ञानतोऽज्ञानतोऽपि वा। स तस्योत्पादयेत्तुष्टिं राज्ञो दद्याच्च तत्समम्। चर्म्मचार्म्मिकभाण्डेषु काष्ठलोष्टमयेषु च। मूल्यात् पञ्चगुणो दण्डः पुष्पमूलफलेषु च। यानस्यैव तु यातुश्च यानस्वामिन एव च। दशातिवर्त्तनान्याहुः शेषे दण्डो विधीयते। छिन्ननास्ये भग्नयुगे तिर्य्यक्प्रतिमुखागते। अक्षभङ्गे च यानस्य चक्रभङ्गे तथैव च। छेदने चैव यन्त्राणां योक्त्ररश्म्योस्तथैव च। आक्रन्दे चाप्यपैहीति न दण्डं मनुरब्रवीत्। यत्रापवर्त्तते युग्यं वैगुण्यात् प्राजकस्य तु। तत्र स्वामी भवेद्दण्ड्यो हिंसायां द्विशतं दमम्। प्राजकश्चेद्भवेदाप्तः प्राजको दण्डमर्हति। युग्यस्थाः प्राजकेऽनाप्ते सर्वे दण्ड्याः शतं शतम्। स चेत्तु पथि संरुद्धः पशुभिर्वा रथेन वा। प्रमापयेत् प्राणभृतस्तत्र दण्डोऽविचारतः। मनुष्यमारणे क्षिप्रं चौरवत् किल्विषी भवेत्। प्राणभृत्सु महत्स्वर्द्धं गोगजोष्ट्रहयादिषु। क्षुद्रकाणां पशूनाञ्च हिंसायां द्विशतो दमः। पञ्चाशत्तु भवेद्दण्डः शुभेषु मृगपक्षिषु। गर्दभाजाविकानाञ्च दण्डः स्यात् पञ्चमाषकः। माषकन्तु भवेद्दण्डः श्वशूकरनिपातने। भार्य्या पुत्रश्च दासश्च शिष्यो भ्राता च सोदरः। प्राप्तापराधास्ताड्याः स्यू रज्ज्वा वेणुदलेन वा। पृष्ठतस्तु शरीरस्य, नोत्तमाङ्गे कथञ्चन। अतोऽन्यथा तु प्रहरन् प्राप्तः स्याच्चौरकिल्विषम्”। अत्र विशेषमाह याज्ञ० यथा

“भस्मपङ्करजःस्पर्शे दण्डो दशपणः स्मृतः। अमेध्यपार्ष्णिनिष्ठ्यूतस्पर्शने द्विगुणस्ततः। समेष्वेवं परस्त्रीषु द्विगुणस्तूत्तमेषु च। हीनेष्वर्द्धदमो मोहमदादिभिरदण्डनम्। विप्रपीडाकरं छेद्यमङ्गमब्राह्मणस्य तु। उद्गूर्णे प्रथमो दण्डः संस्पर्शे तु तदर्द्धिकः। उद्गूर्णे हस्तपादे च दशविंशतिकौ दमौ। परस्परन्तु सर्वेषां शस्त्रे मध्यमसाहसम्। पादकेशांशुककरोल्लुञ्चनेषु पणान् दश। पीडाकर्षांशुकावेष्टपादाध्यासे शतं दमः। शोणितेन विना दुःखं कुर्वन् काष्ठादिभिर्नरः। द्वात्रिंशतं पणान् दाप्यो द्विगुणं दर्शनेऽसृजः। करपाददतो भङ्गे छेदने कर्णनासयोः। मध्यो दण्डो व्रणोद्भेदे मृतकल्पहते तथा। चेष्टाभोजनवाग्रोधे नेत्रादिप्रतिभेदने। कराङ्घ्रिबाहुसक्थ्याञ्च भङ्गे मध्यमसाहसः। एकं घ्नतां बहूनाञ्च यथोक्ताद्द्विगुणो दमः। कलहापहृतं देयं दण्डश्च द्विगुणः स्मृतः। दुःखमुत्पादयेद्यस्तु स समुत्थानजव्ययम्। दाप्यो दण्डञ्च यो

यस्मिन् कलहे समुद्दाहृतः । अभिघाते तथा च्छेदे भेदे कुड्यावपातने । पणान् दाप्यः पञ्चदशविंशतिन्तद्वयं तथा । दुःखोत्पादि गृहे द्रव्यं क्षिपन् प्राणहरन्तथा । षोड़शाद्यः पणान् दाप्यो द्वितीयो मध्यमं दमम् । दुःखे च शोणितोत्पादे शाखाङ्गच्छेदने तथा । दण्डः क्षुद्रपशूनाञ्च द्विपणप्रभृति क्रमात् । लिङ्गस्य च्छेदने मृत्यौ मध्यमो मूल्यमेव च । महापशूनामेतेषु स्थानेषु द्विगुणो दमः । प्ररोहिशाखिनां शाखास्कन्धसर्वविदारणे । उपजीव्यद्रुमाणाञ्च विंशतेर्द्विगुणो दमः । चैत्यश्मशानसीमासु पुण्यस्थाने सुरालये । जातद्रुमाणां द्विगुणो दमो वृक्षेऽथ विश्रुते । गुल्मगुच्छक्षुपलताप्रतानौषधिवीरुधाम् । पूर्वस्मृतादर्द्धदण्डः स्थानेषूक्तेषु कर्त्तने" ।

विक्रयासम्प्रदाने "वसानस्त्रीन् पणान् दण्ड्यो नेजकस्तु पराशुकम् । विक्रयावक्रयाधानयाचितेषु पणान् दश । पितापुत्रविरोधे तु साक्षिणां त्रिपणो दमः । अन्तरे च तयोर्यः स्यात्तस्याप्यष्टगुणो दमः । तुलाशासनमानानां कूटकृन्नाणकस्य च । एभिश्च व्यवहर्त्ता यः स दाप्यो दण्डमुत्तमम् । अकूटं कूटकं ब्रूते कूटं यश्चाप्यकूटकम् । स नाणकपरीक्षी तु दाप्य उत्तमसाहसम् । भिषङ्मिथ्या चरन् दाप्यस्तिर्य्यक्षु प्रथमं दमम् । मानुषे मध्यमं राजमानुषेषूत्तमं दमम् । अवन्ध्यं यश्च बध्नाति बन्ध्यं यश्च प्रमुञ्चति । अप्राप्तव्यवहारञ्च स दाप्यो दण्डमुत्तमम् । मानेन तुलया वापि योऽशमष्टमकं हरेत् । दण्डं स दाप्यो द्विशतं वृद्धौ हानौ च कल्पितम् । भेषजस्नेहलवणगन्धधान्यगुड़ादिषु । पण्येषु प्रक्षिपन् हीनं पणान् दाप्यस्तु षोड़श । मृच्चर्म्ममणिसूत्रायःकाष्ठवल्कलवाससाम् । अजातौ जातिकरणे विक्रेयादष्टगुणो दमः । समुद्गपरिवर्त्तञ्च सारभाण्डञ्च कृत्रिमम् । आधानं विक्रयं वापि नयतो दण्डकल्पना । भिन्ने पणे तु पञ्चाशत् पणे तु शतमुच्यते । द्विपणे द्विशतो दण्डो मूल्यवृद्धौ च वृद्धिमान्" याज्ञ० उक्तो दमः ।

"अन्यहस्ते च विक्रीतं दुष्टं वाऽदुष्टवद् यदि । विक्रीणीते दमस्तत्र मूल्यात्तु द्विगुणो भवेत्" याज्ञ० ।

साहसे याज्ञ० उक्तो दमो यथा "सामान्यद्रव्यप्रसभहरणात् साहसं स्मृतम् । तन्मूल्याद्द्विगुणो दण्डो निह्नवे तु चतुर्गुणः । यः साहसं कारयति स दाप्यो द्विगुणं दमम् । यश्चैवमुक्त्वाऽहं दाता कारयेत् स चतुर्गुणम् । अर्घ्याक्रोशातिक्रमकृद्भ्रातृभार्य्याप्रहारकः । सन्दिष्टस्याप्रदाता च समुद्रगृहभेदकृत् । सामन्तकुलिकादीनामपकारस्य कारकः । पञ्चाशत्पणिको दण्ड एषामिति विनिश्चयः । स्वच्छन्दं विधवागामी विक्रुष्टेऽनाभिधावकः । अकारणे च विक्रोष्टा चण्डालश्चोत्तमान् स्पृशन् । शूद्रः प्रव्रजितानाञ्च दैवे पित्र्ये च भोजकः । अयुक्तं शपथं कुर्व्वन्नयोग्योऽयोग्यकर्म्मकृत् । वृषक्षुद्रपशूनाञ्च पुंस्त्वस्य प्रतिघातकृत् । साधारणस्यापलापी दासीगर्भविनाशकृत् । पितृपुत्रस्वसृभ्रातृदम्पत्याचार्य्यशिष्यकाः । एषामपतितानां तु त्यागी च शतदण्डभाक् ।"

चौर्य्ये दण्डो मनूक्तो यथा । "यस्तु रज्जुं घटं कूपाद्धरेद्भिन्द्याच्च यः प्रपाम् । स दण्डं प्राप्नुयात् माषं तच्च तस्मिन् समाहरेत् । धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिकं बधः । शेषेऽप्येकादशगुणं दाप्यस्तस्य च तद्धनम् । तथा धरिममेयानां शतादभ्यधिके बधः । सुवर्णरजतादीनामुत्तमानाञ्च वाससाम् । पञ्चाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते । शेषेऽप्येकादशगुणं मूल्याद्दण्डं प्रकल्पयेत् । पुरुषाणां कुलीनानां नारीणाञ्च विशेषतः । मुख्यानां चैव रत्नानां हरणे बधमर्हति । महापशूनां हरणे शस्त्राणामौषधस्य च । कालमासाद्य कार्य्यञ्च राजा दण्डं प्रकल्पयेत् । गोषु ब्राह्मणसंस्थासु च्छुरिकायाश्च भेदने । पशूनां हरणे चैव सद्यः कार्य्योऽर्द्धपादिकः । सूत्रकार्पासकिण्वानां गोमयस्य गुड़स्य च । दध्नः क्षीरस्य तक्रस्य पानीयस्य तृणस्य च । वेणुवैदलभाण्डानां लवणानान्तथैव च । मृण्मयानाञ्च हरणे मृदो भस्मन एव च । मत्स्यानां पक्षिणाञ्चैव तैलस्य च घृतस्य च । मांसस्य मधुनश्चैव यच्चान्यत् पशुसम्भवम् । अन्येषाञ्चैवमादीनां मद्यानामोदनस्य च । पक्वान्नानाञ्च सर्व्वेषां तन्मूल्याद्द्विगुणो दमः । पुष्पेषु हरिते धान्ये गुल्मवल्लीनगेषु च । अन्येष्वपरिपूतेषु दण्डः स्यात् पञ्चकृष्णलः । परिपूतेषु धान्येषु शाकमूलफलेषु च । निरन्वये शतं दण्डः सान्वयेऽर्द्धशतं दमः । स्यात् साहसं त्वन्वयवत् प्रसभं कर्म्म यत्कृतम् । निरन्वयं भवेत् स्तेयं हृत्वापह्नूयते च यत् । यस्त्वेतान्युपक्लृप्तानि द्रव्याणि स्तेनयेन्नरः । तमाद्यं दण्डयेद्राजा यश्चाग्निं चोरयेद्गृहात् । येन येन यथाङ्गेन स्तेनो नृषु विचेष्टते । तत्तदेव हरेत्तस्य प्रत्यादेशाय पार्थिवः"। अन्यत्र च चौर्य्यादिनानाविधे मनुनोक्तो दमो यथा ।

"न होढ़ेन विना चौरं घातयेद्धार्म्मिको नृपः । स-

होढ़ं सोपकरणं घातयेदविचारयन्। ग्रामेष्वपि च ये केचिच्चौराणां भक्तदायकाः। भाण्डावकाशदाश्चैव सर्व्वांस्तानपि घातयेत्। राष्ट्रेषु रक्षाधिकृतान् सामन्तांश्चैव चोदितान्। अभ्याघातेषु मध्यस्थान् शिष्याच्चौरानिव द्रुतम्। यश्चापि धर्म्मसमयात् प्रच्युतो धर्मजीवनः। दण्डेनैव तमप्योषेत् स्वकाद्धर्म्माद्धि विच्युतम्। ग्रामघाते हिताभङ्गे पथि मोषाभिदर्शने। शक्तितो नाभिधावन्तो निर्व्वास्याः सपरिच्छदाः। राज्ञः कोषापहर्त्तॄंश्च प्रतिकूलेषु च स्थितान्। घातयेद्विविधैर्दण्डैररीणाञ्चोपजापकान्। सन्धिं छित्त्वा तु ये चौर्य्यं रात्रौ कुर्व्वन्ति तस्कराः। तेषां छित्त्वा नृपो हस्तौ तीक्ष्णशूले निवेशयेत्। अङ्गुली ग्रन्थिभेदस्य छेदयेत् प्रथमे ग्रहे। द्वितीये हस्तचरणौ तृतीये वधमर्हति। अग्निदान् भक्तदांश्चैव तथा शस्त्रावकाशदान्। सन्निधातॄंश्च मोषस्य हन्याच्चौरमिवेश्वरः। तड़ागभेदकं हन्यादप्सु शुद्धवधेन वा। तद्वापि प्रतिसंस्कुर्य्याद्दाप्यस्तूत्तमसाहसम्। कोष्ठागारायुधागारदेवतागारभेदकान्। हस्त्यश्वरथहर्त्तॄंश्च हन्यादेवाऽविचारयन्। यस्तु पूर्व्वनिविष्टस्य तड़ागस्योदकं हरेत्। आगमं वाप्यपां भिन्द्यात् स दाप्यः पूर्व्वसाहसम्। समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि। स द्वौ कार्षापणौ दद्यादमेध्यञ्चाशु शोधयेत्। आपद्गतोऽथवा वृद्धो गर्भिणी बाल एव वा। परिभाषणमर्हन्ति तच्च शोध्यमिति स्थितिः। चिकित्सकानां सर्व्वेषां मिथ्या प्रचरतां दमः। अमानुषेषु प्रथमो मानुषेषु तु मध्यमः। संक्रमध्वजयष्टीनां प्रतिमानाञ्च भेदकः। प्रतिकुर्य्याच्च तत् सर्व्वं पञ्च दद्याच्छतानि च। अदूषितानां द्रव्याणां दूषणे भेदने तथा। मणीनामपवेधे च दण्डः प्रथमसाहसः। समैर्हि विषमं यस्तु चरेद्वै मूल्यतोऽपि वा। स प्राप्नुयाद्दमं पूर्व्वं नरो मध्यममेव वा। बन्धनानि च सर्व्वाणि राजमार्गे निवेशयेत्। दुःखिता यत्र दृश्येरन् विकृताः पापकारिणः। प्राकारस्य च भेत्तारं परिखाणाञ्च पूरकम्। द्वाराणाञ्चैव भङ्क्तारं क्षिप्रमेव प्रवासयेत्। अभिचारेषु सर्व्वेषु कर्त्तव्यो द्विशतो दमः। मूलकर्म्मणि चानाप्तैः कृत्यासु विविधासु च। अबीजविक्रयी चैव बीजोत्कृष्टस्तथैव च। मर्य्यादाभेदकश्चैव विकृतं प्राप्नुयाद्वधम्। सर्व्वकण्टकपापिष्ठं हेमकारन्तु पार्थिवः। प्रवर्त्तमानमन्याये छेदयेल्लवशः क्षुरैः। सीताद्रव्यापहरणे शस्त्राणामौषधस्य च। कालमासाद्य कार्य्यञ्च राजा दण्डं प्रकल्पयेत्” “चौरं प्रदाप्यापहृतं घातयेद्विविधैर्वधैः। सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद्विप्रवासयेत्” या०। अङ्कनविशेषो मनुनोक्तो यथा “गुरुतल्पे भगः कार्य्यः सुरापाने सुराध्वजः। स्तेये च श्वपदं कार्य्यं ब्रह्महण्यशिराः पुमान्”। “एतच्च दण्डोत्तरकालं प्रायश्चित्तमचिकीर्षतां द्रष्टव्यम्। यथाह मनुः “प्रायश्चित्तन्तु कुर्व्वाणाः सर्व्वे वर्णा यथोदितम्। नाङ्क्या राज्ञा ललाटे तु दाप्यास्तूत्तमसाहसमिति” मिता०। “घातितेऽपहृते दोषो ग्रामभर्त्तुरनिर्गते। विवीतभर्त्तुस्तु पथि चौरोद्धर्त्तुरवीतके। स्वसीम्नि दद्याद्ग्रामस्तु पदं वा यत्र गच्छति। पञ्चग्रामी बहिःक्रोशाद्दशग्राम्यथ वा पुनः। बन्दिग्राहांस्तथा वाजिकुञ्जराणाञ्च हारिणः। प्रसह्यघातिनश्चैव शूलमारोपयेन्नरान्। उत्क्षेपकग्रन्थिभेदौ करसन्दंशहीनकौ। कार्य्यौ द्वितीयापराधे करपादैकहीनकौ। क्षुद्रमध्यमहाद्रव्यहरणे सारतोदमः। देशकालवयःशक्तिं संचिन्त्य दण्डकर्म्मणि। भक्तावकाशाग्न्युदकमन्त्रोपकरणव्ययान्। दत्त्वा चौरस्य हन्तुर्व्वा जानतो दम उत्तमः। शस्त्रावपाते गर्भस्य पातने चोत्तमो दमः। उत्तमो वाऽधमो वापि पुरुषस्त्रीप्रमापणे। विप्रदुष्टां स्त्रियञ्चैव पुरुषघ्नीमगर्भिणीम्। सेतुभेदकरीञ्चाप्सु शिलां बद्ध्वा प्रवेशयेत्। विषाग्निदां पतिगुरुनिजापत्यप्रमापिणीम्। विकर्णकरनासौष्ठीं कृत्वा गोभिः प्रमापयेत्। अविज्ञातहतस्याशु कलहं सुतबान्धवाः। प्रष्टव्या योषितश्चास्य परपुंसि रताः पृथक्। स्त्रीद्रव्यवृत्तिकामो वा केन वायं गतः सह। मृत्युदेशसमासन्नं पृच्छेद्वापि जनं शनैः। क्षेत्रवेश्मवनग्रामविवीतखलदाहकाः। राजपत्न्यभिगामी च दग्धव्यास्तु कटाग्निना” याज्ञ०। “तृणं वा यदि वा काष्ठं पुष्पं वा यदि वा फलम्। अनापृच्छन् हि गृह्णानो हस्तच्छेदनमर्हति” मिता० धृतवचनम्।

स्त्रीसंग्रहे मनुनोक्तो दमो यथा “परदाराभिमर्षेषु प्रवृत्तान्नॄन् महीपतिः। उद्वेजनकरैर्दण्डैश्छिन्नयित्वा प्रवासयेत्। परस्य पत्न्या पुरुषः सम्भाषां योजयन् रहः। पूर्व्वमाक्षारितो दोषैः प्राप्नुयात् पूर्व्वसाहसम्। परस्त्रियं योऽभिवदेत् तीर्थेऽरण्ये वनेऽपि वा। नदीनामपि संभेदे स संग्रहणमाप्नुयात्। उपचारक्रियाकेलिः स्पर्शो भूषणवाससाम्। सह खट्टासनञ्चैव सर्व्वं संग्रहणं तथा। स्त्रियं स्पृशेददेशे यः स्पृष्टो वा मर्षयेत्तथा। परस्परस्या-

नुमते सर्वं संग्रहणं स्मृतम् । अब्राह्मणः संग्रहणे प्राणान्तं दण्डमर्हति । न सम्भाषां परस्त्रीभिः प्रतिषिद्धः समाचरेत् । निषिद्धो भाषमाणस्तु सुवर्णं दण्डमर्हति । नैष चारणदारेषु विधिर्नात्मोपजीविषु । सज्जयन्ति हि ते नारीर्निगूढाश्चारयन्ति च । किञ्चिदेव तु दाप्यः स्यात् सम्भाषां ताभिराचरन् । योऽकामां दूषयेत् कन्यां स सद्यो वधमर्हति । सकामां दूषयंस्तुल्यो न वधं प्राप्नुयान्नरः । कन्यां भजन्तीमुत्कृष्टं न किञ्चिदपि दापयेत् । जघन्यं सेवमानान्तु संयतां वासयेद्गृहे । उत्तमां सेवमानस्तु जघन्यो वधमर्हति । शुल्कं दद्यात् सेवमानः समामिच्छेत् पिता यदि । अभिसह्य तु यः कन्यां कुर्याद्दर्पेण मानवः । तस्याशु कर्त्त्ये अङ्गुल्यौ दण्डञ्चार्हति षट् शतम् । सकामां दूषयंस्तुल्यो नाङ्गुलिच्छेदमाप्नुयात् । द्विशतन्तु दमं दाप्यः प्रसङ्गविनिवृत्तये । कन्यैव कन्यां या कुर्यात् तस्याः स्याद्द्विशतो दमः । शुल्कञ्च द्विगुणं दद्याच्छिफाश्चैवाप्नुयाद्दश । या तु कन्यां प्रकुर्यात् स्त्री सा सद्यो मौण्ड्यमर्हति । अङ्गुल्योरेव च छेदं खरेणोद्वहनं तथा । भर्त्तारं लङ्घयेद्या तु स्त्री ज्ञातिगुणदर्पिता । तां श्वभिः खादयेद्राजा संस्थाने बहुसंस्थिते । पुमांसं दाहयेत् पापं शयने तप्त आयसे । अभ्यादध्युश्च काष्ठानि तत्र दह्येत पापकृत् । संवत्सराभिशस्तस्य दुष्टस्य द्विगुणो दमः । व्रात्यया सह संवासे चाण्डाल्या तावदेव तु । शूद्रो गुप्तमगुप्तं वा द्वैजातं वर्णमावसन् । अगुप्तमङ्गसर्वस्वैर्गुप्तं सर्वेण हीयते । वैश्यः सर्वस्वदण्ड्यः स्यात् संवत्सरनिरोधतः । सहस्रं क्षत्रियो दण्ड्यो मौण्ड्यं मूत्रेण चार्हति । ब्राह्मणीं यद्यगुप्तान्तु गच्छेतां वैश्यपार्थिवौ । वैश्यं पञ्चशतं कुर्यात् क्षत्रियन्तु सहस्रिणम् । उभावपि तु तावेव ब्राह्मण्या गुप्तया सह । विप्लुतौ शूद्रवद्दण्ड्यौ दग्धव्यौ वा कटाग्निना । सहस्रं ब्राह्मणो दण्ड्यो गुप्तां विप्रां बलाद्व्रजन् । शतानि पञ्च दण्ड्यः स्यादिच्छन्त्या सह सङ्गतः । मौण्ड्यं प्राणान्तिको दण्डो ब्राह्मणस्य विधीयते । इतरेषान्तु वर्णानां दण्डः प्राणान्तिको भवेत् । न जातु ब्राह्मणं हन्यात् सर्वपापेष्वपि स्थितम् । राष्ट्रादेनं बहिः कुर्यात् समग्रधनमक्षतम् । न ब्राह्मणवधाद्भूयानधर्मो विद्यते भुवि । तस्मादस्य वधं राजा मनसापि न चिन्तयेत् । वैश्यश्चेत् क्षत्रियां गुप्तां वैश्यां वा क्षत्रियो व्रजेत् । योब्राह्मण्यामगुप्तायां तावुभौ दण्डमर्हतः । सहस्रं ब्राह्मणो दण्ड्यं दाप्यो गुप्ते तु ते व्रजन् । शूद्रायां क्षत्रियविशोः साहस्रो वै भवेद्दमः । क्षत्रियायामगुप्तायां वैश्ये पञ्चशतं दमः । मूत्रेण मौण्ड्यमिच्छेत्तु क्षत्रियो दण्डमेव वा । अगुप्ते क्षत्रियावैश्ये शूद्रां वा ब्राह्मणो व्रजन् । शतानि पञ्च दण्ड्यः स्यात् सहस्रन्त्वन्त्यजस्त्रियम्" ।

"स्त्री निषेधे शतं दद्याद्द्विशतन्तु दमं पुमान् । प्रतिषेधे द्वयोर्दण्डो यथा संग्रहणे तथा । सजातावुत्तमो दण्ड आनुलोम्ये तु मध्यमः । प्रातिलोम्ये वधः पुंसः स्त्रीणां नासादिकर्त्तनम् । अलङ्कृतां हरन् कन्यामुत्तमन्त्वन्यथाऽधमम् । दण्डं दद्यात् सवर्णासु प्रातिलोम्ये वधः स्मृतः । सकामास्वनुलोमासु न दोषस्त्वन्यथा दमः । दूषणे तु करच्छेद उत्तमायां वधस्तथा । शतं स्त्रीदूषणे दद्याद् द्वे तु मिथ्याभिशंसने । पशून् गच्छन् शतं दाप्यो हीनां स्त्रीं गाञ्च मध्यमम् । अवरुद्धासु दासीषु भुजिष्यासु तथैव च । गम्यास्वपि पुमान् दाप्यः पञ्चाशत्पणिकं दमम् । प्रसह्य दास्यभिगमे दण्डो दशपणः स्मृतः । बहूनां यद्यकामासौ चतुर्विंशतिकः पृथक् । गृहीतवेतना वेश्या नेच्छन्ती द्विगुणं वहेत् । अगृहीते समं दाप्यः पुमानप्येवमेव च । अयोनौ गच्छतो योषां पुरुषं वापि मोहतः । चतुर्विंशतिको दण्डस्तथा प्रव्रजितागमे । अन्त्याभिगमने त्वङ्क्यः कुबन्धेन प्रवासयेत् । शूद्रस्तथान्त्य एव स्यादन्त्यस्यार्य्यागमे वधः" ।

राजशासनकूटकरणादौ मनुनोक्तो दमो यथा

"ऊनं वाप्यधिकं वापि लिखेद्यो राजशासनम् । पारदारिकचौरं वा मुञ्चतो दण्ड उत्तमः । अभक्ष्येण द्विजं दूष्यन् दण्ड्य उत्तमसाहसम् । क्षत्रियं मध्यमं वैश्यं प्रथमं शूद्रमर्द्धकम् । कूटस्वर्णव्यवहारी विमांसस्य च विक्रयी । त्र्यङ्गहीनस्तु कर्त्तव्यो दाप्यश्चोत्तमसाहसम् । चतुष्पादकृतो दोषो नापैहीति प्रजल्पतः । काष्ठलोष्ट्रेषु पाषाणबाहुयुग्यकृतस्तथा । छिन्ननस्येन यानेन तथा भग्नयुगादिना । पश्चाच्चैवापसरता हिंसने स्वाम्यदोषभाक् । शक्तो ह्यमोचयन् स्वामी दंष्ट्रिणां शृङ्गिणां तथा । प्रथमं साहसं दद्याद्विक्रुष्टे द्विगुणं ततः । जारं चौरेत्यभिवदन् दाप्यः पञ्चशतं दमम् । उपजीव्य धनं मुञ्चंस्तदेवाष्टगुणीकृतम् । राज्ञोऽनिष्टप्रवक्तारं तस्यैवाक्रोशकारिणम् । तन्मन्त्रस्य च भेत्तारं जिह्वां छित्त्वा प्रवासयेत् । मृताङ्गलग्नविक्रेतुर्गुरो-

स्ताडयितुस्तथा। राजयानासनारोढुर्दण्ड उत्तमसाहसः। द्विनेत्रभेदिनो राजद्विष्टादेशकृतस्तथा। विप्रत्वेन च शूद्रस्य जीवतोऽष्टशतो दमः। दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान्नृपेण तु। सभ्याः सजयिनो दण्ड्या विवादाद्द्विगुणं दमम्। यो मन्येताजितोऽस्मीति न्यायेनापि पराजितः। तमायान्तं पुनर्जित्वा दापयेद्द्विगुणं दमम्"। याज्ञवल्क्यवचनानि अनुपदमेषां मानवत्वोक्तिः प्रामादिकी।

सामान्यतोदमविधिः "पिताचार्य्यः सुहृन्माता भार्य्या पुत्रः पुरोहितः। नादण्ड्यो नाम राज्ञोऽस्ति यः स्वधर्मे न तिष्ठति। कार्षापणं भवेद्दण्ड्यो यत्रान्यः प्राकृतो जनः। तत्र राजा भवेद्दण्ड्यः सहस्रमिति धारणा। अष्टापाद्यन्तु शूद्रस्य स्तेये भवति किल्विषम्। षोड़शैव तु वैश्यस्य द्वात्रिंशत् क्षत्रियस्य च। ब्राह्मणस्य चतुःषष्टिःपूर्णं वापि शतं भवेत्। द्विगुणा वा चतुःषष्टिस्तद्दोषगुणविद्धि सः। वानस्पत्यं मूलफलं दार्व्वग्न्यर्थं तथैव च। तृणञ्च गोभ्यो ग्रासार्थमस्तेयं मनुरब्रवीत्। योऽदत्तादायिनो हस्ताल्लिप्सेत ब्राह्मणो धनम्। याजनाध्यापनेनापि यथा स्तेनस्तथैव सः। द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके। आददानः परक्षेत्रान्न दण्डं दातुमर्हति। असन्धितानां सन्धाता सन्धितानाञ्च मोक्षकः। दासाश्वरथहर्त्ता च प्राप्तः स्याच्चौरकिल्विषम्"।

"ऋत्विजं यस्त्यजेद्याज्यो याज्यञ्चर्त्विक् त्यजेद्यदि। शक्तं कर्म्मण्यदुष्टञ्च तयोर्दण्डः शतं शतम्। न माता न पिता न स्त्री न पुत्रस्त्यागमर्हति। त्यजन्नपतितानेतान् राज्ञा दण्ड्यः शतानि षट्" मनूक्तो दमः।

अग्निपु० २२६ अ० सर्वविषये दमभेद उक्तो यथा "चौरैरमूषितो यस्तु मूषितोऽस्मीति भाषते। तत्प्रदातरि भूपाले स दण्ड्यस्तावदेव तु। यो यावद्विपरीतार्थं मिथ्या वा यो वदेत्तु तम्। तौ नृपेण ह्यधर्मज्ञौ दाप्यौ तद्द्विगुणं दमम्। कूटसाक्ष्यं तु कुर्वाणांस्त्रीन् वर्णांश्च प्रमापयेत्। विवासयेद्ब्राह्मणन्तु विधिरेष न हीतरः। निक्षेपस्य समं मूल्यं दण्ड्यो निक्षेपभुक् तथा। वस्त्रादिकस्य, धर्मज्ञ! तथा धर्मो न हीयते। यो निक्षेपं घातयति यश्चानिक्षिप्य याचते। तावुभौ चौरवच्छास्यौ दण्ड्यौ वा द्विगुणं दमम्। अज्ञानाद्यः पुमान् कुर्य्यात् परद्रव्यस्य विक्रयम्। निर्द्दोषो, ज्ञानपूर्व्वन्तु चौरवद्दण्डमर्हति। मूल्यमादाय यः पण्यं न दद्याद्दण्ड्य एव सः। प्रतिश्रुत्याप्रदातारं सुवर्णं दण्डयेन्नृपः। भृतिं गृह्य न कुर्य्याद्यः कर्माष्टौ कृष्णला दमः। अकाले तु त्यजन् भृत्यं दण्ड्यः स्यात्तावदेव तु। क्रीत्वा विक्रीय वा किञ्चिद्यस्येहानुशयो भवेत्। सोऽन्तर्दशाहात्तत्स्वामी दद्याच्चैवाददीत च। परेण तु दशाहस्य नादद्यान्नैव दापयेत्। आददद्धि ददच्चैव राज्ञा दण्ड्यः शतानि षट्। वरे दोषानविख्याप्य यः कन्यां वरयेदिह। दत्ताप्यदत्ता सा तस्य राज्ञा दण्ड्यः शतद्वयम्। प्रदाय कन्यां योऽन्यस्मै पुनस्तां सम्प्रयच्छति। दण्डः कार्य्यो नरेन्द्रेण तस्याप्युत्तमसाहसः। सत्यङ्कारेण वाचा च युक्तं पण्यमसंशयम्। लुब्धोऽन्यत्र च विक्रेता षट्शतं दण्डमर्हति। दद्याद्धेनुं न यः पालो गृहीत्वा भक्तवेतनम्। स तु दण्ड्यः शतं राज्ञा सुवर्णं वाप्यरक्षिता। धनुःशतं परीणाहो ग्रामस्य तु समन्ततः। द्विगुणं त्रिगुणं वापि नगरस्य च कल्पयेत्। वृतिं तत्र प्रकुर्वीत यामुष्ट्रो नावलोकयेत्। तत्रापरिवृते धान्ये हिंसिते नैव दण्डनम्। गृहन्तड़ागमारामं क्षेत्रं वा भीषया हरन्। शतानि पञ्च दण्ड्यः स्यादज्ञानात् द्विशतो दमः। मर्यादाभेदकाः सर्वे दण्ड्याः प्रथमसाहसम्। शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति। वैश्यस्तु द्विशतं राम! शूद्रस्तु बधमर्हति। पञ्चाशद्ब्राह्मणो दण्ड्यः क्षत्रियस्याभिशंसने। वैश्ये चाप्यर्द्धपञ्चाशच्छूद्रे द्वादशको दमः। क्षत्रियक्षेपको वैश्यः साहसं पूर्वमेव तु। शूद्रः क्षत्रियमाक्रुश्य जिह्वाच्छेदमवाप्नुयात्। धर्मोपदेशं विप्राणां शूद्रः कुर्व्वंश्च दण्डभाक्। श्रुतदेशादिवितथी दाप्यो द्विगुणसाहसम्। उत्तमः साहसस्तस्य यः पातैरुत्तमान् क्षिपेत्। प्रमादाद्यैर्भयात् प्रोच्य प्रीत्या दण्डार्द्धमर्हति। मातरं पितरं ज्येष्ठं भ्रातरं श्वशुरं गुरुम्। आकारयञ्छतं दण्ड्यः पन्थानं चाददद्गुरोः। एकजातिर्द्विजातींस्तु येनाङ्गेनापराध्नुयात्। तदेव च्छेदयेत्तस्य क्षिप्रमेवाविचारयन्। अवनिष्ठीवतो दर्पाद्द्वावोष्ठौ छेदयेन्नृपः। अपमूत्रयतो मेढ्रमपशर्द्दयतो गुदम्। उत्कृष्टासनसंस्थस्य नीचस्याधोनिकृन्तनम्। यो यदङ्गं च रुजयेत्तदङ्गन्तस्य कर्त्तयेत्। अर्द्धपादकराः कार्या गोगजाश्वोष्ट्रघातकाः। वृक्षन्तु विफलं कृत्वा सुवर्णं दण्डमर्हति। द्विगुणं

दापयेच्छिन्ने पथि सीम्नि जलाशये। द्रव्याणि यो हरेद्यस्य ज्ञानतोऽज्ञानतोऽपि वा। स तस्योत्पाद्य तुष्टिन्तु राज्ञे दद्यात्ततो दमम्। यस्तु रज्जुं घटं कूपाद्धरेच्छिन्द्याच्च वा प्रपाम्। स दण्डं प्राप्नुयात् माषं दण्ड्यः स्यात् प्राणिताडने। धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिकं बधः। शेषेऽप्येकादशगुणं तस्य दण्डं प्रकल्पयेत्। सुवर्णरजतादीनां नृस्त्रीणां हरणे बधः। येन येन यथाङ्गेन स्तेनो नृषु विचेष्टते। तत्तदेव हरेदस्य प्रत्यादेशाय पार्थिवः। ब्राह्मणः शाकधान्यादि अल्पं गृह्णन्न दोषभाक्। गोदेवार्थं हरंश्चापि, हन्यादुष्टं बधोद्यतम्। गृहक्षेत्रापहर्त्तारं तथा पत्न्यभिगामिनम्। अग्निदं गरदं हन्यात्तथा चाभ्युद्यतायुधम्। राजगव्यभिचाराभ्यां हन्याच्चैवाततायिनम्। परस्त्रियं न भाषेत प्रतिषिद्धो विशेच्च हि। अदण्ड्या स्त्री भवेद्राज्ञा वरयन्ती पतिं स्वयम्। उत्तमां सेवमानः स्त्रीं जघन्यो बधमर्हति। भर्त्तारं लङ्घयेद्या तां श्वभिः सङ्घातयेत् स्त्रियम्। सवर्णदूषितां कुर्य्यात् पिण्डमात्रोपजीविनीम्। ज्यायसा दूषिता नारी मुण्डनं समवाप्नुयात्। वैश्यागमे तु विप्रस्य क्षत्रियस्यान्त्यजागमे। क्षत्रियः प्रथमं, वैश्यो दण्ड्यः शूद्रागमे भवेत्। गृहीत्वा वेतनं वेश्या लोभादन्यत्र गच्छति। वेतनन्द्विगुणं दद्याद्दण्डञ्च द्विगुणं तथा। भार्य्या पुत्राश्च दासाश्च शिष्यो भ्राता च सोदरः। कृतापराधास्ताड्याः स्यू रज्ज्वा वेणुदलेन वा। पृष्ठे, न मस्तके हन्याच्चौरस्याप्नोति किल्विषम्। रक्षास्वधिकृतैर्यैस्तु प्रजाऽत्यर्थं विलुप्यते। तेषां सर्वस्वमादाय राजा कुर्य्यात् प्रवासनम्। ये नियुक्ताः स्वकार्येषु हन्युः कार्य्याणि कर्मिणाम्। निर्घृणाः क्रूरमनसस्तान्निःस्वान् कारयेन्नृपः। अमात्यः प्राड्विवाको वा यः कुर्य्यात् कार्य्यमन्यथा। तस्य सर्वस्वमादाय तं राजा विप्रवासयेत्। गुरुतल्पे भगः कार्य्यः सुरापाने सुराध्वजः। स्तेयेषु श्वपदं विद्याद् ब्रह्महण्यशिरः पुमान्। शूद्रादीन् घातयेद्राजा पापान्, विप्रान् प्रवासयेत्। महापातकिनां वित्तं वरुणायोपपादयेत्। ग्रामेष्वपि च ये केचिच्चौराणां भक्तदायकाः। भाण्डारकोषदाश्चैव सर्वांस्तानपि घातयेत्। राष्ट्रेषु राजाधिकृतान् सामन्तान् पापिनो हरेत्। सन्धिं कृत्वा तु ये चौर्य्यं रात्रौ कुर्वन्ति तस्कराः। तेषां छित्वा नृपो हस्तौ तीक्ष्णे शूले निवेशयेत्। तडागदेवतागारभेदकान् घातयेन्नृपः। समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि। स हि कार्षापणन्दण्ड्यस्तममेध्यञ्च शोधयेत्। प्रतिमासङ्क्रमभिदो दद्युः पञ्च शतानि ते। समेषु विषमं यो वा चरते मूल्यतोऽपि वा। समाप्नुयान्नरः पूर्वं दमं मध्यममेव वा। द्रव्यमादाय वणिजामनर्घेणावरुन्धताम्। राजा पृथक् पृथक् कुर्य्याद्दण्डमुत्तमसाहसम्। द्रव्याणां दूषको यश्च प्रतिच्छन्दकविक्रयी। मध्यमं प्राप्नुयाद्दण्डं कूटकर्त्ता तथोत्तमम्। कलहापहृतं देयं दण्डश्च द्विगुणस्ततः। अभक्ष्यभक्षे विप्रे वा शूद्रे वा कृष्णलो दमः। तुलाशासनमानानां कूटकृन्नाणकस्य च। एभिश्च व्यवहर्त्ता यः स दाप्यो दममुत्तमम्। विषाग्निदां पतिगुरुविप्रापत्यप्रमापिणीम्। विकर्णकरनासौष्ठीं कृत्वा गोभिः प्रवासयेत्। क्षेत्रवेश्मवनग्रामविदाहकास्तथा नराः। राजपत्न्यभिगामी च दग्धव्यास्तु कटाग्निना। ऊनं वाप्यधिकं वापि लिखेद्यो राजशासनम्। पारजायिकचौरौ च मुञ्चतो दण्ड उत्तमः। राजयानासनारोढुर्दण्ड उत्तमसाहसः। यो मन्येताजितोऽस्मीति न्यायेनापि पराजितः। तमायान्तं पराजित्य दण्डयेद् द्विगुणं दमम्। आह्वानकारी वध्यः स्यादनाहूतमथाह्वयन्। दाण्डिकस्य च यो हस्तादभिमुक्तः पलायते। हीनः पुरुषकारेण तद् दद्याद्दाण्डिको धनम्"। "दण्डो दमयतामस्मि" गीता। "दण्डवत्प्रायश्चित्तानि भवन्ति" प्रा० वि० धृतवाक्यम् कुलालचक्रार्थे "कलसे निजहेतुदण्डजः किमु चक्रभ्रमिकारिता गुणः" नैष०। दण्ड्यतेऽनेन करणे घञ्। २५देहे दण्डपारुष्यशब्दे मिता०। २६द्वापरोद्भवे नृपभेदे। "क्रोधहन्तेति यस्तस्य बभूवावरजोऽसुरः। दण्ड इत्यभिविख्यातः सोऽभवन्मनुजर्षभः" भा० आ० ६७ अ०। "बधः पाण्ड्यस्य च तथा अश्वत्थाम्ना महात्मना। दण्डसेनस्य च ततो दण्डस्य च बधस्तथा" भा० आ० १ अ०। दण्डयति कर्त्तरि-अच्। २७नृपे दण्डनीतिशब्दे कामन्द०। अस्य शब्दस्य शब्दकल्पद्रुमदृष्ट्या शरणागतत्राणार्थतोक्तिः प्रामादिकी तत्प्रमाणवाक्ये दत्तमित्यभिधीयते इत्येव पाठः साधुः। लिपिकरप्रमादात् दत्तमित्यत्र दण्डमिति पाठ इति बोध्यम् दत्तशब्दे दृश्यम्।

**दण्डक** पु० दण्ड+स्वार्थे क। इक्ष्वाकुराजपुत्रभेदे "दण्ड-

को नृपतिः कामात् क्रोधाच्च जनमेजयः” कामन्दकी । जनस्थानशब्दे दृश्यम् । ह्रस्वो दण्डः अल्पार्थे कन् । २ह्रस्वलगुडे (सोँटा) । ३षड्विंशत्यक्षराधिकपादके चण्डप्रयातादौ छन्दोभेदे । “यदिह नयुगलं ततः सप्तरेफास्तदा चण्डप्रयातो भवेद्दण्डकः” वृ०र० । ४दण्डनृपकृते सन्निवेशे पु० । “दण्डकानध्यवात्तां यौ” भट्टिः पुंस्त्वेन बहुवचनान्ततया जयमङ्गलः पपाठ । “पराक्रमात् जिगमिषुरेव दण्डकान्” रामा० अयो० २१स० ६४ श्लो० । “प्राप्तानि दुःखान्यपि दण्डकेषु” रघुः । तद्भिन्नपरत्वे स्त्री त्रिका० “भरतस्तु दण्डकामध्यवात्तां यौ” इति पपाठ उदाजहार च “कायोध्यायाः पुनरुपगमो दण्डकायावने वः” भवभूतिवाक्यम् । तच्च वनं वृ० स० १४० अ० कूर्मवि०दक्षिणस्यामुक्तं यथा “बलदेवपट्टनदण्डकावनतिमिङ्गिलाशना भद्रा.” । [कन्दे राजनि०।

**दण्डकन्दक** पु० दण्डः प्रकाण्डः कन्दोऽस्य कप् । भूमि-

**दण्डकाक** पुंस्त्री० दण्डः यम इव कृष्णत्वात् काकः । (डाँड) काकभेदे हेमच०। [वर्त्तयिनी” भा०व०४३ अ० ।

**दण्डगौरी** स्त्री अप्सरोभेदे “उर्वशी मिश्रकेशी च दण्डगौरी

**दण्डग्राह** त्रि० दण्डं गृह्णाति ग्रह—अण् उप० स० । दण्डधारके ततः रेवत्या० अपत्यादौ ठक् । दाण्डग्राहिक तदपत्यादौ पुंस्त्री० ।

**दण्डघ्न** त्रि० दण्डेन देहेन हन्ति हन—क । देहेन घातिनि दण्डपारुष्यकर्त्तरि । “न साहसिकदण्डघ्नौ स राजा शक्रलोकभाक्” मनुः । [वाद्यभेदे त्रिका० ।

**दण्डढक्का** स्त्री दण्डा प्रकाण्डा ढक्का । (दामामा) ख्याते

**दण्डताम्री** स्त्री ताम्रेण निर्वृत्ता अण् ङीप् दण्डा प्रकाण्डा ताम्री । ताम्रीवाद्यभेदे शब्दर० ।

**दण्डदास** पु० दण्डेन कृतो दासः । दण्डद्रव्यदानासामर्थ्येन तच्छोधनार्थं स्वीकृतदासभावे दासभेदे “ध्वजाहृतो भक्तदासो गृहजः क्रीतदत्त्रिमौ । पैतृको दण्डदासश्च सप्तैते दासयोनयः” मनुः । “दण्डादिधनशुद्ध्यर्थं स्वीकृतदासभावः” कुल्लू० ।

**दण्डधर** पु० दण्डं लोकानां कर्मानुसारिणं दण्डं लगुडं वा धरति धर—अच् ६त० । १यमे अमरः २नृपे । ३लगुडधारके त्रि० । “अमदुढं मनुदण्डधरान्वयम्” रघुः । “ईशो दण्डस्य वरुणो राज्ञां दण्डधरो हि सः” मनुः । “नाहं दण्डधरस्तव” भा० शा० २२ अ० ।

**दण्डधार** पु० दण्डं धरति धृ—अण् उप० स०। १यमे २नृपे च मेदि० । ३लगुडहस्ते त्रि० “क्रोधवर्द्धन इत्येव यस्त्वन्यः परिकीर्त्तितः । दण्डधार इति ख्यातः स आसीत् नृपतिः क्षितौ” भा०आ०६७अ० उक्ते ४नृपभेदे पु० ५धृतराष्ट्रपुत्रभेदे । “कवची निषङ्गी दण्डी दण्डधारो धनुर्ग्रहः” ६७अ० धृतराष्ट्रपुत्रकथने ।

**दण्डनायक** पु० दण्डं नयति नी—ण्वुल् ६त० । १सेनान्याम् हेमच० । दण्डप्रणेतरि २नृपे च ।

**दण्डनीति** स्त्री दण्डो नीयतेऽनया नी—करणे क्तिन् । विद्याभेदे । “एकैव दण्डनीतिस्तु विद्येत्यौशनसी स्थितिः । तस्यां हि सर्वविद्यानामारम्भाः समुदाहृताः” । “दमो दण्ड इति ख्यातस्तात्स्थ्याद्दण्डो महीपतिः । तस्य नीतिः दण्डनीतिर्नयनान्नीतिरुच्यते” काम० नीतिः । तच्छास्त्रविषयविभागादि भा० शा० ५९ अ० उक्तं यथा

“ततोऽध्यायसहस्राणां शतञ्चक्रे स्वबुद्धिजम् । यत्र धर्मस्तथैवार्थः कामश्चैवाभिवर्णितः । त्रिवर्ग इति विख्यातो गण एष स्वयम्भुवा । चतुर्थो मोक्ष इत्येव पृथगर्थः पृथग्गुणः । मोक्षस्यापि त्रिवर्गोऽन्यः प्रोक्तः सत्त्वं रजस्तमः । स्थानं वृद्धिः क्षयश्चैव त्रिवर्गश्चैव दण्डजः । आत्मा देशश्च कालश्चाप्युपायाः कृत्यमेव च । सहायाः कारणञ्चैव षड्वर्गो नीतिजः स्मृतः । त्रयी चान्वीक्षिकी चैव वार्त्ता च भरतर्षभ ! । दण्डनीतिश्च विपुला विद्यास्तत्र निदर्शिताः । अमात्यरक्षा प्रणिधी राजपुत्रस्य लक्षणम् । चारश्च विविधोपायः प्रणिधेयः पृथग्विधः। साम भेदः प्रदानञ्च ततो दण्डश्च पार्थिव ! । उपेक्षा पञ्चमी चात्र कार्त्स्न्येन समुदाहृता । मन्त्रश्च वर्णितः कृत्स्नस्तथा भेदार्थ एव च । विभ्रमश्चैव मन्त्रस्य सिद्ध्यसिद्ध्योश्च यत् फलम् । सन्धिश्च त्रिविधाभिख्यो हीनो मध्यस्तथोत्तमः । भयसत्कारवित्ताख्यः कार्त्स्न्येन परिवर्णितः । यात्राकालाश्च चत्वारस्त्रिवर्गस्य च विस्तरः । विजयो धर्मयुक्तश्च तथार्थविजयश्च ह । आसुरश्चैव विजयस्तथा कार्त्स्न्येन वर्णितः । लक्षणं पञ्चवर्गस्य त्रिविधञ्चात्र वर्णितम् । प्रकाशश्चाप्रकाशश्च दण्डोऽथ परिशब्दितः । प्रकाशोऽष्टविधस्तत्र गुह्यस्य च सुविस्तरः । रथा नागा हयाश्चैव पादाताश्चैव पाण्डव ! । विष्टिर्नावश्चराश्चैव दैशिका इति चाष्टमम् । अङ्गान्येतानि कौरव्य ! प्रकाशानि बलस्य तु । जङ्गमाजङ्गमाश्चोक्ताश्चूर्णयोगा विषादयः । स्पर्शे चाभ्यवहार्ये चाप्युपांशुस्त्रिविधः स्मृतः । अरिर्मित्रमुदासीन इत्येतेऽप्यनुवर्णिताः ।

कृत्स्ना मार्गगुणाश्चैव तथा भूमिगुणाश्च ह। आत्मरक्षणमाश्वासः स्पशानाञ्चान्ववेक्षणम्। कल्पना विविधाश्चापि नृनागरथवाजिनाम्। व्यूहाश्च विविधाभिख्या विचित्रं युद्धकौशलम्। उत्पाताश्च निपाताश्च सुयुद्धं सुपलायितम्। शस्त्राणां पालनं ज्ञानं तथैव भरतर्षभ!। बलव्यसनमुक्तञ्च तथैव बलहर्षणम्। पीड़ातापत्कालश्च पत्तिज्ञानञ्च पाण्डव!। तथा खातविधानञ्च योगसञ्चार एव च। चौरैराटविकैश्चोग्रैः परराष्ट्रस्य पीड़नम्। अग्निदैर्गरदैश्चैव प्रतिरूपककारकैः। श्रेणीमुख्योपजापेन वीरुधच्छेदनेन च। भूषणेन च नागानामातङ्कजननेन च। आराधनेन भक्तस्य प्रत्ययोपार्ज्जनेन च। सप्ताङ्गस्य च राज्यस्य ह्रासवृद्धी समञ्जसम्। कृतसामर्थ्ययोगाच्च राष्ट्रस्य च विवर्द्धनम्। अरिमध्यस्थमित्राणां सम्यक् चोक्तं प्रपञ्चनम्। अवमर्द्दः प्रतीघातस्तथा चैव बलीयसाम्। व्यवहारः सुसूक्ष्मश्च तथा कण्टकशोधनम्। श्रमो व्यायामयोगश्च त्यागो द्रव्यस्य संग्रहः। अभृतानाञ्च भरणं भृतानाञ्चान्ववेक्षणम्। अर्थस्य काले दानञ्च व्यसने चाप्रसङ्गिता। तथा राजगुणाश्चैव सेनापतिगुणाश्च ह। कारणञ्च त्रिवर्गस्य गुणा दोषास्तथैव च। दुष्टेप्सितञ्च विविधं वृत्तिश्चैवानुवर्त्तिनाम्। शङ्कितत्वञ्च सर्वस्य प्रमादस्य च वर्ज्जनम्। अलब्धलाभो, लब्धस्य तथैव च विवर्द्धनम्। प्रदानञ्च विवृद्धस्य पात्रेभ्यो विधिवत्ततः। विसर्गोऽर्थस्य धर्म्मार्थं कामहेतुकमुच्यते। चतुर्थं व्यसनाघाते तथैवात्रानुवर्णितम्। क्रोधजानि तथोग्राणि कामजानि तथैव च। दशोक्तानि कुरुश्रेष्ठ! व्यसनान्यत्र चैव ह। मृगयाक्षास्तथा पानं स्त्रियश्च भरतर्षभ!। कामजान्याहुराचार्य्याः प्रोक्तानीह स्वयम्भुवा। वाक्पारुष्यं तथोग्रत्वं दण्डपारुष्यमेव च। निग्रहोऽप्यात्मनस्त्यागमर्थदूषणमेव च। यन्त्राणि विविधान्येव क्रियास्तेषाञ्च वर्णिताः। अवमर्द्दः प्रतीघातः केतनानाञ्च भञ्जनम्। चैत्यद्रुमावमर्द्दश्च रोधः कर्म्मानुशासनम्। अपस्करोऽथ गमनं तथोपायाश्च वर्णिताः। पणवानकशङ्खानां भेरीणाञ्च युधिष्ठिर!। उपार्जनञ्च द्रव्याणां परिमर्द्दश्च तानि षट्। लब्धस्य च प्रशमनं सताञ्चैवाभिपूजनम्। विद्वद्भिरेकीभावश्च दानहोमविधिज्ञता। मङ्गलालम्भनञ्चैव शरीरस्य प्रतिक्रिया। आहारयोजनञ्चैव नित्यमास्तिक्यमेव च। एकेन च यथोत्थेयं सत्यत्वं मधुरं गिरः। उत्सवानां समाजानां क्रियाकेतनजास्तथा। प्रत्यक्षाश्च परोक्षाश्च सर्वाधिकरणेष्वथ। वृत्ते भरतशार्दूल! नित्यञ्चैवान्ववेक्षणम्। अदण्ड्यत्वञ्च विप्राणां युक्त्या दण्डनिपातनम्। अनुजीविस्वजातिभ्यो गुणेभ्यश्च समुद्भवः। रक्षणञ्चैव पौराणां राष्ट्रस्य च विवर्द्धनम्। मण्डलस्था च या चिन्ता राजन्! द्वादशराजिका। द्वासप्ततिविधा चैव शरीरस्य प्रतिक्रिया। देशजातिकुलानाञ्च धर्म्माः समनुवर्णिताः। धर्मश्चार्थश्च कामश्च मोक्षश्चात्रानुवर्णितः। उपायश्चार्थलिप्सा च विविधा भूरिदक्षिणा। मूलकर्मक्रिया चात्र मायायोगश्च वर्णितः। दूषणं स्रोतसाञ्चैव वर्णितं च स्थिराम्भसाम्। यैर्यैरुपायैर्लोकस्तु न चलेदार्य्यवर्त्मनः। तत्सर्वं राजशार्दूल! नीतिशास्त्रेऽभिवर्णितम्। एतत् कृत्वा शुभं शास्त्रं ततः स भगवान् प्रभुः। देवानुवाच संहृष्टः सर्वाञ्छक्रपुरोगमान्। उपकाराय लोकस्य त्रिवर्गस्थापनाय च। नवनीतं सरस्वत्या बुद्धिरेषा प्रभाविता। दण्डेन सहिता ह्येषा लोकरक्षणकारिका। निग्रहानुग्रहरता लोकाननुचरिष्यति। दण्डेन नीयते चेदं दण्डं नयति वा पुनः। दण्डनीतिरिति ख्याता त्रींल्लोकानतिवर्त्तते। षाड्गुण्यगुणसारैषा स्थास्यत्यग्रे महात्मसु। धर्म्मार्थकाममोक्षाश्च सकला ह्यत्र शब्दिताः। ततस्तां भगवान्नीतिं पूर्वं जग्राह शङ्करः। बहुरूपो विशालाक्षः शिवः स्थाणुरुमापतिः। प्रजानामायुषो ह्रासं विज्ञाय भगवान् शिवः। सञ्चिक्षेप ततः शास्त्रं महार्थं ब्रह्मणा कृतम्। वैशालाक्षमिति प्रोक्तं तदिदं प्रत्यपद्यत। दशाध्यायसहस्राणि सुब्रह्मण्यो महातपाः। भगवानपि तच्छास्त्रं सञ्चिक्षेप पुरन्दरः। सहस्रैः पञ्चभिस्तात! यदुक्तं बाहुदन्तकम्। अध्यायानां सहस्रैस्तु त्रिभिरेव बृहस्पतिः। सञ्चिक्षेपेश्वरो बुद्ध्या बार्हस्पत्यं यदुच्यते। अध्यायानां सहस्रेण काव्यः संक्षेपमब्रवीत्। तच्छास्त्रममितप्रज्ञो योगाचार्य्यो महायशाः। एवं लोकानुरोधेन शास्त्रमेतन्महर्षिभिः। संक्षिप्तमायुर्विज्ञाय मर्त्यानां ह्रासमेव च।"

२दुर्गायाम् "नयानयगता लोके विकल्पनिलयामला। दण्डनाद्दमनाद्वापि दण्डनीतिरिति स्मृता" देवीपु०४५ अ० भावे क्तिन्। ३दण्डप्रणयने स्त्री।

**दण्डनेतृ** न० दण्डं नयति अपराधिनम् नी—तृच् ६त०। दण्डप्रणायके नृपे। "सैन्यापत्यञ्च राज्यञ्च दण्डनेतृत्वमेव च" मनुः।

**दण्डप** पु० दण्डेन पाति पा—क। दण्डेन पालके नृपे तस्यापत्यं नडा०फक्। दाण्डपायन तदपत्ये पुंस्त्री।

**दण्डपांशुल** पु० दण्डेन यष्टिधारणेन पांशुलः अधमः। द्वारपाले शब्दर०।

**दण्डपाणि** पु० दण्डः यष्टिः पाणौ यस्य। दण्डधरे यमे। काशीस्थे २भैरवभेदे "विश्वेशं माधवं ढुण्ढिं दण्डपाणिञ्च भैरवम्" स च पूर्णभद्रयक्षसुतो हरिकेशनामा आराधितशिववरेण काश्यां दण्डपाणिनामत्वमवाप। यथाह काशीख० ३२ अ० "इति श्रुत्वा वचः पत्न्याः पूर्णभद्रः स यक्षराट्" इत्युपक्रमे "अन्तर्वत्न्यथ कालेन तत्पत्नी सुषुवे सुतम्। तस्य नाम पिता चक्रे हरिकेश इति द्विज!" इत्यनेन तस्योत्पत्तिमुक्त्वा तस्य शिवाराधनमुपवर्ण्य तपसाप्रसन्नशिवस्य तस्मै वरदानमुक्तं यथा "भक्तस्य धीरस्य तपोनिधेर्देवो हरो वराणां निकरं तदा ददे। क्षेत्रस्य यक्षास्य मम प्रियस्य भो भवाधुना दण्डधरो वरान्मम। स्थिरत्वमद्यादि दुरात्मदण्डकः सुपालकः पुण्यकृताञ्च मत्प्रियः। त्वं दण्डपाणिर्भव नामतोऽधुना सर्वान् गणान् शाधि ममाज्ञयोत्कटान्। त्वत्सात्कृतक्षेत्रवरेऽद्य यक्षराट् कल्याममनाराध्य सुमुक्तिभाजनम्। समाजनं प्रागत एव ते चरेत् ततः समर्च्चो मम भक्त आदरात्। मद्भक्तियुक्तोऽपि विना त्वदीयां भक्तिं न काशीवसतिं लभेत। गणेषु देवेषु हि मानवेषु तदग्रमान्यो भव दण्डपाणे"। काश्यां तत्स्थितिस्थानञ्च तत्रैवोक्तं यथा "त्वं दक्षिणस्यां दिशि दण्डपाणे! सदैव मे नेत्रपथमवाप्नुत। त्वं दण्डयन् प्राणभृतो दुरीहानिहास्व निस्तानभयं दिशन् वै"।

**दण्डपारुष्य** न० दण्डेन देहेन पारुष्यम्। व्यवहारविषयभेदे "तत्स्वरूपञ्च नारदेनोक्तम् "परगात्रेष्वभिद्रोहो हस्तपादायुधादिभिः भस्मादिभिश्चोपघातो दण्डपारुष्यमुच्यते" इति। "परगात्रेषु स्थावरजङ्गमात्मकद्रव्येषु हस्तपादायुधैरादिग्रहणाद्ग्रावादिभिर्योऽभिद्रोहो हिंसनं दुःखोत्पादनं तथा भस्मना आदिग्रहणाद् रजःपङ्कपुरीषाद्यैश्च य उपघातः संस्पर्शनरूपं मनोदुःखोत्पादनन्तदुभयं दण्डपारुष्यम्। दण्ड्यतेऽनेनेति दण्डो देहस्तेन यत् पारुष्यं विरुद्धाचरणं जङ्गमादेर्द्रव्यस्य, तद्दण्डपारुष्यम्" मिता०।

तद्भेदादिकं वीरमि० उक्तं यथा

"तस्य त्रैविध्यमाह नारदः। "तस्यापि दृष्टन्त्रैविध्यं हीनमध्योत्तमक्रमात्। अवगोरणनिःशङ्कपातनक्षतदर्शनैः। हीनमध्योत्तमानाञ्च द्रव्याणां समतिक्रमात्। त्रीण्येव साहसान्याहुस्तत्र कण्टकशोधनमिति"। अवगोरणं ताडनाद्युद्योगः। निःशङ्कपातनं निःशङ्कप्रहरणम्। त्रीण्येव साहसानि त्रिप्रकाराण्येव सहसाकृतानि दण्डपारुष्याणीत्यर्थः। अन्यानपि भेदानाह परिशिष्टकारः। "दुःखं रक्तं व्रणं भङ्गं छेदनं भेदनन्तथा। कुर्य्याद्यः प्राणिनां तद्धि दण्डपारुष्यमुच्यते"। स्थावरजङ्गमप्राणिनां प्राण्यन्तरकृतनखादिना छेदनादिभवं दुःखं रक्तव्रणादिकञ्च दण्डपारुष्यमुच्यत इत्यर्थः। व्यासोऽपि "भस्मादिना प्रक्षिपणी ताडनञ्च करादिना। आवेष्टनञ्चांशुकाद्यैर्दण्डपारुष्यमुच्यते"। आदिग्रहणाद्दुःखकरं कर्दमपांशुमलादि द्रव्यं गृह्यते। करादिनेत्यादिशब्देन पाषाणेष्टकायुधादि द्रव्यम्। अंशुकाद्यैरित्यादिशब्देन रज्जुशृङ्खलादिद्रव्यम्। दण्डपारुष्यस्य पञ्चप्रकारा विषयो नारदेन दर्शिताः। "विधिः पञ्चविधस्तूक्त एतयोरुभयोरपि। पारुष्ये सति संरम्भादुत्पन्ने क्रुद्धयोर्द्वयोः। स मान्यते यः क्षमते दण्डभाग्योऽतिवर्त्तते। पूर्वमाचारयेद्यस्तु नियतं स्यात् स दोषभाक्। पश्चाद्यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः। द्वयोरापन्नयोस्तुल्यमनुबध्नाति यः पुनः। स तयोर्दण्डमाप्नोति पूर्वो वा यदि वेतरः। पारुष्यदोषावृतयोर्युगपत्सम्प्रवृत्तयोः। विशेषश्चेन्न लक्ष्येत विनयः स्यात् समस्तयोः। श्वपाकषण्डचाण्डालव्यङ्गेषु वधवृत्तिषु। हस्तिपव्रात्यदासेषु गुर्वाचार्य्यनृपेषु च। मर्य्यादातिक्रमे सद्यो घात एवानुशासनम्। यमेव ह्यतिवर्त्तेरन्नेते सन्तञ्जनं नृषु। स एव विनयं कुर्य्यात् न तद्विनयभाङ्नृपः। मला ह्येते मनुष्याणां धनमेषां मलात्मकम्। अतस्तान् घातयेद्राजा नार्थदण्डेन दण्डयेदिति"। अयमर्थः। वाग्दण्डपारुष्ययोरुभयोरपि द्वयोः प्रवृत्तकलहयोर्मध्ये यः क्षमते न तस्य केवलं दण्डाभाव एव किन्तु पूज्यत्वमपि। तथा पूर्वं कलहे प्रवृत्तस्य दण्डगुरुत्वम्। कलहे च दृढवैरानुबन्धात्तुरेव दण्डभाक्त्वम्। तथा तयोर्द्वयोरपराधविशेषापरिज्ञाने सम एव दण्डः। तथा श्वपचादिभिरार्य्याणामपराधे कृते सज्जना एव दण्डने अधिकारिणस्तेषामशक्यत्वे तान् राजा घातयेदेव नार्थं गृह्णीयादिति।

यत्तु बृहस्पतिवचनम् "आक्रुष्टस्तु समाक्रोशं ताडितः प्रतिताडयन्। हत्वापराधिनञ्चैव नापराधी भवेन्नरः" इति। तत्पूर्वप्रवृत्तस्य समो दण्डः पश्चात् प्रवृत्तस्य नेत्येवंपरञ्च तु दण्डाभावपरम्। दण्डपारुष्य स्वरूपसन्देहे निर्णयक्रमाह याज्ञवल्क्यः "असाक्षिकहते चिह्नैर्युक्तिभिश्चागमेन च। द्रष्टव्यो व्यवहारस्तु कूटचिह्नकृतो भयादिति"। यदा कश्चिद्दण्ड-हमनेनाहत इति राज्ञे निवेदयति तदा चिह्नैर्व्रणादिभिस्तत्स्वरूपगतैर्लिङ्गैः युक्तिभिः कारणप्रयोजनपर्यालोचनादिभिः आगमेन जनप्रवादेन चशब्दाद्दिव्येन वा कूटचिह्नकृतसम्भावनभयात् परीक्षा कार्य्येत्यर्थः।

**दण्डपाल** पु० दण्डं देहं पालयति भक्षणात् पालि-अण् उप० स०। (डाड़िकोणा) मत्स्यभेदे हारा० तद्भोजिनो रोगिणो देहस्वास्थ्यजननात्तस्य तथात्वम्। संज्ञायां कन्। दण्डपालक शकुलमत्स्यभेदे हारा०। उभयमपि दण्डनायके।

**दण्डपिङ्गलक** पु०दण्डः देहः पिङ्गलोऽत्र। उत्तरस्थदेशभेदे "उत्तरतः कैलासः" इत्युपक्रमे वृ० स० १४ अ० कूर्मविभागे "पौरवकवचदारुदण्डपिङ्गलकाः" उक्तः।

**दण्डबालधि** पु० दण्ड इव बालधिरस्य। हस्तिनि शब्दर०। तस्य लाङ्गूलस्य दण्डाकारत्वात् तथात्वम्।

**दण्डबाहु** त्रि० दण्ड इव बाहुरस्य। १दण्डाकारबाहुयुक्ते २कुमारानुचरभेदे पु०। "दण्डबाहुः सुबाहुश्च रजःकोकिल एव च" भा० श० ४६ अ० कुमारानुचरोक्तौ।

**दण्डभृत्** त्रि० दण्डं यष्टिं लोकदमनं वा बिभर्त्ति भृ-क्विप्। १यष्टिधारके २यमे त्रिका०।

**दण्डमत्स्य** पु०दण्ड इव मत्स्यः। दण्डाकारे शकुलमत्स्ये। "दण्डमत्स्यो रसे तिक्तः पित्तरक्तं कफं हरेत्। वातसाधारणः प्रोक्तः शुक्रलो बलवर्द्धनः" राजव०।

**दण्डमान(ण)व** पु० दण्डप्रधानो मान(ण)वः शा० त०। दण्डप्रधाने जने बालके च तदर्थपरतायां गोत्रप्रत्ययान्तशब्दात् "दण्डमान(ण)वान्तेवासिषु" पा० न वुञ्। दाक्षा दण्डमान(ण)वाः शिष्या वा" सि० कौ०।

**दण्डमातङ्ग** पु० पिण्डतगरे पारस्करनिघण्टुः।

**दण्डमाथ** पु० दण्डाकारो माथः पन्थाः शा० त०। प्रधानपथे दण्डमाथं धावति ठक्। दाण्डमाथिक तत्धावके त्रि०।

**दण्डमुद्रा** स्त्री दण्डाकारा मुद्रा "उत्तानोद्धृष्टा मध्या सरला बद्धमुष्टिका। दण्डमुद्रा समाख्याता" तन्त्रसारोक्ते मुद्राभेदे।

**दण्डयात्रा** स्त्री दण्डार्थं शत्रुदमनार्थं दण्डा प्रकाण्डा वा यात्रा। १जिगीषोर्यात्रायां २सम्यग्गमने ३वरयात्रायाञ्च मेदि०।

**दण्डयाम** पु० दण्डेन यच्छति यम-बा० कर्त्तरि यम-घञ्। १यमे २दिने। दण्डे इन्द्रियदमने यामः संयमो यस्य। ३अगस्त्ये मुनौ च मेदि०।

**दण्डरी** स्त्री दण्डं तदाकारं राति रा-क गौरा० ङीष्। (डङ्गरा) इतिनामके वृक्षे राजनि०।

**दण्डवादिन्** पु० दण्डेन तदुत्तोलनेन वदति वद-णिनि। १द्वारपाले हारा०२दण्डवक्तरि प्राड्विकादौ च।

**दण्डवासिन्** पु० दण्डे दण्डनिमित्तं वसति द्वारदेशे वस-णिनि। १द्वारपाले त्रिका०। २एकग्रामदण्डनेऽधिकृते जने जटा०।

**दण्डविष्कम्भ** पु० दण्डं मन्थानदण्डं विष्कम्नाति वि+स्कन्भ-अण् उप० स०। (बोलमओयार खुँटि) तक्रमन्थनार्थं रज्ज्वा दण्डाकर्षणार्थे मन्थानबन्धनहेतौ स्तम्भभेदे अमरः।

**दण्डवृन्त** पु० दण्डाकारः पत्रादिहीनत्वात् वृन्तः। स्नुहीवृक्षे। स्वार्थे क। स्नुहीवृक्षे राजनि०। तस्य पत्रशून्यत्वेन दण्डाकारत्वात्तथात्वम्।

**दण्डव्यूह** पु० दण्डसंज्ञको व्यूहः। व्यूहभेदे दण्डशब्दे दृश्यम्। "दण्डव्यूहेन तन्मार्गं यायात्तु शकटेन वा" मनुः। "दण्डाकृतिरचनो दण्डव्यूहः" कुल्लू०। यत्राग्रे बलाध्यक्षो मध्ये राजा पश्चात् सेनापतिः पार्श्वयोर्हस्तिनस्तत्समीपे घोटकास्ततः पदातयः इत्येवं कृतरचनो दीर्घः सर्वतः समविन्यासो दण्डव्यूह उच्यते। तेन यातव्यं मार्गं सर्वतोभये सति यायात्" तदर्थः।

**दण्डसहाय** पु० दण्डे सहायः। दुष्टनिग्रहादौ राज्ञा सहाये। स च सहाया इत्युपक्रमे "दण्डेषु सुहृत्कुमाराटविकाः सामन्तकाद्याश्चेति" सा० द० उक्तः।

**दण्डसेन** पु० पौरवे विष्वक्सेनसुते नृपभेदे विष्वक्सेनस्य पुत्रोऽभूत् दण्डसेनो महीपतिः" हरिवं०२०अ० २द्वापरयुगीये नृपभेदे च। वध पाण्डस्य च तथा अश्वत्थाम्नः महात्मनः। दण्डसेनस्य च ततो दण्डस्य च वधस्तथा" भा० आ० १ अ०।

**दण्डस्थान** न०६त०। मनूक्तेषु दशसु दण्डस्थानेषु उपस्थादिषु

दश स्थानानि दण्डस्येत्यादिवाक्यं दण्डशब्दे दृश्यम् ।

**दण्डहस्त** पु॰ दण्ड इव हस्तो हस्तमस्य । तगरपुष्पे राजनि॰ ।

**दण्डाख्य** न॰ चम्पानदीसमीपस्थे तीर्थभेदे । “तथा चम्पां समासाद्य भागीरथ्यां कृतोदकः । दण्डाख्यमभिगम्यैव गोसहस्रफलं लभेत्” भा॰ व॰ ८५ अ॰ । दण्डार्कमित्यपि तत्र पाठान्तरम् ।

**दण्डाजिन** न॰ दण्डश्चाजिनञ्च समा॰ द्व॰ । १दण्डचर्मणोः समाहारे । तत् छलेन धार्य्यतयाऽस्त्यस्य अच् । २शाठ्ये शब्दार्थचि॰ ।

**दण्डादण्डि** अव्य॰ दण्डैश्च दण्डैश्च प्रहृत्येदं प्रवृत्तं युद्धम् “क्रियाव्यतिहारे इच् समा॰ पूर्वपददीर्घः । परस्परदण्डकरणकप्रहारपूर्वकं प्रवृत्ते युद्धे ।

**दण्डादि** न॰ “दण्डादिभ्यो यत्” पा॰ अर्हार्थे यत्प्रत्ययनिमित्ते शब्दगणे स च पा॰ ग॰ सू॰ उक्तो यथा “दण्ड, मुसल, मधुपर्क, कशा, अर्घ, मेधा, मेघ, सुवर्ण, उदक, वध, युग, गुहा, भाग, इभ, भङ्ग” ।

**दण्डापूप** पु॰ दण्डे दण्डाकर्षे अपूपस्य तत्सम्बद्धस्यापूपस्याकर्षः । दण्डाकर्षणे अर्थसिद्धे तत्सम्बद्धापूपस्याकर्षे । तत्प्रतिपादकः न्यायः दण्डापूपन्यायः । यथा “भुञ्जीतामरणात् क्षान्तेति” वचनेन जाताधिकारायाः पत्न्या अभावे अनुत्पन्नाधिकारपत्न्यभावोक्तानां पूर्वधनस्वामिदायग्राहिणां दुहित्रादीनां धनाधिकारस्य दर्शितत्वात् पत्नीतो जघन्यदुहितृदौहित्रयोरधिकारे दण्डापूपन्यायसिद्धोऽयमर्थः” “स्थावरपदाद्दण्डापूपन्यायादेवापरस्य धनस्य सिद्धिः” दा॰ भा॰ दण्डापूप इवाचरति क्यच् ततः कर्त्तरि क्तः । दण्डापूपायित-दण्डापूपवदाचरिते पदार्थे “पत्न्या च भर्त्तृधनात् कन्यायै विवाहार्थं तुरीयांशो देयः. पुत्राणामेव तद्दानप्रतिपादनात् दण्डापूपायितं पत्न्यादीनां दानम्” दा॰ भा॰ । “यथा दण्डाकर्षे तत्सम्बद्धस्यापूपस्याप्याकर्षः तथा अपुत्रसंक्रान्तधनस्य पत्नीगततया आकर्षे तत्सम्बद्धस्य कन्याविवाहधनावशिष्टत्वविशेषस्याप्याकर्ष इति भावः” श्रीकृष्णः ।

**दण्डार** त्रि॰ दण्डमृच्छति ऋ—अण् उप॰ स॰ । दण्डप्राप्ते । २मत्तहस्तिनि शब्दर॰ । ३कुम्भकारचक्रे ४यन्त्रभेदे ५वाहने पु॰ मेदि॰ ।

**दण्डार्क** न॰ चम्पानदीसमीपस्थे तीर्थभेदे “अथ चम्पां समासाद्य भागीरथ्यां कृतोदकः । दण्डार्कमभिगम्याथ गोसहस्रफलं लभेत्” भा॰ व॰ ८३ अ॰ । दण्डाख्यमिति वा पाठः

**दण्डापतानक** पु॰ सुश्रुतोक्ते वातरोगभेदे “कफान्वितो भृशं वायुस्तास्वेव यदि तिष्ठति । स दण्डवत्स्तम्भयति कृच्छ्रो दण्डापतानकः” ।

**दण्डासन** न॰ आसनभेदे हेमच॰ ।

**दण्डाहत** न॰ दण्डेन मन्थानयष्ट्याऽऽहतम् । (घोल) मन्थनदण्डेनालोडिते तक्रे अमरः ।

**दण्डिक** त्रि॰ दण्डोऽस्त्यस्य ठन् । १दण्डधारके (डाडिकोषा) २मत्स्यभेदे राजनि॰ ३हारभेदे स्त्री जटाधरः । ४रज्ज्वां सुपद्मव्या॰ वृत्तिः ।

**दण्डिन्** पु॰ दण्ड+अस्त्यर्थे इनि । १यमे, हेमच॰ २नृपे, ३द्वारपाले, ४मञ्जुघोषे, ५रवेः पार्श्वचरभेदे, शब्दार्थचि॰ ६जिनभेदे, त्रिका॰ ७दमनकवृक्षे, राजनि॰ ८चतुर्थाश्रमविशिष्टे, काव्यादर्शग्रन्थकर्त्तरि ९कविभेदे च । “जाते जगति वाल्मीके कविरित्यभिधीयते । कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि” उद्भटः । १०दण्डधारके त्रि॰ । स्त्रियां ङीप् । ११महादेवे पु॰ । “दण्डिने लोमकर्णाय दण्डिदण्डाय वै नमः” भा॰ शा॰ २८५ अ॰ । दण्डिदण्डोऽपि शिवे “गुह्यकेशनखश्मश्रुः पात्री दण्डी कुसुम्भवान्” १२धृतराष्ट्रपुत्रभेदे दण्डधारशब्दे दृश्यम् ।

**दण्डिमन्** पु॰ दण्डस्य भावः कर्म वा पृथ्वा॰ इमनिच् । दण्डभावे दण्डकर्मणि च ।

**दण्डोत्पल** न॰ दण्डयुक्तमुत्पलमिव । १वृक्षभेदे, (डानिकोषा) २मत्स्यभेदे राजनि॰ । तत्रार्थे स्त्री रत्नमाला ।

**दण्ड्य** त्रि॰ दण्ड–कर्म्मणि यत् । १दण्डनीये । दण्डमर्हति दण्डा॰ यत् । २दण्डार्हे । दण्डशब्दे उभयोदा॰ दृश्यम्

**दत्** पु॰ दन्त+पृषो॰ । १दन्ते शब्दरत्ना॰ । “दत् दतो दतः नाशाकर्णदतो भङ्गे” मनुः । दन्तशब्दस्यैव रूपमित्येके दन्तशब्दस्य शसादौ दत आदेशे तत्सिद्धेः शुद्धादेः परतः दन्तस्य तु दत्रादेशे “शुद्दन् लोलकुण्डलः” भट्टिः । “सुदतीजनमज्जनार्तितैः” नैष॰ ।

**दत्त** त्रि॰ दा–कर्म्मणि क्त । १त्यक्ते कृतदाने उत्सृष्टे “स्वहस्तदत्ते मुनिमासने मुनिम्” माघः । दत्तं च सप्तविधं दत्ताप्रदानिकशब्दे वक्ष्यते । २अत्रेरनसूयागर्भजाते दत्तात्रेयापरनामके विष्णवतारूपे पुत्रभेदे पु॰ । आत्रेयशब्दे ९६२ पृ॰ तत्सम्भवकथा दृश्या “कपिलो नारदो दत्तो योगेशाः सनकादयः” भाग॰ ४।१९।६ । ३अग्निसिंहनन्दने जिनभेदे हेमच॰ । ४सात्वतवंश्ये भजमानान्वयजे राजाधिदेवस्य पुत्रभेदे । “राजाधिदेवस्य

सुता जज्ञिरे वीर्य्यवत्तराः। दत्तातिदत्तौ बलिनौ शोणाश्वः श्वेतवाहनः। शमी च दत्तशर्म्मा च दत्तशत्रुश्च शत्रुजित्। श्रवणा च श्रविष्ठा च स्वसारौ सम्बभूवतुः” हरिवं० २६अ०। भावे क्त। ५दाने न० “दत्तभुक्तफलं धनम्” दायभा० भारतवाक्यम्। “शरणागतसंत्राणं भूतानां चाप्यहिंसनम्। बहिर्वेदि च यद्दानं दत्तमित्यभिधीयते” भा० शा० उक्ते ६शरणागतादित्रिके अत्र दण्डमिति लिपिकरप्रमादपाठदर्शनात् शब्दकल्पद्रुमे दण्डशब्दस्य शरणागतत्राणाद्यर्थकतोक्ता तद्दृष्ट्वैवास्माभिः दण्डशब्दस्य तदर्थकता प्रागुक्ता प्रमादकृतैव अर्थपर्य्यालोचनया तत्र “दत्तमित्यभिधीयते” इति पाठस्यैव समुचितत्वात् द्वादशपुत्रान्तर्गते ७गौणपुत्रभेदे। स च कलियुगेऽपि कर्त्तुं शक्यते “दत्तौरसेतरेषान्तु पुत्रत्वेन परिग्रहः” कलिवर्ज्ज्ये आदित्यपु० “दत्तपदं कृत्रिमस्याप्युपलक्षणं “औरसः क्षेत्रजस्यैव दत्तः कृत्रिम एव च” कलिधर्म्मे पराशरः इति दत्तकमीमा०। अन्यैस्तु क्षेत्रजपदस्य औरसविशेषणत्वं कृत्रिमपदस्य दत्तकविशेषणत्वं मत्वा द्वयोरेव कलौ पुत्रत्वमिति व्यवस्थापितम्। स्वार्थे क। तत्रार्थे। तल्लक्षणं याज्ञ० “दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत्” मनुरपि “माता पिता वा दद्यातां यमद्भिः पुत्रमापदि। सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुतः” इति। “आपद्ग्रहणादनापदि न देयो दातुरयं प्रतिषेधस्तथा एकः पुत्रो न देयः “न त्वेकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वेति” वसिष्ठस्मरणात्। तथानेकपुत्रसद्भावेऽपि ज्येष्ठो न देयः। “ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः” इति तस्यैव पुत्रकार्य्यकरणे मुख्यत्वात्” मिता०।

अथ दत्तकग्रहणाधिकारादिकं दत्तकचन्द्रिकायां दर्शितं तदिह प्रदर्श्यते।

मनुः “अपुत्रेण सुतः कार्य्यो यादृक्तादृक् प्रयत्नतः। पिण्डोदकक्रियाहेतोर्नामसंकीर्त्तनाय च।” अत्रिश्च “अपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदा। पिण्डोदकक्रियाहेतोर्यस्मात्तस्मात् प्रयत्नतः”। अपुत्रेण अजातपुत्रेण मृतपुत्रेण वा। “अपुत्रो मृतपुत्रो वा पुत्रार्थं समुपोष्य च” इति शौनकसंवादात्। तेन पुत्रोत्पत्त्या “ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः। पितॄणामनृणश्चैव स तस्मात्सर्व्वमर्हतीति” मनुवचनावगते ऋणपरीहारेऽपि तत्पुत्रमरणे पिण्डोदकाद्यर्थं पुनः पुत्रकरणमावश्यकम्। अत्र पुत्रपदं पौत्रप्रपौत्रयोरप्युपलक्षणम् तयोरपि पिण्डदातृत्ववंशकरत्वाविशेषात्। अन्यथा सत्यपि पौत्रे मृतपुत्रस्य निर्निमित्तपुत्रपरिग्रहापत्तिः अतः पुत्रपौत्रप्रपौत्ररहितस्यैव पुत्रीकरणमवगम्यते। अपुत्रेणेत्यत्र पुंस्त्वैकत्वयोर्विधेयविशेषणतया विवक्षितत्वम् तेन द्वाभ्यां त्रिभिर्वा नैकः प्रतिग्राह्य इति तु न देश्यं द्व्यामुष्यायणस्य द्वाभ्यां परिग्रहस्य वक्ष्यमाणत्वात्। स्त्रियाश्च भर्त्तुरनुज्ञया तदधिकारात्। यथाह वशिष्ठः “न तु स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद्वान्यत्रानुज्ञानाद्भर्त्तुरिति”। प्रतिनिधिरिति। स च क्षेत्रजादिरेकादशविधः। यथाह मनुः “क्षेत्रजादीन् सुतानेतानेकादश यथोदितान्। पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः”। वृहस्पतिः “पुत्रास्त्रयोदश प्रोक्ता मनुना येऽनुपूर्व्वशः। सन्तानकारणन्तेषामौरसः पुत्रिका तथा। आज्यं विना यथा तैलं सद्भिः प्रतिनिधीकृतम्। तथैकादश पुत्रास्तु पुत्रिकौरसयोर्विना”। तत्रापि कलौ न सर्व्वेषामभ्यनुज्ञानम्। “अनेकधा कृताः पुत्रा ऋषिभिर्ये पुरातनैः। न शक्यन्तेऽधुना कर्त्तुं शक्तिहीनैरिदन्तनैरिति” वचनात्। “दत्तौरसेतरेषान्तु पुत्रत्वेन परिग्रहः” इत्याद्यभिधाय “इमान् धर्म्मान् कलियुगे वर्ज्ज्यानाहुर्म्मनीषिणः” इति दत्तकेतरप्रतिनिधिनिषेधात् अतो दत्तकविधिर्विवेच्यते। तत्र शौनकः। “ब्राह्मणानां सपिण्डेषु कर्त्तव्यः पुत्रसंग्रहः। तदभावेऽसपिण्डे वा अन्यत्र तु न कारयेत्”। सपिण्डेष्विति सामान्यश्रवणात् समानासमानगोत्रेष्वित्यर्थः। तथाच सपिण्डाभावे असपिण्डः सगोत्रस्तदभावे भिन्नगोत्रोऽपि ग्राह्य इत्याह शाकलः “सपिण्डापत्यकञ्चैव सगोत्रजमथापि वा। अपुत्रको द्विजो यस्मात् पुत्रत्वे परिकल्पयेत्। समानगोत्रजाभावे पालयेदन्यगोत्रजम्। दौहित्रं भागिनेयञ्च मातृस्वसृसुतं विना” इति। “अन्यत्र तु न कारयेदिति” ब्राह्मणातिरिक्तः क्षत्रियादिरसमानजातीयो दत्तको व्यावर्त्त्यते” यदाह मनुः। “माता पिता वा दद्यातां यमद्भिः पुत्रमापदि। सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्त्रिमः सुतः”। आपदि पुत्रप्रतिग्रहीतुरपुत्रत्वे सदृशं सजातीयम्। यत्तु “सदृशं न जातितः किन्तु कुलानुरूपैर्गुणैस्तेन क्षत्रियादिरपि ब्राह्मणस्य पुत्रो युज्यते”

इति मेधातिथिव्याख्यानम् । तत्रायमभिसन्धिः औरसाभावे क्षत्रियादेरसमानजातीयतया पिण्डोदकाद्यनर्हत्वेऽपि नामसंकीर्त्तनादिप्रयोजनकतया पुत्रत्वमुत्पद्यत एव शास्त्रीयत्वात् परन्त्वल्पोपकारतया ग्रासाच्छादनमात्रभागित्वं यदाह कात्यायनः "असवर्णास्तु ग्रासाच्छादनभागिन" इति । तथा शौनकः "यदि स्यादन्यजातीयो गृहीतोऽपि सुतः क्वचित् । अंशभाजं न तं कुर्य्याच्छौनकस्य मतं हि तत् ।" याज्ञवल्क्येनाऽपि पिण्डदोंऽशहरश्चैषां पूर्व्वाभावे परः परः । सजातीयेष्वयं प्रोक्तस्तनयेषु मयाविधिः" । सजातीयस्य पिण्डदातृत्वांशहरत्वे विहिते न तु विजातीयस्य पुत्रत्वं निषिद्धम् व्यक्तमाह वृद्धयाज्ञवल्क्यः "सजातीयः सुतो ग्राह्यः पिण्डदाता स रिक्थभाक् । तदभावे विजातीयो वंशमात्रकरः स्मृतः "ग्रासाच्छादनमात्रन्तु स लभेत तदृक्थिन" इति । वस्तुतस्तु मुनिवचने सदृशपदस्य सजातीयार्थकत्वैव युक्ता परत्र तादृशदत्तकस्य विभागदर्शनात् असवर्णस्य च विभागासम्भवात् । "दौहित्रो भागिनेयश्चेति" दौहित्रभागिनेयनिषेधः शूद्रातिरिक्तविषयः तथा च शौनकः "क्षत्रियाणां सजातौ च गुरुगोत्रसमेऽपि वा । वैश्यानां वैश्यजातेषु शूद्राणां शूद्रजातिषु । सर्वेषामेव वर्णानां जातिष्वेव न चान्यतः । दौहित्रो भागिनेयश्च शूद्रैस्तु क्रियते सुतः । ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचित्" । गुरुगोत्रसमेऽपि वेति क्षत्रियाणां प्रातिस्विकगोत्राभावात् गुरुगोत्रनिर्देशः "पौरोहित्यान् राजन्यविशां प्रवृणीते इति" सूत्रेण तस्य पुरोहितगोत्रभागित्वोक्तेः । जातिष्वेव नचान्यत इति नियमः सजातीयसम्भवे विजातीयनिषेधार्थः अन्यथा प्रागुक्तकात्यायनविरोधः स्यात् । तत्रापि सन्निहितसपिण्डेषु सति भ्रातृसुते स एव पुत्रीकार्य्य इत्याह मनुः "सर्वेषामेकजातानामेकश्चेत् पुत्रवान् भवेत् । सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत्" । बृहस्पतिः "यद्येकजाता बहवो भ्रातरश्च सहोदराः । एकस्यापि सुते जाते सर्वे ते पुत्रिणः स्मृताः" इति । अत्र वचनद्वयेऽपि भ्रातृसुते पुत्रप्रतिनिधितया कथञ्चित् सम्भवति अन्यो न प्रतिनिधिः कार्य्य इत्यवगम्यते । न चापत्यमुत्पादयितव्यमिति नित्योह्ययं विधिः स यथा कथञ्चित् पालनीयस्तत्र भ्रातृव्ये पुत्रातिदेशेन तत्फलस्य पिण्डोदकादेरलोकतापरीहारस्य च सिद्धत्वेन न पुनस्तत्र प्रवृत्तिरत एवाकृतस्यैव भ्रातृपुत्रस्य पुत्रत्वम् । "अपुत्रस्य पितृव्यस्य तत्पुत्रो भ्रातृजो भवेत् । स एव तस्य कुर्वीत श्राद्धपिण्डोदकक्रियामिति" बृहत्पराशरवचनात् । तस्मिन् सति तु न दत्तकाद्युपादानमिति वाच्यम् । भ्रातृव्यस्य पुत्रातिदेशेनालोकतापरीहारादिसाधकत्वेऽपि नामसंकीर्त्तनोचितवंशकरत्वानुपपत्त्या तदर्थं तदुपादानस्यावश्यकत्वात् । किञ्च इदं हि वचनद्वयं सति भ्रातृपुत्रे न दत्तकाद्युपादाननिषेधकं परन्तु श्राद्धादिकर्तृत्वरूपपुत्रधर्म्मातिदेशकम् अन्यथा सत्यपि भ्रातृपुत्रे क्षेत्रजपुत्रोत्पादनविधिविरोधापत्तेः । "अकृता वा कृता वापि यं विन्देत् सदृशात् सुतम् । पौत्री मातामहस्तेन दद्यात् पिण्डं हरेद्धनमिति" वचने दौहित्रेऽपि पौत्रातिदेशसत्त्वात् दौहित्रसत्त्वेऽपि प्रागुक्तयुक्त्या दत्तकाद्यनुपादानप्रसङ्गाच्च । ननु सत्यपि भ्रातृपुत्रे दत्तकाद्युपादानस्य शास्त्रीयत्वे "बह्वीनामेकपत्नीनामेष एव विधिः स्मृत" इति बृहस्पतिवचने "सर्व्वासामेकपत्नीनामेका चेत् पुत्रिणी भवेत्" सर्व्वास्ता स्तेन पुत्रेण प्राह पुत्रवतीर्म्मनुरिति" मनुवचने च सपत्नीपुत्रे पुत्रधर्म्मातिदेशेन सत्यपि तस्मिन् दत्तकाद्युपादानमस्त्विति चेन्न यथा "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा भवति वाजिभ्यो वाजिनम्" इत्यत्रामिक्षार्थं प्रवृत्तस्योद्देश्यीभूतामिक्षापचारे आमिक्षा पुरुषं प्रवर्त्तयति न तु वाजिनम् अनुद्देश्यत्वेनाप्रयोजकत्वात् यथा वा पितुः क्षयाहे पित्रादित्रिकस्य पार्व्वणे कृते मातामहादिश्राद्धाय न पुनः पार्व्वणारम्भः तस्य पितृश्राद्धाधीनप्रवृत्तेः तथात्रापि भर्त्तुरनुज्ञाशास्त्रेण तत्पुत्रोपादानाय प्रवृत्तायास्तत्पुत्राभाव एव तदुपादानं न तु तत्पुत्रानपचारेऽपि स्वपुत्रापचारे तदुपादानं तत्प्रवृत्तेरप्रयोजकत्वात् तत्रालोकतापरीहारोऽस्या न स्यादित्यपेक्षायां मनुबृहस्पतिवचनद्वयं सपत्नीपुत्रे पुत्रातिदेशेनालोकतापरीहारश्राद्धोपपादकं, भर्त्तृवंशमन्तरेण चास्या वंशान्तरासम्भवेन तस्यैव स्ववंशकरत्वं चेत्यतः समस्तस्यापि पुत्रप्रयोजनस्य सम्भवेन सति सपत्नीपुत्रे न दत्तकाद्युपादानं, भ्रातृपुत्रस्य तु वंशकरत्वाभावेन सत्यपि तस्मिन्नुपादीयन्ते दत्तकादय इत्येतावान् परं विशेषः । ननु सति भ्रातृसुते तस्यैव पुत्रीकरणावश्यम्भावे यत्रैक एव भ्रातृपुत्रस्तत्र तदसम्भवः । "नत्वेकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा स हि सन्ताना य

पुत्रैर्षामिति" वशिष्ठस्मरणादिति चेन्न एतस्य द्व्यामुष्यायणेतरविषये सावकाशत्वात् द्व्यामुष्यायणे च हेतुवन्निगदर्शितसन्ततिविच्छेदाभावात् वेतालस्य च भैरवपुत्रपुत्रीकरणे पौराणिकलिङ्गदर्शनाच्च। यथा "ततः कदाचिदुर्वश्यां भैरवो मैथुनं गतः। तस्यां स जनयामास सुवेशं नाम पुत्रकम्। तमेव चक्रे तनयं वेतालोऽपि स्वकं सुतम्। ततस्तौ तेन पुत्रेण स्वर्ग्यां गतिमवापतुरिति"।

केन पुत्रो देय इत्याह शौनकः "नैकपुत्रेण कर्त्तव्यं पुत्रदानं कदाचन। बहुपुत्रेण कर्त्तव्यं पुत्रदानं प्रयत्नतः" इति। द्विपुत्रस्यापि पुत्रदाने अपरपुत्रनाशे वंशविच्छेदमाशङ्क्याह बहुपुत्रेणेति। स्त्रियास्तु जीवति भर्त्तरि तदनुमतौ, प्रोषिते मृते वा तदनुज्ञां विनापि यथाह वशिष्ठः। "न तु स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद्वा अन्यत्रानुज्ञानाद्भर्त्तुरिति"। अनुमतिश्च अप्रतिषेधेऽपि भवति "अप्रतिषिद्धं परमतमनुमतं भवतीति" न्यायात्। निरपेक्षदानमाह याज्ञवल्क्यः "दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत्"। तथा। "मातापितृभ्यामुत्सृष्टस्तयोरन्यतरेण वेति"।

अथ पुत्रपरिग्रहविधिमाह शौनकः "शौनकोऽहं प्रवक्ष्यामि पुत्रसंग्रहमुत्तमम्। अपुत्रो मृतपुत्रो वा पुत्रार्थं समुपोष्य च। संग्रहं संग्रहणविधिम्। उपोष्य ग्रहणात् पूर्वदिने कृतोपवासः। वृद्धगौतमः "वाससी कुण्डले दत्त्वा उष्णीषञ्चाङ्गुलीयकम्। आचार्य्यं धर्म्मसंयुक्तं वैष्णवं वेदपारगम्। मधुपर्केण सम्पूज्य राजानञ्च द्विजान् शुचीन्"। राज्ञो विप्रकृष्टत्वे ग्रामस्वामिनम् "बन्धूनाहूय सर्वांस्तु ग्रामस्वामिनमेव च" इति स्मरणात्। द्विजानिति बहुत्वं त्रित्वपर्य्यवसितं कपिञ्जलन्यायात्। द्विजानां पूजनं याचनार्थम्। "बर्हिः कुशमयञ्चैव पालाशं चेध्ममेव च। एतानाहृत्य बन्धूंश्च ज्ञातीनाहूय यत्नतः। बन्धूनन्नेन सम्भोज्य ब्राह्मणांश्च विशेषतः। अग्न्याधानादिकं तत्र कृत्वाज्योत्पवनान्तकम्। दातुः समक्षं गत्वा च पुत्रं देहीति याचयेत्। दाने समर्थो दातास्मै "ये यज्ञेनेति पञ्चभिः"(१)। दद्यादिति शेषः। बन्धूनात्ममातृपितृबन्धून्। ज्ञातीन् सपिण्डान्। तदाह्वानं दृष्टार्थम् बन्धूनाहूतान् ब्राह्मणान्, पूर्वकृतान्। चकारात् आहूतान्, ज्ञातींश्च सम्भोज्येत्यर्थः।

तथा "देवस्य त्वेति"(२)मन्त्रेण हस्ताभ्यां परिगृह्य च। अङ्गादङ्गेत्यृचं (३)जप्त्वा आघ्राय शिशुमूर्द्धनि। वस्त्रादिभिरलङ्कृत्य पुत्रच्छायावहं सुतम्। पुत्रच्छाया पुत्रसादृश्यं नियोगादिना(४)स्वयमुत्पादनयोग्यत्वमिति यावत्। तथा "नृत्यगीतैश्च वाद्यैश्च स्वस्तिशब्दैश्च संयुतम्। गृहमध्ये तमाधाय चरुं कृत्वा विधानतः। यस्त्वाहृदेत्यृचा(५) चैव तुभ्यमग्ने त्यृचैकया(६)। सोमोऽददिदित्येताभिः(७) प्रत्यृचं पञ्चभिस्तथेति"।

(अत्र प्रतीकसूचिताः ऋचः प्रायशोऽनेकेषां तत्स्वरूपाज्ञानात् तेषां प्रबोधाय वेदादुद्धृत्य प्रदर्श्यन्ते। (१) "ये यज्ञेन दक्षिणया समक्ता इन्द्रस्य सख्यममृतत्वमानश। तेभ्यो भद्रमङ्गिरसो वो अस्तु प्रतिगृभ्णीत मानवं सुमेधसः" ऋ०१०।६२।१। "य उदाजन् पितरो गोमयं वस्वृतेनाभिन्दन् परिवत्सरे वलम्। दीर्घायुत्वमङ्गिरसो वो अस्तु प्रतिगृभ्णीत मानवं सुमेधसः।२। य ऋतेन सूर्य्यमारोहयन् दिव्यप्रथयन् पृथिवीं मातरं वि। सुप्रजास्त्वमङ्गिरसो वो अस्तु प्रतिगृभ्णीत मानवं सुमेधसः।३। अयं नाभा वदति वल्गु वो गृहे देवपुत्रा ऋषयस्तच्छृणोतन। सुब्रह्मण्यमङ्गिरसो वो अस्तु प्रतिगृभ्णीत मानवं सुमेधसः।४। विरूपास इदृषयस्त इद्गम्भीरवेपसः। ते अङ्गिरसः सूनवस्ते अग्नेः परिजज्ञिरे" ५। (२) "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि" यजु० १।२। (३) "अङ्गादङ्गं सम्भवसि हृदयादधिजायसे। आत्मा वै पुत्रनामासि संजीव शरदां शतम्"। (४) "नियोगादिनेति आदिना विवाहसंग्रहः। दुहितृभगिनीप्रभृतीनां विवाहयोग्यत्वाभावात् अर्थतएव तत्सिद्धौ विरुद्धसम्बन्धोपलक्षणार्थमित्युक्तिरपि विवाहयोग्यत्वाभावसूचनार्थं शूद्रादेर्दौहित्रादिप्रतिसम्भवार्थञ्चातस्तेषां पृथग्ग्रहणमिति बोध्यम्)। (५) ("यस्त्वा हृदा कीरिणा मन्यमानोमर्त्यं मर्त्यो जोहवीमि। जातवेदो यशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमश्याम्" ऋ०५।४।१०। (६) "तुभ्यमग्ने पर्य्यवहन्त्सूर्य्यां वहतुना सह। पुनः पतिभ्यो जायां दा अग्ने! प्रजया सह" ऋ०१०।८५।३८। (७) "सोमोऽददद्गन्धर्वाय गन्धर्वोऽददग्नये। रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम्" ऋ० १०।८५।४१। "इहैव स्तं मा वि यौष्टं विश्वमायुर्व्यश्नुतम्। क्रीळन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वे गृहे" ४२।

"आ नः प्रजां जनयतु प्रजापतिराजरसाय समनक्त्वर्य्यमा । अदुर्मङ्गलीः पतिलोकमाविश शं नो भव द्विपदे शं चतुष्पदे" ४३ "अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः । वीरसूर्देवकामा स्योना शं नो भव द्विपदे शं चतुष्पदे" ४४ "इमां त्वमिन्द्र मीढ्वः सुपुत्रां सुभगां कृणु । दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि" ४५) ।

वृद्धगौतमः । "पायसं तत्र साज्यञ्च शतसङ्ख्यञ्च होमयेत् । "प्रजापते न (८) त्वदेतान्यन्य इत्यृचा प्रजापतिमिति" । ("प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परिता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम्" (८) यजु० १०।२०।) वशिष्ठः । "पुत्रं प्रतिग्रहीष्यन् बन्धूनाहूय राजनि निवेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वा अदूरबान्धवं बन्धुसन्निकृष्टमेव गृह्णीयात् सन्देहे चोत्पन्ने दूरबान्धवं शूद्रमिव स्थापयेत् विज्ञायते ह्येकेन बहून् जायते इति" । (मुद्रितपुस्तके बहूंस्त्रायते इति पाठस्तु संहिताऽसंवादो अनन्वितश्चेत्युपेक्षितः । बहूंस्त्रायते" मीमांसाधृतपाठः । एकेन पुत्रेण बहवः पित्रादयस्त्रायन्ते इति व्याख्याय विज्ञायते इत्यादि श्रुतिं मत्वा बहुरिति जसः स्थाने सुप् इति त्रायते इति वचनव्यत्ययः"मीमांसाशयः) । निवेशनं गृहम् । सन्देहे इति दूरावस्थितबान्धवस्य अत्यन्तदेशभाषाविप्रकर्षिणा कुलशीलादिसन्देहो भवत्येव तथात्वे तन्निर्णयपर्य्यन्तं न व्यवहरेत् तत्र हेतुरेकेनेति । एतदन्यतरविधिरावश्यकः । ततश्च शौनकः "दक्षिणां गुरवे दद्यात् यथाशक्ति द्विजोत्तमः । नृपो राज्यार्द्धमेवाथ वैश्यो वित्तशतत्रयम् । शूद्रः सर्वस्वमेवापि अशक्तश्चेद्यथाबलम्" । राज्यार्द्धमर्द्धराज्योत्पन्नमेकवर्षीयद्रव्यम् । "प्रदद्यादर्द्धराज्योत्थमेकवर्षाहृतं धनमिति" वृद्धगौतमस्मरणात् । उत्तममध्यमाधमभेदेन वित्तानां सुवर्णरजततास्राणामिति ज्ञेयम् । "शतत्रयं नाणकानां सौवर्णमथ राजतम् । प्रदद्यात् ताम्रमथ वा उत्तमादिव्यवस्थयेति" वृद्धगौतमस्मरणात् । सर्वस्वमेकवर्षभृतिलब्धमिति यावत् । तैत्तिरीयाणान्तु विधिविशेषमाह बौधायनः "अथ पुत्रपरिग्रहविधिं व्याख्यास्यामः प्रतिग्रहीष्यन्नुपकल्पयते द्वे वाससी द्वे कुण्डले अङ्गुलीयकम्, आचार्य्यञ्च वेदपारगञ्च कुशमयं बर्हिः, पर्णमयमिध्ममित्यथ बन्धूनाहूय, निवेशनस्य मध्ये राजनि निवेद्य परिषदि वागारमध्ये ब्राह्मणवागालम्बेन उपविश्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा यद्देवयजनोल्लेखप्रभृति आप्रणीताभ्यः कृत्वा दातुः समक्षं गत्वा मे पुत्रं देहीति भिक्षेत ददानीतीतर आह तं परिगृह्णाति धर्म्माय त्वा परिगृह्णामि सन्तत्यै त्वा परिग्रहीष्यामि इत्यथैनं वस्त्रकुण्डलादिभिरलङ्कृत्य परिधानप्रभृत्यग्निमुखं कृत्वा पक्वा जुहोति यस्त्वाहृदा कीरिणाः मन्यमान(८) इति" पुरोऽनुवाक्यामनूद्य "यस्मै त्वं सुकृते जातवेद" इति (१०) याज्यया जुहोत्यथ व्याहृतीर्हुत्वा स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानदक्षिणां ददाति एते च वाससी एते कुण्डले एतच्चाङ्गुरीयकं च एवं त्वौरस उत्पद्यते तुरीयभागेसम्भवतीति आह स्म बौधायनः" इति । (८) प्राग्वत् (१०) यस्मै त्वं सुकृते जातवेद उ लोकमग्ने ! कृणवः स्योनम् । अश्विनं पुत्रिणं वीरवन्तं गोमन्तं रयिं नशते स्वस्ति" ५।४।११) । एवमुक्तविध्यभावे परिग्रहीतस्य तु विवाहोचितधनमात्रभागित्वं नत्वंशभागित्वमिति वक्ष्यते तथा मनुः । "गोत्ररिक्थे जनयितुर्न हरेद्दत्त्रिमः सुतः । गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधेति" । एतेन दातृधने दानादेव पुत्रत्वनिवृत्तिद्वारा दत्त्रिमस्य स्वत्वनिवृत्तिर्दातृगोत्रनिवृत्तिश्च भवतीत्युच्यते । तथा च गोत्रादिनिवृत्तेरेव दर्शनात् "संस्कुर्य्यात् स्वसुतान् पितेति" स्मरणात् ग्रहणानन्तरसम्भाव्यमाना एव दत्तकस्य संस्काराः प्रतिग्रहीत्रा कार्य्या न पुनर्जनकेन कृतपूर्वा अपि आवर्त्तनीयाः "एवमेनः शमं याति बीजगर्भसमुद्भवमिति" । "चित्रं कर्म यथानेकैरङ्गैरुन्मील्यते शनैः । ब्राह्मण्यमपि तद्वत् स्यात् संस्कारैर्विधिपूर्वकैरिति" मनुवचनबोधितस्य तत्तत्क्रियातो बीजादिदोषनाशस्य ब्राह्मण्याधानस्य च जातत्वेन तदावृत्तौ प्रमाणाभावात् । अन्यथा "अष्टौ संस्कारकर्म्माणि गर्भाधानमिव स्वयम् । पिता कुर्य्यात्तदन्यो वा तस्याभावेऽपि तत्क्रमात्" इत्यनेन पुंसवनसीमन्तोन्नयनयोरपि करणापत्तेः । तच्चायुक्तं अस्याऽदायिकत्वात् । किन्तु ग्रहणानन्तरमेव पितृत्वेन संस्काराधिकारात् तत्पूर्वभाविषु संस्कारेषु प्रतिग्रहीतुरनधिकार एवायाति कालाभावात् । यदि च तत्पूर्वभाविनोऽपि संस्कारा जनकेन न कृतास्तदा बीजगर्भदोषनाशावश्यकत्वेन क्रमानुरोधेन च प्रतिग्रहीत्रैव ते समाधेयाः । एवञ्च उपनयनमात्रकरणेऽपि 'प्रतिग्रहीतु-

दत्तकपुत्रसिद्धिः। "अन्यशाखोद्भवो दत्तः पुत्रश्चैवोपनायितः। स्वगोत्रेण स्वशाखोक्तविधिना स स्वशाखभागिति" वशिष्ठस्मरणात्। एतच्चाष्टमाब्दरूपतन्मुख्यकालाभ्यन्तरवर्त्तिपरिग्रहे बोध्यम् अन्यथा मुख्यकालेऽधिकारयोग्यत्वाभावे गौणकाले अनधिकारात्तत्सिद्धिरिति। अत्र च जनकप्रतिग्रहीत्रोरुभयोरपि पुत्राभिसन्धाने सति दत्तकस्य द्व्यामुष्यायणत्वेनोभयगोत्रभागित्वम्। विशेषो वक्ष्यते यत्तु पुराणनाम्ना पठन्ति। "पितृगोत्रेण यः पुत्रः संस्कृतः पृथिवीपते!। आचूड़ान्तं न पुत्रः स पुत्रतां याति चान्यतः। चूड़ाद्या यदि संस्कारा निजगोत्रेण वै कृताः। दत्ताद्यास्तनयास्ते स्युरन्यथा दास उच्यते। यदि स्यात् कृतसंस्कारो यदि वातीतशैशवः। ग्रहणे पञ्चमाद्वर्षात् पुत्रेष्टिं प्रथमं चरेदिति"। तदमूलम्। समूलत्वेऽपि यज्जनकगोत्रेण चूड़ान्तसंस्कारसंस्कृतस्य न ग्रहीतुः पुत्रत्वं ग्रहीत्रैव चूड़ादिसंस्कारकरणे तत्। यदि च कृतचूड़ोऽतीतपञ्चवर्षो वा ग्राह्यो भवति न तदास्य पुत्रत्वं सम्भवतीति च विवृण्वन्ति तन्न अनुवादापत्तेः। पञ्चवर्षाभ्यन्तरगृहीतस्याप्युपनयनात् पूर्वं सकलशिष्टानुमोदितपुत्रत्वव्यवहारानुपपत्तेः तदानीं ग्रहीतरि मृते तत्श्राद्धानधिकारापत्तेश्च। किन्त्वयं वचनार्थः जनकगोत्रेण कृतचूड़ान्तसंस्कारस्य पुत्रत्वं निषिध्य प्रतिग्रहीत्रा पुनश्चूड़ादिकरणे तत् प्रतिप्रसूतम्। ततश्च कृतसंस्कारस्यातीतपञ्चवर्षस्य च ग्रहीत्रा चूड़ादिकरणात् पूर्वं दासत्वाक्षेपात् चूड़ादिकरणानन्तरं पुत्रत्वं लब्धम्। अकृतसंस्कारस्यानतीतपञ्चवर्षस्य तु परिग्रहमात्रादेव तत्प्राप्तं तच्च विततम्। अथवा जनकेन चूड़ान्तं संस्कृतोऽपि पुत्रो न पुत्र इत्यपुत्रत्वादेशः यतोऽन्यतश्च पुत्रतां यातीति हेतुरुपदिष्टः। तथा च एकस्य पुत्रपदस्य चकारस्य च वैयर्थ्यदूषणमपि परिहृतम्। एवञ्च चूड़ाद्या इत्यतद्गुणसंविज्ञानबहुव्रीहिणा द्विजातीनामुपनयनलाभः शूद्रस्य तु विवाहलाभः। "अन्यशाखोद्भवो दत्तः पुत्रश्चैवोपनायितः। स्वगोत्रेण स्वशाखोक्तविधिना स स्वशाखभागिति" प्रागुक्तैकवाक्यत्वात्। पञ्चमाद्वर्षादिति। ब्रह्मवर्चसफलार्थिविप्राभिप्रायं "ब्रह्मवर्चसकामस्य कार्य्यं विप्रस्य पञ्चमे) इति मनुवचने तत्कामस्य पञ्चमवर्षस्यैव उपनयनमुख्यकालत्वेन तदेकमूलत्वात्। तदनर्थिनस्त्वाष्टमाब्दादिति। क्षत्रियादेरप्युपनयनतन्मुख्यकालानादरः। मुख्यकालेऽपि सिद्धाधिकारयोग्यत्वस्यैव गौणकालेऽपि संस्काराधिकारादित्युक्तप्रायम्। चूड़ायां गौणकालादरस्तु वचनबलादेव। पुत्रेष्टिमिति तत्र वर्षत्रयस्यैवाधिकारं तेन पुत्रेष्टिपूर्वकचूड़ादिभिः पुत्रत्वं सम्पाद्यम्। शूद्रेण तु तदापि संस्कारमात्रादेवेति सर्वमनवद्यम्।

एवञ्च सर्वेषामेव प्राचां कालविशेषमनन्तर्भाव्यैव पुत्रपरिग्रहविधानमुपपद्यते उक्तार्थस्य स्वतःसिद्धत्वात्। यथैवमुक्तवचनपरव्याख्याने कृतचूड़स्य दत्तकस्य जनकमात्रपुत्रत्वं निषिध्य अन्यतश्च पुत्रत्वं यातीत्यत्र चकारेण जनकप्रतिग्रहीत्रसाधारण्यं लब्धम् उभयोरेव संस्कारकत्वात् तच्च उभयोरावयोरयं पुत्र इत्यभिसन्धाने सति बोध्यम्। अयमेव द्व्यामुष्यायणो नाम द्विपितृको द्विगोत्रश्च। ननु क्षेत्रजस्यैव द्विपितृकत्वं दृश्यते। यथा हारीतः, "जीवति क्षेत्रजमाहुरस्वातन्त्र्यान्मृते द्व्यामुष्यायणं अशुभबीजत्वात्" जीवत्यपि क्रियाभ्युपगमाद्द्विपितृको भवतीत्याह मनुः, "क्रियाभ्युपगमात्त्वेवं वीजार्थं यत्प्रदीयते। तस्येह भागिनौ दृष्टौ वीजी क्षेत्रिक एव चेति"। अपुत्रवीजक्षेत्रिकयोर्मम क्षेत्रं तव वीजं यदपत्यं तदावयोरित्ययं क्रियाभ्युपगमः। तथा "अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः। उभयोरप्यसावृक्थी पिण्डदाता च धर्मतः" इति। दत्तकस्य तु तददृष्टचरं प्रत्युत "गोत्ररिक्थे जनयितुर्न हरेद्दत्रिमः सुतः" इति प्रागुक्तमनुवचनं तद्विपरीतार्थग्राहकमेवास्तीति चेन्न दत्तकादिष्वपि "सर्वेषामेकपत्नीनामेकस्यापि यदुच्यते। सर्वेषामेव तत् कुर्य्यादेकरूपा हि ते स्मृताः" इति बौधायनवचनेन क्षेत्रजधर्मलाभात्। द्वे श्राद्धे कुर्य्यादेकश्राद्धे वा पृथगुद्दिश्य एकपिण्डे वा द्वावनुकीर्त्तयेत् प्रतिग्रहीतारं चोत्पादयितारम् आ तृतीयात् पुरुषादिति कात्यायनप्रवराध्याये सामान्यतोदर्शनाच्च दत्तकस्यापि द्विपितृकत्वसिद्धिः। अतएव सत्याषाढ़ोऽपि "नित्यानां द्व्यामुष्यायणानां द्वयोरिति" सूत्रेण नित्यद्व्यामुष्यायणानां क्षेत्रजानां सप्रवरगोत्रद्वयसम्बन्धमुक्त्वा दत्तकादीनां द्व्यामुष्यायणवदिति सूत्रेण तद्धर्मोऽतिदिष्टः। विवृतञ्चैतद्भाष्यकारैः "नित्यद्व्यामुष्यायणप्रसङ्गेनानित्यानाञ्च दत्तकादीनामिति"। तावदेव नोत्तरसन्ततौ प्रथमेनैव संग्रहीता चेत्तदा उत्तरस्य पूर्वत्वात्तेनैव दत्तत्वेति"।

एतद्व्यामुष्यायणस्तु क्षेत्रजवत् उभयोरभिसन्धौ दत्तकस्योभयगोत्रभागित्वम् अन्यथा जनकेनैव सर्व्वसंस्कारकरणे जनकगोत्रभागित्वं न ग्रहीतृगोत्रभागित्वं ग्रहीत्रा संस्कारकरणे तु उत्तरस्य ग्रहीतुः पूर्व्वत्वात् प्राधान्यात्तेनैव उत्तरसन्ततेर्गोत्रमिति । तथा च पैठीनसिः "अथ दत्तकक्रीतकृत्रिमपुत्त्रिकापुत्त्राः परपरिग्रहेणार्षेण येऽत्र जातास्तेऽसङ्गतकुलीना द्व्यामुष्यायणा भवन्तीति" । आर्षेण ऋतुक्रमेण परिग्रहेण जनकग्रहीत्रोः स्वीकारेण द्व्यामुष्यायणा भवन्तीत्यर्थः । व्यक्तमुक्तम् "द्व्यामुष्यायणका ये स्युर्दत्तक्रीतादयः सुताः । गोत्रद्वयेऽप्यनूद्वाहः शुङ्गशैशिरयोर्यथेति" । न च दत्तकस्य द्व्यामुष्यायणत्वं न घटते जनकस्यापि तत्र स्वत्वानपायेन "माता पिता वा दद्यातामिति" दानविध्यनुपपत्तेरिति वाच्यम् । "सामान्यं सर्व्वभूतेभ्यो मयोत्सृष्टमिदं जलम् । रमन्तु सर्व्वभूतानि स्नानपानावगाहनैः" इत्यादौ स्वमात्रस्वत्वनाशकसर्व्वभूतोद्देश्यकत्यागादेव नद्यादिवत् साधारणीकृते जले स्वामिनोऽपि उद्दिश्यतया स्वत्ववत् अत्रापि तादृशाभिसन्धिपूर्व्वकादेव दानात् तादृशदत्तकस्य साधारण्यसिद्धिरित्यास्तां विस्तारः ।

अथ दत्तककर्त्तृकश्राद्धनिर्णयः । तत्र पितुः सपिण्डीकरणान्तषोडशश्राद्धे दत्तकस्य पूर्व्वगृहीतत्वेऽपि सत्यौरसे नाधिकारः । "औरसे पुनरुत्पन्ने तेषु ज्यैष्ठ्यं न विद्यते" इति देवलेन ज्येष्ठत्वप्रतिषेधात् । "पिण्डदोऽंशहरश्चैषां पूर्व्वाभावे परः परः" इति याज्ञवल्क्यवचनाच्च । अन्यत्र सर्व्वमौरसवत् । "क्षयाहे तु विशेषमाह जातूकर्ण्यः, "औरसक्षेत्रजौ पुत्त्रौ विधिना पार्व्वणेन तु । प्रत्यब्दमितरे कुर्य्युरेकोद्दिष्टं सुता दश" । इतरे दश दत्तकादयः" । तथा पराशरः "पितुर्गतस्य देवत्वमौरसस्य त्रिपौरुषम् । सर्व्वत्रानेकगोत्राणामेकोद्दिष्टं क्षयेऽहनीति" अनेकगोत्राणां द्विगोत्राणाम् । औरसक्षेत्रजयोरपि साग्न्योरेव पार्व्वणाधिकारः "पार्व्वणेन विधानेन देयमग्निमता सदेति" जाबालमनुस्मृपुराणैकवाक्यत्वात् । औरसक्षेत्रजव्यतिरिक्तानान्तु साग्निनिरग्निसाधारणमेकोद्दिष्टमिति सिद्धम् । द्व्यामुष्यायणस्येतिकर्त्तव्यतायां विशेषमाह शाङ्खायनसूत्रम् "पिण्डान् यथावनेजनं निधाय उभावेकस्मिन् पिण्डे पितृभेदे" इति । पितृभेदे एकस्मिन् पिण्डे उभौ जनकग्रहीतारौ कीर्त्तयेदिति शेषः । प्रवराध्याये, "पितृव्येण चैककार्य्यजातास्ते परिगृहीतुरेव भवन्ति अथ यद्येषां भार्य्यास्वपत्यं न स्यात् तदा रिक्थं हरेयुः पिण्डं तेभ्यः त्रैपुरुषिकं दद्युः यद्यपि स्यादुभाभ्यामेव दद्युरित्याचार्य्यवचनं द्वे श्राद्धे कुर्य्यादेकश्राद्धे वा पृथगनुद्दिश्य एकपिण्डे वा द्वावनुकीर्त्तयेत् प्रतिग्रहीतारं चोत्पादयितारं चा तृतीयात् पुरुषादिति" । ग्रहीतुः क्रियानियमाभावे पुत्त्रान्तराभावे च तस्यैव क्रियानियमे अपत्यसद्भावे च न द्विपितृकत्वमित्यर्थः । अत्र श्राद्धभेदाभेदयोर्विकल्पः । न चेदं क्षेत्रजविषयं सत्याषाढेन दत्तकादीनां द्व्यामुष्यायणवदिति उक्ते च दत्तकेऽपि तद्धर्म्मस्यातिदेशात् । तथा हारीतः, "तेषामुत्पादयितुः प्रथमं प्रवरो भवति द्वौ द्वौ पिण्डौ निर्व्वपेत् एकपिण्डे वा द्वावनुकीर्त्तयेद्द्वितीये पुत्त्रः तृतीये पौत्त्रः लेपिनस्त्रीन् वा यजमाना आ सप्तमादित्येके" इति । तेषां पितॄणां मध्ये वीजिनः प्रथममार्षेयं क्षेत्रिणो द्वितीयमिति द्विप्रवरता । एकपिण्डे वेत्यत्र वीप्साध्याहारः । "यदि द्विपिता स्यादेकैकस्मिन्नेव द्वौ द्वावुपलक्षयेत्" इत्यापस्तम्बवचनात् । द्वितीये पितामहपिण्डे द्व्यामुष्यायणस्य पुत्त्रः, तृतीये प्रपितामहपिण्डे द्व्यामुष्यायणस्य पौत्त्र इति । यदि ग्रहीता प्रथमं मृतः तदा तस्मै दद्यात् अथ यदि जनकस्तदा जनकाय, यद्युभौ तदादौ जनकाय पश्चाद्ग्रहीत्रे दद्यादित्याह मरीचिः, "सगोत्रादन्यगोत्राद्वा यो भवेद्विधवासुतः । पिण्डं श्राद्धविधानञ्च क्षेत्रिणे प्राक् प्रदापयेत् । वीजिने तु ततः पश्चात् क्षेत्री जीवति चेत् क्वचित् । वीजिने दद्युरादौ तु मृते पश्चात् प्रदीयते । उभौ यदि मृतौ स्यातां वीजिन्यादौ ततो ददेत् । क्षेत्रिण्यादौ न दत्तं स्याद्वीजिने नोपतिष्ठते" इति । एतेनैकतरोपरतावपि द्विपितृकस्य पार्व्वणं दर्शितम् । तथा तुल्यन्यायेन मातृभेदेऽपि द्व्यामुष्यायणदत्तकस्य "पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम्" इत्यनेन प्राप्तमातामहश्राद्धे जननीपितॄणां प्रथमं निर्देशस्ततः प्रतिग्रहीत्री या माता तत्पितॄणाम् । शुद्धदत्तकस्य तु प्रतिग्रहीत्र्या एव मातुः पित्रादिपिण्डदानं तस्य तन्मात्रस्वधाकरत्वादिति । एवञ्च "स हि सन्तानाय पूर्व्वेषामिति" हेतुवन्निगदस्वरसान्नैकं पुत्त्रं दद्यादिति निषेधो द्व्यामुष्यायणातिरिक्तविषयः सन्तानविच्छेदाभावादित्युक्तमेव ।

अथास्य सापिण्ड्यम् । जनककुले अवयवान्वयेन

प्रतिग्रहीतृकुले च पिण्डान्वयेन त्रिपौरुषं यदाह कार्ष्णाजिनिः "यावन्तः पितृवर्गाः स्युस्तावद्भिर्दत्तकादयः। प्रेतानां योजनं कुर्य्युः स्वकीयैः पितृभिः सह। द्वाभ्यां सहाथ तत्पुत्राः पौत्राश्चैकेन तत्समम्। चतुर्थे पुरुषे च्छेदं तस्मादेषा त्रिपौरुषीति"। अस्यार्थः दत्तकादयः पुत्राः प्रेतानां प्रतिग्रहीत्रादीनां पितॄणामौरसत्वे दत्तकत्वे द्व्यामुष्यायणत्वे वा यावन्तः पितृवर्गाः त्रयः षट् वा तावद्भिः सह तेषां योजनं सपिण्डनं कुर्य्युः तत्र प्रतिग्रहीत्रादीनामौरसत्वे तत्पितृपितामहप्रपितामहास्त्रयः, दत्तकत्वे तत्प्रतिग्रहीतृपितामहप्रपितामहास्त्रयः, द्व्यामुष्यायणत्वे तज्जनकाद्यास्त्रयः तत्प्रतिग्रहीत्रादयस्त्रय इति षट्। एवञ्च दत्तकस्य स्वकर्त्तृके पार्व्वणे येषां देवतात्वं स्वपुत्रकर्त्तृके सपिण्डीकरणेऽपि तेषामेव तथात्वमिति ज्ञापितम्। दत्तकस्य पुत्रास्तु दत्तकसपिण्डीकरणं तत्प्रतिग्रहीत्रा तत्पितॄणां त्रयाणां मध्ये द्वाभ्याञ्च सह कुर्य्युः। एवञ्च दत्तकस्य पौत्रा दत्तकप्रतिग्रहीतृभ्यां ग्रहीतुः पितॄणां त्रयाणां मध्ये एकेन ग्रहीतुः पित्रेति यावत्तेन च समं सह तत् स्वपितृसपिण्डनं कुर्य्युः। चतुर्थपुरुषे च्छेदमिति। यो यदा यत् सपिण्डीकरोति स तत्पित्रादिभिस्त्रिभिरेव करोतीति चतुर्थे विरामः सिद्ध एवेति तदारम्भः "सिद्धे सत्यारम्भो नियमाय" इति न्यायेन लेपिनां लेपनिरासेन सापिण्ड्यव्यवच्छेदार्थः। तदेवाह तस्मादेषेति। एषा सपिण्डता। तथाच "लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः। पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषमिति" मत्स्यपुराणोक्तसाप्तपौरुषसापिण्ड्यस्य सामान्यस्यानेन विशेषेण बाध एव। अतएव हारीतेन "लेपिनस्त्रीन् वाचक्षाणः स्यात् सप्तमादित्येके" इति पक्षान्तरमुपन्यस्तं सङ्गच्छते। तदेव संग्रहान्यत्रोक्तम् "दत्तकानान्तु पुत्राणां सापिण्ड्यं स्यात्त्रिपौरुषम्। जनकस्य कुले तद्वद्ग्रहीतुरिति धारणेति"। यदिदमुभयत्र त्रिपुरुषसापिण्ड्याभिधानं तत् द्व्यामुष्यायणाभिप्रायेण, तस्य त्रिकद्वयेन सपिण्डनविधानात्। शुद्धदत्तकस्य तु "गोत्ररिक्थे जनयितुर्न हरेद्दत्त्रिमः सुतः। गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधेति" प्रागुक्तमनुवचने पिण्डनिवृत्तिदर्शनात् प्रतिग्रहीतृकुल सापिण्ड्यमिति।" यत्तु वृद्धगौतमीयम् "सगोत्रेषु कृता ये स्युर्दत्तक्रीतादयः सुताः। विधिना गोत्रतां यान्ति न सापिण्ड्यं विधीयते"। सगोत्रेषु मध्ये कृता अपि दत्तकादयो विधिनैव गोत्रं भजन्ते परन्तु तेषु सापिण्ड्यं नोत्पद्यते सगोत्रेष्वपि सापिण्ड्यानुत्पत्तौ परगोत्रेषु सुतरां सापिण्ड्यानुत्पत्तिरिति। तत् पुत्रान्तरवत् साप्तपौरुषसापिण्ड्यप्रसक्तौ निषेधकं सापिण्ड्यप्रयुक्तदशाहाशौचादिप्रतिषेधकम् वा न तु सामान्यतःसापिण्ड्यनिषेधमुक्तवचनजातात्।

अथ दत्तकाशौचनिर्णयः। तत्र शुद्धदत्तकस्य जनककुले परस्परमशौचं नास्त्येव गोत्रपिण्डनिवृत्त्या अशौचनिवृत्तेरर्थसिद्धत्वात् द्व्यामुष्यायणस्य तु उभयत्रैवाशौचमिति। ब्रह्मपुराणे "दत्तकश्च स्वयन्दत्तः कृत्रिमः क्रीत एव च। अपविद्धाश्च ये पुत्रा भरणीयाः सदैव ते। भिन्नगोत्राः पृथक्पिण्डाः पृथग्वंशकराः स्मृताः। जनने मरणे चैव त्र्यहाशौचस्य भागिनः"। पराशरः "भिन्नगोत्रः स्वगोत्रो वा नीतः संस्कृत्य चेच्छया। जनने मरणे तस्य त्र्यहाशौचं विधीयते"। तथा "औरसं वर्जयित्वा च सर्ववर्णेषु सर्व्वदा। क्षेत्रजादिषु पुत्रेषु जातेषु च मृतेषु च। अशौचन्तु त्रिरात्रं स्यात् समानमिति निश्चयः"। सर्व्वदा उपनयनानन्तरमपि। अत्र सगोत्रस्यापि विधिना जनकगोत्रविच्छित्तिपूर्व्वकग्रहीतृगोत्रप्राप्तावसगोत्रदत्तकाविशेषात् त्र्यहाशौचमुक्तं युक्तमेव। तथा दत्तके अकृतोद्वाहे पश्चाज्जातस्यौरसस्य विवाहे न परिवेदनदोषः न वा दत्तकस्याग्रजसोदरात् पूर्व्वं विवाहकरणेऽपि क्षतिः। ननु शुद्धदत्तकस्य जनककुले सापिण्ड्यविच्छेदस्य दर्शितत्वात् तत्र विवाहः प्रसज्येत प्रसज्येत च द्व्यामुष्यायणस्यापि त्रिपुरुषानन्तरितकन्यासन्ततिपरम्परया विवाहः, मैवं "असपिण्डा च या मातुरसगोत्रा च या पितुः। सा प्रशस्ता द्विजातीनां दारकर्म्मणि मैथुने"। मनुवचने चकारात् पितुरसपिण्डा च इति ग्रहीतृमात्रगोत्रस्यापि दत्तकस्य जनकस्यापि सपिण्डासगोत्रावर्जनाय पितुरिति पदोपादानात्। न च तथापि दत्तकस्य पितुरपि दत्तकत्वे तत्त्रिपुरुषानन्तरितकन्यासन्ततेर्विवाहः केन वार्य्यते पितृसापिण्ड्यसगोत्रत्वयोरभावादिति वाच्यम् यतो विवाहे नैतत् सापिण्ड्यमुपयुज्यते किन्तु सर्व्वसाधारणं परिभाषितं पितृपक्षे साप्तपौरुषं मातामहपक्षे पाञ्च-

पौरुषश्चेति न काप्यनुपपत्तिः। तत्प्रपञ्चस्तु तत्र तत्र द्रष्टव्य इति।

अथ दत्तकविभागः। तत्र वृहस्पतिः “एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः। शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम्”। शेषाणां ये तत्रांशभागित्वेन निषिद्धास्तेषाम्। आनृशंस्यं दया। प्रजीवनं भरणम्। तथा यमः “पुत्रास्तु द्वादश प्रोक्ता मुनिभिस्तत्त्वदर्शिभिः। तेषां षड्बन्धुदायादाः षड्दायादबान्धवाः। स्वयमुत्पादितस्त्वेको द्वितीयः क्षेत्रजः स्मृतः। तृतीयः पुत्रिकापुत्रो जातिधर्मविदो विदुः। पौनर्भवश्चतुर्थस्तु कानीनः पञ्चमः स्मृतः। गृहे च गूढ उत्पन्नः षडेते पिण्डदायिनः। अपविद्धः सहोढश्च दत्तः कृत्रिम एव च। क्रीतश्च पञ्चमः पुत्रो यश्चोपनयते स्वयम्। इत्येते सङ्गोत्पन्नाः षड्दायादबान्धवाः” नारदः। औरसः क्षेत्रजश्चैव पुत्त्रिकापुत्त्र एव च। कानीनश्च सहोढश्च गूढोत्पन्नस्तथैव च। पौनर्भवोऽपविद्धश्च दत्तः क्रीतः कृतस्तथा। स्वयं चोपागतः पुत्त्रा द्वादशैते प्रकीर्त्तिताः। तेषां षड्बन्धुदायादाः षड्दायादबान्धवाः।। पूर्वः पूर्वः स्मृतो ज्यैष्ठो जघन्यो यो य उत्तरः। क्रमादेते प्रवर्त्तन्ते मृते पितरि तद्धने। ज्यायसो ज्यायसोऽभावे जघन्यो यो य आप्नुयात्”। पूर्वपूर्वाभावे उत्तरोत्तरेषां द्रविणार्हत्वमित्यर्थः। औरसक्षेत्रजपुत्रिकापुत्रपौनर्भवकानीनगूढोत्पन्नसहोढजदत्तकक्रीतस्वयमुपागतापविद्धयत्रक्वचनोत्पादितानभिधाय विष्णुः “तेषां पूर्वः पूर्वः श्रेयान् स एव दायहरः स चान्यान् बिभृयात्”। औरसपुत्रिकापुत्रक्षेत्रजगूढजकानीनपौनर्भवदत्तकक्रीतकृत्रिमस्वयंदत्तसहोढापविद्धानभिधाय याज्ञवल्क्यः “पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः।” मनुः “न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुः” तथा “श्रेयसः श्रेयसोऽभावे पापीयान् रिक्थमर्हति। बहवश्चेत्तु सदृशाः सर्वे रिक्थस्य भागिनः”। सदृशा गुणेन औरसत्वक्षेत्रजत्वाद्युपाधिना वा। श्रेयस औरसादेः। यवीयान् न्यूनः क्षेत्रजादिरित्यर्थः। तथा “औरसक्षेत्रजौ पुत्रौ पितृरिक्थस्य भागिनौ। दशापरे च क्रमशः पितृरिक्थांशभागिनः”। दश दत्तकादयः। हारीतः “स्वयमुत्पादितः क्षेत्रजः पौनर्भवः कानीनः पुत्रिकापुत्रो गूढोत्पन्नश्चेति बन्धुदायादाः, दत्तः क्रीतोऽपविद्धः सहोढजः स्वयमुपागतः सहसाढश्चेत्यबन्धुदायादाः”। मनुः “पुत्त्रान् द्वादश यानाह नृणां स्वायम्भुवो मनुः। तेषां षट् बन्धुदायादाः षड्दायादबान्धवाः। औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च। गूढोत्पन्नोऽपविद्धश्च दायादबान्धवास्तु षट्। कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा। स्वयंदत्तश्च शौद्रश्च षड्दायादबान्धवाः”। बौधायनः “औरसं पुत्रिकापुत्रं क्षेत्रजं दत्तकृत्रिमौ। गूढञ्चैवापविद्धञ्च रिक्थभाजः प्रचक्षते। कानीनञ्च सहोढञ्च क्रीतं पौनर्भवं तथा। स्वयंदत्तं निषादञ्च गोत्रभाजः प्रचक्षते”। एतच्च कानीनादीनां गोत्रमात्रभागित्वकथनमौरसादीनां मध्ये कस्यापि सम्भवेऽंशहरत्वप्रतिषेधार्थम्। सहोढदत्तकक्रीतस्वयमुपागतापविद्धशौद्रानभिधाय औरसादीन् परामृश्य पुनर्वशिष्ठः “यस्य तु सर्वेषां वर्णानां न कश्चित् दायादः स्यादेते तस्य भागं हरेयुः”। औरसपुत्रिकापुत्रक्षेत्रजकानीनगूढोत्पन्नापविद्धसहोढपौनर्भवदत्तकस्वयमुपागतकृतकक्रीतानभिधाय देवलः “एते द्वादश पुत्रास्तु सन्तत्यर्थमुदाहृताः। आत्मजाः परजाश्चैव लब्धा याहच्छिकास्तथा। तेषां षड्बन्धुदायादाः पूर्वेऽन्ये पितुरेव षट्। विशेषश्चापि पुत्राणामानुपूर्व्याद्विशिष्यते। सर्वे ह्यनौरसस्यैते पुत्रा दायहराः स्मृताः। औरसे पुनरुत्पन्ने तेषु ज्यैष्ठ्यं न विद्यते। तेषां सवर्णा ये पुत्रास्ते तृतीयांशभागिनः। हीनास्तमुपजीवेयुर्ग्रासाच्छादनसम्भृताः” कात्यायनः, “उत्पन्ने त्वौरसे पुत्रे तृतीयांशहराः स्मृताः। सवर्णा असवर्णास्तु ग्रासाच्छादनभागिनः”। चतुर्थांशहराः स्मृता” इति द्वितीयचरणे क्वचित् पाठः। वशिष्ठः, “तस्मिंश्चेत् प्रतिगृहीते औरस उत्पद्यते स चतुर्थभागभागी यदि नाभ्युदयिकेषु प्रयुक्तं स्यात्”। स प्रतिगृहीतपुत्रः आभ्युदयिकेषु यज्ञादिषु यदि औरसेन प्रयुक्तं न स्यात् प्रभूतं धनमिति शेषः। अत्र नानाविधमुनिवचनानां परस्परविरोधपरिहारार्थमेवं व्याख्यायते वृहस्पतिवचने औरसमात्रस्य धनभागित्वकथनमन्येषां भरणमात्रकथनञ्च असवर्णक्षेत्रजदत्तकादिविषयं, देवलकात्यायनवचनैकवाक्यत्वात्। नारदादिवचनेषु च औरसाद्यभावे क्षेत्रजदत्तकादीनामृक्थग्रहणविधिरपि सर्वधनग्रहणविषयः। अतश्च दत्तकग्रहणानन्तरमौरसोत्पत्तौ तदौरसचतुर्थांशविधिर्वशिष्ठोक्तो दत्तकविषये ज्ञेयः। तथा देवलकात्यायनवचने तृतीयांशग्रहणविधिरनुत्कृष्टगुणदत्तकविषयो बोध्यः। “उपपन्नो गुणैः सर्वैः पुत्रो

यस्य हि दक्षिमः । स हरेतैव तद्रिक्थं संप्राप्तोऽप्यन्यगोत्रतः" इति मनुवचनैकवाक्यत्वात् । गुणैः जातिविद्याचारैः । "सप्तधनभोक्ता स्यादौरसोऽपि जघन्यजः । त्रिभागं क्षेत्रजो भुङ्क्ते चतुर्थं पुत्रिकासुतः" इति ब्रह्मपुराणदर्शनात् । क्षेत्रजविषय इत्यन्ये । तथा केनापि मुनिना दत्तकस्य बन्धुदायादत्वमन्येन चादायादत्वमुक्तम् तत् गुणवदगुणवद्भेदेन समाधेयम् । पितुरिव बन्धूनां सपिण्डानामपि दायहरत्वाद्बन्धुदायादत्वं पितृमात्रदायहरत्वात् अबन्धुदायादत्वम् "तेषां षड्बन्धुदायादाः पूर्वेऽन्ये पितुरेव षट्" इत्यत्र पितुरेवेत्येवकारश्रवणात् । एवं दत्तकस्य धनग्रहणादौ मुनिभेदेन पूर्वापरोक्तिवैषम्यं गुणागुणविवेकेनापास्तम् । एतेनौरसस्य भ्रात्रादिधने येनैव भ्रातृत्वादिना सम्बन्धेनाधिकारित्वं तादृशेनैव सम्बन्धेन तादृशदत्तकस्यापि यथासम्भवमुचितांशभागित्वमवधेयम् । एवं धनिनः पुत्रान्तरसत्त्वे मृतपितृकस्य दत्तकपौत्रस्यापि दत्तोचितांशभागित्वं तदसत्त्वे सर्वहरत्वमपीति । न च पौत्रस्य स्वपितृयोग्यांशभागित्वनियमात् दत्तकस्य गृहीतुः पितामहौरसत्वे तादृशपितृव्यतुल्यस्यैवांशस्य तद्योग्यत्वाद्दत्तकपौत्रः पितृव्यतुल्यमेवांशं लभतामिति वाच्यं पुत्रस्य दत्तकत्वे चतुर्थांशः पौत्रस्य तु तथात्वे समानांश इति वैषम्यात् । ततश्च स्वसमानरूपस्य पितुर्यादृशांशः शास्त्रसिद्धस्तस्यैव स्वपितृयोग्यांशतेति यथोक्तमेव साधु । एवं रीतिः प्रपौत्रेऽप्यनुसर्त्तव्येति । ननु क्षेत्रजदत्तकादीनां सामान्यधनाधिकारित्वेऽपि राज्येऽनधिकारः श्रूयते । यथा "औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च । गूढोत्पन्नोऽपविद्धश्च भागार्हास्तनया इमे । कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा । स्वयंदत्तश्च दासश्च षडिमे पुत्रपांशुलाः । अभावे पूर्वपूर्वेषां परान् समभिषेचयेत् । पौनर्भवं स्वयंदत्तं दासं राज्ये न योजयेत्" । तथा "न क्षेत्रजादींस्तनयान् राजा राज्येऽभिषेचयेत् । पितॄणां साधयेत्सत्यमौरसे तनये सतीति" उच्यते । शास्त्रान्तरसद्भावे विशेषशास्त्रस्य सामान्यपरत्वमेव लाघवात् । अतएव पूर्वपूर्वाभावे परपराधिकारबोधकं हि पूर्ववाक्यं प्रागुक्तनारदादिवचनैकवाक्यतया समग्रराज्यमेव विषयीकरोति परवचनञ्च सत्यौरसे क्षेत्रजदत्तकादीनां समानांशनिषेधकम् असवर्णक्षेत्रजदत्तकादिविषयं वा । अन्यथा वाक्यभेदे गौरवम् । तत्स्वीकारेऽपि नानेन वचनेन क्षेत्रजदत्तकादीनां सत्यौरसे स्वस्वोचितांशो निषिध्यते किन्त्वौरससत्त्वे तेषामभिषेकं निषिध्यौरसस्य राज्येऽभिषेको विधीयते तथा च क्षेत्रजदत्तकादयः सामान्यशास्त्रप्राप्तमंशं लभन्त एव तत्सङ्कोचकाभावात् । न चैतदेव वचनं बाधकं भिन्नविषयत्वात् । अतएव "भागार्हास्तनया इमे" इत्यनेन पूर्ववचने भागार्हत्वं स्पष्टीकृतम् । राज्यातिरिक्तस्य भाग इति न शक्यते वक्तुं राज्यस्यैव तत्रोपस्थितत्वात् पौनर्भवादीनान्तु पूर्वपूर्वाभावेऽपि राज्यनियोजनाभावः पृथगभिधानसामर्थ्यादिति । एतावता प्रबन्धेनाभिहितोऽयं क्षेत्रजदत्तकादीनामौरसेन सह विभागप्रकारः स तु शूद्रस्य न सम्भवति तस्य तु "दास्यां वा दासदास्यां वा यः शूद्रस्य सुतो भवेत् । सोऽनुज्ञातो हरेदंशमिति धर्मो व्यवस्थितः" इति मनुवचनेन "जातोऽपि दास्यां शूद्रेण कामतोंऽशहरो भवेत् । मृते पितरि कुर्य्युस्तं भ्रातरस्त्वर्द्धभागिनम् । अभ्रातृको हरेत् सर्वं दुहितॄणां सुतादृते" इति याज्ञवल्कीयेन च दासीपुत्रस्याप्यौरसेन समांशाभिधानेन पितुरनन्तरं भ्रातृरहितस्य तस्यैव दौहित्रेण सह विभागदर्शनेन दण्डापूपायितः सति पितरि क्षेत्रजदत्तकादीनामौरसेन समांशः असति तु तदर्द्धांशः । अन्यथा यत्र च क्षेत्रजदत्तकादीनामौरसचतुर्थांशित्वं तत्र तदपेक्षया अत्यन्तविप्रकृष्टस्य दासीपुत्रस्यौरससमांशित्वमिति महद्वैषम्यं स्यात् । एवं सत्सु क्षेत्रजादिषु सत्योश्च पत्नीकन्ययोर्दौहित्राधिकारे क्रमप्राप्ताधिकारविधिबाधापत्तिः । तेन दौहित्रपर्य्यन्ताधिकारिशृङ्खलायां तदेकतमे सत्यपि न दासीपुत्रस्य सर्वहरत्वं किन्तु तत्समांशः । अतएव "दत्तपुत्रे यथा जाते कदाचित्त्वौरसो भवेत् । पितुर्वित्तस्य सर्वस्य भवेतां समभागिनौ" इत्यपि वचनं शूद्रविषय एव योजनीयम् । तथा "शूद्रस्य तु सवर्णैव नान्या भार्य्योपदिश्यते । तस्यां जाताः समांशाः स्युर्यदि पुत्रशतं भवेत्" इत्यत्र वचने शूद्राणां भार्य्योत्पन्नानां सर्वेषां समांशमभिधाय पुनर्यदि पुत्रशतम् इत्यनेन पुत्रान्तराणामपि समांशता प्रतिपादिता । औरसमात्रपरत्वे पूर्वेणैतत्प्राप्त्या पुनरेतदभिधानं व्यर्थं स्यात् । द्व्यामुष्यायणदत्तकस्य तु जनकप्रतिग्रहीत्रोरुभयोरपुत्रत्वे सर्वरिक्थहरत्वं सत्यौरसे गृहीतस्य तु सांशहरत्वं ग्रहणानन्तरमौरसोत्पत्तौ तु जनकधने तदौरसार्द्धहरत्वं गृहीतुरसाधारणदत्तकस्य यादृशोंऽशः शास्त्रीयः तदर्द्ध-

हरत्वञ्चेति । यदाह प्रवराध्यायः ।"यद्येषां स्यात्तु भार्यासु अपत्यं न स्यात् तदा रिक्थं हरेयुरिति" । तथा नारदः "द्व्यामुष्यायणका दद्युर्द्वाभ्यां पिण्डोदके पृथक् । रिक्थादर्द्धं समादद्युर्बीजिक्षेत्रिकयोस्तथा" । वीजिक्षेत्रिकपदयोर्जनकप्रतिग्रहीत्रुभयोपलक्षकत्वं प्रागेवाभिहितम् ।

अथान्धपङ्गुप्रभृतिपुत्राणां धनानधिकारितया तदौरसक्षेत्रजयोरेव पितामहधनभागित्वश्रुतेर्न तद्गृहीतदत्तकपुत्रादेः पितामहधनाधिकारः। किन्तु भरणमात्रम् अन्धादिभार्य्याणां भरणविधानेन तद्भरणस्य दण्डापूपायितत्वात् । तथा हि, "अन्धपङ्ग्वादीननधिकारिपुत्रानभिधायाह "औरसाः क्षेत्रजास्त्वेषां निर्दोषा भागहारिणः । अपुत्रा योषितश्चैषां भर्त्तव्याः साधुवृत्तयः । सुताश्चैषां प्रभर्त्तव्या यावद्वै भर्तृसात् कृता."याज्ञ०। एवं ग्रहणानन्तरमुत्पन्नौरसेन सह दत्तकस्य विभागदर्शनात् सत्यौरसे गृहीतस्यापि नांशभागित्वमिति । तथा विधानं विना परिगृहीतस्यापि नांशभागित्वमित्याह "तस्मिन् जाते सुते दत्ते न कृते च विधानके । तत् स्वं तस्यैव वित्तस्य यः स्वामी पितुरङ्गना" । तथा मनुः"अविधाय विधानं यः परिगृह्णाति पुत्रकम् । विवाहविधिभाजं तं न कुर्य्यात् धनभाजनम्" इति । अन्यजातीयदत्तकस्यापि नांशभागित्वमित्याह "यदि स्यादन्यजातीयो गृहीतोऽपि सुतः क्वचित् । अंशभाजं न तं कुर्य्यात् शौनकस्य मतं हि तत्" ।

दत्तकमीमांसोक्तो विशेषो दिङ्मात्रमत्रोदाह्रियते । "पुत्त्रानुमत्या पुत्त्रवतोऽपि पुत्त्रग्रहणेऽधिकारः "यन्नः पिता संजानीते तस्मिंस्तिष्ठामहे वयम् । पुरस्तात् सर्व्वं कुर्म्महे त्वामन्वञ्चो वयं स्म हीति" श्रौतलिङ्गात्" ।

"अपुत्रेणेति पुंस्त्वं विवक्षितं स्त्रियाहोमप्रतिग्रहमन्त्रानधिकारेण तद्ग्रहणानधिकारः इति वाचस्पतिमतं तद्दूषयित्वा ब्राह्मणादिद्वारा होममन्त्रपाठेन भर्त्त्रनुज्ञया तासामप्यधिकारः इति" व्यवस्थापितम् । "एकत्वविवक्षया द्वाभ्यां त्रिभिर्वा एकः पुत्रो न ग्रहीतुं शक्यते द्व्यामुष्यायणविधिश्च जनकपरिग्रहीतृद्वयविषयकः न प्रतिग्रहीतृद्वयविषयक इत्यविरोधः" इति । अत्र चन्द्रिकामतात् वैलक्षण्यम् । सोदरभ्रातृपुत्रस्य पुत्रीकरणे बहूनामपि मिलितानां युगपदेवाधिकारः । "तदयं निर्गलितोऽर्थः । समानगोत्रः सपिण्डो मुख्यः तदभावेऽसमानगोत्रः सपिण्डः । यद्यप्यसमानगोत्रः सपिण्डः समानगोत्रोऽसपिण्डश्चेत्युभावपि तुल्यकक्षौ एकैकविशेषणराहित्यादुभयोस्तथापि गोत्रप्रवर्त्तकपुरुषात् सापिण्ड्यप्रवर्त्तकपुरुषस्य सन्निहितत्वेनाभ्यर्हितत्वं तेन चासमानगोत्रोऽपि सपिण्ड एव ग्राह्यो मातामहकुलीनः सर्व्वथा सपिण्डाभावेऽसपिण्डस्तत्रापि समानोदकः स्याच्चतुर्द्दशात्समानगोत्रः प्रत्यासन्नः। तस्याभावे असमानोदकः सगोत्र ऐकविंशात् । तस्याप्यभावे असमानगोत्रोऽसपिण्डश्चेति तदाह शाकलः "सपिण्डापत्यकञ्चैव सगोत्रजमथापि वा । अपुत्त्रको द्विजो यस्मात् पुत्त्रत्वे परिकल्पयेत् । समानगोत्रजाभावे पालयेदन्यगोत्रजम्" इति । सगोत्र इत्यनेन सोदकसगोत्रौ गृह्येते । अत्र च पूर्व्वपूर्व्वस्य प्रत्यासत्त्यतिशयेन निर्द्देश इति तदेवाह वशिष्ठोऽपि "अदूरबान्धवं बन्धुसन्निकृष्टमेव प्रतिगृह्णीयात्" इति । अस्यार्थः अदूरस्थाः बान्धवाः यस्येत्यदूरबान्धवः सन्निहितः सपिण्ड इत्यर्थः । सान्निध्यञ्च द्विधा सगोत्रतया स्वल्पपुरुषान्तरेण च भवति । तत्र सगोत्रः स्वल्पपुरुषान्तरः सपिण्डो मुख्यस्तदभावे बहुपुरुषान्तरोऽपि सगोत्रः सपिण्डः । तदभावे असमानगोत्रः सपिण्डस्तस्याप्यभावे बन्धुसन्निकृष्टः सपिण्डः बन्धूनां सपिण्डानां सन्निकृष्टः सपिण्डः स्वस्यासपिण्डः सोदक इत्यर्थः पर्य्यवस्यति । तत्रापि सन्निकर्षो द्विविधः सगोत्रतया स्वल्पपुरुषान्तरेण च । स्वस्यासपिण्डोऽपि स्वसमानगोत्रः स्वल्पपुरुषान्तरः सपिण्डानां सपिण्डो मुख्यस्तदभावे बहुपुरुषान्तरोऽपि सगोत्रः सपिण्डसपिण्डः सोदक इति यावत् । सपिण्डसोदकाभावे समानगोत्र ऐकविंशात् ग्राह्यः । "तदभावेऽसमानगोत्रोऽसपिण्डोऽपि ग्राह्यः ।"तदभावेऽसपिण्डश्चेति"शौनकोयात् "सन्देहे चोत्पन्ने दूरबान्धवं शूद्रमिव स्थापयेत्" इति वशिष्ठलिङ्गाच्च। "दूरे बान्धवा यस्यासौ दूरबान्धवः गोत्रसापिण्ड्याभ्यामसन्निहित इत्यर्थः । सन्देहोऽत्र कुलशीलादिविषयः । स चासपिण्डेऽसगोत्रे च भवतीति सोऽप्यनुज्ञायते" ।

सगोत्रसपिण्डेषु भ्रातृपुत्र एव पुत्त्रीकार्य्य इत्युक्तं यथा "तत्र सोदरभ्रातृपुत्र एव पुत्त्रीकार्य्य इत्याह मनुः । "भ्रातृणामेकजातानामेकश्चेत् पुत्त्रवान् भवेत् । सर्व्वे ते तेन पुत्त्रेण पुत्त्रिणो मनुरब्रवीत्" इति । अत्र भ्रातॄणां प्रतिग्रहीतृत्वप्रतिपादनात् ग्राह्यत्वाभावोऽवगम्यते ।

एकजातानामित्यनेनैकेन पित्रा एकस्यां मातरि जातानामेव भ्रातृत्वं न भिन्नोदराणां भिन्नपितृकाणां वेति गम्यते। भ्रातॄणामिति पुंस्त्वनिर्देशात् पदद्वयोपादानसामर्थ्याच्च सोदराणां भ्रातृभगिनीनामपि परस्परपुत्रग्रहीतृत्वाभावोऽवगम्यते। तदाह वृद्धगौतमः “ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचिदिति” भागिनेयपदं भ्रातृपुत्रस्याप्युपलक्षणम् तेन भगिन्या भ्रातृपुत्रो न ग्राह्य इत्यर्थः सिद्ध्यति”।

एकपुत्रेण पुत्त्रदानस्य निषेधेन प्रतिग्रहोऽपि निषिद्धः यथोक्तं तत्रैव।

“एक एव पुत्त्रो यस्येति एकपुत्त्रः तेन तत्पुत्त्रदानं न कार्य्यम् “न त्वेवैकं पुत्त्रं दद्यात्प्रतिगृह्णीयाद्वेति” वशिष्ठस्मरणात्। अत्र स्वस्वत्वनिवृत्तिपूर्व्वकपरस्वत्वापादनस्य दानपदार्थत्वात् परस्वत्वापादनस्य च परप्रतिग्रहं विनानुपपत्तेस्तमप्याक्षिपति तेन प्रतिग्रहनिषेधोऽपि अनेनैव सिद्ध्यति। अतएव वशिष्ठः “न त्वेवैकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वेति” उक्त्वा तत्र हेतुमाह “स हि सन्तानाय पूर्व्वेषामिति” सन्तानार्थत्वाभिधानेनैकस्य दाने सन्तानविच्छित्तिप्रत्यवायो बोधितः। स च दातृप्रतिग्रहीत्रोरुभयोरपि उभयगोत्रत्वात्”।

मातापित्रोर्मध्ये पितुर्निरपेक्षतया स्त्रियास्तु भर्त्रनुज्ञापेक्षतया मुख्यगौणाधिकारौ तत्रोक्तौ यथा

“वद्धपुत्रेणेति पुंस्त्वश्रवणात् स्त्रियाः पुत्त्रदानप्रतिषेधः। “न स्त्री पुत्त्रं दद्यात्” नैरपेक्ष्यश्रवणात् भर्त्रनुज्ञाने तस्या अप्यधिकारः। तथा च वशिष्ठः “अन्यत्रानुज्ञानाद्भर्त्तुः” इति। यत्तु “दद्यान्माता पिता यं वा” इति यच्च “माता पिता वा दद्यातामिति” मातुः पितृसमकक्षतयाभिधानं तदपि भर्त्रनुज्ञानविषयमेव। न चैवं विधवाया आपद्यपि पुत्रदानं न स्यात् भर्त्रनुज्ञानासम्भवात् परिग्रहवदिति वाच्यम् मानवीयलिङ्गदर्शनेन तथाकल्पनात् नैरपेक्ष्यकल्पनागमाच्च स्त्रीनिरपेक्षस्यैकस्यापि भर्त्तुर्दानाधिकारः। “दद्यात् माता पिता यं वा। “माता पिता वा दद्यातामिति” मातृनिरपेक्षैकपितृनिर्देशात्. वीजस्य प्राधान्यात् “अयोनिजा अपि पुत्रा इष्यन्त” इति बौधायनीयवचनदर्शनाच्च। भारतेऽपि “माता भस्त्रा पितुः पुत्रो येन जातः स एव हि” इति। श्रुतिरपि “आत्मा वै जायते पुत्र” इति। मानवे दद्यातामित्युभयकर्त्तृकताश्रवणात्तूभयाधिकारो मुख्यः। अतएव वशिष्ठः “शुक्रशोणितसम्भवः पुत्रो मातापितृनिमित्तकस्तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतः” इति। बौधायनोऽपि “मातापित्रोरेव संसर्गसाम्यात्” इति। अतएव “माता पिता वा दद्यातामिति” मनुना मातुर्भर्त्रनुज्ञानसापेक्षत्वात् जघन्यत्वं स्वानुज्ञाननैरपेक्ष्यात् पितुर्मध्यमत्वं जनकतासाम्यात् उभयोर्मुख्यत्वमभिप्रेत्य पूर्व्वपूर्व्वास्मरणादुत्तरोत्तरमभिहितम्। न चेदमेकमेव वाक्यं द्विवचनान्तैकक्रियाश्रवणादिति वाच्यम् मध्ये विकल्पासङ्गतेः तस्मात् कल्पत्रयमेव। अतएव योगीश्वरः “दद्यान्माता पिता यं वा” इति प्रत्येकमेकवचनान्तमेव क्रियापदमुदाजहार। तत्रापि निमित्तमाह प्रयत्नत इति। प्रकृष्टो यत्नो यस्मिन् कालेऽसौ प्रयत्न आपत्कालस्तेन चापत्काल एव पुत्त्रदानं नान्यथेत्यर्थः”।

पञ्चवर्षातीतस्तनयाग्राह्यता तत्रोक्ता यथा

“कालिकापु० “दत्ताद्या अपि तनया निजगोत्रेण संस्कृताः। आयान्ति पुत्रतां सम्यगन्यवीजसमुद्भवाः। पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते। आचूडान्तं न पुत्रः स पुत्रतां याति चान्यतः। चूडाद्या यदि संस्कारा निजगोत्रेण वै कृताः। दत्ताद्यास्तनयास्ते स्युरन्यथा दास उच्यते। ऊर्द्धन्तु पञ्चमाद्वर्षात् न दत्ताद्याः सुता नृप!। गृहीत्वा पञ्चवर्षीयं पुत्रेष्टिं प्रथमञ्चरेत्। पौनर्भवन्तु तनयं जातमात्रं समानयेत्। कृत्वा पौनर्भवष्टोमं जातमात्रस्य तस्य वै। सर्व्वांस्तु कुर्य्यात् संस्कारान् जातकर्म्मादिकान् नरः। कृते पौनर्भवष्टोमे ततः पौनर्भवः सुतः इति”। अन्यवीजसमुद्भवा अपि दत्ताद्यास्तनया निजगोत्रेण प्रतिग्रहीत्रा स्वगोत्रेण सम्यक् स्वसूत्रोक्तविधिना जातकर्म्मादिभिः संस्कृताश्चेत् तदैव प्रतिग्रहीतुः पुत्रतां प्राप्नुवन्ति नान्यथेत्यर्थः। तदाह वशिष्ठः “अन्यशाखोद्भवो दत्तः पुत्रश्चैवोपनायितः। स्वगोत्रेण स्वशाखोक्तविधिना स स्वशाखभागिति” दत्ताद्या इत्यादिपदेन कृत्रिमादीनां ग्रहणम्। औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च। गूढोत्पन्नोऽपविद्धश्च भागार्हास्तनया इमे। कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा। स्वयन्दत्तश्च दासश्च षडिमे पुत्रपांशुलाः। अभावे पूर्व्वपूर्व्वेषां परान् समभिषेचयेत्। पौनर्भवं स्वयन्दत्तं दासं राज्ये न योजयेदिति” पूर्व्वोपक्रमात्

योऽयं पौनर्भवादीनां राज्यनियोजनाभावः स औरसव्यतिरिक्ताभाव एव "अभावे पूर्वपूर्वेषामित्यस्यैवानेनापवादात् सत्यौरसे तु राज्याभावस्य "न क्षेत्रजादींस्तनयान् राजा राज्येऽभिषेचयेत्। पितॄणां साधयेच्चित्यमौरसे तनये सतीत्यनेन" प्रागेवाभिधानात्। सत्यौरसे क्षेत्रजादीन् राज्ये नैवाभिषेचयेत् पितॄणां नित्यं श्राद्धादि च नैव साधयेत् न कारयेदित्यर्थः। गोत्रेणेति यद्यपि जातकर्मादीनां साक्षाद्गोत्रस्य करणता न श्रूयते तथापि तदङ्गभूते वृद्धिश्राद्धे तत्सम्बन्धस्यावश्यम्भावात् प्रधानेऽपि तत्सम्बन्ध इति। चूड़ादिषु साक्षादेव तत्सम्बन्धः। "शिखा अपि च कर्त्तव्याः कुमारस्यार्षसङ्ख्ययेति" स्मरणात्। संस्कारैः पुत्रत्वमित्युक्तम् तानेवान्वयव्यतिरेकाभ्यामाह पितुर्गोत्रेणेति। यः पुत्र आचूड़ान्तं चूड़ान्तैः संस्कारैः पितुर्जनकस्य गोत्रेण संस्कृतः सोऽन्यतोऽन्यस्य पुत्रतां न याति। अयमत्राभिसन्धिः। कृतचूड़स्य परिग्रहीतुः पुत्रताभावप्रतिपादनम् असाधारणपुत्रतां विषयीकरोतीत्यवश्यं वाच्यम्। अन्यथा गृहीत्वा पञ्चवर्षीयमित्यनेन कृतचूड़स्यापि परिग्रहीतृपुत्रताप्रतिपादनविरोधात्। गृहीत्वेत्यस्य च कृतचूड़विषयत्वावश्यम्भावः स्पष्टमिष्यते ततश्च चूड़ान्तसंस्कृतस्य परिग्रहे द्व्यामुष्यायणता भवति गोत्रद्वयेन संस्कृतत्वात् तस्य च फलं गोत्रद्वयसम्बन्ध इत्यग्रे वक्ष्यते। अनेन जातकर्मादीनां चूड़ान्तानां संस्काराणां पुत्रताहेतुत्वमुक्तम्। आचूड़मिति वक्तव्ये यदन्तग्रहणं तदकृतार्षसमसङ्ख्यशिखस्य पुत्रीकरणाभ्यनुज्ञानार्थं प्रधाननिष्पत्त्या पुत्रतार्हत्वात् चूड़ाद्या इति वक्ष्यमाणत्वाच्च। अकृतजातकर्माद्यसम्भवं कथमित्यत आह चूड़ाद्या यदीति। यदि चूड़ाद्याः संस्कारा निजगोत्रेण प्रतिग्रहीतगोत्रेण कृता वैशब्दोऽवधारणे तदैव दत्ताद्यास्तनयाः स्युरन्यथा ते दासा उच्यन्ते इति। चूड़ा आद्या येषां ते तथेति न तु चूड़ाया आद्या इति पूर्वेण पौनरुक्त्यापातात्। अनेन जातकर्माद्यन्नप्राशनान्तानां जनकगोत्रेणानुष्ठानेऽपि न विरोधः। तथा च अकृतजातकर्मादिर्मुख्यः अकृतचूड़ोऽनुकल्प इति सिद्ध्यति। दत्ताद्या इत्यादिपदेन कृत्रिमादिग्रहणमित्युक्तमेव तेषामपि संस्कारैरेव पुत्रत्वं न परिग्रहमात्रेण अन्यथा दास उच्यत इति विपक्षबाधकात्। अन्यथा चूड़ाद्यकरणे कृतचूड़ादिपरिग्रहे वा दासता भवति न तु पुत्रत्वमित्यर्थः अस्य पुत्रत्वस्य यूपत्वादिवत् संस्कारजन्यत्वात्। असंस्कृतः पुत्रीकार्य्य इति स्थितम् तत्रावध्यपेक्षायामाह ऊर्द्धमिति। असंस्कृतोऽपि पञ्चमादूर्द्धं न ग्राह्यः कालाभावेन पुत्रत्वानुपपत्तेः। अनेन पञ्चैव वर्षाणि पुत्रपरिग्रहकाला इत्युक्तं भवति तद्व्यतिरेकेणाभिधानन्तु पञ्चमानन्तरं गौणोऽपि कालो नास्तीति प्रतिपादनाय। अन्यथा "स्वकालादुत्तरः कालो गौणः सर्वः प्रकीर्त्तित" इति न्यायेन पञ्चमानन्तरस्य गौणकालत्वापत्तिः। ततश्च जननमारभ्यातृतीयवर्षं, तत्रापि तृतीयवर्षस्य मुख्यकालता ऊर्द्धन्तु पञ्चमाद्वर्षादित्युपसंहारे वर्षश्रवणाच्च अत्रापि चूड़ाशब्दस्य तृतीयवर्षपरतैवाभिप्रेतेति गम्यते। अन्यथा उपनीतिसहभावपक्षे अष्टमवर्षस्याकृतचूड़स्य परिग्रहापत्तिः। नचेष्टापत्तिः "ऊर्द्धन्तु पञ्चमाद्वर्षादित्यनेन विरोधात्"। तस्मादाचूड़ान्तमित्यत्र चूड़ाशब्दस्तृतीयवर्षपर एव युक्तः तृतीयानन्तरमापञ्चमं गौणः ऊर्द्धन्तु गौणोऽपि नेति स्थितम्"।

"यत्तु कात्यायनस्मरणम्। विक्रयञ्चैव दानञ्च न नेयाः स्युरनिच्छवः"। दाराः पुत्राश्च" इत्यनिच्छूनां दानादिनिषेधः सोऽपि पञ्चवार्षिकस्यैव नाधिकस्येति व्याख्येयम्। यच्च "सदृशन्तु प्रकुर्य्यात् यमिति" वाक्ये गुणदोषविचक्षणमिति पाठमभिप्रेत्य विचक्षणं न तु बालमिति सर्वज्ञेन व्याख्यातम् तदपि पञ्चवार्षिकमेव। विचक्षणं चातुर्य्यविशेषेण न तु बालम् "बाल आ षोड़शाद्वर्षात्" इति लक्षणविशिष्टं न कुर्य्यादित्यर्थ इति व्याख्येयम्। तर्ह्यसंस्कृताभावे कथमित आह गृहीत्वेति। पञ्चवर्षीयं चूड़ान्तसंस्कारसंस्कृतमित्यर्थः। ननु कथं तस्य ग्रहणं दासताभिधानादित्यत आह पुत्रेष्टिमिति। अयमत्राभिसन्धिः "अग्नये पुत्रवते पुरोडाशमष्टाकपालं निर्वपेदिन्द्राय पुत्रिणे पुरोड़ाशमेकादशकपालं प्रजाकामोऽग्निरेवास्मै प्रजां प्रजनयति वृद्धामिन्द्रः प्रयच्छतीति" वाक्ये प्रजाफलकत्वमिष्टेः श्रूयते तत् यत्रानुत्पन्ना प्रजा तत्र तदुत्पत्तिरेव भाव्या यत्र तूत्पन्ना परिगृह्यते तत्रोत्पत्तेरभावात्तस्याः प्रजात्वमेव भाव्यमिति कल्प्यते प्रकृतविध्यन्यथानुपपत्तेः। तच्च दासत्वापनोदनमृते न सम्भवतीति तदपनोदोऽप्यवश्यमभ्युपेयः। अन्यथा प्रजात्वमात्रसम्पादकत्वे पुत्रपरिग्रहमात्रे स्यात्। यदि च संस्कारै-

रेव तत्र पुत्रत्वोत्पत्तेर्न्न तदपेक्षेति तर्हि प्रकृतेऽपि तुल्यं प्रथमपदेनात्र तत्सूचनात्। "सर्व्वांस्तु कुर्य्यात् संस्कारान् जातकर्म्मादिकान्नरः" इत्यन्तेऽभिधानाच्च। तस्मात् पुत्रेष्ट्या पूर्वसंस्कारप्रयुक्तदासत्वापनोदपूर्व-कप्रजात्वसम्पादनात् संस्कृतोऽपि परिग्राह्य इति स्थितम्। यद्येवं तर्हि संस्कृतमित्येव वाच्यम् किं पञ्च-वर्षीयपदोपादानेनेति चेन्नैवम् पञ्चवर्षीयस्यैवेति नियमार्थत्वात् नियमस्याचरणग्रहणपूर्वकब्रह्मवर्च्चसफलकोपनयनप्राप्त्यर्थः। नचायन्नियमः पूर्ववाक्येनैव सिद्ध इति वाच्यम् तस्याकृतसंस्कारावधिसमर्पकत्वेन प्रकृतत्वाभावे परिगृहीतत्वात्। प्रथममिति संस्कारेभ्यः प्रागित्यर्थः। ननु परिग्रहहोमादेव प्रागिति कुतो नेष्यते, गृहीत्वेति शङ्कायां ग्रहणभावनायाः क्त्वाप्रत्ययेन पूर्वकालतावगमात्। पुत्रेष्ट्या पूर्वसंस्कारापनोदेन संस्कारान्तरावश्यापेक्षणाच्चेति"।

पुत्त्रच्छायावहमित्यस्यार्थस्तत्रैवोक्तो यथा

"पुत्रच्छाया पुत्रसादृश्यं तच्च नियोगादिना स्वयमुत्-पादनयोग्यत्वम् यथा भ्रातृसपिण्डसगोत्रादिपुत्रस्य, नचासम्बन्धिनि नियोगासम्भवः "वीजार्थं ब्राह्मणः कश्चि-द्धनेनोपनिमन्त्र्यतामिति" स्मरणेन निमन्त्रणसम्भवात्। ततश्च भ्रातृपितृव्यमातुलदौहित्रभागिनेयादीनां निरासः पुत्रसादृश्याभावात्। एतदेवाभिप्रेत्योक्तमपरेणैव "दौहित्रो भागिनेयश्च शूद्राणां विहितः सुतः। ब्राह्मणादि-त्रये नास्ति भागिनेयः सुतः क्वचिदिति"। अत्रापि भागिनेयपदं पुत्त्रासदृशानां सर्व्वेषामुपलक्षणं विरुद्ध-सम्बन्धस्य समानत्वात्। विरुद्धसम्बन्धश्च नियोगादिना स्वयमुत्पादनायोग्यत्वम्। यथा विरुद्धसम्बन्धो विवाह-गृह्यपरिशिष्टे च वर्जितः। "दम्पत्योर्म्मिथः पितृमातृ-साम्ये विवाहो विरुद्धसम्बन्धो यथा भार्य्यास्वसुर्दुहिता पितृव्यपत्नीस्वसा चेति"। अस्यार्थः यत्र दम्पत्योर्वधू-वरयोः पितृमातृसाम्यं बध्वा वरः पितृस्थानीयो भवति वरस्य वा वधूर्मातृस्थानीया भवति तादृशो विवाहो विरुद्धसम्बन्धः तत्र यथाक्रममुदाहरणद्वयं भार्य्यास्वसुर्दुहिता श्यालिकापुत्त्री पितृव्यपत्नीस्वसा पितृव्यपत्न्या भगिनी चेति। तथा प्रकृते विरुद्धसम्बन्धः पुत्त्रो वर्ज्ज-नीय इति ततो रतियोग सम्भवति तादृशः कार्य्य इति यावत्।"

"परिग्रहविध्यभावे विशेषमाह मनुः। "अविधाय विधानं यः परिगृह्णाति पुत्त्रकम्। विवाहविधिभाजं तं कुर्य्यान्न धनभाजनमिति"। परिग्रहविधिं विना परिगृहीतस्य विवाहमात्रं कार्य्यं न धनदानमित्यर्थः किन्तु तत्र पत्न्यादय एव धनभाजः विधिं विना तस्य पुत्त्रत्वानुत्पादात्। अतएव वृद्धगौतमः "सगोत्रेषु कृता ये स्युर्दत्तक्रीतादयः सुताः। विधिना गोत्रतां यान्ति न सापिण्ड्यं विधीयते" इति विधिनैव गोत्रतां यान्तीति नियमः दानादिविधीनां दत्तकादिलक्षणान्त-र्गतत्वेन स्वरूपनिर्वाहकत्वात् यथोक्तं "यमद्भिः पुत्त्र-मापदि"। अद्ग्रहणं सकलदानविधेरुपलक्षणं तेन च प्रतिग्रहविधिरप्याक्षिप्तो भवति"।

"मेधातिथिरपि दत्तकादिषु संस्कारनिमित्तमेव पुत्त्रत्व-माह "सत्यपि प्रयोगे इन्द्रादिशब्दवल्लोकतोऽर्थातिशयात् शास्त्रे चोत्पत्तिविधानात् भार्य्यादिव्यवहारवत् पुत्त्रत्व-व्यवहारोऽवगन्तव्य इत्यादिग्रन्थसन्दर्भेण"। तस्मात् दत्तकादिषु संस्कारनिमित्तमेव पुत्त्रत्वमिति सिद्धम्। दानप्रतिग्रहहोमाद्यन्यतमाभावे तु पुत्त्रत्वाभाव एवेति।"

दत्तकस्य जनकगृहीत्रोर्मध्ये सापिण्ड्यमस्ति न वेति संश-निर्णयाय सापिण्ड्यविशेषस्य तयोरभावस्तत्र प्रतिपादितः "ननु मनुवचनात् जनकगोत्रनिवृत्तावपि प्रतिग्रहीतृगोत्र-प्राप्तौ किं मानमित्यत आह वृद्धमनुः। दत्तक्रीतादि-पुत्त्राणां वीजवप्तुः सपिण्डता। पञ्चमी सप्तमी तद्वत् गोत्रं तत्पालकस्य चेति"। दत्तक्रीतादिपुत्त्राणां वीज-वप्तुर्जनकस्य सपिण्डतास्त्येव दानादिनापि सा न निव-र्त्तते तस्या अवयवान्वयरूपतया यावच्छरीरं दुरपनेय-त्वात् अनेनावयवान्वय एव सापिण्ड्यं न पिण्डान्वय इत्युक्तं भवति पिण्डान्वयस्य "व्यपैति ददतः स्वधेति" अप-गमावगमात्। सा च सपिण्डता कियतीत्यपेक्षाया-माह पञ्चमी सप्तमीति। पञ्चानां पूरणी पञ्चमी पञ्च-पुरुषव्याप्तेत्यर्थः एवं सप्तमी। गौतमोऽपि "ऊर्द्ध्वं सप्तमात् पितृबन्धुभ्यः वीजिनश्च मातृबन्धुभ्यः पञ्च-मादिति"। अत्र वीजिग्रहणं दत्तकाद्युत्पादकानां सर्व्वे-षामपि संग्रहार्थं न केवलं क्षेत्रजोत्पादकस्यैव "य एतेऽभिहिताः पुत्त्राः प्रसङ्गादन्यवीजजाः। यस्य ते वीजतो जातास्तस्य ते नेतरस्य त्विति" मनुस्मरणात्। तस्य ते पुत्त्रा इति पुत्त्रत्वप्रतिपादनं सापिण्ड्य-प्रतिपादनार्थं न तु पुत्त्रत्वोत्पादनार्थं "पुत्त्रान् द्वादश यानाह" इत्यादिप्रतिग्रहीतृपुत्त्रत्वप्रतिपादनविरोधात्

नेतरस्य प्रतिग्रहीतुरित्यर्थः। नन्वेवं कन्यावदुभयत्रापि सापिण्ड्यमास्तां प्रतिग्रहेण गोत्रवत् सापिण्ड्यस्याप्युत्पत्तेरिति चेन्नैवम् “सगोत्रेषु कृता ये स्युर्दत्तक्रीतादयः सुताः। विधिना गोत्रतां यान्ति न सापिण्ड्यं विधीयते” इति वृद्धगौतमस्मरणविरोधात्। ये दत्तादयः सुताः सगोत्रेषु सगोत्रमध्ये कृतास्ते विधिना गोत्रतां सन्ततित्वं यान्ति परन्तु तैः सह विधिना सापिण्ड्यं न विधीयते नोत्पद्यत इत्यर्थः। सगोत्रेष्वपि सापिण्ड्यानुत्पत्तौ परगोत्रे सुतरां सापिण्ड्यानुत्पत्तिरुक्ता। युक्तञ्चैतत् पितारब्धत्वेन भर्त्रा सहैकशरीरारब्धत्वेन च यथा उभयत्रापि सापिण्ड्यं सिद्ध्यति न तथा दत्तके पितारब्धत्वेऽपि प्रतिग्रहीत्रा सहैकशरीरारब्धत्वाभावात्”। तत्र चायमर्थः धर्मार्थं स्वस्यालोकतापरिहारकधर्मसम्पत्त्यर्थं तत्तद्गोत्रेषु जनकापेक्षया भिन्नगोत्रेणापि परिग्रहीत्रा पुत्रवत् पुत्रप्रतिनिधितया परिगृह्य ये पुत्रा वर्द्धिताः तेषु केवलं परिग्रहीतृसपिण्डविभागित्वमेव न सापिण्ड्यमिति तस्मात् अत्र दत्तके न परिग्रहीतृसापिण्ड्यं किन्तु जनककुल एव साप्तपौरुषिकं सापिण्ड्यमिति सिद्धम्”।

“नन्वेवं दत्तकस्य प्रतिग्रहीतृकुले सापिण्ड्याभावे कथं विवाहो न स्यादिति चेत् सत्यम्। सगोत्रत्वादिति ब्रूमः। तर्हि तद्भगिन्यादिसन्ततौ विवाहोऽस्तु सगोत्रत्वसपिण्डत्वयोरभावात् न चात्र निषेधकं वचनमुपलभामहे प्रत्युत “सावित्रीं यस्य यो दद्यात् तत्कन्यां न विवाहयेत्। तद्गोत्रे तत्कुले वापि विवाहो नैव दोषकृत्” इत्याद्यनुकूलमेव वचनमस्ति। न चेष्टापत्तिः अविच्छिन्नाविगीतसकलदेशीयशिष्टाचारविरोधात् तस्मात् किं तत्राविवाहनिमित्तमिति। अत्र कैश्चिदुच्यते “असपिण्डा च या मातुरसगोत्रा च या पितुः। सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने” इति मनुवाक्ये स्वस्यासपिण्डेति वक्तव्ये यत् पितुरसपिण्डावचनं तद्दत्तकस्य प्रतिग्रहीतृसपिण्डाया विवाहो मा प्रसाङ्क्षीदित्येवमर्थम् अन्यथा पितृद्वारके सापिण्ड्ये मूलपुरुषादष्टमस्य वरस्य, मातृद्वारके सापिण्ड्ये मूलपुरुषात् षष्ठ्याः कन्याया विवाहो न स्यात् पितुः सपिण्डत्वेन असपिण्डताऽभावात् न चेष्टापत्तिः “पञ्चमात् सप्तमादूर्द्ध्वं मातृतः पितृतस्तथा” इत्यादिसकलस्मृतिनिबन्धशिष्टाचारविरोधात्। न चेदं दूषणं दत्तकेऽपि समानम् अष्टमस्य तस्य षष्ठ्याः कन्यायाः पितुः सपिण्डत्वेन अविवाह्यत्वप्रसङ्गादिति वाच्यम् “सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते” इति वक्ष्यमाणवाक्येन सप्तमस्य दत्तकपितुर्मूलपुरुषासपिण्डत्वेन षष्ठ्याः कन्यायास्तदसापिण्ड्येन षष्ठ्याः सप्तमस्य च पितुः सपिण्डत्वाभावादित्युक्तमेव। तस्मात् दत्तकसापिण्ड्यनिर्णायकमिदमेव वचनमिति कानुपपत्तिः?। तदतिभ्रान्तप्रलपितं विकल्पासहत्वात् तथा हि किमिदं दत्तकस्यैव सापिण्ड्यनिर्णायकम् उत दत्तकौरसयोरुभयोरिति। नाद्यः द्वेधा हि अस्य वचनस्य दत्तकविषयता सम्भवेत् दत्तकप्रक्रमाद्वा. दत्तकसापिण्ड्यनिर्णायकविशेषवचनैकवाक्यत्वाद्वा न चैकोऽभयमप्यस्ति अनुपलम्भात्। किञ्चास्य दत्तकपरत्वे अत्रत्यं पितृपदं गौण्या प्रतिग्रहीतृपितृपरं स्यात् तच्च अनिष्टम् “न विधौ परः शब्दार्थ” इति न्यायविरोधात्। नाप्यन्त्यः पितृपदे युगपद्वृत्तिद्वयविरोधात्। न च गङ्गायां मीनघोषावित्यत्रेव वृत्त्यन्तरतात्पर्य्यग्राहकं प्रमाणमस्ति। तस्मात् औरसविषयमेवेदं वचनं गर्भाधानादिप्रक्रमात् “पञ्चमात् सप्तमादूर्द्ध्वमिति” वचनान्तरैकवाक्यत्वाच्च। न चास्यौरसपरत्वे कूटस्थात्” अष्टमस्य वरस्य षष्ठीकन्यायाश्च अनुद्वाहत्वापत्तिः पितुरसपिण्डत्वाभावादित्युक्तमेव दूषणमिति वाच्यम् तस्य पितुरिति पञ्चम्यां षष्ठीभ्रमनिबन्धनत्वेन अदूषणत्वात्। अतएव योगीश्वरेण “मातृतः पितृतस्तथा” इत्यत्र पञ्चमीत्वनिर्णायकस्तसिल्प्रयोग आदृतः। तत्रापि सार्वविभक्तिकत्वशङ्कायाम् “ऊर्द्ध्वं सप्तमात् पितृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमादिति” गौतमवाक्ये पञ्चम्या निर्णय इति न किञ्चित् समाधानमिति समाधानान्तरं वक्तव्यम्। तत्रापरे आहुः “क्षेत्रजादीन् सुतानेतानेकादश यथोदितान्। पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः” इत्यत्र वाक्ये क्षेत्रजादीनां पुत्रप्रतिनिधित्वाभिधानात् “प्रतिनिधिस्तद्धर्मा स्यादिति” न्यायेन सकलौरसधर्म्मप्राप्त्या प्रतिग्रहीत्रादिपितृसपिण्डावर्जनं सेत्स्यतीति। तन्न “न सापिण्ड्यं विधीयते” इत्यनेन निषिद्धस्य सापिण्ड्यस्य अतिदेशासम्भवेनाप्राप्त्या तद्वर्जनासम्भवात्। एतेन पुत्रनाम्ना औरसधर्मातिदेशात् प्रतिग्रहीत्रादिपितृसपिण्डावर्जनसिद्धिरित्यपास्तम् ‘न तौ पशौ करोतीति”वत् निषिद्धस्य सापिण्ड्यस्य अतिदेशासम्भवेन वर्जनासम्भवात् तस्मात् अनन्यगत्या वाचनिकमेव प्रतिग्रहीतृकुले सापिण्ड्यम् अभ्युपगन्त-

व्यक्ति । चोच्यते । द्विविधं हि सापिण्ड्यम् अवयवान्वयेन पिण्डान्वयेन चेति तत्रावयवान्वयसापिण्ड्यस्य दत्तके प्रत्यक्षत्वेऽपि विततत्वेन हेमाद्रिः पिण्डान्वयमेवोपादाय दत्तकादीनां प्रतिग्रहीतृकुले त्रिपुरुषमेव सापिण्ड्यं व्यवातिष्ठिपत्” ।

“दत्तकानामेषा पिण्डान्वयरूपा अशौचाविवाह्यत्वादिप्रयोजिका त्रैपौरुष्येव सपिण्डता, न “लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः । पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषमिति” मात्स्याभिहिता साप्तपौरुषी तस्याः सामान्यरूपतया विशेषेणापवादात्” । “एतदेवाभिप्रेत्योक्तं संग्रहकारेण “दत्तकानान्तु पुत्राणां सापिण्ड्यं स्यात् त्रिपौरुषम् । जनकस्य कुले तद्वद्ग्रहीतुरिति धारणेति”। यदिदमुभयत्र त्रिपुरुषसापिण्ड्याभिधानं तत् द्व्यामुष्यायणाभिप्रायेण तस्य त्रिकद्वयेन सह सपिण्डीकरणाभिधानात् शुद्धदत्तकस्य तु प्रतिग्रहीतृकुले त्रिपुरुषं पिण्डान्वयरूपं सापिण्ड्यं जनककुले साप्तपौरुषमवयवान्वयरूपमेवेति । तद्वत् सपिण्डतावत् गोत्रमपि बीजवप्तुर्जनकस्य न केवलं जनकस्य अपि तु तत्पालकस्य च दत्तकादेर्यः पालकस्तस्य च गोत्रं दत्तकादीनां भवतीति । अनेन सपिण्डतावैलक्षण्यं गोत्रेऽभिहितं यथा सपिण्डता जनकस्यैव न तथा गोत्रं किन्तु उभयोरपि तदिति । न चेदमपि दत्तकमात्रे किन्तु द्व्यामुष्यायणे दत्तकविशेषे । तथा हि द्विविधा दत्तकादयो नित्यवद्द्व्यामुष्यायणा अनित्यवद्द्व्यामुष्यायणाश्चेति । तत्र नित्यवद्द्व्यामुष्यायणा नाम ये जनकप्रतिग्रहीतृभ्यामावयोरयं पुत्र इति संप्रतिपन्नाः । अनित्यवद्द्व्यामुष्यायणास्तु ये चूडान्तैःसंस्कारैर्जनकेन संस्कृताः उपनयनादिभिश्च प्रतिग्रहीत्रा, तेषां गोत्रद्वयेनापि संस्कृतत्वात् द्व्यामुष्यायणत्वं परन्त्वनित्यं जातमात्रस्यैव परिग्रहे गोत्रद्वयेन संस्काराभावात् तस्य प्रतिग्रहीतृगोत्रमेव ; तदिदं सर्वमभिप्रेत्याह कात्यायनः “नित्यानां द्व्यामुष्यायणानां द्वयोरिति” सूत्रेण नित्यद्व्यामुष्यायणानां गोत्रद्वयप्रवरसम्बन्धमुक्त्वा तमेवानित्येष्वप्यतिदिशति “दत्तकादीनान्तु द्व्यामुष्यायणवदिति” सूत्रेण । व्याख्यातञ्चैतत् प्रवरस्वामिभिः द्व्यामुष्यायणप्रसङ्गेनानित्यानाह दत्तकेति । तावदेव नोत्तरसन्ततौ प्रथमेनैव संस्काराः परिग्रहीत्रा चेत् तदा उत्तरस्य पूर्वत्वात्तेनैव उत्तरत्र । तथा पितृव्येण भ्रातृव्येण चैकार्षेण ये जातास्ते परिग्रहीतुरेवेति” । अस्य भाष्यस्यायमर्थः यो गोत्रद्वयेन संस्कृतस्तस्यैव गोत्रद्वयसम्बन्धो नोत्तरसन्ततेः जनकगोत्रसम्बन्धे किं कारणमित्यत आह प्रथमेनेति प्रथमो जनकस्तेनैव संस्कृतत्वात् । संस्काराश्च चौडान्ताः । “पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते ! । आचूडान्तं न पुत्रः स पुत्रतां याति चान्यतः” इति कालिकापुराणात् । व्याख्यातञ्चैतत् प्रागेव अन्यसाधारणीं पुत्रतां न याति किन्तु द्व्यामुष्यायणो भवतीति । प्रथमेनासंस्कारे कथमित्यत आह परिग्रहीत्रा चेदिति । परिग्रहीत्रैव जातकर्मादिसर्वसंस्कारकरणे चौडादिसंस्कारकरणेऽपि वा उत्तरस्य परिग्रहीतुरेव गोत्रम् तत्र हेतुः पूर्वत्वात् संस्कारकरणे प्रथमत्वात् । द्व्यामुष्यायणसन्ततौ दत्तकसन्ततौ चामेलितं गोत्रमाह तेनैवेति । परिग्रहीतृगोत्रेणैव उत्तरसन्ततेर्गोत्रमुभयत्रापि । सगोत्रपरिग्रहमाह तथेति । जनकपरिग्रहीत्रोरेकगोत्रत्वेऽपि परिग्रहीत्रैव व्यपदेशः परिग्रहसंस्कारकरणादिति । यत्तु “गोत्ररिक्थे जनयितुर्न भजेद्दत्त्रिमः सुत इति तत्परिग्रहीत्रैव जातकर्मादिसर्वसंस्कारकरणपक्षे वेदितव्यम् । ये तु नित्यवद्द्व्यामुष्यायणादत्तकादयस्तेषां गोत्रद्वयम् । “द्व्यामुष्यायणका ये स्युर्दत्तकक्रीतकादयः । गोत्रद्वयेऽप्यनुद्वाहः शुङ्गशैशिरयोर्यथेति” पारिजातधृतस्मरणात् । गोत्रद्वये जनकगोत्रे परिग्रहीतृगोत्रे च । दत्तकादीनाञ्च द्व्यामुष्यायणत्वे” इदं वचनं “नित्यानां द्व्यामुष्यायणानामिति” सत्याषाढवचनं च प्रमाणम् । प्रवरमञ्जर्यामप्यनेनैवाभिप्रायेणोक्तं “दत्तक्रीतकृत्रिमपुत्रिकापुत्रादीनां यथासम्भवं गोत्रद्वयं सप्रवरमस्तीति” एतावता द्विगोत्राणां गोत्रद्वयं सप्रवरं विवाहे वर्ज्यमिति” ।

शाखायां विशेषस्तत्रोक्तो यथा

“शाखापि प्रतिग्रहीतुरेवेत्याह वशिष्ठः “अन्यशाखोद्भवो दत्तः पुत्रश्चैवोपनायितः । स्वगोत्रेण स्वशाखोक्तविधिना स स्वशाखभागिति” । स्वस्य प्रतिग्रहीतुः शाखा यस्मिन् कर्म्मणि तत् स्वशाखं कर्म्म तद्भजतीति स्वशाखभागिति प्रतिग्रहीतृशाखीयमेव कर्म तेन कर्त्तव्यमित्यर्थः । दत्तकादीनां मातामहा अपि प्रतिग्रहीत्री या माता तत्पितर एव पितृन्यायस्य

मातामहेष्वपि समानत्वात्” दत्तकमीमांसाकृत् ।

श्राद्धीयद्रव्यग्रहणनिषेधे विशेषस्तत्रोक्तो यथा “एवं प्रतिग्रहीतृकुलश्राद्धीयद्रव्यं दत्तकाय प्रतिग्रहीतृजनककुलश्राद्धीयद्रव्यञ्च द्व्यामुष्यायणाय न दातव्यं “सपिण्डाय सगोत्राय श्राद्धीयं नैव दापयेत् । न भोजयेत् पितृश्राद्धे समानप्रवरं तथेति” हेमाद्रिपारिजातधृतवचनात् । श्राद्धीयं श्राद्धे दत्तद्रव्यम्” ।

दत्तदुहिताऽपि ग्रहीतुं शक्यते यथोक्तं तत्रैव “औरसपुत्त्रस्येव औरसपुत्त्र्या अप्यपचारे क्षेत्रजाद्याः पुत्त्र्यः प्रतिनिधयो भवन्ति । “मुख्यापचारे प्रतिनिधिरिति” न्यायात् । मुख्यत्वञ्चास्या दानादिविधौ साधनत्वेन साधनत्वञ्च ऋतुगमनविधिना साधितायाः द्रव्यार्ज्जनविधिना अर्ज्जितस्य व्रीह्यादेः क्रतुसाधनत्ववत् । तथा हि रात्रिसत्रन्यायेन “ऋत्वियात् प्रजां विन्दामहे ऋत्वियात् प्रजां विन्दते” इत्याद्यर्थवादोन्नीते “ऋतावुपेयात् तस्मिन् संविशेत्” इत्यादौ नित्ये ऋतुगमनविधौ स्त्रीपुंससाधारण्याः श्रुतिसिद्धायाः प्रजाया एव भाव्यत्वमवगम्यते । प्रजनयतीति प्रजेतिव्युत्पत्त्या प्रजननशक्तिमतः स्त्रीपुंसयोरेव प्रजाशब्दवाच्यत्वात् न नपुंसकस्य, तस्य शुक्रशोणितसाम्यजन्यत्वेन नान्तरीयकत्वात् । अतएव “अनधीत्य द्विजो वेदमनुत्पाद्य च सन्ततिम् । अनिष्ट्वा विविधैर्यज्ञैर्मोक्षमिच्छन् पतत्यधः” इति तादृश्या एव सन्ततेरनुत्पादे अधःपातः स्मर्य्यते । संतनोत्यन्वयमिति सन्ततिः प्रजापर्य्याय एव । “प्रजा स्यात् सन्ततौ जने” इति कोषात् । एवम् “अपत्यार्थं स्त्रियः सृष्टाः स्त्री क्षेत्रं बीजिनो नराः । क्षेत्रं बीजवते देयं नाबीजी क्षेत्रमर्हति” इत्यत्र अपत्यशब्दो व्याख्यातः “अपत्यं कस्मादपततं भवति नानेन पततीति” यास्कस्मरणात् । “आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियान्त्वमी । आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे” इति कोषाच्च । यदात्र “पुमान् पुरुमना भवति पुंसतेर्वेति” यास्कोक्त्या पुंपदं बहुज्ञपरं तदा पुंसतेर्वेति” तदुक्त्यैव प्रवक्तृमिथुनपरमेव व्याख्यायताम् । अतएव यास्कः “मिथुनाः पित्र्यदायादा” इति । तदेतादृक्, श्लोकाभ्यामप्युक्तम् । “अङ्गादङ्गात् सम्भवसि हृदयादधिजायसे । आत्मा वै पुत्रनामासि स जीव शरदां शतमिति” । “अविशेषेण पुत्राणां दायो भवति धर्म्मतः । मिथुनानां विसर्गादौ मनुः स्वायम्भुवोऽब्रवीत्” इत्यत्र पुत्रपदं मिथुनपरं दर्शितवान् । नचात्र मिथुनपदं पुत्रद्वयपरमिति वाच्यम् । अङ्गादङ्गात् सम्भवसि इत्यस्यासङ्गतेः । “न दुहितर इत्येके पुमान् दायादोऽदायादा स्त्रीति विज्ञायत” इत्येकीयमते दुहितृनिराकरणासङ्गतेश्च । यच्च “नापुत्रस्य लोकोऽस्तीत्यादौ पुत्रपदं तदप्युभयपरमेव । “भ्रातृपुत्रौ स्वसृदुहितृभ्यामिति” पाणिनिना पुत्रदुहितृपदयोरेकशेषस्मरणात् । एतेन “अपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदा” इत्यादावपि पुत्रपदं व्याख्यातम् । तत्साधनञ्च पुत्रिकाकरणलिङ्गमग्रे वक्ष्यते । अतएवोक्तम् “तत्समः पुत्रिकासुत” इति । “अङ्गादङ्गात्सम्भवति पुत्रवद्दुहिता नृणामिति” च । यदि च अदृष्टवैकल्येन कन्यानुत्पादः तदा कृष्णप्रतिपच्छ्राद्धादिना तत्सम्पादनं कार्य्यं कृष्णचतुर्थीश्राद्धादिना पुत्रादृष्टस्येव” । यत्तु गमनकरणिकायामेव भावनायाम् “एवं गच्छन् पुत्रं जनयेदिति” पुत्रस्यैव भाव्यत्वं प्रतीयते तत्प्रजापदोपात्तयोः स्त्रीपुंसयोर्म्मध्ये पुत्रस्य तद्वाक्यविहितगुणफलतया अवष्टत्वानुवादः पुत्रार्थिप्रवृत्त्यर्थः । गुणाश्च युग्मनिशाशुक्राधिक्यस्त्रीवामतेन्दुसौम्यग्रपुंसवनापूपादयो योगिमन्त्रादिभिरेव एवमित्यादिना सङ्गीतताः । आश्वलायनेनापि पाणिग्रहणे पुत्रपुत्र्योर्गुणफलत्वं प्रकटितम् । “गृह्णामि ते सौभगत्वाय हस्तमित्यङ्गुष्ठमेव गृह्णीयात् यदि कामयेत पुमांस एव मे पुत्रा जायेरन्नित्यङ्गुलीरेव, स्त्रीकामो रोमान्ते हस्तं साङ्गुष्ठमुभयकाम इति” । एतेन “स्त्रियोऽयुग्मासु रात्रिषु” इत्यपि व्याख्यातम् । तस्मात् पुत्रस्येव श्राद्धकर्त्तृत्वेन परलोकसाधनतया च पुत्र्या अपि दानश्राद्धादिविधिसाधनत्वेन सिद्धे मुख्यत्वे तदपचारे प्रतिनिधिर्युक्त एव । “दुहिता दुर्हिता दूरे हिता दोग्धा” इति निरुक्त्या दुहितृदौहित्रद्वारापि पित्रुपकारकत्वं दर्शयति यास्कः मनुरपि “पौत्रदौहित्रयोर्लोके विशेषो नोपपद्यते । दौहित्रोऽपि ह्यमुत्रैनं सन्तारयति पौत्रवदिति” । महाभारते माध्याप्युक्तिश्च “एका शताधिका बाला भविष्यति मरीयसी । तेन दौहित्रजाल्लोकान् प्राप्स्यामिति मे मतिः” । अन्यत्रापि “दुहितर एव मातापित्रोः किमौरसाः सुताः । निपतन् दिवो यया-

तिर्दौहित्रैरद्भुतः पर्वमिति"। दौहित्रैरष्टकादिभिः कानीनैर्म्मार्गशीर्षकैः। एवञ्चौरसदुहित्रभावे दौहित्रकृतलोकप्राप्त्यर्थं क्षेत्रजादिदुहितृणामपि प्रतिनिधित्वेनोपादानं सिद्धमेव। न च व्रीहिप्रतिनिधित्व इव वचनमस्ति। यद्येवं तर्हि भर्त्रपचारे देवरस्येव भार्य्योपचारे श्यालिकायाः प्रतिनिधित्वं स्यात् श्वशुरशरीरावयवान्वयेन सौसादृश्यादिति चेन्मैवम् नहि श्वशुरशरीरावयवान्वयेन भार्य्योपादानं किन्तु तस्याः संस्कृतत्वेन, न च तत् श्यालिकायामस्ति। यत् च कनिष्ठादौ तदस्ति तत्र भवत्येव तस्याः ज्येष्ठाप्रतिनिधित्वम्। यथाह व्यतिरेकमुखेन योगीश्वरः। "सत्यामन्यां सवर्णायां धर्म्मकार्य्यं न कारयेत्। सवर्णासु विधौ धर्म्मे ज्येष्ठया न विनेतरेति"। तस्मात् सिद्धमासां न्यायत एव प्रतिनिधित्वम्"।

"दुहितृप्रतिनिधौ पुराणेषु लिङ्गदर्शनानि उपलभ्यन्ते। तत्र दत्तकाया रामायणे बालकाण्डे दशरथं प्रति सुमन्त्रस्य सनत्कुमारोक्तभविष्यानुवादो लिङ्गम्। "इक्ष्वाकूणां कुले जातो भविष्यति सुधार्मिकः। नाम्ना दशरथो वीरः श्रीमान् सत्यपराक्रमः। सख्यं तस्याङ्गराजेन भविष्यति महात्मना। कन्या चास्य महाभागा शान्ता नाम भविष्यति। अपुत्रस्त्वङ्गराजो वै लोमपाद इति श्रुतः। स राजानं दशरथं प्रार्थयिष्यति भूमिपः। अनपत्योऽस्मि धर्म्मज्ञ! कन्येयं मम दीयताम्। शान्ता शान्तेन मनसा पुत्रार्थं वरवर्णिनी। ततो राजा दशरथो मनसाभिविचिन्त्य च। दास्यते तां तदा कन्यां शान्तामङ्गाधिपाय सः। प्रतिगृह्य तु तां कन्यां स राजा विगतज्वरः। नगरं यास्यति क्षिप्रं प्रहृष्टेनान्तरात्मना। कन्यां तामृष्यशृङ्गाय प्रदास्यति स वीर्य्यवान्" इत्यादि"।

"तत्रैव ऋष्यशृङ्गं प्रति लोमपादवाक्यम्। "इयं राजा दशरथः सखा मे दयितः सुहृत्। अपत्यार्थं मयानेन दत्तेयं वरवर्णिनी। याचमानस्य मे ब्रह्मन्! शान्ता प्रियतमा मम। सोऽयं ते श्वशुरो धीर! यथैवाहं तथा नृपः" इत्यादि। अत्र दीयतां दास्यते प्रतिगृह्य दत्तशब्दैर्द्दानविधिः स्पष्ट एव। तथा पुत्र इत्युपक्रम्य पुत्रार्थं इत्युपसंहारात् औरसपुत्रीवत् दत्तपुत्र्यपि पुत्रप्रतिनिधिर्भवतीति गम्यते"।

एवं कृत्रिमादिपुत्रीकरणमपि शकुन्तलादीतिहासादौ दृष्टम्।

"दत्तकाशौचनिर्णयः। तत्र जनककुले परस्परं नास्त्येव। "गोत्ररिक्थे जनयितुर्न भजेद्दत्त्रिमः सुतः। गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा" इति मनुवचनात्। अत्र च स्वधापिण्डशब्दौ अशौचादिसकलपितृकर्मोपलक्षणं पिण्डदानादिनिमित्तीभूतगोत्ररिक्थयोर्निवृत्तिश्रवणात् प्रेतपिण्डदानादेश्चाशौचपर्य्यन्तकालत्वनियमात् तदा पिण्डनिवृत्त्या अशौचनिवृत्तिरर्थसिद्धैव। "असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान्। प्रथमेऽहनि यो दद्यात् स दशाहं समापयेत्। प्रथमाह्निणान्तु नैव स्यात् कर्त्तुः स्वस्ति तथापि च। यावदशौचपदकं पिण्डमेकञ्च दद्युः" इत्यादिवाक्यपर्य्यालोचनया पिण्डाशौचयोः समव्याप्तिसिद्धेः तस्मात् दत्तकतज्जनकादीनाञ्च परस्परं नाशौचादि। यत्तु "वैजिकादपि सम्बन्धादनुरुन्ध्यादघं त्र्यहमिति" तदपि "व्यपैति ददतः स्वधा" इत्यनेनापोदितम् दत्तकातिरिक्तस्थले तस्य सावकाशत्वात्। किञ्च अशौचोदकदानादौ गोत्रसापिण्ड्ययोर्मिलितयोर्निमित्तत्वावगमात् अन्यतरापाते न तन्निमित्तमशौचादि। तथा च शङ्खलिखितौ "सपिण्डता तु विज्ञेया गोत्रतः साप्तपौरुषी। पिण्डश्चोदकदानञ्च शौचाशौचं तदानुगमिति"।

प्रतिग्रहीतृपित्रादीनान्तु दत्तकादिमरणे त्रिरात्रमशौचम्। तदाह बृहस्पतिः अन्याश्रितेषु दारेषु परपत्नीसुतेषु च। मृतेष्वाप्लुत्य शुद्ध्यन्ति त्रिरात्रेण द्विजोत्तमाः"। इदञ्च त्रिरात्राशौचविधानं यत्प्रतियोगिकं भार्य्यात्वं पुत्रत्वञ्च तस्यैव। त्रिपुरुषान्तरवर्त्तिनां पितृसपिण्डानान्तु पृथगाह मरीचिः "सूतके मृतके चैव त्रिरात्रं परपूर्वयोः। एकाहस्तु सपिण्डानां त्रिरात्रं यत्र वै पितुः" इति। यद्यपि दत्तकादीनामुत्पन्नानामेव स्वीकारात् परिग्रहीतुस्तदुत्पत्त्याशौचं न घटते तथापि तदपत्योत्पत्त्याशौचं घटत एवेति सूतकनिर्द्देशः। इदमपि समानजातीयानामेव पुत्राणाम्। तथा च ब्रह्मपुराणम्। "औरसं वर्ज्जयित्वा तु सर्ववर्णेषु सर्वदा। क्षेत्रजादिषु पुत्रेषु जातेषु च मृतेषु च। अशौचन्तु त्रिरात्रं स्यात् समान इति निश्चयः" इति। सर्वदा सर्वकाले उपनयनान्तरमपि। "अन्याश्रितेषु दारेषु परपत्नीसुतेषु च। गोत्रिणः स्नानशुद्धाः स्युस्त्रिरात्रेणैव तत्त्ववित्" इति। यद्यपि प्रतिग्रहीतृमरणे दत्तकस्य दशाहाशौचं न घटते

सपिण्डसगोत्रत्वयोर्मिलितयोरभावात् अशौचविशेषश्च कृत्य नोपलभ्यते तथापि “गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन्। प्रेतहारैः समं तत्र दशरात्रेण शुद्ध्यतीति” मरीचिवचनेन शिष्यस्य गुरुप्रेतकार्य्यकरणनिमित्तदशाहाशौचसुक्तम्भवति। अत्र गुरुशब्द आचार्य्यादिरूपः। गुरुत्वमत्राप्यस्ति उपनयनादिकर्तृत्वात्। ततश्च दत्तकस्य प्रतिग्रहीतृक्रियाकरण एव दशरात्राशौचं सिद्ध्यति अन्यथा त्रिरात्रमेव पूर्वोक्तवचनात्। एवं दत्तकस्य प्रतिग्रहीतुस्त्रिपुरुषानन्तरवर्तिसपिण्डमरणे एकाहः “एकाहस्तु सपिण्डानाम्” इति पूर्वोक्तमरीचिवाक्यात्। सोदकसगोत्रयोर्मरणे स्नानमात्रम्। “अन्याश्रितेषु दारेषु परपत्नीसुतेषु च” इति पूर्वोक्तप्रजापतिवाक्यात्”।

अन्येऽपि मीमांसादौ विशेषाः सन्ति ते च तत्र एवावगन्तव्या विस्तरभयात् न लिखिताः।

दत्तकचन्द्रिकानुसारिव्यवस्था वङ्गदेशे प्रचलिता मीमांसानुसारिव्यवस्था तु पाश्चात्त्यदेशप्रचलितेति भेदः।

वीरमित्रोदये अकृतानुज्ञे भर्त्तरि मृते स्त्रिया दत्तको ग्रहीतुं शक्यते इति व्यवस्थापितम् यथा “न तु स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वान्यत्रानुज्ञानाद्भर्त्तुरिति”। अत्र भर्त्रनुज्ञां विना स्त्रियाः पुत्रप्रतिग्रहनिषेधाददत्तानुज्ञे भर्त्तरि मृते विधवया कृतः पुत्रो दत्तको न भवतीत्याहुस्तन्न अपुत्रस्य गत्यभावात्-पुत्रकरणस्यावश्यकत्वश्रवणाच्छास्त्रमूलकतदनुज्ञायास्तत्राप्यक्षतेः। न चैवमनुज्ञानादन्यत्रेति व्यर्थम् व्यावर्त्त्याभावाच्छास्त्रीयानुमतेः सर्वत्रावश्यकत्वादिति वाच्यम्। मुमुक्षोः, पत्यन्तरे पुत्रवती वानुज्ञाया असम्भवाद्भार्य्या यदि स्वपुत्रार्थिनी तां प्रति निषेधात्। तथा हि “सर्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत्। सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुरिति”। पुत्रकार्य्यश्राद्धादेः सपत्नीपुत्रेण सिद्धेर्भर्त्रनुज्ञां विना तादृश्याः पुत्रो न कार्य्यः। उभयोरपि तत्र कार्य्यस्य तेन निष्पत्तेः। भर्त्तुर्हि स औरस एव मुख्यः तस्या अपि दत्तवद्गौण इति तादृश्या भर्त्रनुमतिमन्तरेणेतरो न प्रतिग्राह्य इति तात्पर्य्यार्थः। वस्तुतस्तु “भ्रातृणामेकजातानामेकश्चेत् पुत्रवान् भवेत्। सर्वांस्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीदिति” वचनवदेतस्यापि भ्रातृपुत्रस्य गौणदत्तकपुत्रत्वादिसत्त्वेऽन्यपुत्रप्रतिनिधिर्न कार्य्य इत्यर्थकतया मिताक्षरास्मृतिचन्द्रिकादौ व्याख्यातस्त्वाद्भर्त्तरि जीवति भार्य्यया स्वातन्त्र्येण तदननुमत्या न पुत्रीकरणीय इति भर्त्तुरनुज्ञानादन्यत्रेत्यस्यार्थः। मृते तु तस्मिन् न पारतन्त्र्यम् तस्या यत्पारतन्त्र्यं तदनुमतिरेवापेक्षिता। एवं सति दृष्टार्थता भवति प्रतिषेधस्य,। तस्माददत्तानुज्ञे मृतेऽपि भर्त्तरि भार्य्यया दत्तकादिकरणमविरुद्धम्। मनुवचनद्वयस्य पूर्वोक्तार्थकत्वे उपपत्तिरपि मिताक्षरादावेवोक्ता”।

इयमपि व्यवस्था पाश्चात्त्यकदेशे प्रचलिता।

दत्तैश्यस्योपाधिभेदे “शर्म्मा देवश्च विप्रस्य वर्म्मा त्राता च भूभुजः। भूतिर्दत्तश्च वैश्यस्य दासः शूद्रस्य कारयेत्” उद्वा॰ त॰। [हरिवं॰ ३९अ॰ दत्तशब्दे दृश्यम्।

**दत्तशत्रु** पु॰ अग्निदेवस्थपपुत्रभेदे दत्तशर्म्मापि तत्पुत्रभेदे

**दत्तात्मन्** पु॰ द्वादशपुत्रान्तर्गते पुत्रभेदे “दत्तात्मा तु स्वयंदत्तः” याज्ञ॰। “मातापितृविहीनस्ताभ्यां त्यक्तो या तवाहं पुत्रो भवामीति स्वयंदत्त उपनतः” मिता॰। “स्वयमेव स्वात्मानमन्यस्मै दत्तवांस्तवाहं पुत्रो भवामीति स्वयमुपगतो मातापितृविहीनस्ताभ्यां त्यक्तो या सवर्णोऽपतितः स उच्यते तथा च मनुः “मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात्। आत्मानं स्पर्शयेद्यस्तु स्वयन्दत्तस्तु स स्मृतः” इति। अकारणात् पातित्यादिकारणमन्तरेणैव दुर्भिक्षादौ पोषणाद्यसामर्थ्यादिना मातापितृभ्यान्त्यक्तः स्वतन्त्र इत्यर्थः” वी॰ मि॰।

**दत्तात्रेय** पु॰ दत्तसंज्ञकः आत्रेयः। योगाचार्य्ये अनुसूयागर्भजे अत्रिपुत्रे षष्ठे भगवदवतारभेदे। आत्रेयशब्दे तस्योत्पत्तिकथा दृश्या “षष्ठमत्रेरपत्यत्वं वृतः प्राप्तोऽनुसूयया। आन्वीक्षिकीमलर्काय प्रह्लादादिभ्यः स ऊचिवान्” भाग॰ १।३।१२। तेन च स्वसंहितायां योगोऽनुशिष्टः कार्त्तवीर्य्याय च तेन वरो दत्तः कार्त्तवीर्य्यशब्दे दृश्यः।

**दत्तात्रेयेश्वर** पु॰ काशीस्थे शिवलिङ्गभेदे “भीष्मकेशवनासौ दत्तात्रेयेश्वराह्वयम्। दत्तात्रेयेश्वरात् पूर्वमेष आदिगदाधरः” काशीख॰ ३३ अ॰।

**दत्तानपकर्म्मन्** न॰ दत्तस्य न अपकर्म्म यत्र। दत्ताप्रदानिकाख्ये व्यवहारविषयभेदे।

**दत्ताप्रदानिक** न॰ दत्तस्य असम्यक्तया दत्तत्वात् पुनराप्रदानं ग्रहणमस्त्यत्र ठन्। अष्टादशविवादान्तर्गते व्यवहारविषयभेदे तत्स्वरूपादिकं वी॰मि॰ उक्तं यथा नारदः “दत्त्वा द्रव्यमसम्यग्यः पुनरादातुमिच्छति।

दत्ताप्रदानिकं नाम व्यवहारपदं हि तदिति"। असम्यक् अशास्त्रीयमार्गाश्रयणेनेत्यर्थः। दानप्रकारस्यादेयादिभेदैश्चतुर्विधत्वमाह स एव। "अदेयमथ देयञ्च दत्तं वाऽदत्तमेव च। व्यवहारेषु विज्ञेयो दानमार्गश्चतुर्विधः" इति। तत्र तावददेयस्य स्वरूपभेदानाह बृहस्पतिः "सामान्यं पुत्रदाराधिसर्वस्वन्यासयाचितम्। प्रतिश्रुतमथान्यस्य न देयं त्वष्टधा स्मृतमिति"। सामान्यं साधारणं प्रतिश्रुतं वाचादत्तम्। नारदोऽपि "अन्वाहितं याचितकमाधिः साधारणञ्च यत्। निक्षेपः पुत्रदाराश्च सर्वस्वञ्चान्वये सति। आपत्स्वपि हि कष्टासु वर्त्तमानेन देहिना। अदेयान्याहुराचार्य्या यच्चान्यस्मै प्रतिश्रुतमिति"। साधारणं बहुस्वामिकं रिक्थादिकं न त्वविभक्तस्वामिकं सुवर्णादिकं तस्य सम्मतौ देयत्वेन वक्ष्यमाणत्वात्। अत्र पुत्रदानमेकपुत्रविषयं तद्दाने सन्ततिविच्छेदप्रसङ्गात्। अतएव विष्णुः, "शुक्रशोणितसम्भवः पुरुषो मातापितृनिमित्तकस्तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतो नत्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा स हि सन्तानाय पूर्वेषामिति"। अतश्च "सुतस्य सुतदाराणां वशित्वन्त्वनुशासने। विक्रये चैव दाने च वशित्वं न सुते पितुः" इत्यादीनि स्मृत्यन्तरोक्तवचनानि सुतस्यादेयत्वप्रतिपादकानि एकपुत्रविषयाणीति ज्ञेयानि। अनेकपुत्रेष्वपि मातापितृवियोगसहनक्षम एव देयः। अतएव कात्यायनः "विक्रयञ्चैव दानञ्च न नेयाः स्युरनिच्छवः। दाराः पुत्राश्चेति" यथा दारा विक्रयं दानं वा भर्त्रा न नेयास्तथा मातापितृभ्यां पुत्रा अपि पितृवियोगानिच्छवो न नेया इत्यर्थ उक्तः स्मृतिचन्द्रिकायाम्। न नेयाः स्युरनिच्छव इत्येतदनापद्विषयम्। "आपत्काले तु कर्त्तव्यं दानं विक्रयमेव वा। अन्यथा न प्रवर्त्तेत इति शास्त्रविनिश्चयः" इति तानेवाधिकृत्य तेनैवाभिधानात्। भार्य्यापि पत्यनुज्ञया देयमित्याह विष्णुः "न तु स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वान्यत्रानुज्ञानाद्भर्त्तुरिति"। अन्वाहितादिवत् स्त्रीधनमप्यदेयम्। अतएव दक्षः "सामान्यं याचितं न्यास आधिर्दाराश्च तद्धनम्। अन्वाहितञ्च निःक्षेपः सर्वस्वं चान्वये सति। आपत्स्वपि न देयानि नव वस्तूनि पण्डितैः। यो ददाति स मूढात्मा प्रायश्चित्तीयते नरः" इति। अदेयदाने प्रतिग्रहे च दण्डमाह मनुः। "अदेयं यश्च गृह्णाति यश्चादेयं प्रयच्छति। तावुभौ चौरवच्छास्यौ दाप्यौ चोत्तमसाहसमिति"। अदेयग्रहणमदत्तस्याप्युपलक्षणार्थम्। अतएव नारदः। "गृह्णात्यदत्तं यो मोहाद्यश्चादेयं प्रयच्छति। दण्डनीयावुभावेतौ धर्मज्ञेन महीक्षितेति"। अदत्तादेयग्रहणाद्गृहीतस्य परावर्त्तनमपि कार्यमिति गम्यते। अदत्तग्रहणे दाने च दानसिद्ध्यभावात्परस्वत्वानुत्पत्तेरित्युक्तं स्मृतिचन्द्रिकायाम्। देयस्वरूपमाह स एव। "कुटुम्बभरणाद्द्रव्यं यत्किञ्चिदतिरिच्यते। तद्देयमुपहृत्यान्यत्तद्दोषमवाप्नुयादिति"। अन्यदुपहृत्य भर्त्तव्यकुटुम्बमनवरुद्ध्येत्यर्थः। उपरोधश्च भोजनाच्छादनादिराहित्यनिबन्धनतोऽत्राभिमतो न ताम्बूलादिभोगसाधनवैकल्यनिबन्धनः। अतएव बृहस्पतिः। "कुटुम्बं भक्तवसनाद्देयं यदतिरिच्यत इति"। भक्तं भोजनं वसनम् आच्छादनम्। भक्तवसनाद्यदतिरिच्यत इत्यन्वयः। याज्ञवल्क्योऽपि" स्वं कुटुम्बाविरोधेन देयं दारसुतादृते" इति। कुटुम्बाविरोधेन कुटुम्बानुपरोधेन कुटुम्बभरणावशिष्टं स्वन्देयमित्यर्थः। स्थावरविषये देयमाहतुः प्रजापतिबृहस्पती "सप्रागमाद्गृहक्षेत्राद्यद्यत्क्षेत्रं प्रदीयते। पित्र्यं वाथ स्वयंप्राप्तं तद्दातव्यं विवक्षितमिति"। सप्रागमात्पूर्वोक्तसप्तविधागमयुक्तात्। क्षेत्रग्रहणमुपलक्षणम्। पित्र्यं वंशपरम्परायातम्। स्वयंप्राप्तं स्वयमर्जितम्। पित्र्यस्वयंप्राप्तयोरुपादानं क्रीतादीनामुपलक्षणार्थम्। पित्र्यं वा स्वयंप्राप्तं वा यद्गृहक्षेत्रादिकं प्रदीयते तत्सप्रागमान्विताद्गृहक्षेत्रादुद्धृत्य दातव्यमिति विवक्षितमित्यर्थः। अत्र सप्रागमाद्गृहक्षेत्रादित्यभिधानं गृहक्षेत्रादिदानं कुटुम्बपर्य्याप्ते सागमके गृहे क्षेत्राद्यन्तरे सत्येव नान्यथेत्येवमर्थम्। यत्तु कात्यायनेनोक्तम् "सर्वस्वं गृहवर्ज्जं तु कुटुम्बभरणाधिकम्। यद्द्रव्यं तत् स्वकन्देयमदेयं स्यात्ततोऽन्यथेति"। तद्गृहाद्यन्तराभावविषयम्। स्वकं स्वकीयम् यथेष्टविनियोगार्हद्रव्यमिति यावत्। स्वयंप्राप्तं त्वविभक्तधनैर्भ्रातृभिरननुज्ञातमपि देयम्। "स्वेच्छादेयं स्वयंप्राप्तं बन्धाचारेण बन्धकम्" इति बृहस्पतिस्मरणात्। स्वेच्छादेयं भ्रात्राद्यनुज्ञामन्तरेणापि देयम्। बन्धकं बन्धाचारेणाधिरूपेण देयमित्यर्थः। यत्तु तेनैवोक्तम् "विभक्ता अविभक्ता वा दायादाः स्थावरे समाः। एकोऽप्यनीशः सर्वत्र दानाधमनविक्रये" इति। तत् समानाधिकाविभक्तस्थावरविषयम्। आधसनमा-

धीकरणं विभक्ता अपि स्थावरे समाः किमुताविभक्ता इति दण्डापूपन्यायेन व्याख्येयम्। अन्यथा विभागो निरर्थकः स्यात्। अतश्च यदुक्तं स्मृत्यन्तरे "एकोऽपि स्थावरे कुर्य्याद्दानाधमनविक्रयम्। आपत्काले कुटुम्बार्थे धर्मार्थे च विशेषतः" इति। तत्क्रमायातविभक्तस्थावरविषयं स्वल्पानधिकस्थावरविषयं वेति मन्तव्यम्। स्वार्जितमपि किञ्चित्प्राप्तव्यवहारेषु पुत्रेषु सत्सु तदनुमत्यैव दातव्यमित्यभिप्रेत्याह भगवान् व्यासः। "स्थावरं द्विपदञ्चैव यद्यपि स्वयमर्जितम्। असम्भूय सुतान् सर्व्वान्न दानञ्च च विक्रयः। ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः। वृत्तिं च तेऽभिकाङ्क्षन्ति न दानञ्च च विक्रयः" इति। अत्रोत्तरपद्यं पूर्व्वपद्यदर्शितवृहस्पतिवचनार्थस्य दण्डापूपन्यायप्रदर्शनेन दृढीकरणार्थम्। किञ्चिद्भर्त्रा पत्न्यनुज्ञातमेव देयम्। किञ्चिन्मुख्येनापि भ्रात्राद्यनुज्ञातमेव देयम्। तथा च वृहस्पतिः "सौदायिकं क्रमायातं शौर्य्यप्राप्तञ्च यद्भवेत्। स्त्रीज्ञातिस्वाम्यनुज्ञातं दत्तं सिद्धिमवाप्नुयादिति"। सौदायिकं वैवाहिकं यस्याः परिणयने लब्धं तस्याः अनुज्ञयैव दातव्यम्। क्रमायातम्पितृपितामहादिक्रमायातम्। ज्ञात्यनुमतं न सकलन्देयम्। "वैवाहिके क्रमायाते सर्व्वदानञ्च विद्यते" इति तेनैवोक्तत्वात्। देयोक्तिप्रसङ्गेन प्रतिग्रहे प्रकारविशेषं दर्शयति याज्ञवल्क्यः "प्रतिग्रहः प्रकाशः स्यात् स्थावरस्य विशेषतः" इति। प्रकाशः प्रकटः ससाक्षिक इति यावत्। पुत्रप्रतिग्रहे प्रकारविशेष उक्तो वशिष्ठेन। "पुत्रं परिग्रहीष्यन् बन्धूनाहूय राजनि चावेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वाऽदूरबान्धवमसन्निकृष्टमेव प्रतिगृह्णीयादिति"। अदूरबान्धवं सन्निहितमातुलादिबान्धवम् असन्निकृष्टं सन्निकृष्टभ्रातृभगिनीपुत्रादिव्यतिरिक्तमेव प्रतिगृह्णीयादित्यर्थः। प्रासङ्गिकंसमाप्य प्रकृतमप्याह याज्ञवल्क्यः "देयं प्रतिश्रुतं चैव दत्त्वा नापहरेत् पुनः" इति। ददत्ते दास्यामीति यत् प्रतिश्रुतन्तद्देयम् तस्मै दातव्यं यदि धर्म्मप्रच्युतो न भवति। प्रच्युते पुनर्न दातव्यं "प्रतिश्रुत्याप्यधर्म्मसंयुक्ताय न दद्यादिति" गौतमस्मरणात्। "दत्त्वा नापहरेत् पुनः"। न्यायमार्गेण यत् दत्तं सम्प्र[illegible]मपि पुनर्नापहर्त्तव्यम् किन्तु तथैवानुमन्तव्यमित्यर्थः। यत् पुनः प्रतिश्रुतञ्च ददाति दत्तं वाऽपहरति तस्य दोषमाह हारीतः "प्रतिश्रुतार्थादानेन दत्तस्य छेदनेन च। विविधान्नरकान् याति तिर्य्यग्योनौ च जायते। वाचैव यत्प्रतिज्ञातं कर्म्मणा नोपपादितम्। ऋणं तद्धर्म्मसंयुक्तमिह लोके परत्र च" इति। यद्वचनं धर्म्मसंयुक्तं प्रतिग्रहीतुः प्रवृत्तधर्म्मसम्पत्त्यर्थं वाचा प्रतिज्ञातञ्च पश्चादर्पितं तदिह परत्र च ऋणवद्बाधेतीत्यर्थः। प्रतिश्रुतमददद्दाता तद्दाप्यो दण्ड्यश्चेत्याह कात्यायनः "स्वेच्छया यः प्रतिश्रुत्य ब्राह्मणाय प्रतिग्रहम्। न दद्यादृणवद्दाप्यः प्राप्नुयात्पूर्व्वसाहसम्" इति। मत्स्यपुराणेऽपि "प्रतिश्रुत्याप्रदातारं सुवर्णं दण्डयेन्नृपः" इति। अनयोर्द्दण्डयोरपराधानुसारेण व्यवस्था।

दत्तं सप्तविधमदत्तं षोड़शप्रकारमित्याह नारदः

"दत्तं सप्तविधं प्रोक्तमदत्तं षोड़शात्मकम्" इति। तत्र दत्तभेदानाह स एव। "पण्यमूल्यं भृतिस्तुष्ट्या स्नेहात् प्रत्युपकारतः। स्त्रीशुल्कानुग्रहार्थञ्च दत्तं दानविदो विदुः" इति। पण्यमूल्यं क्रीतद्रव्यस्य मूल्यम्। भृतिस्वरूपं कात्यायनेन दर्शितम्। "अभीप्सितोपलब्ध्यर्थं दानं यत्र निरूपितम्। उपलब्धिक्रियालब्धं सा भृतिः परिकीर्त्तिता" इति। प्रयोजनक्रियासम्पादनार्थं भृतिरिष्यत इत्यर्थः। तुष्ट्या परितोषेण वन्दिप्रभृतिभ्यो दत्तमिति शेषः। स्नेहात् प्रीत्या दुहित्रादिभ्यो दत्तम्। प्रत्युपकारतः कृतोपकाराय प्रत्युपकारिणा दत्तम्। तत्प्रदर्शनार्थमाह। कात्यायनः "भयत्राणोपरक्षार्थैस्तथाकार्यप्रसाधनात्। अनेन विधिना लब्धं भयत्राणादिकं धनम्"। उपकारकरणेन लब्धमिति यावत्। स्त्रीशुल्कं विवाहार्थं कन्याबन्धुभ्यो दत्तम्। अनुग्रहार्थं परोपकारः कर्त्तव्य इति विधिबलात् कृताप्यनुग्रहार्थं दत्तमेतत् सकलं सफलं भवतीति दर्शयितुन्नारद आह "मातापित्रोर्गुरौ मित्रे विनीते चोपकारिणि। दीनानाथविशिष्टेभ्यो दत्तं तु सफलम्भवेदिति"। उपकारिणि परोपकारे सफलं फलातिशयोपेतमित्यर्थः। तदेतत्पण्यादि सप्तविधं दत्तमेव दानविदोविदुः अपरावर्त्तनीयं विदुरित्यर्थः। वृहस्पतिरपि "भृतिस्तुष्ट्या पण्यमूल्यं स्त्रीशुल्कमुपकारिणे। श्रद्धानुग्रहसंप्रीत्या दत्तं सप्तविधं विदुरिति" अदत्तानि दर्शयति नारदः "अदत्तन्तु भयक्रोधशोकवेगरुगन्वितैः। तथोत्कोचपरीहासव्यत्यासच्छलयोगतः। बालमूढास्वतन्त्रार्त्तमत्तोन्मत्तापवर्ज्जितम्। कर्त्ता ममायं कर्म्मेति प्रतिलाभेच्छया च यत्। अपात्रे पात्रमित्युक्ते कार्य्ये वा धर्म्मसंहिते। यद्दत्तं स्यादविज्ञानाददत्तमिति

तत्स्मृतमिति"। दक् उपतापः भयादिजनितोय उपताप-स्तदन्वितैरित्यन्वयः। अपवर्ज्जितं दत्तं बालादिभिरप-वर्ज्जितमित्यन्वयः। एतदुक्तं भवति भयोपतप्तेन वन्दि-ग्राहादिभ्यो दत्तं क्रोधोपतप्तेन क्रोधविषयीभूतानां पुत्रभ्रात्रादीनां भयं कर्त्तुमितरेभ्यो दत्तम्। पुत्रादि-वियोगजनितशोकवेगादुपतप्तेन किं स्थितेन धनेनेति तात्कालिक्या बुद्ध्या दत्तम्। उत्कोचेन राजकीया-दिभ्यो दत्तम्। उपहासेन दत्तम्। व्यत्यासेन एकः स्वद्रव्यमन्यस्मै ददाति अन्योऽपि स्वीयन्तस्मै ददातीति दानव्यत्यासेन दत्तम्। छलयोगतः शतदानमभिसन्धाय सहस्रमिति परिभाष्य दत्तम्। बालेनाप्राप्तव्यवहारेण दत्तं मूढेन लोकवेदानभिज्ञेन दत्तम्। अस्वतन्त्रेण दासादिना दत्तम्। आर्त्तेन रोगोपहतेन दत्तम्। मत्तेन धुस्तूरादिभक्षणादिना मत्तेन दत्तम् उन्मत्तेन वातपित्ताद्युद्रेकादिना चलितधिया दत्तम्। अयं मदीयं कर्म करिष्यतीति प्रतिलाभेच्छया प्रतिलाभमकुर्वाणाय दत्तम्। अपात्रायायोग्याय योग्योऽहम् इत्युक्तिमात्रेण दत्तम्। यज्ञादिं करिष्यामीत्युक्त्वा धनं गृहीत्वा द्यूता-दिकर्म्मणि विनियुञ्जानाय दत्तं इत्येवं षोड़शप्रकार-मपि दत्तं पुनः प्रत्याहरणीयत्वाददत्तमुच्यत इत्यर्थः। पुनःप्रत्याहरणीयत्वमेवंविधानामाह कात्यायनः "काम-क्रोधास्वतन्त्रार्त्तक्लीबोन्मत्तप्रमोहितैः। व्यत्यासपरि-हासाय यद्दत्तन्तत् पुनर्हरेत्। या तु कार्यप्रसिद्ध्यर्थ-मुत्कोचा स्यात् प्रतिक्रिया। तस्मिन्नपि प्रसिद्धेऽर्थे न देया स्यात्कथञ्चन। अथ प्रागेव दत्ता स्यात् प्रतिदाप्यस्ततो-बलात्। दण्डञ्चैकादशगुणमाहुर्गार्ग्यैयमानवाः" उत्कोचस्वरूपमाह स एव। "स्तेयसाहसिकोद्-वृत्तपारदारिकशंसनात्। दर्शनाद्वृत्तनष्टस्य तथाऽ-सत्यप्रवर्त्तनात्। प्राप्तमेतैस्तु यत्किञ्चिदुत्कोचाख्यं तदुच्यते। न दाता तत्र दण्ड्यः स्यान्मध्यस्थश्चैव दोष-भागिति" एतदुक्तं भवति यदि मह्यं न प्रयच्छसि तदा त्वत्कृतं स्तेयादि कथयामीति भीतिमुत्पाद्य स्तेयादि-कर्त्तुः सकाशाद्धनमादत्ते। तथा त्वं यदि धनं मह्यं प्रयच्छसि तदा पलायमानं त्वां दर्शयामीति भीतिमुत्पाद्य पलायिनः सकाशाद्यत्किञ्चिदादत्ते तथा तव सत्यमपि स्वामिनिकटेऽसत्यं वदिष्यामीत्युक्त्वा यत्किञ्चिदादत्ते तदु-त्कोचाख्यं तद्ग्राहा दात्रे दाप्यम् उत्कोचग्राहकग्राहकौ च दण्डनीयाविति पुनः प्रत्याहरणीयमिति वृहस्पति-रप्याह प्रतिलाभेच्छया दत्तमपात्रे पात्रशङ्कया। कार्य्ये वाधर्म्मसंयुक्ते स्वामी तत् पुनराप्नुयादिति"। आर्त्तदत्त-स्यादत्तत्वं धर्म्मकार्य्यव्यतिरिक्तविषयम्। तथा च कात्या-यनः "स्वस्थेनार्त्तेन वा दत्तं श्रावितं धर्म्मकारणात्। अदत्त्वा तु मृते दाप्यस्तत्सुतो नात्र संशयः" इति। मनुरपि सोपाधिकदानादेर्निवर्त्तनमाह "योगाधमनविक्रीतं योगदानप्रतिग्रहम्। यत्र वाप्युपधिम्पश्येत्तत्सर्वं विनि-वर्त्तयेदिति"। योग उपाधिः येनागामिनोपाधिविशे-षेणाधिविक्रयादानप्रतिग्रहाः कृतास्तदुपाधिविगमे ते सर्वेऽपि निवर्त्तेरन्नित्यर्थः।"

**दत्तामित्र** पु० सौवीरे नृपभेदे। "दत्तामित्र इति ख्यातं संग्रामे कृतनिश्चयम्। सुमित्रं नाम सौवीरमर्ज्जुनोऽदमयच्छरैः" भा० आ० १३९ अ०। [दत्तिभिः" रघुः

**दत्ति** स्त्री दा–क्तिन् ददादेशः। दाने "अनुष्टस्त्रीव निवाप-

**दत्तिक** त्रि० अल्पो दत्तः ठक्। अल्पदत्ते। दत्तात्मशब्दात् मनुष्यनाम्नः घन् इलच् ठ क वा। देवदत्त+यज्ञदत्त+ स्वार्थाद्यर्थे घादौ पूर्वपदलोपे दत्तिय, दत्तिल दत्तिक दत्तक देवदत्त यज्ञदत्त सोमदत्तादौ।

**दत्तेय** पुंस्त्री० दत्ताया अपत्यम् ढक्। १दत्ताया दत्तककन्याया अपत्ये २इन्द्रे पु० हेमच० दत्तोलेति वा तत्र पाठः।

**दत्तोलि** पु० पुलस्त्यसुनौ विष्णुपु०।

**दत्र** न० दा–बा० कत्रन्। १धने "इन्द्र! यत्ते माहिनं दत्रम्" ऋ० ३।३६।९। "दत्रं धनम्" भा०। "दत्रं विश्वा अधिया इन्द्र! कृष्टीः" ऋ० ४।१७।६। "दत्रं धने" भा०। २हिरण्ये निरु० "यो दत्रवां उषसो न प्रतीकम्" ऋ० ६।५०।८।

**दत्त्रिम** त्रि० दानेन निर्वृत्तः दा–क्त्रि–क्त्रेर्मप् च। १दान-निर्वृत्ते। "निष्ठां गते दत्त्रिमसभ्यतोषे" भट्टिः। "माता पिता वा दद्यातां यमद्भिः पुत्रमापदि। सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्त्रिमः सुतः" इत्युक्ते २दत्तक-पुत्रे पु०।

**दद** दाने धृतौ च भ्वा० आ० सक० सेट्। ददते अददिष्ट ददृदे। "विटविटपमसुं ददस्व तस्मै" माघः। [तत्रार्थे।

**दद** त्रि० दा–बा० श। दातरि। पक्षे आदन्तत्वात् यः दाय

**ददन** न० दद–भावे ल्युट्। दाने शब्दर०।

**ददि** त्रि० दा–कि द्वित्वम्। दानकर्त्तरि। [ विदारणशीले।

**ददृत्** त्रि० दीर्य्यति दृ–क्विप् ह्रस्वः द्वित्वं तुकम्। दीर्य्यति।

**ददृशान** त्रि० दृश–शानच्। दृशे "अस्य शुभ्रासो ददृशानपवे-

जेँ हमानस्य" ऋ० १०।३।६। "दृश्यानपवेः दृश्यमानायुधस्य" भा० अत्र दृश्यमानेति विवरणं कालाविवक्षयेति बोध्यम्

**दघि(ग्धि)** अव्य० याच्ञायाम् निघण्टुः। अयं धातुरित्यन्ये।

**दद्रु** पु० ददते कण्डू' दद–रु। रोगभेदे। "सकण्डुरागपिड़कं दद्रुमण्डलमुद्गतम्" भावप्र०। उद्गतं उच्छूनम् कुष्ठशब्दे २१५४ पृ० दृश्यम्। स्वार्थे क। दद्रुक तत्रार्थे शब्दर०। [अमरः २हाकुचे रत्नमा०।

**दद्रुघ्न** पु० दद्रुं हन्ति हन–टक्। १चक्रमर्द्दके (दादमर्द्दन)।

**दद्रुण** त्रि० दद्रू+पामा० अस्त्यर्थे न हुस्वश्च। दद्रुरोगयुक्ते अमरः। [भेदे (दाद्)।

**दद्रू** स्त्री दरिद्रात्यनयाङ्गम् दरिद्रा–ऊ नि०। त्वग्रोग-

**दध** दाने धारणे च आ० भ्वा० सक० सेट्। दधते अदधिष्ट।

**दधन्वत्** त्रि० दधि–मतुप् वेदे नि० दधन्नादेशे मस्य वः। दधिविशिष्टे। "अच्छिद्रस्य दधन्वतः सुपर्णस्य दधन्वतः" ऋ० ६।४८।१८। "दधन्वतः दधिमतः" भा०।

**दधि** क्लि० धा–कि द्वित्वम्। १धारणकर्त्तरि किप्रत्ययान्तत्वेन तद्योगे न कर्मणि षष्ठी "स्रष्टा दधिं साधकमेतदर्चकान्" मुग्ध०। दध–इन्। २दुग्धविकृतिभेदे, (दइ) ३वस्त्रे च न० हेमच०। दधिगुणभेदादिकं भावप्र० उक्तं यथा

"दध्युष्णं दीपनं स्निग्धं कषायानुरसं गुरु। पाकेऽम्लं श्वासपित्तास्रशोथमेदःकफप्रदम्। मूत्रकृच्छ्रे प्रतिश्याये पीनसे विषमज्वरे। अतीसारेऽरुचौ कार्श्ये शस्यते बलशुक्रकृत्। अथ दधिभेदाः। "आदौ मन्दं ततः स्वादु स्वाद्वम्लञ्च ततः परम्। अम्लञ्चतुर्थमत्यम्लं पञ्चमं दधि पञ्चधा। अथ मन्दादीनां लक्षणानि गुणाश्च। मन्दं दुग्धं यदव्यक्तरसं किञ्चिद्घनं भवेत्। मन्दं स्यात् सृष्टविण्मूत्रं दोषत्रयविदाहकृत्। यत्सम्यग् घनतां यातं व्यक्तं स्वादुरसं भवेत्। अव्यक्ताम्लरसं तत्तु स्वादु विज्ञैरुदाहृतम्। स्वादु स्यादत्यभिष्यन्दि वृष्यं मेदःकफापहम्। वातघ्नं मधुरं पाके रक्तपित्तप्रसादनम्। स्वाद्वम्लसान्द्रं मधुरं कषायानुरसं भवेत्। स्वाद्वम्लस्य गुणा ज्ञेया सामान्यदधिवज्जनैः। यत्तिरोहितमाधुर्यं व्यक्ताम्लत्वं तदम्लकम्। अम्लन्तु दीपनं पित्तरक्तश्लेष्मविवर्द्धनम्। तदत्यम्लं दन्तरोमहर्षकण्ठादिदाहकृत्। अत्यम्लं दीपनं रक्तवातपित्तकरं परम्"। गोदधिगुणाः "गव्यं दधि विशेषेण स्वाद्वम्लञ्च रुचिप्रदम्। पवित्रं दीपनं हृद्यं पुष्टिकृत् पवनापहम्। उक्तं दध्नामशेषाणां मध्ये गव्यं गुणाधिकम्। माहिषदधिगुणाः। माहिषं दधि सुस्निग्धं श्लेष्मलं वातपित्तनुत्। स्वादुपाकमभिष्यन्दि वृष्यं गुर्वस्रदूषकम्"। छागीदधिगुणाः "आजं दध्युत्तमं ग्राहि लघु दोषत्रयापहम्। शस्यते श्वासकासार्शःक्षयकार्श्येषु दीपनम्"। पक्वदुग्धदधिगुणाः। पक्वदुग्धभवं रुच्यं दधि स्निग्धं गुणोत्तमम्। पित्तानिलापहं सर्वधात्वग्निबलवर्द्धनम्। निःसरदुग्धदधिगुणाः। असारं दधि संग्राहि शीतलं वातलं लघु। विष्टम्भि दीपनं रुच्यं ग्रहणीरोगनाशनम्। गालितदधिगुणाः "गालितं दधि सुस्निग्धं वातघ्नं कफकृद्गुरु। बलपुष्टिकरं रुच्यं मधुरं नातिपित्तकृत्। शर्करादिसहितदधिगुणाः। सशर्करं दधि श्रेष्ठं तृष्णापित्तास्रदाहजित्। सगुडं वातनुद्वृष्यं बृंहणं तर्पणं गुरु।" अथ रात्रौ दधिभोजननिषेधः। न नक्तं दधि भुञ्जीत नचाप्यघृतशर्करम्। नामुद्गसूपं नाक्षौद्रं नोष्णं नामलकैर्विना। अयमर्थः। रात्रौ दधि न भुञ्जीत भुञ्जीत चेत्तदा अघृतशर्करमसुद्गसूपं क्षौद्रमुष्णं विनामलकैश्च दधि न भुञ्जीत। तेन घृतशर्करादियुक्तं दधि रात्रावपि भुञ्जीतेत्यर्थः। तथा च। शस्यते दधि नो रात्रौ शस्तञ्चाम्बुघृतान्वितम्। रक्तपित्तकफोत्थेषु विकारेषु तु नैव तत्। तदम्बुघृतान्वितमपि। अथर्तुविशेषेण विधिनिषेधौ। हेमन्ते शिशिरे चापि वर्षासु दधि शस्यते। शरद्ग्रीष्मवसन्तेषु प्रायशस्तद्विगर्हितम्। अथाविधिना दधिसेवने दोषमाह ज्वरासृक्पित्तवीसर्पकुष्ठपाण्डामयभ्रमान्। प्राप्नुयात् कामलाञ्चोग्रां विधिं हित्वा दधिप्रियः। अथ सरस्य मस्तुनश्च लक्षणं गुणाश्च। दध्नस्तूपरि यो भागो घनः स्नेहसमन्वितः। स लोके सर इत्युक्तो दध्नोमण्डस्तु मस्त्विति। सरः स्वादुर्गुरुर्वृष्यो वातवह्निप्रणाशनः। साम्लोवस्तिप्रशमनः पित्तश्लेष्मविवर्द्धनः। मस्तु क्लमहरं बल्यं लघु भक्ताभिलाषकृत्। स्रोतोविशोधनं ह्लादि कफतृष्णानिलापहम्। अवृष्यं प्रीणनं शीघ्रं भिनत्ति मलसञ्चयम्"।

"दधि सक्तुषु भोक्तव्यम् सर्वञ्च दधिसम्भवम्" मनुः। "विना लवणतोयाभ्यां दधि मासेन जीर्य्यतिः" "कफपित्तकरं दधि" इति वैद्य०।

दधिशब्दस्य दुग्धविकाररूपार्थत्वे क्लीवत्वेन तदर्थे उक्तपुंस्कत्वाभावात् टादावचि न पुंवद्भावः। धारणकर्त्त-

रूपार्थपरत्वे तु प्रवृत्तिनिमित्तसाम्यात् उक्तपुंस्कत्वात् स्त्रीत्वेऽपि वा पुंवद्रूपं दधये दधिने कुलाय इत्यादि। अस्य उरःप्रभृतिषु पाठात् बहुव्रीहौ नित्यं कप् बहुदधिको यस्य इत्यादि।

**दधिकूर्चिका** स्त्री "दध्ना सह पयः पक्वं यत् स्यात् सा दधिकूर्चिका" इत्युक्तलक्षणायामामिक्षायाम्।

**दधिक्रा** पु० दधिः दधदन्यं धारयन् सन् क्रामति क्रम—विट् अन्तस्यात्। १अश्वरूपे अग्न्यात्मके देवभेदे "दधिक्राश्च दक्रद्युर्विश्वकृष्टिम्" ऋ० ४।३८।२। उक्ता व्युत्पत्तिर्भाष्ये दर्शिता। "आ दधिक्राः शवसा पञ्च कृष्टीः" १०।३।२ अग्नि निघ०। तन्नामनिरुक्तिः २।२७। तत्र दर्शिता यथा "तत्र दधिक्रा इत्येतद् दधत् क्रामतीति वा दधत् क्रन्दतीति वा दधदाकारी भवतीति वा। तस्याश्ववद् देवतावच्च निगमा भवन्ति"। अतो देवार्थतापीति गम्यते" स चाग्निरूपः दधिक्रावन् शब्दे माधववाक्ये दृश्यम्।

**दधिक्रावन्** पु० दधिः दधत् क्रामति क्रम—वनिप् अन्तस्यात्। अश्वरूपे अग्न्यात्मके देवभेदे। "दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः। सुरभि नो मुखाकरत् प्राण आयूंषि तारिषत्" ताण्ड्य०ब्रा० १।६।१७। "दधिः दधारयन् क्रामतीति दधिक्रावा क्रमेर्वनिपि विड्वनोरनुनासिकस्यादिति" मकारस्याकारः, तस्य दधिक्राव्णः एतत् संज्ञकस्याश्वरूपस्य देवस्य" भा० अत्र द्राह्यायणः, "आग्नीध्रीयं गत्वा दधिभक्षं भक्षयेयुरुपह्वय दधिक्राव्ण इति। अत्र यद्यप्यस्मिन् मन्त्रे दधिक्राव्ण इति अश्वरूपोऽग्निविशेष एव देवतात्वेनाभिधीयते, तथापि दधिशब्दयोगात् सामान्येन दधिभक्षणे विनियोग इति द्रष्टव्यम्" भा०। एतदनुसारेण पञ्चगव्यादिशोधनेऽपि दधिशोधनेऽयं मन्त्रो विनियुक्तः इति बोध्यम्।

**दधिघर्म्म** पु० दधिसंस्कारके वैदिके कर्म्मभेदे। "दधिघर्म्मेण चरन्ति प्रवर्ग्यवांश्चेत्" आश्व० श्रौ० ५।१३।१। दधिघर्मो नाम कर्मविशेषः" नारा०। स च कात्या० श्रौ० उक्तो यथा १०।३।२०। "सप्रवर्ग्ये दधिघर्म्मः" सू० दध्याहरति प्रेषितो दधिघर्मार्थं दध्याहरति तच्च यागार्थत्वात् सान्नाय्यधर्म्मेण वत्सापाकरणादिना संस्कार्यं तत्र दध्नो ह्यहसाध्यत्वात् पूर्वस्मिन्नहनि प्रातःसवनिक दध्यर्थदोहानन्तरं दधिघर्मः दध्यर्थमपि रात्रौ दोह आतञ्चनान्तः कर्त्तव्यः। तत्सम्बन्धिनो वत्सापाकरणादयोऽप्यनेनैव क्रमेण कर्त्तव्याः प्रवर्ग्यवत्येवायं दधिघर्मः" कर्कः। तत्करणप्रकारमपि तदुत्तरसूत्रैराह यथा "उपविश्य सदसः पुरस्तात् सपवित्रायामग्निहोत्रहवण्यां ग्रहणं यथोक्तम्" २१ सू०। तत् प्रतिप्रस्थाताहृतदधि उत्तरवेदेः पश्चादासाद्यालभ्य ततः सदसः पश्चादुपविश्य सपवित्रायामग्निहोत्रहवण्यां शाखापवित्रेणाग्निहोत्रहवण्याम् यथोक्तं यथा प्रवर्ग्याध्यायोक्तं तथा ग्रहणं करोति अतो यावतीति मन्त्रान्तं स्थालीमुखेनैवाग्निहोत्रहवण्यां निनयनं कर्त्तव्यम्। आनयनञ्च निनयनमेव" कर्कः विस्तरः तदुत्तरसूत्रेषु दर्शितः। तादृशकर्म्मसमुदायश्च दधिघर्मशब्दार्थः।

**दधिचार** पु० दधि चारयति चालयति चर—णिच्—अण् उप० स०। मन्थानदण्डे हारा०। [२दधिजातमात्रे त्रि०।

**दधिज** न० दध्नो जायते जन—ड। १नवनीते राजनि०

**दधित्थ** पु० दधीव तद्वर्णवत् द्रवे तिष्ठति स्था—क पृषो०। कपित्थे अमरः तद्द्रवस्य दधिवर्णत्वात् तथात्वम्। "दधित्थरससंयुक्तां पिप्पलीं माक्षिकान्विताम्" सुश्रु०।

**दधित्थाख्य** पु० दधित्थमाख्याति आ+ख्या—क। सरलद्रवे (लोवान) रत्नमाला।

**दधिधेनु** स्त्री दानार्थं कल्पितदधिकुम्भनिर्मिते धेनुभेदे तद्विधानं हेमा० दा० स्कन्दपु० उक्तो यथा

"दधिधेनोर्महाराज! विधानं शृणु साम्प्रतम्। अनुलिप्ते महीभागे गोमयेन नराधिप!। गोचर्म्ममात्रन्तु पुनः पुष्पप्रकरसंयुतम्। कुशैरास्तीर्य्य वसुधां कृष्णाजिनकृतास्तराम्। दधिकुम्भञ्च संस्थाप्य सप्तधान्यस्य चोपरि। चतुर्थांशेन वत्सन्तु सौवर्णखुरसंयुतम्। प्रशस्तपत्रश्रवणां मुक्ताफलमयेक्षणाम्। चन्दनागुरुशृङ्गीं च मुखं वै गन्धमालिकम्। जिह्वा शर्करया राजन्! घ्राणं श्रीखण्डकं तथा। फलमूलमया दन्ताः सितसूत्रस्य कम्बलाः। ताम्रपृष्ठा दर्भरोमा पुच्छं सूत्रमयं तथा। स्वर्णशृङ्गीं रौप्यखुरीं नवनीतमयस्तनीम्। इक्षुपादां सुसंस्कृत्य सर्वाभरणभूषिताम्। आच्छाद्य वस्त्रयुग्मेन पुष्पगन्धैस्तु पूजिताम्। ब्राह्मणाय कुलीनाय साधुवृत्ताय धीमते। समाधियमयुक्ताय तादृशाय प्रदापयेत्। पुच्छदेशोपविष्टाय मुद्रिकाकर्णमात्रकैः। पादुकोपानहौ छत्रं दत्त्वा मन्त्रमनुस्मरेत्। दधिक्राव्णेतिमन्त्रेण दधिधेनुं प्रदापयेत्। एवं दधिमयीं धेनुं दत्त्वा राजर्षिसत्तम!। एकाहारो दिनं तिष्ठेद्दध्ना च नृपनन्दन!। यजमानो वसेद्राजन्! त्रिदिवं च

द्विजोत्तम ! दीयमानां प्रपश्यन्ति तेऽपि यान्ति परां गतिम् । दश पूर्वान् दश परानात्मानञ्चैकविंशकम् । विष्णुलोकमवाप्नोति यावदाहूतसंप्लवम् । दाता च दापकाश्चैव तेऽपि यान्ति परां गतिम् । यत्र मधुवहा नद्यो यत्र पायसकर्द्दमाः । ऋषयो मुनयं सिद्धास्तत्र गच्छन्ति धेनुदाः । य इदं शृणुयाद्भक्त्या श्रावयेद्वापि मानवः । सोऽश्वमेधफलं प्राप्य विष्णुलोकं स गच्छति" । घृतधेनुविधिवत् सर्वमत्र कर्म्म ।

**दधिपयस्** न॰ द्वि॰व॰। दधि च पयश्च । "जातिरप्राणिनाम् पा॰ अप्राणिजातित्वात् समाहारद्वन्द्वे प्राप्ते "न दधिपय आदीनि" पा॰ तन्निषेधः दधिपयसी ।

**दधिपयआदि** न॰ समाहारद्वन्द्वनिषेधनिमित्ते शब्दद्वयगणभेदे । स च गणः पा॰ग॰सूत्रे उक्तो यथा "दधिपयसी सर्पिर्मधुनी मधुसर्पिषी ब्रह्मप्रजापती शिववैश्रवणौ स्कन्दविशाखौ परिव्राट्कौशिकौ प्रवर्ग्योपसदौ शुक्लकृष्णौ इध्माबर्हिषी दीक्षातपसी श्रद्धातपसी मेधातपसी अध्ययनतपसी उलूखलमुसले आद्यवसाने श्रद्धामेधे ऋक्सामे वाङ्मनसे" ।

**दधिपुष्पिका** स्त्री दधीव शुभ्रं पुष्पमस्याः कप् अत इत्त्वम् । श्वेतापराजितायाम् राजनि॰ ।

**दधिपुष्पी** स्त्री दधीव शुभ्रं पुष्पमस्याः जातित्वात् ङीष् । कोलशिम्ब्यां राजनि॰ ।

**दधिपूप** पु॰ दधिपक्वः पूपः । अपूपभेदे । "शालिपिष्टं युतं दध्ना मर्दयित्वा घृते पचेत् । वेष्टयेत् पक्वखण्डेन सुवृत्तं दधिपूपकम् । दधिपूपो गुरुर्वृष्यो बृंहणोऽनिलपित्तहा । हृद्योऽग्निजननश्चैव विशेषाद्रुचिकारकः" पाकशास्त्रम् ।

**दधिफल** पु॰ दधीव द्रवः फलेऽस्य । कपित्थे अमरः तद्द्रवस्य दधितुल्याम्लरसत्वात् तथात्वम् । [रत्नमाला ।

**दधिमण्ड** पु॰ ६त॰ । दध्नः मस्तुनि (मात) ख्याते पदार्थे ।

**दधिमण्डोद(क)** पु॰ दधिमण्ड इवोदकमत्र उदकस्य वा उदादेशः । दधिमण्डतुल्यजले समुद्रभेदे । "दधिमण्डोद एवात्र विज्ञेयो वारिजासनः" हेमा॰ व्र॰ तद्दानम् । "उत्तरेषु च कौरव्य ! द्वीपेषु श्रूयते कथा । एवं तत्र महाराज ! श्रुवतश्च निबोध मे । घृततोयः समुद्रोऽत्र दधिमण्डोदकः परः । सुरोदः सागरश्चैव तथान्यो जलसागरः" भा॰ भी॰ १२ अ॰ ।

**दधिमुख** पु॰ १रामसेनापतिवानरभेदे "श्रीमान् दधिमुखो नाम हरिवृद्धोऽतिवीर्य्यवान्" भा॰व॰२८२अ॰ ।२नागभेदे "सुरामुखो दधिमुखस्तथा विमलपिण्डकः" भा॰आ॰३५ अ॰ सर्पनामोक्तौ दधिवक्त्रादयोऽप्यत्र ।

**दधिवत्** त्रि॰ दधि अस्त्यत्र मतुप् वेदे मस्य वः । दधियुक्ते "अपूपवान् दधिवांश्चरुरेह सीदतु" अथ॰ १८।४।१७। लोके तु न मस्य वः दधिमत् इत्येव स्त्रियां ङीप्

**दधिवामन** न॰ १शालग्राममूर्त्तिषु वामनमूर्त्तिभेदे ब्रह्मवै॰ प्रकृतिख॰ तल्लक्षणमुक्तं यथा । "अतिक्षुद्रं द्विचक्रञ्च । नवीननीरदोपमम् । दधिवामनकं ज्ञेयं स्टहिणाञ्च सुखप्रदम् । दध्योदने होतव्यः वामनः । २दध्योदनेन हवनीये वामनभेदे पु॰ । "दध्योदनेन शुद्धेन हुत्वा मुच्येत दुर्गतः । स्मृत्वा त्रैविक्रमं रूपं जपेन्मन्त्रमनन्यधीः" तन्त्रसारे दधिवामनप्रयोगः ।

**दधिवारि** न॰६त॰। दधिमस्तुपदार्थे (दधिर मात) हेमच॰ ।

**दधिवाहन** पु॰ अङ्गनामकनृपपुत्रे "अङ्गपुत्रो महानासीत् राजेन्द्रो दधिवाहनः । दधिवाहनपुत्रस्तु राजा दिविरथोऽभवत्" हरिवं॰ ३१ अ॰ । दधिवाहनपुत्रस्तु पुत्रो दिविरथस्य तु" भा॰ शा॰ ४९ अ॰ ।

**दधिशोण** पु॰ वानरे त्रिका॰ ।

**दधिषाय्य** पु॰दधि स्यति सो—आय्य षत्वम् ।१घृते उज्ज्वल॰ । "दधिषाय्यः" उणा॰ सू॰ सि॰ कौ॰ इत्तौ "दधातेराय्यः द्वित्वमित्त्वं षुक्च इत्युक्त्वा "मित्रावसो दधिषाय्य"इत्युदाजहार" ।

**दधिसक्तु** पु॰ ब॰ व॰ । "दध्युपसिक्ताः सक्तवः "अन्नेन व्यञ्जनम्" पा॰समासः । दध्युपसिक्तेषु सक्तुषु । "कन्दुपक्वानि तैलेन पायसं दधिसक्तवः" ति॰ त॰कूर्म्मपु॰ ।

**दधिसार** पु॰ ६त॰ । नवनीते हेमच॰ ।

**दधिस्कन्द** पु॰ तीर्थभेदे ।

**दधिस्नेह** पु॰ ६त॰ । दधिसारे त्रिका॰ ।

**दधिस्य(ध्यस्य)** अतिगार्द्ध्येन दधीच्छति क्यच् अस् सुक् वा । अतिगार्द्ध्येन दधीच्छायायां प॰ अक॰ सेट् । दधिस्यति दध्यस्यति ।

**दधिस्वेद** पु॰ दध्नः स्वेद इव । तक्रे (घोल) जटाधरः ।

**दधी(च)चि** पु॰ अथर्वमुनेरौरसे कर्द्दमप्रजापतिकन्यायां शान्तिनाम्न्यां जाते मुनिभेदे । इन्द्रयाचितेन तेन च प्राणांस्त्यक्त्वा स्वदेहास्थीनि दत्तानि इन्द्रेण च तैर्वज्रं निर्माय वृत्तासुरो निहतः तत्कथा

"अतेऽस्थिभिर्दधीचस्य न हन्तुं त्रिदशद्विषः । तस्मा-

इत्वा ऋषिम्रेष्ठो याच्यतां सुरसत्तमाः"। दधीचास्थीनि देहीति तैर्बधिष्यामहे रिपून्। स च तैर्याचितोऽस्थीनि यत्नाद्धर्मविदस्तदा। प्राणत्यागं कुरुश्रेष्ठ! चकारैवाविचारयन्। सलोकानक्षयान् प्राप्तो देवप्रियकरस्तदा। तस्यास्थिभिरथो शक्रः संप्रहृष्टमनास्तदा। कारयामास दिव्यानि नानाप्रहरणानि च। वज्राणि चक्राणि गदा गुरून् दण्डांश्च पुष्कलान्" भा॰ शल्य॰ ५२ अ॰। "गते शतक्रतौ चतः! कहमल्येन चोदितः। यथोचितं सुदुहितः प्रादात् विश्वसृजां ततः" इत्युपक्रमे "अथर्वणोऽददाच्छान्तिं यया यज्ञो वितन्यते" भाग॰ ३।२४।२४ अ॰। "दध्यङ्ङाथर्वणस्त्वष्टे वर्मांभेद्यं मदात्मकम्" भाग॰ ६।८।५१। तस्याथर्वणकर्तृ मदुहितृपालिजातत्वादाथर्वणत्वविशेषणम्। "ददौ चास्थीनि देवेभ्यो दधीचिः सुमनास्तदा" अग्निपु॰ दध्यनृचशब्दे व्युत्पत्तिर्दर्श्या।

**दधीचास्थि** न॰ ६त॰। तज्जातत्वात् १वज्रे २तन्नामनामके हीरके च त्रिका॰।

**दधृष** त्रि॰धृष–क्विन् नि॰। १धृष्टे क्विन्नन्तत्वात् भलि पदान्ते च कुत्वम्।२धर्षके च।"वाजेषु दधृषं कवे" ऋ॰३।४२।६। "दधृषम् शत्रूणामभिभावकम्" भा॰।

**दधृष्वणि** त्रि॰ दधृगिवाचरति दधृष्+क्विप् ततो वा॰ वनि। धर्षके। "सावहिमधृष्टं चिद् दधृष्वणिम्" ऋ॰८।६।१।२। [लाय परमेष्ठिने"यमतर्पणमन्त्रः।

**दध्न** पु॰ दध–बा॰ न। यमभेदे। "औडुम्बराय दध्नाय नी-

**दध्यनृच** पु॰ दधिं धारकमञ्चति अनृच–क्विप्। अथर्वर्षिपुत्रे दधीचौ मुनिभेदे "दध्यङ्ङाथर्वणस्त्वष्टे" भाग॰६।६।८।५१ "स वा अधिगतो दध्यङ्ङश्विभ्यां ब्रह्म निष्कलम्" भाग॰६।८।५५। "यामथर्वा मनुष्पिता दध्यङ्धियमत्नत इत्यृचमधिकृत्य निरुक्ते तु १२।३३ अन्या निरुक्तिरुक्ता "दध्यङ्प्रत्यक्तो ध्यानमिति वा प्रत्यक्तमस्मिन् ध्यानमिति वा"।"दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाच" ऋ॰ १।११६।१२। आथर्वणः अथर्वणः पुत्रो दध्यङ् एतत्संज्ञ ऋषिरश्वस्य शीर्ष्णा युष्मत्सामर्थ्येन प्रतिहितेन शिरसा वां युवाभ्यामीमिमां मधुविद्यां यद् यदा खलु प्रोवाच प्रोक्तवान्। तदानीमश्वस्य शिरसः सन्धानलक्षणं पुनर्मानुषस्य शिरसः प्रतिसन्धानलक्षणं च यद्भवदीयं कर्म तदाविष्कृणोमीत्यर्थः। अत्रेयमाख्यायिका "इन्द्रो दधीचे प्रवर्ग्यविद्यां मधुविद्यां चोपदिश्य यदीमामन्यस्मै वक्ष्यसि शिरस्ते छेत्स्यामीत्युवाच। ततोऽश्विनावश्वस्य शिरश्छित्वा दधीचः शिरः-प्रच्छिद्यान्यत्र निधाय तत्राश्वं शिरः प्रत्यधत्तां तेन च दध्यङ् ऋचः सामानि यजूंषि च प्रवर्ग्यविषयाणि मधुविद्याप्रतिपादकं ब्राह्मणं चाश्विनावध्यापयामास। तदिन्द्रो ज्ञात्वा वज्रेण तच्छिरोऽच्छिनत्। अथाश्विनौ तस्य स्वकीयं मानुषं शिरः प्रत्यधत्तामिति। शाट्यायनवाजसनेययोः प्रपञ्चेनोक्तम्। तस्य टाटावजादौ दधीचः दधीचा इत्यादि। ततः स्वार्थे अण् इञ् वा पृषो॰ इत्वाभावे। दधीच दधीचि इति रूपमित्यवधेयम्।

**दध्यन्न** न॰ दध्युपसिक्तमन्नम्"अन्नेन व्यञ्जनम्"पा॰ समासः। दध्युपसिक्ते अन्ने "दध्यन्नं पायसं चैव गुडपिष्टं समोदकम्"याज्ञ॰ दध्योदनोऽप्यत्र पु॰। दध्योदनं हविष्यूषम्" याज्ञ॰ याज्ञवल्क्योक्तौ।

**दध्याकर** पु॰ ६त॰। दधिसमुद्रे शब्दार्थकल्पतरुः।

**दध्यानी** स्त्री दधि–दधिरसमानयति आ–नी–क गौरा॰ ङीष्। (सुदर्शनवृक्ष) सुदर्शनायाम् रत्नमाला।

**दध्युत्तर** न॰ ६त॰। दधिस्नेहे शब्दच॰। "पयसः सर्पिषश्चैव दधोदध्युत्तरस्य च" हरिवं॰ ७९३ अ॰।

**दध्युत्तरग** न॰ दध उत्तरं गच्छति गम–ड। दधिस्नेहे रत्नमाला। [जटाधरः।

**दध्युद(क)** पु॰ दधि उदकमिवास्य वा उदादेशः। दधिसमुद्रे

**दनायुस्** पु॰ दक्षकन्याभेदे सा च कश्यपपत्नीभेदः दनुशब्दे दृश्यम्। "दनुश्च दनायुश्च मातेव च पितेव च परिजग्मतुस्तस्याह्लानव इत्याहुः" शत॰ ब्रा॰ १।६।३।८ "दनायुषः पुनः पुत्राश्चत्वारोऽसुरपुङ्गवाः। विक्षरो बलवीरौ च वृत्रश्चैव महासुरः" भा॰ आ॰ ६५ अ॰।

**दनु** स्त्री दक्षकन्याभेदे सा च कश्यपर्षिपत्नी दानवमाता। "प्रजज्ञिरे महाभागा दक्षकन्यास्त्रयोदश। अदितिर्दितिर्दनुः काला दनायुः सिंहिका तथा। क्रोधा प्रधा च विश्वा च विनता कपिला मुनिः। कद्रूश्च मनुजव्याघ्र! दक्षकन्यैव भारत। एतासां वीर्यसम्पन्नं पुत्रपौत्रमनन्तकम्। "चत्वारिंशद्दनोः पुत्राः ख्याताः सर्वत्र भारत। तेषां प्रथमजो राजा विप्रचित्तिर्महायशाः। सम्बरो नमुचिश्चैव पुलोमा चेति विश्रुतः। असिलोमा च केशी च दुर्जयश्चैव दानवः। अयःशिरा अश्वशिरा अश्वशङ्कुश्च वीर्यवान्। तथा गगनमूर्द्धा च वेगवान् केतुमांश्च सः। स्वर्भानुरश्वोऽश्वपतिर्वृषपर्वाजकस्तथा। अश्वग्रीवश्च सूक्ष्मश्च तुहु-

खण्डश्च महाबलः। एकपादेकचक्रश्च विरूपाक्षमहो-दरौ। निचन्द्रश्च निकुम्भश्च कुजटः कपटस्तथा। शरभः शलभश्चैव सूर्य्यचन्द्रमसौ तथा। एते ख्याता दनोर्वंशे दानवाः परिकीर्त्तिताः। अन्यौ तु खलु देवानां सूर्य्याचन्द्रमसौ स्मृतौ। अन्यौ दानवमुख्यानां सूर्य्यचन्द्रमसौ तथा। इमे च वंशाः प्रथिताः सत्त्ववन्तो महाबलाः। दनुपुत्रा महाराज! दश दानववंशजाः। एकाक्षोऽमृतपो वीरः प्रलम्बनरकावपि। वातापिः शत्रुतपनः शठश्चैव महासुरः। गविष्ठश्च वनायुश्च दीर्घजिह्वश्च दानवः। असंख्येयाः स्मृतास्तेषां पुत्राः पौत्राश्च भारत!"भा०आ०६५अ०। दनोरपत्यम् अण्। दानव दनोरपत्ये पुंस्त्री स्त्रियां ङीप्।

**दनायु** पु० दानवभेदे दानवशब्दे दृश्यम्। अयं शब्दः दनायुस् शब्दात् प्राक् पाठ्यः।

**दनुज** पु०दनोर्जायते जन--ड। दनोरपत्ये असुरे अमरः।

**दनुजद्विष्** पु० दनुजान् द्वेष्टि द्विष--क्विप्। देवे हेम०। दनुजारिप्रभृतयोऽप्यत्र।

**दनुसूनु** पु० ६त०। दानवे जटाधरः।

**दन्त** पु० अन्तर्भावितण्यर्थे दम—तन्। १मुखान्तःस्थचर्वणसाधनेऽस्थिभेदे (दाँत) २कुञ्जे, ३पर्वतनितम्बे ४सानुनि, ५द्वात्रिंशत्संख्यायाञ्च मेदि०। अत एव नैषध० दन्तानां द्विगुणितषोडशपदार्थरूपत्वेन भङ्ग्या द्वात्रिंशत्त्वं वर्णितं यथा। "उद्देशपर्वण्यपि लक्षणेऽपि द्विधोदितैः षोडशभिः पदार्थैः। आन्वीक्षिकीं यद्दशनद्विभावीं तां मुक्तिकामाकलितां प्रतीमः"। ६शैलशृङ्गे त्रिका० (155) रूपे ७पञ्चमात्राप्रभेदे छन्दोग्र० सदन्ततया जन्मनि जन्मोत्तरं मासभेदे च तज्जन्मफलं ज्यो०त० उक्तं यथा "जातः सदन्तः पितृमातृहन्ता तातं विहन्यात् प्रथमे तु मासे। अम्बां द्वितीये सहजं तृतीये मासे चतुर्थे शुभकारकः स्यात्। मिष्टान्नभोजी सुभगः सुताख्ये५ षष्ठे सुखी पण्डितकल्पबुद्धिः। ततोऽधिकः स्यात् बलवान् द्युनाख्ये७ मासेऽष्टमे वित्तसुखैर्विहीनः। सुरप्रतापी नवमे सुत्यश्च दशमे तथा। एकादशे द्वादशे च सुखी च सुभगो भवेत्। अष्टौ पुत्तलकान् कृत्वा सुगन्धैर्गन्धकैस्तथा। स्रोतःसु संक्रमे चापि स्नापयेत् शुक्लपुष्पकैः। स्नानं संक्रमणस्याधः शम्भोर्दर्शनमन्ततः। होमं विप्रार्च्चनञ्चैवमशुभे दन्तदर्शने"।"स्निग्धा घनाश्च दशनाः सुतीक्ष्णदंष्ट्राः समाश्च शुभाः" इ०स०६७अ०। दन्तमूलप्रादुर्भावश्च गर्भोपनिषदि गर्भे सप्तममासे जायते इति प्रतिपादितम्।

**दन्तक** त्रि० दन्ते दन्तमार्ज्जने प्रसितः कन्। १दन्तमार्जनप्रसिते। दन्त इव कन्। २शैलशृङ्गे गिरेः प्रदेशाद्बहिर्निर्गते ३पाषाणभेदे च हेमच०। स्वार्थे क। ४दन्तशब्दार्थे पु०।

**दन्तकर्षण** पु० दन्तान् कर्षति कृष—ल्यु। जम्बीरे शब्दर०।

**दन्तकाष्ठ** न० दन्तधावनार्थं काष्ठम्। १दन्तधावने काष्ठे। तत्काष्ठमस्त्यत्र साध्यतया अच्। २विकङ्कतवृक्षे पु०राजनि०। सफलतत्काष्ठभेदाः वृ० स० ८५ अ० उक्ता यथा

"वल्लीलतागुल्मतरुप्रभेदैः स्युर्दन्तकाष्ठानि सहस्रशो यैः। फलानि वाच्यान्यतितत्प्रसङ्गो मा भूदतो वच्म्यथ कामिकानि। अज्ञातपूर्वाणि न दन्तकाष्ठान्यद्याच्च पत्रैश्च समन्वितानि। न युग्मपर्वाणि न पाटितानि न चोर्ध्वशुष्काणि विना त्वचा वा। वैकङ्कतश्रीफलकाश्मरीषु ब्राह्मी द्युतिः क्षेमतरौ सुदाराः। वृद्धिर्वटेऽर्के प्रचुरं च तेजः पुत्रा मधूके ककुभे प्रियत्वम्। लक्ष्मीः शिरीषे च तथा करञ्जे प्लक्षेऽर्थसिद्धिः समभीप्सिता स्यात्। मान्यत्वमायाति जनस्य जात्यां प्राधान्यमश्वत्थतरौ वदन्ति। आरोग्यमायुर्बदरीबृहत्योरैश्वर्यवृद्धिः खदिरे सबिल्वे। द्रव्याणि चेष्टान्यतिमुक्तके स्युः प्राप्नोति तान्येव पुनः कदम्बे। निम्बेऽर्थाप्तिः करवीरेऽन्नलब्धिर्भाण्डीरे स्यादिदमेव प्रभूतम्। शम्यां शत्रूनपहन्त्यर्जुने च श्यामायां च द्विषतामेव नाशः। सालेऽश्वकर्णे च वदन्ति गौरवं सभद्रदारावपि चाटरूषके। वाल्लभ्यमायाति जनस्य सर्वतः प्रियङ्ग्वपामार्गसजम्बुदाडिमैः। उदङ्मुखः प्राङ्मुख एव वाब्दं कामं यथेष्टं हृदये निवेश्य। अद्यादनिन्द्यं च सुखोपविष्टः प्रक्षाल्य जह्याच्च शुचिप्रदेशे। अभिमुखपतितं प्रशान्तदिक्स्थं शुभमतिशोभनमूर्ध्वसंस्थितं यत्। अशुभकरमतोऽन्यथा प्रदिष्टं स्थितपतितं च करोति मृष्टमन्नम्"।

आ० त० नरसिंहपुराणे च "दन्तकाष्ठस्य वक्ष्यामि समासेन प्रशस्तताम्। सर्वे कण्टकिनः पुण्याः क्षीरिणश्च यशस्विनः"। महाभारते। "तिक्तं कषायं कटुकं सुगन्धि कण्टकान्वितम्। क्षीरिणो वृक्षगुल्मादीन् भक्षयेद्दन्तधावने"। निषिद्धकाष्ठानि यथा "गुवाकतालहिन्तालास्तथा ताडी च केतकी। खर्ज्जूरनारिकेलौ च सप्तैते तृणराजकाः। तृणराजशिरापत्रैर्यः कुर्याद्दन्तधावनम्। तावद्भवति चाण्डालो याव-

शृङ्गां न पश्यति। तस्य स्थौल्यं परिमाणञ्चाह विष्णुः "कनिष्ठाग्रसमं स्थौल्यं सकूर्चं द्वादशाङ्गुलम्। प्रातर्भुक्त्वा च यतवाक् भक्षयेद्दन्तधावनम्" मरीचिः द्वादशाङ्गुलञ्च वैश्यानां शूद्राणान्तु षडङ्गुलम्। चतुरङ्गुलमानेन नारीणां विधिरुच्यते। अन्तरप्रभवानाञ्च षडङ्गुलमुदाहृतम्"। दन्तधावनदन्तपवनशब्दे ऽधिकं दृश्यम्। [राजनि॰

**दन्तकाष्ठक** न॰ दन्तधावनोपयोगि काष्ठमस्मात्। आकुल्यवृक्षे

**दन्तकूर** पु॰ दन्ताः कूरमन्नमिव चर्व्यन्ते यत्र। संग्रामे नीलकण्ठः "माद्रीपुत्रः सहदेवः कलिङ्गान् समागतान् अजयद्दन्तकूरे" भा॰उ॰ २२अ॰। "अयं कपाटेन जघान पाण्ड्यं तथा कलिङ्गान् दन्तकूरे ममर्द" ४७ अ॰।

**दन्तक्रूर** पु॰ दन्ताः क्रूरा यत्र। देशभेदे २तद्रूपे च नीलक॰। "ब्रह्मद्विषाञ्चाथ तस्मिन् सहस्राणि चतुर्दश। पुनरन्यानि जग्राह दन्तक्रूरं जघान ह" भा॰द्रो॰७॰ अ॰।

**दन्तघर्ष** पु॰६त॰। दन्तानां परस्परघर्षभेदे। "यस्य वै भुक्तमात्रस्य हृदयं बाधते क्षुधा। जायते दन्तघर्षश्च स गतायुः स्मृतो बुधैः" मार्क॰ पु॰।

**दन्तचाल** पु॰ दन्तानां चालश्चलनमत्र। सुश्रुतोक्ते आतुरोपद्रवभेदे (दाँतनड़ा)। आतुरोपद्रवोपक्रमे "नेत्रस्तम्भ निमेषश्च तृष्णां कासं प्रजागरम्। लभन्ते दन्तचालश्च तांस्तानन्यानुपद्रवान्"।

**दन्तच्छद** पु॰ दन्ताश्छाद्यन्तेऽनेन छद-णिच्-घ ह्रस्वः। ओष्ठे (ठोँट) हलायुधः। "बिम्बो दन्तच्छदं न वा" भट्टिः। "दन्तच्छदैः सव्रणदन्तचिह्नैः" ऋतुसंहारः।

**दन्तच्छदोपमा** स्त्री दन्तच्छद ओष्ठ उपमीयतेऽनया अङ्। बिम्बीलतायाम् (तेलाकुचा) राजनि॰। तत्फलेन हि ओष्ठसादृश्यं प्रसिद्धम्।

**दन्तजात** त्रि॰ जातो दन्तोऽस्य निष्ठान्तत्वात् परनिपातः। १जातदन्ते। "दन्तजातेऽनुजाते वा कृतचूडे च संस्थिते" मनुः। दन्तजननं तज्जननयोग्यकालश्चोभयमपि दन्तजातशब्देनोच्यते। गर्भोपनिषदि सप्तममासे दन्तजननकालश्रोक्तत्वात् तत्र दैवात् दन्तानुत्पत्तावपि जातदन्तकालत्वात् दन्तजनन इवाशौचनिमित्तता" शुद्धित॰।

**दन्तजाह** न॰ दन्तानां मूलं कर्णा॰ जाह। दन्तमूले।

**दन्तदर्शन** न॰ दन्तानां दर्शनम् दृश-णिच्-ल्युट्। युद्धादौ योधानां प्रतियोधं प्रति स्वदन्तान् बहिष्कृत्य दर्शने (दाँतखामुटि) "दन्तदर्शनमारावस्ततो युद्धं प्रवर्त्तते" भा॰ व॰ छ॰ ७१ अ॰।

**दन्तधावन** पु॰ दन्तान् धावयति शोधयति धाव-ल्यु। १खदिरवृक्षे, २गुञ्जकरञ्जे, राजनि॰ ३बकुले शब्दच॰। एतेषां तत्साधनत्वात् तथात्वम्। भावे ल्युट्। ४दन्तमार्जने तत्प्रकारो यथा "प्रातर्भुक्त्वा च मृद्वग्रं कषायं कटुतिक्तकम्। भक्षयेद्दन्तधावनं दन्तमांसान्यबाधयन्। तस्य काष्ठानि यथा "केऽप्यत्र करवीरार्ककरञ्जबकुलासनान्। दन्तकाष्ठार्थमन्ये तु सर्वान् कण्टकिनोऽभ्यधुः। खदिरश्च कदम्बश्च करञ्जश्च वटस्तथा। तिन्तिडी वेणुपृष्ठञ्च आम्रनिम्बौ तथैव च। अपामार्गश्च विल्वश्च अर्कश्चोडुम्बरस्तथा। एते प्रशस्ताः कथिता दन्तधावनकर्मणि"। तत्र निषिद्धकाष्ठानि यथा "गुवाकतालहिन्तालखर्जूरैः केतकीयुतैः। नारिकेलेन ताद्या च न कुर्याद्दन्तधावनम्"। तस्य दिग्भेदस्थानेदे शुभाशुभफलं यथा "मृत्युः स्याद्दक्षिणास्येन पश्चिमास्येन चामयः। पूर्वास्येनोत्तरास्येन सम्पदो दन्तधावनात्"। तस्य तिथिविशेषे निषेधो यथा "प्रतिपद्दर्शषष्ठीषु नवम्येकादशीषु च। दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलम्"। दन्तघर्षणानन्तरं चक्षुःसेचनं यथा। दन्तान्मूर्द्धमधो दृष्ट्वा प्रातः सिञ्चेच्च लोचने। तोयपूर्णमुखस्तेन दृष्टिरासु प्रमोदते"। रोगविशेषे दन्तकाष्ठवर्जनं यथा "अर्दित. कर्णशूली च दन्तरोगी नवज्वरी। शोषी कासी च मूर्च्छार्त्तो दन्तकाष्ठं विवर्जयेत्"। तस्य गुणा यथा "निहन्ति वक्त्रवैरस्यं जिह्वादन्ताश्रितं मलम्। आरोग्यं रुचिमाधत्ते सद्यो दन्तविशोधनम्" इति राजवल्लभः। "कृतशौचस्ततः प्राज्ञः कुर्याद्दन्तस्य धावनम्। जिह्वाया मार्जनञ्चापि रसालच्छदनादिभिः। दक्षिणाभिमुखो भूत्वा पश्चिमाभिमुखस्तथा। न दन्तधावनं कुर्यात् कुर्याच्चेन्नारकी भवेत्। मध्यमानामिकाभ्याञ्च वृद्धाङ्गुष्ठेन च द्विजः। दन्तस्य धावनं कुर्यात् तर्जन्या न कदाचन। अश्वत्थवटविल्वानां धात्र्याः काष्ठिकया बुधः। न दन्तधावनं कुर्यात्तथेन्द्रसुरवस्य च। नित्यक्रियाफलं प्रेप्सुस्त्वरया दन्तधावनम्। प्रभाते कुरुते प्राज्ञः सूर्योदयविवर्जिते। सूर्योदये द्विजश्रेष्ठ! यः कुर्याद्दन्तधावनम्। नित्यक्रियाफलं तस्य सर्वमेव विनश्यति। यः स्नानसमये कुर्यात् जैमिने! दन्तधावनम्। निराशाः पितरो यान्ति तस्य देवाः सुरर्षयः। दन्तस्य धावनं कुर्यादो मध्याह्नापराह्णयोः। तस्य पुष्पं न गृह्णन्ति देवताः पितरो जलम्। स्नानकाले

पुष्करिण्यां यः कुर्य्याद्दन्तधावनम्। तावज्ज्ञेयः स चाण्डालो यावद्गङ्गां न पश्यति। अभ्युदिते सूर्य्ये यः कुर्य्याद्दन्तधावनम्। तद्दन्तकाष्ठे पितरो भुक्त्वा गच्छन्ति दुःखिनः। उपवासदिने विप्र! पितृश्राद्धदिने तथा। न च तत्फलमाप्नोति दन्तधावनकृन्नरः। प्रभाते मार्जयेद्दन्तान् वाससा रसनां तथा। कुर्य्याद्द्वादश विप्रेन्द्र! कवलानि जलैर्बुधः। उपवासे पितृश्राद्धे विधिनानेन जैमिने!। दन्तधावनकृन्मर्त्त्यः संपूर्णं लभते फलम्" पाद्मे क्रियायोगसारः। "उषःकाले तु सम्प्राप्ते शौचं कृत्वा यथार्थवत्। ततः स्नानं प्रकुर्वीत दन्तधावनपूर्वकम्। मुखे पर्युषिते नित्यं भवत्यप्रयतो नरः। तस्मात् सर्वप्रयत्नेन भक्षयेद्दन्तधावनम्। कदम्बबिल्वखदिरकरवीरवटार्जुनाः। तगरं बृहती जातीकरञ्जार्कातिमुक्तकाः। जम्बूमधूकापामार्गशिरीषोडुम्बरासनाः। क्षीरिकण्टकिवृक्षाद्याः प्रशस्ता दन्तधावने। कटुतिक्तकषायाश्च धनारोग्यसुखप्रदाः। प्रक्षाल्य भुक्त्वा च शुचौ देशे त्यक्त्वा तदाचमेत्। अमावास्यां तथा षष्ठ्यां नवम्यां प्रतिपद्यपि। वर्जयेद्दन्तकाष्ठन्तु तथैवार्कस्य वासरे। अभावे दन्तकाष्ठस्य निषिद्धायां तथा तिथौ। अपां द्वादशगण्डूषैः कुर्वीत मुखशोधनम्" इति मार्क० २१४ अ० "मैत्रं प्रसाधनं स्नानं दन्तधावनमञ्जनम्। पूर्वाह्ण एव कुर्वीत देवतानाञ्च पूजनम्" मनुः।

**दन्तपत्त्र** न० दन्त इव पत्त्रमत्र। दन्ताकारपत्त्रयुक्ते कर्णभूषणभेदे शब्दर०। "विलासिनीविभ्रमदन्तपत्त्रम्" रघुः "कर्णावसक्तामलदन्तपत्त्रम्" कुमा० दन्तः गजदन्तः तन्निर्मितं पत्त्रम्। २गजदन्तनिर्मिते पत्त्राकारे कर्णभूषणभेदे च "अहृदये! त्वत्कृते निपतितं दन्तपत्त्रम्" काद०।

**दन्तपत्त्रक** न०दन्त इव शुभ्रं पत्त्रं दलं यस्य कप्। कुन्दपुष्पे शब्दच०। स्वल्पार्थे कोऽपि अत इत्त्वम्। दन्तपत्त्रिका स्वल्पे तत्रार्थे स्त्री विदग्धनीलोचितदन्तपत्त्रिका" माघः

**दन्तपवन** न० दन्तं पुनाति अनेन पू-करणे ल्युट्। १दन्तकाष्ठे। भावे ल्युट्। २दन्तधावने च। तत्प्रकारो भावप्र० उक्तो यथा

"तत्रादौ दन्तपवनं द्वादशाङ्गुलमायतम्। कनिष्ठिकापरीणाहमृज्वग्रथितमव्रणम्। अयुग्मग्रन्थि यच्चापि प्रत्यग्रं शस्तभूमिजम्। अवेक्ष्यर्त्तुञ्च दोषञ्च रसं वीर्य्यञ्च योजयेत्। कषायं मधुरं तिक्तं कटुकं प्रातरुत्थितः। निम्बश्च तिक्तके श्रेष्ठः कषाये खदिरस्तथा। मधूको मधुरे श्रेष्ठः करञ्जः कटुके तथा। क्षौद्रव्योषत्रिवर्गाक्तं सतैलं सैन्धवेन च। चूर्णेन तेजोवत्याश्च दन्तान्नित्यं विशोधयेत्। एकैकं घर्षयेद्दन्तं मृदुना कूर्चकेन च। दन्तशोधनचूर्णेन दन्तमांसान्यबाधयन्। तद्दौर्गन्ध्योपदेहौ तु श्लेष्माणं चापकर्षति। वैशद्यमन्नाभिरुचिं सौमनस्यं करोति च। न खादेद्गलताल्वोष्ठजिह्वारोगसमुद्भवे। अथास्यपाके श्वासे च कासहिक्कावमीषु च। दुर्बलोऽजीर्णभक्तश्च मूर्च्छार्त्तो मदपीडितः। शिरोरुगार्त्तस्तृषितः श्रान्तःपानक्लमान्वितः। अर्दितः कर्णशूली च दन्तरोगी च वर्जयेत्"

**दन्तपात** पु०६त०। १दन्तानां पतने। २वर्षभेदे अश्वानां स्वतो दन्तविशेषपतने च तत्कालश्च वृ० सं०६६अ० उक्तो यथा "षड्भिर्दन्तैः सिताभैर्भवति हयशिशुस्तैः कषायैर्द्विवर्षः सन्दंशैर्मध्यमान्त्यैः पतितसमुदितैस्त्र्यब्दपञ्चाब्दिकोऽश्वः। सन्दंशानुक्रमेण त्रिकपरिगताः कालिकापीतशुक्लाः काचा माक्षीकशङ्खावटचलमतो दन्तपातञ्च विद्धि"

**दन्तपाली** स्त्री ६त०। दन्ताग्रे "ताल्वोष्ठदन्तपालीजिह्वानेत्रान्तपायुकरचरणैः। रक्तैस्तु रक्तसारा बहुधनवनितार्थपुत्रयुता:" वृ० सं० ६८ अ०।

**दन्तपुप्पुटक** पु० दन्तरोगभेदे दन्तरोगशब्दे सुश्रुतवाक्यम्।

**दन्तपुष्प** न०दन्त इव शुभ्रं पुष्पमस्य। १कुन्दे, २कतकफले च शब्दच०।

**दन्तफल** न० दन्त इव शुभ्रं फलमस्य। १कतकफले शब्दच० दन्तवत् शुभ्रं फलमस्य। २कपित्थे पु० ३पिप्पल्याम् राजनि० स्त्री टाप्।

**दन्तभाग** पु० दन्तसम्बन्धी भागः। गजस्य मुखात् स्कन्धपर्य्यन्ते अग्रभागे अमरः।

**दन्तमल** न० ६त०। दन्तलग्नक्लेदे हारा०।

**दन्तमांस** न० दन्तसंलग्नं मांसम्। दन्तसंलग्नमांसे (मेड़े) ख्याते मांसभेदे।

**दन्तमूल** न० दन्तरोगभेदे दन्तरोगशब्दे दृश्यम्।

**दन्तमूलिका** स्त्री दन्त इव शुभ्रं मूलं यस्याः कप्। दन्तीवृक्षे राजनि०।

**दन्तमूलीय** पु० दन्तमूले भवः छ। तवर्गादौ। दन्त्यशब्दे [दृश्यम्।

**दन्तरोग** पु० ६त०। मुखरोगान्तर्गते दन्तदन्तमूलगते रोगभेदे स च रोग० सुश्रुते उक्तो यथा।

"अथातो मुखरोगाणां निदानं व्याख्यास्यामः। मुख-

रोगाः पञ्चषष्टिः सप्तस्वायतनेषु तत्रायतनान्योष्ठौ दन्तमूलानि दन्ता जिह्वा तालुकण्ठः “सर्वाणि चेति। तत्राष्टावोष्ठयोः। पञ्चदश दन्तमूलेषु, अष्टौ दन्तेषु, इति चोपक्रम्योक्तं यथा।
“दन्तमूलगतास्तु शीतादो१ दन्तपुप्पुटको२ दन्तवेष्टकः३ शौषिरो४ महाशौषिरः५ परिदरः६ उपकुशो७ दन्तवैदर्भो८ वर्द्धनो९ऽधिमांसो१०नाड्यः१५ पञ्चेति” इत्युद्दिश्य “शोणितं दन्तवेष्टेभ्यो यस्याकस्मात् प्रवर्त्तते। दुर्गन्धीनि सकृष्णानि प्रक्लेदीनि मृदूनि च। दन्तमांसानि शीर्य्यन्ते पचन्ति च परस्परम्। शीतादो नाम स व्याधिः कफशोणितसम्भवः१। दन्तयोस्त्रिषु वा यस्य श्वयथुः सरुजो महान्। दन्तपुप्पुटको ज्ञेयः कफरक्तनिमित्तजः२। स्रवन्ति पूयरुधिरं चला दन्ता भवन्ति च। दन्तवेष्टः स विज्ञेयो दुष्टशोणितसम्भवः३। श्वयथुर्दन्तमूलेषु रुजावान् कफरक्तजः। लालास्रावो स विज्ञेयः कण्डूमान् शौषिरो गदः४। दन्ताश्चलन्ति वेष्टेभ्यस्तालु चाप्यवदीर्य्यते। दन्तमांसानि पच्यन्ते मुखञ्च परिपीड्यते। यस्मिन् स सर्वजो व्याधिर्महाशौषिरसंज्ञकः५। दन्तमांसानि शीर्य्यन्ते यस्मिन् ष्ठीवति चाप्यसृक्। पित्तासृक्कफजो व्याधिर्ज्ञेयः परिदरो हि सः६। वेष्टेषु दाहः पाकश्च तेभ्यो दन्ताश्चलन्ति च। आघट्टिताः प्रस्रवन्ति शोणितं मन्दवेदनाः। आध्मायन्ते स्रुते रक्ते मुखं पूति च जायते। यस्मिन्नुपकुशः स स्यात्पित्तरक्तकृतो गदः७। घृष्टेषु दन्तमूलेषु संरम्भो जायते महान्। भवन्ति च चला दन्ताः स वैदर्भोऽभिघातजः८। मारुतेनाधिको दन्तो जायते तीव्रवेदनः। वर्द्धनः स मतो व्याधिर्जाते रुक् च प्रशाम्यति९। हानव्ये पश्चिमे दन्ते महान् शोथो महारुजः। लालास्रावो कफकृतो विज्ञेयः सोऽधिमांसकः१०। दन्तमूलगता नाड्यः पञ्च ज्ञेया यथेरिताः१५। “दन्तगतास्तु दालनः१ क्रिमिदन्तको२ दन्तहर्षो३ भञ्जनकः४ दन्तशर्करा५ कपालिका६ श्यावदन्तो७ हनुमोक्षश्चेति। दाल्यन्ते बहुधा दन्ता यस्मिंस्तीव्ररुगन्विताः। दालनः स इति ज्ञेयः सदागतिनिमित्तजः। कृष्णश्छिद्री चलः स्रावी ससंरम्भो महारुजः१। अनिमित्तरुजो वाताद्विज्ञेयः क्रिमिदन्तकः२। दशनाः शीतमुष्णञ्च सहन्ते स्पर्शनं न च। यस्य तं दन्तहर्षन्तु व्याधिं विद्यात्समीरणात्३। वक्त्रं वक्रं भवेद्यस्मिन् दन्तभङ्गश्च तीव्ररुक्। कफवातकृतो व्याधिः स भञ्जनकसंज्ञितः४। शर्करेव स्थिरीभूतो मलो दन्तेषु यस्य वै। सा दन्तानां गुणघ्नी तु विज्ञेया दन्तशर्करा५। दलन्ति दन्तवल्कानि यदा शर्करया सह। ज्ञेया कपालिका सैव दशनानां विनाशिनी६। योऽसृङ्मिश्रेण पित्तेन दग्धो दन्तस्त्वशेषतः। श्यावतां नीलतां वापि गतः स श्यावदन्तकः७। वातेन तैस्तैर्भावैस्तु हनुसन्धिर्विसंहतः। हनुमोक्ष इति ज्ञेयो व्याधिरर्दितलक्षणः८”।

**दन्तलेखक** त्रि॰ दन्तान् लिखति जीविकार्थम् लिख—“संज्ञायाम्” पा॰ ण्वुल् “नित्यं क्रीडाजीविकयोः” पा॰ नित्यस॰। दन्तलेखनरूपजीविकायुक्ते। “अर्के जीविकार्थे” पा॰ पूर्वपदस्याद्युदात्तत्वम्।

**दन्तवक्र** पु॰ करूषाधिपे द्वापरयुगोद्भवे हिरण्यकशिपोरवताररूपे नृपभेदे “हिरण्यकशिपुर्योऽसौ दैत्यराजोऽभवत् पुरा। पृथुकीर्त्त्यां तु संजज्ञे तनयो वृद्धशर्मणः। करूषाधिपतिर्वीरो दन्तवक्रो महाबलः” हरिवं॰ ३५ अ॰। “अधिराजाधिपञ्चैव दन्तवक्रं महाबलम्। जिगाय करदञ्चैव कृत्वा राज्ये न्यवेशयत्” भा॰स॰ ३० अ॰। सहदेवदक्षिणदिग्विजयोक्तौ “द्वारवत्यां नियसता यदुसिंहेन तेन वै” इत्युपक्रमे “दन्तवक्रश्च कारूषो निहतो दक्षिणापथे” हरिवं॰ १७२ अ॰। द्वारकायासकाले कृष्णेन बधो वर्णितः। “मातृष्वस्रेयोवश्चैद्यो दन्तवक्रश्च पाण्डव!। पार्षदप्रवरौ विष्णोर्विप्रशापात् पदच्युतौ” भाग॰ ७।१।३२ इत्युपक्रमे हिरण्याक्षादिजन्मनाशोक्त्यनन्तरम् “तावेव क्षत्रियौ जातौ मातृष्वस्रात्मजौ तव। अधुना शापनिर्मुक्तौ कृष्णचक्रहतांहसौ”। ४४ “कृष्णोऽपि तमहन् गुर्व्या कौमोदक्या स्तनान्तरे। गाढनिर्भिन्नहृदय उद्वमन् रुधिरं मुखात्। प्रसार्य्य केशान् बाह्वङ्घ्रीन् धरण्यां न्यपतद्व्यसुः। ततः सूक्ष्मतरं ज्योतिः कृष्णमाविशदद्भुतम्” भाग॰ १०।७७।७

**दन्तवल्क** पु॰ दन्तस्य वल्कमिव। दन्तावरकचर्म्मात्मके मांसभेदे “दलन्ति दन्तवल्कानि यदा शर्करया सह” सुश्रुतः।

**दन्तवर्त्ति** स्त्री दन्तनिर्मिता वर्त्तिः। “दन्तैर्हस्तिवराहोष्ट्रगवाश्वाजखरोद्भवैः सशङ्खमौक्तिकाम्भोधिफेनैर्मरिचपादिकैः क्षतशुक्रमपि व्याधिं दन्तवर्त्तिर्निवर्त्तयेत्” चक्रदत्तोक्ते वर्तिकाभेदे।

[ ओष्ठे हेम॰।

**दन्तवस्त्र** न॰ दन्तस्य वस्त्रमिव च्छादकत्वात्। दन्तवाससि

**दन्तवासस्** न॰ दन्तस्य वास इवाच्छादकत्वात्। ओष्ठे त्रिका॰

"तुलां यदारोहति दन्तवाससा" कुमा० । [राजनि० ।
**दन्तबीज(क)** पु० दन्त इव बीजमस्य वा कप् । दाड़िमीवृक्षे
**दन्तवेष्ट** पु० सुश्रुतोक्ते दन्तरोगभेदे दन्तरोगशब्दे दृश्यम् ।
**दन्तवैदर्भ** पु० सुश्रुतोक्ते दन्तरोगभेदे दन्तरोगशब्दे दृश्यम् ।
**दन्तशङ्कु** पु० "वडिशो दन्तशङ्कुश्चानताग्रे तीक्ष्णकण्टकप्रथम-यवपत्रमुखे" सुश्रुतोक्ते अस्त्रभेदे ।
**दन्तशठ** पु० दन्तान् शठति क्लेदयति शठ–अच् । १जम्बीरे २कपित्थे ३कर्मरङ्गे, ४नागरङ्गे च । ५चाङ्गेर्यां ६चुक्राम्लिकायां स्त्री० मेदिनि० ७अम्ले हेमच० दन्तुद्रा-म्लिकायाम् स्त्री राजनि० ।
**दन्तशर्करा** स्त्री दन्तस्य शर्करेव । दन्तरोगभेदे दन्तरोगशब्दे दृश्यम् । [ख्याते चूर्णभेदे त्रिका० ।
**दन्तशाण** पु० दन्तस्य शाण इव चिक्कणताहेतुत्वात् (मिशि)
**दन्तशूल** न० दन्तस्य शूलमिव । दन्तवेदनायाम् । "शीर्ष-रोगेऽक्षिरोगे च दन्तशूले गलग्रहे" भा० शा०३०५ अ० ।
**दन्तशोफ** पु० दन्तस्य शोफ इव । दन्तार्बुदे (दाँतेर आव) राजनि० । [भागे मांसपिण्डे शब्दच० ।
**दन्तसिरा** स्त्री दन्तस्य सिरा यत्र । (मेड़े) ख्याते दन्ताधो-
**दन्तहर्ष** पु० सुश्रुतोक्ते दन्तरोगभेदे दन्तरोगशब्दे दृश्यम् ।
**दन्तहर्षक** पु० दन्तान् हर्षयति हृष–णिच्–ण्वुल् । जम्बीरे जटाधरः । [ दन्ताग्रीय तद्भवादौ त्रि० ।
**दन्ताग्र** न० ६त० । दन्तस्याग्रे ततः गहा० भवादौ छ ।
**दन्ताघात** पु० दन्तानाहन्ति आ+हन–अण् उप० स० । १निम्बूके । भावे घञ् । २दन्तैराहनने राजनि० । "दन्ताघातविदारितारिरुधिरैः सिन्दूरशोभाकरम्" गणेशध्यानम् । रतौ तत्स्थानानि यथा "स्तनयो-र्गण्डयोश्चैव ओष्ठे चैव तथाधरे । दन्ताघातः प्रकर्त्तव्यः कामिनीनां सुखावहः" कामशास्त्रम् ।
**दन्ताद** पु० "केशरोमनखादाश्च दन्तादाः चिक्कशा-स्तथा । कुष्ठजाश्च परीसर्पाश्चेयाः शोणितसम्भवाः" सुश्रुतोक्ते दन्तखादकक्रमिरोगभेदे । "दन्तादानां समु-द्दिष्टं विधानं मुखरोगिणाम्" सुश्रु० ।
**दन्तादन्ति** त्रि० दन्तैश्च दन्तैश्च प्रहृत्य प्रवृत्तं युद्धम् इच् समा० पूर्वपदोदीर्घः । परस्परदन्तप्रहारेण प्रवृत्ते युद्धे "कचाकचि युद्धमासीद्दन्तादन्ति नखानखि" भा० कर्ण० ४९ अ० । [ जातित्वात् ङीष् ।
**दन्तायुध** पुंस्त्री० दन्ता युधमिवास्य । सूकरे त्रिका० स्त्रियां
**दन्तार्बुद** पु० दन्तस्यार्बुदमिव । दन्तरोगभेदे राजनि० ।
**दन्तालिका** स्त्री दन्तान् अलति भूषयति, तेभ्यो वा पर्या-प्नोति अल+ण्वुल् । वल्गायाम् । (लागाम) त्रिका० । "दन्तालिकाधरणनिश्चलपाणियुग्मम्" । (वल्गयापलम्) माघः । अच् गौ०ङीष् दन्ताली तत्रार्थे वैजय० । [अमरः ।
**दन्तावल** पु० दन्त+अस्त्यर्थे वलच् पूर्वपददीर्घः । हस्तिनि
**दन्तिका** स्त्री दम–तन्+गौरा० ङीष् स्वार्थे क ह्रस्वः । दन्तीवृक्षे अमरः ।
**दन्तिजा** स्त्री दन्तिका+पृषो० । दन्त्योषधौ शब्दर० ।
**दन्तिन्** पु० दन्त+अस्त्यर्थे इनि । हस्तिनि अमरः "अनि-र्वाणस्य दन्तिनः" रघुः । "पिष्टाद्रिपृष्ठास्तरसा च दन्तिनः" माघः । [ दन्तीवृक्षे राजनि० ।
**दन्तिनी** स्त्री दन्तस्तदाकारोऽस्त्यस्याः मूले इनि ङीप् ।
**दन्तिमद** ६त० । हस्तिमदे गन्धद्रव्यभेदे शब्दार्थचि० ।
**दन्तिमूलिका** स्त्री दन्ति गजदन्तयुक्तमिव मूलमस्याः कप् कापि अत इत्त्वम् । दन्तीवृक्षे राजनि० ।
**दन्ती** स्त्री दम–तन् गौरा०ङीष् । १उदुम्बरपर्ण्यां, प्रत्यक्-पर्ण्यां मोषधौ अमरः । दन्तः गजदन्त इव मूलमस्त्यस्याः अच् गौरा०ङीष् ।२स्वनामख्याते वृक्षे भावप्र० "लघुदीर्घ-प्रभेदेन प्रोक्तं दन्तीद्वयं बुधैः । दन्तीद्वयं सरं पाके रसे च कटु दीपनम् । गुदाङ्कुराश्मशूलास्रकण्डुकुष्ठविदाहनुत् । तीक्ष्णोष्णं हन्ति पित्तास्रकफशोथोदरक्रमीन्" भावप्र० तद्गुणा उक्ताः ।
**दन्तीबीज** न० दन्त्या इव बीजमस्य । जयपाले राजनि० ।
**दन्तुर** त्रि० उन्नताः दन्ताः सन्त्यस्य दन्त+उरच् । १उन्नत-दन्तयुक्ते, उन्नतानते विषमे स्थाने च शब्दार्थचि० । "सूकरे निहते चैव दन्तुरो जायते नरः" शाता० तथा-भवनसाधनं कर्मविशेष उक्ताः । "कदाचिद्दन्तुरो मूर्खः कदाचिल्लोमशः सुखी । कदाचित् तुन्दिलो दुःखी कदा-चिन्मुञ्जा वसीति" सामुद्रकम् । "अमलमणिशलाका दन्तुराभिः किरीटकोटिभिः" काद० । "करयन्त्रणदन्तु-रान्तरे" नैष० ।
**दन्तुरक** पु० देशभेदे स च देशः वृ० स० १४ अ० कूर्मवि-भागे अथ पूर्वस्यामित्युपक्रमे "मिथिलसमभटोड्राश्व-वदनदन्तुरकाः" । पूर्वस्यामुक्तः । [ राजनि० ।
**दन्तुरच्छद** पु० दन्तुर उन्नतानतः छदो यस्य । बीजपूरे
**दन्तोलूखलिक** पु० दन्ता एव उलूखलः कण्डनसाधनं विद्यतेऽस्य ठन् । वानप्रस्थभेदे स हि दन्तैरेव व्रीह्यादीन् कण्डयित्वा खादति । "दन्तोलूखलिकः कालपक्काशी

वाग्भकृत्तकः" याज्ञ० । "अश्मकुट्टो भवेद्वापि दन्तोलूखलिकोऽपि वा" मनुः । इति । दन्तोलूखलीत्यप्यत्र ।

**दन्तौष्ठ** न० दन्ताश्च ओष्ठौ च तेषां समाहारः । दन्तौष्ठानां समाहारे । ततः शरीरावयवत्वात् भवादौ यत् । दन्त्योष्ठ्य तदुच्चार्ये दन्त्यवकारे "दन्तोष्ठ्यौ तु स्मृतो बुधैः" शिक्षा०

**दन्त्य** पु० दन्ते दन्तमूले वा भवः यत् । दन्तदन्तमूलयोर्जाते १तवर्गादौ वर्णे । "लृतुलसानां दन्ताः" सि०कौ० । "दन्त्या लृतुलसाः स्मृताः" पा० शि० । शेखरादौ दन्तशब्दस्य दन्तमूलपरतोक्ता अन्यथा भग्नदन्तस्य तदनुच्चारणापत्तेः" दन्तेभ्यो हितः यत् । २दन्तहितकारके त्रि० ।

**दन्त्यरिष्ट** न० दन्त्यम् अरिष्टं रिष्टाभावो यत्रौषधे । चक्रदत्तोक्ते अर्शोघ्ने औषधभेदे ।
"दन्ती चित्रकमूलानि उभाद्रौषे विपाचयेत् । त्रिपलं त्रिफलायाश्च दलानां तत्र दापयेत् । तथा गुडस्य तत्तिष्ठेन्मासार्द्धं घृतभाजने । तन्मात्रया पिबेन्नित्यमर्शोभ्यो विप्रमुच्यते । ग्रहणीपाण्डुरोगघ्नं वातवर्चोऽनुलोमनम् । दीपनञ्चारुचिघ्नञ्च दन्त्यरिष्टमिदं विदुः" ।

**दन्दशूक** पुंस्त्री गर्हितं दशति दन्श–गर्हार्थे यङ्–ऊक । १राक्षसे, "दन्दशूकान् जिघांसौ" भट्टिः २सरीसृपे, ३सर्पे च मेदि० । "दन्दशूकः पतङ्गो वा भवेत् कीटोऽथवा कृमिः" याज्ञ० ।

**दन्द्रम्यमाण** त्रि० द्रम–यङ् शानच् । कुटिलगतियुक्ते ।

**दन्भ** दम्भे स्वा० पर० अक० सेट् । दभ्नोति अदम्भीत् । दम्भित्वा दब्ध्वा । दब्धः । सनि वेट् इडभावपक्षे नलोपे धीप्सति धिप्सति दिदम्भिषति ।

**दन्भ** संघाते चुरा० आत्म० अक० सेट् । दम्भयते अददम्भत ।

**दन्श** हिंसने रदकरणकव्यापारभेदे दंशने (कामड़ान) भ्वा०पर०सक०अनिट् । दशति अदाङ्क्षीत् ददंश । "करौ निरोद्धुं दशति स्म केवलम्" "कटुकीटान् दशतः सतः क्वचित्" नैष० । दष्टः दंष्ट्रा ।

**दभ** प्रेरणे चु० उभ० सक० सेट् इदित् । दम्भयति ते अददम्भत ।

**दभ्र** न० दन्भ–रक् । १अल्पे २तद्वति त्रि० अमरः ३समुद्रे पु० उणा० "अदभ्रदर्भामधिशय्य स स्थलीम्" किरा० । ४दनुजस्त्रियां स्त्री निघण्टुः । "न सिदभ्रस्य चिकुवः" ऋ० १।८१।२।

**दम** अव्य० दम–विच् । कलत्रे भद्रार्थेचि० ।

**दम** उपशमे दण्डे च दिवा० शमा० अक० सेट् । दाम्यति अदमत्-अदमीत् ददाम देमतुः । णिच् दमयति ते अदिदमत् त टित् दमथुः दमितः दान्तः । उदित् दमित्वा दान्त्वा । "शमो दाम्यति राक्षसान्" "आनुश्याम्दमञ्चाश्चान्" "दमित्वाथरिसंघातान्" "अदान्तां क्लिदयैरपि" भट्टिः । दमः दम्यः दमनः ।

**दम** पु० दम–भावे घञ् । १दण्डे, २बाह्येन्द्रियाणां स्वस्वविषयेभ्यो निवर्त्तने, "निग्रहो बाह्यवृत्तीनां दम इत्यभिधीयते" इत्युक्ते बाह्येन्द्रियव्यापाररोधे, विकारहेतुसन्निधानेऽपि ३मनसः स्थैर्य्ये, "कुत्सितात् कर्मणो विप्र ! यच्च चित्तनिवारणम् । स कीर्त्तितो दमः" इत्युक्ते ४कुकर्मभ्यो मनसो निवारणे, ५कर्दमे, मेदि० ६दमने च । ६भीमन्वपपुत्रभेदे दमयन्तीशब्दे दृश्यम् । ७विष्णौ पु० दमयितृशब्दे दृश्यम् ।

**दमघोष** पु० श्रुतश्रवोऽपरनामके शिशुपालपितरि राजभेदे "ततः संजनयामास सुप्रभे द्वे च दारिके । कुन्तीञ्च पाण्डोर्महिषीं देवतामिव भूचराम् । भार्य्याञ्च दमघोषस्य चेदिराजस्य सुप्रभाम्" हरिवं० ८५ अ० ।

**दमघोषज** पु०दमघोषात् जायते जन–ड । शिशुपाले"सुदमो दमघोषजः" माघः ।

**दमघोषसुत** पु० ६त० । शिशुपाले "दमघोषसुतो वीरः शिशुपालो महामतिः" भा० आ० १८७ अ० दमघोषतनयादयोऽप्यत्र । [क्लेशसहने च ।

**दमथ** पु० दम–भावे उणा० अथच् । १दण्डे २तपः-

**दमथु** पु० दम–भावे अथु । १दमे दमने अमरः ।

**दमन** न०दम–भावे ल्युट् । १दण्डे २इन्द्रियादीनां बाह्यवृत्तिनिरोधे । कर्त्तरि अच् । (दोना)ख्याते ३पुष्पचामरे पुष्पप्रधाने वृक्षभेदे "दमनस्तु रसे तिक्तो हृद्यो वृष्यः सुगन्धकः । ग्रहणीविषकुष्ठास्रक्लेदकण्डूत्रिदोषजित्" भावप्र० । दमनारोपणोत्सवश्च नि०सि०उक्तो यथा "चैत्रशुक्लद्वादश्यां दमनोत्सवः "द्वादश्यां चैत्रमासस्य शुक्लायां दमनोत्सवः । बौधायनादिभिः प्रोक्तः कर्त्तव्यः प्रतिवत्सरमिति" रामार्चनचन्द्रिकोक्तेः 'ऊर्जे व्रतं मधौ दोला श्रावणे तन्तुपूजनम् । चैत्रे च दमनारोपमकुर्वाणो व्रजत्यधः" इति तत्रैव पाद्मवचनाच्च । शिवभक्तादिभिस्तु चतुर्दश्यादौ कार्य्यः "तत्र स्यात् स्त्रीयतिथिषु षष्ठ्यादेर्दमनार्पणम्" इति तत्रैवोक्तेः । ज्योतिःप्रकाशेऽपि "स्वस्वदेवप्रतिष्ठायां मन्त्रसंग्रहणे तथा । पवित्रदमनारोपे यात्रा तत्तत्तिथिर्बुधैः" । विषयस्तु "वह्निर्विधिर्द्विर्गिरिजा गणेशः

फणी विशाखो दिनकृत्महेशः। दुर्गोत्‌को विश्वहरिः स्मरश्च शर्वः शशी चेति तिथीशु पूज्याः" इत्युक्ताः व्यागमोक्तदीक्षयतो दमनरोपणविधिः रामार्चनचन्द्रिकायाम्। तर्द्दिधस्तत्रैव दृश्यः। ४उणमान्ते ५वीरे शङ्करः। ६कुन्दवृक्षे राजनि०। ७ऋषिभेदे दमयन्तीशब्दे दृश्यम्। "यद्वरात् भीमस्य नृपस्य दमयन्तीकन्यावरलाभः। "दमनाद्‌मानाक् प्रसेदुषस्तनयां तथ्यगिरस्तपोधनात्। वरमाप" नैष०। दमयति–दम–णिच्–ल्यु। दशासनकर्त्तरि त्रि० दुष्टदमनः सर्वदमन इत्यादि। ८विदर्भाधिपभीमनृपसुतभेदे च दमयन्तीशब्दे दृश्यम्। स्वाधिकारात् प्रमाद्यन्तीः प्रजाः दमयितुं शीलमस्य युच्। १०परमेश्वरे। "मरीचिर्दमनो हंसः" विष्णु स०। "वैवस्वतादिरूपेण दमयितृत्वात् वा" भाष्योक्तेस्तथात्वम्। भावे ल्युट्। ११दमने न० "न्यस्य दुष्टदमनक्षमं हरिम्" माघः।

**दमनक** पु० स्वार्थे क। १दमनवृक्षे "द्विगुणगणमिह वितनुहि। दमनकमिति गदति शुचि हि" इत्युक्ते २चतुश्चरपादके छन्दोभेदे ३एकादशाक्षरपादके छन्दोभेदे च। "द्विजवर ! युगलममलं तदनु कलय नलघुयुतकम्। फणिपतिवरपरिगदितं दमनकमिदमतिललितम्" इ० र० टी०

**दमनी** स्त्री दम्यतेऽग्निरनया–करणे ल्युट् ङीप्। अग्निदमनीवृक्षे राजनि०।

**दमन्य** दमन इवाचरति दमन–क्यच् वेदे अन्त्यलोपः दमनकर्तृतुल्याचारे पर० अक० सेट्। दमन्यति अदमन्यीत्। "षड्‌च्च विशीर्षाणं दमन्यत्" ऋ० १०।८६।

**दमयन्ती** स्त्री विदर्भाधिपभीमनृपस्य कन्याभेदे तत्कथा भा० व० ५५अ० यथा

"तथैवासीद्विदर्भेषु भीमो भीमपराक्रमः। शूरः सर्वगुणैर्युक्तः प्रजाकामः स चाप्रजः। स प्रजार्थे परं यत्नमकरोत् सुसमाहितः। तमभ्यागच्छद्ब्रह्मर्षिर्दमनो नाम भारत ! तं स भीमं प्रजाकामस्तोषयामास धर्मवित्। महिष्या सह राजेन्द्र ! सत्कारेण सुवर्चसम्। तस्मै प्रसन्नो दमनः सभार्याय वरं ददौ। कन्यारत्नं कुमारांश्च त्रीनुदारान् महायशाः। दमयन्तीं दमं दान्तं दमनञ्च सुवर्चसम्। उपपन्नान् गुणैः सर्वैर्भीमान् भीमपराक्रमान्। दमयन्ती तु रूपेण तेजसा यशसा श्रिया। सौभाग्येषु च लोकेषु यशः प्राप सुमध्यमा"। भा० व० ५त० अ०। सा च पुण्यश्लोकनलराजकलत्रम् यथोक्तं तत्रैव ५७अ०

"सा समीक्ष्य तु तान् देवान् पुण्यश्लोकञ्च भारत !। नैषधं वरयामास भैमी धर्मेण पाण्डव !। विलज्जमाना वस्त्रान्ते जग्राहायतलोचना। स्कन्धदेशेऽसृजत्तस्य स्रजं परमशोभनाम्। वरयामास चैवैनं पतित्वे वरवर्णिनी" "पार्थिवाश्चानुभूयास्य विवाहं विस्मयान्विताः। दमयन्त्याश्च मुदिताः प्रतिजग्मुर्यथागतम्। गतेषु पार्थिवेन्द्रेषु भीमः प्रीतो महामनाः। विवाहं कारयामास दमयन्त्या नलस्य च। उष्य तत्र यथाकामं नैषधो द्विपदां वरः। भीमेन समनुज्ञातो जगाम नगरं स्वकम्"। "त्वयि वीर ! विराजते परं दमयन्तीकिलकिञ्चितं किल" नैष०। [ "दण्डो दमयिता दमः" विष्णु स०।

**दमयितृ** त्रि० दम–णिच्–तृच्। १शासनकर्त्तरि २विष्णौ पु०

**दमाय** दमं दमनमिच्छति क्यच्–आत्मनोदमनेच्छायां पर० अक० सेट्। दमायति अदमायीत् "स्तुत्ये वीर ! उग्रमुग्रं दमायन्नन्यमन्य मतिनेनीयमानः" ऋ० ६।४७। १६। "दमायन्तु ब्रह्मचारिणः" तै० उ० १।४।२।

**दमित** त्रि० दम्यते स्म दम–णिच्–क्त वा दान्तत्वादिट्। अतदमने दृष्यादौ।

**दमिन्** त्रि० दम–शमा० घिनुण्। १दमनशीले स्त्रियां ङीप्। २सागरसिन्धुनदीसङ्गमदक्षिणस्थे तीर्थभेदे न० ३तत्प्रवर्त्तकर्षिभेदे पु० "सागरस्य च सिन्धोश्च सङ्गमं प्राप्य भारत !" इत्युपक्रमे "प्रदक्षिणमुपावृत्य गच्छेत भरतर्षभ !। तीर्थं कुरुवरश्रेष्ठ ! त्रिषु लोकेषु विश्रुतम्। दमीति नाम्ना विख्यातं सर्वपापप्रणाशनम्। तत्र ब्रह्मादयो देवा उपासन्ते महेश्वरम्। तत्र स्नात्वार्चयित्वा च रुद्रदेवगणैर्वृतम्। जन्मप्रभृति यत्पापं तत्स्नातस्य प्रणश्यति। दमी चात्र नरश्रेष्ठ ! सर्वदेवैरभिष्टुतः। तत्र स्नात्वा नरव्याघ्र ! हयमेधमवाप्नुयात्" भा० व० ८२ अ०।

**दमु(न्)नस्** पु० दम–उनसि पृषो० वा नुम्। १अग्नौ, अमरः २शुक्राचार्य्ये उणा०। निरुक्ते ४।५। "जुष्टो दमूना अतिथिर्दुरोणे" ऋचमधिकृत्य अस्य अन्या निरुक्तिरुक्ता यथा "दमूना दममना वा दानमना वापि वा दम इति गृहनाम तन्मनाः स्यान्मना मनोतेः"। २दमयितरि त्रि०। "दमूना गृहपतिर्दम आं" ऋ० १।६०४। "दमयति राक्षसादिकमिति दमूनाः" भा०।

**दमे** अव्य० दम–बा० के। गृहे निघण्टुः।

**दम्पती** पु० द्वि० व०। जाया च पतिश्च द्वन्द्वे जायाशब्दस्य पक्षे दमादेशः। मिलितयोः जायापत्योः अमरः। "तौ दम्पती वशिष्ठस्य गुरोर्जग्मतुराश्रमम्" रघुः।

"भुञ्जीयातां ततः पश्चादवशिष्टं तु दम्पती" मनुः। "दम्पत्योर्मध्यगं धनम्" दायभा०। तयोरिदं पत्यन्तत्वात् यक्। दाम्पत्य तत्सम्बन्धिनि त्रि०।

**दम्भ** पु० दन्भ–घञ्। १कपटे २शाठ्ये अधार्मिकेणात्मनो धार्मिकत्वस्य ख्यापने ४लोभवञ्चनाभ्यां विहितकर्मानुष्ठाने ५पूजाप्राप्त्यर्थं स्वधार्मिकत्वख्यापने। "दर्पं दम्भं च मानं च क्रोधं तैक्ष्ण्यं च वर्जयेत्" मनुः। "सत्कारमानपूजार्थं तपो दम्भेन चैव यत्" गीता। न्यायसूत्रवृत्तौ तु दम्भस्य रागविशेषेच्छाभेदरूपत्वमुक्तं यथा "तद् त्रैराश्यं रागद्वेषमोहान्तर्भावात्" गौ०सू०। "तत्र रागपक्षः कामो मत्सरः स्पृहा तृष्णा लोभो माया दम्भः" इत्युक्त्वा "कामो रिरंसा रतिश्च विजातीयः संयोगः नारीगताभिलाष इति तु न युक्तं स्त्रियः कामेऽव्याप्तेः मत्सरः स्वप्रयोजनप्रतिसन्धानं विना पराभिमतनिवारणेच्छा,यथा राजकीयादुदपानाज्जलोदकं पेयम् इत्यादि। एवं परगुणनिवारणेच्छाऽपि। स्पृहा धर्माविरोधेन प्राप्तीच्छा तृष्णा इदं मे न क्षियतामितीच्छा उचितव्ययाकरणेनापि धनरक्षणेच्छारूपं कार्पण्यमपि तृष्णाभेद एव। धर्मविरोधेन परद्रव्येच्छा लोभः, परवञ्चनेच्छा माया, कपटेन धार्मिकत्वादिना स्वोत्कर्षख्यापनेच्छा दम्भः" गौ० वृ० ४।३ कामादिकदम्भान्तानामिच्छाविशेषरूपत्वात् रागरूपे दोषे अन्तर्भाव उक्तः अधिकं दोषशब्दे वक्ष्यते।

**दम्भक** पु० दन्भ–ण्वुल्। प्रतारके। "धर्मध्वजी सदालुब्धश्छाद्मिको लोकदम्भकः" मनुः।

**दम्भन** पु० दन्भ–भावे ल्युट्। १दम्भे २मोहने च। "व्रतेन पापं प्रच्छाद्य कुर्वन् स्त्रीशूद्रदम्भनम्" मनुः।

**दम्भिन्** त्रि० दन्भ–णिनि। दम्भकर्त्तरि। "दम्भिहैतुकपाषण्डबकवृत्तींश्च वर्जयेत्" याज्ञ०।

**दम्भोद्भव** पु० १सार्वभौमे नृपभेदे। "राजा दम्भोद्भवो नाम सर्वभौमः पुराऽभवत्" भा० उ० ९१ अ०। इत्युपक्रमे तस्य नरनाम्ना ऋषिणा गर्वो निहतस्तत्कथा तत्रैवाध्याये दृश्या। "दण्डको नृपतिः कामात्,क्रोधाच्च जनमेजयः। लोभादैलस्तु राजर्षिर्वातापिर्हर्षतोऽसुरः। पौलस्त्यो राक्षसो मानात् मदाद्दम्भोद्भवो नृपः। प्रयाता निधनं ह्येते शत्रुषड्वर्गमाश्रिताः"काम०। दम्भ उद्भवो यस्य। २दम्भसहिते कर्म्मादौ त्रि०। [२हीरके अमरः।

**दम्भोलि** पु० दम्भेति खेदयति दन्भ–ओलि। १वज्रे अमरः।

**दम्य** त्रि०दम–पवर्गान्तत्वात् यत्। १प्राप्तभारवहनयोग्यावस्थे वत्सतरे २अनडुहि च अमरः। ३दमनीये ४दमनार्हे त्रि०। "अप्राप्तदम्यावस्थः" प्रा० त०। "धुर्य्येषु दम्यः सदृशं बिभर्त्ति" रघुः।

**दय** गतौ बधे, दाने पालने च भ्वा० आत्म० सक० सेट्। दयते अदयिष्ट अदयिढ्वम् अदयिध्वम् अदयिद्वम्। दयाम् बभूव आस चक्रे। "न वा पलायाञ्चक्रे विदयाञ्चक्रे न राक्षसः"भट्टिः दया दयितः। "व्रजन्ति तेषां दयसे न कस्मात्"।"स चापि रुधिरैर्मर्त्तैः स्वेषामप्यदयिष्ट न" भट्टिः

**दया** स्त्री दय-भिदा० भावे अङ्। १दुःखितेषु भूतेष्वनुकम्पायाम् ।२परदुःखाऽसहने करुणाशब्दे दृश्यम्। ३परदुःखप्रहरणेच्छायाम्। "यत्नादपि परक्लेशं हर्त्तुं या हृदि जायते। इच्छा भूमिसुरश्रेष्ठ! सा दया परिकीर्त्तितेति"। आत्मवत् सर्वभूतेषु यो हिताय शुभाय च। वर्तते सततं हृष्टः क्रिया ह्येषा दया स्मृता। प्राणा यथात्मनोऽभीष्टा भूतानामपि ते तथा। आत्मौपम्येन सर्वत्र दयां कुर्वन्ति साधवः"। इयं मोहपत्नी यथा। "मोहपत्नी दया साध्वी पूजिता च जगत्प्रिया। सर्वलोकाश्च सर्वत्र निष्फलाश्च यया विना" देवीभागवते ९स्क० १अ०। यत्र मोहोक्ति तत्र दयायाः सत्त्वाद्द्या मोहपत्नीति "अहिंसा परमो धर्म्मो विप्राणां नात्र संशयः। दया सर्वत्र कर्त्तव्या ब्राह्मणेन विजानता। यज्ञादन्यत्र विप्रेन्द्र! न हिंसा याज्ञिकी मतेति" देवीभागवतम्। यज्ञादन्यत्र दया कर्त्तव्या यज्ञे तु हिंसैव कर्त्तव्या न सा याज्ञिकी हिंसा हिंसा भवति। "अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः" इति श्रुतेः। "या वेदविहिता हिंसा नियतास्मिंश्चराचरे। अहिंसामेव तां विद्याद् वेदाद् धर्मो हि निर्बभाविति" मनुस्मृतेश्च। "तृणं वाप्यविधानेन छेदयेन्न कदाचनेति" कुलार्णवोक्तेश्च। ४दक्षकन्याजाते धर्मस्य पत्नीभेदे तदपत्यम् अभयम् धर्म्मशब्दे दृश्यम्। "धनुर्भृतोऽप्यस्य दयार्द्रभावम्"रघुः। "तव धर्म्मः सदयोदयोज्ज्वलः" नैष० सा च शान्तिरसस्य व्यभिचारिभावः यथाह सा० द०। शान्तरसोपक्रमे "रोमाञ्चाद्याः स्वानुभावास्तथा स्युर्व्यभिचारिणः निर्वेदहर्षस्मरणमतिभूतदयादयः"।

**दयाकूट** पु० दयायाः कूट इव। बुद्धे हेम०।

**दयालु** त्रि० दय–आलुच्। कृपायुक्ते। "दयालुरपि स कृष्णः" इत्युद्भटः। "यशःशरीरे भव मे दयालुः" "निरीक्षमाणः सुतरां दयालुः" रघुः।

**दयावीर** पु० दयया वीरः । १दयार्थकृते वीरे रसे २तद्युक्ते नायकभेदे च सा० द० वीररसलक्षणमुक्त्वा "स च दानधर्मयुद्धैर्दयया च समन्वितश्चतुर्द्धा स्यात्" स च दानवीरो धर्मवीरोदयावीरो युद्धवीरश्चेति चतुर्विधः" इति विभज्य "दयावीरो यथा जीमूतवाहनः । "शिरामुखैः स्यन्दत एव रक्तमद्यापि देहे मम मांसमस्ति । तृप्तिं न पश्यामि तवापि तावत् किं भक्षणात्त्वं विरतो गरुत्मन्" । एवमपि विभावादयः पूर्वोदाहरणवदूह्याः" उदाजहार ।

**दयित** पु० दय–क्त । १पत्यौ अमरः । २प्रियमात्रे त्रि० । ३भार्य्यायां स्त्री । "दयिता दयिताननाम्बुजं दरमीलन्नयना निरीक्षते" रघु० । "न गजा नगजा दयिता दयिताः" भट्टिः ।

**दयिलु** त्रि० दय–इलु । दयाशीले ।

**दयू** त्रि० देव–क्विप् ऊठ् । देवनकर्त्तरि ।

**दर** अव्य० दृ–भये अप् । १ईषदर्थे । २भये, ३गर्त्ते च पुं न० । अमरः "दरादराभ्यां दरकम्पिनी पपे" नैषधम् "दरमीलन्नयनानिरीक्षते" रघुवंशः । "न जातहार्देन न विद्विषादरः" किरा० । ४कन्दरे पुं स्त्री० स्त्रीत्वे ङीप् । "दरीगृहोत्सङ्गनिषक्तभासः" । "दरीमुखोत्थितेन समीरणेन" कुमा० । ५शङ्खे शब्दार्थचि० । "स उच्चकाशे धवलो दरोदरोप्युरुक्रमस्याधरशोणशोणिमेति" भाग० । [शब्दार्थचि० ।

**दरक** त्रि० दर+भये "लज्जादिभ्यो वुन्" पा० वुन् । भीरौ

**दरकण्टिका** स्त्री दर ईषत् कण्टो यस्याः कप् कापि अत इत्वम् । शतावर्य्याम् राजनि० ।

**दरणि** पुं स्त्री दृ–अनि । नद्यादेः कूलभङ्गे (भाङ्गन) शब्दार्थचि० । स्त्रीत्वे वा ङीप् ।

**दरथ** पु० दृ–विदारे "दृणमिदमिभ्यश्च" उज्ज्वलदत्तधृतसूत्रात् अथ । १दिक्षु प्रसरणे २गर्त्ते च उज्ज्वलदत्तः ।

**दरद्** स्त्री दृ–विदारणे "दृदभसोऽदिः" उणा० अदि । १हृदये २कूले च उज्ज्वलद० । दृ–भये अदि । ३पर्वते ४प्रपाते ५भये च पु० मेदि० । ६म्लेच्छजातौ अमरटीका ।

**दरद** त्रि० दरं भयं ददाति दा–क दर ईषत् दायति शुध्यति दैप–शोधे–क वा । १भयदायके २हिङ्गुले पु० न० भावप्र० तद्भेदादिकमुक्तं यथा "हिङ्गुलं दरदं म्लेच्छमिङ्गुलञ्चूर्णपारदम् । दरदस्त्रिविधः प्रोक्तश्चर्मारः शुकतुण्डकः । हंसपादस्तृतीयः स्यादुगुणवानुत्तरोत्तरम् । चर्मारः शुक्लवर्णः स्यात् सपीतः शुकतुण्डकः । जवाकुसुमसङ्काशो हंसपादो महोत्तमः । तिक्तं कषायं कटु हिङ्गुलं स्यान्नेत्रामयघ्नं कफपित्तहारि । हृल्लासकुष्ठज्वरकामलांश्च प्लीहामवातौ च गरञ्च हन्ति । ऊर्द्ध्वपातनयुक्त्या तु तस्माद्यन्त्रपाचितम् । हिङ्गुलं तस्य सूतन्तु शुद्धमेवं न शोधयेत् । ३देशभेदे पु०ब० व० देशः वृ० स० १४ अ० "ऐशान्यामित्युपक्रमे "अभिसारदरदतङ्गणकुलूतसैरिन्ध्रवनराष्ट्राः" "शूद्राभीराश्च दरदाः काश्मीराः पत्तिभिः सह" भा० भी० ९ अ० । प्राच्योदीच्यदेशोक्तौ । सोऽभिजनोऽस्य तस्य राजा वा अण् । दारद पित्रादिक्रमेण तद्देशवासिनि तन्नृपे च । बहुषु अणो लुक् । "गृहीत्वा तु बलं सारं फाल्गुनः पाण्डुनन्दनः । दरदान् सह काम्बोजैरजयत् पाकशासनिः । प्रागुत्तरां दिशं ये च वसन्त्याश्रित्य दस्यवः । निवसन्ति वने ये च तान् सर्वानजयत् प्रभुः" भा० स० २६ अ० । आर्षे क्वचिदेकत्वेऽपि अणो लुक् । "शाल्वराजश्च दरदो विदेहाधिपतिस्तथा" हरिवं० ९१ अ० । ४म्लेच्छजातिभेदे । ५भये शब्दरत्ना० । ६यवनैः क्रियालोपात् शूद्रत्वापन्ने क्षत्रियभेदे च । "शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः" इत्युपक्रमे "पारदापह्लवाश्चीनाः किराता दरदाः खशाः" मनुः ।

**दरवर** पु० दरेषु शङ्खेषु वरः । पाञ्चजन्ये भगवतः शङ्खे श्रीधरः । "दध्मौ दरवरं तेषां विषादं शमयन्निव" भाग० १।११।२ ।

**दरसान** पु० दृ–विदारणे असानच् । द्योते उज्ज्वलद० ।

**दरि(री)** स्त्री दृ–विदारे इन् वा ङीप् । १कन्दरे शब्दरत्ना० । २तक्षककुलजे सर्पभेदे पु० "पूर्णाङ्गदः पूर्णमुखः प्रहासः शकुनिर्दरिः" भा० आ० ५७ अ० ।

**दरित** त्रि० दरो जातोऽस्य तार० इतच् । जातभये हेमच० ।

**दरिद्र** त्रि० दरिद्रा–क । १दुर्गते २निःस्वे अमरः । "मणीय दारिद्र्यदरिद्रतां नृपः" नैष० । "स्त्रीबालोन्मत्तवृद्धानां दरिद्राणाञ्च रोगिणाम्" मनुः । दरिद्रत्वे हेतुः "अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च । अदत्त्वा काञ्चनं गाश्च दरिद्रो नाम जायते" प्रा० त० । "दरिद्रो यस्त्वसन्तुष्टः कृपणो योऽजितेन्द्रियः" भाग० । "अयं पटः सूत्रदरिद्रतां गतः" नैष० ।

**दरिद्रा** दुर्गतौ अदा० स्वपा० पर० अक० सेट् । दरिद्राति जक्षा० दरिद्रति अदरिद्रीत्–अदरिद्रासीत् । दरि-

द्रामास बभूव चकार दरिद्रि दरिद्रौ इत्येके। दरिद्रिता दरिद्र्यात्। दरिद्रिष्यति। दरिद्र्याः। सनि। दिदरिद्रिषति दिदरिद्रासति। [भौवे च।

**दरिन्** त्रि॰ दृ-भये विदारे वा इनि। १भीरौ २विदारण-

**दरोदर** पु॰ दुरोदर+पृषो॰। पाशके "आभिल दुर्गं गिरिकन्दरोदरं क्रीडन्नयमुष्मिन् सततं दरोदरम्" "यमकात् दरोदरो निरुकारः इति गोवर्द्धनः" उज्ज्वलद॰

**दर्त्तृ** त्रि॰ दृ-विदारे वेदे इडभावः। दारयितरि "स व्रजं दर्त्ता पार्ये अध द्योः" ऋ॰ ६।६६।८। "दर्त्ता दारयिता" भा॰। लोके तु दरी(रि)ता इत्येव।

**दर्त्नु** पु॰ दृ-विदारे बा॰ तु इडभावश्छान्दसः। दारके। "यत् पुरां दर्त्नुमावत्" ऋ॰६।२०।३ "दर्त्नुं दारकम्" भा॰

**दर्दर** पु॰ दृ-यङ् अच् पृषो॰। १पर्वते। २ईषद्भग्नभाजने च मेदि॰।

**दर्दराट्** न॰ व्यञ्जनभेदे शब्दच॰।

**दर्दरीक** न॰ दृ-विदारे फर्फरीका॰ नि॰। १वाद्यभेदे।

**दर्दुर** न॰ दृणाति कर्णौ शब्देन उरच् नि॰। १भेके २मेघे ३वाद्यभेदे ४पर्वतभेदे "शैलस्य दर्दुरपुटानिव वादयन्तः" माघः "कौशेयं तित्तिरिर्हृत्वा क्षौमं हृत्वा तु दर्दुरः" मनुः "स्तनाविव दिशस्तस्याः शैलौ मलयदर्दुरौ" रघुः। "हिमवान् पारिपात्रश्च विन्ध्यकैलासमन्दराः। मलयो दर्दुरश्चैव महेन्द्रो गन्धमादनः" भा॰ स॰ १० अ॰। "निर्याय तस्मादुद्देशात् पश्यामो लवणाम्भसः। समीपे सह्यमलयौ दर्दुरञ्च महागिरिम्" भा॰ व॰ २८१ अ॰। "मलयात् दर्दुराच्चैव चन्दनागुरुसञ्चयान्" ५१ अ॰। दर्दुरः पर्वतः सन्निकृष्टतयाऽस्त्यस्य अच्। ५तत्सन्निकृष्टे देशभेदे च। स च देशः "अथ दक्षिणेन लङ्का" इत्यु-पक्रमे "गिरिनगरवनादर्दुरमहेन्द्रमालिन्द्यभरुकच्छाः" वृ॰ सं॰ १४॰अ॰ दक्षिणस्यामुक्तः। ६रागभेदे संगीत-सारः। ७चण्डिकायां स्त्री मेदि॰।

**दर्दुरक** पु॰दर्दुराय कायति दर्दुर इव कायति शब्दायते वा कै-क। १वाद्यभेदे शब्देन मेघसूचके २भेके। स्वार्थे क। ३दर्दुरशब्दार्थे। [रक्तारिवस्तुः।

**दर्दुरच्छदा** स्त्री दर्दुर इव छदो यस्याः। ब्राह्म्यां पा-

**दर्द्रु(द्रू)** पु॰ दरिद्रा-दरिद्रातेर्यलोपश्च" उणा॰ऊ उवा दका-राकारयोर्लोपः" उज्ज्वलदत्तः। १दद्रुरोगे भोजदेवशब्दा-नुशासने तु "दरिद्रातेर्यलोपश्चेति तिपानिर्देशात् रिश्च आचेति संहितापाठेर्यशब्दलोपे दर्द्रु इत्यपि साधितम्। तथा रश्च इश्च आचेत्यत्र सन्देहद्वितीयरेफ-लोपेन दद्रुरित्यपि साधितम्। एवञ्च रूपचतुष्टयमिति। सि॰ कौ॰।

**दर्द्रु(द्रू)घ्न** पु॰दर्द्रु(द्रू) हन्ति हन-टक्। चक्रमर्द्दके शब्दर॰।

**दर्द्रु(द्रू)नाशिनी** स्त्री दर्द्रु(द्रू)नाशयति नश-णिच् णिनि ङीप्। सोमराजीवृक्षे राजनि॰।

**दर्प** पु॰ दृप-भावे घञ् कर्त्तरि अच् वा। १अहङ्कारे पराव-धीरणाहेतौ गुरुजनपाद्यतिक्रमके २चित्तवृत्तिभेदे। गर्व॰ भेदे ३हर्षजन्यगर्वे ४मृगमदे मेदि॰। ५उष्मणि त्रिका॰। ६उच्छ्रङ्खलत्वे ७धर्म्ममर्य्यादातिक्रमे नीलकण्ठः दर्पश्च सविषयभेदादिकं ब्रह्मवै॰ जन्मख॰ उक्तं यथा "अहङ्कारश्च सर्वेषां पापबीजममङ्गलम्। ब्रह्मा-ण्डेषु च सर्वेषां गर्वपर्य्यन्तमुन्नतिः। येषां येषां भवेद्दर्पो ब्रह्माण्डेषु परात्परे। विज्ञाय सर्वं सर्वात्मा तेषां मानान्तमेव च। कुत्रापि महतामेव तेषां गर्वो भवेत् प्रिये!। एवंविधमहं तेषां चूर्णीभूतं करोमि च। चकार दर्पभङ्गञ्च महाविष्णोः पुरा विभुः। ब्रह्मणश्च तथा विष्णोः शेषस्य च शिवस्य च। धर्मस्य च यमस्यापि शाम्बस्य चन्द्रसूर्य्ययोः। गरुडस्य च वह्नेश्च गुरोर्दुर्वाससस्तथा। दौवारिकस्य भक्तस्य जयस्य विजयस्य च। सुराणामसुराणाञ्च भवतः कामशक्रयोः। लक्ष्मणस्या-र्जुनस्यापि वायस्य च भृगोस्तथा। कुबेरोग्र सशुक्राणां वायोश्च वरुणस्य च। सरस्वत्याश्च दुर्गायाः पद्मायाश्च भुवस्तथा। सावित्र्याश्चैव गङ्गाया मनसायास्तथैव च। प्राणाधिष्ठातृदेव्याश्च प्रियायाः प्राणतोऽपि च। प्राणाधिकाया राधाया अन्येषामपि का कथा। हृत्वा दर्पञ्च सर्वेषां प्रसादञ्च चकार सः"।

दउत्साहे मल्लिना॰ "तेजो विहीनं विजहाति दर्पः" किरा॰ "दर्प उत्साहः" मल्लि॰।

**दर्पक** पु॰दर्पयति दृप-हर्षमोहनयोः णिच्-ण्वुल्। मोहका-रके १कन्दर्पे अमरः। २अहङ्कारमोहयोः कारके त्रि॰।

**दर्पण** पु॰न॰ दृप-सन्दीपने ल्यु। १आदर्शे (आयना)। मुकुरे अमरः २नेत्रे न॰जटा॰ ३पर्वतभेदे ४नदभेदे च। "ततः पूर्वं महाराज! दर्पणो नाम पर्वतः। कुबेरो यत्र वसति धनपालैः समं सदेति। यस्मिन्नाके मध्य-भागे रोहिणी रोहितावतिः। यस्मिन् लोहादिकं सर्वं स्वर्णतां याति तत्क्षणात्। तस्मान्निदूरे स्रवति दर्पणो नाम वै नदः। हिमाद्रिप्रभवो नित्यं लौहित्य

दर्शयतीति तस्य तथात्वम् ५दर्शयितरि च । "कर्णधार इवापारे भगवान् पारदर्शकः" भाग० ११।१२।२८ । तुमर्थे ण्वुल् । ६द्रष्टुमित्यर्थे । "अनिमन्त्रितोन गच्छेत यज्ञं गच्छेत दर्शकः" भा० अनु० १०४ अ० । दर्शकः द्रष्टुमित्यर्थः एतद्योगेन कर्मणि न षष्ठीत्यतः यज्ञमित्यत्र द्वितीया ।

**दर्शत** पु० दृश्यतेऽसौ दिवि दृश--कर्मणि अतच् । १सूर्ये २चन्द्रे च सि० कौ० । ३दर्शनीये त्रि० । "स दर्शतश्रीरतिथिर्गृहे गृहे" ऋ० १०।९१।२। "दर्शतश्रीः दर्शनीयविभूतिः" भा० ।

**दर्शन** न० दृश—भावकरणादौ ल्युट् । १नेत्रे २स्वप्ने ३बुद्धौ ४धर्मे ५दर्पणे ६शास्त्रे मेदिनि० ७उपलब्धौ अमरः । ८वर्णे त्रिकाण्ड० ९निभालने जटाध० । दृश्यते यथार्थतया ज्ञायते पदार्थोऽनेन करणे ल्युट् । अध्यात्मवेदके १०शास्त्रभेदे तानि च नास्तिकबौद्धजैनवैष्णवास्तिकादिमतभेदेन नानाविधानि । तानि च सर्वदर्शनसंग्रहे तत्तन्मतप्रदर्शनावसरे दर्शितानि । तत्रास्तिकदर्शनानि षट् तत्र गौतमेन न्यायदर्शनं, कणादेन वैशेषिकं, कपिलेन साङ्ख्यं, पतञ्जलिना योगदर्शनं, जैमिनिना पूर्वमीमांसाव्यासेन वेदान्तदर्शनम् प्रणीतम् । तत्र वेदान्तदर्शनं व्यासप्रणीतमेकमपि बहुभिर्विद्वद्भिः द्वैताद्वैतविशिष्टाद्वैतशुद्धाद्वैतप्रभेदेन नानाविधं यथा बुद्धस्यैकस्योपदेशकत्वेऽपि विनेयानां बुद्धिवैचित्र्यात् स्वस्वबुद्ध्यनुसारिपदार्थकल्पनया योगाचारमाध्यमिकादिभेदा उपजाताः । एवं वेदान्तस्यापि "षड्दर्शनानि मेऽङ्गानि पादौ कुक्षिः करौ शिरः । तेषु भेदन्तु यः कुर्यान्मदङ्गच्छेदको हि सः । एतान्येव कुलस्यापि षडङ्गानि भवन्ति हि । तस्मात्तदात्मकं कौलमहं कौलात्मकः शिवे !" तन्त्रशास्त्रम् । पदार्थभेददर्शने फलभेदो यथा "नन्द उवाच । "केषाञ्च दर्शने ! पुण्यं पापञ्च यस्य दर्शने । तत्सर्वं वद सर्वेश ! श्रोतुं कौतूहलं हि मे । श्रीभगवान् उवाच । पुण्याश्रयाणां तीर्थानां वैष्णवानाञ्च दर्शने । देवताप्रतिमादर्शात् तीर्थस्नायी भवेन्नरः । सूर्य्यस्य दर्शने भक्त्या सतीनां दर्शने तथा । सन्न्यासिनां यतीनाञ्च तथैव ब्रह्मचारिणाम् । भक्त्या गवाञ्च वह्नीनां गुरूणाञ्च विशेषतः । गजेन्द्राणाञ्च सिंहानां श्वेताश्वानां तथैव च । शुकानाञ्च पिकानाञ्च खञ्जनानां तथैव च । हंसानाञ्च मयूराणां चाषानां शङ्खपक्षिणाम् । वत्सप्रयुक्तधेनूनामश्वत्थानां तथैव च । पतिपुत्रवतीनाञ्च नराणां तीर्थयायिनाम् । प्रदीपानां सुवर्णानां मणीनाञ्च विशेषतः । मुक्तानां हीरकाणाञ्च माणिक्यानां महाशय ! । तुलसीशुक्लपुष्पाणां दर्शनं पापनाशनम् । फलानि शुक्लधान्यानि घृतं दधि मधूनि च । पूर्णकुम्भञ्च लाजांश्च राजेन्द्रं दर्पणं जलम् । माल्यञ्च शुक्लपुष्पाणां दृष्ट्वा पुण्यं लभेन्नरः । गोरोचनाञ्च कर्पूरं रजतञ्च सरोवरम् । पुष्पोद्यानं पुष्पितञ्च दृष्ट्वा पुण्यं लभेन्नरः । देवान्वितं देवघटं सुगन्धिपवनं तथा । शङ्खञ्च दुन्दुभिं दृष्ट्वा सद्यः पुण्यं लभेन्नरः । शुक्लपक्षस्य चन्द्रस्य पीयूषं चन्दनं तथा । कस्तूरीं कुङ्कुमं दृष्ट्वा नन्द ! पुण्यं लभेन्नरः । पताकामक्षयवटं देवोत्थितं शुभम् । देवालयं देवखातं दृष्ट्वा पुण्यं लभेन्नरः । शुक्लं प्रवालं रजतं स्फाटिकं कुशमूलकम् । गङ्गामृदं कुशं ताम्रं दृष्ट्वा पुण्यं लभेन्नरः । पुराणपुस्तकं शुद्धं सबीजं विष्णुयन्त्रकम् । स्निग्धदूर्वाक्षतं रत्नं दृष्ट्वा पुण्यं लभेन्नरः । तपस्विनं सिद्धमन्त्रं समुद्रं कृष्णसारकम् । यज्ञं महोत्सवं दृष्ट्वा सुपुण्यं लभते नरः । गोमूत्रं गोमयं दुग्धं गोधूलिं गोष्ठ गोष्पदम् । पक्वशस्यान्वितं क्षेत्रं दृष्ट्वा पुण्यं लभेन्नरः । रुचिरां पद्मिनीं श्यामां न्यग्रोधपरिमण्डलाम् । सुवेशिकां सुवसनां दिव्यभूषणभूषिताम् । वेश्यां क्षेमङ्करीं मत्स्यं सदूर्वाक्षततण्डुलम् । सिद्धान्नं परमान्नञ्च दृष्ट्वा पुण्यं लभेद्ध्रुवम् । कार्त्तिक्यां पूर्णिमायाञ्च राधिकाप्रतिमां शुभाम् । संपूज्य दृष्ट्वा नत्वा च करोति जन्मखण्डनम् । हिङ्गुलायां तथाऽष्टम्यामिषे मासि सिते शुभे । श्रीदुर्गाप्रतिमां दृष्ट्वा करोति जन्मखण्डनम् । शिवरात्रौ च काश्याञ्च विश्वनाथस्य दर्शनम् । कृत्वोपवासं पूजाञ्च करोति जन्मखण्डनम् । जन्माष्टमीदिने भक्तो दृष्ट्वा मां विन्ध्यमाधवम् । प्रणम्य पूजां कृत्वा च करोति जन्मखण्डनम् । उपोष्य व्रजभूमौ च भाण्डीरे मालतीवने । संपूज्य राधां मां चैव करोति जन्मखण्डनम् । पौषे मासि शुक्लरात्रौ यत्र तत्र स्थले नरः । पद्मायाः प्रतिमां दृष्ट्वा करोति जन्मखण्डनम् । सप्तजन्म भवेत्तस्य पुत्रः पौत्रो धनेश्वरः । उपोष्यैकादशीं स्नात्वा प्रभाते द्वादशीदिने । दृष्ट्वा काश्यामन्नपूर्णां करोति जन्मखण्डनम् । दत्त्वा विष्णुपदे पिण्डं विष्णुं यत्र विलोकयेत् । पितॄणां स्वात्मनश्चैव करोति जन्मखण्डनम् । प्रयागे मुण्डनं कृत्वा यत्र पितॄन् प्रतर्पयेत् । उपोष्य नैमिषारण्ये करोति जन्मखण्डनम् । उपोष्य

पुष्करे स्नात्वा किं वा वदरिकाश्रमे। संपूज्य दृष्ट्वा मामेव करोति जन्मखण्डनम्। भिक्षां कृत्वा च वदरीं भुङ्क्ते वदरिकाश्रमे। दृष्ट्वा मत्प्रतिमां नन्द! करोति जन्मखण्डनम्। दोलायमानं गोविन्दं दृष्ट्वा वृन्दावने च माम्। दृष्ट्वा संपूज्य नत्वा च करोति जन्मखण्डनम्। भाद्रे दृष्ट्वा च मञ्चस्थं मामेव मधुसूदनम्। संपूज्य नत्वा भक्त्या च करोति जन्मखण्डनम्। रथस्थञ्च जगन्नाथं यो द्रक्ष्यति कलौ नरः। संपूज्य भक्त्या नत्वा च करोति जन्मखण्डनम्। उत्तरायणसंक्रान्त्यां प्रयागे स्नानमाचरेत्। संपूज्य दृष्ट्वा मामेव करोति जन्मखण्डनम्। कार्त्तिक्यां पूर्णिमायाञ्च दृष्ट्वा मत्प्रतिमां शुभाम्। उपोष्य पूजां कृत्वा च करोति जन्मखण्डनम्। चन्द्रभागासमीपे च माघ्याञ्च मां नमेत् शनैः। राधया सह मां दृष्ट्वा करोति जन्मनः क्षयम्। रामेश्वरं सेतुबन्धे आषाढ़पूर्णिमादिने। उपोष्य दृष्ट्वा संपूज्य करोति जन्मनः क्षयम्। दीननाथं दिनकरं लोलार्कं चोत्तरायणे। उपोष्य दृष्ट्वा संपूज्य करोति जन्मनः क्षयम्। ऋषिकोष्ठे सुवने कलविङ्के सुगङ्करे। विश्वन्दके राजकोष्ठे नन्दके पुष्पभद्रके। पार्वतीप्रतिमां दृष्ट्वा कार्त्तिकेयं गणेश्वरम्। नन्दिनं शङ्करं दृष्ट्वा करोति जन्मनः क्षयम्। त्रिकूटे मणिभद्रे च पश्चिमोदधिसन्निधौ। समुपोष्य दधि प्राश्य मां दृष्ट्वा मुक्तिमाप्नुयात्" ब्रह्म॰ वै॰ जन्म॰ ख॰। शकुनभेददर्शने फलभेदः शकुनशब्दे दृश्यम्।

**दर्शनप्रतिभू** पु॰ दर्शनाय प्रतिभूः। प्रतिभूभेदे "दर्शने प्रातिभाव्ये च विधिः स्यात् पूर्वचोदितः" "यो यस्य प्रतिभूस्तिष्ठेत् दर्शनायेह मानवः। अदर्शयन् स तं तस्य प्रयच्छेत् स्वधनाद्दणम्" मनुः। वीरमि॰ विस्तरेण तद्विधिरुक्तो यथा "अथ प्रतिभूः तत्र प्रातिभाव्यं नाम विश्वासार्थं पुरुषान्तरेण सह समयः। तद्भेदानाह वृहस्पतिः "दर्शने प्रत्यये दाने ऋणिद्रव्यार्पणे तथा। चतुःप्रकारः प्रतिभूः शास्त्रे दृष्टो मनीषिभिः"। प्रत्ययो विश्वासः दानम् ऋणापाकरणार्थमर्थार्पणम्। ऋणिद्रव्यार्पणम् ऋणिनो यद्द्रव्यं गृहोपकरणादि तदर्पणम्। चतुःप्रकाराणां प्रतिभुवां प्रातिभाव्याङ्गीकारप्रकारं दर्शयति स एव "आहैको दर्शयामीति साधुरित्यपरोऽब्रवीत्। दाताहमेतद्द्रविणमर्पयाम्यपरोऽब्रवीत्"। एको दर्शनप्रतिभूरहमेनं पलायनप्रवृत्तं दर्शयिष्यामीत्याह। अपरः प्रत्ययप्रतिभूरेषः साधुर्न त्वां प्रतारयिष्यति यतोऽयं श्रेनियपुत्रोऽस्य सर्वग्रस्तसम्पन्नो ग्रामोऽस्ति मत्प्रत्ययेनास्य द्रव्यं देहीति ब्रवीति। दानप्रतिभूर्यद्ययं न ददाति तदा सद्धिकमृणमहं दातेति। अपरः ऋणिद्रव्यार्पणप्रतिभूर्यद्ययं न ददाति तदाहमेतदीयगृहोपकरणादिकमर्पयिष्यामीति कथयतीत्यर्थः। दर्शनप्रतिभुवा यदा धनिकस्य धारणिकदर्शनापेक्षा तदैव स दर्शनीयः इत्याह कात्यायनः "दर्शनप्रतिभूर्यस्तु देशे काले च दर्शयेत्"। यस्मिन् देशे काले च धनिकस्तद्दर्शनमपेक्षते तत्रैव दर्शयेत् अधमर्णमिति शेषः। दर्शिते च तस्मिन् धनिकेन प्रातिभाव्यात् स मोक्तव्य इत्युत्तरार्द्धेनाह स एव। "यद्यसौ दर्शयेत् तत्र मोक्तव्यः प्रतिभूर्भवेत्"। एवं प्रत्ययादिप्रतिभुवोऽपि तदविसंवादे मोक्तव्याः, अन्यथा धारणिकदेयं धनं दाप्या इत्याहतुः कात्यायनवृहस्पती "यो यस्य प्रतिभूस्तिष्ठेद्दर्शनायेह मानवः। अदर्शयन् स तत्तस्मै प्रयच्छेत् स्वधनादृणम्। आद्यौ तु वितथे दाप्यौ तत्कालावेदितं धनम्। उत्तरौ तु विसंवादे तौ विना तत्सुतौ तथा"। यत्तु योगीश्वरेण प्रतिभुवान्त्रैविध्यमेवोक्तम्। "दर्शने प्रत्यये दाने प्रातिभाव्यं विधीयते" तद्दानार्पणयोरनतिभेदाभिप्रायेण। "आद्यौ तु वितथे दाप्या वितरस्य सुता अपि"। वितथे दर्शनप्रत्यये विसंवादे इतरस्य सुता न दाप्याः। सुता इत्यभिधानाच्च पौत्रा इत्युक्तम्भवति दानं स्वधनार्पणं धनिकाय। अर्पणन्तु धारणिकधनमानीय तस्य अर्पणं धनिकस्य स्वधनलाभे उभयतो न विशेषः अतएव सूक्ष्मभेदविवक्षया पञ्चप्रकारा अपि प्रतिभुवो हारीतेनोक्ताः। "अभये प्रत्यये दाने उपस्थाने प्रदर्शने। पञ्चस्वेषु प्रकारेषु ग्राह्यो हि प्रतिभूर्बुधैः" अभयमुपद्रववारणम्। उपस्थानमत्र धारणिकधनस्य धनिकायानीयार्पणं न दर्शनं तस्य पृथङ्निर्देशात् पञ्चस्वित्यनन्वयाच्च। व्यासस्तु सप्तभिर्विषयैः सप्तप्रकारं प्रतिभुवमाह। "लेख्ये कृते च दिव्ये वा दानप्रत्ययदर्शने। गृहीतवस्त्रोपस्थाने ऋणिद्रव्यार्पणे तथा"। प्रतिभूर्ग्राह्य इत्यत्र प्रकृतम्। कात्यायनोऽपि "दानोपस्थानवादेषु विश्वासशपथाय च। लग्नकङ्कारयेदेवं यथायोग्यं विपर्यये"। वादो विवादस्तत्र प्रतिभूग्रहणम्। "उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये" इति। योगीश्वरेणाप्युक्तञ्च प्रागेव व्याख्या-

तम्। दर्शनप्रत्ययदानेषु यथार्थं सर्वमाननभावबन्धाव इति परमार्थः। दर्शनप्रतिभुवे नष्टधारणिकान्वेषणाय कालावधिर्देय इत्याह। वृहस्पतिः "नष्टस्यान्वेषणे कालं दद्यात् प्रतिभुवे धनी। देशानुरूपतः पक्षं मासं सार्द्धमथापि वा"। सार्द्धमासमिति परमावधिः। तथा च कात्यायनः "नष्टस्यान्वेषणार्थन्तु देयं पक्षत्रयं परम्। यद्यसौ दर्शयेत्तत्र मोक्तव्यः प्रतिभूर्भवेत्। काले प्रतीते प्रतिभूर्यदि तं नैव दर्शयेत्। स तमर्थं प्रदाप्यः स्यात् प्रेते चैव विधिः स्मृतः"। परं परमावधिभूतम्। प्रतीतेऽन्वेषणाय परिकल्पिते, प्रेते चैव विधिरिति धारणिके मृते प्रतिभूस्तमर्थं प्रदाप्य इति विधिः कालावधिविधेस्तत्राव्यवधानात्। एतदपि दैवराजकृतप्रतिबन्धाभावे बोध्यम्। अतएव कात्यायनः "दर्शनप्रतिभूर्यत्र देशे काले न दर्शयेत्। निबन्धमावहेत्तत्र दैवराजकृताहते"। निबन्धमृणम्। दैवकृतो दीर्घरोगमरणादिरूप ऋणदानप्रतिबन्धः। राजकृतो बन्धनासेधदण्डादिरूपः। प्रतिभूभेदेन स्वरूपमाह नारदः "कश्चित्प्रतिकुर्वंस्तु प्रत्यये वाथ स्थापिते। प्रतिभूस्तद्दत्तं दद्यादनुपस्थापयंस्तथेति"। कश्चिदधमर्णमप्रतिकुर्वत् सत्साध्येनु निर्गन्तव्यादिना ऋणमप्रत्यर्पयत्स्थिति दानप्रतिभूविषयम्। प्रत्यये विश्वासे स्थापिते विसंवादिते इति प्रत्ययप्रतिभूविषयम्। अनुपस्थापयन् धनिनमदर्शयन् धनिनः सकाशादाधिस्तत्रं पर्याप्तं तद्धनं वोत्तमर्णायानर्पयन्निति दर्शनप्रत्यार्पणप्रतिभूविषयमिति विवेकः"।

**दर्शनीय** त्रि० दृश-कर्मणि अर्हादौ वा अनीयर्। १मनोहरे, २दर्शनयोग्ये च धरणिः। "दर्शनीयतमो नृपाधिदं वचनमब्रवीत्" भा० स० ७५ अ०।

**दर्शप** पु० दर्शेन दर्शनेन पिबन्ति पा-क। दर्शनमात्रेण पातृषु देवेषु "न वै देवा अश्नन्ति पिबन्ति एतदेवामृतं दृष्ट्वा तृप्यन्ति" छा० उ० दर्शनमात्रेण तेषां तृप्तिहेतुपानसम्भवस्योक्तेस्तथात्वम्। "गुह्यस्य निर्माणरतास्तुषितदेवाः सर्वाशना दर्शपा आज्यपाश्च" भा० अनु० १६ अ०। [रात्रौ हेमच०।

**दर्शयामिनी** स्त्री दर्शस्येव यामिनी। अन्धकारयुक्तायां

**दर्शयितृ** त्रि० दृश-णिच्-तृच्। १दर्शनकारके दर्शके "पथः श्रुतेर्दर्शयितारः ईश्वराः" रघुः २प्रतीहारे द्वारपाले पु०

**दर्शविपद्** पु० दर्शे अमावास्यायां विपद् नाशोऽदर्शनमस्य। चन्द्रे त्रिका०। [दिते च हेमच०।

**दर्शित** त्रि० दृश-णिच्-क्त। १प्रकटिते २प्रकाशिते ३प्रतिपादिते

**दर्शिन्** त्रि० दृश-णिनि। १द्रष्टरि २विवेचके ३साक्षात्कारके च। "तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः" कुमा०। "तस्मै सभ्याः सभार्याय गोप्त्रे गुप्ततमेन्द्रियाः अर्हणामर्हते चक्रुर्मुनयो नयचक्षुषे" ... "तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च। फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव" ... "मुनिर्दीर्घदर्शी" रघुः। मन्त्रदर्शिभिरुच्यते" मनुः। स्त्रियां ङीप्। प्रतीपदर्शिनी।

**दर्शिवन्** त्रि० दृश-"अन्येऽपि दृश्यन्ते" इति पा० क्वनिप्। द्रष्टरि। "कुरूणां पाण्डवानां च भयात् प्रत्यक्षदर्शिवान्" भा०आ० ६ अ०। "अन्यो न त्वामृते वक्ता विद्यते सर्वदर्शिवन्" ह० वि०। "अत्र दर्शिवन्" इति शब्दकल्पद्रुमपाठोऽतीव प्रामादिकम्।

**दल** भेदे भ्वा०पर०अक० भेदने सक० सेट्। दलति अदालीत् णिचि वा घटा०दलयति दालयति। ददाल देलतुः दलितः। दला "ददाल भूर्नभोरन्ध्रं गोत्रदम्भं बभञ्ज च" "ददाल भूः पुपूरे द्यौः कपीनामपि निस्वनैः" "अदालिषुः शिलादेशे भूर्ध्वभूवन् महाद्रुमाः" भट्टिः "दलति बत मम हृदयम्" अमरु०।

**दल** भेदने चुरा० उभ०सक०सेट्। दालयति-ते अदीदलत् त। "सुरेनाऽदालयत्तस्य" "दालयत्यसौ कुलस्यायतः" अलङ्का०। भेदश्च द्विधाकरणं विकसनञ्च तत्र विकसने। "दरविदलितमल्लीवल्लिचञ्चत्पराग" गीतगो०।

**दल** न०दल-अच् १उत्सेधे २खण्डे ३पत्रे ४अर्द्धे मेदि०। ५धने शब्दर० ५तमालपत्रे राजनि० ६अर्द्धे लीलावती "प्राप्तापराधास्ताड्याः स्युः रज्ज्वा वेणुदलेन वा" मनुः "ताम्बूलीनां दलैस्तत्र रचितापानभूमयः" रघुः "वापीष्वन्तर्लीनमहानीलदलासु" माघः। "अङ्कः स्ववंशेन युक्तः सनिजदलयुतः कीदृशः कीदृशोऽसौ" लीला०।

**दलकोष** पु० दलान्येव कोषो यस्य। कुन्दपुष्पवृक्षे शब्दमा०। तस्य पुष्पे कोषान्तराभावात् तथात्वम्

**दलन** त्रि० दल-वा अलन्। द्विधाकारके। तेन निर्वृत्तं अरी० वुञ्। दालिकन्तत्रिरर्टाद्यादौ त्रि०।

**दलनिर्मोक** पु० दलतीति दलं वल्कलं निर्मोक इव यस्य। भूर्जपत्रवृक्षे शब्दमाला। तस्य हि वल्कलस्य निर्मोकाकारत्वात्तथात्वम्।

**दलन** न० दल-करणे ल्युट्। १दलनकारणे (ढेला) २लोष्टे स्त्री० ङीप् रत्नावली। तथाभूतस्त्रियां स्त्री "प्रतिपक्षपक्षदलनी" विदग्धमो०।

**दलप** न० दल-कपन्। १प्रहरणे उत्कलद०। २विदारकमात्रे त्रि०३स्वर्णे उणादि०। दलं पाति पा-क। ४दलपतौ

दलाभिपटलपत्रादयोऽप्यत्र पु० । [ह्नि दलाकार पुष्पा

**दलपुष्पा** स्त्री दल इव पुष्पमस्याः । केतक्याम् राजनि०। या

**दल(मा)शाली** स्त्री दलेन मलति सम्बध्नाति मल--णिनि शलते शल–णिनि वा । कञ्जुकशाके पारस्करनि०।[लमा०

**दलसारिणी** स्त्री दले पत्रे सारोऽस्यस्या इनि । केमुके

**दलसूचि(ची)** स्त्री दलस्य सूचिरिव । कण्टके हारा० ।

**दलस्नसा** स्त्री ६त० । पत्रसिरायाम् हेमच० ।

**दलाढ़क** पु०दलेनाढ़क इव । १स्वयंजाततिलहके, २ग्रामग्राम्, ३गैरिके ४फेने, ५खातके, ६नागकेशरे, ७महत्तरे,मेदि० ८कुन्दे, ९करिकर्णे, १०शिरीषे, ११वात्यायाञ्च हेमच० ।

**दलाढ्य** पु० दलेन हेमेनाढ्यः । पङ्ककर्वटे (दलदलिया) कर्दमभेदे त्रिका० । [ २दमनकवृक्षे च पु० शब्दर० ।

**दलामल** न० दलेनामलम् । १मरुवके मेदि० । २मदनवृक्षे

**दलाम्ल** न० दलेनाम्लम् । चुक्रे (चुकापालङ्ग) राजनि० ।

**दलि** स्त्री दल–इन् । १लोष्ट्रे उज्ज्वल० तन्नार्थे पुंस्त्री दलिदेवः । संज्ञायां कन् । दलिक २काष्ठे हेमच० ।

**दलित** त्रि० दल--क्त । १विकसिते । २खण्डिते ३मर्द्दिते । "व्येका दलिता विभाजितेष्टेन" "दलिता बाधे तयोः स्याताम्" लीला० । [ ङीप् ।

**दलिन्** त्रि० दल--मत्वा० मत्वर्थे इनि । दलयुक्ते स्त्रियां

**दलेगन्धि** पु० दले गन्धो यस्याः इत् समा० सप्तम्या अलुक् । सप्तच्छदवृक्षे (छातिम गाछ)त्रिका० ।

**दलोद्भव** त्रि० दलादुद्भवति उद्+भू--अच् ५त० । दलजाते २मधुभेदे न० । "कहि मेहप्रशमनं मधु हन्तं दलोद्भवम्" सुश्रु० ।

**दल्भ** पु०दल--भ । १ऋषिभेदे २चक्रे च उज्ज्वल०ततो गर्गा० अपत्ये यञ् । दाल्भ्य तदपत्ये पुंस्त्री । "तेन तं ह बको दाल्भ्यो विदाञ्चकार" छान्दो० ।

**दल्मि** पु० दल--मि । १इन्द्रे २वज्रे उज्ज्वलद० । ततो मत्वर्थे मतुप् यवादि० मोपधत्वेऽपि न मस्य वः । दल्मिमत् वज्रयुक्ते इन्द्रे । [ दलस्यादूरदेशादौ ।

**दल्य** त्रि० दलस्यादूरदेशादि दल+चतुरर्थ्यां बला० य ।

**दव** गतौ भ्वा० पर० सक० सेट् इदित् । दन्वति अदन्वीत् । ददन्व । क्विपि दन् ।

**दव** पु० दुनोति दु-अच् । १वने, २वनानले च अमरः । भावे अप् । ३उपतापे । "अतिमात्रं दववह्न्युर्चाय" माघः ।

**दवथु** पु०दु--उपतापे भावे अथुच् । उपतापे । "स दवथु वपुर्वचोविषम्" माघः "केचिद्दिपणुमासेदुरन्ये दवथुसत्तमम्" भट्टिः । [रोहिषतृणे राजनि० ।

**दवदग्धक** न० दवेन दग्धं सत् कायति प्रकाशते कै--क ।

**दवदहन** पु० दवजातो वनजातो दहनः । दावानले । "यरःसख्येऽसख्ये दवदहनदाहव्यतिकरः" उद्भटः । "कि-ञ्चालजविघ्नमज्वरदवदहनशिखाभिः" भाग०५।८।२७श्लो० "दवाग्निप्रभृतयोऽप्यत्र "दयाम हव्यापि विना दवाग्निः" रघुः ।

**दवि** दूरीकरोति दूर+णिच्–स्थूलदूरेत्यादिना दवादेशः नामधातुः दूरीकरणे सक०सेट् । दवयति अदी(द)दवत् । "दवयदतिरयेण प्राप्ततूर्णीं विभागम्" भट्टिः ।

**दविष्ठ** त्रि० इदमेषामतिशयेन दूरम् इष्ठन् दवादेशः । दूरतमे । ईयसुन् दवीयस् तन्नार्थे त्रि० "तेजस्विमध्ये तेजस्वी दवीयानपि गम्यते" माघः स्त्रियां ङीप् । "नैव शुक्तिरपि दवीयसी" किरा० । [ णवु-त ।

**दश** दीप्तौ चु० उभ० सक० सेट् इदित् । दंशयति-ते अददंश

**दश** दंशने चुरा०आत्म० सक० सेट् इदित् । दंशयते अददंशत

**दशक** न०दश परिमाणमस्य कन् । दशति, दशकञ्चाम् । "धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः । धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्" । "मृगया ऽक्षो दिवास्वप्नः परीवादः स्त्रियो मदः । तौर्य्यत्रिकं वृथाट्या च कामजो दशको गणः" मनुः ।

**दशकण्ठ** पु० दश कण्ठा यस्य । १रावणे हेमच० ।

**दशकण्ठजित्** पु० दशकण्ठं जयति जि--क्विप् । १रामे त्रिका० । दशकण्ठारिप्रभृतयोऽप्यत्र "दशकण्ठारिगुरुं विदुर्बुधाः" रघुः ।

**दशकन्धर** पु० दश कन्धरा यस्य । रावणे हेमच० । तृणो० रलोपे दशकन्धोऽप्यत्र "दशकन्धरराजसूनोस्तथा युद्ध सभूत्कृत्" भा० व० २८८ अ० । [ त्रिका० ।

**दशकन्धरजित्** पु० दशकन्धरं जयति जि--क्विप् । रामे

**दशकर्मन्** न० दशविधम् कर्म । गर्भाधानादिद्विवाहान्ते दशविधे संस्कारकर्म्मणि । दशकर्मपद्धत्यादौ तद्विहितिर्दृश्या ।

**दशकुलवृक्ष** पु० दशगुणितः कुलवृक्षः संख्यात्वात् कर्मधा० या व० व० । तन्त्रोक्ते कुलवृक्षदशके कुलवृक्षदशकं च तन्त्रसारोक्तं यथा "श्लेष्मातकः करञ्जश्च बिल्वाश्वत्थकदम्बकाः । निम्बो वटोदुम्बरौ च धात्री चिञ्चा दश स्मृताः" "साधकः प्रातरुत्थाय कुलवृक्षं प्रणम्य च" ।

**दशक्षीर** न० दशविधं क्षीरम् । स्मृगीगर्द्दभीक्षीरवर्जिते

"गव्यमाज तथा चौष्ट्रमाविकं माहिषञ्च यत्। अश्वायाश्चैव नार्य्याश्च करेणूनां तथैव च" इत्युक्ताष्टविधक्षीररूपे क्षीरदशके "पुनः पचेत् दशक्षीरं सिता-मधुकचन्दनैः" सुश्रुतः।

**दशग्रामपति** पु० दशानां ग्रामाणां पतिः उत्तरपदद्विगुः। दशग्रामाध्यक्षे। तन्नियोगादि मनुनोक्तं यथा "ग्रामस्याधिपतिं कुर्य्यात् दशग्रामपतिं तथा। विंशतीशं शतेशञ्च सहस्रपतिमेव च। ग्रामे दोषान् समुत्पन्नान् ग्रामिकः शनकैः स्वयम्। शंसेद्ग्रामदशेशाय दशेशो विंशतीशिनम्। विंशतीशस्तु तत्सर्वं शतेशाय निवेदयेत्। शंसेद्ग्रामशतेशस्तु सहस्रपतये स्वयम्। यानि राजप्रदेयानि प्रत्यहं ग्रामवासिभिः। अन्नपानेन्धनादीनि ग्रामिकस्तान्यवाप्नुयात्। दशी कुलन्तु भुञ्जीत विंशी पञ्चकुलानि च। ग्रामं ग्रामशताध्यक्षः सहस्राधिपतिः पुरम्। तेषां ग्राम्याणि कार्य्याणि पृथक् कार्य्याणि चैव हि। राज्ञोऽन्यः सचिवः स्निग्धस्तानि पश्येदतन्द्रितः"।

**दशग्रामिक** त्रि० दश ग्रामा अधिकृतत्वेन सन्त्यस्य ठन्। तस्यादूरदेशादि कच्छ्वा०चतुरर्थ्यां ठञ् वा।१दशग्रामाधिपे २तस्यादूरदेशादौ। स्त्रियां ङीप् चतुरर्थ्यां काश्या० ठञ् ञिठो वा। दाशग्रामिक तस्यादूरदेशादौ त्रि० ठञि स्त्रियां ङीप् ञिठे टाप् इति भेदः।

**दशग्रामिन्** पु० दश ग्रामा अधिकृतत्वेन सन्त्यस्य इनि। दशग्रामाधिपतौ। "स्वसीम्नि दद्यात् ग्रामस्तु पदं वा यत्र गच्छति। पञ्चग्रामी बहिः कोशात् दशग्राम्यथ वा पुनः" याज्ञ०।

**दशग्रीव** पु० दश ग्रीवा अस्य। १रावणे। "पुष्पोत्कटायां जज्ञाते द्वौ पुत्रौ राक्षसेश्वरौ। कुम्भकर्णदशग्रीवौ बलेनाप्रतिमौ भुवि"। "दशग्रीवस्तु सर्वेषां श्रेष्ठो राक्षसपुङ्गवः। महोत्साहो महावीर्य्यो महासत्त्वपराक्रमः" भा०व० २७४ अ०। २असुरविशेषे "दशग्रीवश्च बाली च मेघवासा दशावरः। टिट्टिभो विटभूतश्च संह्रादश्चेन्द्रतापनः" भा० व० ६ अ०। ३दमघोषस्य पुत्रभेदे। "शिशुपालो दशग्रीवो रैभ्योऽथोपदिशो बली। सर्वास्त्रकुशला वीरा वीर्य्यवन्तो महाबलाः" हरिवं०११७ अ०। ४एकादशमन्वन्तरीयेन्द्रशत्रुभेदे तदुपक्रमे गरु० पु० ८७ अ० "एकैकस्त्रिंशकस्तेषां गणाश्चेन्द्रश्च वै वृषः। दशग्रीवो रिपुस्तस्य स्त्रीरूपी घातयिष्यति"।

**दशज्योति(स्)** पु० सुभ्राजः पुत्रभेदे। "सुभ्राजस्तु त्रयः पुत्राः प्रजावन्तो बहुश्रुताः। दशज्योतिः शतज्योतिः सहस्रज्योतिरेव च। दशपुत्रसहस्राणि दशज्योतेर्महात्मनः" भा० आ० १ अ०।

**दशत्** स्त्री दश परिमाणमस्य अति। दशानां वर्गे-दशके दशसङ्ख्यायाम्। "स वै दक्षिणा नयन्। अन्यूना दशतो नयेद्यथा एकां दासन्न स्याद्दशभ्यस्तेभ्यो दशतसुपावर्त्तयेद्यथा द्वे दासन्न स्यात् पञ्चभ्यस्तेभ्यो दशतसुपावर्त्तयेद्यथा तिस्रो दासन्न स्यात्त्रिभ्यस्तेभ्यो दशतसुपावर्त्तयेद्यथा पञ्च दासन्न स्याद्वाभ्यां तथ्यां दशतसुपावर्त्तयेद्देवमा शतात्तयो ह्यसेषान्यूना विराडसयां लोके कामदुघा भवति" शतब्रा०४।५।८।१६। "या प्रथमा दशदयं स लोको या द्वितीयान्तरिक्षं तद्या तृतीया द्यौः सैषमेव लोकं प्रथमया दशतारोहदन्तरिक्षं द्वितीयया दिवं तृतीयया तथैवैतद्यजमान इममेव लोक प्रथमया दशता रोहत्यन्तरिक्षं द्वितीयया दिवं तृतीयया" ८।५।२।१५। "एकादश दशत आलभते। एकादशाक्षरा वै वीर्य्यं त्रिष्टुविन्द्रियस्यैव वीर्य्यस्यावरुद्ध्या एकादश दशत आलभते दश वै पशोः प्राणा आत्मैकादशः प्राणैरेव पशूनृत्समर्द्धयति" शत० ब्रा० १३।२।५।४।

**दशतय** त्रि० दशावयवा यस्य दशानामवयवा वा संख्यायाः अवयवे तयप्। १दशसंख्यायां २तत्संख्यान्विते त्रि० स्त्रियां ङीप्। "अथास्य संस्तविका देवा इन्द्रः सोमो वरुणः पर्जन्य ऋतव आग्नावैष्णवं हविर्न त्वक् संस्तविको दशतयीषु विद्यते" निरु० ७।८। "तदेकमेव जातवेदसं गायत्रं तृचं दशतयीषु विद्यते" २०।

**दशति** स्त्री दशावृत्ता दश नि०। दशावृत्तदशके शतसंख्यायां "कालेन महता कद्रूरण्डानां दशतीर्दश। जनयामास विप्रेन्द्र!" भा० आ० १६ अ०। यथा "दशावृत्ता नव नवतिः तथा दशावृत्ता दश दशतिः शतमित्यर्थः। दश दशतीर्दशशतानीत्यर्थः" नीलक०। तत्संख्यायाञ्च "योद्धारस्तत्र जायन्ते सूतयो दशतिर्दश" भा०व०१०७अ०।

**दशदशिन्** त्रि० दशावृत्ता दश परिमाणमस्य डिनि। शतगुणिते स्त्रियां ङीप्। [धर्मभेदे दशकशब्दे दृश्यम्।

**दशधर्म्म** पु० दशविधो धर्मः। सर्ववर्णसाधारणे मनूक्ते

**दशधा** अव्य० दशानां प्रकारः धाच्। दशप्रकारे "गायत्रीं दशधा जप्त्वा ततः सन्ध्यां समाचरेत्" मल० त०। "कृते सर्वं रिक्तजातं दशधा परिकल्प्य च" मनुः।

**दशन्** त्रि० दन्श बा०—कनिन् । संख्याविशेषे १द्विगुणितपञ्चके २तत्संख्यान्विते च । तत्संख्यावाचकाश्च एकादिशब्दे उक्ताः“दिशो दशोक्ताः पुरुषस्य लोके सहस्रमाहुर्दशपूर्णं शतानि । दशैव मासान् बिभ्रति गर्भवत्यो दशैरेका दश दाशा दशार्हाः” भा० उ० १३४ अ० । आसन्नादी रयन्ति उपदिशन्ति परका उपदेष्टारः दशोपनिषदां प्राधान्येन दशत्वात् तत्प्रतिपाद्योपदेशकत्वेन तेषां दशत्वम् ।

**दशन** न०दश्यतेऽनेन वा दन्श—भावे करणादौ वा ल्युट् नि० नलोपः । १कवचे वर्मणि २शिखरे पु० मेदि० ।३दन्ते पुंन० अमरः । “बभौ सदशनज्योत्स्ना सा विभोर्वदनोद्भवा” रघुः । “तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत् स्त्रियम्” मनुः । “ताम्बूलाक्तं दशनमसकृत् दर्शयन्तीह चेटी” सा० द० ।

**दशनच्छद** पु०दशनान् दन्तान् छादयति छादि—घञ् ह्रस्वः। ओष्ठे “दशन्तो दशनच्छदान्” भा० आ० १०२ अ० ।

**दशनपद** न०दशनस्य दशनक्षतस्य पदम् । दशनक्षतस्थाने तदङ्के “दशनपदं भवदधरगतं मम जनयति चेतसि खेदम्” गीतगो०

**दशनवासस्** न० दशनस्य वास इवाच्छादकत्वात् । ओष्ठ-मात्रे अमरः ।

**दशनवीज** पु०दशन इव वीजमस्य । दाडिमीवृक्षे पारस्करनि०

**दशनाङ्क** पु० हेम० । दशनक्षते । [ (मुकापाकड) शब्दच० ।

**दशनाढ्या** स्त्री दशन आढ्यो यस्याः सेवनात् । चुक्रिकायां

**दशनोच्छिष्ट** न० दशनेनोच्छिष्टं यत्र । अधरादिचुम्बने “रेवतीदशनोच्छिष्टपरिपूतपुटे दृशौ” माघः । २निश्वासे पु० हेम० । ३दन्तोच्छिष्टे त्रि० मेदि० ।

**दशप** पु० दश ग्रामान् पाति रक्षति पा—क । दशग्रामी रक्षके राजनियुक्ते पुरुषभेदे । तन्नियोगादिकं भा० शा० ८७ अ० उक्तं यथा

“ग्रामस्याधिपतिः कार्य्यो दशग्राम्यास्तथाऽपरः । द्विगुणायाः शतस्यैवं सहस्रस्य च कारयेत् । ग्रामेयान् ग्रामदोषांश्च ग्रामिकः प्रतिभावयेत् । तान् ब्रूयाद्दशपायासौ स तु विंशतिपाय वै । सोऽपि विंशत्यधिपतिर्वृत्तं जानपदे जने । ग्रामाणां शतपालाय सर्व्वमेव निवेदयेत् । यानि ग्राम्याणि भोज्यानि ग्रामिकस्तान्युपाश्नीयात् । दशपस्तेन भर्त्तव्यस्तेनापि द्विगुणाधिपः । ग्रामं ग्रामशताध्यक्षो भोक्तुमर्हति सत्कृतः । महान्तं भरतश्रेष्ठ ! सुस्फीतं जनसङ्कुलम् । तत्र ह्यनेकपायत्तं राज्ञो भवति भारत ! । शाखानगरमर्हस्तु सहस्रपतिरुत्तमः । धान्यं हिरण्यं भोगेन भोक्तुं राष्ट्रीयसङ्गतः । तेषां संग्रामकृत्यं स्यात् ग्रामकृत्यञ्च तेषु यत् । धर्म्मज्ञः सचिवः कश्चित् तत् प्रपश्येदतन्द्रितः” ।

**दशपञ्चतपस्** पु० दशसु इन्द्रियेषु पञ्चसु वह्निषु च तपो यस्य । इन्द्रियजयपूर्वकपञ्चाग्नितपश्चारिणि । “अब्भक्षो वायुभक्षश्च दन्तोलूखलिकस्तथा । अश्मकुट्टो निरशनः दशपञ्चतपाश्च यः” हरिवं० ४५ अ० । [ बुद्धे । हेमच०

**दशपारमिताध्वर** पु० दशभिर्बलैः पारमितोऽध्वरो येन ।

**दशपुर** न०दश दिशः पिपर्त्ति पृ—क । १कैवर्त्तीमुस्तके अमरः । दश पुरो यत्र अच् समा० । २मालवदेशैकखण्डे मेदि० स च देशः वृ०सं०१४ अ० अथ दक्षिणेन लङ्केत्युपक्रमे “दशपुरगोनर्द्दकोलकाः” दक्षिणस्यामुक्तः । “पावीकुर्वद्दशपुरवधूनेत्रकौतूहलानाम्” माघः ।

**दशपुरुष** पु० दशगुणितः पुरुषः । स्वजनकावधिपुरुषदशके । “यो मातृतः पितृतश्च दशपुरुषं समनुष्ठिता विद्यातपोभ्यां पुण्यैश्च कर्मभिर्येषामुभयतो नाब्राह्मण्यं निनयेयुः” आश्व० श्रौ० ६।३।२० । “येषां मातृतः पितृतश्चोभयतो ये दशपूर्वाः पुरुषाः ते विद्यया तपसा पुण्यैः प्रतिषिद्धवर्जितैश्च युक्ताः सम्यगनुष्ठितवन्तो वैदिकं मन्त्रानम्, अपि च अब्राह्मण्यं न निनयेयुः निश्चयेनाब्राह्मण्यं न गमयेयुः । अब्राह्मण्यगमनं नाम शूद्रायामपत्योत्पादनमित्युच्यते । विद्या नाम षडङ्गो वेदः, तदर्थज्ञानञ्च । तपो नाम श्रौतस्मार्त्तकर्मानुष्ठानम् । पुण्यकर्म नाम प्रतिषिद्धवर्जनम् । तानेवंविधान् पुरुषाननुप्रसर्पयेयुः, एतदुक्तं भवति मातृतः पितृतश्चोभयतः पूर्वं दश ये पुरुषाः ते षडङ्गवेदाध्ययनेन तदर्थज्ञानेन च श्रौतस्मार्त्तकर्मानुष्ठानेन च प्रतिषिद्धवर्जितेन च युक्ताः शूद्रायामपत्योत्पादनं चाकृतवन्तो ये पुरुषा तानेवंविधान् पुरुषाननुप्रसर्पयेयुः । दशपुरुषमिति दशपुरुषा इत्यर्थः । नारा० । “मातापित्रोर्यस्य वश्यः श्रोत्रियो दशपूरुषः” भा० अनु० ६० अ० “दशपुरुषविख्यातश्रोत्रियाणां महाकुलम्” स्मृतिः ।

**दशपूर** न० दश दिशः पूरयति पूर—अण् । कैवर्त्तीमुस्तके अमरे पाठान्तरम् ।

**दशपेय** पु०दशभिः पुरुषैश्चमस पेयमत्र । यागभेदे । “संसृपेष्टिभिश्चरित्वा दशपेयेन यजेत” आश्व० श्रौ० ६।३।१७ । “संसृपेष्ट्यो नाम सप्तेष्टयः आग्नेयादयः, ताभिः सप्ताहं चरित्वा दशपेयेन यजेत । दशपेयो नाम यज्ञ-

क्रतुः" नारा०। "तत्र दश दशैकैकं चमसं भक्षयेयुः" १८, "तत्र दशमेव एकैकं चमसं दशपुरुषा भक्षयन्ति" नारा०।

**दशबल** पु० दश बलानि यस्य। बुद्धदेवे अमरः तानि च बलानि "दानशीलक्षमावीर्य्यध्यानप्रज्ञाबलानि च। उपायः प्रणिधिर्ज्ञानं दश बुद्धबलानि वै"। [ बाहुयुक्ते त्रि०

**दशबाहु** स्त्री दश बाहवोऽस्याः। दशभुजायां दुर्गायाम्। दश-

**दशभुजा** स्त्री दश भुजा अस्याः। दुर्गायां "इतिवृत्तं पुरा कल्पे मनोः स्वायम्भुवेऽन्तरे। आविर्भूता दशभुजा देवी देवहिताय वै" कालिकापु० ५८ अ०।

**दशभूमिग** पु० दशसु भूमिषु दानादिबलेषु गच्छति गम—ड। बुद्धे हेमच०। [ त्रिका०।

**दशभूमीश** पु० दशानां दानादीनां भूमीनामीशः। बुद्धे

**दशम** त्रि० दशानां पूरणे डटि नान्तत्वात् मट्। दशसंख्यायाः पूरणे। "दशमस्त्वमसि" वेदान्तपरिभाषा। "नवमे दशमे मासि प्रबलैः सूतिमारुतैः" याज्ञ०। "अददीताथ षड्भागं प्रनष्टाधिगतान्नृपः। दशमं द्वादशं वापि सतां धर्ममनुस्मरन्"। यद्यपि स्यात्तु सत्पुत्रोऽप्यपुत्रोऽपि वा भवेत्। नाधिकं दशमाद्दद्याच्छूद्रापुत्राय धर्मतः" मनुः। स्त्रियां ङीप्। सा च "शतायुर्वै पुरुषः" इति श्रुतेः पुरुषस्यायुःकालस्य शतसंख्यकतया तस्य दशभिर्विभागे नवतेरूर्द्ध्वं दशवर्षावच्छिन्ने २काले पुरुषावस्थाटौ स्त्री। "यत्र स्युः सोऽत्र मानार्हः शूद्रोऽपि दशमीं गतः"। "चक्रिणो दशमीस्थस्य रोगिणो भारिणः स्त्रियाः। स्नातकस्य च राज्ञस्य पन्था देयो वरस्य च" मनुः। चन्द्रस्य दशमकलाक्रियारूपे तदुपलक्षिते वा कालभेदरूपे ३तिथिभेदे स्त्री। सा च शुक्ला एकादश्या, कृष्णा तु नवम्या युता ग्राह्या। "सम्पूर्णा दशमी कार्य्या पूर्वया परयाथ वा। युक्ता न दूषिता यस्मादिति सा सर्वतो सुखी"। यथा सम्पूर्णा दोषरहिता तथा विद्धापीति विकल्पं व्यवस्थापयति विष्णुधर्मोत्तरीयम्। "शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः। कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः"। "आरभ्य तस्यां दशमीञ्च यावत्" तिथित०। "कृष्णपक्षे दशम्यादि वर्जयित्वा चतुर्दशीम्" मनुः।

**दशमभाव** पु० कर्म० जन्मवर्षादिलग्नांशविशेषानीतेषु तन्वादिद्वादशभावेषु दशमे भावे। तदानयनप्रकारो यथा। "पूर्वं नतं स्याद्दिनरात्रिखण्डं दिवानिशोरिष्टघटीविहीनम्। दिवानिशोरिष्टघटीषु शुद्धं द्युरात्रिखण्डं त्वपरं नतं स्यात्। तत्काले सायनार्कस्य भुक्तभोग्यांशसंगुणात्। स्वोदयात् खाग्निलब्धं यत् भुक्तं भोग्यं रवेस्त्यजेत्। इष्टनाडीपलेभ्यश्च गतगम्यान्निजोदयात्। शेषं खत्र्याहतं भुक्तमशुद्धेन लवादिकम्। अशुद्धं शुद्धभे हीनयुक् तनुर्व्ययनांशकम्। एवं लङ्कोदयैर्भुक्तभोग्यं शोध्यं पलोक्तवत्। पूर्वपश्चान्नतादन्यत् प्राग्वत्तद्दशमं भवेत्"। जातकोपयोपयोगितद्भावे शुभाशुभं सर्वार्थचि० उक्तं यथा

"दशमात् प्रवृत्तिमाज्ञां कीर्त्तिं वृष्टिं प्रवासपूर्त्तादीन्। मानं कर्माजीवं जानुस्थानं च निर्दिशेद्धीमान्। कर्माधिपे हीनबले सपापे कर्मादिवैकल्यमुशन्ति तज्ज्ञाः। कर्मेशवागीशशशाङ्कपुत्रा वीर्यान्विता यशकरा भवन्ति। शुभग्रहैर्दृष्टिसमन्वितास्ते वीर्यान्विता यशविशेषभाजः। दुःस्थाः शशाङ्कात्मजजीवशुक्राः पापेक्षिताः कर्मविनाशभाजः। नाशस्थितास्तत्र तदंशनाथास्तद्युक्तराशेरधिपाश्च नाशम्। राहौ च माने यदि वा दिनेशे भागीरथीस्नानमुशन्ति तज्ज्ञाः। माने च मीने यदि वा ससौम्ये भौमान्विते वा भविता च मुक्तिः। जलर्क्षगे पूर्णशशाङ्कजीवे मानस्थिते गाङ्गजलादिपूतः। माने गुरौ शुक्रयुते च केन्द्रे स्वोच्चस्थिते तादृशतोयपूतः। माने भवे शुक्रयुते सजीवे केन्द्रोच्चगे तादृशतोयपूतः। बुधे व्यये वा यदि वा तदीशे स्वोच्चान्विते तादृशपुण्यभाक् स्यात्। चन्द्रे तृतीये जलराशियुक्ते सौम्यान्विते तादृशपुण्यभाक् स्यात्। शुभेश्वरे केन्द्रयुते जलर्क्षे सौम्येक्षिते तादृशतोयपूतः। बुधे सजीवे यदि वा सभौमे प्राकारहर्म्यमण्डपगोपुरादीन्। मानस्थिते तद्गृहनाथयुक्ते करोति जीर्णोद्धरणादि तत्र। करोति कूपादितटागभूमिं कर्मेश्वरे गोपुरभागयुक्ते। स्वदृक्कर्के वा शुभदृष्टियुक्तभाग्येश्वरेणापि निरीक्षिते वा। चन्द्रात्मजे कर्मगते तदीशे भाग्यस्थिते पापविवर्जितेऽस्मिन्। सौम्येक्षिते शोभनभावयुक्ते यज्ञस्य कर्त्ता स भवेत् तदानीम्। कर्माधिपेऽस्मिन् यदि सोमपुत्रे स्वोच्चस्थिते वा यदि धर्मराशौ। विवर्जितः स्याच्छशिराहुपापैर्यज्ञस्य कर्त्ता स भवेत्तदानीम्। कर्माधिपे स्वोच्चगते सपापे नीचांशगे नाशगतेऽपि तस्मिन्। विघ्नो भवत्येव मखस्य तस्य क्रूरादिषष्ठांशगतेऽपि चैवम्। तद्भस्थिते सोमसुते तदीशे स्वोच्चान्विते सोमसुतेन दृष्टे। शुभेक्षिते वा सबुधे स्वराशौ यज्ञस्य कर्त्ता स भवेत्तदानीम्। आज्ञास्थानाधिपे सौम्ये शुभदृष्टियुतेऽपि वा। शोभनांश-"

गते वापि जातस्त्वाज्ञाधिपो भवेत् । आज्ञास्थानगते सूर्ये भूमिपुत्रेऽथ वा युते । केन्द्रान्विते तदीशेऽपि क्रूराज्ञां करोति सः । आज्ञाधिपे मन्दयुते रन्ध्रनाथेन संयुते । क्रूरांशे केन्द्रराशौ वा क्रूराज्ञां करोति सः । मानाधिपे केन्द्रयुते शुभयुक्तेक्षितेऽपि वा । क्रूरषष्ठांशसंयुक्ते सौम्याज्ञां करोति सः । राहुमन्दयुते माने रन्ध्रे राहौ ध्वजेऽपि वा । नीचस्थे धर्मभावेशे क्रूराज्ञां करोति सः । शशाङ्के कर्किसंयुक्ते गुरुशुक्रनिरीक्षिते । पारावतादिभागस्थे सत्कीर्त्तिसहितो भवेत् । तदीशे शुभसंयुक्ते शुभमध्यगतेऽपि वा । शुभग्रहाणामंशे वा सत्कीर्त्तिरहितो भवेत् । कान्तिस्थानाधिपे सौम्ये स्वोच्चमित्रस्ववर्गगे । सौम्यषष्ठांशके वापि सत्कीर्त्तिसहितो भवेत् । तदीशे देवलोकस्थे सिंहांशे शुभनायके । बलपूर्णे विलग्नेशे सत्कीर्त्तिसहितो भवेत् । पापग्रहाणां सम्बन्धे माननाथे बलक्षये । क्रूरषष्ठांशसंयुक्ते सत्कीर्त्तिरहितो भवेत् । अपकीर्त्तियुतो जातः कर्मस्थे च रवौ शनौ । पापांशके पापदृष्टे पापमध्यगतेऽपि तत् । शुभग्रहाणां सम्बन्धे मानतन्नायकेऽपि वा । स्वोच्चे वा स्वगृहे वापि जातो मानी दृढव्रतः । दृक्कृतत्रोऽपि मानी स्यान्माने जीवेऽथ वा शुभे । तदीशे शुभसम्बन्धे शुभमध्यगतेऽपि वा । पापे माने पापदृष्टे तदीशे नीचराशिगे । पापराश्यंशके वापि मानहीनो भवेन्नरः । मानाधिपे चरांशस्थे सञ्चारसहितो भवेत् । स्थिरांशस्थैर्य्यसंहृष्टं मृगयाल हिदेहगे । षष्ठेशे कर्मराशिस्थे कर्मेशे मन्दसंयुते । केन्द्रत्रिकोणगे वापि दासी दासान् विनिर्दिशेत् । कर्माधिपस्यांशपतौ शनिसम्बन्धसंयुते । षष्ठाधिपस्य सम्बन्धे बहुदासान् विनिर्दिशेत् । शुभग्रहेण संदृष्टे कर्मराशौ तदीश्वरे । भानुपुत्रेण वा युक्ते बहुदासान् विनिर्दिशेत् । कर्मनाथेन वा भुक्तिप्रदे पूर्तिं विनिर्दिशेत् । तत्र पापसमायोगे जानुदौर्बल्यमादिशेत्" ।

वर्षलग्नात् दशमभावफलादिकं नील०ता० उक्तं यथा "सबलेऽवदपतौ खस्थे राज्यार्थसुखकीर्त्तयः । स्थानान्तराप्तिरन्यस्मिन् केन्द्रे स्वदृशुखाप्तयः । दृष्टं बली रविः खस्थः पूर्वार्जितपदाप्तिकृत् । एकादशेऽस्मिन् सख्यं स्यान्नृपामात्यगुणोत्तमैः । रविस्थानेऽन्यिहा लग्ने खे वा राज्याप्तिरौत्स्यदा । नीचेऽर्के पापसंयुक्ते भूपाद्दुःखवधं दिशेत् । सिंहे रविर्बली खस्थः स्थानलाभस्थपाश्रयः । स्थानान्तराधिकाराप्तिः इन्दुः सारपदे बली । खेशलग्नेशवर्षेशेत्थशाली राज्यदायकः । वर्षेशे राज्यसद्मेऽर्केत्थशाले महान्नृपः । शनिस्थाने कुजः पश्यन् सुखहा पापकर्मतः । नृपभीतिं वित्तनाशं दद्याद्दशमगो यदि । ईदृशे त्रिनवस्थेऽस्मिन् दग्धे नष्टेऽथवाक्षयः । मन्दोऽवदपोऽधिकारी त्रिधर्मगे धर्मतद्विदः । तस्मिन् दग्धेऽपि नष्टे च पापकृद्धर्मनिन्दकः । ईदृशीदृकफलं सूर्ये गुराविव नयार्थभाक् । ततस्था सुखहा पुण्यागमपापं स्वलाश्रयात् । सूनौ खेशे रवौ खस्थे वर्षेसुथशिलं यदि । लग्नाधिपेन राज्याप्तिरुक्ता वीर्य्यानुमानतः । धर्मकर्माधिपौ दग्धौ धर्मराज्यक्षयावहौ" ।

**दशमहाविद्या** स्त्री दशाहत्ता महाविद्या । "काली तारा महाविद्या षोडशी भुवनेश्वरी । भैरवी छिन्नमस्ता च विद्या धूमावती तथा । बगला सिद्धविद्या च मातङ्गी कमलात्मिका । एता दश महाविद्याः सिद्धविद्याः प्रकीर्त्तिताः" इति तन्त्रोक्तेषु दशसु देवीमूर्त्तिभेदेषु ।

**दशमालिक** पु०।देशभेदे २तद्रूपे ३तद्वासिजने च ब०व०। "तथैव रमणाशीनास्तथैव दशमालिकाः" भा०भी०६अ० ।

**दशमास्य** पु० दश मासान् गर्भे स्थितः यत् । दशमासान् व्याप्य गर्भे स्थिते बाले । तथाभूतस्य गर्भात् सुखनिर्गमाय पाठ्यमन्त्रत्रयं ऋ० दर्शितं यथा ।

"यथा वातः पुष्करिणीं समिङ्गयति सर्वतः । एवा ते गर्भ एजतु निरैतु दशमास्यः" ऋ० ५।७८।७ । "यथा वातो यथा वनं यथा समुद्र एजति । एवा त्वं दशमास्य सहावेहि जरायुणा" ८ । "दश मासाञ्छशयानः कुमारो अधिमातरि । निरैतु जीवो अक्षतो जीवो जीवन्त्या अधि" ९ । "एतदाद्यृक्त्रयं गर्भस्राविण्युपनिषत् ।"एतदाद्यृक्त्रयेणासौ सप्तवध्रिः स्वयोषितः । गर्भिण्याः प्रसवायाशु स्तुतवानश्विनावृषिः"।"यथा वातः पुष्करिणीं सर आदिकं सर्वतः समिङ्गयति सम्यक् चालयति एवैवं तव गर्भ एजतु कम्पताम् । इतस्ततः सञ्चरतु । दशमास्यो दश मासान् गर्भे स्थितो निरैतु" । निर्गच्छतु "वातो यथा कम्पमानो वनं कम्पयति स्वयम् । यथा समुद्रश्चलति चाल्यते वाथ वायुना । स्थित्वा दशैव मासांस्त्वं गर्भोल्बेन सुवेष्टितः । निर्गच्छ जठरान्मातुर्जरायुजस्ततः पतेत् । दशमासानुषित्वासौ जननीजठरे सुखम् । निर्गच्छतु सुखं जीवो जननी चापि जीवतु" भा० ।

**दशमिन्** त्रि० नवतेरूर्द्ध्वं दशमी साऽवस्थाभेदोऽस्त्यस्य

परत्वार्थात् इति । नवत्यूर्द्धवयस्के अतिवृद्धे अमरः ।

**दशमीस्थ** त्रि० दशम्यामवस्थायां तिष्ठति स्था-क । १अतिवृद्धे दशमशब्दे उदा० । २स्मरक्षतानां कामिनां दशानां मध्ये नाशरूपां दशां प्राप्ते च दशाशब्दे दृश्यम् ।

**दशमुख** पु० दश मुखान्यस्य । १रावणे "गत्वा चोर्द्धं दशमुखभुजोच्छ्वासितप्रस्थसन्धेः" मेघ० । २महाकालीरूपे देवीभेदे स्त्री "नीलाश्मद्युतिमास्यपाददशकां सेवे महाकालिकाम्" महाकालीध्यानम् । तस्या दशास्यवत्त्वात्तथात्वम् । दशवदनादयोऽप्यत्र ।

**दशमुखरिपु** पु० ६त० । रामे "सीतां हित्वा दशमुखरिपुर्नोपयेमे यदन्याम्" रघुः ।

**दशमूत्रक** न० दशानां मूत्राणां समाहारः । दशानां प्राणिनां गोमहिषाजाविहयगजखरोष्ट्रमानुषमानुषीणां मूत्रे । प्राणिभेदे तद्गुणाः सुश्रुते उक्ता यथा

"गोमूत्रं कटुतीक्ष्णोष्णं सक्षारत्वान्न वातलम् । लघ्वग्निदीपनं मेध्यं पित्तलं कफवातजित् । शूलगुल्मोदरानाहविरेकास्थापनादिषु । मूत्रप्रयोगसाध्ये च १गव्यं मूत्रं प्रयोजयेत् । दुर्नामोदरशूलेषु कुष्ठमेहाविशुद्धिषु । आनाहशोफगुल्मेषु पाण्डुरोगे च माहिषम्२ । कासश्वासापहं शोषकामलापाण्डुरोगनुत् । कटुतिक्तान्वितं छागम्३मीषन्मारुतकोपनम् । कासप्लीहोदरश्वासशोषवर्चोग्रहे हितम् । सक्षारतिक्तकटुकमुष्णं वातघ्नमाविकम्४ । दीपनं कटुतीक्ष्णोष्णं वातचेतोविकारनुत् । आश्वं५ कफहरं मूत्रं क्रिमिदद्रुषु शस्यते । सतिक्तं लवणं भेदि वातघ्नं पित्तकोपनम् । तीक्ष्णं क्षारे किलासे च नागं६ मूत्रं प्रयोजयेत् । गरचेतोविकारघ्नं तीक्ष्णं ग्रहणिरोगनुत् । दीपनं गार्दभं७ मूत्रं क्रिमिवातकफापहम् । शोफकुष्ठोदरोन्मादमारुतक्रिमिनाशनम् । अर्शोघ्नं कारभं८ मूत्रं मानुषन्तु९ १०विषापहम्" ।

**दशमूल** न० दशसंख्यकानां मूलानां समाहारः पात्रा० न वा ङीप् । चक्रदत्तोक्ते पाचनभेदे "विल्वश्योनाकगाम्भारीपाटलागणिकारिकाः । दीपनं कफवातघ्नं पञ्चमूलमिदं महत् । शालपर्णीपृश्निपर्णीवृहतीद्वयगोक्षुरम् । वातपित्तहरं वृष्यं कनीयः पञ्चमूलकम् । उभयं दशमूलन्तु सन्निपातज्वरापहम् । कासे श्वासे च तन्द्रायां पार्श्वशूले च शस्यते । पिप्पलीचूर्णसंयुक्तं कण्ठहृद्ग्रहनाशनम्" । अत्र वा ङीप् । दशमूलीरसे सर्पिः" चक्रद० ।

**दशमूलघृत** न० चक्रदत्तोक्ते ज्वरघ्ने घृतभेदे ।

"दशमूलीरसे सर्पिः सक्षीरे पञ्चकोलकैः । सक्षारैर्हन्ति तत्पूर्वं ज्वरकासाग्निमन्दताः । वातपित्तकफव्याधीन् प्लीहानं चापि पाण्डुताम्" । २तत्रोक्ते कासघ्ने घृतभेदे च । "दशमूलीकषायेण भार्गीकल्कं पचेत् घृतम् । दध्नतित्तिरिनिर्यूहे तत्परं वातकासनुत्" ।

**दशमूलतैल** न० चक्रदत्तोक्ते बाधिर्य्यनाशके तैलभेदे ।

"दशमूलीकषायेण तैलप्रस्थं विपाचयेत् । एतत्कल्कं प्रदायैव बाधिर्य्ये परमौषधम्" ।

**दशमूलषट्पलघृत** न० चक्रदत्तोक्ते कासादिघ्ने घृतभेदे । "दशमूलीचतुःप्रस्थे रसे प्रस्थोन्मितं हविः । सक्षारैः पञ्चकोलैस्तु कल्कितं साधु साधितम् । कासहृत्पार्श्वशूलघ्नं हिक्काश्वासनिवर्हणम् । कल्कं षट्पलमेवात्र ग्राहयन्ति भिषग्वराः" ।

**दशमूलाद्यघृत** न० चक्रदत्तोक्ते कासनाशके घृतभेदे

"दशमूलाढके प्रस्थं घृतस्याक्षसमैः पचेत् । पुष्कराह्वशटीविल्वसुरसव्योषहिङ्गुभिः । पेयानुपानं तत् देयं कासे वातकफाधिके । श्वासरोगेषु सर्वेषु कफवातात्मकेषु च"

**दशयोग** पु० दशानामङ्गानां योगः । विवाहादौ वर्ज्ये दोषभेदे तत्स्वरूपप्रतिप्रसवादिकम् उपयमशब्दे १२६८ पृ० दृश्यम् । अयं दशयोगभङ्ग इत्यन्ये । २दशहराशब्दे वक्ष्यमाणे ज्यैष्ठमासशुक्लपक्षादिदशके च ।

**दशरथ** पु० सूर्य्यवंश्ये अजन्टपात्मजे रामचन्द्रपितरि नृपभेदे मेदि० "अयोध्यायां महाराजो रघुरासीत् महाबलः । अजस्तु रघुतो जज्ञे अजाद्दशरथोऽभवत्" हरिवं० १५ अ० ।

**दशरथसुत** पु० ६त० । रामे दशरथात्मजादयोऽप्यत्र ।

**दशरश्मिशत** पु० दश रश्मिशतान्यस्य । सहस्रकिरणे सूर्य्ये "दशरश्मिशतोपमद्युतिम् । यशसा दिक्षु दशस्वपि श्रुतम् । दशपूर्वरथं यमाख्यया दशकण्ठारिगुरुं विदुर्बुधाः" रघुः ।

**दशरात्र** पु० दशभिः रात्रिभिर्निर्वृत्तः ठञ् तस्य लुक् तद्धितार्थद्वि० अच् समा० । १दशरात्रसाध्ये यागभेदे स च यागः कात्या० २५।११।१७ श्रौ० उक्तः । दशानां रात्रीणां समाहारः । २रात्रिदशके न० । अस्य रात्रान्तत्वेऽपि संख्यावाचकपूर्वकत्वात् क्लीवता । "प्रतिषेधैः समं तत्र दशरात्रमशुध्यति । यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत्" मनुः । "अथ चेद्दशरात्रं सन्निपतेत् आद्यं दशरात्रम्" शु० त० ।

**दशरूपक** न० दश रूपकाणि दृश्यकाव्यानि प्रतिपाद्यत्वेन सन्त्यत्र अच् । नाटकादिलक्षणप्रतिपादकग्रन्थभेदे ।

**दशरूपभृत्** पु० दश मत्स्यादीनि रूपाणि बिभर्त्ति भृ-क्विप्। मत्स्यादिदशाकृतिधारके विष्णौ शब्दार्थक०। दशावतारशब्दे तद्रूपाणि दृश्यानि।

**दशलक्षणक** पु० दश लक्षणान्यस्य कप्। धर्मे "दश लक्षणको धर्मः सेवितव्यः प्रयत्नतः" इत्युपक्रमे "धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः। धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्" मनुः।

**दशवाजिन्** पु० दश वाजिनो रथेऽस्य। १चन्द्रे हेमच०। "दशाश्वं श्वेतपद्मस्थं विचिन्त्योमाधिदैवतम्" चन्द्रध्या०।

**दशवार्षिक** त्रि० दशसु वर्षेषु भवः ठञ् उत्तरपदवृद्धिः। दशवर्षभवे स्त्रियां ङीप्। "पश्यतोऽब्रुवतो हानिर्भूमेर्विंशतिवार्षिकी। परेण भुज्यमानाया धनस्य दशवार्षिकी" याज्ञ०।

**दशविध** त्रि० दश विधा प्रकारा यस्य। दशप्रकारे "भेदस्तमसोऽष्टविधो दशविधो महामोहः" सां० का०। दशविधसंस्कारः।

**दशवीर** न० दश वीरा यत्र। सत्रभेदे। "तदेतच्छाक्रानां दशवीरमेषां दश वीरा जायन्ते य एतदुपयन्ति" तां० ब्रा० २५।७।४। "तदेतदुक्तं सत्रं शक्रानां दशवीरं वीरयन्त्यमित्रानिति वीराः पुत्रास्तेषां दशसंख्यानां साधकम् अतो ये दीक्षिता एतदुपयन्ति तेषामपि दश वीराः पुत्रा जायन्ते" भा०। [भिर्वशं दशव्रजम्" ऋ०८।८।२०

**दशव्रज** पु० ऋषिभेदे। "याभिः कण्वं मेधातिथिं यत्तं या-

**दशशत** न० दशगुणितं शतम्। १सहस्रसंख्यायां २तत्संख्येये च। "गवां दशशतं धनम्" भा० व० ६८ अ०।

**दशशतरश्मि** पु० दशशतं सहस्रं रश्मयोऽस्य। सूर्ये हेमच०।

**दशशताङ्घ्रि** स्त्री दश शतमङ्घ्रयोऽस्य। १शतमूल्यां २शतावर्याम् पारस्करनि०।

**दशसप्ता** स्त्री दश च सप्त चासां विष्टुतौ। साम्नो विन्यासभेदेन विष्टुतिभेदे तत्प्रकारादिकं तां० ब्रा० भाष्ये दर्शितं यथा।

"अथ सप्तदशस्तोमस्य दशसप्ताख्या विष्टुतिः। सा द्विःप्रकारा। सप्तास्थितेत्यपरा सा च द्विःप्रकारा। ततः पञ्चभ्यस्तिसृभ्यो नवभ्यश्चेत्येकः। तत्र उद्यती ततो भस्त्रेति दशसप्तसप्तास्थितयोर्भेदेन सहैत्येवं सप्त विष्टुतयः। तत्राद्यां दशसप्ताख्यां विष्टुतिं दर्शयति" भा०। "पञ्चभ्यो हिङ्करोति स तिसृभिः स एकया स एकया, पञ्चभ्यो हिङ्करोति स एकया स तिसृभिः स एकया, सप्तभ्यो हिङ्करोति स एकया स तिसृभिः स तिसृभिः दशसप्ता सप्तदशस्य विष्टुतिः" तां० ब्रा०२।७।१। "स्पष्टार्थः। आदितो द्वाभ्यां पञ्चर्चाभ्यां हिङ्करोति पर्यायाभ्यां दश। उत्तरे सप्तेति दश च सप्त चास्यां विष्टुताविति दशसप्तेयं सप्तदशस्तोमस्य विष्टुतिः"। तदुत्तरत्र खण्डादौ उद्यती सप्तास्थिताभस्त्राणां प्रकारो वर्णितस्तत्रैव दृश्यः

**दशसाहस्र** न० दश गुणितं सहस्रं परिमाणमस्य अण् उत्तरपदवृद्धिः। १दशगुणितसहस्रमिते अयुते २तत्संख्येये च "भूतानां दशसाहस्रं परिचेयं समाहृतम्" हरिवं० २५२ अ०।

**दशसाहस्रिक** त्रि०दश सहस्राणि प्रमाणमस्य ठञ् उत्तरपदवृद्धिः। अयुतमितभागादौ। "दशसाहस्रिको भागस्तेषां धात्रा प्रकल्पितः" हरिवं० ११३ अ०।

**दशस्य** त्रि० दशं दानमिच्छति क्यच् सुक् च नामधातुः दानेच्छायां प०अक० सेट् दशस्यति अदशस्यीत्। "एवा नो अग्ने विक्षा दशस्य" ऋ० ७।४२।५। "इरावती धेनुमती हि भूतं "सूयवसिनी मनुषे दशस्या" ७।६६।३।

**दशहरा** स्त्री दश पापानि हरति हृ-ट। गङ्गाजन्मदिने ज्यैष्ठशुक्लदशम्याम्।

"ज्यैष्ठे मासि सितिसुतदिने शुक्लपक्षे दशम्यां हस्ते शैलान्निरगमदियं जाह्नवी मर्त्यलोकम्। पापान्यस्यां हरति च तिथौ सा दशेत्याहुरार्याः पुण्यं दद्यादपि शतगुणं वाजिमेधायुतस्येति" शङ्खः। अपि च "अदत्तानामुपादानं हिंसा चैव विधानतः। परदारोपसेवा च कायिकं त्रिविधं स्मृतम्। पारुष्यमनृतं चैव पैशुन्यञ्चापि सर्वशः। असम्बद्धप्रलापश्च वाङ्मयं स्यात् चतुर्विधम्। परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम्। वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम्। एतानि दश पापानि हर त्वं मम जाह्नवि!। दशपापहरा यस्मात् तस्माद्दशहरा स्मृता। "ज्यैष्ठे मासि सिते पक्षे दशम्यां बुधहस्तयोः। गरानन्दे व्यतीपाते कन्याचन्द्रे वृषे रवौ। दशयोगे नरः स्नात्वा सर्वपापैः प्रमुच्यते" इति स्कन्दपुराणे काशीखण्डे। अत्र कुजबुधयोः कल्पभेदेन व्यवस्था ज्ञेया। २सेतुबन्धरामेश्वरयोः प्रतिष्ठादिने यथोक्तं स्कान्दे सेतुमाहात्म्ये "ज्यैष्ठे मासि सिते पक्षे दशम्यां बुधहस्तयोः। गरानन्दे व्यतीपाते कन्याचन्द्रे वृषे रवौ। दशयोगे सेतुमध्ये लिङ्गरूपधरं हरम्। रामो वै स्थापयामास शिवलिङ्गमनुत्तमम्। अतो-

ऽस्यां तु विशेषेण पूजा कार्य्या हितार्थिभिः”। अत्र स्नानाङ्गसङ्कल्प उक्तः गारुडे २१५ अ० यथा। “अद्य इस्ते तु नक्षत्रे दशम्यां ज्यैष्ठके सिते। दशपापहराय च अदत्तादानकल्मषम्। विरुद्धाचरणं हिंसा परदारोपसेवनम्। पारुष्याहृतपैशुन्यमसम्बद्धं प्रभाषणम्। परद्रव्याभिध्यानञ्च मनसानिष्टचिन्तनम्। एतद्दशावघाताय गङ्गास्नानं करोम्यहमिति”।

**दशा** स्त्री दन्श–अङ् नि० नलोपः। १अवस्थायां २दीपवर्त्त्याम्, मेदि० “अपेक्षन्ते न च स्नेहं न पात्रं न दशान्तरम्। परोपकारनिरता मणिदीपा इवोत्तमाः” इत्युद्भटः। ३चित्ते, अजयपालः। ४कालकृतविशेषरूपायां ५गर्भवासजन्मादिबाल्ययौवनादिरूपायामवस्थायाञ्च। ताश्च “गर्भवासः१जन्म२बाल्यं३ कौमारं४ पौगण्डम्५ यौवनं६ स्थाविरता७ जरा८ प्राणरोधः९ नाशः१०” नीलकण्ठेनोक्ताः दश वेद्याः। ५कामकृते विरहिण्यां नेत्ररागाद्यवस्थादशके, ज्योतिषोक्ते नक्षत्रानुसारेण सूर्य्यादिग्रहाणां स्वामित्वेन ६भोग्यकाले च। तत्र स्मरकृतदशाश्च “नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ सङ्कल्पः। निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः। उन्मादो मूर्च्छा मृतिरित्येताः स्मरदशा दशैव स्युः”। ग्रहाणां स्वस्वसूचितफलविपाककालभेदरूपा दशा च नानाविधा तत्र “कलौ नाक्षत्रिकी दशा” इत्युक्तेः नक्षत्रसूचितैव दशा ग्राह्या साऽपि नानाविधा षट्त्रिंशद्वर्षीया मङ्गलादियोगिनीदशा, अष्टोत्तरीयवर्षात्मिका रव्याद्यष्टग्रहाणां दशा। विंशोत्तरीयवर्षात्मिका सूर्य्यादिनवग्रहैर्विपच्यमानफलात्मिका च तत्र योगिनीदशा तु “गुणं संयोज्य जन्मर्क्षं वसुभिर्भागमाहरेत्। मङ्गलाद्यास्त्रिरावृत्ता ह्यष्टौ ज्ञेया महादशाः”। “मङ्गला पिङ्गला धन्या भ्रामरी भद्रिका तथा। उल्का सिद्धा सङ्कटा च एकोत्तरमिताः क्रमात्” इत्युक्त्यनुसारेण ज्ञेया। तदानयनञ्चान्यत्र “आर्द्रादिभिस्त्रिरावृत्त्या ह्यष्टौ ज्ञेयाः क्रमादमूः। मङ्गला पिङ्गला धन्या भ्रामरी भद्रिका तथा। उल्का सिद्धा सङ्कटा च एकैकोत्तरवत्सरा। अश्विन्यादित्रयं तत्र भ्रामर्य्यादित्रयेऽधिकम्। सिद्धायां रोहिणी शेषे सङ्कटायां मृगः परः। मङ्गलायाः पतिश्चन्द्रः पिङ्गलाया रविस्तथा। धन्यायास्तु बुधः स्वामी भ्रामर्य्या धरणीसुतः। भद्रिकायाः पतिर्जीव उल्काया रविनन्दनः। सिद्धायाः भार्गवः स्वामी सङ्कटायास्तु दानवः” इत्येवं क्रमात् दशाज्ञेया। तासां सुखेन ज्ञानाय

### योगिनीदशाचक्रम्।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| दशानाम | म | पि | ध | भ्रा | भ | उ | सि | सं० |
| तदीशाः | च | र | बु | कु | जी | श | शु | रा |
| मानवर्षाः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ |
| जन्मनक्ष- | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ |
| त्रानुसारेण | १४ | १५ | १६ | १७ | १८ | १९ | २० | २१ |
| तासां प्रवेश- | २२ | २३ | २४ | २५ | २६ | २७ | ४ | ५ |
| नक्षत्राणि। | | | | १ | २ | ३ | | |

त्रैराशिकेन नक्षत्रभुक्तकालमपहाय प्रकृतदशाकालात् गतभोग्यकालानुसारेण दशाकालाः कल्प्याः एवं सर्वत्र।

विंशोत्तरीयदशा तु “रविश्चन्द्रस्तथा भौमो बुधजीवौ शनैश्चरः। बुधः केतुः भृगुश्चेति कृत्तिकादौ त्रिधा भ्रमेत्”। दशावर्षाश्च “षट् सूर्य्यस्य दशा वर्षाः दिङ्मिता रजनीपतेः। कुजस्य सप्त वर्षाः स्युः राहोरष्टादशैव तु। गुरोः षोड़श विज्ञेयाः शनेरेकोनविंशतिः। विदः सप्तदश ज्ञेया केतूनां सप्त कीर्त्तिताः। भृगोर्विंशतिरुद्दिष्टा सूर्य्यादीनां महादशाः”।

### विंशोत्तरीयदशाचक्रम्।

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| दशेशाः | र | च | म | रा | जी | श | बु | के | शु |
| वर्षमानम् | ६ | १० | ७ | १८ | १६ | १९ | १७ | ७ | २० |
| जन्मनक्षत्रा- | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ |
| नुसारेण | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ | २० |
| प्रवेशनक्षत्राणि | २१ | २२ | २३ | २४ | २५ | २६ | २७ | १ | २ |

त्रैराशिकेन प्राग्वद्भुक्तभोग्यकालानुसारेण दशाकल्पनम्।

एतद्दशफलानि सर्वार्थचिन्तामण्यावुक्तानि यथा

“दशानुरोधेन फलं वदन्ति मुनीश्वरा जातशुभाशुभं तत्। सारं समुद्धृत्य तदेव वक्ष्ये भेदं यथा विस्तरतो दशानाम्। दीप्तः१ स्वस्थ२स्तु मुदितः३ शान्तो४ हीनो५ऽतिदुःखितः६। विकलश्च७ खलः८ कोपी९ नवधा खेचरो भवेत्। उच्चस्थः खचरो दीप्तः१ स्वस्थः२ स्वक्षेत्रगो मतः। मुदितो३, मित्रभे ४शान्तः समगो हीनको५ऽधरः। शत्रुभे दुःखसंयुक्तो६ विकलः७ पापसंयुतः। खलः८ पराजितो ज्ञेयः कोपी९ स्यादर्कसंयुतः। पृथक् पृथक् फलं तेषां दशाकाले विशेषतः। तत्र नामानुरोधेन परिपाके वदन्ति हि। पाके प्रदीप्तस्य वराधिपत्यसत्साह शौर्य्यं धनवाहनञ्च। स्त्रीपुत्रलाभं सुखबन्धुपूजां क्षितीश्वरान्मानमुपैति

विद्याम्[1]। स्वस्थस्य खेटस्य दशाविपाके स्वस्थो नृपाप्तधनादिसौख्यम्। विद्यायशःप्रीतिमहत्त्वताश्च दारार्थभूम्यात्मजधर्ममेति[2]। सुदान्वितस्यापि दशाविपाके वस्त्रादिभूगन्धसुतार्थधैर्यम्। पुराणधर्मश्रवणादिगानदानादियानाम्बरभूषणाप्तिम्[3]। दशाविपाके सुखधैर्यमेति शान्तस्य[4] भूपुत्रकलत्रयानम्। विद्याविनोदान्वितधर्मशास्त्रं बह्वर्थदेशाधिपपूज्यताञ्च। स्थानच्युतिर्बन्धुविरोधिता च हीनस्य[5] खेटस्य दशाविपाके। जीवत्यसौ कुत्सितहीनवृत्त्या त्यक्तोजनै रोगनिपीड़ितः स्यात्। दुःखान्वितस्यापि[6] दशाविपाके नानाविधं दुःखमुपैति नित्यम्। विदेशगो बन्धुजनैर्विहीनश्चौरादिभूपैर्भयमाप्रपन्नः। वैकल्यखेटस्य[7] दशाविपाके वैकल्यतां याति मनोविकारम्। पित्रादिकानां मरणं विशेषात् स्त्रीपुत्रयानाम्बरचोरपीड़ाम्। दशाविपाके कलहं वियोगं खलस्य[8] खेटस्य पितुर्वियोगम्। मतुञ्चनानाधनभूमिनाशमुपैति नित्यं स्वजनैश्च निन्द्यः। कोपान्वितस्यापि[9] दशाविपाके पापं समायाति बहुप्रकारैः। विद्यावधः स्त्रीधनभूमिनाशं राज्ञाञ्च वित्तं हरतेऽत्र रोगी"।

अथ परमोच्चादिगरविदशाफलानि। भानोर्दशायां परमोच्चगस्य भृत्यार्थदारात्मजकीर्त्तिशौर्यम्। संमाननं भूमिपतेः सकाशादुपैति सञ्चारविनोदगोष्ठीम्। उच्चान्वितस्यापि रवेर्दशायां गोवृद्धिधान्यार्थपरिश्रमञ्च। संसारयुग्बन्धुजनैर्विरोधं देशाद्विदेशञ्च रतिप्रकोपात्। प्रचण्डवेश्यागमनं क्षितीशादुपैति हृष्टिं रतिकेलिमानम्। मृदङ्गभेरीरवयुक्तयावमन्योन्यवैरं लभते मनुष्यः। आरोहिणी वासरनायकस्य दशा महत्त्वं कुरुतेऽतिसौख्यम्। परोपकारं सुतदारभूमिगोवाजिमातङ्गकृषिक्रियादीन्। दशावरोहा दिननायकस्य कृषिक्रियावित्तगृहेष्टनाशम्। चोराग्निपीड़ां कलहं विरोधं नरेशकोपं कुरुते विदेशम्। नीचस्थितस्यापि रवेर्विपाके मानार्थनाशं क्षितिपालकोपात्। स्वबन्धुनाशं सुतमित्रदारैः पित्रादिकानामपकीर्त्तिमेति। अत्यन्तनीचान्वितसूर्यदाये विपत्तिमाप्नोति गृहच्युतिञ्च। विदेशयानं मरणं गुरूणां स्त्रीपुत्रगोभूमिकृषेर्विनाशम्। मूलत्रिकोणस्थरवेर्विपाके चेतार्थदारात्मजबन्धुसौख्यम्। राजाश्रयं गोधनमित्रलाभं स्वस्थानयानादिकमेति राज्यम्। स्वक्षेत्रगस्यापि रवेर्दशायां स्वबन्धुसौख्यं कृषिवित्तकीर्तिम्। विद्यायशःप्रार्थित राजपूजां स्वभूमिलाभं समुपैति विद्याम्। दशाविपाके ह्यधिशत्रुगस्य रवेः प्रनष्टार्थकलत्रपुत्रः। गोमित्रपित्रादिशरीरकष्टं शत्रुत्वमायाति जनैः समन्तात्। सपत्नराशिस्थितसूर्यदाये दुःखी परिभ्रष्टसुतार्थदारः। नृपाग्निचोरैर्विपदं विषादं पित्रोर्विरोधञ्च दशान्तमेति। स्वमित्रराशिस्थितसूर्यदाये स्वभृत्यमित्रात्मजराजपूजाम्। खगेन्द्रवासं स्वजनस्य सङ्गाद् यानादिभूषाम्बरताम्रलाभम्। अत्यन्तमित्रर्क्षगतस्य भानोर्दशाविपाके ह्यतिसौख्यमेति। स्त्रीपुत्रधान्यार्थमनोविलासतटाकयानाम्बरभूषणानि। समर्क्षगस्यापि रवेर्दशायां समञ्जनैः स्यात् कृषिभूमिधान्यम्। गोवाजियानाम्बरदेहसौख्यं स्त्रीपुत्रदोषं रणपीड़ितः स्यात्। नीचान्वितस्यापि रवेर्दशायां नीचानुवृत्त्या कुनखी कुशीलः। स्त्रीपुत्रधान्यार्थपशुक्रियादिमनोविकारं समुपैति हेयम्। उच्चान्वितस्यापि रवेर्दशायां मनोविलासं लभते स्ववृत्त्या। तीर्थाभिषेकं हरिकीर्त्तनञ्च प्राकारकूपादिपुराणशास्त्रम्। पापान्वितस्य द्युमणेर्विपाके नित्यं मनः क्लिश्यति हेयबुद्ध्या। कुभोजनं कुत्सितवस्त्रपानं कुशीलवृत्त्या स्वधनं क्षयत्वम्। दिनाधिनाथस्य शुभान्वितस्य पाके सुखं भूमिधनादिवस्त्रम्। हृष्टैर्विलासं स्वजनैः समाजं कल्याणवाग्जालविनोदगोष्ठीम्। पापेक्षितस्यापि सहस्रभानोर्दशाविपाके परमन्तु दुःखम्। पित्रोर्विनाशं सुतदारकष्टं चोराग्निभूपालकृतं क्षयत्वम्। करोति भानुः शुभवीक्षितश्चेत् विद्यायशस्वी सुतवाग्विलासम्। कान्तिप्रतापं रतिकेलिसौख्यं पित्रोः सुखं भूपतिमाननां च। केन्द्रान्वितस्यापि दिवाकरस्य दशाविपाके नृपदण्डदुःखम्। स्थानच्युतिम्बन्धुवियोगमेति भङ्गः कृषेर्वित्तपरिश्रमञ्च। त्रिकोणसंयुक्तरवेर्विपाके बुद्धिभ्रमं राजविमाननञ्च। सौख्यादिहानिं निधनं पितुश्च कर्म्मादिवैकल्यमुपैति काले। उच्चांशकस्य च दशा विदधाति वृत्तिं नित्यं प्रतापजनितां महतीं श्रियञ्च। नानाविनोदललितं रतिकेलिसौख्यं स्त्रीवस्त्रलाभमनिशं पितृवर्गनाशम्। नीचांशयुक्तस्य रवेर्दशायां भार्यार्थभूपुत्रविदेशयानम्। त्यक्तोजनैर्बन्धुविकुत्सितस्तु मनोविकारं ज्वरमेहरोगम्। आदौ सूर्यदशायां दुःखं पितृरोगकृतभयश्चाधिः। मध्ये पशुधनहानिश्चान्ते विद्यामहत्त्वञ्च। दशाविपाके धनहानिमेति षष्ठस्थभानोरतिदुःखजालम्। गुल्मक्षयोद्भूतपवित्ररोगं मूत्रादिकृच्छ्रं त्वथवा प्रमेहम्। रन्ध्रस्थभानोरपि वा दशायां देहस्य कष्टं त्वथवाग्निचिह्नम्।

चातुर्थिकं नेत्रविकारकासं ज्वरातिसारं स्वपदच्युतिञ्च। भानोर्द्वादशगस्य चेद्यदि दशा क्लेशार्थहानिं क्रमं स्त्रीवन्धात्मजभूमिनाशमथ वा पित्रोर्विनाशं कलिम्। स्थानात् स्थानपरिभ्रमं विषकृतं राज्ञोभयं पादरुक् विद्यावादविनोदगोष्ठिकलहं गोवाजिसंपीड़नम्। पुत्रोत्पत्तिविपत्तिमत्र कुरुते भानोर्धनस्थस्य वा क्लेशबन्धुवियोग दुःखकलहं वाग्दूषणं क्रोधनम्। स्त्रीनाशं धननाशनं नृपभयं भूपुत्रयानाम्बरं सर्वं नाशमुपैति तत्र शुभयुक् वाच्यं न चैतत्फलम्। भानोर्विक्रमयुक्तस्य दशा धैर्यं महत् सुखम्। नृपमाननमर्थाप्तिं भ्रातृवैरं विपत्तथा। सुखस्थितस्यापि रवेर्दशायां भोगार्थभूक्षेत्रकलत्रहानिम्। क्षेत्रादिनाशं स्वपदच्युतिं वा यानच्युतं चोरविषाग्निशस्त्रैः। दारान्वितस्यापि रवेर्दशायां कलत्ररोगस्तथ वा म्रृतिर्वा। कुभोजनं कुत्सितपाकजातं क्षीरादिदध्याज्यविहीनमन्नम्। कर्मस्थितस्यापि रवेर्दशायां राज्यार्थलाभं समुपैति धैर्यम्। उद्योगसिद्धिं यशसा समेतं जयं विवादे नृपमाननं च। आयस्थितस्यापि दशा विपाके भानोर्धनाप्तिं शुभकर्मलाभम्। उद्योगसिद्धिं सुतदारसौख्यं यानादिभूषाम्बरदेहसौख्यम्। संज्ञाध्याये यस्य यद्द्रव्यमुक्तं कर्माजीवे यस्य यच्चोपदिष्टम्। भावस्थानालोकयोगोद्भवं च तत्तत्सर्वं तस्य योज्यं दशायाम्। सूर्ये स्थानबलाधिके कृषिधनं गोभूमियानाम्बरं सौख्यं राजसु माननं परधनैः संयुज्यते कान्तिमान्। तत्पाके शयनाम्बरादि लभते सर्वोपकारं महाकीर्त्तिं भूषणमिष्टबन्धुसहितं तीर्थाभिषेकं महत्। रविर्यदा स्थानबलेन हीनस्तत्पाककाले बलमर्थनाशम्। स्थानच्युतिं बन्धुविरोधतापं देशाद्विदेशं समुपैति दुःखम्। दिग्वीर्य्युक्ते दिवसेश्वरे तु दिगन्तराक्रान्तिधनादिसौख्यम्। तत्तद्दिशः प्राप्तयशोऽर्थभूमिर्नो चेत्तथा तादृशमत्र नास्ति। तत्कालमानात्ततुते बलिष्ठे रवौ विपाके कृषिभूमिवित्ते। उद्योगसिद्धिं नृपमाननाञ्च हीने रवौ कालबलेन नाशम्। निसर्गतः सर्वमुपैति कालरवौ तु नैसर्गिकवीर्य्युक्ते। यानार्थभूषाम्बरदेहसौख्यं हीने रवौ चोरनृपाग्निभीतिम्। रवौ तु चेष्टाधिकवीर्य्युक्ते स्वचेष्टितार्थागममेति सौख्यम्। नृपसमानं सुतदारसौख्यं क्ष्म्यादियानाम्बरमत्र हीने। रवौ खगानां बलदृष्टियुक्ते त्वचिन्तयित्वा सकलं च सौख्यम्। तज्जायते तत्परिपाककाले तेनैव हीने सकलं विनाशम्। क्रूरादिषष्ठांशरिवेर्दशायां स्थानच्युतिं वा नृपचौरभीतिम्। कोपाधिकं तत्र शिरोरुजं च पित्रादिनाशं त्वथवा तदीयम्। स्वद्वंशषष्ठांशरवेर्दशायां स्वद्वंशपानाम्बरभूषणाप्तिम्। नामद्वयं राजसुपजितञ्च वेदान्तशास्त्रागमधर्मशास्त्रम्। पारावतांशयुतस्य भानोर्दशाविपाके महतीञ्च कीर्त्तिम्। बन्धुर्धदेशाधिपमाननं च पुत्रादिसंमित्रकलत्रलाभम्। स्त्रोच्चादिजन्यं फलमाङ्करादौ पश्चात् फलं खेचरदृष्टिजन्यम्। मध्ये फलं स्थानभवं तथैव पापग्रहाणामिह योजयन्ति। भुजङ्गमत्र्यंशयुतस्य भानोर्दशाविपाकेऽहिभयं विषाद्वा। नृपाग्निपातित्वमनेकदुःखं पाशादिभत्र्यंशयुतस्य चैवम्। स्वोच्चस्थोऽपि दिनेशो नीचांशे चेत्कलत्रधनहानिः। स्वकुलजबन्धुविरोधः पित्रादीनां तथैव सुनिवाक्यम्। उच्चांशकयुतो भानुर्नीचस्थोऽपि महत्सुखम्। करोति राज्यभारं च दशान्ते विपदं क्रमात्"।

अथोच्चादिगचन्द्रदशाफलानि "अत्युच्चगस्यापि निशाकरस्य दशाविपाके कुसुमाम्बरञ्च। महत्त्वतामेति कलत्रलाभं धनायतिं पुत्रमनोविलासम्। उच्चस्थितस्यापि निशाकरस्य प्राप्तौ दशायां सुतदारवित्तम्। मिष्टान्नपानाम्बरभूषणाप्तिं विदेशयानं स्वजनैर्विरोधम्। आरोहिणी चन्द्रदशा प्रपन्ना स्त्रीपुत्रवित्ताम्बरसौख्यकीर्त्तिम्। करोति राज्यं सुखभोजनञ्च देवार्च्चनं भूसुरतर्पणञ्च। निशाकरस्याप्यवरोहकाले स्त्रीपुत्रमित्राम्बरसौख्यहानिम्। मनोविकारं स्वजनैर्विरोधं चोराग्निभूपैः पतनं तटाके। नीचांशगस्यापि निशाकरस्य प्राप्तौ दशायां विविधार्थहानिम्। कुभोजनं कुत्सितराजसेवा मनोविकारं समुपैति निद्राम्। मूलत्रिकोणस्थितचन्द्रदाये नृपाद्धनं भूमिसुतार्थदारान्। प्राप्नोति भूषाम्बरमानलाभं सुखं जनन्या रतिकेलिलोलम्। स्वक्षेत्रगस्यापि निशाकरस्य नृपाद्धनप्राप्तिमुपैति सौख्यम्। प्रचण्डवेशग्रागमनं क्षितीशात् संमाननं स्त्रीसुतबन्धुसौख्यम्। निशाकरस्याप्यतिशत्रुराशिं गतस्य दाये कलहोऽर्थनाशम्। कुवस्त्रतां कुत्सितभोजनञ्च क्षेत्रार्थदारात्मजतापयानम्। यानाम्बरालङ्करणादिहानिं विदेशयानं परिचारकत्वम्। देशान्तरे भ्रास्यति बन्धुहीनो दुःखी परिक्लिश्यति शत्रुगेहे। मित्रर्क्षगस्यापि निशाकरस्य पाकेऽर्थलाभं क्षितिपालमैत्रीम्। उद्योगसिद्धिं जलवस्तुलाभं चित्राम्बराभूषणवाग्विलासम्। सुधाकरस्याप्यतिमित्रराशिं गतस्य

दाये स्वतिसौख्यमेति। विद्याविनोदाङ्कितराजपूजां बलात्मदारात्मजकामलाभम्। दशाविपाके समराशिगस्य कलानिधेः काञ्चनभूमिलाभम्। किञ्चित्सुखं वाय्वररोगपीड़ां विदेशयानं लभते मनुष्यः। नीचस्थितस्य हि दशा विपदं महार्त्तिं क्लेशार्थदुःखवनवासमुपैति काले। कारागृहं निगड़पादलगात्रहीनश्चौराग्निभूपतिभयं सुतदारशेषम्। क्षीणेन्दुपाके सकलं विहीनं राज्यार्थभूपुत्रकलत्रमित्रम्। उन्मादचित्तं स्वजनैर्विरोधमखिलमायाति कुशीलवृत्त्या। पूर्णेन्दुपाके परिपूर्णमेति विद्याविनोदाङ्कितराजपूजाम्। स्त्रीपुत्रभृत्यार्थमनोविलासं विशेषतः शोभनकर्म्मलाभम्। केनापि सौम्यस्य वियच्चरेण युक्तस्य चन्द्रस्य दशाविपाके। मनःप्रसादं मदनाभिरामं स्त्रीपुत्रभृत्यादिविनोदगोष्ठीम्। पापान्वितस्यापि निशाकरस्य पाकेऽग्निचौरक्षितिपालकोपैः। दुःखं सुतस्त्रीसुतबन्धुहानिं विदेशयानं त्वशुभादिकर्म्म। चन्द्रस्य सौम्यग्रहसंयुतस्य प्राप्तौ दशायां शुभकर्म्मलाभम्। गोभूहिरण्याम्बरभूषणानि तीर्थाभिषेकं परदारसौख्यम्। पापेक्षितस्यापि निशाकरस्य दशाविपाके विफलं सुकर्म्म। कोपाधिकं कुत्सितभोजनञ्च मातुर्वियोगं स्वजना तदीयम्। निशाकरस्यापि शुभेक्षितस्य परोपकारं महतीं च कीर्त्तिम्। इष्टार्थबन्ध्वागमभूषणानं अलङ्क्रियावस्त्रमनोविलासम्। मूलत्रिकोणगेन्दोर्द्दशां प्रपन्नो नरः सुबन्धुकोषः। बहुपुत्रवान् विनीतो बन्धुविरोधं प्रधानतां याति। सुखस्थितस्यापि निशाकरस्य मातुर्वियोगं सुखयानभूमिम्। कृषेर्धनाप्तिं गृहकर्म्मलाभकीर्त्तिं स्वनामाङ्कितपद्यजालम्। दारान्वितस्यापि निशाकरस्य पाके कलत्राप्तिमुदाहरन्ति। सुपुत्रसौख्यं शयनाम्बरञ्च प्रमेहमूत्रादिकशं मनोज्ञम्। कर्म्मस्थितस्यापि दशा प्रपन्ना चन्द्रस्य कीर्त्तिं लभते सुविद्याम्। यज्ञादिकर्म्माप्तिमनेकसौख्यं भूपुत्रयानाम्बरबन्धुपूजाम्। नीचांशगस्यापि दशा ददाति रोगं महत्तरं चेन्दोः। पादाक्षिरोगपीड़ां युद्धेषु पराजयं गतोत्साहम्। उच्चांशगस्यापि दशा ददाति सौख्यं महत्तरं चेन्दोः। नानाविधधनलाभं भूपतिसम्मानदेहपुष्टिं च। चन्द्रदशायामादौ नरपतिसम्माननकीर्त्तिसौख्यं च। मध्ये स्त्रीसुतनाशं गृहधनसौख्याम्बरं चान्ते। षष्ठस्य चन्द्रस्य दशा प्रपन्ना करोति दुःखं कलहं वियोगम्। चौराग्निभूपालभयं जलेन मूत्रादिकृच्छ्रं जननाशमाशु। रन्ध्रस्थितस्यापि दशा प्रपन्ना देहस्य कार्श्यं जलभीतिदुःखम्। विदेशयानं स्वजनैर्विरोधं कुभोजनं मातृजनेषु नाशम्। रिष्फगचन्द्रदशायां प्राप्तौ क्षतिनाशनं कुरुते। राज्ञोऽन्नतधनभाग्यं स्थानविनाशं महत्तरं दुःखम्। चन्द्रस्य वित्तस्थितिपाककाले वित्तात्मजस्त्रीसुखभोगभाग्यम्। मिष्टान्नपानं रतिकेलिसौख्यं धनागमं पुण्यजलाभिषेकम्। तृतीयराशिस्थनिशाकरस्य दशा महत्सौख्यमनेकवित्तम्। मनो दृढं भ्रातृजनादिसौख्यं कृष्यन्नयानाम्बरभूषणाप्तिम्। लाभस्थितस्यापि निशाकरस्य प्राप्तौ दशायां विविधार्थलाभम्। मृष्टान्नपानाम्बरकेलिलोलं स्त्रीपुत्रलाभं तु मनोविलासम्। दिनेश्वरेणाहतचन्द्रदाये प्राप्नोति दुःखं स्वजनैर्विरोधम्। भार्य्याक्षयं भूपभयाग्निचौरैर्मातुर्वियोगं कृषिधान्यनाशम्। चन्द्रे स्थानबलाधिके धनसुखं कीर्त्तिञ्च विद्यागमं देवब्राह्मणतर्पणं नृपधनान्याप्नोति भूमिं धनम्। क्षीरान्नाम्बरभूषणं कृषिधनं गोविक्रियासेवनं मिष्टान्नादिरसायनं फलयुतं दध्याज्यमाल्याम्बरम्। निशाकरे स्थानबलैर्विहीने स्थानार्थनाशं स्वपदच्युतिञ्च। स्वबन्धुनाशं त्वथ वा वियोगं कृषेर्विनाशं समुपैति काले। निशाकरे दिग्बलसंयुतेऽस्मिन् दिगन्तरादागतवस्तु चित्रम्। विद्यागमं भूपतिमित्रताञ्च स्वबन्धुपूजां गजवाजिभूमिम्। चन्द्रे तथा कालबलान्वितेऽस्मिन् तुरङ्गयानं कृषिगोमहीश्च। विद्यादिघोषं नवकेशदन्तचर्म्माम्बरालङ्कृतवाहनञ्च। निसर्गवीर्य्यान्वितचन्द्रदाये निसर्गतश्चापि करोति सौख्यम्। अयत्नतो वाहनदेशलाभं नृपालपूजां बहुवाहनञ्च। चन्द्रे यदा दिग्बलवीर्य्ययुक्ते कृपाकटाक्षेण नरेश्वरस्य। समस्तभाग्यं समुपैति सौख्यं परोपकारं च मनोऽभिलाषम्। क्रूरादिषष्ठांशसमन्वितस्य दाये शशाङ्कस्य बहुत्वदुःखम्। स्त्रीपुत्रनाशं क्षितिपालकोपं विद्याविवादं कलहं जनैश्च। मृदंशषष्ठांशसमन्वितस्य चन्द्रस्य दाये बहुपुत्रलाभम्। भृत्यार्थलाभं विजयं सुखं च कीर्त्तिञ्च विद्यां लभते विशेषात्। पारावतांशसमन्वितस्य चन्द्रस्य दाये महतीं च कीर्त्तिम्। विद्याविनोदं लभते च सौख्यं देवार्च्चनं पुण्यजलाभिषेकम्। क्रूरदृक्काणसंयुक्तचन्द्रो दिशति रोगिताम्। कार्श्यं पापसमायुक्तं गोत्राद्भूपालपीड़नम्। स्यादौ मात्रफलं प्रोक्तं स्थानजन्यं ततः फलम्। स्वांशोद्भवं फलं पश्चाद्दृग्गृहजातफलं तथा”।

अथोच्चादिस्थभौमदशाफलम्। “स्वतुङ्गभूतस्य दशाव-

काले क्षेत्रार्थलाभं समरे जयञ्च । आधिक्यमन्वेति नरेशमानसहोदरस्त्रीसुतवाग्विलासम् । उच्चक्षगतस्य हि दशा धरणीसुतस्य प्राप्नोति राज्यमथवा क्षितिपाच्च वित्तम् । भूमेध्यदारसुतबन्धुसमागमं च यानादिरोहणविशेषविदेशयानम् । आरोहिणी भूमिसुतस्य सौख्यं दशा तनोत्यत्र नरेन्द्रपूजाम् । प्रधानताश्वैर्यमनोऽभिलाषं भाग्योत्तरं गोगजवाजिसङ्घम् । धरासुतस्याप्यवरोहकाले स्थानार्थनाशं कलिकोपदुःखम् । विदेशवासं स्वजनैर्विरोधं चोराग्निभूपैर्भयमेति कष्टम् । नीचस्थितस्यापि धरासुतस्य दाये कुवृत्त्या स्वजनादिरक्षाम् । कुभोजनं गोगजवाजिनाशं स्वबन्धुनाशं नृपवह्निचोरैः । मूलत्रिकोणस्थितभौमदाये मिष्टान्नपानाम्बरभूषणाप्तिम् । पुराणधर्मश्रवणं मनोज्ञं भ्रात्रादिसौख्यं कृषिलाभमेति । स्वक्षेत्रगस्यापि धरासुतस्य दशाविपाके लभतेऽर्थभूमिम् । स्थानाधिपत्यं सुखवाहनञ्च नामद्वयं भ्रातृसुखं सुखाप्तिम् । धरासुतस्याप्यतिशत्रुराशिं गतस्य दाये कलहादिदुःखम् । नरेशकोपं स्वजनैर्विरोधं भूम्यर्थदारात्मजमित्ररोगम् । भूनन्दनस्याप्यरिराशिगस्य दशाविपाके समरे च पीड़ाम् । शोकाग्निभूपालविषैः प्रमादं पीड़ातिकृच्छ्रादिगुदाक्षिरोगम् । मित्रर्क्षगस्यापि कुजस्य दाये मित्रत्वमायाति सपत्नसङ्घैः । चोराग्निमान्द्याक्षिविषादभूमिं कृषेर्विनाशं कलिकोपदुःखम् । कुजस्य दाये त्वतिमित्रराशिं गतस्य भूपालकृतार्थभूमिम् । वस्त्रादियज्ञादिविवाहदीक्षामुपैति देशान्तरलब्धभाग्यम् । धरासुतस्यापि समर्क्षगस्य नृहोपकार्य्यं स्वजनप्रमाणात् । स्त्रीपुत्रभृत्यात्मसहोदराणां शत्रुत्वमाप्नोति नृपाग्निपीड़ाम् । नीचग्रहेणापि समन्वितस्य धरासुतस्यातिमनोविकारम् । मेध्यत्वहत्तिं परकीयमन्नं स्त्रीपुत्रनाशं नृपवह्निचोरैः । किञ्चित् सुखं भोजनवस्त्रपानं कष्टेन वृत्तिं नृपपूजनञ्च । उच्चान्वितेनापि समन्वितस्य भौमस्य दाये सुतदारपीड़ाम् । पापान्वितस्यापि कुजस्य दाये पापानि कर्माणि करोति नित्यम् । देवद्विजानां पशुदेवतानां सहोदराणाञ्च कुमार्गवृत्त्या । शुभान्वितस्यापि कुजस्य दाये कैश्चित् सुखं देहकृशाङ्गरोगम् । भूपैर्विवादं समरे जयं च विद्याविवादं परदेशवासम् । शुभेक्षितधरासूनोर्दाये भूम्यर्थनाशनम् । तस्मिन् गोचरसंयुक्ते त्वत्यन्तं शोभनं भवेत् । आरस्य पापग्रहवीक्षितस्य प्राप्तौ दशायां बहुदुःखकष्टम् । जनैः परित्यक्तकलत्रमित्रो देशान्तरस्थः क्षितिपालकोपात् । केन्द्रगतभौमदाये चोरविषाद्यानुपैति दुःखानि । कलहो वाग्विरोधं लभते देशान्तरं याति । चतुर्थराशिस्थितभौमदाये स्थानच्युतिं बन्धुविरोधिताञ्च । चोराग्निपीड़ां नृपतेः सकाशात् भीतिं परे दुर्गपदे प्रयाति । कलत्रयुक्तस्य कुजस्य दाये कलत्रहानिर्गुदमूत्रकृच्छ्रम् । अगोचरस्थस्य च तादृशं फलं तदन्यथा चेत् फलमन्यथैव । कर्मस्थितस्यापि कुजस्य पाके कर्मादिवैकल्यमुपैति दुःखम् । उद्योगभङ्गं त्वपकीर्त्तिमेति विद्यासुतस्त्रीधनमानहानिः । अर्कगभौमदशायां दधाति शोकं स्त्रिया विरोधं च । राज्याच्च्युतिं विपक्षाद्देशाद्देशान्तरं याति । वित्तगभौमदशायां संप्राप्तौ तस्य हानिमुपयाति । स्वकुलाढ्यत्वं लभते नृपहृतवित्तं सुखाक्षिरोगञ्च । भ्रातृस्थानगतस्य सौख्यफलदो भूनन्दनोऽरातिहा धैर्यं वित्तसुतार्थदारसहजैः सङ्गं नृपात् पूज्यताम् । पुत्रस्थानगतस्य पुत्रमरणं बुद्धिभ्रमं जायतां शत्रुक्षेत्रगतस्य भूमिसहजैर्दुःखं महारोगभाक् । पञ्चमस्थधरासूनोर्दाये कीर्त्तिं विवेकिताम् । नेत्ररोगं त्वर्थनाशं दद्यात् कलहमेव वा । मरणपदस्थो भौमः करोति दुःखं महद्भयं पाके । स्फोटकमन्यविरोधं स्थानविनाशं विदेशयानञ्च । नवमस्थधरासूनोर्दशापाके पदच्युतिम् । गुरूणां च तथा कष्टं तपोविघ्नं महद्भयम् । आयस्थभौमदाये करोति राज्यार्थभूपसम्मानम् । समरे जयप्रतापं वागुपकारं मनोजवं कीर्त्तिम् । व्ययगतभौमदशायां प्राप्तौ धनहृतं नृपाद्भीतिम् । स्थानसुतदारनाशं भ्रातृणां विदेशवासञ्च । उच्चांशसंयुक्तधराजकाले मनोभिलाषं विजयं सुखञ्च । प्रचण्डदाक्ष्योगमनं नृपस्य प्रधानतां याति सुगन्धपद्यम् । नीचांशभौमदाये नीचयुतेऽत्यन्तकर्मवैकल्यम् । धनहानिभूपदण्डः शिश्नोदरपरायणोऽशीलः । भौमदशायामादौ लभते विविधार्थमानहानिं च । मध्येऽग्निभूपचोरैर्भीतिं तत्र विनिर्दिशेन्मतिमान् । अन्ते भ्रातृवियोगं सुतधनदाराग्निगुल्ममूत्रादिम् । भौमेऽप्येवं न भवेद्गोचरयुक्ते विशेषतः कथयेत् । भौमस्य संस्थानबलान्वितस्य दशाविपाकेऽर्थकलत्रसौख्यम् । स्थानादिलाभं सुखकीर्त्तिशौर्यमुद्योगसिद्धिं त्वनयादुपैति । स्थानवीर्यविहीनस्तु कुरुते स्वपदच्युतिम् । कुजः कुसीदवृत्त्या च जीवनं भवति ध्रुवम् । दिग्वीर्ययुक्तस्य कुजस्य दाये नृपात् सुवर्णार्घरत्नप्रतापम् । गोभूमिवस्त्राम्बरयानलाभं दिगन्तरा

कान्तयशःप्रतापम्। कारवीर्ययुतभौमदशायां काम्यमर्थ्यरिति सौख्यमुपैति। पट्टवस्त्रमणिमौक्तिकलाभं चित्रवस्त्रकपगोगजलाभम्। निसर्गवीर्यान्वितभौमदाये कृपाकटाक्षेण महीपतीनाम्। समस्तभाग्यात्मजमित्रबन्धुगोभूमिभूषाम्बरदेहसौख्यम्। निसर्गतः स्थानधनादिनाशं पित्ताधिकं कुत्सितभोजनञ्च। कुजस्य दाये कुनखी पितृघ्नः सहोदराणामपि देहपीडा। वक्रान्वितस्य भौमस्य दशाकाले महद्भयम्। चौराग्निसर्पपीडां च वनवासं पदच्युतिम्। दृग्वीर्ययुक्तस्य कुजस्य दाये कृपाकटाक्षेण महीपतीनाम्। समस्तभाग्यात्मजमित्रबन्धुगोभूमिभूषाम्बरदेहसौख्यम्। क्रूरषष्ठांशसंयुक्तभौमदायेऽतिपीडनम्। कारागृहप्रवेशञ्च समस्तविभवक्षयम्। सौम्यषष्ठांशसंयुक्तभौमदाये शुभं भवेत्। विवाहदीक्षायज्ञं च सर्वेषामुपकारकम्। पारावतादिसंयुक्तभौमदाये महत् सुखम्। भूस्वर्णदारसम्पत्तिधनवाहनभोजनम्। क्रूरद्रेक्काणसंयुक्तकुजदाये मनोव्यथा। निगडं विषभीतिं च पाशबन्धनमेव च। उच्चस्थोऽपि धरासूनुर्नीचांशकसमन्वितः। तत्पाके भ्रातृमरणं नृपवह्निविषाद्भयम्। भूमिपुत्रोऽपि नीचस्थः स्वोच्चभागसमन्वितः। तत्पाके भूमिदारार्थपुत्रमित्रविवर्द्धनम्" कुजदशा।

अथ बुधदशा। "अत्युच्चसोमात्मजदायकाले धनान्वितः ख्यातिमुपैति सौख्यम्। ज्ञानञ्च कीर्त्तिं जननायकत्वं स्त्रीपुत्रभूत्यर्थमहोत्सवञ्च। उच्चस्थितस्यापि शशाङ्कसूनोर्दशा महत्त्वं कुरुतेऽर्थसौख्यम्। देहस्य पुष्टिर्धनधान्यपुत्रगोवाजिमत्तेभघटङ्कनादम्। आरोहिणी सौम्यदशा प्रपन्ना यशोत्सवं गोवृषवाजिमत्कुम्। स्वदेशभूषाम्बरयानलाभं वाणिज्यभूत्यर्थपरोपकारम्। शशाङ्कसूनोरवरोहिणी या दशा महत्कष्टतरञ्च दुःखम्। विज्ञानहीनं परदारसङ्गं नृपाग्निचोरैर्भयमत्र कष्टम्। नीचस्थचन्द्रात्मजदायकाले स्थानेन हीनं स्वजनैर्वियुक्तम्। पदच्युतिं बन्धुविरोधितां च विदेशयानं वनवासदुःखम्। मूलत्रिकोणान्वितसौम्यदाये राज्यं महत्सौख्यकरं च कीर्त्तिम्। विद्याविलासं निगमार्थशीलं पुराणधर्मश्रवणादिपूतः। स्वक्षेत्रगस्यापि शशाङ्कसूनोः प्राप्तौ दशायां धनधान्यसम्पत्। वाणिज्यगोभूमिसुतार्थदारस्वहृदन्नपानाम्बरभूषणाप्तिः। शशाङ्कसूनोस्त्वरिराशिगस्य शत्रोर्भयं भूपतिकोपजातम्। विद्याविहीनं कुलहीनसेवां कुभोजनं दारसुतार्थनाशनम्। शशाङ्कसूनोरतिशत्रुराशिं गतस्य पाके विपदं च दुःखम्। उद्योगभङ्गं स्वजनैर्विरोधं यज्ञादिविघ्नं शुभकर्मनाशम्। मित्रक्षेत्रदशायां शशाङ्कसूनोर्धनायतिः सौख्यम्। नामद्वयसंप्राप्तिः स्वनामाङ्कितगद्यपद्यानि। अतिमित्रराशिगस्य दशा प्रपन्ना महत्त्वतां याति। भूपतिमैत्रं सौख्यं धनसुतदारांश्च बन्धुसम्मानम्। समर्क्षगस्यापि शशाङ्कसूनोर्दशा सुखं धान्यसुताम्बराणि। करोति राज्यच्युतिमत्रविघ्नं विज्ञानहीनं पिटकादिरोगम्। नीचखेचरसंयुक्तसौम्यदायेऽतिकष्टताम्। पदभ्रंशं बन्धुनाशं कर्मनाशं मनोरुजम्। उच्चखेचरसंयुक्तसौम्यदाये महत् सुखम्। भाग्योत्तरं सुविद्यां च वाणिज्यं मोक्षसिक्रियाः। विदः पापान्वितस्यापि दाये पापमुपैति च। क्षेत्रार्थदारपुत्रादिकृषिगोभूमिनाशनम्। विदः सौम्ययुतस्यापि परिपाके महत् सुखम्। राज्ययोगं सुखं कीर्त्तिं दारपुत्रनृपात् सुखम्। सौम्येक्षितस्यापि शशाङ्कसूनोर्दशाविपाके महतीं च कीर्त्तिम्। विद्याविलासोद्भव राजपूजां कान्तिप्रतापं यशसा समेतम्। पापेक्षितस्यापि शशाङ्कसूनोर्धान्यक्षयं बन्धुजनैर्वियुक्तम्। विदेशयानं स्वपदच्युतिं च प्रेष्यानुवृत्त्या कलहोऽतिकष्टम्। केन्द्रोपगस्य हि दशा शशिनन्दनस्य भूपालमित्रधनधान्यकलत्रपुत्रान्। यज्ञादि कर्म नृपमानयशःप्रलब्धिं स्वहृदन्नपानशयनाम्बरभूषणानि। लग्नं गतस्य हि दशा शशिनन्दनस्य भूपालमानं कविलब्धभाग्यम्। भेरीरवादि परिघोषितयानमार्गं तीर्थाभिषेकमथवा जगति प्रसिद्धम्। वित्तगसौम्यदशायां विद्याप्राप्तिं महत्त्वकीर्त्तिञ्च। भूपतिभाग्यसमानो राज्यस्थाने प्रधानतां याति। तृतीयराशिस्थितचन्द्रसूनोर्दशाविपाके जडतां समेति। उद्वेगमाजीवनगुल्मरोगमस्वार्त्तियोगे नृपमानमञ्च। शशाङ्कसूनोर्हिबुकस्थितस्य दशा प्रपन्ना गृहधान्यनाशम्। सौख्यादिहीनं हिबुकेशमत्युमुद्योगभङ्गं च पदच्युतिं वा। पञ्चमस्थशशिनन्दनस्य या क्रूरबुद्धिरतिकष्टता भवेत्। हीनवृत्तिरपि राजसेवया लब्धलब्धधनमेति सम्पदम्। षष्ठाष्टमान्त्यस्थितसौम्यदाये त्वग्दोषजातं बहुरोगमेति। विचर्चिका पैत्तिकपाण्डुरोगं नृपाग्निचौरैर्मरणं कृशत्वम्। देहाकृतैरबलकलत्रबन्धुविद्वेषणं भूपतिदत्तकोपम्। चाक-

खिन्नं मृत्युभयं प्रमादं रिपुफस्थितस्यापि शशाङ्कसूनोः। दारस्थितस्यापि शशाङ्कसूनोर्दशा विपाके सुतदारवित्तम्। विद्याविनोदं विमलाम्बरं च नामद्वयं भूपतिमित्रताञ्च। भाग्यस्थितस्यापि शशाङ्कसूनोर्भाग्योत्तरं दारसुतार्थलाभम्। तीर्थाभिषेकं जपहोमदानं यज्ञादिकर्माणि लभेन्मनुष्यः। कर्मस्थितस्यापि शशाङ्कसूनोर्दशाविपाके नृपतौल्यमेति। सौख्यं स्वनामाङ्कितमद्यपद्यं नामद्वयं दारसुतार्थलाभम्। प्रपूजनं देवमहीरुहाणां साधुत्वलाभं जननायकत्वम्। कवित्वमार्गं समुपैति काले यज्ञादिदीक्षां स्वजनैर्विशेषात्। उपान्त्यराशिस्थितसौम्यदाये त्वनेकधा वित्तमुपैति काले। दानेन वा भूपतिमाननाद्वा कृषेश्च वाणिज्यविचारतो वा। उच्चांशसंयुक्तशशाङ्कसूनोर्दशाविपाके सुतभूप्रवाप्तिः। मनोविलासं नयनाभिरामसुलाहधैर्य्यं च जलाभिषेकम्। नीचांशकयुतः सौम्यो नीचवृत्त्यानुजीवनम्। प्रेष्यत्वं परिचारं च दशायाञ्च करोति तत्। सौम्यदशायामादौ लभते धनधान्यसम्पदं पुरुषः। अन्ते स्वजनविरोधं मध्ये दाये नरेशसम्मानम्। अर्कगसौम्यदशायां लभते विविधापदं मनोदुःखम्। स्वकुलजनपविरोधं निन्दाभयं वाणिकर्षरोगञ्च। स्थानवीर्य्ययुते सौम्ये तत्पाके कीर्त्तिराज्यदम्। मनोधैर्य्यं मनोल्लासं यज्ञदीक्षाशुभप्रदम्। तद्विहीनबुधे स्थानदारपुत्रमहद्भयम्। विदेशवासं दुःखं च नानापरिभवक्रियाः। दिग्वीर्य्यसहिते सौम्ये दिगन्ताद्धनिकः सुधीः। सामन्तराजमित्रत्वं गन्धमाल्यस्य लेपनम्। कालवीर्य्ययुतसौम्यदशायां देहसौख्यकलहादिवियोगम्। दारपुत्रनृपमाननमेति जाह्नतोयपरिपूततनुः स्यात्। निसर्गवीर्य्यान्वितसौम्यदाये निसर्गतश्चापि शुभादि कर्म। विद्याविवादं स्वजनैर्विरोधं मातुर्वियोगं त्वथवा तदीयम्। वक्रचेष्टान्विते सौम्ये भाग्यदारसुतार्थभाक्। तथा पुराणदानादिधर्म्माख्यानमाचरेत्। दृग्बलेन युते सौम्ये सर्व्वभूतेषु सौम्यताम्। करोति रतिकेलिञ्च राजभाग्यसमन्वितम्। क्रूरषष्ठांशसौम्यस्य दशापाके महद्भयम्। चोराग्निभूपैर्भीतिः स्याच्छुभदृग्योगवर्जिते। स्वदृग्भादियुते सौम्ये राज्यलाभं महत्सुखम्। मार्दवं सर्व्वभूतेषु कृषिपुत्रार्थसम्पदम्। सौम्ये वैशेषिकांशस्थे विशेषाद्राजपूज्यताम्। सुगन्धाम्बरमाल्यं च विद्यामोदोरहस्यताम्। क्रूरद्रेष्काणसंयुक्तचन्द्रपुत्रदशा यदा। चोराग्निभूपतिभयं स्थाननाशं महद्भयम्। उच्चराशिगतः सौम्यो नीचभागगतो यदि। राज्यं सुखं महत्कीर्त्तिम् विनाशयति तत्क्षणात्। चन्द्रात्मजोऽपि नीचस्थः स्वोच्चभागसमन्वितः। अशुभं फलमादौ तु शुभमन्ते प्रयच्छति"।

अथ गुरुदशा "गुरोर्दशायां परमोन्नतस्य राज्यं महत्सौख्यमुपैति कीर्त्तिम्। मनोविलासं गजवाजिसङ्घं नृपाभिषेकं स्वकुलाधिपत्यम्। कुलीरगस्यापि गुरोर्दशायां भाग्योत्तरं भूपतिमाननाद्वा। विदेशयानं महदाधिपत्यं दुःखैः परिक्लिष्टतनुर्मनुष्यः। आरोहिणी देवगुरोर्महत्त्वं दशा प्रपन्ना कुरुतेऽर्थभूमिम्। गानक्रिया स्त्रीसुतराजपूजां स्ववीर्य्यतः प्राप्तयशःप्रतापम्। जीवदशायामारोहिण्यामीशो मण्डलादिनाथो वा। द्विजभूपालसद्धनो मेधावी कान्तिमान् विनीतश्च। देवेन्द्रपूज्यस्य दशावरोहा करोति सौख्यं सकृदेव नाशः। सकलयशः कान्तिविशेषलाभं नरेश्वरत्वं सकृदेव याति। अतिनीचभागभाजो गुरोर्दशायां प्रभग्नगृहपुष्टः। अन्योन्यकूटवैरं क्षितिनाशं याति परभृत्यः। मूलत्रिकोणनिलयस्य गुरोर्दशायां राज्यार्थभूमिसुतदारविशेषसौख्यम्। यानाधिरोहणमपि स्वबलाप्तवित्तं यज्ञादिकर्मजनपूजितपादपीठम्। गुरोर्दशायां स्वगृहं गतस्य राज्ञोऽर्थभूधान्यसुखाम्बरञ्च। मिष्टान्नगोवाजिमनोविलासं काव्यादिपुण्यागमवेदशास्त्रम्। गुरोर्दशायामतिशत्रुराशिं गतस्य दुःखं समुपैति शोकम्। विवादभूम्यर्थकलत्रनाशं नृपाग्निचोरैर्बहुदुःखपीडाम्। गुरोर्दशायामरिराशिगस्य क्षेत्रादिवित्तं शयनाम्बरञ्च। नरेशसम्मानमुपैति नित्यं स्त्रीपुत्रभृत्यात्मसहोदरार्त्तिम्। प्राप्नो दशायामतिमित्रराशिं गतस्य जीवस्य नरेन्द्रपूज्यम्। मृदङ्गभेरीरवयानघोषं दिगन्तराक्रान्तसमस्तभाग्यम्। मित्रर्क्षगस्यापि गुरोर्दशायां नरेशमैत्रीं समुपैति कीर्त्तिम्। विद्याविवादे जयमङ्गसौख्यसुगन्धसद्वस्त्रपरोपकारम्। समर्क्षगस्यापि गुरोर्दशायां सामान्यतो भूपतिदत्तभाग्यम्। कृष्यर्थगोभूमिमनोविलासं सिताम्बरालङ्कृतिभूषणाप्तिम्। नीचखेचरसंयुक्तजीवदाये मनोरुजम्। परप्रेष्यापवादञ्च पुत्राद्याश्च विरोधिताम्। उच्चखेचरसंयुक्तगुरुदाये महत्सुखम्। अनेकगोपुरादीनां निर्माणं नृपपूज्यताम्। पापान्वितस्यापि गुरोर्दशायां करोति पापं हृदयान्तरस्थम्। मूढं बहिः पुण्यफलं विशेषात् भूम्यर्थदारात्मजसौख्यमेति। शुभान्वितस्यापि गुरोर्दशायां नरेशमान्

मृदुलाम्बरं च। दानेन वित्तं नृपमाननाद्वा यज्ञादिसंमार्गविशेषलाभम्। पापेक्षितस्यापि गुरोर्दशायां प्राप्तं सुखं किञ्चिदुपैति धैर्यम्। क्वचिद् यशः कुत्रचिदाप्तसौख्यं क्वचिद्धनं नाशमुपैति चान्ते। शुभेक्षितस्यापि गुरोर्दशायां देशान्तरे वित्तमुपैति भूपात्। देवार्चनं भूसुरतर्पणञ्च तीर्थाभिषेकं गुरुपूज्यताञ्च। केन्द्रगतजीवदाये राज्यं भूदारराजसम्मानम्। विविधसुखानन्दकरं बहुजनरक्षां प्रधानतां याति। लग्नकृतस्य हि दशा प्रकृष्टं करोति जीवस्य सौख्यममलाम्बरभूषणाप्तिम्। यानाधिरोहणमदङ्गणवारवैश्च मत्तेभवाजिभटसङ्कुयुतं करोति। चतुर्थकेन्द्रस्थितजीवदाये यानत्रयं भूपतिमित्रभावम्। भूपालयोगो यदि भूपतित्वं नो चेत्तदा तत्सदृशं करोति। कलत्रराशिस्थितजीवदाये दारार्थपुत्रार्थसुखं प्रयाति। विदेशयानं समरे जयञ्च भाग्यं परब्रह्मणि पुण्यकर्म। कर्मस्थितस्यापि गुरोर्विपाके राज्याप्तिमाकुर्नयस्तदानीम्। भूपालयोगे त्वथ वार्यपुत्रकलत्रसत्कर्मसु राजयोगम्। पञ्चमस्थगुरोर्दाये मन्त्रोपासिसमं हृत्सुखम्। सुताप्तिं राजपूजाञ्च वेदान्तश्रवणादिकम्। त्रिकोणसंस्थस्य गुरोर्दशायां स्त्रीपुत्रधान्यार्थविवेकबुद्धिम्। मृद्वन्नपानाम्बरपट्टवस्त्रयानादिलाभं नवमे तु सौख्यम्। उच्चांशसंयुक्तगुरोर्दशायां भाग्योत्तरं राजसमानमेति। प्रवालमुक्तामणिरत्नलाभं सर्वेषु सख्यं समुपैति सौख्यम्। नीचांशसंयुक्तगुरोर्विपाके भूपाद्भयं गुल्मविचर्चिकादीन्। स्थानच्युतिं बन्धुविरोधिताञ्च नृपाग्निचौरैः स्वकुलोद्भवैश्च। अर्कगजीवदशायां सहसा ज्वरपीड़ितो भवेत् क्षीणः। अङ्गाङ्कुरोमतप्तो दुःशीलत्वप्रभग्नसंसारः। आदौ गुरुदशाकाले नृपपूजां महत्सुखम्। मध्ये स्त्रीपुत्रलाभादि चान्ते कष्टं विनिर्दिशेत्। धनस्थितस्यापि गुरोर्विपाके धनायतिं भूपतिमानञ्च। विद्याविवादाङ्कितराजगोष्ठीं सर्वोपकारं विजयं सुखञ्च। नृपकृतबहुमानं भ्रातृभिर्भूमिलाभं परयुतविजनैर्वा दत्तगोभूमिवित्तम्। वसनशयनभूषागन्धमाल्याम्बराणि परकृतमुपकारं शुद्धतामेति शौर्यम्। तृतीयस्थगुरोर्दाये भ्रातृणां च सुखं धनम्। नृपदत्तं धनं सौख्यं गन्धमाल्याम्बरादिकम्। नीरोगतां पुत्रकलत्रलाभं लग्नाद्रिपुस्थस्य गुरोर्दशायाम्। आदौ भवेदेवमथान्त्यपाके दारार्थचौरादिभयं सरोगम्। जीवोमरखद्रस्थः करोति सौख्यं स्वबन्धुजनहानिम्। स्थानच्युतिं विदेशं प्रान्ते स्त्रीराजपुत्रसम्मानम्। लाभगजीवदशायां संप्राप्तौ राज्यलाभमुपयाति। बह्वर्थदारपुत्राङ्गुपविरोधं स्वबन्धुविद्वेषम्। व्ययगतजीवदशायां प्राप्तौ वाहनादि समुपयाति। लभते विदेशयानं नानाक्लेशैश्च परिभूतः। पाके स्थानबलान्वितस्य च गुरोः क्षेत्रार्थदारात्मजान् संप्राप्नोति गजाश्ववस्त्रकनकं चित्राम्बरं भूषणम्। दिग्वीर्यान्वितदेशनायकगुरौ लोके प्रसिद्धं तथा जीवे कालबलाधिके नृपवधूसम्मानितां याति सः। निसर्गवीर्यान्वितजीवदाये निसर्गतस्यातिसुखं महत्त्वम्। विद्याविलासं रतिकेलिसौख्यं भागीरथीतोयकृताभिषेकम्। वक्रं गतस्यापि गुरोर्दशायां महार्थतां याति सुतार्थदारान्। युद्धे जयं भूपतिमित्रतां च सुगन्धजाताम्बरयानविलासम्। दिग्वीर्ययुक्तस्य गुरोर्विपाके कृपाकटाक्षः महीपतीनाम्। समस्तभाग्यं समुपैति नित्यं देशान्तरे भ्राम्यति किञ्चिदेव। क्रूरषष्ठांशसंयुक्तगुरोर्दायेऽतिकष्टताम्। राजकोपावमानादीन् लभते नात्र संशयः। सौम्यषष्ट्यंशसंयुक्तगुरोर्दायेऽतिसौख्यताम्। वाहनं बन्धुसम्मानं यज्ञवैवाहिकं शुभम्। पारावतांशयुक्तस्य गुरोः पाके महत् सुखम्। मृदुचपट्टवस्त्रञ्च हेमविक्रियभूषणम्। पापद्रेक्काणयुक्तस्य गुरोर्दाये च बन्धनम्। कारागृहप्रवेशञ्च निगड़ं दारविग्रहम्। उच्चस्थोऽपि गुरुर्नीचराश्यंशकसमन्वितः। महाभाग्यं तु संप्राप्तं तत्क्षणादेव नश्यति। नीचस्थो देवपूज्योऽपि स्वोच्चांशकसमन्वितः। भाग्यक्षये तु संप्राप्ते भाग्यं याति तदा नरः”।

अथ शुक्रदशा। “अत्युच्चगदशायां मत्तविलासप्रियार्थभोगी स्यात्। माल्याच्छादनभोजनशयनस्त्रीपुत्रधनयुक्तः। स्वोच्चस्थितस्यापि भृगोर्दशायां स्त्रीसङ्गनष्टार्थविरुद्धधर्मम्। पित्रोर्विनाशं समुपैति दुःखं शिरोरुजं भूपतिमानञ्च। आरोहिणी शुक्रदशा प्रपन्ना धान्यं वरालङ्कृतिकान्तिपूजाम्। प्रवृत्तिसिद्धिं स्वजनैर्विरोधं मातादिनाशं परदारसङ्गम्। भृगोः सुतस्योच्चावरोहकाले प्रचण्डवेश्यागमनं धनाप्तिम्। स्त्रीपुत्रबन्धार्त्तिमनोविकारं हृच्छूलरोगं मदनार्त्तिमेति। उद्वेगरोगतप्तः कर्मसु विफलेषु सर्वदाभिरतः। अतिनीचगतस्य दाये शुक्रस्यात्मार्थदारपुत्रार्त्तिम्। मूलत्रिकोणभाजो भृगोर्दशायां महाधिपत्यं स्यात्। क्रयविक्रयकृषलब्धधनवान् कीर्त्त्यन्वितो विभिन्नश्च। स्वर्क्षगशुक्रदशायां

लभते स्त्रीपुत्रमित्रधनशौर्य्यम् । नित्योत्साहं द्वेषं परोपकारं महत्त्वञ्च । भृगोर्दशायामतिशत्रुराशिं गतस्य पुत्रार्थकलत्रहानिम् । प्रभग्नसंसारविशीर्णदेहं गुल्माग्निरोगं ग्रहणीप्रकोपम् । शत्रुक्षेत्रदशायां भृगोरपत्यार्थदारहानिः स्यात् । भूपतिरोषं कुरुते मत्तविलासाद्यैः पापकर्माणि । मित्रक्षेत्र दशायां परोपकारी कलाविधिज्ञश्च । पूगारामकृषिः स्याद्देवमनुष्येश्वरोद्भूतार्थश्च ख्यातिर्मित्रशुक्रदाये भूपतिसम्मानसौख्यं च । गोधनवाजिसमेतं गजवरसङ्घैः निरस्तदोषैश्च । समक्षेत्रगस्यापि भृगोर्विपाके प्रमेहगुल्माग्निगुदजरोगः । किञ्चित् सुखं भूपतिवह्निचोरैः भयं स्वनामाङ्कितगद्यपद्यम् । नीचखेचरसंयुक्तभृगोर्दाये महद्भयम् । अपवादकृतं दोषं लभते पापकर्मभिः । स्वोच्चस्थितेन सहितस्य भृगोर्विपाके राज्यं महत्त्वममराधिपतित्वमेव । हेमाम्बरादिमणिभूषणयानलाभं भेरीमृदङ्गपणवानकवाद्यघोषैः । पापान्वितस्यापि भृगोर्दशायां स्थानच्युतिं बन्धुजनैर्विरोधम् आचारहीनं कलहप्रियत्वं क्षयार्थभूम्यात्मजदारनाशम् । शुभान्वितस्यापि भृगोर्दशायां सौभाग्यमित्रात्मजधान्यलाभम् । नरेशपूजां गजवाजिसङ्घं प्रवालमुक्तामणियानलाभम् । पापेक्षितस्यापि भृगोर्दशायां मानार्थहानिं समुपैति दुःखम् । स्त्रिया विरोधं स्वपदच्युतिं च विदेशवासं निजकर्महीनम् । शुभेक्षितस्यापि भृगोर्विपाके धनाम्बरं भूपतिपूजनञ्च । जनाधिपत्यं स्वशरीरकान्तिं कलत्रमित्रात्मजसौख्यमेति । केन्द्रं गतस्य हि दशा भृगुनन्दनस्य यानाम्बरादिमणिभूषितदेहकान्तिम् । राज्यार्थभूमिकृषिवाहनवस्त्रशस्त्रदुर्गादियानवनवारिजलाभिषेकम् । लग्नगशुक्रदशायां संप्राप्तं राजमानं लभते मणिगोधनकृषिलाभं परापवादं महोत्साहम् । चतुर्थराशिस्थितशुक्रदाये राज्यं महत्सौख्यमुपैति यानम् । कृषिक्रियावित्तपशुप्रजानां वृद्धिं प्रतापान्वितकीर्त्तिजालम् । कलत्रराशिस्थितशुक्रदाये कलत्रनाशं त्वथवा विदेशम् । प्रमेहगुल्मादिशरीररोगं प्रभग्नवित्तात्मजबन्धुराज्यम् । कर्मस्थशुक्रस्य दशाविपाके विद्याधनप्राप्तिनरेशपूज्ये । भाग्योत्तरं पालितदेहकान्तिं दिगन्तरप्राप्तयशःप्रतापम् । त्रिकोणसंयुक्तभृगोर्विपाके विद्याधनप्राप्तिनरेशपूजाम् । प्रवालमुक्तामणिशङ्खशुक्तिगोभूमियानाम्बरवस्त्रलाभम् । पञ्चमस्थभृगोर्दाये पुत्रावाप्तिं विनिर्दिशेत् । कीर्त्तिञ्च राजपूजाञ्च सर्व्वभाग्योपकारकम् । त्रिकोणस्थगतः शुक्रः करोति नृपपूज्यताम् । यज्ञकर्मादिलाभञ्च गुरुपित्रोः सुखं यशः । वित्तगशुक्रदशायां धनहानिमाङ्कर्धनायतिं चापि । अन्नसुखं वाग्विलासं परोपकारं नरेशसम्मानम् । तृतीयराशिस्थितशुक्रदाये धैर्य्यं महोत्साहमदीनसत्त्वम् । चित्राम्बरालङ्कृतिवाहनाप्तिं सहोदराणां बहुभाग्यलाभम् । भृगोर्विपाकेऽरिगतस्य नाशं मान्यार्थबन्ध्वात्मजसोदराणाम् । रोगं महाकार्यविनाशनं च शत्रोर्भयं भूपतिवह्निचोरैः । रन्ध्रस्थितस्यापि भृगोर्विपाके शस्त्राग्निचोरक्षतमित्रविघ्नम् । क्वचित् सुखं किञ्चिदुपैति वित्तं क्वचिन्नरेशाप्तयशःप्रतापम् । लाभस्थितस्यापि भृगोर्विपाके सुगन्धमाल्याम्बरराज्यपूजाम् । पुत्रार्थसौख्यं कृषिविक्रयञ्च दानं स्वनामाङ्कितपद्यजालम् । व्ययगतशुक्रदशायां लभते धान्यार्थराजसम्मानम् । स्थानच्युतिं प्रवासं मातृवियोगं मनोविलासञ्च । जीवक्षेत्रगतस्य भृगोः स्त्रीपुत्रमहीनाशनं कुरुते । कर्मसु नित्यो विघ्नो जननीक्लेशान्वितो मनोदुःखी । कर्कगशुक्रदशायां जीर्णगृहवासः शुभावरोधश्च । लभते दारविनाशं भ्रातृवियोगञ्च कलहञ्च । सिंहगशुक्रदशायां लभते त्रिविधापदं मनोदुःखम् । उद्योगरोमतप्तः कर्मसु विफले तु सर्व्वदाभिरतः । शुक्रे स्थानबलाधिके नरपतेः सम्मानं भूषणं विद्यावादविवादगोष्ठिरसिकं नामद्वयं संभ्रमम् । तस्मिन् दिक्प्रबलान्विते बहुयशःपुत्रार्थदाराम्बरं शुक्रे कालबलान्विते सुखधनं कीर्त्तिः स्वनामाङ्किता । निसर्गवीर्य्ययुक्तस्य भृगोर्दाये महत् सुखम् । कृषिगोभूमिवित्तादि भ्रातृमातृसुखं भवेत् । वक्रं गतस्यापि भृगोः सुतस्य दशाविपाके त्वतिराजपूजाम् । मृदङ्गभेरीरवयुक्तयानं विचित्रवस्त्राभरणानि राज्यम् । दिग्वीर्य्ययुक्तस्य भृगोर्विपाके यज्ञादिकर्माणि करोति काले । विद्याविलासं शयनाम्बरञ्च नृपाभिषेकं कलहं विरोधम् । क्रूरषष्ठांशयुक्तस्य भृगोर्दाये विपद्भयम् । चोराग्निराजभीतिः स्यात् कृषिगोभूमिनाशनम् । सौम्यषष्ठांशयुक्तस्य भृगोर्दाये महत् सुखम् । कूपारामतडागानां निर्माणं देवपूजनम् । वैशेषिकांशसंयुक्तभृगोर्दाये महत् सुखम् । वाहनं भूपसम्मानं भ्रातृस्त्रीधनसम्पदः । क्रूरद्रेक्काणसंयुक्तभृगोर्दायेऽरिभीतिदम् । कारागृहमहत्कष्टमनलं चोरपीडनम् । उच्चक्षेत्रेऽपि नीचांशयुक्तः शुक्रोऽतिकष्टदः । करोति राज्यनाशञ्च स्थाननाशमथापि वा । उच्चांशयुक्तशुक्रोऽपि नीचराशिसमन्वितः । कृषिगोभूमि-

वाणिज्यं धनधान्यविवर्द्धनम्” शुक्रमहादशाफलम् ।

अथ शनिदशा । “मन्दात्युच्चदशायां ग्रामसभामण्डलाधिपत्यं स्यात् । लभते विनोदशीलं पितृनाशं बन्धुकलहं च । स्वोच्चदशायां कुरुते देशभ्रंशं मनोरुजं दुःखम् । वाणिज्यहानिसत्त्वं कृषिहानिं नृपविरोधञ्च । आरोहिणी वासरनाथसूनोर्दशा विपाके नृपलब्धभाग्यम् । वाणिज्यलाभं कृषिभूमिलाभं गोवाजियानं सुतदारलाभम् । दिनेशसूनोस्त्ववरोहकाले राज्यच्युतिं दारसुतार्थनाशम् । भाग्यक्षयं भूपतिकोपयुक्तं प्रेष्यत्वमायाति गुदाक्षिरोगम् । नीचस्थितस्यापि दिनेशसूनोर्दाये कलत्रात्मजसोदराणाम् । नाशं महाकष्टतरां कृषिं च नीचानुवृत्त्या समुपैति वृत्तिम् । मूलत्रिकोणनिलयस्य शनेर्दशायां देशान्तरादिवनवासमुपैति काले । नामद्वयं यदि समानपराधिपत्यं विद्वेषणं सुतकलत्रजनादिभिर्वा । स्वक्षेत्रगस्य च दशा दिवसेशसूनोर्हर्षं करोति बलपौरुषकीर्त्तिजालम् । राजाश्रयं कनकभूषणभूमिलाभं धैर्यं स्वनामसदृशानुगुणं च सौख्यम् । शनेर्दशायामतिशत्रुगस्य स्थानच्युतिं बन्धुविरोधिताञ्च । चोरादिभूपैर्भयमत्र विघ्नं भृत्यार्थदारात्मजकोपमेति । दिनेशसूनोस्त्वरिराशिगस्य वैश्याङ्गनं प्राप्य तु भूमिनाशम् । कृषेर्विनाशं स्वपदच्युतिञ्च वैरं समायाति शरीरकष्टम् । मित्रक्षेत्रदशायां मन्दस्य तु शिल्पकर्मवेत्ता । ज्ञानबलं प्रतापं ददाति दुःखं महत्त्वञ्च । अधिमित्रमन्ददाये ददाति सौख्यं नरेशसम्मानम् । सुतवनदारविशेषात् पशुकृषिमहिषादिवाणिज्यम् । समक्षगस्यापि शनेर्दशायां समानबुद्धिः सुतदारमित्रैः । भृत्यापदं बन्धुजनेषु वैरं देहस्य कष्टं कफवातपित्तैः । नीचखेचरसंयुक्तशनेर्दाये महद्भयम् । विप्रलम्भोपवासश्च नीचवृत्त्यानुजीवनम् । स्वोच्चखेचरसंयुक्तशनेर्दाये महत् सुखम् । किञ्चिद्राज्यं कृषेर्लाभं भृत्यवर्गार्थनाशनम् । पापान्वितस्यापि शनेर्दशायां पापानि गूढ़ानि करोति काले । नीचस्त्रिया सङ्गमनं विशेषाच्चोरादिनीचैः कलहं विदारम् । शुभान्वितस्यापि शनेर्दशायां विशेषतो ज्ञानमुपैति काले । परोपकारं नृपलब्धभाग्यं कृष्याणि धान्यान्ययसाञ्च लाभम् । पापेक्षितस्यापि शनेर्दशायां भृत्यार्थदारात्मजसोदराणाम् । नाशं समायाति परापवादं कुभोजनं कुत्सितगन्धमाल्यम् । शुभेक्षितस्यापि शनेर्दशायां स्त्रीपुत्रभृत्यार्थमुपैति काले । पश्चादुपैत्यस्य महत्कष्टं गोभूमिवाणिज्यकृषेर्विनाशम् । केन्द्रान्वितशनेर्दाये कलहायासपीड़नम् । पुत्रमित्रार्थदारादिबन्धूनां मरणं ध्रुवम् । लग्नगतशनेर्दाये देहकष्टमुपैति च । स्थानच्युतिं प्रवासञ्च राजकोपं शिरोरुजम् । चतुर्थस्थशनेर्दाये मातृतद्वर्गनाशनम् । स्वगृहदाहं पदभ्रंशं चोरार्त्तिं नृपपीड़नम् । दारराशिगतस्यापि शनेर्दायेऽरिपीड़नम् । मूत्रकृच्छ्रं महाद्वेषं स्त्रीहेतोर्मरणन्तु वा । दशमस्थशनेर्दाये कर्म्मनाशमुपैति च । देशान्तरं पदभ्रंशं निगड़ं राजपीड़नम् । द्वितीयस्थशनेर्दाये वित्तनाशमथाक्षिरुक् । राजकोपं मनस्तापमशेषं मनोरुजम् । तृतीयस्थशनेर्दाये कृषिगोधनसम्पदः । मनोजाड्यमनुत्साहं भ्रातृतद्वर्गनाशनम् । पञ्चमस्थशनेर्दाये पुत्रनाशं मनोरुजम् । राजकोपं भृत्यनाशं बन्धुस्त्रीवित्तविभ्रमम् । षष्ठस्थरविसूनोस्तु दशाकालेऽरिपीड़नम् । व्याधिचोरविषैर्बाधां गृहक्षेत्रविनाशनम् । मरणपदस्थो मन्दः करोति नित्यं सुतार्थदाराणाम् । नाशं भृत्यजनानां गोमहिषभूमिदारनाशं च । नवमगतमन्ददाये पितुर्नाशं गुरोस्तथैवापि । लभते विदेशयानं स्वकुलजातैर्विनाशमुपयाति । लाभगमन्ददशायां लभते विविधार्थसौख्यसम्मानम् । सुतदारभृत्यसौख्यं मनोविलासं क्रमेण लब्धधनम् । व्ययगतमन्ददशायां भीतिं चोराग्निभूपसङ्घैश्च । विविधापदं च दुःखं विदेशयानं स्वबन्धुनाशञ्च । अर्कगमन्ददशायां स्वजनद्वेषं परक्लेशं लभते । भृत्यापत्यविरोधं महोद्योगं दोषपरिभूतम् । नीचांशमन्ददाये नीचाचारेण जीवनं लभते । सर्वेषां प्रेष्यत्वं धनसुतदारैश्च विग्रहं दुःखम् । उच्चांशमन्ददाये विविधसुखानन्दभोगभाग्यादीन् । कुरुते विदेशयानं ग्रामसभामण्डलाधिपत्यं वा । आदौ मन्ददशायामतिदुःखं मातृनाशनं कुरुते । मध्ये विदेशयानं परगृहवासं परान्नभुक् चान्ते । स्थानवीर्य्ययुतमन्ददशायां दारपुत्रधनकीर्त्तिमुपैति । चोरशत्रुनृपवह्निभयं वा बन्धुनाशमथवाक्षिगुदार्त्तिम् । मन्दस्य दिग्वीर्य्ययुतस्य दाये दिगन्तरादाप्तसुखार्थकीर्त्तिम् । भृत्यार्थदारात्मजसोदराणां विनाशनं बन्धुजनैर्विरोधम् । कालवीर्य्ययुतमन्ददशायां कालकूटविषभीतिमुपैति । दारपुत्रनृपचोरभयं वा धान्यभूमिकृषिवाहनलाभम् । वक्रचारयुतो मन्दः करोति विफलां क्रियाम् । उद्योगभङ्गदुःखञ्च सोदराणाञ्च नाशनम् । क्रूरषष्ट्यंशसंयुक्तशनिदाये महद्भयम् । नृपकोपं

पदभ्रंशं कारागृहनिवेशनम् । सौम्यषष्ठांशसंयुक्तशनिदाये महत्सुखम् । दारपुत्रार्थसंपत्तिं लभते बन्धुविग्रहम् । वैशेषिकांशसंयुक्तः शनिःसौख्यं करोति च । विशेषाद्राजसम्मानं विचित्राम्बरभूषणम् । क्रूरद्रेक्काणसंयुक्तशनिदाये महद्भयम् । उद्बन्धनं विषाद्भीतिं नृपचोराग्निजम्भयम् । नीचराशिगतो मन्दः स्वोच्चांशकसमन्वितः । दशादौ दुःखमापाद्य दशान्ते फलदो भवेत् । उच्चराशिगतो मन्दो नीचांशकसमन्वितः । दशादौ सुखमापाद्य दशान्ते कष्टदो भवेत् ।”

अथ राहुदशा । “राहोर्मेषोऽत्र केतोस्तु वृश्चिकस्तुङ्गसंज्ञितः । मूलत्रिकोणं कुम्भश्च क्रियो मित्रमुच्यते । एतत्सप्तमराशिन्तु केतोर्मूलत्रिकोणभम् । षष्ठाष्टरिष्फगो राहुस्तद्दाये कष्टदो भवेत् । उच्चस्थः सैंहिकेयस्तु तत्पाके सुखदो भवेत् । राज्यं करोति मित्राप्तिं धनधान्याभिवर्धनम् । राहुर्नीचस्थितोदाये चोराग्निनृपभीतिदः । उद्बन्धनं विषाद्भीतिं कुरुते सिंहिकासुतः । राहोर्दशायाः संप्राप्तौ नृपचोराग्निपीड़नम् । विदेशयानं दुःखार्तिं वनवासाद्भयं ध्रुवम् । लग्नगतराहुदाये बुद्धिविहीनं विषाग्निशस्त्राद्यैः । बन्धुविनाशं लभते दुःखार्तिश्च पराजयं समरे । राहोर्दशायां धनराशिगस्य राज्यञ्च वित्तं हरते विशेषात् । कुभोजनं कुत्सितराजसेवा मनोविकारं त्वन्ृतं प्रकोपम् । तृतीयराशिस्थितराहुकाले पुत्रार्थदारात्मजसोदराणाम् । सुखं तथैवैश्वर्यमाधिपत्यं विदेशयानं नरपालपूजाम् । चतुर्थराशिस्थितराहुकाले मातुर्विनाशन्त्वथवा तदीयम् । क्षेत्रार्थनाशं नृपतेः प्रकोपं भार्यादिपातित्यमनेकदुःखम् । चोराग्निबन्धार्ति मनोविकारं दारात्मजानामपि रोगपीड़ा । चतुर्थराशिस्थितराहुकाले प्रभग्नसंसारकलत्रपुत्रम् । बुद्धिभ्रमं भोजनसौख्यनाशं विद्याविवादं कलहञ्च दुःखम् । कोपं नरेन्द्रस्य सुतस्य नाशं राहोः सुतस्थस्य दशाविपाके । दशाविपाके त्वरिराशिगस्य चोराग्निभूपैर्भयमाप्तनाशम् । प्रमेहगुल्मक्षयपित्तरोगं त्वग्दोषरोगं त्वथवा क्षतिञ्च । कलत्रराशिस्थितराहुदाये कलत्रनाशं समुपैति शीघ्रम् । विदेशयानं कृषिभागहानिं सर्पाद्भयं मृत्युसुतार्थनाशम् । राहोर्दशायां निधनस्थितस्य यमालयं याति सुतार्थनाशम् । चोराग्निभूपैः स्वकुलोद्भवैश्च भयं मृगैर्वा वनवासदुःखम् । राहोर्दशायां नवमस्थितस्य पितुर्विनाशं लभते मनुष्यः । विदेशयानं गुरुबन्धुनाशं स्नानं समुद्रस्य सुतार्थनाशम् । मानस्थितस्यापि दशाविपाके राहोः प्रवृत्तिं लभते मनुष्यः । पुराणधर्मश्रवणादिभिश्च गाङ्गेयतोयैरपि शुद्धदेहः । सौम्यर्क्षगश्चेत् फलमेवमेव पापर्क्षगश्चेन्न तथा भवेद्धि । प्रोक्तं फलं यत्सकलं तदेव सौम्यर्क्षगश्चेत् फलमन्यथान्यत् । पापक्षेत्रगतो राहुः कर्मस्थः पापसंयुतः । अभिशस्तस्तदाकाले पुत्रदाराग्निपीड़नम् । आयराशिगतो राहुस्तत्पाके नृपमाननम् । धनाप्तिः दारलाभश्च गृहक्षेत्रादिसम्पदः । व्ययगतराहुदशायां देशभ्रंशं मनोरुजं कुरुते । विच्छिन्नदारपुत्रं कृषिपशुधनं धान्यसम्पदां नाशम् । कुलीरगोमेषयुतस्य राहोर्दशाविपाके धनलाभमेति । विद्याविनोदं नृपमाननञ्च कलत्रभृत्यात्मसुखं प्रयाति । पाथोजमीनाश्वयुतस्य राहोर्दशाविपाके सुतदारलाभम् । देशाधिपत्यं नरवाहनञ्च दशावसाने सकलं विनाशम् । पापर्क्षसंयुक्तफणीन्द्रदाये देहस्य कार्श्यं स्वकुलस्य नाशम् । भूपाद्भयं वञ्चनतोऽरिभीतिः प्रमेहकासक्षयमूत्रकृच्छ्रम् । शुभदृष्टियुतो राहुः करोति सफलक्रियाम् । राजमाननमर्थाप्तिं बन्धूनां मरणं ध्रुवम् । पापदृष्टियुतो राहुः कर्मनाशं करोति च । उद्योगभङ्गं देहार्तिं चोराग्निनृपपीड़नम् । उच्चगेहयुतो राहु राजप्रलाभं करोति च । स्त्रीपुत्रधनसम्पत्तिं वस्त्राभरणलेपनम् । नीचग्रहयुतो राहुर्नीचवृत्त्यानुजीवनम् । कुभोजनं कुदारञ्च कुपुत्रं लभते तदा । दशादौ दुःखमाप्नोति दशामध्ये सुखं यशः । दशान्ते स्थाननाशञ्च गुरुपुत्रादिनाशनम् ।”

अथ केतुदशाफलम् । “भार्यापुत्रविनाशनं नरपतेर्भ्रान्तिर्महाकष्टतां विद्याबन्धुधनाप्तिमित्ररहितं रोगाग्निमित्रैर्भयम् । यानारोहणपातनं विषजलैः शस्त्रादिभिर्वा भयं देशाद्देशविवासनं कलिरुचिं वज्रादिभिर्वा भयम् । केतोर्दशायां संप्राप्तौ दारपुत्रविनाशनम् । राजकोपं मनस्तापं चोराग्निकृषिनाशनम् । केन्द्रस्थस्य दशा केतोः करोति विफलक्रियाम् । राजार्थसुतदाराणां नाशनं विपदं तथा । लग्नकेन्द्रगतस्यापि केतोर्दाये महद्भयम् । ज्वरातिसारमेहञ्च स्वासकादि विषूचिकाः । धनराशिगतस्यापि केतोर्दाये धनक्षयम् । वाक्पारुष्यं मनोदुःखं कुत्सितान्नं मनोरुजम् । तृतीयराशिगस्यापि केतोर्दाये महत्सुखम् । मनोवैकल्य-

आयाति भ्रातृभिर्द्वेषं परम्। चतुर्थराशिगस्यापि केतोर्दाये सुखक्षयम्। प्रभग्नदारपुत्रादिर्गृहे ग्राम्य प्रहर्षितः। पञ्चमस्थस्य केतोस्तु दशाकाले सुतक्षयम्। बुद्धिभ्रमं विशेषेण राजकोपं धनक्षयम्। केतोस्त्वरिगतस्यापि दशाकाले महद्भयम्। चौराग्निविषभीतिः स्याद्देशाग्निं समुपैति च। कलत्रराशिसंयुक्तकेतोर्दाये महद्भयम्। दारपुत्रार्थनाशश्च मलकृच्छ्रं मनोरुजम्। केतोरष्टमयुक्तस्य दशाकाले महद्भयम्। पितृमृत्युश्चासकासप्रहण्यादिक्षयान्वितः। नवमस्थस्य केतोस्तु दशापाके पितुर्विपत्। गुरोर्वा विपदं दुःखं शुभकर्मविनाशनम्। कर्मस्थ केतोः संप्राप्तौ दशायां सुखमेति च। मानहानिं मनोजाड्यमपकीर्तिं मनोरुजम्। लाभस्थकेतोः संप्राप्तौ दाये सौख्यं करोति च। भ्रातृवर्गादिसौख्यञ्च वस्त्रदारादिवर्धनम्। रिःफस्थकेतोः संप्राप्तौ दाये कष्टतरं भवेत्। स्थानच्युतिं प्रवासञ्च राजपीड़ाञ्चिनाशनम्। दशादौ सुखमाप्नोति दशामध्ये महद्भयम्। दशान्ते राजभीतिश्च देहजाड्यमथापि वा। शुभवीक्षणसंयुक्तः केतुः सौख्यं करोति च। राजप्राप्तिं गृहशान्तिश्च राजपूजां महत्तराम्। पापेक्षितयुतो वापि केतुर्दुःखं करोति च। ज्वरातिसारमेहांश्च त्वग्दोषं राजपीड़नम्।" इयं हरगौरीदशेत्युच्यते।

अष्टोत्तरीयदशा ज्यो०त० उक्ता यथा।

"षट् सूर्य्यस्य दशा ज्ञेया शशिनोदश पञ्च च। अष्टावङ्गारके प्रोक्ता बुधे सप्तदश स्मृताः। शनैश्चरे दश प्रोक्ता गुरोरेकोनविंशतिः। राहोर्द्वादश वर्षाणि भृगोरप्येकविंशतिः। दिक्षु त्रयं त्रयं ज्ञेयं विदिक्षु च चतुष्टयम्। कृत्तिकादि प्रदातव्यं दिगम्बरमता दशा। कृत्तिकादित्रये सूर्य्यः सोमो रौद्रचतुष्टये। मघादित्रितये भौमो बुधो हस्तचतुष्टये। अनुराधात्रये सौरिर्गुरुः पूर्वाचतुष्टये। धनिष्ठात्रितये राहुः शेषे शुक्रः प्रकीर्त्तितः। सूर्य्योपप्लवभौमार्किदशातिकष्टदा नृणाम्। सुरज्ञचन्द्रशुक्राणां यथेप्सितफलप्रदा"। वराहः "स्वशाकहीनशाकाब्दात् प्रत्यब्दं पञ्च वासरान्। तिथींश्च चन्द्रशिखिनौ ज्ञागुणौ च कृताश्विनौ। दण्डपलविपलान्यनुपलानि च सावने। वर्द्धयित्वा क्षयशेषभोगप्राप्तु गणनक्रमात्"। अन्तर्दशाज्ञानमाह। "स्वदशाभिर्दशां हत्वा नवभिर्भागमाहरेत्। लब्धा मासास्तु तच्छेषं पूरयित्वा तु त्रिंशता। अङ्कैर्हृत्वा दिनं लब्धं तच्छेषे षष्टिपूरिते। नवभिश्च हृते लब्धा ज्ञेया दण्डास्तदन्तरे। रवेः षड्वर्षमध्ये तु वेदा ४ मासा रवेर्निजाः। चन्द्रस्य दश मासाश्च दिक्दिनं पञ्च मासकाः। कुजस्य, ज्ञस्य रुद्रास्तु मासा दिक्दिवसाः शनेः। ऋतुमासाद्युविंशञ्च गुरोर्वर्षा द्युविंशतिः। राहोर्मासाष्टका ज्ञेया भृगोर्वर्षस्तु मासकौ। एवं ग्रहाणामन्येषामूह्याश्चैवान्तरोदयाः। यद्ग्रहस्यान्तरे यस्तु यत्संख्यं कालमाप्तवान्। तत्संख्यं स्वान्तरे तस्मै स दद्यादिति निश्चयाः। स्वान्तरग्रहणे स्वांशं स्वांशेन पूरयेत् सदा"। दशाफलन्तु। "उद्विग्नचित्तपरिखेदितवित्तनाशक्लेशप्रवासगदपीड़ितपक्षघातैः। संक्षोभितस्वजनबन्धुवियोगदुःखैर्भानोर्दशा भवति कष्टकरी नराणाम्"। र। "सौख्यं बिभर्त्ति वरवाहनयानरत्नकीर्त्तिप्रतापबलवीर्य्यशुभान्वितञ्च। मिष्टान्नपानशयनासनभाजनानि चान्द्री ददाति धनकाञ्चनभूमिशस्यम्"। च। "शस्त्राभिघातवधबन्धनरेन्द्रपीड़ाचिन्ताज्वरं विकलताञ्च गृहे करोति। चौराग्निदाहभयभङ्गविपत्तिरोगकीर्त्तिप्रतापधनहा च दशा कुजस्य"। भ। "दिव्याङ्गनावदनपङ्कजषट्पदत्वं लीलाविलासशयनासनभोजनञ्च। नानाप्रकारविभवागमकोषवृद्धिः क्षिप्रं भवेद्बुधदशासु हितार्थसिद्धिः"। बु। "मिथ्यापवादवधबन्धनकार्य्यहानिर्मात्सर्य्ययुक्प्रियसुखद्रविणैर्विहीनः। मित्रेषु वैरमभिवाञ्छति वैरयुक्तः कष्टासु पापदशासु शनैश्चरस्य"। श। "रम्यं गृहं विनयसञ्चयमानवृद्धिं प्राप्नोति सौख्यधनधान्यविभूतियोगम्। धर्मार्थकामसुखभोगयशःप्रयुक्तं यावद्बृहस्पतिदशा पुरुषो हि तावत्"। बृ। "बुद्धाविहीनमतिनाशवियोगदुःखं नष्टार्थसिद्धिभयभङ्गविषार्त्तिरोगम्। सन्तापशोकपरदेशगतिं करोति राहोर्दशा भवति जीवनसंशयाय"। रा। "मन्त्रप्रभावनिपुणः प्रमदाविलासः श्वेतातपत्रनृपपूजितदेशलाभः। हस्त्यश्वलाभधनपूर्णमनोरथः स्यात् शौक्री दशा भवति निश्चलराजलक्ष्मीः"। शु। अन्तर्दशाफलं तु विस्तरभयान्नोक्तम्। "सत्ये लग्नदशा प्रोक्ता त्रेतायां योगिनी मता। द्वापरे हरगौरी तु कलौ नाक्षत्रिकी दशा" अग्निपुराणनाम्ना पठित्वा गौड़ा अष्टोत्तरीयदशामेव नाक्षत्रिकी दशेत्याहुः। वराहेण तु नाक्षत्रिकीं दशामनादृत्यैव बृहज्जातके बलिष्ठलग्नकेन्द्रस्थादिदशा प्रतिपादिता यथा

"उदयरविशशाङ्कप्राणिकेन्द्रादिसंस्थाः प्रथमवयसि

मध्येऽन्त्ये च दद्युः फलानि । न हि न फलविपाकः केन्द्रसंस्थाद्यभावे भवति हि फलपक्तिः पूर्वमापोक्लिमेऽपि १ । आयुः कृतं येन हि यत्तदेव कल्प्या दशा सा प्रबलस्य पूर्वम् । साम्ये बहूनां बहुवर्षदस्य तेषां च साम्ये प्रथमोदितस्य २ । एकर्क्षगोऽर्द्धमपहृत्य ददाति तु स्वं त्र्यंशं त्रिकोणगृहगः स्मरगः स्वरांशम् । पादं फलस्य चतुरस्रगतः स होरास्त्वेवं परस्परगताः परिपाचयन्ति ३। स्थानान्यथैतानि सवर्णयित्वा सर्वाण्यधश्छेदविवर्जितानि । दशाब्दपिण्डे गुणका यथांशं छेदस्तदैक्येन दशाप्रभेदः” ४ सू० ।

“उदयो लग्नं रविरात्मा शशाङ्कश्चन्द्रो मनः एषामुदयरविशशाङ्कानां मध्याद् यः प्राणी बलवान् तद्बलवशात्तस्य सम्बन्धिनी प्रथमा दशा भवति प्राणिनां देहवताम् । तथा च यवनेश्वरः “निशाकरादित्यविलग्नभानां तत्कालयोगादधिकं बलं यः। बिभर्त्ति तस्यादिदशेष्यते सा शेषास्ततः शेषबलक्रमेणेति” उदयश्च रविश्च शशाङ्कश्चोदयरविशशाङ्काः उदयरविशशाङ्कानां प्राणी उदयरविशशाङ्कप्राणी च केन्द्रादिसंस्थाश्चोदयरविशशाङ्कप्राणिकेन्द्रादिसंस्थाः एवमेषां मध्याद्येन प्रथमा दशा दत्ता तस्यैव केन्द्रादिसंस्थाः केन्द्रपणफरापोक्लिमेषु स्थिता ग्रहाः वीर्योपचयक्रमेण दशां दद्युः एवं लग्नार्कशशाङ्कानां मध्यादेकस्य बलवतो दशा आदौ परिकल्प्या ततस्तस्य ये केन्द्रस्थाः तेषां दशाः परिकल्प्याः तैः केन्द्रस्थैः प्रथमे वयसि फलं दत्तं भवति ततः प्रथमदशापतेरेव ये पणफरस्थास्तेषां दशाः परिकल्प्याः तैः मध्ये वयसि फलं दत्तं भवति । ततः प्रथमदशापतेरेवापोक्लिमस्थानां दशाः परिकल्प्याः तैरन्त्ये वयसि फलं दत्तं भवति यदुक्तम् प्रथमवयसि मध्येऽन्त्ये च दद्युः फलानि तथा च यवनेश्वरः “पूर्वं तु केन्द्रोपगताः फलन्ति मध्ये वयः पणफरे निविष्टाः । आपोक्लिमस्थाः फलदावयोऽन्त्ये यथाबलं स्वं समुपैति पूर्वम्” । अथ यदि केन्द्रस्थाः ग्रहाः न भवन्ति तदा कः प्रथमे वयसि फलं प्रयच्छति इत्याह न हि न फलविपाक इत्यादि केन्द्रस्थाद्यभावे केन्द्रस्थानां ग्रहाणामभावे असम्भवे सति प्रथमे वयसि यः फलविपाकः स न हि न यतो द्वौ नञौ प्रकृत्यर्थं गमयतः पणफरस्थानामप्यभावे मध्ये वयसि फलविपाको न हि न एतदुक्तं भवति यदा केन्द्रस्था ग्रहा न भवन्ति तदा पणफरस्थाः पूर्वं फलं प्रयच्छन्ति ततः आपोक्लिमस्थाः अथ केन्द्रस्थाश्च भवन्ति पणफरस्थाश्च न भवन्ति । तदा सर्वस्मिन्नेव वयसि आपोक्लिमस्थाः फलं प्रयच्छन्ति । यत उक्तं भवति हि फलपक्तिः पूर्वमापोक्लिमेऽपि इति एवमापोक्लिमस्थानामभावे प्रथमं केन्द्रस्थाः फलं प्रयच्छन्ति ततः पणफरस्थाः। आपोक्लिमस्था न भवन्ति न च पणफरस्थास्तदा सर्वस्मिन्नेव वयसि केन्द्रस्थाः फलं प्रयच्छन्ति । एतदुक्तं भवति । लग्नार्कशशाङ्कानां मध्ये यो बलवांस्तस्य प्रथमां दशां कल्पयित्वा ततस्तत्केन्द्रगानां सर्वेषां कल्पनीया तेषां परिकल्प्य पणफरस्थानां ततः परिकल्पनीयास्ततः परमापोक्लिमस्थानाम् केन्द्रस्थानामभावे प्रथमं दशापतेरनन्तरं पणफरस्थानां कल्पनीयास्ततः आपोक्लिमस्थानाम् केन्द्रस्थानामभावे पणफरस्थानामप्यभावे आपोक्लिमस्थानामेव कल्पनीयाः । अथ केन्द्रस्थाः पणफरस्थाश्च भवन्ति । आपोक्लिमस्था न भवन्ति तदा केन्द्रस्थानां परिकल्प्य पणफरस्थानामेव परिकल्पनीयाः अथ केन्द्रस्था भवन्ति पणफरस्था न भवन्ति आपोक्लिमस्थाश्च भवन्ति तदा केन्द्रस्थानां कल्पयित्वा आपोक्लिमगानामेव कल्पनीयाः । अथ केन्द्रगा एव केवलं भवन्ति तदा तेषामेव कल्पनीयाः । अथ पणफरगा एव भवन्ति तदा पणफरगानामेव कल्पनीयाः। अथाऽपोक्लिमगा एव भवन्ति तदा तेषामेव कल्पनीयाः। तथा च स्वल्पजातके उक्तम् । लग्नार्कशशाङ्कानां यो बलवांस्तद्दशा भवेत् प्रथमा । तत्केन्द्रपणफरापोक्लिमोपगानां बलाच्छेषाः” १ ।

अथ दशाकालप्रमाणं केन्द्रगानामपि दशाक्रमस्थानमिन्द्रवज्रयाह “आयुः कृतमिति शोध्यक्षेपविशुद्धमायुर्यावद्वर्षप्रमाणं येन ग्रहेण दत्तं तस्य ग्रहस्य सम्बन्धिनी दशा कल्प्या परिकल्पनीया तत्र “लग्नार्कशशाङ्कानां यो बलवान् तद्दशा भवेत्प्रथमेति न्यायेन तद्दशां प्रथमं कल्पयित्वा ततस्तत्केन्द्रगानां परिकल्पनीया यत्तेषां च केन्द्रगानां मध्यात् सा च दशा प्रबलस्यातिबलस्य पूर्वं प्रथमं कल्प्या अनन्तरं तस्मादूनबलस्य एवं क्रमेण यथा यथा ऊनबला भवन्ति तथा तथा पश्चात्तदीयदशाः कल्पनीयाः । एवं केन्द्रगानां दशाः परिकल्प्य ततः पणफरगानाम् अनेनैव क्रमेण परिकल्प्याः ततः आपोक्लिमगानाम् अनेनैव क्रमेणेति । साम्ये बहूनामिति केन्द्रगानां बहूनां ग्रहाणां बलसाम्ये सति बहुवर्षदस्य बहूनि वर्षाणि येन दत्तानि तस्य प्रथमं दशा परि-

कल्प्या । नन्वत्र कथं ग्रहाणां बलसाम्यं भवति यदि द्वावपि स्वसुहृत्त्रिकोणोच्चगतौ भवतस्तदा नैसर्गिकेण बलेन योऽधिकः स एव बली स्यात् किन्तु स्थानदिक्चेष्टाकालबलग्रहदर्शनादिबलानि यावद्गणितविधिनैकी क्रियन्ते तावद्बलसाम्यं भवति ग्रहाणां यथा सामान्येनोदाहरणम् । यदि शनैश्चरो बलत्रयेण संयुक्तो भवति भौमो बलद्वयेन तदा तत्र भौमस्य निसर्गबलबत्वाद्बलसाम्य भवत्येवं सर्वेषामपि ज्ञेयम् । तेषाञ्च साम्ये प्रथमोदितस्येति तेषां वर्षाणां साम्येऽपि वर्षतुल्यत्वेऽपि प्रथमोदितस्य दशा परिकल्प्या प्रथममादावर्कमण्डलाद्य उदित उद्गतस्तस्य । यदा बलसाम्यं न भवति तदा बहुवर्षदेऽपि ग्रहे स्थिते तदा प्रथमोदितेऽपि स्थिते बलाधिकस्यैव पूर्वं परिकल्प्येति तेषाञ्च बलसाम्ये प्रथमोदितस्येत्यत्र द्विविध उदयः प्रत्यहं चक्रभ्रमवशादेकः, आदित्यविप्रकर्षेणापरः । तत्र ह्यादित्यविप्रकर्षेण उदयो गणितस्कन्धोक्तकालांशकवशाज्ज्ञेयः अत्र च भगवान् गार्गिः "बली लग्नेन्दुसूर्य्याणां दशामाद्यां प्रयच्छति । तस्मात्ततः प्रयच्छन्ति केन्द्रादिस्थाः क्रमेण तु । तत्रापि बलिनः पूर्वं तत्साम्ये बहुदायकाः । तत्साम्येऽपि प्रयच्छन्ति ये पूर्वं रविविच्युताः" २ भट्टो० ।

"एवं दशाव्यवस्थायां जातायामन्तर्दशायाञ्च ग्रहस्थानं वसन्ततिलकेनाह एकर्क्षगोऽर्द्धमिति दशापतिना सहैकर्क्षगो ग्रहः एकस्मिन् राशौ गतः दशापतिदत्तान्तर्दशाकालस्य यदर्द्धं तदर्द्धमपहृत्य स्वैरात्मीयैः दशागुणैः परिपाचयति । त्र्यंशं त्रिकोणगृहगः दशापतेस्त्रिकोणगृहगते नवपञ्चमे स्थाने स्थितो दशापतिदत्तान्तर्दशाकालात् त्र्यंशं तृतीयभागमपहृत्य स्वैरात्मीयैः दशागुणैः परिपाचयति । स्मरगः स्मरांशमिति दशापतेः स्मरगः सप्तमस्थानगः दशापतिदत्तान्तर्दशाकालात् स्मरांशं सप्तमभागमपहृत्य स्वैः दशागुणैः परिपाचयति । पादं फलस्य चतुरस्रगतः दशापतेः चतुरस्रगोऽष्टमचतुर्थस्थानस्थो दशापतिदत्तान्तर्दशाकालात्पादं चतुर्थभागमपहृत्य स्वैर्दशागुणैः परिपाचयति । सहोराः होरा लग्नं तया सहिताः परस्परमन्योन्यमनेकप्रकारेण व्यवस्थिताः स्वैः स्वैः गुणैः परिपाचयति । एतदुक्तं भवति । यथा दशापतेः सकाशादेकर्क्षादिगो ग्रहो यथास्वं पठितमंशं परिपाचयति तथा लग्नमपि पाचयति । अथ दशापतेः प्रथममंशपरिकल्पनां कृत्वा पश्चादेकर्क्षादिगतानां कर्त्तव्याः यस्माद्दशापतेर्यो भाग आगच्छति तदनुसारेणार्द्धादयो भागाः परिशेषाणां भवन्ति । अथैकस्मिन् स्थाने यदा बहवो ग्रहा भवन्ति तदा तेषां मध्याद् यो बलवान् स एवैकः परिपाचयति नान्ये । कथमेतद्गम्यते उच्यते । एकवचननिर्द्देशात् एकर्क्षगोऽर्द्धमपहृत्य ददाति तु स्वमित्याद्येकवचनात् न केवलं मिहिराचार्य्यस्यैकवचननिर्द्देशः क्रतो यावत् स्वल्पजातकेऽपि तथा चोक्तम् "एकर्क्षेऽर्द्धं त्र्यंशं त्रिकोणयोः सप्तमे तु सप्तांशं चतुरस्रयोस्तु पादं पाचयति गतो ग्रहः स्वगुणैरिति" गर्गादीनामप्येकवचननिर्द्देशोऽस्ति तथा च भगवान् गर्गः "एकर्क्षे संगतस्त्वर्द्धं त्रिभागन्तु त्रिकोणगः सप्तमस्थः स्मरांशन्तु पादन्तु चतुरस्रगः । लग्नेन सहिताः सर्वे ह्यन्योन्यं फलदायकाः" यवनेश्वरस्याप्येवम् "कालोऽर्द्धभागैकग्रहाश्रितस्य तदर्द्धभागं लभते चतुर्थे । त्रिभागभागी च त्रिकोणसंस्थात्तदर्द्धभाक् स्याच्च पृथक् त्रिकोणे । स्यात् सप्तमे सप्तमभागभागी स्थितो ग्रहश्चारवशात् ग्रहस्य"। एवं सर्वत्रैकवचननिर्द्देशः । तस्मादेवं ज्ञायते यथैक एवांशहारो भवति न सर्व इति तथा च सत्यः "अर्द्धं तृतीयमर्द्धं तथार्द्धं स्वोच्चसप्तमं भागम् । एकर्क्षे नवपञ्चमचतुर्थनिधनास्तसंस्थानम् । दद्युर्ग्रहा ग्रहाणां स्वदशास्वन्तर्दशाख्यानाम् । फलकालान्मितविधिक्रमेण भेदाश्च तेऽप्येवम् । एकर्क्षगेषु बलवान् भागहारो मितो रिपोर्वापि मितश्च" । पुष्कलफलं तस्मिन् काले रिपोर्नैवं तथा च मयः "एकर्क्षोपगतानां यो भवति बलाधिको विशेषेण । एकः स एव हर्त्ता नान्ये तत्र स्थिता विहगाः" । इति लग्नेऽपि यस्मांशापहारित्वं प्राप्तस्तत्र च लग्ने यदा ग्रहः स्थितो भवति तदा लग्नग्रहयोर्यो बलवान् स एवैकः पठितमंशमपहरति अन्ये सर्वेषामेकादिराशिगानामन्तर्दशाभागमिच्छन्ति । अन्ये पुनः एकमेव भागं गृहीत्वा तं भागमेकर्क्षगानां भागीकृत्य तद्भागांशमिच्छन्ति"२भट्टो० ।

"अथ दशांशपरिकल्पनाज्ञानमिन्द्रवज्रयाह स्थानानीति अर्द्धादिका भागाः स्थानशब्देनोच्यन्ते तेषां चार्द्धादिकानां भागानां सवर्णना कार्या सवर्णना सदृशच्छेदता ततः सवर्णयित्वा छेदसादृश्यमुत्पाद्य ततस्तानि सर्वाणि स्थानानि अधः स्वैः छेदैः विवर्जितानि कार्याणि छेदा अपास्या इत्यर्थः । उपरिगताराशयो यथांशं प्रत्यंशं गुणना कार्या भवन्ति छेदः तदैक्येन संक्षेपेण

छेदो भागहारो भवति। कश्चित् गुणके को भागहार इत्याह दशाब्दपिण्डे दशायदंसमूहे। तेनैतदुक्तं भवति दशाब्दान् पृथक् पृथक् संगुणकारैः संगुण्य छेदेन विभज्यावाप्तं वर्षाद्यमन्तर्दशा भवन्ति" ४ भट्टो०।

"सम्यग्बलिनः स्वतुङ्गभागे संपूर्णा बलवर्जितस्य रिक्ता। नीचांशगतस्य शत्रुभागे ज्ञेयानिष्टफला दशा प्रसूतौ" ५ मू०।

"एवं दशान्तर्दशाविभागे ज्ञाते कस्य सम्बन्धिनी दशान्तर्दशा वा शुभफला भवति कस्याशुभफलेत्येतन्न ज्ञायते तदर्थं दशासु फलानुरूपाः संज्ञा वैतालीयेनाह सम्यग्बलिन इति प्रसूतौ पुरुषस्य जन्मकाले यो ग्रहः सम्यग्बलवान् भवति पूर्वोक्तैः बलैः सर्वैः युक्तो भवति तत्सम्बन्धिनी संपूर्णनाम्नी दशा भवति न केवलं यावत् स्वतुङ्गभागेऽवस्थितस्य परमोच्चभागगतस्यैव संपूर्णा नाम्नी भवति सम्यग्बलिनइत्युक्त्वा पुनः स्वतुङ्गभाग इत्यनेनैतज्ज्ञापयति यदि परमोच्चगतो ग्रहोऽन्यैः बलकारणैः युक्तो न भवति तथापि तस्य सम्बन्धिनी संपूर्णैव संपूर्णायां दशायामन्तर्दशायाञ्च काले शरीरारोग्यधनवृद्धिभिः पुरुषोऽभिवर्द्धते। अथ समस्तबलैः युक्तो न भवति किञ्चिदूनबलस्य भागे यो ग्रहो गतः भवति यश्च शत्रुभागे शत्रुनवांशे च गतस्तस्य दशानिष्टफला ज्ञेया ज्ञातव्या। अथानिष्टफलदशान्तर्दशाकाले धनहानिमनारोग्यञ्च प्राप्नोति अत्र च भगवान् गार्गिः "सर्वैर्बलैरुपेतस्य परमोच्चगतस्य च। संपूर्णाख्या दशा ज्ञेया धनारोग्यविवर्द्धिनी। सर्वैर्बलैर्विहीनस्य नीचराशिगतस्य वा। रिक्ता नाम दशा ज्ञेया धनारोग्यविनाशिनी। स्वोच्चराशिगतस्याथ किञ्चिद्बलगतस्य च। पूर्णा नाम दशा ज्ञेया धनवृद्धिकरी शुभा। यः स्यात् परमनीचस्थस्तथाचारिनवांशके। तस्यानिष्टफला नाम व्याध्यनर्थविवर्द्धिनी"५ भट्टो०।

"भ्रष्टस्य तुङ्गादवरोहिसंज्ञा मध्या भवेत् सा सुहृदुच्चभागे। आरोहिणी निम्नपरिच्युतस्य नीचारिभागेष्वधमा भवेत् सा" ६ मू०।

"अथ दशान्तर्दशासंज्ञाः पुनरपीन्द्रवज्रयाह भ्रष्टस्येति तुङ्गात्परमोच्चाद्भ्रष्टस्य च्युतस्यावरोहिसंज्ञा दशा परमोच्चभागान्तादारभ्य यावत् परमनीचभागादि तत्रान्तरे यद्राशिषट्कं तत्रावस्थितेन ग्रहेण या दत्ता दशान्तर्दशा वा सावरोहिणीसंज्ञा भवति यस्मात्परमोच्चाद्भ्रष्टः प्रत्यहमधोऽवतरतीति ग्रहः कल्प्यते यावत्परमनीचमिति अवरोहिसंज्ञा दशाऽधमफला भवति। यस्माद्वक्ष्यति "संज्ञानुरूपाणि फलान्यथैषामिति"। मध्या भवेत् सा सुहृदुच्चभाग इति सैवारोहिणी यत्र तत्र राशौ व्यवस्थितेन सुहृद्भागेन मित्रांशकस्थेन दत्ता दशा मध्यानाम्न्येव भवति एवं यत्र तत्र राशौ अर्थादेव स्वांशकस्थेन दशा मध्यैव। एवं यत्र तत्र राशौ स्वोच्चनवांशकस्थेन दशा मध्यैव। आरोहिणीति; निम्नान्नीचात् परिच्युतस्य चलितस्य ग्रहस्यारोहिणीनाम्नी दशा भवति परमनीचान्तभागादारभ्य यावत् परमोच्चभागादि तत्रान्तरे यद्राशिषट्कं तत्रावस्थितेन ग्रहेण या दत्ता दशान्तर्दशा वा सारोहिणीनाम्नी दशा भवति यस्मात् परमनीचाद्भ्रष्टः प्रत्यहं तावदारोहतीति ग्रहः परिकल्प्यते यावत् परमोच्चमिति। आरोहिणी च श्रेष्ठफला भवति। नीचारिभांश इति सैवारोहिणी यत्र तत्र राशौ स्वनीचराश्यंशोपगतेन दत्ताऽधमानाम्नी दशा भवति एवं यत्र तत्र राशावरिभांशकस्थेन शत्रुनवांशकगेन दत्ताऽधमैव दशा भवति। पूर्वं शत्रुनवांशकगेन दत्तानिष्टफलेत्युक्तमधुना सैवाधमेति तत् किमेतदित्यत्रोच्यते अवरोहिणीशत्रुनवांशकस्थेन दत्तापि अनिष्टफला ज्ञेया आरोहिण्यधमा अनयोः कः फलभेदः अत्रोच्यते अनिष्टफलाफलमशुभं प्रयच्छति अधमाशुभमेवाल्पमिति एवमवरोहिणीसंज्ञा यदाधमसंज्ञा भवति तदा सैवानिष्टफलसंज्ञां लभते आरोहिणी यदा मध्यसंज्ञा भवति तदा सैव पूर्णेति संज्ञा ज्ञेया अत्राह, भगवान् गार्गिः "उच्चनीचान्तरस्थस्य दशा स्यादवरोहिणी। तस्यामल्पमवाप्नोति फलं क्लेशाच्छुभं नरः। मित्रोच्चस्वांशकस्थस्य मध्या मध्यफला तु सा। नीचोच्चमध्यगस्योक्ता श्रेष्ठा चारोहिणी दशा। सैवाधमाख्या भवति नीचराश्यंशगस्य तु। अवरोहिणी चेदधमा भवेत् कष्टफला तदा। आरोहिणी मध्यफला संपूर्णा परिकीर्त्तितेति"६ भट्टो०।

"नीचारिभांशे समवस्थितस्य शस्ते गृहे मिश्रफला प्रदिष्टा। संज्ञानुरूपाणि फलान्यथैषां दशासु वक्ष्यामि यथोपयोगम्" ७मू०।

"अथ दशान्तर्दशासंज्ञाः पुनरप्युपजातिकयाह नीचारीति शस्तानि गृहाणि स्वोच्चमूलत्रिकोणात्मक्षेत्रमित्रक्षेत्राणि तेष्ववस्थितेन नीचराश्यंशकेऽरिभांशे शत्रु०

नवांशके समवस्थितेन वा ग्रहेण दत्ता या दशान्तर्दशा या-सा मिश्रफलानामन्त्रैव मिश्रफला शुभमशुभञ्च फलं प्रयच्छति व्याधिसमेतमर्थागममेवमादिशेत् अर्थादेवागस्त-राशिगतेन, अशस्ताः शत्रुनीचराशयः तद्गेन स्वोच्चमिलमूलत्रिकोणात्मवर्गोत्तमनवांशकगेनापि दत्ता मिश्रफलैव भवति संज्ञारूपाणि नामसदृशानि फलानि दशास्वन्तर्दशासु च ज्ञेयानि। तद्यथा संपूर्णाऽत्यन्तश्रेष्ठफलप्रदा। पूर्णा श्रेष्ठफला। अधमाऽशुभफलदा अल्पफलदा रिक्ता अर्थापहारिणी अनिष्टफलदात्यन्तमशुभफलकारी। मिश्रफला शुभमशुभञ्च फलं प्रयच्छति। अथैषां दशास्विति अथशब्दः आनन्तर्ये एषामादित्यपूर्वाणां ग्रहाणां दशासु यथोपयोगम् उत्तरत्र वक्ष्यामि यथा येन प्रकारेणैव युज्यते तथा तत्कथयिष्यामि कस्यान्तर्दशायां किं फलमुपयुज्यत" भट्टो०

"उभयेऽधममध्यमपूजिता द्रेक्काणैश्चरभेषु चोत्क्रमात्। अशुभेष्टसमाः स्थिरे क्रमाद्धोरायाः परिकल्पिता दशा" दसू०।

"अथ लग्नदशायां शुभाशुभत्वानं वैतालीयेनाह उभये इति। उभये द्विस्वभावे राशौ लग्नगते द्रेक्काणक्रमेणाधममध्यमपूजिता दशा ज्ञेयाः प्रथमद्रेक्काणे जातस्याधमाऽशोभनाऽनिष्टफला द्वितीये द्रेक्काणे मध्यमा-मिश्रफला तृतीये द्रेक्काणे पूजिता श्रेष्ठफला। चरभेषु चरराशिषु उत्क्रमेण वैपरीत्येन तेन प्रथमद्रेक्काणे जातस्य पूजिता द्वितीये मध्यमा तृतीयेऽधमानिष्टफला अशुभेष्टसमाः स्थिरे क्रमादिति स्थिरे स्थिरराशौ प्रथमद्रेक्काणेऽशुभा द्वितीये द्रेक्काणे इष्टा श्रेष्ठा तृतीये द्रेक्काणे समा मध्यफला एवं होरायाः लग्नस्य दशाः परिकल्पिता उक्ता इति" भट्टो०।

"एकं द्वौ नवविंशतिर्धृतिकृती पञ्चाशदेषां क्रमाच्चन्द्रारेन्दुजशुक्रजीवदिनकृद्दैवाकरीणां समाः। स्वैः स्वैः पुष्टफला निसर्गजनितैः पक्तिर्दशायाः क्रमादन्ते लग्नदशा शुभेति यवनानेच्छन्ति केचित्तथा" दसू०।

"अथ नैसर्गिकदशाकालं ग्रहाणां शार्दूलविक्रीड़ितेनाह एकमिति। एकाद्याः समाः एकादीनि वर्षाणि चन्द्रादीनां यथाभिहितानि नैसर्गिकाणि तद्यथा जन्मसमयादारभ्यैकं संवत्सरः एकश्चन्द्रस्य ततः परं द्वावारस्याङ्गारकस्य एवं त्रयः ततः परं नवेन्दुजस्य बुधस्य एवं द्वादश। ततः परं विंशतिः शुक्रस्य एवं द्वात्रिंशत्। ततः परं धृतयः अष्टादश जीवस्य गुरोः एवं पञ्चाशत् ततः परं कृतिसंख्या विंशतिः दिनकृतः सूर्य्यस्य एवं सप्ततिः। ततः परं पञ्चाशत् दैवाकरेः सौरेः, एवं विंशत्यधिकं वर्षशतम् १२०। एतेषु निसर्गदशाधिपेषु ग्रहेषु बलवत्सूपचयशुद्धितेषु च तद्दशासु शोभनानि दशाफलानि भवन्ति हीनबलेष्वनुपचयस्थेष्वशोभनानि। एतच्च सर्वथा चिन्त्यम्। यतो निसर्गदशास्वविसंवाद इति तथा च यवनेश्वरः "स्तनोपभोगः शशिनो वयः स्यम् भौमस्य विद्याद्दशनानुजन्म। बौधन्तु शिक्षापटकालमाङ्करमैथुनेच्छाललितप्रवृत्तिम्। शौक्रं युवत्वं विषुपूर्वदृष्टमामध्यमाह्वेव-गुरोर्वदन्ति। रवेर्वयोऽद्ध्रोत्परमव्ययस्मात् सौरेर्जरा दुर्भगकालमाङ्करिति" नैसर्गिकस्य दशाकालस्य प्रयोजनमाह स्वैः स्वैरिति तत्र यस्य ग्रहस्य सम्बन्धिनी पूर्वविधिना कृता दशान्तर्दशा वा सा यदि नैसर्गिकसमाभिः निसर्गकथितवर्षैः स्वैः स्वैः आत्मीयैः युज्यते स्वदशाकालेन समकालं भवति तदा यावत्कालं तस्य दशाद्वयस्यैक्यं भवति तावत्कालं तस्य दशान्तर्दशा वा यदि भवति तस्याः पुष्टा परिपूर्णा फलपक्तिः पाको भवति क्रमात् प्रतिपद्य यावद्वर्त्तते तावच्छुभफलेत्यर्थः। अत्र केचिद्वदन्ति "यथा पूर्वविधिना ज्ञाता शुभा तदा शुभफलमत्यर्थं प्रयच्छत्यथाशुभा तदाऽशुभमत्यर्थमिति" एतच्चायुक्तम् यस्माद्यवनेश्वरः "स्वेष्टा दशा स्वे वयसि ग्रहस्येति" तथा च सत्यः "एकाब्दिकः शशी द्व्यब्दिकः कुजो द्वादशाब्दिकः सौम्यः द्वात्रिंशद्भृगुसुतो गुरुस्तु कथितः शतस्यार्द्धं ५०। सप्तत्यब्दः सूर्यो विंशत्यधिकः शनैश्चरोऽब्दशतः। वयसोऽन्तराणि चैषां स्वदशा नैसर्गिकः कालः। स्वं वयसः सदृशं ग्रहाः समासाद्य देहिनां कालम्। भक्षणपोषणचेष्टास्वभावदाः स्वर्यथासंख्यम्"। अथ लग्नदशानैसर्गिककालं पुराणयवनमतेनाह अन्ते लग्नदशा इति विंशत्यधिकाद्वर्षशतादूर्ध्वं यदि कस्यचिदायुषः कालो भवति तदा स कालः सर्व एव लग्नस्य नैसर्गिकी दशा। कालो भवति तस्मिन् काले पुराणयवनानां मतेन लग्नदशा शोभना भवति। विंशत्यधिकाद्वर्षशतादूर्ध्वमित्येतत् कुतोऽवगम्यते उच्यते तदर्वाक्कालस्यान्यग्रहपरिगृहीतत्वात् लग्नस्यानवकाशादेव। अथ वान्यः कश्चिदाह यथा ननु विंशत्यधिकात् शतादधिकं यस्यायुर्नास्ति किं तस्य लग्ननैसर्गिको दशाकालो नास्ति। उच्यते नास्त्येव न केवलं यावद्वर्षसप्ततेरभ्यधिकं नास्ति यस्यायु-

नास्ति तस्य शनैश्चरसम्बन्धी नैसर्गिको दशाकालो नास्ति यस्य पञ्चाशतोऽधिकं नास्ति तस्यादित्यस्यापि नास्ति एवमन्येषामपि योज्यम् ननु विंशत्यधिकं वर्षशतं परमायुरत ऊर्द्ध्वं जीविताभावात्को लग्नस्य नैसर्गिको दशाकालः उच्यते पूर्व्वमेव व्याख्यातं यथा विंशत्यधिकं वर्षशतं परमायुः त्रैराशिकार्थमस्मादीनामायुर्ज्ञानार्थं प्रदर्शितं यतः तावत्प्रमाणादायुषः परं सम्भवतीति तथा च यदा मीनलग्ने बलवति मीनांशकान्ते च कश्चिज्जातो भवति सर्वे च ग्रहाः यत्र तत्र राशौ मीनांशकावस्थिता भवन्ति केचिदुच्चगताः केचिच्च वक्रितास्तदा मीनलग्नो द्वादशवर्षाणि ददाति स एव बलयुतस्तदान्यानि द्वादशवर्षाणि प्रत्येकं मीनांशकान्तं गत्वा द्वादशवर्षाणि ददाति तानि च वक्रोच्चगत्वात् त्रिगुणानि षट्त्रिंशद्भवन्ति आदित्यवर्ज्जम् आदित्यस्य मेषे प्रत्यंशके गतस्य सप्तविंशतिवर्षाणि भवन्ति एवं चन्द्रादीनां षण्णां शतद्वयं षोड़शाधिकं भवति आदित्यस्य सप्तविंशतिः लग्नस्य चतुर्विंशतिः। एवमेकीकृतं शतद्वयं सप्तषष्ट्यधिकं भवति। नन्वेतावत्प्रमाणं कालं कश्चिज्जीवमानो न दृश्यते योगस्यातिदुर्लभत्वात् उच्यते कश्चित् दृश्यत एव जन्वादिकः नेच्छन्ति केचित्तथा तां लग्नदशामन्ते केचिदाचार्याः श्रुतिकीर्त्तिप्रभृतयः तथा तेनैव प्रकारेण शुभेति नेच्छन्ति नो वाञ्छन्तीत्यर्थः यस्माद्बलत्वे लग्नस्य वयोऽन्ते तद्दशा भवति सा शुभा। आचार्य्येण लग्नदशायां शुभाशुभत्वं बलवशाच्चोक्तं द्रेक्काणवशादुक्तम् उभयेऽधममध्यपूजिता इति यस्माद्बलहीनस्यापि लग्नस्य वयोऽन्ते दशा द्रेक्काणवशाच्छुभा भवति तस्माद्ये आचार्या अन्ते लग्नदशां नेच्छन्ति ते निष्कारणमेव नेच्छन्ति। ननु किमागमग्रन्थानां कारणेन उच्यते य एवाचार्याः अन्ते लग्नदशां नेच्छन्ति त एवागमान् त्यक्त्वा यथादर्शितकारणम् उपन्यस्य नेच्छन्ति तेन कारणेन दोष उक्तः तथा च श्रुतिकीर्त्तिः "अन्ते लग्नदशा शुभेति" यवनानैतद्बहूनां मतं तस्मिन् हीनबले यतोऽन्त्यसमये साम्यादतो नेष्यते एतच्छ्रुतकीर्त्तिना कारणमुपन्यस्तं तच्च दुष्टमतो नैसर्गिके लग्नदशाकालेऽन्तदशा शुभेत्यवगन्तव्यम्" भट्टो०।

"पाकस्वामिनि लग्नगे सुहृदि वा वर्गस्थसौम्येऽपि वा प्रारब्धा शुभदा दशा त्रिदशषड्लाभेषु वा पाकपे। मित्रोच्चोपचयत्रिकोणमदने पाकेश्वरस्य स्थितश्चन्द्रः सत्फलबोधनानि कुरुते पापानि चातोऽन्यथा" १०मू०।

"अथ दशान्तर्दशाशुभाशुभज्ञानं शार्दूलविक्रीड़ितेनाह पाकस्वामिनीति। सौरसावनचान्द्रनाक्षत्राणि चत्वारि मानानि तत्र सौरमानं रविभगणभोगः। यावता कालेनार्कोंऽशमेकं भुङ्क्ते स सौरो मासदिनं यावता कालेन राशिद्वादशकं भुङ्क्ते तत्सौरवर्षं तच्च पञ्चषष्ट्यधिकैस्त्रिभिः शतैः दिनानां घटिकापञ्चदशकेन सार्द्धेन भवति। सावनमुदयादुदयः। अर्कोदयात् पुनरेवार्कोदयः सावनमहोरात्रं तच्च षष्टिघटिकमहोरात्रं अहोरात्रत्रिंशन्मासः मासा द्वादश वर्षम्। एवं षष्ट्यधिकैस्त्रिभिः शतैः दिनानां सावनं वर्षम्। चान्द्रं तिथिभोगः तच्च स्वमानेन षष्ट्यधिकं शतत्रयं भवति सावनेनेदं मानं शतत्रयं चतुःपञ्चाशदधिकं दिनानां तच्चान्द्रं वर्षं भवति। एवं सौरसावनचान्द्राणि त्रीणि मानानि प्रत्येकं स्वस्वमानेन षष्ट्यधिकं शतत्रयं भवति। नाक्षत्रं चन्द्रनक्षत्रभोगः तच्च दिनानां सप्तविंशत्या मासो भवति तत्र शतत्रयेण चतुर्विंशत्यधिकेन दिनानां वर्षस्तत्तस्तु "रव्यंशगोऽहोरात्रः सौरश्चान्द्रमसस्तिथिः। चन्द्रनक्षत्रभोगस्तु नाक्षत्रः परिकीर्त्तितः। स सावनो यहर्गणादुदयादुदयावधि। नाक्षत्रमाने मासः स्यात् सप्तविंशतिवासरः। शेषमानेषु निर्दिष्टो मासस्त्रिंशद्दिनात्मकः" इति तस्मात् सावनमानेनायुर्दायगणना कार्य्या यस्माच्छोध्यक्षेपविशुद्धमायुः कर्त्तव्यं तच्च सावनमानं सौरमानेन संक्रान्त्यधिको मासः सावनस्त्रिंशद्रात्रः चान्द्रोऽमावास्यान्तिकः, नाक्षत्रो रेवत्यन्तिकः। सौरमधिमासकयुतं चान्द्रं भवति चान्द्रमवमरात्रोनं सावनं भवति चान्द्रं सावनात्मकम् उक्तञ्च "युगवर्षमासपिण्डं रविमानं साधिमासकं चान्द्रम्। अवमविहीनं सावनमैन्दवमवटान्वितं वर्षमिति। एवं शोध्यक्षेपविशुद्धं सावनमानेनायुर्दायविधिः तथा च मयूरचित्रके भगवान् गार्गिः "आयुर्दायविभागश्च प्रायश्चित्तक्रियास्तथा। सावनेनैव कर्त्तव्या सत्राणामप्युपासनम्"। नन्वर्कोदयादारभ्यार्कोदयावधिं सावदहोरात्रं तत् पुलिशतन्त्रे सौरमहोरात्रं पठ्यते। "अष्टाविंशसप्तमहृपनवमुनिनगतिथयः शतगुणाश्च सौरेणेति" एतच्च पुलिश एव जानाति यस्मात् पुलिशतन्त्रं वर्ज्जयित्वा सर्वसिद्धान्तेषु तन्त्रेषु सौरमानेन रविभगणभोगः सौरमानमधिमासयुक्तं चान्द्रमवमरात्रोनं सावनं भवति एवं शोध्यक्षेपविशुद्धं चान्द्रं भवति। सावनमानं सर्वसंहितासु

चार्कोदयादारभ्यार्कोदयं यावदहोरात्रं तत्सावनमहोरात्रमिति संज्ञा तथा च भगवान् पराशरः गार्गिश्च "सावनेन स्मृतो मासस्त्रिंशदुष्णकरोदयः" तथा श्रीभट्टब्रह्मगुप्तः "सावनमुदयादुदयमिति" एवं पुरुषस्य जन्मसमये सावनमहर्गणं कृत्वा तस्मात्तिथिनक्षत्रपरिच्छेदस्तात्कालिकाश्चग्रहाः सलग्ना यथा कृतास्तथा दशान्तर्दशावसाने कर्त्तव्याः तत आगामिदशाफलं वक्तव्यम् । कथमुच्यते । प्रथमं जन्मनि अहोरात्रात् तात्कालिकं कृत्वा ततस्तत्रान्तर्दशाकालं वर्षादिकं दिनीकृत्य योजयेद्वर्षाणि द्वादशभिः संगुण्य तेषु मासान् संयोज्य त्रिंशता पुनः संगुण्य तेषु दिनानि क्षिपेत् । एवं कृते दशाकालो दिनरूपो भवति तत्र तात्कालिके जन्माहर्गणे सविकले सविकलं संयोज्याहर्गणो भवति ततायो यद्घटिकादिः कालो भवति तस्यातीतार्द्धरात्रात्परतो गणना कार्या तस्मादिष्टदिनमानमानयेदनेनाचार्य्यसूर्य्यश्च द्युगणोऽधोभवगुणितो हिनवरसाप्तावधिकश्चान्द्रः चान्द्रोऽधरतुवेदानागाप्तः अधिमासदिनैर्हीनः इति अथ वहुगुणत्रिरात् सुनिशुचितः हिनवखरसाप्तः पृथग्रसखदिग्भिः लब्धं खरामगुणितं शुक्लाप्तात् सैककोरविद्युगणः एतत् खण्डनाद्यकरणेनैव भवति । कोऽसौ रविद्युगण इत्याह शाकोऽगवसुशरोनोऽर्कगुण्यं चैत्रादिमासयुक्तः त्रिंशद्गुणस्तिथियुत इति । क- षष्ट्यधिकेन शततयेण भागमपहृत्यावाप्तं करणाब्दाः शेषाश्चिंशद्भक्ताश्चैत्रसितायां मासाः शेषा वर्त्तमानमासे सितायास्तिथयः करणाब्देष्वगवसुशरान् संयोज्यातीतशककालो भवति तस्मिन् शाके तस्मिन्मासे तस्मिन् दिने सोऽहर्गण इति तत्रैव दशाप्रवेशः पुनरप्यन्यमन्तर्दशाकालं दिनीकृत्य तस्मिन् योजयेत् एवं यावत्योऽन्तर्दशा भवन्ति तावत्योऽनेनैव प्रकारेण योजनीयाः । एवं ततो ग्रहान् लग्नञ्च गणयेत् अथ वानेन प्रकारेण कालानयनम् "आदित्ये क्रियमाणे यावन्तो गतभगणा भवन्ति तावन्तः करणप्रारम्भादारभ्य गतावदाः । तेषु करणप्रणीतं शककालं संयोज्येष्टशककालो भवति वर्त्तमाने वर्षे यावन्तो राशयः स्फुटार्का भवन्ति तावन्तो मासाः सूर्यभगणानीतात् शुक्लपक्षं कृष्णपक्षं वा तिथिनक्षत्रं चन्द्रार्काभ्यां ज्ञायते एव । पाकस्वामिनीत्यादि यस्य ग्रहस्यान्तर्दशाप्रवेशः स पाकस्वामी तावच्चासौ पाकस्वामी यावत् तस्यान्तर्दशामेव । स च पाकस्वाम्यन्तर्दशाप्रवेशे लग्नगो यदि भवति तदा तस्य सम्बन्धिन्यन्तर्दशा प्रारब्धा शुभदा शोभनफलदा भवति अथ वा तात्कालिकं पाकस्वामिनो यत् सुहृन्मित्रं तस्मिन्नपि दशा प्रवेशकाले लग्नगे शोभना दशा वक्तव्या । अथ वास्य दशापतेः पूर्वव्याख्यातो यो वर्गः तस्मिन्नपि लग्नगे शोभना । अथवान्यस्मिन् सौम्ये शुभग्रहे तत्काललग्नगे दशा प्रारब्धा शोभनैव । अथवा पाकपे दशाधिपतौ ग्रहे तात्कालिकलग्नाच्चिदशषड्लाभेषु तृतीयषट्दशमैकादशस्थानानामन्यतमस्थे शोभनैव दशा वक्तव्या । यद्यप्यत्र सामान्येनोक्तं प्रारब्धा शुभदा दशा तथापि "अधिशत्रुदशां शत्रोः प्राप्तो ऽनिष्टफलप्रदः । अधिमित्रोऽपि मित्रस्य दशां प्राप्तोऽतिशोभनः । समः समदशामेत्य यथोक्तफलदो हि सः" । एतदपि चिन्तनीयम् अनेन प्रकारेण यदि शुभफलान्तर्दशा भवति तदा शुभैव अन्यथाऽशुभैव । अथ शुभफलायामन्तर्दशायां किमप्यनवरतमेव सर्वकालं शुभफलावाप्तिर्भवति किं वा कस्मिंश्चिद्दिवसे एवमशुभायामन्तर्दशायामशुभफलावाप्तिरित्युभयत्र सन्देहस्तु हारार्थमाह मित्रोच्चोपचयेत्यादि पाकेश्वरस्य दशापतेः प्रतिराशौ सञ्चरतः तत्काले यो ग्रहो मित्रं तदुच्चस्थित- चन्द्रमा यदा भवति तदा सत्फलबोधनानि कुरुते न केवलं यावत् पाकपतेरुपचयस्थानगतोऽपि त्रिषडेकादशदशमस्थानानामन्यतमस्थानस्थस्त्रिकोणगोऽपि नवपञ्चमस्थानगतोऽपि तथा मदनस्थः सप्तमे च स्थितः एतेषु निर्दिष्टस्थानेष्वन्यतमस्थानगश्चन्द्रमाः शुभफलायां दशायां सत्फलबोधनानि कुरुते । ज्ञायते तेषां फलानामित्यतोऽच्चोपचयत्रिकोणमदने यस्मिन् स्थाने पाकेश्वरस्य चन्द्रमाः स्थितः स राशिः जन्मनि योभाव आसीत्तदुद्भूतं सत्फलं बोधयति विशेषेण तथा दशा पठितमिति अतोऽस्मादुक्तप्रकारादन्यथा पाकपतेस्तत्कालं शत्रुगृहे नीचराशौ वा दशापतिना सहैकराशौ द्वितीयचतुर्थाष्टमद्वादशस्थानानामन्यतमस्थानस्थो भवति तदा शुभफलायां दशायां पापानि फलानि प्रकटीकरोति स च राशिर्यो भाव आसीत्तदुद्भूतं फलं बोधयति विशेषेण दशापठितमपि अनिष्टमप्यष्टकवर्गोद्भूतं च मित्रदशायां मित्रोच्चोपचयादिषु सत्फलबोधनानि कुरुते शत्रुनीचादिषु अशुभफलानामिति तथा च भगवान् गार्गिः "यद्राशिसंस्थः शीतांशुः शुभकृत् परिकीर्त्तितः । स राशिर्जन्मकाले तु यो भावस्तत् कृतश्च तत्" । शरीरादि-

क्तं सौख्यं वक्तव्यं बलयोगतः अनिष्टराशिसंस्थं तु तद्भावानामशोभन इति" १० भट्टो०।

"दशासु शस्तासु शुभानि कुर्वन्त्यनिष्टसंज्ञास्वशुभानि चैवम्। मिश्रासु मिश्राणि दशाफलानि होराफलं लग्नपतेः समानम्" १६ मू०।

"अथैकस्मिन् वृत्ते दशासु शुभान्यशुभानि च फलान्युक्तानि तेषां विषयविभागं लग्नदशाफलं चोपजातिकयाह दशासु इति शुभाशुभं व्यामिश्रत्वं दशासु पूर्वमेवोक्तं तथा जन्मकाले उपचयराशिस्थानिर्मलमूर्त्तयः स्वोच्चगतयश्च ये ग्रहास्तेषामपि दशाः शुभाः ये चोपचयस्था हृता कृशाः स्वल्पमूर्त्तयस्तेषामपि दशा अशुभाः तथा च यवनेश्वरः "निशाकरादित्यविलग्नभानां तत्कालयोगाद्धिकं बलं यः। बिभर्त्ति तस्यादिदशेष्यते सा शेषास्ततः शेषबलक्रमेण। वयोऽधिको यः प्रथमागतो वा ग्रहः स पूर्वं पठितो दशेशः। बलाधिकश्चेद्यदि केन्द्रसंस्थः पूर्वं स शेषासु यथा प्रदिष्टः। श्रेष्ठा दशा स्वे वयसि ग्रहस्य स्वोच्चाश्रितात्कालबलाश्रिताच्चेत्। मूलत्रिकोणात् स्वगृहाच्च मध्या मित्राश्रिताज्जन्मगृहाश्रिताद्वा। नीचारिभांशोपगताज्जिता वा गृहात् परिध्वस्तविवर्णरूक्षा। अस्तं गताश्चोनिधनारिभेशात् या वाध्यते सा बहुदोषदा स्यात्"। एवं शस्तासु शोभनासु दशासु ग्रहाः शुभान्येव फलानि कुर्वन्ति दशाफलवृत्ते यानि शुभान्यभिहितानि तान्येव भवन्ति नेतराणि, अनिष्टसंज्ञास्वशुभदशासु अशुभान्यनिष्टानि एव भवन्ति मिश्रासु दशासु मिश्राण्येव दशाफलानि भवन्ति एतच्च प्रतिसूतमस्माभिश्च व्याख्यातं तथा च सत्यः "जन्मन्युपचयभवनेषु संस्थिताः स्वोच्चगाः सुमूर्त्तिधराः, श्रेष्ठं फलं विदध्युर्ग्रहाः क्रमात् स्वां दशां प्राप्य अन्यैर्निहता दुःखाल्पमूर्त्तयो ह्युपचयर्क्षसंस्थाश्च स्वदशाभिहतं नेष्टं ग्रहाः प्रयच्छन्ति लोकेषु होराफलं लग्नपतेः समानमिति" होरायाः लग्नस्यान्तर्दशाफलं लग्नपतेः लग्नाधिपस्य समानं तुल्यम् वक्तव्यं यथा मेषलग्नजातस्य भौमदशाफलं वृषलग्नजातस्य शुक्रदशाफलं एवमन्येष्वपि वक्तव्यं किन्तु द्रेक्काणवशाच्छुभायां लग्नदशायां शुभफलमशुभायामशुभम् मिश्रायामुभयमपि। अथ ये पूर्वं दशारिष्टा उक्तास्तेषामिमे भङ्गाः प्रोक्ताः तथा च सारावल्याम् "प्रबले बलवान् खेटः शुभैर्वा संनिरीक्षितः। सौम्याधिमित्रवर्गस्थो मृत्युकृत् न भवेत् तदा। अन्तर्दशाधिनाथस्य विबलस्य दशा यदा। बलिनः स्यात् तदा भङ्गो न बाध्या तस्य च ध्रुवम्। युद्धे च विजयी तस्मिन् ग्रहयोगे शुभो यदि। दशायां न भवेत् कष्टं स्त्रीच्छादिषु च संस्थिते इति" १८भट्टो०।

"संज्ञाध्याये यस्य यद्द्रव्यमुक्तं कर्माजीवो यश्च यस्योपदिष्टः। भावस्थानालोकयोगोद्भवञ्च तत्तत्सर्वं तस्य योज्यं दशायाम्" २०मू०।

"अथान्येषामपि फलानां दशास्वतिदेशं मालिन्याह संज्ञाध्याये इति। यस्य ग्रहस्य संज्ञाध्याये यद्द्रव्यम् "ताम्रं स्यान्मणिहेमेत्यादिना, ग्रन्थे नोक्तं कथितं तस्य तद्द्रव्यस्य शुभदशायां प्राप्तिः योज्या अशुभदशायां हानिः। यश्च कर्माजीवो यस्य ग्रहोपदिष्टो जातकेऽभिहितः "अर्थाप्तिः पितृपत्नीत्यादि तस्य ग्रहस्तस्य कर्माजीवस्य तदन्तर्दशायामेवाप्तिर्भविष्यति। भावफलं वक्ष्यति "सूरस्वच्छ" इत्यादि स्थानफलं राशिफलं "प्रथितचतुरोऽटन" इत्यादि तथा "मेषे सस्त्रक्तिमिरनयन" इत्यादि। आलोकनफलं दृष्टिफलम् "चन्द्रे भूपबुधौ" इत्यादि योगोद्भवं नाभसयोगानुक्ता "सर्वयोगेषु योगकर्तृभ्यो ग्रहेभ्यो मध्याद् यो बलीयान् स स्वदशायामेव फलं ददाति" नाभसयोगाः सकलदशास्वपि फलप्रदाः वक्ष्यति च "इति निगदिता योगाः सार्द्धं फलैरिह नाभसाः नियतफलदाश्चिन्त्या ह्येते समस्तदशास्वपीति"। एवमादि यद् यदुक्तं तत्सर्वं निरवशेषं तस्य ग्रहस्य दशायां योज्यमिति" २०भट्टो०।

"छायां महाभूतकृताञ्च सर्वेऽभिव्यञ्जयन्ति स्वदशामवाप्य। कम्ब्वग्निवाय्वम्बरजान् गुणांश्च नासास्यदृक्त्वक्श्रवणानुमेयान्" २१ मू०।

"अथ यस्य जातकमपि न गणितं तस्य शरीरच्छायां दृष्ट्वा ग्रहदशाज्ञानमिन्द्रवज्रयाह छायां महाभूतकृतामिति पूर्वमुक्तम् "शिखिभूखपयोमरुद्गणानां वशिनो भूमिसुतादयः क्रमेणेति" तत्रादित्यचन्द्रौ वर्ज्जयित्वा-अवशिष्टावेव यः कश्चिद्ग्रहः स्वदशामात्मीयदशामवाप्य महाभूतकृतां छायां अभिव्यञ्जयति प्रकटीकरोति छायाशब्देन शरीरशोभाभिधीयते शरीरकान्तिरित्यर्थः तथा च"सच्छायोऽयं विच्छायोऽयं वर्त्तत इत्यभिधीयते स्वमात्मीयदशायां पृथिव्यादिमहाभूतकृतां शरीरच्छायां व्यञ्जयति प्रकटीकरोति सा च कम्ब्वग्निवाय्वम्बरजान् गुणान् कुः पृथिवी अम्बु वरुणः अग्निः हुताशनः

वायुः अनिलः अम्बरम् आकाशम् एभ्यो जातोत्पन्ना सा छाया तद्गुणान् करोति तांश्च यथासंख्यं नासास्य दृक्त्वक्श्रवणानुमेयान् । पार्थिवी पार्थिवं गुणं गन्धमभिव्यञ्जयति नासानुमेयं घ्राणेनोपलभ्यते आप्या आप्यं गुणं रसमभिव्यञ्जयति तच्चास्यानुमेयम् आस्यशब्देनेह जिह्वा ज्ञेया तया रसस्योपलब्धेः आस्यग्रहणं चात्र वृत्तानुरोधात् कृतम्, आग्नेयी आग्नेयं गुणं रूपमभिव्यञ्जयति दृष्ट्यनुमेयं, वायवी वायव्यं स्पर्शं गुणमभिव्यञ्जयति त्वगनुमेयं स्पर्शेनोपलभ्यते नाभसी नाभसं गुणं शब्दमभिव्यञ्जयति श्रवणानुमेयं कर्णोपलभ्यम् । एतदुक्तं भवति यदा शुभगन्धः पुरुषो भवति तदास्य बुधकृता पार्थिवीच्छाया ज्ञेया । यदा मिष्टरसभोजी भवति तदास्य चन्द्रशुक्रकृताप्या छाया ज्ञेया । यदातीवरूपवान् सुकान्तः पुरुषो भवति तदा सूर्यभौमकृता आग्नेयी छाया ज्ञेया । यदा स्पर्शेन मृदुर्भवति तदा शनैश्चरकृता वायवी छाया ज्ञेया । यदास्य वचनं कर्णयोः सुखकरं भवति तदा जीवकृता नाभसी छाया ज्ञेया। छायाविशेषलक्षणमाचार्येण संहितायामभिहितम् तथा च "छाया शुभाशुभफलानि निवेदयन्ती लक्ष्या मनुष्यपशुपक्षिषु लक्षणज्ञैः । तेजोगुणान् बहिरपि प्रविकाशयन्ती दीपप्रभा स्फटिकरत्नघटस्थितेव । स्निग्धद्विजत्वङ्नखरोमकेशा छाया सुगन्धा च महीसमुत्था । तुष्ट्यर्थलाभाभ्युदयान् करोति धर्मस्य चाहन्यहनि प्रवृत्तिम् । स्निग्धा सिता च हरिता नयनाभिरामा सौभाग्यमार्दवसुखाभ्युदयान् करोति । सर्वार्थसिद्धिजननी जननीव चाप्या छायाफलं तनुभृतां शुभमाददाति । चण्डा धृष्या पद्महेमाग्निवर्णा युक्ता तेजोविक्रमैः सप्रतापैः । आग्नेयीति प्राणिनां स्याज्जयाय क्षिप्रं सिद्धिं वाञ्छितार्थस्य धत्ते । मलिनपरुषकृष्णा पापगन्धानिलोत्था जनयति वधबन्धं व्याध्यनर्थार्थनाशम् । स्फटिकसदृशरूपा भाग्ययुक्तात्युदारा निधिरिव गगनोत्था श्रेयसां स्वच्छवर्णा" २१भट्टो० ।

"शुभफलददशायां तादृगेवान्तरात्मा(त्मा) बहु जनयति पुंसां सौख्यमर्थागमं च । कथितफलविपाकैस्तर्कयेद्वर्त्तमानां परिणमति फलाप्तिः स्वप्नचिन्तास्ववीर्यैः"२२मू०

"अत्र च वायवीं छायां वर्जयित्वा सर्वास्वेव छायासु अशुभं शुभं च फलं तत्कथम् शुभफलेयमशुभफलेयमिति तद्दृशा ज्ञायते तत्संज्ञानमन्तरात्मनः स्वरूपं मालिन्यादि शुभफलदेति शुभं फलं ददाति यः स शुभफलदः शुभफलदस्य ग्रहस्य या दशा तस्याम् अन्तरात्मा स्वदेहस्थः परमात्मा चित्स्वरूपः तादृगेव शुभो भवति । तस्य च पुरुषस्य छायादर्शितग्रहदशाकाले बहुविधमनेकप्रकारं सौख्यं सुखभावमर्थागमं धनलाभं च जनयत्युत्पादयति अर्थादेवाशुभदशायां पुरुषस्यान्तरात्माप्यशुभो भवति तत्र दर्शितग्रहच्छाया सूचिता तादृगेव फलदा सा चासौख्यमनर्थागमञ्च बहुप्रकारं जनयति मिश्रायां मिश्रा च । यात्रायाञ्च वक्ष्यति "निमित्तानुचरं सूक्ष्मं देहेन्द्रियमहत्तरम् । तेजो ह्येतच्छरीरस्थं त्रिकालफलवन्नृणाम् । प्रीतये न मनो नार्थेनासिद्धावभिनन्दति । तस्मात् सर्वात्मना यातुरनुमेयं यथा मनः। शुभाशुभानि सर्वाणि निमित्तानि स्युरेकतः । एकतश्च मनःशुद्धिस्तद्विशुद्धिर्जयावहा" इति कथितफलविपाकैरिति ग्रहाणां दशासु यानि फलानि शुभान्यशुभानि कथितान्युक्तानि तानि यः पुरुषो भुङ्क्ते तस्य पुरुषस्य तद्ग्रहदशा वर्त्तते इति ज्ञेयम् एतदुक्तं भवति यादृशं फलं शुभमशुभं वा पुरुषस्योपलभ्यते तच्च यस्य ग्रहस्य दशायां पठितं सा तस्य दशा नरस्य वर्त्तत इति ज्ञेयम् । एवं वर्त्तमानां दशान्तर्कयेल्लक्षयेदित्यर्थः । एवं छायावशेनान्तरात्मवशेन फलपक्तिवशेन वा गणितस्य जातकस्य वर्त्तमानां दशां वदेत् । यथा सौरदशायामशुभायां व्यङ्गत्वमुक्तं न च शुभायामथ नैकध्यं व्यङ्गत्वं दृष्टम् । शुक्रदशायां शुभायां निधिप्राप्तिरुक्ता न च सापि दृष्टा । तदर्थमाह परिणमति फलाप्तिरिति अवीर्यैः बलहीनैः ग्रहैः फलानि यानि शुभान्यशुभानि वा दत्तानि तत्फलाप्तिः फलप्राप्तिः स्वप्ने स्वप्नावस्थायां परिणमत्यनुभूयते चिन्तायां मनोरथेन वेति । केचित्तु "शुभफलददशायां तादृगेवान्तरास्थेति पठित्वैवं व्याचक्षते यथा शुभायां दशायामन्तरास्थान्तर्दशा शुभापि भवति तदा पुंसां बहु जनयति सौख्यमर्थागममिति अर्थादेवाशुभायां दशायामशुभान्तर्दशा असौख्यमनर्थागमञ्च बहु जनयतीति" अनेन व्याख्यानेन शुभायामशुभायाञ्च शुभाशुभानि भवन्ति मिश्रफलं प्रयच्छन्ति । न चैतदिष्यते यस्मादुक्तम् "एकर्क्षगोऽर्द्धमपहृत्य ददाति तु स्वमिति" अत्र दशापतेः फलमपहृत्यान्तर्दशापतिरेव स्वं फलं ददातीति ज्ञेयम् अन्यथापहृत्येति निरर्थकं स्यादिति तस्मात् पूर्वपाठः श्रेयान् द्वितीयः प्रमादपाठः । प्रमादपाठेन विना छायां दृष्ट्वा दशायाः शुभाशुभत्वमानेतुं

न शक्यत इति” २२भट्टोत्पलकृतं तद्व्याख्यानम्।

“एकग्रहस्य सदृशे फलयोर्विरोधे नाशं वदेद् यदधिकं परिपच्यते तत्। नान्यो ग्रहः सदृशमन्यफलं हिनस्ति स्वां स्वां दशामुपगताः स्वफलप्रदाः स्युः” २३मू०।

“कथैकग्रहदत्तयोः फलयोः सदृशयोर्नाशो भवति भिन्नदत्तानां बहूनामपि पक्तिरेव भवतीत्येतद्दर्शयन्नति-लक्षेनाह एकग्रहस्येति सर्वाण्येव फलानि नाशवर्जं स्वदशायां ग्रहः प्रयच्छतीत्युक्तम् तत्रैकेन ग्रहेण यदा सदृशं विरुद्धं फलद्वयं दत्तं भवति तस्मिन् सदृशे तुल्ये द्वयोः फलयोर्विरोधे सति नाशो भवतीति तस्य फलद्वयस्य वदेद्ब्रूयात् कीदृशं तद्विरुद्धमित्यत्रोच्यते यथा कश्चिद्ग्रहः कयापि युक्त्या दशाफलादिना सुवर्णदो भवति स एवान्यया युक्त्या अष्टवर्गफलयोगफलदृष्टिफलभावफलानामन्यतमेन सुवर्णापहारी भवति तदा फलद्वयेऽपि सुवर्णसम्बन्धोऽस्ति इति सादृश्यं स्वर्णदानापहारेणेति विरोधः। एवमेकस्य ग्रहस्य सदृशे फलयोः विरोधे नाशं वदेत् न सुवर्णलाभो न चापहानिरिति यदधिकं परिपच्यते तत्र एकेनापि ग्रहेण फलद्वयं दत्तमन्यरूपं तयोः मध्याद्यदधिकं तत्परिपच्यते। यथा कश्चिद्ग्रहो निर्दिष्टप्रकारद्वयेन सुवर्णदः स एव प्रकारेणैकेन सुवर्णापहारी तदा द्वयोरधिकत्वाद्दानस्य सुवर्णं ददात्येव नापहरति। अथ वा प्रकारद्वयेन सुवर्णापहारी प्रकारेणैकेन सुवर्णदस्तदापहरणस्याधिकत्वादपहरत्येव। अथवा सुवर्णापहारी रूप्यदश्च तथापि द्वे असदृशे असदृशत्वादधिकं परिपच्यते सुवर्णापहारी रूप्यदश्च भवति इति कश्चित् नान्यो ग्रह इति अन्येन ग्रहेण दत्तं सदृशं विरोध्यपि फलं नान्यो ग्रहोऽपि हिनस्त्यपहरति यथा कश्चिद्ग्रहः सुवर्णदो भवत्यन्यश्च सुवर्णापहारी तदा तत्र सुवर्णदः स्वदशायां सुवर्णं ददाति स्वदशायां सुवर्णापहारी चापहरति अनेनैतदुक्तं भवति। यथैकग्रहस्य सदृशफलयोः विरोधे समग्रजन्मान्तरेऽपि फलनाशं वदेत् अन्यत्र विरुद्धयोरपि फलयोः नाशं न वदेत् यतः सुवर्णदो ग्रहः स्वामात्मीयां दशामुपगतः प्राप्तः सुवर्णलाभं करोति सुवर्णापहारी स्वदशामुपगतः प्राप्तः सुवर्णमपहरति एतदष्टकवर्गफलं विनाशयतस्तत्रैकस्य ग्रहस्य फलसदृशयोरपि तुल्यसंख्ययोः फलयोर्नाशो भविष्यति यथा च भविष्यति तथा तत्रैव प्रतिपादयिष्यामः इति” २३भट्टो०

ताजकोक्तवर्षदशा पात्यांशदशाख्या तु नील०उक्ता यथा

अथ दशाक्रमः “स्पष्टान् सलग्नान् खचरान् विधाय राशीन् विनाऽल्पाल्पलवं तु पूर्वम्। निवेश्य तस्मादधिकाधिकांशं क्रमादयं स्यात् तु दशाक्रमोऽब्दे। ऊनं विशोध्याधिकतः क्रमेणांशाद्यं विशुद्धांशकशेषकैक्यम्। सर्वाधिकांशोन्मितमेव तत् स्यादनेन वर्षस्य मितिस्तु भाज्या। शुद्धांशकांस्तान् गुणयेदनेन लब्धं ध्रुवाङ्केन भवेद्दशायाः। मानं दिनाद्यं खलु तद्ग्रहस्य फलान्यथैषां निगदेत्तु शास्त्रात्। शुद्धांशसाम्ये बलिनो दशाद्या बलस्य साम्येऽल्पगतेऽस्तु पूर्वा। साम्ये विलग्नस्य बलेन चिन्त्यं बलादिकं लग्नपतेर्विचिन्त्यम्”।

तत्फलादिकं “दशा रवेः पूर्णबलस्य दत्ते” इत्यादिना तत्रोक्तं दृश्यम्। पाश्चात्त्यैः वर्षकाले मुद्दा दशा व्यवह्रियते सा तु “वर्षोन्मितिर्जन्मभसंयुताङ्कहृता क्रमेण रवितो दिनानि। विंशोत्तरीयानुहृतेस्तु वर्षाः वर्षप्रवेशात् त्रिगुणा दशाः स्युः” यथा रवेः षड्वर्षाः त्रिगुणिताः १८ दिनानि। एवं विधोः १०वर्षा वर्षे ३० दिनानि। कुजस्य ७वर्षा वर्षे २१ दिनानि। राहोः १८ वर्षा वर्षे ५४ दिनानि। गुरोः १६ वर्षा वर्षे ४८ दिनानि। शनेः १९वर्षा वर्षे ५७दिनानि। बुधस्य १७वर्षा वर्षे ५१ दिनानि। केतोः ७ वर्षा वर्षे २१ दिनानि। शुक्रस्य २० वर्षा वर्षे ६० दिनानि। एवं ३६० दिनानीति बोध्यम्। जातकग्रन्थे तु दशविधा दशा उक्ता १योगिनी २वार्षिकी ३नाक्षत्रिकी ४साम्बिकी ५मुद्दा ६विंशोत्तरा ७त्रिंशोत्तरा ८पताकी ९हरगौरी १०दैनिकीति। तत्रैव तद्विशेषो बोध्यो विस्तरभयादिह तदानयनादिकं नोक्तम्।

“सत्ये लग्नदशा चैव त्रेतायां हरगौरिका। द्वापरे योगिनी चैव कलौ नाक्षत्रिकी दशा” इति समयामृतम् वराहस्तु बृहज्जातके एतदनादृत्यैव कलौ लाग्निकी दशा दर्शितेति बोध्यम्। अन्तर्दशाग्रन्थे विंशोत्तरीयदशान्तर्दशानयने “स्वदशाभिर्दशां हत्वा दशभिर्भागमाहरे”दित्येव पाठः। तत्र वसुभिरित्यपि पाठो बोध्यः।

## विंशोत्तरीयान्तर्दशाचक्रम् ।

| | | | |
|---|---|---|---|
| महादशावर्षाः | र६ | च७ | म१० |
| | ख०।३।१८ | ख०।१०।० | ख०४।२७ |
| | च०६। | म०७।० | रा१।०।१८ |
| | म०४।६ | रा१।६।० | जी०।११।६ |
| | रा०।१०।२४ | जी१।४।० | श१।१।९ |
| | जी०।९।१८ | श१।७।० | बु०।११।२७ |
| | श०।११।१२ | बु१।५।० | के४।२७ |
| | बु०।१०।६ | के०।७।० | शु१।२ |
| | के०।४।६ | शु१।८।० | र०।४।६ |
| | शु१।०।० | र०।६ ० | च०।७। |
| समष्टिवर्षाः | ६ | १० | ७ |
| महादशावर्षाः | रा १८ | जी १६ | श १९ |
| | ख२।८।१२ | ख२।१।१८ | ख३ ०।३ |
| | जी२।४।२४ | श२।६।१२ | बु२।८।९ |
| | श२।१०।६ | बु२।३।६ | के१।१।९ |
| | बु२।६।१८ | के०।११।६ | शु३।२।० |
| | के१।०।१८ | शु२।८। | र०।११।१२ |
| | शु३।०।० | र०।९।१८ | च१।७।० |
| | र०।१०।० | च१।४। | म१।१।९ |
| | च१।६।० | म०।११।६ | रा२।१०।६ |
| | म१।०।१८ | रा२।४।२४ | जी२।६।१२ |
| समष्टिवर्षाः | १८ | १६ | १९ |
| महादशावर्षाः | बु १७ | के ७ | शु २० |
| | ख०२।४।२७ | ख०।४।२७ | ख३।४। |
| | के०।११।२७ | शु१।२। | र१।०।० |
| | शु२।१०।० | र०।४।६ | च१।८। |
| | र०।१०।६ | च१।५।० | म१।२। |
| | च१।५।० | म०।४।२७ | रा३।०।० |
| | म०।११।२७ | रा१।०।१८ | जी२।८।० |
| | रा२।६।१८ | जी०।११।६ | श३।२। |
| | जी२।३।६ | श१।१।९।९ | बु२।१०।० |
| | श२।८।९ | बु११।२७ | के१।२ |
| समष्टिवर्षाः | १७ | ७ | २० |

अष्टोत्तरीयान्तर्दशामानं ज्योतिस्तत्त्वेऽस्तीति नात्र प्रदर्शितम् ।

पूर्वमनुक्तत्वात् योगिन्यामन्तर्दशाचक्रमत्र प्रदर्श्यते

## योगिन्यन्तर्दशाचक्रम् ।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| महादशावर्षाः | म१। | पि२। | ध३। | भ्रा४। | भ५। | उ६। | सि७। | स८। |
| अन्तर्दशामानम् । | म१० | पि१।१० | ध३। | भ्रा५।१० | भ८।१० | उ१।२ | सि१।४।१० | स१।६।१० |
| | पि२० | ध२।० | भ्रा४। | भ६।२० | उ१०। | सि१।२ | स१।६।२० | म।२।२० |
| | ध१।० | भ्रा२।२० | भ५ | उ८। | सि१।१।२० | स१।४ | म०२।१० | पि।५।१० |
| | भ्रा१।१० | भ३।१० | उ६ | सि८।१० | स१।१।१० | म।२। | पि०४।२० | ध।८।० |
| | भ१।२० | उ४। | सि७ | स१०।२० | म।१।२० | पि।४। | ध।७। | भ्रा।१०।२० |
| | उ२। | सि४।२० | स८ | म१।१० | पि।३।१० | ध।६। | भ्रा।९।१० | भ१।१।१० |
| | सि२।१० | स५।१० | म१। | पि२।२० | ध।५। | भ्रा।८। | भ१।१।२० | उ१।४ |
| | स२।२० | म।२० | पि२। | ध४ | भ्रा।६।२ | भ।१०। | उ१।२। | सि१।६।२० |
| समष्टिवर्षाः | १। | २। | ३। | ४। | ५। | ६। | ७। | ८। |

**दशाकर्ष** पु० दशया तैलादिकमाकर्षति आ+कृष–अण् । १प्रदीपे २वस्त्राञ्चले पु०स्त्री० पुंस्त्वे अ०व० । हारा० । णिनि दशाकर्षिन् प्रदीपे हारा० ।

**दशाक्षर** न० दश अक्षराणि पादेऽत्र । १पङ्क्तिनामके छन्दोभेदे । "वरुणो दशाक्षरेण विराजमुदजयत्" यजु० ९।३६। २दशाक्षरयुक्ते मन्त्रभेदे त्रि० । स्त्रियां टाप् । "दशाक्षरा वै विराट्" श० ब्रा० १।१।१।२२। ३तन्त्रोक्ते स्त्रीदेवतामन्त्रे स्त्री तत्र अर्थ आद्यापि गौराङ्गीप् । "एषा दशाक्षरी विद्या सर्वसम्पत्प्रदायिनी" तन्त्रसा० ।

**दशाङ्गधूप** पु० त्रिदोषघ्ने अपस्मारपिशाचादिनाशके धूपविशेषे यथा "वासवेहा दशाङ्गेन त्रिदोषघ्नेन चार्भकम् । नश्यन्ति यस्य धूपेन अपस्मारपिशाचकाः । पञ्चांशा गन्धपाषाणात् तावन्माहिषगुग्गुलुः । चतुरंशं चन्दनञ्च जटामांसी च तावती । त्रिभागः सर्जकः सारस्तावदेव हि लाक्षकम् । उशीरन्तु द्विभागं स्यात् घृते भृष्टं नखं समम् । कर्पूरौ मृगनाभिश्च एकभागौ प्रकीर्त्तितौ ।

एष दशाङ्गधूपस्तु रुद्रस्यापि मनोहरेदिति” शब्दार्थचि० धृतवाक्यम्। पुष्पदानोत्तरं देवाय दीयमाने २धूपविशेषे यथा “मधु मुस्तं घृतं गन्धो गुग्गुल्वगुरुशैलजम्। सरलं सिह्लं सिद्धार्थं दशाङ्गधूप उच्यते इति”। अन्यश्च। कर्पूरं कुष्ठमगुरु गुग्गुलुर्मलयोद्भवम्। केशरं वालकं पत्र त्वक् जातीकोषमुत्तमम्। सर्वमेतद्घृतयुतं दशाङ्गधूप ईरित” इति।

**दशाङ्गुल** न० दश अङ्गुलय इव फलत्वगुपरि सन्त्यस्य अच्। १खर्बुजे फलभेदे भावप्र०तस्य फलोपरि अङ्गुलाकारदशसिरासत्त्वात् तथात्वम्। तद्गुणाः खर्बुजशब्दे २४६६ पृ० उक्ताः। दश अङ्गुलयः प्रमाणमस्य तद्धितार्थद्विगोः ठञ् तस्य लुक् अच्समा०। २दशाङ्गुलिप्रमाणयुक्ते त्रि०। “निःक्षेप्योऽयोमयः शङ्कुर्ज्वलन्नास्ये दशाङ्गुलः” मनुः। सहस्रशीर्षेत्यादि “अत्यतिष्ठद्दशाङ्गुलम्” ऋ० १०।९०।१ “दशाङ्गुलं दशाङ्गुलिपरिमितं देशमत्यतिष्ठत् अतिक्रम्य व्यवस्थितः”भा०।

**दशाधिपति** पु० ६त० ज्योतिषोक्ते १दशापतौ रव्यादिग्रहे दशानां पदातीनामधिपतिः। दशपदात्यध्यक्षे राजनियुक्ते २सैन्यभेदे च (जमादार) “समानाशनपानास्ते कार्य्या द्विगुणवेतनाः। दशाधिपतयः कार्य्याः शताधिपतयस्तथा। ततः सहस्राधिपतिं कुर्य्याच्छूरमतन्द्रितम्”भा०शा०१००अ०।

**दशानन** पु० दश आननान्यस्य। रावणे शब्दर०। “दशाननकिरीटेभ्यस्तत्क्षणं राक्षसश्रियः” रघुः। “ध्वंसितोद्धत दशाननाम्” (लङ्काम्) माघः। दशास्यादयोऽप्यत्र।

**दशानिक** पु० आने जीवने हितः आनिकः दशाभेदे आनिकः। दन्तीवृक्षे शब्दच०

**दशान्त** पु० ६त०। १वार्द्धके २वर्त्तिकान्ते च। “निविष्टविषयस्नेहः स दशान्तमुपेयिवान्। आसीदासन्ननिर्वाणः प्रदीपार्चिरिवोषसि” रघुः।

**दशामय** पु० दशामया यस्मात्। रुद्रे हेमच०।

**दशापवित्र** न० दशा वस्त्राञ्चलं पवित्रमिव। श्राद्धादिदेये वासःखण्डे। “दशापवित्रनामको यो वस्त्रखण्डस्तेनोद्धृतो द्रोणकलशमूलमध्ये त्रिभागान् मन्त्रगतैस्त्रिभिः शोधयेत्” “दशापवित्रस्य मध्ये शुक्लां पूर्णां स्रुवं सोमधारास्रावणार्थं यजमान आबध्नाति,सा नाभिरित्युच्यते। उदीचीनदशमवाचीननाभि च ‘दशापवित्रं’ कृत्वा द्रोणकलशस्योपरिष्टादुद्गातादयस्ततो वितनुयुः। वितत्य च दशापवित्रस्य कोणान् धारयेयुः” ता० ब्रा०१।२ भा०। “अथ दशापवित्रमुपस्पृश्य हिङ्करोति” शत० ब्रा० ४।२।२।११

**दशारुहा** स्त्री दशसु दिक्षु आरोहति आ+रुह-क। कैवर्त्तीमुस्तके राजनि०।

**दशार्ण** पु० दश ऋणानि दुर्गाणि भूमयो जलाधारा वा यत्र “प्रवत्सेत्यादिना” पा०वृद्धिः। १देशभेदे स च देशः वृ० सं० कूर्मविभागे १४ अ० आग्नेय्यामुक्तो यथा “आग्नेय्यां दिशि कोसलाः”इत्युपक्रमे “निषादराष्ट्राणि पुरिकदाशार्णाः”। स्वार्थे अण्। “तत्राधरेऽवन्त्यपरान्त्य साधून् वणिगदाशार्णान् मरुकच्छपांश्च” ५ अ०। “सप्तव्याधा दशार्णेषु” श्राद्धे पाठ्यपितृगाथा। तद्वाचकशब्दो यत्रानुवाकेऽध्याये अस्ति विमुक्ता०अण्। दाशार्ण दशार्णशब्दयुक्ते अनुवाके अध्याये च। सोऽभिजनोऽस्य तस्य राजा वा अण्। दाशार्ण पित्रादिक्रमेण तद्देशवासिनि तन्नृपे च“तत्र दाशार्णको राजा सुधर्म्मा लोमहर्षणम्। कृतवान् भीमसेनेन महद्युद्धं निरायुधम्”भा०स०२८ अ०। भीमप्राचीजये। अत्र स्वार्थे क। बहुषु अणो लुक्। “पूर्वमागस्कृतो जित्वा दशार्णाः समरे जिताः”भा०आ० ११२अ०। “विजित्याल्पेन कालेन दशार्णानजयत् प्रभुः। प्रतीचोस्योऽपि तन्नामा देशोऽस्ति “तान् दशार्णान् स जित्वा च प्रतस्थे पाण्डुनन्दनः” भा० स० ३१ अ०। नकुलप्रतीचीजये। अतएव भा०भी० ९अ० “अतऊर्द्ध्वं जनपदान्निबोध गदतोमम” इत्युपक्रमे “उत्तमाश्च दशार्णाश्च मेकलाश्चोत्कलैः सह” इत्यत्र उत्तमत्वेन पूर्वं पूर्वदक्षिणस्याम् दशार्णानुक्त्वा “जठराः कुकुराश्चैव सदशार्णाश्च भारत!। पुनरन्यो निर्विशेषणो दशार्णदेश उक्तः। परस्ताच्च “वातायना दशार्णाश्च रोमाणः कुशविन्दवः इत्यत्र वातायनत्वेन विशेषणात् तादृशोऽपि देशभेदोऽस्तीति गम्यते। “सम्पत्स्यन्ते कतिपयदिनस्थायि हंसा दशार्णाः” मेघ०।

**दशार्णेयु** पु० पौरवरौद्राश्वन्टपस्य पुत्रभेदे “दशार्णेयुर्जलेयुश्च स्थलेयुश्च महाबलः” हरिवं०३१अ०।

**दशार्द्ध** न० दशानामर्द्धम्। १पञ्चसंख्यायां २तत्संख्येये च “अश्वरोमाता विनाशिन्यो दशार्द्धानान्तु याः स्मृताः” मनुः। “छिद्रेण यन्त्रस्य समर्पयध्वं शरैः शितैर्व्योमचरैर्दशार्द्धैः” भा०आ० १८५ अ०। दश बलानि अश्नोति अश—अण्। ३दशबले बुद्धे त्रिका० दशबलशब्दे दृश्यम्।

**दशार्ह** पु०क्रोष्टृवंश्यधृष्टनृपस्य पुत्रभेदे“धृष्टस्य जज्ञिरे पुत्रास्त्रयः

परमधार्म्मिकाः । आवन्त्यश्च दशार्हश्च वर्ची विषहरश्च यः” हरिवं० ३७ अ०क्रोष्टुवंश्योक्तौ । भाग० ८।२४।१ उक्ते ३दृष्णिन्टपपौत्रे च । “क्रथस्य कुन्तिः पुत्रोऽभूद् दृष्णि स्तस्याथ निर्वृतिः । ततो दशार्हो नाम्नाभूत् तस्य व्योमः सुतस्ततः”। उपचारात् ३तद्वंश्ये न्टपे ४तदधिकृतदेशे च “धौम्यश्च भीमश्च युधिष्ठिरश्च यमौ च कृष्णाश्च दशार्ह सिंहः । उवाच दिष्ट्या भवतां शिवेन प्राप्तः किरीटी मुदितः कृतास्त्रः । प्रोवाच कृष्णामपि याज्ञसेनीं दशार्ह-भर्त्ता सहितःसुहृद्भिः”भा०व०१८३अ०।५विष्णौ पु०“विज-योजयः सत्यसन्धो दशार्हः सात्वतां पतिः” विष्णु०स० । शङ्करभाष्ये तु दाशार्ह इति पठित्वा दाशोदानं तमर्हति दाशार्हः दशार्हस्य कुले उत्पन्नत्वाद्वा”व्याख्यातम् । दशा-र्हस्य गोत्रापत्यम् शिवा०अण् । दाशार्ह यदुवंश्यन्टपात्मजे कृष्णादौ स्त्रि०स्त्रियां ङीप् । दशार्हसंज्ञावकशब्दोऽस्त्यत्र अध्याये अनुवाके वा विमुक्ता० अण् । दाशार्ह दशार्ह-शब्दयुक्ते अनुवाके अध्याये च । ६आयुधजीविसंघभेदे च। ततः स्वार्थे पर्श्वा० अण् । दाशार्ह आयुधजीविसंघभेदे । मद्रा०स्वार्थे अण् । दाशार्ह यदुवंश्ये न्टपमात्रे च ।

**दशावतार** पु०दश अवतारा अस्य । विष्णौ दश अवताराश्च अवतारशब्दे दृश्याः अन्येऽपि दशावताराः मत्स्यपु०उक्ता यथा “धर्म्मांशारायवस्यांश: संभूतश्चाक्षुषेऽन्तरे । यज्ञश्च वर्त्तयामासुर्देवा वैवस्वतेऽन्तरे । प्रादुर्भावे ततस्तस्य ब्रह्मा स्यासीत् पुरोहितः । युगाख्यायाञ्चतुर्थ्यान्तु आपन्नेषु सुरेषु वै । संभूतः स समुद्रान्ते हिरण्यकशिपोर्वधे । द्वितीये नरसिंहाख्ये रुद्रो ह्यासीत् पुरोहितः । वलि-संस्थेषु लोकेषु त्रेतायां सप्तमं प्रति । तृतीये वामनस्यार्थे धर्म्मेण तु पुरोधसा । इतास्त्विमः सम्भूतास्तस्य दिव्याः संभूतयो द्विजाः । मानुष्याः सप्त येऽन्ये तु शापजा-स्तान्निबोधत । त्रेतायुगे तु प्रथमे दत्तात्रेयो बभूव ह । नष्टे धर्म्मे चतुर्थांशे मार्कण्डेयपुरःसरः । पञ्चमः पञ्चदश्यान्तु त्रेतायां सम्बभूव ह । मान्धाता चक्रवर्त्ती तु तस्यौतथ्यपुरःसरः । एकोनविंश्यां त्रेतायां सर्वक्षत्रान्तकृद्विभुः । जामदग्न्यस्तथा षष्ठो विश्वामित्र पुरःसरः । चतुर्विंशे युगे रामो वशिष्ठेन पुरोधसा । सप्तमो रावणस्यार्थे जज्ञे दशरथात्मजः । अष्टमे द्वापरे विष्णुरष्टाविंशे पराशरात् । वेदव्यासस्तथा जज्ञे जातूकर्ण्यपुरःसरः । कर्त्तुं धर्म्मव्यवस्थानमसुराणां प्रणाशनम् । तिभेत्र नवमके जज्ञे तपसा पुष्करेक्षणः । देवक्यां वसुदेवेन द्वैपायनपुरःसरः । तस्मिन्नेव युगे क्षीणे सन्ध्याशिष्टे भविष्यति । कल्की विष्णुयशा नाम पाराशर्य्यपुरःसरः । दशमो भाव्यसंभूतो याज्ञ-वल्क्यपुरःसरः ।”

**दशाश्व** पु० दश अश्वा रथेऽस्य । चन्द्रे शब्दर०। “रथ-स्त्रिचक्रः सोमस्य कुन्दाभास्तस्य वाजिनः । वामदक्षिणतो युक्ता दश तेन चरत्यसौ । वीथ्याश्रयाणि ऋक्षाणि ध्रुवाधारेण वेगिना । ह्रासवृद्धिक्रमस्तस्य रश्मीनां सवितुर्यथा । अर्कस्येव स्थितस्याश्वाः सकृद्युक्ता वहन्ति ते । कल्पमेकं मुनिश्रेष्ठ ! वारिगर्भसमुद्भवाः” पुराण सर्वस्वे विष्णु० पु० ।

**दशाश्वमेध ( धिक )** न०काशीस्थतीर्थभेदे तन्नमप्रवृत्ति-र्दिकथा काशी०ख० ५२अ० उक्ता यथा

“साहाय्यं प्राप्य राजर्षेर्दिवोदासस्य पद्मभूः । इयाज दशभिः काश्यामश्वमेधैर्महामखैः । अद्यापि होमधूमौघैर्य्यद्व्याप्तं गगनान्तरम् । तदा प्रभृति नैवेह नीलिमानं जहात्यदः । तीर्थं दशाश्वमेधाख्यं प्रथितं जगतीतले । तदा प्रभृति तत्रासीद्धाराणस्यां शुभप्रदम् । पुरा रुद्रसरो नाम तत्तीर्थं कलसोद्भव ! । दशाश्वमेधिकं पश्चाज्जातं विधिपरिग्रहात् । स्वर्द्धुन्यथ ततः प्राप्ता भगीरथसमागमात् । अतीव पुण्यवज्जात मतस्तीर्थमनुत्तमम् । विधिर्दशाश्वमेधेशं लिङ्गं संस्थाप्य तत्र वै । स्थितवान् न गतोऽद्यापि क्वापि काशीं विहाय तु । राज्ञो धर्म्मरतेस्तस्य छिद्रं नाप च किञ्चन । अतः पुरारेः पुरतो विदित्वा किं वदेद्विधिः । क्षेत्रप्रभावं विज्ञाय ध्यायन् विश्वेश्वरं विभुम् । ब्रह्मेश्वरं च संस्थाप्य विधिस्तत्रैव संस्थितः । परा तनुरियं काशी विश्वेशस्येति निश्चितम् । अस्याः संसेवना-च्छम्भुर्न कुप्यति पुरा मयि । कः प्राप्य काशीं दुर्मेधाः पुनस्त्यक्तुमिहेहते । अनेकजन्मजनितकर्म्मनिर्मूल-नक्षमाम् । विश्वसन्तापसंहर्त्तुः स्थाने विश्वपतेस्तनुः । सन्ताप्यते परं काश्याविश्लेषजमहाग्निना । प्राप्य काशीं त्यजेद्यस्तु समस्ताघौघनाशनीम् । न्टपशुः स परिज्ञेयो महासौख्यपराङ्मुखः । निर्वाणलक्ष्मीं यः काङ्क्षेद्भ्रमन् संसारदुर्गतिम् । तेन काशी न सन्त्याज्या यद्याप्तैशादनुग्रहात् । यः काशीं संपरि-त्यज्य गच्छेदन्यत्र दुर्मतिः । तस्य हस्ततलाद्गच्छेच्चतु-र्वर्गफलोदयः । निवर्हणीमघौघस्य सुपुण्यपरिवृंहि-

णीम्। कः प्राप्य काशीं दुर्मेधास्त्यजेन्मोक्षसुखप्रदाम्। सत्यलोके क्षतं सौख्यं क्व सौख्यं वैष्णवे पदे। यत् सौख्यं लभ्यते काश्यां निमेषार्द्धनिषेवणात्। वाराणसीगुणगणांश्चिन्तयेन्द्रुहिणस्त्विति। व्याहृत्य मन्दरगिरिं न पुनः प्रत्यगान्मुने!। स्कन्द उवाच। मित्रावरुणयोः पुत्र। महिमानं ब्रवीमि ते। काश्यां दशाश्वमेधस्य सर्वतीर्थशिरोमणेः। दशाश्वमेधिकं प्राप्य सर्वतीर्थोत्तमोत्तमम्। यत् किञ्चित् क्रियते कर्म तदक्षयमिहेरितम्। स्नानं दानं तपो होमः स्वाध्यायो देवतार्चनम्। सन्ध्योपास्तिस्तर्पणञ्च श्राद्धं पितृसमर्चनम्। दशाश्वमेधिके तीर्थे सकृत् स्नात्वा नरोत्तमः। दृष्ट्वा दशाश्वमेधेशं सर्वपापैः प्रमुच्यते। ज्यैष्ठे मासि सिते पक्षे प्राप्य प्रतिपदं तिथिम्। दशाश्वमेधिके स्नात्वा मुच्यते जन्मपातकात्। ज्यैष्ठशुक्लद्वितीयायां स्नात्वा रुद्रसरोवरे। जन्मद्वयकृतं पापं तत्क्षणादेव मुञ्चति। एवं सर्वासु तिथिषु क्रमात् स्नायान्नरोत्तमः। आ शुक्लदशमीं यावद्दशजन्माघमुत्सृजेत्। तिथिं दशहरां प्राप्य दशजन्माघहारिणीम्। दशाश्वमेधिके स्नातो यामीं पश्येन्न यातनाम्। लिङ्गं दशाश्वमेधेशं दृष्ट्वा दशहरातिथौ। दशजन्मार्जितैः पापैस्त्यज्यते नात्र संशयः। स्नातो दशहरायां यः पूजयेल्लिङ्गमुत्तमम्। भक्त्या दशाश्वमेधेशं न तं गर्भदशा स्पृशेत्। ज्यैष्ठे मासि सिते पक्षे पक्षं रुद्रसरे नरः। कुर्वन्वै वार्षिकीं यात्रां न विघ्नैरभिभूयते। दशाश्वमेधावश्चैवैवं फलं सम्प्रणाप्यते। दशाश्वमेधे तत्पूर्वं स्नात्वा दशहरातिथौ। स्वर्धुन्याः पश्चिमे तीरे नत्वा दशहरेश्वरम्। वं दुर्गामवाप्नोति पुमान् पुण्यतमः क्वचित्। यत् काश्यां दक्षिणद्वारमन्तर्गेहस्य कीर्त्यते। तत्र ब्रह्मेश्वरं दृष्ट्वा ब्रह्मलोके महीयते। इति ब्राह्मणवेशेन वाराणस्यां महाधिया। द्रुहिणेन स्थितं तावद्यावद्विश्वेरागमः। दिवोदासोऽपि राजेन्द्रो वृद्धब्राह्मणरूपिणे। ब्रह्मणे कृतयज्ञाय ब्रह्मशालामकारयत्। ब्रह्मेश्वरसमीपे तु ब्रह्मशाला मनोहरा। ब्रह्मा तत्रावसद्योम ब्रह्मघोषैर्निनादयन्।"

**दशाह** पु॰ दशानामह्नां समाहारः टच् समा॰ समाहारत्वात् नाह्नादेशः "अह्नान्ताः पुंसि" पा॰ पुंस्त्वम्। दशदिनसमुदाये। "दशाहं शावमाशौचं सपिण्डेषु विधीयते" "अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत्" मनुः।

**दशिन्** त्रि॰ ब॰ व॰ दश संख्याः सन्ति येषाम् इनि। १दशसंख्यायुक्ते। दशसंख्या ग्रामाः अधिकृतत्वेन सन्त्यस्य इनि। २राज्ञा नियुक्ते दशग्रामाधिकृते च "दशी कुलन्तु भुञ्जीत विंशी पञ्च कुलानि च" मनुः। दश संख्याः प्रमाणं येषाम् इनि। ३दशसंख्याप्रमाणके त्रि॰। "तां दशिभिः प्रायुङ्क्त" शत॰ ब्रा॰ १३।१४।२। दशा वर्त्तिका वस्त्राञ्चलं वा अस्त्यस्य इनि। ४दशायुक्ते दीपे ५सदशे वस्त्रे च त्रि॰

**दशीविदर्भ** पु॰ दक्षिणस्थे देशभेदे "अथापरे जनपदा" इत्युपक्रमे "दशीविदर्भाः कान्तीकास्तङ्गनाः परतङ्गनाः" भा॰ भी॰९ अ॰।

**दशेन्धन** पु॰ दशा वर्त्तिकैव इन्धनं यस्य। प्रदीपे त्रिका॰।

**दशेर** त्रि॰ दंश–एरक्। हिंस्रे त्रिका॰।

**दशेरक** पु॰ दशेर+संज्ञायां कन्। १मध्यदेशे योऽभिजनोऽस्य तस्य राजा वा अण्। दाशेरक पित्रादिक्रमेण तद्देशवासिनि तन्नृपे च। बहुषु अणो लुक्। २दशेरक तत्रार्थे ब॰व॰। हेमचन्द्रे दशेरक इति पाठान्तरम्।

**दशेश** पु॰ दशानामीशः। दशापतौ १रव्यादिग्रहे। दशानां ग्रामाणामीशः। २राज्ञा नियुक्ते दशग्रामाधिकृते च। "शंसेद् ग्रामो दशेशाय दशेशो विंशतीशिनम्" मनुः।

**दशैकाशिक** त्रि॰ एकादशार्थत्वादेकादश वस्तुतो दश ये दत्ता दश एकादश भविष्यन्ति ते दशैकादशाः निपातनात् समासान्तोऽकारः। "प्रयच्छति गर्ह्यम्" पा॰ दशैकादशान् प्रयच्छतीत्यर्थे "कुसीददशैकादशात् ष्ठन्ष्ठचा" विति पा॰ ष्ठच्। शतं प्रति दशकरूपां वृद्धिं ग्रहीतरि वार्धुषिकभेदे स्त्रियां षित्त्वात् ङीष्।

**दशोणि** पु॰ दश बह्वः उणयोऽस्य। बहुहविष्के "दशोणये कवये तर्कसातौ" ऋ॰६।२०।४ "दशोणये बहुहविष्काय कवये मेधाविनः पञ्चम्यर्थे चतुर्थी" भा॰।

**दशौषधकाल** पु॰ दशविध औषधकालः शा॰ क॰। दशविधे औषधकाले स च सुश्रुते उत्तरतन्त्रे उक्तो यथा "अत ऊर्द्ध्वं दशौषधकालान्वक्ष्यामः। तत्र "निर्भक्तं प्राग्भक्तमधोभक्तं मध्येभक्तमन्तराभक्तं सभक्तं सामुद्गं मुहुर्मुहुर्ग्रासं ग्रासान्तरञ्चेति दशौषधकालाः। तत्र निर्भक्तं १केवलमेवौषधमुपयुज्यते। वीर्याधिकं भवति भेषजमन्नहीनं हन्यात्तथामयमसंशयमाशु चैव। तद्बालवृद्धयुवतीमृदवोऽथ पीत्वा ग्लानिं परां समुपयान्ति बलक्षयञ्च। प्राग्भक्तं २नाम यत् प्राग्भक्त-

स्योपयुज्यते। सौम्यं विपाकमुपयाति बलं न हिंस्या दन्नाहृतं न च मुहुर्वदनान्निरेति। प्राग्भक्तसेवनमथो बलमादधाति दद्याच्च वृद्धशिशुभीरुवराङ्गनाभ्यः। अधो भक्तं ३नाम यद्भुक्तान्ते पीयते। पीतं यदन्नमुपयुज्य तदूर्द्धकाले हन्याद्गदान् बहुविधांश्च बलं ददाति। मध्येभक्तं ४नाम यन्मध्ये भक्तस्य पीयते। मध्ये तु पीतमुपहन्त्यविसारिभावाद्यो मध्यदेहमभिभूय भवन्ति रोगाः। अन्तराभक्तं ६नाम यदन्तरा पीयते पूर्वापरयोर्भक्तयोः। हृद्यं मनोबलकरन्त्वथ दीपनीयं पथ्यञ्च सम्भवति चान्तरभक्तमेतत्। सभक्तं ७नामौषधेषु यत्साध्यते भक्तम्। पथ्यं सभक्तमबलाबलयोर्हि नित्यं तद्द्वेषिणामपि तथा शिशुवृद्धयोश्च। सामुद्गं ८नाम यद्भक्तस्यादावन्ते च पीयते। दोषे द्विधा प्रविसृते तु समुद्गसंज्ञमाद्यन्तयोर्यदशनस्य निषेव्यते तु। मुहुर्मुहुर्नाम सभक्तमभक्तं वा यदौषधं मुहुर्मुहुरुपयुज्यते। श्वासे मुहुर्मुहुरतिप्रसृते च कासे हिक्कावमीषु च वदन्त्युपयोज्यमेतत्। ग्रासं ९नामकवलनम् (फलमस्य मुद्रितपुस्तके पतितम्) ग्रासान्तरं १०नाम यत्पिण्डव्यामिश्रम्। ग्रासान्तरेषु वितरेद्वमनीयधूमान् श्वासादिषु प्रथितदृष्टगुणांश्च लेहान्। एवमेते दशौषधकालाः”।

**दस** उत्क्षेपे उपक्षपे च अपक्षये अक॰ दि॰ पर॰सक॰सेट्। दस्यति। इरित् अदसत् अदासीत्-अदसीत्। उदित्। दसित्वा दस्त्वा। “तेषां द्विषोऽदस्यन्” तै॰ स॰ १।६।१।२ “त्वां त्वारे दसमानो भगमीट्टे तकवीये” ऋ॰१।१३४ ५। आशिषि लङ् गणव्यत्ययश्च “मा ते प्राण उपदसन्” अथ॰५।३०।१५ “अव्रह्मताविदसाम” यजु॰ १०।२२

**दस** दर्शने दंशने च चु॰ आ॰ सक॰ सेट्‌ इरित्। दंसयते अददंसत दंसशब्दे दृश्यम्।

**दस** पु॰ दस उपक्षपे वेदे भावे अच्। उपक्षेपे “मनुं चक्रुरपरं दसाय” ऋ॰ ६।२१।२१। दसाय शत्रूणामुपक्षेपाय” भा॰ लोके तु घञ् दास इत्येव तत्रार्थे उत्क्षेपे च।

**दसेरक** पु॰ दशेरकशब्दार्थे मरुदेशे “दसेरकाः केकयाः सकैकेयाः हृ॰ स॰ ४अ॰। सोऽभिजनोऽस्यस्य तस्य राजा वा अण्। दासेरक पित्रादिक्रमेण तत्र वासिनि तन्नृपे च बहुषु अणो लुक्। तत्रार्थे “आवन्त्यान् दाक्षिणात्यांश्च पार्वतीयान् दसेरकान्” भा॰द्रो॰११अ॰। दासेरक पृषो॰।२गर्द्दभे पुंस्त्री॰।“यास्त्विष्टन्त्यः प्रमेहन्ति दयेगोष्ट्र दसेरकाः” भा॰क॰१०अ॰। अयं तालव्यमध्यश्च त्रिका॰।

**दस्म** त्रि॰दस उपक्षेपे मक् १उपक्षेपके “पुरूणि दस्मो निरिणाति व्यज्वैः ऋ॰१।१४८।४। “दस्म उपक्षपयिता”भा॰ दस दर्शने कर्मणि मक्। २दर्शनीये “राजेव दस्म! निषदोऽधिवर्हिषि” ऋ॰१०। ४३।२।“हे दस्म! दर्शनीयेन्द्र!” भा॰। “दस्मत् कृणोष्यध्वरम्” १।७४। ४। दस्मत् दस दंशनदर्शनयोः इषियुधीन्धीत्यादिना मक्। “दस्मभित्यत्र मकारस्य वर्णव्यत्ययेन तकारः” भा॰ “एतेनास्य तालव्यकल्पनम् प्रामादिकम्। “जुजोषदिन्द्रोदस्मवर्चाः ऋ॰ १।१७३।४ “दस्मवर्चाः दर्शनीयतेजाः” भा॰ ३यजमाने ४चौरे ५हुताशने च मेदि॰। स्वार्थे यत् दस्म्य दर्शनीये त्रि॰। “इयुप्याय दस्म्य वचः” ऋ॰ ८। २४। २०।

**दस्यु** पु॰ दस-युच् अनुनासिकत्वात् नानादेशः।१महासाहसिके (डाकाइत्) २खले च शब्दार्थचि॰ “स्वभिर्हतस्य यन्मांसं शुचि तन्मनुरब्रवीत्। क्रव्याद्भिश्च हतस्यान्यैश्चण्डालाद्यैश्च दस्युभिः” मनुः। “मुखबाहूरुपज्जानां या लोके जातयो बहिः। म्लेच्छवाचश्चार्य्यवाचः सर्वे ते दस्यवः स्मृताः” मनूक्ते ब्राह्मणादिचतुर्वर्णभिन्ने ३जातिभेदे च। “प्रसाधनोपचारज्ञमदासं दासजीवनम्। सैरिन्ध्रं वागुरावृत्तिं सूते दस्युरयोगवे”मनुः। ४कर्मवर्जिते च। “मर्ते दस्युजूताय स्तवान्” ऋ॰।६। २४। ८। “दस्युजूताय कर्मवर्जितैः प्रेरिताय” भा॰ ५उपक्षपके त्रि॰६असुरे पु॰ “चेतन्तो दस्युतर्हणा” ऋ॰९।४७।२ “दस्यूनामसुराणां तर्हणा” भा॰ “स वज्रभृद्दस्युहा भीम उग्रः”ऋ॰१।१००।१२दस्युहा “दस्यूनामुपक्षपयितृणामसुराणां वहन्ता” भा॰।

**दस्युसात्** अव्य॰दस्युनामधीनं भवति करोति सम्पद्यते वा साति। तस्कराधीने भूतादौ “अन्ताश्चाकाल एव स्युर्लोकोऽयं दस्युसाद्भवेत्। पतेयुर्नरकं घोरं यदि राजा न पालयेत्” भा॰ शा॰ ६८ अ॰।

**दस्र** पुंस्त्री॰ दस्यति पांस्नून् दस उत्क्षपे रक्। १गर्द्दभे स्त्रियां जातित्वात् ङीष्। दस्यति रोगान् क्षिपति दस उपक्षेपे। २अश्विनीकुमारयोर्द्वयोः द्वि॰ व॰। तत्तुल्यसंख्यत्वात् ३द्वित्वसंख्यायां ४तत्संख्येये च तदधिष्ठातृकत्वात् ५अश्विनीनक्षत्रे च मेदि॰। “अनुसस्रतुस्तमथ दस्रयोः सुतौ” माघः। तयोर्मध्ये विशेषवाचित्वे एकवचनान्तोऽयं “नासत्यस्यैव दस्रस्य सुतौ द्वावश्विनामपि। मार्त्तण्डस्यात्मजावेतावष्टमस्य महा-

क्षनः” भा॰शा॰२०८। “देवौ तस्मात्जावेतामश्विनौ भिषजां वरौ। नासत्यश्चैव दस्रश्च सुतौ द्वावश्विनाविति” हरिवं॰ ९ अ॰। नासत्यदस्रयोर्द्वन्द्वचारित्वात् द्विवच-नान्तता ६हिंस्रे त्रि॰। ७शिशिरे न॰ संक्षिप्तसारः।

**दस्रदेवता** स्त्री॰ दस्रौ देवता यस्य। अश्विनीतारायां हेम॰। अश्वियमदहनेत्यादिवाक्ये तस्या दस्रदैवत्यमनुसन्धेयम्।

**दस्रसू** स्त्री॰ दस्रौ सूते सू-क्विप्। सूर्यपत्न्यां त्वष्टृकन्यायां संज्ञायाम् त्रिका॰ अश्विनीकुमारशब्दे दृश्यम्

**दह** दीप्तौ अक॰ दाहे सक॰चु॰उभ॰ सेट् इदित्। दंहयति ते अददंहत् त।

**दह** दाहे भस्मीकरणे सक॰भ्वा॰प॰अनिट्। दहति अधाक्षीत् ददाह देहतुः। दग्धा धक्ष्यति भक्ष्यति। दग्धः दग्धिः दग्ध्वा दग्धव्यः दहनीयः दाह्यः। दाहः दहनम्। दाहयति अददीहत् दिधक्षति “उष्णो दहति चाङ्गारः शीतः कृष्णायते करम्” हितो॰ “क्रुद्धं कुलं धक्ष्यति विप्रवह्निः”भट्टिः दृश्यान-ङ्गारकारीव सैनान् धाक्षीः समूलकान्” भा॰व॰। ६०अ॰ “दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः”का॰द॰“देहं धारयथाग्नेया दग्धुं धामाविवत् स्वकम्” भाग॰ “दग्धव्योऽसौ कटाग्निना” मनुः। “कर्मभिर्दह्यते अदाहि देहे। “दह्यते च कुलं सर्वम्”चाणक्यः। “देहे बद्धा मतेश्वरा” भट्टिः दंदह्यते। “दंदह्यमाना शोकेन” भट्टिः।

**दहदहा** स्त्री कुमारानुचरमातृभेदे “ख्याता दहदहा चैव तथा धमधमेति च” भा॰ श॰४७अ॰दह दहेति वक्ति मयूरव्यं॰ कर्त्तारं चाभिदधातीति कर्त्तरि अयं साधुः एवं धमधमेत्यत्रापि बोध्यम्।

**दहन** पु॰ दह-ल्यु। १अग्नौ, “दददहनस्तुहिनदीधितिस्तस्य”सा॰द॰“दह दहन! तदेतत् पापमङ्गं मदीयम्” सीतोक्तिः। २चित्रकवृक्षे, ३भल्लातके, ४दुष्टचेतसि च। ५कपोते पुंस्त्री॰ राजनि॰स्त्रियां जातित्वात् ङीष्। ६दाहकमात्रे त्रि॰।लोकदहन! मनो दहन इत्यादि। ७रुद्रभेदे पु॰।“एकादश सुताः स्थाणोः ख्याताः परमतेजसः। मृगव्याधश्च सर्पश्च निरृतिश्च महायशाः, । अजैकपादहिर्बुध्न्यः पिनाकी च परन्तपः। दहनोऽथेश्वरश्चैव कपाली च महाद्युतिः, स्थाणुर्भगश्च भगवान् रुद्रा एकादश स्मृताः” भा॰ आ॰ ६६ अ॰। उपचारात् ८कृत्तिकानक्षत्रे “दहनविधिषताख्यानेत्र सौम्यवारे” ज्यो॰ त॰। भावे ल्युट्। ९दाहे न॰। “अपरो दहने स्वकर्मणां ववृते ज्ञानमयेन वह्निना” रघुः।

**दहनकेतन** पु॰न॰ दहनस्य केतन इव। धूमे हेमच॰।

**दहनपुष्ट** त्रि॰दहनादिव पुष्टं स्फोटकं यस्मात्। वैद्यकप्रसिद्धे (वेलेस्तारा) पदार्थे अग्निपुष्टादयोऽप्यत्र। तत्प्रदाने हि देहे वह्नेरिव स्फोटकं (फोस्का) भवतीति प्रसिद्धिः।

**दहनप्रिया** स्त्री ६त॰। स्वाहायामग्निभार्य्यायाम् त्रिका॰

**दहनर्क्ष** न॰६त॰। कृत्तिकानक्षत्रे “यदा विशाखासु महेन्द्रमन्त्री सुतश्च भानोर्दहनर्क्षयातः” वृ॰ सं॰ १० अ॰। दहनभादयोऽप्यत्र।

**दहनसारथि** पु॰६त॰। वायौ।“दलितमदनदहनसारथिरयाहततचलवनूतकलिके” दशकु॰। दहनसहचरादयोऽप्यत्र।

**दहनागुरु** न॰दहनस्य दाहाय अगुरु।दाहागुरुणि राजनि॰

**दहनाराति** पु॰ ६त॰। जले राजनि॰। तस्य वह्निनाशकत्वात् तथात्वम् दहनरिपुप्रभृतयोऽप्यत्र।

**दहनोपल** पु॰ दहनाय वह्नये हितः उपलः (आतशी) सूर्य्यकान्तमणौ हेम॰। सूर्य्यकिरणसम्पर्केण हि ततो वह्नेः प्रादुर्भावात् तस्य तथात्वम्।

**दहनोल्का** ६०। विस्फुलिङ्गरूपायामुल्कायाम् त्रिका॰

**दहर** पु॰ दह-अर। १मूषिकायां २स्वल्पे ३भ्रातरि ४बालके च मेदि॰। ५अतिसूक्ष्मे ६दुर्बोधे च “अथ यदिदं दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्” छा॰उ॰। तत्र स्वल्पे “नेष्टा पत्नीमानेष्यन् कौशं वासः परिधापयति चण्डातकं दहरं वा” कात्या॰श्रौ॰ १४।५।२ “परिधापयतीति कारितत्वादध्वर्युप्रैषात् भवति चण्डातकं चलनक उच्यते एवं ह्यभियुक्तोपदेशः अर्द्धोरुकं विलासिन्या वासश्चण्डातकं विदुः” दहरं तु कौपीनम् दहरशब्दस्याल्पवाचकत्वात्” कर्कः। ७नरके ८वस्त्रे च उणादि॰।

**दहराकाश** पु॰ कर्म॰। चिदाकाशे ईश्वरे।

**दह्र** पु॰दह-रक्। १दावाग्नौ २जठरे च। “सोऽन्यजन्मनि दह्राग्निर्विश्रवाश्च महातपाः” भाग॰४।१।३० “दह्राग्निः जठराग्निः” श्रीधरःस्वल्पार्थस्यैवात्र कर्मधारयः जठरस्थस्याग्नेः स्वल्पत्वात् इत्यन्ये।

**दा** दाने भ्वा॰पर॰ सक॰ सेट् च इत्। यच्छति प्रणियच्छति अदात्। ददौ ददतुः। देयात्। दास्यति। देयम् दानीयं दातव्यं दत्तः दातुम् दत्त्वा।

**दा** दाने जुहो० उभ०सक०सेट्। ददाति दत्ते प्रणिददाति। दद्यात् ददीत। ददातु ददतु देहि दत्ताम् दत्स्व। अददात् अदत्त। अदात् अदित। ददौ ददिथ–ददाथ ददिव। ददे ददिषे। दाता देयात् दासीष्ट। दास्यति। कर्मणि दीयते अदायि अदायिषाताम्–अदिषाताम्। दायीष्ट–दायिषीष्ट दास्यते–दायिष्यते। दापयति। दित्सति देदीयते। दातव्यः दानीयः देयम्। दाता। दानं दायः दत्तं प्रत्तम्। दातुं दत्तिः दत्त्वा प्रदाय। ददत् ददानः। ददिवान्। "यो ददाति स कुक्कुटः" अमरः। "मूर्ध्नि मूर्द्धाभिषिक्तस्य ददति स विधानतः" रामा०अयो० २६स०। "दद्याच्चैवासनं स्वकम्" "सोऽन्तर्दशाहात् तद्द्रव्यं दद्याच्चैवाददीत वा" मनुः। "देहि युद्धं नरपते! ममाद्य रणमूर्द्धनि" भा० उ०१६३अ० "ददौ स दश धर्माय" मनुः। "अवकाशं किलोदन्वान् रामायाभ्यर्थितो ददौ" रघुः। "पाण्डवानां सभामध्ये दुर्योधन उपागतः। तस्मै गाञ्च हिरण्यञ्च" विदग्धमू०। "न दास्यामि समादातं सोमं कस्मैचिदप्यहम्" भा० आ०२४अ० "दातव्यमिति यद्दानं दीयतेऽनुपकारिणे" गीता "देयं दारसुतादृते" याज्ञ०। "दत्तभुक्तफलं धनम्" दायभागधृतभारतम् "दत्तात्मा तु स्वयं दत्तः" मनुः "सुता ददे तस्य सुताय मैथिली" भट्टिः। "आददानः परस्वेभ्यात्" न दण्डं दातुमर्हति" "स ज्ञेयः दत्त्रिमः सुतः" मनुः "तेषां दत्त्वा तु हस्तेषु सपवित्रं तिलोदकम्" स्मृतिः। "अदित्सन्तं दापयति प्रजानन्" यजु०६।२४। "दायादानपि दापयेत्" मनुः। "तेषामग्रीति यानानि रत्नपूर्णानि दापय" रामा०अयो०३२ स०। "स दाप्यः प्रथमं दमम्" याज्ञ० "अकाम्यमिव दित्ससि" ऋ०१।१७०।२ "दित्सन्तं भूयो यजमानश्चिकेत" ऋ०२। १४।१०।

अति+अतिक्रम्य दाने अयत्नदाने च। "न जीवन्तमतिददाति" कात्या० ४।१।२७। "अतिदाने बलिर्बद्धः" चाण०

अनु+पश्चाद्दाने तुल्यरूपदाने प्रतिनिधित्वेन दाने च। "न दूढ्ये अनुददासि वामम्" ऋ०१।१६०।५। "सूरश्चिदस्मा अनु दादपस्याम्" ७।४५।२ "यः शर्धते नानुददाति शृध्याम्" २।१२।१०

अभि+आभिमुख्येन दाने "तथैव चैनस्तस्मा वामपार्ष्णिमभ्यदात्" भा० व० १६७अ० गदाम्।

अव+अधोदाने अवत्तम् आदिकर्मणि तु वा तादेशः यथाह सि० कौ० "अवदत्तं विदत्तञ्च प्रदत्तञ्चादिकर्मणि। सुदत्तमनुदत्तञ्च निदत्तमिति चेष्यते" चशब्दाद्यथाप्राप्तम्।

आ+ग्रहणे "दद्याच्चैवाददीत वा"। "शुभां विद्यामाददीतावरादपि" मनुः। "स्वं चादास्यामि भूयोऽहं पाप्मानं जरया सह" भा०आ०८४अ०। "शरीरमात्तं मृत्युना" का० उ० "आददानः परस्वेभ्यात्" मनुः।

अप+आ+अपेक्ष्य ग्रहणे। "मृत्पिण्डमपादाय महावीरं करोति" शत०ब्रा० १४।१।२।१७

उद्+आ+उदस्य ग्रहणे "उदादाय पृथिवीं जीवदानुम्" यजु०१। २८। [रघुः।

उप+आ+सामीप्येन ग्रहणे "उपात्तविद्यो गुरुदक्षिणार्थी"

परि+आ+परिवर्त्य ग्रहणे "पर्याददानं चास्त्राणि भीमधन्वानमर्जुनम्" भा०उ०४८अ० "तस्मिंश्चिपीनादधीतः प्रज्ञां पर्याददीत च" भा०शा० ८६अ०।

प्रति+आ+प्रतिग्रहणे दत्तस्य पुनर्ग्रहणे च। "शुभाशुभं कर्मकृतं यदन्यस्तदेव प्रत्याददते स्वदेहे" भा०शा० २०२ अ० "न चाहं शक्तः शापं प्रत्यादातुम्" भा०आ०२अ०

वि+आ+अङ्गादेःप्रसारणे आत्म०स्वाङ्गप्रसारणे तु पर०। "व्याददास्यं महाराजस्तौ दृष्ट्वाऽथ ह्यधावत" हरिवं० ३१७ अ०। "अत्तयत्नेन मां वक्त्रो व्यात्तास्यो दारुणाकृतिः" भा०व०६४अ०। "नभःस्पृशं दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रम्" गीता।

परि+उपरिस्थापने। "जिते दुःस्वप्न्यं सर्वमाप्ते परिदद्मसि" ऋ० ८।४७।१५ "परिदद्मसि उपरि दद्मः वयं जिताः परित्यजामः इत्यर्थः। अथवा जिते मयि यद्दुःस्वप्न्यं दृष्टं तत् स्वर्णकाराय मालाकाराय वा परिदद्मसि अस्मत्तोऽपि निष्कृष्य तयोरुपरि स्थापयामः" भा०

प्र+विधानादिना प्रकर्षेण च दाने। "प्रदानं स्वाम्यकारणम्" मनुः। "प्रत्तं जलं ह्यञ्जलमन्तिकेऽपाम्" भट्टिः। "नष्टं विनष्टं कृमिभिः श्वहृतं विषमे स्थितम्। हीनं पुरुषकारेण प्रदद्यात् पाल एव तु" मनुः।

अनु+प्र+पश्चात् प्रदाने। "एते श्वासानुप्रदाना अघोषाश्च विवृण्वते। कण्ठम्" शिक्षा।

प्रति+प्र+प्रत्यर्पणे गृहीतस्य पुनरर्पणे "राज्यं प्रतिप्रदास्यामि" भा० उ० ५१२५ श्लो०।

सम्+प्र+सत्कारेण प्रदाने। "तदर्हमासनं तस्मै सम्प्रदाय यथाविधि। गां चैव मधुपर्कं च सम्प्रदायार्घ्यमेव च" भा० स०५अ०। "अहन्यहनि चार्थ्येव याचतां सम्प्रदीयते" भा० व०८५।३१श्लो०। अविच्छेदेन शिष्टानामाचारे च, सम्प्रदायः।

प्रति+प्रतिरूपदाने प्रत्यर्पणे च। "सत्यङ्कारकृतं द्रव्यं द्विगुणं प्रतिदापयेत्" याज्ञ०। "प्रतिदास्यामि भगवन्! पुंलिङ्गं तव सुव्रत!" भा० उ० १९२ अ०।
"शिष्यव्यतिक्रमं वीक्ष्य निवर्त्य गुरुरागतः। अशपत् पततां देहो निमे! पण्डितमानिनः। निमिः प्रतिददौ शापं गुरवे धर्मवर्जिने। तवापि पततां देहो लोभाद्धर्ममजानतः" भाग० ९।१३।५

दा लवने अदा० प० सक० अनिट् पित् तेन न घुसंज्ञा। दाति अदासीत् दायात्। "अग्निर्हि दाति रोमा पृथिव्याः" ऋ०१०।९५।४ "दाति छिनत्ति दाप् लवने अदादित्वाच्छपो लुक्" भा०। "कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय" १०।१३१।२ "स हि ष्मा धन्वाक्षितं दाता न दात्या पशुः" ५।७।७ "अहिंसन्त ओषधीर्दान्तु पर्वन्" अथ० १२।३।३१ "बर्हिर्देवसदनं दामि" कात्या०श्रौ० कर्कधृतश्रुतिः। [उज्ज्वलद०।

दाक पु० ददाति यज्ञे हविरादिकं दा-क न कित्। यजमाने

दाक्ष त्रि० दक्षस्येदम् अण्। दक्षसम्बन्धिनि मखादौ "भागीयसी भागमादातुमिच्छन् मखो दाक्षो येन कृतोऽन्यथावत्" हरिवं०१३१ अ०। दाक्षीणां सङ्घः अङ्को लक्षणं वा इञन्तात् अण्। २दाक्षिसमुदाये ३तदङ्के च पु० ४तल्लक्षणे न०। "परम्परासंबद्धोऽङ्कः साक्षात्तु लक्षणम्" सि०कौ० दाक्षेः छात्राः "इञश्च" पा० अण्। ५दाक्षेः छात्रेषु ब० व०। दाक्षेरागतः अण्। ६दाक्षेरागते त्रि०। गोत्रचरणात् वुञि प्राप्ते "न दण्डमानवान्तेवासिषु" पा० पर्युदासात् अणेव। ७दाक्षेः दण्डप्रधानमानवेषु दक्षान्तेवासिषु च तेन तद्भिन्नेषु दाक्षकः। तेषु तु दाक्षा-दण्डमानवाः शिष्या वा" सि०कौ०।

दाक्षक पु० दाक्षेरिदम् गोत्रचरणात् वुञ्। १दण्डमानवान्तेवासिभिन्ने तत्सम्बन्धिनि तेषु तु अणेव। दाक्षशब्दे दृश्यम्। दाक्षीणां विषयो देशः राजन्या० वुञ्। २दाक्षेर्विषये पु०।

दाक्षायण पुंस्त्री दक्षस्य गोत्रापत्यम् इञ् "यञिञोश्च" पा० यूनि फक् "इञः प्राचामिति" पा० विशेषणात् न युवप्रत्ययस्य लुक् तस्य प्राग्देशस्थितत्वाभावादिति" सि० कौ० १दक्षस्य यूनि गोत्रापत्ये। दाक्षायणस्य विषयो देशः ऐषुकार्या०भक्तल्। दाक्षायणभक्त तदीये देशरूपे विषये पु०। दक्षस्येदम् दाक्षं तच्च तदयनञ्चेति। २सुवर्णादावलङ्कारे न०। "दाक्षायणं दक्षिणा" कात्या० श्रौ० ४।४।२८। "दाक्षायणं सुवर्णमुच्यते" कर्कः। "यो बिभर्त्ति दाक्षायणं हिरण्यम्" यजु० ३४।५१। "दाक्षायणशब्दोऽलङ्कारार्थः" वेददी०उक्तेः ३भूषणे च। तत्र दक्षस्य यून्यपत्ये "यदाबध्नन् दाक्षायणा हिरण्यम्" यजु०३४।५२। स्त्रियां ङीप्। "भोः कश्यपस्य पुत्रोऽहं माता दाक्षायणी च मे" भा० शा०१७०अ० "दाक्षायण्योऽश्विनीत्याद्याः" अमरः। दक्ष एव दाक्षः तस्यायनं तत्कृतो यज्ञभेदः संज्ञात्वात् पूर्वपदास्य णत्वम्। ४दक्षकृते यज्ञभेदे स च यज्ञः शत०ब्रा० २।४।४।२ उक्तो यथा
"प्रजापतिर्ह वा एतेनाग्रे यज्ञेनेजे प्रजाकामो बहुः प्रजया पशुभिः स्यां श्रियं गच्छेयं यशस्व्यन्नादः स्यामिति। स वै दक्षो नाम। तद्यदनेन सोऽयजत तस्माद्दाक्षायणयज्ञो नाम" तद्विधिर्यथा "दाक्षायणयज्ञः प्राजापत्ययशस्कामस्य" कात्या०श्रौ० ४।४।१। इत्यादिषु १०सूत्रेषूक्तः। "तत्रैवं प्रथमं पौर्णमास्यां आग्न्वारम्भणीयपूर्वकोऽग्नीषोमीययागः पुनरुद्धृत्य सांनाय्यवदुपक्रमः। प्रतिपद्याग्नेयेन पुरोडाशेनैन्द्रेण दध्ना पयसा च यागः, पक्षे वैमृधः। मांसमैथुनवर्जनसङ्कल्पः। पुनरुद्धृत्य तस्मिन् प्रतिपद्दिन ऐन्द्राग्नयागः पुनरुद्धृत्य मैत्रावरुण्याः पयस्याया उपक्रमः। प्रातर्द्वितीयायामाग्नेयेन मैत्रावरुण्या च यागो यथोक्तपक्षे आदित्यचरुः तदानीमेव पुनरुद्धृत्याग्नीषोमीययागः। ततः पुनरुद्धरणादिर्दधियागोपक्रमः। प्रातस्तृतीयायामाग्नेयसांनाय्ययागः पक्षे वैमृधः। तदानीमेवोद्धृत्यैन्द्राग्नयागः। पुनरुद्धृत्य मैत्रावरुण्या उपक्रमः तदनन्तरमादित्यो वा इत्येवम्प्रकारेण संवत्सरं यावत् प्रत्यहं कर्त्तव्यम्" कर्कः। तत्पद्धतिश्च तत्र भाष्ये दृश्या। "ऋक्ष्येष्ट्याग्रयणञ्चैव चातुर्मास्यानि चाहरेत्। उत्तरायणञ्च क्रमशो दाक्षस्यायनमेव च" मनुः। सुवर्णे "दाक्षायणी ब्रह्मसूत्री वेणुमान् सकमण्डलुः" याज्ञ० "दाक्षायणं सुवर्णं तदस्यास्तीति इनि। दाक्षायणी" मिता०।

दाक्षायणी स्त्री० दक्षस्यापत्यम् इञि फक् ङीष्। १अश्विन्यादितारासु २सत्यां दुर्गायाम् मेदि० "सापि दक्षाय सुश्रोणी गौरी दत्ताथ ब्रह्मणा। दुहितृत्वे पुरा याहि रुद्रेणोढा महात्मना। सा च दाक्षायणी देवी पुनर्भूत्वा न्पोत्तम!" वराह०पु०। ३रेवतीनक्षत्रे हेम०। ४दन्तीवृक्षे रत्नमा०। ५अदित्यां कश्यपपत्न्याम् "दक्षश्च तेषामारम्य प्रजाः

सम्यग्विवर्द्धिताः । तत्र दाक्षायणीपुत्राः सर्वे देवाः-सवासवाः । वसवोऽष्टौ च रुद्राश्च आदित्यामरुतस्तथा” ।

**दाक्षायणीपति** पु० ६त० । १शिवे २चन्द्रे च त्रिका०।

**दाक्षायण्य** पु० दाक्षायण्यामदितौ भवः बा०यत् । आदित्ये “शक्षोभतस्तथा दक्षो भवितेह प्रजापतिः । दाक्षायण्य स्तथादित्यो मनुश्चादित्यतस्तथा” भा० अनु०१४७अ०

**दाक्षि** पुंस्त्री दक्षस्य गोत्रापत्यम् इञ् । दक्षस्यापत्ये घोषादिषु परेषु अस्य आद्युदात्तता दाक्षिघोषः दाक्षिकन्या दाक्षिह्रद इत्यादि । संज्ञात्वेऽपि एतत्पूर्वककन्यायास्तत्पुरुषे “तत् पुरुषे शालाया नपुंसके” “कन्या च” पा० क्लीवत्वप्राप्तावपि“संज्ञायां कन्योशीनरेषु”पा०उशीनरत्वाभावात् न क्लीवता । उशीनरदेशकन्यायान्तु क्लीवत्वात् नाद्युदात्तता ।“कन्यापलदनगरग्रामह्रदोत्तरपदात्”पा०एतत्पूर्वककन्यादिभ्यः भवादौ छ । दाक्षिकन्थीयं दाक्षिनगरीयमित्यादि । “कूलसूदस्थलकर्षाः” पा० आद्युदात्तात् अस्मात् परस्यकूलादीनामादिरुदात्तः । दाक्षिकूलः दाक्षिकर्षः । एतौ च ग्रामविशेषवाचिनौ । अस्य इञन्तत्वात् प्रस्थशब्दे परे नाद्युदात्तता । दाक्षिप्रस्थः ।

**दाक्षिण** त्रि० दक्षिणा प्रयोजनमस्य अण् । ऋतुगताङ्गहोमभेदे स च “अथ प्रतिपरेत्य गार्हपत्यम् दाक्षिणानि जुहोति” शत०ब्रा०४।३।४।६ इत्युपक्रम्य दर्शितः “इडां भक्षयित्वा शालाद्वार्य्ये दाक्षिणहोमः” कात्या०श्रौ० १०।२।४ “ततः शालाद्वार्ये दाक्षिणहोमः कर्त्तव्यः दाक्षिणहोम इति संज्ञा “अथ प्रतिपरेत्य गार्हपत्यं दाक्षिणानि जुहोतीति” श्रुतत्वात् दाक्षिणानि दक्षिणा प्रयोजनानि येषाम्”कर्कः ।

**दाक्षिणक** पु० दक्षिणायां कर्मसमाप्तौ द्रव्यदानरूपायां क्रियायां प्रसृतः दक्षिणमार्गेण चन्द्रलोकं गच्छति वा वुञ् । १दक्षिणातत्परे इष्टापूर्त्तेन २चन्द्रलोकगामिनि च उपचारात् दक्षिणमार्गगामिनो ३बन्धे च । “विपर्ययादतत्त्वज्ञाना दृष्यते बन्धः स च त्रिविधः प्राकृतिकोवैकृतिको दाक्षिणकश्चेति इत्युपक्रमे “इष्टापूर्त्तेन-दाक्षिणकः पुरुषतत्त्वानभिज्ञो हि इष्टापूर्त्तकारी कामोपहतमनावध्यत इति” सा०कौ० ।

**दाक्षिणशाल** त्रि० दक्षिणशालायां भवःञ । दाक्षिणशालायां भवे ।

**दाक्षिणात्य** त्रि० दाक्षिणा भवः “दक्षिणापश्चात्पुरसस्त्यक्” पा० त्यक् । १दक्षिणाभवे २नारिकेले पु० राजनि० ।

**दाक्षिणापथक** त्रि० दक्षिणापथे देशे भवः धूमा० वुञ् । दक्षिणापथदेशभवे ।

**दाक्षिण्य** न० दक्षिणस्य अनुकूलस्य पटोर्वा भावः ष्यञ् । १आनुकूल्ये २पटुतायाम् ।“नारदो मत्प्रियं कुर्वन् मुनिरक्लिष्टकर्मकृत् । दाक्षिण्यादनुरोधाच्च दत्तवानात्र संशयः” हरिवं०१२६अ० । “तस्य दाक्षिण्यरूढेन नाम्ना मगधवंशजा” रघुः । “दाक्षिण्यं चेष्टया वाचा परचित्तानुवर्त्तनम्”सा०द०उक्ते ३नाटकलक्षणभेदे च ।

**दाक्षी** स्त्री दक्षस्य स्त्र्यपत्यम् इञ् । “इतो मनुष्यजातेः” पा०ङीष् । १दक्षस्य स्त्र्यपत्ये २पाणिनिमुनेर्मातरि च

**दाक्षीपुत्र** पु० ६त०। पाणिनिमुनौ हेमच०।

**दाक्षेय** पु०दाक्ष्या अपत्यम् । पाणिनिमुनौ हेमच०।

**दाक्ष्य** न० दक्षस्य भावः कर्म्म वा ष्यञ् । १कौशले सहसाप्रत्युत्पन्नकार्येषु अव्यामोहेन प्रवृत्तौ “शक्तिं चावेक्ष्य दाक्ष्यं च भृत्यानाञ्च परिग्रहम्” मनुः । “दाक्ष्यं सद्यःफलदं यद्यतः” माघः ।

**दाघ** पु० दह—भावे घञ् न्यङ्क्वा० कुः । दाहे शब्दार्थचि० ।

**दाडक** पु० दल—ण्वुल् लस्य डः । दन्ते शब्दार्थक० ।

**दाडिम** त्रि०दल—विशरणे भावे घञ् दालेन निर्वृत्तः भावात् इमप् लस्य डः । स्वनामख्याते फलप्रधाने वृक्षे मेदि० “तत् फलं त्रिविधं स्वादु स्वाद्वम्लं केवलाम्लकम् । तत्र स्वादु १त्रिदोषघ्नं तृड्दाहज्वरनाशनम् । हृत्कण्ठमुखरोगघ्नं तर्पणं शुक्रलं लघु । कषायानुरसं ग्राहि स्निग्धं मेधाबलावहम् । स्वाद्वम्लं २दीपनं रुच्यं किञ्चित् पित्तकरं लघु । अम्लन्तु ३पित्तजनकमुष्णं वातकफापहमिति” भाव०प्र०। २एलायां मेदि०। अस्य स्त्रीत्वे गौरा० ङीष् ।“वियोगिनीमैक्षत दाडिमीमसौ”नैष०“रक्ता दन्ता भविष्यन्ति दाडिमीकुसुमोपमाः” देवी०। एतत् स्थिता दुर्गा रक्तदन्ती । अमरे पुंस्त्रोक्तिः प्रायिकी उदाहरणं दृष्ट्वा मेदिनिकारेण त्रिलिङ्गत्वस्योक्तेः ।

**दाडिमपत्रक** पु० दाडिमस्य पत्रमिव पत्रमस्य कप् । रोहितकवृक्षे राजनि०

**दाडिमपुष्प** पु० दाडिमस्य पुष्पमिव पुष्पमस्य । १रोहितकवृक्षे ६त०। २दाडिमस्य पुष्पे न०।

**दाडिमप्रिय** पु० दाडिमं तत्फलं प्रियमस्य । १शुकखगे २दाडिमप्रियमात्रे त्रि० शब्दरत्ना०

**दाडिमभक्षण** पु०दाडिमं भक्षयितुं शीलमस्य ल्यु । १शुकखगे शब्दच० । २दाडिमफलभक्षके त्रि०। भक्ष—भावे ल्युट् ६त० । ३दाडिमफलस्य भक्षणे न०

**दाडिमादिचूर्ण** न० दाडिमफलत्वगादिचूर्णविशेषे । “द्वे

पले दाडिमादष्टौ खण्डात् व्योषं पलत्रयम्। त्रि सुगन्धिपलञ्चैव चूर्णमेकत्र कारयेत्। तच्चूर्णं मात्रया भुक्तमरोचकहरं परम्। दीपनं पाचनं च स्यात् पीनसज्वरकासजित्” वैद्य०

**दाडिमाष्टक** पु० दाडिमस्य तत्त्वचः अष्टकं पलाष्टकं यत्र। दाडिमफलत्वगादियुक्ते चूर्णभेदे “कर्षोन्मिता तुगाक्षीरी चातुर्जातं द्विकार्षिकम्। यमानी धान्यका जाजी ग्रन्थिव्योषं पलांशकम्। पलानि दाडिमादष्टौ सितायाश्चैकतः कृतः। गुणैः कपित्थाष्टकवच्चूर्णोऽयं दाडिमाष्टकः” चक्रद०। कपित्थाष्टकस्य १६६०पृ० उक्तम् तद्वत्गुण युतोऽयमिति बोध्यम्।

**दाडिमीरस** पु० “दाडिमं घृतसम्पूर्णं तत्र पात्रे विनिःक्षिपेत्। ततः पक्वः पटे पूत इति स्याद्दाडिमीरसः” इत्युक्ते रसभेदे

**दाडिमीसार** पु० दाडिमीं तच्छब्दं सरति गच्छति अण्। दाडिमवृक्षे राजनि०। [दृक्षे शब्दार्थचि०।

**दाडिम्ब** पु०दा—बा०डिम्ब डस्य नेत्त्वम्। (डालिम)। ख्याते

**दाडी** स्त्री दल्यते फलेऽसौ दल—कर्म्मणि घञ् गौरा० ङीष् लस्य डः। दाडिमे पा०। तस्याः फलम्। अण् तस्य हरितक्या० लुपि “हरीतक्यादि चेति” प्रकृतिलिङ्गत्वात् २तत्फलेऽपि स्त्री।

**दाढा** स्त्री दैप् शोधे दा—दाने सम्प्रदा०भावे क्विप् दे शुद्धै दानाय वा ढौकते ढौक—बा०ड। १दन्तभेदे दंष्ट्रायाम् हेम०। दानाय प्रेरणे २प्रार्थनायां ३समूहे च” शब्दार्थकल्प०। स्वार्थे क क्वापि अत इत्त्वम्। दाढिका तत्रार्थे हेम०। दाढायै केशसमूहाय प्रभवति ठक्। दाढिका (दाडि) श्मश्रुणि। “केशेषु गृह्णतो हस्तौ छेदयेदविचारयन्। पादयोर्दाढिकायां च” मनुः। “दाढिकायां श्मश्रुणि” कुल्लू०।

**दाण्ड** पु०स्त्री दण्डस्य इक्ष्वाकुपुत्रभेदस्यापत्यम् शिवा० अण्। १दण्डस्यापत्ये स्त्रियां ङीप्। दण्डस्य भावः पृथ्वा०। वा अण्। २दण्डभावे न०। ३आयुधजीविसङ्घभेदे। दण्डानां समूहः अञ्। ४दण्डसमूहे न०।

**दाण्ड(ण्डि)कि** त्रि० “आर्ङ्गस्त्रिगर्त्तषष्ठाश्च कौण्डोपरथदाण्ड(ण्डि)की। क्रोष्टुकिर्जालमानिश्च ब्रह्मगुप्तोऽथ जालकिः” सि० कौ०उक्ते त्रिगर्त्तषष्ठे आयुधजीविसङ्घभेदे ततः स्वार्थे छ। दाण्ड(ण्डि)कीय तत्रार्थे।

**दाण्डपाता** स्त्री दण्डस्य पातो यस्यां तिथौ “तास्यां क्रियायाम्” पा०सूत्रेण संज्ञायां ञः। दण्डपातस्यतिथिभेदे।

**दाण्डाजिनिक** त्रि० दण्डाजिनेन तद्धारणेनार्थानन्विच्छति “अयःशूलदण्डाजिनाभ्याम्” पा०ठञ्। मायाविनि कपटेनार्थलाभेच्छया दण्डाजिनधारिणि

**दाण्डायन** पु० दण्डस्य गोत्रापत्यम् नडा० फक्। दण्डगोत्रापत्ये तस्य स्थलं दाण्डिनायनस्थलम्। ग्रामभेदे “कूलसूदस्थलकर्षाः संज्ञायाम्” पा० ततः उत्तरपदस्थस्थलशब्द आद्युदात्तः” सि० कौ०।

**दाण्डिक** त्रि० दण्डेन तद्धारणेन जीवति वेतना० ठञ्। दण्डधारणोपजीविनि। तस्य भावः पुरो० यक्। दाण्डिक्य तद्भावे न०। [दण्डप्रोक्तकल्पसूत्राध्यायिषु

**दाण्डिन्** पु० ब०व०। दण्डेन प्रोक्तमधीयते शौन० णिनि।

**दाण्डिनायन** पुंस्त्री० दण्डिनो गोत्रापत्यं नडा० फक् दाण्डिनायनेत्यादिना टिलोपाभावः। दण्डिनोगोत्रापत्ये।

**दात** त्रि० दाप् लवने कर्म्मणि क्त। १लूने, २छिन्ने। दैप्-शोधे कर्त्तरि क्त। ३शुद्धे च। दो—खण्डने इत्यस्य तु दितः दा—दाने इत्यस्य दत्त इति भेदः।

**दाति** स्त्री०दैप् शोधे दाप् लवने भावे क्तिच्। १शुद्धौ २छेदने दा—दाने बा०ति। ३दाने ४दत्ते च “मरुतो दातिवारः” ऋ०१।१६७।८। “दातिवारः प्रदेयजलः दत्तवरणीयहविर्लक्षणधनो वा” भा०

**दातु** न०दा—भावे तुन्। १दाने “कत्तस्य दातु शवसो व्युष्टौ” ऋ० १०।९९।१ “कत् दातु किं दानम्” भा० “सहस्र दातु पशुमद्धिरण्यवत्” ऋ०८।७२।६। २दातरि त्रि०।

**दातृ** त्रि० दा—दाने तृच्। १दानकर्त्तरि २दानशीले च १दाता मे भूभृतां नाथः प्रमाणीक्रियतामिति” कुमा० “कामो दाता कामः प्रतिग्रहीता कामैतत्ते” यजु०७।४८ स्त्रियां ङीप्। शीलार्थे तृचि तु न कर्म्मणि षष्ठी “स हि ष्मा धन्वाक्षितं दाता न दात्या पशुः” ऋ० ५।७।७। दातृधर्मस्य दानशब्दे दृश्यः।

**दात्यूह** पुंस्त्री० दाप्—लवने क्तिन् दातिमूहते ऊह—अण् दो—खण्डने क्तिन् दितिं वहति वह—क ऊठ् दित्यूहः ततः स्वार्थे अण् देविकाशिंशपेत्यादिना आत्त्वम्। १कालकण्ठके पक्षिभेदे अमरः। २जलकाके राजनि०। ३चातके मेदि०४मेघे पु०शब्दर०। जातित्वे सर्वत्र स्त्रियां ङीष्। “सारसं रज्जुवालं च दात्यूहं शुकसारिके” मनुः “क्रव्यादपक्षिदात्यूहशुकप्रतुदटिट्टिभान्” याज्ञ०।

**दात्यौह** पुंस्त्री दात्यूह+पृषो०। दात्यूहे खगे शब्दर०

**दात्र** न० दो–खण्डने दाप् लवने वा करणे ष्ट्रन्। छेदन साधने लवित्रे (दा) अस्त्रभेदे अमरः। "क्षुरैः क्षुरप्रैर्भल्लैश्च दात्रैरञ्जलिकैस्तथा" हरिवं०२२७ अ० "दात्रेण धान्यं लुनाति" व्या०। दा–दाने कर्मणि त्र। २दातव्ये। "दात्रं यत्रोपदस्यति" ऋ०८।४३।२२ "दात्रं दातव्यम्" कर्त्तरि त्र। ३दानकर्त्तरि "सोमस्य दात्रमसि" यजु०१०।६ "दात्रं दानकर्त्तृ" वेददी०दा दाने भावे त्र। ४दाने "तद्दां दात्रं महि कीर्त्तेन्यम्" ऋ०१।११६।६ "दात्रं दानम्" भा०।

**दात्व** पु० दा–दाने त्वन्। १दातरि २यज्ञकर्मणि च उज्ज्वल०।

**दाद** पु०दद–भावे घञ्। दाने "दत्त्वा च विविधान् दादान् पूजयित्वा च वै द्विजान्" भा०श० ३७अ० "तत्र दत्त्वा बहून् दादान् विप्रान् संपूज्यमाधवः" ४०अ०।

**दाधिक** त्रि० दध्नि दध्ना वा संस्कृतः दध्ना चरति दध्ना संसृष्टं उपसिक्तं वा ठक्। १दध्नि संस्कृतद्रव्ये २दध्नाचारिणि ३दध्ना संसृष्टे ४दध्नोपसिक्ते च "वीजपूररसोपेतं सर्पिर्दधि चतुर्गुणम्। साधितं दाधिकं नाम गुल्महृत् प्लीहशूलजित्" सुश्रुतोक्ते गुल्मादिनाशके ५औषधभेदे न०।

**दाधित्थ** न० दाधित्थस्य विकारः अनुदात्तादित्वात् अञ्। दधित्थस्य कपित्थस्य विकारे। तस्य परिमाणम्। तत्प्रत्ययात् पुनरञ्। २दाधित्थपरिमाणे न०।

**दाधृवि** स्त्री धृवि–यङ् लुक् इन्। धरित्र्यां माधवः "पुत्रा यांश्चो नु दाधृविभरध्यै" ऋ०६।६६।१। "दाधृविर्धरित्री" भा०।

**दाधृषि** त्रि० धृष–यङ्लुक्–इन्। अत्यन्तधर्षके "ब्रह्मणा यासि सवनेषु दाधृषिः" ऋ०२।७।७ "दाधृषिर्धर्षकः" भा० "सत्राहणं दाधृषिं तुम्रमिन्द्रम्" ऋ०४।११६।८ "दाधृषिमत्यन्तधर्षकम्" भा०।

**दान** आर्जवे ऋजूकरणे सक० उभ० भ्वा० स्वार्थे सन्। छेदने तु न सन्। दीदांसति ते अदीदांसीत् अदीदांसिष्ट छेदने तु दानति ते। अदानीत् अदानिष्ट दीदांसयति दानयति। दीदांसति काष्ठं ऋजूकरोतीत्यर्थः दानति काष्ठं छिनत्तीत्यर्थः।

**दान** न०दा–दाने दो–खण्डने दैप् शोधने वा भावादौ ल्युट्। १गजमदजले २दीयमाने त्रि० ३धने न० "दानं ददत्यपि जलैः सहसाधिरूढे" माघः "सेनाचरीभवदिभाननदानवारिवासेन यस्य जनिता सुरभीरणश्रीः" नैष० "आसीदनाविष्कृतदानराजिः" रघुः। ४पालने ५छेदने ६शुद्धौ च स्वस्वत्वत्यागाद्यनुकूलव्यापारभेदे स्वत्वाभिसन्धानापूर्वकस्वत्वत्यागे दानपदार्थनिरूपणं तदङ्गादिकं च शुद्धि० त० यथा

देवलः "अर्थानामुदिते पात्रे श्रद्धया प्रतिपादनम्। दानमित्यभिनिर्दिष्टं व्याख्यानन्तस्य वक्ष्यते" अर्थो द्रव्यम्। उदिते शास्त्रकथिते श्रद्धा देवलोक्ता यथा "सतृकतिश्चानसूया च सदा श्रद्धेति कीर्त्तिता"। अतएव भगवद्गीतासु "अश्रद्धया हुतं दत्तं तपस्तप्तं कृतन्तु यत्। असदित्युच्यते पार्थ! न च तत् प्रेत्य नेह च"। हरिवंशे बलिं प्रति भगवद्वाक्यम् "अश्रोत्रियं श्राद्धमधीतमव्रतं त्वदक्षिणं यज्ञमनृत्विजा हुतम्। अश्रद्धया दत्तमसंस्कृतं हविर्भागाः षडेते तव दैत्यपुङ्गव!"। प्रतिपादनं स्वीकरणं पात्रायत्तीकरणमिति यावत्। तेन शास्त्रोक्तसम्प्रदानस्वत्वावच्छिन्नद्रव्यत्यागो दानम्। ततश्च उद्देश्यपात्रविशेषो यदि न स्वीकरोति तदा सोपाधित्यागविशेषस्यानिर्वाहाच्च दातुः स्वत्वं निवर्त्तते इति रत्नाकरप्रभृतयः। वस्तुतस्तु "प्रदानं स्वाम्यकारणमिति" मनूक्तेर्दानमात्रात् सम्प्रदानस्य तद्विषयज्ञानाभावदशायामपि स्वत्वमुत्पद्यते पितुः स्वत्वोपरमात्तद्धने गर्भस्यस्येव। तेन शास्त्रोक्तसम्प्रदानस्वत्वापादकद्रव्यत्यागोदानम्। तथाच दत्तस्य प्रतिपत्तौ न तु प्रतिग्रहघटितं दानमिति। व्यक्तमाह कात्यायनः "पित्रा दत्तमादाय गृहीत्वा निष्क्रामयति" आदाय प्रतिगृह्य ततो हस्तं गृहीत्वा वक्ष्यमाणमन्त्रेण निष्क्रामयतीत्यर्थः। "दत्त्वान्ते स्वस्तिवाचयेत्" इति वक्ष्यमाणवचनाच्चेति। अतएव मरीचिः "वत्सगोषु यथा नष्टां मातरं लभते सुतः। मनसा यस्य यद्दत्तं तद्धि तस्योपतिष्ठते"। नचैतत्तर्पणमात्रपरं वत्सगोष्विति दृष्टान्ताभिधानेन च यस्य यदिति सामान्याभिधानेन होलाधिकरणन्यायात् सामान्यपरं तेन श्राद्धादावपि तथा। "एकत्र निर्णीतः" इति न्यायाच्च। अतएव दत्तस्योद्देश्यपात्राभावेऽपि इतरधनवत्तद्धनस्वामिकुले प्रतिपत्तिमाह हेमाद्रिधृतधौम्यः "परोक्षे कल्पितं दानं पात्राभावे कथं भवेत्। गोत्रजेभ्यस्तथा दद्यात् तदभावेऽस्य बन्धुषु"। दानकल्पतरौ नारदः "ब्राह्मणस्य च यद्दत्तं सान्वयस्य न चास्ति सः।

सकुल्ये तस्य निनयेत्तदभावेऽस्य बन्धुषु । यदा तु न सकुल्यः स्यान्न च सम्बन्धिबान्धवाः । दद्यात् सजातिशिष्येभ्यस्तदभावेऽप्सु निःक्षिपेत्” अतएव आत्मीयात्तस्य पात्राभावे जले प्रक्षेपः । अतएव “मनसा पात्रमुद्दिश्य भूमौ तोयं विनिःक्षिपेत् । विद्यते सागरस्यान्तो दानस्यान्तो न विद्यते” इति नारदीयोक्तम् । दानानन्तरमेव स्वीकारात् पूर्वं दक्षिणा क्रियते । यत्र तु पात्रविशेषानुद्देश्यकदानं तत्र दातुः प्रतिपत्त्युपदेशात् तदधीनसम्प्रदानविशेषनिरूपितस्वत्वं त्यागादेव जायते । तत्र प्रतिपादनमाह मत्स्यपुराणम् “न चिरं धारयेद्गेहे हेम संप्रोक्षितं बुधाः । तिष्ठद्भयापहं यस्मात् शोकव्याधिकरं नृणाम् । शीघ्रं परस्वीकरणाच्छ्रेयः प्राप्नोति पुष्कलम्”। “संप्रोक्षितं पात्रमुद्दिश्य त्यक्तमिति” हेमाद्रिः । अतएव विष्णुपुराणे “तस्मात् सर्वात्मना पात्रे दद्यात् कनकमुत्तमम् । अपात्रे पातयेद्दत्तं सुवर्णं नरकार्णवे । प्रमादतस्तु तन्नष्टं तावन्मात्रं नियोजयेत् । अन्यथा स्तेययुक्तः स्यादन्यप्रदत्ते विनाशिनि” । तद्धेम ब्राह्मणायोत्सृष्टं ब्राह्मणसात्कृतम् यदि चौरादिनापह्रियते तदा तावदेव पुनरुत्सृज्य देयमिति दानसागरः । “द्रव्यमर्जयन् ब्राह्मणः प्रतिगृह्णीयात् याजयेदध्यापयेत्” इति श्रुतौ याजनाध्यापनसाहचर्यात् प्रतिग्रहस्य स्वत्वमजनयतोऽप्यर्जनरूपता न विरुद्धा याजनाध्यापनादौ दक्षिणादानादेव स्वत्वादिति दायभागः । नतु प्रतिग्रहात् स्वत्वं प्रागुक्तमनुधौम्यनारदीयवचनविरोधात् । सम्प्रदानस्वीकारात् पूर्वं त्यक्तद्रव्यस्यान्येन ग्रहणे ब्रह्मस्वापहारापत्तेश्च । एवञ्च दाने सम्प्रदानस्य कारकतोद्देश्यत्वात्, नत्वनुमतिद्वारा मानाभावात् मनसा पात्रमनुद्दिश्येत्यत्र व्यभिचाराच्च । एवञ्च त्यागाद्दत्तमपि दातुः स्वत्वं संप्रदानाग्रहणादसम्यक्त्वेन तस्यादानत्वश्रुतेर्दातुः पुनः स्वत्वमुत्पद्यते । तथाच नारदः “दत्त्वा दानमसम्यग्यः पुनरादातुमिच्छति । दत्ताप्रदानिकं नाम व्यवहारपदं हि तत्” असम्यक्त्वञ्च दानस्यादेयद्रव्यदानाद्वा अयथार्थदानाद्वा सम्प्रदानभ्रान्त्यादिना वा पित्राद्यसम्मत्यादिना वा दातुरेवाशुद्धया व्यवस्थाभेदाद्वा इति वाचस्पतिमिश्राः । तथाच देवलः । “दाता प्रतिग्रहीता च श्रद्धा देयञ्च धर्मयुक् । देशकालौ च दानानामङ्गान्येतानि षड्विदुः” । धर्मयुक् न्यायार्जितं द्रव्यं तथाच विष्णुधर्मोत्तरम् “देशकाले तथा पात्रे धनं न्यायागतं तथा । यद्दत्तं ब्राह्मणश्रेष्ठाः ! तदनन्तं प्रकीर्त्तितम्” । प्रतिग्रहाभावे प्रतिग्रहीतृरूपाङ्गाभावादसम्यक्त्वम् । दत्तस्याप्रदानं पुनर्हरणं यस्मिन् व्यवहारपदे तत्तथेति विज्ञानेश्वरः । अतएव यज्ञाद्यर्थं याचकाय धनं दत्तमपि तेन तदकरणे पुनस्तद्ग्रहणमाह मनुः “धर्मार्थं येन दत्तं स्यात् कस्मैचिद्याचते धनम् । पश्चाच्च न तथा तत् स्यान्न देयन्तस्य तद्भवेत्” । दत्तस्य गृहीतस्य भुक्तस्यापि पुनरादानश्रुतेः सुतरां पात्रस्योपेक्षायां तथेति । उपेक्षया स्वत्वहानिमाह बृहस्पतिः “प्राप्तमात्रं येन भुक्तं स्वीकृत्यापरिपन्थिनम् । तस्य तत् सिद्धिमाप्नोति हानिश्चोपेक्षया तथा” । अतएव प्रतिग्रहीतुस्त्यागात् फलं वक्ष्यते । अन्यत्र हारीतः “प्रतिश्रुत्याः प्रदानेन दत्तस्य छेदनेन च । विविधान् नरकान् याति तिर्य्यग्योनौ च जायते । वाचा यच्च प्रतिज्ञातं कर्म्मणा नोपपादितम् । तद्धनं ऋणसंयुक्तम् इह लोके परत्र च” । दत्तस्योच्छेदनं स्वयन्दत्तस्य द्रव्यस्य प्रतिग्रहीतृदानविक्रयादिकं विना छेदं बलात् स्वीकरणं नतु तद्विक्रीतादेरपहरणम् । तथा चाश्वमेधिके पर्व्वणि युधिष्ठिरं प्रति व्यासवाक्यं “दत्तैषा भवता मह्यं ताञ्च भूमिं ददाम्यहम् । अरण्यं दीयतां मेऽद्य आसीत् पूर्व्वन्तु ते यतः” इति कात्यायनः “स्वस्थेनार्त्तेन वा दत्तं श्रावितं धर्मकारणात् । अदत्त्वा तु मृते दाप्यस्तत्सुतो नात्र संशयः” । आर्त्तेन जन्मप्रभृति महारोगिव्यतिरिक्तरोगिणेत्यर्थः । महारोगिणां दाने “तेषां मध्ये तु यः कुष्ठी गर्हितः सर्व्वकर्म्मसु” इति प्रागुक्तभविष्यपुराणीयनिषेधात् । एवञ्च मुमूर्षुदत्तस्य यद्दानोपसर्गत्वाभिधानं तद्धर्म्मार्थेतरदानपरम् । स्मृतिः “स्नात्वा शुद्धे समे देशे गोमयेनोपलेपिते । वसित्वा वसनं शुद्धं दानं दद्यात् सदक्षिणम्” । अत्र आववलेपितदेशाभिधानात् “यज्ञोदानं तपोजप्यं श्राद्धञ्च सुरपूजनम् । गङ्गायान्तु कृतं सर्व्वं कोटिकोटिगुणं भवेत्” इति स्कान्दे गङ्गायामिति गङ्गातीरपरमिति गङ्गावाक्यावली । पाद्मे “शिवस्य विष्णोरन्यस्य सन्निधौ दत्तमक्षयम्” । लिङ्गपुराणे “शालग्रामशिला यत्र तत्तीर्थं योजनद्वयम् । तत्र दानञ्च होमश्च सर्व्वं कोटिगुणं भवेत्” । यत्र भूर्लोके । भूर्लोकमाह विष्णुपुराणम् । “पादगम्यञ्च यत् किञ्चि-

इत्यस्ति पृथिवीमयम् । स भूर्लोकः समाख्यातो विस्तारोऽस्य मयोदितः” पृथिवीमयं पार्थिवम् । ततश्च शालग्रामस्य पात्राद्यवस्थानेऽपि तीर्थत्वमतएव केवलभूमौ शालग्रामावस्थानं तीर्थाय मैथिलानां दुराचरणमेव । शङ्खलिखितौ “आहारं मैथुनं निद्रां सन्ध्याकाले विवर्ज्जयेत् । कर्म्म चाध्ययनञ्चैव तथा दानप्रतिग्रहौ” । स्मृतिः “गत्वा यद्दीयते दानं तदनन्तफलं स्मृतम् । सहस्रगुणमाहूय याचिते तु तदर्द्धकम्” । विष्णुधर्म्मोत्तरम् “सीदते द्विजमुख्याय योऽर्थिने न प्रयच्छति । सामर्थ्ये सति दुर्बुद्धिर्नरकायोपपद्यते” । यमः “आशां दत्त्वा ह्यदातारं दानकाले निषेधकम् । दत्त्वा सन्तप्यते यस्तु तमाहुर्ब्रह्मघातकम्” । मात्स्ये “अनित्यं जीवितं यस्मात् वसु चातीव चञ्चलम् । केशेष्विव गृहीतस्तु मृत्युना धर्म्ममाचरेत्” । भारते “एकां गां दशगुर्दद्यादृश दद्याच्च गोशती । शतं सहस्रगुर्दद्यात् सहस्रं बहुगोधनः” । व्यासः “ग्रासादर्द्धमपि ग्रासमर्थिभ्यः किन्न दीयते । इच्छानुरूपो विभवः कदा कस्य भविष्यति” । तथा “भुक्त्वा दानं न शस्यते” । अतएवाग्निपुराणम् “ग्रासमुष्टिं परगवे साग्रं दद्यात्तु यः सदा । अकृत्वा स्वयमाहारं स्वर्गलोकं स गच्छति” । देवलः “अपापरोगी धर्म्मात्मा दित्सुरव्यसनः शुचिः । अनिन्द्याजीवकर्म्मा च षड्भिर्दाता प्रशस्यते” अनिन्द्याजीवकर्म्मा अगर्हितजीवनोपायः । तथा “अपराबाधमक्लेशं प्रयत्नेनार्जितं धनम् । अल्पं वा विपुलं वापि देयमित्यभिधीयते” । अपराबाधं परपीड़ारहितम् अक्लेशं पातक्लेशाजनकम् । तथा “यत् यच्च दुर्लभं द्रव्यं यस्मिन् कालेऽपि वा पुनः । दानार्हौ देशकालौ तौ स्यातां श्रेष्ठौ न चान्यथा” देवलः “इष्टं दत्तमधीतं वा विनश्यत्यनुकीर्त्तनात् । श्लाघानुशोचनाभ्याञ्च भग्नतेजो विभिद्यते । तस्मादात्मकृतं पुण्यं वृथा न परिकीर्त्तयेत्” इष्टं यजनं अनुकीर्त्तनं कथनं श्लाघा प्रशंसा अनुशोचनं धनव्ययेन पश्चात्तापः । भग्नतेजः फलजननशक्तिहीनं वृथा रत्नादिप्रयोजनं विना । देवलः “पात्रेभ्यो दीयते नित्यमनपेक्ष्य प्रयोजनम् । केवलं धर्म्मबुद्ध्या यत् धर्म्मदानं प्रचक्ष्यते” । प्रयोजनमिह लौकिकमभिहितम् । याज्ञवल्क्यः “न विद्यया केवलया तपसा वापि पात्रता । यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रचक्ष्यते” । वृत्तमाचारः । विष्णुधर्म्मोत्तरे “पतनात् त्रायते यस्मात् पात्रं तस्मात् प्रचक्षते” । महाभारते “पात्राणामपि तत् पात्रं शूद्रान्नं यस्य नोदरे” । अत्र साक्षाच्छूद्रदत्तघृततण्डुलाद्यनुपयोगीति दानसागरः । शूद्रस्तत्राश्रयान्नभोजीति रत्नाकरः । वस्तुतस्तु शुश्रूषु प्रकरणाभिहितशूद्रान्नानुपयोगीत्यर्थः । याज्ञवल्क्यः “दातव्यं प्रत्यहं पात्रे निमित्तेषु विशेषतः” । निमित्तेषु गङ्गातीरादिसंक्रान्त्यादिषु । वृद्धमनुः “सहस्रगुणितं दानं भवेद्दत्तं युगादिषु । कर्म्म श्राद्धादिकञ्चैव तथा मन्वन्तरादिषु” । विवादचिन्तामणौ वशिष्ठः “शुक्रशोणितसम्भवः पुत्रो मातापितृनिमित्तकः । तस्य प्रदानविक्रयपरित्यागे तु मातापितरौ प्रभवतः नत्वेकं पुत्रं दद्यात् प्रतिगृह्णीयात् वा स हि सन्तानाय पूर्व्वेषामिति” । कात्यायनः “विक्रयञ्चैव दानञ्च न नेयाः स्युरनिच्छवः । दाराः पुत्राश्च सर्व्वस्वमात्मन्येव तु योजयेत् । आपत्काले तु कर्त्तव्यं दानं विक्रय एव च । अन्यथा न प्रवर्त्तेत इति शास्त्रार्थनिश्चयः” । एवं भरणासामर्थ्य एव परित्यागः । मनुः “सप्त वित्तागमा धर्म्म्या दायो लाभः क्रयो जयः । प्रयोगः कर्म्मयोगश्च सत्प्रतिग्रह एव च” । दायोऽन्वयागतः लाभो निध्यादेः । जयः संग्रामादेः । प्रयोगः कुशीदं, कर्म्मयोगः कृषिवाणिज्यपुत्रकन्यादि । बृहस्पतिः “कुटुम्बभक्तवसनाद्देयं यदतिरिच्यते । मध्वास्वादो विषं पश्चाद्दातुर्धर्म्मोऽन्यथा भवेत्” । कीर्त्तिनरकाभ्यामित्यर्थः । अस्यापवादमाह स एव “कुटुम्बं पीड़यित्वा तु ब्राह्मणाय महात्मने । दातव्यं भिक्षवे चान्नमात्मनो भूतिमिच्छता” । अतएव भविष्यपुराणे “स्वल्पे महति वा तुल्यं फलमाढ्यदरिद्रयोः” । विष्णुधर्म्मोत्तरे “यस्योपयोगि यद्द्रव्यं देयं तस्यै च तद्भवेत्” । हारीतः “तामसेन तु द्रव्येण ऋत्विग्भिस्तामसैस्तथा । तामसं भावमास्थाय तामसो यज्ञ उच्यते । तामसेन तु यज्ञेन दानेन तपसा तथा । निरये जन्म चेदाहुर्वृद्धिं विद्याश्च तामसीम्” । तामसी वृद्धिर्म्लेच्छाधिपत्यरूपा इति रत्नाकरः । “राजसेन तु द्रव्येण ऋत्विग्भी राजसैस्तथा । राजसं भावमास्थाय राजसो यज्ञ उच्यते । राजसेन तु यज्ञेन दानेन तपसा तथा । निरयस्वर्गयोर्जन्म क्रूरराज्यं श्रिया युतम् । सात्त्विकेन तु द्रव्येण ऋत्विग्भिः सात्त्विकैस्तथा । सात्त्विकं भावमास्थाय सात्त्विको यज्ञ उच्यते । सात्त्विकेन तु यज्ञेन दानेन तपसा

तथा। देवलोके ध्रुवं वासो देवसायुज्यमेव च”। मत्स्यपुराणञ्च “येषां पूर्व्वकृतं कर्म्म सात्त्विकं मनुजोत्तम!। पौरुषेण विना तेषां केषाञ्चिद्दृश्यते फलम्। कर्म्मणा प्राप्यते लोके राजसस्य तथा फलम्। कृच्छ्रेण कर्म्मणा विद्धि तामसस्य तथा फलम्” द्रव्याणामपि तत्तद्भेदमाह नारदः “पार्श्विकद्यूतचौर्य्यार्त्तिप्रतिरूपकसाहसैः। व्याजेनोपार्जितं यद्यत्तत् कृष्णं समुदाहृतम्। पार्श्विकः पात्रतया योऽर्जयतीति प्रायश्चित्तविवेकः। आर्त्त्या परपीड़या, प्रतिरूपकेण कृत्रिमरत्नादिना, साहसेन समुद्रयानगिर्य्यारोहणादिना, व्याजेन ब्राह्मणवेशेन शूद्रादिना। कृष्णं तामसं इति रत्नाकरः। “कुसीदकृषिवाणिज्यशुल्कशिल्पानुवृत्तिभिः। कृतोपकारादाप्तञ्च राजसं समुदाहृतम्” अनुवृत्तिः सेवा। “श्रुतशौर्य्यतपःकन्याशिष्ययाज्यान्वयागतम्। धनं सप्तविधं शुक्लं मुनिभिः समुदाहृतम्”। श्रुतेनाध्ययनेन शौर्य्येण जयादिना तपसा जपहोमदेवार्च्चनादिना कन्यागतं कन्यया सहागतं श्वशुरादेर्लब्धं शिष्यागतं गुरुदक्षिणादिना, याज्यागतं आर्त्विज्यलब्धम् अन्वयागतं दायादिभ्यो लब्धं शुक्लं सात्त्विकम्। अत्र स्वत्वहेतुभूतव्यापाररूपार्जनगणे चौर्य्यस्यापि निर्द्देशाच्चौर्य्योपात्तद्रव्येऽपि यथेष्टविनियोज्यत्वेन शास्त्रगम्यस्वरूपस्वत्वमस्तीति प्रतीयते भवदेवभट्टसम्मतोऽयं पक्षः। यत्तु “द्रव्यमस्वामिविक्रीतं पूर्व्वस्वामी समाप्नुयात्” इति याज्ञवल्क्यीयेन चौरविक्रीतस्यास्वामिविक्रीतत्वमुक्तं तत्रास्वामिपदमप्रशस्तस्वामिपरं “अप्राशस्त्यं विरोधश्च नञार्थाः षट् प्रकीर्त्तिताः” इति प्रागुक्तत्वान्नतु स्वामित्वाभावपरं प्रागुक्तनारदवचनविरोधात्। “ब्राह्मणस्वं न हर्त्तव्यं क्षत्त्रियेण कदाचन। दस्युनिष्क्रिययोस्तु स्वमजीवन् हर्त्तुमर्हति” इत्यनेन चौरस्वत्वाभिधानाच्च अतएव याज्ञवल्क्यः बुभुक्षितस्त्र्यहं स्थित्वा धान्यमब्राह्मणाद्धरेत्”। मनुरपि “तथैव सप्तमे भक्ते भक्तानि षड़नश्नता। अश्वस्तनविधानेन हर्त्तव्यं हीनकर्म्मणः” इत्याभ्यां त्र्यहोपवासषडुपवासानन्तरं धान्यचौर्य्येण जीवनाभिधानात्तद्धनस्य बलिवैश्वदेवार्हता प्रतीयत इति। (अहोरात्रे भोजनद्वयविधानात् त्रिरात्रोपवासे षड्भोजनस्य सम्भवेन वाक्ययोरेकवाक्यत्वया त्रिरात्रोपवास एव सिद्ध्यति। अतः षडोपवासस्य पाक्षिकत्वोक्तिश्चिन्त्यमूला)। व्यक्तं हरिवंशीयसप्तव्याधोपाख्याने “ते नियोगाद्गुरोस्तस्य गां

दोग्ध्रीं समपालयन्। क्रूरा बुद्धिः समभवत्तां गां वै हिंसितुं तदा। पितृभ्यः कल्पयित्वैनामुपभुञ्जीत भारत!। स्मृतिः प्रत्यवमर्षश्च तेषां जात्यन्तरेऽभवत्”। अत्र गुरोर्गां हत्वा श्राद्धेन चौराणामपि जातिस्मरत्वदर्शनाच्चौर्य्येण स्वत्वं प्रतीयते। एतत्तु अत्यन्ताशक्तानां शक्तानां तु मत्स्यपुराणे “गामग्निं ब्राह्मणं शास्त्रं काञ्चनं सलिलं स्त्रियः। मातरं पितरञ्चैव ये निन्दन्ति नराधमाः। न तेषामूर्द्ध्वगमनमेवमाह प्रजापतिः। परस्वं हरते यस्तु पश्चाद्दानं प्रयच्छति। न स गच्छति वै स्वर्गं दातारो यत्र भागिनः” इति सात्त्विकराजसिकवत् फलाभावपरम्। अन्यथा प्रागुक्तहारीतादिवचनविरोधापत्तेः। शातातपपराशरौ “सन्निकृष्टमधीयानं ब्राह्मणं यो व्यतिक्रमेत्। भोजने चैव दाने च दहत्यासप्तमं कुलम्” वशिष्ठव्यासपराशराः “यस्य चैकगृहे मूर्खो दूरे चैव बहुश्रुतः। बहुश्रुताय दातव्यं नास्ति मूर्खे व्यतिक्रमः”। शातातपः “मन्त्रपूतञ्च यद्दानमपात्राय प्रदीयते। दातुर्निष्कृत्य हस्तं तद्भोक्तुर्जिह्वां निकृन्तति। न ददस्वेति यो ब्रूयात् देवाग्नौ ब्राह्मणेषु च। तिर्य्यग्योनिशतं गत्वा चाण्डालेष्वभिजायते”। वशिष्ठः “परिभुक्तमवज्ञातमपर्य्याप्तमसंस्कृतम्। यः प्रयच्छति विप्रेभ्यस्तद्भस्मन्यवतिष्ठते”। अपर्य्याप्तं स्वकार्य्याक्षमम्। यमः “सुवर्णं रजतं ताम्रं यतिभ्यो यः प्रयच्छति। न स तत्फलमाप्नोति तत्रैव परिवर्त्तते”। अत्रैव दृष्टफल एवावतिष्ठते न स्वर्गादिफलमाप्नोतीत्यर्थः। महाभारते “पङ्ग्वन्धबधिरामूकाव्याधिनोपहताश्च ये। भर्त्तव्यास्ते महाराज! न तु देयः प्रतिग्रहः”। व्याधिना यक्ष्मादिना। व्यासः “मातापितृभ्यां यद्दत्तं यद्दत्तं भ्रातृबन्धुषु। आत्मजेषु च यद्दत्तं सोऽनन्तस्वर्गसंक्रमः। पितुः शतगुणं दानं सहस्रं मातुरेव च। अनन्तं दुहितुर्दानं सोदर्य्ये दत्तमक्षयम्”। विशेषयति नारदः “साक्षित्वं प्रातिभाव्यञ्च दानं ग्रहणमेव च। विभक्ता भ्रातरः कुर्य्युर्नाविभक्ताः परस्परम्। योऽसद्भ्यः प्रतिगृह्यापि पुनः सद्भ्यः प्रयच्छति। आत्मानं संक्रमं कृत्वा परांस्तारयते हि सः” धनस्वामिनमात्मानं सन्तारयति दुस्तरमिति। शेषार्द्धं स्कान्दे विशेषः। गोतमः “अन्तर्जानु करं कृत्वा सकुशन्तु तिलोदकम्। फलांशमभिसन्धाय प्रदद्याच्छ्रद्धयान्वितः”। उदकस्तुतिमभिधायाह हारीतः “तस्माद्भिर-

योक्ष्यैतद्दद्यादालभ्य एव च" इति अनोक्ष्य प्रोक्ष्येति रत्नाकरः। अत्र यद्यपि "उत्तानेन तु हस्तेन प्रोक्षणं समुदाहृतम्। न्युब्जेनाभ्युक्षणं प्रोक्तं तिरश्चावोक्षणं स्मृतम्" इति वर्द्धमानधृतेन विरुद्धम्। अतएव कुसुमाञ्जलौ प्रोक्षणाभ्युक्षणादिभिरिति भेदेनोक्तं तथापि "यस्य यद्दीयते वस्त्रमलङ्कारादि काञ्चनम्। तेषां दैवतमुच्चार्य्य कृत्वा प्रोक्षणपूजने। उत्सृज्य मूलमन्त्रेण प्रतिनाम्ना प्रतर्पयेत्" इति कालिकापुराणाद्व्याख्यानेऽपि न शास्त्रविरोधः। वस्तुतस्तु उभयदर्शनाद्वैकल्पिकम्। आलभ्य पाणिना स्पृष्ट्वा। आपस्तम्बः "सर्वाण्युदकपूर्वाणि दानानि यथाश्रुति वीहारे" इति। अन्वाहार्य्यदानादौ यथाश्रुति यावदेव श्रूयते तावदेव कुर्य्यात् वीहारे यज्ञे नोदकपूर्वतानियमः इति कल्पतरुरत्नाकरौ। अन्वाहार्य्यममावस्याश्राद्धं एवञ्चापस्तम्बसूत्रैकवाक्यत्वात् यथाश्रुति वीहारः इति जैमिनिसूत्रेऽपि श्रुतिरुत्पत्तिवाक्यं शाब्दी व्युत्पत्तिश्च तेनोत्पत्तिव्युत्पत्तिवाक्ययोरर्थः यथाश्रुतः स एव विनियोगवाक्ये ग्राह्य इति सूत्रार्थः। नतु श्रुतैरेव शब्दैर्वाक्यरचना कार्य्येत्यर्थः मूलभूतश्रुत्यन्तरकल्पनापत्तेरदृष्टार्थतापत्तेश्च। ततश्च सङ्कल्पादिवाक्ये सङ्कल्पविषयीभूतस्यार्थस्याभिलप्यमानत्वादभिलापे तु तद्वाचकसर्वशब्दानां सामर्थ्यात् श्रुतशब्दस्य नियमो नास्ति अन्यथा विश्वजिता यजेतेत्यादौ स्वर्गकाम इत्यभिलापो न स्यादश्रुतत्वात् तथा "कपिलाकोटिदानात्तु गङ्गास्नानं विशिष्यते इति ब्रह्माण्डपुराणात् कपिलाकोटिदानजन्यफलाधिकफलप्राप्तिकाम इति शिष्टानुमताभिलापो न स्यात्। अतएव ग्रहादीनां नानामुनिभिर्नानानामान्युक्तानि तेषां यत् किञ्चिन्नाम्नैवोल्लेखाय। तथाच मत्स्यपुराणम् "सूर्य्यः सोमस्तथा भौमो बुधजीवसितार्कजाः। राहुः केतुरिति प्रोक्ता ग्रहालोकहितावहाः"। याज्ञवल्क्यः "सूर्य्यः सोमो महीपुत्रः सोमपुत्रः बृहस्पतिः। शुक्रः शनैश्चरो राहुः केतुश्चेति ग्रहाः स्मृताः" यत्र त्वेकस्य देवस्य पूजादौ विशिष्य नानानामोपादानं तत्र ततएव तान्येवाभिलप्यानि न तु नामान्तराणि यत्र यत्र बहुभिर्मुनिभिर्यन्नामाभिधीयते तत्र तदेव वक्तव्यं तथाभिधानेन श्रुतिस्तत्रैव तात्पर्य्यं प्रतीयते। एवञ्च विधिशब्दस्य मन्त्रत्वे भावः स्यादिति न्यायेनापि विधिशब्दस्य विधिवाक्यस्थदेवताप्रतिपादकमात्रस्य मन्त्रसम्पादकत्वं बोध्यम्, योगियाज्ञवल्क्येन "मित्रोधाता- भगस्त्वष्टा पूषार्य्यमांशुरेव च। पर्य्यायनामभिश्चैव एकएव निगद्यते" तथा। "वाचकेऽपि च विद्याते वाच्यएव प्रमोदति" इत्युक्तम्। अतएव मनुः "वाग्दैवत्यैश्च चरुभिर्यजेरंस्ते सरस्वतीम्। अन्हतस्यैनसस्तस्य कुर्व्वाणा निष्कृतिं पराम्"। अत्र वाग्देवता सरस्वतीति श्रुतेर्वाक्सरस्वत्योरेकार्थत्वात् वाग्दैवत्यचरुणा सरस्वती यजनं संगच्छते। अन्यथा नामभेदाद्देवताभेदे विरुद्धं स्यात्। तेऽसत्यवचने सम्भाव्यमाने शूद्रविट्क्षत्त्रियविप्रवधविषयानृतादिसाक्षिणः। स्मृतिः "नामगोत्रे समुच्चार्य्य प्राङ्मुखो देवकीर्त्तनात्। उदङ्मुखाय विप्राय दत्त्वान्ते स्वस्ति वाचयेत्"। देवकीर्त्तनादिति ल्यब्लोपे पञ्चमी देवकीर्त्तनं कृत्वेत्यर्थः। ततश्च दात्रामुकदैवतं विष्णुदैवतं वा वक्तव्यमिति।

देयद्रव्यदेवा विष्णुध०उक्ता यथा "अभयं सर्वदैवत्यं भूमिर्वै विष्णुदेवता। कन्या दासस्तथा दासी प्राजापत्याः प्रकीर्त्तिताः; प्राजापत्यो गजः प्रोक्तस्तुरगोयमदैवतः। तथा चैकशफं सर्वं कथितं यमदैवतम्। महिषश्च तथा याम्य उष्ट्रो वै नैर्ऋतो भवेत्। रौद्री धेनुर्विनिर्द्दिष्टा छाग आग्नेय उच्यते। मेषन्तु वारुणं विद्याद्वराहो वैष्णवः स्मृतः। आरण्याः पशवः सर्वे कथिता वायुदैवताः। जलाशयानि सर्वाणि वारिधानीं कमण्डलुम्। कुम्भञ्च करकञ्चैव वारुणानि विनिर्द्दिशेत्। समुद्रजानि रत्नानि सामुद्राणि तथैव च। आग्नेयं कनकं प्रोक्तं सर्वलौहानि चाप्यथ। प्राजापत्यानि शस्यानि पक्वान्नमपि च द्विजाः!। ज्ञेयानि सर्वगन्धानि गान्धर्वाणि विचक्षणैः वार्हस्पत्यं स्मृतं वासः सौम्यानि रजतानि च। पक्षिणश्च तथा सर्वे वायव्याः परिकीर्त्तिताः। विद्या ब्राह्मी विनिर्द्दिष्टा विद्योपकरणानि च। सारस्वतानि ज्ञेयानि पुस्तकाद्यानि पण्डितैः। सर्वेषां शिल्पभाण्डानां विश्वकर्मा तु दैवतम्। द्रुमाणामथ पुष्पाणां शाकानां हरितैः सह। फलानामपि सर्वेषां तथा ज्ञेयो वनस्पतिः। मत्स्यमांसे विनिर्द्दिष्टे प्राजापत्ये तथैव च। छत्रं कृष्णाजिनं शय्यां रथमासनमेव च। उपानहौ तथा यानं तथा यत् प्राणवर्ज्जितम्। कौत्तानाङ्गिरसं त्वेतत् प्रतिगृह्णीत मानवः। पार्थ्यन्दश्च तथोशीरं वर्मशस्त्रध्वजादिकम्। व्रतोपकरणं सर्वं कथितं सर्वदैवतम्। गृहन्तु सर्वदैवत्यं यदनुक्तं द्विजोत्तमाः!। तज्ज्ञेयं विष्णुदैवत्यं सर्वं वा विष्णुदैवतम्"। देवकीर्तनादित्यत्र

देवकीर्त्तनादिति पट्लिंशन्मते पाठः व्याख्यातश्च हेमाद्रिणा "देवकीर्त्तनोत्तरकालं दत्त्वेत्यर्थः।

विष्णुधर्मोत्तरेऽपि"द्रव्यस्य नाम गृह्णीयाद्ददानीति ततो वदेत्। तोयं दद्यात्तथा दाता दाने विधिरयं स्मृतः"। व्यासः "नामगोत्रे समुच्चार्य्य प्रदद्याच्छ्रद्धयान्वितः। परितुष्टेन भावेन तुभ्यं सम्प्रददे" इति। सम्प्रदानवाक्येऽहं-प्रयोगमाह कात्यायनः "अहमस्मै ददानीति एवमाभाष्य दीयते" एवञ्च सम्प्रददे ददानीत्येतयोर्विकल्पः स च व्यवस्थितः आत्मगामिफले सम्प्रददे परगामिफले ददानीति उभयपदित्वात् दाधातोः फलवति कर्त्त्र्यात्मने पदं इष्यते अफलवति कर्त्तरि परस्मैपदमिति पाणिनिस्मरणात्। अतएवात्मनेपदं परस्मैपदम् इत्येतयोरात्मने परस्मै इत्याभ्यां समाख्या सङ्गच्छते। ददानीत्यस्य ददे इतिवत् वर्त्तमानार्थतेति। अतएव "सकृदाह ददानीति" मनुनाप्युक्तं सङ्गच्छते अनुमत्यर्थे तु सकृत्त्वाभिधानमप्रयोजकमिति। श्राद्धादौ फलभागिनां गोत्राद्युल्लेखदर्शनात् तदितरत्रापि तयोल्लेखाचारः। हारीतः "अथासदद्रव्यदानमसत्यं यच्च दत्त्वा परितप्यते तच्च दानमफलं यच्चोपकारिणे ददाति तच्चात्र परिक्लिष्टं यच्च सोपधं ददाति अन्यस्माविततमलं यच्चापात्राय ददाति अनिष्टदानं भवति यच्चादत्त्वा प्रकीर्त्यते अयदानं यच्चाश्रद्धया ददाति क्रोधाद्राजसं यच्चाक्रुश्य ददाति दत्त्वा वा क्रोशति अवतृतं पैशाचं यच्चावज्ञातं ददाति दत्त्वा चावजानीते सुमूर्खतामसं यच्चाप्रकृतो ददाति एते दानोपसर्गायैरुपसृष्टं दानमप्रसिद्धमसत्यमयशस्यमभ्रुवफलं भवत्यफलं येति"। तर्हि त्यागानन्तरकाले, हस्तार्पणसम्भवेऽप्यदानमसमर्पणम्। उपकारिणे व्यसनोपकारिणे तदितरोपकारिणे तु दत्तः। "मातापित्रोर्गुरौ मित्रे विनीते चोपकारिणे। दीनानाथविशिष्टेभ्यो दत्तन्तु सफलं भवेत्"। तस्मात्तं यथोक्तोपकरणरहितम्। सोपधं सकल्प्य अन्यस्माविर्तं लोकसम्भावनार्थं प्रकाशितम्, अनिष्टदानं भवेत् दानं, भयोमानसेदः अप्रकृतोभयादिमान्। तथाच नारदः "अदत्तन्तु भयक्रोधकामशोकरुगन्वितैः। बालमूढ़ास्वतन्त्रार्त्तमत्तोन्मत्तापवर्जितम्। कर्त्ता ममेदं कर्म्मेति प्रतिलाभेच्छया च यत्"।"प्रतिलाभेच्छया सोपाधिदत्तमुपाध्यसिद्धौ"इति विवादचिन्तामणिः। एततपरमेव हारीतेन सोपधमित्युक्तम्"। हेमाद्रौ दान०ख० दानाङ्गादिकं विस्तरेणोक्तं यथा

"अथ दानाङ्गनिरूपणम्। तानि च प्रतिग्रहीतृ द्रव्यकालदेशश्रद्धासंज्ञकानि। तदुक्तं भविष्यपुराणे "प्रतिग्रहीता द्रव्यञ्च कालो देशश्च पावनः। श्रद्धा च सात्त्विकी ज्ञेयं दानानामङ्गपञ्चकम्"।

तत्र प्रतिग्रहीटपात्रनिरूपणम्। स्कन्दपुराणे देवीं प्रति ईश्वरवचनम् "श्रुतीनामाकराह्येते रत्नानामिव सागराः। विप्रा विप्राधिपमुखे! पूजनीयाः प्रयत्नतः"। विप्राधिपः चन्द्रः तद्वन्मुखं यस्याः सा तथा देवीसम्बोधनमेतत्। "यत्र वेदविदो विप्रा न प्राश्नन्त्युत्तमं हविः। न तत्र देवा देवेशि! हविरश्नन्ति कर्हिचित्"। तथाच तैत्तिरीयश्रुतिः "यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्तीत्यादि"। "विप्रदिव्युच्यते व्योम प्रकारः प्रापणे स्मृतः। दिवं सम्प्रापयन्त्येते दातृन् विप्रास्ततः स्मृताः। अपि नारायणोऽनन्तो ब्रह्मा स्कन्दोऽनिलः शिखी। तद्दानं नाभिनन्दन्ति यत्र विप्रा न पूजिताः। येषां प्रसादात्सुलभ-मायु-र्धर्म्मः सुखं धनम्। श्री-र्यशः-स्वर्गवासश्च तान् विप्रानर्च्चयेद्बुधः"। विष्णुधर्म्मोत्तरे श्रीभगवानुवाच "ब्राह्मणैः पूजितैर्नित्यं पूजितोऽहं न संशयः। निर्भर्त्सितैश्च निर्भर्त्स्ये तैरहं सर्वकर्मसु। विप्राः परा मतिर्मह्यं यस्तान् पूजयते नृप!। तमहं स्वेन रूपेण प्रपश्यामि युधिष्ठिर!। काणाः कुब्जाश्च खञ्जाश्च दरिद्रा व्याधितास्च ये। सर्वरूपास्च ये विप्राः पश्य रूपं ममैव ते"। एतत्तु ब्राह्मणजातिमात्रस्तुतिपरम्। याज्ञवल्क्यः "तपस्तप्त्वासृजद्ब्रह्मा ब्राह्मणान् वेदगुप्तये। तृप्त्यर्थं पितृदेवानां धर्म्मसंरक्षणाय च"। मत्स्यः "नास्ति विप्रसमो देवो नास्ति विप्रसमो गुरुः। नास्ति विप्रात् परः बन्धुर्नास्ति विप्रात् परो निधिः"। वह्निपुराणम् "न जातिर्न कुलं राजन्! न स्वाध्यायः श्रुतं न च। कारणानि द्विजत्वस्य वृत्तमेव तु कारणम्। किं कुलं वृत्तहीनस्य करिष्यति दुरात्मनः। कृमयः किं न जायन्ते कुसुमेषु सुगन्धिषु। नैकमेकान्ततो याह्यं पठनं हि विशाम्पते!। वृत्तमन्विष्यतां तात! रक्षोभिः किं न पठ्यते। बहुना किमधीतेन नटस्येव दुरात्मनः। तेनाधीतं श्रुतं वापि यः क्रियामनुतिष्ठति। कपालस्थं यथा तोयं श्वदृते च यथा पयः। दुष्टं स्यात् स्थानदोषेण, वृत्तहीनं तथा श्रुतम्। तस्माद्द्विज महाराज! वृत्तं ब्राह्मणलक्षणम्। चतुर्वेदोऽपि दुर्वृत्तः

शूद्रादल्पतरः स्मृतः। सत्यं दम-स्तपोदानमहिंसेन्द्रिय-निग्रहः। दृश्यन्ते यत्र राजेन्द्र! स ब्राह्मण इति स्मृतः”। वशिष्ठः “दंश न सत्रं न चासनं नाश्रुतं न बहुश्रुतम्। न सुवृत्तं न दुर्वृत्तं वेद कश्चित्स ब्राह्मणः”। सत्, विशिष्टः असत्, तद्विपरीतः। अत्र चात्मोत्कर्षप्रकाशनं यो न करोति स पात्रमिति तात्पर्य्यमिति। यमः “अहिंसानिरतो नित्यं जुह्वानो जातवेदसम्। स्वदारनिरतो दाता स वै ब्राह्मण उच्यते। श्रुतं प्रज्ञानुगं यस्य प्रज्ञा चैव श्रुतानुगा। असम्भिन्नार्य्यमर्यादः स वै ब्राह्मण उच्यते। आशिषोऽर्थं पूजाञ्च प्रसङ्गञ्च करोति यः। निवृत्तो लोभमोहाभ्यां तं देवा ब्राह्मणं विदुः”। ‘आशिषः’ आशीर्वादान्,-‘अर्थं’ धनलाभाय। प्रसङ्गः आसक्तिः। “सत्यं दानं क्षमा शीलमानृशंस्यं दया घृणा। दृश्यन्ते यत्र लोकेऽस्मिंस्तं देवा ब्राह्मणं विदुः”। शङ्खलिखितौ “तपोधर्मौ दया दानं सत्यं शौचं श्रुतं घृणा। विद्याविज्ञानमास्तिक्यमेतद्ब्राह्मणलक्षणम्”। बौधायनः “विद्या तपश्च योनिश्च एतद्ब्राह्मणलक्षणम्। विद्यातपोभ्यां यो हीनो जातिब्राह्मण एव सः”। वशिष्ठः “ये शान्तदान्ताः श्रुतपूर्णकर्णा जितेन्द्रियाः प्राणिवधे निवृत्ताः। प्रतिग्रहे सङ्कुचिताग्रहस्तास्ते ब्राह्मणास्तारयितुं समर्थाः”। यमः “विद्यावन्तश्च ये विप्राः सुव्रताश्च तपस्विनः। सत्य-संयम-संयुक्ता ध्यानयुक्ता जितेन्द्रियाः। पुनन्ति दर्शनं प्राप्ताः किं पुनः संगतिं गताः। तेषां दत्त्वा च संभोज्य प्राप्नुयुः परमां गतिम्। दत्त्वा द्विजाय शुद्धाय दाता याति शुभां गतिम्। विद्यातपःशीलवांश्च स च तारयते नरः”। कूर्मपुराणे “स्वाध्यायवन्तो ये विप्रा विद्यावन्तो-जितेन्द्रियाः। सत्यसंयमयुक्ताश्च तेभ्यो दद्यात् द्विजोत्तमाः!। श्रोत्रियाय कुलीनाय विनीताय तपस्विने। व्रतस्थाय दरिद्राय प्रदेयं भक्तिपूर्वकम्”। संवर्त्तः “श्रोत्रियाय दरिद्राय अर्थिने च विशेषतः। यद्दानं दीयते तस्मै तद्दानं शुभकारकम्”। श्रोत्रियस्तु, यमेनोक्तः “ओंकारपूर्विकास्तिस्रः सावित्रीर्य्यश्च विन्दति। चरितब्रह्मचर्य्यश्च स वै श्रोत्रिय उच्यते” ओंकारपूर्विका महाव्याहृतीरिति शेषः”। याज्ञवल्क्यः “सर्वस्य प्रभवो विप्रा श्रुताध्ययनशालिनः। तेभ्यः क्रियापराः श्रेष्ठास्तेभ्योऽप्यध्यात्मवित्तमाः”। पद्मपुराणे “यथाहि सर्वदेवानां ज्येष्ठः श्रेष्ठः पितामहः। तथा ज्ञानी सदा पूज्यो निर्ममो निष्परिग्रहः”। मत्स्यपुराणे “शीलं संवासतो ज्ञेयं शौचं संव्यवहारतः। प्रज्ञा संकथनात् ज्ञेया त्रिभिः पात्रं परीक्ष्यते”। भविष्यपुराणे “क्षान्ति-स्पृहा-दया-सत्यं-दानं शीलं तपः श्रुतम्। एतदष्टाङ्गमुद्दिष्टं परमं पात्रलक्षणम्”। वशिष्ठः “स्वाध्यायाढ्यं योनिमन्तं प्रशान्तं वैतानस्थं पापभीरुं बहुज्ञम्। स्त्रीषु क्षान्तं धार्मिकं गोशरण्यं व्रतैः क्लान्तं तादृशं पात्रमाहुः”। योनिमान् प्रशस्तकुलोद्भवः। वैतानस्थः अग्निहोत्रादिकर्मपरः। स्त्रीषु क्षान्तः स्त्रीविषये क्षान्तः। गोशरण्यः गोशुश्रूषारतः”। यमः “विद्यायुक्तो धर्मशीलः प्रशान्तः क्षान्तो दान्तः सत्यवादी कृतज्ञः। वृत्तिग्लानो गोहितो गोशरण्यो दाता यज्वा ब्राह्मणः पात्रमाहुः। स्वाध्यायवान् नियमवांस्तपस्वी ध्यानविच्च यः। क्षान्तो दान्तः सत्यवादी विप्रः पात्रमिहोच्यते” महाभारते “साङ्गांस्तु चतुरो वेदान् योऽधीते वै द्विजर्षभः। षड्भ्योऽनिवृत्तः कर्मभ्यस्तं पात्रमृषयो विदुः”। ‘पात्र’ पात्रतममित्यर्थः। वशिष्ठः “किञ्चिद्वेदमयं पात्रं किञ्चित्पात्रं तपोमयम्। पात्राणामपि तत् पात्रं शूद्रान्नं यस्य नोदरे”। वृहस्पतिः “किञ्चिद्वेदमयं पात्रं किञ्चित्पात्रं तपोमयम्। आगमिष्यति यत् पात्रं तत्पात्रं तारयिष्यति। ब्रह्मचारी भवेत्पात्रं पात्रं वेदस्य पारगः। पात्राणामुत्तमं पात्रं शूद्रान्नं यस्य नोदरे”। व्यासः “किञ्चिद्वेदमयं पात्रं किञ्चित्पात्रं तपोमयम्। असङ्कीर्णं च यत्पात्रं तत्पात्रं तारयिष्यति”। असङ्कीर्णं योन्यादिसङ्कररहितम्। याज्ञवल्क्यः “न विद्यया केवलया तपसा वापि पात्रता। यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्त्तितम्”। देवलः “मात्रश्च ब्राह्मणस्यैव श्रोत्रियश्च ततः परः। अनूचानस्तथा भ्रूण-ऋषिकल्प ऋषिर्मुनिः। इत्येतेऽष्टौ समुद्दिष्टा ब्राह्मणाः प्रथमं स्तुतौ। तेषां परः परः श्रेष्ठो विद्यावृत्तविशेषतः। ब्राह्मणानां कुले जातो जातिमात्रो यदा भवेत्। अनुपेतः क्रियाहीनो मात्र इत्यभिधीयते”। अनुपेतः उपनयनरहितः। “एकदेशमतिक्रम्य वेदस्याचारवानृजुः। स ब्राह्मण इति प्रोक्तो निभृतः सत्यवाग्घृणी”। एकदेशातिक्रमः वेदस्य किञ्चिदूनस्याध्ययनम्। निभृतः

शान्तः । "एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य वा । षट्कर्म्मनिरतो विप्रः श्रोत्रियो नाम धर्म्मवित् । वेद-वेदाङ्ग-तत्त्वज्ञः शुद्धात्मा पापवर्जितः । शेषं श्रोत्रियवत् प्राप्तः सोऽनूचान इति स्मृतः । अनूचानगुणोपेतो यज्ञ-स्वाध्यायमन्वितः । भ्रूण इत्युच्यते शिष्टैः शेषभोजी जितेन्द्रियः । वैदिकं लौकिकञ्चैव सर्व्वं ज्ञानमवाप्य यः । आश्रमस्थो वशी नित्यमृषिकल्प इति स्मृतः" । लौकिकम् अर्थार्जनादिज्ञानम् । "ऊर्द्ध्वरेतास्तपस्युग्रो नियताशी न संशयी । शापानुग्रहयोः शक्तः सत्यसन्धो भवेदृषिः । निवृत्तः सर्व्वतत्त्वज्ञः कामक्रोधविवर्ज्जितः । ध्यानस्थो निष्क्रियो दान्तस्तुल्यमृत्काञ्चनो मुनिः । निवृत्तः निषिद्धकाम्यकर्म्मभ्यः । निष्क्रियः अर्थार्ज्जनादिक्रियारहितः । "एवमन्वयविद्याभ्यां वृत्तेन च समुच्छ्रिताः । त्रिशुक्ला नाम विप्रेन्द्राः पूज्यन्ते सवनादिषु" । सवनादिषु यज्ञादिषु । "प्रतिग्रहसमर्थोऽपि कृत्वा विप्रो यथाविधि । निस्तारयति दातारमात्मानञ्च स्वतेजसा । समर्थोऽपि, समर्थ एवेत्यर्थः । "न लोके ब्राह्मणेभ्योऽन्यत् पवित्रं पुण्यमेव वा । अशक्यञ्च द्विजेन्द्राणां नास्ति वृत्तवतामिति । योक्तव्यो हव्यकव्येषु त्रिशुक्लो ब्राह्मणो द्विजैः । अभिभूतश्च पूर्व्वोक्तैर्दोषैः स्पृष्टश्च नेष्यते" । अभिभूतः अपकृष्टः । पूर्व्वोक्तैः कुलविद्याचारैः । दोषैः उपपातकादिभिः । मनुः "पात्रस्य हि विशेषेण श्रद्दधानतयैव च । अल्पं वा बहु वा प्रेत्य दानस्य प्राप्यते फलम्" । दक्षः "समं द्विगुणसाहस्रमनन्तञ्च यथाक्रमम् । दाने फलविशेषः स्याद्धिंसायामेवमेव हि । शतमब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे । सहस्रगुणमाचार्य्ये अनन्तं वेदपारगे" । 'अब्राह्मणः, राजभृतादिः । यदाह शातातपः । "अब्राह्मणास्तु षट् प्रोक्ता ऋषिः शातातपोऽब्रवीत् । आद्यो राजभृतस्तेषां द्वितीयः क्रयविक्रयी । तृतीयो बहुयाज्यः स्यात् चतुर्थो ग्रामयाजकः" । बहवो याज्या यस्य स बहुयाज्यः । "पञ्चमस्तु भृतस्तेषां ग्रामस्य नगरस्य वा" । ग्रामस्य नगरस्य भृत इत्यन्वयः । "अनागतान्तु यः पूर्व्वां सादित्याञ्चैव पश्चिमाम् । नोपासीत द्विजः सन्ध्यां स षष्ठोऽब्राह्मणः स्मृतः" । 'ब्राह्मणब्रुवस्तु, परस्तादपात्रेषु व्याख्यास्यते" । आचार्य्यस्तु महाभारते "अध्यापयेत्तु यः शिष्यं कृतोपनयनं द्विजः । सरहस्यञ्च सकलं वेदं भरतसत्तम ! । तमाचार्य्यं महाबाहो ! प्रवदन्ति मनीषिणः । एकदेशन्तु वेदस्य वेदाङ्गान्यपि वा पुनः । योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते । निषेकादीनि कर्म्माणि यः करोति नृपोत्तम ! । सम्भावयति चान्नेन स विप्रो गुरुरुच्यते । आग्न्याधेयं पाकयज्ञानग्निष्टोमादिकं तथा । यः करोति वृतो नूनं स तु स्यादृत्विजो द्विजः" । यमः "सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे । प्राधीते शतसाहस्रमनन्तं वेदपारगे । 'प्राधीतः, प्रारब्धाध्ययनः । "उत्पत्तिं प्रलयञ्चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्याञ्च स भवेद्वेदपारगः" । वृहस्पतिः "शूद्रे समगुणं दानं वैश्ये तु द्विगुणं स्मृतम् । क्षत्रिये त्रिगुणं प्राहुः षड्गुणं ब्राह्मणे स्मृतम् । श्रोत्रिये चैव साहस्रमाचार्य्ये द्विगुणं ततः । आत्मज्ञे शतसाहस्रमनन्तं त्वग्निहोत्रिणि" । विष्णुधर्म्मोत्तरे "अमानुषे समं दानं गोषु ज्ञेयं फलं तथा । द्विगुणञ्च तदेवोक्तं तथा त्रैवर्णसङ्करे । शूद्रे चतुर्गुणं प्रोक्तं विशि चाष्टगुणं भवेत् । क्षत्रिये षोडशगुणं ब्रह्मबन्धौ तदेव तु । द्वात्रिंशद्गुणं स्मृतं दानं वेदाध्ययनतत्परे । शतघ्नं तद्विनिर्द्दिष्टं प्राधीते लक्षसम्मितम् । अनन्तञ्च तदेवोक्तं ब्राह्मणे वेदपारगे" । एतेषु, केषाञ्चिदब्राह्मणब्राह्मणब्रुवादीनामपात्राणामपि पात्रत्वनिरूपणं मन्त्रवद्गवादिदानव्यतिरिक्तदानविषयम् । "मन्त्रपूर्व्वञ्च यद्दानमपात्राय प्रदीयते । दातुर्निकृत्य हस्तं तद्भोक्तुर्जिह्वां निकृन्तति" शातातपवचनात् । "उपरुदन्ति दातारं गौरश्वः काञ्चनं क्षितिः । अश्रोत्रियस्य विप्रस्य हस्तं दृष्ट्वा निराकृतेरिति" वशिष्ठवचनाच्च मन्त्रपूर्व्वं गवादिदानानामपात्रप्रतिपादननिषेधात् । शूद्रादीनान्तु पात्रत्वनिरूपणम् अन्नदानविषयम् । "कृतान्नमितरेभ्यः" इति गौतमवचनात् "अन्नं सर्व्वत्र दातव्यमिति" वक्ष्यमाणत्वाच्च । दक्षः "व्यसनापद्यर्थेञ्च कुटुम्बार्थञ्च याचते । एवमन्विष्य दातव्यं सर्व्वदानेष्वयं विधिः" । व्यसनं, राजचौराद्युपद्रवः । 'आपत् दुर्भिक्षादिपीड़ा । 'आद्योऽर्थशब्दो, निवृत्तिवचनः । मनुः "सान्तानिकं यक्ष्यमाणमध्वगं सार्व्ववेदसम् । गुर्व्वर्थं पितृमात्रर्थं स्वाध्यायार्थ्युपतापिनः । नवैतान् स्नातकान् विद्याद्ब्राह्मणान् धर्म्मभिक्षुकान् । 'सान्तानिकः, सन्तानप्रयोजनविवाहार्थीत्यर्थः । 'अध्वगः' अत्र धर्म्मार्थं प्रचलितः । सार्व्ववेदसः सर्व्वस्वदक्षिणयज्ञकृत् । 'उपतापी, व्याधिपीड़ितः "निःस्वेभ्यो देयमेतेभ्यो दानं

विद्याविशेषतः । एतेभ्यो हि द्विजाग्र्येभ्यो देयमन्नं सदक्षिणम् । इतरेभ्यो बहिर्वेदि कृतान्नन्तु प्रदीयते" । विद्याविशेषत इति अल्पविद्याय अल्पं बहुविद्याय बह्वित्यर्थः । बौधायनः सुब्राह्मण-श्रोत्रिय-वेदपारगेभ्यो गुर्वर्थ-निवेशौषधार्थ-वृत्तिक्षीण-यक्ष्यमाणाध्ययनाध्वसंयोग वैश्वजितेषु द्रव्यविभागो यथाशक्ति कार्य्यो बहिर्वेदि भिक्षमाणेषु कृतान्नमितरेषु" । निवेशः, विवाहः । वैश्वजितः, सर्व्वस्वदक्षिणया कृतविश्वजिद्यागः । बहिर्वेदिप्रभृत्यादेतेभ्यो बहिर्वेद्यपि धनमवश्यं देयम् । अन्येभ्यस्तु अन्तर्वेद्येव धनदाननियमः । बहिर्वेदि तु कृतान्नस्यैव । आपस्तम्बः "भिक्षमाणो निमित्त-माचार्य्यो विवाहो यज्ञो मातापित्रोर्बुभूर्षार्हतश्च नियमादिलोपः । तत्र, गुणान् समीक्ष्य यथा देयं, इन्द्रिय-प्रीत्यर्थस्य तु भिक्षमाणमनिमित्तं न तथाद्रियेत" । 'बुभूर्षा भरणेच्छा । अर्हतश्च नियमादिलोप इति, अधिकारिणश्चावश्यककर्म्मविधिलोपप्रसङ्गः । यमः "वेदेन्धनसमृद्धेषु हुतं विप्रमुखाग्निषु । सन्तारयति दातारं महतः किल्विषादपि" । पद्मपुराणे "एकं वेदान्तगं विप्रं भोजयेत् श्रद्धयान्वितः । तस्य भुक्ता स वै कोटिविप्राणां नात्र संशयः" । शातातपः "वेदपूर्णमुखं विप्रं सुभुक्तमपि-भोजयेत् । न तु मूर्खं निराहारं षड्रात्रमुपवासिनम्" । व्यासः "यत् त्रिकर्थं वेदविद्भुक्तं षट्कर्म्मनिरतः शुचिः । दातुः फलमसंख्येयं जन्म जन्म तदक्षयम् । वेदविद्याव्रतस्नाते श्रोत्रिये गृहमागते । क्रीडन्त्योषधयः सर्व्वा यास्यामः परमां गतिम्" । 'ओषधयः, अन्नानि । महाभारते "तद्भक्तास्तद्गताराजंस्तद्गृहास्तद्व्यपाश्रयाः । अर्थिनश्च भवन्त्यर्थे तेषु दत्तं महाफलम्" । अत्र तच्छब्देन पूर्व्वोक्ताः पितरो देवताश्च परामृश्यन्ते । अथवा तदेव दीयमानं भक्तमदनीयं येषां ते तथा एवं तद्गतादिशब्दा अपि । "तस्करेभ्यः परेभ्यो वा ये भयार्त्ता युधिष्ठिर ! । अर्थिनो भोक्तुमिच्छन्ति तेषु दत्तं महाफलम् । हृतस्वा हृतदाराश्च ये विप्रा देशसंप्लवे । अर्थार्थमभिगच्छन्ति तेषु दत्तं महाफलम् । चारित्रनियता राजन् ! ये कृशाः कृशवृत्तयः । अर्थिनश्चोपगच्छन्ति तेषु दत्तं महाफलम् । अव्रतक्रान्ताः स्वधर्म्मेषु पाषण्डसमयेषु च । कृशप्राणाः कृशाहारास्तेषु दत्तं महाफलम् । तपस्विनस्तपोनिष्ठास्तथा भैक्ष्यचराश्च ये । अर्थिनः किञ्चिदिच्छन्ति तेषां दत्तं महाफलम्" ।

आदित्यपुराणम् "अक्रोधना धर्म्मपराः शान्ता दमदमे रताः । तादृशाः साधवो विप्रास्तेभ्यो दत्तं महाफलम् । हृतसर्व्वस्वहरणानिर्द्दोषाः प्रभविष्णुभिः । स्पृहयन्ति सुभक्तानां तेषु दत्तं महाफलम्" । शातातपपराशरौ "सन्निकृष्टमधीयानं ब्राह्मणं यो व्यतिक्रमेत् । भोजने चैव दाने च दहत्यासप्तमं कुलम्" । भविष्यपुराणे यस्त्वासन्नमतिक्रम्य ब्राह्मणं पतिताद्दृते । दूरस्थं भोजयेन्मूढो गुणाढ्यं नरकं व्रजेत् । तस्मान्नातिक्रमेत् प्राज्ञो ब्राह्मणान् प्रातिवेशिकान्" । प्रातिवेशिकान् स्वगृहाददूरवर्त्तिगृहान् । "सम्बन्धिनस्तथा सर्व्वान् दौहित्रं विट्पतिं तथा । भागिनेयं विशेषेण तथा बन्धून् धराधिप ! । नातिक्रमेन्नरस्त्वेतान् सुमूर्खानपि गोपते ! । अतिक्रम्य महारौद्रं रौरवं नरकं व्रजेत्" । विट्पतिः जामाता । सुमूर्खानपि नातिक्रमेदित्येतत्, अन्नदानविषयम् । हिरण्यादिदाने तु, सन्निहितमूर्खव्यतिक्रमे दोषाभावात् तदुक्तं व्यासवशिष्ठबौधायनशातातपपराशरैः "यस्य चैव गृहे मूर्खो दूरे चापि बहुश्रुतः । बहुश्रुताय दातव्यं नास्ति मूर्खे व्यतिक्रमः । ब्राह्मणातिक्रमो नास्ति विप्रे वेदविवर्जिते । ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते" । महाभारते "यदि स्यादधिको विप्रो दूरे वृत्तादिभिर्युतः । तस्मै यत्नेन दातव्यमतिक्रम्यापि सन्निधिम्" । विष्णुः "पुरोहितस्त्वात्मन एव पात्रं स्वसृदुहितृपुत्रजामातरश्चेति" । 'यस्यैते पुरोहितादयः, तस्यैव ते अन्यगुणरहिता अपि पुरोहितादित्वेनैव पात्राणि । व्यासः "मातापितृषु यद्दत्तं भ्रातृषु स्वसृतासु च । जायापत्योस्तु यद्दत्तं सोऽनिन्द्यः स्वर्गसंक्रमः । पितुः शतगुणं दानं सहस्रं मातुरुच्यते । अनन्तं दुहितुर्द्दानं सोदर्य्ये दत्तमक्षयम्" । विष्णुधर्म्मोत्तरम् "आत्मनस्तु भवेत् पात्रं नान्यस्य स्यात् पुरोहितः । पुरोहिते तु स्वे दत्तं दानमक्षय्यमुच्यते । उपाध्यायर्त्विजोश्चैव गुरावपि च मानवैः । वर्णापेक्षा न कर्त्तव्या मातरं पितरं प्रति" । उपाध्यायादयस्तु, पूर्व्वमेव व्याख्याताः तथा । "मातृष्वसा स्वसा चैव तथैव च पितृष्वसा । मातामही भागिनेयी भागिनेयस्तथैव च । दौहित्रोविट्पतिश्चैव तेषु दत्तञ्च अक्षयम् । श्रीमद्दृष्टे यत्तथा दत्तं तदप्यक्षयमुच्यते । मातापित्रोर्गुरौ मित्रे विनीते चोपकारिणि । दीनानाथविशिष्टेभ्योदातव्यं भूतिमिच्छता । अदत्त-

दानाजःदन्ते परभाग्योपजीविनः"। उपकारिणि परोपकारपरे। विशिष्टाः गुणातिशयशालिनः। ब्रह्मपुराणे "यत् कन्यासु पिता कुर्य्याद्दानं पूजनमर्च्चनम्। यत्कृतं सुकृतं विद्यात्तासु दत्तं तदक्षयम्। यद्दत्तं तासु कन्यासु तद्दानं पुण्यमेव च"। कालिकापुराणम् "यद्दत्तं वेदविद्विप्रे यद्दत्तं ब्रह्मचारिणि। तपोनिधेस्तु यद्दत्तं कारुण्येन च यत् सदा। तत् सर्वमक्षयं दानं वै मानेन विधाय यत्"। विष्णुधर्म्मोत्तरे "अन्नदाने न कर्त्तव्यं पात्रापेक्षणमण्वपि। अन्नं सर्वत्र दातव्यं धर्मकामेण वै द्विज!। सदोषेऽपि तु निर्दोषं सगुणेऽपि गुणावहम्। तस्मात् सर्वप्रयत्नेन देयमन्नं सदैव तु। विद्याध्ययनसक्तानामन्नदानं महाफलम्"। तथा "दत्त्वा नृपतिभीतानामक्षिणाञ्च तथा धनम्। तस्करेभ्यश्च भीतानां फलमक्षयमुच्यते यियक्षतां तथा दत्तं व्यसनं तर्त्तुमिच्छताम्। दुःखान्वितानां दीनानामक्षयं परिकीर्त्तितम्। विवाहमेखलाबन्धप्रतिष्ठादिषु कर्मसु। आपन्नेषु तु यद्दत्तमक्षयं तद्दाहृतम्"। संवर्त्तः "दानान्येतानि देयानि तथान्यानि च सर्वशः। दीनान्धकृपणार्थिभ्यः श्रेयःकामेण धीमता"। पद्मपुराणे "दीनान्धकृपणानाथवाग्विहीनेषु यत्तथा। विकलेषु तथान्येषु जड़वामनपङ्गुषु। रोगार्त्तेषु च यद्दत्तं तत्स्यादक्षयफलं धनम्"।

अथ अपात्रनिरूपणम्। तत्र मनुः "मोरक्षकान् वाणिजकांस्तथा कारुकुशीलवान्। प्रेष्यान् वार्द्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत्। ये व्यपेताः स्वकर्मभ्यः परपिण्डोपजीविनः। द्विजत्वमभिकाङ्क्षन्ति तांश्च शूद्रवदाचरेत्। नाङ्गब्राह्मणो भवति न वणिक्न कुशीलवः। न शूद्रप्रेषणं कुर्वन्न स्तेनो न चिकित्सकः। अव्रता ह्यनधीयाना यत्र भैक्ष्यचरा द्विजाः। तं ग्रामं दण्डयेद्राजा चौरभक्तप्रदो हि सः"। वशिष्ठः "उदक्योऽन्वासते येषां ये च केचिदनग्नयः। कुलं वाऽश्रोत्रियं येषां सर्वे ते शूद्रधर्मिणः"। अन्वासते कर्मकाले समीप एव तिष्ठन्ति। विष्णुः "न दानं यशसे दद्यान्न भयान्नोपकारिणि। न नृत्यगीतशीलेभ्यो धर्मार्थमिति निश्चयः"। उपकारिणि आत्मोपकारपरे प्रत्युपकारसमीहयेत्यर्थः। महाभारते "यस्तु प्रेष्यान् द्विजान् मूढ़ो योजयेद्धव्यकव्ययोः। न भवेत्तत्फलं तस्य वैदिकीयं तथा श्रुतिः"। यमः "अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम्। नैषां प्रतिग्रहो देयो न शिला तारयेच्छिलाम्। अपविद्धाग्निहोत्रस्य गुरोर्विप्रियकारिणः। द्रविणं नैव दातव्यं सततं पापकर्मणः। न प्रतिग्रहमर्हन्ति वृषलाध्यापका द्विजाः। शूद्रस्याध्यापनाद्विप्रः पतत्यत्र न संशयः"। तथा "राजधानी यथा शून्या यथा कूपश्च निर्जलः। यथा हुतमनग्नौ च तथा दत्तं द्विजेऽनृचे"। वशिष्ठः "यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः। यश्च विप्रोऽनधीयानस्त्रयस्ते नामधारकाः। विद्वद्भोज्यान्यविद्वांसो येषु राष्ट्रेषु भुञ्जते। अप्यनावृष्टिमिच्छन्ति महद्वा जायते भयम्"। व्यासशातातपौ "नष्टशौचे व्रतभ्रष्टे विप्रे वेदविवर्जिते। रोदित्यन्नं दीयमानं किं मया दुष्कृतं कृतम्। शौचहीनास्तु ये विप्रा न च यज्ञोपवीतिनः। हुतं दत्तं तपस्तेषां नश्यत्यत्र न संशयः। ऊषरे वापितं वीजं यच्च भस्मनि हूयते। क्रियाहीनेषु यद्दत्तं तेषु नाशो विधीयते। प्रस्तरे पतितं वीजं भिन्नभाण्डे च दोहनम्। भस्मन्यपि हुतं द्रव्यं तद्वद्दानमसाधुषु"। पूर्वत्र पात्रगुणकथने कृतेऽपि पुनर्दोषवचनमेवंविधदोषभाग्जनप्रतिषेधार्थम्। मनुः "पात्रभूतो हि यो विप्रः प्रतिगृह्य प्रतिग्रहम्। असत्सु विनियुञ्जीत तस्य देयं न किञ्चन। सञ्चयं कुरुते यश्च प्रतिगृह्य समन्ततः। धर्मार्थं नोपयुङ्क्ते यो न तं तस्करमर्चयेत्"। असत्सु, निषिद्धेषु द्यूतादिषु। दक्षः "विधिहीने तथा पात्रे यो ददाति प्रतिग्रहम्। न केवलं हि तद्याति शेषमप्यस्य नश्यति"। मनुः "अनर्हते यद्ददाति न ददाति यदर्हते। अर्हानर्हापरिज्ञानाद्दानाद्धर्माच्च हीयते"। यमः "यस्तु लिङ्गार्चितां वृत्तिमलिङ्गिभ्यः प्रयच्छति। घोरायां ब्रह्महत्यायां पच्यते नात्र संशयः"। भविष्यपुराणे "नाब्राह्मणाय दातव्यं न देयं ब्राह्मणाक्रिये। न ब्राह्मणब्रुवे चैव न च दुर्ब्राह्मणे धनम्"। व्यासः "ब्रह्मबीजसमुत्पन्नो मन्त्र-संस्कारवर्जितः। जातिमात्रोपजीवी च भवेदब्राह्मणः स तु। गर्भाधानादिभिर्युक्तस्तथोपनयनेन च। न कर्मकृन्नचाधीते स भवेद्ब्राह्मणाक्रियः"। वराहपुराणे "अव्रतौ वैश्यराजन्यौ शूद्रश्चाब्राह्मणास्त्रयः। वेदव्रतविहीनश्च ब्राह्मणो ब्राह्मणब्रुवः"। यमः "यस्य वेदश्च वेदी च विच्छिद्येते त्रिपौरुषम्। स वै दुर्ब्राह्मणो नाम यश्चैव वृषलीपतिः"। कूर्मपुराणे "न वार्य्यपि प्रयच्छेत नास्तिके हैतुकेऽपि वा। न पाषण्डेषु सर्वेषु नावेदविदि धर्मवित्।

नास्तिकः, परलोकवासनाशून्यः। हैतुकः हेतुभिः परलोकं निराकरिष्णुः। मनुर्विष्णुश्च "न वार्य्यपि प्रयच्छेत वैडालव्रतिके द्विजे। न वकव्रतिके पापे नावेदविदि धर्म्मवित्। त्रिष्वप्येतेषु दत्तं हि विधिनोपार्जितं धनम्। दातुर्भवत्यनर्थाय परत्रादातुरेव च"। अनर्थः प्रत्यवायः। "यथा प्लवेनौपलेन निमज्जत्युदके तरन्। दातृप्रतिग्रहीतारौ तथैवाज्ञौ निमज्जतः"। यमः "यः कारणं पुरस्कृत्य व्रतचर्य्यां निषेवते। पापं व्रतेन प्रच्छाद्य वैडालं नाम तद्व्रतम्। अर्थञ्च विपुलं लब्ध्वा दत्त्वा लिङ्गं विवर्जयेत्। आश्रमान्तरितं रक्षेद्वैडालं नाम तद्व्रतम्। यतीनामाश्रमं मत्वा प्रत्यवस्येत्तु यः पुनः। यतिधर्मविलोपेन वैडालं नाम तद्व्रतम्"। विष्णुः "धर्म्मध्वजी सदा लुब्धः छाद्मिको लोकदम्भकः। वैडालव्रतिको ज्ञेयो हिंस्रः सर्व्वाभिसन्धकः। यश्च धर्मध्वजो नित्यं सुराध्वज इवोच्छ्रितः। प्रच्छन्नानि च पापानि वैडालं नाम तद्व्रतम्। अधोदृष्टिर्नैकृतिकः स्वार्थसाधनतत्परः। शठो मिथ्याविनीतश्च वकव्रतचरो द्विजः। ये वकव्रतिनो विप्रा ये च मार्जारलिङ्गिनः। ते पतन्त्यन्धतामिस्रे तेन पापेन कर्म्मणा"। चतुर्विंशतिमतम् "रोदित्यन्नं दीयमानं किं मया दुष्कृतं कृतम्। अश्रोत्रियस्य विप्रस्य हस्तं दृष्ट्वा निराकृतेः"। कात्यायनस्त्वन्यथाह "यः स्वाध्यायाग्निमालस्याद्देवादीनैर्निरस्तवान्। निराकर्त्तामरादीनां स विज्ञेयो निराकृतिरिति"। शातातपः "नेष्टं देवलके दत्तमप्रतिष्ठञ्च वार्द्धुषौ। यच्च वाणिजके दत्तं न च तत् प्रेत्य नो इह"। दक्षः "धूर्त्ते वन्दिनि मल्ले च कुवैद्ये कितवे शठे। चाटचारणचौरेभ्यो दत्तं भवति निष्फलम्"। स्कन्दपुराणे "देवपितृविहीने यदीश्वरेभ्यश्च दीयते। दत्त्वा तु कीर्त्तितं यच्च देवाग्निस्वामिने तथा। अन्यायोपार्जितधनैर्दत्तमब्राह्मणे च यत्। गुरवेऽनृतवक्त्रे च स्तेनाय पतिताय च। कृतघ्नाय च यद्दत्तं सर्व्वदा ब्रह्मविद्विषे। याजकाय च सर्व्वस्य वृषल्याः पतये तथा। परिचाराय भृत्याय सर्व्वस्य पिशुनाय च। इत्येतानि च राजेन्द्र! वृथादानानि षोडश। गर्भस्थोऽज्ञानबालोऽपि भुङ्क्ते वृद्धो न यौवने। तद्दत्तस्येह नाप्नोति सर्व्वथा रिपुसूदन"। तदीयफलमिति शेषः। विष्णुधर्मात् "परस्थाने वृथा दानं सदोषं परिकीर्त्तितम्। आरूढपतिते चैव अन्यायात्तैर्धनैश्च यत्। व्यर्थं हि ब्राह्मणे दानं पतिते तस्करे तथा। गुरोश्चाप्रीतिजनके कृतघ्ने ग्रामयाजके। वेदविक्रायके चैव यस्य चोपपतिर्गृहे। स्त्रीभिर्जितेषु यद्दत्तं व्यालग्राहे तथैव च। ब्रह्मबन्धौ च यद्दत्तं यद्दत्तं वृषलीपतौ। परिचारके च यद्दत्तं वृथा दानानि षोडश" महाभारते "पङ्ग्वन्धबधिरा मूका व्याधिनोपहताश्च ये। भर्त्तव्यास्ते महाराज! न तु देयः प्रतिग्रहः" इति प्रतिग्रहीतृनिरूपणम्।

अथ द्रव्याख्यं दानाङ्गमुच्यते। तत्र देयनिरूपणम्। भविष्यपुराणे "यद्यदिष्टं विशिष्टञ्च न्यायप्राप्तञ्च यद्भवेत्। तत्तद्गुणवते देयमित्येतद्दानलक्षणम्"। वह्निपुराणे "शुभोपात्तेन यत्किञ्चित् करोति लघुना नरः। अनन्तं फलमाप्नोति मुद्गलोऽपि यथा पुरा"। शुभोपात्तेन न्यायोपार्जितेन। लघुना स्वल्पेन द्रव्येणेति शेषः। देवीपुराणे "न्यायतो यानि प्राप्तानि शाकान्यपि नृपोत्तम!। तानि देयानि देव्यास्तु कन्यकायोषितां सदा। तद्भक्तेषु च विप्रेषु अपरेषु च नित्यशः" विष्णुपुराणे "यद्यदिष्टतमं लोके यच्चास्य दयितं गृहे। तत्तद्गुणवते देयं तदेवाक्षयमिच्छता"। महाभारते "विशेषतो महाराज! तस्य न्यायार्जितस्य च। श्रद्धया विधिवत् पात्रे दत्तस्यान्तो न विद्यते"। गौतमः "स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं, क्षत्रियस्य विजितं, निर्विष्टं वैश्यशूद्रयोरिति"। 'अप्रतिबन्धः' दाय एव रिक्थम्। संविभागः सप्रतिबन्धो दायः। परिग्रहः, जलतृणकाष्ठादेरनन्यपूर्व्वस्य स्वीकारः। अधिगमः निध्यादेः प्राप्तिः। एषु निमित्तेषु स्वामी भवति। अधिकम् असाधारणम्। निर्विष्टम् कृष्यादिना द्विजशुश्रूषादिना च यल्लब्धम्। "निर्वेशो भृतिभोगयोरिति" स्मरणात्। मनुः "सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः। प्रयोगः कर्म्मयोगश्च सत्प्रतिग्रह एव च"। प्रयोगः न्यायोपचयार्थं द्रव्यप्रयोगः। कर्म्मयोगः आर्त्विज्यम्। नारदः "धनमूलाः क्रियाः सर्व्वा यत्नस्तस्यार्जने मतः। रक्षणं वर्द्धनं भोग इति तस्य विधिः क्रमात्। तत्पुनस्त्रिविधं ज्ञेयं शुक्लं शवलमेव च। कृष्णञ्च, तस्य विज्ञेयो विभागः सप्तधा पुनः। एकैकस्य शुक्लादेः सप्त सप्त भेदा भवन्तीत्यर्थः। "श्रुतशौर्य्यतपःकन्यायाज्यशिष्यान्वयागतम्। धनं सप्तविधं शुक्लमुदयोऽप्यस्य तद्विधः"। आगतशब्दः श्रुतादिभिः प्रत्येकं संबध्यते। कन्यागतम् आर्षविवाहे

वराद्गृहीतं गोमिथुनादि। याज्यगतम् आर्त्विज्यादिलब्धम्। शिष्यागतम्। गुरुदक्षिणादि। अत्र च यथाधिकारं शुक्लत्वमवधेयम्। उदयः फलं तदप्यस्य शुक्लमित्यर्थः “कुसीदकृषिवाणिज्यशिल्पशुल्कानुवृत्तितः। कृतोपकारादाप्तञ्च शबलं समुदाहृतम्”। न्यायोपचयार्थं द्रव्यप्रयोगः कुसीदम्। शिल्पं कारुकादिकर्म्म। आकरादिभ्योद्रव्योदयः शुल्कम्। अनुवृत्तिः सेवा। “पार्श्वक द्यूतचौर्य्यार्त्तिप्रतिरूपकसाहसैः। व्याजेनोपार्जितं यत्तत् सर्व्वेषां कृष्णमुच्यते”। पार्श्वकोपार्जितं उत्कोचादिलब्धम्। आर्त्त्युपार्जितं परपीडया लब्धम्। प्रतिरूपकं मणिसुवर्णादेः प्रतिरूपकरणम्। साहसं स्वप्राणात्ययाङ्गीकारेण पश्यतोहरत्वादिकम्। व्याजः दम्भेन तपःप्रभृति। “तेन क्रयो विक्रयश्च दानं ग्रहणमेव च। विविधाश्च प्रवर्त्तन्ते क्रियाः सम्भोग एव च। यथाविधेन द्रव्येण यत्किञ्चित् कुरुते नरः। तथाविधमवाप्नोति स फलं प्रेत्य चेह च”। यथाविधेन शुक्लेन कृष्णेन शबलेन वा दानादि कुरुते तथाविधं फलमाप्नोतीति, शुक्लेन शुद्धं दुःखरहितम्, शबलेन, मिश्रम्, कृष्णेन असुखोदयम्। पद्मपुराणे “शुक्लेन वित्तेन कृतं पुण्यं बहुफलं भवेत्। शबलं मध्यमफलं कृष्णं हीनधनं फलम्”। ब्रह्मप्रोक्ते “शुक्लवित्तेन यो धर्मं प्रकुर्य्यात् श्रद्धयान्वितः। तीर्थं पात्रं समासाद्य देवत्वे तत् समश्नुते। राजसेन च भावेन वित्तेन शबलेन च। दद्याद्दानमतिथिभ्यो मानुषत्वे तदश्नुते। तमोवृत्तस्तु यो दद्यात् कृष्णवित्तेन मानवः। तिर्य्यक्त्वे तत्फलं प्रेत्य समश्नाति नराधमः”। नारदः “तत् पुनर्द्वादशविधं प्रतिवर्णाश्रयात् स्मृतम्। साधारणं स्यात्त्रिविधं शेषं नवविधं स्मृतम्”। धर्म्ममिति शेषः। प्रतिवर्णाश्रयान्नवविधं, साधारणं त्रिविधमित्येवं द्वादशविधमित्यर्थः। “क्रमागतं प्रीतिदायः प्राप्तञ्च सह भार्य्यया। अविशेषेण सर्व्वेषां वर्णानां त्रिविधं धनम्। वैशेषिकं धनं ज्ञेयं ब्राह्मणस्य त्रिलक्षणम्। प्रतिग्रहेण संलब्धं याज्यतः शिष्यतस्तथा। त्रिविधं क्षत्त्रियस्यापि प्राहुर्वैशेषिकं धनम्। युद्धोपलब्धं कराच्च दण्डाच्च व्यवहारतः”। करः बल्यादिः। “वैशेषिकं धनं ज्ञेयं वैश्यस्यापि त्रिलक्षणम्। कृषिगोरक्षवाणिज्यैः शूद्रस्यैभ्यस्त्वनुग्रहात्”। एभ्यः ब्राह्मणादिभ्यः। “सर्व्वेषामेव वर्णानामेवं धर्म्यो धनागमः। विपर्य्ययादधर्म्यः स्यान्न चेदापद्गरीयसी”।

एवंधर्म्मसाधनं द्रव्यं निरूप्य तत्र कियद्देयं किं देयमित्यपेक्षायां याज्ञवल्क्यः “स्वं कुटुम्बाविरोधेन देयं दारसुतादृते। नान्वये सति सर्व्वस्वं यच्चान्यस्मै प्रतिश्रुतम्”। अन्वये सन्ताने। प्रतिश्रुतं प्रतिज्ञातम्। कुटुम्बाविरोधस्तु, व्याख्यातो वृहस्पतिना “कुटुम्बभक्तवसनाद्देयं यदतिरिच्यते। मध्वास्वादो विषं पश्चाद्दातुर्धर्म्मोऽन्यथा भवेत्”। भक्तं अन्नम्। वसनं वस्त्रम्। (यावता द्रव्येण कुटुम्बस्य वस्त्रमन्नं संपद्यते तदतिरिक्तं देयं, इतरत्तु न देयमित्यर्थः)। मनुः “शक्तः परजने दाता स्वजने दुःखजीविनि। मध्वापातो विषास्वादः स धर्म्मप्रतिरूपकः”। कात्यायनः “सर्व्वस्वं गृहवर्ज्जन्तु कुटुम्बभरणाधिकम्। यद्द्रव्यं स्वकं देयमदेयं स्यादतोऽन्यथा”। तथा “सप्तरात्राद्गृहीतात् यद्यत् स्तेन प्रणीयते। पित्रा वाथ स्वयं प्राप्तं तद्दातव्यं विवक्षितम्”। सप्तरात्रादिभ्यो यत्प्रणीयते, अधिकं भवति, तद्दातव्यमिति विवक्षितमित्यर्थः। शिवधर्म्मात् “तस्मात्त्रिभागं वित्तस्य जीवनाय प्रकल्पयेत्। भागद्वयन्तु धर्म्मार्थमनित्यं जीवितं यतः”। अशेषवित्तस्य भागपञ्चकं परिकल्प्य भागत्रयं जीवनाय संरक्ष्य भागद्वयं धर्म्माय कल्पयेदित्यर्थः। महाभारते “एकां गां दशगुर्दद्याद्दश दद्याच्च गोशती। शतं सहस्रगुर्दद्यात् सर्व्वे तुल्यफलाः स्मृताः”। नन्वेतद्वचनद्वयोपात्तयोर्वित्तगोशब्दयोरुपलक्षणार्थत्वेन देयमात्रपरत्वाद्विषमभागपरिकल्पनं विरुद्धं यथाश्रुतगोवित्तपरत्वेनाविरोधे दशगुरेकां गां दद्यादितिवचनाद्दशावरगोधनिनोऽपि गोदानानधिकारः स्यात् दशधेनुयोग्यधनिपरत्वे तु उपलक्षणपक्षाङ्गीकाराद्विरोधतादवस्थ्यं तस्मान्न्यूनाधिककल्पयोः कृपणोदाराधिकारिविषयतयैव व्यवस्थेति दृश्यम्। कुटुम्बाविरोधेन देयमित्युक्तम् तस्यापवादमाह व्यासः “कुटुम्बं पीडयित्वापि ब्राह्मणाय महात्मने। दातव्यं भिक्षवे चान्नमात्मनो भूतिमिच्छता”। यत्यतिथ्यादिविषयमेतत्। कात्यायनः “स्वेच्छादेयं स्वयं प्राप्तं बन्धाचारेण बन्धकम्। वैवाहिकक्रमायाते सर्व्वदानं न विद्यते”। बन्धक आधिः तद्बन्धाचारेणाधिरूपेणैव देयम्। यद्विवाहलब्धं तत्तस्यां भार्य्यायां सत्यां सर्व्वमदेयम्। यच्च पितामहादिक्रमायातं तत्र पुत्रे सति न देयम्। “सौदायिकं क्रमायातं शौर्य्यप्राप्तञ्च यद्भवेत्। स्त्रीज्ञातिस्वाम्यनुज्ञातं दत्तं सिद्धिमवाप्नुयात्”। सौदायिकं

विवाहलब्धं तद्भार्य्ययानुज्ञातम् । क्रमायातम् अविभक्तधनैर्ज्ञातिभिरनुज्ञातम् । भृत्येन सता युद्धेन लब्धं स्वामिनानुज्ञातमित्यर्थः । याज्ञवल्क्यः "देयं प्रतिश्रुतञ्चैव दत्त्वा नापहरेत् पुनः" यमः "यच्च वाचा प्रतिज्ञातं कर्म्मणा नोपपादितम् । तद्धनमृणसंयुक्तमिह लोके परत्र च" ऋणसंयुक्तम् ऋणासमर्पणजन्यदोषसंयुक्तमित्यर्थः । "सप्तजातान्नरो हन्याद्दत्तमानांस्तु सप्त च । अतिक्रान्तान् सप्त हन्यादप्रयच्छन् प्रतिश्रुतम् । प्रतिश्रुताप्रदानेन दत्तस्य हरणेन च । जन्मप्रभृति यत् पुण्यं तत्सर्वं सन्नश्यति" । महाभारते "ब्राह्मणं स्वयमाहूय भिक्षार्थे कृशवृत्तिनम् । पश्चान्नास्तीति यो ब्रूयात्तं विद्याद्ब्रह्मघातकम्" तथा "संश्रुत्य यो न दित्सेत याचित्वा यश्च नेच्छति । उभावनृतिकावेतौ तथा पापमवाप्नुतः" तथा "यो न दद्यात् प्रतिश्रुत्य स्वल्पं वा यदि वा बहु । आशास्तस्य हताः सर्वाः क्लीवस्येव प्रजाफलम् । यं निरीक्षेत संक्रुद्ध आशया पूर्वजातया । प्रदहेत हि तं राजन् ! कक्षमक्षयभुग्यथा । तस्माद्दातव्यमेवेह प्रतिश्रुत्य युधिष्ठिर !" । नारदः "ब्राह्मणस्य च यद्देयं सान्वयस्तु न चास्ति सः । सकुल्ये तद्धनं देयं तदभावेऽस्य बन्धुषु । यदा तु न सकुल्यः स्यान्न च सम्बन्धि-बान्धवाः । दद्यात् सजातिशिष्येभ्यस्तदभावेऽप्सु निक्षिपेत्" । गौतमः "प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यात्" । कात्यायनः "प्राणसंशयमापन्नं यो मामुत्तारयेदितः । सर्वस्वन्ते प्रदास्यामीत्युक्तेऽपि न तथा भवेत्"

अथ फलातिशयप्रतिपादनार्थं पात्रविशेषेण देयविशेषाः । भविष्यपुराणे "गोभूतिलहिरण्यादि दद्यान्नित्यमतन्द्रितः । तथा द्रव्यविशेषांश्च दद्यात् पात्रविशेषतः । आर्त्तानामन्नदानञ्च गोदानञ्च कुटुम्बिनाम् । तथा प्रतिष्ठाहीनानां क्षेत्रदानं प्रशस्यते । सुवर्णं याज्ञिकानाञ्च विद्याञ्चैवोर्द्ध्वरेतसाम् । कन्याञ्चैवानपत्यानां ददतां गतिरुत्तमा" । विष्णुधर्मोत्तरात् "युद्धोपकरणं द्रव्यं क्षत्रिये द्विजपुङ्गवाः ! । पण्योपयोगि तद्वैश्ये शूद्रे शिल्पोपयोगि च । यस्योपयोगि यद्द्रव्यं देयं तस्यैव तद्भवेत् । येन येन च भाण्डेन यस्य वृत्तिरुदाहृता । तत्तत्तस्यैव दातव्यं पुण्यकामेन धीमता । दण्डं कृष्णाजिनञ्चैव तथा विप्राः ! कमण्डलुम् । धीरं पुण्यमवाप्नोति दत्त्वैतान् ब्रह्मचारिणे । वस्त्रं शय्यासनं धान्यं वेश्म वेश्मपरिच्छदम् । गृहस्थाय तु तद्दत्तं ज्ञेयं बहुफलं सदा । नीवारं वल्कलं शाकं फलं मूलञ्च गोरसम् । वानप्रस्थाय यद्दत्तमनन्तं परिकीर्त्तितम् । भिक्षाप्रदानं यतये पात्रदानं तथाहितम् । गन्धमाल्यताम्बूलरक्तवस्त्रादिकं स्त्रियः । स्त्रीणां प्रदानं दातव्यं भर्त्तृहस्ते तु नान्यथा । प्रोक्तं संग्रहणं ह्येतद्रूपं भर्त्तुः प्रयच्छतः । अन्नं प्रतिश्रयञ्चैव पान्थे दत्तं महाफलम् । विवाहादिक्रियाकाले तत्क्रियासिद्धिकारणम् । यः प्रयच्छति धर्मज्ञः सोऽश्वमेधमवाप्नुयात् । आतुरेभ्यो धनं दत्त्वा दानं बहुफलं भवेत् । बाले क्रीडनकं दत्त्वा भृष्टमन्नं तथैव च । फलं मनोहरं वापि अग्निष्टोमफलं लभेत् । भृष्टान्नं मानवो दत्त्वा भृष्टान्नानि तु काङ्क्षताम् । अक्षयं फलमाप्नोति स्वर्गलोकञ्च गच्छति । श्रीविहीने तथा दत्त्वा भोजनं द्विजसत्तम ! । वस्त्रं शुभं वा धर्मज्ञः पुण्यं महदुपाश्नुते । कृपास्थानं परं विप्रा विच्युताः पुरुषाः श्रिया । तेभ्योऽनुकम्पा कर्त्तव्या सतां वर्त्मनि तिष्ठता । कार्य्ये सत्युद्यमं कृत्वा परेषां समुपस्थिते । अक्षयं फलमाप्नोति नात्र कार्य्या विचारणा । यवसानां प्रदानेन धेनुमत्सु द्विजातिषु । लवणानाञ्च धर्मज्ञाः ! फलमक्षयमश्नुते । प्रसवेषु तु यद्दत्तं व्यसनार्त्तिभयेषु च । तद्दानमक्षयं प्रोक्तं पुरुषस्य विपश्चितः । दत्त्वा ब्राह्मणशार्दूल ! जलपात्रमथार्थिने । फलमक्षयमाप्नोति नात्र कार्य्या विचारणा" । अङ्गिराः "देवतानां गुरूणाञ्च मातापित्रोस्तथैव च । पुण्यं देयं प्रयत्नेन नापुण्यं नोदितं क्वचित्" नन्दिपुराणे "पापदः पापमाप्नोति नरो लक्षगुणं सदा । पुण्यदः पुण्यमाप्नोति शतशोऽथ सहस्रशः । तथा पात्रविशेषेण दानं स्यादुत्तरोत्तरम् । पितृमातृगुरुब्रह्मवादिनां दीयते तु यत् । तल्लक्षगुणितं विद्यात् पुण्यं वा पापमेव वा" वह्निपुराणे "द्वाविमौ पुरुषौ लोके सूर्य्यमण्डलभेदिनौ । दाताक्षस्य च दुर्भिक्षे सुभिक्षे हेमवस्त्रदः"

अथ अदेयनिरूपणम् । देवलः "अन्यायाधिगतां दत्त्वा सकलां पृथिवीमपि । श्रद्धावर्जमपात्राय न काञ्चिद्भूतिमाप्नुयात्" । वह्निपुराणात् "अन्यायोपागतं द्रव्यं गृहीत्वा यो ह्यपण्डितः । धर्माभिकाङ्क्षी यजते न धर्मफलमश्नुते । धर्मवैतंसिको यस्तु पापात्मा पुरुषस्तथा । ददाति दानं विप्रेभ्यो लोकविश्वासकारणम् । पापेन कर्मणा विप्रो धनं लब्ध्वा निरंकुशः । रागमोहान्वितस्तान्धः

कलुषां योनिमाप्नुयात्। अर्थसञ्चयबुद्धिर्हि लोभमोह वशंगतः। उद्वेजयति भूतानि हिंसया पापचेतनः। एवं लब्ध्वा धनं लोभात् यजते यो ददाति च। स पापकर्म्मणा तेन न विन्दति परां गतिम्” तथा। “एतैरन्यैश्च बहुभिरन्यायोपार्जितैर्धनैः। आरभ्यन्ते क्रिया यास्तु पिशाचास्तत्र दैवतम्”। वृद्धशातातपः“द्रव्येणान्यायलब्धेन यः करोत्यौर्द्ध्वदेहिकम्। न स तत्फलमाप्नोति तस्यार्थस्य दुरागमात्” स्कन्दपुराणे “देवद्रव्यं गुरुद्रव्यं द्रव्यं चण्डेश्वरस्य च। त्रिविधं पतनं दृष्टं दानलङ्घनभक्षणात्”। यमः “अपहृत्य परस्यार्थं दानं यस्तु प्रयच्छति। स दाता नरकं याति यस्यार्थस्तस्य तत्फलम्” तथा। “परिभुक्तमवज्ञातमपर्य्याप्तमसंस्कृतम्। यः प्रयच्छति विप्रेभ्यस्तद्भस्मन्यवतिष्ठते। परिभुक्तं गृहीतोपयोगं वस्त्रादि। अपर्य्याप्तं स्वकार्य्याक्षमं जरद्वस्त्रादि। शातातपः “वेदविक्रयनिर्दिष्टं स्त्रीषु यच्चार्जितं धनम्। अदेयं पितृदेवेभ्यो यच्च क्लीवादुपागतम्” वेदविक्रयो निर्दिष्टो व्यपदिष्टो यत्र तत्तथा निर्विष्टमितिपाठे वेदविक्रयाल्लब्धमित्यर्थः। स्त्रीषु यच्चार्जितमिति स्त्रीव्यापारोपजीवनेन यल्लब्धम्। स्त्रीषु विक्रीतास्विति केचित्” दक्षः “सामान्यं याचितं न्यास आधिर्दाराश्च तद्धनम्। अन्वाहितश्च निक्षेपः सर्वस्वञ्चान्वये सति। आपत्स्वपि न देयानि नव वस्तूनि पण्डितैः। यो ददाति स मूढात्मा प्रायश्चित्तीयते नरः”। सामान्यं अनेकस्वामिकम्। याचितं संव्यवहारार्थं याचित्वानीतं वस्त्रालङ्कारादि। गृहस्वामिने अदर्शयित्वा तत्परोक्षमेव गृहस्वामिने अर्पणीयमिति गृहजनहस्ते स्थापितं द्रव्यं न्यासः। आधिः प्रसिद्धः। दाराः कलत्रम् तद्धनं दारधनम्। तच्च व्याख्यातं मनुना “अध्यग्न्यध्यावाहनिकं दत्तञ्च प्रीतिकर्मणि। भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम्”। अध्यग्नि अग्निसमक्षं यत् स्त्रियै दत्तम्। अध्यावाहनिकं विवाहकाले पित्रादि दत्तम्। प्रीतिकर्मणि स्नेहसम्बन्धेन भर्त्रार्पितम्। विवाहोत्तरकालेऽपि भ्रात्रादिभ्यः प्राप्तम्। याज्ञवल्क्योऽप्याह “भ्रातृमातृपितृपतिप्राप्तमध्यग्न्युपागतम्। आधिवेदनिकञ्चैव स्त्रीधनं परिकीर्त्तितम्” दारान्तरमिच्छता भर्त्रा यद्दत्तं तदाधिवेदनिकम्। एवंप्रकारं स्त्रीधनं न देयमिति। अन्वाहितं यदेकस्य हस्ते निहितं द्रव्यं तेनाप्यनु पश्चादन्यस्य हस्ते स्वामिने देहीति निहितम्। गृहस्वामिसमक्षं स्थापितं द्रव्यं निक्षेपः। कात्यायनः “विक्रयश्चैव दानञ्च न नेयाः स्युरनिच्छवः। दाराः पुत्राश्च सर्वस्वमात्मन्येव तु योजयेत्। आपत्काले तु कर्तव्यं दानं विक्रय एव वा। अन्यथा न प्रवर्त्तन्ते इति शास्त्रस्य निश्चयः”। “आपत्काले तु कर्त्तव्यं दानं विक्रय एव वेति” स्वकीयदानविक्रयेच्छुदारादिविषयम्। यत्तु दाराणाम् “आपत्स्वपि न देयानीति” दक्षेणादेयत्वमुक्तं तत् स्वदानविक्रयानिच्छुदारादिविषयम्। वशिष्ठः “शुक्रशोणितसम्भवः पुत्रो मातापितृनिमित्तकस्तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतः नत्वेकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा स हि सन्तानाय पूर्वेषां न तु स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद्वा अन्यत्रानुज्ञानाद्भर्त्तुः”। वृहस्पतिः “कस्मैचिद्याचमानाय दत्तं धर्माय यद्भवेत्। पश्चाच्च न तथा तत् स्यान्न देयं तस्य तद्भवेत्”। धर्मं कर्त्तुं याचमानाय यद्दत्तं तेन चेदसौ धर्मं न कुर्य्यात्तदा तस्मै न देयमित्यर्थः। अङ्गिराः “बहुभ्यो न प्रदेयानि गौर्गृहं शयनं स्त्रियः। विभक्तदक्षिणा ह्येता दातारं तारयन्ति हि। एका एकस्य दातव्या न बहुभ्यः कथञ्चन। दातुर्विक्रयमापन्ना दहत्यासप्तमं कुलम्”। विक्रेतुरेवैतद्दोषप्रदर्शनं न प्रक्रान्तस्य दातुरिति। लौगक्षायनः “कन्यागव्यादि गृहञ्चैव देयं यच्चोक्तिस्त्रियादिकम्। तदेकस्मै प्रदातव्यं न बहुभ्यः कथञ्चन” व्यासः “न व्यङ्गां रोहिणीं वन्ध्यां न कृशां कृतवत्सिकाम्। न वामनां वेहतञ्च दद्याद्विप्राय गां नरः। वेहत् गर्भोपघातिनी। देवलः “विवत्सां रोगिणीं कृष्णां स्थविरां गृष्टिभीषणाम्। क्षीणक्षीरशरीराङ्गां दत्त्वा दोषमवाप्नुयात्”। कात्यायनः “न चोषरां न निर्दग्धां महीं दद्यात् कथञ्चन। न श्मशानपरीताञ्च न च पापनिषेविताम्”। पापाः हिंस्रप्राणिनो व्याघ्रादयः। विष्णुधर्मोत्तरे “सोशीरां तस्कराकीर्णां तथा व्यालवतीं भुवम्। न दद्यात्तु द्विजश्रेष्ठो या च सन्धिषु संस्थिता”। स्कन्दपुराणे “पापदः पापमाप्नोति नरो लक्षगुणं सदा। तस्मान्न दद्यान्मेधावी पातकं जातु कस्यचित्”। महाभारते “दुःखितेभ्यो हि भूतेभ्यो मृत्युरोगजरादिभिः। भूतः को दुःखमपरं सहस्रो दातुमर्हति। दुःखं ददाति योऽन्यस्य ध्रुवं दुःखं स विन्दति। तस्मान्न कस्यचिद्दुःखं दातव्यं दुःखभीरुणा”।

"अथ पात्रविशेषे अदेयमुच्यते । यमः "सुवर्णं रजतं ताम्रं यतिभ्यो यः प्रयच्छति । न तत्फलमवाप्नोति तत्रैव परिवर्त्तते" । परिवर्त्तः विपर्य्ययः एवशब्दः अप्यर्थः तेन तत्र तस्मिन् दातर्य्यपि परिवर्त्तते धर्म्मविपरीतं धर्म्मं जनयतीत्यर्थः । तथा चोक्तम् "यतये काञ्चनं दत्त्वा दातापि नरकं व्रजेदिति" । देवलः "पक्वान्नं गृहस्थस्य वानप्रस्थस्य गोरसः । वृत्तिश्च भिक्षुवृत्तिभ्यो न देयं पुण्यमिच्छता" । वृत्तिः भिक्षातिरिक्तवर्त्तनम् । तथा "न शूद्राय हविर्दद्यात् सर्पिः क्षीरं तिलान् मधु । न शूद्रात् प्रतिगृह्णीयात्तेषामन्नं निवेदयेत् । गोरसं काञ्चनं चैलं गास्तिला मधुसर्पिषी । तथा सर्व्वरसांश्चापि चण्डालेभ्यो ददेत न" । सर्पिः न दद्यादिति प्रधानमन्तरेण शूद्रस्य सर्पिरस्तीति न ब्रूयादित्यर्थः । तेषामपि चोरादीनां क्रयार्थमन्यत्द्रव्यं निवेदयेदित्यर्थः । शङ्खलिखितौ "कृशरं पायसं यावं दधिमधुकृष्णाजिनानि शूद्रेभ्यो न दद्यान्नोपाकृतं किञ्चित्" । विष्णुधर्म्मोत्तरात् "भुवं धेनुमथाश्वञ्च रत्नानि कनकन्तथा । तिलांश्च कुञ्जरं दद्याच्चाविज्ञातगुणागुणान्"

अतःपरं ग्राह्याग्राह्यद्रव्यं विस्तरेणोक्तं ते च ग्राह्याग्राह्यशब्दे प्रायेण दर्शिते ।

दानाङ्गकालेषु तिथिकालः प्रथमस्तत्रैव ।

भविष्यपुराणे "तिथीनां प्रवरा यस्माद्ब्रह्मणा समुदाहृता । प्रतिपादिता पदे पूर्व्वं प्रतिपत्तेन चोच्यते । स्नानं दानं शतगुणं कार्त्तिके या तिथिर्भवेत्" । स्कन्दपुराणे "आश्विने मासि संप्राप्ते द्वितीया शुक्लपक्षगा । दानं प्रदत्तं यत्तस्यामनन्तफलमुच्यते" । पद्मपुराणे "वैशाखमासे या पुण्या तृतीया शुक्लपक्षगा । अनन्तफलदा तासु स्नानदानादिकर्म्मसु" । भविष्यपुराणे "शिवा शान्ता सुखा राजंश्चतुर्थी त्रिविधा स्मृता । मासि भाद्रपदे शुक्ला शिवा लोकेषु पूजिता । तस्यां स्नानं तथा दानं उपवासो जपस्तथा । भवेत् सहस्रगुणितं प्रसादाद्दन्तिनो नृप । माघमासि तथा शुक्ला या चतुर्थी महीपते ! । सा शान्ता शान्तिदा नित्यं शान्तिं कुर्य्यात्सदैव हि । स्नानदानादिकं सर्व्वमस्यामक्षयमुच्यते । यदा शुक्लचतुर्थ्यान्तु वारो भौमस्य वै भवेत् । तदा सा सुखदा ज्ञेया सुखा नामेति कीर्त्तिता । स्नानदानादिकं सर्व्वमस्यामक्षयमुच्यते" । स्कन्दपुराणे "शुक्ला मार्गशिरे मासि श्रावणे या च सप्तमी । स्नानदाने बहुफला नागलोकप्रदायिनी" । भविष्यपुराणे "येयं भाद्रपदे मासि षष्ठी च भरतर्षभ ! । स्नानदानादिकं सर्व्वमस्यामक्षयमुच्यते" तथा "शुक्लपक्षस्य सप्तम्यां सूर्य्यवारो भवेद्यदि । सप्तमी विजया नाम तत्र दत्तं महाफलम् । शुक्लपक्षस्य सप्तम्यां नक्षत्रं पञ्चतारकम् । यदा च स्यात्तदा ज्ञेया जया नामेति सप्तमी । स्नानदानादिकं तस्यां भवेत् शतगुणं विभो ! । पञ्चतारकमिति: रोहिण्यश्लेषामघाहस्तस्य । "या मार्गशीर्षमासस्य शुक्लपक्षे तु सप्तमी । नन्दा सा कथिता वीर ! सर्व्वानन्दकरी स्मृता । स्नानदानादिकं सर्व्वमस्यामक्षयमुच्यते" । आदिपुराणे "रेवती यत्र सप्तम्यामादित्यदिवसे भवेत् । तद्दानं शतसाहस्रमिति प्राह दिवाकरः । भविष्यपुराणे "पौषे मासि यदा देवि ! शुक्लाष्टम्यां बुधो भवेत् । तदा तु सा महापुण्या महारुद्रेति कीर्त्तिता । तस्यां स्नानं महादानं तर्पणं विप्रभोजनम् । मत्प्रीतये कृतं देवि ! शतसाहस्रिकं भवेत्" । महाभारते "अष्टकासु च यद्दत्तं तदनन्तमुदाहृतम्" । आश्वलायनः "हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टम्योऽष्टका" इति । तथा शतपथश्रुतिः "द्वादश पौर्णमास्यो द्वादशाष्टका द्वादशामावास्या" इति । द्वादशापि कृष्णाष्टम्य इत्यर्थः । देवीपुराणे "आश्विनस्य तु मासस्य नवमी, शुक्लपक्षगा । जायते कोटिगुणितं दानं तस्यां नराधिप !" । गरुडपुराणे "ज्यैष्ठस्य शुक्लदशमी संवत्सरमुखी स्मृता । तस्यां स्नानं प्रकुर्व्वीत दानञ्चैव विशेषतः । "एकादश्यां सिते पक्षे पुष्यर्क्षं यत्र सत्तम ! । तिथौ भवति सा प्रोक्ता विष्णुना पापनाशिनी । दानं यद्दीयते किञ्चित् समुद्दिश्य जनार्द्दनम् । होमो वा क्रियते तस्यामक्षयं कथितं फलम् । मासि भाद्रपदे शुक्ला द्वादशी श्रवणान्विता । महती द्वादशी ज्ञेया उपवासे महाफला । फलं दत्तहुतानाञ्च तस्यां लक्षगुणं भवेत्" । विष्णुधर्म्मोत्तरात् "भाग्यर्क्षसंयुता चैत्रे द्वादशी स्यान्महाफला" । भाग्यर्क्षं पूर्व्वफल्गुनी । "हस्तयुक्ता तु वैशाखे ज्यैष्ठे तु स्वातिसंयुता । ज्येष्ठया च तथाषाढे मूलोपेता च वैष्णवे" वैष्णवे श्रावणे मासि । "तथा भाद्रपदे मासि श्रवणेन तु संयुता । आश्विने द्वादशी पुण्या भवत्याजर्क्षसंयुता" । आजर्क्षः पूर्व्वभाद्रपदा । "कार्त्तिके रेवतीयुक्ता सौम्ये कृत्तिकया तथा" । सौम्यः मार्गशीर्षः । "पौषे मृगशिरोपेता माघे चादित्यसंयुता" । आदित्यः पुनर्व्वसुः ।

मेषे। विषुवन्तुर्ये दक्षायणं सौम्यकं स्मृतम्।" पूर्वश्लोकैर्व्याख्यातमेतत्। "अयनांशकतुल्येन कालेनैतत् स्फुटं भवेत्। सर्वविष्णुपदाद्युक्तभेदादि ह्ययनेऽन्यथा। मृगकर्कादिगे सूर्ये याम्योदगयने सति। तदा संक्रान्तिदाने स्युरुक्ता विष्णुपदादयः।" अयमर्थः राशिं प्रति त्रिंशदंशका भवन्ति सूर्यश्च प्रतिदिनमेकैकमंशं भुङ्क्ते तत्र यावद्भिरंशैरयनच्युतिर्भवति तावता सूर्यस्य भोग्यकालेन भाविनां विष्णुपदादिकानां च्युतिर्भवतीति ततश्च यदा द्वादशभिरयनच्युतिर्भवतीति तदा भाविन्याः संक्रान्तेर्द्वादशभिर्दिनैरर्वाक् पुण्यकालो भवति अस्मिंश्च तत्संक्रान्तिनिमित्तं दानादि कर्त्तव्यमिति। एवं न्यूनातिरिक्तेष्वपि बोद्धव्यम्। न केवलमादित्यस्यैव संक्रमसमये पुण्यकालः किन्तु सर्वेषामपि ग्रहाणां नक्षत्रराशिसंक्रमे पुण्यकालो भवतीति। तदुक्तं ज्योतिःशास्त्रे "नक्षत्रराश्योरविसंक्रमे स्युरर्वाक् परत्रापि रसेन्दुनाड्यः। पुण्यास्तथेन्दोस्त्रिधरापलैर्युता एकैव नाड़ी मुनिभिः शुभोक्ता। नाड्यश्चतस्रः सपलाः कुजस्य बुधस्य तिस्रः पलविश्वयुक्ताः। सार्द्धास्त्रिनाड्यः पलसप्तयुक्ताः गुरोस्तु शुक्रे सपलाश्चतस्रः। द्विनागनाड्यः पलसप्तयुक्ता शनैश्चरस्याभिहिताः सुपुण्याः। आद्ये तु मध्ये जपदानहोमं कुर्वन्नवाप्नोति सुरेन्द्रधाम।" अस्यार्थः आदित्यस्य राशिनक्षत्रगमने अर्वाक् परतश्च षोड़श घटिकाः पुण्यकालः। तथा चन्द्रस्यापि राशिनक्षत्रगमने घटिकैका पलानि त्रयोदश अर्वाक् परतश्च पुण्यकालः। एवं मङ्गलस्य घटिकाश्चतस्रः पलमेकञ्च पुण्यकालः। तथा बुधस्य तिस्रो घटिकाश्चतुर्दश पलानि पुण्यकालः। बृहस्पतेरपि सार्द्धास्तिस्रो घटिकाः सप्त पलानि पुण्यकालः। शुक्रस्य चतस्रो घटिकाः पलमेकञ्च पुण्यकालः। शनैश्चरस्यापि द्व्यशीतिर्घटिकाः सप्त पलानि पुण्यकाल इति।

अथ प्रकीर्णकालाः। आह विष्णुः "अमावस्या व्यतीपातो ग्रहणं चन्द्रसूर्ययोः। मन्वादयो युगादिश्च संक्रान्तिर्वैधृतिस्तथा। दिनक्षयं दिनच्छिद्रमवमञ्च तथा परम्। द्व्ययने विषुवद्युग्मं षड़शीतिमुखन्तथा। चतस्रो विष्णुपद्यश्च पुत्रजन्मादि चापरम्। आदित्यादिग्रहाणाञ्च नक्षत्रैः सह सङ्गमः। विज्ञेयः पुण्यकालोऽयं ज्योतिर्विद्भिर्विचार्य्य च। तत्र दानादिकं कुर्य्यादात्मनः पुण्यवृद्धये।" अमावास्यादीनि प्रसिद्धानि। दिनक्षय उक्तः पद्मपुराणे "द्वौ तिथ्यन्तावेकवारे यस्मिन् स स्याद्दिनक्षयः।" वशिष्ठोऽप्याह "एकस्मिन् सावने त्वह्नि तिथीनां त्रितयं यदा। तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलम्।" दिनच्छिद्रलक्षणमाह भृगुः "तिथ्यर्द्धतिथियोगर्क्षच्छेदादौ शशिपर्व्वणः। सदृशौ दिवसच्छिद्रसमाख्यौ प्राह भार्गवः। अयमर्थः तिथ्यर्द्धं करणं करणतिथियोगनक्षत्राणामन्ते आदौ च पर्व्वकालः सोमग्रहणतुल्यः स च दिनच्छिद्रसंज्ञ इति। छेदकालमानमप्युक्तं तेनैव "छेदादिकालः कथितस्तिथिक्षत्योर्घटीद्वयम्। नागवह्निपलोपेतं नक्षे तत्त्वपलैर्युतम्। पलैः षोड़शभिर्युक्तं नाडिकाद्वितयं युतेः। छेदादिसमयः प्रोक्तो दानेऽनन्तफलप्रदः।" क्षतिः करणम्। नागः अष्टौ। वह्नयः त्रयः। भं नक्षत्रम्। तत्त्वं पञ्चविंशतिः। युतिः योगः। तदयमर्थः सिद्धो भवति। तिथिकरणयोराद्यन्ते घटिकाद्वयमष्टत्रिंशत् पलानि पुण्यकालः। नक्षत्रस्य तु पञ्चविंशतिपलैर्युक्तं घटिकाद्वयम्। योगस्यापि षोड़शभिः पलैर्युक्तं घटिकाद्वयमिति। अवमलक्षणमाह विष्णुः "तिथित्रयं स्पृशत्येको वारः स्यादवमं हि तत्। त्रिवारस्पृक् तिथिर्यत्र दिनस्पृक् च तदुच्यते।" अत्र दिनक्षयावमयोरियान् भेदः। यत्र तिथिद्वयावसाने वारावसानं स दिनक्षयः। यत्र तिथिद्वयावसानेऽपि वारानुवृत्तिः सोऽवम इति। ब्रह्मप्रोक्तं "एकादश्यप्यमावस्या पूर्णिमा पुत्रजन्म च। वैधृतिश्च व्यतीपातो भद्रा चावमवासरः। युगमन्वादयस्ते स्युरिन्दुपर्व्वसमानकाः। क्रान्तिसाम्यं दिनच्छिद्रं ग्रहाणां भगमस्तथा"। भगमः राशिनक्षत्रेषु गमनम्। देवीपुराणे "व्यतीपातो विष्णुपदं षड़शीतिमुखन्तथा। क्रान्तिसाम्यममावास्या ग्रहणं वैधृतिश्च यः। संक्रान्तिश्च दिनच्छिद्रं तिथिवृद्धिर्दिनक्षयः। इत्यादिः पुण्यकालस्तु होमदानादिकर्मणः"। स्कन्दपुराणे "ग्रहणं चन्द्रसूर्य्याभ्यामुत्तरायणमुत्तमम्। विषुवं सव्यतीपातं षड़शीतिमुखन्तथा। दिनच्छिद्राणि संक्रान्तिर्द्वयं विष्णुपदं पुनः। इति कालः समाख्यातः पुंसां पुण्यविवर्द्धनः। अस्मिन् दत्तानि दानानि स्नानहोमतपांसि च। अनन्तफलदानि स्युः स्वर्गमोक्षप्रदान्यपि"। आह च्यवनः "अमावास्यासंक्रान्तिव्यतीपातविषुवायनषड़शीतिमुखविष्णुपदादिवैधृतिग्रहणान्तं स एव पुण्यकालः। "अयने षड़शीतौ च चन्द्रसूर्य्यग्रहे तथा। युगादौ वैधृतौ चैव दत्तं भवति चाक्षयम्"। आह

शातातपः "अयनेषु तु यद्दत्तं षडशीतिमुखेषु च। चन्द्रसूर्य्योपरागे च दत्तं भवति चाक्षयम्"। नारदः "विशाखासु यदा भानुः कृत्तिकासु च चन्द्रमाः। स योगः पद्मको नाम पुष्करेष्वतिदुर्लभः"।

अथ निषिद्धकालाः तत्र शङ्खलिखितौ "आहारं मैथुनं निद्रां सन्ध्याकाले तु वर्ज्जयेत्। कर्म चाध्ययनञ्चैव तथा दानप्रतिग्रहौ"। स्कन्दपुराणे "रात्रौ दानं न कर्त्तव्यं कदाचिदपि केनचित्। हरन्ति राक्षसा यस्मात् तस्माद्दातुर्भयावहम्। विशेषतो निशीथे तु न शुभं कर्म शर्म्मणे। अतो विवर्जयेत् प्राज्ञो दानादिषु महानिशाम्। तथा "स्नानञ्चैव महादानं स्वाध्यायन्तु न तर्पणम्। प्रथमेऽब्दे न कुर्वीत महागुरुनिपातने"। आह ज्योतिःपराशरः "अग्न्याधेयं प्रतिष्ठाञ्च यज्ञदानाद्यभिग्रहान्। माङ्गल्यमभिषेकञ्च मलमासे विवर्जयेत्। वापीकूपतडागादिप्रतिष्ठोदङ्मुखे रवौ। दक्षिणाशामुखे कुर्वन् न तत्फलमवाप्नुयात्। बाले वा यदि वा वृद्धे शुक्रे वास्तमुपागते। मलमासइवैतानि वर्जयेद्यत्नतः सदा"।

अथ निषिद्धस्यापि धर्मविशेषेण पुण्यकालत्वमभिधीयते। देवलः "राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु। स्नानदानादिकं कुर्य्युर्निशि काम्यव्रतेषु च"। वृद्धवसिष्ठः "ग्रहणोद्वाहसंक्रान्तियात्रार्त्तिप्रसवेषु च। दानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते"। विष्णुधर्मोत्तरे "पूजनन्त्वतिथीनाञ्च पान्थानामपि पूजनम्। तत्र रात्रौ तथा ज्ञेयं गवाश्वकञ्च पूजनम्"। महाभारते "रात्रौ दानं न शंसन्ति विना त्वभयदक्षिणाम्। विद्यां कन्यां द्विजश्रेष्ठ! दीपमन्नं प्रतिश्रयम्"। श्रीमार्कण्डेयपुराणे "महानिशा तु विज्ञेया मध्यस्थं प्रहरद्वयम्। स्नानं तत्र न कुर्वीत काम्यनैमित्तिकादृते"। विश्वामित्रः "महानिशा द्वे घटिके रात्रौ मध्यमयामयोः। नैमित्तिकन्तथा कुर्य्याच्चित्यन्तु न मनागपि"।

अथ निमित्तानुरोधेन सदा पुण्यकालाः। विष्णुधर्मोत्तरे "कालः सर्वोऽपि निर्द्दिष्टः पात्रं सर्वमुदाहृतम्। अभयस्य प्रदाने तु नात्र कार्य्या विचारणा। तदैव दानकालस्तु यदा भयमुपस्थितम्"। तथा "न कालनियमो दृष्टो दीयमाने प्रतिश्रये। तदैव दानमप्योक्तं यदा पान्थसमागमः। न हि कालं प्रतीक्षेत जलं दातुं तृषान्विते। अन्नोदकं सदा देयमित्याह भगवान्मनुः"। स्कन्दपुराणे "अर्द्धप्रसूतां गां दद्यात् कालादीनविचारयन्। कालः स एव ग्रहणे यदा सा द्विमुखी तु गौः"। व्यासः "आसन्नमृत्युना देया गौः सवत्सा तु पूर्ववत्। तदभावे तु गौरेव नरकोद्धरणाय वै। तदा यदि न शक्नोति दातुं वैतरणीन्तु गाम्। शक्तोऽन्योऽरुक् तदा दत्त्वा श्रेयो दद्यान्मृतस्य च"। वराहपुराणे "व्यतीपातोऽथ संक्रान्तिस्तथैव ग्रहणं रवेः। पुण्यकालास्तदा सर्वे यदा मृत्युरुपस्थितः। तदा गोभूहिरण्यादि दत्तमक्षयतामियात्"। तथा "यावत् कालं सुते जाते न नाड़ी छिद्यते नृप!। चन्द्रसूर्य्योपरागेण तमाहुः समयं समम्"। विष्णुधर्मोत्तरे "अच्छिन्ननाड्यां यद्दत्तं पुत्रे जाते द्विजोत्तमाः!। संस्कारेषु च पुत्रस्य तदक्षय्यं प्रकीर्त्तितम्"। मत्स्यपुराणे "यदा वा जायते वित्तं चित्तं श्रद्धासमन्वितम्। तदैव दानकालः स्याद्यतोऽनित्यं हि जीवितम्"। इति कालनिरूपणम्।

अथ देशाख्यं दानाङ्गमुपवर्ण्यते। तत्र देवीपुराणे "सर्वे शिवाश्रमाः पुण्याः सर्वा नद्यः शुभप्रदाः। दानस्नानोपवासादिफलदाः सततं नृणाम्"। आह विष्णुः "चातुर्वर्ण्यव्यवस्थानं यस्मिन् देशे न विद्यते। स म्लेच्छदेशो विज्ञेय आर्य्यदेशस्ततः परः"। भविष्यपुराणे "न हीयते यत्र धर्मश्चतुष्पात् सकलो द्विज!। स देशः परमो नित्यं सर्वपुण्यतमो मतः। विद्वद्भिः सेवितो यश्च यस्मिन् देशे प्रवर्त्तते। शास्त्रोक्तस्यापि विप्रेन्द्र! स देशः परमो मतः"। याज्ञवल्क्यः "यस्मिन् देशे मृगः कृष्णस्तस्मिन् धर्म्मान्निबोधत"। श्रीमार्कण्डेयपुराणे "सह्यस्य चोत्तरो यस्तु यत्र गोदावरी नदी। पृथिव्यामपि कृत्स्नायां स प्रदेशोऽतिपावनः"। व्यासः "गङ्गाद्वारे प्रयागे च अविमुक्ते च पुष्करे। नगरे चाट्टहासे च गङ्गासागरसङ्गमे। कुरुक्षेत्रे गयायाञ्च तीर्थे वाऽमरकण्टके। एवमादिषु तीर्थेषु दत्तमक्षयतामियात्। सर्वतीर्थमयी गङ्गा तत्र दत्तं महाफलम्"। स्कन्दपुराणे "वाराणसी कुरुक्षेत्रं प्रयागः पुष्कराणि च। गङ्गा समुद्रतीरञ्च नैमिषामरकण्टकम्। श्रीपर्वतमहाकालं गोकर्णं वेदपर्वतम्। इत्याद्याः कीर्त्तिता देशाः सुरसिद्धनिषेविताः। सर्वे शिलोच्चयाः पुण्याः सर्वा नद्यः ससागराः। गोसिद्धमुनिवासाश्च देशाः पुण्याः प्रकीर्त्तिताः। एषु तीर्थेषु यद्दत्तं फलस्यानन्त्यमश्नुवेत्"। पद्मपुराणे "गङ्गा चोदङ्मुखी यत्र यत्र प्राची सर-

स्ती। तत्र क्रतुशतं पुण्यं स्नानदानेषु सुव्रत!। लिङ्गं वा प्रतिमा वापि दृश्यते यत्र कुत्रचित्। तत् सर्वं पुण्यतां याति दानेषु च महाफलम्"। ब्रह्मप्रोक्ते "नदीतीरे गवां गोष्ठे ब्राह्मणानाञ्च वेश्मनि। दत्तं शतगुणं प्रोक्तंलक्षमादित्यसन्निधौ। शिवस्य विष्णोर्ब्रह्मेश सन्निधौ दत्तमक्षयम्"। तथा "अग्निहोत्रे गवां गोष्ठे वेदघोषपवित्रिते। शिवायतनसंस्थाने यदल्पमपि दीयते। तदनन्तफलं ज्ञेयं शिवक्षेत्रानुभावतः"। मत्स्यपुराणे "शालग्रामसमुद्भूता शिला चक्राङ्कमण्डिता। यत्र तिष्ठति वसुधे। तत्क्षेत्रं योजनत्रयम्। द्वारवत्याः शिला देवि! मुद्रिता मम मुद्रया। यत्रापि नीयते तत्स्यात् तीर्थं द्वादशयोजनम्"। तथा "प्रयागादिषु तीर्थेषु पुण्येष्वायतनेषु च। दत्त्वा चाक्षयमाप्नोति नदीपुण्यवनेषु च"। आयतने शङ्करादिक्षेत्रे तदुक्तं भविष्यपुराणे "क्रोशमात्रं भवेत् क्षेत्रं शिवस्य परमात्मनः। प्राणिनामत्र पञ्चत्वं शिवसायुज्यकारणम्। फलं दत्तहुतानाञ्च अनन्तं परिकीर्त्तितम्। मनुजैः स्थापिते लिङ्गे क्षेत्रे मानमिदं स्मृतम्। स्वयम्भुवि सहस्रं स्यादार्षे चैव तदर्द्धकम्"।

अथ श्रद्धाख्यं दानाङ्गमुच्यते। स्कन्दपुराणे "दानं दद्यात् प्रयत्नेन श्रद्धापूतमतन्द्रितः। श्रद्धाकृतं स्वल्पमपि दानमानन्त्यमश्नुते। अश्रद्धयापि यद्दत्तं सर्व्वस्वमपि सत्तम!। न तत् फलाय भवति तस्माच्छ्रद्धां समाश्रयेत्"। देवलः "प्रदाय शाकमुष्टिं वा श्रद्धाभक्तिसमुद्यताम्। महते पात्रभूताय सर्व्वाभ्युदयमाप्नुयात्"। महाभारते "श्रद्धया साध्यते धर्म्मो महद्भिर्नार्थराशिभिः। निष्किञ्चनास्तु मुनयः श्रद्धावन्तो दिवं गताः। धर्म्मार्थकाममोक्षाणां श्रद्धा परमकारणम्। पुंसामश्रद्दधानानां न धर्म्मो नापि तत्फलम्"। वह्निपुराणात् "श्रद्धापूर्व्वाः सर्व्वधर्म्माः श्रद्धामध्यान्तसंस्थिताः। श्रद्धानिष्ठाप्रतिष्ठाश्च धर्म्माः श्रद्धैव कीर्त्तिताः। श्रुतिमात्ररसाः सूक्ष्माः प्रधानपुरुषेश्वराः। श्रद्धामात्रेण गृह्यन्ते न वाक्येन न चक्षुषा। कायक्लेशैर्न बहुभिर्न चैवार्थस्य राशिभिः। धर्म्मः संप्राप्यते सूक्ष्मः श्रद्धाहीनैः सुरैरपि। श्रद्धा धर्म्मः परः सूक्ष्मः श्रद्धा ज्ञानं हुतन्तपः। श्रद्धा स्वर्गश्च मोक्षश्च श्रद्धा सर्व्वमिदं जगत्। सर्व्वस्वं जीवितञ्चापि दद्यादश्रद्धया यदि। नाप्नुयात् स फलं किञ्चित् श्रद्दधानस्ततो भवेत्"। वेदव्यासः "श्रद्धा वै सात्विकी देवी सूर्य्यस्य दुहिता नृप!। सवित्री प्रसवित्री च लोकविश्वासिनी तथा। वामदेवं त्रायते श्रद्धा मनोहरश्च भारत"। महाभारते "क्रियावान् श्रद्दधानश्च दाता प्राज्ञोऽनसूयकः। धर्म्माधर्म्मविशेषज्ञः सर्व्वं तरति दुस्तरम्"। स्कन्दपुराणे "श्रद्धा मातेव जननी ज्ञानस्य सुकृतस्य च। तस्माच्छ्रद्धां समुत्पाद्य ज्ञानं सुकृतमर्जयेत्" मनुः "श्रद्धयेष्टञ्च पूर्त्तञ्च नित्यं कुर्य्यात् प्रयत्नतः। श्रद्धाकृते ह्यक्षये ते भवतः स्वागतैर्धनैः"। याज्ञवल्क्यः "दातव्यं प्रत्यहं पात्रे निमित्तेषु विशेषतः। याचितेनापि दातव्यं श्रद्धापूतन्तु शक्तितः"। बृहस्पतिः "मन्त्रान्यदोषाद्धोमे तु तपसीन्द्रियदोषतः। न्यूनता स्याच्च दाने तु श्रद्धायुक्ते भवेत् क्वचित्"।

"देशनिरूपणञ्च पूर्व्वं व्रतखण्डादावेव प्रपञ्चितम्। इह तु पात्रादिदानाङ्गनिरूपणप्रतिज्ञानिर्व्वाहार्थं दिङ्मात्रमेव प्रदर्शितम्। न चात्र भविष्यपुराणमतेन दानाङ्गषट्के निरूप्यमाणे दानाङ्गभूतस्यापि दातुः कथं पृथगनुपादनमिति शङ्कनीयं दानस्य दातृव्यतिरेकेणानुपपत्तेस्तेनैव तदाक्षेपात्। एवं तर्हि देशकालादेरप्यनुपादानं स्यात्। "अथ सामान्येनैव तदाक्षेपेऽपि ब्रह्मावर्त्तादिविशेषलाभार्थं तन्निरूपणमिति चेत् दातापि तर्हि शुचित्वादिविशेषलाभार्थं निरूपणीयः स्यात्। उच्यते तत्तद्विधायकवाक्यगताख्यातप्रत्ययोपात्तत्वादेव तदनिरूपणं तत्त्वाक्षेपात्, शुचित्वादिविशेषलाभस्तु वाक्यान्तरादिति कर्त्तनभिधानपक्षे तु प्रत्ययोपात्तभावनयैवाश्रयाधारत्वेन तदाक्षेपाच्च देशादिसाम्यम्। एवमादिकं पर्य्यालोचनया षडङ्गं दानमिति वदता देवलेन तु निरूप्यत एव तथा हि "दाता प्रतिग्रहीता च श्रद्धा देयञ्च धर्म्मयुक्। देशकालौ च दानानामङ्गान्येतानि षड्विदुरिति"। तल्लक्षणन्तु प्रागभिहितमिति तु न पुनराद्रियामहे। न तु श्रद्धादिवदितिकर्त्तव्यतापि दानाङ्गमित्यतः प्रतिपादनीयैव यदाह याज्ञवल्क्यः "देशकाल उपायेन द्रव्यं श्रद्धासमन्वितम्। पात्रे प्रदीयते यत्तत् सकलं धर्म्मलक्षणम्"। इति उपायः इतिकर्त्तव्यता।

अथ दानसामान्यविधिरुच्यते। तत्र दातृधर्म्माः। भविष्यपुराणे "सम्यक् संसाधनं कर्म कर्त्तव्यमधिकारिणा। निष्कामेण महावीरः! काम्यं कामान्वितेन च। आचारयुक्तः श्रद्धावान् प्राज्ञोयोऽध्यात्मवित्तमः। कर्म्मणां फलमाप्नोति न्यायार्जितधनश्च यः"। सम्यक् प्रयत

कल्यादिना । संसाधनं यथाविहितसाधनम् । अधिकारिणा अर्थिना समर्थेन विदुषा च । अध्यात्मवित्तमः परलोकफलभागिन्यात्मनि दृढ़प्रत्ययवान् । न्यायार्जितधनः सद्वृत्त्यर्जितधनः । आपस्तम्बः "प्रयोजयितानुमन्ता कर्त्तेति स्वर्गनरकफलेषु भागिनः यो भूय आरभते तस्मिन् फलविशेषः" । याज्ञवल्क्यः "विधिदिष्टन्तु यत् कर्म करोत्यविधिना तु यः । फलं न किञ्चिदाप्नोति क्लेशमात्रं हि तस्य यत्" । मनुः "प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते । न साम्परायिकं तस्य दुर्मतेर्विद्यते फलम्" । साम्परायिकं पारलौकिकम् । योगियाज्ञवल्क्यः "श्रद्धाविधिसमायुक्तं कर्म यत् क्रियते नृभिः । सुविशुद्धेन भावेन तदानन्त्याय कल्पते । विधिहीनं भावदुष्टं कृतमश्रद्धया च यत् । तद्धरन्त्यसुरास्तस्य मूढ़स्य दुष्कृतात्मनः" । भविष्योत्तरे "काम्योदानविधिः पार्थ ! क्रियमाणो यथातथम् । फलाय मुनिभिः प्रोक्तो विपरीतो भयावहः" । गारुड़पुराणे "प्रशस्तदेशकाले च पात्रे दत्तं तदक्षयम् । कोटिजन्मार्जितं पापं ददतस्तस्य नश्यति । सकलाङ्गोऽपि सम्भारो यस्य दानक्रियाविधौ । सम्भवेदपि पापीयान् स सद्यो मुक्तिमेष्यति" । देवीपुराणे "शुचिना भावपूतेन क्षान्तिसत्यव्रतादिना । अपि सर्षपमात्रोऽपि दातारं तारयेदिह" । दक्षः "दानञ्च विधिवद्देयं काले पात्रे गुणान्विते" । यमः "सर्वत्र गुणवद्दानं श्वपाकादिष्वपि स्मृतम् । देशे काले विधानेन पात्रे दत्तं विशेषतः" । गुणवत् उत्तमफलम् । तथा "दानं हि बहुमानाद्यो गुणवद्भ्यः प्रयच्छति । स तु प्रेत्य धनं लब्ध्वा पुत्रपौत्रैः सहाश्नुते । परस्यानुपहत्येह दानं दत्त्वा विचक्षणः । सुखोदयं सुखोदर्कं प्रेत्य वै लभते धनम्" । अनुपहत्य पीड़ामनुत्पाद्य, सुखोदर्कं सुखोत्तरफलम् । रामायणे "नावज्ञया प्रदातव्यं किञ्चिद्वा केनचित् क्वचित् । अवज्ञया हि यद्दत्तं दातुस्तद्दोषमावहेत्" । शातातपः "अभिगम्य तु यद्दानं यच्च दानमयाचितम् । विद्यते सागरस्यान्तस्तस्यान्तो नैव विद्यते । प्रच्छन्नानि च दानानि ज्ञानञ्च निरहङ्कृतम् । तपांसि च सुगुप्तानि तेषां फलमनन्तकम्" । ब्रह्मप्रोक्ते "गुप्ताधप्रायी गुप्तदाता गुप्तपूजाभिसत्क्रियः । पूज्यते सर्वलोकेषु सर्वदेवैः शतक्रतुः" । व्यासः "स्वयं नीत्वा तु यद्दानं भक्त्या पात्राय दीयते । तत् सहस्रगुणं भूत्वा दातारमुपतिष्ठति" ।

बृहस्पतिः "कृते प्रदीयते गत्वा त्रेतायां दीयते गृहे । द्वापरे च प्रार्थयति कलौ चानुगमान्विते" । प्रतिग्रहीतृगृहं गत्वा यद्दीयते तत् कृते युगे दत्तं भवति प्रतिग्रहीतारं स्वगृहमाहूय यद्दीयते तत् त्रेतायुगे दत्तं भवतीत्यर्थः एवमुत्तरत्रापि । वह्निपुराणे "तमोवृतस्तु यो दद्याद्भयात् क्रोधात् तथैव च । नृप ! दानन्तु तत्सर्वं भुङ्क्ते गर्भस्थ एव च । ईर्षामन्युमनाश्चैव दम्भार्थं चार्थकारणात् । यो ददाति द्विजातिभ्यः स बाल्ये तदश्नुते । देशे काले च पात्रे च योऽददाति द्विजातिषु । परितुष्टेन मनसा यौवने तु तदश्नुते । वैश्वदेवविहीनं च सन्ध्योपासनवर्जितम् । यद्दानं दीयते तत्तु वृद्धकाले समश्नुते" । आह मनुः "न विस्मयेत तपसा, वदेदिष्ट्वा न चानृतम् । नार्त्तोऽपि विप्रवदेद्विप्रान् न दत्त्वा परिकीर्त्तयेत् । यज्ञोऽनृतेन क्षरति तपः क्षरति विस्मयात् । आयुर्विप्रापवादेन दानन्तु परिकीर्त्तनात्" । यमः "आशां दत्त्वा त्वदातारं दानकाले निषेधकम् । दत्त्वा सन्तप्यते यस्तु तमाहुर्ब्रह्मघातकम्" । हारीतः "दानं ध्यानं तपस्यागोमन्त्रकर्म्म विधिक्रियाः । मङ्गलाचारनियमाः शौचभ्रष्टस्य निष्फलाः" । आह प्रचेताः "स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्मणि । पवित्राणां तथा जाप्ये दाने च विधिचोदिते" । वायुपुराणे "क्रियां यः कुरुते मोहादनाचम्येह नास्तिकः । भवन्ति न तथा तस्य क्रियाः सर्वाः न संशयः" । शाट्यायनः "दानमाचमनं होमं भोजनं देवतार्च्चनम् । प्रौढ़पादो न कुर्वीत स्वाध्यायं पितृतर्पणम् । आसनारूढ़पादस्तु जान्वोर्वा जङ्घयोस्तथा । कृतावसक्थिकोयश्च प्रौढ़पादः स उच्यते" । वशिष्ठः "यज्जले शुष्कवस्त्रेण स्थले चैवार्द्रवाससा । जपो होमस्तथा दानं तत्सर्वं निष्फलं भवेत्" । विष्णुपुराणे "होमदेवार्च्चनाद्यासु क्रियास्वाचमने तथा । नैकवस्त्रः प्रवर्त्तेत द्विजवाचनके जपे" । द्विजवाचनके द्विजस्वस्तिवाचनादौ । शातातपः "सव्यादंसात् परिभ्रष्टकटिदेशधृताम्बरः । एकवस्त्रन्तु तं विद्यात् दैवे पित्र्ये च वर्जयेत्" । स्लोकगोतमः "स्नाने दाने जपे होमे दैवे पित्र्ये च कर्मणि । बध्नीयान्नासुरीं कक्षां शेषकाले यथारुचि । याज्ञवल्क्यः "परिधानाद्बहिः कक्षा निबद्धा ह्यासुरी भवेत् । धर्मकर्मणि विद्वद्भिर्वर्जनीया प्रयत्नतः । बहिःकक्षा बहिर्निर्गता कक्षेत्यर्थः" ।

मनुः “न कुर्य्यात् कस्यचित् पीड़ां कर्म्मणा मनसा गिरा ।. आचरन्नभिषेकन्तु कर्म्माण्यप्यन्यथा चरन् । सन्ध्ययोरुभयोर्जप्ये भोजने दन्तधावने । पितृकार्य्ये च दैवे च तथा मूत्रपुरीषयोः । गुरूणां सन्निधौ दाने यागे चैव विशेषतः । एषु मौनं समातिष्ठन् स्वर्गं प्राप्नोति मानवः” । पराशरः “स्नाने दाने जपे होमे दैवे पित्र्ये च कर्म्मणि । सव्यापसव्यौ कर्त्तव्यौ सपवित्रौ करौ द्विजैः” । लघुहारीतः “जपे होमे तथा दाने स्वाध्याये पितृतर्पणे । अशून्यन्तु करं कुर्य्यात् सुवर्ण-रजतैः कुशैः । दर्भहीना तु या सन्ध्या यच्च दानं विनोदकम् । असंख्यातञ्च यज्जप्तं तत्सर्वं निष्प्रयोजनम्” । हारीतः “देवाश्च पितरश्चैव तपोयज्ञदानानामीशते मन्त्राः सर्व्वकार्य्यसाधनानामार्त्तिभयोपसर्गेभ्योरक्षितारो भवन्ति मन्त्रा देवतास्तदा एवंसिद्धमन्त्रवत् करोति देववत्-करोति यद्ददाति देवताभिरेव तद्ददाति यत् प्रतिगृह्णाति देवताभिरेव तत् प्रतिगृह्णाति तस्मान्नामन्त्रवत् प्रतिगृह्णीयात् यत्त्वमन्त्रतः प्रतिपादिता हि देवता-स्तुष्णीं प्रतिगृह्णीयुर्हि शठा भवन्ति तस्मान्मन्त्रवदद्भिर-वोक्ष्य दद्यादालभ्य वा”। अवोक्ष्य प्रोक्षणं कृत्वा । आलभ्य सोदकेन पाणिना स्पृष्ट्वा । आपस्तम्बः “सर्व्वाण्युद-कपूर्व्वाणि दानानि यथाश्रुति वीहारे” वीहारे यज्ञे अन्वाहार्य्यदानादौ यथाश्रुति यावदेव श्रुतं तावदेव कुर्य्यान्नोदकपूर्व्वतादिनियम इत्यर्थः । वराहपुराणे “तोयं दद्यात् द्विजकरे दाने विधिरयं स्मृतः । सकुशो-दकहस्तश्च ददामीति तथा वदेत्” । गौतमः “अन्तर्जानु-करं कृत्वा सकुशन्तु तिलोदकम् । फलानि चाभिसन्धाय प्रदद्यात् श्रद्धयान्वितः” पात्रासन्निधाने तु नारदीयपु-राणे विशेष उक्तः । “मनसा पात्रमुद्दिश्य जलं भूमौ विनिःक्षिपेत् । विद्यते सागरस्यान्तो दानस्यान्तो न वि-द्यते” । धौम्यः “दानकाले तु सम्प्राप्ते पात्रस्यासन्निधौ जलम् । अन्यविप्रकरे दत्त्वा दानं पात्रे निधीयते” । षट्त्रिंशन्मतात् “पात्रं मनसि सञ्चिन्त्य क्रियावन्तं गुणान्वितम् । देशे काले च संप्राप्ते देयमप्सु विनिः-क्षिपेत्” । उभयासन्निधाने तु विशेषस्तत्रैवोक्तः “द्रव्यपात्रविकर्षश्चेत् परोक्षं दातुमुद्यतः । तत् ध्यायेद्वै भुवं पात्रं द्रव्यमादित्यदैवतम्” । धौम्यः “परोक्षेऽपि तु यद्दत्तं तीर्थे स्नातेन सोदकम् । तद्दानं सोदकं प्राङ्मुखम्नन्तफलदायकम् । परोक्षे कल्पितं दानं पात्रा-भावे कथं भवेत् । गोत्रजेभ्यस्तथा दद्यात् तदभावेऽस्य बन्धुषु । परोक्षेऽपि च यद्दत्तं भावपूर्व्वेण चेतसा । गुरुमित्रद्विजातिभ्यस्तत्तु दानमनन्तकम् । परोक्षे खलु यद्दत्तं स्वल्पाक्षरविवर्जितम् । दृश्यते सागरस्यान्तस्त-स्यान्तो नैव दृश्यते” । आपस्तम्बः “तस्मादोमित्युदाहृत्य-यज्ञदानतपःक्रियाः । प्रवर्त्तन्ते विधानोक्ताः सततं ब्रह्मवादिनः । त्रिमात्रस्तु प्रयोक्तव्यः कर्म्मारम्भेषु सर्व्वशः । तिस्रः सार्द्धास्तु कर्त्तव्या मात्रास्तत्त्वार्थचिन्तकैः । देवताध्यानकाले न प्लुतं कुर्य्यात् न संशयः ।” वृद्ध-वशिष्ठः “नामगोत्रे समुच्चार्य्य सम्प्रदानस्य चात्मनः । सम्प्रदेयं प्रयच्छन्ति कन्यादाने तु पुंस्त्रयम् । पुंस्त्रय-मिति प्रपितामहादिपुरुषत्रयमित्यर्थः । तदुक्तं “नान्दी-मुखे विवाहे च प्रपितामहपूर्व्वकम् । नाम सङ्कीर्त्तयन् विद्वानन्यत्र पितृपूर्व्वकम् । तथा दानहोमजपान् कुर्व-न्नासीनः कुशसंस्तरे । एषां फलमनन्तन्तु लभते प्राङ्-मुखोनरः” । स्मृत्यन्तरात् “नामगोत्रे समुच्चार्य्य सम्यक् श्रद्धान्वितो वदेत् । सङ्कीर्त्य देशकालादि तुभ्यं सम्प्र-ददे इति । न ममेति स्वस्वत्वस्य निवृत्तिमपि कीर्त्त-येत्” षट्त्रिंशन्मतात् “प्रणीते तु समिद्धेऽग्नौ जुहु-याद्व्याहृतित्रयम् । उदगग्रेषु दर्भेषु पात्रं तेषूपपादयेत् । प्रागग्रेषु स्वयंस्थित्वा दाता च परमेश्वरम् । ध्यात्वा स्वपुत्रमुद्दिश्य दक्षिणां प्रतिपादयेत् । समस्ता व्याहृ-तीरुक्त्वा तत्रोपरि समापयेत् । ब्राह्मणं प्रणिपत्याथ ततः पात्रं विसर्जयेत् । अनेन विधिना दानं दा-तव्यं होमपूर्व्वकम् । तत् कर्म दक्षिणावर्जं होमवर्जञ्च नार्हति” । एतच्च विहिताङ्गभूतहोमकेषु होमानुवाद-पुरःसरमुपदर्शितं तत्तद्गुणविधिपरम् । अन्यथा स्मृतया-दृष्टशिष्टाचारेषु ताम्बूलादिदानेष्वपि प्रसङ्गः स्यात् । ततःपरं प्रतिग्रहीतृधर्म्मास्तत्रोक्तास्ते च प्रतिग्रहीतृ शब्दे द्रष्टव्याः ।

दातृप्रतिग्रहीत्रुभयधर्म्मास्तत्रोक्ता यथा

गरुड़पुराणे “दैवं वा कर्म्म पित्र्यं वा नाशुचिः कर्त्तुमर्हसि । स्नानमेव द्विजातीनां परं शुद्धिकरं स्मृ-तम् । अतः स्नातोऽर्हतामेति दाने चैव प्रतिग्रहे । कृतमस्नायिना कर्म राक्षसत्वाय कल्पते । प्रजापतिः कर्म्मगुप्त्यै पवित्रमसृजत् पुरा । रक्षोघ्नमेतत् परमं मुनिभिः कल्पितं सदा । तस्माच्चत्करयोर्द्धार्य्यं ददता प्रतिगृह्णता । स्नानहोमजपादीनि कुर्व्वता च विशेषतः । पंत्यच्य

धर्म्मात्र मार्गं ब्रह्ममार्गविनिर्गतम् । सकृत् प्रदक्षिणीकृत्य पवित्रमभिधीयते" । वायुपुराणे "दानं प्रतिग्रहो होमो भोजनं बलिरेव च । साङ्गुष्ठेन सदा कार्य्यमसुरेभ्योऽन्यथा भवेत्" । साङ्गुष्ठेन अङ्गुलीसङ्गताङ्गुष्ठेन । "एतान्येव च कार्य्याणि दानादीनि विशेषतः । अन्तर्जानु विधेयानि तद्वदाचमनं नृप !" । बौधायनः "भोजनं हवनं दानमुपहारः प्रतिग्रहः । बहिर्जानु न कार्य्याणि तद्वदाचमनं स्मृतम्" । ब्रह्माण्डपुराणे "नाधिकारी मुक्तकच्छो मुक्तचूड़स्तथैव च । दाने प्रतिग्रहे यज्ञे ब्रह्मयज्ञादिकर्म्मसु । देवाः समेत्य वस्त्रं हि तच्च पुंसामकल्पयन् । ततश्च वाससा हीनमसंपूर्णं प्रचक्षते । सोत्तरीयस्ततः कुर्यात् सर्वकर्म्माणि भावतः । अधौतं कारुधौतञ्च परिदध्यान्न वाससी । ददानः प्रतिगृह्णंश्च दध्यादहतमेव च" । वराहपुराणे "सुस्नातः सम्यगाचान्तः कृतसंध्यादिकक्रियः । कामक्रोधविहीनश्च मात्सर्य्यमदवर्जितः । जितेन्द्रियः सत्यवादी पात्रं दाता च शस्यते" तथा "प्रमीते गोत्रपुरुषे सूतके वा समागमे । दयरात्रमनर्हः स्यात् कर्तुं दानप्रतिग्रहौ । पिण्डोदकादि सूतके दातुं प्रेताय युज्यते । आच्छन्नायां तथा नार्य्यां दानार्हौ सूतसूतके" । विष्णुधर्म्मोत्तरे "शुचिर्वाप्यशुचिर्वापि दद्यादभयदक्षिणाम् । शुचिनाऽशुचिना वापि ग्राह्या भय उपस्थिते" । छन्दोगपरिशिष्टे कात्यायनः "कुशोपरिनिविष्टेन तथा यज्ञोपवीतिना । देयं प्रतिग्रहीतव्यमन्यथा विफलं हि तत्" । आह जातूकर्ण्यः "ओङ्कारेण दद्यात् प्रतिगृह्णीयाच्च" । स्कान्दपुराणे "प्रणवो जगतां वीजं वेदानामादिरेव च । एष एव परं ब्रह्म पवित्रमयमुत्तमम् । तस्मात् प्रणवमुच्चार्य्य कार्य्यौ दानप्रतिग्रहौ" यमः "योऽर्चितं प्रतिगृह्णाति योऽर्चयित्वा प्रयच्छति । तावुभौ गच्छतः स्वर्गं विपरीते विपर्य्ययः" । लिङ्गपुराणे "दद्याद्दानं यथा शक्त्या सदाभ्यर्चनपूर्वकम् । ब्राह्मणश्चापि गृह्णीयाद्भक्त्या दत्तं प्रतिग्रहम्" । शातातपः "प्रश्नपूर्वन्तु यो दद्यात् ब्राह्मणाय प्रतिग्रहम् । स पूर्वं नरकं याति ब्राह्मणस्तदनन्तरम्" । प्रश्नपूर्वमिति एतमध्यायम् एतमनुवाकं वा यदि त्वमस्खलितं पठसि तदा तएतावद्ददामीत्युक्त्वा तथा कृते यद्दीयते तत् प्रश्नपूर्वकम् । व्यासः "अवमानेन यो दद्याद्गृह्णीयाद्यः प्रतिग्रहम् । तावुभौ नरके मग्नौ वसेतां शरदां शतम्" । शातातपः "कार्य्यलोभेन योदद्याद्गृह्णीयाद्यः प्रतिग्रहम् । दाताग्रे नरकं याति ब्राह्मणस्तदनन्तरम्" । विष्णुधर्म्मोत्तरे "प्रतिग्रहोयोविधिना प्रदत्तः प्रतिग्रहो योविधिना गृहीतः । द्वयोः प्रयोगश्चरमन्तु कार्य्यः श्रेयस्तथाप्नोति न संशयोऽत्र" ।

अथ निषिद्धधर्म्माः । नन्दिपुराणे "दाने विधिमविज्ञाय नहि तद्दातुमर्हति । प्रतिग्रहानभिज्ञश्च गृह्णन्निरयमश्नुते । सावज्ञं प्रतिगृह्णानो गृहीतापि पतत्यधः । किन्त्वं वेत्सीति वक्तव्यो न दाता ब्राह्मणः क्वचित् । सोऽपि पृष्टः स्वयं तेन दानार्थं तं न कीर्त्तयेत्" । यदि त्वमेतत् पठसि तदा तुभ्यमेतद्ददामीति साक्षात् परीक्षणमत्र निषिध्यते, पात्रत्वबोधार्थमुपायान्तरेण परीक्षणं त्वनुमतमेव । तदुक्तं यमेन "शीलं संवसनाज्ज्ञेयं शौचं संव्यवहारतः । प्रज्ञा संकथनात् ज्ञेया त्रिभिः पात्रं परीक्ष्यते" । संकथनं शुद्धभावेन विद्याकथा । वराहपुराणे "अपि सर्षपमात्रं हि न देयं विचिकित्सता । मनसा ह्यननुज्ञातः प्रतिगृह्णीत नैव हि । ददानः प्रतिगृह्णंश्च यतो लोभभयादिना । नाप्नोति श्रेयसा योगं निरयं चैव गच्छति ।" नारदीयपुराणे "देशकालविधानाद्यैर्हीनं दानं भयावहम् । दातुः प्रतिग्रहीतुश्च गृहीतमसतः सदा ।" षट्त्रिंशन्मतात् नामगोत्रे समुच्चार्य्य प्राङ्मुखो देयकीर्त्तनात्" । उदङ्मुखाय विप्राय दत्त्वान्ते स्वस्ति वाचयेत् । देयकीर्त्तनादिति देयकीर्त्तनोत्तरकालं दत्त्वेत्यर्थः । "प्राक्प्रत्यगाश्या वोद्वाहे दातृग्राहकयोः स्थितिः । दद्यात् पूर्वमुखो द्रव्यमेष एव विधिः सदा" । यत्तु कीर्त्तयन्ति "प्राङ्मुखः प्रतिगृह्णीयाद्विवाहे तु विपर्य्यय" इति तस्य समूलत्वे सिद्धे अनुष्ठानविकल्पः, तत्राप्युदङ्मुखसंप्रदानवैशिष्ट्यश्रुतेस्तदेवानुष्ठेयम् । तदुक्तं स्मृत्यन्तरे "दद्यात् पूर्वमुखो दानं गृह्णीयादुत्तरामुखः । आयुर्विवर्द्धते दातुर्ग्रहीतुः क्षीयते तु तत्" ।

देयद्रव्याणां दानमन्त्राः हेमा० व्र० ख० दर्शिता यथा तत्र कपिलायाः मात्स्ये "कपिले ! सर्वभूतानां पूजनीयासि रोहिणि ! । सर्वतीर्थमयी यस्मादतः शान्तिं प्रयच्छ मे" शङ्खस्य "पुण्यस्त्वं शङ्ख ! पुण्यानां मङ्गलानाञ्च मङ्गलम् । विष्णुना विधृतो नित्यमतः शान्तिं प्रयच्छ मे" । वृषस्य "धर्मस्त्वं वृषरूपेण जगदानन्दकारकः । अष्टमूर्त्तेरधिष्ठानमतः शान्तिं प्रयच्छ मे" ।

हेम्नः "हिरण्यगर्भगर्भस्थं हेम बीजं विभावसोः । अनन्त-पुण्यफलदमतः शान्तिं प्रयच्छ मे" ।

पीतवस्त्रस्य "पीतवस्त्रयुगं यस्माद्वासुदेवस्य वल्लभम् । प्रदानात्तस्य मे विष्णुरतः शान्तिं प्रयच्छतु" ।

श्वेताश्वस्य "यस्माद्विष्णुस्वरूपेण यस्मादमृतसम्भवः । चन्द्रार्क-वाहनं नित्यमतः शान्तिं प्रयच्छ मे" ।

धेनोः "यस्मात्त्वं पृथिवी सर्वा धेनुः केशवसन्निभा । सर्व-पापहरा नित्यमतः शान्तिं प्रयच्छ मे" ।

लोहस्य "यस्मादायसकर्माणि त्वदधीनानि सर्वदा । लाङ्ग-लाद्यायुधादीनि ततः शान्तिं प्रयच्छ मे" ।

छागस्य "यस्मात्त्वं छाग ! यज्ञानामङ्गत्वेन व्यवस्थितः । यानं विभावसोर्नित्यमतः शान्तिं प्रयच्छ मे" ।

श्वेतवस्त्रस्य "शरण्यं सर्वलोकानां लज्जाया रक्षणं परम् । सुवेशधारि त्वं यस्माद्वासः ! शान्तिं प्रयच्छ मे" ।

रक्तवस्त्रयुगस्य "रक्तवस्त्रयुगं यस्मादादित्यस्य प्रियं सदा । प्रदानादस्य मे सूर्य्यो ह्यतः शान्तिं प्रयच्छतु" ।

कृष्णवस्त्रस्य "धर्म्मराजेन विधृतं कृष्णवस्त्रं सुशोभनम् । सर्व्वक्लेशविनाशाय कृष्णवस्त्रं ददाम्यहम्" ।

छत्रस्य "छत्रमेव यतो लक्ष्मीश्छत्रमेव जनार्द्दनः । छत्रं ब्रह्मा-खिलत्राणमस्तु मे जन्मजन्मनि" ।

सोपदंशदध्यन्नस्य "चन्द्रमण्डलमध्यस्थं चन्द्राम्बुजसमप्रभम् । दध्यन्नं तस्य दानेन प्रीयतां वामनो मम । दध्यन्नं सोपदंशञ्च ब्रह्मविष्णुशिवात्मकम् । प्रीयतां धर्म्मराजो हि तद्दानान्मम सर्व्वदा" ।

सपानीयदध्यन्नस्य "पानीयसहितञ्चैतत् सदध्योदनपात्रकम् । समर्चितं तत् सफलं सदक्षिणं गृहाण दध्योदनपात्रकं मम" ।

कृशरान्नस्य "सर्व्वात्मा सर्व्वलोकेशः सर्व्वव्यापी सनातनः । नारायणः प्रसन्नः स्यात् कृशरान्नप्रदानतः" ।

पायसान्नस्य "पायसं परमान्नञ्च सर्व्वदानोत्तमोत्तमम् । सर्व्वदेवतयोग्यञ्च श्रेयःपुष्टिं प्रयच्छतु" ।

अपूपान्नस्य "आदित्यतेजसा भक्ष्यं जातिश्रैष्ठ्यकरं परम् । तदन्नं मम विप्र ! त्वं प्रतीच्छापूपमुत्तमम्" ।

सक्तूनाम् "प्राजापत्या यतः प्रोक्ताः सक्तवो यज्ञकर्म्मणि । तस्मात् सक्तून् प्रयच्छामि प्रीयतां मे प्रजापतिः" ।

रजतस्य "असुरेषु समुद्भूतं रजतं पितृवल्लभम् । तस्मादस्य प्रदानेन रुद्रः सम्प्रीयतां मम" ।

ताम्रपात्रस्य "परापवादपैशून्यादभक्ष्यस्य च भक्षणात् । तत्प्रजातञ्च यत् पापं ताम्रपात्रं प्रणाश्यतु" ।

कांस्यपात्रस्य "यानि पापानि काम्यानि कामोत्थानि कृतानि च । कांस्यपात्रप्रदानेन तानि नश्यन्तु मे सदा" ।

स्वर्णगर्भतिलपात्रस्य "देवदेव ! जगन्नाथ ! वाञ्छितार्थफल-प्रद ! । तिलपात्रं प्रदास्यामि तवाङ्गे संस्थितेरहम्" ।

दर्पणस्य "दर्शनेन त्वमादर्श ! नृणां मङ्गलदायकः । शौर्य्य-सौभाग्यसत्कीर्त्तिनिर्म्मलज्ञानदो भव" ।

मुक्तानाम् "ताम्रपर्ण्यर्णवोत्पन्ना वर्णाद्याकल्पवर्णिताः । मुक्ताः शुक्त्युद्भवाः सन्तु भुक्तिमुक्तिप्रदा मम" ।

सुवर्णपद्मस्य "त्वदुद्भवो जगत्स्रष्टुर्वेधसो हेमपङ्कजः । पद्मा-वासहरेर्नाभिजातो मां पाहि सर्व्वदा" ।

सिंहस्य "कान्तारवनदुर्गेषु चौरव्यालाकुले पथि । हिंसकास्तु न हिंसन्तु सिंहदानप्रभावतः" ।

अङ्गुलीयकस्य "हिरण्यगर्भसम्भूतं सौवर्णमङ्गुलीयकम् । धर्म्मप्रदं प्रयच्छामि प्रीयतां कमलापतिः" ।

वलयस्य "काञ्चनं हस्तवलयं रूपकान्तिसुखप्रदम् । विभूषणं प्रदास्यामि विभूषयतु मां सदा" ।

कुण्डलद्वयस्य "क्षीरोदमथने पूर्व्वमुद्भूतं कुण्डलद्वयम् । श्रिया सह यदुद्भूतं ददे श्रीः प्रीयतां मम" ।

तुलस्याः "मणिकाञ्चनपुष्पाणि मणिमुक्तामयानि च । तुल-सीपत्रदानस्य कलां नार्हन्ति षोडशीम् । तुलसीपत्र-दानाद्वा ब्रह्मणः कायसम्भवम् । पापप्रशमनं यातु सर्व्वे सन्तु मनोरथाः" ।

दुग्धस्य "अलक्ष्मीहरणं नित्यं नित्यं सौभाग्यवर्द्धनम् । क्षीरं मङ्गलमायुष्यं ततः शान्तिं प्रयच्छ मे" ।

नवनीतस्य "कामधेनोः समुद्भूतं विष्णोस्तुष्टिकरं परम् । नव-नीतं प्रदास्यामि बलं पुष्टिञ्च देहि मे" ।

आज्यस्य "कामधेनुसमुद्भूतं देवानामुत्तमं हविः । आयुर्वि-वर्द्धनं दातुराज्यं पातु सदैव माम्" ।

तैलस्य "तैलं पुष्टिकरं नित्यमायुष्यं पापनाशनम् । अमा-ङ्गल्यहरं पुण्यमतः शान्तिं प्रयच्छ मे" ।

पादुकायाः "कण्टकोच्छिष्टपाषाणवृश्चिकादिनिवारणम् । पादुके सम्प्रदास्यामि विप्र ! प्रीत्या प्रगृह्यताम्" ।

चामरस्य "शशाङ्ककरसङ्काश ! हिमडिण्डीरपाण्डुर ! प्रोत्सारयाशु दुरितं चामरामरवल्लभ !" ।

चन्दनखण्डस्य "चन्दनावासमन्दारसखे ! वृन्दारकार्च्चित ! । चन्दन ! त्वत्प्रसादान्मे सान्द्रानन्दप्रदो भव" ।

चन्दनाद्यनुलेपनस्य "श्रीखण्डकाण्डकर्पूरकस्तूरीकुङ्कुमा-

न्वितम्। विलेपनं प्रयच्छामि सौख्यमस्तु सदा मम"।

कस्तूर्याः "समस्तेभ्योऽपि वस्तुभ्यः संस्तुतासि सुरासुरैः। विन्यस्ताऽङ्केषु कस्तूरी सुखदाऽस्तु सदा मम"।

कर्पूरस्य "कन्दर्पदर्पदो यस्मात् कर्पूर! प्राणतर्पण!। अममात्मभवस्तापस्तद्दानादपसर्पतु"।

गोपीचन्दनस्य "यदभूदङ्गसंलग्नं कुङ्कुमादिविलेपनम्। जलक्रीडासु गोपीनां द्वारवत्यां जलार्पितम्। गोपीचन्दनमित्युक्तं मुनीन्द्रैः किल्बिषापहम्। तस्मादस्य प्रदानेन विष्णुर्दिशतु वाञ्छितम्"।

शिवप्रतिमायाः "त्वया सुराणाममृतं पिधाय हालाहलं संहृतमेव यस्मात्। तथाऽसुराणां त्रिपुरञ्च दग्धमेकेषुणा लोकहितार्थमीश!। तव प्रदानादहमप्यदोषी दोषैर्विमुक्तस्तु गुणान् प्रपद्ये। तथा कुरु त्वं शरणं प्रपद्ये मयि प्रभो! देववर! प्रसीद"।

उमामहेश्वरयोः "प्रसीदतु भवोनित्यं शक्तियाता महेश्वरः। पार्वत्या सहितोदेवोजगदुत्पत्तिकारकः"।

शिवलिङ्गस्य "शिवशक्त्यात्मकं यस्मात् जगदेतच्चराचरम्। तस्मादनेन सर्वं मे करोतु भगवान् शिवम्। कैलासवासी गौरीशो भगवान् भगनेत्रभित्। चराचरात्मकोलिङ्गरूपी दिशतु वाञ्छितम्"।

मरकतलिङ्गस्य "इदं मारकतं लिङ्गं रौप्यपीठसमन्वितम्। धान्यैर्द्वादशभिर्युक्तमेकादशफलान्वितम्। सम्प्रदद्यां विधानेन यथोक्तं फलमस्तु मे"।

काश्मीरलिङ्गस्य "काश्मीरलिङ्गपक्षे तु इदं काश्मीरजं वदेत्"।

सस्यभूमेः "सर्वभूताश्रया भूमिर्वराहेण समुद्धृता। अनन्तसस्यफलदा अतः शान्तिं प्रयच्छ मे"।

कर्पास्याः "कर्पासेषसमुत्पन्ना शीतवातभयापहा। यस्मात्तु भारहारी स्यादतः शान्तिं प्रयच्छ मे"।

कर्णापदस्य "कौर्णपदमनुष्ये यं स्वर्णवीजं तव प्रभो!। दत्तं गृहाण देवेश! पापं संहर सत्वरम्"।

धान्यस्य "धन्यं करोषि दातारमिह लोके परत्र च। तस्मात् प्रदीयते धान्यमतः शान्तिं प्रयच्छ मे"।

गोधूमानाम् "यस्मादन्नमयोजम्बूद्वीपो गोधूमसम्भवः। गान्धर्वसौख्यधनदः अतः शान्तिं प्रयच्छ मे"।

मुद्गानाम् "मुद्गबीजानि वै यस्मात् प्रियाणि परमेष्ठिनः। तस्मादेषां प्रदानेन प्रीतिः सिद्ध्यतु मे सदा"।

चणकस्य "पुरा गोवर्द्धनोद्धारसमये हरिभर्चिताः। चणकाः सर्वपापघ्ना अतः शान्तिं ददत्वमी"।

लवणस्य "रसानामग्रजं श्रेष्ठं लवणं बलवर्द्धनम्। ब्रह्मणा निर्मितं यस्मादतः शान्तिं प्रयच्छतु"।

यवानाम् "धान्यराजाश्च माङ्गल्या द्विजप्रीतिकरा यवाः। तस्मादेषां प्रदानेन ममास्त्वभिमतं फलम्"।

तिलानाम् "तिलाः पापहरा नित्यं विष्णोर्देहसमुद्भवाः। तिलदानेन सर्वं मे पापं नाशय केशव!"।

शर्करायाः "अमृतस्य कलोत्पन्नाः इक्षुधाराजशर्करा। सूर्यप्रीतिकरा नित्यमतः शान्तिं प्रयच्छ मे"।

खण्डस्य "मनोभवधनुर्मध्यादुद्भूतः शर्कराजनिः। तस्मादस्य प्रदानेन मम सन्तु मनोरथाः"।

गुडस्य "प्रणवः सर्वमन्त्राणां नारीणां पार्वती यथा। तथा रसानां प्रवरः सदैवेक्षुरसोमतः। मम तस्मात् परां लक्ष्मीं ददस्व गुड! सर्वदा"।

मधुनः "यस्मात्तितृणां श्राद्धे त्वं पीतं मध्वमृतोद्भवम्। तस्मात्तव प्रदानेन रक्ष मां दुःखसागरात्"।

उदकुम्भस्य "वारिपूर्णघटोपेतं देवत्रयमयं यतः। प्रीयतां धर्मराजोऽस्तु दानेनानेन पुण्यदः"।

उपानहोः "उपानहौ प्रदास्यामि कण्टकादिनिवारणे। सर्वस्थानेषु सुखदे अतः शान्तिं प्रयच्छतम्"।

व्यजनस्य "भुविता सर्वजन्तूनां शैत्यानन्दकरी शुभा। पितॄणां तृप्तिदा नित्यमतः शान्तिं प्रयच्छ मे"।

शालग्रामस्य "महाकोषनिवासेन चक्राद्यैरुपशोभितम्। अस्य देव! प्रदानात्तु मम सन्तु मनोरथाः"।

शिवनाभस्य "महाकोषनिवासी ते महादेवो महेश्वरः। प्रीयतां तव दानेन अतः शान्तिं प्रयच्छ मे"।

वैतरण्याः "यमद्वारे महाघोरे या सा वैतरणी नदी। तान्तर्तुकामोयच्छामि उत्तारय सुखेन माम्"।

धेनोः "यस्मात्त्वं पृथिवी सर्वा धेनुर्वैष्णवसन्निभा। सर्वपापहरा नित्यमतः शान्तिं प्रयच्छ मे"।

उत्क्रान्तिधेनोः "मृत्युक्रान्तौ प्रवृत्तस्य सुखकान्तिविवृद्धये। तुभ्यं सम्प्रददे नाम्ना गां समुत्क्रान्तिसंज्ञिताम्"।

मेष्याः "वाङ्मनःकायजनितं यत्किञ्चिन्मम दुष्कृतम्। तत् सर्वं विलयं यातु त्वद्दानेनोपसेविनाम्"।

शूलस्य "भगवन्! शूलहस्तेश! दक्षाध्वरविनाशन!। तवायुधप्रदानेन शूलं नश्यतु मे सदा"।

लोहपात्रस्य "यानि पापान्यनेकानि मया कामकृतानि च। लोहपात्रप्रदानेन तानि नश्यन्तु सर्वदा"।

रौप्यपात्रस्य "अगम्यागमनं चैव परदाराभिमर्षणम्। रौप्य-

पात्रप्रदानेन तानि नश्यन्तु मे सदा"।

सहिरण्यतिलानाम् "तिलाः स्वर्णसमायुक्ता दुरितक्षयकारकाः। विष्णुप्रीतिकरा नित्यमतः शान्तिं ददत्वमी"।

सहिरण्यतिलपात्रस्य "तिलाः पुण्याः पवित्राश्च सर्वकामकराः शुभाः। शुक्लाश्चैव तथा कृष्णा विष्णुगात्रसमुद्भवाः। यानि कानि च पापानि ब्रह्महत्यासमानि च। तिलपात्रप्रदानेन तानि नश्यन्तु मे सदा"।

कुष्माण्डस्य "ब्रह्महत्यादिपापघ्नं ब्रह्मणा निर्मितं पुरा। कुष्माण्ड! बहुबीजाढ्यमतः शान्तिं प्रयच्छ मे"

फलस्य "इदं फलं मया विप्र! प्रभूतं पुरतस्तव। तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि"।

मण्डकानाम् "आदित्यतेजसोत्पन्नाः सर्वमङ्गलकारकाः। मण्डकाः सर्वपापघ्ना अतः शान्तिं ददत्वमी"।

स्वर्णपात्रस्य "जन्मान्तरसहस्रेषु यत् कृतं दुरितं मया। स्वर्णपात्रप्रदानेन तस्य शान्तिरिहास्तु मे"।

आरोग्यार्थाज्यस्य "या याऽलक्ष्मीर्देहेषु सर्वगात्रे व्यवस्थिता। तत् सर्वं शमयाज्य त्वं लक्ष्मीं पुष्टिं च वर्द्धय"।

पापक्षयार्थाज्यस्य "आज्यं तेजः समुद्दिष्टमाज्यं पापहरं स्मृतम्। आज्यं सुराणामाहार आज्ये देवाः प्रतिष्ठिताः"।

आयुधस्य "त्वं देवानां मनुष्याणां रक्षणायायुधो ह्यसि। तस्मात् सर्वप्रयत्नेन शान्तिर्भवतु सर्वदा"।

भक्ष्याणाम् "केशवप्रीतिदा भक्ष्याः शम्भुब्रह्मार्कतुष्टिदाः। पृथग्विधापूपकाद्याः यच्छन्तु बलमीरसम्"।

काष्ठानाम् "सोमोद्भवानि दारूणि जातवेदःप्रियाणि च। तस्मादेषां प्रदानेन श्रियं देहि विभावसो!"।

कुलत्थस्य "अग्निवर्णोद्भवो नाम बलकीर्त्तिप्रवर्द्धनः। कुलत्थः सर्वपापघ्नः अतः शान्तिं प्रयच्छ मे"।

शस्यक्षेत्रस्य "सदा रोहन्ति बीजानि काले क्षेत्रे महीतले। तव प्रदानात्सफला मम सन्तु मनोरथाः"।

संक्रान्तिशूलस्य "सर्वग्रहर्क्षतारेश! सर्वेश! त्वं हि भास्कर!। संक्रान्तिशूलदोषं मे निवारय दिवाकर!"।

पुस्तकस्य "सर्वविद्याश्रयं ज्ञानकरणं ललिताक्षरम्। पुस्तकं सम्प्रयच्छामि प्रिया भवतु भारती"।

तण्डुलानाम् "अन्नेन जायते विश्वप्राणिनां प्राणरक्षणम्। तण्डुला वैश्वदैवत्याः पाकेनान्नं भवन्ति वै। पावनाः सर्वयज्ञेषु प्रशस्ता होमकर्मणि। तस्मात्तण्डुलदानेन प्रीयन्तां विश्वदेवताः"।

पुष्पाणाम् "आश्रयन्ति मनो यस्मात् तस्मात् सुमनसः स्मृताः। दत्ता ददतु मे नित्यमत्याह्लादयुतां श्रियम्"।

जीरकस्य "जीरको जायते यस्मान्मङ्गलं शुभकर्मसु। तस्माज्जीरकदानेन प्रीयतां गिरिजा मम"।

ताम्बूलस्य "ताम्बूलं श्रीकरं भद्रं ब्रह्मविष्णुशिवात्मकम्। अस्य प्रदानात् ब्रह्माद्याः शिवं ददतु पुष्कलम्"।

ताम्बूलकरङ्कस्य "पूरितं पूगपूरेण नागवल्लीदलान्वितम्। पूर्णेन चूर्णपात्रेण कर्पूरपूरकेण च। सपूगखण्डनं दिव्यं गन्धर्वाप्सरसां प्रियम्। करङ्क! त्वं गुणाधारस्त्वत्प्रदानात् कुरुष्व माम्"।

हरिद्रायाः "लक्ष्मीप्रिया या लक्ष्मीदा लक्ष्मीवद्दुःस्वप्नप्रिया। सौभाग्यसहरस्त्रीणां हरिद्रा श्रीप्रदाऽस्तु मे"।

सौभाग्यवस्त्रयुग्मस्य "कञ्चुकीवस्त्रयुग्मेन तथाकर्णावतंसकैः। कण्ठसूत्रेण भूषाभिः प्रीयतां मिथिलनन्दिनी"(सीता)।

शूर्पस्य "रामपत्नि! महाभागे! पुण्यमूर्त्ते! निरामये!। गृहाणेमानि शूर्पाणि मया दत्तानि जानकि!"।

कमण्डलोः "कमण्डलुर्जलैः पूर्णः स्वर्णगर्भः सुलक्षणः। अर्पितस्ते महासेन! प्रसन्नश्च सदा भव"।

यज्ञोपवीतस्य "ब्रह्मसूत्रं महादिव्यं मया यत्नेन निर्म्मितम्। ब्राह्म्यं जन्मास्तु मे देव! ब्रह्मसूत्रसमर्पणात्"।

अक्षमालायाः "अष्टाविंशतिसंख्याकैरुद्राक्षैर्योजिता मया। अर्पिता तव हस्ते च गृहाण सुरसैन्यक!"।

स्वर्णनागस्य "विधुन्तुद! नमस्तुभ्यं सिंहिकानन्दनाच्युत!। दानेनानेन नागस्य रक्ष मां वेधजाद्भयात्"।

इक्षुदण्डस्य "इक्षुदण्डं महापुण्यं रसालं सर्वकामदम्। तुभ्यं दास्यामि तेनाशु प्रीयतां परमेश्वरः"।

गन्धद्रव्यस्य "कर्पूरः कदलीभूतो देवदेवप्रियः सदा। भाग्योत्तमो न्वपाणाञ्च तद्दानात् सुखमश्नुते। जटामांसुद्भवं देवीमणिनाभिसमुद्भवम्। भक्त्याहं संप्रदास्यामि मम सन्तु मनोरथाः"।

सूर्य्यमूर्त्तेः "ददाति भानुर्भवनं सर्वोपस्करसंयुतम्। मनोऽभिलषितावाप्तिं करोतु मम भास्करः"।

गणेशप्रतिमायाः "यमामनन्ति विघ्नेशं विश्वनाथसुपासुतम्। विघ्नेशं तं विप्रवर! तुभ्यं दास्याम्यभीष्टदम्"।

गोमात्रस्य "गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश। यस्मात् तस्माच्छिवं मे स्यादिह लोके परत्र च"।

शय्यायाः "यस्मादशून्यं शयनं केशवस्य शिवस्य च। शय्या ममाप्यशून्यास्तु तथाज्जन्मनि जन्मनि"।

रत्नस्य "यथा रत्नेषु सर्वेषु सर्वे देवा व्यवस्थिताः। तथा शान्तिं प्रयच्छन्तु रत्नदानेन मे सुराः"।
भूमेः "यथा भूमिप्रदानस्य कलां नार्हन्ति षोडशीम्। दानान्यन्यानि मे शान्तिर्भूमिदानाद्भवत्विह"।
दास्याः "इयं दासी मया तुभ्यं श्रीवत्स! प्रतिपादिता। तव कर्म्मकरी भोग्या यथेष्टं भद्रमस्तु मे"।
रथस्य "रथाय रथनाथाय नमस्ते विश्वकर्म्मणे। विश्वभूताय नाथाय ब्रह्मणाय नमोनमः"।
छत्रस्य "इहामुत्रभयत्राणं कुरु केशव! मे प्रभो!। छत्रन्त्वत्प्रीतये दत्तं ब्राह्मणाय मया शुभम्"।
शिबिकायाः "देवदेव! जगन्नाथ! विश्वात्मन्! दत्तयानया। प्रभो! शिबिकया देव! प्रीतो भव जनार्द्दन!।
गृहस्य "इदं गृहं गृहाण त्वं सर्वोपस्करसंयुतम्। तव विप्र! प्रसादेन ममास्त्वभिमतं फलम्"।
आश्रयस्य "समाश्रयं प्रयच्छामि प्रीत्यर्थं ते जगन्निधे!"। तव विप्र! प्रसादेन ममास्त्वभिमतं फलम्"।
कन्यायाः "गौरीकन्यामिमां विप्र! यथाशक्ति विभूषिताम्। गोत्राय शर्मणे तुभ्यं विप्र! त्वं तां समाश्रय"।
महिष्याः "चन्द्रादिलोकपालानां या राजमहिषी शुभा। महिषीदानमाहात्म्यादस्तु मे सर्वकामदम्। धर्म्मराजस्य साहाय्ये यस्याः पुत्रः प्रतिष्ठितः। महिषासुरस्य जननी साऽस्तु मे सर्वकामदा"।
सवत्समहिष्याः "महिषीं वत्ससंयुक्तां सुशीलाञ्च पयस्विनीम्। रत्नवस्त्रेण पुष्पेण दत्त्वा स्यात्स्वर्गेश्वरः"।
मेषस्य "रोमत्वङ्मांसमज्जाद्यैः सर्वोपकरणैः शुभः। जगतः, सम्प्रदत्तोऽसि त्वामतः प्रार्थये शिवम्"
अजायाः "देवानां योमुखं हव्यवाहनः सर्वपूजितः। तस्य त्वं वाहनं पूज्यं देवैः सेन्द्रैर्महर्षिभिः। अग्निमान्द्यं पूर्वकर्मविपाकोत्थन्तु यन्मम। तत्सर्वं नाशय क्षिप्रं जठराग्निं विवर्द्धय। त्वं पूर्वं ब्रह्मणा सृष्टा पवित्रा भवती परा। त्वत्प्रसूत्युत्थिता यज्ञाः तस्माच्छान्तिकरी भव"। तुलापुरुषादीनां देयद्रव्याणां मन्त्रास्तु तत्तच्छब्दे दृश्याः। अन्यद्रव्यदानमन्त्रा अपि केचित् क्वचिदुक्ता अनुसन्धेयाः।

**दानक** न॰ कुत्सितं दानम् "दान कुत्सिते" पा॰ग॰सू॰यावा॰ कन्। कुत्सिते दाने।

**दानकाम** त्रि॰ दानं कामयते कम–स्वार्थे णिङ् अण्। दानशीले "गौतमस्तोमेन यदीच्छेद्दानकामा मे प्रजा स्यादिति" कात्या॰श्रौ॰ ८।१।१४।

**दानच्युत** पुंस्त्री गोत्रप्रवर्षिभेदे कार्त्त॰कौ॰ बाभ्रवशब्देनास्य द्वन्द्वे पूर्वपदे प्रकृतिस्वरः बाभ्रवदानच्युताः।

**दानधर्म्म** पु॰ दानरूपो धर्मः। दानात्मके धर्मे स च भारते आनुशासनपर्वणि ५७ अध्यायावधिषु ६८ अध्यायान्तेषु विस्तरेणोक्तः। अन्यत्र "अथातः संप्रवक्ष्यामि दानधर्ममनुत्तमम्। अर्थानामुचिते पात्रे श्रद्धया प्रतिपादनम्। दानन्तु कथितं तज्ज्ञैर्भुक्तिमुक्तिफलप्रदम्। न्यायेनोपार्जयेद्वित्तं दानभोगफलञ्च तत्। अध्यापनं याजनञ्च वृत्तिर्विप्रे प्रतिग्रहः। रक्षणं विजयश्चैव क्षत्रवृत्तिरुदाहृता। कुसीदं कृषिवाणिज्यं वैश्यवृत्तिः सुमावजा। यद्दीयते च पात्रेभ्यस्तद्दानं परिकीर्त्तितम्। नित्यं१ नैमित्तिकं२ काम्यं३ विमलं४ दानमीरितम्। अहन्यहनि यत् किञ्चिद्दीयतेऽनुपकारिणे। अनुद्दिश्य फलं तत् स्यात् ब्राह्मणाय तु नित्यकम्१। यत्तु पापोपशान्त्यै च दीयते विदुषां करे। नैमित्तिकं२ तदुद्दिष्टं दानं सद्भिरनुष्ठितम्। अपत्यविजयैश्वर्य्यस्वर्गार्थं यत् प्रदीयते। दानं तत् काम्य(३)माख्यातमृषिभिर्धर्मचिन्तकैः। ईश्वरप्रीणनार्थाय ब्रह्मवित्सु प्रदीयते। चेतसा सत्त्वयुक्तेन दानं तत् विमलं४ स्मृतम्" इत्युपक्रम्य गारुडे ५१अ॰उक्तः। "दानधर्मात् परोधर्मो भूतानां नेह विद्यते" तत्रैवाध्याये

**दानपति** पु॰ ६त॰। १अक्रूरे यादवभेदे। "गच्छत्वयं दानपतिः क्षिप्रमानयितुं व्रजात्। नन्दगोपस्य गोपांश्च करदान् मम शासनात्" हरिवं॰ ७६ अ॰। "श्वफल्किः स्यन्दनेनाशु प्राप्तो दानपतिर्व्रजम्" ८२ अ॰। २वदान्यपदे, त्रि॰ "यज्वा दानपतिर्धीमान् यथा नान्योऽस्ति कश्चन" भा॰ आ॰२२३अ॰। ३असुरभेदे पु॰। "रणोत्कटो दानपतिः शैलध्वंसी कुलाकुलः" हरिवं॰२४० अ॰ असुरोक्तौ।

**दानपात्र** न॰६त॰। दानयोग्ये ब्राह्मणभेदे दानशब्दे दृश्यम्

**दानफल** न॰ ६त॰। दानजन्ये फलभेदे तत्र दानभेदे कतिचित् फलभेदा वह्नि॰पु॰उक्ता यथा "गत्वा यद्दीयते दानं भक्त्या पात्रे विधानतः। तदनन्तफलं विद्धि अवस्थात्रितये नृप!। तमोवृतस्तु यो दद्यात् भयात् क्रोधात्तथैव च। नृप! दानन्तु तत् सर्वं भुङ्क्ते गर्भस्थ एव तु। ईर्ष्यामन्युमनाश्चैव दम्भार्थं चार्थकारणात्। यो ददाति द्विजातिभ्यः स बाल्ये तु तदश्नुते। वैश्वदेवविहीनञ्च सन्ध्योपासनवर्जितम्। यद्दानं दीयते तस्मै वृद्धकाले तदश्नुते। इयाजन्मानि

चत्वारि इथा दानानि षोडश । तान्यहं संप्रवक्ष्यामि यथावदनुपूर्वशः । अपुत्रस्य१ इथाजन्म धर्मवाह्या नराः२ सदा । परपाकं सदाश्नन्ति३ परतापरतास्व४ ये । देवपितृविहीनं१ यत् ईश्वरेभ्यः स्वदोषतः२ । दत्त्वानुकीर्तनाच्चैव३ वेदाग्निव्रतत्यागिने४ । अन्यायोपार्जितं दानं५ व्यर्थं ब्रह्महणे६ तथा । गुरवेऽन्तवक्त्रे ७यत् स्तेनाय८ पतिताय९ च । कृतघ्नाय१० च यद्दत्तं सर्वदा ब्रह्मविद्विषे ११। याचकाय१२ च सर्वस्य वृषल्याः पतये१३ तथा । परिचारकाय१४ भृत्याय१५ सर्वत्र पिशुनाय१६ च। इत्येतानि तु राजेन्द्र ! इथा दानानि षोडश" ।

**दानव** पु० दनोरपत्यम् अण् । कश्यपपत्न्याः दक्षकन्याभेदस्य दनोरपत्ये । १दानवाश्च भा०आ०६५अ०उक्ता यथा"चत्वारिंशद्दनोः पुत्राः ख्याताः सर्वत्र भारत ! । तेषां प्रथमतो राजा विप्रचित्तिर्महायशाः । शंवरो नमुचिश्चैव पुलोमा चेति विश्रुतः । असिलोमा च केशी च दुर्जयश्चैव दानवः । अयःशिरा अश्वशिरा अश्वशङ्कुश्च वीर्यवान् । तथा गगनमूर्द्धा च वेगवान् केतुमांश्च सः । स्वर्भानुरश्वोऽश्वपतिर्वृषपर्वाजकस्तथा । अश्वग्रीवश्च सूक्ष्मश्च तुहुण्डश्च महावलः । एकपादेकचक्रश्च विरूपाक्षमहोदरौ । निचन्द्रश्च निकुम्भश्च कुपटः कपटस्तथा । शरभः शलभश्चैव सूर्यचन्द्रमसौ तथा । एते ख्याता दनोर्वंशे दानवाः परिकीर्त्तिताः" "दानवांश्च विबुधा विजिग्यिरे" माघः । दानवस्येदम् अण् । २दानवसम्बन्धिनि त्रि० स्त्रियां ङीप् । "मायाश्चाश्चै ददौ सर्वाः दानवीः काममोहिता" हरिवं० १६२अ० ।

**दानवगुरु** पु० ६त०। शुक्राचार्य्ये

**दानवज्र** पु० दैवे गान्धर्वे च वैश्यजातिके अश्वभेदे । "देवगन्धर्ववाहास्ते दिव्यवर्णा मनोजवाः । क्षीणाक्षीणा भवन्त्येते न हीयन्ते च रंहसः । पुरा कृतं महेन्द्रस्य वज्रं वृत्तनिवर्हणम् । दशधा शतधा चैव तच्छीर्णं वृत्रमूर्द्धनि । ततो भागीकृतो देवैर्वज्रभाग उपास्यते । लोके यशोधनं किञ्चित् सा वै वज्रतनुः स्मृता । वज्रपाणिर्ब्राह्मणः स्यात् क्षत्रं वज्ररथं स्मृतम् । वैश्या वै दानवज्राश्च कर्मवज्रा यवीयसः । क्षत्रं वज्रस्य भागेन अवध्या वाजिनः स्मृताः । रथाङ्गं वडवा सूते शूराश्चाश्वेषु ये मताः । कामवर्णाः कामजवाः कामतः समुपस्थिताः । इति गन्धर्वजा कामं पूरयिष्यन्ति ते हयाः" भा०आ०१७०अ०।

**दानवारि** पु०६त० । १देवे २विष्णौ च । दानं गजमदरूपं वारि । ३गजमदजले न० । "सेनाचरीभवदिभाननदानवारिवासेन यस्य जनिताऽसुरभी रजश्रीः"नैष० "कटस्थलप्रोषितदानवारिभिः" माघः ।

**दानवीर** पु० १वीररसभेदे तदाश्रये २नायकभेदे च । "स च दानधर्मयुद्धैर्दयया च समन्वितश्चतुर्द्धा स्यात्" । स च वीरः दानवीरो धर्मवीरो दयावीरो युद्धवीरश्चेति चतुर्विधः तत्र दानवीरो यथा परशुरामः । "त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिरिति" अत्र परशुरामस्य त्यागे उत्साहः स्थायी भावः । सम्प्रदानब्राह्मणैरालम्बनविभावैः सत्त्वाध्यवसायादिभिश्चोद्दीपनविभावैर्विभावितः सर्वस्वत्यागादिभिरनुभावितो हर्षधृत्यादिभिः सञ्चारिभिः पुष्टिं नीतो दानवीरतां भजते" सा० द० ।

**दानवेय** पु०दन्वाः अपत्यं दनु–स्त्रियां मनुष्यजातित्वात् ऊङ् । ततः "स्त्रीभ्यो ढक्" पा० ढक् । दनुनाम्न्यां दक्षकन्याया अपत्ये "दैतेया दानवेयाश्च किमिच्छन्ति पराक्रमात्" हरिवं०२२१अ० "विष्णुना निहतेष्वेव दानवेयेषु ते हताः" भा०क०७२अ०।

**दानशील** त्रि० दानं शीलं सततमनुष्ठानं यस्य । बहुदातरि "यत् फलं दानशीलस्य क्षमाशीलस्य यत् फलम्" भा० भी० १२० अ० ।

**दानशौण्ड** त्रि० दाने शौण्डः दक्षः । बहुप्रदे अमरः "निर्गुणोऽपि विमुखो न भूपतेर्दानशौण्डमनसः पुरोऽभवत्" माघः ।

**दानसागर** पु० गौडदेशप्रसिद्धे भूम्यासनानादीनां षोडशानां पदार्थानां प्रत्येकं षोड़शसंख्यान्विते देयद्रव्यभेदे । "यः कश्चित् कुरुते देवि ! षड्दशे दानसागरम् । इषोत्सर्गं महादानं यत् किञ्चित् पृथिवीतले" कामधेनुत० २५ पटले । दानानां सागर इव प्रतिपादकतया आधार इव । २तुलापुरुषादिमहादानानां विधानज्ञापके स्मृतिनिबन्धभेदे ।

**दानयोग्य** त्रि० ६त०। दानशास्त्रोक्ते दानस्य पात्रे ।

**दानीय** त्रि०दीयतेऽस्मै दा–बा०सम्प्रदाने अनीयर् । १सम्प्रदाने । "दानीयः प्रभवो लयः"मुग्ध०। दानमर्हति यत् । २दानयोग्ये दानपात्रे च ।

**दानु** त्रि० दा–दाने दो–खण्डने वा कर्त्तरि नु। १दातरि २विक्रान्ते मेदि०। ३वायौ ४सुखे च संक्षिप्तसा० उणा०। ५दानवे च। "दानुं शयानं स जघान इन्द्रः" ऋ०

३।२।११। "दानुं दानवम्" माधवः भावे तु। ६दाने ७वर्षणे च वेद न० "यवं न दृष्टिर्दिव्येन दानुना" ऋ०१०। ४३।७ "दानुना दानेन वर्षणेन वा" भा० "आदित्या दानुनस्पती" ऋ० १।१३६।१। "दानुनः दानस्य" भा०कर्मणि तु।८देये धने च। "करत्तिस्रोमघवा दानुचित्राः" ऋ०१।१७४।७ "दानुभिर्देयैर्धनैश्चित्राः" भा०

**दान्त** त्रि० दम–कर्त्तरि क्त। १वहिरिन्द्रियनिग्रहकर्त्तरि "शान्तोदान्त उपरतस्तितिक्षुः श्रद्धावान् समाहितो भूत्वात्मन्यात्मानमवलोकयेत्" वेदान्तसारधृता श्रुतिः। दम–णिच्–क्त नि०। २दमिते ३शिक्षिते वलीवर्दादौ त्रि० ४दमनकवृक्षे पु० राजनि०। [न्द्रियनिग्रहे च।

**दान्ति** स्त्री दम–क्तिन्। १तपःक्लेशादिसहिष्णुतायां २वाह्ये-

**दापित** त्रि० दा–णिच्–कर्मणि क्त। १साधिते २दण्डिते दापितधनके ३प्रतिवाद्यादौ च।

**दाप्य** त्रि०दा–णिच्–कर्मणि यत्। १दण्ड्ये २दापनीये च।

**दाम** न० दो–खण्डने वा०करणे मन्। १पश्वादिवन्धनरज्ज्वौ "स्रग्दामभिरिव चित्रिता" भा० भी०५७अ०। "सन्तानमाल्यदामं च तैरेव कुसुमैः कृतम्" हरिवं०१४५ अ०। भावे मन् २खण्डने। दम्यते अनुशिष्यते दम–कर्मणि घञ् वा०दीर्घः। लोके विश्वसंसारे दामोदरशब्दे दृश्यम्।

**दामकण्ठ** पु० गोत्रप्रवर्त्तकर्षिभेदे तस्य गोत्रापत्यम् इञ्। दामकण्ठि तदीये यून्यपत्ये ततः उपका० छञ् अद्वन्द्वे च बहुषु युवप्रत्ययस्य लुक्। कलशीकण्ठदामकण्ठाः दामकण्ठा वा इत्येवम्।

**दामग्रन्थि** पु० मत्स्यराजविराटस्य सेनापतिभेदे "अथ मत्स्योऽब्रवीद्राजा शतानीकं जघन्यजम्। कङ्कबल्लभगोपालदामग्रन्थिश्च वीर्य्यवान्। युध्येयुरिति मे बुद्धिर्वर्त्तते नात्र संशयः" भा०वि०३१अ०

**दामचन्द्र** पु० द्रुपदनृपस्य पुत्रभेदे "धृष्टद्युम्नः शिखण्डी च दौर्म्मुखिर्जनमेजयः। चन्द्रसेनो रुद्रसेनः कीर्त्तिवर्मा ध्रुवो धरः। वसुचन्द्रो दामचन्द्रः सिंहचन्द्रः सुतेजनः। द्रुपदस्य तथा पुत्रा द्रुपदश्च महास्त्रवित्" भा० द्रो० १५८ अ०

**दामन्** न०स्त्री दो–खण्डने करणभावादौ मनिन्। दोहनकाले पश्वादिपादबन्धनरज्ज्वौ (छाँदनदड़ि) २मालायां ३रज्जुमात्रे अमरः बहुप्रयङ्युक्ते एकस्मिन् यत्र पशवो बध्यन्ते (दोका)ख्याते ४पदार्थे च "भाति स्म दामापदीनमस्य" माघः स्त्रियां नान्तत्वेऽपि मनन्तत्वात् न ङीप्। दामानौ दामानः किन्तु वा डाप्। दामे दामा इत्यादि

**दामनपर्वन्** न० दमनस्येदमण् दामनं पर्व यत्र। दमनभञ्जनतिथौ १चैत्रशुक्लचतुर्दश्याम् २तन्मासीयद्वादश्यादिषु च दमनशब्दे मूलं दृश्यम्। "सत्तीर्थेऽर्कविषुवयोः तन्तुदामनपर्वणोः" नरसिंहपु० तन्तुपर्वशब्दे दृश्यम्

**दामनि** पु० दमनस्यापत्यम् इञ्। १दमनस्यापत्ये २आयुधजीविसंघभेदे च ततः स्वार्थे दामन्यादि० छ। दामनीय तदर्थे बहुत्वे तु तद्राजत्वात्तस्य लुक्। दामनय इत्येव

**दामनी** स्त्री दामैव प्रज्ञा० स्वार्थे अण् अणि न नलोपः ङीप्। पशुबन्धनरज्ज्वौ अमरः "दामनीदामभारैश्च केचित् कायावलम्बिभिः। कीलैरारोप्यमाणैश्च दामनीपाशपाशितैः" हरिवं०६६अ०

**दामन्यादि** पु० "दामन्यादित्रिगर्त्तषष्ठाछः" पा० छप्रत्ययनिमित्ते पा०ग० सूत्रोक्ते शब्दगणे स च गणः "दामनि औलपि वैजवापि औदकि औदङ्कि आच्युतन्ति आच्युतदन्ति शाकुन्तकि आकिदन्ति औड़वि काकदन्तकि शात्रुन्तपि सार्वसेनि विन्दुवैन्दवि तुलभ मौञ्जायन काकन्दि सावित्रीपुत्र"।

**दामलिप्त** न० तमोलिप्तनगरे (तमलुक) हेम०

**दामलिह्** पु०दाम–लेढि लिह–क्विप्। १दामलेहके। तमात्मन इच्छति क्यच् दामलिह्यति ततः क्विप्। २आत्मनो दामलेहकेच्छौ "दादेर्धातोर्घः" पा०उपदेशे दादेरिति विशेषणात् अस्य उपदेशे दादित्वाभावात् न घः सि०कौ०।

**दामाञ्जन** न० दाम्नः अञ्जनम्। अश्वादेः पादबन्धनरज्ज्वौ (पिछाड़ि) हेमच०दामाञ्जनमपत्यार्थे हारावली "दामाञ्जनस्खलितलोलपदं तुरङ्गाः" माघः।

**दामिनी** स्त्री भीमो भीमसेनेनवत् दामा सुदामा नगः स एकदेशत्वेनास्त्यस्य "संज्ञायां मन्माभ्याम्" पा० इनि ङीप्। सौदामन्यां विद्युति।

**दामोदर** पु० दाम बन्धनसाधनं उदरे यस्य। यशोदानन्दने कृष्णे तत्कथा "ततो यशोदा संक्रुद्धा कृष्णं कमललोचनम्। आनाय्य शकटीमूले भर्त्सयन्ती पुनः-पुनः। दाम्ना चैवोदरे बद्ध्वा प्रत्यबध्नाद्दुलूखले। यदि शक्नोषि गच्छेति तमुक्त्वा कर्म साऽकरोत्" इत्युपक्रमे "स च तेनैव नाम्ना तु कृष्णो वै दामबन्धनात्। घोषे दामोदर इति गोपिभिः परिगीयते" हरिवं० ६४अ० "विदारो रोहितोमार्गो हेतुर्दामोदरः सहः" विष्णु०स०। शाङ्करभाष्ये तु अस्यान्यापि व्युत्पत्तिर्दर्शिता यथा

"दमादिसाधनेनोदरा उत्कृष्टा गतिर्या तया गम्यत इति दामोदरः। "दमाद्दामोदरं विदुरिति" महाभारते यशोदया दाम्नोदरे बद्ध इति वा "दामानि लोकनामानि तानि यस्योदरान्तरे। तेन दामोदरस्त्वेषः श्रीधरस्त्विटत्वमाश्रितः" इति व्यासवचनात् वा दामोदरः। "दमो बहिरिन्द्रियनिग्रहः तज्जन्यो दामः तस्येदमित्यण् ऋ गताविति धातोर्भावे "ऋदोरप्"पा० अपि गुणे रपरत्वे च अरः अवगतिः गत्यर्थानां ज्ञानार्थकत्वात्तस्य विशेषणमुदिति उत्कृष्ट इत्यर्थः तथा च दामो दमसाधकः उत् उत्कृष्टः अरः अवगतिः साक्षात्काररूपास्येति दामोदरः। उत्कृष्टा च गतिः धूमादिगतिमपेक्ष्यार्चिरादिः दमादिसाधना अस्य मनुष्यस्येति दामोदरनामनिरुक्तिः। "तवोर्मध्यगतं बद्धं दाम्ना गाढं तथोदरम्। ततश्च दामोदरतां स ययौ दामबन्धनादिति" ब्रह्मपुराणम् इति आनन्दगिरिः। २अतीते अर्हद्भेदे हेमच०। वर्द्धमानपुरसन्निकृष्टे ३नदभेदे च। ४शालग्राममूर्त्तिभेदे तल्लक्षणं पद्मपुराणे यथा "स्थूलो दामोदरो ज्ञेयः सूक्ष्मचक्रो भवेत्तु सः। चक्रे तु मध्यदेशेऽस्य पूजितः सुखदः सदा"। ब्रह्माण्डपुराणे "दामोदरस्तथा स्थूलो मध्यचक्रः प्रतिष्ठितः" प्रतिष्ठित इत्यत्र प्रकीर्तित इति क्वचित् पाठः। "दूर्वाभं द्वारसङ्कीर्णं पीतरेखायुतं शुभम्"। "पीतरेखा तथैव चेति" ब्रह्मपुराणे पाठः। ब्रह्मपुराणे "उपर्य्यत्र चक्रे द्वे नातिदीर्घं मुखे बिलम्। मध्ये च रेखा लम्बैका स च दामोदरः स्मृतः"। अन्यत्र "स्थूलो दामोदरो ज्ञेयः सूक्ष्मरन्ध्रो भवेत्तु यः। चक्रे तन्मध्यदेशस्थे पूजितः शुभदः सदा"। ब्रह्मवै०प्रकृतिखण्डे "द्विचक्रं स्फुटमत्यन्तं ज्ञेयं दामोदराभिधम्"। मत्स्यसूक्ते "विम्बकृष्णमतिस्थूलं लघु दामोदरं स्मृतम्"

दामोष्णीष पु० गोत्रप्रावर्त्तकप्रवरर्षिभेदे "दामोष्णीषस्त्रैवलिश्च पर्णादो वरजानुकः" भा० स० ४ अ०। युधिष्ठिरसभासभ्योक्तौ। तस्यापत्यं कुर्वा०ण्य। दामोष्णीष्य तदपत्ये पुंस्त्री

दाम्पत्य न० दम्पत्योरिदं पत्यन्तत्वात् यक्। १दम्पतिसम्बन्धिनि अग्निहोत्रादौ २दम्पत्योरन्योन्यप्रीतौ च "ब्रह्मवर्चसकामस्तु यजेत ब्रह्मणस्पतिम्" इत्युपक्रमे "विद्याकामस्तु गिरिशं दाम्पत्यार्थमुमां सतीम्" भाग०२।३।८।

दाम्भिक त्रि० दम्भेन चरति धर्मं ठक्। लोकेषु कीर्त्यादिख्यापनार्थं धर्मचारिणि १वैडालव्रतिनि, २दम्भयुक्ते च। "पापरोग्यभिशस्तश्च दाम्भिको रसविक्रयी" मनुना रसविक्रयकर्मविपाकः दाम्भिकत्वमित्युक्तम्। "दाम्भिको दुष्कृतः प्राज्ञः शूद्रेण सदृशो भवेत्" भा०व० २१५ अ०। ३बकपक्षिणि पुंस्त्री०राजनि०।

दाय दाने भ्वा०आत्म०सक०सेट्। दायते अदायिष्ट अदायिढ्वम् अदायिध्वम्। ऋदित् णिच् अददायत-त।

दाय पु० दा—दाने भावे घञ्। १दाने "मिथोदायः कृतो येन गृहीतो मिथ एव वा। मिथ एव प्रदातव्यो यथा दायस्तथा ग्रहः। अस्वामिना कृतो यस्तु दायो विक्रय एव वा" मनुः। दीङ् क्षये भावे घञ्। २क्षये अजयपालः ३स्थाने मेदि०। दो—खण्डने भावे घञ्। ४खण्डने शब्दरत्ना० ५सोल्लुण्ठनभाषणे मेदि०। तस्य परोक्तस्य खण्डनरूपत्वात् तथात्वम्। दा—दाने कर्मणि घञ्। ६देये धनादौ "ते तत्र विविधान् दायान् विजयार्थं नरेश्वराः" भा०आ०१८४ अ०। "संस्थाः सु सारसंस्थित्यै दत्तदायाः शुभाशयाः" काम०नीति० "दायन्तु विविधं तस्मै शृणु मे गदतोऽनघ। यत्नार्थं राजभिर्द्दत्तं महान्तं धनसञ्चयम्" भा०स०५१अ०। ७विवाहकाले कन्यायै दीयमाने यौतकादिधने कन्यादानकाले जामात्रादिभ्यो ८देये धने व्रतान्तभिक्षादौ समावृत्तब्रह्मचारिभ्यो ९दीयमाने धने च १० विभागार्हपित्रादिधने च दायभागशब्दे दृश्यम्।

दायक त्रि०दा—दाने ण्वुल्। १दातरि "तावतां गोसहस्राणां फलं प्राप्नोति दायकः" भा०व०१८२अ० "चौराणां भक्तदायकाः" मनुः। दो—खण्डने ण्वुल्। २खण्डके च। दायेन धनेन कायति कै-क। ३दायादे "ग्रहा इति समाख्याता यजमानस्य दायकाः" ग्रहास् दायका दायादा इत्यर्थः।

दायबन्धु पु० दाये बन्धुः। भ्रातरि शब्दरत्ना०

दायभाग पु०दायस्य सम्बन्धिभिर्भागो यत्र। अष्टादशविवादान्तर्गते विवादपदभेदे तन्निरूपणं जीमूतवाहनकृते दायभागे यथा "अथ दायभागो निरूप्यते तत्र नारदः "विभागोऽर्थस्य पित्र्यस्य पुत्रैर्यत्र प्रकल्प्यते। दायभाग इति प्रोक्तं तद्विवादपदं बुधैः"। पितृत आगतं पित्र्यं तच्च पितृमरणोपजातस्वत्वमुच्यते। पित्र्यस्येति पुत्रैरिति च द्वयमपि सम्बन्धिमात्रोपलक्षणं सम्बन्धिमात्रेण सम्बन्धिमात्रधनविभागेऽपि दायभागपदप्रयोगात् अतएव दायभागं विवादपदमुपक्रम्य नारदोऽपि मात्रादिधन-

विभागमप्युपदर्शितवान् तथा मनुरपि पित्रादिपदमदत्त्वैव "एष स्त्रीपुंसयोरुक्तो धर्मो वो रतिसंहितः। आपद्यपत्यप्राप्तिश्च दायभागं निबोधत" इत्युपक्रम्य यावत्सम्बन्धिधनविभागमुक्तवान्। दीयत इति व्युत्पत्त्या दायशब्दो ददातिप्रयोगश्च गौणः मृतप्रव्रजितादिस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्तिफलसाम्यात् न तु मृतादीनां तत्र त्यागोऽस्ति। ततश्च पूर्वस्वामिसम्बन्धाधीनं तत्स्वाम्योपरमे यत्र द्रव्ये स्वत्वं तत्र निरूढो दायशब्दः। ननु किं दायस्य विभागो विभक्तावयवत्वं? यद्वा दायेन सह विभागोऽसंयुक्तत्वं? न तावत् पूर्वः दायविनाशापत्तेः नापि द्वितीयः संयुक्तोऽपि न ममेदं विभक्तं स्वं भ्रातुरिदमिति प्रयोगात्। न च सम्बन्धविशेषात् सर्वेषां सर्वधनोत्पन्नस्य स्वत्वस्य द्रव्यविशेषे व्यवस्थापनं विभाग इति वाच्यं सम्बन्ध्यन्तरसद्भावप्रतिपन्नस्य सम्बन्धस्यावयवेष्वेव विभागव्यङ्ग्यस्वत्वोत्पादकत्वात् मृतस्य पितृधनगतस्वत्वोत्पादविनाशकल्पनागौरवात् यथेष्टविनियोगफलाभावेनानुपयोगाच्च। उच्यते एकदेशोपात्तस्यैव भूहिरण्यादावुत्पन्नस्य विनिगमनाप्रमाणाभावेन वैशेषिकव्यवहारानर्हतया अव्यवस्थितस्य गुटिकापातादिना व्यञ्जनं विभागः। विशेषेण भजनं स्वत्वज्ञापनं वा विभागः। यत्रापि चैकं दासीगवादिकं बहुसाधारणं तत्रापि तत्तत्कालविशेषे वहनदोहनफलेन स्वत्वं व्यज्यते। तदाह बृहस्पतिः "एकां स्त्रीं कारयेत् कर्म यथांशेन गृहे गृहे। उद्धृत्य कूपवाप्यम्भस्तदनुसारेण गृह्यते। युक्त्या विभजनीयं तदन्यथानर्थकं भवेत्"। इदं श्लोकार्द्धत्रयं नानास्थानस्थं न तु क्रमिकम्। ननु "पितर्य्यूर्द्ध्वं गते पुत्रा विभजेयुर्द्धनं पितुरिति" नारदवचनात् पितुर्द्धनं विभजेयुरित्यन्वयात् विभागात् पूर्वं न तत्र पुत्राणां स्वत्वं न च विभागस्य स्वत्वकारणता असम्बन्धिधनेऽप्यतिप्रसङ्गात्। उच्यते पित्रादिनिधनानन्तरमेवास्मदीयं धनमिति प्रयोगात् एकपुत्रे च विभागं विनैव स्वत्वस्वीकाराच्च सम्बन्धिनिधनमेव स्वत्वकारणमतो नातिप्रसङ्गः। नन्वर्जयितृव्यापारोऽर्जनम् अर्जनाधीनस्वामिभावश्चार्जयिता तेन पुत्रव्यापारोजन्मैवार्जनं युक्तम् अतो जीवत्येव पितरि पुत्राणां तत्र स्वत्वं न तु तन्निधनात् अतएवोक्तं "कश्चिज्जन्मनैव यथा पित्र्ये धने"। नैतत् मन्वादिविरोधात्। तथा मनुः "ऊर्द्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम्। भजेरन् पैतृकं रिक्थमनीशास्ते हि जीवतोः" जीवतोरपि पित्रोः पुत्राणां कुतो न विभाग इत्याशङ्कायामिदमुक्तं तदानीमस्वामित्वादिति। न च भार्य्या पुत्रश्चेत्यादिवत् अस्वातन्त्र्याभिप्रायमिति वाच्यं तदानीं स्वत्वे प्रमाणाभावात् भार्य्यादिषु तु यत्ते समधिगच्छन्ति अर्जयन्तीति स्वत्वे सिद्धे युक्तमस्वातन्त्र्यवर्णनम्। किञ्च स्नेयात्तेऽपि तेषामस्वामित्वे स्वधनसाध्यवैदिककर्मोच्छेदात् श्रुतिविरोधः स्यात्। देवलश्च पितृधने अस्वाम्यमेव स्पष्टयति यथा "पितर्य्युपरते पुत्रा विभजेयुर्द्धनं पितुः। अस्वाम्यं हि भवेदेषां निर्दोषे पितरि स्थिते"। किञ्च जीवत्यपि पितरि पितृधने पुत्राणां स्वामित्वे पितुरनिच्छयापि विभागः स्यात् जन्मनैव स्वत्वमित्यत्र प्रमाणाभावाच्च अर्जनरूपतया जन्मनः स्मृतावनधिगमात्। कश्चिज्जन्मनैवेति च जन्मनिबन्धनत्वात् पितापुत्रसम्बन्धस्य पितृमरणस्य च स्वत्वकारणत्वात् परम्परया वर्णनम्"।

अस्य मते च पुत्राणां पित्राद्युपरमादावेव तद्धने स्वत्वं तच्चैकदेशनिष्ठम्।

मिताक्षरादिप्राचीनमते जन्मनैव पुत्राणां पितृधने स्वत्वं तच्च समुदितद्रव्यनिष्ठमिति भेदः।

तदेतत् प्राचीनमतं वीरमित्रोदये जीमूतवाहनमतनिराकरणेन परिष्कृत्य समर्थितं यथा

"यत्र मन्वादिवचनव्याख्यासु बहुधा बुधाः। विवदन्ते दायभागः स प्रबन्धेन वर्ण्यते"। तल्लक्षणमाह नारदः "विभागोऽर्थस्य पित्र्यस्य पुत्रैर्यत्र प्रकल्प्यते। दायभाग इति प्रोक्तं तद्विवादपदं बुधैरिति"। पित्रोरयं पित्र्यम् इति कृतैकशेषपितृशब्दाद्यत् अग्रे मातृधनस्यापि विभागकथनात्। पित्र्यस्य पुत्रैरिति च द्वयमपि सम्बन्धिमात्रोपलक्षणम् पत्नीत्यादिनान्येषामपि भर्त्रादिधने तन्निरूपणात्। अतएवोपक्रमे मनुना पित्रादिपदन्नोपात्तम्। "एष स्त्रीपुंसयोरुक्तो धर्मो वो रतिसंहितः। आपद्यपत्यप्राप्तिश्च दायधर्मं निबोधतेति"। "दायधर्मोऽप्यत्र विभागरूपोऽभिप्रेतस्तस्यैवाग्रे लक्षणकथनपूर्वकनिरूपणात् उद्देशावसरेऽपि "स्त्रीपुन्धर्मो विभागश्चेति" तस्यैव विवादपदत्वेनोद्देशात्। अतएवाग्रे यावत्सम्बन्धिधनविभागमेव प्रदर्शितवान्मनुः। दायशब्दश्चायं स्वामिसम्बन्धमात्रनिमित्तस्वत्ववद्द्रव्यं वदति।

तथा च निघण्टुकारः "विभक्तव्यं पितृद्रव्यं दायमाहुर्मनीषिणः" इत्याह। अत्रापि पितृपदं सम्बन्धिमात्रोपलक्षणमन्यत्रापि दायशब्दप्रयोगात्। विभक्तव्यं विभागार्हमित्यर्थः अन्यथैकपुत्रादिस्वामिके विभागाभावाद्दायशब्दवाच्यता न स्यात्। यत्तु जीमूतवाहनेन (दीयत इति व्युत्पत्त्या दायशब्दो ददातिप्रयोगश्च गौणः मृतप्रव्रजितादिस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्तिफलसाम्यात्। न तु मृतादीनां तत्र त्यागोऽस्ति। तच्च पूर्वस्वामिसम्बन्धाधीनं तत्स्वाम्योपरमे यत्र द्रव्येऽन्यस्य स्वत्वं तत्र निरूढो दायशब्द) इत्युक्तं, तन्न सुन्दरम् निरूढत्वाङ्गीकारे दायददातिशब्दयोर्गौणत्वोपन्यासानर्थक्यात्। सर्वथाऽवयवार्थराहित्ये हि निरूढत्वम्। न च योगरूढत्वम् अवयवार्थबाधस्य स्वयमेवोपन्यासात् गौणमवयवार्थं परिकल्प्य तदङ्गीकारस्य निष्प्रयोजनत्वमन्योन्याश्रयत्वमनुभवविरोधो व्याघातश्च। तत्स्वाम्योपरम इति च। जन्मनापि स्वत्वस्योपपादयिष्यमाणत्वादव्यापकम्। विभागशब्दस्त्वनेकस्वाम्यानां द्रव्यसमुदायविषयाणां तत्तदेकदेशे व्यवस्थापने शक्तः। अतएवैकपुत्रादीनां पित्रादिधनस्वाम्ये विभागशब्दाप्रयोगो दायोऽनेन लब्ध इत्येव च प्रयोगः। यत्रापि चैकं दासीगवादि बहुसाधारणं तत्रापि तत्तत्काल विशेषनियतदासदोहनादिना तस्य तस्य स्वत्वव्यञ्जनादस्त्येकदेशस्वाम्यव्यवस्थापनरूपो विभागशब्दार्थः। अतएव "एकां स्त्रीं कारयेत्कर्म यथांशेन गृहे गृहे" इति "उद्धृत्य कूपवाप्यम्भस्त्वनुसारेण गृह्यते"। "युक्त्या विभजनीयं तदन्यथानर्थकम्भवेदिति" च बृहस्पत्यादिवचनेषु वक्ष्यमाणरीत्या तदुपपादयिष्यते। स च दायो द्विविधोऽप्रतिबन्धः सप्रतिबन्धश्च। पुत्रादीनां पित्रादिधने पुत्रत्वादिनैव सत्यपि स्वामिनि पित्रादौ जन्मनैव स्वत्वोत्पत्तेः स तेषामप्रतिबन्धो दायः स्वामिसद्भावस्याप्रतिबन्धकत्वात्। यस्तु विभक्तस्यासंसृष्टिनोऽपुत्रस्य मृतस्य भ्रात्रादीनां तद्धनरूपो दायः स सप्रतिबन्धः स्वामिसद्भावस्य प्रतिबन्धकस्यापगम एव तत्र स्वत्वोत्पत्तेः। ननु सर्वोऽपि सप्रतिबन्ध एव दायः। स्वामिसद्भावे पुत्रादीनामपि जन्ममात्रेण स्वत्वस्य वक्तुमशक्यत्वात्। तथाहि। यदि जन्मनैव पुत्रादीनां पित्रादिधने स्वत्वं स्यात्तदुत्पन्नमात्रस्य पुत्रादेस्तत् साधारणमिति तदनुमतिं विना द्रव्यसाध्येष्वाधानादिषु पित्रादीनामनधिकारापत्तौ "जातपुत्रः कृष्णकेशोऽग्नीनादधीतेति" श्रुतिविरोधः। किञ्च विभागात् प्राक्पित्रादिप्रसादलब्धस्याविभाज्यत्ववचनं व्यर्थं स्यात्। नहि पित्रा पुत्रान्तरानुमत्या यदि दत्तं सर्वैरेव दत्तमिति विभागप्राप्त्यभावादेव प्रतिषेधोऽनर्थकः। अननुमत्या तु साधारणद्रव्यस्य दानमेव न सम्भवतीति पित्रादिप्रीतिदत्तत्वादिवचने युक्तिरयुक्ता। एवं पुत्राद्यनुमतिमन्तरेण स्त्र्यादीनामपि भर्त्रादिभिः प्रीतिदानस्यासम्भवात्तदनुमतौ तु तैरपि दत्तत्वात्। "भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेऽपि तत्। सा यथाकाममश्नीयाद्दद्याद्वा स्थावरादृते इति" वचने यथाकाममश्नीयाद्दद्याद्वेत्यनेनाविभाज्यत्वं भर्तृप्रीतिलब्धस्य यदभिहितं तदपि व्यर्थम्। न चेदमविभागावस्थायां प्रीतिदानं तस्य चाविभाज्यत्वञ्च प्रतिपादयति किन्तु स्थावरादृते यद्दत्तमित्यन्वयाद्विभागोत्तरमपि भर्त्रा स्त्रियै स्थावरञ्च प्रीत्या देयमप्रदानाद्दत्तमपि तेन पुत्रादिभिरपहृत्य विभजनीयमस्थावरन्तु न प्रत्याहर्त्तव्यमित्यनुवादमात्रम् स्थावरस्य स्त्रियै प्रीतिदानप्रतिषेधमात्रं तात्पर्य्येण बोधयतीति शङ्कनीयम्। तथान्वयस्य व्यवहितयोजनाप्रसङ्गेनायुक्तत्वात्। स्थावरप्रीतिदानप्रतिषेधमात्रता समर्पकत्वेऽन्यांशस्यानुवादमात्रं व्यर्थत्वापरपर्य्यायमापद्यते।

अथ "मणिमुक्ताप्रवालानां सर्वस्यैव पिता प्रभुः। स्थावरस्य तु सर्वस्य न पिता न पितामहः"। तथा "पितृप्रसादाद्भुज्यन्ते वस्त्राण्याभरणानि च। स्थावरन्तु न भुज्येत प्रसादे सति पैतृक इति" वचनमवश्यं विभागप्राक्कालीनस्थावरप्रसाददानप्रतिषेधपरं वाच्यं मणिमुक्तादिप्रसाददानानुमतिपुरःसरं तत्प्रतिषेधाभिधानात् अन्यथा तस्यानुवादमात्रत्वेन वैयर्थ्यापत्तेः। तथा च जन्मना पुत्रादीनां स्वत्वान्मणिमुक्तादिषु तदनुमतिमन्तरेणापि दाने पितुः स्वातन्त्र्यम्। स्थावरे तु तदनुमत्यैवेति विशेष इति वचनद्वयार्थस्य वाच्यत्वाज्जन्मना स्वत्वमायातीति, मैवम् तस्य पितामहोपात्तस्थावरविषयत्वात्। अतीते पितामहे तत्स्वाम्यनाशात्पितापुत्रयोः साधारणे तदीयद्रव्यस्वत्वेऽपि स्थावर एव पुत्रानुमत्यपेक्षा मणिमुक्तादौ तु नेति तदर्थात्। यत्तु गौतमवचनम् "उत्पत्त्यैवार्थस्वामित्वं लभते इत्याचार्य्याः" इति। जन्मनः स्वत्वहेतुत्वे मिताक्षराकृता प्रमाणत्वेनोपन्यस्तन्तद्दायभागदायतत्त्वकृता व्याख्यातमेव।

पितृस्वत्वोपरमे तज्जन्यत्वस्य हेतुभूतेनोत्पत्तिमात्रसम्बन्धेनान्यसम्बन्धाधिक्येन जनकधने पुत्राणां स्वामित्वात्तद्धनं पुत्रो लभते नान्यः सम्बन्धीत्यार्य्या मन्यन्त इति। न तु पितृस्वत्वे विद्यमानेऽपि तत्र पुत्रस्वत्वमिति तदर्थः। नारददेवलवचनविरोधात्। "पितर्य्यूर्द्ध्वं गते पुत्रा विभजेयुर्द्धनं पितुरिति" नारदः पितुर्द्धनमित्याह। अन्यथा धनं विभजेयुरित्येवावक्ष्यत्। "पितर्य्युपरते पुत्रा विभजेयुर्धनं पितुः। अस्वाम्यं हि भवेदेषां निर्द्दोषे पितरि स्थिते इति"। देवलोऽपि पितुर्द्धनमित्युक्त्वोत्तरार्द्धेनास्वाम्यं हीति स्पष्टमेव तेषामस्वत्वं तत्र हेतुत्वेनोक्तवान्। निर्द्दोषे पातित्यादिस्वत्वापगमकदोषरहिते। मनुरपि "ऊर्द्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम्। भजेरन् पैतृकं रिक्थमनीशास्ते हि जीवतोरिति" जीवतोर्म्मातापित्रोस्तद्धने पुत्राणामस्वाम्यं व्यक्तमेवाह। यत्तु शङ्खलिखितावाहतुः "न जीवति पितरि पुत्रा रिक्थम्भजेरन्। यद्यपि स्वाम्यम्पश्चादधिगतन्तैरनर्हा एव पुत्रा अर्थधर्म्मयोरस्वातन्त्र्यादिति" स्मृतिचन्द्रिकाकारेण च व्याख्यातम्। यद्यपि "तैः पुत्रैः स्वकीयजन्मनः पश्चादनन्तरमेव पितृधने स्वाम्यमधिगतं प्राप्तन्तथापि जीवति पितरि तद्धनं तदिच्छां विना न विभजेरन्नर्थधर्म्मयोरस्वातन्त्र्यात्तत्पारतन्त्र्याद्विभागकरणेऽनर्हाः पुत्रा" इति। तेनानेन वचनेन जन्मना पुत्रादीनां पित्रादिस्वामिकधने स्वत्वमिति" तदपि न मन्वादिवचनानां बहूनामस्वाम्यप्रतिपादकानामनुरोधेनास्यान्यथार्थस्य वर्णनीयत्वात्। वर्णितञ्च कल्पतरौ "यद्यपि पश्चादधिते पितृधनव्यापारनिरपेक्षैः पुत्रैर्विद्यादिभिरुपात्ते धने स्वाम्यन्तथापि तत्राप्यस्वाम्यञ्जीवति पितरि, किमुत पितृधने अर्थधर्म्मयोस्तेषां पितरि जीवत्यस्वातन्त्र्यादिति। किञ्च स्वत्वं शास्त्रैकसमधिगम्यं तत्र च रिक्थक्रयादिवज्जन्मनः स्वत्वहेतुत्वेनानुक्तेर्ज्जन्मना स्वत्वमप्रमाणकमेव। अतएव यथा भार्य्यादिवचनम् "भार्य्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः। यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनमिति"। पारतन्त्र्यमात्रप्रतिपादनपरन्तथाऽस्वाम्यवचनान्यपीत्यपास्तम्। भार्य्यादिष्वध्ययनादिवचनैः कर्त्तनादिसाधनकत्वेन स्वामित्वे सिद्धे युक्तमस्वातन्त्र्यमात्रपरत्वमन्यथा श्रौतादिषु धनसाध्येषु पुराणादिस्वतन्त्वेनामधिकारित्वमपि विरुद्ध्येत। अत्र तु प्रत्युत जन्मनः स्वत्वहेतुत्वे प्रमाणाभावाद्व्यर्थमेवान्यथानेकवचनवर्णनम्। किञ्च यदि स्वत्वं लौकिकं स्यात्तर्हि तदुपायानामपि लौकिकत्वात् "स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं, क्षत्रियस्य विजितम् निर्व्विष्टं वैश्यशूद्रयोरिति" गौतमवचनं व्यर्थमेव स्यादनुवादमात्रत्वान्न हि पाकादोदनो भवतीत्यादि शास्त्रे निष्प्रयोजनमनुवादमात्रमुच्यते। तस्य हि वचनस्यायमर्थः। रिक्थं दायः क्रयः प्रसिद्धः। संविभागो दायस्यैवैकदेशनिष्ठस्वामित्वव्यञ्जको विभागः। परिग्रहः पूर्व्वमपरेणास्वीकृतस्यारण्यादिसाधारणप्रदेशसम्बन्धिनस्तृणजलकाष्ठादेः स्वीकारः। अधिगमोऽज्ञातस्वामिकस्य निध्यादेः प्राप्तिः। एतेषु स्वत्वहेतुषु सत्सु स्वामी भवति। जातेषु च जायते। ब्राह्मणस्य लब्धं प्रतिग्रहादिप्राप्तमधिकमसाधारणं रिक्थादयस्तु सर्व्वसाधारणाः। अधिकमित्युत्तरत्र सर्व्वत्र सम्बध्यते। क्षत्रियस्य विजितं युद्धविजयदण्डादिप्राप्तमसाधारणम्। वैश्यस्य निर्व्विष्टं कृषिगोरक्षणादिभृतिलब्धम्। शूद्रस्य द्विजशुश्रूषादिभृतिलब्धम्। निपूर्व्वस्य विशेर्भृतिवाचकत्वम् "निर्व्वेशो भृतिभोगयोरिति" त्रिकाण्डाभिधानात्। वैश्यशूद्रग्रहणस्योपलक्षणत्वादन्येषामप्यनुलोमजप्रतिलोमजातानां "सूतानामश्वसारथ्यम्" इत्याद्यौशनसादिप्रतिपादितं वृत्तिजातं निर्व्विष्टशब्देन संगृह्यते सर्व्वस्य भृतिरूपत्वात्। किञ्च "योऽदत्तादायिनो हस्ताल्लिप्सेत ब्राह्मणो धनम्। याजनाध्यापनेनापि यथा स्तेनस्तथैव सः"। इत्यदत्तादायिनश्चौरस्य हस्ताद्याजनादिस्वहस्त्यापि धनमर्ज्जयतो दण्डविधानमनुपपन्नं स्वत्वस्य लौकिकत्वे। स्वहस्त्यार्ज्जयतो निरपराधत्वात् मन्मते तु शास्त्रैकसमधिगम्यत्वात् स्वत्वस्य चौरदातृकयाजनादावेतद्वचनादेव स्वत्वानुत्पादकत्वात्तद्विधानमुपपन्नतरम्। अपि च मम स्वमनेनापहृतमिति व्यपदेशो न स्यात् स्वत्वस्य लौकिकत्वे अपहर्त्तुरेव तत्र स्वत्वात्। मन्मते त्वपहारस्य निषिद्धत्वेन स्वत्वानुत्पादकत्वादुपपन्नोऽयं व्यपदेशः। यदि च सुवर्णत्वादिकमिव तत्र स्वत्वमपि प्रत्यक्षप्रमाणकन्तर्हि सुवर्णत्वादौ यथा न सन्देहस्तथास्य स्वमिदमस्य नेत्यपि सन्देहो न स्यान्निर्णीतत्वात्। इदमेवोक्तं संग्रहकारेण। "वर्त्तते यस्य यद्धस्ते तस्य स्वामी स एव न। अन्यस्वमन्यहस्तेषु चौर्य्याद्यैः किन्न दृश्यते। तस्माच्छास्त्रत एव स्यात् स्वाम्यं नानुभवादपि। अस्यापहृतमेतेन न

युक्तं वक्तुमन्यथा। विदितोऽर्थागमः शास्त्रे तथाऽत्रार्थे पृथक् पृथगिति"। शास्त्रे "स्वामी रिक्थक्रयेत्यादौ" साधारणासाधारणरूपोऽर्थागमः स्वत्वोपायः पृथक् पृथग्वर्णितस्तया विदितो लौकिकत्वे तच्छास्त्रानर्थक्यं स्याल्लोकविदितत्वादित्यर्थः। अन्यत् स्पष्टम् यथावर्णमिति स्मृतिचन्द्रिकायां पाठः। पूर्वपाठस्तु मदनरत्नलिखितः। अथ यदयस्य यथेष्टं विनियोज्यं तत्तस्य स्वमिति लोकप्रसिद्धं यथेष्टविनियोज्यत्वं स्वत्वमिति चौर्य्याद्यर्जितेनातिप्रसङ्गस्तत्र चौरादेर्यथेष्टविनियोज्यत्वाभावाद्विनियोगकाले त्रासादिदर्शनात्। अतएव सन्देहोऽप्युपपन्नः सुवर्णत्वादितुल्यत्वाभावात् स्वत्वस्य। नैवम् असम्भवात्। शास्त्रेण सर्वस्य कुटुम्बभरणादौ विनियोगविशेषनियमादैच्छिकविनियोगविषयत्वस्य कुत्राप्यप्रसिद्धेः। तदप्याह संग्रहकारः शङ्कोपन्यासपुरःसरम् "न च स्वमुच्यते तद्यत् स्वेच्छया विनियुज्यते। विनियोगोऽस्य सर्वस्य शास्त्रेणैव नियम्यते इति"। अत्र पूर्वार्द्धे शङ्कोपन्यास उत्तरार्द्धे तत्परिहारः। न च रिक्थादिवदुत्पत्त्यैवार्थस्वामित्वमिति गौतमवचने उत्पत्तेरपि जन्मापरपर्य्यायायाः स्वत्वहेतुत्वोक्तेः सत्यपि स्वत्वस्य तदुपायानाञ्च शास्त्रैकसमधिगम्यत्वे जन्मना पुत्रादेः पित्रादिधने स्वत्वमक्षतमेवेति वाच्यम् तस्यानेकदूषणैरन्यथा व्याख्यानस्य प्रागेवोक्तत्वात्। इदमेवाभिसन्धाय धारेश्वरेणापि शास्त्रैकसमधिगम्यमेव स्वत्वमिति सिद्धान्तितम्। अपि च। जीवत्यपि पित्रादौ पुत्रादेस्तद्धने जन्मना स्वत्वे तदनिच्छायामपि पुत्रादीच्छयैव विभागः स्यात्। अस्वातन्त्र्यवचनान्नैवमिति चेत् न तथा सति दृष्टादृष्टविरोधमात्रं भवेद्व्यवहारस्तु सिद्ध्येदेव। यथा पित्रादिभिः सह पुत्रादिभिश्चतुष्पाद्व्यवहारे प्रवर्त्त्यमाने तेषां दृष्टादृष्टयोः श्रेयोविघातमात्रं शिष्ये पितुः पुत्र इत्यादि वचनार्थ इति प्राक्प्रपञ्चितं तथात्रापि स्यात्। अस्त्विति चेन्न सकलनिबन्धविरोधात्। कश्चिज्जन्मनैवेति प्राचीनग्रन्थलिखनमपि जन्मनिबन्धनत्वात्पितापुत्रादिसम्बन्धस्य पितृमरणस्य च तत्स्वत्वापगमहेतुत्वेन परम्परया वर्णनीयम्। किञ्च। ऊर्द्ध्वं पितुश्चेत्यादि मनुवचनं जन्मना पुत्राणां स्वत्वपरं जीवति पितरि सत्यपि पुत्राणां स्वाम्ये तदिच्छया विना न विभागः ऊर्द्ध्वन्तु स्वेच्छयेति विभागनिषेधार्थं तदिति वाच्यं तन्न्याय्यम् अस्वाम्यपरत्वापत्तेः। न च पितुरुपरमकालविधानार्थमिति युक्तम् दृष्टार्थत्वाद्विभागस्योभयस्याप्यनुपपत्तेः। नापि नियमविधिर्विभागस्य "एवं सह वसेयुर्वा पृथग् वा धर्मकाम्यया" इति मनुना विकल्पाभिधानात्। कालविधौ च पित्रुपरमानन्तरकाल एव विभागो नैमित्तिकस्य निमित्तानन्तर्य्यबाधोऽयं स्यात्। जातेष्टिवज्जातमात्रवियोगापत्तिरूपविशेषविरोधस्यांशाभावात्। अतो जीवतोः पित्रोस्तद्धने स्वाम्यं नास्ति किन्तु परतस्तयोरिति तत्कालीनास्वत्वज्ञापनार्थं मन्वादिवचनं विभागस्तु स्वातन्त्र्यात्तत्कालीन इच्छाप्राप्तोऽनूद्यते। तथा चैतद्वचनविरोधादपि न जन्मना स्वत्वं वक्तुं शक्यम्। उपरमपतितत्वादिकमपि पित्रादिस्वत्वनाशकारणं वक्ष्यते। तस्मात् पित्रादिस्वत्वनाश एव तद्धने पुत्रादीनां स्वाम्यं न तत्स्वत्वसमकालीनमिति स्वाम्यादिसद्भावस्य सर्वत्र प्रतिबन्धकत्वात् सर्वोऽपि सप्रतिबन्ध एव दाय इति द्वैविध्यमनुपपन्नमिति। अत्रोच्यते। यदि स्वत्वापगम एव पुत्रादीनां तद्धने स्वत्वं तर्हि निर्दोषे पित्रादौ जीवति तेषां धनसाध्यवैदिककर्मस्वनधिकारप्रसङ्गे "जातपुत्रः कृष्णकेशोऽग्नीनादधीतेत्यादि श्रुतिविरोधस्तुल्यः स्वकपोलकल्पितहेत्वाभाससमर्थितस्वत्वयोगानुरोधेन श्रुतिसङ्कोचोऽयुक्तः। आहिताग्न्याविष्टप्रथमयज्ञे पित्रादौ जीवत्यपि पुत्रादीन् प्रति तत्प्रवृत्त्यविशेषात्। सकलयाज्ञिकशिष्टानां तदनुष्ठानदर्शनाच्च। जातपुत्रकृष्णकेशपदाभ्यां वयोऽवस्थानतिक्रमस्यैव विवक्षा न तु तयोरव्यवस्थितयोः स्वरूपेणेति विरोधाधिकरणे भाष्यवार्त्तिकादौ स्थितत्वात्। न च यथा पुत्रानुमत्या पितुर्भवन्ति तदधिकारस्तथा सम्मतेऽपि पुत्रादीनामपि पित्राद्यनुमत्येति वाच्यम्। यतो द्वयोरपि मते पितुः स्वत्वस्य धने विद्यमानत्वात् स्वत्वत्यागरूपप्रधाननिष्पत्तिरविहता भवन्मते तु पुत्रादीनां स्वत्वस्यैवाभावादनुमतेश्च स्वत्वजनकत्वाद्यागादिप्रधाननिष्पत्तिरेव कथम्। वस्तुतस्तु पितुः पुत्रानुमतिरपि नापेक्षिता स्वातन्त्र्यात्। पित्राद्यनुमतिस्तु पुत्रादेरपेक्षिता पारतन्त्र्यादित्येतावान् विशेषो यथा स्त्रियाः स्वधनेनापीष्टापूर्त्तादिव्रतादौ भर्त्रादेरनुमतिस्तत्पारतन्त्र्यवचनात्। अननुमतौ तु स्वतन्त्रः प्रत्यवायो वैगुण्यं वा कर्मणि न तु प्रधानस्वरूपानिष्पत्तिः। पित्राद्यनुमतेः स्वत्वोत्पादकत्वञ्च तदनुरोधात्कल्प्यमानमलौकिकमशास्त्रीयञ्च। तस्माच्छास्त्रैकसमधिगम्येऽपि स्वत्वे कथञ्चिज्जन्मनोऽपि

रिक्थादिवचनाद्धिगमादिपदेन संग्रह आवश्यकः श्रुतिस्मृतिपुराणशिष्टाचारसिद्धस्य निर्दोषे जीवत्यपि पित्रादौ पुत्रादियज्ञाद्यनुष्ठानाधिकारस्यानुरोधात्। वस्तुतस्तु लौकिकमेव स्वत्वं लोके च जातमात्राणामेव पुत्रादीनां पित्रादिधने स्वाम्यव्यवहारोऽन्येषामपीति साधयिष्यामः। यच्च पित्रादीनामनुमत्ययोग्यपुत्रादिसाधारणस्वत्वे कथमनुमतिमन्तरेणाधानादिकं स्यादित्युक्तन्तदनुमतियोग्येष्वपि पुत्रादिषु स्वातन्त्र्यात्पित्रादीनां न तदनुमत्यपेक्षा किन्तु तदनुमत्ययोग्येष्विति परिहृतप्रायमेव तद्विधिबलादेवाधिकारोऽवगम्यत इति तु विज्ञानेश्वराचार्य्यः। अतश्चोत्पत्त्यैवार्थस्वामित्वमिति गौतमवचनस्य यज्जीमूतवाहनरघुनन्दनाभ्यामारम्भारिकोत्पत्तिस्वत्वहेतुत्वेन व्याख्यानं कृतन्तदपि व्यर्थमेव। यत्तु मनुवचनन्तस्यापि स्मृतिचन्द्रिकोक्तव्याख्यैव साधीयसी। कल्पतरूक्तव्याख्यायान्तु विद्याद्युपात्ताध्याहारेऽनुपस्थितभूयःपदाध्याहारः प्रसज्येत। जन्मपदाध्याहारस्तु पुत्रत्वाद्याक्षेपस्थितेरल्पाध्याहाराच्च नायुक्तः। तेन श्रुत्युपष्टम्भस्मृत्यनुरोधान्मनुनारददेवलादिवचनानामेवास्वातन्त्र्यपरत्ववर्णनमुचिततरम्। यदप्युक्तं प्रीतिदत्तस्याविभाज्यत्ववचनानि जन्मना स्वत्वाभ्युपगमेऽनुपपन्नानीति। तदपि न अनुमत्यभिप्रायेण स्थावरप्रीतिदानाभावस्थिरीकरणार्थतयोपपत्तेः। स्वातन्त्र्याद्वा पितुरनुमतिमन्तरेणापि तेन दत्ते स्थावरव्यतिरिक्ते पुत्राणामविभाज्यत्वमुच्यते। अतएव स्थावरे विशेषवचनम् "स्थावरं द्विपदञ्चैव यद्यपि स्वयमर्जितम्। असम्भूय सुतान् सर्वान् दानञ्च च विक्रयः" इति। मणिमुक्ताप्रवालानामित्यादिवचनन्तु जन्मना स्वत्वपक्ष एवोपपन्नतरम्। न च पितामहोपात्तस्थावरमात्रविषयत्वमिति युक्तम्। न पिता न पितामह इति द्वयग्रहणात्। पितामहस्य हि स्वार्जितमपि पुत्रे पौत्रे च सत्यपि न देयमिति वचनं जन्मना स्वत्वङ्गमयति। यथा परमते मणिमुक्ताप्रवालादीनां पैतामहानामपि पितुरेव स्वत्वन्तत्कारणात्तथास्मिन् मतेऽपि पुत्रादीनान्तत्र जन्मना स्वत्वे साधारणेऽपि पितुर्दानाधिकार इत्यविशेषः। तस्मात्पैतृके पैतामहे च द्रव्ये पुत्रादीनां यद्यपि जन्मनैव स्वत्वं तथापि पितुरावश्यकेषु धर्मकृत्येषु वाचनिकेषु च प्रसाददानकुटुम्बभरणापद्विमोक्षादिषु च स्थावरव्यतिरिक्तद्रव्यविनियोगे स्वातन्त्र्यमिति ध्येयम्। स्थावरादौ तु स्वार्जितेऽपि पित्रादिपरम्पराप्राप्ते च पुत्रादिपारतन्त्र्यं तुल्यमेव। "स्थावरं द्विपदञ्चैव यद्यपि स्वयमर्जितम्। असम्भूय सुतान् सर्वान् दानञ्च च विक्रयः। ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः। वृत्तिञ्च तेऽभिकाङ्क्षन्ति न दानञ्च च विक्रयः" इत्यादि वचनात्। अस्याप्यपवादो वक्ष्यते यच्च स्वत्वस्य शास्त्रैकसमधिगम्यत्वाच्छास्त्रे च जन्मनः क्वापि स्वत्वहेतुतानभिधानात् कथञ्जन्मना पुत्रादीनाम्पित्रादिधने स्वत्वस्वीकार इत्युक्तम्। तत्तु शास्त्रैकसमधिगम्यत्वमभ्युपेत्यापि गौतमादिवचन उत्पत्तेरपि स्वत्वोक्तेः परिहृतमेव प्राक्। वस्तुतस्तु न स्वत्वस्य शास्त्रैकसमधिगम्यत्वं युक्तियुक्तम्। सर्वथा शास्त्रज्ञानगन्धरहितानां प्रत्यन्तवासिनां म्लेच्छादीनामपि मम स्वमिदं नान्यस्य स्वमिति व्यपदेशस्तत्कृतश्च क्रयविक्रयादिव्यवहारो दृश्यते। तेनान्वयव्यतिरेकाभ्यां क्रयाद्युपायकं स्वामित्वमपि तैर्यथेष्टविनियोगार्हत्वरूपं पदार्थान्तररूपं वा प्रत्यक्षादिप्रमाणान्तरेणावगतमित्यवश्यं वाच्यम्। एतत्तर्कोपष्टब्धोऽनुमानवाक्यप्रयोगोऽपि विज्ञानयोगिनोक्तः "स्वत्वं लौकिकं लौकिकार्थक्रियासाधनत्वाद्व्रीह्यादिवत्" इत्यन्वयदृष्टान्तः। आहवनीयादीनां हि शास्त्रैकसमधिगम्यानां न लौकिकार्थक्रियासाधनत्वमस्तीति व्यतिरेकदृष्टान्तः। तेनान्वयव्यतिरेकी हेतुः। यद्यप्याहवनीयादीनामपि यागादिलौकिकक्रियासाधनत्वमप्यस्ति। तथापि तल्लोकप्रमाणकाग्न्यादिरूपेण नालौकिकाहवनीयादिरूपेणेति न व्यभिचारः। इह तु सुवर्णादिरूपेण न क्रयादिसाधनत्वमपि तु स्वत्वेनैवेति सुवर्णत्वादिना भरणाद्यर्थक्रियासाधनत्वात्तद्यथा लौकिकं रूपमेवं स्वत्वमपि सर्वानुगतं लौकिकमेव नह्यस्वत्वेन क्रयादिक्रियानिर्वाहो लोके। न चैवं स्वामी रिक्थेत्यादिस्मृतीनां लोकसिद्धार्थानुवादकत्वेनानर्थक्यापत्तिरिति वाच्यम्। धर्माधर्मोपयोगितया व्याकरणस्मृतावनादिवाचकत्वतदभावरूपसाधुत्वासाधुत्वविवेकस्येव तस्योपपत्तेः। साधुशब्दाधिकरणे ह्येतदवस्थितं यत्सङ्कीर्णव्यवहारिणां लोकानामविविक्तं लौकिकमेव साधुत्वं शास्त्रेण विविच्यते। नत्वलौकिकसाधुत्वं साधुभिर्भाषितव्यमित्यादिविधावन्योन्याश्रयप्रसङ्गादित्यादि। एवमत्रापि तथा च नयविवेके भवनाथः "लोकसिद्धस्यार्जनस्य-

न्मादि अतएवानिन्द्यं प्रथमलोकशौविषयव्यवस्थितं तन्निबन्धनार्थौ स्मृतिव्याकरणादिस्मृतिवदिति । जन्मादीत्यादिपदेन क्रयादिग्रहणम् । व्याकरणादित्यादिपदेन सङ्गीतरत्नपरीक्षासामुद्रिकाणां ग्रहणम् । रागादीनामपि हि लोकसिद्धानामेवानभियुक्तान् प्रति विवेकार्थमेव तल्लक्षणकथनमित्युक्तं स्मृत्यधिकरणे आचार्य्यचरणैः । स्वामी रिक्थेत्यादिवचनन्तु प्रागेव व्याख्यातम् । रिक्थशब्दस्तु निष्प्रतिबन्धदायपरः संविभागशब्दश्च सप्रतिबन्धदायपर इति मिताक्षरायां विज्ञानेश्वरेण व्याख्यातम् । स्मृतिचन्द्रिकाकृता तु रिक्थं पित्रादिधने पुत्रादीनां स्वामित्वापादकं जन्मैवेति व्याख्याय संविभागः पित्रादिधने विशेषनिष्ठस्वामित्वसम्पादको विभाग इति संविभागशब्दो व्याख्यातस्तच्च स्वस्य सतो विभागात् स्वत्वहेतुत्वेन तत्प्रतिपादनानौचित्यात् । एकदेशव्यवस्थापनमात्रं हि स्वत्वस्य विभागेन क्रियते । मुख्यामुख्यहेतुत्वग्रहणे स्वामिपदे वैरूप्यापत्तेः । अतएवाह मिताक्षरायां विज्ञानेश्वराचार्य्यः 'विभागशब्दस्यानेकस्वामिकधनविषयः प्रसिद्धो नान्यदीयविषयो न प्रहीणविषय इति' । लोके पुत्रादीनां जन्मनैव स्वत्वं प्रसिद्धतरमेव । यदपि पत्नी दुहितरश्चेत्यादिवचनं तदपि स्वामिसम्बन्धनिबन्धनानेकदायहरप्राप्तौ लोकप्रसिद्धेऽपि स्वत्वे व्यामोहनिरासार्थम् । प्रायेण व्यवहारस्मृतीनां लोकसिद्धार्थानुवादकत्वमिति सकलनिबन्धृभिरभिधानात् । नियतोपायिकं स्वत्वं लोकसिद्धमेवेति भगवतोगुरोरपि संमतम् । लिप्सानये हि तृतीये वर्णके द्रव्यार्जननियमानां क्रत्वर्थत्वे स्वत्वमेव न स्यात् स्वत्वस्यालौकिकत्वादिति पूर्वपक्षासम्भवमाशङ्क्य द्रव्यार्जनप्रतिग्रहादीनां स्वत्वसाधनत्वं लोकसिद्धमेवेति पूर्वपक्षः समर्थितस्तेन । न च द्रव्यार्जनस्य क्रत्वर्थत्वे स्वमेव न भवतीति याग एव न संवर्त्तेत । प्रलपितमिदङ्केनापि । अर्ज्जनं स्वत्वं नापादयतीति विप्रतिषिद्धमिति' ग्रन्थेन । अस्यार्थष्टीकाकृता विवृत एवम् । यदा द्रव्यार्ज्जननियमानां क्रत्वर्थत्वन्तदा नियमानां स्वत्वोपायतामिदं शास्त्रं न बोधयति क्रत्वर्थताबोधने व्यापृतत्वात् । तथा सति प्रतिग्रहादिप्राप्तस्य स्वत्वमित्यत्र प्रमाणाभावादस्वेन च स्वत्वत्यागात्मकयागासम्भवात् कस्येह द्रव्यार्ज्जननियमा भवेयुरिति पूर्वपक्षासम्भव इति शङ्कार्थः । प्रलपितमित्याद्युत्तरस्यार्थः । अर्ज्जनप्रतिग्रहादेः स्वत्वहेतुताया लोकसिद्धत्वेन शास्त्रस्य तत्राव्यापारान्नियमानां क्रत्वर्थतैव तेन गम्यत इति न यागासम्भवो नियमानर्थक्यञ्चेति । सिद्धान्तेऽपि तेन स्वत्वस्य लौकिकत्वाभ्युपगमेनैव विचारप्रयोजनमुक्तम् 'अतो नियमातिक्रमः पुरुषस्य न क्रतोरिति' । अस्याप्यर्थ एवं विवृतः । यदा द्रव्यार्ज्जननियमानां क्रत्वर्थत्वन्तदा नियमार्ज्जितेनैव क्रतुर्न नियमातिक्रमार्ज्जितेन द्रव्येण । न तु पुरुषस्य नियमातिक्रमदोषः पूर्व्वपक्षे । सिद्धान्ते अर्ज्जननियमस्य क्रत्वर्थत्वाभावात् केवलपुरुषार्थत्वात् नियमातिक्रमार्ज्जितेनापि द्रव्येण क्रतुसिद्धिरप्रत्यूहा पुरुषस्यैव तु नियमातिक्रमदोष इति अनेन नियमातिक्रमार्ज्जितस्यापि स्वत्वमभ्युपगतमन्यथा क्रतुसिद्ध्यभिधानविरोधात् । तत्रैवाधिकरणे कुमारीलस्वामिनोऽप्यत्रभवतः स्वत्वं लौकिकमित्येवाभिमतमिति । तत्रत्यवार्त्तिकतन्त्ररत्नाभियोगभाजां सुलभमेव । अतएवाह शास्त्रदीपिकायां, पार्थसारथिः रागप्राप्तं तावदर्ज्जनञ्च शास्त्रीयम् । रागतश्च पुरुषार्थतया प्राप्तेः प्रत्यक्षेणैवार्ज्जितं द्रव्यं पुरुषस्योपयत् पुरुषार्थं विज्ञायते न तदनुमाने क्रत्वेकशेषतया शक्यं विज्ञातुम् । तस्मात् पुरुषार्थं द्रव्यं क्रतुरपि पुरुषकार्य्याणामन्यतम इति कार्य्यान्तरवत् क्रतावप्युपयुज्यत इत्येतावान् विशेषः । ननु तत्रैवोक्तं तथा सति जीवनलोपात् क्रतुरेव न प्रवर्त्तेतेति प्रघट्टकेन । अत्रार्ज्जनस्य शास्त्रीयत्वन्निरस्यता स्वत्वस्य तदुपायानाञ्च लोकसिद्धत्वं स्पष्टतरमेवोक्तम् । अन्यदपि तेनैवोक्तम् । तस्मात् पुरुषार्थन्द्रव्यार्ज्जनमेवस्य दृष्टार्थम्भवति । नियमस्तु दृष्टाभावात्काममदृष्टार्थः स्यात् । अदृष्टमपि पुरुषार्थार्ज्जनविषयत्वात् । नियमस्य पुरुषगतत्वमेव कल्प्यते । तेनासावुपायान्तरेणार्ज्जयन् प्रत्यवैतीति गम्यत इति । ततश्च स्वामी रिक्थेत्यादिवचसां लौकिकमेव रिक्थादीनां स्वत्वोपायत्वमनूद्य तदतिरिक्तोपायनिवृत्तौ तात्पर्य्यन्नियमविधयेति नानर्थक्यशङ्कापि तृप्तिसाधनभोजनाश्रितदिङ्नियमवत् । द्रव्यार्ज्जनमेव क्रत्वर्थपुरुषार्थत्वविचारोदाहरणन्नियमस्तु पूर्व्वपक्षयुक्तितयोपन्यस्तः । स एव तत्रोदाहरणमित्येव भट्टगुरुमतयोर्भेदः स्वत्वस्य लौकिकत्वं तूभयसम्मतमिति निष्कर्षः । तत्तद्दूषणभूषणादि तु तन्त्राभियोगवतामाकरे एव व्यक्तं प्रस्तुतानुपयोगादिह नोच्यते । एतेन चौर्य्यादिप्राप्तस्यापि स्वत्वं

स्यादिति यत् संग्रहकारधारेश्वराभ्यां स्वत्वस्य लौकिकत्वे दूषणमभिहितं तदपि परास्तम्। चौर्य्यादिषु स्वत्वोपायत्वस्य लोकप्रसिद्धेरन्यस्य स्वमिदमस्येत्येवं व्यवहारात्। क्रयाद्युपायसन्देहादेव स्वत्वसन्देहोऽपीदमस्य वान्यस्य वेत्याकारोनानुपपन्नः। मम स्वमनेनापहृतमिति न ब्रूयादपहर्त्तुरेव स्वत्वादिति च यत् स्वत्वस्य लौकिकत्वे दूषणमभिहितं तदप्येतेनामूलविशीर्णम्। यच्चोक्तं संग्रहकृता "शास्त्रेण सर्वस्य तत्र विनियोगनियन्त्रणादृयथेष्टविनियोगार्हत्वरूपस्वत्वासम्भवः इच्छया क्वापि नियोगासम्भवादिति। तदप्यापाततः न हि वयमैच्छिकविनियोगोपहितत्वं ब्रूमोऽपि तु तदर्हत्वमात्रम्। अन्यथा राजादिभयादिच्छाप्रतीघातेऽपि तत्र विनियोगेच्छानिच्छादशयोश्च स्वत्वतदभावौ विरुद्धौ प्रसज्येयाताम् राजादिनियन्त्रणादिव शास्त्रनियन्त्रणादन्यत्रैच्छिकविनियोगाभावेऽपि तदर्हत्वस्यानपायात्। अतएव दुष्टेनाशास्त्रीयविनियोगे स्वव्यवहारो नास्ति। प्रत्यवायमात्रपरं शास्त्रातिक्रमात्। तदर्हत्वं च तदर्जितत्वप्रयुक्तमस्त्येव। तथा च नवविवेकेऽप्युक्तम्। "तच्च तस्य तदर्हं यद्येनार्जितमिति"। तदर्हं यथेष्टविनियोगार्हमित्यर्थः प्रतिबन्धादङ्कुरमजनयतोऽपि कुसूलस्थबीजस्य बीजत्वप्रयुक्तमङ्कुरोत्पादकार्हत्वमिव। वस्तुतस्तु बीजत्वाङ्कुरार्हत्वयोरिव स्वत्वतद्यथेष्टविनियोगार्हत्वयोरपि भेद एव। अन्यथार्हतावच्छेदकाऽपरिचयेऽर्हताया दुर्निरूपत्वात्। तेन ब्राह्मण्यमिव स्वत्वमपि तदुपायमात्रव्यङ्ग्यं पदार्थान्तरमेवोत्पत्तिविनाशशालि। ब्राह्मण्यन्तु जातिरूपं नित्यमित्येतावान् परं भेदः। इदञ्चाकरे व्यक्तं लीलावत्यादौ च। अत्र मिताक्षरायां स्वत्वलौकिकालौकिकत्वविचारप्रयोजनमुक्तं शास्त्रैकसमधिगम्ये स्वत्वे। मनुः "यद्गर्हितेनार्जयन्ति कर्म्मणा ब्राह्मणा धनम्। तस्योत्सर्गेण शुध्यन्ति दानेन तपसैव च" इत्यादिस्मरणादसत्प्रतिग्रहादि यस्य यदर्जनोपायत्वेन निषिद्धन्तदर्जिते तस्य स्वत्वाभावाच्चौर्य्याद्यर्जितवत्तत्पुत्राद्यानामपि तदविभाज्यमेव। लौकिकत्वे तु स्वत्वस्य तदर्जितेऽपि पितुः स्वत्वात्तत्पुत्राद्यानां पितृधनत्वेन तद्विभाज्यम्। अर्जयितुरेव प्रतिषेधातिक्रमनिमित्तप्रत्यवायात् प्रायश्चित्तम्। तत्पुत्रादीनान्तु दायरूपधर्म्मोपायतस्तत्स्वमिति न प्रायश्चित्तमपि "सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः। प्रयोगः कर्म्मयोगश्च सत्प्रतिग्रह एव चेति" मनुस्मरणात्। प्रयोगो वृद्ध्यर्थं द्रव्यप्रयोगः कर्म्मयोग आर्त्विज्यादिकरणम्। तत्र दायादीनां त्रयाणां वर्णचतुष्टयसाधारणत्वेन जयस्य क्षत्रियं प्रति, योगस्य स्वयंकृतस्य वैश्यं शूद्रं च प्रति धर्म्यत्वम् अस्वयंकृतस्यापदि च स्वयंकृतस्यापि सर्वान् प्रति। कर्म्मयोगस्य तु विप्रं प्रत्येवेति विशेष इति। अत्र मदनरत्नकरो दूषणमाह 'स्वत्वस्य शास्त्रैकसमधिगम्यत्वेऽप्यसत्प्रतिग्रहादिनिषेधो न स्वत्वानुत्पादकतान्तेषां वदति किन्तु प्रत्यवायमात्रहेतुताम्। इतरथा "आपद्गतः सम्प्रगृह्णन् भुञ्जानो वा यतस्ततः। न लिप्यतैनसा विप्रो ज्वलनार्कसमो हि सः। कुसीदं कृषिवाणिज्यं प्रकुर्वीतास्वयङ्कृतम्। आपत्काले स्वयं कुर्व्वन्नैनसा युज्यते द्विजः" इति वचनैरेनसा न युज्यत इत्यभिधानेनापदि प्रत्यवायाभावावगमेनानापदि प्रत्यवायस्यैवावगमात् प्रतिषेधप्रतिप्रसवयोः समानविषयत्वौचित्यात्। अतएवानापदि तत्र द्रव्यपरित्यागपूर्ब्बकं जपतपोरूपं प्रायश्चित्तमेव विदधाति। न चौर्य्यादिवद्राजदण्डमपि किञ्चिद्वचनमसत्प्रतिग्रहादौ। तेनासत्प्रतिग्रहादेः पूर्ब्बपक्षसिद्धान्तयोर्द्वयोरपि तेषां स्वत्वोत्पादकत्वाविशेषात्तदर्जितस्य पुत्रादिविभाज्यत्वमपि तुल्यमिति नैतत्प्रयोजनं विचारस्यास्य युक्तमिति'। अत्र वदामः। शास्त्रैकसमधिगम्यस्वत्ववादिनो मते यथा चौर्य्यादिनिषेधस्य स्वत्वानुत्पादकत्वदण्डप्रयोजनं विचारस्यास्य युक्तमिति अत्र कर्त्तुः प्रायश्चित्तार्हताप्रयोजकत्वपरता। तथाऽसत्प्रतिग्रहादिनिषेधस्याप्यस्तु यथा चापदुपाधिना "तथैव सप्तमे भक्ते भक्तानि षडनश्नता। अश्वस्तनविधानेन हर्त्तव्यं हीनकर्म्मणः। आख्यातव्यञ्च तत्तस्मै पृच्छते यदि पृच्छतीत्यादि" प्रतिप्रसवबलाच्चौर्य्ये तन्निरतयाभावस्तथाऽसत्प्रतिग्रहादेरप्यस्तु। अन्यथोभयत्रापि ततः पञ्चमहायज्ञाद्यनिष्पत्तिप्रसङ्गः। शास्त्रीयत्वे स्वत्वस्याप्रसक्तचौर्य्योपायकत्वनिषेधः कथमिति चेत्। अधिगमान्तर्भावेन कथञ्चित्तत्प्रसक्तस्तेनावश्यवक्तव्यत्वात् अपरथा प्रतिषेधानुपपत्तेः। शास्त्रप्राप्तप्रतिषेधे च विकल्पापत्तिभिया "दीक्षितो न जुहोतीत्यादिवद्भाष्यकारमतेन पर्य्युदासत्वं सामान्यविशेषभावेन विशेषनिषेधसामान्यविध्योर्बाध्यबाधकभावोऽपि वा मतान्तरेऽन्यत्रापि स्वीकार्य्यमेवागत्या। प्रतिग्रहादेस्तु प्रसक्तिर्ब्राह्मणादेरस्त्येवेत्यापत्तदभावोपाधिकौ प्रतिप्रसवप्रति-

प्रेधावप्युपपन्नतरौ। तर्ह्यसत्प्रतिग्रहस्वयंकृतवाणिज्यादापनापदि ब्राह्मणस्य राजदण्डोऽपि स्यादिति चेन्न इष्टापत्तेः। न हि स्वधर्मत्यागिनो राजदण्डाभावः कस्यापि सम्मतः। स च क्वचित् सामान्यरूपेणोक्त एव स्मर्य्यते क्वचिद्विशेषादाम्नात इत्यन्यदेतत्। अतएवालौकिकस्वत्ववादिन इदमप्यपरदूषणम्। चौर्य्यादिनिषेधस्य वितयप्रयोजकतागौरवम्। पर्य्युदासत्वादिस्वीकारगौरवञ्च लौकिकस्वत्ववादिनस्तु दण्डप्रत्यवायमात्रपरत्वम्। तेषां स्वत्वानुपायत्वस्य लोकसिद्धत्वादिति रागप्राप्तनिषेधे पर्य्युदासादिस्वीकारानापत्तिश्चेति लाघवमिति। तथाच्छास्त्रैकसमधिगम्ये स्वत्वेऽसत्प्रतिग्रहादेस्तदनुपायत्वात्तदर्जिते पितुः स्वत्वाभावः स्यादेवेति चौर्य्याद्यर्जितपितृधनाविभागवदसत्प्रतिग्रहाद्यर्जितस्याप्यविभाज्यत्वम्। लौकिके तु तस्मिन् लोके तेषामपि तदुपायत्वात् सिद्धं तद्विभाज्यमिति मिताक्षरोक्तं साध्वेव प्रयोजनम्। इदञ्चोपलक्षणम्। पूर्वपक्षे चौर्य्याद्यर्जितपितृधनस्वीकारे यथा पुत्त्रादीनामपि दण्डप्रायश्चित्तं भवत्येव तथाऽसत्प्रतिग्रहाद्यर्जिततद्ग्रहणेऽपीत्यपि प्रयोजनमवसेयम् अर्जयितुरेव प्रायश्चित्तमित्यभिधानेनोचितत्वात्। इदन्त्विह विचार्य्यम्। स्वत्वस्य लौकिकत्वे चौर्य्यस्य लोके तदनुपायत्वे सिद्धे षड्भक्तानशनादापदि यच्चौर्य्यमनुमतन्तेन चोरिते स्वत्वमुत्पद्यते न वा। नाद्यः लोकेऽनुपायत्वेनावधारितत्वात्तदुत्पत्तेरभ्युपगन्तुमशक्यत्वात्। न हि प्रत्यक्षविरुद्धं शास्त्रसहस्रेणापि जलादेर्दधिजनकत्वादि बोध्यते। न द्वितीयः अस्वेन पञ्चमहायज्ञादिप्रधानानिष्पत्तेः। नच क्षुत्प्रतिघातमात्रमेव तेन क्रियतां नान्यदलौकिकमिति वाच्यम्। शिष्टाचारविरोधात् न हि "शिष्टाः पञ्चमहायज्ञाद्यकृत्वा तदुपयुञ्जते "यदन्नः पुरुषो लोके तदन्नास्तस्य देवताः" इति स्मरणाच्च। अतएव विश्वामित्रः श्वजाघनीं श्वपचगृहात् हृत्वेन्द्रादिदेवोद्देशेन त्यक्त्वा भोक्ष्यामीति मनसि कृत्य यदा यथादैवतन्त्रागांस्त्यक्तुं प्रवृत्तस्तदा तुष्टैरिन्द्रादिभिर्दृष्टिः सृष्टा शस्यञ्च तत्क्षणमेव प्रभूतमभूदित्याख्यायिका पुराणेषु श्रूयते। शास्त्रैकसमधिगम्ये तु स्वत्वे यथाशास्त्रञ्चौर्य्यादेरपि स्वत्वोत्पादकत्वतदभावौ न विरुद्धौ। लौकिकस्वत्वतदुपायवादिनस्तूभयतः पाशारज्जुरियमिति। अत्र प्रतिविदध्मः। यद्यपि चौर्य्यस्य स्वत्वोत्पादकत्वञ्च लोकसिद्धं तथाप्यनेनैव सप्तभक्ताशनकाले षड्भक्तानशिनो विधानाद् गम्यते। स्वत्वमात्रस्य हि शास्त्रीयत्वे विरुद्धत्वमतज्ज्ञानानां क्रयादिस्वत्वसाध्यव्यवहारानुपपत्तेः। अतश्चौर्य्यनिषेधो दण्डपापमात्रबोधक एव। चौर्य्यस्य स्वत्वोत्पादकत्वाप्रसक्तेर्न तदभावपरः। यथा ब्राह्मणत्वस्य सर्वत्र प्रत्यक्षत्वेऽपि जात्युत्कर्षत्वे शास्त्रीयत्वमेव। पुरुषेयत्तानियमस्य शास्त्रैकगम्यत्वात्। यथाहुराचार्य्याः "एतावन्मात्रमन्विष्टागमिकं प्रत्येतव्यम् नह्ययं पुरुषेयत्तानियमो लोकप्रमाणगम्य इति"। तत्रापि तावत् पुरुषपरम्पराजन्यव्यक्तौ ब्राह्मण्यमभिव्यज्यत इति व्यङ्ग्यव्यञ्जकभाव एव परं शास्त्रीय व्यञ्जके ज्ञानवतस्तादृशव्यक्तौ ब्राह्मण्यं प्रत्यक्षमेव व्यक्तिप्रत्यक्षप्रसक्तजातिप्रत्यक्षसामग्रीसञ्चारादित्यपि वदन्ति। इह तु चौर्य्यमात्रस्यैव स्वत्वानुत्पादकत्वप्रहाणाय तादृशस्य तस्य स्वत्वोत्पादकतैव शास्त्रेण बोध्यते। न च प्रत्यक्षविरोधः। नहि प्रत्यक्षविरुद्धं शास्त्रसहस्रेणापि बोधयितुं शक्यमिति वाच्यम् नह्यनुत्पादकत्वमपि लोकात्। तादृशेन व्यवहाराभावादन्वयव्यतिरेकगम्या स्वत्वस्य चौर्य्योपायकता नावगम्यत इत्येतावत्। तथा च पुत्त्रेष्ट्यादीनां लोकानवगतपुत्त्रादिजनकता यथा शास्त्रादवगम्यते तेषां दृष्टोपायान्तरजन्यतायामपि, तथेहाप्यस्तु। स्वर्गाङ्कुरनीयादीनामलौकिकमात्ररूपाणां दृष्टोपायाभावोऽभ्यधिक इत्यन्यदेतत्। प्रतिबन्धकप्रतिबद्धदाहादिजनकता यथोत्तेजकमन्त्राणामपि वह्नेः शास्त्रगम्या लोकप्रमाणगम्यत्वात् उत्तेजकतायाश्च प्रतिबन्धकप्रतिबद्धकार्य्यजनकतातिरिक्ताया अनिर्वाच्यत्वात्। शक्तिनाशतदुत्पत्तिकल्पनायामतिगौरवात्। यत्तु जन्मना स्वत्वन्निराकुर्वता जीमूतवाहनेन 'क्वचिज्जन्मनैवेति जन्मनिबन्धनत्वात्पितापुत्त्रस्य सम्बन्धस्य पितृमरणस्य च कारणत्वात्परम्परया ग्रन्थनसिति' प्राचीनलिखनाभिप्रायमुक्त्वा कथमुत्पादनरूपेण पितृगतव्यापारेण पुत्त्रे स्वत्वोत्पत्तिरित्याशङ्क्योक्तं 'अन्यव्यापारेणाप्यन्यस्य स्वत्वमविरुद्धं शास्त्रमूलकत्वादस्य। दृष्टञ्च लोकेऽपि दाने हि चेतनोद्देश्यकत्यागादेव दातृव्यापारात् सम्प्रदानस्य द्रव्ये स्वामित्वम्। न च स्वीकारणात् स्वत्वं स्वीकर्त्तुरेव दातृत्वापत्तेः। परस्वत्वापत्तिफलेन हि दानरूपता तच्च फलं सम्प्रदानाधीनम्। यथा हि देवतोद्देशेन त्यागं कुर्वन्नपि यजमानो न होता किन्तु तस्यैव यागस्य

होमाभिधाननिमित्तभूतप्रक्षेपं कुर्वन्नृत्विगेव होतेत्युच्यते तद्वदत्रापि स्यात्। किञ्च। मनसा पात्रमुद्दिश्येत्यादिशास्त्रे स्वीकारात् प्रागेव दानपदं दृष्टम्। ननु यद्द्रूपं स्वीकारः स्वभूततद्भावे विप्रयोगादस्य स्वं कुर्वन् व्यापारः स्वीकारो भवति कथन्ततः प्रागेव स्वत्वम्। उच्यते। उत्पन्नमपि स्वत्वं सम्प्रदानव्यापारेण ममेदमिति ज्ञानेन यथेष्टव्यवहारार्हं क्रियते इति स्वीकारशब्दार्थः याजनाध्यापनसाहचर्याच्च प्रतिग्रहस्य स्वत्वमजनयतोऽप्यर्ज्जनरूपता न विरुद्धा याजनादौ दक्षिणादानादेव स्वत्वात्। पितृनिधनकालीनजीवनमेव वा पुत्रस्यार्जनं भविष्यति। किञ्च। भ्रात्रादिधने तन्मरणात्तन्मरणकालीनजीवनाद्वा भ्रात्रन्तरादेः स्वत्वमकामेनापि वाच्यमन्यथा द्विहाय्यस्त्विति'। तदेतदुत्तानमतिविलसितम्। तथा हि शास्त्रमूलत्वादस्येति तावत् स्वत्वस्य लौकिकत्वसाधनादेव निरास्तम्। यदपि दृष्टश्च लोकेऽपीत्यादि तदप्यापातसुन्दरम्। न हि प्रतिग्रहीतर्य्यस्वीकुर्वत्यपि तस्य स्वत्वमुत्पद्यते। पात्रविशेषोद्देशेन त्यागे तेनास्वीकृतेऽपि तत्स्वत्वोत्पत्तौ परस्मै तस्य प्रतिपादनासम्भवप्रसङ्गात्। यदपि स्वीकर्त्तुरेव दातृत्वापत्तेरिति तदप्ययुक्तम्। परस्वत्वापत्तिफलकव्यापारस्य दानत्वात्सम्प्रदानस्वीकारात्पूर्वदातृमानादिव्यापारस्य दानपदार्थत्वात्तत्फलोपहितता तु तस्य सम्प्रदानस्वीकारमन्तरेण न सम्भवतीति सम्प्रदानव्यापारस्तद्घटकः। न तु स एव दानशब्दार्थः। यदपि यथा होत्यादि तदपि न यजमानकर्त्तृकाग्निहोत्रहोमादौ तदविरोधात्। यत्रापि दर्शपूर्णमासादौ त्यागमात्रं यजमानेन क्रियते। ऋत्विक्तस्य प्रक्षेपोऽध्वर्य्वादिभिस्तत्रापि विविक्तकर्त्तृकत्वाद्यथास्वन्द्व्यवहाराविरोधात्। अन्यत्रस्य प्रक्षेपपर होमशब्दवाच्यता नास्ति। स तु त्यागः स्वकर्त्तृकोऽन्यकर्त्तृको वाऽवच्छेदकोऽस्तु न तावता कश्चिद्दोषः। अतएव यागस्य न प्रक्षेपापेक्ष आत्मलाभो होमस्य तु तदपेक्षएव। दानस्य तु प्रतिग्रहीतृव्यापारसापेक्षतैव तदभावे दानपदार्थानिष्पत्तेः। यच्च किञ्चेत्यादि। तदपि यत्किञ्चित् उत्सर्गस्येव तत्र विधानात् न तु दानस्य। अतएव दाता तत् फलमाप्नोतीत्युक्तमन्यथा तस्यानुवादत्वापत्तेः। दानत्वे हि तस्य तत्फलभावाप्रसक्तेस्तु तत् फलमाप्नोतीति व्यर्थमेव स्यात्। अतस्तत्र जलप्रक्षेपरूपः पात्रोद्देशक उत्सर्गएव ददातिना विवक्षितोदानत्वनिष्पत्तिस्तु तस्य सम्प्रदानकर्त्तृकस्वीकारे सत्येवेति परमार्थः। अतएवोत्सृजे इत्येव तत्र सङ्कल्पवाक्यं शिष्टानामतु ददामि इति सम्प्रददे इति वा। अतः प्रतिग्रहादेव दानस्य फलेऽपि सम्प्रदानस्य स्वत्वमिति प्रतिग्रहस्यार्जनरूपत्वमविरुद्धम्। स्वत्वजनकोहि व्यापारोऽर्जनशब्दार्थः। अतएवाह प्रभाकरः 'प्रज्ञपितमिदं केनापि अर्जनं स्वत्वं नापादयतीति विप्रतिषिद्धमिति'। अस्य ग्रन्थः प्रागेव विवृतः। किञ्च। प्रतिग्रहस्य ममेदमिति ज्ञानरूपस्य दातृव्यापारमात्रोत्पन्नस्वत्वव्यवहारार्थतामात्रसम्पादकतायामर्जनशब्दस्य तत्र गौणता स्यात्। अन्यस्मै तत्प्रतिपादनानुपपत्तिश्च पूर्वमुक्ता। तदस्वीकारे प्रागुत्पन्नतत्स्वत्वनाशश्च कल्प्यः स्यात्। न च दातृव्यापारात्तत्स्वत्वनाशात्साधारण सम्प्रदानस्वत्वोत्पत्तिरवश्याभ्युपेया त्वयापि। अपरथैतत्स्वत्वनाशेऽन्यस्य च स्वत्वानुत्पत्तेर्मध्यस्थस्य तस्य परिग्रहादिनाऽन्यस्य यस्य कस्यापि वनगतास्वामिकतृणकाष्ठादाविव तत्र स्वत्वं स्यात्परिपालनाप्रसक्तिश्च। तथा मन्मतेऽपि पात्रविशेषोद्देशकत्यागे पात्रविशेषस्योत्पन्नमपि स्वत्वन्तदस्वीकारे नश्यत्यन्यस्य स्वीकारात्तस्योत्पद्यत इति न कोऽपि विरोधः साधारणस्वत्वविनाशासाधारणस्वत्वोत्पत्तिरिति वाच्यम्। यतस्तत्र साधारण स्वत्वव्यवहाराभावेन तदुत्पत्तिरप्रामाणिकी नैव स्वीक्रियते गौरवाच्च। किन्तु दातुरेव यथेष्टविनियोगार्हस्वत्वापगमेऽपि परस्वत्वापत्तिफलाभावे दानशब्दार्थानिष्पत्तेर्विधिगिरस्कफलार्थिनः प्रतिपादनावधिपरिपालनीयत्वरूपं स्वत्वमस्त्येव। यथा हुते हविषि भक्षसाङ्गावावधि अस्पृश्यस्पर्शादिनिषेधाश्रयणनिमित्तदोषश्रवणानुरोधेन, तथा चान्यस्वत्वानुत्पत्तावपि न मध्यस्थपरिग्रहाद्यनिवारणादिदोषः। शिष्टाचारोऽप्युभयत्र परिपालनरूपस्तन्मूलकएव। न चोत्सर्गमात्रस्य तत्र त्वया वश्याभ्युपगमात्परस्वत्वापादनादरएव न स्यादिति वाच्यम्। तादृशोत्सर्गस्यैव विधितात्पर्यविषयत्वात्। होमस्थलेऽप्यन्यथा भक्षसाङ्गावानादरापत्तेः। यच्च याजनाध्यापन साहचर्यात् प्रतिग्रहस्यापि स्वत्वाजनकत्वेऽपि गौणमेवार्जनत्वमिति। तदप्यबोधात्। तत्र हि ये ये द्विज प्रभृतीनाम्भागास्तेषान्तेभ्यस्तेभ्यो भृतिरूपेणैव दक्षिणाकाले प्रतिपादनम्। परिक्रयव्यवहारोऽप्यतएव "स्वामिकर्म परिक्रयः" इति जैमिनिसूत्रादौ विस्तरेण

निर्णीतएव विस्तरस्तु तत्रैव द्रष्टव्यः । कर्म्मकरानतिजनिका भृतिरेव हि परिक्रयः । एवमध्यापनेऽपि शिष्योऽध्यापकायाध्यापनभृतिमेव तत्सन्तोषजननीमध्ययनान्तेऽर्पयन्ति । नियतभृतिकरणे तु भृतकाध्यापनमुपपातकम् । अतएव याजनाध्यापनयोः प्रतिग्रहाङ्गीकृतिशब्दवाच्यनिर्वेशाच्च पृथगभिधानमुभयमिश्रितत्वात् । तेन तयोरपि शुक्लमेवार्जनत्वम् । दक्षिणात्वव्यवहारोऽप्यतएव ऋत्विगध्यापकदेये । यदपि भ्रात्रादिधने भ्रात्रन्तरादि स्वत्वोत्पादकत्वन्तन्निधनस्य तत्कालीनभ्रात्रन्तरादिजीवनस्य वा क्लृप्तमिति पुत्रादावपि पित्रादिनिधनन्तत्कालीनञ्जीवनं वा स्वत्वोत्पादकमस्तु नत्वक्लृप्तं पुत्रादिजन्मनैवेत्युक्तम् । तदपि जन्मनोऽपि स्वत्वोत्पादकत्वस्यावश्यकत्वोपपादनादेव परिहृतम् । यच्चोक्तं ऊर्द्ध्वं पितुश्चेत्यादि मनुवचनमपि जन्मनः स्वत्वापादकत्वे न घटते प्राग्विभागनिषेधार्थत्वे तस्यास्वार्थपरत्वापत्तेः विभागस्य दृष्टार्थत्वेन तद्विधानकालविधानयोरसम्भवात् । विभागस्य पक्षप्राप्तस्य नियमार्थत्वे बहुवाक्यविधिविरोधाद्यापत्तेः । तस्मात्पितरि सति मातरि च सत्यान्तयोरस्वाम्याभाव उपरतयोरेव तयोः पुत्रादेस्तद्धनस्वाम्यमिति प्रतिपादनार्थमेव तद्वाक्यमिति । तदप्युक्तानाभिधानम् अस्वार्थविधानापत्तेस्तुल्यत्वात् । प्रागस्वातन्त्र्येण कालविधिपरत्वे बाधकाभावात् । इच्छाप्राप्तकालानुवादेऽपि व्यवहारशास्त्रत्वेनाविरोधात् । एतेन जातेष्टिवच्छ्रुतिविरोधादिनिमित्तानन्तर्यबाधकाभावात्पित्रुपरमानन्तरमेव विभागः प्रसज्येतेत्यप्यपास्तम् । कालविधानेन पित्रुपरमस्य निमित्तत्वाबोधनाच्च । अन्यथा निमित्ते सति नैमित्तिकस्यावश्यकत्वात्पित्रोरूर्द्ध्वं विभागाकरणे प्रत्यवायोऽपि प्रसज्येत । पतितत्वपारिव्राज्ययोः पितृस्वत्वनाशोऽप्यधिकः जन्मना स्वत्वन्तुल्यमेव । पातित्ये तु प्रायश्चित्तानाचरण एव स्वत्वनाशो विभागानर्हता च । अन्यथा द्रव्यसाध्यं प्रायश्चित्तमपि पित्रोः स्वद्रव्येण न स्यात् । अतएव मातुर्निवृत्ते रजसीत्याद्यपि कालविधिपरमेव । न तु पातित्यादिवत्तत्र स्वत्वाभावः । स तु लौकिक एव विभागनिषेधाच्च भ्रात्रादाविवेत्यादि वक्ष्यते । किञ्च । तदेवं पितृस्वत्वापगमएकः कालः अपरस्त्वनपगत एव पितृस्वाम्ये पितुरिच्छयैवेति कालद्वयमित्युक्त्वा मध्ये मिताक्षरोक्तं विभागकालत्रयं दूषयित्वा तस्मात्पतितत्वनिस्पृहत्वोपरमैः पितृस्वत्वापगम एकः कालः अपरस्तु सति स्वत्वे तदिच्छात इति कालद्वयमेव युक्तमित्युपसंहरता जीमूतवाहनेनैव पितृस्वत्वानपगमेऽपि पुत्राणां विभागो स्वीकृतस्तत्र पुत्राणां पितृधने स्वत्वोत्पादः कथम् । कथञ्च जीवतोः पित्रोरस्वाम्यप्रतिपादकवचनैः सह न विरोधः । अस्वस्य विभागासम्भवात्कथन्तेषां विभागः । पितृस्वत्वापगमएवोर्द्ध्वं पितुश्चेत्यनेन विवक्षितोऽतएव स्वतपदम्परित्यज्योर्द्ध्वमित्युक्तम् । पितृस्वत्वापगमोर्द्ध्वमित्यर्थः पितृस्वत्वापगमश्च तन्निधनादिवत्तस्य पतितत्वनिस्पृहत्वाभ्यामपीत्यादि स्वग्रन्थे पूर्वापरविरोधश्च न कथम् । अत्राप्युपरतस्पृहत्वादिना पुत्राणां स्वत्वम्पितृधने भवतीति ज्ञापनादयमेकःकाल इति उक्तम् तत्राप्युपरतस्पृहत्वादिनेत्यनेन पितृस्वत्वापगमएव यदि विवक्षितस्तर्ह्यनपगते पितृस्वत्वे तदिच्छाऽपरः काल इत्यभिधानं विरुद्धम् । पितृस्वत्वापगमकालीनपुत्रादिजीवनस्यैवार्जनस्य तदीयस्य स्वीकारात्पितृस्वत्वे सति पुत्राणान्तद्धने स्वत्वस्वीकारः कथम् । तद्धनात्वमित्वमातृरजोनिवृत्तिमात्रेण पितुः स्वत्वापगमे पूर्वद्रव्यस्वामिसम्बन्धाधीनन्तत्स्वाम्योपरमे यत्र द्रव्ये स्वत्वन्तत्र निरूढोदायशब्द इति स्वोक्तदायशब्दार्थाभावात्पितृस्वत्वानपगमे यत्र विभागस्तत्र दायशब्दप्रयोगोऽपि दुस्थ इत्यादि बहु व्याकुलो स्यात् । जन्मना स्वत्वस्वीकारे तु सर्वमनाकुलमित्यादि सुधीभिरूह्यम् । अतएव मिताक्षरादौ पूर्वस्वामिसम्बन्धाधीनं स्वत्वमन्यस्य यत्र धने तदेव दायशब्दवाच्यमित्युक्तन्न तु पूर्वस्वाम्योपरमेऽपि तत्र प्रवेशितः । तच्चैवं द्विविधो दाय इति" ।

यच्च जीमूतवाहनेनैव मिताक्षरोक्तम् विभागो नाम द्रव्यसमुदायविषयाणामनेकस्वाम्यानान्तदेकदेशेषु व्यवस्थापनमिति विभागशब्दार्थः । न च सम्बन्धाविशेषात् सर्वेषां सर्वधनोत्पन्नस्य स्वत्वस्य द्रव्यविशेषे व्यवस्थापनं विभाग इति वाच्यमित्याशङ्क्य सम्बन्ध्यन्तरसद्भावप्रतिपन्नस्य सम्बन्धस्यावयवेष्वेव विभागव्यवहारस्वत्वापादकत्वात् । तत्रापि पितृधनगतस्वत्वोत्पादविनाशकल्पनागौरवात् । यथेष्टविनियोगफलाभावेनानुपयोगाच्चेति दूषयित्वा उच्यते । "एकदेशोपात्तस्यैव भूहिरण्यादावुत्पन्नस्य स्वत्वस्य विनिगमनाप्रमाणाभावेन वैशेषिकव्यवहारानर्हतया अव्यवस्थितस्य गुटिकापातादिना व्यञ्जनं विभागः । विशेषेण भजनं स्वत्वज्ञापनं वा विभाग इति व्युत्पत्त्येत्युक्तम्" । तद्दायतत्त्वकृतोपन्यस्य

दूषितम् “यत्रास्य स्वत्वतत्रैव गुटिकापात इति कथं वचनाभावाच्चिन्तनीयम्। यत्र हि पितुर्निधनानन्तरं दीयाद्वयोरेकमादाय भ्राता यदर्जितवांस्तत्रार्जकस्य द्वौ भागावपरस्यैकः सर्वसम्मतः। तत्र यदि प्राचीनधनविभागकाले गुटिकापातादर्जकेन स एवाश्वः पश्चाल्लब्धस्तदा प्रादेशिकस्वत्ववादिमते प्रागर्जकस्यैव सोऽश्व इति तेनार्जितधने कथं भ्रात्रन्तरस्य विभागः। तत्रैवास्वत्वेन तदुत्पन्ने सुतरां स्वत्वाभावादश्वस्य चाविभाज्यत्वात्। यदि चार्जकेतरेण सोऽश्वो लब्धस्तदा तेनार्जितधनस्य समभाग एव युक्तः। एकस्य स्वायासेनापरस्याप्यायासेनार्जकत्वादिति। वस्तुतस्तु सम्बन्धाविशेषात् सर्वसम्बन्धिनां सर्वधनोत्पन्नस्य स्वस्य गुटिकापातादिना प्रादेशिकव्यवस्थापनं विभागः। कृत्स्नधनगतस्वत्वोत्पादविनाशावश्यकतया कल्प्यते। संसृष्टतायां प्रादेशिकस्वत्वोत्पादकृत्स्नधनस्वत्वोत्पादविनाशाविव। तत्र “विभक्तो यः पुनः पित्रा भ्रात्रा वैकत्र संस्थितः। पितृव्येणाथ वा प्रीत्या स तु संसृष्ट उच्यते” इति बृहस्पतिवचने येषामेव हि पितृभ्रातृपितृव्यादीनां पितृपितामहोपार्जितद्रव्येणाविभक्तं स्वत्वमुत्पत्तितः सम्भवति। तएव विभक्ताः सन्तः पुनः परस्परप्रीत्या पूर्वकृतविभागाः एव यत्तव धनं तन्ममापि यन्मम धनं तत्तवापीत्येकस्मिन् कार्ये एकरूपतया स्थितास्ते संसृष्टाः नत्वनेवंरूपाणामनसंसर्गमात्रेण सम्भूयकारिणां वणिजामपि संसृष्टत्वम्। नापि विभक्तानां द्रव्यसंसर्गमात्रेण। प्रीतिपूर्वकतादृगभिसन्धिं विनेत्यभिदधता दायभागकृतापि स्वहस्तितम्। साधारणस्वत्वादेव हि “बन्धूनामविभक्तानाम्भोगश्चैव प्रदापयेत्” इति कात्यायनवचनं यथाश्रुतमेव सङ्गच्छते। यावद्भुक्तधनमात्रे स्वस्वत्वस्यापि सत्त्वात्। अतएवात्र धने परस्परस्य चौर्यमपि नास्ति। एवञ्च।

“साक्षित्वप्रातिभाव्यञ्च दानं ग्रहणमेव च। विभक्ता भ्रातरः कुर्युर्नाविभक्ताः परस्परम्” इति नारदवचने परस्परनिरूपितदानादिनिषेधोऽपि न्यायमूलक एव। दानादेःपूर्वमपि देयादौ प्रतिग्रहीत्रादेः स्वत्वसत्त्वाद्दानप्रतिग्रहादेरसम्भवात्। अविभक्तत्वादेव चाविभक्तद्रव्येण यत्कृतं दृष्टादृष्टार्थं कर्म तत्र सर्वेषां फलभागित्वम्। तथा च नारदः “भ्रातॄणामविभक्तानामेको धर्मः प्रवर्त्तते। विभागे सति धर्मोऽपि भवेत्तेषां पृथक् पृथक्”। व्यासोऽपि “स्थावरस्य समस्तस्य गोत्रसाधारणस्य च। नैकः कुर्यात्क्रयन्दानं परस्परमतं विना”। अत्र समस्तस्येति विशेषणोपादानात् कृत्स्नधनगतमेव प्रत्येकं स्वत्वं स्वीक्रियते। तस्मात्तुल्यधनसम्बन्धान्तरसत्त्वेन सम्बन्धिसकाशात् संक्रान्तस्वत्वं यत्तव ममापीति सम्बन्धिनां प्रतीयते तद्विमतौ दानादिकं प्रतिषिद्धं स्वार्थम्। अतो नैकदेशगतं स्वत्वमिति। इदञ्च द्रव्यसमुदायविषयाणामनेकस्वाम्यानामेकदेशे व्यवस्थापनं विभाग इति वदतो मिताक्षराकृतोऽप्यभिमतमिति लक्ष्यते। इदन्त्विह विचार्यम्। द्रव्यसमुदायनिरूपितं स्वामिगतं स्वाम्यम् स्वामिनिरूपितञ्च द्रव्यसमुदाये स्वत्वं व्यासज्यवृत्ति प्रत्येकवृत्ति वा। नाद्यः एकैकस्वामित्वस्वत्वाश्रयनाशे तन्नाशस्यावशिष्टसमुदायगततदुत्पत्तेश्च कल्पनायामतिगौरवापत्तेः प्रत्येकस्य प्रत्येकद्रव्ये दानक्रयादियथेष्टविनियोगानर्हत्वापत्तौ व्यवहारविसंवादापत्तेश्च। न द्वितीयः विभागे सति तावतां नाशोत्पादकल्पनापत्तेः। स्वस्य सतोविभागो न तु विभागात् स्वत्वमिति ग्रन्थविरोधाच्च। अत्र ब्रूमः। प्रत्येकवृत्तीनि सम्बन्धाविशेषात् स्वाम्यानि च सन्त्येव। परस्परविभागागते. परस्परस्वान्यान्यदीयद्रव्ये तानि नश्यन्ति परमते मरणपारिव्रज्यादिनेवेति न काप्यनुपपत्तिः। व्यवस्थापनमपीदमेव अन्यथैकदेश उत्पादनमित्येव वदेत्। अतएव विनाशमात्रकल्पना न तु स्वत्वान्तरोत्पादकल्पना। जीमूतवाहनमते च तत्र वास्तवं मम स्वत्वमिति विभागात् प्रागनिरूपणात्तदधीनस्य तस्मात् लौकिककर्मोच्छेदः। अनुमत्या विभागोत्तरकृतया परस्परद्रव्ये परस्परस्वत्वान्तरोत्पत्तिस्वीकारे तदुत्पादविनाशकल्पनागौरवं यत्त्वया मिताक्षरामतं प्रत्यापादितं ततोऽपि तवाधिकमापन्नम्। व्यवहारानुपयोगेन समुदायस्वत्वस्य निष्प्रयोजनता च योपन्यस्ता साप्येकदेशगतस्वत्वाभ्युपगमे तुल्यैवेति कृतमतिदूरं गत्वा”। अनयोश्च मतयोर्युक्तायुक्तत्वं सुधीभिर्भाव्यम्

“देशानां जातिसंघस्य धर्मो ग्रामस्य यो भृगुः। उदितः स्यात् स तेनैव दायभागं प्रकल्पयेत्” भृगुवचनम् भृगुराहेति शेषः। दायस्य भागः प्रतिपाद्यतयाऽस्त्यत्र अच्। २जीमूतवाहनादिकृते दायस्य विभागज्ञापके ग्रन्थे पुं०। दायभागग्राहिक्रमश्च उत्तराधिकारिशब्दे १०९९ पृ० उक्तः।

**दायाद** पु० दायं विभजनीयधनमादत्ते आ+दा-क । दायमत्ति अद-अण् उपपदसमासो वा । १सपिण्डे २पुत्रे च अमरः । "न तं भजेरन् दायादाः" मनुः । "भुञ्जीतामरणात् चान्ता दायादा ऊर्द्धमाप्नुयुः" कात्या०। ३दायाधिकारिणि त्रि० "तेषां षट् बन्धुदायादाः" मनुः स्त्रियां टाप् "पुमान् दायादोऽदायादा स्त्री" निरु० अमन्त्यतान्तस्यैवेदं रूपम् मुग्धबोधमते अधन्तात् ङीप् स्यात् दायादीति भेदः। सा च ४कन्यायाम् शब्दार्थकल्प०। पुत्रे "त्वया दायादवानस्मि त्वं मे वंशकरः सुतः" भा०आ० ७५अ० ।

**दायाद्य** न० दायादस्य भावः ब्राह्मणा० ष्यञ् । १सापिण्ड्ये दायरूपमाद्यम् । २सापिण्ड्यनिबन्धने धने च "दायाद्यस्य प्रदानञ्च" मनुः "स एव पाण्डोर्दायाद्यं यदि प्राप्नोति पाण्डवः" भा०आ० १४१ अ०। "स्त्रीणां स्वपतिदायाद्यमुपभोगफलं स्मृतम्" भा०अनु०४७अ०

**दायित** त्रि० दायं दानं करोति दायि-कर्मणि-क्त । कृतदाने दापिते भरतः एतन्मूलं मूल्यम् ।

**दार** पु० ब०व०। दारयति भ्रातॄन् दॄ-णिच् दारि-कर्त्तरि अच् । भार्य्यायां "दारांश्च कुरु धर्मेण मा निमज्जीः पितामहान्" भा०आ० १०३अ० "दाराणां सुरवैरिणो रतिपतेर्मातुस्त्रिलोकीजितः" धनञ्जयवि० । "पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम्" मनुः । "सदृशानाहरेत् दारान्" यमः। करणे घञ् २औषधभेदे । भावे घञ् । ३विदारणे पु०।

**दारक** त्रि० दॄ-ण्वुल् । १विदारके २बालके "चाण्डालदारकैश्चानुगम्यमानम्" काद० "एकैव तमभिक्रामन्त्व तिष्ठन्त्वत्रैव दारकाः । तच्छ्रुत्वा वचनं तस्यास्तेऽवाधाव दारकान्" भा०आ० १२६ अ० । "मद्गुरांश्च महाघोरान् समरे शत्रुदारकान्" भा०द्रो० १५६अ० ३पुत्रे "कुमारो भर्त्तृदारकः" अमरः । ४कन्यायां स्त्री "सन्तानसन्धिर्विज्ञेयः दारिकादानपूर्वकः" कामन्दकी० "पूतनां दैत्यदारिकाम्" हरिवं०४२अ०। ५ग्राम्यसूकरे पुंस्त्री राजनि०। तस्य भूमिविदारकत्वात् तथात्वम् ।

**दारकर्म्मन्** न० दाराणां तद्भावस्य प्रतिपादकं कर्म । भार्य्यात्वसम्पादके ज्ञानविशेषरूपे विवाहे त्रिका० "सा प्रशस्ता द्विजातीनां दारकर्म्मणि मैथुने" । "सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्म्मणि" मनुः । दारक्रियाऽप्यत्र स्त्री "पुनर्दारक्रियां कुर्य्यात् पुनराधानमेव च" मनुः "दारक्रिया योग्यदशञ्च पुत्रम्" रघुः । "क्लीबे दारक्रिया बालक" भा० स० ३६अ०।

**दारग्रहण** न० दाराणां दारत्वस्य सम्पादकं ग्रहणं ज्ञानम् । दारत्वसम्पादके ज्ञानरूपे विवाहे "तेन भार्य्यात्वसम्पादकं ग्रहणं विवाहः । तत्र स्वीकाररूपज्ञानविशेषस्य समवायविषयतयोर्भेदात् वरकन्ययोर्विवाहकर्तृत्व कर्मत्वे अतएव "कन्यापुत्रविवाहेष्विति" विष्णुपुराणोक्तं संगच्छते । भार्य्यात्वस्य स्वरूपसद्विशेषत्वेन नेतरेतराश्रयदोष इति" उद्वा० रघु० "तद्दारग्रहणे यत्नं सन्तत्यां च मनः कुरु" भा० आ०१२अ०। दारपरिग्रहादयोऽप्यत्र "अतःपरं समावृत्तः कुर्य्याद्दारपरिग्रहम्" मनुः

**दारण** न० दारयति जलमलम् दॄ-णिच् युच् । १कतकफले शब्दर०। तस्य जलकालुष्यदारणात्तथात्वम् २दारकमात्रे त्रि० "समाधत्त शितं बाणं गिरीणामपि दारणम्" भा० क०४८अ०करणे ल्युट् । ३विदारणसाधने अस्त्रादौ त्रि० स्त्रियां ङीप्। "नमस्ते शुम्भहन्त्रीं निशुम्भसुहृदि दारणीम्" हरिवं०१६६अ०। भावे ल्युट् । ४विदारणे भेदने "दारुदारणपदैः समाहतम्" "तद्दारुदारणपदेषु चतुर्षु किं स्यात्" लीला०। ५भेदीकरणे व्रणादिस्फोटनसाधके ५औषधभेदे तच्च सुश्रुतेनोक्तं यथा

"चिरविल्वोऽग्निको दन्ती चित्रको हयमारकः । कपोतगृध्रकङ्कानां पुरीषाणि च दारणम् । क्षारद्रव्याणि वा यानि क्षारो वा दारणं परम्"

**दारद** न० दरदि देशभेदे भवः शिण्ड्या०अण् । १विषभेदे अमरः २पारदे ३हिङ्गुले च मेदि०। दरदो देशस्य अभिजनः अण् । ४समुद्रे त्रिका० ।

**दारबलिभुज्** पु० दारेण चञ्चुपुटेन विदारणेन बलिं भुङ्क्ते भुज-क्विप् । बकपक्षिणि त्रिका०।

**दारव** त्रि० दारुणः विकारः रजता० अञ् । दारुविकारे काष्ठमये पदार्थे "दारवाणां च तक्षणम्" मनुः । "अभीष्टं पृथिवीगोलं कारयित्वा तु दारवम्" सू०सि०

**दारि** त्रि० दॄ-णिच्-इन् । १दारके स्त्रियां वा ङीप् ।

**दारिका** स्त्री दारक+टाप् कापि अत इत्वम्। कन्यायाम् जटाध० दारकशब्दे उदा०।

**दारिद्र्य** न० दरिद्रस्य भावः ष्यञ् । दरिद्रतायां दुर्गतौ धनादिराहित्ये "प्रणीय दारिद्र्यदरिद्रतां नृपः" नैष० दारिद्र्यवर्णनं मृच्छकटिकायां यथा

"सुखं हि दुःखान्यनुभूय शोभते घनान्धकारेष्विव दीप"

दर्शनम्। सुखान्तु यो याति नरो दरिद्रतां धृतः शरीरेण मृतः स जीवति। दारिद्र्यमनन्तकं दुःखम्। वयस्य! न ममार्थान् प्रति दैन्यम्। पश्य "एतत्तु मां दहति यद्गृहमस्मदीयं क्षीणार्थमित्यतिथयः परिवर्जयन्ति। संशुष्कसान्द्रमदलेखमिव भ्रमन्तः कालात्यये मधुकराः करिणः कपोलम्"। सत्यं न मे विभवनाशकृतास्ति चिन्ता, भाग्यक्रमेण हि धनानि भवन्ति यान्ति। एतत्तु मां दहति नष्टधनाश्रयस्य यत् सौहृदादपि जनाः शिथिलीभवन्ति। दारिद्र्याद्धि ह्रियमेति ह्रीपरिगतः प्रभ्रश्यते तेजसो, निस्तेजाः परिभूयते, परिभवान्निर्वेदमापद्यते। निर्विण्णः शुचमेति, शोकपिहितो बुद्ध्या परित्यज्यते, निर्बुद्धिः क्षयमेत्यहो निर्धनता सर्वापदामास्पदम्। दारिद्र्यं हि पुरुषस्य। निवासश्चिन्तायाः परपरिभवो वैरमपरं, जुगुप्सा मित्राणां स्वजनजनविद्वेषकरणम्। वनं गन्तुं बुद्धिर्भवति च कलत्रात् परिभवो, हृदिस्थः शोकाग्निर्न च दहति सन्तापयति च"। तत्रैव अन्यत्र स्थाने "दारिद्र्यात् पुरुषस्य बान्धवजनो वाक्ये न सन्तिष्ठते, सुस्निग्धा विमुखीभवन्ति सुहृदः स्फारीभवन्त्यापदः। सत्त्वं ह्रासमुपैति शीलशशिनः कान्तिः परिम्लायते, पापं कर्म च यत्परैरपि कृतं तत्तस्य सम्भाव्यते। सङ्गं नैव हि कश्चिदस्य कुरुते सम्भाष्यते नादरात् सम्प्राप्तो गृहमुत्सवेषु धनिनां सावज्ञमालोक्यते। दूरादेव महाजनस्य विहरत्यल्पच्छदो लज्जया मन्ये निर्धनता प्रकाममपरं षष्ठं महापातकम्। दारिद्र्य! शोचामि भवन्तमेवमस्मच्छरीरे सुहृदित्युषित्वा। विपन्नदेहे मयि मन्दभाग्ये, ममेति चिन्ता क्व गमिष्यसि त्वम्"।

तत्सूचकयोगभेदा जातकपद्धतावुक्ता यथा "समस्तपापखेचरैर्युतेक्षितं धनाभिधम् दरिद्रताविधायकं विशेषतः कृशानुना"। "बुधगुरुकवयश्चेद्वित्तगा वित्तनाशं विदधति यदि दृष्टाः सोमसौम्येन्दुपुत्रैः" "लोपः शशी ज्ञेन विलोकितोऽर्थे पूर्वार्जितार्थस्य विनाशदः स्यात्"। "नवीनवित्तागमरोधकोभवेत् रविर्धनेऽत्यष्टमिते कुजोऽङ्के षड्भुयके (?) धननाशदः स्यात्"। ताजकयोगशब्दे वक्ष्यमाणस्थूलयुगगोलकयोगैर्दरिद्रताप्तिः हृच्ज्जा०उक्ता यथा "विधनस्य भूले" "धनविरहितः पाषण्डी वा युगे त्वथ गोलके विधनमलिन" इत्यादि "पञ्चवन्नार्कियोगे स्यान्मूर्खो धूर्त्तो धनोज्झितः"। "तपनारार्किपुत्राणां योगे निःस्वोऽतिदुःखितः"। "चापतेर्वै प्रजातोऽपि शैशवे सम्भवो नरः। मलिनो दुःखितो नीचो निःस्वोदासः खलो भवेत्"। अस्य अपवादः "लग्नाद्विधोर्वा दृष्टिस्थैः शुभैः सर्वैः शुभं फलम्। द्वाभ्यां मध्यं तथैकेनाल्पं चेन्नास्ति दरिद्रता"। जातकपद्धतिः।

**दारित** त्रि० दृ—णिच्—क्त। विदारिते अमरः।

**दारी** स्त्री दारयति दृ—णिच्—इन्-ङीप्। क्षुद्ररोगभेदे। तल्लक्षणं सुश्रुते उक्तं यथा "परिक्रमणशीलस्य वायुरत्यर्थरूक्षयोः। पादयोः कुरुते दारीं सरुजां तल संश्रिताम्"।

**दारु** पु०न० दीर्य्यते दृ—उण्। काष्ठे अमरः "प्रतिष्टब्धश्च विद्वांस्तु भस्मीभवति दारुवत्"। "वानस्पत्यं मूलफलं दार्वग्न्यर्थं तथैव च" मनुः "शैक्यं कमण्डलुश्चैव द्विदलं दारुमेव च" हरिवं० २०१अ०। १पित्तले २देवदारुणि मेदि०। ३शिल्पिनि ४दारके त्रि० धरणिः। दा—दाने दो—खण्डने वा रु। ५दानशीले ६खण्डनशीले च त्रि०।

**दारुक** न०दारु+स्वार्थे क। १देवदारुणि राजनिः। दारु+संज्ञाया कन्। २कृष्णस्य सारथौ पु०। "रथेष्वतिरथो यन्ता दारुकः केशवस्य वै" हरिवं० ११६अ०। "रैवतञ्च गिरिं देवो गत्वा दारुकमब्रवीत्। मदीयं रथमेतं त्वं ग्राहयेहैव दारुक!" १२२अ०। "उत्कन्धरं दारुक इत्युवाच" माघः तस्यापत्यं फिञ्। दारुकि तदपत्ये "शिक्षितो दारुकिस्तदा" भा०व०१८अ०

**दारुकच्छ** पु०देशभेदे तत्र भवः कच्छादिदेशवाचित्वात् वुञ्। दारकच्छक तद्भवे त्रि०। [२वनकदल्यां च राजनिः।

**दारुकदली** स्त्री दारु इव कठिना कदली। १काष्ठकदल्यां

**दारुका** स्त्री दारुणा कायति कै—क। दारुणः प्रतिकृतिर्वा इवार्थे क। काष्ठमयपुत्तलिकायाम् शब्दरत्ना०

**दारुकावन** न०वनभेदरूपे तीर्थभेदे शिवपु०

**दारुकेश्वर** पु० शिवलिङ्गभेदे शिवपु०। [भेदे राजनि०।

**दारुगन्धा** स्त्री दारुणि गन्धो यस्याः। (चोड़ा) गन्धद्रव्य-

**दारुगर्भा** स्त्री दारु तन्मयो गर्भोऽस्याः। काष्ठकदल्यां हारा०

**दारुचिनी** स्त्री स्वनामख्यातायां गुड़त्वचि शब्दार्थचि०।

**दारुचीर्णक** न० गुड़त्वचि शब्दार्थचि०।

**दारुज** त्रि० दारुणो जायते जन—ड। १काष्ठजाते २मर्दले वाद्यभेदे पु० शब्दर०।

**दारुण** पु० दारयति भीषयते चित्तं दृ—भये णिच् "कृदारिभ्य उनन्" उणा०उनन्। १चित्रके २भयानकरसे

अमरः। ३तद्दतिभयानके दुःसहे भीषणे ४भयहेतौ त्रि० “हृदयकुसुमशोषी दारुणो दीर्घशोकः” सा०द०। उज्ज्वलदत्तस्तु दृ—विदारे इत्यस्यैव णिजन्तस्य रूपमिदमित्याह। ५रौद्रसंज्ञकनक्षत्रगणे ज्यो०। “उपेन्द्र! वज्रादपि दारुणोऽसि” गीत०। “दारुणा कण्डुरा रूक्षा केशभूमिः प्रजायते” सुश्रुतः। “वाचा दारुणया क्षिपन्” मनुः। ६विदारके त्रि०। ततः भृशा०अभूततद्भावेऽर्थे क्यङ् दारुणायते “वियोगिहृद्दारुणि दारुणायसे” नैष०७विष्णौ पु० “सुधन्वा खण्डपरशुर्दारुणो द्रविणप्रदः” विष्णुस०। “सन्मार्गविरोधिनां दारुणत्वात् (खण्डकत्वात्) दारुणः” भा०।

**दारुणक** पु० सुश्रुतोक्ते क्षुद्ररोगभेदे क्षुद्ररोगशब्दे २२८२पृ० दृश्यम्। “शिरां दारुणके विद्धा स्निग्धस्विन्नस्य मूर्द्धनि” सुश्रु०।

**दारुणा** स्त्री “तृतीयाऽष्टमयसंज्ञा या दारुणा सा प्रकीर्त्तिता” इत्युक्ते १तिथिभेदे। २नर्मदाखण्डाधिष्ठातृदेवीभेदे च शब्दार्थचि०।

**दारुतीर्थ** न० दारुवनभेदरूपे तीर्थभेदे शिवपु०।

**दारुनिशा** स्त्री दारुप्रधाना निशा हरिद्रा। दारुहरिद्रायाम् रत्नमा०। [हिङ्गुपत्र्याम् राजनि०।

**दारुपत्री** स्त्री दारुणः देवदारुणः पत्रमिव पत्रमस्याः ङीप्।

**दारुपात्र** न० दारुणः पात्रम्। काष्ठमये जलाधारादिपात्रे “अलाबु दारुपात्रञ्च मृण्मयं वैदलं तथा। एतानि यतिपात्राणि मनुः स्वायम्भुवोऽब्रवीत्” मनुः।

**दारुपीता** स्त्री दारुणा काष्ठेन पीता। दारुहरिद्रायां राजनि०। [हारा०।

**दारुपुत्रिका** स्त्री दारुमयी पुत्रिका। काष्ठपुत्तलिकायाम्।

**दारुमुख्याह्वया** स्त्री दारुमुख्यमाह्वयते आ+ह्वे—श। गोधायां राजनि०। आ+ह्वे—क। दारुमुख्याह्वाऽप्यत्र शब्दार्थ०। [ओषधिभेदे शब्दार्थचि०।

**दारुमूषा** स्त्री दारुप्रधाना मूषा। (दारुमूषीति) ख्याते

**दारुयन्त्र** दारुमयं यन्त्रम्। काष्ठनिर्मितयन्त्रभेदे “अस्वतन्त्रो हि पुरुषः कार्य्यते दारुयन्त्रवत्। केचिदीश्वरनिर्दिष्टाः केचिदेव यदृच्छया” भा० उ० १५८ अ०।

**दारुवधू** स्त्री दारुमयी वधूः वधूप्रतिमा दारुमयी वधूरिव वा। १काष्ठपुत्तलिकायां २काष्ठमयीस्त्रीप्रतिमायाञ्च। “जलविन्दुमिन्दुमणिदारुवधूम्” माघः। “इन्दुमणिः चन्द्रकान्तशिला सैव दारुवधूस्तन्मयी वधूः स्त्रीप्रतिमा” मल्लि०। दारुस्त्रीदारुपुत्रीदारुपुत्तलिकादयोऽप्यत्र।

**दारुवह** न०दारु वहति वह—अच् “इको वहेऽपील्वादिभ्यः” पा०पील्वा०न पूर्वपददीर्घः। दारुवाहके जलादौ।

**दारुसार** पु० दारुषु सारः श्रेष्ठः। चन्दने शब्दार्थचि०।

**दारुसिता** स्त्री दारुणि सितेव (दारुचिनीति) ख्यातायां गुडत्वचि। “ज्ञेया दारुसिता स्वाद्वी तिक्ता वानिलपित्तहृत्। सुरभिः शुक्रबलकृत्सुखशोषतृषापहा” भावप्र० तद्गुणा उक्ताः। [हरिद्रायाम् रत्नमाला।

**दारुहरिद्रा** स्त्री दारुमयी हरिद्रा। स्वनामख्यातायाम्

**दारुहस्तक** पु० दारुणो हस्त इव “इवे प्रतिकृतौ” पा० कन्। काष्ठमयदर्वीभेदे अमरः।

**दार्घसत्र** त्रि० दीर्घसत्रे भवः अण् “देविकाशिंशपेत्या” पा० आद्यच आत्। दीर्घसत्रे भवे।

**दार्ढ्य** न० दृढस्य भावः ष्यञ्। दृढत्वे “उत्साहो वाग्मिता दार्ढ्यमापत्क्लेशसहिष्णुता” कामन्दकी०।

**दार्तेय** त्रि० दृतौ भवादि ढञ्। १दृतिभवे २तत्रस्थे च।

**दार्दुर** पु० दर्दुरः भत्तृपात्रभेदस्तदाकारोऽस्त्यस्य प्रज्ञा० ण। १दक्षिणावर्त्तशङ्खभेदे शब्दार्थचि०। दर्दुरस्येदम् अण्। २दर्दुरसम्बन्धिनि त्रि० स्त्रियां ङीप्। “चालितो गुरुपुत्रेण भार्गवोऽङ्गिरसेन वै। प्रविष्टो दार्दुरीं मायामनादृष्टिं चकार ह” हरिवं० ४१६१ श्लो०। दर्दुरश्चेह राक्षसः तेन दार्दुरी राक्षसी

**दार्दुरिक** त्रि०दर्दुरः भत्तृपात्रभेदः शिल्पमस्य ठञ्। भत्तृपात्रभेदकारके (कुमार) कुलाले।

**दार्भ** त्रि० दर्भस्येदम् अण्। कुशसम्बन्धिनि।

**दार्भि** पुंस्त्री दर्भस्य गोत्रापत्यम् इञ्। दर्भर्षिगोत्रापत्ये आग्रायणे तु तस्मिन् फक्। दर्भायण इत्येव।

**दार्भ्य** त्रि० दर्भे भवः कुर्वा० ण्य। दर्भभवे।

**दार्व** पु० देशभेदे स च देशः वृ०स० कूर्मविभागे १४ अ० ऐशान्यामुक्तः “ऐशान्यां मेरुकनष्टराज्यं त्वपक्रमे ब्रह्मपुरदार्वडामरवनराज्यकिरातचीनकौणिन्दाः”। “कौलिसर्पाः समहिषा दार्वाश्चोलाः सकेरलाः” हरिवं०१४ अ०। २तत्रस्थे ३नदीभेदे च तस्या इदम् नद्यादि०ढक्। दार्वेय तदीयजलादौ त्रि० दार्वेषु भवः बहुवचनार्थे वुञ्। दार्वक दार्वजनपदेषु भवे त्रि०।

**दर्वाट** न० दारु इव निश्चलतया निरूपणीयविषयनिश्चयार्थमटन्त्यत्र अट—घञर्थे क। १चिन्तागृहे,२मन्त्रगृहे च। हारा०।

**दार्वण्ड** पुंस्त्री दारु—इव कठिनोऽण्डोऽस्य । मयूरे शब्दार्थकल्प० । स्त्रियां जातित्वात् ङीष् ।

**दार्वाघाट** पुंस्त्री दारु आहन्ति आ+हन—अण् “दारावाहनोऽण् अन्तस्य च टः संज्ञायाम्” वार्त्ति० अण् नस्याने टः । (काठठोकरा) पक्षिभेदे अमरः स्त्रियां जातित्वात् ङीष् । “पुरुषमृगश्चन्द्रमसो गोधा—कालका—दार्वाघाटास्ते वनस्पतीनाम्” यजु०२४।३५। असंज्ञायां तु न टान्तादेशः । दार्वाघात काष्ठाघातमात्रे त्रि० । स च दार्वाघातखगे शब्दरत्ना० अन्तार्थे टान्तत्वमेव युक्तं वार्त्तिके संज्ञायां टान्तत्वस्यैव साधनात् ।

**दार्विका** स्त्री दारयति दॄ+उण्वादित्वात् साधुः ङीष् दार्वी दारुहरिद्रा तद्विकारोऽपि दार्वी अभेदोपचारात् स्वार्थे क । १दारुहरिद्राक्वाथोद्भवे तुत्थे अमरः २गोजिह्वौषधौ शब्दार्थचि० ।

**दार्विपत्रिका** स्त्री दार्व्याः दारुहरिद्रायाः पत्रमिव पत्रमस्त्यस्याः ठन् संज्ञायां ह्रस्वः तत् तदाकारः पत्रेऽस्त्यस्या वा ठन् । गोजिह्वायां रत्नमाला ।

**दार्वी** स्त्री दारयति दॄ—णिच् उन् स्त्रियां दारुणस्य अवयवविभागरूपत्वेन गुणवचनत्वात् वा ङीष् दॄ+उण्वा०नि० ङीष् वा । दारुहरिद्रायाम् ।

**दार्वीक्वाथोद्भव** न०दार्व्याः दारुहरिद्रायाः क्वाथादुद्भवति उद्+भू—अच् । १रसाञ्जने राजनि०२तुत्थिमरसाञ्जने रत्नमा०।

**दार्श** त्रि० दर्शे भवम् आर्षे ठञं बाधित्वा अण् । १दर्शभवे “दार्शमग्नन्त्यन्यपर्वपौर्णमासश्च योगतः” मनुः । लोके तु कालात् ठञ् । दार्शिक इत्येव । दृशि नेत्रे भवः अण् । २नेत्रभवे त्रि० ।

**दार्शपौर्णमासिक** त्रि० दर्शे पौर्णमास्यां च भवः ठञ् । दर्शपौर्णमासीभवे । “दार्शपौर्णमासिकेतिकर्त्तव्यता” कात्या०श्रौ० ५।६।२१। सूत्रे कर्कः ।

**दार्षद** त्रि० दृषदि पिष्टः शैषिकः अण् । दृषदि प्रस्तरे पिष्टे सक्तुप्रभृतौ

**दार्षद्वत** न० दृषद्वत्या नद्यास्तीरे कर्त्तव्यम् अण् । सत्रभेदे तद्विधानादि यथा “दार्षद्वतसत्त्रिमाचार्ययोरन्यतरस्य गा रक्षेत् संवत्सरम्” कात्या०श्रौ० २४।६।२२ इत्यादिभिः“एतत् च दृषद्वतीतीरेण”इत्यन्तैः सूत्रैरुक्तः तत्राव भ्यवशिष्टम्त उत्तरसूत्रेषु दृश्यः । “दार्षद्वतमेतत्संज्ञं सत्रमभिधीयते” कर्कः ।

**दार्ष्टान्तिक** त्रि० दृष्टान्तेन युतः ठञ् । दृष्टान्तयुक्ते उपमेये “स्वापस्य दार्ष्टान्तिकत्वेन विवक्षितम्” इ०उ०शङ्करभाष्यम्

**दाल** न० दले सञ्चितम् अण् । पुष्पात् पतिते दलसञ्चिते १मधुभेदे भाव०प्र०तक्षलवणादि मधुशब्दे दृश्यम् इन्द्रनीलदलाकारस्थूलमक्षिकोत्पन्ने २वल्कोटरान्तर्भवे मधुनि च राजनि० । ३कोद्रवे धान्यभेदे पु०हेमच० ।

**दालन** पु०दालयति दल—णिच्—ल्यु । दन्तगते रोगभेदे रोगशब्दे ४८६६ पृ०दृश्यम् । [विषभेदे हेमच० ।

**दालव** पु० दलति दल—वन् तस्यायम् अण् । स्थावर-

**दाला** स्त्री दल्यते दल—कर्मणि—घञ् । महाकाले किम्पाके इत्त्वे भावप्र० स्वार्थे क । दालिका तत्रार्थे

**दालि** स्त्री दल—इन् । (दाल)इति ख्याते दलिते १शमीधान्ये शब्दार्थचि०। दाडि इस्य लः । २दाडिम्बशब्दार्थे च स्त्रीत्वात् वा ङीष् तत्रार्थे सा च ३देवदालीलतायां राजनि०।

**दालिम** पु० दाडिम+डस्य लः । दाडिमशब्दे भरतः

**दाल्भ** पु० ब०व० । दाल्भ्यस्य दल्भगोत्रजस्य छात्राः अण् यलोपः । दाल्भ्यस्य छात्रेषु

**दाल्भ्य** पुंस्त्री दल्भस्य गोत्रापत्यम् गर्गा०यञ् । दल्भर्षिगोत्रापत्ये बके ऋषिभेदे । “बकोदाल्भ्यः स्थूलशिराः कृष्णद्वैपायनः शुकः” भा०स०४अ० दल्भशब्दे छान्दो० वाक्यम् दृश्यम् । तस्य युवापत्यम् यूनि फिञ् । दाल्भ्यायनि दल्भ्यस्य यून्यपत्ये । २पुण्याश्रमरूपे तीर्थभेदे । “दाल्भ्यघोषश्च दाल्भ्यश्च धरणीस्थो महायशाः । कौन्तेयानन्तयशसः सुव्रतस्यामितौजसः । आश्रमः ख्यायते पुण्यस्त्रिषु लोकेषु विश्रुतः” भा०व०९०अ०

**दाल्मि** पु० दल—णिच् बा०मि । इन्द्रे त्रिका०।

**दाव** पु० दुनोति दु—कर्त्तरि ण । १वने २वनभवेऽनले च अमरः । “ददर्श दावं दह्यन्तं महान्तं गहने वने” भा०अ० २६०श्लो० “वनमिव दावपरीतम्” इ०स०२४अ०। “इन्द्रमिन्द्रः सदा दावं खाण्डवं परिरक्षति” भा०आ० २२३अ० “दावं दग्ध्वा यथा शान्तं पावकं शिशिरात्यये” भा०द्रो० २८४२ श्लो० ‘व्यधिव्यधन्वा विचचार दावम्’ रघुः । भावे घञ् । ३उपतापे च ।

**दावन्** पु० दा—कर्मभावादौ उणा०वनि । १देये २दाने च “नियुत्वता रथेनायाहि दावने वायो मखस्य दावने” ऋ०१।१३४।१ “दावने दातव्याय हविषे तत्स्वीकाराय पुनः किमर्थं दावने अस्मभ्यमभिमतदानाय । उभयत्र ददातेः कर्मणि भावे च क्रमेणौणादिको वनिः । छान्दसः नोपधालोपः”माधवः । लोके तु दावा इत्यादि ।

"अतो मनिन्क्वनिब्वनिपश्च" पा० सुप्युपपदे उपपदे च वनिप्। भूरिदावा इत्यादि बहुदातरि। अयं छन्दस्येव लोके तु न पाणिनिः मुग्धबोधे तु लोकेऽपीत्युक्तम्।

**दावप** पु० दावं वनवह्निं पाति पा—क। पुरुषभेदे "अरण्याय दावपम्" यजु०३०।१६ पुरुषमेधे एकादशयूपे आलभ्यपुरुषभेदोक्तौ।

**दावसु** पु० अङ्गिरसो मुनौ पञ्चमाध्यत्र०

**दावाग्नि** पु० ६त०। वनानले दावानलादयोऽप्यत्र। "दावाग्निसदृशो मेऽद्य दन्दहीति शुभां तनुम्" हरिवं० १५९अ० "जज्वाल चाग्निमदनो दावाग्निरिव निर्दयः" भा० वि० १४अ०।

**दाविक** त्रि० देविकायां नदीभेदे भवः अण् "दाविकाशिंशपेत्यादिना" आद्यच आत्। देविकानद्यां भवे। एवं देविकाकूले भवः अण्। दाविककूल तत्कूलभवे शाल्यादौ।

**दाश(स)** हिंसने स्वा० पर०सक० सेट्। दाश्नो(स्नो)ति अदाशी(सी)त् अयं वैदिकः। "यस्ते दाश्नोति मम उक्तिभिः" ऋ०८।४।६ "दाशद्वाशुषे हन्ति वृत्रम्" ऋ०२।१।६४ "यस्त्वं सुद्रविणो ददाशो अनागास्त्वमदिते!" ऋ०१।६४।१५

**दाश** दाने चु० उभ०सक० सेट्। दाशयति-ते अदिदत् अदिदाशत्-त। "स वा एतेभ्यस्तत् पुरोऽदाशयत् तस्मात् पुरोडाशः" शत० ब्रा०१।६।२।५

**दाश** दाने भ्वा० उभ०सक० सेट्। दाशति-ते अदाशीत् अदाशिष्ट अदित् णिच् अदिदाशत्-त। "यस्तुभ्यं दाशान्न तमंहो अश्नवत्" ऋ०२।२३।४ "तुभ्यं दाशतः स्याम" ७।१४।२

**दाश(स)** पुंस्त्री दाश्नो(स्नो)ति मत्स्यान् दस(श)ति मत्स्यान् वा पचा० नि० नलोपः दाश(स)ते दीयते मत्स्यस्य मूल्यमस्मै घञ् वा। १मत्स्योपजीविनि धीवरे स्त्रियां जातित्वात् ङीप्। "दाशानां भुजवेगेन नद्याः स्रोतोजवेन च। वायुना चानुकूलेन तूर्णं पारमवाप्स्यति" भा० आ० ५८७५श्लो० "स हात् संमोहमापन्नो नावि दाशो यथा तथा" भा० आनु० १२६५श्लो०। "एष नौयायिनामुक्तो व्यवहारस्य निर्णयः। दाशापराधतस्तोये दैविके नास्ति निग्रहः। यच्चापि किञ्चिद्दाशानां विशीर्येतापराधतः। तद्दाशैरेव दातव्यं समागम्य स्वतोऽंशतः"। "निषादो मार्गवं सूते दा(श)सं नौकर्मजीविनम्। कैवर्त्तमिति यं प्राहुरार्यावर्त्तनिवासिनः" इति च मनुः स्वार्थे अ। तत्रार्थे। ततः परं पुत्रशब्दे आद्युदात्तस्तत्पुरुषे दाशपुत्रः। दाशते स्वनिरचे; २भृत्ये (चाकर) पु०रमानाथः।

**दाशग्राम** पु० दाशप्रधानो ग्रामः। धीवरप्रधाने ग्रामे ततः चतुरर्थ्यां कुमुदादि० ठञ् काश्यादि० ठञ्ञिठौ वा दाशग्रामिक तस्य सन्निकृष्टदेशादौ त्रि०। स्त्रियां ठञि ङीप् ञिठि टाप् इति भेदः।

**दाशतयी** स्त्री० दश अवयवा अस्य तयप् दशतयः ततः स्वार्थे प्रज्ञा० अ। दशावयवके ऋग्भेदसंहितायां स्त्री तस्याः दशमण्डलात्मकत्वात्तथात्वम्।

**दाश(स)नन्दिनी** स्त्री ६त०। व्यासमातरि सत्यवत्यां धीवरकन्यायाम्। कालीशब्दे २०२१ पृ० दृश्यम्।

**दाश(स)पु(पू)र** न० दाशा(सा)न् कैवर्त्तान् पिपर्त्ति पालयति पृ—क। पूरयति पूर—अच् वा। कैवर्त्तीमुस्तके क्षीरस्वामी [भिभेदे शब्दार्थचि०।

**दाश(स)फली** स्त्री दाश(स)प्रियं फलमस्याः ङीप्। कोष-

**दाश(स)मेय** पु० देशभेदे स च देशः ह०सं० १४अ० उत्तरतः कैलास इत्युपक्रमे "यौधेय दाश(स)मेय श्यामाकाः क्षेम-धूर्त्ताश्च" उत्तरस्यामुक्तः।

**दाशरथ** पु० दशरथस्येदम् अण्। १श्रीरामे "प्रदीयतां दाशरथाय मैथिलीति" महानाटकम्। दाशरथेः श्रीरामस्येदम् अण्। २दाशरथिसम्बन्धिनि त्रि०। "अजीनदाशरथं न वाक्यम्" भट्टिः।

**दाशरथि** पु० दशरथस्यापत्यम् अत इञ्। दशरथस्यापत्येषु श्रीरामादिषु चतुर्षु। "अवधिं विलङ्घ्य यदि दाशरथिः" "एष दाशरथिभूयमेत्य च" "भरसदोदाशरथिर्भवन् भवान्" माघः। "सोऽहं दाशरथिर्भूत्वा रणभूमेर्बलिक्षमम्" रघुः।

**दाशराज्ञ** त्रि० दशानां राज्ञामिदं तद्वितार्थद्विगोः अण्। उपधालोपः। दशानां राज्ञां सम्बन्धिनि।

**दाशरात्रिक** त्रि० दशरात्रेण निर्वृत्तः ठञ्। दशरात्राख्ये १क्रतुभेदे २दशरात्रस्येदम् ठञ्। दशरात्रसम्बन्धिनि "दाशरात्रिकाण्याहानि ह्रस्वादिभ्योऽनेन" कात्या०श्रौ० २३।१।५ "देवेभ्यो दशरात्रं दिनेभ्यो दाशरात्रिकं छन्दम्" शत० ब्रा० १२।१।२।२

**दाशु** त्रि० दाश—दाने उन्। १दातरि २दत्ते च "यं युवं दाश्वध्वराय देवाः" ऋ०६।६८।६ "दाश्वध्वराय दत्तहविष्काय" भा०।

**दाशुरि** त्रि० दाश हिंसने उरिन्। हिंसके। "स्वयं चित्स मन्यते दाशुरिः" ऋ० ८।४।१२। "दाशुरिर्दाश्वान्" भा०

**दाशेय** पुंस्त्री दाश्या धीवर्य्या अपत्यम् ढक्। धीवर्य्या अपत्ये। स्त्रियां ङीप्। सा च व्यासमातरि सत्यवत्यां शब्दर० "अभिगम्योपसंगृह्य दाशेयीमिदमब्रवीत्" भा० उ० १७२ अ०। [स्त्रियां टाप्।

**दाशेर** पुंस्त्री दाश्या अपत्यम् क्षुद्रा०ढ्रक्। धीवर्य्या अपत्ये

**दाशेरक** पु० दाशेरप्रधानः देशः संज्ञायां कन्। १मालवदेशे २तदधिपे नृपे पित्रादिक्रमेण ३तद्देशवासिषु ब०व०। "दाशेरकगणैः सह" भा०भी०५०अ०।

**दाशौदनिक** पु० दश ओदना यत्र यज्ञे तस्य व्याख्यानो ग्रन्थः ठञ्। १दशौदनयज्ञव्याख्याने ग्रन्थे। दशौदनयज्ञस्य दक्षिणा यज्ञाख्यत्वात् ठञ्। २तद्यज्ञदक्षिणायां स्त्री ङीप्।

**दाश्य** त्रि० दश–क दशस्य दंशकस्यादूरदेशादि सङ्काशा० चतुरर्थ्यां ण्य। दंशकादूरदेशादौ।

**दाश्व** त्रि० दाश–वन् वा० इडभावः। दातरि जटाध०। तत्र दाश्वन् इत्येव पाठो न्याय्यः।

**दाश्वस्** त्रि०दाश–दाने क्वसु"दाश्वान् साह्वानित्यादिना"पा०नि० १दत्तवति। दाश–हिंसने क्वसु। २हिंसितवति। दाश धातौ(दाशुषे)इत्यु दाहरणम्।"योमरो दाश्वांसम्"ऋ०४। ३।८"दाश्वांसं हविर्दत्तवन्तम्" भा० "तस्मै सुनिर्दोरदविक्रदर्शी दाश्वान् सुपुत्राशिषमित्य वाच" रघुः। "पुंसां पुनः पारमहंस्य आश्रमे व्यवस्थितानामनुकम्प्य दाशुषे" भाग०२।४।१३

**दास**–दाने भ्वा०उभ०सक०सेट्। दासति ते अदासीत् अदासिष्ट। ऋदित् चिङ् अददासत् त। हनने च "यो नः कदाचिदपि दासति द्रुहः"ऋ०७।१०४।७। दासति हन्ति" भा० "स्वादिगणीयोऽप्येष दासधातौ इत्यन्यः।

**दास** त्रि० दन्स–दंशने "दंसेष्टनौ नश्च वात्" उणा० १ज्ञातात्मनि २शूद्रे ३धीवरे च पुंस्त्री स्त्रियां ङीष्। दास्यते भृतिरस्मै दासति ददात्यङ्गं स्वामिने उपचाराय वा दास अच् वा। ४भृत्ये (चाकर)। दास–दाने सम्प्रदाने घञ् ५दानपात्रे सम्प्रदाने ६शूद्राणां नामान्त प्रयोज्योपाधिभेदे "शर्मान्तं ब्राह्मणस्य स्यात् वर्मान्तं क्षत्रियस्य तु। गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः" उद्वाहत०। दासशब्दनिरुक्तिभेदादिकं वीरमित्रोदये दर्शितं यथा

"शिष्यान्तेवासिभृतकाधिकर्मकरेभ्यो दासानां भेदन्दासशब्दव्युत्पत्तिप्रदर्शनमुखेनाह कात्यायनः "स्वतन्त्रस्यात्मनो दानाद्दासत्वं दारवद्भृगुरिति"। "यथा भर्त्तुः सम्भोगार्थं स्वशरीरदानाद्दारत्वम्। तथा स्वतन्त्रस्यात्मनः परार्थत्वेन दानाद्दासत्वमिति भृगुराचार्यो मन्यत इत्यर्थः। "अनेनात्यन्तपारार्थ्यमाश्रित्य शुश्रूषका दासाः। पारार्थ्यमात्रमाश्रित्य शुश्रूषकास्तु कर्मकरा इति भेदोऽप्युक्त इत्यवगन्तव्यम्। अत्यन्तपारार्थ्यं तु तेषामयति यैः स्वपुरुषार्थवृत्तिनिरोधेन परार्थत्वमाश्रितमिति स्मृतिचन्द्रिका। दासत्वं ब्राह्मणव्यतिरिक्तेष्वेव "त्रिषु वर्णेषु विज्ञेयं दास्यं विप्रस्य न क्वचिदिति" तेनैवाभिधानात्। अनेन दासानां जातितो भेद उक्तः। विप्रेतरेष्वपि दास्यमानुलोम्येनैव भवति "वर्णानामानुलोम्येन दास्यञ्च प्रतिलोमतः। राजन्यवैश्ययशूद्राणान्त्यजतास्तु स्वतन्त्रतामिति" तेनैवोक्तत्वात्। स्वतन्त्रतां त्यजताम् अत्यन्तपारार्थ्यमुपगतामित्यर्थः। न प्रतिलोमत इति स्वधर्मपरित्यागिभ्योऽतिरिक्तेभ्योऽन्यत्र द्रष्टव्यम्। अतएव नारदः "वर्णानां प्रातिलोम्येन दासत्वञ्च विधीयते। स्वधर्मत्यागिनोऽन्यत्र दारवद्दासता मतेति"। "यथोत्तमवर्णं प्रति हीनवर्णा सवर्णा वा भार्या भवति न पुनर्हीनवर्णं प्रत्युत्तमवर्णा तथैव दासोऽपि भवेदित्यर्थः। एतच्च प्रव्रज्यावसितो हीनवर्णस्यापि दासो भवतीत्यभिधानं क्षत्रियवैश्यप्रव्रज्यावसितविषयञ्च तु ब्राह्मणप्रव्रज्यावसितविषयम् तस्य निर्वासनाभिधानेन दासत्वाभावात्। तस्य निर्वासनं दर्शितं कात्यायनेन" "प्रव्रज्यावसिता यत्र त्रयो वर्णा द्विजातयः। निर्वासं कारयेद्विप्रं दासत्वं क्षत्रविट् भृगुरिति"। "कारयेद्राजेति शेषः क्षत्रश्च विट् च क्षत्रविट् सर्वोद्वन्द्वोविभाषैकवद्भवतीति वचनादेकवद्भावः। निर्वासनञ्च श्वपदेनाङ्कयित्वा कर्त्तव्यमित्याह दक्षनारदौ" "पारिव्रज्यं गृहीत्वा तु यः स्वधर्मे न तिष्ठति। श्वपदेनाङ्कयित्वा तु राजा शीघ्रं प्रवासयेदिति"। न चैवं सति "राज्ञ एव तु दासः स्यात् प्रव्रज्यावसितो नरः। न तस्य प्रतिमोक्षोऽस्ति न विशुद्धः कथञ्चनेति" नारदेन प्रव्रज्यावसितोराज्ञ एव दासो नान्यस्येत्यभिधानात् स्वधर्मत्यागिनोऽन्यस्येति वचनेनैवोक्तं तच्चिर्विषयमितीति वाच्यम्। यतोऽपेक्षाधिकरणन्यायेन क्षत्रियमात्रवचनेनापि राजशब्देनात्र क्षत्रिया प्रजापालस्य ग्रहणात् प्रजापालकत्वस्य राज्याभिषिक्ते वैश्यादावपि

सम्भवाद् यः क्षत्रियः प्रव्रज्यावसितः स हीनवर्णस्यापि प्रजापालस्य वैश्यस्य दासो भवतीति प्रतिपादनार्थत्वात्। केचित्तु प्रव्रज्यावसितस्य ब्राह्मणस्य दासत्वनिर्वासनयोर्विकल्पमाहुः तन्न पूर्वोक्तप्रकारेण सम्भवन्त्याङ्गतौ अष्टदोषदुष्टविकल्पाङ्गीकरणस्यान्याय्यत्वात्। "दास्यं विप्रस्य न क्वचिदिति" निषेधाच्च। दारवद्दासतेति वचनाद्ब्राह्मणस्य सवर्णं प्रति दासत्वं प्राप्तं तन्निषेधार्थमाह कात्यायनः"। "सवर्णोऽपि हि विप्रं तु दासत्वं नैव कारयेदिति" यदि ब्राह्मणः स्वेच्छया दास्यम्भजते तदाऽसावशुभङ्कर्म न कुर्यादित्याह स एव "शीलाध्ययनसम्पन्ने तदूनं कर्म कामतः। तत्रापि नाशुभं कर्म प्रकुर्वीत द्विजोत्तमः" इति। "यस्मात्परोपकारः कर्त्तव्य इति विधिः तस्मादूनं कर्म मध्यमोत्तमव्यतिरिक्तमपि कर्म कामतो वेतनमन्तरेण स्वेच्छया परोपकारार्थं कुर्यादित्यर्थः पूर्वार्द्धस्य। तत्रापि तेष्वपि हीनकर्मसु यदशुभङ्कर्म गृहद्वारशोधनादिकं तन्न कुर्यादित्युत्तरार्द्धार्थः। क्षत्रियवैश्यविषये स्वामिनः कर्त्तव्यमाह मनुः" "क्षत्रियञ्चैव वैश्यञ्च ब्राह्मणो वृत्तिकर्षितौ। बिभृयादानृशंस्येन स्वामी कर्माणि कारयन्निति"। आनृशंस्येन अक्रौर्येण। अयमर्थः। वृत्तिकर्षितं क्षत्रियं वैश्यञ्च दासीभूतमक्रौर्येण स्वामि कर्माणि कारयन् स्वामी पोषयेदिति। अत्र स्वामीत्यनेन न सम्बन्धिजनककर्माणि कारयेदित्याह कर्माणीति सामान्याभिधानेन जघन्यकर्माण्येव कारयितव्यानीति नियमो नास्तीति सूचयति। वृत्तिकर्षिताविल्यनेन, गत्यन्तराभावे एव क्षत्रियवैश्ययोर्दासत्वाङ्गीकारः कार्यो न तु गत्यन्तरसम्भवे इति दर्शयति। बलाद्दासीकरणे दण्डमाह मनुः" "दास्यन्तु कारयँल्लोभाद्ब्राह्मणः संस्कृतान् द्विजान्। अनिच्छतः प्रभावत्वाद्राज्ञा दाप्यः शतानि षडिति"। "प्रभोः भावः प्रभावम् तस्मात् प्रभुत्वादित्यर्थः। साधारणादिभ्यः स्वार्थे अञ् वक्तव्य इति वार्त्तिकादञ्। द्विजातिपदाच्च दण्डः शूद्रविषय इति दर्शयति। अत एवाह "शूद्रन्तु कारयेद्दास्यं क्रीतमक्रीतमेव वा। दास्यायैव हि सृष्टोऽसौ ब्राह्मणस्य स्वयम्भुवेति"। स च दासः पञ्चदशप्रकार इत्याह नारदः "गृहजातस्तथा क्रीतो लब्धो दायादुपागतः। अनाकालभृतश्चैव आहितः स्वामिना च यः। मोचितो महतश्चर्णात् युद्धप्राप्तः पणे जितः। तवाहमित्युपगतः प्रव्रज्यावसितः कृतः। भक्तदासश्च विज्ञेयस्तथैव वडवाहृतः। विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः" इति। गृहजातः स्वगृहे दास्यां जातः। क्रीतो मूल्येन स्वाम्यन्तरात् प्राप्तः। लब्धः तत एव प्रतिग्रहादिना। दायादुपागतः रिक्थग्राहित्वेन लब्धः। अनाकालभृतोदुर्भिक्षे यो मरणाद्दासत्वाय रक्षितः। आहितः स्वामिना ऋणादानर्थार्पितां नीतः। ऋणमोचनेन दासत्वमभ्युपगतः ऋणदासः। युद्धप्राप्तः समरे विजित्य गृहीतः। पणे जितः दासत्वपणके द्यूतादौ जितः। तवाहमित्युपगतः तवाहन्दासोऽस्मीति स्वयमेवोपगतः। प्रव्रज्यावसितः प्रव्रज्यातश्च्युतः। कृतः एतावन्तं तव दासोभवामीत्यभ्युपगतः। भक्तदासः सर्वकालमन्नार्थमेव दासत्वमभ्युपगम्य यः प्रविष्टः। भक्षितं यावत्ते मूल्यद्वारेण ददामि तावद्दास इत्यभ्युपगत इति स्मृतिचन्द्रिका। वडवाहृतः वडवा गृहदासी तया हृतस्तल्लोभेन तामुद्वाह्य दासत्वेन प्रविष्टः। यश्चात्मानं विक्रीणीते असावात्मविक्रेतेत्येवं धर्मशास्त्रे दासभेदाः पञ्चदशप्रकाराः स्मृता इत्यर्थः। अत्राद्यानां गृहजातक्रीतलब्धदायागतानाञ्चतुर्णां दासत्वापगमः स्वामिप्रसादादेव नान्यथेत्याह स एव" "तत्र पूर्वश्चतुर्वर्गो दासत्वान्न विमुच्यते। प्रसादात् स्वामिनोऽन्यत्र दास्यमेषां क्रमागतमिति"। आत्मविक्रेतुरपि दासत्वं स्वामिप्रसादादन्यतो नापैतीत्याह स एव "विक्रीणीते स्वतन्त्रः सन् य आत्मानन्नराधमः। स जघन्यतमस्तेषां सोऽपि दास्यान्न मुच्यत इति" अत्र प्रसादात् स्वामिनोऽन्यत्र इत्यनुषज्यते। ततश्चायमर्थः। आत्मविक्रेतापि गृहजातादिवत् स्वामिप्रसादं विना दास्यान्न विमुच्यत इति एवञ्च गृहदासादयोऽप्यात्मविक्रेतृपञ्चमाः स्वामिप्रसादादकालभृता इव दास्यान्मुच्यन्त इति वचोभङ्ग्या दर्शितमिति मन्तव्यम्। स्वामिप्राणरक्षणाद्गृहजातादयोऽकालभृताश्च सर्वेऽपि दास्यान् मुच्यन्ते इत्याह स एव "यश्चैषां स्वामिनं कश्चिन्मोचयेत् प्राणसंशयात्। दासत्वात् स विमुच्येत पुत्रभागं लभेत चेति"। एषामिति निर्द्धारणे षष्ठी पञ्चदशानां मध्ये अन्यतम इत्यर्थः। यत्तु "ध्वजाहृतोभक्तदासोगृहजः क्रीतदत्त्रिमौ। पैतृको दण्डदासश्च सप्तैते दासयोनयः इति मनुवचने सप्तविधत्वमुक्तं तेषां दासत्वप्रतिपादनाय न परिसंख्यार्थम्। ध्वजा गृहदासी। एतच्च स्वामिप्रसादात् प्राणरक्षणात् वा दास्यापगमनं प्रव्रज्यावसितभिन्नदासेषु द्रष्टव्यम्।

तस्य दासत्वमोक्षाभावात् । अतएव याज्ञवल्क्यः "प्रव्रज्यावसितो राज्ञो दास आमरणान्तिकम्" इति । राज्ञो दासः पार्थिवस्यैव दासो नान्यस्येत्यर्थः । अनाकालभृतादीनां प्रव्रज्यावसितात्मविक्रेतृव्यतिरिक्तानामष्टानां दास्यापनयनप्रकारमाह नारदः "अनाकालभृतो दास्यान्मुच्यते गोयुगन्ददत् । आहितोऽपि धनं दत्त्वा स्वामी यद्येनमुद्धरेत् । ऋणं तु सोदयं दत्त्वा ऋणी दास्यात् प्रमुच्यते । तवाहमित्युपगतो युद्धप्राप्तः रणे-जितः । प्रतिशीर्षप्रदानेन मुच्येरंस्तुल्यकर्मणा । कृतकालव्यपगमात् कृतदासो विमुच्यते । भक्तस्योत्क्षेपणात् सद्यो भक्तदासः प्रमुच्यते । निग्रहाद्वडवायास्तु मुच्यते वडवाभृतः" इति । एतदुक्तं भवति दुर्भिक्षे पोषणेन कारितो दासो गोयुग्मार्पणान्मुच्यते । आहितदासस्तु स्वामिना स्वीकृते ऋणे प्रत्यर्पिते सति उत्तमर्णदास्यान्मुच्यते । ऋणदासस्तु स्वकृतमृणं येनोत्तमर्णाय यावद्धनन्दत्त्वावाकृतं तस्मै तावद्धनं सवृद्धिकं दत्त्वा विमुच्यते । तवाहमित्युपगतादयस्त्रयो दासाः स्वनिर्वर्त्त्यजीवव्यापारनिर्वर्त्तकदासान्तरप्रदानाद्विमुच्यन्ते । कृतकालस्तु दासो दास्यावधित्वेन परिभाषितकालस्यातिक्रमणाद्विमुच्यते । भक्तदासस्तु भक्तस्योत्क्षेपणादुपचितभक्तमूल्यसमर्पणाद्विमुच्यते । वडवादासीलोभेन दासत्वं प्राप्तस्तत्सम्भोगत्यागाद्विमुच्यत इति । बलाद्दासीकृतानां मोक्षमाह याज्ञवल्क्यः "बलाद्दासीकृतश्चौरैर्विक्रीतश्चापि मुच्यते" इति । अपिशब्देन दत्ताहितौ गृह्येते । तत्रायमर्थः । बलात्कारेण यो दासीकृतः यश्च चौरैरपहृत्य दासत्वेन विक्रीत आहितो दत्तो वा स यस्य पार्श्वे दासभावेन तिष्ठति तेन प्रागुक्तमोचनहेतुमन्तरेणैव शीघ्रं मोचनीय इत्यर्थः । यदि तेन लोभादिवशादसौ न मुक्तस्तदा राज्ञा मोचयितव्य इत्याह नारदः "चौरापहृतविक्रीता ये च दासीकृता बलात् । राज्ञा मोचयितव्यास्ते दास्यन्तेषु हि नेष्यते" इति । चौरेणापहृताश्च ते विक्रीताश्चेति कर्मधारयः । यस्त्वेकस्य दास्यं पूर्वमङ्गीकृत्यापरस्यापि दासत्वमङ्गीकरोति असावपरेणापि विवर्जनीय इति स एवाह । "तवाहमिति चात्मानं योऽस्वतन्त्रः प्रयच्छति । न स तं प्राप्नुयात्कामं पूर्वस्वामी लभेत तमिति" । अस्वतन्त्रः परदासत्वेनास्वतन्त्रः कामं नूतनस्वामिदास्यं काङ्क्षमाणम् कृतद्दासीभवन्तं दासं पूर्वस्वामी स्वीकुर्यादित्यर्थः ।

एवं यदेतद्दासमधिकृत्योक्तन्तत्सर्वं दास्यामपि समानन्यायत्वाद्योजनीयम् । दासीस्वामिनमधिकृत्य विशेषमाह कात्यायनः "स्वां दासीं यस्तु सङ्गच्छेत् प्रसूता च भवेत्ततः । अवेक्ष्य बीजं कार्या स्याददासी सान्वया तु सेति" । स्वकृतगर्भाधानमनुसन्धाय सा दासी सन्तानसहिता दासत्वविमोकविधिना स्वकृतगर्भदोषपरिहारार्थं अदासीत्वेन कार्या स्यादित्यर्थः । कः पुनर्दासत्वविमोचको विधिरित्याकाङ्क्षायामाह नारदः "स्वं दासमिच्छेद्यः कर्तुमदासं प्रीतमानसः । स्कन्धादादाय तस्यासौ भिन्द्यात्कुम्भं सहाम्भसा । साक्षताभिः सपुष्पाभिर्मूर्द्धन्यद्भिरवाकिरेत् । अदास इति चोक्त्वा त्रिः प्राङ्मुखं तमथोत्सृजेदिति" । अत्रापि दासशब्देन दास्या अपि ग्रहणम् लिङ्गस्योद्देश्यविशेषणत्वेन ग्रहाधिकरणन्यायेनाविवक्षितत्वात् । एवमुत्सर्गे सति यद्भवति तदाह स एव "ततः प्रभृति वक्तव्यः स्वाम्यनुग्रहपालितः । भोज्यान्नोऽप्यप्रतिग्राह्यो भवत्यभिमतः सतामिति" । स्वाम्यनुग्रहेण दास्यापाकरणमेव वक्तव्यः सम्मानार्हः । अदास्या अपि दासेन परिणीताया दासीत्वमेव भवतीत्याह कात्यायनः "दासेनोढा त्वदासी या सापि दासीत्वमाप्नुयात् । यस्माद्भर्त्ता प्रभुस्तस्याः स्वाम्यधीनः प्रभुर्यतः" इति । दासधनस्यापि तत्स्वामिधनत्वमित्याह स एव "दासस्य तु धनं यत्स्यात् स्वामी तस्य प्रभुः स्मृतः" इति । ब्राह्मण्यादिषु दासीकरणे दण्डमाह कात्यायनः "आदद्याद्ब्राह्मणीं यस्तु विक्रीणीत तथैव च । राज्ञा तदकृतं कार्यं दण्ड्याः स्युः सर्व एव ते । कामात्तु संश्रितां यस्तु कुर्याद्दासीं कुलस्त्रियम् । संक्रामयन् तथान्यत्र दण्ड्यस्तत्राकृतं भवेत् । वासधात्रीमदासीञ्च दासीमिव भुनक्ति यः । परिचारकपत्नीं वा प्राप्नुयात्पूर्वसाहसमिति" । तत्कार्यं सकलं निवर्तनीयमित्यर्थः । तेन राज्ञा दण्ड्याः स्युरित्यन्वयः । विष्णुरपि "यस्तूत्तमवर्णं दास्ये नियोजयति तस्योत्तमसाहसोदण्ड" इति । कश्चिद्दासीविक्रयणे दण्डमाह कात्यायनः "विक्रीयमाणां यो भक्तां दासीं विक्रेतुमिच्छति । अनापदिस्थः शक्तः सन् प्राप्नुयात् द्विशतं दममिति" । द्विशतं पणानामिति शेषः । भक्तामित्यनेन दुष्टाया विक्रयणे दण्डाभाव इति दर्शितमिति" ।

"चूडाद्या यदि संस्कारा निजगोत्रेण वै कृताः । दत्ता-

द्यास्तनयास्ते स्युरन्यथा दास उच्यते” कालिकापुराणोक्ते निजगोत्रेण संस्कारं विना गृहीते ७दत्तकादौ च तेषां च दासवद्रक्षणीयतया तथात्वम् दत्तकशब्दे मूलं दृश्यम् । स्त्रियां ङीप् । दास–उपक्षेपे अच् । ८उपक्षेपके त्रि०। ९वृत्रासुरे पु०दासपत्नीशब्दे दृश्यम् । १०दस्यौ च दासवेशशब्दे दृश्यम् । दासस्यापत्यं नडा० फक् । दासायन दासापत्ये पुंस्त्री०। दास+भृशा० अभूततद्भावे क्यङ् । दासायते अदासो दासो भवतीत्यर्थः । अदासं दासं करोत्यर्थे च्वि ऊर्य्यादयनु प्रयोगः अदासो दासो भवति दासीभवति अदासं दासं करोति दासीकरोतीत्यादि संज्ञायां कन् । दासक गोत्रप्रवर्त्तकर्षिभेदे तस्य गोत्रापत्यम् अश्वा० फक् । दासकायन तद्गोत्रापत्ये पुंस्त्री ।

**दासपत्नी** स्त्री ब०व०। दासयति दास–उपक्षेपे अच् दासो वृत्रासुरः पतिर्यासाम् । १अप्सु । “दासपत्नीरहिगोपा अतिष्ठन्” ऋ०१।३२।११ “दासो विश्वोपक्षयहेतुर्वृत्रः पतिः स्वामी यासामपां ता दासपत्नीः । दासपत्नीः दसु उपक्षये दासयतीति दासोवृत्रः पचाद्यच् । चित इत्यन्तोदात्तत्वम् । दासः पतिर्यासां “विभाषा सपूर्वस्य” पा०ङीप् तत्संनियोगेनेकारस्य नकारः बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्” भा०। “अश्विनाविन्द्रुमन्तं हतभूयौ निरोधत्तामश्विनौ दासपत्नीः” भा० आ०१अ० । ६त० दासस्य पत्नीव दासस्त्रियाञ्च सर्ववचनम् ।

**दासमित्र** न० ६त० । दासस्य मित्रं ततः अदूरदेशादौ काश्या० ठञ् ञिठौ । दासमित्रिक तददूरदेशादौ त्रि०। स्त्रियां ठञि ङीप् ञिठि टाप् । दासमित्रस्यापत्यम् इञ् । दासमित्रि तदपत्ये पुंस्त्री०। ततः ऐषुका०विषये देशे भक्तल् । दासमित्रिभक्त तदीये विषये देशे न०।

**दासमीय** त्रि०दशमे देशभेदे भवः, दासं शूद्रं मिमते मानयन्ति मैथुनार्थिन्यस्ताः दास्यस्तासु भवीवा छ । १दशमदेशभवे २दृष्टशूद्राभिरतस्त्रीजाते च । “व्रात्यानां दासमीयानां वाह्री कानामयज्वनाम्” भा०क० ४४अ० । नीलकण्ठेनोक्तैव व्युत्पत्तिर्दर्शिता ।

**दासवेश** पु० दासस्य दस्योर्विशः । दस्यु नाशे “प्रचाये च दासवेशाय चावहः” ऋ०२।१३।८ “दासवेशाय दासानां दस्यूनां वेशाय नाशाय” भा०

**दासी** स्त्री दास+गौरा०ङीष् दासस्य पत्नीव, तज्जातिस्त्री वा ङीष् । १परिचारिकायां कर्मकर्य्यां दासशब्दे दृश्यम् । “जातोऽपि दास्यां शूद्रेण कामतोऽशहरो भवेत् । मृते पितरि कुर्य्युस्तं भ्रातरस्त्वर्द्धभागिकम्” याज्ञ० २शूद्रकैवर्त्तयोर्भार्य्यायां ३तज्जातिस्त्रियाम् । ४काकजङ्घायां ५नीलाम्लाने ६नीलझिण्ट्याञ्च राजनि०। ७पीतझिण्ट्यां रत्नमा०। ८वेद्यां विश्वः । दास्याः पाद इव पादोऽस्य हस्त्यादित्वात् न अन्त्यलोपः । दासीपाद दासतुल्यपादयुक्ते त्रि०। स्त्रियां कुम्भपद्या०ङीष् पादस्य पद्भावश्च । दासीपदीत्येव “पतितस्योदकं कार्य्यं सपिण्डैर्बान्धवैर्बहिः । निन्दितेऽहनि सायाह्ने ज्ञात्यृत्विग्गुरुसन्निधौ । दासी घटमपां पूर्णं पर्य्यस्येत् प्रेतवत् पदा” मनुः । अत्र शब्दकल्पद्रुमे दासीघटेत्येकपदकल्पनं प्रामादिकं तत्र दास्याः कर्त्तृत्वेन घटस्य च कार्य्यत्वेन भिन्नपदार्थत्वेन पदद्वयम्

**दासीभारादि** पु० पूर्वपदे प्रकृतिस्वरनिमित्ते शब्दगणे स च पा०ग०सू० उक्तो यथा “दासीभारः देवहूतिः । देवभीतिः देवलातिः वसुनीतिः ओषधिचन्द्रमाः ।

**दासीसभ** न०दासीनां सभा संघातः “सभाऽराजमनुष्य पूर्वा” “अशाला च” पा० क्लीवता । दासीसंघाते अमरः दास्या मनुष्यत्वात् संघातार्थकत्वे एव अशालापरत्वे क्लीवता शब्दकल्पद्रुमे विग्रहे दास्याः सभेत्येकवचनोक्तिः प्रामादिकी एकस्याः संघातासम्भवात् शालार्थत्वे च क्लीवत्वाप्रसक्तेः ।

**दासेर** पुंस्त्री दास्याः अपत्यम् क्षुद्रत्वात् ढ्रक् । दास्या अपत्ये १शूद्रे २कैवर्त्ते च । स्त्रियां जातित्वात् ङीष् । दास्यां भवे त्रि० । दास–बा० एरच् । ३उष्ट्रे पुंस्त्री मेदि० स्त्रियां जातित्वात् ङीष् । स्वार्थे क । दासेरक उष्ट्रे राजनि०। दासीपुत्रादौ च हारा० ।

**दास्य** न० दासस्य भावः कर्म वा ष्यञ् । दासस्य १कर्मणि २तस्य भावे च । “निवेदनं स्वस्य दास्यं नवधा भक्तिलक्षणम्” ब्रह्मवै० प्रकृ० “पशूनां रक्षणं चैव दास्यं शूद्रे द्विजन्मनाम्” मनुः । दासशब्दे उदा०दृश्यम् ।

**दास्र** न० दस्रौ देवते अस्य अण् । अश्विनीनक्षत्रे ।

**दाह** पु० दह–भावे घञ् । १भस्मीकरणे “दाहशक्तिरिव कृष्णवर्त्मनि” रघुः “दाहादूर्द्ध्वमशौचं स्यात् यस्य वैतानिको विधिः” शु०त० स्मृतिः । “पांशुवर्षे दिशां दाहे” मनुः । शवदाहप्रकारः छन्दोगपरिशिष्टे उक्तो यथा

“दुर्बलं स्नापयित्वा तं शुद्धचेलाभिसंवृतम् । दक्षिणाशिरसं भूमौ बर्हिष्मत्यां निवेशयेत् । घृतेनाभ्यक्तमाप्लाव्य सुवस्त्रमुपवीतिनम् । चन्दनोक्षितसर्वाङ्गं सुमनोभिर्विभूषयेत् । हिरण्यशकलान्यस्य क्षिप्त्वा छिद्रेषु सप्तसु । मुखेष्वथ पिधायैनं निर्हरेयुः सुतादयः ।

आमपात्रेऽन्नमादाय प्रेतमग्निपुरःसरम्। एकोऽनुगच्छेत्तस्यार्द्धमर्द्धं पथ्युत्सृजेद्भुवि। अर्द्धमादहनं प्राप्य आसीनोदक्षिणामुखः। सव्यं जान्वाच्य शनकैः सतिलं पिण्डदानवत्”। “अथ पुत्रादिराप्लुत्य कुर्य्याद्दारुचयं महत्। भूप्रदेशे शुचौ देशे पश्चाच्चित्यादिलक्षणम्। तत्रोत्तानं निपात्यैनं दक्षिणाशिरसं मुखे। आज्यपूर्णं स्रुवं दद्याद्दक्षिणाग्रं नसि स्रुवम्”। इतोऽन्यत्वाल्यावने विशेषमाह वराहपुराणम् “दक्षिणाशिरसं कृत्वा सचेलन्तु शवं तथा। तीर्थस्यावाहनं कृत्वा स्नपनं तत्र कारयेत्। गयादीनि च तीर्थानि ये च पुण्याः शिलोच्चयाः। कुरुक्षेत्रञ्च गङ्गाञ्च यमुनाञ्च सरिद्वराम्। कौशिकीं चन्द्रभागाञ्च सर्वपापप्रणाशिनीम्। भद्रावकाशां सरयूं गण्डकीं पनसां तथा। वैणवञ्च वराहञ्च तीर्थं पिण्डारकं तथा। पृथिव्यां यानि तीर्थानि सरितः सागरांस्तथा। ध्यात्वा तु मनसा सर्वे कृतस्नानं गतायुषम्। देवाश्चाग्निमुखाः सर्वे गृहीत्वा तु हुताशनम्। गृहीत्वा पाणिना चैव मन्त्रमेतदुदीरयेत्”। ओम् “कृत्वा तु दुष्कृतं कर्म जानता वाप्यजानता। मृत्युकालवशं प्राप्य नरं पञ्चत्वमागतम्। धर्माधर्मसमायुक्तं लोभमोहसमावृतम्। दहेयं सर्वगात्राणि दिव्यान् लोकान् स गच्छतु। एवमुक्त्वा ततः शीघ्रं कृत्वा चैव प्रदक्षिणम्। ज्वलमानं तथा वह्निं शिरःस्थाने प्रदापयेत्। चातुर्वर्ण्येषु संस्थानमेवं भवति पुत्रिके!”। साग्निकदाहप्रकारस्तु नारायणभट्टकृतान्त्येष्टिपद्धतौ दृश्यः।

२कुपितपित्तजदेहसन्तापभेदे यथाह पित्तकोपकारणमुक्त्वा विदाहिलक्षणे भावप्र० “विदाहि द्रव्यमुद्गारमम्लं कुर्य्यात्तथा तृषाम्। हृदि दाहञ्च जनयेत् पाकं गच्छति तच्चिरात्”। “कश्चिद्विमत्सु चैतेषु दाहः परम इष्यते”। “अतिदग्धे दाहपाकरागशोषाङ्गमर्द्दक्लमपिपासामूर्च्छाः स्युर्मरणं वा। पाकान्ते च गलतालोष्ठशोषदाहसन्तापान् जनयति” इति च सुश्रु०

**दाहक** त्रि० दहति दह–ण्वुल्। १दाहकर्त्तरि “लोलवेश्मवनग्रामविवीतस्थलदाहकः” याज्ञ० स्त्रियां ङीपि अत इत्वम्। दाहिका “शक्तिर्यथाग्नौ खलु दाहिका स्थिता” ब्रह्म०वै०पु०। २वह्नौ पु० ३चित्रके वृक्षे च ४रक्तचित्रकवृक्षे पु० राजनि०। वह्नौ च दाहिका शक्तिरतिरिक्तेति मीमांसकाः। तन्मतं च अनुमानचिन्तामणौ अतिरिक्तशक्तिवादनिरासे उत्थाप्य दूषितं प्रसङ्गादत्र दिङ्मात्रं दर्श्यते यथा “स्यादेतत् ईश्वरवत् कार्य्येणैव शक्तिरप्यनुमीयते तथा हि यादृशादेव करानलसंयोगाद्दाहो जायते तादृशादेव सति प्रतिबन्धके न जायते अतो यदभावात् कार्य्याभावस्तदङ्ग्यादावभ्युपेयं तेन विना तदभावात् यत्सद्भावानुपपत्तेर्व्यतिरेकमुखेन शक्तिसिद्धिः। न चादृष्टवैगुण्यं दृष्टसाकुण्ये तदभावात् तस्य तदर्थत्वात् अन्यथा दृढदण्डहतमपि चक्रं न भ्राम्येत। अथादृष्टविलम्बादपि विलम्बो यथा बन्ध्यास्त्रीप्रयोगे, परमाणुकर्मणि, अध्ययनतुल्यत्वे एकत्र फलतारतम्यमिति चेन्न अदृष्टविलम्बे हि न तत्प्रागनुत्पादौ मण्यपसारणानन्तरं दाहाभावप्रसङ्गात्। किञ्च नियमतो मणिसद्भावे कार्य्याभावस्तदभावे कार्य्यमिति दृष्टत्वात् मण्याद्यभाव एव कारणम् अन्यथा कदाचित् मण्याद्यभावेऽपि तदभावान्न कार्यं स्यात् बन्ध्यासंप्रयोगे तु दृष्टव्यभिचारादृष्टविलम्बादेव विलम्बः। अदृष्टञ्च क्वचित् साक्षाज्जनकम् अन्यथा परम्परया हेतुरपि न स्यात्। न च समप्राप्तयोः समस्य निरपवादमध्ययनातिरेकप्रसङ्गाभते नापर इति दृश्यते। न च सर्वोत्पत्तिमतामदृष्टं निमित्तं कारणम् अगम्यागमनसाध्ये सुखे तदभावात् तद्विनाऽधर्मात् सुखं स्यात् न धर्मात्। एतेन सुगम्यागमनादुत्पाद्यं सुखमप्युक्तं तथा चागम्यागमनकारणत्वेन न स धर्मः श्येनापूर्ववच्चिनिषिद्धफलकत्वेनानर्थत्वात्। दाहप्रतिकूलादृष्टादेव तदभाव इति चेन्न तस्योत्तेजकाभावसहितमण्यजन्यत्वे तत्र दाहार्थिनोऽप्रवृत्तिप्रसङ्गात् तज्जन्यत्वे ततस्तदुत्पादकादेव दाहाभाव इति नियमस्यादृष्टेन प्रथमोपस्थितोपजीव्यत्वाच्च। प्रतिबन्धकाभावहेतुत्वस्य तेनाभ्युपगमात् अदृष्टात् शौचाचमनादेव साधारणस्याप्यन्वयः स्यात्। अशुचेरेव तदुत्पत्तौ, शौचे सति तदभावापत्तेः प्रतिपक्षसन्निधापकस्य तत्त्वे, अदृष्टे सति मणिप्रयोगेऽपि दाहानापत्तिः अपि च मकाल एव सन्निधिदर्शनेन तदसिद्धाभावात्। अस्तु तर्ह्युत्तेजकाभावसहकृतप्रतिबन्धकाभावस्यान्वयव्यतिरेकाभ्यां हेतुत्वम् एवं च केवलोत्तेजकसद्भावे उभयसत्त्वे उभयाभावे च विशिष्टाभावोऽनुमितोहेतुः प्रतिबन्धकत्वञ्च कारणीभूताभावप्रतियोगित्वं तच्च मण्याद्यभावत्वेन, न तु प्रतिबन्धकाभावत्वेनेति नान्योन्याश्रयः। एवं प्रतिबन्धकत्वाभिमतमण्यादीनामभावकूट एव कारणं तेन मणिसद्भावे मन्त्राद्यभावेऽपि न कार्यम्। अनतिरि-

ऋाभाववादिमते च व्यवहारार्थं तत्स्थानाभिषिक्तस्य हेतुत्वम्। न चाभावो न कारणं, भाववदुपाहृततौल्यात्। दृष्टञ्च कुड्यसंयोगाभावस्य गतौ, अनुपलब्धस्याभावविज्ञाने, विहिताकरणस्य प्रत्यवाये, निर्दोषत्वस्य वेदप्रामाण्ये जनकत्वमिति प्राहुः। नैवं विशिष्टं हि नार्थान्तरं येन तदभावोऽनुगतः स्यात् किन्तु विशेषणविशेष्यसम्बन्धा इति तेषां प्रत्येकाभावस्य हेतुत्वे क्वचित् विशेषणस्याभावः क्वचित् मण्यभावः क्वचिदुभयं कारणमिति व्यभिचारान्नैकमपि हेतुः स्यात्। स्यादेतत् प्रतियोगिभेदादिव प्रतियोगितावच्छेदकविशेषणभेदेऽप्यभावो भिद्यते अन्यथा पृथिव्यां प्रत्येकरूपाभावेऽसमतेऽपि वायौ रूपसंशयो न स्यात्। एवञ्च यथा केवलदण्डसद्भावे, दण्डपुरुषसद्भावे, द्वयाभावे च विशेषणविशेष्योभयाभावप्रयुक्तः केवलपुरुषाभावोऽबाधितानुगतव्यवहारबलात् प्रतीतिसिद्धः तथा विशेष्यस्य प्रतिबन्धकस्याभावे विशेषणस्योत्तेजकाभावस्याभावे द्वयाभावे च केवलप्रतिबन्धकाभावो विशेष्यविशेषणोभयाभावव्यापकोऽनुगत एव दाहकारणमस्तु। अथ विशेषणाद्यभावादेव केवलपुरुषाभावव्यवहार एकधर्मिमत्त्वादिति चेन्न अनुगतव्यवहारस्यानुगतमानसाध्यत्वात् मन्त्रे चातीन्द्रियत्वात्। अथोत्तेजकप्रयोगकाले मणेः कोऽभावः? न तावत् प्रागध्वंसाभावौ तयोः प्रतियोगिसमानकालत्वात् न च श्यामोऽयमासीदित्यत्र यथा श्यामध्वंसप्रयुक्तश्यामघटत्वेन पक्वघटस्य ध्वंसएव, तथोत्तेजकाभावध्वंसप्रयुक्तोत्तेजकाभावत्वेन मणिध्वंस एवेति वाच्यं ध्वंसस्यानन्तत्वे उत्तेजकापनयेऽपि दाहप्रसङ्गाभावात्। नाप्यत्यन्ताभावः, तस्य कादाचित्कत्वाभावादिति चेत् यथा दण्डोपनयापनयदशायां केवलपुरुषाभाव उत्पादविनाशवान् अबाधितकेवलपुरुषाभावतदभावव्यवहारयोरुपपादयितुमन्यथाऽशक्यत्वात् तथोत्तेजकोपनयापनयदशायां प्रतिबन्धकाभावोऽपि तथैव स्वीकरणीयः तुल्यन्यायत्वात्। यदि च संसर्गाभावत्रयवैधर्म्यात्तत्र नान्तर्भवति तदा तुरीय एव संसर्गाभावोऽस्तु न हि क्लृप्तविशेषबाधे सामान्यबाधो, विशेषान्तरमादायापि तस्य सम्भवात् अन्यथा क्लृप्तानादिसंसर्गाभाववैधर्म्येण ध्वंसोऽपि न सिद्ध्येत् व्यवहारानुपपत्तिश्च तुल्यैव सोऽयमभावे सगोत्रवधो न तु मल्लिवादः। अस्तु वा ध्वंसएवायं संसर्गाभावविभागे अन्यतमभावत्वेन ध्वंसस्य विभजनात् न चैवं विनाशवत्त्वेन प्रागभाव एव सः, परिभाषाया अपर्यनुयोज्यत्वात्। यद्वाऽत्यन्ताभाव एवायं तस्य नित्यत्वेऽपि कादाचित्कप्रतीतिकार्योदयौ प्रत्यासत्तिकादाचित्कत्वात् प्रत्यासत्तिश्च विशेषणाभावो विशेष्याभाव उभयाभावश्च तथैव विशिष्टात्यन्ताभावसत्त्वादिति तन्न यदि प्रतीतविशेषणावच्छेदेन विद्यमानस्यैव विशेषस्य ध्वंसः स्यात् तदा कालरूपातीतविशेषणावच्छिन्नत्वेन प्रतिक्षणं घटस्य विनाशः स्यात् इति क्षणभङ्गापत्तिः विद्यमानस्य विनष्टत्वे चाप्रतीतेः शिखा विनष्टा पुरुषो न विनष्ट इति विपरीताबाधितप्रत्ययाच्च न विशेषणाभावेऽपि विशेष्यध्वंसः श्यामोऽयमासीत् पुरुष इत्यादौ सविशेषणे इति न्यायेन विशेषणवति श्यामत्वैकदेशध्वंस एव प्रतीयते ध्वंसस्य ध्वंसानुपपत्तेः न विद्यमानस्य ध्वंसः। एतेनोत्तेजकसद्भावे वस्तुत उत्तेजकाभावविशिष्टमणेरुत्पन्नध्वंसस्य उत्तेजकापनयसमये ध्वंसो जातोऽन्यतस्य कः कारणमिति न विफल उत्तेजकापनय इत्यपास्तं, विद्यमानध्वंसस्य ध्वंसाभावात्। न च ध्वंसान्यः संसर्गाभावो विशिष्टाभाव इति वाच्यम् उत्पन्नाभावस्य विशिष्टप्रत्ययहेतुतया ततोऽपि विद्यमानस्य विनष्टत्वप्रत्ययापत्तेः। नापि विशिष्टाभावोऽत्यन्ताभावः। तथा हि स एव क्वचित्विशेषणाभावघटितः क्वचिद्विशेष्याभावघटितो दाहकारणमिति अननुगमस्तदवस्थ एव विशेषणविशेष्याभावयोः प्रत्यासत्तिव्यवच्छेदकानुगतधर्माभावात्। अथ विशिष्टविरोधित्वं विशेषणविशेष्याभावयोरनुगतं तदवच्छेदकमस्ति तयोश्च सत्त्व एव विशिष्टात्यन्ताभावसत्त्वादिति चेत्तर्हि विशिष्टविरोधित्वेनानुगतेन तयोरेव विशिष्टाभावत्वेन दाहव्यवहारादौ जनकत्वमस्तु कृतं तदुपजीविनातिरिक्तविशिष्टाभावेन। अथोत्तेजककाले विद्यमानात्यन्ताभावानुवृत्तावप्युत्तेजकापनये उत्तेजकाभावव्यक्तियौ जाता तदवच्छिन्नमणेरभावो न जात इति तदा न कार्योदयः तत्तदुत्तेजकाभावविशिष्टमणेरभावकूटस्य जनकत्वादिति चेन्न तत्तदुत्तेजकाभावानामननुगतत्वेनानुगतविशिष्टाभावव्यवहारानुपपत्तेः उत्तेजकाभावत्वेनानुगमेऽतिप्रसङ्गः। अथ विशेष्यविशेषणाभावयोर्विशिष्टविरोधित्वमनुगतं कारणतावच्छेदकं यत्र तदन्यतराभावस्तत्र न विशिष्टं यत्र विशिष्टं तत्र न तयोरभाव इति सहानवस्थाननियमरूप विरोधस्यानुभवसिद्ध-

स्यादिति चेन्न सहानवस्थाननियमो न परस्परविरहरूपतया विशेषणविशेष्याभावस्य प्रत्येकं विशिष्टाभावतया तत्प्रत्येकाभावाभावस्य विशिष्टत्वापत्तेः तथा च विशेष्यविशेषणयोः प्रत्येकं विशिष्टत्वापत्तेः तदभावस्य तत्त्वात् न चोभयाभाव उभयविशिष्ट एवं स्वाभावद्वयं विशिष्टाभावो न तु प्रत्येकभावरूप इति प्रत्येकाभावाद्विशिष्टव्यवहारो न स्यात्। नापि परस्परविरहव्याप्यत्वं तदाक्षेपकत्वं वा विशेषणविशेष्याभावस्य विशिष्टाभावत्वेन तदव्याप्यत्वात् तदनाक्षेपकत्वाच्च अभेदे तयोरभावात्। एतेनान्यदपि विशिष्टव्यवहारविरोधित्वादिनानुगतत्वमपास्तं केनाप्यनुगतेन विशेषणविशेष्याभावस्य विशिष्टाभावत्वे प्रत्येकाभावस्य विशिष्टाभावत्वेन तदव्याप्यत्वात् तदनाक्षेपकत्वाच्च अभेदे तयोरभावात्। विशेषणविशेष्यान्यतरमात्रस्य विशिष्टत्वापत्तेः तदभावाभावस्य तत्त्वादित्युक्तत्वात् तस्माद्विशेषणविशेष्याभावो विशेषणावच्छिन्नविशेष्याभावो न विशिष्टाभाव इति।

“अत्रोच्यते विशेषणविशेष्ययोः सम्बन्धाद्विशिष्टव्यवहार इति तयोः सम्बन्धाभावाद्विशिष्टाभावव्यवहार इति घटतदभावव्यवहाराविव घटसत्त्वासत्त्वाभ्याम्। न हि तयोरसम्बन्धे विशिष्टव्यवहारः। न च तदभावे सति न विशिष्टाभावव्यवहारः। यस्य च यत्र सम्बन्धः स एव तत्र तस्य वैशिष्ट्यम् स च सम्बन्धाभावो विशेषणाभावाद्विशेष्याभावादुभयाभावात् सर्वत्राविशिष्ट एकस्तेषां व्यापकोऽनुगतविशिष्टाभावव्यवहारकारणम् इह दण्डी पुरुषो नास्तीत्यत्र तथा दर्शनात्। अतएव दण्डमात्रसद्भावे दण्डपुरुषसद्भावे च कैवल्यपुरुषयोः सम्बन्धाभावः सर्वत्रास्तीत्यनुगतः केवलपुरुषतो व्यवहारः। एवञ्च प्रतिबन्धकोत्तेजकाभावयोः सम्बन्धाभावो दाहकारणं स च प्रतिबन्धकाभावे प्रतिबन्धकोत्तेजकसद्भावे उभयाभावे चास्ति सर्वत्र प्रतिबन्धकोत्तेजकाभावयोः सम्बन्धो नास्तीति प्रतीतेः। नन्वेवं यत्र प्रतिबन्धकोत्तेजकाभावौ तत्रापि दाहः स्यात् अधिकरणाभावयोरतिरिक्तसम्बन्धाभावादिति चेन्न तदभावेऽपि स्वरूपसम्बन्धस्याभावात् सर्वत्र स्वरूपसम्बन्धादेवाधिकरणाभावयोर्वैशिष्ट्यप्रतीतेः तथापि प्रतिबन्धकोत्तेजकाभावावेव स्वरूपसम्बन्धः तयोरभावश्च प्रतिबन्धकाभाव उत्तेजकश्च दाहकारणं तथाचोभयाभावे उत्तेजकसत्त्वे परं दाहः स्यात् उत्तेजकवति च प्रतिबन्धके दाहो न स्यादिति चेन्न अधिकरणाभावावेव स्वरूपसम्बन्धस्तयोर्घटवच्च तत्र चत्वरीयतदभावयोर्वैशिष्ट्यप्रत्ययजननयोग्यत्वमस्ति घटवति कदापि घटाभावप्रत्ययानुदयात् तदिहापि प्रतिबन्धकोत्तेजकाभावयोर्विशिष्टप्रत्ययजननयोग्यत्वं स्वरूपसम्बन्धः, अन्यथोत्तेजकवति प्रतिबन्धके चत्वरीयोत्तेजकाभावविशिष्टप्रत्ययापत्तेः। तादृशस्वरूपसम्बन्धाभावश्च प्रतिबन्धकाभावे प्रतिबन्धकोत्तेजकसद्भावे उभयाभावे चाविशिष्ट एव। यद्वा अदण्डपुरुषस्याभावे दण्डी पुरुषो न प्रतियोगी तस्य दण्डित्वाभावात् किन्तु तदन्यः, तस्य चाभावे दण्डिसद्भावेऽपि दण्डमात्रसत्त्वे उभयासत्त्वे चाविशिष्ट इति। तस्मात् केवलपुरुषाभावव्यवहारोऽनुगतः तदुक्तं न हि दण्डिनि सति अदण्डानामन्येषां नाभावः किन्तु दण्डाभावस्यैवेति युक्तम् अन्यथा तत्रान्येषामिति पदस्य व्यर्थत्वापत्तेः। तथा केवलप्रतिबन्धकाभावे उत्तेजकसहकृतः प्रतिबन्धको न तु प्रतियोगी तस्य केवलत्वाभावात् किन्तु तदन्यः, तदन्यस्य च प्रतिबन्धकस्याभावे उत्तेजकसहितप्रतिबन्धकसत्त्वे उत्तेजकमात्रसत्त्वे उभयासत्त्वे विशिष्ट इति नाननुगमः उत्तेजकापनये केवलप्रतिबन्धकोऽस्तीति न तदभाव इति दाहो न भवति। ननु न प्रतिबन्धकाभावः कारणम् एकदण्डान्वये घटोत्पत्तिवत् प्रतिप्रतिबन्धकसत्त्वेऽपि तदन्यप्रतिबन्धकाभावेऽपि कार्य्यानुदयात् न हि यावत्कारणतावच्छेदकावच्छिन्नं तावदन्वयेऽपि कार्य्यमिति चेन्न प्रतिबन्धकाभावत्वेन न हेतुत्वं अन्योन्याश्रयात् किन्तु तत्तन्मण्याद्यभावत्वेनेत्युक्तत्वात् तत्त्वेऽपि वा घटे दण्डसलिलादिकप्रतिबन्धकाभावकूटहेतुत्वात्। यद्वा प्रतिबन्धकतावच्छिन्नप्रतियोगिक एक एवाभावः कारणं स च यावद्विशेषाभावनियत इति न प्रतिबन्धकसत्त्वेऽपरप्रतिबन्धकाभावेऽपि कार्य्योदयः प्रतिबन्धकस्य च संसर्गाभावो हेतुः तेन तत्सत्त्वे तदन्योन्याभावेऽपि न कार्य्यम् अन्वयव्यतिरेकाभ्यां व्याप्तिकारणत्वयोर्ग्रहे संसर्गाभावस्य त्वयाऽपि हेतुत्वाङ्गीकारात् अन्यथा सामग्रीव्यापकयोः सत्त्वे तदन्योन्याभावे च कार्य्यव्याप्याभावापत्तौ कार्य्यकारणयोर्व्याप्यव्यापकभावाभावे व्याघातात्। किञ्च तत्रापि प्रतिबन्धकाभावे शक्तिरस्तीति तत्सत्त्वे तदन्योभावमादाय शक्तिसत्त्वप्रसङ्गः। न च स दुर्वचः न वा प्रागभावत्वादिनाननुगमव्यभिचारौ। प्रतियोग्यधिकरणयोः संसर्गमारोप्य यो निषेधः स संसर्गाभावः भूतलं घटसंसर्गी नेत्यत्र भूतले घटसंसर्गस्य

संसर्गो नारोप्यते किन्तु तादात्म्यम्। वयन्तु ब्रूमः यत्र प्रतियोगिनमधिकरणे समारोप्य निषेधावगमः स संसर्गाभावः यत्र चाधिकरणे प्रतियोगितावच्छेदकमारोप्य निषेधावगमः सोऽन्योन्याभावः भूतलं न घट इत्यत्र भूतलस्य घटत्वावगमात् घटत्वमेव च घटतादात्म्यम्। आरोपस्य हेतुत्वे किं मानमिति चेत् मा भूत्तावदन्यथा, इदमिह, नेदमित्यबाधितविलक्षणव्यवहारस्यैव तत्र मानत्वादिति। ननु प्रतिबन्धकात्यन्ताभावो न हेतुः तस्मिन् सत्यपि संसर्गाभावात् न हि करादौ मण्यत्यन्ताभावः तत्संयोगात्यन्ताभावो वा मणेः स्वावयववृत्तित्वात् संयोगस्य चाव्याप्यवृत्तित्वात् अतएव न तत्प्रध्वंसप्रागभावौ हेतू तयोः करादावृत्तेः गुणकर्मादेश्च प्रतिबन्धकत्वानापत्तेश्च तस्य जन्यधर्मानाश्रयत्वेन तत्र तयोरभावात् न चान्यः संसर्गाभावोऽस्तीति चेन्न संसर्गावच्छिन्नप्रतियोगिकस्याभावविशेषस्य प्रतिबन्धकेऽन्तर्भावात् न च समयावच्छेदेन संसर्गितया अत्यन्ताभाव एव तथैवान्वयव्यतिरेकावधारणात्। अतएव प्रागभावप्रध्वंसस्थले समयविशेषावच्छिन्नात्यन्ताभावेनैवोपपत्तौ न तयोः सिद्धिः अत्यन्ताभावो ह्यव्याप्यवृत्तिः तस्य चैकत्र भावाभावे क्वचिद्देशोऽवच्छेदकः क्वचित्काल इति चेन्न तत्र विद्यमानताविरोधित्वेनैव कपाले न घट इति प्रतीतिवैलक्षण्यात् नत्वेवं भूतले घटाभावप्रतीतिः। अन्ये तु भविष्यति घटो घटो नष्ट इति विलक्षणप्रतीत्या अत्यन्ताभावेनैकेन समर्थयितुमशक्यत्वात् अन्य एवायं संसर्गाभाव इत्यप्याहुः। एतेन विशेषणाभावविशेष्याभावतदुभयाभावघटितसामग्रीत्रयमेवास्तु हेतुः दाहे च जातित्रयकल्पनमिति प्रत्युक्तं अनुगतहेतुसम्भवात् दाहवैजात्यस्य योग्यानुपलब्धिबाधितत्वात् व्यक्तियोग्यतैव जातियोग्यत्वे मानं योग्येऽयोग्यजात्यभावात्। ननु प्रहरं मा दहेत्यादौ सावधिमन्त्रपाठे मन्त्रविनाशे दाहः स्यात् न च संकल्पविषयकालविशेष एव तत्र प्रतिबन्धकः संकल्पनाशसमयस्य स्वतोऽविशेषात्। न च मन्त्रपाठजनितमदृष्टमेव तत्र प्रतिबन्धकं तत्कालदाहाप्राप्तिकफलनाश्यत्वेनाग्रे दाहाप्रतिबन्धादिति वाच्यं प्रतिबन्धकस्याविहितत्वेनानिषिद्धत्वेनादृष्टाजनकत्वात्। तदाचारस्याविगीतत्वेन श्रुत्याद्यनुभावकत्वादिति चेत् नैवम् उद्देश्यप्रधानाहितसंस्कारविषयकालस्य प्रतिबन्धकत्वात् प्रतिबन्धमकुर्वतामप्रतिबन्धकत्वात् न शक्तिमनपकुर्वतां मन्त्रादीनां प्रतिबन्धकत्वमतः शक्तिसिद्धिः। न च कार्यानुत्पाद एव प्रतिबन्धः तज्जनकमेव प्रतिबन्धकमिति वाच्यं कार्यानुत्पादो हि तत्र न प्रागभावो न वा तदुत्तरकालसंसर्गः तस्य मन्त्राद्यजन्यत्वात् इति चेन्न मन्त्रादीनामप्रतिबन्धकत्वात् तत्प्रयोक्तारस्तु प्रतिबन्धकाः ते च किञ्चित्करा एव मन्त्रादौ कार्यकारणोपचारात् वार्त्तिककृत्प्रत्ययात् वा तथा व्यपदेशः। प्रतिबन्धकञ्च सामग्रीविरहः मन्त्राद्यभावघटितसामग्रीविरहः स च मन्त्रादिरेव तदभावाभावस्य तत्त्वात्। नव्यास्तु प्रतिबन्धकाभावो न कारणं न वा शक्तिः, किन्तु तत्तत्कालीनदाहविशेषं प्रति तत्तत्कालप्रतिबन्धोत्तरवह्नेः कारणत्वमिति प्रतिबन्धकाभावः कारणतावच्छेदको न तु कारणं दण्डत्ववत् आकाशाद्येकव्यक्तिकेन तथा कारणत्वं क्वचित् प्रतिबन्धेऽप्यन्यत्र शक्त्युत्पत्तेः किन्तु भेर्यादिकथा कारणत्वमिति तत्प्रतिबन्धे शक्त्युत्पत्तिर्नेत्याहुः। तत्र वह्निप्रतिबन्धकाभावयोरन्वयव्यतिरेकतौल्येनोभयस्यापि कारणत्वात् तत्रैकमवच्छेदकं विनिगमकाभावात्। किञ्च यस्मिन् सत्यपि यदभावात् कार्याभावस्तस्य कारणत्वमायाति न तु तदवच्छेदकत्वं न हि कार्येऽयोगव्यवच्छेदः कारणत्वं किन्तु नियतपूर्वसत्त्वं तच्च सहकारिविरहप्रयुक्तकार्याभावेऽप्यक्षतम्। अन्यथा चक्रसहितदण्डत्वेन कारणत्वे सहकार्युच्छेदः। यस्य यद्धर्मावगत्यैव नियतपूर्ववर्त्तित्वमवगम्यते तदवच्छेदकं दण्डत्वमिव। सहकारी तु न तथा। ननु मा भूत् अर्थापत्तिः शक्तौ मानमनुमानन्तु स्यात्। तथाहि स्थिरोऽवयवी जनकदशाविशिष्टवह्निरजनकदशाव्यावृत्तभावभूतधर्मवान् जनकत्वात् कुण्ठकुठारात्तीक्ष्णकुठारवत् दाह्यासंयुक्तवह्नेर्दाह्यसंयुक्तवह्नित्वादेः प्रतिबन्धकसत्त्वे संयोगादेरजनकदशाव्यावृत्तत्वेन तदतिरिक्तातीन्द्रियभावभूतधर्मसिद्धिः। यद्यपि शक्तेर्भावहेतुत्वेन नाजनकदशाव्यावृत्तत्वं तथाप्युक्तविशिष्टाया स्वरूपत्वम् यद्वा धर्मेऽतीन्द्रियत्वं विशेषणं न च दृष्टान्तासिद्धिः तुल्यधारत्वेऽपि लौहविशेषघटितकुठारे विलक्षणच्छिदाक्रियारूपकार्यबलादतीन्द्रियत्वसिद्धेः। अथ वा तथाभूत एव वह्निः कार्यानुकूलविशिष्टातीन्द्रियधर्मसमवायी जनकत्वात् आत्मवत्। अतीन्द्रियत्वञ्च यद्यपि न साक्षात्काराविषयत्वं अनित्यसाक्षात्काराविषयत्वं योगजधर्मजन्यसाक्षात्कारविषयत्वं वा परं स्वं वा प्रत्यक्षसिद्धेः संयोगादिपञ्चकजन्यज्ञाना-

विषयत्वमैन्द्रियकाणामपि। तथापि संयोगाद्यन्यतर-प्रत्यासत्तिजन्यसाक्षात्कारविषयत्वमुभयवादिसिद्धम् अन्यतरच्च तदन्यान्यत्वं न चाभावातीन्द्रियत्वं तस्यासिद्धेः। न च वह्नौ स्थितिस्थापकेनार्थान्तरं तत्र तदभावात् क्रियाया वेगेनादृष्टवदात्मसंयोगे वा उत्पत्तेः, न चात्मत्वं नित्यत्वं वोपाधिः स्पर्शैकत्वादिमति द्व्यणुके साध्याव्यापकत्वात् यद्वा पिण्डीभूतो वह्निः दाहानुकूलातीन्द्रियभावभूतधर्मवान् दाहजनकत्वात् आत्मवत्। नचार्थत्वमुपाधिः अदृष्टस्य दाहानुकूलत्वेनादृष्टसाध्याव्यापकत्वात्। अथ वा करवह्निसंयोगः कार्यानुकूलातीन्द्रियधर्मसमवायी जनकत्वात् आत्मवत् द्व्यणुकवच्च। न चात्मत्वं द्रव्यत्वं वोपाधिः द्व्यणुकैकत्वस्पर्शादौ साध्याव्यापकत्वात्। यद्वा प्रतिबन्धकदशायां प्रत्यक्षकल-दाहहेतुसमवहितो दाहाजनको वह्निर्जनकदशावृत्तिकार्यानुकूलभावभूतधर्मशून्यः अजनकत्वात् तोयत्वात् कुण्डवत् यद्वा तथाभूतो वह्निः दाहजनकदशावृत्तिदाहानुकूलभावभूतधर्मशून्यः दाहाजनकत्वात् दाहासंयुक्तवह्निवत् अनुकूलत्वञ्च कार्याभावव्याप्याभावप्रतियोगित्वं कारणतदवच्छेदकसाधारणं दण्डत्वेन कारणत्वदण्डत्वाभावादपि कार्याभावदर्शनादिति। उच्यते। साध्यं विनाप्युभयसिद्धप्रतिबन्धकाभावादेव जनकत्वादिहेतुसम्भवात् विपक्षबाधकाभावेनानुमानानामप्रयोजकत्वं यदि च सहचारदर्शनव्यभिचारादर्शनोपाध्यनुपलम्भमात्रादेव व्याप्तिग्रहस्तदा शक्तिसिद्ध्यनन्तरं तेनैव हेतुना शक्त्यतिरिक्तत्वपक्षेण शक्त्यतिरिक्तदाहानुकूलातीन्द्रियधर्मसिद्धिः एवं तत्तदतिरिक्तत्वस्य प्रक्षेपात्तेनैव हेतुनाऽनन्ततादृशधर्मसिद्धिप्रसङ्गः। द्वितीयादितादृशधर्मं विनापि प्रथमानुमितशक्त्यैव जनकत्वाद्युपपत्तेः न तादृशानन्तसिद्धिरिति चेत् हन्तैवं शक्तिं विनापि तदर्थसिद्धेः किं शक्त्या। यत्त्वीश्वरानन्त्यवच्च शक्त्यानन्त्यमित्युक्तं तदबोधात् कार्यमात्रे हि कर्तृत्वेन कारणत्वं नत्वीश्वरत्वेन द्विकर्तृकत्वादिना वा गौरवात् घटे स्वार्थः समाजः। एवञ्च जनकदशाव्यावृत्तत्वेनैव प्रयोजकत्वं न तु भावभूतत्वेनेति गौरवात्। अपि च भावकार्यमात्रस्य समवायिकारणजन्यत्वेन शक्तेरपि तथात्वात् शक्त्यनुकूला शक्तिरपरा समवायिकारणे मन्तव्या एवं तत्रापि समवायिकारणजन्येऽपि तदनुकूलशक्तिस्वीकारे शक्त्यनवस्था। किञ्च प्रथमानुमाने जनकत्वं न स्वरूपयोग्यत्वं वह्नौ कुठारे च तदभावात् किन्तु कार्योपधानं तथा च तदुपधानदशायामपि वह्नौ शक्तिः कुठारे तैक्ष्ण्यमिति साध्योदृष्टान्तासिद्धिश्च। लौहविशेषाणामेव सातिशयच्छिदाजनकत्वमतो नातीन्द्रियतैक्ष्ण्यसिद्धिः। अग्निमचतुर्षु बहिरिन्द्रियाप्रत्यक्षत्वमुपाधिः तत्प्रयोगच्छेदत्वेऽपि सन्दिग्धोपाधित्वेन दूषकत्वात्। अपि च जनकत्वस्य केवलान्वयित्वेन व्यतिरेकाप्रसिद्ध्या नान्वयव्यतिरेकी न च जनकत्वाभावस्य शक्त्यैव प्रसिद्धिः अन्योन्याश्रयात् न च गुरुवचनपरम्परात एव वाक्यार्थतया तत्प्रसिद्धिः अन्वये सिद्धार्थस्याप्रमाणत्वात्। न च परार्द्धसंख्यायां साध्यजनकत्वव्यतिरेकयोः प्रसिद्धिः अप्रत्यक्षायाः सर्वैकमेयायास्तस्याः प्रत्यक्षेण साध्यहेतुव्यतिरेकयोर्ग्रहीतुमशक्यत्वात्। एतेन पक्षापूर्वेऽपि तत्प्रसिद्धिरपास्ता। स्यादेतत् तृणारणिमणीनां वह्नौ कारणत्वादेकशक्तिमत्त्वमुत्प्रेयमेकता एकजातीयकार्ये एकजातीयकारणत्वनियमात्। वह्न्यवान्तरजातीये तेषां प्रत्येकं कारणत्वमिति चेन्न वह्निजातीयत्वस्याकस्मिकतापत्तेः कारणगतैकरूपमपहाय कार्यगतबहुतररूपकल्पने गौरवात् तृणारणिमणिप्रभववह्नित्वावान्तरजातेरनुपलब्धिबाधितत्वाच्च। यत्र च तत्तदिन्धनप्रयोज्यं प्रदीपदावदहनादौ वैजात्यमनुभूयते तत्र कारणे त्वेकशक्तिमत्त्वमपि नास्ति, किन्तु गोमयवृश्चिकप्रभववृश्चिकादिषु वैजात्यकल्पने तत्प्रभववृश्चिकेऽपि वैजात्यं कल्प्यम् एवं तत्प्रभवत्वं तत्प्रभवेऽप्यपीति वैजात्यानन्त्यं विजातीयकारणानां विजातीयकार्यजनकत्वनियमात्। न च तयोर्नैको वृश्चिको बुद्धिव्यपदेशयोरविशेषात्। यदि विजातीयेष्वेककार्याशक्तिः समवेयात् न कार्यविशेषात् कारणविशेषः तदभावात्तदभावः कार्यानुमीयेत तदभावेऽपि तज्जातीयशक्तिमतोऽन्यस्मादपि तदुत्पत्तिसम्भवादिति चेत् वह्निदृष्टिकादावेवमेतन्निरूपितनियतवह्न्यादिकारणत्वे धूमादौ कुतो न तदनुमानम् अन्यथा कार्यवैजात्येऽपि तृणस्य वह्निविशेष इव वह्नित्वेन धूमविशेष एव कारणत्वं न तु धूममात्रे तृणादिप्रभवत्वग्रहानन्तरं वह्न्यवान्तरजातिग्रहवत् वह्नि-तदन्यजन्यत्वग्रहानन्तरं धूमावान्तरजातिग्रहो भविष्यतीत्यप्याशङ्क्येत। बाधकं विना धूमत्वेन वह्निकार्यतेति चेत्तर्हि बाधकं विना धूमं प्रति वह्नित्वेन कारणतेत्यपि तुल्यम्। यत्तु तृणत्वेन कारणत्वग्रहस्योपजीव्यत्वात्तद्ग्राह्यं वह्नौ जातिविशेष एव

कल्प्यते इति तन्न वह्नित्वेन कार्य्यत्वग्रहात्तदर्थं तृणादौ शक्तिकल्पनौचित्यात्। यथा चान्वयव्यतिरेकाभ्यां तृणफुत्कारयोः परस्परसहकारित्वं तथैव तच्छक्त्योरपि परस्परसहकारित्वेन वह्न्यनुकूलत्वं तथैव कार्य्यदर्शनात् एवं तृणारणिमणिफुत्कारनिर्मन्थनतरणिकिरणानां वह्न्यनुकूलशक्तिमत्त्वेन कारणत्वेऽपि फुत्कारेण तृणादेव, निर्मन्थनेनारणेरेव प्रतिफलिततरणिकिरणैर्मणेरेवाग्न्युत्पत्तिः न तु मणिफुत्कारादिभ्यो, मणिफुत्कारशक्त्योः परस्परसहकारित्वविरहात्। यत्तु तृणफुत्कारादिस्तोमत्रये विशिष्टे शक्तिरिति तन्न तृणत्वेन गृहीतकारणताभङ्गप्रसङ्गादिति। उच्यते। तृणारणिमणिफुत्कारादिव्यक्तीनामानन्त्येन प्रतिव्यक्ति भावहेतुतानन्तशक्तिस्वीकारे गौरवं तावदनन्तव्यक्तिजन्यावान्तरवह्निव्यक्तिषु जातित्रयकल्पने लाघवमिति तदेव कल्प्यते न च जातौ योग्यानुपलब्धिबाधः गोमयप्रभववृश्चिकप्रभववृश्चिकयोर्वा पाटलत्वकपिलत्वव्यङ्ग्यवैजात्यस्य प्रत्यक्षसिद्धत्वात् तृणजन्यनानावह्निषु तृणजन्यत्वज्ञानानन्तरं मणिजन्यव्यावृत्त्याऽनुगतबुद्धिरस्ति। जातिविषया तृणजन्यत्वेनोपाधिनाऽसाविति चेन्न बाधकं विनानुगतबुद्धेः सद्रूपजातिविषयत्वनियमात् न च। गोमयवृश्चिकप्रभववृश्चिकजातिपरम्परायामननुगतत्वापत्तिः गोमयजन्यवृश्चिक-प्रभवत्वजातेः सत्त्वात् वह्निमात्रे च दाहस्पर्शवानवयवः तत्संयोगः सेवनादिश्च कारणानि न तु तृणादिकं विनापि, तदुत्पत्तिप्रसङ्गः विशेषसामग्रीमादायैव वा, साध्यसामग्र्याजनकत्वात्। ननु तृणारणिमणीनां वह्नौ कारणत्वग्रहे शक्तिवैजात्ययोरन्यतरकल्पनं तद्ग्रहश्च नान्वयव्यतिरेकाभ्यां व्यभिचारात्। अथारणिमण्यभाववति स्तोमविशेषे तृणं विना वह्निव्यतिरेकः तृणान्वयवह्निरित्यन्वयव्यतिरेकाभ्यां तत्रैव स्तोमे तदितरहेतुसकलसमवधाने तृणान्वयेऽवश्यं वह्निरिति नियतान्वयेन रासभादिव्यावृत्तेन तृणादि कारणत्वग्रह इति चेन्न तृणं विनापि वह्निरिति ज्ञाने सति नियतपूर्ववर्त्तित्वस्य कारणस्य गृहीतुमशक्यत्वात्। तृणाजन्यवह्नौ मणेः कारणत्वग्रह इति चेत् व्यभिचारेण वह्नौ तृणजन्यत्वाग्रहे तदजन्यत्वस्याप्यग्रहात् वह्निमात्रस्यैव उपजन्यत्वाच्च। न च मण्यजन्यत्वेन तृणजन्यत्वग्रह इति, अन्योऽन्याश्रयात्। यत्तु यत्र कारणताग्राहकं नास्ति तत्र व्यभिचारसन्देहपरिपन्थीति तन्न अबाधितनियतपूर्ववर्त्तितामात्रग्रहे तद्ग्रहस्यावश्यकत्वात् अभावप्रमायां भावज्ञानानुदयादिति उच्यते उक्तग्राहकैर्वह्निनिष्ठकार्य्यतानिरूपितकारणतावच्छेदकरूपवत्त्वं तृणस्य तृणनिष्ठनिरूपितकार्य्यतावच्छेदकरूपवत्त्वं वह्नेर्वाऽकार्य्यकारणव्यावृत्तं परिच्छिद्यते। न तु तृणत्वेन कारणत्वं वह्नित्वेन वा कार्य्यत्वं तच्चोभयथापि सम्भवति वह्नित्वेन कार्य्यतया तदनुकूलशक्तिमत्त्वेन तृणादीनां कारणतया वह्नित्वावान्तरजातिविशेषेण कार्य्यतया वा अत्र च विनिगमकमुक्तमेव। अथ तृणारणिमणीनामभावत्रयेण कार्य्यमित्यन्वयव्यतिरेकाभ्याम् अभावत्रयाभावत्वेन तृणादीनां कारणत्वमिति न व्यभिचारः अभावाभावत्वस्य भावपर्य्यवसन्नत्वादिति चेत् अभावत्रयाभावः किं तृणादिप्रत्येकव्यापकोऽप्येक एव उत तृणादि प्रत्येकमेव। आद्येऽभावस्य कारणत्वमिति किमायातं तृणादिकारणत्वे, द्वितीये तृणस्य नारणिमण्यभावाभावत्वं भावाभावत्वतदुभयापत्तेः। एतेनाभावत्रये कार्य्यं न तदभावे कार्य्यमित्यन्वयव्यतिरेकाभ्यां तृणादिप्रत्येकस्य कारणत्वग्रह इति परास्तम्"।

**दाहकाष्ठ** न० दाहस्य दाहार्थं काष्ठमस्य। दाहागुरुणि गन्धद्रव्यभेदे राजनि०।

**दाहघ्न** न० दाहं हन्ति हन–टक्। देहदाहनाशके औषधादिभेदे तत्र चक्रद० उक्तं यथा।

"शतधौतघृताभ्यक्तं दिग्धाङ्गा यवसक्तुभिः। कोलामलकयुक्तैर्वा धान्याम्लैरपि बुद्धिमान्। छादयेत् तस्य सर्वाङ्गमारनालार्द्रवाससा। लामज्जेनाथ युक्तेन चन्दनेनानुलेपयेत्। चन्दनाम्बुकणास्यन्दितालवृन्तोपवीजितः। सुप्याद्दाहार्दितोऽम्भोजकदलीदलसंस्तरे। परिषेकावगाहेषु व्यजनानाञ्च सेवने। शस्यते शिशिरं तोयं तृष्णादाहोपशान्तये। क्षीरैः क्षीरिकषायैश्च सुशीतैश्चन्दनान्वितैः। अन्तर्दाहं प्रशमयेदेतैश्चान्यैश्च शीतलैः। कुशादिशालपर्णीभिर्जीवकाद्येन साधितम्। तैलं घृतं वा दाहघ्नं वातपित्तविनाशनम्। फलिनीलोध्रसेव्याम्बुहेमपत्रं कुटन्नटम्। कालीयकरसोपेतं दाहे शस्तं प्रलेपनम्। ह्रीबेरपद्मकोशीरचन्दनक्षोदवारिणा। संपूर्णामवगाहेत द्रोणीं दाहार्दितो नरः"।

**दाहज्वर** पु० दाहप्रधानो ज्वरः। देहज्वालाविशेषरूपदाहकारके ज्वरभेदे "पीतं वृश्चिकमूलन्तु पर्युषित जलेन वै। शाङ्ग विनाशयेद्दाहज्वरञ्च परमेश्वर!" गारुडे १६२ अ०।

**दाहनागुरु** न० दाहनस्य दाहनाय अगुरु । दाहागुरुणि गन्धद्रव्यभेदे राजनि० ।

**दाहमय** त्रि० दाहेन प्रचुरः । दाहप्रधाने ज्वरादौ । "तस्य दाहमयत्वे भूमोच्छ्वासः" सा० द० । [त्रिका० ।

**दाहसर** पु० दाहार्थं स्रियतेऽसौ सृ—आधारे अप् । श्मशाने

**दाहहरण** न० दाहो ह्रियतेऽनेन हृ—ल्युट् णिच्-कर्त्तरि ल्यु वा । १वीरणमूले (वेणारमूल) शब्दच० । २दाहनाशके त्रि०

**दाहागुरु** न० दाहस्य दाहार्थमगुरु । स्वनामख्याते गन्धद्रव्यभेदे राजनि० । तत्काष्ठस्य दाहेनैव गन्धोत्पादनात् तस्य तथात्वम् । [गरदः" मनुः । स्त्रियां ङीप् ।

**दाहिन्** त्रि० दहति दह—णिनि । दाहके "अगारदाही

**दाहुक** त्रि० दह—बा० उकञ् । दाहके "नाद्याग्निर्दाहुको भवतीति विज्ञायते" आश्व० स्० २।८।१०

**दाह्य** त्रि० दह—कर्म्मणि ण्यत् । १दहनीये दग्धव्ये २दाहार्हे च । "अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च" गीता

**दिक्क** पु० दिक्षु कायते कै—क । विंशतिवर्षवयस्के करिशावके करभे शब्दर० ।

**दिक्कन्या** स्त्री दिश एव कन्याः । १दिग्रूपकन्यानाम् । "दिक्कन्याभिः पवनचमरैर्वीज्यमानः" भारतरत्नम् । दिश एव कन्याः ब्रह्मकन्याः । ब्रह्मणः कन्यारूपाणां दिशां तासां ब्रह्मकन्यात्वे चोत्पत्तिकथा वराहपु० यथा "शृणु राजन्नवहितः प्रजापाल ! कथामिमाम् । यथा दिशः समुत्पन्नाः श्रोत्रेभ्यः पृथिवीपते ! । ब्रह्मणः सृजतः सृष्टिमादिसर्गे समुत्थिते । चिन्ताभूत्महती को मे प्रजाः सृष्टिं करिष्यति । एवं चिन्तयतस्तस्य अवकाशं प्रजास्विह । प्रादुर्बभूवुः श्रोत्रेभ्यो दश कन्या महाप्रभाः । पूर्वा च दक्षिणा चैव प्रतीची चोत्तरा तथा । ऊर्द्ध्वाध एव षण्मुख्याः कन्या ह्यासंस्तदा नृप ! । तासां मध्ये चतस्रस्तु कन्याः परमशोभनाः । याः पश्यन्त्यो महाभागा गाम्भीर्य्येण समन्विताः । ता ऊचुः प्रणयाद्देवं प्रजापतिमकल्मषम् । अवकाशन्तु नो देहि देवदेव ! प्रजापते ! । यत्र तिष्ठामहे सर्वा भर्त्तृभिः सहिताः सुखम् । पतयश्च महाभाग ! देहि नोऽव्यक्तसम्भव ! । ब्रह्मोवाच ब्रह्माण्डमेतत् सुश्रोण्यः ! शतकोटिप्रविस्तरम् । तस्यान्ते स्वेच्छया तुष्टा उष्यतां मा विलम्बथ । भर्त्तॄंश्च वः प्रयच्छामि स्रष्टा रूपस्विनोऽनघाः ! । यथेष्टं गम्यतां देशो यस्या यो रोचतेऽधुना । एवमुक्तास्तु ताः सर्वा यथेष्टं प्रययुस्तदा । ब्रह्मा ससर्ज तूर्णं तान् लोकपालान् महाबलान् । दृष्ट्वा तु लोकपालांस्तु ताः कन्याः पुनराह्वयत् । विवाहं कारयामास ब्रह्मा लोकपितामहः । एकामिन्द्राय स प्रादादग्नयेऽन्यां यमाय च । निरृताय च देवाय वरुणाय महात्मने । वायवे धनदेशाय ईशानाय च सुव्रतः । ऊर्द्ध्वं स्वयमधिष्ठाय शेषायाधो व्यवस्थिताम् । एवं दत्त्वा पुनर्ब्रह्मा तिथिं प्रादात् दिशां पुनः । दशमीं भर्त्तृनाम्नस्तु अर्द्धनाम्नोद्धरत् प्रभुः । ततः प्रभृति ता देव्यः ऐन्द्राद्याः परिकीर्त्तिताः"।

**दिक्कर** पु० । दिशं लोमखदंशनं करोति कृ—टच् । १यूनि त्रिका० २शिवे च दिक्करवासिनीशब्दे दृश्यम् ।

**दिक्करवासिनी** स्त्री दिक्करे शिवे वासिनी । देवीभेदे "एवं दिक्करवासिन्याः कथितः पूर्ववत् क्रमः । यं श्रुत्वा नाशुभं किञ्चिदाप्नोति जगते रतः । दिक्करस्तरुणः प्रोक्तस्तथा शम्भुश्च दिक्करः । तस्मिन्नध्युषिता देवी तस्माद्दिक्करवासिनी" कालिका० पु० ८२ अ० ।

**दिक्करिका** स्त्री १नदीविशेषे । तद् यथा "अस्ति नाटकशैले तु सरो मानससन्निभम् । यत्र सार्द्धं शैलपुत्र्या जलक्रीड़ां सदा हरः । कुरुते सरसाह्वे तु ! स्वर्णपङ्कजशोभिते । तस्य पश्चान्मध्यपूर्वभागेभ्यश्च सरिच्चयम् । अवतीर्य्य प्रयात्येव दक्षिणं सागरं प्रति । तस्य पश्चिम भागे तु नदी दिक्करिकाह्वया । दिग्गजक्लेशसंजाता तेन दिक्करिका स्मृता" कालि० पु० ८२ अ० । दिक् दन्तदंशनं करिका नखक्षतरेखा च यस्याः । २युवत्यां स्त्री दिक्करिन्शब्दे उदा० ।

**दिक्करिन्** पु० दिक्षु स्थितः करी । ऐरावतादौ दिग्गजे "परिणतदिक्करिकास्तटीर्बिभर्त्ति" माघः । ते च पूर्वादिक्रमेण स्थिताः अमरे दर्शिताः यथा "ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः । पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः"। दिक्षु स्थिताः गजाः दिग्गजाः इत्यर्थः । तत्स्त्रियां स्त्री ङीप् । तेषां क्रमेण स्त्रियश्च "करिण्योऽभ्रमुकपिलापिङ्गलानुपमाः क्रमात् । ताम्रकर्णी शुभ्रदन्ती चाङ्गना चाञ्जनावती" अमरोक्ताः ।

**दिक्करी** स्त्री "दिग् दष्टे वक्तुलाकारे करिका नखरेखिका" वैजयन्त्युक्तेः दिशः वक्तुलाकारा दन्तक्षतभेदा करी च नखक्षतभेदा यस्याः संज्ञात्वात् न कप्, दिक्करः युवा ततः "वयसि अचरमे" वा० तस्य वयोवाचित्वात् स्त्रियां ङीष् वा । २युवत्यां स्त्रियाम् हेमच० ।

**दिक्पति** पु० ६त० । दिशां पत्यौ १इन्द्रादौ दिक्पाल शब्दे दृश्यम् । "पवनो दिक्पतिर्भूत्व आकाशः खचराचराः" संकल्पप्रारम्भमन्त्रः "वितरसि दिक्षु रणे दिक्पतिकमनीयम्" गीतगो० । "सूर्यः शोणः क्षमापुत्रः सैंहिकेयः शनिः शशी सौम्यस्त्रिदशमन्त्री च पूर्वादिदिगधीश्वराः" इत्युक्तेषु २सूर्यादिग्रहेषु ।

**दिक्पाल** पु० दिशं पालयति पालि–अण् उप०स० । दिक्पतौ इन्द्रादौ "यत्रार्चयन्ति विधिना दिक्पालांश्चैव कार्मिणः" पद्मपु० । कलशशब्दे १७८१ पृ० उदा० ।

**दिक्शब्द** पु० दिशि दृष्टः शब्दः । दिग्वाचकशब्दे पूर्वापरादौ तस्य देशकालादिपरत्वेऽपि भूतपूर्वं गत्या दिग्वाचकत्वात्तथात्वम् "अन्यारादितरर्त्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते" पा० "दिशि दृष्टः शब्दो दिक्शब्दः तेन सम्प्रति देशकालवृत्तिना योगेऽपि भवति" सि०कौ० ।

**दिक्शूल** न० दिशि दिग्भेदे गतौ शूलमिव । प्राच्यादिदिक्षु गमने निषिद्धवारभेदे । "शुक्रादित्यदिने न वारुणदिशं न ज्ञे कुजे चोत्तरां मन्देन्दोश्च दिने न शक्रककुभं याम्यां गुरौ न व्रजेत् । शूलानीति विलङ्घ्य यान्ति मनुजा ये वित्तलाभाशया भ्रष्टाशाः पुनरापतन्ति यदि ते शक्रेण तुल्या अपि" ज्योतिःसारसंग्रहः । केषाञ्चिन्मते "बौधे गुरौ दक्षिणाम् । ईशाने ज्वलने चैव नैरृते मारुते तथा । न गन्तव्यं सुराचार्ये प्रतीच्यां रविशुक्रयोः" इति

**दिक्साधन** न० दिशः साध्यन्ते ज्ञानार्थम् अनेन । दिग्ज्ञानसाधने उपायभेदे तच्च कुण्डार्के दर्शितं यथा "स्वपाङ्गुलैः संमितकर्कटेन सूत्रेण वा वृत्तवरं विलिख्य । रव्यङ्गुलं शङ्कुममुष्य मध्ये निवेशयेत् खाच्चि मिताङ्गुलीभिः । चतुर्मिताभिश्च ऋजूत्तमाभिः संस्पृष्टशीर्षं तु शलाकिकाभिः । तच्छङ्कुभा यत्र विशेदपैयाद्वृत्ते क्रमात् स्तोवरुणेन्द्रकाष्ठे" स्वपाङ्गुलैः परिमितेन कर्कटेन सूत्रेण वा वृत्तं विलिख्य तन्मध्ये द्वादशाङ्गुलं दृढमच्युपं स्थापयेत् कीदृशं विंशत्यङ्गुलमिताभिश्चतसृभिः ऋजुभिः समानाभिः शलाकाभिः कल्पितचतुर्दिग्गतवृत्तस्थाभिः संस्पृष्टमस्तकम् एवं शङ्कुसमत्वं साधयित्वा तादृशस्य शङ्कोश्छाया पूर्वाह्णे यत्र यस्मिन् प्रदेशे वृत्ते प्रविशति यत्र चापराह्णे वृत्ताद्बहिर्यैति तत्र चिह्नयोः क्रमात् प्रतीची प्राची च भवत इति अत्र दिग्ज्ञानशब्दे वक्ष्यमाणम् "वृत्तेऽम्भः सुसमीकृतक्षितिगते इत्यादि सि० शि० वाक्यं प्रमाणम् । तत्र चरमार्द्धश्लोकस्योपपत्तिः प्रमि०उक्ता यथा "दोःकोट्योर्नाम भेदो न स्वरूपभेद इति दोःकोटिवर्गयोगपदं कर्णः ।० वृत्तपरिधिस्थदिगन्ताच्छङ्कुं यावच्चीयमानास्तत्रः शलाकाः कर्णा भवन्ति समे देशे शङ्कुं निखाय शङ्कुसमितया रज्ज्वा मण्डलं परिलिख्य यत्र शङ्कुच्छाया पतति सा प्राचीति" अत्र शङ्कुसंमितयैत्युपलक्षणं तेनाधिकयापि रज्ज्वा वृत्तं कार्य्यम् । अन्यथा यत्राक्षभा षडङ्गुला तत्र चतुःसंक्रान्तौ द्वादशाङ्गुलशङ्कोश्छायाप्रवेशस्तादृशे वृत्ते न स्यादेव तस्मादस्माभिः षोडशाङ्गुलसूत्रेण वृत्तं कारितं तथा वृत्ते कृते लाघवं चैकेनैव वृत्तेन शङ्कुसमत्वसाधनं दिक्साधनं च सिध्यति । अतएव रामवाजपेयी "शङ्कुमानाधिके व्यासदले वृत्ते विशेद्यदि" इत्याह एवं स्थूलप्राचीसाधनं कृत्वा सूक्ष्मामपि शालिन्याह । "कर्के कीटे गोमृगे यूकया सा द्वाभ्यां चाल्या सिंहकुम्भालिकेऽपि । यां वै काष्ठां भानुमान् याति तस्यां चाल्या द्वन्द्वे कार्मुके चालनं न ।" सा प्राची कर्के कर्कसंक्रान्तौ कीटे वृश्चिकसंक्रान्तौ वृषभमकरसंक्रान्तौ एकया यूकया चाल्या सूर्यस्यायनवशात् उत्तरायणे उत्तरतः दक्षिणायने दक्षिणतः एवं सिंहकुम्भालिके सिंहकन्यातुलासंक्रान्तौ कुम्भमीनमेषसंक्रान्तौ च द्वाभ्यां यूकाभ्यां चालनीया अयनवशात् मिथुनधनुःसंक्रान्तौ चालनं नास्तीति एवं प्राचीसाधनं कृत्वाथोत्तरदक्षिणयोः साधनं शालिन्याह "रज्जुं द्विघ्नां मध्यचिह्नां सपाशां प्राचीं शङ्कौ पश्चिमे चापि दत्त्वा । कर्षेद्धीमान् दक्षिणे चोत्तरे च तच्चिह्ने स्याद्दक्षिणाचोत्तरा दिक्" । कुण्डमण्डपयोर्यावान् विस्तारस्तद्द्विगुणकृतमध्याङ्काडुभयतः पाशवती रज्जुर्न्यस्या तां प्राचीप्रतीच्योर्दत्तशङ्क्वोर्विन्यसेत् ततो मध्याङ्कं धृत्वा रज्जुं दक्षिणे उत्तरे चाकर्षेत् विद्वान्, कर्षाङ्के दक्षिणा उत्तरा च स्यादिति अत्र स्पष्टैव युक्तिरिति । अथ रात्रौ दिक्साधनोपायं वसन्ततिलकयाह "निशि वा श्रवणोदये दिगैन्द्री गुरुभस्योदयनेऽथ वह्निभस्य । शरवह्निशिवायुभान्तरालेऽप्यथुतः साधय पूर्ववच्च याम्याम्" अथवा रात्रौ श्रवणस्योदये प्राची अथ वा पुष्यस्योदये प्राची अथवा कृत्तिकोदये प्राची अथ शरवह्निस्वाती-वायुभयोर्मध्ये चित्रास्वात्यौ तयोरन्तराले प्राची । अस्मुतः प्राचीतः पूर्ववत् पूर्वोक्तेन तथा याम्यां दक्षिणादिशं

साधयेदिति "कृत्तिका श्रवणः पुष्यश्चित्रास्वात्यो-र्यदन्तरम्। एतत् प्राच्या दिशो रूपं युगमात्रोदिते पुरः" इति। अथ चित्रास्वात्योर्यदन्तरे प्राचीत्युक्तं तन्मध्यस्य दुर्विज्ञेयत्वात्तदुपायमनुष्टुभाह "चित्रां विद्धैकया स्वातीमन्ययापि शलाकया। तिर्यक्स्थान्तरचिह्नात् तु हिमूलेऽन्या स्फुटेन्द्रदिक्। एकया ऋज्व्या शलाकया चित्रां विद्वा अन्यया तादृशैव शलाकया स्वातीं विद्वा-तयोः शलाकयोरुपाग्रं दक्षिणोत्तरा मध्याङ्कात् द्वितीयां शलाकां समतया दद्यात् प्रथमद्वितीययोः शलाकयोर्मूलम् एकीकृत्य तृतीयां मध्याङ्कादुभयसंपातं यावच्चतुर्थीं शलाकां प्रान्ते रज्जुप्रोतलम्बद्वयवर्तीं पूर्वापरायतां दद्यात् यत्र लम्बकौ भूम्यां पतितौ तत्राङ्कयोः पूर्वापर-सूत्रदानात् स्पष्टा प्राचीत्यत्र स्पष्टा युक्तिरिति। अथ प्रकारान्तरेण लघूपायेनोदीचीसाधनमाह, दिन-मानदले सप्ताङ्गुलच्छायाप्रतो हि यत्। शङ्कुमूले नीय-मानं सूत्रं स्यादुत्तरा दिशा"। तिथिपत्राद्गणिताद्वा दिनमानमेतावदिति ज्ञात्वा ततो घटिकादिना ज्ञाते दिनार्द्धे मध्याह्ने सप्ताङ्गुलशङ्कोर्यत्र छायाग्रं लगति तस्माच्छङ्कुमूलं यावन्नीयमानं सूत्रं दक्षिणोत्तरसूत्र-मिति अथ वा सप्ताङ्गुलशङ्कोर्गणितागतमाध्याह्निक-छायातुल्या तस्यैव छाया यदा स्यात्तदग्राच्छङ्कुमूले नीयमानं सूत्रं दक्षिणोत्तरेति। अत्र युक्तिस्तस्मिन् समये रविर्दक्षिणोत्तरवृत्ते भवतीति ततः पूर्ववत् पूर्वा-परे साध्ये एवं दिक्साधनं विधाय मण्डपस्य चतुष्को-णत्वाच्चतुष्कोणसाधनं विपरीताख्यानकयाह "दिगन्तशङ्कु-द्वयगं द्विपाशं विस्तारतुल्यं तु गुणं दत्वाङ्के। कोणे प्रकर्षे दिति वेदकोणेष्वेवं चतुःकोणमतीव साधु"। दिगन्तयोः पूर्वदक्षिणयोः दक्षिणापरयोः अपरोत्तरयो उत्तरपूर्वयोः शङ्कुद्वयगं द्वौ पाशौ यस्य तं विस्तारेण तुल्यगुणं सूत्रं अर्द्धचिह्ने धृत्वा कोणे आकर्षयेत्। एवं चतु-र्ष्वपि कोणेष्विति कृते साधु चतुरस्रं स्यादिति" तट्-व्याख्या। अधिकं दिग्ज्ञानशब्दे दृश्यम्।

**दिक्स्रक्ति** न० दिक्कोणे। "दिक्स्रक्ति पुरुषमात्रं मीयते" कात्या० श्रौ० २०।३।२।१८। "दिक्स्रक्ति दिक्कोणम्" संग्रह व्याख्या।

**दिगंश** पु० ७त०। सि०शि० उक्ते दिक्स्थे अंशभेदे यथा "चक्रांशकाङ्के क्षितिजाख्यवृत्ते प्राक्स्वस्तिकाभीष्ट दिशस्तु मध्ये। येऽंशाः स्थितास्तेऽत्र दिगंशकाख्यास्त-स्त्वग्राश्च दिग्ज्येत्यपरे विभागे" सि०शि० "कदाचिदत्र-भीष्टदिने यस्मिन् काले प्रच्छकः पृच्छति तत्र कालेऽर्को-परि न्यस्तस्य दिङ्मण्डलस्य क्षितिजस्य च सम्पाते याभीष्टा दिक् तस्याः प्राक् स्वस्तिकस्य चान्तरे क्षितिज-वृत्ते येऽंशास्तेऽत्र दिगंशका ज्ञेयाः। तेषां ज्या दिग्-ज्येति एवं पश्चिमभागेऽपि" प्र०मि०

**दिगन्त** पु० ६त०। १दिशामन्ते। दिगन्तविश्रान्तरथोहि तत्सुतः "भुजार्जितानां च दिगन्तसम्पदाम्" रघुः। २शास्त्रीयस्नानकर्मयुतजनाधिष्ठितमध्यदेशादतिरिक्ते देशे च

**दिगन्तर** न० दिशामन्तरमवकाशः। १दिशामवकाशे "शब्दा-रपूतानि दिगन्तराणि" रघुः। अन्या दिक् मयूर०। २प्रकृतदिशोऽन्यस्यां दिशि च न०।

**दिगम्बर** पु० दिक्शून्यमम्बरं यस्य। १शिवे २जैनभेदे पु० तन्मतमर्हच्छब्दे उक्तप्रायं किञ्चिदत्राधिकमुच्यते। "दि-गम्बरा मध्यमत्वमाहुरापादमस्तकम्। चैतन्यव्याप्तिसंदृष्टे-रानखाग्रश्रुतेरपि"। अस्य भाषा प्राकृतान्तरभेदमिश्रा मागधी। अस्य स्वरूपन्तु गलन्मलपङ्केन पिच्छिलवी-भत्सदुष्प्रेक्ष्यदेहः विलुञ्चितचिकुरो मुक्तवसनो वेश-दुर्दर्शनः शिखिशिखण्डपिच्छिकाहस्तः इति। एतन्मत-सिद्धं जीवस्य मध्यमपरिमाणत्वं शा०स्०० भाष्ययोर्नि-राकृतं यथा

"एवञ्चात्माऽकात्स्न्र्यम्" सू०। "शरीरपरिमाणो हि जीव इत्यार्हता मन्यन्ते। शरीरपरिमाणतायां च सत्यामकृत्स्नोऽसर्वगतः परिच्छिन्न आत्मेत्यतो घटादि-वदनित्यत्वमात्मनः प्रसज्येत। शरीराणाञ्चानवस्थित-परिमाणत्वान्मनुष्यजीवो मनुष्यशरीरपरिमाणो भूत्वा पुनः केनचित् कर्मविपाकेन हस्तिजन्म प्राप्नुवन्न कृत्स्नं हस्तिशरीरं व्याप्नुयात्, पुत्तिकाजन्म च प्राप्नुवन्न कृत्स्नः पुत्तिकाशरीरे सम्मीयेत। समान एष एकस्मिन्नपि जन्मनि कौमारयौवनस्थाविरेषु दोषः। स्यादेतत्, अन-न्तावयवो जीवस्तस्य त एवावयवा अल्पे शरीरे सङ्-कुचेयुर्महति च विकाशेयुरिति। तेषां पुनरनन्तानां जीवावयवानां समानदेशत्वं प्रतिहन्येत वा न वेति वक्तव्यम्। प्रतिघाते तावन्नानन्तावयवाः परिच्छिन्ने देशे सम्मीयेरन्। अप्रतिघातेऽप्येकावयवदेशत्वोपपत्तेः सर्वेषामवयवानां प्रथिमानुपपत्तेः जीवस्याणुमात्रत्वप्रसङ्गः स्यात्। अपि च शरीरमात्रपरिच्छिन्नानां जीवावयवा-नामानन्त्यं नोत्प्रेक्षितुमपि शक्यम्। अथ पर्यायेण

इत्थञ्चशरीरप्रतिपत्तौ च केचिज्जीवावयवा उपगच्छन्ति तनुशरीरप्रतिपत्तौ च केचिदपगच्छन्ति इत्युच्येत तत्रा-भ्युच्यते” भा० । “न च पर्य्यायादप्यविरोधो विकारा-दिभ्यः” सू० । “न च पर्य्यायेणाप्यवयवोपगमापगमा-भ्यामेतद्देहपरिमाणत्वं जीवस्याविरोधेनोपपादयितुं शक्यते कुतः विकारादिदोषप्रसङ्गात् । अवयवोपगमा-पगमाभ्यां ह्यनिशमापूर्य्यमाणस्यापचीयमानस्य च जीवस्य विक्रियावत्त्वं तावदपरिहार्य्यं, विक्रियावत्त्वे च चर्मा-दिवदनित्यत्वं प्रसज्येत, ततश्च बन्धमोक्षाभ्युपगमो बाध्येत, कर्म्माष्टकपरिवेष्टितस्य जीवस्यालावूवत् संसार-सागरे निमग्नस्य बन्धनोच्छेदादूर्द्ध्वगामित्वं भवतीति । किञ्चान्यदागच्छतामपगच्छताञ्चावयवानामागमापायधर्म-वत्त्वादेवानात्मत्वं शरीरादिवत् । ततश्चावस्थितः कश्चि-दवयवी आत्मेति स्यात्, न च स निरूपयितुं शक्यते अयमसाविति । किञ्चान्यदागच्छन्तश्चैते जीवावयवाः कुतः प्रादुर्भवन्ति अपगच्छन्तश्च क्व वा लीयन्त इति वक्तव्यम् । न हि भूतेभ्यः प्रादुर्भवेयुः भूतेषु च लीये-रन् अभौतिकत्वाज्जीवस्य । नापि कश्चिदन्यः साधारणो-ऽसाधारणो वा जीवानामवयवाधारो निरूप्यते प्रमाणा-भावात् । किञ्चान्यदनवधृतस्वरूपश्चैवं सत्यात्मा स्यात् आगच्छतामपगच्छताञ्चावयवानामनियतपरिमाणत्वात्, अत एवमादिदोषप्रसङ्गात् न पर्य्यायेणाप्यवयवोपगमाप-गमावात्मन आश्रयितुं शक्येते । अथ वा पूर्व्वेण सूत्रेण शरीरपरिमाणस्यात्मन उपचितापचितशरीरान्तरप्रतिप-त्तावकात्स्न्यं प्रसञ्जनद्वारेणानित्यतायां चोदितायां पुनः पर्य्यायेण परिमाणानवस्थानेऽपि स्रोतःसन्ताननित्यता न्यायेनात्मनो नित्यता स्यात्, यथा रक्तपटादीनां विज्ञानान-वस्थानेऽपि तत्सन्ताननित्यता तद्वद्दिग्वसनानां(विवसनानाम्) अपीत्याशङ्कानेन सूत्रेणोत्तरमुच्यते । सन्तानस्य ताव-दवस्तुत्वे नैरात्म्यवादप्रसङ्गः, वस्तुत्वेऽप्यात्मनो विका-रादिदोषप्रसङ्गादस्य पक्षस्यानुपपत्तिरिति” ।

२नग्ने त्रि० “दिगम्बरत्वेन निवेदितं वसु” । कुमा० स्त्रियां गौरा०ङीष् । “तथा चैव दिगम्बरी” काली-ध्यानम् “लोलूपाऽपि दिगम्बरी त्रिजगतां मातापि सद्यौवना”कालीस्तवः । दिगेवाम्बरम् । ४दिग्रूपे अम्बरे दिक् च अम्बरञ्च समा०द्व० । ५दिगाकाशसमाहारे च न० “आच्छादितायतदिगम्बरमुच्चकैर्गाम् माघः । ६तमसि न० मेदि० स्वार्थे क । दिगम्बरक क्षपणके हारा० ।

**दिगादि** पु० “दिगादिभ्यो यत्” पा० विहितयत्प्रत्ययनिमित्ते शब्दगणभेदे स च गणः पा०ग०सू०उक्तो यथा “दिक् वर्ग पूग गण पक्ष धाय्य मित्र मेधा अन्तर पथिन् रहस् अलीक उखा साक्षिन् देश आदि अन्त मुख जघन मेघ यूथ (उदकात् संज्ञायाम्)न्याय वंश वेश काल आकाश” ।

**दिगीश्वर** पु० ६त० । १इन्द्रादौ दिक्पाले २सूर्य्यादिग्रहे च “दिगीश्वरा भास्करगुरुभौमा राहुार्किचन्द्रज्ञसुरार्चिताः स्युः” ज्यो०त०दिगीशादयोऽप्यत्र “दिगीशवृन्दांशविभूति रीशिता” नैष० [उदयाचलादौ ।

**दिगुपाधि** पु० ६त० । दिशां प्राच्यादिव्यवहारोपाधौ

**दिग्गज** पु० दिशि स्थितो गजः । दिशु स्थिते ऐरावतादौ गजे दिक्करिनृपक्ष्ये द्वयम् । “नदत्याकाशगङ्गायाः स्रोतस्युद्दामदिग्गजे” रघुः । “चिरस्य वाचार्य्यमनन्ति दिग्गजैः” माघः ।

**दिग्जय** पु० दिशां तत्स्थलोकनृपाणां जयः । जिगी-षुकृते युद्धेन १दिक्स्थितनृपजये विद्यया २दिक्स्थ-लोकादिजये च । दिग्विजयादयोऽप्यत्र

**दिग्ज्ञान** न० ६त० सि०शि० उक्ते दिशां प्राचीत्वादिज्ञान-साधने प्रकारभेदे स च तत्रोक्तो यथा

“वृत्तेऽम्भःसुसमीकृतक्षितिगते केन्द्रस्थशङ्कोः क्रमा-च्छायाग्रं यत्र विशत्यपैति च यतस्तत्रापरैन्द्र्यौ दिशौ । तत्कालापमजीवयोस्तु विवराच्छायार्कमित्या हताल्लम्बज्याप्त-मिताङ्गुलैरयनदिश्यैन्द्री स्फुटा चालिता । तन्मत्स्याद्य याम्यसौम्यककुभौ सौम्या ध्रुवे वा भवेदेकस्मादपि भायतो भुजमितां कोटीमिमां शङ्कुतः । न्यस्येदुद्यदिष्टजुं तथा भुवि यथा बाहूपयोः संयुतिः कोटिः प्राच्यपरा भवेदिति कृते वाहुश्च याम्योत्तरा” मू० “उदकेन समीकृतायां भूमा-विष्टप्रमाणं वृत्तं विलिख्य तस्य केन्द्रे द्वादशाङ्गुलशङ्कुं निवेश्य तस्य छाया तस्मिन् वृत्ते यत्र प्रविशति पूर्व्वाह्णे वा अपराह्णे यतो निर्गच्छति तत्र पश्चिमपूर्व्वदिशौ किल भवतः । परन्तु यस्मिन् काले छायाप्रवेशो जातो यस्मिन् काले च निर्गमस्तात्कालिकयोरर्कयोः क्रान्तिज्ये साध्ये । तयोरन्तरात् तस्याश्छायायाः कर्णेन गुणितात् लम्बज्यया भक्तादुपलब्धमङ्गुलादि फलं तेनैन्द्री दिगुत्तरतश्चालिता स्फुटा भवति यद्युत्तरेऽयने रविर्वर्त्तते तदा उत्तरतः यदि दक्षिणे तदा दक्षिणतः । एवं स्फुटा प्राची । अन्यथा स्थूलेत्यर्थः । तन्मत्स्याद्याम्यसौम्ये दिशौ । अथ प्रकारा-न्तरेणाह । ध्रुवमवलम्ब्य सूत्रेण विद्धा ध्रुवाभिमुखकी-

यकः सौम्या । तस्यानकोनको याम्या । तत्क्रमात् पूर्वापरे । प्रथमं भाच्छायायदर्शने दिग्ज्ञानमुक्तम् । इदानीमथवैकस्मादपि भायतः । तद्यथैवम् । अभीष्टकाले शङ्कोर्भायं विज्ञायित्वा तस्माच्छायाया वक्ष्यमाणप्रकारेण भुजं कोटिं चानीय भुजकोटिमिते शलाके सङ्गृहीत्वा शङ्कुमूलाद्यथादिग्गतां कोटिशलाकां छायाग्राद्यथादिग्गतां भुजशलाकां च तथा भुवि न्यसेद्यथा शलाकाग्रयोः संयुतिः स्यात् । एवं कृते सति कोटिः प्राच्यपरा दिग्भवति । बाहुश्च याम्योत्तरा । अत्रोपपत्तिः । अहोरात्रवृत्ते इष्टानामुन्नतघटिकानामग्रे पूर्वाह्णे समनलम्बेन यावदन्तरं तावदेवापराह्णे तावतीनां घटीनामग्रे भवति । अतस्तच्छायाग्रबिन्दुभ्यां दिग्ज्ञानमुपपद्यते । परं तत्कालान्तरेण यदर्कक्रान्त्यन्तरं तेनान्तरितं भवति । अतस्तत् शोध्यम् । तद्यथैवम् । तस्मिन् काले यानि कर्णवृत्ताग्राङ्गुलानि पूर्वाह्णे यानि चापराह्णे तेषामन्तरं कार्यम् । तत्र वाचवार्थं तत्कालक्रान्त्योरेवान्तरं कृतम् । ततोऽग्राकरणायानुपातः । यदि लम्बज्याकोट्या त्रिज्या कर्णस्तदा क्रान्तिज्यान्तरेण किमिति । अत लब्धमग्रान्तरम् । ततोऽन्योऽनुपातः । यदि त्रिज्याव्यासार्धे एतावदन्तरं तदा कर्णव्यासार्धे किमिति । अत तुल्यत्वात् गुणकभाजकयोस्त्रिज्यानाशे कृते यदुपपन्नं तत्कालापमजीवयोस्तु विवरादित्यादि । यद्युत्तरमयनं वर्तते उत्तरतोऽर्के चालिते शङ्कोर्भायं दक्षिणतो याति तदोत्तरतश्चालनीयम् । अत उपपन्नैन्द्री स्फुटा चालितेति । भुजकोटीनामुपपत्तिरग्रे । अस्तिवेशमात्रेण दिग्ज्ञानमिव दर्शितम्" प्रमि० ।

**दिग्ज्या** स्त्री दिक्शब्दे दर्शिते सि०शि०उक्ते दिशामंशभेदे ।

**दिग्दर्शन** न० दिशो दृश्यन्तेऽनेन दृश—करणे ल्युट् । १दिग्ज्ञानसाधने यन्त्रभेदे(कम्पास)इत्य०।२दिशां दर्शने च

**दिग्दाह** पु० दिशां दाहः । ह०स० २१अ० उक्ते उत्पातभेदे तच्छुभाशुभादिकं तत्रोक्तं यथा

"दाहो दिशां राजभयाय पीतो देशस्य नाशाय हुताशवर्णः । यश्चारुणः स्यादपसव्यवायुः शस्यस्य नाशं स करोति दृष्टः । योऽतीव दीप्त्या कुरुते प्रकाशं छायामपि व्यञ्जयतेऽर्कवत् यः । राज्ञो महद्वेदयते भयं सः शस्त्रप्रकोपं क्षतजानुरूपः । प्राक् क्षत्रियाणां सनरेश्वराणां प्राग्दक्षिणे शिल्पिकुमारपीडा । याम्ये सहोग्रैः प्रकृतैश्च वैश्या दूताः पुनर्भूप्रमदाश्च कोणे । पश्चात्तु शूद्राः कृषिजीविनश्च चौरास्तुरङ्गैः सह वायुदिक्स्थे । पीड्यां प्रयान्त्युत्तरतश्च विप्राः पाषण्डिनो वाणिजकाश्च शार्व्याम्(ऐशान्याम्) । नभः प्रसन्नं विमलानि भानि प्रदक्षिणं वाति सदागतिश्च । दिशां च दाहः कनकावदातो हिताय लोकस्य सपार्थिवस्य" ।

**दिग्देवता** स्त्री दिशां तन्मर्य्यादानां देवता साक्षिभूतेव । दिशां मर्य्यादासाक्षीभूतदेवतायाम् "दिग्देवता अतिरजस्वलमतिर्न विजानाति" भाग०४।१४।८

**दिग्ध** पु० दिह—क्त । १विषाक्तवाणे अमरः "छेदवे दिग्धसरैरिवाहतः" कुमा० । २अग्नौ ३स्नेहे च पु० हेमच० । ४प्रबन्धे अजयपालः । ५लिप्ते त्रि० मेदि० ।

**दिग्बल** न० दिङ्निमित्तं ग्रहाणाम् बलम् । लग्नादौ स्थितग्रहाणां दिग्भेदनियमिते बले यथाह ज्योतिषे "लग्ने सौम्यसुराचार्यौ कुजार्कौ दशमे तथा । द्यूने सौरिस्तुर्ये तु सितेन्दू दिग्बलान्वितौ" । अत्र कोणदिग्बलित्वनिरासाय लग्नदशमद्यूनचतुर्थपदैः पूर्वदक्षिणपश्चिमोत्तरदिगुपादनम् । लग्ने स्थितौ बुधगुरू पूर्वदिग्बलिनौ यतो राशीनामुदयो लग्नं उदयश्च पूर्वदिश्येव भवति । लग्नात् दशमे स्थितौ कुजार्कौ दक्षिणदिग्बलिनौ यतो लग्नाद्दशमराशिरेव दक्षिणदिशि तिष्ठति । सप्तमे स्थितो शनिः पश्चिमदिग्बली यतो लग्नात् सप्तमराशिरस्तमेति । अस्तश्च पश्चिमदिश्येव भवति । तथा लग्नाच्चतुर्थे स्थितौ शुक्रचन्द्रौ उत्तरदिग्बलिनौ यतो लग्नाच्चतुर्थराशिरेवोत्तरदिग्भागे तिष्ठति । तद्बलान्वितो ग्रहो दिग्बलीत्युच्यते" एतच्चायुर्दायादिषु बलगणनोपयोगि । यात्रादिषु यथास्थितपूर्वाद्यपेक्षयैव ग्रहाणां दिग्बलित्वं ज्यो०त० उक्तं यथा "प्राच्यां सौम्यसुराचार्यौ याम्यां भास्करभूमिजौ । प्रत्यक् सौरिरुदीच्यान्तु सितेन्दू दिग्बलान्वितौ" ।

**दिग्बलिन्** पु० दिग्बलमस्त्यस्य इनि । १दिङ्निमित्तबलयुक्ते ग्रहे दिग्बलशब्दे दृश्यम् । २ताहृशे राशिभेदे च "ऐन्द्र्यां भानुधरात्मजस्तु शशियोर्याम्ये सरीर्यां अक्षिर्यांदृश्यां बलयुक् तथैव बलिनः पानीयजायोत्तरे" ज्यो०त०

**दिग्वदन** न० दिग्भेदे वदनं यस्य । प्राच्यादिदिग्भेदेन तत्रस्थितमुखके राशिभेदे । "लग्ने दिग्वदनेऽतिदक्षगमनं प्राच्यादि शूलं विना" ज्यो०त० राशीनां दिग्भेदेन मुखमुक्तं तत्रैव । "मेषाद्यास्त्रिभ्रमात् स्युः"

प्रागादिदिङ्मुखास्त्वमी" तथा च मेषः प्राग्वदनः, वृषो याम्यवदनः, मिथुनः पश्चिमामुखः, कर्कं उत्तरामुखः एवं सिंहादयः धनुरादयश्च। दिग्लग्नादयोऽप्यत्र।

**दिग्वस्त्र** पु॰ दिगूपं वस्त्रमस्य। १शिवे २जैनभेदे च ३नग्ने त्रि॰ "दिग्वस्त्रावद्धकाञ्चीमणिमयमुकुटाद्यैर्युता-दीप्तजिह्वा" रक्षाकालीध्यानम्। दिग्वसनादयोऽप्यत्र।

**दिग्वारण** पु॰ दिक्षु स्थितो वारणः। दिग्गजे ऐरावतादौ। "दिग्वारणमदाविलम्" "प्रभिन्नदिग्वारणवाहनो वृषा" कुमा॰।

**दिग्विजय** पु॰ दिशां तत्स्थजनपदलोकानां विजयः। विद्यायुद्धेन वा दिक्स्थजनपदलोकजये "पाण्डवदिग्विजयः भीमदिग्विजयः शङ्करदिग्विजयः" इत्यादि।

**दिङ्क** पु॰ दिङ् इति कायति शब्दायते कै—क। उत्कुणे मत्कुणे शब्दकल्प॰। तत्स्फोटने हि दिङ् इति शब्दो जायते इति तस्य तथात्वम्।

**दिङ्नक्षत्र** न॰ दिशि दिग्भेदेन स्थितं नक्षत्रम्। "कृत्तिकाद्यास्तु पूर्वादौ सप्त सप्तोदिताः क्रमात्। यद्दिश्यं यस्य नक्षत्रं तत्र तस्य शुभं स्मृतम्" ज्यो॰त॰उक्ते नक्षत्रभेदे।

**दिङ्नाग** पु॰ दिशि स्थितो नागः। दिग्गजे "दिङ्नागानां पथि परिहरन् स्थूलहस्तावलेपान्" मेघदू॰ "दिङ्नागमदगन्धिषु" कुमा॰।

**दिङ्मण्डल** त्रि॰ ६त॰। १दिशां मण्डले २मण्डलाकारे तत्समूहे च। "उन्मादाम्बुदवर्जितान्धतमसप्रभ्रष्टदिङ्मण्डले" उद्भटः।

**दिङ्मात्र** न॰ दिगेव मात्रच्। एकदेशे शब्दार्थचिन्ता॰।

**दिङ्मूढ़** त्रि॰ दिशि मूढः। दिग्भ्रान्तियुक्ते पूर्वादिदिशां यथार्थतोऽपरिज्ञानम् दिग्भ्रमः तद्युक्ते दिशामयथार्थज्ञानयुक्ते।

**दिण्डि** पु॰ डिण्डि+पृषो॰ वाद्यभेदे।

**दिण्डिर** पु॰ डिण्डिर+पृषो॰। वाद्यभेदे अमरः।

**दित** त्रि॰ दो—खण्डने क्त इत्त्वम्। छिन्ने हैमीकृते अमरः।

**दिति(ती)** स्त्री दो—खण्डने क्तिच् वा ङीप्। १दैत्यमातरि कश्यपपत्न्याम्। "प्रजज्ञिरे महाभागा दक्षकन्यास्त्रयोदश। अदितिर्दितिः दनुः काला" भा॰आ॰६५अ॰। ताश्च कश्यपस्य पत्न्यः "ददौ स दश धर्माय कश्यपाय त्रयोदश" हरिवं॰ ६अ॰। भावे क्तिन् न ङीप्। २खण्डने च।

**दितिज** पु॰ दितेर्जायते जन—ड। असुरे "इत्येते दितिजसंघानाम्" भा॰अनु॰१४अ॰। "दितिजसहस्रगणैर्निषेव्यमाणम्" हरिवं॰२२२अ॰ "एकएव दितेः पुत्रो हिरण्यकशिपुः स्मृतः" भा॰आ॰६५अ॰। उक्तेरेकस्यैव तत्सुतत्वेऽपि तद्वंशजानानामप्युपचारात् तज्जन्यत्वं द्रष्टव्यम्।

**दितितनय** पु॰ ६त॰। दैत्ये दितिनन्दनदितिसुतादयोऽप्यत्र। "नखे दितिसुताधीशः पदे रोदसी" सा॰द॰।

**दित्य** पु॰ दितौ भवः यत्। १असुरे शब्दार्थकल्प॰। दितिं खण्डनमर्हति यत्। २छेदनार्हे—धान्यादौ त्रि॰।

**दित्यवाट्** पु॰ दित्यं छेदनार्हं धान्यादिकं वहति वह—ण्वि। द्विवर्षवयस्के पशौ। "दित्यवाट्योविराट् छन्दः" यजु॰१४।१०। "दो अवखण्डने क्तिन् प्रत्ययः दितिं खण्डनमर्हति दित्यं धान्यं वहति दित्यवाट् यद्वा द्विवर्षः पशुर्दित्यवाट् विराट् छन्दो भूत्वोत्क्रान्तं दित्यवाहं पशुं वयसा प्राप्नोत् "दित्यवाहं वयसाप्नोद्विराट् छन्दः विराड्भूत्वा दित्यवाह उदक्रामत्" शत॰ब्रा॰ ८।२।४।१२। श्रुतेः, वेददी॰ स्त्रियां ङीपि वाहऊठ्। दित्यौही इत्येव। "दित्यवाट् च मे दित्यौही च मे" यजु॰ १८।२६। "द्विसंवत्सरो वृषो दित्यवाट् तादृशी गौर्दित्यौही" वेददी॰।

**दित्सा** स्त्री दातुमिच्छा दा—सन् इस् अभ्यासलोपः भावे अ। दानेच्छायाम्।

**दित्सु** त्रि॰ दातुमिच्छुः दा—सन्—उ। दानेच्छावति "दित्सुः सुतां योधवरैस्तुरङ्गैः" भट्टिः क्वचित् आर्षे तु नाभ्यासलोपः "संप्रहृष्टो यदा शल्यो दिदित्सुरपि जीवितम्" भा॰उ॰७अ॰।

**दिदृक्षा** स्त्री द्रष्टुमिच्छा दृश—सन्—भावे अ। दर्शनेच्छायाम्। "द्रौपदीं प्रार्थयन्तस्ते स्वयंवरदिदृक्षया" भा॰आ॰ १अ॰। "एकस्यसौदर्य्यदिदृक्षयेव" कुमा॰।

**दिदृक्षु** त्रि॰ द्रष्टुमिच्छुः दृश—सन्—उ। द्रष्टुमिच्छौ "कोपितोह्यसि मया दिदृक्षुणा" रघुः। "व्यवहारान् दिदृक्षुस्तु ब्राह्मणैः सह पार्थिवः" मनुः।

**दिदृक्षेण्य** त्रि॰ द्रष्टुमेष्टव्यः दृश—सन् केन्य। "द्रष्टुमेष्टव्ये। "दिदृक्षेण्यः परि काष्ठासु जेन्यः" ऋ॰१।१४६।५।

**दिदृक्षेय** त्रि॰ दिदृक्षामर्हति बा॰ ढक्। दर्शनीये "दिदृक्षेयः सूनवे भाऋजीकः" ऋ॰ ३।१।१२। "दिदृक्षेयः सर्वैर्दर्शनीयः" भा॰

**दिद्यु** पु॰ दिद्युत्+पृषो॰। १वज्रे निघण्टुः "सृजदस्ता धृषता दिद्युमस्मै" ऋ॰१।७१।५। "पाहि मा दिद्योः" यजु॰ २।२०। २वाणे च "सत्राषां सत्पतिरेष्यति दिद्यून्

पाहि" यजु० १०।१७। टो अवखण्डने द्यनि अवखण्डयन्ति दिद्युरो वाखाः "इषवो वै दिद्यव इषुवधमेवैनमेतदति नयतीति" शत०ब्रा०५।४।२।२।

**दिद्युत्** त्रि० द्युत–क्विप् नि०। १दीप्तिशीले २वज्रे पुं०निघ०।

**दिधिषाय्य** न० दधात्याज्ञं दम् धा–आय्य नि०द्वित्वं युक् च। १मद्ये २आरोपितत्वस्वभावे ३धारके त्रि०। "मित्र इव यो दिधिषाय्यो भूदुदेव" ऋ०२।४।१। "दिधिषाय्यो धारयिता" भा० उज्ज्वलदत्तस्तु दधिषाय्य इति सूत्रं पठित्वा दधिपूर्वकादस्यतेराय्यः इति व्याचख्यौ।

**दिधिषु** पु० दिधीं धैर्यम् इच्छति इष–क्विप् शकन्ध्वा०। द्विरूढायाः स्त्रियाः पत्यौ पुनर्भूपतौ अमरः।

**दिधिषू** स्त्री दधाति पापं धिषते वा धा–धिष–वा ऊ अन्दूदम्भू इत्यादिना नि०। वारद्वयविवाहितायां स्त्रियाम्। "ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा। सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूः स्मृता" देवलोक्तायां ज्येष्ठाविवाहप्रागभावकालीनविवाहयुक्तायां २कनिष्ठायां भगिन्याञ्च।

**दिधिषूपति** पु०६त०। "भ्रातुर्मृतस्य भार्यायां योऽनुरज्येत कामतः। धर्मेणापि नियुक्तायां स ज्ञेयो दिधिषूपतिः" मनूक्ते विधवायां भ्रातृभार्यायां रते भ्रातरि।

**दिधीषू** स्त्री दिधिषू–पृषो०। दिधिषूशब्दार्थे शब्दरत्ना०।

**दिन** पु०न०द्यति तमः दो–अवखण्डने दी–क्षये वा नक् ह्रस्वः। १सूर्यकिरणावच्छिन्ने काले तच्चोदादिकं अहन् शब्दे ५७६ पृ० दृश्यम्। २षष्टिदण्डात्मके मानुषे अहोरात्रे चान्द्रे ३तिथिरूपे काले ४चान्द्रमासात्मके पैत्र्ये कालभेदे सौरवर्षरूपे ५दैवे कालभेदे ब्राह्मे ६कल्परूपे काले च "अजगोपतियुग्मञ्च कर्किधन्विमृगास्तथा। निशासंज्ञाः स्मृताश्चैव शेषाश्चान्ये दिनाख्यकाः"इति ज्योतिषतत्त्वोक्ते ७राशिभेदे। "दिने दिने त्वं तनुरेधि रेऽधिकम्" नैष० "दिनानि दीनोद्धरणोचितस्य" "दिनेषु गच्छत्सु नितान्तपीवरम्" रघुः। "प्रौढ़ध्वान्तं दिनमिह जलदाः" माघः जीमूतवाहनस्तु सूर्यकिरणावच्छिन्नं चतुर्यामात्मकं दिनमित्याह "दिनं दिनेशस्य यतोऽत्र दर्शने तमो तमोहन्तुरदर्शने सति। कृष्णशुक्लानां द्युनिशं यथा तथा पितॄणां शशिपृष्ठवासिनाम्" सि०शि० दिनमानशब्दे दृश्यम् "तिथिशान्द्रमसं दिनम्" सू०सि०।

**दिनकर** पु० दिनं करोति कृ–ट, दिने करः किरणो वास्य। १सूर्ये २अर्कवृक्षे च "दिनकराभिमुखा सरोरुहः" रघुः। "अम्लानताम्रपुटपरिभ्रमणं समन्तादस्यन्तरे दिनकरस्य करप्रसारः" स्फु० श्लो०।

**दिनकरतनय** पु० ६त०। कर्णानन्दने १शनौ २यमे च "चारवशात् द्वितीयस्तृगे दिनतनये" वृ०सं०१०४अ०। दिनकरसुतादयोऽप्यत्र ३कर्णे ४सुग्रीवे ५तपत्यां ६यमुनायां च स्त्री। ["दिनकर्त्ता न दृश्यते" हरिवं०१६१अ०।

**दिनकर्त्** पु०दिनं करोति कृ–तृच्। १सूर्ये २अर्कवृक्षे च

**दिनकृत्** पु० दिनं करोति कृ–क्विप्। सूर्ये हेमच०। "शुक्लाः करा दिनकृतो दिवादिमध्यान्तगामिनः स्निग्धाः" वृ०सं० ३०अ०। २अर्कवृक्षे च [शब्दर०।

**दिनकेशव** पु० दिनस्य केशव इवात्मकत्वात्। अन्धकारे

**दिनक्षय** पु० दिनस्य तिथेः क्षयः। तिथिक्षये। "एकस्मिन् सावने त्वह्नि तिथीनां त्रितयं यदा। तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलम्"मलमा०त०वशिष्ठः। तिथिक्षयशब्दे दृश्यम्।

**दिनचर्या** ७त०। भावप्र० उक्ते दिने कर्त्तव्यभेदे यथा "मानवो येन विधिना स्वस्थस्तिष्ठति सर्वदा। तमेव कारयेद्वैद्यो यतः स्वास्थ्यं सदेप्सितम्। दिनचर्यां निशाचर्यां ऋतुचर्यां यथोदिताम्। आचरन् पुरुषः स्वस्थः सदा तिष्ठति नान्यथा"। तत्र स्वस्थस्य लक्षणमाह सुश्रुतः "समदोषः समाग्निश्च समधातुमलक्रियः। प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते"। क्रियात्र कर्म तेन समक्रियः शरीरानुरूपकर्मा। तत्र दिनचर्यामाह ब्राह्मे मुहूर्त्ते बुध्येत स्वस्थो रक्षार्थमायुषः। तत्र दुःस्वप्रशान्त्यर्थं स्मरेद्धि मधुसूदनम्। दध्याज्यदर्पणसिद्धार्थविल्वगोरोचनास्रजाम्। दर्शनं स्पर्शनं कार्यं प्रबुद्धेन शुभावहम्। स्वमाननं घृते पश्येत् यदीच्छेत् चिरजीवितम्। आयुष्यमुषसि प्रोक्तं मलादीनां विसर्जनम्। तदन्त्र कूजनाध्मानोदरगौरववारणम्। आदिशब्देन वातमूत्रादीनां ग्रहणम्। आटोपशूलौ परिकर्त्तिका च सङ्गः पुरीषस्य तथोर्द्ध्ववातः। पुरीषमाशादथवा निरेति पुरीषवेगेऽभिहते नरस्य। परिकर्त्तिका गुदे परिकर्त्तनवत्पीड़ा। पुरीषस्य सङ्गो निरोधः। ऊर्द्ध्ववातः उद्गारवाहुल्यम्। वातमूत्रपुरीषाणां सङ्गाध्माने क्लमो रुजा। जठरे वातजाश्चान्ये रोगाः स्यु वातनिग्रहात्। वस्तिमेहनयोः शूलं मूत्रकृच्छ्रं शिरोरुजाः। विनामो वङ्क्षणानाहः स्याल्लिङ्गं मूत्रनिग्रहे। विनामः शरीरस्य नम्रता वङ्क्षण-

शानाहः वक्त्रवैरस्यकर्णपार्श्वपीड़ा । न वेगितोऽन्यकार्य्यः स्यान्न वेगान् धारयेद्‌ बलात् । कामशोकभयक्रोधान् मनोवेगान्विधारयेत् । गुदादिमलमार्गाणां शौचं कान्तिबलप्रदम् । पवित्रकरमाख्यातमलक्ष्मीकलिपापहृत् । प्रक्षालनं मतं पाण्योः पादयोः शुद्धिकारणम् । मलश्रमहरं वृष्यं चक्षुष्यं राजसापहम् । दन्तकाष्ठविधिः भक्षयेद्दन्तपवनं द्वादशाङ्गुलमायतम् । कनिष्ठिकाग्रवत् स्थूलमृज्वग्रन्थि तथाऽव्रणम् । एकैकं घर्षयेद्दन्तं मृदुना कूर्चकेन तु । दन्तशोधनचूर्णेन दन्तमांसान्यबाधयन् । क्षौद्रत्रिकटुकाक्तेन तैलसिन्धुभवेन वा । चूर्णेन तेजोवत्याश्च दन्तान्नित्यं विशोधयेत् । तेजोवती (तेजवल्कल) इति लोके प्रसिद्धा । मधूको मधुरे श्रेष्ठः करञ्जः कटुके तथा । निम्बश्च तिक्तके श्रेष्ठः कषाये खदिरस्तथा । समयन्तु समालोक्य दोषञ्च प्रकृतिं तथा । यथोचितैरसैर्वीर्य्यैर्युक्तं द्रव्यं प्रयोजयेत् । तेनास्य मुखवैरस्यदन्तजिह्वास्यजा गदाः । रुचिश्चैषां लघुता न भवन्ति भवन्ति च । अर्के वीर्य्यं वटे दीप्तिः करञ्जे विजयो भवेत् । प्लक्षे चैवार्थसम्पत्तिर्बदर्य्यां मधुरस्वनम् । खदिरे मुखसौगन्ध्यं बिल्वे तु विपुलं धनम् । उदुम्बरे तु वाक्‌सिद्धिराम्रे त्वारोग्यमेव च । कदम्बे तु धृतिर्मेधा चम्पके दृढवाक्श्रुतिः । शिरीषे कीर्त्तिसौभाग्यमायुरारोग्यमेव च । अपामार्गे धृतिर्मेधा प्रज्ञाशक्तिस्तथासने । दाडिम्यां सुन्दराकारः ककुभे कुटजे तथा । जातीतगरमन्दारैर्दुःस्वप्नञ्च विनश्यति । गुवाकतालहिन्तालं केतकञ्च दृढच्छदः । खर्ज्जूरं नारिकेलञ्च सप्तैते तृणराजकाः । तृणराजसमुत्पन्नं यः कुर्य्याद्दन्तधावनम् । नरश्चाण्डालयोनिः स्याद्यावद्गङ्गां न पश्यति । न खादेद्गलताल्वोष्ठजिह्वादन्तगदेषु तत् । मुखस्य पाके शोथे च श्वासकासवमीषु च । दुर्ब्बलो जीर्णभुक्तश्च हिक्कामूर्च्छामदान्वितः । शिरोरुजार्त्तस्तृषितः श्रान्तः पानक्लमान्वितः । अर्द्दितः कर्णशूली च नेत्ररोगी नवज्वरी । वर्ज्जयेद्दन्तकाष्ठन्तु हृदामययुतोऽपि च । अजीर्णभक्तः न जीर्णं भुक्तं यस्य सः । जिह्वानिर्लेखनं हैमं राजतं ताम्रजं तथा । पाटितं मृदु तत् काष्ठं मृदुपत्रमयं तथा । तत् काष्ठं दन्तशोधनयोग्यं काष्ठम् । दशाङ्गुलं मृदु स्निग्धं तेन जिह्वां लिखेत् सुखम् । तज्जिह्वामलवैरस्यदुर्गन्धजड़ताहरम् । गण्डूषमपि कुर्व्वीत शीतेन पयसा सुखः । कफतृष्णामलहरं मुखान्तःशुद्धिकारकम् । सुखोष्णोदकगण्डूषः कफारुचिमलापहः । दन्तजाड्यहरश्चापि मुखलाघवकारकः । विषमूर्च्छामदार्त्तानां शोषिणां रक्तपित्तिनाम् । कुपिताक्षिमलक्षीणरूक्षाणां स न शस्यते । सुखोष्णोदकगण्डूषो यथा “मुखप्रक्षालनं शीतपयसा रक्तपित्तजित् । मुखस्य पीड़काशोषनीलिकाव्यङ्गनाशनम् । कुर्य्याद्वापि कटूष्णेन पयसास्यविशोधनम् । कफवातहरं स्निग्धं मुखशोषविनाशनम् । कटुतैलादि नस्यार्थं नित्याभ्यासेन योजयेत् । प्रातः श्लेष्मणि मध्याह्ने पित्ते सायं समीरणे । सुगन्धवदनाः स्निग्धनिःस्वना विमलेन्द्रियाः । निर्व्वलीपलितव्यङ्गा भवेयुर्नस्यशीलिनः । सौवीरमञ्जनं नित्यं हितमक्ष्णोस्ततो भजेत् । लोचने भवतस्तेन मनोज्ञे सूक्ष्मदर्शने । सौवीरं (श्वेतसुरमा) इति लोके प्रसिद्धम् । स्रोतोऽञ्जनं मतं श्रेष्ठं विशुद्धं सिन्धुसम्भवम् । दृष्टेः कण्डूयनहरं दाहक्लेदरुजापहम् । अक्ष्णोरूपावहञ्चैव सहते मारुतातपौ । नेत्ररोगा न जायन्ते तस्मादञ्जनमाचरेत् । स्रोतोऽञ्जनं (कृष्णसुरमा) इति लोके । विशुद्धं शोधनं विनापि । सिन्धुसम्भवम् सिन्धुर्नाम पर्व्वतः तत्र सम्भवम् । रात्रौ जागरितः श्रान्तः छर्द्दितो भुक्तवांस्तथा । ज्वरातुरः शिरःस्नातो नाक्ष्णोरञ्जनमाचरेत् । पक्षात्पक्षाच्छ्मश्रुकेशरोमाणि कर्त्तयेत् । केशश्मश्रुनखादीनां कर्त्तनं सम्प्रसाधनम् । पौष्टिकं वृष्यमायुष्यं शौचकान्तिकरं परम् । सम्प्रसाधनम् शोभाजनकम् । उत्पाटयेत्तु लोमानि नासायाः न कदाचन । तदुत्पाटनतो दृष्टेर्दौर्ब्बल्यं त्वरया भवेत् । केशपाशे प्रकुर्व्वीत प्रसाधन्या प्रसाधनम् । केशप्रसाधनं केश्यं रजोजन्तुमलापहम् । आदर्शालोकनं प्रोक्तं माङ्गल्यं कान्तिकारकम् । पौष्टिकं बल्यमायुष्यं पापालक्ष्मीविनाशनम् । लाघवं कर्म्मसामर्थ्यं विभक्तघनगात्रता । दोषक्षयोऽग्निवृद्धिश्च व्यायामादुपजायते । व्यायामे दृढगात्रस्य व्याधिर्नास्ति कदाचन । विरुद्धं वा विदग्धं वा भुक्तं शीघ्रं विपच्यते । भवन्ति शीघ्रं नैतस्य देहे शिथिलतादयः । न चैनं सहसाक्रम्य जरा समधिरोहति । न चास्ति सदृशन्तेन किञ्चित् स्थौल्यापकर्षणम् । स सदा गुणमाधत्ते बलिनां स्निग्धभोजिनाम् । वसन्ते शीतसमये सुतरां स हितो मतः । अन्यदापि च कर्त्तव्यो बलार्द्धेन यथाबलम् ।

हृदयस्थो यदा वायुर्वक्त्रं शीघ्रं प्रपद्यते। मुखञ्च शोषं लभते तद्बलार्द्धस्य लक्षणम्। किं वा ललाटे नासायां गात्रसन्धिषु कक्षयोः। यदा सञ्जायते स्वेदो बलार्द्धन्तु तदादिशेत्। भुक्तवान् कृतसम्भोगः कासी श्वासी कृशः-क्षयी। रक्तपित्ती क्षती शोषी न तं कुर्य्यात् कदाचन। अतिव्यायामतः कासो ज्वरः छर्द्दिः श्रमः क्लमः। तृष्णाक्षयः प्रतमको रक्तपित्तञ्च जायते। अभ्यङ्गं कारयेन्नित्यं सर्व्वेष्वङ्गेषु पुष्टिदम्। शिरःश्रवणपादेषु तं विशेषेण शीलयेत्। सार्षपं गन्धतैलञ्च यत्तैलं पुष्पवासितम्। अन्यद्रव्ययुतं तैलं न दुष्यति कदाचन। गन्धतैलम् गन्धद्रव्याणामगुर्व्वादीनामग्नियोगेन निष्कासितः स्नेहः। अभ्यङ्गो वातकफहृच्छ्रमशान्तिबलं सुखम्। निद्रावर्णमृदुत्वायुः कुरुते देहपुष्टिकृत्। अभ्यङ्गः शीलितो मूर्ध्नि सकलेन्द्रियतर्पकः। दृष्टिपुष्टिकरो हन्ति शिरोभूमिगतान् गदान्। केशानां बहुतां दार्ढ्यं मृदुतां दीर्घतां तथा। कृष्णतां कुरुते कुर्य्याच्छिरसः पूर्णतामपि। न कर्णरोगा न मलं न च मन्याहनुग्रहः। नोच्चैःश्रुतिर्न वाधिर्य्यं स्यान्नित्यं कर्णपूरणात्। रसाद्यैः पूरणं कर्णे भोजनात् प्राक् प्रशस्यते। तैलाद्यैः पूरणं कर्णे भास्करेऽस्तमुपागते। पादाभ्यङ्गस्तु स्थैर्य्यं निद्रादृष्टिप्रसादकृत्। पादसुप्तिश्रमस्तम्भसङ्कोचस्फुटनप्रणुत्। व्यायामक्षुण्णवपुषं पद्भ्यां संमर्दितं तथा। व्याधयो नोपसर्पन्ति वैनतेयमिवोरगाः। लोमकूपं शिराजालं धमनीभिः कलेवरैः। तर्पयेद्बलमाधत्ते स्नेहयुक्तावगाहने। अद्भिः संसिक्तमूलानां तरूणाम्पल्लवादयः। वर्द्धन्ते हि तथा नृणां स्नेहसंसिक्तधातवः। नवज्वरी अजीर्णी च नाभ्यञ्जेत कथञ्चन। तथा विरिक्तो वान्तश्च निरूढो यश्च मानवः। निरूढः दत्तो निरूहवस्तिः यस्मै सः। पूर्व्वयोः कृच्छ्रता व्याधेरसाध्यत्वमथापि वा। शेषाणां नत्विह प्रोक्ता वह्निसादादयो गदाः। पूर्व्वयोः तरुणज्वरिणोऽजीर्णिनश्च। उद्वर्त्तनङ्कफहरं मेदोघ्नं शुक्रदम्परम्। बल्यं शोणितकृच्चापि त्वक्प्रसादमृदुत्वकृत्। मुखलेपात् दृढं चक्षुः पीनोगण्डस्तथाननम्। कान्तमव्यङ्गपिडकं भवेत्कमलसन्निभम्। दीपनं वृष्यमायुष्यं स्नानमोजोबलप्रदम्। कण्डूमलश्रमस्वेदतन्द्रातृड्दाहपाकनुत्। बाह्यैश्च सेकैः शीताद्यैरूष्मान्तर्याति पीड़ितः। नरस्य स्नातमात्रस्य दीप्यते तेन पावकः। शीतेन पयसा स्नानं रक्तपित्तप्रशान्तिकृत्। तदेवोष्णेन तोयेन बल्यं वातकफापहम्। शिरःस्नानमचक्षुष्यमत्युष्णेनाम्भसा सदा। वातश्लेष्मप्रकोपे तु हितन्तच्च प्रकीर्त्तितम्। "अशीतेनाम्भसा स्नानं पयःपानन्नवाः स्त्रियः। एतद्वो मानवाः ! पथ्यं स्निग्धमल्पञ्च भोजनम्।" हरिश्चन्द्रस्यैतत्। यः सदामलकैः स्नानं करोति स विनिश्चितम्। वलीपलितनिर्मुक्तो जीवेद्वर्षशतन्नरः। स्नानं ज्वरेऽतिसारे च नेत्रकर्णानिलार्त्तिषु। आध्मानपीनसाजीर्णभुक्तवत्सु च गर्हितम्। स्नानस्यानन्तरं सम्यक्वस्त्रेणाङ्गस्य मार्जनम्। कान्तिप्रदं शरीरस्य कण्डूत्वग्दोषनाशनम्। कौशेयौर्णिकवस्त्रञ्च रक्तवस्त्रन्तथैव च। वातश्लेष्महरन्तत्तु शीतकाले विधारयेत्। कौशेयं पट्टाम्बरम् तसरवस्त्रञ्च। मेध्यं सुशीतम्पित्तघ्नं कषायं वस्त्रमुच्यते। तद्धारयेदुष्णकाले तच्चापि लघु शस्यते। कषायं (कोसुकी) इति लोके कषायरागरक्तं वा। शुक्लन्तु शुभदं वस्त्रं शीतातपनिवारणम्। नचोष्णञ्च न वा शीतन्तत्तु वर्षासु धारयेत्। यशस्यङ्काम्यमायुष्यं श्रीमदानन्दवर्द्धनम्। त्वच्यं वशीकरं हृद्यं नवं निर्म्मलमम्बरम्। काम्यं कामोद्दीपकम्। कदापि न जनैः सद्भिर्धार्य्यं मलिनमम्बरम्। तत्तु कण्डूकृमिकरं ग्लान्यलक्ष्मीकरम्परम्। अलक्ष्मीः अशोभा दारिद्र्यञ्च। कुङ्कुमञ्चन्दनञ्चापि कृष्णागुरु च मिश्रितम्। उष्णं वातकफध्वंसि शीतकाले तदिष्यते। चन्दनं घनसारेण बालकेन च मिश्रितम्। सुगन्धि परमं शीतमुष्णकाले प्रशस्यते। घनसारः कर्पूरः बालकं ह्रीवेरम्। चन्दनं घुसृणोपेतं मृगनाभिसमायुतम्। न चोष्णं नच वा शीतं वर्षाकाले तदिष्यते। घुसृणं कुङ्कुमम्। मृगनाभिः कस्तूरी। अनुलेपस्तृषामूर्च्छादुर्गन्धस्वेददाहजित्। सौभाग्यतेजस्त्वग्वर्णप्रीत्योजोबलवर्द्धनः। स स्नानार्हलोकानामनुलेपोऽपि नो हितः। सुगन्धिपुष्पमालानां धारणङ्कान्तिकारकम्। पापरक्षोपहहरं कामदं श्रीविवर्द्धनम्। भूषणैर्भूषयेदङ्गं यथायोग्यं विधानतः। शुचिसौभाग्यसन्तोषदायकं काञ्चनं स्मृतम्। ग्रहदृष्टिहरं पुष्टिकरं दुःस्वप्ननाशनम्। पापदौर्भाग्यशमनं रत्नाभरणधारणम्। माणिक्यन्तरणेः सुजात्यममलं मुक्ताफलम् शीतगोर्माहेयस्य च विद्रुमो निगदितः सौम्यस्य गारुत्मतम्। देवेज्यस्य च पुष्परागमसुराचार्य्यस्य वज्रं शनेः नीलन्निर्म्मलमन्ययोश्च गदिते गोमेद-

वातरजोऽपहम्। हिमन्नं हितकरत्वाच्च माङ्गल्यमपि कीर्त्तितम्। सत्यातपाहवनस्थैर्य्यधैर्य्यतेजोविवर्द्धनम्। अदृष्टमयकरञ्चापि भयघ्नं दण्डधारणम्। कर्म्मोच्चाटन संयुक्ता शिबिका सर्ववल्लभा। तस्यामारोहणं नृणां त्रिदोषशमकं मतम्। वातश्लेष्मगदार्त्तानामहिता श्रमकर्षदिः। पित्तानिलकरो हस्ती लक्ष्म्यायुःपुष्टिवर्द्धनः। घोटकारोहणं वातपित्ताग्निश्रमकृन्मतम्। मेदोवर्णकफघ्नञ्च हितं तद्बलिनां परम्। आतप स्वेदमूर्च्छाश्रपित्तलतृष्णाक्लमश्रमान्। दाहं विवर्णतां कुर्य्यादेतान् छाया व्यपोहति। दृष्टिदृष्या हिमावस्था निद्रालस्यविधायिनी।"

**दिनज्योतिस्** न० ६त०। आतपे राजनि०।

**दिनदुःखित** पुंस्त्री० दिनमपि दुःखितः उत्कण्ठितः। चक्रवाके शब्दर०। स्त्रियां ङीष्। रात्रौ हि स्त्रीविरहेण दिनार्थमुत्कण्ठायुक्तत्वात् तस्य तथात्वम्।

**दिनप** पु० दिनं पाति पा—क। १सूर्य्ये हारा० २अर्कवृक्षे ३सूर्य्यादिषु वारेषु च "दिनाब्दमासहोराणामधिपा न समाः कुतः" इति मयस्य प्रश्ने "मन्दादधः क्रमेण स्युश्चतुर्था दिवसाधिपाः। वर्षाधिपतयस्तद्वत् तृतीयाश्च प्रकीर्त्तिताः" सू० सि०। "शनेः सकाशादधः क्रमेण चतुर्थसङ्ख्याका ग्रहा दिनाधिपतयो वारेश्वरा भवन्ति यथा शनिरविचन्द्रभौमबुधगुरुशुक्रा इति तत्क्रमः" रङ्ग०। "सूतकानां परिच्छेदो दिनमासाब्दपास्तथा। मध्यमग्रहभुक्तिस्तु सावनेनैव गृह्यते" सू०सि०।

**दिनपति** पु०६त०। १सूर्य्ये २अर्कवृक्षे च ३वारेशसूर्य्यादौ च दिनपशब्दे दृश्यम् दिननाथदिनेशादयोऽप्यत्र। ४दिनप्रवेशलग्नेशे दिनप्रवेशलग्नेश्वरादिषु मध्ये तल्लग्न दर्शिनि अधिकबलयुक्ते ५ग्रहभेदे च दिनप्रवेशशब्दे दृश्यम्। "दिननाथपूर्णशशिनोरसम्भवात्"माघः।

**दिनपात** पु० दिनस्य चान्द्रदिनस्य तिथेः पातः क्षयः। दिनक्षये "अधिवासे दिनपाते धनुषि रवौ भानुलङ्घिते मासि। चक्रिणि सुप्ते कुर्य्यान्न माङ्गल्यं विवाहञ्च" भीमपराक्रमः।

**दिनपिण्ड** पु० ६त०। ज्योतिषोक्ते अहर्गणे।

**दिनप्रणी** पु०दिनं प्रणयति करोति प्र+णी—क्विप्। १सूर्य्ये २अर्कवृक्षे च।

**दिनप्रवेश** पु० ताजकोक्ते मासप्रवेशवत् वर्षमासमध्यस्थदिनानां प्रवेशे तत्प्रवेशकालाद्यानयनं नील०ता० उक्तं यथा "मासार्कस्य तदासन्नपङ्क्त्यर्केण सहान्तरम्। कलीकृत्यार्कगत्याप्तदिनाद्येन युतोनितम्। तत् पङ्क्तिस्थं वारपूर्वं मासार्केऽधिकहीनके। तद्वाराद्ये मासवेशो दिवसेऽप्येव मेव तु"। अयमर्थः मासार्कः वर्षप्रवेशकालीन एव राश्यंशकलाविकलादियुक्तः सूर्य्यः प्रथममासार्कः द्वितीयमासार्कस्तु तथाभूतार्क एकैकराशिमात्रयुक्तः। तस्य तदासन्नपङ्क्त्यर्केण पाश्चात्यदेशप्रचलितमकरन्दानुसारितिथिपत्रिकास्थसन्निकृष्टग्रहलाघवपङ्क्तिस्थेन स्फुटार्केण यदन्तरं तत् कलात्मकं कृत्वा तद्विकलीकृतविगत्या तद्विकलीकस्फुटसूर्य्यगत्या हरणेन लब्धदिनाद्येन तत्पङ्क्तिस्थार्के! वारादिना युतमूनितं वा कार्य्यं तथा सति यदि मासार्कस्ततोऽधिको भवति तदा पूर्वोक्तरीत्या युते वारादौ मासप्रवेशे वारादिर्भवति यदि मासार्कस्ततो हीनो भवति तदा ऊनितं कार्यम् एवंकृते तथाभूते वारादिके मासप्रवेशो भवति। दिनप्रवेशे त्वयं भेदः। वर्षप्रवेशप्रथममासप्रवेशकालयोरैक्यमिव प्रथमदिनप्रवेशस्यापि तत्कालैक्यम्। द्वितीयादिदिनप्रवेशकालस्तु इत्थम् मासार्कस्थाने दिनार्क इति विपरिणमनीयम् तथा च मासार्के एकैकांशयोजने द्वितीयादिदिनार्कौ भवति तस्य पूर्ववत् आसन्नपङ्क्तिस्थस्फुटार्केण यदन्तरं तत्कलात्मकं कृत्वा तद्विकलीकृतगत्या हृते लब्धेन दिनाद्येन पङ्क्तिस्थार्ककालवारादिकं युतमूनितं वा कार्यं तथा सति यद् अंशादिकं भवति तत्पङ्क्तिस्थार्ककालीनवारादिषु हीनमधिकं कार्यं तथा कृते यद्भवति तत् द्वितीयादिदिनप्रवेशे वारादि ज्ञेयम् तथा च तादृक्समये यस्य राशेरुदयः तत् अंशादिसंहितं दिनप्रवेशलग्नम् इति।

दिनेशायनं च तत्रैवोक्तं यथा

"तत्र मासतनोर्नाथो मुन्थेशोजन्मपस्तथा। त्रिराशिपो दिननिशोरवीन्दुभपतिस्तथा। अब्दप्रवेशलग्नेश एषु वीर्याधिकस्तनुम्। पश्यन् मासपतिर्ज्ञेयस्ततो वाच्यं शुभाशुभम्। अपरे दिनलग्नेशं तथा प्राहुर्विचक्षणाः। मासघस्रेशयोर्वाच्यं फलं वर्षेशवद्बुधैः" नी०कं० इत्युपक्रमे दिनपतिनिर्णयस्तत्फलं च तत्रोक्तं यथा

"दिनप्रवेशकालेऽपि खेटान् भावांश्च साधयेत्। चन्द्रलग्नांशकाभ्यां तु फलं तत्र वदेद्बुधः। चतुष्कमित्थिहेशादि दिनमासाब्दलग्नपाः। एषां बली तनुं पश्यन् दिनेशः परिकीर्त्तितः"। इत्थिहेशादिचतुष्कम् दिनमुन्थेशः जन्म-

लग्नेशः, दिनरात्रिभेदेन दिने दिनप्रवेशे सूर्यः, रात्रौ दिनप्रवेशे चन्द्रः, एतदुक्तम्, दिनमासाब्दपाः दिनप्रवेशमासप्रवेशवर्षप्रवेशलग्नेशास्त्रयः इति सप्तानां मध्ये योऽधिकबलवान् दिनप्रवेशलग्नदर्शी च स दिनपतिरिति बोध्यम्। इदन्त्ववधेयं सम्या हि राश्यंशादियुतं लग्नलग्नमेव या च एकैकवर्षे एकैकराशिमतिक्रम्य राश्यन्तरे गच्छति तेन तस्या मासे लं राशिकेन सार्द्धद्व्यंशभोगः दिने च पञ्चकलाभोगः तदनुसारेणैव सम्यायाः राश्यादिकल्पनया तद्भोगनिरूपणम्। "त्रिकोणकेन्द्रायगताः शुभाश्चेच्चन्द्रासनौर्वा बलिनः खलास्तु। षडन्त्यगास्तत्र दिने सुखानि विलासमानार्थयशोयुतानि। षडष्टरिप्फोपगता दिनाद्दमासेष्विष्टेयाः खलखेटयुक्ताः। गदप्रदा मानयशोहराश्च केन्द्रत्रिकोणायगताः सुखाप्त्यै। लग्नांशपः सौम्यखगैः समेतो दृष्टोऽपि वा मित्रदृशेन्दुनापि। नैरुज्यराज्यादिशरीरपुष्टिर्मासोक्तवद्दुःखमतोऽन्यथात्वे। यदंशपः सूर्ययुतेक्षितो वा स्निग्धेक्षणाद्भावजसौख्यकृत् सः। दुःखप्रदः प्रोक्तवदन्यथात्वे सर्वेषु भावेष्वियमेव रीतिः। षष्ठांशकः सौम्ययुतो रोगदः पापयुक् शुभः। व्ययांशः शुभयुग्दृष्टः सद्व्ययः पापतस्त्वसन्। जायांशः सौम्ययुग्दृष्टः स्त्रीसौख्यविलासकृत्। पापैर्दृष्टैः कलिर्दुःखं पापान्तःस्थे क्षतिं वदेत्। शुभमध्यस्थिते सप्तांशे बहुलं कामिनीसुखम्। ख्यां रतिर्गुरावन्यखगेऽन्यासु रतिं वदेत्। मृत्यंशे मृत्युगैः सौम्यैर्युग्दृष्टे मरणं खे। मिश्रैर्मिश्रं खलैः सौख्यं वर्षलग्नानुसारतः। द्विहादये खला हानिं व्यये सौम्याः शुभव्ययम्। कर्त्तरी पापजा रोगं करोति शुभजा शुभम्। लग्नेऽष्टमे वा क्षीणेन्दुस्तत्रुदः पापदृग्युतः। रोगो वा मरणं वापि रिपुतः, शस्त्रभीरपि। चन्द्रे सभौमे निधनारिसंस्थे स्त्रीणां भयं शस्त्रकृतं पयो वा। पापैः सुखस्थैः पतनं गजाश्ववानात्ततः स्यात्सुहला च पीड़ा। शुभा द्यूने विजयदा द्यूनादर्थे सुखावहाः। नवमे धर्मभाग्यार्थराजगौरवकीर्त्तिदाः। दिनप्रवेशेऽस्ति विधुरवस्थायां तु यादृशि। तदवस्था तुल्यमसौ फलं दत्ते न संशयः। विहाय राशिं चन्द्रस्य भागा द्विघ्नाः शरोद्धृताः। लब्धं गता अवस्थाः स्युर्भौम्यायाः फलमादिशेत्। प्रवासं प्रवासोपगते रात्रिनाशेऽर्थनाशस्तु नष्टोपगे मृत्युभीतिः। मृतावस्थिते स्याज्जयायां जयस्तु विलासस्तु हास्योपगे कामिनीभिः।

रतौ स्याद्रतिः क्रीड़िता सौख्यदानी प्रसुप्ता च निद्रां कलिर्दृक्कपीड़ाम्। भवं तापरागिः सुखं स्यात्तु भुक्ता ज्वराकम्पिताद्य स्थिताद्य क्रमेण"।

**दिनबन्धु** पु० ६त०। १सूर्ये हेम०। २अर्कवृक्षे च

**दिनबल** पु०दिने बलं यस्य। १द्विपदराशिषु। ते च राशयः बृहज्जा० भट्टोत्पलयोरुक्ता यथा

"होरा स्वामिगुरुज्ञवीक्षितयुता नान्यैश्च वीर्योत्कटाः केन्द्रस्था द्विपदादयोऽह्नि, निशि च प्राप्ते च सन्ध्याद्वये" मू० "वीर्योत्कटाः इत्यनुवर्त्तते द्विपदादयो द्विपदचतुष्पदकीटाः यथाक्रममह्नि, निशि, प्राप्ते च सन्ध्याद्वये वीर्योत्कटाः भवन्ति अह्नि दिने द्विपदा बलिनः, निशि रात्रौ चतुष्पदाः, सन्ध्याद्वये कीटाः। अत्र न केवलं वृश्चिकं कीटः यावदाप्याः कीटप्रत्येयैव ज्ञेयाः। तत्र च श्रीदेवकीर्त्तिः "मिथुनतुलाकुम्भकन्या दिवाबला धन्विनश्च पूर्वार्द्धम्। अजवृषसिंहा रात्रौ मृगहयोः पूर्वपश्चार्द्धे। वृश्चिकमीनकुलीरा मकरान्त्यार्द्धे च सन्ध्यायामिति" भट्टो०। एवं स्थिते यज्जक० पञ्चपष्ठादिराशीनां यद्दिनबलमुक्तं तन्मूलं चिन्त्यम्। दिने बलं यस्य। २सूर्यगुरुशुक्रेषु ग्रहेषु यथाह बृहज्जा०"निशि शशिकुजसौराः सर्वदा ज्ञोऽह्नि, चान्ये, बहुलसितगताः स्युः क्रूरसौम्याः क्रमेण" "शशिकुजसौराश्चन्द्रभौमशनयः निशि रात्रौ वीर्यवन्तो बलिनः, बुधः सर्वदा सर्वस्मिन् काले निशि दिने च बली, अन्ये परे रविगुरुसिता अह्नि दिने बलिनः" भट्टो०।

**दिनमणि** पु०दिने मणिरिव प्रकाशकत्वात्। १सूर्ये हारा०। २अर्कवृक्षे च "दिनमणिमण्डलमण्डन! भवखण्डन!" गीतगो०। "मद्दहः किमहो रजनी तनुर्दिनमसौ गणकोत्तरगोलगे। ननु तनुर्दिवसो महती निशा वद विचक्षण! दक्षिणदिग्गते" सि०शि०

**दिनमयूख** पु०दिने मयूखोऽस्य। १सूर्ये २अर्कवृक्षे च दिनकिरणादयोऽप्यत्र।

**दिनमान** न० दिनस्य मानम्। सूर्यदर्शनकालस्य मानभेदे तन्मानभेदे कारणं सि०शि० उक्तं यथा

"अतश्च सौम्ये दिवसो महान् स्यात् रात्रिर्लघुर्व्यस्तमतश्च याम्ये। द्युरात्रवृत्ते क्षितिजादधःस्थे रात्रिर्यतः स्याद्दिनमानमूर्द्धे। यदा समत्वं द्युनिशोर्निरक्षे नोन्नमण्डलं तत्र कुजादयतोऽन्यत्। षटषष्टिभागाभ्यधिकाः पलांशा यत्राथ तत्राक्षपरो विशेषः। लग्नाधिका क्रान्तिरुदक्

च यावत् तावद्दिनं सततमेव तत्र । यावच्च याम्यां सततं तमिस्रा ततश्च मेरौ सततं समार्द्धम् । विषुवद्वृत्तं द्युसदां क्षितिजत्वमितं तथा च दैत्यानाम् । उत्तरयाम्यौ क्रमशो मूर्द्धोर्द्धगतौ ध्रुवौ यतस्तेषाम् । उत्तरगोले क्षितिजादूर्द्ध्वं परितो भ्रमन्तमादित्यम् । सव्यं त्रिदशाः सततं पश्यन्त्यसुरा अपसव्यगं याम्ये । दिनं दिनेशस्य यतोऽत्र दर्शने तमी तमोहन्तुरदर्शने यति । कृष्णगानां द्युनिशं यथा तथा पितॄणां शशिपृष्ठवासिनाम् । दिनं सुराणामयनं यदुत्तरं निशेतरत् संहितिकैः प्रकीर्तितम् । दिनोन्मुखेऽर्के दिनमेव तन्मतं निशा तथा तत्फलकीर्तनाय तत् । हन्तान्तमारोहति यैः क्रमेण तैरेव हन्तैरवरोहतीनः । यत्रैव दृष्टः प्रथमं स देवैस्तत्रैव तिष्ठन् न विलोक्यते किम् ? । विधूर्द्ध्वभागे पितरो वसन्तः स्वाधः सुधादीधितिमामनन्ति । पश्यन्ति तेऽर्कं निजमस्तकोर्द्ध्वे दर्शे यतोऽस्माद् द्युदलं तदेषाम् । भार्द्धान्तरत्वाद्विधोरधःस्थं तस्माद्विधोः खलु पौर्णमासाम् । कृष्णे रविः पक्षदलेऽभ्युदेति शुक्लेऽस्तमेत्यर्थत एव सिद्धम् । यदतिदूरगतो द्रुहिणः क्षितेः सततमाप्रलयं रविमीक्षते । भवति तावदयं यथितस्य तद्ग्रहशशदहवयुतं द्युनिशं विधेः । खो हि प्रदेशोऽपमण्डलस्य तिर्यक्स्थितो याम्यदयं तयास्तम् । सोऽल्पेन कालेन य ऊर्द्ध्वसंस्थोऽनल्पेन सोऽस्मादुदया न तुल्याः । य उद्गमे याम्यनता न भाद्याः स्वस्यापमेनापि निरक्षदेशे । याम्याःजतस्तेऽतिनतत्वमाप्ता उद्यन्ति कालेन ततोऽल्पकेन । कर्क्यादयः सौम्यनता हि येऽत्र ते यान्ति याम्याजनशादजुत्वम् । कालेन तस्मादृघबहुनोदयन्ते तदन्तरे स्वं चरखण्डमेव । अथ चक्रपादास्तिथिनाड़िकाभिः पृथक् समुद्यन्ति निरक्षदेशे । चक्रार्द्धमाद्यं च तथा द्वितीयं सर्वत्र पूर्वाभिः २०मितामिरेव । मेषादेर्मिथुनान्तो नाड़ीभिस्तिथिमिताभिरुदगते । लङ्कति कुजे तदधःस्थे प्रथमं ताभिस्तरोनामि । कन्यान्ताद्धनुषोऽन्तस्तिथिमितनाड़ीभिरुदयते । लङ्कति कुजे चोर्द्ध्वस्थे पश्चात् ताभिस्त्वराढ्याभिः । तद्विहितविमर्द्धिः कन्यान्तो वा झषान्तो वा । चरखण्डैस्माढ्यास्तेन निरक्षोदयाः स्वदेशे स्युः । क्षितिजेऽजादिं कृत्वा गोलं भ्रमयन् प्रदर्शयेत् सर्वम् । उक्तमनुक्तं चान्यच्छिष्याणां बोधजननार्थम् । येऽभ्युदेति समयेन येन तत्प्रमोऽक्तमुपयाति तेन च । राशिकुञ्जमपमण्डलं कुजादर्द्धमेव सततं यतः स्थितम् ।

यत्र सम्यगवधा २४जिनोनकास्तत्र नोदयचराद्यसम्भवः । साम्यसंस्थिततयान्यथोदितं येन नैव विषयो स्वगोचरः । यत्र सम्यगपमण्डलं कुजे तद्वदत्र हाद्यमिह सम्भवत्यते । प्राचि पश्चिमकुजेऽस्तलग्नकं मध्यलग्नमिति दक्षिणोत्तरे" ।

**दिनमुख** न० ६त० । अहर्मुखे प्रभाते । [त्रिका० ।

**दिनमूर्द्धन्** पु० दिनस्य मूर्द्धेवाद्यस्थानत्वात् । उदयाचले

**दिनयौवन** न० दिनस्य यौवनमिव । मध्याह्ने शब्दार्थचि०

**दिनरत्न** न० दिनस्य रत्नमिव प्रकाशकत्वात् । १सूर्ये हेमच० २अर्कवृक्षे च ।

**दिनराशि** पु०६त० । ज्योतिषोक्ते १अहर्गणे "यथास्वभगणा भ्यस्तो दिनराशिः कुवासरैः । विभाजितो मध्यगत्या भगणादिर्ग्रहो भवेत्" सू०सि० । २दिनसंज्ञके वृषादौ राशौ च राशिशब्दे दृश्यम् ।

**दिनव्यास** पु०दिनस्य अहोरात्रात्मककालस्यापकवृत्तस्य व्यासः । सू०सि० उक्ते अहोरात्रवृत्तव्यासे "क्रान्तौ क्रमोत्क्रमज्ये द्वे कृत्वा तत्रोत्क्रमज्यया । हीनात्रिज्या दिनव्यासदलं तद्दक्षिणोत्तरम्" सू० "दिनव्यासदलमहोरात्रवृत्तस्य व्यासार्द्धम्" रङ्ग० ।

**दिनांश** पु०६त० । त्रिधा विभक्तस्य दिनस्य १प्रातर्मध्याह्नसायाह्नेषु भागेषु राजनि० । पञ्चधाविभक्तस्य दिनस्य २प्रातःसङ्गवादौ च "प्रातःकालो मुहूर्त्तांस्त्रीन् सङ्गवस्तावदेव तु । मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्णस्ततःपरम् । सायाह्नस्त्रिमुहूर्त्तः स्यात् श्राद्धं तत्र न कारयेत्" तिथित० ।

**दिनागम** पु० ६त० । प्रभाते "त्वयस्यानुगमक्षुः स कदाचिद्दिनागमे" हरिवं० ८१अ० ।

**दिनादि** पु० ६त० । प्रभातकाले राजनि० ।

**दिनान्त** पु० ६त० । सायाह्ने "कृत्वा दिनान्ते निलयाय गन्तुम्" रघुः । दिनावसानादयोऽप्यत्र । "दिनावसानोत्सुकबालवत्सा" रघुः । [त्रिका० ।

**दिनान्तक** पु० दिनमन्तयति अन्त+णिच्--ण्वुल् । अन्धकारे

**दिनारम्भ** ६त० । प्रभाते

**दिनार्द्ध** पु०दिनस्य सूर्यकिरणप्रकाशात्मककालस्यार्द्धम् । दिवाभागस्यार्द्धे "एवं विषुवति छाया स्वदेशे या दिनार्द्धजा" सू०सि० ।

**दिनिका** स्त्री दिनं तत्सततं कर्महेतुतया अस्त्यस्य मतौ ठन् । दिने कर्मकरणभृतौ(एकदिनेरमजुरि) रत्नमाला ।

**दिनेश** पु०६त० । १सूर्ये हेमच० । २अर्कवृक्षे दिनप्रवेशसमव्योक्ते दिनप्रवेशसमये शादिषु मध्येऽधिकबलयुते तस्य-

दर्शिनि ३प्रस्ते ४सूर्यादौ वारेऽभे च दिनेश्वरादयोऽप्यत्र ।

**दिनेशात्मज** पु० ६त० । १शनौ २यमे ३कर्णे ४सुग्रीवे च ५तपत्यां ६यमुनायां च स्त्री ।

**दिन्भ** संघाते चु० आत्म० अक० सेट् । दिम्भयते अदिदिम्भत

**दिप्सु** त्रि० दम्भ–सन् उ–छान्दसः न भष् । दम्भेच्छौ । "न यं दिप्सन्ति दिप्सवः" ऋ०१।२५।१४। "लोके तु धिप्सन्ति धिप्सुः" इति भेदः । [दिम्भत्-त ।

**दिभ** नोदने चु० उभ०सक० सेट् इदित् । दिम्भयति-ते अदि-

**दिम्भ** संघाते चुरा० उभ० सक०सेट् । दिम्भयति ते अदिदि-म्भत्-त । [दा१दा२७।

**दिय** त्रि० देव+पृषो० । देवे "भुवस्तुर्दियानां पतिः" ऋ०

**दिरिपक** पु० कन्दुके त्रिका० ।

**दिलीप** पु० सूर्यवंश्ये १नृपभेदे । सूर्यवंशे दिलीपौ च द्वौ जातौ एकः अंशुमतः पुत्रः खट्वाङ्गापरनामा । अपरोऽडु-विडस्य पुत्रः रामस्य प्रपितामहः यथोक्तं हरिवंशे १५अ० "सुतः पञ्चजनस्यासीदंशुमान्नाम वीर्यवान् । दिलीपस्तनयस्तस्य खट्वाङ्ग इति विश्रुतः । येन स्वर्गादि-हागत्य मुहूर्तं प्राप्य जीवितम् । त्रयोऽनुसन्धिता लोका बुद्ध्या सत्येन चानघ ! । दिलीपस्य तु दायादो महा-राजो भगीरथः" । "अनमित्रसुतो राजा विद्वान् दुलि-दुहोऽभवत् । दिलीपस्तनयस्तस्य रामस्य प्रपितामहः । दीर्घबाहुर्दिलीपस्य रघुर्नाम्नाऽभवत् सुतः । अयोध्यायां महाराजो रघुराशीन्महाबलः । अजस्तु रघुतोजज्ञे अजाद्दशरथोऽभवत् । रामो दशरथाज्जज्ञे धर्मात्मा सुमहायशाः" हरिवं० १५अ०रामस्य प्रपितामहः तस्य वृद्धप्रपितामहः इत्यर्थः । तत्र रघुपितरि "दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव" रघुः । [त्रिका० ।

**दिलीपराज** पु० दिलीप एव राट् राजा । दिलीपन्टपे

**दिलीर** न०दल–वा०ईर पृषो०। शिलीन्ध्रे हारा० [न्वीत् ।

**दिव** प्रीतौ भ्वा० पर०सक० सेट् इदित् । दिन्वति अदि-

**दिव** जिगीषायां क्रीडायां च अक०पक्षे व्यवहारे इच्छायां स्तुतौ च सक०दिवा०पर०सक०सेट् । अस्य करणस्य वा कर्म-संज्ञा । अक्षैरक्षान् वा दीव्यति अदेवीत् दिदेव । देवित्वा द्यूत्वा देवनं दिदिवान् दुद्यूवान् "अदीव्यद्रौद्रमक्षयम्" भट्टिः । "उवाच दीव्याव पुनर्बहुवित्तं मयाऽर्जितम्" भा०स०७८अ० "दिव्यामि शकुने ! त्वया" भा०स०७४अ० "ततस्तु याते वार्ष्णेये पुण्यश्लोकस्य दीव्यतः" भा०व०६१अ०। "तदाऽदेवीत् पाण्डवोऽजातशत्रुः" भा०स०६५अ० आर्षे तु कश्चित् तङ् । "प्रवृत्त्यायैव दीव्येत विना दुर्द्यूतदे-विनम्" भा० वि० १८अ० "अज्ञातुल्या पुनर्द्यूतमेहि दीव्यस्व भारत !" भा०स०७४अ० । "के तत्रान्ये कितवा दीव्यमाना विना राज्ञो धृतराष्ट्रस्य पुत्रैः" ५६० श्लो० "दिवस्तदर्थस्य" पा० व्यवहारक्रीडार्थत्वेऽस्य कर्मणि षष्ठी शतस्य दीव्यति । तदर्थस्य किं ब्राह्मणं दीव्यति स्तौती त्यर्थः सि० कौ० । द्यूतं जिगीषायामन्यत्र आद्युनः जिगीषाम्भूत्व इत्यर्थः । दिदेविषति दुद्यूषति देवयति ते अदिदिवत् त । "तेनादुद्यूषयद्रामं क्रमेण मृगलोच-ना" भट्टिः । देदिवीति देद्योति उपसर्गपूर्वस्य तत्तदुपसर्गद्योत्यार्थयुक्ते तदर्थे ।

**दिव** कूजने चु० आत्म० सक० सेट् । देवयते अदिदेवत ।

**दिव** अर्द्दे चु० उभ० सक०सेट् । देवयति ते अदीदिवत् त ।

**दिव्** स्त्री दीव्यत्यत्र दिव–वा० आधारे डिवि । १स्वर्गे २आकाशे च अमरः । द्यौः दिवौ दिवः द्युभ्याम् द्युषु । ३दिने "सौरेव द्युनिमोषामम" ऋ०सं० "मनीषिनं द्यौरपि येन दुग्धा" रघुः "य इत्यमस्यास्त्रमहर्दिवं दिवः" "दिवीव चक्षुराततम्" ऋ०१।२२।५

**दिव** न० दीव्यत्यत्र घञर्थे आधारे क । १स्वर्गे । दिवौकसः त्रिदिवः । २आकाशे मेदि० ३दिने ४वने च हेमच० । तत्र स्वर्गे "लोकपालैर्महाभागैर्दिवं देववरैरिव" भा०व० १६१अ० दिने "शुशुभेऽभ्यधिकं राजन् ! दिवं ज्योति-र्गणैरिव" हरिवं० ६३ अ० ।

**दिवङ्गम** त्रि०दिवमाकाशं स्वर्गं वा गच्छति दिव–वा० खच् मुम् । १आकाशगामिनि । "दिवं प्रतिष्ठमानानामस्तु पन्था दिवङ्गमः" भा०व० ४८अ०। २स्वर्गगामिनि च "दिवङ्गमं करोधाय मार्गं भीमस्य कारणात्" भा०उ० १४६अ० ।

**दिवन्** न० दिव–वा० अप्रतिपूर्वादपि कनिन् उज्ज्वल०। स्वर्गे त्रिदिवौकसः । अस्य भत्वे उपधाल्लोपस्य दीर्घ-विधौ स्थानिवत्त्वाभावात् दीर्घः दीव्ना दीव्ने इत्यादि

**दिवस** पु० दीव्यत्यत्र दिव–असच् किच्च । "नाडीषष्टितम-स्तत्र यावन्तो दिवसः स्मृतः । त्रिंशभागोऽर्कराशेस्तु दिवसः सौर उच्यते । चान्द्रस्तु तिथ्यवच्छिन्नो भौमो भूपरिधेर्मतः" इत्युक्तेषु सावनादिषु दिनेषु । "दिवसाः परिणामरमणीयाः" शकु०। "अयोजयत् स धर्मात्मा दिवसे दिवसेऽत्र च" । भा०उ० १८२अ० ।

**दिवसकर** पु० दिवसे करोऽस्य दिवसं करोति कृ–अच्

वा। १सूर्य्ये हेमच०२अर्कवृक्षे च। "दिवसकरवृन्दोऽस्त ध्वान्तमन्तर्दधेषु" माघः। कृ—क्विप् दिवसकृदप्यत्र पु०।

**दिवस्पति** पु० दिवः पतिः अलुक्स०रोःसत्वम्। १इन्द्रे अमरः। "इन्द्राणीमानयिष्यामो यद्येच्छसि दिवस्पते!" भा०उ०११अ०।

**दिवस्पुत्र** पु० दिवः आकाशस्य पुत्रवत् प्रियः दिवः पुरु त्रायते त्रै—क पृषो०वा। १द्युलोकप्रिये २द्युलोकपालके वा सूर्य्ये। "दिवस्पुत्राय सूर्याय शंसत" यजु० ४।३५ "दिवस्पुत्राय द्युलोकस्य पुत्रवत् प्रियाय द्युलोकाद्धि सूर्यो जायते दिवः पुरु त्रायते स इति दिवस्पुत्राय दिवःपालकायेति" वा वेददी०।

**दिवस्पृथिवी** स्त्री द्वि०व०द्यौश्च पृथिवी च "दिवसश्च पृथिव्याम्" पा० दिव इत्येव चात् द्यावा च आदेशे अकारोच्चारणं सकारस्य रुत्वं (क्वापि) मा भूदित्येतदर्थम्" सि०कौ०। रोदस्योः द्यावाभूम्योः हेमच० "तं देवा बुध्ने रजसः सुदंससं दिवस्पृथिव्योररतिम्" ऋ० २।२।१

**दिवस्पृश्** पु० स्पृशति स्पृश—क्विन् ६त०। पादेन स्वर्गस्पर्शिनि १परमेश्वरे "दिवस्पृक् सर्वदृग्व्यासः" विष्णुस०। "दिवःस्पर्शनाद्दिवस्पृक्" भा० "पादोऽस्य सर्वाभूतानि त्रिपादस्यामृतं दिवि" छा०उ० तस्य पादस्य दिविस्थत्वात् त्रिविक्रमावतारे वा तथात्वात् तत्त्वम्। २आकाशस्पर्शिनि शब्दादौ च।

**दिवा** अव्य० दिव—का। दिवसे अमरः "दिवा मातर्युष्मच्चरणयुगलध्याननिरतः" कर्पूरस्तवः "पश्चिमान्तु समासीनो मलं हन्ति दिवाकृतम्" मनुः।

**दिवाकर** पु०दिवा करोति कृ—ट। १सूर्य्ये २अर्कवृक्षे च "दिवाकरकरैः पूतं दिवास्नानं प्रशस्यते" ति०त० "दिवाकराद्रक्षति यो गुहासु" "दिवाकराम्रुष्टविभूषणास्पदाम्" कुमा०।

**दिवाकरसुत** पु० ६त०। १शनौ २यमे ३कर्णे ४सुग्रीवे च ५यमुनायां तपत्यां च स्त्री। अरुणात्मजशब्दे दृश्यम्। "गङ्गादिवाकरसुताजलचारुहाराम्" वृ०सं०४२ अ०

**दिवाकीर्त्ति** पु० दिवैव कीर्त्तिः कृत्यं यस्य रात्रौ क्षुरकर्मनिषेधात्। १नापिते अमरः। २चण्डाले हेमच०। तस्य दिवाचरत्वात्तथात्वं दिवाचरशब्दे दृश्यम्। "दिवाकीर्त्तिमुदक्याञ्च पतितं सूतिकां तथा। शवं तत्स्पृष्टिनं स्पृष्ट्वा स्नानेनैव विशुध्यति" मनुना तस्यास्पृश्यत्वमुक्तम्। दिवाऽकीर्त्तिर्यस्य। उलूके मेचके हेमच०। दिवा तस्य नामोच्चारणे हि तद्दिने भक्ष्यद्रव्ये तिक्तता जायते इति लोकप्रसिद्धत्वात् तन्नाम्नो न दिवाकीर्त्तनीयता।

**दिवाकीर्त्त्य** न०दिवा दिवसे कीर्त्यं कीर्त्तनीयम्। वर्षसाध्ये गवामयने सत्रे द्वयोर्मासषट्कयोर्मध्ये विषुवन्नामके एकस्मिन्नहनि गेये सामभेदे तच्च ता०ब्रा०४।६।११ दर्शितं यथा "विषुवानेष भवति" पूर्वोत्तरयोः षण्मासोर्मध्येऽनुष्ठेयं गवायनस्य प्रधानभूतं विषुवदाख्यमहः प्रदर्शयति एष विषुवान् संवत्सरस्य मध्यतो भवतीत्युपक्रमे अस्मिन्नहनि सामानि विधत्ते" भा०। "दिवाकीर्त्त्यं साम भवति" ता०ब्रा० ४।६।१२। "दिवाकीर्त्त्यानि शुक्रियाणि सामानि तस्मिन् प्रयुज्यन्ते इति दिवाकीर्त्त्यसामा अयं विषुवान् दिवाकीर्त्त्यसामा कार्यः" भा०। तस्य प्रशंसापूर्वकं तत्र गेयर्चः प्रतीकञ्च दर्शितं यथा

"स्वर्भानुर्वा आसुर आदित्यन्तमसाविध्यत्तस्य देवा दिवाकीर्त्त्यैस्तमोऽपाघ्नन् यद्दिवाकीर्त्त्यानि भवन्ति तम एवास्मादपघ्नन्ति रश्मयो वा एत आदित्यस्य यद्दिवाकीर्त्त्यानि रश्मिभिरेव तदादित्यं साक्षादारभन्ते" ता०ब्रा० ४।६।१३ "आसुरेण स्वर्भानुना तमसाविद्धस्यादित्यस्य बाधकं तमोऽन्धकारं देवा दिवाकीर्त्त्यैः सामभिरपाघ्नन् अनाशयन् अतो यद्दिवाकीर्त्त्यान्यस्मिन् भवन्ति तेन तम एवास्मादादित्यादपघ्नन्ति। कथमेषां साम्नां तमोहननसामर्थ्यमिति चेत् उच्यते दिवाकीर्त्त्यसामानीति यत् एते आदित्यस्य रश्मयो वै रश्मिरूपा एव अत एषां युक्तमेव तमसो नाशकत्वं तत्तथासति रश्मिभिरेवादित्यं साक्षात् प्रत्यक्षमारभन्ते ये सत्त्रिणो विषुवति दिवाकीर्त्त्यानि प्रयुञ्जत इत्यर्थः। दिवाकीर्त्त्यैः सामभिस्तमसोऽपहननं सामान्येनोक्तं तदेव विवृणोति" भा० "भ्राजाभ्राजे पवमानमुखे भवतो मुखत एवास्य तमोऽपघ्नन्ति" ता०ब्रा० ४।६।१४। "पवमानमुखे माध्यन्दिनार्भवयोः पवमानयोर्मुखे प्रमुखे भ्राजाभ्राजे सामनी भवतः गायत्रस्य नित्यत्वात् ततः परस्तात् क्रमेण भवत इत्यर्थः। अस्य प्रत्नामनुद्युतमिति तृचे गातव्यं साम भ्राजं, तन्माध्यन्दिने पवमानमुखे, "परिस्वानो गिरिष्ठा इत्यस्मिन् गेयं साम आभ्राजं तदार्भवपवमानमुखे" भा०

**दिवाचर** त्रि० दिवा दिवसे चरति भक्षार्थम् चर—ट। पक्षिभेदे स्त्रियां ङीप्। "दिवाचरो न शर्वर्यां न च नक्तञ्चरो दिवा" वृ०सं० ८८अ० २चण्डाले तस्य रात्रौ ग्रामनगरे चारनिषेधेन दिवसे एव चारस्य मनुना वि-

ञ्चितत्वात् तथात्वं यथा "रात्रौ न विचरेयुस्ते ग्रामेषु नगरेषु च। दिवा चरेयुः कार्य्यार्थं चिह्निता राजशासनैः" २श्यामाखगादौ च दिवासञ्चरशब्दे दृश्यम्।

**दिवाचारिन्** त्रि० दिवा चरति चर–णिनि। दिवसञ्चारिणि भूते। "स्वाहेत्यथ बलिहरणम्" इत्युपक्रमे "सर्वेभ्यो भूतेभ्यो दिवाचारिभ्य इति दिवा" आश्व०गृ० १।२।८सू०।

**दिवाटन** पुंस्त्री० दिवाऽटति अट–ल्यु। १काके शब्दार्थकल्प०। स्त्रियां जातित्वात् ङीष्। २दिवागमनयुक्ते त्रि०।

**दिवातन** त्रि० दिवा भवः ट्यु तुट् च। दिवाभवे। "शशिन इव दिवातनस्य लेखा" कुमा०। स्त्रियां ङीप्। "पङ्कजानां दिवातनीम्" भट्टिः।

**दिवातर** न० अतिशयेन दिवा प्रकाशकम् तरप्। अत्यन्तप्रकाशके दिवसे। "यः सुहर्गतरो दिवातराय प्रायुषे दिवातरात्" ऋ०१।१२७।५

**दिवान्ध** पुंस्त्री० दिवा दिवसे अन्धः। १पेचके त्रिका०। २दिवसान्धप्राणिमात्रे च। "दिवान्धाः प्राणिनः केचित् रात्रावन्धास्तथाऽपरे" देवीमा०। ३वल्गुलाखगे स्त्री राजनि०

**दिवान्धकी** स्त्री दिवान्ध–स्वार्थे क गौरा० ङीष्। छुछुन्द्र्याम् पुराणम्।

**दिवाभीत** पुंस्त्री दिवा दिवसे भीतः। १पेचके "लीनं दिवाभीतमिवान्धकारम्" कुमा०। स्त्रियां जातित्वात् ङीष्। २कुमुदाकरे ३चौरे च पु० मेदि०।

**दिवाभीति** पु० दिवा भीतिरस्य। १पेचके शब्दर०। २दिवसभीतियुक्ते त्रि०। [वृक्षे च।

**दिवामणि** पु० दिवा मणिरिव। १सूर्य्ये शब्दर० २अर्क-

**दिवामध्य** न० ६त०। मध्याह्ने हेमच०।

**दिवावसु** पु० दिवा वसुः किरणोऽस्य। १सूर्य्ये २अर्कवृक्षे च दीव्यति दिव–क्विप् द्यौः आवसुः रुचिरस्य दिवमावसति आ+वस–उन् वा। १दीप्तरुचिष्के २द्युलोकवासिनि वा इन्द्रे। "दिवं यय दिवावसो!" ऋ०८।३४।१।

**दिवाशय** पु० दिवा दिवसे शेते–शी–अच् ७त०। १दिवास्वापयुक्ते २दिवसेऽप्रकाशयुक्ते च "न मे दिवाशयाः पुत्रा न रात्रौ दधिभोजिनः। गुर्विणीं नानुगच्छन्ति न स्पृशन्ति रजस्वलाम्" जैमि० भारतम्। "आरुरोह कुमुदाकरोपमां रात्रिजागरपरो दिवाशयः" रघुः।

**दिवासञ्चर** त्रि० दिवा दिवसे सञ्चरति सम्–चर–ट। दिवसचारिणि प्राणिभेदे तथाभूताः सु०सं०८८अ०कृत-ञ्चिदुक्ता यथा "श्वव्याघ्रार्गेन्द्रनागशल्लकनरिखिलीकपिचक्राह्वयाशगोधातौरक्षसखरीटकशुकध्वाङ्क्षाः कपोतास्तयः। भारद्वाजकुलालकुक्कुटखरा हारीतदात्यौ कपिः फेण्टः कुक्कुटपूर्णकूटचटकाश्चोक्ता दिवासञ्चराः"।

**दिवास्वप्न** पु० दिवा दिवसे स्वप्नः। दिवानिद्रायाम्। तद्दोषादिकं दिनचर्य्याशब्दे भावप्र०उक्तमुक्तम्। सुश्रुते च "सर्वर्त्तुषु दिवास्वापः प्रतिषिद्धोऽन्यत्र ग्रीष्मात्। प्रतिषिद्धेष्वपि तु बालवृद्धस्त्रीकर्षितक्षतक्षीणमद्यनित्ययानवाहनाध्वकर्मपरिश्रान्तानामभुक्तवतां मेदःस्वेदकफरसरक्तक्षीणानामजीर्णिनाञ्च मुहूर्त्तं दिवास्वप्नमप्रतिषिद्धं रात्रावपि जागरितवतां जागरितकालादर्द्धमिष्यते दिवास्वप्नः। विकृतिर्हि दिवास्वप्नो नाम तत्र स्वपतामधर्मः सर्वदोषप्रकोपश्च तत्प्रकोपाच्च कासश्वासप्रतिश्यायशिरोगौरवाङ्गमर्द्दारोचकज्वराग्निदौर्बल्यानि भवन्ति"। "मृगयाक्षो दिवास्वप्नः परीवादः स्त्रियोमदः। तौर्य्यत्रिकं वृथाट्या च कामजो दशको गणः" व्यसनोक्तौ मनुः "रक्षाभियुक्तमस्तं वा दिवास्वप्नञ्च सेवते। अपकाशगते काले स्वयं दोषान् प्रकोपयेत्" भा०आनु०१७अ०

**दिवास्वाप** पु० ७त०। १दिवसनिद्रायाम्। दिवास्वप्नशब्दे दृश्यम्। दिवास्वापोऽस्य। २उलूकादौ च तेषां रात्रिचारित्वेन दिवास्वापवत्त्वात् तथात्वम् यथोक्तं सु०सं० ८८अ० "लोमाशिकापिङ्गलाच्छिपिकाख्यौ वल्गुलुलूकौ शशकश्च रात्रौ।" २वल्गुलीखगे स्त्री राजनि०।

**दिवि** पु० दीव्यति दिव–बा० कि। चाषखगे शब्दमा०

**दिविचित्** त्रि० दिवि चयति वसति चि–क्विप् अलुक्स०। स्वर्गवासिनि। "स्थ्यमासाविचरन्ता दिविचिता" ऋ० १०।९२।१२। "दिविचिता दिविवसन्तौ" भा०। छान्दोग्ये वेदे आच्। "नम आदित्येभ्यश्च विश्वेभ्यश्च देवेभ्यो दिविचिद्भ्यो लोकचिद्भ्यः" छा०उ०

**दिविज** पु० दिवि जायते जन–ड अलुक्स०। द्युलोकजाते "तामेवातिदूरे मधुकरीमिव सुमनस उपजिघ्रन्तीं दिविजमनुजमनोनयनाह्लाददुघैर्गतिविहारविनयावलोकसुस्वराक्षरावयवैः" भाग०५।२।७ "व्युषा आशो दिविजा ऋतेनाविष्कृण्वाना" ऋ०७,७५।१ "जे विभाषा" पा० पक्षे लुक् द्युजोऽप्यत्र

**दिवित्मत्** दीप्तिमत्+पृषो०। दीप्तियुक्ते "महारावे दिवित्मते" ऋ०४।२१।११ "दिवित्मते दीप्तिमते" भा०।

**दिविता** स्त्री दीप–बा० इतच् पृषो०। दीप्तौ "श्यावाश्वो

वाचा दिविता दिवित्मता" ऋ०१।०७६।६ "दिवितायां दीप्तिमत्तायाम्" भा०।

**दिवियज्** पु० दिवि द्युलोकेस्थितानीन्द्रादीन् यजते यज–क्विप् अलुक्स०। द्युलोकस्थितदेवयाजिनि "होतारो न दिवियजो मन्द्रतमाः" ऋ०८।६७.२६ "देवानिन्द्रादीन्स्तुवन्त्येवं दिवियजो दिवि द्युलोकेस्थितानिन्द्रादीन् देवान् यजन्तः" भा०।

**दिविरथ** पु० पौरवे भूमन्युसुते नृपभेदे "ततो दिविरथो नाम भूमन्योरभवत् सुतः" भा०आ०९४अ०२अङ्गराजपुत्र दधिवाहनपुत्रे नृपभेदे च "अङ्गपुत्रो महानासीद् राजेन्द्रो दधिवाहनः। दधिवाहनपुत्रस्तु राजा दिविरथोऽभवत्। पुत्रो दिविरथस्यासीच्छक्रतुल्यपराक्रमः" हरिवं० ३१अ०।

**दिविष(स)द्** पु० दिवि सीदति सद–क्विप् अलुक्स० वा षत्वम्। देवे अमरः। "पृथिवीषदं त्वान्तरिक्षसदं दिविषदं देवसदं नाकसदम्" यजु० ९।२ "सान्द्रानन्दपुरन्दरादिदिविषद्वृन्दैरमन्दादरात्" "इत्यद्दानवदूयमानदिविषद्दुर्वारदुःखापदाम्" गीतगो०।

**दिविष्टि** त्रि० दिवमिच्छति इष–कर्त्तरि क्तिच्। द्युलोकेच्छायुक्ते "इमा उ वां दिविष्टयः" ऋ०७।७४।१ "दिविष्टयो दिवमिच्छन्त्यः" भा०

**दिविष्ठ** त्रि०दिवि तिष्ठति स्था–क अलुक्स० षत्वम्। १कल्पवृक्षे (?)... २स्वर्गस्थिते च "दिविष्ठस्य भुविष्ठस्य सर्वभूतो मम प्रियः" भा०आ०६अ०।

**दिविस्पृश्** त्रि०दिवि स्पृशति क्विन् "न रपरेति" पा०षत्वं दाभात् न षत्वम्। द्युलोकस्पर्शिनि "आ हि स्थाथो दिविस्पृशम्" ऋ०४।४६।४ क्विन्नन्तत्वात् भलि पदान्ते च कुः

**दिवी** स्त्री दिव वा० ई। उपजिह्विकाकीटे हारा०।

**दिवेदिवे** अव्य० दिव–वा० के द्वित्वञ्च। दिवसे निरु०।

**दिवौकस्** पु० द्यौः स्वर्ग आकाशो वा ओकोऽस्य। १देवे २चातकखगे च मेदि०।

**दिवोजा** त्रि० दिवो जायते जन–ड। वा० अलुक्स०। द्युलोकाज्जाते "एषा स्या नो दुहिता दिवोजा" ऋ०६।६५।१

**दिवोदास** पु०दिवः स्वर्गात् दासो दानं यस्मै। वध्र्यश्वस्य पुत्रभेदे "वध्र्यश्वान्मिथुनं यज्ञे मेनकायामिति श्रुतिः। दिवोदासश्च राजर्षिरहल्या च यशस्विनी" हरिवं० ३२अ०। मनुवंश्ये रिपुञ्जयाख्ये २नृपभेदे च तत्कथा काशीख०४७अ०। "तस्मिन्नवसरे ब्रह्मा दृष्टो राजर्षिसत्तमः। अविमुक्ते महाक्षेत्रे तपस्विविजितेन्द्रियः। मनोरन्वयजो वीरः क्षात्रधर्मदवोदितः। रिपुञ्जयेति विख्यातो राजा परपुरञ्जयः। अथ ब्रह्मा तमासाद्य बहुगौरवपूर्वकम्। उवाच वचनं राजन्! रिपुञ्जय! महामते!। इमां पालय भूपाल! ससमुद्राद्रिकाननाम्। नागकन्यां नागराजः पत्न्यर्थन्ते प्रदास्यति। अनङ्गमोहिनीनाम्नी यासुकिः शीलभूषणाम्। दिवोऽपि देवादास्यन्ति रत्नानि कुसुमानि च। प्रजापालनसन्तुष्टा महाराज! प्रतिक्षणम्। दिवोदास इति ख्यातमतो नाम तमाप्स्यसि। मत्प्रसादाच्च नृपते! दिव्यं सामर्थ्यमस्तु ते। परमेष्ठिवचः श्रुत्वा ततोऽसौ राजसत्तमः। बेधसं बहुशः स्तुत्वा वाक्यञ्चेदमुवाच ह। राजोवाच। पितामह! महामान्य! त्रिलोकीकरणक्षम!। कथमन्ये च राजानो मे कथं कथ्यते त्वया। ब्रह्मोवाच त्वयि राज्यं प्रकुर्वाणे देवोऽपि विधास्यति। पापनिष्ठे च वै राज्ञि न देवो वर्षते पुनः। राजोवाच यद्यहं पृथिवीनाथः सर्वलोकपितामह!। तदा दिविसदो देवा दिवितिष्ठन्तु मा भुवि। देवेषु दिवि तिष्ठत्सु मयि तिष्ठति भूतले। असपत्नेन राज्येन प्रजा सौख्यमवाप्स्यति। तथेति विश्वसृक्प्रोक्तो दिवोदासो नरेश्वरः। पटहं घोषयामास दिवं देवा व्रजन्त्विति। मयि प्रशासति क्षोणीं सुराः स्वस्था भवन्त्विति। नागच्छन्त्विह वै नागा नराः सुस्था भवन्त्विति" इत्युपक्रमे

दिवोदासस्य काशीतो निर्वासनान्तकथा तत्र उत्तरेषु अध्यायेषु दृश्या। ३धन्वन्तरेरवतारे काशीराजभेदे आयुर्वेदशब्दे तत्कथा ७८९पृ० सुश्रुतप्रादुर्भावे भाव०प्र० उक्ता दृश्या।

**दिवोद्भव** त्रि० दिवे स्वर्गे उद्भवति उद्+भू अच्। आकाशस्वर्गयोर्जाते। २एलायां स्त्री शब्दार्थकल्प०।

**दिवोल्का** स्त्री दिवा जाता उल्का। दिवसजातायां नभश्च्युतायामुल्कायाम्। "सभूमा न्यपतत् सार्चिर्दिवोल्का नभसश्च्युता" भा०उ०००अ०।

**दिवौकस्** पु० दिवं स्वर्ग ओकोऽस्य दिवा ओकोऽस्येति दिवन्शब्दे उज्ज्वलदत्तः। देवे "पथि व्यजृम्भन्त दिवौकसामपि"। "वचोनिशम्याधिपतेर्दिवौकसाम्" रघुः। "कौस्तुभन्निव दिवौकसां प्रियम्" माघः "तारकेश दिवौकसः" कुमा०;

**दिवौकस** पु० (ओकस) शब्दोऽदन्तोऽप्यस्तीत्युज्ज्वलदत्तोक्तेः

दिव्यमोकसोऽस्य । देवे "वसुधामिह संप्राप्तैः सर्वैरेव दिवौकसैः" हरिवं० २१२अ० ।

**दिव्य** त्रि० दिवि भवः यत् । १स्वर्गभवे २आकाशभवे ३उत्पातभेदे पु० "संसूचयन्ति दिव्यान्तरीक्षभौमास्तदुत्पाताः" वृ०सं०उक्तम् उत्पातशब्दे ११२२पृ०दृश्यम् । ४यवे ५गुग्गुलौ च पु०राजनि०। कालीविलासतन्त्रोक्ते ६भावभेदे "शृणु भावत्रयं देवि ! दिव्यवीरपशुक्रमात् । दिव्यस्तु देववत्प्रायो वीरश्चोद्धतमानसः । सत्यत्रेताद्वापरान्तं दिव्यभावविनिर्णयः । कलौ तावत्परपर्य्यन्तं वीरभाव इतीरितम् । मद्यं मत्स्यं तथा मांसं मुद्रां मैथुनमेव च । श्मशानसाधनं भद्रे ! चितासाधनमेव च । एतत्ते कथितं सर्वं दिव्यवीरमतं प्रिये । दिव्यवीरमतं नास्ति कलिकाले सुलोचने !"। ७नायकभेदे रसमञ्जरी इन्द्रादयो दिव्यनायकाः । ८लवङ्गे न०मेदि० ९हरिचन्दने न०राजनि० । १०गङ्गाजलादिस्पर्शपूर्वकशपथभेदे "आप्तस्यो वचनं श्रुत्वा ग्रामेशोद्यानिनां वरः । गङ्गातोयं करे कृत्वा स्वीकारञ्च चकार सः । गङ्गातोयस्पर्शस्य मिथ्या यदि भवेज्जनः । स याति कालसूत्रञ्च यावदै ब्रह्मणोवयः" । ब्रह्म०वै०प्र०ख०। "तथा गङ्गोदकं ताम्रं गोमयं गोरजस्तथा । सत्यं वा यदि वाऽसत्यं यदि दिव्यं करोति यः । कर्त्ता च रौरवं याति तथा कारयिता प्रिये ! । उभयोः पुनरावृत्तिर्नरयोनिषु नास्ति वै । तस्मात्ति पुनरावृत्तिर्व्याघ्रभूकरयोनिषु । दिव्यं कर्त्तुः कारयितुर्जपपूजा वृथा तथा । गायत्रीरहितश्चापि नरकस्योत्तरोत्तरम्" इति गायत्रीतन्त्रे ५पट०। व्यवहारे प्रतिज्ञातार्थसाधनाय वादिप्रतिवादिनोरन्यतराभ्यां कर्त्तव्ये ११लौकिकसाक्ष्यादिप्रमाणासद्भावे तुलादिपरीक्षाभेदे । तद्भेदादिः तत्र तत्सामान्यविधिश्च वीरमि० दिव्यमातृकायां दर्शितो यथा "तत्र दिव्यन्नाम मानुषप्रमाणाभावे सन्दिग्धार्थनिर्णायकं यत् तदुच्यते । यत्तु स्मृतितत्त्वे एवकारस्थले कपिशब्दं दत्त्वा मानुषप्रमाणसत्त्वेऽपि तत्र दिव्याङ्गीकारस्तत्रापि तद्भवतीति प्रयोजनमुक्तं तदयुक्तम् "एषामन्यतमाभावे दिव्यान्यतममिति" वदता याज्ञवल्क्येन "प्रमाणहीने वादे तु निर्दोषा दैविकी क्रियेति" वदता बृहस्पतिना च "युक्तिष्वप्यसमर्थासु शपथैरेनमर्दयेदिति" नारदेनापि मानुषप्रमाणासत्त्वे एव दिव्यस्य विधानात् । तत्र बृहस्पतिः दिव्यभेदानाह "घटोऽग्निरुदकञ्चैव विषं कोषश्च पञ्चमः । षडन्तु तण्डुलाः प्रोक्ताः सप्तमन्तप्तमाषकम् । अष्टमं फालमित्युक्तं नवमन्धर्मजन्तथा । दिव्यान्येतानि सर्वाणि निर्दिष्टानि स्वयम्भुवेति" । नारदः "युक्तिष्वप्यसमर्थासु शपथैरेनमर्दयेत् । अर्थकालबलापेक्ष मग्न्यम्बुसुकृतादिभिः । घटोऽग्निरुदकं चैव विषं कोशस्तु पञ्चमः । उक्तान्येतानि दिव्यानि विशुद्ध्यर्थं महात्मभिः । सन्दिग्धेऽर्थेऽभियुक्तानां परीक्षार्थं महात्मनाम् । प्रोक्तानि नारदेनेह सत्यानृतविशुद्धये" इति । अर्दयेत्शोधयेत् । अर्थापेक्षत्वं सिषाधयिषितार्थस्याल्पत्वमहत्त्वानुरूपमित्यर्थः । नन्वेषामपि शपथानां मानुषप्रमाणाभाव एव निर्णायकत्वेन दिव्यत्वात् कथं दिव्यानि नवेत्यभिधानम् । तथा च मनुः "तत्र दिव्यं नाम तुलाधारणं विषाशनमप्सु प्रवेशो लोहधारणमिष्टापूर्त्तप्रदानमन्यांश्च शपथान् कारयेदिति" । तांश्च शपथानाह बृहस्पतिः "सत्यवाहनशस्त्राणि गोबीजकनकानि च । देवब्राह्मणपादांश्च पुत्रदारशिरांसि च । एते च शपथाः प्रोक्ताः स्वल्पार्थे सुकराः सदेति" । नारदोऽपि "सत्यवाहनशस्त्राणि गोबीजकनकानि च । देवतापितृपादांश्च दत्तानि सुकृतानि च । स्पृशेच्छिरांसि पुत्राणां दाराणां सुहृदान्तथा । अभियोगेषु सर्वेषु कोशपानमथापि वा । इत्येते शपथाः प्रोक्ता मनुना स्वल्पकारणे" इति । सत्यम् । अत्र समनन्तरभाविनिर्णयनिमित्तस्य दिव्यत्वेन विवक्षितत्वात् । तादृशत्वञ्च घटादीनामेव न तु शपथानामन्येषां कालान्तरभाविनिर्णयनिमित्तत्वात् । नन्वेवं कोशस्य कथन्तेषु पठनमिति चेत् सत्यम् । तस्य तेषु पाठोमहाभियोगविषयकत्वसाम्यात् सावष्टम्भाभियोगविषयत्वसाम्याच्च । वस्तुतस्तु शपथानामपि नारदादिवचनात्सामान्यगोबलीवर्दन्यायेन दिव्यत्वाभ्युपगमेन नवशब्दस्योपलक्षणत्वात् । तथा च नारदः "युक्तिष्वप्यसमर्थासु शपथैरेनमर्दयेत् । अर्थकालबलापेक्षमग्न्यम्बुसुकृतादिभिः । घटोऽग्निरुदकञ्चैव विषं कोशश्च पञ्चमः । उक्तान्येतानि दिव्यानि विशुद्ध्यर्थं महात्मभिः"। दिव्यं नाम तुलारोहणम् । विषाशनमप्सु प्रवेशो लोहधारणमिष्टापूर्त्तप्रदानमन्यांश्च शपथान् कारयेत् । मनुः "असाक्षिकेषु त्वर्थेषु मिथो विवदमानयोः । अविदंस्तत्त्वतः सत्यं शपथेनापि लम्भयेत् । अग्निं वाहारयेदेनमप्सु चैनन्निमज्जयेत् । पुत्रदारस्य वाप्येनं शिरांसि स्पर्शयेत् पृथक् । यथादेवैः प्रयुक्तानि पुरुकार्थे महात्मभिः । परस्परविशुद्ध्यर्थं

तस्माद्दिव्यानि नामतः"। अशक्तिरैस्त्विति मानुषप्रमाणरहितैस्त्वित्यर्थः। उद्दिष्टानां दिव्यानां मध्ये तुलादीनि महाभियोगे प्रयोक्तव्यानि तथा च याज्ञवल्क्यः "तुलाग्न्यापो विषं कोशो दिव्यानीह विशुद्धये। महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि। रुच्या वान्यतरः कुर्य्यादितरो वर्त्तयेच्छिरः"। अत्राग्निशब्देन तप्तायःपिण्डादयो लक्ष्यन्ते। शीर्षकं लक्षणया जयपराजयनिमित्तो दण्डः तत्प्रयुक्तदण्डभागित्वं वा रुच्या इच्छया। इतरः अभियुक्ताभियोक्त्रोरन्यतरः। इतरः शिरोवर्त्तयेत् दण्डं स्वीकुर्य्यादित्यर्थः। ननु "कोशमल्पेऽपि दापयेत्" इति स्वल्पाभियोगेऽपि कोशस्य विधानात् कथं महाभियोगेष्वेतानीति चेन्न तस्य तुलादिषु पाठोऽवष्टम्भाभियोगेऽपि प्राप्त्यर्थः। न तु महाभियोगेष्वेवेति नियमार्थः। "अन्यथा कोशस्य शङ्काभियोग एव प्राप्तिः स्यात्। "अवष्टम्भाभियुक्तानां घटादीनि विनिर्द्दिशेत्। तण्डुलाश्चैव कोशश्च शङ्कास्वेतौ नियम्य चेति पितामहस्मरणात्। अवष्टम्भः शीर्षकस्थः। अवष्टम्भोऽत्र निश्चय इति स्मृतितत्त्वे। यदा शीर्षकस्थोऽभियोक्ता न स्यात्तदा एतानि दिव्यानि न स्युरिति तथा च नारदः "शिरोवर्त्ती यदा न स्यात्तदा दिव्यं न दीयते" इति। दिव्यदाने नियममाह पितामहः "अभियोक्ता शिरःस्थाने दिव्येषु परिकीर्त्त्यते। अभियुक्ताय दातव्यं दिव्यं श्रुतिनिदर्शनात्"। कात्यायनोऽपि "न कश्चिदभियोक्तारं दिव्येषु विनियोजयेदिति"। अभियुक्ताय दातव्यमित्यस्यापवादं रुच्या वान्यतर इत्यनेनाह याज्ञवल्क्यः। नारदोऽपि "अभियोक्ता शिरःस्थाने सर्व्वत्रैकः प्रकल्पितः। इच्छया त्वितरः कुर्य्यादितरो वर्त्तयेच्छिरः" इति। क्वचिद्विषयविशेषे शिरोविनापि दिव्यं देयमित्याह याज्ञवल्क्यः "विनापि शीर्षकात् कुर्य्यान्नृपद्रोहेऽथ पातके" इति। शीर्षकाद्विनापि पराजयप्रयुक्तदण्डभागिनोऽभियोक्तुरभावेऽपि। पातके ब्रह्महत्यादौ। कात्यायनोऽपि "पार्थिवैः शङ्कितानाञ्च निर्द्दिष्टानाञ्च दस्युभिः। आत्मशुद्धिपराणाञ्च दिव्यं देयं शिरो विनेति"। कालिकापुराणेऽपि "परदाराभिशापे च चौर्य्यागम्यागमेषु च। महापातकशस्ते च स्याद्दिव्यं महासाहसे। विप्रतिपत्तौ विवादेऽवर्णस्य स्थापने क्षते। तत्रैव स्थापयेद्दिव्यं शिरःपूर्वं महीपतिः। परदाराभिमर्षे च बहवो यत्र वादिनः। शिरोहीनश्चरेद्दिव्यमात्मनः शुद्धिकारणादिति"। विप्रतिपत्तौ परदारगमनाद्यभियोगरूपायां, विवादे ऋणादानादिविषये अवर्णोऽपवादः। परदाराभिमर्षे चेति चौर्य्यादीनामप्युपलक्षणम्। विष्णुः "राजद्रोहे साहसे च विना शीर्षप्रवर्त्तनादिति"। विषयविशेषेषु दिव्यविशेषानाह संग्रहकारः "घटादीनि विषान्तानि गुरुष्वर्थेषु दापयेत्"। पितामहोऽपि "अवष्टम्भाभियुक्तानां घटादीनि विनिर्द्दिशेत्। तण्डुलाश्चैव कोशश्च शङ्कास्वेतौ नियोजयेत् इति"। कात्यायनः "महाविश्वाससन्धाने विभागे रिक्थिनां सदा। क्रियासमूहकर्त्तृत्वे घटादीनि विनिर्द्दिशेत्"। क्रियासमूहकर्त्तृत्वे सम्भूयैकक्रियाकारित्वे। पितामहोऽपि "विश्रम्भे सर्वशङ्कासु सन्धिकार्य्ये तथैव च। एष कोशः प्रदातव्यो नित्यं चित्तविशुद्धये। शिरःस्थापि विहीनानि दिव्यादीनि विवर्ज्जयेत्। घटादीनि विषान्तानि कोश एकः शिरः स्मृतः" इति। तण्डुलानां विषयं स एवाह "चौर्य्ये तु तण्डुला देया नान्यत्रेति विनिश्चयः" इति। अन्यत्र स्त्रीसंग्रहादौ न तु दत्तापह्नवे "तदर्द्धस्य तण्डुला" इति वक्ष्यमाणकात्यायनवचनेन तण्डुलदिव्यस्य विधानात्। एतच्च चौर्य्यशङ्कायां वेदितव्यम्। "चौर्य्येऽभिशङ्कायुक्तानां तप्तमाषो विधीयते" इति महाचौर्य्यशङ्कायां तप्तमाषस्य तेनैव विधानात्। द्रव्यसङ्ख्यया दिव्यविशेषानाह विष्णुः "अथ शपथक्रिया राजद्रोहादिषु यथाकामनिक्षेपचौर्य्येष्वर्थप्रमाणादिति"। शपथो दिव्यम्। राजद्रोहादिषु यथाकामं राजेच्छानुरोधाद्दिव्यं निक्षेपादिषु धनतारतम्यादित्यर्थः। वस्त्वादिविषयविवादे तु तन्मूल्यद्रव्यपरिमाणं ग्राह्यम्। बृहस्पतिरपि "विषं सहस्रेऽपहृते पादोने च हुताशनः। त्रिभागोने च सलिलमर्द्धे देयो घटः सदा। चतुःशताभियोगे तु दातव्यस्तप्तमाषकः। त्रिशते तण्डुला देयाः कोशश्चैव तदर्द्धके। शतहृतेऽपह्नुते च दातव्यं धर्म्मशोधनम्। गोचरस्य प्रदातव्यं सद्यः कालावलेहनम्। एषा सङ्ख्या निकृष्टानां मध्यानां द्विगुणा स्मृता। चतुर्गुणोत्तमानाञ्च कल्पनीया परीक्षकैरिति"। धर्म्मशोधनम्। धर्म्मजदिव्येन शोधनम्। निकृष्टानां जातिगुणधर्म्मैः मध्यमत्वमुत्तमत्वञ्च तैरेव। यत्तु "नाहस्मादुद्धरेत् फालञ्च

विषं न तुलां तथेति” याज्ञवल्क्यवचनं तन्मध्यमोत्तमपुरुषविषयम् । यत्तु “सहस्रे तु घटं दद्यात् सहस्रार्द्धे तथायसम् । अर्द्धस्यार्द्धे तु सलिलं तस्यार्द्धे तु विषं स्मृतमिति” पितामहवचनं तद्दृयलाञ्छद्रव्यापहारे पातित्यं भवति तद्विषयम् । एतत्स्तेयसाहसविषयम् दत्तापह्नवे तु कात्यायनः “दत्तस्यापह्नवो यत्र प्रमाणं तत्र कल्पयेत् । स्तेयसाहसयोर्दिव्यं स्वल्पेऽप्यर्थे प्रदापयेत् । सर्वद्रव्यप्रमाणन्तु ज्ञात्वा हेम प्रकल्पयेत् । हेमप्रमाणयुक्तन्तु तदा दिव्यं प्रयोजयेत् । ज्ञात्वा सङ्ख्यां सुवर्णानां शतनाशे विषं स्मृतम् । अशीतेस्तु विनाशेऽथ दद्याच्चैव हुताशनम् । षष्ट्या नाशे जलं देयं चत्वारिंशति वै घटम् । विंशद्दशविनाशे तु कोषपानं विधीयते । पञ्चाधिकस्य वा नाशे तदर्द्धार्द्धस्य तण्डुलाः । ततोऽर्द्धार्द्धविनाशे हि स्पृशेत्पुत्रादिमस्तकान् । ततोऽर्द्धार्द्धविनाशे तु लौकिकस्य क्रिया स्मृता । एवं विचारयन् राजा धर्मार्थाभ्यां न हीयत” इति । अत्र सुवर्णशब्दः षोड़शमाषात्मकः । नाशोऽपह्नवः । विंशद्दशविनाशे विंशद्विनाशेन इति स्मृतिचन्द्रिका । पञ्चाधिकस्य पञ्चभ्योऽधिकस्य षट्प्रभृतेरिति यावत् । तदर्द्धार्द्धस्य सुवर्णप्रभृतेः । ततोऽर्द्धार्द्धस्य अष्टमाषेण सुवर्णार्द्धप्रभृतेः । ततोऽर्द्धार्द्धस्य विनाशे सार्द्धसप्तमाषे न्यूनसुवर्णार्द्धप्रभृतेर्विनाशे । लौकिकाश्च क्रियाः । अपह्नवे तव दशगुणो द्रव्यनाशो भविष्यतीत्यादिकाः । चशब्दः स्मार्त्तशपथसंग्रहार्थः । अतएवाह विष्णुः “सर्वेष्वेवार्थजातेषु मूल्यं कनकं कल्पयेत् । तत्र च कृष्णलोने शूद्रं दूर्वाकरं शापयेत्, द्विकृष्णलोने तिलकरम्, त्रिकृष्णलोने जलकरं चतुःकृष्णलोने सुवर्णकरम्, पञ्चकृष्णलोने सीरोद्धृतमहीकरम्, तत्र सुवर्णार्द्धोने कोशो देयः शूद्रस्य ततःपरं यथार्हं धटाग्न्युदकविषाणामन्यतमं द्विगुणार्थे यथाभिहिता समयक्रिया । वैश्यस्य त्रिगुणेऽर्थे, राजन्यस्य कोशवर्जं चतुर्गुणेऽर्थे ब्राह्मणस्य कोशन्दद्यात् अन्यत्रागामिकालसमयनिबन्धनक्रियातः कोशस्थाने ब्राह्मणं सीरोद्धृतमहीकरमेव शापयेत् । प्रागदृष्टदोषं स्वल्पेऽप्यर्थे दिव्यानामन्यतममेव कारयेत् । ख्यातस्य प्रथितं सुचरितं न महत्यर्थेऽपीति” । सीरोद्धृतमहीकरं लाङ्गलोद्धृतलोष्टहस्तमित्यर्थः । अनघहणमधिके शापनिवृत्त्यर्थं शापे तु विशेषमाह मनुः “सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः । गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैरिति” यद्यहमर्थापह्नवी स्यात् तदा सत्याभिधानधर्मो मम निष्फलः स्यादिति शपथकारिणं ब्राह्मणं वाचयेत् । एवं क्षत्रियादीनां वाहनादीनि निष्फलानि स्युरित्यादीत्यर्थः । पादस्पर्शादीनां विशेषः स्मृत्यन्तरे दर्शितः “निष्के तु सत्यवचनं द्विनिष्के पादलम्भनम् । त्रिकादर्वाक् तु पुष्पं स्यात् कोशपानमतःपरम्” इति । अत्र निष्कशब्देन कर्षचतुर्थांशो मुद्रामुद्रितः प्रतिपाद्यते क्वचिद्देशे तत्रापि निष्कव्यवहारात् न तु मनूक्तो निष्कः तस्य राजतपलात्मकत्वेन मूलकाञ्चनकर्षादधिकत्वात् तत्र सत्यवचनविधौ चतुर्गुणेऽर्थे ब्राह्मणस्येति विरोधः स्यात् ! दिव्ये दण्डे च मनूक्तं परिमाणम् ग्राह्यमिति वृहस्पतिराह “सङ्ख्या रश्मिरजोमूला मनुना समुदाहृता । कार्षापणान्ता सा दिव्ये नियोज्या विनये तथेति” । संख्या परिमाणं रश्मिरजोमूला त्रसरेण्वादिका । विनये दण्डे । तच्च परिमाणं प्रतिज्ञापूर्वकं मनुराह “लोकसंव्यवहारार्थं याः संज्ञाः प्रथिता भुवि । ताम्ररूप्यसुवर्णानां ताः प्रवक्ष्याम्यशेषतः । जालान्तरगते भानौ यत् सूक्ष्मं दृश्यते रजः । प्रथमं तत्प्रमाणानान्त्रसरेणुम्प्रचक्षते । त्रसरेणवोऽष्टौ विज्ञेया लिक्षैका परिमाणतः । ता राजसर्षपस्तिस्रस्ते त्रयो गौरसर्षपः । सर्षपाः षड्यवो मध्यस्त्रियवन्त्वेककृष्णलम् । पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोडश । पलं सुवर्णाश्चत्वारः पलानि धरणन्दश । द्वे कृष्णले समधृते विज्ञेयो रौप्यमाषकः । ते षोडश स्याद्धरणं पुराणश्चैव राजतः । धरणानि दश ज्ञेयः शतमानस्तु राजतः । कार्षापणस्तु विज्ञेयः कार्षिकस्ताम्रिकः पणः । चतुःसौवर्णिको निष्को विज्ञेयस्तु प्रमाणतः” इति । अत्र ताम्ररूप्यसुवर्णानामिति ताम्ररूप्ययोरल्पत्वात् प्राक्प्रयोगो न तु क्रमप्रदर्शनार्थः । पलानि धरणन्दशेत्यन्तं सुवर्णपरिमाणाभिधानात् । चतुःसौवर्णिको निष्क इत्युक्तं रूप्यपरिमाणाभिधानम् । अवशिष्टेन ताम्रपरिमाणाभिधानम् । जालान्तरप्रविष्टे सूर्यरश्मौ यत् सूक्ष्मं रजो दृश्यते तत् त्रसरेणुसंज्ञकम् अष्टौ त्रसरेणवो लिक्षा तास्तिस्रः राजसर्षपः । त्रयो राजसर्षपाः गौरसर्षपः । षड्गौरसर्षपा मध्यमो यवो न सूक्ष्मो न स्थूल इति । मध्यमयवस्य परिमाणमुक्तं मिताक्षरायाम् मध्यशब्दः पादपूरणार्थः । तथा च संपूर्णयवपरिमाणमुक्तमिति मनु-

माषैः। त्रयो यवाः कृष्णलम्। माषः पञ्च कृष्णलानि सुवर्णः षोडश माषाः। पलं सुवर्णाश्चत्वारः। धरणन्दश पलानि। कृष्णमाषो द्वे कृष्णले। रजतस्य धरणं षोडश कृष्णमाषाः। अस्य च पुराण इति संज्ञान्तरम्। राजतः शतमानः राजतदशधरणानि राजतपलसंज्ञाप्यस्य भवति। "शतमानन्तु दशभिर्धरणैः पलमेव त्विति" याज्ञवल्क्यस्मरणात्। पूर्वोक्तसुवर्णचतुष्टयपरिमित एको राजतनिष्कः। कार्षिकः कर्षसंमितः ताम्रिकस्ताम्रविकारः कार्षापणो विज्ञेयः। पण इति च संज्ञा अस्यैव विज्ञेयेत्यर्थः। पणशब्दोऽध्याहार्यः। अतएव वृहस्पतिः "निष्कं सुवर्णाश्चत्वारः कार्षिकस्ताम्रिकः पणः"। ताम्रकर्षकृता मुद्रा विज्ञेयः कार्षिकः पणः। स एव चन्द्रिका प्रोक्ता तासाञ्चतस्रस्तु धानकाः। ता द्वादश सुवर्णस्तु दीनाराख्यः स एव तु"। इति कर्षः पलचतुर्थांशः। "ते षोडशाक्षः कर्षोऽस्त्री पलङ्कर्षचतुष्टयम्" इत्यमरसिंहेनाभिधानात्। ते माषाः षोडशाक्षः कर्ष इति च संज्ञेत्यर्थः। तेनाक्षकर्षशब्दयोः सुवर्णपरिमाणवचनत्वमित्यवगम्यते। याज्ञवल्क्यः पले विकल्पमाह "पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्त्तितम्"। इति तस्य चतुर्थोऽंशो विंशतिमो वा तत्परिमितः कार्षापणः। अतएव कात्यायनः "माषो विंशतिभागस्तु ज्ञेयः कार्षापणस्य तु। काकिणी तु चतुर्भागा माषकस्य पणस्य चेति"। राजतेऽपि कार्षापणोऽस्तीत्याह नारदः "कार्षापणो दक्षिणस्यान्दिशि रौप्यः प्रवर्त्तते" इति। व्यासस्तु निष्कस्य प्रमाणमाह "पलान्यष्टौ सुवर्णस्तु ते सुवर्णाश्चतुर्दश। एतत् निष्कप्रमाणन्तु व्यासेन परिकीर्त्तितम्"

वर्णभेदेन दिव्यव्यवस्थामाह नारदः "ब्राह्मणस्य धटो देयः क्षत्रियस्य हुताशनः। वैश्यस्य सलिलं देयं शूद्रस्य विषमेव तु। साधारणः समस्तानां कोषः प्रोक्तो मनीषिभिः। विषं विना ब्राह्मणस्य सर्वेषां वा तुला स्मृता" इति। अनित्या चेयं व्यवस्था "राजन्येऽग्निघटं विप्रे वैश्ये तोयं नियोजयेत्। सर्वेषु सर्वदिव्यं वा विषवर्ज्जं द्विजोत्तमे" इति कात्यायनस्मरणात्। व्यवस्थापक्षे वयोविशेषादिना व्यवस्थापनीयम् तदाह नारदः "क्लीवातुरान् सत्त्वहीनान् परितस्वार्दितान्नरान्। बालवृद्धातुरांस्त्रीश्च परीक्षेत घटे सदा। स्त्रीणान्तु न विषं प्रोक्तं न चापि सलिलं स्मृतम्। घटकोषादिभिस्तासामन्तस्तत्त्वं विचारयेत्। नार्त्तानान्तोयशुद्धिः स्यात् न विषं पित्तरोगिणाम्। श्वित्रान्धकुनखादीनां नाग्निकर्म विधीयते। न मज्जनीयाः स्त्रीबाला धर्मशास्त्रविचक्षणैः। रोगिणो ये च वृद्धाः स्युः पुमांसो ये च दुर्बलाः। निरुच्छ्वासात् व्याधिक्लिष्टानार्त्तांस्तोये निमज्जयेत्। सद्यो म्रियन्ते मज्जन्तः स्वल्पप्राणा हि ते स्मृताः। नाहसेऽप्यागतानेतांश्चैव तोये निमज्जयेत्। न चापि हारयेदग्निं विषेण विशोधयेत्" याज्ञवल्क्यः "तुला स्त्रीबालवृद्धान्धपङ्गुब्राह्मणरोगिणाम्। अग्निर्जलं वा शूद्रस्य यवाः सप्त विषस्य चेति"। स्त्रीमात्रजातिवयोऽवस्थाविशेषानादरेण। बाल आषोडशाद्वर्षाज्जातिविशेषानादरेण। वृद्धोऽशीतिकावरः। अन्धो नेत्रविकलः। पङ्गुः पादविकलः। ब्राह्मणोजातिमात्रम्। रोगी व्याधितः।

एतेषां शोधनार्थं सर्वदिव्यसाधारणेषु मार्गशीर्षचैत्रवैशाखेषु स्त्र्यादीनां सर्वदिव्यप्रसक्तौ तुलैवेति नियम्यते न तु सर्वकालं स्त्रीणां तुलानियमः कोषादिविधानात्। अग्निः फालस्तप्तमाषश्च क्षत्रियस्य। जलमेव वैश्यस्य। यवा एवार्थे शूद्रस्य विषस्य सप्तैव यवा उक्तप्रमाणवन्तो भवन्तीत्यर्थः। ब्राह्मणस्य तुलाविधानात् अग्निर्जलं चेति क्षत्रियवैश्यविषयमित्यवगम्यते। अतएव पितामहः "ब्राह्मणस्य धटो देयः क्षत्रियस्य हुताशनः। वैश्यस्य सलिलं प्रोक्तं विषं शूद्रस्य दापयेत्" इति। कात्यायनोऽपि "न लोहशिल्पिनामग्निः सलिलं नाम्बुसेविनाम्। मन्त्रयोगविदाञ्चैव विषं दद्यात्तु न क्वचित्। तण्डुलैर्न नियुञ्जीत व्रतिनं मुखरोगिणाम्" इति। व्रतिनं पयोव्रतादिनियमस्थम्। हारीतोऽपि "कुष्ठिनां वर्जयेदग्निं सलिलं श्वासकासिनाम्। पित्तश्लेष्मवतां नित्यं विषं च परिवर्जयेत्" इति।

विष्णुरपि "न श्लेष्मकारिणां व्याधितानां भीरूणां श्वासकासिकानामम्बुसेविनामुदकं हेमन्तशिशिरयोश्चेति" पितामहोऽपि "कुष्ठिनां वर्जयेदग्निं सलिलं श्वासकासिनाम्। पित्तश्लेष्मवतां नित्यं विषन्तु परिवर्जयेत्। मद्यपस्त्रीव्यसनिनां कितवानां तथैव च। कोषः प्राज्ञैर्न दातव्यो ये च नास्तिकवृत्तयः" इति। यत्तु पितामहेनोक्तम् "सव्रतानां भृशार्त्तानां व्याधितानां तपस्विनाम्। स्त्रीणाञ्च न भवेद्दिव्यं यदि धर्मस्त्वपेक्ष्यते" इति तुलेतरविषयं तदिति केचित् तदयुक्तम्। "घटकोषादिभिस्तासामन्तस्तत्त्वं विचारयेदिति पूर्वोदाहृत-

नारदवचनेन स्त्रीणां कोशादेर्विधानात् । तदन्यस्त्रविषयमित्युक्तं विद्यारण्यश्रीपादैः । विज्ञानेश्वराचार्यास्तु पुंस्त्रियोर्विवादे स्त्री वान्यतरः कुर्यादित्यनेन पक्षे स्त्रीणामपि दिव्यप्रसक्तौ पुरुषस्यैव दिव्यं न स्त्रीणामित्येतत्परमिदम् । अन्यथा सर्वथा तासां दिव्यनिषेधे घटकोशादिभिस्तासामन्तस्तत्त्वं विचारयेदित्यनेन विरोधः स्यादिति प्राहुः । कात्यायनः "गोरक्षकान् वाणिजकांस्तथा कारुकुशीलवान् । प्रेष्यान् वार्द्धुषिकांश्चैव ग्राहयेच्छूद्रवद्द्विजान्" । कालिकापुराणेऽपि "वर्णान्त्यस्य सदा देयं माषकं तप्तहेमजमिति" । वर्णानामन्त्यः प्रत्यन्तः तस्येत्यर्थः । नारदोऽपि "महापराधे निर्द्धर्मे कृतघ्ने क्लीवकुत्सिते । नास्तिके दृष्टदोषे च शपथानां तु विवर्जयेत्" इति । कात्यायनोऽपि "मातापितृद्विजगुरुवृद्धस्त्रीबालघातिनाम् । महापातकयुक्तानां नास्तिकानां विशेषतः । लिङ्गिनां प्रमदानाञ्च मन्त्रयोगक्रियाविदाम् । वर्णसङ्करजातानां पापाभ्यासप्रवर्त्तिनाम् । एतेष्वेवाभियोगेषु निन्द्येष्वेवं प्रवर्त्तितः । दिव्यं प्रकल्पयेन्नैव राजा धर्मपरायणः । एतैरेव नियुक्तानां साधूनां दिव्यमर्हति । न सन्ति साधवो यत्र तत्र शोध्याः स्वकैर्नरैरिति" । साधूनां दिव्यमर्हति राजा कल्पयितुमिति शेषः । प्रतिनिधिद्वारा एतैर्दिव्यं कारणीयमिति द्रढयितुमाह स एव "महापातकयुक्तेषु नास्तिकेषु विशेषतः । न देयं तेषु दिव्यन्तु पापाभ्यासरते भृगुः । येषु पापेषु दिव्यानि कर्त्तव्यानि प्रयत्नतः । तारयेत्सज्जनैस्तानि नाभिशस्तं त्यजेन्नर इति" । तारयेत् शोधयेत् । अभिशोधनं प्रतिनिधिद्वारा शोधनमकारयित्वा न त्यजेदित्यर्थः । यत्तु तेनैवोक्तम् "अस्पृश्याधमदासानां म्लेच्छानां पापकारिणाम् । प्रातिलोम्यप्रसूतानां निश्चयो न तु राजनि । तत्प्रसिद्धानि दिव्यानि संशये तेषु निर्दिशेदिति" । तत्तैर्नियुक्तानां साधूनामभावे विज्ञेयम् । तत्प्रसिद्धानि घटादीनि इति स्मृतितत्त्वे । साधूनामप्यसामर्थ्ये प्रतिनिधिमप्युपजानाति स एव "कालदेशाविरोधे तु यथायुक्तं प्रकल्पयेत् । अन्येन हारयेद्दिव्यं विधिरेष विपर्ययः" । सामर्थ्याभावे सर्ववर्णविषये विशेषमाह हारीतः, "राजन्योऽग्निं घटं विप्रे वैश्ये तोयं नियोजयेत् । न विषं ब्राह्मणे दद्याद्विषं वर्णान्तरे स्मृतम् । कोशतण्डुलधर्मांस्तु धर्मज्ञश्वमेव च । पुत्रदारादिशपथान् सर्ववर्णे प्रयोजयेत्" इति ।

अथ दिव्यकालः तत्र पितामहः "यो यस्य विहितः कालो विधिर्यस्य च यो यथा । तं प्रवक्ष्यामि तत्त्वेन वादिनस्य बलाबलम् । चैत्रो मार्गशिराश्चैव वैशाखश्च तथैव च । एते साधारणा मासा दिव्यानामविरोधिनः । घटः सर्वर्त्तुकः प्रोक्तो वाते वाति विवर्जयेत् । अग्निः शिशिरहेमन्तवर्षासु परिकीर्त्तितः । शरद्ग्रीष्मे च सलिलं हेमन्ते शिशिरे विषमिति" । विष्णुरपि "स्त्रीब्राह्मणविकलाऽसमर्थरोगिणां न तुला देया न वाति वायौ न कुष्ठ्यसमर्थलोहकाराणामग्निर्देयः शरद्ग्रीष्मयोश्च न कुष्ठिपैत्तिकब्राह्मणानां विषं देयं प्रावृषि च । न श्लेष्मिकाणां व्याध्यर्दितानां भीरूणां श्वासकासिनामम्बुजीविनामुदकं हेमन्तशिशिरयोश्चेति । हेमन्तनिषेधोऽत्र पौषमासविषय एव न तु मार्गशीर्षविषयोऽपि । मार्गशीर्षस्य "चैत्रो मार्गशिरा इति पूर्वोदाहृतपितामहवचनेन सकलदिव्यसाधारणत्वाभिधानात् । नारदोऽपि "विचार्य्य धर्मनिपुणैर्धर्मशास्त्रविशारदैः । धर्मं सर्वर्त्तुकं प्रोक्तं पण्डितैर्घटधारणम् । वर्षासु समये वह्निर्हेमन्तशिशिरे तथा । ग्रीष्मे सलिलमित्युक्तं विषं काले तु शीतले । न शीते तोयशुद्धिः स्यान्नोष्णकालेऽग्निशोधनम् । न प्रावृषि विषं दद्यात् प्रवाते न तुलां तथा । नापराह्णे न सन्ध्यायां न मध्याह्ने कदाचनेति" । मध्याह्ने दिव्यनिषेधो जलव्यतिरिक्तविषयः । अतएव पितामहः "पूर्वाह्णेऽग्निपरीक्षा स्यात् पूर्वाह्णे च घटो भवेत् । मध्याह्ने तु जलं देयं धर्मतत्त्वमभीप्सता । दिवसस्य तु पूर्वाह्णे कोशशुद्धिर्विधीयते । रात्रौ तु पश्चिमे भागे विषं देयं सुशीतलमिति" । अत्र विषस्य वर्षासु निषेधात् सिंहरवावेव परीक्षामात्रनिषेधाच्च दिव्यान्तरं सिंहेतरवर्षास्वपि कुर्वन्ति । अतः "याम्यायने हरौ सुप्ते सर्वकर्माणि वर्जयेदित्यस्य न विषयः । तथा च ज्योतिषे "सिंहस्थे मकरस्थे च जीवे चास्तमिते भृगौ । मलमासे न कर्त्तव्या परीक्षा जयकाङ्क्षिणा" । तथा "रविशुद्धौ गुरौ चैव न शुक्रेऽस्तंगते पुनः । सिंहस्थे च रवौ नैव परीक्षा शस्यते बुधैः । नाष्टम्यां न चतुर्दश्यां प्रायश्चित्तपरीक्षणे । न परीक्षाभिवासश्च शनिभौमदिने भवेत्" । रविशुद्धौ गुरौ चेदित्यत्र शस्यत इति शेषः तथा च दीपिकायाम् "न शुक्रास्तेऽष्टमेऽर्के गुरुसहितरवौ जन्ममासेऽष्टमेऽब्दे

त्रिष्टौ मासे मलाख्ये कुजशनिदिवसे जन्मताराष्टु चाथ। नाड़ीनक्षत्रहीने गुरुरविरजनीनाथताराविशुद्धौ प्रातः कार्य्या परीक्षा हितनुचरग्रहांशोदये शस्तलग्ने”। इति। यद्यपि दिव्ये वारविशेषविधानाभावस्तथापि शिष्टाचारादादित्यवारे दिव्यानि दातव्यानीति मिताक्षरायाम्। अथ दिव्यदेशाः तत्र पितामहः। “प्राङ्मुखो निश्चलः कार्य्यः शुचौ देशे घटः सदा। इन्द्रस्थाने सभायां वा राजद्वारे चतुष्पथे” इति। घटग्रहणं दिव्यान्तरस्याप्युपलक्षणम्। इन्द्रस्थानग्रहणञ्च प्रसिद्धदेवतायतनान्तरस्याप्युपलक्षणम्। अतएव दिव्यमात्रमुपक्रम्य नारदः “सभाराजकुलद्वारे देवायतनचत्वरे”। विषयविशेषे इन्द्रस्थानादीनां व्यवस्थामाह। कात्यायनः “इन्द्रस्थानेऽभिशस्तानां महापातकिनां नृणाम्। नृपद्रोहप्रवृत्तानां राजद्वारे प्रयोजयेत्। प्रातिलोम्यप्रसूतानां दिव्यं देयञ्चतुष्पथे। अतोऽन्येषु तु कार्य्येषु सभामध्ये विदुर्बुधाः” इति। इन्द्रस्थाने इन्द्रध्वजपूजास्थाने। दिव्यदेशानादरे दिव्यं विसंवदतीत्याह, नारदः “अदेशकालदत्तानि बहिर्वासकृतानि च। व्यभिचारं सदर्थेषु कुर्व्वन्तीह न संशयः”। वासो जननिवासस्तस्माद्बहिष्कृतानि निर्जनप्रदेशकृतानीति यावत्। अतएव पितामहः “प्रत्यक्षं दापयेद्दिव्यं राज्ञा वाधिकृतोऽपि वा। ब्राह्मणानां श्रुतवतां प्रकृतीनां तथैव चेति”। ब्राह्मणानां प्रकृतयोऽमात्यास्तेषाञ्चेत्यन्वयः।

अथ दिव्यसाधारणविधिस्तत्र बृहस्पतिः “मोहात् क्रोधाल्लोभतो वा भेदमायान्ति साक्षिणः। विधिदत्तस्य दिव्यस्य न भेदो जायते क्वचिदिति”। विधिश्च पितामहेन दर्शितः “दिव्येषु सर्व्वकार्य्याणि प्राड्विवाकः समाचरेत्। अध्वरेषु यथाध्वर्य्युः सोपवासो नृपाज्ञया। तत्रावाहयेद्देवान् विधिनानेन धर्म्मवित्। वादित्रतूर्य्यघोषैश्च गन्धमाल्यानुलेपनैः। प्राङ्मुखः प्राञ्जलिर्भूत्वा प्राड्विवाकस्ततो वदेत्। एह्येहि भगवन्धर्म्म! अस्मिन्दिव्ये समाविश। सहितो लोकपालैश्च वस्वादित्यमरुद्गणैः। आवाह्य तु घटे धर्म्मं पश्चादङ्गानि विन्यसेत्”। सर्व्वकार्य्याणि साधारणानि असाधारणानि च तत्तदुपयोगिसामग्रीसम्पादनानन्तरमित्यर्थः। घटग्रहणमत्र दिव्यमात्रोपलक्षणम्। अस्मिन्दिव्य इति मन्त्रलिङ्गादेतेषां धर्म्माणां दिव्यमात्रसाधारण्यम्। “इमं मन्त्रविधिं कृत्स्नं सर्व्वदिव्येषु योजयेत्। आवाहनञ्च देवानां तथैव परिकल्पयेत्” इत्युपसंहरता तेनैवोक्तत्वाच्च। अङ्गानि कानीत्याकाङ्क्षायां स एवाह, “इन्द्रं पूर्व्वे तु विन्यस्य प्रेतेशं दक्षिणे तथा। वरुणं पश्चिमे भागे कुबेरं चोत्तरे तथा। अग्न्यादिलोकपालांश्च कोणभागेषु विन्यसेत्। इन्द्रः पीतो यमः श्यामो वरुणः स्फटिकप्रभः। कुबेरस्तु सुवर्णाभः अग्निश्चैव सुवर्णभः। तथैव निरृतिः श्यामो वायुर्धूम्रः प्रशस्यते। ईशानस्तु भवेद्रक्त एवं ध्यायेत्क्रमादिमान्। इन्द्रस्य दक्षिणे पार्श्वे वसूनावाहयेद्बुधः। धरो ध्रुवस्तथा सोम आपश्चैवानलोऽनिलः। प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्त्तिताः। देवेशेशानयोर्मध्ये आदित्यानां तथाऽऽसनम्। धातार्य्यमा च मित्रश्च वरुणांशो भगस्तथा। इन्द्रो विवस्वान् पूषा च पर्ज्जन्यो दशमः स्मृतः। ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यजः। इत्येते द्वादशादित्या नामभिः परिकीर्त्तिताः। अग्नेः पश्चिमभागे तु रुद्रा एकादश स्मृताः। वीरभद्रश्च शम्भुश्च गिरिशश्च महायशाः। अजैकपादहिर्ब्रध्नः पिनाकी चापराजितः। भुवनाधीश्वरश्चैव कपाली च विशाम्पतिः। स्थाणुर्भवश्च भगवान् रुद्रास्त्वेकादश स्मृताः। प्रेतेशरक्षोमध्ये च मातृस्थानं प्रकल्पयेत्। ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा। वाराही चैव माहेन्द्री चामुण्डा गणसंयुता। निरृतेरुत्तरे भागे गणेशायतनं विदुः। वरुणस्योत्तरे भागे मरुतां स्थानमुच्यते। पवनः स्पर्शनो वायुरनिलो मरुतस्तथा। प्राणः प्राणेशजीवौ च मरुतोऽष्टौ प्रकीर्त्तिताः। घटस्योत्तरभागे तु दुर्गामावाहयेद्बुधः। एतासां देवतानान्तु स्वनाम्ना पूजनं विदुः। भूषावसानं धर्म्माय दत्त्वा चार्घादिकं क्रमात्। अर्घादि पश्चादङ्गानां भूषान्तमुपकल्पयेत्। गन्धादिकां निवेद्यान्तां परिचर्य्यां प्रकल्पयेत्। चतुर्दिक्षु तथा होमः कर्त्तव्यो वेदपारगैः। आज्येन हविषा चैव समिद्भिर्होमसाधनैः। सावित्र्या प्रणवेनाथ स्वाहान्तेनैव होमयेत्”। अङ्गानाम् इन्द्रादिदुर्गान्तानाम् अर्घाद्युपकल्पनञ्च न काण्डानुसमयेन। तथात्वे प्रयोगवचनावगताङ्गसहभावबाधापत्तेः। किन्तु पदार्थानुसमयेन तथा च दुर्गायै भूषणं दत्त्वा धर्म्मस्येन्द्रादिदुर्गान्तानाञ्च गन्धादिपरिचर्य्यं विप्रकल्पयेदिति। गायत्रीं प्रणवादिकामुच्चार्य्य पुनः प्रणवं स्वाहाकारान्तमुच्चार्य्य समिदाज्यचरुभिः प्रत्येकमष्टोत्तरशतं जुहुयात्।

"अनुक्तसङ्ख्या यत्र स्यात् शतमष्टोत्तरं हुतमिति" चरुणादित्यर्थः। होमानन्तरकर्त्तव्यं स एवाह "यमर्थमभियुक्तः स्यात्तल्लिखित्वा तत्तु पत्रके। मन्त्रेणानेन सहितं तत् कार्यञ्च शिरः क्रमात्"। मन्त्रश्च, "आदित्यचन्द्रावनिलानलौ च द्यौर्भूमिरापो हृदयं यमश्च। अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तमिति" एतत् सर्वं पूर्वाह्णे कर्त्तव्यम् तस्य प्रधानकालत्वात् तथा च नारदः "अहोरात्रोषिते स्नाते आर्द्रवाससि मानवे। पूर्वाह्णे सर्वदिव्यानां प्रदानमनुकीर्त्तितमिति"। एतत् प्राड्विवाकेनोपवासादिनियमपूर्वकं कर्त्तव्यम् तथा च नारदः "प्राड्विवाकस्ततो विप्रो वेदवेदाङ्गपारगः। श्रुतवृत्तोपसम्पन्नः शान्तचित्तो विमत्सरः। सत्यसन्धः शुचिर्दक्षः सर्वप्राणिहिते रतः। उपोषितश्चार्द्रवासाः कृतदन्तानुधावनः। सर्वासां देवतानाञ्च पूजां कृत्वा यथाविधि"। कर्त्तुरुपवासादिकमाह "त्रिरात्रोपोषितोयः स्यादेकरात्रोपोषितस्तु वा। नित्यं देयानि दिव्यानि शुचये चार्द्रवाससे" इति। याज्ञवल्क्योऽपि "सचैलं स्नातमाहूय सूर्य्योदय उपोषितम्। कारयेत्सर्वदिव्यानि नृपब्राह्मणसन्निधाविति"। अत्र सूर्य्योदयपदेन पूर्वाह्ण एव ग्राह्यः "पूर्वाह्णे सर्वदिव्यानां प्रदानमनुकीर्त्तितमिति" नारदवचनानुरोधात्। त्रिरात्रैकरात्रोपवासयोः शक्ताशक्तविषयत्वेन व्यवस्था ज्ञेया। दिव्यप्रयोगानन्तरं दक्षिणादानम् उक्तेन विधिना दिव्यप्रयोगं कारयितुः राज्ञः फलञ्चाह पितामहः "सद्भिः परिवृतो राजा शुद्धिमेतां प्रपूजयेत्। ऋत्विक्पुरोहिताचार्य्यान् दक्षिणाभिस्तु तोषयेत्। एवं कारयिता राजा भुक्त्वा भोगान्मनोरमान्। महतीं कीर्त्तिमाप्नोति ब्रह्मभूयाय कल्पते" इति। अयञ्च विधिः सर्वदिव्यसाधारण इत्याह स एव "इमं मन्त्रविधिं कृत्स्नं सर्वदिव्येषु योजयेत्। आवाहनञ्च देवानां तथैव परिकीर्त्तितमिति"। सर्वदेवावाहनादि संशोध्यशिरसि पत्रारोपणान्तं सर्वदिव्यसाधारणमित्यर्थः" दिव्यमातृका। १२जलभेदे। "दिव्यं चतुर्विधं प्रोक्तं धाराजं करकाभवम्। तौषारञ्च तथा हैमं तेषु धारं गुणाधिकम्" भाव०प्र०। १३स्नानभेदे न० "अशामर्थ्याच्छरीरस्य कालशक्त्याद्यपेक्षया। मन्त्रस्नानादितः सप्त केचिदिच्छन्ति सूरयः। मान्त्रं भौमं तथाग्नेयं वायव्यं दिव्यमेव च। वारुणं मानसञ्चैव सप्तस्नानं प्रकीर्तितम्। "आपोहिष्ठेति" वै मान्त्रं, मृदालम्भन्तु पार्थिवम्। आग्नेयं भस्मना स्नानं, वायव्यं गोरजः स्मृतम्। यत्तु सातपवर्षेण स्नानं तद्दिव्यमुच्यते। वारुणञ्चावगाहञ्च, मानसं विष्णुचिन्तनम्। समस्तं स्नानमुद्दिष्टं मन्त्रस्नानक्रमेण तु। कालदोषादसामर्थ्यात् सर्वं तस्य फलं स्मृतम्" योगियाज्ञवल्क्यः। दिवि द्योतात्मके आदित्ये परमव्योम्नि वा ब्रह्मणि स्वस्वरूपे भवः यत्। "दिव्यश्च देवताप्रायः शुद्धान्तःकरणः सदा। द्वन्द्वातीतो वीतरागः सर्वभूतसमः क्षमी" इत्युक्ते १४तत्त्ववेत्तरि पु० १५आमलक्यां स्त्री मेदि०। १६वन्ध्याकर्कोटक्याम् १७शतावर्य्याम् १८महामेदायाम् १९ब्राह्म्याम् २०स्थूलजीरके २१श्वेतदूर्वायाम् २२हरीतक्याम् २३पुरायाम् २४गन्धवत्याञ्च स्त्री राजनि०। २५दैवे दिने २६तदीये माने च न० दिव्यदिनदिव्यमानशब्दयोर्दृश्यम्। २७द्युलोकाज्जाते २८मनोज्ञे २९लोकातीते दिव्यदर्शी दिव्यचक्षुः त्रि०।

**दिव्यकट** न०प्रतीच्यां पुरभेदे "कृत्स्नं पञ्चनदञ्चैव तथैवामरपर्वतम्। उत्तरज्योतिषञ्चैव तथा दिव्यकटं पुरम्" भा० स०३२अ० नकुलप्रतीचीजये।

**दिव्यकुण्ड** न० कामरूपपीठस्थक्षोभकशैलपूर्वभागस्थे कुण्डविशेषे। "यथा तद्दक्षिणे महाशैलः क्षोभकोनामनामतः। तस्मिन् गिरौ शिलापृष्ठवक्त्रा देवी व्यवस्थिता। पञ्चपुष्करिणी नाम्ना पञ्चयोनिस्वरूपिणी। एकत्र पञ्चभिर्दुर्गा योनिभिः पञ्चवक्त्रकम्। स्थिता रमयितुं तत्र नित्यमेव हिमाद्रिजा। तच्छैलपूर्वभागात्तु कान्ता नाम महानदी। दक्षिणं सागरं याति प्रथमं चोत्तरस्रवा। दिव्यकुण्डं महाकुण्डं तच्छैलोपत्यकागतम्। संस्थितस्तत्र स्नात्वा तु तां देवीं परिपूजयेत्। दिव्यकुण्डे नरः स्नात्वा पञ्चपुष्करिणीं शिवाम्। यः पूजयेन्महाभागः स योनौ न हि जायते"। कालि०पु०८१अ०

**दिव्यगन्ध** पु० कर्म०। १मनोज्ञे गन्धे। दिव्योगन्धोऽस्य। २गन्धके ३लवङ्गे च न० ४स्थूलैलायां महाचञ्चुशाके च स्त्री राजनि०।

**दिव्यगायन** पु० कर्म०। गन्धर्वे अमरः।

**दिव्यचक्षुस्** पु०दिव्यं चक्षुर्यस्मात् ५ब०। १मर्कटे शब्दमाला। (चसमा) ख्याते २पदार्थे च ३सुगन्धभेदे ४सुलोचने च। दिव्यमन्तरीक्षभूतं चक्षुरस्य। ५अन्धे त्रि०मेदि०। कर्मधा०। ५अलौकिकपदार्थदर्शनयोग्ये नेत्रे न०"न च मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा। दिव्यं ददामि ते चक्षुः पश्य मे

योगमैश्वरम्" गीता। दिव्यमलौकिकार्थदर्शनसाधनं चक्षुरस्य। ७तथाभूतनेत्रयुक्ते त्रि॰ "त्वया नियम्या ननु दिव्यचक्षुषा" रघुः "नमस्तुभ्यं विरूपाक्ष! नमस्ते दिव्यचक्षुषे" नीलकण्ठस्तवः।

**दिव्यतेजस्** स्त्री दिव्यं तेजो यस्याः ५ब॰। १ब्राह्मीलतायाम्। २उज्ज्वलतेजस्के त्रि॰।

**दिव्यदर्शिन्** त्रि॰दिव्यमलौकिकपदार्थं पश्यति दृश–णिनि। अतीन्द्रियार्थदर्शके। "व्याजहार सभामध्ये दिव्यदर्शी महातपाः" भा॰आश्व॰ २॰अ॰। दृश–क्विप्। दिव्यदृगप्यत्र।

**दिव्यदिन** न॰ दिवि भवम् यत् कर्म॰। दैवे दिने "मासैर्द्वादशभिर्वर्षं दिव्यं तदहरुच्यते" सू॰सि॰तन्मानमुक्तम्।

**दिव्यदोहद** न॰ "यत् दीयते तु देवेभ्यो मनोराज्यस्य सिद्धये। उपयाचितकं दिव्यदोहदं तद्विदुर्बुधाः" हारा॰ उक्ते अभीष्टसिद्धये देवेभ्यो देये द्रव्ये।

**दिव्यनदी** स्त्री कर्म॰। आकाशगङ्गायाम्।

**दिव्यनारी** स्त्री अप्सरःसु स्वर्वेश्यायाम् दिव्यस्त्री प्रभृतयोऽप्यत्र। "दिव्यस्त्रीकरचारुचामरवरैः संवीज्यमानः कदा" गङ्गास्तवः।

**दिव्यपञ्चामृतम्** न॰ पञ्चानाममृतानां तत्तुल्यस्वादूनां समाहारः कर्म॰। मिलितगव्याज्यदधिक्षीरमधुसितात्मके पदार्थे राजनि॰।

**दिव्यपुष्प** पु॰दिव्यं मनोज्ञं पुष्पमस्य। १करवीरे २महाद्रोणायां राजनि॰ संज्ञायां कन् कापि अतइत्वम्। दिव्यपुष्पिका रक्तपुष्पकार्कवृक्षे स्त्री रत्नमाला।

**दिव्यप्रश्न** पु॰ कर्म॰। अनागतज्ञापके प्रश्ने। "उच्चावचं दैवयुक्तं रहस्यं दिव्यप्रश्नाः मृगचक्रा मुहूर्त्ताः। क्षयं महान्तं कुरुसृञ्जयानां निवेदयन्तो पाण्डवानां जयञ्च" भा॰उ॰ ४७अ॰।

**दिव्यमान** न॰ कर्म॰। दैवे माने "सुरासुराणामन्योन्यमहोरात्रं विपर्ययात्। यत् प्रोक्तं तद्भवेद्दिव्यं मानो भैमपुराणात्"। "युगानां त्रिचनं यातं तथा कृतयुगं त्विदम्। प्रोज्झ्य सृष्टेस्ततः कालं पूर्वोक्तं दिव्यसंख्यया"। "ब्राह्मं दिव्यं तथा पित्र्यं प्राजापत्यं गुरोस्तथा। सौरं च सावनं चान्द्रमार्क्षं मानानि वै नव" सू॰सि॰।

**दिव्ययमुना** स्त्री नित्यकर्म॰। कामरूपपीठस्थदर्मनिकाया नद्याः पूर्वभागस्थे नदीभेदे यथा "तस्या नद्याः पूर्वभागे गङ्गेव फलदायिनी। माघन्तु सकलं मासं तस्यां स्नात्वा नरोत्तमः। तथा दर्मनिकायाञ्च परं निर्वाणमाप्नुयात्। ततः पूर्वे परा देवी नाम्ना या सरिदुत्तमा। महती दिव्ययमुना यमुनावत्फलप्रदा। दक्षिणाद्रिसमुद्भूता दक्षिणोदधिगामिनी। तस्यान्तु कार्त्तिकं मासं स्नात्वा मोक्षमवाप्नुयात्" कालि॰पु॰८१अ॰

**दिव्यरत्न** न॰कर्म॰। चिन्तामणौ मणौ शब्दार्थक॰।

**दिव्यरथ** पु॰ कर्म॰। व्योमयाने विमाने शब्दरत्ना॰।

**दिव्यरस** पु॰ नित्यकर्म॰। १पारदे राजनि॰। २मनोज्ञे रसे पु॰ दिव्योरसोऽस्य। ३रुचिररसयुक्ते त्रि॰।

**दिव्यलता** स्त्री कर्म॰। १मूर्वालतायाम् राजनि॰। २मनोज्ञलतामात्रे च।

**दिव्यवस्त्र** पु॰ दिव्यं वस्त्रं यस्मात्। १सूर्यप्रकाशे शब्दरत्ना॰। ६त॰। २भास्वरवस्त्रयुक्ते त्रि॰कर्म॰। ३मनोज्ञे वसने न॰

**दिव्यसरित्** स्त्री कर्म॰ आकाशगङ्गायाम् "व्योम्नि दिव्यसरिदम्बुपद्धतिः" माघः।

**दिव्यसानु** पु॰ १विश्वदेवभेदे "विश्वे चाग्निमुखा देवाः" इत्युपक्रमे "पार्ष्णिक्षेमासमूहश्च दिव्यसानुस्तथैव च" भा॰आनु॰ ९१अ॰विश्वदेवोक्तौ। २दिव्यसानुके गिरौ च।

**दिव्यसार** पु॰ दिव्यः सारोऽस्य। शालवृक्षे राजनि॰।

**दिव्यादिव्य** पु॰ दिव्यश्चादिव्यश्च कर्म॰। नायकभेदे रसमञ्जरी यथा अर्जुनादयः। २नायिकाभेदे स्त्री यथा द्रौपद्यादयः। ३उपदेवीभेदे स्त्री शब्दार्थचि॰।

**दिव्यासन** न॰ "अथ दिव्यासनं वक्ष्ये पृष्ठं हस्तेन बन्धयेत्। एकहस्तमध्यदेशं भूमिहस्तञ्च नासया" रुद्रजा॰ उक्ते आसनभेदे।

**दिव्येलक** पु॰ सर्पभेदे "भयाणां वैकरञ्जानां पुनर्दिव्येलकलोध्रपुष्पकराजिचित्रिकाः पोटगलः पुष्पाभिकीर्णो दर्भपुष्पोवेल्लितकः सप्त तेषामाद्ययोराजिलवत् शेषा मण्डलिवत्" सुश्रु॰।

**दिव्योदक** न॰ कर्म॰। १अन्तरीक्षभवे जले दिव्यशब्दे भाव॰प्र॰ वाक्ये तद्भेदादि दृश्यम्। अम्बुशब्दे विवृतिः।

**दिव्योपपादुक** पु॰ उपपद्यते मातृपित्रादिदृष्टकारणमनपेक्ष्यैव अदृष्टवशात्तत्ताशुष्य एव उत्पद्यते उप+पद–उकञ् कर्म॰ पिशाचादिव्यावृत्तये दिव्य इति विशेषणं तेषाञ्च मातृपित्रादिदृष्टकारणापेक्षाभावेऽपि दिव्यत्वाभावाञ्च तथात्वम्। देवे अमरः।

**दिव्यौघ** पु॰ तन्त्रोक्ते गुरुभेदे। "महादेवो महाकालश्रि-

पुरश्चैव भैरवः । दिव्यौघा गुरवः प्रोक्ताः सिद्धौघान् कथयामि ते"। इति शक्तिरत्नाकरतन्त्रम् । "अथ तारा-गुरून् वक्ष्ये दृष्टादृष्टफलप्रदान् । अर्द्धकेशो व्योमकेशो नीलकण्ठोऽवृषध्वजः । दिव्यौघान् सिद्धिदान् वत्स ! मृत्युञ्जयावस्थितो सदा" । "शृणु वत्स ! महादेव ! गुरून् दुर्गामनूक्तवान् । परमात्मा परानन्दः परमेष्ठी शुभोदयः । कृष्णकाल ! कालनाथो दिव्यौघा भैरवादिकाः" तन्त्रसारे देवताभेदात्तद्भेदा उक्ता २कपिरौषधौ च

**दिव्यौषधि** स्त्री नित्यकर्म० । १मनःशिलायाम् शब्दार्थचि०।

**दिश** दाने आज्ञापने कथने च तु०उभ०सक०अनिट् । दिशति ते अदिक्षत् न दिदेश देष्टा दिष्टः दिष्टिः । दिक्षा आदिश्य "शाक्तिकः सन्ति मेत्युक्त्वा दिशेत्युक्तो दिशेच यः" मनुः । दाने "दृष्टां गतिं तस्य सुरा दिशन्ति" भा० आनु०१८४२श्लो० आज्ञापने "महादेवेन दिष्टं ते पुत्रजन्म नराधिप !" भा० व० १०६अ० । "दिदेश तस्मै प्रयतां तनूजाम्" कुमा० ।

अति+स्वविषयस्ततुल्यान्यविषये उपदेशे सक० अतिदेशशब्दे १००पृ०दृश्यम् । "यथाकालोपपाते तद्दैवते तद्दैवतं हुत्वा तद्वातिदिश्यानेन जुहुयात्" कात्या०श्रौ० २५।२।४ उपदेशे च । "इत्यर्चितः स भगवानतिदिश्यात्मनः पदम्" भाग०४।८।२८।

अनु+पश्चात्कथने । "यस्य देवेभ्योऽनुदिशति" तैत्ति० ब० ६।५।४।२ "रामस्यानुदिश्यताम्" रामा०बह्मा०८८स०

अप+छलने यथार्थाङ्गवे अपदेशशब्दे दृश्यम् । "पश्चिम-क्रतुविदा पुरोधसा रोगशान्तिमपदिश्य मन्त्रिभिः । सम्भृते शिखिनि गूढमादधुः" "तस्य निर्दयरतिश्रमालसाः भित्वलक्षमपदिश्य पार्श्वगाः" रघुः ।

वि+अप+संज्ञाभेदे "भ्रातरं राजराजानं महेश्वरसखं प्रभुम् । धनेश्वरं व्यपदिशन्" भा०व०२८०अ०।"मित्रं च मां व्यपदिशस्यपरं च यासि" मृच्छक० "ईश्वर इति व्यपदिश्यते" वेदा०सा० "निमित्तसद्भावाद्विशिष्टोऽपदेशोऽसुख्यव्यवहारोव्यपदेशः" परिभाषेन्दुशेखरोक्तेऽर्थे ।

अभि+अभिमुखीकृत्योपदेशे । "यां यामभ्यदिशत् सैनमकामयत" पञ्चभोब्रा० १२।११।

आ+आज्ञायाम् उपदेशे "अथात आदेशो नेति" वृ०उ० "आदिशदादीप्रकृत्यानुकल्पम्" भट्टिः । आदेशशब्दे २१६ पृ० उक्ते अर्थे च "धातोः स्थाने इवादेशम्" रघुः ।

अनु+आ+पश्चादादेशे उपदेशे च अन्वादेशशब्दे २१६ पृ० उक्ते अर्थे च ।

प्रति+आ+निराकरणे "प्रत्यादेशो निराकृतिः" अमरः "क्रतु प्रणामक्रिययैव तन्वी प्रत्यादिदेशैनमभाषमाणा" "अन्तः शरीरेष्वपि यः प्रजानां प्रत्यादिदेशाविनयं विनेता" रघुः "किमहमेतं जलधरसमयं न प्रत्यादिशामि" विक्र०

वि+आ+विशेषेणादेशे । "समीरणः प्रेरयिता भवेति व्यादिश्यते केन हुताशनस्य" कुमा०

सम्+आ+सम्यगादेशे । "समादिदेशैकवधूर्भवित्री" कुमा०।

उद्+स्वरूपकथने "उद्देशोलक्षणं विभागः परीक्षा चेति" न्यायसमयः । उद्देशशब्दे ११७०उक्तेऽर्थे च । तच्छब्दे उदा० प्रश्ने उद्दे शकशब्दे दृश्यम् ।

उप+अनुशासने उपदेशशब्दे १२१० पृ०उक्तेऽर्थे च । "उपदिशति कामिनीनां यौवनमद एव ललितानि" सा०द० "उपदिष्टमिच्छामि तापसं वीतकल्मषाः"भा०उ०१७४अ०

प्रति—उप+उपदेशस्य प्रतिरूपोपदेशे "व्याधिं प्रति प्रत्युपदेक्ष्यामः" सुश्रु० "यद्यत्प्रयोगविषये भाविकमुपदिश्यते मया तस्मै । तत्तद्विशेषकरणात् प्रत्युपदिशतीव मे बाला" मालवि०

निर्+निर्णयेन देशने कथने च "ब्रतुषत् पीठमासन्ने निरदिक्षच्च कासनम्" भट्टिः उच्चारणे च "निर्दिश्यमानादेशा भवन्ति" व्या०परिभाषा "षष्ठ्यन्तं निर्दिश्यमानमस्तुश्चार्यमाणम्" नागेशभट्टः ।

प्रति+निर्+प्रकृतानुरूपनिर्देशे । "तदिति प्रकृतं भावलक्षणं प्रतिनिर्दिश्यते" । येन पदेन उद्दे शस्तेनैव पदेन पुनःकथने । उद्देश्यप्रतिनिर्द्दे श्ययोरेकपदप्रतिपाद्यत्वेऽपि न कथितपदत्वदोषः अन्यपदेन निर्द्देशे तु प्रत्युत भग्नप्रक्रमतादोषः यथाह सा०द० "एवमुक्तो मन्त्रिमुख्यैरावणः प्रत्यभाषत"अत्र वचधातुना प्रक्रान्तं प्रतिवचनमपि तेनैव वक्तुमुचितं तेन रावणः प्रत्यवोचतेति पाठो युक्तः । एवञ्च सति न कथितपदत्वदोषः तस्योद्देश्यप्रतिनिर्देश्यव्यतिरिक्तविषयत्वात् । इह हि वचनप्रतिवचनयोरुद्देश्यप्रतिनिर्देश्यत्वं यथा

"उदेति सविता ताम्रस्ताम्र एवास्तमेति च" इत्यत्र । यदि पदान्तरेण स एवार्थः प्रतिपाद्यते तदान्योऽर्थ इव प्रतिभासमानः प्रतीतिं स्थगयति । यथा वा

"ते हिमालयमामन्त्र्य पुनःप्रेक्ष्य च शूलिनम् । सिद्धञ्चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः" अत्र अस्मै

इति इदमा प्रक्रान्तस्य तेनैव तत्समानाधिकरणेनेतच्छब्देन वा परामर्शो युक्तो न तच्छब्देन। यथा वा "उद्वन्वच्छिन्ना भूः स च पतिरपां योजनशतम्" अत्र "मिता भूः पत्यापां स च पतिरपामिति" युक्तः पाठः।

प्रति+प्रतिरूपदेशने। "भुजगगतिप्रतिदेशितात्मतत्त्वः" भा० शा० २६७ अ०

सम्+सम्यक्कथने सम्यक्तयादेशे वाचा कथने च "अभिद्रुति कांचिदिति संदिदिशे" माघः "ननु सन्दिशेति सुदृशोदितया त्रपया न किञ्चन किलाभिदधे" माघः "ददौ स दयितां साले मालामाशयत्रां हिरण्मयीम्। राज्ये सन्दिश्य भोगांश्च ममार व्यथपीडितः" भट्टिः "अथ विश्वात्मने गौरी सन्दिदेश मिथः सखीम्" कुमा०।

**दिश्** स्त्री दिशति ददात्यवकाशं दिश–क्विन्। १आशायाम् प्राच्यादिव्यवहारहेतौ काष्ठायाम्। "कृत्वैकमवधिं तस्मादिदं पूर्वञ्च पश्चिमम्। इति निर्दिश्यते देशो यया सा दिगिति स्मृतेति" उक्तेस्तस्या दैशिकपरत्वापरत्वासमवायिकारणत्वम्। सा चैका नित्या विभ्वी चेति "कालखात्मदिशां सर्वगतत्वं परमं महत्" भाषा०। दिक्परीक्षा च कणाद सूत्रोपस्कारयोर्यथा

"इत इदमिति यतस्तद्दिश्यं लिङ्गम्" सू०। "काललिङ्गप्रकरणं समाप्य इदानीं दिग्लिङ्गप्रकरणमारभमाण आह। दिश इदं दिश्यं दिगनुमापकम् इतोऽल्पतरसंयुक्तसंयोगाश्रयादिदं बहुतरसंयुक्तसंयोगाधिकरणं परम् इतश्च संयुक्तसंयोगभूयस्त्वाधिकरणादिदं संयुक्तसंयोगाल्पीयस्त्वाधिकरणमपरमिति नियतदिग्देशयोः समानकालयोः पिण्डयोर्यतो द्रव्याद्भवति सा दिगित्यर्थः। न हि तादृशं द्रव्यमन्तरेण भूयसां संयुक्तसंयोगानामल्पीयसां वा पिण्डयोरुपनयनायकमन्यदस्ति न च तदुपनयमन्तरेण तत्तद्विशिष्टबुद्धिः न च तामन्तरेण परत्वापरत्वयोरुत्पत्तिः न च तदुत्पत्तिं विना तद्विशिष्टप्रत्ययव्यवहारौ। न च काल एव संयोगोपनायकोऽस्तु किं द्रव्यान्तरेणेति वाच्यं कालस्य नियतक्रियोपनायकत्वेनैव सिद्धेः, अनियतपरधर्मोपनायकत्वकल्पनायान्तु काश्मीरकुङ्कुमपङ्करागं कार्णाटकामिनीकुचकलशं प्रत्युपनयेत् आकाशात्मनोरपि तथा परधर्मोपसंक्रामकत्वे स एव प्रसङ्गः, दिशस्तु अनियतपरधर्मोपसंक्रामकतयैव सिद्धत्वान्नातिप्रसङ्गः एवञ्च क्रियोपनायकात् कालात् संयोगोपनायिका दिक् पृथगेव। किञ्चास्मात् पूर्वमिदम् अस्माद्दक्षिणमिदम् अस्मात्पश्चिममिदम् अस्मादुत्तरमिदम् अस्माद्दक्षिणपूर्वमिदम् अस्माद्दक्षिणपश्चिममिदम् अस्मात्पश्चिमोत्तरमिदम् अस्मादुत्तरपूर्वमिदम् अस्मादधस्तादिदम् अस्मादुपरिष्टादिदम् इत्येते प्रत्यया इत इदमितीत्यनेन संगृहीताः एतेषां प्रत्ययानां निमित्तान्तरासम्भवात्। किञ्च नियतोपाध्युन्नायकः कालः अनियतोपाध्युन्नायिका दिक्, भवति हि यदपेक्षया यो वर्त्तमानः स तदपेक्षया वर्त्तमान एव, दिगुपाधौ तु नैवं नियमः यं प्रति या प्राची तं प्रत्येव कदाचित्तस्याः प्रतीचीत्वात् एवमुदीच्यादिष्वपि वाच्यम्, यदपेक्षया सूर्य्योदयाचलसन्निहिता या दिक् सा तदपेक्षया प्राची यदपेक्षया सूर्य्यास्ताचलसन्निहिता या दिक् सा तदपेक्षया प्रतीची, सन्निधानन्तु संयुक्तसंयोगाल्पीयस्त्वं ते च सूर्य्यसंयोगा अल्पीयांसो भूयांसो वा दिगुपनेयाः। एवं प्राच्यभिमुखपुरुषवामप्रदेशावच्छिन्ना दिगुदीची, तादृशपुरुषदक्षिणभागावच्छिन्ना दिक् दक्षिणा, वामत्वदक्षिणत्वे तु शरीरावयववृत्तिजातिविशेषौ। गुरुत्वासमवायिकारणकक्रियाजन्यसंयोगाश्रयो दिक् अधः। अदृष्टवदात्मसंयोगजन्याग्निक्रियाजन्यसंयोगाश्रयो दिगूर्द्ध्वा। एवञ्चेन्द्राग्नियमनिरृतिवरुणवायुसोमेशाननागब्रह्माधिष्ठानोपलक्षिता दश दिश इति व्यपदेशान्तरं प्राच्यादिव्यपदेशात्" उप०सू०। "द्रव्यत्वनित्यत्वे वायुना व्याख्याते" सू०। दिशो द्रव्यत्वं नित्यत्वञ्च वायुपरमाणुवदित्याह। "गुणवत्त्वाद्द्रव्यत्वम् अनाश्रितत्वाच्च नित्यत्वमित्यर्थः" सू०। एकत्वमतिदिशन्नाह। "तत्त्वम्भावेन" सू०। "दिग्लिङ्गाविशेषाद्विशेषलिङ्गाभावाच्च सत्त्वावदेकत्वं तदनुविधानादेकपृथक्त्वम्" सू०। ननु यद्येकैव दिक् कथं तर्हि दश दिश इति प्रतीतिव्यवहारावित्यत आह। "कार्य्यविशेषेण नानात्वम्" सू०। "कार्य्यविशेषः कार्य्यभेदस्तेन नानात्वोपचार इत्यर्थः" सू०। तमेव कार्य्यभेदं दर्शयन्नाह। "आदित्यसंयोगाद्भूतपूर्वाद्भविष्यतो भूताच्च प्राची" सू०। "प्राक् अस्यां सविता अञ्चतीति प्राची तथाच यस्यां दिशि मेरुप्रदक्षिणक्रमेण भ्रमत आदित्यस्य प्रथमं संयोगो भूतपूर्वो भविष्यन् वा सा दिक् प्राची अत्र पुरुषाभिसन्धिभेदमाश्रित्य कालत्रयोपवर्णनम्, भवति हि कस्यचित्पूर्वेद्युः प्रातरस्यां दिशि आदित्यसंयोगः प्रथमं वृत्त इतीयं प्राचीति प्राचीव्यवहारः कस्यचिदपरेद्युरस्यां आदित्यसंयोगः प्रथमं भावीत्यभिसन्धाय प्राचीव्यवहारः

कस्यांचिद्दिशि यस्याम् आदित्यसंयोगो भवत्यतीतोऽभिसम्बन्धाय प्राचीव्यवहारः, भूतादिति आदिकर्मणि क्तप्रत्ययः तेनाभिसम्बन्धेरनियमात् यदाप्यादित्यसंयोगो नास्ति रात्रौ मध्याह्नादौ तदापि प्राचीव्यवहारानुगमः सिद्ध्यतीति भावः" उप०वृ०। दिगन्तरव्यवहारेऽपीममेव प्रकारमतिदिशन्नाह "तथा दक्षिणा प्रतीची उदीची च" सू०। "तद्वदेव दक्षिणदिग्वर्त्तिनमादिना यद्वादित्यसंयोगाद्भूतपूर्वाद्भविष्यतो भूताद्वा दक्षिणव्यवहारः एवं प्रतीच्युदीच्योरपि व्यवहार उन्नेयः। वाममदक्षिणत्वे निरुक्त एव" उप० वृ०। दिगन्तरालव्यवहारेऽपीममेव प्रकारमतिदिशन्नाह "एतेन दिगन्तरालानि व्याख्यातानि" सू०। "प्राचीदक्षिणयोर्दिशोर्लक्षणसाङ्कर्य्येण दक्षिणपूर्वा दिगिति व्यवहारः एवं दक्षिणपश्चिमा पश्चिमोत्तरोत्तरपूर्वेत्यूह्यम् एते चादित्यसंयोगा येन विभुना द्रव्येणोपनीयन्ते सा दिगिति कणादरहस्ये कृत्यादितं विस्तरतः" उप०वृ०। क्विपदान्ते च कुः। दिक्। "दिग्दक्षिणा गन्धवहं मुखेन"। "प्रसन्नदिक् पांशुविविक्तवातम्" कुमा०। सा चोपाधिभेदात् दशधा "पूर्वाग्नेयी दक्षिणा च नैर्ऋती पश्चिमा तथा। वायवी चोत्तरैशानी ऊर्द्ध्वा चाधोदिशोदशेति" वराहपुराणम्। आयामन्दे तत्त्वत्त्वे प्रमाणं प्राच्यादिभेदे उपाधिस्वरूपञ्च८२५पृ०दृश्यम्। "यया दिशा धावति वेधसः स्पृहा" नैष० "परस्परावापमिवामला दिशः" किरा० भागुरिमते वा टाप् दिशाप्यत्र। दिशागज दिशापालशब्दे दृश्यम् दिशाश्च यात्राद्युपयोगिसंज्ञाभेदः ज्यो० त० उक्तो यथा "अङ्गारिणी दिग्रविविप्रयुक्ता यस्यां रविस्तिष्ठति सा प्रदीप्ता। प्रधूमिता यास्यति यां दिनेशः शेषाः प्रशस्ताः शुभदाश्च ताः स्युः"। "यत्र पूर्वादिकाष्ठायां इभराश्यादिगोरविः। सा दिगस्तमिता ज्ञेया शेषास्तिस्रः सदोदिताः। यात्रा युद्धं विवादश्च द्वारं प्रासादहर्म्मयोः। न कर्त्तव्यं शुभं चान्यदस्तायामभिमुखं नरैः"। "अस्तायायां स्थितं यस्य नाम्नः प्रथममक्षरम्। स आर्त्तः सर्वकार्येषु श्रेयोदैवहतो नरः" ज्योति० त० दिक्करशब्दोक्ते २दन्तक्षते च वैजयन्ती ३दशसंख्यायाम् ४तत्संख्यान्विते च। "दिग्भिर्गुणैरष्टभिः शरैवैः" नील० ता०। ५श्रोत्राधिष्ठातृदेवताभेदे "दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः" शारदातिलकम्। कः प्रजापतिः दिशि भवं दिगा०यत्। दिश्य दिग्भवे त्रि०। दिशा निर्वृत्तम् ठञ्। दैशिक दिक्कृते त्रि० दैशिकपरत्वापरत्वे।

**दिश** त्रि०दिशति दिश–क। १देशके। २विष्णौ पु०। "चतुरश्रो गभीरात्मा विदिशो व्यादिशो दिशः" विष्णुस०।

**दिशस्** स्त्री दिश–वा० कसुन्। दिशि रमानाथः।

**दिशागज** पु० दिशायां स्थितो गजः। दिग्गजे "नागान् दिशागजसुतान् दिव्यानपि च भारत!" हरिवं०१४५अ०

**दिशाचक्षुस्** पु० गरुडात्मजभेदे। "शतवेगो दिशाचक्षुर्निमिषोऽनिमिषस्तथा" भा० उ० १०० गरुडपुत्रोक्तौ।

**दिशापाल** पु०दिशां पालयति पालि–अण् उप०स०। इन्द्रादौ १दिक्पाले २ब्रह्मनियोजिते वैराजादिप्रजापतिसुते दिशां पालकभेदे च। दिग्भेदेन तेषां नियोजनकथा हरिवं०४अ०यथा "एवं विभज्य राज्यानि क्रमेण स पितामहः। दिशापालानथ ततः स्थापयामास भारत!। पूर्वस्यां दिशि पुत्रन्तु वैराजस्य प्रजापतेः। दिशापालं सुधन्वानं राजानं सोऽभ्यषेचयेत्। दक्षिणस्यां महात्मानं कर्दमस्य प्रजापतेः। पुत्रं शङ्खपदं नाम राजानं सोऽभ्यषेचयेत्। पश्चिमायां दिशि तथा रजसः पुत्रमच्युतम्। केतुमन्तं महात्मानं राजानं सोऽभ्यषेचयेत्। तथा हिरण्यरोमाणं पर्जन्यस्य प्रजापतेः। उदीच्यां दिशि दुर्द्धर्षं राजानं सोऽभ्यषेचयेत्। तैरियं पृथिवी सर्वा सप्तद्वीपा सपत्तना। यथाप्रदेशमद्यापि धर्मेण परिपाल्यते"।

**दिशोदण्ड** पु० दिशमनाहत्य दण्डः अलुक् स०। दिशोऽनादरेण दण्डे सि० कौ०।

**दिश्य** त्रि० दिशि भवः दिगा० यत्। दिशि भवे। "ये सर्पाः पार्थिवा ये आन्तरिक्षा ये दिव्या ये दिश्यास्तेभ्य इमं बलिमहार्षम्" आश्व० गृ० २।१।९।

**दिष्ट** त्रि०दिश–कर्म्मणि क्त। १उपदिष्टे २कथिते। संज्ञायां कर्त्तरि क्त। ३भाग्ये न० अमरः। "न दिष्टमिष्टं कुरुते न तिष्ठति तु पौरुषे" विष्णु पु०। ४काले पु०अमरः। ५वैवस्वतमनोः पुत्रभेदे। "नरिष्यन्तोऽथ नाभागः सप्तमो दिष्ट उच्यते" भाग० ८।१३।२ वैवस्वतमनुपुत्रकथने। ६दारुहरिद्रायां शब्दमाला

**दिष्टान्त** पु० ६त०। १भाग्यसमाप्तौ तदुपलक्षिते २मरणे च। "ततो दिष्टान्तमापन्नः सर्वेषां दुःखमावहन्" भा० आ० ४९ अ० "दिष्टान्तमाप्स्यति भवानपि पुत्रशोकात्" रघुः

**दिष्टि** स्त्री दिश–भावे क्तिन् संज्ञायां कर्त्तरि क्तिच् वा। १हर्षे २परिमाणे च मेदि०। ३कथने उपदेशे ४उत्सवे "तथाचास्य दिष्टिवृद्धिमिव शुश्राव" काद०। ५भाग्ये च "राजकुले दिष्टिवृद्धिसम्भ्रमोमहानभूत्" काद०।

**दिष्ट्या** अव्य० दिश–सम्पदा०भावे क्विप् दिशं देशनं स्यायति स्यै–ष्ट्यै–वा क्विप्, अमरादि०नि०वा । १हर्षे २मङ्गले भाग्यार्थकदिष्टिशब्दस्य तृतीयान्तस्य रूपमित्यन्ये तेन ३भाग्येनेत्यर्थे । "अन्योऽन्यमतसौहार्दा दिष्ट्यादिष्ट्येति चाब्रुवन्" भा० आ० १२८अ०

**दिष्णु** त्रि० दा–गिष्णु । दातरि उज्ज्वलद० ।

**दिह** लेपने अदा० उभ० सक० अनिट् । देग्धि दिग्धे अधिक्षत् अधिक्षत-अदिग्ध अधिक्षन्त अदिहत । । दिदेह दिदिहे । देग्धा धेक्ष्यति दिग्धः । "अदिहंश्चन्दनैः शुभैः" भट्टिः । "स चन्दनोशीरमृणालदिग्धः" भट्टिः । उपसर्गपूर्वकस्य तत्तदुपसर्गद्योत्यार्थयुक्तलेपने । प्रदिदेग्धि "दन्तास्तपसाभिदिग्धाः" अथ०५।१८।८ "दन्तरजसावदेग्धि" कौ०तं०ब्रा०२१ "कवचैः शोणितादिग्धैः" भा०भी० ३२८४ श्लो० "ऊर्जं वा एतं रसं पृथिव्या उपदीका उद्दिहन्ति यद्वल्मीकम्" तै०आ०५।२।८ "लोहानां च मणीनां च मलपङ्कोपदिग्धता" काम०नी० "शिरोगलकफोपदिग्धम्" सुश्रु० "यथाधो भूमौ निदिग्धं तदस्तुया स्यादेवं तत्" शत०ब्रा० १।७।२।१२

**दी** क्षये दि० आत्म० अक० अनिट् । दीयते अदास्त । दिग्ये कोदित् दीनः । उपसर्गपूर्वकस्य तत्तदुपसर्गद्योत्यार्थक्षये "अध श्येनो जवसा निरदीयम्" ऋ०४।२७।१ "आपो मम्रे हतमद्यं वहन्तीः स्वयमत्कैः परिदीयन्ति यह्वीः" ऋ०२। ३५।१४

**दीक्ष** मौण्ड्ये याग उपनयने नियमव्रतयोरादेशे च भ्वा० आ०सक० सेट् । दीक्षते अदीक्षिष्ट । दिदीक्षे दीक्षिष्यते । "दीक्षस्व मह रामेण त्वरितं तुरगाध्वरे" भट्टिः "यज्ञादुह वा एष पुनर्जायते यो दीक्षते" ऐत०ब्रा०२।२२ "कथं नोमध्येऽदीक्षिष्ट" ऐत०ब्रा० २।१८ "ब्रह्मबलेन दीक्षिष्यमाणः" भाग० २।१।६ क्वचित् वेदे परस्मैपदः "ते ह देवयजनं दिदीक्षुः" पञ्चवि०ब्रा०२४।१८ णिच् । दीक्षयति "राजानं दीक्षयामासुः सर्पसत्राय्ये तदा" भा० आ० २०१७ श्लो० ।

**दीक्षण** न० दीक्ष–भावे ल्युट् । यज्ञाद्यङ्गनियमभेदे । "बन्धमोक्षणश्वदीक्षणेष्वपि" राजमार्तण्डः ।

**दीक्षणीय** न० दीक्षणाय हितादि छ । दीक्षासाधने हविर्भेदे । "यो दीक्षते आग्नावैष्णवं हदो दीक्षणीयं हविर्भवति" शत०ब्रा० ३।३।४।२१ १इष्टिभेदे स्त्री "दीक्षणीयाप्रायणीयातिथ्यदेवता" कात्या०श्रौ०५।४।१० "दीक्षणीयादीनां सकलानामिष्टीनां बदेवताकानामुपांशुत्वम्" कर्कः "यागन्तेन वा दीक्षणीयां नीचैस्तरां नीचैस्तरामितरे" कात्या०श्रौ० ७।२।२१ "अथ वा यागन्ते च उत्तमया वाचा उच्चैर्दीक्षणीयां कुर्युः इतरे द्वे इष्टी प्रायणीयातिथ्ये नीचैस्तरां कर्तव्ये, दीक्षणीया उच्चैस्तरां, प्रायणीया तदपेक्षया नीचैस्तरां, तदपेक्षया नीचैस्तरामातिथ्येति" कर्कः । ३सौमिके इष्टिभेदे हेम० । ४वाजपेयाङ्गभूते इष्टिभेदे । "वाजपेयाङ्गभूतानां यजतीनां दीक्षणीयाप्रायणीयादीनामादिषु सकृद्गृहीतमाज्यं जुहोति" यजु० ८।५। वेददी० ।

**दीक्षा** स्त्री दीक्ष–भावे अ । १नियमे २उपनयनसंस्कारे "दीयते विमलं ज्ञानं क्षीयते कर्मवासना । तेन दीक्षेति सा प्रोक्ता मुनिभिस्तन्त्रवेदिभिः" इति तन्त्रोक्ते ३अभीष्टदेवमन्त्रग्रहणे ४तदुपदेशे । यागाङ्गदीक्षा च द्वादशसंख्या अपरिमिता वा यथाह कात्या०श्रौ०७।१।२९सू० "द्वादश दीक्षाः" "अत्राग्निष्टोमे भवन्ति" कर्कः । "अपरिमिता वा" द्वादशसंख्यातोऽतिशयेनाधिकसंख्या वा दीक्षा भवन्ति "अपरिमितं प्रमाणाद्भूय इति" परिशिष्टकारः अतश्चत्वारो दीक्षापक्षाः, "एका दीक्षा, तिस्रो दीक्षा, द्वादशदीक्षा अपरिमिता वा दीक्षेति" शाखान्तरादेते दीक्षापक्षाः । आपस्तम्बः "दशाहमवरार्ध्यं दीक्षितो भवति मासं संवत्सरं वा यदा कृशः स्यादित्यपरं विज्ञायते च यदा वै दीक्षितः कृशो भवत्यथ मेध्यो भवति यदास्मिन्नन्तर्न किं चन भवत्यथ मेध्यो भवति यदास्य कृष्णं चक्षुषोर्नश्यत्यथ मेध्यो भवति यदास्य त्वचास्थि संधीयतेऽथ मेध्यो भवति पीवा दीक्षेत कृशो यजेत यदस्याङ्गानां हीयते जुहोत्येव तदिति विज्ञायते" इति । कर्कः "पुण्याहे दीक्षा क्रयः प्रसव उत्थानम्" ११सू० "तान्यत्र दीक्षा सोमक्रयः प्रसवः सुत्या उत्थानं समाप्तिः पुण्याहे विष्टिव्यतीपातादिज्योतिःशास्त्रनिषेधवर्जिते सुदिने भवन्ति यतएवं स्मरन्ति "आभ्युदयिकः पदार्थः पुण्येऽहनि कर्तव्यः एतानि चाभ्युदयिकानीति" कर्कः । तान्त्रिकमन्त्रदीक्षाकालादि मल०त० उक्तं यथा "अथ दीक्षाकालः सा च मलमासे न कार्या यथाऽगस्त्यसंहितायाम् "यदा ददाति सन्तुष्टः प्रसन्नवदनो मनुम् । अयमेव तथा चैशमिति कर्त्तव्यताक्रमः । विशुद्धदेशकालेषु शुद्धात्मा नियतो गुरुः । सङ्कल्पो मोपग्र कर्त्तव्यमङ्कुरारोपणं मुने ! । कुर्यान्नान्दीमुखं

चाद्रमाद्रौ च स्वस्तिवाचनम्। स्पष्टोक्तप्रकारेण तदेतद्विदधीत वै। मधुमासे भवेद्दुःखं माधवे रत्नसञ्चयः। मरणं भवति ज्यैष्ठे आषाढे बन्धुनाशनम्। सन्ततिः श्रावणे नूनं भवेद्भाद्रपदे क्षयः। प्रजानाशाश्विने मासि सर्वतः शुभमेव हि। ज्ञानं स्यात् कार्त्तिके सौख्यं मार्गशीर्षे भवत्यपि। पौषे ज्ञानक्षयो माघे भवेन्मेधाविवर्द्धनम्। फाल्गुनेऽपि विवृद्धिः स्यान्मलमासं विवर्जयेत्। गुरौ रवौ दिने शुक्रे कर्त्तव्यं बुधसोमयोः। अश्विनी भरणी स्वातिविशाखाहस्तभेषु च। ज्येष्ठोत्तरत्रयेष्वेवं कुर्य्यान्मन्त्राभिषेचनम्। शुक्लपक्षे च कृष्णे वा दीक्षा सर्वसुखावहा। पूर्णिमा पञ्चमी चैव द्वितीया सप्तमी तथा। त्रयोदशी च दशमी प्रशस्ता सर्वकामदा। पञ्चाङ्गशुद्धदिवसे सोदये शशितारयोः। गुरुशुक्रोदये शुद्धे लग्ने द्वादशशोधिते। चन्द्रतारानुकूले च शस्यते सर्वकर्मसु। सूर्य्यग्रहणकालेन समानो नास्ति कश्चन। तत्र यद्यत् कृतं सर्वमनन्तफलदं भवेत्। न मासतिथिवारादिशोधनं सूर्य्यपर्वणि। ददातीष्टं ग्रहीतं यस्मिन् काले गुरोर्न्वपु। सिद्धिर्भवति मन्त्रस्य विनायासेन वेगतः"। मनुं मन्त्रम्। अङ्कुरारोपणमासमप्रसिद्धम्। शुद्धकालत्वं दर्शयति मधुमासे इत्यादि। पञ्चाङ्गशुद्धदिवसे तिथिवारनक्षत्रकरणयोगशुद्धदिवसे। तथाच महाकपिलपञ्चरात्रम् "एवं नक्षत्रतिथ्यादौ करणे योगवासरे। मन्त्रोपदेशो गुरुणा साधकस्य शुभावहः"। सोदये शशितारयोरिति जन्मचन्द्राद्यतारयोरानुकूल्यसहिते गुरुशुक्रोदये गुरुशुक्रानस्तमये। एतत्तु समयशुद्ध्यन्तरोपलक्षणम्। (अकालशब्दोक्ते "गुरोर्भृगोरस्तबाल्ये" इत्यादिके वचने "परीक्षारामकूपांश्च पुरश्चरणदीक्षणे" इत्यादिना अशुद्धकाले तस्यावर्ज्यत्वमुक्तम्)। द्वादशशोधिते द्वादशांशशोधिते। ज्ञानमालायाम् "रविसंक्रमणे चैव सूर्य्यस्य ग्रहणे तथा"। तथा "तत्र लग्नादिकं किञ्चिन्न विचार्य्यं कथञ्चन"। दीक्षातत्त्वे "यदैवेच्छा तदा दीक्षा गुरोराज्ञानुरूपतः। न तिथिर्न व्रतं होमो न स्नानं न जपः क्रिया। दीक्षायाः कारणं किञ्चित् स्वेच्छयाप्ते तु सद्गुरौ"। सद्गुरौ सिद्धमन्त्रगुरौ। दीपिकायाम् "ध्रुवमृदुनक्षत्रगणे रविशुभवासरेषु सक्तियो सद्गुरौ दीक्षा। स्थिरलग्ने शुभचन्द्रे केन्द्रे कोणे शुभे गुरौ धर्म्मे"। ध्रुवाणि त्रीण्युत्तराणि रोहिणी च। मृदूनि चित्रा-

नुराधामृगशिरोरेवत्यः। केन्द्रं लग्नचतुर्थसप्तदशकम्। कोणं नवपञ्चकम्। धर्म्मो नवमः। वीरतन्त्रे "रोहिणी श्रवणार्द्रा च धनिष्ठा चोत्तरात्रयम्। पुष्यः शतभिषगर्क्षं च दीक्षानक्षत्रमिष्यते"। अर्कौ हस्तः। रत्नावल्याम् "योगाश्च प्रीतिरायुष्मान् सौभाग्यः शोभनो धृतिः। वृद्धिर्ध्रुवः सुकर्म्मा च साध्यः शुक्लश्च हर्षणः। वरीयांश्च शिवः सिद्धो ब्रह्मा इन्द्रश्च षोडश"। तथा। शुभानि करणानि स्युर्दीक्षायाञ्च विशेषतः। शकुन्यादीनि विष्टिञ्च विशेषेण विवर्जयेत्"। शकुन्यादीनि शकुनिनागचतुष्पदकिन्तुघ्नानि। कृष्णेऽष्टम्यां चतुर्दश्यां पूर्वपक्षदिने तथा"। कृष्णे कृष्णपक्षे। कालोत्तरे "भूतिकामैः सिते सदा" म०त० दीक्षायां प्रतिप्रसवः "राघवभट्टधृतसारसंग्रहे पित्र्यक्षिजन्मदिवसे संक्रान्तौ विषुवायने। सत्तीर्थेऽर्कविधुग्रासे तन्तुदामनपर्वणोः। मन्त्रदीक्षां प्रकुर्वाणो मासर्क्षादीन् न शोधयेत्"। तन्तुपर्व परमेश्वरोपवीतदानतिथिः श्रावणी पूर्णिमा। दामनपर्व दमनभञ्जनतिथिश्चैत्रशुक्लचतुर्दशी। कूर्म्मपुराणे हिमालयं प्रति देवीवाक्यम् "यानि शास्त्राणि दृश्यन्ते लोकेऽस्मिन् विविधानि च। श्रुतिस्मृतिविरुद्धानि निष्ठा तेषां हि तामसी। करालभैरवञ्चापि यामलं वाममाश्रितम्। एवंविधानि चान्यानि मोहनार्थानि तानि तु। मया सृष्टानि चान्यानि मोहायैषां भवार्णवे"। तस्मात् सद्भिः श्रुतिस्मृतिविरुद्धे वर्त्मनि न कदाचित् पदं न्यस्तव्यम्। अथारिदुष्टमन्त्रप्रतीकारस्तु "एषु दोषेषु सर्वत्र मायां कामथापि वा। लिखा चादौ श्रियं दद्यात् तद्दूषणविमुक्तये। तारसंपुटितो वापि दुष्टमन्त्रो विशुध्यति। यस्य यत्र भवेद्भक्तिः सोऽपि मन्त्रोऽस्य सिद्ध्यति। भुवनेश्वरीपारिजातेऽपि "मायाबीजसमायुक्तः क्षिप्रं सिद्धिप्रदो भवेत्। विरुद्धस्तु केवलो मन्त्रो मायाबीजोज्ज्वलीकृतः। मायाबीजात् भवेत् प्राणोबीजञ्चैतन्यवीर्य्यवत्"। नारदीये "यदृच्छया श्रुतं मन्त्रं छद्मनापि छलेन वा। पत्रेक्षितं वा गाथाञ्च तस्मैत्य त्वनर्थकृत्। प्रविश्य विधिवद्दीक्षामभिषेकावसानिकाम्"। अधिकं तन्त्रसारोक्तं देशाद्यनुपदं वक्ष्यते

तन्त्रसारे दीक्षाशब्दस्य व्युत्पत्तिप्रदर्शनपूर्वं कलापावश्यकता दर्शिता यथा

"दीक्षां विना जपस्य दुष्टत्वात् प्रथमं सा निरूप्यते "दिव्यं ज्ञानं यतो दद्यात् कुर्य्यात् पापस्य संक्ष-

यम् । तस्माद्दीक्षेति सा प्रोक्ता मुनिभिस्तन्त्रवेदिभिः । दीयते ज्ञानसम्भारः क्षालनात् पापसन्ततेः । ततो दीक्षेति सा प्रोक्ता मुनिभिस्तन्त्रवेदिभिः" । सर्वाश्रमेषु दीक्षाया आवश्यकत्वम् तथा च "दीक्षामूलं जपं सर्वं दीक्षामूलं परन्तपः । दीक्षामाश्रित्य निवसेत् यत्र कुत्राश्रमे वसन्" । शूद्रस्य निषेधमाह तन्त्रान्तरे "प्रणवाद्यं न दातव्यं मन्त्रं शूद्राय सर्वथा । आत्ममन्त्रं गुरोर्मन्त्रं मन्त्रञ्चाजपसंज्ञकम् । स्वाहाप्रणवसंयुक्तं शूद्रे मन्त्रं ददद्द्विजः । शूद्रो निरयमाप्नोति ब्राह्मणो यात्यधोगतिम्" । स्मृतिसंग्रहार्णवे "सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्रो यदि जानीयात् स मृतोऽधोगच्छति" । लक्ष्मीं लक्ष्मीमन्त्रम् । विशेषमाह वाराहीतन्त्रे "गोपालस्य मनुर्देवो महेशस्यापि पादजे । तत् पत्न्याश्चापि सूर्यस्य गणेशस्य मनुस्तथा" ।

अदीक्षितस्य निन्दामाह तन्त्रसारे

"अदीक्षिता ये कुर्वन्ति जपपूजादिकाः क्रियाः । न भवन्ति प्रिये तेषां शिलायामुप्तबीजवत् । देवि ! दीक्षाविहीनस्य न सिद्धिर्न च सद्गतिः । तस्मात् सर्वप्रयत्नेन गुरुणा दीक्षितो भवेत् । अदीक्षितोऽपि मरणे रौरवं नरकं व्रजेत् । तस्माद्दीक्षां प्रयत्नेन सदा कुर्य्याच्च तान्त्रिकात् । कल्पे दृष्ट्वा तु मन्त्रं वै यो गृह्णाति नराधमः । मन्वन्तरसहस्रेषु निष्कृतिर्नैव जायते । नादीक्षितस्य कार्य्यं स्यात् तपोभिर्नियमव्रतैः । न तीर्थगमनेनापि न च शारीरयन्त्रणैः" । अतः सद्गुरोराहितदीक्षः सर्वकर्माणि साधयेत् । गोविन्दवृन्दावने "अदीक्षितस्य मरणे प्रेतत्वं न विमुञ्चति" । नवरत्नेश्वरः "सर्वेषामपि दीक्षायां शुद्धिः कल्मषक्षालितम् । अविरोधाच्च तन्त्रेव प्रासङ्गिक्यस्तु मुक्तयः"। दीक्षा काम्या च यथा कुलार्णवे "उपपातकलक्षाणि महापातककोटयः । क्षणाद्दहति देवेशि ! दीक्षा हि विधिना कृता । दीक्षाद्यागमोक्तागमपदार्थमाह यामले "आगतः शिववक्त्रेभ्यो गतश्च गिरिजानने । मतस्तस्या हृदम्भोजे तस्मादागम उच्यते । आगमोक्तविधानेन कलौ देवान् यजेत् सुधीः । न हि देवाः प्रसीदन्ति कलौ चान्यविधानतः । पञ्चवर्षैर्भवेद्दीक्षा ह्यागमोक्तैः शृणु प्रिये ! । यां कृत्वा कलिकाले च सर्वाभीष्टं लभेन्नरः" तन्त्रसा॰

दीक्षाप्रकारश्च कलावतीशब्दे १७६२ पृ॰ द्रष्टव्यः ।

अन्यत्र च दीक्षाशब्दव्युत्पत्त्यादिकमुक्तं यथा

रुद्रयामले "ददाति शिवतादात्म्यं क्षिणोति च मलत्रयम् । अतो दीक्षेति संप्रोक्ता दीक्षातन्त्रार्थवेदिभिः" । लघुकल्पलते च "दीयते परमं ज्ञानं क्षीयते पापसन्ततिः । तेन दीक्षोच्यते तन्त्रे आगमार्थवनावलात्" । योगिनीतन्त्रे तृतीयभागे षष्ठपटलेऽपि "दीयते ज्ञानमत्यर्थं क्षीयते पाशबन्धनम् । अतो दीक्षेति देवेशि ! कथिता तत्त्वचिन्तकैः । मनसा कर्मणा वाचा यत् पापं समुपार्जितम् । तेषां विश्लेषकरणी परमज्ञानदा यतः । तस्माद्दीक्षेति लोकेऽस्मिन् गीयते शास्त्रवेदकैः । विज्ञानफलदा सैव द्वितीया लयकारिणी । तृतीया मुक्तिदा चैव तस्माद्दीक्षेति गीयते" । विश्वसारतन्त्रे द्वितीयपटले च "अथ दीक्षां प्रवक्ष्यामि शृणुष्व कमलानने ! । यस्य विज्ञानमात्रेण देवत्वं लभते नरः । दिव्यज्ञानं यतो दद्यात् कुर्य्यात्पापक्षयं यतः । तस्माद्दीक्षेति सा प्रोक्ता सर्वतन्त्रस्य सम्मता" । अथ दीक्षामाहात्म्यम् रुद्रयामले पूर्व्वखण्डे तृतीयपटले "देवि ! दीक्षाविहीनस्य न सिद्धिर्न च सद्गतिः । तस्मात् सर्व्व प्रयत्नेन गुरुणा दीक्षितो भवेत् । अदीक्षितोऽपि मरणे रौरवं नरकं व्रजेत् । तस्माद्दीक्षां प्रयत्नेन सदा कुर्य्याच्च तान्त्रिकीम्" पञ्चदशपटले "अदीक्षिता ये कुर्वन्ति जपपूजादिकाः क्रियाः । न भवन्ति प्रिये ! तेषां शिलायामुप्तबीजवत्" कल्पसूत्रटीकाधृतकुलार्णवतन्त्रे "रसेन्द्रेण यथा विद्धमयः सुवर्णतां व्रजेत् । दीक्षाविद्धस्तथैवात्मा शिवत्वं लभते प्रिये ! दीक्षाग्निदग्धकर्मासौ पाशाद्विच्छिन्नबन्धनः । गतस्तस्य कर्मबन्धो निर्जीवश्च शिवो भवेत् । गतं शूद्रस्य शूद्रत्वं विप्रस्यापि च विप्रता । दीक्षासंस्कारसंभिन्ने जातिभेदो न विद्यते । शिवलिङ्गे शिलाबुद्धिं कुर्वन् यत् पापमाप्नुयात् । दीक्षितस्यापि पूर्वत्वं स्मरन् तत् पापमाप्नुयात् । द्वादशान्तौ हृत्पद्मजातिलिङ्गं प्रतिष्ठितम् । यथोच्यते तथा शूद्राः सर्वे वर्णाश्च दीक्षिताः । येन पूजितमात्रेण चाब्रह्मभुवनान्तकम् । पूजितं तेन सर्वं स्याद्दीक्षितेन न संशयः । नादीक्षितस्य कार्यं स्यात्तपोभिर्नियमव्रतैः । न तीर्थगमनेनापि न च शारीरयन्त्रणैः" । पञ्चमखण्डे षष्ठोल्लासेऽपि "गवां सर्पिः शरीरस्थं न करोत्यात्मपोषणम् । स्वकर्म चरितं दत्तं पुनस्तासेव पोषयेत् । एवं सर्वशरीरस्थं सर्पिर्वत् परमेश्वरी । विना चोपासनाद्देवि ! न ददाति फलं नृणाम्" । पुरश्चरणरसोल्लासे प्रथमपटले "न च दीक्षा-

परं स्नानं न च दीक्षापरं तपः। न च दीक्षापरं कालं तस्माद्दीक्षा गरीयसी”

तत्र देशकालादि तन्त्रसारे निर्णीतं यथा “वृषे सिंहे च कन्यायां धनुर्मीनाख्यलग्नके। चन्द्रतारानुकूले च कुर्य्याद्दीक्षाप्रवर्त्तनम्। स्थिरलग्नं विष्णुमन्त्रे शिवमन्त्रे चरः शुभः। द्विःस्वभावगतं लग्नं शक्तिमन्त्रे प्रशस्यते। त्रिषडायगताः पापाः शुभाः केन्द्रा त्रिकोणगाः। दीक्षायान्तु शुभाः सर्वे रन्ध्रस्थाः सर्वनाशकाः”। शुक्लपक्षे भवेद्दीक्षा कृष्णेऽप्या पञ्चमाह्निनात्”। निषिद्धमासेऽपि तत्तद्विशेषो वनिभिरुदितः रत्नावल्याम् “षष्ठी भाद्रपदे मासि तथा कृष्णा चतुर्दशी। कार्त्तिके नवमी शुक्ला मार्गे शुक्ल तृतीयिका। पौषे च नवमी शुक्ला माघे शुक्लचतुर्थिका। फाल्गुने नवमी शुक्ला चैत्रे कामचतुर्दशी”। त्रयोदशीति केचित्। “वैशाखे साऽक्षया चैव ज्यैष्ठे दशहरा तिथिः। आषाढे नवमी शुक्ला श्रावणे कृष्णपञ्चमी। एतानि देवपर्वाणि तीर्थकोटिफलं लभेत्। अत्र दीक्षा प्रकर्त्तव्या न मासञ्च परीक्षयेत्। न वारं न च नक्षत्रं न तिथ्यादिकदूषणम्। न योगकरणञ्चैव शङ्करेण च भाषितम्”। अन्यत्र। “चैत्रे त्रयोदशी शुक्ला वैशाखैकादशी सिता। ज्यैष्ठे चतुर्दशी कृष्णा आषाढे नागपञ्चमी। श्रावणैकादशी भाद्रे रोहिणीसंयुताष्टमी। आश्विने च महापुण्या महाष्टम्यभीष्टदा। कार्त्तिके नवमी शुक्ला मार्गशीर्षे तथा सिता। षष्ठी चतुर्दशी पौषे माघेऽप्येकादशी सिता। फाल्गुने च सिता षष्ठी चेति कालविनिर्णयः”। योगिनीतन्त्रे “अयने विषुवे चैव ग्रहणे चन्द्रसूर्य्ययोः। रविसंक्रान्तिदिवसे युगाद्यायां सुरेश्वरि!। मन्वन्तरासु सर्वासु महापूजादिने तथा। चतुर्थी पञ्चमी चैव चतुर्दश्यष्टमी तथा। तिथयः शुभदाः प्रोक्ताः” इत्यादिवचनात् चतुर्दश्यष्टमीति शक्तिविषयम् चतुर्थीति गणेशविषयम् तत्तत्कल्पोक्तत्वात् “निन्दितेष्वपि कालेषु दीक्षोक्ता ग्रहणे शुभा। सूर्य्यग्रहणकालस्य समानो नास्ति भूतले। विशेषतो महादेवि! दीक्षाग्रहणकर्मणि। तत्र यद्यत्कृतं सर्वमनन्तफलदं भवेत्। रविसंक्रमणे चैव सूर्य्यस्य ग्रहणे तथा। तत्र लग्नादिकं किञ्चिच विचार्य्यं कदाचन। रविसंक्रमणे चैव नान्यदन्वेषितं भवेत्। न वारतिथिमासादिशोधनं सूर्य्यपर्वणि”। एवं चन्द्रग्रहणेऽपि तथा च रुद्रयामले “न कुर्य्यात्कार्त्तिकीं दीक्षामुपरक्ते विभावसौ। न कुर्य्याद्वैष्णवीं तान्तु यदि चन्द्रमसो ग्रहः”। एतच्च गोपालश्रीविद्येतरविषयम्। “अन्येषु पुण्ययोगेषु ग्रहणे चन्द्रसूर्य्ययोरिति” गौतमीयात्। सूर्य्यग्रहणकाले तु नान्यदन्वेषितं भवेत्” इति योगिनीहृदयाच्च। वस्तुतस्तु “श्रीपराकालीतारा-जानि लोपादौर्गस्य यो मनुः। सूर्य्यसोपग्रहे लब्धे लब्धां शीघ्रफलप्रदः” इत्युक्तवचनानुरोधात् पूर्ववचने शक्तिमन्त्रपदं श्रीविद्याद्यतिरिक्तशक्तिमन्त्रपरमिति साम्प्रदायिकाः। “अमावास्या सोमवारे भौमवारे चतुर्थिका। सप्तमी रविवारे च सूर्य्यग्रहणतः समा। शिष्यामाहूय गुरुणा कृपया दीयते यदि। तदा लग्नादिकं किञ्चिच विचार्य्यं कदाचन। तथा “सर्वे वारा ग्रहाः सर्वे नक्षत्राणि च राशयः। यस्मिन्नहनि सन्तुष्टो गुरुः सर्वे शुभावहाः”। योगिनीतन्त्रे “ग्रहणे च महातीर्थे नास्ति कालस्य निर्णयः”। अथ वक्ष्यामि दीक्षायाः स्थानं तन्त्रानुसारतः। गोशालायां गुरोर्गेहे देवागारे च कानने। पुण्यक्षेत्रे तथोद्याने नदीतीरे च मन्त्रवित्। धात्रीविल्वसमीपे च पर्वताग्रगुहासु च। गङ्गायास्तु तटे वापि कोटिकोटिगुणं भवेत्”। दीक्षायां निषिद्धदेशमाह “गयायां भास्करक्षेत्रे विरजे चन्द्रपर्वते। चट्टले च मतङ्गे च तथा कन्याश्रमेषु च। न कुर्य्यात्तु दीक्षां तीर्थेष्वेतेषु पार्वति!”। वाराहीतन्त्रे “शुक्रोऽस्तो यदि वा वृद्धो गुर्वादित्यो भवेद्यदि। मेषवृश्चिकसिंहेषु तदा दोषो न विद्यते”। महाविद्यासु सर्वासु कालादिविचारो नास्ति तदुक्तं मुण्डमालातन्त्रे “कालादिशोधनं नास्ति न चामित्रादि दूषणम्”। २ कर्मणि च “विवाहदीक्षां निरवर्त्तयत् गुरुः” “विवाहदीक्षातिलकं चकार” रघुः नियमे “एतांस्त्वाचरेदेव दीक्षा विप्रो वने वसन्” मनुः।

**दीक्षागुरु** पु० दीक्षायां गुरुरुपदेष्टा। मन्त्राद्युपदेष्टरि।

**दीक्षान्त** पु० दीक्षायाः प्रधानयागस्य अन्तः अन्तोपलक्षितः तत्समापको यागभेदः। अवभृथस्नानरूपे यागभेदे अमरः।

**दीक्षापति** पु० ६त०। दीक्षापालके सोमे। “दीक्षां मे दीक्षापतिर्मन्यतामनु” यजु०५।६। “दीक्षायाः पतिः पालकः सोमः” वेददी०। दीक्षापालादयोऽप्यत्र।

**दीक्षायूप** पु०न० दीक्षाङ्गं यूपः। दीक्षाङ्गपश्वादिमारणार्थे काष्ठमये पदार्थभेदे “रणयज्ञदीक्षायूपेन” काद०

**दीक्षित** त्रि॰दीक्ष–कर्त्तरि क्त दीक्षा जाताऽस्य तार॰इतच् वा। १सोमादियागाङ्गव्रतभेदधारिणि २संजाततन्त्रोक्त दीक्षे च दीक्षाशब्दे उदा॰। "वर्णानां ब्राह्मणश्चापि विप्रेश दीक्षितो द्विजः" भा॰अनु॰६१८स्लो॰ "अवाच्यो दीक्षितो नाम्ना यवीयानपि यो भवेत्। भोभवत्पूर्वकन्त्वेनम-भिभाषेत धर्मवित्" "नाक्रामेत् कामतश्छायां बभ्रुणो दीक्षितस्य च" मनुः। ३काम्पिल्लनगरस्थविप्रभेदे तत्कथा "आसीत् काम्पिल्लनगरे सोमयाजिकुलोद्भवः। दीक्षितो यज्ञदत्ताख्यो यज्ञविद्याविशारदः। वेदवेदाङ्ग वेदार्थवेदोक्ताचारचञ्चुरः। राजमान्यो बहुधनो वदान्यः कीर्त्तिभाजनम्। अग्निशुश्रूषणरतो वेदाध्ययनतत्परः" काशीख॰ १३अ॰। स दीक्षितः अयनं यस्याः गौरा॰ ङीष्। दीक्षितायनी तत्पत्न्यां स्त्री "महापतिव्रतां सम्यक् पत्नीं प्रोवाच तामथ। दीक्षितायनि! कुत्रासि क्व ते गुणनिधिः सुतः। अथ तिष्ठतु किन्तेन क्व सा मम शुभोर्मिका। अङ्गोद्वर्त्तनकाले या त्वया मेऽङ्गुलितो हृता। नवरत्नमयीं शीघ्रं तामानीय प्रयच्छ मे। इति श्रुत्वाथ तद्वाक्यं भीता सा दीक्षितायनी" काशीख॰ १३अ॰ यजमाने ४संजातदीक्षे च। "संग्रामाध्वर-दीक्षितो नरपतिः पत्नी गृहीतव्रता" वेणीसं॰ "दीक्षितो न ददाति" श्रुतिः।

**दीक्षित** त्रि॰दीक्ष–शीलार्थे युचं बाधित्वा तृच्। दीक्षाशीले

**दीति** स्त्री दीप–क्तिन् वेदे पलोपः। दीप्तौ "सुदीतिरध्या-दित्येभ्यः" ता॰ब्रा॰१६।११ "सुदीतिः सुदीप्तिरसि" भा॰।

**दीदि** पु॰ दीप बा॰ दि–द्वित्वे॰। द्योतमाने। "अश्विना पिबतं मधु दीद्यग्नी शुचिव्रता" ऋ॰ १।१५।१॰ दीद्यग्नी द्योतमानाग्नियुक्तौ" भा॰

**दीदिवि** पु॰ दिव–क्विन् अभ्यासे तस्य दीर्घः वलि वलोपः। १स्वर्गे २भक्ष्ये च उज्ज्वल॰। ३अन्ने अस्त्री अमरः। पुनः-पुनर्भृशं वा दीव्यति दिव–यङ्लुक् इन् न गुणः अभ्यासदीर्घः। ४पुनःपुनर्भृशं वा द्योतने त्रि॰ "राज-न्तमध्वराणां गोपामृतस्य दीदिविम्" ऋ॰१।१।८ "दीदि-विम् पुनःपुनर्भृशं वा द्योतकम्" भा॰

**दीधिति** स्त्री दीधी–क्तिन् यहादित्वादिट् "यीवर्णयोर्दीधि-वेव्योः" पा॰ इकारलोपश्च। १किरणे "सजिलमये शशिनि रवेर्दीधितयो मूर्च्छितास्तमोनैशम्। क्षपयन्ति दर्पणोदरनिहिता इव मन्दिरस्यान्तः" इ॰रं॰ "पुपोष वृद्धिं हरिदश्वदीधितेः" रघुः "अस्तदीधितिरिव विदर्भजे!" नैष॰। "स्वाधःसुधादीधितिमानन्ति" शि॰शि॰ २रघुनाथ-शिरोमणिकृते चिन्तामणिटीकाभेदे ३अङ्गुलौ निघण्टुः।

**दीधितिकृत्** पु॰दीधितिं कृ–क्विप्। चिन्तामणिटीकाभेद-कारके रघुनाथशिरोमणिपण्डिते

**दीधितिमत्** पु॰ दीधितयः भूम्ना सन्त्यस्य मतुप्। १सूर्ये "सरसां सुप्तपद्मानां प्रातर्दीधितिमानिव"। "शरद्घ-मात् दीधितमानिवोत्थः" कुमा॰। २अर्कवृक्षे च।

**दीधी** देवने दीप्तौ च अदा॰ जक्षा॰ आत्म॰ अक॰ सेट्। दीधीते अदीधिष्ट। दीध्ये दीध्याञ्चक्रे। दीधिता दीधिष्यते दीधितिः। "दीधीवेवीसमः कश्चिद्गुणवृद्ध्यो-रभाजनम्" सा॰ द॰।

**दीन** त्रि॰ दी–क्त तस्य नः। १दुःखिते अमरः। २भीते च। ३तगरपुष्पे न॰ ४मूषिकायां स्त्री मेदि॰। "महासुरेवे-वादीनमनाहीनयमीरितम्" माघः। "दिनानि दीनो-द्धरणोचितस्य" रघुः।

**दीनदयालु** पु॰ दीने दयालुः। दुःखिते १दयालौ "दीनद-यालुतयाऽवनिपालः" नैष॰।

**दीननाथ** ६त॰। दुःखितजनभर्त्तरि।

**दीनार** पु॰दी–आरक् हुट् च। १स्वर्णभूषणे २मुद्रायां ३सुवर्ण-कर्षद्वये ४निष्कमाने अमरभरतौ। "दीनारोरेभकैर-ष्टाविंशत्या परिकीर्त्तितः। सुवर्णसप्ततिसोमाशोरोपक उच्यते" विष्णुगुप्तोक्ते सप्तमांशाधिकहेमरत्तिकारूप-रोपकैरष्टाविंशत्या परिमिते ५हालि शद्गत्तिकामिते हेम्नि च प्राय॰त॰ रघुः।

**दीप** दीप्तौ दि॰आत्म॰अक॰सेट्। दीप्यते अदीपि–अदीपिष्ट। दिदीपे दीप्तः। णिच् अदीदिपत्–त अदिदीपत् त। दीप्तिः। दीपनं दीपकः द्रीप्रः। "दीप्यमानः स्वतेजसा" मनुः। "पुनर्दिदीपे मदर्दुर्हिनश्रीः" रघुः "देवाहवेष्व-दीपिष्ट" "सधूमदीप्ताग्निरुचीनि रेजुः" भट्टिः "ततः शकुनयो दीप्ताः मृगाश्च क्रूरभाषिणः" हरिवं॰१७१ अ॰। "हिंस्रेषु दीप्तास्त्रधरः कुमारः" भट्टिः "यावत् कर्माणि दीप्यन्ते तावत् संसारवासना:" कुलार्ण॰। उपसर्गपूर्वकस्य तत्तदुपसर्गद्योत्यार्थयुक्ते तदर्थे "आदिद्यदादीप्तकशा-नुकल्पम्" भट्टिः "यस्य यद्रे तसः प्रथममुददीप्यत" ऐत॰ब्रा॰ ३।२४ "क्रुध्यन्ति परिदीप्यन्ति भूमिजस्याधिष्ठिते" भा॰ शा॰ २०२६ श्लो॰ आर्षः पदव्यत्ययः। "ते शराः स्वस-मुत्थेन प्रदीप्ताश्चित्रभानुना" भा॰ ७॰१८१ अ॰

**दीप** पु॰ दीपयति स्वं परञ्च दीप–णिच्–अच्। स्वपर-

प्रकाशके तैलादिस्नेहयोगेन १वर्त्तिकादाहकशिखान्विते प्रदीपे कार्त्तिके तद्दानप्रशंसा पाद्मे उत्तरख० यथा "शृणु दीपस्य माहात्म्यं कार्त्तिके च हरिप्रिय !। यस्य श्रवणमात्रेण दीपदाने मतिर्भवेत्। सूर्य्यग्रहे कुरुक्षेत्रे नर्म्मदायां शशिग्रहे। तुलादानस्य यत् पुण्यं तदूर्जे दीपदानतः। घृतेन दीपकं यस्तु तिलतैलेन वा पुनः। ज्वालयेन्मुनिशार्दूल ! अश्वमेधेन तस्य किम्। तेनेष्टं क्रतुभिः सर्व्वं कृतं तीर्थावगाहनम्। दीपदानं कृतं येन कार्त्तिके केशवाग्रतः। तावद्गर्जन्ति पापानि देहेऽस्मिन्मुनिसत्तम !। यावत् कार्त्तिकमासे न दीपदानं कृतं भवेत्। तावद्गर्जन्ति पुण्यानि स्वर्गे मर्त्त्ये रसातले। यावत्तु ज्वलते दीपः कार्त्तिके केशवाग्रतः। श्रूयतेऽत्रापि पितृभिर्गाथा गीता महामुने !। भविष्यन्ति कुलेऽस्माकं कदाचित्ते सुता भुवि। कार्त्तिके दीपदानैर्ये तोषयिष्यन्ति केशवम्। अपि नस्ते भविष्यन्ति कुले सुचरिता सुतैः। दीपदानं कार्त्तिके ये दास्यन्ति हरितुष्टिदम्। गयायां पिण्डदानेन कृतं नः प्रीणनं सुतैः। यैश्चापि कार्त्तिके दत्तो दीपस्तुष्टिकरो हरेः। दीपं दास्यन्ति ये पुत्रास्तुष्ट्यर्थं चक्रपाणिनः। कार्त्तिके तैर्हि [illegible] ! नरकादुद्धृता वयम्। मन्त्रहीनं क्रियाहीनं शुद्धिहीनं जनार्द्दन !। व्रतं सम्पूर्णतां यातु कार्त्तिके दीपदानतः। अनेनैव हि मन्त्रेण दीपं सङ्कल्पयेन्मुने !। मधुसूदनतुष्ट्यर्थं कार्त्तिके मुनिपुङ्गव !"। वामनपुराणे च "दास्यते देवदेवाय दीपपुष्पानुलेपनम्। अपि नः स कुले भूयादेकादश्यां तिथौ नरः। करिष्यत्युपवासन्तु सर्व्वपातकहानिदम्। इत्थं पितृणां वचनं श्रुत्वा नृपतिसत्तमः। ददौ च दीपान् विधिवत् विष्णोरायतने बहिः। सुगन्धतैलसंपूर्णान् दीपान् सहततैलकान्। सर्षपस्य सुतैलेन मधुकानलसम्भवैः। दीपप्रदानान्नरकानन्धतामिस्रसंज्ञकान्। तीर्त्वा स भार्य्यया ब्रह्मन् ! विष्णुलोकमगात्ततः" वराहपुराणे दीपं स्पृष्ट्वा वैधकर्म्मकरणे दोष उक्तो यथा

"दीपं स्पृष्ट्वा तु यो देवि ! मम कर्म्माणि कारयेत्। तस्यापराधाद्वै भूमे ! पापं प्राप्नोति मानवः। तच्छृणुष्व महाभागे ! कथ्यमानं मयानघे !। जायते षष्टिवर्षाणि कुष्ठी गात्रपरिप्लुतः। चाण्डालस्य गृहे तत्र एवमेव न संशयः। एवं भुक्त्वा तु तत्कर्म्म मम क्षेत्रे मृतो यदि। मद्भक्तश्चैव जाये[illegible]। प्रायश्चित्तं प्रवक्ष्यामि दीपस्य स्पर्शनाद्भुवि। तरन्ति मनुजा येन कष्टं चाण्डालयोनिषु। यस्य कस्यापि मासस्य शुक्लपक्षे च द्वादशी। चतुर्थभक्तमाहारमाकाशशयने स्वपेत्। दीपं दत्त्वापराधाद्वै तरन्ति मनुजा भुवि। शुचिर्भूत्वा यथान्यायं मम कर्म्मपथे स्थितः। एतत्ते कथितं देवि ! स्पर्शनात् दीपकस्य तु। संसारशोधनञ्चैव यत् कृत्वा लभते शुभम्"। वर्त्तिस्थज्वलदग्निशिखा हि दीपः तदङ्गस्नेहादिनियमो यथा वह्निपुराणे "घृतं तैलञ्च दीपार्थे स्नेहान्यन्यानि वर्जयेत्"। दीपभेदास्तद्दशाभेदाश्च कालिका० पु० ६८ अ० उक्ता यथा "पुरश्चरणकृत्यासु दीपं शृणुष्व भैरव !। दीपेन लोकान् जयति दीपस्तेजोमयः स्मृतः। चतुर्व्वर्गप्रदो दीपस्तस्माद्दीपैर्यजेत् श्रिये" इत्युपक्रम्य "घृतप्रदीपः प्रथमस्तिलतैलोद्भवस्ततः। सार्षपः फलनिर्य्यासजातो वा राजिकोद्भवः। दधिजः खाण्डजश्चैव प्रदीपाः सप्त कीर्त्तिताः। पद्मसूत्रभवा दर्भगर्भसूत्रभवाऽथ वा। शणजा वादरी वापि फलकोषोद्भवाऽथ वा। वर्त्तिका दीपकृत्येषु सदा पञ्चविधाः स्मृताः। तैजसं दारवं लौहं मार्त्तिक्यं नारिकेलजम्। तृणध्वजोद्भवं वापि दीपपात्रं प्रशस्यते। दीपवृक्षाश्च कर्त्तव्यास्तैजसाद्यैश्च भैरव !। वृक्षेषु दीपो दातव्यो न तु भूमौ कदाचन। सर्व्वसहा वसुमती सहते न त्विदं द्वयम्। अकार्य्यपादघातञ्च दीपतापं तथैव च। तस्माद्यथा तु पृथिवी तापं नाप्नोति वै तथा। दीपं दद्यान्महादेव्यै अन्येभ्योऽपि च भैरव !। कुर्व्वन् पृथिवीतापं यो दीपं सत्सृजेन्नरः। स ताम्रतापं नरकमाप्नोत्येव शतं समाः। सुहृत्तवर्त्तिसंस्नेहपात्रेऽभग्ने सुदर्शने। तृणमये वृक्षकोटौ तु दीपं दद्यात् प्रयत्नतः। लभ्यते यस्य तापस्तु दीपस्य चतुरङ्गुलात्। न स दीप इति ख्यातो ह्योघवह्निस्तु स स्मृतः। नेत्राह्लादकरः सार्च्चिर्दूरतापविवर्जितः। सुशिखः शब्दरहितो निर्धूमो नातिह्रस्वकः। दक्षिणावर्त्तवर्त्तिस्तु प्रदीपः श्रीविवृद्धये। दीपवृक्षस्थिते पात्रे शुद्धस्नेहप्रपूरिते। दक्षिणावर्त्तवर्त्त्या तु चारुदीप्तः प्रदीपकः। उत्तमः प्रोच्यते पुत्र ! सर्व्वतुष्टिप्रदायकः। वृक्षेण वर्ज्जितो दीपो मध्यमः परिकीर्त्तितः। विहीनः पात्रतैलाभ्यामधमः परिकीर्त्तितः। शाणं वा वादरं वासं जीर्णं मलिनमेव वा। उपयुक्तन्तु नो दद्यात् वर्त्तिकार्थन्तु साधकः। उपाददान् नूतनमेव सततं श्रीविवृद्धये। क्षौमजं रोमजं वस्त्रं

वर्त्तिकार्थं न चाददेत्। न मिश्रीकृत्य दद्यात्तु दीपं स्नेहान् घृतादिकान्। कृत्वा मिश्रीकृतं स्नेहं तामिस्रं नरकं व्रजेत्। वसामज्जास्थिनिर्यासैः स्नेहैः प्राण्यङ्गसम्भवैः। प्रदीपं नैव कुर्यात्तु कृत्वा पङ्के विषीदति। अस्थिपातेऽथ वा गर्त्ते दुर्गन्धाद्युपशालिनि। नैव दीपः प्रदातव्यो विबुधैः श्रीविवृद्धये। नैव निर्वापयेद्दीपं कदाचिदपि यत्नतः। यतनं लक्षणोपेतं देवार्थमुपकल्पितम्। न हरेज्जनतो दीपं तथा लोभादिना नरः। दीपहर्त्ता भवेदन्धः काणो निर्वापको भवेत्। उद्दीप्तदीपप्रतिमः काष्ठकाष्ठगसम्भवः। विल्वधीोद्भवमेवाथ दीपालाभे निवेदयेत्। उल्मुकं नैव दीपार्थे कदाचिदपि चोत्सृजेत्। प्रपद्यार्थन्तु तं दद्यादुपचाराद्वहिः कृतः। एवं वां कथितो दीपो धूपश्च शृणुतं सुतौ!"। श्राद्धे वस्त्रवर्त्तियुक्तदीपनिषेधो यथा "दीपं वर्जेत् वस्त्रवर्त्तिप्रलयं तैलमेव च"। योगिनी॰त॰ २य भागे ५पटलः।

पुरुषस्य दीपनिर्वापणे दोषो यथा। "दीपनिर्वापणात् पुंसः कुष्माण्डच्छेदनात् स्त्रियः। अचिरेणैव कालेन वंशनाशो भवेद्ध्रुवम्" ति॰त॰। देवदत्तदीपस्य तु निर्वापणम् विधानपारिजाते उक्तं यथा "स्वयं निर्वापितं दीपमाजिघ्रन्ति सुरारयः। तस्मान्निर्वापयेद्दीपं देवानां प्रीणतुष्टये"। कार्त्तिककृष्णचतुर्दश्यां नरकनिवृत्तये दीपदानं यथा "नरकाय प्रदातव्यो दीपः संपूज्य देवताः" तिथितत्त्वधृतलिङ्गपुराणम्।

"स्नाने धूमे तथा दीपे नैवेद्ये भूषणे तथा। घण्टानादं प्रकुर्वीत तथा नीराजनेऽपि च। विधानपारिजातोक्तः दीपदाने घण्टानादोविधेयः। शिवालये दीपोद्दीपनमाहात्म्यं काशीख॰ १२अध्याये दृश्या दिङ्मात्रमत्रोच्यते "स दीपवासनायोगात् बहून् दीपान् प्रदीप्य वै। अलकायाः पतिरभूद्रत्नदीपशिखाश्रयः"। दीपवर्त्तिश्च कर्पूरगर्भिणी कार्या "वर्त्त्या कर्पूरगर्भिण्या सर्पिषा तिलजेन वा। आरोप्य दर्शयेद्दीपानुच्चैः सौरभशालिनः" शारदाति॰। तन्त्रसारे "कर्पूरादियुता वर्त्तिः सा च कार्पासनिर्मिता। सम्प्राप्ता सुसंस्कृतो दीपः स्यात्तुरगकुलः" कार्त्तवीर्य्यप्रियार्थदीपविशेषस्तु कार्त्तवीर्यदीपशब्दे १६८४ पृ॰उक्तः। दीपदानफलादिकम् भा॰अनु॰६८अ॰उक्तं यथा

"दीपदाने प्रवक्ष्यामि फलयोगमनुत्तमम्। यथा येन यदा चैव प्रदेया यादृशाश्च ते। ज्योतिस्तेजः प्रकाशं वाऽप्यूर्द्धगञ्चापि वर्ण्यते। प्रदानं तेजसां तस्मात्तेजो वर्द्धयते नृणाम्। अन्धन्तमस्तमिस्रञ्च दक्षिणायनमेव च। उत्तरायणमेतस्माज्ज्योतिर्दानं प्रशस्यते। यस्मादूर्द्धगमेतत्तु तमसश्चैव भेषजम्। तस्मादूर्द्धगतेर्दाता भवेदत्रेति निश्चयः। देवास्तेजस्विनो यस्मात् प्रभावन्तः प्रकाशकाः। तामसा राक्षसाश्चैव तस्माद्दीपः प्रदीयते। आलोकदानाच्चक्षुष्मान् प्रभायुक्तो भवेन्नरः। तान् दत्त्वा नोपहिंसेत न हरेन्नोपनाशयेत्। दीपहर्त्ता भवेदन्धस्तमोगतिरसुप्रभः। दीपप्रदः स्वर्गलोके दीपमालेव राजते। हविषा प्रथमः कल्पो द्वितीयश्चौषधीरसैः। वसामेदोऽस्थिनिर्यासैर्न कार्यः पुष्टिमिच्छता। गिरिप्रपाते गहने चैत्यस्थाने चतुष्पथे। दीपदाता भवेन्नित्यं य इच्छेद्भूतिमात्मनः। कुलोद्योतो विशुद्धात्मा प्रकाशत्वञ्च गच्छति। ज्योतिषाञ्चैव सालोक्यं दीपदाता नरः सदा" दीपस्य शुभाशुभलक्षणम् वृ॰सं॰ ८४अ॰ उक्तं यथा

"वामावर्त्तो मलिनकिरणः सस्फुलिङ्गोऽल्पमूर्त्तिः क्षिप्रं नाशं व्रजति विमलस्नेहवर्त्त्यन्वितोऽपि। दीपः पापं कथयति फलं शब्दवान् वेपनश्च व्याकीर्णार्चिर्विशलभमरुद् यश्च नाशं प्रयाति। दीपः संहतमूर्त्तिरायततनुर्निर्वेपनो दीप्तिमान् निःशब्दो रुचिरः प्रदक्षिणगतिर्वैदूर्य्यहेमद्युतिः। लक्ष्मीं क्षिप्रमभिव्यनक्ति रुचिरं यश्चोद्यतं दीप्यते शेषं लक्षणमग्निलक्षणसमं योज्यं यथायुक्तितः" "प्रवर्त्तितो दीप इव प्रदीपात्" निशीथदीपाः सहसा हतत्विषः" रघुः। दीपयत्यर्थान् वा। २प्रकाशके यथा चित्रदीपादयः पञ्चदश्याम्।

**दीपक** पु॰त्रि॰दीपयति स्वं परञ्चार्थं दीपि—ण्वुल्। स्वपरप्रकाशके स्त्रियां टाप् अतइत्त्वम् दीपिका। षट्कर्मदीपिका ज्योतिषदीपिका २प्रदीपे पु॰३अलङ्कारभेदे अलङ्कारशब्दे ३९९पृ॰दृश्यम्। ४यमान्यां रत्नमाला ५लोधनलके इच्चे शब्दरत्ना॰ अनयोरग्निदीपकत्वात् तथात्वम् ६कुङ्कुमे न॰। ७खगपाहिणि(बाज)(सिकरा) प्रसिद्धे खगे पुंस्त्री हेमच॰दमालावृत्तभेदे "तुरगैकमुपधाय सुनरेन्द्रमवधाय। इह दीपकमवेहि वसुमत्समधेहि" तल्लक्षणम्। ९रागभेदे पु॰ स च हनूमन्मते द्वितीयोरागः सूर्यनेत्राद्विनिर्गतः षड्जस्वराश्रयः ग्रीष्मर्त्तौ मध्याह्ने गेयः। क्षुद्रोदीपःङीप्। स्वार्थे—क ह्रस्वः। दीपिका क्षुद्रदीपे "स शंबरारेर्बलिदीपिका इव" नैष॰।

**दीपकलिका** स्त्री दीपस्य कलिकेव । १दीपशिखायां शूलपाणिकृते २याज्ञवल्क्यसंहिताटीकाभेदे च ।

**दीपकिट्ट** न० ६त० । कज्जले शब्दार्थकल्पतरुः ।

**दीपकूपी** स्त्री दीपस्य कूपीव । दीपवर्त्तिकायाम् दीपदशायाम् शब्दमा० ।

**दीपखोरी** स्त्री खोर–गत्याघाते णिच्–अच् गौरा० ङीष् । ६त०। दीपवर्त्तिकायां (शलते) शब्दमाला ।

**दीपध्वज** पु० दीपस्य ध्वज इव । कज्जले जटाध० ।

**दीपन** त्रि० दीपयति वह्निम् दीप–णिच्–ल्यु । १तगरमूले रत्नमा० २कुङ्कुमे त्रिका० । ३मयूरशिखावृक्षे ४शालिञ्चशाके च पु० शब्दच० ५कासमर्दे ६पलाण्डौ च पु० राजनि० । ७दीपकमात्रे त्रि० । भावे ल्युट् । ८प्रकाशने न० ९याद्यमन्त्रसंस्कारभेदे च "मन्त्राणां दश कथ्यन्ते संस्काराः सिद्धिदायिनः । जननं जीवनं पश्चात्ताडनं बोधनं तथा । अथाभिषेको विमलीकरणाप्यायने तथा । तर्पणं दीपनं गुप्तिर्दशैता मन्त्रसंस्क्रियाः । "तारमायारमायोगो मनोर्दीपनमुच्यते" शारदाति० । दीप्यतेऽनया दीपि–करणे ल्युट् ङीप् । दीपनी १०मेथिकायां ११पाठायां १२यवान्यां स्त्री राजनि० । १३दीपनसाधने त्रि० स्त्रियां ङीप् । "त्रिफला कफपित्तघ्नी मेहकुष्ठविनाशिनी । चक्षुष्या दीपनी" "निहन्याद्दीपनं गुल्मपीनसाग्न्यल्पतामपि" । "कटुकोदीपनः पाचनो रोचनः शोधनः" इति च सुश्रु० ।

**दीपनीय** पु० दीपनाय जठरानलोद्दीपानाय हितः छ । १यवान्यां राजनि० औषधवर्गभेदे "पिप्पली पिप्पलीमूलं चव्यचित्रकनागरम् । दीपनीयः स्मृतो वर्गः कफानिलगदापहः" चक्रपाणिदत्तः । दीप–णिच–अनीयर् । २ज्वालनीये त्रि० ।

**दीपपादप** पु० दीपस्य पादप इव आश्रयत्वात् । (पिलसुज) दीपाधारे शब्दार्थकल्प० दीपवृक्षादयोऽप्यत्र ।

**दीपपुष्प** पु० दीपः तत्कलिकेव पुष्पमस्य । चम्पके राजनि० ।

**दीपभाजन** न० ६त० । दीपपात्रे तज्ज्वालनतैलाधारे पात्रे "वामनार्चिरिव दीपभाजनम्" रघुः ।

**दीपमाला** स्त्री दीपानां माला । श्रेणीभूते प्रदीपसंघे "उद्बुद्धं च जगद्धात्रीं पूजयेद्दीपमालया" ति०त० ।

**दीपवत्** त्रि० दीप+अस्त्यर्थे मतुप् मस्य वः । १दीपयुक्ते गृहादौ स्त्रियां ङीप् ङीवत्नः २कामाख्यापीठस्थे नदीभेदे "शाश्वती कथिता या तु नदी मत्स्यध्वजा स्थिता । तस्याः पूर्वे समाख्याता नदी दीपवती मता । एषा च हिमवज्जाता ह्रिन्दनी दीपवत्समः । तेन देवमनुष्येषु नदी दीपवती स्मृता । दीपवत्याः पूर्वतस्तु शृङ्गाटोनाम पर्वतः" कालिका०पु० ८२अ० ।

**दीपशत्रु** पु० ६त० । कीटभेदे (जोनाकीपोका) पारस्करनि० ।

**दीपशिखा** पु०६त०। १प्रदीपज्वालायाम् उपचारात् तज्जाते २कज्जले च शब्दार्थचन्द्रिका ।

**दीपशृङ्खला** स्त्री दीपानां शृङ्खलेव । दीपावल्यां हारा०

**दीपान्वित** त्रि० ६त० । १दीपयुक्ते गृहादौ श्मशानचत्वरादिषु देयदीपयुक्तायां मुख्याश्विनस्य गौणकार्त्तिकस्य २अमावास्यायाम् स्त्री तत्कर्त्तव्यादि यथा

भविष्यपुराणे "येयं दीपान्विता राजन् । ख्याता पञ्चदशी भुवि । तस्यां दद्याच्च चेद्दत्तं पितृणां वै महालये । प्रदोषसमये लक्ष्मीं पूजयित्वा यथाक्रमम् । दीपवृक्षास्तथा कार्या भक्त्या देवगृहेष्वपि । चतुष्पथे श्मशानेषु नदीपर्वतसानुषु । वृक्षमूलेषु गोष्ठेषु चत्वरेषु गृहेषु च । वस्त्रैः पुष्पैः शोभितव्याः क्रयविक्रयभूमयः । दीपमालापरिक्षिप्ते प्रदोषे तदनन्तरम् । ब्राह्मणान् भोजयित्वादौ विभज्य च बुभुक्षितान् । अलङ्कृतेन भोक्तव्यं नववस्त्रोपशोभिना । स्निग्धैर्दग्धैर्विदग्धैश्च बान्धवैर्वं तकैः सह" तिथित० ।

निर्णयसिन्धौ तत्र विशेष उक्तो यथा

कालादर्शे "प्रत्यूषे अश्वयुग्दर्शे कृताभ्यङ्गादिमङ्गलः । भक्त्या प्रपूजयेद्देवीमलक्ष्मीविनिवृत्तये" अस्य व्याख्याने आदिशब्दात्सचलयुदकस्नानादेरुपसंग्रहः तदुक्तं पद्मपुराणे "स्वातिस्थिते रवाविन्दुर्यदि स्वातिगतो भवेत् । पञ्चत्वगुदकस्नायी कृताभ्यङ्गविधिर्नरः । नीराजितो महालक्ष्मीमर्चयन् श्रियमश्नुते । अश्वयुग्दर्श इति दर्शशब्दः प्रत्यूषे स्वातियुक्ततिथिपरः तदुक्तं ब्राह्मे "ऊर्जे शुक्लद्वितीयायां तिथिषु स्वातिकृत्तगे । मानवो मङ्गलस्नायी नैव लक्ष्म्या वियुज्यते" । तत्रैव "इषे भूते च दर्शे च कार्त्तिकप्रथमे दिने । यदा स्वातौ तदाभ्यङ्गस्नानं कुर्याद्दिनोदये" । कश्यपसंहितायां तु दीपावलिदर्शं प्रक्रम्य "इन्दुक्षयेऽपि संक्रान्तौ रवौ पाते दिनक्षये । तत्राभ्यङ्गो न दोषाय प्रातः पापापनुत्तये" इति । स्वातियोगं विनाप्यभ्यङ्ग उक्तः । मात्स्ये "दीपैर्नीराजनादत्र सैषा दीपावली स्मृता" । अत्र विशेषो हेमाद्रौ भविष्ये "दिवा तत्र न भोक्तव्यमृते बालातुराज्जनात् । प्रदोषसमये

लक्ष्मीं पूजयित्वा ततः क्रमात्। दीपवृक्षाश्च दातव्याः शक्त्या देवगृहेषु च" तत्रैवाभ्यङ्गमभिधाय "एवं प्रभातसमये त्वमावास्यां नराधिप!। कृत्वा तु पार्वणश्राद्धं दधिक्षीरघृतादिभिः। दीपान् दत्त्वा प्रदोषे तु लक्ष्मीं पूज्य यथाविधि। स्वलङ्कृतेन भोक्तव्यं सितवस्त्रोपशोभिना"। अयं प्रदोषव्यापी ग्राह्यः "तुलासंस्थे सहस्रांशौ प्रदोषे भूतदर्शयोः। उल्काहस्ता नराः कुर्युः पितॄणां मार्गदर्शनम्" इति ज्योतिषोक्तेः "दिनद्वये तस्य सत्त्वे परः "दण्डैकरजनीयोगे दर्शः स्यात्तु परेऽहनि। तदा विहाय पूर्वेद्युः परेऽह्नि सुखरात्रिका" इति तिथितत्त्वे ज्योतिर्वचनात्। दिवोदासीये तु प्रदोषस्य कर्मकालत्वात् "अर्द्धरात्रे भवत्येव लक्ष्मीराश्रयितुं गृहान्। अतः स्वलङ्कृता लिप्ता दीपैर्जाग्रज्जनोत्सवाः। सुधाधवलिताः कार्याः पुष्पमालोपशोभिताः" इति ब्राह्मोक्तेश्च प्रदोषार्द्धरात्रव्यापिनी मुख्या, एकैकव्याप्तौ परैव। प्रदोषस्य मुख्यत्वादर्द्धरात्रेऽनुष्ठेयाभावाच्च। यत्तु "अपराह्णे प्रकर्त्तव्यं श्राद्धं पितृपरायणैः। प्रदोषसमये राजन्! कर्त्तव्या दीपमालिका" इति क्रमः स सम्पूर्णतिथावेव प्राप्तेरनुवादो न विधिः। तत्तत्कर्मकालव्याप्तेर्बलवत्त्वात् सम्पूर्णतिथौ प्राप्त्या खण्डतिथावप्राप्त्या विध्यनुवादविरोधाच्चेत्युक्तम्। अतएव दर्शेऽपररात्रेऽलक्ष्मीनिःसारणमुक्तं मदनरत्ने भविष्ये "एवं गते निशीथे तु जने निद्रार्द्धलोचने। तावन्नगरनारीभिः शूर्पडिण्डिमवादनैः। निष्काश्यते प्रहृष्टाभिरलक्ष्मीः स्वगृहाङ्गणात्"। दीपावली (देओयाली) इति ख्याता तत्रार्थे

**दीपीय** त्रि॰ दीप+अपूपा॰ हितार्थे पक्षे छ। दीपहिते पक्षे यत्। दीप्य तत्रार्थे त्रि॰।

**दीपोत्सव** पु॰ दीपैरुत्सवः। १दीपहेतुके उत्सवे उपचारात् २दीपान्वितामावास्यायाञ्च भविष्यपु॰।

**दीप्त** त्रि॰ दीप—क्त। १प्रकाशान्विते २सन्धुज्वलिते च मेदि॰। "समिद्धशरणा दीप्ता देहे लङ्का मतेश्वरा" भट्टिः। ३स्वर्णे ४हिङ्गुनि च न॰ राजनि॰। ५निम्बूके पु॰ ६सिंहे पुंस्त्री॰ राजनि॰ स्त्रियां जातित्वात् ङीष्। ७ज्योतिष्मत्यां (मा-तला) स्त्री रत्नमाला ९लाङ्गलिक्यां स्त्री टाप्। "शुण्ठी पाठमिता कणार्णवमिता दीप्तायमान्योः क्रमात्" वैद्यकम्। १०नासारोगभेदे पु॰ "नासा प्रदीप्तेव च यस्य जन्तोर्व्याधिन्तु तं दीप्तमुदाहरन्ति" सुश्रुतः नासारोगभेदोक्तौ। "दीप्ते रोगे पैत्तिकं संविधानं कुर्य्यात् सर्वं स्वादु यच्छीतलञ्च" सुश्रुतः स्वार्थे क। दीप्तक स्वर्णे न॰ राजनि॰।

**दीप्तकीर्त्ति** त्रि॰ दीप्ता कीर्त्तिर्यस्य। १प्रकाशमानयशस्के २कार्त्तिकेये पु॰। "आग्नेयश्चैव स्कन्दश्च दीप्तकीर्त्तिरनामयः" भा॰व॰ २३१अ॰ कार्तिकनामोक्तौ। कर्म॰। ३दीप्ते यशसि स्त्री।

**दीप्तकेतु** पु॰ १नृपभेदे। "धृष्टकेतुर्हतकेतुर्दीप्तकेतुर्निरामयः" भा॰आ॰ १अ॰ नानानृपोक्तौ। २दक्षसावर्णिमनुपुत्रभेदे। "नवमो दक्षसावर्णिर्मनुर्वरुणसम्भवः। धृष्टकेतुर्दीप्तकेतुरित्याद्यास्तत्सुता नृप!"। भाग॰८।१३।६ २दीप्तः केतुरस्य। ३दीप्तध्वजके त्रि॰ कर्म॰। ४दीप्ते ध्वजे पुंन॰

**दीप्तजिह्वा** स्त्री दीप्ता जिह्वा यस्याः। उल्कामुख्यां शृगाल्यां हारा॰ तस्या रात्रौ जिह्वातोऽग्नेः स्वतः स्फुरणात्तथात्वम्।

**दीप्तपिङ्गल** पुंस्त्री दीप्तं स्वर्णमिव पिङ्गलः जटायाम्। स्वर्णपिङ्गलजटायुक्तत्वात् सिंहे राजनि॰ स्त्रियां जातित्वात् ङीष्।

**दीप्तमूर्त्ति** त्रि॰ दीप्ता मूर्त्तिरस्य। १प्रकाशान्वितमूर्त्तिके २विष्णौ पु॰। "विश्वमूर्त्तिर्महामूर्त्तिर्दीप्तमूर्त्तिरमूर्त्तिमान्" विष्णुस॰ "ज्ञानमयी स्वेच्छया वा तैजसी मूर्त्तिरस्येति" भा॰। [रात्रौ स्वयं ज्वलनात्तस्य तथात्वम्।

**दीप्तरस** पु॰ दीप्तो रसोऽस्य। किञ्चुलके शब्दच॰ तद्रसस्य

**दीप्तरोमन्** पु॰ विश्वदेवभेदे। "जितात्मा मुनिवर्यश्च दीप्तरोमा भयङ्करः" भा॰ अनु॰ ६१अ॰ विश्वदेवोक्तौ।

**दीप्तलोचन** पुंस्त्री॰ दीप्तं लोचनं यस्य। विड़ाले राजनि॰। स्त्रियां जातित्वात् ङीष्। [२ज्वलिते ३लोहे च।

**दीप्तलोह** न॰ नित्यकर्म॰। १कांस्ये राजनि॰ कर्म॰।

**दीप्तवर्ण** त्रि॰ दीप्तं स्वर्णमिव वर्णोऽस्य। १स्वर्णतुल्यवर्णके २कार्त्तिकेये पु॰ "शिशुः शीघ्रः शुचिश्चण्डो दीप्तवर्णः शुभाननः" भा॰व॰ २३१अ॰ कार्त्तिकनामोक्तौ।

**दीप्तशक्ति** त्रि॰ दीप्ता शक्तिरस्य। १प्रकाशमानसामर्थ्ये दीप्ता शक्तिरस्त्रविशेषोऽस्य। २कार्त्तिकेये पु॰। "दीप्तशक्तिः प्रशान्तात्मा भद्रकृत् कूटमोहनः" भा॰व॰ २३१अ॰ स्कन्दनामोक्तौ।

**दीप्तांशक** पु॰ कर्म॰। ताजकोक्ते सूर्य्यादेरंशभेदे। "तिग्मकोटनगाङ्कशैलखचराः सूर्य्यादिदीप्तांशकाः" नील॰ता॰ र१५। चं१२। म८। बु७। ह९ शु७। श९। सूर्य्यादेः एतदंशमध्यवर्त्तिनि ग्रहान्तरे इत्थशालादियोगः, विशाद्धीं-

न्तराले तु पूर्वत्यशालः तदूर्द्धं त्रैराशिकेन फलकल्पना।

**दीप्तांशु** पु० दीप्ता अंशवोऽस्य। १सूर्य्ये "यथा हि दिवि दीप्तांशुः प्रभासयति तेजसा" भा० आ० १७१ अ०। २अर्कवृक्षे च।

**दीप्ताक्ष** पुंस्त्री० दीप्ते अक्षिणी यस्य षच्। १विडाले त्रिका० स्त्रियां ङीष्। २दीप्तलोचनान्विते स्वपराक्रमादौ त्रि०। "बाह्लः सन्द्रवंश्यानां दीप्ताक्षाणां पुरूरवाः" भा० उ० ७४अ० स्त्रियां ङीप्। "एताश्चान्याश्च दीप्ताक्ष्यः करभोत्कटमूर्द्धजाः" भा० व० २७८अ०

**दीप्ताग्नि** पु० दीप्तोऽग्निरस्य। १अगस्त्ये मुनौ त्रिका० तेन भुक्तपीतमात्रेण वातापिसमुद्रयोर्जठरानलेन जारणात् तस्य तथात्वम्। २दीप्तजठरानलयुक्ते त्रि० "बलिनः खरभक्ष्या ये ये च दीप्ताग्नयो नराः"। "सात्म्यतोऽल्पतया वापि दीप्ताग्नेस्तरुणस्य च" सुश्रु० कर्म०। ३दीप्ते वह्नौ पु० "सधूमदीप्ताग्निरुचीनि रेजुः" भट्टिः "सद्यान् दीप्ताग्निसङ्काशान्" भा० व० १७अ०।

**दीप्ताङ्ग** त्रि० दीप्तमङ्गमस्य। १दीप्तियुक्तदेहके। २मयूरे पुंस्त्री शब्दच० स्त्रियां जातित्वात् ङीष्।

**दीप्ति** स्त्री दीप–भावे क्तिन्। १त्विषि प्रभायाम् "एवं दीप्त्या योजनं भाति सन्ध्या" सू०सं०२१अ० २अभिव्यक्तौ च ज्ञानाभिव्यक्तिरूपदीप्तेः कारणानि पात०सू० भाष्योक्तानि यथा

"योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः" सू० "योगाङ्गान्यष्टावभिधायिष्यमाणानि तेषामनुष्ठानात् पञ्चपर्वणो विपर्ययस्याशुद्धिरूपस्य क्षयो नाशस्तत्क्षये सम्यग्ज्ञानस्याभिव्यक्तिर्यथा यथा च साधनान्यनुष्ठीयन्ते तथा तथा तनुत्वमशुद्धिरापद्यते यथा यथा च क्षीयते तथा तथा च क्षयक्रमानुरोधिनी ज्ञानस्यापि दीप्तिर्विवर्द्धते सा खल्वेषा विवृद्धिः प्रकर्षमनुभवति आ विवेकख्यातेरा गुणपुरुषस्वरूपविज्ञानादित्यर्थः। योगाङ्गानुष्ठानमशुद्धेर्वियोगकारणं यथा परशुः छेद्यस्य, विवेकख्यातेस्तु प्राप्तिकारणं यथा धर्मः सुखस्य, नान्यकारणम्। कति चैतानि कारणानि शास्त्रे भवन्ति नवैवेत्याह तद् यथा "उत्पत्तिस्थित्यभिव्यक्तिविकारप्रत्ययाप्तयः। वियोगान्यत्वधृतयः कारणं नवधा स्मृतम्" इति। तत्रोत्पत्तिकारणं मनोभवति ज्ञानस्य, स्थितिकारणं मनसः पुरुषार्थता शरीरस्येवाहार इति अभिव्यक्तिकारणं यथा रूपस्यालोकस्तथा रूपज्ञानम्। विकारकारणं मनसो विषयान्तरम् यथाग्निः पाक्यस्य, प्रत्ययकारणं धूमज्ञानमग्निज्ञानस्य, प्राप्तिकारणं योगाङ्गानुष्ठानं विवेकख्यातेः वियोगकारणं तदेवाशुद्धेः अन्यत्वकारणं, यथा सुवर्णकारः सुवर्णस्य, एवमेकस्य प्रत्ययस्याविद्यामूढत्वे द्वेषो, दुःखत्वे रागः, सुखत्वे तत्त्वज्ञानं माध्यस्थ्ये, धृतिकारणं शरीरमिन्द्रियाणां, तानि च तस्य महाभूतानि शरीराणां तानि च परस्परं सर्वेषाम्। तैर्य्यग्यौनमानुषदैवतानि च परस्परार्थत्वादित्येवं नव कारणानि तानि च यथासम्भवं पदार्थान्तरेष्वपि योज्यानि" भा० स्त्रीणां यौवने अयत्नसाध्ये गुणभेदरूपे ३सत्वजेऽलङ्कारे च "यौवने सत्वजास्तासामष्टाविंशतिसंख्यकाः। अलङ्कारास्तत्र भावहावहेलास्त्रयोऽङ्गजाः। शोभा कान्तिश्च दीप्तिश्च माधुर्य्यञ्च प्रगल्भता" इत्युपक्रमे "रूपयौवनलालित्यभोगाद्यैरङ्गभूषणम्। शोभा प्रोक्ता, सैव कान्तिर्मन्मथाप्यायिता द्युतिः। कान्तिरेवातिविस्तीर्णा दीप्तिरित्यभिधीयते" सा०द० लक्षयित्वा उदाजहार यथा "तारुण्यस्य विलासः समधिकलावण्यसम्पदो हासः। धरणितलस्याभरणं युवजनमनसो वशीकरणम्"। दीप–कर्त्तरि संज्ञायां क्तिच्। ४लाक्षायां ५कांस्ये च राजनि०। विश्वदेवभेदे पु० "उष्णीनाभो नभोदश्च विश्वायुर्दीप्तिरेव च" भा०अनु०६१अ० विश्वदेवोक्तौ।

**दीप्तिक** स्त्री दीप्त्या कायति कै–क। दुग्धपाषाणवृक्षे राजनि०।

**दीप्तिमत्** पु० दीप्तिरस्त्यस्य मतुप्। दीप्तियुक्ते "तद्रत्नौघ्नि शतधा भिन्नं ददृशे दीप्तिमन्मुखम्" रघुः। उद्धृक्ष्णौ दीप्तिमान् स्थूलो जयी याम्येऽपि यो बली" सू०सि० "दिवस्पृ तैर्भूरतिदीप्तिमद्भिर्नक्तं मद्दैर्धौरमलप्रदीप्तैः" भा०क०६४अ०। कृष्णस्य सत्यभामायां जाते २पुत्रभेदे पु० कृष्णस्येत्युपक्रमे "जज्ञिरे सत्यभामायां भानुर्भीमवरः क्षुपः। रोहितो दीप्तिमांश्चैव ताम्रजाक्षो जलान्तकः" हरिवं०१६२ अ०।

**दीप्तोद** न० दीप्तमुदकं यत्र उदकस्योदादेशः। तीर्थभेदे "गच्छ पुत्र! नदीं पुण्यां वधूसरकृताह्वयाम्। तत्रोपस्पृश्य तीर्थेषु पुनर्वपुरवाप्स्यसि। दीप्तोदं नाम तत्तीर्थं यत्र ते प्रपितामहः। भृगुर्देवयुगे राम! तप्तवानुत्तमं तपः। तत्तथा कृतवान् रामः कौन्तेय! वचनात् पितुः" भा०व० ९९अ० [कान्तमणौ (आतशी) राजनि०।

**दीप्तोपल** पु०दीप्तः सूर्य्यकरसंसर्गात् ज्वलितः उपलः। सूर्य्य-

**दीप्य** त्रि॰ दीप्ताय दीपनाय हितम् गवा॰ यत् । दीप्तिहिते ।

**दीप्य** पु॰ दीपाय अग्निदीपनाय हितम् अपूपा॰ यत् । १यमान्यां २जीरके च राजनि॰ । ३रुद्रजटायाम् अमरः ४प्रदीप्तिहितादौ त्रि॰ ।

**दीप्यक** पु॰ दीप्य+संज्ञायां कन् स्वार्थे क वा । १अजमोदायां २यमान्यां ३मयूरशिखायां रुद्रजटायाञ्च मेदि॰ ।

**दीप्र** त्रि॰ दीप–र । दीप्तिशीले "हिंस्रेषु दीप्रास्त्रधरः कुमारः" "आतीनव्यालदीप्रास्त्रः सुत्वनः परिपूजयन्" भट्टिः

**दीर्घ** पु॰ दॄ–विदारे बा॰ घञ् घस्य नेत्त्वम् । १आयते (लम्बा) परिमाणभेदयुते दीर्घत्वञ्च परिमाणभेदे इति कणादाः महत्त्वावान्तरभेद इति सांख्याः । तथा हि कणाद सू॰ उपस्कारवृत्तौ च परिमाणसत्तां व्यवस्थाप्य सकारणं महत्त्वादिकं व्यवस्थापितं यथा "अणोर्महतश्चोपलब्ध्यनुपलब्धी नित्ये व्याख्याते" सू॰ । "नित्ये इति विषयेण विषयिणं नित्यत्वप्रतिपादकं चतुर्थाध्यायमुपलक्षयति उपलब्ध्यनुपलब्धी इति यथायोगमन्वयः "येन यस्याभिसम्बन्धो दूरस्थस्यापि तस्य सः" न्यायात् तदेवं स्थूलो नीलः कलस इति प्रात्यक्षिकप्रत्यये यथा नीलं रूपं विषयस्तथा परिमाणमपि तेन च परिमाणेन परमाणुपर्य्यन्तं परिमाणमुन्नीयते द्रव्यत्वाच्च किञ्च द्रव्यप्रत्यक्षतायां रूपवत् परिमाणमपि कारणं न हि महत्त्वमन्तरेण द्रव्यं प्रत्यक्षं भवति तथा च द्रव्यप्रत्यक्षकारणत्वेन स्वयञ्च प्रत्यक्षतया परिमाणं गुणोऽस्तीति निश्चीयते, यदि हि घटादिस्वरूपं परिमाणं स्यात् तदा महदानयेत्युक्ते घटमात्रमानयेत् तथा च प्रैषसंप्रतिपत्ती विरुध्येयाताम्, एवं घटपदात् परिमाणं प्रतीयेत परिमाणपदाद्वा घट इति । मानव्यवहारासाधारणकारणत्वं द्रव्यसाक्षात्कारकारणविषयनिष्ठसामान्यगुणत्वं वा महत्त्वं मानव्यवहारोऽत्र इस्तवितस्त्यादिव्यवहारो न तु पलप्रस्थादिव्यवहारः । तच्च परिमाणञ्चतुर्विधं महत्त्वमणुत्वं दीर्घत्वं ह्रस्वत्वञ्च, तत्र परममहत्त्वपरमदीर्घत्वे विभुचतुष्टयवर्त्तिनी परमाणुत्वपरमह्रस्वत्वे परमाणुवर्त्तिनी अवान्तराणुत्वावान्तरह्रस्वत्वे द्व्यणुकवर्तिनी त्रसरेणुमारभ्य महावयविपर्य्यन्तं महत्त्वदीर्घत्वे, । एवञ्च सर्वाण्यपि द्रव्याणि परिमाणद्वयवन्ति । विल्वामलकादावणुत्वव्यवहारः समिदिक्षुदण्डादिषु च ह्रस्वत्वव्यवहारो भाक्तः, भक्तिश्चात्र प्रकर्षभावाभावः । आमलके यः प्रकर्षभावस्तस्याभावः कुवले, विल्वे यः प्रकर्षभावस्तस्याभाव आमलके, स च गौणमुख्योभयभागित्वाद्भक्तिपदवाच्यः दीर्घत्वह्रस्वत्वे नित्ये न वर्त्तेते इत्येके, परिमाणे एव ते न भवत इत्यपरे, महत्त्वं दीर्घमानीयतामितिवत् महत्सु वर्त्तुलं त्रिकोणञ्चानीयतामिति निर्धारणवलाद्वर्त्तुलत्वादीनामप्यापत्तेरिति तेषामाशयात् । इदानीं परिमाणकारणानि परिसङ्ख्ये" उप॰ वृ॰ । "कारणबहुत्वाच्च" सू॰ "चकारो महत्त्वप्रचयौ समुच्चिनोति, परिमाणमुत्पद्यते इति सूत्रशेषः, तत्र कारणबहुत्वं केवलं त्र्यणुके महत्त्वदीर्घत्वे जनयति महत्त्वप्रचययोस्तत्कारणेऽभावात् तच्च बहुत्वमीश्वरापेक्षाबुद्धिजन्यं तद्बुद्धेरनेकविषयत्वेऽप्यदृष्टविशेषोपग्राही नियामकः । एवं परमाणुद्वयगतं द्वित्वं द्व्यणुके परिमाणोत्पादकं वक्ष्यते द्वाभ्यां तन्तुभ्यामप्रचिताभ्यामारब्धे पटे केवलं महत्त्वमेवासमवायिकारणं बहुत्वप्रचययोस्तत्राभावात् । यत्र च द्वाभ्यां तूलकपिण्डाभ्यां तूलकपिण्डारम्भस्तत्र परिमाणोत्कर्षदर्शनात् प्रचयः कारणं बहुत्वस्याभावात् महत्त्वस्य सत्त्वेऽपि परिमाणोत्कर्षं प्रत्यप्रयोजकत्वात् । एवञ्च सति यदि महत्त्वं तत्र कारणं तदा न दोषः तदुक्तम् "द्वाभ्यामेकेन सर्वैर्वा" इति । प्रचयश्च आरम्भकः संयोगः, स च स्वाभिमुखकिञ्चिदवयवासंयुक्तत्वे सति स्वाभिमुखकिञ्चिदवयवसंयोगलक्षणः, स चावयवसंयोगः स्वावयवप्रशिथिलसंयोगापेक्षः परिमाणजनकः गुणकर्मारम्भे सापेक्ष इति वचनात्" उप॰ वृ॰ ।

"एतेन दीर्घत्वह्रस्वत्वे व्याख्याते" सू॰ "अणुत्वमहत्त्वप्रक्रियां दीर्घत्वह्रस्वत्वयोरतिदिशति । ह्रस्वत्वदीर्घत्वे अपि न ह्रस्वत्वदीर्घत्ववती । महत्त्वोत्पादकमेव दीर्घत्वोत्पादकमणुत्वोत्पादकमेव ह्रस्वत्वोत्पादकम्, कारणैक्यात् कथं कार्य्यभेद इति चेन्न प्रागभावभेदेन पाकजवदुपपत्तेः यत्रैव महत्त्वं तत्र दीर्घत्वं यत्राणुत्वं तत्र नित्यं ह्रस्वत्वमित्याद्यतिदेशार्थः" उप॰ वृ॰ । "अनित्येऽनित्यम्" सू॰ । "इदानीं विनाशकमाह एतच्चतुर्विधमपि परिमाणं विनाशिनि द्रव्ये वर्त्तमानमाश्रयनाशादेव नश्यति न तु विरोधिगुणान्तरात् । घटे सत्यपि तत्परिमाणं विनश्यति कथमन्यथा कम्बुभङ्गेऽपि स एवायं घट इति प्रत्यभिज्ञेति चेन्न आश्रयनाशेन तत्र घटनाशावश्यकत्वात् न हि परमाणुद्वयसंयोगनाशाद् द्व्यणुके नष्टे तदाश्रितस्य त्रसरेणोस्तदाश्रितस्य चूर्णशर्करादेरविनाश इति युक्तिरभ्युपगमो वा, कथं तर्हि प्रत्यभिज्ञेति चेत्,

सैवेयं दीपकलिकेति प्रत्यभिज्ञानवद्भ्रान्तित्वात्। प्रदीपप्रत्यभिज्ञाऽपि प्रकृतैव, ह्रस्वत्वदीर्घत्वे परमुत्पादविनाशशालिनी इति चेन्न तद्विनाशस्याश्रयविनाशमन्तरेणानुपपत्तेरुक्तत्वात्। तत् किं पार्थिवपरमाणुरूपादिवत् परमाणुगतमणुत्वं शब्दबुद्ध्यादिवदाकाशादिगतं महत्त्वमपि नश्यतीत्यत आह उप०ह०। "नित्ये नित्यम्" सू० "नित्येष्वाकाशादिषु परमाणुषु च यत् परिमाणं तन्नित्यं विनाशकाभावात्" उप० ह०।

सांख्यसूत्रभाष्ययोस्तु परिमाणद्वैविध्यं व्यवस्थापितं यथा "न परिमाणचातुर्विध्यं द्वाभ्यां तद्योगात्" सू०। "अणु महद्दीर्घं ह्रस्वमिति परिमाणचातुर्विध्यं नास्ति। द्वैविध्यं तु वर्त्तत एव द्वाभ्यां तद्योगात् द्वाभ्यामेवाणुमहत्परिमाणाभ्यां चातुर्विध्यसम्भवादित्यर्थः। महत्परिमाणस्यावान्तरभेदावेव हि ह्रस्वदीर्घौ। अन्यथा वक्रादिरूपैः परिमाणानन्त्यप्रसङ्गादिति। तत्राकाशस्येऽणुपरिमाणमकारणस्य कारणं गुणविशेषं वर्जयित्वा भूतेन्द्रियाणां मूलकारणेषु सत्त्वादिगुणेषु मन्तव्यम्। अन्यत्र यथायोग्यं मध्यमादिपरममहत्त्वान्तपरिमाणानि तानि च महत्त्वस्यैवावान्तरभेदा इति"।

दीर्घत्वे कारणञ्च पार्श्वतोयोजितावयवबाहुल्यादिकम् स्थूलत्वे तु ऊर्द्ध्वाधःस्थितावयवबाहुल्यादिकमिति भेदः। कालस्य दीर्घत्वप्रयोजकं तदुपाधेर्बहुकालस्थायित्वं तदभिप्रेत्यैव "दीर्घकालनैरन्तर्य्यादरसेवितात्" योगशास्त्रे "दीर्घयामा त्रियामा" इति काव्ये च प्रयोगः। २व्याकरणपरिभाषिते द्विमात्रकालेनोच्चार्ये (आ ई ऊ) प्रभृतौ वर्णे च। "ऊकालोऽज्झ्रस्वदीर्घप्लुतः" पा० "एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते। त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्द्धमात्रकम्" शिक्षा। "गुहानिवहप्रतिशब्ददीर्घम्" रघौ शब्दस्य गुणत्वेऽपि दीर्घत्वं बहुकालस्थायित्वेन भाक्तम्। एवं "हृदयकुसुमशोषी दारुणोदीर्घशोकः" "सा दीर्घं रोदिति विक्षिपत्यत इतः क्षामा भुजावल्लरीम्" सा०द० शोकरोदनयोर्दीर्घत्वं बहुकालस्थायित्वात् भाक्तमेव। ३तालशालवृक्षे ४उत्कटे पु० ५रामशरे पु०६उष्ट्रे पुंस्त्री० राजनि० स्त्रियां जातित्वात् ङीष्। "वृश्चिककन्यामृगपतिवणिजो दीर्घाः" ज्यो०त० उक्तेषु ७सिंहकन्यातुलावृश्चिकराशिषु पु०।

**दीर्घकणा** स्त्री नित्यकर्म०। श्वेतजीरके राजनि०।

**दीर्घकण्टक** पु०दीर्घः कण्टको यस्य। वर्वुरे (वावला) राजनि०

**दीर्घकण्ठ** पुंस्त्री० दीर्घः कण्ठो यस्य। १वके शब्दच० स्त्रियां जातित्वात् ङीष्। २दानवभेदे पु० ३आयतकण्ठकमात्रे त्रि० "विस्तरोदीर्घकण्ठश्च मद्यपो मारुताशनः" हरिवं०२४०अ० कर्म०। ४आयते कण्ठे पु०। व कप्। दीर्घकण्ठक। वकखगे शब्दच०

**दीर्घकन्द** न०दीर्घः कन्दोऽस्य। १मूलके। दीर्घः कन्दो यस्याः कप् अत इत्त्वम्। दीर्घकन्दिका २मूषल्याम् स्त्री राजनि०।

**दीर्घकन्धर** पुंस्त्री दीर्घः कन्धरोऽस्य। १वकखगे राजनि०। स्त्रियां ङीष्। २दीर्घकन्धरयुक्ते त्रि० कर्म०। ३दीर्घे कन्धरे पु०।

**दीर्घकाण्ड** पु० दीर्घः काण्डोऽस्य। १गुण्डतृणे २पातालगरुडीलतायां ३तित्ताङ्कायां स्त्री राजनि०।

**दीर्घकील** पु०दीर्घः कीलो यत्र। १अङ्कोटके वृक्षे वा कप्। दीर्घकीलक तत्रैवार्थे कर्म०। २दीर्घे कीले पु०न०।

**दीर्घकूर** न०दीर्घं कूरम्। आन्ध्रदेशोद्भवे शालिभेदे राजान्ने राजनि०

**दीर्घकेश** पुंस्त्री०दीर्घः केश इव लोमास्य। १भल्लूके राजनि० स्त्रियां जातित्वात् ङीष्। २आयतकेशयुते त्रि० स्त्रियां स्वाङ्गत्वात् वा ङीष्। "दीर्घकेशी सुमध्या" इहन्नाटकम् वृ०सं०१४अ०कूर्मविभागे उक्ते पश्चिमोत्तरदिक्स्थे ३देशभेदे च यथा "एकविलोचनशूलिकदीर्घग्रीवास्यकेशाश्च"।

**दीर्घकोशि(षि)का** स्त्री दीर्घः को(षो)शो यस्याः कप् अतइत्त्वम् (झिनुक) शुक्तिमायाम् अमरः। तालव्यमध्योऽपि भरतः।

**दीर्घगति** पु०दीर्घा गतिरस्य। १उष्ट्रे राजनि० तस्य पादविक्षेपस्य बहुदेशान्तरितत्वात्तथात्वम्। [राजनि०।

**दीर्घग्रन्थि** पु० दीर्घो ग्रन्थिः पर्व यस्य। गजपिप्पल्याम्।

**दीर्घग्रीव** पुंस्त्री०दीर्घा ग्रीवा यस्य। १उष्ट्रे राजनि०२नीलक्रौञ्चे हेमच०। स्त्रियां जातित्वात् ङीष्। ३पश्चिमोत्तरदिक्स्थे देशभेदे पु० दीर्घकेशशब्दे दृश्यम्। [माला।

**दीर्घघाटिक** पुंस्त्री० दीर्घा घाटाऽस्त्यस्य ठन्। १उष्ट्रे शब्द-

**दीर्घचञ्चु** पु० दीर्घा चञ्चुरस्य। खगभेदे पारस्करनि०।

**दीर्घच्छद** पु०दीर्घाश्छदा यस्य। १इक्षौ शब्दार्थचि०। २दीर्घच्छदके त्रि० कर्म०। ३दीर्घे छदे पु०।

**दीर्घजङ्गल** पुंस्त्री० नित्यकर्म०। मद्गुनमत्स्ये (माङ्गन) शब्दमाला स्त्रियां ङीष्।

**दीर्घजङ्घ** पुंस्त्री० दीर्घा जङ्घा यस्य। १उष्ट्रे जटाध०।

२यके त्रिकाण्ड० स्त्रियां ङीप्। ३दीर्घजङ्घायुक्ते उष्ट्रादौ त्रि० कर्म०। ४दीर्घायां जङ्घायाम् स्त्री

**दीर्घजिह्व** पुंस्त्री० दीर्घा जिह्वा यस्य। १सर्पे हेमच० स्त्रियां ङीप्। २दानवभेदे पु० "गविष्ठश्च वनायुश्च दीर्घजिह्वश्च दानवः" भा०आ० ६५अ० ४राक्षसभेदे स्त्रियां टाप्। "द्वाविर्ती त्र्यक्षीं ललाटाक्षीं दीर्घजिह्वामजिह्विकाम्" भा०व० २७९ अ०। ५कुमारानुचरमातृगणभेदे "जाटालिका कामचरी दीर्घजिह्वा बलोत्कटा" भा०श० ४७अ० दीर्घजिह्वी च छन्दसि" पा०नि०पुंस्यपि ङीष् इकन्त्रे च "अप श्वानं श्नथिष्ट न सखायो दीर्घजिह्व्यम्" ऋ० ९।१०१।१।

**दीर्घजीविन्** त्रि० दीर्घं बहुकालं जीवति जीव–णिनि। बहुकालजीविनि। "तत्र कालेन जायन्ते मानवा दीर्घजीविनः" मनुः।

**दीर्घतन्तु** पु० दीर्घास्तन्तवः स्तुतयोऽस्य। प्रभूतस्तुतिके देवादौ "दीर्घतन्तुर्बृहदुक्षा यमन्निः" ऋ० १०।६९।७ २दीर्घकालव्यापिसन्तानके। कर्म०। ३दीर्घे तन्तौ पु०।

**दीर्घतपस्** त्रि० दीर्घं बहुकालव्यापकं तपोऽस्य। १बहुकालव्यापकतपस्के २आयुर्वंश्ये नृपभेदे पु० "काश्यस्य काश्यपः पुत्रो राजा दीर्घतपास्तथा। धन्वस्तु दीर्घतपसो ह्यभवत् धन्वन्तरिः सुतः" हरिवं० २९ अ० आयुर्वंशोक्तौ।

**दीर्घतमस्** पु० उतथ्यर्षेः पुत्रे गुरुशापात् अन्धतां प्राप्ते ऋषिभेदे तत्कथा उतथ्यशब्दे १०७५पृ० उक्ता दृश्या "स वै दीर्घतमा नाम शापादृषिरजायत। बृहस्पतेर्बृहत्कीर्त्तेर्बृहस्पतिरिवौजसा। जात्यन्धो वेदवित् प्राज्ञः पत्नीं लेभे स विद्यया" भा०आ०१०४अ० "ऋषिर्दीर्घतमा नाम जात्यन्धो गुरुशापतः। त्वत्प्रसादाच्च चक्षुष्मांस्तेन सत्येन मोचय" हरिवं० २६३अ० "दीर्घतमा मामतेयो जजुर्वान् दशमे युगे" ऋ०१।१५८।६

**दीर्घतरु** पु० नित्यकर्म०। तालवृक्षे शब्दार्थकल्प०। २दीर्घे उन्नमाते च। [शब्दमाला।

**दीर्घतिमिष** स्त्री तिम–वा किषन् नित्यकर्म०। कर्कट्याम्

**दीर्घतुण्डा** स्त्री दीर्घं तुण्डमस्याः। १छुछुन्दर्यां भावप्र०। २दीर्घमुखयुक्ते गजादौ पुंस्त्री०। कर्म०। ३दीर्घे तुण्डे न०

**दीर्घतृण** पु० दीर्घं तृणमत्र। १पल्लिवाहे राजनि० कर्म०। २दीर्घे तृणे न०

**दीर्घदण्ड** पु०दीर्घो दण्ड इव काण्डेन। १एरण्डवृक्षे २गोरक्षां स्त्री भावप्र०गौरा०ङीष्। ३गोरक्षीवृक्षे स्त्री टाप् राजनि०।

**दीर्घदर्शिन्** पु० दीर्घं दीर्घात् वा पश्यति दृश–णिनि। १भाविकार्यज्ञे २पण्डिते च अमरः। ३गृध्रे पु०शब्दरत्ना०। ४भल्लूके राजनि०। ५दूरात् दर्शके त्रि०। "स हि धर्मं पुरस्कृत्य दीर्घदर्शी परं हितम्" भा०स० ४८अ० [र्येन २अ०। ६दूरवीक्षणे यन्त्रभेदे कला०

**दीर्घदृष्टि** पु०दीर्घा दृष्टिरस्य। १पण्डिते। दीर्घा दूरतो दृष्टि-

**दीर्घद्रु** पु०नित्यकर्म०। १तालवृक्षे शब्दच०कर्म०। २दीर्घे वृक्षे

**दीर्घद्रुम** पु० नित्यकर्म०। शाल्मलिवृक्षे (शिमुल) राजनि०।

**दीर्घनाद** पु० दीर्घो दूरगामित्वात् विस्तीर्णो नादोऽस्य बहुव्री० न णत्वम्। १शङ्खे राजनि० २बहुकालस्थायिशब्दयुक्ते घण्टादौ त्रि०। कर्म०। ३आयते शब्दे पु०।

**दीर्घनाल** पु० दीर्घं नालं यस्य। १यावनाले हेमच० गुण्डतृणे २दीर्घरोहिषके न० राजनि०।

**दीर्घनास** त्रि०दीर्घा नासाऽस्य। १दीर्घनासिकान्विते। "वक्रघाती दीर्घनासो दद्यात् गां धवलप्रभाम्" शातातपेन ततकर्मविपाक उक्तः। कर्म०। २दीर्घायां नासायां स्त्री

**दीर्घनिद्रा** स्त्री नित्यकर्म०। १मरणे कर्म०। २चिरकालव्यापिन्यां निद्रायाञ्च "अकाले बोधितो भ्राता प्रियस्वप्नो वृथा भवान्। रामेषुभिरितीवासौ दीर्घनिद्रां प्रवेशितः" रघुः।

**दीर्घपक्ष** पु० दीर्घौ पक्षौ यस्य। १कलिङ्गखगे शब्दच०। २दीर्घपक्षयुक्ते खगमात्रे पुंस्त्री०।

**दीर्घपटोलिका** स्त्री कुत्सिता पटली कन् कर्म०। (घुँधुल) ख्यातायां लतायाम् राजवल्लभः।

**दीर्घपत्र** पु० दीर्घं पत्रं यस्य। १राजपलाण्डौ २विष्णुकन्दे ३हरिदर्भे ४कुन्दरे ५तालवृक्षे च राजनि० ६कुपीलौ भावप्र० कप् संज्ञायां कन् वा। दीर्घपत्रक ७रक्तलशुने ८एरण्डे ९हिज्जले १०वेतसे च राजनि०। ११करीरवृक्षे शब्दच०१२जलजमधूके जटाध० १३लशुने हेमच० कापि अत इत्त्वम्। दीर्घपत्रिका १४श्वेतवचायां १५शालपर्ण्यां १६घृतकुमार्याञ्च स्त्री राजनि०।

**दीर्घपत्रा** स्त्री दीर्घं पत्रं यस्याः। १चित्रपर्णिकायां (चाकुलिया) भेदे २क्षुद्रजम्बूवृक्षे रत्नमाला ३गन्धपत्रायां ४केतक्यां ५टोरीवृक्षे च राजनि०। गौरा०ङीष् दीर्घपत्री ६पलाशीलतायां ७महाचञ्चु शाके स्त्री राजनि०।

**दीर्घपर्णी** स्त्री दीर्घं पर्णं यस्याः गौरा० ङीष्। पृश्निपर्ण्याम् राजनि०।

**दीर्घपल्लव** पु० दीर्घः पल्लवोऽस्य । १शणवृक्षे राजनि० २आयतपत्रयुक्ते त्रि० । कर्म० । ३आयते पल्लवे पुंन० ।

**दीर्घपाद्** पु० दीर्घः पादोऽस्य अन्त्यलोपः समा०। कङ्कपक्षि शब्दर० समासान्तविधेरनित्यत्वात् दीर्घपादोऽप्यत्र हेमच० २दीर्घपादयुक्ते त्रि०। [कर्म०। ३दीर्घे हस्ते पु०।

**दीर्घपादप** पु० नित्यकर्म० । १तालवृक्षे २पूगे च राजनि० ।

**दीर्घपृष्ठ** पुंस्त्री०दीर्घं पृष्ठमस्य । सर्पे अमरः स्त्रियां ङीष् ।

**दीर्घप्रज्ञ** पु० १द्वापरयुगीये वृषपर्वासुरावतारे नृपभेदे "वृषपर्वेति विख्यातः श्रीमान् यस्तु महासुरः । दीर्घप्रज्ञ इति ख्यातः पृथिव्यां सोऽभवन्नृपः !"। भा०आ०६७अ० "अमितौजसे तथोग्राय हार्दिक्यायाङ्गकाय च । दीर्घप्रज्ञाय शूराय रोचमानाय वा विभो !" भा०उ०३अ० । २दूरदर्शिनि त्रि० "कामसूर्तिधरः क्रूरः कालकल्पोव्यदृश्यत । तमुवाच ततो राजा दीर्घप्रज्ञो युधिष्ठिरः" भा० व०११ अ० ।

**दीर्घफल** पु० दीर्घाणि फलान्यस्य । १आरग्वधे (सोन्दाल) संज्ञायां कन् । दीर्घफलक । अगस्त्यवृक्षे पु० । वा कप् कापि अत इत्त्वम् । दीर्घफलिका १कपिलद्राक्षायां, २जतुकायाञ्च स्त्री राजनि० [चमर्यां राजनि०।

**दीर्घवाली** स्त्री दीर्घः वालः केशो यस्याः स्वाङ्गत्वात् ङीष् ।

**दीर्घबाहु** पु० दीर्घौ बाहू यस्य । १शिवानुचरभेदे "तथापे समपद्यन्त भूतसंघाः सहस्रशः" इत्युपक्रमे "दीर्घरोमा दीर्घभुजो दीर्घबाहुर्निरञ्जनः" हरिवं० २७७ अ०। २धृतराष्ट्रपुत्रभेदे "दीर्घबाहुर्महाबाहुर्व्यूढोरः कनकाङ्गदः" भा०आ० ६७अ०। ३आयतबाहुयुक्ते त्रि०"दीर्घबाहुर्दिलीपस्य रघुर्नाम्नाऽभवत् सुतः" हरिवं०१५अ०

**दीर्घभुज** पु० दीर्घौ भुजौ यस्य । १शिवानुचरभेदे दीर्घबाहुशब्दे दृश्यम् । २दीर्घबाहुयुक्ते त्रि०कर्म०। ३दीर्घे भुजे पु०।

**दीर्घमारुत** पुंस्त्री दीर्घो मारुतो वेगवायुरस्य । गजे त्रिका० स्त्रियां जातित्वात् ङीष् ।

**दीर्घमूल** पु० दीर्घं मूलं यस्य । १मोरटालतायां. २विल्वभेदे च राजनि०। ३लामज्जके न०। कर्म०संज्ञायां कन् । ४मूलके राजनि० । ५श्यामालतायां शालपर्ण्याञ्च स्त्री टाप् रत्नमाला । ६दुरालभायां स्त्री ङीप् शब्दमाला ।

**दीर्घयज्ञ** त्रि०दीर्घः बहुकालव्यापको यज्ञो यस्य । १बहुकालव्यापकयज्ञकारिणि । २द्वापरयुगीये अयोध्याधिप राजभेदे पु० "अयोध्यायान्तु धर्मज्ञं दीर्घयज्ञं महाबलम् । अजयत् पाण्डवश्रेष्ठो नातितीव्रेण कर्मणा" भा०२६अ०।

**दीर्घयाथ** त्रि० या—कर्मणि थ । दीर्घकालेन याथः गन्तव्यः । दीर्घकालेन गन्तव्ये "इयाऽसृजत् पथिभिर्दीर्घयाथैः" ऋ०२ १८।२ "दीर्घयाथैर्दीर्घकालेन गन्तव्यैः" भा०।

**दीर्घरद्** पुंस्त्री० दीर्घो रदोऽस्य । १शूकरे त्रिका० स्त्रियां ङीप् । २दीर्घदन्तयुते त्रि० कर्म०। ३दीर्घे दन्ते पु०।

**दीर्घरसन** पुंस्त्री० दीर्घा रसना जिह्वास्य । सर्पे शब्दच० स्त्रियां ङीप् । [५न०। हरिद्रायाम् राजनि० ।

**दीर्घरागा** स्त्री दीर्घो बहुकालस्थायी रागो रञ्जनं यस्याः

**दीर्घरात्र** न० दीर्घा बह्व्यो रात्रयः सन्त्यत्र अर्शआ० अच् । १चिरकाले त्रिका०कर्म०। मुग्धबोधमते अ समा० । २दीर्घायां रात्रौ "रात्राह्नाहाः पुंसि" पा०उक्तेः पुंस्त्वम् ।

**दीर्घरोमन्** पु०दीर्घाणि रोमाण्यस्य । १भल्लूके शब्दार्थकल्प०। २शिवानुचरभेदे दीर्घबाहुशब्दे दृश्यम् । ३धृतराष्ट्रपुत्रभेदे च "प्रमथश्च प्रमाथी च दीर्घरोमा च वीर्यवान्" भा०आ० ११७अ० अत्र सर्वे नाम्ना अदन्ताः स्युरित्युक्तेरदन्ततास्य

**दीर्घरोहिषक** न०नित्यकर्म०। कतृणे सुगन्धतृणभेदे राजनि०

**दीर्घलोचन** त्रि० दीर्घमायतं लोचनमस्य । १आयतनेत्रके २शिवानुचरभेदे पु० "एते चान्ये च बहवो दीर्घास्या दीर्घलोचनाः" हरिवं०२७अ०३धृतराष्ट्रपुत्रभेदे पु० "अनाधृष्यः कुण्डभेदी विरावी दीर्घलोचनः" भा०आ० ६७अ० । धृतराष्ट्रपुत्रोक्तौ । कर्म० । ४आयते नेत्रे न०

**दीर्घवंश** पु० दीर्घो वंश इव । नलतृणे राजनि० कर्म० । २सन्तते कुले च ।

**दीर्घवक्त्र** पुंस्त्री० दीर्घं वक्त्रमस्य । १गजे शब्दमा० स्त्रियां जातित्वात् ङीष् । २आयतमुखयुक्ते त्रि० स्त्रियां स्वाङ्गत्वेऽपि टाप् कर्म०। ३आयते मुखे न०

**दीर्घवच्छिका** स्त्री दीर्घवत् दीर्घेण तुल्यं शीकते सिञ्चति शीक—क पृषो० ह्रस्वः । कुम्भीरे शब्दार्थकल्प० ।

**दीर्घवर्षाभू** पुंस्त्री०नित्यकर्म०। श्वेतपुनर्णवायाम् पारस्करनि०

**दीर्घवल्ली** स्त्री नित्यकर्म० । १पलाश्यां, २पातालगरुडीलतायां ३माहेन्द्रवारुण्याम् राजनि० कर्म० । ४आयतायां लतायाञ्च [स्करनिघण्टुः ।

**दीर्घवृन्त** पु० नित्यकर्म०। १शालवृक्षे २तालवृक्षे च पार-

**दीर्घवृन्त(क)** पु० दीर्घं वृन्तमस्य । श्योनाके वृक्षे । वा कप् । तत्रार्थे । २इन्द्रचिर्भट्यां स्त्री टाप् अमरः। संज्ञायां कन् अत इत्त्वम् दीर्घवृन्तिका । एलापर्ण्याम् स्त्री रत्नमाला ।

**दीर्घशर** पु० नित्यकर्म० । यावनाले राजनि० ।

**दीर्घशाख** पु० दीर्घा शाखा यस्य । १शालवृक्षे संज्ञायां कन् टाप् अत इत्वम् । २एलापर्ण्याम् स्त्री राजनि० । वा कप् अत इत्वम् । दीर्घशाखिका ३शोणाम्लग्राम् राजनि०।

**दीर्घशिम्बिका** स्त्री दीर्घा शिम्बी यस्य कप् ह्रस्वः । क्षुपे (नाकछिक्नी) ख्याते राजनि०।

**दीर्घशूक** पु० दीर्घः शूकोऽग्रमस्य । शालिभेदे संज्ञायां कन् । दीर्घशूकः राजाद्ये राजनि० कर्म०। २दीर्घे शूके न०

**दीर्घश्रवस्** पु० दीर्घं श्रवोऽस्य । दीर्घतमसः पुत्रे ऋषिभेदे "औशिजाय वणिजे दीर्घश्रवसे" ऋ० १।११२।११ "उशिक् संज्ञा दीर्घतमसः पत्नी तस्याः पुत्रो दीर्घश्रवा नाम कश्चिदृषिरनावृष्टौ जीवनार्थमकरोत् वाणिज्यम्" भा० २दीर्घकर्णयुक्ते त्रि० कर्म०। ३दीर्घे कर्णे न०।

**दीर्घसत्र** न० कर्म० । १दीर्घकालिके यज्ञभेदे हेम०। २तत्कर्तरि त्रि०। "हविषे दीर्घसत्रस्य सा चेदानीं प्रचेतसः" रघुः । दीर्घाणि सत्राणि कृतानि यत्र । ३तीर्थभेदे "ततो गच्छेत धर्मज्ञ! दीर्घसत्रं यथाक्रमम् । तत्र ब्रह्मादयो देवाः सिद्धाश्च परमर्षयः । दीर्घसत्रमुपासन्ते दीक्षिता नियतव्रताः । गमनादेव राजेन्द्र ! दीर्घसत्रमरिन्दम ! । राजसूयाश्वमेधाभ्यां फलं प्राप्नोति भारत !" भा०व०८२अ० । ४यावज्जीवकर्त्तव्ये अग्निहोत्रे न० "दीर्घसत्रं ह वा त उपयन्ति येऽग्निहोत्रं जुह्वत्येतद्वै जरामर्यं सत्रं यदग्निहोत्रं जरया वा ह्येवास्मान्मुच्यन्ते मृत्युना वा" शत०ब्रा० १२।४।१।१

**दीर्घसत्रिन्** पु० दीर्घसत्रमस्त्यस्य इनि । १बहुकालिकसत्रकारके २यावज्जीवकर्तव्याग्निहोत्रिणि च, "यदेतस्य दीर्घसत्रिणोऽग्निहोत्रं जुह्वतोऽन्तरेणाग्नी युक्तं वा वियायात्" शत०ब्रा० १२।४।१।२

**दीर्घसुरत** पुंस्त्री० दीर्घं बहुकालव्यापकं सुरतमस्य । १कुक्कुरे त्रिका० स्त्रियां जातित्वात् ङीष् । कर्म० । २आयते सुरते न० ।

**दीर्घसूक्ष्म** पु० कर्म०। पात०सू० भाष्योक्ते प्राणायामभेदे तत्स्वरूपादि तत्रोक्तं यथा

"तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः" सू०। "सत्यासनजये बाह्यस्य वायोराचमनं श्वासः । कोष्ठ्यस्य वायोर्निःसारणं प्रश्वासः तयोर्गतिविच्छेद उभयाभावः प्राणायामः" भा० । "बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसङ्ख्याभिः परिदृष्टो दीर्घसूक्ष्मः" सू० । "यत्र प्रश्वासपूर्वको गत्यभावः स बाह्यः यत्र श्वासपूर्वको गत्यभावः स आभ्यन्तरः तृतीयस्तम्भवृत्तिर्यत्रोभयाभावः सकृत्प्रयत्नाद्भवति यथा तप्ते न्यस्तमुपले जलं सर्वतः सङ्कोचमापद्यते । तथा द्वयोर्युगपद्गत्यभाव इति । त्रयोऽप्येते देशेन परिदृष्टाः, इयानस्य विषयो देश इति । कालेन परिदृष्टाः क्षणानामियत्तावधारणेनावच्छिन्ना इत्यर्थः । सङ्ख्याभिः परिदृष्टाः एतावद्भिः श्वासप्रश्वासैः प्रथम उद्घातस्तद्वत् निगृहीतस्यैतावद्भिः द्वितीय उद्घातः एवं तृतीयः एवं मृदुरेवं मध्य एवं तीव्र इति सङ्ख्यापरिदृष्टः स खल्वयमेवमभ्यस्तो दीर्घसूक्ष्मः" भा० । "बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः" सू० । "देशकालसङ्ख्याभिर्बाह्यविषयः परिदृष्ट आक्षिप्तः तथाभ्यन्तरविषयः परिदृष्ट आक्षिप्तः उभयथा दीर्घसूक्ष्मः तत्पूर्वको भूमिजयात् क्रमेणोभयोर्गत्यभावश्चतुर्थः प्राणायामः । तृतीयस्तु विषयानालोचितो गत्यभावः सकृदारब्ध एव देशकालसङ्ख्याभिः परिदृष्टो दीर्घसूक्ष्मश्चतुर्थस्तु श्वासप्रश्वासयोर्विषयावधारणात् क्रमेण भूमिजयादुभयाक्षेपपूर्वको गत्यभावश्चतुर्थः प्राणायामः इत्ययं विशेषः" भा० ।

**दीर्घसूत्र** त्रि० दीर्घेण चिरकालेन सूत्रमर्पितं व्यापारो यस्य । १चिरकालेन प्रारब्धकर्मानुष्ठातरि अमरः । "दीर्घसूत्रस्य आपत्प्राप्तिरिति इतिहासमुखेन" भा०शा०१३७अ० दर्शिता तथा "अनागतविधाता च प्रत्युत्पन्नमतिश्च यः । द्वावेव सुखमेधेते दीर्घसूत्रो विनश्यति । अत्रैव चेदमव्यग्रं शृणु व्याख्यानमुत्तमम् । दीर्घसूत्रमुपाश्रित्य कार्य्याकार्य्यविनिश्चये । नातिगाधे जलाधारे सुहृदः मत्स्यास्त्रयः । प्रभूतमत्स्ये कौन्तेय ! बभूवुः सहचारिणः । तत्रैको दीर्घकालज्ञ उत्पन्नप्रतिभोऽपरः । दीर्घसूत्रश्च तत्रैकस्त्रयाणां सहचारिणाम् । कदाचित् तं जलाधारं मत्स्यबन्धाः समन्ततः । निःस्रावयामासुरथो निम्नेषु विविधैर्मुखैः । प्रक्षीयमाणं तं दृष्ट्वा जलाधारं भयागमे । अब्रवीद्दीर्घदर्शी तु तावुभौ सुहृदौ तदा । इयमापत् समुत्पन्ना सर्वेषां सलिलौकसाम् । शीघ्रमन्यत्र गच्छामः पन्था यावन्न दुष्यति । अनागतमनर्थं हि सुनयैर्यः प्रबाधयेत् । स न संशयमाप्नोति रोचतां वो व्रजामहे । दीर्घसूत्रस्तु यस्तत्र सोऽब्रवीत् सम्यगुच्यते । न तु कार्य्या त्वरा तावदिति मे निश्चिता मतिः । अथ सम्प्रतिपत्तिज्ञः प्राब्रवीद्दीर्घदर्शिनम् । प्राप्ते काले न मे किञ्चिन्न्यायतः परिहास्यते । एवं श्रुत्वा निरक्रामद्दीर्घदर्शी महामतिः । जगाम स्रोतसा तेन गम्भीरं

श्चित्रजलाशयम् । ततः प्रस्रुततोयन्तं प्रसमीक्ष्य जलाशयम् । बबन्धुर्विविधैर्योगैर्मत्स्यान् मत्स्योपजीविनः विलोड्यमाने तस्मिंस्तु स्रुततोये जलाशये । अगच्छत् स्पन्दनं तत्र दीर्घसूत्रः सहापरैः । उद्दाने क्रियमाणे तु मत्स्यानां तत्र रज्जुभिः । प्रविश्यान्तरमेतेषां स्थितः सम्प्रतिपत्तिमान् । ग्रस्तमेव तदुद्दानं गृहीत्वा तं तथैव सः । सर्वानेव च तांस्तत्र ते विदुर्ग्रथितानिति । ततः प्रक्षाल्यमानेषु मत्स्येषु विपुले जले । मुक्त्वा रज्जुं प्रमुक्तोऽसौ शीघ्रं सम्प्रतिपत्तिमान् । दीर्घसूत्रस्तु मन्दात्मा हीनबुद्धिरचेतनः । मरणं प्राप्तवान् मूढो यथैवोपहतेन्द्रियः । एवं प्राप्ततमं कालं यो मोहान्नावबुध्यते । स विनश्यति वै क्षिप्रं दीर्घसूत्रो यथा झषः । आदौ न कुरुते श्रेयः कुशलोऽस्मीति यः पुमान् । स संशयमवाप्नोति यथा सम्प्रतिपत्तिमान् । अनागतविधाता च प्रत्युत्पन्नमतिश्च यः । द्वावेव सुखमेधेते दीर्घसूत्रो विनश्यति” कर्म॰ २दीर्घे सूत्रे न॰। ६त॰। ३दीर्घतन्तुके त्रि॰“दीर्घसूत्रमकरोत् परिधानम्” माघः ।

**दीर्घसूत्रिन्** त्रि॰ दीर्घं सूत्रं कर्तव्यव्यापारोऽस्त्यस्य इनि । चिरक्रियावति ।“अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः । विषादी दीर्घसूत्री च कर्त्ता तामस उच्यते” गीता । “यदल्पं कार्यं तन्मासेनापि यो न सम्पादयति स दीर्घसूत्री” आ॰त॰ रघु॰ ।

**दीर्घस्कन्ध** पु॰दीर्घः स्कन्धः काण्डोऽस्य । तालवृक्षे राजनि॰

**दीर्घा** स्त्री दीर्घ+टाप् । पृश्निपर्ण्याम् राजनि॰ ।

**दीर्घाध्वग** पु॰ दीर्घमायतमध्वानं गच्छति गम—ड ६त॰ । (धावोडिया) ख्याते पत्रवाहकभेदे ।

**दीर्घायु** त्रि॰दीर्घमायुः यस्य । चिरकालजीविनि “जीवातुश्च दीर्घायुत्वं मे” यजु॰१८।६ “दीर्घायुत्वाय प्रति रत्न आयुः” ऋ॰८।५८।७

**दीर्घायुध** पु॰ नित्यकर्म॰ । कुन्तास्त्रे त्रिका॰। दीर्घं दन्तरूपमायुधं यस्य दीर्घात् आयुध्यते आ+युध—क । १शूकरे पुंस्त्री शब्दमा॰ ।

**दीर्घायुष्य** पु॰दीर्घमायुष्यं यस्य । १श्वेतमन्दारवृक्षे २मार्कण्डेये च राजनि॰। ३आयतायुर्युक्तेषु चिरजीविशब्दार्थोक्तेषु त्रि॰ कर्म॰। ४दीर्घे बहुकालव्यापके आयुषि तत्कारणत्वं मनुना । “ऋषयो दीर्घसन्ध्यत्वात् दीर्घमायुरवाप्नुयुः” ।

**दीर्घायुस्** पु॰दीर्घमायुरस्य । १दीर्घायुष्ययुक्ते २चिरजीविशब्दोक्तार्थे च । “दीर्घायुस्त्वे ओषधे ! खनिता” यजु॰ १।२।१००

**दीर्घालर्क** पु॰ दीर्घोऽलर्क इव । श्वेतमन्दारवृक्षे राजनि॰ ।

**दीर्घास्य** त्रि॰ दीर्घमास्यं यस्य । १आयतमुखे २हस्तिनि च ३शिवानुचरभेदे दीर्घलोचनशब्दे दृश्यम् दीर्घमास्यं यत्र देशे । ४पाश्चमोत्तरदेशभेदे वृ॰सं॰१४अ॰वाक्यं दीर्घग्रीवशब्दे दृश्यम् ।

**दीर्घाहन्** पु॰दीर्घाण्यहानि यत्र । निदाघसमये इह“हल्ङ्याप्भ्यो दीर्घात्” पा॰ सुलोपे प्रत्ययलक्षणेन “रोऽसुपि” पा॰ रत्वनिषेधेन रुत्वस्यासिद्धत्वात् न नान्तलक्षणः उपधादीर्घः” सि॰कौ॰। दीर्घाह्ना इत्यत्र “अह्नोऽदन्तात्” पा॰ णत्वम् कर्म॰। “राजाहःसखिभ्यः टच्” पा॰ टच् । दीर्घाह दीर्घदिवसे पु॰।

**दीर्घिका** स्त्री दीर्घैव स्वार्थे क कापि अत इत्वम् । १जलाशयभेदे तत्प्रमाणं जलाशयोत्सर्गतत्त्वे यथा मत्स्यवर्द्धमानधृतवसिष्ठः “शतेन धनुर्भिः पुष्करिणी । त्रिभिः शतैर्दीर्घिका, चतुर्भिर्द्रोणः पञ्चभिस्तडागः ! । द्रोणाद्दशगुणा वापी”इति संहितायामन्तरपदस्तुतेरत्रापि तथावगम्यते । तेन चतुर्दिक्षु पञ्चत्रिंशद्धस्तानून्यनतायां द्वादशशतहस्तान्तरानून्यत्वेन दीर्घिका” “मुक्ताफल क्रीडति दीर्घिकायाम्”रघुः । २जलाशयमात्रे“वापी दीर्घिका” अमरः दीर्घिकाभिश्च पूर्णाभिस्तथा पुष्करिणीभिर्हि” भा॰आ॰ १२८अ॰ ।

**दीर्घवृन्त** नित्यकर्म॰। डुण्डुकवृक्षे राजनि॰। [४भये च न॰

**दीर्ण** त्रि॰ दॄ—क्त । १विदारिते २भीते च भावे क्त । ३विदारे

**दीस** त्रि॰दी—क्षये क्विप् तां स्यति सो—क । क्षयनाशके गवादिगणे दीप्रेत्यत्र दीसेति पाठान्तरात् हितादौ यत् । दीस्य तद्धितादौ त्रि॰ ।

**दु** गतौ भ्वा॰पर॰सक॰अनिट् । दवति अदौषीत् केचित्तु वेडयमित्याहुस्तेन अदावीदित्यपि । दुदाव वेट् कत्वेऽपि लिटि नित्येट् दुदुविव । दूनः । “पित्तेन दूने रसने सितापि” नैष॰।

**दु** उपतापे स्वा॰प॰सक॰वेट् । उपतापःपीडनम् । दुनोति अदावीत् अदौषीत् लिटि नित्येट् दुदुविव । दुतः । “मृदुतया दुतया” माघः । “दुनोति निर्गन्धतया स्म चेतः” कुमा॰“स भस्माङ्गकारारीन् दुदाव च क्षतान्तवत्” भट्टिः “सद्द दूयेत यदङ्गमर्पितम्”रघुः कर्मकर्तरि रूपं दू—क्षरे दैवादिकस्य वा रूपम् ।

दुःक(दुष्क)र्ण पु० वा सत्वम्। धृतराष्ट्रपुत्रभेदे "दुर्मर्षणो दुर्मुखश्च दुष्कर्णः कर्ण एव च" भा० आ० ६७अ० तत्पुत्रोक्तौ।

दुःख दुःखकरणे कण्ड्वा० पर० अक० सेट्। दुःख्यति अदुःख्यीत् अदुःखीत्। [अदुदुःखत् त।

दुःख तत्क्रियायाम् अद–चु० उभ० अक० सेट्। दुःखयति ते

दुःख न० दुष्टानि खानि यस्मिन्, दुष्टं खनति खन–ड, दुःख–अच् वा। सांख्यादिमतसिद्धे प्रतिकूलवेदनीये रजःकार्ये १चित्तादिधर्मभेदे। न्यायमते २आत्मधर्मभेदे "बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना तथा। धर्माधर्मौ गुणा एते आत्मनः स्युश्चतुर्दश। अधर्मजन्यं दुःखं स्यात् प्रतिकूलं सचेतसाम्" भाषा० "अधर्मत्वेन दुःखत्वेन कार्यकारणभावः। प्रतिकूलं, दुःखत्वज्ञानादेव सर्वेषां स्वाभाविकविषयः प्रतिकूल इत्यर्थः सि० मु०। "इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम्" गौ० सू० "यज्जातीयस्यार्थस्य सन्निकर्षात् सुखमात्मोपलब्धवान्। तज्जातीयमेवार्थं पश्यन्नुपादातुमिच्छति सेयमादातुमिच्छा एकस्यानेकार्थदर्शिनो दर्शनप्रतिसन्धानाद् भवति लिङ्गमात्मनः, नियतविषये हि बुद्धिभेदमात्रे न सम्भवति देहान्तरवदिति। एवमेकस्यानेकार्थदर्शिनो दर्शनप्रतिसन्धानाद्दुःखहेतौ द्वेषः। यज्जातीयो यस्यार्थः सुखहेतुः प्रसिद्धस्तज्जातीयमर्थं पश्यन्नादातुम् प्रयतते, सोऽयम् प्रयत्न एकमनेकार्थदर्शिनं दर्शनप्रतिसन्धातारमन्तरेण न स्यात् नियतविषये बुद्धिभेदमात्रे न सम्भवति देहान्तरवदिति एतेन दुःखहेतौ प्रयत्नो व्याख्यातः। सुखदुःखस्मृत्या चायं तत्साधनमाददानः सुखमुपलभते दुःखमुपलभते सुखदुःखे वेदयते पूर्वोक्त एव हेतुः" भा० "द्वितीयसूत्रभाष्ये च 'दोषैः प्रयुक्तः शरीरेण प्रवर्त्तमानो हिंसास्तेयप्रतिषिद्धपरद्रोहं परद्रव्याभीप्सा नास्तिक्यञ्चेति सेयं पापात्मिका प्रवृत्तिरधर्माय'" उक्तम्।

कणा० सूत्रे उपस्कारवृत्तौ च सुखदुःखयोः परस्परभेदः, ज्ञानाद्भेदश्च साधितो यथा

"इष्टानिष्टकारणविशेषाद्विरोधाच्च मिथः सुखदुःखयोरर्थान्तरभावः" सू०। "आत्मगुणानां कारणभेदव्युत्पादनं दशमाध्यायार्थः, तत्र "आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्" इति गौतमीये प्रमेयविभागसूत्रे सुखस्यानभिधानात् दुःखाभिन्नमेव सुखमिति भ्रमनिरासार्थं सुखदुःखयोरेव प्रथमं भेदमाह। सुखदुःखयोर्मिथः परस्परमर्थान्तरभावो भेदो वैजात्यमिति यावत् कुत इत्यत आह इष्टानिष्टकारणविशेषात् इष्टम् इष्यमाणं स्रक्चन्दनवनितादि अनिष्टमनिष्यमाणमहिकण्टकादि, तद्रूपं यत्कारणं तस्य विशेषाद्भेदात् कारणवैजात्याधीनं कार्यवैजात्यमावश्यकं यतः। भेदकान्तरमाह विरोधात् सहानवस्थानलक्षणात् नह्येकस्मिन्नात्मन्येकदा सुखदुःखयोरनुभवः। चकारादनयोः कार्यभेदं भेदकं समुच्चिनोति, तथाहि अनुग्रहाभिष्वङ्गनयनप्रसादादि सुखस्य, दैन्यमुखमालिन्यादि दुःखस्य कार्यमिति ततोऽप्यनयोर्भेदः। तदुक्तं प्रशस्तपादाचार्यैः "अनुग्रहलक्षणं सुखं स्रगाद्यभिप्रेतविषयसान्निध्ये सति इष्टोपलब्धीन्द्रियार्थसन्निकर्षाद्धर्माद्यपेक्षादात्ममनसोः संयोगाद्यदनुग्रहाभिष्वङ्गनयनादिप्रसादजनकमुत्पद्यते तत् सुखम्" इति, तदिदमतीतेषु स्रक्चन्दनादिषु स्मृतिजम्, अनागतेषु सङ्कल्पजम्, गौतमीये सूत्रे सुखापरिगणनं वैराग्याय, सुखमपि दुःखत्वेन भावयतो वैराग्यं स्यादेतदर्थमिति" उप० वृ०। "नन्वास्तां सुखदुःखे परस्परं भिन्ने, ज्ञानादभिन्ने स्यातां स्वत्वनुभववदित्यत आह उप० वृ० "संशयनिर्णयान्तराभावश्च ज्ञानान्तरत्वे हेतुः" सू० "सुखदुःखयोर्ज्ञानान्तरत्वे ज्ञानभिन्नत्वे संशयनिर्णयावान्तरत्वाभावो हेतुर्लिङ्गमित्यर्थः, तदयमर्थः सुखं दुःखं वा ज्ञानं भवत् संशयरूपं वा स्यात् निर्णयरूपं वा, नाद्यः कोटिद्वयानुल्लेखित्वात्, न द्वितीयः एककोट्यनुल्लेखित्वात्, तथा च यावद्विशेषबाधात् सामान्यबाधः, द्वावेव हि ज्ञानस्य विशेषौ संशयत्वं निर्णयत्वञ्च, तदुभयञ्च, सुखे दुःखे च बाधितमिति ज्ञानत्वमपि तत्र बाधितम्। चकारादनुभवबाधं समुच्चिनोति सुखदुःखयोरहं सुखी दुःखीति मानसोऽनुभवो नत्वहं जाने सन्देह्मि निश्चिनोमीत्याकारोऽनुभव इति। भेदकान्तरमाह" उप० वृ० "तयोर्निष्पत्तिः प्रत्यक्षलैङ्गिकाभ्याम्" सू० "तयोः संशयनिर्णययोर्निष्पत्तिरुत्पत्तिः प्रत्यक्षाल्लिङ्गाच्च सुखं दुःखं वा न प्रत्यक्षसामग्रीजन्यं न वा लिङ्गजन्यम्, चतुर्विधं हि सुखं वैषयिकं मानोरथिकम् आभिमानिकमाभ्यासिकञ्च, तत्र तथाद्यामिन्द्रियसन्निकर्षप्रभवत्वं नास्त्येव। प्रथममिन्द्रियार्थसन्निकर्षजन्यत्वात् ज्ञानं स्यादिति चेन्न सामग्र्येकदेशस्य कार्यस्य साजात्यानापादकत्वात् अन्यथा दिक्कालसाधारण्येन सकलकार्यैकजात्यापत्तेः, किञ्च इन्द्रियार्थसन्निकर्षादुत्पद्यमानं सुखं निर्विकल्पकं वा स्यात् सविकल्पकं

वा, नाद्यः अतीन्द्रियत्वप्रसङ्गात्, न द्वितीयः विशेष्यविशेषणभावेन द्वयोरनाकलनरूपत्वात्। किञ्च सुखदुःखयोरन्यसंवेद्यत्वात् ज्ञानस्यान्यसंवेद्यत्वेऽनवस्थाप्रसङ्गात्। लैङ्गिकमिति लिङ्गमेव वैषयिकवत्। वृत्तिकृतस्तु तयोर्ज्ञानसुखयोर्निष्पत्तिः प्रत्यक्षलैङ्गिकाभ्यां प्रत्यक्षलैङ्गिकज्ञानव्याख्यानाभ्यां व्याख्याता, प्रत्यक्षं ज्ञानमिन्द्रियजम्, लैङ्गिकन्तु लिङ्गजम्, सुखादिकन्तु नैतादृशमिति व्याचक्रुः" उप० वृ०। "अभूदित्यपि" सू० "लैङ्गिकज्ञानाद् सुखादेः प्रकारभेदाधीनं भेदमाह इति शब्दः प्रकारे, अपिशब्दो भविष्यतीत्याकारान्तरसमुच्चये, तथाच पर्वते वह्निरभूद्भविष्यति वेति लैङ्गिके ज्ञानेऽतीतादिः प्रकारो दृश्यते न चैवं प्रकारं सुखं दुःखं वा उत्पद्यमानमुपलभ्यम्" उप० वृ०। "सति च कार्यदर्शनात्" सू० "चशब्दः भेदकान्तरं समुच्चिनोति। सति इन्द्रियार्थसन्निकर्षे सति च व्याप्तिपक्षधर्म्मतादिप्रतिसन्धाने कार्य्यस्य सुखस्य दुःखस्य वाऽदर्शनात् न प्रत्यक्षमात्रं सुखं दुःखं वा न लैङ्गिकमात्रं वा, तदयमर्थः ज्ञानसामान्यं तावत् सुखदुःखे न भवत इत्युक्तं ज्ञानविशेषः प्रत्यक्षज्ञानं वा भवेदनुमितिरूपं वा इन्द्रियार्थसन्निकर्षे स्रक्चन्दनादिप्रत्यक्षे सुखत्वानुभवाभावात्, न द्वितीयः चन्दनाद्यनुमितौ वह्न्याद्यनुमितौ वा सुखत्वदुःखत्वान्यतराननुभवात्। एवं प्रत्यक्षविशेषेऽनुमितिविशेषे वा सुखदुःखयोरननुभवाच्च तद्विशेषोऽपीति" उप० वृ०। "एकार्थसमवायिकारणान्तरेषु दृष्टत्वात्" सू०। "भेदकान्तरमाह सुखदुःखयोरिति शेषः, सुखं प्रति एकार्थसमवेतानि असाधारणकारणानि, धर्म्मः, सुखे रागः, सुखकारणेच्छा, तदुपादानयत्नः, स्रक्चन्दनादिज्ञानम्। दुःखं प्रति तु अधर्म्मः, अनिष्टकण्टकादिज्ञानम्, एषु एकार्थसमवायिषु कारणेषु दृष्टत्वादित्यर्थः, ज्ञानन्तु निर्विकल्पकमेकार्थसमवेतमसाधारणकारणं नापेक्षत एव, सविकल्पकन्त्वपेक्षते विशेषणज्ञानं तच्च कारणान्तरं स्वविजातीयं कारणं न भवति, मनःसंयोगस्तु साधारणत्वादविवक्षितः। यद्यपि स्मृतिः संस्कारमसाधारणमपेक्षते तथापि तद्भेदः स्फुटसिद्ध एवेत्यनुभवमादाय भेदचिन्तनात्। लैङ्गिके यद्यपि व्याप्तिस्मृतिपक्षधर्म्मताज्ञानापेक्षा तथाप्यन्तरशब्देनैव तद्व्युदासः। तदयं प्रमाणप्रयोगः सुखदुःखे अनुभवभिन्ने स्वसमानाधिकरणसजातीयासाधारणकारणजन्यत्वात् स्मृतिवदाद्यशब्दवत्" उप० वृ०।

सांख्यास्तु तस्य रजःकार्यत्वम् चित्तस्य विषयाणाञ्च धर्मत्वं तत्त्रैविध्यञ्चोररीचक्रुः। तथा हि "दुःखत्रयाभिघातादित्यादि" सा० का० तत्त्वकौमुद्यामुक्तं यथा "दुःखानां त्रयं दुःखत्रयं तत् खलु त्रिविधम् आध्यात्मिकमाधिभौतिकमाधिदैविकञ्च तत्राध्यात्मिकं द्विविधं शारीरं मानसञ्च। शारीरं वातपित्तश्लेष्मणां वैषम्यनिमित्तं, मानसं कामक्रोधलोभमोहभयेर्ष्याविषादविषयविशेषादर्शननिबन्धनम्। सर्वं चैतदान्तरोपायसाध्यत्वादाध्यात्मिकं दुःखम्। बाह्योपायसाध्यञ्च दुःखं द्वेधा आधिभौतिकमाधिदैविकञ्च तत्राधिभौतिकं मानुषपशुपक्षिसरीसृपस्थावरनिमित्तम्। आधिदैविकं यक्षराक्षसविनायकग्रहावेशनिबन्धनम्। तदेतत् प्रत्यात्मवेदनीयं दुःखं रजःपरिणामभेदो न शक्यते प्रत्याख्यातुम्। तदनेन दुःखत्रितयेनान्तःकरणवर्त्तिना चेतनाशक्तेः प्रतिकूलतयाभिसम्बन्धोऽभिघातः इति। एतावता प्रतिकूलवेदनीयत्वं जिज्ञासाहेतुरुक्तः। यद्यपि न सन्निरुध्यते दुःखं तथापि तदभिभवः शक्यः कर्त्तुमित्युपरिष्टादुपपादयिष्यते"

"भोग्ये हि सुखदुःखे अनुकूलप्रतिकूलवेदनीये प्रत्यात्ममनुभूयेते तेनानयोरनुकूलनीयेन प्रतिकूलनीयेन च केनचिदन्येन भवितव्यं नचानुकूलनीयाः प्रतिकूलनीया वा बुद्ध्यादयस्तेषां सुखदुःखाद्यात्मकत्वेन स्वात्मनि वृत्तिविरोधात्। तस्माद्योऽसुखाद्यात्मा सोऽनुकूलनीयः प्रतिकूलनीयो वा स चात्मेति" सां० प्र० भा०।

सर्वेषां त्रिगुणात्मत्वात् विषयस्यापि सुखदुःखात्मकत्वं त० कौ० व्यवस्थापितं यथा

"अत्र च सुखदुःखमोहाः परस्परविरोधिनः स्वस्वानुरूपाणि सुखदुःखमोहात्मकान्येव निमित्तानि कल्पयन्ति। तेषाञ्च परस्परमभिभाव्याभिभावकभावान्नानात्वम्। तद्यथा एकैव स्त्री रूपयौवनकुलशीलसम्पन्ना स्वामिनं सुखाकरोति तत्कस्य हेतोः? स्वामिनं प्रति तस्याः सुखरूपसमुद्भवात्। सैव स्त्री सपत्नीर्दुःखाकरोति तत्कस्य हेतोः? ताः प्रति तस्या दुःखरूपसमुद्भवात्। एवं पुरुषान्तरं तामविन्दत् सैव मोहयति तत्कस्य हेतोः? तत् प्रति तस्या मोहरूपसमुद्भवात्। अनया च स्त्रिया सर्वे भावा व्याख्याताः। तत्र यत् सुखहेतुस्तत् सुखात्मकं सत्त्वं, यत् दुःखहेतुस्तद्दुःखात्मकं रजः यन्मोहहेतुस्तन्मोहात्मकं तमः, सुखप्रकाशलाघवानां त्वेकस्मिन् युगपदुद्भूतावविरोधः सहदर्शनात्। तस्मात् सुखदुःखमोहैरिव

विरोधिभिरेकैकगुणवृत्तिभिः सुखप्रकाशलाघवैर्न निमित्तभेदा उन्नीयन्ते एवं दुःखोपष्टम्भकप्रवर्त्तकत्वैरेवं मोहगुरुत्वावरणैरिति सिद्धं त्रैगुण्यमिति"।

दुःखादीनाञ्च सा० प्र० भा० विषयमतत्त्वं यद्दर्शितं तच्च आनन्दशब्दे ७२२ पृ० दृश्यम् "प्रीत्यप्रीतिविषादाद्यैर्गुणानामन्योन्यवैधर्म्यम्" सा० सू०

"गुणानां सत्त्वादिद्रव्यत्रयाणामन्योऽन्यं सुखदुःखविषादाद्यैः साधर्म्यं कार्येषु तद्दर्शनादित्यर्थः। मोहादिकं च घटादेरपि रूपादिवदेव धर्मोऽन्तःकरणोपादानत्वादन्यकार्याणामित्युक्तम्। सत्त्वादिशब्दव्याख्याः पञ्चशिखाचार्यैरुक्ताः यथा "सत्त्वं नाम प्रसादलाघवाभिष्वङ्गप्रीतितितिक्षासन्तोषादिरूपानन्तभेदं समासतः सुखात्मकम्। एवं रजोऽपि शोकादिनानाभेदं समासतो दुःखात्मकम्" सा० प्रवचनभाष्यम्।

दुःखस्य चित्तवृत्तिविशेषरूपत्वम् शङ्करभाष्ये उक्तम् तच्च अज्ञानशब्दे ६४२ पृ० दर्शितम्।

कविकल्पलतायाञ्च लोकसिद्धानि कतिचित् दुःखकारणानि दर्शितानि यथा

पारतन्त्र्यं१ आधिः२ व्याधिः३ मानच्युतिः४ शत्रुः५ कुभार्या६ नैःस्वम्७ कुग्रामवासः८ कुस्वामिसेवनम्९ बहुकन्याः१० वृद्धत्वं११ परगृहवासः१२ वर्षाप्रवासः१३ भार्याद्वयम्१४ कुभृत्यः१५ दुर्बलकरणककलिः१६

वराहपुराणे दुःखतराणि कतिचिदुक्तानि यथा

"दुःखमेव प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे!। उचितेनोपचारेण दुःखं मोक्षविनाशनम्। अहङ्कारस्ततो नित्यं नरा मोहेन चाहताः। ये मां नैव प्रपद्यन्ते ततो दुःखतरन्नु किम्। सर्वाशी सर्वविक्रेता नमस्कारविवर्जितः। ये च मां न प्रपद्यन्ते ततो दुःखतरन्नु किम्। सर्वाण्यन्नानि तु सिद्धानि पाकभेदन्तु कारयेत्। अवैश्वदेवं योऽश्नाति ततो दुःखतरन्नु किम्। प्राप्तकाले वैश्वदेवे दृष्ट्वा ह्यतिथिमागतम्। अदत्त्वा तस्य यो भुङ्क्ते ततो दुःखतरन्नु किम्। असन्तुष्टस्तु वैभव्ये परदाराभिमर्दकः। परोपतापी मन्दात्मा ततो दुःखतरन्नु किम्। अकल्पायुर्बलं कर्म दृष्ट्वा संवसते नरः। मृत्युकालवशं प्राप्तस्ततो दुःखतरन्नु किम्। हस्त्यश्वरथयानानि गच्छमानानि पश्यति। न वै तस्याग्रतः पृष्ठे ततो दुःखतरन्नु किम्। अश्नन्ति पिशितं केचित् रसयासिसमन्वितम्। शुष्कान्नं केचिदश्नन्ति ततो दुःखतरन्नु किम्। वरवस्त्रावृतां शय्यां समासेवन्ति भूषिताः। केचित् तृणेषु शेरन्ते ततो दुःखतरन्नु किम्। विद्वान् कृती गुणज्ञश्च सर्वशास्त्रविशारदः। केचिन्मूकाश्च दृश्यन्ते ततो दुःखतरन्नु किम्। विद्यमाने धने केचित् कृपणा भोगवर्जिताः। दरिद्रो जायते दाता ततो दुःखतरन्नु किम्। पुरुषस्य तु द्वे भार्ये तयोरेकां प्रशंसयेत्। एकापि दुर्भगा तत्र ततो दुःखतरन्नु किम्। लब्ध्वा तु मानवीं संज्ञां पञ्चभूतसमन्विताम्। मामेव न प्रपद्यन्ते ततो दुःखतरन्नु किम्। लब्ध्वा ब्राह्मण्यभावन्तु त्रयो वर्णाः सुमध्यमे!। पापकर्मरता ह्यासंस्ततो दुःखतरन्नु किम्। एतत्ते कथितं भद्रे! दुःखकर्म विनिश्चितम्। सर्वभूतहितार्थाय यत्त्वया परिपृच्छ्यते"। "अवाच्यवादांश्च बहून् वदिष्यन्ति तवाहिताः। निन्दन्तस्तव सामर्थ्यं ततो दुःखतरन्नु किम्" गीता। "मा जीवन् यः परावज्ञादुःखदग्धोऽपि जीवति" माघः। "सुखं हि दुःखान्यनुभूय शोभते" मृच्छ०। दुःखमनुभवति दुःख+क्यङ् दुःखायते दुःखमनुभवतीत्यर्थः। "दुःखायते जनः सर्वः सएवैकः सुखायते" भट्टिः।

**दुःखग्राम** पु० दुःखानां ग्रामोऽत्र। १संसारे शब्दार्थचि०। ६त०। २दुःखसमुदाये च।

**दुःखजात** त्रि० जातं दुःखमस्य परनि०। संजातदुःखे "जातिकालसुखादिभ्यः" इत्यादिना पा०अन्त्यान्तोदात्तता ६त०। २दुःखसमुदाये न०।

**दुःखत्रय** न० ६त०। आध्यात्मिकाधिभौतिकाधिदैविकरूपे दुःखत्रिके दुःखशब्दे सा०का० त०कौ०वाक्यं दृश्यम्।

**दुःखदिर** पु० दुष्टः खदिरः वा सत्वम्। महासारे खदिरभेदे शब्दार्थचि०। [हेमच०।

**दुःखदोह्या** स्त्री दुःखेन दोह्या। दुःखेन दोह्यायां गवि।

**दुःखशील** त्रि० दुःखं शीलयति शील–अण् उप०। दुःखानुभवशीलनकर्त्तरि "कामैकपत्नी व्रतदुःखशीलाम्" कुमा०।

**दुःखित** त्रि० दुःख+तार० इतच्। संजातदुःखे "दुःखिता यत्र दृश्येरन् विकृताः पापकारिणः" मनुः।

**दुःखिन्** त्रि० दुःख+सुखा० गत्वर्थे इनि। दुःखान्विते

**दुःशकुन** न०दुष्टं शकुनं वा रोः सः। अशुभसूचके निमित्तभेदे "वन्ध्याचर्मतुषास्थि सर्पलवणाङ्गारेन्धनक्लीवविट्तैलोन्मत्तवसौषधारिजटिलप्राट्तृणव्याधिताः नग्नाभ्यक्तविमुक्तकेशपतित व्यङ्गक्षुधार्त्ता असृक् स्त्रीपुष्पं शरटः स्वगेहदहनं मार्जारयुद्धं क्षुतम्। काषायी गुड़-

शकपङ्कविधवाः कुब्जाः कुटुम्बे कलिर्वस्त्रादेः स्खलनं तुषापसमरं कृष्णानि धान्यानि च । कार्पासं वमनञ्च गर्दभरवो दक्षेऽतिरुट् गर्भिणी मुण्डार्द्राम्बरदुर्वचोऽन्धबधिरोदक्या न दृष्टाः शुभाः । कृष्णाम्बरा कृष्णविलेपनाढ्या कृष्णस्रजं मूर्द्धनि धारयन्ती । दृष्टा प्रकोपा यदि कृष्णवर्णा नारी नरैस्तद्विपदो भवन्तीति" शब्दार्थचि०धृतवाक्यम्

दिग्भेदादिभिः शकुनभेदे फलभेदः वृ०सं०८६अ०उक्तो यथा "अन्यजन्मान्तरकृतं कर्म्म पुंसां शुभाशुभम् । यत्तस्य शकुनः पाकं निवेदयति गच्छताम् । ग्रामारण्याम्बुभूव्योमद्युनिशोभयचारिणः । रुतयातेक्षितोक्तेषु ग्राह्याः स्त्रीपुन्नपुंसकाः । पृथग्जात्यनवस्थानादेषां व्यक्तिर्न लक्ष्यते । सामान्यलक्षणोद्देशे श्लोकावृषिकृताविमौ । पीनोन्नतविकृष्टांसाः पृथुग्रीवाः सुवक्षसः । स्वल्पगम्भीरविरुताः पुमांसः स्थिरविक्रमाः । तनूरस्कशिरोग्रीवाः सूक्ष्मास्यपदविक्रमाः । प्रसक्तमृदुभाषिण्यः स्त्रियोऽतोऽन्यन्नपुंसकम् । ग्रामारण्यप्रचाराद्यं लोकादेवोपलक्षयेत् । सञ्चिक्षिप्सुरहं वच्मि यात्रामात्रप्रयोजनम् । पथ्यात्मानं नृपं सैन्ये पुरे चोद्दिश्य देवताम् । सार्थे प्रधानं साम्ये स्याज्जातिविद्यावयोऽधिकम् । भुक्तप्राप्तैष्यदर्केषु फलं दिक्षु तथाविधम् । अङ्गारदीप्तधूमिन्यस्ताश्च शान्तास्ततोऽपराः । तत्पञ्चमदिशां तुल्यं शुभं त्रैकाल्यमादिशेत् । परिशेषयोर्दिशोर्वाच्यं यथासन्नं शुभाशुभम् । शीघ्रमासन्ननिम्नस्थैश्चिराद्युन्नतदूरगैः । स्थानवृद्ध्युपघाताच्च तद्वद्ब्रूयात्फलं पुनः । क्षणतिथ्युडुवातार्कैर्देवदीप्तो यथोत्तरम् । क्रियादीप्तो गतिस्थानभावस्वरविचेष्टितैः । दशधैवं प्रशान्तोऽपि सौम्यस्तद्वत्फलाशनः । मांसामेध्याशनो रौद्रो विमिश्रोऽन्नाशनः स्मृतः । हर्म्यप्रासादमङ्गल्यमनोज्ञस्थानसंस्थिताः । श्रेष्ठा मधुरसक्षीरफलपुष्पद्रुमेषु च । स्वकाले गिरितोयस्था बलिनो द्युनिशाचराः । क्लीबस्त्रीपुरुषाश्चैषां बलिनः स्युर्यथोत्तरम् । जवजातिबलस्थानहर्षसत्त्वस्वरान्विताः । स्वभूमावनुलोमाश्च तद्वूनाः स्युर्विवर्जिताः । कुक्कुटेभपिरिल्याश्च शिखिवञ्जुलछिक्कराः । बलिनः सिंहनादश्च कूटपूरी च पूर्वतः । क्रोष्टुकोलूकहारीतकाककोकर्क्षपिङ्गलाः । कपोतरुदिताक्रन्दक्रूरशब्दाश्च याम्यतः । गोशशक्रौञ्चलोमाशहंसोत्क्रोशकपिञ्जलाः । बिडालोत्सववादित्रगीतहासाश्च वारुणाः । शतपत्रकुरङ्गाखुमृगैकशफकोकिलाः । चाषशल्यकपुण्याहघण्टाशङ्खरवा उदक् । न ग्राम्योऽरण्यगो ग्राह्यो नारण्यो ग्रामसंस्थितः । दिवाचरो न शर्वर्यां न च नक्तञ्चरो दिवा । द्वन्द्वरोगान्वितत्रस्ताः कलहामिषकाङ्क्षिणः । आपगान्तरिता मत्ता न ग्राह्याः शकुनाः क्वचित् । रोहिताश्वाजवालेयकुरङ्गोष्ट्रमृगाः शशः । निष्फलाः शिशिरे ज्ञेया वसन्ते काककोकिलौ । न तु भाद्रपदे ग्राह्याः सूकरश्ववृकादयः । शरद्यब्जादगोक्रौञ्चाः श्रावणे हस्तिचातकौ । व्याघ्रर्क्षवानरद्वीपिमहिषाः सबिलेशयाः । हेमन्ते निष्फला ज्ञेया बालाः सर्वे विमानुषाः । ऐन्द्रानलदिशोर्मध्ये त्रिभागेषु व्यवस्थिताः । कोशाध्यक्षानलाजीवितपोयुक्ताः प्रदक्षिणम् । शिल्पी भिक्षुर्विवस्त्रा स्त्री याम्यानलदिगन्तरे । परतश्चापि मातङ्गगोपधर्म्मसमाश्रयाः । नैरृतीवारुणीमध्ये प्रमदासूतितस्कराः । शौण्डिकः शाकुनी हिंस्रो वायव्यपश्चिमान्तरे । विषघातकगोस्वामिकुहकज्ञास्ततः परम् । धनवानीक्षणिकश्च मालाकारः परं ततः । वैष्णवश्चरकश्चैव वाजिनां रक्षणे रतः । एवं द्वात्रिंशतो भेदाः पूर्वदिग्भिः सहोदिताः । राजा कुमारो नेता च दूतः श्रेष्ठी चरो द्विजः । गजाध्यक्षश्च पूर्वाद्याः क्षत्रियाद्याश्चतुर्दिशम् । गच्छतस्तिष्ठतो वापि दिशि यस्यां व्यवस्थितः । विरौति शकुनो वाच्यस्तद्दिग्जेन समागमः । भिन्नभैरवदीनार्त्तपरुषक्षामजर्ज्जराः । स्वरा नेष्टाः शुभाः शान्ता हृष्टप्रकृतिपूरिताः । शिवा श्यामा रला छुच्छुः पिङ्गला गृहगोधिका । सूकरी परपुष्टा च पुन्नामानश्च वामतः । स्त्रीसञ्ज्ञा भासभषककपिश्रीकर्णछिक्कराः । शिखिश्रीकण्ठपिप्पीकरुरुश्येनाश्च दक्षिणाः । क्ष्वेडास्फोटितपुण्याहगीतशङ्खाम्बुनिःस्वनाः । सतूर्याध्ययनाः पुंवत् स्त्रीवदन्या गिरः शुभाः । ग्रामौ मध्यमषड्जौ तु गान्धारश्चेति शोभनाः । षड्जामध्यमगान्धारा ऋषभश्च स्वरा हिताः । रुतकीर्त्तनदृष्टेषु भारद्वाजाजबर्हिणः । धन्या नकुलचाषौ च सरटः पापदोऽग्रतः । जाहकाहिशशक्रोडगोधानां कीर्त्तनं शुभम् । रुतसन्दर्शनं नेष्टं प्रतीपं वानरर्क्षयोः । ओजाः प्रदक्षिणं शस्ता मृगाः सनकुलाण्डजाः । चाषः सनकुलो वामो भृगुराहापराह्णतः । छिक्करः कूटपूरी च पिरिली चाह्नि दक्षिणा । अपसव्याः सदा शस्ता दंष्ट्रिणः सबिलेशयाः । श्वेते हयशिते प्राच्यां शवमांसे च दक्षिणे । कन्यकादधिनी पश्चादुदग्गोविप्रसाधवः । जालश्वचरणौ नेष्टौ प्राग्याम्यौ शस्त्रघातकौ । पश्चादासवषण्डौ च

स्खलासनहृत्त्वान्युदक्। कर्मसङ्गमयुद्धेषु प्रवेशे नष्टमार्गणे। यानव्यस्तगता ग्राह्या विशेषश्चात्र वक्ष्यते। द्विजा मध्यानवद्ग्राह्याः कुरङ्गरुरुवानराः। अह्नश्च प्रथमे भागे चाषवञ्जुलकुक्कुटाः। पश्चिमे शर्वरीभागे नप्तृकौलूकपिङ्गलाः। सर्व एव विपर्यस्ता ग्राह्याः सार्थेषु योषिताम्। नृपसन्दर्शने ग्राह्याः प्रवेशेऽपि प्रयाणवत्। गिर्य्यरण्यप्रवेशे च नदीनां चावगाहने। वामदक्षिणगौ शस्तौ यौ तु तावग्रपृष्ठगौ। क्रियादीप्तौ विनाशाय यातुः परिघसञ्ज्ञितौ। तावेव तु यथाभागं प्रशान्तरुतचेष्टितौ। शकुनौ शकुनद्वारसञ्ज्ञितावर्थसिद्धये। केचित्तु शकुनद्वारमिच्छन्त्युभयतः स्थितैः। शकुनैरेकजातीयैः शान्तचेष्टाविराविभिः। विसर्जयति यद्येक एकश्च प्रतिषेधति। स विरोधोऽशुभो यातुर्ग्राह्यो वा बलवत्तरः। पूर्वं प्रावेशिको भूत्वा पुनः प्रास्थानिको भवेत्। सुखेन सिद्धिमाचष्टे प्रवेशे तद्विपर्ययः। विसर्ज्य शकुनः पूर्वं स एव निरुणद्धि चेत्। प्राह यातुररेर्मृत्युं डमरं रोगमेव वा। अपसव्यास्तु शकुना दीप्ता भयनिवेदिनः। आरम्भे शकुनो दीप्तो वर्षान्तस्तद्भयङ्करः। तिथिवाय्वर्कभस्थानचेष्टादीप्ता यथाक्रमम्। धनसैन्यबलाङ्गेष्टकर्मणां स्युर्भयङ्कराः। जीमूतध्वनिदीप्तेषु भयं भवति मारुतात्। उभयोः सन्ध्ययोर्दीप्ताः शस्त्रोद्भवभयङ्कराः। चितिकेशकपालेषु मृत्युबन्धवधप्रदाः। कण्टकीकाष्ठभस्मस्थाः कलहायासदुःखदाः। अप्रसिद्धिं भयं वापि निःसाराश्मव्यवस्थिताः। कुर्वन्ति शकुना दीप्ताः शान्ता वाच्यफलास्तु ते। अभिसिद्धिसिद्धिदौ ज्ञेयौ निर्ह्रादाहारकारिणौ। स्थानाद्द्रुवन् व्रजेद्यात्रां शंसते त्वन्यथागमम्। कलहः स्वरदीप्तेषु स्थानदीप्तेषु विग्रहः। उच्चमादौ स्वरं कृत्वा नीचं पश्चाच्च घोषकृत्। एकस्थाने रुवन्दीप्तः सप्ताहाद्ग्रामघातकृत्। पुरेशनरेन्द्राणामृत्वयनवत्सरात्। सर्वे दुर्भिक्षकर्त्तारः स्वजातिपिशिताशनाः। सर्पमूषिकमार्जारपृथुरोमविवर्जिताः। परयोनिषु गच्छन्तो मैथुनं देशनाशनाः। अन्यत्र वेसरोत्पत्तेर्नॄणां चाजातिमैथुनात्। बन्धघातभयानि स्युः पादोरुमस्तकान्तिगैः। आमपिशिताद्यादैर्व्वर्म्मोषणतग्रहाः। क्रूरोग्रदोषदुष्टैश्च प्रधानन्तपहन्तृकैः। चिरकालैश्च दीप्ताद्यास्त्वागमो दिक्षु तत्कृणाम्। सद्रव्यो बलवांश्च स्यात्सद्रव्यस्यागमो भवेत्। द्युतिमान् विनतग्रीवो सौम्यो दारुणदरुकृत्। विदिक्स्थः शकुनो दीप्तो वामस्थेनानुवाशितः। स्त्रियाः संग्रहणं प्राह तद्दिगाख्यातयोनितः। शान्तः पञ्चमदीप्तेन विरुतो विजयावहः। द्विनरागमकारी वा दोषकृत्तद्विपर्यये। वामसव्यरुतौ मध्यः प्राह स्वपरयोर्भयम्। सरथं कथयन्त्येते सर्वे समविराविणः। वृक्षापमध्यमूलेषु गजाश्वरथिकागमः। दीर्घाङ्गसुषिताग्रेषु नरनौशिविकागमः। शकटेनोन्नतस्थे च छायास्थे कुलसंयुतः। एकत्रिपञ्चसप्ताहात् पूर्वाद्यास्त्वन्तरासु च। सुरपतिहुतवहयमनिर्ऋतिवरुणपवनेन्दुशङ्कराः। प्राच्यादीनां पतयो दिशः पुमांसोऽङ्गना विदिशः। तरुतालीविदलाम्बरसलिलजशरचर्मपट्टलेखाः स्युः। द्वात्रिंशत्प्रविभक्ते दिक्चक्रे तेषु कार्याणि। व्यायामशिखिनिकूजितकलहाम्भोनिगडमन्त्रगोशब्दाः। वर्णाश्च रक्तपीतककृष्णसिताः कोणगा मिश्राः। चिह्नं ध्वजो दग्धमथ श्मशानं दरी जलं पर्वतयज्ञघोषाः। एतेषु संयोगभयानि विन्द्यात् अन्यानि वा स्थानविकल्पितानि। स्त्रीणां विकल्पे बृहती कुमारी व्यङ्गा विगन्धा त्वथ नीलवस्त्रा। कुब्जा प्रदीर्घा विधवा च ताश्च संयोगचिन्तापरिवेदिकाः स्युः। पृच्छासु रूप्यकनकातुरभामिनीनां सेवाव्ययानसखगोकुलसंश्रयासु। न्यग्रोधरक्ततरुलोध्रककीचकाख्यास्तद्द्रुमाः खदिरबिल्वनगार्जुनाश्च"।

अन्यानि शुभाशुभशकुनानि तत्रोक्तानि तत्तच्छब्दे उक्तानि

**दुः(दुश्श)शला** स्त्री धृतराष्ट्रकन्यायाम् वा रोः शः। दुःशलाप्यत्र "कुण्डजश्चित्रकश्चैव दुःशला च शताधिका" भा० आ० ६७अ०। [दुःखेन शिष्यमाणे।

**दुःशास** त्रि० दुःखेन शिष्यतेऽसौ शास–कर्मणि वेदे खल्।

**दुःशासन** त्रि० दुःखेन शिष्यतेऽसौ "भाषायां शासियुधिदृशिधृषिमृषिभ्यो युच्" पा० भाषायां युचो विधानात् कर्मणि युच्। दुःखेन शिष्यमाणे दुर्य्योधनादिमध्ये २धृतराष्ट्रपुत्रभेदे पु०। "दुर्य्योधनो युयुत्सुश्च राजन्! दुःशासनस्तथा" भा०आ० ६७अ०

**दुः(श्शी)शील** त्रि० दुष्टं शीलमस्य वा रोः शः। दुष्टशीले "पुत्रमप्यतिदुःशीलो न धैर्यं कर्त्तुमर्हति" भा०स०२०अ०

**दुःशोध** त्रि० दुर्+शुध–कर्मणि खल्। १दुःखेन शोधनीये प्रतीकार्ये च त्रि० "तथैव खलु दुःशोधान् शोधयेत् क्षारकर्मणा" सुश्रु०। [त्वा षः। दुष्टे सन्धौ

**दुः(दुष्ष)षन्धि** पु० दुष्टः सन्धिः सुषामा० षत्वे विसर्गस्य

**दुः(दुष्ष)षमस्** अव्य० दुष्टं समम् तिष्ठद्गु० अव्ययी० षत्वे

रोर्वा षः । गर्हायाम् अमरः ६ब०। अषत्वम् । अक्षम-शक्ते त्रिका० ।

**दुः(दुस्स)सह** त्रि० दुःखेन सह्यतेऽसौ सह-खल् वा रोः षः । १दुःखेन सोढव्ये "यो दुःसहासो वसुधा" ऋ० ८.८१।५ "तेषामापततां वेगः करिणां दुःसहोऽभवत्" भा०व०६५अ० "दुःसहेन हृदये निशाचरी" रघुः "भवत्यनिष्टादपि नाम दुःसहात्" कुमा० । २नागदमन्यां स्त्री राजनि० । [भावे क्त । २दुष्टे स्वप्ने न०।

**दुःषु(सु)प्त** त्रि० दुर्+स्वप-क्त-वा षत्वम् । १दुष्टस्वप्नयुक्ते

**दुःषूति** त्रि० दुष्टा सूतिः रोर्वा षः । दुष्टायां सूतौ ।

**दुः(दुष्षे)षेध** त्रि० दुर्-षिध-खल् सुषामा० षत्वे रोर्वा षः । सेद्धुमसाध्ये । [दुष्टसक्थियुक्ते ।

**दुःसक्थ(क्थि)** त्रि० दुष्टं सक्थि यस्य वा अच् समा०।

**दुःसाध(ध्य)** त्रि०दुःखेन साध्यतेऽसौ खल् तत्रार्थे यत् वा। साधयितुमशक्ये "क्रन्दोनुष्टप्तिदुःसाधा" माघः "किं नाम मम दुःसाध्यं शत्रुणा निग्रहे रणे" हरिवं० २६७अ०

**दुःसाधिन्** त्रि० दुष्टं साधयति साधि-णिनि । १दुष्टसाधके २दौवारिके पु० शब्दमाला ।

**दुः(दु)स्त्री** स्त्री दुष्टा स्त्री प्रा०स० वा विसर्गलोपः । दुष्टायां स्त्रियां तस्याभावः कर्म वा अण् । दौस्त्रैण तस्याभावे कर्मणि च न० ।

**दुः(दु)स्थ** त्रि०दुष्टं तिष्ठति स्था-क वा विसर्गलोपः । १दुर्गते २मूर्खे ३दुष्टं स्थिते च मेदि० ४लुब्धे शब्दार्थचि० । "दुःस्थं तिष्ठसि यच्च पथ्यमधुना कर्त्तासि तत् श्रोष्यसि" अमरुश० ।

**दुः(दु)स्पर्श** त्रि० दुःखेन स्पृश्यतेऽसौ दुर्+स्पृश-कर्मणि खल् वा विसर्गलोपः । १स्प्रष्टुमशक्ये मेदि०। "दुर्ग्राह्यो हस्तिना वायुः दुस्पर्शः पाणिना शशी" भा०आनु०२२अ० २दुरालभायाम् स्त्री अमरः ३लताकरञ्जे राजनि० ४कपिकच्छ्वाम् ५आकाशवल्ल्यां ६कण्टकार्य्याम् च स्त्री राजनि०। [१कर्मणि खल् । २दुष्टे श्रणे च अस्मादौ हेमच०।

**दुः(दु)स्फोट** पु०दुष्टं स्फोटयति स्फुट-अच् वा विसर्गलोपः ।

**दुःस्वप्न** पु० दुष्टः स्वप्नः प्रा०स० । अशुभसूचके स्वप्नभेदे स च छान्दोग्यो० "अथ स्वप्ने कृष्णदन्तं पुरुषं पश्यति स एनं हन्ति" इत्युक्तः ।

कतिचित् दुःस्वप्नभेदाश्च ब्रह्मवैवर्त्तजन्मख० उक्ता यथा "सर्वं श्रुतं महाभाग ! दुःस्वप्नं कथय प्रभो ! । उवाच तच्च भगवान् ! श्रूयतामिति तद्वचः । श्रीभगवानुवाच स्वप्ने हसति यो हर्षाद्विवाहं यदि पश्यति । नर्त्तनं गीतमिष्टञ्च विपत्तिस्तस्य निश्चितम् । दन्ता यस्य विपोद्यन्ते विचरन्तञ्च पश्यति । धनहानिर्भवेत्तस्य पीडा चापि शरीरजा । अभ्यङ्गितस्तु तैलेन यो गच्छेद्दक्षिणां दिशम् । खरोष्ट्रमहिषारूढो मृत्युस्तस्य न संशयः । स्वप्ने चूर्णं जवापुष्पमशोकं करवीरकम् । विपत्तिस्तस्य तैलञ्च लवणं यदि पश्यति । नग्नां कृष्णां छिन्ननासां शूद्रस्य विधवां तथा । कपर्दकं तालफलं दृष्ट्वा शोकमवाप्नुयात् । स्वप्ने रुष्टं ब्राह्मणञ्च ब्राह्मणीं कोपसंयुताम् । विपत्तिश्च भवेत्तस्य लक्ष्मीर्याति गृहाद्ध्रुवम् । वनपुष्पं रक्तवर्णं पलाशञ्च सुपुष्पितम् । कार्पासं रक्तवस्त्रं च दृष्ट्वा दुःखमवाप्नुयात् । गायन्तीञ्च हसन्तीं वा कृष्णाम्बरधरां स्त्रियम् । दृष्ट्वा कृष्णाञ्च विधवां नरो मृत्युमवाप्नुयात् । देवता यत्र नृत्यन्ति गायन्ति च हसन्ति च । आस्फोटयन्ति धावन्ति तस्य देशो विनश्यति । वान्तं मूत्रं पुरीषञ्च रौप्यं रत्नं सुवर्णकम् । प्रत्यक्षमथ वा स्वप्ने जीवितं दशमासिकम् । कृष्णाम्बरधरां नारीं कृष्णमाल्यानुलेपनाम् । उपगूहति यः स्वप्ने तस्य मृत्युर्भविष्यति । मृतवत्सञ्च स्वप्नञ्च मृगस्य वानरस्य वा । यः प्राप्नोत्यस्थिमालां च विपत्तिस्तस्य निश्चितम् । अभ्यङ्गितस्तु तैलेन हविषा मधुनाऽपि वा । तक्रेणैव गुडेनापि पीडा तस्य विनिश्चितम् । पतितं नखकेशञ्च निर्वाणाङ्गारमेव च । भस्मपूर्णां चितां दृष्ट्वा लभते मृत्युमेव च । मसीञ्च किञ्चित् कृष्णं वा दृष्ट्वा दुःखं लभेद्ध्रुवम् । पादुकाफलकं रक्तपुष्पमाल्यं भयानकम् । माषं मसूरं मुद्गं वा दृष्ट्वा सद्यो व्रणं भवेत् । करटं सरटं काकं भल्लूकं वानरं परम् । पूयगात्रमलं स्वप्ने केवलं व्याधिकारणम् । भग्नभाण्डं क्षतं शूद्रं गलत्कुष्ठं च रोगिणम् । रक्ताम्बरञ्च जटिलं शूकरं महिषं खरम् । कृष्णाकारं महाघोरं मृतजीवं भयङ्करम् । दृष्ट्वा स्वप्ने योनिलिङ्गं विपत्तिं लभते ध्रुवम् । कुवेशरूपं म्लेच्छञ्च यमदूतं भयङ्करम् । पाशहस्तं पाशयस्तं दृष्ट्वा मृत्युं लभेन्नरः । ब्राह्मणो ब्राह्मणी बाला बालको वा सुतः सुता । विदायं कुरुते कोपात् दृष्ट्वा दुःखमवाप्नुयात् । कृष्णपुष्पञ्च तन्माल्यं शस्त्रास्त्रधारिणम् । म्लेच्छाञ्च विकृताकारां दृष्ट्वा मृत्युं लभेद्ध्रुवम् । नाट्यञ्च नर्त्तनं गीतं गायनं रक्तवाससम् । मृदङ्गवाद्यमानन्दं दृष्ट्वा दुःखं लभेद्ध्रुवम् ।

मायायक्तं मृतं दृष्ट्वा मृत्युञ्च लभते ध्रुवम्। मत्स्यादिधारणं यो हि तद्भ्रातुर्मरणं भवेत्। छिन्नं भग्नञ्च वापि विक्षतं सत्नकेशिनम्। क्षिप्रं व्यत्यञ्च कुर्वन्तं दृष्ट्वा मृत्युं लभेन्नरः। मृतो वापि मृता वापि कृष्णा स्त्रेच्छा भयानका। उपगूहति यं स्वप्ने तस्य मृत्युर्विनिश्चितम्। उपगूहति यं स्वप्ने म्लेच्छो दंष्ट्रिणोऽपि वा। बालका मानवाश्चैव तस्य राजकुलाद्भयम्। छिन्नवृत्तं पतन्तञ्च शिलावृष्टिं तुषं तु रम्। रक्ताङ्गारं भस्मवृष्टिं दृष्ट्वा दुःखमवाप्नुयात्। यद्वं पतन्तं शैलं वा धूमकेतुं भयानकम्। भग्नं स्कन्धं तरोर्वापि दृष्ट्वा दुःखमवाप्नुयात्। रथगेहस्थशैलगोहस्तितुरगोऽम्बरात्। भूमौ पतति यत्स्वप्ने विपत्तिस्तस्य निश्चितम्। उच्चैः पतन्ति गर्त्तेषु भस्माङ्गारचितासु च। क्षारकुण्डेषु चूर्णेषु मृत्युस्तेषां न संशयः। बलाहृत्याति दृष्टञ्च छत्रञ्च यस्य मस्तकात्। पितुर्नाशो भवेत्तस्य गुरोर्वापि न्टपस्य वा। सुरभी यस्य गेहाच्च याति वत्सा सवत्सिका। प्रयाति पालतस्तस्य लक्ष्मीरपि वसुन्धरा। पाशेन बद्ध्वा बद्धञ्च यं गृहीत्वा प्रयान्ति च। यमदूतास्च ये म्लेच्छास्तस्य मृत्युर्विनिश्चितम्। गणको ब्राह्मणो वापि ब्राह्मणी वा गुरुस्तथा। परिरुष्टः शपति यं विपत्तिस्तस्य निश्चितम्। विरोधिनस्च काकास्तु कुक्कुरा भल्लुकास्तथा। पतन्त्यागत्य यच्चाङ्गे तस्य मृत्युर्न संशयः। महिषा भल्लुका उष्ट्राः शूकरा गर्दभास्तथा। रुष्टा धावन्ति यं स्वप्ने स रोगी निश्चितं भवेत्"।

अस्य शान्तिस्तत्रोक्ता यथा

"रक्तचन्दनकाष्ठानि घृताक्तानि च यो जुहेत्। गायत्र्या च सहस्रेण तेन शान्तिर्विधीयते। सहस्रधा जपेद्यो हि भक्त्या मां मधुसूदनम्। निष्पापो हि भवेत् सोऽपि दुःस्वप्नः सुस्वप्नो भवेत्। अच्युतं केशवं विष्णुं हरिं सत्यं जनार्दनम्। हंसं नारायणञ्चैव एतन्नामाष्टकं शुभम्। शुचिः पूर्वमुखः प्राज्ञो दशकृत्वश्च यो जपेत्। निष्पापो हि भवेत् सोऽपि दुःस्वप्नः सुस्वप्नो भवेत्"। स्वापसमयलग्ने दुःस्वप्नसूचकग्रहयोगभेदः नी॰त॰ उक्तो यथा

"लग्नांशपेऽर्के तनुगेऽथ वाऽस्मिन् दुःस्वप्नमीक्षेत यथा विविक्तम्। रक्ताम्बरं वह्निमथापि चन्द्रे हृत्येवमादि"।

"मोद्यते भक्ष्यते वापि पिशाचासुरवायसैः। भूतैः प्रेतैः श्वभिर्व्याघ्रैर्गोमायुखरसूकरैः। सरभैः करभैः कीशैः म्लेच्छैरन्यतरैर्वृकैः। स्वप्ने स जीवितं त्यक्त्वा वर्षान्ते यममीक्षते। गन्धपुष्पांशुकैः शोणैः स्वान्तं भूषिताम्बरः। यः पश्येत् स्वप्नसमये सोऽष्टौ मासाननिन्यत्यो" काशीख॰अधिकं काशविक्रमशब्दे १९६७पृ॰दृश्यम्

**दुकूल** न॰ दु—कलच् कुक् च दुष्टं कुलति कुल—आवरणे क वा पृषो॰। १क्षौमाम्बरे २सूक्ष्मवस्त्रे ३श्लक्ष्णवस्त्रे च मेदि॰। "गोपवधूटीदुकूलचौराय" भागा॰ "अथ सवलक दुकूलकुथादिभिः" भट्टिः। "वधूदुकूलं कलहंसलक्षणम्" कुमा॰।

**दुगूल** न॰ दुकूल+पृषो॰। दुकूलार्थे पट्टवस्त्रे हेमच॰।

**दुग्ध** न॰ दुह—क्त। १पयसि क्षीरे स्त्रीजातिस्तनिषृन्दिद्रवद्रव्ये। कर्मणि क्त। २कृतदोहायां धेन्वादौ स्त्री ३प्रपूरिते त्रि॰मेदिनी॰। भावे क्त। ४दोहने न॰ क्षीरवर्गशब्दे २२७७पृ॰ अस्य विवृतिः। तत्रानुक्तं भावप्र॰ उक्तं किं चिदत्राभिधीयते

"रात्रौ चन्द्रगुणाधिक्यादृव्ययामाकरणात्तथा। प्राभातिकं तदा प्रायः प्रादोषाद्गुरु शीतलम्। दिवाकरकराघातात् व्यायामानलसेवनात्। प्राभातिकान्तु प्रादोषं लघु वातकफापहम्"। अथ दुग्धसेवने समयादिविशेषे गुणमाह। "वृष्यं बृंहणमग्निदीपनकरं पूर्वाह्णकाले पयो मध्याह्ने तु बलावहं कफहरं पित्तापहं दीपनम्। बाले वृद्धिकरं क्षये क्षयकरं वृद्धेषु रेतोवहम् रात्रौ पथ्यमनेकदोषशमनं क्षीरं सदा सेव्यते। वदन्ति पेयं निशि केवलं पयो भोज्यं न तेनेह सहौदनादिकम्। भवत्यजीर्णे निशि पीतशर्करा क्षीराल्पपानस्य न शेषसत्यजेत्। विदाहीन्यन्नपानानि दिवा भुङ्क्ते हि यन्नरः। तद्विदाहप्रशान्त्यर्थं रात्रौ क्षीरं सदा पिबेत्। दीप्ताग्नये क्षये पुंसि वातवृद्धे पयःप्रिये। मतं हिततमं पथ्यं सद्यः शुक्रकरं यतः"। अथ मथितस्य दुग्धस्य गुणाः "क्षीरं गव्यमथाजं कोष्णं दण्डाहतं पिबेत्। लघु वृष्यं ज्वरहरं वातपित्तकफापहम्"। अथ गोजदुग्धगुणाः "गोदुग्धप्रभवं किं वा छागीदुग्धसमुद्भवम्। तद्भवेच्च त्रिदोषघ्नं रोचनं बलवर्द्धनम्। वह्निवृद्धिकरं वृष्यं सद्यस्तृप्तिकरं लघु। अतीसारेऽग्निमान्द्ये च ज्वरे जीर्णे प्रशस्यते"। अथ निन्दितदुग्धम् "विवर्णं विरसं चाम्लं दुर्गन्धं ग्रथितं पयः। वर्जयेदम्ललवणयुक्तं कुष्ठादिकृद्यतः"। अजादिदुग्धगुणादिभेदादिकं तत्तच्छब्दे उक्तम्।

"कोऽप्याविकं पथ्यतमं कृतोष्णं क्षीरं त्वजानां शृतशीतमाहुः। दोहान्तशीतं महिषीपयस्तं गव्यन्तु धारोष्णमिदं प्रशस्तम्। हृद्यं तु हृष्यमग्निवर्द्धनकरं पूर्वाह्णपीतं पयो मध्याह्ने बलदायकं रतिकरं कृच्छ्रस्य विच्छेदनम्। बाल्ये वह्निकरं ततो बलकरं वीर्यप्रदं वार्द्धके रात्रौ क्षीरमनेकदोषशमनं सेव्यं ततः सर्वदा। क्षीरं मुहूर्त्तत्रितयोषितं यदतःप्रमेतद्विकृतिं प्रयाति। पश्चात्तु दोषं कुरुते तदूर्द्ध्वं विषोपमं स्याद्दिवसो दशानाम्। जीर्णज्वरे कफे क्षीणे क्षीरं स्यादमृतोपमम्। तदेव तरुणे पीतं विषवद्धन्ति मानुषम्"। क्षीरकाथगुणः। "चतुर्थभागं सलिलं निधाय यत्नाद् यदावर्त्तितमुत्तमं तत्। सर्वामयघ्नं बलपुष्टिकारि वीर्यप्रदं क्षीरमतिप्रशस्तम्। गव्यं पूर्वाह्णकाले स्यादपराह्णे तु माहिषम्। क्षीरं सवर्णकरं पथ्यं यद्वा साल्यञ्च सर्वदा। क्षीरं न भुञ्जीत कदाप्यतप्तं तप्तञ्च नैतल्लवणेन सार्द्धम्। पिष्टान्नसन्धानकमाषमुद्गकोशातकीकन्दफलादिकैश्च"। तथा
"मत्स्यमांसगुडमुद्गमूलकैः कुष्ठमावहति सेवितं पयः। शाकजाम्बवरसैश्च सेवितं मारयत्यबुधमाशु सर्पवत्। स्निग्धं शीतं गुरु क्षीरं सर्वकालं न सेवयेत्। दीप्ताग्निं कुरुते मन्दं मन्दाग्निं नष्टमेव च। नित्यन्तोयाग्निना सेव्यं सुपक्वं माहिषं पयः। पुष्णन्ति धातवः सर्वे बलपुष्टिविवर्द्धनम्। क्षीरं गवाजकादेर्मधुरं क्षीरं नवप्रसूतानाम्। रूक्षञ्च पित्तदाहं करोति रक्तामयं कुरुते। मधुरं विदाहशमनं क्षीरं मध्यप्रसूतानाम्। लवणं मधुरं क्षीरं विदाहजननं चिरप्रसूतानाम्। गुणहीनं निःसारं क्षीरं प्रथमप्रसूतानाम्। मध्यमवयसां युक्तमिदं दुर्बलन्तु वृद्धानाम्। तासां मासत्रयादूर्द्ध्वं गुर्व्विणीनाञ्च यत् पयः। तद्वाहि लवणं क्षीरं मधुरं पित्तशोषकृत्। दुग्धाग्रं शीतलं स्वादु हृद्यं वर्णकरं गुरु। वातपित्तापहं रुच्यं बृंहणं बलवर्द्धनम्" राजनि०।

**दुग्धतालीय** न० दुग्धस्य तालाय प्रतिष्ठायै हितं छ। १दुग्धाग्रे २क्षीरफेने च मेदि०।

**दुग्धपाचन** न० दुग्धं पाच्यतेऽनेन पाचि—करणे ल्युट्। दुग्धपाकपात्रे हारा०।

**दुग्धपाषाण** पु० दुग्धं निर्यासः पाषाण इव यस्य। (शिरगोला) ख्याते वृक्षभेदे राजनि०। स्वार्थे क। अत्रैवार्थे।

**दुग्धपुष्पी** स्त्री दुग्धमिव शुभ्रं पुष्पं मञ्जरी यस्याः गौरा० ङीष्। (दुधमेथा) ख्याते १वृक्षभेदे २सेवकालौ शब्दच०।

**दुग्धफेन** पु० दुग्धस्य फेनो यत्र। शर्करासहिते क्षीरहिण्डीरे राजनि०। गौरा० ङीष्। दुग्धफेनी १क्षुपभेदे स्त्री। स्वार्थे क तत्रार्थे पु०

**दुग्धबन्ध** पु० दुग्धार्थं बन्धः। दुग्धदोहनार्थं गोर्बन्धे "पीतदुग्धा तु धेनुर्या संस्थिता दुग्धबन्धकैः" हेमच०।

**दुग्धबीजा** स्त्री दुग्धमिव बीजं शस्यबीजं यत्र। यावनालाद्यतण्डुलचिपिटे राजनि०।

**दुग्धसमुद्र** पु० ६त०। दुग्धोदके क्षीरसमुद्रे त्रिका०। दुग्धसिन्धुप्रभृतयोऽप्यत्र। "लवणजलधिरादौ दुग्धसिन्धुश्च तस्मादमृतममृतरश्मिं श्रीश्च यस्मात् बभूव" सि०शि०

**दुग्धाङ्क** पु० दुग्धमिव शुभ्राऽङ्कः चिह्नभेदोऽस्य। उपलभेदे शब्दार्थक०।

**दुग्धाश्मन्** पु० दुग्धं निर्यासः अश्मा इव। दुग्धपाषाणवृक्षे राजनि०।

**दुग्धाम्र** न० दुग्धपक्वमाम्रम्। दुग्धतालीये राजनि०।

**दुग्धिका** स्त्री दुग्धं क्षीरमिव निर्यासोऽस्त्यस्याः ठन्। (दुधि (क्षीरा) इति ख्याते वृक्षभेदे। "दुग्धिकोष्णा गुरू रूक्षा वातला पुत्रदायिनी। स्वादुक्षीरा कटुस्तिक्ता सृष्टमूत्रमला पटुः। ग्राही विष्टम्भिनी वृष्या कफकुष्ठकृमिप्रणुत्" भावप्र०। २गन्धिका इति प्रसिद्धायामुत्तमफलिन्याम् युग्मफलायाम् रत्नमा०।

**दुग्धिनिका** स्त्री दुग्धमस्त्यस्य इनि दुग्धिनि निर्यासे कायति कै—क अलुक्स०। रक्तापामार्गे राजनि०।

**दुग्धी** स्त्री दुग्धमिव निर्यासोऽस्त्यस्याः अर्श आद्यच् गौरा० ङीष्। १दुग्धिकायाम् (दुधि) १क्षीरावीलतायां मेदि०। २दुग्धपाषाणे राजनि०।

**दुघ** त्रि० दोग्धि—दुह—क हस्य घः। दोहनकर्त्तरि "कामदुघा गौः" सि०कौ०। अस्य कस्मिंश्चिदुपपदे एव साधुत्वं नान्यथा। "कामदुघाङ्घ्रिपद्म" भाग० ३।२१।१५

**दुच्छक** पु० दु—सन्तापे बाहु० भावे क्विप् तस्मै उपतापाय तन्निवृत्तये शक्नोति शक—अच्। सुराणामगन्धद्रव्ये विहाराद्यवकाशके च मेदि०।

**दुच्छुन्** पु० दुष्टःश्वा प्रा०स० पृषो०। दुष्टकुक्कुरे "आरेबाधस्व दुच्छुनाम्" यजु०१६।२८ "दुष्टाश्च ते श्वानश्च तेषाम्" वेददी०।

**दुच्छून** त्रि० दुष्ट उच्छूनः प्रा०स०। पृषो०। दुष्टे उच्छूने ततः भृशा०क्यङ्। दुच्छुनायते बाधते इत्यर्थः। "किमस्मान् दुच्छुनायसे" ऋ०७।५५।२ 'दुच्छुनायसे बाधसे" भा०।

**दुडि** स्त्री दुडि+अस्य डः। दुल्याम् रायमुकुटः।

दुण्डुक त्रि० दुण्डुभ इव कायति कै—क पृषो० मलोपः। दुष्टचित्ते शब्दार्थकल्पतरुः।

दुण्डुभ पुंस्त्री० दुण्डुभ+पृषो०। (ढोडा) सर्पभेदे अमरः। “शरमीनां महारौद्रां प्रावश्चत्र्ति दुण्डुभाम्। मज्जामांसमहापङ्कां कबन्धावर्जितोडुपाम्” भा०द्रो०१५६अ०।

दुण्डुभि पु० दुन्दुभि+पृषो०। दुन्दुभिशब्दार्थे “दुण्डुभेर्मूषिकायां च कीटानां कल्प एव च” इति सुश्रुतस्थाने प्रतिज्ञाय सुश्रुतेन कल्पस्थाने दुन्दुभिस्वनीयाध्याय उक्तः अतस्तयोरेकार्थता।

दुत त्रि० दु उपतापे क्त। पीड़िते “स्वदुतया दुतया” माघः। दुगतौ इत्यस्य तु “दुस्वोर्दीर्घश्च” पा० नत्वे दीर्घश्च दून इत्येव सि०कौ०।

दुत्योत्पदवीय पु० नील० ताजकोक्ते वर्षप्रवेशे योगभेदे “वीर्योनितौ कार्यविलग्ननाथौ स्वर्क्षादिकेनाप्यतरोयुनक्ति। अन्यौ यदा द्वौ बलिनौ तदाप्यवलायतो वीर्य सुयन्ति सन्तः” तल्लक्षणम्।

दुद्द पु०पर्वतभेदे। “उत्कृष्यान् मन्दरो नीलो निषधो दुद्दुर्दुदस्तथा” भा०अनु०१६५अ०। दर्दुरस्तथा इत्येव पाठः साधुः

दुदुह पु० अनुवंश्ये नृपभेदे। “अनोस्तु पुत्रोधर्माऽभूदुपतस्तस्यात्मजोऽभवत्। इतात्तु दुदुहो जज्ञे प्रचेतास्तस्य चात्मजः” हरिवं० ३२अ०

दुद्रुम पु० दुष्टो द्रुमः प्रा०स०। हरितपर्णे पलाण्डौ अमरः।

दुध हिंसने प्रेरणे च भ्वा०पर०सक०सेट्। दोधति अदोधीत् दुदोध दुधितम् “नेयत्तमो दुधितं रोचत” ऋ० ४।१।१७ “दुधिः प्रेरण कर्मा” भा०।

दुधि त्रि० दुधिर्हिंसाकर्मेति भाष्योक्तेः दुध—हिंसायां कि। १हिंसके “स्तुम सूभे दुधयेऽर्कं! ते” ऋ०६।२६।२“दुधये हिंसकाय” भा० उपचारात् २दुर्धरे च “दुधेर्युक्तस्य द्रवतः सहानसा” ऋ० १०।१०२।६ दुधेर्दुर्धरस्य” भा०

दुध्र त्रि० दुध—बा० रक् दुर्ं वा धारयति धृ—मूल०क पृषो०। १हिंसके २प्रेरके ३दुर्द्धरे ४दुर्द्धर्षे ५दुष्टानां व्यवस्थापके च। “दुध्र आभूषु रामयचित्र दामनि” ऋ०१।५६।३“दुध्रः दुष्टानां धर्त्ता व्यवस्थापयिता वा” भा० “दुध्रकृतो मरुतो भ्राजदृष्टयः” ऋ०१।६४।११ “दुध्रकृत् दुध्रं दुष्टं नाम्नां दुर्द्धर्षं वा आत्मना” भा० “विदथे दुध्रवाचः” ऋ०७।२१।२ “दुध्रवाचः दुर्द्धरवाचः” भा०। [शब्दर०।

दुन्दभ पु० दुन्द इत्यव्यक्तं भवति भव—ड। दुन्दुभिवाद्ये

दुन्दु पु० १वसुदेवे त्रिका० २दुन्दुभिवाद्ये शब्दरत्ना०।

दुन्दुभ पु० दुन्दु इत्यव्यक्तं शब्दं भवति भव—ड। दुन्दुभिवाद्ये शब्दर०। दुन्दुम इति पाठान्तरम्।

दुन्दुभि पु० दुन्दु इत्यव्यक्तशब्देनोभति पूरयति उभ—पूरणे कि शक०। ढक्काढक्कायाम् अमरः। “दुन्दुभे! त्वं सपत्नानां घोषाद् हृदयकम्पनः” दुन्दुभिपूजामन्त्रः “विजयदुन्दुभितामयुरर्णवाः” रघुः “दुन्दुभिश्च तदा देवैस्ताडितो देवकिङ्करैः” भा०अनु० २६श्लो०। १वरुणे २दैत्यभेदे मेदि० ३राक्षसभेदे पु०शब्दर० ४विषे हेमच० ५पाशके स्त्री अमरः स्वर्णरत्नादिमये चतुःपार्श्वे बिन्दुयुक्ते द्यूतोपकरणे (पाशटी)ख्याते ६पदार्थे स्त्री ७गन्धर्वीभेदे स्त्री वा ङीप्। “तेषां समस्तं गन्धर्वी दुन्दुभी नाम नामतः। प्रयास वरदोदेवी गच्छ कार्यार्थसिद्धये। पितामहवचः श्रुत्वा गन्धर्वी दुन्दुभी ततः। मन्थरा मानुषे लोके कुब्जानामाभवत्तदा” भा०व० २७५ अ० दुन्दुभिनामासुरभेदश्च मायाविनामासुरपिता तत्कथा रामा० कि० ९सर्गे “मायावी नाम तेजस्वी पूर्वजो दुन्दुभेः सुतः। तेन तस्य महद्वैरं वालिनः स्त्रीकृतं पुरा” “यदा तु दुन्दुभिं नाम दानवं महिषाकृतिम्। प्रतिकालयते वाली मलयं प्रतिपर्वतम्। तदा विवेश महिषो मलयस्य गुहां प्रति। विवेश वाली तत्रापि मलयं तज्जिघांसया” रामा० कि० ४६ अ० ४श्लो०। “दुन्दुभिं नामेति अत्र दुन्दुभिशब्देन तत्पुत्रो मायाविनामा दानव उच्यते तद्वृत्तान्तस्यैवाग्रे वक्ष्यमाणत्वात् “मायावी नाम तेजस्वी दुन्दुभेः पूर्वजः सुतः” इति प्रोक्तेस्तस्य तत् पुत्रत्वं पितुर्महिषाकारत्वात् तत्पुत्रस्य तदाकारत्वमिति च बोध्यम्” तट्टीका

दुन्दुभिक पु० कीटभेदे कीटशब्दे दृश्यम्।

दुन्दुभिनिर्ह्राद पु० दुन्दुभे रिव निर्ह्रादोऽस्य। दानवभेदे स्कान्दपु०। [नृपभेदे।

दुन्दुभिषेण पु० दुन्दुभिः सेनायां यस्य सुषामा० षत्वम्।

दुन्दुभिस्वन पु० ६त०। १दुन्दुभिशब्दे दुन्दुभेर्वाद्यभेदस्य स्वनो यत्र विषचिकित्सायाम्। सुश्रुतोक्ते विषचिकित्साभेदे “अथातो दुन्दुभिस्वनीयमध्यायं व्याख्यास्यामः धवाश्वकर्णतिनिशपलाशपिचुमर्दपाटलिपारिभद्रकाम्रोडुम्बरकरहाटकार्जुनककुभसर्जकपीतनश्लेष्मातकाङ्कोठामलकप्रग्रहकुटजशमीकपित्थाश्मन्तकार्कचिरविल्वमहावृक्षारुष्करारागुमधुकमधुशिग्रुशाकगोजीवामूर्वातिल्वकेक्षुरकगोपघण्टारिमेदानां भस्मान्याहृत्य गवां मूत्रेण क्षारकल्पेन परि-

स्नाव्य विपचेद्दृढाग्नौ पिप्पलीमूलतण्डुलीयकवराङ्ग-चोचकर्माङ्गकार्कराङ्गकाहस्तिपिप्पलीमरिचोत्पलशारि-वाविडङ्गदन्तीधूमानन्ताशोमसरलावाह्लीकगुहाकोशाम्र-श्वेतसर्षपवरुणलवणाल्मुलनिचुलवासवर्मानवञ्जुलपुलश्मेची-सप्तपर्णदन्तकेलवालुकनागदन्त्यतिविषाभयाभद्रदारुकुष्ठ-हरिद्रावचाचूर्णानि लोहानाञ्च समभागानि ततः क्षार-वदागतपाकमवतार्य लोहकुम्भे निदध्यात्। अनेन दुन्दुभिं लिम्पेत् पताकातोरणानि च। अस्यशब्दग्र-नात् स्पर्शात् विषात् सम्मानमुच्यते। एष क्षारागदो नाम शर्कराश्मरीषु च। अर्शःसु वातगुल्मेषु कास-शूलोदरेषु च। अजीर्णे ग्रहणीदोषे भक्तद्वेषे च दा-रुणे। एष सर्वविषार्त्तानां सर्वथैवोपयुज्यते। तथा तच्च-कसुश्रुतानामयं दर्पाङ्कुशोऽगदः"।

**दुन्दुभ्य** पु॰ दुन्दुभौ दानवभेदे विषे वाद्यभेदे वा भवः भवतो वा यत्। १रुद्रभेदे "नमो दुन्दुभ्याय वन्वाय च" यजु॰ १६।३५ दुन्दुभये तद्वादनाय साधु यत्। २दुन्दुभिवादन साधने मन्त्रभेदे "ऐन्द्राः क्षत्रियस्य चक्रदुन्दुभ्याः" कात्या॰श्रौ॰ १४।३।१२ "क्षत्रियस्य चक्रारोहणे दुन्दु-भेर्वादनमन्त्रा ऐन्द्रा भवन्ति" कर्कः।

**दुन्दुमार** पु॰ धुन्धुमार+पृषो॰। धुन्धुमारदेशे शब्दार्थकल्प॰।

**दुफानिकुत्थ** न॰ नी॰ ता॰ उक्ते वर्षप्रवेशे योगभेदे तल्ल-क्षणं तत्रोक्तं यथा "मन्दः शुभोऽशादिपदस्थितश्चेत् पदोनषोडशेन च हतेत्यशालः। तत्रापि कार्यं भवतीति वाच्यं वक्रादिनिर्वीर्यपदेन चेत् स्यात्"।

**दुम्बक** पु॰ (दुम्बा) इति ख्याते मेषभेदे शब्दार्थचि॰।

**दुर्(स्)** अव्य॰टु—डुक् हुक् वा। १दुष्टे २निन्दायां ३निषेधे ४दुःखे च पुरुषोत्तमः ५ईषदर्थे ६कष्टार्थे ७अभावे ८असम्पत्तौ ९सङ्कटे च गणर॰दुर्जीवनः दुर्बलः दुर्दिनम् "सुदुरोरधिकरणे" पा॰दुष्कृतम्। क्रियायोगेऽस्योपसर्गता उपसर्गशब्दे १२२१पृ॰ दृश्यम्।

**दुर्** स्त्री दृ—क्विप्। द्वारे "दुरोद्युतान्यच्चरम्" ऋ॰१।१८८।५ "या दुरः यज्ञगृहद्वारः" भा॰ दुरो मानुषो देव आ च" ऋ॰५।४५।१ "मानुषीर्मनुष्य सम्बन्धिनीर्दुरः द्वारः" भा॰

**दुर** त्रि॰ दु—बा॰ कुर। दातरि "दुरो अश्वस्य दुर इन्द्र गोरसि दुरो यवस्य वसुन इनस्पतिः" ऋ॰१।५३।२ "दुरो दातासि" भा॰

**दुरक्ष** पु॰ दुष्टोऽक्षः प्रा॰स॰। १कपटपाशके २दुष्टनेत्रे च "अक्षैर्वै पुरुषस्याक्षि प्रयाम्यमेति ह स्माह याज्ञवल्क्यो दुरक्ष इव ह्यास पूयोह्यैवास्य दूषीका ते एवैतदनक्ति करोति यदक्ष्यावनक्ति" शत॰ब्रा॰ ३।१।३।१० "दुरक्षमेव अञ्जनेन नाशयति" भा॰६ब॰। दुष्टमक्षि यस्य षच् समा। ३तद्युक्ते त्रि॰ "अश्वः शुक्ल उ दुष्टस्य इवाथो ह दुरक्षोभावु कश्यसु" शत॰ब्रा॰७।३।२।१४ दुष्टोऽक्षो यत्र। ४दुष्टद्यूते

**दुरतिक्रम** त्रि॰दुःखेनातिक्रम्यतेऽसौ दुर्+अति+क्रम—कर्मणि खल्। १दुःखेनातिक्रमणीये २दुर्लङ्घ्ये "सर्वन्तु तपसा-साध्यं तपो हि दुरतिक्रमम्" मनुः। ३विष्णौ पु॰ "समा वर्त्तो निवृत्तात्मा दुर्जयो दुरतिक्रमः" विष्णु॰सं॰ "भयहेतुत्वादस्याज्ञा सूर्यादयोनातिक्रामन्तीति दुरतिक्रमः "भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः" इति मन्त्रव-र्णात्" भा॰ "तस्याज्ञाया दुर्लङ्घ्यत्वात् तस्य तथात्वम्।

**दुरत्यय** त्रि॰दुःखेनातीयते दुर्+अति—इ—खल्। १दुरतिक्र-मणीये २दुस्तरे च। "स्वर्गमार्गपरिघो दुरत्ययः" रघुः।

**दुरत्येतु** त्रि॰ दुर्+अति+इ—कर्मणि—तुन्। दुरतिक्रमणीये "ता भूरि पाशावनृतस्य सेतू दुरत्येतू रिपवे मर्त्याय" ऋ॰ ७।६५।३ "दुरत्येतू दुरतिक्रमणीयौ" भा॰

**दुरदृष्ट** न॰ दुष्टमदृष्टम् प्रा॰स॰। दुर्भाग्ये पापे।

**दुरद्मनी** स्त्री अद—भावे मनिन् वा ङीप् दुष्टा अद्मनिः (नी) प्रा॰स॰। दुर्भोजने। "पाहि दुरद्मन्या अविषं नः पितुम्" यजु॰ २।२०। "अदनमद्मनी दुष्टा अद्मनी दुरद्मनी दुर्भोजनम् ततः मां पाहि चतुर्थी पञ्चम्यर्थे" वेददी॰।

**दुरधिग** त्रि॰ दुःखेनाधिगम्यतेऽसौ दुर्+अधि+गम—बा॰ कर्मणि ड। १दुष्प्रापे २दुर्ज्ञेये च। "दिव्याश्चरैर्दुरधि-गाश्च नृप विक्रियाभिः" भाग॰ ३।२३।८।

**दुरधिगम** त्रि॰ दुःखेनाधिगम्यते दुर्+अधि+गम—कर्मणि खल्। १दुष्प्रापे २दुर्ज्ञेये च। "द्रव्यदेशकालवयःश्र्द्धा-मन्त्रविधानयोगोपपत्त्या दुरधिगमोऽपि भगवान्" भाग॰५।२३।२ "इह दुरधिगमैः किञ्चिदेवागमैः" किरा॰।

**दुरधीत** न॰ दुष्टमधीतम् प्रा॰स॰। वर्णानां यथास्थानानु-च्चारणेन यथास्वरानुच्चारणेन च अध्ययने "दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपरा-धादिति" दुष्टांश्छब्दान्मा प्रयुज्महीत्यध्येयं व्या-करणम्" महाभाष्योक्तेः "यदधीतमविज्ञातं निगदेनैव शब्द्यते। सोऽनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्" श्रुतेश्चाध्ययनस्य दुष्टत्वं बोध्यम्। {अध्येतृभेदकौ

**दुरध्यय** त्रि॰ दुःखेनाधीयते कष्टार्थे दुर्+अधि+इ—खल्।

**दुरध्व** पु॰ दुष्टोऽध्वा प्रा॰स॰अच् समा॰। दुष्टवर्त्मनि अमरः।

**दुरन्त** त्रि॰दुष्टोऽन्तोऽवसानं यस्य प्रा॰ब॰। १मृगयाद्यूतपानादिषु व्यसनेषु शब्दार्थचि॰। तानि हि प्रथमं सुखयित्वा अन्ते दुःखाकुर्वन्ति।"व्यसनानि दुरन्तानि प्रयत्नेन विवर्जयेत्" मनुः। दुर्ज्ञेयोऽन्तः परिच्छेदो यस्य। २दुर्ज्ञेये ३गभीरे ४दुरतिक्रमणीये च "न्त्यति युवतिजनेन समं सखि! विरहिजनस्य दुरन्ते" गीतगो॰। कप्। दुरन्तक असह्यमर्य्यादे ५शिवे पु॰ "दुर्विज्ञेयो महादेवो दुराधारो दुरन्तकः" भा॰ अनु॰४१अ॰।

**दुरन्वय** त्रि॰दुःखेनान्वीयतेऽसौ दुर+अनु-इ-कर्मणि खल्। दुःखेनानुगमनीये "दुरन्वयं दुष्प्रधर्षं दुरापं दुरभिक्रमम्। सर्वं वै तपसाभ्येति" भा॰अनु॰ १२२अ॰

**दुरभिग्रह** पु॰दुःखेनाभिमुख्येन गृह्यतेऽसौ दुर्+अभि+खल्। १अपामार्गे २दुःखेन ग्राह्ये त्रि॰। ३दुरालभायां४कपिकच्छ्वाञ्च स्त्री राजनि॰।

**दुरवग्रह** त्रि॰ दुःखेनावगृह्यते निगृह्यतेऽसौ दुर्+अव+ग्रह-कर्मणि खल्। कष्टेनानिग्राह्ये "वंशागतो रिपुर्यस्तु विचलेत् दुरवग्रहः" कामन्दकी॰ [स्थायाम्।

**दुरवस्था** स्त्री दुष्टा अवस्था प्रा॰स॰। दारिद्र्यादौ दुष्टाव-

**दुरस्य** दुष्ट+क्यच् "दुरस्युर्द्रविणस्युर्वृषण्यति" पा॰ वेदे नि॰। दुष्टीभवने पर॰अक॰ सेट्। दुरस्यति अदुरस्यीत्। "अभि पृतन्यन्तं तिष्ठाभि यो नो दुरस्यति" अथ॰१।२९।२ लोके तु दुष्टीयति इत्येव। [उणादिको॰।

**दुराक** पु॰ दुर्+अक+संज्ञायां कर्त्तरि घञ्। म्लेच्छदेशभेदे

**दुराचर** त्रि॰दुःखेन आचर्य्यते दुर्+आ+चर-कर्मणि खल्। १कष्टेनाचरणीये "सोऽयं चतुर्णामेतेषामाश्रमाणां दुराचरः" भा॰शा॰६५६श्लो॰। आर्षत्वात् कर्तरि षष्ठी। दुष्टमाचरति अच्। २दुष्टाचारयुक्ते त्रि॰ "समीरणः श्रोत्रगतोऽन्यथाचरः। समन्ततः शूलमतीव कर्णयोः। करोति दोषैश्च यथा श्रमाहतः स कर्णशूलो कथितो दुराचरः" सुश्रु॰।

**दुराचार** पु॰ दुष्ट आचारः प्रा॰स॰। दुष्टे आचारे "प्राप्ते कलियुगे घोरे नराः पुण्यविवर्जिताः। दुराचाररताः सर्वे सत्यवार्त्तापराङ्मुखाः" अध्यात्मरामा॰। "याच्ञाभङ्गभयेन व्रीडा वदनानमनादिकृत् दुराचारात्" सा॰द॰। दुष्ट आचारो यस्य प्रा॰ब॰। २दुष्टाचारयुक्ते त्रि॰"हृष्यहानि दुराचारा घोररूपाशयक्रियाः" भट्टिः "दुराचारो हि पुरुषो लोके भवति निन्दितः" मनुः।

**दुराढ्यङ्कर** त्रि॰ दुःखेन आढ्यं क्रियते "कर्त्तृकर्मणोश्च भूकृञोः" पा॰कर्तृकर्मणोरीषदादिषु च उपपदेषु भूकृञोः खल् स्यात् यथासङ्ख्यं नेष्यते कर्तृकर्मणी धातोरव्यवधानेन प्रयोक्तव्ये ईषदादयस्तु(ईष दुः सु)ततः प्राक्। "कर्तृकर्मणोश्च्व्यर्थयोरिति वाच्यम्" वार्त्ति॰ सि॰कौ॰ कर्मणि उपपदे खल् मुम्। दुःखेन अनाढ्ये आढ्ये करणीये

**दुराढ्यम्भव** न॰ दुःखेन अनाढ्येनाढ्येन भूयते दुर्+च्व्यर्थे आढ्ये कर्तरि उपपदे भावे खल् मुम्। दुःखेन अनाढ्यस्याढ्यभवने।

**दुरात्मन्** त्रि॰ दुष्ट आत्मा अन्तःकरणं यस्य। दुष्टान्तःकरणे "यस्तु धर्मेण कार्य्याणि मोहात् कुर्य्यान्नराधिपः। अचिरात्तं दुरात्मानं वशे कुर्वन्ति शत्रवः"। "यस्तु दोषवतीं कन्यामनाख्यायोपपादयेत्। तस्य तत् वितथं कुर्य्यात् कन्यादातुर्दुरात्मनः" मनुः।

**दुराधन** पु॰ धृतराष्ट्रपुत्रभेदे। "अपराजितः पण्डितको विशालाक्षो दुराधनः" भा॰आ॰ ६७अ॰ धृतराष्ट्रसुतोक्तौ

**दुराधर** पु॰ धृतराष्ट्रपुत्रभेदे। अपराजितः कुण्डशायी विशालाक्षो दुराधरः" भा॰आ॰११७अ॰ तत्पुत्रोक्तौ।

**दुराधर्ष** पु॰ दुष्टान् राक्षसान् आधर्षति दुर्+आ+धृष अच्। १श्वेतसर्षपे तत्क्षेपणे हि वेतालादीनामपसर्पणं स्मृतौ दर्शितम्। दुःखेन ईषदपि धर्षयितुमशक्यम् दुर्+आ+धृष-कर्मणि खल्। २धर्षयितुमशक्ये त्रि॰। "जगन्नाथो दुराधर्षो गङ्गां भागीरथीं प्रति" भा॰अनु॰ ५८अ॰ "स प्रभावात् दुराधर्षो महाबलपराक्रमः" भा॰व॰ २०२अ॰। ३कुटुम्बिनीवृक्षे स्त्री राजनि॰।

**दुराधार** पु॰ दुःखेनाधार्यते दुर्+आ-धारि-कर्मणि खल्। दुःखेन १आधारणीये २चिन्तनीये त्रि॰ ३महादेवे पु॰। दुरन्तशब्दे दृश्यम्।

**दुरानम** त्रि॰ दुःखेनानम्यते दुर्+आ+नम-णिच्-कर्मणि खल्। दुःखेन आनमनीये। "स विचिन्त्य च धनुर्दुरानमम्" रघुः।

**दुराप** त्रि॰ दुःखेनाप्यते दुर्+आप-खल्। १दुष्प्राप्ये। "इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः" रघुः "अस्त्रं हरादाप्तवता दुरापम्" रघुः सम्बन्धविवक्षया कर्तरि षष्ठी। भावे खल्। २दुष्प्राप्तौ न॰।

**दुरारिहा** पु॰ दुष्टमियर्त्ति दुर्+ऋ-णिनि दुरारी दुर्गामी असुरः तं हन्ति हन्-क्विप्। विष्णौ "दुरावासो दुरारिहा" विष्णुसं॰ भाष्ये उक्तैव व्युत्पत्तिरुक्ता।

**दुरारुह** पु० दुःखेनारुह्यतेऽसौ दुर्+आ–रुह–कर्मणि क। १विल्वे २नारिकेलवृक्षे च। ३खर्जूर्यां स्त्री राजनि०। ४दुरारोहणीये त्रि० "सुपुष्पितः स्यात् अफलः फलवान् स्याद्दुरारुहः" भा० आ० १४०अ०

**दुरारोह** पुंस्त्री० दुःखेनारुह्यते दुर्+आ+रुह–खल्। १खर्जूरे स्त्रियां जातित्वात् ङीष्। २शीवल्ल्यां स्त्री राजनि० ३शाल्मलिवृक्षे स्त्री त्रिका०। ४दुरारोहणीये त्रि०। "दुरारोहं पदं राज्ञां सर्वलोकनमस्कृतम्" कामन्द० भावे खल्। ५दुःखेनारोहणे पु०।

**दुरालभा**(म्भा) स्त्री दुःखेनालभ्यते स्पृश्यते असौ दुर्+आ+लभ–खल् आगमशिष्टेरनित्यत्वात् वा मुम्। (आलकुशी) १यवासायाम् राजनि०। "दुरालभा कटुस्तिक्ता चारोष्णा मधुराम्लिका। वातगुल्मप्रमेहाणां नाशिनी परिकीर्तिता" राजनि०। "यवासस्य गुणैस्तुल्या बुधैरुक्ता दुरालभा" भावप्र० २दुःस्पर्शनीयमात्रे त्रि०। "सूर्पं श्यामा त्रिवृच्चैवो कटी मूला दुरालभा" सुश्रु० "तीक्ष्णवीर्यास्तु भूतानां दुरालम्भाः सकण्टकाः" भा० अनु० ८८अ०। [कल्पतरुः।

**दुरालाप** पु० दुष्ट आलापः प्रा० स०। गालिवचने शब्दार्थ-

**दुराव्य** न० अव–गत्यादौ भावे ण्यत् दुष्टमाव्यं मतिः प्रा० स०। दुष्टमतौ "सुवितस्य मनामहेऽतिसेतुं दुराव्यम्" ऋ० ८।४१।२ "दुराव्यं दुष्टमतिम्" भा०।

**दुराशय** पु० प्रा० स०। १दुष्टे आशये "स्फुटनिर्भिन्नदुराशयोऽधमः" माघः। दुष्ट आशयो यस्य प्रादि० ब०। २दुष्टाशययुक्ते त्रि० "उपेयिवान् मूलमशेषमूलं दुराशयः कामदुघाङ्घ्रिपस्य" भाग० ३।२१।१५

**दुराशा** स्त्री प्रा० स०। दुस्पूरायामाशायाम्।

**दुरासद** त्रि० दुःखेनासद्यतेऽसौ दुर्+आ+सद–कर्मणि खल्। १दुष्प्राप्ये २दुर्गम्ये "त्रिलोचनैकांशतया दुरासदः" "स बभूव दुरासदः परैः" रघुः। "सम्पयानमपि सद्दुरासदम्" माघः। "पापाटव्या दुरासदाया दवतः" नलोदयः।

**दुरित** न० दुष्टमितं गमनं नरकादिस्थानप्राप्तिरस्मात्। १पापे २तद्वति त्रि० अमरः। "दुरितैरपि कर्तुमात्मसात् प्रयतन्ते न्द्रपसूनवो हि यत्" रघुः "महानदीप्रवाहमिव सर्वदुरितताप्रहरम्" काद० "कामीशाद्वीपरावः स दहतु दुरितं शाम्भवोवः शराग्निः" अनर्घ०

**दुरितदमनी** स्त्री दुरितं दम्यतेऽनया दम–करणे ल्युट् ङीप्। १शमीवृक्षे राजनि० २पापदमनसाधनमात्रे त्रि० स्त्रियां ङीप्।

**दुरितारि** ६त०। १दुरितनाशके। २जैनानां शासनदेवताभेदे च। "चक्रेश्वर्यजिता बाला दुरितारिश्च कालिका। महाकाली श्यामा शान्ता भृकुटिश्च सुतारका। आकाशा मानवी चण्डा विदिता चाङ्कुशी तथा। कन्दर्पनिर्वाणबला धारिणी धरणप्रिया। नरदत्ताऽथ गान्धार्यम्बिका पद्मावती तथा। सिद्धायिका चेति जैन्यः क्रमाच्छासनदेवताः" हेमच०।

**दुरिष्ट** न० दुष्टमिष्टं यज्ञः। अभिचारार्थे यज्ञे। "देवद्विजपितृद्वेष्टा रत्नदूषयिता च यः। स याति कृमिभक्षं वै कृमीशे च दुरिष्टकृदिति" विष्णु पु०

**दुरिष्टि** स्त्री दुष्टा इष्टिः प्रा० स०। अशास्त्रीये यागे "पाहि दुरिष्ट्यै" यजु० २।२०। पञ्चम्यर्थे चतुर्थी।

**दुरीश** पु० दुष्ट ईशः प्रा० स०। निन्दिते प्रभौ

**दुरीषणा** स्त्री दुष्टा ईषणा प्रा० स०। शापे शब्दार्थकल्पतरुः।

**दुरु** पु० पर्वतभेदे। "मलयवान् मन्दरो नीलो निषधोदुरुर्दुरस्तथा" भा० अनु० १६५अ०। दर्दुरस्तथेत्येव पाठः साधुः।

**दुरुक्त** न० दुष्टमुक्तं प्रा० स०। दुष्टवचने "दुरुक्तमात्राभिहितैः प्राप्नुवन्ति सुदुष्कृतम्" भा० अनु० ५०२श्लो०।

**दुरुच्छेद** त्रि० दुःखेन उच्छिद्यतेऽसौ दु+उद्+छिद–कर्मणि खल्। १दुर्वारे भावे खल्। २दुःखेन वारणे पु०।

**दुरुत्तर** त्रि० दुःखेनोत्तीर्यतेऽसौ दुर्+उद्+तॄ–कर्मणि खल्। १दुस्तरे "दुरुत्तरे पङ्क इवान्धकारे" भट्टिः। भावे खल्। २दुःखेन तरणे पु०। दुष्टमुत्तरम् प्रा० स०। ४दुष्टे उत्तरवाक्ये न०।

**दुरुदाहर** त्रि० दुःखेनोदाह्रियते दुर्+आ–हृ–कर्मणि खल्। दुःखेन वचनीये "अनुज्झितार्थसम्बन्धः प्रबन्धो दुरुदाहरः" माघः। प्रा० स०। २दुष्टे उदाहरणे पु०

**दुरुधुरा** स्त्री जन्मकाले चन्द्रात् द्वितीयद्वादशस्थिते रविभिन्नग्रहरूपे चान्द्रयोगभेदे तत्स्वरूपभेदफलादिकं वृहज्जा० भट्टोत्पलव्याख्यानयोर्दर्शितं यथा "हित्वार्कं सुनफाऽनफादुरुधुराः स्वान्त्योभयस्थैर्ग्रहैः शीतांशोः कथितोऽन्यथा तु बहुभिः केमद्रुमोऽन्यैस्त्वसौ। केन्द्रे शीतकरेऽथ वा ग्रहयुते केमद्रुमो नेष्यते। केचित् केन्द्रनवांशकेषु च वदन्त्युक्तिः प्रसिद्धा न सा। त्रिंशत्सरूपाः सुनफाऽनफाख्याः षष्टित्रयं दौरुधुरे प्रभेदाः। इच्छाविकल्पैः क्रमशोऽभिनीय नीते निवृत्तिः पुनरन्यनीतिः" वृहज्जा० "अथ सुनफानफादुरुधुराकेमद्रुमाख्यं योगचतुष्टयं

शार्दूलविक्रीडितेनाह हित्वार्कमिति । अर्कमादित्यं हित्वा त्यक्त्वा यदाऽन्यः कश्चिद्ग्रहो भौमादिकः शीतांशो श्चन्द्रात् स्वान्त्योभयस्थो भवति द्वितीयस्थो, द्वादशस्थो, वा द्वितीयद्वादशस्थौ वा द्वौ भवतस्तदा सुनफाऽनफादुरुधुराख्यं योगत्रयं भवति एतदुक्तं भवति अर्कं हित्वा यदाऽन्योग्रहः कश्चिच्चन्द्रात् द्वितीयस्थाने भवति तदा सुनफानामयोगो भवति अथार्कं वर्जयित्वा चन्द्रात् द्वादशगो भवति कश्चित्तदा अनफानामयोगो भवति एवं चन्द्रात् द्वितीयद्वादशगौ ग्रहौ भवतस्तदा दुरुधुरानाम योगो भवति योगत्रयेऽप्यादित्यो यदि द्वितीये द्वादशे वा स्थाने भवति तदा योगभङ्गस्तद्भवति । किन्तु योगकर्त्तॄणां मध्ये न गण्यते । एते योगाः बहुभिराचार्यैः कथिताः अन्यथा तु बहुभिः केमद्रुमः उक्तः । अथास्य योगत्रयस्याभावे बहुभिरार्यैः केमद्रुमाख्योयोगोऽभिहितः एतदुक्तं भवति चन्द्राच्च द्वितीये न द्वादशे कश्चिद्ग्रहो भवति तदा केमद्रुमाख्योयोगो भवति अन्यैस्त्वसाविति अन्येषां गर्गादीनामेवं मतं केन्द्रे जन्मलग्नकेन्द्रे शीतकरे चन्द्रे वा भौमादिग्रहयुते भौमादिग्रहविरहितयोरपि चन्द्राद्द्वितीयद्वादशस्थानयोः केमद्रुमो न भवति केन्द्रे ग्रहयुते इत्यत्र कैश्चिच्चन्द्रकेन्द्रमेव केवलं व्याख्यातम् तच्चायुक्तम् चन्द्रकेन्द्रे ग्रहयुते चन्द्रमसोऽपि योगोऽस्तंभवति शीतकरे ग्रहयुत इत्येतदपार्थकं स्यात् अत्र च भगवान् गार्गिः "व्ययार्थकेन्द्रगश्चन्द्राद्विना भानुं न चेद्ग्रहः । कश्चित् स्यात् वा विना चन्द्रलग्नात् केन्द्रगतोऽथ वा । योगः केमद्रुमोनाम तदा स्याद्यत्र गर्हिताः । भवन्ति निन्दिताचारा दारिद्र्यापत्तिसंयुताः" तथा च सारावल्याम् "सुनफानफादुरुधुराः क्रमेण योगा भवन्ति रविरहितैः । वित्तान्त्योभयसंस्थैः कैरववनबान्धवाद्विहगैः" एतेन "यदा योगाः केन्द्रे ग्रहवर्जितः शशाङ्कश्च । केमद्रुमोऽतिकष्टः शशिनि च सर्वग्रहादृष्टे" । अन्ये आचार्या नेच्छन्ति वराहमिहिरस्तु पुनरिच्छत्येव अस्मिन्नर्थे तस्यैव तद्वाक्यम् अन्यथा केमद्रुम इति एवमुक्त्वा परमतमुक्तम् अन्यैरसौ इति "केन्द्रे शीतकरेऽथवा ग्रहयुते केमद्रुमो नेष्यते" स्वल्पजातकेऽपि । तेन सुनफानफादुरुधुराऽभावे केमद्रुमउक्तः तथा च "रविवर्जं द्वादशगैरनफा चन्द्रद्वितीयगैः सुनफा । उभयस्थितैर्दुरुधुरा केमद्रुमसंज्ञकोऽतोऽन्यः" । सत्यस्यापि सुनफानफादुरुधुराभावे केमद्रुमः तथा च "सुनफा त्वनफायोगोदौरुधुरश्चन्द्रसंस्थितखेटात् । प्राक् पृष्ठतो ग्रहेन्द्रैरुभयगतैस्तेषु रविवर्जम् । केमद्रुमोऽत्र योगोऽन्यथा भवेद्यत्र गर्हितं जन्म" केचित् केन्द्रनवांशकेष्विति केचिदाचार्याः केन्द्रेषु केचिच्च नवांशकेष्वेतद्योगत्रयं वदन्ति यथा चन्द्राद्द्वितीयद्वादशोभयस्थैः ग्रहैः सुनफाद्या योगा व्याख्याताः तथा कैश्चिच्छ्रुतकीर्तिजीवशर्मप्रभृतिभिः केन्द्रवशान्नवांशकवशाच्च व्याख्याताः एतदुक्तं भवति ताराग्रहैश्चन्द्राच्चतुर्थस्थानस्थैः सुनफा दशमस्थानस्थैरनफा चतुर्थदशमस्थितैः दुरुधुरा अतोऽन्यथा केमद्रुमः तथा च श्रुतकीर्तिः "चन्द्राच्चतुर्थैः सुनफा दशमस्थितैः कीर्तितोऽनफा विहगैः । उभयस्थितैर्दुरुधुरा केमद्रुमसंज्ञितोऽन्यथा योगः" केचिन्नवांशकेषु वदन्ति यत्र तत्र राशौ यद्राशिसम्बन्धिनवांशके चन्द्रमा भवति तस्माद्राशेः यो द्वितीयो राशिः तत्र यदि ताराग्रहोभवति तदा सुनफा अथ चन्द्रनवांशकराशेर्द्वादशे ताराग्रहो भवति तदाऽनफा अथ चन्द्रनवांशकराशेः द्वितीये द्वादशे च यदा ग्रहौ भवतस्तदा दुरुधुरा अतोऽन्यथा केमद्रुमः । तथा च चन्द्रनवांशकराशितोद्विद्वादशराशी यदि ग्रहरहितौ भवतः तदा केमद्रुमः तथा च जीवशर्मा "यद्राशिसंज्ञे शीतांशुर्नवांशे जन्मनि स्थितः । तद्द्वितीयस्थितैर्योगः सुनफाख्यः प्रकीर्तितः । द्वादशैरनफा ज्ञेया ग्रहैर्द्विद्वादशस्थितैः । प्रोक्तो दुरुधुरा योगोऽन्यथा केमद्रुमः स्मृतः" । उक्तिः प्रसिद्धा न सा येषामेवंविधं मतं तेषामुक्तिः लोके न प्रसिद्धा तन्मतं वृद्धज्योतिषिकैः नाङ्गीकृतमित्यर्थः । अथ सुनफानफादुरुधुराख्यप्रकारज्ञानमिन्द्रवज्रयाह त्रिंशत्सरूपा इति सरूपाः सैकाः त्रिंशदेकत्रिंशत् सुनफाख्यायोगाः तावन्त एवानफाख्याः षष्टित्रयमशीत्यधिकं शतं दुरुधुराप्रभेदानाम् एषां पूर्ववद्विकल्पगणितम् । इच्छाविकल्पैरित्यादि । एतच्छ्लोके लोष्टुकप्रस्तारः पूर्वमेव नाभसयोगाध्याये व्याख्यातः इच्छाविकल्पैः क्रमशः परिपाट्याऽन्यत्र लोष्टुकमभिनीय नीते निवृत्तिः कार्या पुनः भूयोऽन्यनीतिरित्यन्यत्र स्थानान्तरे चालनम् । अथ सुनफाद्यो भौमबुधगुरुसितासितैः पञ्चभिर्निष्पाद्यन्ते तस्मादिच्छाविकल्पाः पञ्च तेषां न्यासः अत्र प्राग्वत् पूर्वेण पूर्वेण गणितेन युक्तस्थानं विनान्त्यं प्रवदन्ति संख्यामिति कृत्वा जातम्
५ ४ ३ २ १ अथवा प्राग्वत् सैव संख्या जाता । एवम्
१ २ ३ ४ ५ एकविकल्पाः पञ्च, द्विविकल्पा दश, त्रिवि-

कल्पा दश, चतुर्विकल्पाः पञ्च, पञ्चविकल्पाः एकः, एवमेकत्रिंशत् ५।१०।१०।५।१ तद्यथा द्वितीये चन्द्राद्भौमः१ बुधः२ बृहस्पतिः३ शुक्रः४ सौरः५ एवमेकविकल्पाः पञ्च। अथ द्विविकल्पाः भौमबुधौ१ भौमजीवौ२ भौमशुक्रौ३ भौमसौरौ४ बुधजीवौ५ बुधशुक्रौ६ बुधसौरौ७ जीवशुक्रौ८ जीवसौरौ९ शुक्रसौरौ१० एवं द्विविकल्पाः दश। अथ त्रिविकल्पाः भौमबुधजीवाः१ भौमबुधशुक्राः २ भौमबुधसौराः ३ भौमजीवशुक्राः ४ भौमजीवसौराः ५ भौमशुक्रसौराः ६ बुधजीवशुक्राः ७ बुधजीवसौराः ८ बुधशुक्रसौराः ९ जीवशुक्रसौराः१० एवं त्रिविकल्पा दश १०। अथ चतुर्विकल्पाः भौमबुधजीवशुक्राः१ भौमबुधजीवसौराः२ भौमजीवशुक्रसौराः३ भौमबुधशुक्रसौराः४ बुधजीवशुक्रसौराः५ एवं चतुर्विकल्पाः पञ्च ५। अथ पञ्चविकल्पः भौमबुधजीवशुक्रसौराः१ एवं पञ्चविकल्प एक१। एवमेकत्रिंशत् ३१। सुनफायोगाः उत्पादिता अनेनैव प्रकारेण। द्वादशस्थैः अनफाभेदाः एकत्रिंशत्। अथ दुरुधराविकल्पाः एषां लोट्कप्रस्ताराभावात् स्वबुद्ध्या इच्छाविकल्पैः क्रमशोभिनीयेति न्यायेन व्युत्पत्तिः। एको द्वितीये, द्वितीयो (अन्यः) द्वादशे, एको द्वादशे द्वितीयो (अन्यः) द्वितीये, यथा भौमबुधौ१ बुधभौमौ २। भौमजीवौ३ जीवभौमौ४ भौमशुक्रौ५ शुक्रभौमौ६ भौमसौरौ७ सौरभौमौ८ बुधजीवौ९ जीवबुधौ १० बुधशुक्रौ११ शुक्रबुधौ१२ बुधसौरौ१३ सौरबुधौ१४ जीवशुक्रौ१५ शुक्रजीवौ१६ जीवसौरौ१७ सौरजीवौ१८ शुक्रसौरौ१९ सौरशुक्रौ२०। अथैको द्वितीये द्वादशे द्वौ, द्वितीये द्वौ द्वादशे चैकः तद्यथा भौमः बुधजीवौ१ बुधजीवौ भौमः२। भौमः शुक्रबुधौ३ बुधशुक्रौ, भौमः४। भौमः, बुधसौरौ५, बुधसौरौ, भौमः६। भौमः जीवशुक्रौ७ जीवशुक्रौ, भौमः८। भौमः जीवसौरौ९ जीवसौरौ, भौमः१०। भौमः शुक्रसौरौ११ शुक्रसौरौ, भौमः१२। बुधः भौमजीवौ१३ भौमजीवौ, बुधः १४। बुधः भौमशुक्रौ१५ भौमशुक्रौ, बुध१६। बुधः भौमसौरौ१७ भौमसौरौ, बुधः १८। बुधः जीवशुक्रौ१९ जीवशुक्रौ, बुधः२० बुधः, जीवसौरौ२१ जीवसौरौ, बुधः२२। बुधः शुक्रसौरौ२३ शुक्रसौरौ बुधः२४। जीवः भौमबुधौ२५ भौमबुधौ जीवः२६। जीवः, भौमशुक्रौ२७ भौमशुक्रौ, जीवः२८। जीवः भौमसौरौ २९ भौमसौरौ जीवः३०। जीवः बुधशुक्रौ३१ बुधशुक्रौ जीवः३२। जीवः बुधसौरौ३३ बुधसौरौ, जीवः३४। जीवः शुक्रसौरौ३५ शुक्रसौरौ, जीवः३६। शुक्रः भौमबुधौ३७ भौमबुधौ, शुक्रः३८। शुक्रः भौमजीवौ३९ भौमजीवौ, शुक्रः४०। शुक्रः भौमसौरौ४१ भौमसौरौ, शुक्रः४२। शुक्रः बुधजीवौ४३ बुधजीवौ, शुक्रः४४। शुक्रः बुधसौरौ४५ बुधसौरौ, शुक्रः४६। शुक्रः जीवसौरौ४७ जीवसौरौ शुक्रः ४८। सौरः भौमबुधौ४९ भौमबुधौ सौरः५०। सौरः भौमजीवौ५१ भौमजीवौ, सौरः५२। सौरः भौमशुक्रौ५३ भौमशुक्रौ सौरः५४। सौरः बुधजीवौ५५ बुधजीवौ, सौरः५६। सौरः बुधशुक्रौ५७ बुधशुक्रौ, सौरः५८। सौरः जीवशुक्रौ५९ जीवशुक्रौ सौरः६०। एवमेकत्र जाताः६०। अथैको द्वितीये, द्वादशे त्रयः, त्रयो द्वितीये, द्वादशे चैकः, तद्यथा भौमः बुधजीवशुक्राः१ बुधजीवशुक्राः भौमः२। भौमः बुधजीवसौराः३ बुधजीवसौराः, भौमः४। भौमः बुधशुक्रसौराः५ बुधशुक्रसौराः, भौमः६। भौमः जीवशुक्रसौराः७ जीवशुक्रसौराः, भौमः८। बुधः भौमजीवशुक्राः९ भौमजीवशुक्राः, बुधः१०। बुधः भौमजीवसौराः११ भौमजीवसौराः बुधः१२। बुधः भौमशुक्रसौराः१३ भौमशुक्रसौराः, बुधः१४। बुधः जीवशुक्रसौराः१५ जीवशुक्रसौराः बुधः१६। जीवः भौमबुधशुक्राः१७ भौमबुधशुक्राः, जीवः १८। जीवः भौमबुधसौराः१९ भौमबुधसौराः, जीवः२०। एकत्र १००। जीवः भौमशुक्रसौराः१ भौमशुक्रसौराः, जीवः२। जीवः बुधशुक्रसौराः३ बुधशुक्रसौराः, जीवः४। शुक्रः भौमबुधजीवाः५ भौमबुधजीवाः, शुक्रः६। शुक्रः भौमबुधसौराः७ भौमबुधसौराः, शुक्रः८। शुक्रः भौमजीवसौराः९ भौमजीवसौराः, शुक्रः१०। शुक्रः बुधजीवसौराः११ बुधजीवसौराः, शुक्रः१२। सौरः भौमबुधजीवाः१३ भौमबुधजीवाः, सौरः१४। सौरः भौमबुधशुक्राः१५ भौमबुधशुक्राः, सौरः१६। सौरः भौमजीवशुक्राः१७ भौमजीवशुक्राः, सौरः१८। सौरः बुधजीवशुक्राः१९ बुधजीवशुक्राः, सौरः२०। एवमेकत्र१२०। अथ द्वितीये एको द्वादशे चत्वारः, चत्वारो द्वितीये द्वादशे चैकः तद्यथा भौमः बुधजीवशुक्रसौराः१ बुधजीवशुक्रसौराः भौमः२। बुधः, भौमजीवशुक्रसौराः३ भौमजीवशुक्रसौराः, बुधः४। जीवः भौमबुधशुक्रसौराः५ भौमबुधशुक्रसौराः, जीवः६। शुक्रः भौमबुधजीवसौराः७ भौमबुधजीवसौराः, शुक्रः८।

सौरः भौमबुधजीवशुक्राः ९ भौमबुधजीवशुक्राः, सौरः १०। एवमेकत्व १२०। अथ द्वौ द्वादशे, द्वावेव द्वितीये तद्यथा भौ०बु०,जी०शु० १ जी०शु०,भौ०बु० २। भौ०बु०,जी०सौ० ३ जी०सौ०,भौ०बु० ४। भौ०बु०, शु०सौ० ५ शु०सौ०,भौ०बु० ६। भौ०जी०, शु०बु० ७ शु०बु०,भौ०जी० ८। भौ०जी०, बु० सौ० ९ बु०भौ०जी०सौ० १०। भौ०जी०, शु०सौ० ११ शु० सौ०, भौ०जी० १२। भौ० शु०, बु०जी० १३ बु०जी०, भौ०शु० १४। भौ०शु०, बु०सौ० १५ बु०सौ०भौ०शु० १६। भौ०शु०, जी०सौ० १७ जी०सौ०, भौ०शु० १८। बु०जी०, भौ०सौ० १९ भौ०सौ०बु०जी० २०। एकमेकत्र १५०। भौ०सौ०,बु०शु० १ बु०शु०,भौ०सौ० २। भौ०सौ०,जी०शु० ३ जी०शु०,भौ०सौ० ४। बु०जी०,शु०सौ० ५ शु०सौ०,बु०जी० ६। बु०शु०, जी०सौ० ७ जी०सौ०,बु०शु० ८। जी०शु०,बु०सौ० ९ बु०सौ०जी०शु० १०। एवमेकत्र १६०। द्वौ द्वितीये त्रयो द्वादशे, द्वादशे द्वौ त्रयो द्वितीये तद्यथा भौ०बु०, जी०शु०सौ० १ जी०शु०सौ०, भौ०बु० २। भौ०जी०, बु०शु०सौ० ३ बु०शु०सौ०, भौ०जी० ४। भौ०शु०, बु०जी०सौ० ५ बु०जी०सौ०, भौ०शु० ६। भौ०सौ०, बु०जी०शु० ७। बु०जी०शु०, भौ० सौ० ८। बु०जी०,भौ०शु०सौ० ९। भौ०शु०सौ०,बु०जी० १०। एवमेकत्र १७०। बु०शु०, भौ०जी०सौ० १ भौ०जी०सौ०, बु० शु० २। बु०सौ०, भौ०जी०शु० ३ भौ०जी०शु०, बु०सौ० ४। जी०शु०, भौ०बु०सौ० ५। भौ०बु०सौ०, जी०शु० ६। जी०सौ०, भौ०बु०शु० ७ भौ०बु०शु०, जी० सौ० ८। शु०सौ०,भौ०बु०जी० ९। भौ०बु०जी०,शु०सौ० १०। एवमेकत्र १८०।

एवं दुरुधुरायोगभेदाः शतमशीत्यधिकं प्रदर्शितम्" भट्टो०। "सम्पन्नभोगसुखभुग्धनवाहनाढ्यस्त्यागान्वितो दुरुधुराप्रभवः सुभृत्यः। केमद्रुमे मलिनदुःखितनीचनिःस्वाः प्रेष्याः खलाश्च नृपतेरपि वंशजाताः" वृहज्जा०। अस्य पुंस्त्वमपि। "प्रचुरधनसमेतो भोगसौख्यान्वितः स्याद्गजहयरथमुख्यैर्वाहनैरन्वितश्च। बहुवितरणलज्जाप्रापिताखण्डकीर्त्तिर्दुरुधुरजनितो ना भृत्यवर्गैः प्रपूर्णः" जातकपद्धतौ पुंस्त्वोक्तेः। "दधतेव योगमुभयग्रहान्तरस्थितिकारितं दुरुधुराख्यमिन्दुना" माघः।

**दुरुफ** पु० नी०ता० उक्ते योगभेदे। "तम्बीरकुत्थौ दुरुफश्च योगाः स्युः षोडशैषां कथयामि लक्ष्म" इत्युद्दिश्य "लग्नात् षष्ठेऽष्टमेऽन्त्ये रिपुररिगृहगो वक्रगो नीचगामी क्रूरैर्युक्तोऽस्तगो वा यदि शुभमित्रो क्रूरनीचारिभस्थैः। अनीक्षमाणस्तनुमस्तभागे स्थितः शुभोच्चादिपदैश्च शून्यः। क्रूरेसराफो न स वीर्ययुक्तः कार्यं विधातुं न विभुर्यतोऽसौ। चन्द्रः सूर्याद्द्वादशे दृश्चिकाद्ये षष्ठे नेष्टोऽन्ये तुलायां विशेषात्। राशीशेनादृष्टमूर्त्तिर्न सद्भिर्दृष्टो ज्ञेयः शून्यमार्गः पदोनः। क्षीणो भान्ते नो शुभो जन्मकाले पृच्छायां वा चन्द्र एवं विचिन्त्यः। शुक्ले भौमः कृष्णपक्षेऽर्कसूनुः सुहृदृष्टुं वीक्षते नो शुभोऽसौ। शुक्ले दिवा स्वगृहगोऽर्कसुतः शशाङ्कं कृष्णे कुजो निशि समर्क्षगतः प्रपश्येत्। दोषाल्पतां वितनुतेऽपरथा बहुत्वम् प्रश्नेऽथ वा जनुषि बुद्धिमतोहनीयम्"।

**दुरूह** त्रि० दुःखेन ऊह्यते दुर्+ऊह–कर्मणि खल्। दुर्वितर्क्ये। "जानीते जयदेव एव शरणः श्लाघ्ये दुरूहद्रुते" गीतगो०।

**दुरेवा** त्रि० दुर्+इ–वा० व। दुःखेन गम्ये "प्राद्वेषीमीयाः सहते दुरेवाः" ऋ०५।२।९। "दुरेवाः दुःखगमनाः" भा०।

**दुरोक** त्रि० दुट ओकः समवायोऽत्र प्रा०ब०। दुःसेवे "दुरोकमग्निरायवे शुशोच" ऋ०७।४।३ "दुरोकं दुःसेवम्" भा०

**दुरोण** पु० गृहे निघण्टुः। "नि दुरोणे अमृतो मर्त्यानां राजा ससाद विदथानि साधन्" ऋ०३।१।१८। २यज्ञगृहे च। "काव्यो राजा नेषु कृत्वा दक्षस्य दुरोणे" यजु०१२।७२ "दुरोणे यज्ञगृहे" वेददी० "अभि द्विस्त्रायुर्दुरोणयुः" ऋ० ८।६०।१९ "दुरोणयुर्यजमानगृहस्य मिश्रयिता" भा० यु–मिश्रणे वा० कु। "हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्" कठोप०।

**दुरोदर** पु० दुष्टम् आ समन्तादुदरमस्य। १द्यूतकारे २पणे मेदि०। ३अक्षे ४द्यूते न० अमरः। "दुरोदरच्छद्मजितां समीहते नयेन जेतुं जगतीं सुयोधनः" किरा०। "न मृगयाऽभिरतिर्न दुरोदरम्" रघुः।

**दुर्ग** पुंन०दुःखेन गम्यतेऽसौ दुर्+गम–बा०ड। (गड़) (केल्ला) प्रसिद्धे राज्ञानाम्नणीये १कोट्टे। तत्स्वरूपभेदादिकं मत्स्यपुराणे २१६ अ० उक्तं यथा "एवंविधं यथालाभं राजा विषयमावसेत्। तत्र दुर्गं नृपः कुर्यात् षण्णामेकतमं बुधः। धन्वदुर्गं महीदुर्गं नरदुर्गं तथैव च। वार्क्षं चैवाम्बुदुर्गं च गिरिदुर्गं च पार्थिव!। सर्वेषामेव दुर्गाणां गिरिदुर्गं प्रशस्यते। दुर्गं च परिखोपेतं वप्राट्टालकसंयुतम्। शत-

प्रोयन्त्रमुख्यैश्च शतघ्नश्च समाहृतम्। गोपुरं सकपाटञ्च तत्र स्यात् सुमनोहरम्। सपताकञ्जारूढ़ो येन राजा विशेत् पुरम्। चतस्रश्च तथा तत्र कार्य्यास्त्वायतवीथयः। एकस्मिंस्तत्र वीथ्यग्रे देववेश्म भवेद्दृढ़म्। वीथ्यग्रे च द्वितीये च राजवेश्म विधीयते। धर्म्माधिकरणं कार्य्यं वीथ्यग्रे च तृतीयके। चतुर्थे, त्वथ वीथ्यग्रे गोपुरञ्च विधीयते। आयतञ्चतुरस्रं वा वृत्तं वा कारयेत् पुरम्। मुक्तिहीनं त्रिकोणञ्च यवमध्यं तथैव च। आयतञ्चतुरस्रं वा वृत्तं वा कारयेत् पुरम्। अर्द्धचन्द्रं प्रशंसन्ति नदीतीरेषु तद्वसन्। अन्यत्तत्र न कर्त्तव्यं प्रयत्नेन विजानता। राज्ञा कोशगृहं कार्य्यं दक्षिणे राजवेश्मनः। तस्यापि दक्षिणे भागे गजस्थानं विधीयते। गजानां प्राङ्मुखी शाला कर्त्तव्या वाप्युदङ्मुखी। आग्नेये च तथा भागे आयुधागारमिष्यते। महानसञ्च धर्म्मज्ञ! कर्म्मशालास्तथापराः। गृहं पुरोधसः कार्य्यं वामतो राजवेश्मनः। मन्त्रिवेदविदाञ्चैव चिकित्साकर्त्तुरेव च। तत्रैव च तथा भागे कोषागारं विधीयते। गवां स्थानं तथैवात्र तुरगाणां तथैव च। उत्तराभिमुखी श्रेणी तुरगाणां विधीयते। दक्षिणाभिमुखी वाथ परिशिष्टास्तु गर्हिताः। तुरगास्ते तथा धार्य्याः प्रदीपैः सार्व्वरात्रिकैः। कुक्कुटान् वानरांश्चैव मर्कटांश्च विशेषतः। धारयेदश्वशालासु सवत्सां धेनुमेव च। अजाश्च धार्य्या यत्नेन तुरगाणां हितैषिणा। गोगजाश्वादिशालासु तत्पुरीषस्य निर्गमः। अस्तं गते न कर्त्तव्यो देवदेवे दिवाकरे। तत्र तत्र यथास्थानं राजा विज्ञाय सारतः। दद्यादावसथस्थानं सर्व्वेषामनुपूर्व्वशः। योधानां शिल्पिनाञ्चैव सर्व्वेषामविशेषतः। दद्यादावसथान् दुर्गे कालमन्त्रविदां शुभान्। गोवैद्यानश्ववैद्यांश्च गजवैद्यांस्तथैव च। आहरेत भृशं राजा दुर्गे हि प्रबला रुजः। कुशीलवानां विप्राणां दुर्गे स्थानं विधीयते। न बहूनामतो दुर्गे विना कार्य्यं तथा भवेत्। दुर्गे च तत्र कर्त्तव्या नानाप्रहरणान्विताः। सहस्रघातिनो राजंस्तैस्तु रक्षा विधीयते। दुर्गे द्वाराणि गुप्तानि कार्य्याण्यपि च भूभुजा। सञ्चयश्चात्र सर्व्वेषामायुधानां प्रशस्यते। धनुषां क्षेपणीयानान्तोमराणां च पार्थिव!। शराणामथ खड़्गानां कवचानां तथैव च। लगुडानां गुड़ानाञ्च हुड़ानां परिघैः सह। अश्मनाञ्च प्रभूतानां मुद्गराणां तथैव च। त्रिशूलानां पट्टिशानां कुठाराणाञ्च पार्थिव!। प्रासानाञ्च सशूलानां शक्तीनाञ्च नरोत्तम!। परश्वधानां चक्राणां वर्म्मणाञ्चर्म्मभिः सह। कुद्दालक्षुरवेत्राणां पीठकानान्तथैव च। तुषाणाञ्चैव दात्राणामङ्गाराणाञ्च सञ्चयः। सर्व्वेषां शिल्पिभाण्डानां सञ्चयश्चात्र चेष्यते। वादित्राणाञ्च सर्व्वेषामौषधीनान्तथैव च। यवसानां प्रभूतानामिन्धनस्य च सञ्चयः। गुड़स्य सर्व्वतैलानां गोरसानान्तथैव च। वसानामथ मज्जानां स्नायूनामस्थिभिः सह। गोचर्म्मपटहानाञ्च धान्यानां सर्व्वतस्तथा। तथैवाभ्रपटानाञ्च यवगोधूमयोरपि। रत्नानां सर्व्ववस्त्राणां लोहानामप्यशेषतः। कलायमुद्गमाषाणाञ्चणकानां तिलैः सह। तथा च सर्व्वशस्यानां पांशुगोमययोरपि। शणसर्ज्जरसं भूर्ज्जं जतुलाक्षा च टङ्कणम्। राजा सञ्चिनुयाद्दुर्गे यच्चान्यदपि किञ्चन। कुम्भाश्चाशीविषैः कार्य्या व्यालसिंहादयस्तथा। मृगाश्च पक्षिणश्चैव रक्ष्यास्ते च परस्परम्। स्थानानि च विरुद्धानां सुगुप्तानि पृथक् पृथक्। कर्त्तव्यानि महाभाग! यत्नेन पृथिवीक्षिता। उक्तानि चाप्यनुक्तानि राजद्रव्याण्यशेषतः। सुगुप्तानि पुरे कुर्य्याज्जनानां हितकाम्यया। जीवकर्षभकाकोलमामलक्याटरूषकान्। शालपर्णीं पृश्निपर्णीं मुद्गपर्णीं तथैव च। माषपर्णीं मदौ द्वौ च सारिवे द्वे बलात्रयम्। वारा श्वसन्ती वृष्या च वृहती कण्टकारिका। शृङ्गी शृङ्गाटकी द्रोणी वर्षाभूर्द्दर्भरेणुका। मधुपर्णीं विदार्य्यौ द्वे महाक्षीरा महातपाः। धन्वनः सहदेवाह्वा कटुकैरण्डकं विषः। पर्णी शताह्वा मृद्वीका फलगुखर्जूरयष्टिकाः। शुक्रातिशुक्रकाश्मर्य्यं छत्रातिच्छत्रवीरणाः। इक्षुरिक्षुविकाराश्च फाणिताद्याश्च सत्तम!। सिंही च सहदेवी च विश्वेदेवाश्वरोधकम्। मधुकं पुष्पहंसाख्या शतपुष्पा मधूलिका। शतावरीमधूके च पिप्पलं तालमेव च। आत्मगुप्ता कट्फलाख्या दार्व्विका राजशीर्षकी। राजसर्षपधान्याकमृष्यप्रोक्ता तथोत्कटा। कालशाकं पद्मबीजं गोवल्ली मधुवल्लिका। शीतपाकी कुवेराक्षी काकजिह्वोरुपुष्पिका। पर्व्वतत्रपुसौ चोभौ गुञ्जातकपुनर्नवे। कसेरुकाश्मीरी बल्या शालूककेसरम्। तुषधान्यानि सर्व्वाणि शमीधान्यानि चैव हि। क्षीरं क्षौद्रं तथा तक्रं तैलं मज्जा वसा घृतम्। नीपश्चारिष्टकाक्षोड़वातामसोमवाणकम्। एवमादीनि चान्यानि विज्ञेयो मधुरोगणः। राजा सञ्चिनुयात्सर्व्वं पुरे निरवशेषतः। दाड़िमाम्रातकौ चैव

तिन्तिडीकाम्लवेतसम्। भव्यकर्कन्धुलकुचकरमर्दकरूषकम्। बीजपूरककण्डूरे मालतीराजबन्धुकम्। कोलकद्वयपर्णानि द्वयोराम्रातयोरपि। पारावतं नागरकं प्राचीनोलकमेव च। कपित्थामलकं चुक्रं फलं दन्तशठस्य च। जाम्बवं नवनीतञ्च सौवीरकतुषोदके। सुरासवञ्च मद्यानि मण्डतक्रदधीनि च। शुक्तानि चैव सर्वाणि ज्ञेयमाम्लगणं द्विज!। एवमादीनि चान्यानि राजा सञ्चिनुयात् पुरे। सैन्धवोद्भिदपाठेयपाक्यसामुद्ररोमकम्। कुप्यसौवर्चलविड़ं वालकेयं यवाह्वकम्। और्वं क्षारं कालभस्म विज्ञेयो लवणोगणः। एवमादीनि चान्यानि राजा सञ्चिनुयात् पुरे। पिप्पली पिप्पलीमूलचव्यचित्रकनागरम्। कुवेरकं मरीचकं शिग्रुभल्लातसर्षपाः। कुष्ठाजमोदाकिणिही हिङ्गुमूलकधान्यकम्। कारवीकुञ्चिका याज्या सुमुखा काकमाचिका। फणिज्झकोऽथ लशुनं भूस्तृणं सुरसन्तथा। कायस्था च वयस्था च हरितालं मनःशिला। अमृता च रुदन्ती च रोहिषं कुङ्कुमं तथा। जया एरण्डकाण्डीरं सल्लकी हञ्जिका तथा। सर्वपित्तानि मूत्राणि प्रायो हरितकानि च। फलानि चैव हि तथा सूक्ष्मैला हिङ्गुपत्रिका। एवमादीनि चान्यानि गणः कटुकसंज्ञितः। राजा सञ्चिनुयाद्दुर्गे प्रयत्नेन नृपोत्तम!। मुस्तं चन्दनह्रीवेरकृतमालकदारवः। हरिद्रानलदोशीरनक्तमालकदम्बकम्। दूर्वा पटोलकटुका दार्वीत्वक् पत्रकं वचा। किराततिक्तभूतुम्बी विषा चातिविषा तथा। तालीशपत्रतगरसप्तपर्णविकङ्कताः। काकोदुम्बरिका दिव्या तथा चैव सुरोद्भवा। षड्ग्रन्था रोहिणी मांसी पर्पटश्चाथ दन्तिका। रसाञ्जनं भृङ्गराजपतङ्गी परिपेलवम्। दुःस्पर्शा गुरुणी कामा श्यामाकं गन्धनाकुली। रूपपर्णी व्याघ्रनखं मञ्जिष्ठा चतुरङ्गुला। रम्भा चैवाङ्कुरास्फोता तालास्फोता हरेणुका। वेत्राग्रं वेतसस्तुम्बी विषाणी लोध्रपुष्पिणी। मालतीकरकृष्णाख्या वृश्चिका जीविता तथा। पर्णिका च गुडूची च स गणस्तिक्तसंज्ञकः। एवमादीनि चान्यानि राजा सञ्चिनुयात् पुरे। अभयामलके चोभे तथैव च विभीतकम्। प्रियङ्गुधातकीपुष्पं मोचाख्या चार्जुनासनाः। अनन्ता स्त्री तुवरिका श्योना च कट्फलं तथा। भूर्जपत्रं शिलापत्रं पाटलापत्रलोमकम्। समङ्गा त्रिवृतामूलकार्पासगैरिकाञ्जनम्। विद्रुमं समधूच्छिष्टं कुम्भिका कुमुदोत्पलम्। न्यग्रोधोदुम्बराश्वत्थकिंशुकाः शिंशपा शमी। प्रियालु-

पीलुकासारिशिरीषाः पद्मकं तथा। बिल्वोऽग्निमन्थः प्लक्षश्च श्यामाकश्च वको घनम्। राजादनं करीरञ्च धान्यकं प्रियकस्तथा। कङ्कोलाशोकबदराः कदम्बखदिरद्वयम्। एषां पत्राणि साराणि मूलानि कुसुमानि च। एवमादीनि चान्यानि कषायाख्यो मतो रसः। प्रयत्नेन नृपश्रेष्ठो राजा सञ्चिनुयात् पुरे। कीटाश्च मारणे योग्या व्यङ्गतायां तथैव च। वातधूमाम्बुमार्गाणां दूषणानि तथैव च। धार्याणि पार्थिवैर्दुर्गे तानि वक्ष्यामि पार्थिव!। विषाणां धारणं कार्यं प्रयत्नेन महीभुजा। विचित्राश्चागदा धार्या विषस्य शमनास्तथा। रक्षोभूतपिशाचघ्नाः पापघ्नाः पुष्टिवर्द्धनाः। कलाविदश्च पुरुषाः पुरे धार्याः प्रयत्नतः। भीतान् प्रमत्तान् कुपितांस्तथैव च विमानितान्। कुभृत्यान् पापशीलांश्च न राजा वासयेत् पुरे। यन्त्रायुधाट्टालचयोपपन्नं समग्रधान्यौषधिसम्प्रयुक्तम्। वणिग्जनैश्चावृतमावसेत दुर्गं सुगुप्तं नृपतिः सदैव। मनुरुवाच। रक्षोघ्नानि विषघ्नानि यानि धार्याणि भूभुजा। अगदानि समाचक्ष्व तानि धर्मभृतां वर!। मत्स्य उवाच। बिल्वाटकी यवक्षारं पाटला वाह्लिकोषणाः। श्रीपर्णी शल्लकीयुक्तो निक्वाथः प्रोक्षणं परम्। सविषं प्रोक्षितं तेन सद्यो भवति निर्विषम्। यवसैन्धवपानीयवस्त्रशय्यासनोदकम्। कवचाभरणं छत्रं बालव्यजनवेश्मनाम्। शेलुः पाटलातिविषा शिग्रुमूर्वा पुनर्नवा। समङ्गावृषमूलञ्च कपित्थवृषशोणितम्। महादन्तशठन्तद्वत् प्रोक्षणं विषनाशनम्। लाक्षाप्रियङ्गुमञ्जिष्ठा सममेला हरेणुका। यष्ट्याह्वा मधुरा चैव बभ्रुपित्तेन कल्पिता। निखनेद्गोविषाणस्थं सप्तरात्रं महीतले। ततः कृत्वा मणिं हेम्ना बद्धं हस्तेन धारयेत्। संस्पृष्टं सविषं तेन सद्यो भवति निर्विषम्। मनोह्वया शमीपत्रं तुम्बिका श्वेतसर्षपाः। कपित्थकुष्ठमञ्जिष्ठाः पित्तेन श्लक्ष्णकल्पिताः। शुनो गोः कपिलायाश्च सौम्याक्षिप्तोऽपरोगदः। विषजित् परमं कार्यं मणिरत्नञ्च पूर्ववत्। मूषिका जतुका चापि हस्ते बद्धा विषापहा। हरेणुर्मांसी मञ्जिष्ठा रजनी मधुका मधु। अक्षत्वक् सुरसं लाक्षा श्वपित्तं पूर्ववद्भुवि। वादित्राणि पताकाश्च पिष्टैरेतैः प्रलेपिताः। श्रुत्वा दृष्ट्वा समाघ्राय सद्यो भवति निर्विषः। त्र्यूषणं पञ्चलवणं मञ्जिष्ठा रजनीद्वयम्। सूक्ष्मैला त्रिवृतापत्रं विडङ्गानीन्द्रवारुणी। मधुकं वेतसं क्षौद्रं विषाणे च

निधापयेत् । तस्मादुष्णाम्बुना मात्रं प्रागुक्तं योजयेत्ततः । युक्तं सर्जरसोपेताः सर्षपा एलावालुकैः । सुवेगा तस्करपुरैः कुसुमैरर्जुनस्य तु । धूपो वासगृहे हन्ति विषं स्थावरजङ्गमम् । न तत्र कीटा न विषं दर्दुरा न सरीसृपाः । न कृत्याकर्मणाञ्चापि धूपोऽयं यत्र दह्यते । कल्पितैश्चन्दनक्षीरपलाशद्रुमवल्कलैः । मूर्व्वैलावालुसरसानाकुलीतण्डुलीयकैः । क्वाथः स विषकार्य्येषु काकमाचीयुतो हितः । रोचनापत्रनेपालीकुङ्कुमैस्तिलकान् वहन् । विषैर्न बाध्यते स्याच्च नरनारीनृपप्रियः । चूर्णैर्हरिद्रामञ्जिष्ठाकिणिहीकणनिम्बजैः । दिग्धं निर्विषतामेति गात्रं सर्वविषार्द्दितम् । शिरीषस्य फलं पत्रं पुष्पं त्वङ्मूलमेव च । गोमूत्रघृष्टं ह्यगदः सर्वकर्मकरः स्मृतः । एकवीर ! महौषध्यः शृणु चातः परं नृप ! वन्ध्या कर्कोटकी राजन् ! विष्णुक्रान्ता तथोत्कटा । शतमूली सितानन्दा बला मोचा पटोलिका । सोमापिण्डा निशा चैव तथा दग्धरुहा च या । स्थले कमलिनी या च विशाली शङ्खमूलिका । चण्डाली हस्तिमगधा गोऽजापर्णी करम्भिका । रक्ता चैव महारक्ता तथा वर्हिशिखा च या । कोशातकी नक्तमालं प्रियालस्य सुलोचनी । वारुणी वसुगन्धा च तथा वै गन्धनाकुली । ईश्वरी शिवगन्धा च श्यामला वंशनालिका । जतुकाली महाश्वेता श्वेता च मधुयष्टिका । वज्रकः पारिभद्रश्च तथा वै सिन्धुवारकाः । जीवानन्दा वसुच्छिद्रा नतनागरकण्टका । नालश्च जाली जाती च तथा च वटपत्रिका । कार्त्तस्वरं महानीला कुन्दुरुर्हंसपादिका । मण्डूकपर्णी वाराही द्वे तथा तण्डुलीयके । सर्पाक्षी लवली ब्राह्मी विश्वरूपा सुखाकरा । रुजापहा वृद्धिकरी तथा चैव विशल्यदा । पत्रिका रोहिणी चैव नक्तमाला महौषधी । तथामलकवन्दाकं श्यामचित्रफला च या । काकोली क्षीरकाकोली पीलुपर्णी तथैव च । केशिनी वृश्चिकाली च महानागा शतावरी । गरुड़ी च तथा वेगा जले कुमुदिनी तथा । स्थले चोत्पलिनी या च महाभूमिलता च या । उन्मादिनी सोमराजी सर्वरत्नानि पार्थिव ! । विशेषान्मरकतानि कीटपक्षं विशेषतः । जीवजाताश्च मणयः सर्वे धार्य्याः प्रयत्नतः । रक्षोघ्नाश्च विषघ्नाश्च कृत्यावेतालनाशनाः । विशेषान्नरनागाश्च गोखरोष्ट्रसमुद्भवाः । सर्पतित्तिरगोमायुवभ्रमण्डूकजाश्च ये । सिंहव्याघ्रर्क्षमार्जारद्वीपिवानरसंभवाः । कपिञ्जला गजा वाजिमहिषैणभवाश्च ये । इत्येवमेतैः सकलैरुपेतन्द्रव्यैश्च सर्व्वैः स्वपुरं सुरक्षितम् । राजा वसेत्तत्र गृहं सुशुभ्रं गुणान्वितं लक्षणसंप्रयुक्तम् । मनुरुवाच “राजारक्षारहस्यानि यानि दुर्गे निधापयेत् । कारयेद्वा महीभर्त्ता ब्रूहि तत्त्वानि तानि च । मत्स्यउवाच । शिरीषोदुम्बरशमीबीजपूरं घृतप्लुतम् । क्षुद्योगः कथितो राजन् ! मासार्द्धं तु पुरातनैः । कशेरुफलमूलानि इक्षुमूलं तथा बिसम् । दूर्व्वाक्षीरघृतैर्मण्डः सिद्धोऽयं मासिकः परः । नरं शस्त्रहतं प्राप्तो न तस्य मरणं भवेत् । कल्माषवेणुना तत्र जनयेत्तु विभावसुम् । गृहे त्रिरपसव्यन्तु क्रियते यत्र पार्थिव ! । नान्योऽग्निर्ज्वलते तत्र नात्र कार्या विचारणा । कार्पासास्थ्ना भुजङ्गस्य तेन निर्मोचनं भवेत् । सर्पनिर्यासने धूपः प्रशस्तः सततं गृहे । सामुद्रसैन्धवयवा विद्युद्दग्धा च मृत्तिका । तयानुलिप्तं यद्वेश्म नाग्निना दह्यते नृप ! । दिवा च दुर्गे रक्षोऽग्नि र्वाति वाते विशेषतः । विषाच्च रक्ष्योनृपतिस्तत्र युक्तिं निबोध मे । क्रीड़ानिमित्तं नृपतिर्धारयेन्मृगपक्षिणः । अन्नं वै प्राक् परीक्षेत वह्नौ चान्यतरेषु च । वस्त्रं पुष्पमलङ्कारं भोजनाच्छादनं तथा । नापरीक्षितपूर्व्वन्तु स्पृशेदपि महामतिः । स्याद्वाक्त्रो वक्त्रसन्तप्तः सोद्वेगश्च निरीक्षते । विषदोऽथ विषं दत्तं यच्च तत्र परीक्षते । स्रस्तोत्तरीयो विमनाः स्तम्भकुड्यादिभिस्तथा । प्रच्छादयति चात्मानं लज्जते त्वरते तथा । भुवं विलिखति ग्रीवां तथा चालयते नृप ! । कण्डूयति च मूर्द्धानं परिलेह्याननन्तथा । क्रियासु त्वरितो राजन् ! विपरीतास्वपि ध्रुवम् । एवमादीनि चिह्नानि विषदस्य परीक्षयेत् । समीपे विक्षिपेद्वह्नौ तदन्नं त्वरयान्वितः । इन्द्रायुधसवर्णन्तु रूक्षं स्फोटसमन्वितम् । एकावर्त्तन्तु दुर्गन्धि भृशञ्चटचटायते । तद्धूमसेवनाज्जन्तोः शिरोरोगश्च जायते । सविषेऽन्ने विलीयन्ते न च पार्थिव ! मक्षिकाः । निलीनाश्च विपद्यन्ते संस्पृष्टे सविषे तथा । विरज्यति चकोरस्य दृष्टिः पार्थिवसत्तम ! । विकृतिश्च स्वरो याति कोकिलस्य तथा नृप ! । गतिः स्खलति हंसस्य भृङ्गराजश्च कूजति । क्रौञ्चो मदमथाभ्येति कृकवाकुर्विरौति च । विक्रोशति शुको राजन् ! सारिका वमते ततः । चामीकरोऽन्यतो याति मृत्युं कारण्डवस्तथा । मेहते वानरो राजन् ! ग्लायते जीवजीवकः । हृष्टरोमा भवेद्वभ्रुः पृषतश्चैव रोदिति । हर्षमायाति च

शिखी विषसन्दर्शनाच्च नृप ! अन्नञ्च सविषं राजंश्चिरेण च विपद्यते । तदा भवति निःश्राव्यं पक्वपर्य्युषितोपमम् । व्यापन्नरसगन्धञ्च चन्द्रिकाभिस्तथायुतम् । व्यञ्जनानान्तु शुष्कत्वं द्रवाणां बुद्बुदोद्भवः । ससैन्धवानां द्रव्याणां जायते फेनमालिता । सस्यराजिश्च ताम्रा स्यात् नीला च पयसस्तथा । कोकिलाभा च मद्यस्य तोयस्य च नृपोत्तम ! धान्याम्लस्य तथा कृष्णा कपिला कोद्रवस्य च । मधुश्यामा च तक्रस्य नीला पीता तथैव च । घृतस्योदकसङ्काशा कपोताभा च मस्तुनः । हरिता माक्षिकस्यापि तैलस्य च तथाऽरुणा । फलानामप्यपक्वानां पाकः क्षिप्रं प्रजायते । प्रकोपश्चैव पक्वानां माल्यानां म्लानता तथा । मृदुता कठिनानां स्यात् मृदूनाञ्च विपर्य्ययः । सूक्ष्माणां रूपदलनं तथा चैवातिरक्तता । श्याममण्डलता चैव वस्त्राणां वै तथैव च । लोहानाञ्च मणीनाञ्च मलपङ्कोपदिग्धता । अनुलेपनगन्धानां माल्यानाञ्च नृपोत्तम ! । विगन्धता च विज्ञेया तथा राजन् ! जलस्य तु । दन्तकाष्ठत्वचः श्यामास्तनुसत्वास्तथैव च । एवमादीनि चिह्नानि विज्ञेयानि नृपोत्तम ! । तस्माद्राजा सदा तिष्ठेत् मणिमन्त्रौषधीगणैः । उक्तैः संरक्षितो राजा प्रमादपरिवर्जकः । प्रजातरोर्मूलमिहावनीशस्तद्रक्षणाद्राष्ट्रमुपैति वृद्धिम् । तस्मात् प्रयत्नेन नृपस्य रक्षा सर्व्वेण कार्य्या रविवंशचन्द्र !" दुर्गशुभाशुभलक्षणञ्च कालिकापुराणे ८६ अ॰ यथा

"दुर्गांस्तु सततं कुर्य्यात् प्राकाराट्टालतोरणैः । भूषितान्नगराद्राजा दुर्गं दुर्गाश्रयं चरेत् । दुर्गं बलं नृपाणान्तु नित्यं दुर्गं प्रशस्यते । शतमेको योधयति दुर्गस्थायी धनुर्द्धरः । शतं दशसहस्राणि तस्मात् दुर्गं प्रशस्यते । जलदुर्गं भूमिदुर्गं वृक्षदुर्गं तथैव च । अरण्यवनदुर्गञ्च शैलजं परिखोद्भवम् । दुर्गं कार्य्यं नृपतिना यथायोग्यं स्वदेशतः । दुर्गं कुर्व्वन् पुरं कुर्य्यात् त्रिकोणं धनुराकृति । वर्त्तुलं वा चतुष्कोणं नान्यथा नगरं चरेत् । मृदङ्गाकृति दुर्गञ्च सततं कुलनाशनम् । यथा राक्षसराजस्य लङ्का दुर्गाजिता पुरा । बलेः पुरी शोणिताख्या तेजो दुर्गं प्रतिष्ठितम् । यतस्तत् व्यजनाकारमतो भ्रष्टः श्रियो बलिः । सौभाग्यं शाल्वराजस्य नगरं पञ्चकोणकम् । दिवि यद्वर्त्तते राजंस्तच्च भ्रष्टं भविष्यति । यच्चायोध्याह्वयं भूप ! पुरमिक्ष्वाकुभूभुजाम् । धनुराकृति तच्चापि ततोऽभूद्विजयप्रदम् । दुर्गभूमौ यजेद्दुर्गां दिक्पालांश्चैव द्वारतः । पूजयित्वा विधानेन जयं भूपः समाप्नुयात् । अतो दुर्गं नृपः कुर्य्यात् सततं जयवृद्धये" । अधिकं दुर्गकर्म्मशब्दे द्रष्टव्यम् २असुरभेदे तत्कथा काशीख॰७०अ॰

"दुर्गोनाम महादैत्यो रुरुदैत्याङ्गजोऽभवत् । यतस्तत्वा तपस्तीव्रं पुंभ्योऽजेयत्वमाप्तवान् । ततस्तेनाखिला लोका भूर्भुवःस्वर्मुखा अपि । स्वसात्कृता विनिर्जित्य रणे स्वभुजसारतः !" ३देवीभेदे स्त्री

दुर्गासुरहननात् देव्या दुर्गेति नामाभूत् यथाह तत्रैव ७२अ॰ "अद्य प्रभृति मे नाम दुर्गेति ख्यातिमेष्यति । दुर्गदैत्यस्य समरे घातनादतिदुर्गमात्" दुर्गासुरस्यैव नामान्तरं दुर्गम इति । "तत्रैव च वधिष्यामि दुर्गमाख्यं महासुरम् । दुर्गादेवीति विख्यातं तन्मे नाम भविष्यति" देवीमा॰ । तत्र-शाकम्बरीप्रादुर्भावयुगे स च वैवस्वतमन्वन्तरे चत्वारिंशत्तमयुगकालः यथोक्तं तत्स्तोत्रे वैवस्वतमन्वन्तरमुक्त्वा "तस्मिन्नेवान्तरे शक्र ! चत्वारिंशत्तमे युगे" शताक्षीशाकम्भर्य्योरवतारमुक्त्वा तत्रैव दुर्गासुरवधेन दुर्गानामताप्राप्तिरुक्ता । तेन श्वेतवराहकल्पे साऽद्यापि न प्रादुर्भूता कल्पान्तरे तस्याः प्रादुर्भावेण तस्या इदानीमर्च्चनीयतेति बोध्यम् । दुर्गाशब्दस्यान्यापि निरुक्तिरन्यत्र दर्शिता प्रसङ्गादिहोच्यते यथा

"दुर्गो दैत्ये ४महाविघ्ने ५भवबन्धे ६कुकर्म्मणि । ७शोके ८दुःखे च ९नरके १०यमदण्डे च ११जन्मनि । १२महाभयेऽतिरोगे १४चाप्याशब्दो हन्तृवाचकः । एतान् हन्त्येव या देवी सा दुर्गा परिकीर्त्तिता" । अपिच "दैत्यनाशार्थवचनो दकारः परिकीर्त्तितः । उकारो विघ्ननाशस्य वाचको वेदसम्मतः । रेफो रोगघ्नवचनो गश्च पापघ्नवाचकः । भयशत्रुघ्नवचनश्चाकारः परिकीर्त्तितः । स्मृत्युक्तिश्रवणाद् यस्या एते नश्यन्ति निश्चितम् । ततो दुर्गा हरेः शक्तिर्हरिणा परिकीर्त्तिता" । "दुर्गेति दैत्यवचनोऽप्याकारो नाशवाचकः । दुर्गं नाशयते या तु सा दुर्गा परिकीर्त्तिता" । विपत्तिवाचको दुर्गश्चाकारो नाशवाचकः । तं ननाश पुरा तेन बुधैर्दुर्गा प्रकीर्त्तिता" । अस्याः स्थानं कृष्णावेनातुङ्गभद्रयोर्मध्यभागे सह्याद्रेरीषत्प्राच्यां प्रसिद्धम् । "सर्व्वस्वरूपिणी शक्तिः सा दुर्गेति च पठ्यते" यथा मुण्डमालायाम् "भूतानि दुर्गा भुवनानि दुर्गा नराः स्त्रियश्चापि सुरासुरादिकम् । यद्दृश्यन्ति दृश्यं खलु सैव दुर्गा दुर्गास्वरू-

पादपरं न किञ्चिदिति” शब्दार्थचिन्तामणिष्टतेषु महाविष्ण्वादिषु च पु० १३गुग्गुलौ राजनि० १४दुर्गमभावे क्लि० १५दुर्ज्ञेये १६परमेश्वरे पु० “दुर्लभो दुर्गमो दुर्गो दुरावासो दुराधरः” विष्णुसं०। “अन्तरायप्रतिहतैर्दुराप्यते इति दुर्ग” भा०

**दुर्गकर्मन्** न० दुर्गार्थं दुर्गे वा कर्म कार्यम्। भा० शा० ८६अ० उक्ते दुर्गसाधनकर्मभेदे यथा

“तस्मात्ते वर्तयिष्यामि दुर्गकर्म विशेषतः। श्रुत्वा तथा विधातव्यमनुष्ठेयञ्च यत्नतः। षड्विधं दुर्गमास्थाय पुराण्यथ निवेशयेत्। सर्वसम्पत्प्रधानं यद्बाहुल्यञ्चापि सम्भवेत्। धन्वदुर्गं महीदुर्गं गिरिदुर्गं तथैव च। मनुष्यदुर्गं म्टहुर्गं वनदुर्गञ्च तानि षट्। यत् पुरं दुर्गसम्पन्नं धान्यायुधसमन्वितम्। दृढ़प्राकारपरिखं हस्त्यश्वरथसङ्कुलम्। विद्वांसः शिल्पिनो यत्र निचयाश्च सुचिन्तिताः। धार्मिकश्च जनो यत्र दाक्ष्यमुत्तममास्थितः। ऊर्जस्विनरनागाश्वं चत्वरापणशोभितम्। प्रसिद्धव्यवहारञ्च प्रशान्तमकुतोभयम्। सुप्रभं सान्तनादञ्च सुप्रशस्तनिवेशनम्। शूराढ्यजनसम्पन्नं ब्रह्मघोषानुनादितम्। समाजोत्सवसम्पन्नं सदा पूजितदैवतम्। वश्यामात्यबलो राजा तत् पुरं स्वयमाविशेत्। तत्र कोषं बलं मित्रं व्यवहारञ्च वर्द्धयेत्। पुरे जनपदे चैव सर्वदोषान्निवर्त्तयेत्। भाण्डागारायुधागारं प्रयत्नेनाभिवर्द्धयेत्। निचयान् वर्द्धयेत् सर्वांस्तथा यन्त्रायुधालयान्। काष्ठलोहतुषाङ्गारदारुशृङ्गास्थिवैणवान्। मज्जास्नेहवसाक्षौद्रमौषधग्राममेव च। शणं सर्ज्जरसञ्चान्यमायुधानि शरांस्तथा। चर्मस्नायु तथा वेत्रं मुञ्जवल्वजबन्धनान्। आशयाश्चोदपानाश्च प्रभूता सलिलाकराः। निरोद्धव्याः सदा राज्ञा क्षीरिणश्च महीरुहाः। सत्कृताश्च प्रयत्नेन आचार्यर्त्विक्पुरोहिताः। महेष्वासाः स्थपतयः सांवत्सरचिकित्सकाः। प्राज्ञा मेधाविनो दान्ता दक्षाः शूरा बहुश्रुताः। कुलीनाः सत्त्वसम्पन्ना युक्ताः सर्वेषु कर्मसु। पूजयेद्धार्मिकान् राजा निगृह्णीयादधार्मिकान्। नियुञ्ज्याच्च प्रयत्नेन सर्ववर्णान् स्वकर्मसु। बाह्यमाभ्यन्तरञ्चैव पौरजानपदं तथा। चारैः सुविदितं कृत्वा ततः कर्म प्रयोजयेत्। चरान् मन्त्रञ्च कोषञ्च दण्डञ्चैव विशेषतः। अनुतिष्ठेत् स्वयं राजा सर्वं ह्यत्र प्रतिष्ठितम्। उदासीनारिमित्राणां सर्वमेव चिकीर्षितम्। पुरे जनपदे चैव ज्ञातव्यं चारचक्षुषा। ततस्तेषां विधातव्यं सर्वमेवाप्रमादतः। भक्तान् पूजयता नित्यं द्विषतश्च निगृह्णता। यष्टव्यं क्रतुभिर्नित्यं दातव्यञ्चाप्यपीडया। प्रजानां रक्षणं कार्यं न कार्यं धर्मबाधकम्। कृपणानाथवृद्धानां विधवानाञ्च योषिताम्। योगक्षेमञ्च वृत्तिञ्च नित्यमेव प्रकल्पयेत्। आश्रमेषु यथाकालं चेलभाजनभोजनम्। सदैवोपहरेद्राजा सत्कृत्याभ्यर्च्य मान्य च। आत्मानं सर्वकार्याणि तापसे राष्ट्रमेव च। निवेदयेत् प्रयत्नेन तिष्ठेत् प्रह्वश्च सर्वदा। सर्वार्थत्यागिनं राजा कुले जातं बहुश्रुतम्। पूजयेत्तादृशं दृष्ट्वा शयनासनभोजनैः। तस्मिन् कुर्वीत विश्वासं राजा कस्याञ्चिदापदि। तापसेषु हि विश्वासमपि कुर्वन्ति दस्यवः। तस्मिन् निधीनादधीत प्रज्ञां पर्याददीत च। न चापि तीक्ष्णं सेवेत भृशं वा प्रतिपूजयेत्। अन्यः कार्यः स्वराष्ट्रेषु परराष्ट्रेषु चापरः। अटवीषु परः कार्यः सामन्तनगरेष्वपि। तेषु सत्कारमानाभ्यां संविभागांश्च कारयेत्। परराष्ट्राटवीस्थेषु यथा स्वविषये तथा। ते कस्याञ्चिदवस्थायां शरणं शरणार्थिने। राज्ञे दद्युर्यथाकामं तापसाः संशितव्रताः। एष ते लक्षणोद्देशः सङ्क्षेपेण प्रकीर्त्तितः। यादृशे नगरे राजा स्वयमावस्तुमर्हति”।

**दुर्गकारक** पु० दुर्गं करोति वेष्टनेन कृ–ण्वुल्। १वृक्षभेदे। २दुर्गकर्त्तरि त्रि०।

**दुर्गत** त्रि० दुर्गच्छति दुर्+गम–कर्त्तरि क्त। १दरिद्रे २दैन्यङ्गते च अमरः। “समाश्वसिमि केनाहं कथं प्राणिमि दुर्गतः” भट्टिः। “निधानकुम्भस्य यथैव दुर्गतः” सा० द०।

**दुर्गतरणी** स्त्री दुर्गं तीर्य्यतेऽनया तॄ–करणे ल्युट् ङीप्। देवीभेदे “सावित्री दुर्गतरणी वीणा सप्तविधा तथा” भा० स० ११अ० ब्रह्मसभावर्णने। २दुर्गतरणसाधने त्रि०

**दुर्गति** स्त्री दुष्टा गतिः प्रा० स०। १नरके अमरः। २दारिद्र्ये मेदि०। “न दुर्गतिमवाप्नोति स्वर्गलोकञ्च गच्छति” भा० शा० ५५८३श्लो० दुःस्थिता गतिरस्य प्रा० ब०। ३तद्युते त्रि०।

**दुर्गतिनाशिनी** स्त्री दुर्गतिं नाशयति नाशि–णिनि ङीप्। दुर्गादेव्याम्। “ब्रह्माण्डविजयस्यास्य कवचस्य प्रजापतिः। ऋषिश्छन्दश्च गायत्री देवी दुर्गतिनाशिनी” ब्रह्मवै० गणे० ख०। २दुर्गतिनाशके त्रि० स्त्रियां ङीप्।

**दुर्गन्ध** पु० दुःस्थितो गन्धोऽस्य प्रा० ब०। १सौवर्चललवणे हेम०। २दुष्टगन्धयुक्ते त्रि०। प्रा० स०। ३दुष्टे गन्धे “मांस-

मेदोऽस्थिदुर्गन्धा” हरिवं० ५३अ० “सुगन्धं वेत्ति दुर्गन्धं दुर्गन्धस्य सुगन्धिताम्”, सुश्रुतः।

**दुर्गन्धाङ्ग** त्रि० दुर्गन्धोऽङ्गे यस्य। पूतिगन्धान्वितदेहके स्त्रियां ङीप्। भारता० सौगन्धिकपुष्पाहरणेन तथाङ्गतेत्युक्तम् यथा “सौगन्धिकस्य हरणात् दुर्गन्धाङ्गः प्रजायते”

**दुर्गन्धिन्** त्रि० दुर्गन्धोऽस्त्यस्य नित्ययोगे इनि “तेन न कर्मधारयात् मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः” इत्यस्य न प्रवृत्तिः। १दुष्टगन्धयुक्ते त्रि० रायमुकुटः “चर्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः” मनुः। स्त्रियां ङीप्।

**दुर्गपति** पु० ६त०। १दुर्गरक्षके दुर्गाध्यक्षभेदे। २दुर्गस्वामिनि च। “वयं जयेम हेलाभिर्दस्यून् दुर्गपतिर्यथा” भाग० ३।१४।१८

**दुर्गपाल** पु० दुर्गं दुर्गं वा पालयति पालि–अण् उप०स०। १दुर्गपालके ‘यच्चोऽसुराणामसि दुर्गपालो विश्वाभिवन्द्यैरभिवन्दिताङ्घ्रिः” भाग० ८।२३।५। २दुर्गरक्षके च

**दुर्गपुष्पी** स्त्री दुर्गं पुष्पमस्याः जातित्वात् ङीष्। (केयपुष्पा) ख्याते वृक्षभेदे शब्दच०।

**दुर्गम** पु० दुःखेन गम्यतेऽसौ दुर्+गम–कर्मणि खल्। १दुर्गनामासुरभेदे “दुर्गमाख्यं महासुरम्” देवीमा०। २दुर्गमनीये त्रि०। “कान्तारोवर्त्म दुर्गमम्” अमरः। ३दुर्ज्ञेये च ४परमेश्वरे पु० दुर्गशब्दे दृश्यम् “दुःखेन गम्यते ज्ञायते इति दुर्गमः” भाष्ये तन्नामनिरुक्तिः।

**दुर्गल** पु० दुःस्थितो गलो यत्र लोकानाम्। देशभेदे “दुर्गलाः प्रतिमात्स्याश्च कुन्तलाः कोशलास्तथा” भा० भी० ६अ० जनपदोक्तौ। सोऽभिजनोऽस्य, तस्य राजा वा अण्। दौर्गल पित्रादिक्रमेण तद्देशवासिनि तन्नृपे च। बहुषु अणो लुक्। दुर्गला इत्येव।

**दुर्गलङ्घन** पुंस्त्री० दुर्गं लङ्घ्यतेऽनेन लङ्घि–करणे ल्युट्। उष्ट्रे हेमच० स्त्रियां जातित्वात् ङीप्।

**दुर्गसंस्कार** पु० ६त०। प्रतिपक्षस्य युद्धार्थोद्योगे राज्ञा स्वदुर्गस्य भग्नप्रायस्य पुनर्नवीकरणे “अतो दुर्गसंस्कार आरब्धव्ये किं कौमुदीमहोत्सवेन” इति मुद्रारा०

**दुर्गसञ्चर** पु० दुर्गं सञ्चर्यतेऽनेन सम्+चर–करणे अप्। (सांको) संक्रमे हेमच०चञ्। दुर्गसञ्चारोऽप्यत्र अमरटीकायां क्षीरस्वामी

**दुर्गसिंह** पु० कलापपरिशिष्टकारे विद्वद्भेदे

**दुर्गा** स्त्री दुर्गशब्दोक्ते १देवीभेदे तच्चिरुक्त्यादिकं तत्र दर्शितम्। २नीलीवृक्षे मेदि०। ३अपराजितायाम् शब्दच० ४श्यामाखगे राजनि०। ५हिमालयकन्यायाञ्च “सा दुर्गा मेनकाकन्या दैत्यदुर्गतिनाशिनी” ब्रह्मवै०पु०

**दुर्गाढ** त्रि० दुर्+गाह–कर्मणि क्त। दुःखेनावगाह्ये “दुर्गाढो नयमार्गोऽयमित्याकुलहृदो जनाः” हरिवं०२२६अ०

**दुर्गाध्यक्ष** पु० ६त०। दुर्गरक्षके सेनाभेदे “अनाहार्यश्च शूरश्च तथा प्राज्ञः कुलोद्भवः। दुर्गाध्यक्षः स्मृतो राज्ञ उद्युक्तः सर्वकर्मसु” मत्स्यपु० तल्लक्षणमुक्तम्।

**दुर्गानवमी** स्त्री दुर्गाप्रिया तत्पूजाङ्गत्वात् नवमी। कार्त्तिकशुक्लपक्षीयनवम्याम्। दुर्गाया इयम् अण् ङीप्। दौर्गी तत्पूजयाङ्गनवमीतिथौ “श्रावणी दौर्गनवमी दूर्वा चैव हुताशनी। पूर्वविद्धैव कर्त्तव्या शिवरात्रिर्बलेर्दिनम्” ति०त०। तत्पूजाविधानादि यौगिनीतन्त्रे यथा

“कार्त्तिकेऽमलपक्षे च नवम्याञ्च विशेषतः। षड्भुजां तु जगद्धात्रीं पूजयेद् दीपमालया” तन्त्रान्तरे “त्रिकालं पूजयेद्दुर्गां मनुनैकाक्षरेण (दुँ)च। नानाबलिविधानेन गीतवाद्यपुरःसरम्। कार्त्तिकस्य सिते पक्षे नवम्याञ्च विशेषतः। कृत्वैवं साधकश्रेष्ठो लभेद्राज्यमकण्टकम्” कुब्जिकातन्त्रे “कार्त्तिके शुक्लपक्षे तु नवम्यां जगदम्बिकाम्। दुर्गां प्रपूजयेद् भक्त्या धर्मकामार्थसिद्धये। शक्तिसङ्गमतन्त्रे “कार्त्तिकस्य सिते पक्षे नवम्यां जगदीश्वरीम्। त्रिकालमेककालं वा वर्षे वर्षे प्रपूजयेत्। निर्माय प्रतिमां भक्त्या जगद्धात्र्या विधानतः। पूजयित्वा परदिने प्रतिमां तां विसर्जयेत्। एवं कृत्वा चक्रवर्त्ती भवेत् साधकसत्तमः। पुत्रपौत्रधनैश्वर्यसंयुतास्य भवेत् पुरी। दासदासीगणैर्युक्तो मुक्तः स्यात् पापसङ्कटात्। विशेषतः वसुयुतां नवमीं प्राप्य साधकः। पूजयित्वा स्वर्णमयीं तां लभते वाञ्छितं फलम्” भविष्ये “मासैश्चतुर्भिर्यत् पुण्यं विधिनाऽऽपूज्य चण्डिकाम्। तत् फलं लभते धीर! नवम्यां कार्त्तिकस्य च”। अधिकं जगद्धात्रीशब्दे ३००४पृ०दृश्यम्।

**दुर्गास्मरण** न० “दुर्गां जगदिदं सर्वं दुर्गा सर्वस्य कारणम्। अहञ्च दुर्गेत्येवं यत् तद्दुर्गास्मरणं विदुः” इत्युक्ते चिन्तनभेदे।

**दुर्गाह्व** पु० दुर्गा आह्वास्य। भूमिजगुग्गुलौ राजनि०।

**दुर्गृभि** त्रि० दुःखेन गृह्यतेऽसौ दुर्+ग्रह–बा० कर्मणि कि सम्प्रसारणम् वेदे हस्य भः। दुर्ग्राह्ये यष्टीतमशक्ये “न ष्टञ्जादविषाय दुर्गृभिः” ऋ० १।१४०।६ “हतस्य अतप्रवेशे दुर्गृभिस्वनः” १।५२।६ “दुर्गृभिस्वनः

दुर्ग्रहव्यापनः" भा॰ अनु॰ व्याप्तौ वा॰ वन शक॰।

**दुर्गोत्सव** पु॰ ६त॰। दुर्गाया देवीभेदस्य पूजानिमित्ते उत्सवे स च शारदिकः वासन्तिकश्च।

**दुर्ग्रह** त्रि॰ दुःखेन गृह्यतेऽसौ दुर्+ग्रह–कर्मणि खल्। १दुःखेन ग्राह्ये २दुर्जये ३दुराग्रहे "दुर्गाणि दुर्ग्रहाण्यासन् तस्य रोद्धुरपि द्विषाम्" रघुः। ४अपामार्गे स्त्री शब्दार्थचि॰।

**दुर्ग्राह्य** त्रि॰ दुर्+ग्रह–कर्मणि ण्यत्। ग्रहीतुमशक्ये दुःखेन ग्राह्ये "जग्राह तद्धनूरत्नं दुर्ग्राह्यं दैवतैरपि" हरिवं॰ ८४अ॰।

**दुर्घट** त्रि॰ दुर्+घट–कर्मणि खल्। घटयितुमशक्ये दुःसंपाद्ये। "कोऽन्वर्थो दुर्घट इव भवति स्वरूपद्वयाभावात्" भाग॰ ६।८।२४

**दुर्घोष** पुंस्त्री॰ दुष्टो घोषोऽस्य। १भल्लूके राजनि॰ स्त्रियां जातित्वात् ङीष्। २दुष्टशब्दयुक्ते त्रि॰ स्त्रियां टाप्। प्रा॰स॰। ३दुष्टे शब्दे पु॰

**दुर्जन** पु॰दुष्टो जनः प्रा॰स॰। खलपुरुषे "दुर्जनः परिहर्त्तव्यो विद्यया भूषितोऽपि सः। मणिना भूषितः सर्पः किमसौ न भयङ्करः" चाण॰ "शाम्येत् प्रत्यपकारेण नोपकारेण दुर्जनः" कुमा॰"पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम्" मनुः भृशा॰च्व्यर्थे क्यङ्। दुर्जनायते अदुर्जनो दुर्जनो भवतीत्यर्थः।

**दुर्जय** त्रि॰दुःखेन जीयतेऽसौ दुर्+जि–कर्मणि खल्। १जेतुमशक्ये दुःखेन जेतव्ये। २परमेश्वरे पु॰ "समावर्त्तो निवृत्तात्मा दुर्जयो दुरतिक्रमः" विष्णुसं॰। "क्लेशांश्च विविधांस्तांस्तान् मृत्युमेव च दुर्जयम्" मनुः ३कार्त्तवीर्यवंश्ये ऽनन्तरूपपुत्रे नृपभेदे कूर्मपु॰

**दुर्जयन्त** पु॰ नृपभेदे। विष्णुपु॰

**दुर्जर** त्रि॰ दुःखेन जीर्यति जॄ–अच्। दुःखेन जीर्यति "ग्राहिणी वातला रूक्षा दुर्जरा तक्रकूर्चिका" सुश्रु॰ "कफप्रकोपि तन्मद्यं दुर्जरञ्च विशेषतः" सुश्रु॰। २ज्योतिष्मतीलतायाम् स्त्री राजनि॰

**दुर्जात** न॰ दुष्टं जातम् प्रा॰स॰। व्यसने "दुर्जातबन्धुरयमृक्षहरीश्वरो मे" रघुः। २असम्यग्जाते त्रि॰मेदि॰ ३असमञ्जसे त्रि॰ त्रिका॰। "यो न यातयते वैरमल्पसत्त्वोद्यमः पुमान्। अफलं जन्म तस्याहं मन्ये दुर्जातजायिनः" भा॰व॰ ३५अ॰ "दुष्कुलेयस्तथा मूढो दुर्जातः शक्र! दृश्यते" भा॰शा॰ ८१२०श्लो॰

**दुर्जाति** त्रि॰ दुःस्थिता जातिरस्य प्रा॰ब॰। निन्दितवंश्ये "दुर्जातेः सूतपुत्रस्य शकुनेः। सौबलस्य च" भा॰उ॰ ४८अ॰। दुःस्थिता जातिर्जन्म यस्य प्रा॰ब॰। २निन्दितजनिके त्रि॰"हृदितशरणा दुर्जातीनां सहस्व रुषां फलम्" अनर्घ॰ दुष्टा जातिः प्रा॰स॰। ३दुष्टायां जातौ तत्र भवः छ। दुर्जातीय दुष्टजातिभवे। "दुर्जातयेन येन स्वमीहयोजनितः सुतः" हरिवं॰ ८॰अ॰

**दुर्जीव** त्रि॰ दुःस्थितो जीवो जीवनोपायो यस्य प्रा॰ब॰। १परभक्तााद्युपजीविनि। "यथा च मन्ये दुर्जीवमेवं न सुकरं ध्रुवम्" रामा॰२५६अ॰। दुर्+जीव–भावे खल्। २निन्दितजीवने न॰ "दुर्जीवं नित्यशस्तस्य यः परैरुपजीव्यते। राम! तस्य तु दुर्जीवं यः परानुपजीवति" रामा॰२।१०५।५ दुःखं जीवति दुर्+जीव–अच्। ३परायत्ततया जीविनि त्रि॰ "सर्वं परवशं दुःखमिति" मनूक्तेः जीवनस्य पराधीनत्वे दुःखहेतुत्वात् तज्जीवनस्य तथात्वदुक्तः।

**दुर्ज्ञेय** त्रि॰ दुःखेन ज्ञायते ज्ञा+कर्मणि यत्। ज्ञातुमशक्ये दुःखेन ज्ञेये "उच्चावचेषु भूतेषु दुर्ज्ञेयामकृतात्मभिः"मनुः।

**दुर्ण(र्न)य** पु॰ दुष्टो नयः प्रा॰स॰ णत्वम्। १दुष्टायां नीतौ दुःस्थितो नयोऽस्य प्रा॰ब॰। २तद्युते त्रि॰। "चन्तव्योमम दुष्टस्य दुर्णयस्य फलोदयः" हरिवं॰ ५१०अ॰ अत्र णत्वमेव न्याय्यम् पूर्वपदात् संज्ञायामेव णत्वविधानात् दुर्+नी–अचि तु अणत्वमेव णत्वविधौ दुरः प्रतिषेधात्।

**दुर्णश** त्रि॰ दुःखेन नश्यति दुर्+नश–अच् वेदे णत्वम्। लक्ष्मेव नष्टे "परएकेन दुर्णशं चिद्वर्वाक्" ऋग्॰ ५।११।७ लोके तु दुर्नश इत्येवाणत्वयुक्तः।

**दु(र्णा)र्नामन्** स्त्री दुःस्थितं नामास्य पूर्वपदात् संज्ञायां णत्वे प्राप्ते क्षुभ्रादेराकृतिगणत्वात् न णत्वमित्येके वेदे तु णत्वषष्ठपाठो दृश्यते। दीर्घकोषिकायां (जिनुक) ख्याते १पदार्थे अमरः २अर्शोरोगे च राजनि॰ तद्रोगस्यानिपातकशेषत्वादकीर्तनीयत्वेन निन्दितत्वात् तथात्वम् "अमी वा यस्ते गर्भं दुर्णामा योनिमाशये" ऋ॰ १०।१६२।१। "क्षयोव्यक्षै भेषजं वजं दुर्णामचातनम्"। "दुर्णामा च सुनामा चोभा संवृतमिच्छतः" अथ॰८।६।४। वा डाप् दुर्नामा उपधालोपित्वात् पक्षे ङीप् उपधालोपे दुर्नाम्नी

**दुर्दम** त्रि॰ दुःखेन दम्यतेऽसौ दुर्+दम–कर्मणि खल्। दमयितुमशक्ये "सकृपाशावकीर्णास्ते न भविष्यन्ति दुर्दमाः" भा॰शा॰८८अ॰। २रोहिणीगर्भजाते वसुदेवात्मजभेदे

"पौरवी रोहिणी नाम वाह्लीकस्यात्मजाऽभवत् । ज्येष्ठा पत्नी महाराज ! दयितानकदुन्दुभेः । लेभे ज्येष्ठं सुतं रामं शारणं शठमेव च । दुर्दमं दमनं शुभ्रं पिण्डारकमुशीनरम् । चित्रां नाम कुमारीञ्च रोहिणीतनयान् दश" हरिवं० ३६अ०

**दुर्दमन** त्रि०दुःखेन दम्यतेऽसौ बा० युच् दुःखेन दमनं यस्य वा । १दुःखेन दमनीये २जनमेजयवंशजे कलियुगीये शतानीकात्मजे नृपभेदे । "तिमेर्बृहद्रथस्तस्माच्छतानीकः सुदासजः । शतानीकाद्दुर्दमनस्तस्यापत्यं महीनरः" भाग० ९। २२।२९

**दुर्दर्श** त्रि० दुःखेन दृश्यतेऽसौ दुर्+दृश–कर्मणि खल् । दृष्टुमशक्ये दुःखेन दर्शनयोग्ये । "सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम" गीता । "तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठम् पुराणम्" कठो० वेदे तु दुःखेन दर्शोदर्शनमस्येत्येव वाक्यम "भाषायां शासियुधिदृशिधृषिमृषिभ्यो युच्" पा० भाषायामेव युचो विधानात् । भाषायां तु युच् । दुर्दर्शन तत्रार्थे त्रि० "विशेषतश्चात्र दुर्दर्शनानि पञ्चाणि" सुश्रु० ।

**दुर्दान्त** त्रि० दुःखेन दान्तः दमितः दमि–क्त वा नि० । दुःखेन दमनीये १अशान्ते "एनसा युज्यते राजा दुर्दान्त इति चोच्यते" भा०शा०२४अ० । २कलहे ३वत्सतरे च राजनि० ४शिवे पु० "दीक्षितोऽदीक्षितः क्षान्तो दुर्दान्तोदान्तनाशनः" भा० शा० २८६अ० शिवनामोक्तौ

**दुर्दिन** न०दुःष्टं दिनम् प्रा०स०। १मेघाच्छन्ने २दिने अमरः दिनस्य प्रकाशकत्वेन मेघावरणेन तथात्वाभावात् तस्य दुष्टत्वम् । "३घनान्धकारे ४वृष्टौ च दुर्दिनं कवयो विदुः" शाब्दः । "दिनस्य अहोरात्रपरत्वेन च रात्रेरपि दुर्दिनशब्दवाच्यता । तत्र घनान्धकारे "अनभिज्ञास्तमिस्राणां दुर्दिनेष्वभिसारिकाः" कुमा० वर्षणे "द्विषां विषह्य काकुत्स्थः तत्र नाराचदुर्दिनम्" । "न प्रसेहे निरुद्धार्कमधारावर्षदुर्दिनम्" रघुः ५दुष्टे दिनमात्रे "यदच्युतकथालापरसपीयूषवर्जितम् । तद्दिनं दुर्दिनं प्रोक्तं मेघाच्छन्नं न दुर्दिनम्" शब्दार्थचि०धृतम् ।

**दुर्दुरूट** त्रि० दुर्+दुल–उत्क्षेपणे कूट पृषो०णिलोपः लस्य रः । १नास्तिके जटा० "कुत्सितानि कुत्सनैः" पा० अस्य समासे परनिपातः मीमांसदुर्दुरूटः नास्तिकमीमांसक इत्यर्थः तस्येश्वरप्रतिषेधेन नास्तिकत्वात् निन्दनीयत्वेन तद्वाचकशब्दस्य परनिपातः ।

**दुर्दृशीक** न० दुर्+दृश–बा०कर्मणि ईकक् । दुर्दर्शनीये विषे "अजकायं सुदुर्दृशीकं तिरोदधे" ऋ०७।५०।२ "दुर्दृशीकं सुदुर्दर्शनम् विषम्" भा०।

**दुर्दृष्ट** त्रि० दुष्टं दृष्टम् । रागादिदोषेण दृष्टे "दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान् नृपेण तु । सभ्याः सजयिनो दण्ड्या विवादाद्द्विगुणन्दमम्" याज्ञ० "दुर्दृष्टान् स्वत्वाचारप्राप्त धर्मोल्लङ्घनेन रागलोभादिभिरसम्यग्विचारितत्वेनाशङ्क्यमानान् व्यवहारान् पुनः स्वयं सम्यक् विचार्य निश्चितदोषाः पूर्वसभ्याः जयिसहिताः प्रत्येकं विवादे यो दमः पराजितस्य तं द्विगुणन्दाप्याः । अप्राप्तजेतृ दण्डविधिपरत्वाद्वचनस्य रागाल्लोभादित्यादिश्लोकेन अपौनरुक्त्यम् । यदा पुनः साक्षिदोषेण व्यवहारस्य दुर्दृष्टता तदा साक्षिण एव दण्ड्याः न जयी नापि सभ्याः यदा तु राजानुमत्या व्यवहारस्य दुर्दृष्टत्वन्तदा सर्व एव राजसहिताः सभ्यादयो दण्डनीयाः । "पादो गच्छति कर्तारं पादः साक्षिणमृच्छति । पादः सभासदः सर्वान् पादो राजानमृच्छति" इति वचनात् । एतच्च प्रत्येकं राजादीनां दोषप्रतिपादनम् न पुनरेकस्यैव पापापूर्वस्य विभागाय, यथोक्तम् "कर्तृसमवायिफलजननस्वभावत्वादपूर्वस्य" मिता० ।

**दुर्दैव** न० दुष्टं दैवम् । दुरदृष्टे दुर्भाग्ये पापे

**दुर्द्यूत** न० दुष्टं द्यूतम् प्रा०स०। १कपटद्यूतक्रीडायाम् । "भ्रातरं च विगर्हस्व ज्येष्ठं दुर्द्यूतदेविनम्" भा०व०८०अ० "अहं हि तावत् सर्वेषां तेषां दुर्द्यूतदेविनाम्" भा०आश्र०८अ०

**दुर्द्रिता** स्त्री खण्डितलताभेदे जटा०

**दुर्द्रुम** पु० दुष्टो द्रुमः प्रा०स०। पलाण्डौ राजनि०

**दुर्द्धर** त्रि०दुःखेन धार्यते दुर्+धृ–कर्मणि खल् । १नरकभेदे २ऋषभौषधौ मेदि० ३पारदे ४भल्लातके राजनि० "दुर्द्धरं दुर्मुखञ्चैभौ शरैर्निन्ये यमक्षयम्" देवीमा०उक्ते ५महिषासुरसेनापतिभेदे पु०। ६परमेश्वरे पु० "दर्पहा दर्पदो दृप्तो दुर्द्धरोऽन्थापराजितः" विष्णु०सं० "न शक्यधारणा यस्य प्रणिधानादिषु सर्वोपाधिनिर्मुक्तत्वात्तथापि तत्प्रसादतः कैश्चित् दुःखेन हृदये धार्यते जन्मान्तरसहस्रेषु भावनायोगात् तस्माद्दुर्द्धरः "क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् । अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते" भगवद्वचनात्" भा० "सुभुजो दुर्द्धरो वाग्मी" विष्णुसं० अस्य चान्या व्युत्पत्तिः भाष्ये दर्शिता यथा "पृथिव्यादीन्यपि लोकधारकाण्यन्यैर्धारयितुमशक्यानि धारयन्न केनापि

धारयितुं शक्यत इति दुर्द्धरः । दुःखेन ध्यानसमये मुमुक्षुभिर्हृदये धार्यत इति वा दुर्द्धरः” भा०। तेन व्युत्पत्तिभेदान्नामभेदोपपत्तेः सहस्रसंख्यापूर्त्तिर्द्रष्टव्या । “वन्येभदानानिलगन्धदुर्द्धरा” माघः । “दण्डो हि सुमहत्तेजो दुर्द्धरश्चाकृतात्मभिः” रघुः ।

**दुर्द्धरीतु** पु० दुर्+धृ–बा० कर्मणि ईतुन् । दुर्द्धरणीये । “अग्निमीळे भुजां यविष्ठं शासा मित्रं दुर्द्धरीतुम्” ऋ०१०।२०।२ “दुर्द्धरीतुम् दुर्द्धरणीयम्” भा०

**दुर्द्धर्म** त्रि०दुःस्थितो धर्मो यस्य प्रा०ब० समासान्तविधेरनित्यत्वात् आर्षे न कचित् अनिच्समा० । दुष्टधर्मयुक्ते “कर्कोटकान् वीरकांश्च दुर्द्धर्मांश्च विवर्जयेत्” भा० क० ४४ अ० । लोके तु अनिच्समा० । दुर्द्धर्मन् इत्येव तत्रार्थे

**दुर्द्धर्ष** त्रि० दुःखेन धृष्यतेऽसौ दुर्+धृष–कर्मणि खल् । १धर्षयितुमशक्ये दुःखेन धर्षणीये “संयतात्मा सुदुर्द्धर्ष उग्रे तपसि वर्त्तते” भा०आ०७१अ० भाषायां तु युच् दुर्द्धर्षण तत्रार्थे त्रि० “सहि दुर्द्धर्षणो वाली नित्यं समरकर्मसु” रामा०कि० ५५ स्लो० २राजभेदे विन्दानुविन्दौ दुर्द्धर्षः सुबाहुः दुष्प्रधर्षणः” भा०आ० ६७अ०

**दुर्द्धा** स्त्री दुर्+धा–भावे अ । दुष्टधाने । “दुर्धां दधाति परमे व्योमन्” ऋ० १०।१०९।४ “दुर्धां दुर्धानम्” भा० व्योमन् व्योम्नि सप्तम्या लुकि न नलोपः ।

**दुर्धाव** त्रि० दुर्+धाव–खल्। दुःशोधनीये ।

**दुर्हित** त्रि०दुर्+धा–कर्मणि क्त वेदे न धाञो हिः । दुष्टं स्थापिते “इदमप्रे सुधितं दुर्धिताद्धि” ऋ०१।१४०।११ “दुर्धितात् दुष्टं स्थापितात्” भा० लोके तु दुर्हित इत्येव तदर्थे त्रि० ।

**दुर्धी** त्रि० दुःस्थिता धीर्यस्य प्रा०ब०। १दुष्टबुद्धियुक्ते “अनुत्थानवता चापि दुर्विनीतेन दुर्द्धिया” भा०उ०१२४अ० अत्र “गतिकारकेतरपूर्वस्य यण् नेष्यते” वार्त्ति० न यण् । “प्रादिभ्यो धातुजस्य वा चोत्तरपदलोपः” वार्त्ति०दुःस्थितशब्दस्य उत्तरपदलोपे दुरित्यस्य धीशब्दं प्रति गतित्वं नास्ति किन्तु लुप्तस्थितशब्दं प्रति, अतोऽस्य गतिपूर्वकत्वाभावात् न यण् इति बोध्यम् । दुष्टं ध्यायति दुर्+ध्यै–क्विपि दुर्धीशब्दस्य गतिपूर्वकत्वात् यण् दुर्ध्यौ इत्यादि । अत्र संयोगपूर्वकत्वेऽपि धात्ववयवसंयोगपूर्वकत्वाभावात् न इयङः प्रवृत्तिरिति बोध्यम् ।

**दुर्धुर्** त्रि० दुर्+धुर्व–हिंसने कर्मणि क्विप् । दुःखेन हिंस्ये “इथा गावो न दुर्धुरः” ऋ० ५।५६।४ “दुर्धुरो दुःखेन हिंस्याः” भा०

**दुर्धुरूट** त्रि०दुर्+धुर्व–ऊट पृषो०। युक्तिं विना गुरुवाक्यममन्यमाने “मीमांसकदुर्धुरूट इति पाठान्तरे तत्त्वबोधनी दुर्धुरूढ इति च तत्र पाठान्तरे दुष्टकर्मकर्त्तरि रूढोऽयं शब्द इत्यन्ये ।

**दुर्नय** पु० दुर्+नी–अच् । १नीतिविरुद्धाचरणे दुश्चेष्टायां “अम्बिके ! तव पौत्रस्य दुर्नयात् किल भारताः । सानुबन्धा विनङ्क्ष्यन्ति” भा०आ० १२८अ० “संचिन्त्य दुर्नयं घोरं सुतानां द्यूतजन्म यत्” भा०व० ५।०अ०।

**दुर्नामक** पु० दुष्टं नामास्य कप्। अर्शोरोगे अमरः ।

**दुर्नामारि** पु० ६त० । अर्शोघ्ने शूरणे राजनि०।

**दुर्निमित** त्रि० दुर्+नि+मि–क्षेपणे क्त । दुष्टं क्षिप्ते यथास्थानादुत्क्षिप्ते “पदे पदे दुर्निमिता गलन्ती” कुमा०

**दुर्निमित्त** न० दुष्टं निमित्तम् प्रा०स० । भाविरिष्टसूचके शकुनभेदे “दृष्ट्वा तु दुर्निमित्तानि जराचन्धमदर्शयन्” भा०स० २०अ० ।

**दुर्नियन्तु** त्रि० दुर्+नि–यम–तृन् । दुःखेन नियन्तव्ये । “सूर्यस्येव रश्मयो दुर्नियन्तवो हस्तयोर्दुर्नियन्तवः” ऋ० १।१३५।८ “दुर्नियन्तवः दुःखेन नियन्तव्याः” भा०

**दुर्निष्प्रपतर** न० दुःखेन निष्प्रपतति दुर्+निर्+प्र+पत–अच् । अतिशयेन तत् तरप् वेदे तकारलोपः । दुःखेन निष्क्रान्ततरे । “अतो वै खलु दुर्निष्प्रपतरं भवति” छा० उ० । “दुर्निष्प्रतरमिति तकारएको लुप्तो द्रष्टव्यः” भा० ।

**दुर्नीत** न० दुर्+नी–भावे क्त । नीतिविरुद्धाचरणे “यस्य प्रसादात् दुर्नीतं प्राप्ताः स्म भरतर्षभ !” भा०वि० २०अ० दुर्+नी–कर्त्तरि क्त । २तद्युक्ते त्रि० । भावे क्तिन् । दुर्नीति दुष्टे नये स्त्री ।

**दुर्बद्ध** त्रि० दुष्टं बद्धः । यथादेशावबन्धनात् दुष्टतया बद्धे । “दुर्बद्धानुभिन्ने च विज्ञेयं भिन्ननेत्रवत्” सुश्रु०।

**दुर्बल** त्रि० दुःस्थितं बलमस्य प्रा०ब० । स्वल्पबलान्विते “स्थूले मत्स्यानिवापक्ष्यन् दुर्बलान् बलवत्तरान्” “योऽधार्यो दुर्बलेन्द्रियैः” मनुः “तक्रं नैव क्षते दद्यात् नोष्णकाले न दुर्बले” सुश्रु०। २कृशे ३शिथिले च “स्वार्थोपपत्तिं प्रति दुर्बलाशः” रघुः । दुःस्थितं बलं यस्याः प्रा०ब०। ४अम्बुशिरीषिकायां स्त्री भावप्र०। दुर्बलस्य भावः ष्यञ् । दौर्बल्य न०, तल् दुर्बलता स्त्री. त्व दुर्बलत्व न० स्वल्पबलत्वे

**दुर्बाल** त्रि० दुष्टो बालोऽस्य । १दुश्चर्मरोगयुक्ते २खलतौ

२कुटिलकेशे च मेधातिथिः "जटिलञ्चानधीयानं दुर्बालं कितवं तथा" मनुव्याख्याने तथार्थद्वयस्य तेनोक्तत्वात्।

**दुर्वीरण** न० दुष्टं वीरणम् प्रा०स०। दुष्टे वीरणे तृणभेदे "श्मश्रूण्यौपपक्ष्याणि दुर्वीरणानि जायन्ते" शत०ब्रा० ११।४।१।६ "दुर्वीरणानि दुष्टवीरणानीवेति" लुप्तोपमा भा०

**दुर्बोध** त्रि० दुःखेन बुध्यते दुर्+बुध—कर्मणि खल्। बोद्धुमशक्ये दुःखेन ज्ञेये "ख्यातदुर्बोधगिरः शिरोमणेः" गदाधरः "निसर्गदुर्बोधमबोधविक्लवाः" किरा०

**दुर्ब्राह्मण** पु० दुष्टो ब्राह्मणः प्रा०स०। "यस्य वेदश्च वेदी च विच्छिद्येते त्रिपौरुषी। स वै दुर्ब्राह्मणो ज्ञेयः, इति धूर्त्तस्वामिनोक्ते निन्दितब्राह्मणभेदे तस्य आवश्यकवेदपाठविहितहोमयोस्त्रिपुरुषमुत्सन्नत्वात् दुष्टत्वम्। "प्रष्टव्रात्याद्दुर्ब्राह्मणस्य ब्रह्मवर्चसकामस्य" आपस्तम्बः "यो दुर्ब्राह्मणः सोमं पिपासति" तैत्ति०स०२।१।१०।१

**दुर्भग** त्रि० दुःस्थितो भगो भाग्यमस्य प्रा०ब०। दुष्टभाग्यान्विते "दुर्भगोऽयं जनस्तत्र किमर्थमनुशाञ्छितः" हरिवं०१२६अ० पतिस्नेहशून्यायां (दुया) ख्यातायां २स्त्रियां स्त्री "कर्मभिः स्वकृतैः सा तु दुर्भगा समपद्यत" भा०आ०१६८अ०। प्रियादिषु पाठात् एतस्मिन् परे पूर्वस्थितस्त्रीलिङ्गशब्दस्य कर्मधारये न पुंवद्भावः।

**दुर्भाग्य** न० दुष्टं भाग्यम् प्रा०स०। १दुरदृष्टे पापे। दुःस्थितं भाग्यमस्य प्रा०ब०। २दुष्टभाग्यान्विते त्रि०

**दुर्भिक्ष** अव्य० भिक्षायाः अभावः। १भिक्षाया अभावे। दुर्लभा भिक्षा यत्र प्रा०ब०। यद्देशे यानि शस्यानि जायन्ते तद्देशे तद्द्रव्यस्यानुत्पत्त्या २तद्द्रव्यालाभसमयभेदे न०। तत्समयभेदसूचकाश्च षष्टिसंवत्सरान्तर्गता वर्षभेदाः ज्योति०त० भविष्यपु० उक्ताः संग्रह्य दर्श्यन्ते यथा

"राष्ट्रभङ्गश्च दुर्भिक्षं तस्करैरुपपीडनम्। जानीयाद्विपक्षं घोरं प्रमाथिनि१३ वरानने!।" "दुर्भिक्षं जायते घोरं सर्वोपद्रवसंयुतम्। अनावृष्टिः समाख्याता व्यये२० संवत्सरे प्रिये!"। "क्वचिद्वर्षति पर्जन्यो देशे संक्षिप्तमण्डलः। दुर्भिक्षं सर्वरीवर्षे ३४ व्यवहारे विपर्ययः"। "दुर्भिक्षं जायते सर्वा मेदिनी दुष्यति प्रिये!। प्लवे३५ प्लवन्ति तोयानि पीडिता मानवा भुवि"। "दुर्भिक्षं जायते घोरं धान्यौषधिप्रपीडनम्। अनले५० च समाख्याता नात्र कार्य्या विचारणा"। "देशभङ्गः सुदुर्भिक्षं समासात् कथयाम्यहम्। पिङ्गले५१ चारुपद्माक्षि! दुर्भिक्षं मर्मदारुणे"। "दुर्भिक्षं मध्यमं प्रोक्तं व्यवहारो न वर्त्तते। भवेद्वै मध्यमा वृष्टिर्दुर्मतौ ५५ समुपस्थिते"। "दुर्भिक्षं मरणं घोरं धान्यौषधिप्रपीडनम्। पापरोगो भवेद्देवि! रक्ताक्षे५८ऽमरवन्दिनि"!। "रोगो मरणदुर्भिक्षं विरोधोपद्रवाकुलम्। क्रोधे५९ तु विषमं सर्वं समाख्यातं हरप्रिये!"। ५९ "मेदिनी चलते देवि! सर्वभूतं चराचरम्। देशभङ्गश्च दुर्भिक्षं क्षये संक्षीयते प्रजाः। सौराष्ट्रे मालवे देशे दक्षिणे कोङ्कणे तथा। दुर्भिक्षं जायते घोरं क्षये६० संवत्सरे प्रिये!"। क्वचिदद्भुतोत्पातेऽपि दुर्भिक्षं भवति यथा

"मांसास्थिनी समादाय श्मशानाद् गृध्रवायसाः। श्वा शृगालोऽथ वा मध्ये पुरस्य प्रविशन्ति चेत्। विक्षिपन्ति गृहादौ च श्मशानं वा मही भवेत्। चौरेण हन्यते लोकः परचक्रसमागमः। संग्रामश्च महाघोरो दुर्भिक्षं मरकस्तथा। अद्भुतानि प्रदृश्यन्ते तत्र देशस्य विद्रवः। अकाले फलपुष्पाणि देशविद्रवकारणम्" इति ज्योत०त०। तत्र कालेऽशौचिभ्यो भिक्षाग्रहणे दोषाभाव इति हारलताप्रभृतयः। कौर्मे "सद्यःशौचं समाख्यातं दुर्भिक्षे चाप्युपप्लवे। डिम्बाहवे हतानाञ्च विद्युता पार्थिवैर्द्विजैः। सद्यः शौचं समाख्यातं शापादिमरणे तथा" इति शु०त०"दुर्भिक्षयुक्तराष्ट्रे च मृतके सूतकेऽपि वा। नियमाश्च न दुष्यन्ति दानधर्मरतेष्वपि। दीक्षिताश्चाभिषिक्ताश्च व्रततीर्थपरास्तथा। दीक्षाकाले विवाहादौ देवद्रोणयां निमन्त्रिते। पूर्वसङ्कल्पिते चापि नाशौचं मृतसूतके" इति गारुडे २०६अ० "शकटः शाकिनी गावो जालमास्कन्दनं वनम्। अनूपः पर्वतो राजा दुर्भिक्षे नव वृत्तयः" चाणक्याः "द्वाविमौ पुरुषौ लोके सूर्य्यमण्डलभेदिनौ। दातान्नस्य तु दुर्भिक्षे सुभिक्षे वस्त्रहेमदः"। "एकयाने चतुःशाले दुर्भिक्षे राष्ट्रविप्लवे। पतिना नीयमानायाः पुरःशुक्रो न दुष्यति" ज्यो०त०।

**दुर्भिद** त्रि० दुःखेन भिद्यते दुर्+भिद्—कर्मणि खलर्थे क। दुर्भेद्ये भेत्तुमशक्ये। "गिरिमासाद्य दुर्भिदम्" भा०द्रो० ३५अ०। खल्। दुर्भेद तत्रार्थे त्रि०। ण्यत्। दुर्भेद्य तत्रार्थे त्रि०।

**दुर्भिषज्य** त्रि० दुर्+भिषज्—कण्ड्वा० यक् कर्मणि ण्यत् यलोपः। १दुःखेन चिकित्स्ये। भावे ण्यत्। दुःखेन २चिकित्सायाम् "दुर्भिषज्यं चास्मै भवति यमेष न प्रतिपद्यते" छा०उ०"तमिन्द्रियद्वारदेशं यस्माद्दोषाच्छुक्रमादाय

प्रसृतस्तस्मिन्निन्द्रियदेशेष्वात्मा पुनर्न प्रतिपद्यते। कदाचिद् व्यत्यासेनेन्द्रियमात्राः प्रवेशयति। तत आन्ध्यबाधिर्यादिदोषप्राप्तौ दुर्भिषज्यं दुःखभिषक्कर्मता च्छायो देहाय भवति दुःखेन चिकित्सनीयोऽसौ भवतीत्यर्थः" भा०

**दुर्भृत्य** पु० दुष्टोऽसन् भृत्यः। भृत्यशब्दे वक्ष्यमाणभृत्यगुणविहीने निन्द्ये भृत्ये तत्स्वरूपं शुक्रनीतिशास्त्रपरिशिष्टे २अ० उक्तं यथा

"विपरीतगुणैरेभिर्भृतकोनिन्द्य उच्यते। ये भृत्याहीनभृतिका ये दण्डेन प्रकर्षिताः। शठाश्च कातरा लुब्धाः समक्षेऽप्रियवादिनः। मनोव्यसनिनश्चार्त्ता उत्कोचेष्टाश्च देविनः। नास्तिकादाम्भिकाश्चैव सत्यवाचोऽप्यसूयकाः। ये चापमानिता येऽसह्यवाक्यैर्मर्मणि भेदिताः। रिपोर्मित्रसेवकाश्च पूर्ववैरानुबन्धिनः। चण्डाः साहसिका धर्महीना नैते सुसेवकाः। नीचो विवर्द्धितो राज्ञा राज्यनाशाय संभवेत्। नीचाधिको नीचकुलो दुःसङ्गेन समेधितः। महाजनैः स्पर्द्धमानो हन्ति राष्ट्रं सराजकम्। सदर्थवदनर्थं तु सदर्थं त्वप्यनर्थवत्। कृत्वा स्वबुद्धिमाहात्म्यात् महान्तमपि निन्दति। वञ्चयित्वान्यसर्वस्वं विश्वासेनान्तरात्मनम्। स नीचस्तुङ्गतां यातुं ब्रह्मापि खलु कातरः। संक्षेपतस्तु कथितं सदसद्भृत्यलक्षणम्"।

**दुर्भ्रातृ** पु० दुष्टो भ्राता प्रा०स०। दुष्टे भ्रातरि "दुर्भ्रातुस्तस्य चोग्रस्य राजन्! दुःशासनस्य च" भा०व० २७अ० तस्य भावः युवा० अण्। दौर्भ्रात्र तद्भावे न०

**दुर्मति** स्त्री दुष्टा मतिः। विवेकोत्पत्तिप्रतिबन्धकपापेन १मलिनबुद्धौ "निषीदन्नो अप दुर्मतिं जहि" यजु० ११।४७। "देवीरपां मतिं दुर्मतिं बाधमानाः" १७।५४ दुःस्थिता मतिर्यस्य प्रा०ब०। २तद्युक्ते त्रि० "न साम्परायिकं तस्य दुर्मतेर्विद्यते फलम्" मनुः दुःस्था मतिरत्र प्रा०७त०। ३षष्टिवर्षमध्ये स्वत्सरभेदे "दुर्भिक्षं मध्यमं प्रोक्तं व्यवहारो न वर्त्तते। भवेद्दै मध्यमा वृष्टिर्दुर्मतौ ५५ समुपस्थिते" ज्योति०त० भवि०पु०

**दुर्मद** त्रि० दुःस्थितो मदो यस्य प्रा०ब०। उन्मत्ते "दुर्मदं गन्धर्वाप्सरोभ्यः" यजु० ३०।८। "कुमारान् क्रीडमानांस्तान् दृष्ट्वा राजा च दुर्मदान्" भा०आ० १२९अ०। २धृतराष्ट्रसुतभेदे "दुर्मदो दुःप्रधर्षश्च विवित्सुर्विकटाननः" भा०आ० ६७अ० तत्पुत्रोक्तौ।

**दुर्मनस्** त्रि० दुष्टं मनः प्रा०स०। २दुष्टे मनसि "प्राप्य दुर्मनसा वीर! गर्वेण च विशेषतः" रामा०अयो० ३१।२० दुःस्थितं मनोऽस्य प्रा०ब०। २दुःस्थितमनस्के ३व्याकुलचित्ते त्रि० "नापैति हृदयाद्राज्ञो दुर्मनाः स कथोऽभवत्" भा०आ०१६६ अ० ततो भृशा० च्व्यर्थे क्यङ् सलोपश्च दुर्मनायते। [तस्य नाम" ऋ०१०।१२।६।

**दुर्मन्तु** त्रि० दुर्+मन–तुन्। दुष्टं मन्यमाने "दुर्मन्त्वत्रामृ-

**दुर्मन्त्रित** त्रि० दुर्+मन्त्र–क्त। १दुष्टं मन्त्रिते मन्त्रणाविषये "त्वया दुर्मन्त्रितं द्यूतं सौबलेन च भारत!" भा०उ०१२७ अ०। भावे क्त। २दुष्टमन्त्रणायां न० पराभवो हि तव वने य आसीत् दुर्मन्त्रिते घोषयात्रागतानाम्" भा०उ०११७अ०

**दुर्मन्त्रिन्** पु० दुष्टो मन्त्री प्रा० स०। मन्त्रिलक्षणगुणरहिते दुष्टे मन्त्रिणि। मन्त्रिलक्षणञ्च अमात्यशब्दे ३३१ पृ० उक्तम्। तद्वैपरीत्ये मन्त्रिणो दुष्टत्वम्। "सन्तापयन्ति कमपथ्यभुजं न रोगाः दुर्मन्त्रिणं कमुपयान्ति न नीतिदोषाः" पञ्चत०

**दुर्मर** त्रि० दुष्टो मरो मृत्युः प्रा०स०। १दुष्टे मृत्यौ दुःखेन म्रियते दुर्+मृ–अच्। २श्वेतदूर्वायाम् स्त्री राजनि०। ३दूर्वायां स्त्री जटाध० दुःखेन मरो मरणं यस्य। ४दुःखेन मृत्युयुक्ते त्रि० "दुर्मरत्वमहं मन्ये नृणां कृच्छ्रेऽपि वर्तताम्। यत्र कर्णं हतं श्रुत्वा नात्यजत् जीवितं नृपः" भा०क०१अ०। ल्युट्। दुर्मरणमप्यत्र। मरणस्य दुष्टत्वं चण्डालादिहतत्वादिना भवति यथोक्तं नि० सि०

अङ्गिराः "चण्डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि। दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम्। उदकं पिण्डदानं च प्रेतेभ्यो यत्प्रदीयते। नोपतिष्ठति तत्सर्वमन्तरिक्षे विनश्यति"। षट्त्रिंशन्मतेऽप्येवम् ब्राह्मेऽपि, "शृङ्गिदंष्ट्रिनखव्यालविषवह्निस्त्रियाजलैः"। व्यालोगजः। "सुदूरात्परिहर्तव्यः कुर्वन् क्रीडां मृतस्तु यः। नागानां विप्रियं कुर्वन् हतश्चाप्यथ विद्युता। निगृहीतः स्वयं राज्ञा चौर्यदोषेण कुत्रचित्। परदारान् हरन्तश्च द्वेषात्तु पतिभिर्हताः। असमानैश्च सङ्कीर्णैश्चण्डालाद्यैश्च विग्रहम्। कृत्वा तैर्निहतास्तद्वच्चण्डालादीन् समाश्रिताः। शस्त्राग्निगरदाश्चैव पाखण्डा क्रूरबुद्धयः। क्रोधात् प्रायं विषं वह्निं शस्त्रमुद्बन्धनं जलम्। गिरिवृक्षप्रपातं च ये कुर्वन्ति नराधमाः। कुशिल्पजीविनो ये च सूनालङ्कारधारिणः। मुखे भगास्तु ये केचित् क्लीवप्राया नपुंसकाः। ब्रह्मदण्डहता ये च ये चापि ब्राह्मणे-

र्हिताः। महापातकिनो ये च पतितास्ते प्रकीर्त्तिताः। पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्थिसञ्चयः। न चाश्रुपातः पिण्डो वा कार्य्यं श्राद्धादिकं क्वचित्। एतानि पतितानां तु यः करोति विमोहितः। तप्तकृच्छ्रद्वयेनैव तस्य शुद्धिर्न चान्यथा"।

तत्र दुर्मरणनिमित्तं दानादि तत्रोक्तं यथा

"तत्र दुर्मरणनिमित्तं दानादिकार्य्यं तच्च विश्वप्रकाशादौ दर्शितं यथा

शातातपीये च "व्याघ्रेण निहते विप्रैर्विप्रकन्यां विवाहयेत्। सर्पदष्टे नागबलिर्द्देयः सर्पश्च काञ्चनः। चतुर्निष्कमितं हैमं गजं दद्याद्गजेर्हते। राज्ञा विनिहते दद्यात् पुरुषं तु हिरण्मयम्। चौरेण निहते धेनुं वैरिणा निहते वृषम्। वृकेण निहते दद्याद्यथा शक्त्या तु काञ्चनम्। शय्यामृते प्रदातव्या शय्या तूलीसमन्विता। निष्कमात्रसुवर्णस्य विष्णुना समधिष्ठिता। शौचहीने मृते चैव द्विनिष्कं स्वर्णजं हरिम्। संस्कारहीने च मृते कुमारमुपनाययेत्। निष्कत्रयस्वर्णमितं दद्यादश्वं हयाहते। शुना हते क्षेत्रपालं स्थापयेन्निजशक्तितः। शूकरेण हते दद्यान्महिषं दक्षिणान्वितम्। क्रिमिभिश्च मृते दद्याद्गोधूमान् पञ्चखारिकाः। वृक्षं वृक्षहते दद्यात्सौवर्णं वस्त्रसंयुतम्। शकटेन हते दद्याद्द्रव्यं सोपस्करान्वितम्। भृगुपातमृते चैव प्रदद्याद्धान्यपर्वतम्। अग्निना निहते कार्य्यमुदपानं स्वशक्तितः। दारुणा निहते चैव कर्त्तव्या सदने सभा। शृङ्गेण निहते दद्यान्महिषीं दक्षिणान्विताम्। अश्मना निहते दद्यात्सवत्सां गां पयस्विनीम्। विषेण च मृते दद्यान्मेदिनीं हेमनिर्मिताम्। उद्बन्धनेन च मृते वापीं कनकनिर्मितम्। मृते जलेन वरुणं हैमं दद्याद्द्विनिष्कजम्। विषूचिकामृते स्वादु भोजयेच्च शतं द्विजान्। घृतधेनुः प्रदातव्या कण्ठान्नकवले मृते। कासरोगेण च मृते चाष्टकृच्छ्रं व्रतं चरेत्। अतिसारमृते लक्षं गायत्र्याः प्रयतो जपेत्। शाकिन्यादिग्रहग्रस्ते जपेद्रुद्रं यथोदितम्। विद्युत्पातेन निहते विद्यादानं समाचरेत्। अन्तरिक्षमृते कार्य्यं वेदपारायणं तथा। सच्छास्त्रपुस्तकं दद्यादस्पृश्यस्पर्शतो मृते। पतिते च मृते कुर्य्यात् प्राजापत्यांस्तु षोड़श। मृते चापत्यरहिते कृच्छ्राणां नवतिं चरेत्। एवं कृते विधाने तु विदध्यादौर्द्ध्वदेहिकम्"। अनन्तभट्टेन तु दुर्मरणप्रकाराश्चतुःषष्टिप्रकारा उक्तास्ते च तत्कृतान्त्येष्टिपद्धतौ दृश्याः।

**दुर्मर्ष** पु॰ दुःखेन मृष्यते दुर्+मृष—कर्म्मणि खल्। दुःखेन मर्षणीये दुःखेन सहनीये "यच्छुष्मूया इमं हवं दुर्मर्षं चक्रिया उत" ऋ॰ ८।४५।१८

**दुर्मर्षण** पु॰ दुर्+मृष—भाषायां खलं बाधित्वा युच्। १दुःखेन सहनीये २विष्णौ पु॰ "अजो दुर्मर्षणः शास्ता" विष्णुसं॰ मर्षितुं दानवादिभिर्न शक्यते इति दुर्मर्षणः" भा॰ ३धृतराष्ट्रपुत्रभेदे "दुर्मर्षणो विकर्णश्च चित्रसेनो विविंशतिः" भा॰आ॰६३॰ तत्पुत्रोक्तौ

**दुर्म(ल्ली)ल्लिका** स्त्री दृश्यकाव्यरूपे उपरूपकभेदे सा॰द॰यथा "नाटिका त्रोटकं गोष्ठी सट्टकं नाट्यरासकम्। प्रस्थानोल्लाप्यकाव्यानि प्रेङ्खणं रासकं तथा। संलापकं श्रीगदितं शिल्पकञ्च विलासिका। दुर्मल्लिका प्रकरणी हल्लीशोभाणिकेति च। अष्टादश प्राहुरुपरूपकाणि मनीषिणः। विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम्" इत्युद्दिश्य तल्लक्षणमुक्तं यथा

"दुर्मल्ली चतुरङ्का स्यात् कौशिकी भारती तथा। अगर्भा नागरनरा न्यूननायकभूषिता। त्रिनालिः प्रथमोऽङ्कोऽस्यां विटक्रीडामयो भवेत्। पञ्चनालिर्द्वितीयोऽङ्को विदूषकविलासवान्। षण्नालिकस्तृतीयस्तु पीठमर्दविलासवान्। चतुर्थो दशनालिः स्यादङ्कः क्रीड़ितनायकः। यथा बिन्दुमती"।

**दुर्मायु** त्रि॰ दुष्टान्यायुधानि मिन्वन्ति मि—क्षेपे उण्। दुष्टायुधक्षेपके "दुर्मायवो दुरेवा मर्त्यासः" ऋ॰१।२०।१५

**दुर्मित्र** पु॰ दुष्टं मित्रम् प्रा॰स॰ अमित्रवत् पुंस्त्वम्। विरोधित्वात् यथा १अमित्रे शत्रौ। दुःस्थितं मित्रं यस्य। २दुष्टमित्रके त्रि॰। "दुर्मित्रासः प्रकलविन् मिमानाः" ऋ॰७।१८।१५ स्त्रियां टाप्। दुर्मित्राया अपत्यम् बाह्वा॰ इञ्। दौर्मित्रि तदपत्ये पुंस्त्री॰

**दुर्मित्रिय** त्रि॰ दुर्मित्राय अमित्रत्वाय साधु च। अमित्रत्वेनावस्थिते। "सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु" यजु॰६।२२। "दुर्मित्रिया अमित्रत्वेनावस्थिताः" वेददी॰

**दुर्मिलका** स्त्री मात्रावृत्तभेदे यथा "द्वात्रिंशन्मात्रं फणिपतिजल्पितसकलविभूषणवृत्तवरम् दशवसुभुवनैर्यतिरत्र प्रभवति कविकुलहृदयानन्दकरम्। यद्यष्टचतुष्कलगणनिर्मितपदमिति दुर्मिलकानामपरं नरपतिवरतोषणवन्दिविभूषणभुवनविदितसन्तापहरम्"।

दुर्मुख त्रि॰ दुष्टं मुखं तद्व्यापारो वाऽस्य प्रा॰ ब॰। १अश्वे हेमच॰। २वानरभेदे ३राक्षसभेदे "रक्षःपतिस्तद्वचोऽथ निकुम्भकुम्भधूम्राक्षदुर्मुखसुरान्तनरान्तकादीन्" भाग॰९।१०।१८ ४नागभेदे मेदि॰। "नागश्रेष्ठो दुर्मुखश्चाम्बरीषः स्वयं राजा वरुणस्यापि राजन्" भा॰भीष्म॰४अ॰ ५महिषासुरसेनानीभेदे "दुर्द्धरं दुर्मुखं चोभौ शरैर्निन्ये यमक्षयम्" देवीमा॰ ६शिवे "नन्दिमुखो भीममुखः सुमुखोदुर्मुखोऽमुखः" भा॰शा॰२८६अ॰ शिवनामोक्तौ। ७धृतराष्ट्रपुत्रभेदे "दुःसहो दुःशलश्चैव दुर्मुखश्च तथा परः" भा॰आ॰६७अ॰। ८नृपभेदे। "संग्रामजिद्दुर्मुखश्च उग्रसेनश्च वीर्यवान्" भा॰स॰४अ॰ युधिष्ठिरसभागतनृपोक्तौ ९यक्षभेदे ब्रह्मपु॰। १०अप्रियवादिनि त्रि॰। ११रामस्यान्तःपुरचारिणि चरभेदे "शुद्धान्तचारी दुर्मुखः स मया पौरजानपदानपसर्पितुं प्रयुक्तः" उत्तररामच॰। १२उत्तरद्वारस्थगृहे ६०वर्षमध्ये १३वर्षभेदे "तुषधान्यचयो देवि! सर्वशस्यमहार्घता। व्यवहाराश्च नश्यन्ति दुर्मुखे दुर्मुखाः प्रजाः" ज्यो॰त॰भवि॰पु॰

दुर्मुहूर्त्त न॰ निन्दितो मुहूर्तः प्रा॰स॰। अप्रशस्ते मुहूर्त्ते "नक्षत्रेष्वासुरेष्वन्ये दुस्तिथौ दुर्मुहूर्तजाः। संपतन्त्यासुरीं योनिं यज्ञप्रसववर्जिताः" भा॰शा॰१८०अ॰

दुर्मूल्य त्रि॰ दुःस्थितं मूल्यं प्रा॰स॰। १दुःस्थिते मूल्ये २महार्घे यस्य यन्मूल्यं क्लृप्तं तत आधिक्ये मूल्यस्य दुःस्थितत्वमिति बोध्यम् प्रा॰ब॰। २तद्युक्ते त्रि॰

दुर्मेधस् त्रि॰निन्दिता मेधास्य असिच् समा॰। १निन्दितमतौ विवेकासमर्थे २धारणवर्जितबुद्धिके "न किञ्चिदुक्त्वा दुर्मेधास्तस्थौ किञ्चिदवाङ्मुखः" भा॰व॰ १०अ॰ "प्रत्याख्यातोऽपि दुर्मेधाः" २८१अ॰। आर्षे तु समासान्तविधेरनित्यत्वात् क्वचिन्नासिच् समा॰। "त एव वेदा दुर्मेधैर्धार्यन्ते पुरुषैर्यथा" भाग॰ १।४।२५ "अश्रद्दधानान् निःसत्त्वान् दुर्मेधान् ह्रसितायुषः" भाग॰१।४।१८

दुर्मोह पु॰ निन्दितं मुह्यत्यनेन मुह–करणे घञ्। १काकतुण्ड्यां राजनि॰। २काकादन्यां स्त्री शब्दार्थचि॰।

दुर्य्य पु॰ दुरं द्वारं याति या–क दुरि द्वारे भवः यत् वा। १गृहे "देवी दुर्ये आयुर्मा" शत॰ब्रा॰ २।५।२।१८ "खं गोष्ठमावदतं देवी! दुर्ये" यजु॰५।१७। दुर्यशब्दो गृहवाची "दुर्या वै गृहाः" इति श्रुतेः वेददी॰। द्वारे भवे यूपे च। "निरेके पज्रेषु सोमो दुर्योन यूपः" ऋ॰१।५१।१४

दुर्यशस् न॰ निन्दितं यशः प्रा॰स॰। विरोधिलक्षणया १अकीर्त्तौ "त्वद्यशःसूचिसचिवः स कामिनोर्मनोभवः सीव्यति दुर्यशःपटौ" नैष॰। दुःस्थितं यशोऽस्य प्रा॰ब॰। २दुष्टयशस्के त्रि॰

दुर्योग पु॰ दुष्टो योगः प्रा॰स॰। १दुर्भाग्यसूचके ग्रहयोगभेदे २दुष्टकौशले च "दासीभूतास्मि दुर्योगात् सपत्न्याः पतगोत्तम!" भा॰ आ॰ २७अ॰ तस्या दास्ये च सर्पाणां यथा कौशलभेदः तथा तत्रैवाध्याये दृश्यः।

दुर्योण न॰ दुरां योनिः स्थानमस्य अच्॰ च संज्ञात्वात् णत्वम्। संग्रामे "नि दुर्योण आवृणङ् मृध्रवाचः" ऋ॰५।२९।१० "दुर्योणः संग्रामः" भा॰

दुर्योध पु॰दुःखेन युध्यतेऽसौ दुर्+युध–कर्मणि खल्। दुःखेन योधनीये।

दुर्योधन पु॰ दुर्+युध–भाषायां युच्। १धृतराष्ट्रस्य ज्येष्ठे पुत्रे। "कलेरंशस्तु सञ्जज्ञे भुवि दुर्योधनो नृपः॥ दुर्बुद्धिर्दुर्मतिश्चैव कुरूणामयशस्करः। जगतो यस्तु सर्वस्य विद्विष्टः कलिपूरुषः। यः सर्वां घातयामास पृथिवीं पृथिवीपते!॥ उद्दीपितं येन वैरं भूतान्तकरणं महत्" भा॰आ॰६७अ॰ "स जातमात्र एवाथ धृतराष्ट्रसुतो नृप!। रासभारावसदृशं रुराव च ननाद च। तं खराः प्रत्यभाषन्त गृध्रगोमायुवायसाः। वाताश्च प्रववुश्चापि दिग्दाहश्चाभवत्तदा। ततस्तु भीतवद्राजा धृतराष्ट्रोऽब्रवीदिदम्। समानीय बहून् विप्रान् भीष्मं विदुरमेव च। अन्यांश्च सुहृदो राजन्! कुरून् सर्वांस्तथैव च। युधिष्ठिरो राजपुत्रो ज्येष्ठो नः कुलवर्द्धनः। प्राप्तः स्वगुणतो राज्यं न तस्मिन् वाच्यमस्ति नः। अयन्त्वनन्तरस्तस्मादपि राजा भविष्यति। एतद्धि ब्रूत मे तथ्यं यदत्र भविता ध्रुवम्। वाक्यस्यैतस्य निधने दिक्षु सर्वासु भारत!। क्रव्यादाः प्राणदन् घोराः शिवाश्चाशिवशंसिनः। लक्षयित्वा निमित्तानि तानि घोराणि सर्वशः। तेऽब्रुवन् ब्राह्मणा राजन्! विदुरश्च महामतिः। यथेमानि निमित्तानि घोराणि मनुजाधिप!। उत्थितानि सुते जाते ज्येष्ठे तु पुरुषर्षभ!। व्यक्तं कुलान्तकरणो भवितैष सुतस्तव। तस्य शान्तिः परित्यागे गुप्तावपनयो महान्। शतमेकोनमप्यस्तु पुत्राणान्ते महीपते!। त्यजैनमेकं शान्तिञ्चेत् कुलस्येच्छसि भारत!। एकेन कुरु वै क्षेमं कुलस्य जगतस्तथा। त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्। ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्। स तथा

विदुरेणोक्तस्तैश्च सर्वैर्द्विजोत्तमैः। न चकार तथा राजा पुत्रस्नेहसमन्वितः" भा॰आ॰११५अ॰ २दुर्योधनीये त्रि॰

दुर्योनि स्त्री निन्दिता योनिः प्रा॰स॰। १निन्दितायां जातौ दुःस्थिता योनिरस्य प्रा॰ब॰। २निन्दितजातिके त्रि॰ "न कथञ्चन दुर्योनिः प्रकृतिं स्वां नियच्छति" मनुः।

दुर्लतिका स्त्री दुष्टा लतेव स्वार्थे क प्रा॰स॰। १निन्दितायां लतायां २छन्दोभेदे च "वसुभिश्च रसैरथ दिग्भिरुदीरितसद्यतिका विहिता हि सगणाष्टकभूषितसञ्चरणाञ्चितदुर्नय! दुर्लतिकेति सदा। फणभृत्कुलसङ्कुलनामकनागवरार्चिता सुकृतां सुखदा यशवन्! धराधिप! गौडकुलोज्ज्वल! तामवधेहि हृदये सदा" वृ॰र॰टीका।

दुर्लभ त्रि॰ दुःखेन लभ्यते दुर्+लभ—कर्मणि खल्। १लब्धुमशक्ये कष्टेन लभ्ये २दुष्प्राप्ये मेदि॰ ३अतिप्रशस्ते शब्दर॰४प्रिये हेमच॰। "नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा" सा॰द॰ "अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः" रामा॰ "दुर्लभं प्राकृतं वाक्यं दुर्लभः क्षेमकृत् सुतः। दुर्लभा सदृशी भार्या दुर्लभः स्वजनः प्रियः" चाणक्य॰ ५कचूरे पु॰ मेदि॰ ६कर्चूरे पु॰ राजनि॰ ७दुरालभायां ८श्वेतकण्टकार्याञ्च स्त्री राजनि॰। ९विष्णौ पु॰ "दुर्लभो दुर्जयो दुर्गः" विष्णुसं॰। "दुर्लभया भक्त्या लभ्यत इति दुर्लभः "जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः। नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते" इति व्यासवचनात् "भक्त्या लभ्यस्त्वनन्ययेति"भगवद्वचनात् भा॰"आसक्त्योः श्रियमन्विच्छेन्नैनां मन्येत दुर्लभाम्" मनुः। "मत्परं दुर्लभं मत्वा नूनमावर्जितं मया" रघुः "कुसुमायुधपत्नि! दुर्लभस्तव भर्त्ता न चिराद् भविष्यति" कुमा॰।

दुर्ललित न॰दुर्+लल—ईप्सायां भावे क्त। दुष्टेच्छायां दुर्लभवस्तुवाञ्छायाम् (आव्दार) तस्या अन्यलाभाविषयत्वेन दुष्टत्वम्। २दुश्चेष्टिते च "स शशाप ततो रोषान्मुनिर्दुहितरं तव। अतिदुर्ललितैः कन्या यमलुप्तं गमिष्यति" हरिवं॰ १४९ अ॰| कर्त्तरि क्त। ३तथाविधेच्छायुक्ते ४दुश्चेष्टान्विते ५चपले च त्रि॰ "बालस्य मे प्रकृतिदुर्ललितस्य पापः पापं व्यवस्यति समक्षमुदायुधोऽसौ" वेणी॰।

दुर्लसित न॰ दुर्+लस—क्त। दुश्चेष्टायाम्।

दुर्लाभ पु॰ दुर्+लभ—घञ्। दुःखेन लाभे। "लोकदुर्ला-भविष्यं वडवामुखसागरम्" भा॰ शा॰ ३०२ अ॰।

दुर्लेख्य न॰ दुष्टं लेख्यम्। गर्हिते लेख्यपत्रे। "देशान्तरस्थे दुर्लेख्ये नष्टोन्मृष्टे हृते तथा। भिन्ने दग्धे तथा छिन्ने लेख्यमन्यत्तु कारयेत्" नार॰ सर्वैरेतैर्विशेषणैर्व्यवहाराक्षमता विवक्षिता। दुष्टं लिप्यक्षरपरिलोपेनावाचकतया वा यल्लेख्यं तत्तु दुर्लेख्यं, नष्टं सर्वथा नाशमुपगतम् उन्मृष्टं मषीदोषादिना अदितलिप्यक्षरम्। यद्यपि दग्धमपि नष्टमेव तथापि कालमात्रकृता शीर्णता नष्टपदेनात्र विवक्षिता। पत्रान्तरकरणञ्चार्थिप्रत्यर्थिनोः परस्परसम्प्रतिपत्तौ। विमतौ तु देशान्तरस्थपत्रानयनाय कालो देयोऽध्वापेक्षया, व्यवहारो वाऽप्रवर्त्तनीयः दुर्लेख्यादौ तु सम्प्रतिपत्तौ पत्रान्तरकरणमन्यथा व्यवहारस्यासक्तिरेवेत्यवसेयं साक्षिषु सत्सु तैरेव निर्णयः"। तथाच नारदः "लेख्ये देशान्तरस्थे तु शीर्णे दुर्लिखिते हृते। सतस्तत्कालकरणमसतो द्रष्टृदर्शनमिति" वीरमि॰

दुर्व वधे भ्वा॰पर॰सक॰सेट्। दूर्वति अदूर्वीत्। ईदित्। दूर्त्तः

दुर्वच त्रि॰ दुःखेन उच्यते दुर्+वच—कर्म्मणि खल्। दुःखेन कथनीये वक्तुमशक्ये। "अपि वागधिपस्य दुर्वचं वचनं तद्विदधीत विस्मयम्" किरा॰। खलर्थयोगे कर्त्तरि षष्ठ्या निषेधेन सम्बन्धविवक्षयाऽत्र षष्ठी" भीमराजस्त्वेताऽङ्गमयोक्तं दुर्वचं वचः" भा॰ उ॰ १७७ अ॰।

दुर्वचस् न॰दुष्टं वचः प्रा॰स॰। गर्हिते वचने वचसो दुष्टत्वमप्रियावेदकत्वेन "अवद्यं दुर्वचो ज्ञातेर्मैवान्तरितसौहृदम्" उद्भ॰ "नार्यो जित्वा विकत्थन्ते न च जल्पन्ति दुर्वचः" भा॰द्रो॰ १४८ अ॰। दुःस्थितं वचोऽस्य प्रा॰ब॰। २दुष्टवचनवक्तरि त्रि॰।

दुर्वराह पुंस्त्री॰ गर्हितो वराहः प्रा॰स॰। १गर्हिते वराहे विड्वराहे ग्राम्यशूकरे स्त्रियां जातित्वात् ङीष्। "तयो ह वापशवोऽमेध्या दुर्वराह एडकः श्वा" शत॰ ब्रा॰१२।४।१।४

दुर्वर्ण न॰ निन्दितो हेमापेक्षया निकृष्टो वर्णोऽस्य। १रजते अमरः। "दुर्वर्णभित्तिरिह सान्द्रसुधासवर्णा" माघः २एलवालुके मेदि॰। ३निन्द्यवर्णयुक्ते त्रि॰। "न तत्र कश्चिद्दुर्वर्णो व्याधितो वापि दृश्यते" भा॰स॰ १६६ अ॰। ४श्वेतकुष्ठिनि तस्य रजतवर्णतुल्यत्वात् दुर्वर्णत्वम्। "दुर्वर्णः कुनखी कुष्ठी मायावी कुण्डगोलकौ" भा॰ म॰ १९९ अ॰। दुष्टो वर्णः प्रा॰स॰। ५निन्द्ये ब्राह्मणादिवर्णे च। "दुर्वर्णोऽस्य भ्रातृव्यः" तैत्ति॰स॰ २।१।४।६। दुष्टे ६अक्षरे पु॰।

**दुर्वृत्त** त्रि॰ दुर्+वृ—कर्म्मणि क्त । दुर्वारे “दुर्वर्त्तुःस्मा भवति भीम ऋञ्जन्” ऋ॰ ४।२८।८ “दुर्वर्त्तुः दुर्वारः” भा॰ ।

**दुर्वस** त्रि॰ दुःखेनोष्यतेऽत्र दुर्+वस—वा॰ आधारे खल् । कष्टेन वासयोग्ये वस्तुमशक्ये “त्वयोदयोऽयं संप्राप्तः कष्टात् परमदुर्वसः” भा॰वि॰१अ॰ ।

**दुर्वसति** स्त्री दुःखेन वसतिः । दुःखेनावस्थितौ “रोगोपसृष्टतनुदुर्वसतिं मुमुक्षुः” रघुः ।

**दुर्वह** त्रि॰ दुःखेनोह्यतेऽसौ दुर्+वह—कर्म्मणि खल् । दुःखेन वहनीये वोढुमशक्ये । “न दुर्वहश्रोणिपयोधरार्त्ताः” कुमा॰ “अनुप्रवेशादाद्यस्य पुंसस्तेनापि दुर्वहम्” रघुः । “दुर्वहो नियहो दण्डो हिरण्यबहुलस्तथा” भा॰शा॰ ६१८०श्लो॰ ।

**दुर्वाच्** स्त्री गर्हिता वाक् प्रा॰स॰ । १निन्द्ये वाक्ये दुःस्थिता वागस्य प्रा॰ब॰। २निन्द्यवचनान्विते त्रि॰ “यथाभनमलङ्कारमन्नपानमनार्य्यताम् । दुर्वाग्भरं रतिञ्चैव ददौ स्त्रीभ्यः प्रजापतिः” भा॰अनु॰४॰अ॰ “अतीव जल्पन् दुर्वाचो भवतीह विहेटकः” भा॰आ॰ ३०७६ श्लो॰ ।

**दुर्वाच्य** न॰ निन्द्यं वाच्यम् प्रा॰स॰। अपवादे १अकीर्त्तौ “क्रोडानिविष्टं न सुता दुर्वाच्यं न भविष्यति” रामा॰सु॰ १५२४श्लो॰। २कष्टेन वाच्ये च ।

**दुर्वाद** पु॰ दुष्टो वादः प्रा॰स॰ । अकीर्त्तौ स्तुतिपूर्व्वकाप्रियवाक्ये १अपवादे जटाध॰ २निन्दितवाक्ये च ।

**दुर्वान्त** न॰ दुष्टं वान्तं प्रा॰स॰ । १विधानातिक्रमेण वमने दुःस्थितं वान्तमस्य प्रा॰ब॰। २दुष्टवमनयुक्ते त्रि॰ । “दुर्वान्तस्य तु वमनात् क्लिष्टा दोषा व्याप्य शरीरं कण्डूश्वयथुकुष्ठपीडकाज्वराङ्गमर्द्दनिस्तोदनानि कुर्व्वन्ति” सुश्रुतः ।

**दुर्वार** त्रि॰ दुःखेन वार्य्यतेऽसौ दुर्+वारि—कर्मणि खल् । दुःखेन वारणीये वारयितुमशक्ये “किन्नायमरिदुर्वारः पाणौ पाशः प्रचेतसः” कुमा॰ “सा दुर्वारं कथमपि परित्यागदुःखं विषेहे” रघुः ।

**दुर्वारण** त्रि॰ दुःखेन वारणमस्य । १दुःखेन वारणीये “संरब्धश्च शरानस्यन् द्रोणं दुर्वारणं रणे” भा॰द्रो॰ १८३अ॰। २शिवे पु॰ दुर्विषहशब्दे दृश्यम् ।

**दुर्वारि** त्रि॰ दुःखेन वारिर्वारणमस्य । कम्बोजदेशीये योधभेदे “एते दुर्वारयो नाम कम्बोजा यदि ते श्रुताः” भा॰द्रो॰११२अ॰ । [दुष्प्रवृत्तौ ।

**दुर्वार्त्ता** स्त्री गर्ह्या वार्त्ता प्रा॰स॰ । अप्रियावेदकवार्त्तायां

**दुर्वासना** स्त्री दुष्टा वासना प्रा॰स॰। पूरयितुमशक्ये वासनायाम्

**दुर्वासस्** पु॰ मुनिभेदे स च शङ्करांशेनात्रेरनसूयागर्भजः । तदुद्भवकथा आत्रेयशब्दे ६८२ पृ॰दृश्या तन्नामनिरुक्तिश्च यथा “निगूढनिश्चयं धर्मं यं तं दुर्वाससं विदुः” भा॰ अनु॰ ४७अ॰ । “ममांशस्तु क्षितितले महाभागो द्विजोत्तमः । दुर्वासा इति विख्यातः स हि त्वां याजयिष्यति” भा॰आ॰ २२२अ॰ शिववाक्यम् । तस्य रुद्रांशजत्वेन क्रोधनत्वं यथाह “दुर्वासाः क्रोधनः श्येनस्तथा दीर्घतमा मुनिः” भा॰स॰ ७अ॰ “शिष्यायुतसमोपेतो दुर्वासा नाम कामतः । तमागतमभिप्रेक्ष्य मुनिं परमकोपनम्” भा॰व॰२६१अ॰ तस्य क्रोधशीलत्वेन विशेषणम् । दुःसाध्यं वासः गृहे वासनमस्य इति वा व्युत्पत्तिः । गृहे तदीयवासनस्य दुःसाध्यत्वात् दुर्वासस्त्वं यथोक्तं भा॰अनु॰१५८अ॰ यथा “अवसन्मे गृहे तात ! ब्राह्मणो हरिपिङ्गलः । चीरवासा बिल्वदण्डी दीर्घश्मश्रुः कृशो महान् । दीर्घेभ्यश्च मनुष्येभ्यः प्रमाणादधिको भुवि । सर्वान् सञ्चरते लोकान् ये दिव्या ये च मानुषाः । इमां गाथां गायमानश्चत्वरेषु सभासु च । दुर्वाससं वासयेत् को ब्राह्मणं सत्कृतं गृहे । रोषणः सर्व्वभूतानां सूक्ष्मेऽप्यपकृते कृते । परिभाषाञ्च मे श्रुत्वा कोऽनुदद्यात् प्रतिश्रयम् । यो मां कश्चिद्वासयीत न स मां कोपयेदिति । यस्मान्निद्रावते कश्चित्ततोऽहं समवासयम् । स च भुङ्क्ते सहस्राणां बहूनामन्नमेकदा । एकदाऽल्पकं भुङ्क्ते न चैवेति पुनर्गृहान् । अकस्माच्च प्रहसति तथाऽकस्मात् प्ररोदिति । न चास्य वयसा तुल्यः पृथिव्यामभवत्तदा । अथ स्वावसथं गत्वा स शय्यास्तरणानि च । कन्याश्चालङ्कृता दग्ध्वा ततो व्यपगतः पुनः । अथ मामब्रवीद्भूयः स मुनिः संशितव्रतः । कृष्ण ! पायसमिच्छामि भोक्तुमित्येव सत्वरः । तदैव तु मया तस्य चित्तज्ञेन गृहे जनः । सर्वाण्यन्नानि पानानि भक्ष्याश्चोच्चावचास्तथा । भवन्तु सत्कृतानीह पूर्व्वमेव प्रचोदितः । ततोऽहं ज्वलमानं वै पायसं प्रत्यवेदयम् । तं भुक्त्वैव तु स क्षिप्रं ततो वचनमब्रवीत् । क्षिप्रमङ्गानि लिम्पस्व पायसेनेति स स्म ह । अविमृश्यैव च ततः कृतवानस्मि तत्तथा । तेनोच्छिष्टेन गात्राणि शिरश्चैवाभ्यमृक्षयम् । स ददर्श तदाऽभ्याशे मातरं ते शुभाननाम् । तामपि स्मयमानः स पायसेनाभ्यलेपयत् । मुनिः पायसदिग्धाङ्गीं रथे तूर्णमयोजयत् । तमारुह्य रथञ्चैव निर्ययौ स गृहान्-

मम। अग्निवर्णोज्ज्वलन् धीमान् स द्विजो रथधूर्य्यवत्। प्रतोदेनातुदद्बालां रुक्मिणीं मम पश्यतः। न च मे स्तोकमप्यासीद्दुःखमीषत्रोक्तं तदा। तथा स राजमार्गेण महता निर्ययौ बहिः। तद्दृष्ट्वा महदाश्चर्य्यं दाशार्हा जातमन्यवः। तथाऽजल्पन् मिथः केचित् समाभाष्य परस्परम्। ब्राह्मणा एव जायेरन् नान्यो वर्णः कथञ्चन। को ह्येनं रथमास्थाय जीवेदन्यः पुमानिह। आशीविषविषं तीक्ष्णं ततस्तीक्ष्णतरो द्विजः। ब्रह्माशीविषदग्धस्य नास्ति कश्चिच्चिकित्सकः। तस्मिन् व्रजति दुर्द्धर्षे प्रास्खलद्रुक्मिणी पथि। तन्नामर्षयत श्रीमांस्ततस्तूर्णमचोदयत्। ततः परमसंक्रुद्धो रथात् प्रस्कन्द्य सद्विजः। पदातिरुत्पथेनैव प्राद्रवद्दक्षिणामुखः। तमुत्पथेन धावन्तमन्वधावं द्विजोत्तमम्। तथैव पयसा दिग्धः प्रसीद भगवन्निति। ततो विलोक्य तेजस्वी ब्राह्मणो मामुवाच ह। जितः क्रोधस्त्वया कृष्ण! प्रकृत्यैव महाभुज!। न तेऽपराधमिह वै दृष्टवानस्मि सुव्रत!। प्रीतोऽस्मि तव गोविन्द! वृणु कामान् यथेप्सितान्"।

**दुर्विगाह** त्रि॰ दुर्+वि+गाह–कर्मणि खल्। १दुःखेन गाहनीये २धृतराष्ट्रपुत्रभेदे पु॰ "दुर्मदोदुर्विगाहश्च विवित्सुर्विकटाननः" भा॰आ॰११७अ॰।

**दुर्विदग्ध** त्रि॰ दुष्टो विदग्धः प्रा॰स॰। गर्विते "अलीकवेगदुर्विदग्धं गरुत्मन्तम्" काद॰।

**दुर्विदत्र** त्रि॰विद–लाभे विद–ज्ञाने वा बा॰अत्र विदत्रं लभ्यं धनं ज्ञानं वा ततः प्रा॰ब॰। १दुर्धनके २दुर्ज्ञानके च "आरे मन्युं दुर्विदत्रस्य धीमहि" ऋ॰१०।२५।४। "दुर्विदत्रा निर्ऋतिर्न" ऋ॰१०।२६।२।

**दुर्विध** त्रि॰ दुष्टा विधाऽस्य प्रा॰ब॰। दरिद्रे अमरः। (दमयन्तीवर्णने) "अपि खञ्जनमञ्जनाञ्चिते विदधाते रुचिगर्वदुर्विधम्" नैष॰ "विविनक्ति न बुद्धिदुर्विधः" माघः। २खले मेदि॰ ३मूर्खे शब्दर॰। "शास्त्रेष्वन्येषु कुधियो विद्यमानेषु दुर्विधाः। बुद्धिमान्वीक्षिकीं प्राप्य निरर्थान् प्रवदन्ति ते" रामा॰ २।१०८।२

**दुर्विनय** पु॰ दुर्+वि+नी–भावे अच्। विनयराहित्ये। दुर्+वि+नी–क्तिन्। दुर्विनीति तत्रार्थे स्त्री

**दुर्विनीत** त्रि॰ दुर्+वि+नी–कर्त्तरि क्त। १विनयाकर्त्तरि विनयशून्ये २अशिक्षिताश्वे पुंस्त्री॰हेमच॰स्त्रियां जातित्वात् ङीष्।

**दुर्विमोचन** त्रि॰ दुःखेन विमोचनं यस्य। १दुःखेन मोचनीये २धृतराष्ट्रपुत्रभेदे पु॰ "चित्रवाणश्चित्रवर्मा सुवर्मा दुर्विमोचनः" भा॰आ॰११७अ॰। तत्पुत्रोक्तौ तु ६७अ॰। दुर्विरोचन इति पाठान्तरम्। सोऽपि तत्पुत्रभेदे

**दुर्विवाह** पु॰निन्दितो विवाहः प्रा॰स॰। ब्राह्मयादिचतुष्कभिन्नेषु आसुरादिषु चतुर्षु विवाहेषु ब्राह्मयादीनष्टौ विवाहानुक्त्वा मनुनोक्तं यथा

"ब्राह्मयादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः। ब्रह्मवर्चस्विनः पुत्रा जायन्ते शिष्टसम्मताः। रूपसत्त्वगुणोपेता धनवन्तो यशस्विनः। पर्य्याप्तभोगा धर्मिष्ठा जीवन्ति च शतं समाः। इतरेषु तु शिष्टेषु नृशंसानृतवादिनः। जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषः सुताः। अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा। निन्दितै र्निन्दिता नृणां तस्मान्निन्द्यान् विवर्जयेत्"

**दुर्विष** पु॰दुःस्थितो विषोऽस्य प्रा॰ब॰। विषजनविकारशून्ये शिवे "दुर्द्धर्षो दुष्प्रकाशश्च दुर्विषो दुर्जयोऽजयः" भा॰शा॰ २८६अ॰ शिवनामोक्तौ। तस्याकृतमन्थनकाले विषपानेऽपि तज्जनविकारराहित्यात् विषविकारस्य तं प्रति दुःस्थितत्वात्तस्य तथात्वम्। दुष्टो विषो वा पेयत्वे नास्त्यस्य अच् वा। दुष्टविषपानाद्वा तस्य तथात्वम्।

**दुर्विषह** त्रि॰ दुःखेन विषह्यतेऽसौ दुर्+वि+सह–कर्मणि खल्। १सोढुमशक्ये दुःखेन सहनीये "सैषा दुर्विषहा माया देवैरपि दुरासदा" हरिवं॰ ४६अ॰ २शिवे पु॰ "दुर्वारणो दुर्विषहोदुस्सहोदुरतिक्रमः" भा॰शा॰२८६ अ॰। ३धृतराष्ट्रपुत्रभेदे "दुर्योधनो दुर्विषहो दुर्मुखो दुष्प्रधर्षणः" भा॰आ॰१८६अ॰ तत्पुत्रोक्तौ

**दुर्वृत्त** न॰ दुष्टं वृत्तम् प्रा॰स॰। १निन्दिते आचरणे "दुर्वृत्तं धार्त्तराष्ट्राणामुक्तवान् भगवानृषिः" भा॰आ॰१अ॰ दुःस्थं वृत्तमस्य प्रा॰ब॰। २दुर्जने "दुर्वृत्तवृत्तशमनं तव देवि! शीलम्" देवीमा॰ "चाटुतस्कर दुर्वृत्तमहासाहसिकादिभिः" याज्ञ॰

**दुर्वेद** त्रि॰ दुःखेन विद्यते लभ्यतेऽसौ दुर्+विद+लाभे–कर्मणि खल्। १लब्धुमशक्ये दुःखेन लभ्ये "ये एव के च मारुतौ स्यातां दुर्वेदे एव वशा दुग्धिर्यदि वशां दुग्धि न विन्देदपि" शत॰ब्रा॰ ५।१।३।३ दुरल्पो वेदोऽस्य प्रा॰ब॰। २वेदपाठरहिते च। "दुर्वेदा वा सुवेदा वा प्राकृताः संस्कृतास्तथा। ब्राह्मणा नावमन्तव्या भस्मच्छन्ना इवाग्नयः" भा॰व॰१९९अ॰

**दुर्व्यवहार** पु० दुष्टो व्यवहारः प्रा०स० । दुष्टे दृष्टशब्ददर्शिते रागलोभादिनाऽसत्यनिर्णीते व्यवहारे तच्छब्दे दृश्यम् ।

**दुर्व्रजित** न० गर्हितं व्रजितम् प्रा०स० । निन्दितगतौ "दुर्व्याहृताच्छङ्कमाना दुःस्थिता दुरवेक्षितात् । दुरासितात् दुर्व्रजितादिङ्गिताध्यासितादपि" भा०व०२३२अ०

**दुर्ह(ण)न** त्रि० दुःखेनाहन्यतेऽसौ दुर्+हन–कर्मणि खल् । हन्तुमशक्ये दुःखेन हन्तव्ये "प्रकलयन्निति च तस्यार्थो निकृष्टो दुर्हने हते" भट्टिः वेदे तु णत्वम् । "मो षु णः परापरा निर्ऋतिर्दुर्हणा वधीत्" ऋ०१।३८।६ "त्वं नो अस्या इन्द्र ! दुर्हणायाः" ऋ०१।१२१।१४

**दुर्हणायु** त्रि० दुष्टं हननमिच्छति क्यच् दुर्हणाय–उन् वेदे णत्वम् । दुष्टहननेच्छौ "क्षियं वट्टदुर्हणायुवम्" ऋ०४।३०।८। "दुर्हणायुवं दुष्टहननमिच्छन्तीम्" भा० छान्दस उवङ् ।

**दुर्हणु** त्रि० दुःस्थो हनुरस्य प्रा०ब० दुर्+हन–उन् वा, वेदे णत्वम् । १दुःखेन हननीये २दुष्टहनुयुक्ते च "तदा रभस्व दुर्हणो !" ऋ० १०।१५५।२। लोके तु दुर्हनु इत्येव दुष्टहनुके त्रि० ।

**दुर्हल(लि)** त्रि० दुष्टो हलिरस्य वा अच् समा० । दुष्टहलियुक्ते

**दुर्हित** त्रि० निन्दितो हितः प्रा०स० । विरोधिलक्षणया शत्रौ "न दुर्हितः स्यादम्ने न पापया" ऋ०८।१९।२६

**दुर्हुत** न० निन्दितं हुतम् प्रा०स० । अफलजनके होमे "सदैव याचमानेषु तथा दम्भान्वितेषु च । एतेषु दक्षिणा दत्ता दावाग्नाविव दुर्हुतम्" भा०शा०१८अ०

**दुर्हृणायु** त्रि० दुष्टं हृणीयते क्रुध्यति लज्जते वा दुर्+हृणी+क्रोधे लज्जायाञ्च कण्ड्वा० यक् तत उन् अल्लोपयलोपौ पृषो० वर्णव्यत्यासे ईकारस्याकारः, कण्ड्वा० वा नि० । १दुष्टक्रोधने २दुष्टं लज्जमाने च ।

"दुर्हृणायुस्तिरश्चिरतानि वसवो जिघांसति" ऋ०७।५९।८ "दुर्हृणायुरयोभनं क्रुध्यन्" भा० "अतस्य शिमीवतो भामिनो दुर्हृणायून्" ऋ०१।८४।१६

**दुर्हृत्** त्रि० दुष्टं हृदयमस्य प्रा०ब० "सुहृद्दुर्हृदौ मित्रामित्रयोः" पा० निपा० । १अमित्रे शत्रौ । दुःस्थितं हृदस्य प्रा०ब० । २दुःस्थितहृदये त्रि० "अश्मसारमयं नूनं हृदयं मम दुर्हृदः" भा०व० ११२अ० । तस्य भावः युवा०अण् द्विपदवृद्धिः दौर्हार्दं दुष्टान्तःकरणत्वे शत्रुत्वे च न० ।

**दुर्हृदय** त्रि० दुःस्थं हृदयमस्य प्रा०ब० अशत्रुत्वेन न निपा० । १दुष्टान्तःकरणयुक्ते । दुष्टं हृदयम् प्रा०स० । २दुष्टे मनसि न० ।

**दुल** उत्क्षेपे (दोलान) चुरा०उभ० सक० सेट् । दोलयति ते अदूदुलत् । "नारी यदङ्गं स्थाप्य कान्तस्योरुद्वयोपरि । कटिं चेद्दोलयेदाशु बन्धः कन्दर्पसङ्कुलः" रतिमञ्जरी "आन्दोलत् क दोलने" कविकल्पद्रुमः । अस्य वा चुरादित्वमपि । दुल–क्ति "दुलिः कच्छा दुली नितम्बीरभ्यन्ती" तैत्ति० ४।४।५।१ दुलीति उत्क्षिपन्तीत्यर्थः ।

**दुलि** पु० दुल–कि । १मुनिभेदे शब्दार्थचि० । २कच्छपस्त्रियां स्त्री वा ङीष् । ३उत्क्षेपके त्रि० ।

**दुलिदुह** पु० दिलीपवंश्यपितरि अनमित्रसुते "अनमित्रसुतो राजा विद्वान् दुलिदुहोऽभवत् । दौलिपस्तनयस्तस्य रामस्य प्रपितामहः" हरिवं० १५अ० [शब्दार्थचि० ।

**दूलल** त्रि० दु+क्विप् दुतं लल ति लल–अच् । रोमशे

**दुवस्** परिचरणे उपतापे च कण्ड्वा० नाम० यक् पर० सक० सेट् । दुवस्यति अदुवस्यीत् "अनेहसः स्तुभ इन्द्रो दुवस्यति" ऋ० २।५।१३ "याभिर्विश्वजानि दुवस्यथः" ऋ० १।११२।१५ "समिद्भिरग्निं नमसा दुवस्यन्" ऋ०२।१।२

**दुवस्** न० दुवस् परिचरणे कण्ड्वा०दुवस्य–क्विप् अल्लोपयलोपौ । १हविषि २परिचरणे च "ऐभिरग्ने दुवोगिरोविश्वेभिः" ऋ०१।१४।८ "दुवः परिचर्याम्" । दुव इच्छति क्यच् वा अनङ् दुवन्यति "स त्वा भरिषो गविषो दुवन्यसम्" ऋ०४।४०।२। दुवः परिचरणमिच्छन्तः दुवन्याः तान् सीदति दुवन्यसम्" भा० कर्मणि ल्युट् अनङ्भावे पक्षे अल्लोपयलोपौ दुवसन परिचरणीये "श्येनासो न दुवसनासः" ऋ०४।६।१० "दुवसनासः परिचरणीयाः" भा०

**दुवस्य** त्रि० नाम०दुवस्य–शक्यार्थे यत् अल्लोपयलोपौ । "परिचर्यार्हे "आ यद्दुवस्याद्दुवसे न कारुः" ऋ० १।१६५। १४। "दुवस्यात् परिचर्यार्हात् दुवसे परिचरणाय" भा०

**दुवस्यु** त्रि० दुवः परिचरणमिच्छति क्यच् "क्याच्छन्दसि" पा०उन् । परिचरणेच्छायुक्ते "गोसूर्तिं पर्यन्तं दुवस्युः" ऋ०१०।१००।१२ वेदे क्वचिदस्य स्त्रियामुवङ् । "स न ईळानया सह देवा अग्ने दुवस्युवा" ऋ०८।१०२।२

**दुवस्वत्** त्रि० दुवो हविः परिचरणं वास्त्यस्य मतुप् मस्य वः सान्तत्वान् न पदकार्यम् । १हविर्युक्ते २परिचरणयुक्ते च "अवस्युरसि दुवस्वान्" यजु०५।३२ "सोमनेत्रेभ्यो देवेभ्य उपरिसद्भ्यो दुवस्वद्भ्यः स्वाहा" ९।३५ "दुवस्वाञ्छृत्यूर्मे" १८।४

**दुवोयु** त्रि० दुवः परिचर्य्यामिच्छति क्यचि वेदे वा पदकार्य्यम् उन्। परिचरणेच्छौ। "स तु श्रुधि श्रुत्या यो दुवोयुः" ऋ० ६।३६।५। "दुवोयुरस्मदीयं परिचरणमात्मन इच्छन्" भा० पक्षे दुवस्यु तत्रार्थे

**दुश्चर** त्रि० दुःखेन चर्य्यते दुर्+चर–कर्म्मणि खल्। चरितुमशक्ये १दुःखेन चरणीये "चरतः किल दुश्चरं तपः" रघुः "स्थाने तपो दुश्चरमेतदर्थम्" कुमा० "अहं प्रजाः सिसृक्षुस्तु तपस्तप्त्वा सुदुश्चरम्" मनुः। दुःखेन दुष्टं वा चरति चर+अच्। १भल्लुके हारा० २भल्लूके पुंस्त्री० राजनि०।

**दुश्चरित** न० दुष्टं चरितम् प्रा०स०। १दुष्कृते पापे "इह दुश्चरितैः केचित् केचित् पूर्वकृतैस्तथा। प्राप्नुवन्ति दुरात्मानो नरा रूपविपर्य्ययम्"। "यथा महाह्रदं प्राप्य क्षिप्तं लोष्टं निमज्जति। तथा दुश्चरितं सर्वं वेदे त्रिवृति मज्जति" मनुः। दुःखेन चरितम्। २कष्टेन कृते त्रि० दुष्टं चरितं यस्य प्रा०ब०। ३तद्युक्ते त्रि०।

**दुश्चर्म्मन्** पु० दुःस्थितं चर्म्म यत्र प्रा०ब०। १स्वभावतोऽनावृतमेढ्रे रोगभेदे। "हेमहारी तु कुनखी दुश्चर्म्मा गुरुतल्पगः" याज्ञ०। २कोठरोगे राजनि०।

**दुश्चारित्र** न० चरित्रमेव स्वार्थे अण् चारित्रं दुष्टं चारित्रम् प्रा०स०। दुष्टे चरित्रे पापे। दुःस्थितं चारित्रमस्य प्रा०ब०। १दुष्टचरित्रयुक्ते त्रि० "शूद्रो राजन्! भवति ब्रह्मबन्धुर्दुश्चारित्रोयश्च धर्म्मादपेतः" भा०शा०६३अ०।

**दुश्चिकित्स्य** त्रि० दुर्+कित–स्वार्थे सन् कर्म्मणि यत्। दुःखेन चिकित्सनीये प्रतिकार्य्ये रोगे। सुश्रुतोक्ताः ते च रोगा अवारणीयशब्दे ४४८पृ० दर्शिताः।

**दुश्चिक्य** न० लग्नात् तृतीये राशौ "त्रित्रिकोणस्य नवमं दुश्चिक्यं स्यात् तृतीयकम्" ज्यो०त०

**दुश्च्यवन** पु० दुःसहं च्यवनं चालनमस्य दुःसहश्च्यवनः शिवो येन वा प्रा०ब०, दुर्+च्यु–ल्यु, "कन्दसि गत्यर्थेभ्यः" पा० युच् वा। इन्द्रे अमरः "युत्कारेण दुश्च्यवनेन धृष्णुना" ऋ० १०।१०२।२ "दुश्च्यवनेनान्यैरविचाल्येन" भा० बहुकालानन्तरं स्वस्थानात् पतनात् तस्य तथात्वम्। एकैकमन्वन्तरे हि चतुर्दश इन्द्रा भवन्तीति एकसप्ततिमहायुगस्य मन्वन्तरकालस्य चतुर्दशोभागः किञ्चिदधिकपञ्चसहस्रयुगात्मककस्तत्कालस्ततोऽनन्तरं तस्य पतनात् तथात्वम्। चतुर्दश इन्द्राश्च कल्पभेदेन भिन्ननामानः इन्द्रशब्दे ८४५पृ० दर्शिताः। च्यवनेन शिवेनाभिभूतत्वात् तस्य तथात्वम् "अच्यवतश्च शक्रस्य वज्रेण प्रहरिष्यतः। सवज्रं स्तम्भयामास तं बाहुं परिघोपमम्" भा०अनु० १६०अ० "बाहुं सवज्रं शक्रस्य क्रुद्धस्यास्तम्भयत् प्रभुः" मल्लिनाथधृतपुराणम्।

**दुश्च्याव** त्रि० दुःखेन च्याव्यतेऽसौ दुर्+च्यु–णिच् कर्म्मणि खल्। १दुःखेन च्यावनीये। २महादेवे पु० "दुश्च्यावश्च्यवनो जेता हन्ता ब्रह्मद्विषां हरः" भा०क०२४अ०

**दु(दुः)श्रव** न० दुःखेन श्रूयतेऽसौ दुर्+श्रु–खल् वा रेफस्य उत्वम्। श्रुतिदुःखावहे परुषवर्णयुक्ते काव्यदोषभेदे "दुःश्रवं त्रिविधाश्लीलानुचितार्थप्रयुक्तता" इत्युपक्रमे परुषवर्णतया श्रुतिदुःखावहत्वं दुःश्रवत्वमिति सा०द० लक्षयित्वा यथा "कार्त्तार्थं यातु तन्वङ्गी" इत्युदाहृतम्। तस्य चापरनाम श्रुतिकटुरिति चन्द्रालोके उक्तम् "भवेच्छ्रुतिकटुर्वर्णः श्रवणोद्वेजने पटुः"। अत्र तद्घटकवर्णस्यैव परुषत्वेन तद्घटितकाव्यस्य तथात्वं "पदे पदांशे वाक्येऽर्थे सम्भवन्ति रसेऽपि ते" सा०द० सामान्यतो दोषाणां पञ्चधोत्कीर्त्तनेऽपि श्रुतिकटुदोषस्य पदतदंशवाक्येष्वेव सम्भवः इत्येव विशेषः।

**दुष** वैकृते दिवा०पर०अक० अनिट्। दुष्यति इरित् अदुषत् अदुक्षत् दुदोष दोष्टा दोक्ष्यति। "श्मशानेष्वपि तेजस्वी पावको नैव दुष्यति" मनुः। "मेदं प्रजापते रेतोऽदुषत्" ऐत०ब्रा० ३।३३ "राहुके पट्टसूत्रे च स्पर्शविद्धं न दुष्यति" स्मृतिः। वैकृतञ्च यस्य यथास्वरूपं तद्वैपरीत्यं, यथा हेतोः साध्यानुमापकत्वं तद्वैपरीत्ये दुष्टत्वम् अशुद्धत्वञ्च। यथा मलादिना वस्त्रादेरशुद्धत्वम्। अशुद्धिश्च स्वरूपतः यथा मालिन्यादिना, शास्त्रविध्युल्लङ्घने दुरदृष्टजनकत्वेन वा। यथा नीलीवस्त्रादिधारणादेः शास्त्रनिषिद्धत्वात् तद्धारणे दुरदृष्टोत्पत्तेः तस्य दुष्टत्वम्। एवमन्यत्राप्यूह्यम् "दुषधातोरिवाश्माकं दोषसम्पत्तये गुणः" उद्भटः दोषः। दुष्टः। "अनेकदोषदुष्टोऽपि कायः कस्य न वल्लभः" पञ्चत० दोषी। णिचि। दूषयति चित्तविकारे तु दोषयति दूषयति वा चित्तम्। "न च किञ्चिदेवांशं काव्यस्य दूषयन्तः श्रुतिकटादयो दोषाः, किं तर्हि सर्वमेव काव्यम्" सा०द०। "दोषोविचारसुलभो यदि दूष्यते तद् व्याख्या मम प्रथममेव न दूषणीया" काव्यप्र०व्या० महेश्वरः "यः सौहृदे पुरुषं स्थापयित्वा पश्चादेनं दूषयते स बालः" भा०स० ६२ अ० "यथा क्रतुषु विप्राणां सोमपानं न दूषितम्" कुला-

र्थवतत्त्वम्। दूषयन् दूषणीयः दूषितः दूषयित्वा संदूष्य। उपसर्गपूर्वकः तत्तदुपसर्गद्योत्यार्थयुक्तविकारे

**दुष्कर** त्रि॰ दुःखेन क्रियते दुर्+कृ–कर्मणि खल्। कर्त्तुमशक्ये १दुःखेन करणीये "अपि यत् सुकरं कर्म तदप्येकेन दुष्करम्" मनुः "मुग्धे! दुष्करमेतदित्यतितरा मुक्ता सहायं बलात्" अमरुश॰। २आकाशे न॰ शब्दार्थकल्पतरुः तस्यानन्तत्वेन दुष्करत्वात्। भावे खल्। ३दुःखेन करणे न॰।

**दुष्कर्मन्** न॰ दुष्टं कर्म प्रा॰स॰। १पापे। दुष्कर्मभिश्च मनुजो नाशं यास्यति दुर्मतिः" भा॰उ॰ १२अ॰ "दुष्कर्मजान्यथा रोगा यान्ति चैव क्रमात् शमम्। जपैः सुरार्चनैर्होमैर्दानैस्तेषां क्षयो भवेत्" शातातपः। दुःस्थितं कर्मास्य प्रा॰ब॰। २पापकर्मकारके त्रि॰ "ततो वसति दुष्कर्मा नरके शाश्वतीः समाः" भा॰उ॰१२१अ॰।

**दुष्काल** पु॰ दुष्टः कालः प्रा॰स॰। निन्दिते काले। यस्य वः कालोविहितस्तस्य ततो वैलक्षण्ये कालस्य दुष्टता २प्रलये च। दुःसहो कालः कलनमस्य प्रा॰ब॰। ३शिवे "अकालश्चातिकालश्च दुष्कालः कालएव च" भा॰शा॰ २८६ अ॰शिवनामोक्तौ।

**दुष्कुल** न॰ दुष्टं कुलम् प्रा॰स॰। १निन्दिते कुले "अन्त्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपि" मनुः। दुःस्थं कुलमस्य प्रा॰ब॰। २निन्दितकुलजाते त्रि॰ "मदमूर्खताभिमाना दुष्कुलनैश्वर्यसंयुक्ताः" प्रा॰द॰ दुष्कुले भवः यत् ख। दुष्कुलीन, ढक् दौष्कुलेय निन्द्यकुलभवे त्रि॰

**दुष्कृत** न॰ दुष्टं कृतम् प्रा॰स॰। १पापे "दातव्यं दुष्कृतं किञ्चित् तत्सर्वं प्रतिपद्यते। निपानकर्त्तुः स्नात्वा तु दुष्कृतांशेन लिप्यते" मनुः २तज्जनके कर्मणि च "यथा यथा मनस्तस्य दुष्कृतं कर्म गर्हति" मनुः तदस्यास्ति इनि। दुष्कृतिन् तद्युक्ते "पुनःपुनर्दुष्कृतिनं निनिन्द" रघुः।

**दुष्कृति** त्रि॰दुष्टा कृतिरस्य प्रा॰ब॰। दुष्कर्मकारके "पादस्पर्शस्तु रक्षांसि दुष्कृतीनवधूननम्" मनुः प्रा॰स॰। २पापे स्त्री

**दुष्क्रीत** त्रि॰ दुष्टं क्रीतम् प्रा॰स॰। रूपसंख्यादिकमपरीक्ष्य क्रीते क्रीतानुशयशब्दे दृश्यम् "क्रीत्वा मूल्येन यो द्रव्यं दुष्क्रीतं मन्यते क्रयी" नारदः। [अमरः।

**दुष्खदिर** पु॰दुष्टः खदिरः प्रा॰स॰। कालस्कन्धे क्षुद्रखदिरभेदे

**दुष्ट** त्रि॰ दुष–क्त। १दुर्वृत्ते २अधमे विप्रः। ३दोषाश्रिते च दोषशब्दे वक्ष्यमाणव्यभिचारादीनामन्यतमयुक्ते ४हेतौ। ५पित्तादिदोषयुक्ते ज्ञानकारणे नेत्रादौ यथा कथञ्चित् ६दोषयुक्ते च त्रि॰ ७कुष्ठे न॰ (कुड़) ख्याते शब्दच॰। "त्वाष्ट्रो दुष्टः प्रियोऽस्यासीत्" रघुः "दुष्टः शब्दः स्वरतो वर्णतो वा" महाभाष्यधृता श्रुतिः।

**दुष्टचारिन्** त्रि॰ दुष्टं चरति चर–णिनि। दोषयुक्तकर्मकारिणि "अथ यत्नैनमासीनं शङ्केरन् दुष्टचारिणः" भा॰वि॰४अ॰।

**दुष्टगज** पु॰ नित्यकर्म॰। गम्भीरवेदिनि गजे हेमच॰।

**दुष्टनु** त्रि॰ दुष्टा तनुरस्य प्रा॰ब॰ वेदे षत्वम्। दुष्टदेहयुक्ते "वृथा किल त्वा दुष्टनो! जघिवानृक्ष न क्रतवः" अथ॰ ४।७।३ लोके तु दुस्तनु इत्येव तत्रार्थे

**दुष्टयोग** पु॰ कर्म॰। १वैधृतिव्यतीपातादि योगे तस्य स्नानदानाद्यतिरिक्तकर्मसु वर्ज्यत्वमशुभसूचकत्वञ्च मू॰चि॰नाना-स्थाने उक्तं यथा

"तुल्यांशुजालसम्पर्कात् तयोस्तु प्रवहाहतः। तद्दृक्क्रोधभवो वह्निर्लोकाभावाय जायते। विनाशयति पातोऽस्मिन् लोकानामसकृद् यतः। व्यतीपातः प्रसिद्धोऽयं संज्ञाभेदेन वैधृतिः। स कृष्णो दारुणवपुर्लोहिताक्षो महोदरः। सर्वानिष्टकरो रौद्रो भूयो भूयः प्रजायते। आद्यन्तकालयोर्मध्यः कालोज्ञेयोऽतिदारुणः। प्रज्वलज्ज्वलनाकारः सर्वकर्मसु गर्हितः। एकायनगतं यावदर्केन्द्वोर्मण्डलान्तरम्। सम्भवस्तावदेवास्य सर्वकर्मविनाशकृत्। व्यतीपातत्रयं घोरं गण्डान्तत्रितयं तथा। एतद् भसन्धित्रितयं सर्वकर्मसु वर्जयेत्"

२अरिष्टसूचके गोचरविलग्नादिस्थग्रहयोगभेदे च

**दुष्ट(स्त)र** त्रि॰ दुःखेन तीर्यतेऽसौ कर्मणि खल् वेदे सुषामादेराकृतिगणत्वात् षत्वम्। "चर्त्तं त्यं मरुतः पतृषु दुष्टरम्" ऋ॰१।५४।१४ लोके तु न षत्वम् "तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्" रघुः।

**दुष्टरक्तक** त्रि॰ दुष्टा रक्ता च इगस्य। पित्तादिदोषजरक्तरोगके। "दोचितः स्त्रीप्रसङ्गेन जायते दुष्टरक्तक" शातातपेन तत्कर्मपाक उक्तः।

**दुष्टरीतु** पु॰ दुर्+तृ–तुन् वेदे इट् दीर्घश्च षत्वम्। दुःखेन तरणीयेऽहिंस्ये "तुविग्रवे वज्रये दुष्टरीतवे" ऋ॰२।२१। २। लोके तु दुस्तर इत्येव।

**दुष्टवृष** पु॰कर्म॰। शक्तत्वेऽपि अधुर्यहे वृषे (गड़िया) ख्याते हेमच॰। [शब्दे दृश्यम्।

**दुष्टव्रण** पु॰ नित्यक॰। अचिकित्स्यनीये व्रणभेदे व्रणशब्दे

**दुष्टसाक्षिन्** पु॰ कर्म॰। नारदाद्युक्ते असाक्षित्वप्रयोजकदोष

युक्ते साक्षिणि । साक्षिणोदोषाश्च नारदेनोक्ताः यथा "यस्मात्मदोषदुष्टत्वादस्वस्थ इव लक्ष्यते । स्थानात् स्थानान्तरं गच्छेदेकैकञ्चानुधावति । कासत्यकस्माच्च भृशमभीक्ष्णं निःश्वसित्यपि । विलिखत्यवनीं पद्भ्यां बाहू वासश्च धूनयेत् । भिद्यते मुखवर्णोऽस्य ललाटं स्विद्यते तथा । शोषमागच्छतश्चोष्ठावूर्द्ध्वं तिर्य्यक् च वीक्षते । त्वरमाण इवाबद्धमपृष्टो बहु भाषते । कूटसाक्षी स विज्ञेयस्तं पापं विनयेद्भृशम्" । अबद्धमसम्बद्धम् । विनयेच्छिक्षयेत् यथा कौटसाक्ष्याद्बिभेतीत्यर्थः । न तु दण्डयेदित्यर्थः । प्राकृतवैकृतिकविकारविवेकस्य दुःशकत्वात् सम्भावनामात्रेण च दण्डनस्यान्याय्यत्वादिति मिता० उक्तम् । मदनरत्ने त्वाविद्धमिति पठित्वा आकुलमिति व्याख्यातम् । शङ्खलिखितावपि "मन्त्रिभिः शास्त्रसामर्थ्याद्दुष्टलक्षणं शाख्यन्निर्य्यक्प्रेक्षते समन्तादेवावलोकयति । अकस्मान्मूत्रं पुरीषं विसृजति देशाद्देशं गच्छति पाणिना पाणिं पीडयति नखाच्छिनत्ति मुखमस्य विवर्णतामेति प्रस्विद्यति चास्य ललाटञ्च चक्षुर्न च वाचं प्रतिपूजयत्यकस्माद्ददाति, प्रशंसति पुनः पुनरन्यमपवदति बहिर्निरीक्षते मुखं परामृशति शिरः प्रकम्पयत्योष्ठौ निर्भुजति सृक्कणी परिलेढि अतिविस्मितः कर्म्मस्वमहत्स्वपि भ्रुवौ संहरति तूष्णीं ध्यायति पूर्व्वोत्तरविरुद्धं व्याहरति एवमादिदुष्टलक्षणं क्रुद्धस्य च स्वामिनोऽन्यत्र प्रकृतिशीलादिति" अकस्मादिति तूष्णीमिति च यथायोगमनेकत्र सम्बन्धनीयम् । अन्यत्र प्रकृतिशीलादिति । प्रकृत्या स्वभावात् शीलन्तिर्य्यक्प्रेक्षणादिधर्म्मो यस्य स तथोक्तस्ततोऽन्यत्रैतानि दुष्टक्रुद्धलक्षणानि, एते अवान्तरवैलक्षण्यस्य दुर्ज्ञेयत्वादित्यवधानेन परीक्ष्य वस्तुतत्त्वानुसरणं करणीयमिति सूचितम्" वीरमि०

मुनिवाक्ये अन्येऽपि साक्षिदोषा असाक्षिलक्षणोक्त्या वीरमि० भङ्ग्यादर्शिता यथा

मनुः "नार्थसम्बन्धिनो नाप्ता न सहाया न वैरिणः । न दृष्टदोषाः कर्त्तव्या न व्याध्यार्त्ता न दूषिताः । न साक्षी नृपतिः कार्य्यो न कारुककुशीलवौ । न श्रोत्रियो न लिङ्गस्थो न सङ्गेभ्यो विनिर्गतः । नाध्यधीनो न वक्तव्यो न दस्युर्न विकर्म्मकृत् । न वृद्धो न शिशुर्नैको नान्त्यो न विकलेन्द्रियः । नार्त्तो न मत्तो नोन्मत्तो न क्षुत्तृष्णोपपीडितः । न श्रमार्त्तो न कामार्त्तो न क्रुद्धो नापि तस्करः" इति । "अत्र सर्व्वविशेषणैरसत्यसम्भावना विस्मरणादिकमसाक्ष्यनिमित्तमुपलक्ष्यते । अतएव वृद्धविकलेन्द्रियविकर्म्मकृत्तस्करादीनां गोवृषन्यायेन पुनरुपादानम् । अत्र बहवः शब्दाः स्पष्टार्थाः । अन्ये मेधातिथ्यनुसारेण विव्रियन्ते । अर्थसम्बन्धिन उत्तमर्णाधमर्णाद्याः उत्तमर्णो ह्यधमर्णवचनेन पराजीयमान स्तदानीमेव रोषाविष्टोऽधमर्णादृणं प्रत्यादातुं प्रवर्त्तेतेति तच्चित्तानुवृत्तिरधमर्णस्य तदनुगुणकौटसाक्ष्यहेतुत्वेन संभाव्यते । उत्तमर्णो निर्धनेऽधमर्णे स्वसाक्षितया धनं प्राप्य स्वं तदर्पयिष्यतीति बुद्ध्या तदनुगुणवादी सम्भाव्यते । तथार्थः प्रयोजनन्तत्सम्बन्धिनो वादिप्रतिवादिनोरन्यतरस्मात् येषां स्वप्रयोजनं सिसाधयिषितन्तेऽप्युपकारगन्धात् साक्ष्यानर्हाः इत्यादि । सर्व्वत्र कौटसाक्ष्यसम्भावनोह्या । दृष्टदोषा अन्यत्र कृतकौटसाक्ष्याः । व्याध्यार्त्ता वचनविसंवादापादकव्याधिपीडावन्तः । दूषिता अभिशस्ताः । नृपतेरसाक्षित्वमकृताभिप्रायेणातो न प्राक्तननारदोक्तिविरोधः । लिङ्गस्थोऽपत्यादिः । सङ्गेभ्यो विनिर्गतः परित्यक्तः पित्रादिगुरुजनसंसर्गात् वृत्तानुपसेवनात्तस्याऽसत्यसम्भावना । अध्यधीनो बन्धकीकृतः तस्य तदाज्ञावशवर्त्तित्वात् । वक्तव्यो निन्दास्पदम् विकर्म्मकृत् अधर्म्मभीरुः । वृद्धविकलेन्द्रिययोर्वार्द्धकस्वभावहेतुकेन्द्रियवैकल्येन भेदः । आर्त्तः शोकेन । नारदोऽपि "दासनैःकृतिकाश्रद्धेयवृद्धस्त्रीबालचाक्रिकाः । मत्तोन्मत्तप्रमत्तार्त्तकितवग्रामयाजकाः । महापथिकसामुद्रवणिक्प्रव्रजितातुराः । व्यङ्गैकश्रोत्रियाचारहीनक्लीवकुशीलवाः । नास्तिकव्रात्यदाराग्नित्यागिनोऽयाज्ययाजकाः । एकस्थालीसहायारिचरज्ञातिसनाभयः । प्राग्दृष्टदोषशैलूषविषजीव्यहितुण्डिकाः । गरदाग्निदकीनाशशूद्रापुत्त्रोपपातिनः । क्लान्तसाहसिकश्रान्तनिर्धूतान्त्यावसायिनः । भिन्नवृत्तासमावृत्तजडतैलिकमूलिकाः । भूताविष्टनृपद्विष्टवर्णनक्षत्रसूचकाः । अघशंस्यात्मविक्रेतृहीनाङ्गभगवृत्तयः । कुनखी श्यावदन् श्वित्री मित्रध्रुक्शठशौण्डिकाः । ऐन्द्रजालिकलुब्धोग्रश्रेणीगणविरोधिनः । वधकश्चित्रकृत् मङ्खी पतितः कूटकारकः । कुहकः प्रत्यवसितस्तस्करो राजपूरुषः । मनुष्यपशुमांसास्थिमधुक्षीराम्बुसर्पिषाम् । विक्रेता ब्राह्मणश्चैव द्विजो वार्द्धुषिकश्च यः । च्युतः स्वधर्मात्कुलिकः सूचको हीनसेवकः । पित्रा विवदमानश्च भेदकृच्चेत्यसाक्षिणः । श्रेण्यादिषु तु वर्गेषु कश्चिच्चेद्द्वेष्यतामियात् । तस्य तेभ्यो न साक्ष्यं

स्याद्द्वेष्टारः सर्वं एव ते"। नैकृतिकः परापकारशीलः। चाक्रिकस्तैलिकः। प्रमत्तः सदाऽनवहितः। महापथिको महापथगामी। सामुद्रवणिग्वहित्रवाही। एकः श्रोत्रियो द्वयोरननुमतः। एकः, श्रोत्रिय इति पृथग्वा प्रायश्चोक्तं च प्रागेव तत्। अपरार्केण तु युग्मश्चेति पठित्वा युग्मौ द्वावित्ति व्याख्यातम्। एकस्थालीसहाय एकपाकभोजीति। सहाय्यन्यतरसाहाय्यकारी, मिश्रचण्डेश्वरौ। मदनरत्नाकरस्तु एकस्थाल्योः सहाय इति विशेषणद्वयं पृथक्कृत्य एकस्थाली स्थाल्यधिकरणकः पाकोलक्ष्यते। स एको यस्येत्येकस्थालीति व्याचख्यौ। समासान्तविधेरनित्यत्वादेकस्थालीत्यत्र "नद्यृतश्चेति" पा० न कप्। अर्द्धपिप्पलीत्यादिवत् ह्रस्व इति च समादधे। अरिचरः भूतपूर्वः शत्रुः। भूतपूर्वे चरट्। कल्पतरौ स्त्रस्तधर इति पठित्वा शस्त्रधर इति व्याख्यातम्। ज्ञातयः सगोत्राः सनाभयो मातुलतत्सुतमातृष्वस्रीयादयः। शैलूषः स्त्रीणां नर्तयिता। कुशीलवस्तु रङ्गोपजीवी नट इति भेदः। विषजीवी विषक्रयजीवीति मदनरत्ने। विषवद्योपजीवीति रत्नाकरे। आहितुण्डिकः सर्पक्रीडोपजीवी व्यालग्राही। कीनाशः कर्कशः क्षुद्रो वा। कृपण इति तु मदनरत्ने। उपपातिन उपपातकीति कल्पतरुः। मदनरत्ने तूपपातक इति पठितम्। उप समीपं पातकं यस्येति विग्रहः पातकयुक्त इति व्याख्यातञ्च। क्लान्तोऽतिखिन्नः श्रान्तोऽनवरतकर्मकारीति मदनरत्ने। अशान्त इति पठित्वाऽयोग्यकर्मकारीति रत्नाकरे। निर्धूतो बान्धवैस्त्यक्त इति मदनरत्ने। पामरान्त्यजम्लेच्छादिभिर्निःसारित इति रत्नाकरे। मूलिकः लोभमयशून्य इति भवदेवः। मूलं विप्रलम्भस्तत्कारीति तु युक्तम्। अपरार्केण तु पौपिक इति पठित्वा पौपिकः पूपादिविक्रयीति व्याकृतम्। वर्षसूचको वर्षशकुनवेदी। नक्षत्रसूचको ज्यौतिषिकः। अघशंसी परकीयपापप्रकाशकः। हीनाङ्ग उचितपरिमाणन्यूनाङ्गः। व्यङ्गस्तु खिलाङ्गुल्यादिरिति भेदः। भगदत्तिर्भार्यादास्यादिसम्भोगशुल्कोपजीवी शङ्खी तु प्रभवन्नंनजीवीति मदनरत्नरत्नाकरयोः। कुहको दाम्भिकः। प्रत्यवसितः प्रव्रज्यादिच्युतः। कुलिको राज्ञा व्यवहारपरिच्छेदकतया नियुक्तः। अस्य च साक्षित्वकरणे निषेधो, विधिस्तु कृतसाक्ष्य इति कल्पतरुः। मदनरत्ने तु कुलं ब्राह्मणादिगणस्तदधिकारी कुलिक इति व्याख्यातम्। सूचको राज्ञा परदोषान्वेषणपूर्वकं स्वस्मै तन्निवेदने नियुक्तः। भेदकृन्मित्रादिप्रीतिभङ्गकर्त्ता। श्रेण्यादिविरुद्धस्ताथसमर्थः। येषु श्रेण्यादिषु यस्यैकोऽपि द्वेषयुतां शत्रुतामाप्तस्तदीयविवादे तच्छ्रेण्यादिनिविष्टाः सर्वे एव न साक्षिणस्तत्र हेतुर्द्वेष्टारः सर्वएव त इति तच्छ्रेण्यान्तर्गतैकद्वेष्यनुरोधकृतवैरनिर्यातनार्थमन्यथावादित्वसम्भवात्। अतएव नारदः "बालोऽज्ञानादसत्यात् स्त्री पापाभ्यां स्याच्च कूटकृत्। विब्रूयाद्बान्धवः स्नेहाद्वैरनिर्यातनादरिरिति"। कात्यायनः "तद्वृत्तिजीविनो ये च तत्सेवाहितकारिणः। तद्वन्धु सुहृदो भृत्या आप्तास्ते तु न साक्षिणः। मातृष्वसुःसुताश्चैव पितृष्वसृसुतास्तथा। मातुलस्य सुताश्चैव सोदर्यसुतमातुलाः। एते सनाभयः प्रोक्ताः साक्ष्यन्तेषु न योजयेत्। कुल्याः सम्बन्धिनश्चैव विवाह्यो भगिनीपतिः। पिता बन्धुः पितृव्यश्च श्वशुरो गुरवस्तथा"। तथा बृहस्पतिः "मातुः पिता पितृव्यश्च भार्याभ्रातृमातुलौ। भ्राता सखा च जामाता सर्ववादेष्वसाक्षिणः। परस्त्रीपानसक्ताश्च कितवाः सर्वदूषकाः। उन्मत्तार्त्ताः साहसिका नास्तिकाश्च न साक्षिणः" इति। अत्र मातृष्वस्रादिशब्दानां सम्बन्धिशब्दत्वादर्थिप्रत्यर्थिनोरन्यतरस्य एतादृशसम्बन्धिनो न साक्षिणः सम्बन्धिनि स्नेहादन्यत्र वैरसम्भवादिति ध्येयम्। शङ्खलिखितौ "शुल्कगुल्माधिकृतौ दूतो वेष्टितशिराः स्त्रियोगुरुकुलवासिनः परिव्राजकवानप्रस्थनिर्ग्रन्थाः शङ्खिनः व्यालग्राहिणः" इति अत्राऽसाक्षिणः इति प्रकृतम् शुल्काधिकृतः शुल्कग्रहणस्थानाधिकारी। गुल्मः स्वस्थाननिवेशितः पदातिसमूहस्तदधिकृतः। वेष्टितशिराः उद्धतवेषोमूर्द्धव्याध्यभिभूतो वा इतरे प्रसिद्धा व्याख्याततराश्च। अनेन प्रपञ्चेन लोभादिकमसाक्षित्वनिमित्तमेव व्यक्तीकृतम्। यथाह मनुः "लोभान्मोहाद्भयात् क्रोधान्मैत्र्यात्कामात्तथैव च। अज्ञानाद्बालभावाच्च साक्षी वितथ उच्यते" इति।

**दुष्ठु** अव्य० दुर्+स्था—कु सुषामा० षत्वम्। १निन्दायाम् अमरः। २अविनीते त्रि० उणादिको० ततः उद्गाता० भावे अञ्। दौष्ठव अविनये न०।

**दुष्पतन** न० दुष्टं पतत्यनेन दुर्+पत—करणे ल्युट्। १अपशब्दे त्रिका०। अपशब्दप्रयोगस्य दुरदृष्टजनकतया पतनहेतुत्वात् तथात्वम्। "नापभाषितवै न म्लेच्छितवै म्लेच्छो ह वा नाम यदपशब्दः" इत्यादिश्रुत्या हि अपशब्दप्रयो-

गस्य निषिद्धत्वेन तत्प्रयोगस्य पापजनकत्वं सूचितम्। भावे ल्युट्। २दुःखेन पतने न०।

**दुष्पत्र** पु० दुःखदं पत्रमस्य प्रा०ब०। चोरनामगन्धद्रव्ये अमरः

**दुष्पद** त्रि० दुःखेन पद्यते दुर्+पद—कर्मणि खल्। दुःखेन प्राप्ये प्राप्तुमशक्ये "सुतो हि चक्रेण रथ्या दुष्पदा दृणक्" ऋ० १।५३।८ "दुष्पदा दुष्पदेन प्राप्तुमशक्येन चक्रेण" भा० तृतीयास्थाने छान्दस आच्।

**दुष्पराजय** त्रि० दुःखेन पराजीयतेऽसौ दुर्+परा+जि कर्मणि खल्। १जेतुमशक्ये दुःखेन जेतव्ये २धृतराष्ट्रपुत्रभेदे पु० "उग्रश्रवा उग्रसेनः सेनानीर्दुष्पराजयः" भा०आ० ११७अ० तत्पुत्रोक्तौ।

**दुष्परिग्रह** त्रि० दुःखेन परिगृह्यतेऽसौ दुर्+परि+ग्रह—कर्मणि खल्। १परिग्रहीतुमशक्ये "लोकाधाराः श्रियो राज्ञां दुरापा दुष्परिग्रहाः" कामन्द०। प्रा०स०। २निन्द्यभार्य्यायाञ्च। दुःस्थितः परिग्रहो भार्य्या यस्य प्रा०ब०। ३दुष्टभार्य्ये के पु०

**दुष्परिहन्तु** त्रि० दुर्+परि+हन—खलर्थे तुन्। १दुःखेन नाशयितव्ये २दुष्परिहार्ये च "यक्ष्मता नो दुष्परिहन्तु गम्म" ऋ०२।२३।६ "दुष्परिहन्तु हन्तुमशक्यम्" भा०

**दुष्पर्श** त्रि० दुर्+स्पृश—कर्मणि खल् वा विसर्गलोपः। १दुःखेन स्पर्शनीये स्प्रष्टुमशक्ये २दुरालभायां स्त्री अमरः तत्रार्थे पु० भरतः।

**दुष्पान** त्रि० दुःखेन पीयतेऽसौ "आतो युच्" पा० खलर्थे कर्मणि युच्। दुःखेन पेये १पातुमशक्ये। भावे युच्। २दुःखेन पाने न०।

**दुष्पुरुष** पु० प्रा०स०। निन्द्ये पुरुषे ततः ब्राह्मणा० स्वार्थे भावे कर्मणि वा ष्यञ्। दौष्पुरुष्य तदर्थे पु० तद्भावे तत्कर्मणि तु न०।

**दुष्पूर** त्रि० दुर्+पूरि—कर्मणि खल्। १पूरयितुमशक्ये दुःखेन पूरणीये। "काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः" गीता २अनिवार्ये च "कामरूपेण कौन्तेय! दुष्पूरेणानलेन च" गीता

**दुष्प्रकाश** त्रि० दुष्टः प्रकाशः प्रा०स०। विरोधिलक्षणया अन्धकारे "पापस्य लोको निरयो दुष्प्रकाशो नित्यं दुःखं शोकभूयिष्ठमेव" भा०शा० ७३अ०।

**दुष्प्रकृति** त्रि० दुःस्था प्रकृतिरस्य प्रा०ब०। १दुष्टस्वभावे "त्वं तु दुष्प्रकृतिर्मूढो महायुद्धेष्वकोविदः" भा०क० ४०अ०। प्रा०स०। २निन्दायां प्रकृतौ निन्द्ये स्वभावे स्त्री

**दुष्प्रजस्** त्रि० दुष्टा प्रजाऽस्य असिच् समा०। १निन्द्यप्रजायुक्ते। प्रा०स०नासिच्। दुष्प्रजा २निन्द्यप्रजायां स्त्री

**दुष्प्रज्ञान** त्रि० दुःखेन प्रज्ञायतेऽसौ दुर्+प्र+ज्ञा—खलर्थे कर्मणि युच्। १ज्ञातुमशक्ये। दुष्टं प्रज्ञानं प्रा०स०। २निन्द्ये ज्ञाने न० "दुष्प्रज्ञानेन निरयाः बहवः समुदाहृताः" भा०शा० १२७अ०।

**दुष्प्रधर्ष** त्रि० दुष्करः प्रधर्षोऽस्य प्रा०ब०। १धर्षयितुमशक्ये दुःखेन धर्षणीये "सा दुष्प्रधर्षा मनसाऽन्यैः हंसैः" रघुः। २दुरालभायां ३खर्ज्जूर्य्याञ्च स्त्री राजनि०। ४धृतराष्ट्रपुत्रभेदे पु० "दुर्मुखो दुष्प्रधर्षश्च विवित्सुर्विकटः समः" भा० भी० ६४अ०। तत्र दुष्प्रहर्षश्चेति पाठान्तरम् भा०आ० ६४अ० तत्पुत्रोक्तौ तथोक्तेः

**दुष्प्रधर्षण** त्रि० दुर्+प्र+धृष—भाषायां युच्। १दुःखेन धर्षणीये धर्षयितुमशक्ये। "विन्दानुविन्दौ दुर्द्धर्षः सुबाहुर्दुष्प्रधर्षणः" भा०आ० ६७ उक्ते २धृतराष्ट्रपुत्रभेदे पु० ३खार्कायाम् स्त्री अमरः गौरा० ङीष्।

**दुष्प्रधर्षिणी** स्त्री दुष्प्रधर्षोऽस्त्यस्याः इनि ङीप्। १कण्टकार्यां राजनि० २वृहत्याम् भावप्र०।

**दुष्प्रवृत्ति** स्त्री प्रा०स०। दुष्टायां प्रवृत्तौ वार्त्तायां "तेषां सूर्पणखैवैका दुष्प्रवृत्तिहराऽभवत्" रघुः।

**दुष्प्रवेश** त्रि० दुष्करः प्रवेशोऽत्र प्रा०ब०। १दुःखेन प्रवेश्ये प्रवेष्टुमशक्ये "महर्षिगणसम्बाधं ब्राह्म्या लक्ष्म्या समन्वितम्। दुष्प्रवेशं महाराज! नरैर्धर्मबहिष्कृतैः" भा०व० १४५अ०। २कन्थारीवृक्षे स्त्री राजनि०।

**दुष्प्रहर्ष** त्रि० दुष्करः प्रहर्षोऽस्य प्रा०ब०। १दुष्करप्रहर्षयुक्ते २धृतराष्ट्रपुत्रभेदे पु० दुर्मदो दुष्प्रहर्षश्च विवित्सुर्विकटः समः" भा०आ० ६७अ०। तत्पुत्रोक्तौ

**दुष्म(ष्य)न्त** पु० १पौरवे भरतपितरि राजभेदे "‥"उपदानवी सुतान् लेभे चतुरस्त्वैलिकात्मजान्। दुष्मन्तमथ सुष्मन्तं प्रवीरमनघं तथा। दुष्मन्तस्य तु दायादो भरतो नाम वीर्य्यवान्। स सर्वदमनो नाम नागायुतबलो महान्। चक्रवर्त्ती सुतोजज्ञे दुष्मन्तस्य महात्मनः। शकुन्तलायां भरतोयस्य नाम्ना स्म भारताः। दुष्मन्तं प्रति राजानं वागुवाचाशरीरिणी। माता भस्त्रा पितुः पुत्रो येन जातः स एव सः। भरस्व पुत्रं दुष्मन्त! माऽवमंस्थाः शकुन्तलाम्। रेतोधाः पुत्र उन्नयति नरदेव! यमक्षयात्। त्वञ्चास्य धाता गर्भस्य सत्यमाह शकुन्तला" हरिवं० ३२अ०। अस्य शकुन्तलापरिवेदनकथा शकुन्तलाशब्दे दृश्या

तुर्वसुर्वंश्यमरुत्तकन्यायां सम्मतायां संवर्त्तर्षेः जाते नृपभेदे तत्कथा हरिवं० ३२अ० । तुर्वसुवंशवर्णने यथा "अनपत्यो मरुत्तस्तु राजा मरुत्तः कथितस्तव । अनपत्योऽभवद्राजा यज्वा विपुलदक्षिणः । दुहिता सम्मता नाम तस्यासीत् पृथिवीपतेः ! । दक्षिणार्थं तु सा दत्ता संवर्त्ताय महात्मने । दुष्मन्तं पौरवञ्चापि लेभे पुत्रमकल्मषम् । एवं ययातेः शापेन जरासंक्रमणे तदा । पौरवं तुर्वसोर्वंशः प्रविवेश नृपोत्तम ! । दुष्मन्तस्य तु दायादः करुत्थामः प्रजेश्वरः" । तस्यापत्यम् इञ् दौष्मन्ति भरते करुत्थामे च नृपभेदे

दु(दुः)स्थ त्रि० दुर्+स्था—क वा विसर्गलोपः । दुःखेन स्थिते "कल्यान्तदुःस्था वसुधा तथोहे" भट्टिः १कुक्कुटे २कुक्कुरे च पुंस्त्री मर्थार्थचि० स्त्रियां जातित्वात् ङीष् ।

दु(दुः)स्पृष्ट न० दुर् स्पृष्टम् प्रा०स० वा विसर्गलोपः । जिह्वाग्रादिना वर्णोच्चारणस्थानस्य ईषत्स्पर्शरूपे चाभ्यन्तरे वर्णोच्चारणप्रयत्ने तदस्यास्ति कारणत्वेन अच् । २तेनोच्चार्यवर्णे च "अचोऽस्पृष्टा यणस्त्वीषत् नेमस्पृष्टाः शलस्तथा" "दुस्पृष्टेति विज्ञेयो लकारः प्लुत एव च" पाणिनिशिक्षा । लकारस्य लकारादित्वेन दुस्पृष्टत्वमिति आकरे स्थितम् । [अदुहत् । दुदोह दुहितः ।

दुह वधे भ्वा०पर०सक०सेट् । दोहति दहित् अदोहीत्

दुह दोहने अन्तःस्थितद्रवद्रव्यस्याकर्षणेन बहिर्निस्सारणे अद०उभ०द्वि०कअनिट् । दोग्धि दुग्धे दुह्यात् अधोक्ष्यदुग्ध । अधुक्षत् अदुग्ध अधुक्षन्त अधुक्षाञ्च अदुह्महि दुदोह । दुदोहिथ दुदुहिव दुदुहे । दुह्यात् धोक्ष्यति ते । दोग्धव्यं दुह्यं दोह्यम् । दोग्धा दोहनं दुग्धम् । दोग्धुम् दुग्ध्वा संदुह्य । "यं सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे । भास्वन्ति रत्नानि महौषधीश्च पृथूपदिष्टां दुदुहुर्धरित्रीम्" कुमा० "यः पयो दोग्धि पाषाणम्" "पयोघटोध्नीरपि गा दुहन्ति" भट्टिः एककर्मविवक्षायाम् अस्यैककर्मकत्वमपि "दुदोह यत्तसिद्धयर्थं मग्ममुःसामलक्षणम्" मनुः "दुग्ध्वा पयः पत्रपुटे मदीयम्" रघुः । निःसारणमात्रे च "दुग्धेऽस्मै सर्वं कामं यो वाचो दोहः" का०उ० "न कर्मफलमाप्नोति योऽधर्मं दोग्धुमिच्छति" भा०व० ११३६श्लो० "यत्र धर्मदुघा भूमिः सर्वकामदुघा सती । दोग्धि स्मामीप्सितानर्थान् यजमानस्य सर्वदा" भाग० ४।१९।७ दुघुर्हति । अस्य गौणकर्मणि लकारादि "प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् । अप्रधाने दुहादीनां ण्यन्ते कर्त्तुश्च कर्मणः" इत्युक्तेः । "तेषु तेषु तु पात्रेषु दुह्यमाना वसुन्धरा" हरिवं० ८१ श्लो० अस्य कर्मकर्त्तरि गौणकर्मणः कर्तृत्वविवक्षायाम् केवलं तङ् न यक् । गौःपयो दुग्धे । वा चिण् । अदोहि अधुक्षत अदुग्ध सि०कौ०

दुहादि पु० गौणे कर्मणि लकारविधानार्थे धातुसमूहे स च "दुह्याच्पच्दण्ड्रुधिप्रच्छि चिब्रूशासुजिमन्थ्मुषाम् । कर्मयुक् स्यादकथितं तथा स्यात् नीहृकृष्वहाम्" व्या० कारिकायां पठितः दुहप्रभृतिः मुषपर्यन्तः धातुसंघः । अस्य कस्यापि कारकसंज्ञाऽप्राप्तौ प्रधानकर्मोपयोगिनः कर्मसंज्ञा "दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ । ब्रुविशासि गुणेन च यत् सचते तदकीर्त्तितमाचरितं कविना" महाभाष्यकृतोक्तेः । [उदा० ।

दुहि पु० दुह—धातुनिर्देशे इक् । दुहधातौ दुहादिशब्दे

दुहितुःपति पु० ६त० षष्ठ्या वा अलुक् स० । जामातरि पक्षे लुक् । दुहितृपतिरप्यत्र ।

दुहितृ स्त्री दुह—दह वा तृच् । "नप्तृ नेष्टृत्वष्टृहोतृ पोतृभ्रातृजामातृमातृपितृदुहितृ" उणा० नि० । स्वजन्यस्त्रियां स्त्रीयन्ततौ ऋदन्तत्वेऽपि स्वस्रादित्वात् न ङीप् । तृणन्तत्वाभावात् सर्वनामस्थाने परे न वृद्धिः दुहितरौ दुहितरः इत्यादि प्रियादिषु पाठात् अस्मिन् शब्दे परे पूर्वस्थितस्य उक्त पुंस्कस्त्रीलिङ्गस्य विशेषणशब्दस्य न पुंवत् जातादुहितृकः । "मातुर्दुहितरः शेषमृणात् ताभ्य ऋतेऽन्वयः" याज्ञ० । "मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत्" मनुः । कन्याशब्देऽनुक्तं तद्दानमात्रफलादिकमधिकमुच्यते ।

"कृत्वा परीक्षां कान्तस्य वृणोति कामिनी वरम् । वराय गुणहीनाय वृद्धाय ज्ञानिने तथा । दरिद्राय च मूर्खाय रोगिणे कुत्सिताय च । अत्यन्तकोपयुक्ताय चात्यन्तदुर्मुखाय च । जडाय चैव मूकाय क्लीबतुल्याय पापिने । ब्रह्महत्यां लभेत् सोऽपि यः स्वकन्यां ददाति च । शान्ताय गुणिने चैव यूने च विदुषेऽपि च । वैष्णवाय सुतां दत्त्वा दशवापीफलं लभेत्" । कन्याविक्रये दोषो यथा "यः कन्यापालनं कृत्वा करोति विक्रयं यदि । विपत्तौ धनलोभेन कुम्भीपाकं स गच्छति । कन्यामूत्रपुरीषञ्च तत्र भक्षति पातकी । कृमिभिर्दंशितः काकैर्यावदिन्द्राश्चतुर्दश । मृतस्य व्याधयोनौ च स लभेज्जन्म निश्चितम् । विक्रीणीत

मांसभारं वहत्येव दिवानिशम्” कन्यादानफलं यथा “दशवापीसमा कन्या दीयते ब्राह्मणाय या। वेद-ज्ञाय पवित्राय चापतिग्रहशालिने। सन्ध्यावते वेद पाठकारिणे सत्यवादिने। अस्मै प्रदत्ता कन्या च दश वापीफलप्रदा। त्रिसन्ध्याकारिणे सत्यवादिने प्रतिग्रह-शालिने। वेदज्ञाय च विप्राय दत्ताष्टफलदायिनी। प्रतिग्रहग्रस्तहीनाय सन्ध्याहीनाय नित्यशः। मूर्खाय दत्ता कन्या च सा चतुःफलदायिनी। परदारग्रहीताय याजकाय द्विजाय च। शठाय सन्ध्याहीनाय वाप्यैकफलदा सुता। त्यक्तसन्ध्याय गायत्रीविहीनाय शठाय च। विप्रोद्भवाय दत्ता सा वाप्यर्द्धफलदा सुता। पापिने शूद्रजाताय विप्रचेतोद्भवाय च। दत्ता चाण्डालतुल्याय कन्या सा नरकप्रदा। विष्णुभक्ताय विदुषे विप्राय सत्यवादिने। जितेन्द्रियाय दत्ता या नियुतवापीफलप्रदा। धृतिवर्षसहस्राणि दिव्यरूपं विधाय च। एवम्भूताय दत्त्वा च मोदते विष्णुमन्दिरे। दत्त्वा कन्यां सुशीलाञ्च हराय हरयेऽथ वा। नारायणस्वरूपञ्च भवेदेव श्रुतौ श्रुतम्। विष्णुभक्तो यदा कन्यां ददाति विष्णुप्रीतये। स लभेद्वरिदास्यञ्च भुवं विप्रोद्भवाय च” ब्रह्म०वै०प्र०ख०।

**दु(दो)ह्य** त्रि० दुह–गौणे कर्मणि वा क्यप् पक्षे ण्यत्। १दोहनगौणकर्मणि गव्यादौ गौणकर्माविवक्षायां दोहनप्रधानकर्मणि २दुग्धादौ च।

**दु(द्रु)ह्यु** पु० शर्मिष्ठायां जाते ययातिपुत्रभेदे। “अन्वग्रज्ञात् प्रजां सर्वां ययातिरपराजितः। तस्य पुत्रा महेष्वासाः सर्वे समुदिता गुणैः। देवयान्यां महाराज! शर्मिष्ठायाञ्च जज्ञिरे। देवयान्यामजायेतां यदुस्तुर्वसुरेव च। दुह्युश्चानुश्च पूरुश्च शर्मिष्ठायां प्रजज्ञिरे” भा० आ० ७५अ० हरिवंशे तु ३०अ० द्रुह्युरिति अणुरिति पाठः। लिपिकरप्रमादात् द्विधा पाठः “तेषां ययातिः पञ्चानां विजित्य वसुधामिमाम्। देवयानीमुशनसः सुतां भार्य्यामवाप सः। शर्मिष्ठामासुरीञ्चैव तनयां वृषपर्वणः। यदुञ्च तुर्वसुञ्चैव देवयानी व्यजायत। द्रुह्युञ्चाणुञ्च पूरुञ्च शर्मिष्ठा वार्षपार्वणी”।

तस्य राज्यदेशश्च तत्रैव ३१अ० उक्तो यथा “सप्तद्वीपां ययातिस्तु जित्वा पृथ्वीं ससागराम्। व्यभजत् पञ्चधा राजा पुत्राणां नाहुषस्तदा। दिशि दक्षिणपूर्वस्यां तुर्वसुं मतिमान्नृपः। प्रतीच्यामुत्तरस्याञ्च द्रुह्युञ्चानुञ्च नाहुषः। दिशि पूर्वोत्तरस्यान्तु यदुं स्वेष्वयोजयत्। मध्ये पूरुञ्च राजानमभ्यषिञ्चत् स नाहुषः। तैरियं पृथिवी सर्वा सप्तद्वीपा सपत्तना। यथाप्रदेशमद्यापि धर्मेण परिपाल्यते”। तद्वंशवर्णनञ्च तत्रैव ३२अ० यथा “द्रुह्योश्च तनयो राजन्! बभ्रुः सेतुश्च पार्थिवः। अङ्गारः सेतुपुत्रश्च मरुतां पतिरुच्यते। यौवनाश्वेन समरे कृच्छ्रेण निहतो बली। युद्धं सुमहदासीत् मासान् परि चतुर्दश। अङ्गारस्य तु दायादो गान्धारो नाम पार्थिवः। ख्यायते यस्य नाम्ना वै गान्धारविषयो महान्। गान्धारदेशजाश्चैव तुरगा वाजिनां वराः” तस्य पितुर्ययातेर्जरायाः अग्रहणे शापकथा भा०आ० ८४अ० “ययातिरुवाच। “यत्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि। तस्माद्द्रुह्यो! प्रियः कामो न ते सम्पत्स्यते क्वचित्। यत्राश्वरथमुख्यानामश्वानां स्याद्गतं न च। हस्तिनां पीठकानाञ्च गर्दभानान्तथैव च। वस्तानाञ्च गवाञ्चैव शिबिकायास्तथैव च। उडुपप्लवसन्तारो यत्र नित्यं भविष्यति। अराजभोजशब्दं त्वं तत्र प्राप्स्यसि सान्वयः”

**दू** खेदे दिवा०आत्म०अक०सेट्। दूयते अदविष्ट। दुदुवे। ओदित् दूनः कविकल्पद्रुमः पा० दुनोतेरेव नत्वदीर्घौ इति भेदः। “तया हीनं विधातर्मां कथं पश्यन् न दूयसे” रघुः। “न दूये सात्वतीसूनुर्यन्मह्यमपराध्यति” माघः। उपतप्तीकरणे सक०। “दूयते दीनं खलजनः” दुर्गादासः।

**दूडभ** त्रि० दुःखेन दभ्यतेऽसौ दुर्+दन्भ–कर्मणि खल्। “दुरो दाशनाशदभध्येषूत्वमुत्तरपदादेः ष्टुत्वञ्च” पृषो० पा० गणसूत्रोक्तकर्म नि० नलोपः। दुःखेन दम्भनीये

**दूडाश** त्रि० दुःखेन दाश्यते दुर्+दाश–कर्मणि खल्। दूडभशब्दोक्त पा०ग० सूत्रेण सिद्धम्। दुःखेन हिंसनीये

**दूढी** त्रि० दुष्टं ध्यायति दुर्+ध्यै–चिन्तायां कर्त्तरि सम्प० भावे वा क्विप्। दूडभशब्दोक्तकार्य्यम् पा०ग० सूत्रे ध्यायतेर्धातोर्निर्देशात्। १दुष्टं ध्यायिनि २दुष्टायां बुद्धौ स्त्री “अस्माकं शंसो अभ्यस्तु दूढ्यः” ऋ० १।९४।८। “वधैर्दुःशंसा अप दूढ्यो जहि” ९।१९।८। “दूढ्यम्। दुष्टं ध्यायिनि

**दूढ्य** त्रि० दुष्टं ध्यायति दुर्+ध्यै–क। दूडभशब्दवत् साध्यम्।

**दूणाश** त्रि० दुःखेन नाश्यते दुर्+नाशि–कर्मणि खल् दूडभशब्दवत् साध्यम्। १दुःखेन नाशनीये। “दूणाशेयं दक्षिणा पार्थवानाम्” ऋ०६।२७।२८ “दूणाशा दुर्नाशा केनापि नाशयितुमशक्या” भा० २चातुर्मास्याङ्गे तृतीये सप्तदशे पञ्चमे यज्ञभेदे पु० “द्विनामोत्तरो बहुहिरण्यो

दूणाशश्चेति” कात्या०श्रौ०२२। ८।२६। “उत्तरस्तृतीयः सप्तदशः द्विनामा भवति बहुहिरण्य इत्येकं दूणाशश्च द्वितीयं नाम” संग्र०। तस्य च तथादक्षिणायुक्तत्वात् अर्श० अचि तथात्वम्।

**दूत** त्रि० दु-गतौ “दुतनिभ्यां दीर्घश्च” उणा० त कित् दीर्घश्च दू—परितापे कर्त्तरि क्त वा दीर्घान्तस्य न नत्वम् “दुग्वोर्दीर्घश्च” पा० सूत्रेण दुनोतेरेव नत्वदीर्घयोर्विधानात्। १सन्देशहरे अमरः। २उपतप्ते च

“चारेक्षणो दूतमुखः पुरुषः कोऽपि पार्थिवः” माघः तत्र साधारणदूतलक्षणं तद्भेदाश्च मा०टी० उक्ता यथा निसृष्टार्थो मितार्थश्च तथा सन्देशहारकः। कार्य्यप्रैष्यस्त्रिधा दूतो दूत्यश्चापि तथाविधाः” तत्र कार्य्यप्रेष्यो दूत इति लक्षणम्। तत्र “उभयोर्भावमुन्नीय स्वयं वदति चोत्तरम्। सुश्लिष्टं कुरुते कार्य्यं निसृष्टार्थस्तु स स्मृतः” उभयोरिति येन प्रेषितो यदन्तिकं प्रेषितश्च। “मितार्थभाषी कार्य्यस्य सिद्धिकारी मितार्थकः”।
नृपतिदूतलक्षणं युक्तिकल्पतरावुक्तं यथा

“परेङ्गितज्ञः परवाग्व्यङ्ग्यार्थस्यापि तत्त्ववित्। सदोत्पन्नमतिर्धीरो दूतः स्यात् पृथिवीपतेः। दूतञ्चैव प्रकुर्वीत सर्वशास्त्रविशारदम्। इङ्गितज्ञं तथा सभ्यं दक्षं सत्कुलसम्भवम्। अनुरक्तः शुचिर्दक्षः स्मृतिमान् देशकालवित्। वपुष्मान् वीतभीर्वाग्मी दूतो राज्ञः प्रशस्यते। दूत एव हि सन्धत्ते भिनत्त्येव हि संहतान्। विसृष्टार्थो१ मितार्थश्च२ तथा शासनहारकः३। दूतास्त्रयोऽमात्यगुणैः समैः पादार्द्धवर्जितैः। विसृष्टार्थं कार्य्यवशात् शासनं तु करोति यः१। मितार्थः२ कार्य्यमात्रोक्तौ स कुर्य्यादुत्तरोत्तरम्। यथोक्तवादी सन्देशहारको लेखहारकः३। तत्र दूतो व्रजन्नेव चिन्तयेदुत्तरोत्तरम्। वार्त्ताविशेषं भूपाय झटित्येवान्यवेश्मनि। दूतो हि न लिखेत् किञ्चित् निर्णेता वा विनिर्णयम्। पृच्छ्यमानोऽपि न ब्रूयात् स्वामिनः क्वापि वैशसम्” कामन्द० शास्त्रे च राजदूततद्भेदचरलक्षणं चोक्तं यथा “कृतमन्त्रस्तु मन्त्रज्ञो मन्त्रिणां मन्त्रसम्मतम्। यातव्याय प्रहिणुयाद्दूतं दूत्याभिमानिनम्। प्रगल्भः स्मृतिमान्वाग्मी शास्त्रे शस्त्रे च निष्ठितः। अभ्यस्तकर्मा नृपतेर्दूतो भवितुमर्हति। निसृष्टार्थो१ मितार्थश्च२ तथा शासनवाहकः३। सामर्थ्यात्पादतो हीनो दूतस्तु त्रिविधः स्मृतः। स भर्त्तुः शासनाद्गच्छेद्गन्तव्यमुत्तरोत्तरम्। स्वराष्ट्रपरराष्ट्राणामिति चेति च चिन्तयन्। अन्तःपालांस्तु कुर्वीत मित्राण्याटविकांस्तथा। जलस्थलानि मार्गांश्च विद्यात् स्वबलसिद्धये। नाविज्ञातः पुरं शत्रोः प्रविशेच्च न संसदि। कालमीक्षेत कार्य्यार्थमनुज्ञातश्च निष्पतेत्। सारवत्ताञ्च राष्ट्रस्य दुर्गं तद्गुप्तिमेव च। छिद्रं शत्रोर्विजानीयात् कोषमित्रबलानि च। उद्यतेष्वपि शस्त्रेषु यथोक्तं शासनं वदेत्। रागापरागौ जानीयात् प्रकृतीनाञ्च भर्त्तरि। भृत्यपक्षस्य चापायं कुर्य्यादनतिलक्षितः। पृच्छ्यमानोऽपि न ब्रूयात् स्वस्वामिप्रकृतिच्युतिम्। ब्रूयात् प्रसृतया वाचा सर्वं वेद भवानिति। फलेन नाम्ना द्रव्येण कर्म्मणा च महीयसा। कुर्य्याच्चतुर्विधं स्तोत्रं पक्षयोरुभयोरपि। विद्याशिल्पोपदेशेन संश्लिष्योभयवेतनैः। भृत्यपक्षञ्च जानीयात्तद्वृत्तं च विचेष्टितम्। तीर्थाश्रमाश्रयस्थाने शास्त्रविज्ञानहेतुना। तपस्विव्यञ्जनोपेतैः स्वचरैः सह संवसेत्। सन्तापं कुलमैश्वर्य्यं त्यागमुत्थानसौष्ठवम्। अनुद्रतां भद्रताञ्च भर्त्तुर्भेद्येषु दर्शयेत्। सहेतानिष्टवचनं कामक्रोधञ्च वर्जयेत्। नान्यैः शयीत, भावं स्वं रक्षेद्विद्यात्परस्य च। काले व्रजति मेधावी न खिद्येतात्मसिद्धये। क्षिप्यमाणश्च बुध्येत कालं नानार्थलोभनैः। एतेष्वहःसु गच्छत्सु न तत्र पृथिवीपतेः। पश्यति व्यसनं किञ्चित् स्वयं वा कर्त्तुमिच्छति। स्वान्तःप्रकोपमथ वा विनेतुं नीतिवित्तमः। सस्यादेः संग्रहं कर्त्तुं स्वदुर्गे दुर्गसत्क्रियाम्। स्वपक्षाभ्युदयाकाङ्क्षी देशकालावुदीक्षते। तत्र यात्रास्वयं चित्तमाप्स्यैव समीहते। यात्राकालक्षयार्थी वा तत्र चायं विलम्बते। काले विक्षिप्यमाणे तु तर्कयेदिति पण्डितः। कार्य्यकालविपत्तिञ्च व्यक्तां ज्ञात्वा विनिष्पतेत्। तिष्ठन् वार्त्ताविशेषार्थान् भर्त्तुः सर्वान्निवेदयेत्। रिपोः शत्रुपरिच्छेदः सुहृद्बन्धुविभेदनम्। दुर्गकोषबलज्ञानं भृत्यपक्षोपसंग्रहः। राष्ट्रात् व्यपेतपालानामात्मसात्करणं तथा। युद्धापसारभूज्ञानं दूतकर्मेति कथ्यते। दूतेनैव नरेन्द्रस्तु कुर्वीतारिविकर्षणम्। स्वपक्षे च विजानीयात् परदूतविचेष्टितम्। तर्केङ्गितज्ञः स्मृतिमान् मृदुर्लघुपरिक्रमः। क्लेशायाससहो दक्षतरः स्यात् प्रतिपत्तिमान्। तपस्विलिङ्गिनो धूर्त्ताः पण्यशिल्पोपजीविकाः। चराश्चरेयुः परितः पिबन्तो जगतां मतम्। निर्गच्छेयुर्विशेयुश्च सर्ववार्त्ताविदोऽन्वहम्। चराः सकाशात् पतेश्चक्षुर्दूर-

तरं हि ते। स्वल्पं स्वल्पप्रचारेण पश्येदै विनिचेष्टितम्। स्वपन्नपि च जागर्त्ति चारचक्षुर्महीपतिः। विवस्वानिव तेजोभिर्नभस्वानिव चेष्टितैः। राजा चरैर्जगत् कृत्स्नं व्याप्नुयाल्लोकसम्मतैः। चारचक्षुर्नरेन्द्रः स्यात्सम्पतेत्तेन भूयसा। अनेनासम्पतन्मोहात्पतत्यन्धः समेऽपि हि। सर्वसम्पत्समुदयं सर्वावस्थाविचेष्टितम्। चरेण द्विषतां विद्यात्तद्देशप्रार्थनानि च। प्रकाशश्चाप्रकाशश्च चरस्तु द्विविधः स्मृतः। अप्रकाशोऽयमुद्दिष्टः प्रकाशो दूत उच्यते। चरेण प्रचरेद्राजा सूत्रेणार्त्विगिवाध्वरे। दूते सन्धानमायाते चरचर्य्या प्रतिष्ठिता। तीक्ष्णः प्रव्रजितश्चैव सत्री वनग एव च। एते ज्ञेयास्तु सञ्चाराः सर्वे नान्योन्यवेदिनः। संस्थानवन्तः संस्थाश्च कार्य्याः कार्य्यप्रसिद्धये। तिष्ठेयुः पार्श्वे सञ्चाराः परिचर्य्यापवादिनः। शान्तः क्षपीवन्तो लिङ्गी भिक्षुकोऽध्यापकस्तथा। संस्थाः स्युश्चारसंस्थित्यै दत्तदायाः शुभाशयाः। सर्वेषिंस्तत्र सञ्चारास्तिष्ठेयुश्चित्तवेदिनः। स्वपक्षे परपक्षे च यो हि वेद चिकीर्षितम्। जाग्रदपि सुषुप्तोऽसौ न भूपः प्रतिबुध्यते। कारणाकारणक्रुद्धान् बुध्येत स्वपरिग्रहे। पापानकारणक्रुद्धांस्तूष्णीं दण्डेन साधयेत्। ये तु कारणतः क्रुद्धास्तान् वशीकृत्य संवसेत्। शमयेद्दानमानाभ्यां छिद्रञ्च परिपूरयेत्। अणुनापि विजयते छिद्रेण बलवत्तरम्। निःशेषं मज्जयेद्राष्ट्रं पानपात्रमिवोदकम्। जडमूकान्धबधिरच्छद्मानः षण्डकास्तथा। किराता वामनाः कुब्जास्तद्विधा ये च कारकाः। भिक्षुकाश्चारणा दास्यो नानाकार्य्यकलाविदः। अन्तःपुरगतां वार्त्तामाहरेयुरलक्षिताः। छत्रव्यजनभृङ्गारयानवाहनधारिणः। महामात्रे बहिर्वार्त्तां विदुरन्ये च तद्विधाः। सूदव्यञ्जनकर्त्तारस्तत्पका व्ययकास्तथा। प्रसाधका भोजकाश्च गात्रसंवाहका अपि। जलताम्बूलकुसुमगन्धभूषणदायकाः। कर्त्तव्याश्च सदा ह्युते ये चान्येऽभ्यासवर्त्तिनः। सञ्ज्ञाभिर्मूर्च्छितैर्लेखैराकारैरिङ्गितैरपि। सुसञ्चरेयुरव्यग्राश्चराश्चर्य्यां परस्परम्। समापिबन्तो जगतां मतानि जलानि भूमेरिव सूर्य्यपादाः। अनेकशिल्पाध्ययनप्रवीणाश्चराश्चरेयुर्बहुलिङ्गरूपाः। येन प्रकारेण परानुपेयात् परापरज्ञश्च समृद्धिहेतोः। तमात्मनि स्वस्थमतिस्तु तज्ज्ञैर्वियुज्यमानं परतो हि विद्यात्"। २प्रेष्यमात्रे त्रि० ततः भावे कर्म्मणि च "दूतवणिग्भ्याञ्च पा० यत्। दूत्य तद्भावे तत्कर्म्मणि च "दूत्यं तद्भावकर्म्मणोः" अमरः। कामन्द० वाक्ये उदा० ष्यञ् दौत्य तत्रार्थे "न प्रयाति च दौत्येन" हितो० "द्विषां हृदैर्दौत्यपथः सितीकृतः" नैष०। लिङ्गविशिष्टपरिभाषया दूतीशब्दादपि यत् ष्यञ् च। दूत्य दौत्य दूतीनां कर्म्मणि भावे च। स्वार्थे क। दूतक तत्रार्थे स्त्रियां कापि अत इत्त्वम् दूतिका दूत्याम्। भावे क्त। ४उपतापे न०। [पुष्पत्रां शब्दच०।

**दूतघ्नी** स्त्री दूतं खेटं हन्ति हन—टक् ङीप्। कदम्ब-

**दूति** स्त्री दु—बा० ति दीर्घश्च उज्ज्वलद०। प्रेषणायां स्त्रियां "तां कामिनो दूतिमुदाहरन्ति" वर्णविवेकः वा ङीप् दूती तत्रार्थे "उत्तिष्ठ दूति! यामोयामो यातस्तथापि नायातः" सा०द० "रतिदूतिपदेषु कोकिलाम्" कुमा० "प्रतिकृतिरचनाभ्यो दूतिसंदर्शिताभ्यः" "तेन दूतिविदितं निषेदुषा" रघुः दूतीभेदलक्षणे सा०द०उक्तं "दूत्यः सखी नटी दासी धात्रेयी प्रतिवेशिनी। बाला प्रव्रजिता कारुः शिल्पिन्याद्याः स्वयं तथा। कला कौशलमुत्साहो भक्तिश्चित्तज्ञता स्मृतिः। माधुर्य्यं नर्मविज्ञानं वाग्मिता चेति तद्गुणाः। एता अपि यथौचित्यादुत्तमाधममध्यमाः"

**दून** पु० दु—उपतापे क्त "दुग्वोर्दीर्घश्च" पा०तस्य नः दीर्घश्च। मुग्ध० दू—खेदे ओदित्त्वात् तस्य नः। १अध्व.दिश्रान्ते २उपतप्ते ३दुःखिते च "पित्तेन दूने रसने सितापि तिक्तायते हंसकुलावतंस!" नैष०।

**दू(र्)** स्त्री दैप् शुद्धौ बा० कू। प्राणरूपे देवताभेदे "सा वा एषा देवता दूर्नाम दूरं ह्यस्या मृत्युर्दूरं ह वा अस्मान्मृत्युर्भवति य एवं वेद" शत०ब्रा० १४।४।१० "उपासकशरीरस्था प्राणरूपा देवता दूर्नाम दूरित्येवं ख्याताऽतः शुद्धा" भा०अत्र शुद्धेति विशेषणात् दैपधातो रूपमिति सूचितम्। ब्राह्मणे तु दूरसम्बन्धात् तत्सिद्धिरुक्ता तथा च दूरं करोति मृत्युमुपासकस्य दूर+कृत्यर्थे णिच् बा० न टवादेशः क्विप् णिलोपः रान्तोऽयमिति तु युक्तम्।

**दूर** त्रि० दुर्+इण—"दुरीणो लोपश्च" उणा० रक् धातो रिकारलोपे रेफे परे पूर्वाणो दीर्घः। १विप्रकृष्टे महदन्तरेण स्थिते दैशिकपरत्वयुक्ते अमरः। "दूरान्तिकादिधीहेतुरेका नित्या दिगुच्यते" भाषा० "दूरत्वमन्तिकत्वञ्च दैशिकं परत्वमपरत्वं बोध्यम् तद्बुद्धेरसाधारणं बीजं दिगेव" सि०मुक्ता०अतिदूरत्वञ्च प्रत्यक्षं नोत्पादयति यथाह

"अतिदूरात् सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात्। सौक्ष्म्याद्व्यवधानादभिभवात् समानाभिहाराच्च" सां०का० "अनुपलब्धिरिति वक्ष्यमाणं सिंहावलोकितन्यायेनानुषञ्जनीयम् यथा उत्पतन् वियति पतत्री अतिदूरतया सन्नपि प्रत्यक्षेण नोपलभ्यते" त०कौ०। "त्वं दूरमपि गच्छन्ती हृदयं न जहासि मे" शकु० "न खलु दूरगतोऽप्यतिवर्तते महमसावितिवन्धुजनोदितैः" माघः। भावप्राधान्यात् २दूरत्वे च "दूरान्तिकार्थेभ्यो द्वितीया च" पा० असत्त्ववचने प्रातिपदिकार्थे एभ्योद्वितीया चात् पञ्चमीतृतीये स्तः" सि०कौ० "ग्रामस्य दूरं दूरात् दूरेण वा। असत्त्ववचने इत्युक्तेर्नेह दूरः पन्थाः" सि०कौ० "रामाद्दूरस्य यो दूरम्" सुग्धवो० "नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः" सा०द० "सा तस्य कर्मनिर्वृत्तैः दूरं पश्चात् क्वता फलैः" रघुः "दूरादपि क्रतुषु यज्वभिरिज्यते यः" माघः "दूरेण ह्यवरं कर्म बुद्धियोगात् धनञ्जय!" गीता "स्तुतिभ्योऽच्युत! रिच्यन्ते दूरेण चरितानि ते" रघुः एतच्छब्दयोगे पञ्चमी षष्ठी च। "दूरं ग्रामस्य ग्रामाद्वा" सि०कौ० अतिशायने इष्ठन् दवादेशे दविष्ठ ईयसुन् दवीयस् अतिशयेन दूरस्थिते त्रि० ईयसुनि स्त्रियां ङीप्। "तेजस्विमध्ये तेजस्वी दवीयानपि गण्यते" माघः। दूरं करोति दूर+णिच् दवादेशः दवयति। "दवयदतिरवेण प्राप्तनैर्विभागम्" भट्टिः।

**दूरङ्गम** त्रि०दूरं गच्छति गम—बा० वेदे ख मुम् च। दूरगामिनि "दूरङ्गमं ज्योतिषां ज्योतिरेकम्" यजु०३४।१। लोके तु ड दूरग इत्येव

**दूरत्व** न० दूरस्य भावः त्व। दैशिके परत्वे तच्च भ्रमविशेषे कारणम् यथोक्तं "दोषोऽप्रमायाजनकः प्रमायास्तु गुणो भवेत्। पित्तदूरत्वादिरूपो दोषो नानाविधः स्मृतः" भाषा० "क्वचिच्चन्द्रादेः स्वल्पपरिमाणभ्रमे दूरत्वं दोषः" सि०मुक्ता०।

**दूरदर्शन** पुंस्त्री०दूरात् पश्यति दृश—ल्यु। १गृध्रे राजनि० जातित्वात् स्त्रियां ङीष्। २पण्डिते पु० दृश—भावे ल्युट्। ३दूरतोवीक्षणे न०। दूरतो दृश्यतेऽनेन दृश—करणे ल्युट्। ४दूरवीक्षणे यन्त्रभेदे (दूरवीन)

**दूरदर्शिन्** त्रि० दूरात् पश्यति कार्योत्पत्तेः प्राक् पश्यति जानाति वा दृश—णिनि। १दूरदर्शके २पण्डिते पु० अमरः ३गृध्रे पुंस्त्री० त्रिका० स्त्रियां ङीप्।

**दूरदृश्** त्रि०दूरात् पश्यति दृश—क्विन्। १दूरदर्शिनि २पण्डिते शब्द२०३गृध्रे हेमच०। क्विन्नन्तत्वात् झलि पदान्ते च कुः।

**दूरमूल** पु०दूरपर्यन्तं मूलमस्य। मुञ्जतृणे (मुँज)। राजनि०

**दूरवेधिन्** पु० दूरात् वेधोऽस्यास्य साध्यतया इनि। दूरात् लक्ष्यभेदके

**दूरापात** त्रि० दूरमापतति आ+पत—कर्त्तरि ज्वला० ण। दूरपातिनि अस्त्रे णिनि दूरापातिन् तत्रार्थे हेमच०।

**दूरूढा** स्त्री दुर्+रुह—क्त रेफे परे पूर्वाणो दीर्घः। दुःखतया रूढे जाते क्षुद्ररोगशब्दे ३३८ पृ०दृश्यम्।

**दूरेअमित** पु० दूरेअमितः प्रतर्यस्य वेदे सप्तम्याः अलुक् प्रकृतिभावः। एकोनपञ्चाशन्मरुन्मध्ये मरुद्भेदे। ते च यजु० १७अ०।१ मन्त्रादौ ८० मन्त्रान्ते शुक्रज्योतिश्चेत्यादयोदर्शिताः। "अग्निमितश्च दूरेअमितश्च गणः" दम०

**दूरेत्य** त्रि० दूरे भवः त्यप्। दूरभवे

**दूरेपाक** त्रि० दूरे पचति पच—ण न्यङ्क्वा० कुत्वम् स-प्तम्या अलुक् स०। दूरे पाचके स्त्रियां टाप्। तत्रैव गणे स्त्रीत्वेनापि निर्देशात् लिङ्गविशिष्टपरिभाषाया अनित्यत्वं ज्ञापितम्। [पाचके।

**दूरेपाकु** त्रि० पच—उण् न्यङ्क्वा० कुत्वम् अलुक् स०। दूरे-

**दूरेरितेक्षण** त्रि० दूरे ईरितमीक्षणं येन। दूरपर्यन्तप्रेरित दर्शने केकरे (टेरा) शब्दमाला।

**दूरोह** पु० दुःखेन रुह्यतेऽसौ दुर्+रुह—कर्मणि खल् रेफे परे पूर्वाणो दीर्घः। दुःखेन रोहणीये रोढुमशक्ये आदित्ये लोके तस्य निष्कामज्योतिष्टोमादियज्ञप्रयासज्ञानज्ञानेन साध्यारोहणत्वात् दूरोहत्वम्। "असौ वै दूरोहो योऽसौ तपतीति" ऐत०४।२० श्रुतेस्तस्य तथात्वम्। २दूरारोहमात्रे त्रि०।

**दूरोहण** त्रि० दुःखकरमारोहणमस्य प्रा०ब०। आदित्ये दूरोह शब्दे तस्य तथात्वं दृश्यम् ३छन्दोभेदे न०। असौ वा आदित्यो दूरोहणं छन्दः" इति श्रुतिः। "दूरोहणं छन्दः" यजु०१०।५ छान्दसं क्लीवत्वम्। ३दूरारोहणीये त्रि० दुःखेन रोहणं वा। ४दुःसाध्ये रोहणे ५तच्छन्दस्क मन्त्रसाध्याभ्यासभेदे च यथोक्तं आश्व०श्रौतसूत्रे

"हंसः शुचिषदिति पच्छोऽर्द्धर्चशस्त्रिपद्या चतुर्थं मनवानसङ्क्रा प्रणुत्यावस्येत्। पुनस्त्रिपद्याऽर्द्धर्चशः पच्छ एव सप्तमम्" ८।२।१४ "एतामृचमित्यं शंसेत्। प्रथमं पच्छः द्वितीयमर्द्धर्चशः। तृतीयं त्रिभिः पादैरवसाय उत्तमेन पादेन प्रणुत्य चतुर्थमनवानसङ्क्रा प्रणवेनाव स्येत्। एतदारोहणम्। अथावरोहणम्। पुनस्त्रि-

पद्येत्येवमादिनोक्तं पञ्चमम्। अर्धर्चेशः षष्ठं, पुनः पञ्चः सप्तमम्। एतत् दूरोहणं भवति। सप्तमवाननियमेन कक्क सप्तकत्वोऽध्यस्ता दूरोहणमिति ज्ञापनार्थम्। एतत्कारः पौनर्वचनिकः" नारा० "एतत् दूरोहणम्" ८।२।१५ दूरोहणमिति प्रकृते पुनर्दूरोहणवचनं द्विविधं दूरोहणमस्तीति प्रदर्शनार्थं तेन स्वर्गकामस्य चतुरभ्यस्तेन दूरोहणं भवति" नारा०।

**दूर्य** न० दूरे उत्सार्यम् दूर+यत्। १पुरीषे विष्ठायाम् शब्दर० "ततः कल्यं समुत्थाय कुर्यान्मूत्रं नरेश्वर!। नैर्ऋत्यामिषुविक्षेपमतीत्याभ्यधिकं भुवः" विष्णु पु० तस्येषुविक्षेपस्थानातिक्रमेण त्यागविधानेन दूरोत्सार्यत्वात् तथात्वम्। दूराय रोगदूरीकरणाय साधु यत्। २यवास्याम् राजनि०।

**दूर्वा** स्त्री दूर्वति रोगान् अनिष्टं वा दुर्व—हिंसायाम् अच् रेफे परे पूर्वाणो दीर्घः। १स्वनामख्याते घासभेदे तद्भेदादिकं भावप्र० उक्तं यथा

"नीलदूर्वा रुहानन्ता भार्गवी शतपर्विका। शष्पं सहस्रवीर्या च शतवल्ली च कीर्तिता। नीलदूर्वा हिमा तिक्ता मधुरा तुवरा हरेत्। कफपित्तास्रवीसर्पतृष्णादाहत्वगामयान्"। श्वेतदूर्वा "दूर्वा शुक्ला तु गोलोमी शतवीर्या च कथ्यते। श्वेतदूर्वा कषाया स्यात् स्वाद्वी व्रण्या च जीवनी। तिक्ता हिमा विसर्पास्रतृट्पित्तकफदाहहृत्"। गण्डदूर्वा

"गण्डदूर्वा तु गण्डाली मत्स्याक्षी शकुलाक्षकः। गण्डदूर्वा हिमा लोहद्राविणी ग्राहिणी लघुः। तिक्ता कषाया मधुरा वातकृत् कटुपाकिनी। दाहतृष्णाबलासास्रकुष्ठपित्तज्वरापहा"। तस्या उत्पत्तिकथा भविष्योत्तरे "क्षीरोदसागरे पूर्वं मथ्यमानेऽमृतार्थिना। विष्णुना बाहुजङ्घाभ्यां विधृत्य मन्दरं गिरिम्। भ्रमता तेन वेगेन लोमान्याघर्षितानि वै। ऊर्मिभिस्तानि रोमाणि क्षोत्क्षिप्तानि तटान्तरे। अजायत शुभा दूर्वा रम्या हरितशाड्वला। एवमेषा समुत्पन्ना दूर्वा विष्णुतनूद्भवा। तस्या उपरि विन्यस्तं मथितामृतमुत्तमम्। देवदानवगन्धर्वयक्षविद्याधरोरगैः। तत्र येऽमृतकुम्भस्य निपेतुर्वारिविन्दवः। तैरियं स्पर्शमासाद्य दूर्वा चैवाजराऽमरा। वन्द्या पवित्रा देवैस्तु सर्वदाभ्यर्चिता तथा"। "दूर्वा दहति पापानि धात्री हरति पातकम्। हरीतकी हरेद्रोगं तुलसी हरते भयम्" विष्णुधर्मोत्तरे। दूर्वा पूज्यत्वेनास्त्यस्याम् अर्श० अच्। २भाद्रशुक्लाष्टम्यां तद्दिने दूर्वायाः पूजाविधानात् तस्याः तथात्वम् "श्रावणी दौर्गनवमी दूर्वा चैव हुताशनी। पूर्वविद्धैव कर्त्तव्या शिवरात्रिर्बलेर्दिनम्" कालमाधवीयधृतवाक्यम् व्रतशब्दे दूर्वाष्टमीव्रते तत्पूजाविधानं दृश्यम्। ततः समूहे काण्डच्। दूर्वाकाण्ड दूर्वासमूहे न० "दूर्वाकाण्डमिव श्यामा" भट्टिः। दूर्वया दुर्गापूजननिषेधः "अक्षतैर्नार्चयेत् विष्णुं न तुलस्या विनायकम्। न दूर्वया यजेत् दुर्गां नोन्मत्तेन दिवाकरम्" आगमः। दुर्गायै अर्घ्यार्थवर्त्तिदूर्वादानं तु न निषिद्धमिति तु तत्त्वम्। जनमेजयवंश्ये ३रूपभेदे पु० "रूपञ्जयस्ततो दूर्वस्तस्मिन्सख्याज्जनिष्यति" भाग० ६।२२।२६

**दूर्वाक्षी** स्त्री वसुदेवभ्रातृभेदस्य वृकस्य पत्न्याम् "तक्षपुष्कर-मालादीन् दूर्वाक्ष्यां वृक आदधे" भाग०६।२४। २२श्लो०

**दूर्वाद्यघृत** न० चक्रदत्तोक्ते घृतभेदे तत्पाकविधिस्तत्रोक्तो यथा

"दूर्वा सोत्पलकिञ्जल्का मञ्जिष्ठा सैलवालुका। सिता शीतमुशीरञ्च मुस्तं चन्दनपद्मकौ। विपचेत् कार्षिकैरेतैः सर्पिराज्यं सुखाग्निना। तण्डुलाम्बु अजाक्षीरं दत्त्वा चैव चतुर्गुणम्। तत्पानं वमतो रक्तं स्रावनं नासिकागते। कर्णाभ्यां यस्य गच्छेत् तु तस्य कर्णौ प्रपूरयेत्। चक्षुःस्राविणि रक्ते तु पूरयेत् तेन चक्षुषोः। मेढ्रपायुप्रवृत्ते तु वस्तिकर्मसु योजयेत्। रोमकूपप्रवृत्ते तु तदभ्यङ्गे प्रयोजयेत्"।

**दूर्वाष्टमी** स्त्री दूर्वाप्रिया तत्पूजाङ्गत्वात् अष्टमी। भाद्रशुक्लाष्टम्याम् तस्या उभयदिनव्याप्तौ पूर्वदिने पूजा "श्रावणी दौर्गनवमी दूर्वा चैव हुताशनी। पूर्वविद्धैव कर्त्तव्या शिवरात्रिर्बलेर्दिनम्" ति०त० धृतवचनात्। दूर्वापूजाप्रकारस्तु विविधः हेमा० व्रतख० उक्तः व्रतशब्दे दृश्यः गौडदेशे तु भविष्योत्तरपुराणोक्तस्तत्प्रकारः प्रचलितः।

**दूर्वासोम** पु० सुश्रुतोक्ते रसायनाङ्गे सोमलताभेदे यथोक्तं तत्र उत्तरतन्त्रे

"अंशुमान् मुञ्जवांश्चैव चन्द्रमा रजतप्रभः। दूर्वासोमः कनीयांश्च श्वेताक्षः कनकप्रभः। प्रतानवांस्तालवृन्तः करवीरोंऽशवानपि। स्वयम्प्रभो महासोमो यश्चापि गरुडाहृतः। गायत्र्यस्त्रैष्टुभः पाङ्क्तो जागतः शाङ्करस्तथा। अग्निष्टोमो रैवतश्च यथोक्त इति संज्ञितः। गायत्र्या त्रिपदा युक्तो यश्चोडुपतिरुच्यते। एते सोमाः समाख्याता वेदोक्तैर्नामभिः पुनः। सर्वेषामेव चैतेषामेको विधिरुपासने। सर्वे तुल्यगुणाश्चैव विधानं तेषु

वक्ष्यते"। "अतोऽन्यतमं सोममुपयुयुक्षुः सर्वप्रकारपरिचारकोपेतः प्रशस्तदेशे त्रिवृतमगारं कारयित्वा हृतदोषः प्रतिसंसृष्टः प्रशस्तेषु तिथिकरणमुहूर्त्तनक्षत्रेषु कन्दमन्नमादायाध्वरकल्पेनाहृतमभिषुतमभिहुतं चान्तरान्तराकृतमङ्गलः सोमकन्दं सुवर्णसूच्या विदार्य्य पयोऽद्धलीयासौवर्णे पात्रेऽञ्जलिमात्रं, ततः सकृदेवोपयुञ्जीत नास्वादयंस्तत उपस्पृश्य शेषमप्स्ववसाद्य यमनियमाभ्यामात्मानं संयोज्य वाग्यतोऽभ्यन्तरतः सुहृद्भिरुपास्यमानो विहरेत्"।

**दूर्वेष्टका** स्त्री यज्ञाङ्गे चितिरूपेष्टकाभेदे "तमग्निरब्रवीत्। उपाहमायानीति केनेति पशुभिरिति तथेति पश्विष्टकयाह तदुवाचैषा वाव पश्विष्टका यद्दूर्वेष्टका तस्मात् प्रथमायै स्वयमातृण्णाया अनन्तर्हिता दूर्वेष्टकोपधीयते तस्मादस्या अनन्तर्हिता ओषधयोऽनन्तर्हिताः पशवोऽनन्तर्हितोऽग्निरनन्तर्हितो ह्येष एतयोपैत्" शत० ब्रा० ६।२।१।२।

**दूलाश** त्रि० दूडाश+डस्य वा लः। दुःखेन हिंस्ये।

**दूली** स्त्री दूरं दूरताऽस्त्यस्याः अच्, दू–खेदे सम्प०भावे क्विप् तां राति ददाति वा रा–क रस्य लः दुरे खेदाय लायते गृह्यते ला–क प्रज्ञार्थे क वा गौरा० ङीष्। नील्यां शब्दर०। "शृणुष्वेह महाबाहो नीलीरक्तस्य धारणात्। वाससो गणशार्दूल! गदतो मम कृत्स्नशः। पालनाद्विक्रयाच्चैव तद्वृत्त्युपजीवनात्। पतितस्तु भवेद्विप्रस्त्रिभिः कृच्छ्रैर्विशुध्यति" भविष्यपु० तस्यावपनक्रयादेर्निषेधेन दूरीकार्य्यत्वात् तथात्वम् तदुपजीवने च पापोत्पादनेन तस्याः दुःखहेतुत्वात् वा तथात्वम्। स्वार्थे क। दूलिका तत्रार्थे

**दूश्य** न० दू–खेदे सम्पदा०भावे क्विप् तां श्यायते गमयति अन्तर्भूतण्यर्थे श्यै–गतौ क। वस्त्रनिर्मिते गृहे (ताँबु) हारसुन्दरी।

**दूषक** त्रि० दुष–णिच्–ण्वुल्। १दोषजनके "दूषकतावीजानिरुक्तेः" सर्वदर्शनसंग्रहः "वेदविक्रयिणश्चैव वेदानां चैव दूषकाः। वेदानां निन्दकाश्चैव ते वै निरयगामिनः" भा०अनु० १६४४श्लो०। "पाषण्डाऽदूषकाश्चैव समजानाञ्च दूषकाः। ये प्रत्यवसिताश्चैव ते वै निरयगामिनः" भा० अनु० १६४८श्लो०। "कूटशासनकर्त्तॄंश्च प्रकृतीनाञ्च दूषकान्" (हन्यात्) मनुः। २खले च त्रिका०

**दूषण** न० दूषि–भावे ल्युट्। सदोषतासम्पादने "दूष्यस्यादूषणार्थं च परित्यागो महीयसः। अर्थस्य नीतितत्त्वज्ञैरर्थदूषणमुच्यते" काम०नी० दूषि–कर्त्तरि ल्यु। २दोषजनके त्रि० "पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम्। स्वप्नश्चान्यगृहे वासो नारीणां दूषणानि च" मनुः। ३राक्षसभेदे पु० खरशब्दे २४६६ पृ० उदा०

**दूषणारि** पु० ६त०। श्रीरामे शब्दरत्ना० तस्य रामेण वधकथा खरशब्दे २४६६पृ० दृश्या।

**दूषयितृ** त्रि० दूषि–शीलार्थे तृच्। दूषणशीले [ङीप्।

**दूषि(षी)** स्त्री दूषि–इन्। नेत्रमले (पिँचुटि) शब्दमा० वा

**दूषिका** स्त्री दूषि+स्वार्थे क ण्वुल् वा। १नेत्रमले (पिँचुटि) २तूलिकायां मेदि०। ३दूषणकर्त्र्यां स्त्रियाञ्च। दूषी+स्वार्थे क वा न ह्रस्वः। तत्रार्थे "वयसा पुण्या अस्तुभिर्श्चादिनीर्दूषीकाभिः"। यजु० २५।८ "शाल्मली कण्टकप्रख्याः कफमारुतशोणितैः। जायन्ते पिडका यूनां वक्त्रे या मुखदूषिकाः" सुश्रुतः "स्त्रियास्तथाऽपचारिण्या निष्कृतिः स्याददूषिका" भा०शा० ३४अ० पुंसि तु ण्वुलि दूषक इत्येव। "नह्यहं प्रकृतिद्वेषी नाहं प्रकृतिदूषकः" हरिवं० १८८अ०

**दूषित** त्रि० दूषि–क्त। १दत्तदूषणे २प्राप्तदूषणे ३अभिशस्ते मैथुनापवादयुक्ते ४नष्टकन्याभावायां स्त्रियां स्त्री शब्दरत्ना०।

**दूषीविष** न० दूषयति दूषि–बा० ई कर्म०। सुश्रुतोक्ते धातुदूषके विषभेदे यथा"यत् स्थावरं जङ्गमकृत्रिमं वा देहादशेषं यदनिर्गतं तत्। जीर्णं विषघ्नौषधिभिर्हतं वा दावाग्निवातातपशोषितं वा। स्वभावतो वा गुणविप्रहीनं विषं हि दूषीविषतामुपैति। वीर्य्याल्पभावान्न निपातयेत्तत् कफावृतं वर्षगणानुबन्धि। तेनार्द्दितो भिन्नपुरीषवर्णो विगन्धवैरस्यमुखः पिपासी। मूर्च्छन् वमन् गद्गदवाग्विषण्णो भवेच्च दूष्योदरलिङ्गजुष्टः। आमाशयस्थे कफवातरोगी पक्वाशयस्थेऽनिलपित्तरोगी। भवेन्नरो ध्वस्तशिरोरुहाङ्गो विलूनपक्षस्तु यथा विहङ्गः। स्थितं रसादिष्वथ वा यथोक्तान् करोति धातुप्रभवान् विकारान्। कोपञ्च शीतानिलदुर्दिनेषु यात्याशु पूर्वं शृणु तत्र रूपम्। निद्रागुरुत्वञ्च विजृम्भणञ्च विश्लेषहर्षावथवाङ्गमर्दः। ततः करोत्यन्नमदाविपाकावरोचकं मण्डलकोठमोहान्। धातुक्षयं पादकरास्यशोफं दकोदरं छर्दिमथातिसारम्। वैवर्ण्यमूर्च्छाविषमज्वरान्वा कुर्यात् प्रवृद्धां प्रबलां तृषां वा। उन्मादमन्यज्जनयेत्तथान्यदानाहमन्यत् क्षपयेच्च शुक्रम्। प्रगाढमन्य-

व्जनयेच्च कुष्ठं तांस्तान् विकारांश्च बहुप्रकारान्। दूषितं देशकालान्न दिवास्वप्नैरभीक्ष्णशः। यस्माद्दूषयते धातून् तस्माद्दूषीविषं स्मृतम्”

**दूष्य** त्रि॰ दूषि—कर्मणि यत्। १दूषणीये “दूष्यं वचो मम पुनर्निपुणं विभाव्य” अनुमानदीधितिः। “राज्योपघातं कुर्वाणा ये पापाचारवल्लभाः। एकैकशः संहता वा दूष्यांस्तान् परिचक्षते” कामन्दकी॰उक्ते २राजद्रोपघातके। ३वस्त्रे ४वस्त्रमण्डपे न॰ मेदि॰ ५पूये न॰ हेमच॰ ६हस्तिवन्धरज्ज्वाम् स्त्री हेमच॰।

**दूष्योदर** न॰दूषिभिर्दोषैः कृतमुदरं तन्नामा रोगः। सुश्रुतोक्ते दोषकृते उदररोगभेदे तन्निदानादि तत्रोक्तम् उदरशब्दे ११४८पृ॰दर्शितम् “प्रकीर्तितं दूष्योदरन्तु घोरम्”सुश्रुतः

**दृ** आदरे तु॰ आ॰ सक॰ अनिट्। द्रियते अदृत। अयमाङ्पूर्व एव प्रयुज्यते। “निपीय यस्य क्षितिरक्षिणः कथां तथाऽऽद्रियन्ते न बुधाः सुधामपि” नैष॰ आदृतः आदरः। “दराादराभ्यां दरकम्पिनी पपे” नैष॰ “न जातहार्देन न विद्विषादरः” किरा॰ “आदृत्यस्तेन हृत्येन” भट्टिः।

**दृ** वधे स्वादि॰ पर॰सक॰ अनिट्। दृणोति अदार्षीत् ददार स्वादिगणे छान्दसीत्यविकारे “चिञ् जिरि दाश दृ—हिंसायाम्” पा॰ उक्तेः छान्दसोऽयम्। “चिणोतिभीषायामपीत्येके” सि॰कौ॰ उक्तेः अन्यस्यापि क्वचिद्भाषायां प्रयोग इति गम्यते मत्स्यघातिनि धीवरे दाशशब्दप्रयोगात्। [संक्षिप्तसारे

**दृक्क** न॰ दृ+विदारे बा॰ कक् गुणस्य न कित्त्वम्। छिद्रे

**दृक्काण** न॰ज्योतिषोक्ते राशेस्तृतीये दशांशरूपे अंशे द्रेक्काणे “त्रिंशत्समे विंशतिरत्र्यमे खे रुद्रेऽक्षिचन्द्रादशकं दृकाणे” नील॰ता॰ पञ्चवर्गीवलकथने दृक्काणशब्दे विवृतिः।

**दृक्कर्ण** पुंस्त्री॰ दृक् नेत्रमेव कर्णोऽस्य। सर्पे हेमच॰ स्त्रियां जातित्वात् ङीष्।

**दृक्कर्म्मन्** न॰ दृगर्थं दृष्ट्यर्थं कर्म। ग्रहाणां दर्शनयोग्यताज्ञानार्थे सू॰सि॰ उक्ते कर्मभेदे तच्च ग्रहनक्षत्रयोगाद्युपयोगि संस्कारभेदरूपं यथाह तत्र

“नक्षत्रग्रहयोगेषु ग्रहास्तोदयसाधने। शृङ्गोन्नतौ तु चन्द्रस्य दृक्कर्मादाविदं स्मृतम्” सू॰सि॰“अत्र निमित्तसप्तमी ग्रहनक्षत्राणां बहुत्वाद्बहुवचनम्। नक्षत्रग्रहयोर्युत्यर्थं नक्षत्रग्रहयोरिदं द्वयं दृक्कर्म स्फुटं प्रागुक्तम् आदौ प्रथमं कार्यम्। ताभ्यामनन्तरं क्रिया कार्यार्थः। अत्र नक्षत्रध्रुवकाणामायनदृक्कर्मसंस्कृतानामेवोक्तत्वादायनं दृक्कर्म न कार्यमिति ध्येयम्। ग्रहाणामस्तोदयौ नित्यास्तोदयौ सूर्यसान्निध्यजनितास्तोदयौ च ग्रहाणामुपलक्षणत्वान्नक्षत्राणामपि। तयोः साधननिमित्तं ग्रहस्य नक्षत्रस्य वा देयम्। अत्राक्षदृक्कर्मार्थं केवलः शरः साध्यः। न तु दिनमानरात्रिमानगतोन्नते साध्ये। क्षितिजसम्बन्धेन दृश्यग्रहरूपोदयास्तलग्नसाधकत्वेन क्षितिजातिरिक्तायनपरिणामस्य व्यर्थत्वात् युतौ तु कदम्बप्रोतवृत्ते युगपद्दर्शनार्थं तत्परिणामस्यावश्यकत्वात्। शृङ्गोन्नतिनिमित्तं चन्द्रस्य। तुकारः समुच्चयार्थकचकारपरः। अत्रापि श्लोके पूर्वार्द्धोक्तमाक्षदृक्कर्म संस्कार्यमिति ध्येयम्”। रङ्गना॰

दृक्कर्म द्विविधम् आयनमाक्षजञ्च तत्रायनदृक्कर्मायनशब्दे ७०१पृ॰ सि॰शि॰ उक्तं दर्शितम् आक्षजं दृक्कर्मोच्यते

“इदानीमाक्षजं दृक्कर्माह प्रमि॰ “स्फुटास्फुटक्रान्तिजयोश्चरार्धयोः समान्यदिक्त्वेऽन्तरयोगजासवः। पलोद्भवाख्या भनभःशदा शरे मङ्त्यथाल्पे यदि वा स्युरन्यथा। अक्षेत्रुरक्षावलनेन हतो विभक्तो लम्बज्यया रविहृतोऽथवा हतो वा। लब्धं हतं त्रिभगुणेन हृतं द्युमौर्व्या स्युर्वाऽसवः पलभवा अथ वैः शरे तु। याम्योत्तरे क्रमविलोमविधानलग्नं खेटात् कृतायनफलादुदयास्तलग्नम्। सौम्ये क्रमेण विपरीतमिषौ तु याम्ये भार्धाधिकात् खचरतोऽस्तविलग्नमेवम्”मू॰। “ग्रहस्य स्फुटक्रान्तेरस्फुटक्रान्तेश्चरार्धे साध्ये। यदि स्फुटास्फुटक्रान्ती तुल्यदिके तदा चरार्धयोरन्तरं कार्यम्। यदि भिन्नदिके तदा योगः। एवं येऽसवो भवेयुस्ते पलोद्भवा ज्ञेयाः। ग्रहस्य भस्य वा यदा मध्यान्तरस्तदैवम्। यदाल्पस्तदान्यथा वा पलोद्भवासवः साध्याः। ग्रहस्य स्पष्टः शरोऽक्षवलनेन गुण्यो लम्बज्यया भाज्यः। अथ वा पलभया गुणितो द्वादशभिर्भाज्यः। यल्लब्धं तत् त्रिज्यया गुणयं द्युज्यया भाज्यं फलं पलोद्भवा असवो भवन्तीत्यनुकल्पः। अथ कृतायनदृक्कर्मकं ग्रहं रविं प्रकल्प्य तैः पलोद्भवासुभिर्लग्नं साध्यम्। यदि ग्रहस्य याम्यः शरस्तदा क्रमविलग्नम्। यदि सौम्यस्तदा विलोमलग्नम्। एवं कृते सति ग्रहस्योदयलग्नं भवति। अथ तमेव ग्रहं सभार्धं रविं प्रकल्प्य तैरेवासुभिरुत्तरे शरे यत् क्रमलग्नं याम्ये विलोमं क्रियते तद्ग्रहस्यास्तलग्नम्”। “अत्रोपपत्तिः। अत्र गोले विषु-

वलयवृत्तं स्वाक्षांशैर्यावद्भ्रामितं तावदुन्मण्डलमुत्तरगोले क्षितिजादुपरि लगति याम्येऽधः। यतस्तत्रस्थो ग्रहः खचरार्धासुभिरुन्नतिं नतिं च गतः। अतश्चरार्द्धस्य या वासना सैव पलोद्भवासूनाम्। स्फुटास्फुटक्रान्तिजयोश्चरार्धयोरन्तरे यावन्तोऽसवस्तावन्तः शरभवा इत्यर्थाज्जातम्। यतस्तयोरन्तरं शर एवं तुल्यदिक्कौ। यदा महता शरेणान्यदिक्कं नीता क्रान्तिस्तदा शरस्यैकं खण्डमुत्तरतोऽन्यद्दक्षिणतः। तयोर्योगे यतः शरो भवति। अतस्तज्जनितयोश्चरार्धयोर्योगे शरजनिताः पलोद्भवासवः स्युः। एवं हि महति शरे। अथाल्पे। ग्रहः किलोत्तरगोल उत्तरश्च तस्य शरस्तदाक्षवशाच्छरेण ग्रहस्य तदुन्नमनं तत् त्रैराशिकेन साध्यते। यदि लम्बज्यया कोट्याऽक्षज्यातुल्यो भुजस्तदा स्फुटशरतुल्यया किमिति। अत्र यत् फलं तदुपहद्युज्यावृत्ते ज्यारूपं भवति। अथ वा लघुना क्षेत्रेणानुपातः। यदि द्वादशाङ्गुलकोट्या पलभा भुजस्तदा स्फुटशरकोट्या किमिति। फलं तुल्यमेव। अथ त्रिज्यावृत्त परिणामायानुपातः। यदि द्युज्यावृत्त एतावती ज्या तदा त्रिज्यावृत्ते कियतीति। फलस्य धनुः कर्तुं युज्यते। तच्छरस्याल्पत्वान्नोपपद्यत इति न कृतम्। आयनदृक्कर्मण्यस्फुटाच्च पादशरः साधिताः इह तु स्फुटात्। तत्र कारणमुच्यते। तेन दृक्कर्मणा निरक्षदेशक्षितिजस्थो ग्रहः कृतः। तत् क्षितिजमन्यदेशे उन्मण्डलम्। शरमूले यद्द्युज्यावृत्तं शराग्रे च यत् तयोर्द्वयोरुन्मण्डले यावदन्तरं तावान् स्फुटः शरः। न तु कोटिरूपः। अतोऽत्र कोटिरूपेण पलोद्भवा असवः साधिताः कृतायनदृक्कर्मको ग्रहोऽक्षवशात् प्रागुदित उदेष्यति वा वैरसुभिस्तेऽत्र पलोद्भवाख्याः। अथ याम्ये शरे तैरसुभिः क्षितिजादधःस्थो ग्रहो यावदुपरि क्षितिजं नीयते तावत् कृतायनदृक्कर्मग्रहादग्रतः क्रान्तिवृत्तं क्षितिजे लगति। यदि सौम्यः शरस्तदा तैरसुभिः क्षितिजादुपरिस्थो ग्रहः क्षितिजं यावदधो नीयते तावत् कृतायनदृक्कर्मकाद्ग्रहात् पृष्ठतः क्रान्तिवृत्तं क्षितिजे लगति। अत उक्तं शरे याम्योत्तरे क्रमोत्क्रमविधानलग्नमित्यादि। एवं कृते उदयलग्नं जातम्। अस्मादुदयलग्नसाधनादस्तलग्नसाधनम्। यतो यैरसुभिर्विक्षेपेण प्राच्यां ग्रहः क्षितिजादुन्नाम्यते तैरेव प्रतीच्यां नाम्यते। यैर्नाम्यते तैरेवोन्नाम्यते। अथ प्रतीच्यां ग्रहोऽस्तं गच्छति प्राच्यां यल्लग्नमुदेति तदस्तलग्नम्। अतो भार्धाधिकात् खचरत इत्युक्तम्। इदं सर्वं गोलोपरि सम्यग्दृश्यते"।

द्रेक्काण न० ज्यो० उक्ते राशेर्दशांशरूपे तृतीयांशे द्रेक्काणे तथा च एकैकराशौ त्रयो द्रेक्काणास्तेन द्वादशराशिषु ३६ द्रेक्काणा भवन्ति मेषादिराशिस्थानां तेषां षट्त्रिंशतः क्रमेण स्वरूपाणि बृहज्जा० २६ श्लोकैरुक्तानि यथा "कट्यां सितवस्त्रवेष्टितः कृष्णः शक्त इवाभिरक्षितुम्। रौद्रः परशुं समुद्यतं धत्ते रक्तविलोचनः पुमान्१। रक्ताम्बराभरणभक्ष्यचिन्ता कुम्भाकृतिर्वाजिमुखी तृषार्त्ता। एकेन पादेन च मेषमध्ये द्रेक्काणरूपं यवनोपदिष्टम्२। क्रूरः कलाज्ञः कपिलः क्रियार्थी भग्नव्रतोऽभ्युद्यतदण्डहस्तः। रक्तानि वस्त्राणि बिभर्त्ति चण्डो मेषे तृतीयः कथितस्त्रिभागः३। कुञ्चितलूनकचा घटदेहा दग्धपटा तृषिताशनचित्ता। आभरणान्यभिवाञ्छति नारी रूपमिदं वृषभे प्रथमस्य४। क्षेत्रधान्यगृहधेनुकलाज्ञो लाङ्गले सशकटे कुशलश्च। स्कन्धमुद्वहति गोपतितुल्यं क्षुत्परोऽजवदनो मलवासाः५। द्विपसमकायः पाण्डुरदंष्ट्रः शरभसमाङ्घ्रिः पिङ्गलमूर्तिः। अविमृगलोभव्याकुलचित्तो वृषभवनस्य प्रान्तगतोऽयम्६। सूच्याश्रयं समभिवाञ्छति कर्म नारी रूपान्विताऽऽभरणकार्यकृतादरा च। हीनप्रजोच्छ्रितभुजर्त्तुमती त्रिभागमाद्यं तृतीयभवनस्य वदन्ति तज्ज्ञाः७। उद्यानसंस्थः कवची धनुष्मान् शूरोऽस्त्रधारी गरुडाननश्च। क्रीडात्मजालङ्करणार्थचिन्तां करोति मध्ये मिथुनस्य राशेः८। भूषितो वरुणवद्बहुरत्नो बद्धतूणकवचः सधनुष्कः। नृत्यवादनकलासु च विद्वान् काव्यकृन्मिथुनराश्यवसाने९। पत्रमूलफलभृद्द्विपकायः कानने मलयगः शरभाङ्घ्रिः। क्रोडतुल्यवदनो हयकण्ठः कर्कटे प्रथमरूपमुशन्ति१०। पद्मार्चिता मूर्द्धनि भोगियुक्ता स्त्री कर्कशारण्यगता विरौति। शाखां पलाशस्य समाश्रिता च मध्ये स्थिता कर्कटकस्य राशेः११। भार्याभरणार्थमर्णवं नौस्थो गच्छति सर्पवेष्टितः। हैमैश्च युतो विभूषणैश्चिपिटास्योऽन्त्यगतश्च कर्कटे १२। शाल्मलेरुपरि गृध्रजम्बुकौ श्वा नरश्च मलिनाम्बरान्वितः। रौति मातृपितृविप्रयोजितः सिंहरूपमिदमाद्यमुच्यते १३। हयाकृतिः पाण्डुरमाल्यशेखरो बिभर्ति कृष्णाजिनकम्बलं नरः। दुरासदः सिंह इवात्तकार्मुको नताग्रनासो मृगराजमध्यमः१४।

रक्ताननो वानरतुल्यचेष्टो बिभर्त्ति दण्डं फलमामिषं च । कूर्च्ची मनुष्यः कुटिलैश्च केशैर्मेषेश्वरस्यान्त्यगतस्त्रिभागः १५ । पुष्पप्रपूर्णेन घटेन कन्या मलप्रदिग्धाम्बरसंवृताङ्गी । वस्त्रार्थसंयोगमभीप्समाना गुरोः कुलं वाञ्छति कन्यकाद्यः १६ । पुरुषः प्रगृहीतलेखनिः श्यामो वस्त्रशिरा व्ययायकृत् । विपुलं च बिभर्त्ति कार्मुकं रोमव्याप्ततनुश्च मध्यमः १७ । गौरी सुधौताग्र्यदुकूलगुप्ता समुच्छ्रिता कुम्भकटाहहस्ता । देवालयं स्त्री प्रयता प्रवृत्ता वदन्ति कन्यान्त्यगतं त्रिभागम् १८ । वीथ्यन्तरापणगतः पुरुषस्तुलावानुन्मानमानकुशलः प्रतिमानहस्तः । भाण्डं विचिन्तयति तस्य च मूल्यमेतद्रूपं वदन्ति यवनाः प्रथमं तुलायाः १९ । कलशं परिगृह्य विनिःपतितुं समभीप्सति गृध्रमुखः पुरुषः । क्षुधितस्तृषितश्च कलत्रसुतान्मनसैति तुलाधरमध्यगतः २० । विभीषयंस्तिष्ठति रत्नचित्रितो वने मृगान् काञ्चनतूणवर्मभृत् । फलामिषं वानररूपधृन्नरस्तुलावसाने यवनैरुदाहृतः २१ । वस्त्रैर्विहीनाऽऽभरणैश्च नारी महासमुद्रात् समुपैति कूलम् । स्थानच्युता सर्पनिबद्धपादा मनोरमा वृश्चिकराशिपूर्वः । स्थानसुखान्यभिवाञ्छति नारी भर्त्तृकृते भुजगावृतदेहा । कच्छपकुम्भसमानशरीरा वृश्चिकमध्यमरूपमुशन्ति २२ । पृथुलचिपिटकूर्मतुल्यवक्त्रः श्वमृगवराहशृगालभीषकारी । अवति च मलयाकरप्रदेशं मृगपतिरन्त्यगतस्य वृश्चिकस्य २४ । मनुष्यवक्त्रोऽश्वसमानकायो धनुर्विगृह्यायतमाश्रमस्थः । क्रतूपयोज्यानि तपस्विनश्च रक्षन् पूर्वो धनुषस्त्रिभागः २५ । मनोरमा चम्पकहेमवर्णा भद्रासने तिष्ठति मध्यरूपा । समुद्ररत्नानि विघट्टयन्ती मध्यत्रिभागो धनुषः प्रदिष्टः २६ । कूर्च्ची नरो हाटकचम्पकाभोवरासने दण्डधरो निषण्णः । कौशेयकान्युद्वहतेऽजिनं च तृतीयरूपं नवमस्य राशेः २७ । रोमचितोमकरोपमदंष्ट्रः सूकरकायसमानशरीरः । योक्त्रकजालकबन्धनधारी रौद्रमुखो मकरप्रथमस्तु २८ । कलास्वभिज्ञाब्जदलायताक्षी श्यामा विचित्राणि च मार्गमाणा । विभूषणालङ्कृतलोहकर्णा योषा प्रदिष्टा मकरस्य मध्ये २९ । किन्नरोपमतनुः सकम्बलस्तूणचापकवचैः समन्वितः । कुम्भमुद्वहति रत्नचित्रितं स्कन्धमं मकरराशिपश्चिमः ३० । स्नेहमद्यजलभोजनागमव्याकुलीकृतमनाः सकम्बलः । कोषकारवसनोऽजिनान्वितो गृध्रतुल्यवदनो घटादिमः ३१ । दग्धे शकटे सशाल्मले लोहान्याहरतेऽङ्गना वने । मलिनेन पटेन संवृता भाण्डैर्मूर्द्धिगतैश्च मध्यमः ३२ । श्यामः सरोमश्रवणः किरीटी त्वक्पत्रनिर्यासफलैर्बिभर्त्ति । भाण्डानि लोहैर्व्यतिमिश्रितानि सञ्चारयत्यन्त्यगतो घटस्य ३३ । सुगभाण्डमुक्तामणिशङ्खमिश्रैर्व्याक्षिप्तहस्तः सविभूषणश्च । भार्याविभूषार्थमपां निधानं नावा प्लवत्यादिगतो झषस्य ३४ । अत्युच्छ्रितध्वजपताकमुपैति पोतं कूलं प्रयाति जलधेः परिवारयुक्ता । वर्णेन चम्पकमुखा प्रमदा त्रिभागो मीनस्य चैष कथितो मुनिभिर्द्वितीयः ३५ । श्वभ्रान्तिके सर्पनिवेष्टिताङ्गो वस्त्रैर्विहीनः पुरुषस्त्वटव्याम् । चौरानलव्याकुलितान्तरात्मा विक्रोशतेऽन्त्योपगतो झषस्य ३६ ।" एतेषां स्वरूपोत्कीर्त्तनेन नष्टजातकोद्धारः तत्रैव दर्शितः तथा षट्पञ्चाशिकायां चौरस्वरूपविज्ञानमपि एतद्द्वारेण कार्यमित्युक्तम् यथा "अंशकाज्ज्ञायते द्रव्यं दृक्काणैस्तस्करास्तथा" "होरानवांशप्रतिमं विलग्नं लग्नाद्रविर्यावति वा दृकाणे । "तस्माद्वदेत्तावति वा विलग्नं प्रष्टुः प्रसूताविह शास्त्रमाहुः" इत्युक्ता०। राशिभेदे तदधिपाश्च "स्वपञ्चनवमानां ये राशीनामधिपाः ग्रहाः । ते द्रेक्काणाधिपा राशौ द्रेक्काणास्त्रय एव हि" ज्यो०त० यथा मेषस्य स्वामी कुजः १द्रेक्काणेशः । तत्पञ्चम सिंहराशेः स्वामी रविः स मेषस्य २द्रेक्काणेशः मेषतः नवमो धनुराशिस्तदीशः जीवः मेषस्य ३द्रेक्काणेशः एवं सर्वादेरूह्यम् । द्रेष्काण द्रेक्काण द्रेकाणा अपि तत्रार्थे

**दृक्क्षेप** पु० ६त० । १दृष्टिपाते स्त०सि० उक्ते २दृग्वृत्तजात्यन्तरालस्यशररूपे क्षेपे च यथा

"अथाभ्यामुपयुक्तं दृक्क्षेपं लम्बनोपयुक्तां दृग्नतिं चाह" रङ्ग०। "मध्योदयज्ययाभ्यस्ता त्रिज्याप्ता वर्गितं फलम् । मध्यज्यावर्गविश्लिष्टं दृक्क्षेपः शेषतः पदम् । तत्त्रिज्यावर्गविश्लेषान्मूलं शङ्कुः स दृग्गतिः" सू०। पूर्वोक्तमध्यज्या पूर्वानीतोदयाभिधयोदयज्यया। अस्या ज्याङ्कपत्वाद्दृग्ज्ययेत्युक्तम् । गुणिता त्रिज्यया भक्ता फलं वर्गितं वर्गः सञ्जातो यस्य तत् । फलस्य वर्गः कार्य इत्यर्थः । मध्यज्याया वर्गे विश्लिष्टं हीनं वर्गितं फलं कार्यम् । शेषान्मूलं दृक्क्षेपः तत्त्रिज्ययोर्यौ वर्गौ तयोरन्तरान्मूलं शङ्कुः । स आनीतः शङ्कुर्दृग्गतिसञ्ज्ञो भवति । न तु शङ्कुमात्रम् । अत्रोपपत्तिः । त्रिभोनलग्नस्य दृग्ज्यानयनार्थं चेत्थम् । मध्यलग्नदृग्ज्या कर्णस्त्रिभोनलग्नस्य याम्योत्तरवृत्तात् प्रागपरस्थितत्वेन

तत्स्वस्वस्तिकान्तरस्थिततदीयदृग्वृत्तप्रदेशांशज्या कोटिः। मध्यलग्नत्रिभोनलग्नान्तरांशज्या क्रान्तिवृत्तस्थो भुजः। अत्र भुजानयनं चोदयलग्नस्थक्रान्तिवृत्तप्रदेशः। प्राक्स्वस्तिकात् तद्याम्यान्तरेणोत्तरदक्षिणो भवति। एवमस्तलग्नप्रदेशः परस्वस्तिकाद्दक्षिणोत्तरः। तदनुरोधेन च त्रिभोनलग्नप्रदेशक्रान्तिवृत्तीययाम्योत्तरवृत्तरूपतद्दृग्वृत्तक्षितिजसम्पातात् तदग्रान्तरेण लग्नमवश्यं भवति। अतस्त्रिजयातुल्यमध्यलग्नदृग्ज्यया लग्नाग्रातुल्यो भुजस्तदाभीष्टतद्दृग्ज्यया क इत्यनुपातेन स फलभुजः। तद्वर्गोनान्मध्यलग्नदृग्ज्यावर्गान्मूलं त्रिभोनलग्नस्य दृग्ज्या दृक्क्षेपाख्या। एतद्वर्गोनात् त्रिज्यावर्गान्मूलं त्रिभोनलग्नशङ्कुर्दृग्गतिसंज्ञः। अत्रेदमवधेयम्। त्रिप्रश्नाधिकारोक्तप्रकारेण त्रिभोनलग्नस्य शङ्कुदृग्ज्ये दृग्गतिदृक्क्षेपतुल्ये न भवतः। किन्तु दृग्गतिदृक्क्षेपाभ्यां क्रमेण न्यूनाधिके भवतः सर्वदा धूलीकर्मणानुभवात्। अत आनीतोऽयं दृक्क्षेपस्त्रिभोनलग्नदृङ्मण्डलस्थितोऽपि न त्रिज्यानुरुद्धः। किन्तु फलवर्गोनत्रिज्यावर्गपदरूपविलक्षणवृत्तव्यासार्धप्रमाणेन सिद्ध इति गम्यते। अतो दृग्ज्यायास्त्रिज्यानुरुद्धत्वेन त्रिज्यावृत्तपरिणतो दृक्क्षेपस्त्रिभोनलग्नस्य दृग्ज्या स्फुटदृक्क्षेपरूपा। अस्यास्त्रिज्यावर्गेत्यादिना दृग्गतिः स्फुटा त्रिभोनलग्नशङ्कुरूपा। एतदनुक्तिः स्वल्पान्तरत्वाद्गणितसुखार्थं कृपालुना कृता। त्रिप्रश्नक्रियागौरवभियैतन्मार्गान्तरं लाघवादुक्तमिति दिक्। अथ लाघवाद्दृक्क्षेपदृग्गती गणितसुखार्थं श्लोकार्धेनाह" रङ्ग॰ "नतांशबाहुकोटिज्ये स्फुटे दृक्क्षेपदृग्गती। एकज्यावर्गतश्छेदो लब्धं दृग्गतिजीवया" सू॰। "दशमभावनतांशानां भुजकोट्योर्नतांशतदूननवतिरूपयोरनयोर्ज्ये क्रमेण दृक्क्षेपदृग्गती अस्फुटे स्थूले। यत्तु स्फुटे प्रागुक्ते दृक्क्षेपदृग्गती विहाय गणितलाघवार्थं दशमभावनतांशभुजकोट्योर्ज्ये तत्स्थानापन्ने ग्राह्ये। तत्तूदयज्याभावे नतांशबाहुकोटिज्ये दृक्क्षेपदृग्गती स्फुटे इति तन्न उक्तप्रकारेणैतत्सिद्धेस्तत्कथनस्य व्यर्थत्वात्। अत्रोपपत्तिः। त्रिभोनलग्नस्य दशमभावासन्नत्वेन दशमभावस्य याम्योत्तरवृत्तस्थत्वेन लाघवार्थं दशमभावमेव त्रिभोनलग्नं प्रकल्प्य तन्नतांशज्या मध्यज्यारूपा त्रिभोनलग्नदृक्क्षेपः। उन्नतज्या शङ्कुर्दृग्गतिः। इदमतिस्थूलम्। यैस्तु भगवतोक्तं मध्यलग्नं दशमभावपरतया व्याख्यातं तेषां मत एतदुक्तमिति सूक्ष्मम्। प्रयास-
साधितदृक्क्षेपदृग्गती प्रागुक्ते सूक्ष्मे अपतिस्थूले इति ध्येयम्। भास्कराचार्यैस्तु" "त्रिभोनलग्नस्य दिनार्धजाते नतोन्नतज्ये यदि वा सुखार्थम्"। इति यदुक्तं तदस्मात् सूक्ष्ममिति ध्येयम्" रङ्ग॰। [तीर्थदृक्पथे" नैष॰।

**दृक्पथ** पु॰ ६त॰। दृष्टियोग्ये स्थाने। "क्रमेण तस्मिन्नथ-

**दृक्प्रसाद** स्त्री दृशं प्रसादयति अञ्जनेन प्र+सद्+णिच् अण् दृशः प्रसादो यस्याः वा। कुलत्थायां राजनि॰ तदञ्जनेन नेत्रयोः प्रसादनात्तस्यास्तथात्वम्।

**दृक्प्रिया** स्त्री दृशं प्रीणाति प्री—क। शोभायां राजनि॰ शोभादर्शने हि, दृशोस्तद्द्वारात्मनः प्रीणनात्तस्यास्तथात्वम्

**दृक्शक्ति** स्त्री दृक् प्रकाशनमेव शक्तिः। १प्रकाशरूपे चैतन्ये २तद्युक्ते सर्वप्रकाशके चेतने पुरुषे च "दृग्दर्शनशक्त्योरेकात्मतेवास्मिता" पात॰सू॰ "पुरुषोदृक्शक्तिर्बुद्धिर्दर्शनशक्तिः" भा॰।

**दृक्श्रुति** पु॰ दृक् नेत्रमेव श्रुतिः श्रवणमस्य। चक्षुःश्रवसि सर्पे हला॰। [धिष्ठातृत्वेन तदध्यक्षत्वम्।

**दृगध्यक्ष** पु॰ ६त॰। सूर्ये शब्दार्थकल्पतरुः। तस्य नेत्रा-

**दृगल** न॰ दृशे दर्शनायालति अल—पर्याप्तौ अच्। शकले खण्डे "पुरा दृगलं प्रत्तमिन्द्राग्निभ्यः" आश्व॰श्रौ॰ ५।७।२ "दृगलं शकलम्" नारा॰।

**दृग्गति** स्त्री ६त॰। १दृशोर्गतौ सू॰सि॰ उक्ते परहस्तोपयोगिनि २दृशोगतिभेदे दृक्क्षेपशब्दे दृश्यम्।

**दृग्गोल** न॰ खगोलान्तर्गते गोलभेदे यथोक्तं सि॰शि॰ "बद्ध्वा खगोले नलिकाद्वयं च ध्रुवद्वये तन्नलिकास्थमेव। बहिः खगोलाद्विदधीत धीमान् दृग्गोलमेवं खलु वक्ष्यमाणम्। भगोलवृत्तैः सहितः खगोलो दृग्गोलसंज्ञोऽपममण्डलाद्यैः। द्विगोलजातं खलु दृश्यतेऽत्र चेत्तं हि दृग्गोलमतो वदन्ति"। "तस्मिन् खगोले ध्रुवचिह्नयोर्नलिकाद्वयं बद्ध्वा तन्नलिकाधारमेव खगोलाद्बहिरङ्गुलत्रयान्तरे दृग्गोलं रचयेत्। कथितैः खगोलवृत्तैर्वक्ष्यमाणैर्भगोलवृत्तैः क्रान्तिविमण्डलाद्यैर्यो निबध्यते स दृग्गोलः। कथमस्य दृग्गोलसंज्ञेति तदर्थमाह। द्विगोलजातमित्यादि। यतोऽग्राकुज्यासमण्डलाद्यक्षक्षेत्राणि द्विगोलजातानि भगोलवृत्तैः खगोलवृत्तमिलितैस्तान्युत्पद्यन्ते। भिन्नगोलबन्धे सम्यङ् नोपलभ्यन्त इति दृग्गोलः कृतः" प्रमि॰।

**दृग्ज्या** स्त्री सू॰सि॰उक्तायां दिनमानादिज्ञानार्थं शङ्कुच्छायोपयोगिन्यां दृष्टियोग्यायां दृग्वृत्तक्षेत्रस्थजीवायाम् यथोक्तं

तत्र "त्रिज्योदक्चरजायुक्ता याम्यायां तद्विवर्जिता । अन्त्या नतोत्क्रमज्योना स्वाहोरात्रार्द्धसङ्गुणा । त्रिज्याभक्ता भवेच्छेदो लम्बज्याघ्नोऽथ भाजितः । त्रिभज्यया भवेच्छङ्कुस्तद्वर्गं परिशोधयेत् । त्रिज्यावर्गात् पदं दृग्ज्या छायाकर्णौ तु पूर्ववत्" सू॰सि॰ "उत्तरगोले चरोत्पन्नया ज्यया चरज्ययेत्यर्थः पूर्वचरानयने चरज्यायाश्चरजेति सङ्ग्रोक्तेः । युक्ता त्रिज्यान्त्या स्यात् । याम्यगोले तया चरज्ययोना त्रिजीवान्त्या स्यात् । नतोत्क्रमज्योना सूर्योदयादिष्टगतघट्यो दिनशेषघट्यो वा दिनार्धान्तर्गता उन्नतसंज्ञास्ताभिरून दिनार्धं नतकालो घट्यात्मकस्तस्मादसुभ्यो लिप्तास्तत्त्वयमैरित्यादिविधिना तयोः रन्ध्रयमला इत्याद्युक्तोत्क्रमज्यापिण्डैर्ज्योत्क्रमज्या । पञ्चदशघट्यधिकनते तु पञ्चदशघट्यूननतस्य क्रमज्याखण्डैः क्रमज्या तया युक्ता त्रिज्योत्क्रमज्या भवति । तया हीनेत्यर्थः । स्वाहोरात्रार्द्धसङ्गुणा । गृहीतचरज्यासम्बन्ध्यहोरात्रवृत्तव्यासार्धं द्युज्या तया गुणिता त्रिज्यया भक्ता फलं छेदसंज्ञः स्यात् । अथानन्तरं छेदो लम्बज्यया गुणितस्त्रिज्यया भाज्यः फलमिष्टकाले शङ्कुः स्यात् । तस्य शङ्कोर्वर्गं त्रिज्यावर्गाच्छोधयेत् । शेषस्य मूलं दृग्ज्या । आभ्यां छायाकर्णौ तु पूर्ववत् पूर्वोक्तरीत्या भवतः । अत्र छायाकर्णौ त्विति कोणच्छायाकर्णसाधनश्लोकान्तभागस्य ग्रहणात् तच्छ्लोकोक्तरीत्याभीष्टशङ्कुदृग्ज्याभ्यां छायाकर्णौ साध्याविद्युक्तम् । अत्रोपपत्तिः । याम्योत्तरवृत्तोर्द्धभागग्रहाधिष्ठितद्युरात्रवृत्तसम्पातात् क्षितिजद्युरात्रवृत्तसम्पातद्वयबद्धोदयास्तसूत्रक्षितिजसम्बद्धयाम्योत्तरवृत्तसूत्रसम्पातपर्यन्तमहोरात्रवृत्ते सूत्रं त्रिज्यानुरूपमन्त्या । सा तूत्तरगोले चरज्यायुता त्रिज्या दक्षिणगोले चरज्ययोना त्रिज्या उन्मण्डलयाम्योत्तरसूत्रावध्यहोरात्रवृत्तव्यासार्धं त्रिज्यात्वात् उन्मण्डलस्योत्तरदक्षिणक्रमेण क्षितिजादूर्ध्वाधःस्थत्वेन तद्याम्योत्तरसूत्रयोर्मध्ये चरज्यात्वाच्च । ग्रहाहोरात्रवृत्ते याम्योत्तराहोरात्रवृत्तसम्पातादुभयत्र नतघट्यन्तरेण स्थाने तत्सूत्रं नतकालस्य सम्पूर्णज्या । तन्मध्यादूर्द्धसूत्रं शररूपं नतोत्क्रमज्या । तया हीनान्त्या ग्रहस्थानादहोरात्रवृत्ते उदयास्तसूत्रपर्यन्तमृजुसूत्रं त्रिज्यानुरूपमिष्टान्त्या । तत्तुल्या याम्योत्तरोर्ध्वव्यासवृत्तान्तर्गता सा द्युज्याप्रमाणसाधितेष्टहृतिः । द्युज्यागुणा त्रिज्याभक्ता फलं छेदः । अस्मात् त्रिज्याकर्णे लम्बज्या कोटिस्तदेष्टहृतिकर्णे का कोटिरित्यनुपातेनेष्टशङ्कुः । अस्मादुदृग्ज्याच्छायातत्कर्णौ उक्तरीत्या सिद्धावित्युक्तमुपपन्नम्" रङ्गनाथः ।

**दृग्लम्बन** न॰ सि॰शि॰ उक्ते ग्रहणदर्शनोपयोगिनि दृक्क्षेत्रस्थलम्बभेदे यथा "दृष्टापवर्त्तितां पृथ्वीं कक्षे च शशिसूर्ययोः । भित्तौ विलिख्य तन्मध्ये तिर्यग्रेखां तयोर्द्विमाम् । तिर्यग्रेखायुतौ कक्ष्ये कक्षायां क्षितिजं तथा । ऊर्द्ध्वरेखायुतौ स्वार्धं दृग्ज्याचापांशकैर्नतौ । कृत्वार्केन्दू समुत्पत्तिं लम्बनस्य प्रदर्शयेत् । एकं भूमध्यतः सूत्रं नयेत्खण्डांशुमण्डलम् । द्वितीयं भूपृष्ठगादन्यद्दृष्टिसूत्रं तदुच्यते । कक्षायां सूत्रयोर्मध्ये यास्ता लम्बनलिप्तिकाः । गर्भसूत्रे सदा स्यातां चन्द्रार्कौ समलिप्तिकौ । दृक्सूत्राल्लम्बितचन्द्रस्तेन तल्लम्बनं स्मृतम् । दृग्गर्भसूत्रयोरैक्यात् खमध्ये नास्ति लम्बनम्" । "यत्र तत्र नतादर्कादधश्चन्द्रावलम्बनम् । तद्दृग्वृत्तेऽन्तरं चन्द्रभान्वोः पूर्वापरं च तत् । पूर्वापरं च याम्योदग्जातं तेनान्तरद्वयम् । क्रान्तिमण्डलं प्राची तत्तिर्यग्दक्षिणोत्तरा । यत् पूर्वापरभावेन लम्बनाख्यं तदन्तरम् । यदान्योत्तरभावेन नतिसंज्ञं तदुच्यते । नतिलिप्ता भुजः कर्णो दृग्लम्बनकलास्तयोः । आद्यन्तरपदं कोटिः स्फुटलम्बनलिप्तिकाः । परलम्बनलिप्ताघ्नी त्रिज्याप्ता रविदृग्ज्यका । दृग्लम्बनकलास्ताः स्युरेवं दृक्क्षेपतो नतिः । गत्यन्तरस्य तिथ्यंशः परलम्बनलिप्तिका । नतियोजनतिथ्यंशः कुदलस्य यतो मितिः । स्युर्लम्बनकला नाड्यो गत्यन्तरलवोद्धृताः । प्राग्ग्रस्तो रवेश्चन्द्रः पश्चात् पृष्ठेऽवलम्बितः" सि॰शि॰ ।

**दृग्विष** पुंस्त्री दृशि विषमस्य । दृष्टिविषे सर्पभेदे हेमच॰ । स्त्रियां जातित्वात् ङीष् ।

**दृग्वृत्त** न॰ दृशः प्रचारस्थानं वृत्तमिव । १वृत्ताकारे दृक्प्रचारस्थले । "दृग्वृत्तस्य कदम्बप्रोतवृत्ताकारत्वे क्रान्तिवृत्ते ततोऽन्तराभावाद् लम्बनाभावः । याम्योत्तरमन्तरं दृग्लम्बनं नतिरेवोत्पन्ना । दृग्वृत्ताकारक्रान्तिवृत्ते तु दृग्लम्बनमेव क्रान्तिवृत्ते तयोरन्तरमिति लम्बनमुपपन्नं नत्यभावश्च । तथा च दृग्वृत्तस्य कदम्बप्रोतवृत्ताकारत्वे त्रिभोनलग्नस्थानेऽसौ भवति तद्वृत्तस्य क्रान्तिवृत्तयाम्योत्तरत्वेनोदयास्तलग्नमध्यवर्त्तित्वेन लग्नस्थानात् त्रिभान्तरितत्वात्" सू॰सि॰टी॰ रङ्गना॰ २दृङ्मण्डले च

तस्य खगोलबन्धप्रकारो दृङ्मण्डलशब्दे वक्ष्यते

**दृङ्नति** स्त्री सि० शि० ग्रहणदर्शनोपयोगितया दर्शिते दृक्प्रचारस्य नतिविशेषे यथा

"त्रिभोनलग्नस्य रवेश्च शङ्क्वोर्वा दृग्ज्ययोर्वर्गवियोगमूलम्। स्याद्दृङ्नतिर्वेदगुणा त्रिमौर्व्या भक्ताथवा लम्बननाडिकाः स्युः" मू० "त्रिभोनलग्नस्य यः शङ्कुः साधितस्तथा दर्शान्तकाले रवेः स्वोपकरणैर्यः शङ्कुरुत्पद्यते तावेतौ स्थापयित्वा तयोश्च दृग्ज्ये साध्ये। अथ तयोः शङ्क्वोर्यद्वर्गान्तरपदं तद्दृङ्नतिसंज्ञं भवति प्रथमप्रकारोऽयम्। अथ दृङ्नतेर्द्वितीयः प्रकारः। तयोर्दृग्ज्ययोर्वर्गान्तरपदं दृङ्नतिसंज्ञं भवति। अथ दृङ्नतेर्लम्बनमुच्यते। दृङ्नतिश्चतुर्गुणा त्रिज्यया भक्ता फलं लम्बननाडिकाः स्युः। अत्रोपपत्तिः सैव। यदा वित्रिभलग्नं खमध्ये भवति तदा दृङ्मण्डलमेव क्रान्तिवृत्तम्। त्रिभोनलग्नार्कयोर्यान्तरज्या सैव तदार्कस्य दृग्ज्या। सा चतुर्गुणा त्रिज्ययाप्ता मध्यमं किल लम्बनं भवति। तदेव स्फुटम् ऊर्द्ध्वस्थितत्वात् क्रान्तिवृत्तस्य। अथ यदा वित्रिभलग्नं खार्धोन्नतम् तिर्यक्स्थितत्वात् क्रान्तिवृत्तस्य, तदा तत् प्राच्यपरया स्फुटं लम्बनं कोटिरूपं भवति। तच्च वित्रिभलग्नशङ्क्वनुपातेन तथा स्फुटं कोटिरूपं ज्ञातम्। तत् कथमिति चेत् तदर्थमुच्यते। मध्यलम्बनानयने त्रिज्यैव वित्रिभलग्नशङ्कुः। ततः स्फुटत्वार्थं यः साधितो वित्रिभलग्नशङ्कुः स दृक्क्षेपमण्डले कोटिस्तद्दृग्ज्या भुजस्त्रिज्या कर्णः। वित्रिभलग्नस्य यद्दृङ्मण्डलं तद्दृक्क्षेपमण्डलमिति गोले कथितम्। अतस्त्रिज्यापरिणतया नतज्यया यदानीतं तज्जातं कर्णरूपं तत् कोटिरूपस्य वित्रिभलग्नशङ्कोरनुपातेन कोटित्वं नीतमित्युपपन्नम्। यदेव स्फुटलम्बनस्य कोटिरूपत्वमुपपन्नं तदेव प्रकारान्तरेणोपपादितम्। रवेर्दृङ्मण्डले या दृग्ज्या सा कर्णरूपिणी। वित्रिभलग्नस्य या दृग्ज्या स एव दृक्क्षेपः स भुजरूपः। यतः क्रान्तिमण्डलप्राच्याः सम्यग्दक्षिणोत्तरं खार्धाद्वित्रिभलग्नोपरिगतं दृक्क्षेपमण्डलम्। तत्र वित्रिभलग्नस्य या दृग्ज्या स दृक्क्षेपः। तज्जनिता नतिकक्षाचन्द्रार्ककक्षयोर्याम्योत्तरमन्तरं यत्सर्वत्र तुल्यमेव द्रष्टा पश्यति। यथोक्तं गोले।"कक्षयोरन्तरं यत् स्याद्वित्रिभे सर्वतोऽपि तत्" इतः "नतिलिप्ता भुजः कर्णो दृग्लम्बनकलास्तयोः। त त्यन्तरपदं कोटिः स्फुटलम्बनलिप्तिकाः"। "यत इदं लम्बनक्षेत्रमतो दृक्क्षेपार्कदृग्ज्ययोर्वर्गान्तरपदतुल्या दृङ्नतिर्भवितुमर्हति। परं यथा स्थिते गोले क्षेत्रोपरीयं न दृश्यते। यतो वित्रिभलग्नार्कयोरन्तरज्या वित्रिभलग्नशङ्कुव्यासार्द्धपरिणता सती दृङ्नतिर्भवति। अत एवानेनापि प्रकारेण क्षितिजस्थेऽर्के परमा दृङ्नतिर्वित्रिभलग्नशङ्कुतुल्या भवति। अतोऽयमपि प्रकारः पूर्वतुल्य एव। किन्तु दृक्क्षेपार्कदृग्ज्ययोस्तुल्ये शलाके भुजकर्णरूपे समायां भूमौ विन्यस्य तदन्तरे कोटिरूपां दृङ्नतिं दर्शयेत्। एवमनेकविधान्युपपत्त्यनुसारेण क्षेत्राणि परिकल्प्य मूलोक्तमौपसंहारमाचार्य्याः कुर्वते। अथ प्रस्तुतमुच्यते। अत्र किल वित्रिभलग्नस्य रवेश्च दृग्ज्ययोर्यद्वर्गान्तरपदं तावदेव तच्छङ्क्वोरपि भवति। तत् कथमिति चेत् तदुच्यते। अत्र स्वस्वशङ्कुवर्गयोनौ त्रिज्यावर्गौ दृग्ज्यावर्गौ भवतः। तयोरन्तरे कृते त्रिज्यावर्गयोस्तुल्यत्वात्तयोः शङ्कुवर्गान्तरमेवावशिष्यते। एवं यत्र कुत्रचिद्व्यासार्द्धेऽपि भुजज्ययोर्वर्गान्तरतुल्यं तत्कोटिज्ययोर्वर्गान्तरं भवतीति। अत उक्तम् "त्रिभोनलग्नस्य रवेश्च शङ्क्वोर्वा दृग्ज्ययोरिति" दृङ्नतितस्त्रिज्यानुपातेन लम्बनस्य घटीकरणम्" प्रमिता०। अत्रोपपत्तिरपि तत्रोक्ता यथा

"अथ याम्योत्तरायां तु भित्तौ पूर्वोक्तमालिखेत्। ये कक्षामण्डले तत्र ज्ञेये दृक्क्षेपमण्डले। त्रिभोनलग्नदृग्ज्या या स दृक्क्षेपो द्वयोरपि। तच्चापांशैर्नतौ विन्दू कृत्वा वित्रिभसंज्ञकौ। तल्लम्बनकलाः प्राग्वज्ज्ञेयास्ता नतिलिप्तिकाः। कक्षयोरन्तरं यत् स्याद्वित्रिभे सर्वतोऽपि तत्। याम्योत्तरं नतिः सा च दृक्क्षेपात् साध्यते ततः" "इदमेव क्षेत्रकं याम्योत्तरायां भित्तौ पूर्वपार्श्वे लिखित्वा तत्रुपपत्तिर्दर्शनीया। ये तत्र कक्षामण्डले ते दृक्क्षेपमण्डले। दर्शान्ते त्रिभोनलग्नस्य या दृग्ज्या स दृक्क्षेपः द्वयोरपि तावान्। ब्रह्मगुप्तमते तु तच्चापांशा वित्रिभलग्नशरसंख्यातश्चन्द्रदृक्क्षेपचापांशाः स्युः। तयोर्द्वयोः खार्धात् स्वस्वदृक्क्षेपचापांशैर्नतौ विन्दू कार्यौ तौ च वित्रिभसंज्ञौ। ततः प्राग्वद्भूमध्याद् भूपृष्ठाच्च सूत्रे प्रसार्य लम्बनलिप्तिका ज्ञेयास्ता नतिलिप्तिकाः नतिनाम चन्द्रार्ककक्षयोर्याम्योत्तरमन्तरम्। तद्वित्रिभलग्नस्थाने यावत् सर्वतोऽपि तावदेव भवति। अतो दृक्क्षेपात् साधिता नतिः"।

**दृङ्मण्डल** न॰ दृशः तत्प्रचारस्य मण्डलमिव। सि॰शि॰ उक्ते गोलबन्धान्तर्गते वलयाकारे मण्डलभेदे यथोक्तं तत्र "ऊर्द्ध्वाधरस्वस्तिककीलयुग्मे प्रोतं स्थिरं दृग्वलयं तदन्तः। कृत्वा परिभ्राम्य च तत्र तत्र नेयं ग्रहो गच्छति यत्र यत्र। ज्ञेयं तदेवाखिलखेचराणां पृथक् पृथग्वा रचयेत् तथाष्टौ। दृङ्मण्डलं त्रिलिभलग्नकस्य दृक्क्षेपवृत्ताख्यमिदं वदन्ति" खस्वस्तिके चाधःस्वस्तिके चान्तःकीलकौ कृत्वा तयोः प्रोतं स्थिरं दृग्वलयं कार्यम्। तत्तु पूर्ववृत्तेभ्यः किञ्चिन्न्यूनं कार्यम्। यथा खगोलान्तर्भवति। यद्येक एव ग्रहगोलस्तदैकमेव दृङ्मण्डलम्। यो यो ग्रहो यत्र यत्र वर्त्तते तस्य तस्योपरीदमेव परिभ्राम्य विन्यस्य दृग्ज्याशङ्क्वादिकं दर्शनीयम्। अथ वा पृथक् पृथगष्टौ दृङ्मण्डलानि रचयेत्। तथाष्टमं त्रिभलग्नस्य तच्च दृक्क्षेपमण्डलम्" दृग्वलयमप्यत्र

**दृढ़** त्रि॰दृह दृहि वा वृद्धौ क्तः"स्थूलबलयोः"इडभावः दृंहितोऽपि नि॰ नलोपः। १स्थूले २अशिथिले प्रगाढे ३बलवति च मेदि॰ ४कठिने अमरः ५लौहे न॰ शब्दच॰। भावे क्त। ६अतिशये न॰ अमरः। क्रियाविशेषणत्वेऽस्य क्लीवता "दृढ़भक्तिरिति ज्येष्ठे" रघुव्या॰ "दृढ़ं भक्तिरस्येति विग्रहः" मल्लिना॰। "दृढ़ा भक्तिश्च केशवे" विष्णुस्तवः। दृढ़त्वं च काठिन्यं तच्च स्पर्शत्वव्याप्यजातिभेदः, अशिथिलावयवसंयोगभेदः, उपचारात् अतिशयश्च। "दृढकारी मृदुर्दान्तः क्रूराचारैरसंवसन्" मनुः "दृढग्राही करोमीति जप्यं जपति जापकः। न संपूर्णो न संयुक्तो निरयं सोऽनुगच्छति" भा॰शा॰ १६७अ॰। दृढ़स्य भावः इमनिच् द्रढ़िमन् तद्भावे पु॰ "बधान द्रागेव द्रढ़िमरमणीयं परिकरम्" गङ्गालहरी त्व दृढत्व न॰ तल् दृढता स्त्री ष्यञ् दार्ढ्य न॰ स्थौल्ये अतिशये च। अतिशयेन दृढः इष्ठन् ऋतोरः द्रढिष्ठ ईयसुन् द्रढीयस् अतिशयेन दृढ़े त्रि॰ ईयसुनि स्त्रियां ङीप्। दृढं करोति णिच् ऋतोरः। द्रढयति "वियोगो वैराग्यं द्रढ़यति च" प्रबोधचन्द्रो॰ त्रयोदशमनोः रुचेः ७पुत्रभेदे पु॰। "त्रयोदशस्य पुत्रास्ते विज्ञेयास्तु रुचेः सुताः। चित्रसेनो विचित्रश्च नयो धर्मभृतो धृतः। सुनेत्रः चत्रवृद्धिश्च सुतपा निर्भयो दृढः। रौच्यस्यैते मनोः पुत्रा अन्तरे तु त्रयोदशे" हरिवं॰ ७अ॰। ८धृतराष्ट्रपुत्रभेदे पु॰ "पुत्रास्तेऽभ्यर्दयन् भीमं दश दाशरथेः समाः। नागदत्तो दृढरथो वीरबाहुरयोभुजः। दृढः सुहस्तो विरजाः प्रमाथ्युग्रोऽप्ययाय्यपि। तान् दृष्ट्वा चुक्रुधे भीमोजग्राहे भारसाधनान्। एकमेकं समुद्दिश्य पातयामास मर्मसु। ते विद्धा व्यसवः पेतुः स्यन्दनेभ्योऽमितौजसः" भा॰द्रो॰ १५७अ॰ ६विष्णौ पु॰ "वेधाः स्वाङ्गोऽजितः कृष्णो दृढः सङ्कर्षणोऽच्युतः" विष्णु सं॰ "स्वरूपसामर्थ्यादेः प्रच्युत्यभावात् दृढः" भा॰ १०रूपकभेदे पु॰ "दृढः प्रौढोऽथ खचरो विभवस्ततुरक्रमः। निशारुकः प्रतितालः कथिताः सप्त रूपकाः" इत्युद्दिश्य "दृढाख्यः स्यादु लघुद्वन्द्वं तालेऽत्र हंसलीलके। चतुर्दशाक्षरयुतः शृङ्गारे परिकीर्त्तितः" सङ्गीतदा॰। लीला॰ उक्ते ११कुट्टकगणितभेदे कुट्टकशब्दे दृश्यम्। [घटकयुक्ते दृक्षभेदे शब्दर॰।

**दृढकण्टक** पु॰दृढः कण्टकोऽस्य। (धला आकड़ा) क्षुद्रक-

**दृढकाण्ड** पु॰ दृढः कठिनः काण्डः स्कन्धोऽस्य। १वंशवृक्षे २दीर्घरोहिषके च राजनि॰।

**दृढक्षात्र** पु॰ धृतराष्ट्रपुत्रभेदे "दृढवर्मा दृढक्षात्रः सोमकीर्त्तिरनूदरः" भा॰आ॰ ६७अ॰ तत्पुत्रोक्तौ।

**दृढक्षुरा** स्त्री दृढं क्षुरमिवाग्रं यस्याः। बल्वजायाम् तृणभेदे राजनि॰।

**दृढगात्रिका** स्त्री दृढं गात्रमस्याः कप् कापि अत इत्वम्। मत्स्यण्ड्यां फाणिते शब्दच॰।

**दृढग्रन्थि** पु॰दृढो ग्रन्थिः पर्वास्य। १वंशे राजनि॰ २कठिनग्रन्थियुक्तमात्रे त्रि॰।

**दृढच्छद** न॰ दृढः छदोऽस्य। दीर्घरोहिषकेतृणे राजनि॰।

**दृढच्युत** पु॰ परपुरञ्जयन्नृपात्मजायां जाते अगस्त्यमुनिपुत्रे इध्मवाहापरनामके मुनिभेदे "उपयेमे वीर्यपणां वैदर्भीं मलयध्वजः। युधि निर्जित्य राजन्यान् पाण्ड्यः परपुरञ्जयः। तस्यां संजनयाञ्चक्रे आत्मजामसितेक्षणाम्। यवीयसः सप्त सुतान् सप्त द्रविडभूभृतः। अगस्त्यः प्राग्दुहितरमुपयेमे धृतव्रताम्। यस्यां दृढच्युतो जात इध्मवाहात्मजो मुनिः" भाग॰ ४।२८।२८। पादपूरणार्थः सन्धिरार्षः। अयं गोत्रप्रवरविशेषः प्रवराध्याये दृश्यः।

**दृढतरु** पु॰ नित्यकर्म॰। धववृक्षे राजनि॰। दृढवृक्षोऽप्यत्र

**दृढतृण** पु॰ दृढं कठिनं तृणमस्य। १मुञ्जतृणे २बल्वजायां स्त्री राजनि॰।

**दृढत्वच्** पु॰ दृढा त्वगस्य। यावनालशरे राजनि॰।

**दृढदंशक** पुंस्त्री दृढं दंशति दन्श-ण्वुल्। (हाङ्गर) ख्याते जलजन्तुभेदे शब्दार्थकल्प॰। स्त्रियां ङीष्।

ङीष । २दृढदंशनकारिमात्रे त्रि० स्त्रियां टाप् कापि अतद्दृस्त्वमिति भेदः ।

**दृढधन** पु० दृढं धनं निश्चयरूपा सम्पत्तिरस्य । शाक्यमुनौ जलितवि० । दृढधनुरप्यत्र । समासान्तविधेरनित्वात् नानङ् ।

**दृढधन्वन्** पु० दृढं धनुरस्य अनङ् समा० । १दृढधनुष्के "राजानं दृढधन्वानं दिलीपं सत्यवादिनम्" भा०द्रो० ३११अ० । २पौरवे नृपभेदे "दक्षिणस्याञ्च कम्बोजो दृढधन्वा च पौरवः" भा०आ० १८६अ०।

**दृढनिश्चय** पु० दृढः कृतकैरभिभवितुमशक्यतया स्थिरः निश्चयः अहमकर्त्ता भोक्ता संसारिसच्चिदानन्दाद्वितीयं ब्रह्मास्मीत्यध्यवसायोऽस्य । स्थिरप्रज्ञे संसारादुपरते अहं ब्रह्मास्मीत्यध्यवसाययुते विदुषि ।

**दृढनीर** पु० दृढं कालेन दृढतां प्राप्तं नीरं यस्य । नारिकेले राजनि० । तस्य जलस्यैव क्रमशः कठिनशस्यरूपेण परिणतत्वात् तथात्वम् ।

**दृढनेमि** पु० अजमीढवंश्ये सत्यधृतिनृपपुत्रे नृपभेदे । "अजमीढस्य दायादः" इत्युपक्रमे "जज्ञे सत्यधृतेः पुत्रो दृढनेमिः प्रतापवान्" हरिवं०२०अ०। दृढा नेमिरस्य । २दृढनेमिके रथे पु० । [गौरा० ङीष् ।

**दृढपत्र** पु०दृढं पत्रमस्य । १वंशे २वल्वजायां स्त्री राजनि०

**दृढपाद** त्रि०दृढः पादः पदनं स्थानमस्य । १दृढनिश्चये २वेधसि पु०"बहुत्वाद्दृढपादस्य विश्वात्मा जगतां पतिः" हरिवं० २०४० श्लो०। दृढः पादोमूलमस्याः समासान्तविधेरनित्यत्वात्त्वान्त्यलोपः समा० । २यवतिक्तायां स्त्री ३भूम्यामलक्यां स्त्री राजनि० ङीष् ।

**दृढप्ररोह** पु० दृढः प्ररोहः अङ्कुरोऽस्य । वटवृक्षे राजनि०

**दृढफल** पु० दृढानि फलानि यस्य । नारिकेले राजनि० ।

**दृढबन्धिनी** स्त्री दृढं बध्नाति बध्नाति स्वाश्रयं णिनि । १श्यामालतायां शब्दच० । २अशिथिलबन्धकारके त्रि० ।

**दृढभूमि** पु० दृढा भूमिरवस्था यस्य । दीर्घकालनैरन्तर्यादरासेविते योगशास्त्रोक्ते मनसःस्थैर्यकरणार्थे अभ्यासभेदे "तत्र स्थितौ यत्नोऽभ्यासः" पात०सू० "चित्तस्याऽवृत्तिकस्य प्रशान्तवाहिता स्थितिः प्रयत्नः वीर्यमुत्साहः तत्संपिपादयिषया तत्साधनानुष्ठानमभ्यासः" भा० "स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः" सू० "दीर्घकालासेवितः निरन्तरासेवितः तपसा ब्रह्मचर्येण विद्यया श्रद्धया च संपादितः सत्कारवान् दृढभूमिर्भवति । व्युत्थानसंस्कारेणानभिभूतविषय इत्यर्थः" भा० "ननु व्युत्थानसंस्कारेणानादिपरिपन्थिना प्रतिबद्धोऽभ्यासः कथं स्थित्यै कल्पत इत्यत आह स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः यथोक्तः सोयमभ्यासो विशेषेण एवं सम्पन्नः सन् दृढावस्थो न सहसा व्युत्थानसंस्कारैरभिभूतस्थितिरूपविषयो भवति यदि पुनरेवं भूतमप्यभ्यासं सत्वोपरमेत ततः कालपरिपाकेणाभिभवेत् तस्मिन्नोपरन्तव्यमिति भावः" विवरणम्

**दृढमुष्टि** पु० दृढो मुष्टिर्धारणोऽस्य । १खड्गादौ हेमच० । दृढं बद्धः दानार्थमप्रसारितो मुष्टिरस्य । २कृपणे त्रि० दृढोमुष्टिर्मुष्टाघातोऽस्य । दृढमुष्ट्याघातकारिणि "निष्टीतः कन्धरायां विपुला दृढमुष्टिना" हरिवं० २०अ० ।

**दृढमूल** पु० दृढं मूलमस्य । १मुञ्जतृणे २मन्थानकतृणे च राजनि० ३नारिकेले शब्दार्थकल्प० ।

**दृढरङ्गा** स्त्री दृढः रङ्गो रञ्जनं यस्याः ५त० । स्फट्यां (फटकिरी) राजनि० । तद्योगेन रागस्य स्थिरतेति तस्यास्तथात्वम् ।

**दृढरथ** पु० १धृतराष्ट्रपुत्रभेदे "अभयो रौद्रकर्मा च तथा दृढरथश्च यः" भा०आ०६७अ० तत्पुत्रोक्तौ अस्यैव नामान्तरं दृढरथाश्रय इति तत्र पाठान्तरम् । २कक्षेयुवंश्ये नृपभेदे तद्वंशवर्णने "दृढस्थनास्तु राजेन्द्रो जनयामास वै सुतम् । नाम्ना जयद्रथं वीरं यस्माद्दृढरथो नृपः । आसीद्दृढरथस्यापि विश्वजिज्जनमेजय !" हरिवं० ३१२अ० ।

**दृढरुचि** स्त्री दृढा रुचिरस्य । १स्थिररागयुक्ते २कुशद्वीपपतेर्हिरण्यरेतसः प्रैयव्रतस्य पुत्रभेदे कुशद्वीपशब्दे २१४५ दृश्यम् ।

**दृढलता** स्त्री नित्यकर्म०। पातालगरुडीलतायां राजनि०।

**दृढलोमन्** त्रि० दृढानि लोमान्यस्य । १कठिनलोमयुक्ते त्रि०स्त्रियां डाप् ङीप् वा दृढलोमा दृढलोम्नी । २शूकरे पु० शूकर्यां स्त्री शब्दच० ।

**दृढवर्मन्** पु० दृढं वर्म यस्य । १दुर्भेदवर्माद्युक्ते २धृतराष्ट्रपुत्रभेदे दृढवाक्शब्दे दृश्यम् ।

**दृढवल्कल** पु० दृढं वल्कलमस्य । १पूगवृक्षे २अम्बष्ठायां स्त्री तत्र दृढत्वचापि राजनि० । ३कठिनवल्कलयुक्ते त्रि० ।

**दृढवल्का** स्त्री दृढं वल्कमस्याः । अम्बष्ठायां राजनि० ।

**दृढवीज** पु० दृढं वीजमस्य । १वदरे २चक्रमर्दे ३वर्वुरे च

राजनि० एतेषां कठिनवीजकत्वात्तथात्वम् ४कठिनवीजयुक्ते त्रि० कर्म० । ५कठिने वीजे न० ।

**दृढव्य** पु० ऋषिभेदे "दृढव्यश्चोर्द्ध्ववाहुश्च तृणसोमाङ्गिरास्तथा" भा०अनु० १५०अ० ।

**दृढव्रत** त्रि० दृढं प्रतिपक्षैश्चालयितुमशक्यं व्रतमस्य । १अन्तरायैरचाल्यसङ्कल्पके फलपर्य्यन्तं प्रारब्धकर्म्मात्यागशीले भगवानेव भजनीयः स च एवंरूप एवेत्यत्राप्रामाण्यशङ्काशून्यसंकल्पके २विदुषि च । तत्र प्रथमार्थे "एवं दृढव्रतोनित्यं ब्रह्मचारी समाहितः" मनुः द्वितीयार्थे "अहिंसानिरतो यश्च सत्यवादी दृढव्रतः" भा०व० ६८१०श्लो० ३स्थिरसङ्कल्पयुक्ते च "स्थेयान् निगूढमानोधीरोदात्तो दृढव्रतः कथितः" सा०द० ।

**दृढसन्ध** त्रि० दृढा सन्धाऽस्य । १स्थिरसन्धाने २धृतराष्ट्रपुत्रभेदे पु० "जरासन्धो दृढसन्धः सत्यसन्धः सहस्रवाक्" भा०आ० ६७अ० तत्पुत्रोक्तौ ।

**दृढसन्धि** त्रि० दृढः सन्धिः सन्धानं यस्य । निश्छिद्रतया संहते अमरः । [मूर्वालतायाम् शब्दच० ।

**दृढसूत्रिका** स्त्री दृढं सूत्रं यस्याः कप अत इत्वम् ।

**दृढसेन** पु० कलियुगीये जनमेजयवंश्ये नृपभेदे "क्षेमोऽथ सुव्रतस्तस्माद्धर्मस्तत्र समन्ततः । दृढसेनोऽथ सुमतिः सुबलो जनिता ततः" भाग० ९।२२।३० जनमेजयं प्रति तद्वंश्यभविष्यन्नृपोक्तौ ।

**दृढस्कन्ध** पु० दृढः स्कन्धोऽस्य । क्षीरिवृक्षे जटाधरः ।

**दृढस्यु** पु० अगस्त्यपत्नीलोपामुद्रागर्भजाते इध्मवाहापरनामके ऋषिभेदे इध्मवाहशब्दे ९२८पृ०दृश्यम् ।

**दृढहनु** पु० आजमीढवंश्ये नृपभेदे "आजमीढाद्बृहदिषुस्तस्य पुत्रो बृहद्धनुः । बृहत्कायस्ततस्तस्य पुत्रश्चाशीत्यजद्रथः । तत्सुतो विश्वदस्तस्य सेनजित् समजायत । रुचिराश्वो दृढहनुः काश्योवत्सश्च तत्सुताः" भाग० ५।२१।१७।

**दृढहस्त** पु० दृढः हस्तः हस्तव्यापारोऽस्य । १खड्गादिधारणे दृढहस्तके योधे २धृतराष्ट्रपुत्रभेदे पु० "दृढहस्तः सुहस्तश्च वातवेगसुवर्च्चसौ" भा०आ० ६७अ०तत्पुत्रोक्तौ

**दृढाक्ष** पु० राजभेदे "एकलव्यो दृढाक्षश्च क्षत्रधर्म्मा जयद्रथः" हरिवं० ९९अ०।

**दृढाङ्ग** त्रि०दृढमङ्गमस्य । १कठिनाङ्गयुक्ते २हीरके न०राजनि० तस्यावयवस्य इतरापेक्षयाऽतीव कठिनत्वात्तथात्वम् ।

**दृढादि** पु० "वर्णदृढादिभ्यः ष्यञ् च" पा०"चात् इमनिच्" सि०कौ० उक्ते भावे ष्यञ्इमनिचोर्निमित्ते शब्दगणे स च गणः "दृढ वृढ परिवृढ भृश कृश वक्र शुक्र चुक्र आम्र लवण ताम्र अम्ल शीत उष्ण जड़ वधिर पण्डित मधुर मूर्ख मूक (वेर्यातलाभमतिमनःशारदानाम्) (समोमतिमनसोः) जवन" दृढादिः । गुणवचनत्वादेव सिद्धे इमनिजर्थं वचनम् ।

**दृढायु** पु० तृतीयमनोः सावर्णस्य पुत्रभेदे "संवर्त्तगः सुशर्म्मा च देवानीकः पुरूद्वहः । क्षेमधन्वा दृढायुश्च आदर्शः पण्डको मनुः । सावर्णस्य तु पुत्रा वै तृतीयस्य नव स्मृताः" हरिवं० ७अ०। उर्वशीगर्भजाते ऐलनृपपुत्रभेदे च "षट् सुता जज्ञिरे चैलादायुर्धीमानमावसुः । दृढायुश्च वनायुश्च शतायुश्चोर्व्वशीसुताः" भा०आ० ७४अ०

**दृढायुध** पु० दृढमायुधं तद्व्यापारोऽस्य । दृढायुधव्यापारके "दृढायुधौ ध्रुवपातौ युद्धे च कृतनिश्चयौ" (नकुलसहदेवौ) भा०व० ५१अ० । २धृतराष्ट्रपुत्रभेदे पु० "उग्रायुधो भीमशरः कनकायुर्दृढायुधः" भा०आ० ६७अ० तत्पुत्रोक्तौ ।

**दृढाश्व** पु० धुन्धुमारनृपपुत्रभेदे "धौन्धुमारिर्दृढाश्वश्च हर्यश्वस्तस्य चात्मजः" हरिवं० १२अ०।

**दृढेयु** पु० ऋषिभेदे "दृढेयुश्च ऋतेयुश्च परिव्याधश्च कीर्त्तिमान् । एकतश्च द्वितश्चैव त्रितश्चैवादित्यसन्निभाः" भा० अनु० १५०अ० ।

**दृढेषुधि** पु० दृढं बद्ध इषुधिर्येन । दृढतया बद्धतूणके १योधे २राजभेदे "अविविक्तश्चपलोधूर्त्तः कृतबन्धुर्दृढेषुधिः" भा० आ० १अ० ।

**दृत** त्रि० दृ+क्त १आदरयुक्ते आदृतः दृ—विदारे क्त वा० ह्रस्वः । २विदीर्णे "दृते दृंह मामित्रस्य" यजु० ३६।१८"दृते दृ विदारे विदीर्णे जराजर्जरितेऽपि शरीरे" वेददी० ३जीरके स्त्री शब्दच० ।

**दृति** स्त्री दृ—विदारे ति कित् ह्रस्वश्च । १चर्म्ममयपात्रे २मत्स्ये च मेदि०। "इन्द्रियाणां तु सर्वेषां यद्येकं क्षरतीन्द्रियम् । तेनास्य क्षरति प्रज्ञा दृतेः पादादिवोदकम्" मनुः "कपाले यद्वदापः स्युः श्वदृतौ च यथा पयः । आश्रयस्थानदोषेण वृत्तहीने तथा श्रुतम्"भा०शा०१३२४ श्लो०। दृतौ भवः ढञ् दार्त्तेय दृतिभवे स्त्रियां ङीप् । मत्स्ये "मांसादष्टगुणा दृतिः" उज्ज्वलद०धृतवाक्यम् । ३रोमश चर्म्मणि ४गलकम्बले च "सवत्सां पीवरीं दत्त्वा दृतिकण्ठामलङ्कृताम्" भा०अनु० ७९अ० "दृतिकण्ठां

महत्स्वगलकम्बलाम्” नीलकण्ठः “दृतिकण्ठमनड्वाहं सर्वरत्नैरलङ्कृतम्” तत्रैवाध्याये। ५मेघे निघण्टुः ६सत्र-विशेषकारके यजमानभेदे दृतिवातवतोरयनशब्दे दृश्यम्।

**दृतिधारक** दृतिं दृत्याकारं धारयति धारि-ण्वुल् ६त०। (आकनपाता) ख्याते वृक्षे शब्दच०।

**दृतिवातवतोरयन** न०अलुक् स०। सत्रभेदे “दृतिवातवतो-रयनमेकैकेन पृष्ठ्यस्तोमेन मासं मासम्” कात्या०श्रौ०२४। २४।१६ “दृतिवातवतोरयनमिति सत्रस्य संज्ञा” कर्कः। ताण्ड्यब्रा०२५।२। १वाक्यादौ अस्य विवृतिः। “अथ दृतिवातवतोरयनमाह भा० “अतिरात्रस्त्रिवृता मासं, पञ्चदशेन मासं, सप्तदशेन मासमेकविंशेन मासं, त्रिणवेन मासं, त्रयस्त्रिंशेन मासं, महाव्रतं, त्रयस्त्रिं-शेन मासं, त्रिणवेन मासमेकविंशेन मासं, सप्तदशेन मासं, पञ्चदशेन मासं, त्रिवृता मासमतिरात्रः”। १“प्रथमं प्रायणीयोऽतिरात्रस्ततस्त्रिवृदादित्रयस्त्रिं-शान्ताः आदितः षण्मासा आप्तव्याः विषुवतः स्थाने महाव्रतं भवति तत्र त्रिवृदादिमासा उत्त-रस्मिन् पक्षेऽपि द्वादशादिसप्तमासान्ताः षण्मासाः स्युः तत उदयनीयमहः एतानि त्रिपञ्चाशदुत्तरशतत्रय-महानि स्युः अधिकयोर्द्वयोरह्नोः व्यवस्थाविषये सूत्र-कारः दृतिवातवतोरयने द्वावेकोनौ मासौ सनुयुक्ति-वृतावित्ति गौतमस्त्रयस्त्रिंशाविति धानञ्जय्यः उभौ वा त्रिंशिनौ स्यातां यथैतद्ब्राह्मणमिति त्रयस्त्रिंशावे-कोनाविति कल्पकारस्य मतम्। अथैतदयनं कर्तृद्वारा प्रशंसति” भा०। “एतद्वै दृतिवातवन्तौ खाण्डव उपेतौ विषुवति वातवानुत्तिष्ठति, समापयति दृतिस्तस्मात्तनीयांसो वातवता भूयांसो दार्त्तेयाः” ६“एतत् सत्रायणं दृतिश्च वातवांश्चेत्युभौ यजमानौ खाण्डवे वने उपेतः अन्वतिष्ठतामित्यर्थः भूतकाले व्यत्ययेन वर्त्तमानप्रत्ययः एवमुत्तरयोरप्याख्यातयोर्द्रष्टव्यं तयोरनुष्ठानप्रयुक्तं किञ्चित् फलवैषम्यं वक्तुमाह वातवान् विषुवति महा-व्रते सम्पूर्णे उत्तिष्ठति उत्तिष्ठन् सत्रं समापितवान् दृतिस्तु द्वादशापि मासानास्थाय समापयत् यस्मादेवं तस्माद्वातवता वातवतोवंश्यास्तनीयांसः अल्पसं तनवः प्रजा अभवन् दार्त्तेया दृतिवंश्यास्तु भूयांसो, बहुसत्-स्वानुष्ठानं प्रशस्तफलवदित्युक्तं भवति। अत्र विवृतिभिः क्रमम् इति वातवतोरयनमात्रिणवेभ्यस्त्रिवृद्भ्य उत्तर-त्र्युक्थानि पञ्चदशेभ्यः षोडशिनमित्यादिकं द्रष्टव्यम्”।

**दृतिहरि** पु० दृतिं चर्ममयं द्रव्यं हरति दृतौ+उपपदे हृ-पशौ कर्त्तरि इन्। कुक्कुरे उज्ज्व०। पशोरन्यत्र अण् दृतिहार चर्महारके।

**दृत्य** त्रि० दृ—कर्मणि क्यप्। १आदरणीये भावे क्यप्। २आदरे न० आङि आदृत्य तत्रार्थे “आदृत्यस्तेन दृत्येन” भट्टिः।

**दृध्र** न० गवां निर्गमनद्वाररोधके “ते गव्यता मनसा दृध्र-मुब्धम्” ऋ० ४।१।१५ भाष्ये माधवः।

**दृन्** अव्य० १हिंसायाम् सि०कौ०। २इदार्थे शब्दार्थचि०।

**दृन्फ** क्लेशे तु०प० अक०सेट्। दृफति दृम्फति अदृम्फीत्। क्लेशने सक०। दृन्फूः सर्पजातिः

**दृन्फू** स्त्री दृन्फ—कू नि० न नलोपः। १सर्पजातौ २वज्रे च मेदि० दृन्भू तत्रार्थे सि०कौ०।

**दृन्भू** पु० दृन् हिंसायां भवति भुवः क्विप्। १वज्रे २सूर्ये हेमच०। ३सर्पे शब्दच० ४अन्तके संक्षिप्तसार “दृन्कर पुनःपूर्वस्य भुवो यण् वक्तव्यः” वार्ति० अजादौ यण्। दृन्भ्वौ दृन्भ्व इत्यादि दृम्भू तत्रार्थे सि०कौ० [कन्दर्पः

**दृप** बाधने तु० पर० सक० सेट्। दृपति अदर्पीत्। ददर्प।

**दृप** सन्दीपने वा चुरा०उभ०पक्षे भ्वा०पर०सक०सेट्। दर्प-यति ते दर्पति। अदीदृपत्-त अददर्पत्-त अदर्पीत्।

**दृप** हर्षे गर्वे च अक०दिवा०वेट् दृप्यति “दृप्यद्दानवदूयमा-नदिविषद्दुर्वारदुःखोपमाम्” गीतगो० इरित् अदृपत् अद्राप्सीत् अदर्पीत् केचिदिमं अदितं मन्यन्ते दर्पि-ष्यति द्रप्स्यति अस्य रधादित्वात् वेट्कत्वम्। तेन रूपे न वैलक्षण्यम् दर्पः दृप्तः। ओत् दृप्तः। शब्द-स्तोमे अदित्त्वोक्तिः मतभेदेन।

**दृप्त** त्रि० दृप—गर्वे हर्षे च वर्त्तमाने क्त। १गर्वान्विते २हर्षा-न्विते च ३विष्णौ पु० “दर्पदो दर्पको दृप्तोदुर्द्धरोऽ-थापराजितः” विष्णु सं० “दृप्तबालाकिर्हानूचानो गार्ग्य आस” शत०ब्रा० १४।५।१।१

**दृप्र** त्रि० दृप—बाधने रक्। बलयुक्ते उणादि०।

**दृफ** क्लेशे तुदा० मुचादि० अक०पर० सेट्। दृम्फति अद-र्फीत् क्लेशने सक०। राजा चौरं दृम्फति क्लिश्नातीत्यर्थः।

**दृब्ध** त्रि०दृभ—ग्रन्थने कर्मणि क्त। १ग्रथिते त्रि०अमरः। दृभ—भये कर्त्तरि क्त। २भीते भावे क्त। ४ग्रथने५भये च न०

**दृभ** ग्रथने वा चुरा०उभ०पक्षे तु०पर०सक०सेट्। दर्भयति ते दृभति अदीदृभत्-त अददर्भत् त अदर्भीत्। ईदित्। दृब्धः दृब्धवान्। दर्भः

**दृभ** भये वा चुरा०उभ०पक्षे भ्वा०पर०सक०सेट्। दर्भयति-ते दर्भति। अदीदृभत् त अददर्भत् त। अदर्भीत् ईदित् दृब्धः दृब्धवान्।

**दृभीक** पु० दृभ—बा० ईकङ्। असुरभेदे "अध्वर्यवो यो दृभीकम्" ऋ० २।१४।२ "दृभीको नामासुरः" भा०

**दृमिचण्डेश्वर** न० मत्स्यपुराणोक्ते शिवलिङ्गभेदे

**दृवन्** त्रि० दृ—विदारे क्वनिप् बा० वेदे ह्रस्वः। विदारके "दृवाणि रव्याणि क्षुमाणि" यजु०१०।८

**दृश** चाक्षुषज्ञाने भ्वा०पर०सक० अनिट्। पश्यति इरित् अदर्शत् अद्राक्षीत्। ददर्श ददर्शिथ दद्रष्ठ ददृशिव द्रष्टा दृश्यात् द्रक्ष्यति। दर्शनीयं द्रष्टव्यं दृश्यः द्रष्टा दृष्टः द्रष्टुं दृष्टिः दृक् दृष्ट्वा प्रदृश्य। "तुतोष पश्यन् वितृणान्तरालाः" भट्टिः पश्यतो हरः। "न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा। दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्"। "अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा" गीता "ददर्श दूनः स्थलपद्मिनीं नलः" नैष० मानसज्ञाने च "शान्तोदान्त उपरतस्तितिक्षुः श्रद्धावान् समाहितोभूत्वा आत्मन्यात्मानं पश्यति" श्रुतिः "आत्मा वा अरे द्रष्टव्यः" इ०उ० श्रुतिः णमुल् "तं विप्रदर्शं कृतघातयत्ना" भट्टिः "दृशेरनालोचने कङ् च" पा० कर्त्तरि कङ् अन्यादृशः कीदृशः चात् क्विन् क्स च अन्यादृक् अन्यादृक्षः। श पश्यः "अपास्य पश्यं निजदृश्यखेटात्" नील०ता० "उग्रम्पश्याकुलेऽरण्ये" भट्टिः दर्शयति ते अददर्शत् अदीदृशत् त। णिचि कर्मणः कर्तृत्वे तङ् दर्शयते भवो भक्तान् भक्तैर्वा आत्मानमिति शेषः। एवं विषये दृशेः कर्तुर्वा कर्मसंज्ञा "सीतां रामेण चात्मानमदर्शयत लक्ष्मणम्" मुग्धबो० सनि तङ् दिदृक्षते। "दिदृक्षमाणः परितः ससीतं रामं यदा नैक्षत लक्ष्मणञ्च"। भट्टिः दिदृक्षा कर्मणि दृश्यते "एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" श्रुतिः "जालान्तरगते भानौ यत् सूक्ष्मं दृश्यते रजः" मनुः "अदर्शि सङ्कोच्य कदाप्यवीक्षितः" "रूपमदर्शि धृतोऽसि यदर्थम्" नैष० अस्यार्थे कचित्तङपि। "यं यं हि ददृशे सेयं तं तं मेने नलं नृपम्" भा०व०२२०२श्लो०। दर्शनयोग्ये प्रकाशे च अक० "मधुरात्मानमदर्शयत् पुरः" कुमा०। दर्शनार्थत्वे तङ् स्यादिति बोध्यम्।

अनु+अनुरूपदर्शने "रथे विलग्नाविव चन्द्रसूर्यौ घनान्तरेणानुददर्श लोकः" भा०वि० १६९८श्लो० दृशिशब्दे पात०सूत्रे उदा० दृश्यम्। "बहुविधमनुदृश्य चार्थहेतोः कृपणमिहार्यमनार्यमाश्रयन्तम्" भा०शा० १७९ अ०

अभि+आभिमुख्येन समन्ताद्वा दर्शने "तदा प्रभृति कौन्तेय! नरा गिरिमिमं सदा। नाशक्नुवन्नभिद्रष्टुं कुत एवाधिरोहितुम्" भा०व०९९८२श्लो०

अव+नीचतया दर्शने "यथा जलस्थ आभासः स्थलस्थेनावदृश्यते। स्वाभासेन यथा सूर्यो जलस्थेन दिवि स्थितः" भाग० ३।२७।१२

आ+आभिमुख्येन समन्ताद्वा दर्शने आदर्शः। "उत्कलादर्शितपथः कलिङ्गाभिमुखो ययौ" रघुः।

उद्+नीचस्योच्चतया दृष्टौ उत्प्रेक्षणे च

उप+सामीप्येन दर्शने। "चतुष्पाद् व्यवहारोऽयं विवादेषूपदर्शितः" याज्ञ०।

नि+दृष्टान्ततया साम्मुख्येन वा दर्शने। "द्रष्टुमिच्छामि ते रूपमैश्वरं त्वं निदर्शय" भा०आश्व० १५८८ श्लो० निदर्शनालङ्कारः "निदर्शयामास विशेषदृश्यम्" रघुः

परा+विपरीतदर्शने यस्य यथारूपं ततोऽन्यरूपेण दर्शने "धूममग्निं परादृश्य मित्राद्भूत्वा दधतां भयम्" अथ० ८।८।२। "त्रीन् स्तनानुपेयुस्तं परादद्दृशुः। द्वौ स्तना उपेयुस्तस्मे दीयसः पराददृशुः" शत० ब्रा० ६।५।१।२।४।

परि+परितः समन्ताद्वा दर्शने "परिदृष्टानि तीर्थानि गङ्गा चैव मया नृप!" भा०आश्व०७२अ० परिच्छिन्नतया दर्शने च। "बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः" पा०सू०। दीर्घसूक्ष्मशब्दे ३६१४पृ० दृश्यम्।

प्र+सम्यग्दर्शने "मनसैव प्रदीपेन महानात्मा प्रदृश्यते" भा०आश्व० १९अ० "अहो त्वयाद्य विप्रेषु भक्तिरागः प्रदर्शितः" भा०अनु० ७२११श्लो० एकदेशदर्शने च। प्रदर्शनार्थमिदमुक्तम्। "योगेश्वरत्वं कृष्णेन यत्र राज्ञां प्रदर्शितम्" भा०आ०५१० श्लो०।

प्रति+तुल्यरूपदर्शने "क्षताभ्यङ्गः शोणितेन रुद्रवत् प्रत्यदृश्यत" भा०भी० ४६७९श्लो० "निमित्तलक्षणं ज्ञानं शाकुनं स्वप्नदर्शनम्। अवश्यं सुखदुःखेषु नराणां प्रतिदृश्यते" रामा०अयो० ५८।१५ श्लो०

वि+विशेषेण दर्शने "विदर्शयन्तोविविधान् भूयिष्ठांश्च निर्झरान्" रामा०अयो० ४८अ० १२श्लो०

सम्+सम्यग्दर्शने "संद्रक्ष्यन्ति नरास्तान्ये स्वरूपेण विनाशनम्" भा०शा० १०६८ श्लो०

**दृश्** त्रि॰ कर्म्मण्युपपदे दृश–क्विन् अन्ति पदान्ते च कुः। १तत्तत्पदार्थदर्शके "वायुभक्षो दिवा तिष्ठन् रात्रिं नीत्वाप्सु सूर्य्यदृक्" याज्ञ॰ "ऐन्द्रद्युम्ने! यज्ञदृशा-विज्ञायां विरजू वै जनकेन्द्रं दिदृक्षू" भा॰व॰१०६२४श्लो॰ अनुपपदेऽपि क्विन्। २द्रष्टरि "दृग्दर्शनशक्त्योरेकात्मते-वास्मिता" पात॰सू॰। भावे क्विन्। ३दर्शने ४ज्ञानमात्रे च स्त्री "प्रतिबन्धदृशः प्रतिबद्धज्ञानमनुमानम्" सा॰सू॰ "प्रतिबन्धो व्याप्तिर्व्याप्तिदर्शनात् व्यापकज्ञानमनुमानम्" भाष्यम्। करणे क्विन्। ५नेत्रे स्त्री "दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः" सा॰द॰। "नवकोपदह-नार्च्चिषं ततः सन्दधे दृशमुदग्रतारकाम्" रघुः ६द्वित्व-संख्यायाञ्च।

**दृशति** स्त्री दृश–बा॰ भावे अतिक्। दर्शने "सूरो न यस्य दृशतिररेपाः" ऋ॰ ६।३।२ "दृशतिर्दर्शनम्" भा॰

**दृशद्** स्त्री दृषद्+पृषो॰। शिलायाममरे पाठान्तरम् "तथा दृशत्पुत्रश्च" गोभिलः "दृशत् पेषणाधारशिला, पुत्रं पेषणकरणरूपप्रस्तरस्तदुभयं पूर्ववदुपसादयतीत्यर्थः" सं॰त॰ रघु॰।

**दृशद्वती** स्त्री दृषद्वती+पृषो॰। १आर्य्यावर्त्तसीमास्थे नदी-भेदे २कात्यायन्याञ्च मेदि॰। [काङ्क्षम्।

**दृशा** स्त्री दृश्+हलन्तत्वात् वा टाप्। नेत्रे शब्दर॰ दृशा-

**दृशाकाङ्क्ष्य** त्रि॰ दृशया आकाङ्क्षम्। पद्मे शब्दच॰।

**दृशान** पु॰ दृश–आनच् किच्च। १लोकपाले उज्ज्वल॰ २विरोचने पु॰ ३ज्योतिषि न॰ मेदि॰। ४आचार्य्ये पु॰ उणा-दिकोषः। ५ब्राह्मणे ६उपाध्याये च पु॰ संक्षिप्तसारः।

**दृशि(शी)** स्त्री दृश–भावे कि वा ङीप्। १दृष्टौ २प्रकाशे च "द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः" पात॰सू॰। "दृ-शिमात्र इति दृक्शक्तिरेव विशेषणेन परामृष्टेत्यर्थः। स पुरुषो बुद्धेः प्रतिसंवेदी बुद्धेर्न सरूपो नात्यन्तं विरूप इति न तावत् सरूपः कस्मात्? ज्ञाताज्ञातविषयत्वात् परिणामिनी हि बुद्धिस्तस्याश्च विषयो गवादिर्घटादि र्ज्ञातश्चाज्ञातश्चेति परिणामित्वं दर्शयति। कस्मात्? न हि बुद्धिश्च नाम पुरुषविषयश्च स्याद्गृहीता चेति सिद्धं पुरुषस्य सदा ज्ञातविषयत्वं ततश्चापरिणामित्व-मिति। किञ्च परार्था बुद्धिः संहत्यकारित्वात् स्वार्थः पुरुष इति। तथा सर्वार्थाध्यवसायकत्वात् त्रिगुणा बुद्धिस्त्रिगुणत्वादचेतनेति गुणानान्तूपद्रष्टा पुरुष इत्यतो न सरूपः। अस्तु तर्हि विरूप इति नात्यन्तं विरूपः, कस्मात्? शुद्धोऽप्यसौ पश्यन्नतदात्मापि तदात्मक इव प्रत्यवभासते। तथा चोक्तम् अपरिणामिनी हि भोक्तृशक्तिरप्रतिसंक्रमा च परिणामिन्यर्थे प्रतिसंक्रान्तेव तद्वृत्तिमनुपतति। तस्याश्च प्राप्तचैतन्योपग्रहरूपाया बुद्धिवृत्तेरनुकारमात्रतया बुद्धिवृत्त्यविशिष्टा हि ज्ञानवृत्तिरित्याख्यायते" भा॰। सूर्य्यप्रकाशयोरिव द्रष्टृदृशोर्धर्मधर्मिणोरैक्यात् ३चेतने पुरुषे च "दृशिस्वरूपो गगनोपमोऽमलः"। "तदभावात् संयोगाभावो हानं तद् दृशेः कैवल्यम्" पात॰सू॰ "मिथ्यादर्शनस्याभावात् बुद्धिपुरु-षसंयोगाभावः आत्यन्तिको बन्धनोपरम इत्यर्थः एतद्धानं तद् दृशेः कैवल्यं पुरुषस्यामिश्रीभावः पुनरसंयोगो गुणैरित्यर्थः। दुःखकारणनिवृत्तौ दुःखोपरमो हानं तदा स्वरूपप्रतिष्ठः पुरुष इत्युक्तम्" भा॰ दृश–इक् ४दृशधातौ "दृशेरनालोचने कङ् च" पा॰

**दृशीक** त्रि॰ दृश–कर्मणि बा॰ ईकक्। १दर्शनीये २शोभने च "सोमं रुद्राय दृशीकम्" ऋ॰ १।२७।१० "दृशीकं दर्श-नीयं समीचीनम्" भा॰

**दृशेन्य** त्रि॰ दृश–कर्मणि केन्यन्। दर्शनीये "दृशेन्यो महिना समिद्धः" ऋ॰ १०।८८।७ "दृशेन्यः दर्शनीयः" भा॰

**दृशोपम** न॰ दृशाया उपमा यत्र। श्वेतपद्मे शब्दमाला।

**दृश्य** त्रि॰ दृश–कर्मणि क्यप्। १दर्शनीये २मनोरमे च "चित्तं तदा कुण्डिनवेशिनः सा नलस्य मूर्त्तिर्वहते न दृश्या। बभूव तच्चित्ततरन्तयापि विश्वैकदृश्यैव यदस्य मूर्त्तिः"। "आस्तामनङ्गीकरणाद्भवेन दृश्यः स्मरो नेति पुराणवाणी" नैष॰ "तमेकदृश्यं नयनैः पिबन्त्यो नार्य्यो न जग्मुर्विषयान्तराणि" कुमा॰ "निदर्शयामास विशेष-दृश्यमिन्दुं नवोत्थानमिव" रघुः। ३ज्ञेयमात्रे ४प्रकाश्ये च "द्रष्टृदृश्ययोः संयोगो हेयहेतुः" पात॰सू॰ "द्रष्टा बुद्धेः प्रतिसंवेदी पुरुषः, दृश्या बुद्धिसत्त्वोपारूढाः सर्वे धर्माः, तदेतद् दृश्यमयस्कान्तमणिकल्पं सन्नि-धिमात्रोपकारि दृश्यत्वेन स्वम्भवति पुरुषस्य दृशि-रूपस्य स्वामिनः। अनुभवकर्मविषयतामापन्नमन्यस्वरू-पेण प्रतिलब्धात्मकं स्वतन्त्रमपि तदर्थत्वात् परतन्त्रम् उभयोर्दृग्दर्शनशक्त्योरनादिरर्थकृतः संयोगो हेयहे-तुर्दुःखस्य कारणमित्यर्थः" भा॰ "प्रकाशक्रियास्थिति-शीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम्" पात॰सू॰ "प्रकाशशीलं सत्त्वं, क्रियाशीलं रजः। स्थितिशीलं तम इति एते गुणाः परस्परोपरक्तप्रविभागाः परिणा-

मिनः संयोगविभागधर्माणः इतरेतरोपाश्रयेणोर्ज्जित मूर्त्तयः परस्पराङ्गाङ्गित्वेऽप्यसम्भिन्नशक्तिप्रविभागास्तुल्य जातीयाऽतुल्यजातीयशक्तिभेदानुपातिनः। प्रधानवेलायामुपदर्शितसन्निधाना गुणत्वेऽपि च व्यापारमात्रेण प्रधानान्तर्णीतानुमितास्तिताः पुरुषार्थकर्त्तव्यतया प्रयुक्तसामर्थ्याः सन्निधिमात्रोपकारिणः अयस्कान्तमणिकल्पाः प्रत्ययमन्तरेण एकतमस्य वृत्तिमनुवर्तमानाः प्रधानशब्दवाच्या भवन्ति। एतद्दृश्यमित्युच्यते। तदेतद्भूतेन्द्रियात्मकं भूतभावेन पृथिव्यादिना सूक्ष्मस्थूलेन परिणमते तथेन्द्रियभावेन श्रोत्रादिना सूक्ष्मस्थूलेन परिणमत इति। तत्तु नाप्रयोजनम् अपि तु प्रयोजनमुररीकृत्य प्रवर्तत इति भोगापवर्गार्थं हि तद्दृश्यं पुरुषस्येति तत्रेष्टानिष्टगुणस्वरूपावधारणम् अविभागापन्नं भोगो भोक्तुः स्वरूपावधारणमपवर्ग इति द्वयोरतिरिक्तमन्यद्दर्शनं नास्ति" भा० ग्रहाणां नक्षत्राणां च कालांशविशेषेण सूर्य्यसान्निध्ये अदृश्यत्वं सू० सि० उक्तम् अस्तशब्दे ५६२पृ०दर्शितम् उदयशब्दे ११४४।४५ पृ० दृश्यत्वं च दर्शितं तत एवावगन्तव्यम्।

**दृश्य(ष्ट)** जाति न० लीला० उक्ते दृष्टकर्मरूपे गणितभेदे दृष्टकर्मन् शब्दे ६६७ पृ० तत्प्रकारो दृश्यः।

**दृश्यादृश्य** त्रि० दृश्यञ्च अदृश्यञ्च द्वन्द्व०। १दृश्ये अदृश्ये च "अष्टादशशताभ्यस्ताद्दृश्यांशाः स्वोदयासुभिः। विभज्य लब्धाः क्षेत्रांशैस्तैर्दृश्यादृश्यतारा वा" सू०सि०। "दृश्या चासौ अदृश्या च" कर्म०। "सा दृष्टेन्दुः सिनीवाली" अमरोक्तेः किञ्चिदंशेन दृश्यचन्द्रायाम् किञ्चिदंशेन अदृश्यचन्द्रायाञ्च २सिनीवाल्यां स्त्री तस्यां चन्द्रस्य दर्शनादर्शनयोः सत्त्वात् तथात्वम्। ३तदभिमानिदेवतायाञ्च सा च अङ्गिरसस्तृतीयकन्या यथाह भा०व० २१७अ० "यां कपर्दिसुतामाहुर्दृश्यादृश्येति देहिनः। तनुत्वात् सा सिनीवाली तृतीयाऽङ्गिरसः सुता"

**दृश्वन्** त्रि० दृश–क्वनिप्। दर्शके "विवेकदृश्वत्वमगात् सुराणाम्" भट्टिः "अनात्मदृश्वन विषयैर्विद्यानां पारदृश्वनः"। "गुर्वर्थमर्थी श्रुतपारदृश्वा" रघुः।

**दृषत्सार** न० दृषदः सारमिव। सुखडायसे राजनि०।

**दृषद्** स्त्री दॄ–अदि पुक् ह्रस्वश्च। १शिलायां २पेषणशिलायाञ्च मेदि० तत्र शिलायां "गुर्वीरजस्रं दृषदः समन्तात्" माघः। "दृषदो वासितोत्सङ्गा निषण्णमृगनाभिभिः" कुमा०"तत्र व्यक्तं दृषदि चरणन्यासमर्द्धेन्दुमौलेः" मेघ० पेषणशिलायाम् "पश्चादग्नेर्दृषदमश्मानं प्रतिष्ठाप्य" आश्व० गृ० १,७,२ "अपामग्नेः सुरेशस्य दृषदोलूखलस्य च। चतुर्दैवानि चत्वारि द्वाराणि विदधुश्च ते" हरिवं०११६अ०। दृषदोलूखलमित्यत्र राजदन्ता०पूर्वनि०। दृषदि पिष्टाः अण्। दार्षद, दृषदि पिष्टे त्रि०

**दृषद्‌माषक** पु० माषः शुल्कत्वेन दीयते कन् दृषदि पेषणव्यवहारे राज्ञे देयः माषकः "कारनाम्नि च प्राचां हलादौ" पा० अलुक् समा०। पेषणव्यवहारे राजदेये माषरूपे करे।

**दृषद्वत्** त्रि० दृषदः सन्त्यत्र भूम्ना मतुप् मस्य वः। १दृषद्युक्ते स्त्रियां ङीप्। सा च २नदीभेदे "सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्। तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते" मनुः "प्रययुश्चाङ्गिनीकूलात् कुरुक्षेत्रं महाजनाः। सरस्वतीदृषद्वत्यौ यमुनाञ्च निषेव्य ते। ययुर्वनेनैव वनं सततं पश्चिमां दिशम्" भा०व० ५अ०। "कौशिकी मन्दाकिनी यमुना सरस्वती दृषद्वती गोमती" भाग० ५।१६।१८ भारतवर्षस्थमहानदीकथने। "दक्षिणेन सरस्वत्याः दृषद्वत्युत्तरेण च। ये वसन्ति कुरुक्षेत्रे ते वसन्ति त्रिपिष्टपे" भा०व० ८३अ०। ३नृपभेदे पु० "संयातिः खलु दृषद्वतो दुहितरं वराङ्गीं नामोपयेमे तस्यामस्य जज्ञे सार्वभौमः" भा०आ० ६५अ०। विश्वामित्रस्य ४पत्नीभेदे स्त्री "दृषद्वतीसुतश्चापि विश्वामित्रात्तथाऽष्टकः। अष्टकस्य सुतो लौहिः प्रोक्तो जह्नुगणो मया" हरिवं०२७अ०

**दृष्ट** त्रि० दृश–कर्मणि क्त। १दर्शनकर्मणि विलोकिते "दृष्टदोषेऽपि विषये ममत्वाकृष्टचेतनः" देवीमा०"द्यूतमेतत् पुराकल्पे दृष्टं वैरकरं महत्" "तस्येह भागिनौ दृष्टौ वीजी क्षेत्रिकएव च" मनुः २ज्ञातमात्रे च "दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः" सा० का० "दृष्टानुश्रविकविषयवितृष्णा वशीकारसंज्ञा वैराग्यम्" पात०सू० "दृष्टं श्रुतञ्चेत्युपासीत" छा०उप०। भावे क्त। ३दर्शने ४राज्ञां स्वराष्ट्रस्थात् चौरादेर्भये ५परराष्ट्रात् दाहविलोपादेर्भये च न० अमरः। ६साक्षात्कारे न० "दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात्। त्रिविधं प्रमाणमिष्टम्" सा०का० उद्दिश्य तल्लक्षितं यथा

"प्रतिविषयाध्यवसायो दृष्टं, त्रिविधमनुमानमाख्यातम्" सां०का० "अत्र दृष्टमिति लक्ष्यनिर्देशः परिशिष्टन्तु लक्षणं समानासमानजातीयव्यवच्छेदो लक्षणार्थः। अवयवार्थस्तु विषिण्वन्ति विषयिणमनुबध्नन्ति

स्वेन रूपेण निरूपणीयं कुर्वन्तीति यावत् विषयाः पृथिव्यादयः सुखादयश्च अस्मदादीनामविषयाश्च तन्मात्रलक्षणा योगिनामूर्द्ध्वस्रोतसाञ्च विषयाः। विषयं विषयं प्रति वर्त्तते इति प्रतिविषयमिन्द्रियवृत्तिश्च सन्निकर्षः अर्थसन्निकृष्टमिन्द्रियमित्यर्थः तस्मिन्नध्यवसायस्तदाश्रितइत्यर्थः अध्यवसायश्च बुद्धिव्यापारो ज्ञानम्। उपात्तविषयाणामिन्द्रियाणां वृत्तौ सत्यां बुद्धेस्तमोऽभिभवे सति यः सत्त्वसमुद्रेकः सोऽध्यवसायइति वृत्तिरिति ज्ञानमिति चाख्यायते इदं तावत् प्रमाणम्। अनेन यश्चेतनाशक्तेरनुग्रहस्तत् फलं प्रमाबोधः। बुद्धितत्त्वं हि प्राकृतत्वादचेतनमिति तदीयोऽध्यवसायोऽप्यचेतनो घटादिवत्, एवं बुद्धितत्त्वस्य सुखादयोऽपि परिणामभेदा अचेतनाः। पुरुषस्तु सुखाद्यननुषङ्गी चेतनः सोऽयं बुद्धितत्त्ववर्त्तिना ज्ञानसुखादिना तत्प्रतिबिम्बितस्तच्छायापत्त्या ज्ञानसुखादिमानिव भवतीति चेतनोऽनुगृह्यते चितिच्छायापत्त्या चाचेतनापि बुद्धिस्तदध्यवसायोऽपि चेतन इव भवतीति। तथा च वक्ष्यति "तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम्। गुणकर्तृत्वेऽपि तथा कर्त्तेव भवत्युदासीनः" इति। अत्राध्यवसायग्रहणेन संशयं व्यवच्छिनत्ति संशयस्य अनवस्थितग्रहणेनानिश्चितरूपत्वात् निश्चयोऽध्यवसाय इत्यनर्थान्तरम्। विषयग्रहणेन चासद्विषयं विपर्य्ययमपाकरोति, प्रतिग्रहणेन चेन्द्रियार्थसन्निकर्षसूचनादनुमानस्मृत्यादयः पराकृता भवन्ति। तदेवं समानासमानजातीयव्यवच्छेदकत्वात् प्रतिविषयाध्यवसाय इति दृष्टस्य सम्पूर्णं लक्षणम्" तत्त्वकौ०।

**दृष्टदोष** त्रि० दृष्टो दोषः रागलोभादिर्यस्य। १ज्ञातरागलोभादिरूपदोषके "न दृष्टदोषाः कर्तव्या न व्याध्यार्त्ता न दूषिताः" साक्षिकरणनिषेधे मनुः। दृष्टो दोषो मिथ्याज्ञानजन्यवासना यत्र। २ज्ञातमिथ्याज्ञानजन्यवासनायुक्तविषये "दृष्टदोषेऽपि विषये ममत्वाकृष्टचेतनः" देवीमा० दृष्टो ज्ञातो दोषोयेन। ३छिद्रावलोकके रिपौ

**दृष्टपृष्ठ** त्रि० दृष्टम् प्रतियोधैः पृष्ठमस्य। पलायमाने शब्दार्थचि० रणात् पराङ्मुखस्य शत्रुभिः पृष्ठस्य दर्शनात् तथात्वम्।

**दृष्टप्रत्यय** त्रि० दृष्टेन दर्शनेन प्रत्ययः विश्वासो यस्य। अन्यत दर्शनेन कृतदृढनिश्चये।

**दृष्टरजस्** स्त्री दृष्टं रज आर्त्तवं यया। १दृष्टरजस्कायां नार्याम् अमरः। २तदुपलक्षितायां मध्यमायां प्रौढायाम् स्त्रियां राजनि०।

**दृष्टान्त** पु० दृष्टोऽन्तः विषयपरिच्छेदोयत्र। गौ० सूत्रोक्ते षोडशसु पदार्थेषु मध्ये पदार्थभेदे तल्लक्षणं तत्रोक्तं यथा "लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः" सू० "लोकसामान्यमनतीता लौकिका नैसर्गिकं वैनयिकं बुद्ध्यतिशयमप्राप्तास्तद्विपरीताः परीक्षकास्तर्केण प्रमाणैरर्थं परीक्षितुमर्हन्तीति, यथा यमर्थं लौकिका बुध्यन्ते तथा परीक्षका अपि सोऽर्थो दृष्टान्तः। दृष्टान्तविरोधेन हि प्रतिपक्षाः प्रतिषेद्धव्या भवन्तीति। दृष्टान्तसमाधिना च स्वपक्षाः स्थापनीया भवन्तीति तदुक्तावयवेषु चोदाहरणाय कल्पत इति" वात्स्या० भा०। २तत्रोक्तावयवमध्ये उदाहरणे च तल्लक्षणं तत्रोक्तं तच्च उदाहरणशब्दे ११६४ पृ० दर्शितम् अधिकमत्र तत्सूत्रभाष्यं प्रदर्श्यते यथा "साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्त उदाहरणम्" गौ०सू० "साध्येन साधर्म्यं समानधर्मता साध्यसाधर्म्यात् कारणात् तद्धर्मभावी दृष्टान्त इति तस्य धर्मस्तद्धर्मः तस्य साध्यस्य, साध्यञ्च द्विविधम् धर्मिविशिष्टो वा धर्मः शब्दस्यानित्यत्वम्। धर्मविशिष्टो वा धर्मी अनित्यः शब्द इति, इहोत्तरन्तद्ग्रहणेन गृह्यते इति कस्मात्? पृथग्धर्मवचनात्। तस्य धर्मस्तद्धर्मस्तस्य भावस्तद्धर्मभावः स यस्मिन् दृष्टान्ते वर्त्तते स दृष्टान्तः साध्यसाधर्म्यात् तद्धर्मभावी भवति स चोदाहरणमिष्यते तत्र यदुत्पद्यते तदुत्पत्तिधर्मकम् यच्च भूत्वा न भवति आत्मानं जहाति निरुध्यत इत्यनित्यम्। एवमुत्पत्तिधर्मकत्वं साधनमनित्यत्वं साध्यं सोऽयमेकस्मिन् द्वयोर्धर्मयोः साध्यसाधनभावः साधर्म्याद्व्यवस्थित उपलभ्यते तं दृष्टान्ते उपलभमानः शब्देऽप्यनुमिनोति शब्दोऽप्युत्पत्तिधर्मकत्वादनित्यः स्थाल्यादिवदित्युदाह्रियते तेन धर्मयोः साध्यसाधनभाव इत्युदाहरणम्" भा० "तद्विपर्य्ययाद्वा विपरीतम्" गौ०सू० "दृष्टान्त उदाहरणमिति प्रकृतं, साध्यवैधर्म्यात् तद्धर्मभावी दृष्टान्त उदाहरणमिति। अनित्यः शब्द उत्पत्तिधर्मकत्वात् यथा अनुत्पत्तिधर्मकं नित्यमात्मादि सोऽयमात्मादिदृष्टान्तः साध्यवैधर्म्यादनुत्पत्तिधर्मकत्वादतद्धर्मभावी योऽसौ साध्यस्य धर्मोऽनित्यत्वं स तस्मिन् भवतीति। अत्रात्मादौ दृष्टान्ते उत्पत्तिधर्मकत्वस्याभावादनित्यत्वं न भवतीति उपलभमानः शब्दे विपर्य्ययमनुमिनोति उत्पत्तिधर्मकत्वस्य भावादनित्यः शब्द इति साध-

र्म्योक्तस्य हेतोः साध्यसाधर्म्यात् तद्धर्मभावो दृष्टान्त उदाहरणम् वैधर्म्योक्तस्य हेतोः साध्यवैधर्म्यादतद्धर्मभावो दृष्टान्त उदाहरणम् । पूर्वस्मिन् दृष्टान्ते यौ तौ धर्मौ साध्यसाधनभूतौ पश्यति साध्येऽपि तयोः साध्यसाधनभावमनुमिनोति । उत्तरस्मिन् दृष्टान्ते ययोर्धर्मयोरेकस्याभावादितरस्याभावं पश्यति तयोरेकस्याभावादितरस्याभावं साध्ये अनुमिनोतीति, तदेतद्धेत्वाभासेषु न सम्भवतीत्यहेतवो हेत्वाभासाः तदिदं हेतूदाहरणयोः साधर्म्यं परमसूक्ष्मं दुःखबोधं पण्डितैरुपवेदनीयमिति" भाष्यम् । अन्यत्र च "वादिप्रतिवादिनोः संप्रतिपत्तिविषयोऽर्थो दृष्टान्तः । यथा पर्वतो वह्निमान् धूमात् महानसवदित्यादौ महानसो दृष्टान्तः । स द्विविधः साधर्म्यदृष्टान्तः वैधर्म्यदृष्टान्तः । आद्यः पर्वते वह्निसाधने धूमवत्त्वस्य हेतोर्महानसः । द्वितीयः तत्रैव धूमवत्त्वस्य हेतोर्महाह्रदः । ३अर्थालङ्कारभेदे अलङ्कारशब्दे ३८८ पृ॰ दृश्यम् "दृष्टान्तोऽत्र महार्णवः" माघः ४शास्त्रे ५मरणे च मेदि॰

**दृष्टि** स्त्री दृश–भावे क्तिन् । १दर्शने चाक्षुषज्ञाने "मात्रादृष्ट्या चक्षुष्मतामनुपलम्भः" सां॰सू॰। अक्षिपटलशब्दे ४२पृ॰ अक्षिशब्दे ४५पृष्ठे च दृश्यम् । २ज्ञानमात्रे मेदि॰ "तयोरेकतरदृष्ट्या एकतरसिद्धेर्नापलापः" । "विदितबन्धकारणस्य दृष्ट्या तद्रूपम्" सां॰सू॰ । ३प्रकाशे च "न द्रष्टुर्दृष्टेर्विपरिलोपोऽस्ति" श्रुतिः । ग्रहदृष्टिभेदादिकं ग्रहदृष्टिशब्दे २७५२।५३ पृ॰ दृश्यम् । करणे क्तिन् । ४नेत्रे अमरः । "अक्ष्णोस्तावन्मुकुलयतितदृष्टिरालुप्यते मे" मेघ॰ "दृष्टिर्गाढनिमीलिता न विकला नाभ्यन्तरे चञ्चला" उद्भ॰ "दृष्ट्या प्रसादामलया कुमारं प्रत्यग्रहीत्" रघुः "दृष्टा दृष्टिमधो ददाति" सा॰द॰ ।

**दृष्टिकृत्** त्रि॰ दृष्टिं करोति कृ–क्विप् । २दर्शके २स्थलपद्मे न॰ शब्दच॰। तस्य शोभया लोकानां दृष्टिसम्पादकत्वात् तथात्वम् ।

**दृष्टिकृत** न॰ दृष्टिर्लोकानां दृष्टिः कृता येन निष्ठान्तस्य परनिपातः । १स्थलपद्मे शब्दरत्नावली । २कृतदर्शने त्रि॰।

**दृष्टिक्षेप** पु॰दृष्टेः क्षेपः । १दृष्टिपाते ।

**दृष्टिगत** पु॰ दृष्टिं गतः विषतया प्राप्तः । १नेत्रविषये । ७त॰। २नेत्रगते रोगभेदे अक्षिपटलशब्दे ४२पृ॰दृश्यम् ।

**दृष्टिगुण** पु॰ दृष्ट्या गुण्यतेऽभ्यस्यतेऽत्र चु॰ गुण–अभ्यासे आधारे अच् । १बाणादिलक्ष्ये शब्दमाला तस्य दृष्ट्यैव शरादिक्षेपणाभ्यासनात् तथात्वम् ६त॰ । २नेत्रगुणे रूपादौ ।

**दृष्टिप** पु॰ दृष्टिं पिबति पा–क । देवगणभेदे "गणा देवानां मूष्मपाः सोमपाश्च, लोकाः सुयामास्तुषिता ब्रह्मकायाः । आभासुरा गन्धपा दृष्टिपाश्च" भा॰आनु॰ १८अ॰

**दृष्टिबन्धु** पु॰दृष्टेर्नेत्रस्य बन्धुरिव सादृश्यापादनात् । १खद्योते शब्दर॰ अक्षिपटलशब्दे ४२ पृ॰ उक्ते न "खद्योतविस्फुलिङ्गाभामिति" सुश्रुतवाक्येन दृष्टेस्तत्तुल्यत्वस्योत्कीर्तनेन तस्य तत्सादृश्यापादकतया तथात्वम् ।

**दृष्टिवाद** पु॰ हेमच॰ उक्ते पञ्चात्मके बौद्धानां वादरूपकथाभेदे "दृष्टिवादो द्वादशाङ्गी स्याद्गणिपिटकाह्वया । प्रतिकर्मसूत्रपूर्वानुयोगो पूर्वगतचूलिकाः । पञ्च स्युर्दृष्टिवादभेदाः पूर्वाणि चतुर्दशापि पूर्वगते" ।

**दृष्टिविक्षेप** पु॰ दृष्टिस्तदेकदेशस्य विक्षेपः । १कटाक्षदर्शने हला॰ ६त॰। २दृष्टिपाते ३दर्शनान्तराले च

**दृष्टिविभ्रम** दृष्टेर्विभ्रमः विलासभेदः । नेत्रविलासभेदे "विवर्तितभ्रूरियमद्य शिक्षते भयादकामापि हि दृष्टिविभ्रमम्" शकु॰ २दर्शनभ्रान्तौ च

**दृष्टिविष** पुंस्त्री दृष्टौ विषोऽस्य । १सर्पभेदे स्त्रियां जातित्वात् ङीष् । "दृष्टीविषैः सप्तशीर्षैर्गुप्तं भोगिभिरद्भुतैः" भा॰व॰२२४अ॰। दृष्टीविषैरित्यत्र आर्षो दीर्घः । "ते चाब्रुवन् नहुषो घोररूपो दृष्टीविषस्तस्य बिभीम देव !" भा॰उ॰ १५अ॰ ।

**दृह** वृद्धौ भ्वा॰पर॰अक॰सेट् । दर्हति अदर्हीत् ददर्ह । अयमिदित् तत्र दृंहति अदृंहीत् । "तमेतैः स्तोमैः सम्प्रदर्शैरदृंहन्" ताण्ड्य॰ब्रा॰४।५।८ इदित्त्वात् नलोपाभावः दृंह्यते दृंहितः "दिशो दृंह दृंहिता दृंहणेन" तैत्ति॰ २।८।३।८ "दृंहणाय स्वनामसि" अथ॰ ६।१३६।१ अनिदितस्तु दृह्यते दृह्नितः इत्यादि ।

**दॄ** भये भ्वा॰ पर॰ सक॰ सेट् । दरति अदारीत् घटा॰ णिच् दरयति । ददार दरीता दरिता। दीर्णः ।

**दॄ** विदारे दिवा॰ पर॰सक॰ सेट् । दीर्यति अदारीत् । ददार दरीता दरिता दीर्णः । [दरिता । दीर्णः । भगन्दरः

**दॄ** विदारे क्र्या॰प्वा॰पर॰अक॰सेट् । दृणाति अदारीत् दरीता

**दे** पालने भ्वा॰ आत्म॰सक॰ अनिट् । दयते अदास्त ददे दाता दास्यते दातम् दत्तः ।

**देय** त्रि॰दा–कर्मणि यत् । १दातव्ये "स्वं कुटुम्बाविरोधेन देयं दारसुतादृते । नान्वये सति सर्वस्वं यच्चान्यस्मै प्रतिश्रुतम्"

याज्ञ० वचनोक्तनिषिद्धभिन्ने २दानार्हे दत्ताप्रदानिक-शब्दे ३४५५।५६ पृ० दृश्यम् ।

**देव** देवने भ्वा० आत्म० अक० सेट् । देवते अदेविष्ट । अदेविद्म् अदेवि(द्वि)ष्वम् दिदेवे अदिदेत् । देवयति ते अदिदेवत् त । देवनमिह रोदनमिति भट्टमल्लः । परि+विलापे । "विलापः परिदेवनम्" अमरः । "खर-दूषणयोर्भ्रात्रोः पर्य्यदेविष्ट सा पुरः" भट्टिः ।

**देव** पु० दिव—अच् । १अमरे सुरे नाट्योक्तौ २राजनि अमरः । ३नृपे ४मेघे पु० ५इन्द्रिये न० मेदिनि० ६पारदे पु० राजनि० । ७ब्राह्मणानामुपाधिभेदे "ततश्च नाम कुर्वीत पितैव दशमेऽहनि । देवपूर्वं नराख्यं हि शर्मवर्मादि संयुतम्" इति भवि०पु० । "नरमाचष्टे इति नराख्यं नरनाम, देवात् पूर्वं तच्च विशिष्टं शर्म-युतम् । "शर्मा देवश्च विप्रस्य वर्मा त्राता च भूभुजः । भूतिगुप्तश्च वैश्यस्य दासः शूद्रस्य कारयेत्" इति यम-वचने तच्छब्दयोपलक्ष्येः । "शर्मान्तं ब्राह्मणस्य स्यात्" इति शातातपीयेन शर्मान्तता च । ८देवदारुणि श-ब्दार्थचि० ९पूज्ये १०दीप्ते च त्रि० ११परात्मनि पु० "एकोदेवः सर्वभूतेषु गूढः" श्रुतिः । "भर्गोदेवस्य" गायत्री "दीव्यते क्रीडते यस्मात् रोचते द्योतते दिवि । तस्मा-द्देव इति प्रोक्तः स्तूयते सर्वदैवतैः" योगियाज्ञ० "उद्भवः क्षोभणो देवः" विष्णुसं० "यतः क्रीडति सर्गादिभिः जिगीषते शत्रून्, व्यवहरति सर्वभूतेषु आत्म-तया, द्योतते स्तूयते स्तुत्यैः सर्वत्र गच्छतीति तस्मात् देवः" भा० । सुराश्च यद्यपि बहवस्तथापि प्राधान्यात् त्रयस्त्रिंशत्संख्यया त्रयस्त्रिंशत्पतिशब्दे ३३५८ पृ० दृश्याः तत्र सुरे "देवा अप्यस्य रूपस्य नित्यं दर्शन-काङ्क्षिणः" गीता । "देवान्ऋषीन् मनुष्यांश्च पितॄन् गृ-ह्याश्च देवताः" मनुः । नृपे "देवाकर्णय सुश्रुतेन चरक-स्योक्तेन जानेऽखिलम्" नैष० नाट्योक्तौ नृपे "यथाऽऽ-ज्ञापयति देवः" भूरिनाटकेषु । मेघे देवो गर्जति देव-गर्जनम् देवे वर्षति । "देवाश्च आजानदेवाः कर्मदेवाश्च" कर्मदेवशब्दे १७२८ पृ० दृश्यम् ।

**देवऋषभ** पु० नित्यकर्म० प्रकृतिवद्भावः । कश्यपकन्यायां धर्मस्य पत्नीभेदे भानौ जाते पुत्रे दशधर्मायेत्युपक्रमे "भानुर्लम्बा ककुज्जामिर्विश्वा साध्या मरुत्वती । वसुर्मु-हूर्त्ता सङ्कल्पो धर्मपत्न्यः सुतान् शृणु । भानोस्तु देवऋषभ इन्द्रसेनस्ततो नृप !" भा० ६।५।४।५

**देवऋषि** पु० देवानामृषिः, पूज्यत्वात् प्रकृतिवद्भावो वा । देवर्षौ नारदादौ "अथ देवऋषी राजन् ! संपरेतं नृपात्मजम्" भाग० ६।१६।१ पक्षे देवर्षिरप्यत्र । इष्ट-स्तेऽस्तु देवर्षे तवर्षिभिर्वद भारत" भा०आ० ६७अ० ।

**देवक** त्रि० दिव—ण्वुल् । १क्रीडके २गन्धर्वपतिभेदे ३ओज-स्वतः मातामहे आहुकपुत्रे नृपभेदे च पु० "यस्त्वासी-द्देवको नाम देवराजसमद्युतिः । स गन्धर्वपतिर्मुख्यः क्षितौ जज्ञे नराधिपः" भा० आ०६७अ० तस्यैव देवक-नाम्ना कलावतारः इत्यर्थः । "आहुकस्य तु काश्यायां द्वौ पुत्रौ सम्बभूवतुः । देवकश्चोग्रसेनश्च देवगर्भसमावुभौ । देवकस्याभवन् पुत्राश्चत्वारस्त्रिदशोपमाः । देववानुपदेवश्च सन्देवो देवरक्षितः । कुमार्यः सप्त चास्यासन् वसुदे-वाय ता ददौ । देवकी शान्तिदेवा च सन्देवा देवर-क्षिता । वृकदेव्युपदेवी च सुनाम्नी चैव सप्तमी" हरिवं० ३८अ० । ४तत्कन्यायां स्त्री ङीष् । देवकीशब्दे दृश्यम्

**देवकर्दम** पु० देवप्रियः कर्दम इव । श्रीखण्डागुरुकर्पूर कुङ्कुमैर्मिलितैः कृते कर्दमरूपे गन्धद्रव्यभेदे राजनि० ।

**देवकात्मजा** स्त्री ६त० । देवकन्यपसुतायां देवक्यां प्राधान्यात् शब्दरत्ना० ।

**देवकार्य** न० देवप्रियार्थं कार्यम् । १देवप्रियार्थे होमपूजादौ कार्ये "देवकार्यात् द्विजातीनां पितृकार्यं विशिष्यते" मनुः । देवानामभिलषितं कार्यम् । २देवाभिलषिते कार्ये च "अनुष्ठितदेवकार्यम्" रघुः क्षतरावणवधादिरूपदेवकार्य-मित्यर्थः । देवकर्मादयोऽप्यत्र "देवकर्मकृतश्चैव युक्ताः कामेन कर्मसु" भा०शा०१६७अ०

**देवकाष्ठ** न० देवप्रियं काष्ठमस्य । देवदारुवृक्षे रत्ना० । "मनःशिला देवकाष्ठं रजन्यौ त्रिफलोषणम्" सुश्रु० ।

**देवकिरी** स्त्री मेघरागस्य भार्य्याभेदे रागिणीभेदे तद्रागस्य रागिणीभेदाः तत्स्वरूपञ्च सङ्गीतदा०उक्तं यथा "ललिता मालती गौरी नाटी देवकिरी तथा । मेघ-रागस्य रागिण्यो भवन्तीमाः सुमध्यमाः" । अस्या स्वरूपं यथा "भ्रमन्ती नन्दने श्यामा पुष्पप्रचयतत्परा । ख्याता देवकिरी ह्येषा करार्पितसखीकरा" देवगिरीति वा पाठः ।

**देवकिल्विष** न० देवेन कृतं किल्विषमनिष्टकर्म । देवकृते अनिष्टे कार्ये यथा वरुणकृतपाशबन्धनं यमकृतपाटबन्ध-नमित्यादि । "मुञ्चन्तु मा शपथ्यादथो वरुण्यादुत । अथो यमस्य पड्वीशात् सर्वस्माद्देवकिल्विषात्" ऋ०१०।९७।१६।

**देवकी** स्त्री देवक+पुंयोगे ङीष् पुंयोगस्य न केवल टा-

ण्यलक्षणः किन्तु जन्यजनकत्वादिरूपोऽपीति हरदत्तः तेन कैकयीति सिद्धम् । देवकराजकन्याभेदे देवकशब्दे दृश्यम् । देवकी च कश्यपपत्न्या अदितेरवतारः यथोक्तं हरिवं० ५६अ० “तस्य (कश्यपस्य)भार्याद्वयञ्चैव अदितिः सुरभिस्तथा । देवकी रोहिणी चैव वसुदेवस्य धीमतः”

**देवकीनन्दन** पु० ६त०। वसुदेवपत्न्या देवक्यानन्दने श्रीकृष्णे । “नन्दगोपस्य जायैका वसुदेवस्य चापरा । तुल्यकालं हि गर्भिण्यौ यशोदा देवकी तथा । देवक्यजनयद्विष्णुं यशोदा तान्तु कन्यकाम् । मुहूर्त्तेऽभिजिते प्राप्ते सार्द्धरात्रे विभूषिते” हरिवं०। ६०अ० “देवकीनन्दनः स्रष्टा क्षितीशः पापनाशनः” विष्णुसं० “गृहीत्वा शरणं प्राप्ते कृष्णे देवकिनन्दने” भा०आ० १अ० संज्ञात्वात् ङीपो ह्रस्वः ।

[नुशिष्टः कुक् च । देवसम्बन्धिनि ।

**देवकीय** त्रि० देवस्येदम् गहा० छ “देवस्य च” पा०ग०तद-

**देवकीपुत्र** पु० ६त० । १श्रीकृष्णे “वक्ष्याम्येव दास्यामि देवकीपुत्रमाश्रितः” हरिवं० १४२अ०। २पुरुषयज्ञदर्शनविद्यायां घोरनामकाङ्गिरसस्य शिष्यभूते कृष्णे च । यज्ञदर्शनमुपक्रम्य “तद्धैतद्घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाचापिपास एव स बभूव सोऽन्तवेलायामेतत्त्रयं प्रतिपद्येताक्षितमस्यच्युतमसि प्राणसंशितमसीति” छा०उ० ३।१७,६ “तद्धैतत् यज्ञदर्शनं घोरोनामतः, आङ्गिरसो गोत्रतः कृष्णाय देवकीपुत्राय शिष्यायोक्त्वोवाच तदेतत्त्रयमित्यादि व्यवहितेन सम्बन्धः । स चैतद्दर्शनं श्रुत्वाऽपिपास एवान्याभ्यो विद्याभ्यो बभूव । इत्यञ्च विशिष्टेयं विद्या यत् कृष्णस्य देवकीपुत्रस्यान्यां विद्यां प्रति तृड्विच्छेदकरीति पुरुषयज्ञविद्यां स्तौति घोर आङ्गिरसः कृष्णायोक्त्वेमां विद्यां किमुवाचेति तदाह स एवं यथोक्तयज्ञविदन्तवेलायां मरणकाले एतन्मन्त्रत्रयं प्रतिपद्येत जपेदित्यर्थः । किं तत् अक्षितमक्षीणमक्षतं वाऽसीत्येकं यजुः” भा०अत्र परमेश्वरस्य वासुदेवात्मकेश्वरस्य अन्यशिष्यत्वानुपपत्तौ इह तदन्यस्यैव शिष्यत्वम् । श्रुतौ स्मृतेः अनादिप्रवाहरूपतया वासुदेवस्य शिष्यत्वकल्पनया जनकयाज्ञवल्क्ययोरिव कल्पान्तरस्थयोरिव आख्यायिका स्तुत्यर्थैत्यन्ये । देवकीसुतादयोऽपि वासुदेवे । “अथ भाद्रपदे मासि कृष्णाष्टम्यां कलौ युगे । अष्टाविंशतिमे जातः कृष्णोऽसौ देवकीसुतः” ति०त० ब्रह्मपु० “व्याधायिषातामभिदेवकीसुतम्” माघः ।

**देवकीमातृ** पु० देवकी माता यस्य समासान्तविधेरनित्यत्वात् न कप्, देवकीं मिनोति प्रक्षिपति स्तनेन मा—तृच् वा । वासुदेवे श्रीकृष्णे । “पश्यैतान् देवकीमातर्मृधे नद्य संयुगे” भा०द्रो० १८अ० प्रथमे विग्रहे सर्वनामस्थाने परे गुणः देवकीमातरमित्यादि द्वितीये देवकीमातारमिति भेदः ।

**देवकुण्ड** न० देवकृतं कुण्डम् । देवखातके शब्दार्थचि०

**देवकुरुम्बा** स्त्री महाद्रोणयां राजनि० ।

**देवकुल** न० कुल—संहतौ क देवार्थं कुलमत्यद्वारतया संहतम् । अल्पसुखे (देउल) ख्याते देवगृहभेदे हारा० । देवानां २वंशे ३समूहे च

**देवकुल्या** स्त्री देवकृता कुल्या अल्पसरित् । १देवसरिति गङ्गायाम् ६त० । मरीचेः कन्यायाः पूर्णिमासः २कन्यायाञ्च “पत्नी मरीचेस्तु कला सुषुवे कर्दमात्मजा । कश्यपं पूर्णमासञ्च ययोरापूरितं जगत् । पूर्णिमासूत विरजं विश्वगञ्च परन्तप । देवकुल्यां हरेः पादशौचाद्याऽभूत् सरिद्दिवः” भाग०४।१।१२। सा च भरतवंश्यस्य भूम्नः पत्नीभेदः यथाह भाग० ५।१५।६ “भरतस्यात्मजः सुमतिर्नाम” इत्युपक्रमे “प्रतिहर्त्तुः स्तुत्यामजभूमानावजनिषाताम् । भूम्न ऋषिकुल्यायामुद्गीथः ततः प्रस्तारो देवकुल्यायाम्” ।

**देवकुसुम** न० देवप्रियं कुसुमम् । लवङ्गे अमरः ।

**देवकूट** न० वशिष्ठाश्रमसन्निकटस्थे तीर्थभेदे “तत्राश्रमो वशिष्ठस्य त्रिषु लोकेषु विश्रुतः । तत्राभिषेकं कुर्वाणो वाजपेयमवाप्नुयात् । देवकूटं समासाद्य देवर्षिगणसेवितम्” भा०व० ८४अ० ।

**देवक्षत्र** पु० क्रोष्टुवंश्ये नृपभेदे “तस्मात् करम्भः कारम्भिर्देवरातोऽभवन्नृपः । देवक्षत्रोऽभवत्तस्य दैवक्षत्रिर्महायशाः । देववर्णसमो जज्ञे देवक्षत्रस्य नन्दनः” हरिवं० ३७अ०। देवानां क्षत्रं बलं यत्र । २यज्ञे च “उच्छन्त्यां मे यजता देवक्षत्रे रुशद्गवि” ऋ० ५।६४।७ “देवक्षत्रे यज्ञे” भा० ।

**देवखात** न० देवेन खातं खन—क्त । १अकृत्रिमे २जलाशये ७त०। ३देवसमीपस्थे खाते च “नदीषु देवखातेषु तडागेषु सरित्सु च । स्नानं समाचरेन्नित्यं गर्त्तप्रस्रवणेषु च” मनुः स्वार्थे क तत्रार्थे अमरः । ४गुहायां भरतः ।

**देवखातबिल** पु० नित्यकर्म० । गुहायाम् अमरः ।

**देवगण** पु० ६त०। १देवसमूहे “उदर्कस्तव कल्याणि ! तुष्टो देवगणेश्वरः” भा०भी० १२३अ०। देवगणाश्च त्रयस्त्रिंशत्पतिशब्दे २३५८ पृ० उक्ताः वस्वादीनुक्त्वा “त्रयस्त्रिंशत

इत्येते देवास्तेषामहं तव। अन्वयं संप्रवक्ष्यामि पञ्चयः कुलतो गणान्” इत्युपक्रमे “एते देवगणा राजन्! कीर्त्तितास्तेऽनुपूर्वशः” भा०आ०६६अ० उक्ताः। देवसंज्ञ-कोगणः। २नक्षत्रभेदे उपयमशब्दे १२५० पृ० गणकूटे दृश्यम् हत०। ३देवपक्षे ४देवानुचरादौ

**देवगणग्रह** पु० सुश्रुतोक्ते देवादिगणरूपे ग्रहे देवानाञ्च शुद्धस्वभावत्वात् ग्रहत्वासम्भवमाशङ्क्य तद्गणानामेव ग्रहत्वं च तत्रोक्तं यथा

“गुह्यानागतविज्ञानमनवस्था सहिष्णुता। क्रिया वाऽमानुषी यस्मिन् स ग्रहः परिकीर्त्त्यते। अशुचिं भिन्नमर्य्यादं क्षतं वा यदि वाऽक्षतम्। हिंस्युर्हिंसाविहाराथं सत्कारार्थमथापि च। असंख्येया ग्रहगणा ग्रहाधिपतयस्तु ये। व्यज्यन्ते विविधाकारा भिद्यन्ते ते तथाष्टधा। देवास्तथा शत्रुगणाश्च तेषां गन्धर्व्वयक्षाः पितरो भुजङ्गाः। रक्षांसि या चापि पिशाचजातिरेषोऽष्टधा देवगणग्रहाख्यः। सन्तुष्टः शुचिरपि चेष्टगन्धमाल्यो निस्तन्द्रो ह्यवितथसंस्कृतप्रभाषी। तेजस्वी स्थिरनयनो वरप्रदाता ब्रह्मण्यो भवति च यः स देवजुष्टः। संस्वेदी द्विजगुरुदेवदोषवक्ता जिह्माक्षो विगतभयो विमार्गदृष्टिः। सन्तुष्टो भवति न चान्नपानजातैर्दुष्टात्मा भवति च दैवशत्रुजुष्टः। हृष्टात्मा पुलिनवनान्तरोपसेवी स्वाचारः प्रियपरिगीतगन्धमाल्यः। नृत्यन् वा प्रहसति चारु चाल्पशब्दं गन्धर्व्वग्रहपरिपीडितो मनुष्यः। ताम्राक्षः प्रियतनुरक्तवस्त्रधारी गम्भीरो द्रुतगतिरल्पवाक् सहिष्णुः। तेजस्वी वदति च किं ददामि कस्मै यो यक्षग्रहपरिपीडितो मनुष्यः। प्रेतेभ्यो विसृजति संस्तरेषु पिण्डान् शान्तात्मा जलमपि चापसव्यवस्त्रः। मांसेप्सुस्तिलगुडपायसाभिकामस्तद्भक्तो भवति पितृग्रहाभिभूतः। भूमौ यः प्रसरति सर्पवत् कदाचित् सृक्कण्यौ विलिहति जिह्वया प्रसक्तम्। निद्रालुर्गुडमधुदुग्धपायसेप्सुर्विज्ञेयो भवति भुजङ्गमेन जुष्टः। मांसासृग्विविधसुराविकारलिप्सुर्निर्लज्जो भृशमतिनिष्ठुरोऽतिशूरः। क्रोधालुर्विपुलबलो निशाविहारी शौचद्विड्भवति च राक्षसैर्गृहीतः। उद्धस्तः कृशपरुषश्चिरप्रलापी दुर्गन्धो भृशमशुचिस्तथातिलोलः। बह्वाशी विजनहिमाम्बुरात्रिसेवी व्याचेष्टं भ्रमति रुदन् पिशाचजुष्टः। स्थूलाक्षस्त्वरितगतिः स्वफेनलेही निद्रालुः पतति च कम्पते च योऽति। यश्चाद्रिद्विरदनगादिविच्युतःसन् संसृष्टो न भवति वाङ्कैन जुष्टः। देवग्रहाः पौर्णमास्यामासुराः सन्ध्ययोरपि। गन्धर्व्वाः प्रायशोऽष्टम्यां यक्षाश्च प्रतिपद्यथ। कृष्णपक्षे च पितरः पञ्चम्यामपि चोरगाः। रक्षांसि निशि पैशाचाश्चतुर्दश्यां विशन्ति च। दर्पणादीन् यथा छाया शीतोष्णं प्राणिनो यथा। स्वमणिं भास्कराचिश्च यथा देहं च देहिनः। विशन्ति च न दृश्यन्ते ग्रहास्तद्वच्छरीरिणम्। तपांसि तीव्राणि तथैव दानव्रतानि धर्मो नियमश्च सत्यम्। गुणास्तथाष्टावपि तेषु नित्या व्यस्ताः समस्ताश्च यथाप्रभावम्। न ते मनुष्यैः सह संविशन्ति नवा मनुष्यान् क्वचिदाविशन्ति। ये चाविशन्तीति वदन्ति मोहात्ते भूतविद्याविषयादपोह्याः। तेषां ग्रहाणां परिचारका ये कोटीसहस्रायुतपद्मसंख्याः। असृग्वसामांसभुजः सुभीमा निशाविहाराश्च तमाविशन्ति। निशाचराणां तेषां हि ये देवगणसंश्रिताः। ते तु तच्छीलसंसर्गाद्विज्ञेयास्तु तदञ्जनाः। देवग्रहा इति पुनः प्रोच्यन्ते शुचयश्च ये। देववत् ते नमस्यन्ते प्रत्यर्थन्ते च देववत्”।

**देवगणिका** स्त्री हत०। स्वर्वेश्यायामप्सरःसु।

**देवगन्धर्व** पु० देवानां गन्धर्वः गायनः। १देवसमीपे गायने गन्धर्वभेदे। देवगन्धर्वाश्च मौनेयाः प्राधेयाश्च गन्धर्वशब्दे २५२८ पृ० उक्ताः। [राजनि०।

**देवगन्धा** स्त्री देवप्रियोगन्धोऽस्याः। महामोदयामोदायाम्

**देवगर्भ** पु०देवात् गर्भोयस्य। देवाहितगर्भके देवपुत्रे १नराटौ “प्रतिजग्राह सं राधा विधिवद्दिव्यरूपिणम्। पुत्रं कमलगर्भाभं देवगर्भं श्रियावृतम्” भा०व०३०८अ०। “देवकश्चोग्रसेनश्च देवगर्भसमावुभौ” हरिवं० ३८अ० “स तस्यां जनयामास देवगर्भोपमं सुतम्” ११८अ० २कुशद्वीपस्य २नदीभेदे स्त्री “रसकुल्या मधुकुल्या मित्रविन्दा श्रुतविन्दा देवगर्भा घृतच्युता मन्त्रमालेति यासां पयोभिः कुशद्वीपौकसः” भाग० ५।२०।११

**देवगान्धार** पु० देवप्रियः देवयोग्यो वा गान्धारः। स्वरभेदे “ततस्तु देवगान्धारं छालिक्यं श्रवणास्ततम्। भीमस्त्रियः प्रजगिरे मनःश्रोत्रसुखावहम्” हरिवं० १५२अ० २श्रीरागस्य रागिणीभेदे स्त्री “गान्धारी देवगान्धारी मालवी श्रीश्च मारवी। राम(गि)किर्य्यपि रागिण्यः श्रीरागस्य प्रिया इमाः” सङ्गीत०दा०

**देवगायन** पु० हत०। गन्धर्वे हेमच०।

**देवगिरि** पु० देवानां प्रियः गिरिः। १पर्वतभेदे स च

भारतवर्षीयः स्वनामख्यातो गिरिः "भारतेऽप्यस्मिन् वर्षे सरिच्छैलाः सन्ति बहवः इत्युपक्रमे "सह्यो देवगिरिर्ऋष्यमूकः श्रीशैलः" भाग०५।१९।१७ उक्तेः श्रीरागस्य २रागिणीविशेषे स्त्री ङीप् देवगान्धारीशब्दे दृश्यम्।

**देवगुरु** पु० ६त०। १सुराचार्ये वृहस्पतौ हेमच० देवानां पितरि २कश्यपे च "अपश्यन् कश्यपं तत्र मुनिं दीप्तं तपोनिधिम्। आद्यं देवगुरुं देवम्" हरिवं० २५७ अ०

**देवगुही** स्त्री गुह–बा० कि ङीप् देववत् गुह्ते गुह्या। सरस्वत्याम् "देवगुह्यां सरस्वत्यां सार्वभौम इति प्रभुः" भाग०८।१३।८।

**देवगुह्य** त्रि० ६त०। देवानामतिरहस्ये। "एकमासीनमेकान्ते देवगुह्यधरं प्रभुम्" हरिवं० ११६अ० "श्रुतार्थो देवगुह्यस्य भवान् यत्र वयं स्थिताः" तत्रैवाध्याये "तस्मिन् भ्रातृणां विग्रहे देवगुह्ये" भा०आ० १अ० २मरणे न०। शब्दार्थचि०। तद्धि प्राणिनां वैराग्यानुत्पादाय देवैर्गोप्यते इति तस्य तथात्वम्।

**देवगृह** न० ६त०। देवालये तल्लक्षणं गरुडपु० ४७अ० यथा "चतुःषष्टिपदं कृत्वा दिग्विदिक्षूपलक्षितम्। चतुष्कोणं चतुर्भित्ति द्वाराणि सूर्यसंख्यया। चत्वारिंशाष्टभिश्चैव भित्तीनां कल्पना भवेत्। ऊर्द्ध्वक्षेत्रसमा जङ्घा जङ्घार्द्धद्विगुणं भवेत्। गर्भविस्तारविस्तीर्णा शूकाग्रा च विधीयते। तत्त्रिभागेण कर्त्तव्या पञ्चभागेन वा पुनः। निर्गमस्तु शुकाघ्राया उच्छ्रयः शिखरार्द्धतः। चतुर्धा शिखरं कृत्वा त्रिभागे वेदिबन्धनम्। चतुर्थे पुनरस्यैव कण्ठस्य मलसारकम्। अथ वापि समं वास्तु कृत्वा षोडशभागिकम्। तस्य मध्ये चतुर्भागमादौ गर्भन्तु कारयेत्। भागद्वादशकां भित्तिं ततस्तु परिकल्पयेत्। चतुर्भागेण भित्तीनामुच्छ्रयः स्यात् प्रमाणतः। द्विगुणः शिखरोच्छ्रायो भित्त्युच्छ्रायाच्च मानतः। शिखरार्द्धस्य चार्द्धेन विधेयास्तु प्रदक्षिणाः। चतुर्दिक्षु तथा ज्ञेयो निर्गमस्तु तथा बुधैः। पञ्चभागेन संभज्य गर्भमानं विचक्षणः। भागमेकं गृहीत्वा तु निर्गमं कल्पयेत् पुनः। गर्भसूत्रसमो भागादग्रतो मुखमण्डपः। एतत् सामान्यमुद्दिष्टं प्रासादस्य हि लक्षणम्। लिङ्गमानमथो वक्ष्ये पीठो लिङ्गसमो भवेत्। द्विगुणेन भवेद्गर्भः समन्ताच्छौनक! ध्रुवम्। तद्विधा च भवेद्भित्तिर्जङ्घा तद्विस्तरार्द्धगा। द्विगुणं शिखरं प्रोक्तं जङ्घायाश्चैव शौनक!। पीठं गर्भावरं कुर्यात् तन्मानेन शुकाग्रकाम्। निर्गमस्तु समाख्यातः शेषं पूर्ववदेव तु। लिङ्गमानं स्मृतं ह्येतद् द्वारमानमथोच्यते। कराग्रं वेदवत् कृत्वा द्वारं भागाष्टकं भवेत्। विस्तरेण समाख्यातं द्विगुणं वेच्छ्रया भवेत्। द्वारवत् पीठमध्ये तु शेषं सुषिरकं भवेत्। पादिकं शेषिकं भित्तिर्द्वारार्द्धेन परिग्रहात्। तद्विस्तारसमा जङ्घा शिखरं द्विगुणं भवेत्। शुकाघ्रा पूर्ववज्ज्ञेया निर्गमोच्छ्रायकं भवेत्। मण्डपे मानमेतत्तु स्वरूपञ्चापरं वदे। त्रैवेदं कारयेत् क्षेत्रं यत्र तिष्ठन्ति देवताः। इत्थं कृतेन मानेन बाह्यभागविनिर्गतम्। नेमिः पादेन विस्तीर्णा प्रासादस्य समन्ततः। गर्भन्तु द्विगुणं कुर्यात् नेम्यामानं भवेदिह। स एव भित्तेरुत्सेधो द्विगुणः शिखरो मतः। प्रासादानाञ्च वक्ष्यामि मानं योनिञ्च नामतः। वैराजः पुष्पकाख्यश्च कैलासो मालकाह्वयः। त्रिपिष्टः पञ्च पञ्चैते प्रासादाः सर्वयोनयः। प्रथमश्चतुरस्रो हि द्वितीयस्तु तदायतः। वृत्तो वृत्तायतश्चान्योऽष्टास्रश्चेह च पञ्चमः। एतेभ्य एव सम्भूताः प्रासादाः सुमनोहराः। सर्वप्रकृतिभूतेभ्यश्चत्वारिंशच्च पञ्च च। मेरुश्च मन्दरश्चैव विमानश्च तथाऽपरः। भद्रकः सर्वतोभद्रो! रुचकोनन्दनस्तथा। नन्दिवर्द्धनसंज्ञश्च श्रीवत्सश्च नवेत्यमी। चतुरस्रात् समुद्भूता वैराजादिति गम्यताम्। वडभी गृहराजश्च शालागृहञ्च मन्दिरम्। विशालश्च तथा ब्रह्ममन्दिरं भवनं तथा। उत्तम्भं शिविका वेश्म नवैते पुष्पकोद्भवाः। वलयो दुन्दुभिः पद्मो महापद्मस्तथाऽपरः। वर्द्धनोऽप्यन्य उष्णीष शङ्खश्च कलसस्तथा। खपूरवृक्षकाश्चान्यो वृत्ताः कैलाससम्भवाः। गजोऽथ वृषभो हंसो गरुडः सिंहनामकः। भूमुखो भूधरश्चैव श्रीजयः पृथिवीधरः। वृत्तायतसमुद्भूता नवैते मालकाह्वयात्। वज्रं चक्रं तथान्यच्च स्वस्तिकं वज्रसंज्ञितम्। चित्रस्वस्तिकखड्गौ च गदा श्रीवृक्ष एव च। विजयो नामतश्चैते त्रिपिष्टपसमुद्भवाः। त्रिकोणपत्रमर्द्धेन्दु चतुष्कोणं द्विरष्टकम्। यत्र तत्र विधातव्यं संस्थानं मण्डपस्य तु। राज्यञ्च विजयश्चैवमायुर्वर्द्धनमेव च। पुत्रलाभः श्रियः पुष्टिस्त्रिकोणादिक्रमाद्भवेत्। कुर्य्यात् ध्वजादिसंख्यां वा द्वारि गर्भगृहन्तथा। मण्डपः सम संख्याभिर्गुणितः सूत्रतस्तथा। मण्डपस्य चतुर्थांशाद्भद्रः कार्यो विजानता। सगवाक्षकोपेतो निर्गवाक्षोऽथ वा भवेत्। सार्द्धभित्तिप्रमाणेन भित्तिमाने-

न वा पुनः। भित्तेर्द्वैगुण्यतो वापि कर्त्तव्या मण्डपाः क्वचित्। प्रासादे मञ्जुरी कार्या चित्रा विषमभूमिका। परिमाणविरोधेन रेखा वैषम्यभूमिका। आधारस्तु चतुर्द्वारश्चतुर्मण्डपशोभितः। शतशृङ्गसमायुक्तो मेरुप्रासाद उत्तमः। मण्डपास्तस्य कर्त्तव्या भद्रैस्त्रिभिरलङ्कृताः। घटनाकारमानानां भिन्ना भिन्ना भवन्ति ये। कियन्तोयेषु साधारानिराधाराश्च केचन। प्रतिच्छन्दक्रमेदेन प्रासादाः सम्भवन्ति ते। अन्योन्यसङ्कराकीर्णा घटना नामभेदतः। देवतानां विशेषाय प्रासादा बहवः स्मृताः। प्रासादे नियमो नास्ति देवानां च स्वयम्भुवाम्। तान्येव देवतानाञ्च पूर्वमानेन कारयेत् चतुरस्रायतास्तत्र चतुष्कोणसमन्विताः। चन्द्रशालान्विताः कार्या भेरीशिखरसंयुता। पुरतो वाहनानाञ्च कर्त्तव्या लघुमण्डपाः। नाट्यशाला च कर्त्तव्या द्वारदेशसमाश्रया। प्रासादा देवतानाञ्च कार्या दिक्षु विदिक्ष्वपि। द्वारपालाश्च कर्त्तव्या मुख्याङ्गत्वात् पृथक् पृथक्। किञ्चिद्विदूरतः कार्या मठास्तत्रोपजीविनाम्। प्रावृता जगती कार्या फलपुष्पजलान्विता। प्रासादेषु सुरान् स्थाप्य पूजाभिः पूजयेन्नरः। वासुदेवे सर्वदेवान् स्वर्गभाक् तद्गृहादिकृत्"

प्रासादसामान्यलक्षणमुक्तमग्निपुराणे १०४अ० यथा

"ईश्वर उवाच वक्ष्ये प्रासादसामान्यलक्षणं ते शिखिध्वज!। चतुर्भागीकृते क्षेत्रे भित्तेर्भागेन विस्तरात्। अष्टिभागेण गर्भः स्यात् पिण्डिका पादविस्तरात्। पञ्चभागीकृते क्षेत्रे ह्यन्तर्भागे तु पिण्डिका। सुषिरं भागविस्तीर्णं भित्तयो भागविस्तरात्। भागौ द्वौ मध्यमे गर्भे ज्येष्ठभागद्वयेन तु। त्रिभिस्तु कन्यसोगर्भः शेषो भित्तिरिति क्वचित्। षोढाभक्तेऽथ वा क्षेत्रे भित्तिर्भागैकविस्तरात्। गर्भो भागेन विस्तीर्णो भागद्वयेन पिण्डिका। विस्ताराद्द्विगुणो वापि सपादद्विगुणोऽपि वा। अर्द्धार्द्धद्विगुणो वापि त्रिगुणः क्वचिदुच्छ्रयः। जगती विस्ताराद्र्द्धेन त्रिभागेण क्वचिद्भवेत्। नेमिः पादोनविस्तीर्णा प्रासादस्य समन्ततः। परिधिस्त्र्यंशको मध्ये रथकांस्तत कारयेत्। चामुण्डभैरवं तेषु नाट्येशं च निवेशयेत्। प्रासादार्द्धेन देवानामष्टौ वा चतुरोऽपि वा। प्रदक्षिणं बहिः कुर्यात् प्रासादादिषु वा न वा। आदित्याः पूर्वतः स्थाप्याः स्कन्दोऽग्निर्वायुगोचरे। एवं यमादयो न्यास्याः स्वस्यां स्वस्यां दिशि स्थिताः। चतुर्द्धा शिखरं कृत्वा शुकनासा द्विभागिका। तृतीये वेदिका लग्ने सकण्ठा मलसारकः। वैराजः पुष्पकश्चान्यः कैलासो मालकस्तथा। त्रिविष्टपश्च पञ्चैव मेरुमूर्द्धनि संस्थिताः। चतुरस्रस्तु तत्राद्यो द्वितीयोऽपि तदायतः। वृत्तो वृत्तायतश्चान्यो ह्यष्टास्रश्चापि पञ्चमः। एकैको नवधा भेदैश्चत्वारिंशच्च पञ्च च। प्रासादः प्रथमो मेरुर्द्वितीयो मन्दरस्तथा। विमानश्च तथा भद्रः सर्वतोभद्र एव च। रुचको नन्दको नन्दिवर्द्धनश्च तथापरः। श्रीवत्सश्चेति वैराजान्वयाये च समुत्थिताः। वलभी गृहराजश्च शालागृहञ्च मन्दिरम्। विशालश्च तथा ब्रह्ममन्दिरं भुवनतथा। उत्तमः शिविका वेश्म नवैते पुष्पकोद्भवाः। वलयो दुन्दुभिः पद्मो महापद्मक एव च। वर्द्धनो वान्य उष्णीषः शङ्खश्च कलसस्तथा। स्वपुरवृक्षकश्चान्योः वृत्ताः कैलाससम्भवाः। गजोऽथ वृषभो हंसो गरुत्मान् सिंहनामकः। भूमुखो भूधरश्चान्यः श्रीजयः पृथिवीधरः। वृत्तायतात् समुद्भूता नवैते मालकाह्वयात्। वज्रं चक्रं तथा चान्यत् स्वस्तिकं वज्रस्वस्तिकम्। चित्रं स्वस्तिकखड्गञ्च गदा श्रीवृक्ष एव च। विजयो नामतश्चैते त्रिविष्टपसमुद्भवाः। नगराणामिमाः सञ्ज्ञा लाटादीनामिमास्तथा। ग्रीवार्द्धेनोन्नतं मूलं पृथुलञ्च विभागतः। दशधा वेदिकां कृत्वा पञ्चभिः स्कन्धविस्तरः। त्रिभिः कण्ठं तु कर्त्तव्यं चतुर्भिस्तु तदण्डकम्। दिक्षु द्वाराणि कार्याणि न विदिक्षु कदाचन। पिण्डिका कोणविस्तीर्णा मध्यमान्ता ह्युदाहृता। क्वचित् पञ्चमभागेन महतां गर्भपादतः। उच्छ्राया द्विगुणास्तेषामन्यथा वा निगद्यते। षष्ट्याधिकात् समारभ्य अङ्गुलानां शतादिह। उत्तमान्यपि चत्वारि द्वाराणि दशहानितः। त्रीण्येव मध्यमानि स्युस्त्रीण्येव कन्यसान्यतः। उच्छ्रायार्द्धेन विस्तारो ह्युच्छ्रायोऽभ्यधिकस्त्रिधा। चतुर्भिरष्टभिर्वापि दशभिरङ्गुलैस्ततः। उच्छ्रायात् पादविस्तीर्णा विशाखास्तदुदुम्बरे। विस्तरार्द्धेन बाहुल्यं सर्वेषामेव कीर्त्तितम्। द्विपञ्चसप्तनवभिः शाखाभिर्द्वारमिष्टदम्। अधःशाखा चतुर्थांशे प्रतीहारौ निवेशयेत्। मिथुनैरथवल्लीभिः शाखाशेषं विभूषयेत्। स्तम्भविद्धेऽष्टत्यता स्यात् वृक्षविद्धे त्वभूतिता। कूपविद्धे भयं पुरवद्ध विद्धे धनक्षयः। प्रासादगृहशालादिमार्गविद्धेषु बन्धनम्। सभाविद्धे तु दारिद्र्यं वर्णविद्धे निराकृतिः। उलूखले च दारिद्र्यं शिलाविद्धे तु शत्रुता। छायाविद्धे

तु दारिद्र्यं वेधदोषे हि जायते। छेदादुत्पाटनाद्वापि तथा प्राकारलङ्घनात्। सीमाया द्विगुणत्यागाद्वेधदोषो न जायते"।

देवस्टहृदयप्रासादे विशेषस्तत्र ४२ अ० उक्तो यथा

"मानेन प्रतिमाया वा प्रासादमपरं शृणु। प्रतिमायाः प्रमाणेन कर्त्तव्या पिण्डिका शुभा। गर्भस्तु पिण्डिकार्द्धेन गर्भमानास्तु भित्तयः। भित्तेरायाममानेन उत्सेधन्तु प्रकल्पयेत्। भित्त्युच्छ्रायात्तु द्विगुणं शिखरं कल्पयेद्बुधः। शिखरस्य तु तुर्येण भ्रमणं परिकल्पयेत्। शिखरस्य चतुर्थेन अग्रतो मुखमण्डपम्। अष्टमांशेन गर्भस्य रथकानान्तु निर्गमः। परिधेर्गुणभागेन रथकांस्तत्र कल्पयेत्। तत्तृतीयेन वा कुर्य्याद्रथकानान्तु निर्गमम्। वामत्रयं स्थापनीयं रथकत्रितये सदा। शिखरार्थं हि सूत्राणि चत्वारि विनिपातयेत्। शुकनासोर्द्ध्वतः सूत्रं तिर्य्यग्भूतं निपातयेत्। शिखरस्यार्द्धभागस्थं सिंहं तत्र तु कारयेत्। शुकनासां स्थिरीकृत्य मध्यसन्धौ निधापयेत्। तदूर्द्ध्वन्तु भवेद्वेदी सकण्ठा मलसारकम्। स्कन्धभग्नं न कर्त्तव्यं विकराडं तथैव च। ऊर्द्ध्वं च वेदिकामानात् कलसं परिकल्पयेत्। विस्ताराद्द्विगुणं द्वारं कर्त्तव्यं तु सुशोभनम्। उदुम्बरौ तदूर्द्ध्वञ्च न्यसेच्छाखां सुमङ्गलैः। द्वारस्य तु चतुर्थांशे कार्य्यौ चण्डप्रचण्डकौ। विष्वक्सेनवत्सदण्डौ शिखोर्द्ध्वोडुम्बरे श्रियम्। दिग्गजैः स्नाप्यमानान्तां घटैः साब्जां सुरूपिकाम्। प्रासादस्य चतुर्थांशैः प्राकारस्योच्छ्रयो भवेत्। प्रासादात् पादहीनस्तु गोपुरस्योच्छ्रयो भवेत्। पञ्चहस्तस्य देवस्य एकहस्ता तु पीठिका। गारुडं मण्डपं चाग्रे एकं भौमादिधाम च। कुर्य्याद्धि प्रतिमायान्तु दिक्षु चाष्टासु चोपरि। पूर्ब्बे वराहं दक्षे च नृसिंहं श्रीधरं जले। उत्तरे तु हयग्रीवमाग्नेय्यां जामदग्न्यकम्। नैरृत्यां रामकं वायौ वामनं वासुदेवकम्। ईशे प्रासादरचना देया वस्वर्ककादिभिः। द्वारस्य चाष्टमाद्यंशं त्यक्त्वा वेधो न दोषभाक्"।

वृ०सं० ५७अ० कश्चिद्विशेषोऽत्रोक्तो यथा

"कृत्वा प्रभूतं सलिलमारामान् विनिवेश्य च। देवतायतनं कुर्य्याद्यशोधर्म्माभिवृद्धये। इष्टापूर्त्तेन लभ्यन्ते ये लोकास्तान् बुभूषता। देवानामालयः कार्य्यो द्वयमप्यत्र दृश्यते। सलिलोद्यानयुक्तेषु कृतेष्वकृतकेषु च। स्थानेष्वेतेषु सान्निध्यमुपगच्छन्ति देवताः। सरःसु नलिनीच्छन्ननिरस्तरविरश्मिषु। हंसांसाक्षिप्तकह्लारवीचीविमलवारिषु। हंसकारण्डवक्रौञ्चचक्रवाकविराविषु। पर्य्यन्तनिचुलच्छायाविश्रान्तजलचारिषु। क्रौञ्चकाञ्चीकलापाश्च कलहंसकलस्वनाः। नद्यस्तोयांशुका यत्र शफरीकृतमेखलाः। फुल्लतीरद्रुमोत्तंसाः सङ्गमश्रोणिमण्डलाः। पुलिनाभ्युन्नता रम्या हंसहासाश्च निम्नगाः। वनोपान्तनदीशैलनिर्झरोपान्तभूमिषु। रमन्ते देवता नित्यं पुरेषूद्यानवत्सु च। भूमयो ब्राह्मणादीनां याः प्रोक्ता वास्तुकर्म्मणि। ता एव तेषां शस्यन्ते देवतायतनेष्वपि। चतुःषष्टिपदं कार्य्यं देवतायतनं सदा। द्वारं च मध्यमं तत्र समदिक्स्थं प्रशस्यते। यो विस्तारो भवेद्यस्य द्विगुणा तत्समुन्नतिः। उच्छ्रायाद्यस्तृतीयोऽंशस्तेन तुल्या कटिर्भवेत्। विस्तारार्द्धं भवेद्गर्भो भित्तयोऽन्याः समन्ततः। गर्भपादेन विस्तीर्णं द्वारं द्विगुणमुच्छ्रितम्। उच्छ्रायात्पादविस्तीर्णा शाखा तद्वदुदुम्बरः। विस्तारपादप्रतिमं बाहुल्यं शाखयोः स्मृतम्। त्रिपञ्चसप्तनवभिः शाखाभिस्तत्प्रशस्यते। अधःशाखाचतुर्भागे प्रतीहारौ निवेशयेत्। शेषं मङ्गल्यविहगैः श्रीवृक्षस्वस्तिकैर्घटैः। मिथुनैः पत्रवल्लीभिः प्रमथैश्चोपशोभयेत्। द्वारमानाष्टभागोना प्रतिमा स्यात्सपिण्डिका। द्वौ भागौ प्रतिमा तत्र तृतीयांशश्च पिण्डिका। मेरुमन्दरकैलासविमानच्छन्दनन्दनाः। समुद्गपद्मगरुडनन्दिवर्द्धनकुञ्जराः। गुहराजो वृषो हंसः सर्व्वतोभद्रको घटः। सिंहो वृत्तश्चतुष्कोणः षोडशाष्टाश्रयस्तथा। इत्येते विंशतिः प्रोक्ताः प्रासादाः संज्ञया मया। यथोक्तानुक्रमेणैव लक्षणानि वदाम्यतः। तत्र षडश्रिर्मेरुर्द्वादशभौमो विचित्रकुहरश्च। द्वारैर्युतश्चतुर्भिर्द्वात्रिंशद्धस्तविस्तीर्णः। त्रिंशद्धस्तायामो दशभौमो मन्दरः शिखरयुक्तः। कैलासोऽपि शिखरवानष्टाविंशोऽष्टभौमश्च। जालगवाक्षकयुक्तो विमानसंज्ञस्त्रिसप्तकायामः। नन्दन इति षड्भौमो द्वात्रिंशः षोडशाण्डयुतः। वृत्तः समुद्गनामा पद्मः पद्माकृतिः शयानष्टौ। शृङ्गेणैकेन भवेदेकैव च भूमिका तस्य। गरुडाकृतिश्च गरुडो नन्दीति च षट्चतुष्कविस्तीर्णः। कार्य्यश्च सप्तभौमो विभूषितोऽण्डैश्च विंशत्या। कुञ्जर इति गजपृष्ठः षोडशहस्तः समन्ततो मूलात्। गुहराजः षोडशकस्त्रिचन्द्रशाला भवेद्वलभी। वृष एकभूमिशृङ्गो द्वादशहस्तः समन्ततो वृत्तः। हंसो हंसाकारो घटोऽष्टहस्तः कलसरूपः। द्वारैर्युतश्चतुर्भिर्बहुशिखरो भ-

वति सर्वतोभद्रः। बहुरुचिरचन्द्रशालः षड्विंशः पद्म-
कोभवः। सिंहः सिंहाक्रान्तो द्वादशकोणोऽष्टहस्तवि-
स्तीर्णः। चत्वारोऽञ्जनरूपाः पञ्चाण्डयुतस्तु चतुरस्रः।
भूमिकाङ्गुलमानेन मयस्याष्टोत्तरं शतम्। सार्धं हस्त-
त्रयं चैव कथितं विश्वकर्मणा। प्राहुः स्थपतयश्चात्र
मतमेकं विपश्चितः। कपोतपालिसंयुक्ता न्यूना गच्छन्ति
तुल्यताम्। प्रासादलक्षणमिदं कथितं समासाद्गर्गेण
यद्विरचितं तदिहास्ति सर्वम्। मन्वादिभिर्विरचितानि
पृथूनि यानि तच्चिन्तितं प्रति मयात्र ततोऽधिकारः"।
तत्प्रतिष्ठाविधिश्च मठप्रतिष्ठाशब्दे वक्ष्यते।

**देवग्रह** पु० देवगणशब्दे स्मृतोक्ते ग्रहभेदे।
"यः पश्यति नरो देवान् जाग्रद्वा शयितोऽपि वा।
उन्मादाद्यति स तु क्षिप्रं तन्तु देवग्रहं विदुः" भा०व०१४५अ०

**देवङ्गम** त्रि० देवं गच्छति गम—खच् मुम्। देवगामिनि "अस्यां
रात्र्यां व्युष्टायां देवङ्गमाय" शत०ब्रा० ३।८।१।१२
लोके तु खिनि देवगामीत्येव।

**देवचक्र** न० सत्राङ्गे १अभिप्लवभेदे "यदि यद्वा एतद्देवचक्रं
यदभिप्लवः" ऐत०ब्रा० ४।१५ "देवचक्रे वा एते पृष्ठ-
प्रतिष्ठिते। यजमानस्य पाप्मानं तृं हतो परिप्लवेते
स यो द्वैवं विदुषां दीक्षितानां पापकं सत्ये कीर्तय-
त्येते ह्यस्य देवचक्रे शिरश्छिन्तो दशरात्र उद्भिः पृष्ठ्या-
भिप्लवौ चक्रे" शत०ब्रा० १२।२।२।२ यामलोक्ते देवता-
भेदोपास्यताज्ञापके २चक्रभेदे यथा
"पूर्वपश्चिमभेदेन षड्रेखां समालिखेत्। याम्यादि
दक्षिणान्तश्च रेखा दश समालिखेत्। पञ्चगेहे पूरकाङ्कः
सर्वाधोहारकाङ्ककान्। तन्मध्ये रसवेदाङ्कं देवताष्टक-
संयुतम्। पूरकाङ्कमाद्यगेहे सप्तर्षियुतमालिखेत्। तद्-
क्षिणे द्वादशञ्च दक्षे च नवमन्तथा। तद्दक्षेऽष्टादशकं
तद्दक्षे षोडशकं ततः। पूरकाङ्कं तले लेख्य इन्द्राद्यङ्कश्च
दक्षतः। इन्द्रगेहे च शतकं विधिविद्याफलप्रदम्।
धर्मगेहे शून्यसप्तयुगलं विलिखेत् बुधः। अनलमन्दिरे
नाथ! शून्याष्टवसुरेव च। कालीगेहे शून्यवेदरामाङ्कं
विलिखेत्ततः। धूमावतीमन्दिरे च शून्यखेषुनिशापतीन्।
इन्द्राधो दक्षतो लेख्या अङ्कास्तन्त्राधिदेवता। शून्यषट्च-
न्द्रयुक्तं सर्वत्र दक्षतो लिखेत्। तथाश्विनीकुमारौ च
शून्यान् नयुगमेरुकौ। तत्पश्चात् सूर्यगेहे च सहस्राक्ष-
समन्वितम्। वारिणीमन्दिरस्याङ्कं शून्यवेदषडात्म-
कम्। नगवासुखीगेहस्य शून्याष्टचन्द्रसंयुतम्।
ततश्चन्द्रघण्टागेहस्याधो वायुगेहं मनोरमम्। रसवेदात्मकं
गेहं सर्वसिद्धिप्रदायकम्। राहुगेहं महापापं शून्य
शून्यमर्षिप्रियम्। पश्चादर्कगेहस्य च खशून्ययुगला-
त्मकम्। षोडशीमन्दिरे शून्यषट्चन्द्रसमाहितम्।
मातङ्गीमन्दिरे शून्यरसचन्द्रसमन्वितम्। वायोरधोव-
रुणस्य गेहं सप्तर्षिप्रियम्। तारिणीगेहमध्ये च
शून्याष्टकसमन्वितम्। बुधगेहस्थिताङ्कञ्च शून्यचन्द्र
युगात्मकम्। भुवनेशीमन्दिरस्यं शून्याष्टचन्द्रमण्ड-
लम्। प्रत्यङ्गिरामन्दिरस्यं शून्यषट्कर्षिप्रियम्।
वरुणाधः कुबेरस्य गेहस्यं षट्युग्मकम्। आनन्दभै-
रवीगेहे दशकं परिकीर्तितम्। धरणीगेहमध्ये च
शून्ययुग्मेन्दुसंयुतम्। भैरवीगृहमध्यस्थं शून्यं यु-
गलचन्द्रकम्। बालागेहस्यं शून्यर्षिचन्द्रमण्डलसंयु-
तम्। कुबेराधः शुभं चक्रस्थिताङ्कं सर्वसिद्धिदम्। ईश-
रस्य गेहस्याङ्कं सप्तशून्ययुगात्मकम्। तिरस्करिण्या
गेहस्थं वसुबाणसमन्वितम्। छिन्नमस्तामन्दिरं पश्चा-
दष्टचन्द्रसमन्वितम्। छिन्नमस्तागेहं पश्चात् शून्याष्टचन्द्र
मण्डलम्। वागीश्वरीगेहं पश्चात् खसप्तचन्द्रमण्ड-
लम्। महाफलप्रदातारं धर्मं चरति तस्य न। ईश-
रस्य ह्यधोगेहे वटुकस्य गेहं ततः। शून्याष्टमात्रं स-
गेहं धर्मार्थकाममोक्षदम्। तत्पश्चात् डाकिनीगेहं खशून्य
मुनिसंयुतम्। हन्ति साधकमुख्यं हि चक्रादेव न संशयः।
खगेहे खीयमन्त्रस्य फलदं परिकीर्तितम्। भीमादेवी
गेहं पश्चात् खसप्तचन्द्रमण्डलम्। भयदं सर्वदेवेषु तु
वर्जयेत्तु गेहान्तरम्। वर्णं लिखेत् शेषगेहयोः
पश्चिमतोऽन्तः। इन्द्रगेहादिवधि धीरो ककारादिकवर्ण-
कम्। अकारान्तं लिखेत् तत्र गणयेत् साधकोऽन्ततः।
पूरकाङ्कमूर्द्धदेशे हारकाङ्कमधो लिखेत्। निजनामा-
क्षरं यत्र तत्कोष्ठाङ्कं महेश्वर!। नीत्वा च पूरयेद्वि-
द्वान् खखगेहोर्द्धदेशकैः। अङ्कैस्ततो हरेन्नाथ! अधोऽ-
ङ्के हार्यं शेषकम्। विस्तारश्चेद्देवतानां तदङ्कः शुभदः
स्मृतः। अल्पस्त्वशुभदः प्रोक्तः साधकस्यासुखावहः।
एकाक्षरे महाशोक्षं तत्रापि गणयेच्च च। स्वीयाङ्कः
शून्यगामी च देवताङ्कं ततः प्रभो!। तदा नैव शुभं वि-
द्यादशुभाय प्रकल्पते। एके धनमवाप्नोति द्वितीये राज-
वल्लभः। तृतीये जयसिद्धिः स्यात् चतुर्थे मरणं ध्रुवम्।
पञ्चमे पञ्चवाणः स्यात् षष्ठे दुःखोत्कटानि च। देवानां
शक्तिवर्गाणामित्यङ्काः परिकीर्तिताः। वैष्णवानां विशेषो-

त्र पशुमाङ्गो निषेधकः। येषां यासां देवतानामिच्छा तिष्ठति चेतसि। तन्मन्त्रग्रहणादेव अष्टैश्वर्ययुतो भवेत्। यद्देवताश्रिताये तु तदुच्छिष्टाङ्ग हरन्ति ते। यज्ञाङ्गेन पूरयित्वाद्यधोङ्गेन हरेत् सदा"।

**देवचर्या** स्त्री ६त०। १देवचरिते अद्भुते २देवार्थं चरणे होमादौ च "श्रिया युतमनिर्देश्यं देवचर्योपशोभितम्" (आश्रमम्) भा०व० १४५ अ०।

**देवचिकित्सक** पु० द्वि०व० ६त०। स्वर्वैद्ययोरश्विनीकुमारयोः द्वन्द्व०। आयुर्वेदशब्दे ७७८ पृ०तयोस्तथात्वकथा दृश्या। २द्वित्वसंख्यायां तदधिष्ठातृके ३अश्विनीनक्षत्रे च

**देवच्छन्द** पु० देवैश्छन्द्यते प्रार्थ्यते छन्द–कर्मणि घञ्। शतयष्टिके हारे अमरः। "शतमष्टयुतं हारो देवच्छन्दोह्यशीतिरेकयुता" वृ०सं० उक्ते २हारे च।

**देवच्छन्दस** न० देवप्रियं छन्दः टच् समा०। वैदिके श्रौतिये छन्दोभेदे।

**देवज** त्रि० देवाज्जायते जन–ड। १देवजाते २सामभेदे न०। "तस्मादाङ्गः सत्वं साम देवजं सामेति" शत०ब्रा०२।४। २।१६। ३यादवचक्रोदरे सूर्यवंश्ये ३संयमन्नपपुत्रभेदे पु० "तत्पुत्रात् संयमादासीत् कृशाश्वः सहदेवजः" भाग० ९। २।२२ देवजेन सह वर्त्तमानः कृशाश्वः। सूर्यसम्पादिते ४ऋतौ पु०"सप्तथमाहुरेकजं षड़िद्द यमा ऋषयो देवजाः" ऋ० १।१६४।१५। "सप्तानामृतूनां मध्ये सप्तथं सप्तमऋतम्। "थट् च छन्दसि" पा० इति थट्। एकजमेकेनोत्पन्नमाहुः कालतत्त्वविदः। चैत्रादीनां द्वादशानां मासानां द्वयमेलनेन वसन्ताद्याः षड़ृतवो भवन्ति। अधिकमासेनैक उत्पद्यते सप्तमर्तुः। न च तादृशो मास एव नास्तीति मन्तव्यम्। "अस्ति त्रयोदशो मास इत्याहुरिति"श्रुतेः। तदेवोच्यते। षड़िद्द यमाः। इत्थब्द एव कारार्थः। षडेव ऋतवो मासद्वयरूपा ऋषयो गन्तारः। ते च देवजाः। देवादादित्याज्जाता इत्येवमाहुः। सप्तमधारस्य त्रयोदशस्य मासस्य देवाभावः। "निः स्वर्यो-ऽधिकमासो हि मण्डलं तपते रवेरित्यादि"स्मृतेः। तस्मात् षडेव देवजाः अदेवज एकः" भा० "सूर्यसंक्रान्तिरहितत्वान्निःसूर्यकत्वं तेन ऋतूनां चान्द्रत्वमपि गम्यते।

**देवजग्ध** त्रि० ६त०। १देवभक्षिते २कतृणे न० हेमच०स्वल्पार्थे कन्। देवजग्धकम् कत्तृणे अमरः।

**देवजन** पु० देवरूपोजनः। देवरूपे जने "भक्षयित्वाभ्यात्मपः स्रुचा निनयते त्रिः सर्वदेवजनेभ्यः स्वाहेति"आश्व० श्रौ०२।४।१२। देवानां जनः। २सर्पदेवे तदुपकरणभूते गन्धर्वादौ। [शब्दार्थचि०।

**देवजनविद्या** स्त्री ६त०। गन्धर्वविद्यायां नृत्यगीतादौ

**देवजात** त्रि० १देवेभ्यो जातः। देवेभ्यो जाते "यद्वाजिनो देवजातस्य सप्तेः" ऋ०।१६२।१ ६त०। २देवानां गणे न० "यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुतः इति" शत०ब्रा० १४।४।२।२६

**देवजामि** स्त्री देवानां जामिरिव। १देवबन्धौ "अयामि घोष इन्द्र! देवजामिरिरज्यन्त" ऋ० ७,२३।१ "देवजामिर्देवानां बन्धुः" भा०। ६त०। २देवानां बध्वां च "विद्म ते स्वप्न! जनित्रं देवजामीनां पुत्रोऽसि यमस्य करणः" अथ० ६।४६।२

**देवट** त्रि० दिव–अटन्। शिल्पिनि उणादिकोषः

**देवट्टी** स्त्री देवं देवशब्दमट्टते अतिक्रामति अट्ट–अण् उप०स० शक० गौरा० ङीप्। गङ्गाविपन्नग्राम् वारा०।

**देवतर** त्रि० अतिशयेन देवः दीप्तः देवको वा तरप्। १अतिशयदीप्ते २अतिदेवके च ततः शुभ्रा० ढक्। दैवतरेय तदपत्ये पुंस्त्री० स्त्रियां ङीप्।

**देवतरु** पु० देवप्रियस्तरुः। १मन्दारादिवृक्षे "पञ्चैते देवतरवः मन्दारः पारिजातकः। सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्"अमरः २चैत्यवृक्षे च शब्दार्थचि०

**देवता** स्त्री देव+स्वार्थे तल् "क्वचित् स्वार्थिका अपि प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते" भाष्योक्तेः पुंस्त्वातिक्रमेण स्त्रीत्वम्। देवे निर्जरे। देवतात्वञ्च "वेदमेयत्यागोद्देश्यत्वम् उद्देश्यत्वञ्च तस्येदमित्यारोपज्ञानविषयत्वमिति" श्राद्धविवेकः। तच्च मन्त्रस्तुत्यत्वं वा। तदुभयं पितृनामप्यस्तीति श्राद्धादौ तेषां देवतात्वम्। मन्त्रेण द्योत्यत्वं वा देवतात्वं यथाह ऋग्वेदभाष्योपोद्घाते माधवः "तथा देवनार्थदीव्यतिधातुनिमित्तो देवशब्द इत्येतदाम्नायते। "देवनाद्देवोऽभूदिति तद्देवानां देवत्वमिति"। अतो दीव्यतीति देवः मन्त्रेण द्योत्यत इत्यर्थः। "यस्य यस्य तु मन्त्रस्य उद्दिष्टा देवता तु या। तदाकारं भवेत्तस्य दैवत्वं देवतोच्यते"योगियाज्ञ०। वैदिकमन्त्रभेदे देवताभेदाः सर्वानुक्रमिकायामुक्तास्तत एवावसेयाः। तन्मूलं हेमा०ब्र०ख० उक्तमिह विस्तरभयानोद्धृतम्। मन्त्राणां तज्ज्ञाने फलमज्ञाने निन्दामाह हेमा०ब्र० योगियाज्ञ० "आर्षं छन्दो दैवतञ्च विनियोगस्तथैव च। वेदितव्यं

प्रयत्नेन ब्राह्मणेन विशेषतः । अविदित्वा तु यः कुर्य्याद् यजनाध्ययनं जपम् । होममन्तर्जले दानं तस्य चाल्पफलं भवेत्” । तथा “यो विजानाति मन्त्राणामार्षं छन्दश्च दैवतम् । विनियोगं ब्राह्मणञ्च मन्त्रार्थं ज्ञानकर्म च । एकैकस्य ऋषेः सोऽपि वन्द्योऽह्यतिथिवद्भवेत् । देवतायाश्च सायुज्यं गच्छत्यत्र न संशयः । पूर्व्वोक्तेन प्रकारेण ऋष्यादीन् वेत्ति यो द्विजः । अधिकारो भवेत्तस्य रहस्यादिषु कर्म्मसु” । ब्राह्मणेन मन्त्रेतरवेदभागेन सह वेदितव्यमित्यर्थः उत्तरत्र विनियोगब्राह्मणयोर्भेदतया निर्देशात् । तन्निरुक्तिरपि तेनैवोत्तरत्र दर्शिता यथा “नैरुक्त्यं यस्य मन्त्रस्य विनियोग प्रयोजनम् । प्रतिष्ठानं स्तुतिश्चैव ब्राह्मणं तदिहोच्यते । एवं पञ्चविधं योगं जपकाले ह्यनुस्मरेत् । होमे चान्तर्जले योगे स्वाध्याये यजने तथा” इति । २प्रदेयद्रव्यस्वाधिपतौ च दानशब्दे २५१८ पृ० तद्विशेषो दृश्यः । देवताभेदाश्च निरुक्ते दैवतकाण्डे उक्ता यथा

“अग्न्यादिदेवपत्न्यन्तं देवताकाण्डमुच्यते । वाय्वादयो भगान्ताः स्युरन्तरिक्षस्थदेवताः । सूर्य्यादिदेवपत्न्यन्ता द्युस्थाना देवता इति” । त्रयस्त्रिंशत्पतिशब्दे ३३५८पृ० देवतानां प्राधान्यतस्त्रयस्त्रिंशत्त्वमुक्तं किन्तु स्वस्वगणपत्नीसहितानां तासां त्रयस्त्रिंशत्कोटिसंख्यात्वं यथोक्तं पद्मपु०उत्तरख०“सदारा विबुधाः सर्व्वे स्वानां स्वानां गणैः सह । त्रैलोक्ये ते त्रयस्त्रिंशत्कोटिसंख्यतयाऽभवन्” । तेषां गणभेदाश्च गणदेवताशब्दे २५०२पृ०उक्ताः दृश्याः । तन्मध्येऽधिकारिभेदेन देवताभेदा यथा “या यस्याभिमता पुंसः सा हि तस्यैव देवता । किन्तु कार्य्यविशेषेण पूजिता चेष्टदा नृणाम् । विशेषात् सर्व्वदा नायं नियमोह्यन्यथा नृप ! । नृपाणां दैवतं विष्णुस्तथैव च पुरन्दरः । विप्राणामग्निरादित्यो ब्रह्मा चैव पिनाकधृक् । देवानां दैवतं विष्णुर्दानवानां त्रिशूलधृत् । गन्धर्व्वाणां तथा सोमो यक्षाणामपि कथ्यते । विद्याधराणां वाग्देवी साध्यानां भगवान् हरिः । रक्षसां शङ्करो रुद्रः किन्नराणाञ्च पार्व्वती । ऋषीणां दैवतं ब्रह्मा महादेवश्च शूलधृत् । मनूनां स्यादुमा देवी तथा विष्णुः सभास्करः । गृहस्थानाञ्च सर्व्वे स्युर्ब्रह्मा वै ब्रह्मचारिणाम् । वैखानसस्याम्बिका स्याद् यतीनाञ्च महेश्वरः । भूतानां भगवान् रुद्रः कुष्माण्डानां विनायकः । सर्व्वेषां भगवान् ब्रह्मा देवदेवः प्रजापतिः । इत्येवं भगवान् ब्रह्मा स्वयं देवोऽभ्यभाषत” इति कूर्म्मपु० । देवानां वर्णभेदा भा०शा० मोक्षधर्म्मे

“आदित्याः क्षत्रियास्तेषां विशश्च मरुतस्तथा । अश्विनौ च स्मृतौ शूद्रौ तपस्युग्रे समास्थितौ । स्मृतास्त्वाङ्गिरसा देवा ब्राह्मणा इति निश्चयः । इत्येतत् सर्व्वदेवानां चातुर्व्वर्ण्यं प्रकीर्त्तितम्” । वैष्णवानां गणेशाद्यनन्तरं सनकादिवैष्णवानां पूज्यत्वेन देवतात्वमुक्तं यथा

“यत्र यत्र सुराः पूज्या गणेशाद्यास्तु कर्म्मिणाम् । विष्ण्वर्च्चने तत्र तत्र वैष्णवानां हि वैष्णवाः । विश्वक्सेनं ससनकं सनातनमतःपरम् । सनन्दं सनत्कुमारञ्च पञ्चैवं पूजयेत्ततः” पद्म० उत्तरख० । देवषट्कं यथा “गणेशञ्च दिनेशञ्च वह्निं विष्णुं शिवं शिवाम् । देवषट्कञ्च संपूज्य नमस्कृत्य विचक्षणः” ब्रह्म०वै०प्रक० । कालविशेषे देवताभेदपूजा मत्स्यमहोदधावुक्ता यथा

“अन्येष्वपुपरागार्कोदयसाध्यायनादिषु । कुर्य्यादन्यायोगेषु विशेषाद्देवतार्च्चनम् । यथा यथेष्टदेवेषु नृणां भक्तिः समेधते । प्राप्यते तैरयत्नेन मनोऽभीष्टं तथा तथा । शुचौ तत्तदहे कुर्य्याद्देवप्रस्वपनोत्सवम् । ऊर्ज्जे तथैव देवानामुत्थापनविधिं सुधीः । माघकृष्णचतुर्द्दश्यां विशेषाच्छिवपूजनम् । आश्विनाद्यनवाहेषु दुर्गा पूज्या यथाविधि । गोपालं पूजयेद्विद्वान्नभःकृष्णाष्टमीदिने । रामं चैत्रे सिते पक्षे नवम्यामर्च्चयेत् सुधीः । वैशाखाद्यचतुर्द्दश्यां नरसिंहं प्रपूजयेत् । यजेच्छुक्लचतुर्थ्यान्तु गणेशं भाद्रमाघयोः । महालक्ष्मीं यजेद्विद्वान् भाद्रकृष्णाष्टमीदिने । माघस्य शुक्लसप्तम्यां विशेषाद्दिननायकम् । या काचित् सप्तमी शुक्ला रविवारयुता यदि । तस्यां दिनेशं संपूज्य दद्यादर्घ्यं पुरोदितम् । तत्तत्कल्पोदितानन्यान् देवताप्रीतिवर्द्धनान् । विशेषनियमान् कृत्वा भजेद्देवमनन्यधीः । आषाढीकार्त्तिकीमध्ये किञ्चिन्नियममाचरेत् । देवस्य प्रीतये विद्वान् जपपूजादितत्परः । एवं यो भजते विष्णुं रुद्रं दुर्गां गणाधिपम् । भास्करं श्रद्धया नित्यं स कदाचिन्न सीदति” ।

देशनादेशितचतुर्थ्यन्तपदनिर्देश्यत्वं देवतात्वम् अग्नये स्वाहेत्यादिमन्त्रएव देवतेति मीमांसकाः । तन्मतञ्च पूर्व्वपक्षविधया शब्दचि० उक्त्वा दूषितं तच्च च विग्रहशब्दे ४५६ पृ० दर्शितम् । देवतानां चैतन्ये विग्रहवत्त्वे वा मन्त्राणामेव देवतात्वं श्राद्धवि० समर्थितं यथा

“विग्रहवत्त्वं चेन्द्रादीनामपि तिर्य्यगधिकरणे दर्शितं देव-

तात्वं हि तथाविधानां नेष्टमिति । नन्विन्द्रादीनां विग्रहवत्त्वे किं प्रमाणम्? अर्थवाद इति चेन्न तस्य सिद्धेऽर्थेऽप्रामाण्यात् । कथं वा विग्रहवतामदेवतात्वम्? ऐन्द्रं हविरित्यादौ तद्धितादिभिः प्रकृत्यर्थस्य देवतात्वबोधनात् इन्द्रादिपदानि च सहस्रचक्षुरादिमतीषु व्यक्तिषु मुख्यानि मन्त्रपरत्वे लक्षणाप्रसङ्गात् । उच्यते ऐन्द्रादिपदकामाधिकारिकविधिवाक्यस्थकामिश्रुतिरत्र प्रमाणम् अन्यथा स्वर्गिशरीरेऽप्यनाश्वासः स्यात् । यत्राप्यर्थवादादैन्द्रादिपदप्राप्तग्रहणतिः तत्रापि तत्फलपरत्वे रात्रिसत्रन्यायएव प्रमाणं विग्रहवतामिन्द्रादीनां सन्निधानस्य प्रत्यक्षबाधितत्वेन तथाविधानां पूज्यत्वासम्भवात् अगत्या तदाकारतया ध्यातस्य मन्त्रस्य लक्षितस्य देवतात्वमिति रहस्यम् । इन्द्राकारतया ध्यानादिन्द्रप्रीतिरप्युपपन्ना । तथा च योगियाज्ञवल्क्यः "यस्य यस्य तु मन्त्रस्य उद्दिष्टा या च देवता । तदाकारं भवेत्तस्य दैवत्वं देवतोच्यते" इति । ननु देवानां विग्रहवत्त्वे तेषामेवाराधितानां फलदातृत्वं कुतो न भवेत्? अप्रमाणपूर्वकल्पनया । तथा च भविष्यपुराणे "यद्यद्द्रव्यं नरोऽत्यर्थमादित्याय प्रयच्छति । तत्तस्य शतसाहस्रमुत्पादयति भास्करः" याज्ञवल्क्यः "आयुः पूजां धनं विद्यां स्वर्गं मोक्षं सुखानि च । प्रयच्छन्ति तथा राज्यं प्रीता नृणां पितामहाः" । तथा च देवताधिकरणसिद्धान्तविरोधः स्यात् । उच्यते देवानामिन्द्रादीनां पितॄणां वस्वादीनां युगमन्वन्तरादिभेदेन नानात्वावगमात् फलोदयकाले पूर्वस्य च्युताधिकारत्वेन फलदातृत्वाशक्तेः । अन्यस्य चानाराधितत्वेन फलदातृत्वायोगात् तत्रापूर्वे शब्दशक्तौ वाचकशब्दसद्भावात् सर्वत्रैव तदभिधानम् अतएव काम्ये कृत्प्रयुक्तिलिङ्गादिर्नित्ये निषेधे चापूर्वमाहेत्युक्तम् । एवञ्चापूर्वानुप्रवेशात् सहकारितया यदि देवतापि फलदात्री न क्वचित् कोऽपि विरोधः" ।

**देवताजित्** पु० देवतां जयति जि–क्विप् । १देवजयिनि असुरादौ भरतपुत्रसुमतेः २पुत्रभेदे च "भरतस्यात्मजः सुमतिर्नाम" इत्युपक्रमे "तस्माद्वृद्धसेनायां देवताजिन्नाम पुत्रोऽभूत्" भाग० ५।१५।२।

**देवताड** पु० देवः दीप्तः तालः डस्य लः । (देताड) ख्याते १वृक्षे अमरः । २घोषकलतायाम् विश्वः । देवौ आदित्यचन्द्रौ ताडयति ताडि अण् उप०स० । ३राहौ । देवनाय दीपनाय ताड्यतेऽसौ ताडि–कर्मणि अच् । ४वह्नौ च मेदि० । तस्योद्दीपनाय ताड्यमानत्वात् तथात्वम् । देवताडक स्वार्थे क । देवताडश्च रत्नमाला ।

**देवतात** पु० तन–क्त वा क्त ततएव तातः स्वार्थे अण् वा देवार्थं तते १यज्ञे निघ० "एवा देव देवताते पवस्व" ऋ० ९।९७।२७। इत० । २देवजनके कश्यपे च । तेनादित्यादीनामुत्पादनात्तथात्वम् । ३मरीच्यादिषु "एते (मरीच्यादयः) मनूंस्तु सप्तान्यानसृजन् भूरितेजसः । देवान् देवनिकायांश्च महर्षींश्चामितौजसः" मनुः । ४हिरण्यगर्भे च "कर्मात्मनां च देवानां सोऽसृजत् प्राणिनां प्रभुः । साध्यानाञ्च गणं सूक्ष्मम्" मनुः ।

**देवताति** पु० देव+स्वार्थे तातिल् । देवे "स आवह देवतातिं यविष्ठ!" ऋ० १।४९।४ देवतातिं देवं स्वार्थे तातिल्" भा०

**देवताधिकरण** न० देवता कर्मसु तदधिकारित्वमनधिकारित्वं वाधिक्रियते विचार्यतेऽत्र अधि+कृ–आधारे ल्युट् । देवतानां यज्ञादावधिकारित्वतदभाववोरन्यतरसाधके न्यायभेदे । यज्ञादौ देवतानामनधिकारः इति मीमांसकाः । तच्च जै०सू० भाष्ययोर्दर्शितं यथा

"फलार्थत्वात् कर्मणः शास्त्रं सर्वाधिकारं स्यात्" सू० "इदमामनन्ति, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्येवमादि । तत्र सन्देहः किं यावत्किञ्चित् सत्वं, तत् सर्वम् अधिकृत्य एतदुच्यते, उत समर्थम् अधिकृत्य? इति । किं प्राप्तम्? सर्वाधिकारः, अविशेषात् । ननु वृक्षादयो न किञ्चित् कामयन्ते, कथम् तेषाम् अधिकारः स्यात्? उच्यते, मा भूत् अचेतनानाम्, तिरश्चस्तु अधिकृत्य यजेत इति ब्रूयात् । ननु तिर्यञ्चोऽपि न किञ्चित् कामयन्ते । न इति ब्रूमः, कामयन्ते सुखम्, एवं हि दृश्यते, घर्मोपतप्ताः छायाम् उपसर्पन्ति, शीतेन पीडिताः आतपम् । आह, ननु तिर्यञ्च आसन्नं फलं चेतयन्ते, न कालान्तरफलं प्रार्थयन्ते, कालान्तरफलानि च कर्माणि । उच्यते, कालान्तरेऽपि फलं कामयमाना लक्ष्यन्ते, शुनः चतुर्दश्याम् उपवसतः पश्यामः, श्येनांश्च अष्टम्याम् । न चैषां व्याध्याशङ्का, नियतनिमित्तत्वात्, न अनाहाराणामपि तस्मिन् काले दर्शनात्, समानाहाराणामपि अन्यस्मिन् काले अदर्शनात् । लिङ्गानि च वेदे भवन्ति, देवा वै सत्रमासत इत्येवमादीनि "देवतानाम् ऋषीणां वनस्पतीनाम् अधिकारं दर्शयन्ति । ननु कार्त्स्न्येन विधिम् उपसंहर्तुम् न शक्नुवन्ति इति अनधिकृताः ।

उच्यते, यागं कर्त्तुम् शक्नुवन्ति केचित्, तस्मात् यजेत इत्येवमादीनि अधिकरिष्यन्ति शक्नुवतः, विष्णुक्रमादिवचनानि तु अशक्तान् न अधिकरिष्यन्ति। तत्र योऽनुपदिष्टविष्णुक्रमादिकः स केवलं यागं करिष्यति, कः तस्य दोषः?। द्रव्यपरिग्रहोऽपि देवग्रामः, हस्तिग्रामः, वृषभस्य ग्रामः इति उपचारात् अस्त्येव तस्मात् अमनुष्याणामपि शक्नुवताम् अधिकार इति" भा० "कर्त्तुर्वा श्रुतिसंयोगाद्विधिः कार्त्स्न्येन गम्यते" सू० वाशब्दः पक्षं व्यावर्त्तयति। न चैतदस्ति, तिर्य्यगादीनामपि अधिकारः इति। कस्य तर्हि?। यः समर्थः कृत्स्नं कर्म अभिनिर्वर्त्तयितुम्। न चैते, शक्नुवन्ति तिर्य्यगादयः कृत्स्नं कर्माभिनिर्वर्त्तयितुम्, तस्मात् एषां न दुःखस्याभ्युपायः कर्म इति, कथं यो न शक्यते कर्त्तुम्, सोऽभ्युपायः स्यात्? इति। न देवानां, देवतान्तराभावात्, न हि आत्मानम्, उद्दिश्य त्यागः सम्भवति, त्याग एवासौ न स्यात्, न ऋषीणाम्, आर्षेयाभावात्, न भृग्वादयो भृग्वादिभिः सगोत्रा भवन्ति, न चैषां सामर्थ्यं प्रत्यक्षम्" (देवानां देवतान्तरभावादिति येषां शब्द एव देवताभिप्रेता, तेषामयमप्ययुक्तो पन्थः, शक्यते ह्येन्द्रे चापीन्द्रशब्दोच्चारणेन हविस्त्यक्तुम्। तस्मात् अर्थमेव देवतामभिप्रेत्य एतद्भाष्यमिति तत्त्वरत्नम्)। यानि पुनर्लिङ्गानि, देवा वै सत्रमासत इत्येवमादीनि, अर्थवादाः ते विधिप्ररोचनार्थाः। विद्यते हि विधिरन्यः तेषु सर्वेषु, न च विधेर्विधिनैकवाक्यभावो भवति, वचनव्यक्तिभेदात्। स्तुतिस्तु सा, इत्थं नाम सत्राणि आसितव्यानि, यत् कृतकृत्या अपि आसते देवाः, आसन्नचेतना अपि तिर्य्यञ्चः, अचेतना अपि वनस्पतयः, किमङ्ग पुनर्विद्वांसो मनुष्याः" भा०

देवानामधिकारित्वं विशेषतो ब्रह्मविद्यामेऽधिकारित्वमिति वेदान्तिनः तच्च शा०सू० भाष्याभ्यां समर्थितम् तच्च अधिकारिशब्दे ४५५ पृ० दृश्यम्।

**देवतानुक्रम** ६त०। देवानामुद्देशे "नामधेयानि मन्त्रस्य दक्षिणाश्च व्रतानि च। देवतानुक्रमः कल्पः संकल्पस्तन्त्रमेव च" भाग० २।६।२६

**देवताप्रतिमा** स्त्री ६त०। देवतानां प्रतिमूर्त्तौ तदङ्गमानभेदादिकं सामान्यविशेषतः वृ०सं०५८अ०उक्तं यथा "देवागारद्वारस्याष्टांशोनस्य यस्तृतीयोंऽशः। तत्पिण्डिका प्रमाणं प्रतिमा तद्द्विगुणपरिमाणा। स्वैरङ्गुलप्रमाणैर्द्वादशविस्तीर्णमायतं च मुखम्। नग्नजिता तु चतुर्दश दैर्घ्येण द्राविडं कथितम्। नासाललाटचिबुकग्रीवाश्चतुरङ्गुलास्तथा कर्णौ। द्वे अङ्गुले च हनुके चिबुकं द्व्यङ्गुलं विस्तृतम्। अष्टाङ्गुलं ललाटं विस्तारात् द्व्यङ्गुलात्परे शङ्खौ। चतुरङ्गुलौ तु शङ्खौ कर्णौ तु द्व्यङ्गुलं पृथुलौ। कर्णोपान्तः कार्य्योऽर्द्धपञ्चमे भ्रूसमेन सूत्रेण। कर्णस्रोतः सुकुमारकं च नयनप्रबन्धसमम्। चतुरङ्गुलं वशिष्ठः कथयति नेत्रान्तकर्णयोर्विवरम्। अधरोऽङ्गुलप्रमाणस्तस्यार्धेनोत्तरोष्ठश्च। अर्धाङ्गुला तु गोच्छा वक्त्रं चतुरङ्गुलायतं कार्य्यम्। विपुलं तु सार्द्धमङ्गुलं मध्यात्तत्त्र्यङ्गुलं व्यात्तम्। द्व्यङ्गुलतुल्यौ नासापुटौ च नासा पुटाग्रतो ज्ञेया। स्याद् द्व्यङ्गुलमुच्छ्रायश्चतुरङ्गुलमन्तरं चाक्ष्णोः। द्व्यङ्गुलमितोऽक्षिकोशो द्वे नेत्रे तत्त्रिभागिका तारा। दृक् तारापञ्चांशो नेत्रविकाशोऽङ्गुलं भवति। पर्य्यन्तात्पर्य्यन्तं दश भ्रुवोऽर्द्धाङ्गुलं भ्रुवोर्लेखा। भ्रूमध्यं द्व्यङ्गुलकं भ्रूर्दैर्घ्येणाङ्गुलचतुष्कम्। कार्य्या तु केशरेखा भ्रूबन्धसमाङ्गुलार्द्धविस्तीर्णा। नेत्रान्ते करवीरकमुपन्यसेदङ्गुलप्रमितम्। द्वात्रिंशत्परिणाहाच्चतुर्दशायामतोऽङ्गुलानि शिरः। द्वादश तु चित्रकर्मणि दृश्यन्ते विंशतिरदृश्याः। आस्यं सकेशनिचयं षोडश दैर्घ्येण नग्नजित्प्रोक्तम्। ग्रीवा दशविस्तीर्णा परिणाहाद्विंशतिः सैका। कण्ठाद्द्वादश हृदयं हृदयान्नाभिश्च तत्प्रमाणेन। नाभीमध्यान्मेढ्रान्तरं च तत्तुल्यमेवोक्तम्। ऊरू चाङ्गुलमानैश्चतुर्युता विंशतिस्तथा जङ्घे। जानुकपिण्डे चतुरङ्गुले च पादौ च तत्तुल्यौ। द्वादशदीर्घौ षट् पृथुतया च पादौ त्रिकायताङ्गुष्ठौ। पञ्चाङ्गुलपरिणाहौ प्रदेशिनी त्र्यङ्गुलं दीर्घा। अष्टांशाष्टांशोनाः शेषाङ्गुलयः क्रमेण कर्त्तव्याः। स चतुर्थभागमङ्गुलमुत्सेधोऽङ्गुष्ठकस्योक्तः। अङ्गुलस्य नखः कथितश्चतुर्थभागोनमङ्गुलं तज्ज्ञैः। शेषनखानामर्द्धाङ्गुलं क्रमात् किञ्चिदूनं वा। जङ्घाग्रे परिणाहश्चतुर्दशोक्तस्तु विस्तरः पञ्च। मध्ये तु सप्त विपुला परिणाहात्त्रिगुणिताः सप्त। अष्टौ तु जानुमध्ये वैपुल्यं त्र्यष्टकं तु परिणाहः। विपुलौ चतुर्दशोरू मध्ये द्विगुणश्च तत्परिधिः। कटिरष्टादशविपुला चत्वारिंशच्चतुर्युता परिधौ। अङ्गुलमेकं नाभिर्वेधेन तथा प्रमाणेन। चत्वारिंशद् द्वियुता नाभीमध्येन मध्यपरिणाहः। स्तनयोः षोडश चान्तरमूर्द्ध्वं कक्षे षडङ्गुलिके। कार्य्याविष्टावंसौ द्वादश बाहू तथा प्रबाहू

च। बाहू षड्विस्तीर्णौ प्रतिबाहू त्वङ्गुलचतुष्कम्। षोडश बाहू मूले परिणाहाद्द्वादशाग्रहस्तौ च। विस्तारेण करतलं षडङ्गुलं सप्त दैर्घ्येण। पञ्चाङ्गुलानि मध्या प्रदेशिनी मध्यपर्वदलहीना। अनया तुल्या चानामिका कनिष्ठा तु पर्वोना। पर्वद्वयमङ्गुष्ठः शेषाङ्गुल्यस्त्रिभिस्त्रिभिः कार्याः। नखपरिमाणं कार्यं सर्वासां पर्वणोऽर्द्धेन। देशानुरूपभूषणवेषालङ्कारमूर्त्तिभिः कार्या। प्रतिमा लक्षणयुक्ता सन्निहिता वृद्धिदा भवति। दशरथतनयो रामो बलिश्च वैरोचनिः शतं विंशम्। द्वादशहान्या शेषाः प्रवरसमन्यूनपरिमाणाः। कार्योऽष्टभुजो भगवांश्चतुर्भुजो द्विभुज एव वा विष्णुः। श्रीवत्साङ्कितवक्षाः कौस्तुभमणिभूषितोरस्कः। अतसीकुसुमश्यामः पीताम्बरनिवसनः प्रसन्नमुखः। कुण्डलकिरीटधारी पीनगलोरःस्थलांसभुजः। खड्गगदाशरपाणिर्दक्षिणतः शान्तिदश्चतुर्थकरः। वामकरेषु च कार्मुकखेटकचक्राणि शङ्खश्च। अथ च चतुर्भुजमिच्छति शान्तिद एको गदाधरश्चान्यः। दक्षिणपार्श्वे ह्येवं वामे शङ्खश्च चक्रञ्च। द्विभुजस्य तु शान्तिकरो दक्षिणहस्तोऽपरश्च शङ्खधरः। एवं विष्णोः प्रतिमा कर्त्तव्या भूतिमिच्छद्भिः। बलदेवो हलपाणिर्मदविभ्रमलोचनश्च कर्त्तव्यः। बिभ्रत् कुण्डलमेकं शङ्खेन्दुमृणालगौरवपुः। एकानंशा कार्या देवी बलदेवकृष्णयोर्मध्ये। कटिसंस्थितवामकरा सरोजमितरेण चोद्वहती। कार्या चतुर्भुजा या वामकराभ्यां सपुस्तकं कमलम्। द्वाभ्यां दक्षिणपार्श्वे वरमर्थिष्वक्षसूत्रञ्च। वामेष्वष्टभुजायाः कमण्डलुश्चापमम्बुजं शास्त्रम्। वरशरदर्पणयुक्ताः सव्यभुजाः साक्षसूत्राश्च। शाम्बश्च गदाहस्तः प्रद्युम्नश्चापभृत् सुरूपश्च। अनयोः स्त्रियौ च कार्ये खेटकनिस्त्रिंशधारिण्यौ। ब्रह्मा कमण्डलुकरश्चतुर्मुखः पङ्कजासनस्थश्च। स्कन्दः कुमाररूपः शक्तिधरो बर्हिकेतुश्च। शुक्लचतुर्विषाणो द्विपो महेन्द्रस्य वज्रपाणित्वञ्च। तिर्य्यग्ललाटसंस्थं तृतीयमपि लोचनं चिह्नम्। शम्भोः शिरसीन्दुकला वृषध्वजोऽक्षि च तृतीयमप्यूर्द्धम्। शूलं धनुः पिनाकं वामार्द्धे वा गिरिसुतार्द्धम्। पद्माङ्कितकरचरणः प्रसन्नमूर्त्तिः सुनीचकेशश्च। पद्मासनोपविष्टः पितेव जगतो भवेद्बुद्धः। आजानुलम्बबाहुः श्रीवत्साङ्कः प्रशान्तमूर्त्तिश्च। दिग्वासास्तरुणो रूपवांश्च कार्य्योऽर्हतां देवः। नासाललाटजङ्घोरुगण्डवक्षांसि चोन्नतानि रवेः। कुर्य्यादुदीच्यवेशं गूढं पादादुरो यावत्। बिभ्राणः स्वकररुहे पाणिभ्यां पङ्कजे मुकुटधारी। कुण्डलभूषितवदनः प्रलम्बहारो वियद्गवृतः। कमलोदरद्युतिमुखः कञ्चुकगुप्तः स्मितप्रसन्नमुखः। रत्नोज्ज्वलप्रभामण्डलश्च कर्त्तुः शुभकरोऽर्कः। सौम्या तु हस्तमात्रा वसुदा हस्तद्वयोच्छ्रिता प्रतिमा। क्षेमसुभिक्षाय भवेत् त्रिचतुर्हस्तप्रमाणायाम्। नृपभयमत्यङ्गायां हीनाङ्गायामकल्यता कर्त्तुः। शातोदर्य्यां क्षुद्भयम् अर्थविनाशः कृशायां च। मरणं तु सक्षतायां शस्त्रनिपातेन निर्द्दिशेत्कर्त्तुः। वामावनता पत्नीं दक्षिणविनता हिनस्त्यायुः। अन्धत्वमूर्द्धदृष्ट्या करोति चिन्तामधोमुखी दृष्टिः। सर्व्वप्रतिमास्वेवं शुभाशुभं भास्करोक्तसमम्। लिङ्गस्य वृत्तपरिधिं दैर्घ्येणासूत्र्य तत् त्रिधा विभजेत्। मूले तच्चतुरस्रं मध्ये त्वष्टाश्रि वृत्तमतः। चतुरस्रमवनिखाते मध्यं कार्य्यं तु पिण्डिकाश्वभ्रे। दृश्योच्छ्रायेण समा समन्ततः पिण्डिका श्वभ्रात्। कृशदीर्घं देशघ्नं पार्श्वविहीनं पुरस्य नाशाय। यस्य क्षतं भवेन्मस्तके विनाशाय तल्लिङ्गम्। मातृगणः कर्त्तव्यः स्वनामदेवानुरूपकृतचिह्नः। रेवन्तोऽश्वारूढो मृगयाक्रीडादिपरिवारः। दण्डी यमो महिषगो हंसारूढश्च पाशभृद्वरुणः। नरवाहनः कुबेरो वामःकिरीटी बृहत्कुक्षिः। प्रमथाधिपो गजमुखः प्रलम्बजठरः कुठारधारी स्यात्। एकविषाणो बिभ्रन्मूलककन्दं सुनीलदलकन्दम्"।

देवभेदेन मूर्त्तिभेदलक्षणानि अग्निपु० १०४ अ० उक्तानि तत्राङ्गभेदमानानि यथा

"भगवानुवाच। वासुदेवादिप्रतिमालक्षणं प्रवदामि ते। प्रासादस्योत्तरे पूर्व्वमुखीं वा चोत्तराननाम्। संस्थाप्य पूज्य च बलिं दत्त्वाथो मध्यसूत्रकम्। शिलां शिल्पी तु नवधा विभज्य नवमेऽंशके। सूर्य्यभक्तैः शिलायां तु भागं स्वाङ्गुलमुच्यते। द्व्यङ्गुलं गोलकं नाम्ना कालनेत्रं तदुच्यते। भागमेकं त्रिधा भक्त्वा पार्ष्णिभागं प्रकल्पयेत्। भागमेकं तथा जानौ ग्रीवायां भागमेव च। मुकुटं तालमात्रं स्यात्तालमात्रं तथा मुखम्। तालेनैकेन कण्ठन्तु तालेन हृदयं तथा। नाभिमेढ्रान्तरन्तालं द्वितालावूरुकौ तथा। तालद्वयेन जङ्घा स्यात् सूत्राणि शृणु साम्प्रतम्। कार्य्यं सूत्रद्वयं पादे जङ्घामध्ये तथापरम्। जानौ सूत्रद्वयं कार्य्यमूरुमध्ये तथापरम्। मेढ्रे तथापरं कार्य्यं कट्यां सूत्रन्तथापरम्। मेखला-

बन्धसिद्ध्यर्थं नाभ्यां चैकापरन्तथा । हृदये च तथा कार्य्यं कण्ठे सूत्रद्वयं तथा । ललाटे चापरं कार्य्यं मस्तके च तथापरम् । मुकुटोपरि कर्त्तव्यं सूत्रमेकं विचक्षणैः । सूत्राण्यूर्द्ध्वं प्रदेयानि सप्तैव कमलोद्भव ! । कक्षात्रिकान्तरेणैव षट् सूत्राणि प्रदापयेत् । मध्यसूत्रं तु सन्त्यज्य सूत्राण्येव निवेशयेत् । ललाटं नासिका वक्त्रं कर्त्तव्यञ्चतुरङ्गुलम् । ग्रीवाकर्णौ तु कर्त्तव्यौ आयामाच्चतुरङ्गुलौ । द्व्यङ्गुले हनुके कार्य्ये विस्ताराच्चिबुकन्तथा । अष्टाङ्गुलं ललाटन्तु विस्तारेण प्रकीर्त्तितम् । परेण द्व्यङ्गुलौ शङ्खौ कर्त्तव्यावलकान्वितौ । चतुरङ्गुलमाख्यातमन्तरं कर्णनेत्रयोः । द्व्यङ्गुलौ पृथुकौ कर्णौ कर्णपाङ्गार्द्धपञ्चमे । भ्रूसमेन तु सूत्रेण कर्णस्रोतः प्रकीर्त्तितम् । विद्धं षडङ्गुलं कर्णमविद्धञ्चतुरङ्गुलम् । चिबुकेन समं विद्धमविद्धं वा षडङ्गुलम् । गन्धपात्रं तथावर्त्तं शष्कुलीं कल्पयेत्तथा । द्व्यङ्गुलेनाधरः कार्य्यस्तस्यार्द्धेनोत्तराधरः । अर्द्धाङ्गुलं तथा नेत्रं वक्त्रन्तु चतुरङ्गुलम् । आयामेन तु वैपुल्यात् सार्द्धमङ्गुलमुच्यते । अव्यात्तमेवं स्याद्वक्त्रं व्यात्तं त्र्यङ्गुलमुच्यते । नासावंशसमुच्छ्रायं मूले त्वेकाङ्गुलं मतम् । उच्छ्रायो द्व्यङ्गुलं चाग्रे करवीरोपमा स्मृता । अन्तरं चक्षुषोः कार्य्यं चतुरङ्गुलमानतः । द्व्यङ्गुलं चाक्षिकोणं च द्व्यङ्गुलं चान्तरं तयोः । तारा नेत्रत्रिभागेण दृक् तारापञ्चमांशिका । त्र्यङ्गुलं नेत्रविस्तारं द्रोणी चार्द्धाङ्गुला मता । तत्प्रमाणा भ्रुवोर्लेखा भ्रुवौ चैव समे मते । भ्रूमध्यं द्व्यङ्गुलं कार्य्यं भ्रूदैर्घ्यं चतुरङ्गुलम् । षट्त्रिंशदङ्गुलायामम्मस्तकस्य तु वेष्टनम् । मूर्त्तीनां केशवादीनां द्वात्रिंशद्वेष्टनं भवेत् । पञ्चनेत्रा स्वधोग्रीवा विस्ताराद्वेष्टनं पुनः । त्रिगुणं तु भवेद्दूर्द्ध्वं विस्तृताष्टाङ्गुलं पुनः । ग्रीवात्रिगुणमायामं ग्रीवाबाह्वन्तरं भवेत् । स्कन्धावष्टाङ्गुलौ कार्य्यौ त्रिकलावंसकौ शुभौ । सप्तनेत्रौ स्मृतौ बाहू प्रबाहू षोड़शाङ्गुलौ । त्रिकलौ विस्तृतौ बाहू प्रबाहू चापि तत्समौ । बाहुदण्डोर्द्ध्वतो ज्ञेयः परिणाहः कला नव । सप्तदशाङ्गुलो मध्ये कूर्परोर्द्धे च षोड़श । कूर्परस्य भवेन्नाहः त्रिगुणः कमलोद्भव ! । नाहः प्रबाहुमध्ये तु षोड़शाङ्गुल उच्यते । अग्रहस्ते परीणाहो द्वादशाङ्गुल उच्यते । विस्तारेण करतलं कीर्त्तितं तु षडङ्गुलम् । दैर्घ्यं सप्ताङ्गुलं कार्य्यं मध्या पञ्चाङ्गुला मता । तर्जन्यनामिका चैव तस्मादर्द्धाङ्गुलं विना । कनिष्ठाङ्गुष्ठकौ कार्य्यौ चतुरङ्गुलसम्मितौ । द्विपर्वाङ्गुष्ठकः कार्य्यः शेषाङ्गुल्यस्त्रिपर्विकाः । सर्व्वासां पर्व्वणोऽर्द्धेन नखमानं विधीयते । वक्षसो यत् प्रमाणन्तु जठरं तत्प्रमाणतः । अङ्गुलैकं भवेन्नाभी वेधेन च प्रमाणतः । ततो मेढ्रान्तरं कार्य्यं तालमात्रं प्रमाणतः । नाभिमध्ये परीणाहो द्विचत्वारिंशदङ्गुलैः । अन्तरं स्तनयोः कार्य्यं तालमात्रं प्रमाणतः । चिबुकौ यवमानौ तु मण्डलं द्विपदं भवेत् । चतुःषष्ट्यङ्गुलं कार्य्यं वेष्टनं वक्षसः स्फुटम् । चतुर्णवञ्च तदधोवेष्टनं परिकीर्त्तितम् । परिणाहस्तथा कट्यां चतुःपञ्चाशदङ्गुलैः । विस्तारश्चोरुमूले तु प्रोच्यते द्वादशाङ्गुलः । तस्मादभ्यधिकं मध्ये ततो निम्नतरं क्रमात् । विस्तृताष्टाङ्गुलं जानु त्रिगुणा परिणाहतः । जङ्घामध्ये तु विस्तारः सप्ताङ्गुल उदाहृतः । त्रिगुणः परिधिश्चास्य जङ्घाग्रं पञ्चविस्तरम् । त्रिगुणः परिधिश्चास्य पादौ तालप्रमाणकौ । आयामादुत्थितौ पादौ चतुरङ्गुलमेव च । गुल्फात् पूर्व्वं तु कर्त्तव्यं प्रमाणाच्चतुरङ्गुलम् । त्रिकलं विस्तृतौ पादौ त्र्यङ्गुलो गुह्यकः स्मृतः । पञ्चाङ्गुलस्तु नाहोऽस्य दीर्घा तद्वत् प्रदेशिनी । अष्टमाष्टांशतो न्यूनाः शेषाङ्गुल्यः क्रमेण तु । सपादाङ्गुलमुत्सेधमङ्गुष्ठस्य प्रकीर्त्तितम् । यवोनमङ्गुलं कार्य्यमङ्गुष्ठस्य नखं तथा । अर्द्धाङ्गुलं तथान्यासां क्रमान्न्यूनं तु कारयेत् । त्र्यङ्गुलौ वृषणौ कार्य्यौ मेढ्रं तु चतुरङ्गुलम् । परिणाहोऽत्र कोषाग्रं कर्त्तव्यञ्चतुरङ्गुलम् । षडङ्गुलपरीणाहौ वृषणौ परिकीर्त्तितौ । प्रतिमा भूषणाद्या स्यादेतदुद्देशलक्षणम् । अनयैव दिशा कार्य्यं लोके दृष्टा तु लक्षणम्” ।

वासुदेवस्य “दक्षिणे तु करे चक्रमधस्तात् पद्ममेव च । वामे शङ्खं गदाधस्ताद्वासुदेवस्य लक्षणम् । श्रीपुष्टी चापि कर्त्तव्ये पद्मवीणाकरान्विते । ऊरुमात्रोच्छ्रितायामे मालाविद्याधरौ तथा । प्रभामण्डलसंस्थौ तौ प्रभा हस्त्यादिभूषणौ । पद्माभं पादपीठन्तु प्रतिमास्वेवमाचरेत्” ।

मत्स्यादिलक्षणानि तत्र ४९ अ० उक्तानि यथा

भगवानुवाच “दशावतारं मत्स्यादिलक्षणं प्रवदामि ते । मत्स्याकारस्तु मत्स्यः स्यात् कूर्म्मः कूर्म्माकृतिर्भवेत् । नराङ्गो वाथ कर्त्तव्यो भूवराहो गदादिभृत् । दक्षिणे

वामके शङ्खं लक्ष्मीर्वा पद्ममेव वा । श्रीर्वामकूर्परस्था तु स्नानन्तौ चरणानुगौ । वराहस्थापनाद्राज्यं भवाब्धितरणं भवेत् । नरसिंहो विवृत्तास्यो वामोरुक्षतदानवः । तद्वक्षोदारयन्माली स्फुरच्चक्रगदाधरः । छत्री दण्डी वामनः स्यादथ वा स्याच्चतुर्भुजः । रामश्चापेषुहस्तः स्यात् खड्गी परशुनान्वितः । रामश्चापी शरी खड्गी शङ्खी वा द्विभुजः स्मृतः । गदालाङ्गलधारी च रामो वाथ चतुर्भुजः । वामोर्द्ध्वे लाङ्गलं दद्यादधः शङ्खं सुशोभनम् । मुषलं दक्षिणोर्द्ध्वे तु चक्रञ्चाधः सुशोभनम् । शान्तात्मा लम्बकर्णश्च गौराङ्गश्चाम्बरावृतः । ऊर्द्ध्वपद्मस्थितो बुद्धो वरदाभयदायकः । धनुस्तूणान्वितः कल्की म्लेच्छोत्सादकरो द्विजः । अथवाश्वस्थितः खड्गी शङ्खचक्रशरान्वितः" । "लक्षणं वासुदेवादिनवकस्य वदामि ते । दक्षिणोर्द्ध्वे गदा वामे वामोर्द्ध्वे चक्रमुत्तमम् । ब्रह्मेशौ पार्श्वगौ नित्यं वासुदेवोऽस्ति पूर्ववत् । शङ्खी स वरदो वाथ द्विभुजो वा चतुर्भुजः । लाङ्गली मुषली रामो गदापद्मधरः स्मृतः । प्रद्युम्नो दक्षिणे वज्रं शङ्खं वामे धनुः करे । गदानाभ्यावृतः प्रीत्या प्रद्युम्नो वा धनुःशरी । चतुर्भुजोऽनिरुद्धः स्यात्तथा नारायणो विभुः । चतुर्मुखश्चतुर्बाहुर्बृहज्जठरमण्डलः । लम्बकूर्च्चो जटायुक्तो ब्रह्मा हंसाग्रवाहनः । दक्षिणे चाक्षसूत्रञ्च स्रुवं वामे तु कुण्डिकाम् । आज्यस्थाली सरस्वती सावित्री वामदक्षिणे । विष्णुरष्टभुजस्तार्क्ष्ये करे खड्गस्तु दक्षिणे । गदा शरश्च वरदो वामे कार्मुकखेटके । चक्रशङ्खौ चतुर्बाहुर्नरसिंहश्चतुर्भुजः । शङ्खचक्रधरो वापि विदारितमहासुरः । चतुर्बाहुर्वराहस्तु शेषः पाणितले धृतः । धारयन् बाहुना पृथ्वीं वामेन कमलाधरः । पादलग्ना धरा कार्य्या पदा लक्ष्मीर्व्यवस्थिता । त्रैलोक्यमोहनस्तार्क्ष्ये अष्टबाहुस्तु दक्षिणे । चक्रं खड्गं च मुषलं अङ्कुशं वामके करे । शङ्खशार्ङ्गगदापाशा पद्मवीणासमन्विते । लक्ष्मीः सरस्वती कार्य्ये विश्वरूपोऽथ दक्षिणे । मुद्गरं च तथा पाशं शक्तिशूलं शरं करे । वामे शङ्खञ्च शार्ङ्गञ्च गदां पाशं च तोमरम् । लाङ्गलं परशुं दण्डं छुरिकां चर्मक्षेपणम् । विंशद्बाहुश्चतुर्वक्त्रो दक्षिणस्थोऽथ वामके । त्रिनेत्रो वामपार्श्वेन शयितो जलशाय्यपि । श्रिया धृतैकचरणो विमलाद्याभिरीडितः । नाभिपद्मचतुर्वक्त्रो हरिशङ्करको हरिः । शूलर्ष्टिधारी दक्षे च गदाचक्रधरः परे । रुद्रकेशवलक्ष्माङ्गो गौरीलक्ष्मीसमन्वितः । शङ्खचक्रगदावेदपाणिश्चाश्वशिरा हरिः । वामपादधृतः शेषो दक्षिणः कूर्मपृष्ठगः । दत्तात्रेयो द्विबाहुः स्याद्वामोत्सङ्गे श्रिया सह । विष्वक्सेनश्चक्रगदी हली शङ्खी हरेर्गणः" ।

देवीप्रतिमालक्षणानि तत्रैव ५०अ० उक्तानि यथा

"भगवानुवाच चण्डी विंशतिबाहुः स्याद्बिभ्रती दक्षिणैः करैः । शूलासिशक्तिचक्राणि पाशं खेटायुधाभयम् । डमरुं शक्तिकां वामैर्नागपाशञ्च खेटकम् । कुठाराङ्कुशचापांश्च घण्टाध्वजगदास्तथा । आदर्शमुद्गरान् हस्तैश्चण्डी वा दशबाहुका । तदधो महिषश्छिन्नमूर्द्धा पातितमस्तकः । शस्त्रोद्यतकरः क्रुद्धस्तद्ग्रीवासम्भवः पुमान् । शूलहस्तो वमद्रक्तो रक्तस्रङ्मूर्द्धजेक्षणः । सिंहेनास्वाद्यमानस्तु पाशबद्धो गले भृशम् । याम्याङ्घ्र्याक्रान्तसिंहा च सव्याङ्घ्रिर्नीचगासुरे । चण्डिकेयं त्रिनेत्रा च सशस्त्रा रिपुमर्द्दिनी । नवपद्मात्मके स्थाने पूज्या दुर्गा स्वमूर्त्तितः । आदौ मध्ये च तन्त्रादौ नवतत्त्वात्मभिः क्रमात् । अष्टादशभुजैका तु दक्षे मुण्डं च खेटकम् । आदर्शतर्जनीचापं ध्वजं डमरुकं तथा । पाशं वामे बिभ्रती च शक्तिमुद्गरशूलकम् । वज्रखड्गाङ्कुशशरान् चक्रन्देवी शलाकया । एतैरेवायुधैर्युक्ता शेषाः षोडशबाहुकाः । डमरुं तर्जनीं त्यक्त्वा रुद्रचण्डादयो नव । रुद्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका । चण्डा चण्डवती चैव चण्डरूपातिचण्डिका । उग्रचण्डा च मध्यस्था रोचनाभाऽरुणाऽसिता । नीला शुक्ला धूम्रिका च पीता श्वेता च सिंहगाः । महिषोऽथ पुमान् शस्त्री तत्कचग्रहमुष्टिकाः । आलीढा नव दुर्गाः स्युः स्थाप्याः पुत्रादिवृद्धये । तथा गौरी चण्डिकाद्या कुण्ड्यक्षररदाग्निधृक् । सैव रम्भावने सिद्धाऽग्निहीना ललिता तथा । स्कन्धमूर्द्धकरा वामे द्वितीये धृतदर्पणा । याम्ये फलाञ्जलिहस्ता सौभाग्या तत्र चोर्द्धिका । लक्ष्मीर्याम्यकराम्भोजा वामे श्रीफलसंयुता । पुस्ताक्षमालिकाहस्ता वीणाहस्ता सरस्वती । कुम्भाब्जहस्ता श्वेताभा मकरोपरि जाह्नवी । कूर्मगा यमुना कुम्भकरा श्यामा च पूज्यते । सवीणस्तुम्बुरुः शुक्लः शूली मात्रग्रतो वृषे । गौरी चतुर्मुखी ब्राह्मी अक्षमालासुरान्विता । कुण्डाक्षपात्रिणी वामे हंसगा शाङ्करी सिता । शरचापौ दक्षिणेऽस्या वामे चक्रं

चतुर्भुजे । कौमारी शिखिगा रक्ता शक्तिहस्ता द्विबाहुका । चक्रशङ्खधरा सव्ये वामे लोकगदाब्ज-धृक् । दण्डशङ्खासिगदया वाराही महिषस्थिता । ऐन्द्री वामे वज्रहस्ता सहस्राक्षी तु सिद्धये । चामुण्डा कोटराक्षी स्यान्निर्मांसा तु त्रिलोचना । निर्मांसा अस्थिसारा वा ऊर्द्ध्वकेशी कृशोदरी । द्वीपिचर्मधरा वामे कपालं पट्टिशं करे । शूलं कर्त्री दक्षिणेऽस्याः शवारूढास्थिभूषणा । विनायको नराकारो बृहत्कुक्षि-र्गजाननः । बृहच्छुण्डो ह्युपवीति मुखं सप्तकलं भवेत् । विस्ताराद्दैर्घ्यतश्चैव शुण्डं षट्त्रिंशदङ्गुलम् । कला द्वादश नाडी तु ग्रीवा सार्द्धकलोच्छ्रिता । षट्-त्रिंशदङ्गुलं कण्ठं गुह्यमध्यर्द्धमङ्गुलम् । नाभिरूरू द्वादश च जङ्घे पादे तु दक्षिणे । स्वदन्तं परशुं वामे लड्डुकञ्चोत्पलं शये । सुमुखी च विडालाक्षी पार्श्वे स्कन्दो मयूरगः । स्वामी शाखो विशाखश्च द्विभुजो बालरूपधृक् । दक्षे शक्तिः कुक्कुटोऽथ एकवक्त्रोऽथ षण्मुखः । षड्भुजो वा द्वादशभिर्ग्रामेऽरण्ये द्विबाहुकः । शक्तीषुपाशनिस्त्रिंशतोत्रदोऽर्ज्जनीयुतः । शक्त्या दक्षिणहस्तेषु षट्सु वामे करे तथा । शिखिपिच्छन्धनुः खेटं पताकाभयकुक्कुटे । कपालकर्त्तरीशूलपाशभृद्याम्यसौम्ययोः । गजचर्मभृदूर्द्ध्वास्यपादा स्याद्रुद्र-चर्चिका । सैव चाष्टभुजा देवी शिरोडमरुकान्विता । तेन सा रुद्रचामुण्डा नाटेश्वर्यथ नृत्यती । इयमेव महा-लक्ष्मीरुपविष्टा चतुर्मुखी । नृवाजिमहिषेभांश्च खा-दन्ती च करे स्थितान् । दशबाहुस्त्रिनेत्रा च शस्त्रासि-डमरुत्रिकम् । बिभ्रती दक्षिणे हस्ते वामे घण्टां च खेटकम् । खट्वाङ्गं च त्रिशूलञ्च सिद्धचामुण्डकाह्वया । सिद्धयोगेश्वरी देवी सर्वसिद्धिप्रदायिका । एतद्रूपा भवे-दन्या पाशाङ्कुशयुतारुणा । भैरवी रूपविद्या तु भुजै-र्द्वादशभिर्युता । एताः श्मशानजा रौद्र्योऽम्बाष्टकमि-दं स्मृतम् । क्षमा शिवावृता वृद्धा द्विभुजा विवृतानना । दन्तुरा क्षेमकारी स्याद्भूमौ जानुकरा स्थिता । यक्षिण्य-स्तब्धदीर्घाक्षाः शाकिन्यो वक्रदृष्टयः । पिङ्गाक्ष्यः स्यु-र्महारम्या रूपिण्योऽप्सरसः सदा । साक्षमाली त्रिशूली च नन्दीशो द्वारपालकः । महाकालोऽसिमुण्डी स्या-च्छूलखेटकवांस्तथा । कृशो भृङ्गी च नृत्यन् वै कुष्मा-ण्डस्थूलखर्ववान् । गजगोकर्णवक्त्राद्या वीरभद्रादयो गणाः । घण्टाकर्णोऽष्टादशदोः पापरोगं विदारयन् । वज्रासिदण्डचक्रेषुमुषलाङ्कुशमुद्गरान् । दक्षिणे तर्जनीं खेटं शक्तिं मुण्डञ्च पाशकम् । चापं घण्टां कुठारञ्च द्वाभ्याञ्चैव त्रिशूलकम् । घण्टामालाकुलो देवो विस्फो-टकविमर्द्दनः" ।

सूर्य्यादिप्रतिमालक्षणानि ५१अ० तन्त्रोक्तानि यथा

"भगवानुवाच । सप्ताश्वे सैकचक्रे रथे सूर्य्यो द्विपद्मधृक् । मसीभाजनलेखन्यौ बिभ्रत् कुण्डी तु दक्षिणे । वामे तु पिङ्गलो द्वारि दण्डभृत् स रवेर्गणः । बालव्यजनधा-रिण्यौ पार्श्वे राज्ञी च निष्प्रभा । अथवाश्वसमारूढः कार्य्य एकस्तु भास्करः । वरदा द्व्यब्जिनः सर्व्वे दिक्पा-लास्त्रधराः क्रमात् । मुद्गरशूलचक्राब्जभृतोऽग्न्यादिवि-दिक्स्थिताः । सूर्य्यार्य्यमादिरक्षोन्ताश्चतुर्हस्ता द्विषड्दले । वरुणः सूर्य्यनामा च सहस्रांशुस्तथापरः । धाता तपन-संज्ञश्च सविताथ गभस्तिमान् । रविश्चैवाथ पर्ज्जन्यस्त्वष्टा मित्रोऽथ विष्णुकः । मेषादिराशिसंस्थाश्च मार्गादिकार्त्ति-कान्तगाः । कृष्णो रक्तो मनाग्रक्तः पीतः पाण्डुरकः सितः । कपिलः पीतवर्णश्च शुकाभो धवलस्तथा । धूम्रो नीलः क्रमाद्वर्णाः शक्तयः केशरान्तगाः । इडा सुषुम्णा विश्वार्च्चिरिन्दुसंज्ञा प्रमर्द्दिनी । प्रहर्षणी महाकाली कपिला च प्रबोधनी । नीलाम्बरा घनान्ता च अमृ-ताख्या च शक्तयः । वरुणादेश्च तद्वर्णाः केशराग्रेषु वि-न्यसेत् । तेजश्चण्डो महावक्त्रो द्विभुजः पद्मखड्गभृत् । कुण्डिकाजप्यमालीन्दुः कुजः शक्त्यक्षमालिकः । बुधश्चा-पाक्षपाणिः स्याज्जीवः कुण्ड्यक्षमालिकः । शुक्रः कु-ण्ड्यक्षमाली स्यात् किङ्किणीसूत्रवाञ्छनिः । अर्द्धचन्द्रधरो राहुः केतुः खड्गी च दीपभृत् । अनन्तस्तक्षकः कर्क्कः पद्मो महाब्जः शङ्खकः । कुलिकः सूत्रिणः सर्व्वे फण-वक्त्रा महाप्रभाः । इन्द्रो वज्री गजारूढश्छागगोऽग्निश्च शक्तिमान् । यमो दण्डी च महिषे नैर्ऋतः खड्गवान् करे । मकरे वरुणः पाशी वायुर्ध्वजधरो मृगे । गदी कुवेरो मेषस्थ ईशानश्च जटी वृषे । द्विबाहवो लोक-पाला विश्वकर्माक्षसूत्रभृत् । हनूमान् वज्रहस्तः स्यात् पद्भ्यां सम्पीडितासुरः । वीणाहस्ताः किन्नराः स्यु-र्मालाविद्याधराश्च खे । दुर्ब्बलाङ्गाः पिशाचाः स्युर्वेताला विकृताननाः । क्षेत्रपालाः शूलवन्तः प्रेता महोदराः कृशाः" ।

६४योगिनी प्रतिमालक्षणं ५२अ०

"भगवानुवाच योगिन्यष्टाष्टकं वक्ष्ये ऐन्द्रादीशान्ततः क्र-

मात् । अक्षोभ्या ऋक्षकर्णी च राक्षसी क्षपणा क्षया । पिङ्गाक्षी चाक्षया क्षेमा इला लीला लया तथा । लोला लङ्का च लङ्केशी लालसा विमला पुनः । हुताशा च विशालाक्षी हुङ्कारा वडवामुखी । हाहारवा महाक्रूरा क्रोधना तु भयानना । सर्वज्ञा तरला तारा ऋग्वा चैव हयानना । तथैव रससङ्ग्राही शबरा तालुजिह्विका । रक्ताक्षी सुप्रसिद्धा तु विद्युज्जिह्वा करङ्किणी । मेघनादा प्रचण्डोग्रा कालकर्णी वरप्रदा । चन्द्रावली चन्द्रहासा प्रपञ्चा प्रलयान्तिका । शिशुवक्त्रा पिशाची च पिशिताशा च लोलुपा । धमनी तपनी चैव वामनी विकृतानना । वायुवेगा बृहत्कुक्षिर्विकृता विश्वरूपिका । यमजिह्वा जयन्ती च दुर्जया च यमान्तिका । विडाली रेवती चैव पूतना विजयान्तिका । अष्टहस्ताश्चतुर्हस्ता इच्छास्त्राः सर्वसिद्धिदाः” ।

भैरवप्रतिमालक्षणानि यथा ५२ अ०

“भैरवश्चार्कहस्तः स्यात् कूर्पराख्यो जटेन्दुभृत् । खड्गाङ्कुशकुठारेषुविश्वाभयभृदेकतः । चापत्रिशूलखट्वाङ्गपाशकार्द्धवरोद्यतः । गजचर्मधरो द्वाभ्यां कृत्तिवासोविभूषितः । प्रेतासनो मातृमध्ये पूज्यः पञ्चाननोऽथ वा । अविलोमाग्निपर्यन्तं दीर्घाष्टकैकभेदितम् । तत् पदाङ्गानि आत्मन्तैरन्वितं च क्रमाद्यजेत् । मन्दिराग्निदलारूढं स्वर्णैरसकान्वितम् । नादविन्दिन्दुसंयुक्तं मातृनाथाङ्गदीपितम् । वीरभद्रो वृषारूढो मातृमध्ये स चतुर्मुखः । गौरी तु द्विभुजा त्र्यक्षा शूलिनी दर्पणान्विता । शूलं गलन्तिका कुण्डी वरदा च चतुर्भुजा । अब्जस्था ललिता स्कन्दगणादर्शशलाकया । चण्डिका दशहस्ता स्यात् खड्गशूलारिशक्तिधृक् । दक्षे वामे नागपाशं चर्माङ्कुशकुठारकम् । धनुः सिंहे च महिषः शूलेन प्रहतोपतः” ।

लिङ्गलक्षणमुक्तं तत्र ५३ अ०

“भगवानुवाच । लिङ्गादिलक्षणं वक्ष्ये कमलोद्भव ! तच्छृणु । दैर्घ्यार्द्धं वसुभिर्भक्त्वा त्यक्त्वा भागत्रयं ततः । विष्कम्भं भूतभागैस्तु चतुरस्रन्तु कारयेत् । आयामं मूर्त्तिभिर्भक्त्वा एकद्वित्रिक्रमान् न्यसेत् । ब्रह्मविष्णुशिवांशेषु वर्द्धमानोऽयमुच्यते । चतुरस्रेऽस्य वर्णार्द्धं गुह्यकोणेषु लाञ्छयेत् । अष्टास्रं वैष्णवं भागं सिध्यत्येव न संशयः । षोडशास्रं ततः कुर्याद्द्वात्रिंशास्रं ततः पुनः । चतुःषष्ट्यस्रकं कृत्वा वर्त्तुलं साधयेत्ततः । कर्त्तयेदथ लिङ्गस्य शिरो वै देशिकोत्तमः । विस्तारमथ लिङ्गस्य अष्टधा संविभाजयेत् । भागार्द्धार्द्धन्तु सन्त्यज्य कलाकारं शिरो भवेत् । त्रिषु भागेषु सप्तममायामं यस्य विस्तरम् । तद्विभागसमं लिङ्गं सर्व्वकामफलप्रदम् । दैर्घ्यस्य तु चतुर्थेन विष्कम्भं देवपूजिते । सर्व्वेषामेव लिङ्गानां लक्षणं शृणु साम्प्रतम् । मध्यसूत्रं समासाद्य ब्रह्मरुद्रान्तिके बुधः । षोडशाङ्गुललिङ्गस्य षड्भागैर्भाजितो यथा । तद्वै यवनस्तनाभ्यां मानमन्तरमुच्यते । यवाष्टमुत्तरे कार्य्यं शेषाणां यवहानितः । अधोभागं त्रिधा कृत्वा त्वर्द्धमेकं परित्यजेत् । अष्टधा तद्द्वयं कृत्वा ऊर्द्ध्वभागत्रयं त्यजेत् । ऊर्द्ध्वञ्च पञ्चमाद्भागाद् भ्राम्य रेखां प्रलम्बयेत् । भागमेकं परित्यज्य सङ्गमं कारयेत्तयोः । एतत् साधारणं प्रोक्तं लिङ्गानां लक्षणं मया । सर्व्वसाधारणं वक्ष्ये पिण्डिकानां निबोध मे । ब्रह्मभागप्रवेशञ्च ज्ञात्वा लिङ्गस्य चोच्छ्रयम् । न्यसेद्ब्रह्मशिलां विद्वान् सम्यक्कूर्म्मशिलोपरि । तथा समुच्छ्रयं ज्ञात्वा पिण्डिकां प्रविभाजयेत् । द्विभागमुच्छ्रितं पीठं विस्तारं लिङ्गसम्मितम् । त्रिभागं मध्यतः खातं कृत्वा पीठं विभाजयेत् । समानार्द्धत्रिभागेण बाहुल्यं परिकल्पयेत् । बाहुल्यस्य त्रिभागेण मेखलामथ कल्पयेत् । खातं स्यान्मेखलातुल्यं क्रमान्निम्नन्तु कारयेत् । मेखला षोडशांशेन खातं वा तत्प्रमाणतः । उच्छ्रायं तस्य पीठस्य विकाराङ्गं तु कारयेत् । भूमौ प्रविष्टमेकं तु भागैकेन पिण्डिका । कण्ठं भागैस्त्रिभिः कार्य्यं भागेनैकेन पट्टिका । द्व्यंशेन चोर्द्ध्वपट्टन्तु एकांशाः शेषपट्टिकाः । भागं भागं प्रविष्टन्तु यावत् कण्ठं ततः पुनः । निर्गमं भागमेकं तु यावद्वै शेषपट्टिका । प्रणालस्य त्रिभागेण निर्गमस्तु त्रिभागतः । मूलेऽङ्गुल्यग्रविस्तारमग्रे त्र्यंशेन चार्द्धतः । ईषन्निम्नन्तु कुर्व्वीत खातं तस्योत्तरेण वै । पिण्डिकासहितं लिङ्गमेतत् साधारणं स्मृतम्” ।

लिङ्गभेदादिकथनं तत्रैव ५४ अ०

“भगवानुवाच । वक्ष्याम्यन्यप्रकारेण लिङ्गमानादिकं शृणु । वक्ष्ये लवणजं लिङ्गं घृतजं बुद्धिवर्द्धनम् । भूतये वस्त्रलिङ्गन्तु लिङ्गन्तात्कालिकं विदुः । पक्वापक्वं मृन्मयं स्यादपक्वात् पक्वजं वरम् । ततो दारुमयं पुण्यं दारुजात् शैलजं वरम् । शैलाद्वरं तु मुक्ताजं ततो लौहं सुवर्णजम् । राजतं कीर्त्तितं ताम्रं पैत्तलं भुक्तिमुक्तिदम् । रसजं रसलिङ्गञ्च भुक्तिमुक्तिप्रदं वरम् ।

रत्नजं रत्नलोहादिरत्नगर्भन्तु वर्द्धयेत् । मानादि नेष्टं सिद्धादि स्थापितेऽथ स्वयम्भुवि । वामे च स्वेच्छया तेषां पीठप्रासादकल्पना । पूजयेत् सूर्य्यविम्बस्थं दर्पणे प्रतिविम्बितम् । पूज्यो हरस्तु सर्व्वत्र लिङ्गे पूर्णार्चनं भवेत् । हस्तोत्तरविधं शैलं दारुजं तद्वदेव हि । चलमङ्गुलमानेन द्वारगर्भकरैः स्थितम् । अङ्गुलाद्दृढलिङ्गं स्याद् यावत् पञ्चदशाङ्गुलम् । द्वारमानात् त्रिसद्धार्कं नवधा गर्भमानतः । नवधा गर्भमानेन लिङ्गं धाम्नि च पूजयेत् । एवं लिङ्गानि षट्त्रिंशत् ज्ञेयानि ज्येष्ठमानतः । मध्यमानेन षट्त्रिंशत् षट्त्रिंशदधमेन च । इत्यमैक्येन लिङ्गानां शतमष्टोत्तरं भवेत् । एकाङ्गुलादिपञ्चान्तं कन्यसञ्चलमुच्यते । षडादिदशपर्यन्तञ्चलं लिङ्गञ्च मध्यमम् । एकादशाङ्गुलादि स्यात् ज्येष्ठं पञ्चदशान्तकम् । षडङ्गुलं महारत्नै रत्नैरन्यैर्नवाङ्गुलम् । रविभिर्हेमभारोत्थं लिङ्गं शेषैस्त्रिपञ्चभिः । षोडशांशे च वेदांशे युगं लुप्तोर्द्ध्वदेशतः । द्वात्रिंशत् षोडशांशांश्च कोणयोस्तु विलोपयेत् । चतुर्निवेशनात् कण्ठो विंशतिस्त्रियुगैस्तथा । पार्श्वाभ्यां तु विलुप्ताभ्यां चललिङ्गं भवेद्वरम् । धाम्नो युगत्र्नागांशैर्द्वारं हीनादितः क्रमात् । लिङ्गद्वारोच्छ्रयाद्वर्गं भवेत् पादोनतः क्रमात् । गर्भार्द्धेनाधमं लिङ्गं भूतांशैः स्यात् त्रिभिर्वरम् । तयोर्मध्ये च सूत्राणि सप्त सम्पातयेत् समम् । एवं स्युर्नव सूत्राणि भूतसूत्रैश्च मध्यमम् । ह्यन्तरो वामवामश्च लिङ्गानां दीर्घता नव । हस्तादिवर्द्धते हस्तो यावत् स्युर्नव पाणयः । हीनमध्योत्तमं लिङ्गं त्रिविधं त्रिविधात्मकम् । एकैकलिङ्गमध्येषु त्रीणि त्रीणि च पादशः । लिङ्गानि घटयेद्धीमान् षट्सु चाष्टोत्तरेषु च । स्थिरदीर्घप्रभेदात्तु द्वारगर्भकरात्मिका । भाग्येशञ्चाग्नीशञ्च देवेज्यन्तुल्यसंज्ञितम् । चत्वारि लिङ्गरूपाणि विष्कम्भेण तु लक्षयेत् । दीर्घमायान्वितं कृत्वा लिङ्गं कुर्य्यात् त्रिरूपकम् । चतुरष्टाष्टहस्तञ्च तत्त्वत्रयगुणात्मकम् । लिङ्गानामीप्सितं दैर्घ्यं तेन कृत्वाङ्गुलानि वै । ध्वजाद्यायैः स्वरैर्भूतैः शिखिभिर्वा हरेत् क्रमात् । तान्याङ्गुलानि यच्छेषं लक्षयेच्च शुभाशुभम् । ध्वजाद्या ध्वजसिंहेभवृषाः श्रेष्ठाः परे शुभाः । स्वरेषु षड्जगान्धारपञ्चमाः शुभदायकाः । भूतेषु च शुभा भूः स्यादग्निश्चाहवनीयकः । उक्तायामस्य चार्द्धांशे नागांशैर्भाजिते क्रमात् । रसभूतांशषष्ठांशसंख्याधिकशरैर्भवेत् । आढ्यानाढ्यसुरेज्याख्यतुल्यानाञ्चतुरस्रता । पञ्चमं वर्द्धमानाख्यं व्यासाच्चाष्टप्रवर्द्धितः । द्विधा भेदो वहन्यत्र वध्यन्ते विश्वकर्मतः । आढ्यादीनां त्रिधा स्थौल्याद्यवधूतं तदष्टधा । त्रिधा हस्ताज्जिनाख्यञ्च युक्तं सर्व्वसमेन च । पञ्चविंशतिलिङ्गानि नाढ्ये देवार्चिते तथा । पञ्चसप्तभिरेकत्वाज्जिनैर्भक्तैर्भवन्ति हि । चतुर्द्दश सहस्राणि चतुर्द्दश शतानि च । इत्यष्टाङ्गुलविस्तारो नवैककरगर्भतः । तेषां कोणार्द्धकोणस्थैश्छिन्द्येत् कोणानि सूत्रकैः । विस्तारं मध्यतः कृत्वा स्थाप्यं वा मध्यतस्त्वयम् । विभागादूर्द्ध्वमष्टास्रो ह्यष्टास्रः स्यात्त्रिवांशकः । पादाज्जान्वन्तको ब्रह्मा नाभ्यन्तो विष्णुरित्यतः । मूर्द्धान्तो भूतभागेशो व्यक्तोऽव्यक्तो च तद्वति । पञ्चलिङ्गव्यवस्थायां शिरो वर्त्तमुच्यते । छत्राभं कुक्कुटाभं वा बालेन्दुप्रतिमाकृति । एकैकस्य चतुर्भेदैः काम्यभेदात् फलं वदे । लिङ्गमस्तकविस्तारं वसुभक्तन्तु कारयेत् । अर्द्धभागं चतुर्थां तु विस्तारोच्छ्रायतो भजेत् । चत्वारि तत्र सूत्राणि भागभागानुपातनात् । पुण्डरीकन्तु भागेन विशालाख्यं द्विलोपनात् । त्रिशातनात्तु श्रीवत्सं शत्रुकृद्वेदलोपनात् । शिरः सर्व्वसमे श्रेष्ठं कुक्कुटाभं सुराह्वये । चतुर्भागात्मके लिङ्गे त्रापुषं द्वयलोपनात् । अनाद्यस्य शिरः प्रोक्तमर्द्धचन्द्रं शिरः शृणु । अंशात् प्रान्ते युगांशैश्च त्वेकहान्यामृताक्षकम् । पूर्व्वबालेन्दुकुमुदं द्वित्रिवेदक्षयात् क्रमात् । चतुस्त्रिरेकवदनं मुखलिङ्गमतः शृणु । पूजाभागं प्रकर्त्तव्यं मूर्त्त्यस्त्रिपदकल्पितम् । अर्कांशं पूर्व्ववत् त्यक्त्वा षट् स्थानानि विवर्त्तयेत् । शिरोन्नतिः प्रकर्त्तव्या ललाटं नासिका ततः । वदनं चिबुकं ग्रीवा युगभागैर्भुजाक्षिभिः । कराभ्यां मुकुलीकृत्य प्रतिमायाः प्रमाणतः । मुखं प्रति समः कार्य्यो विस्तारादष्टमांशतः । चतुर्मुखं मया प्रोक्तं त्रिमुखञ्चोच्यते शृणु । कर्णपादाधिकास्तस्य ललाटादीनि निर्द्दिशेत् । भुजौ चतुर्भिर्भागैस्तु कर्त्तव्यौ पश्चिमोज्झितम् । विस्तारादष्टमांशेन मुखानां प्रतिनिर्गमः । एकवक्त्रं तथा कार्य्यं पूर्व्वस्यां सौम्यलोचनम् । ललाटनासिकावक्त्रग्रीवायाञ्च विवर्त्तयेत् । भुजाञ्च पञ्चमांशेन भुजहीनं विवर्त्तयेत् । विस्तारस्य षडंशेन मुखैर्निर्गमनं हितम् । सर्व्वेषां मुखलिङ्गानां त्रापुषं वाथ कुक्कुटम्” ।

विशेषेण देवतादीनां मूर्त्तिलक्षणं हेमाद्रिव्रतखण्डे विष्णुध०

गणेशस्य "विनायकस्तु कर्त्तव्यो गजवक्त्रश्चतुर्भुजः। शूल-कञ्चाक्षमाला च तस्य दक्षिणहस्तयोः। पात्रञ्चोदक-पूर्णञ्च परशुश्चैव वामतः। दन्तश्चास्य न कर्त्तव्यो वामे रिपुनिसूदन!। पादपीठकृतः पाद एक आसनगो भवेत्। पूर्णं चोदकपात्रे च कराग्रन्तस्य कारयेत्। लम्बोदरस्तथाकार्य्यस्तब्धकर्णश्च यादव। व्याघ्रचर्माम्बरधरः सर्पयज्ञोपवीतवान्"। स्वलकं, गजदन्ताकारम्।

सरस्वत्याः "देवी सरस्वती कार्य्या सर्वाभरणभूषिता। चतुर्भुजा सा कर्त्तव्या तथैव च समुत्थिता"। (समुत्थिता, ऊर्द्ध्वा) पुस्तकञ्चाक्षमाला च तस्या दक्षिणहस्तयोः। वामयोश्च तथा कार्य्या वैणवी च कमण्डलुः। समपादप्रतिष्ठा च कार्य्या सौम्यमुखी तथा"। वैणवी, वीणा

लक्ष्म्याः "हरेः समीपे कर्तव्या लक्ष्मीस्तु द्विभुजा नृप!। दिव्यरूपाम्बरधरा सर्वाभरणभूषिता। गौरी शुक्लाम्बरा देवी रूपेणाप्रतिमा भुवि। पृथक् चतुर्भुजा कार्य्या देवी सिंहासना शुभा। सिंहासनस्था कर्तव्यं कमलं चारुकर्णिकम्। अष्टपत्रं महाभाग! कर्णिकायान्तु सा स्थिता। विनायकवदासीना देवी कार्य्या महाभुजा। बृहन्नालञ्च करे कार्यं तस्याश्च कमलं शुभम्। दक्षिणे यादवश्रेष्ठ! केयूरं प्रान्तसंस्थितम्। वामेऽमृतघटः कार्य्यस्तथा राजन्! मनोहरः। तस्याश्च द्वौ करौ कार्य्यौ बिल्वशङ्खधरौ द्विज!। आवर्जितघटं कार्यं तत्पृष्ठे-कुञ्जरद्वयम्। देव्याश्च मस्तके पद्मं तथा कार्यं मनोहरम्"।

श्रियः "पद्मस्था पद्महस्ता च गजोत्क्षिप्तघटप्लुता। श्रीः पद्ममालिनी चैव कालिकाकृतिरेव च"।

महालक्ष्म्याः विश्वकर्मशास्त्रे "क्षेत्रे कोलापुरादन्ये महालक्ष्मीर्य्यदोच्यते। लक्ष्मीवत् सा तदा कार्य्या" रूपाभरणभूषिता। दक्षिणाधःकरे पात्रमूर्द्ध्वे कौमोदकी ततः। वामोर्द्ध्वे खेटकं धत्ते श्रीफलन्त्वधः करे। बिभ्रती मस्तके लिङ्गं पूजनीया विभूतये"।

भद्रकाल्याः विष्णुधर्मोत्तरे "अष्टादशभुजा कार्य्या भद्रकाली मनोहरा। आलीढस्थानसंस्था च चतुःसिंहे रथे स्थिता। अक्षमाला त्रिशूलञ्च खड्गश्चन्द्रश्च यादव!। बाणचापे च कर्तव्ये शङ्खपद्मौ तथैव च। स्रुक्स्रुवौ च तथा कार्य्यौ तथोदककमण्डलू। दण्डशक्ती च कर्तव्ये कृष्णाजिनहुताशनौ। हस्तानां भद्रकाल्यास्तु भवेत् शा-लिकरः करः। एकश्चैव महाभाग रत्नपात्रधरो भवेत्"।

चण्डिकायाः "निगद्यते ह्यथो चण्डी हेमाभा सा सुरूपिणी। त्रिनेत्रा यौवनस्था च क्रुद्धा चोर्द्ध्वस्थिता मता। कृशमध्या विशालाक्षी चारुपीनपयोधरा। एकवक्त्रा तु सुग्रीवा बाहुविंशतिसंयुता। शूलासिशङ्ख-चक्राणि बाणशक्तिपवीनपि। अभयडमरुञ्चैव कलिकां दक्षिणे करे। ऊर्ध्वादिक्रमयोगेन बिभ्रती सा सदा शुभा। नागपाशन्तथा खेटं कुठाराङ्कुशकार्मुकम्। घण्टा, ध्वज, गदादर्शं, मुद्गरं वाम एव च। तदधोमहिषश्छिन्नमूर्द्धा पतितमस्तकः। शस्त्रोद्यतकरस्तब्धः तद्ग्रीवासम्भवः पुमान्। शूलभिन्नो वमद्रक्तोरक्तभ्रूमूर्द्धजेक्षणः। सिंहेन खाद्यमानश्च पाशबद्धो गले भृशम्। याम्याङ्घ्र्याक्रान्तसिंहा च सव्याङ्घ्र्यालीढगासुरे। चण्डी चोद्यतशस्त्रा वश्याशेषरिपुनाशिनी" (असुरे, महिषे)

दुर्गायाः "शक्तिं बाणं तथा शूलं खड्गञ्चक्रञ्च दक्षिणे। चन्द्रबिम्बमधो वामे खेटमूर्द्ध्वं कपालकम्। शूलं चक्रञ्च बिभ्राणा सिंहारूढा च दिग्भुजा। एषा देवी समुद्दिष्टा दुर्गा दुर्गापहारिणी"। दिग्भुजा, दशभुजा

नन्दायाः "नन्दा भगवती देवी भारद्वाजाभिनन्दजा। वरपाशा ङ्कुशा-ज्ञानि बिभ्रती च चतुर्भुजा"। "गौरवर्णा गजस्था वा खड्ग खेटवराभया"।

अम्बायाः "अम्बा कुन्दवर्णाभा पाशाज्ञाभीतिपालिनी"।

सर्वमङ्गलायाः "चतुर्बाहुः प्रकर्तव्या सिंहस्था सर्वमङ्गला। अक्षसूत्रं कञ्जं दक्षे शूलकुण्डीधरोत्तरे"।

कालरात्रेः "एकवीणा जया कर्णपूरा नग्ना खरस्थिता। लम्बोष्ठा कर्णिकाकर्णी तैलाभ्यक्तशरीरिणी। वामपादे लसल्लोहलताकण्टकभूषणा। वर्द्धन्मूर्द्धजाकृष्टा कालरात्रिर्भयङ्करी"।

ललितायाः "शङ्खसुग्धकरादर्शं बिभ्रती वामपार्श्वतः। याम्ये फलाञ्जनीहस्ता ललितोद्गी सुभूषणा"।

ज्येष्ठायाः "तुङ्गनासा च लम्बोष्ठी लम्बमानस्तनोदरी। आलोहिता स्मृता ह्येषा ज्येष्ठा लक्ष्मीरिति श्रिये। उत्पलाभयहस्तेयं द्विभुजा वीरवन्दिता"।

ज्येष्ठाभेदस्य "रक्तज्येष्ठा च नीला च भूतलार्पितपादिका। भूतलं स्पृशते दोर्भ्यां द्विभुजा वीरवन्दिता"।

गौर्य्याः "गौरी कुमारिकारूपा ध्यायमाना सुरेश्वरैः।

वरदाभयहस्ता सा द्विभुजा श्रेयसे सदा। अक्षस्रता-ग्रे पद्मं तथाधश्च कमण्डलुः। गौर्य्यां मूर्त्तिश्चतुर्बाहुः कर्त्तव्या कमलासना"।

भूतमातुः "श्यामवर्णा विशालाक्षी क्षीराहणनिभानना। द्विभुजा बिभ्रती लिङ्गं चर्म शस्त्रन्तु दक्षिणे। सिंहासनोपविष्टेयं मुक्ताभरणभूषिजा। भूतप्रेतपिशाचाद्यैः सेविता तु विशेषतः। इन्द्रयक्षैश्च गन्धर्वैः सिद्धविद्याधरादिभिः। अश्वत्थस्याप्यधो देवी भूतमातेति विश्रुता"।

सुरभेः "सुरभिर्गोमुखी देवी सुरूपा सर्वभूषणा। चाक्षसूत्रं तथा कुण्डीं बिभ्राणा भूतिपुष्टिदा"।

योगनिद्रायाः "निद्रा तु शयनारूढा सुसौम्या मुकुलेक्षणा। पानपात्रवरा चेयं द्विभुजा परिकीर्त्तिता"।

मातॄणाम् "अथातः सम्प्रवक्ष्यामि मातृरूपाणि ते शृणु"।

ब्राह्म्याः "तत्र ब्राह्मी चतुर्वक्त्रा षड्भुजा हंससंस्थिता। पिङ्गला भूषणोपेता मृगचर्मोत्तरीयका। वरं सूत्रं स्रुवं धत्ते दक्षबाहुत्रये क्रमात्। वामे तु पुस्तकं कुण्डीं बिभ्रती चाभयप्रदा"।

माहेश्वर्य्याः "माहेश्वरी वृषारूढा पञ्चवक्त्रा त्रिलोचना। शुक्लेन्दुभृज्जटाजूटा शुक्ला सर्वसुखप्रदा। षड्भुजा वरदा दक्षे सूत्रं डमरुकं तथा। शूलघण्टाऽभयं वामे सैव धत्ते महाभुजा।

कौमार्य्याः "कौमारी रक्तवर्णा स्यात् षड्वक्त्रा द्वादशलोचना। रविबाहुर्मयूरस्था वरदा शक्तिधारिणी। पताकां बिभ्रती दण्डञ्चापं वाणं च दक्षिणे। वामे चापमथो घण्टां कमलं कुक्कुटं तथः। परशुं बिभ्रती तीक्ष्णं तदधस्त्वभयान्विता"।

वैष्णव्याः "वैष्णवी तार्क्ष्यगा श्यामा षड्भुजा वनमालिनी। वरदा गदिनी दक्षे बिभ्रती चाम्बुजस्रजम्। शङ्खचक्राभया वामे सा चेयं विलसद्भुजा"।

वाराह्याः "कृष्णवर्णा तु वाराही शूकरास्या महोदरी। वरदा दण्डिनी खड्गं बिभ्रती दक्षिणे सदा। खेटपाशाभया वामे सैव चापि लसद्भुजा"।

*ऐन्द्र्याः ऐन्द्री सहस्रदृक् सौम्यहेमाभा गजसंस्थिता। वरदा सूत्रिणी वज्रं बिभ्रत्यूर्द्धन्तु दक्षिणे। वामे तु कलसं पात्रं त्वभयं तदधः करे"।

चामुण्डायाः "चामुण्डा प्रेतगा रक्ता विकृतास्याहिभूषणा। दंष्ट्राग्रा क्षीणदेहा च गर्त्ताक्षी भीमरूपिणी। दिग्बाहुः क्षामकुक्षिश्च मुसलं कवच शरम्। अङ्कुशं बिभ्रती खड्गं दक्षिणे त्वथ वामतः। खेटं पाशन्धनुर्दण्डं कुठारं चेति बिभ्रती"।

चण्डिकायाः "चण्डिका श्वेतवर्णा स्यात् शवारूढा च षड्भुजा। जटिला वर्त्तुलाक्षी वरदा शूलधारिणी। कर्त्तिकां बिभ्रती दक्षे पानपात्राभयान्यतः। इत्येवं मातरः प्रोक्ता रूपभेदव्यवस्थया"।

नान्दीमुखमातॄणाम् गौर्य्यादिमातरस्तु भविष्यत्पुराणे निरूपिताः। "गौरी पद्मा-शची-मेधा सावित्री विजया जया। देवमाता स्वधा स्वाहा तथान्या लोकमातृका। धृतिः पुष्टिस्तथा तुष्टिरात्मदेवतया सह। पूज्याश्चित्रेऽथवार्च्चायां वरदाऽभयपाणयः"।

नवदुर्गाणाम् "नवपद्मान्विते स्थाने पूज्या दुर्गाः स्वमूर्त्तितः। आदौ मध्ये तथेन्द्रादौ नवतत्त्वाक्षरैः क्रमात्। अष्टादशभुजैका तु पीनवक्षोरुहोरुका। सर्वालङ्कारसंयुक्ता सर्वसिद्धिप्रदायिनी। मूर्द्धजं खेटकं घण्टामादर्शं तर्जनीं धनुः। ध्वजं डमरुकं पाशं बिभ्रती वामपाणिभिः। शक्तिमुद्गरशूलानि वज्रं शङ्खमथाङ्कुशम्। शलाकां मार्गणं चक्रं दधाना दक्षिणैः करैः। शृण्वन्ति येऽप्युद्भिरित्येताः पूजनीया महात्मभिः। शेषाः षोड़शहस्ताश्च शलाकां मार्गणं विना। रुद्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका। चण्डा चण्डवती चैव चण्डरूपातिचण्डिका। नवमी चोग्रचण्डा च मध्यस्था वह्निसन्निभा। रोचनाभाऽरुणा कृष्णा नीला शुक्ला च धूम्रिका। पीता च पाण्डुरा ज्ञेया आलीढस्था हरिस्थिता। महिषस्था सशस्त्रोका दैत्यमूर्द्धजमुष्टिका। पद्माक्षती रथ स्थाप्या इत्युक्तं स्कन्दयामले"।

वामायाः "हंसस्था जटिला त्र्यक्षा वह्निज्वालासमप्रभा। कपालाभयहस्तोग्रा वामा वामफलप्रदा। द्विबाहुरेकवक्त्रैषा विधातव्या विपश्चिता"।

ज्येष्ठायाः "पाठलाभा भवेद्दष्टाकपालशरधारिणी। उग्रा सत्वावला भूत्वै शलुप्ती शेषपूर्वजा"।

रौद्र्याः "रक्तवस्त्रा तथा रौद्री कपालचमरीकरा। शेषपूर्वा तु विज्ञेया कृष्णवक्त्रा सुभीषणा"।

काल्याः "घनश्यामा ततः काली ताम्ररक्तनिभानना। कपालकर्त्तिकाहस्ता विज्ञेया भयनाशिनी"।

कलविकर्णिकायाः "नीलशुभ्रा महादेवी विकर्णी कलपूर्विका। कपालशक्तिहस्तेयं भयघ्ना शुभप्रदा"।

बलविकर्णिकायाः "बभ्रुवर्णा विशालाक्षी कपालं जपमालिकाम्।

विभाषा शान्तिदा भूत्यै बलपूर्वा विकर्षिका"।

बलप्रमथन्याः "ताम्राभा श्वेतवर्णा स्यात् बलप्रमथनी शुभा। कपालपाणिनी चेयं सर्वगत् भयङ्करी"।

सर्वभूतदमन्याः "जवाकुसुमवर्णाभा दंष्ट्रिणी च महोदरी। कपालवर्जिणी भूतदमनी सर्वपूर्विका"।

मनोन्मन्याः विश्वकर्मशास्त्रात् "नीलताम्रारुणाभासा पृथुवक्त्रा मनोन्मनी। कपालखड्गिनी भूत्यै शत्रूणां भयवर्द्धनी"।

कृष्णायाः मार्कण्डेयपुराणे "अक्षसूत्रञ्च कुर्व्वी च हृदयाग्रे पुटाञ्जलिम्। पञ्चाग्निकुण्डमध्यस्था कृष्णान्तामनुधारयेत्"

उमायाः "अक्षसूत्रञ्च कमलं दर्पणञ्च कमण्डलुम्। उमा बिभर्त्ति हस्तैस्तु पूजिता त्रिदशैरपि"।

पार्व्वत्याः "अक्षसूत्रं शिवं देवगणाध्यक्षं कमण्डलुम्। अग्निकुण्डद्वयं पार्श्वे पार्व्वती पर्व्वतोद्भवा"।

महाकाल्याः विष्णुधर्म्मोत्तरात् "सा भिन्नाञ्जनसङ्काशा दंष्ट्राङ्कितवरानना। विशाललोचना नारी बभूव तनुमध्यमा। खड्ग, पात्र-शिरः खेटैरलङ्कृतचतुर्भुजा। कवन्धहारं शिरसा बिभ्राणा हि शिरःस्रजम्"।

वारुणीचामुण्डायाः विष्णुधर्म्मोत्तरे "लम्बोदरी तु कर्त्तव्या रक्ताम्बरपयोधरा। शूलहस्ता महाभागा भुजप्रहरणा तथा। कार्पासकलशा देवी वारुणी चातिसुन्दरी। हस्तत्रयी च कर्त्तव्या बहुबाहुस्तथैव च। चामुण्डा कथिता चैव सर्व्वसत्त्ववशङ्करी"।

शिवदूत्याः मत्स्यपुराणे "तथैवार्त्तमुखी शुष्का शुष्कनाया विशेषतः। बहुबाहुयुता देवी भुजगैः परिवेष्टिता। कपालमालिनी भीमा तथा खट्वाङ्गधारिणी। शिवदूती तु कर्त्तव्या शृगालवदना शुभा। कालीढासनसंस्थाना तथा राजंश्चतुर्भुजा। असृक्पात्रधरा देवी खड्गशूलधरा तथा। चतुर्थस्तु करस्तस्यास्तथाकार्य्यस्तु पाशिनः"

कात्यायन्याः मयदीपिकायाम् "कात्यायन्याः प्रवक्ष्यामि रूपं दशभुजं तथा। त्रयाणामपि देवानामनुकारानुकारिणीम्। जटाजूटसमायुक्तामर्द्धेन्दुकृतलक्षणाम्। लोचनत्रयसंयुक्तां पूर्णेन्दुसदृशाननाम्। अतसीपुष्पसङ्काशां सुप्रतिष्ठां सुलोचनाम्। नवयौवनसम्पन्नां सर्व्वाभरणभूषिताम्। सुचारुदर्शनां, तद्वत्पीनोन्नतपयोधराम्। त्रिभङ्गस्थानसंस्थानां महिषासुरमर्द्दिनीम्। त्रिशूलं दक्षिणे दद्यात् खड्गचक्रं तथैव च। तीक्ष्णवाणं तथा शक्तिं वामतो विनिवोधत। खेटकं पूर्णचापञ्च पाशमङ्कुशमेव च। घण्टां वा परशुञ्चापि चामरं सन्निवेशयेत्। अधस्तान्महिषं तद्वद्विशिरस्कं प्रदर्शयेत्। शिरश्छेदोद्भवं तद्वद्दानवं खड्गपाणिनम्। हृदि शूलेन निर्भिन्नं निर्यदन्त्रविभूषणम्। रक्तरक्तीकृताङ्गञ्च रक्तविस्फारितेक्षणम्। वेष्टितं नागपाशेन भ्रुकुटीभीषणाननम्। सपाशवामहस्तेन धृतकेशञ्च दुर्गया। वमद्रुधिरवक्त्रञ्च देव्याः सिंहं प्रदर्शयेत्"।

अम्बिकायाः शब्दसमुच्चये "सिंहारूढाम्बिका मूर्त्या भूषिता दर्पणोद्वहा"। (वामभुजे दर्पणोद्वहा दक्षिणे वरयुक्ता यदुक्तम्। "दक्षिणे तु करे प्रोक्तोवरः साधारणः सदा") खड्गखेटधरा द्वाभ्यां कर्त्तव्या च चतुर्भुजा"।

योगेश्वर्य्याः "दशबाहुस्त्रिनेत्रा च शस्त्रशक्त्रासिडामरुम्। बिभ्रती दक्षिणे हस्ते वामे घण्टाञ्च खेटकम्। खट्वाङ्गञ्च त्रिशूलञ्च देवी योगेश्वरी मता"।

भैरव्याः विश्वकर्म्मशास्त्रात् "एवंरूपा भवेदन्या पाशाङ्कुशयुताक्षया। भैरव्याख्या यदीष्टा तु भुजैर्द्वादशभिर्युता"।

रम्भायाः देवीपुराणे "कमण्डलुवज्रहस्ते च बिभ्रती वज्रमङ्कुशम्। गजासनस्थिता रम्भा सुरूपा सर्व्वकामदा"।

शिवायाः "शिवा शवासना कार्य्या त्रिनेत्रा वरपाणिका। डमरुखड्गधारी च त्रिशूलाऽभयदायिका"।

कीर्त्तेः "सुमध्याङ्कारयेत् कीर्त्तिं नीलोत्पलदलस्थिताम्। सर्व्वाभरणभूषाङ्गीं कल्होत्पलधारिणीम्। मदिरौदनगन्धाढ्या मङ्गलाभिभूषणा"।

सिद्धेः "सिद्धिर्देवी प्रकर्त्तव्या सिद्धार्थकवरप्रदा। सितचन्दनगन्धाढ्या सितपङ्कजभूषिता। सितासनस्थिता देवी प्रतिहारोपशोभिता।

रत्याः "सुन्दरीङ्कारयेद्रतिं पर्य्यङ्कासनसंस्थिताम्। दर्पणालोकसुरतां तिलकालकभूषिताम्। मालाचामरशोभाढ्यां वेणुवीणासदाप्रियाम्"।

क्षमायाः "क्षमा तु सुमुखी कार्य्या योगपट्टोत्तरीयका। पद्मासनकृताधारा वरदोद्यतपाणिका। शूलमेखलसंयुक्ता प्रशान्ता योगसंस्थिता"।

वैष्णव्याः "सुसिद्धा वैष्णवी कार्य्या शङ्खचक्रगदाम्बुजा। वनमालाकृतापीडा पीतवस्त्रा सुशोभिता"।

ऐन्द्र्याः "ऐन्द्री सुरवराध्यक्षा गजराजोपरिस्थिता। वज्राङ्कुशधरा देवी हारकेयूरभूषिता"।

याम्यायाः "वैवस्वती प्रकर्त्तव्या दुर्द्धरा महिषोपरि। शुष्कराङ्गा कपालेऽसृक् पिवन्ती दण्डधारिणी"।

दीप्तेः "तेजोऽधिका प्रकर्तव्या दीप्तिश्चन्द्रासनस्थिता"।
रतेः "कमनीया रतिः कार्या वसन्तोज्ज्वलभूषणा। स्त्रयमाना शुभा देवी समस्ताभरणैर्युता। वीणावादनशीला च मदकर्पूरचर्चिता। दण्डाचसूत्रधरा च व्रतस्थायोगसंस्थिता"।
श्वेतायाः "श्वेता पूर्णेन्दुसदृशा श्वेतपङ्कजसंस्थिता"।
भद्रायाः "भद्रा सुभद्रा कर्तव्या भद्रासनव्यवस्थिता। नीलोत्पलफलहस्ता शूलसूत्राक्षधारिणी"।
मङ्गलायाः "सिंहासनस्थिता देवी जटामुकुटमण्डिता। शूलाचसूत्रधरा च वरदाभयचापधृक्। दर्पणं शरखेटञ्च खड्गचन्द्रधरा शिवा। सुरूपा लक्षणोपेता सुस्तनी चारुहासिनी। सर्वाभरणभूषाङ्गी सर्वशोभासमन्विता"।
जयाविजययोः "जयाञ्च विजयां कुर्यात् शूलपद्माक्षधारिणीम्। वरोद्यताञ्च सिंहस्थां सर्वकर्मप्रसाधिनीम्"।
काल्याः "काली करालरूपा च चण्डपाशोद्यता भवेत्"।
घण्टाकर्ण्याः "घण्टाकर्णी प्रकर्तव्या घण्टात्रिशूलधारिणी"।
जयन्त्याः "जयन्ती सुन्दरी कार्या कुन्तशूलासिधारिणी। खेटकव्यग्रहस्ता च पूजनीया शुभान्वितैः"।
दितेः "दितिर्दैत्यनुता देवी सदा पूज्या महाहवे॥ दण्डासनस्थिता भद्रा सर्वाभरणभूषिता। फलनीलोत्पलकरा चोत्पलस्रग्विभूषिता"।
अरुन्धत्याः "अक्रोधाऽरुन्धती देवी सितवस्त्रा व्रतस्थिता। पत्रपुष्पोदककरा चन्दनेन सुचर्चिता"।
अपराजितायाः "अपराजिता च कर्तव्या सिंहारूढा महाबला। पिनाकेषुकरा चैव खड्गखेटकधारिणी। त्रिनेत्रेन्दुजटाभारा ह्रतवासुकिकङ्कणा"।
कौमार्याः "कौमारी चैव कर्तव्या मयूरासनशक्तिभृत्। त्रिदशश्रीकालरूपा च रक्तमाल्या सकुक्कुटा"।
चतुःषष्टियोगिनीरूपाणि मयदीपिकायां
१अक्षोभ्यायाः "वज्राखाऽभयभृद्याम्ये करे सा खेटभृत्ततः। हेमभूषणभूषा स्यादक्षोभ्या करिसंस्थिता"।
२रूक्षकर्ण्याः "रूक्षकर्णी तु गौराङ्गी कम्बुवाणाभयावहा। धनुःकपालभृत् सौम्ये रूक्षस्था तर्जनीस्थिता"।
३राक्षस्याः "राक्षसी हेमवर्णा स्याद्व्याघ्रगाप्ती हयस्थिता। कुठाराशनिभृद्याम्ये वामे पाशाङ्कुशान्विता"।
४चपलायाः "चपला चम्पकच्छाया दक्षिणे सुङ्राङ्कुशौ। कपालञ्च फलं सव्ये धत्ते कुञ्जास्थिसंस्थिता"।
५चयायाः "चया कूर्मस्थिता गौरी जपस्था सा घटान्विता। वामे कपालपिण्डाभृत्सर्वालङ्कारभूषिता"। (जपस्था जपपरा)
६पिङ्गाक्ष्याः "पिङ्गाक्षी स्याद्बभ्रुवर्णा त्रिनेत्रा च हयस्थिता। कौशेयपाशभृद्याम्ये वामे चाङ्कुशखेटिनी"।
७अक्षयायाः "अक्षया हेमवर्णा स्याद्व्याघ्रगात्री हकस्थिता। कुठारखड्गभृद्याम्ये वामे पाशाङ्कुशान्विता"।
८क्षेमायाः "क्षेमा तु शवगा पीता शक्तिभिन्दीधनुःकरा। याम्ये डमरुशूलेषुवस्तभृत् सममस्थिता"।
९बालायाः "शक्तिखड्गधरा ताम्रा खेटपाशकपालिनी। रक्ता वह्निस्थिता बाला क्रीडन्ती दहनैः सह"।
१०लीलायाः "लीला लीलावती रक्ता दक्षपाणिजयान्विता। बिभ्राणा पट्टिशम्पाशं वामे मस्ताङ्गमम्बुजम्"।
११जयायाः "हयारूढा जया रक्ता याम्ये दण्डासिधारिणी। कर्तरीकाङ्गभृद्वामे तर्जन्यासक्तसिक्थका"।
१२लोलायाः "कर्तरी मार्जनी याम्ये सौम्ये पीडनकङ्करे। शूलं रुरुयुतं धत्ते लोला तु खरगा सदा"।
१३लङ्कायाः "वामे लुलायमुण्डञ्च तत् पिबन्त्यसृक्करङ्किका। लङ्केशोरःस्थिता लङ्का खादन्ती मिश्रितङ्कनम्"।
१४लङ्केश्वर्याः "त्रिफलाशाकखोटोदामोदकाणी च दक्षिणे। शोणा लङ्केश्वरी कुम्भे डिम्बसृचौ बिभ्रती"।
१५लालसायाः "दक्षिणे वरदं चक्रं वामे कङ्कणकङ्करे। बिभ्राणा कोलगा रक्ता लालास्रग्लालसा मता"।
१६विमलायाः "द्वीपिस्था विमला रक्ता ताम्राऽलङ्कारभूषिता। कर्तरीकुम्भभृद्याम्ये वामे पाशकपालिनी"।
१७हुताशनायाः "कृष्णा हुताशनाजस्था ज्वालिनी दक्षिणे शुभा। वामे त्वभयहस्ता स्याद्दिष्टराज्यघटान्विता"।
१८विशालाक्ष्याः "शूकरास्रा विशालाक्षी त्रिसन्ध्यस्था सितेतरा। घण्टावाद्यधरा सौम्ये याम्ये कर्तरिकाभया"।
१९हुङ्कारायाः "हुङ्कारा मीनवक्त्रा स्यात् मीनगा साक्षमालिनी। सुफलं बिभ्रती वामे सौम्ये तु फलपल्लवौ"।
२०बडवामुख्याः "अङ्काभ्यां बिभ्रती बालौ पर्यङ्के बडवामुखी। समतुरुकुम्भिभृद्याम्ये कृष्णा नीलधरान्यतः"।
२१हाहारवायाः "तर्ज्जन्यभयभृत्सौम्ये याम्ये दण्डकपालिनी। कृष्णा हाहारवा क्रूरा रासभस्था खरस्मिता"।
२२महाक्रूरायाः "लुलापास्या लुलापस्था महाक्रूरा सितेतरा। वामेऽस्याः पाशमालाब्जं दक्षिणे दण्डलेखनी"।
२३क्रोधनायाः "असिता क्रोधना याम्ये खादन्ती मांसमण्डकम्। वामे विद्युज्जिह्वा क्रूरा सव्ये घोरकपालिनी" चक्रस्थाऽऽकण्ठमदिरां बिभ्रती जम्बुकस्थिता"।

२४भयाननायाः "कृष्णा भयानना स्थूलोदंष्ट्रोग्रास्थिविभूषणा । याम्ये स्यात् शिखरं शूलं शर्वरं खेलिहान्यतः"।
२५सर्वज्ञायाः "त्रिशूलपृष्ठभृद्वामे मुण्डं डमरुकं शवम् । त्रिभाषा भाजनं द्वाभ्यां सर्वज्ञा प्रेतगाऽसिता"।
२६तरलायाः "जानुक्षिप्तौ करौ कृत्वा उद्यन्ती तरलायते । शूलडमरुहस्ता च गोधास्था तरलाऽसिता"।
२७तारायाः "तारा तारगुणैर्युक्ता कौशिकस्था सितेतरा । धत्ते शवाङ्के सौम्ये शूलकङ्करमन्यतः"।
२८ऋग्वेदायाः "कृष्णा पद्मस्थिता दक्षे ज्ञानमुद्राक्षमालिनी । ऋग्वेदं वामतो धत्ते पुस्तकञ्च कमण्डलुम्"।
२९हयाननायाः "रौद्रा कृष्णा तुरङ्गास्था कबन्धस्था हयानना । मुण्डशूर्पधरा याम्ये सौम्ये संहारिकाङ्कभृत्"।
३०रससंग्राह्याः "छिन्नहस्ता शवारूढा तारा स्थूला जटाधरा । खट्वाङ्गं डमरुं सौम्ये शूलोलके बिभ्रती ततः। शवस्था रससंग्राही नृत्यन्ती जटिलाऽसिता । कुशूलान् चक्रकङ्कालान् बिभ्रती चर्मवासिनी"।
३१शबरायाः "सवेदनद्विजासक्ता वरिष्ठा शबराऽलिभा । वामे करोपधानाशिधरा उलूकाधरान्यतः"।
३२तालुजिह्विकायाः "स्फटिकाभा गरुडस्था सुकान्ता तालुजिह्विका । शङ्खखेटकहस्ताग्रा याम्ये स्वस्तिकखड्गभृत्"।
३३रक्ताक्ष्याः "रक्ताक्षी वाहमारूढा रक्तपाना शशिप्रभा । गदाखड्गधरा याम्ये वामे पाशकपालभृत्"। [द्रष्टव्यम् ।
३४सुप्रसिद्धायाश्चध्यानं मुद्रितपुस्तके पतितं मयटीपिकायां
३५विद्युज्जिह्वायाः "विद्युज्जिह्वाऽसिता क्रूरा सव्ये वीरकपालिनी । चक्रस्था चक्रकर्त्तरीधारिणी दक्षिणे करे"।
३६करङ्किण्याः "ग्राहस्था चामरच्छत्रभृदृतिद्वयसंयुता । कुम्भपाशधरा श्वेता क्रोधयुक्ता करङ्किणी"।
३७मेघनादायाः "मेघनादा तु चन्द्राभा खड्गखेटकधारिणी । नालैर्वृता घनारूढा तडिन्मण्डलसन्निभा"।
३८प्रचण्डोग्रायाः "प्रचण्डोग्रा तु नक्रस्था याम्येऽस्याः कर्त्तरीफलम् । कपालं मुण्डमन्यत्र शत्रुघ्नी स्फटिकप्रभा"।
३९कालकर्ण्याः "शुक्ला शवासना रौद्रा बिभ्रत्यजाच्छलकम् । कालकर्णी जगत्ख्याता कर्णिकारविभूषणा"।
४०चन्द्रावल्याः "चन्द्रावली तु हेमाभा हेमसिंहासनस्थिता । याम्येऽक्षमाला मालाभृत् शेषेऽब्ज-ध्वजधारिणी"।
४१चन्द्रहासायाः "चन्द्रहासा स्थिता गौरी वेदास्या दोर्द्वयोः क्रमात् । कमण्डल्वङ्कुशग्रग्रा मन्त्रमालाङ्कुशान्विता"।

४२वरप्रदायाः "कर्त्तरीमभयं याम्ये धत्ते श्वेता वरप्रदा । हंसदंष्ट्रसमारूढा पूर्णपात्रधरान्यतः"।
४३प्रपञ्चिकायाः "फलस्रगन्विता याम्ये कुन्त-कुण्डीधरान्यतः । रौक्ममाला प्रपञ्चास्था गौरी विश्वप्रपञ्चिका ।
४४प्रलयान्तायाः "मर्कटस्था प्रलयान्ता बिभ्रती करयोर्द्वयोः । खादन्त्याम्रफलं शूला गौराङ्गी वानरानना"।
४५शिशुवक्त्रायाः "शिशुवक्त्रा मृगारोढा पिङ्गाभा याम्यसौम्ययोः । भिन्दीपालकखेटाभ्यां पाशाशिभ्याञ्च संयुता ।
४६पिशाच्याः "काकास्था श्येनगा गौरी पिशाची रक्तमण्डिता । कङ्काल-कर्त्तरीखड्गं बिभ्रती याम्यसौम्ययोः"।
४७पिशिताशायाः "फल-तूणधरा वामे सौम्ये-शस्त्रासिधारिणी । खड्गस्था बभ्रुवर्णा स्यात् पिशिताशातिदुर्बला"।
४८लोलुपायाः "भ्रमन्ती लोलुपा पीना खरस्था याम्यसौम्ययोः । खड्गडमरुकर्त्तरीः पाशञ्चैव तु बिभ्रती"।
४९धमन्याः "धमनी पुष्पकस्था स्यात् गौरी यक्षगणान्विता । गदापट्टिशभृत्सौम्ये स्थूलतोमरिणी ततः"।
५०तपन्याः "तपनी सर्पमा गौरी वराङ्गी पद्मानना । स्वकर्णयानयोर्भोगे व्यस्तहस्तोग्ररूपिणी"।
५१वामन्याः "पीता महाशुगा सा स्यात् वामनी बिभ्रती करे । कुठारं लगुडं वामेऽक्षमालां धनुरन्ततः"।
५२विकृताननायाः "शूलभिन्दिपालपाशा सिंहास्थशरीरिणी । जिह्वे द्वे बिभ्रती चैव चतुर्दोर्विकृतानना"।
५३वायुवेगायाः "शङ्खपूरणिका द्वाभ्यां हृकामयधरा द्वयोः । द्विसिंहरथसंस्था स्यात्ताम्राभा वायुवेगिका"।
५४बृहत्कुक्षेः "भार्यस्थिता बृहत्कुक्षिः सौम्ये मुण्डकपालभृत् । गौरी महातनुर्याम्ये कर्त्तरीपट्टिकाधरा"।
५५विकृतायाः "उष्ट्रस्था विकृता गौरी भयकृद्विकृतानना । तूणञ्च डमरुं याम्ये सौम्ये खड्गार्द्धमस्तकम्"।
५६विश्वरूपिकायाः "खेटक खड्गभृद्वामे गदा-चक्रास्त्रभृत्ततः । वनमालावती पीता तार्क्ष्यस्था विश्वरूपिका"।
५७यमजिह्वायाः "मुषलं मुद्गरं याम्ये परशुश्चासनं ततः । बिभ्रती यमजिह्वा स्यात् कराला महिषस्थिता"।
५८जयन्त्याः "नृत्यन्ती खरगा श्वेता याम्ये डमरुतूणभृत् । सदैत्यशैलमुण्डोग्रा जयन्ती वामहस्तयोः"।
५९दुर्जयायाः "श्वारूढा दुर्जया श्वेता रौद्री भगशावृता । खड्गकुन्तोद्यतकरा दुर्गकाननवासिनी"।

६०यमान्तिकायाः “असकृत् खेटिनी दोर्भ्यां चतुर्दोर्याम्यसौम्ययोः। शूलबाणधरा याम्ये धनुःशक्तिकरान्यतः। शकटस्थातिघोरास्या क्षीरवर्णा यमान्तिका”।

६१विडाल्याः “मार्ज्जारस्था विडाली च विडालाक्षी भवेत् सिता”।

६२रेवत्याः “वामे तृणञ्च खट्वाङ्गं शूलं टङ्कञ्च बिभ्रती। श्यामा पिशाचवक्त्रोग्रा कपालस्था च रेवती”।

६३पूतनायाः “कुशूलयष्टिभृद्वामे भिन्दीपालकपालभृत्। कुब्जाभा पूतना नग्ना विकृतास्या शवस्थिता”।

६४विजयन्तिकायाः “कर्त्तरीशूलभृद्याम्ये वामे मुण्डकपालिनी। श्वेतवर्णा वृषारूढा विजया विजयप्रदा”।

ब्रह्मणः विष्णुधर्मोत्तरात् “ब्रह्माणं कारयेद्विद्वान् देवं सौम्यं चतुर्भुजम्। बद्धपद्मासनन्तुष्टं तथा कृष्णाजिनाम्बरम्। जटाधरं चतुर्वक्त्रं सप्तहंसरथस्थितम्। वामे न्यस्तेतरकरन्तस्यैकन्दोर्युगं भवेत्। एतस्मिन् दक्षिणे पाणावक्षमाला तथा शुभा। कमण्डलुं द्वितीये च सर्वाभरणधारिणम्। सर्वलक्षणयुक्तस्य शान्तिरूपस्य पार्थिव!। पद्मपत्रदलाग्राभं ध्यानसंमीलितेक्षणम्। अर्च्चायाङ्कारयेद्देवं चित्रे वा वास्तुकर्म्मणि”।

आदित्यपुराणे तु “पद्मपत्रासनस्थश्च ब्रह्मा कार्य्यश्चतुर्मुखः। सावित्री तस्य कर्त्तव्या वामोत्सङ्गगता तथा”।

प्रजापतेः “आदित्यवर्णं धर्मज्ञ! साक्षमालाकरं तथा। रूपं पूर्व्वोदितं कार्य्यं रूपमन्यज्जगत्पतेः”।

लोकपालब्रह्मणः “हंसयानेन कर्त्तव्यो न कार्य्यश्च चतुर्मुखः। ब्रह्मास्त्वपरं रूपं सर्व्वकार्य्यं प्रजापतेः। अक्षसूत्रं पुस्तकञ्च धत्ते पद्मं कमण्डलुम्। चतुर्वक्त्रा तु सावित्री श्रोत्रियाणां गृहे हिता”।

विश्वकर्म्मणः “विश्वकर्म्मा तु कर्त्तव्यः सुरस्थलधरः प्रभुः। सन्दंशपाणिर्द्विभुजस्तेजोमूर्त्तिधरो महान्”।

धर्म्मस्य “चतुर्वक्त्रश्चतुष्पादश्चतुर्बाहुः सिताम्बरः। सर्व्वाभरणवान् श्वेतो धर्म्मः कार्य्यो विजानता। दक्षिणे चाक्षमाला च तस्य वामे च पुस्तकम्। मूर्त्तिमान् व्यवसायस्तु कार्य्यो दक्षिणभागतः। वामभागे ततः कार्य्यो वृषः परमरूपवान्। कार्य्यौ पद्मकरौ मूर्ध्नि विन्यस्तौ तु तथा तयोः”।

ऋग्वेदस्य विश्वकर्म्मशास्त्रात् “ऋग्वेदः श्वेतवर्णः स्यात् द्विभुजो रासभाननः। अक्षमालाधरः सौम्यः प्रीतश्चाध्ययनोद्यतः”।

सामवेदस्य “नीलोत्पलदलाभासः सामवेदो हयाननः। अक्षमालान्वितो दक्षे वामे कम्बुधरः स्मृतः”।

यजुर्वेदस्य “अजास्यः पीतवर्णः स्यात् यजुर्वेदोऽक्षसूत्रधृक्। वामे कुलिशपाणिस्तु भूतिदो मङ्गलप्रदः”।

अथर्व्ववेदस्य “आथर्व्वणाभिधो वेदो धवलो मर्कटाननः। अक्षसूत्रञ्च खट्वाङ्गं बिभ्राणोऽयं जयप्रियः”।

शिक्षायाः “शिक्षा शुभ्राभयकरा ज्ञानमुद्रान्विता शुभा। साक्षसूत्रा सकुण्डीका द्विभुजा दण्डपङ्कजा”।

कल्पस्य “कल्पस्तु कुमुदाभासो वायसास्यो महोदरः। दण्डी कुण्डीधरोऽब्जस्थो मेखलाकुण्डलान्वितः”।

व्याकरणस्य “सितं व्याकरणं ज्ञेयं मयूरास्यं घटोदरम्। वीणाकजान्वितं दिव्यं दिव्यवस्त्रविभूषितम्”।

निरुक्तस्य “इन्दुवन्निर्म्मलं शान्तं वकवक्त्रं कृशोदरम्। पाशपङ्कजहस्तं स्याच्चाक्षसूत्रं सपुस्तकम्। नरस्कमिति निर्णीतं छन्दोनिर्णीयतेऽधुना”।

छन्दसः “जवाकुसुमसंकाशं छन्दो ज्ञेयं विपश्चिता। चकोराख्यपाणिन्तु शक्तिं बिभ्रच्छिखान्विताम्। लोहकुण्डलकोपेतं प्रवालकृतकुण्डलम्”।

ज्योतिषस्य “ज्योतिषं तु विडालास्यमिन्द्रगोपनिभं शुभम्। अक्षसूत्रं कजं बिभ्रद्धस्तयोर्दक्षवामयोः”।

मीमांसायाः “सोमकान्तिसमाभासं मीमांसाशास्त्रमुत्तमम्। अक्षसूत्रं दधद्दक्षे सुधापूर्णघटं करे”।

न्यायस्य “अतसीपुष्पसङ्काशो न्यायो ज्ञेयो विपश्चिता। सिंहास्यो दक्षिणे सूत्रं ध्वजं वामकरे दधत्”।

धर्म्मशास्त्रस्य “धर्म्मशास्त्रं सितं शान्तं चापवक्त्रं कजासनम्। मुक्ताजपाक्षभृद्दक्षे तुलाहस्तन्तु वामतः”।

पुराणस्य “पुराणं चम्पकाभासं शुकवक्त्रं चतुर्द्दलम्। अक्षसूत्रं हये ज्ञेयं नानाभरणभूषितम्”।

इतिहासस्य “इतिहासः कजाभासः शूकरास्यो महोदरः। अक्षसूत्रं घटं बिभ्रत् पञ्चजाभरणान्वितः”।

धनुर्वेदस्य “पीतवर्णो धनुर्वेदः पिकवक्त्रो महातनुः। रत्नमालावलिं धत्ते मस्तके भूषिता जटा”।

आयुर्वेदस्य “आयुर्वेदो हरिद्राभो वानरास्यो विशालदृक्। अक्षसूत्रं सुधाकुम्भं बिभ्रदारोग्यदो भृशम्”।

नृत्यशास्त्रस्य “नृत्यशास्त्रं सितं रम्यं मृगवक्त्रं जटाधरम्। अक्षसूत्रं त्रिशूलञ्च बिभ्राणञ्च त्रिलोचनम्”।

पञ्चरात्रस्य “पञ्चरात्राभिधं शास्त्रं धवलं वृषभाननम्। अक्षसूत्रं हलं धत्ते वनमालाविभूषितम्”।

पाशुपतस्य “शास्त्रं पाशुपतं शुभ्रं व्यालवक्त्रं कृशोदरम्। कपालधरं भीमं व्याघ्रचर्म्माम्बरावृतम्”।

पातञ्जलस्य "पातञ्जलाभिधं रक्तं सर्पवक्त्रं सुतेजसम्। अक्षसूत्रं पृदाकुञ्च धारयन् कुण्डलान्वितम्"। (पृदाकुः सर्पः)।

साङ्ख्यस्य "साङ्ख्यं तत् कपिलं बभ्रुवक्त्रमुज्ज्वलतन्द्रितम्। जाप्यदण्डधरं दीर्घनखलोमजटाधरम्"।

अर्थशास्त्रस्य "अर्थशास्त्रं भवेद्गौरं सारिकावदनं शुभम्। अक्षसूत्रं फलं बिभ्रद्दक्षहारं कमण्डलुम्"।

प्रसङ्गाद्वेदादीनामधिदेवताः तत्रोक्ताः प्रदर्श्यन्ते विष्णुधर्मोत्तरात् "ऋग्वेदस्तु स्मृतो ब्रह्मा यजुर्वेदस्तु वासवः। सामवेदस्तथा विष्णुः शम्भुराथर्वणो भवेत्। शिक्षा प्रजापतिर्ज्ञेयः कल्पो ब्रह्मा प्रकीर्तितः। सरस्वती व्याकरणं निरुक्तं वरुणः प्रभुः। छन्दो विष्णुस्तथैवाग्निर्ज्योतिषं भगवान् रविः। मीमांसा भगवान् सोमो न्यायदेवः समीरणः। धर्मश्च धर्मशास्त्राणि पुराणञ्च तथा मनुः। इतिहासः प्रजाध्यक्षो धनुर्वेदः शतक्रतुः। आयुर्वेदस्तथा साक्षाद्देवो धन्वन्तरिः प्रभुः। कलावेदो मही देवी नृत्यशास्त्रं महेश्वरः। सङ्कर्षणः पञ्चरात्रं रुद्रः पाशुपतं तथा। पातञ्जलमनन्तश्च साङ्ख्यञ्च कपिलो मुनिः। अर्थशास्त्राणि सर्वाणि धनाध्यक्षः प्रकीर्तितः। कलाशास्त्राणि सर्वाणि कामदेवो जगद्गुरुः। अन्यानि यानि शास्त्राणि यत् कर्माणि प्रचक्षते। स एव देवता तस्य शास्त्रं कार्यञ्च देववत्"।

ऋषीणाम् मयसंग्रहे "उदासीना सोपवीताः कमण्डलुसमन्विताः। जटिलाः श्मश्रुलाः शान्ताः आसीना ध्यानतत्पराः। सप्तर्षयो वशिष्ठश्च कार्यो भार्यासमन्वितः। गौतमश्च भरद्वाजो विश्वामित्रश्च कश्यपः। जमदग्निर्वशिष्ठोऽत्रिः सप्त वैवस्वतेऽन्तरे। मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः। प्रचेताश्च वशिष्ठश्च भृगुर्नारद एव च। जटिलाः श्मश्रुलाः शान्ताः तथा धमनिसन्तताः। कुशाक्षधराः कार्य्या मुनयो द्विभुजा दश"।

नारदस्य "नारदो देवगन्धर्वः साक्षसूत्रकमण्डलुः। सेव्यो वै वीणया वामभुजमूलोपगूढया"।

मुनीनाम् भविष्योत्तरात् "प्रकृत्या काञ्चनं कृत्वा यथा शक्त्या तु शोभितम्। पुरुषाकृतिं प्रशान्तञ्च जटामञ्जुलधारिणम्। कमण्डलुकरं शिष्यैर्नगैश्च परिवारितम्। मृत्युभुग्विषहन्तारं दर्भहस्तं वरं मुनिम्"।

भृगूणाम् "कर्तव्याः शक्ररूपेण भृगवो नाम देवताः। भुवनो भावनश्चैव सुजन्यः सुजनस्तथा। क्रतुः सुवः स्वमूर्नाम व्यजश्च व्यसुनस्तथा। प्रसवश्चाव्ययश्चैव दक्षो द्वादशकस्तथा। भृगवो नामनिर्दिष्टा देवा द्वादश यज्ञियाः"।

अङ्गिरसः "जीवरूपेण कर्तव्या देवाश्चाङ्गिरसस्तथा। आत्मा ह्यायुर्मनो दक्षः मदप्राणस्तथैव च। हविष्मश्च गविष्ठश्च ऋतः सत्यश्च तेजसः"।

विष्णोः विष्णुधर्मोत्तरात् "देवदेवं यथा विष्णुं कारयेद्गरुडस्थितम्। कौस्तुभोद्भासिनोरस्कं सर्वाभरणधारिणम्। सजलाम्बुदच्छायं पीतदिव्याम्बरं तथा। मुखानि चास्य चत्वारि बाहवो द्विगुणास्तथा। सौम्यन्तु वदनं पूर्वं नारसिंहन्तु दक्षिणम्। कपिलं पश्चिमं वक्त्रं तथा वाराहमुत्तमम्। तस्य दक्षिणहस्तेषु बाणारिमुसलाभयम्। चर्मक्षीरवराविन्दुर्वामे च वनमालिनः। कार्य्याणि विष्णोर्देवेश! वामहस्तेष्वनुक्रमात्"। (अरि, चक्रं इन्दुः शङ्खः)।

लोकपालविष्णोः "एकवक्त्रो द्विबाहुश्च गदाचक्रधरः प्रभुः।

वासुदेवस्य "एकवक्त्रश्चतुर्बाहुः सौम्यरूपः सुदर्शनः। पीताम्बरश्च मेघाभः सर्वाभरणभूषितः। कण्ठेन शुभरेखेन कम्बुतुल्येन राजता। वराभरणयुक्तेन कुण्डलोत्तरभूषिणा। अङ्गदी बद्धकेयूरो वनमालाविभूषणः। उरसा कौस्तुभं बिभ्रत् किरीटं शिरसा तथा। शिरःपद्मस्तथैवास्य कर्तव्यश्चारुकर्णिकः। पुष्टिश्लिष्टायतभुजस्तनुताम्रनखाङ्गुलिः। मध्येन त्रिवलीभङ्गशोभितेन सुचारुणा। स्त्रीरूपधारिणी क्षौणी कार्य्या तत्पादमध्यगा। तत्करस्थाङ्घ्रियुगलो देवः कार्य्यो जनार्दनः। तालान्तरपदन्यासः किञ्चिच्छिक्यान्तदक्षिणः। सुतुष्टया मही कार्य्या देवदर्शितविस्मिता। देवस्य कटिवासेन कार्य्यो जान्ववलम्बिना। वनमाला च कर्तव्या देवजान्ववलम्बिनी। यज्ञोपवीतं कर्तव्यं नाभिदेशमुपागतम्। उत्फुल्लकमलं पाणौ कुर्य्याद्देवस्य दक्षिणे। वामपार्श्वगतं शङ्खं शङ्खाकारन्तु कारयेत्। दक्षिणे तु गदा देवी तनुमध्या सुलोचना। स्त्रीरूपधारिणी कुर्य्या सर्वाभरणभूषिता। पश्यन्ती देवदेवेशं कार्य्या चामरधारिणी। कुर्य्यात्तन्मूर्ध्नि विन्यस्तं देवहस्तन्तु दक्षिणम्। वामभागगतश्चक्रः कार्य्यो लम्बोदरस्तथा। सर्वाभरणसंयुक्तो वृत्तविस्फारितेक्षणः। कर्त्तव्यश्चामरकरो देववीक्षणतत्परः। कुर्य्यात् देवकरं वामं विन्यस्तं तस्य मूर्द्धनि।

सङ्कर्षणस्य "वासुदेवस्वरूपेण कार्य्यः सङ्कर्षणः प्रभुः। स तु

शुक्लवपुः कार्यो नीलवासा यदूत्तम ! । गदास्थाने च मुषलञ्चक्रस्थाने च लाङ्गलम् । कर्त्तव्यौ तनुमध्यौ तु स्वरूपौ रूपसंयुतौ” ।

प्रद्युम्नस्य “वासुदेवस्वरूपेण प्रद्युम्नश्च तथा भवेत् । स तु दूर्वाङ्कुरश्यामः सितवासा विधीयते । चक्रस्थाने भवेच्चापो गदास्थाने तथा शरः । तथाविधौ तौ कर्त्तव्यौ यथा मुषललाङ्गलौ” ।

अनिरुद्धस्य “एतदेव तथा रूपमनिरुद्धस्य कारयेत् । पद्मपत्राभवपुषो रक्ताम्बरधरस्य तु । चक्रस्थाने भवेच्चर्म गदास्थानेऽसिरेव च । चर्म स्याच्चक्ररूपेण प्रांशुः खड्गो विधीयते । चक्रादीनां स्वरूपाणि किञ्चित्पूर्वं सुदर्शयेत् । रथ्याण्यायुधरूपाणि चक्रादीन्येव यादव ! । वामपार्श्वगताः कार्या देवानां प्रवराध्वजाः । सुपताकायुता राजन् ! यष्टिस्थास्ते यथेरितम्” ।

लक्ष्मीनारायणयोः विश्वकर्मशास्त्रात् “लक्ष्मीनारायणौ कार्यौ संयुक्तौ दिव्यरूपिणौ । दक्षिणस्था विभोर्मूर्त्तिर्लक्ष्मीमूर्तिस्तु वामतः । दक्षिणः कण्ठलग्नोऽस्या वामो हस्तः सरोजभृत् । विभोर्वामकरो लक्ष्म्याः कुक्षिभागस्थितः सदा । सर्वावयवसंपूर्णा सर्वालङ्कारभूषिता । सुरुनेत्रकपोलास्या रूपयौवनसंयुता । सिद्धिः कार्या समीपस्था चामरव्याहिणी शुभा । कर्तव्यं वाहनं सव्ये देवाधोभागगं सदा । शङ्खचक्रधरौ तस्य द्वौ कार्यौ पुरुषौ पुरः । वामनौ हारकेयूरकिरीटमणिभूषणौ । उपासकौ समीपस्थौ प्रभोर्ब्रह्मशिवात्मकौ । रचनां योगपट्टस्य शिक्षामञ्जलिमास्थितौ” ।

योगेश्वरस्य सिद्धार्थसंहितायाम् “पद्मासनसमासीनः किञ्चिन्मीलितलोचनः । घोणाग्रे दत्तदृष्टिश्च श्वेतपद्मोपरिस्थितः । वामदक्षिणगौ हस्तौ उत्तानावेकभागगौ । तत्करद्वयपार्श्वस्थे पङ्केरुहमहागरे । ऊर्द्ध्वे करद्वये तस्य पाञ्चजन्यः सुदर्शनः । योगस्वामी स विज्ञेयः पूज्यो मोक्षार्थियोगिभिः” । [त्रिमूर्त्तिशब्दे २८७८पृ० दर्शितानि चतुर्विंशतिमूर्त्तीनां लक्षणानि विष्णुधर्मोत्तरे उक्तानि चतुर्विंश-

हंसमत्स्यकूर्माणाम् “हंसोमत्स्यस्तथा कूर्मः कार्यास्तद्रूपधारिणः । शृङ्गी मत्स्यस्तु कर्त्तव्यो देवदेवो जनार्दनः” ।

“वराहस्य ‘ऐश्वर्यसंनिरुद्धश्च वराहो भगवान् हरिः । ऐश्वर्यशक्त्या दंष्ट्राग्रसमुद्धृतवसुन्धरः । नृवराहोऽथ वा कार्यः शेषोपरिगतः प्रभुः । शेषश्चतुर्भुजः कार्यः चारुरत्नफणान्वितः । आश्चर्योत्फुल्लनयनो देववीक्षणतत्परः । कर्त्तव्यौ सीरमुषलौ करयोस्तस्य यादव ! । सर्पभोगश्च कर्त्तव्यस्तथैव रचिताञ्जलिः । आलीढस्थानसंस्थानस्तत्पृष्ठे भगवान् भवेत् । वामारत्निगता तस्य योषिद्रूपा वसुन्धरा । नमस्कारपरा तस्य कर्त्तव्या द्विभुजा शुभा । यस्मिन् भुजे धरा देवी तत्र शङ्खकरो भवेत् । अन्ये तस्य कराः कार्याः पद्मचक्रगदाधराः । हिरण्याक्षशिरश्छेदचक्रोद्यतकरोऽथ वा । स्वतोद्धृतहिरण्याक्षः सुमुखो भगवान् भवेत् । मूर्त्तिमन्तमनैश्वर्यं हिरण्याक्षं विदुर्बुधाः । ऐश्वर्येणाविनाशेन स निरस्तोऽरिमर्दनः । नृवराहोऽथ वा कार्यो ध्याने कपिलवत् स्थितः । द्विभुजस्त्वथ वा कार्यः पिण्डनिर्वपनोद्यतः । समग्रक्रोडरूपेण बद्धदानवमध्यगः । नृवराहोवराहश्च कर्त्तव्यः क्ष्माविदारणः” ।

नरसिंहस्य “य एवं भगवान्विष्णुर्नरसिंहवपुर्द्धरः । ध्यानविधिः स एवोक्तः परमज्ञानवर्द्धनः । पीनस्कन्धकटिग्रीवः कृशमध्यः कृशोदरः । सिंहाननो नृदेहश्च नीलवासाः प्रभान्वितः । आलीढस्थानसंस्थानः सर्वाभरणभूषितः । ज्वालामालाकुलमुखो ज्वालाकेसरमण्डलः । हिरण्यकशिपोर्वक्षःपाटयन्नखरैः खरैः । नीलोत्पलाभः कर्तव्यो देवजानुगतस्तथा । हिरण्यकशिपुर्दैत्यस्तमज्ञानं विदुर्बुधाः” ।

वामनस्य “कर्त्तव्यो वामनो देवः सङ्कटैर्गात्रपर्वभिः । पीनगात्रश्च कर्तव्यो दण्डी चाध्ययनोद्यतः । दूर्वाश्यामश्च कर्तव्यः कृष्णाजिनधरस्तथा” ।

त्रिविक्रमस्य “सजलाम्बुदसङ्काशस्तथा कार्यस्त्रिविक्रमः । दण्डपाशधरः कार्यः शङ्खचक्रगदाधरः । शङ्खचक्रगदापद्माः कार्यास्तस्य सरूपिणः । निर्देहास्ते न कर्तव्या शेषं कार्यन्तु पूर्ववत् । एकोर्द्ध्ववदनः कार्यो देवो विस्फारितेक्षणः” ।

परशुरामस्य “कार्यस्तु भार्गवो रामो जटामण्डलदुर्दशः । हस्तेऽस्य परशुः कार्यः कृष्णाजिनधरस्य तु” ।

रामादीनाम् “रामो दाशरथिः कार्यो राजलक्षणलाञ्छितः । भरतो लक्ष्मणश्चैव शत्रुघ्नश्च महायशाः । तथैव सर्वे कर्तव्याः किन्तु मौलिविवर्जिताः” ।

कृष्णस्य “कृष्णश्चक्रधरः कार्यो नीलोत्पलदलच्छविः । इन्दीवरधरा कार्या तस्य साक्षाच्च रुक्मिणी” ।

बलभद्रस्य “सीरपाणिर्बलः कार्यो मुषली चैव कुण्डली । श्वेतोऽतिनीलवसनो मदाद्भ्रान्तलोचनः” ।

प्रद्युम्नस्य "चापबाणधरः कार्य्यः प्रद्युम्नश्च सुदर्शनः। राजन्निन्द्रमणिश्यामः श्वेतवासा मदोत्कटः"।

कामस्य "कामदेवस्तु कर्त्तव्यो रूपेणाप्रतिमो भुवि। अष्टबाहुः प्रकर्त्तव्यः शङ्खपद्मविभूषणः। चापबाणकरश्चैव मदादञ्चितलोचनः। रतिः प्रीतिस्तथा शक्तिर्मदशक्तिस्तथोज्ज्वला। चतस्रस्तस्य कर्त्तव्याः पत्न्यो रूपमनोहराः। चत्वारश्च करास्तस्य कार्य्या भार्य्यास्तनोपगाः। केतुश्च मकरः कार्य्यः पञ्चबाणमुखो महान्"।

अनिरुद्धशाम्बयोः "कर्त्तव्यश्चानिरुद्धोऽपि खड्गचर्म्मधरः प्रभुः। शाम्बः कार्य्यो गदाहस्तः सुरूपश्च विशेषतः। शाम्बानिरुद्धौ कर्त्तव्यौ पद्माभौ रक्तवाससौ"।

देवक्याः "पद्मपत्राग्रगौराभा कर्त्तव्या देवकी तथा"।

यशोदायाः "मधूकपुष्पसच्छाया यशोदापि सदा भवेत्"।

गोपालस्य "गोपालप्रतिमां कुर्य्यात् वेणुवादनतत्पराम्। बर्हापीडां घनश्यामां द्विभुजामूर्द्ध्वसंस्थिताम्"।

बुद्धस्य "काषायवस्त्रसंवीतः स्कन्धसंसक्तचीवरः। पद्मासनस्थो द्विभुजो ध्यायी बुद्धः प्रकीर्त्तितः"।

कल्किनः "खड्गोद्यतकरः क्रुद्धो हयारूढो महाबलः। म्लेच्छोच्छेदकरः कल्की द्विभुजः परिकीर्त्तितः"।

नरनारायणहरिकृष्णानाम् "दूर्व्वाश्यामो नरः कार्य्यो द्विभुजश्च महाबलः। नारायणश्चतुर्बाहुर्नीलोत्पलदलच्छविः। तयोर्मध्ये तु बदरी कार्य्या फलविभूषणा। बदर्य्यामग्रतो कार्य्यावक्षमालाधरावुभौ। अष्टचक्रे स्थितौ याने भूतयुक्ते मनोरमे। कृष्णाजिनधरौ दान्तौ जटामण्डलधारिणौ। पादेन चैकेन रथस्थितेन पादेन चैकेन च जानुगेन। कार्य्यो हरिश्चात्र नरेण तुल्यः कृष्णोऽपि नारायणतुल्यमूर्त्तिः"।

हयग्रीवस्य "भूतिमान् पृथिवीहस्तन्यस्तपादः सितच्छविः। नीलाम्बरधरः कार्य्यो देवो हयशिरोधरः। विन्द्यात् सङ्कर्षणांशेन देवो हयशिरोधरः। कर्त्तव्योऽष्टभुजो देवः तत्करेषु चतुर्ष्वथ। शङ्खं चक्रं गदां पद्मं स्वाकारं धारयेद्बुधः। चत्वारश्च कराः कार्य्या वेदानां देहधारिणाम्। देवेन मूर्द्ध्नि विन्यस्ताः सर्व्वाभरणधारिणः"।

कपिलस्य "प्रद्युम्नं विद्धि वैराग्यात् कापिलीं तनुमास्थितः। मध्ये तु करकः कार्य्यस्तस्योत्सङ्गगतः परः। दोर्युगं चापरं तस्य शङ्खचक्रधरं भवेत्। पद्मासनोपविष्टश्च ध्यानसंमीलितेक्षणः। कर्त्तव्यः कपिलो देवो जटामण्डलमण्डितः। वायुसंरोधपीनांसः पद्माङ्कचरणद्वयः। कृष्णाजिनधरो राजन्! ब्रह्मसूत्रोपवीतवान्। विमर्दन्महापद्मकर्णिकासंस्थितः प्रभुः। वैराग्यभावेन महानुभावो ध्यानस्थितः स्वम्परमं पदन्तत्। ध्यायंस्तथास्ते भुवनस्य गोप्ता साङ्ख्यप्रवक्ता पुरुषः पुराणः"।

व्यासस्य "कृशः कृष्णतनुर्व्यासः पिङ्गलोऽतिजटाधरः। सुमन्तुर्जैमिनिः पैलो वैशम्पायन एव च। तस्य शिष्याश्च कर्त्तव्याश्चत्वारः पारिपार्श्विकाः"।

वाल्मीकेः "गौरस्तु कार्य्यो वाल्मीकिस्तेजोमण्डलदुर्द्दशः। तपस्यभिरतः शान्तो न कृशो न च पीवरः"।

दत्तात्रेयस्य "वाल्मीकिरूपं सकलं दत्तात्रेयस्य कारयेत्"।

धन्वन्तरेः "धन्वन्तरिः प्रकर्त्तव्यः सुरूपः प्रियदर्शनः। करद्वयगतश्चास्य साम्रुतः कलसो भवेत्।

जलशायिनः "जलमध्यगतः कार्य्यः शेषपर्य्यङ्कतल्पगः। फणापुञ्जमहारत्नदुर्निरीक्ष्यशिरोधरः। देवदेवस्तु कर्त्तव्यस्तत्र सुप्तश्चतुर्भुजः। तथापरश्च कर्त्तव्यः शेषभोगाङ्गसंस्थितः। एकपादोऽस्य कर्त्तव्यो लक्ष्म्युत्सङ्गगतः प्रभोः। तथापरश्च कर्त्तव्यस्तत्र जानौ प्रसारितः। कर्त्तव्यो नाभिदेशस्थस्तथा तस्यापरः करः। तथैवान्यः करः कार्य्यो देवस्य तु शिरोधरः। सन्तानमञ्जरीधारी तथैवास्यापरो भवेत्। नाभीसरसिसम्भूते कमले तस्य यादव!। सर्व्वशास्त्रमयो देवः शाम्बत्कार्य्यः पितामहः। नाललग्नौ च कर्त्तव्यौ पद्मस्य मधुकैटभौ। स्वरूपधारीणि भुजङ्गमस्य कार्य्याण्यथास्त्राणि तथा समीपे। एतत्तवाग्रे यदुपुङ्गवोक्तं देवस्य रूपं परमस्य तस्य"।

गरुडस्य विष्णुधर्म्मोत्तरात् "तार्क्ष्यो मरकतप्रख्यः कौशिकाकारनासिकः। चतुर्भुजस्तु कर्त्तव्यो वृत्तनेत्रमुखस्तथा। स्कन्धोरुजानुचरणः पक्षद्वयविभूषितः। प्रभासंस्थानसौवर्णकलापेन विराजितः। छत्रन्तु पूर्णकुम्भञ्च करयोस्तस्य कारयेत्। करद्वयन्तु कर्त्तव्यं तथा विरचिताञ्जलि। यदास्य भगवान् पृष्ठे छत्रकुम्भधरौ करौ। न कर्त्तव्यौ तु कर्त्तव्यौ देवपादधरौ शुभौ। किञ्चिल्लम्बोदरः कार्य्यः सर्व्वाभरणभूषितः"।

रुद्रस्य "देवदेवं महादेवं वृषारूढन्तु कारयेत्। तस्य वक्त्राणि कार्य्याणि पञ्च यादवनन्दन!। सर्व्वाणि सौम्यरूपाणि दक्षिणं विकटं स्मृतम्। कपालमालिकं भीमं जगत्संहारकारकम्। त्रिनेत्राणि तु सर्व्वाणि वदनं तूत्तरं विना। जटाकलापे महति तस्य चन्द्रकला भवेत्। तस्योपरि-

ग्टाहृदनं पञ्चमन्तु विधीयते । यज्ञोपवीतं च तथा वासुकिं तस्य कारयेत् । दशबाहुस्तथा कार्यो देवदेवो महेश्वरः । अक्षमालात्रिशूलञ्च चर्मदण्डमथोत्पलम् । तस्य दक्षिणहस्तेषु कर्त्तव्यानि महाभुज ! । वामे च मातुलाङ्गञ्च चापादर्शं कमण्डलुम् । तथा चर्म च कर्त्तव्यं देवदेवस्य शूलिनः । वर्णस्तथास्य कर्त्तव्यश्चन्द्रांशुसदृशप्रभः" ।

ईशानादीनाम् "ईशस्तत्पुरुषाघोरवामजातक्रमेण तु । सितपीतकृष्णरक्तास्फटिकवर्णाः प्रकीर्तिताः । पञ्चवक्त्राः स्मृताः सर्वे दशदोर्दण्डभूषिताः । खड्गखेटधनुर्बाणकमण्डलुत्रिशूलिनः । वराभयकरोपेताः शूलपङ्कजपाणयः" । वामो, वामदेवः । जातः, सद्योजातः ।

मूर्त्त्यष्टकस्य "शर्वो भीमो महादेवः रुद्रः पशुपतिर्भवः । उग्र ईशान इत्यष्टौ मूर्त्तयः शिवसन्निभाः । जगाकृष्णचूड़ामणयो जटामण्डलमण्डिताः । त्रिनेत्रा वरखट्वाङ्गत्रिशूलवरपाणयः" ।

अर्द्धनारीश्वरस्य "अर्द्धं देवस्य नारी तु कर्त्तव्या शुभलक्षणा । अर्द्धन्तु पुरुषः कार्यः सर्वलक्षणभूषितः । ईश्वरार्द्धे जटाजूटं कर्त्तव्यं चन्द्रभूषितम् । उमार्द्धे तिलकं कुर्यात् सीमन्तालकं तथा । भस्मोद्धूलितमर्द्धन्तु अर्द्धं कुङ्कुमभूषितम् । नागोपवीतिनं चार्द्धमर्द्धं हारविभूषितम् । वामार्द्धे तु स्तनं कुर्यात् घनं पीनं सुवर्त्तुलम् । उमार्द्धे तु प्रकर्त्तव्यं सुवस्त्रेण च वेष्टितम् । मेखलां दापयेत्तत्र वज्रवैदूर्यभूषिताम् । अर्द्धलिङ्गं महेशार्द्धे सर्पमेखलमण्डितम् । पादञ्च देवदेवस्य वामपद्मोपरिस्थितम् । वामाङ्कं स्मृतं वाममञ्जनेन विभूषितम् । त्रिशूलमक्षसूत्रञ्च भुजयोः सव्ययोः स्मृतम् । दर्पणञ्चोत्पलं कार्यं भुजयोरपसव्ययोः" ।

दक्षिणामूर्त्तेः "दक्षेण मुद्रां प्रतिपादयन्तं सिताक्षमालां च तथोर्द्ध्वभागे । वामे च पुस्तामखिलागमाद्यां बिभ्राणमर्द्धेन सुधाधरं च । सिताम्बुजस्थं सितवर्णमीशं सिताम्बरालेपनमिन्दुमौलिम् । ज्ञानं मुनिभ्यः प्रतिपादयन्तं तं दक्षिणामूर्त्तिमुदाहरन्ति" ।

उमामहेश्वरयोः "युग्मं स्त्रीपुरुषं कार्यमुमेशौ दिव्यरूपिणौ । एकवक्त्रं तु देवेशं जटाचन्द्रार्द्धभूषितम् । द्विपाणि द्विभुजां देवीं सुमध्यां सुपयोधराम् । वामपाणिन्तु देवस्य देव्याः स्कन्धे नियोजयेत् । दक्षिणन्तु करं शस्त्रोत्पलेन विभूषितम् । देव्यास्तु दक्षिणं पाणिं स्कन्धे देवस्य कल्पयेत् । वामपाणौ तथा देव्या दर्पणं दापयेच्छुभम्" ।

हरिहरस्य "कार्यं हरिहरस्यापि दक्षिणार्द्धे सदा शिवः । वामार्द्धे हृषीकेशः श्वेतनीलाकृतिः क्रमात् । वरत्रिशूलचक्राभयधारिणौ बाहवः क्रमात् । दक्षिणे वृषभः पार्श्वे वामभागे विहङ्गराडिति" ।

विद्येश्वराणाम् विश्वकर्मशास्त्रात् "दिव्यर्षौ जटिलाः सदाः शरत्रिशूलधारिणः । पुटाञ्जलिकराः सर्वे विश्वे शावैकवक्त्रकाः । अनन्तश्च त्रिमूर्तिश्च सूक्ष्मः श्रीकण्ठ एव च । शिवः शिखण्डी कनेत्र एकरुद्रश्च ते क्रमात्" ।

१रुद्रभेदानां तत्राजस्य "अथ रुद्रान् प्रवक्ष्यामि बाहुभेदप्रकाश्वितान् । अजनामा महारुद्रो धत्ते शूलमथाङ्कुशम् । कपालं डमरुं सर्पं मुद्गरञ्च सुदर्शनम् । अभयञ्चासमथो दत्ते तथा वामे कराष्टके । तर्जनीमूर्द्ध्वतस्तत्र खट्वाङ्गलदधः करे । गदां च पट्टिशं घण्टां शक्तिपरशुकल्पिकाः" ।

२एकपादस्य "एकपादाभिधो बिभ्रत् सेडाढः खाड्गं वरम् । चक्रं डमरुकं शूलं मुद्गरं तदधोवरम् । अभयाक्षमधो वामे खट्वाङ्गोर्द्ध्वहस्तके । मदूघण्टां कपालञ्च कौमुदीं तर्जनीं घटम् । परशुञ्चक्रमाधत्ते क्रमाद्वाङ्गष्टके त्विति । अनेकभोगसम्पत्तिं कुरुते यजनात् सदा" ।

३अहिर्बुध्नस्य "अहिर्बुध्नो गदां चक्रं खड्गं डमरुकं शरौ । शूलाङ्कुशाक्षमालाश्च दक्षोर्द्ध्वाधःकरैः क्रमात् । तोमरं पट्टिशं चर्म कपालं तर्जनीं घटम् । शक्तिं परशुकं वामे दत्ते धारयत्यपि" ।

४विरूपाक्षस्य "विरूपाक्षस्ततः खड्गं शूलं डमरुकाङ्कुशौ । सर्पं चक्रं गदामक्षसूत्रं बिभ्रत् कराष्टके । खेटं खट्वाङ्गकं शक्तिं परशुं तर्जनीं घटम् । घण्टाकपालकौ चेति वामोर्द्ध्वादिकराष्टके" ।

५रेवतस्य "रेवतो दक्षिणे चापं खड्गशूलं गदामहिम् । चक्राङ्कुशाक्षमालास्तु धारयन्नूर्द्ध्वमादितः । धनुः खेटञ्च खट्वाङ्गं घण्टातर्जनिकां ततः । परशुं पट्टिशं पात्रं वामबाहुकेऽष्टकेऽर्पयन् । सर्वसम्पत्करो ह्येष जायते वाञ्छनाङ्कुशम्" ।

६हरस्य "हराख्यो मुद्गरञ्चैव डमरुं शूलमङ्कुशम् । गदासर्पाक्षसूत्राणि धारयन् दक्षिणोर्द्ध्वतः । पट्टिशन्तोमरं शक्तिं परशुं तर्जनीं घटम् । खट्वाङ्गं पट्टिकाश्चेति वामोर्द्ध्वादिक्रमेण तु" ।

७बहुरूपस्य "बहुरूपोदधद्वज्रं डमरुञ्च सुदर्शनम् । सर्पं

शूलाङ्कुशौ चैव कौमुदीं जपमालिकाम्। घण्टाकपालखट्वाङ्गं तर्जनीं कुण्डिकां धनुः। परशुं पट्टिशं चैव वामोर्द्धादिकराष्टके"।

८त्र्यम्बकस्य "त्र्यम्बकोऽपि दधच्चक्रं डमरुं मुद्गरं शरम्। शूलाङ्कुशाक्षिजाप्यञ्च दक्षोर्द्धादिक्रमेण हि। गदाखट्वाङ्गपालाक्षि कार्मुकं तर्जनीघटौ। परशुं पट्टिशं चेति वामोर्द्धादिकराष्टके"।

९सुरेश्वरस्य "सुरेश्वरोहि डमरुं चक्रं शूलाङ्कुशावपि। शरञ्च मुद्गरं चापं दक्षबाह्वष्टके त्विति। पङ्कजं परशुं घण्टां पट्टिशं तर्जनीं धनुः। खट्वाङ्गं कारयेत्तात वामेऽष्टकरपल्लवे"।

१०जयन्तस्य "जयन्तो दशमो रुद्रोऽप्यङ्कुशं चक्रमुद्गरौ। शूलाक्षिडमरुं बाणमलङ्कृतं यमे त्विति। गदा-खट्वाङ्ग-परशुं कपालं शक्तिं तर्जनीम्। धनुः कुण्डी-मथोर्द्धादि वामबाह्वष्टके दधत्"।

११अपराजितस्य "अथापराजितो दध्ये तोमरं वज्रमङ्कुशम्। शूलाक्षिचक्रडमरुमक्षमालां दधत् क्रमात्। शक्तिं खेटं गदां पात्रं तर्जनीं पट्टिशङ्कजम्। घण्टाञ्च-त्तरतश्चाथ धारयन्नूर्द्धमादितः। अजैकपादहिर्बुध्नः विरूपाक्षश्च रेवतः। हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः। रुद्रा एकादश प्रोक्ता जयन्तश्चापराजितः"।

स्कन्दस्य विष्णुधर्मोत्तरात् "कुमारः षण्मुखः कार्यः शिखण्डकविभूषणः। रक्ताम्बरधरः कार्यो मयूरवरवाहनः। कुक्कुटश्च तथा घण्टा तस्य दक्षिणहस्तयोः। पताका वैजयन्ती च शक्तिः कार्या च वामयोः"।

भैरवस्य "अथातो रूपनिर्माणं वक्ष्येऽहं भैरवस्य तु। लम्बोदरन्तु कर्त्तव्यं वृत्तपिङ्गललोचनम्। दंष्ट्राकरालवदनं फुल्लनासापुटन्तथा। कपालमालिनं रौद्रं सर्वतः सर्पभूषणम्। व्यालेन त्रासयन्तञ्च देवीं पर्वतनन्दिनीम्। सजलाम्बुदसङ्काशं गजचर्मोत्तरच्छदम्। बहुभिर्बाहुभिर्व्याप्तं सर्वायुधविभूषणम्। वृहत् शालप्रतीकाशैस्तथा तीक्ष्णनखैः शुभैः। आचीक्षतमिदं रूपं भैरवस्य प्रकीर्त्तितम्"।

महाकालस्य "महाकालस्य कथितमेतद्वै भैरवं शुभम्। देवीत्रासनकश्चास्य करे कार्यश्च पन्नगः। न चास्य पुरतः कार्या देवी पर्वतनन्दिनी। शुक्ला न कार्यास्य तथा न रक्ता समीपतो मातृगणप्रधाने। कार्यं तथा वत् परिवर्द्धमस्य यथाच कार्या बहुरूपरूपकाः"।

नन्दिनः "नन्दी कार्यस्त्रिनेत्रस्तु चतुर्बाहुर्महाभुजः। सिन्दूराभश्च सङ्काशो व्याघ्रचर्मपरिच्छदः। त्रिशूलभिन्दिपालौ च करयोस्तस्य कारयेत्। शिरोगतं तृतीयन्तु तर्जयन्तं तथापरम्। आलोकयानं कर्त्तव्यं दूरादागमिनं जनम्"।

वीरभद्रस्य "अनेनैव तु रूपेण वीरभद्रं विदुर्बुधाः"।

ज्वरस्य विश्वकर्मशास्त्रात् "ज्वरस्त्रिपादः कर्तव्यस्त्रिनेत्रैर्वदनैस्त्रिभिः। भस्मप्रहरणो रुद्रस्त्रिबाह्वर्याकुलेक्षणः"।

१वसूनां विश्वकर्मशास्त्रात् तत्र धरस्य "अथातः संप्रवक्ष्यामि वसुरूपाणि ते जय!। पद्माक्ष-मालिके तस्य दक्षवामकरद्वये। श्वेतशक्ती दधानोऽयं धराख्यो वसुरादिमः।

२ध्रुवस्य "मालां पुष्करबीजोत्थां चक्रं शक्तिं कमण्डलुम्। दक्षाधरादिसिक्तोऽन यस्य वसुः स ध्रुवो मतः"।

३सोमस्य "मुक्ताफललतामाला पङ्कजं शक्तिरङ्कुशः। स वसुः कीर्त्तितो वत्स सोमनामेति वै बुधैः"।

४आपस्य "सव्यशमोऽङ्गौ यस्य करौ स्तः शक्तिसंयुतौ। सीराङ्कुशान्वितौ चाधः स भवेदापसंज्ञकः"।

५अनिलस्य "अक्षमालोपवीत्युर्द्ध्वे स्त्रुचिशक्तिकराधधः। यस्य स्तः सोऽनिलाख्यः स्यात्षुभदः पञ्चमो वसुः"।

६नलस्य "स्रुवाक्षमालिके दध्ये वामे शक्तिकपालभृत्। सव्योर्द्धादिक्रमाद्युयोऽसौ नलाख्यस्तु वसुः स्मृतः"।

७प्रत्यूषस्य "खट्वाङ्गधरः सव्ये शक्तिखेटकरोऽन्यतः। प्रत्यूषाख्यो वसुश्चायं सप्तमः परिकीर्त्तितः"।

८प्रभासस्य "सव्ये दण्डकपालोऽसौ वामे तु स्त्रुचिशक्तिकः। शुभदः कीर्त्तितश्चायं प्रभासो-वसुरष्टमः। एते सर्वे समाख्याता नवकाञ्चनसन्निभाः। धरो ध्रुवश्च सोमः स्यादापश्चैवानिलो नलः। प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्त्तिताः"।

द्वादशादित्यानाम् "शृणु वत्स! प्रवक्ष्यामि सूर्यभेदांस्तु ते जय!। यावत् प्रकाशकः सूर्यो जायते मूर्त्तिभिर्यथा"।

१धातुः "दक्षिणे पौष्करी माला करे वामे कमण्डलुः। पद्माभ्यां शोभितकरा सा धात्री प्रथमा स्मृता"।

२मित्रस्य "शूलं वामकरे चास्याः दक्षिणे सोम एव च। मैत्री नाम त्रिनयना कुशेशयविभूषिता"।

३अर्यम्णः "प्रथमे तु करे चक्रं तथा वामे च कौमुदी। मूर्त्तिरार्यमणी ज्ञेया सपद्मैः पाणिपल्लवैः"।

४रुद्रस्य "अक्षमाला करे सव्ये चक्रं वामे प्रतिष्ठितम्। सा मूर्त्ती रौद्री ज्ञातव्या प्रधाना पद्मभूषिता"।

५वरुणस्य "चक्रं तु दक्षिणे यस्या वामे पाशः सुशोभनः।
सा वारुणी भवेन्मूर्तिः पद्मव्यग्रकरद्वया"।
६सूर्यस्य "कमण्डलुर्दक्षिणतो माला चाक्षमयी भवेत्। सा
भवेत् सम्मता सूर्यमूर्तिः पद्मविभूषिता"।
७भगस्य "यस्या दक्षिणतः शूलं वामहस्ते सुदर्शनः। भग-
मूर्तिः समाख्याता पद्महस्ता शुभा जय !"।
८विवस्वतः "अथ वामकरे माला त्रिशूलं दक्षिणे स्मृतम्।
विवस्वन्मूर्तिरेषा स्यात् पद्मलाञ्छनलक्षिता"।
९पूष्णः "पूषाख्यस्य भवेन्मूर्त्तिर्द्विभुजा पद्मलाञ्छिता। सर्व
पापहरा ज्ञेया सर्वलक्षणलक्षिता"।
१०सवितुः "दक्षिणे तु गदा यस्या वामे चैव सुदर्शनः। पद्म-
व्यग्रा तु साविती मूर्तिः सर्वार्थसाधनी"।
११त्वष्टुः "स्रुचं च दक्षिणे हस्ते वामे होमजकालिकाम्।
मूर्तिस्त्वाष्ट्री भजेत् सा स्यात् पद्मरुद्धकरद्वया"।
१२विष्णोः "सुदर्शनकरा सव्ये पद्महस्ता तु वामतः। एषा
स्यात् द्वादशी मूर्तिर्विष्णोरमिततेजसः। धाता मित्रो-
ऽर्यमा रुद्रो वरुणः सूर्य एव च। भगो विवस्वान्
पूषा च सविता दशमः स्मृतः। एकादशस्तथा त्वष्टा
विष्णुर्द्वादश उच्यते"।
मरुताम् "अथातः संप्रवक्ष्यामि रूपाणि मरुतां तव"।
१श्वसनस्य "अक्षमालाम्बुजे दक्षे वामे कुण्डीध्वजान्वितः।
श्वसनाख्यो भवेदेवं साधकानां सुसिद्धिदः"।
२स्पर्शनस्य "चक्राक्षमालिकापात्रध्वजयुक् स्पर्शनाभिधः"।
३वायोः "कपालध्वजपाशाब्जधारको वायुनामकः"।
४मातरिश्वनः "मातरिश्वा कपालाब्जध्वजपात्रकरो मतः"।
५सदागतेः "ध्वजाक्षसूत्रपात्राब्जं बिभ्राणः स्यात्सदागतिः।
६महाबलस्य "ध्वजासिखेटपात्राणि धारयंस्तु महाबलः"।
७बलवर्द्धनस्य "ध्वजपाशकपालाक्षिसंयुतो बलवर्द्धनः"।
८पृषदश्वस्य "पात्राक्षसूत्रपाशाब्जधारकः पृषदश्वकः"।
९गन्धवहस्य "अक्षसूत्रगदाकम्बुध्वजी गन्धवहाभिधः"।
१०गन्धवाहकस्य "कपालध्वजपात्राब्जहस्तको गन्धवाहकः"
११अनिलस्य "ज्ञानमुद्राक्षसूत्राब्जध्वजहस्तोऽनिलो मतः"।
१२आशुगस्य "अक्षमालासुनीलाब्ज-ध्वज-कम्बुष्टगाशुगः"।
१३सुखस्य "ध्वजबाणधनुःकुण्डीकरयुक् सुखदो भवेत्"।
१४कर्करस्य "ध्वजाब्जपात्रमुद्राश्च धारयेत् कर्कराभिधः"।
१५समीरणस्य "अब्जाक्षमालिकापात्रध्वजहस्तः समीरणः"।
१६समीरकस्य "ध्वजपात्रधनाब्जानि बिभ्राणस्तु समीरकः"।
१७अनुत्तमस्य "अक्षसूत्रध्वजाब्जानि मुण्डं बिभ्रदनुत्तमः।
१८मारुतस्य "अक्षमालाध्वजाब्जानि धारयन्मारुताभिधः"।
१९नागयोनिजस्य "पद्मक्षसूत्रपाशाब्जसंयुतो नागयोनिजः"।
२०जगत्प्राणस्य "ध्वजमुण्डाक्षपात्री स्याज्जगत्प्राणाभिधः
स्मृतः"।
२१पवनस्य "ध्वजसूत्रपाशाब्जसंयुतः पवनाभिधः"।
२२वातस्य "खट्वाङ्गध्वजखेटानि बिभ्राणो वातसंज्ञकः"।
२३प्रभञ्जनस्य "ध्वजाक्षमृगपात्राणि धारयंस्तु प्रभञ्जनः"।
२४पवस्य "अक्षसूत्रध्वजाब्जाक्षिपाणियुक् पवनामकः"।
२५नभस्वतः "शूलाब्जध्वजपात्राणि नभस्वानिति धारयन्"।
२६अतिबलस्य "ध्वजाङ्कुशाक्षमुण्डानि बिभ्राणोऽतिबलो मतः"
२७तरस्विनः "सध्वजाम्बुजपात्राङ्कुस्तरस्वी नाम कीर्त्तितः"।
२८द्रावणस्य "टङ्कमुण्डध्वजाब्जानि धारयन् द्रावणो मतः"।
२९देवयक्षकस्य "ध्वजाक्षतर्जनीपात्रपाणियुग् देवयक्षकः"।
३०गात्रजाड्यस्य "अक्षमालाकुठाराब्जध्वजयुग्गात्रजाड्यकः"।
३१अधरस्य "घण्टाक्षध्वजमुण्डाब्जानि धारयन्नधराभिधः"।
३२जर्द्धदृशः "बोधिपल्लवसूत्राब्जध्वजहस्तः सदोर्द्धदृक्"।
३३गतिरोधनस्य "अक्षसूत्रध्वजाशोकपात्रयुक् गतिरोधनः"।
३४पाणिकस्य "पाणिको नाम विज्ञेयो बाणाक्षध्वजमुण्डयुक्"।
३५साधकस्य "ध्वजाक्षवटपात्राणि धारयन् साधको मतः"।
३६विश्वपूरकस्य "बीजपूरध्वजाब्जाक्षसंयुतो विश्वपूरकः"।
३७जगदाश्रयस्य "घण्टाक्षध्वजमालाभिः संयुतो जगदाश्रयः"
३८विश्वातिरिक्तस्य"विश्वातिरिक्तोनाम ध्वजलाञ्छनपाशयुक्"
३९कुजागरस्य "अक्षमालाकजे घण्टाध्वजौ बिभ्रत् कुजागरः"
४०विश्वोदरस्य "विश्वोदरो भवेदेष शङ्खशूलघटध्वजी"।
४१अग्रहस्य "अग्रहो नाम विज्ञेयो ह्यक्षबाणधनुर्घटी"।
४२तीव्रकस्य "श्रीफलाब्जाक्षपात्राणि धारयंस्तीव्रको मतः"।
४३सुवहस्य "शक्तिमुण्डध्वजपाशी सुवहोऽयं प्रकीर्तितः"।
४४बीजवर्द्धनस्य "अक्षसूत्रध्वजपाशपात्रयुक् बीजवर्द्धनः"।
४५भद्रजवस्य "ध्वजपाश-कपालाब्जैर्युतो भद्रजवो मतः"।
४६पुष्करोद्भवस्य "टङ्कपाश-ध्वजाब्जानि धारयन् पुष्करोद्भवः"।
४७अजिनीपतेः "पलाशपत्रपाशाब्जध्वजहस्तोऽजिनीपतिः"।
४८व्यक्तमूर्त्तेः "जम्बुबीज-ध्वजा-ब्जाक्षपाणियुग्व्यक्तमूर्तिकः"।
४९विश्वगस्य "परिघाक्षध्वजाब्जानि धारयन् विश्वगो मतः।
सर्वे चतुर्भुजा ज्ञेया युवानः कुटिलभ्रुवः। सव्योर्द्ध-
द्युत्तरोर्द्धानुक्रमेणायुधधारिणः। रक्ताश्च महावीर्याः
सर्वभूषणभूषिताः। धूम्रवर्णा मृगारूढाः सर्वे ते शबला-
युक्ताः। इति तेऽत्र समाख्याता शुभदास्तु मरुद्गणाः
संख्ययैकोनपञ्चाशत् सर्वरोगापनुत्तये"। स्कान्दपुरा०

साध्यानां ब्रह्माण्डपुराणे “साध्याः पद्मासनगताः कमण्डलुकृताञ्जलिनः । धर्मपुत्रा महात्मानो द्वादशामरपूजिताः”
विष्णुधर्मोत्तरे “मनोनुमन्ता प्राणश्च नरयानश्च वीर्यवान् । चित्तिर्हयो, नयश्चैव हंसो नारायणस्तथा । प्रभवो विष्णुर्विभुश्च साध्या द्वादश जज्ञिरे” ।
अश्विनोः “पद्मपत्रसवर्णाभौ पद्मपत्रसमाम्बरौ । द्विभुजौ देवभिषजौ कर्त्तव्यौ देहसंयुतौ । सर्वाभरणसम्पन्नौ विशेषाद्वारुलोचनौ । तयोरौषधयः कार्या दिव्या दक्षिणहस्तयोः । वामयोः पुस्तके कार्ये दर्शनीये तथा नृप ! । एकस्य दक्षिणे पार्श्वे वामे चान्यस्य यादव ! । नारीयुगं प्रकर्त्तव्यं सुरूपञ्चारुदर्शनम् । तयोश्च नामनी प्रोक्ते रूपसम्पत् तथाकृतिः । मधूकपुष्पसङ्काशा रूपसम्पत् प्रकीर्त्तिता । आकृतिः कथिता लोके शरकाण्डनिभा तथा । रत्नभाण्डकरे कार्ये चन्द्रशुक्लाम्बरे तथा” ।
रेवन्तस्य “पृष्ठस्थः सूर्य्यवत् कार्यो रेवन्तस्य तथा प्रभुः” ।
यक्षाणां मयसंग्रहे “तुन्दिला द्विभुजाः कार्या निधिहस्ता मदोत्कटः । गदी वैश्रवणः श्रेष्ठो नृपाकल्पसमो वरः । सिद्धार्थो मणिभद्रश्च सुमना नन्दनो यथाः । कण्डूतिः पाञ्चकः शङ्खो मणिमान् पद्मरामकौ । सर्वभोजी पिङ्गाक्षचतुरो मन्दराश्रयः । शुभद्रचन्द्रप्रद्योतमेघवर्णजयावहाः । द्युतिमान् केतुमान् श्वेतोमौलिमान् विजयाकृतिः । पद्मवर्ण-महाघास-पुष्पदन्ताः सुदर्शनाः । पूर्णमास-हिरण्याक्ष-शतजिह्व बलाहकाः । बलार्कविपुलौ पद्मनाभः कुसुदवीरकौ । सुगन्ध इत्यमी यक्षास्तेषां राजा धनाधिपः” ।
राक्षसादीनां मयदीपिकायाम् “रक्तवस्त्रधराः कृष्णा नखदीर्घाः सदंष्ट्रिकाः । कर्त्रीखट्वाङ्गहस्ताश्च राक्षसा घोररूपिणः । हेतिः प्रहेतिः यज्ञघ्नः शङ्कुश्च सनिबन्धनः । विद्युत्सर्जमनुष्यादपौरुषेयसुकेशिनः । उग्रमालोत्यमी प्रोक्ताः प्रधाना राक्षसाः किल । भूतास्तथैव दानाश्च दीर्घवक्त्राः पिशाचकाः” ।
गन्धर्व्वरूपमाह विश्वकर्मा “वरदो भक्तलोकानां किरीटी कुण्डली गदी । कार्यस्तु रूपी गन्धर्वो वीणावाद्यरतस्तथा” ।
वासुकेस्तत्रैव “अनन्तो रक्तकायश्च सितपङ्कजमालिकः । शतसाहस्रभोगोऽहिः शिरःकुवलयान्वितः” ।
तक्षकादिनागरूपमाह मयः “श्वेतदेहश्च कर्त्तव्यः स्फुरन्मौक्तिकसन्निभः । रक्ताक्षः स्वस्तिकोपेतः सुतेजास्तक्षको महान् । कृष्णः कर्कोटक कण्ठे शुक्ररेखात्रयान्वितः । रक्तपद्मनिभः पद्मः शिरःशुक्लः सविद्रुमः । शङ्खवर्णो महापद्मो मस्तके कृष्णशूलधृक् । हेमाभः शङ्खपालः स्यात् सितरेखाधरो गले । कुलिको रक्तदेहस्तु चन्द्रार्द्धकृतमस्तकः । द्विजिह्वा वाङ्मयत्सप्तफणामणिसमन्विताः । अक्षसूत्रधराः सर्वे कुण्डिकापुच्छसंयुताः । एकभोगास्त्रिभोगाश्च ह्येतज्जाताः सुतादयः” ।
पितॄणाम् विष्णुधर्मोत्तरे “कुशपद्मविष्टरस्थाः पितरः पिण्डपाणिनः” । ते च वायुपुराणोक्ता यथा
“आभास्वरा बर्हिषदो अग्निष्वात्तास्तथैव च । क्रव्यादाः सोमपाश्चैव आज्यपाश्च सुकालिनः” ।
विश्वदेवानाम् “क्रतुर्दक्षो वसुः सत्यः कालको धुरिलोचनौ । पुरूरवा माद्रवाश्च विश्वे देवा दश स्मृताः । विदेहास्तु प्रकर्त्तव्या दक्षिणे बाणपाणयः । कर्त्तव्या वामभागे तु शरासनपरायणाः” ।
प्रसङ्गादस्त्ररूपाण्यपि तत्र विश्वकर्मोक्तानि यथा
“षड्त्रिंशदङ्गुले खड्गशक्ती तालाधिकौ मतौ । शूलपाशौ पद्मशङ्खौ तालमात्रौ प्रकीर्त्तितौ । गदा द्वितालपाशश्च गोलकोऽष्टप्रमाणतः । बाणो द्वितालको दण्डो द्विगुणो द्वादशाङ्गुलः । कपालं पङ्कजं चर्म पाशं खड्गोऽङ्कुशो मतः । डमरुस्तथा घण्टा छुरिका षोड़शाङ्गुला । वज्रं तत् पुरुषस्थूलं पङ्क्तयोऽतिदृढो बली । शक्तिस्तु योषिदाकारा लोहिताङ्गी वृकाश्रिता । दण्डोऽपि पुरुषः कृष्णो घोरो लोहितलोचनः । खड्गश्च पुरुषः श्यामशरीरः क्रुद्धलोचनः । पाशः सप्तफणः सर्पपुरुषः पुच्छसंयुतः । ध्वजस्तु पुरुषः पीतो व्यात्तास्यो महाबलः । गदा पीतप्रभा कन्या सुपीनजघनस्थला । त्रिशूलं पुरुषो दिव्यः सभ्रूः श्यामकलेवरः । शङ्खोऽपि पुरुषो दिव्यः शुक्लाङ्गः शुभलोचनः । हेतिर्वङ्कतिथी सा स्त्री भिन्दिः श्यामतनुः पुमान् । शरः स्यात् पुरुषो दिव्यो रक्ताङ्गो दिव्यलोचनः । धनुः स्त्री पद्मरक्ताभा मूर्ध्नि पूरितचापधृत् । एवमस्त्राणि भूतानि जानीयात् परमेश्वरे । भक्तानां चैव सर्वेषां मूर्ध्नि स्वायुधलाञ्छनम् । भुजौ द्वौ तु प्रकर्त्तव्यौ स्वाम्बलम्नौ सदा बुधैः” ।
धर्मज्ञानवैराग्यैश्वर्याणाम् “धर्मं ज्ञानं च वैराग्यमैश्वर्यं च तथैव हि । सितरक्तपीतकृष्णसिंहरूपाः प्रकीर्त्तिताः” ।
पृथ्व्याः विष्णुधर्मोत्तरे “शुक्लवर्णा मही कार्या दिव्याभर-

णभूषिता । चतुर्भुजा सौम्यवपुश्चन्द्रांशुसदृशाम्बरा । रत्नपात्रं शस्यपात्रं पात्रमोषधिसंयुतम् । पद्मं करे च कर्त्तव्यं भुवो यादवनन्दन ! । दिग्गजानां चतुर्णाञ्च कार्या पृष्ठगता तथा । सर्व्वौषधियुता देवी शुक्लवर्णा ततः स्मृता” ।

लवणोदस्य “लवणोदः प्रकर्त्तव्यो द्विभुजः सर्व्वसिद्धये । धत्तेऽक्षमालिकां दक्षे वामे पात्रं तु रत्नभृत् । सोत्तरीयो पवती च पाटलाभः सुवस्त्रधृक् । बर्हिःपवित्रपाणिस्तु लाभदो भूतिमण्डितः” ।

क्षीरोदस्य “क्षीरोदः श्वेतवर्णस्तु द्विभुजो रत्नकुण्डलः । मकरस्थोऽम्बुजं दक्षे वामे तु कलसं दधत्” ।

दधिमण्डोदस्य “दधिमण्डोद एवात्र विज्ञेयो वारिजासनः । दण्डं शङ्खं च बिभ्राणो द्विभुजोऽसौ जटायुतः” ।

घृतोदस्य “घृतोदः कपिलो ज्ञेयः कुलीरस्थो जटाधरः । कमलपीतं पात्रञ्च घटं बिभ्रत्तु दोर्द्वये” ।

इक्षूदस्य “इक्षूदोऽत्र प्रकर्त्तव्यो गोमूत्रसदृशच्छविः । दर्दुरस्थो घटं दण्डं बिभ्राणो नीलकुण्डलः” ।

सुरोदस्य “सुरोदो गण्डकान्तस्थो ज्ञेयो गोमेदसन्निभः । सुद्गरं कुण्डिकां बिभ्रत् द्विभुजो भूतिवर्द्धनः” ।

स्वादूदस्य “स्वादूदो मौक्तिकाभासो दर्दुरस्थो सुवेशधृक् । सुक्तास्रुताद्यपात्रे च धारयन् सर्पभूषणः । वैदूर्यसदृशाः सर्व्वे द्विभुजाः कलसान्विताः । पङ्कजस्थाः प्रकर्त्तव्याः देवतास्नपनाय तु” ।

द्वीपादीनाम् विष्णुधर्म्मोत्तरात् “द्वीपश्चैलगाः सर्व्वे कामरूपधरा यतः । प्रेङ्खायुधान्विताः कार्य्याः स्वस्वचिह्नधरा नराः” ।

दिशाम् “पूर्व्वा१ गजगता बाला रक्तवर्णा तु दिग्भवेत् । पङ्कजस्था प्रतिज्ञेया करेणुकृतहस्तका । हृष्टहृष्टा हृष्टकाया पद्माभा पूर्व्वदक्षिणा२ । रथस्था दक्षिणा३ पीता तथा स्यात् प्राप्तयौवना । उष्ट्रगा कृष्णपीता च तरुणी दक्षपश्चिमा४ । यौवनाद्विच्युता कृष्णा पश्चिमा५ तुरगस्थिता । आसन्नपलिता नीला मृगगा तदनन्तरा६ । श्वेता नरगता वृद्धा तथा भवति चोत्तरा७ । अतिवृद्धा वृषस्था च शुक्ला पूर्व्वोत्तरा८ भवेत् । अधस्तात्९ पृथिवीतुल्या चोर्द्ध्वा१० गगनसन्निभा” ।

१दिक्पतीनाम् तत्रेन्द्रस्य “चतुर्दन्ते गजे शक्रः श्वेतः कार्य्यः सुरेश्वरः । वामोत्सङ्गगता कार्य्या तस्य भार्य्या शची नृप ! । नीलवस्त्रा सुवर्णाभा सर्व्वाभरणवांस्तथा । तिर्य्यग्ललाटकस्ताक्ष्र्यः कर्त्तव्यश्च विभूषितः । शक्रश्चतुर्भुजः कार्य्यो द्विभुजा च तथा शची । पद्माङ्कुशौ च कर्त्तव्यौ वामदक्षिणहस्तयोः । वामं शचीपृष्ठगतं द्वितीयं वज्रसंयुतम् । वामे शच्याः करे कार्य्या रम्याः सन्तानमञ्जरी । दक्षिणं पृष्ठविन्यस्तं देवराजस्य कारयेत्” ।

२अग्नेः “रक्तं जटाधरं वह्निं कारयेद्धूम्रवाससम् । ज्वालामालाकुलं सौम्यं त्रिनेत्रं श्मश्रुधारिणम् । चतुर्बाहुं चतुर्दंष्ट्रं देवेशं वायुसारथिम् । चतुर्भिश्च शुकैर्युक्ते धूमचिह्नरथे स्थितम् । वामोत्सङ्गगता स्वाहा शक्रस्येव शची भवेत् । रत्नपात्रकरा देवी वह्नेर्दक्षिणहस्तयोः । ज्वालात्रिशूले कर्त्तव्ये त्वक्षमाल्यञ्च वामके” ।

३यमस्य “सजलाम्बुदसच्छायः तप्तचामीकराम्बरः । महिषस्थश्च कर्त्तव्यः सर्व्वाभरणवान् यमः । नीलोत्पलाभां धूम्रोर्णां वामोत्सङ्गे च कारयेत् । धूम्रोर्णा द्विभुजा कार्य्या यमः कार्य्यश्चतुर्भुजः । दण्डखड्गावुभौ कार्य्यौ यमदक्षिणहस्तयोः । ज्वाला त्रिशूला कर्त्तव्या त्वक्षमाला च वामके । दण्डोपरि मुखं कार्य्यं ज्वालामालाविभूषणम् । धूम्रोर्णादक्षिणो हस्तो यमपृष्ठगतो भवेत् । वामे तस्याः करे कार्य्यं मातुलाङ्गं सुदर्शनम् । पार्श्वे तु दक्षिणे तस्य चित्रगुप्तं तु कारयेत् । आपीच्यवेशं स्वाकारं द्विभुजं सौम्यदर्शनम् । दक्षिणे लेखनी तस्य वामे पत्रं तु कारयेत् । वामे पाशधरः कार्य्यः कालो विकटदर्शनः” ।

निर्ऋतेः “विरूपाक्षो विवृत्तास्यः प्रांशुदंष्ट्रोज्ज्वलाननः । ऊर्द्ध्वकेशी खरस्थश्च द्विबाहुर्भीषणाननः । कर्णेन कृष्णरक्ताङ्गः कृष्णाम्बरधरस्तथा । सर्व्वाभरणवान् दंष्ट्रासङ्गैर्दण्डधरस्तथा । भार्य्याश्चतस्रः कर्त्तव्या देवी च निर्ऋतिस्तथा । कृष्णाङ्गी कृष्णवदना पाशहस्ता तु वामतः” ।

वरुणस्य “सप्तहंसे रथे कार्य्यो वरुणो यादसाम्पतिः । स्निग्धवैदूर्य्यसंकाशः श्वेताम्बरधरस्तथा । किञ्चित्प्रलम्बजठरो मुक्ताहारविभूषितः । सर्व्वाभरणवान् राजन् ! महादेवश्चतुर्भुजः । वामभागगतं केतुं मकरं तस्य कारयेत् । छत्रं तु सुसितं मूर्द्ध्नि भार्य्या सर्व्वाङ्गसुन्दरी । वामोत्सङ्गगता कार्य्या मध्ये तु द्विभुजा नृप ! । उत्पलं कारयेत् वामे दक्षिणे देवपृष्ठगम् । पद्मपाशौ करे कार्य्यौ देवदक्षिणहस्तयोः । शङ्खञ्च रत्नपात्रञ्च वामयोस्तस्य कारयेत् । भागे तु दक्षिणे गङ्गा मकरस्था सचामरा । देवी पद्मकरा कार्य्या चन्द्रगौरी वरानना । वामे तु

यमुना कार्या कूर्मसंस्था सचामरा। नीलोत्पलकरा सौम्या नीलनीरजसन्निभाः"।

वायोः "वायुरम्बरवर्णस्तु तदाकाराम्बरो भवेत्। काष्ठपूरितचक्रस्तु द्विभुजो रूपसंयुतः। गमनेच्छुः शिवा भार्या तस्य कार्या च वामतः। कार्यो गृहीतचक्राङ्कः कराभ्यां पवनो द्विजः। तथैव देवी कर्त्तव्या शिवा परमसुन्दरी। व्याहतास्यस्तथा कार्यो देवो व्याकुलमूर्द्धजः"।

धनदस्य विष्णुधर्मोत्तरात् "कर्तव्यः पद्मपत्राभो वरदो नरवाहनः। चामीकराभो वरदः सर्वाभरणभूषितः। लम्बोदरश्चतुर्बाहुर्वामपिङ्गललोचनः। आपीच्यवेषः कवची हारभारी मनोहरः। द्वे च दंष्ट्रे मुखे तस्य कर्तव्ये श्मश्रुधारिणः। वामेन विभवा कार्या मौलिस्तस्यारिमर्दन!। वामोत्सङ्गगता कार्या ऋद्धिर्देवी वरप्रदा। देवपृष्ठगतं पाणिं द्विभुजायास्तु दक्षिणम्। रत्नपात्रधरं कुर्यात् वामं रिपुनिसूदन!। गदाशक्ती च कर्तव्ये तस्य दक्षिणहस्तयोः। सिंहार्कलक्षणं केतुं, शिविकामपि पादयोः। शङ्खपद्मनिधी कार्यौ सरूपौ निधिसंस्थितौ। शङ्खपद्माङ्कविन्यस्तं वदनं तस्य पार्श्वयोः"

आकाशस्य "नीलोत्पलाभं गगनं तद्वर्णाम्बरधारि च। चन्द्रार्कहस्तं कर्तव्यं द्विभुजं सौम्यदर्शनम्"।

व्योम्नः "चतुरस्रं भवेन्मूलं ततो वृत्तं महाभुज। तत्तुल्यचतुरस्रञ्च मेरुवत् संस्थितं शुभम्। भद्रपीठमयः प्रोक्तो व्योमभागस्तृतीयकः। स्तम्भवच्चतुरस्रस्य मध्यभागः प्रकीर्तितः। भद्रपीठवदन्यच्च तत्र पद्मं निवेशयेत्। शुभाष्टपत्रं तन्मध्ये कर्णिकायां दिवाकरः। पत्राष्टके न्यसेत्तस्य दिक्पालान् सर्वतोदिशः"।

ध्रुवस्य "विष्णुरूपधरः कार्यो ध्रुवो ग्रहगणेश्वरः। चक्ररश्मिकरः श्रीमान् द्विभुजः सौम्यदर्शनः"।

रवेः मत्स्यपुराणात् "रविः कार्यः शुभश्मश्रुः सिन्दूरारुणसुप्रभः। आपीच्यवेषः स्वाकारः सर्वाभरणभूषितः। चतुर्बाहुर्महातेजा कवचेनाभिसंवृतः। कर्तव्या रशना चास्य पानीयाङ्गेति संज्ञिताः। रश्मयस्तस्य कर्तव्या वामदक्षिणहस्तयोः। ऊर्द्ध्वं स्रग्दामसंस्थाना सर्वपुष्पचिता शुभा। स्वरूपरूपः स्वाकारो दण्डः कार्योऽस्य वामतः। दक्षिणे पिङ्गले भागे कर्तव्यश्चातिपिङ्गलः। आपीच्यवेषौ कर्तव्यौ तावुभावपि यादव!। तयोर्मूर्ध्नि च विन्यस्तौ करौ कार्यौ विभावसोः। लेखनीपत्रके कार्ये पिङ्गलश्चातिपिङ्गलः। चर्मशूलधरो देवस्तथा यत्राभिधीयते। सिंहो ध्वजश्च कर्तव्यस्तथा सूर्यस्य वामतः। चत्वारश्चास्य कर्तव्यास्तनयास्तस्य पार्श्वयोः। रेवन्तश्च यमश्चैव मनुद्वितयमेव च। ग्रहराजो रविः कार्यो ग्रहैर्वा परिवारितः। राज्ञी सवर्णा छाया च तथा देवी सुवर्च्चसा। चतस्रश्चास्य कर्तव्याः पत्न्यश्च परिपार्श्वयोः। एकचक्रे च सप्ताश्वे षडश्वे वा रथोत्तरे। उपविष्टस्तु कर्तव्यो देवो ह्यरुणसारथिः"।

विष्णुधर्मोत्तरे तु "पद्मासनः पद्मकरः पद्मगर्भदलद्युतिः। सप्ताश्वरथसंस्थश्च द्विभुजश्च सदागतिः"।

चन्द्रस्य मत्स्यपुराणे "चन्द्रः श्वेतवपुः कार्यः श्वेताम्बरधरः प्रभुः। चतुर्बाहुर्महातेजाः सर्वाभरणभूषितः। कुमुदौ च सितौ कार्यौ तस्य देवस्य हस्तयोः। कान्तिर्मूर्त्तिमती कार्या तस्य पार्श्वे तु दक्षिणे। वामे शोभा तथा कार्या रूपेणाप्रतिमा भुवि। चिह्नं तथास्य सिंहाङ्कं वामपार्श्वेऽर्कवद्भवेत्! दशाश्वे च रथे कार्यो द्विचक्रे वरसारथौ"। विष्णुधर्मोत्तरे तु "श्वेतः श्वेताम्बरधरः श्वेताश्वः श्वेतभूषणः। गदापाणिर्द्विबाहुश्च कर्तव्यो वरदः शशी"।

भौमस्य मत्स्यपुराणात् "भौमोऽग्नितुल्यः कर्तव्यस्त्वष्टाश्वे काञ्चने रथे"। विष्णुधर्मोत्तरे "रक्तमाल्याम्बरधरः शक्तिशूलगदाधरः। चतुर्भुजो मेषगमो वरदः स्यादराहुतः"।

बुधस्य "विष्णुतुल्यो बुधः कार्यो भौमतुल्ये तथा रथे"।

"गुरोः "तप्तजाम्बूनदाकारो द्विभुजश्च बृहस्पतिः। पुस्तकं चाक्षमालाञ्च करयोस्तस्य कारयेत्। सर्वाभरणयुक्तश्च तथा पीताम्बरो गुरुः"।

शुक्रस्य "अष्टाश्वे काञ्चने दिव्ये रथे दृष्टिमनोरमे। शुक्रः श्वेतवपुः कार्यः श्वेताम्बरधरस्तथा। द्वौ करौ कथितौ तस्य निधिपुस्तकसंयुतौ। दशाश्वे वा रथे कार्यो राजते भृगुनन्दनः"।

शनेः "कृष्णवासास्तथा कृष्णः शनिः कार्योऽसिताननः। दण्डाक्षमालासंयुक्तः करद्वितयभूषणः। कार्ष्णायसे रथे कार्यस्तथैवाष्टतुरङ्गमे"।

राहोः "रौप्ये रथे तथाष्टाश्वे राहुः कार्यो विचक्षणैः। कम्बलं पुस्तकं कार्यं भुजेनैकेन संयुतम्। करमेकन्तु कुर्य्याच्च शस्यशून्यन्तु दक्षिणम्"।

केतोः "विश्वकर्मशास्त्रात् "भौमवच्च तथा रूपं केतोः कार्यं

विजानता । केवलं चास्य कर्त्तव्याः दश राजंस्तुरङ्गमाः" ।
शुक्लपक्षस्य प्रतिपदः "तिथयोऽथाधुनोच्यन्ते प्रतिपद् द्विभुजा-
कृता । मेषगा शक्तिपात्रा सा सितपक्षादिमा मता" ।
द्वितीयायाः "द्वितीया हंसगा शुभ्रा पात्रपुस्तकधारिणी" ।
तृतीयायाः "तृतीया वृषगा गौरी शूलपात्रधरा मता" ।
चतुर्थ्याः "नीलोत्पलदलाभासा चतुर्थी मूषकस्थिता । परशुं
बिभ्रती पात्रं पीतवस्त्राऽहिसंयुता" ।
पञ्चम्याः "पङ्कजस्था प्रवालाभा फणामस्तकभूषणा । शङ्खं
मुद्रां तथा पात्रं बिभ्राणा पञ्चमी मता" ।
षष्ठ्याः "मयूरगाऽरुणा षष्ठी पात्रकुक्कुटधारिणी" ।
सप्तम्याः "ताम्रवर्णाब्जपात्रा सा हयस्था सप्तमी मता" ।
अष्टम्याः "घण्टापात्रधरा गोस्था गोक्षीरधवलाऽष्टमी" ।
नवम्याः "नवमी सिंहगा शुभ्रा पाशपात्रधरा शुभा" ।
दशम्याः "कृष्णवर्णा तुलापस्था दशमी दण्डपाणिनी" ।
एकादश्याः "एकादशी मृगाजस्था तुला-कर्त्तरिकायुता ।
सिंहाननाऽरुणगला-लम्बिता लासिनी परा" ।
द्वादश्याः "द्वादशी गरुडारूढा मेघवर्णारपाणिनी" अरं, चक्रम्
त्रयोदश्याः "चापबाणधरा गौरी मकरस्था त्रयोदशी" ।
चतुर्दश्याः "अजस्था पाटलाभा सा पलपात्रसुराम्बुता ।
नीलकण्ठेन्द्रगोपाभलोचनेयं चतुर्दशी" ।
पौर्णमास्याः "शशगा पूर्णिमा शुभ्रा मौक्तिकाभरणान्विता ।
सुधापूर्णघटा धीर ! वामदक्षिणबाहुका" ।
कृष्णप्रतिपदः "धूसरा कृष्णपक्षाद्या मारसंस्था चतुर्मुखा ।
अक्षसूत्रं स्रुवं पुस्तीं पात्रं धत्ते चतुर्भुजा" । [ण्डिका" ।
कृष्णद्वितीयायाः "द्वितीया कुमुदाभासा कूर्मस्था साक्षकु-
कृष्णतृतीयायाः "तृतीया तार्क्ष्यगा नीला शङ्खपात्रधरा
द्विदोः" । [धत्तेऽक्षमालिकां दण्डं पाशं पात्रञ्च दंष्ट्रिणी" ।
कृष्णचतुर्थ्याः "चतुर्थी कज्जलाभा सा महिषस्था चतुर्भुजा ।
कृष्णपञ्चम्याः "ग्राहस्था चन्द्रगौराभा पञ्चमी साक्षकुण्डिका" ।
कृष्णषष्ठ्याः "त्र्यक्षी मयूरगा रक्ता शक्तिकुक्कुटधारिणी ।
राकास्था द्विभुजा षष्ठी रक्तवस्त्रा सुभूषणा । नीलकुण्डल-
कण्ठा सा जटाखण्डेन्दुभूषिता" ।
कृष्णसप्तम्याः "इभस्था सप्तमी गौरी द्विभुजा वज्रपाणिनी" ।
कृष्णाष्टम्याः "प्रेतगा चाष्टमी रक्ता कृष्णग्रीवा सितांशुका ।
वज्रं खड्गं तथा खेटं पात्रं धत्ते चतुर्भुजा" ।
कृष्णनवम्याः "सर्पगा नवमी नीला दंष्ट्रिणी पात्रतर्जनी" ।
कृष्णदशम्याः "सिंहासनस्थिता शुभ्रा दशमी पीतकुण्डला ।
ज्ञानमुद्राक्षपात्रेयं पीतवस्त्राक्षमालिनी" ।

कृष्णैकादश्याः "एकादशी वृषस्थाब्जनीलशुभ्रारशूलिनी" ।
कृष्णद्वादश्याः "ताम्रवर्णा रथारूढा पात्रखेटासिपङ्कजा ।
द्वादशी शुभ्रवस्त्रेयं नीलकुण्डलभूषिता" ।
कृष्णत्रयोदश्याः "अशोककलिकाबाणचापपात्रा त्रयोदशी ।
मेचकाजानना श्यामा हरिद्रस्त्रा मदालसा । गदापात्र-
धरा गौरी निषिस्था वा त्रयोदशी" ।
कृष्णचतुर्दश्याः "द्विभुजा तुरगारूढा कृष्णवर्णा चतुर्दशी ।
खड्गभल्लधरा नीलकुण्डलांशुकभूषणा" ।
अमावस्यायाः "अमावास्या विधातव्या द्विदोर्मरकतप्रभा ।
दर्भासनस्थिता चेयं दर्भपिण्डधरा क्षमा" ।
नक्षत्राणाम् अश्विन्याः "अथ नक्षत्ररूपाणि कथयामि
समासतः । तत्रादावश्विनी ज्ञेया पद्मपत्रनिभा शुभा ।
अश्ववक्त्राम्बुजारूढा द्विभुजा च सिताम्बरा । दक्षे
दिव्यौषधीपात्रं बिभ्रती पुस्तकं करे" ।
भरण्याः "भरणी महिषारूढा गजवक्त्राञ्जनप्रभा । दण्ड-
पाशधरालुप्ता रक्तदृक् परिकीर्त्तिता" ।
कृत्तिकायाः "छागस्था छागवक्त्रासा पिङ्गभ्रूकेशलोचना । खड्गं
शक्तिञ्च बिभ्राणा पीनाङ्गजठराऽरुणा । कृत्तिका कीर्त्तिता
चेयं स्वर्णमालाविभूषणा" ।
रोहिण्याः "रोहिणी तुहिनाभासा सर्पवक्त्रा तु हंसगा ।
खड्गकुण्डीधरा देवी कीर्त्तिता हारभूषणा" ।
मृगशीर्षायाः "मृगानना हयास्था या नागवक्त्राऽऽम्रहायणी ।
गर्भस्था चन्द्रगौराभकुण्डिकाजपमालिनी" ।
आर्द्रायाः "शशमुखी कृष्णवर्णा तु रक्ताद्री शूलपाणिनी । नील-
वस्त्रा श्वारूढा चास्थिमालाविभूषणा" ।
पुनर्वसोः "शूकरास्यो बिडालस्थो गौरवर्णः पुनर्वसुः । खड्ग-
वज्राङ्कुशाभीतीर्बिभ्राणः परिकीर्त्तितः" ।
पुष्यस्य "छागारूढस्य मेघाभः पुष्योऽयं मधुपिङ्गदृक् । अक्ष-
चषकासनीकुण्डीं दधानोऽत्र चतुर्भुजः" ।
अश्लेषायाः "कोकास्या वा बिडालास्या रक्ताऽश्लेषा चतुर्भुजा ।
अक्षकुण्डीधरा द्वाभ्यां सर्पलिङ्गनधारिणी" ।
मघायाः "कपिवक्त्रा मघा श्यामा कृशाङ्गी च महोदरा ।
दर्भपिण्डधराऽजस्था द्विभुजेयमुदीरिता" ।
पूर्वफाल्गुन्याः "पूर्वा हस्तिमुखा स्कन्दस्था शूकनासाद्वयाऽ-
रुणा" । स्कः खड्गः चक्रं वा ।
उत्तरफाल्गुन्याः "व्याघ्राननोत्तरा गोस्था शुभ्रवर्णा चतुर्भुजा ।
दर्पिणी स्फल-खट्वाङ्गधारिणी परिकीर्त्तिता" ।
हस्तस्य "गौरारुणो तुलापाङ्गो हस्तनामा हयस्थितः ।

अक्षयज्ञभुजद्वन्द्वो भूषितः परिकीर्त्तितः" । तुलायां महिषः

चित्रायाः "व्याघ्रास्या महिषारूढा चित्रा गौरी चतुर्भुजा । अक्षकुण्डी सपुस्ती च सुधापूर्णवटान्विताः" ।

स्वात्याः "महिषस्था मृगारूढा गौरी श्यामायवा मता । पीना चतुर्भुजा स्वात्यचाङ्कुशध्वजपाणिनी" ।

विशाखायाः हर्य्यश्ववदना रक्ता नाभिपादान्तहेमभा । मेष-व्याघ्रस्थिता सेयं विशाखाङ्कुशवर्ज्जिणी । वामे, शक्तिमधः पात्रं बिभ्राणा हेमभूषणा" ।

अनुराधायाः "हरिस्था च बिडालास्या द्विभुजाम्बुजवर्ज्जिणी । मूर्द्धादिनाभिपादान्तश्यामगौरी क्रमेण तु । अनुराधा परिज्ञेया पद्मरागविभूषणा" ।

ज्येष्ठायाः "पीतवर्णा गजारूढा भल्लास्या वा मृगानना । अक्षसूत्रं प्रबिभ्रत्ते वामे ज्येष्ठाङ्कुशं शये" ।

मूलस्य "मूलरूपं विधातव्यं श्यामं कुणपवाहनम् । खड्गखेटधरं चोग्रं द्विभुजञ्च वृकाननम्" ।

पूर्व्वाषाढ़ायाः "कुम्भीरवदना नीला मर्कटस्था चतुर्भुजा । अक्षसूत्रं कजं पाशं पात्रं या बिभ्रती सदा । पूर्व्वाषाढ़ा समुद्दिष्टा पीतवस्त्राज्जभूषणा" ।

उत्तराषाढ़ायाः "सर्पेना चोत्तराषाढ़ा गौरवर्णा सुरूपिणी । नागबद्धजटाजूट-स्वर्णकुण्डलभूषिता । कृष्णनागधरा दक्षे वामे पुस्ती सकुण्डिका" ।

अभिजितः "अभिजित् कुमुदाभासा नक्रवक्त्रा तु हंसगा । वरस्रुकपुस्तकाभीतिसंयुतेयं चतुर्भुजा" ।

श्रवणस्य "नीलरुक् तुरगारूढः श्रवणो मर्कटाननः । शङ्खचक्रगदाज्ञानि बिभ्राणः स्वर्णभूषणः" ।

धनिष्ठायाः "तप्तचामीकराभासा निधिस्था पङ्कजासना । पक्वबिम्बाधरा तन्वी पीनोन्नतपयोधरा । दीर्घवेणी सपुष्पा सा मौक्तिकाभरणान्विता । चारुनेत्रा सुवेशाढ्या द्विभुजा वसनावृता । वराभयान्विता सौम्या धनिष्ठा परिकीर्त्तिता" ।

शततारायाः "शुभ्रा मकरगाऽश्वास्या द्विभुजा पाशपाणिनी । पाटला वस्त्रसंयुक्ता कीर्त्तिता शततारका" ।

पूर्व्वभाद्रपदायाः "पूर्व्वा भाद्रपदा शुभ्रा गोवक्त्रा छागगामिनी । मेषशीर्षधरा सेयं सीधुपात्रञ्च बिभ्रती" ।

उत्तरभाद्रपदायाः "गर्द्दभास्या वृषारूढा सिता भाद्रपदोत्तरा । पात्रञ्च डमरुञ्चैत्ते द्विभुजेयमुदीरिता" ।

रेवत्याः "रेवती करभास्या स्यात् द्विभुजा हस्तिगामिनी । कमलं कुण्डिकां धत्ते श्वेतवर्णा महात्मना" ।

योगानां विष्कुम्भस्य "विष्कुम्भः प्रथमो ज्ञेयः पीतवर्णस्तु षड्भुजः । रक्ताक्षो नीलकण्ठस्तु हस्तनेत्रः शुभीषणः । विशालभालो दीर्घाङ्गस्तुङ्गनासो जटाधरः । लम्बकर्णे-न्द्रनीलोत्थस्वर्णरत्नजकुण्डलः । सुक्ष्मनीलेन्द्रगोपाभवसनः स्वर्णभूषणः । मुद्गरं प्रथमे दक्षे द्वितीये कर्त्तरीमिह । तृतीये कुलिशं पाणौ वामाद्ये टङ्कमेव च । श्वेतपुच्छं द्वितीये च तृतीये चामृतं घटम् । बिभ्राणः पूजनीयोऽयं पीतपुष्पैः सुगन्धिभिः । कार्य्यनिष्पत्तये नूनमन्यथा विघ्नदायकः" ।

प्रीतेः "प्रीतिनामा द्वितीयस्तु जवाकुसुमसन्निभः । श्वेतवक्त्रो विशालाक्षो लम्बकर्णान्तकुण्डलः । भालेऽलितिलकोपेतः सौम्यो मुक्ताविभूषणः । श्वेतवस्त्रो जटामौलिरष्टबाहुर्लम्बोदरः । बन्धुजीवोत्थपुष्पाङ्कमल्लिकामादिमे शये । द्वितीये मोदकं पाणौ तृतीये कदलीफलम् । चतुर्थे पङ्कजञ्चैव वामाद्ये चामृतं घटम् । द्वितीये चात्र वै पात्रं सोमपूर्णं मनोहरम् । तृतीये कुलिशं हस्ते चतुर्थे चात्र वैध्वजम् । दधानो भूतये प्रीत्यै सर्व्वतापनिकृन्तने" ।

आयुष्मतः "आयुष्मांस्तु तृतीयोऽयं मौक्तिकाभोऽरुणोदरः । क्षौमवस्त्रान्वितश्चैव मुक्तासौवर्णभूषणः । दिग्भुजः प्रथमे दक्षे चाक्षसूत्रञ्च मौक्तिकम् । दूर्व्वामत्र द्वितीये तृतीये चूतपल्लवम् । चतुर्थे पङ्कजञ्चैव पञ्चमे चातपत्रकम् । सुधाकुम्भन्तु वामाद्ये बीजपूरपिधानकम् । पात्रं दध्यक्षतोपेतं द्वितीये करपल्लवे । तृतीये श्रीफलं हस्ते चतुर्थे पविमेव च । पञ्चमे चामरं हस्ते स्वर्णदण्डं सितं शुभम् । धारयन्नेष वै पूज्यो भोगायुष्यविवृद्धये" ।

सौभाग्यस्य "सौभाग्याख्यश्चतुर्थोऽत्र स्फटिकाभस्त्रिलोचनः । कम्बोकण्ठो महासत्त्वः सुन्दरः कुमुदाम्बरः । दशबाहुरयञ्चाक्षौ (शये)प्रथमे श्रीफलं करे । अक्षसूत्रं प्रवालोत्थं द्वितीये करपल्लवे । तृतीये कमलं हस्ते चतुर्थे वाचनारकम् । पञ्चमे शक्तिमत्रैव वामाद्ये पात्रमेव च । द्वितीये चामृतं कुम्भं तृतीये तु प्रकीर्णकम् । चतुर्थे दर्पणं हस्ते वेणुदण्डञ्च पञ्चमे । बिभ्राणः सौम्य सौभाग्यवृद्धये चायुषे श्रिये" । (पूजनीय इति शेष)

शोभनस्य "शोभनः पञ्चमो योगः श्वेतवक्त्रो वशी बली । शेषारूढः कृशाङ्गश्च प्रवालकृतकुण्डलः । शोणशुक्लाम्बरश्चैव मुक्ताविद्रुमभूषणः । अक्षसूत्रं सुहेमोत्थं प्रथमे दक्षिणे करे । द्वितीये पङ्कजं हस्ते तृतीये श्रीफलं शये । तुर्ये शक्तिं कराम्भोजे वामाद्ये वै कमण्डलुम् ।

द्वितीये स्वर्णजं पात्रं तृतीये चैव दर्पणम्। चतुर्थे चामरं पाणौ धारयद्भक्तिदोरिति। पूजनीयो महाभक्त्या सौख्यसौभाग्यवृद्धये"।

अतिगण्डस्य "अतिगण्डाभिधश्चाथ षष्ठो योगः प्रतीयते। गण्डारूढ़ांस्थितः क्रूरः कृष्णवक्त्रोऽर्कभूषणः। स्थूलो विवृत्तिस्तुङ्गनासिकोऽरुणभूषणः। पिङ्गश्मश्रुजटामौलिः षड्भुजः कटिस्त्रवान्। अक्षसूत्रं यमादिस्थे लोहजं करपल्लवे। एवं क्रमं द्वितीये च तृतीये चैव वारिजम्। पात्रं वामादिमे पाणौ द्वितीये शक्तिमेव च। पताकान्तु तृतीये वै दधानः कृष्णलोहिताम्। पूजनीयो महाभक्त्या दुष्टभीतिनिवृत्तये"।

सुकर्मणः "चतुर्भुजः सुकर्मा वै श्वेताङ्गश्चरत्सुतिः। नील-शुभ्रांशुकोपेतः स्वर्णनीलविभूषणः। रुद्राक्षमालिका-माक्षौ (यमे दक्षे) प्रथमे करपल्लवे। द्वितीये कमलं पाणौ वामादौ दण्डमेव च। पताकामल वै हस्ते द्वितीये सु-मनोहरा। बिभ्रत् हृद्धये नृणां कर्मारम्भशुभप्रदः"।

धृतेः "धृत्याख्यश्चाष्टमो योगः कथ्यते वसुवाहकः। भाला-रुणस्तु सर्वाङ्गे श्वेतवर्णोऽरुणाम्बरः। स्वर्णमुक्तेन्द्रनी-लाढ्यो विद्रुमान्वितभूषणः। मुक्ताक्षमालिकां दक्षे प्रथमे रत्नमुद्रिके। द्वितीये श्रीफलं पाणौ तृतीयेऽशो-कपल्लवम्। चतुर्थे हेमजं दण्डं वामाद्ये वै कमण्ड-लुम्। द्वितीये चामृतं पात्रं तृतीये चाम्बुजं करे। पताकामल वै तुर्ये बिभ्राणः श्रीविवृद्धये"।

शूलस्य "नवमः शूलनामाथ कथ्यते व्यक्तभागतः। ताम्रा-रुणगलश्चैव श्वेतवर्णः कृशोदरः। भालरेखात्रयश्चैव त्रिजटो नीलकुन्तलः। अर्कहस्तो यमादिस्थे त्रिशूलं चातिभीषणम्। द्वितीये मुद्गरं पाणौ तृतीये चाक्ष-सूत्रकम्। चतुर्थे श्रृङ्खलामल पञ्चमे दण्डमेव च। षष्ठे चैवाम्बुजं पाणौ कपालं चोत्तरादिमे। टङ्कं द्वितीयके चैव तृतीये वै कमण्डलुम्। घण्टांमन्तु करे तुर्ये पञ्चमे चैव दर्पणम्। पताकामल वै षष्ठे धारयन्नेव पूजितः। भवेदनिष्टनाशाय वैरिविध्वस्तये नृणाम्"।

गण्डस्य "गण्डाख्यः कथ्यते योगो दशमः सोऽयमल हि। गण्डः शुभ्रारुणाङ्गस्तु षड्भुजो मेचकाम्बरः। हरि-न्मणिविभूषाढ्यो नीलविद्रुमकुण्डलः। अक्षसूत्रं यमा-दिस्थे द्वितीये चन्द्रहासकम्। तृतीये वारिजं नील वामाद्ये वै कमण्डलुम्। द्वितीये खेटकं हस्ते पताकाञ्च तृतीयके। दधानो यज्वनस्तुष्ट्यै रोगानिष्टनिवृत्तये"।

वृद्धेः "एकादशस्तु वृद्ध्याख्यः कथ्यते ११रुद्रचन्द्रदोः। पाटा-रुणोऽपरश्वेतो भालविस्तीर्णमण्डलः। विचित्रवसनो-पेतो मुक्ताश्चौवर्णभूषणः। अक्षसूत्रं यमादिस्थे द्वि-तीये चामृतं घटम्। तृतीये नन्दकं पाणौ चतुर्थे बाणमेव च। पञ्चमे मुद्गरश्चैव षष्ठे सन्दंशमेव च। सप्तमे कम्बुमत्रैव पङ्कजञ्चाष्टमे शये। कुण्डिकामादिमे वामे द्वितीये पात्रमेव च। तृतीये खेटकं हस्ते चतुर्थे चैव कार्मुकम्। पञ्चमे टङ्कमत्रैव षष्ठे चैणविषाणकम्। सप्तमे चापमत्रैव पताकामष्टमे करे। बिभ्राणः श्रेयसो वृद्ध्यै चायुर्गोत्रधनस्य च"।

ध्रुवस्य "द्वादशो ध्रुवनामा वै योगश्चात्रैव कथ्यते। वक्षः-स्थलारुणश्चैव शुक्लसर्वाङ्ग एव च। माञ्जिष्ठवसनोपेतो हेममुक्ताविभूषणः। चतुर्दशभुजोपेतो दक्षिणाद्योऽ-क्षसूत्रकम्। द्वितीये तु कजं खड्गं तृतीये चैव मुद्ग-रम्। चतुर्थे सायकं हस्ते पञ्चमे चैव पङ्कजम्। षष्ठे मनोहरं शङ्खं सप्तमे चामरं शये। पात्रं सौम्यादिमे पाणौ द्वितीये चैव खेटकम्। टङ्कं तृतीयके हस्ते चतुर्थे चैव कार्मुकम्। पताकामल वै हस्ते पञ्चमे वरञ्चषष्ठे। षष्ठे मनोहरादर्शं सप्तमे चक्रमादधत्। पूजनीयो महाभक्त्या लक्ष्मीस्थैर्यादिहेतवे"।

व्याघातस्य "कथ्यते चाधुना योगो व्याघाताख्यस्त्रयोदशः। नाभ्यूर्द्ध्वं लोहितश्चायं श्वेतपूर्वस्त्रिलोचनः। अत्र-श्वेतारुणप्रान्तवसनः स्वर्णकुण्डलः। गले स्फटिकमालो-ऽसौ शेषरुद्राक्षभूषणः। मषिवर्ण्योऽलिवर्णस्तु षड्भुजः कुटिलाननः। पङ्कजं प्रथमे दक्षे द्वितीये परशुं शये। तृतीये चात्र वै पाशं वामे पात्रमिहादिमे। द्वितीये चामृतं कुम्भं तृतीये चाङ्कुशं शये। बिभ्राणोऽयं महापूज्यः कार्यभ्रंशनिवृत्तये"।

हर्षणस्य "अधुना कथ्यते योगो हर्षणाख्यश्चतुर्दशः। जानूर्द्ध्वं लोहितश्चायं ततपूर्वं श्वेतएव च। पाटलाभांशुकोपेतो मुक्तावैदूर्यभूषणः। भुजद्वादशकोपेतो लम्बकर्णो वि-शालदृक्। कौस्तुभं प्रथमे दक्षे द्वितीये चाक्षसूत्रकम्। तृतीये पङ्कजं हस्ते चतुर्थे बाणमेव च। पञ्चमे श-ङ्खमत्रैव षष्ठे पाशं कराम्बुजे। वामादिमे करे पात्रं द्वितीये चामृतं घटम्। तृतीये परशुं हस्ते चतुर्थे चैव कार्मुकम्। पञ्चमे तु करे चक्रं षष्ठे चैवाङ्कुशं शये। बिभ्राणः श्रेयसे भूयो मानोत्थ्यै सुखाय च"।

वज्रस्य "अथ पञ्चदशो योगः कथ्यते वज्रसंज्ञकः। श्वेताङ्कि-

काञ्चीं बिभ्राणः कृष्णग्रीवोऽरुणाननः। रोचनावसनोपेतो पिङ्गकर्णस्त्रिलोचनः। वज्रवैदूर्यभूषाढ्यः कटिसूत्रसमन्वितः। जटां त्रिवलयां बिभ्रत् दिग्भुजः परितो बली। अक्षसूत्रं यमादिस्थे द्वितीये बाणमेव च। तृतीये पङ्कजं हस्ते चतुर्थे कुलिशं शये। पञ्चमे परशुं पाणौ वामाद्ये चामृतं घटम्। द्वितीये कार्मुकं चैव तृतीये पात्रमुत्तमम्। चतुर्थे कुलिशं चैव पञ्चमे पाशमेव च। बिभ्रद्विजयसौख्याय लक्ष्मीसन्तानवृद्धये"।

सिद्धेः "कथ्यते चाधुना योगः सिद्धिनामा तु षोडशः। पादजङ्घारुणश्चोर्द्ध्वे श्वेतवर्णः शुभाननः। दिग्भुजो लोहितग्रीवो लोहितनिहिताम्बरः। मुक्ताहारमणिस्वर्णभूषणः सोमकुण्डलः। श्रीफलं प्रथमे दक्षे द्वितीये चैव पङ्कजम्। तृतीये पुस्तकं हस्ते चतुर्थे बाणमेव च। पञ्चमे च ध्वजं हस्ते वामे पात्रमिहादिमे। द्वितीये चामृतं कुम्भं तृतीये चैव चामरम्। चतुर्थे चैव कोदण्डं पताकामिह पञ्चमे। दधानः सिद्धये नृणां वाञ्छितार्थस्य सिद्धिदः"। (अस्यामृगित्यपरनाम)

व्यतीपातस्य "व्यतीपाताभिधश्चैव योगः सप्तदशस्त्विह। कण्ठेन लोहितश्चायं श्वेतग्रीवोऽलिभाननः। शुक्लमाञ्जिष्ठवसनो नीलस्वर्णजभूषणः। अष्टादशभुजो देवो भ्रुकुटीकुटिलाननः। दात्रमाद्यादिमे हस्ते द्वितीये लोष्टभेदनम्। अक्षसूत्रं तृतीये तु तुर्ये बाणं मनोहरम्। पञ्चमे शृङ्खलां लौहीं षष्ठे कवचमेव च। सप्तमे मुद्गरं हस्ते पङ्कजं चाष्टमे करे। कुद्दालं नवमे हस्ते शङ्खकामादिमोत्तरे। पात्रं द्वितीयके चैव स्वर्णकुम्भं तृतीयके। चतुर्थे कार्मुकं पाणौ पञ्चमे कर्त्रिकामिह। मुसलन्तु करे षष्ठे सप्तमे टङ्कमेव च। अष्टमे च ध्वजं हस्ते नवमे प्राङ्कुटं शये। दधानो वैरिवर्गस्य ध्वंसये चैव मृत्यवे। यज्वनः पुत्रसन्तत्यै लक्ष्मीभोगसुखाय च

वरीयसः "अष्टादशो वरीयांश्च कथ्यते योग उत्तमः। आकण्ठशुभ्रवर्णस्तु लोहितग्रीव एव च। श्वेतवक्त्रो विशालाक्षो लम्बकर्णोऽर्ककुण्डलः। स्वर्णाभरणभूषाढ्यो लक्षणानेकसंयुतः। अक्षसूत्रं यमादिस्थे द्वितीये वीजपूरकम्। चन्द्रहासं तृतीये तु तुर्ये बाणं कराम्बुजे। पञ्चमे शङ्खमत्रैव षष्ठे परशुमेव च। सप्तमे मुद्गरं हस्ते चाष्टमे दात्रमेव च। नवमे चात्र वै शङ्खं दशमे कमलं करे। एकादशे पविश्चात्र द्वादशे हलमेव च। दण्डं त्रयोदशे हस्ते शक्तिमस्त्रं चतुर्दशे। कञ्जं पञ्चदशे हस्ते षोडशेऽथ त्रिशूलकम्। घटं वामादिमे पाणौ पात्रमत्र द्वितीयके। तृतीये खेटकञ्चैव तुर्ये कार्मुकमेव च। चक्रन्तु पञ्चमे हस्ते षष्ठे चैव कुठारकम्। सप्तमे टङ्कमत्रैव चामरञ्चाष्टमे शये। नवमे डमरुञ्चैव दशमे चात्र वल्लकीम्। एकादशे शृङ्गिणञ्चैव द्वादशे मुसलं शये। त्रयोदशे तु वै पाशं गदामत्र चतुर्दशे। दर्पणं तिथिमे हस्ते ध्वजमत्रैव षोडशे। दधानः श्रेयसे भूत्यै सर्वभोगसुखाय च"।

परिघस्य "एकोनविंशकश्चात्र कथ्यते परिघोऽनघ!। पादजान्वन्तशुभ्रोऽसौ श्वेतवक्त्रो जटाधरः। मध्यारुणोदरे नीलरेखासंयुत एव च। नीलाम्बरो महासत्वो हेमरत्नजकुण्डलः। सुवर्णभूषणोपेतो षड्भुजः क्रूरदर्शनः। गदामाद्यादिमे हस्ते द्वितीये परिघं शये। तृतीये कमलं पाणौ वामाद्ये पात्रमेव च। द्वितीये पट्टिशं हस्ते तृतीये चात्र वै ध्वजम्। बिभ्राणः शत्रुनाशाय दुष्टभीतिनिवृत्तये"।

शिवस्य "अथ विंशतिमो योगः शिवाख्यश्चात्र कथ्यते। शुभ्रवर्णस्त्रिनेत्रस्तु मौक्तिकाभरणान्वितः। दक्षिणे प्रथमे हस्ते वीजपूरं मनोहरम्। अक्षसूत्रं द्वितीये च तृतीये कम्बुमेव च। चतुर्थे सायकं हस्ते पञ्चमे चन्द्रहासकम्। मुद्गरञ्च करे षष्ठे सप्तमे परशुं शये। कुद्दालमष्टमे पाणौ नवमे दात्रमेव च। दशमे चात्र वै शङ्खं पविमेकादशे त्विह। द्वादशे पञ्चशाखां वै लोष्टभेदनमेव च। त्रयोदशे हलञ्चैव शक्तिमस्त्रं चतुर्दशे। करे पञ्चदशे दण्डं षोडशे चाम्बुजं त्विह। त्रिशूलं मुनिचन्द्रे(१७) च वसुचन्द्रे(१८) च तोमरम्। वामादिमे शये पात्रं द्वितीये चामृतं घटम्। तृतीये चक्रमत्रैव चतुर्थे वै शरासनम्। पञ्चमे खेटकं हस्ते षष्ठे टङ्कं कराम्बुजे। कुठारं सप्तमे पाणौ प्राङ्कुटञ्चाष्टमे त्विह। नवमे चामरं शुभ्रं दशमे डमरुन्त्विह। शृङ्गिणमेकादशे हस्ते द्वादशे चैव दर्पणम्। अष्टादशे शये कुन्तं बिभ्राणः शान्तिवृद्धये"। (अत्र त्रयोदशादिसप्तदशान्तवामहस्तानां चिह्नवाक्यानि मुद्रितपुस्तके पतितानि विश्वकर्मशास्त्रे द्रष्टव्यानि)।

सिद्धस्य "एकविंशोऽधुना योगः सिद्धनामाभिधीयते। जवाकुसुमसङ्काशः शुभ्ररेखात्रयोदरः। जटाभिरष्टभिस्तस्य मुकुटः खण्डचन्द्रयुक्। शोणशुभ्रांशुकोपेतः स्फाटिकाभरणान्वितः। वसुपक्षभुजः२८ सौम्यस्तुन्दिलः सर्व-

न्नणः । तोमरश्चादिमे दक्षे द्वितीयेऽत्र त्रिशूलकम् । तृतीये पङ्कजं पाणौ तुर्ये दण्डं सुवर्णजम् । पञ्चमे तु करे शक्तिं षष्ठे वै लाङ्गलं शये । सप्तमे कुलिशं हस्ते खट्वाङ्गमेवैव चाष्टमे । नवमे ढालमेवैव दशमे तु परश्वधम् । मुद्गरं रुद्रहस्ते वै द्वादशे चन्द्रहासकम् । त्रयोदशे शये बाणं शङ्खमेव चतुर्दशे । कुम्भं वामादिमे हस्ते द्वितीये डमरुं शये । पात्रन्तु नवमे हस्ते दशमे वै कुठारकम् । टङ्कमेकादशे हस्ते द्वादशे चैव खेटकम् । त्रयोदशे शये चापं चक्रमेव चतुर्दशे । धारयन् पूजनीयोऽसौ भोगसौख्यश्रिये जये"। (अत्र तृतीयाद्यष्टमान्तवामहस्तचिह्नवाक्यानि मुद्रितपुस्तके पतितानि विश्वकर्मशास्त्रे दृश्यानि)।

साध्यस्य "साध्यो द्वाविंशकश्चैव कथ्यते योग एव सः । शुभ्रवर्णो विशालाक्षो वह्निरेखगलाननः । कौसुम्भवसनोपेतो वज्रवैदूर्यकुण्डलः । वेदवह्निभुजोपेतो मेखलानेत्रयुक् । अक्षसूत्रं यमादिस्थे द्वितीये वीजपूरकम् । तृतीये शक्तिमेवैव तुर्ये चैव त्रिशूलकम् । पञ्चमे सायकं हस्ते षष्ठे वज्रं कराम्बुजे । सप्तमे पङ्कजं पाणौ दण्डमेवैव चाष्टमे । नवमे तोमरं पाणौ दशमे शक्तिमेव च । एकादशे हलं हस्ते द्वादशे खट्वाङ्गमेव च । त्रयोदशे शये खड्गं परशुन्तु चतुर्दशे । करे पञ्चदशे रम्ये मुद्गरं कठिनाङ्कुलौ । षोडशे ढालमेवैव शङ्खं सप्तदशे त्विह । वामादिमे करे कुण्डीं द्वितीये पात्रमेव च । तृतीये चाभयं हस्ते तुर्ये डमरुमेव च । पञ्चमे कार्मुकं पाणौ षष्ठे चैवाङ्कुशं शये । सप्तमे तु ध्वजं दिव्यमष्टमे पाशमेव च । नवमे कुन्तमेवैव दशमे तु गदामिह । मुसलं रुद्रहस्ते वै द्वादशे चैव चामरम् । त्रयोदशे करे खेटं कुठारन्तु चतुर्दशे । टङ्कं पञ्चदशे पाणौ षोडशे चैव दर्पणम् । चक्रं सप्तदशे हस्ते दधानः श्रीविवृद्धये"।

शुभस्य "शुभनामा त्रयोविंशो योगश्चात्रैव कथ्यते । नीलकालिकशोणस्तु मौक्तिकाभस्त्रिलोचनः । शोणरेखाङ्कितग्रीवः शोणशुभ्रांशुकावृतः । मुक्ताविद्रुममाणिक्यभूषणः स्वर्णकुण्डलः । द्वात्रिंशद्बाहुसंयुक्तो जटाकपिलमण्डलः । वरं यमादिमे पाणौ द्वितीये चाक्षसूत्रकम् । तृतीये च त्रिशूलं वै तुर्ये बाणं कराम्बुजे । पञ्चमे पङ्कजं चैव षष्ठे कुलिशमेव च । सप्तमे शक्तिमेवैव दण्डं वै चाष्टमे करे । नवमे तोमरं हस्ते दशमे खट्वाङ्गिकामिह । हलमेकादशे चैव द्वादशे खड्गमेव हि । ढालं त्रयोदशे हस्ते मुद्गरं च चतुर्दशे । शङ्खं पञ्चदशे पाणौ षोडशे तु परश्वधम् । अभयं चादिमे वामे द्वितीये वै कमण्डलुम् । तृतीये पात्रमेवैव तुर्ये कार्मुकमेव च । पञ्चमे डमरुं पाणौ षष्ठे चाङ्कुशमेव च । सप्तमे वीजपूरं वै ध्वजं वै चाष्टमे करे । नवमे पानपात्रञ्च दशमे कुन्तमेव च । गदामेकादशे हस्ते द्वादशे चैव खेटकम् । चामरं मन्मथे १३ पाणौ टङ्कमेव चतुर्दशे । चक्रं पञ्चदशे चैव षोडशे तु कुठारकम् । बिभ्राणो भुक्तये पूज्यः सौन्दर्याय सुखाय च"।

शुक्रस्य "चतुर्विंशतिमश्चात्र शुक्राख्यः कथ्यतेऽधुना । चिबुके लोहितश्चायं चन्द्रगौरस्त्रिलोचनः । जटामुकुटखण्डेन्दुर्नीलरेखासुधाधरः । सिन्दूरवदनोपेतो भालालितिलकाङ्कितः । प्रवालमौक्तिकस्वर्णभूषणः कण्ठकौस्तुभः । खवह्नि३०बाहुसंयुक्तो रत्नमुद्रासमन्वितः । शूर्पाक्षमालिकां याम्ये प्रथमे करपल्लवे । द्वितीये च त्रिशूलं वै तृतीये बाणमेव च । परश्वधं करे तुर्ये पञ्चमे शङ्खमेव च । मुद्गरं चात्र वै षष्ठे सप्तमे ढालमेव च । अष्टमे तु करे खड्गं नवमे चैव लाङ्गलम् । दशमे खट्वाङ्गमेवैव तोमरं रुद्रसम्मिते । द्वादशे तु करे दण्डं शक्तिमेव त्रयोदशे । चतुर्दशे शये वज्रं करे पञ्चदशे कजम् । वीजपूरन्तु वामाद्ये द्वितीये पात्रमेव च । तृतीये कार्मुकं पाणौ तुर्ये चैव कुठारकम् । पञ्चमे चक्रमेवैव षष्ठे टङ्कं कराम्बुजे । सप्तमे चामरं पाणौ खेटकं चाष्टमे शये । नवमे तु गदामेव दशमे चाऽमृतं घटम् । कुन्तमेकादशे हस्ते द्वादशे पात्रमेव च । त्रयोदशे घण्टां चैव दर्पणञ्च चतुर्दशे । ध्वजं पञ्चदशे हस्ते दधानस्तु महाय च"।

ब्रह्मणः "पञ्चविंशतिमो योगो ब्रह्मनामा प्रतीयते । शोणगौरः पाण्डुराभश्चन्द्रगौरस्त्रिलोचनः । नीलकालिकशोणस्तु ग्रीवास्वर्णस्त्रिरेखिकः । जटात्रयप्रलम्बोऽसौ सौम्यः प्रहसिताननः । ताम्रवर्णांशुकोपेतः कण्ठरुद्राक्षमालिकः । मुक्तामाणिक्यहेमोत्थभूषणः सोमकुण्डलः । वियद्बाण५०भुजोपेतः किङ्किणीजालमेखलः । सौम्याक्षमालिकां दक्षे प्रथमे तलशोभने । द्वितीये तु वरं पाणौ खड्गमेव त्रयोदशे । हलं चतुर्दशे हस्ते खट्वाङ्गं पञ्चदशे त्विह । षोडशे चैव लोहासिं सुनिरम्बे च तोमरम् । अष्टादशे शये दण्डं शक्तिमेको.

नविंशके । करे विंशतिमे चक्रं त्वेकविंशे शये कजम् । द्वाविंशे चमसं हस्ते त्रयोविंशे शयेऽर्बुदम् । चतुर्विंशतिमे पाणौ सुदृढं लोहभेदनम् । पञ्चविंशे तु रत्नास्त्रं वामाद्ये वै कमण्डलुम् । द्वितीये चाभयं हस्ते तृतीये चात्र वै ध्रुवम् । तुर्ये खट्वाङ्गमेवेह कुद्दालं चैव पञ्चमे । षष्ठे शरासनं पाणौ सप्तमे कवचं शये । अष्टमे पट्टिशं हस्ते नवमे वै सुदर्शनम् । दशमे वीजपूरं वै पाशमेकादशे करे । द्वादशे चात्र वै टङ्कं खेटमत्र त्रयोदशे । चतुर्दशे कुठाराख्यं डमरुन्तिथिसंस्थिते । षोड़शे चामरं हस्ते कुम्भं सप्तदशे त्विह । अष्टादशे गदामत्र मुसलं नन्दचन्द्र१९मे । अङ्कुशं विंशके हस्ते पाशञ्चैवैकविंशके । द्वाविंशके ध्वजं शुभ्रं वीरभद्रन्त्रिपञ्चमे । जिने२४ सुनिर्मलादर्शं पञ्चविंशेऽजिनं शये, दधानो यज्वनो गोत्रपरमायुर्विवृद्धये" । (अत्र हतीयादित्रयोदशान्तदशहस्तचिह्नवाक्यानि मुद्रितपुस्तके पतितानि विश्वकर्म्मशास्त्रे द्रष्टव्यानि) ।

इन्द्रस्य "इन्द्रः षड्विंशकश्चात्र कथ्यते तव साम्प्रतम् । हस्तपादारुणश्चायं शोणशुभ्रायतेक्षणः । धम्मिल्लमल्लिकामाल्यचन्दनाद्यनुलेपनः । भालाङ्किततिलकश्चैव कर्णकुण्डलमेचकः । मुक्ताहारोज्ज्वलोरस्कः सर्व्वरत्नविभूषणः । शुभ्रपीतेन्द्रनीलाभवसनः सर्व्वलक्षणः । युग्मवाणा५२भुजोपेतो मनागरुणलोचनः । शक्तिमाद्यादिमे हस्ते द्वितीये मौक्तिकस्रजम् । तृतीये कमलं पाणौ चतुर्थे शुक्तिकां त्विह । स्रुवन्तु पञ्चमे पाणौ षष्ठे चात्र त्रिशूलकम् । सप्तमे चैव लोहासिं कुद्दालं चाष्टमे करे । नवमे पत्रिकाञ्चैव दशमे चन्द्रहासकम् । एकादशे हलं हस्ते द्वादशे टङ्कमेव च । तोमरं मन्मथे१३ पाणौ दण्डं चैव चतुर्दशे । करे पञ्चदशे शक्तिं षोड़शे कुलिशं शये । चक्रञ्च मुनिचन्द्राङ्के१७ वसुचन्द्रे१८ परश्वधम् । एकोनविंशके कम्बुं विंशके पुस्तकं त्विह । विष्टरं त्वेकविंशे वै द्वाविंशे चैव मुद्गरम् । चमसन्तु त्रयोविंशे चतुर्विंशे त्विहार्बुदम् । पञ्चविंशतिमे हस्ते लोष्टभेदनमेव च । षड्विंशे च तुरङ्गास्त्रं वामाद्ये चाभयं शये । द्वितीये कुण्डिकामत्र तृतीये वीजपूरकम् । तुर्ये वामे घृतं पात्रं पञ्चमे स्रुवमेव हि । षष्ठे खट्वाङ्गमेवेह सप्तमे डमरुं शये । अष्टमे प्राङ्कुटं पाणौ नवमे चैव कार्म्मुकम् । दशमे खेटकं हस्ते रुद्रे चैव कुठारकम् । द्वादशे चामरं हस्ते कुन्तमत्र त्रयोदशे । गदां चतुर्दशे चैव मुसलन्तिथिसंमिते । अङ्कुशं षोड़शे हस्ते पाशं सप्तदशे करे । पट्टिशं वसुचन्द्राङ्के१८ चक्रन्त्वेकोनविंशके । कवचं विंशके चैव दात्रञ्चैवैकविंशके । द्वाविंशके तु वै टङ्कं त्रयोविंशे ध्वजन्त्विह । वीरभद्रं चतुर्विंशे पञ्चविंशे तु दर्पणम् । अजिनं चात्र षड्विंशे विभ्राणः श्रीविवृद्धये" ।

वैधृतेः "वैधृत्याख्यस्तु वै योगः सप्तविंशतिमस्त्विह । शुभ्रवर्णो महारौद्रो शोणाक्षोणः स्मितानन । जटापञ्चप्रलम्बस्तु मेचकारुणकुण्डलः । नीलशोणसुवर्णाढ्यभूषणो मेचकाम्बरः । वेदबाण५४भुजोपेतो दृढतुङ्गकुचिः शुभन्धरः । अक्षसूत्रं यमादिस्थे द्वितीये वरमेव च । तृतीये चैव सन्दंशं तुर्ये शुक्तिं सरुद्रजाम् । पञ्चमे पङ्कजं पाणौ षष्ठे चात्र स्रुवन्तथा । सप्तमे सायकं पाणौ शालखड्गमिहाष्टमे । नवमे चैव कुद्दालं दशमे च त्रिशूलकम् । टङ्कमेकादशे हस्ते द्वादशे हलमेव च । त्रयोदशे तु वै खड्गं तोमरन्तु चतुर्दशे । करे पञ्चदशे दण्डं षोडशे शक्तिमेव च । वज्रं सप्तदशे पाणौ कवचं वसुचन्द्रमे१८ । परशुं नन्दचन्द्राङ्के१९ विंशके चार्बुदं करे । एकविंशे शये चैव लोष्टभेदनमेव च । द्वाविंशे वै तुरङ्गास्त्रं त्रयोविंशे तु शङ्कुकम् । पुस्तकन्तु चतुर्विंशे पञ्चविंशे तु विष्टरम् । षड्विंशे मुद्गरं पाणौ चमसं सप्तविंशके । वामादिमे करे कुण्डीमभयन्तु द्वितीयके । मीनं तृतीयके हस्ते चतुर्थे वीजपूरकम् । पञ्चमे पात्रमत्रैव षष्ठे चैव स्रुवं करे । सप्तमे कार्म्मुकं पाणौ डमरुं चाष्टमे करे । नवमे प्राङ्कुटं हस्ते खट्वाङ्गञ्चैव दिक्करे । चामरं रुद्रमे चैव द्वादशेऽत्र कुठारकम् । खेटं त्रयोदशे चैव कुन्तमत्र चतुर्दशे । गदां पञ्चदशे पाणौ षोड़शे मुसलन्त्विह । ऋष्टिं सप्तदशे हस्ते पाशमष्टादशे करे । पट्टिशं नन्दचन्द्राङ्के१९ वीरभद्रन्तु विंशके । एकविंशे शये टङ्कं द्वाविंशे चाजिनं करे । त्रयोविंशे तु वै चक्रं कवचं जिन२४हस्तके । पञ्चविंशे तु वै पात्रं षड्विंशे दर्पणं शुभम् । सप्तविंशे ध्वजं हस्ते धारयन् दुष्टनाशनम्" ।

करणानां वबस्य "करणानामथो वक्ष्ये रूपसम्बन्धिलक्षणम् । ववाभिधन्तु वै पीतं जटिलं रत्नकुण्डलम् । नीलवस्त्रन्तु रुद्राक्षभूषणं कण्ठपाण्डुरम् । चतुर्दशभुजोपेतं पिङ्गभ्रूलोचनत्रयम् । वरं यमादिमे हस्ते द्वितीये बाण-

मेव च। तृतीये कुलिशं पाशौ चतुर्थे चैव पङ्कजम्। मुद्गरं पञ्चमे चैव षष्ठे सन्दंशमेव च। सप्तमे चाङ्कुशं दिव्यं पञ्चशाखे महोदरे। प्रथमे चाभयं वामे द्वितीये तु शरासनम्। तृतीये पुस्तकं हस्ते चतुर्थे मुकुरं शये। टङ्कन्तु पञ्चमे पाणौ षष्ठे कर्त्तरिकामिह। करे तु सप्तमे चात्र नागपाशं दधच्छ्रिये"।

बालवस्य "बालवाख्यन्तु वै रक्तं नीलग्रीवं महोदरम्। श्वेतवस्त्रं जटाभारं पिङ्गलं तुङ्गनासिकम्। कण्ठरुद्राक्षमालं तद्भूतिमत्कालपाण्डुरम्। रसचन्द्र१६करोपेतं कव्यालम्नकरण्डकम्। प्रथमे मोदकं हस्ते दक्षिणे सुमनोहरे। द्वितीये केतकीपत्रं तृतीये शक्तिमेव च। चतुर्थे पङ्कजं पाणौ पञ्चमे वै सुदर्शनम्। षष्ठे सर्वायसं बाणं सप्तमे कुलिशं करे। सन्दंशमष्टमे हस्ते पात्रं वामादिमे त्विह। द्वितीये कुण्डिकामत्र तृतीये चैव पट्टिशम्। वीजपूरं करे तुर्ये पञ्चमे शङ्खमेव च। कोदण्डमत्र वै षष्ठे सप्तमे कुलिशद्वरे। अष्टमे पुस्तकं बिभ्रद्ध्याय विजयाय च"।

कौलवस्य "श्वेताङ्कर्णिकाभासं तृतीयं कौलवाभिधम्। रक्तकण्ठं पिकास्यं वै नीलश्वेताम्बराम्बरम्। रुद्राक्षसौवर्णभूषणं चन्द्रनीलकम्। अष्टादशभुजोपेतं किङ्किणीकटिसूत्रकम्। वरं चमादिमे हस्ते द्वितीये चाक्षसूत्रकम्। तृतीये स्वर्णजं दण्डं चतुर्थे चैव पुस्तकम्। पञ्चमे मोदकं हस्ते षष्ठे सन्दंशमेव च। सप्तमे डमरुं पाणौ वज्रमत्रैव चाष्टमे। नवमे शृङ्गिकामत्र शोणगुञ्जाद्यनामिकाम्। अभयं चादिमे वामे द्वितीये वै कमण्डलुम्। तृतीये चासवं पात्रं तुर्ये चाम्भोजमुत्तमम्। पञ्चमे चामरं शुभं षष्ठे दात्र कराम्बुजे। सप्तमे वल्लकीमत्र शृङ्गिं चैवाष्टमे करे। नवमे कदलीपत्रं दधत् सन्ततुखाय च"।

तैतिलस्य "चतुर्थं तैतिलं नाम श्यामवर्णं कृशोदरम्। शोणवस्त्रं जवापुष्पमालिकं तैत्तिराननम्। विंशत्पक्ष२० भुजोपेतं घण्टावद्धनितम्बकम्। प्रथमे दक्षिणे हस्ते श्रीफलं सुमनोहरम्। खड्गमत्र द्वितीये वै तृतीये चैव पुस्तकम्। अक्षसूत्रं करे तुर्ये पञ्चमे वायमेव च। षष्ठे सुदर्शनं दिव्यं सप्तमे कुलिशं त्विह। अष्टमे तु स्रुवं पाणौ नवमे चैव मुद्गरम्। दशमे चाङ्कुशं हस्ते पात्रं वामादिमे करे। द्वितीये खेटकं चैव तृतीये शारिजं शुभम्। चतुर्थे कुण्डिकामत्र पञ्चमे चैव कार्मुकम्। षष्ठे मनोहरं शङ्खं सप्तमे चामरं सितम्। स्रुवं चैवाष्टमे हस्ते नवमे टङ्कमत्र हि। दशमे तु करे पाशं बिभ्राणं यज्वनः श्रिये"।

गरस्य "पञ्चमं चात्र विज्ञेयं करणन्तु गराभिधम्। गोमुखं चित्रितग्रीवं धूसरं लोहिताम्बरम्। पक्षपक्ष२२भुजोपेतं शतपद्माक्षभूषणम्। चादिमे दक्षिणे शक्तिं द्वितीये चक्रमेव च। तृतीये श्रीफलं हस्ते चतुर्थे चैव पङ्कजम्। पञ्चमे पुस्तकं रम्यं षष्ठे बाणं मनोहरम्। सप्तमे गोदण्डं शृङ्गं कुलिशं चाष्टमे करे। नवमे वल्लकीमत्र दशमे वीरभद्रकम्। एकादशे तु सन्दंशं पञ्चशाखे मनोहरे। अभीतिमुत्तरादिस्ये द्वितीये शङ्खमत्र हि। पात्रमत्र तृतीये वै चतुर्थे चैव चामरम्। पञ्चमे डमरुं हस्ते षष्ठे चैव शरासनम्। सप्तमे कुण्डिकामत्र चाष्टमे दशचक्रकम्। नवमे तु करे वंशं दशमे चैव दर्पणम्। एकादशे तु रुद्राक्षं बिभ्रत् कीर्त्तिसुखश्रिये"।

वणिजः "वानरास्यं वणिक् धूम्रं पीतवस्त्रं कृशासनम्। जिन२४बाहुयुतं चेदं षष्ठं कनकभूषणम्। वरमाद्यादिमे हस्ते द्वितीये चाक्षसूत्रकम्। तृतीये शुक्तिकामत्र मोदकन्तु चतुर्थके। पञ्चमे कुलिशं हस्ते षष्ठे शक्तिं कराम्बुजे। सप्तमे वैणवं दण्डं खड्गमत्रैव चाष्टमे। नवमे पाशमत्रैव दशमे चैव वै ध्वजम्। एकादशे तुरङ्गाक्षं द्वादशे वै सुदर्शनम्। सौम्यादिमे करेऽभीतिं द्वितीये वै कमण्डलुम्। वीजपूरं तृतीयेऽत्र पानपात्रं चतुर्थके। पञ्चमे पञ्चवक्त्राक्षं षष्ठे चैव तु पट्टिशम्। सप्तमे चामरं हस्ते खेटकं चाष्टमे शये। नवमे चाङ्कुशं पाणौ दशमे हलमेव च। एकादशे करे रम्यं दर्पणं चातिनिर्मलम्। द्वादशे धारयत् शङ्खं लक्ष्मीसौभाग्यहेतवे"। (पञ्चवक्त्राक्षं पञ्चमुखरुद्राक्षम्)

भद्रायाः "व्याघ्रचर्माम्बरा भद्रा श्वेताभा गर्दभानना। सप्तबाहुसमायुक्ता त्रिपदा लोहभूषणा। कर्त्तिकामादिमे दक्षे द्वितीये तु गदामिह। तृतीये सायकं हस्ते चतुर्थे चन्द्रहासकम्। खेटमूर्द्धकरे वामे तदधश्चैव कार्मुकम्। पात्रमस्मादधो वामे धारयन्ती रिपोर्भिये"

शकुनेः "अष्टमं शकुनिप्रख्यं करणं हरितप्रभम्। प्रवालभूषणोपेतं शक्रनीलनिभाम्बरम्। रसपक्ष२६भुजोपेतमेकवक्त्रं कृशोदरम्। चादिमे दक्षिणे चक्रं द्वितीये वरमेव च। अक्षसूत्रं तृतीये तु तुर्ये चैव तु पङ्कजम्। प-

ञ्चमे मोदकं हस्ते षष्ठे वज्रं कराम्बुजे। सप्तमे तोमरं पाणौ शक्तिमत्रैव चाष्टमे। नवमे हस्तिजन्दन्तं दशमे चन्द्रहासकम्। एकादशे करे बाणं द्वादशे चाङ्कुशं शये। त्रयोदशे गदामत्र शङ्खं वामादिमे करे। अभयन्तु द्वितीयेऽत्र तृतीये वै कमण्डलुम्। वीजपूरं करे तुर्ये पञ्चमे पात्रमेव च। षष्ठे कराम्बुजे शृङ्गं सप्तमे कुन्तमेव च। परिघं चाष्टमे हस्ते दण्डन्तु नवमे करे। खेटकं दशमे पाणौ धनुरेकादशे शये। द्वादशे पात्रमत्रैव त्रिशूलन्तु त्रयोदशे। दधानं श्रेयसे भूत्यै विजयाय सुखाय च। तापाय चैव शत्रूणां विशेषेण समर्चितम्"।

चतुष्पदस्य "चतुष्पदाभिधं चात्र नवमं कथ्यते जय!। कपावर्णं चतुष्पादं चतुरास्यं जटान्वितम्। मनुष्यास्यन्तु वै पूर्वं दक्षिणं चैव गोमुखम्। अजास्यं पश्चिमन्तस्य चोत्तरं शूकराननम्। मनुष्याकारवत् सर्वं त्रिकपुच्छविनिर्गतम्। पीतवस्त्रं बृहत्कुक्षि नीलमुक्ताविभूषणम्। वसुपक्ष२८भुजोपेतं दीर्घनासं महाजवम्। दक्षिणाद्ये करे शक्तिं द्वितीये चाक्षसूत्रकम्। सुदर्शनं तृतीये तु चतुर्थे चैव पङ्कजम्। पञ्चमे मुद्गरं चैव षष्ठे मोदकमेव च। सप्तमे तु गदां पाणावष्टमे चाङ्कुशं शये। नवमे तु करे बाणं दशमे खड्गमेव च। एकादशे करे दन्तं द्वादशे शुक्तिमत्र हि। त्रयोदशे शये चात्र तोमरं सुदृढं शुभम्। चतुर्दशे तु वै वज्रं वामाद्येऽभीतिमेव च। कमण्डलुं द्वितीये वै तृतीये शङ्खमेव च। चतुर्थे वीजपूरं वै पञ्चमे टङ्कमेव च। षष्ठे पात्रं सुधापूर्णं सप्तमे च त्रिशूलकम्। अष्टमे पात्रमत्रैव नवमे धनुरेव च। दशमे खेटकं हस्ते दण्डमेकादशे करे। द्वादशे पट्टिशं पाणौ कुन्तमत्र त्रयोदशे। शृङ्गं चतुर्दशे बिभ्रद्गोत्वदृष्टौ सुपूजितम्"।

नागस्य "नागाख्यं दशमं रक्तं नीलवस्त्रं जटाधरम्। मनुष्याकारमेवैतन्मस्तकन्यस्ततत्फणम्। वियद्गुण३०भुजोपेतं मुक्तारुद्राक्षभूषणम्। प्रथमे मोदकं दक्षे द्वितीये चैव पङ्कजम्। अक्षसूत्रं तृतीयेऽत्र वरन्तुर्ये कराम्बुजे। पञ्चमे तु करे चक्रं षष्ठे वज्रन्तु वै शये। सप्तमे तोमरं पाणौ शक्तिमत्रैव चाष्टमे। नवमे सोज्ज्वलं दन्तं दशमे चन्द्रहासकम्। बाणमेकादशे हस्ते द्वादशे चाङ्कुशं शये। त्रयोदशे गदामत्र तुरुष्कास्त्रं चतुर्दशे। करे पञ्चदशे दात्रं वामे पात्रन्तु चादिमे। वीजपूरं द्वितीयेऽत्र तृतीये वै कमण्डलुम्। चतुर्थे चाभयं हस्ते पञ्चमे शङ्खमेव च। षष्ठे कराम्बुजे शृङ्गं सप्तमे कुन्तमुत्तमम्। पट्टिशं चाष्टमे हस्ते नवमे दण्डमत्र हि। दशमे खेटकञ्चैव धनुरेकादशे करे। द्वादशे पाशमत्रैव त्रिशूलञ्च त्रयोदशे। चतुर्दशे दशास्यं वै करे पञ्चदशेऽर्बुदम्। दधानं विजयारोग्यं कुर्वीताभयदं नृणाम्"। (दशास्यं दशमुखरुद्राक्षम्)

किन्तुघ्नस्य "एकादशन्तु किन्तुघ्नं करणं कथ्यतेऽधुना। गोक्षीरधवलं चैतत्पीतवस्त्रं हयाननम्। सर्वाभरणसंयुक्तं द्वात्रिंशद्बाहुसंयुतम्। वरञ्चैवादिमे दक्षे द्वितीये चाक्षसूत्रकम्। तृतीये सोज्ज्वलं चक्रं तुर्ये चाब्जं कराम्बुजे। पञ्चमे मोदकं हस्ते षष्ठे वै कुलिशं शये। सप्तमे तोमरं पाणौ शक्तिमत्रैव चाष्टमे। नवमे गजदन्तञ्च दशमे खड्गमुत्तमम्। एकादशे तु वै बाणं द्वादशे सृणिमेव च। त्रयोदशे गदामत्र डमरुञ्च चतुर्दशे। करे पञ्चदशे पुस्तीं परशुञ्चैव षोडशे। अभयञ्चादिमे वामे द्वितीये वै कमण्डलुम्। शङ्खमत्र तृतीये वै चतुर्थे वीजपूरकम्। पञ्चमे चासवं पात्रं षष्ठे शृङ्गं मनोहरम्। सप्तमे कुन्तमत्रैव चाष्टमे पट्टिशं शये। नवमे वैणवं दण्डं दशमे खेटमेव च। चापमेकादशे पाणौ द्वादशे पात्रमत्र हि। त्रयोदशे त्रिशूलं वै टङ्कमत्र चतुर्दशे। वीणामिष्विन्दु१५हस्ते च ध्वजञ्चैव तु षोडशे। धारयद्वैरिणां ध्वस्त्यै पूजनीयं विपश्चिता। विद्यालाभाय सन्तुष्टिविजयादिसुखार्थिना"। किंस्तुघ्नमिति वा पाठः।

राशीनां मेषस्य विष्णुधर्मोत्तरात् "मेषवक्त्रो नरो रक्तो द्विभुजः पङ्कजासनः। ज्ञानमुद्राकरः पीतवसनः कनकाङ्गदी"।

वृषस्य "वृषाननो नरः शुभ्रो रक्तवस्त्राक्षकुण्डिकः"।

मिथुनस्य "पुमान् गदी सवीणा च योषिच्च मिथुनं सितम्"।

कर्कटस्य "कर्कटः कपिलः श्वास्यः कूर्ममुद्राधरो नरः"।

सिंहस्य "सिंहवक्त्रोऽरुणोऽजस्थो द्विभुजोऽभयपात्रयुक्"।

कन्यायाः "शुक्लाम्बिभ्रत् सिता कन्या द्विभुजा पङ्कजासना"।

तुलायाः "तुलाधरो नरो गौरः पिङ्गनेत्रः कलासनः"।

वृश्चिकस्य "वृश्चिकस्थो नरः पिङ्गो द्विभुजो मर्कटाननः। दक्षे वृश्चिकमालाधृक् वामे पात्रं सुरायुतम्"।

धनुषः "अश्ववक्त्रो नरश्चापी ज्याकृष्टकरदक्षिणः"।

मकरस्य "अक्षकुण्डीधरो नीलो मृगवक्त्रो नरो हि सः"।

कुम्भस्य "मकरास्योऽसितोऽब्जस्थो रिक्तकुम्भो नरो घटः"।

मीनस्य "मत्स्ययुग्मस्थितः श्यामो मत्स्यहस्तो महोदरः । मत्स्यवक्त्रो नरो मीनो हरिन्मणिविभूषणः" ।

कालस्य विश्वकर्म्मशास्त्रात् "कालः करालवदनो नित्यञ्च विभीषणः । पाशहस्तश्च कर्त्तव्यः सर्पवृश्चिकरोमवान्" ।

निमेषस्य "निमेषस्तु भवेदत्र मेचकाभोऽर्द्धनीलदृक् । अक्षसूत्रं करे दक्षे ज्ञानमुद्राञ्चथोत्तरे । दधानो योगसंसिद्ध्यै पूजनीयो विपश्चिता" ।

काष्ठायाः "नीलवर्णा भवेत् काष्ठा पीतवस्त्रा त्रिलोचना । अष्टादशभुजोपेता ज्ञानपुस्तीसमन्विता" ।

कलायाः "शुक्लवर्णा कला ज्ञेया नीलवस्त्रा त्रिलोचना । व्योमवज्राङ्कुशदीप्तकण्ठलम्बितमालिका । शुक्लाक्षमालिकादक्षा वामपङ्कजसंयुता । पूजनीया विशेषेण ज्ञानविज्ञानहेतवे" ।

क्षणस्य "क्षणाभिधो भवेत् पीतः सुनिपक्षः सुमौक्तिकः । जटालिमौक्तिकोपेतचन्दनालिकपाण्डुरः । मुक्तासूत्रार्किहस्तोऽयं वामे स्वर्णकमण्डलुः" ।

१मुहूर्त्तानां तत्र दिने रौद्रस्य "मुहूर्त्तानधुना वक्ष्मि नामलक्षपृथक्फलैः । तत्रादिमस्तु रौद्राख्यः श्यामश्वेतारुणच्छविः । श्वेतवस्त्रो महातुङ्गो दक्षिणे सर्पमादधत् । वामे पात्रं सुधापूर्णं क्षुद्रकर्मप्रसिद्धये" ।

२सितस्य "सिताभिधो द्वितीयस्तु श्वेतवर्णो महोदयः । श्वेतशोणाभवस्त्रोऽयं श्वेतमुक्ताविभूषणः । दक्षिणे पङ्कजं शुभ्रं वामे चैव कमण्डलुम् । दधानस्तु श्रियै पूज्यो योगसिद्ध्यै सुखाय च" ।

३अजपस्य "तृतीयोऽप्याजपाख्यस्तु कृष्णः शुभ्रो महातनुः । दक्षिणे पङ्कजं नीलं वामे सर्पं महाफणम् । बिभ्रद्विपुलभोगाय पूजनीयो महाधिया" ।

४आर्य्यभटस्य "तुर्य्यश्चार्य्यभटाख्यस्तु नीलः शुभ्रो महोदरः । दक्षिणे पुस्तकं हस्ते वामे चैव त्रिशूलकम् । दधानः श्रेयसे भूत्यै विजयाय सुखाय च" ।

५सावित्रस्य "अधुना चैव सावित्रः पञ्चमः कथ्यते जय ! । श्वेतवर्णोऽश्ववक्त्रस्तु मेचकवसनान्वितः । पुस्तकं दक्षिणे हस्ते वामे कुण्डन्तु निर्व्रणम् । दरद्रोगविनाशाय पूजनीयोऽप्यहर्निशम्" ।

६वैराजस्य "वैराजश्चात्र वै षष्ठः श्यामवर्णो जटाधरः । दक्षिणे तु करे दण्डं वामे चैव स्रुवं करे । बिभ्रद्दृद्ध्यै च सौख्याय पूजनीयोऽतिभक्तितः" ।

७गन्धर्व्वस्य "सप्तमश्चात्र गन्धर्व्वस्ताम्रवर्णः कृशोदरः । दक्षिणे वज्रकौ पाणौ वामे शक्तिञ्च धारयन् । सौख्यसिद्ध्यै यशोवृद्ध्यै पूजनीयो विपश्चिता" ।

८अभिजितः (कुतपस्य) "अधुना चाभिजिन्नाम कथ्यतेऽष्टमः शुभः । पीतवर्णोऽतिहृस्वस्तु ताम्रवर्णो महोदरः । तृणहस्तद्वयोपेतः पूजनीयः सुखाप्तये । स एव कुतपो नाम विज्ञातव्यो मनीषिभिः । पितॄणां सुप्रियश्चैव पिण्डहस्तोऽथवाप्ययम्" ।

९रौहिणेयस्य "नवमो रौहिणेयाख्यो मुहूर्त्तः कथ्यते जय ! । शुभ्रवर्णो विशालाक्षो नीलवस्त्रोऽभ्रकुण्डलः । दक्षिणे पङ्कजं पाणौ वामे मोदकमेव च । दधानः सुखसम्पत्त्यै विजयारोग्यवृद्धये" ।

१०बलस्य "अधुना कथ्यते वत्स ! दशमस्तु बलाभिधः । गौरवर्णोऽरुणः श्वेतवसनः स्वर्णकुण्डलः । दक्षिणे तु करे शङ्खं वामे पङ्कजमादधत्" ।

११विजयस्य "एकादशोऽधुना ज्ञेयो मुहूर्त्तो विजयाभिधः । हेमवर्णो वृहद्गात्रः कृष्णश्वेतारुणांशुकः । अक्षसूत्रं करे दक्षे वामे चैव कमण्डलुम् । दधत् प्रजासुखार्थाय पूजनीयो विपश्चिता" ।

१२नैर्ऋतस्य "नैर्ऋताख्योऽधुना ज्ञेयो द्वादशस्तु मुहूर्त्तकः । नीलवर्णोत्पलमौलिः पीतवस्त्रो महाबलः । दक्षिणे तु करे चक्रं वामे चाभयमादधत्" ।

१३सन्मथस्य "त्रयोदशो भवेदत्र रक्तः सन्मथाभिधः । ताम्रवस्त्रो महौजस्को रत्नहेमजकुण्डलः । शोणपङ्कजदक्षस्तु वामकुण्डीसमन्वितः" ।

१४वरुणस्य "मुहूर्त्तः कथ्यते चात्र वरुणाख्यश्चतुर्दशः । मुक्ताफलनिभश्चैव मुक्ताहारविभूषणः । धनुर्बाणधरश्चैव पूजनीयः सुखाप्तये" ।

१५सुभगस्य "अथ पञ्चदशो ज्ञेयः सुभगस्तु हरित्प्रभः" ।

१रात्रौ अतिरौद्रस्य "अथो निशाचरान् क्रमो मुहूर्त्तान् तिथिसंख्यकान् । तत्रादिमोऽतिरौद्राख्यः कृष्णवर्णोऽरुणांशुकः । चतुर्भुजो महाक्रूरः शाखिसङ्कटकोबलः । आदिमे दक्षिणे बिभ्रत् कौशिकञ्चातिभीषणम् । द्वितीये तु करे सर्पं वामोर्द्धे त्वथ वै करे । सन्दंशं तदधः पात्रं बिभ्राणः सर्वविघ्नहा" ।

२महागन्धर्व्वराजस्य "महागन्धर्व्वराजाख्यो द्वितीयस्तत्र चैव हि । कृष्णशुभ्रारुणग्रीवो नीलवस्त्रो महाबलः । चतुर्भुजो विशालाक्षो गौरवर्णो जटाधरः । आदिमे दक्षिणे शङ्खं द्वितीये चैव पङ्कजम् । वामोर्द्धगे क्षीरं

मदधस्थे तु पात्रकम्। धारयन्निष्टसम्पत्त्यै पूजनीयो विचक्षणैः”।

३द्रविणस्य “तृतीयः कथ्यते चाथ रात्रिजो द्रविणाभिधः। तप्तचामीकराभासः कृष्णनीलारुणांशुकः। दक्षिणे प्रथमे पद्मं हेमजञ्चातिशोभनम्। द्वितीये तु करे वीणां वामोर्द्ध्वे वीजपूरकम्। दधानः सर्वसम्पत्तिसुखायुःश्रीविवृद्धये”।

४आवणस्य “आवणाख्यस्ततस्तुर्य्यो नीलवर्णोऽर्ककुण्डलः। नीलारुणांशुकोपेतः कण्ठनीलाक्षमालिकः। दक्षिणाद्ये करे खड्गं द्वितीये चैव पङ्कजम्। वल्लकीमूर्द्ध्वगे वामे पात्रमस्याद्धःस्थिते। दधानः पूजनीयोऽयं ज्ञानविज्ञानसिद्धये”।

५वायोः “मुहूर्त्तः कथ्यते चाथो वायुसंज्ञस्तु पञ्चमः। हरिद्वर्णो जवाकर्णः श्वेतवस्त्रो महाबलः। कीरमाद्यादिमे हस्ते द्वितीये तु ध्वजं शये। वामोर्द्ध्वगे करे कीरं द्वितीये पात्रमादधत्”।

६अग्नेः “अग्निसंज्ञस्ततः षष्ठो जवाकुसुमसन्निभः। कृष्णनीलांशुकोपेतः शिखारुद्राक्षसंयुतः। दक्षिणाद्ये करे पात्रं द्वितीये शक्तिमेव च। वामादिमे करे कीरं द्वितीये क्षीरमेव च। दधानः कीर्त्तये भक्त्यै विजयायुःप्रवृद्धये”।

७राक्षसस्य “अधुना कथ्यते वत्स! राक्षसाख्यस्तु सप्तमः। नीलवर्णोऽपदंष्ट्रस्तु नीलशुभ्रारुणांशुकः। दक्षिणाद्ये करे पद्मं द्वितीये तु त्रिशूलकम्। खट्वाङ्गमुत्तरे वामे पात्रमस्याद्धःस्थिते। दधद्वैरिविघाताय पूजनीयस्तु साधकैः।

८धातुः “धाता चैवाष्टमः पीतवर्णः पाटलभांशुकः। कर्णस्फाटिकसौवर्णकुण्डलः कम्बुकन्धरः। पुस्तीमाद्यादिमे हस्ते द्वितीये चैव विष्टरम्। वामादिमे करे दण्डं द्वितीये स्वर्णकुण्डलम्। दधानः प्रीतये भक्त्यै विजयाय सुखाय च”।

९सौम्यस्य “नवमः सौम्यनामाथ शुभ्रवर्णो विशालदृक्। पीतवस्त्रो महातेजा मुक्तासर्वाङ्गभूषणः। आदिमे दक्षिणे शङ्खं द्वितीये चैव पङ्कजम्। वामादिमे करे पात्रं द्वितीये क्षीरमेव च। दधानस्तुष्टये भक्त्यै पूजनीयस्तु मुक्तिदः”।

१०ब्रह्मणः “दशमश्चात्र विज्ञेयो मुहूर्त्तो ब्रह्मसंज्ञकः। पीतवर्णः शुक्लवस्त्रो जटामुकुटसंयुतः। कण्ठरुद्राक्षमालोऽयं भालपाण्डुरचन्दनः। सुवर्णकुण्डलोपेतः कटिसूत्रोत्तरीयवान्। अक्षसूत्रं यमादिस्थे द्वितीये चैव पङ्कजम्। वामोर्द्ध्वे तु स्रुवं हस्ते पुस्तकन्तदधःकरे। दधत् सौवर्णमुक्तानां लाभाय विजयाय च”।

११वाक्पतेः “एकादशोऽधुना ज्ञेयो वाक्पतिर्नाम नामतः। सुवर्णवर्ण एवायं कृष्णशुभ्रांशुकान्वितः। कुञ्जोमाद्यादिहस्ते तु द्वितीये क्षीरमेव च। वामादिमे करे कीरं द्वितीये नीरजं दधत्। प्रजालाभकरश्चैव कार्यनिष्पत्तिसाधकः”।

१२पौष्णस्य “द्वादशश्चात्र विज्ञेयो पौष्णनामा सुलोहितः। पीतवस्त्रो जटामौलिस्त्रिपुण्ड्रकृतसद्युतिः। तुन्दिलः सोपवीती च नीलकीलकपाण्डुरः। दक्षादिमे करे वीजपूरकं शुभ्रवर्णकम्। द्वितीये वारिजं पाणौ पात्रं वामादिमे करे। वन्दंशन्तु द्वितीयेऽयं धारयन् वैरितापदः”।

१३वैकुण्ठस्य “जयाधुनात्र वै कथ्यो वैकुण्ठाख्यस्त्रयोदशः। पादकान्त्रशुभ्रोऽयं कण्ठान्तारुणवर्णकः। अलिवर्णकः केशान्ते कुण्डलानेकरत्नजः। दक्षिणाद्ये करे पुस्तीमम्बुजन्तु द्वितीयके। केकिपिच्छन्तु वामाद्ये द्वितीये चातपत्रकम्। दधानः कीर्त्तये भक्त्यै पूजनीयः सिताम्बुजैः”।

१४समीरणस्य “चतुर्दशोऽधुना ज्ञेयो नामतस्तु समीरणः। जलनीलनिभश्चैव शुभधारकतद्युतिः। पीतनीलारुणप्रान्तवसनः स्निग्धलोचनः। तालपत्रं यमादिस्थे द्वितीये नीलनीरजम्। वामादिमे करे पात्रं द्वितीये नीलकमलम्। दधानो यज्वनो भूत्यै बालवृद्ध्यै सुखाय च”।

१५नैर्ऋतस्य “अथ पञ्चदशो ज्ञेयो मुहूर्त्तो नैर्ऋतोऽरुणः। मेचकाभत्रिनेत्रस्तु दंष्ट्रावान् वसनारुणः। खर्वेन्द्रनीलभूषाढ्यः शोणालितिलकान्वितः। आदिमे दक्षिणे वाणं द्वितीये कमलं करे। वामादिस्थे धनुर्हस्ते द्वितीये चैव वारिजम्। दधच्छान्त्यै सुभोगाय बलाय विजयाय च”।

अहोरात्रस्य “एते निशाचराः ख्याता मुहूर्त्ताः सकलास्तव। अहोरात्राभिधश्चात्र कृष्णग्रीवादिमूर्द्धजः। कण्ठपादान्तशुभ्रोऽयं द्विभुजो दीर्घमौलिकः। सार्द्धचन्द्रजटामौलिः पिङ्गलश्मश्रुलोचनः। रुद्राक्षमालिकोपेतः कृष्णशुभ्रांशुकान्वितः। अर्कं दक्षे दधानोऽयं वामे चैव विधुन्तुदम्। इष्टापूर्त्तप्रसिद्ध्यर्थं पूजनीयो मनीषिभिः”।

शुक्लपक्षस्य “शुक्लपक्षो नरः शुक्लो जटामुकुटसंयुतः। श्वेतवस्त्रो विशालाक्षो भालाङ्कितिलकान्वितः। सूर्य्यमार्कौ दधानोऽयं वामे चन्द्रजबिम्बकम्। पूजनीयो महाभक्त्या प्रतिपक्षं सिते सिते। अस्य द्वादश भेदाः स्युर्विज्ञेया वर्णभेदतः। पूजनीयावलार्थाय प्रतिमासन्तु भेदतः”।

कृष्णपक्षस्य “श्यामाभः कृष्णपक्षस्तु सितशोणाम्बरो बली। सूर्य्यबिम्बं यमे बिभ्रद्वामे दीपं समुज्ज्वलम्। पूजनीयो बलाप्त्यर्थं प्रतिमासन्तु भेदतः। इत्यस्याकर्मभेदाः स्युर्भेपक्षादिजनामतः”।

मासस्य “स्वनामतस्तु मासः स्यात् द्विवर्णस्तु द्विदोरिति। आभ्यूर्द्धः श्वेतकृष्णः पिङ्गलोचनमूर्द्धजः। सूर्य्यचन्द्रान्वितः सोऽयं प्रतिमासन्तु पूज्यते। स्वनामपूर्वकैर्मन्त्रैर्होमपूजाविधानकैः”।

ऋतूनां हेमन्तस्य “ऋतुषट्कमथो ब्रूमो लक्षणनामपृथक्फलैः। हेमन्ताख्यस्तु तत्राद्यः कपिलः पिङ्गकुण्डलः। पीतवस्त्रसमायुक्तस्त्रिजटः कृष्णगोधिकः। (गोधिर्ललाटम्) धान्यमञ्जरिकाहस्तु वामपात्रपिधानकः। पूजनीयो विभूत्यर्थं धान्यसम्पत्तिहेतवे”।

शिशिरस्य “शिशिराख्यो द्वितीयस्तु हरित्पीतनिभाकृतिः। पीतकुण्डलकर्णस्तु कण्ठविद्रुममालिकः। मधुद्रुमप्रसूनाङ्कपात्रमार्कौ कराम्बुजे। वामे धान्यशरावन्तु धारयन्निष्टहेतवे”।

वसन्तस्य “विष्णुप्रकरणोक्तस्तु ज्ञातव्योऽत्र वसन्तकः”।

ग्रीष्मस्य “ग्रीष्माभिधश्चतुर्थस्तु धूसरो रुक्ममालकः। अवस्थिताकेहस्तस्तु वामे शुभ्रातपत्रयुक्। रोमसन्तापनाशाय पूजनीयोऽरिपक्षहा”।

वर्षायाः “पञ्चमस्तोयदर्तुस्तु हरिद्वर्णोऽरुणेक्षणः। ताम्रवर्णांशुकोपेतः कृष्णविद्रुमकुण्डलः। मीनमार्कौ दधानोऽयं तोयपूर्णघटं परे। मेघमालावृतश्चैव विद्युद्दहनदीप्तिमान्। हरिताविदद्भिः पूज्यो पुष्टिसन्तुष्टिहेतवे”।

शरदः “शरदृतुरथो षष्ठश्चन्द्रगौरः सुलोचनः। कण्ठमौक्तिकमालस्तु कर्णचन्द्रजकुण्डलौ। चन्द्रबिम्बं करे दक्षे वामे चामृतजं घटम्। दधानः पूजनीयोऽयमायुर्वृद्ध्यै सुखाय च”।

दक्षिणायनस्य “दक्षिणायनसंज्ञोऽथ श्यामः सोमेन्द्रलोचनः। पीतवस्त्रो हृत्कुण्डः कर्णिकारदलद्युतिः। बीजाङ्कुरशरावार्किः स्थितोत्तरहस्तकः। पूजितः श्रियमे नित्यं धनधान्यसमृद्धये”।

उत्तरायणस्य “उत्तरायणसंज्ञोऽथ शुभ्रवर्णो विशालदृक्। कञ्जिच्छवसनोपेतः स्वर्णमुक्ताविभूषणः। पुस्तकं दक्षिणे हस्ते वामे तु रविबिम्बकम्। दधद्धुक्त्यै सुरे चैव पूजनीयस्तु कीर्तये”।

१।१वत्सराणाम् प्रभवस्य “अथ संवत्सरान् ब्रूमो नामलक्षणफलान्वितः। प्रभवाख्योभवेदाद्यः पीतवर्णो महोदरः। नीलवस्त्रसमायुक्तो दक्षे काञ्चनकुण्डलः। वामे स्फाटिकवर्णस्तु पृष्ठलम्बिजटालयः। दक्षिणे प्रथमे शक्तिं पङ्कजन्तु द्वितीयके। वामादिमे शरावन्तु बीजपूर्णं कराम्बुजे। द्वितीये चैव मन्दंशं दधानः पुष्टिहेतवे”।

१।२विभवस्य“विभवाख्यो द्वितीयस्तु नीलपीतारुणच्छविः। पीतशुभ्रान्तवस्त्रोऽयं कण्ठे पद्माङ्कमालिकः। दक्षिणाद्ये शरं पाणौ द्वितीये नीलपङ्कजम्। सन्दंशन्तूत्तरादिस्थे द्वितीये चैव कार्मुकम्। दधद्विभूतये नित्यं पूजनीयो विपश्चिता”।

१।३शुक्लस्य “शुक्लनामा तृतीयस्तु श्वेतपङ्कजसन्निभः। कण्ठपद्माक्षमालोऽयं शुभ्रमाल्यानुलेपनधृक्। दक्षिणाद्ये शरावन्तु द्वितीये बाणमेव च। दर्पणञ्चोत्तरादिस्थे द्वितीये चैव कार्मुकम्। दधानो भूतये मर्त्यैः पूजनीयः सतात्मभिः”।

१।४प्रमोदस्य“प्रमोदाख्यश्चतुर्थस्तु नीलग्रीवो महोदरः। श्वेतवस्त्रोऽक्षसङ्काशो योगपट्टोत्तरीयवान्। दक्षिणाद्ये तु सन्दंशं द्वितीये क्षीरमेव च। वामादिमे शरावन्तु द्वितीये नीलपङ्कजम्। दधत् सौख्याय भोगाय विजयाय महाय च”।

१।५प्रजापतेः “प्रजापत्याख्य एवात्र पञ्चमः स्वर्णसन्निभः। शोणभूषणवस्त्राढ्यस्तुन्दिलो गौरपाण्डुरः। कमण्डलुं यमादिस्थे द्वितीये परशुं करे। शरावन्तूत्तरादिस्थे द्वितीये पुस्तकं दधत्। प्रजावृद्ध्यै विभूत्यै च पूजनीयो विजानता”।

१।६अङ्गिरसः “अङ्गिराख्यस्ततः षष्ठो वर्णशुभ्रोऽतिलोमशः। ताम्रवस्त्रो महातेजा द्वादशाङ्गसचन्दनः। पवित्रदर्भपाणिस्तु जटामण्डितमस्तकः। ज्ञानखड्गन्तु दक्षाद्ये द्वितीये समिधङ्करे। वामादिमे शरावन्तु मञ्जूदण्डं द्वितीयके। दधत् सुपूजितो भूत्यै श्रेयसे च सुखाय च”।

१।७श्रीमुखस्य “सप्तमः श्रीमुखाख्यस्तु पीतवर्णो विशालदृक्। पाटलावसनोपेतो दीर्घकर्णोलकारुणः। सुवर्णरत्नभूषाढ्यः सर्वानर्थविघातकृत्। श्रीफलं दक्षिणादिस्थे द्वितीये चैव पङ्कजम्। पुस्तकञ्चोत्सङ्गे वामे तदधस्तु

शरासकम् । दधानः पुष्टये लक्ष्म्यै चन्दनादिभिरर्चितः"।

१।८भावस्य "भावाभिधोऽष्टमस्तत्र नीलशुभ्रारुणच्छविः। पीतकृष्णारुणप्रान्तवसनश्चित्रकुण्डलः। मुक्ताविद्रुममालोऽयं जटापिङ्गाक्ष एव च। दक्षिणे प्रथमे पुस्तमंशकन्तु द्वितीयके। वामोर्द्धगे करे शूलं तदधः पात्रमासवम्। बिभ्रत् पूजनीयस्तु धान्यलाभाय वै श्रिये"।

१।९यूनः "नवमोऽत्र युवाख्यस्तु पाटलाभोऽरुणेक्षणः। नीलवस्त्रजटोत्तुङ्गो रत्नमेचककुण्डलः। दक्षिणे प्रथमे शङ्खं द्वितीये तु सुदर्शनम्। वामादिमे करे पात्रं द्वितीये नीलपङ्कजम्। बिभ्राणः कान्तये पूज्यो लक्ष्मीसौभाग्यवृद्धये"।

१।१०धातुः "धाता चैव प्रविज्ञेयो दशमः पिङ्गलोचनः। रक्तशुभ्रारुणप्रान्तवसनः श्वेतकुण्डलः। शरासमादिमे दक्षे द्वितीये बीजपूरकम्। वामोर्द्धगे करे पुस्तीं नीलमिन्दीवरन्त्वधः। जयाय पुत्रसम्पत्त्यै पूजनीयः सुभक्तितः"। (दक्षादिति शेषः)

२।११ईश्वरस्य "ईश्वराभिध एवात्र ज्ञेय एकादशोऽप्यसौ। कैरवाभक्षिनेत्रस्तु जटाखण्डेन्दुमौलिकः। मुक्तास्फाटिकरुद्राक्षभूषणस्तुङ्गनासिकः। त्रिशूलमादिमे दक्षे द्वितीये क्षीरमेव च। शरासमादिमे वामे द्वितीये चैव पुस्तकम्। बिभ्रत् सौख्याय पूज्योऽसौ योगवृद्ध्यै सुताप्तये"।

१।१२बहुधान्यस्य "द्वादशो बहुधान्याख्यः पीतनीलारुणच्छविः। पीतवस्त्रो विशालाक्षस्तुन्दिलो दीर्घगोधिकः। जवाकुसुममालोऽयं कवची गजकुण्डलः। दक्षिणाद्ये करे कुम्भं सौवर्णं सर्वधान्यकम्। वीजपूरपिधानन्तत् खचितानेकरत्नकम्। द्वितीये डमरुं वामे चोर्द्धे नीलकनीरजम्। द्वितीये तु करे सीरं दधानः सर्वधान्यकम्। सिद्धये पूजितो नित्यं स्वनामाद्यैस्तु संस्कृतः"।

२।१३प्रमाथिनः "प्रमाथिसंज्ञकस्वाद्यः शुक्लवर्णो महाभुजः। जटात्रितयसंयुक्तो दीर्घभालोऽर्ककुण्डलः। शोणनीलाम्बरोपेतः काञ्चनानेकमुद्रिकः। पिकमाक्यादिमे हस्ते द्वितीये कम्बुमेव च। पाशं वामोर्द्धगे हस्ते तदधस्त्वम्बुपात्रकम्। दधानो वैरिघाताय स्वर्गस्यैव पुष्टये"।

२।२विक्रमस्य "विक्रमाख्यो द्वितीयस्तु नीलशुभ्रो महोदरः। पीतवस्त्रो दृढाङ्गाङ्गः कण्ठमौक्तिकालिकः। आदिमे दक्षिणे शङ्खं द्वितीये चैव पद्मजम्। वामादिमे करे पात्रं पाशमत्र द्वितीयके। दधानोऽतिबलार्थाय पूजनीयस्तु यत्नतः"।

२।३वृषस्य "वृषाभिधस्तृतीयस्तु श्वेतगौरो विशालदृक्। स्थूलरोमाऽतिसंहृष्टः केतकीदलकर्णयुक्। पीतप्रान्तारुणोपेतवसनः कटिघण्टकः। आदिमे दक्षिणे पाशं द्वितीये शङ्खमेव च। वामादिमे करे पात्रं द्वितीये मृगमेव च। धनधान्यप्रवृद्ध्यर्थं पूजनीयोऽतिसादरम्"।

२।४चित्रभानोः "चतुर्थश्चित्रभान्वाख्यश्चित्रग्रीवोऽरुणांशुकः। मुक्तागर्भनिभश्चैव वरदः स्वर्णकुण्डलः। मुक्तास्रजन्तु दक्षाद्ये द्वितीये चैव पाशकम्। वामादिमे करे कम्बुं द्वितीये पङ्कजं शुभम्। बिभ्रदानन्दसम्पत्त्यै प्रतापार्थविवृद्धये"।

२।५सुभानोः "पञ्चमस्तु सुभान्वाख्यः शुभ्रशोणरुचिः शुभः। कण्ठत्रिरेखाशोणस्तु जटाकाञ्चनसन्निभः। आदिमे दक्षिणे पद्मं द्वितीये शङ्खमुज्ज्वलम्। वामोर्द्धे तु करे पाशं तदधःस्थे शयेऽङ्कुशम्। बिभ्राणः सुखदः शान्त्यै रिपुपक्षक्षयाय च"।

२।६तारणस्य "अत्र संवत्सरः षष्ठस्तारणाख्यः सिताम्बरः। श्वेतनीलारुणस्यैव स्वर्णकुण्डलभूषणः। प्रथमे दक्षिणे कुम्भं द्वितीये चैव पङ्कजम्। उत्तराद्ये करे पाशं द्वितीये शङ्खमादधत्। दुर्गत्वनेकनाशाय भूतये विजयाय च"।

२।७पार्थिवस्य "सप्तमः पार्थिवाख्यस्तु तप्तकाञ्चनसन्निभः। पीतशोणाम्बरस्यैव कृष्णग्रीवोऽतिसुन्दरः। सर्वरत्नविभूषाढ्यः केतकीदलमस्तकः। आदिमे दक्षिणे बाणं द्वितीये चैव पङ्कजम्। कार्मुकस्योत्तरादिस्थे द्वितीये शङ्खमेव च। दधद्राज्यादिलाभाय पूजनीयः प्रयत्नतः।

२।८व्ययस्य "अव्ययाख्योऽष्टमस्त्वत्र कैरवारुणसन्निभः। कृष्णनीलारुणश्वेतवसनश्चित्रकुण्डलः। कीरमाक्यादिमे हस्ते द्वितीये क्षीरमेव च। शङ्खं वामादिमे हस्ते द्वितीये पाशमादधत्। यज्वनोभूतये नित्यं वृद्धये चायुषे श्रिये"।

२।९सर्वजितः "सर्वजिन्नवमोऽप्यत्र श्वेतनीलोऽसितप्रभः। नीलवस्त्रजटोत्तुङ्गः कृष्णनीरजकुण्डलः। दक्षादिमे करे बाणं द्वितीये चैव पुस्तकम्। वामादिमे करे पाशं द्वितीये पात्रमेव च। दधानः पूजनीयोऽयं विजयाय सुखाय च"।

२।१०सर्वधारकस्य "अधुना कथ्यते वत्स ! दशमः सर्वधारकः। कङ्कपत्रनिभश्चैव पाटलावसनान्वितः। नीलपङ्कजवर्णस्त्वमुक्ताहारविभूषणः। पाशं दक्षादिमे हस्ते द्वितीये केतकीदलम्। शङ्खञ्चोत्तरादिस्थे द्वितीये चैव पुस्तकम्। दधानो विजयारोग्यवृद्धये चैव यज्वनः"।

२।११विरोधिनः "एकादशोऽधुना ज्ञेयो विरोधी नाम वत्सरः। कृष्णपाण्डुरदेहस्तु वरदो नीलकुण्डलः। कृष्णप्रान्तासुवर्णश्चैव वसनप्रान्तभूषणः। बिम्बीफलन्तु दक्षाद्ये द्वितीये श्वेतपङ्कजम्। वामादिमे करे सर्पं द्वितीये पाशमादधत्। पूजनीयोऽरिघाताय वरवृद्ध्यै च यत्नतः"।

२।१२विकृतस्य "द्वादशो विकृताख्यस्तु धूसरः पिङ्गलोचनः। नीलशुभ्रांशुकोपेतो मेषशृङ्गजकुण्डलः। दक्षिणाद्ये करे पाशं द्वितीये मेषशृङ्गकम्। वामोर्द्ध्वगे करे शङ्खं पाशमधादधः करे। दधानो रोगनाशाय दुष्टशत्रुविघातकृत्"।

३।१खरस्य "खराभिधानस्तत्राद्यो रक्तवर्णो महोदरः। नीलवस्त्रो वृहद्भालो घनवर्वरमूर्द्धजः। दक्षिणाद्ये करे शक्तिं द्वितीये खड्गमेव च। वामादिमे करे पात्रं द्वितीये चामरन्दधत्। शत्रुनाशाय पूज्योऽसौ विजयायैव यत्नतः"।

३।२नन्दनस्य "नन्दनाख्यो द्वितीयस्तु पीतशोणाननो बली। शुभ्रवस्त्रो जटालम्बी दीर्घकर्णः कजासनः। पङ्कजन्तु यमादिस्थे द्वितीये शक्तिमेव च। वज्रं वामादिमे पाणौ द्वितीये चाङ्कुशं शये। दधानः श्रेयसे भूत्यै पूजनीयो महोदयः"।

३।३विजयस्य "विजयाख्यस्तृतीयस्तु श्वेतपीतारुणच्छविः। कृष्णवक्त्रः कपोत्तुङ्गजटारुद्राक्षमालिकः। कमण्डलुं यमादिस्थे द्वितीये कुलिशं करे। शक्तिं वामादिमे हस्ते द्वितीये चैव पङ्कजम्। दधानो विजयारोग्यवृद्धये चैव पूजितः"।

३।४जयस्य "जयाभिधश्चतुर्थोऽत्र पीतशोणः शुचिः सुखी। पीतवस्त्रो जटैकस्तु पीतरक्तार्णवेष्टितः। पुस्तकं प्रथमे दक्षे द्वितीये नीलपङ्कजम्। वामादिमे करे वज्रं द्वितीये शक्तिमेव च। दधानः शुभमाङ्गल्यवृद्धये चैव पूजितः"

३।५मन्मथस्य "पञ्चमो मन्मथाख्यस्तु नीलशोणशुचिः शुभः। स्वर्णकुण्डलसंयुक्तः कीरपक्षनिभांशुकः। मल्लिकाधन्वबाणस्तु मूर्वापुष्पजमालिकः। दण्डन्तु दक्षिणे हस्ते द्वितीये चैव पङ्कजम्। वामादिमे करे पुस्तीं द्वितीये शक्तिमेव च। दधानः विजये भूत्यै योषिद्वर्गवशीकृतौ"।

३।६दुर्मुखस्य "षष्ठश्चैवात्र विज्ञेयो वत्सरो दुर्मुखाभिधः। शुकचञ्चुनिभश्चैव नीलकुण्डलसम्बरः। दक्षिणाद्ये करे शक्तिं द्वितीये वज्रमेव च। शूकं वामादिमे पाणौ द्वितीये सर्पमादधत्। पूजनीयो विधानेन भ्रूकुटीकुटिलाननः। दुष्टशत्रुविनाशाय सर्वरोगोपशान्तये"।

३।७हेमलम्बस्य "सप्तमो हेमलम्बाख्यो रक्तपीतनिभच्छविः। रम्भापत्रांशुकश्चैव रत्नकुण्डलभूषणः। हेमजं पङ्कजं दक्षे प्रथमे करपल्लवे। द्वितीये कुलिशं पाणौ वामाद्ये पात्रमुत्तमम्। द्वितीये तु करे शक्तिं दधानो मुक्तये जय!"।

३।८विलम्बस्य "अष्टमस्तु विलम्बाख्यः पाटलाभः कृशोदरः। पीतवस्त्रो वृहद्भालोजटाखण्डेन्दुमण्डनः। प्रथमे दक्षिणे सर्पं द्वितीये शक्तिमेव च। वामादिमे करे पात्रं द्वितीये चैव पङ्कजम्। दधानः शत्रुघाताय पूजनीयो विशेषतः"।

३।९ विकारिणः "विकारी नवमश्चात्र कृष्णनीलारुणच्छविः। ताम्रकुण्डलवस्त्राद्यः कण्ठशोणत्रिरेखिकः। दक्षिणाद्ये करे बाणं द्वितीये चैव पुस्तकम्। वामादिमे धनुर्हस्ते द्वितीये शक्तिमादधत्। पूजनीयो विशेषेण सर्वरोगोपशान्तये"।

३।१०शार्वरिणः "दशमः शार्वरिप्रख्यः कृष्णशुभ्रारुणच्छविः। शोणवस्त्रोऽतिदीर्घाङ्गः स्थूलवर्वरमूर्द्धजः। दक्षिणाद्ये करे सर्पं द्वितीये शालमञ्जरीदलम्। कौशिकस्तोत्तरादिस्थे द्वितीये शक्तिमेव च। दधानः कीर्त्तये पुष्ट्यै शत्रुभङ्गाय पूजितः"।

३।११प्लवस्य "एकादशः प्लवाख्यस्तु शशकर्णनिभच्छविः। दर्दराभाम्बरोपेतो लोहकुण्डलसंयुतः। आदिमे दक्षिणे हस्ते दर्दुरं मणिसंयुतम्। द्वितीये तु करे शक्तिं पात्रं वामादिमे करे। द्वितीये पद्मं बिभ्रत् पूजनीयोऽघमिलहा"।

३।१२ शुभकृतः "शुभकृत् द्वादशोऽप्यत्र नागजाभः सुलोचनः। पाटलावसनोपेतः कृष्णकुण्डलभूषणः। दक्षिणे भीषणां शक्तिं प्रथमे करपल्लवे। द्वितीये हेमजं पद्मं वामाद्ये चैव दर्पणम्। द्वितीये कुलिशं हस्ते दधत्सौख्याय सम्मदे"।

४।१ शुभकृतः "शुभकृत् पीतधूम्रस्तु प्रथमो नीलजाम्बरः। नीलभूषणसंयुक्तो रत्नरुद्राकराङ्गुलिः। घटं दक्षादिमे हस्ते द्वितीये चैव पुस्तकम्। वामादिमे करे पात्रं द्वितीये ध्वजमेव च। दधानः श्रेयसे पुष्ट्यै पूजनीयो जयाय च"।

४।२ क्रोधिनः "क्रोधिसंज्ञो द्वितीयस्तु नीलशुभ्रः कृशोदरः।

मेचकाम्बरसंयुक्तस्तुङ्गनासाविपाण्डुरः। पद्मं दक्षादिमे हस्ते द्वितीये ध्वजमेव च। वामादिमे कञ्जं पाणौ द्वितीये सीरमेव च। दधानो वैरिनाशाय कृष्णदूर्व्वैः सुपूजितः"।

४।३ विश्वावसोः "विश्वावसुस्तृतीयस्तु कृष्णपीनः सुकोलटक्। कृष्णशुभ्रारुणप्रान्तवसनश्चित्रकुण्डलः। ध्वजं दक्षादिमे पाणौ द्वितीये कुलिशं शये। दधानो भुक्तये प्रीत्यै नानाभोगफलाप्तये"।

४।४पराभवस्य "पराभवश्चतुर्थस्तु धूसरोऽरुणाम्बरः। नीलोत्पलस्तुतिश्चैव क्षुद्रघण्टिकमेखलः। नीलोत्पलन्तु दक्षाद्ये द्वितीये ध्वजमेव च। वामादिमे करे पात्रं सन्दंशं तु द्वितीयके। धारयन्नरिघाताय पूजनीयो विपश्चिता"।

४।५प्लवङ्गस्य "पञ्चमस्तु प्लवङ्गाख्यो हरिणाजिनसन्निभः। मेघोदराभवस्त्रोऽयं संयुतः कृष्णकम्बरः। दक्षिणाद्ये ध्वजं पाणौ द्वितीये मेषशृङ्गकम्। वामादिमे करे पात्रं द्वितीये पाशमेव च। दधानो भूतये भुक्त्यै पूजनीयः सदा नृभिः"।

४।६ कीलकस्य "कीलकाख्यस्ततः षष्ठः कृष्णवर्णोऽतिदीर्घदृक्। नीलवस्त्रो जटाभारः कृष्णकुण्डलभूषणः। कीलकं दक्षिणादिस्थे द्वितीये ध्वजमेव च। वामादिमे करे पाशं सन्दंशन्तु द्वितीयके। दधानो विजयारोग्यहृतये चैव पूजितः"।

४।७सौम्यस्य "सप्तमः सौम्यनामा च कीर्त्त्यते वत्सरः शुभः। नीलपीतजटायुक्तो रम्भादलनिभांशुकः। स्वर्णपत्रस्तुतिश्चैव कण्ठपङ्कजमालिकः। चन्द्रमाकार्यादिमे हस्ते द्वितीये केतकीदलम्। वामादिमे ध्वजं हस्ते द्वितीये नीरजं शुभम्। विभवसौभाग्ययोगाय पूजनीयः सुभक्तितः"।

४।८ साधारणस्य "साधारणोऽष्टमो ज्ञेयो नीलगौरारुणच्छविः। पीतशोणान्तवस्त्रोऽयं स्वर्णकुण्डलरत्नयुक्। चन्द्रहासं यमादिस्थे द्वितीये चैव कीलकम्। वामादिमे ध्वजं पाणौ सन्दंशञ्चोत्तरे दधत्। धनदश्च सुखाप्त्यर्थं पूजनीयः सिताम्बुजैः"।

४।९ विरोधकृतः "विरोधकृच्च विज्ञेयो नवमो वत्सरो जय!। पिङ्गाभः शुक्लवस्त्रोऽयं पिङ्गश्मश्रुजटेक्षणः। दक्षिणाद्ये करे शङ्खं द्वितीये चैव वै ध्वजम्। चन्द्रहासन्तु वामाद्ये द्वितीये परशुं शये। बिभ्राणो रोगनाशाय मत्सन्तापकृत् जय!।"

४।१० परिधाविनः "परिधावी तु विज्ञेयो दशमश्चैव वत्सरः। इन्दीवराभश्वेतः कृष्णपीतनिभांशुकः। मल्लप्रसवकर्णस्तु कण्ठपङ्कजमालिकः। पिकमाकार्यादिमे हस्ते द्वितीये ध्वजमेव च। घण्टां वामादिमे पाणौ द्वितीये चैव डमरुम्। दधानो हृदये चैव श्रेयोभूतिसुखायुषाम्"।

४।११प्रमादिनः "प्रमादी चापि विज्ञेयो रुद्रसङ्ख्योऽपि वत्सरः। अतसीपुष्पसङ्काशो हरिनीलारुणाम्बरः। मदघूर्णितनेत्रस्तु तन्द्रीभूत इवालसः। दण्डमाकार्यादिमे हस्ते द्वितीये दण्डमेव च। वामादिमे करे पात्रं द्वितीये विषिनीदलम्। दधानो रोमविच्छित्त्यै मम भक्ताय यज्वनः"।

४।१२आनन्दस्य "आनन्दाख्यः सितः पीतवसनो द्वादशोऽत्र हि। शुक्लेन्द्रनीलसौवर्णभूषणो नीलकुण्डलः। पङ्कजं दक्षिणादिस्थे द्वितीये केतकीदलम्। वामोर्द्ध्वगे ध्वजं पाणौ तदधस्ते तु मोदकम्। योऽभिलष्यार्थ संपूज्यो गन्धपुष्पाक्षतादिभिः"।

५।१राक्षसस्य "तामसानां भवेदाद्यो राक्षसो नाम वत्सरः। इन्दीवरदलाभासो हेमवस्त्रोऽर्कभूषणः। अर्कमाकार्यादिमे हस्ते द्वितीये शृङ्खलमेव च। नीलोत्पलन्तु वामाद्ये द्वितीये कुलिशं शये। दधद्रोगादिनाशाय पूज्यः स्यात्सुभिरेव सः"।

५।२अनलस्य "अनलाख्यो द्वितीयस्तु नीलशुभ्रारुणच्छविः। पीतप्रान्तासितवस्त्रस्तु वज्रकुण्डलभूषणः। चन्द्रहासं यमादिस्थे द्वितीये चाङ्कुशं करे। पिशितञ्चोत्तरादिस्थे परे चैव परश्वधम्। दधत् सुसम्पदेऽरीणां विजयायैव यज्वनः"।

५।३पिङ्गलस्य "पिङ्गलाख्यस्तृतीयोऽत्र कुसुदारुणसन्निभः। श्वेतप्रान्तारुणानीलवसनः स्वर्णभूषणः। आदिमे पिशितं याम्ये द्वितीये सीरमेव च। कुलिशञ्चैव वामाद्ये सन्दंशन्तु द्वितीयके। बिभ्राणो विजयारोग्यहृतये चैव पूजितः"।

५।४कालयुक्तस्य "कालयुक्ताभिधस्तुर्यो नीलकण्ठो वृकोदरः। पीतारुणांशुकोपेतो नीलस्वर्णजभूषणः। यमादिमे करे सर्पं द्वितीये सीरमेव च। सोमपात्रन्तु वामाद्ये द्वितीये कीलमेव च। पूजनीयो विशेषेण यज्वनो वैरिहत्यये"।

५।५सिद्धार्थस्य "अधुना कीर्त्त्यते वत्स! सिद्धार्थो नाम पञ्चमः।

तप्तकाञ्चनसङ्काशो नीलशुभ्राम्बरांशुकः । नीलकुण्डलसंयुक्तो मुक्ताविद्रुमभूषणः । सौवर्णं कलशं याम्ये प्रथमे करपल्लवे । इन्दीवरं परे चैव कुलिशञ्चोत्तरोर्द्धगे । वीजपूरमधस्तस्माद्दधानः श्रेयसे सदे" ।

५।६रौद्रस्य "रौद्राभिधस्ततः षष्ठः पिङ्गलः कृष्णलोहितः । पाटलावसनोपेतो सुस्वर्णरमूर्द्धजः । वीरमाद्यादिमे हस्ते द्वितीये हलमादधत् । कुण्डीमिन्द्रादिमे पाणौ परे कुण्डलिनं शये । रोगनाशाय संभक्त्यै पूज्योऽयं परिपन्थिषु" । (इन्द्रो वामः)

५।७दुर्मतेः "सप्तमः कथ्यते चायं मेचकाभः स दुर्मतिः । शङ्खमाद्यादिमे हस्ते स्वर्णमेखलरत्नजम् । वर्मपत्र द्वितीये वै कुण्डीमिन्द्रादिमे शये । द्वितीये पुस्तकं पाणौ दधद्विद्वक्षद्रिपोः" । (इन्द्रो वामः)

५।८दुन्दुभेः "अष्टमो दुन्दुभिप्रख्यो नीलग्रीवो विशालदृक् । सोमवर्णः सिताम्भोजवसनः कृष्णगोधिकः । जटामुकुटभालोऽयं स्वर्णपत्रद्युतिः शुभः । कदलीफलमाद्यादौ द्वितीये शङ्खमेव च । वीजपूरन्तु वामाद्ये द्वितीये शस्त्रकर्त्तरीम् । विभ्राणो धनधान्याय पूजनीयः सदा नृभिः" ।

५।९रुधिरोद्गारिणः "नवमो रुधिरोद्गारी नीलशोणाविदेहयुक् । कृष्णप्रान्तारुणश्चैतवसनो नीलभूषणः । लोहिताक्षो जटापिङ्गः शोणचन्दनचर्चितः । रक्तोत्पलं यमादिस्थे द्वितीये कुलिशं शये । पिशितश्चोत्तरादिस्थे द्वितीये चाङ्कुशं दधत् । वैरिभङ्गाय वै पूज्यो बालकद्यौ हि यज्वनः" ।

५।१०रक्ताक्षस्य "दशमश्चैव रक्ताक्षो नीलकण्ठः कृशोदरः । पीतनीलतनुश्चैव नीलशोणाविकाम्बरः । शरमाद्यादिमे पाणौ द्वितीये चैव पङ्कजम् । वीरमिन्द्रादिमे हस्ते द्वितीये चैव कर्त्तरीम् । दधद्वैरिविघाताय पूजनीयः प्रयत्नतः" ।

५।११क्रोधनस्य "एकादशोऽधुना वत्स ! क्रोधनाख्यो निगद्यते । सजलाम्बुदसङ्काशः पीतशोणाम्बरान्वितः । लोहभूषणसंयुक्तः केशमध्यमपङ्कजः । दक्षिणाद्ये करे शूलं पलशुम्भाख्यसंयुतम् । द्वितीये कर्त्तरीमत्र वामाद्ये पालमासनम् । सन्दंशन्तु द्वितीये वै दधानो वैरिहत्यये" ।

५।१२क्षयस्य "क्षयाभिधो भवेदत्र द्वादशो वत्सरो जय ! । कृष्णग्रीवः सुनीलाङ्गो रक्तनेत्रो जटाधरः । मेचकारुणवस्त्रस्तु नीलकारुणगोधिकः । आदिमे दक्षिणे सर्पं द्वितीये चैव पाशकम् । विषकुम्भन्तु वामाद्ये द्वितीये चैव केतनम्" । एवं पञ्चद्वादशकषष्टिवत्सराणां मूर्त्तयः ।

यासां देवतानां प्रतिमानां यथारूपनिर्माणमुक्तं तासां तथारूपेणैव ध्येयता । अत्रानुक्तदेवतानां ध्यानभेदा ध्यानशब्दे वक्ष्यन्ते । देवताप्रतिमूर्त्त्यादयोऽप्यत्र । प्रतिमानिर्माणे द्रव्यभेदा मत्स्यपु०उक्ताः ते च देवताप्रतिष्ठाशब्दे वक्ष्यते

**देवताप्रतिष्ठा** स्त्री ६त० । देवताप्रतिमानां विधानेन तत्सान्निध्यापादके अर्च्चे वक्ष्यमाणनिरुक्तियुक्ते संस्कारभेदे देवप्रतिष्ठादयोऽप्यत्र । तद्विधानादि देवप्रतिष्ठातत्त्वे संक्षेपेणोक्तं यथा मत्स्यपु०

"सौवर्णी राजती वापि ताम्री रत्नमयी तथा । शैलदारुमयी वापि लौहसङ्गमयी तथा । रीतिकाधातुयुक्ता च ताम्रकांस्यमयी तथा । शुभदारुमयी वापि देवतार्च्चा प्रशस्यते । अङ्गुष्ठपर्व्वमारभ्य वितस्तिं यावदेव तु । गृहेषु प्रतिमा कार्य्या नाधिका शस्यते बुधैः" । रीतिका पित्तलं शुभदारुमयी यज्ञियकाष्ठमयी । अर्च्चा प्रतिमा गृहेषु स्वगृहेषु । "प्रासादेष्वधिका शुभेति" वचनात् तत्राधिकापि शैलजा दृष्टे शुभदा । तन्त्रान्तरेऽप्युक्तम् "चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः । उपासकानां कार्य्यार्थं ब्रह्मणो रूपकल्पना" । रूपकल्पना रूपस्थानां देवतानां पुंस्त्र्यंशादिकल्पना । गौतमीयतन्त्रे "काश्मीरी शान्तदा प्रोक्ता सर्व्वकापि विज्ञप्तिदा । तेजोदा दारुजा चैव रैत्तिकी वस्तुनाशिनी । ताम्री धर्म्मविवृद्धिञ्च करोति बहुसौख्यदा । शुद्धे च लक्ष्मयी प्रोक्ता प्रतिमा शुभलक्षणा । भोगदा मोक्षदा सा तु प्रतिमा कथिता तव" । वराहपुराणे "कुड्ये लेख्ये च मे कश्चित् पटे कश्चिच्च मानवः । पूजयेद्वदि वा चक्रे मम तेजोऽशसम्भवे" । कुड्ये लेख्ये भित्तौ लिखिते तथा पटे च लिखिते । चक्रे शालग्रामचक्रे । मत्स्यपुराणे लिङ्गमभिधाय "एवं रत्नमयं कुर्य्यात् स्फाटिकं पार्थिवं तथा । शुभदारुमयं वापि यद्वा मनसि रोचते । चैत्रे वा फाल्गुने वापि ज्यैष्ठे वा माधवे तथा । माघे वा सर्व्वदेवानां प्रतिष्ठा शुभदा भवेत् । प्राप्य पक्षं शुभं शुक्लमतीते चोत्तरायणे" । अतीते इत्ते "पञ्चमी च द्वितीया च तृतीया सप्तमी तथा । दशमी पौर्णमासी च तथा श्रेष्ठा त्रयोदशी । तासु प्रतिष्ठा विधिवत् कृता बहुफला भवेत्" । व्यवहारसमुच्चये

"प्रतिष्ठा सर्व्वदेवानां केशवस्य विशेषतः । उत्तरायणमापन्ने शुक्लपक्षे शुभे दिने । कृष्णपक्षे च पञ्चम्याम् अष्टम्याञ्चैव शस्यते" । भुजबलभीमे "युगादावयने पुण्ये कर्त्तव्या विषुवद्वये । चन्द्रसूर्य्यग्रहे वापि दिने पुण्येऽथ पर्व्वसु । या तिथिर्यस्य देवस्य तस्यां वा तस्य कीर्त्तिता । स्वस्वागमविशेषेण प्रतिष्ठा मुक्तिदायिनी" । पद्मपुराणे "प्रतिपद्धनदस्योक्ता पवित्रारोहणे तिथिः । श्रियो देव्या द्वितीया च तिथीनामुत्तमा स्मृता । तृतीया तु भवान्याश्च चतुर्थी तत्सुतस्य च । पञ्चमी नागराजस्य षष्ठी प्रोक्ता गुहस्य च । सप्तमी भास्करे प्रोक्ता भैरवस्याष्टमी तथा । दुर्गाया नवमी प्रोक्ता दशमी वासुकेस्तथा । एकादशी ऋषीणाञ्च द्वादशी चक्रपाणिनः । त्रयोदशी त्वनङ्गस्य शिवस्योक्ता चतुर्द्दशी । मम चैव मुनिश्रेष्ठ ! पौर्णमासी तिथिः स्मृता" । चक्रपाणिन इति पदं व्यवहारे इत्यस्मात् इनिप्रत्ययः "महिषासुरहन्त्र्याश्च प्रतिष्ठा दक्षिणायने" । कल्पतरौ देवीपुराणम् "यस्य देवस्य यः कालः प्रतिष्ठाध्वजरोपणे । गर्त्तापूरशिलान्यासे शुभदस्तस्य पूजितः" । यस्य देवस्य प्रतिष्ठा ध्वजारोपणे यः कालः शुभदस्तस्य गर्त्तापूरशिलान्यासे गृहारम्भे स कालः पूजित इत्यर्थः । प्रतिष्ठासमुच्चये "माघेऽथ फाल्गुने वापि चैत्रवैशाखयोरपि । ज्यैष्ठाषाढकयोर्व्वापि प्रतिष्ठा शुभदा भवेत्" । भविष्ये "सोमो बृहस्पतिश्चैव शुक्रश्चैव तथा बुधः । एते सौम्यग्रहाः प्रोक्ताः प्रतिष्ठा यज्ञकर्म्मसु" । एतद्वारेषु प्रतिष्ठा कर्त्तव्या इत्यर्थः । मत्स्यपुराणम् "आषाढे द्वे तथा मूलमुत्तरात्रयमेव च । ज्येष्ठा श्रवणरोहिण्यः पूर्व्वभाद्रपदस्तथा । हस्ताश्विनी रेवती च पुष्यो मृगशिरस्तथा । अनुराधा तथा स्वाती प्रतिष्ठादिषु शस्यते" । दीपिकायाम् "प्राजेशशाक्रकरादितिभाश्विनीषु पौष्णामरेज्यशशिभेषु तथोत्तरासु । कर्त्तुः शुभे शशिनि केन्द्रगते च जीवे कार्य्या हरेः शुभतिथौ विधिवत् प्रतिष्ठा" । देवीपुराणम् "तथा द्वादशगे जीवे अष्टमे वाथ भास्करे । प्रतिष्ठा कारिता विष्णोर्महाभयकरी मता" । कल्पतरौ देवीपुराणम् "चतुर्व्वर्णैस्तथा विष्णुः प्रतिष्ठाप्यः सुखार्थिभिः" । कालिकापुराणम् "प्रतिमायाः कपोलौ द्वौ स्पृष्ट्वा दक्षिणपाणिना । प्राणप्रतिष्ठां कुर्व्वीत तस्या देवस्य या हरेः । अकृतायां प्रतिष्ठायां प्राणानां प्रतिमासु च । यथापूर्व्वं तथाभावः स्वर्णादीनां न विष्णुता । अन्येषामपि देवानां प्रतिमासु च पार्थिव ! । प्राणप्रतिष्ठा कर्त्तव्या तस्यां देवत्वसिद्धये" । प्रतिष्ठा ब्राह्मणद्वारैव कर्त्तव्या । यथा हयशीर्षपञ्चरात्रे भगवद्वाक्यं "कर्त्तुमिच्छति यः पुण्यां मम मूर्त्तिं प्रतिष्ठया । अन्वेषणीयस्त्वाचार्य्यस्तेन लक्षणसंयुतः । ब्राह्मणः सर्व्ववर्णानां पञ्चरात्रविशारदः । ब्राह्मणानामभावे तु क्षत्त्रियो वैश्यशूद्रयोः । क्षत्त्रियाणामभावे तु वैश्यः शूद्रस्य कल्पितः । कदाचिदपि शूद्रस्तु न चाचार्य्यत्वमर्हति" । बृहन्नारदीये "नमेद्यः शूद्रसंस्पृष्टं लिङ्गं वा हरिमेव वा । स सर्व्वयातनाभोगी यावदाहूतसंप्लवम्" । आहूतसंप्लवं प्रलयपर्य्यन्तम् । तथा "स्त्रीणामनुपनीतानां शूद्राणाञ्च जनेश्वर ! । स्पर्शने नाधिकारोऽस्ति विष्णौ वा शङ्करेऽपि वा" । कर्म्मादौ तु नवग्रहपूजामाह मत्स्यपुराणम् "नवग्रहमखं कृत्वा ततः कर्म्म समारभेत् । अन्यथा फलदं पुंसां न काम्यं जायते क्वचित्" । प्रतिष्ठाप्रकारस्तु विस्तरेण मत्स्यपुराणादावुक्तः । तदसम्भवे विद्याकरवाजपेयिसम्मतोभविष्यादावुक्तो ग्राह्यः यथा भविष्यपुराणम् "स्नपनादि यथाशक्ति कृत्वा तन्मूलमन्त्रकम् । विन्यसेद्धृदयाम्भोजे प्रतिष्ठा सुकृता भवेत्" । आदिपदात् पूजोत्सवहोमादि मत्स्यकपिलपञ्चरात्रोक्तकर्म्म च कर्त्तव्यं तद्यथा "सपुष्पं सकुशं पाणिं न्यसेद्देवस्य मस्तके । पञ्चवारं जपेन्मूलमष्टोत्तरशतोत्तरम् । ततो मूलेन मूर्द्धादिपीठान्तं संस्पृशेदिति । तत्त्वन्यासं लिपिन्यासं मन्त्रन्यासञ्च विन्यसेत् । पूजाञ्च महतीं कुर्य्यात् स्वतन्त्रोक्तां यथाविधि । प्राणप्रतिष्ठामन्त्रेण प्राणस्थापनमाचरेत्" । लिपिन्यासः मातृकान्यासः । उक्तञ्च "जपादौ सर्व्वमन्त्राणां विन्यासेन लिपिं विना । कृतं तन्निष्फलं विद्यात् तस्मात् पूर्व्वं लिपिं न्यसेत्" । कादिमतेऽपि "मातृकायाः षडङ्गञ्च मातृकान्यासमेव च । सर्व्वेषां प्रथमं कृत्वा पश्चात्तन्त्रोदितं न्यसेत्" । एतद्वचनाच्च पूर्व्वं मातृकान्यासः पश्चात्तत्त्वन्यासः । क्रमदीपिकायामप्येवं क्रमः । मन्त्रन्यासश्च तत्तन्मन्त्रविशेषोक्तपदवर्णन्यासः । तदभावे शिरसि मूलमन्त्रेण तत्त्वन्यासः । तत्त्वन्यासस्तु विष्णुविषयक एव न्यासप्रमाणानि शारदाक्रमदीपिकोक्तान्यनुसन्धेयानि । प्राणप्रतिष्ठामन्त्रस्तु शारदात्रयोविंशतिपटलोक्तः यथा "पाशाङ्कुशपुटा शक्तिर्व्वायुर्बिन्दुविभूषितः । याद्याः सप्त सकारान्ता व्योम सत्येन्दुसंयुतम् । तदन्ते हंसमन्त्रः स्यात्-

तोऽमुष्य पदं वदेत्। प्राणा इति वदेत् पश्चादिह प्राणास्ततःपरम्। अमुष्य जीव इह च स्थितोऽमुष्यपदं वदेत्। सर्वेन्द्रियाण्यमुष्यान्ते वाङ्मनश्चक्षुरन्ततः। श्रोत्रघ्राणपदे प्राणा इहागत्य सुखं चिरम्। तिष्ठन्त्वग्निवध्वन्ते प्राणमन्त्रोऽयमीरितः। प्रत्यमुष्यपदात् पूर्वं पाशाद्यानि नियोजयेत्। प्रयोगेषु समाख्यातः प्राणमन्त्रो मनीषिभिः"। पाशाङ्कुशपुटा शक्तिरित्यनेन प्रथमं पाशबीजं आं, ततः शक्तिबीजं ह्रीं, ततोऽङ्कुशबीजं क्रों, वायुर्यकारः बिन्दुविभूषितः तेन यं, याद्याः सप्त सकारान्ता उद्धृतयकारानुवादेन सप्त न तु तद्भिन्नं बीजं, पूर्वं पृथगुद्धारस्तु वर्णसप्तानामपि सबिन्दुत्वाख्यापनाय। अन्यत्रापि "अङ्कुशवाय्वनलायनीवरुणबीजान्युक्तानि अत्र वायुबीजस्यैकत्वं बीजत्वेन सर्वेषां सबिन्दुत्वं व्यक्तं राघवभट्टोऽप्येवम्। अन्यस्तु याद्या बिन्दुविभूषिताः इत्युक्त्वा नादबिन्दुविभूषिता इति व्याख्याय याद्या इत्यस्य विशेषणं वदति। व्योम हकारः सत्यओकारः इन्दुर्बिन्दुः तेन होम् अतएव "पाशाङ्कुशान्तरितशक्तिमनोः पुरस्तादुच्चार्य यादिसुनिवर्णगुणं सहंसमिति" प्रपञ्चसारोऽप्याह। गुणमित्यनेन हौमिति पद्मपादाचार्यैर्व्याख्यातम् अग्निवधूः स्वाहा। तेनायं मन्त्रः आं ह्रीं क्रों यं रं लं वं शं षं सं हों हंसः अमुष्य प्राणा इह प्राणाः। आमित्यादि अमुष्य जीव इह स्थितः। आमित्यादि अमुष्य सर्वेन्द्रियाणि। आमित्यादि अमुष्य वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा। अमुष्येति षष्ठ्यन्तदेवतानामोपलक्षणम् "अदः पदं हि यद्रूपं यत्र मन्त्रे हि दृश्यते। साध्याभिधानं तद्रूपं तत्र स्थाने नियोजयेत्" इति नारदीयात्। वशिष्ठसंहितायाम् "हृदि हस्तं समादाय मूलमन्त्रञ्च संजपेत्"। मूलमन्त्रं तत्तद्देवतामन्त्रं स च वैदिकः तान्त्रिकश्च "ओङ्कारादिचतुर्थ्यन्तं नमस्कारान्तमीरितम्। स्वनाम सर्वसत्त्वानां मन्त्र इत्यभिधीयते" इति ब्रह्मपुराणीयेन ओङ्कारादिचतुर्थ्यन्ततत्तद्देवतानामरूपो वा। कालिकापुराणेऽपि "प्रतिमायाः कपोलौ द्वौ स्पृष्ट्वा दक्षिणपाणिना। प्राणप्रतिष्ठां कुर्वीत तस्या देवस्य वा हरेः। वासुदेवस्य बीजेन तद्विष्णोरित्यनेन(१)च। तथैवाङ्गाङ्गिमन्त्राभ्यां प्रतिष्ठामाचरेद्धरेः। तथैव हृदयेऽङ्गुष्ठं दत्त्वा शश्वच्च मन्त्रवित्। एभिर्मन्त्रैः प्रतिष्ठान्तु हृदयेऽपि समाचरेत्। अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाः चरन्तु च। अस्यै देवत्वसंख्यायै स्वाहेति यजुरीरयन्। अङ्गमन्त्रैरङ्गिमन्त्रैर्वैदिकैरित्यनेन च। प्राणप्रतिष्ठां सर्वत्र प्रतिमासु समाचरेत्"। देवीप्रतिष्ठायाम् अस्मा इत्यत्र अस्यै देवत्वसंख्यायै इत्यूहः शारस्वत्यां मेध्यां प्राणा इत्यत्र प्राणै इत्यूहवत्। अङ्गमन्त्रैरङ्गन्यासमन्त्रैः अङ्गिमन्त्रैः प्रधानमन्त्रैः वैदिकैः ओं मनोजूतिर्जुषतामित्यादि(२)मन्त्रैः। (यजु०२।१३)। स्नपनात् पूर्वं वल्मीकमृत्तिकादिभिस्त्रिभिः क्षालनमाह हयशीर्षपञ्चरात्रम् "वल्मीकमृत्तिकाभिस्तु गोमयेन तु भस्मना। क्षालयेत् शिल्पिसंस्पर्शदोषाणामुपशान्तये। स्नापयेद्गन्धतोयेन शुद्धवत्या तु देशिकः। नमस्तेऽर्च्ये सुरेशानि! प्रणीते विश्वकर्मणा। प्रभाविताशेषजगद्धात्रि! तुभ्यं नमोनमः। त्वयि संपूजयामीशे! नारायणमनामयम्। रहिता शिल्पिदोषैस्तु शुद्धियुक्ता सदा भव"। तेन च यथाशक्ति स्नपनादीतिकर्तव्यताकः प्रतिमाहृदये तन्मूलमन्त्रविन्यासोदेवताविशेषसन्निधिः प्रतिष्ठेति। राघवभट्टधृतमहाकपिलपञ्चरात्रेऽपि "प्रतिष्ठाशब्दसंसिद्धिः प्रतिपूर्वाच्च तिष्ठतेः। बह्वर्थत्वान्निपातानां संस्कारादौ प्रतेः स्थितिः। अर्द्धस्तदयमेतस्य गीयते शाब्दिकैर्जनैः। विशेषसन्निधेर्या तु क्रियते व्यापकस्य तु। तन्मूर्त्तौ भावना मन्त्रैः प्रतिष्ठा सा विधीयते"। तुभस्मना गोमयभस्मना गन्धतोयेन चन्दनादियुक्ततोयेन। देवतास्नानीयद्रव्यपरिमाणमाह ब्रह्मपुराणम् "अष्टोत्तरं पलशतं स्नाने देयञ्च सर्वदा"। पलमाह मनुः "पञ्च कृष्णलको माषस्ते सुवर्णस्तु षोडश। पलं सुवर्णाश्चत्वारः" इति। ततश्चाष्टरत्तिकाधिकलौकिकमाषद्वयाधिकतोलकत्रयेण। १।२।८। वैधपलं भवति एवं तथाविधाष्टोत्तरशतपलपरिमितेन लौकिकषष्ट्यधिकशतत्रयतोलकाः ३६० इति। एवं वल्मीकमृत्तिकादिक्षालने सर्वाङ्गीणजलस्पर्शनस्नानरूपत्वात्तत्रापि अष्टोत्तरं शतपलमिति वदन्ति। वल्मीकमृदादिस्नाने मन्त्रविशेषानुपादानात् "मन्त्रानादेशे गायत्रीति" शूलपाणिलिखितात् गायत्र्या तत्तन्मूलमन्त्रेण वा स्नानं कारयितव्यम्। गन्धोदकस्नाने तु शुद्धवत्या(२) एतोन्विन्द्रमित्यादि ऋक्त्रयात्मिकया। देशिको यजमानोगुरुर्वा विज्ञः। नमस्ते इत्यादि विज्ञापनमन्त्रे देवतान्तरे च नारायणमित्यत्र तत्तद्देवतानामोहः। शिवलिङ्गस्यार्च्यत्वात् अर्चाविशेषणत्वात् स्त्रीलिङ्गमविरुद्धम्। यमः "कृत्वा देवगृहं सर्वं प्रतिष्ठाप्य च देवताम्। विधाय विधिवत् पूजां तल्लोकं विन्दते ध्रु-

वम्"। नारसिंहे "प्रतिमां लक्षणोपेतां नरसिंहस्य कारयेत्। सर्व्वपापानि संत्यज्य स तु विष्णुपुरं व्रजेत्। प्रतिष्ठां नरसिंहस्य यः करोति यथाविधि। निष्कामो नरशार्दूल! देहबन्धात् प्रमुच्यते। सकामो नरसिंहस्य पुरं प्राप्य प्रमोदते। विधिवत् स्नापयेद् यस्तु कारयित्वा जनार्द्दनम्। न जातु निर्गमस्तस्य विष्णुलोकात् कथञ्चन"। नरसिंहस्य विष्णोः उपसंहारे तथा दर्शनात्। माधवोल्लासे "देवस्य प्रतिमायास्तु यावन्तः परमाणवः। तावद्वर्षसहस्राणि विष्णुलोके महीयते। राजमार्त्तण्डे "पुत्त्रोत्पत्तौ तथा चाद्यमन्नप्राशनिके तथा। चूड़ाकार्य्ये व्रते चैव नाम्नि पुंसवनेषु च। पाणिग्रहे प्रतिष्ठायां प्रवेशे नववेश्मनः। एतद्वृद्धिकरं नाम गृहस्थस्य विधीयते"। वृद्धिकरं श्राद्धमित्यन्वयः। सूत उवाच "कलौ चैकाहसाध्येन प्रतिष्ठां मन्दवित्तवान्। मध्यमेनाधमेनापि प्रकुर्य्यात्तान्त्रिकोत्तमः। नित्यं निर्व्वर्त्त्य मतिमान् कुर्य्यादभ्युदयन्ततः। विप्रान् संभोजयेच्चाथ ततो यागगृहं व्रजेत्। गणेशग्रहदिक्पालान् प्रतिकुम्भेषु पूजयेत्। स्थण्डिले पूजयेद्विष्णुं परिवारगणं यजेत्। स्नापयेत् प्रथमं देवं तोयैः पञ्चविधैरपि। पञ्चामृतैः पञ्चगव्यैः पञ्चमृत्पिण्डकैरपि। तिलतैलैस्तथा स्नेहैः कषायैरपि सत्तमः"। तथा "जम्बुशाल्मलिवाट्यालं वदरं बकुलं तथा। एतेषां वल्कलरसः कषायः परिकीर्त्तितः। पञ्चपुष्पोदकैर्व्वाथ त्रिपत्रैरपि सत्तमः। तुलसीकुन्दमालूरपत्रागस्त्याङ्कुलिपत्रकम्। चम्पकाश्वशमीपद्मकरवीरञ्च पञ्चकम्। मृत्तिका करिदन्तस्य पर्व्वताश्वखुरस्य च। कुशवल्मीकसम्भूतं मृत्पञ्चकमितीरितम्। गोमूत्रं गोमयं क्षीरं दधिसर्पिः कुशोदकम्। कुर्य्यात् प्राणप्रतिष्ठाञ्च होमं कुर्य्याद् यथाविधि। दक्षिणां विधिवत् कुर्य्यात् पूर्णार्घ्यं तदनन्तरम्"। इति भविष्यपुराणे तृतीयभागे नवमोऽध्यायः। नरसिंहपुराणे "पञ्चगव्येन देवेशं यः स्नापयति भक्तितः। ब्रह्मकूर्च्चविधानेन विष्णुलोके महीयते"। ब्रह्मकूर्च्चविधानेन कुशोदकयुक्तेन पञ्चगव्येन। स्नानीयानुलेपने तदुद्वर्त्तने फलमाह तत्रैव "यवगोधूमजैश्चूर्णैरुद्वर्त्त्योष्णेन वारिणा। प्रक्षाल्य देवदेवेशं वारुणं लोकमाप्नुयात्"। स्मृतिः "चतुरङ्गुलविस्तारा दीर्घा हस्तद्वयावधि। पताका लोकपालानां दशानां परिकीर्त्तिताः"। पञ्चहस्तस्तु वै दण्डः पताकानां प्रकीर्त्तितः। ज्योतिषे "दुग्धं सशर्करञ्चैव घृतं दधि तथा मधु। पञ्चामृतमिदं प्रोक्तं विधेयं सर्व्वकर्म्मसु"। प्रतिष्ठानन्तरं मात्स्ये "ततः सहस्रं विप्राणामथ वाष्टशतं तथा। भोजयेच्च यथाशक्त्या पञ्चाशद्वाथ विंशतिम्"। षोडशोपचाराः "आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम्। मधुपर्काचमस्नानवसनाभरणानि च। गन्धपुष्पे धूपदीपौ नैवेद्यं वन्दनं तथा"। दशोपचारास्तु "पाद्यार्घ्यमाचमनीयं मधुपर्काचमने अपि। गन्धादिपञ्चकञ्चेति उपचारा दशोदिताः"। पञ्चोपचारास्तु "गन्धादयो नैवेद्यान्ताः पूजा पञ्चोपचारिका"। उपचारद्रव्याणि शारदायाम् "पाद्यं श्यामाकदूर्व्वाब्जविष्णुक्रान्ताभिरीरितम्"। विष्णुक्रान्ता अपराजिता एतद्द्रव्ययुक्तं जलमिति शेषः। "गन्धपुष्पाक्षतयवकुशाग्रफलसर्षपैः। सदूर्व्वैः सर्व्वदेवानामेतदर्घ्यमुदीरितम्"। एतद्युक्तं जलमित्यर्थः। "जातीलवङ्गकक्कोलैर्जलमाचमनीयकम्। आज्यं दधि मधून्मिश्रं मधुपर्कं निवेदयेत्"। कात्यायनः "मधुपर्कं दधिघृतमधु पिहितं कांस्यं कांस्येन"। मधुपर्केति स्थाने स्नानीयेति पाठः पूर्व्वोक्तद्रव्ययुक्तं जलमात्रं वा "गन्धचन्दनकर्पूरकालागुरुभिरीरितः"। राघवभट्टधृतम् "शङ्खपात्रस्थितं गन्धं मन्त्रैः कुर्य्यात् कनिष्ठया। कनिष्ठाङ्गुष्ठसंयुक्ता गन्धमुद्रा प्रकीर्त्तिता"। पुष्पाणि तत्तद्देवदेयानि "अगुरूशीरगुग्गुलुमधुपर्कचन्दनैः। धूपयेदाज्यसंमिश्रैः सूर्य्यैर्देवस्य देशिकः। तत्र तत्र जलं दद्यात् उपचारान्तरान्तरे"। राघवभट्टधृतम् "सर्व्वोपचारवस्तूनामभावे भावनैव हि। निर्म्मलेनोदकेनाथ पूर्णतेत्याह नारदः"। नारसिंहे "पञ्चगव्येन देवेशं यः स्नापयति भक्तितः। ब्रह्मकूर्च्चविधानेन विष्णुलोके महीयते"। ब्रह्मकूर्च्चविधानेन कुशोदकयुक्तेन पञ्चगव्येन। ब्रह्मपुराणे "देवानां प्रतिमा यत्र घृताभ्यक्ततमा भवेत्। पलानि तस्मै देयानि श्रद्धया पञ्चविंशतिम्। अष्टोत्तरशतं स्नाने पलं देयञ्च सर्व्वदा। यवगोधूमजैश्चूर्णैरुद्वर्त्त्योष्णेन वारिणा। प्रक्षाल्य देवदेवेशं वारुणं लोकमाप्नुयात्। पादपीठन्तु यो दद्यात् विल्वपत्रैर्निघर्षयेत्। उष्णाम्बुना च प्रक्षाल्य सर्व्वपापैः प्रमुच्यते" देवीपुराणम् "होमोग्रहादिपूजायां शतमष्टोत्तरं भवेत्। अष्टाविंशतिरष्टौ वा यथाशक्ति विधीयते"। कात्यायनः "आज्यद्रव्यमनादेशे जुहोतिषु विधीयते"। कालिकापुराणम् "महीयते च देवेभ्यो गन्धपुष्पादिकं तथा।

अर्घ्यपात्रस्थितैस्तोयैरभिषिच्य तदुत्सृजेत्"। नरसिंहपुराणम् "स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकम्। अथ नीराजनविधिः पूजारत्नाकरे देवीपुराणे "भक्त्या पिष्टप्रदीपाद्यैश्चूताश्वत्थादिपल्लवैः। ओषधीभिश्च मेध्याभिः सर्व्ववीजैर्यवादिभिः। नवम्यां पर्व्वकालेषु यात्राकाले विशेषतः। यः कुर्य्याच्छ्रद्धया वीर! देव्या नीराजनं नरः। शङ्खभेर्य्यादिनिनदैर्जयशब्दैश्च पुष्कलैः। यावन्तो दिवसान् वीर! देव्या नीराजनं कृतम्। तावद्वर्षसहस्राणि स्वर्गलोके महीयते। यस्तु कुर्य्यात् प्रदीपेन सूर्य्यलोकं स गच्छति"। पर्व्वकाले उत्सवकाले। देव्या इति स्तोत्रमविवक्षितम्। अथ प्रतिष्ठितमूर्त्तौ कदाचित् पूजाऽभावे महाकपिलपञ्चरात्रम् "एकाहं पूजाविहतौ कुर्य्याद्द्विगुणमर्च्चनम्। त्रिरात्रे तु महापूजा संप्रोक्षणमतःपरम्। मासादूर्द्धमनेकाहं पूजनं चेद्विहन्यते। प्रतिष्ठैवोच्यते कैश्चित् कैश्चित् संप्रोक्षणक्रमः"। संप्रोक्षणक्रमः "संप्रोक्षणन्तु देवस्य देवस्य त्वेति(४)पूर्व्ववत्। गव्यं रसैश्च संस्नाप्य दर्भतोयैर्विशोध्य च। प्रोक्षयेत् प्रोक्षणीतोयैर्मूलेनाष्टोत्तरं शतम्। सपुष्पं सकुशं पाणिं न्यसेद्देवस्य मस्तके। पञ्चवारं जपेन्मूलमष्टोत्तरशतं तथा। ततो मूलेन मूर्द्धादि पीठान्तं चैव संस्पृशेत्"। इति "तत्त्वन्यासं लिपिन्यासं मन्त्रन्यासञ्च विन्यसेत्। प्राणप्रतिष्ठामन्त्रेण प्राणस्थापनमाचरेत्। पूजाञ्च महतीं कुर्य्यात् स्वतन्त्रोक्तां यथाविधि। यागहीनादिषु प्रायः संक्षेपेण विधिः स्मृतः"। अथास्पृश्यस्पर्शने तु बौधायनः "द्रव्यवत् कृतशौचानां देवार्च्चानां भूयः प्रतिष्ठापनमिति"। देवार्च्चा देवताप्रतिमा। तासामस्पृश्यस्पृष्टानां प्रकृतिद्रव्यस्य ताम्रादेर्यथेष्टं शौचं कृत्वा पुनः प्रतिष्ठापनात् पूज्यत्वमित्यर्थः इति। रत्नाकरे आदिपुराणे "खण्डिते स्फुटिते दग्धे भ्रष्टे स्थानविवर्जिते। यागहीने पशुस्पृष्टे पतिते दुष्टभूमिषु। अन्यमन्त्रार्च्चिते चैव पतितस्पर्शदूषिते। दशस्वेतेषु नो चक्रुः सन्निधानं दिवौकसः। इति सर्व्वगतो विष्णुः परिभाषाञ्चकार ह"। अत्र वृद्धिश्राद्धहोमौ त्वावश्यकौ यथाशक्तीत्यभिधानात् इति कश्चित्। तथा चाल्पधनानां यज्ञं विनाऽपि पूजनमाह विष्णुधर्म्मोत्तरे प्रथमकाण्डम् "पूजाकर्म्म बहिर्वेद्यां श्रद्धया भृगुनन्दन!। न त्वल्पदक्षिणैर्यज्ञैर्यजेतेह कदाचन। विष्णुदेवनिकायस्थं यथाऽहमरिन्दम!। तपसा पूजयेन्नित्यं यस्मादल्पधनो नरः"। यद्येकाहे वास्तुयागग्रहहोमौ तदा तन्त्रेण वृद्धिश्राद्धं कुर्य्यात् तथा एकस्मिन्नग्नौ होमत्रयं विधेयं एकाग्नावनेकहोमकरणे एकं परिसमूहनादिकमाह गोभिलः। "गणेष्वेकं परिसमूहनमिध्मबर्हिः पर्य्युक्षणमाज्यभागाविति"। पूजादिकं प्रत्येकमेव"।

तत्र प्रतीकसूचितामन्त्राः क्रमेण यथा

(१) तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्" ऋ० १।१२६

(२) "मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमम् तनोत्वरिष्टं यज्ञं समिमं दधातु विश्वे देवास इहमादयन्तामों प्रतिष्ठ" यजु० २।१२

(३) अत्र शुद्धवत्या शुद्धपदवत्या ताश्च तिस्र ऋचः ऋ०८।९७ सूक्तास्थिता यथा

"एतोन्विन्द्रं स्तवाम शुद्धं शुद्धेन साम्ना। शुद्धैरुक्थैर्वावृध्वांसं शुद्ध आशीर्वान् ममत्तु।७। इन्द्र! शुद्धो न आगहि शुद्धः शुद्धाभिरूतिभिः। शुद्धो रयिं निधारय शुद्धो ममद्धि सोम्यः।८। इन्द्र! शुद्धो हि नो रयिं शुद्धो रत्नानि दाशुषे। शुद्धो वृत्राणि जिघ्नसे शुद्धो वाजं सिषाससि।९।

(४) "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि" यजु०१।६

विस्तरस्तु अग्निपु० ५६ अ०आदौ उक्तो यथा

"प्रतिष्ठापञ्चकं वक्ष्ये प्रतिमात्मा तु पूरुषः। प्रकृतिः पिण्डिका लक्ष्मीः प्रतिष्ठा योगकस्तयोः। इच्छाफलार्थिभिस्तस्मात् प्रतिष्ठा क्रियते नरैः। गर्भसूत्रं तु निःसार्य्य प्रासादस्याग्रतो गुरुः। अष्टषोडशविंशान्तं मण्डपञ्चाश्रमादिकम्। स्नानार्थं कलशार्थञ्च यागद्रव्यार्थमर्द्धतः। त्रिभागेणार्द्धभागेन वेदिं कुर्य्यात्तु शोभनाम्। कलशैर्घटिकाभिश्च वितानाद्यैश्च भूषयेत्। पञ्चगव्येन सम्प्रोक्ष्य सर्व्वद्रव्याणि धारयेत्। अलङ्कृतो गुरुर्विष्णुं ध्यात्वात्मानं प्रपूजयेत्। अङ्गुरीयप्रभृतिभिर्मूर्त्तिपान् वलयादिभिः। कुण्डे कुण्डे स्थापयेच्च मूर्त्तिपांस्तत्र पारगान्" (मूर्त्तिपान् मूर्त्तिनिर्म्माणशिल्पिनः)। "चतुष्कोणे चार्द्धकोणे वर्त्तुले पद्मसन्निभे। पूर्व्वादौ तोरणार्थन्तु पिप्पलोदुम्बरौ वटम्। प्लक्षं सुशोभनं पूर्व्वं सुभद्रं दक्षतोरणम्। सुकर्म्म च सुहोत्रञ्च आप्ये सौम्ये सुधन्वयम्। पञ्चहस्तं तु

संस्थाप्य स्योनापृथिवि(१) पूजयेत्। तोरणस्तम्भमूले तु कलशान्मङ्गलाङ्कुरान्। प्रदद्यादुपरिष्टाच्च कुर्याच्चक्रं सुदर्शनम्। पञ्चहस्तप्रमाणन्तु ध्वजं कुर्याद्विचक्षणः। वैपुल्यं चास्य कुर्वीत षोडशाङ्गुलसम्मितम्। सप्तहस्तोच्छ्रितं चास्य कुर्यात् दण्डं समाहितः। अरुणोऽग्निनिभश्चैव कृष्णः शुक्लोऽथ पीतकः। रक्तवर्णस्तथा श्वेतः कृष्णवर्णः क्रमाद् ध्वजाः। कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः। शङ्कुकर्णः सर्वनेत्रः सुमुखः सुप्रतिष्ठितः। पूज्याः कोटिगुणैर्युक्ताः पूर्वाद्या ध्वजदेवताः। जनाढकसुपूरास्तु पक्वबिम्बोपमा घटाः। अष्टाविंशाधिकशतं कालमण्डलवर्जिताः। सहिरण्या वस्त्रकण्ठाः सोदकास्तोरणाद्वहिः। घटाः स्थाप्याश्च पूर्वादौ वेदिकायाश्च कोणगान्। चतुरः स्थापयेत् कुम्भानाजिघ्रेति (२) च मन्त्रतः। कुम्भेष्वावाह्य शक्रादीन् पूर्वादौ पूजयेत् क्रमात्। इन्द्रागच्छ देवराज! वज्रहस्त! गजस्थित!। पूर्वद्वारञ्च मे रक्ष देवैः सह नमोऽस्तु ते१। त्रातारमिन्द्रमन्त्रेण (३) अर्चयित्वा यजेद् बुधः। आगच्छाग्ने! शक्तियुत! छागस्थ! बलसंयुत!। रक्षाग्नेयीं दिशं देवैः पूजां गृह्ण नमोऽस्तु ते। अग्निर्मूर्द्धेति (४)मन्त्रेण यजेद्वा अग्नये नमः२। महिषस्थ! यमागच्छ दण्डहस्त! महाबल!। रक्ष त्वं दक्षिणद्वारं वैवस्वत! नमोऽस्तु ते। वैवस्वतं सङ्गमनमित्यनेन (५) यजेद् यमम्३। नैर्ऋतागच्छ खड्गाढ्य! बलवाहनसंयुत!। इदमर्घ्यमिदं पाद्यं रक्ष त्वं नैर्ऋतीं दिशम्। एष ते इति (६) मन्त्रेण यजेदर्घ्यादिभिर्नरः४। मकरारूढ! वरुण! पाशहस्त! महाबल!। आगच्छ पश्चिमं द्वारं रक्ष रक्ष नमोऽस्तु ते। उरुं हि राजा(७) वरुणं यजेदर्घ्यादिभिर्गुरुः५। आगच्छ वायो! सबल! ध्वजहस्त! सवाहन!। वायव्यं रक्ष देवैस्त्वं समरुद्भिर्नमोऽस्तु ते। वात (८) इत्यादिभिश्चार्चेदोङ्नमो वायवेऽपि वा ६। आगच्छ सोम! सबल! गदाहस्त! सवाहन!। रक्ष त्वमुत्तरद्वारं सकुबेर! नमोऽस्तु ते। सोमं राजानमिति (९) वा यजेत्सोमाय वै नमः७। आगच्छेशान! सबल! शूलहस्त! वृषस्थित!। यज्ञमण्डपस्यैशीं दिशं रक्ष नमोऽस्तु ते। ईशानादस्येति (१०) यजेदीशानाय नमोऽपि वा ८। ब्रह्मन्नागच्छ हंसस्थ! स्रुक्स्रुवव्यग्रहस्तक!। सलोकोर्द्ध्वां दिशं रक्ष यज्ञं नमोऽस्तु ते। हिरण्यगर्भेति (११) यजेद्ब्रह्मणेऽपि वा ९। अनन्तागच्छ चक्राढ्य! कूर्मस्थाहिगणेश्वर!। अधोदिशं रक्ष रक्ष अनन्तेश! नमोऽस्तु ते। नमोऽस्तु सर्पेति (१२) यजेदनन्ताय नमोऽपि वा" १० ५६अ०।

(अत्राध्याये प्रतीकसूचिता मन्त्राः क्रमेण दर्श्यन्ते यथा

(१) "स्योना पृथिवि नो भवानृक्षरा निवेशनी। यच्छा नः शर्म सप्रथाः" यजु०३५।२१। ऋग्वेदे तु पृथिवी इति पाठः

(२) "आजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः। पुनरूर्जा निवर्तस्व सा नः सहस्रं धुक्ष्वोरुधारा पयस्वती पुनर्मा विशताद्रयिः" यजु० ८।४२

(३) "त्रातारमिन्द्रमवितारमिन्द्रं हवे हवे सुहवं शूरमिन्द्रम्। ह्वयामि शक्रं पुरुहूतमिन्द्रं स्वस्ति नो मघवा धात्विन्द्रः" यजु० २०,५०

(४) "अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपां रेतांसि जिन्वति" यजु० ३।१२

(५) "वैवस्वतं सङ्गमनं जनानां यमं राजानं हविषा दुवस्य" ऋ०१०।१४।१ अर्धर्चम्।

(६) "एष ते निर्ऋते! भागस्तं जुषस्व स्वाहा" यजु०९।३५

(७) "उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ। अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित्" ऋ० १।२४।८

(८) "वात आ वातु भेषजं शम्भु मयोभु नो हृदे। प्र ण आयूंषि तारिषत्" ऋ०१०।१८६।१

(९) "सोमं राजानमवसेऽग्निं गीर्भिर्हवामहे। आदित्यान् विष्णुं सूर्यं ब्रह्माणञ्च बृहस्पतिम्" ऋ०१०।१४१।३।

(१०) "ईशानादस्य भुवनस्य भूरेर्न वा उ। योषद्रुद्रादसुर्यम्" ऋ०२।३३।९ अर्द्धर्चम्

(११) "हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्। स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम" ऋ०१०।१२१।१

(१२) "नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु। ये अन्तरिक्षे ये च दिवि तेभ्यः सर्पेभ्यो नमः" यजु०१३।६)

"भूमेः परिग्रहं कुर्यात् क्षिपेद्व्रीहीँश्च सर्षपान्। नारसिंहेन रक्षोघ्नं प्रोक्षयेत् पञ्चगव्यतः। भूमिं घटे तु संपूज्य करके चाङ्गकं हरिम्। अस्त्रमन्त्रेण कवचं तत्र चाष्टशतं यजेत्। अच्छिन्नधारया सिञ्चन् व्रीहीन् संकल्प धारयेत्। प्रदक्षिणं परिभ्राम्य कलश

विक्रिरोपरि । सवस्त्रे कलसे भूयः पूजयेदच्युतं श्रियम् । योगे योगेति मन्त्रेण (१) न्यसेच्छय्यान्तु मण्डले । कुशोपरि तूलिकाञ्च शय्यायां दिग्विदिक्षु च । विद्याधिपान् यजेद्विष्णुं मधुघातं त्रिविक्रमम् । वामनं दिक्षु वाय्वादौ श्रीधरञ्च हृषीकपम् । पद्मनाभं दामोदरमैशान्यां स्नानमण्डपे । अभ्यर्च्य पश्चादैशान्यां चतुष्कुम्भे सवेदिके । स्नानमण्डपके सर्वद्रव्याण्यानीय निःक्षिपेत् । स्नानकुम्भेषु कुम्भांस्तांश्चतुर्दिक्ष्वधिवासयेत् । कलसाः स्थापनीयास्तु अभिषेकार्थमादरात् । वटोदुम्बरकाश्वत्थांश्चम्पकाशोकश्रीद्रुमान् । पलाशार्जुनप्लक्षांस्तु कदम्बबकुलाम्रकान् । पल्लवांस्तु समानीय पूर्वकुम्भे विनिःक्षिपेत् । पद्मकं रोचनां दूर्वां दर्भपिञ्जलमेव च । जातीपुष्पं कुन्दपुष्पञ्चन्दनं रक्तचन्दनम् । सिद्धार्थं तगरञ्चैव तण्डुलं दक्षिणे न्यसेत् । सुवर्णं रजतञ्चैव कूलद्वयमृदन्तथा । नद्याः समुद्रगामिन्या विशेषात् जाह्नवीमृदम् । गोमयञ्च यवान् शालींस्तिलांश्चैवापरे न्यसेत् । विष्णुपर्णीं श्यामलतां भृङ्गराजं शतावरीम् । सहदेवीं महादेवीं बलां व्याघ्रीं सलक्ष्मणाम् । ऐशान्यामपरे कुम्भे माङ्गल्यान्विनिवेशयेत् । वल्मीकमृत्तिकां सप्तस्थानोत्थामपरे न्यसेत् । जाह्नवीवालुकातोयं विन्यसेदपरे घटे । वराहवृषनागेन्द्रविषाणोद्धृतमृत्तिकाम् । मृत्तिकां पद्ममूलस्य कुशस्य त्वपरे न्यसेत् । तीर्थपर्वतमृद्भिश्च युक्तमप्यपरे न्यसेत् । नागकेशरपुष्पञ्च काश्मीरमपरे न्यसेत् । वैदुर्यं विद्रुमं मुक्तां स्फटिकं वज्रमेव च । एतान्येकत्र निःक्षिप्य स्थापयेद्देवसत्तमम् । नदीनदतडागानां सलिलैरपरं न्यसेत् । एकाशीतिपदे चान्यान्मण्डपे कलसान् न्यसेत् । गन्धोदकाद्यैः सम्पूर्णान् श्रीसूक्तं (२)नाभिमन्त्रयेत् । यवं सिद्धार्थकं गन्धं कुशाग्रं चाक्षतं तथा । तिलान् फलं तथा पुष्पमर्घ्यार्थं पूर्वतो न्यसेत् । पद्मं श्यामलतां दूर्वां विष्णुपर्णीं कुशांस्तथा । पाद्यार्थं दक्षिणे भागे मधुपर्कं तु दक्षिणे । कक्कोलकं लवङ्गं च तथा जातीफलं शुभम् । उत्तरे ह्याचमनाय अग्नौ दूर्वाक्षतान्वितम् । पात्रं नीराजनार्थं च तथोद्वर्त्तनमानिले । गन्धपुष्पान्वितं पात्रमैशान्यां पात्रके न्यसेत् । मुरामांसीं चामलकं सहदेवीं निशाद्वयम् । घृतदीपान्न्यसेदष्टौ न्यसेन्नीराजनाय च । शङ्खं चक्रञ्च श्रीवत्सं कुलिशं पङ्कजादिकम् । हेमादिपात्रे कृत्वा तु नानावर्णादिपुष्पकम्” ५७अ०

(१) (“योगे योगे तवस्तरं वाजे वाजे हवामहे । सखाय इन्द्रमूतये” ऋ०१।३०।७)

(२) श्रीसूक्तं हिरण्यवर्णामित्यादि पञ्चदशर्चमृग्वेद परिशिष्टोक्तं तुलादाना० १६५ पृष्ठादौ द्रष्टव्यम् ।

“ऐशान्यां जनयेत् कुण्डं गुरुर्वह्निञ्च वैष्णवम् । गायत्र्याष्टशतं हुत्वा सम्पातविधिना घटान् । प्रोक्षयेत् कारुशालायां शिल्पिभिर्मूर्तिपैर्व्रजेत् । तूर्यशब्दैः कौतुकञ्च बन्धयेद्दक्षिणे करे । विष्णवे शिपिविष्टाय (१) ऊर्णासूत्रेण सर्षपैः । पट्टसूत्रेण कर्त्तव्यं दैशिकस्यापि कौतुकम् । मण्डपे प्रतिमां स्थाप्य सवस्त्रां पूजितां स्तुवन् । नमस्तेऽर्च्चे ! सुरेशानि ! प्रणीते ! विश्वकर्मणा । प्रभाविताशेषजगद्धात्रि ! तुभ्यं नमो नमः । त्वयि सम्पूजयामीशे नारायणमनामयम् । रहिता शिल्पिदोषैस्त्वमृद्धियुक्ता सदा भव । एवं विज्ञाप्य प्रतिमां नयेत्तां स्नानमण्डपम् । शिल्पिनन्तोषयेद्द्रव्यैर्गुरवे गां प्रदापयेत् । चित्रं देवेति (२) मन्त्रेण नेत्रे चोन्मीलयेत्ततः । अग्निर्ज्योतीति (३) दृष्टिञ्च दद्याद्वै भद्रपीठके । ततः शुक्लानि पुष्पाणि घृतं सिद्धार्थकं तथा । दूर्वां कुशाग्रं देवस्य दद्याच्छिरसि दैशिकः । मधुवातेति (४) मन्त्रेण नेत्रे चाभ्यञ्जयेद् गुरुः । हिरण्यगर्भमन्त्रेण(५) इमं मेति(६) च कीर्त्तयेत् । घृतेनाभ्यञ्जयेत् पश्चात् पठन् घृतवतीं (७)पुनः । मसूरपिष्टेनोद्वर्त्य अतो देवेति(८) कीर्त्तयन् । क्षालयेदुष्णतोयेन सप्त तेऽग्ने ति(९) दैशिकः । द्रुपदादि(१०)वेत्यनुलिम्पेदापो हि ष्ठेति (११)सेचयेत् । नदीजैस्तीर्थजैः स्नानं पावमानीति(१२) रत्नजैः । समुद्रं गच्छ (१३) चन्दनैस्तीर्थमृत्कलसेन च । शन्नो देवीः (१४) स्नापयेच्च गायत्र्याप्युष्णवारिणा । पञ्चमृद्भिर्हिरण्येति (१५) स्नापयेत्परमेश्वरम् । सिकताद्भिरिमं मेति(१६) वल्मीकोदघटेन च । तद्विष्णोरित्यो (१७) षध्यद्भिर्याओषधीति (१८) मन्त्रतः । यज्ञायज्ञेति (१९) काषायैः पञ्चभिर्गव्यकैस्ततः । पयः पृथिव्यां (२०) मन्त्रेण याः फलिनी (२१) फलाम्बुभिः । विश्वतश्चक्षुः (२२) सौम्येन पूर्णेण कलसेन च । सोमं राजानमित्येव (२३) विष्णोरराटं (२४) दक्षतः । हंसः शुचिः (२५) पश्चिमेन कुर्यादुद्वर्तनं हरेः । मूर्द्धानन्दिवो (२६) मन्त्रेण धात्रीं मांसीं च के दद्यात् । मानस्तोकेति (२७) मन्त्रेण गन्धद्वारेति (२८) गन्धकैः । इदमापेति (२९) च घटैरेकाशीतिपदस्थितैः । एह्येहि भगवन् ! विष्णो ! लोका-

लुप्तहकारक ! । यज्ञभागं गृहाणेमं वासुदेव । नमोऽस्तु ते । अनेनावाह्य देवेशं कुर्यात् कौतुकमोचनम् । युञ्जामि त्वेति (२०) सूक्तेन देयिकस्यापि मोचयेत् । पाद्यं हिरण्यमयेनार्घ्यं (२१)अतो देवेति(२२) चार्घ्यकम् । मधुवाता(२३)मधुपर्कं मयि गृह्णामि(२४) चाचमेत् । यज्ञमीमदन्तेति(२५)किरेद्दूर्वाक्षतं बुधः । काण्डात्(२६)निर्मञ्छनं कुर्याद्गन्धं गन्धवतीति(२७)च । तन्त्वा यामीति(२८)माल्यञ्च इदं विष्णुः(२९)पवित्रकम् । बृहस्पते (४०) वस्त्रयुग्मं वेदाहमित्युत्तरीयकम् । (४१) महाव्रतेन(४२)मधुमत्या पुष्पं औषधयः(४३)क्षिपेत् । धूपं दद्याद्धूरसीति (४४) विभ्राट्सूक्तेन(४५) चाञ्जनम् । युञ्जन्तीति (४६)च तिलकं दीर्घायुष्टे ति(४७)माल्यकम् । इन्द्रं विश्वेति (४८)छत्रन्तु आदर्शन्तु विराजतः । (४९) चामरन्तु विकर्णेन भूर्षा रथन्तरेण(५०) च । व्यजनं वासुदेवस्य युञ्जामि त्वेति (५१) पुष्पकम् । वेदाद्यैः संस्तुतिं कुर्याद्धरेः पुरुषसूक्ततः । सर्वमेतत्समं कुर्यात् पिण्डिकादौ हरादिके । देवस्योत्थानसमये सौपर्णं (५२) सूक्तमुच्चरेत् । उत्तिष्ठेति(५३)समुत्थाप्य यथाया मण्डपे नयेत् । आकुनेनैव सूक्तेन देवं अक्षरयादिना । (५४) अतो देवेति (५५) सूक्तेन प्रतिमां पिण्डिकां तथा । ओंसूक्तेन च शय्यायां विन्यस्य सकलीकृतिः । भृङ्गराजं इमं नाग व्यजनं कलसं तथा । वैजयन्तीं तथा भेरीं दीपमित्यष्टमङ्गलम् । इर्यवेदस्य सूक्तेन (५६) पादशैये त्रिपादिति (५७) । उत्थां पिधानकं पात्रमन्त्रिकां दर्विकां ददेत् । सुषलोलूखलं दद्याच्छिलां सम्मार्जनीं तथा । तथा भोजनभाण्डानि गृहोपकरणानि च । शिरोदेशे च निद्राख्यं वस्त्रत्रयुतं घटम् । मधुखाद्यैः पूरयित्वा स्नपनस्य विधिः स्मृतः" ५८अ० (५८अ० प्रतीकसूचितामन्त्राः यथा

(१) "विष्णवे शिपिविष्टाय स्वाहा" यजु०२०।२२

(२) "चित्रं देवानामुद्गादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः आप्रा द्यावा पृथिवी चान्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च" ऋ० १।११५।१।

(३) "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा ! सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा ! अग्निर्वर्चो ज्योतिर्वर्चः स्वाहा ! सूर्यो वर्चो ज्योतिर्वर्चः स्वाहा ! ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा" यजु० ३।९

(४) "मधुवाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः" यजु० १३।२७ अत्र एकैव ऋक् पाठ्या ।

(५) "हिरण्यगर्भः समवर्तताग्रे इत्यादि प्राग्वत् ।

(६) "इमं मे वरुण ! श्रुधी हवमद्या च मृडय । त्वामवस्युराचके" यजु० २१।१

(७) "इतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा" यजु० ३४।४५

(८) अतो देवा अवन्तु न इत्यादि प्राग्वत् ।

(९) "सप्त तेऽग्ने ! समिधः सप्त जिह्वाः सप्त ऋषयः सप्त धाम प्रियाणि । सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरापृणस्व घृतेन स्वाहा" यजु०१७।७९

(१०) द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव । पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः" यजु०२५।२०

(११) "आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे" ऋ०१०।९।१

(१२) "पावमानसूक्तम् स्वादिष्ठयेत्यादि हिरण्यवर्णामित्यादि प्रतिसूक्तात्मकम् ऋक्तन्त्र सुवादानादिपङ्क्तौ ।१६७ अवधि १८५ पृ० पर्यन्ते द्रष्टव्यम् । यजुर्वेदोक्तं पुनन्तु पितर इत्यादि नवर्चं तत्रैव २०६पृ०द्रष्टव्यम्

(१३)समुद्रं गच्छ स्वाहा । अन्तरिक्षं गच्छ स्वाहा देवं सवितारं गच्छ स्वाहा । यजु० ६।२१

(१४) "शन्नो देवीरभीष्टय आपो भवन्तु पीतये । शंयोरभिस्रवन्तु नः" ऋ० १०।९।४

(१५) "हिरण्यगर्भः समवर्तताग्रे इत्यादि प्राग्वत् ।

(१६) "इमं मे गङ्गे यमुने ! सरस्वति ! शुतुद्रि ! स्तोमं सचता परुष्ण्या । असिक्न्या मरुद्वृधे वितस्तयाऽऽर्जीकीये शृणुह्या सुषोमया" ऋ०१०।७५।५

(१७) "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम्" ऋ०१।२२।२०

(१८) "या ओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः । तासामसि त्वमुत्तमारं कामाय शं हृदे" यजु०१२।९२

(१९) "यज्ञायज्ञा वो अग्नये गिरा गिरा च दक्षसे । प्रप्र वयममृतं जातवेदसं प्रियं मित्रं न शंसिषम्" ऋ०६।४८।१

(२०) "पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयोधाः । पयस्वतीः प्रदिशः सन्तु मह्यम्" ऋ०१८।३६

(२१) "याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः । बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः" यजु०१२।८९

(२२) "विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् । सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जन-

यन् देवएकः" ऋ०१० मण्डले ८सूक्ते ।१।२ ऋक् ।

(२३) सोमं राजानमित्यादि प्राग्वत् ।

(२४) "विष्णोरराटमसि विष्णोः श्नप्त्रे स्थः। विष्णोः स्यूरसि विष्णोर्ध्रुवोऽसि। वैष्णवमसि विष्णवे त्वा" यजु० ५।२१।

(२५) "हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्। नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्" यजु० १०।२४

(२६) "मूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आजातमग्निम्। कविं सम्राजमतिथिं जनानामासन्नापात्रं जनयन्त देवाः" यजु० ७।२४

(२७) "मा न स्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः। मा नो वीरान् रुद्र! भामिनो वधीर्हविष्मन्तः सदामित्त्वा हवामहे" यजु०१६।१६

(२८) "गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्" श्रीसूक्ते ८मन्त्रः

(२९) "इदमापः प्रवहत यत्किञ्च दुरितं मयि। यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम्" ऋ०१।२३।२२

(३०) "मुञ्चामि त्वा हविषा जीवनाय कमज्ञातयक्ष्मादुत राजयक्ष्मात्। ग्राहिर्जग्राह यदि वैतदेनं तस्या इन्द्राग्नी प्रमुमुक्तमेनम्।१ यदि क्षितायुर्यदि वा परेतो यदि मृत्योरन्तिकं नीत एव। तमाहरामि निर्ऋतेरुपस्थादस्पार्षमेनं शतशारदाय।२ सहस्राक्षेण शतशारदेन शतायुषा हविषाहार्षमेनम्। शतं यथेमं शरदो नयातीन्द्रो विश्वस्य दुरितस्य पारम्।३ शतं जीव शरदो वर्द्धमानः शतं हेमन्तान् शतमु वसन्तान्। शतमिन्द्राग्नी सविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुः। ४ आहार्षं त्वाविदं त्वा पुनरागाः पुनर्नव। सर्वाङ्ग! सर्वं ते चक्षुः सर्वमायुश्च तेऽविदम्"५ऋ०१०।१६१

(३१) "अतो देवा अवन्तु न इत्यादि प्राग्वत्।

(३२) "हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्। योऽसावादित्ये पुरुषः सोऽसावहम्" यजु०४०।१७

(३३) मधुवाता इत्यादि प्राग्वत् ऋगेका।

(३४) मयि गृह्णाम्यग्रे! अग्निं रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय मासु देवताः सचन्ताम्" यजु०१३।१

(३५) "अक्षन्नमीमदन्त ह्यवप्रिया अधूषत। अस्तोषत स्वभानवो विप्रा न विष्ठया मतीयोजान्विन्द्र! ते हरी" ऋ० २।८.२

(३६) "काण्डात् काण्डात् प्ररोहन्ती परुषः परुषस्परि। एवा नो दूर्वे प्रतनु सहस्रेण शतेन च" यजु०१३।२०

(३७) गन्धवती गन्धद्वारामित्यादि प्राग्वत्।

(३८) "तत्त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुशंस मा न आयुः प्रमोषीः" ऋ० १।२४।११

(३९) "इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पांसुरे" ऋ०१।२२।१७

(४०) "बृहस्पते! अति यदर्यो अर्हाद् द्युमद्विभाति क्रतुमज्जनेषु। यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम्" यजु० २६।३

(४१) "वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्। तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" यजु० ३१।१२

(४२) महाव्रतं यद्वर्णो हिरण्यस्येत्यस्यामृचि गेयं साम

(४३) "ओषधयः समवदन्त सोमेन सह राज्ञा। यस्मै कृणोति ब्राह्मणस्तं राजन् पारयामसि" यजु० १२।९६

(४४) धूरसि धूर्वन्तं धूर्व तं योऽस्मान् धूर्वति तं धूर्व यं वयं धूर्वामः। देवानामसि वह्नितमं सस्नितमं पप्रितमं जुष्टतमं देवहूतमम्" यजु० १।८

(४५) "विभ्राट् बृहत् पिबतु सोम्यम्, इत्यादि करतां नः सुराधसः इत्यन्तम्" यजु० ३३।३० मन्त्रावधि ४६ मन्त्र पर्यन्तं मत्कृततुलादानादि पद्धतौ १२२ पत्रावधि ११३ पत्रपर्यन्ते द्रष्टव्यम्।

(४६) "युञ्जन्ति ब्रध्नमरुषं चरन्तं परितस्थुषः। रोचन्ते रोचना दिवि" यजु०२३।५

(४७) दीर्घायुष्ट ओषधे! खनिता यस्मै च त्वा खनाम्यहम्। अथो त्वं दीर्घायुर्भूत्वा शतवल्शा विरोहतात्" यजु०१२।१००

(४८) "इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः। रथीतमं रथीनां राजानं सत्पतिं पतिम्" ऋ०१।११।१

(४९) "ततो विराडजायत विराजो अधिपूरुषः। स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः" यजु०३१।५

(५०) रथन्तरं साम अभि त्वा शूर इत्यस्यामृचि गेयं तच्च मत्कृततुलादानादिपद्धतौ १९२।९३ पत्रे द्रष्टव्यम्।

(५१) मुञ्चामि त्वा इत्यादि प्राग्वत् ऋगेका।

(५२) सौपर्णं सूक्तम् ऋग्वेदप्रसिद्धम्।

(५३) "उत्तिष्ठ ब्रह्मणस्पते! देवयन्तस्त्वेमहे। उपप्रयन्तु

मरुतः सुदानव इन्द्र ! प्राशूर्भवा सचा” यजु०२४।५६

(५४) अक्षरथं सामभेदः ।

(५५) अतो देवा इत्यादि षड़्चम् ऋ०१।२२। तच्च मत्-कृत तुलादानादि पद्धतौ ८८।८६ पत्ने द्रष्टव्यम् ।

(५६) अश्वसूक्तम् ऋग्वेद प्रसिद्धम् ।

(५७) त्रिपादूर्द्ध उदैत् पुरुषः पादोऽस्येहाभवत् पुनः । ततो विष्वङ् व्यक्रामत् साशनानशने अभि यजु०३१।४)

“हरेः सान्निध्यकरणमधिवासनमुच्यते। सर्वज्ञं सर्वगं ध्यात्वा आत्मानं पुरुषोत्तमम् । ओङ्कारेण समायोज्य चिच्छक्तिमभिमानिनीम् । निःसार्य्यात्मैकतां कृत्वा स्वस्मिन् सर्वगते विभौ । योजयेन्मरुता पृथ्वीं वह्निबीजेन दीपयेत् । संहरेद्वायुना चाग्निं वायुमाकाशतो नयेत् । अधिभूताधिदैवैस्तु साध्यात्मैर्विभवैः सह । तन्मात्रपा-त्मकान् कृत्वा संहरेत्तत्क्रमाद् बुधः । आकाशं मन-साहृत्य मनोऽहङ्करणे कुरु । अहङ्कारञ्च महति तञ्चाप्य-व्याकृते नयेत् । अव्याकृतं ज्ञानरूपे वासुदेवः स ईरितः । स तामव्याकृतां मायामवष्टभ्य सिसृक्षया । सङ्कर्षणाख्यः शब्दात्मा स्पर्शाख्यमसृजत् प्रभुः । सोऽस्य मायां स प्रद्युम्नं तेजोरूपं स चासृजत् । अनिरुद्धं रसमात्रं ब्रह्माणं गन्धरूपकम् । अनिरुद्धः स च ब्रह्मा अप आदौ ससर्ज ह । तस्मिन् हिरण्मयञ्चाण्डं सोऽसृजत् पञ्चभूतवत् । तस्मिन् संक्रामिते जीवे शक्तिरात्मोपसं-हृता । प्राणो जीवेन संयुक्तो वृत्तिमानिति शब्द्यते । जीवो व्याहृतिसंज्ञस्तु प्राणेष्वाध्यात्मिकः स्मृतः । प्राणै-र्युक्ता ततो बुद्धिः सञ्जाता चाष्टमूर्तिकी । अहङ्कारस्ततो जज्ञे मनस्तस्मादजायत । अर्थाः प्रजज्ञिरे पञ्च सङ्कल्पा-दियुतास्ततः । शब्दः स्पर्शश्च रूपञ्च रसो गन्ध इति स्मृताः । ज्ञानशक्तियुतान्येतैरारब्धानीन्द्रियाणि तु । त्वक्श्रोत्रघ्राणचक्षूंषि जिह्वाबुद्धीन्द्रियाणि तु । पादौ पायुस्तथा पाणी वागुपस्थश्च पञ्चमः । कर्मेन्द्रियाणि चैतानि पञ्चभूतान्यतः शृणु । आकाशवायुतेजांसि स-लिलं पृथिवी तथा । स्थूलमेभिः शरीरन्तु सर्वाधारं प्रजायते । एतेषां वाचका मन्त्रा न्यासायोच्यन्त उ-त्तमाः । जीवभूतं मकारन्तु जीवोपाधिगतं न्यसेत् । हृ-दयस्थं बकारन्तु बुद्धितत्त्वं न्यसेत् बुधः । फकारमपि तत्रैव अहङ्कारमयं न्यसेत् । मनस्तत्त्वं पकारन्तु न्यसेत् संकल्पसम्भवम् । शब्दतन्मात्रतत्त्वन्तु नकारं मस्तके न्यसेत् । स्पर्शात्मकं धकारन्तु वक्त्रदेशे तु विन्यसेत् । दकारं रूपतत्त्वन्तु हृद्देशे विनिवेशयेत् । थकारं वस्ति-देशे तु रसतन्मात्रकं न्यसेत् । तकारं गन्धतन्मात्रं जङ्घयोर्विनिवेशयेत् । णकारं श्रोत्रयोर्न्यस्य ढकारं वि-न्यसेत्त्वचि । डकारं नेत्रयुग्मे तु रसनायां ठकार-कम् । टकारं नासिकायान्तु ञकारं वाचि विन्यसेत् । झकारं करयोर्न्यस्य पाणितत्त्वं विचक्षणः । जकारं पादयोर्न्यस्य छं पायौ चमुपस्थके । विन्यसेत् पृथिवीतत्त्वं ङकारं पादयुग्मके । वस्तौ घकारं गं तत्त्वं तैजसं हृदि विन्यसेत् । खकारं वायुतत्त्वञ्च नासिकायां निवे-शयेत् । ककारं विन्यसेन्नित्यं खतत्त्वं मस्तके बुधः । हृत्पुण्डरीके विन्यस्य मकारं सूर्यदैवतम् । द्वासप्तति-सहस्राणि हृदयादभिनिःसृताः । कलाषोडशसंयुक्तं सकारं तत्र विन्यसेत् । तन्मध्ये चिन्तयेन्मन्त्री विन्दुं व-ह्नेस्तु मण्डलम् । हकारं विन्यसेत्तत्र प्रणवेन सुरो-त्तम ! । ओं यं परमेष्ठ्यात्मने रं नमः पुरुषात्मने । लं नमोविश्वात्मने न्यस्य वं निवृत्त्यात्मने नमः । ओं शं नमः सर्वात्मने इत्युक्ताः पञ्च शक्तयः । स्थाने तु प्रथमा योज्या द्वितीया आसने मता । तृतीये शयने तद्वच्चतुर्थी यानकर्मणि । प्रत्यर्चायां पञ्चमी स्यात्पञ्चो-पनिषदः स्मृताः । हकारं विन्यसेन्मध्ये ध्यात्वा मन्त्र-मयं हरिम् । यां मूर्तिं स्थापयेत्तस्या मूलमन्त्रं न्यसे-त्ततः । ओं नमो भगवते वासुदेवायेति च मूलकम् । शि-रोघ्राणललाटेषु मुखकण्ठहृदि क्रमात् । भुजयोर्जङ्घ-योरङ्घ्र्योः केशवं शिरसि न्यसेत् । नारायणं न्यसेद्वक्त्रे ग्रीवायां माधवं न्यसेत् । गोविन्दं भुजयोर्न्यस्य विष्णुं च हृदये न्यसेत् । मधुसूदनकं पृष्ठे वामनं जठरे न्यसेत् । कट्यान्त्रिविक्रमं न्यस्य जङ्घायां श्रीधरं न्यसेत् । हृषीकेशं दक्षिणायां पद्मनाभं तु गुल्फके । दामोदरं पादयोश्च हृदयादिषडङ्गकम् । एतत् साधारणं प्रोक्त-मादिमूर्तेस्तु सत्तम ! । अथ वा यस्य देवस्य प्रारब्धं स्था-पनं भवेत् । तस्यैव मूलमन्त्रेण सजीवकरणं भवेत् । यस्या मूर्तेस्तु यन्नाम तस्याद्यं चाक्षरं च यत् । तत् स्वरैर्द्वादशैर्भेद्य ह्यङ्गानि परिकल्पयेत् । हृदयादीनि देवेश-मूलञ्च दशमाक्षरम् । यथा देवे तथा देहे तत्त्वानि विनि योजयेत् । चक्राब्जमण्डले विष्णुं यजेद्गन्धादिना तथा । पूर्ववच्चासनं दद्यात् सपात्रं सपरिच्छदम् । शुभचक्रं द्वादशारं ह्युपरिष्टाद्विचिन्तयेत् । त्रिनाभि चक्रं द्विनेमि स्वरैस्तच्च समन्वितम् । पृष्ठदेशे ततः प्राज्ञः प्रकृत्यादी-

न्निवेशयेत् । पूजयेदारकाद्येषु सूर्यं द्वादशधा पुनः । कलाषोडशसंयुक्तं सोमन्तत्र विचिन्तयेत् । सबलं त्रितयं नाभौ चिन्तयेद्देशिकोत्तमः । पद्मञ्च द्वादशदलं पद्ममध्ये विचिन्तयेत् । तन्मध्ये पौरुषीं शक्तिं ध्यात्वाभ्यर्च्य च देशिकः । प्रतिमायां हरिं न्यस्य तत्र तं पूजयेत् सुरम् । गन्धपुष्पादिभिः सम्यक् साङ्गं सावरणं क्रमात् । द्वादशाक्षरबीजैस्तु केशवादीन् समर्चयेत् । द्वादशारे मण्डले तु लोकपालादिकं क्रमात् । प्रतिमामर्च्चयेत् पश्चाद्गन्धपुष्पादिभिर्द्विजः । पौरुषेण तु सूक्तेन (१) श्रियाः सूक्तेन(२)पिण्डिकाम् । जननादिक्रमात् पश्चाज्जनयेद्वैष्णवानलम् । हुत्वाग्निं वैष्णवैर्मन्त्रैः कुर्य्याच्छान्त्युदकं बुधः । तत् सिक्त्वा प्रतिमामूर्द्ध्नि वह्निप्रणयनं चरेत् । दक्षिणेऽग्निं दूतमिति (३) कुण्डेऽग्निं प्रणयेद्बुधः । अग्निनाग्निश्च (४) पूर्वे च कुण्डेऽग्निं प्रणयेद् बुधः । उत्तरे प्रणयेदग्निमग्निं दूतं हवीमभिः (५)। अग्निप्रणयने मन्त्रस्त्वमग्ने (६)द्युभिरुच्यते । पलाशसमिधानान्तु अष्टोत्तरसहस्रकम् । कुण्डे कुण्डे होमयेच्च व्रीहीन् वेदादिकैस्तथा । आज्यांस्तिलान् व्याहृतिभिर्मूलमन्त्रेण वै हुतम् । कुर्य्यात्ततः शान्तिहोमं मधुरत्रितयेन च । द्वादशार्णैः स्पृशेत् पादौ नाभिं हृन्मस्तकं ततः । घृतं दधि पयो हुत्वा स्पृशेन्मूर्द्धन्यथो ततः । स्पृष्ट्वा शिरोनाभिपादांश्चतस्रः स्थापयेन्नदीः । गङ्गा च यमुना गोदा क्रमान्नाम्ना सरस्वती । दहेत्तु विष्णुगायत्र्या (७) गायत्र्या श्रपयेच्चरुम् । होमयेच्च बलिं दद्यात्तदन्ते भोजयेद्द्विजान् । शाखाधिपानां तुष्ट्यर्थं हेम गां गुरवे ददेत् । दिक्पतिभ्यो बलिं दत्त्वा रात्रौ कुर्य्याच्च जागरम् । ब्रह्मगीतादिशब्देन सर्वभागधिवासनात्" ५८अ०।

५८ अ० प्रतीकसूचितामन्त्राः यथा [१-१६

(१) ("पौरुषसूक्तं सहस्रशीर्षेत्यादि षोडशार्च्चम्" यजु०३१।

(२) श्रीसूक्तं हिरण्यवर्णामित्यादि ऋग्वेदपरिशिष्टोक्तं पञ्चदशर्च्चम् तुलादानां १६५ पत्ते द्रष्टव्यम् ।

(३) "अग्निं दूतं पुरोदधे हव्यवाहमुपब्रुवे । देवाँ आसादयादिह" यजु० २२।१७

(४) "अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड् जुह्वास्यः" सामसं ४।१।१।१

(५) ''अग्निमग्निं हवीमभिः सदा हवन्त विश्पतिम् । हव्यवाहं पुरुप्रियम्" ऋ० १।१२।२

(६) त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि । त्वं वनेभ्यस्त्वमोषधिभ्यस्त्वं नृणां नृपते ! जायसे शुचिः यजु० ११।२७

(७) तद्विष्णोः परमं पदमित्यादि प्राग्वत् वैष्णवी गायत्री । )

"पिण्डिकास्थापनार्थन्तु गर्भागारं तु सप्तधा । विभजेद् ब्रह्मभागे तु प्रतिमां स्थापयेद् बुधः । देवमानुषपैशाचभागेषु न कदाचन । ब्रह्मभागं परित्यज्य किञ्चिदाश्रित्य चान्तरम् । देवमानुषभागाभ्यां स्थाप्या यत्नात्तु पिण्डिका । नपुंसकशिलायान्तु रत्नन्यासं समाचरेत् । नारसिंहेन हुत्वाथ कुर्यात् न्यासं च तेन वै । व्रीहीन् रत्नांस्त्रिधातूंश्च लोहादींश्चन्दनादिकान् । पूर्वादिनवगर्तेषु न्यसेन्मध्ये यथारुचि । अथ चेन्द्रादिमन्त्रैश्च गर्त्तौ गुग्गुलुनावृतः । रत्नन्यासविधिं कृत्वा प्रतिमामालभेद्गुरुः । सशलाकैर्दर्भपुञ्जैः सहदेवैः समन्वितैः । सबाह्यान्तैश्च संस्कृत्य पञ्चगव्येन शोधयेत् । प्रोक्षयेद्दर्भतोयेन नदीतीर्थोदकेन च । होमार्थं स्थण्डिलं कुर्यात् सिकताभिः समन्ततः । सार्द्धहस्तप्रमाणं तु चतुरस्रं सुशोभनम् । अष्टदिक्षु यथान्यासं कलसानपि विन्यसेत् । पूर्वादिष्वष्टवर्णेन अग्निमानीय संस्कृतम् । त्वमग्ने ! द्युभिरिति च(१)गायत्र्या समिधो हुनेत् । अष्टार्णेनाष्टशतकं साज्यं पूर्णां प्रदापयेत् । शान्त्युदकमाम्रपत्रैः मूलेन शतमन्त्रितम् । सिञ्चेद्देवस्य तन्मूर्ध्नि श्रीश्च ते (२) ह्यनया ऋचा । ब्रह्मयानेन चोद्धृत्य उत्तिष्ठ ब्रह्मणस्पते (३)। तद्विष्णोरिति (४) मन्त्रेण प्रासादाभिमुखं नयेत् । शिविकायां हरिं स्थाप्य भ्रामयीत पुरादिकम् । गीतवेदादिशब्दैश्च प्रासादद्वारि धारयेत् । स्त्रीभिर्विप्रैर्मङ्गलाष्टघटैः संस्नापयेद्धरिम् । ततो गन्धादिनाभ्यर्च्य मूलमन्त्रेण देशिकः । अतो देवेति (५)वस्त्राद्यमष्टाङ्गार्घ्यं निवेद्य च । स्थिरे लग्ने पिण्डिकायां देवस्य त्वेति (६) धारयेत् । ओं त्रैलोक्यविक्रान्ताय नमस्तेऽस्तु त्रिविक्रम ! । संस्थाप्य पिण्डिकायान्तु स्थिरं कुर्याद्विचक्षणः । ध्रुवा द्यौरिति (७) मन्त्रेण विश्वतश्चक्षुरित्यपि (८) । पञ्चगव्येन संस्नाप्याक्षाल्य गन्धोदकेन च । पूजयेत् सकलीकृत्य साङ्गं सावरणं हरिम् । ध्यायेत् खं तस्य मूर्तिन्तु पृथिवीं तस्य पीठकाम् । कल्पयेद्विग्रहं तस्य तैजसैः परमाणुभिः । जीवमावाहयिष्यामि पञ्चविंशतितत्त्वगम् । चैतन्यं परमानन्दं जाग्रत्स्वप्नविवर्जितम् । देहेन्द्रियमनोबुद्धिप्राणाहङ्कारवर्जि-

नम्। ब्रह्मादिस्तम्बपर्य्यन्तं हृदयेषु व्यवस्थितम्। हृदयात् प्रतिमाबिम्बे स्थिरो भव परेश्वर!। सजीवं कुरु बिम्बं त्वं सबाह्याभ्यन्तरस्थितः। अङ्गुष्ठमात्रः पुरुषो देहोपाधिषु संस्थितः। ज्योतिर्ज्ञानं परं ब्रह्म एकमेवाद्वितीयकम्। सजीवीकरणं कृत्वा प्रणवेन निबोधयेत्। सान्निध्यकरणन्नाम हृदयं स्पृश्य वै जपेत्। सूक्तन्तु पौरुषं ध्यायन् इदं गुह्यमनुं जपेत्। नमस्तेऽस्तु सुरेशाय सन्तोषविभवात्मने। ज्ञानविज्ञानरूपाय ब्रह्मतेजोऽनुयायिने। गुणातिक्रान्तवेशाय पुरुषाय महात्मने। अक्षयाय पुराणाय विष्णो! सन्निहितो भव। यच्च ते परमं तत्त्वं यच्च ज्ञानमयं वपुः। तत् सर्वमेकतो लीनमस्मिन्देहे विवर्द्धताम्। आत्मानं सन्निधीकृत्य ब्रह्मादिपरिवारकान्। स्वनाम्ना स्थापयेदन्यानायुधादीन् स्वमुद्रया। यात्राऽर्घादिकं दद्या श्रेयः सन्निहितो हरिः। नत्वा स्तुत्वा सवाद्येन जप्त्वा चाष्टाक्षरादिकम्। चण्डप्रचण्डौ द्वारस्थौ निर्गत्याभ्यर्चयेद्गुरुः। अग्निमण्डपमासाद्य गरुडं स्थाप्य पूजयेत्। दिगीशान् दिक्षु देवांश्च स्थाप्य सम्पूज्य देशिकः। विष्वक्सेनं तु संस्थाप्य शङ्खचक्रादि पूजयेत्। सर्वपार्षदकेभ्यश्च बलिं भूतेषु चार्पयेत्। ग्रामवस्त्रसुवर्णादि गुरवे दक्षिणां ददेत्। यागोपयोगि द्रव्याद्यमाचार्याय नरोऽर्पयेत्। आचार्यदक्षिणार्द्धन्तु ऋत्विग्भ्यो दक्षिणां ददेत्। अन्येभ्यो दक्षिणां दद्याद्भोजयेद् ब्राह्मणांस्ततः। अवारितफलान् दद्याद्यजमानाय वै गुरुः। विष्णुं नयेत् प्रतिष्ठाता चात्मना सकलं कुलम्। सर्वेषामेव देवानामेष साधारणो विधिः। मूलमन्त्राः पृथक् तेषां शेषं कार्यं समानकम्" हे०अ०।

( हे०अ० प्रतीकसूचिता मन्त्रा यथा

(१) त्वमग्ने द्युभिरित्यादि प्राग्वत्।

(२) "श्रीश्च ते लक्ष्मीश्च ते पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणामुं म इषाण सर्वलोकं म इषाण" यजु० ३१।२२

(३) उत्तिष्ठ ब्रह्मणस्पते इत्यादि प्राग्वत्।

(४) तद्विष्णोः परमं पदमित्यादि प्राग्वत्।

(५) अतो देवा अवन्तु न इत्यादि प्राग्वत्।

(६) देवस्य त्वा इत्यादि प्राग्वत्।

(७) "ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे। ध्रुवं विश्वमिदं जगद् ध्रुवो राजा विशामयम्" ऋ०१०।१७३।४

(८) विश्वतश्चक्षुरित्यादि २७०८ पृष्ठे प्रदर्शितम्)।

प्रतिष्ठामयूखादौ तत्प्रयोगो दृश्यः। प्रतिष्ठायाः पूज्यताप्रयोजकता कुसुमाञ्जलौ हरिदासीये च व्यवस्थापिता यथा "कथञ्च प्रतिमादौ प्रतिष्ठादेरुपयोगः तथा च प्रतिष्ठाजन्या शक्तिश्चाण्डालादिस्पर्शनाश्या पूज्यताप्रयोजिका स्वीकार्य्या इत्यत आह हरि० "निमित्तभेदसंसर्गादुत्कर्षादपकर्षतः। देवताः सन्निधानेन प्रत्यभिज्ञानतोऽपि वा" मू०। "निमित्तभेदः अदृष्टभेदः। देवताः प्रतिष्ठाविधिना सन्निधानेनाहङ्कारममकारादिना आराधनीयतामासादयन्ति प्रतिष्ठाविधिना देवतानां प्रतिमादौ अहङ्कारममकारौ चाण्डालादिस्पर्शे च तादृशाभिमानाभावः। देवताचैतन्यविवादेऽपि यथार्थपूजितत्वधीः प्रतिष्ठितत्वधीश्च चाण्डालादिस्पर्शाभावविशिष्टा पूज्यतानियामिका तत्र चोपयोगिनी प्रतिष्ठा। वस्तुतस्तु प्रतिष्ठाकालीनयावदस्पृश्यस्पर्शनादिसंसर्गाभावः प्रतिष्ठाध्वंसकालीनः पूज्यताप्रयोजकः प्रतिष्ठितं पूजयेदितिवाक्येन प्रतिष्ठाध्वंसस्यैव प्राप्तेरिति" हरिदासः।

प्रतिमादौ प्रतिष्ठाजन्या पूज्यताप्रयोजिका शक्तिरुत्पद्यते इति मीमांसकास्तन्मतमनुमानचिन्तामणौ शक्तिवादे निराकृतं यथा

"अथ प्रतिमादौ प्रतिष्ठाजन्यं न यजमानादृष्टं पूज्यत्वप्रयोजकं भोगादिना तन्नाशेऽपि पूज्यत्वात् तत्सत्त्वेऽपि चाण्डालादिस्पर्शेनापूज्यत्वात् अन्यधर्मं प्रत्यन्यधर्मस्यानुपयोगाच्च न प्रतिष्ठाध्वंसस्तथा, तत एव उपजीव्यप्रतिष्ठाप्रयोजकत्वभङ्गापत्तेः। तस्मात् प्रतिष्ठाजन्याऽस्पृश्यस्पर्शादिनाश्या प्रतिमादिनिष्ठा शक्तिरभ्युपेयेति चेत् प्रतिष्ठाविधिना प्रतिमादौ देवतासन्निधिरहङ्कारममकाररूपः क्रियते स्वधादृश्यदर्शिनश्चित्तादाविव, ज्ञानस्य नाशेऽपि संस्कारसत्त्वात् अस्पृश्यस्पर्शादिना तु तन्नाशः अचेतनदेवतापक्षे च यथार्थप्रतिष्ठितप्रत्यभिज्ञानस्यास्पृश्यस्पर्शादिविरहसहकृतस्य तथात्वं प्रतिष्ठितं पूजयेदिति विधिबलात्तत्प्रतिसन्धानस्यावश्यकत्वादिति प्राञ्चः। नव्यास्तु प्रतिष्ठाविधिनैव तत्राधेयशक्तिवदपूर्वान्तरं जन्यते तददृष्टवदात्मसंयोगाश्रयपूज्यत्वम् अस्पृश्यस्पर्शेन तन्नाशे चापूज्यत्वमित्याहुः। वयन्तु ब्रूमः प्रतिष्ठितं पूजयेदिति विधिवाक्येन प्रतिष्ठायाः कारणत्वं न बोध्यते किन्तु भूतार्थे क्तानुशासनादतीतप्रतिष्ठे पूज्यत्वं बोध्यते तथा च प्रतिष्ठाध्वंसः प्रतिष्ठाकालीनयावदस्पृश्यादिप्रतियोगिकानादिसंसर्गाभावस-

ष्ठितः पूज्यत्वप्रयोजकः स च प्रागभावोऽत्यान्ताभावश्च क्वचित्”। देवप्रतिष्ठादयोऽप्यत्र

तत्र विहितनक्षत्रलग्नादिकं मु°चि° उक्तं यथा

“जलाशयारामसुरप्रतिष्ठा सौम्यायने जीवशशाङ्कशुक्रे। दृश्ये,मृदुक्षिप्रचरध्रुवे स्यात्पक्षे सिते स्वर्क्षतिथिक्षणे वा। रिक्तारवर्ज्ये दिवसेऽतिशस्ता शशाङ्कपापैस्त्रिभवाङ्गसंस्थैः। व्यष्टान्त्यगैः सत्खचरैर्मृगेन्द्रे सूर्यो, घटे को, युवतौ च विष्णुः। शिवो नृयुग्मे, द्वितनौ च देव्यः, क्षुद्राश्चरे, सर्व इमे स्थिरर्क्षे। पुष्ये ग्रहा, विघ्नपयक्षसर्पभूतादयोऽन्त्ये, श्रवणे जिनश्च”।

“देवप्रतिष्ठायां तु विशेषस्तत्र वशिष्ठः “अथ प्रतिष्ठां कथयामि सम्यक् शिवस्य विष्णोस्त्वथ वा परेषाम्। सौम्यायने देवगुरौ च शुक्रे सन्दृश्यमाने परिचारकाणाम्”। शिवविष्णुग्रहणं प्राधान्यख्यापनार्थम्। अत्र सौम्यप्रकृतीनां देवानामुत्तरायणे स्थापनमुक्ता उग्रप्रकृतीनां दक्षिणायनेऽपि कार्यं तदुक्तं वैखानससंहितायाम् “मातृभैरववाराहनारसिंहत्रिविक्रमाः। महिषासुरहन्त्री च स्थाप्या वै दक्षिणायने”। इति शैवसिद्धान्तशेखरे तु “श्वेतोत्तरे प्रतिष्ठा स्यादयने शुक्तिमिच्छताम्। दक्षिणे तु मुमुक्षूणां मलमासे न सा द्वयोरिति” इत्युक्तम्। अत्र दक्षिणे तु मुमुक्षूणामित्यपि मातृभैरवेत्यादिपरतया योज्यमन्यथा प्रतिपदं मासगणना वशिष्ठादिषु न युज्येत यदाह वशिष्ठः “मासे तपस्ये तपसि प्रतिष्ठा धनायुरारोग्यकरी च कर्त्तुः। चैत्रे महारुग्भयदा च शुक्रे समाधवे पुत्रधनाप्तये स्यात्”। नारदोऽपि “विचैत्रेष्वेव मासेषु माघादिषु च पञ्चसु”। वशिष्ठः “आषाढमासादिचतुष्टयेऽपि कलत्रसन्तानविनाशदा स्यात्। ऊर्जे च कर्त्तुर्निधनप्रदा च सौम्ये सपौषेऽखिलदुःखदा स्यात्। वलक्षपक्षः शुभदः समस्तः स दैव तत्राद्यदिनं विहाय। अन्त्यत्रिभागं परिहृत्य कृष्णपक्षोऽपि शस्तः खलु पञ्चयोश्च। रिक्तावमत्यक्तदिनेष्वनिन्द्ययोगेषु वैनाशकवर्जितेषु। दिने महादोषविवर्जिते च शशाङ्कताराबलसंयुते च”। वैनाशकनक्षत्राणि नारदेनोक्तानि “जन्मभाद्दशमं कर्म सङ्घातर्क्षञ्च षोडशम्। अष्टादशं सामुदयं त्रयोविंशं विनाशभम्। मानसं पञ्चविंशर्क्षं नाचरेच्छुभमेषु तु”। इति अथ तिथीनाह नारदः। “यद्दिनं यस्य देवस्य तद्दिने तस्य संस्थितिः। द्वितीयादिद्वयोः पञ्चम्यादितस्तिसृषु क्रमात्। दशम्यादि चतसृषु पौर्णमास्यां विशेषतः। मुख्यतिथ्यसम्भवे उक्ततिथौ स्थापनं कार्यम्”इत्यर्थः। अथ वारानाह नारदः “कुजवर्जितवारेषु कर्त्तुः सूर्ये बलप्रदे। चन्द्रताराबलोपेते पूर्वाह्णे शोभने दिने”। इति प्रत्येकं वारफलमाह वशिष्ठः “कीर्तिप्रदं क्षेमकरं कृशानुभयप्रदं वृद्धिकरं दृढं च। लक्ष्मीकरं सुस्थिरदं त्विनादिवारेषु संस्थापनमामनन्ति”। अथ देवप्रतिष्ठानक्षत्राणि “हस्तत्रये मित्रहरित्रये च पौष्णद्वयादित्यसुरेज्यभेषु। स्यादुत्तराधातृशशाङ्कभेषु सर्वामरस्थापनमुत्तमं सत्”। अत्र षोडशभानि ध्रुवमृदुक्षिप्रलघुरूपाणि एवोक्तानि तत्र ग्रन्थकर्त्रा जलाशयारामसुरप्रतिष्ठा नक्षत्राणि बहुसाम्यत्वादेतानि उक्तानि द्वित्राणि तु भिन्नानि तान्युक्तविशेषवचनेभ्योऽवसेयानि। देवताघटनमुहूर्तस्तु उच्यते मया तत्र दीपिका “ध्रुवलघुमृदुवर्गे वारुणे विष्णुदैवे मृदितिधनिष्ठे शोभने वासरे च। त्रिदशमदनजन्मैकादशे ३।१०।७।१।११। शीतरश्मौ विबुधघटितरिष्टा नाडिनक्षत्रहीने” इति। नाडिनक्षत्राणि वैनाशिकनक्षत्राणि। अथ देवताप्रतिष्ठायां सामान्यतो लग्नशुद्धिं देवताविशेषे च तथा। पादोनोपजातिकाभ्यामाह शशाङ्केति। जलाशयप्रतिष्ठायामारामप्रतिष्ठायां च सुलग्नमात्रं विचार्यं देवप्रतिष्ठायां शशाङ्कचन्द्रः पापाः सूर्यभौमशनिराहुकेतवस्तैस्त्रिभवाङ्गसंस्थैस्तृतीयषष्ठैकादशस्थानस्थितैरुपलक्षिते लग्ने। तथा सत्खचरैः सोमबुधगुरुशुक्रैर्व्यष्टान्त्यगैरष्टमद्वादशव्यतिरिक्ताखिलस्थानस्थैः सद्भिर्देवप्रतिष्ठातिशस्ता तदुक्तं रत्नमालायाम्। “केन्द्रत्रिकोणभवमूर्त्तिषु सद्ग्रहेषु चन्द्रार्कभौमशनिषु त्रिषडायगेषु। सान्निध्यमेति नियतं प्रतिमासु देवः कर्तुः सुखार्थसुतसम्पदरोगता च। सौम्या लग्नाद्याश्रिता मूर्त्तिपूर्वान् भावान् वीर्यैरुत्कटाबर्द्धयन्ति। षष्ठं हित्वा भावमेते हि तत्र शत्रुध्वस्तिं कर्तुरुत्पादयन्ति”। शनिग्रहणं राहुकेत्वोरप्युपलक्षणं यदाह वशिष्ठः “सूर्येन्दुभौमार्कि हि केतवश्च लग्नस्थितानैधनदाश्च भर्तुः। सौम्यग्रहा लग्नगतास्तदैव ह्यायुर्बलारोग्यकराश्च नूनम्”। अन्यच्च तत्रैव “सर्वे ग्रहानैधनदास्तुजस्तं सौम्या व्यसौम्याः खलु मृत्युसंस्थाः” इति अथ प्रसङ्गान्नवांशविचारः तत्र स्थिरद्विस्वभावनवांशाश्शाह्या न चरांशस्तत्रापि तुलांशः साधीयान् यदाह वशिष्ठः “पञ्चेष्टकैः जीवशशाङ्कसूर्यसुतज्ञपद्मैः सौम्यनवांशयुक्तैः लग्ने

स्थिरे चोभयराशियुक्ते नवांशके चोभयगे स्थिरे वा"। उभयगे द्विस्वभावे "चरोदये लग्नगते न कार्यं संस्थापनं नैव चरांशकेऽपि। चरोऽपि मुख्यः सततांशकस्य सदा मृदुत्वात् सुरसन्निवेशे" इति मृदुत्वाच्छुभस्वामिकत्वात् नारदोऽपि "शुभलग्ने शुभांशे च कर्तुस्तेऽनिधनोदये। राशयः सकलाः सेष्टाः शुभग्रहयुतेक्षिताः" इति अथ लग्नदौष्ट्येऽपवादो वशिष्ठेनोक्तः "एकोऽपि जीवो बलवान् तनुस्थः सितोऽपि सौम्योऽथवा बली चेत्। दोषानशेषान्विनिहन्ति सद्यः स्कन्दो यथा तारकदैत्यवर्गमिति" नारदः "गुणाधिकतरे लग्ने दोषेऽत्यल्पतरे यदि। सुराणां स्थापनं तत्र कर्तुरिष्टार्थसिद्धिदम्"। मृगेन्द्र इति सूर्यो मृगेन्द्रे सिंहलग्ने स्थाप्यः, तथा कोब्रह्मा घटे कुम्भलग्ने, विष्णुर्युवतौ कन्यालग्ने। शिवो महादेवो नृयुग्मे मिथुनलग्ने च, पुनर्द्वितनौ मिथुनकन्याधनुर्मीनलग्नेषु देव्यो दुर्गादिशक्तिमूर्त्यादयः। चरे मेषकर्कतुलामकरलग्नेषु क्षुद्रादेव्यश्चतुःषष्टियोगिनीप्रभृतयः। सर्वं इमे उक्ता अनुक्ताश्च देवा इत्यर्थः। उक्ता महादेवादयः अनुक्ता इन्द्रादयः ते स्थिरर्क्षे वृषसिंहवृश्चिककुम्भलग्नेषु स्थाप्याः यदाह श्रीपतिः "सिंहोदये दिनकरो, मिथुने, महेशो, नारायणश्च युवतौ, घटभे विधाता। देव्यो द्विमूर्तिभवने च निवेशनीयाः क्षुद्राश्चरे स्थिरगृहे निखिलाश्च देवाः"। इति पुष्ये ग्रहा इति ग्रहाश्चन्द्रादयोऽष्टौ पुष्यनक्षत्रे स्थाप्या इत्यर्थः। उपलक्षणं चैतत् तत्र सूर्यस्य हस्तनक्षत्रे स्थापनं, महादेवब्रह्मणोः पुष्यश्रवणाभिजित्सु स्थापनं, कुबेरस्कन्दयोरनुराधायां, दुर्गाप्रभृतीनां मूले स्थापनं, सप्तर्षीणां स्वाधिष्ठितनक्षत्रे लक्ष्मीव्यासवाल्मीक्यगस्त्यानामपि सप्तर्ष्यधिष्ठितनक्षत्रे स्थापनम् उक्तञ्च रत्नमालायां "पुष्यश्रुत्यभिजित्सु, चेश्वरकयोर्वित्ताधिपस्कन्दयोर्मैत्रे तिग्मरुचेः करे, निरृतिभे दुर्गादिकानां शुभम्"। कोब्रह्मा तथा "सप्तर्षयो यत्र चरन्ति धिष्ण्ये कार्या प्रतिष्ठा खलु तत्र तेषाम्। श्रीव्यासवाल्मीकिघटोद्भवानां तथा स्मृता वाक्पतिभे ग्रहाणामिति"। सप्तर्षयस्तु कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः। जमदग्निर्वशिष्ठश्च सप्तैते ऋषयः स्मृताः" इति स्मृतेस्ते यस्मिन्नक्षत्रे सञ्चरन्तो दृश्यन्ते तस्मिन्नक्षत्रे तेषां स्थापनम्। श्रीव्यासवाल्मीकिघटोद्भवानां तथा सप्तर्ष्यधिष्ठितनक्षत्रे। ग्रहाणां वाक्पतिभे पुष्ये घटोद्भवोऽगस्त्यः। विघ्नपेति विघ्नपो गणेशः यक्षो देवयोनिः सर्पा वासुक्यादयः भूतो देवयोनिः "विद्याधराप्सरोयक्षरक्षोगन्धर्वकिन्नराः। पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः" इत्यभिधानात् आदिशब्देन राक्षसासुरप्रमथसरस्वतीप्रभृतयो गृह्यन्ते ते रेवत्यां स्थाप्याः। तथा श्रवसि श्रवणनक्षत्रे जिनो बुद्धः स्थाप्यः। उपलक्षणं चैतत् इन्द्रकुबेरवर्जितानां लोकपालानां धनिष्ठायां स्थापनम्, इतोऽवशिष्टानां देवतानान्त्र्युत्तरारोहिणीषु स्थापनं स्यादित्यर्थः एतदप्युक्तं रत्नमालायाम् "गणपरिवृढरक्षोयक्षभूतासुराणां प्रमथफणिसरस्वत्यादिकानां च पौष्णे २७। श्रवसि सुगतनाम्नो वासवे लोकपानां निगदितमखिलानां स्थापनं हि स्थिरेष्विति"। परिवृढः स्वामी। "प्रभौ परिवृढ" इति साधुः गणपरिवृढो गणेशः। प्रमथा महादेवस्य पारिषदाः। श्रवसि श्रवणनक्षत्रे सुगतो बुद्धः "सर्वज्ञः सुगतो बुद्धः इत्यमरः स्थिरेषु रोहिणीत्र्युत्तरास्वित्यर्थः" पी०धा०।

**देवतामय** त्रि० देवतात्मकं देवता+मयट्। १देवतात्मके स्त्रियां ङीप्। २हिरण्यगर्भरूपे देवताभेदे च स्त्री ङीप् "या प्राणेन सम्भवत्यदितिर्देवतामयी। गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत" कठोप० ४।७। "या देवतामयी सर्वदेवतात्मिका प्राणेन हिरण्यगर्भरूपेण परस्माद् ब्रह्मणः सम्भवति शब्दादीनामदनात् अदितिस्तां पूर्ववत् गुहां (सर्वप्राणिगुहां हृदयाकाशम्) प्रविश्य तिष्ठन्तीमदितिम्। या भूतेभिर्भूतैः समन्विता व्यजायत उत्पन्नेत्यर्थः" भा०।

**देवतायतन** न० ६त०। देवगृहे "सीमासन्धिषु कार्याणि देवतायतनानि च" मनुः "रूपेणाग्र्येण सम्पन्नां (रुक्मिणी) देवतायतनान्तिके" हरिवं० ११७अ० देवतालयादयोऽप्यत्र "उद्यानदेवतालयपितृवनवल्मीकमार्गचितिजाताः" वृ०सं० ४२अ०

**देव(वा)तिथि** पु० पुरुवंश्ये अक्रोधनपुत्रे नृपभेदे "अक्रोधनः खलु कालिङ्गीं करम्भां नामोपयेमे तस्यामस्य जज्ञे देव(वा)तिथिः" भा०आ०९५अ० "ततश्चाक्रोधनस्तस्मात् देव(वा)तिथिरमुष्य च" भाग० ९।२२।९ देवातिथिरित्येव पाठः बहुषु पुस्तकेषु क्वचित् देवतिथिरिति पाठः।

**देवत्रा** अव्य० देवाय देयं करोति सम्पद्यते वा "देवे त्रा च" पा० कृभ्वस्तियोगे त्रा। कर्मादिविषये देवाय १देये २तदधीने

च। देवं वन्दे देवे रमे वा द्वितीयान्तात् सप्तम्यन्तात् वा देवशब्दात् त्ला। ३वन्दनादिकर्मणि देवे ४रक्षणविषये देवे च "देवता यन्तमवसे" यजु०६।२० "देवान् प्रति वन्तं गच्छन्तम्" वेददी०उक्तं ५देवतां प्रतीत्यर्थे च "ता देवीर्देवत्रेयं यज्ञं नयत" यजु० ६।२४ देवान् त्रायते त्रा—क। ६देवरक्षके त्रि० "देव एव सविता अर्पयति वर्षिष्ठेऽधि-नाक इति देवत्रो एतदाह" शत०ब्रा० १।२।२।१४

**देवदण्ड** स्त्री देवात् मेघात् दण्डो यस्याः। नागबलायां राजनि०।

**देवदत्त** पु० देवा एनं देयासुः संज्ञायां क्त। संज्ञाशब्दप्रति-पाद्ये १नरभेदे "ब्राह्मणार्थो यथा नास्ति कश्चित् ब्राह्मणकम्बले। देवदत्तादयो वाक्ये तथैव स्युर्निरर्थकाः" हरिः २त०।२देवेन दत्ते त्रि०"देवदत्तां पतिर्भार्यां विन्दते नेच्छयात्मनः। तां साध्वीं बिभृयान्नित्यम् देवानां प्रियमाचरन्" मनुः "भगोऽर्यमा सविता पुरन्धिर्मह्यं त्वादुर्गार्ह-पत्याय देवाः" इत्यादि मन्त्रलिङ्गात् या देवदत्ता भार्या तां पतिर्लभते न तु स्वेच्छया तां भर्ता देवानां प्रियं कुर्वन् बिभृयात्" कुल्लू० ३बुद्धानुजे पु० त्रिका० ४अर्जुनशङ्खे शब्दार्थकल्पतरुः। "पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः" गीता। ५देहस्थे जृम्भणकरे वायुभेदे "विजृम्भणे देवदत्तः शुद्धस्फटिकसन्निभः" शारदातिलक-टीकायां राघवभट्टधृतवाक्यम्। देवाय दत्तम्। ६देवार्थोत्-सृष्टे ग्रामादौ त्रि०।

**देवदत्तक** पु० देवदत्तो मुख्य एषाम् "स एषां ग्रामणीः" पा०कन्। १देवदत्तप्रधानकेषु ब०व०अनुकम्पितो देवदत्तः। बह्वचो मनुष्यनाम्नष्ठज् वा घनिलचौ" पा० ठच् घन् इलच् पक्षे कन्। २अनुकम्पिते देवदत्ते "ठाजादावूर्ध्वं द्वितीयादचः" पा० द्वितीयादचः परं सर्वं लुप्यते इति देविक देविय देविल इति रूपत्रयं तत्रार्थे तेषाम-जादित्वात् कनस्तु तदभावात् न लोपः। "अजादौ च विभाषा लोपोवक्तव्यः" वा० देवक इत्यपि तत्रार्थे "लोपः पूर्वपदस्य च" वा० दत्तिक दत्तिल दत्तिय दत्तक इत्येतेऽपि तत्रार्थे।

**देवदत्ताग्रज** पु० ६त०। बुद्धे त्रिका०।

**देवदर्श** त्रि० देवं पश्यति दृश—अण् उप०स०। १देवतादर्शके देवं दृष्ट्वेत्यर्थे णमुल्। देवदर्शम् देवं दृष्ट्वेत्यर्थे अव्यय०

**देवदर्शन** त्रि०देवं पश्यति दृश—ण्वुल्। १देवदर्शके २ऋषिभेदे पु०तेन प्रोक्तमधीयते शौनका० णिनि। दैवदर्शनिन् तत्-प्रोक्ताध्यायिषु ब०व०दृश—भावे ल्युट् ६त०। ३देवतानां दर्शने न०।

**देवदानी** स्त्री देवानामिव दानं शुद्धिरस्याः दैप्—शोधे भावे ल्युट् गौरा० ङीष्। हस्तिघोषलतायां रत्नमा०।

**देवदारु** न० देवानां दारु तत्प्रियं काष्ठं चन्दनमस्य। स्व-नामख्याते वृक्षभेदे अमरः। अस्य पुंस्त्वमपि "अमुं पुरः पश्यसि देवदारुम्" रघुः "पारिजातान् कोविदारान् देवदारुद्रुमांस्तथा" भा०व० १५८अ०। "वोढा भुजङ्गः कम्पितदेवदारुः" कुमा० "देवदारु लघु स्निग्धं तिक्तोष्णं कटुपाकि च। विबन्धाध्मानशोथामतन्द्राहिक्काज्वरास्र-जित्। प्रमेहपीनसश्लेष्मकासकण्डूसमीरनुत्" भावप्र०।

**देवदालिका** स्त्री देवदालीव कायति इवार्थे कन् केऽणो ह्रस्वः। महाकालवृक्षे राजनि०।

**देवदाली** स्त्री देवेन मेघशब्देन दालोदलनमस्याः गौरा० ङीष्। (घघरबेल) ख्याते लताभेदे "देवदाली रसे तिक्ता कफार्शःशोफपाण्डुताः। नाशयेद्वमनी तिक्ता क्षयहिक्काक्रमिज्वरान्। शीता परा खरस्पर्शा विषघ्नी गरनाशनी" भावप्र०। देवदालीफलं तिक्तं क्रमिश्लेष्म विनाशनम्। स्वंसनं गुल्मशूलघ्नमर्शोघ्नं वातजित् परम्। देवदालीदलं तक्रे स्वेदितं खण्डितं त्र्यहम्। वेसवारयुते साज्ये भर्जितं हिङ्गुना हढम्" तत्रैव।

**देवदास** पु० ६त०। देवानां दासे स्त्रियां ङीप्।

**देवदासी** स्त्री देवमिन्द्रियं दासयति दास—बधे अण्। १वन-बीजपूरके राजनि०। देवाय क्रीडायै दासीव। २वेश्यायाञ्च शब्दार्थकल्प०। ६त०। ३देवानां परिचारिकायाम्।

**देवदीप** पु० देवार्थो दीपः। १देवार्थे दीपे देवं दीप्तशील-मालोकसंयुक्तं दीपयति दीप—णिच्—अण् उप० स०। २लोचने शब्दरत्ना०।

**देवदुन्दुभि** पु० देवानां दुन्दुभिरिव हर्षप्रदत्वात्। १रक्त-तुलस्याम्। ६त०। २देवढक्कायाम् रत्नमा०। "देवदुन्दु-भयो नेदुःर्नन्तृतुश्चाप्सरोगणाः" भूरिप्रयोगः।

**देवदूती** स्त्री देवा इन्द्रियाणि दूयन्ते खिद्यन्तेऽनया दू—क्तिच् ङीप्। वनबीजपूरके राजनि०।

**देवदेव** पु० देवेषु मध्ये दीव्यति दिव—अच्। १महादेवे "अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाक" कुमा० २ब्रह्मणि च शब्दरत्ना० देवानां देवः स्वामी ३विष्णौ। "द्रौपद्याः सङ्कटं ज्ञात्वा देवदेवो

जगत्पतिः। पार्श्वस्थां रुक्मिणीं लक्ष्मीं केशवः शयने प्रभुः" भा०व०२६२अ०।

**देवदेवेश** पु० देवप्रकारः देवदेवः तस्येशः। महादेवे "यदि मे भगवान् प्रीतः सर्वलोकनमस्कृत!। स्वयं मां देवदेवेश! याजयस्व सुरेश्वर!" भा०आ० २२३अ०।

**देवदोल** पु० दैवैः दृश्यो दोलः। प्रातःकरणीये दोलोत्सवे दोलशब्दे दृश्यम्।

**देवद्युम्न** पु० भरतवंश्ये देवाजितोऽपत्ये नृपभेदे "तस्या स्त्र्यां तत्तनयो देवद्युम्नः" भाग० ५।१५।२

**देवद्रोणी** स्त्री ६त०। १देवयात्रायां द्वारा०। २स्वयम्भूलिङ्गाद्यवस्थानगह्वरे च "देवद्रोण्यां विहारे च कूपेष्वायतनेषु च। एषु मोषु विपन्नासु प्रायश्चित्तं न विद्यते" संवर्तः। "देवद्रोणी स्वयम्भूलिङ्गाद्यवस्थानगह्वरम्" प्रा०त० रघु०।

**देवद्र्यञ्च्** त्रि० देवमञ्चति पूजयति अन्च–क्विन् देवस्य टेः अद्र्यादेशः। १देवपूजके अमरः। गत्यर्थाञ्चतेस्तु नलोपः। देवद्र्यच् देवमन्तरि। सर्वनामस्थाने परे उभयत्र देवद्र्यङ् देवद्र्यञ्चौ अन्त्यताजादौ देवद्रीचः देवद्र्यञ्च इत्यादिर्भेदः।

**देवधन** न० देवार्थं धनम्। १देवोद्देशेनोत्सृष्टे धने देवतानां चेतनत्वपक्षे २देवस्वामिके धने च।

**देवधानी** स्त्री देवा धीयन्तेऽस्याम् धा–आधारे ल्युट् ङीप्। इन्द्रपुर्याम् "तामवन्द्रो पूर्वस्मान्मेरोर्देवधानी नाम" भाग० ५।२१।१० [ हेमच०।

**देवधान्य** न० देवानां योग्यं धान्यम्। (देधान) धान्यभेदे।

**देवधूप** पु० देवानां प्रियो धूपः। गुग्गुलौ रत्नमा०।

**देवन्** पु० दिव–वा० कनि। पत्युः स्त्रजाते भ्रातरि हेम०।

**देवन** पु० दीव्यत्यनेन दिव–करणे ल्युट्। १पाशके। भावे ल्युट्। २क्रीडायां ३दीप्तौ ४व्यवहारे ५जिगीषायां ६स्तुतौ च न०। दीव्यत्यत्र दिव–आधारे ल्युट्। ७लीलोद्याने ८पद्मे च।

**देवनदी** स्त्री ६त०। गङ्गायाम् अमरः। "असंबाधा देवनदी स्वर्गसम्पादिनी शुभा" भा०आदि०चैत्ररथपर्व। "इरावती वितस्ता च सिन्धुर्देवनदी तथा" भा०आ०६अ०। "स्नातं गतान् देवनद्यां दुर्वासःप्रभृतीन् मुनीन्" भा०व०२६२अ० २देवखातनदीमात्रे च "सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्" मनुः। [ द्वारपाले हेमच०।

**देवनन्दिन्** पु० देवं सक्रं नन्दयति नन्दि–णिनि। इन्द्र-

**देवनल** पु० देव इव श्रेष्ठत्वात् नलः। महानले स्थूलदस्खे नलभेदे राजनि०।

**देवनामन्** पु० कुशद्वीपपतिहिरण्यरेतसः पुत्रभेदे कुशद्वीपशब्दे २१४५ पृ० दृश्यम्। [ २विमाने च।

**देवना** स्त्री च० दिव–भावे युच्। १क्रीडायां शब्दरत्ना०।

**देवनागर** पु०देवेति नाम यस्य कप्। देवयोनौ विद्याधरादौ हेमचन्द्रे देवनारक इति पाठः नरएव नारः ततः स्वार्थे क देवकुपनरः। देवजन इति तदर्थः सोऽपि तदर्थे।

**देवनाल** पु० नलएव नालः स्वार्थे अण् देव इव श्रेष्ठत्वात् नालः। नलोत्तमे राजनि०।

**देवनिद्** त्रि० देवं निन्दति निन्द–क्विप् ६त०। देवनिन्दके "देवनिदोऽप्रथमा अजूर्यन्" ऋ० १।१५२।२

**देवनिर्मित** त्रि० ६त०। १देवै रचिते। "द्वीपेषु दिक्षु पूर्वादि नगर्यो देवनिर्मिताः" सू०सि०। २गुडूच्याम् स्त्री शब्दार्थचि०।

**देवपति** पु० ६त०। इन्द्रे हेमच०।

**देवपत्नी** स्त्री देवः पतिर्यस्याः। सपूर्वत्वात् वा नुक् ङीप् च। १देवभार्यायाम्। "उत ग्ना व्यन्तु देवपत्नीः" ऋ०५।४६।८ "देवपत्न्यो देवकन्या देवमातर एव च" भा०अनु०१४अ० २मध्वालुके शब्दार्थचि०।

**देवपथ** पु० ६त०। १छायापथे आकाशस्थिते छायाकारे पथि देवपथ इव कन् तस्य देवपथादि० लुक्। २तत्सदृशे च ३देवयाने अर्चिरादिमार्गे च। देवयानशब्दे दृश्यम्। देवस्थानगमनार्थः पन्थाः। ४देवस्थानगमनार्थे मार्गे च। स च अन्यैर्नरैर्गन्तुमशक्य इति हनुमता तस्य द्वारनिरोधः कृतः यथाह भा०व० १४८अ०। "अयञ्च मार्गो मर्त्यानामगम्यः कुरुनन्दन!। ततोऽहं रुद्धवान् मार्गं तवेमं देवसेवितम्। धर्षयेद्वा शपेद्वापि मा कश्चिदिति भारत! दिव्यो देवपथोह्येष नात्र गच्छन्ति मानुषाः"।

**देवपथादि** पु० "इवे प्रतिकृतौ" पा०कनो लुम् निमित्ते शब्दगणे स च गणः पा०ग०सू० उक्तो यथा

देवपथ हंसपथ वारिपथ रथपथ स्थलपथ करिपथ अजपथ राजपथ शतपथ शङ्कुपथ सिन्धुपथ सिद्धिगति उष्ट्रग्रीव वामरज्जु हस्त इन्द्रदण्ड पुष्प मत्स्य।

**देवपर** त्रि० दैवः परोऽस्य। यद्भविष्यो देवायत्तमिति चिन्तके आपदुद्धारार्थं पौरुषचेष्टारहिते।

**देवपर्ण** न० देवप्रियं पर्णमस्य। सुरपर्णे राजनि०।

**देवपशु** पु॰ देवाय उत्सृष्टः पशुः । देवोद्देशेन उत्सृष्टे पशौ । "अनिर्दशाहां गां सूतां वृषान् देवपशूंस्तथा । सपालान् वा विपालान् वा न दण्ड्यान् मनुरब्रवीत्" मनुः । भिन्नत्वेन २देवोपासके च । "अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मि न स वेद यथा पशुरेव स देवानाम्" इति श्रुतौ तस्य देवोपकरणतुल्यतया पशुत्वप्रतिपादनात्तथात्वम् ।

**देवपात्र** न॰६त॰ । देवैः पीयतेऽत्र पा—आधारे ष्ट्रन् । अग्नौ "आत्मपात्रं जुहूर्देवानामिति देवपात्रं वा एष यदग्निस्तस्मादग्नौ सर्वेभ्यो देवेभ्यो जुह्वति" शत॰ब्रा॰ १।४।२।१० "आत्मरूपं पात्रमात्मानम् । अग्नौ प्रक्षिप्तस्य हविषो देवैरद्यमानत्वादग्नेर्देवपात्रत्वम्" भा॰

**देवपान** पु॰ देवैः पीयतेऽनेन पा—करणे ल्युट् । चमसे सोमपानपात्रभेदे "चमसो देवपान इति चमसेन ह्य वा एतेन भूतेन देवा भक्षयन्ति तस्मादाह चमसो देवपान इति" शत॰ब्रा॰ १।४।२।१४

**देवपाल** पु॰ शाकद्वीपस्य वर्षपर्वतभेदे । शाकद्वीपोपक्रमे "एतस्य वर्षमर्य्यादागिरयो नद्यश्च सप्त सप्तैव । ईशानउरुशृङ्गो बलभद्रः शतकेसरः सहस्रस्रोता देवपालो महानसः" इतिभाग॰ ५।२०।१८

**देवपालित** त्रि॰ देवेन मेघाम्बुना पालितः । १देवमातृके देशे २सुररक्षिते च । देवाएनं पाल्यासुः आशिषि संज्ञायां क्त । ३संज्ञाभेदे तत्र च "कारकाद्दत्तश्रुतयोराशिषि" पा॰ दत्तश्रुतयोरेवेति नियमात् न अन्तोदात्तता

**देवपीयु** पु॰ देवान् पीयति हिनस्ति पीय—उन् । देवद्वेष्टरि असुरे । "अपेतोयन्तु पणयोऽसुम्ना देवपीयवः" यजु॰ ३५।१ "देवपीयवः देवद्विषः" वेददीपः

**देवपुत्र** पु॰ ६त॰ । १देवकुमारे "देवपुत्रोपमौ वीरौ बालाविव हुताशनौ" हरिवं॰ ८४अ॰ देवस्य पुत्रीव प्रियत्वात् । २एलायां स्त्री जटाधरः । ६त॰ । ३देवकन्यायाञ्च स्त्री स्वार्थे क । देवपुत्रिका तत्रार्थे राजनि॰ स्त्री

**देवपुर्** स्त्री ६त॰ समासान्तविधेरनित्यत्वात् न अप् । अमरावत्याम् पुरशब्देन ६त॰ स॰ । देवपुर तत्रार्थे न॰ ।

**देवपुरी** स्त्री पुरीशब्देन ६त॰ स॰। अमरावत्याम् ।

**देवपूज्य** पु॰ ६त॰ । सुराचार्य्ये वृहस्पतौ ।

**देवप्रतिकृति** स्त्री ६त॰ । १देवप्रतिमायाम् देवलानां जीविकार्थे २देवप्रतिमायाञ्च ।

**देवप्रतिमा** स्त्री ६त॰ । देवमूर्त्तौ देवतामूर्त्तिशब्दे दृश्यम् ।

**देवप्रश्न** पु॰ देवानुद्दिश्य प्रश्नः । देवान् प्रति शुभाशुभविषयप्रश्ने उपश्रुतौ हेमच॰। उपश्रुतिशब्दे दृश्यम् ।

**देवप्रस्थ** पु॰ सेनाविन्दुन्टपपुरे । "स देवप्रस्थमासाद्य सेनाविन्दोः पुरं प्रति" भा॰स॰ २६अ॰

**देवप्रिय** पु॰ ६त॰। १पीतभृङ्गराजे २वकवृक्षे च राजनि॰ । तत्पुष्पस्य देवप्रियत्वात् तथात्वम् । ·

**देवबधू** पु॰ ६त॰। अप्सरःसु ।

**देवबला** स्त्री देवानामिव बलं यस्याः ५त॰। १सहदेव्यां २भावमाणमाञ्च राजनि॰ ।

**देवबलि** पु॰ देवार्थं बलिः वर्ण—इन् बल्यादेशः । देवार्थे उपहारे ।

**देवबाहु** पु॰ यदुवंश्ये हृदीकपुत्रभेदे "निमित्तस्तात् स्वयं भोजो हृदीकस्तत्सुतो मतः । देवबाहुः शतधनुः क्रतवर्मेति तत्सुताः" भाग॰ ६।२४।२६ ऋषिभेदे च "मान्यः पृथुस्तथैवाग्र्यो आप्यो वामन एव च । देवबाहुर्यदुध्रस्त पर्जन्यश्चैव सोमजः" हरिवं॰ २६१अ॰।

**देवब्रह्मन्** पु॰ देव इव ब्रह्मा । नारदे त्रिका॰।

**देवब्राह्मण** पु॰ देवपूजकः ब्राह्मणः । देवले देवोपजीवके उपजीविकार्थं देवपूजके ।

**देवभवन** न॰देवानां भवनमिव । १अश्वत्थवृक्षे । ६त॰। २स्वर्गे शब्दच॰ । ३देवप्रतिमालये च ।

**देवभाग** पु॰ ६त॰ । सू॰सि॰ उक्ते लवणसमुद्रात् उत्तरस्थिते उत्तरगोलरूपे पदार्थे "ततः समन्तात् परिधिः क्रमेणायं महार्णवः । मेखलेव स्थितो धात्र्या देवासुरविभागकृत्" सू॰सि॰ "तेन समुद्रादुत्तरं भूगोलखण्डं जम्बूद्वीपं देवानां, समुद्राद्दक्षिणं समुद्रातिरिक्तं भूगोलखण्डं षड्द्वीपषट्समुद्रोभयात्मकं दैत्यानामिति सिद्धम् मेरुदण्डानुबद्धभूगोलमध्ये परिधिरूपो लवणसमुद्रोऽस्ति । उत्तरगोलार्द्धं दक्षिणभूगोलार्धान्तर्गत समुद्रस्य प्रान्तपरिधिस्थमिति मेखलाया कष्वधःस्थितत्वेन तात्पर्य्यार्थः" रङ्ग॰ ।

"मेषादौ देवभागस्थो देवानां याति दर्शनम् । देवभागे सुराणां च हेमन्ते मन्दतान्यथा । धनुर्मृगस्थः सविता देवभागे न दृश्यते । देवभागेऽसुराणां तु दृश्यो भवत्युदये । भूमण्डलात् पञ्चदशे भागे देवेऽथ वाऽऽसुरे" सू॰सि॰।

देवाय देयो भागः । देवार्थं देये २धनादिभागभेदे च ।

**देवभीति** स्त्री ५त॰ । १देवेभ्यो भये । ६त॰ । २देवानां भये च तत्र पूर्वपदप्रकृतिस्वरः ।

**देवभू** स्त्री ६त०। १स्वर्गे देवं देवत्वं भवते भू-प्राप्तौ क्विप्। २देवत्वप्राप्तिरभावे क्विप्। तद्देवत्वप्राप्तौ शब्दर०।

**देवभूति** स्त्री देवेषु भूतिः प्राप्तिरस्याः। १मन्दाकिन्याम् शब्दरत्ना०। ६त०। २देवानामैश्वर्ये च।

**देवभूमि** स्त्री ६त०। १स्वर्गे। २देवप्रियभूमौ च

**देवभूय** न० भू-भावे क्यप् ६त०। देवभावे देवत्वे अमरः।

**देवभृत्** पु०देवं बिभर्ति पालयति भृ-क्विप्।१इन्द्रे २विष्णौ च "देवेशो देवभृद्गुरुः"विष्णुस०। "देवभृत् शक्रस्तस्य गुरुः शास्तेति" भाष्यम् एकनाम। नामद्वयपक्षे तु भिन्नं पदम् देवभृद् गुरुः।

**देवभ्राज्** पु० देवेषु भ्राजते भ्राज-क्विप्। सूर्यवंश्ये देवभेदे "पुरा विवस्वतः सर्वे महास्तेषां तथावरः। देवभ्राट् तनयस्तस्य सुभ्राडिति ततः स्मृतः" भा०आ० १अ०

**देवमणि** पु०देव इव मणिः देवप्रियो वा मणिः देवेषु मणिरिव वा। १सूर्ये २कौस्तुभमणौ ३अश्वरोमावर्तभेदे च मेदि०। "सप्तच्छदेवमणयो भ्रतरन्ध्रभागाः" माघः। "सप्तच्छाः सप्तयाः देवमणयो निगालावर्ताः कौस्तुभादि दिव्यमणयश्च वेषाल्ते "आवर्त्ती रोमजो देवमणिस्त्वेष निगालजः" मल्लिनाथधृतकोषः।

**देवमत** लि० ६त०।१देवसम्मते।२ऋषिभेदे पु०"अत्राप्युदाहरन्तीममितिहासं पुरातनम्। नारदस्य च संवादमृषेर्देवमतस्य च" भा०आश्व० २४अ०।

**देवमातृ** स्त्री ६त०। १सुराणां मातरि "देवकन्या देवपत्न्यो देवमातर एव च" भा०अनु० १४अ०। २अदित्यां च। ३दाक्षायण्यां मत्स्यपु०।

**देवमातृक** पु० देवः मेघवर्षः मातेव पालकत्वात् यस्य कप्। १वर्षाम्बुसम्पन्नव्रीहिपालिते देशे अमरः। तदुपलक्षिते २अन्यादौ च "कच्चिद्राष्ट्रे तडागानि पूर्णानि च बृहन्ति च। भागशो विनिविष्टानि न कृषिर्देवमातृका" भा०स० ५अ०।

**देवमान** न० देवानां मानं कालपरिच्छेदभेदः। १दिव्यमाने मानुषसौरवर्षात्मके एकस्मिन् दैवे दिने तच्चिंशन्मिते तदीये "मासे तद्द्वीत्या तेषां वर्षे च"संक्रान्त्या सौर उच्यते। मासैर्द्वादशभिर्वर्षं दिव्यं तदह्न उच्यते। सुरासुराणामन्योन्यमहोरात्रं विपर्ययात्। तत् षष्टिषड्गुणा दिव्यं वर्षमासुरमेव च"सू०सि०।"ब्राह्मं दिव्यं तथा पित्र्यं प्राजापत्यं गुरोस्तथा। सौरञ्च सावनं चान्द्रमार्क्षं मानानि वै नव" सू०सि० "द्वितीयं दिव्यं देवमानम्। तत्र पूर्वोक्तम्" रञ्जना०। देवेषु मानोऽस्य रमणीयत्वात्। २देवयोग्ये अट्टादौ च "वेश्म परिष्कृतं देवमानेव चित्रसः" भा० १०।१०७।१० देवमानेव देवमानमिव रमणीयमिति भा० प्रथमास्थाने आकारादेशश्छान्दसः।

**देवमानक** पु० देवेषु मानोऽस्य कप् संज्ञायां कन् वा। कौस्तुभमणौ देवमणौ शब्दरत्ना०।

**देवमाया** स्त्री ६त०। अविद्यायाम् बन्धहेतौ परमेश्वरमायायाम् "ते दुस्तरामतितरन्ति च देवमायाम्"भाग०२।७।४०

**देवमार्ग** पु०देवोपलक्षितो मार्गः। अर्चिराद्यभिमानिदेवाधिष्ठिते देवयाने पथि। १देवाधिष्ठितपथमात्रे च। "ते (वानरा) विक्रमास्तु बाहुभ्यां देवमार्गं च दर्शिताः" रामा० सु०६१।४

**देवमास** पु० दीव्यत्यत्र दिव-आधारे घञ् कर्म०। गर्भावधिके अष्टमे मासि मिता० तत्र हि स्मृतेरोजसः प्रादुर्भावात् गर्भस्य देवत्वात्तस्य तथात्वं यथाह याज्ञ० "सप्तमे चाष्टमे मासि त्वङ्मांसस्मृतिमानपि। पुनर्धात्रीं पुनर्गर्भमोजस्तस्य प्रधावति। अष्टमे मास्यतो गर्भोजातः प्राणैर्वियुज्यते" "अनेनौजःस्थितिरेव जीवनहेतुरिति दर्शयति तत्स्वरूपञ्च स्मृत्यन्तरे दर्शितम् "हृदि तिष्ठति यत् शुद्धमीषदुष्णं सपीतकम्। ओजः शरीरे संख्यातं तन्नाशान्नाश उच्यते" मिता० ६त०। २देवानां मासे सौरत्रिंशद्वर्षात्मके मासे च।

**देवमित** पु० देवो मितमस्य। संज्ञाभेदयुक्ते मनुष्यादौ "संज्ञायां मितामितयोः" पा०बहु० अन्तोदात्तता। कुमारानुचरमातृभेदे स्त्री "कण्डूतिः कालिका चैव देवमिता च भारत!" भा०शल्य० ४७अ० मातृगणोक्तौ

**देवमीढ** पु० यदुवंश्ये नृपभेदे "यदोरभूदन्वयाये देवमीढ इति स्मृतः। यादवस्तस्य तु सुतः शूरस्त्रैलोक्यसम्मतः। शूरस्य शौरिर्न्वरो वसुदेवो महायशाः" भा०द्रो०१४४अ०

**देवमीढुष** पु० हृदीकस्य पुत्रभेदे "तस्यापि (हृदीकस्यापि) कृतवर्मशतधनुर्देवमीढषाद्याः पुत्रा बभूवु" श्रीधरधृत पराशरः। २देवमीढे वसुदेवपितामहे च "अश्मक्यां जनयामास शूरं वै देवमीढुषः। महिष्यां जज्ञिरे शूराद्भोज्यायां पुरुषा दश। वसुदेवो महाबाहुः पूर्वमानकदुन्दुभिः" इत्यादि हरिवं० ३५अ०।
क्रोष्टुवंश्ये ३नृपभेदे "गान्धारी चैव माद्री च क्रोष्टोर्भार्ये बभूवतुः। गान्धारी जनयामास अनमित्रं महाबलम्। माद्री युधाजितं पुत्रं ततोऽन्यं देवमीढु-

यम्। तेषां वंशस्त्विधा भूतो वृष्णीनां कुलवर्द्धनः" हरिवं० ३५अ०।

**देवमुनि** पु० देव इव मुनिः। देवर्षौ नारदादौ। १तुराख्ये ऋषौ च "एतेन वै तुरो देवमुनिः सर्वान् ऋद्धिमाप्नोत्" पञ्चभीषब्रा० २५।१४

**देवयज्** पु० देवा इज्यन्तेऽत्र यज—आधारे क्विप्। देवयजनयोग्ये वह्निभेदे "अपाग्ने ! अग्निमामादम् हि निष्क्रव्यादं सेध का देवयजं वह" यजु० १।१७ "तत्र त्रयोऽग्नयः सन्ति। एकः आमात्। आममपक्वमत्तीत्यामाल्लौकिकोऽग्निः। द्वितीयः क्रव्यात् शवदाहे क्रव्यं मांसमत्तीति क्रव्यात् चिताग्निः। तृतीयो यागयोग्यः। तथाविधांस्त्रीनङ्गारान् गार्हपत्यात् प्रागभागे पृथक् कृत्य तेषां मध्ये यागयोग्यताहीनौ द्वावग्नी आमात्क्रव्यात्संज्ञौ त्याजयितुं गार्हपत्यं प्रत्युच्यते" वेददी०

**देवयजन** न० देवा इज्यन्तेऽत्र यज—आधारे ल्युट्। वेदिस्थाने "अपारहं पृथिव्यै देवयजनाद् बध्यासम्" यजु० १।१५ २पृथिव्यां स्त्री ङीप्। "पृथिवि ! देवयजन्योषध्यास्ते मूलं मा हिंसिषम्" १।२४ हे देवयजनि हे पृथिवि इत्यर्थः। ३यागाविकरणस्थानमात्रे च "स यदस्यै पृथिव्या अनामृतं देवयजनमासीत्तच्चन्द्रमसि न्यदधत तदेतच्चन्द्रमसि कृष्णं तस्मादाहुश्चन्द्रमस्यस्यै पृथिव्यै देवयजनमित्यपि ह वा अस्यै तस्मिन् देवयजन इष्टं भवति तस्माद्धै प्रतिमार्ष्टि" शत०ब्रा० १।२।५।१८ "वेदीमार्जनप्रशंसार्थमितिहासमाह। आ समन्तात् मृतं सर्वदा नश्वरमामृतं तद्विपरीतं यद्देवयागाधिकरणभूतं स्थानम्" भा० तत् स्थानं विशिनष्टि कात्या०श्रौ० २०।४।१४ "नित्योदकं देवयजनं पुरस्तात्"सू०"पुरस्तात् प्राच्यां दिशि नित्यं सदा स्यादुदकं यत्र तद् देवयजनमध्यवसेयम्" कर्कः।

**देवयजि** पु० देवं यजते यज—इन्। देवयाजके "अद्यो द्विजान् देवयजीन् निहन्तः" भट्टिः।

**देवयज्ञ** पु० ६त०। देवानां यज्ञे पञ्चयज्ञान्तर्गते होमरूपे गृहस्थनित्यकर्त्तव्ये यज्ञभेदे। "अथातः पञ्च यज्ञाः देवयज्ञो भूतयज्ञः पितृयज्ञो ब्रह्मयज्ञो मनुष्ययज्ञ" इति। "तद्यदग्नौ जुहोति स देवयज्ञो यद्बलिङ्करोति स भूतयज्ञो यत् पितृभ्यो ददाति स पितृयज्ञो यत् स्वाध्याय मधीयते स ब्रह्मयज्ञो यन्मनुष्येभ्यो ददाति स मनुष्ययज्ञ इति" आश्वा० गृ० सू० ३।१,२,३, "अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्। होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्। पञ्चैतान् यो महायज्ञान् न हापयति शक्तितः। स गृहेऽपि वसन्नित्यं सूनादोषैर्न लिप्यते" मनुः। तत्र होमस्य देवता मनुनोक्ता यथा "आभ्यः कुर्याद्देवताभ्यो ब्राह्मणो होममन्वहम्। अग्नेः सोमस्य चैवादौ तयोश्चैव समस्तयोः। विश्वेभ्यश्चैव देवेभ्यो धन्वन्तरय एव च। कुह्वै चैवानुमत्यै च प्रजापतयएव च। सह द्यावापृथिव्योश्च तथा स्विष्टकृतेऽन्ततः"। "तत्र च यज्ञशब्दो महत्त्वख्यापनाय गौणः" इति कुल्लू०।

**देवयज्या** स्त्री देवानां यज्यः यागः। "छन्दसि निष्टर्क्य"-त्यादि" नि० य। देवार्थयागक्रियायाम् दर्शादिकायाम्। "दैव्याय कर्मणे शुन्धध्वम् देवयज्यायै" यजु० १।१३। "देवयज्यायै देवसम्बन्धिन्यै यागक्रियायै दर्शादिकायै" वेददी०। "अयाम ते सुमतिं देवयज्यया" ऋ० १।११४।१ "वयं देवयज्यया देवयागेन तद्दैवत्येन यज्ञेनायाम" भा०।

**देवयाजिन्** पु० देवं यजते यज—णिनि। आत्मभेदेन देवार्थयागकारके। "अथ ह स देवयाजी यो वेद देवानेवाहमिदं यजे देवानुपपर्यामीति स यथा श्रेयसे पापीयान् बलिं हरेद्वैश्यो वा राज्ञे बलिं हरेदेवं स ह न तावन्तं लोकं जयति यावन्तमितरः" शत०ब्रा०११।२।६।१४ आत्माभेदेन याज्यमेत्तया तस्य निकृष्टत्वमुक्तम् आत्मयाजी श्रेयान् देवयाजी इत्युपक्रम्य तथा वर्णनात्। २कुमारसैन्यभेदे च "यज्ञवाहुः प्रबाहुश्च देवयाजी च सोमपाः" भा०शल्य० ७६अ० तत्रैवोक्तौ

**देवयात** त्रि० देवं देवत्वं यातः। देवत्वप्राप्ते तस्य विषयो देशः राजन्या० वुञ्। दैवयातक तस्य विषये देशे। अत्र दैवयातव इति पाठान्तरं देवं देवत्वं याति या—तुन् देवयातुः स्वार्थे अण्। दैवयातव देवत्वप्राप्तरि ततः राजन्या० वुञ्। दैवयातवक तस्य विषये देशे।

**देवयात्रा** स्त्री देवानां यात्रा। देवोत्सवादौ देवप्रतिमानां स्थानान्तरनयनरूपगतौ।

**देवयाविन्** पु० दानवभेदे "सोमपो देवयावी च प्रवरो वीर महानः" हरिवं० २४०अ०।

**देवयान** न० यायतेऽनेन या—करणे ल्युट् ६त०। १सुराणां गतिसाधने रथभेदे विमाने। देवो परेशः यायतेऽनेन मार्गेण या—करणे ल्युट्। २अर्चिरादिमार्गरूपे पथिभेदे

पु० अर्चिरादिमार्गशब्दे २६४ पृ० दर्शितच्छान्दोग्यवाक्यम्। "स एनान् ब्रह्म गमयत्येष देवयानः पन्थाः देवपथो ब्रह्मपथ इत्यपि तत्र स्थानान्तरे पाठः। तत्र सन्निवेशाद्यधिष्ठातृदेवभेदादिकं शा॰सू॰भा॰ दर्शितं यथा "अर्चिरादिना तत्प्रथितेः" शा॰ सू॰।

"आसृत्युपक्रमात् समानोत्क्रान्तिरित्युक्तम्। सृतिस्तु श्रुत्यन्तरेष्वनेकधा श्रूयते। नाडीरश्मिसम्बन्धेनैका "अथैतैरेव रश्मिभिरूर्द्ध्व आक्रमते, इति। अर्चिरादिकैका "तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहः" इति। "स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति" इत्यन्या। "यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुमागच्छति" इत्यपरा। "सूर्यद्वारेण ते विरजाः प्रयान्ति" इति चापरा। तत्र संशयः किं परस्परं भिन्ना एताः सृतयः किं वैकैवानेकविशेषणेति। तत्र प्राप्तं तावद्भिन्ना एवैताः सृतय इति, भिन्नप्रकरणस्थितत्वाद्भिन्नोपासनशेषत्वाच्च। अपि च "अथैतैरेव रश्मिभिः" इत्यवधारणमर्चिराद्यपेक्षायामुपरुध्येत, त्वरावचनञ्च पीड्येत "स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छति" इति तस्मादन्योन्यभिन्ना एवैते पन्थान इत्येवं प्राप्तेऽभिदध्महे। अर्चिरादिनेति। सर्वो ब्रह्मप्रेप्सुरर्चिरादिनैवाध्वना रंहतीति प्रतिजानीमहे। कुतः? तत्प्रथितेः। प्रथितो ह्येष मार्गः सर्वेषां विदुषाम्। तथाहि पञ्चाग्निविद्याप्रकरणे "ये चामी अरण्ये श्रद्धां सत्यमुपासते" इति विद्यान्तरशीलिनामप्यर्चिरादिका सृतिः श्राव्यते। स्यादेतत् यासु विद्यासु न काचिद्गतिरुच्यते तास्वेवेयमर्चिरादिकोपतिष्ठताम् यासु त्वन्याऽन्या श्राव्यते तासु किमर्चिराद्याश्रयणम्? इति। अत्रोच्यते, भवेदेतदेवं यद्यत्यन्तभिन्ना एवैताः सृतयः स्युः, एकैव त्वेषा सृतिरनेकविशेषणा ब्रह्मलोकप्रतिपादनी क्वचित् केनचिद्विशेषणेनोपलक्षितेति वदामः, सर्वत्रैकदेशप्रत्यभिज्ञानादितरेतरविशेषणविशेष्यभावोपपत्तेः। प्रकरणभेदेऽपि तु विद्यैकत्वे भवतीतरेतरविशेषणोपसंहारवद्गतिविशेषणानामप्युपसंहारः। विद्याभेदेऽपि गत्येकदेशप्रत्यभिज्ञानाद्गन्तव्याभेदाच्च गत्यभेद एव। तथाहि "ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति" "तस्मिन् वसति शाश्वतीः समाः" "सा या ब्रह्मणो जितिर्या व्युष्टिस्तां जितिं जयति तां व्युष्टिं व्यश्नुते" "तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दति" इति तत्र तत्र च तदेवैकं फलं ब्रह्मलोकप्राप्तिलक्षणं प्रदर्श्यते। यत्त्वेतैरेवेत्यवधारणमर्चिराद्याश्रयणे न स्यादिति। नैष दोषः, रश्मिप्राप्तिपरत्वादस्य। न ह्येक एवशब्दो रश्मींश्च प्रापयितुमर्हति, अर्चिरादींश्च व्यावर्तयितुम्। तस्माद्रश्मिसम्बन्ध एवायमवधार्यते इति द्रष्टव्यम्। त्वरावचनं त्वर्चिराद्यपेक्षायामपि नैवोपरुध्यते यथा निमिषमात्रेणात्रागम्यत इति। अपि च "अथैतयोः पथोर्न कतरेण चेति" मार्गद्वयभ्रष्टानां कष्टं तृतीयं स्थानमाचक्षाणा पितृयाणव्यतिरिक्तमेकमेव देवयानमर्चिरादिपर्वाणं पन्थानं प्रथयति। भूयांसि चार्चिरादिश्रुतौ मार्गपर्वाणि, अल्पीयांसि त्वन्यत्र, भूयसाञ्चानुगुण्येनाल्पीयसां नयनं न्याय्यमित्यतोऽपि अर्चिरादिना तत्प्रथितेरित्युक्तम्" भा०।

"वायुमब्दादविशेषाविशेषाभ्याम्" सू०।

"केन पुनः सन्निवेशविशेषेण गतिविशेषणानामितरेतरविशेषणविशेष्यभाव? इति तदेतत् सुहृद्भूत्वाऽऽचार्यो ग्रथयति "स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकं इति कौषितकिनां देवयानः पन्थाः पठ्यते। तत्रार्चिरग्निलोकशब्दौ तावदेकार्थौ ज्वलनवचनत्वादिति नात्र सन्निवेशक्रमः कश्चिदन्वेष्टव्यः, वायुस्त्वर्चिरादिवर्त्मन्यश्रुतः कतमस्मिन् स्थाने सन्निवेशयितव्य इति। उच्यते, "तेऽर्चिषमभिसम्भवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान्, मासेभ्यः संवत्सरं, संवत्सरादादित्यम् इत्यत्र संवत्सरात् पराञ्चमादित्यादर्वाञ्चं वायुमभिसम्भवन्ति, कस्मात् अविशेषविशेषाभ्याम्। तथाहि "स वायुलोकम् इत्यत्राविशेषोपदिष्टस्य वायोः श्रुत्यन्तरे विशेषोपदेशो दृश्यते "यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुमागच्छति तस्मै स यत्र विजिहीते यथा रथचक्रस्य खण्डेन स ऊर्द्ध्व आक्रमते स आदित्यमागच्छति" इति एतस्मादादित्याद्वायोः पूर्वत्वदर्शनाद्विशेषादब्दादित्ययोरन्तराले वायुर्निवेशयितव्यः। कस्मात् पुनरग्नेः परत्वदर्शनाद्विशेषादर्चिषोऽनन्तरं वायुर्न निवेश्यते। नैषोऽस्ति विशेष इति। वदामः। ननूदाहृता श्रुतिः "स एतं

देवयानं पन्थानमापद्याग्निलोकमागच्छति, स वायुलोकम् इति। उच्यते, नैवलोऽत्र पाठः पौर्वापर्यावस्थितो नात्र क्रमवचनः कश्चिच्छब्दोऽस्ति। पदार्थोपदर्शनमात्रं ह्यत्र क्रियते “एतंश्चैतञ्च स गच्छति” इति उत्तरत्र पुनर्वायुप्रत्तेन रथचक्रमात्रेण छिद्रेणोर्द्ध्वमाक्रम्यादित्यमागच्छतीत्यवगम्यते क्रमः तस्मात् सूक्तमविशेषविशेषाभ्यामिति। वाजसनेयिनस्तु “मासेभ्यो देवलोकं देवलोकादादित्यम्” इति समामनन्ति, तत्रादित्यानन्तर्याय देवलोकाद्वायुमभिसम्भवेयुः। वायुमब्दादिति तु छान्दोग्यश्रुत्यपेक्षयोक्तम्। छान्दोग्यवाजसनेयिनोस्त्वेकत्र देवलोको न विद्यते परत्र संवत्सरः, तत्र श्रुतिद्वयप्रत्ययादुभावप्युभयत्र ग्रथितव्यौ, तत्रापि माससम्बन्धात् संवत्सरः पूर्वः पश्चिमो देवलोक इति विवेक्तव्यम्” भा०।

“तडितोऽधिवरुणः सम्बन्धात्” सू०।

“आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतम्” इत्यस्यां विद्युत उपरिष्टात् वरुणलोकमित्ययं वरुणः सम्बध्यते। अस्ति हि सम्बन्धो विद्युद्वरुणयोः। “यदा हि विशाला विद्युतस्तीव्रस्तनितनिर्घोषाः जीमूतोदरेषु प्रनृत्यन्ति अथापः प्रपतन्ति विद्योतते स्तनयति वर्षिष्यति वा” इति च ब्राह्मणम्। अपाञ्चाधिपतिर्वरुण इति श्रुतिस्मृतिप्रसिद्धिः। वरुणाच्चाधीन्द्रप्रजापती स्थानान्तराभावात् पाठसामर्थ्याच्चागन्तुकत्वादपि वरुणादीनामन्त एव निवेशः। वैशेषिकस्थानाभावात् विद्युच्चान्त्याऽर्चिरादौ वर्त्मनि” भा०।

“आतिवाहिकास्तल्लिङ्गात्” सू०।

इत्यादि सूत्रभाष्यन्तु आतिवाहिकशब्दे ६५२पृ० दर्शितम् “कार्यं वादरिरस्य गत्युपपत्तेः” सू०। “स एनान् ब्रह्म गमयति” इत्यत्र विचिकित्स्यते, किं कार्यमपरं ब्रह्म गमयति आहोस्वित् परमेवाविकृतं मुख्यं ब्रह्मेति। कुतः संशयः, ब्रह्मशब्दप्रयोगात् गतिश्रुतेश्च। तत्र कार्यमेव सगुणमपरं ब्रह्म नयत्येतानमानवः पुरुष इति वादरिराचार्यो मन्यते। कुतः? अस्य गत्युपपत्तेः। अस्य हि कार्यब्रह्मणो गन्तव्यत्वमुपपद्यते प्रदेशवत्त्वात्, न तु परस्मिन् ब्रह्मणि गन्तृत्वं गन्तव्यत्वं गतिर्वाऽवकल्पते सर्वगतत्वात् प्रत्यगात्मत्वाच्च गन्तॄणाम्” भा०।

“विशेषितत्वाच्च” सू०। “ब्रह्मलोकान् गमयति” “ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति” इति श्रुत्यन्तरे विशेषितत्वात् कार्यब्रह्मविषयैव गतिरित्यवगम्यते। न हि बहुवचनेन विशेषणं परस्मिन् ब्रह्मण्यवकल्पते। कार्ये त्ववस्थाभेदोपपत्तेः सम्भवति बहुवचनम्। लोकश्रुतिरपि विकारगोचरायामेव सन्निवेशविशिष्टायां भोगभूमावाञ्जसी, गौणी त्वन्यत्र “ब्रह्मैव लोक एष सम्राट्” इत्यादिषु। अधिकरणाधिकर्तव्यनिर्देशोऽपि परस्मिन् ब्रह्मणि नाञ्जसः स्यात्, तस्मात् कार्यविषयमेवेदं नयनम्” भा०।

“ननु कार्यविषयेऽपि ब्रह्मशब्दो नोपपद्यते समस्तस्य हि जगतो जन्मादिकारणं ब्रह्मेति प्रतिष्ठापितमित्यत्रोच्यते”। “सामीप्यात्तु तद्व्यपदेशः” सू०।

“तुशब्द आशङ्काव्यावृत्त्यर्थः। परब्रह्मसामीप्यादपरस्य ब्रह्मणस्तस्मिन्नपि ब्रह्मशब्दप्रयोगो न विरुध्यते। परमेव हि ब्रह्म विशुद्धोपाधिसम्बन्धात् क्वचित् कैश्चिद्विकारधर्मैर्मनोमयत्वादिभिरुपासनायोपदिश्यमानमपरमिति स्थितिः। ननु कार्यप्राप्तावनावृत्तिश्रवणं न घटते। न हि परस्मात् ब्रह्मणोऽन्यत्र क्वचित् नित्यता सम्भवति। दर्शयति च देवयानपथप्रस्थितानामनावृत्तिं “एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते” इति। “तेषामिह न पुनरावृत्तिरस्ति तयोर्द्ध्वमायन्नमृतत्वमेतीति” चेति। अत्र ब्रूमः” भा०।

“कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्” सू०।

“कार्यब्रह्मलोकप्रलयप्रत्युपस्थाने सति तत्रैवोत्पन्नसम्यग्दर्शनाः सन्तस्तदध्यक्षेण हिरण्यगर्भेण सहातः परं परिशुद्धं विष्णोः परं पदं प्रतिपद्यन्त इति। इत्थं क्रममुक्तिरनावृत्त्यादिश्रुत्यभिधानेभ्योऽभ्युपगन्तव्या। न ह्यञ्जसैव गतिपूर्विका परप्राप्तिः सम्भवति इत्युपपादितम्” भा०

“स्मृतेश्च” सू०। “स्मृतिरप्येतमर्थमनुजानाति ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्” इति। तस्मात् कार्यब्रह्मविषया गतिः श्रूयत इति सिद्धान्तः” शा० भाष्यम्।

**देवयानी** स्त्री शुक्राचार्यस्य कन्यायां सा हि कचशापात् क्षत्रियेन ययातिनोढा तत्कथा भा० आ० ७५।७७अ०। “देवयान्याश्च संयोगं ययातेर्नाहुषस्य च”। देवयानीञ्च दयितां सुतां तस्य महात्मनः। देवयान्यामजायेतां यदुस्तुर्वसुरेव च” ७५अ०।

**देवयावन्** त्रि॰ देवं याति या—वनिप्। देवं प्रति गन्तरि "द्रवद्दूतो देवयावा वनिष्ठः" ऋ॰७।१०।२

**देवयिष्ठ** त्रि॰ चु॰ दिव—परिदेवने तृच्। परिदेवके

**देवयु** त्रि॰ देवं याति या—मृगय्वा॰ नि॰ कु। १धार्मिके। देवं द्योतनस्वभावं विष्णुभावमात्मन इच्छति क्यच्—तत उन्। २आत्मनो द्योतनस्वभावेच्छौ च "नरो यत्र देवयवोमदन्ति" ऋ॰१।१४५।५। ३लोकयात्रिके मेदि॰ ४देवे पु॰ देवं यौति यु—मिश्रणे क्विप् अनित्यमागमानुशासनमिति न लुक्।४यज्ञादिना देवानां मिश्रीकारके "सुधातुं यज्ञपतिं देवयुवम्" यजु॰१।१२ छान्दस उवङ्।

**देवयुग** पु॰देवप्रियं युगम्। सत्ययुगे "पुरा देवयुगे ब्रह्मन् प्रजापतिसुते शुभे आस्तां भगिन्यौ "ते भार्ये" कश्यपस्यास्तां कद्रूश्च विनता तथा" भा॰आ॰१६अ॰। "पुरा देवयुगे तात! देवेन्द्रेषु महात्मनः" भा॰अनु॰ ८३अ॰।

**देवयोनि** पु॰ देवानामिव कामिचारित्वात् योनिः यस्य। १विद्याधरादौ ते च अमरोक्ता यथा "विद्याधरोऽप्सरो यक्षोरक्षोगन्धर्वकिन्नराः। पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः"।२देवजातौ स्त्री "द्वे वै योनी इति ब्रूयात् देवयोनिरन्यो मनुष्ययोनिरन्यः" शत॰ब्रा॰७।४।२।१०

**देवयोषा** ६त॰। अप्सरसि। "ससुचुर्देवयोषास्तु पुष्पवर्षमनुत्तमम्" भा॰शल्य॰ ४७अ॰। "शुभे कुन्ती च माद्री च देवयोषोपमे भुवि" हरिवं॰ ५४अ॰

**देवर** पु॰ दीव्यतेऽनेन दिव—करणे अरच्। भर्त्तुरनुजे भ्रातरि। "पतिश्वशुरता ज्येष्ठे पतिर्देवरतानुजे" उद्भटः पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा" मनुः २भर्तृभ्रातृमात्रे च "देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया" मनुः अत्र देवरशब्दः भर्तुः ज्येष्ठकनिष्ठोभयपरः। उत्तरत्र "विधवायां नियोगार्थे निर्वृत्ते तु यथाविधि। गुरुवच्च स्नुषावच्च वर्त्तेयाताम् परस्परम्" कनिष्ठस्य पूर्वजपत्नीत्वेन गुरुतल्पत्वस्य ज्येष्ठस्य च कनिष्ठपत्न्याः स्नुषातल्पत्वस्योक्तेः। स्वार्थे क तत्रार्थे। "देवा देवरकोमतः" उज्ज्वलद॰ धृतकोषः।

**देवरक्षित** त्रि॰ ६त॰। १देवेन २रक्षिते देवकन्यपुत्रभेदे पु॰ तत्कन्यायां स्त्री "देवकस्याभवन् पुत्राश्चत्वारास्त्रिदशोपमाः। देववानुपदेवश्च सुदेवो देवरक्षितः। कुमार्यः सप्त चास्यासन् वसुदेवाय ता ददौ। देवकी शान्तिदेवी च सन्देवा देवरक्षिता। वृकदेव्युपदेवी च सुनाम्नी चैव सप्तमी" हरिवं॰ ३८अ॰

**देवरथ** न॰ देवस्यादित्यस्य रथः। सूर्यरथे "द्वात्रिंशतं वै देवरथाह्न्यम्" शत॰ब्रा॰ १४।६।१।२ देव "आदित्यस्तस्य रथो देवरथः तस्य गत्या एकेनाह्ना यावद्देशपरिमाणं परिच्छिद्यते तदेकं देवरथाह्न्यम् तद्द्वात्रिंशद्गुणितम् तावत् परिमाणोऽयं लोकः" भा॰ २प्रवरान्तर्गतर्षिभेदे ततः फिञ्। दैवरथायनि तदपत्ये पुंस्त्री। ३देवानां याने विमाने च

**देवरहस्य** न॰ देवानामपि रहस्यम्। अतिगोप्ये "श्रुतं देवरहस्यं ते नारदाद्देवदर्शनात्" भा॰आश्र॰३६अ॰

**देवराज्** पु॰ देवेषु राजते राज—क्विप्। इन्द्रे "हत्वा देवराट् स्वेभाग वै" भा॰अनु॰ १अ॰

**देवराज** पु॰ देवानां राजा—टच् समा॰। सुरराजे इन्द्रे "यस्यासीद्देवको नाम देवराजसमद्युतिः" भा॰आ॰६७अ॰ "देवराजः सहानुजः" ह॰सं॰४०अ॰ "ततः कुलालादि॰ वुञ्। देवराजक तत्कृते त्रि॰।

**देवरात** पु॰ देवाल्लब्धं रातमायुः संज्ञायां त।१विष्णुना देवेन रक्षिते परिक्षिते नृपे परिक्षितशब्दे तत्कथा दृश्या २विश्वामित्रपुत्रभेदे "विश्वामित्रस्य च सुता देवरातादयः स्मृताः" हरिवं॰ २७अ॰। "पार्थिवा देवरातास्र याज्ञवल्क्यायनवङ्कनम्" हरिवं २७अ॰। ३द्वापरयुगोद्भवे राजभेदे च "जानूरुर्देवरातश्च भोजो भीमरथश्च यः" "उपासते सभायां स्म कुन्तीपुत्रं युधिष्ठिरम्" भा॰सभा॰४अ॰ उपसंहारे युधिष्ठिरसभासत्त्वेन तस्योक्तेः न तस्य परिक्षितादिरूपत्वम्। ततः काश्यादि॰ ठञ् ञिठ् च। दैवरातिक तदपत्यादौ त्रि॰। ठञि स्त्रियां ङीप् इति भेदः।

**देवर्षि** पु॰ देव इव ऋषिः देवानामपि ऋषि पूज्यत्वात्। १नारदादौ न्यायादिकर्त्तरि कणादादौ च "देवर्षिरचितं गार्ग्य! कणात्रेयचिकित्सितम्। न्यायतन्त्राण्यनेकानि तैस्तैरुक्तानि वादिभिः" भा॰शा॰ २१०अ॰ "आब्रह्म भुवनात् लोका देवर्षिपितृमानवः। तृप्यन्तु पितरः सर्वे मातृमातामहादयः" तर्पणमन्त्रः।

**देवल** पु॰ देव—वृषा॰ कलच्। १धार्मिके २देवद्रव्योपजीविनि ब्राह्मणे च "चिकित्सकान् देवलकान् मांसविक्रयिणस्तथा। विपणेन च जीवन्तोवर्ज्याः स्युर्हव्यकव्ययोः" मनुः "देवलः देवप्रतिमापरिचारकः वर्त्तनार्थत्वेनैतत्कर्मणोऽयं निषेधः न धर्मार्थं "देवकोषोपजीवी च नाम्ना देवलको भवेत्" देवलस्मरणात्, कुल्लू॰। प्रत्यूषवसुपुत्रे ३ऋषिभेदे "प्रत्यूषस्य विदुः पुत्रमृषिं नाम्ना तु देवलम्" हरिवं॰

३अ०। असितमुनेरपत्ये ४ऋषिभेदे। स च रम्भानाम्नेनापावकतया बभूव ब्रह्मवै०पु०"असितपुत्रत्वात् तत्प्रकारस्थले "असितो देवलो व्यासः" इत्यादौ तस्यैव बोधः। स च स्मृतिकर्त्ता यथाह हेमा०व्र०ख० मनुः।
"विष्णुः पराशरो दक्षः संवर्त्तव्यासहारिताः। शातातपो वशिष्ठश्च यमापस्तम्बगौतमाः। देवलः शङ्खलिखितौ भरद्वाजोशनोऽत्रयः। शौनको याज्ञवल्क्यश्च दशाष्टौ स्मृतिकारिणः"। ५धौम्यर्षेरग्रजभ्रातरि च "यवीयान् देवलस्यैष वने भ्राता तपस्यति। धौम्य उत्कोचके तीर्थे तं वृणीध्वं यदीच्छथ" भा०आ० १८३ अ०। तस्य धौम्याग्रजतोक्ता। ६नारदमुनौ त्रिका० ७देवरे शब्दरत्ना०। देवं लाति ला—क। जीविकार्थं देवप्रतिमायाः देशान्तरनायके च। स्वार्थे क। देवलक तत्रार्थे।

**देवलता** स्त्री देवप्रिया लता शा० त०। १नवमल्लिकायाम् शब्दच०। देवलस्य भावः तल्। २देवलत्वे उपजीविकार्थं देवपूजने स्त्री।

**देवलाङ्गुलिका** स्त्री देवस्तनया चु० देव—परिदेवने करणे अच कर्म०। वृश्चिकालिकायां (विछाति) राजनि०।

**देवलाति** स्त्री देवानां तत्प्रतिमानां लातिः ग्रहणम् ष०त०। देवप्रतिमाग्रहणे तस्य दासीभारादित्वात् तत्पुरुषे पूर्वपदप्रकृतिस्वरत्वम्।

**देवलोक** पु० देवानां लोकः। १स्वर्गे त्रिका०। "आचार्यो ब्रह्मलोकेशः प्राजापत्ये पिता प्रभुः। अतिथिस्त्विन्द्रलोकेशो देवलोकस्य चर्त्विजः" मनुः। भूर्लोकोऽथ भुवर्लोकः स्वर्लोकोऽथ महर्जनः। तपः सत्यञ्च सप्तैते देवलोकाः प्रकीर्त्तिताः" मत्स्यपु०उक्तेषु २भूर्लोकादिषु च

**देववक्त्र** न० देवानां वक्त्रं मुखमिव। वह्नौ तत्र हुतस्यैव देवैरदनात् तस्य तन्मुखत्वम्।

**देववर्त्मन्** ष०त०। सुरवर्त्मनि आकाशे हेमच०।

**देववर्द्धकि** पु० ष०त०। विश्वकर्मणि हेमच०।

**देववर्द्धन** पु० देवकन्द्रपपुत्रभेदे "चत्वारो देवकात्मजाः। देववानुपदेवश्च सुदेवो देववर्द्धनः" भाग० ६।२४।१२

**देववल्लभ** त्रि० ष०त०। १देवानामिष्टे २सुरपुन्नागे पु० अमरः।

**देववात** पु० देवैर्वातः वा—गतिगन्धनयोः कर्मणि क्त ३त०। देवैरिष्यमाणतया प्राप्ते ऋषिभेदे। "अमन्थिष्टां भारता रेवदग्निं देवश्रवा देववातः सुदक्षम्" ऋ०३।२३।२।

**देववायु** पु० द्वादशमनोः पुत्रभेदे "देववायुरदूरश्च देवश्रेष्ठो विदूरथः। मित्रवान्मित्रदेवश्च मित्रसेनश्च मित्रकृत्। मित्रवाहः सुवर्चाश्च द्वादशस्य मनोः सुताः" हरिवं० ७ अ०।

**देववाहन** पु० देवान् हवींषि वाहयति प्रापयति वह—णिच्—ल्यु। १वह्नौ "द्वषो अग्निः समिध्यते अश्वो न देववाहनम्" ऋ०३।२७।१४ ष०त०। २देवानां वाहने न०।

**देवविद्या** स्त्री देवज्ञानार्था विद्या। निरुक्तविद्यायाम् "नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इतिहासपुराणपञ्चमो वेदानां वेदः पित्र्यो राशिर्दैवं निधिर्वाकोवाक्यमेकायनं देवविद्या ब्रह्मविद्या भूतविद्या क्षत्रविद्या नक्षत्रविद्या सर्पदेवजनविद्या नामैतन्नामोपास्वेति" छा०उ०"ऋग्वेदं भगवोऽध्येमि यजामि। यजुर्वेदं सामवेदमाथर्वणं चतुर्थवेदं वेदशब्दस्य प्रकृतत्वादितिहासपुराणं पञ्चमं वेदानां वेदं पञ्चमानां वेदानां वेदं व्याकरणमित्यर्थः व्याकरणेन हि पदादिविभागश ऋग्वेदादयो ज्ञायन्ते पित्र्यं श्राद्धकल्पम्। राशिर्गणितं दैवमुत्पातज्ञानं निधिं महाकालादिनिधिशास्त्रम्। वाको वाक्यं तर्कशास्त्रम्। एकायनं नीतिशास्त्रं देवविद्यां निरुक्तं, ब्रह्मण ऋग्यजुः सामाख्यस्य विद्या ब्रह्मविद्या शिक्षाकल्पच्छन्दश्चितयस्ताः। भूतविद्यां भूततन्त्रम्। क्षत्रविद्यां धनुर्वेदम्। नक्षत्रविद्यां ज्योतिषं सर्पविद्यां गारुड़म्। देवजनविद्यां गन्धयुक्तिनृत्यगीतवाद्यशिल्पादि विज्ञानानि। एतत् सर्वं हे भगवोऽध्येमि" भा०

**देवविश्** स्त्री क०व० देवानां विशः। देवमनुष्येषु मरुत्सु। "आहतस्तु सप्तकपालो विशो वै मरुतो देवविशस्ता हेदमनिभेद्या इव चेदस्ताः प्रजापतिं यजमानमुपेत्योचुर्विवैते मयिप्राग्मह इमाः प्रजा या एतेन हविषा जग्ध्मे" शत० ब्रा० २।५।१।१२। अजादि वा टाप्

**देववी** त्रि० देवं वेति कामयते वी—कान्त्यादिषु क्विप्। देवकामे। "स वह्निः सोम! जाग्टविः पवस्व देववीरति" ऋ० ६।२६।२।

**देववीति** स्त्री वी—खादने क्तिन् ष०त०। देवानां भक्षणे। "देववीतये त्वा ग्टह्णामि" यजु० १।१५। देवानां भक्षणायेत्यर्थः। [१सप्तपर्णवृक्षे च मेदि०।

**देववृक्ष** पु०देवप्रियो वृक्षः शाक०। १मन्दारवृक्षे २गुग्गुलौ

**देववृत्ति** स्त्री देवकृता उणादिसूत्रस्य वृत्तिः। उणादिसूत्रवृत्तिभेदे ३।६८।१०१ सू० उज्ज्वलदत्तोक्ते दृश्यम्।

**देवव्यचस्** त्रि० वि+अन्च गतौ कसुन् ३त०। देवैर्व्याप्ते "स्तृणीमहि देवव्यचा विबर्हिः" ऋ० २।४।४।

**देवव्रत** पु० १भीष्मे त्रिका० "गाङ्गं देवव्रतं नाम पुत्रं सोऽजनयत् प्रभुः। स तु भीष्म इति ख्यातः कौरवाणां पितामहः" हरिवं०३अ०। २अधिपते इत्यस्यार्थाच गेये सामभेदे च तानि तद्दोनि त्रीणि सामानि। ६त०। ३देवत्वसाधने व्रते न०।

**देवव्रतिन्** त्रि० देवतार्थं व्रतमस्त्यस्य इनि। देवार्थव्रतयुक्ते "देवव्रती स्याद्दत्तप्रदाने" भा०आनु० ७१अ०।

**देवशत्रु** पु० ६त०। १देवारौ असुरे "स देवशत्रुनिव देवराजः" भा० द्रो० १४६ अ०। २सुश्रुतोक्ते देवशत्रुग्रहभेदे तदाविष्टनरलक्षणं तत्रोक्तं यथा "संस्वेदी द्विजगुरुदेवदोषवक्ता जिह्माक्षो विगतभयो विमार्गदृष्टिः। सन्तुष्टो भवति च न चान्नपानजातैर्दुष्टात्मा भवति च देवशत्रुजुष्टः"।

**देवशर्मन्** पु०देव इव शर्मा अशुभनाशकः,कर्म०वा। १ब्राह्मणस्योपनामनि "ततश्च नाम कुर्वीत पितैव दशमेऽहनि। देवपूर्वं नराख्यं हि शर्मवर्मादिसंयुतम्" विष्णुपु०। "नरमाचष्टे नराख्यं नरनाम। देवपूर्वं देवात् पूर्वं तच्च विशिष्टं शर्मयुतं तदन्ते" व्याख्याति छिनत्त्यशुभं शृ—मनिन् शर्मा। देवपदं हि विप्राणां नाममात्रसमन्वितम्" शु०त०। "शर्मा देवश्च विप्रस्य शर्मा त्राता च भूभुजः। भूतिर्दत्तश्च वैश्यस्य दासः शूद्रस्य कारयेत्" यमवचने शर्मदेवयोः क्रमेण निर्देशेऽपि "शर्मान्तं ब्राह्मणस्य स्यात् वर्मान्तं क्षत्रियस्य तु" शातातपोक्तेः शर्मान्ततैव नामनि ज्ञेया अतएव तर्पणप्रयोगे "अमुकगोत्रः पिता अमुकदेवशर्मा तृप्यतामेतत्तिलोदकं तस्मै स्वधेति" श्रा० त०। "शर्मा तर्पणादिके कार्ये शर्मा तर्पणकर्मणि" गोभिलेन च शर्मान्तता उक्ता। २ऋषिभेदे "देवशर्मा च धौम्यश्च हस्तिकाश्यप एव च" भा० अनु० १६५।

**देवशस्** अव्य०देव+वा० शस्। देवेष्वित्यर्थे "त्वयि प्रति तान् देवशो विहि" ऋ० २।१।५।

**देवशिल्पिन्** पु० ६त०। विश्वकर्म्मणि।

**देवशुनी** स्त्री देव इव प्रभावान्विता शुनी। देवतुल्यप्रभावान्वितायां शुन्यां सरमायाम्। "पणिभिरसुरैर्निगूढागा अन्वेष्टुं सरमां देवशुनीमिन्द्रेण प्रहितामसुर्य्यः पणयो मित्रीयन्तः प्रोचुरिति" ऋ०१।६।५ भा० छता श्रुतिः "तच्छ्रुत्वा तस्य माता सरमा पुत्रदुःखार्त्ता तत्सत्रमुपागच्छत् स जनमेजयः सह भ्रातृभिर्दीर्घं सत्रमुपास्ते। स तया क्रुद्धया तत्रोक्तोऽयं मे पुत्रो न किञ्चिदपराध्यति नावेक्षते हवींषि नावलेढि किमर्थमभिहत इति। न किञ्चिदुक्तवन्तस्ते सा नानुवाच यस्मादयमभिहतोऽनपकारी तस्माददृष्टन्त्वां भयमागमिष्यतीति" भा०आ०३अ०।

**देवशेखर** पु०दीव्यतीति देवः शेखरोऽस्य। १दमनकवृक्षे ६त०। २देवानां शेखरे पु० न०।

**देवश्रवस्** पु० १विश्वामित्रपुत्रभेदे "देवश्रवाः कतश्चैव यस्मात्कात्यायनाः स्मृताः" हरिवं० २७ अ० विश्वामित्रपुत्रकथने। २वसुदेवभ्रातरि "वसुदेवं देवभागं देवश्रवसमानकम्। सृञ्जयं श्यामकं कङ्कं समीकं वत्सकं वृकम्" भाग० ६।२४।१७। "कंसवत्यां देवश्रवसः सुवीर इषुमांस्तथा" २२ श्लो०

**देवश्री** पु० देवान् श्रयति हविर्दानेन सेवते श्री—क्विप्। यज्ञे "दैव्याय धर्त्रे जोष्ट्रे देवश्रीः" यजु० १७।५६। ६त०। २देवानां लक्ष्म्यां स्त्री।

**देवश्रुत्** त्रि० देवेषु श्रूयते श्रु—क्विप् तुक्। देवेषु विख्याते। "देवश्रुतौ देवेष्वाघोषतम्" यजु०५।१७ "निग्राभ्या स्थ देवश्रुतस्तर्पयत मा" यजु० ६।३०

**देवश्रुत** पु० देवेषु श्रुतः विख्यातः। १ईश्वरे २नारदे ३शास्त्रे च शब्दार्थकल्प०। ४जिनभेदे हेमच०। "स्वयंप्रभश्च सर्वानुभूतिदेवश्रुतौ च यो"। अवसर्पिण्यां जिनोक्तौ।

**देवश्रेणी** स्त्री देवानां श्रेणीव। १मूर्वालतायां राजनि० ६त०। २देवतापङ्क्तौ च।

**देवश्रेष्ठ** पु० द्वादशमनोः पुत्रभेदे। "देववायुरदूरश्च देवश्रेष्ठो विदूरथः" हरिवं०७अ० तत्सुतोक्तौ।

**देवसदन** त्रि० सीदत्यत्र सद—आधारे ल्युट्। देवानामाधारे। "बर्हिर्देवसदनम्" श्रुतिः। "अश्वत्थो देवसदनस्तृतीयस्यामितो दिवि" अथ०५।४।३।

**देवसभा** स्त्री ६त०। १देवानां सभायां सुधर्म्मायाम् अमरः। २राजसभायाञ्च।

**देवसभ्य** त्रि०देवनं देवः क्रीड़ा तस्य सभा तत्र सीदति यत्। क्रीड़ार्थसभागते सभिके त्रिका०।

**देवसर्षप** पु० दीव्यति द्योतते दिव—अच् नित्यक०। अन्याले रक्तमूलके सूक्ष्मपत्रे वृक्षभेदे राजनि०।

**देवसह** न० देवं सहते सह—अच्। १भिक्षासूत्रभेदे २दण्डोत्पलौषधौ स्त्री विश्वः। ३शोभाकरे पर्वतभेदे पु० "हिमवत्यर्बुदे सह्ये महेन्द्रमलये तथा। श्रीपर्वते देव

गिरौ गिरौ देवह्रदे तथा। पारिपात्रे च विन्ध्ये च देवसुन्दे ह्रदे तथा। उत्तरेण वितस्तायाः प्रस्रवणे महीधराः। यश्च तेषामधोमध्ये सिन्धुर्नाम महानदः। हठवत् प्लवते तत्र चन्द्रमाः सोमसत्तमः” सुश्रुतः।

**देवसात्** अव्य० देवाधीनं करोति कार्त्स्न्येन सम्पद्यते क्रादियोगे, देये वा देव+साति। १कार्त्स्न्येन देवाधीने सम्पन्ने २देवाय देये च। “हता वा देवसात् भूत्वा लोकान् प्राप्स्यथ पुष्कलान्” भा०द्रो०१९० अ०

**देवसायुज्य** न० युज–सम्प० भावे क्विप् युक् योगः तया सह वर्त्तते सहशब्दस्य सादेशे सयुक् तस्य भावः ष्यञ् ६त०। देवत्वे अमरः।

**देव(वेद)सावर्णि** पु० मनुभेदे स च त्रयोदशो मनुः। यथा “मनुस्त्रयोदशो भव्यो वेद (देव) सावर्णिरात्मवान्। चित्रसेनविचित्राद्या वेद (देव) सावर्णिदेहजाः। सुकर्मसुत्रामसंज्ञा देवा इन्द्रो दिवस्पतिः। निर्मोहतत्त्वदर्शाद्या भविष्यन्त्यृषयस्तदा। देवहोत्रस्य तनय उपहर्त्ता दिवस्पतेः। योगेश्वरो हरेरंशो बृहत्यां संभविष्यति” भाग० ८।१३।१४

**देवसुन्द** पु० सोमाकारह्रदभेदे सुश्रुतः देवसदशब्दे दृश्यम्।

**देवसुषि** पु० देवैः प्राणादित्यादिभिः रक्ष्यमाणः सुषिः द्वारम्। प्राणादित्यादिभिः रक्ष्यमाणे हृदयस्य द्वारभेदे। स च पञ्चसंख्याकः छा० उ० व्यक्तमपि यथा “तस्य ह वा हृदयस्य पञ्च देवसुषयः स योऽस्य प्राङ्सुषिः स प्राणस्तच्चक्षुः स आदित्यस्तदेतत्तेजोऽन्नाद्यमित्युपासीत तेजस्व्यन्नादो भवति य एवं वेद” “अथ योऽस्य दक्षिणः सुषिः स व्यानस्तच्छ्रोत्रं स चन्द्रमास्तदेतच्छ्रीश्च यशश्चेत्युपासीत श्रीमान् यशस्वी भवति य एवं वेद” “अथ योऽस्य प्रत्यङ्सुषिः सोऽपानः सा वाक् सोऽग्निस्तदेतद्ब्रह्मवर्चसमन्नाद्यमित्युपासीत ब्रह्मवर्चस्यन्नादो भवति य एवं वेद” “अथ योऽस्योदङ्सुषिः स समानस्तन्मनः स पर्जन्यः तदेतत्कीर्त्तिश्च व्युष्टिश्चेत्युपासीत कीर्त्तिमान् व्युष्टिमान् भवति य एवं वेद” “अथ योऽस्योर्द्ध्वः सुषिः स उदानः स वायुः स आकाशस्तदेतदोजश्च महश्चेत्युपासीत ओजस्वी महस्वान् भवति य एवं वेद” “ते वा एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपाः स य एतानेव पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् वेदास्य कुले वीरो जायते प्रतिपद्यते स्वर्गं लोकं य एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् वेद” “तस्य ह वा इत्यादिना गायत्र्याख्यस्य ब्रह्मण उपासनाङ्गत्वेन द्वारपालादिगुणविधानार्थमारभ्यते। तस्येति प्रकृतस्य हृदयस्येत्यर्थः। एतस्यानन्तरनिर्दिष्टस्य। पञ्च पञ्चसंख्याका देवानां सुषयो देवसुषयः स्वर्गलोकप्राप्तिद्वारच्छिद्राणि देवैः प्राणादित्यादिभीरक्ष्यमाणानीत्यतो देवसुषयस्तस्य स्वर्गलोकभवनस्य हृदयस्यास्य यः प्राङ्सुषिः पूर्वाभिमुखस्य प्राग्गतं यच्छिद्रं द्वारं स प्राणः तत्स्थस्तेन द्वारेण यः सञ्चरति वायुविशेषः स प्राणनितीति प्राणः। तेनैव सम्बद्धमव्यतिरिक्तं तच्चक्षुस्तथैवादित्यः “आदित्यो ह वै बाह्यप्राण इति श्रुतेः” “चक्षूरूपप्रतिष्ठाक्रमेण हृदि स्थितः। “स आदित्यः कस्मिन् प्रतिष्ठित इति चक्षुषीत्यादि” वाजसनेयके। प्राणवायुदेवतैव ह्येका चक्षुरादित्यश्च सहाश्रयेण। वक्ष्यति च “प्राणाय स्वाहेति हुतं हविः सर्वमेतत्तर्पयतीति”। तदेतत्प्राणाख्यं स्वर्गलोकद्वारत्वाद्ब्रह्म” “स्वर्गलोकं प्रतिपित्सुस्तेजस्त्वं तच्चक्षुरादित्यस्वरूपेणाऽऽदत्वाच्च सवितुस्तेजोऽन्नाद्यमित्याभ्यां गुणाभ्यामुपासीत। ततस्तेजस्व्यन्नादश्चामयावित्वरहितो भवति य एवं वेद तस्यैतद्गुणफलम्। उपासनेन वशीकृतो द्वारपः स्वर्गलोकप्राप्तिहेतुर्भवतीति मुख्यञ्च फलम्” “अथ योऽस्य दक्षिणः सुषिः तत्स्थो वायुविशेषः स वीर्य्यवत्कर्म कुर्वन्विगृह्य वा प्राणापानौ नाना वाऽनितीति व्यानस्तत्सम्बद्धमेव च तच्छ्रोत्रमिन्द्रियं तथा स चन्द्रमाः” “श्रोत्रेण सृष्टा दिशश्चन्द्रमाश्चेति” श्रुतेः। सहाश्रयौ पूर्ववत्तदेतच्छ्रीश्च विभूतिः श्रोत्रचन्द्रमसोर्ज्ञानान्न हेतुत्वमतस्ताभ्यां श्रोत्रज्ञानान्नवतश्च यशः ख्यातिर्भवतीति यशोहेतुत्वाद्यशस्त्वमतस्ताभ्यां गुणाभ्यामुपासीतेत्यादि समानम्” “अथ योऽस्य प्रत्यङ्सुषिः पश्चिमस्तत्स्थो वायुविशेषः स मूत्रपुरीषाद्यपनयन्नधोऽनितीत्यपानः सा तथा सा वाक्” “तत्सम्बन्धात्तथाग्निस्तदेतद्ब्रह्मवर्चसं वृत्तस्वाध्यायनिमित्तं तेजो ब्रह्मवर्चसम् अग्निसम्बन्धाद्वृत्तस्वाध्यायस्य। अन्नपचनहेतुत्वादपानस्यान्नाद्यत्वम्। समानमन्यत्। अथो योऽस्योदङ्सुषिरुदङ्गतः सुषिस्तत्स्थो वायुविशेषः सोऽशितपीते समं नयतीति समानः। तत्सम्बद्धं मनोऽन्तःकरणं स पर्जन्यो वृष्ट्यात्मको देवः, पर्जन्यनिमित्ताश्चापः” इति। “मनसा

सृष्टा आपश्च वरुणश्चेति” श्रुतेस्तद्देतत्कीर्त्तिश्च मनसो ध्यानस्य कीर्त्तिहेतुत्वात्। आत्मपरोक्षं विश्रुतत्वं कीर्त्तिर्यशः स्वकरणमवेद्यं विश्रुतत्वं व्युष्टिः कान्तिर्देहगतं लावण्यम्। ततश्च कीर्त्तिसम्भवात्कीर्त्तिश्चेति। समानमन्यत्” “अथ योऽस्योर्द्ध्वः सुषिः स उदान आपादतलादारभ्योर्द्ध्वमुत्क्रमणादुत्कर्षाच्च कर्म कुर्वन्नित्युदानः स वायुस्तदाधारश्चाकाशस्तदेतत्। वाय्वाकाशयोरोजोहेतुत्वादोजो बलं महत्त्वाच्च महः इति। समानमन्यत्। ते वै एते यथोक्ताः पञ्च सुषिसम्बन्धात्पञ्च ब्रह्मणो हार्दस्य पुरुषा राजपुरुषा इव द्वारस्थाः स्वर्गस्य हार्दस्य लोकस्य द्वारपालाः। एतैर्हि चक्षुःश्रोत्रवाङ्मनःप्राणैर्बहिर्मुखप्रवृत्तैर्ब्रह्मणो हार्दस्य प्राप्तिद्वाराणि निरुद्धानि। प्रत्यक्षं ह्येतदजितकरणतया बाह्यविषयासङ्गानृतप्ररूढत्वान्न हार्दब्रह्मणि मनस्तिष्ठति। तस्मात्सत्यमुक्तमेते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपा इति। अतः स य एतानेवं यथोक्तगुणविशिष्टान् स्वर्गस्य लोकस्य द्वारपान्वेदोपास्ते उपासनया वशीकरोति स राजद्वारपालानिवोपासनेन वशीकृत्य तैरनिवारितः प्रतिपद्यते स्वर्गं लोकं राजानमिव हार्दं ब्रह्म। किञ्चास्य विदुषः कुले वीरः पुत्रो जायते वीरपुरुषसेवनात्। तस्य चर्ण्णोपाकरणेन ब्रह्मोपासनप्रवृत्तिहेतुत्वम्। ततश्च स्वर्गलोकप्रतिपत्तये पारम्पर्य्येण भवतीति स्वर्गलोकप्रतिपत्तिरेवैकं फलम्” भाष्यम्।

**देवसू** पु० सुवन्ति अनुजानन्ति सू—क्विप् देवाश्च ते सुवश्चेति कर्म०। अनुज्ञाकर्तृदेवभेदे। “स वै दीक्षते। स उपवसथेऽग्नीषोमीयं पशुमालभते तस्य वपया प्रचर्य्याग्नीषोमीयमेकादशकपालं पुरोडाशं निर्वपति तदनु देवसुवां हवींषि निरुप्यते” शत०ब्रा० ५।३।३।१ “देवसुवां हवींषि विधित्सुस्तं पाशमग्नीषोमीयपशुपुरोडाशानन्तरभावित्वं वक्तुमाह उपवसथ इति उपवसथः सुत्यादिवसात् पूर्वमहः। तदनु देवसुवां हवींषि निर्वपति सुवन्त्यनुजानन्तीति सुवः देवाश्च ते सुवश्चेति देवसुवः तेषां देवसुवाम् ‘ओः सुपीति’ पा०यणादेशः। प्रसवितृत्वं चैषां माम्नायते ‘देवसुवामेतानि हवींषि भवन्ति एतावन्तो वै देवानां सवाः त एवास्मै सवान् प्रयच्छन्ति त एनं सुवत इति” भा०तत्तत्कर्म्मणि आधिपत्यादिकरणायानुज्ञाकर्त्तारस्य सवित्रादयो वरुणान्ता अष्टौ देवा यथाह यजु०९।३९ “सविता त्वा सवानां सुवतामग्निर्गृहपतीनां सोमो वनस्पतीनाम्। बृहस्पतिर्वाच इन्द्रो ज्यैष्ठ्याय रुद्रः पशुभ्यो मित्रः सत्यो वरुणो धर्म्मपतीनाम्” “सविता सवानां प्रसवानामाज्ञानामाधिपत्ये हे यजमान! त्वा त्वां सुवतां प्रेरयतु सर्वेषामाज्ञादानेऽधिकारी भवेत्यर्थः। अग्निः गृहपतीनां गृहस्थानामाधिपत्ये त्वां सुवताम्। सोमो वनस्पतीनां वृक्षाणामाधिपत्ये त्वां सुवतां वृक्षाः सर्वे तवोपकारकाः भवन्तु यथा। बृहस्पतिर्वागर्थं त्वां सुवतां पाण्डित्याय प्रेरयतु यद्वा षष्ठ्यर्थे चतुर्थी वाच आधिपत्ये सुवताम्। इन्द्रोदेवो ज्यैष्ठाय ज्येष्ठभावाय त्वां सुवताम्। रुद्रः त्वां सुवताम्। मित्रो देव सत्यः सुपां सुलुगित्यादिना या० चतुर्थ्याः सु आदेशः सत्याय सत्यवाक्याय सत्यं वदितुं त्वां सुवताम्। वरुणो धर्म्मपतीनां धर्म्मेश्वराणां धर्म्मशीलानामाधिपत्ये त्वां सुवताम्। सवित्रादयोऽष्टौ देवसुवो देवास्त्वां नानाधिपत्यानि ददत्विति वाक्यार्थः” वेददी०।

**देवसृष्ट** त्रि० ३त०। देवेन सृष्टे “देवसृष्टो वा एषेर्य्यदा-पयत्येदिरनया” शत०५।२।३।९ देवसृष्टा उ इति च्छेदः “देवसृष्टो वा एषेर्य्येत् सौत्रामण्यनया” ५।५। ४।१४ मदिरिकायां स्त्री हेमच०।

**देवसेना** स्त्री ६त०। १सुराणां सैन्ये। “देवसेनां दानवैर्हि भग्नां दृष्ट्वा महाबलः” भा०व०२२३अ०। २प्रजापतेः कन्याभेदे सा च स्कन्दस्य भार्य्या षष्ठीति प्रथिता तत्कथा भा०व०२२३अ० “अहं प्रजापतेः कन्या देवसेनेति विश्रुता। भगिनी मे दैत्यसेना सा पूर्वं केशिना हृता”

“सदैवावां भगिन्यौ तु सखीभिः सह मानसम्। आगच्छावेह रत्यर्थमनुज्ञाप्य प्रजापतिम्। नित्यञ्चावां प्रार्थयते हर्त्तुं केशी महासुरः। इच्छत्येनं दैत्यसेना न चाहं पाकशासन। सा हृताऽनेन भगवन्! मुक्ताहं त्वद्बलेन तु। त्वया देवेन्द्र! निर्द्दिष्टं पतिमिच्छामि दुर्जयम्” इन्द्र उवाच “मम मातृष्वसेया त्वं माता दाक्षायणी मम। आख्यातन्त्वहमिच्छामि स्वयमात्मबलं त्वया” कन्योवाच “अबलाऽहं महाबाहो! पतिस्तु बलवान्मम। वरदानात् पितुर्भावी सुरासुरनमस्कृतः” इन्द्र उवाच “कीदृशन्तु बलं देवि! पत्युस्तव भविष्यति। एतदिच्छाम्यहं श्रोतुं तव वाक्यमनिन्दिते!” कन्योवाच “देवदानवयक्षाणां किन्नरोरगरक्षसाम्। जेता यो दुष्टदैत्यानां महावीर्य्यो महाबलः। यस्तु सर्वाणि भूतानि त्वया सह विजेष्यति। स हि मे भविता

भर्त्ता ब्रह्मण्यः कीर्त्तिवर्द्धनः" मार्कण्डेय उवाच "इन्द्रस्तस्य वचःश्रुत्वा दुःखितोऽचिन्तयदृदृढम् । अस्या देव्याः पतिर्नास्ति यादृशं संप्रभाषते"। इत्युपक्रमे ब्रह्मण उपदेशेन स्कन्दस्य तत्पतित्वावधारणे स्कन्दोत्पत्तिमुपवर्ण्योक्तं "चकार तां देवसेनां या सा तेन विमोचिता । अयं तस्याः पतिर्नूनं विहितो ब्रह्मणा स्वयम् । इति चिन्त्यानयामास देवसेनामलङ्कृताम् । स्कन्दं प्रोवाच बलभिदियं कन्या सुरोत्तम ! । अजाते त्वयि निर्द्दिष्टा तव पत्नी स्वयम्भुवा । तस्मात्त्वमस्या विधिवत् पाणिं मन्त्रपुरस्कृतम् । गृहाण दक्षिणं देव्या पाणिना पद्मवर्चसा । एवमुक्तः स जग्राह तस्याः पाणिं यथाविधि । बृहस्पतिर्मन्त्रविद्धि जजाप च जुहाव च । एवं स्कन्दस्य महिषीं देवसेनां विदुर्जनाः । षष्ठीं यां ब्राह्मणाः प्राहुर्लक्ष्मीमाशां सुखप्रदाम् । सिनीवालीं कुहूञ्चैव सद्वृत्तिमपराजिताम् । यदा स्कन्दः पतिर्लब्धः शाश्वतो देवसेनया । तदा तमाश्रयल्लक्ष्मीः स्वयं देवी शरीरिणी । श्रीजुष्टः पञ्चमीं स्कन्दस्तस्माच्छ्रीपञ्चमी स्मृता । षष्ठ्यां कृतार्थोऽभूद्यस्मात्तस्मात् षष्ठी महातिथिः" भा०व० २२८अ०।

**देवसेनापति** पु० ६त०। कार्त्तिकेये शब्दार्थ०। तस्य तत्पतित्वकथा देवसेनाशब्दे दृश्या "देवसेनापतिः स्कन्दो मातरो लोकमातरः" यजमानाभिषेकमन्त्रः ।

**देवस्थान** पु० देवानां स्थानमिव स्थानमस्य । ऋषिभेदे "द्वैपायनो नारदश्च देवलश्च महातपाः । देवस्थानश्च कण्वश्च तेषां शिष्याश्च सत्तमाः" भा०शा०१अ०। ६त० । २स्वर्गे न० ।

**देवस्वत्क** पु०देवस्य त्वेति आद्यशब्दोऽस्त्यत्रानुवाके अध्याये वा गोषदा० वुन् । देवस्य त्वेत्याद्यप्रतीकयुक्ते अध्याये अनुवाके च ।

**देवस्व** न० ६त० । देवप्रतिमार्थमुत्सृष्टे धने । "ब्रह्मस्वञ्च गुरोर्द्रव्यं देवस्वञ्च हरेत्तु यः । कन्यां ददाति शुल्केन स प्रेतो जायते स्मृतः" भा० पञ्चप्रेतोपाख्याने "देवस्वं ब्राह्मणस्वं च लोभेनोपहिनस्ति यः" मनुः "यज्वनं यज्ञशीलानां देवस्वं तद्विदुर्बुधाः" मनूक्ते २यज्ञशीलधने च । [चित्तद्देवहविः" यजु० ६।१०

**देवहविस्** न० ६त० । पशौ "आपो देवीः स्वदन्तु स्वात्तं

**देवहव्य** पु० देवाय हव्यं यस्य । ऋषिभेदे "संवर्त्तो देवहव्यश्च विष्वक्सेनश्च वीर्यवान्" भा०स०७अ०शक्रसभ्योक्तौ ।

**देवहित** त्रि० ६त०। १देवानां हिते ३त०। २देवैः स्थापिते च "नाना हि वा देवहितं सदस्कृतम्" यजु० १९।७

**देवहू** स्त्री देवाह्वयन्त्यत्र ह्वे—सम्प्र०भावे क्विप्, कर्त्तरि वा क्विप् । १देवाह्वाने "देवहूर्यज आ च वक्षत्" यजु० १८।६२। २देवाह्वानकर्त्तरि त्रि० "दस्मा हि देवहूतमा अश्वा अग्ने रथीरिव" ऋ० ८।४।१।४ ३यज्ञार्थं व्रीहिपूर्णे शकटे च "प्रथितमं जुष्टतमं देवहूतमम्" यजु० १।८ "देवानामतिशयेनाह्वाद यज्ञार्थं व्रीहिपूर्णं शकटं दृष्ट्वा देवा आहूता इव शीघ्रमागच्छन्ति" वेददी० । ४वामकर्णे "आपश्यो व्यवहारोऽत्र चित्तमन्धो बह्वूदनम् । पितृहूर्दक्षिणः कर्णः उत्तरो देवहूः स्मृतः" भाग०४।२९।१३। ५ऋषिभेदे ततः गर्गा० यञ् । दैवहव्य तदपत्ये पुंस्त्री०

**देवहूति** स्त्री स्वायम्भुवमनोर्मध्यमायां कन्यायाम् "यस्तु तत्र पुमान् सोऽभून्मनुः स्वायम्भुवः स्वराट् । स्त्री-यासीत् शतरूपाख्या महिष्यस्य महात्मनः । तदा मिथुन धर्मेण प्रजा ह्येधांबभूविरे । स चापि शतरूपायां पञ्चापत्यान्यजीजनत् । प्रियव्रतोत्तानपादौ तिस्रः कन्याश्च भारत ! । आकूतिर्देवहूतिश्च प्रसूतिरिति सत्तम ! । आकूतिं रुचये प्रादात् कर्दमाय तु मध्यमाम्" भाग० ३।१२।२८ सा च कपिलरूपस्य भगवतोमाता यथाह तत्रैव

"जज्ञे च कर्दमगृहे द्विज ! देवहूत्यां स्त्रीभिः समं नवभिरात्मगतिं स्वमात्रे । ऊचे ययात्मशमलं गुणसङ्गपङ्कमस्मिन् विधूय कपिलस्य गतिं प्रपेदे" भाग०२।३।४ तदुपदेशप्रकारश्च कपिलशब्दे भागवतवाक्योक्तः १६६२ पृष्ठादौ दर्शितः ।

**देवहूय** पु० देवा हूयन्तेऽसुरैः यत्र आधारे ब० क्यप् । १देवासुरसंग्रामे "स्पर्द्धन्ते वा उ देवहूये" ऋ०७।८५।२। भावे क्यप् । २देवानामाह्वाने न० "ते वा एत ऋतवः । देवाः पितरः समो हैव विद्वान्देवाः पितरः इति ह्वयत्याहास्य देवा देवहूयं गच्छन्त्या पितरः पितृहूयमवन्ति हैनं देवा देवहूयेऽवन्ति पितरः पितृहूये य एवं विद्वान् देवाः पितर इति ह्वयति"शत०ब्रा०२।१।३।२ "ऋत्वादीनां देवपित्रात्मनां द्वेधा विभागमाह वसन्त इत्युपक्रम्य य एवमृतूनां देवत्वं पितृत्वं च विद्वांस्तान्-ऋतून् देवाः पितर इति ह्वयति व्यवहरेत् अस्माह्वातः

देवहूयं देवह्वानं प्रति देवा आगच्छन्ति आगताश्च ते स्वसम्बद्धे कर्मणि एनमवन्ति" भा०

**देवहेडन** न० हेड–भावे ल्युट् ६त० लस्य डः। देवानामवहेलनरूपे अपराधे "यद्देवा देवहेडनं देवासश्चकृमा वयम्" यजु० २०।१४

**देवहोत्र** पु० त्रयोदशे मन्वन्तरे योगेश्वररूपस्य हरेरंशस्य पितरि। त्रयोदशमनूपक्रमे "देवहोत्रस्य तनय उपहर्त्ता दिवस्पतेः। योगेश्वरो हरेरंशो बृहत्यां संभविष्यति" भाग० ८।१३।१४

**देवह्रद** पु० श्रीपर्वतस्थे तीर्थभेदे "श्रीपर्वते महादेवो देव्या सह महाद्युतिः। न्यवसत् परमप्रीतो ब्रह्मा च त्रिदशैः सह। तत्र देवह्रदे स्नात्वा शुचिः प्रयतमानसः। अश्वमेधमवाप्नोति परां सिद्धिञ्च गच्छति" भा० व० ८५ अ०। [ गर्त्तोञ्च शब्दच० ।

**देवा** स्त्री दिव–अच्। १पद्मचारिण्यां लतायाम् २असनप-

**देवाक्रीड़** पु० देवा आक्रीड़न्त्यत्र आ+क्रीड–आधारे घञ् ६त०। १देवोद्याने इन्द्रारामे "देवराजाभ्यनुज्ञातो रत्नैश्च प्रतिपूजितः। वैनतेयं समारुह्य सहितः सत्यभामया। देवाक्रीड़ं परिक्रामन् पूज्यमानः सुरर्षिभिः। स ददर्श महावाह्वराक्रीडं वासवस्य च" हरिवं० १२२अ०

**देवागारिक** त्रि० देवागारे नियुक्तः अगारान्तत्वात् ठन्। देवागारे परिचरणार्थं नियुक्ते।

**देवाची** स्त्री देवानञ्चति वेदे बा०नलोपः नाद्र्यादेशश्च ङीप्। १देवान् प्रति गन्त्र्यां २देवानां पूजिकायां च "देवान् प्रत्यक्तया कृपेति" यास्कोक्तेः देवान् प्रत्यक्ततया सामर्थ्यलक्षणायां २कृपायाञ्च "य ऊर्द्ध्वया स्वध्वरो देवाच्या कृपा" ऋ०१।१२७।१ "कृपा कल्पयेति" भा०

**देवाजीव** त्रि० देवं देवप्रतिमाद्रव्यमाजीवति जीव–अण् उपस०। (पजारी) देवले। मिनि देवाजीवीत्यप्यत्र।

**देवाट** त्रि० देवा अटन्त्यत्र अट–आधारे घञ्। देवगत्याधारे पाटलिपुत्राद्दूरस्थां गङ्गापारे वर्त्तमाने १हरिहरक्षेत्रे "यदा नन्दो म्लेच्छपाणिर्गोधनेन पुरस्कृतः। स्थितवान् तद्दिनादेव क्षेत्रं हरिहरात्मकम्। देवानामटनाच्चैव देवाट इति संज्ञितम्" वराहपु०। देवानटन्ति अट–अण् उप०स०। देवान् प्रति २गन्तरि त्रि०।

**देवातिथि** पु० पौरवनृपभेदे "ततश्चाक्रोधनस्तस्माद्देवातिथिरमूनृपः" भाग० ९।२२।१९

**देवातिदेव** पु० देवानतिक्रम्य दीव्यति अति+दिव–अच्। विष्णौ "देवातिदेवो भगवान् प्रसूतिरंशे हरिर्यस्य जगत्प्रणेता" हरिवं० १५४अ०।

**देवात्मन्** पु० देव आत्मा यस्य। १अश्वत्थवृक्षे अश्वत्थशब्दे दृश्यम् कर्म०। २देवस्वरूपे च।

**देवाधिदेव** पु० देवानामधिदेवः। १सर्वेश्वरे परमेश्वरे २महादेवे च ३जिनदेवभेदे हेमच०।

**देवाधिप** पु०देवानामप्यधिपः। १सर्वनियन्तरि परमेश्वरे २द्वापरयुगीयनृपभेदे स च निकुम्भासुरांशात् द्वापरे भूमाववततार यथाह भा०आ०६७अ०"निकुम्भादजितः संख्ये महामतिरजायत। भूमौ भूमिपतिश्रेष्ठो देवाधिप इति स्मृतः"। ३इन्द्रे च "वलिं बद्ध्वा महादैत्यं शक्रो देवाधिपः कृतः" भा०उ० ९अ०

**देवानांप्रिय** त्रि० ६त०। "देवानां प्रिय इति च मूर्खे" वा० अलुक्स०। १मूर्खे "पशवो हि देवानां प्रीतिं जनयन्ति इति तेषां प्रियास्तथा च तत्प्रियत्वेन पशुतुल्यता प्रतीयते इत्यतः पशुवन्मूर्ख इति तदर्थः" तत्त्वबो०। २छागे पुंस्त्री लिङ्का०।

**देवानीक** पु० सावर्णस्य तृतीयमनोः पुत्रभेदे "संवर्त्तनः सुशर्मा च देवानीकः पुरूवहः" हरिवं०७अ० तत्पुत्रोक्तौ। सगरवंश्ये २नृपभेदे च "क्षेमधन्वसुतस्त्वासीत् देवानीकः प्रतापवान्" हरिवं० १५अ०। ६त०। ३देवानां सैन्ये न० "उग्रं तच्च महानादं देवानीकं महाप्रभम्" भा०व० २२६अ०।

**देवानुक्रम** पु०वैदिकमन्त्राणां देवताज्ञापनायानुक्रमो यत्र। वैदिकमन्त्राणां देवताज्ञापके ग्रन्थभेदे। सामान्यतः छन्दोविशेषाणां देवताभेदाः सर्वानुक्रमणिकायामुक्ताः तच्च देवताशब्दे ३६८२ पृ० "गायत्र्या अग्निरुष्णिहः सवितेत्यादि" वाक्यम् दर्शितम्।

**देवानुचर** त्रि० देवाननुचरति अनु+चर–ट। १देवपश्चाद्गामिनि विद्याधरादौ उपदेवे "निशम्य देवानुचरस्य वाचं मनुष्यदेवः पुनरप्युवाच" रघुः। देवानुयायिनृदेवानुगमप्यत्रार्थोऽप्यत्र।

**देवान्तक** पु० ६त०। १राक्षसभेदे २दैत्यभेदे च।

**देवान्धस्** न० देवानामन्ध इव दर्शनेन प्रीतिकरम्। १अमृते हेमच० देवाहारादयोऽप्यत्र। देवयोग्यमन्धः। २देवनैवेद्यार्थे ३कल्पितेऽन्ने च "अनुपाकृतमांसानि देवान्नानि हवींषि च" मनुः।

**देवापि** पु० पौरवे प्रतीपराजपुत्रे नृपभेदे "प्रतीपस्य

भयः पुत्रा जज्ञिरे भरतर्षभ !। देवापिः शान्तनुश्चैव बाह्लीकश्च महारथः। देवापिश्च प्रवव्राज तेषां धर्मीहितेऽप्सया" भा०आ० ९४अ० "ऋक्षस्तस्य दिलीपोऽभूत् प्रतापस्तस्य चात्मजः। देवापिः शान्तनुस्तस्य बाह्लीक इति चात्मजाः। पितृराज्यं परित्यज्य देवापिस्तु वनं गतः" भाग० ९।२२।११ "देवापिर्योगमास्थाय कलाप ग्राममास्थितः। सोमवंशे कलौ नष्टे कृतादौ स्थापयिष्यति" तत्रैव [ शब्दच० ।

**देवाभीष्ट** त्रि० ६त०। १देवानामभिलषिते २ताम्बूल्यां स्त्री

**देवायतन** न० ६त०। देवप्रतिमालये "न देवायतनं गच्छेत् कदाचिद्वाऽप्रदक्षिणम्। न पीड़येद्वा वस्त्राणि न देवायतनेष्वपि" कूर्मपु० "न जीर्णदेवायतने न वल्मीके कदाचन" मनुना तत्र मूत्रोत्सर्गः प्रतिषिद्धः।

**देवायुध** न० ६त०। इन्द्रधनुषि सूर्यप्रतिकूलदिशि सजलजलधरयुक्ते गगने सूर्यकिरणप्रतिबिम्बेन जाते धनुराकारे पदार्थे हेम०इन्द्रायुधशब्दे ९५४पृ० दर्शितं तदुत्पत्तिकारणं दृश्यम्। ६त०। २देवानामायुधे वज्रादौ च।

**देवायुस्** न० ६त० अच् समा०। देवानां जीवनकाले "मन्त्रेणाहवनीये निर्वपति तृतीयस्या गार्हपत्ये द्राघीयो हि देवायुषम्" शत० ब्रा० ७।१।१।१०

**देवारण्य** न०देवप्रियं देवभूयिष्ठं वा अरण्यम्। १तीर्थभेदे "प्रयागे देवरण्ये देवारण्येषु चैव ह। भोगवत्यां महाराज ! कौशिकस्याश्रमे तथा" भा०व०१८७अ०। ६त०। २देवनामारामे च "अलसुद्योतयामासुर्देवारण्यमिवर्तवः" रघुः।

**देवारि** पु० ६त०। १असुरे "येन देवारयः सर्वे महायुधि निपातिताः" भा०द्रो० ८१अ०।

**देवार्पण** न० देवेषु अर्पणम्। देवोद्देशेन देयद्रव्यस्य तद्दानजन्यफलस्य वा १त्यागे। देवेभ्योऽर्प्यन्ते यैः अर्पि-करणे ल्युट्। २ऋग्वेदादौ "पृथग्भूतानि चान्यानि यानि देवार्पणानि वै" भा० अनु०८६त०। "देवार्पणानि ऋग्यजुःसामानि पृथग्भूतानि मूर्तिमन्तीत्यर्थः" नीलक०।

**देवार्य** पु० अर्हद्गणभेदे "अरिष्टनेमिस्तु नेमिर्द्वाविंशस्तीर्थकृत्। महावीरो वर्द्धमानो देवार्यो ज्ञातनन्दनः। गणा नवास्यर्षिसंघा एकादश गणाधिपाः" हेमच०।

**देवार्ह** त्रि०देवानर्हति दाने अर्ह—अण् उप०स०। १देवाय दानयोग्ये २सुरपर्णे न० राजनि०।

**देवालय** न० ६त०। १स्वर्गे २देवप्रतिमाभवने च शब्दार्थ-कल्प०। ३स्वहद्वैवौषतायां स्त्री राजनि०। [ इबा०।

**देवाला** स्त्री देव इवालति अल—अच्। रागिणीभेदे

**देवावास** पु० ६त०। १अश्वत्थवृक्षे त्रि०। २स्वर्गे ३देवप्रतिमालये ४सुमेरौ च "देवावासः शुभः पुण्यो गिरिराजो हिरण्मयः" हरिवं० २२६अ०

**देवावी** पु० देवानवति अव—प्रीणने औणादिक ई। १देवतर्पके सोमे "देवेभ्यस्त्वा देवाव्यं गृह्णामि" यजु० ७।२२। देवा अव्यन्ते तर्प्यन्तेऽस्मिन् आधारे ई। २देवतर्पणाधारे यज्ञे च"इमं नो देव ! सवितर्यज्ञं प्रणय देवाव्यम्" यजु० ११।८।

**देवावृध्** पु०देवा वर्द्धन्तेऽत्र वृध—क्विप् पूर्वपददीर्घः। पर्वतभेदे "देवावृत् पर्वतश्चैव तथा वै वालुको गिरिः" हरिवं० २२६अ०।

**देवावृध** पु०देवा वर्द्धन्तेऽनेन वृध—घञर्थे क दीर्घः। सात्वते नृपभेदे "सात्वतान् सत्वसम्पन्नान् कौशल्या सुषुवे सुतान्। भजिनं भजमानञ्च दिव्यं देवावृधं नृपम्" हरिवं० ३८अ० "तत्र देवावृधो दत्त्वा सराष्ट्रोऽभ्यपतद्दिवम्" भा०शा० २३४अ०

**देवाश्व** पु० देवस्य शक्रस्याश्वः। उच्चैःश्रवसि अश्वे

**देवाहार** पु० देवयोग्य आहारः। १देवार्हे आहारे ६त०। २अमृते हेमच०।

**देवाह्वय** पु० नृपभेदे "देवाह्वयः सुप्रतिमः सुप्रतीको बृहद्रथः" भा० आ० १अ० नानानृपोक्तौ

**देविक** पु०अनुकम्पितो देवदत्तः मनुष्यनामवह्वचकत्वेन ठन्। द्वितीयादचः परस्य लोपः। १अनुकम्पिते देवदत्ते। दीव्यति दिव—ण्वुल् कापि अतइत्त्वम्। २नदीभेदे स्त्री "अर्द्धयोजनविस्तारां पञ्चयोजनमायताम्। एतावद्देविकामाहुर्देवर्षिपरिषेविताम्" पद्मपु०। ३भुस्तूरे भावप्र० देविकायां भवः अण्। एत आत् दाविक तत्रभवे त्रि०।

**देविन्** त्रि० दिव—णिनि। क्रीडाकारके "राज्ञा सचिह्नं निर्वास्याः कूटाक्षोपधिदेविनः" याज्ञ०।

**देविय** पु० अनुकम्पितो देवदत्तः वह्वचकमनुष्यनामत्वात् घ द्वितीयादचः परस्य लोपः। अनुकम्पिते देवदत्ते।

**देविल** त्रि० देव देवने इलच्। १धार्मिके। अनुकम्पितो देवदत्तः इलच् देवियवत्। २अनुकम्पिते देवदत्ते पु०

**देवी** स्त्री देवयति प्रदर्शितनिवृत्त्युपदेशेन यथाधिकारं व्यवहारयति सर्वान् दिव—णिच् अच् ङीप्, दीव्यति दिव—अच् पचादौ देवट् इति निर्देशात् टित्त्वात् ङीप्

देवस्य पत्नी ङीष् वा। २देवपत्न्यां "देवीनां दृचि गायते" स्मृतिः। देवसेनाशब्दे उदा० दृश्यम्। ३दुर्गायाञ्च धरणी "नमोदेव्यै महादेव्यै शिवायै सततं नमः" "देव्या यया ततमिदं जगदात्मशक्त्या" इति च देवीमाहात्म्यम्। "सकृत् कृत्वा महा पूजां देवीपादजलं पिबत्। न जातु जननीगर्भे गच्छेदिति विनिश्चयः" दीवीभाग० "अपराधं परं कृत्वा देवीभक्तस्य को नरः। सुखं लभेत यद्यपि भवेत् त्राता शिवः स्वयम्" इति देवीभाग० ३कृताभिषेकायां राजमहिष्याम् अमरः। ४मूर्वायां ५पृक्कायां च मेदि०। ६द्विजस्त्रीणासुपाधिभेदे "देव्यन्ताश्च स्त्रियः सर्वा दास्यन्ताः शूद्रयोनयः" कर्मविपाकः। ७आदित्यभक्तायां ८लिङ्गिन्यां ९वन्ध्याकर्कोटक्यां १०शालपर्ण्यां ११महाद्रोण्यां १२पाठायां १३नागरमुस्तायाम्। १४स्पृक्कायां १५हरीतक्याम् १६अतस्यां १७श्यामानामखगे च स्त्री राजनि०। १८रविसंक्रान्तौ तत्कालस्य यथा देवीस्वरूपत्वम् तथा एकादशीत० निरणायि यथा "अतीतानागतो भोगो नाड्यः पञ्चदश स्मृताः। सान्निध्यन्तु भवेत् तत्र यत्राणां संक्रमे रवेः। व्यवहारो भवेल्लोके चन्द्रसूर्योपलक्षितः। काले विकल्पते सर्वं ब्रह्माण्डं सचराचरम्। पुण्यपापविभागेन फलं देवी प्रयच्छति। एकाधिकशतं तस्मिन् कोटिकोटिगुणं भवेत्। धर्माद्दिवर्द्धते ह्यायूराज्यं पुत्रसुखादि च। अधर्माद्व्याधिशोकादि विषुवायणसन्निधौ। विषुवेषु च यद्दत्तं जप्तं भवति चाक्षयम्। एवं विष्णुपदे चैव षडशीतिमुखेषु च" देवीपु०। "भोगोव्याप्तिः स्वच्छसंक्रमणकालसन्निधाने पुण्यतमत्वमिति यावदिति कल्पतरुः। वस्तुतस्तु भुज्यत इति भोगो भोग्यः रविसंक्रमणे अतीतानागतः कालो भोग्यस्तन्निमित्तपुण्यपापजननयोग्य इति यावत्। अतएव पुण्यपापविभागेन फलमित्युपसंहृतम्। स कालः क्रियानित्याह। नाड्यः पञ्चदशेति उभयतः पञ्चदशदण्डपुण्यत्वं दिवा विष्णुपदीविषयमिति तिथितत्त्वे वक्ष्यते। सान्निध्यमित्यादिना तस्यैव कालस्य स्तुतिः। विकल्पते स्वभावात् प्रच्यवते। देवी संक्रान्तिकालस्वरूपा संक्रान्त्युपक्रमे देवीपुराण एव "समायनस्ततुर्मासः पक्षोहश्च क्रमेण तु। स्थूलसूक्ष्मविभागेन देवी सर्वगता विभो!"। इत्यभिधानात् "कलाकाष्ठादिरूपेण परिणामप्रदायिनी" इति मार्कण्डेयपुराणाञ्च" रघु०। तत्र कृताभिषेकायां राजमहिष्याम् "स्नातोऽनुलिप्तः सुरभिः स्रग्वी रुचिरभूषणः। स्नातां विशुद्धवसनां गच्छेद्देवीं सुभूषणाम्। न हि देवीगृहं गच्छेदात्मीयात् सन्निवेशनात्। अत्यर्थवल्लभोऽपीह विश्वासं स्त्रीषु न व्रजेत्। देवीगृहगतं भ्राता भद्रसेनममारयत्। मातुःशय्यान्तरे लीनं कारूषञ्चौरसं सुतम्। लाजान् विषेण संयोज्य मधुनेति विलोभितः। देवी तु काशीराजेन्द्रं निजघान रहोगतम्" काम०नीति०।

**देवीकोट** पु० शोणितपुरे वाणासुरपुरे त्रिका०।

**देवीन्धियक** पु० देवीं धिया इत्याद्यप्रतीकशब्दोऽस्ति अत्र अनुवाके अध्याये वा गोपदा०वुन्। देवीं धियेत्याद्यप्रतीकयुक्ते अनुवाके अध्याये च।

**देवीपुराण** न० देव्यामाहात्म्यादियुक्ते उपपुराणभेदे

**देवीभागवत** न० देव्या माहात्म्यादिकं भागवताख्यं पुराणम्। पुराणभेदे तच्चोपपुराणं कल्पान्तरे महापुराणं चेति उपपुराणशब्दे निर्णीतं तत्र दृश्यम्।

**देवीमाहात्म्य** न० ६त०। मार्कण्डेयपुराणान्तर्गते "सावर्णिः सूर्यतनय इत्यादिके सावर्णिर्भविता मनुरित्यन्ते त्रयोदशाध्यायात्मके ग्रन्थभेदे "श्रोष्यन्ति चैव ये भक्त्या देवीमाहात्म्यमुत्तमम्" मत्स्यपु०।

**देवीरापसक** पु० देवीराप इत्याद्यप्रतीकमस्त्यत्रानुवाके अध्याये वा गोपदा० वुन्। देवीराप इत्याद्यप्रतीकयुक्ते अध्याये अनुवाके च।

**देवीसूक्त** न० देव्याः तद्देवताकं सूक्तम्कसमुदायः। ऋग्वेदे शाकलसंहितायामतिप्रसिद्धे देवीदेवताके १सूक्तभेदे "रात्रिसूक्तं जपेदादौ मध्ये सप्तशतीं जपेत्। प्रान्ते तु जपनीयं वै देवीसूक्तमिति क्रमात्" मरीचिकल्पः। तत्रैव पुरश्चरणप्रकरणे "कृष्णाष्टमीं समारभ्य यावत् कृष्णचतुर्दशीम्। इत्यौकोत्तरमाज्ञाप्य पूर्वसंपुटितं ततः। एवं देव्या यथा प्रोक्तः पौरश्चरणिकः क्रमः। तदन्ते हवनं कुर्यात् प्रतिश्लोकेन पायसम्। रात्रिसूक्तं प्रतिऋचं तथा देव्याश्च सूक्तकम्। हुत्वान्ते प्रजपेत् स्तोत्रमादौ पूजादिकं मुने!" अत्र गुप्तवतीकारा आहुः। "पूर्वसंपुटितम् पूर्वाभ्यां पूर्वोक्ताभ्यां रात्रिसूक्तदेवीसूक्ताभ्यां संपुटितम्" प्रतिश्लोकेनेति मन्त्रविभागोपलक्षणम् कात्यायन्यादितन्त्रोक्तसप्तशतीविभागस्यान्यस्य हवनादिविधिं प्रति वाक्यशेषत्वेन तेनैव वैधपदार्थनिर्णयावश्यमभावात्। रात्रिसूक्तदेवीसूक्ते च ऋग्वेदे

शाकलसंहितायां प्रसिद्धे। तथेत्यनेन जपे ऋक्प्रक्रमः संपुटाकारो निर्दिश्यते तच्छब्दस्य पूर्वपरामर्शित्वात्। तस्य श्लोकपूरणमात्रार्थत्वं तु न न्याय्यम्। द्वाभ्यामपि सूक्ताभ्यां त्रिरावृत्तसप्तशतीहोमोत्तरमेव पाठक्रमानुसारेण होमः। "विश्वेश्वरीं जगद्धात्रीमिति" स्तवो रात्रिसूक्तम्। "नमोदेव्यै महादेव्यै इति" स्तवो देवीसूक्तमिति कश्चित् तच्च "प्रतिश्लोकं प्रतिऋचमिति" प्रतिनियतनिर्देशविरोधात् ऋक्सूक्तादिशब्दानां वैदिकमन्त्रेष्वेव रूढत्वप्रसिद्धेः। मत्स्यसूक्तमित्यादि काचित्कतान्त्रिकव्यवहारस्य केवलयौगिकत्वेनोपपत्तेः। तेन ऋक्पदस्य श्लोके लक्षणेत्युक्तिरपि साहसमात्रम्। सत्तद्मनोध्यानादिविधौ हृदयन्तरपदयोः प्रतिनियतनिर्देशबलादेव लक्षणाव्यवस्थाया इव प्रकृते ऋक्प्राया एव शक्तेर्व्यवस्थादार्ढ्यस्य कैमुतिकन्यायेनैव सिद्धेः। यदि त्वेवमालोच्यते "विश्वेश्वर्यादिकं सूक्तं दृष्टं तद्ब्रह्मणा पुरा। स्तुतये योगनिद्राया मम देव्याः पुरन्दर!। महिषान्तकरीसूक्तं सर्वसिद्धिप्रदं तथा। देव्या ययादिकं दिव्यं दृष्टं देवैः सहर्षिभिः। देवि! प्रपन्नार्त्तिहरे! प्रसीदेत्यादिकं तथा। नारायणीस्तुतिर्नाम सूक्तं परमशोभनम्। असुध्याः स्तुतये दृष्टं ब्रह्माद्यैः सकलैः सुरैः। नमो देव्यादिकं सूक्तं सर्वकामफलप्रदम्" इति विशफलितवेषेण पाञ्चरात्रलक्ष्मीतन्त्रे व्यवहारदर्शनादेतेषां स्तोत्राणामपौरुषेयत्वस्य सिद्धान्तितत्वाच्च सूक्तत्वव्यवहारो युज्यत एवेति। तदा कात्यायनीतन्त्रमते विश्वेश्वरीमिति श्लोकात् पूर्वं ब्रह्मोवाचेत्यस्य पाठाभावात्तदुत्तरमेव तत्पाठाच्च। त्वं स्वाहेत्यारभ्यैव स्तोत्रारम्भः तस्य च योगनिद्रात्मकरात्रिदैवतत्वात् मरीचितन्त्रे रात्रिसूक्तादेन निर्देश इति समाधेयं परं त्वेतत्तन्त्रमनुसरता विश्वेश्वरीमिति श्लोकेऽङ्गहोमदशायां न होतव्यम्। स्तोत्रान्तिमश्लोकस्य द्वेधा विभागोऽपि न कार्यः। देवीसूक्तेऽपि त्रेधा विभागोऽङ्गहोमे न विधेयः प्रधानविधिशेषस्याङ्गविधावन्वयेन प्रतिऋचमिति पदे लक्षणाकल्पने मानाभावादित्यवधेयम्"। २नमोदेव्यै महादेव्यै इत्यादिके देवीमाहात्म्यस्य पञ्चमाध्यायस्थे देव्याः स्तुतिरूपे मालामन्त्रे च "स च वैश्यस्तपस्तेपे देवीसूक्तं परं जपन्" देवीमाहा॰ तत्र गुप्तवतीकारा आहुः "देवीसूक्तं बह्वृचेष्वतिप्रसिद्धमेकं, विश्वेश्वरीमित्यादीत्यके श्रीसूक्तमाथर्वणप्रसिद्धमित्यन्ये। वस्तुतस्तु देवीसूक्तं नमोदेव्या इत्यादिकं पञ्चमाध्यायस्थं स्तुतिरूपं तच्च सर्वदेवताकूटस्थाया महालक्ष्म्याः स्तोत्रं शुम्भादिवधार्थिभिर्ब्रह्मादिभिर्देवैर्दृष्टं सर्वक्लेशपरिहारैश्वर्यादिफलकं तत्कामाभ्यां ताभ्यां जप्तम् अनुपदं श्रुतत्वात् बुद्धिसन्निहितत्वाच्चेदमेव देवीसूक्तपदेनात्र ग्रहीतुमुचितं लक्ष्मीतन्त्रसम्मतश्चायमर्थः इति प्रागेव निरूपितमित्यपरे "प्राणाधः संस्थितं वीजं व्योम वीजं हुताशनः। त्रिकोणबिन्दुनादाढ्यं प्रणवादि नमोऽन्तकम्। अम्बिकासिद्धिदं ज्ञेयं देवीसूक्तं परं स्मृतम्" इति क्वचित्पठिते ३मन्त्रभेदे च।

**देवृ** पु॰ दिव–ऋ। देवरे स्वामिनः कनिष्ठभ्रातरि अमरः।

**देवेज्** पु॰ देवं यजते यज–क्विप्। देवयष्टरि

**देवेज्य** पु॰ देवानामिज्यः पूज्यः। सुराचार्ये जीवे शब्दर॰।

**देवेन्द्र** पु॰ ६त॰। सुरेन्द्रे शक्रे "त्वमेव देवेन्द्र! सदा निगद्यसे" रघुः।

**देवेश** पु॰ ६त॰। १देवनियन्तरि परमेश्वरे २महादेवे च "भगवांश्चापि देवेशो यत्र देवी च कीर्त्यते" भा॰अा॰ ६२अ॰। ३तत्पत्न्यां स्त्री ङीष्। "देवेशि! भक्तिसुलभे! परिवारसमन्विते!। यावत्त्वां पूजयिष्यामि तावत्त्वं सुस्थिरा भव" तन्त्रसारः। ४विष्णौ पु॰ "देवेशो देवभृद्गुरुः" विष्णुस॰ देवेश्वरादयोऽप्यत्र।

**देवेशय** पु॰ देवे अधिष्ठातृतया शेते शी–अच् अलुक्स॰। देवेषु अधिष्ठातृतया वासिनि १परमेश्वरे २विष्णौ च "अन्तेशय! हिरण्येशय! देवेशय! कुशेशय!" भा॰शा॰ ३४०अ॰। [ ३गुग्गुलौ च पु॰ राजनि॰।

**देवेष्ट** त्रि॰ देवानामिष्टः। १देवानामभिलषिते २महामेदायां

**देवोद्यान** न॰ ६त॰। देवानामुद्याने तच्चेदस्य नन्दनं चैत्ररथं वैभ्राजं सर्वतोभद्रमिति चत्वारि, त्रिकाण्डे तु वैभ्राजं मिश्रकं सिध्रकावणं चैत्ररथमिति चक्राणीति भेदः।

**देवौकस्** न॰ ६त॰। देवस्थाने सुमेरौ "राजधान्यदेवौकःशैलयोर्मध्यस्थलगाः। रोहितकमवन्ती च तथा सन्निहितं सरः" सूर्यसि॰।

**दैव्य** न॰ देवस्य भावः ष्यञ् वेदे बा॰ न वृद्धिः। देवत्वे "महत्तद्वो देव्यस्य प्रवाचनम्" ऋ॰ ४।२६।१ "देव्यस्य देवत्वस्य प्रवाचनं प्रख्यापकम्" भा॰।

**देश** पु॰ दिशति दिश–अच्। भूगोलान्तर्गते विभागभेदे जनपदशब्दे विवृतिः। विस्तरस्तु देशावलीग्रन्थस्य प्रामाण्ये

तत्र दृश्यः। [हेमच०। देश+स्वार्थे क। २देशशब्दार्थे

**देशक** त्रि० दिश–कर्त्तरि ण्वुल्। १उपदेष्टरि अनुशास्तरि

**देशकारा(री)** स्त्री रागिणीभेदे सङ्गीतशास्त्रम्। इयं च मेघरागस्य भार्य्या

**देशधर्म्म** पु० देशानुरूपः धर्मः। देशोचितधर्मे स च “यस्मिन् देशे य आचारः पारम्पर्य्यक्रमागतः” मनूक्तः “देशधर्मान् जातिधर्मान् कुलधर्मांश्च शाश्वतान्। पाषण्डगणधर्मांश्च शास्त्रेऽस्मिन्नुक्तवान् मनुः” मनुः शास्त्रविरोधस्थले देशधर्मः परित्याज्यः यथाह आ०गृ० सू० १।७।१ नारायणोपाध्यायः “वैदेहेषु सद्यएव व्यवायोदृष्टः गृह्ये तु “ब्रह्मचारिणौ त्रिरात्रमिति” ब्रह्मचर्य्यं विहितं तत्र गृह्योक्तमेव कर्म कुर्य्यात् न देशधर्म्ममिति”।

**देशना** स्त्री दिश–णिच्–युच्। नियोगे विध्यादौ “एकोद्दिष्टादिवृद्ध्यादौ ह्रासवृद्ध्यादि देशना” ति०त०व्यासः।

**देशपरिच्छिन्न** त्रि० ३त०। अधिकरणैकदेशवर्त्तिनि सर्वाव्यापिनि। यथा संयोगादि।

**देशभाषा** स्त्री देशप्रचलिता भाषा शा०त०। तत्तद्देशेषु प्रचलितभाषायाम् मातृभाषायाम्। “कुशला देशभाषासु जल्पन्तोऽन्योन्यमीश्वराः” भा०श० ४६ अ०।

**देशराजचरित** न०गद्यपद्यमयात्मके चम्पूभेदे सा०द०

**देशरूप** न० दिश–कर्मणि घञ् देशस्य दिश्यमानस्य उचितस्य रूपम्। उचिते समञ्जसे अमरः “लघुना देशरूपेण पन्थयोगेन भारत!” भा०शा०१०७अ०। देश+प्रशंसायाम् रूपप्। २प्रशंसिते देशे च।

**देशाखी** स्त्री रागिणीभेदे सा च हिन्दोलरागस्य द्वितीय भार्य्या संगीतशास्त्रम्।

**देशान्तर** न० अन्योदेशः मयूर०स०। १देशभेदे तच्च स्मृतौ परिभाषितं यथाह वृद्धमनुः

“वाचो यत्र विभिद्यन्ते गिरिर्वा व्यवधायकः। महानद्यन्तरं यत्र तद्देशान्तरमुच्यते। देशनामनदीभेदान्निकटोऽपि भवेद्यदि। तत्तु देशान्तरं प्रोक्तं स्वयमेव स्वयम्भुवा। दशरात्रेण या वार्त्ता न श्रूयेताथवा पुनः”। वृहस्पतिः “देशान्तरं वदन्त्येके षष्टियोजनमायतम्। चत्वारिंशद्वदन्त्येके त्रिंशदेके तथैव च” “इत्युक्तमुनित्रयवचनोक्तवागादियोजनादिभेदसामञ्जस्यार्थमेवं व्याख्यायते त्रितयवैशिष्ट्ये त्रिंशद् योजनाभ्यन्तरे, द्वितीयवैशिष्ट्ये तदुपरि, एकवैशिष्ट्ये चत्वारिंशद्योजनोपरि, वाणीगिरिमहानद्यन्तरितत्वभेदाभावेऽपि षष्टियोजनोपरि, वैदेश्यमिति शुद्धिचिन्तामणिः” शु०त०रघु०। “देशान्तरगते प्रेते” शु०त० “क्लीवे देशान्तरगते पतिते भिक्षुकेऽपि वा। योगशास्त्राभियुक्ते च न दोषः परिवेदने” उ०त०शातातपः भूगोलस्थमध्यरेखातः पूर्वापरस्थे उत्तरदक्षिणस्थे वा योजनविशेषान्तररूपे चरसंज्ञके, २पदार्थे तत्स्वरूपं सि०शि०उक्तं तच्च चरशब्दे २८८८पृ० दर्शितम्। अधिकमत्र सि०शि० उक्तं तत्रादर्शितं दर्श्यते

“यल्लङ्कोज्जयिनीपुरोपरि कुरुक्षेत्रादिदेशान् स्पृशत् सूत्रं मेरुगतं बुधैर्निगदिता सा मध्यरेखा भुवः” मू०“अत्रोपपत्तिर्गोले इदानीं देशान्तरमाह” प्रमिता० “यत्र रेखापुरे स्वाक्षतुल्यः पलस्तन्निजस्थानमध्यस्थितैर्योजनैः। खेटभुक्तिर्हता स्पष्टभूवेष्टनेनोद्धृता प्राग्धणं स्वं तु पश्चाद्ग्रहे” मू० “अत्रोपपत्तिस्त्रैराशिकेन गोलेऽभिहिता च। इदानीं देशान्तरघटिका आह” प्रमि० “प्राग्भूविभागे गणितोत्थकालादनन्तरं प्रग्रहणं विधोः स्यात्। आदौ हि पश्चाद्विवरे तयोर्या भवन्ति देशान्तरनाडिकास्ताः। तद्घ्नं स्फुटं षष्टिहृतं कुवृत्तं भवन्ति देशान्तरयोजनानि। घटीगुणा षष्टिहृता द्युभुक्तिः स्वर्णं ग्रहे चोक्तवदेव कार्यम्। अर्कोदयादूर्द्ध्वमधश्च ताभिः प्राच्यां प्रतीच्यां दिनपप्रवृत्तिः। ऊर्द्ध्वं तथाधश्चरनाडिकाभी रवावुदग्दक्षिणगोलयाते” मू०। “यः किल मध्यरेखाया अपरिज्ञानात् ततः प्राक् पश्चाद्वा स्थितोऽस्मीति न वेत्ति तेनैवं ज्ञातव्यम्। विधुग्रहणदिने घटिकायन्त्रेण स्पर्शकाले रात्रिगतं ज्ञेयम्। अथ च गणितेन स्पर्शकालो ज्ञेयः। गणितोत्थकालादनन्तरं प्रग्रहणं यदि दृष्टं तदा द्रष्टा रेखातः प्राग्भूविभागे। यतो द्रष्टा यथा यथा रेखातः प्राग्व्रजति तथा तथा रेखोदयात् प्रागेवार्कोदयं पश्यति। इतोऽन्यथा चेत् तदा पश्चाद् द्रष्टा। दृग्ग्रहणप्रग्रहणकालयोरन्तरं देशान्तरघटिकास्ताभिर्गुणं षष्ट्या हृतं स्पष्टभूवेष्टनम्। एवमनुपाताद्देशान्तरयोजनानि। अथ वा किं योजनैः। यदि घटीषष्ट्या गतिर्लभ्यते तदा देशान्तरघटीभिः किमिति। एवं यत् फलमुत्पद्यते तत् प्राग्धणं पश्चाद्धनमिति युक्तमुक्तम्। तथा प्राच्यां ताभिर्घटीभिर्दिनवारप्रवृत्तिरर्कोदयादूर्द्ध्वं भवति। प्रतीच्यां तु तस्मादधः। यतो लङ्कोदये वारादिः। अतएव च रवावुत्तरगोलस्थे चरार्द्धघटिकाभिरूर्द्ध्वम्। यतस्तदोन्मण्डलं क्षितिजादूर्द्ध्वम्। दक्षिणे

त्वधोऽतस्तत्त्वोदयादधो वारप्रवृत्तिरिति सर्वं निरवद्यम्" घमि० ।

**देशिक** त्रि० देशे प्रसितः ठन् । १पथिके हेमच० । देश उपदेशः तत्र प्रसितः । २गुर्वादौ "धर्माणां देशिकः साक्षात् स भविष्यति धर्मभाक्" भा०अ०१४७अ० ।

**देशिन्** त्रि०दिशति दिश–णिनि । १देशके स्त्रियां ङीप् सा च २तर्ज्जन्यां शब्दच०"कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च । प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात्" याज्ञ०

**देशी** स्त्री रागिणीभेदे सा च दीपकरागस्य भार्य्या

**देशीय** त्रि० देशे भवः गहा० छ । देशभवे "इति पाश्चात्त्य देशीयाः पठन्ति" रघु० "सुरते कर्णमूलेषु यच्च देशीय भाषया । दम्पत्योर्जल्पितं मन्दं मन्मनं तद्विदुर्बुधाः" कामशास्त्रम् ।

**देशित** त्रि० दिश–णिच् कर्मणि क्त । उपदेशप्रेरिते "काकेभ्यो रक्ष्यतामन्नमिति बालोऽपि देशितः । उपघातप्रधानत्वान्न श्वादिभ्योऽपि रक्षति" मीमांसाकारिका ।

**देशीयवराडी** पु० रागिणीभेदे "देशीयवराडीरूपक तालेन गीयते" गीतगो०

**देश्य** त्रि० दिश–कर्मणि ण्यत् । १उपदेश्ये २पूर्वपक्षे न० श-ब्दरत्ना० देशे भवः दिगा० यत् । ३देशभवे त्रि० अस्य अकर्मधारये तत्पुरुषे उत्तरपदस्यस्य वर्ग्या०आद्युदात्तता ।

**देष्ठ** त्रि० अतिशयेन दाता दातृ+अतिशायने इष्ठन् तृणोलोपे गुणः । दातृतमे "वसुदेष्ठः सुन्वते भुवः" ऋ०८।६६।६

**देष्णु** त्रि० दा–इष्णुच् गुणः । दातरि उज्ज्वल०

**देह** पु०न० दिह–घञ् । १शरीरे स च स्थूलसूक्ष्मकारण-भेदात् त्रिविधः । अङ्गशब्दे गात्रशब्दे च विवृतिः सूक्ष्मदेहस्यैव भोगो ब्रह्मवैवर्त्तपु० दर्शितो यथा तत्र यमं प्रति सावित्रीप्रश्नः "स्वदेहे भस्मसाद्भूते यान्ति लोकान्तरं नराः । केन देहेन वा भोगं भुञ्जते च शुभाशुभम् । देहो वा कि विधो ब्रह्मन् ! तन्मे व्याख्यातुमर्हसि" तत्र यमस्योत्तरम् "शृणु देहविवरणं कथयामि यथागमम् । पृथिवी वायुराकाशस्तेजस्तोयमिति स्फुटम् । देहिनां देहवीजञ्च स्रष्टुः सृष्टिविधौ परम् । पृथिव्यादिपञ्चभूतैर्यो देहो निर्मितो भवेत् । स कृत्रिमो नश्वरश्च भस्मसाच्च भवेदिह । वृद्धाङ्गुष्ठप्रमाणश्च यो जीवः पुरुषः कृतः । विभर्त्ति सूक्ष्मदेहन्तं तद्रूपं भोगहेतवे । स देहो न भवेद्भस्म ज्वलदग्नौ यमालये । जलेन नष्टो देहो वा प्रहारे सुचिरे कृते । न शस्त्रे च न चास्त्रे च न तीक्ष्णकण्टके तथा । तप्तद्रवे तप्तलौहे तप्तपाषाण एव च । प्रतप्तप्रतिमाश्लेषेऽप्यत्यूर्द्ध्वपतनेऽपि च । न च दग्धो न भग्नश्च भुङ्क्ते सन्तापमेव च । कथितं देहवृत्तान्तकारणञ्च यथागमम्" स्थूलस्य नश्वरः । "अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः" गीता । सूक्ष्मादित्रैविध्यं सां०का०त०कौ०

"सूक्ष्मा मातापितृजाः सह प्रभूतैस्त्रिधा विशेषाः स्युः । सूक्ष्मास्तेषां नियताः मातापितृजा निवर्त्तन्ते" सां०का० "त्रिधा विशेषाः स्युः । तान् विशेषप्रकारानाह सूक्ष्मा इत्यादि सूक्ष्मदेहाः परिकल्पिताः (१) मातापितृजाः षाट्कौशिकाः तत्र मातृतो लोमलोहितमांसानि, पितृतस्तु स्नाय्वस्थिमज्जान इति षट्कोशाः । प्रकृष्टानि महान्ति भूतानि प्रभूतानि तैः सह सूक्ष्मशरीरमेको विशेषः मातापितृजो द्वितीयः महाभूतानि तृतीयः । महाभूतवर्गे च घटादीनां निवेशः इति । सूक्ष्ममातापितृजयोर्द्वयोर्विशेषमाह सूक्ष्मास्तेषां विशेषाणां मध्ये ये, ते नियताः, नित्याः मातापितृजा निवर्त्तन्ते रसान्ता वा भस्मान्ता वा विड्न्ता वेति सूक्ष्मशरीरं विभजते" त०कौ०

"पूर्वोत्पन्नम(श)सक्तं नियतं महदादिसूक्ष्मपर्यन्तम् । संसरति निरुपभोगं भावैरधिवासितं लिङ्गम्" सां०का० प्रधानेनादिसर्गे प्रतिपुरुषमेकैकमुत्पादितम् अस(श)मव्याहतं शिलामप्यनुविशति नियतम् आ आदिसर्गात् आ च महाप्रलयादवतिष्ठते । महदादिसूक्ष्मपर्यन्तं महदहङ्कारैकादशेन्द्रियपञ्चतन्मात्रपर्यन्तम् एषां समुदायः सूक्ष्मशरीरं शान्तघोरमूढैरिन्द्रियैरन्वितत्वाद्विशेषः । नन्वस्त्वेतदेव शरीरं भोगायतनं पुरुषस्य, कृतं दृश्यमानेन षाट्कौशिकेन शरीरेणेत्यत आह संसरतीति उपात्तमुपात्तं षाट्कौशिकं शरीरं जहाति हायं हायं चोपादत्ते कस्मात् ? निरुपभोगं यतः, षाट्कौशिकं शरीरं विना सूक्ष्मं शरीरं निरुपभोगं, तस्मात्संसरति । ननु धर्माधर्मनिमित्तः संसारः न च सूक्ष्मशरीरस्यास्ति यद्योगः, तत्कथं संसरतीत्यत आह भावैरधिवासितं धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्य्यानैश्वर्य्याणि भावास्तदन्विता बुद्धिः तदन्वितञ्च सूक्ष्मशरीरमिति तदपि भावैरधिवासितं यथा सुरभिचम्पकसम्पर्काद्वस्त्रं तदामोदवासितम्भवति तस्माद्भावैरेवाधिवासितत्वात्संसरति । कस्मात्पुनः प्रधानमिव महाप्रलयेऽपि तच्छरीरं न तिष्ठतीत्यत आह

लिङ्गम् लयं गच्छतीति लिङ्गं हेतुमत्त्वेन चास्य लिङ्गत्वमिति भावः" त०कौ०। परिकल्पिता इत्यस्य अनुमिता इत्यर्थः तत्प्रयोगश्च परलोके कर्मफलभोगः स्थूलदेहं विनाऽनुपपन्नः भोगत्वात् स्थूलस्वदेहारब्धक्षुधादिजनितस्य यस्यस्य स्वदेहेनैव भोगवत् यद्यत् स्वदेहारब्धं कर्मफलं तत्तत् स्वदेहेनैव भोग्यं नेतरेण अन्यथा कृतहान्यकृताभ्यागमप्रसङ्ग इत्यादि तर्कशास्त्रानुसन्धातव्यः।

"किन्तु देहमयोनिजम्" भाषा० "देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः" शा०भा०कारिका "देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा। तथा देहान्तरप्राप्तिः" गीता। उत्पत्तिस्थानभेदेन देहश्चतुर्विधः "देहश्चतुर्विधो ज्ञेयो जन्तोरुत्पत्तिभेदतः। उद्भिज्जः स्वेदजोऽण्डोत्थश्चतुर्थश्च जरायुजः" राघवभट्टधृतवाक्यम्। ज्योतिषोक्ते २लग्ने च "देहाधीशः स्वगेहे बुधगुरुकविभिः संयुतो वीक्षितो वा" जातका०। दिह—भावे घञ्। ३लेपने पु०

**देहकर्तृ** त्रि० देहं करोति कृ—तृच्। १देहकारके पृथिव्यादिभूते २ईश्वरे ३सूर्ये च पु० कर्मसाक्षित्वात्तयोस्तथात्वम् "देहकर्त्ता प्रशान्तात्मा विश्वात्मा विश्वतोमुखः" भा०व० ३अ०। सूर्यनामोक्तौ।

**देहकृत्** त्रि० देहं करोति कृ—क्विप्। १देहकारके पृथिव्यादिभूते। २परमेश्वरे पु० "स एष भगवान् देवः" इत्युपक्रमे "देहकृत् देहभृत् देही" भा०अनु० १६अ० ईशस्तुतिः। [(पाखा) शब्दच०।

**देहकोष** पु० देहस्य कोष इव। देहावरके खगानां पक्षे

**देहक्षय** पु० देहस्य क्षयो यस्मात्। १रोगे शब्दच०। हेम०। २देहस्य नाशे च।

**देहज** पु० देहात् जायते जन—ड। १तनुजे पुत्रे "द्वैपायनादनयरो महित्वे तस्य देहजः"। २पुत्र्यां स्त्री। ३देहजातमात्रे त्रि० "अहितो देहजो व्याधिर्हितमारण्यमौषधम्" उद्भटः।

**देहद** पु० देहं दायति शोधयति देहं देहपुष्टिं ददाति रसायनेन वा दै—शोधने दा—दाने वा क। १पारदे राजनि०। २देहदातरि त्रि०।

**देहधारक** न० देहं धारयति धारि—ण्वुल्। १अस्थ्नि देहधारिणि २शरीरिमात्रे त्रि०। णिनि। देहधारिन् तत्रार्थे स्त्रियां ङीप्। "संस्थिता परमा माया देहिनां देहधारिणी" ति०त० स्त०प्रभा०ख०।

**देहधि** पु० देहो धीयतेऽत्र धा—आधारे कि। देहाधारे खगानां देहावरके पक्षे (पाखा) शब्दचन्द्रिकाकोषः।

**देहधृज** पु० धृज—गतौ क्विन्। प्राणवायौ "वायुर्यो वक्त्रसञ्चारी स प्राणो नाम देहधृक्" सुश्रु०। २देहधारकमात्रे मनुष्यादौ त्रि०।

**देहभुग्** त्रि० देहे भुङ्क्ते कर्मफलानि भुज—क्विन्। १देहाभिमानिनि जीवे। देहं भुङ्क्ते भोजयति कर्मसाक्षित्वात् भुज—अन्तर्भूतण्यर्थे क्विन्। २सूर्ये पु० "देहभुग् देहिनां गतिः" भा० अनु० १६ अ० सूर्यनामोक्तौ।

**देहभृत्** पु० देहं बिभर्त्ति स्वकर्मानुसारेण भृ—क्विप्। स्वस्वकर्मानुसारेण देहाधिष्ठातरि कर्मात्मनि १जीवे। "कर्मात्मा त्वपरो योऽसौ बन्धमोक्षैः संयुज्यते" सा०प्र० भा०धृतवाक्ये तस्य कर्मयोगेन देहसम्बन्धरूपस्य बन्धस्योक्तेस्तथात्वम्। "धिगिमां देहभृतामसारताम्" रघुः।

"मनुष्योऽहं ब्राह्मणोऽहं गृहस्थोऽहमित्याद्यभिमानेनाबाधितेन देहं कर्माधिकारहेतुं वर्णाश्रमादिरूपं कर्तृत्वभोक्तृत्वाद्याश्रयं स्थूलसूक्ष्मशरीरेन्द्रियसङ्घातं बिभर्त्ति अनाद्यविद्यावासनावशात् व्यवहारयोग्यत्वेन, कल्पितमसत्यमपि सत्यतया स्वभिन्नमपि स्वाभिन्नतया पश्यन् धारयति पोषयति वेति देहभृत्। २विवेकज्ञानशून्ये अविद्यावति कर्तृत्वाभिमानिनि। स च त्रिविधः। रागादिदोषप्राबल्यात् काम्यनिषिद्धादियथेष्टकर्मानुष्ठायी मोक्षशास्त्रानधिकार्येकः १। अपरस्तु यः प्राकृतः सुकृतवशात् किञ्चित् प्रक्षीणरागादिदोषः सर्वाणि कर्माणि त्यक्तुमशक्नुवन् निषिद्धानि काम्यानि च परित्यज्य नित्यानि नैमित्तिकानि च कर्माणि फलाभिसन्धित्यागेन सत्त्वशुद्ध्यर्थमनुतिष्ठन् गौणसन्न्यासी मोक्षशास्त्राधिकारी द्वितीयः २। ततो नित्यनैमित्तिककर्मानुष्ठानेनान्तःकरणशुद्ध्या समुपजातविविदिषः श्रवणादिना वेदनं मोक्षसाधनं सम्पिपादयिषुः सर्वाणि कर्माणि विधितः परित्यज्य ब्रह्मनिष्ठं गुरुमुपसर्पति विविदिषासन्न्यासिसमाख्यस्तृतीयः ३।

**देहम्भर** त्रि० देहं बिभर्त्ति भृ—बा० खच् मुम् च। देहपोषके "जनेषु देहम्भरवार्त्तिकेषु" भाग०५।५।४

**देहयात्रा** स्त्री देहस्य लोकान्तरे यात्रा, देहरक्षार्थं यात्रा उद्यमादि वा। १यमपुर्य्यादिगमने मरणे २देहरक्षार्थं भोजनादौ च मेदि० "अयं देहयात्रामात्रार्थमिच्छानिच्छापरेच्छाप्रापितानि सुखदुःखलक्षणान्यारब्धफलान्य-

शुभयम्” वेदान्तसा० “अतीव भर्तुर्भगवर्मनिरया शुश्रूषया चार्षया देहयात्मया” भाग०४।२३।१७ आर्षः टाप्।

**देहला** स्त्री देहं भुवि क्षेपं राति ददाति सेवनात् रा—क रस्य लः। मद्ये शब्दच०।

**देहलि(ली)** स्त्री देहं लेपनं लाति गृह्णाति आधारत्वेन ला—बा० कि वा ङीप्। द्वारपिण्डाम् (देओयाल) शब्दर०। “विन्यस्यन्ती भुवि गणनया देहलीदत्तपुष्पैः” मेघदू०। अमरादौ ह्रस्वान्तपाठः स च पु०।

**देहवत्** त्रि० देह+अस्त्यर्थे मतुप् मस्य वः। देहाभिमानिनि जीवे “अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते” गीता।

**देहवायु** पु० देहस्थो वायुः। प्राणादिवायुपञ्चके त्रिका०।

**देहसाम्य** न० ६त०। अङ्गानां समत्वे। तल्लक्षणमुक्तं यथा “अङ्गानां समतां विद्यात् समे प्रत्यक्षि लीयते। नो चेत्तैव समानत्वमनुक्तं शुष्कदृत्वत्” शब्दार्थचि० धृतवाक्ये।

**देहसार** पु० ६त०। मज्जनि धातौ राजनि०।

**देहातीत** पु० देहं देहाध्यासमतीतः। घटादिवत् देहस्य द्रष्टृत्वेन तदभिमानशून्ये विदुषि।

**देहात्मवादिन्** पु० देहमात्मानं वदति वद—णिनि। चार्वाके तस्य यथा देहात्मवादित्वं तथा चार्वाकशब्दे २८२१ पृ० दर्शितम्।

**देहात्मप्रत्यय** पु० देहस्यात्मतया प्रत्ययः। देहे आत्मत्वेन अभिमाने “देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः। लौकिकं तद्वदेवेदं प्रमाणं त्वाऽऽत्मनिश्चयात्” शा०भा०धृ० कारिका

**देहाध्यास** पु० देहस्य तद्धर्मस्य वा आत्मतया तद्धर्मतया वा अध्यासः भ्रमः। देहधर्मस्य मनुष्यत्वादेरात्मधर्मतया बोधे। यथा मनुष्योऽहं कृशोऽहं गौरोऽहमित्यादि देहधर्मस्य आत्मनि भ्रमः।

**देहिका** स्त्री दिह—ण्वुल्। कीटभेदे उपजिह्विकायां त्रिका०

**देहिन्** स्त्री देहाः सर्वे भूतभविष्यद्वर्त्तमाना जगन्मण्डलवर्तिनोऽस्य सन्तीति इनि। १देहतादात्म्याध्यासापन्ने जीवे, एकस्यैव विभुत्वेन सर्वदेहयोगित्वात् सर्वदेहोपाधिरात्मा देहीत्युच्यते। २देहाभिमानात्मदर्शिनि च। जीवस्य विद्वांश्चेत् प्रत्यासीन परमेष्ठे तत्पूजापरिभवादिभिरप्रहृष्यन्नविषीदन्नहङ्कारममकारशून्यस्तिष्ठति। अन्यो हि देहतादात्म्याभिमानाद् देहमात्मतयाऽभिमन्यमानः देहाधिकरणमेवात्मनोधिकरणं मन्यमानो गृहे भूमावपने वाऽहमासे इति मन्यते न तु देहे आसे इति “देहिनामदेहयोगमंहसाम्” माघः।

**दै** शोधने भ्वा०पर०सक० शुद्धौ अक० अनिट् पित् तेन न घसंज्ञा। दायति अदासीत् ददौ दायात् दायते दातः। दातिः। [ सितो गौरः” अमरः।

अव+श्वेतीभावे अक० आवदायति शुक्लीभवति “अवदातः

**दैतेय** पुंस्त्री दितेरपत्यं ढक्। दितेरपत्ये असुरे अमरः। “दैतेयाश्चाप्यदैतेयाः परस्परजयैषिणः” हरिवं०२१४ अ०। स्त्रियां ङीप्। “दैतेयी चासुरी प्रजा” भा०शा० २२७अ०।

**दैत्य** पु० दितेरपत्यं ण्य। दितेरपत्ये अमरः। “दैत्यदानवयक्षाणां गन्धर्वोरगरक्षसाम्” मनुः। योपधत्वात् जातावपि स्त्रियां टाप्। [दैत्यगुरुस्तृतीये” ह०सं० १०४अ०।

**दैत्यगुरु** पु० ६त०। शुक्राचार्ये अमरः। “शनुचयाम्

**दैत्यदेव** पु० ६त०। १वरुणे त्रिका०। २वायौ हेम०।

**दैत्यद्वीप** पु० गरुडात्मजभेदे “दैत्यद्वीपः परिद्वीपः सारसः पद्मकेतनः” भा०उ० १०० अ० गरुडात्मजोक्तौ

**दैत्यधूमिनी** स्त्री तारादेव्यर्चनाङ्गे मुद्राभेदे “तारार्चने विशेषास्तु कथ्यन्ते पञ्च मुद्रिकाः। योनिश्च भूतिनी चैव बीजाख्या दैत्यधूमिनी। लेलिहानेति संप्रोक्ताः पञ्च मुद्रा विलोकिताः” तन्त्रसारे उद्दिष्टा “दानवधूमकेत्वपरनामतया सा लक्षिता यथा“परिवर्त्त्य करौ स्पष्टौ कनिष्ठाकृष्टमध्यमे। अनामायुगलं चाधस्तर्ज्जनीयुगलं पृथक्। अन्योऽन्यं निबिडां बद्धाङ्गुष्ठाग्रे ऽनामिकां ततः। दानवधूमकेत्वाख्या मुद्रैषा कथिता प्रिये!”।

**दैत्यनिसूदन** पु० दैत्यान् निसूदयति हिनस्ति नि+सूदि—णिच्—ल्यु। विष्णौ तस्य दानवारित्वात्तथात्वम्।

**दैत्यपति** पु० ६त०। हिरण्यकशिपौ। “प्राणच्छिदां दैत्यपतेर्नखानाम्” माघः।

**दैत्यपुरोधस्** पु० ६त०। शुक्राचार्ये हारा० “जिगीषया ततो देवाववृरेऽङ्गिरसं मुनिम्। पौरोहित्येन याज्यार्थे काव्यं तूशनसं परे” भा०आ० ७६अ० तस्यासुरपौरहित्यवरणमुक्तम्। दैत्यपुरोहितादयोऽप्यत्र।

**दैत्यपूज्य** पु० ६त०। शुक्राचार्ये “कनकनिकषगौरे व्याधयो दैत्यपूज्ये” ह०सं० ८अ०।

**दैत्यमातृ** स्त्री ६त०। कश्यपपत्नेः कलत्रे १दितौ उपचारात् तेषां विमातृषु २अदित्यादिषु तत्कलत्रेषु च “अदितिर्दितिर्दनुश्चैव सिंहिका दैत्यमातरः” हरिवं० १६८अ०।

**दैत्यमेदज** पु॰ दैत्यस्य मेदाज्जायते जन–ड । १गुग्गुलौ २पृथिव्यां स्त्री राजनि॰मधुकैटभमेदजातत्वात्तस्यास्तथात्वम्

**दैत्ययुग** न॰ ६त॰ । दैवयुगवत् द्वादशसहस्रमितवर्षेषु शब्दार्थकल्पतरुः । दैवयुगशब्दे दृश्यम् ।

**दैत्या** स्त्री दितेरियम् यत् टाप् । १सुरायां त्रिका॰ २सुरानामगन्धद्रव्ये अमरः । ३चण्डौषधौ मेदि॰ योषधत्वात् जातावपि टाप् । ४दैत्यजातिस्त्रियाम् । [मेदि॰ ।

**दैत्यारि** पु॰ ६त॰ । १विष्णौ अमरः । २देवतामात्रे च

**दैत्याहोरात्र** पु॰ ६त॰। मानुषे वर्षे शब्दार्थकल्पतरुः तस्मानस्य देवमानतुल्यत्वात्तथात्वम् ।

**दैत्येज्य** पु॰ ६त॰। दैत्यगुरौ शुक्राचार्ये । [भवे त्रि॰।

**दैन** न॰ दीनस्य भावः । १दीनत्वे दिने भवः अण् । २दिन-

**दैनन्दिन** त्रि॰ दिनं दिनं भवः वीप्सायां द्वित्वम् अत्यन्तसंयोगे द्वितीया ततो भवार्थे अण् अणि परे द्वितीयविभक्तेर्लुक मध्यस्थायास्तु प्रत्ययपरत्वाभावान्न लुक् । दिने दिने भवे प्रत्यहं भवे "एष दैनन्दिनः सर्गो ब्राह्मस्त्रैलोक्यवर्तनः । तिर्य्यङ्नृपितृदेवानां सम्भवो यत्र कर्मभिः" भाग॰ ३।११।२७।

**दैनन्दिनप्रलय** पु॰६त॰ । ब्रह्मणः स्वमानानुसारेण प्रतिदिनावसाने सर्वसृष्टवस्तूनां लये प्रलयविशेषे "चतुर्दशेन्द्रावच्छिन्नं ब्रह्मणो दिनमुच्यते । तावती ब्रह्मणो रात्रिः सा च ब्राह्मी निशा नृप ! । कालरात्रिश्च सा ज्ञेया वेदेषु परिकीर्तिता । एवं सप्तकल्पजीवी मार्कण्डेयो महातपाः । ब्रह्मलोकादधः सर्वे लोका दग्धाश्च तत्र वै । उत्थितेनैव सहसा सङ्कर्षणमुखाग्निना । चन्द्रार्कब्रह्मपुत्राश्च ब्रह्मलोकं गता ध्रुवम् । ब्रह्मरात्रे व्यतीते तु पुनश्च ससृजे विधिः । तस्य ब्राह्म्यां निशायाञ्च क्षुद्रप्रलयसम्भवः । एवं त्रिंशद्दिवारात्रैर्ब्रह्मणो मास एव च । वर्षं द्वादशमासैश्च ब्रह्मसम्बन्धि चैव हि । एवं परिमिताब्दे च गते च ब्रह्मणो नृप । दैनन्दिनस्तु प्रलयो वेदेषु परिकीर्तितः । अहोरात्रश्च स प्रोक्तो वेदविद्भिः पुरातनैः । तत्र सर्वे प्रनष्टाश्च चन्द्रार्कादिदिगीश्वराः । आदित्या वसवो रुद्रा मन्विन्द्रा मानवादयः । ऋषयो मुनयश्चैव गन्धर्वा राक्षसादयः । मार्कण्डेयो लोमशश्च पेचकश्चिरजीविनः । इन्द्रद्युम्नश्च नृपतिश्चाकूपारश्च कच्छपः । नाडीजङ्घो वकश्चैव सर्वे नष्टाश्च तत्र वै । ब्रह्मलोकादधः सर्वे लोका नागालयास्तथा । ब्रह्मलोकं ययुः सर्वे ब्रह्मलोकादधस्तथा । गते दैनन्दिने ब्रह्मा लोकांश्च ससृजे पुनः । एवं शतायुःपर्यन्तं परमायुश्च ब्रह्मणः" ब्र॰वै॰प्र॰ ।

**दैनिक** त्रि॰ दिने भवः "कालाट्ठञ्" पा॰ ठञ् । दिनभवे स्त्रियां ङीप् । सा च दिने क्रियमाणकर्मभृतौ शब्दमा॰।

**दैर्घवरत्र** पु॰दीर्घवरत्रेण निर्वृत्तः कूपः अण् । दीर्घरज्ज्वाकृष्टदकसाधनेन निष्पादिते कूपे ।

**दैर्घ्य** न॰ दीर्घस्य भावः ष्यञ् । दीर्घतायाम् ।

**दैन्य** न॰ दीनस्य भावः ष्यञ् । १दीनत्वे, कार्पण्ये च । "दौर्गत्याद्यैरनौजस्यं दैन्यं मलिनतादि कृत्" सा॰द॰ उक्ते २व्यभिचारिभावभेदे च "दैन्यचिन्तासुनिश्वासवैवर्ण्यौत्सुक्यचिन्तादिकृत्" सा॰द॰ "इन्दोर्दैन्यं त्वदनुसरणक्लिष्टकान्तेर्बिभर्त्ति" मेघ॰।

**दैलीपि** पु॰ दिलीपस्यापत्यम् इञ् । दिलीपापत्ये ततः तौल्वल्या॰ युवप्रत्ययस्य फको न लुक् । दैलीपायनरूपतदीय युवापत्ये ।

**दैव** त्रि॰ देवादागतः अण् । १भाग्ये फलोन्मुखे शुभाशुभकर्मणि "दैवाधीनं जगत्सर्वं जन्मकर्म शुभाशुभम् । संयोगाश्च वियोगाश्च न च दैवात् परं बलम् । कृष्णायत्तञ्च तद्दैवं स दैवात् परतस्ततः । भजन्ति सततं भक्ताः परमात्मानमीश्वरम् । दैवं वर्द्धयितुं शक्तः क्षयं कर्त्तुं स्वलीलया । न दैवबद्धस्तद्भक्तश्चाविनाशी च निर्गुणः" इति ब्र॰वै॰गणे॰। मनुरुवाच । "दैवे पुरुषकारे च किं ज्यायस्तद्ब्रवीहि मे । अत्र मे संशयो देव ! छेत्तुमर्हस्यशेषतः" मत्स्य उवाच "स्वमेव कर्म दैवाख्यं विद्धि देहान्तरार्जितम् । तस्मात् पौरुषमेवेह श्रेष्ठमाहुर्मनीषिणः । प्रतिकूलं तथा दैवं पौरुषेण विहन्यते । मङ्गलाचारयुक्तानां नित्यमुत्थानशीलिनाम् । येषां पूर्वकृतं कर्म सात्त्विकं मनुजोत्तम ! । पौरुषेण विना तेषां केषाञ्चिद्दृश्यते फलम् । कर्मणा प्राप्यते लोके राजसस्य तथा फलम् । कृच्छ्रेण कर्मणा विद्धि तामसस्य तथा फलम् । पौरुषेणाप्यते राजन् ! मार्गितव्यं फलं नरैः । दैवमेव विजानन्ति नराः पौरुषवर्जिताः । तस्माद्धि कालसंयुक्तं दैवेन सफलं भवेत् । पौरुषं दैवसम्पत्त्या काले फलति पार्थिव ! । दैवं पुरुषकारश्च कालश्च मनुजोत्तम ! । त्रयमेव मनुष्यस्य पिण्डितं स्यात् फलावहम् । कृषेर्वृष्टिसमायोगात् दृश्यन्ते फलसिद्धयः । तास्तु काले प्रदृश्यन्ते नैवाकाले कथञ्चन । तस्मात् सदैव कर्तव्यं सधर्मपौरुषं नृभिः । एवन्ते

प्राप्नुवन्तीह परलोके फलं ध्रुवम्। नालसाः प्राप्नुवन्त्यर्थांश्च दैवपरायणाः। तस्मात् सदैव यत्नेन पौरुषे यत्नमाचरेत्। त्यक्त्वालसान् दैवपरान् मनुष्यानुत्थानयुक्तान् पुरुषान् हि लक्ष्मीः। अन्विष्य यत्नाद्वृणुते नृपेन्द्र तस्मात् सदोत्थानवता हि भाव्यम्" मत्स्यपु०१९५अ०। "तृणं वज्रायते नूनं वज्रं चैव तृणायते। बलवान् बलहीनश्च दैवस्य गतिरीदृशी" "उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीर्दैवेन देयमिति कापुरुषा वदन्ति" नीतिमाला "दैवायत्तं कुले जन्म ममायत्तं हि पौरुषम्" वेणीसं०। देवस्येदम् देवाद्यञौ पा०अञ्। २देवसम्बन्धिनि स्त्रियां ङीप्। "दैवी ह्येषा गुणमयी मम माया दुरत्यया" गीता। "दैवी विचित्रा गतिः" उद्भटः। ३गीतोक्ते सम्पद्भेदे स्त्री "अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः। दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम्। अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम्। दया भूतेष्वलोलुत्वं मार्दवं ह्रीरचापलम्। तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता। भवन्ति सम्पदं दैवीमभिजातस्य भारत!। दैवी सम्पद् विमोक्षाय निबन्धायासुरी मता" गीता देवस्येयम् अञ्। ४मनूक्ते विवाहभेदे पु० "ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः। गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः" इत्युद्दिश्य "यज्ञे तु वितते सम्यगृत्विजे कर्म कुर्वते। अलङ्कृत्य सुतादानं दैवं धर्मं प्रचक्षते" इति लक्षितम् "सुतादानं तन्निमित्तग्रहणमिति तात्पर्य्यार्थः। विवाहानां ब्रह्मदेवादिदेवताकत्वाऽभावेन इवार्थगर्भितार्थकता कुल्लूकभट्टेनोक्ता। देवो देवताऽस्य अञ्। ५मनूक्ते अङ्गुल्यग्ररूपे आचमनाङ्गतीर्थभेदे आचमनोपक्रमे "अङ्गुष्ठमूलस्य तले ब्राह्मं तीर्थं प्रचक्षते। कायमङ्गुलिमूलेऽग्रे दैवतीर्थं तयोरधः" कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च। प्रजापतिपितृब्रह्मदैवतीर्थान्यनुक्रमात्" याज्ञवल्क्यैकवाक्यत्वात् अङ्गुल्यग्रस्यैव तथात्वम्। इदमर्थे अञ्। ६देवसम्बन्धिनि देवसर्गरूपे सर्गभेदे दैवसर्गश्चाष्टविधो "विबुधाः१ पितरो२ऽसुराः३ गन्धर्वाप्सरसः सिद्धा४ यक्षरक्षांसि चारणानि५ भूतप्रेतपिशाचाश्च६ विद्याध्राः७ किन्नरादयः८ भाग०३।१०।२६ उक्तः साङ्ख्यतत्त्वकौमुद्यान्तु अन्यविधैवाष्टविधतोक्ता यथा "अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति। मानुष्यश्चैकविधः समासतो भौतिकः सर्गः" सा० का० "ब्राह्मप्राजापत्यैन्द्रगान्धर्वराक्षसपैशाच इत्यष्टविधो दैवः सर्गः" त०कौ०। देवो देवभेदो देवताऽस्य अञ्। ७श्राद्धभेदे देवताभेदोद्देशेन कर्तव्ये श्राद्धभेदे न०। तस्य पितृश्राद्धात् पूर्वं कर्त्तव्यता मनुनोक्ता यथा "दैवकार्य्याद् द्विजातीनां पितृकार्यं विशिष्यते। दैवं हि पितृकार्यस्य पूर्वमाप्यायनं स्मृतम्। तेषामारक्षभूतं तु पूर्वं दैवं नियोजयेत्। रक्षांसि हि विलुम्पन्ति श्राद्धमारक्षवर्जितम्। दैवाद्यन्तं तदीहेत पैत्राद्यन्तं न तद्भवेत्। पैत्राद्यन्तं त्वीहमानः क्षिप्रं नश्यति सान्वयः"। देवलोऽपि "यत्तत्र क्रियते कर्म पैतृके ब्राह्मणान् प्रति। तत्सर्वं तत्र कर्तव्यं वैश्वदेविकपूर्विकम्" आसनगन्धादिदाने दैवपूर्वकतां पैत्र्यश्राद्धे विधत्ते स्म। श्राद्धभेदे देवताभेदाश्च नि०सि० निरूपिताः कस्यचिच्छ्राद्धस्य चादैवपूर्वकता चोक्ता यथा

हेमाद्रौ बृहस्पतिः "इष्टिश्राद्धे क्रतुदक्षौ सत्यौ नान्दीमुखे वसुः। नैमित्तिके कामकालौ काम्ये च धुरिलोचनौ। पुरूरवार्द्रवौ चैव पार्वणे समुदाहृतौ" तत्रैव "उत्पत्तिं नाम चैतेषां न विदुर्ये द्विजातयः। अयमुच्चारणीयस्तैः श्लोकः श्रद्धासमन्वितैः। आगच्छन्तु महाभागा विश्वेदेवा महाबलाः। ये यत्र विहिताः श्राद्धे सावधाना भवन्तु ते" इति। इष्टिश्राद्धं प्रतिरुचिविहितमित्युक्तमिति कल्पतरुः। आधानादिकर्माङ्गमित्यन्ये। नैमित्तिकमेकोद्दिष्टम् "एकोद्दिष्टन्तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते" भविष्योक्तेः एतद्व यद्यपि "एकोद्दिष्टं दैवहीनमिति" तत्र वैश्वदेवनिषेधस्तथापि "नवश्राद्धे द्वादशमासिके च कामकालौ ज्ञेयौ "नवश्राद्धं दशाहानि नवमिश्रन्तु षड्ऋतून्। अतःपरं पुराणं वै त्रिविधं श्राद्धमुच्यते। यस्मिन्नेव पुराणे वा विश्वेदेवा न लेभिरे। आसुरं तद्भवेच्छ्राद्धं दृष्टं मन्त्रवर्जितम्" इति बह्वृचपरिशिष्टात्। एतच्च बह्वृचानामेव। तेन तेषामेवोक्तिः अन्येषां तु नात्र विश्वेदेवा कात्यायनोक्तेस्तन्निषेध एवेति पृथ्वीचन्द्रोदयः। अन्ये तु नैमित्तिकं सपिण्डीकरणमाहुः। भविष्ये यद्यप्येकोद्दिष्टं तच्छब्देनोक्तं तथापि "तदप्यदैवं कर्तव्यमयुग्मान् भोजयेद्द्विजानिति" तत्रैव विश्वेदेवनिषेधात्। यद्यपि सपिण्डीकरणेऽप्यत्र एकोद्दिष्टत्वं तथापि "सपिण्डीकरणं श्राद्धं देवपूर्वं नियोजयेदिति" वचनात्तत्परत्वम्। हेमाद्रावादित्यपुराणे "विश्वेदेवौ क्रतुदक्षः सर्वास्विष्टिषु कीर्त्तितौ। नित्यं नान्दीमुखे श्राद्धे वसुसत्यौ च पैतृके। नवान्नलम्भने देवौ

कामकालौ सदैव हि। अपि कन्यागते सूर्य्ये काम्ये च धुरिलोचनौ। पुरूरवार्द्रवौ चैव विश्वेदेवौ तु पार्वणे"। क्वचित् विश्वेदेवापवादमाह हेमाद्रौ शातातपः "नित्यं श्राद्धमदैवं स्यादेकोद्दिष्टं तथैव च। मातुः श्राद्धं च युग्मैः स्याददैवं प्राङ्मुखैः पृथक्। योजयेद्दैवपूर्वाणि श्राद्धान्यन्यानि यत्नतः" नान्दीश्राद्धे भिन्नप्रयोगपक्षे मातुः श्राद्धमदैवमिति हेमाद्रिः। तत्र देवसम्बन्धिनि। "होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्" मनुः। दिवि भवः अण्। ८आकाशभवे त्रि०।

**दैवक** पु० देवएव दैवः स्वार्थे क। १देवे "सर्वभूतानि सदैवकानि प्रस्थेऽजयत् खाण्डवे सव्यसाची" भा०व०४८अ०। देवकस्यापत्यं स्त्री अण् ङीप्। २देवकनृपस्यापत्यस्त्रियां वसुदेवपत्नीभेदे श्रीकृष्णस्य मातरि स्त्री। [ऽप्यत्र।

**दैवकीनन्दन** पु० ६त०। वासुदेवे श्रीकृष्णे दैवकीसुतादयो-

**दैवकोविद** त्रि० दैवे शुभाशुभज्ञापकहेतौ कोविदः। दैवज्ञे शब्दरत्ना० स्त्रियां टाप्।

**दैवक्षत्रि** पु० क्रोष्टुवंश्ये देवक्षत्रस्यात्मजे नृपभेदे "तस्मात् करम्भः कारम्भिर्देवरातोऽभवन्नृपः। देवक्षत्रः सुतस्तस्य दैवक्षत्रिर्महायशाः" हरिवं० ३७अ०।

**दैवचिन्तक** पु० दैवं लक्षणेन शुभाशुभं चिन्तयति चिन्ति–ण्वुल्। दैवज्ञे तल्लक्षणादिकं वृ०सं० २अ० उक्तं तच्च २५०० पृ० गणकशब्दे दर्शितम् दैवविदादयोऽप्यत्र।

**दैवज्ञ** त्रि० दैवं जानाति ज्ञा–क। १दैवचिन्तके प्रश्नादिना शुभाशुभनिरूपिकायां विप्रस्त्रिकायां २स्त्रियां स्त्री ३सङ्कीर्णजातिभेदे गणकशब्दे २५०२पृ०दृश्यम् तज्जातिप्राप्तिहेतुश्च ब्रह्मवै० प्र० खण्डे उक्तो यथा

"लाक्षालौहादिव्यापारी रसादिविक्रयी च यः। स याति नागवेष्टञ्च नागैर्वेष्टित एव च। वसेत् स्वलोममानाब्दं तत्रैव नागदंशितः। ततो भवेत् स गणको वैद्यश्च सप्तजन्मसु। गोपश्च चर्मकारश्च शङ्खकारस्ततः शुचिः" स च अपकृष्टब्राह्मणः "अब्राह्मणो भट्टदैवज्ञादि" प्रा०वि० अब्राह्मणशब्दे दृश्यम् तस्य च नक्षत्रसूचकत्वदोषेण दूषितत्वादपकृष्टत्वम्।

**दैवत** न० देवतैव स्वार्थे अण्। देवतायां "दैवतैरुपलक्ष्यन्ते सुदूरमतिवेगिताः" सू० सि० "किमेकं दैवतं लोके" विष्णु सं० "ब्राह्मणो दैवतं महत्" मनुः "ब्राह्मणाः सम्भवेनैव देवानामपि दैवतम्" मनुः। अस्य अमरे पुंनपुंसकतोक्तावपि कविभिः पुंस्त्वेनाप्रयुक्तत्वात् तत्प्रयोगे अप्रयुक्तताख्यः काव्यदोष इति काव्यप्र० आह स यथा "यथायं दारुणाचारः सर्वदैव विभाव्यते। तथा मन्ये दैवतोऽस्य पिशाचो राक्षसोऽथवा" अत्र दैवतशब्दः "दैवतानि पुंसि वा" इत्याम्नातोऽपि न केनचित् प्रयुज्यते। "आर्षं छन्दो दैवतञ्च विनियोगस्तथैव च" इत्युद्देशे योगियाज्ञ० "यस्य यस्य तु मन्त्रस्य उद्दिष्टा देवता तु या। तदाकारं भवेत्तस्य दैवतं दैवतोच्यते" "अथातो दैवतम् तद्यानि नामानि प्राधान्यस्तुतीनां देवतानां तद्दैवतमित्याचक्षते" निरु० देवतामधिकृत्योक्तः ग्रन्थः अण्। निरुक्तस्य ३तृतीये काण्डे तस्य देवताधिकारेण कृतत्वात्। "आद्यं नैघण्टुकं काण्डं द्वितीयं नैगमं तथा। तृतीयं दैवतञ्चेति समाम्नायस्त्रिधा मतः" यास्कोक्तः तत्र "अग्न्यादिदेवपत्न्यन्तं देवताकाण्डमुच्यते" इति तत्रोक्तम्। देवतानां समूहः अण्। ४देवतासमूहे न० देवताया इदम् अण्। ५देवतासम्बन्धिनि प्रतिमादौ "मृदं गां दैवतं विप्रं घृतं मधु चतुष्पथम्। प्रदक्षिणानि कुर्वीत प्रज्ञातांश्च वनस्पतीन्" मनुः।

**दैवतन्त्र** त्रि० दैवं भाग्यं तन्त्रं प्रधानं यस्य। भाग्याधीने "किन्तु पुरा हरिश्चन्द्ररामचन्द्रमुख्या महीन्द्रा ऐश्वर्य्योपमितमहेन्द्रा दैवतन्त्रं दुःखयन्त्रं सम्यगनुभूय पश्चादनेककालचिरराज्यमकुर्वन्" दश०कु०।

**दैवतरस** पु० प्रवरर्षिभेदे "श्रौमतकामकायनानां वैश्वामित्रदेवश्रवस दैवतरसेति" आश्व० श्रौ० १२।१४।२

**दैवतरेय** पुंस्त्री० देवतरसः श्रेष्ठदेवस्यापत्यं शुभ्रा० ढक्। श्रेष्ठदेवस्यापत्ये स्त्रियां ङीप्।

**दैवति** पुंस्त्री दैवतस्यापत्यम् इञ्। देवतापत्ये ततः यूनि फक्। दैवतायन तस्य यून्यपत्ये तौल्वल्या०तस्य न लुक्।

**दैवत्य** त्रि० देवता स्वार्थे ष्यञ्। देवतायाम् "आर्षं छन्दश्च दैवत्यम्" याज्ञ० "ऋग्वेदो देवदैवत्यः यजुर्वेदस्तु मध्यमः" मनुः।

**दैवदत्त** त्रि० देवदत्तस्य छात्रा "वा नामधेयस्य वृद्धसंज्ञा वक्तव्याः" वार्त्ति० वृद्धत्वाभावपक्षे अण्। १देवदत्तच्छात्रादौ। देवदत्तः भक्तिरस्य अचित्तत्वाभावात् न ठक् किन्तु अण्। २देवदत्तभक्तियुक्ते त्रि० अपत्ये तु इञ् दैवदत्ति तदपत्ये पुंस्त्री भवार्थे काश्या० ठञ् ञिठौ दैवदत्तिक तद्भवार्थे। स्त्रियां ठञि ङीप् ञिठि टाप्।

**दैवदर्शनिन्** पु० ब०व०। देवदर्शनेन ऋषिणा दृष्टमधीयते शौनका० णिनि। देवदर्शनप्रोक्तच्छन्दोऽध्यायिषु।

**दैवदारव** त्रि॰ देवदारोर्विकारः "ओरञ्" पा॰ अञ् । देवदारुवृक्षविकारे यूपादौ

**दैवदीप** पु॰ दैवेन दीप इव । नेत्रे त्रिका॰ । तस्य दीपवदर्थप्रकाशकत्वात् तत्तुल्यत्वं दैवाधीनतयैवाश्रत्वादिस्फुन्यत्वेन दीपतुल्यत्वमिति तस्य तथात्वम् ।

**दैवन्त्यायन** पु॰ देवन्त+बा॰ गोत्रे यञ् ततोयूनि फक् । भृग्वार्षेयगोत्रप्रवरभेदे "याज्ञवाधौलमौनमौकशार्कराक्षिसार्ष्टिसावर्णिशालङ्कायनजैमिनिदैवन्त्यायनानां भार्गववैतहव्यसावेतसेति" आश्व॰श्रौ॰ १२।१० "अयं गण" भृग्वार्षेयः । प्रवरेषु कचिच्छाखान्तरवशात् पदविपर्य्यासोवर्णविपर्य्यासो वा पदान्यत्वं वाऽस्ति न तेन प्रवरान्यत्वं भवतीति मन्तव्यम्" नारा॰

**दैवपर** त्रि॰ दैवं भाग्यं परं चिन्त्यं यस्य । कार्यसिद्धौ भाग्यस्य प्रधानतया चिन्तके यद्भविष्ये हेम॰ "सम्पत्तेश्च विपत्तेश्च दैवमेव हि कारणम् । इति दैवपरोध्यायन्नात्मना न विचेष्टते" काम॰ नी॰ ।

**दैवप्रश्न** पु॰ दिवि आकाशे भवः दैवः कर्म॰ । "नक्तं निर्गत्य यत्किञ्चिच्छुभाशुभकरं वचः । श्रूयते तद्विदुर्धीरा दैवप्रश्नमुपश्रुतिम्" हारा॰ उक्ते शुभाशुभसूचनार्थे आकाशभवे वाक्यभेदे उपश्रुतौ आकाशवाण्याम् ।

**दैवमति** पुंस्त्री॰ देवमतस्यर्षेरपत्यम् इञ् । देवमतस्यर्षेरपत्ये स्त्रियां वा ङीप् । ततोयूनि फक् । दैवमतायन तदीये यून्यपत्ये तत्र तौल्व॰न फको लुक् । अत्र दैवमिति इति तौल्वल्या॰ गणे पाठान्तरं स च देवमितस्यापत्ये अन्यत् दैवमतिवत् ।

**दैवयज्ञि** पुंस्त्री॰ देवो देवार्थो यज्ञो यस्य तस्यापत्यम् इञ् । देवार्थयज्ञकारकस्यापत्ये स्त्रियां वा ङीप् । ततोयून्यपत्ये फक् । दैवयज्ञायन तदीये यून्यपत्ये । अत्र तौल्व॰ न फको लुक् ।

**दैवयुग** न॰ देवस्येदम् अण् कर्म॰ । दिव्ये युगे देवमानेन द्वादशसहस्रवर्षमितकाले "यदेतत् परिसंख्यातमादावेव चतुर्युगम् । एतत् द्वादशसाहस्रं देवानां युगमुच्यते"मनुः "सुरासुराणामन्योऽन्यमहोरात्रौ विपर्ययात् । तत्षष्टिः षड्गुणा दिव्यं वर्षमासुरमेव च" सू॰सि॰ "देवदैत्यानां बहुत्वाद्बहुवचनम् । अन्योऽन्यम् परस्परम् विपर्ययात् व्यत्यासात् अहोरात्रः । अयमर्थः । देवानां यद्दिनं तदसुराणां रात्रिः । देवानां या रात्रिस्तदसुराणां दिनम् । दैत्यानां यद्दिनं तद्देवानां रात्रिः । दैत्यानां या रात्रिस्तद्देवानां दिनमिति । तथा च देवदैत्ययोर्दिनरात्र्योरेव व्यत्यासाद्भेदो न मानेनेति । तयोरहोरात्रस्यैक्याद्देवाहोरात्रमानकथनेनैव दैत्याहोरात्रमानमुक्तमिति भावः" रङ्ग॰ "तद्द्वादशसहस्राणि चतुर्युगमुदाहृतम् । सूर्य्याब्दसङ्ख्यया द्वित्रिसागरैरयुताहतैः । सन्ध्यासन्ध्यांशसहितं विज्ञेयं तच्चतुर्युगम् । कृतादीनां व्यवस्थेयं धर्मपादव्यवस्थया" सू॰सि॰ ।

**दैवयोग** पु॰दैवस्य योगः फलोन्मुखतया सम्बन्धः । भाग्यस्य फलोन्मुखतया सम्बन्धे ।

**दैवराजिक** त्रि॰ देवराजे भवादि काश्या॰ ठञ् ञिठ् वा । देवराजभवे स्त्रियां ठञि ङीप् ञिठि टाप् ।

**दैवराति** पुंस्त्री॰ देवरातस्यापत्यम् इञ् । १देवरातस्यापत्ये २जनकराजपितरि च जनकस्य देवरातित्वस्य भा॰शा॰ ३१०अ॰ उक्तेः यथा "याज्ञवल्क्यमृषिश्रेष्ठं दैवरातिर्महायशाः । पप्रच्छ जनको राजा प्रश्नं प्रश्नविदां वरम्" देवरातशब्दे दृश्यम् ।

**दैवल** पु॰ देवलस्यापत्यं शिवा॰ अण् । देवलस्यर्षेरपत्ये सच शाण्डिल्यगोत्रस्य प्रवरर्षिभेदः यथाह आश्व॰श्रौ॰१२।१४।७।८ "शाण्डिलानां शाण्डिल्यासितदैवलेति" "कश्यपासितदैवलेति वा" ।

**दैवलक** पु॰ देवं देवयोनिं लाति स्वल्पाति पूज्यत्वेन ला—क स्वार्थे कुत्सितार्थे क वा । १भूतसेवके हारा॰ देवलकस्येदम् अण् । २देवलकसम्बन्धिनि त्रि॰ ।

**दैवलेखक** पु॰ दैवं लिखति लिख—ण्वुल् । मौहूर्त्तिके त्रिका॰ ।

**दैववंश** पु॰ देवानामयम् अण् कर्म॰ । देवानां वंशे तद्वंशवर्णनञ्च वायुपु॰ ३१अ॰ यथा "पितृवंशप्रसङ्गेन कथा ह्येषा प्रकीर्तिता । पितृणामानुपूर्व्येण देवान् वक्ष्याम्यतःपरम् । त्रेतायुगमुखे पूर्वमासन् स्वायम्भुवेऽन्तरे । देवा यामा इति ख्याताः पूर्वं ये यज्ञसूनवः । अजिता ब्रह्मणः पुत्रा जिताजिदजिताश्च ये । पुत्राः स्वायम्भुवस्यैते शुक्रनाम्ना तु मानसाः । तृप्तिमन्तोगणा ह्येते देवानान्तु त्रयः स्मृताः । छन्दोगास्तु त्रयस्त्रिंशत् सर्वे स्वायम्भुवस्य ह । यदुर्ययातिर्द्वौ देवौ दीधदः स्नवसो मतिः । विभासश्च क्रतुश्चैव प्रजातिर्विशतोद्युतिः । वायसो मङ्गलश्चैव यामा द्वादश कीर्तिताः । अभिमन्युरुग्रदृष्टिः समयोऽथ शुचिश्रवाः । केवलो विश्वरूपश्च सुपक्षो मधुपस्तथा । तुरीयो निर्हपुश्चैव युक्तोग्रावाशिनस्तु ते । यमिनो विश्वदेवाद्यो यविष्ठोऽमृतवानपि ।

अजिरो विभुर्विभावश्च अविकोऽथ विदेहकः। श्रुति श्रवो हृच्छयश्च देवा द्वादश कीर्तिताः। आसन् स्वायम्भुवस्यैते अन्तरे सोमपायिनः। त्रिविक्रमन्तो मन्वा ह्येते वीर्यवन्तो महाबलाः। तेषामिन्द्रः सदा ह्यासीत् विश्वभुक् प्रथमो विभुः। असुरा ये तदा तेषामासन् दायाद बान्धवाः। सुपर्णयक्षगन्धर्वाः पिशाचोरगराक्षसाः। अष्टौ पितृभिः सार्द्धं ते नासत्या देवयोनयः"।

**दैववाणी** स्त्री कर्म०। १दैवप्रश्ने उपश्रुतौ २संस्कृतवाक्ये "संस्कृतानाम दैवी वाक्" काव्यादर्शः।

**दैवशर्मि** पुंस्त्री० देवशर्मणोऽपत्यम् बाह्वा०इञ्। देवशर्मणोऽपत्ये ततः गहादि०भवाद्यर्थे छ। दैवशर्मीय तद्भवादौ त्रि०

**दैवसर्ग** पु० कर्म०। देवादिसर्गभेदे देवशब्दे दृश्यम्।

**दैवसृष्टि** स्त्री देवस्येयम् अण् दैवी कर्म०। अव्यक्तायां देवानां सृष्टौ। तत्प्रकारश्च वायुपु० ६अ० उक्तो यथा "सृष्टा सुरांस्तु देवेशस्तनुमन्यामपद्यत। अरक्तां सत्त्वबहुलां ततस्तां सोऽभ्ययूयुजत्। ततस्तां युञ्जतस्तस्य प्रियमासीत् प्रभोः किल। ततो मुखे समुत्पन्ना दीव्यतस्तस्य देवताः। यतोऽस्य दीव्यतो जातास्तेन देवाः प्रकीर्तिताः। धातुर्दिवीति यः प्रोक्तः क्रीड़ायां स विभाव्यते। तस्मात्तन्वान्तु दिव्यायां जज्ञिरे तेन देवताः"।

**दैवस्थानि** पुंस्त्री० देवस्थानस्यर्षेरपत्यम् इञ्। १देवस्थानस्यर्षेरपत्ये स्त्रियां वा ङीप्। ततः यूनि फक् तस्य पैला० लुक्। २दैवस्थानि तदीये यूनपत्ये च।

**दैवहव** पु० ब०व०। दैवहव्यस्य देवहूनामकर्षेरपत्यस्य छात्राः कण्वा० अण् यञो लुप्। दैवहव्यस्य छात्रेषु।

**दैवहीन** त्रि० दैवेन भाग्येन हीनः। शुभभाग्यहीने तदनुमापकहेतवश्च दीपिकायामुक्ता यथा "व्यसनी विनष्टधर्मा त्रिविधोत्पातपीड़ितोयश्च। पुरुषः स दैवहीनः कथितो दैवान्वितोऽन्यः। दैवहीनं रिपुं जेतुं यायाद्दैवान्वितो नृपः। योज्यो दैवान्विताभात्या दैवहीने तथात्मनि" तत्रैव।

**दैवागारिक** त्रि० देवागारे नियुक्तः "तत्र नियुक्तः" इत्यधिकारे अगारान्तात् ठक्। देवागारनियुक्ते देवागारिक इति क्वचित् पाठदर्शनात् ठना निष्पन्नमित्युक्तं प्राक्।

**दैवात्** अव्य० हठादित्यर्थे शब्दार्थचि०।

**दैवात्यय** पु० दैवकृतोऽत्यय उत्पातः। दैवकृते उत्पाते "अन्यत्र दैवात्ययात्" वृ०सं०२अ०। दिव्यान्तरिक्षभूमिजेषूत्पातेषु वह्न्यादि अशुभं च दैवात्यय इत्यर्थः।

**दैवादिक** पु० दिवादिगणे पठितः ठञ्। दिवादिगणे पठिते धातौ "सेवेति मयानिर्दिष्टो दैवादिकनिदर्शनः" मनो०।

**दैवारिप** पु० देवारीन् असुरान् पाति आश्रयदानेन पा—क देवारिपः समुद्रस्तत्र भवः अण्। शङ्खे तस्य समुद्रजातत्वात् तथात्वम् "भैरवं शब्दमत्यर्थं वानरश्च च कुर्वतः। दैवारिपाश्च बीभत्सुस्ताविनृ दीर्घोधने वधे" भा० वि० ६अ० "दैवारिपात् शङ्खात् भैरवं शब्दं कुर्वतः इत्यर्थः" नीलक०।

**दैवासुर** न० देवासुरस्य वैरम् द्वन्द्वात् वैरे वुञि प्राप्ते "न वैरे देवासुरादिभ्यः" वार्त्ति०तन्निषेधे अण्। १देवासुरयोर्वैरे। देवासुरशब्दोऽस्त्यत्र अनुवाके अध्याये वा विमुक्ता०अण्। देवासुरशब्दयुक्ते २अनुवाके ३अध्याये च पु०।

**दैवाहोरात्र** पु० कर्म०। देवानां मानेन दिनरूपे मानुषे वर्षात्मके काले।

**दैविक** त्रि० देवस्येदम् देवानुद्दिश्य प्रवृत्तः वा० ठक्। देवमात्रोद्देशेन कर्तव्ये श्राद्धे। "देवानुद्दिश्य यच्छ्राद्धं तत्तु दैविकमुच्यते। हविष्येण विशिष्टेन सप्तम्यादिषु यत्नतः" भविष्यपु०। दैवशब्दोऽपि तदर्थे। "सम्यक्सिलस्य दये दैवे रचितमित्यपि" मनुना देवमात्रोद्देश्यक श्राद्धे तन्निमन्त्रे रचितशब्दस्य वक्ष्यतोक्तेः दैवशब्दस्य निरपेक्षदेवमात्रोद्देश्यकश्राद्धपरत्वावगतेः। २दैवसम्बन्धिनि त्रि०। "अहोरात्रे विभजते सूर्यो मानुषदैविके। दैविकानां युगानान्तु सहस्रपरिसङ्ख्यया। यत् प्राक् द्वादशसाहस्रमुदितं दैविकं युगम्"। "द्वापरार्धतलोके दैविके नास्ति निग्रहः" इति च मनुः।

**दैवी** स्त्री देवस्येयम् अण् अञ् वा। १देवसम्बन्धिन्यां स्त्रियां "दैवी सम्पद् विमोक्षाय" गीता। "काला मे समतर्क्यहेतुगहना दैवी सतां यातना" शान्तिश०। २दैवविवाहेनोढायां स्त्रियां "ब्राह्मीपुत्रः पुरुषानेकविंशतिं पूयते दैवीपुत्रश्चतुर्दश आर्षीपुत्रः सप्त" विष्णुसं०।

**दैवोदास** पु० दिवोदासे भवः अण्। १दिवोदासभवे तस्यापत्यं शिवाद्यण्। २तदपत्ये स च प्रवरभेदः यथाह आश्व०श्रौ० १२।१०।१२ मित्रयुवां वाध्र्यश्वेति "त्रिप्रवरं भार्गवदैवोदासवाध्र्यश्वेति" दिवोदासेनाहूयमानः अण्। ३दिवोदासेनाहूयमाने वह्नौ च "दैवोदासो अग्निर्देवां अच्छा न मज्मना" ऋ० ८।१०३।२ "दैवोदासः दिवोदासेनाहूयमानोऽग्निः" भा० तस्यापत्यम् इञ्। दैवोदासि इत्येव स च प्रतर्दनः।

**दैव्य** न० देवस्येदम् "देवात् यञञौ" पा० यञ् । १देवसम्बन्धिनि २भाग्ये च "ब्रूषे नमसा दैव्यं जनम्" ऋ० २।२०।११ ।

**दैशिक** त्रि०देशेन निर्वृत्तः तस्येदम् वा ठञ् । १देशजाते २देशसम्बन्धिनि च स्त्रियां ङीप् । "परत्वञ्चापरत्वञ्च द्विविधं परिकीर्त्तितम् । दैशिकं कालिकञ्चापि मूर्त्त एव तु दैशिकम्" । परत्वं सूर्य्यसंयोगभूयस्त्वज्ञानतो भवेत् । अपरत्वं तदल्पत्वबुद्धितः स्यादितीरितम् । तयोरसमवायी तु दिक्संयोगस्तदाश्रये । दिवाकरपरिस्पन्द पूर्वोत्पन्नत्वबुद्धितः । परत्वमपरत्वन्तु तदनन्तरबुद्धितः । अत्र त्वसमवायी स्यात् संयोगः कालपिण्डयोः । अपेक्षाबुद्धिनाशेन नाशस्त्वेषामुदाहृतः" भाषा०।"दैशिकपरत्वं बहुतरसूर्य्यसंयोगान्तरितत्वज्ञानादुत्पद्यते । एवं तदल्पीयस्त्वज्ञानादपरत्वमुत्पद्यते । अत्रावधित्वार्थं द्वितीयापेक्षा । यथा पाटलिपुत्रात् काशीमपेक्ष्य प्रयागः परः । पाटलिपुत्रात् कुरुक्षेत्रमपेक्ष्य प्रयागोऽपर इति । तयोर्दैशिकपरत्वापरत्वयोः । असमवायी असमवायिकारणम् । तदाश्रये दैशिकपरत्वापरत्वाश्रये । दिवाकरेति । अत्र परत्वं अपरत्वञ्च कालिकं ग्राह्यम् । यस्य सूर्य्यपरिस्पन्दापेक्षया यस्य सूर्य्यपरिस्पन्दोऽधिकः स ज्येष्ठः यस्य न्यूनः स कनिष्ठः । कालिकपरत्वापरत्वे जन्यद्रव्य एव । अत्र कालिकपरत्वापरत्वयोः । एषां कालिकदैशिकपरत्वापरत्वानाम्" सि०मू०। [ सम्बन्धभेदे ।

**दैशिकविशेषणता** स्त्री कर्म० । देशकृते अभावीयस्वरूप-

**दैष्टिक** त्रि० दिष्टं भाग्यमिति मतिर्यस्य "अस्ति नास्ति दिष्टं मतिः" पा० ठक् । भाग्यप्रमाणके दैवपरे । "नालम्बते दैष्टिकतां न निषीदति पौरुषे" माघः ।

**दैहिक** त्रि० देहे भवः तस्येदं वा ठक् । १देहभवे २देहसम्बन्धिनि च "दैहिकानां मलानां च शुद्धिषु द्वादशस्वपि । वसाशुक्रमसृङ्मज्जामूत्रविड् घ्राणकर्णविट् । श्लेष्माश्रुदूषिका स्वेदो द्वादशैते नृणां मलाः" मनुः "एष हि ब्रह्मबन्धूनां वधो नान्योऽस्ति दैहिकः" भाग० १।७।५६। स्त्रियां ङीप् । "प्रजाः ससर्ज कतिधा दैहिकीर्मानसीर्विभुः" भाग० २।१०।१

**दैह्य** त्रि० देहे भवः ष्यञ् । देहभवे जीवे । "अथापि वत मे दैह्यो ह्यात्मा चैवात्मना विभुः" भाग० १।४।२० "सूर्य्योऽग्निः खं मरुद्देवः सोमः सन्ध्याऽहनी दिशः । कं कुः स्वयं धर्म इति ह्येते दैह्यस्य साक्षिणः" भाग० ६।१।२८।

**दो** छेदे दिवा०पर०सक०अनिट् । द्यति अदात् दितः दितिः ।

**दोःशिखर** न० ६त० । स्कन्धे राजनि० ।

**दोःसहस्रभृत्** पु०दोःसहस्रं बाहुसहस्रं बिभर्त्ति भृ—क्विप् । १कार्त्तवीर्य्यार्जुने २बाणासुरे च "सहस्रभुजभृत् श्रीमान् कार्त्तवीर्य्योऽभवत् प्रभुः" भा०अनु० १५२अ० कार्त्तवीर्य्यस्य तथात्वमुक्तम् "अथ वीर्य्यमदोत्सिक्तो बाणो बाहुसहस्रवान्" हरिवं० १७५अ० बाणस्य सहस्रबाहुतोक्ता ।

**दोग्धृ** त्रि० दुह—तृच् । १दोहनकर्त्तरि २गोपाले ३वत्से ४अर्थोपजीविनि ५अर्के ६दोहनशीले च मेदि० "मेरौ स्थिते दोग्धरि दोहदक्षे" कुमा०स्त्रियां ङीप् । सा च ७धेन्वाम्।"दोहावसाने पुनरेव दोग्ध्रीम्" रघुः "अचला छायया भूमिर्दोग्ध्री कामानिवोत्तमान् । दोग्ध्री वासांसि रत्नानि पशून् व्रीहीन् यवांस्तथा" भा०अनु० ६२अ० । शीलार्थतृन्नन्तत्वान्नास्य कर्मणि षष्ठी ।

**दोघ** पु० दुह—अच् वेदे नि० हस्य घः । दोग्धरि "एह दोघं भवथं देवरायः" ऋ०५।१५।५। "दोघं कामानां दोग्धारम्" भा० ।

**दोड़ी** स्त्री दोल—अच् गौरा० ङीष् लस्य डः । (दाड़ी) फलप्रधाने वृक्षभेदे तस्याः फलम् अण् । हरीतक्या० लुक् । दोडी तत् फलेऽपि स्त्री ।

**दोध** पु० दुह—घञ् बा० हस्य धः । गोवत्से "देव ! सदोधकदम्बतलस्थ ! श्रीधर ! तावकनामपदं मे" छन्दोम० ।

**दोधक** न० एकादशाक्षरपादके वर्णवृत्तभेदे "दोधकवृत्तमिदं भभभाद्गु गौ" वृत्तर० ।

**दोर** पु०डोर+डस्य रः । (डोर) इति ख्यातायां रज्ज्वाम् ।

**दोरक** न० डोरक+डस्य रः । वीणाबन्धनतन्तौ "ततस्तदुद्धृतं हिरण्यं सूत्रं दोरकेण बध्नाति" कात्या०श्रौ०७।६।११

**दोर्गन्तु** पु० दोषा बाहुना गन्तुः कुण्ठितः । कुण्ठितहस्ते कार्य्यासमर्थबाहौ त्रिका० ।

**दोर्ग्रह** पु० ६त० । १बाहुस्तम्भे रोगभेदे । दोर्भ्यां गृह्यतेऽनेन करणे घञ् । २बलवति हारा० ।

**दोर्ज्या** स्त्री कर्म० सि० उक्तायां भुजकारज्यायाम् "दोर्ज्यान्तरगुणाभुक्तिस्तत्वनेत्रोद्धृता पुनः" सू० "दोर्ज्यान्तरगुणा भुजज्यानयनावसरे यत् ज्यापिण्डान्तरं तेन गुणिता" रङ्गना० ।

**दोर्मूल** न० ६त० । भुजमूले कक्षे हेम० ।

**दोल** पु० दुल—घञ् । दोलने श्रीकृष्णस्य समाख्याते उत्सवभेदे स च फाल्गुनपौर्णमास्यां कर्तव्यः चतुर्दशीतिथौ

तस्य कृत्य खण्डे कर्त्तव्यता तत्र दोलोत्सवतत्त्वे उक्तं यथा "यदा अरुणोदयकाले पौर्णमासीलाभस्तदा तत्रैव दोलयात्रा। उभयदिने अरुणोदयकाले पौर्णमासीलाभे पूर्व्वदिने सङ्गवमध्याह्नकालव्यापित्वात् त्रिसन्ध्यव्यापित्वेन तिथेर्बलवत्त्वाच्च। यदा तिथिक्षयवशादरुणोदयकाले न पौर्णमासीलाभस्तदा कदाचित् सहायभावेन चतुर्द्दश्यादरः। एतेन पूर्व्वदिने अरुणोदयं विना पूर्व्वाह्ने पौर्णमासीलाभः परदिने मुहूर्त्तान्यूनतिथिलाभस्तदा फल्गूत्सवः पूर्व्वदिने युग्मवचनानुरोधादिति निरस्तम् उभयदिने कर्म्मयोग्यप्रशस्तकालप्राप्ततिथिसन्देह एव युग्मवचनप्रवृत्तेः। एवं पञ्चमीपर्य्यन्तासु तिथिषु तत्करणे अनयैव दिशा व्यवस्थोन्नेयेति" दोलयात्रातत्त्वम् "विशेषतः कलियुगे दोलोत्सवो विधीयते। फाल्गुने च चतुर्द्दश्या अष्टमे यामसंज्ञके। अथ वा पौर्णमास्यान्तु प्रतिपत्सन्धिसङ्गतौ। पूजयेद्विधिवत् भक्त्या फल्गुचूर्णैर्बहुविधैः। सितरक्तैर्गौरपीतैः कर्पूरादिविमिश्रितैः। हरिद्राक्षारयोगाच्च रङ्गरम्यैर्मनोहरैः। अन्यैर्वा रङ्गरम्यैश्च प्रीणयेत् परमेश्वरम्। एकादश्यां समारभ्य पञ्चम्यन्तं समापयेत्। पञ्चाहानि त्र्यहाणि स्युर्दोलोत्सवो विधीयते। दक्षिणाभिमुखं कृष्णं दोलयानं सकृन्नराः। दृष्ट्वापराधनिचयैर्मुक्तास्ते नात्र संशयः" पाद्मे पातालखण्डे। "जैमिनिरुवाच फाल्गुने मासि कुर्व्वीत दोलारोहणमुत्तमम्। यत्र क्रीडति गोविन्दो लोकानुग्रहणाय वै। प्रत्यर्च्चां देवदेवस्य गोविन्दाख्यान्तु कारयेत्। प्रासादं पुरतः कुर्य्यात् षोडशस्तम्भमुच्छ्रितम्। चतुरस्रं चतुर्द्वारं मण्डपं वेदिकान्वितम्। चारुचन्द्रातप माल्यचामरध्वजशोभितम्। भद्रासनं वेदिकायां श्रीपर्णीकाष्ठनिर्म्मितम्। फल्गूत्सवं प्रकुर्व्वीत पञ्चाहानि त्र्यहाणि वै। फाल्गुन्याः पूर्व्वतो विप्राश्चतुर्द्दश्यां निशामुखे। वह्न्युत्सवं प्रकुर्व्वीत दोलमण्डपपूर्व्वतः। गोविन्दानुग्रहीतन्तु यात्राङ्गं तत् प्रकीर्त्तितम्। आचार्य्यवरणं कृत्वा वह्निं निर्म्मथनोद्भवम्। भूमिं संस्कृत्य विधिवत् तृणराशिं महोच्छ्रितम्। मेषघ्नं कारयित्वा तु वह्निं तत्र विनिःक्षिपेत्। पूजयित्वा विधानेन कुश्माण्डविधिनाहुनेत्। गोविन्दं पूजयित्वा तु भ्रामयेत् सप्तधा विभुम्। तस्मिन् काले हरिं दृष्ट्वा सर्व्वपापैः प्रमुच्यते। यत्नात्तं रक्षयेद्वह्निं यावद्यात्रा समाप्यते। प्रान्त्ययामे चतुर्द्दश्यां गोविन्दप्रतिमां शुभाम्। वासयित्वा हरेरग्रे पूजयेत् पुरुषोत्तमम्। उपचारविशिष्टैस्तु प्रत्यर्च्चामपि पूजयेत्। ततो वरञ्च वसनं मालाञ्च द्विजसत्तमाः। अर्च्चायां विन्यसेन्मन्त्रं परं ज्योतिर्विभावयन्। ततश्च प्रतिमा साक्षात् जायते पुरुषोत्तमः। रत्नान्दोलिकया तां वै नयेत् स्नानस्य मण्डपम्। नानातूर्य्यनिनादैश्च शङ्खध्वनिपुरःसरम्। जयशब्दैस्तथा स्तोत्रैः पुष्पवृष्टिभिरेव च। छत्रध्वजपताकाभिश्चामरव्यजनैस्तथा। निरन्तरं दीपिकाभिस्तथा कुर्य्यान्महोत्सवम्। आगच्छन्ति तदा देवाः पितामहपुरोगमाः। द्रष्टुमृषिगणैः सार्द्धं गोविन्दस्य महोत्सवम्। भद्रासनेऽधिवास्यैनं पूजयेदुपचारकैः। महास्नानस्य विधिना स्नपनं तस्य कारयेत्। पञ्चामृतैश्च वै सर्व्वैः तेषामन्यतमेन वा। स्नानान्ते गन्धतोयेन श्रीसूक्तेनाभिषेचयेत्। संप्रोक्ष्य भूषयेद्देवं वस्त्रालङ्कारमाल्यकैः। नीराजयित्वा संपूज्य प्रासादं परिवेष्टयेत्। सप्तकृत्वस्ततो देवं दोलमण्डपमानयेत्। सुसंस्कृतायां रथ्यायां पताकातोरणादिभिः। अधोदेशे मण्डपं तं सप्तशो भ्रामयेत्ततः। ऊर्द्ध्वदेशे पुनस्तद्वत् स्तम्भवेद्यान्तु सप्त वै। यात्रावसाने च पुनर्भ्रामयेदेकविंशतिम्। इयं लीला भगवतः पितामहमुखेरिता" स्कान्दे उत्कलखण्डे। गारुडे "चैत्रे मासि सिते पक्षे दक्षिणाभिमुखं हरिम्। दोलारूढं समभ्यर्च्च्य मासमान्दोलयेत् कलौ" तच्चिन्त्यता च पद्मपुराणे 'ऊर्ज्जे रथं मधौ दोलां श्रावणे तन्तुपर्व्व च। चैत्रे मदनकारोपमकुर्व्वाणो व्रजत्यधः। विष्णुं दोलास्थितं दृष्ट्वा त्रैलोक्यस्योत्सवो भवेत्। तस्मात् कार्य्यशतं त्यक्त्वा दोलाहे उत्सवं कुरु"। दोलोत्सवविधिः "चैत्रस्य शुक्लद्वादश्यां प्रातःकृत्यं समाप्य च। नित्यपूजां विधायाथ कुर्य्याद्दोलोत्सवं व्रती। तदर्थञ्च विशेषेण नैविद्यादिकमर्पयेत्। संमान्य वैष्णवांस्तैश्च गीतनृत्यादि कारयेत्। महानीराजनं कृत्वा प्रक्षिपेदच्युतोपरि। गन्धानुलेपचूर्णानि विचित्राणि विभागशः। सन्तोषय्य वैष्णवांस्तैश्च गतिनृत्यादिभिः प्रभुः। नत्वाभ्यर्च्याऽप्रमत्तः सन् दोलामारोहयेच्छुभाम्। नीत्वा बहिर्वेदिकायाः सुरङ्गाया यथाविधि। अभ्यर्च्यान्दोलयेत् कृष्णं सर्व्वलोकावलोकितम्। एवमभ्यर्च्चयन् यामे यामे त्वान्दोलयन् प्रभुम्। महोत्सवेन गमयेद्दिनं रात्रिञ्च यत्नतः। एवं जागरणं कृत्वा वैष्णवैः सह वैष्णवः। प्रणम्य प्रार्थ्य निर्म्मञ्छ्य कृष्णं स्वालयमानयेत्। चैत्रे मासि सिते पक्षे

तृतीयायां रमापतिम्। दोलारूढं समभ्यर्च्य मासमान्दोलयेत् कलौ। यत् फाल्गुनस्य राकायामुत्तरा फल्गुनी यदा। तदा दोलोत्सवः कार्य्यस्तत्र श्रीपुरुषोत्तमे” इति हरिभक्तिविलासः।

**दोला** स्त्री दुल–अच् घञ् वा टाप्। (डोली) १यानभेदे, २उद्यानादौ क्रीड़ार्थं दोलनयन्त्रे च। स्वार्थे क। दोलिका तत्रार्थे अमरः। ३स्वेदनार्थे यन्त्रभेदे शब्दार्थचि०। दोलां करोति क्यङ् दोलायते चदोलायिष्ट “मतिर्दोलायते न्यूनं सतामपि खलोक्तिभिः” हितो० “दोलायमानं गोविन्दं मञ्चस्थं मधुसूदनम्। रथस्थं वामनं दृष्ट्वा पुनर्जन्म न विद्यते” स्क०पु०उत्क०।

**दोलायुद्ध** न० दोलेव युद्धम्। अनियतजयपराजययुतयुद्धे। दोलाया यथा दोलनेनान्यतरपार्श्वे स्थितिरनियता एवं जयपराजययोरेकतरपक्षे अनियततया स्थितिर्यत्र तादृशं युद्धं दोलायुद्धमिति व्यवह्रियते। “दोलायुद्धं कृतगुरुतरध्वानमौद्धत्यभाजाम्” माघः।

**दोली** स्त्री दोल्यतेऽनया दुल–बा० करणे इन् वा ङीप्। (डुली) ख्याते यानभेदे वाह्यखट्वायाम् हारा०।

**दोष** पु० दुष–भावे करणे वा घञ्। १अपकर्षप्रयोजके वस्तुनिष्ठे धर्मभेदे। यथा काव्यदोषा श्रुतिकट्वादयः हेतुदोषाः व्यभिचारादयः अङ्गदोषाः पित्तादयः। २दूषणे “दोषो विचारसुलभो यदि दृश्यते तत् व्याख्या मम प्रथममेव न दूषणीया” महेश्वरः। “एको हि दोषोगुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः” कुमा० “अदाता वंशदोषेण कर्मदोषात् दरिद्रता। उन्मादो मातृदोषेण पितृदोषेण मूर्खता”। काव्यदोषास्तु काव्य०प्र०उक्ता यथा “मुख्यार्थहतिर्दोषो रसश्च मुख्यस्तदाश्रयाद्वाच्यः। उभयोपयोगिनः स्युः शब्दाद्यास्तेन तेष्वपि सः” इतिरकार्थः। “दुष्टं पदं श्रुतिकटु च्युतसंस्कृत्यप्रयुक्तमसमर्थम्। निहतार्थमनुचितार्थं निरर्थकमवाचकं त्रिधाऽश्लीलम्। सन्दिग्धमप्रतीतम् ग्राम्यं नेयार्थमथ भवेत् क्लिष्टम्। अविमृष्टविधेयांशं विरुद्धमतिकृत् समासगतमेव”। तत्र श्रुतिकटु परुषवर्णरूपम् १दुष्टम्। २च्युतसंस्कृति व्याकरणलक्षणहीनम्। ३ अप्रयुक्तं तथाम्नातमपि कविभिर्नादृतम्। यथा दैवतशब्दः पुंस्त्वाम्नातोऽपि न केनचित् प्रयुज्यते। ४ असमर्थं यत्तदर्थं पठ्यते न च तत्राऽस्य शक्तिः यथा हन्तीति गमनार्थम्। ५निहतार्थं यदुभयार्थमप्रसिद्धेऽर्थे प्रयुक्तम्। यथा शोणितशब्द उज्ज्वलार्थे। ६अनुचितार्थं यथा, पशुपदं कातरत्वाभिव्यञ्जकमित्यनुचितार्थम्। ७निरर्थकं पादपूरणमात्रप्रयोजनं चादिपदम्। ८ अवाचकं यथा जन्तुपदं दानार्थे प्रयुक्तं न च तस्याभिधायकम्। यत्रोपसर्गसंसर्गादर्थान्तरगतम्। यथा दधात्यर्थे विदधातीति पदम्। ९त्रिधेति व्रीडाजुगुप्सामङ्गलव्यञ्जकत्वात् अश्लीलम्। यथा साधनवायुविनाशशब्दा व्रीड़ादिव्यञ्जकाः। १२सन्दिग्धं यथा बन्द्यामिति किं हठहृतमहिलायां, किं वा नमस्यामिति सन्देहः। १३अप्रतीतं यत् केवले शास्त्रे प्रसिद्धम्। यथा आशयशब्दः योगशास्त्रादावेव वासनार्थो नान्यत्र। १४ग्राम्यं यत् केवले लोके स्थितम्। यथा कट्यादिशब्दाः। १५ नेयार्थम् “निरूढ़ा लक्षणाः काश्चित् सामर्थ्यादभिधानवत्। क्रियन्ते साम्प्रतं काश्चित् काश्चिन्नैव त्वशक्तितः” इति यदसिद्धं लाक्षणिकम् यथा चपेटापातनेन निर्जितत्वं लक्ष्यते। १६ क्लिष्टं यत्रार्थप्रतिपत्तिर्व्यवहिता यथा अत्रिनेत्रजज्योतिरुद्भमभासिशब्दस्य कुमुदार्थपरत्वे क्लिष्टत्वम्। १७अविमृष्टः प्राधान्येनानिर्दिष्टो विधेयांशो यत्र तत्। यत्र अनुवाद्यमनुक्त्वा प्रथमं विधेयनिर्देशः यथा न्यक्कारोह्ययमेवेत्यत्र अनुवाद्यविधेययोरक्रमेण निर्देशो यत्र। समासान्तर्गतत्वेन विधेयांशस्य झटित्यबोधोऽपि यत्र। यथा तत्रैव पद्ये ह्यधोक्षूनैरित्यत्र इयात्वस्य न्यूनत्वे विधेयं तच्च समासान्तर्गततया नाशु बोध्यते। १८विरुद्धमतिकृत्। यथा भवानीपतिशब्दस्य भवान्याःपत्यन्तरप्रतीतिकारित्वम्। “अपास्य च्युतसंस्कारमसमर्थं निरर्थकम्। वाक्येऽपि दोषाः सन्त्येते पदस्यांशेऽपि केचन”। वाक्यमात्रगतादोषास्तु।

“प्रतिकूलवर्णमुपहतलुप्तविसर्गं विसन्धि हतवृत्तम्। न्यूनाधिककथितपदम् अभवन्मतयोगमनभिहितवाच्यम्। अपदस्थपदसमासं सङ्कीर्णं गर्भितं प्रसिद्धिहतम्। भग्नप्रक्रममक्रमम् अमतपरार्थं च वाक्यमेव तथा” रसानुगुणत्वं वर्णानां वक्ष्यते तद्विपरीतं १प्रतिकूलवर्णम् यथा शृङ्गारे टवर्गादि रौद्रे मधुरवर्णादि। २ उपहत उत्वं प्राप्तो लुप्तो वा विसर्गो यत्र तत् एतच्च असकृत्प्रयोगे एव दोषो न सकृत्प्रयोगे। ३ विसन्धिः सन्धेर्वैरूप्यं विश्लेषोऽश्लीलत्वं कष्टत्वञ्च। संहितां न करोमीति स्वेच्छया सकृदपि दोषः प्रगृह्यादिहेतुकत्वे तु असकृत्। तत्र चलण्डामरचेष्टितमित्यादौ अश्लीलता तर्वालोत्यादौ कष्टतेति बोध्यम्।

४हतं लक्षणानुसरणेऽप्यश्रव्यं अप्राप्तगुरुभावान्तलघु रसाननुगुणञ्च वृत्तं यत्र तत् हतवृत्तम्। ५न्यूनपदं यथा "सुचिरमुषितं वल्कलधरैरिति" वेणीसंहारपद्ये अस्माभिरिति विशेष्यं पदं न्यूनम्। तथा तत्रैव पद्ये "गुरुः खेदं खिन्ने मयीत्यत्र" खिन्ने इत्यस्मात् पूर्वं इत्थमिति पदं च न्यूनम्। ६अधिकं यथा स्फटिकाकृतिनिर्मल इत्यत्राकृतिपदमधिकम्। ७कथितपदं यथा एकत्र पद्ये एकस्यैव लीलादिशब्दस्य द्विधा प्रयोगे। ८पतत्प्रकर्षम्। यत्रादौ गाढबन्धनरूपप्रकर्षः अन्ते तु तद्धीनता तत्। ९समाप्तपुनरात्तम्। क्रिययैव वाक्यसमाप्तेर्नियमात् क्रियाप्रयोगादनन्तरं यत्र तत्क्रियासापेक्षकारकान्तरादिप्रयोगः तत्र समाप्तपुनरात्तत्वम्। १० द्वितीयार्द्धगतैकवाचकशेषप्रथमार्द्धम्। द्वितीयार्द्धगतमेकं पदं प्रथमार्द्धस्य समापकं यत्र तथाभूतं वाक्यं दुष्टमित्यर्थः। ११ न भवन् मतः इष्टः योगः सम्बन्धः यत्र तत्। १२अवाच्यं वक्तव्यमनुक्तम्। १३अस्थानस्थपदम्। १४अस्थानस्थसमासञ्च। १५संकीर्णं यत्र वाक्यान्तरस्य पदानि वाक्यान्तरमनुप्रविशन्ति। १६गर्भितं यत्र वाक्यस्य मध्ये वाक्यान्तरमनुप्रविशति। १७प्रसिद्धिमतिक्रान्तं यथा रवो मण्डूकादिषु प्रसिद्धो, न तु सिंहादिनादे। १८भग्नः प्रक्रमः प्रस्तावो यत्र तत्। १९अविद्यमानः क्रमो यत्र तदक्रमम्। २०अमतः प्रकृतविरुद्धः परार्थो यत्र। अर्थदोषास्तु। अर्थोऽपुष्टः कष्टो व्याहतपुनरुक्तदुष्क्रमग्राम्याः। सन्दिग्धो निर्हेतुः प्रसिद्धिविद्याविरुद्धश्च। अनवीकृतः सनियमाऽनियमविशेषाविशेषपरिवृत्ताः। साकाङ्क्षोऽपदयुक्तः सहचरभिन्नः प्रकाशितविरुद्धः। विध्यनुवादायुक्तस्त्यक्तपुनः स्वीकृतोऽश्लीलः"। यत्रातिविततत्वादयोऽनुपादानेऽपि प्रतिपाद्यमानमर्थं न बाधन्त इत्यपुष्टास्तत्र, न त्वसङ्गताः पुनरुक्ता वा।

रसदोषास्तु "व्यभिचारिरसस्थायिभावानां शब्दवाच्यता। कष्टकल्पनया व्यक्तिरनुभावविभावयोः। प्रतिकूलविभावादिग्रहो दीप्तिः पुनःपुनः। अकाण्डे प्रथनच्छेदौ अङ्गस्याप्यतिविस्तृतिः। अङ्गिनोऽननुसन्धानं प्रकृतीनां विपर्ययः। अनङ्गस्याभिधानञ्च रसे दोषाः स्युरीदृशाः"।

चन्द्रालोके तु दोषसामान्यविशेषलक्षणान्युक्त्वा दिङ्मात्रमुदाहृतं यथा

"स्याच्चेतोविशता येन सक्षता रमणीयता। शब्देऽर्थे च कृतोन्मेषं दोषमुद्घोषयन्ति तम्। भवेच्छ्रुतिकटुर्वर्णैः श्रवणोद्वेजने पटुः। विख्यायते व्याकरणविरुद्धं च्युतसंस्कृतिः। अप्रयुक्तं दैवतादौ शब्दे पुंलिङ्गतादिकम्। असमर्थन्तु हन्त्यादेः प्रयोगो गमनादिषु। स हन्ति हन्त कान्तारे कान्तः कुटिलकुन्तलः। निहतार्थं लोहितादौ शोणितादिप्रयोगतः। एकाक्षरं विना भूभ्रूमुखादिकं खलतादिवत्। अवनत्यनुचितार्थं यत्पदमाक्षसदेव तत्। इयमुद्गतयाख्यापकेलिकौतुकशर्वरी। निरर्थकं तुहीत्यादि पूरणैकप्रयोजनम्। कथं विदधदित्यादौ इषदाद्यमवाचकम्। भवे नभस्तलं भास्वानरुणं तनुते करैः। अश्लीलं त्रिविधं व्रीडाजुगुप्साऽमङ्गलात्मना। आह्लादसाधनं वायुः कान्तानाशे भवेत् कथम्। स्यादुद्दर्थमिह सन्दिग्धं न द्यां यान्ति पतत्त्रिणः। स्यादप्रतीतं शास्त्रैकगम्यं वीताऽनुमादिवत्। शिथिलं, शयने लिल्ये मञ्जितं ते शशिश्रियि। मलयुङ्कटीलोठगल्लादि ग्राम्यमुच्यते। नेयार्थं लक्षणात्यन्तप्रसरादमनोहरम्। हिमांशोर्हारधिक्कारसाक्षरे यामिकाः कराः। क्लिष्टमर्थो यदीयोऽर्थस्थितः श्रेषिस्वति। हरिप्रियापितृवारप्रवाहप्रतिमं वचः। अविमृष्टविधेयांशः समासपिहिते विधौ। विशन्ति शिशिरप्रायाः कटाक्षाः कामिनां हृदि। अपराधीन इत्यादि विरुद्धमतिकृन्मतम्। अन्यसङ्गतसुतुङ्गहारशोभिपयोधरा। रसाद्यनुचिते वर्णे प्रतिकूलाक्षरं विदुः। न मामकन्द! जानासि रावणं रणदारुणम्। यस्मिन् प्रकृतो लुप्तो विसर्ग इह तत्तथा। कुर्वन्त्यिः वडवागच्छ विसन्धिः कपती द्रुमौ। हतवृत्तमनुक्तोऽपि छन्दोदोषसकाश्चेत्। विशाललोचने! पश्याऽम्बरं तारातरङ्गितम्। न्यूनं त्वत्खड्गसम्भूतयशः पुष्पं नभस्तलम्। अधिकं भवतः शत्रून् दशत्यसिलताफणी। कथितं पुनरुक्ता वाक् शशाभाब्जशशाबलोचना। विकृतं दरविकृतैरैरवः कुञ्जराः पुरम्। पतत्प्रकर्षं हीनाऽनुप्रासादित्वे यथोत्तरम्। गम्भीरारम्भदम्भोलिपाणिरेष समागतः। समाप्तपुनरात्तं स्यादेष पीयूषभाजनम्। नेत्रानन्दी तुषारांशुरित्यम्बुनिधिबान्धवः। अर्द्धान्तरपदापेक्षि क्रीडाव्यत्येषु सञ्चितम्। मेघारम्भे स्तुमः शम्भुमर्द्धरम्भोरुविग्रहम्। अभवन्मतयोगः स्यात् चेदभिमतोऽन्वयः। येन बद्धोऽम्बुधिर्यस्य रामस्यानुचरा वयम्। स एष लङ्कालङ्कारं रावणं हन्तुमुद्यतः। द्विषां सम्पदमाक्षिप्य यः शत्रून् समपूरयत्। अस्थानस्थसमासं तु विद्वज्जनमनोरमम्।

मिथः पृथग्वाक्यपदैः सङ्कीर्णं यत्तदेव तत्। वक्त्रेण भ्राजते रात्रिः कान्ता चन्द्रेण राजते। गर्भिताख्यं त्वशुभः पूरगर्भितं भूमिभूषणम्। आकर्णय पयः पूर्णसुवर्णकलशायते। भग्नप्रक्रमसमारब्धशब्दनिर्वाहहीनता। अक्रमः कृष्ण! पूज्यन्ते त्वामनाराध्य देवताः। अमतार्थान्तरं मुख्येऽमुख्ये वार्थे विरोधकृत्। त्यक्तहारस्तरः कृत्वा शोकेनालिङ्गिताऽङ्गना। अपुष्टार्थो विशेष्ये चेन्न विशेषोविशेषणात्। विशन्ति हृदयं कान्ताकटाक्षाः खञ्जनत्विषः। कष्टः स्पष्टावबोधार्थमक्षमो वाच्यसन्निभः। व्याहतत्वेद्विरोधः स्यान्मिथः पूर्वापरार्थयोः। सहस्रपत्रमिव ते वक्त्रं केनोपमीयते। कृतस्तत्रोपमा यत्र पुनरुक्तः सुधाकरः। दुःक्रमग्राम्यसन्दिग्धास्त्रयो दोषाः क्रमादमी। त्वद्भक्तः कृष्ण! गच्छेयं नरकं स्वर्गमेव वा। एकं मे चुम्बनं देहि तव दास्यामि कङ्कणम्। ब्रूत किं सेव्यतां चन्द्रमुखीचन्द्रकिरीटयोः। अनौचित्यं कीर्त्तिमतां तरङ्गयति यः सदा। प्रसिद्ध्या विद्यया वापि विरुद्धं द्विविधं मतम्। व्यक्तोयं पञ्च कन्दर्पप्रतापधवलद्युतिः। केतकी शेखरे शम्भोर्धत्ते चन्द्रकलातुलाम्। सामान्यपरिवृत्तिः स्यात् कुण्डलक्षविविक्षहा। विशेषपरिवृत्तिः स्याद्दयिता मम चेतसि। हे सः सहचराऽचारुविरुद्धान्योन्यसङ्गती। व्याङ्गाः सन्तश्च तनयं स्वं परञ्च न जानते। सरोजनेत्र! पुत्रस्य मुखेन्दुमवलोकय। पालयिष्यति ते गोत्रमसौ नरपुरन्दरः। पदे तदंशे वाक्यांशे वाक्ये वाक्यकदम्बके। यथानुसारमभ्यूहेद्दोषान् शब्दार्थसम्भवान्"। ३व्यावृत्तिव्यवहारान्यतरप्रयोजनविघटके धर्मभेदे स च दोषस्त्रिविधः। अव्याप्तिः अतिव्याप्तिः असम्भवः। ४विध्यतिक्रमजनिते ऽदृष्टभेदे मीमांसकाः। ५गुरुतल्पगमनाभक्ष्यभक्षणादिजनिते पापे मेदि०। दुष—वैकल्ये करणे घञ्। ६वातपित्तकफेषु यथाह भाव०प्र०अत्र दोषाः प्रवक्ष्यन्ते इत्युपक्रमे दोषस्वरूपमाह वाग्भटः "वायुः पित्तं कफश्चेति त्रयो दोषाः समासतः। विकृताऽविकृता देहं घ्नन्ति ते वर्द्धयन्ति च। ते व्यापिनोऽपि हृन्नाभ्योरधोमध्योर्द्धसंश्रयाः। वयोऽहोरात्रभुक्तानामन्तमध्यादिगाः क्रमात्" दोषशब्दस्य निरुक्तिमाह "धातवश्च मलाश्चापि दुष्यन्त्येभिर्यतस्ततः। वातपित्तकफा एते त्रयो दोषा इति स्मृताः" दोषा इत्यत्र दुष वैकल्ये इति दुषधातोः दुष्यन्त्येभिरिति वाक्ये अकर्त्तरि च कारके संज्ञायामित्यनेन सूत्रेण करणेऽर्थे घञ् प्रत्ययः। ७तेषां विकारे च। मो०उक्ते प्रवृत्तिप्रयोजके रागद्वेषमोहात्मके दृष्टधर्मभेदे तल्लक्षणादिकं सू०भा० उक्तं यथा

"प्रवर्त्तनालक्षणा दोषाः" सू० "प्रवर्त्तना प्रवृत्तिहेतुत्वम् ज्ञातारं हि रागादयः प्रवर्त्तयन्ति पुण्ये पापे वा। यत्र मिथ्याज्ञानं तत्र रागद्वेषाविति प्रत्यात्मवेदनीया हीमे दोषाः कस्मात्? लक्षणतो निर्दिश्यन्त इति कर्मलक्षणाः खलु रक्तद्विष्टमूढाः रक्तो हि तत्कर्म कुरुते येन कर्मणा सुखं दुःखं वा भजते, तथा द्विष्टस्तथा मूढ इति दोषा रागद्वेषमोहा इत्युच्यमाने बहुनोक्तं भवतीति" भा० विवृतमेतत् तद्वृत्तौ यथा "दोषं लक्षयति। दोषा इति बहुवचनं रागद्वेषमोहात्मकलक्षणत्रयज्ञापनाय प्रवर्त्तना प्रवृत्तिजनकत्वं तदेव लक्षणं येषाम् यद्यपीदं शरीरादृष्टेश्वरेच्छादावतिव्याप्तं तथापि लौकिकप्रत्यक्षविषयत्वे सतीति विशेषणीयं यागादिगोचरप्रमावारणाय प्रमान्यत्वे सतीति विशेषयन्ति"।

तद्भेदाश्च सू० भा० ४अ० १आह्निके उक्ता यथा

"तत्त्रैराश्यं रागद्वेषमोहार्थान्तरभावात्" सू० "तेषां दोषाणां त्रयोराशयस्त्रयः पक्षाः। रागपक्षः—कामो मत्सरः स्पृहा तृष्णा लोभ इति। द्वेषपक्षः—क्रोधः ईर्ष्याऽसूया द्रोहोऽमर्ष इति। मोहपक्षः—मिथ्याज्ञानं विचिकित्सा मानः प्रमादः इति। त्रैराश्यान्नोपसङ्ख्यायन्त इति, लक्षणस्य तर्हि भेदात् त्रित्वमनुपपन्नम्, नानुपपन्नं रागद्वेषमोहार्थान्तरभावात् आसक्तिलक्षणो रागः, अमर्षलक्षणो द्वेषः, मिथ्याप्रतिपत्तिलक्षणो मोह इति। एतत् प्रत्यात्मवेदनीयं सर्वशरीरिणाम्, विजानात्ययं शरीरी रागमुत्पन्नम्, अस्ति मेऽध्यात्मं रागधर्म इति। विरागञ्च विजानाति नास्ति मेऽध्यात्मं रागधर्म इति। एवमितरयोरपीति। मानेर्ष्याऽसूयाप्रभृतयस्तु त्रैराश्यमनुपतिता इति नोपसङ्ख्यायन्ते" भा०। विवृतमेतत् वृत्तौ

"तथा दोषाः" सू० "परीक्षिता इति बुद्धिसमानाश्रयत्वादात्मगुणाः, प्रवृत्तिहेतुत्वात् पुनर्भवप्रतिसन्धानसामर्थ्याच्च संसारहेतवः, संसारस्यानादित्वादनादिना प्रबन्धेन प्रवर्त्तन्ते, मिथ्याज्ञाननिवृत्तिस्तत्त्वज्ञानात् तन्निवृत्तौ रागद्वेषप्रबन्धोच्छेदेऽपवर्ग इति प्रादुर्भावतिरोभावधर्मका इत्येवमाद्युक्तं दोषाणामिति प्रवर्त्तनालक्षणा दोषा इत्युक्तं तथा चेमे मानेर्ष्यासूयाविचिकित्सामत्सरादयः ते कस्मान्नोपसङ्ख्यायन्त इत्यत आह" भा०।

“तेषां दोषाणां त्रयो राशयः त्रयः पक्षा न तु रागद्वेषमोहानामेकैकत्वं तेषामर्थान्तरभावात् अवान्तरभेदवत्त्वात् तथा च भयशोकमानादीनामेष्वेवान्तर्भावाच्च विभागन्यूनत्वं इच्छात्वद्वेषत्वमिथ्याज्ञानत्वरूपविरुद्धधर्मवत्त्वाच्च त्रिभागाधिक्यम् इच्छात्वादिकन्तु रागाद्यनुभवसिद्धं तत्र रागपक्षः कामो मत्सरः स्पृहा तृष्णा लोभो माया दम्भ इति कामो रिरंसा। रतिश्च विजातीयस्त्रीसंयोगः। नारीगताभिलाष इति तु न युक्तं स्त्रियाः कामेऽव्याप्तेः। मत्सरः स्वप्रयोजनमनुसन्धानं विना पराभिमतनिवारणेच्छा यथा राजकीयादुदपानाज्जलोदकं पेयम् इत्यादि। एवं परगुणनिवारणेच्छाऽपि। स्पृहा धर्माविरोधेन प्राप्तीच्छा। तृष्णा इदं मे न क्षीयतामितीच्छा उचितव्ययाकरणेनापि धनरक्षणेच्छारूपं कार्पण्यमपि तृष्णाभेद एव। धर्मविरोधेन परद्रव्येच्छा लोभः। परवञ्चनेच्छा माया कपटेन धार्मिकत्वादिना स्वोत्कर्षख्यापनेच्छा दम्भः। द्वेषपक्षाः क्रोध ईर्ष्याऽसूया द्रोहोऽमर्षोऽभिमान इति क्रोधो नेत्रलौहित्यादिहेतुर्दोषविशेषः। ईर्ष्या साधारणे वस्तुनि परस्वत्वात्तदुपहीतरि द्वेषः यथा दुरन्तदायादानाम्। असूया परगुणादौ द्वेषः द्रोहो नाशाय द्वेषः हिंसा तु दोषजन्या। परे तु तान्द्रोहं मन्यते। अमर्षः कृतापराधे असमर्थस्य द्वेषः अभिमानोऽपकारिण्यकिञ्चित्करस्यात्मनि द्वेषः। मोहपक्षा विपर्य्ययसंशयतर्कमानप्रमादभयशोकाः। विपर्य्ययो मिथ्याज्ञानापरपर्य्यायोऽयथार्थनिश्चयः एकधर्मिकविरुद्धभावाभावज्ञानं संशयः स एव विचिकित्सेत्युच्यते व्याप्यारोपाद्व्यापकप्रसञ्जनं तर्कः आत्मन्यविद्यमानगुणारोपेणोत्कर्षधीर्मानः गुणवति निर्गुणत्वधीरूपस्मयोऽपि मानेऽन्तर्भवति। प्रमादः पूर्वकर्त्तव्यतया निश्चितेऽप्यकर्त्तव्यताधीः एवं वैपरीत्येऽपि भयमनिष्टहेतूपनिपाते तत्परित्यागानर्हता ज्ञानं शोक इष्टवियोगे तल्लाभानर्हताज्ञानम्” इमिथ्याज्ञानजन्यवासनायां दुःखजन्मप्रवृत्तिदोषा मिथ्याज्ञानानामिति सूत्रवृत्तौ चरमे दोषशब्दस्य तथार्थत्वाभिधानात्। १०वसुपुत्रभेदे द्रोणशब्दे दृश्यम् भ्रमजनकादोषास्तु पित्तादयः भाषापरिच्छेदे उक्ता यथा “दोषोऽप्रमाया जनकः प्रमायास्तु गुणो भवेत्। पित्तदूरत्वादिरूपो दोषो नानाविधः स्मृतः।” “अप्रमां प्रति दोषः जनकः कारणम्। प्रमां प्रति गुणः कारणम्। तत्रापि पित्तादिरूपा दोषा अननुगताः। तेषां कारणत्वम् अन्वयव्यतिरेकाभ्यामेव सिद्धम्। गुणस्य प्रमाजनकत्वन्तु अनुमानात् सिद्धम्। यथा प्रमा ज्ञानसाधारणकारणभिन्नकारणजन्या जन्यज्ञानत्वात् अप्रमावत्। न च दोषाभाव एव कारणमस्त्विति वाच्यम् पीतः शङ्ख इति ज्ञानस्थले पित्तदोषसत्त्वाच्छुक्लप्रमानुत्पत्तिप्रसङ्गात्। विनिगमनाविरहात् अनन्तदोषाभावस्य कारणत्वमपेक्ष्य गुणकारणताया न्याय्यत्वात्। न च गुणसत्त्वेऽपि पित्तप्रतिबन्धाच्छङ्खे न शैत्यज्ञानम्। अतः पित्तादिदोषाभावानां कारणत्वमवश्यं वाच्यं तथा च किं गुणस्य हेतुत्वकल्पनयेति वाच्यम् तथाप्यन्वयव्यतिरेकाभ्यां गुणस्यापि हेतुत्वसिद्धेः। एवं भ्रमं प्रति गुणाभावः कारणमित्यस्यापि सुवचत्वाच्च। तत्र दोषाः के इत्याकाङ्क्षायामाह। पित्तेति। क्वचित् पीतादिभ्रमे पित्तं दोषः। क्वचिच्चन्द्रादेः स्वल्पपरिमाणभ्रमे दूरत्वं दोषः। क्वचिच्च वंशोरगभ्रमे मण्डूकवसाञ्जनमित्येवं दोषा भ्रान्तिजनका इत्यर्थः। ११मौवर्ष्ये। स्वार्थे क। दोषक तत्रार्थे। “वातपित्तकफा दोषाः दूषणाः स्युः सप्त धातवः” शा० ति० दोषक्षयवृद्धिज्ञानादिकं सुश्रुते स्तत्स्थाने १६अ० उक्तं तत्रैव दृश्यम्। न्यायमतसिद्धहेत्वाभासाख्याः हेतुदोषाश्च हेत्वाभासशब्दे वक्ष्यन्ते तत्सामान्यलक्षणं च यादृशविशिष्टविषयकत्वेन ज्ञानस्यानुमितितत्कारणीभूतज्ञानप्रतिबन्धकत्वं तत्त्वम्। तत्प्रत्यक्षतत्साध्यकानुमितौ यावन्तोदोषाः सम्भवन्ति तावदन्यतमत्वम् वा “दुग्धधातोरिवाशाकं दोषसम्पत्तये गुणः” उद्भ०

**दोषग्राहिन्** त्रि० दोषं गृह्णाति ग्रह–णिनि। खले हला०। “विहाय सूर्पवद्दोषान् गुणान् गृह्णन्ति साधवः। दोषग्राही गुणत्यागी चालनीव हि दुर्जनः” उद्भटः।

**दोषघ्न** त्रि० दोषं वातादिविकारं हन्ति हन–टक्। धातुवैषम्यरूपदोषनाशके औषधादौ “दोषघ्ना पञ्चमी पाण्डुरोगाद्यैः कुष्ठनाशनाः” सुश्रुतः।

**दोषज्ञ** त्रि० दोषं कर्त्तव्याकरणे दोषं जानाति ज्ञा–क। १पण्डिते अमरः। “अथ प्रदोषे दोषज्ञः संवेशाय विशांपतिम्” रघुः। २परकीयदोषज्ञातृमात्रे त्रि०। “अज्ञातदोषैर्दोषज्ञैः” माघः।

**दोषण्य** त्रि० दोष्णि भवः दोष+यत् दोषन्नादेशः “ये चाभावककर्मणोः” प्रकृतिवद्भावः। वाङ्मये “यच्छ दोषण्यसंसाभ्याम्” ऋ० १०।१६३।२

**दोषत्रय** न० ६त०। वातपित्तकफानां त्रिके राजनि०।

**दोषभेद** पु० ६त०। द्विषष्टिप्रकारे दोषभेदे स च सुश्रुते उक्तो यथा

अथातो दोषभेदविकल्पनामाध्यायं व्याख्यास्यामः।

"द्विषष्टिर्दोषभेदा ये पुरस्तात्परिकीर्त्तिताः। कति तत्रैकशो ज्ञेया द्विशो वाप्यथ वा त्रिशः। तस्य तद्वचनं श्रुत्वा संशयच्छिन्महातपाः। प्रीतात्मा न्वपशार्दूलः सुश्रुतायाह तत्त्वतः। त्रयो दोषा धातवश्च पुरीषं मूत्रमेव च। देहं सन्धारयन्त्येते ह्यव्यापन्ना रसैर्हितैः। तुरगः षोडशकलः प्राणश्चैकादशैव ये। दोषाणान्तु सहस्रं यच्छतं त्रिंशतिरेव च। शयस्य पञ्च द्रव्याणां त्रिसप्तत्यधिकोत्तरम्। व्यासतः कीर्त्तितं तज्ज्ञैः भिन्नदोषास्त्रयो गुणाः। द्विषष्टिधा वदन्त्येते भूयिष्ठमिति निश्चयः। त्रय एव पृथक् दोषा द्विशो नव समाधिकैः। त्रयोदशाधिकैकद्विसममध्योल्वणैस्त्रिशः। पञ्चाशदेवन्तु सह भवन्ति क्षयमागतैः। क्षीणमध्याधिकक्षीणक्षीणद्वैस्तथापरैः। द्वादशैव समाख्यातास्त्रयो दोषा द्विषष्टिधा। भिन्नधातुमलैर्दोषा यान्त्यसंख्येयतां पुनः। तस्मात्प्रवक्तुं संयम्य दोषभेदविकल्पनैः। रोगं विदित्वोपचरेद्रसभेदैर्यथेरितैः। भिषक् कुर्वीत करणं रसा दोषास्तु कारणम्। कार्यमारोग्यमेवैकमनारोग्यमतोऽन्यथा"।

**दोषल** त्रि० दोष+मत्वर्थे लच्। दोषयुक्ते "केदारं मधुरं प्रोक्तं विपाके गुरु दोषलम्। तद्वत् पाल्वलमुद्दिष्टं विशेषाद्दोषलन्तु तत्" सुश्रुतः। [अथ०१६।४६

**दोषस्** स्त्री दुष–असुन्। रात्रौ "सत्यधोवसो दोषसश्च"

**दोषा** अव्य० दुष्यत्यत्र दुष–बा० आधारे आ स्वरा०। १रात्रावित्यर्थे "दोषाऽपि नूनमहिमांशुरसौ किलेति" माघः दोषापि रात्रावपीत्यर्थः। दिवाभूता रात्रिः दोषाभूतमहः इति भाष्यप्रयोगात् असत्त्वार्थेऽपि तस्य वृत्तिता। ततः ट्युल् तुट् च। दोषातन रात्रिभवे त्रि० "दोषातनं बुधबृहस्पतियोगदृश्यः" रघुः। (अस्मद्वन्दम्) अस्य टाबन्तस्त्रीत्वमपि "घर्मकालदिवस इव क्षयितदोषः" काद०। दोषाशब्दस्य टाबन्तत्वे एव गौणे ह्रस्वसम्भवः अव्ययत्वे न तत्सम्भवः इति बोध्यम्। दोष+भागुरिमते स्त्रियां टाप्। २बाहौ स्त्री शब्दार्थचि०।

**दोषाकर** पु० दोषा रात्रौ करोऽस्य। १चन्द्रे "शामित्रवेध विहितानपहृत्य दोषान् दोषाकरः शुभमनेकविधं विधत्ते" ज्यो०त०। ६त०। २दोषाणामाकरे च।

**दोषाक्लेशी** स्त्री दोषां बाहुं क्लिश्नाति क्लिश–अच् गौरा० ङीष्। वनवर्वुरिकायां राजनि०।

**दोषाङ्कुश** पु० दोषाणां काव्यदोषाणामङ्कुश इव निरासकत्वात्। चन्द्रालोकोक्ते काव्यदोषनिवारके काव्यधर्मभेदे तल्लक्षणादि तत्रोक्तं यथा

"दोषमापतितं स्वान्ते प्रसरन्तं विशृङ्खलम्। निवारयति यस्त्रेधा दोषाङ्कुशमुशन्ति तम्। दोषो गुणत्वं तनुते दोषत्वं वा निरस्यति। भवन्नथ वा दोषं नयत्यत्राह्यतामसौ। मुखं चन्द्रश्रियं धत्ते श्वेतश्मश्रुकराङ्कुरैः। अत्र हासरसोद्देशे ग्राम्यत्वं गुणतां गतम्। तव दुग्धाब्धिसम्भूतेः कथं जाता कलङ्किता। कवीनां समयाद्विद्याविरोधोऽदोषतां गतः। दधार गौरी हृदये देवं हि मकराङ्कितम्। अत्र श्लेषोदयान्नैव त्याज्यं ह्रीति निरर्थकम्"।

**दोषातिलक** पु० दोषा रात्रेस्तिलक इव। प्रदीपे त्रिका०

**दोषास्य** पु० दोषा आस्यमिव प्रकाशदीप्तिसाधनं वा यस्य। प्रदीपे शब्दच०। [रोगे शब्दच०।

**दोषिक** त्रि० दोषः वातादिविकारः कारणतयाऽस्त्यस्य ठन्।

**दोषिन्** त्रि० दुष–णिनि। दोषयुक्ते शब्दकल्पद्रुमे दोषशब्दात् अस्त्यर्थे इनिकल्पनं "नैकाक्षरात् कृतो जातेः सप्तम्याश्च न तौ स्मृतौ" इत्यनुशासनविरुद्धम् (तौ। इनिठनौ)। सति च मत्यन्तरे अभियुक्तप्रयोगे तस्य सङ्कोचकल्पनस्य काचित्कत्वम् भाष्यकृता व्यवस्थापितम् यथा रसिक इत्यादिप्रयोगदर्शनात् न सर्वत्र।

**दोषैकदृश्** त्रि० दोषमेवैकं पश्यति दोषैकशब्दयोः कर्मधारये एकशब्दस्य पूर्वकालैकेत्यादि पा० परनिपाते तत्पूर्वकात् दृशः क्विप्। खले अमरः। दोषे एकस्मिन् दृग्ज्ञानं यस्येति विग्रहं वदन् भरतः भ्रान्त एव सति गत्यन्तरे व्यधिकरणबहुव्रीहेरसाधुत्वनियमात्।

**दोस्** पु०न० दम्यतेऽनेन दम–डोसि अडु चा०। बाहौ "नूनमब्दविनाशाय विधिना दोः प्रसारितः" रामा०लङ्का० १२२ "दोषं तस्य तथा विधस्य भजते" मल्लिनाथधृतवाक्यम् "ककुद्दोषणी" इति महाभाष्यप्रयोगे अस्य क्लीवता "तमुपाद्रवदुद्यम्य दक्षिणं दोर्निशाचरः" रघुः। "दोर्दण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलम्" सुवन्धुः। "दुहितरमनुकम्प्यामद्रिरादाय दोर्भ्याम्" कुमा०। अस्य भत्वे याजादौ तद्धिते च वा दोषन्नादेशः। पुंसि दोः दोषौ दोषः क्लीवे दोः दोषणी दोष्णी दोंषि शसादौ तु दोंषि दोषाणि दोष्णा दोषा दोषभ्यां दोर्भ्यामित्यादि।

**दोस्थ** पु० दोषि दोर्व्यापारे तिष्ठति स्था—क वा रोर्लोपः। १सेवके २क्रीड़के च त्रिका० उपचारात् ३क्रीड़ायाम् ४सेवायाञ्च स्त्रिका० ५बाहुस्थिते त्रि०।

**दोह** पु० दुह—भावे घञ्। १दोहने "दुग्धेऽखिलान् सर्वान् कामान् यो वाग्दोहः" छा०उ० "मेरौ स्थिते दोग्धरि दोहदक्षे" कुमा० "दोहावसाने पुनरेव दोग्ध्रीम्" रघुः। आधारे घञ्। २दोहनपात्रे शब्दच०। कर्मणि घञ्। ३दुग्धे शब्दार्थचि०।

**दोहज** त्रि० दोहात् दोहनाज्जायते जन—ड। १दोहनजाते २दुग्धे न० शब्दार्थकल्प०।

**दोहड़िका** स्त्री मात्रावृत्तभेदे (दोहा) तल्लक्षणादि छन्दोम० उक्तं यथा "मात्रात्रयोदशकं यदि पूर्वं ततकविरामि। एव पुनरेकादशकं दोहड़िका द्विगुणेन"

**दोहद** पुन० दोहमाकर्षं ददाति दा—क। १गर्भे २गर्भलक्षणे ३गर्भिण्याः अभिलाषे च मे०। सुश्रुते तु दौहृ(ह)दमिति पठित्वा तदुपहत्यां दोषादिकमुक्तं यथा "द्विहृदयाञ्च नारीं दौहृ(ह)दिनीमाचक्षते। दौहृ(ह)दविमाननात् कुब्जं कुणिं खञ्जं जड़ं वामनं विकृताक्षमक्षं वा नारी सुतं जनयति। तस्मात् सा यद्यदिच्छेत्तत्तस्यै दापयेत्। लब्धदौ(ह)हृदा हि वीर्यवन्तं चिरायुषञ्च पुत्रं जनयति"। भवन्ति चात्र "इन्द्रियार्थांस्तु यान् यान् सा भोक्तुमिच्छति गर्भिणी। गर्भाबाधभयात्तांस्तान् भिषगाहृत्य दापयेत्। सा प्राप्तदौ(ह)हृदा पुत्रं जनयेत गुणान्वितम्। अलब्धदौ(ह)हृदा गर्भे लभेतात्मनि वा भयम्। येषु येष्विन्द्रियार्थेषु दौहृ(ह)दे वै विमानना। प्रजायेत सुतस्यार्त्तिस्तस्मिंस्तस्मिंस्तथेन्द्रिये। राजसन्दर्शने यस्या दौहृ(ह)दं जायते स्त्रियाः। अर्थवन्तं महाभागं कुमारं सा प्रसूयते। दुकूलपट्टकौशेयभूषणादिषु दौ(ह)हृदात्। अलङ्कारैषिणं पुत्रं ललितं सा प्रसूयते। आश्रमे संयतात्मानं धर्मशीलं प्रसूयते। देवताप्रतिमायान्तु प्रसूते पार्षदोपमम्। दर्शने व्यालजातीनां हिंसाशीलं प्रसूयते। गोधामांसाशने पुत्रं सुषुप्सुं धारणात्मकम्। गवां मांसे च बलिनं सर्वक्लेशसहं तथा। माहिषे दौ(ह)हृदाच्छूरं रक्ताक्षं लोमसंयुतम्। वराहमांसात् स्वप्नालुं शूरं सञ्जनयेत् सुतम्। मार्गाद्विक्रान्तजङ्घालं सदा वनचरं सुतम्। सृमराद्विग्नमनसं नित्यभीतं च तैत्तिरात्। अतोऽनुक्तेषु या नारी समभिध्याति दौ(ह)हृदम्। शरीराचारशीलैः सा समानं जनयिष्यति। कर्मणा चोदितं जन्तोर्भवितव्यं पुनर्भवेत्। यथा तथा दैवयोगाद्दौ(ह)हृदं जनयेद्धृदि"। ४यात्रायां दिग्भेदे दोषशान्त्यर्थं ४सेव्यपदार्थे यथाह मु०चि० "आज्यं तिलौदनं मत्स्यं पयश्चापि यथाक्रमम्। भक्षयेद्दोहदं दिग्भ्रमाशां पूर्वादिकां व्रजेत्। रसालां पायसं काञ्जीं शृतं दुग्धं तथा दधि। पयोऽशृतं तिलान्नं च भक्षयेद्वारदोहदम्। पक्षादितोऽर्कदलतण्डुलवारिसर्पिः श्राद्धान्नहविष्यमपि हेमजलं त्वपूपम्। भुक्त्वा व्रजेद्धवकमन्नु च धेनुमूत्रं यावान्नपायसगुडानसृगन्नसत्रान्" मु० चि० अथ दिग्दोहदमनुष्टुभाह आज्यमिति। आज्यं घृतं पूर्वस्याम्। तिलौदनं तिलमिश्रौदनं दक्षिणस्याम्। मत्स्यं प्रसिद्धं पश्चिमायाम्, पयोदुग्धमुत्तरस्याम्। एतद्यथाक्रमं दिक्क्रमभीष्टदिग्भवं दोहदं भक्षयेत्ततः पूर्वादिकामाशां जिगमिषितां दिशां व्रजेत्। यदाह श्रीपतिः "आज्यं तिलौदनं मत्स्यं पयः प्राक्प्रभृतिक्रमात्। भुक्तेति चेचः नारदेन त्वन्यथोक्तं "घृतान्नं तिलपिष्टान्नं मत्स्यान्नं घृतपायसम्। प्रागादिक्रमशो भुक्त्वा याति राजा जयन्नरीन्"। वसिष्ठेनापि "घृतान्नं कृसरान्नं च मत्स्यान्नं घृतपायसम्। पूर्वादिषु क्रमाद्भुक्त्वा यात्रा सिद्धिमवाप्नुयात्" इति। अत्रैवं विरोधे विकल्पो यथा—देशाचारं वा व्यवस्था। अथ वारदोहदमनुष्टुभाह रसालामिति। रसाला शर्करादधिमरीचकर्पूरैः संस्कृता लोके शिखरिणीति प्रसिद्धा तां रविवारे। पायसकाञ्ज्यौ प्रसिद्धे सोममङ्गलवारयोः। शृतं पक्वं दुग्धं बुधे, शृतं पाक इति साधु। तथापि क्षीरहविषोरेवेति वार्त्तिकात् प्रस्तुते क्षीरे साधुत्वम्। दधि प्रसिद्धं गुरुवारे। अशृतमपक्वं दुग्धं शुक्रे, तिलान्नं तिलमिश्रौदनं शनौ। एतद्वारदोहदं रविवारादौ क्रमेण भक्षयेत्। यदाह श्रीपतिः "मञ्जिकां शृतपायसं तथा काञ्जिकं शृतपयोऽदधि क्रमात्। क्षीरमाममथ तत् कथितं तिलौदनं वारदोहदविधिर्बुधैः स्मृतः" इति वसिष्ठनारदाभ्यां दुग्धस्य पक्वापक्वविशेषो नाभ्यधायि "मञ्जिकां परमान्नं च काञ्जिकं च पयोदधि। क्षीरं तिलौदनं भुक्त्वा भानुवारादिषु क्रमाद्दिने"। मञ्जिका रसाला। "स्याद्रसाला तु मञ्जिका" इत्यभिधानात्। गुरुस्तु विशेषमाह "सूर्यवारे घृतं प्राश्यं चन्द्रवारे पयस्तथा। गुड़मङ्गारके वारे बुधवारे तिलानपि। गुरुवारे दधि प्राश्यं शुक्रवारे यवानपि। माषान् भुक्त्वा

शनेर्वारे मूले नक्षत्रदोषभागिति"। अथ तिथिदोहदं वसन्ततिलकाच्छन्दसाह पक्षादित इति। पक्षादिः प्रतिपत्तस्याः ल्यप्लोपे पञ्चमी। प्रतिपदादिपञ्चदशतिथिषु क्रमेण तिथिदोहदं भुक्त्वा व्रजेत्। यथा प्रतिपदि अर्कस्य क्षीरविशेषस्य दलानि पर्णानि। द्वितीयायां तण्डुलवारि-क्षालिततण्डुलजलम्। तृतीयायां सर्पिर्घृतम्। चतुर्थ्यां क्षीरा यवागूः। पञ्चम्यां हविष्यं दध्यादि। षष्ठ्यां हेमजलं प्रक्षालितसुवर्णजलम्। सप्तम्यामपूपम्। अष्टम्यां रुचकं वीजपूरफलम्। "फलपूरो वीजपूरो रुचको मातुलुङ्गके" इत्यमरः। नवम्यामम्बु जलम्। दशम्यां धेनुमूत्रं स्त्रीगवीमूत्रं न तु वृषमूत्रं धेनुशब्दस्य ग्रहणात्। एकादश्यां यावान्नं यवविकारम्। द्वादश्यां पायसम्। त्रयोदश्यां गुडमिक्षुविकारं, चतुर्दश्यामसृक् रुधिरम्। पञ्चदश्यामसृग्दध्नोदनमिश्रितसक्तून्। यदाह बृहस्पतिः "अर्कपत्रं भवेदादौ प्रथमायान्तु भक्षणम्। द्वितीयायां भवेद्यात्रुर्भक्ष्यं तण्डुलोदकम्। तृतीयायां तथा सर्पिर्यवागूः स्यात्ततः परम्। पञ्चम्यां तद्धविष्यं स्यात् षष्ठ्यां वा काञ्चनोदकम्। अपूपभुक्तिः सप्तम्यामष्टम्यां वीजपूरकम्। नवम्यां तोयपानं स्याद्गोमूत्रन्तु ततःपरम्। एकादश्यां यवान्नं स्यात् द्वादश्यां पायसं पिबेत्। त्रयोदश्यां गुडं वेद्यं रुधिरं स्याच्चतुर्दशे। दध्योदनं भवेद्भोज्यं पञ्चदश्यां यियासतः। पक्षयोरुभयोरेवं यात्रायोगे विधिः स्मृतः" इति। दैवज्ञमनोहरेऽपि कश्चिद्भेदः। यथा "अर्कदलतण्डुलोदकसर्पींषि हविष्यदधिसुवर्णपयः। तिलवारिवीजपूरकमध्वाज्यकमूत्रपिष्टिकाश्चापि। तिलपिष्टकदम्बफलानि शाकमथ प्रवालपर्णानि प्रतिपत्प्रभृतिषु भुक्त्वा प्रस्थाता सिद्धिमाप्नोतीति"। ननु "आलभ्यालभ्य भक्ष्यान् वा स्मृत्वा दृष्ट्वा तान् व्रजेत्। दृष्ट्वा वा सिद्धिमाप्नोति दुष्टभादिषु भूपतिरिति" इत्युक्तेः दुष्टवारादिषु दोहदाभिधानं सार्थकम्। विहितेषु पुनर्नक्षत्रतिथिवारादिषु दोहदाभिधानं व्यर्थम्। दोषनिवारणफलको हि दोहदस्तदभावे वैयर्थ्यप्रसङ्गात्। उच्यते। दुष्टभादिषु भूपतिरित्यत्र दुष्टत्वं किन्नैसर्गिकमतान्यत् अविहितनक्षत्रेष्वपि क्रूरग्रहसाहित्यादिसंज्ञात् दोषः सम्भावितोऽस्ति तदपाकरणाय दोहदाभिधानं सार्थकम् एवं सर्ववर्णानामपि पारिषदस्य विरुद्धताराक्रूरग्रहसाहित्यादिग्रहादोषनिवारणाय दोहदोक्तेः सार्थक्यात्। एवं विहिततिथिदोहदाभिधानं योगिन्यादिदोषनाशार्थम्। "शक्रराशेरशुभा तिथिः स्यात्" इत्येतद्दोषनिवारणार्थं च। तद्दोषाभिधानं च रत्नमालायाम्। "आद्यास्तिस्रः क्रियपूर्विकाणां मेषादीनामिह पञ्चमी स्यात्। पराः परेषां परतस्तथैव शक्रराशेरशुभा तिथिः स्यात्" इति। एवं वारदोहदोक्तेरपि वक्रिग्रहवारत्मूलादिदोषहान्या सार्थिका दिग्दोहदोक्तेरपि त्रिविधप्रतिशुक्रप्रतिबुधप्रतिभौमादिदोषहान्या सार्थिका" पी॰धा॰

तत्र गर्भे "सुदक्षिणा दोहदलक्षणं दधौ" रघुः। अभिलाषे "उदकक्रीडादोहदागतानाञ्च" काद॰ गर्भिण्यभिलाषे "प्रजावती दोहदशंसिनी ते" रघुः ४पुष्पोद्गमौषधे च "कुसुमं कृतदोहदस्त्वया यदशोकोऽयमुदीरयिष्यति" रघुः "आकण्ठास्यमुखमदिरादोहदच्छद्मनास्याः" मेघः अशोकबकुलयोः स्त्रीपदताडनगण्डूषमदिरे दोहदमिति प्रसिद्धिः। "स्त्रीणां स्पर्शात् प्रियङ्गुर्विकसति बकुलः सीधुगण्डूषसेकात् पादाघातादशोकस्तिलककुरवकौ वीक्षणालिङ्गनाभ्याम्। मन्दारो नर्मवाक्यात् पटुमृदुहसनात् चम्पको वक्त्रवातात् चूतो गीतान्नमेरुर्विकसति च पुरोनर्तनात् कर्णिकारः" मल्लि॰ धृतवाक्यम्

**दोहदलक्षण** न॰ दोहदस्य गर्भस्य लक्षणं यत्र। १वयःसन्धौ हेम॰। २गर्भलक्षणे च।

**दोहदवती** स्त्री दोहद+अस्त्यर्थे मतुप् मस्य वः। द्रव्यविशेषाभिलाषवत्यां गर्भिण्याम् अमरः। दोहदान्वितायाम् हेमच॰।

**दोहन** न॰ दुह—भावे ल्युट्। १अन्तःस्थितद्रवद्रव्यस्य बहिर्निःसारणरूपे व्यापारे (दोयोया) करणे ल्युट् ङीप्। २दोहनसाधनपात्र्याम् शब्दरत्ना॰।

**दोहल** पु॰ दोहमाकर्षं लाति गृह्णाति ला—क। १इच्छायां २दोहदशब्दार्थे च शब्दार्थकल्प॰। "अशोक! यदि सद्य एव मुकुलैर्न सम्पत्स्यसे वृथा वहसि दोहदं ललितकामिसाधारणम्" मालविका॰ ततः अस्त्यर्थे मतुप् मस्य वः। ङीप् दोहलवती १दोहदवत्यां स्त्रियां शब्दार्थचि॰। २अशोकवृक्षे स्त्री राजनि॰ गौरा॰ ङीष् दोहली।

**दोहस्** पु॰ दुह—भावे असुन्। दोहने प्रक्षारणे "इमा अस्य समूहे दोहसा दिवः" ऋ॰१॰११।१ "दोहसा दोहनेन" भा॰

**दोहसे** अव्य॰ दुह—तुमर्थे "सेसेनसेन" इत्यादि पा॰ ३।४।९ सू॰ तुमर्थे असेन्। दोग्धुमित्यर्थे "मर्त्तं स्वमहोदहसे"

ऋ० ६।६६।१ "मक्षु न येषु दोहसे" ऋ० ६।६६।५ "दोहसे कामान् दोग्धुम्" भाष्यम्।

**दोहा** स्त्री मात्रावृत्तभेदे "षट्कचतुरगौ त्रिकलमपि विषमपदे विनिधेहि। समपादान्ते चैकलमिति दोहामवधेहि" तल्लक्षणम्। [दुग्धे त्रिका०।

**दोहापनय** पु० दोहमपनयति क्षरणेन अप+नी—अच्।

**दोहित** त्रि० दोह+तार० इतच्। सञ्जातदोहे [ङीप्।

**दोहिन्** त्रि० दुह—शीलार्थे णिनुण्। दोहनशीले स्त्रियां

**दोहीयस्** त्रि० दोग्धृ+अतिशायने "तुश्छन्दसि" इयसुन् तृणोलोपः। अतिशयेन दोग्धरि। स्त्रियां ङीप् दोहीयसी एवं इष्ठन् दोहिष्ठ तत्रार्थे त्रि० स्त्रियां टाप्। शब्दकल्पद्रुमे अस्य दोहिन्शब्दप्रकृतिकत्वकल्पनं प्रामादिकमेव।

**दोह्य** त्रि० दुह—कर्मणि वा ण्यत्। १दोहनीये २दुग्धे ३वत्सादौ स्त्री। "ईडवन्द्यशंसदुहां ण्यतः" पा० आद्युदात्तता। "वीजायोबाह्यरतक्षीरोह्य पुंसां परीक्षणम्" याज्ञ०। [त्रि०।

**दौःसाधिक** पु० दुष्टः साधः तत्र नियुक्तः ठक्। द्वारपाले

**दौकूल** पु० दुकूलेन परिवृतो रथः अण्। दुकूलेन परिवृते रथे अमरः पृषो० दौगूल तत्रार्थे हेमच०।

**दौगर्ह** पु० अन्ये निरु०।

**दौत्य** न० दूतस्य भावः कर्म वा ष्यञ्। १दूतकर्मणि २तद्भावे च "हनूमदाद्यैर्यशसा मया पुनर्द्विषां हसैर्दौत्यपथः सितीकृतः" नैष० "दौत्यं तत्कृतं घोरे विग्रहे जनमेजय!" हरिवं० १७४अ० "भगवन् श्रूयतां वाक्यं दौत्येनाहमिहागतः" हरिवं०१७७अ०।

**दौरात्म्य** न० दुष्ट आत्मा यत्नः धृतिः बुद्धिः स्वभावः शरीरं वा यस्य तस्य भावः ष्यञ्। निन्दितयत्नादौ "दौरात्म्याद्रावणस्यात् न नात्मन्याः अहृषुः प्रजाः" रघुः।

**दौर्ग** न० दुर्गस्य दुर्गाया वा इदम् अण्। १दुर्गसम्बन्धिनि २दुर्गासम्बन्धिनि च "श्रावणी दौर्गनवमी दूर्वा चैव हुताशनी। पूर्वविद्धैव कर्तव्या शिवरात्रिर्बलेर्दिनम्" कालमा० धृतवाक्यम्।

**दौर्गत्य** न० दुर्गतस्य भावः ष्यञ्। १दारिद्र्ये २दुःखित्वे च "दौर्गत्याद्यैरनौजस्यं दैन्यं मलिनतादिकृत्" सा०द० "भर्त्तुः कुर्वन्ति दौर्गत्यात् सोऽनर्थः सुमहान् स्मृतः" भा० स० ५अ०।

**दौर्गन्ध्य** न० दुष्टो गन्धोऽस्य ततो भावे ष्यञ्। दुष्टगन्धयोगे। "लघु तृष्णाहरं श्लक्ष्णं दौर्गन्ध्यनाशनम्" सुश्रुतः। गात्रे दौर्गन्ध्यकारणञ्च भगुभारते उक्तं तच्च १७६१पृ० दर्शितम्।

**दौर्गह** पु० दुर्गहस्यापत्यम् शिवा० अण्। १दुर्गहस्यर्षेरपत्ये पुरुकुत्से ऋषौ "अस्म ऋषयो दौर्गहे बध्यमाने" ऋ०४।४२।८। "पुरुकुत्सस्य महिषी दौर्गहे बन्धने स्थिते। पत्यावराजकं दृष्ट्वा राष्ट्रं पुत्रस्य लिप्सया" भा० धृतवाक्यम् २अन्ये निरु० दौगर्ह इत्यत्र पाठान्तरम्।

**दौर्ग्रह** पु० दुःखेन ग्रहो ग्रहणमस्य अश्वस्य, तत्सम्बन्धो यागः अण्। अश्वमेधे "तेन ह पुरुकुत्सो दौर्ग्रहेणेजे" शत० ब्रा० १३।५।४५। दौर्ग्रहेणाश्वेन संहतेन क्रतुना अश्वमेधेनेजे इत्यर्थः" भा०।

**दौर्गायण** पु० दुर्गस्यापत्यं नडा० फक्। दुर्गस्यापत्ये

**दौर्जन्य** न० दुर्जनस्य भावः ष्यञ्। दुर्जनत्वे "तदिदं मम दौर्जन्यं बालिशस्य महीयसि" भाग० ६।६८।५२

**दौर्बल्य** न० दुर्बलस्य भावः ष्यञ्। दुर्बलत्वे "अनादेयस्य चादानात् आदेयस्य च वर्जनात्। दौर्बल्यं ख्याप्यते राज्ञः" मनुः "पपात भूमौ दौर्बल्यात्" भा० शा० ५श्लो०।

**दौर्भागिनेय** पुंस्त्री० दुर्भगाया अपत्यं कल्या० ढक् इनङ् च हृद्भगेत्यादिना द्विपदवृद्धिः। दुर्भगाया अपत्ये।

**दौर्भाग्य** न० दुर्भगाया दुर्भगस्य वा भावः ष्यञ् द्विपदवृद्धिः। दुर्भाग्यान्वितत्वे "भुक्त्वा पितृगृहे नारी भुङ्क्ते स्वामिगृहे यदि। दौर्भाग्यं जायते तस्याः शपन्ति कुलदेवताः" इति ज्योति०त० "यत्ते केशेषु दौर्भाग्यं सीमन्ते च मूर्धनि। ललाटे कर्णयोरक्ष्णोरापस्तद्घ्नन्तु सर्वदा" याज्ञ० "अद्य कैकेयि! दौर्भाग्यं राज्ञा ते ख्यापितं महत्" भा०व०२७६अ० तत्कारणञ्च भगुभारतोक्तम् १७६२ पृ०दर्शितम्। [भ्रातृत्वे।

**दौर्भ्रात्र** न० दुष्टो भ्राता तस्य भावः युवा० अण्। दुष्ट-

**दौर्मनस्य** न० दुष्टं मनोऽस्य तस्य भावः ष्यञ्। खेदादिनिमित्ते चित्तस्य दौस्थ्ये दुष्टमनोयुक्तत्वे "तेषां क्षते मे निश्वासो दौर्मनस्यञ्च जायते" देवीमा० "क्षतस्तुतिः प्रोषितदौर्मनस्यम्" ह०सं० ७८अ०।

**दौर्वासस** न० दुर्वाससा प्रोक्तम् अण्। शिवधर्मोक्ते उपपुराणभेदे उपपुराणशब्दे दृश्यम्। [मेदि०।

**दौर्वीण** न० दूर्वायाः इदम् खञ्। १दूर्वारसे २दूर्वायां च

**दौर्व्रत्य** न० दुष्टं स्खलनोच्छलनादि व्रतं यस्य तस्य भावः

ष्यञ्। दुष्टमतत्वे "मित्रं सौमत्येन चरं दौर्मत्येन" यजु०२६।६

दौर्हृ(ह)द न० दुर्हृदो भावः ष्यञ् वा न द्विपदवृद्धिः। दोहृद+स्वार्थे ष्यञ् वा। हृच्छादौ दोहृदशब्दार्थे दोहृदशब्दे सुश्रुतवाक्यं दृश्यम्।

दौर्हार्द न० दुर्हृदो भावः युवा० अण् द्विपदवृद्धिः। शत्रुत्वे

दौर्हृदय न० दुर्हृदयस्य दुष्टहृदययुक्तस्य भावः युवा० अण् न द्विपदवृद्धिः। दुष्टचित्तत्वे। [कक्षमे हेमच०।

दौलेय पु० दुलेरपत्यम् "इतश्चानिञः" पा० ढक्। दुलेरपत्ये

दौलि पु० दुलम+अपत्ये इञ्। इन्द्रे शब्दार्थकल्प०।

दौवारिक पु० द्वारे नियुक्तः ठक् द्वारा० व्याभ्यां प्राक् ऐच्। १द्वारनियुक्ते २द्वारपाले ३प्रतीहार्यां स्त्री ङीप्। "दौवारिकी देवसरूपमेत्य" रघुः "प्रविश्य दौवारिकः" शकु०। दौवारिकलक्षणं मत्स्यपु० उक्तं यथा "प्रांशुः सुरूपोदक्षश्च प्रियवादी न चोद्धतः। चित्तग्राहश्च सर्वेषां प्रतीहारः स उच्यते"। औशनसनीतिशास्त्रपरिशिष्टे तु अन्यथोक्तं यथा

"शस्त्रास्त्रकुशलो यस्तु हठाङ्गश्च निरालसः। यथायोग्यं समाह्वयात् स ज्ञेयः प्रतिहारकः"। "इङ्गिताकारतत्त्वज्ञो बलवान् प्रियदर्शनः। अप्रमादी सदा दक्षः स प्रतीहार उच्यते" चाणक्यः। ह०सं०उक्ते २एकाशीतिपदस्थे वास्तुदेवभेदे च "पितृदौवारिकसुग्रीवकुसुमदन्ताम्बुपलशराः"।

दौवालिक पु० देशभेदे तत्रत्यराजादिषु ब०व०। "दौवालिकाः सागरकाः पत्रोर्णाः शैशिरास्तथा। कर्णप्रावरणाश्चैव बहवस्तत्र भारत!। तत्रस्था द्वारपालैस्ते प्रोच्यन्ते राजशासनात्। कृतकालाः सुबलयस्ततो द्वारमवाप्स्यथ" भा०स०५१अ०।

दौश्चर्म्य न० दुश्चर्मणो भावः ष्यञ्। स्वभावतोऽनावृतमेढ़त्वे "ब्रह्महा क्षयरोगित्वं दौश्चर्म्यं गुरुतल्पगः"मनुः।

दौष्क त्रि० दोषा चरति "दोष उपसंख्यानम्" वार्त्ति० ठण् "इसुसः कः" पा० कत्वम्। बाहुभ्यां चारिणि।

दौष्कुल दुष्टं कुलमस्य दुष्कुलः स्वार्थे अण्। दुष्टकुलयुक्ते "न दुर्जने दौष्कुले वा व्रतैर्यो वा न संस्कृतः"भा०शा० २६अ०।

दौष्कुलेय पु०दुष्कुलस्यापत्यं तत्र भवो वा "दुष्कुलाड्ढक्" पा० पक्षे ढक्। दुष्कुलजाते "कुलेजाताश्च क्लिश्यन्ते दौष्कुलेयवशानुगाः" भा०व० १६१अ०।

दौष्कुल्य त्रि० दुष्कुल+स्वार्थे ष्यञ्। दुष्टकुलयुक्ते "दौष्कुल्या व्याधिबहुलाः दुरात्मानोऽप्रतापिनः" भा०व० १८२अ०।

दौष्ठव न० दुष्ठोः अविनीतस्य भावः उद्गा०अण्। अविनीतत्वे

दौष्पुरुष्य न० दुष्टः पुरुषः तस्य भावः स्वार्थे वा ब्राह्मणा० ष्यञ्। १दुष्टे पुरुषे २तद्भावे च।

दौष्मन्त(न्ति) पु० दुष्मन्तस्यापत्यम् शिवा० अण् इञ् वा। दुष्मन्तस्यापत्ये भरते "दौष्मन्तं भरतं चापि कृतं सृञ्जय! शुश्रुमः" भा०द्रो०६७अ०। "भरतञ्चैव दौष्मन्तिं कृतं सृञ्जय! शुश्रुमः" भा०शा०२६अ०। अस्य विसर्गमध्यता मन्मूलतापि "तेन हैतेन भरतो दौःषन्तिरीजे" शत०ब्रा० १३।५।४८ अत्र पृषो०मस्य लोप इति बोध्यम् यमध्यो दौषन्तिरित्यप्यत्र "रूपौदार्य्यगुणोपेतं दौष्यन्तिं जनमेजय!" भा०आ०७४अ०।

दौष्मन्त्य त्रि० दुष्मन्तस्यायम् ष्यञ्। दुष्मन्तसम्बन्धिनि "सत्यवत्यचिन्तयन्मा दौष्मन्त्यो वंश उच्छेदं व्रजेदिति" भा० आ० ६५अ०। [भावे।

दौस्त्र न० दुष्टा स्त्री तस्याः भावः युवा० अण्। दुष्टस्त्रिया

दौहिक दोहं नित्यमर्हति ठञ्। नित्यं दोहार्हे

दौहित्र पुंस्त्री० दुहितुरपत्यम् विदा० अञ्। दुहितुरपत्ये स्त्रियां ङीप्। "पौत्रदौहित्रयोर्लोके विशेषो नास्ति कश्चन। तयोर्हि मातापितरौ सम्भूतौ तस्य देहतः" मनुः "दौहित्रोऽपि ह्यमुत्रैनं सन्तारयति पौत्रवत्।" मनुः। २खड्गादौ न०। "दौहित्रं खड्गमित्याहुरपत्यं दुहितुस्तिलाः। कपिलायाघृतं चैव दौहित्रमिति चोच्यते" मार्कण्डेयपु० "त्रीणि श्राद्धे प्रशस्तानि दौहित्रं कुतपस्तिलाः" तत्रैव। "त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः। व्रतस्थमपि दौहित्रं श्राद्धे यत्नेन भोजयेत्। कुतपञ्चासने दद्यात् तिलैश्च विकिरेन्महीम्" मनुः "कुतपं नेपालकम्बलम्" इति कुल्लूकभट्टः। "ब्राह्मविवाहेनोढायाः कन्याया पुत्रोत्पत्तिं विना तद्गृहभोजने दोषोऽभिहितः" वह्निपु०। "कन्यायां ब्रह्मदेयायामभुञ्जन् पुत्रमश्नुते। अथ भुञ्जीत यो मोहात् भुक्त्वा स नरकं व्रजेत्। अप्रजायाञ्च कन्यायां न भुञ्जीयात् कदाचन। दौहित्रस्य मुखं दृष्ट्वा किमर्थमनुशोचसि। महाघन्तसमाकीर्णात् नास्ति ते नरकाद्भयम्। तीर्णस्त्वं सर्वदुःखेभ्यः परं स्वर्गमवाप्स्यसि। दौहित्रस्य तु दानेन नन्दन्ति पितरः

सदा। यत्किञ्चित् कुरुते दानं तदानन्त्याय कल्पते"

**दौहित्रायण** पुंस्त्री॰ दुहितुरपत्यं युवा विदा॰ अजि कञ्जलत्वात् यूनि हरिता॰ फक्। दुहितुर्यून्यपत्ये।

**द्यविद्यवी** स्त्री दिवसे निघ॰।

**द्यावाक्षमा** स्त्री द्वि॰व॰। द्यौश्च क्षमा च दिवो द्यावादेशः। स्वर्गपृथिव्योः हेमच॰। एवं द्यावापृथिवीद्यावाभूमि शब्दावपि तत्रार्थे द्वि॰व॰ "द्यावापृथिवीयम्" शत॰ब्रा॰ ११।५।२ द्यावापृथिव्योरिदम् वैश्वदेवं तत्सम्बन्धि इत्यर्थः। "द्यावापृथिवी इह ज्यैष्ठे" शत॰१३।५।१।११ "आर्षत्वात् एकवचनान्तता। "द्यावाभूमी जनयन् देव एक आस्ते विश्वस्य कर्त्ता भुवनस्य गोप्ता" अनुमानचिन्तामणिधृतश्रुतिः।

**द्यु** अभिसर्पणे अदा॰पर॰सक॰अनिट्। द्यौति अद्यौषीत्। दुद्याव। "गुहाया निरगात् बाली सिंहो ऽ रण्यमिव द्युवन्" भट्टिः।

**द्यु** न॰ दिव—उन् किच्च वा॰वलोपश्च। १दिने २गगने ३स्वर्गे च विश्वः ४अग्नौ पु॰ मेदि॰।

**द्युक्ष** त्रि॰ दिवि द्युनि क्षयति क्षि—निवासे ड। १स्वर्गलोकवासिनि त्रिका॰ "द्युक्षो राजा गिरामक्षितोतिः" ऋ॰६।२४।१ "द्युक्षो द्युलोक निवासी" भा॰ २दीप्तियुक्ते च "द्युक्षमर्यमणं भगम्" ऋ॰१।१३६।६ "द्युक्षं दीप्तिमन्तम्" भा॰।

**द्युग** पुंस्त्री॰ द्युनि दिवि वा आकाशे गच्छति गम—ड। १पक्षिणि राजनि॰। स्त्रियां जातित्वात् ङीष्। २आकाशगामिमात्रे त्रि॰ स्त्रियां टाप्।

**द्युगण** पु॰ द्युनां दिवां वा दिनानां गणः। ग्रहाणां मध्यगतिसाधनाङ्गे दिनवृन्दे अहर्गणशब्दे ५७७ पृ॰तदानयनादि दृश्यम्। "रविदिनान्तगताधिकमासकैः क्षतदिनैः रहितो द्युगणो विधोः" सि॰शि॰।

**द्युगत्** न॰ द्यु+गम—क्विप्। शीघ्रे निघ॰ "अतस्त्वा गीर्भिर्द्युगदिन्द्र!" ऋ॰ ८।८६।४

**द्युचर** त्रि॰ दिवि द्युनि वा आकाशे चरति चर—ट। १ग्रहे २पक्षिणि च "दौश्चाल तदा राजन्! द्युचराश्च सहस्रशः" हरिवं॰ १२२अ॰।

**द्युज्या** स्त्री ६त॰। द्युवृत्तसाहोपातवृत्तस्य दलरूपायां ज्यायाम्। "क्रान्तेः क्रमोत्क्रमज्ये द्वे कृत्वा तत्रोत्क्रमज्यया। हीना त्रिज्या दिनव्यासदलं तद्दक्षिणोत्तरम्" सू॰सि॰ "स्वक्रान्तेः क्रमोत्क्रमज्ये द्वे अपि प्रसाध्य तत्र तन्मध्ये क्रान्त्युत्क्रमज्यया त्रिज्या हीना, दिनव्यासदलमहोरात्रवृत्तस्य व्यासार्द्धं द्युज्येत्यर्थः" रङ्ग॰। "क्रान्तिज्या भुजः त्रिज्या कर्णस्तद्वर्गान्तरपदमहोरात्रवृत्तस्यार्द्धं सैव द्युज्या" सि॰शि॰ व्याख्यायां प्रमिता॰।

**द्युत** दीप्तौ भ्वा॰अक॰आत्म॰सेट्। द्योतते लुदित्त्वात् पक्षे ङ प॰अद्युतत् अद्योतिष्ट। दिद्युते। द्योतनः "अद्युतच्चन्द्राभरणम्" भट्टिः उपसर्गपूर्वकस्य तत्तदुपसर्गद्योत्यार्थयुक्ते द्योतने। "अद्योतिष्ट सभावेद्यामसौ नरशिखित्रयी" माघः। "विद्युद्युते बाडवजातवेदसाम्" माघः २शोभायाञ्च "मञ्जीरनद्धीतवधूसुखद्युतः" माघः घिषि द्योतयति प्रकाशने अञ्जनाद्यत्या बोधने च द्योत्यार्थः अस्त्यर्थे

**द्युत्** पु॰द्युत—क्विप्। १किरणे हेमच॰। २द्योतमाने त्रि॰ "स हि द्युता विद्युता वेति साम" ऋ॰१०।६६।२। "द्युता द्योतमानेन" भा॰।

**द्युत** त्रि॰ द्युत—क। द्योतमाने अद्द्वचरति क्विप् द्युतति अद्युतीत्। "द्युतद्यामानं बृहतीमृतेन" ऋ॰५।८०।१

**द्युतान** त्रि॰ द्युत—शानच् वेदे गणव्यत्ययात् शपोलुक्। द्योतनशीले "द्युतानस्त्वा मारुतो मिनोतु" यजु॰ ५।२७ "द्युतानः दीप्यमानः" वेददी॰।

**द्युति** स्त्री द्युत—इन्। १दीप्तौ २शोभायाम् "सुवर्णपुञ्जद्युतिरञ्जिताङ्गुलिः" रघुः। "रूपयौवनलालित्य भोगाद्यैरङ्गभूषणम्। शोभा प्रोक्ता सैव कान्तिर्मन्मथाप्यायिता द्युतिः। कान्तिरेवातिविस्तीर्णा दीप्तिरित्यभिधीयते" सा॰द॰ तत्सामान्यावान्तरभेदकथनेन स्त्रीणां सात्विकालङ्कारतया उक्ते ३अर्थे। "देहजा कान्तिर्द्युतिरित्याचार्या मन्यन्ते।

**द्युतित** न॰द्युत—भावे क्त वा न गुणः। १दीप्तौ पक्षे गुणः द्योतितमप्यत्र। २कर्त्तरि क्त। २दीप्तियुते त्रि॰।

**द्युतिधर** पु॰ द्युतिं देहगतां कान्तिं धारयति अन्तर्भूतण्यर्थे धृ—अच्। विष्णौ "तेजो हरो द्युतिधरः" विष्णु सं॰ "द्युतिमङ्गगतां कान्तिं धारयन् द्युतिधरः" भा॰ "ओजस्तेजो द्युतिधरः" विष्णुसं॰नामान्तरं तद्व्युत्पत्तिः भाष्ये ऽन्यथा दर्शिता यथा "ज्ञानलक्षणां दीप्तिं धारयन् द्युतिधरः" इति। तेनोभयविधयोगार्थवत्त्वात् तस्य नामद्वयमित्यपौनरुक्त्यम्।

**द्युतिमत्** त्रि॰ द्युतिः प्रशंसायामस्त्यर्थे मतुप्। १प्रशस्तकान्तियुक्ते "यशोऽतिकायो द्युतिमान्" भा॰आ॰६६अ॰ "द्युतिमतां निकरेण महात्मनाम्" किरा॰। स्त्रियां ङीप्। स्वायम्भुवस्य मनोः २पुत्रभेदे पु॰। तदुपक्रमे "ज्योति-

मान् द्युतिमान् हव्यः सवर्णापुत्र एव च" हरिवं०७अ०। मेरुसावर्णमन्वन्तरे ३सप्तर्षिभेदे च। तदुपक्रमे "ज्योतिष्मान् भार्गवश्चैव द्युतिमानङ्गिरास्तथा" तत्रैवाध्याये। मद्रराज ४नृपभेदे "सहदेवोऽपि माद्रीमेव स्वयंवरे विजयां नामोपयेमे मद्रराजस्य द्युतिमतोदुहितरम्" भा०आ० ९५अ०। ५शाल्वदेशनृपभेदे च "नाम्ना च द्युतिमान्नाम शाल्वराजः प्रतापवान्" भा०आ०२२४अ०। ६मदिराश्वनृपपुत्रे च "मदिराश्वस्य पुत्रोऽभूत् द्युतिमान्नाम पार्थिवः। पुत्रोद्युतिमतस्त्वासीद्राजा परमधार्मिकः" भा०अनु० २अ०।

**द्युतिला** स्त्री द्युतिं लाति ला—क। ओषधिभेदे रत्नमाला।

**द्युधुनि** स्त्री ६त०। स्वर्गनद्यां गङ्गायाम् "विरहितो द्युधुनि पातयिवसनाद्य" भाग०३।२३।२७ द्युनद्यादयोऽप्यत्र।

**द्युन** न० लग्नावधिके सप्तमस्थाने "द्युनं द्यूनं तथास्ताख्यं षट्कोणं रिपुमन्दिरम्" ज्यो०त०।

**द्युनिवास** पु० दिवि द्युनि वा निवासोऽस्य। देवे "शोकाग्निनाऽगात् द्युनिवासभूयम्" भट्टिः। [इन्द्रे च।

**द्युपति** पु० ६त०। १इन्द्रे हेमच०। २दिनपतौ सूर्ये ३अर्के-

**द्युम** त्रि० द्यु+अस्त्यर्थे म। दिनादिविशिष्टे [इन्द्रे च।

**द्युमणि** पु०दिवः स्वर्गस्य मणिरिव। १सूर्ये अमरः। २अर्क-

**द्युमत्सेन** पु० शाल्वमहीपतिभेदे सत्यवतः पितरि "द्युमत्सेनसुतं वीरं सत्यवन्तमनिन्दिता" भा०वि०२०अ०। "आसीच्छाल्वेषु धर्मात्मा क्षत्रियः पृथिवीपतिः। द्युमत्सेन इति ख्यातः पश्चादन्धो बभूव ह। विनष्टचक्षुषस्तस्य बालपुत्रस्य धीमतः। सामीप्येन गतं राज्यं छिद्रेऽस्मिन् पूर्ववैरिणा। स बालवत्सया सार्द्धं भार्यया प्रस्थितोवनम्। महारण्यं गतश्चापि तपस्तेपे महाव्रतः। तस्य पुत्रः पुरे जातः संवृद्धश्च तपोवने। सत्यवाननुरूपो मे भर्त्तेति मनसा वृतः" भा०व०२९४अ० सावित्र्युक्तिः।

**द्युमत्** त्रि० द्यौः कान्तिरस्यास्ति दिव—मतुप् दिव उत्त्वम्। कान्तियुक्ते "वीतिहोत्रं त्वा कवे! द्युमन्तम्" यजु० २।४ "द्युमत्तमा सुप्रतीकस्य सूनोः" २७।११

**द्युमद्गान** न० साममानभेदे।

**द्युमयी** स्त्री विश्वकर्मकन्यायां सूर्यभार्यायाम् "सुरेषु द्युमयी त्वाष्ट्री प्रिये चैते विभावसोः" त्रिका०।

**द्युम्न** न० दिवं दीप्तिं मनति म्ना—क। १धने अमरः। २बले निघण्टुः। प्रद्युम्नः।

**द्युलोक** पु० द्यौरेव लोकः दिव उत्त्वम्। स्वर्गलोके

**द्युवन्** पु० द्यु—कनिन् उवङ्। सूर्ये उज्ज्वल०।

**द्युष(स)द्** पु० दिवि सीदति सद्—क्विप् पूर्वपदात् छन्दसि षत्वम् लोकेऽषत्वम्। १देवे २ग्रहे च "मनःसु येषां द्युसदां न्यधीयत" माघः।

**द्यू** त्रि० दिव्यति दिव—क्विप् ऊठ्। देवके अक्षद्यूः।

**द्यूत** न० दिव—भावे क्त ऊठ् अर्द्धर्चा०। १देवने क्रीड़ाभेदे २विवादपदभेदे च तत्स्वरूपादिकं वीर०मि० निरूपितम् "अक्षवध्रशलाकाद्यैर्देवनं जिह्मकारितम्। पणक्रीड़ा वयोभिश्च पदन्द्यूतसमाह्वयमिति" नारदः। अक्षाः पाशाः। वध्रश्चर्मपट्टिका। शलाका दन्तादिमय्यो दीर्घचतुरस्राः। आद्यग्रहणाच्चतुरङ्गादिक्रीड़ासाधनं करितुरगादिकं गृह्यते। तैरप्राणिभिर्या पणपूर्विका क्रीड़ा। तथा वयोभिः पक्षिभिः पारावतादिभिः चशब्दान्मल्लमेषादिभिश्च प्राणिभिर्या पणपूर्विका क्रीड़ा क्रियते तदुभयं यथाक्रमन्द्यूतसमाह्वयाख्यं व्यवहारपदमित्यर्थः। द्यूतञ्च समाह्वयञ्च द्यूतसमाह्वयम्। अतएव मनुः। "अप्राणिभिर्यत् क्रियते तल्लोके द्यूतमुच्यते। प्राणिभिः क्रियमाणस्तु स विज्ञेयः समाह्वयः" इति। तत्र सभिकं प्रत्याह नारदः "सभिकः कारयेद्द्यूतन्देयं दद्याच्च तत्कृतम्। दशकन्तु शतं वृद्धिस्ततः स्याद्द्यूतकारिता। स्थ वा कितवो राज्ञे दत्त्वा लाभं यथोदितम्। प्रकाशन्देवनं कुर्य्यादेवं दोषो न विद्यत" इति। तस्य वृत्तिमाह याज्ञवल्क्यः "ग्लहे शतिकवृद्धेस्तु सभिकः पञ्चकं शतम्। गृह्णीयाद्धूर्त्तकितवादितराद्दशकं शतमिति"। परस्परं सम्प्रतिपत्त्या कितवः परिकल्पितः पणो ग्लहः तत्र ग्लहे तदाश्रया शतपरिमिता तदधिकपरिमिता वा वृद्धिर्यस्यासौ शतिकवृद्धिस्तस्मात्कितवात्पञ्चकं शतं जितस्य ग्लहस्यात्मनस्तु विंशतितमं भागं गृह्णीयादित्यर्थः। पञ्चकं शतं पञ्चपणा आयो यस्मिन् शते तत्पञ्चकं "तदस्मिन् वृद्धीति" पा०कन्। सभापतिस्तु कल्पिताक्षादिभिः क्रीड़ोपकरणैस्तदुपचितद्रव्योपजीवी इतरस्मादपूर्णशतवृद्धेः कितवाद्दशकं शतञ्जितस्य दशमभागं गृह्णीयादित्यर्थः। एवं क्लृप्तवृत्तेः सभिकस्य यत्कर्त्तव्यं तदाह स एव "स सम्यक्पालितो दद्यात् राज्ञे भागं यथाकृतम्। जितमुद्ग्राहयेज्जेत्रे दद्यात्सत्यं वचः क्षमीति"। यः क्लृप्तवृत्तिर्द्यूताधिकारी स राज्ञा धूर्त्तकितवेभ्योरक्षित-

तस्मै राज्ञे यथाप्रतिपन्नमंशं दद्यात्। तथा जितं द्रव्यं पराजितसकाशादासेधादिना उद्धृत्य जेत्रे जयिने दद्यात्। तथा क्षमी भूत्वा द्यूतकारिणोऽतिविश्वासार्थं सत्यं वचो वदेदित्यर्थः। नारदोऽपि "सभिकः कारयेत् द्यूतं देयं दद्याच्च तत्कृतमिति"। बृहस्पतिरपि "सभिको ग्राहकस्तत्र दद्याज्जेत्रे नृपाय चेति" द्यूतपराजितकितवानां बन्धनादिना पणग्राहको भवेत्। पणग्रहणात् प्रागेव स्वकीयं द्रव्यं जेत्रे नृपाय च यथाभागं सभिको दद्यादित्यर्थः। तथा च कात्यायनः "जेतुर्दद्यात् स्वकं द्रव्यं जितं ग्राह्यं त्रिपञ्चिकम्। सद्यो वा कितवेनैव सभिकात्तु न संशयः" इति। त्रिपञ्चिकमित्यनेन यथासामर्थ्यमा त्रिपक्षात्कालो देय इति दर्शितमिति स्मृतिचन्द्रिकायाम्। यदा तु जेत्रे जितं द्रव्यं सभिको दापयितुमशक्तस्तदा राजा दापयेदित्याह याज्ञवल्क्यः "प्राप्ते नृपतिना भागे प्रसिद्धे धूर्त्तमण्डले। जितं ससभिके स्थाने दापयेदन्यथा न त्विति" प्रसिद्धे अन्यथा प्रच्छन्ने सभिकरहितेऽदत्तराजभागे द्यूते जितपणे जेत्रे न दापयेदित्यर्थः। प्राणिद्यूते प्राणिनां जयपराजयौ तत्स्वामिनोरित्याह बृहस्पतिः "द्वन्द्वयुद्धेन यः कश्चिदवसादमवाप्नुयात्। तत्स्वामिना पणो देयो यस्तत्र परिकल्पितः" इति। पणपरिकल्पनं कृताकृतमित्याह नारदः "परिहासकृतं यच्च यच्चाप्यविदितं नृपे। तत्रापि नाप्नुयात्काममथ वाऽनुमतं तयोरिति"। काम्यत इति कामः पणः। अत्र जयपराजयविप्रतिपत्तौ निर्णयप्रकारमाह याज्ञवल्क्यः "द्रष्टारो व्यवहाराणां साक्षिणश्च त एव हीति"। द्यूतव्यवहाराणां द्रष्टारः सभ्याः त एव कितवा एव नियोक्तव्या राज्ञा। न तत्र श्रुताध्ययनसम्पन्ना इत्याद्युक्तनियमोऽस्ति। साक्षिणोऽपि त एव द्यूते द्यूतकरा एव कार्य्याः न तत्र स्त्रीबालवृद्धकितवेत्यादिसाक्षिनिरूपणोक्तनिषेधोऽस्तीत्यर्थः। विष्णुरपि "कितवेष्वेव तिष्ठेरन् कितवाः संशयं प्रति। य एव तत्र द्रष्टारस्त एवैषान्तु साक्षिणः" इति। साक्षिणां परस्परविरोधे आह बृहस्पतिः "उभयोरपि सन्दिग्धे कितवाः स्युः परीक्षकाः। यदा विद्वेषिणस्ते तु तदा राजा विचारयेदिति।" अनियुक्तद्यूतकारिणो दण्डमाह नारदः "अनिर्दिष्टस्तु यो राज्ञा द्यूतं कुर्वीत मानवः। न स तं प्राप्नुयात्कामं विनयञ्चैव सोऽर्हतीति"। ये तु कूटं द्यूतं कुर्वन्ति तेषां दण्डमाह याज्ञवल्क्यः "राज्ञा सचिह्नं निर्वास्याः कूटाक्षोपधिदेविनः" इति। कूटैरक्षादिभिः उपधिना मणिमन्त्रादिना मतिवञ्चनेन च ये दीव्यन्ति तान् श्वपदादिनाऽङ्कयित्वा राजा स्वराष्ट्रान्निर्वासयेदित्यर्थः। निर्वासने विशेषमाह नारदः "कूटाक्षदेविनः पापान् राजा राष्ट्राद्विवासयेत्। कण्ठेऽक्षमालामासज्य स ह्येषां विनयः स्मृतः" इति। दण्डने विशेषमाह विष्णुः। "द्यूते कूटाक्षदेविनां करच्छेदः उपधिदेविनामाच्छेदः" इति। यानि तु द्यूतनिषेधकानि मनुवचनानि "द्यूतं समाह्वयञ्चैव यः कुर्य्यात्कारयेत वा। तान् सर्वान् घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः। प्रकाशमेतत्तास्कर्य्यं यद्देवनसमाह्वयौ। तयोर्नित्यं प्रतीघाते नृपतिर्यत्नवान् भवेत्। द्यूतं समाह्वयञ्चैव राजा राष्ट्रे निवारयेत्" इत्यादीनि तानि कूटाक्षदेवनविषयतया राजाध्यक्षसभिकरहिततया वा योज्यानि। अतएव बृहस्पतिः "द्यूतं निषिद्धं मनुना सत्यशौचधनापहम्। अभ्यनुज्ञातमन्यैस्तु राजभागसमन्वितम्। सभिकाधिष्ठितं कार्य्यं तस्करज्ञानहेतुकम्" इति। याज्ञवल्क्योऽपि "द्यूतमेकमुखं कार्य्यं तस्करज्ञानकारणादिति" राज्ञा द्यूतम् एकं मुखं प्रधानं यस्य तत् तथोक्तं कार्य्यम्। राजाध्यक्षाधिष्ठितं राज्ञा कारयितव्यमित्यर्थः। तस्करज्ञानकारणात्। ल्यब्लोपे पञ्चमी। तस्करज्ञानरूपं प्रयोजनं पर्य्यालोच्येत्यर्थः। प्रायशश्चौर्य्यार्जितधना एव कितवा भवन्त्यतश्चौरविज्ञानार्थमेकमुखं कार्य्यमित्याशयः"

**द्यूतकर** त्रि॰ द्यूतं करोति कृ–ट। (जुयारी) द्यूतकारके शब्दर॰।

**द्यूतकार** त्रि॰ द्यूतं करोति कृ–अण् कारयति कारि–अण् वा। १द्यूतकरे द्यूतस्य कारयितरि २सभिके च अमरः स्वार्थे क। कारि ण्वुल् वा। द्यूतकारक तत्रार्थे त्रि॰।

**द्यूतकृत्** त्रि॰ द्यूतं करोति कृ–क्विप्। द्यूतकरे त्रिका॰।

**द्यूतपूर्णिमा** स्त्री द्यूतार्था पूर्णिमा। कोजागरपूर्णिमायाम् आश्विनपौर्णमास्यां त्रिका॰ कोजागरशब्दे तत्र द्यूतविधानमुक्तम्। द्यूतपौर्णमासी तत्रार्थे।

**द्यूतप्रतिपद्(दा)** द्यूतार्था प्रतिपत् वा टाप्। कार्त्तिकशुक्लप्रतिपदि तत्र द्यूतविधानं ति॰त॰ यथा ब्रह्म॰पु॰ "शङ्करश्च पुरा द्यूतं ससर्ज्ज सुमनोहरम्। कार्त्तिके शुक्लपक्षे तु प्रथमेऽहनि भूपते॥ जितश्च शङ्करस्तत्र जयं लेभे च पार्वती। अतोऽर्थाच्छङ्करो दुःखी गौरी नित्यं

सुखोषिता। तस्मात् द्यूतं प्रकर्त्तव्यं प्रभाते तत्र मानवैः"। "द्यूतप्रतिपदा नाम तत्र भावी महोत्सवः" ति०त० छूतं बलिं प्रति भगवद्वाक्यम्। [त्रिका०।

**द्यूतवीज** न० द्यूतस्य वीजं साधनम्। कपर्दके (कडि)

**द्यूतवृत्ति** पु० द्यूतं वृत्तिर्जीविका यस्य। सभिके तस्य यथा द्यूतोपजीवित्वं तथा द्यूतशब्दे उक्तम् "मित्रध्रुक् द्यूतवृत्तिश्च पुत्राचार्य्यस्तथैव" मनुना तस्य हव्यकव्यदानाऽयोग्यतोक्ता।

**द्यून** न० लग्नात् सप्तमस्थाने द्युनशब्दे दृश्यम् "द्यूनजन्मारिपुत्रभवस्थितश्चन्द्रमाः शुभफलप्रदस्तथा" ज्यो०त०

**द्यै** न्यक्करणे भ्वा०सक०अनिट्। द्यायति अद्यासीत् दद्यौ

**द्यो** स्त्री द्योतन्ते देवा अत्र द्युत—बा० आधारे डो। १स्वर्गे २आकाशे च अमरः। "धरावियद्द्योषविलेषु विश्रुतम्" भा०क०९०अ० द्योषद् द्योभूमिः। सर्वनामस्थाने परे तस्य औरौत् द्यौः द्यावौ द्यावः।

**द्योकार** त्रि० द्योतत्वात् प्रासादादीन् करोति कृ—अण्। प्रासादादिकरे शिल्पिभेदे "एवं क्षत्रियदायादास्तत्र तत्र परिस्रुताः। द्योकारहेमकारादिजातिं नित्यं समाश्रिताः" भा०शा०४९अ०तत्र व्योकारेति व्याकारेति वा पाठान्तरम्। व्योकारः लोहकारः व्याकारो धनुष्कार इत्यर्थः।

**द्योत** पु० द्युत—भावे घञ्। १प्रकाशे २आतपे अमरः। खद्योतः "चन्द्रार्ककिरणद्योतम्" हरिवं०४२अ० "विद्युद्योतनिकाशेन सकुटेनार्कवर्चसा" हरिवं० २४१अ०। उत्कृष्टो द्योत उद्द्योतः "निरवद्यविद्योद्द्योतेन द्योतितस्तत्त्वतोऽयमर्थः" दायभा०

**द्योतन** त्रि० द्युत—शीलार्थे युच्। १द्योतनशीले "विलोक्य द्योतनं चन्द्रं लक्ष्मणं शोचनोऽवदत्" भट्टिः २दीपे पु०। ३अग्नौ स्त्री निरु०। भावे ल्युट्। ४प्रकाशे न० "द्योतनाद्देवः" इति कुल्लू०। द्युत—णिच—ल्यु। ५प्रकाशके त्रि०। भावे ल्युट्। ६प्रकाशने न०।

**द्योतनि** त्रि० द्युत—णिच्—अनि। प्रकाशके "आ द्योतनिं वहति शुभ्रयाम्" ऋ०३।५८।१ "द्योतनिं प्रकाशकं स्वर्यम्" भा०

**द्योतिरिङ्गण** पु० ज्योतिरिङ्गण+पृषो०। खद्योते हेमच०।

**द्योभूमि** पु० द्यौराकाशो भूमिर्गतिस्थानं यस्य। १पक्षिणि शब्दच०। द्यौश्च भूमिश्च द्व०। २द्यावापृथिव्योः स्त्री द्वि०व०

**द्योषद्** पु०द्यवि सीदति सद—क्विप् षत्वम्। देवे शब्दरत्ना०। यहादौ अषत्वम् द्योसदित्येव।

**द्यौत** न० "द्विर्वेद्युश्च" उणा० द्विव—क्त द्युरादेशः इड्भिन्न। ज्योतिःपदार्थे उज्ज्वलदत्तः।

**द्यौर्लोक** पु० द्यौरेव लोकः द्योलोक+पृषो०। द्युलोके स्वर्गे "किं तामभिजयति पृथिवीलोकमेव पुरोऽनुवाक्यया जयत्यन्तरिक्षलोकं याज्यया द्यौर्लोकं शस्यया" शत०ब्रा०

**द्रगड़** पु०द्रेति गर्दति गड—अच्। वाद्यभेदे (दगड़ काड़ा) त्रिका०।

**द्रङ्कण** न० तोलके शब्दमाला।

**द्रङ्ग** पु० पुरीभेदे हेमच०। स च "कर्बटादधमो द्रङ्गः पत्तनाद्युत्तमस्तु सः" वाचस्पत्युक्तलक्षणः।

**द्रढि** नामधातुः दृढं करोति दृढ+कृतौ णिच् ऋतो रः दृढीकरणे सक०उभ०सेट्। द्रढयति ते। द्रढयन् द्रढयितुम्

**द्रढिमन्** पु०दृढस्य भावः दृढ+इमनिच् ऋतो रः। दृढत्वे "बधान द्रागेव द्रढिमरमणीयं परिकरम्" गङ्गालहरी। "हृदयमरिवधोदयादुदूढद्रढिम दधातु पुनःपुरन्दरस्य" माघः।

**द्रधस्** स्त्री रोदस्योः "हे द्रधसी सततो वस्त एकः केशी विश्वा भुवनानि विद्वान्" तैत्ति०सं० ३।१।२।२

**द्रप्स** न०दृप्यति अनेन दृप—बा०कस ऋतो रः। घनेतरदध्नि(जलोदर) अमरः पृषो० द्रप्स्य द्रप्स इत्येते अपि तत्रार्थे अमरटीकायां भरतः। २रसे पु०। "भुवनानाम्भिर्द्रप्सो अपामसि" यजु०१४।९ "द्रप्सो रसः" वेददी० "यत्ते द्रप्स स्कन्दति यस्ते अंशुरिति यो स्तोकः। स्कन्दति स द्रप्सस्तत्तमाह यस्ते अंशुरिति तदंशुमाह ग्रावच्युतः" शत० ब्रा० ४।२।४।२ "सोऽस्मै द्रप्सान् गर्भं भवन्तोऽस्त्री वसवोऽस्त्वज्जन्त तानस्मात् पादधात्" शत० ब्रा०६।१।२।६। ३द्रुतगतियुक्ते च "अनुद्रप्सास इन्दवः" ऋ०९।६।४ "द्रप्सासः द्रुतगतयः" भा०

**द्रम** गतौ भ्वा०पर०सक०सेट्। द्रमति अद्रमीत् दद्राम "वानरा दद्रमुश्चाथ संग्रामं च शशंसिरे" भट्टिः यङि दंद्रम्यते "दंद्रम्यमाणाः परियन्ति मूढाः" कठोप०। दंद्रमणः

**द्रमिल** पु० देशभेदे। तत्र भवः अण्। द्रामिल चाणक्ये पु० तत्र भवे त्रि० हेम०।

**द्रम्म** पु० लीला० उक्ते षोडशपणे "वराटकानां दशकद्वयं यत् सा काकिणी ताश्च पणश्चतस्रः। ते षोडश द्रम्म इहापि कीर्तितो द्रम्मैस्तथा षोडशभिश्च निष्कः"

**द्रव** पु० द्रु गतौ भावे अप्। १द्रवणे २पलायने ३परीहासे अमरः। ४गतौ ५आसवे। ६वेगे च द्रु—अच्। ७क्षरण

युक्ते त्रि० । ८द्रवत्वगुणयुक्तमात्रे त्रि० “आचिक्य काचिद्द्रवरागमेव” कुमा० “द्रवः सङ्घातकठिनः” कुमा० “सर्वाणि द्रवाणि उदङ्मुखेन जुहोति” श्रुतिः “गण्ड-स्थलाघर्षगलन्मदोदकद्रवद्रुमस्कन्धनिलायिनोऽलयः” “म-दोदकद्रवकटभित्तिसङ्गिभिः” माघः न्यायोक्ते ६द्रवत्व-रूपे गुणभेदे “द्वयोर्नैमित्तिकोद्रवः” भाषा० द्रवत्वशब्दे दृश्यम् । शीघ्रे च ।

द्रवक त्रि० द्रु–शीलार्थे वुक सुग्ध० । १पलायनशीले २त्वरण-

द्रवज पु० द्रवाज् जायते जन–ड । १गुडे राजनि० । २द्रव-जातमात्रे त्रि० । (हस्ते राजनि०।

द्रवत्पत्री स्त्री द्रवत् पत्रं यस्याः गौरा०ङीष् । शिलुड़ी-

द्रवत् उपभोगे अक०पर०सेट् द्रवस् इत्यत्र गणरत्ने कण्ड्वा० गणे पाठान्तरम् । द्रवत्यति । अद्रवत्यीत् ।

द्रवत् त्रि० द्रु–शतृ । १त्वरणयुक्ते २शीघ्रे न० निरु०

द्रवत्व न०द्रवस्य भावः । न्यायोक्ते संग्राहके गुणभेदे भाषा० “सांसिद्धिकद्रवत्वं स्यान्नैमित्तिकमथापरम् । सांसिद्धि-कन्तु सलिले द्वितीयं क्षितितेजसोः । परमाणौ जले नित्य-मन्यत्रानित्यमुच्यते । नैमित्तिकं वह्नियोगात्तपनीयघृता-दिषु । द्रवत्वं स्यन्दने हेतुर्निमित्तं संग्रहे तु तत्” भाषा० “द्रवत्वन्निरूपयति सांसिद्धिकमिति । द्रवत्वं द्विविधं सांसिद्धिकं नैमित्तिकञ्चेति । द्वितीयं नैमित्तिकं पर-माणावेवेति । जलपरमाणौ द्रवत्वं नित्यम् । अन्यत्र पृथिवीपरमाण्वादौ जलद्व्यणुकादौ च अनित्यम् । कुत्रचित्तेजसि कुत्रचित् पृथिव्याञ्च नैमित्तिकं द्रवत्वम् । तत्र को वा नैमित्तिकस्तद्दर्शयति नैमित्तिकमिति । वह्नीतिपदन्तेजोऽर्थकम् । तथा च तेजःसंयोगादग्निसं-योगजन्यं नैमित्तिकं द्रवत्वम् । तच्च सुवर्णादिरूपे तैजसे घृतजतुप्रभृतिपृथिव्यां च वर्तत इत्यर्थः । द्रवत्वं स्यन्दने हेतुरिति असमवायिकारणमित्यर्थः । संग्रहे सक्त्वादिसंयोगविशेषे तद्द्रवत्वं स्नेहसहितमिति बोद्ध-व्यम्” मुक्ता० । तल् द्रवताप्यत्र स्त्री “न च न द्रवता द्रवता परितो हिमहानकृता न कृता क्वचन” भट्टिः ।

द्रवद्रव्य न० द्रवतीति द्रवं कर्म० । १दुग्धदध्याज्यतक्रासवजल तैलादिषु २दैहिकमूत्रादिषु च ।

द्रवन्ती त्रि० द्रु–शतृ ङीप् । १द्रवयुक्तस्त्रियां सा च २स्रवन्त्यां नद्यां ३मूषिकपर्ण्यां च राजनि० ।

द्रवरस त्रि० द्रवयुक्तो रसो यस्य । १सार्द्ररसे २लाक्षायां स्त्री राजनि० ।

द्रवस् उपभोगे कण्ड्वा० पर० सेट् । द्रवस्यति अद्रवस्यीत् ।

द्रवाधार पु० ६त० । १द्रवद्रव्याधारे २चुलुके च शब्दार्थक०

द्रवाय्य त्रि० द्रु–आय्य । द्रुतिशीले मुग्धबो० ।

द्रवि त्रि० द्रावयति अन्तर्भूतण्यर्थे द्रु–इन् । स्वर्णादिद्रावके स्वर्णकारे “द्रविर्न द्रावयति दारु धक्षत्” ऋ०६।३।५

द्रविड पु० स्वनामख्याते देशभेदे स च देशः वृ०सं० कूर्मवि-भागे १४अ० नैरृत्यामुक्तः “नैरृत्यां दिशि देशाः” इत्यु-पक्रमे “हेमगिरिसिन्धुकालकरैवतकसुराष्ट्रबादर द्रविडाः” तेषां राजा सोऽभिजनोऽस्य वा अण् । द्राविड तद्देश-रूपे पित्रादिक्रमेण तत्रवासिनि च । बहुषु अणो लुक् । २ब्राह्मणभेदे सच “आन्ध्राः कर्णाटकाश्चैव गुर्जरा द्रवि-डास्तथा । महाराष्ट्रा इति ख्याताः पञ्चैते द्रविडाः स्मृताः” वायुरसंहिता । ३सवर्णायां व्रात्यक्षत्रियजाते क्षत्रियभेदे यथाह मनुः “झल्लोमल्लश्च राजन्यात् व्रात्यान्निच्छिविरेव च । नटश्च करणश्चैव खसो द्रविड एव च” । जामदग्न्यभयेन क्षत्रियधर्मत्यागेन वृष-लत्वं प्राप्ते तद्देशीये ४क्षत्रिये च यथाह भा०आश्व०२९ अ० “ततस्तु क्षत्रियाः केचिज्जामदग्न्यभयार्दिताः । विविशुर्गिरिदुर्गाणि मृगाः सिंहार्दिता इव । तेषां स्वविहितं कर्म तद्भयान्नानुतिष्ठताम् । प्रजा वृषलतां प्राप्ता ब्राह्मणानामदर्शनात् । एवं ते द्रविडाभीराः पुण्ड्राश्च शबरैः सह । वृषलत्वं परिगता व्युत्थानात् क्षत्रधर्मिणः” ४रागिणीभेदे स्त्री गौरा० ङीष् ।

द्रविण न० द्रु–इनन् । १धने २काञ्चने मेदि० । ३बले ४परा-क्रमे च निघ० “द्रविणं परिमितमधिकव्ययिनं जन-माकुलीकुरुते” उद्भ० “ज्ञातिभ्यो द्रविणं दत्त्वा कन्यार्थे चैव शक्तितः” मनुः । “तेषां सदश्वभूयिष्ठास्तुङ्गा द्रविणराश-यः” रघुः । ५पृथुन्हपपुत्रभेदे पु०“वैन्यस्तु वीर्यमहतामि-त्युपक्रमे “पुत्रानुत्पादयामास पञ्चार्चिष्मान् प्रशंसितान् । विजिताश्वं धूम्रकेशं हर्यश्वं द्रविणं वृकम्” भाग०४। २२।५० तत्र बले “बलेः पुत्रो महावीर्य्यो बाणो द्रविण वत्तरः” हरिवं०१६१अ०पराक्रमे “बभूवतुस्ततस्तस्य पत्नौ द्रविणवत्तरौ” भा०उद्यो० ११२अ० । ५वाञ्छिते च द्रविणप्रदशब्दे दृश्यम् । ६क्रौञ्चद्वीपस्थे वर्षपुरुषभेदे पु० “क्रौञ्चद्वीपस्थवर्षनदीना मम्भः पवित्रममल-मुपयुञ्जानाः पुरुषर्षभद्रविणदेवक संज्ञाः” भाग० ५।२०।१६

द्रविणक पु० ३वसुसुताग्नेः पुत्रभेदे “अग्नेर्भार्य्या वसोर्धारा

पुत्रो द्रविणकादयः" भाग० ६।६।१२श्लो० द्रविण+स्वार्थे क। २द्रविणशब्दार्थे न०।

**द्रविणनाशक** न० द्रविणं नाशयति नाशि–ल्यु। शोभाञ्जने शब्दरत्ना० तत्सेवने धननाशकत्वात्तस्य तथात्वम् अतः स्मृतौ शोभाञ्जनभक्षणनिषेधोऽदृष्टफलक एव।

**द्रविणप्रद** लि० द्रविणं प्रददाति प्र+दा–क। १धनदायके २विष्णौ पु०। तस्य वाञ्छितप्रदत्वात् तथात्वम् "सुधन्वा खण्डपरशुर्दारुणो द्रविणप्रदः" विष्णुस० वाञ्छितप्रदत्वेन तस्य तथात्वम् भाष्ये उक्तम्।

**द्रविणस्** लि० द्रावणमिच्छति लालसायां क्यचि सुक् द्रविणस्यति ततः सम्प० भावे क्विपि अतो लोपे क्वौ लुप्ते न स्थानिवद्भवतीति यलोपः। धनेच्छायाम् "द्रविणोदा द्रविणसः ग्रावहस्तासः" ऋ०१।१५।७ भाष्ये च उक्ता व्युत्पत्तिर्दर्शिता। "द्रविणस्वन्त इह सन्त्विन्दवः" ऋ० ६।८५।१ "द्रविणस्वन्तो धनवन्तः" इति भाष्योक्तेः द्रविणशब्दात् कर्मसाधनात् धनवचनात् मतुप्।

**द्रविणस्यु** लि० द्रविणमात्मनो लालसयेच्छति क्यचि सुक् द्रविणस्य–उन्। लालसया धनकामिनि "द्रविणस्युर्द्रविणसस्कानः" ऋ०१०।६५।१६ "छन्दस्येव द्रु वरस्युद्रविणस्युः" इत्यादिना पा० क्यचि निपातनम्। लोके तु द्रविणीयुरित्येव।

**द्रविणोदस्** लि० १धनदातरि "द्रविणोदाः धनप्रदम्" ऋ०१। १५।७ "धनप्रदोऽग्निः सोमं पिबत्विति शेषः। तमेतं मन्त्रं यास्क एवं निर्वक्ति। नि०८।१ "द्रविणोदाः कस्माद्धनं द्रविणमुच्यते यदेनदभिद्रवन्ति बलं वा द्रविणं यदेने नाभिद्रवन्ति तस्य दाता द्रविणोदास्तस्यैषा भवति। द्रविणोदा द्रविणस" इत्यादि। सोऽयं यास्कोक्तो निर्वचनप्रपञ्चस्तस्मिन्नेव मन्त्रेऽवगन्तव्यः। द्रविणोदाः। "दूदन्निभ्यामिनन्" उ०२।५१। निन्वादाद्युदात्तो द्रविणशब्दः। तद्ददातीति द्रविणोदाः। "क्विप् चेति" पा० क्विप्। पूर्वपदस्य सकारोपजनश्छान्दसः कृत्वोत्त्वे। कृदुत्तरपदप्रकृतिस्वरत्वम्। देवविशेषणत्वे नैकवाक्यतापक्षे द्वितीयायाः स्वादेशः। अथ वा द्रविणमात्मन इच्छन्ति द्रविणस्यन्ति। सुप आत्मनः क्यच्। "सर्वप्रातिपदिकेभ्यो लालसायां सुगवक्तव्यः" वार्त्ति० क्यचि परतः सुगागमः। द्रविणस्यतेः सम्पदादित्वाद्भावे क्विप्। अतोलोपः। "क्वौ लुप्तं न स्थानिवद्भवति" पा० इति तस्य स्थानिवत्त्वप्रतिषेधाद्यलोपः। एवं द्रविणस् शब्दो धनेच्छावचनः। द्रविणेच्छां ददाति यथेष्टधनप्रदानेनोपक्षपयतीत्यर्थे दद उपक्षये इत्यस्मादन्तर्भावितण्यर्थात् "क्विप् चेति" पा० क्विप्। एवं द्रविणोदःशब्दः सकारान्तो भवति। तथा द्राविणोदसाः प्रवादा भवन्तीति नैरुक्तो व्यवहार उपपद्यते। अतो द्रविणोदस् शब्दो भिन्नवाक्यत्वे स्वार्थे प्रथमा एकवाक्यत्वे तु व्यत्ययेन द्वितीया भवति। द्रविणस इत्यत्रापि वाक्यभेदपक्षे द्रविणसः सोमस्येत्यर्थे न उकारोपजनश्छान्दसः। आद्युदात्तत्वं तु नियमेन स्थितम्। कर्तृत्वविशेषणत्वे नैकवाक्यत्वपक्षे तु क्यजन्तात् क्विप्। अतो लोपादि पूर्ववत्। अत्र द्रविणोदाशब्दोऽपि तत्रार्थे। २अग्नौ च "द्रविणं धनमित्युक्तं बलञ्च द्रविणं स्मृतम्। ददाति तद्भवानेव द्रविणोदास्ततोभवान्" वराहपु०।

**द्रवित्नु** लि० द्रु–गतौ इत्नु। गतिशीले "शविष्ठस्य द्रवित्नवः" ऋ०८।७४।१४। "रथमस्तस्य द्रवित्नुम्" ऋ० १०।११।६

**द्रव्य** न० द्रोर्विकारः द्रोरिति यत् "द्रव्यञ्च भव्ये" पा०निपा०। १पित्तले २वित्ते ३पृथिव्यादिषु नवसु। ४विलेपने न० ५भेषजे ६द्रुमविकारे ७तत्सम्बन्धिनि च लि० मेदि०। ८जतुनि ९विनये न० हेम०। १०मद्ये न० राजनि०। द्रव्यलक्षणमौलुक्यशब्दे १५८६ पृ० उक्तं तद्भेदाश्च नव "पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा इति द्रव्याणि" कणा० सू० "इदानीमपवर्गभागितया सर्वपदार्थाश्रयतया च प्रथमोद्दिष्टस्य द्रव्यपदार्थस्य विभागं विशेषोद्देशञ्च कुर्वन्नाह पृथिव्याप इति इतिकारोऽवधारणार्थः तेन नवैव द्रव्याणि नाधिकानि न न्यूनानि वेत्यर्थः। ननु विभागबलादेव न्यूनाधिकसङ्ख्याव्यवच्छेदसिद्धौ किमितिकारेणेति चेत् उद्देशमात्रपरतयाऽपि सूत्रसम्भवे विभागतात्पर्य्यस्फोरणार्थतयैवेतिकाराभिधानात् सुवर्णादीनामीश्वरस्य चात्रैवान्तर्भावात् अन्धकारस्य चाधिकत्वे नाशङ्कामानस्याभावत्वव्युत्पादनादेतदध्यवसेयम्। असमासकरणन्तु सर्वेषां प्राधान्यप्रदर्शनाय" उपस्कृ०। वैद्यके तु तस्य पञ्चविधतोक्ता यथा "रसोगुणस्तथा वीर्य्यं विपाकः शक्तिरेव च। पञ्चानां यः समाहारस्तद्द्रव्यमिति कीर्त्त्यते" इति भिषग्वराः। प्रकारान्तरेण च पञ्चविधम् अत्यन्तकठिनकठिनार्द्रकोमलद्रवद्रव्यभेदात्। द्रव्यभेदानां गुणवत्तावधिश्च वैद्यकोक्तः यथा "गुणहीनं भवेद्वर्षादूर्द्ध्वं तद्रूपमौषधम्। मासद्वयात् तथा

चूर्णं लभते हीनवीर्य्यताम् । हीनत्वं गुटिका लेहो लभते वत्सरात् परम् । हीनाः स्युर्घृततैलाद्याश्चतुर्मासाधिकास्तथा । घृततैलाद्या इति योगविशेषणम् । चतुर्मासाधिकाः संवत्सरादुपरि चत्वारो मासा अधिका येषां ते । "घृतमब्दात् परं पक्वं हीनवीर्य्यत्वमाप्नुयात् । तैलं पक्वमपक्वं वा चिरस्थायि गुणाधिकम् । तदपि षोड़शमासाभ्यन्तरे पक्वतैलं गुणाधिकं बोद्धव्यम् । "ओषध्यो लघुपाकाः स्युर्निर्वीर्य्या वत्सरात्परम्" । ओषध्यो धान्यादयः । लघुपाकाः शीघ्रपाकाः "निर्वीर्य्याः स्युर्गुणैर्युक्ता आसवा धातवोरसाः" ।

सामान्यतो वैद्यकेऽभिनवानामेव गुणवत्ता घृतादीनां पक्वानामपि केषाञ्चित् गुणवत्ता उक्ता यथा "द्रव्याण्यभिनवान्येव प्रशस्तानि क्रियाविधौ । ऋते गुडघृतक्षौद्रधान्यकृष्णाविडङ्गतः" रसादिमध्येऽपि द्रव्यस्यैव सुश्रुते प्रधानत्वमुक्तं यथा

"अथातो द्रव्यरसगुणवीर्य्यविपाकविज्ञानीयमध्यायं व्याख्यास्यामः । केचिदाचार्य्या ब्रुवते द्रव्यं प्रधानं कस्माद्व्यवस्थितत्वादिह खलु द्रव्यं व्यवस्थितं न रसादयो यथाऽऽमे फले ये रसादयस्ते पक्वे न सन्ति । नित्यत्वाच्च नित्यं हि द्रव्यमनित्या गुणा यथा कल्कादिप्रविभागः स एव सम्पन्नरसगन्धो व्यापन्नरसगन्धो वा भवति । स्वजात्यवस्थानाच्च यथा हि पार्थिवं द्रव्यमन्यभावं न गच्छत्येवं शेषाणि । पञ्चेन्द्रियग्रहणाच्च पञ्चभिरिन्द्रियैर्गृह्यते द्रव्यं न रसादयः । आश्रयत्वाच्च द्रव्यमाश्रिता रसादयो भवन्ति । आरम्भसामर्थ्याच्च द्रव्याश्रित आरम्भो यथा विदारिगन्धादिमाहृत्य सङ्क्षुद्य विपचेदित्येवमादिषु न रसादिष्वारम्भः । शास्त्रप्रामाण्याच्च शास्त्रे हि द्रव्यं प्रधानमुपदेशे हि योगानां यथा मातुलुङ्गाग्निमन्थौ चेति न रसादय उपदिश्यन्ते । क्रमापेक्षितत्वाच्च रसादीनां रसादयो हि द्रव्यक्रममपेक्षन्ते यथा तरुणे तरुणाः सम्पूर्णे सम्पूर्णा इति । एकदेशसाध्यत्वाच्च द्रव्याणामेकदेशतोऽपि व्याधयः साध्यन्ते यथा महावृक्षक्षीरेणेति तस्माद्द्रव्यं प्रधानं द्रव्यलक्षणन्तु क्रियागुणवत्समवायिकारणमिति । नेत्याहुरन्ये रसास्तु प्रधानं कस्मादागमादागमो हि शास्त्रमुच्यते शास्त्रे हि रसा अधिकृता यथा रसायत्त आहार इति तस्मिंश्च प्राणाः । उपदेशाच्चोपदिश्यन्ते हि रसा यथा मधुराम्ललवणा वातं शमयन्ति । अनुमानाच्च रसेन ह्यनुमीयते द्रव्यं यथा मधुरमिति । ऋषिवचनाच्च ऋषिवचनं वेदो यथा किञ्चिदिज्यार्थं मधुरमाहरेदिति । तस्माद्रसाः प्रधानं रसेषु गुणसंज्ञा । रसलक्षणमन्यत्रोपदेक्ष्यामः । नेत्याहुरन्ये । वीर्य्यं प्रधानमिति कस्मात्तद्वशेनौषधकर्म्मनिष्पत्तेः । इहौषधकर्म्माण्यूर्द्ध्वाधोभागोभयभागसंशोधनसंशमनसंग्राहकाग्निदीपनप्रपीड़नलेखनवृंहणरसायनवाजीकरणश्वयथुकरणविलयनदहनदारणमादनप्राणघ्नविषप्रशमनानि वीर्य्यप्राधान्याद्भवन्ति । तच्च वीर्य्यं द्विविधमुष्णं शीतं चाग्नीषोमीयत्वाज्जगतः । केचिदष्टविधमाहुरुष्णं शीतं स्निग्धं रूक्षं विशदं पिच्छिलं मृदु तीक्ष्णं चेत्येतानि वीर्य्याणि स्वबलगुणोत्कर्षाद्रसमभिभूयात्मकर्म कुर्व्वन्ति यथा तावन्महत्पञ्चमूलं कषायं तिक्तानुरसं वातं शमयेदुष्णवीर्य्यत्वात् तथा कुलत्थः कषायः कटुकः पलाण्डुः स्नेहभावाच्च । मधुरश्चेक्षुरसो वातं वर्द्धयति शीतवीर्य्यत्वात् । कटुका पिप्पली पित्तं शमयति मृदुशीतवीर्य्यत्वादम्लमामलकं लवणं सैन्धवञ्च । तिक्ता काकमाची पित्तं वर्द्धयत्युष्णवीर्य्यत्वान्मधुरा मत्स्याश्च । कटुकं मूलकं श्लेष्माणं वर्द्धयति स्निग्धवीर्य्यत्वात् । अम्लं कपित्थं श्लेष्माणं शमयति रूक्षवीर्य्यत्वान्मधुरं क्षौद्रञ्च । तदेतन्निदर्शनमात्रमुक्तम्" भवन्ति चात्र "ये रसा वातशमना भवन्ति यदि तेषु वै । रौक्ष्यलाघवशैत्यानि न ते हन्युः समीरणम् । ये रसाः पित्तशमना भवन्ति यदि तेषु वै । तैक्ष्ण्यौष्ण्यलघुताश्चैव न ते तत्कर्म्मकारिणः । ये रसाः श्लेष्मशमना भवन्ति यदि तेषु वै । स्नेहगौरवशैत्यानि बलासं वर्द्धयन्ति ते" तस्माद्वीर्य्यं प्रधानमिति । नेत्याहुरन्ये । विपाकः प्रधानमिति कस्मात् सम्यङ्मिथ्याविपाकत्वादिह सर्व्वद्रव्याण्यभ्यवहृतानि सम्यक् विपक्वानि गुणं दोषं वा जनयन्ति । तत्राहुरन्ये प्रतिरसं पाक इति । केचित्त्रिविधमिच्छन्ति मधुरमम्लं कटुकं चेति तत्तु न सम्यक् भूतगुणादागमाच्चाम्लो विपाको नास्ति पित्तं हि विदग्धमम्लतामुपैत्यग्नेर्मन्दत्वात् । यद्येवं लवणोऽप्यन्यः पाको भविष्यति श्लेष्मा हि विदग्धो लवणतामुपैति मधुरो मधुरस्याम्लोऽम्लस्यैवं सर्व्वेषामिति केचिदाहुर्दृष्टान्तं चोपदिशन्ति यथा तावत् क्षीरस्थालीगतमभिपच्यमानं मधुरमेव स्यात्तथा शालियवमुद्गादयः प्रकीर्णाः स्वभावमुत्तरकालेऽपि न परित्यजन्ति तद्वदिति । केचिद्वदन्त्यबलवन्तो बलवतां वशमायान्ती-

न्त्येवमनवस्थितत्वादविज्ञान एव। आगमे हि द्विविध एव पाको मधुरः कटुकश्च तयोर्मधुराख्यो गुरुः कटुकाख्यो लघुरिति तत्र पृथिव्यप्तेजोवाय्वाकाशानां द्वैविध्यं भवति गुणसाधर्म्याद्गुरुता लघुता च पृथिव्यापश्च गुर्व्यः शेषाणि लघूनि तस्माद्द्विविध एव पाक इति। भवन्ति चात्र। द्रव्येषु पच्यमानेषु येष्वम्बुपृथिवीगुणाः। निर्वर्त्तन्तेऽधिकास्तत्र पाको मधुर उच्यते। तेजोऽनिलाकाशगुणाः पच्यमानेषु येषु तु। निर्वर्त्तन्तेऽधिकास्तत्र पाकः कटुक उच्यते। पृथक्त्वदर्शिनामेष वादिनां वादसंग्रहः। चतुर्णामपि सामर्थ्यमिच्छन्त्यत्र विपश्चितः। तद्द्रव्यमात्मना किञ्चित्किञ्चिद्वीर्य्येण सेवितम्। किञ्चिद्रसविपाकाभ्यां दोषं हन्ति करोति वा। पाको नास्ति विना वीर्य्याद्वीर्य्यं नास्ति विना रसात्। रसो नास्ति विना द्रव्याद्द्रव्यं श्रेष्ठमतः स्मृतम्। जन्म तु द्रव्यरसयोरन्योऽन्यापेक्षकं स्मृतम्। अन्योऽन्यापेक्षकं जन्म यथा स्याद्देहदेहिनोः। वीर्य्यसंज्ञा गुणा येऽष्टौ तेऽपि द्रव्याश्रयाः स्मृताः। रसेषु न वसन्त्येते निर्गुणास्तु गुणाः स्मृताः। द्रव्ये द्रव्याणि यस्माद्धि विपच्यन्ते न षड्रसाः। श्रेष्ठं द्रव्यमतो ज्ञेयं शेषा भावास्तदाश्रयाः। अमीमांस्यान्यचिन्त्यानि प्रसिद्धानि स्वभावतः। आगमेनोपयोज्यानि भेषजानि विचक्षणैः। प्रत्यक्षलक्षणफलाः प्रसिद्धाश्च स्वभावतः। नौषधीर्हेतुभिर्विद्वान् परीक्षेत कथञ्चन। सहस्रेणापि हेतूनां नाम्बष्ठादिर्विरेचयेत्। तस्मात्तिष्ठेत्तु मतिमानागमेन तु हेतुषु"। "वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते। द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन व्यवस्थितः" हरिणा परिभाषिते ११वस्तुपदार्थे च। "स्वार्थो द्रव्यञ्च लिङ्गञ्च संख्या कर्मादिरेव च" हरिः लिङ्गसंख्यान्वयित्वेन सत्वरूपतया च तस्य तथात्वम्। "क्रिया न युज्यते लिङ्गक्रियानाधारकारकैः। असत्वभूतता तस्या इयमेवावधार्य्यताम्" हरिः। क्रियानाधारकारकत्वैर्न युज्यते इत्यर्थः। तेन लिङ्गसंख्याकारकत्वशून्यत्वं सत्वत्वमेव द्रव्यत्वम्। "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति भाष्यम्। द्रव्यविशेषहस्तादौ उच्छिष्टदोषादिशुद्धिभेद उक्तः कूर्मपु० "उच्चावचान्नपानेषु द्रव्यहस्तो भवेन्नरः। भूमौ निःक्षिप्य तद्द्रव्यमाचम्याभ्युक्षयेत्तु तत्। तैजसं वै समादाय यद्युच्छिष्टो भवेद्द्विजः। भूमौ निःक्षिप्य तद्द्रव्यमाचम्याभ्युक्षयेत्तु तत्। यद्यद्द्रव्यं करे धृत्वा भवेदुच्छेषणान्वितः। अनिधायैव तद्द्रव्यमाचान्तः शुचितामियात्। वस्त्रादिषु विकल्पः स्यात् न तत्स्पृष्ट्वाचमेदिह। अरण्येऽनुदके रात्रौ चौरव्याघ्राकुले पथि। कृत्वा मूत्रपुरीषं वा द्रव्यहस्तो न दुष्यति"।

**द्रव्यक** त्रि० द्रव्यं हरति वहति आवहति वा द्रव्य+कन्। १द्रव्यहारके २तद्वाहके ३द्रव्यावाहके च।

**द्रव्यकल्क** पु० "द्रव्यकल्कः पञ्चधा स्यात् कल्कं चूर्णं रसस्तथा। तैलमष्टिः क्रमाज्ज्ञेयं यथोत्तरगुणं प्रिये!" वैद्यकोक्ते कल्कादिपञ्चके।

**द्रव्यगण** पु० ६त०। सुश्रुतोक्ते ओषधिविशेषाणां सप्तत्रिंशन्मितानां गणभेदे ते च तत्र दर्शिता यथा "द्रव्यसंग्रहणीयमध्यायं व्याख्यास्यामः

अथातः समासेन सप्तत्रिंशद्द्रव्यगणा भवन्ति। तद्यथा। विदारीगन्धा विदारी सहदेवा विश्वदेवा श्वदंष्ट्रा पृथक्पर्णी शतावरी सारिवा कृष्णसारिवा जीवकर्षभकौ महासहा क्षुद्रसहा बृहत्यौ पुनर्नवैरण्डो हंसपदी वृश्चिकाल्यृषभी चेति। "विदारीगन्धादिरयं गणः पित्तानिलापहः। शोषगुल्माङ्गमर्दोर्द्ध्वश्वासकासविनाशनः१। आरग्वधमदनगोपघोण्टाकुटजपाठाकण्टकीपाटलामूर्वेन्द्रयवसप्तपर्णनिम्बकुरुण्टकदासीकुरुण्टकगुडूचीचित्रकशार्ङ्गेष्टाकरञ्जद्वयपटोलकिराततिक्तकानि सुषवी चेति। आरग्वधादिरित्येष गणः श्लेष्मविषापहः। मेहकुष्ठज्वरवमीकण्डूघ्नो व्रणशोधनः२। वरुणार्त्तगलशिग्रुतर्कारीमेषशृङ्गीपूतीकनक्तमालमोरटाग्निमन्थसैरीयकद्वयबिम्बीवसुकवसिरचित्रकशतावरीबिल्वाजशृङ्गीदर्भा बृहतीद्वयञ्चेति। वरुणादिर्गणो ह्येष कफमेदोनिवारणः। विनिहन्ति शिरःशूलं गुल्माभ्यन्तरविद्रधीन्३। वीरतरुसहचरद्वयदर्भवृक्षादनीगुन्द्रानलकुशकाशाश्मभेदकाग्निमन्थमोरटावसुकवसिरभल्लूककुरुण्टकेन्दीवरकपोतवङ्काः श्वदंष्ट्रा चेति। वीरतर्वादिरित्येष गणो वातविकारनुत्। अश्मरीशर्करामूत्रकृच्छ्राघातरुजापहः४। सालसाराजकर्णखदिरकदरकालस्कन्धक्रमुकभूर्जमेषशृङ्गीतिनिशचन्दनशिंशपाशिरीषासनधवार्जुनतालशाकनक्तमालपूतीकाश्वकर्णागुरूणि कालीयकञ्चेति। सालसारादिरित्येष गणः कुष्ठविनाशनः। मेहपाण्ड्वामयहरः कफमेदोविशोषणः५। रोध्रसावररोध्रपलाशकुटन्नटाशोकफञ्जीकट्फलैलवालुकशल्लकीजिङ्गिनीकदम्बसालाः कदली चेति। एष रोध्रादिरित्युक्तो मेदःकफहरो गणः।

योनिदोषहरः स्तन्यो व्रण्यो विषविनाशनः६। अर्कालर्ककरञ्जद्वयनागदन्तीमयूरकभार्गीरास्नेन्द्रपुष्पीक्षुद्रश्वेतामहाश्वेतावृश्चिकाल्यलवणास्तापसवृक्षश्चेति। अर्कादिको गणो ह्येष कफमेदोविषापहः। कृमिकुष्ठप्रशमनो विशेषाद्व्रणशोधनः७। सुरसाश्वेतसुरसाफणिज्झकार्जकभूस्तृणसुगन्धकसुमुखकालमालकासमर्दक्षवकखरपुष्पाविडङ्गकट्फलसुरसीनिर्गुण्डीकुलाहलोन्दुरुकर्णिकाफञ्जीप्राचीबलाकाकमाच्यो विषमुष्टिकश्चेति। सुरसादिर्गणो ह्येष कफहृत् कृमिसूदनः। प्रतिश्यायारुचिश्वासकासघ्नो व्रणशोधनः८। मुष्ककपलाशधवचित्रकमदनवृक्षशिंशपावज्रवृक्षास्त्रिफला चेति। मुष्ककादिर्गणो ह्येष मेदोघ्नः शुक्रदोषहृत्। मेहार्शःपाण्डुरोगघ्नः शर्कराश्मरिनाशनः९। पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेरमरिचहस्तिपिप्पलीहरेणुकैलाजमोदेन्द्रयवपाठाजीरकसर्षपमहानिम्बफलहिङ्गुभार्गीमधुरसातिविषावचाविडङ्गानि कटुरोहिणी चेति। पिप्पल्यादिः कफहरः प्रतिश्यायानिलारुचीः निहन्याद्दीपनो गुल्मशूलघ्नश्चामपाचनः१०। एलातगरकुष्ठमांसीध्यामकत्वक्पत्रनागपुष्पप्रियङ्गुहरेणुकाव्याघ्रनखशुक्तिचण्डास्थौणेयकश्रीवेष्टकचोचचोरकवालकगुग्गुलुसर्जरसतुरुष्ककुन्दुरुकाऽगुरुस्पृक्कोशीरभद्रदारुकुङ्कुमानि पुन्नागकेशरञ्चेति। एलादिको वातकफौ निहन्याद्विषमेव च। वर्णप्रसादनः कण्डूपिडकाकोठनाशनः११। वचामुस्तातिविषाभयाभद्रदारूणि नागकेशरञ्चेति १२। हरिद्रादारुहरिद्राकलशीकुटजबीजानि मधुकं चेति१२। एतौ वचाहरिद्रादी गणौ स्तन्यविशोधनौ। आमातीसारशमनौ विशेषाद्दोषपाचनौ १२।१३। श्यामामहाश्यामात्रिवृद्दन्तीशङ्खिनीतिल्वककम्पिल्लकरम्यकक्रमुकपत्रश्रेणीगवाक्षीराजवृक्षकरञ्जद्वयगुडूचीसप्तलाच्छगलान्त्रीसुधाः सुवर्णक्षीरी चेति। उक्तः श्यामादिरित्येष गणो गुल्मविषापहः। आनाहोदरविड्भेदी तथोदावर्त्तनाशनः१४। बृहतीकण्टकारिकाकुटजफलपाठा मधुकञ्चेति। पाचनीयो बृहत्यादिर्गणः पित्तानिलापहः। कफारोचकहृल्लासमूत्रकृच्छ्ररुजापहः१५। पटोलचन्दनकुचन्दनमूर्वागुडूचीपाठाः कटुरोहिणी चेति। पटोलादिर्गणः पित्तकफारोचकनाशनः। ज्वरोपशमनो व्रण्यश्छर्दिकण्डूविषापहः १६। काकोलीक्षीरकाकोलीजीवकर्षभकमुद्गपर्णीमाषपर्णीमेदामहामेदाच्छिन्नरुहाकर्कटशृङ्गीतुगाक्षीरीपद्मकप्रपौण्डरीकर्द्धिवृद्धिमृद्वीकाजीवन्त्यो मधुकञ्चेति। काकोल्यादिरयं पित्तशोणितानिलनाशनः। जीवनो बृंहणो वृष्यः स्तन्यश्लेष्मकरस्तथा१७। ऊषकसैन्धवशिलाजतुकासीसद्वयहिङ्गूनि तुत्थकञ्चेति। ऊषकादिः कफं हन्ति गणो मेदोविशोषणः। अश्मरीशर्करामूत्रकृच्छ्रगुल्मप्रणाशनः१८। सारिवामधुकचन्दनकुचन्दनपद्मककाश्मरीफलमधूकपुष्पाण्युशीरञ्चेति। सारिवादिः पिपासाघ्नो रक्तपित्तहरो गणः। पित्तज्वरप्रशमनो विशेषाद्दाहनाशनः१९। अञ्जनरसाञ्जननागपुष्पप्रियङ्गुनीलोत्पलनलदनलिनकेशराणि मधुकञ्चेति। अञ्जनादिर्गणो ह्येष रक्तपित्तनिबर्हणः। विषोपशमनो दाहं निहन्त्याभ्यन्तरं तथा२०। परूषकद्राक्षाकट्फलदाडिमराजादनकतकफलशाकफलानि त्रिफला चेति। परूषकादिरित्येष गणोऽनिलविनाशनः। मूत्रदोषहरो हृद्यः पिपासाघ्नो रुचिप्रदः२१। प्रियङ्गुसमङ्गाधातकीपुन्नागरक्तचन्दनकुचन्दनमोचरसरसाञ्जनकुम्भीकस्रोतोऽञ्जनपद्मकेशरयोजनवल्ल्यो दीर्घमूला चेति २२। अम्बष्ठाधातकीकुसुमसमङ्गाकट्वङ्गमधुकबिल्वपेशिकासावररोध्रपलाशनन्दीवृक्षपद्मकेशराणि चेति २३। गणौ प्रियङ्ग्वम्बष्ठादी पक्वातीसारनाशनौ। सन्धानीयौ हितौ पित्ते व्रणानाञ्चापि रोपणौ२२।२३। न्यग्रोधोदुम्बराश्वत्थप्लक्षमधूककपीतनककुभाम्रकोशाम्रचोरकपत्रजम्बूद्वयपियालमधुकरोहिणीवञ्जुलकदम्बबदरीतिन्दुकीसल्लकीरोध्रसावररोध्रभल्लातकपलाशा नन्दीवृक्षश्चेति। न्यग्रोधादिर्गणो व्रण्यः संग्राही भग्नसाधकः। रक्तपित्तहरो दाहमेदोघ्नो योनिदोषहृत्२४। गुडूचीनिम्बकुस्तुम्बुरुचन्दनानि पद्मकञ्चेति। एष सर्वज्वरान् हन्ति गुडूच्यादिस्तु दीपनः। हृल्लासारोचकवमीपिपासादाहनाशनः २५। उत्पलरक्तोत्पलकुमुदसौगन्धिककुवलयपुण्डरीकाणि मधुकञ्चेति। उत्पलादिरयं दाहपित्तरक्तविनाशनः। पिपासाविषहृद्रोगच्छर्दिमूर्च्छाहरो गणः२६। मुस्ताहरिद्रादारुहरिद्राहरीतक्यामलकविभीतककुष्ठहैमवतीवचापाठाकटुरोहिणीशार्ङ्गेष्टातिविषाद्राविडीभल्लातकानि चित्रकश्चेति। एष मुस्तादिको नाम्ना गणः श्लेष्मनिषूदनः। योनिदोषहरः स्तन्यशोधनः पाचनस्तथा२७। हरितक्यामलकविभीतकानि त्रिफला। त्रिफला कफपित्तघ्नी मेहकुष्ठविनाशिनी। चक्षुष्या दीपनी चैव विषमज्वरनाशिनी२८। पिप्पलीमरिचशृङ्गवेराणि त्रिकटुकम्। त्र्यूषणं कफमेदोघ्नं मेहकुष्ठत्वगामयान्। निहन्याद्दीपनं गुल्म-

पीनसाग्न्यल्पतामपि २९। आमलकीहरीतकीपिप्पल्यश्चित्रकश्चेति। आमलक्यादिरित्येष गणः सर्वज्वरापहः। चक्षुष्यो दीपनो वृष्यः कफारोचकनाशनः ३०। त्रपुसीसताम्ररजतकृष्णलोहसुवर्णानि लोहमलश्चेति। गणस्त्रप्वादिरित्येष गरक्रिमिहरः परः। पिपासाविषहृद्रोगपाण्डुमेहहरस्तथा ३१। लाक्षारेवतकुटजाऽश्वमारकट्फलहरिद्राद्वयनिम्बसप्तच्छदमालत्यस्त्रायमाणा चेति। कषायस्तिक्तमधुरः कफपित्तार्त्तिनाशनः। कुष्ठक्रिमिहरश्चैव दुष्टव्रणविशोधनः ३२। पञ्च पञ्चमूलान्यत ऊर्द्ध्वं वक्ष्यामः। तत्र त्रिकण्टकबृहतीद्वयपृथक्पर्ण्यो विदारीगन्धा चेति कनीयः १। कषायतिक्तमधुरं कनीयः पञ्चमूलकम्। वातघ्नं पित्तशमनं वृंहणं बलवर्द्धनम् ३२। बिल्वाग्निमन्थटुण्टुकपाटलाकाश्मर्य्यश्चेति महत् २। "सतिक्तं कफवातघ्नं पाके लघ्वग्निदीपनम्। मधुरानुरसञ्चैव पञ्चमूलं महत् स्मृतम् ३३। अनयोर्दशमूलमुच्यते। "गणः श्वासहरो ह्येष कफपित्तानिलापहः। आमस्य पाचनश्चैव सर्वज्वरविनाशनः ३४। विदारीसारिवारजनीगुडूच्योऽजशृङ्गी चेति वल्लीसंज्ञः ३। करमर्दत्रिकण्टकसैरीयकशतावरीगृध्रनख्य इति कण्टकसंज्ञः ४। रक्तपित्तहरौ ह्येतौ शोफत्रयविनाशनौ। सर्वमेहहरौ चैव शुक्रदोषविनाशनौ ३५।३६ कुशकाशनलदर्भकाण्डेक्षुका इति तृणसंज्ञकः ५। मूत्रदोषविकारञ्च रक्तपित्तं तथैव च। अन्त्यः प्रयुक्तः क्षीरेण शीघ्रमेव विनाशयेत्। एषां वातहरावाद्यावन्त्यः पित्तविनाशनः। पञ्चकौ श्लेष्मशमनावितरौ परिकीर्त्तितौ" ३७त्रिवृतादिकमन्यत्रोपदेक्ष्यामः। "समासेन गणा ह्येते प्रोक्तास्तेषान्तु विस्तरम्। चिकित्सितेषु वक्ष्यामि ज्ञात्वा दोषबलाबलम्। एभिर्लेपान् कषायांश्च तैलं सर्पींषि पानकान्। प्रविभज्य यथान्यायं कुर्वीत मतिमान् भिषक्। धूमवर्षानिलक्लेदैः सर्वर्त्तुष्वनभिद्रुते। ग्राहयित्वा गृहे न्यस्येद्विधिनौषधसंग्रहम्। समीक्ष्य दोषभेदांश्च गणान् मिश्रान् प्रयोजयेत्। पृथङ्मिश्रान् समस्तान्वा गणं वा व्यस्तसंहतम्"।

**द्रव्यगुण** पु॰ द्रव्यस्य गुणः प्रतिपाद्यतया यत्र। द्रव्याणां गुणज्ञापके ग्रन्थभेदे यथा भावप्र॰ द्रव्याणां गुणज्ञापकभाग इत्यादि।

**द्रव्यपति** पु॰ द्रव्यभेदानां पतिः। वृ॰सं॰ ४१अ॰ उक्ते द्रव्यभेदानां महार्घतादिप्रयोजके पत्यौ मेषादिराशौ यथा "ये येषां द्रव्याणामधिपतयो राशयः समुद्दिष्टाः। मुनिभिः शुभाशुभार्थं तानागमतः प्रवक्ष्यामि। वस्त्राविककुतपानां मसूरगोधूमरालकयवानाम्। स्थलसम्भवौषधीनां कनकस्य च कीर्त्तितो मेषः। गवि वस्त्रकुसुमगोधूमशालियवमहिषसुरभितनयाः स्युः। मिथुनेऽपि धान्यशारदवल्लीशालूककर्पासाः। कर्किणि कोद्रवकदलीदूर्वाफलकन्दपत्रचोचानि। सिंहे तुषधान्यरसाः सिंहादीनां त्वचः सगुडाः। षष्ठेऽतसीकलायाः कुलत्थगोधूममुद्गनिष्पावाः। सप्तमराशौ माषा गोधूमाः सर्षपाः सयवाः। अष्टमराशाविक्षुः सैक्यं लोहान्यजाविकं चापि। नवमे तु तगरलवणाम्बरास्त्रतिलधान्यमूलानि। मकरे तरुगुल्माद्यं सैक्यं गुडवर्णकाञ्चलोहानि। कुम्भे सलिलजफलकुसुमरत्नचित्राणि रूपाणि। मीने कपालसम्भवरत्नान्यम्बूद्भवानि वज्राणि। स्नेहाश्च नैकरूपा व्याख्याता मत्स्यजातं च। राशेश्चतुर्दशाष्टमसप्तनवपञ्चमस्थितो जीवः। द्व्येकादशदशपञ्चाष्टमेषु शशिजश्च वृद्धिकरः। षट्सप्तमगो हानिं वृद्धिं शुक्रः करोति शेषेषु। उपचयसंस्थाः क्रूराः शुभदाः शेषेषु हानिकराः। राशेर्यस्य क्रूराः पीडास्थानेषु संस्थिता बलिनः। तत्प्रोक्तद्रव्याणां महार्घता दुर्लभत्वं च। इष्टस्थाने सौम्या बलिनो येषां भवन्ति राशीनाम्। तद्द्रव्याणां वृद्धिः सामार्घ्यमदुर्लभत्वं च। गोचरपीडायामपि राशिर्बलिभिः शुभग्रहैर्दृष्टः। पीडां न करोति तथा क्रूरैरेवं विपर्यासः"।

**द्रव्यमय** त्रि॰ द्रव्य+प्राचुर्य्ये मयट्। साधनतया द्रव्यप्रचुरे यज्ञे द्रव्यसाधनके यज्ञादौ "द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे। स्वाध्यायज्ञानयज्ञाश्च इत्युपक्रमे "श्रेयान् द्रव्यमयाद् यज्ञात् ज्ञानयज्ञः परन्तप!। सर्वं कर्माखिलं पार्थ! ज्ञाने परिसमाप्यते" गीता।

**द्रव्यविशेष** पु॰ सुश्रुतोक्ते धर्मविशेषेण द्रव्याणां पार्थिवत्वादिविशेषे यथा

"अथातो द्रव्यविशेषविज्ञानीयमध्यायं व्याख्यास्यामः। पृथिव्यप्तेजोवाय्वाकाशानां समुदायाद्द्रव्याभिनिर्वृत्तिरुत्कर्षस्त्वभिव्यञ्जको भवतीदं पार्थिवमिदमाप्यमिदं तैजसमिदं वायव्यमिदमाकाशीयमिति। तत्र स्थूलसान्द्रमन्दस्थिरखरगुरुकठिनगन्धबहुलमीषत्कषायं प्रायशो मधुरमिति पार्थिवं तत् स्थैर्य्यबलगौरवसङ्घातोपचयकरं विशेषतश्चाधोगतिस्वभावमिति। शीतस्तिमितस्निग्धगुरुसरसान्द्रमृदुपिच्छिलरसबहुलमीषत्कषायाम्ललवणं म-

मधुररसप्रायमाप्यं तत् स्नेहनप्रह्लादनक्लेदनबन्धनविष्यन्दनकरमिति। उष्णतीक्ष्णसूक्ष्मरूक्षखरलघुविशदं रूपगुणबहुलमीषदम्ललवणं कटुकरसप्रायं विशेषतश्चोर्द्ध्वगतिस्वभावमिति तैजसं तद्दहनपचनदारणतापनप्रकाशनप्रभावर्णकरमिति। सूक्ष्मरूक्षखरशिशिरलघुविशदं स्पर्शबहुलमीषत्तिक्तं विशेषतः कषायमिति वायवीयं तद्वैशद्यलाघवग्लपनविरूक्षणविचारणकरमिति। श्लक्ष्णसूक्ष्ममृदुव्यवायिविविक्तमव्यक्तरसं शब्दबहुलमाकाशीयं तन्मार्दवशौषिर्य्यलाघवकरमिति"।

**द्रव्यशुद्धि** स्त्री ६त०। द्रव्याणां प्रक्षालनादिना मलादेरपनयने। द्रव्यविशेषस्य शुद्धिभेदा २७६ पृष्ठादौ दृश्याः "प्रेतशुद्धिं प्रवक्ष्यामि द्रव्यशुद्धिं तथैव च" मनुः

**द्रष्टव्य** त्रि० दृश–तव्य। साक्षात्कर्त्तव्ये "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" वृ०उ०।

**द्रष्टृ** त्रि० दृश–तृच्। १दर्शके २साक्षात्कारके ३प्रकाशके च "नान्योतोऽस्ति द्रष्टा" श्रुतिः "द्रष्टारोव्यवहाराणां साक्षिणश्च तएव हि" याज्ञ०। "दृश्यद्रष्टृसंयोगो हेयहेतुः" योगसू० "चक्षुर्जन्यमनोवृत्तिर्विद्युक्ता रूपभासिका। दृष्टिरित्युच्यते द्रष्टा दृष्टिकर्त्तेति चोच्यते शब्दार्थचि० धृतवाक्यम्।

सांख्यमते यथा पुरुषस्य द्रष्टृत्वं तथा सां०सू० निरणायि यथा "द्रष्टृत्वादिरात्मनः करणत्वमिन्द्रियाणाम्" द्रष्टृत्वादिपञ्चकं वक्तृत्वादिपञ्चकं सङ्कल्पयितृत्वं चात्मनः पुरुषस्य, दर्शनादिवृत्तौ करणत्वं त्विन्द्रियाणामित्यर्थः। ननु द्रष्टृत्वश्रोतृत्वादिकं कदाचिदनुभवे पर्य्यवसानात् पुरुषस्याविकारिणोऽपि घटतां वक्तृत्वादिकं क्रियामात्रं तत्कथं कूटस्थस्य घटतामिति चेन्न अयस्कान्तवत् सान्निध्यमात्रेण दर्शनादिवृत्तिकर्त्तृत्वस्यैवात्र द्रष्टृत्वादिशब्दार्थत्वात्। यथा हि महाराजः स्वयमव्याप्रियमाणोऽपि सैन्येन करणेन योद्धा भवत्याज्ञामात्रेण प्रेरकत्वात् तथा कूटस्थोऽपि पुरुषश्चक्षुराद्यखिलकरणैर्द्रष्टा वक्ता सङ्कल्पयिता चेत्येवमादिर्भवति संयोगाख्यसान्निध्यमात्रेणैव तेषां प्रेरकत्वादयस्कान्तमणिवदिति। कर्त्तृत्वं चात्र कारकचक्रप्रयोक्तृत्वं करणत्वं क्रियाहेतुव्यापारवत्त्वं तत्साधकतमत्वं वा कुठारादिवत्। यत्तु शास्त्रेषु पुरुषे दर्शनादिकर्त्तृत्वं निषिध्यते तदनुकूलकृतिमत्त्वं तत्तत्क्रियावत्त्वं वा। तथा चोक्तम् "अत आत्मनि कर्त्तृत्वमकर्त्तृत्वं च संस्थितम्। निरिच्छत्वादकर्त्तासौ कर्त्ता सन्निधिमात्रतः" इति अतएव कारकचक्रप्रयोक्तृतायन्त्रारोहरूपतया द्रष्टृत्ववक्तृत्वादिकमात्मनो नित्यमिति श्रूयते। "न द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते न श्रोतुःश्रुतेर्विपरिलोपो विद्यत इत्यादिनेति"। ननु प्रमाणविभागे प्रत्यक्षादिवृत्तीनामेव करणत्वमुक्तमत्र कथमिन्द्रियस्योच्यत इति चेन्न अत्र दर्शनादिरूपासु चक्षुरादिद्वारकबुद्धिवृत्तिष्वेवेन्द्रियाणां करणत्ववचनात्। तत्र पुरुषनिष्ठे बोधाख्यफले वृत्तीनां करणत्वस्योक्तत्वादिति" प्र० भाष्यम्।

सां०का० तत्त्वकौमुद्योस्तथैव व्यवस्थापितं यथा "तस्माच्च विपर्य्यासात्सिद्धं साक्षित्वमस्य पुरुषस्य। कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्त्तृभावश्च" "तत्र चेतनत्वेन अविषयत्वेन च साक्षित्वद्रष्टृत्वे दर्शिते चेतनोहि द्रष्टा भवति नाचेतनः। साक्षी च दर्शितविषयो भवति यस्मै प्रदर्श्यते विषयः स साक्षी यथा हि लोके अर्थिप्रत्यर्थिनौ विवादविषयं साक्षिणे दर्शयतः एवं प्रकृतिरपि स्वचरितं विषयं पुरुषाय दर्शयतीति पुरुषः साक्षी। न चाचेतनोविषयो वा शक्योविषयं दर्शयितुमिति चैतन्यादविषयत्वाच्च भवति साक्षी अतएव द्रष्टापि भवति" त०कौ० न्यायमते च दर्शनादिज्ञानाश्रयत्वादात्मनोद्रष्टृत्वं सुव्यक्तमिति भेदः।

**द्रह** पु० ह्रद+पृषो०। अगाधजले ह्रदे हेमच०।

**द्रह्यत्** त्रि० दृंह–शतृ वेदे निपा०। दृढीकुर्वति। "द्रपत् सोमं पाहि द्रह्यदिन्द्र!" ऋ०२।११।१५ "द्रह्यत् दृंहते रिदं रूपं दृढीकुर्वत्" भा०।

**द्रा** कुत्से पलायने अदा०अक० अनिट्। द्राति अद्रासीत्। दद्रौ पलायनं बहुलायासेन गतिः तत्र सक०। "मतयोदद्रुः" ऋ०१।६२।११। द्रापयति "एष वै तं द्रापयति यं दिद्रापयिषति" शत० ब्रा०६।१।१।२४। अप+अपसरणे "अप द्राह्यवीरहः" अथ०६।१४।२ "माप द्रान्वरातयः" ६।१२९।१

नि+मेध्यानाडीसंयोगरूपनिद्रायाम् अक०। "तदा निदद्रावुपपल्वलं खगः" नैष०।

प्र+प्रकर्षेण पलायने प्रद्राणः

**द्राक्** अव्य० द्रा–बा०कु। द्रुते शीघ्रे झटितीत्यर्थे अमरः "द्राक्पर्य्यन्तकपालसम्पुटमिलदित्यादि" वीरच० "धनस्य द्रागवियुक्तता" कामन्द० "साक्षात्कृति कृतिषु निरस्यानन्दमिन्द्रादिषु द्राक्" नैष० ९स०।

द्राघ काङ्क्षायां भ्वा० पर० सक० सेट् इदित् । द्राङ्घति अद्राङ्घीत् । दद्राङ्घ दद्राङ्घतुः ।

द्राक्षा स्त्री द्राघि-अ बा० नलोपः । अद्वीकायां गोस्तन्यां (किसमिस) अमरः । "द्राक्षा स्वाद्वी फला मधुरसा मृद्वीका हारहूरा च" "द्राक्षा स्वादुफला प्रोक्ता तथा मधुरसापि च । मृद्वीका हारहूरा च गोस्तनी चापि कीर्त्तिता" भावप्र० । द्राक्षापक्वा सरा शीता चक्षुष्या बृंहणी गुरुः । स्वादुपाकरसा स्वर्या तुवरा सृष्टमूत्रविट् । कोष्ठमारुतकृद् वृष्या कफपुष्टिरुचिप्रदा । हन्ति तृष्णाज्वरश्वासवातवातास्रकामलान् । कृच्छ्रास्रपित्तसम्मोहदाहशोषमदात्ययान् । आमा साऽल्पगुणा गुर्वी सैवाम्ला रक्तपित्तकृत् । वृष्या स्यात् गोस्तनी द्राक्षा गुर्वी च कफपित्तहृत् । अबीजाऽन्या स्वल्पतरा गोस्तनीसदृशी गुणैः । द्राक्षा पर्वतजा लघ्वी साऽम्ला श्लेष्माम्लपित्तकृत् । द्राक्षा कर्कशजा याहक् ताहशी करमर्दिका" इति भावप्र० तस्याः फलम् अण् हरीत० लुप् । तत्फलेऽपि स्त्री । "द्राक्षे ! हृष्यन्ति के त्वामवेत्य ! मधुरमपि गीतगो० "आसीर्वाजिवरतासु द्राक्षावलयभूमिषु" रघुः "पुन्नागतालीबकुलं द्राक्षारचनं क्वचित्" हरिवं० ११४अ० आग्नायिकभावात् परस्य द्राक्षाशब्दस्य तत्पुरुषे चूर्णा० आद्युदात्तता । प्रस्थशब्दे परे आकारादित्वात् पूर्वपदमाद्युदात्तम् द्राक्षाप्रस्थः । कर्का०मतोर्मस्य न वः । द्राक्षामान् ।

द्राक्षाघृत न० द्राक्षामिश्रणेन पक्वं घृतम् । "पुराणसर्पिषः प्रस्थो द्राक्षार्धप्रस्थसाधितः । कामलागुल्मपाण्डुर्तिज्वरमेहोदरापहः" चक्रदत्तोक्ते घृतभेदे

द्राख शोषणे सक० अलमर्थे अक०भ्वा०पर० सेट् । द्राखति अद्राखीत् । ऋदित् णिचि चङि अदद्राखत् त । दद्राख अर्थे बधेऽपि ।

द्राघ आयासे शक्तौ श्रमे च भ्वा०पर० अक० सेट् । द्राघति अद्राघीत् । ऋदित् णिचि चङि अदद्राघत् त । दद्राघ केचित् अस्य इदित्त्वमपीच्छन्ति द्राङ्घति अद्राङ्घीत् ।

द्राघि नामधातुः दीर्घीकरणे दीर्घं करोति दीर्घ+कृतौ णिच्-द्राघादेशः सक० उभ० सेट् । द्राघयति ते अदिद्राघत् त । "द्राघयन्ति हि मे शोकं स्मर्यमाणागुणास्तव" भट्टिः

द्राघिमन् पु० दीर्घस्य भावः इमनिच् द्राघादेशः । दीर्घत्वे "वासांसि च द्राघिमवन्त्य दूष्यः" भट्टिः "वर्षिमा च मे द्राघिमा च मे" यजु०१८।४

द्राघिष्ठ त्रि० अतिशयेन दीर्घः इष्ठन् द्राघादेशः । अतिदीर्घे ईयसुन् द्राघीयस् तदर्थे त्रि० स्त्रियां ङीप् ।

द्राघमन् पु० द्राघिमन्+वेदे पृषो० इकारस्याकारः । दीर्घत्वे "दीर्घं द्राघ्मा सुरभि भूत्वस्मे" ऋ०१०।७०।४ तृतीयास्थाने आच् अनोऽल्लोपे रूपसिद्धिः द्राघ्मा द्राघिम्ना इत्यर्थः ।

द्राड विभेदे भ्वा०आ० सक०सेट् । द्राडते अद्राडिष्ट । दद्राडे

द्राण त्रि० द्रा-कर्त्तरि क्त तस्य नः । १सुप्ते २पलायिते च । भावे क्त । ३स्वप्ने पलायने च न० अमरः ।

द्राप पु० द्रा-णिच्-पुक् अच् । १पङ्के २आकाशे ३कपर्दिनि ४मूर्खे च शब्दकल्पतरुः ।

द्रापि त्रि० द्रापयति कुत्सितां गतिं प्रापयति पापिनम् द्रा-णिच् पुक् इन् । कुत्सितगतिप्रापके रुद्रे "द्रापे ! अन्धसस्पते ! दरिद्र ! नीललोहित !" यजु०१६।४७। २कवचे च "बिभ्रद्द्रापिं हिरण्ययं वरुणो वस्त निर्णिजम्" ऋ०१।२५।१३ "द्रापिं कवचम्" भा०

द्रामिल पु०द्रमिलो देशोऽभिजनोऽस्य अण् । १चाणक्ये हेमच० २पित्रादिक्रमेण तद्देशवासिनि त्रि० बहुत्वे अणो लुक् । द्रमिलाः । [तापे च ।

द्राव पु० द्रु-गतौ स्रुतौ भावे घञ् । १गतौ २द्रवणे ३अनुताके च ।

द्रावक पु० द्रवति चन्द्रकरसम्पर्कात् द्रु-ण्वुल् । १चन्द्रकान्तमणौ २विदग्धे ३चोरके च मेदि० ४सिक्थे जारे शब्दमाला । द्रावयति द्रु-णिच् ण्वुल् । ५द्रवकारके ६हृदयग्राहिणि त्रि० धरणिः । ७रसभेदे टङ्कणे पु० शब्दमाला । दन्ताकायां स्त्री टापि अत इत्वम् शब्दरत्ना० ८प्रौढादौषधभेदे पु० । ०१सिक्थके न० राजनि० ।

द्रावककन्द पु० द्रावकः कन्दोऽस्य । तैलकन्दे राजनि० ।

द्रावकर न० द्रावं द्रवं करोति स्वर्णादिकं धातुसम्पर्केण कृ-ताच्छील्ये ट । स्वेतटङ्कणे राजनि० अच् । द्रावकार द्रवकारके त्रि० ।

द्रावण न० द्रावयति जलमलं स्वसंयोगात् द्रु-णिच् युच् । १कतकफले (निर्मालि) रत्नमाला । २पलायनकारके त्रि० । "त्रैलोक्यद्रावणं क्रूरं दुराचारं बलाबलम्" (रावणम्) हरिवं० ४अ० ।

द्रावयित्नु त्रि० द्रु-णिच्-इत्नुच् तुकरणेनैवेटिद्रूपसिद्धौ इत्नुचकरणं बा०अन्येभ्योऽपि इत्नुच् भवतीति ज्ञापितम् । द्रावणशीले "सूर्यस्येव रश्मयो द्रावयित्नवः" ऋ०६। ६६।६।

द्राविड त्रि० द्रविडोदेशोऽभिजनोऽस्य अण् । पित्रादिक्रमेण द्रविडदेशवासिनि । बहुषु अणो लुक् । द्रविडाः क्वचिदार्षे न लुक् । "कर्णाटाश्चैव तैलङ्गा गुर्जरा राष्ट्रवासिनः । आन्ध्राश्च द्राविडाः पञ्च विन्ध्यदक्षिणवासिनः" स्कन्दपु० ।

द्राविडक न० द्रविडे भवः अण् संज्ञायां कन् । १विट्खदिरे (जियतपर्णी) ख्याते २वेधमुख्यके पु० अमरः ।

द्राविड़भूतिक पु० द्राविडी भूतिरस्यास्तियस्य कप् । विट्खदिरे शब्दरत्ना० ।

द्राविडी स्त्री द्रविडे भवा अण् ङीप् । एलायां राजनि० ।

द्राह जागरे भ्वा० आत्म० अक० सेट् । द्राहते अद्राहिष्ट दद्राहे ऋदित् णिच् चङि अदद्राहत् त ।

द्राह्यायण पु० द्रह्यस्य गोत्रापत्यं युवा अण् वुनि फक् । सामगानां कल्पसूत्रकारके ऋषिभेदे ।

द्रु गतौ भ्वा० पर० सक० अनिट् । द्रवति स्वार्थे चङ् अदुद्रुवत् । णिचि चङि तु अदि(दु)द्रवत् त । दुद्रुवे । गतिश्चेह संयोगानुकूलव्यापारः द्रवद्रव्याणां दूरप्रसरणरूपं स्यन्दनं च "द्रवत्वात् स्यन्दनम्" कणा० सूत्रम् "स्यन्दनं द्रव्यत्वादसमवायिकारणादुत्पद्यते । तथा हि पतितानामपां बिन्दूनां परस्परं संयोगेन महत् जलस्रोतोयज्जायते तस्य यत् स्यन्दनं दूरप्रसरणं तत् द्रवत्वादसमवायिकारणादुत्पद्यते गुरुत्वान्निमित्तकारणात् पतु समवायिकारणेषु" उप०वृत्तिः णिचः सनि दि(दु)द्रावयिषति । तत्र गतौ "समुद्रमेवाभिमुखा द्रवन्ति" गीता "ततः किरीटी सहसा पाञ्चालान् समरेऽद्रवत्" भा०आ०५४ ७८श्लो० "तं दुद्रावाद्रिणा कपिः" भट्टिः

द्रु अनुतापे स्वा०पर० सक० अनिट् । द्रुणोति अद्रौषीत् । बधे च "स भक्षणात् चकारारीन् दुद्राव च हतानवत्" भट्टिः ।

द्रु पु०द्रवत्यूर्द्धं द्रु—बा० डु । १वृक्षे २शाखायाञ्च । ३गतौ स्त्री । "अदादीनाय षड्भागं द्रुमांसमधुसर्पिषाम्" मनुः द्रुमयः । ४वृक्षविकारे न० "द्रुणा दक्षूतिमूर्दिम" ऋ०१। १६।१।१ "द्रुणो द्रुमविकारस्य" भा० विकारे प्रकृतिशब्दः ततश्च तत्स्थः तच्छब्द इति च तत्र न्यायोक्तिः । ५द्रवयुक्ते त्रि० । "द्रुणा सधस्थमासदत्" ऋ० ८।१।२ "द्रुणा द्रोणकलशेन" भा० तत्र पुंस्त्वमपि "आ तु षिञ्च हरिमीं द्रोरुपस्थे" ऋ०१०।१०१।१० "द्रोर्द्रुमविकारस्य" भा० [किम्बे० । देवदारुवृक्षे अमरः ।

द्रुकिलिम न०किलति किल—श्वैत्यक्रीडनयोः बा०किमच् ।

द्रुघण पु० द्रुः हन्यः संसारगतिर्वा हन्यतेऽनेन द्रु—हन करणे अप् घनादेशो वत्वञ्च । १मुद्गरे लौहमुद्गरे खड्गधारादीनां मुद्गराकारे लौहमयास्त्रभेदे २कुठारे ३ब्रह्मणि च मेदि० ४भूमिचम्पके शब्दचन्द्रिका पूर्वपदात् संज्ञायामिति णत्वे विहिते शब्दकल्पद्रुमे दन्त्यमध्यतोक्तिः प्रामादिकी ५द्रुममये घने च "काष्ठाया मध्ये द्रुघणं शयानम्" ऋ०१०।१०२।८ "द्रुघणं द्रुममयघनम्" भा० छान्दसोऽसंज्ञात्वेऽपि णत्वम् । [द्रुद्रोह । द्रुडः ।

द्रुड मज्जने तु०कु०पर० अक० सेट् । द्रुडति अद्रोडीत् ।

द्रुण कुटिलीभवने तु० पर० अक० सेट् कुटादि । द्रुणति अद्रुणीत् । दुद्रोण । अतो कुटिलीकरणे हिंसायाञ्च सक० भा० ।

द्रुण न० द्रुणति हिनस्ति कुटिलीभवति वा द्रुण—क । धनुषि २खड्गे च हेमच०३वृश्चिके ४भृङ्गे च पुंस्त्री० स्त्रियां जातित्वात् ङीष् । ५पिशुने त्रि० शब्दमाला ।

द्रुणस त्रि० द्रुरिव दीर्घा नासिकाऽस्य अच् समा० नसादेशः पूर्वपदात् संज्ञायां णत्वम् । दीर्घनासायुक्ते शब्दस्तोमे द्रुणस इति दन्त्यान्तोक्तिः प्रमादोत्थाः ।

द्रुणह पु० द्रुणं खड्गं जहाति त्यक्ताक्रमस्थानतोऽपसारणात् हा—क । खड्गपिधाने कोशे हारा० ।

द्रुणा स्त्री द्रुण्यते कुटिलीक्रियतेऽनया द्रुण—घञर्थे क । ज्यायां मौर्व्याम् हेमच० ।

द्रुणि स्त्री द्रोणी—पृषो० । १द्रोण्यां भरतः वा ङीप् । २कर्णजलौकसि ३कच्छप्यां ५काष्ठाम्बुवाहिन्याञ्च भरतः ।

द्रुत त्रि० द्रु—क्त । १जातद्रवे द्रवत्वयुक्ते सुवर्णादौ "द्रुतं द्रुतं वह्निसमागतं मनस्" भट्टिः "द्रुतपातकाम्यनिलसंयुमतः" माघः । २शीघ्रे न० ३शीघ्रतायुक्ते त्रि० । "सकल्मेन्द्रद्रुतपातितार्गलाः" काव्यप्र० "द्रुतपदमिति मा वयस्य ! यासीः" माघः । ४विडाले मेदि०

द्रुतपद न०द्रुतं शीघ्रगामि पदम् । १शीघ्रगामिपदे । ६त० । २तद्युक्ते त्रि० । "द्रुतपदं भवति नभनयावेत्" इत्तर० उक्ते द्वादशाक्षरपादके वर्णवृत्तभेदे ।

द्रुतमध्या स्त्री "भनयमोजगतं गुरुणी चेद् युजि च नजौ ज्यगुतौ द्रुतमध्या" छन्दो० उक्ते अर्द्धसमाख्ये वर्णवृत्तभेदे ।

द्रुतविलम्बित न० "द्रुतविलम्बितमाह नभौ भरौ" इत्तर० उक्ते द्वादशाक्षरपादके १वर्णवृत्तभेदे "किञ्चिद् द्रुतञ्च विलम्बितञ्च किञ्चित् । २किञ्चिच्छीघ्रे किञ्चिद्विलम्बिते च "तरणिजापुलिने नवबल्लवीपरिषदा सह केलिकुतूहलात् । द्रुतविलम्बितचारुविहारिणं हरिमहं हृदयेन सदा वहे" । छन्दोमञ्जरी ।

द्रुति स्त्री द्रु—भावे क्तिन् । १द्रवे २गतौ च ।

द्रुनख पु॰ द्रुरिव नख इव न संघात्वे ऽपि चलम्। १कण्टके त्रिका॰

द्रुपद पु॰ पञ्चालानामधिपे यज्ञसेनापरनामके नृपभेदे "गच्छताद्यैव पाञ्चालान् द्रुपदस्य निवेशने। स्वयंवरो महांस्तत्र भविता सुमहाधनः। एवमुक्ताः प्रयातास्ते पाण्डवा जनमेजय!। राज्ञा दक्षिणपाञ्चालान् द्रुपदेनाभिरक्षितान्" भा॰आ॰ १८४अ॰ स च मरुद्गणांशाज्जातः यथाह भा॰आ॰६७अ॰ "सात्यकिः सत्यसन्धस्तु योऽसौ वृष्णिकुलोद्वहः। पक्षात् स जज्ञे मरुतां देवानामरिमर्दनः। द्रुपदश्चापि राजर्षिस्तत एवाभवद्गणात्। मानुषे नृपलोकेऽस्मिन् सर्वशस्त्रभृतांवरः" स च भरद्वाजसखस्य पृषतनृपस्य पुत्रः यथोक्तं भा॰आ॰ १३०अ॰ "भरद्वाजसखा चासीत् पृषतो नाम पार्थिवः। तस्यापि द्रुपदो नाम तदा समभवत् सुतः। स नित्यमाश्रमं गत्वा द्रोणेन सह पार्थिवः। चिक्रीडाध्ययनञ्चैव चकार क्षत्रियर्षभः। ततो व्यतीते पृषते स राजा द्रुपदोऽभवत्। पाञ्चालेषु महाबाहुरुत्तरेषु नरेश्वर!" तस्य द्रोणेन बालसख्ये ऽपि पश्चात् वैरं जातं यथोक्तं भा॰आ॰१३१अ॰ "ततो द्रुपदमासाद्य भारद्वाजः प्रतापवान्। अब्रवीत् पार्थिवं राजन्! सखायं विद्धि मामिह। इत्येवमुक्तः सख्या स प्रीतिपूर्वं जनेश्वरः। भारद्वाजेन पाञ्चाल्यो नामृष्यत वचोऽस्य तत्। स क्रोधामर्षजिह्मभ्रूः कषायीकृतलोचनः। ऐश्वर्यमदसम्पन्नो द्रोणं राजाऽब्रवीदिदम्। द्रुपद उवाच। अकृतेयं तव प्रज्ञा ब्रह्मन्नातिसमञ्जसी। यन्मां ब्रवीषि प्रसभं सखा तेऽहमिति द्विज। न हि राज्ञामुदीर्णानामेवं भूतैर्नरैः क्वचित्। सख्यं भवति मन्दात्मन्! श्रिया हीनैर्धनच्युतैः। सौहृदं मे त्वया ह्यासीत् पूर्वं सामर्थ्यबन्धनम्। न सख्यमजरं लोके हृदि तिष्ठति कस्यचित्। कालो ह्येनं विहरति क्रोधो वैनं हरत्युत। मैवं जीर्णमुपास्स्व त्वं सख्यं भवत्वपाकृधि। आसीत् सख्यं द्विजश्रेष्ठ! त्वया मेऽर्थनिबन्धनम्। न दरिद्रो वसुमतो नाविद्वान् विदुषः सखा। न शूरस्य सखा क्लीवः सखिपूर्वं किमिष्यते। ययोरेव समं वित्तं ययोरेव समं श्रुतम्। तयोर्विवाहः सख्यञ्च न तु पुष्टविपुष्टयोः। नाश्रोत्रियः श्रोत्रियस्य नारथी रथिनः सखा। नाराजा पार्थिवस्यापि सखिपूर्वं किमिष्यते। वैशम्पायन उवाच। द्रुपदेनैवमुक्तस्तु भारद्वाजः प्रतापवान्। मुहूर्तं चिन्तयित्वा तु मन्युनाऽभिपरिप्लुतः। स विनिश्चित्य मनसा पाञ्चाल्यं प्रति बुद्धिमान्। जगाम कुरुमुख्यानां नगरं नागसाह्वयम्" द्रोणश्चार्जुनादीन् शिष्यान् कृत्वा तद्द्वारा द्रुपदं पराजित्य तस्यार्द्धराज्यार्द्धहरणपूर्वकं द्रुपदेन पुनः सख्यं यथास्थितमकरोत् यथाह भा॰आ॰१३८अ॰ "ते यज्ञसेनं द्रुपदं गृहीत्वा रणमूर्द्धनि। उपाजह्रुः सहामात्यं द्रोणाय भरतर्षभ!। भग्नदर्पं हृतधनं तं तथा वशमागतम्। स वैरं मनसा ध्यात्वा द्रोणो द्रुपदमब्रवीत्। विमृद्य तरसा राष्ट्रं पुरन्ते मृदितो मया। प्राप्य जीवं रिपुवशं सखिपूर्वं किमिष्यते। एवमुक्त्वा प्रहस्यैवं किञ्चित् स पुनरब्रवीत्। मा भैः प्राणभयाद्वीर! क्षमिणो ब्राह्मणा वयम्। आश्रमे क्रीडितं यत्तु त्वया बाल्ये मया सह। तेन संवर्द्धितः स्नेहः प्रीतिश्च क्षत्रियर्षभ!। प्रार्थयेयं त्वया सख्यं पुनरेव जनाधिप!। वरं ददामि ते राजन्! राज्यस्यार्द्धमवाप्नुहि। अराजा किल नो राज्ञः सखा भवितुमर्हति। अतः प्रयतितं राज्ये यज्ञसेन! मया तव। राजासि दक्षिणे कूले भागीरथ्याहमुत्तरे। सखायं मां विजानीहि पाञ्चाल! यदि मन्यसे। द्रुपद उवाच। अनाश्चर्यमिदं ब्रह्मन्! विक्रान्तेषु महात्मसु। प्रीये त्वयाहं त्वत्तश्च प्रीतिमिच्छामि शाश्वतीम्। वैशम्पायन उवाच। एवमुक्तः स तं द्रोणो मोक्षयामास भारत!। सत्कृत्य चैनं प्रीतात्मा राज्यार्द्धं प्रत्यपादयत्। माकन्दीमथ गङ्गायास्तीरे जनपदायुताम्। सोऽध्यावसद्दीनमनाः काम्पिल्यञ्च पुरोत्तमम्। दक्षिणांश्चापि पाञ्चालान् यावच्चर्मण्वतीं नदीम्। द्रोणेन चैवं द्रुपदः परिभूयाथ पालितः। क्षात्रेण च बलेनास्य नापश्यत् स पराजयम्। हीनं विदित्वा चात्मानं ब्राह्मेण स बलेन तु। पुत्रजन्म परीप्सन् वै पृथिवीमन्वसञ्चरत्। अहिच्छत्रञ्च विषयं द्रोणः समभिपद्यत। एवं राजन्नहिच्छत्रा पुरी जनपदायुता। युधि निर्जित्य पार्थेन द्रोणाय प्रतिपादिता" इत्यादि। २द्रोःकाष्ठस्य देशभेदे "आदित्यं द्रुपदेषु बद्धम्" ऋ॰१।२४।१२ "द्रोः काष्ठस्य पदेषु यूपस्य प्रदेशविशेषेषु" भा॰ द्रुमयं काष्ठमयं पदम्। ३काष्ठपादुकायाम् "द्रुपदादिव मुमुचानः" यजु॰२०।२० "द्रुः सारसम्बयं पदं पादुका तस्मात् मुमुचानः पृथग्भवन्। यथा पादुकादोषैरसम्बद्धोभवति" वेददी॰ द्रुपदं तच्छब्दोऽस्त्यस्याऽऽर्षि अच्। ४द्रुपदशब्दयुक्तायामृचि स्त्री "गायत्र्युष्णिहं तु द्रुपदां वा मतं जपेत्"

षा॰त॰। साच ऋक् "द्रुपदादिव मुमुचानः" इत्यादिका यजु॰२०।२॰ "द्रुपदान्तु ततोऽजपत्ता जलमादाय पाणिना" काशी॰ ३५अ॰

**द्रुपदात्मज** पु॰ ६त॰। १द्रुपदस्य राज्ञो नन्दने शिखण्डिनि २धृष्टद्युम्ने ३यात्रसेन्यां स्त्री। शिखण्डी च स्त्रीरूपेण पूर्वं जातः पश्चात् स्थूणयक्षवरेण पुंस्त्वलाभ तत्कथा भा॰उद्यो॰१९२।९३ अ॰ दृश्या "एवमेव महाराज! स्त्रीपुमान् द्रुपदात्मजः। स सम्भूतः कुरुश्रेष्ठ! शिखण्डी भरतर्षभ!" इत्यन्त ग्रन्थे द्रुपदशब्दे दर्शिते द्रोणद्रुपदयो वैरे जाते तन्मूलनिर्वेदात् द्रुपदस्य द्रोणान्तकपुत्रेच्छया याजोपयाजाभ्यां यज्ञस्य करणे अग्निमध्यात् धृष्टद्युम्न कृष्णयोरुत्पत्तिकथा भा॰आ॰१६७अ॰

"द्रोणाद्विभिष्टमासाद्य भवन्तं ब्रह्मवित्तमम्। द्रोणान्तकमहं पुत्रं लभेयं युधि दुर्जयम्। तत् कर्म कुरु मे याज! वितराम्यर्बुदं गवाम्। तथेत्युक्त्वा तु तं याजो याज्यार्थमुपकल्पयन्। सुवर्णं इति चाकाममुपयाजमचोदयत्। याजो द्रोणविनाशाय प्रतिजज्ञे तथा च सः। ततस्तस्य नरेन्द्रस्य उपयाजो महातपाः। आचख्यौ कर्म वैतानं तदा पुत्रफलाय वै। स च पुत्रो महावीर्यो महातेजा महाबलः। इष्यते यद्विधो राजन्! भविता ते तथाविधः। भारद्वाजस्य हन्तारं सोऽभिसन्धाय भूपतिः। आजह्रे तत्तथा सर्वं द्रुपदः कर्मसिद्धये। याजस्तु हवनस्यान्ते देवीमाह्वापयत्तदा। प्रैहि मां राज्ञि पृषति! मिथुनं त्वामुपस्थितम्। राज्ञ्युवाच। अवलिप्तं मुखं ब्रह्मन्! दिव्यान् गन्धान् बिभर्मि च। सुतार्थे नोपलब्धास्मि तिष्ठ याज मम प्रिये। याज उवाच। याजेन श्रपितं हव्यमुपयाजाभिमन्त्रितम्। कथं कामं न सम्पध्यात् सा त्वं विप्रैहि तिष्ठ वा। ब्राह्मण उवाच। एवमुक्त्वा तु याजेन हुते हविषि संस्कृते। उत्तस्थौ पावकात्तस्मात् कुमारो देवसन्निभः। ज्वालावर्णो घोररूपः किरीटी वर्म चोत्तमम्। बिभ्रत् सखड्गः सशरो धनुष्मान् विनदन्मुहुः। सोऽध्यारोहद्रथवरं तेन च प्रययौ तदा। ततः प्रणेदुः पाञ्चालाः प्रहृष्टाः साधु साध्विति। हर्षाविष्टांस्ततश्चैतान्नेयं सेहे वसुन्धरा। भयापहो राजपुत्रः पाञ्चालानां यशस्करः। राज्ञः शोकापहो जात एष द्रोणवधाय वै। इत्युवाच महद्भूतमदृश्यं खेचरं तदा। कुमारी चापि पाञ्चाली वेदीमध्यात् समुत्थिता। सुभगा दर्शनीयाङ्गी स्वसिता-यतलोचना। श्यामा पद्मपलाशाक्षी नीलकुञ्चितमूर्द्धजा। ताम्रतुङ्गनखी सुभ्रूश्चारुपीनपयोधरा। मानुषं विग्रहं कृत्वा साक्षादमरवर्णिनी। नीलोत्पलसमो गन्धो यस्याः क्रोशात् प्रधावति। या बिभर्त्ति परं रूपं यस्या नास्त्युपमा भुवि। देवदानवयक्षाणामीप्सिता देवरूपिणी। तां चापि जातां सुश्रोणीं वागुवाचाशरीरिणी। सर्वयोषिद्वरा कृष्णा निनीषुः क्षत्रियान् क्षयम्। सुरकार्य्यमियं काले करिष्यति सुमध्यमा। अस्या हेतोः कौरवाणां महदुत्पत्स्यते भयम्। तं श्रुत्वा सर्वपाञ्चालाः प्रणेदुः सिंहसङ्घवत्। न चैतान् हर्षसम्पूर्णानियं सेहे वसुन्धरा। तौ दृष्ट्वा पार्षती याजं प्रपेदे वै सुतार्थिनी। न वै मदन्यां जननीं जानीयातामिमाविति। तथेत्युवाच तां याजो राज्ञः प्रियचिकीर्षया। तयोश्च नामनी चक्रुर्द्विजाः सम्पूर्णमानसाः। धृष्टत्वादतिधृष्णुत्वाद्धर्म्माद्युत्सम्भवादपि। धृष्टद्युम्नः कुमारोऽयं द्रुपदस्य भवत्विति। कृष्णेत्येवाब्रुवन् कृष्णां कृष्णाभूत् सा हि वर्णतः। तथा तन्मिथुनं जज्ञे द्रुपदस्य महामखे। धृष्टद्युम्नन्तु पाञ्चाल्यमानीय स्वं निवेशनम्। उपाकरोदस्त्रहेतोर्भारद्वाजः प्रतापवान्। अमोक्षणीयं दैवं हि भावि मत्वा महामतिः। तथा तत् कृतवान् द्रोण आत्मकीर्त्त्यनुरक्षणात्"। द्रुपदसुतादयोऽप्यत्र।

**द्रुपदी** स्त्री द्रुरिव दीर्घः पादोऽस्याः कुम्भपद्या॰ ङीपि पद्भावः। द्रुमतुल्यपादयुक्तायां स्त्रियाम्।

**द्रुपदादित्य** पु॰ काशीस्थे द्रौपद्याः स्थापिते आदित्यलिङ्गभेदे तदाविर्भावकथा काशीख॰ ४९अ॰

"आकर्णय मुने! पूर्वं पञ्चवक्त्रो हरेः स्वयम्। पृथिव्यां पञ्चधा भूत्वा प्रादुरासीज्जनर्द्दितः। उमापि च जगद्धात्री द्रुपदस्य महीभुजः। यज्ञतो वह्निकुण्डाच्च प्रादुरासीऽतिसुन्दरी। पञ्चापि पाण्डुतनयाः साक्षाद्रुद्रवपुर्द्धराः। अवतेरुरिह क्ष्मायां दुष्टसंहारकारिणः। नारायणोऽपि कृष्णत्वं प्राप्य तत्राहवाऽकरोत्। दुर्वृत्तदलशमनः सद्वृत्तस्थितिकारकः। प्रसन्नाः सूर्य्यविष्णोन्ते पाण्डवेयाः पृथक् पृथक्। उदयास्तमयौ तस्मिन् सम्पदां विपदामपि। कदाचित्ते महावीरा भ्रातृभ्यप्रतिपादिताम्। विपत्तिमाप्य महतीं बभूवुः काननौकसः। पाञ्चाल्यपि च तत्पत्नी पतिव्यसनकर्षिता। धर्म्मं प्राप्य तन्वङ्गी ब्रध्नमाराधयद्ध्रुवम्। आराधितोऽथ सविता तया द्रुपदकन्यया। ददर्शी सपिधानाञ्च

त्वाविवामखदान्दरौ । उवाच च प्रसन्नात्मा भास्करो द्रुपदात्मजाम् । आराधयन्तीं भावेन सर्वत्र युधिमानघाम् । त्वाल्लैतया महाभागे ! यावन्तोऽर्थिनोजनाः । तावन्तस्तृप्तिमाप्स्यन्ति यावत्त्वं न भोक्ष्यसे । भुक्तायां त्वयि रिक्ता सा पूर्णभक्ता भविष्यति । स्थवद्दुर्ग्रामननिधिरिक्ताभक्ष्यप्रदायिनी । इत्थं वरमदा ब्रह्मः काम्यामादित्यतो मुने ! । अपरञ्च वरो दत्तस्तस्यै देवेन भास्वता । रविरुवाच । विश्वेशाद्दक्षिणे भागे यो मां त्वत्पुरतस्थितम् । आराधयिष्यति नरः क्षुद्बाधा तस्य नश्यति । अन्यच्च मे वरो दत्तो विश्वेशेन पतिव्रते ! । तपसा परितुष्टेन तं निशामय वच्मि ते । प्रायते ! त्वां समाराध्य यो मां द्रक्ष्यति मानवः । तस्य त्वं दुःखतिमिरमपानुद निजैः करैः । अतो धर्मप्रिये ! नित्यं प्राप्य विश्वेश्वराहरम् । काशीस्थितानां जन्तूनां नाशयाघ्यच सञ्चयम् । ये मामत्र भजिष्यन्ति मानवाः श्रद्धयान्विताः । त्वद्दरोद्यतपाणिस्य तेषां दास्यामि चिन्तितम् । भवतीं मत्समीपस्थां युधिष्ठिरपतिव्रताम् । विश्वेशाद्दक्षिणे भागे दण्डपाणेः समीपतः । येऽर्चयिष्यन्ति भावेन पुरुषा वा स्त्रियोऽपि वा । तेषां कदाचिन्नो भावि भयं प्रियवियोगजम् । न व्याधिजं भयं क्वापि न क्षुत्तृष्णासमुद्भवम् । द्रौपदीदर्शनतः काश्यां तव धर्मप्रियेऽनघे ! । इति दत्त्वा वरान्देव आदित्यः सर्वदः सताम् । धर्मसुमाराधयामास धर्मं द्रौपदीपाण्डवौ । आदित्यस्य कथामेतां द्रौपद्याराधितस्य वै । यः श्रोष्यति नरो भक्त्या तस्यैनः क्षयमेष्यति । स्कन्द उवाच । द्रौपदादित्यमाहात्म्यं संक्षेपात् कथितं मया । मयूखादित्यमाहात्म्यं शृणु इदानीं घटोद्भव !" "चतुर्थो द्रुपदादित्यः" काशीख० ४६अ० द्रौपदादित्योऽप्यत्र । "इदानीं द्रौपदादित्यं कथयिष्यामि तेऽनघ" तत्र ।

**द्रुम** पु० द्रुः शाखास्त्यस्य म । १वृक्षे अमरः । २पारिजाते ३कुबेरे च मेदि० । "बद्धपल्लवपुटाञ्जलिं द्रुमम्" रघुः । "तस्य तहर्द्धते नित्यं सिच्यमान इव द्रुमः" मनुः ४किम्पुरुषाधीशभेदे "द्रुमः किम्पुरुषेशश्च उपास्ते धनदेश्वरम्" भा०स० ४१०श्लो० "किंपुरुषाधिराजमिव मुनिजनस्टहीतजलकलशपरिषिच्यमानद्रुमम्" काद० कृष्णपत्न्यां रुक्मिण्यां जाते ५पुत्रभेदे "प्रद्युम्नः प्रथमं जज्ञे शंवरान्तकरः सुतः । द्वितीयश्चारुदेष्णश्च वृष्णिसिंहो महारथः । चारुभद्रश्चारुगर्भः सुदंष्ट्रो द्रुम एव च" हरिवं० १६२अ० । शिविवंशादौल्यांशजाते द्वापरयुगीये ६नृपभेदे "यस्तु राजन् क्रथविनामा दैत्यो यः परिकीर्त्तितः । द्रुम इत्यभिविख्यातः स आसीद्भुवि पार्थिवः" भा०आ० ६७अ० ७प्राचीने नृपवरभेदे "उशीनरः शतरथः कङ्को दुलिदुहो द्रुमः" भा०आ०१अ०प्राचीननृपोक्तौ ।

**द्रुमनख** पु० द्रुमस्य नख इव संस्थानेऽपि न खत्वम् । कण्टके शब्दरत्ना० ।

**द्रुममय** पु० त्रि० । द्रुम+विकारे मयट् । वृक्षविकारे यूपादौ

**द्रुममर** पु० द्रुमो म्रियतेऽनेन मृ—करणे अप् । कण्टके हारा० ।

**द्रुमव्याधि** पु० द्रुमस्य व्याधिरिव । द्रुमामये १लाक्षायाम् राजनि० । ६त० । २वृक्षरोगे च

**द्रुमशीर्ष** न० द्रुमस्य शीर्षमिव शीर्षमग्रमस्य । वृक्षतुल्याग्रयुक्ते कुट्टिमभेदे "कपिशीर्षं द्रुमशीर्षं तथा चाखोट शीर्षकम् । इति कुट्टिमभेदाः स्युः शाल्विकैः समुदाहृताः" शब्दर० । ६त० । २वृक्षाग्रे न० । [शब्दार्थक० ।

**द्रुमश्रेष्ठ** पु० द्रुमेषु श्रेष्ठः । १प्रधानवृक्षे २तालवृक्षे च

**द्रुमषण्ड** न० द्रुमाणां समूहः द्रुम+षण्डच् । वृक्षसमूहे "जलेषु जलजैर्मत्स्यं स्थलेषु स्थलजैरपि । पङ्कजैर्द्रुमषण्डैश्च सर्वतः प्रतिभूषितम्" हरिवं०६७अ०

**द्रुमसेन** पु० राजभेदे स च गविष्ठासुरांशाज्जातः द्वापरयुगीयो नृपभेदः "गविष्ठस्तु महातेजा यः प्रख्यातो महासुरः । द्रुमसेन इति ख्यातः पृथिव्यां सोऽभवन्नृपः" भा०आ० ६७अ० । [वृक्षस्य रोगे च ।

**द्रुमामय** पु० द्रुमस्यामय इव । लाक्षायां अमरः । ६त० ।

**द्रुमारि** पु०६त० । १हस्तिनि गजे राजनि०२वृक्षनाशकमात्रे च

**द्रुमाश्रय** त्रि० द्रुम आश्रयो यस्य । १वृक्षाश्रिते २सरटे पुंस्त्री० राजनि० । स्त्रियां जातित्वात् ङीष् ।

**द्रुमिणी** स्त्री द्रुमाणां समूहः खला०समूहे इनि ङीप् । वृक्षसमूहे ।

**द्रुमेश्वर** पु० द्रुमेषु ईश्वर इव श्रेष्ठत्वात् । १तालवृक्षे शब्दार्थक० । २द्रुमाणां श्रेष्ठे च "स्वर्गादिहानयित्वा च पारिजातं द्रुमेश्वरम्" हरिवं०१२६अ० । ३ओषधीशे चन्द्रे च

**द्रुमोत्पल** पु०द्रुमे उत्पलमिव पुष्पमस्य । कर्णिकारवृक्षे अमरः

**द्रुय** गतौ भ्वा०पर०सक० सेट् निघण्टुः । द्रुयति अद्रुयीत् दद्रुय । निघण्टौ द्रूयेति पाठान्तरम् ।

**द्रुवय** पु० "द्रौ च माने वयः" पा० द्रु+माने वय । माने अमरः ।

**द्रुसल्लक** पु० द्रुषु सल्लक इव । पियालवृक्षे शब्दर० ।

**द्रुह** अनिष्टचिन्तने दिवा०पर०सक०वेट् । द्रुह्यति अद्रोहीत्-

अध्रुक्षत् । द्रोहिता द्रोग्धा द्रोढा द्रोहिष्यति ध्रोक्ष्यति । ध्रुक् ध्रुट् । "क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः" पा० कोपविषयस्य सम्प्रदानता । भक्ताय द्रुह्यति । उपसृष्टस्य तस्य सम्प्रदानस्य कर्मता भक्तमभिद्रुह्यति । "न यजमानाय द्रुह्यति" शत०ब्रा० २।१।४।२८। "मा द्रुहेभ्यो महाभाग ! दीनेभ्यो द्रोग्धुमर्हसि !" भाग०६।४।७ "नाभिद्रुह्यति भक्तेभ्यः" भाग०४।२०।२ आर्षत्वात् न कर्मता । "मातरञ्चाभिद्रुह्यन्ति मनसा कर्मणा च ये" भा०शा० "भवांस्तानभिद्रुह्येत" कामन्दकी० अत्र तङ् असाधुः ।

द्रुह् त्रि० द्रुह–क्विप् । द्रोहकारके मित्रध्रुक् ट् ।

द्रुह त्रि० द्रुह–कर्तरि क । १द्रोहकारके "द्रुहा तन्वं गूहमाना" ऋ०७।१०४।१७। २पुत्रे शब्दार्थकल्प०। पुत्रस्य वित्ताय वा पितुरनिष्टचिन्तनस्य प्रायशः सम्भावनात् तथात्वम् । ३दुहितरि स्त्री ङीप् शब्दार्थकल्प० ।

द्रुहण पु० द्रुं संसारगतिं हन्ति–हन अच् "पूर्वपदात् संज्ञायाम्" पा० णत्वम् । ब्रह्मणि । द्रुहणेन निर्वृत्तादि अरीहणादि० वुञ् । द्रौहणक तन्निर्वृत्तादौ त्रि० ।

द्रुहिण पु० द्रुह्यति कामक्रोधादिभ्यो दुष्टेभ्यो वा द्रुह–बा० इनन् किच्च । चतुर्मुखे ब्रह्मणि अमरः "दुराचारा दानवीया द्राविणी द्रुहिणसुता" काशीख०२९अ० गङ्गासहस्रनाम । २विष्णौ च "महादेव ! देवस्तुत ! द्रुहिण ! अनन्त ! विश्वकर्मन् नस्त्रायस्वेति" हरिवं० २५९अ० ।

द्रुह्य त्रि० भिदादिगणे द्रुह्येति पाठात् द्रुह–न ण्यत् किन्तु क्यप् । द्रोहविषये तस्यापत्यम् शिवा०अण् द्रौह्य तदपत्ये बहुषु यस्कादि० अणो लुक् । द्रुह्या इत्येव ।

द्रुह्यु पु० ययातेर्ज्येष्ठस्य शर्मिष्ठायां जाते तनयभेदे तुर्वसुशब्दे दृश्यम् । तत्र ययातिशापकथा "ययातिरुवाच "द्रुह्यो ! त्वं प्रतिपद्यस्व वर्णरूपविनाशिनीम् । जरां वर्षसहस्रं मे यौवनं स्वन्ददस्व च । पूर्णे वर्षसहस्रे तु पुनर्दास्यामि यौवनम् । स्वं चादास्यामि भूयोऽहं पाप्मानं जरया सह । द्रुह्युरुवाच । न गजं न रथं नाश्वं जीर्णो भुङ्क्ते न च स्त्रियम् । वाग्भङ्गश्चास्य भवति तां जरां नाभिकामये । ययातिरुवाच । यत्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि । तस्माद्द्रुह्यो ! प्रियः कामो न ते सम्पत्स्यते क्वचित् । अश्वप्लवरथप्लवानामश्वानां स्याद्गतं न च । हस्तिनां पीठकानाञ्च गर्दभानान्तथैव च । वस्तानाञ्च गवाञ्चैव शिविकायास्तथैव च । उडुपप्लवनारो यत्र नित्यं भविष्यति । अराजभोजशब्दं तत्र प्राप्स्यसि सान्वयः" भा०आ०८४अ०।

द्रू गतौ वधे च स्वा०क्र्या० च उ०सक०सेट् । द्रूणोति द्रूणुते द्रूणाति द्रूणीते अद्रावीत् अद्रविष्ट । दुद्राव । दुद्रविथ । द्रविता द्रविष्यति ।

द्रू पु० द्रू–क्विप् । हिरण्ये उज्ज्वद० ।

द्रूघण पु० द्रु घन+पृषो० दीर्घः । मुद्गरे त्रिरूपकोषः ।

द्रूण पु० द्रू–हिंसायाम् बा० नक् । वृश्चिके शब्दार्थकल्प० ।

द्रेक स्वने उत्साहे च भ्वा०आत्म०अक० सेट् । द्रेकते अद्रेकिष्ट । ऋदित् णिचि चङि अदिद्रेकत् त ।

द्रेक पु० द्रेकाण+पृषो० । द्रेकाणे राशेस्तृतीयांशे ।

द्रेकाण पु० "स्वपञ्चनवमानां ये राशीनामधिपा ग्रहाः । एते द्रेकाणपाराशौ द्रेकाणास्त्रय एव हि" ज्यो०त०उक्ते राशेस्तृतीयभागे तदधिपाश्च उक्तदिशाज्ञेयाः । दृकाणशब्दे दृश्यम् ।

द्रेश्य त्रि० दृश–कर्मणि क्यप् वेदे पृषो० । दृश्ये "यत्तद्द्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रम्" मुण्डको० । "अद्रेश्यम् अदृश्यं सर्वेषां बुद्धीन्द्रियाणामगम्यमित्येतत् दृशेर्बहिःप्रवृत्तस्य पञ्चेन्द्रियद्वारकत्वात्" भा० ।

द्रेष्काण पु० द्रेकाण+पृषो० । द्रेकाणे राशेस्तृतीये भागे ।

द्रोघ त्रि० द्रुह–कर्मणि घञ् बा० वेदे कुत्वम् । द्रोहविषये "द्वेषसा द्रोघमित्रान्" ऋ०१०।८९।१२ "द्रोघमित्रान् द्रुग्धानि मित्राणि यैः ते द्रोघमित्राः" भा०। करणे घञ् । द्रोहसूचकवाक्यादौ "द्रोघाय चिद्वचस आनवाय" ऋ० ६।६२।९ "द्रोघाय अतिद्रोहात्मकाय वचसे" भा० "द्रोघवाचस्ते निर्ऋथं सचन्ताम्" ऋ०७।१०४।१४

द्रोण पु० द्रोणः कलशः उत्पत्तिस्थानत्वेनास्त्यस्य अच् । भारद्वाजे कौरवाणां धनुर्वेदाचार्ये तदुत्पत्तिकथा "गङ्गाद्वारं प्रति महान् बभूव भगवानृषिः । भरद्वाज इति ख्यातः सततं संशितव्रतः । सोऽभिषेक्तुं ततो गङ्गां पूर्वमेवागमन्नदीम् । महर्षिभिर्भरद्वाजो हविर्धाने चरन् पुरा । ददर्शाप्सरसां साक्षात् घृताचीमाप्लुतामृषिः । रूपयौवनसम्पन्नां मददृप्तां मदालसाम् । तस्याः पुनर्नदीतीरे वसनं पर्यवर्तत । व्यपकृष्टाम्बरां दृष्ट्वा तामृषिश्चकमे ततः । तत्र संसक्तमनसो भरद्वाजस्य धीमतः । ततोऽस्य रेतश्चस्कन्द तदृषिर्द्रोण आदधे । ततः समभवद्द्रोणः कलशे तस्य धीमतः । अध्यगीष्ट स वेदांश्च वेदाङ्गानि च सर्वशः । अग्निवेश्यं महाभागं

भारद्वाजः प्रतापवान्। सत्यपादप्रदाग्नेयमस्त्रमस्त्रविदां वरः। अग्नेस्तु जातः स मुनिस्ततो भरतसत्तम!। भारद्वाजं तदाग्नेयं महास्त्रं सत्यपादयत्" भा० आ० १२०अ०। (डाँडकाक) २दग्धकाके पुंस्त्री० स्त्रियां ङीष् मेदि० ३वृश्चिके राजनि०। चतुःशतधनुः परिमिते ४जलाशये "शतेन धनुर्भिः पुष्करिणी त्रिभिः दीर्घिका चतुर्भिर्द्रोणः" जला०त०। द्रु स—क द्रु—न किञ्च। ५मेघनायकभेदे तदानयनादि ज्यो० त० यथा "त्रियुते शाकवर्षे तु चतुर्भिः शेषिते क्रमात्। आवर्तं विद्धि संवर्तं पुष्करं द्रोणमम्बुदम्। आवर्त्तो निर्जलो मेघः संवर्तश्च बहूदकः। पुष्करो दुष्करजलो द्रोणः शस्यप्रपूरकः"। "कोऽयमेवंविधे काले कालपाशस्थिते मयि। अनावृष्टिहते शस्ये द्रोणमेघ इवोदितः" मृच्छ० "केयमभ्युद्यते शस्त्रे मृत्युवक्त्रगते मयि। अनावृष्टिहते शस्ये द्रोणवृष्टिरिवागता" मृच्छ० (वनवर्षिका) ६पुष्पप्रधाने वृक्षे। "ब्रह्मविष्णुशिवादीनां द्रोणपुष्पं सदा प्रियम्" दुर्गार्चाप्रयोगः। ७आढके पु०न० ८आढकचतुष्टये च (१२ सेर) "द्रोणस्तु खार्य्याः खलु षोडशांशः" लीला० उक्ते ९खार्य्याः षोडशभागे। आढकशब्दे ६५६पृ० दृश्यम्। "धान्यद्रोणस्तु साधिकः" मनुः "दशद्रोणा भवेत् खारी कुम्भोऽपि द्रोणविंशतिः" १०उन्माने "अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ तु पुष्कलम्। पुष्कलानि च चत्वारि आढकः परिकीर्तितः। चतुराढको भवेत् द्रोण इत्येतन्मानलक्षणम्" कल्पतरौ हारीतप्रभृतिभिः कुडवचतुष्टयेनोत्तरप्रस्थाढकद्रोण इत्युक्तं कुडवचतुष्टयादष्टाचत्वारिंशत्प्रसृतिभिः प्रस्थचतुष्टयात् द्विनवत्यधिकशतेन प्रसृतिभिराढकः। तच्चतुष्टयात् अष्टषष्ट्यधिकसप्तशतप्रसृतिभिर्द्रोणः" प्रा०त०रघु०। गोपथब्राह्मणस्य "द्वात्रिंशत् पलिकं प्रसृतं स्वयमथर्वणा। आढकस्तु चतुःप्रस्थश्चतुर्भिर्द्रोण आढकैः" एषां कार्यविशेषे परिमाणभेदाद्व्यवस्थाप्याः। मानार्थे अयमर्द्धर्चादिः। ११द्रुमे इत्यमाते। द्रोणस्य गोत्रापत्यम् वा फक् पक्षे इञ्। द्रौणायन द्रौणि तदपत्ये "अनादिरिह द्रोणः अश्वत्थाम्नश्चानन्तरे तूपचारात्" सि० कौ० एतच्च पाणिनेर्द्रोणात् प्राचीनत्वस्थापनायोक्तं वस्तुतः कुर्वादि इष्यावत्सकादीनां बहूनां पा० सूत्रे कीर्तनात् ततोऽर्वाचीनत्वं पाणिनेर्व्यक्तं प्रतिभाति सर्वानादित्व कल्पने मानाभावात् इत्यवधारितं सरलाख्यव्याख्यानेोपक्रमेऽस्माभिः "द्रोणस्त्वविशुष्ठमिदं यदृक्म" भाग०। कुशद्वीपस्थे १२वर्षपर्वतभेदे "चतुर्थः पर्वतो द्रोणो यत्रौषध्यो महागिरौ। विशल्यकरणी चैव मृतसञ्जीवनी तथा" मत्स्यपु० १२१अ० स्वार्थे क। द्रोणक तत्रार्थे।

**द्रोणकलश** पु० द्रोण इव कलशः। द्रुममये यज्ञपात्रभेदे "आहवनीयं गच्छन्त्यादाय यावद्द्रोणकलशसोमपात्राणि" कात्या०श्रौ० ८।७।५। पञ्चग्रावाणोऽभिषवार्थाः ते च पूर्वमभिषवणे स्थापिता अपि वचनात्तत्रानीयन्ते संस्कारार्थं द्रोणकलशः द्रुममयः कलशाकारो वैकङ्कतः यज्ञोपरिधारायन्त्रा ब्रह्मन्" कर्कः। यज्ञपात्रभेदे "ध्रुवश्च मे चमसाश्च मे वायव्यानि च मे द्रोणकलशश्च मे" यजु०१८।२१।

**द्रोणकाक** पुंस्त्री० कर्म०। (दाँडकाक) ख्याते दग्धकाके काकभेदे अमरः।

**द्रोणक्षीरा** स्त्री द्रोणमितं क्षीरमस्याः। द्रोणमितदुग्धवत्यां गवि अमरः।

**द्रोणगन्धिका** स्त्री द्रोणस्य तन्नामपुष्पस्य गन्ध इव गन्धो यस्याः कप् अत इत्वम्। रास्नायां जटा०। शब्दच०।

**द्रोणघा** स्त्री द्रोणदुघा+पृषो०। द्रोणमितदुग्धवत्यां गवि

**द्रोणचित्** पु० यज्ञिये अग्निभेदे "एतया त्रिकत्वाभ्यां चितिं चिन्वन्ति द्रोणचिद्रथचक्रचित्कङ्कचित्प्रउगचिदुभयतः समूह्य पुरीषः" कात्या०श्रौ०१६।५।६। "एते अग्निविशेषाः" कर्कः "तं हैके एतया त्रिकत्वाभिमन्त्राभ्यां चितिं चिन्वन्ति द्रोणचितं वा रथचक्रचितं वा कङ्कचितं वा प्रउगचितं वा" शत०ब्रा० ६।७।२।८

**द्रोणदुग्धा** स्त्री द्रोणमितं दुग्धं यस्याः। द्रोणमितक्षीरायां द्रोणदुघायां गवि हेमच०।

**द्रोणदुघा** स्त्री द्रोणमितं दोग्धि दुह—कः घश्चान्तादेशः। द्रोणमितदुग्धायां गवि अमरः।

**द्रोणपदी** स्त्री द्रोण इव पादोऽस्याः कुम्भपद्या० ङीपि पादोऽन्त्यलोपे पद्भावः। द्रोणतुल्यपादयुक्तायां स्त्रियाम्।

**द्रोणपर्णी** स्त्री द्रोणस्य वृक्षभेदस्य पर्णमिव पर्णमस्याः जातित्वात् ङीष्। भूमिकदल्याम् शब्दार्थ०।

**द्रोणपुष्पी** स्त्री द्रोणस्य पुष्पमिव पुष्पमस्याः जातित्वात् ङीष्। (गुमक) इति ख्याते १क्षुपभेदे "द्रोणपुष्पी गुरुः स्वादु रूक्षोष्णा वातपित्तकृत्। स क्षारलवणा स्वादुपाका कट्वी च भेदिनी। कफाग्निकामलाशोथतमकश्वासजन्तुजित्" भावप्र०। २द्रोणवृक्षे रत्नमाला। "द्रोणपुष्पीदलं स्वादु रूक्षं गुरु च पित्तकृत्। भेदकं कामलाशोथमेहपूयहरं कटु" वैद्यकम्।

**द्रोणमाना** स्त्री द्रोणो मानं दुग्धे ऽस्याः । द्रोणदुघायां गवि शब्दच० । द्रोणो मानं यस्याः । द्रोणमिते द्रव्यादौ त्रि०

**द्रोणमुखम्** न० चतुःशतग्राममनोहरग्रामे हारा० ।

**द्रोणशर्मपद** न० तीर्थभेदे "शरस्तम्बे कुशस्तम्बे द्रोणशर्मपदे तथा । अपां प्रपतनासेवी सेव्यते सोऽप्सरोगणैः" भा०अनु० २५अ० ।

**द्रोणसाच** त्रि० द्रोणं द्रोणकलशं सचते सच—अच् । द्रोणकलशसेवके । "एवा पतिं द्रोणसाचमचेतसम्" ऋ०१०।४४।४ "द्रोणसाचं द्रोणकलशस्य सेवितारम्" भा० ।

**द्रोणा** स्त्री १द्रोणस्त्रियाम् २द्रोणपुष्प्यां शब्दार्थ० ।

**द्रोणाचार्य्य** पु० कर्म० । कौरवाणां शस्त्रशिक्षके भारद्वाजे

**द्रोणाहाव** पु० आहूयन्त्यत्र पानार्थं बलीवर्दान् आहावो जलाधारः जलाशयभेदः द्रोणमयः द्रुममयः आहावः । द्रुममये जलाधारभेदे "द्रोणाहावमवतमश्मचक्रम्" ऋ०१०।१०१।७।

**द्रोणि(णी)** स्त्री द्रवति गच्छति जलम् द्रु—नि वा ङीप् । १काष्ठाम्बुवाहिन्याम् अमरः । (डोङ्गा) २जलाधारे कदलीत्वगादि निर्मिते पात्रभेदे "तैलपूर्णे कटाहे वा द्रोण्यां वा शाययेत् नरम्" सुश्रुतः "भरद्वाजस्य च स्कन्नं शुक्रं द्रोण्यामवर्द्धत" भा०आ०६३अ० ४काष्ठमये स्नानपात्रे ५पर्वतानामन्तरे देशभेदे च "शैलानामन्तरे द्रोण्यः सिद्धचारणसेविताः" शब्दार्थचि० धृतवाक्यम् । "पूर्णन्तां पयसा नद्यो द्रोण्यश्च विपुलायताः" हरिवं० ७४अ० । द्रोणस्य पत्नी ङीप् । ७द्रोणपत्न्यां स्त्री ८द्विशूर्पपरिमाणे वैद्यकभाषा ९कदल्यां मेदि० । १०नीलीवृक्षे शब्दरत्ना० ११गैरवस्त्री हेमच० १२इन्द्रचिर्भट्यां १३द्रोणीजलवणे च राजनि० १४नदीभेदे उणादिको० १५द्रु ते च

**द्रोणीदल** पु० द्रोणीव दलमस्य । केतकीवृक्षे हारा०

**द्रोणीलवण** न० द्रोण्यां भवं लवणम् । उपकर्णाटदेशभवे लवणे राजनि० । "विज्ञेयं द्रोणीलवणं पाके नात्युष्णतां गतम् । अविदाहि भेदकञ्च स्निग्धं शूलविनाशनम् । अल्पपित्तकरं चैव भिषग्भिः समुदाहृतम्" राजनि० ।

**द्रोण्य** त्रि० द्रोणं द्रुममयं यूपमर्हति यत् । द्रुममययूपार्हे पश्वादौ "द्रववद्रु द्रोण्यः पशुः" ऋ०५।५०।४। "द्रोण्यः यूपार्हः पशुः" भा० ।

**द्रोण्यश्व** त्रि० द्रोणिं द्रुतमश्नुते अश—व्याप्तौ बा० व । द्रुतव्यापके "द्रोण्यश्वास ईरते घृतं वा" ऋ०१०।९९।४ "द्रोण्यश्वासः द्रुतव्यापनाः" भा० ।

**द्रोमिल** पु० चाणक्ये मुनौ हेमच० द्रामिल इति वा तत्र पाठः । अन्यतरस्य प्रामादिकत्वं सुदृढदोषात् ।

**द्रोह** पु० द्रुह—भावे घञ् । १अनिष्टचिन्तने २अपकारे ३हिंसायां च । "पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् । वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः" मनुः द्रोहश्छद्मवधः" कुल्लू० "द्रोहो जिघांसा" म०त० रघु० "विनापि शीर्षकात् कुर्यात् नृपद्रोहे तु पातके" मनुः अत्र हन्तुमिच्छा अनिष्टचिन्तनं वा द्रोहपदार्थः । "द्रोहोद्रेकमहोर्मिमेदुरमदा मन्दाकिनी मन्दताम्" काव्यप्र० द्रोहः जातोऽस्य तारका० इतच् । द्रोहित जातद्रोहे त्रि० । [अमरः ।

**द्रोहचिन्तन** न० द्रोहार्थं चिन्तनम् । परानिष्टचिन्तने

**द्रोहाट** त्रि०द्रोहेणाटति अट—अच् । १वैडालव्रतिके छद्मना परहिंसार्थं व्रतधारिणि २मृगलुब्धके ३वेदशाखाभेदे पु० मेदि० ।

**द्रौण** त्रि० द्रोणं सम्भवति अवहरति पचति वा अण् पक्षे ठन् । द्रोणमितधान्यादेः खारिन् १सम्भावके २तदपहारके ३तत्पाचके च स्त्रियां ङीप् । पक्षे ठनि द्रौणिक तत्रार्थे स्त्रियां टाप् । तत्रार्थे द्रौणिक इति शब्दकल्पं प्रामादिकमेव ठनि इद्वृद्ध्यप्रसक्तेः ।

**द्रौणीज** न० द्रोण्यां जायते जन—ड । १द्रोणीजाते लवणे राजनि० । २द्रोण्यां जाते द्रोणाचार्य्ये द्रोणस्य पत्नी ङीप् द्रोणी तस्यां जाते ३अश्वत्थाम्नि च ।

**द्रौणायन** पु० अश्वत्थाम्नि द्रोणशब्दे दृश्यम् द्रौणिरप्यत्र ।

**द्रौणायनि** पु०द्रोणस्यापत्यं बा०फिञ् । अश्वत्थाम्नि "सकर्णदुर्योधनबाल्हशल्यद्रौणायनिक्राथसुनीथवक्राः" भा०आ० १८७अ० । "द्रौणायने ! वत्समत्वधमात्मानं शोकानले प्रक्षेप्तुम्" वेणीसं०

**द्रौणिक** त्रि० द्रोणस्य वापः क्षेत्रम् ठञ् । द्रोणमितबीजवपनयोग्ये १क्षेत्रादौ अमरः । तेन क्रीतमित्याद्यर्थे असमासे ठक् । २द्रोणक्रीतादौ, समासे तु निष्का० ठञ् । स्वरे भेदः ।

**द्रौपद** पुंस्त्री० द्रुपदस्यापत्यं शिवा० अण् । १द्रुपदराजपुत्रे तत्कन्यायां २कृष्णायां स्त्री । द्रुपदात्मजशब्दे दृश्यम् "द्रौपद्या च महातेजास्तथैवच सुभद्रया" हरिवं०१३५अ० "द्रौपदी तत्र संजज्ञे शचीभागादनिन्दिता । नातिह्रस्वा न महती नीलोत्पलसुगन्धिनी । पद्मायताक्षी सुश्रोणी असितायितमूर्द्धजा । सर्वलक्षणसम्पन्ना वैदूर्य

मथिवसन्निभा। पञ्चानां पुरुषेन्द्राणां चित्तप्रमथिनी रहः" भा०आ० १६७अ० तस्याः पञ्चपतिकत्वकारणं भा०आ० १६८।६९ अ० उक्तं दिङ्मात्रमत्रोच्यते तत्र द्रौपद्याः पूर्ववृत्तान्तकथनेन पञ्चपतिकत्वनिरूपणाय "व्यास उवाच आसीत्तपोवने काचिदृषेः कन्या महात्मनः। नाध्यगच्छत् पतिं सा तु कन्या रूपवती सती। तोषयामास तपसा सा किलोग्रेण शङ्करम्। तामुवाचेश्वरः प्रीतो वृणु काममिति स्वयम्। सैवमुक्ताऽब्रवीत् कन्या देवं वरदमीश्वरम्। पतिं सर्वगुणोपेतमिच्छामीति पुनः पुनः। ददौ तस्मै स देवेशस्तं वरं प्रीतमानसः पञ्च ते पतयो भद्रे! भविष्यन्तीति शङ्करः। सा प्रसादयती देवमिदं भूयोऽभ्यभाषत। एकं पतिं गुणोपेतं त्वत्तोऽर्हामीत्यथ शङ्कर!। तां देवदेवः प्रीतात्मा पुनः प्राह शुभं वचः। पञ्चकृत्वस्त्वयोक्तोऽहं पतिं देहीति वै पुनः। तत्तथा भविता भद्रे! वचस्तद्भद्रमस्तु ते। देहमन्यं गतायास्ते सर्वमेतद्भविष्यति। द्रौपद्येषा हि सा जज्ञे सुता वै देवरूपिणी। पञ्चानां विहिता पत्नी कृष्णा पार्षत्यनिन्दिता। स्वर्गश्रीः पाण्डवार्थन्तु समुत्पन्ना महामखे। सेह तप्त्वा तपो घोरं दुहितृत्वं तवागता। सैषा देवी रुचिरा देवजुष्टा पञ्चानामेका स्वकृतेनेह कर्मणा। सृष्टा स्वयं देवपत्नी स्वयम्भुवा राजन्! द्रुपदेष्टं कुरुष्व"। ब्रह्मवैवर्त्ते तु जन्मखण्डे ११५अ० अन्यथा वर्णितं यथा "वह्निरुवाच शृणु राम! महाभाग! सीतासंगोपनं कुरु। सप्ताहाभ्यन्तरे चैव रावणो दुष्टराक्षसः। दुर्निवार्य्यः प्राक्तनेन जानकीञ्च हरिष्यति। राम उवाच। सीतां गृहीत्वा त्वं गच्छ छायात्रैव तु तिष्ठतु। कलत्रवर्जनं कर्म सर्वशास्त्रे जुगुप्सितम्। सीतां गृहीत्वा प्रययौ वह्नलोकं हुताशनः। सीतायाः सदृशी छाया तस्थौ श्रीरामसन्निधौ। सा च छाया हृता पूर्वं रावणेन बलीयसा। समुद्दधार तां रामो निहत्य तं सबान्धवम्। वह्नौ परीक्षाकाले च छाया वह्नौ विवेश ह। वह्निस्तच्छायाञ्च संरक्ष्य ददौ रामाय जानकीम्। सा च छाया तपश्चक्रे नारायणसरोवरे। तपश्चकार दिव्यञ्च शतवर्षञ्च शूलिनः। वरं वृणुष्व भद्रे! त्वमुवाच शङ्करस्ताम्। उवाच तां शिवं व्यग्रा भर्त्तृदुःखेन दुःखिता। पतिन्देहि पञ्चधा सा वरं वव्रे त्रिलोचनम्। सर्वसम्पत्प्रदस्तुष्टस्तस्यै शर्वो वरं ददौ। महादेव उवाच। साध्वि! त्वं पञ्चधा ब्रूषे पतिन्देहीति व्याकुला। पञ्चेन्द्राश्च हरेरंशा भविष्यन्ति प्रियास्तव। ते च सर्वे च पञ्चेन्द्रास्त्वधुना पञ्च पाण्डवाः। सा च छाया द्रौपदी च यज्ञकुण्डसमुद्भवा। कृते युगे वेदवती त्रेतायां जनकात्मजा। द्वापरे द्रौपदी छाया तेन कृष्णा त्रिहायणी। वैष्णवी कृष्णभक्ता च तेन कृष्णा प्रकीर्त्तिता। स्वर्गलक्ष्मीर्महेन्द्राणां सा च पञ्चाङ्गविष्यति। राजा ददौ फाल्गुनाय कन्यायाश्च स्वयंवरे। अपृच्छ मातरं वीरो वस्तु प्राप्तं मयाधुना। तमुवाच स्वयं माता गृहाण भ्रातृभिः सह। धर्म्मोर्वरेण पूर्वञ्च परत्र मातुराज्ञया। द्रौपद्याः स्वामिनस्तेन हेतुना पञ्चपाण्डवाः। चतुर्दशानामिन्द्राणां पञ्चेन्द्राः पञ्चपाण्डवाः" "अहल्या द्रौपदी कुन्ती तारा मन्दोदरी तथा। पञ्च कन्याः स्मरेन्नित्यं महापातकनाशनम्" प्रातःस्मरणीयकीर्त्तने। [दिन निर्द्दे शादौ।

**द्रौपदायनि** त्रि० द्रुपदेन निर्द्दे त्तादि कर्णा० फिञ्। द्रुप-

**द्रौपदेय** पु० द्रौपद्या अपत्यम् ढक्। युधिष्ठिरादीनां द्रौपद्यामुत्पन्ने प्रतिविन्ध्यादौ ते च विश्वदेवगणांशेनोत्पन्नाः यथाह भा० आ०६७अ०। "द्रौपदेयाश्च ये पञ्च बभूवुर्भरतर्षभ!। विश्वान् देवगणान् विद्धि सञ्जातान् भरतर्षभ!। प्रतिविन्ध्यः सुतसोमः श्रुतकर्मा तथा परः। नाकुलिस्तु शतानीकः श्रुतसेनश्च वीर्य्यवान्। पाञ्चाल्यपि तु पञ्चभ्यः पतिभ्यः शुभलक्षणा। लेभे पञ्च सुतान् वीरान् श्रेष्ठान् पञ्चाचलानिव। युधिष्ठिरात् प्रतिविन्ध्यं सुतसोमं वृकोदरात्। अर्ज्जुनाच्छ्रुतकर्माणं शतानीकञ्च नाकुलिम्। सहदेवाच्छ्रुतसेनमेतान् पञ्च महारथान्। पाञ्चाली सुषुवे वीरानादित्यानदितिर्यथा। शास्त्रतः प्रतिविन्ध्यन्तमूचुर्विप्रा युधिष्ठिरम्। परप्रहरणज्ञाने प्रतिविन्ध्यो भवत्वयम्। सुते सोमसहस्रे तु सोमार्कसमतेजसम्। सुतसोमं महेष्वासं सुषुवे भीमसेनतः। श्रुतं कर्म महत् कृत्वा निवृत्तेन किरीटिना। जातः सुतस्तेनेत्येवं श्रुतकर्मा ततोऽभवत्। शतानीकस्य राजर्षेः कौरवस्य महात्मनः। चक्रे पुत्रं सनामानं नकुलः कीर्त्तिवर्द्धनम्। ततस्त्वजीजनत् कृष्णा नक्षत्रे वह्निदैवते। सहदेवात् सुतं तस्मात् श्रुतसेनेति यं विदुः। एकवर्षान्तरास्त्वेते द्रौपदेया यशस्विनः" भा० आ० २२२अ०।

**द्रौहिक** त्रि० द्रोहं नित्यमर्हति छेदा० ठञ्। नित्यं द्रोहार्हे।

**द्रौह्य** त्रि० द्रुह्यापत्यं शिवा०अण्। द्रुह्यापत्ये

**द्वन्द्** न० द्वन्द्व+पृषो० वलोपः । द्वन्द्वशब्दार्थे त्रिकाण्डशेषः ।

**द्वन्द्व** न० द्वौ द्वौ सहाभिव्यक्तौ "द्वन्द्वं रहस्यमर्य्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु" पा० द्विशब्दस्य द्विर्वचनं पूर्वपदस्याम्भावोऽत्वञ्चोत्तरपदस्य नपुंसकत्वञ्च निपात्यते एष्वर्थेषु" सि०कौ० उक्ते १रहस्यादौ "तत्र रहस्यं द्वन्द्वशब्दस्य वाच्यम् इतरे विषयभूताः । द्वन्द्वमन्त्रयते रहस्यमित्यर्थः । मर्य्यादा स्थित्यनतिक्रमः । आचतुरं हीमे पशवो द्वन्द्वं मिथुनायन्ते माता पुत्रेण मिथुनं गच्छति पौत्रेण प्रपौत्रेणापीति मर्य्यादार्थः । व्युत्क्रमणं पृथगवस्थानम् । द्वन्द्वं व्युत्क्रान्ताः द्विवर्गसम्बन्धेन पृथगवस्थिताः । द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति द्वन्द्वं संकर्षणवासुदेवौ । अभिव्यक्तौ साहचर्य्येणेत्यर्थः । योगविभागादन्यत्रापि द्वन्द्व इष्यते" सि०कौ० "अत्र अन्यत्रापि तेन द्वन्द्वयुद्धान्यवर्त्तन्तेत्यादि सिद्धं द्वयोर्द्वयोर्युद्धान्यवर्तन्तेत्यर्थः वीप्सायां द्विर्वचनेऽप्यनेन तस्य रूपनिष्पत्तिः । द्वन्द्वसमाहारादौ तु द्वन्द्वशब्दप्रयोगः द्वन्द्वा द्वन्द्वा अवयवार्थराहित्येनाव्युत्पन्नत्वादिति बोध्यम्" शब्देन्दु० । तत्र रहस्यं द्वाभ्यामेव ज्ञेयम् । २कलहे ३मिथुने स्त्रीपुंसयोर्द्वये ४युगले च मेदि० ५रोगभेदे ६समासभेदे च पु० स च द्विधा समाहारेतरेतरयोगभेदात् तत्र संहतिप्राधान्ये समाहारद्वन्द्वः संहन्यमानप्राधान्ये इतरेतरयोगः इति वैयाकरणाः इतरेतरयोगशब्दे ९२१ पृ० दृश्यम् शब्दश०प्र० अन्यथा निरणायि यथा

"यद्यदर्थकयन्नामव्यूहो यद्यत्प्रकारके । बोधे समर्थः स द्वन्द्वः समासस्तावदर्थकः ।" "यद्यदर्थोपस्थापकस्य क्रमिकयादृशनामस्तोमस्य निश्चयस्तत्तदर्थप्रकारकान्वयबोधं प्रति तत्त्वेन समर्थस्तादृशनामनिवह एव तावदर्थको द्वन्द्वसमासः । पाणिपादं वादय धवखदिरौ छिन्धीत्यादौ हि कर्मत्वाद्यंशे करचरणादिप्रकारकान्वयबोधं प्रत्यमादिधर्मिकः करचरणाद्युपस्थापकस्य पाणिपादादिक्रमिकनामस्तोमस्याव्यवहितोत्तरत्वसम्बन्धेन निश्चयः कारणम् अतः पाणिपादादिसमुदायः करचरणादितत्तदर्थे द्वन्द्वः । यत्तु पाणिपादमित्यादौ समाहारद्वन्द्वे सर्वत्रोत्तरपदे पाणिपादादिसाहित्ये लक्षणा अतएव नित्यं तत्रैकवचनं समाहारस्यैकत्वात् पदान्तरन्तु तादृशलक्षणाया निरूढत्वसम्पादकं तथाविधसाहित्यस्य च स्वाश्रयनिष्ठत्वादिसम्बन्धेनैव द्वितीयाद्यर्थकर्मत्वादौ साकाङ्क्षत्वात् पाणिपादं वादयेत्यादेर्नायोग्यत्वमिति प्राच्यैरुक्तं तच्च तुच्छं तुल्यवदेकक्रियान्वयित्वं बुद्धिविशेषविषयत्वं वा पाणिपादयोः साहित्यं तस्य च नानात्वसत्त्वेन तद्गतद्वित्वादिबोधार्थं समाहारद्वन्द्वादपि द्विवचनाद्यापत्तेर्दुर्वारत्वात् । साहित्यस्य द्वित्वत्वेऽपि न समाहारद्वन्द्वस्य द्विवचनादिसाकाङ्क्षत्वं तादृशद्वित्वोरिवेति चेत् तर्हि पाणिपादप्रभृतीनां नानात्वेऽपि न तदर्थकस्य द्वन्द्वस्य द्विवचनाद्याकाङ्क्षत्वमित्येव वक्तुमुचितं कृतं साहित्यभक्त्या दृश्यन्त्वं घनमित्यादेरयोग्यताया दुर्वारतापाताच्च नामार्थयोर्भेदान्वयस्याव्युत्पन्नत्वेन हस्तिनामस्थानाच्च साहित्यस्य स्वाश्रयत्वादिसम्बन्धेन घनादावन्वयायोगात् तादृशसाहित्ये घनादेरभेदविरहाच्च । समाहारपरिभाषा तु क्लीबलिङ्गत्वनित्यैकवचनत्वादिपदसंस्कारोपयोगितयैवोपपन्ना न द्वन्द्वस्यार्थव्यवस्थापिका । एतेन धवखदिरावित्यादावितरेतरद्वन्द्वेऽप्युत्तरपदे धवखदिरसाहित्यालक्षणा अन्यथा द्विवचनादेः प्रकृत्यर्थतावच्छेदकत्वेन पर्य्याप्तिसम्बन्धेन स्वार्थद्वित्वाद्यनुभावकत्वव्युत्पत्तेर्धवखदिरावित्यतो धवद्वयस्य खदिरद्वयस्य च प्रतीत्यापत्तेरिति मीमांसकानाम्मतमपास्तं तुल्यवदेकक्रियान्वयित्वं धवखदिरविशेष्यकधीविशेष्यत्वं वा धवखदिरयोः साहित्यं तदाश्रयश्च धवद्वयादिरपीति तादृशसाहित्यान्वयलक्षणापक्षेऽपि धवखदिरावित्यतो धवद्वयादिबोधस्य दुर्वारतापत्तेः । न च त्रितयाविशेष्यकधवखदिरधर्मिकधीविशेष्यत्वमेव प्रकृते धवखदिरयोः साहित्यं तच्च न धवद्वयादेरिति वाच्यं तादृशसाहित्यान्वयस्याननुभवेनास्वरसेनात् तस्माद्यत्र नानाधर्माणां प्रकृत्यर्थतावच्छेदकत्वं तत्र तत्तद्धर्मावच्छिन्ने समुदित एव पर्य्याप्तिसम्बन्धेन द्वित्वादिबोधने द्विवचनादिकं साकाङ्क्षं न तु तादृशैकधर्मावच्छिन्नं परित्यज्य तथाविधापरधर्मावच्छिन्ने, यतो धवखदिरावित्यादितो धवयोः खदिरयोश्च नावबोधप्रसङ्ग इति तत्त्वम् । घटघटेत्यादिकस्य घटकलसेत्यादिकस्य घटतद्घटेत्यादिकस्य च क्रमिकनामस्तोमस्य निश्चयत्वेन घटादेरन्वयबोधं प्रत्यहेतुत्वमतो न तादृङ्नामनिवहो घटाद्यर्थे द्वन्द्वः । अतएव समसमानपदार्थयोस्तत्त्वावच्छेदकयोर्वा यत्र मिथोभेदस्तत्रैव द्वन्द्वस्य साधुत्वसूचनाय "चार्थे द्वन्द्व" इति पाणिनिः प्राह । अतएव भेदगर्भसमुच्चयार्थकं चशब्दमन्तर्भाव्य धवश्च खदिरश्चेत्यादिकं विग्रहमस्य प्रयुञ्जते वृद्धाः, सम्पादयते च तत्र मिथोभेदप्राप्त्यर्थं चकारद्वयं, पीततत्पटयोश्चादात्म्यमित्यादौ तत्पटादेः पीताद्यभिन्नत्वेऽपि पीतत्व-

तत्पटत्वाद्योः पदार्थतावच्छेदकयोरस्त्येव भेदः सुवर्णस्तु द्वित्वं न तत्र प्रकृत्यर्थेऽन्वेति पर्य्याप्तिसम्बन्धेन पीततत्पटे तस्य बाधात् सुवर्णद्वित्वादेस्तादृशसम्बन्धेनैव प्रकृत्यर्थसाकाङ्क्षत्वात् परन्तु प्रकृत्यर्थतावच्छेदकयोः पीतत्वतत्पटत्वयोरेव स्वोत्पत्तिवैचित्र्यात्। अतएव द्व्यणुकारम्भकसंयोगनाशेभ्यः कार्य्यद्रव्यं नश्यतीति भाष्यस्य योग्यतासम्पत्तये सुवर्णैकत्वस्य कार्य्यद्रव्यत्वेऽन्वयमभिधित्सुनाचार्य्येण जात्यभिप्रायकमेकवचनमिति गुणकिरणावल्यामभिहितम्। अतएव च "श्यालाः सुभ्रातरः पत्याः स्वामिनो देवदेवरौ" इत्यत्र च द्विवचनमहिम्ना स्वामिनो भ्राता देवदेवरोभयपदवाच्य इत्यर्थः सुभूत्यादिभिः सङ्गच्छते। यदि च पटद्वयासत्त्वेऽपि भूतले पीतपटावित्यादिकः प्रयोगः स्यात् पीतत्वपटत्वोभयाश्रयस्य तत्र सत्त्वादेवं पीतपटयोरभेद इत्यादितः शुक्लपटत्वादेरबोधप्रसङ्गश्च तदंशे सुवर्णद्वित्वस्य प्रकारत्वादित्यादिरुच्यमीर्य्यते तदा गोदौ ग्राम इत्यादाविव साधुत्वार्थमेव तत्र द्विवचनमिति वदन्ति। विद्यतेविन्दतिविन्तीनामनिट् इत्यत्र विद्यत इत्यादिशब्दो न विदधातुत्वेनोपस्थापकः किन्तु सत्तार्थकताद्यवच्छिन्नत्वेनैव। अनयाक्षरयोः पदार्थयोर्भेदेऽपि हरिश्चहरिश्चावित्यप्रयोगात्। समानशब्दयोर्द्वन्द्वप्रसक्तावेकशेषोऽव्युत्पत्तिसिद्धत्वेन हरिश्चावित्यत्र लुप्तलुप्ताभ्यामेव हरिपदाभ्यामुपस्थितयोरनयाक्षरयोर्बोधः हरी नमस्यावित्यत्राप्युक्तरीत्यैव हरिपदाभ्यां विष्णुचन्द्रयोरवगतिः। अन्यथा हरिहरौ नमस्यावित्यपि प्रयोगापत्तेः हरी च हरश्चेति विग्रहस्थले यत्र हरय इत्यादितः समस्यमानपदार्थानामवान्तरसंख्यावगमस्तत्र तत्तत्संख्यावच्छिन्नस्वार्थवाचकस्य लुप्तस्य हर्य्यादिपदस्योत्तरत्वेन प्रतिसंहितमेव हर्य्यादिपदं तथाविधस्वार्थस्य लक्षणया बोधकं तदप्रतिसन्धाने तु श्रुतमेव हरिपदं विष्णुद्वयोः सिंहत्रयस्य चैकया लक्षणया शक्तिभ्रान्त्यैव वा। नच विग्रहस्थसुवर्णस्य द्वित्वादेः समासाप्रतिपाद्यत्वनियमात्तथाविधद्वित्वत्रित्वान्तर्भावेण द्वन्द्वस्यैवासाधुत्वादुक्तक्रमेणैकशेषो न युक्तः, शलाकापरि हस्तमित्यादौ व्यभिचारेणोक्तनियमस्यासत्त्वात् एकत्वे चैकत्वानि चेति विग्रहे च एकत्वानीत्येकशेषस्य गुणकिरणावल्यामाचार्य्यैरभिहितत्वाच्च। हंसश्च हंसी च इत्यर्थे हंसहंसावित्यप्रयोगात् तत्रापि "पुंसा स्त्रियाः साहचर्ये" इत्यनुशिष्टे हंसीपदस्य लोपे हंसावित्यत्र लुप्तमेव हंसीपदमनुसन्धाय

स्त्रीपुंसयोर्बोधः तल्लोपस्याज्ञानतस्तु हंसपदे स्त्रीहंसत्वपुरुषहंसत्वाभ्यां विभिन्नरूपाभ्यामेकस्याः शक्तेर्लक्षणया वा पक्षादेव। यत्तु तत्र हंसपदमेव लक्षणया हंसीत्वेन शक्त्या च हंसत्वेन बोधकं सुवर्णस्तु पुंस्त्वं हंस एवान्वेति न तु हंस्यामयोग्यत्वात् इति मतं तन्न तथासति स्त्रीहंसत्वहंसत्वयोः पदार्थतावच्छेदकयोर्मिथोभेदविरहेण द्वन्द्वाप्रसक्तावेकशेषस्य हंसश्च हंसी च इत्यस्य दुष्करत्वापत्तेः अन्यथा घटतद्घटावित्यपि द्वन्द्वप्रसङ्गात् हंसौ च हंसाश्चेति विग्रहेऽपि हंसा इत्यतो हंसद्वयहंसत्रययोः प्रागुक्तरीत्यावगमः। दुन्दुभी च दुन्दुभिश्चेति विग्रहे दुन्दुभी सुन्दरावित्यत्राप्यभेदयोर्बोधनस्थले पुंलिङ्गस्यैव दुन्दुभिशब्दस्य शिष्टतया तद्विशेषणत्वादेव सुन्दरादेः पुंस्त्वम्। युवा च युवतिश्च इत्यर्थे युवानावित्यत्राप्युक्तरीत्यैव युवतीयौवनवतोर्बोधः वरटाहंसौ लक्षणाक्रान्तावित्यादौ तु स्त्रीपुंसयोर्द्वन्द्वेऽपि पदसारूप्यविरहान्नैकशेषः इत्यर्जनप्रकरणे ब्राह्मणवात्स्यायनेत्यत्रापि ब्राह्मणश्च ब्राह्मणी च इति विग्रहे प्रागुक्तदिशा ब्राह्मणभार्य्यापत्योरवगमः। एकश्चैका चेत्यत्र एकौ, द्वौ च द्वे चेत्यत्र द्वौ, उभे चोभौ चेत्यत्र उभौ त्रयश्च तिस्रश्च इत्यत्र च विग्रहे त्रय इत्यादिरेकशेष इष्यत एव। आख्यानेकफेलतरुणेषु स्त्रीपुंसयोर्बहुत्वमन्तर्भाव्य साङ्ख्येव द्वन्द्वस्थले तु पुंस एव लुक् तेन मेषश्च मेषाश्चेत्यर्थे मेषा इत्यत्रापि लुप्तं बहुमेषाणां लक्षकं मेषपदं प्रतिसन्धत्त एव बहुमेषाणामनेकमेषीणाञ्चावगमः। एवं महिषाश्च महिष्यश्चेत्यर्थे महिष्य इत्यत्रापि महिषपदं बहूनां महिषाणां, अजाश्च अज्यश्चेत्यर्थे अजा इत्यत्र तु अजादेरप्राप्यत्वात् पुंसो लुक् परन्तु स्त्रियाः। तथा गर्द्दभाश्च गर्द्दभ्यश्चेत्यर्थे गर्द्दभा इत्यत्रापि स्वरायामेकशेषत्वात् शर्कराश्च शर्कर्य्यश्च इत्यर्थे शर्करा इत्यत्रापि तदर्थार्थकत्वात्। स्वसा च भ्राता चेत्यर्थे भ्रातरावित्यत्र पुत्रश्च दुहिता चेत्यर्थे पुत्रावित्यत्र च विरूपैकशेषेऽपि स्वसृपदं दुहितृपदञ्च लुप्तं प्रतिसन्धायैव भ्रातृभगिन्योः पुत्रकन्ययोश्चावगमः। "ज्येष्ठपुत्रदुहित्रोश्च ज्येष्ठे मासि न कारयेत्" इत्यादिकस्तु प्रयोगः परिचिन्तनीयः। स च चैत्रश्चेति विग्रहे त्यदादिना तदन्यस्य द्वन्द्वे लुकि तावित्यत्रापि लुप्तं चैत्रादिपदमनुसन्धत्त एव चैत्राद्यवगमः स च यश्चेत्यादि विग्रहेण किंपदान्यत्यदादिद्वयगर्भद्वन्द्वे तु पूर्व्वस्यैव वा लुक् अन्यस्यैव वा त्यदादिषु वि

युष्मामित्यत्र त्यादावप्युक्तक्रमेणैव तदर्थयुष्मदर्थयोर्बोधः स च स चेत्यत्रापि विभिन्नार्थयोर्विवक्षे स्वपूर्वागमितोऽपि तदादिः स्वोत्तरापठित एव "तत्त्वमानुपश्यल्योऽसौ यद्यद्विद्यातिनिर्मलेत्यादौ तु न त्यदादिशेषेण द्वन्द्वः परन्तु तदाद्यव्ययेन यथा "तत्त्वामसभूतभीतस्य" इत्यादौ यत्तदादिव्यतिरिक्तानामेवाव्ययानां सरूपैकशेषस्य व्युत्पन्नत्वात् प्रयोगानुरोधित्वात् कल्पनायाः। कस्य त्वञ्चेत्यादिविवक्षेया किमा तादृशद्वन्द्वे तु तदन्यस्यैव त्यदादेर्लुकि कावित्यादिक एव प्रयोगः चैत्रस्य पितरावित्यत्रापि विरूपैकशेषे लुप्तस्य मातृपदस्य स्मरणान्मातुरवगमः तदस्मरणे तु पितृपदे जनकशरीरत्वेन लक्षणया मातापित्रोरवगतिरिति प्राञ्चः। कौमारास्तु माता पितुर्द्वन्द्वे माता पितृभ्यां मातापितराभ्यामिति प्रयोगद्वयोर्दर्शनाच्चैत्रस्य पितरावित्यत्र नैकशेषः परन्तु पुष्पवन्तादिपदवन्मातृत्वपितृत्वाभ्यां विभिन्नरूपाभ्यामेकशक्तिमदेव नियतद्विवचनाकाङ्क्षं पितृपदं प्रकृत्यन्तरम्। एवं श्वश्रूश्च श्वशुरश्चेत्यर्थे श्वशुरावित्यत्र श्वशुरपदमपि श्वश्र्वा। श्वशुरस्य द्वन्द्वे श्वश्रूश्वशुरावित्येव प्रयोगादित्याहुः"। द्वन्द्वं विभजते। "द्वौ भेदावस्य शास्त्रोक्तौ समाहारेतरेतरौ। एकान्यवचनाकाङ्क्षाहीनोपादानतश्च तौ"। "अस्य द्वन्द्वस्य द्वौ भेदौ समाहार इतरेतरश्च शास्त्रसिद्धौ तत्रैकवचनान्यवचनाकाङ्क्षाविहीनः समाहारः तथाविधवचनाकाङ्क्षश्चेतरेतरः पाणिपादं हस्त्यश्वमित्यादितो हि करचरणादीनां बहूनामप्यगतावेकवचनमेव प्रमाणं धवखदिरावित्यादौ द्विवचनादेः पदिस्कन्दिच्छिदेर्दीदित्यादौ तु पदिस्कन्दिभ्यां सहितः छिदिरिति विग्रहे मध्यपदलोपी कर्मधारयो यथा व्याप्त्र्यतिव्याप्तेरिति मणिपन्थादौ"।

केचित् पदभेदे द्वन्द्वमिच्छन्तः "व्याप्येकदन्तहेरम्बलम्बोदरगजाननाः" इत्युदाजह्रुः तन्न समीचीनम् चोऽवधारणे इत्यादिवत् एकदन्तादिशब्दानामेवात्र पदार्थत्वात् तथाभूतशब्दानाञ्च विभिन्नानुपूर्वीकत्वेन भिन्नत्वात् एते शब्दा गणेशे हस्तिमन्त इत्येवं कोषाद्यन्वयबोधात्। घटकलसयोरभेद इत्यादौ तु घटपदकलसपदप्रतिपाद्यत्वरूपपदार्थतावच्छेदकभेदात् न द्वन्द्वानुपपत्तिरिति दिक्। "देवताद्वन्द्वे" "चार्थे द्वन्द्वः" पा० "द्वन्द्वः सामासिकस्य च" गीता। तत्र युगले "द्वन्द्वं ते मन्दचेता यदि जपति जनो वारमेकं कदाचित्" कर्पूरस्तवः। "विरहविधुरकोकद्वन्द्वशोकं विभिन्दन्" उद्भटः। मिथुनम् स्त्रीपुंसयोर्द्वित्वम् तत्र "द्वन्द्वानि भावं क्रियया विवव्रुः" कुमा० "मृगद्वन्द्वेषु पश्यन्तो स्यन्दनाबद्धदृष्टिषु" रघुः। "क्षुत्पिपासे शोकमोहौ रागद्वेषौ तथैव च। लाभालाभौ च शीतोष्णे तथा मानापमानकौ। कामक्रोधप्रवृत्तयोः द्वन्द्वशब्देन वर्णिता" इत्युक्ते परस्परविरुद्धस्वभावे शीतोष्णादौ "न द्वन्द्वदुःखमिह किञ्चिदकिञ्चनोऽपि" माघः "तितिक्षा शीतोष्णादिद्वन्द्वसहिष्णुता" वेदान्तसा० "द्वन्द्वातीतो विमत्सरः" गीता। आसनजये च द्वन्द्वदुःखैरनभिभवः योगसू० उक्तः "ततो द्वन्द्वानभिघातः" "शीतोष्णादिभिर्द्वन्द्वैरासनजयान्नाभिभूयते" भा०।

७ दुर्गे युक्तिकल्प० तद्विशेषादिकं तत्रोक्तं यथा "राज्ञोबलं न हि बलं द्वन्द्वमेव बलं बलम्। अल्पबलवान् राजा स्थिरो द्वन्द्वबलाद्भवेत्" तथा च "एकः शतं योधयति प्राकारस्थो धनुर्धरः। शतं दशसहस्राणि तस्माद्दुर्गं विशिष्यते। अकृत्रिमं कृत्रिमञ्च तत् पुनर्द्विविधं भवेत्। यद्दैवरचितं द्वन्द्वं गिरिनद्यादिसंश्रितम्। अकृत्रिममिदं ज्ञेयं दुर्लङ्घ्यमरिभूभुजाम्। प्राकारपरिखारण्यसंश्रयं यद्भवेदिह। कृत्रिमं नाम विज्ञेयं लङ्घ्यालङ्घ्यन्तु वैरिणाम्" तत्राकृत्रिमद्वन्द्वलक्षणं तत्रैव यथा "अत्युच्चविस्तीर्णशिरा दुरारोहः सकाननः। सजलाशयसञ्चारभोज्यद्रव्यसमाश्रयः। सुनिःसरणो द्वन्द्वः पर्वताख्यो महीभुजाम्। नद्योगभीरविस्तीर्णाश्चतुर्दिक्षु व्यवस्थिताः। तन्मध्ये भूप्रदेशो यो नदीद्वन्द्वः स उच्यते। यदन्यच्चिरकालीनं दुर्लङ्घ्यं विपिनादिकम्। तन्मध्यरचिता भूमिर्द्वन्द्वत्वेनोपतिष्ठते। वनद्वन्द्वमिति ख्यातं यथापूर्वं महत्तरम्" कृत्रिमद्वन्द्वलक्षणं तत्रैव यथा "यस्मिन् राज्ये गिरिर्नास्ति नद्यो वा गहनोदकाः। तत्र मध्ये महीपालः कृत्रिमं द्वन्द्वमारभेत्। गजैरलङ्घ्या विस्तीर्णा गम्भीराः पूर्णवारयः। द्वन्द्वत्वेन समादिष्टाः परिखा वज्रसादृशः। विशालशालं सघनं वज्रकण्टकिसङ्कटम्। द्वन्द्वत्वेन समादिष्टं विस्तीर्णं विषमं वनम्। अधोऽधोबध्यमानोऽपि कन्दरोऽल्पजलंस्रवन्। द्वन्द्वत्वेन समुद्दिष्टः दुर्लङ्घ्यो हि स भूभुजा। सर्वतः परिखां कृत्वा निवध्योपरिकन्दरम्। तज्जलस्तु तदेशत्वात् जलद्वन्द्वं तदुच्यते। एषामभावे निम्नस्य भूप्रदेशस्य बन्धनात्। यतोऽत्र स्रवते वारि जलद्वन्द्वं ततो भवेत्। एतयोरपि संमिश्रात् संमिश्रं द्वन्द्वमाचरेत्। आश्रित्य कृत्रिमं द्वन्द्वं बलवद्-

वैरिणो द्विषि। अन्यत्र बलिनं द्वन्द्वं कृत्वा चरपति र्वसेत्। रथपतिर्यदा वैरी जलद्वन्द्वं तदाचरेत्। गजाश्वनायकेद्वैरी जलद्रुमं तदाचरेत्। गिरिद्रुमं नृपः सेवेत् यस्य स्याद् द्विविधो रिपुः। सर्वो हि त्रिविधो युद्धः समासादुपदिश्यते। प्रतिराजस्य राज्यान्ते प्रकटे गुप्त एव च। राज्यान्ते सैनिकान् रक्षेत् प्रकटे निवसेत् स्वयम्। गुप्तेऽस्त्रकोषसम्भारं संरक्षेदिति निश्चयः"। तत्र सामान्यतो गुणा नीतिशास्त्रोक्ताः यथा "अप्रवेशापसरणं द्वन्द्वमुत्तममुच्यते। अन्यत्र बन्दिग्राहेव न तादृगवमाश्रयेत्। मनुष्यद्वन्द्वं महीद्वन्द्वं गिरिद्वन्द्वं तथैव च। मनुष्यद्वन्द्वमित्याहुर्योद्धृद्वन्द्वं प्रकीर्तितम्। योद्धृमुख्यं हि यत् द्वन्द्वं सुतकायस्य हि तत्"। अन्यत्र च "यावत् प्रमाणं नगरं हि राज्ञां ततो भवेदुत्तममध्यमान्तम्। त्रिंशत्तदर्धेन गुणोत्तरेण निदेशजानां धरणीपतीनाम्" मतंस्तु "यदन्यद् द्विविधं द्वन्द्वं ब्रूते धरणीभुजाम्। ताभ्यामेवातिरिच्येत जलद्वन्द्वं विशेषतः। अन्येषु देवात् भिन्नेषु जलद्वन्द्वात् जयेन्नृपः। जलद्वन्द्वे हि भिन्ने हि न चान्यत् कार्यकारकम्"। भोजः "तदेव वैरिदुर्लङ्घ्यं विस्तीर्णविषमञ्च तत्। अप्रवेशापसरणं तद्द्वन्द्वमुत्तमं विदुः"।

**द्वन्द्वगद** पु० द्वन्द्वरूपो गदः। रागद्वेषादिरूपे रोगे। "अहं हरिः सर्वमिदं जनार्दनो नान्यं ततः कारणकार्यजातम्। ईदृङ्मनो यस्य न तस्य भूयो भवोद्भवा द्वन्द्वगदा भवन्ति" विष्णुपु०।

**द्वन्द्वचर** पुंस्त्री द्वन्द्वीभूय मिथुनीभूय चरति चर–ट। चक्रवाके हेमच०। स्त्रियां जातित्वात् ङीष्। "शशिना पुनरेति शर्वरी दयिता द्वन्द्वचरं पतत्रिणम्" रघुः। णिनि द्वन्द्वचारिन् अप्यत्र त्रिका०। स्त्रियां ङीप्।

**द्वन्द्वज** त्रि० द्वन्द्वात् जायते जन–ड। वातपित्तश्लेष्मणां मध्ये द्वाभ्यां दोषाभ्यां जाते १रोगादौ माधवनिदानम् २कलहात् जाते च।

**द्वन्द्वयुद्ध** न० द्वयोर्द्वयोर्युद्धम्। द्वयोर्द्वयोर्युद्धे "कैराते द्वन्द्वयुद्धे च यदिदं समवर्तत" भा०उ०१८५अ०। "बहूनि भुवि चित्राणि द्वन्द्वयुद्धानि सञ्जय!" भा०द्रो० ११अ०

**द्वय** न० द्व्यवयवम् द्वि–अवयवे तयप् तस्य वा अयच्। १द्वयोरवयवे २द्वित्वे च अत्र स्त्रीत्वमपि ङीप्। "अतदुद्वयीजित्वरसुन्दरान्तरे" नैष० "कुसुमस्तवकस्येव द्वयी वृत्तिर्मनस्विनः" भा०र० द्वे अवयवे यस्य अयच्। २द्वित्वान्विते त्रि० अयचः तयप्स्थानिकत्वात् जसि सर्वनामता "द्वयेऽप्यमुष्यन्त विनीतमार्गाः" माघः "अयं द्वयेषामपि मेदिनीभृतामिति" माघे द्वयेषामित्यसाधु अन्ये तु द्वयं द्वित्वमिच्छन्ति द्वय–क्विप् तेषामिति समर्थन्ते। स्त्रियां ङीप्। "द्वयीषु निःक्षेप द्वयार्पितं द्वयम्" कुमा० अत्र द्वयेऽपीति पाठान्तरम्।

**द्वयाग्नि** पु० द्वयः द्विरूपोऽग्निरत्र। पाठिकुमे चितके (चिता) इति भाषा ख्याते वृक्षे राज०तस्य प्रचुराग्निरूपत्वात्तथात्वम्।

**द्वयातिग** त्रि० द्वयं रजस्तमसी द्वित्वमतिगच्छति अति+गम–ड। रजस्तमोभ्यामनभिभूतसत्त्वगुणयुक्ते अमरः।

**द्वयाविन्** त्रि० द्वयमस्त्यस्य वेदे "बहुलं छन्दसि" मत्वर्थे विनि "छन्दोविन्प्रकरणे अष्टामेखलाद्वयोभयरुजा हृदयानां दीर्घश्चेति वक्तव्यम्" वार्ति० विनि पूर्वपददीर्घश्च। द्वित्वयुक्ते स्त्रियां ङीप्।

**द्वयु** पु० द्वाभ्यां प्रकाराभ्यां युक्ता द्वि+यु–अ–कु पृषो०। प्रत्यक्षतो हितवादिनि परोक्षतोऽहितवादिनि एवं द्विप्रकारयुते शत्रौ "दुर्मेधा वा अपद्वयुः" ऋ०८।१८।१५भाष्यभा०

**द्वर** त्रि० दृ–आदृतौ अच्। आवरणकारके दृ–रन्। द्वरि तमार्थे "स हि द्वरो द्वरिषु वव्रे" ऋ०१।५२।२

**द्वाः(द्वा)स्थ** पु० द्वारि तिष्ठति स्था–क वा विसर्गलोपः। द्वारपाले अमरः। "ते सद्मनि गिरेर्वेगात् उन्मुखद्वाःस्थवीक्षिताः" कुमा० "विद्वानपि तयोर्द्वाःस्थः समयं रक्षकोऽभिनत्" रघुः। [अमरः।

**द्वाः(द्वा)स्थित** द्वारि स्थितः वा विसर्गलोपः। द्वारपाले

**द्वा(द्वि)चत्वारिंश** त्रि० द्वा(द्वि)चत्वारिंशतः पूरणः डट्। येन द्वाचत्वारिंश् संख्या पूर्यते तस्मिन्। स्त्रियां ङीप्।

**द्वा(द्वि)चत्वारिंशत्** स्त्री द्व्यधिका चत्वारिंशत् द्विशब्दस्य वा आत्वम्। द्व्यधिकचत्वारिंशत्संख्यायाम् तदन्विते च। तत्परिमाणमस्य ठन्। द्वा(द्वि)चत्वारिंशतिक तत्परिमाणे त्रि० पूरणे तमप् द्वा(द्वि)चत्वारिंशत्तम तत्संख्यापूरणे त्रि०।

**द्वाज** पु० द्वाभ्यां जायते जन–ड पृषो०। द्वाभ्यां जाते "नाम निर्वचनं तस्य श्लोकमेकं पुरा जगुः। मूढे! भर द्वाजमिमं भरद्वाजं बृहस्पते!। यातौ यदुक्त्वा पितरौ भरद्वाजमथाह्वयत्" भाग०९।२०।५ "तत्र प्रथमं पुत्रं त्यक्त्वा यान्तीं ममतां बृहस्पतिराह हे मूढे! इमं पुत्रं भर पुषाण। भर्तुर्बिभेमीति चेत्तत्राह द्वाजम् एकस्य क्षेत्रे अन्यस्य वीजेनेत्यादिरूपं द्वाभ्यां जातं अतस्तवाप्ययं पुत्र इति तस्मात् न भयशङ्केत्यर्थः। एवमुक्त्वा यतो तं

प्रत्याह हे वृहस्पते! त्वमिमं भर यतो द्वाजं द्वाभ्यां ममावाभ्याम् अन्यायतो जातं अतो नाहमेकाकिनी भरामीत्यर्थः। अद्भुतादिवचस्त्वा पितरौ ममतावृहस्पती विसृजन्तौ पुत्रं परित्यज्य यातौ ततो हेतोरयं भरद्वाज इति" श्रीधरस्वामी।

**द्वात्रिंशत्** स्त्री द्व्यधिका त्रिंशत् शाक०। १अधिकत्रिंशत् संख्यायां २तद्वति। तस्याः पूरणः डट्। द्वात्रिंश। तमप् द्वात्रिंशत्तम तत्संख्यापूरणे त्रि० स्त्रियां ङीप्।

**द्वात्रिंशदपराध** पु० कर्म०। भक्तानामीश्वरविषये द्वात्रिंशत्संख्यकेषु अपराधेषु। ते च अपराधाः तन्त्रसारे दर्शिता यथा "तन्त्रान्तरे यानैर्वा पादुकाभिर्वा गमनं भगवतो गृहे। देवोत्सवेष्वसेवा च अप्रणामस्तदग्रतः। उच्छिष्टे चैव चाशौचे भगवद्वन्दनादिकम्। एकहस्तप्रणामश्च तत्पुरस्तात् प्रदक्षिणम्। पादप्रसारणञ्चाग्रे तथा पर्य्यङ्कबन्धनम्। शयनं भक्षणञ्चापि मिथ्याभाषणमेव च। उच्चैर्भाषो मिथो जल्पो रोदनानि च विग्रहः। निग्रहानुग्रहौ चैव स्त्रीषु च क्रूरभाषणम्। कम्बलावरणञ्चैव परकीर्त्तिरपस्तुतिः। अश्लीलभाषणञ्चैव अधोवायुविमोक्षणम्। शक्तौ गौणोपचारश्च अनिवेदितभक्षणम्। तत्तत्कालोद्भवानाञ्च फलादीनामनर्पणम्। विनियुक्तावशिष्टस्य प्रदानं व्यञ्जनस्य तु। पृष्ठीकृतासनञ्चैव परनिन्दा परस्तुतिः। गुरौ मौनं निजस्तोत्रं देवतानिन्दनं तथा। अपराधास्तथा विष्णोर्द्वात्रिंशत् परिकीर्त्तिताः"।

**द्वात्रिंशल्लक्षण** पु० द्वात्रिंशत् लक्षणानि शुभलक्षणानि यस्य। शुभलक्षणान्विते महापुरुषलक्षणयुते नरे। काशी०ख० ११ अ०। "पञ्चदीर्घः पञ्चसूक्ष्मः सप्तरक्तः षडुन्नतः। त्रिहृस्वपृथुगम्भीरो द्वात्रिंशल्लक्षणस्त्विति" "पञ्च दीर्घाणि शस्तानि यथा दीर्घाण्यथास्य वै। भुजौ नेत्रे हनू नासावक्षसी तनयस्य ते। त्वक्केशाङ्गुलिदशनाः पर्व्वाण्यङ्गुलिजान्यपि। तथास्य पञ्च सूक्ष्माणि द्विकपालपदेशभाक् यथा। पार्श्वाङ्घ्रितलनेत्रान्तं तालुजिह्वाधरोष्ठकम्। सप्तारक्तञ्च नखसंज्ञितम् राजलक्षणपदम्। कक्षा कुक्षिर्वक्षःस्कन्धकरपृष्ठं षडुन्नतम्। तथास्य दृश्यते बाले महदैश्वर्य्यभाग् यथा। ललाटकटिवक्षोभिः त्रिभिर्विस्तीर्णो यथाह्यसौ। पर्व्वतेजोऽतिगम्भीरं तथा शाम्यति नान्यथा। ग्रीवाजङ्घामेहनैश्च त्रिभिर्ह्रस्वोऽप्यपीडितः। स्वरेण सत्त्वनाभिभ्यां त्रिगम्भीरः शिशुः शुभः।"

**द्वादशी** स्त्री द्वादशानां पूरणः द्वादशन्+डट्। द्वादशसंख्यापूरणे स्त्रियां ङीप्। सा च द्वादश्याः चन्द्रकलायाः क्षयविरचप्रवेशनिर्गमयोग्यायां क्रियारूपायां तदुपलक्षित कालरूपायां वा तिथौ तस्यां व्रतकालनिर्णयः कालमा०उक्तो यथा "अथ द्वादशी निर्णीयते। सा च युग्मादिवाक्येन पूर्व्वविद्धा ग्राह्या। स्कन्दपुराणेऽपि "द्वादशी च प्रकर्त्तव्या एकादश्या युता विभो!। सदा कार्य्या च विद्वद्भिर्विष्णुभक्तैश्च मानवैः" इति। उत्तरविद्धां प्रतिषेधति वृहस्पतिः। "द्वितीया पञ्चमी वेधाद्दशमी च त्रयोदशी। चतुर्द्दशी चोपवासे हन्युः पूर्व्वोत्तरे तिथी" इति। नन्वेवं सत्येकादश्युपवासो द्वादश्युपवासश्च सत्येकस्मिन्नहनि प्राप्नोति सत्यम् तथापि चोभयशास्त्रयोऽन्यं विरोधाभावात् उभयोरनुष्ठानं भविष्यति। नन्वेकं व्रतमसमाप्य व्रतान्तरानुष्ठानमयुक्तम्। "असमाप्ते व्रते पूर्व्वे नैव कुर्य्याद्व्रतान्तरम्" इति वाक्यात् नैवम् इदं हि वाक्यमेकव्रतस्य मध्ये व्रतान्तरोपक्रमं निषेधति प्रकृते तु व्रतद्वयस्यापि सहैवोपक्रम इति तन्त्रेणानुष्ठानं भविष्यति। नन्वस्त्वेवं खण्डतिथौ, अखण्डतिथौ त्वेकादशी द्वादश्युपवासौ द्वौ नैरन्तर्य्येण प्राप्नुतः। तत्र पारणमन्तरेण प्रथमोपवासस्यासमाप्तत्वात्। द्वितीयोपवासस्य प्रक्रमो न सम्भवतीति चेत् नैवम् अद्भिः पारणं कृत्वा द्वितीयोपवासस्य प्रक्रमितुं शक्यत्वात्। नाद्यं तु पारणमशितानशितोभयात्मकम्। तत्राशितरूपत्वात् पूर्व्वोपवासं परिसमापयति। अनशितरूपत्वेनोत्तरोपवासं न विहन्ति। एतच्च व्याख्यानं दर्शपूर्णमासप्रकरणे वाजसनेयब्राह्मणे श्रूयते "यदानश्नन्नुपवसेत् क्षोधुकः स्याद्यदश्नीयात् रुद्रोऽस्य पशूनभिमन्येतापोऽश्नाति तन्नेवाशितं न क्षोधुको भवति नास्य रुद्रः पशूनभिमन्यते" इति। तस्मादुदकपारणेनोपवासद्वयनिर्वाहः। एतच्च सर्व्वतिथिसाधारणम्। प्रकृते त्वेकादशीद्वादश्योर्दैवतैक्यादुदकपारणमन्तरेणापि न कश्चिद्दोषः। अतएव स्मर्य्यते "एकादशीमुपोष्यैव द्वादशीं समुपोषयेत्। न तत्र विधिलोपः स्यादुभयोर्दैवतं हरिः" इति। उपवासद्वयाशक्तौ केवलद्वादश्युपवासिनोऽभयोः फलं सिध्यति तथा च स्मृतिः "एवमेकादशीं त्यक्त्वा द्वादशीं समुपोषयेत्। पूर्व्ववासरजं पुण्यं सर्व्वं प्राप्नोत्यसंशयम्" इति। द्वादश्यां तु काम्योपवासो मार्कण्डेयेन दर्शितः "द्वादश्यामुपवासेन विजयी नृप! सर्व्वशः।

चक्रवर्त्तित्वमतुलं संप्राप्य ऋतुजाः स्त्रियः" इति । अथाष्टौ महाद्वादश्यः, शुद्धैकादशीयुता द्वादशी उन्मीलिनीसंज्ञा १ द्वादश्येव शुद्धाधिका वर्द्धते चेत् सा वञ्जुली२ वासरत्रयस्पर्शिनी त्रिस्पृशा३ अमे पर्व्वणः सम्पूर्णाधिकत्वे पक्षवर्द्धिनी४ । जयाद्यष्टकस्य इत्यष्टौ निर्ण० सि० उक्ता जयादिचतुष्टयस्य हेमा०ब्र० उक्ता यथा "जया१ च विजया२ चैव जयन्ती३ पापनाशिनी४ ॥ सर्व्वपापहरा चैता कर्त्तव्या फलकाङ्क्षिभिः । एकादश्यां शुक्लपक्षे यदा ऋक्षं पुनर्व्वसुः । सा नाम्ना च जया१ ख्याता तिथीनामुत्तमा तिथिः । समुपोष्य व्रती पापात् मुच्यते नात्र संशयः । अग्निष्टोमस्य यज्ञस्य फलमाप्नोति मानवः१ । यदा शुक्ले तु द्वादश्यां नक्षत्रं श्रवणं भवेत् । विजया२ सा तथा प्रोक्ता तिथीनामुत्तमा तिथिः । तस्यां स्नातः सर्व्वतीर्थे स्नातो भवति मानवः । दानं सहस्रगुणितं तथा चैव पयोव्रतम् । होमजपोपवासेन सहस्राणां फलं लभेत् । यदा च शुक्लद्वादश्यां रोहिणी च प्रजायते । जयन्ती३ नाम सा प्रोक्ता सर्व्वपापहरा तिथिः । सप्तजन्मकृतं पापं स्वल्पं वा यदि वा बहु । तत् क्षालयति गोविन्दस्तस्यामभ्यर्च्चितस्तथा । यदा च शुक्लद्वादश्यां पुष्यं भवति कर्हिचित् । तदा साऽतिमहापुण्या कथिता पापनाशिनी४ । यो ददाति च यत्पुण्यं नित्यं संवत्सरे नरः । उपवासन्तु तस्यां च यः करोति महत्फलम् । तस्यां जगत्पतिर्देवः सर्व्वलोकेश्वरो हरिः । प्रत्यक्षतां प्रयात्याशु तदनन्तफलं स्मृतम्" एकादशीव्रतयोः साहचर्य्यादौ पारणे च विशेषः नि० सि० उक्तो यथा

"एकादशीद्वादश्योरेकत्वे तत्रैवोपवासः पार्थक्ये तु प्रसक्तोपवासद्वयम् "एकादशीमुपोष्यैव द्वादशीं समुपोषयेत्" इति विष्णुरहस्यात् असक्तौ तु द्वादश्यामेव "एवमेकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् । पूर्व्ववासरजं पुण्यं सर्व्वं प्राप्नोत्यसंशयम्" इति तत्रैवोक्तेः यदाल्पा द्वादशी तदोक्तं नारदेन "यदा भवति स्वल्पापि द्वादशी पारणादिने । उषःकाले द्वयं कुर्य्यात् प्रातर्माध्याह्निकं तदा" नारदीयेऽपि "अल्पायामथ विप्रेन्द्र ! द्वादश्यामरुणोदये । स्नानार्च्चनक्रियाः कार्य्या दानहोमादि संयुताः" इति सङ्कटे तु माधवीये देवलः "संकटे विषमे प्राप्ते द्वादश्यां पारयेत्कथम् । अद्भिस्तु पारणं कुर्य्यात् पुनर्भुक्तं न दोषकृत्" इति सङ्कटे त्रयोदशीपात-प्रदोषादौ अत्र केचिदाहुः "अपकर्षवाक्यान्यग्निहोत्रविषयाणि अग्निहोत्रादीनां श्रौतत्वेनापकर्षयोगादिति । द्वादश्यां च प्रथमपादमतिक्रम्य पारणं कार्य्यम् "द्वादश्याः प्रथमः पादो हरिवासरसंज्ञितः । तमतिक्रम्य कुर्व्वीत पारणं विष्णुतत्परः" इति निर्णयामृते मदनरत्ने च विष्णुधर्म्मोक्तेः । अत्र केचित् सङ्कटे "यदा स्वल्पा द्वादशी तदापि प्रातर्मुहूर्त्तत्रये पारणं कार्य्यम् "सर्व्वेषामुपवासानां प्रातरेव हि पारणमिति वचनादिति" । अन्ये तु रवश्च बहूनां कर्म्मकालानां विना कारणं बाधापत्तेः प्रागुक्तवचनैश्च अल्पद्वादश्यामेवापकर्षविधानादपराह्ण एव कार्य्यम् प्रातः शब्दस्तु "सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितमिति" वदपराह्णमात्रपरोऽप्युपपन्नः न च वाक्यवैयर्थ्यं पुनर्भोजनवारणपारणविशेषार्थत्वात् इत्याहुः । प्रमादेन एकादश्युपवासातिक्रमे अपरार्के वाराहे "एकादशी विद्धा चेद्द्वादशी परतः स्थिता । उपोष्या द्वादशी तत्र यदीच्छेत् परमं पदम्" । नि० सि० स्थानान्तरे

भाद्रपदशुक्लद्वादश्यां श्रवणयोगरहितायां पारणं कुर्य्यात् आभाकारिसमर्थेऽपीति दिवोदासोदाहृतवचनात् ।

"उपोष्य द्वादशीं मोहात् ऋक्षं श्रवणे यदि । करोति हन्ति तत्पुण्यं द्वादशद्वादशीभवम्" इति तत्रैव स्कान्दात् । अत्र तत्रैव प्रतिप्रसवः मार्कण्डेयोक्तः "श्रियेऽपि च महीपाल ! श्रवणं वर्त्तते यदि । तिथिनक्षत्रयोर्योगे भोक्तव्यं द्वादशीं लङ्घयेत हि" इति । केचित्तु तदा तत्परित्यागायोगस्तदा श्रवणस्य त्रेधाविभक्तस्य मध्यमविंशतिघटिकायोगं त्यक्त्वा पारणं कार्य्यं तदुक्तं विष्णुधर्म्मे "श्रुतेश्च मध्ये परिवर्त्तमेति सुप्तिप्रबोधपरिवर्त्तनमब्दु वर्ज्यमिति" । केचित्तद्घटी विभज्य मध्यपादद्वयं वर्ज्यमाहुः अत्र मूलं चिन्त्यम् । अत्रैव विष्णुपरिवर्त्तनोत्सवं कुर्य्यात् । सन्ध्यायां विष्णुं संपूज्य प्रार्थयेत मन्त्रस्तु तिथितत्त्वे उक्तः । यो "वासुदेव ! जगन्नाथ ! प्राप्तेयं द्वादशी तव । पार्श्वेन परिवर्त्तस्व सुखं स्वपिहि माधव !" इति अत्रैव शक्रध्वजोत्थापनमपरार्के मत्स्ये च "द्वादश्यां तु सिते पक्षे मासि प्रौष्ठपदे तथा । शक्रमुत्थापयेद्राजा विश्वश्रवणवासवे" इत्यनेन श्रवणद्वादशी तत्रैकादश्यां द्वादशीश्रवणयोगे कैवोपाख्या "एकादशी द्वादशी च वैष्णव्यमपि तत्र चेत् । तद्विष्णुशृङ्खलं नाम विष्णुसायुज्यकृद्भवेत्" इति विष्णुधर्म्मोक्तेः नारदीयेऽपि "संयुक्ते-

श्वादशीं राजन् द्वादशीं यदि संस्पृशेत् । श्रवणं ज्योतिषां श्रेष्ठं ब्रह्महत्यां व्यपोहति । द्वादशी श्रवणस्पृष्टा स्पृशेदेकादशीं यदि । स एव वैष्णवो योगो विष्णुशृङ्खलसंज्ञितः" इति हेमाद्रौ दिनद्वये द्वादशीश्रवणयोगेऽपि पूर्व्वा, निर्णयामृते तस्य पूर्व्वार्द्धमन्यथा पठितम् । "द्वादशी श्रवणर्क्षं च स्पृशेदेकादशीं यदि" इति तेन हेमाद्रिमते एकादश्याः श्रवणयोगाभावेऽपि तद्युक्तद्वादशीयोगमात्रेण विष्णुशृङ्खलं भवति निर्णयामृतमते तु श्रवणस्यैकादशीद्वादशीभ्यां योग एव विष्णुशृङ्खलं नान्यथेति । यदा निशीथानन्तरं सूर्य्योदयावधि द्विकलामात्रमपि श्रवणर्क्षं भवति तदापि पूर्व्वैव तदुक्तं तत्रैव नारदीये इमां प्रकृत्य "तिथिनक्षत्रयोर्योगो योगश्चैव नराधिप ! । द्विकलो यदि लभ्येत स ज्ञेयो ह्यष्टयामिकः" इति "द्वादशी श्रवणस्पृष्टा कृत्स्ना पुण्यतमा तिथिः । न तु सा तेन संयुक्ता तावत्येव प्रशस्यते" इति मदनरत्ने मात्स्याच्च । दिवोदासीये तु "रात्रेः प्रथमपादे चेच्छ्रवणं हरिवासरे । तदा पूर्व्वोपवासः स्यात् प्रातर्भान्ते च पारणम्" इत्युक्तम् । इदं तु निर्मूलत्वात् पूर्व्वविरोधाच्चोपेक्ष्यं इयं बुधवारेऽतिप्रशस्ता "बुधश्रवणसंयुक्ता सैव चेद्द्वादशी भवेत् । अत्यन्तमहती सा स्याद्दत्तं भवति चाक्षयम्" इति हेमाद्रौ स्कान्दात् । यानि तु पठन्ति "उत्तराषाढसंयुक्ता श्रोणाभाद्रपदापि वा । आसुरी सैव तारा स्याद्धन्ति पुण्यं पुराकृतम् । उदयव्यापिनी ग्राह्या श्रोणाद्वादशिका युता । विद्धर्क्षसंयुता या च नैवोपोष्या शुभेप्सुभिः" इत्यादीनि विष्णुधर्म्मस्कान्दभविष्यादीनि वचनानि तानि निर्मूलानि । यदपि [illegible]व्यर्थसारे उदयव्यापिनी ग्राह्येत्युक्तं यच्च बृहन्नारदीये "उदयव्यापिनी ग्राह्या श्रवणद्वादशीव्रते" इति तद्यदा शुद्धाधिका द्वादशी परदिने सूर्योदये श्रवणयोगः पूर्व्वेऽह्नि च तद्भिन्ने काले योगस्तत्परम् । दिनद्वये उदययोगे पूर्व्वैव वक्ष्यमाणकालव्याप्तेरित्युक्तं मदनरत्ने । यदा त्वेकादश्येव श्रवणयुता न द्वादशी तदापि पूर्व्वैव "यदा न प्राप्यते ऋक्षं द्वादश्यां वैष्णवं क्वचित् । एकादशी तदोपोष्या पापघ्नी श्रवणान्विता" इति मदनरत्ने नारदीयोक्तेः यदा परैवर्क्षयुता तदा परा तत्र शक्तेनोपवासद्वयं कार्य्यम् "एकादशीमुपोष्यैव द्वादशीं समुपोषयेत् । न चात्र विधिलोपः स्यादुभयोर्द्दैवतं हरिः" इति भविष्योक्तेः यत्तु विष्णुधर्म्मे "पारणान्तं व्रतं ज्ञेयं व्रतान्ते द्विजभोजनम् । असमाप्ते व्रते पूर्व्वे नैव कुर्य्याद्व्रतान्तरम्" इति तदेतद्भिन्नपरम् अत्र गौडाः "शृणु राजन् परं काम्यं श्रवणद्वादशीव्रतम्" इति स्मृतिवचनात् काम्यमेवेदम् तेनाशक्तस्य नित्यैकादशीव्रतमेवेति मन्यन्ते "द्वादश्यामुपवासेन शुद्धात्मा नृप सर्व्वशः । चक्रवर्त्तित्वमतुलं संप्राप्नोत्युत्तमां श्रियम्" इति गौडनिबन्धे मार्कण्डेयोक्तेश्च । दाक्षिणात्यास्तु "एकादश्यां नरो भुक्त्वा द्वादश्यां समुपोषणात् । व्रतद्वयकृतं पुण्यं सर्व्वं प्राप्नोत्यसंशयम्" इति वराहवामनपुराणोक्तेः श्रवणद्वादशीव्रतमेवेत्याहुः भुक्त्वेति फलाद्याहारपरम् नक्तपरम् "नक्तान्वितानि पापानीति" निषेधात् "उपवासद्वयं कर्त्तुं न शक्नोति नरो यदि । प्रथमेऽह्नि फलाहारी निराहारी परेऽहनि" इति दिवोदासीये भविष्योक्तेश्च । असक्तौ तु स्वीकृतैकादशीव्रतोऽयं प्रत्युक्तं मात्स्ये "द्वादश्यां शुक्लपक्षे तु नक्षत्रं श्रवणं यदि । उपोष्यैकादशीं तत्र द्वादश्यां पूजयेद्धरिम्" इति पूजयेत्तु उपवसेदित्यर्थः । अस्वीकृतैकादशीव्रतस्त्वेकादश्यां भुक्त्वा द्वादश्यामुपवसेत् "एकमेकादशीं भुक्त्वा द्वादशीं समुपोषयेत् । पूर्व्ववासरजं पुण्यं सर्व्वं प्राप्नोत्यसंशयम्" इति नारदीयोक्तेः । पारणं तूभयान्तेऽन्यतरगते वा कुर्य्यात् "तिथिनक्षत्रनियमे तिथिभान्ते च पारणमिति" स्कान्दात् "तिथिनक्षत्रसंयोगे उपवासो यदा भवेत् । पारणं तु न कर्त्तव्यं यावन्नैकस्य संक्षयः" इति नारदीयादिति हेमाद्रिः । यद्यप्यत्र नक्षत्रमात्रान्तेऽपि पारणं प्रतिभाति तथापि तिथिमात्रान्ते ज्ञेयम् नक्षत्रान्ते तिथिमध्येऽपि "याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रयोगतः । ऋक्षान्ते पारणं कुर्य्याद्विना श्रवणरोहिणीम्" इति विष्णुधर्म्मे श्रवणान्तमात्रे पारणनिषेधात् "रोहिण्यान्तु भान्ते कुर्य्यात्तिथेर्वापि" इति वह्निपुराणात् तदन्तेऽप्यस्तु न तत्रैवमस्तीति न, ऋक्षान्तोऽनुक्तत्व इति मदनरत्ने । असम्भवे तु "तिथ्यन्ते तिथिभान्ते वा पारणं यत्र चोदितम् । यामत्रयोर्द्ध्वगामिन्यां प्रातरेव हि पारणम्" इति ज्ञेयम् । यत्तु मदनरत्ने द्वादशीवृद्धौ श्रवणवृद्धौ वा श्रवणान्त एव पारणं कुर्य्यात् "पारणं तिथिवृद्धौ तु द्वादश्यामृक्षसंक्षयात् । वृद्धौ कुर्य्यात्त्रयोदश्यां तत्र दोषो न विद्यते" इति वह्निपुराणादित्युक्तम् तत्प्रकरणादेतस्यामेव श्रवणयुक्तैकादश्यां विहितनिजवैकादशीव्रतपरं न तु श्रवण-

द्वादशीपरमिति मदनरत्ने। गौडास्तु श्रवणद्वादशीपर-माहुः अत्र विधिर्मदनरत्ने विष्णुधर्मे "तस्मिन् दिने तथा स्नानं यत्र क्वचन सङ्गमे। दध्योदनयुतं तस्यां जलपूर्णं घटं द्विजे। वस्त्रसंवेष्टितं दत्त्वा छत्रोपानहमेव च। न दुर्गतिमवाप्नोति गतिमग्र्यां च विन्दति"।

दशावतारद्वादश्यो हेमा०व्र० उक्ता यथा विष्णुपु० "मार्गशीर्षे सिते पक्षे द्वादश्यां समजायत। मत्स्यो विष्णुः समाह्लादस्तस्येष्टेयं सदा तिथिः। एकादश्या-मुपोष्यादौ पठन् मत्स्यावतारकम्। स्वर्णं सौवर्णं मत्स्यं च कारयित्वा वदेदिदम्।' विष्णुर्मे प्रीयतां मत्स्य इत्युक्त्वा ब्राह्मणाय तम्। यो दद्यात् स सुखी भूत्वा विष्णुलोकं व्रजेच्छुभम्। पौषे मासि सिते पक्षे द्वादश्यां समजायत। कूर्मरूपी स भगवान् तस्येष्टेयं सदा तिथिः। एकादश्यामुपोष्यादौ पठन् कूर्मस्य तारकम्। स्वर्णं सौवर्णं कूर्मस्य कार-यित्वा वदेदिदम्। विष्णुर्मे प्रीयतां कूर्म इत्युक्त्वा ब्राह्म-णाय तम्। यो दद्यात्स सुखी भूत्वा विष्णुलोके महीयते। यो मर्त्यो माघशुक्लस्य द्वादश्यां तु विशेषतः। उपोष्य भक्त्या चाभ्यर्च्य वराहं स्वर्णनिर्मितम्। दद्या-त्पठेच्च चरितं वाराहं हरिसत्तमम्। वराहजन्मदिवसे विप्राय श्रद्धयान्वितः। सुरभिं तं समासाद्य मोदते काल-मक्षयम्। वराहविष्णुप्रीतिश्च कूर्मदेवं यथातथम्। नारसिंहं फाल्गुने तु एकादश्यां सिते शुचिः। उपो-ष्याभ्यर्चयेद्भक्त्या नारसिंहभवे दिने। सौवर्णं नार-सिंहं च कृत्वा भक्त्या द्विजाय तु। दद्यात् सिंहचरि-तमिदं शृण्वन् पठंश्च वा। शत्रून् विजित्येह लक्ष्मीं प्राप्य नित्यं नरोत्तमः। पातालस्वर्गमाप्नोति नाग-दैत्याङ्गनायुतम्। चैत्रे मासि सिते पक्षे एकादश्यामु-पोषितः। वामनस्य दिनेऽभ्यर्च्य वामनं पुरुषोत्तमम्। सौवर्णं वामनं दद्यात् पठेद्भक्त्या च यो नरः। स चिरं वामनस्येदं शृणुयाद्वाप्युपोषितः। स धनैरन्वितो भुक्त्वा भोगानिह च मानुषान्। ब्रह्मलोकमवाप्नोति विद्वान्मा-मानुतत्परः। वैशाखशुक्लैकादश्यामुपोष्याभ्यर्चयेच्छुचिः। जामदग्न्यं तथा रामं दद्याद्विप्राय स्वर्णजम्। ज्यैष्ठ-शुक्लैकादश्यामुपोष्य द्वादशीदिने। रामं दाशरथिं सीतां पूजयेद्भक्तिभावतः। इदं च रामचरितं शृणु-याद्वा पठेन्नरः। रामस्य जन्मदिवसे (कल्पभेदादवि-रुद्धम्) तथा दाशरथेर्द्विजः। सीतारामन्तु सौवर्णं यो विप्राय प्रयच्छति। द्वादश्यां रामचरितमिदं शृण्वन् पठंश्च वा। स इन्द्रलोकं लभते रामस्यैव प्रसा-दतः। इह कीर्त्तिमवाप्नोति धनं पुत्रांश्च जीवितम्। आषाढ़मासि शुक्लां य उपोष्यैकादशीं द्विजः। द्वाद-श्यामर्चयेद्रामं रौहिणेयं महाबलम्। रौहिणेयस्य रामस्य तिथौ जन्मनि सत्तमे। सौवर्णं ब्राह्मणायापि रामं दद्यात्सपालकम्। स नागलोकमाप्नोति यावदिन्द्रा-श्चतुर्दश। इह स्त्रीभोगमाप्नोति बलवान्नीरुजो भवेत्। श्रावणे मासि शुक्लां य उपोष्यैकादशीं द्विजः। द्वाद-श्यामर्चयेत् कृष्णं रुक्मिणीसहितं शुचिः। स्वर्णप्रतिकृतिं कृत्वा दद्याच्च ब्राह्मणाय च। पठेच्च कृष्णचरितं कृष्ण-जन्मदिने (कल्पभेदादविरुद्धम्) शुचिः। श्रावणे शृणु-याद्वापि य इदं पुरुषोत्तमः। स मुच्यतेऽस्मात् संसारात् भुक्त्वा भोगमनुत्तमम्। यस्तु भाद्रपदे मासि एकादश्यामु-पोषितः। शुक्लायामर्चयेत् कल्किं विष्णुं सौवर्णम-च्युतम्। द्वादश्यां जन्मदिवसे कल्किविष्णुः सुरेश्वरः। दद्याद्विप्राय तं चापि भक्त्यानुष्ठानतो सदा। पठेदिदं कल्किविष्णोश्चरितं शृणुयात्ततः। जनलोकमवाप्नोति कृते जन्म लभेद्युगे। तस्मिंस्तस्मिंस्तु दिवसे दत्तं विष्णु-वतारकम्। अर्चयन्तु सुराः सर्वे भवेयुः सर्वदार्चिताः'। ति० त० नारदीये 'वैशाखशुक्लपक्षे तु द्वादशी वैष्णवी तिथिः। तस्यां शीतलतोयेन स्नापयेत् केशवं शुचिः'। इयं पिपी-तकी द्वादशी। अत्र 'षष्ठीसमेता कर्त्तव्या सप्तमी नाष्टमीयुता। पतङ्गोपासनायेह षष्ठ्यामाहुरुपोषणम्। एकादश्यां प्रकुर्वन्ति उपवासं मनीषिणः। उपासनाय द्वादश्यां विष्णोर्यद्वदिदं तथा'। इति भविष्यपुराणेन एकाद-श्युपवासानन्तरं द्वादश्यां विष्णूपासनाया उक्तत्वादत्रापि तथा व्यवहरन्तीति नाम सुम्मादरः। द्वादशीव्रतेतूप-वासानन्तर्य्यं विनापि पूजेति। इयं पूर्ववचनोक्तषष्ठीयुता सप्तमीवत्। आषाढ़द्वादश्यादिषु शयनादिकं प्रागुक्तवचनात् भविष्योत्तरे 'द्वादशी श्रवणोपेता सर्वपापहरा तिथिः। बुधवारसमायुक्ता ततः शतगुणा भवेत्। तामुपोष्य समाप्नोति द्वादशद्वादशीफलम्'। उभयदिने तल्लाभे तु एकादशीयुता ग्राह्या। 'द्वादशी च प्रकर्त्तव्या एकादश्या-युता विभो। सदा कार्य्या च विद्वद्भिर्विष्णुभक्तैश्च मानवैः" इति स्कान्दात्। यदा त्वेकादश्यामेव श्रवणा तदा तामुपवसेत् तथाच नारदः "याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रयोगतः। तास्वेव तद्व्रतं कुर्य्यात्

श्रवणद्वादशीं विना’। भविष्योत्तरे ‘एकादशी यदा तु स्यात् श्रवणेन समन्विता। विजया सा तदा प्रोक्ता भक्तानां विजयप्रदा। तिथिनक्षत्रसंयोगे उपवासो यदा भवेत्। तावदेव न भोक्तव्यं यावन्नैकस्य संक्षयः। विशेषेण महीपाल ! श्रवणं वर्द्धते यदि। तिथिक्षयेण भोक्तव्यं द्वादशीं नैव लङ्घयेत्’। तिथिक्षयेण एकादशीक्षयेण भोक्तव्यं द्वादश्यां पारयेदित्यर्थः। अत्र हेतुः द्वादशीमित्यादिः। यदा त्वेकादश्युपवासदिने श्रवणं नास्ति परदिने द्वादश्यां तत् तदोपवासद्वयमाह ब्रह्मवैवर्त्तः ‘एकादशीमुपोष्यैव द्वादशीं समुपोषयेत्। न चात्र विधिलोपः स्यादुभयोर्द्देवता हरिः’। अत्र च ‘उपवासे व्रते पूर्वे नैव कुर्यात् व्रतान्तरम्’ इति स्मृतेः पारणस्याकरणेन पूर्वोपवासासमाप्तावुपवासान्तरारम्भे विधिलोपेन भवेदित्यर्थः। हेतुमाह उभयोरित्यादिः। उभयोपवासासामर्थ्ये तु श्रवणद्वादश्येवोपोष्या तथाच स्मृतिः। ‘वरमेकादशीं भुक्त्वा द्वादशीं समुपोषयेत्। पूर्वोपवासजं पुण्यं सर्वं प्राप्नोत्यसंशयः’। तथा ‘उपोष्य द्वादशीं पुण्यां विष्णुऋक्षेण संयुताम्। एकादश्युद्भवं पुण्यं नरः प्राप्नोत्यसंशयम्’। द्वादश्युपवासःकाम्यः। तथाह मार्कण्डेयः ‘द्वादश्यामुपवासेन विशाला नृप सर्वशः। चक्रवर्त्तित्वमतुलं संप्राप्नोत्यतुलां श्रियम्’’ इति तत्त्व० कश्चिद्विशेषोऽनयोर्द्देशभेदादुव्यवस्था।

मासभेदे द्वादशद्वादशीव्रतभेदा वह्निपु० १८८अ० उक्ता यथा अग्निरुवाच। द्वादशीव्रतकं वक्ष्ये भुक्तिमुक्तिप्रदायकम्। एकभक्तेन नक्तेन तथैवायाचितेन च। उपवासेन भैक्ष्येण चैवं द्वादशिकव्रती। चैत्रे मासि सिते पक्षे द्वादश्यां मदनं हरिम्। पूजयेद् भुक्तिमुक्त्यर्थी मदनद्वादशीव्रती१। माघशुक्ले तु द्वादश्यां भीमद्वादशिकव्रती। नमो नारायणायेति यजेद्विष्णुं स सर्वभाक्२। फाल्गुने च सिते पक्षे गोविन्दद्वादशीव्रती३। विशोकद्वादशीकारी यजेदाश्वयुजे हरिम्४। लवणं मार्गशीर्षे५ तु कृष्णमभ्यर्च्य यो नरः। ददाति शुक्लद्वादश्यां स सर्वरसदायकः। गोवत्सं पूजयेद् भाद्रे गोवत्सद्वादशीव्रती६। माघ्यान्तु समतीतायां श्रवणेन तु संयुता। द्वादशी७ या भवेत् कृष्णा प्रोक्ता सा तिलद्वादशी। तिलैः स्नानन्तिलैर्होमो नैवेद्यन्तिलमोदकम्। दीपश्च तिलतैलेन तथा देयं तिलोदकम्। तिलाश्च देया विप्रेभ्यः फलं होमोपवासतः। ओं नमो भगवतेऽथो वासुदेवाय वै यजेत्। सकुलः स्वर्गमाप्नोति षट्तिलद्वादशीव्रती। मनोरथद्वादशीकृत् फाल्गुने तु सितेऽर्च्चयेत्८। नामद्वादशीव्रतकृत् केशवाद्यैश्च नामभिः। वर्षं यजेद्धरिं स्वर्गी न भवेन्नारकी नरः। फाल्गुनस्य सितेऽभ्यर्च्य सुमतिद्वादशीव्रती९। मासि भाद्रपदे शुक्ले१० अनन्तद्वादशीव्रती। अश्लेषर्क्षे तु मूले वा माघे११ कृष्णाय वै नमः। यजेत्तिलांश्च जुहुयात्तिलद्वादशीकृन्नरः। सुगतिद्वादशीकारी फाल्गुने तु सिते यजेत्। जय कृष्ण नमस्तुभ्यं वर्षं स्याद् भुक्तिमुक्तिमः। पौषशुक्ले तु द्वादश्यां१२ सम्प्राप्तिद्वादशीव्रती’’।

द्वादशीनियमा तत्कर्म्मभेदनिषेधाश्च एका०त० उक्ता यथा ‘‘द्वादशीनियमाः। द्वादश्यामपि विष्णुपूजनम् ‘‘एकादश्यां प्रकुर्वन्ति उपवासं मनीषिणः। उपासनाय द्वादश्यां विष्णोर्यद्दिवसन्तथा’’ इति भविष्यपुराणात्। यद्वत् यथा द्वादश्यां विष्णूपासनाय एकादश्यामुपवासं प्रकुर्वन्ति तथा इयमपि पक्षोयुक्ता सप्तमी उपोष्या सप्तम्यां सूर्य्योपासनायेत्यर्थः। तत्र ब्रह्माण्डपुराणम्। ‘‘कांस्यं मांसं सुरां क्षौद्रं लोभं वितथभाषणम्। व्यायामञ्च व्यवायञ्च दिवास्वप्नं तथाञ्जनम्। शिलापिष्टं मसूरांश्च द्वादशैतानि वैष्णवः। द्वादश्यां वर्ज्जयेन्नित्यं सर्व्वपापैः प्रमुच्यते। पुनर्भोजनमध्वानं यानभारायमैथुने, उपवासफलं हन्युर्दिवा निद्रा च पञ्चमी’’। हारीतः ‘‘उपवासं द्विजः कृत्वा ततोब्राह्मणभोजनम्। कुर्य्यात्तस्य समग्र उपवासो हि जायते’’। शङ्खः ‘‘वृद्धः’’ शाङ्कः। नारायणमन्त्रजपस्य पापात्मनिर्णयाय ते कात्यायनः ‘‘मिथ्यावादे दिवास्वप्ने बहुशोजलसेवने। अष्टाक्षरं व्रती जप्त्वा शतमष्टोत्तरं शुचिः’’ तथा ‘‘मन्त्रं निवेद्य हरये निवेद्योपोषणं व्रती। द्वादश्यां पारणं कुर्य्याद्वर्ज्जयित्वा यु पोदकीम्’’। उपोदकीम् पूतिकाशाकम्। कूर्म्मपुराणे ‘‘कांस्यं मांसं सुरां क्षौद्रं हिंसां तैलमसत्यताम्। द्यूतक्रीड़ां दिवानिद्रां व्यायामं क्रोधमैथुनम्। द्वादश्यां द्वादशैतानि वैष्णवः परिवर्ज्जयेत्’’। संवत्सरप्रदीपे ‘‘अभ्यङ्गञ्च पराक्षञ्च तैलं निर्माल्यलङ्घनम्। तुलसीचयनं द्यूतं पुनर्भोजनमेव च। वस्त्रपीड़ां तथा क्षारं द्वादश्यां वर्ज्जयेद्बुधः’’। अभ्यङ्गोयेन केनापि, तैलं तिलतैलं मार्टीषपि निषिद्धम्। स्मृतिः

"सतत्र सार्षपं तैलं यच्चैवं पुष्पवासितम् । अदुष्टं पक्वतैलञ्च स्नानाभ्यङ्गेषु नित्यशः" इति वचनं द्वादशीतरपरः । नित्यश इति पर्ववारादावपि । वारे द्रव्यदानेनापि प्रतिप्रसवमाह स्मृतिः "रवौ पुष्पं गुरौ दूर्वां भूमिं भूमिजवासरे । भार्गवे गोमयं दद्यात्तैलदोषोपशान्तये" । दद्यात्तैले इति शेषः । स्मृतिसन्तोषे "कांस्यं मांसं मसूरञ्च चणकं कोरदूषकम् । शाकं मधु परान्नञ्च त्यजेदुपवसन् स्त्रियम्" । निर्माल्यकुङ्कुमस्यापि निषिद्धमत्वाधिकदोषकरं पुण्यहानिकरं वा । क्षारं वस्त्रञ्च । "सम्मार्जनस्तत्पट्टीषु द्वादश्यां श्राद्धवासरे । वस्त्राणां क्षारसंयोगोदहत्यासप्तमं कुलम्" । इति स्मृतिवचनात् ।

**द्वादशक** त्रि० द्वादश संख्याऽस्य कन् । १द्वादशसंख्यान्विते पञ्चदशे दण्डादौ "वैश्ये शारदपञ्चाशच्छूद्रे द्वादशकोदमः" मनुः द्वादशानां संख्या कन् । २द्वादशसंख्यायाञ्च "ब्राह्मणस्य परित्राणाद्गवां द्वादशकस्य च" मनुः

**द्वादशकर** पु० द्वादश करा भुजा यस्य । १कार्त्तिकेये त्रिका० "स्वामी स्वामी विशाखश्च द्विभुजो बाहुरूप उक् । दधे शक्तिः कुक्कुटोऽथ एकवक्त्रोऽथ षण्मुखः । षड्भुजो वा द्वादशभिर्बाहुभिरेऽरण्ये द्विनाहुकः । शक्तीषुपाशानि स्त्रिंशतोमरदोत्कर्णीयुतः । मत्स्या दक्षिणहस्तेषु, मटुक, वामे करे तथा । शिखिपिच्छं धनुः खेटं पताकाभयकुक्कुटे । कपालकर्त्तरीशूलपाशभृद्याम्यसौम्ययोः" हेमा०ब्र० । २मूलयोगे ३हर्षणयोगे च तयोर्द्वादशदण्डात्मकत्वम् १७६पृ० दृश्यम् । द्वादशभुजादयोऽप्यत्र । ४कुमारानुचरगणभेदे "अनन्तो द्वादशभुजस्तथा कृष्णोपकृष्णकौ" भा०शल्य० ४६अ० तद्गणोक्तौ । द्वादश कराः किरणा यस्य । ५द्वादशार्चिषि जीवे "ध्यात्वा पीताम्बरं पीतं सरोजस्थं चतुर्भुजम्" इत्युक्तेश्चतुर्भुजस्यैव प्रतीतेर्नामकरस्य रूपपरता "भैरवीरूपविद्या च भुजैर्द्वादशभिर्युताः" हेमा०व्र०उक्ते ६भैरवीभेदे स्त्री ।

**द्वादशन्** त्रि० द्वौ च दश च अधिका वा दश । १अधिकायां द्वियुतायां वा दशसंख्यायां २तद्युते च "द्वादश प्रतिमासानि आद्यं षाण्मासिके तथा" ति०त०

**द्वादशपत्र** न० द्वादशाक्षराणि पत्राणीव यस्य । "वैशाखादिरूपतया कल्पित द्वादशाक्षरयुक्ते भगवतो मन्त्रभेदे स च मन्त्रः ओं नमो भगवते वासुदेवाय" यथोक्तं वामनपु० "पितामहोऽपि तं पुत्रं साध्यं वह्नितये रतम् । सनत्कुमारं प्रोवाच योगं द्वादशपत्रकम् । मिथ्यासंज्ञस्तु ओंकारो मेषोऽस्य शिरसि स्थितः । मासो वैशाखनामा च प्रथमं पत्रकं स्मृतम् । नकारः शिरसि प्रोक्तो वृषोऽस्य शिरसि स्थितः । ज्यैष्ठमासश्च तत्पत्रं द्वितीयं परिकीर्तितम् । मोकारो भुजयोर्युग्मं मिथुनं तत्र संस्थितम् । मास आषाढनामा च तृतीयं पत्रकं स्मृतम् । भकारं नेत्रयुगलं कर्कटस्तत्र संस्थितः । मासः श्रावण इत्युक्तश्चतुर्थं पत्रकं स्मृतम् । गकारं हृदयं प्रोक्तं सिंहो वसति तत्र च । मासो भाद्रस्तथा प्रोक्तः पञ्चमं पत्रकं स्मृतम् । वकारं कवचं विद्यात् कन्या तत्र प्रतिष्ठिता । मासश्चाश्वयुजो नाम षष्ठं तत्पत्रकं स्मृतम् । तेकारमस्त्रग्रामश्च तुलाराशिसमाश्रयः । मासश्च कार्तिको नाम सप्तमं पत्रकं स्मृतम् । वाकारं नाभिसंयुक्तं स्थितं तत्र च वृश्चिकः । मासो मार्गशिरा नाम अष्टमं पत्रकं स्मृतम् । सुकारं जघनं प्रोक्तं तत्रस्थश्च धनुर्धरः । पुष्येति गदितो मासो नवमं परिकीर्तितम् । देकारश्चोरुयुगलं मकरस्तत्र संस्थितः । माघो निगदितो मासः पत्रकं दशमं स्मृतम् । वाकारो जानुयुगलं कुम्भस्तत्रापि संस्थितः । पत्रकं फाल्गुनं प्रोक्तं रुद्रैकादशकं स्मृतम् । पादौ यकारो मीनो हि स चैत्रे च वसेत् सदा । इदन्तु द्वादशं प्रोक्तं पत्रं वै केशवस्य हि । द्वादशारं यथा चक्रं यन्नाभि द्विभुजस्तथा । त्रिधा हृत्स्थे स्वमूर्त्तिश्च तथोक्तः परमेश्वरः । एतत्तवोक्तं देवस्य रूपं द्वादशपत्रकम् । यस्मिन् ज्ञाते द्विजश्रेष्ठ ! न भूयो मरणं भवेत्"

**द्वादशपुत्र** पु० ब० व० संख्यात्वात् कर्म० । औरसादिद्वादशविधेषु पुत्रेषु यथाह विष्णु स०

"अथ द्वादश पुत्रा भवन्ति । स्वे क्षेत्रे संस्कृतायामुत्पादितः स्वयमौरसः प्रथमः१ । नियुक्तायां सपिण्डेनोत्तमवर्णेन वोत्पादितः क्षेत्रजो द्वितीयः२ । पुत्रिकापुत्रस्तृतीयः३ । यस्तस्याः पुत्रः स मे पुत्रो भवेदिति या पित्रा दत्ता सा पुत्रिका । पुत्रिकाविधिना प्रतिपादिता पितृभ्रातृविहीना पुत्रिकैव । पौनर्भवश्चतुर्थः४ । अक्षता भूयःसंस्कृता, पुनर्भूः भूयस्त्वसंस्कृतापि परपूर्वा । कानीनः पञ्चमः५ । पितृगृहेऽसंस्कृतयैवोत्पादितः । स च पाणिग्राहस्य । गृहे च गूढोत्पन्नः षष्ठः६ । यस्य तल्पजस्तस्यासौ । सहोढः सप्तमः७ । गर्भिणी या संस्क्रियते तस्याः पुत्रः । स च पाणिग्राहस्य । दत्तकश्चाष्टमः८ । स च मातापितृभ्यां यस्य दत्तः । क्रीतश्च नवमः९ ।

स च येन क्रीतः। स्वयमुपगतोद्यमः।१०। स च स्वयो-पगतः। अपविद्धस्त्वेकादशः।११। पित्रा माता च परित्यक्तः। स च येन प्रतिगृहीतः। यस्त कानीनोत्पादितः द्वादशः।१२। एतेषां पूर्वः पूर्वः श्रेयान्। स एव दायहरः'।

'वह्नीनां द्वादश ह्येव पुत्राः पुराणदृष्टाः। स्वयमुत्पादितः स्वक्षेत्रे संस्कृतायां प्रथमः। तदलाभे नियुक्तायां क्षेत्रजो द्वितीयः२। तृतीयः३ पुत्रिका विज्ञायते अभ्रातृका पुंसः पितृनभ्येति प्रतीचीनं गच्छति पुत्रत्वम्। श्लोकः। अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम्। अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति। पौनर्भवश्चतुर्थः४ पुनर्भूः कौमारं भर्त्तारमुत्सृज्यान्यैः सह चरित्वा तस्यैव कुटुम्बमाश्रयति सा पुनर्भूर्भवति। या च क्लीबं पतितमुन्मत्तं वा भर्त्तारमुत्सृज्यान्यं पतिं विन्दति मृते वा, सा पुनर्भूर्भवति। कानीनः पञ्चमो या पितृगृहेऽसंस्कृता कामादुत्पादयेन्मातामहस्य पुत्रो भवतीत्याहुः। अथाप्युदाहरन्ति। अप्रत्ता दुहिता यस्य पुत्रं विन्दति तुल्यतः। पुत्री मातामहस्तेन दद्यात् पिण्डं हरेद्धनमिति। गूढे च गूढोत्पन्नः षष्ठ इत्येते दायादा बान्धवास्त्रातारो महतोभयादित्याहुः। अथादायादास्तत्र सहोढएव प्रथमो या गर्भिणी संस्क्रियते तस्यां जातः सहोढः पुत्रो भवति। दत्तको द्वितीयो यं मातापितरौ दद्याताम्। क्रीतस्तृतीयस्तच्छुनःशेफेन व्याख्यातं हरिश्चन्द्रो ह वै राजा सोऽजीगर्त्तस्य सौयवसेः पुत्रं विक्रीय स्वयं क्रीतवान्। स्वयमुपागतश्चतुर्थः तच्छुनःशेफेन व्याख्यातं शुनःशेफो ह वै यूपे नियुक्तो देवतास्तुष्टाव तस्येह देवताः पाशं विमुमुचुस्तमृत्विज ऊचुर्ममैवायं पुत्रोऽस्त्विति तान्नाह न सम्पेदे ते सम्पादयामासुरेष एव यं कामयेत तस्य पुत्रोऽस्त्विति तस्येह विश्वामित्रो होतासीत्तस्य पुत्रत्वमियाय। अपविद्धः पञ्चमो यं मातापितृभ्यामपास्तं प्रतिगृह्णीयात्। शूद्रापुत्रएव षष्ठो भवतीत्याहुरित्येतेऽदायादा बान्धवाः। अथाप्युदाहरन्ति। यस्य पूर्वेषां वर्णानां न कश्चिद्दायादः स्यादेते तस्यापहरन्ति' वशिष्ठसंहिता १७अ०। अत्र कानीनस्य मातामहपुत्रत्वमुक्तं विष्णु० मते च पाणिग्राहस्य पुत्रत्वं मिथःसमयभेदेनात्र व्यवस्था

**द्वादशप्रसृत** लि० द्वादश प्रसृतयः यन्त्र अच्। द्वादशप्रसृतियुक्ते मानभेदे वह्निभेदे यथा "दस्त्वादौ सैन्धवस्याच्च मधुनः प्रसृतिद्वयम्। विनिर्मथ्य ततो दद्यात्स्नेहस्य प्रसृतिद्वयम्। एकीभूते ततः स्नेहे कल्कस्य प्रसृतिं क्षिपेत्। संमूर्च्छिते कषायन्तु चतुःप्रसृतिसम्मितम्। वितरेच्च तदावापमन्ते द्विप्रसृतोन्मितम्। एवं प्रकल्पितो वस्तिर्द्वादशप्रसृतो भवेत्। ज्येष्ठायाः खलु मात्रायाः प्रमाणमिदमीरितम्। अपस्मारे भिषक्त्वायांसतद्वत्प्रसृतिज्ञापनम्। यथावयो निरूहाणां कल्पनेयमुदाहृता। सैन्धवादिद्रव्याणां विज्ञिकाभिर्मितार्णवैः:"।

**द्वादशभाव** पु० द्वादशगुणितो भावः। ज्यो०उक्तेषु तन्वादिषु द्वादशसु भावेषु तदानयनादि तत्स्थितग्रहफलञ्च नी०ता०उक्तं यथा "पूर्वं नतं स्याद्दिनरात्रिखण्डं दिवानिशोरिष्टघटीविहीनम्। दिवानिशोरिष्टघटीषु शुद्धं द्युरात्रिखण्डं त्वपरं नतं स्यात्। तत्काले सायनार्कस्य भुक्तभोग्यांशसंगुणात्। स्वोदयात् खाग्निलब्धं यत् भुक्तं भोग्यं रवेस्त्यजेत्। इष्टनाडीपलेभ्यश्च गतगम्याञ्जिनोदयात्। शेषं खत्र्याहतं भक्तमशुद्धेन लवादिकम्। अशुद्धशुद्धभे हीनयुक् तनुर्व्ययनांशकम्। एवं लङ्कोदयैर्भुक्तं भोग्यं शोध्यं पलीकृतात्। पूर्वपश्चान्नतादन्यत् प्राग्वत्तद्दशमं भवेत्। सषड्भे लग्नखे जायातुर्यौ लग्नोनतुर्यतः। षष्ठांशयुक् तनुः सन्धिरग्रे षष्ठांशयोजनात्। त्रयः सषड्योभावाः षष्ठांशैकयुक् तुखात्। अन्ये त्रयः षडेवं ते भार्धयुक्ताः परेऽपि षट्। खेटे भावसमे पूर्णं फलं सन्धिसमे तु खम्। हीनेऽधिके विसन्धिभ्यां भावे पूर्वापरे फलम्। भुक्तं भोग्यं खेटकालात् गुणात् त्रिंशल्लिप्ताक्षोदयाप्तं लवादिकम्। हीनं युक्तं भास्करे तत्ततः स्याद्राशौ लग्नं भार्धयुक्तादृगेस्तु। खेटे सन्धिद्वयान्तःस्थे फलं तद्भावजं भवेत्। हीनेऽधिके द्विसन्धिभ्यां भावे पूर्वापरे फलम्। यद्वसन्ध्यन्तरं कार्यं विंशत्या गुणितं भवेत्। भावसन्ध्यन्तरेणाप्तं फलं विंशोपकाः स्मृताः"। अयमर्थः। मेषादिराशीनामुदयकालोलग्नं तस्य च त्रिंशदंशरूपतया जन्मकाले मेषादीनां यतमोऽंशो गतः तदारभ्य तदुत्तरराशेस्तत्तोर्वाचीनांशान्तः तनुभावः एवं धनभावादि एवं तन्वादिद्वादशभावास्तेषां सन्धयोऽपि तथैव ज्ञेयाः। राशिमात्रगणनया फलं स्थूलं भावगणनया तु सूक्ष्मं फलादिकं भवतीति ज्ञेयम्। ते च तनुभावः, धनभावः, सहजभावः, बन्धुभावः, पुत्रभावः, रिपुभावः, कलत्रभावः, मृत्युभावः, धर्मभावः, कर्मभावः, आयभावः, व्ययभावश्चेति द्वादश। तेषां सन्धयश्च द्वादशेत्यवधेयम्।

**द्वादशमद्य** न॰ द्वादशविधं मद्यम्। "पानसं द्राक्षमाधूकं खार्जुरं तालमैक्षवम्। माध्वीकं टङ्कमाध्वीकं मैरेयं नारिकेलजम्। समानानि विजानीयात् मद्यान्येकादशैव तु। द्वादशं तु सुरामद्यं सर्वेषामधमं स्मृतम्" पुलस्त्योक्ते द्वादशविधे मद्ये।

**द्वादशमल** पु॰ द्वादशगुणितो मलः। "वसाशुक्रमसृङ्मज्जं मूत्रविट्कर्णविङ्नखाः। श्लेष्मास्थि दूषिका स्वेदो द्वादशैते नृणां मलाः" अत्रिसंहितोक्ते नृणां द्वादशविधे मले। तत्र "षण्णां षण्णां क्रमेणैव शुद्धिरुक्ता मनीषिभिः। मृद्वारिभिश्च पूर्वेषामुत्तरेषान्तु वारिभिः" शुद्धिप्रकारमाह तत्रैव।

**द्वादशमास** पु॰ द्वादशगुणितो मासः। १चैत्रवैशाखज्यैष्ठाषाढश्रावणभाद्राश्विनकार्त्तिकमार्गशीर्षपौषमाघफाल्गुनसंज्ञकेषु द्वादशसु मासेषु "कश्चित् द्वादश मासाः संवत्सरः कश्चित् त्रयोदश मासाः" श्रुतिः द्वन्॰। २वर्षे पु॰

**द्वादशमासकर्मन्** न॰ द्वादशसु मासेषु कर्त्तव्यं कर्म। विष्णुस॰ उक्ते मार्गादिमासेषु तिथिभेदे दानहोमादिकर्मभेदे यथा

"मार्गशीर्षशुक्लपञ्चदश्यां मृगशिरःसंयुक्तायां चूर्णित-लवणस्य सुवर्णनाभं प्रस्थमेकं चन्द्रोदये ब्राह्मणाय प्रदापयेत्। अनेन कर्मणा रूपसौभाग्यवानभिजायते। पौषी चेत् पुष्ययुक्ता स्यात्तस्यां गौरसर्षपकल्कोद्वर्त्तितशरीरो गव्यघृतपूर्णकुम्भेनाभिषिक्तः सर्वौषधीभिः सर्वगन्धैः सर्वबीजैश्च स्नातो घृतेन भगवन्तं वासुदेवं स्नापयित्वा गन्धपुष्पधूपदीपनैवेद्यादिभिश्चाभ्यर्च्य वैष्णवैः शाक्रैर्बार्हस्पत्यैश्च मन्त्रैः पावके हुत्वा ससुवर्णेन घृतेन ब्राह्मणान् स्वस्ति वाचयेत्। वासोयुगं कर्त्रे दद्यात्। अनेन कर्मणा पुष्यते। माघी मघायुता चेत्तस्यां तिलैः श्राद्धं कृत्वा पूतोभवति। फाल्गुनी फल्गुनीयुता चेत्स्यात्तस्यां ब्राह्मणाय सुसंस्कृतं स्वास्तीर्णं शयनं निवेद्य भार्य्यां मनोज्ञां रूपवतीं द्रविणवतीञ्चाप्नोति। नार्य्यपि भर्त्तारम्। चैत्री चित्रायुता स्यात्तस्यां चित्रवस्त्रप्रदानेन सौभाग्यमाप्नोति। वैशाखी विशाखायुता चेत्तस्यां ब्राह्मणसप्तकं क्षौद्रयुक्तैस्तिलैः सन्तर्प्य धर्मराजानं प्रीणयित्वा पापेभ्यः पूतोभवति। ज्यैष्ठी ज्येष्ठायुता चेत्तस्यां छत्रोपानत्प्रदानेन गवामाधिपत्यं प्राप्नोति। आषाढ्यामाषाढायुक्तायामन्नपानदानेन तदेवाक्षय्यमाप्नोति। श्रावण्यां श्रवणयुक्तायां जलधेनुं सान्नां वासोयुगाच्छादितां दत्त्वा स्वर्गमाप्नोति। प्रोष्ठपद्यां प्रोष्ठपदायुक्तायां गोदानेन सर्वपापविनिर्मुक्तोभवति। आश्वयुज्यामश्विनीगते चन्द्रमसि घृतपूर्णं भाजनं सुवर्णयुतं विप्राय दत्त्वा दीप्ताग्निर्भवति। कार्त्तिकी कृत्तिकायुता चेत्तस्यां सितमुक्षाणमन्यवर्णं वा शशाङ्कोदये सर्वसस्यरत्नगन्धोपेतं दीपमध्ये ब्राह्मणाय दत्त्वा कान्तारभयं न पश्यति। वैशाखशुक्लतृतीयायामुपोषितोऽक्षतैर्वासुदेवमभ्यर्च्य तानेव हुत्वा दत्त्वा च सर्वपापेभ्यः पूतोभवति। यच्च तस्मिन्नहनि प्रयच्छति तदक्षय्यमाप्नोति। पौष्यां समतीतायां कृष्णपक्षद्वादश्यां सोपवासस्तिलैः स्नातस्तिलोदकं दत्त्वा तिलैर्वासुदेवमभ्यर्च्य तानेव हुत्वा दत्त्वा भुक्त्वा च पापेभ्यः पूतोभवति। माघ्यां समतीतायां कृष्णद्वादश्यां सोपवासः श्रवणं प्राप्य वासुदेवाग्रतो महावर्त्तिद्वयेन दीपद्वयं दद्यात्। दक्षिणपार्श्वे महारजतरक्तेन समग्रेण वाससा घृततुलामष्टाधिकां दत्त्वा वामपार्श्वे तिलतैलतुलां साष्टां दत्त्वा श्वेतेन समग्रेण वाससा एतत्कृत्वा कृतकृत्योयस्मिन् राष्ट्रेऽभिजायते यस्मिन् देशे यस्मिन् कुले च तत्रोज्ज्वलोभवति। आश्विनं सकलं मासं ब्राह्मणेभ्यः प्रत्यहं घृतं प्रदायाश्विनौ प्रीणयित्वा रूपभाग्भवति। तस्मिन्नेव मासि प्रत्यहं गोरसैर्ब्राह्मणान् भोजयित्वा राज्यभाग्भवति। प्रतिमासं रेवतीयुते चन्द्रमसि मधुघृतयुतं रेवतीप्रीत्यै परमान्नं ब्राह्मणान् भोजयित्वा रेवतीं प्रीणयित्वा रूपभाग्भवति। माघे मास्यग्निं प्रत्यहं तिलैर्हुत्वा सघृतं कुल्माषं ब्राह्मणान् भोजयित्वा दीप्ताग्निर्भवति। सर्वां चतुर्दशीं नदीजले स्नात्वा धर्मराजानं पूजयित्वा सर्वपापेभ्यः पूतोभवति। यदिच्छेद्विपुलान् भोगान् चन्द्रसूर्य्यग्रहोपमान्। प्रातःस्नायी भवेन्नित्यं द्वौ मासौ माघफाल्गुनौ"। कृत्यतत्त्वे दर्शितानि अन्यानि च मासभेदकार्य्याणि द्रष्टव्यानि।

**द्वादशमासिक** न॰ मासिभवं ठञ् मासिकम् कर्म॰। मृतदिनावधिद्वादशसंख्यापूरणे मासे कर्त्तव्ये प्रेतोद्देश्यके श्राद्धभेदे।

**द्वादशयात्रा** स्त्री द्वादशसु मासेषु द्वादशविधा यात्रा। यात्रातत्त्वे स्कान्दपुराणोक्ते मासभेदे देवोत्सवे यात्राभेदे ताश्च तत्र दर्शिता यथा

"इन्द्रद्युम्न उवाच वैशाखादिषु मासेषु यात्रापूजाविधिं मुने!। श्रोतुमिच्छामि देवेशे यथावद्वक्तुमर्हसि। जैमिनिरुवाच। वैशाखादिषु मासेषु देवदेवस्य शार्ङ्गिणः।

या या द्वादश यात्राः स्युस्ता हि वक्ष्यामि ते शृणु। वैशाखे चान्दनी यात्रा ज्यैष्ठे स्नापन्युदीरिता। आषाढे रथयात्रा स्यात् श्रावणे शयनी तथा। भाद्रे दक्षिणपार्श्वी सा आश्विने वामपार्श्विका। उत्थानी कार्तिके मासि छादनी मार्गशीर्षके। पौषे पुष्याभिषेकः स्यान्माघे शाल्योदनी तथा। फाल्गुने दोलयात्रा स्यात् चैत्रे मदनभञ्जिका। एकैका मुक्तिदा सर्वा धर्मकामार्थसाधनाः”। तद्विधिस्तु तत्रैव दृश्यः।

**द्वादशराजमण्डल** न॰ द्वादशानां राज्ञां मण्डलम् उत्तरपदद्विगुः। द्वादशानां राज्ञां मण्डले तच्च अग्निपु॰ २३९अ॰ उक्तं यथा

“राम उवाच। मण्डलं चिन्तयेत् मुख्यं राजा द्वादशराजकम्। अरिर्मित्रमरेर्मित्रं मित्रमित्रमतः परम्। तथारिमित्रमित्रञ्च विजिगीषोः पुरः स्मृताः। पार्ष्णिग्राहः स्मृतः पश्चादाक्रन्दस्तदनन्तरम्। आसारावनयोश्चैवं विजिगीषोश्च मण्डलम्। अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः। अनुग्रहे संहतयोर्निग्रहे व्यस्तयोः प्रभुः। मण्डलाद्बहिरेतेषामुदासीनो बलाधिकः। अनुग्रहे संहतानां व्यस्तानां च वधे प्रभुः”।

**द्वादशरात्र** पु॰ द्वादशभिः रात्रिभिः निर्वृत्तः तद्धितार्थद्विगुः अच् समा॰। द्वादशदिनसाध्ये १द्वादशाहनामके अहीनयागभेदे २रात्रिसत्रभेदे स च यागः कात्यायनेनोक्तः “ज्योतिष्टोमधर्मा एकाहद्वादशाहयोस्तद्गुणदर्शनात्” कात्या॰श्रौ॰१२।१।१ “द्वादशाहः सत्रमहीनश्च” ३सू॰ “अत्र विशेषमाह द्वादशाहमृद्धिकामा उपेयुरिति”। “तथा त्रयोदशरात्रमासीरन्निति सत्रलिङ्गम् द्वादशाहेन प्रजाकामं याजयेदित्यहीनलिङ्गम्। अस्यानुकथनप्रयोजनम्, सत्रे सत्रात्मको धर्मो द्वादशत्वेन प्रवर्तते, अहीने चाहीनात्मकः” कर्कः “उक्ता अहीनाः इदानीं सत्राण्यभिधीयन्ते” कर्कः “द्वादशरात्रादीनि रात्रिसत्राणि” कात्या॰श्रौ॰२४।१।१ “रात्रिसत्राणि इति नाम तच्च द्वादशरात्रप्रभृतीनाम् पूर्वपदप्रधानोऽयं बहुव्रीहिः एकोत्तरेण चत्वारिंशदन्तानि। तत्र द्वादशरात्रं द्वादशाह एव सत्रात्मकः स च पूर्वमुक्त एव ततो द्वादशरात्रादारभ्य एकैकाहवृद्ध्या चत्वारिंशद्रात्रान्तानि सत्राणि भवन्ति” कर्कः। द्वादशानां रात्रीणां समा॰ द्वि॰ अच् समा॰। ३समाहृतासु द्वादशरात्रिषु न॰ “अत ऊर्द्ध्वं त्रिरात्रं द्वादशरात्रं वा” आश्व॰गृ॰१।८।१ “अतः गृहप्रवेशनीयहोमादूर्द्ध्वं त्रिरात्रं द्वादशरात्रं वा नियतौ” नारा॰ द्वादश रात्रयः साधनकालत्वेन सन्त्यस्य अर्श आद्यच्। ४द्वादशरात्रिसाध्ये सत्रभेदे उदा॰ पूर्वमुक्तम्।

**द्वादशलोचन** पु॰ द्वादश लोचनान्यस्य। कार्त्तिकेये त्रिका॰ तस्य षडाननत्वात् तथात्वम्।

**द्वादशवर्गी** स्त्री द्वादशानां वर्गाणां समाहारः समा॰ द्वि॰ ङीप्। नीलकण्ठताजकोक्ते वर्षकाले ग्रहाणां बलसाधने द्वादशमिते वर्गे सा च

“क्षेत्रं होरा त्र्यंशपञ्चांशसप्तवस्वङ्कांशेशार्कभागाः सुधीभिः। विज्ञातव्या लग्नसंस्थाः शुभानां वर्गाः श्रेष्ठाः पापवर्गा अनिष्टाः। ओजे रवीन्द्वोः सम इन्दुरव्योर्होरे स्वहार्द्धप्रमिते विचिन्त्ये। द्रेष्काणपाः स्वेषुनवर्क्षनाथास्तुर्यांशपाः स्वर्क्षजकेन्द्रनाथाः। ओजर्क्षे पञ्चमांशेशाः कुजार्कीज्यज्ञभार्गवाः। समभे व्यत्ययाज्ज्ञेया द्वादशांशाः स्वभात् स्मृताः। सप्तौजतो व्योमचरोऽङ्कशैलवस्वङ्कदिग्रुद्रगुणः स्वराशेः। भक्तो गताक्षैर्नगाष्टनन्ददिग्रुद्रभागाः कुयुतात् क्रियात् स्युः। एवं द्वादशवर्गी स्यात् ग्रहाणां बलसिद्धये। स्वोच्चमित्रशुभाः श्रेष्ठाः नीचारिक्रूरगोऽशुभाः। एवं ग्रहाणां शुभपापवर्गपङ्क्तिद्वयं वीक्ष्य शुभाधिकत्वे। दशाफलं भावफलं च वाच्यं शुभं त्वनिष्टं त्वशुभाधिकत्वे। क्रूरोऽपि सौम्याधिकवर्गशाली शुभोऽतिसौम्यः शुभखेचरश्चेत्। सौम्योऽपि पापाधिकवर्गयोगाद्दुष्टोऽतिनिन्द्यः खलु पापखेटः। राशीशमित्रोच्चारिपुक्रमेण चिन्त्यं तनोरप्यनयैव रीत्या। भावेषु सर्वेष्वपि वर्गचक्रं विलोक्य तत्तत् फलमूहनीयम्” इति द्वादशवर्गी।

**द्वादशवार्षिक** त्रि॰ द्वादश वर्षान् अधीष्टः भृतो भूतो वा उत्तरपदवृद्धिः। द्वादश वर्षान् व्याप्य १अधीष्टे सत्कृत्य नियोजिते २भृते कर्मकरे ३भूते स्वसत्तयाव्यापके ब्रह्महत्यानोदके व्रतभेदे च तच्च प्रा॰वि॰ दर्शितं यथा

तत्र मनुः “ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसेत्। भैक्ष्याश्यात्मविशुद्ध्यर्थं कृत्वा शवशिरोध्वजम्”। संवर्त्तः “ब्रह्महा तु वनं गत्वा वनवासो जटी ध्वजी। वन्यान्येव फलान्यश्नन् सर्वकामविवर्जितः। भिक्षार्थी विचरेद्ग्रामं वन्यैर्यदि न जीवति। चातुर्वर्ण्यं चरेद्भैक्ष्यं खट्वाङ्गी संयतः पुमान्। भिक्षित्वैवं समादाय वनं गच्छेत्ततः पुनः। वनवासी स पापात्मा सदाकाल

मतन्द्रितः। स्थापयच्चैव तत् पापं ब्रह्मघ्नः पापकृत्तमः। अनेनैव विधानेन द्वादशाब्दं समाचरेत्"। "तस्मादुक्तनिमित्तेष्वपि प्राजापत्यादयो योजनीयाः। तत्र द्वादशवार्षिकव्रते द्वादशदिवसव्यापकैकं प्राजापत्यमित्यस्य गण्यमाने प्राजापत्यानां षष्ट्यधिकशतत्रयं द्वादशवार्षिकवैकल्पिकमनुष्ठेयं भवति। तदशक्तौ तावत्यो वा धेनवो दातव्याः" मिता०। रघु०मते तदर्द्धमिति भेदः। भाविनि तु "वर्षस्याभविष्यति" पा० नोत्तरपदवृद्धिः। द्वादशवर्षिक द्वादशवर्षान् भाविनि ज्वरादौ

**द्वादशशुद्धि** स्त्री द्वादशगुणिता शुद्धिः। तन्त्रसारोक्ते वैष्णवानां कायिकादिद्वादशशुद्धिभेदे "अथ द्वादशशुद्धिर्वै वैष्णवानामिहोच्यते। गृहोपलेपनञ्चैव तथा चागमनं हरेः। भक्त्या प्रदक्षिणञ्चैव पादयोः शोधनं पुनः। पूजार्थं पत्रपुष्पाणां भक्त्यैवोत्तोलनं हरेः। करयोः सर्वशुद्धीनामियं शुद्धिर्विशिष्यते। तन्नामकीर्त्तनञ्चैव गुणानामपि कीर्त्तनम्। भक्त्या श्रीकृष्णदेवस्य वचसः शुद्धिरिष्यते। तत्कथाश्रवणञ्चैव तस्योत्सवनिरीक्षणम्। श्रोत्रयोर्नेत्रयोश्चैव शुद्धिः सम्यगिहोच्यते। पादोदकस्य निर्माल्यमालानामपि धारणम्। उच्यते शिरसः शुद्धिः प्रणतस्य हरेः पुरः। आघ्राणं गन्धपुष्पादेर्निर्माल्यस्य तपोधन!। विशुद्धिः स्यादनन्तस्य घ्राणस्यापि विधीयते। पत्रपुष्पादिकं यच्च कृष्णपादयुगार्पितम्। तदेकं पावनं लोके तद्धि सर्वं विशोधयेत्। ललाटे च गदा यस्य मूर्ध्नि चापं शरांस्तथा। नन्दकञ्चैव हृन्मध्ये शङ्खं चक्रं भुजद्वये। शङ्खचक्राङ्कितो विप्रः श्मशाने म्रियते यदि। प्रयागे या गतिः प्रोक्ता सा गतिस्तस्य गौतम!"।

**द्वादशशोधित** न० द्वादशं व्यवस्थानं प्रहराद्धिक्येन शोधितम्। व्यवस्थाने प्रहराद्धिक्येन शुद्धियुक्ते लग्ने "गुरुशुक्रोदये शुद्धलग्ने द्वादशशोधिते" दीक्षातत्त्वम्।

**द्वादशसंग्राम** द्वादशविधः संग्रामः। देवानामसुरैः सह द्वादशविधे युद्धे ते च संग्रामभेदा वह्निपु० २७१ अ० उक्ता यथा "देवासुराणां सङ्ग्रामा दायार्थं द्वादशाऽभवन्। प्रथमो नारसिंहस्तु द्वितीयो वामनो रणः। सङ्ग्रामश्च वाराहश्चतुर्थोऽमृतमन्थनः। तारकामयसङ्ग्रामः५ षष्ठो ह्याजीवकोऽ६ रणः। त्रैपुर७श्चान्धकवधोऽ८ष्टमो वृत्रघातकः। जितो१० हालाहल११श्चाथ घोरः कोलाहलो१२ रणः। हिरण्यकशिपोर्वक्षो विदार्य च नखैः पुरा। नारसिंहो१ देवपालः प्रह्लादं कृतवान् नृपम्। देवासुरे२ वामनश्च छलित्वा बलिमूर्जितम्। महेन्द्राय ददौ राज्यं पुत्रोऽदितिसम्भवः। वराहस्तु३ हिरण्याक्षं हत्वा देवानपालयत्। उज्जहार भुवं मग्नां देवदेवैरभिष्टुतः। मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम्। सुरासुरैश्च मथितं देवेभ्यश्चामृतं ददौ४। तारकामयसङ्ग्रामे५ तदा देवाश्च पालिताः। निवार्येन्द्रं गुरून् देवान् दानवान् सोमसंयतान्। विश्वामित्रवसिष्ठात्रिकवयश्च रणे सुरान्। अपाचयन् निवार्य रागद्वेषादिदानवान्६। पृथ्वीरथे ब्रह्मयन्तुरीशस्य शरो हरिः। ददाह त्रिपुरं देवपालको दैत्यमर्द्दनः७। गौरीं जिहीर्षुणा रुद्रमन्धकेनार्दितं हरिः। असुरघ्नश्च रेवत्यां चक्रे चान्धासुरार्दनम्८। अपां फेनमयो भूत्वा देवासुररणे हरन्। वृत्रं देवहरं विष्णुर्देवधर्ममपालयत्९। शाल्वादीन् दानवान् जित्वा हरिः परशुरामकः। अपालयत् सुरादींश्च दुष्टक्षत्रं निहत्य च१०। हालाहलं११ विषं दैत्यं निराकृत्य महेश्वरात्। भयं निर्णाशयामास देवानां मधुसूदनः। देवासुरे रणे यश्च दैत्यः कोलाहलो जितः१२। पालिताश्च सुराः सर्वे विष्णुना धर्मपालनात्। राजानो राजपुत्राश्च मुनयो देवता हरिः। यदुक्तं यच्च नैवोक्तमवतारा हरेरिमे"।

**द्वादशसप्तमीव्रत** न० हेमा०व्र० भविष्यपुराणोक्ते माघादिपौषान्तेषु द्वादशसु मासेषु सप्तम्योः कर्त्तव्ये सूर्यव्रतभेदे "अथात्यन्तं प्रवक्ष्यामि सप्तमीकल्पमुत्तमम्। माघमासात् समारभ्य शुक्लपक्षे युधिष्ठिर!। सप्तम्यां कृतसङ्कल्पो वर्षमेकं व्रती भवेत्। वरुणं माघमासे तु भानुं संपूज्य कारयेत्। ब्रह्मकूर्चविधानेन यथा भक्त्या नृपोत्तम!। षष्ठ्यां भोजयेद्विप्रान् तिलपिष्टगुडोदनैः। अग्निष्टोमस्य यज्ञस्य फलं सम्यगवाप्यते। तपनं फाल्गुने मासि सूर्यमित्यभिपूजयेत्। वाजपेयस्य यज्ञस्य फलं प्राप्नोति दुर्लभम्। सप्तम्यां चैत्रमासे तु वेदांशुरिति पूजयेत्। उक्थाध्वरस्य पुण्यं नरः प्राप्नोत्यसंशयम्। वैशाखस्य तु सप्तम्यां धाता सूर्यमपूजयेत्। पशुबन्धाध्वरं पुण्यं सम्यक् प्राप्नोति मानवः। सप्तम्यां ज्यैष्ठमासस्य इन्द्रमित्यभिपूजयेत्। अश्वमेधफलावाप्तिर्जायते नात्र संशयः। तथाषाढस्य सप्तम्यां पूजयित्वा दिवाकरम्। वडसयंस्य यज्ञस्य फलं प्राप्नोति पुष्क-

त्तम् । श्रावणे मासि सप्तम्यामर्यमाणं प्रपूजयेत् । सौत्रामणीफलं पार्थ ! नरः प्राप्नोति भक्तितः । रविं भाद्रपदे मासि सप्तम्यामर्चयेच्छुचिः । तुलापुरुषदानस्य सुखेन फलमाप्नुयात् । अश्वयुक्शुक्लसप्तम्यां सवितारं प्रपूजयेत् । गोसहस्रप्रदानस्य फलमाप्नोति भक्तितः । कार्त्तिके शुक्लसप्तम्यां सप्ताश्वं नाम पूजयेत् । योऽभ्यर्च-यति पुण्यात्मा पौण्डरीकं फलं लभेत् । मार्गशीर्षे तथा भानुं पूजयित्वा विधानतः । राजसूयस्य यज्ञस्य फलमाप्नोति वै नरः । भास्करं पुष्यमासे तु पूजयित्वा विधानतः । चतुर्णामपि वेदानां स्वाध्यायस्य फलं लभेत् । तथैव कृष्णसप्तम्यां नामपूजादिकन्तु यः । सोप-वासः प्रयत्नेन वर्षमेकं समाचरेत् । पारिते नियमे चाथ सूर्ययागं समारभेत्" ।

**द्वादशसाहस्र** त्रि॰ द्वादश सहस्राणि परिमाणमस्य अण् उत्तरपदवृद्धिः । द्वादशसहस्रसंख्यायुक्ते "एतद् द्वादशसा-हस्रं देवानां युगमुच्यते" । "यत् प्राक् द्वादशसाहस्र-मुदितं दैविकं युगम्" इति च मनुः । स्त्रियां ङीप् । द्वादशसाहस्री संहिता । अत्र पक्षे ठञ् । द्वादशसाह-स्रिक तत्रार्थे ।

**द्वादशांशु** पु॰ द्वादश अंशवोऽस्य । वृहस्पतौ "शुक्रः षोड-शरश्मिस्तु यस्तु देवो ह्यपोमयः । लोहितो नवरश्मिस्तु स्थानमाप्यन्तु तस्य वै । वृहद्‌द्वादशरश्मीकं हरिद्राभन्तु वेधसः । अष्टरश्मिः शनिस्तस्तु कृष्णं वृद्धमयस्मयम्" मत्स्यपु॰ १२७अ॰ । द्वादशरश्मिप्रभृतयोऽप्यत्र त्रिका॰ ।

**द्वादशाक्ष** पु॰ द्वादशाक्षीणि यस्य षच् समा॰ । १कार्त्तिकेये । द्वादश मनोबुद्धिसहितज्ञानेन्द्रियादीनि अक्षीणीव यस्य । २बुद्धे च हेमच॰ । "एकाक्षो द्वादशाक्षश्च तथा चैक-जटः प्रभुः" भा॰ग॰४६अ॰उक्ते ३कुमारानुचरभेदे च ।

**द्वादशाक्षर** पु॰ द्वादश अक्षराणि अस्य । द्वादशाक्षरयुक्ते मन्त्रभेदे यथा विष्णोः "ओं नमो भगवते वासुदेवाय" "नमो भगवते वासुदेवायोङ्कारपूर्वकम् । महामन्त्रमिदं प्राहुस्तत्त्वज्ञा द्वादशाक्षरमिति" पद्म॰पु॰क्रिया॰ । कृष्णस्य "ओं क्लीं गोपीजनवल्लभाय स्वाहा" इत्येवं ३तावत्यां शक्तिविषयविद्यायां स्त्री गौरा॰ङीष् । ४द्वादशाक्षरयुक्त-पादके जगतीच्छन्दसि न॰ "विश्वे देवा द्वादशाक्षरेण जगतीमुदजयंस्तामुज्जेषम्" यजु॰६।३२

**द्वादशात्म** पु॰ द्वादश ज्ञानकर्मेन्द्रियमनोबुद्धिरूपाः पदार्थाः पूजनीयत्वेनाख्याति आ+ख्या—क । बुद्धे हेमच॰ । लोकशब्दे द्वादशायतनशब्दे च विस्तरतो दृश्यम् ।

**द्वादशाङ्गी** स्त्री द्वादशानामङ्गानां समाहारः ङीप् । १जिनाभिमते आचाराङ्गादौ द्वादशोपाङ्गसहिते दृष्टिवा-दरूपे द्वादशानामङ्गानां समाहारे "आचाराङ्गं सूत्रकृतं स्थानाङ्गं समवाययुक् । पञ्चमं भगवत्यङ्गं ज्ञाता धर्मकथापि च । उपासकाऽन्तकृदनुत्तरोपपातिका दश । प्रश्नव्याकरणं चैव विपाकश्रुतमेव च । इत्ये-कादश सोपाङ्गान्यङ्गानि द्वादशं पुनः । दृष्टिवादो द्वाद-शाङ्गी स्याद्गणिपिटकाह्वया" हेमच॰ । दृष्टिवादश्च पञ्च-विधः दृष्टिवादशब्दे दर्शितः । द्वादशाङ्गान्यस्य । २धूप-भेदे पु॰ "गुग्गुलुश्चन्दनं पत्रं कुष्ठमागुरु कुङ्कुमम् । जातीकोषश्च कर्पूरं जटामांसी च वालकम् । लघुशीरश्च धूपोऽसौ द्वादशाङ्गः प्रकीर्त्तितः" तन्त्रम् ।

**द्वादशाङ्गुल** पु॰ द्वादश अङ्गुलयः प्रमाणमस्य तद्धितार्थे द्वि॰ "द्विगोर्नित्यम्" मात्रचो लुक् अच् समा॰ । वितस्तौ परिमाणभेदे अमरः ।

**द्वादशात्मन्** पु॰ द्वादशात्मानो मूर्त्तयो यस्य । सूर्ये । आदि-त्यशब्दे ६८६पृ॰ धात्रादयो विष्णुपर्यन्ताः तस्य मूर्त्तय उक्ताः । द्वादशमेषादिराशयश्चास्य मूर्त्तयः सू॰सि॰ उक्ता यथा सूर्यं इत्युपक्रमे "पुनर्द्वादशधात्मानं विभजन् राशि-संज्ञकम्" । २अर्कवृक्षे च ।

**द्वादशादित्य** पु॰ संख्यात्वात् कर्म॰ । १धात्रादिषु विष्णुपर्यन्तेषु द्वादशसु आदित्येषु २काशीस्थेषु द्वादशसु लोलार्कादिषु च "इति काशीप्रभावज्ञोऽजनस्तु कमोहदः । कृत्वा द्वादशधात्मानं काशीपुर्यां व्यवस्थितः । लोलार्क उत्तरार्कश्च साम्बादित्यस्तथैव च । चतुर्थो द्रुपदादित्यो मयूखादित्य एव च । खखोल्कश्चारुणादित्यो वृद्धकेशव-सञ्ज्ञौ । दशमो विमलादित्यो गङ्गादित्यस्तथैव च । द्वादशश्च यमादित्यः काशीपुर्यां घटोद्भव ! । तमोऽधि-केभ्योदुष्टेभ्यः क्षेत्रं रक्षन्त्यमी सदा" काशी॰ख॰४६अ॰

**द्वादशाध्यायी** स्त्री द्वादशानामध्यायानां समाहारः ङीप् । जैमिनीयसूत्ररूपायां द्वादशलक्षण्याम् "धर्मो द्वादश-लक्षण्यां व्युत्पाद्यस्तत्र लक्षणैः । प्रमाणभेदशेषत्वप्रयुक्ति क्रमसंज्ञकाः । अधिकारोऽतिदेशश्च सामान्येन विशेषतः । ऊहोऽबाधश्च तन्त्रं च प्रसङ्गश्चोदिताः क्रमात्" जैमिनीय न्यायमाला जैमिनिशब्दे ३१४६पृ॰दृश्यम् । द्वादशलक्ष-ण्यपत्र । २मन्वादिसंहितायाश्च तयोर्द्वादशाध्या-यात्मकत्वात्तथात्वम् ।

**द्वादशान्यिक** त्रि॰ द्वादश अन्वे अन्वयाभूता अपपाठा जाता अस्य "कर्मगण्ध्ययने वृत्तम्" इत्युपक्रमे "बह्वच् पूर्वपदाट्ठञ्" पा॰ ठञ्। जातद्वादशापपाठके कुत्सिताध्ययन कर्तृभेदे।

**द्वादशायतन** न॰ द्वादशविधमायतनम्। बौद्धमतसिद्धेषु द्वादशसु पूजास्थानेषु मनोबुद्ध्यादिषु यथा "अर्थानुपार्ज्य बहुशो द्वादशायतनानि वै। परितः पूजनीयानि किमन्यैरिह पूजितैः। ज्ञानेन्द्रियाणि पञ्चैव तथा कर्मेन्द्रियाणि च। मनो बुद्धिरिति प्रोक्तं द्वादशायतनं बुधैरिति"।

**द्वादशायुस्** पु॰ द्वादश वर्षाः आयुःकालोऽस्य। कुक्कुरे शब्दमाला। आयुस्शब्दे ७६३पृ॰ शुनः त्रयोदशवर्षायुष्कालत्वोक्तावपि प्रायिकत्वादत्र द्वादशवर्षोक्तिरिति विवेच्यम्।

**द्वादशार** न॰ द्वादश अरा रथाङ्गावयवभेदा इव यस्य। १द्वादशकोणे राशिचक्रादौ "द्वादशारं न हि तज्जराय वर्वर्त्ति चक्रं परि द्यामृतस्य" ऋ॰१।१६४।११ "ऋतस्योदकस्य सत्यात्मकस्य वादित्यस्य चक्रं पुनःपुनः क्रमणशीलं मण्डलाख्यं रथचक्रं वर्वर्त्ति पुनःपुनर्वर्त्तते। सञ्चरति। कुत्र। द्यां परि। द्युलोकस्यान्तरिक्षस्य परितः। कीदृशं तत्। द्वादशारम्। द्वादशसंख्याकैर्मेषादिराश्यात्मकैर्वाऽरै रथाङ्गावयवैर्युक्तम्" भा॰ २तन्त्रोक्ते सुषुम्णानाडीमध्ये हृदयस्थे ककारादिठान्तद्वादशवर्णयुक्ते द्वादशदलकमले च द्वादशदलादयोऽप्यत्र।

**द्वादशाशन** न॰द्वादशविधमशनम् शाक॰त॰। सुश्रुतोक्ते अधिकारिभेदेन द्वादशविधे अशनभेदे यथोक्तं तत्र उत्तरतन्त्रे।

"अत ऊर्द्ध्वं द्वादशाशनप्रविभागान्वक्ष्यामः। तत्र शीतोष्णस्निग्धरूक्षद्रवशुष्कैककालिकद्विकालिकौषधयुक्तमात्राहीनदोषप्रशमनवृत्त्यर्थाः। तृष्णोष्णमद्दाहार्त्तान् रक्तपित्तविषातुरान्। मूर्च्छार्त्तान् स्त्रीषु च क्षीणान् शीतैः१रन्नैरुपाचरेत्। कफवातामयाविष्टान् विरिक्तान् स्नेहपायिनः। प्रक्लिन्नदेहांश्च नरानुष्णैः२रन्नैरुपाचरेत्। वातिकान् रूक्षदेहांश्च व्यायामोपहतांस्तथा। व्यवायिनश्चापि नरान् स्निग्धैः३रन्नैरुपाचरेत्। मेदसाभिपरीतांस्तु स्थूलान्मेहातुरानपि। कफाभिपन्नदेहांश्च रूक्षैः४रन्नैरुपाचरेत्। शुष्कदेहान् पिपासार्त्तान् दुर्बलानपि च द्रवैः ५। प्रक्लिन्नकायान् व्रणिनः शुष्कैः६र्मेहिनमेव च। एककालं७ भवेद्देयो दुर्बलाग्निविवृद्धये। समाग्नये तथाहारो देयः कालमथोभयम् ८। औषधद्वेषिणे देयस्तथौषधसमायुतः ९। मन्दाग्नये रोगिणे च मात्राहीनः १० प्रशस्यते। यथार्थदत्तश्चाहारो दोषप्रशमनः ११ स्मृतः। अतःपरन्तु स्वस्थानां वृत्त्यर्थं १२ सर्वमेव च। द्वादशाशनप्रविचारानेतानेव प्रचक्षते"।

**द्वादशाह** पु॰ द्वादशभिरहोभिर्निर्वृत्तः ठञ् तस्य लुक्, द्वादशमहः कर्म॰, द्वादशानामह्नां समाहारो वा टच् समा॰ अह्नाहान्तत्वात् पुंस्त्वम्। १द्वादशभिरहोभिः साध्ये यागभेदे द्वादशरात्रशब्दे दृश्यम्। २द्वादशे दिने "द्वादशाहः प्रशस्यते" स्मृतिः। ३द्वादशदिनसमाहारे "सत्यं श्राद्धं मासि मासि अपर्य्याप्ताब्दं प्रति। द्वादशाहेन वा कुर्य्यादेकाह्ने द्वादशाथ वा" ति॰त॰। अत्र अपवर्गे तृतीया द्वादशानां श्राद्धानां मध्ये प्रत्यहमेकैककरणेन द्वादशदिनव्यापकता बोध्या" द्वादश दिनानि च आद्यमाससम्बन्धीनि याह्याणीति बोध्यम्। द्वादशाहम् अधीष्टो भृतोभूतो भावी वा" पा॰ ठञ् तस्य लुक्। द्वादशदिनं व्याप्य ४सत्कृत्यनियोजिते ५भृते कर्मकरे स्वसत्तया तद्व्यापके ६यागादौ ७तत्र भाविनि ज्वरादौ च "ऐकाहिकेषु विकारेषु द्वादशाहिकेषु च यथार्थं प्रयोगः" कात्या॰ श्रौ॰ १२।६।२५ सूत्रे कर्क॰।

**द्वापर** पु॰ द्वौ परौ प्रकारौ विषयौ वस्य पृषो॰। १संशये। द्वाभ्यां सत्यत्रेताभ्यां परः पृषो॰। २सत्यत्रेतायुगानन्तरे युगभेदे च। ३द्व्यङ्कसंख्यान्वितपार्श्वकपाशके न॰ अक्षशब्दे ३३४ पृ॰ दृश्यम्। द्वापरयुगमानञ्च "अष्टौ शतसहस्राणि वर्षाणां मानुषाणि तु। चतुःषष्टिः सहस्राणि वर्षाणां द्वापरं युगम्" मत्स्यपु॰ १४१अ॰। तद्धर्मभेदश्च तत्र १४२अ॰उक्तो यथा

"अत ऊर्द्ध्वं प्रवक्ष्यामि द्वापरस्य विधिं पुनः। तत्र त्रेतायुगे क्षीणे द्वापरं प्रतिपद्यते। द्वापरादौ प्रजानान्तु सिद्धिस्त्रेतायुगे तु या। परिवृत्ते युगे तस्मिंस्ततः सा वै प्रणश्यति। ततः प्रवर्त्तिते तासां प्रजानां द्वापरे पुनः। लोभोधृतिर्वणिग्युद्धं तत्त्वानामविनिश्चयः। प्रध्वंसश्चैव वर्णानां कर्मणान्तु विपर्य्ययः। याञ्चा बधः परोदण्डोमानोदर्पोऽक्षमा बलम्। तथा रजस्तमोभूतः प्रवृत्ते द्वापरे पुनः। आद्ये कृते नाधर्मोऽस्ति स त्रेतायां प्रवर्त्तितः। द्वापरे व्याकुलीभूत्वा कलौ धर्मः प्रणश्यति। वर्णानां द्वापरे धर्माः सङ्कीर्य्यन्ते

**द्वारपाल** त्रि॰ द्वारं पालयति पालि—अण् । १द्वाररक्षके दौवारिकशब्दे ३७७१पृ॰ अस्य लक्षणम् "ततो मङ्कणकं गत्वा द्वारपालं महाबलम् । तं यक्षमभिवाद्यैव गोसहस्रफलं लभेत्" भा॰व॰८३अ॰। ततोऽर्घपात्रं विन्यस्य द्वारपालान् समर्चयेत्" तन्त्रसा॰ देवताभेदे द्वारपालभेदाः तत्र तत्र प्रकरणे तन्त्रोक्ता ज्ञेयाः । २तीर्थभेदे च "ततो गच्छेत राजेन्द्र ! द्वारपालं तरन्तुकम् । तस्य तीर्थं सरस्वत्यां यक्षेन्द्रस्य महात्मनः । तत्र स्नात्वा नरो राजन्नग्निष्टोमफलं लभेत्" भा॰व॰८३अ॰ स्त्रियां ङीप् । तस्या अपत्यं रेवत्या॰ ठक् न ढक् । द्वारपालिक द्वारपाल्या अपत्ये पुंस्त्री॰ । स्त्रियां ङीत् [टाप् ।

**द्वारपालक** त्रि॰ द्वारं पालयति ण्वुल् । दौवारिके स्त्रियां

**द्वारपिण्डी** स्त्री द्वारस्य पिण्डीव । देहल्यां जटा॰ ।

**द्वारबलिभुज्** पु॰ द्वारदत्तं बलिं भुङ्क्ते भुज—क्विप् । बक खगे त्रिका॰ । [पदार्थे हेमच॰ ।

**द्वारयन्त्र** द्वारे स्थितं यन्त्रम् । (ताला) (कुलुप) ख्याते

**द्वार(रा)वती** स्त्री द्वाराणि चतुर्वर्णमोक्षद्वाराणि प्रशस्तान्यत्र मतुप् मस्य वः संज्ञात्वेन वा पूर्वपददीर्घः । समुद्रोपान्तिके श्रीवासुदेवनिर्मिते पुरीभेदे तत्पुरीनिर्माणप्रकारस्थानादिकं हरिवं॰ विस्तरतो वर्णितं दिङ्मात्रमत्रोच्यते ।

"आनूपं सिन्धुराजस्य प्रपेदुर्यदुपुङ्गवाः । ते तत्र रम्यदेशेषु विषयेषु सुखप्रियाः । मुमुदुर्यादवाः सर्वे देवाः स्वर्गगता यथा । पुरवास्तु विचिन्वन् स कृष्णस्तु परवीरहा । ददर्श विपुलं देशं सागरानूपशोभितम् । वाहनानां हितञ्चैव सिकतातामृमृत्तिकम् । पुरलक्षणसम्पन्नं कृतास्पदमिव श्रिया । सागरानिलसंवीतं सागराम्बुनिषेवितम् । विषयं सिन्धुराजस्य शोभितं पुरलक्षणैः । तत्र रैवतको नाम पर्वतो नातिदूरतः । मन्दरोदारशिखरः सर्वतोऽभिविराजते । तत्रैकलव्यसंवासो द्रोणेनाध्युषितश्चिरम् । प्रभूतपुरुषोपेतः सर्वरत्नसमाकुलः । विहारभूमिस्तत्रैव तस्य राज्ञः सुनिर्मिता । नाम्ना द्वारवती नाम स्वायताऽष्टापदोपमा । केशवेन मतिस्तत्र पुर्य्यर्थे विनिवेशिता । निवेशं तत्र सैन्यानां रोचयन्ति स्म यादवाः । ते रक्तसूर्य्ये दिवसे तत्र यादवपुङ्गवाः । सेनापालाश्च चक्रुः स्कन्धावारनिवेशनम् । ध्रुवाय तत्र न्यवसत् केशवः सह यादवैः । देशे पुरनिवेशाय स यदुप्रवरो विभुः । तस्यास्तु विविधं नाम वास्तूनि च गदाग्रजः । निर्ममे पुरुषश्रेष्ठो मनसा यादवोत्तमः । एवं द्वारावतीञ्चैव पुरीं प्राप्य सबान्धवाः" । हरिवं॰ ११४ अ॰ । "इयं द्वारावती नाम पृथिव्यां निर्मिता मया । भविष्यति पुरी रम्या शक्रस्येवामरावती । तान्येवास्याः कारयिष्ये चिह्नान्यायतनानि च । चत्वरान् राजमार्गांश्च समानन्तःपुराणि च । देवा इवात्र मोदन्तां वसन्तो विगतज्वराः । बाधमाना रिपून् सर्वानुग्रसेनपुरोगमाः । गृह्यन्तां गृहवास्तूनि कार्य्यन्तां त्रिकचत्वराः । मीयन्तां राजमार्गाश्च प्राकारस्य च या मतिः । प्रेष्यन्तां शिल्पिमुख्या वै नियुक्ता वेश्मकर्मसु । नियुज्यन्तां च देशेषु प्रेष्यकर्मकरा जनाः । एवमुक्तास्तु यदवो हृष्टसम्प्रहृततत्पराः । यथानिवेशं संहृष्टाश्चक्रुर्वास्तुपरिग्रहम् । सूत्रहस्तास्ततो मानं चक्रुर्यादवपुङ्गवाः । पुण्येऽहनि महाराज ! द्विजातीन् प्रतिपूज्य च । वासुदेवस्तु कर्माणि विधिनाऽकारयंस्ततः । स्थपतीनथ गोविन्दस्ततोवाच महामतिः । अस्मदर्थे सुविहितं क्रियतामत्र मन्दिरम् । विभक्तचत्वरपथं सुनिविष्टेष्टदैवतम् । ते तथेति महाबाहुमुक्त्वा स्थपतयस्तदा । दुर्गकर्माणि सन्धाराणुपमाय यथाविधि । यथान्यायं निर्ममिरे द्वाराण्यायतनानि च । स्थानानि विदधुश्चैव ब्रह्मादीनां यथाक्रमम् । अपामग्नेः सुरेशस्य पशुदोहकरस्य च । मातृदैवानि चत्वारि द्वाराणि विदधुश्च ते । मुख्याख्यमैन्द्रं भल्लाटं पुष्पदन्तं तथैव च । ते वेश्मसु शुभ्रेषु यादवेषु महात्मसु । पुर्य्याः स्थिरं प्रवेशार्थं चिन्तयामास माधवः । तस्य दैवोत्थिता बुद्धिर्विमला क्षिप्रकारिणी । पुर्य्याः स्रष्टा वै प्रियकरी यदूनामभिवर्द्धिनी । शिल्पिमुख्यस्तु देवानां प्रजापतिसुतः प्रभुः । विश्वकर्मा स्वमत्या वै पुरीं संस्थापयिष्यति । मनसा समनुध्याय तस्यागमनकारणात् । त्रिदशाभिमुखः कृष्णो विविक्ते समपद्यत । तस्मिन्नेव ततः काले शिल्पाचार्य्यो महामतिः । विश्वकर्मा सुरश्रेष्ठः कृष्णस्य प्रमुखे स्थितः । यदीच्छेत् सागरः किञ्चिदुत्स्रष्टुमिह तोयराट् । ततः स्वायतलक्षण्या पुरी स्यात् पुरुषोत्तम ! । एवमुक्तस्ततः कृष्णः प्रागेव कृतनिश्चयः । सागरं सरितां नाथमुवाच वदतां वरः । समुद्र ! दश च द्वे च योजनानि जलाशये । प्रतिसंह्रियतामात्मा यद्यस्ति मयि

मान्यता। अवकाशे त्वया दत्ते पुरीयं मामके बले। पर्य्याप्तविषयारामा समग्रं विजहिष्यते। ततः कृष्णस्य वचनं श्रुत्वा नदनदीपतिः। समारुतेन योगेन उत्ससर्ज्ज जलाशयम्। विश्वकर्मा ततः प्रीतः पुर्य्याः संदृश्य वास्तु तत्। गोविन्दे चैव सम्मानं सागरः कृतवांस्तदा” हरिव० ११६ अ० ततो देवस्य लीलासंवरणानन्तरं तत्कलत्रादीनां ततोऽपगमने समुद्रेण तत्पुर्य्याः प्लावनं कृतम् तत्कथा भा०मौ०७ अ०। “निर्याते तु जने तस्मिन् सागरो मकरालयः। द्वारकां रत्नसम्पूर्णां जलेनाप्लावयत्तदा। यद्यद्धि पुरुषव्याघ्रो भूमेस्तस्या व्यमुञ्चत। तत्तत् संप्लावयामास सलिलेन स सागरः। तदद्भुतमभिप्रेक्ष्य द्वारकावासिनो जनाः। तूर्णात्तूर्णतरं जग्मुरहो दैवमयाब्रुवन्” “काशी काञ्ची च मायाख्या त्वयोध्या द्वारवत्यपि। मथुराऽवन्तिका चैव सप्त पुर्य्योऽत्र मोक्षदाः। श्रीशैलः मोक्षदः सर्वैः केदारोऽपि ततोऽधिकः। श्रीशैलाच्चापि केदारात् प्रयागं मोक्षदं परम्। प्रयागादपि तीर्थाग्र्यादविमुक्तं विशिष्यते। यथाऽविमुक्ते निर्वाणं न तथान्यत्र कुत्रचित्। अन्यानि मुक्तिक्षेत्राणि काशीप्राप्तिकराणि च। काशीं प्राप्य विमुच्येत नान्यथा तीर्थकोटिभिः” काशी० ७अ० निषिद्धमपि तप्तमुद्रादिधारणस्य तन्माहात्म्यकथनात् तत्र विहितं तन्नाम निर्वचनञ्चोक्तं काशीख०७अ०

“सप्तरात्रमुषित्वा तु ययौ द्वारावतीं प्रति। चतुर्णामपि वर्णानां यत्र द्वाराणि सर्वतः। अतो द्वारवतीत्युक्ता विद्वद्भिस्तत्त्ववेदिभिः। अस्थीन्यपि च जन्तूनां यत्र चक्राङ्कितान्यहो। किं चित्रं यत्र तत्र स्युः शङ्खचक्राङ्किताः करैः। अन्तकः शिक्षयत्येवं निजदूतान् मुहुर्मुहुः। ते त्याज्या यैर्द्वारवत्या नामापि परिगृह्यते। श्रीखण्डे क स आमोदः स्वर्णे वर्णः क तादृशः। तत् पावित्रं क वै तीर्थे, तद्गोपीचन्दने यथा। दूताः! शृणुत यद्भालं गोपीचन्दनलाञ्छितम्। ज्वलदिन्धनवत् सोऽपि दूरे त्याज्यः प्रयत्नतः। तुलस्यलङ्कृताये ये तुलसीनामजापकाः। तुलसीवनमालाये ते त्याज्या दूरतोभटाः। पवित्राणां च सर्वेषां सुपवित्रा बलाधिका। तुलां स्तुति यतस्तस्मात्तुलसीति निरुच्यते। युगे युगे द्वारवत्या रत्नानि परितोमृषन्। अब्धीरत्नाकरोऽद्यापि लोकेषु परिगीयते। द्वारवत्यां म्रियन्तोये जन्तवः कालचोदिताः। चतुर्भुजाः स्युर्वैकुण्ठे ते पीताम्बरधारिणः। तत्रापि तर्पयेत् पितृन् सहदेवर्षिमानवान्। तत्र तेषु च तीर्थेषु स्नातो सर्वेषु तन्त्रितः” दीर्घे द्वारावती तत्रार्थे “अयोध्या मथुरा माया काशी काञ्ची अवन्तिका। पुरी द्वारावती चैव सप्तैता मोक्षदायिकाः। एतास्तु पृथिवीमध्ये न गच्छन्ते कदाचन। पुरी द्वारावती विष्णोः प्राञ्चजन्योपरिस्थिता। मुक्तिदा गदिता एताः सर्वाश्च मानिताः सुरैः। यानि कानि च क्षेत्राणि काशीप्राप्तिकराणि षट्” इति भूतशुद्धितन्त्रम्।

**द्वारशाखा** स्त्री ६त०। द्वारस्यावयवे (वाजु) शब्दार्थच०।

**द्वारस्तम्भ** पु० ६त०। द्वाराङ्गस्तम्भे शब्दार्थच०।

**द्वारस्थ** त्रि० द्वारे तिष्ठति स्था—क। १द्वारपाले शब्दच० २द्वारस्थितमात्रे च।

**द्वारादि** “द्वारादीनाञ्च” व्याभ्यां पूर्वमैजागमनिमित्ते पा०ग०सू०उक्ते शब्दगणे स च गणः“द्वार स्वर स्वाध्याय व्यल्कश स्वस्ति स्वर् स्फ्यकृत स्वादुमृदु श्वन् स्व” द्वारे नियुक्तः ठक्। दौवारिकः।

**द्वाराध्यक्ष** पु० द्वारेऽध्यक्षः। प्रतीहारे “नेमव्यासक्त इत्याह द्वाराध्यक्षा विशां पते!” भा०व०२०अ०

**द्वारिक** त्रि० द्वारं पाल्यतयाऽस्त्यस्य ठन्। द्वारपाले वारसुन्दरी प्रशस्तानि चत्वारि द्वाराणि सन्त्यस्याम् ठन् टाप्। द्वारिका २द्वारवत्यां स्त्री शब्दरत्ना०।

**द्वारिन्** त्रि० द्वारं पाल्यत्वेनाऽस्त्यस्य इनि। १द्वारपाले २द्वारयुते त्रि० द्वारशब्दे दृश्यम्।

**द्वार्य्य** त्रि० द्वारि भवः यत्। द्वारिभवे “द्वार्य्ये स्थूणे देवी द्वारौ” आश्व०श्रौ० ४।१२।१ द्वारिभवे द्वार्य्ये स्थूणे” नारा० वृत्तिः “चतुर्गृहीतं शालाद्वार्य्ये जुहोति” कात्या० श्रौ०८।१।२६

**द्वा(द्वि)विंश** त्रि० द्वा(द्वि)विंशतेः पूरणः डट्। द्वाविंशतिसंख्यापूरणे स्त्रियां ङीप्। द्वा(द्वि)विंशत्या युतं शतादि ड। २तद्युते शतादौ त्रि०।

**द्वा(द्वि)विंशति** स्त्री द्व्यधिका विंशतिः द्वौ च विंशतिश्च वा आत् बहुत्वेऽपि एकव०। (बाइस) १द्व्यधिकविंशतिसंख्यायां २तत्संख्यायुते च “कर्णो द्वाविंशतिं भल्लान्” भा० द्रो०४७अ० द्वा(द्वि)विंशतिः प्रमाणमस्य ठन्। द्वा(द्वि)विंशतिक तत्संख्यान्विते त्रि० पूरणे तमप्। द्वा(द्वि)विंशतितम द्वाविंशतिसंख्यापूरणे त्रि०। एवं द्वा(द्वि)त्रिंशद्द्वा(द्वि)चत्वारिंशदादयोऽपि तत्तत्संख्यायां

तत्संख्यान्विते स्त्री एकव॰पूरणे ड तमपौ छन्दसि यौ ठन्। एवं ड। द्वा(द्वि)त्रिंशादि तद्युते शतादौ त्रि॰वा परिमाणमस्य ठन्। द्वा(द्वि)त्रिंशतिकादि तत्तत्संख्यापरिमाणके त्रि॰।

**द्वा(द्वि)षष्टि** स्त्री अधिका षष्टिः द्वौ च षष्टिश्च वा वा स्यात् एकव॰। १अधिकषष्टिसंख्यायां २तद्युते च। पक्षे द्विषष्टिरप्यत्र तया युतं शतादि ड। द्वा(द्वि)षष्ट तद्युते शतादौ। वा परिमाणमस्य ठन्। द्वा(द्वि)षष्टिक तत्परिमाणके त्रि॰ पूरणे तमप्। द्वा(द्वि)षष्टितम डट्, द्वा(द्वि)षष्ट तत्संख्यापूरणे डटि स्त्रियां ङीप्।

**द्वा(द्वि)सप्तति** स्त्री अधिका सप्ततिः द्वौ च सप्ततिश्च वा वा स्यात् एकव॰। १अधिकसप्ततिसंख्यायां २तत्संख्याते च "द्वासप्ततिर्भुक्तयस्ते पादास्ते द्वादश क्रमात्" ज्यो॰त॰। द्विसप्ततिरप्यत्र। तया युतं शतादि ड। द्वा(द्वि)सप्तत तद्युते शतादौ त्रि॰ तस्याः पूरणे तमप्। द्वा(द्वि)सप्ततितम डट्। द्वा(द्वि)सप्तत तत्संख्यापूरणे त्रि॰ स्त्रियां डटि ङीप्।

**द्वि** त्रि॰ द्वि॰व॰। द्व–ड। १द्वित्वसंख्यायां "द्व्येकयोर्द्विवचनैकवचने" पा॰ द्वित्वार्थकताया भाष्याद्युक्तेः। २द्वित्वसंख्यान्विते च। सर्वनामकार्यं तस्य जसादिप्राप्त्यभावात् त्यदादित्वात् अत्वम्। द्वौ द्वे। द्वयोः स्त्रियोः पुत्रः द्विपुत्र इत्यादौ सर्वनामत्वात् वृत्तिमात्रे पुंवद्भावः। अकच्। द्वके इत्यादि। स्वार्थे केनोपपत्तौ चित्स्वरार्थमकच्।

**द्विक** त्रि॰ द्वि॰व॰। द्वि–अकच्। १द्वित्वसंख्यायां तद्युते त्रि॰ स्त्रियां टेरकचि द्वके इत्येव स्वार्थे के तु प्रत्ययस्थकात् पूर्वस्य इत्वम् द्विके इति भेदः। द्वयोरवयवः द्वौ अवयवौ वा यस्य कन्। २द्वित्वे न॰ एकव॰। ३तद्युते त्रि॰ "एकं द्विकं त्रिकं चैव चतुष्कं पञ्चकं तथा। अमी पञ्चैव लिङ्गार्थाः" भर्तृहरिः। द्वौ दीयेते इत्यादिना अत्र शतादौ कन्। ४इत्यादिना दीयमानद्विरूपकादिके शतादौ। "द्विकं शतं वा गृह्णीयात् सतां धर्ममनुस्मरन्" "द्विकं शतस्य गृह्णानो न भवत्यर्थकिल्बिषी" मनुः द्वौ कौ ककारौ वाचकशब्दे यस्य। ५काके ६कोके च पुंस्त्री॰ मेदि॰। तयोर्वाचकशब्दे ककारद्वयस्य सत्त्वात् तथात्वम्। स्त्रियां जातित्वात् ङीष्।

**द्विककार** पुंस्त्री॰ द्वौ ककारौ वाचकशब्देऽस्य। १काके २कोके च शब्दरत्ना॰। स्त्रियां जातित्वात् ङीष्। ३ककारद्वययुते शब्दादौ त्रि॰।

**द्विककुद्** पुं॰ द्वे ककुदे यस्य अन्त्यलोपः समा॰। उष्ट्रे हेमच॰

**द्विकर** त्रि॰ द्वौ करोति संख्यापूर्वकत्वात् अहेत्वादौ कृ–ट। १द्विसंख्यान्वितकारके। द्वौ करौ यस्य २द्विभुजे च। द्वयोः करयोः समाहारः। ३करद्वये "बुभुक्षितः किं ? द्विकरेण भुङ्क्ते" उद्भटः।

**द्विकार्षापण(णिक)** त्रि॰ द्वाभ्यां कार्षापणाभ्यां क्रीतं ठक् तस्य वा लुक्। द्वाभ्यां कार्षापणाभ्यां क्रीते पक्षे ठकोऽलोपे। द्विकार्षापणिक तत्रार्थे।

**द्विकौडविक** त्रि॰ द्वौ कुडवौ प्रयोजनमस्य ठञ्, द्वाभ्यां कुडवाभ्यां क्रीतं वा ठक् न तस्य लुक्। उत्तरपदवृद्धिः। १द्विकुडवप्रयोजनके २द्वाभ्यां कुडवाभ्यां क्रीते च।

**द्विगु** त्रि॰ द्वौ गावौ यस्य गोस्त्वात् गोर्ह्रस्वः। १द्वयोर्गवोः स्वामिनि द्विगवस्वामिके पुरुषे। "द्वन्द्वो द्विगुरपि चाहं सततमव्ययीभावः" उद्भटः। व्याकरणोक्ते तत्पुरुषान्तर्गते पा॰ सूत्रोक्ते २समासभेदे पु॰ स च सि॰कौ॰ मनोरमादौ च दर्शितो यथा "दिक्संख्ये संज्ञायाम्" ।२।१।५०। पा॰ "समानाधिकरणेनेत्यापादपरिसमाप्तेरधिकारः। संज्ञायामेवेति नियमार्थं सूत्रम्। पूर्वेषुकामशमी। सप्तर्षयः। नेह उत्तरा वृक्षाः। पञ्च ब्राह्मणाः" सि॰कौ॰। "तद्धितार्थोत्तरपदसमाहारे च" पा॰ ।२।१।५१।पा॰ "तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्संख्ये प्राग्वत्। पूर्वस्यां शालायां भवः। पौर्वशालः। समासे कृते दिक्पूर्वपदादसंज्ञायां ञ इति ञः। सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः। आपरशालः। पूर्वा शाला प्रिया यस्येति त्रिपदे बहुव्रीहौ कृते प्रियाशब्दे उत्तरपदे पूर्वयोस्तत्पुरुषः तेन शालाशब्दे आकार उदात्तः। पूर्वशालाप्रियः। दिक्षु समाहारो नास्त्यनभिधानात्। संख्यायास्तद्धितार्थे षण्णां मातॄणामपत्यम् षाण्मातुरः। पञ्च गावो धनं यस्येति त्रिपदे बहुव्रीहाववान्तरतत्पुरुषस्य विकल्पे प्राप्ते द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्" सि॰कौ॰ "नियमार्थमिति विशेषणं विशेष्येणेत्यनेनैव सिद्धे तत्पुरुषे संज्ञायामेव दिक्संख्ये समस्येते नान्यत्रेति नियामकमिदमिति भावः। त्रिलोकनाथ इत्यादौ तु उत्तरपदद्विगुरिति असंज्ञकत्वेऽपि न क्षतिः। पूर्वसूत्रमित्यादौ संज्ञाभावेऽपि कालवाचकत्वात् समासो, न ह्यत्र दिग्विशेषबोध उदयगिर्यादिसम्बन्धाया एव दिक्त्वात् एवं देशवाचकेनापि समास इति वृद्ध-

व्यम्” मनो० “तद्धितार्थोत्तरेत्यादिस्थले वैषयिके आधारे सप्तमी। विषयत्वञ्चानेकविधमित्याह तद्धितार्थे विषये इत्यादि तद्धितार्थे वाच्ये इति तु नोक्तं पाञ्चनापितिरित्यादौ समासेनोक्तत्वात्तदुत्तरं तद्धितानुत्पत्तिप्रसङ्गात्। अतएव द्विगोस्तद्धितस्य लुग्वचनं चरितार्थमन्यथा तदर्थस्य समासेनोक्ततयाऽप्रयोगात् तदनुत्पत्तौ कथं लोपः स्यात्”। “समाहारः समूहः स चावयवाभिन्नो बुद्धिकल्पितभेदवान्। अतएव समूहं प्रति तस्योपसर्ज्जनत्वं तेन पञ्चखट्वीत्यादिसिद्धिः तत्र खट्वाशब्दस्योपसर्जनत्वेन ह्रस्वे कृत एवादन्तत्वे सत्येव ङीपः प्रवृत्तेरित्यन्यत्र विस्तरः। अत्रेदं बोध्यं सामूहिकस्य तद्धितस्य लुकि पञ्चगवमित्यत्र गोरतद्धितलुकीति टच् न स्यादिति विषये इत्युक्तमेवञ्च समाहारे वाच्ये इति तस्य पृथग्ग्रहणसामर्थ्यादेव समासात्त इत्याशयेन वाच्ये इति व्याख्यातमिति” “तथाच समासेनैव समाहारस्योक्तत्वात् न सामूहिकतद्धितोत्पत्तिरिति भावः” मनो० “एतद्वार्त्तिकमुत्तरपूर्वेत्यादिद्वन्द्वसिद्ध्यर्थमवश्यमारम्भणीयं तेन प्रकृते पुंवद्भावेनोपपत्तावपि न निष्फलतेति बोध्यम्” “उदात्त इति असति त्वशान्तरतत्पुरुषे पूर्वपदप्रकृतिस्वरेण पूर्वशब्दस्याद्युदात्तत्वमेव स्यादिति भावः” मनो० “आषमातुर इति “मातुरुत् सङ्ख्यासंभद्रपूर्वायाः” पा० इत्युदादेशः अनपत्य इत्युक्तेर्द्विगोर्लुगिति न लुक्” “विकल्पे प्राप्ते इति महाविभाषयेति शेषः। ततश्च टजभावे पञ्चगोधन इत्यपि स्यादिति भावः” “एतच्चोभयत्रापि नित्यताबोधकमिति बोध्यम् अतएवैतद्वार्त्तिकमुक्ता समुदायवृत्तावयवानां कदाचिदप्यवृत्तिर्मा भूदिति प्रयोजनमुक्तं भाष्ये” “द्वन्द्वोत्तरतत्पुरुषोदाहरणन्तु वाक् च दृषच्च प्रिये अस्य वाग्दृषद्‌प्रिय एवं छत्रोपानह्‌प्रिय इह त्रिपदे बहुव्रीहौ कर्त्तव्ये पूर्वं नित्यद्वन्द्वस्तेन समासान्तोऽपि नित्य एव” मनो०।

शब्दशक्तिप्रकाशिकायामेतल्लक्षणादिकमुक्तं यथा

“द्विगुं लक्षयति। संख्याशब्दयुतं नाम तदलक्ष्यार्थबोधकम्। अभेदेनैव यत्स्वार्थे स द्विगुस्त्रिविधो मतः। संख्यावच्छिन्नशक्तं यत्पदोत्तरत्वविशिष्टं यन्नाम स्वार्थधर्मिकं तादात्म्येन तदलक्ष्यार्थस्यान्वयबोधं प्रति समर्थं तन्नामोत्तरतापन्नं तन्नामैव तदलक्ष्यार्थाभिन्नस्वार्थे द्विगुरुच्यते। त्रिकटु त्रिभुवन चतुर्युग चतुर्वर्ग पञ्चगव्य पञ्चामृत षड्‌रस षट्‌पदार्थ सप्तर्षि अष्टनाग अष्टवसु नवरत्न नवग्रह दशमूल एकादशरुद्र एकादशेन्द्रिय द्वादशादित्य इत्यादिकस्तु कर्मधारयः शुण्ठ्यादिपर्याप्तत्रित्वावच्छिन्नबोधकतया न पूर्वपदार्थस्य बोधकाभावकटुप्रभृतिभ्यः कटुत्वादिसामान्यस्याप्रतीतेः। पञ्चमूलीत्यादौ तु मूलपञ्चकत्वेनैव मूलविशेषेषु तात्पर्यं नतु विशेषरूपेणापि अतएव “कण्टकार्यादिकं स्वल्पं माषाद्यादि च यन्महत्। पञ्चमूलं तदुभयं दशमूलमुदाहृतमित्यादिकस्तादृश्येन बोधस्यैव प्रयोगः। “वर्षाकाले मघर्क्षे च युक्ता चापि त्रयोदशी” इत्यादावेकवचनस्य साधुत्वसम्भवात् द्वयोरूपमित्याद्यर्थे द्विरूपादिपदं नाभेदेन द्विप्रकृतेरनुभावकम्। एकत्वसंख्याया विशिष्टं बोधयदपि एकपदं न पर्याप्तिसंसर्गेण तदवच्छिन्नस्य बोधकं, द्वित्वादिपदं पर्याप्त्या द्वित्वावच्छिन्नं प्रतिपादयदपि न तत्र शक्तं साकाङ्क्षत्वादतोनैकघटद्वितयपटेत्यादिकर्मधारयेऽतिप्रसङ्गः। सप्तशती पञ्चतामित्यादौ च यद्यपि शते धर्मिणि सप्तानामभेदेन नान्वयः बाधितत्वान्नापि सप्तपदलक्षितस्य, द्विगुत्वहान्यापत्तेः तथापि शतपदार्थैकदेशे शतत्वसंख्यायां तस्याः सप्तत्वसत्त्वादिति वदन्ति। द्विगव्यं गच्छत इत्याद्यव्ययीभाववारणन्तु पूर्ववत्। स चायं द्विगुस्त्रिविधः तद्धितार्थोत्तरपदसमाहारभेदात्। तत्र तद्धितार्थं द्विगुं लक्षयति। तद्धितार्थान्वितस्वार्थस्तद्धितार्थद्विगुर्मतः। तद्धितार्थे साकाङ्क्षिकस्वान्त्यनामा स्वपूर्वगः। यो द्विगुः स्वोत्तरतद्धितार्थान्वितस्वार्थकः स तद्धितार्थद्विगुः। द्विमुद्रो हय इत्यादौ द्वाभ्यां मुद्राभ्यां क्रीतस्य द्विवर्षो गौरित्यादौ द्वाभ्यां वर्षाभ्यामभिव्यक्तवयस्कस्य द्विदलं पवित्रमित्यादौ द्वाभ्यां दलाभ्यां निर्मितस्य, द्विगुञ्जं स्वर्णमित्यादौ द्वाभ्यां गुञ्जाभ्यां तुलितस्य, त्रिकाण्डः पुरुष इत्यादौ त्रिभिः काण्डैः परिमितस्य, पञ्चकपालश्चरुरित्यादौ पञ्चभिः कपालैः संस्कृतस्य, बोधने लुप्तस्यैव ठगादितद्धितस्य क्रीताद्यभिधायकत्वात्, परिशिष्टकतामतेनेदम्। उक्तप्रयोगेषु द्विगोरन्तिमनाम्नैव क्रीतादिरूपार्थो लक्ष्यते नतु लुप्तठगादिरप्यपेक्ष्यतेऽतस्तद्धितार्थलाक्षणिकस्वान्त्यनामको द्विगुरेव तद्धितार्थद्विगुरिति फक्किभाष्यमतन्तु न युक्तम् असर्वगत्वात् पाञ्चनापितिरित्यादौ पञ्चानां पुरुषाणामपत्यस्य पञ्चगार्ग्यरूप्यो गौरित्यादौ पञ्चानां गर्गाणां भूतपूर्वस्य बोधने तद्धितेनैव स्वार्थस्यापत्यप्रभृतेरुपस्थापनात् द्विगर्गमुद्रः पशु-

रित्यादावुत्तरपदस्य शक्तिविरहेण क्रीताद्यर्थे लाक्षणिकत्वायोगात्। उत्तरपदद्विगुं लक्षयति। स्वान्तर्निविष्टशब्दाभ्यां शब्दान्तरसमासगः। यो द्विगुः शाब्दिकैरुक्तः स उत्तरपदद्विगुः। यो द्विगुः स्वघटकनामभ्यां सह साकाङ्क्षनामान्तरेण समासस्यान्तर्गतः स उत्तरपदद्विगुः यथा पञ्च गावो धनमस्येत्यादिविग्रहे पञ्चगवधनः पुरुष इत्यादौ बहुव्रीह्यादिनिविष्टः पञ्चगवादिः। समाहारद्विगुं लक्षयति। स्वार्थान्वितसमाहारलक्षकस्यान्यशब्दकः। उक्ताभ्यामितरः किं वा समाहारद्विगुर्द्विगुः। स्वोपस्थाप्यार्थस्य समाहारलक्षको यदीयान्त्यशब्दः स द्विगुः समाहारद्विगुः पञ्चपुलीत्यत्र हि योगलभ्यानां पञ्चाभिन्नपुलानां समाहारः परस्थपुलशब्देन लक्ष्यते न तु तत्र द्विगोः शक्त्यन्तरलभ्ये शक्त्ययोगात् अतएव न लक्षणापि शक्यसम्बन्धस्यैव लक्षणात्वेन वाक्ये तदसम्भवात्। यद्द च पञ्चपुलीत्यतः पञ्चानां पुलानामेव बोधो न तु तत्समाहारस्यापि अतएव पञ्चपुलीं छिनत्ति इत्यादिकः प्रयोगः प्रमाणम् अन्यथा समूहात्मनः समाहारस्य छिदाद्यसम्भवेन तदयोग्यत्वापत्तेः पुलादेर्द्वित्वबहुत्वेऽप्येकवचनस्यानुशासनिकं दारादेर्बहुवचनवदुपपद्यते। न च द्रव्यप्राधान्ये पञ्चखट्वीत्यादौ ह्रस्वो न स्यात् गोशब्दस्येव स्त्रीप्रत्ययस्यापि समासान्त्यस्योपसर्जनस्यैव तद्विधानादिति वाच्यं समाहारसंज्ञकद्विगोरप्यन्त्यस्य स्त्रीप्रत्ययस्य पृथगेव ह्रस्वविधेर्वक्तव्यत्वात् प्रयोगानुसारित्वात् कल्पनायाः, पञ्चपाचकीत्यादावव्याप्तिश्च तत्रोत्तरपदस्य वाक्यत्वेन लक्षकत्वायोगादिति सूक्ष्ममीक्ष्यते तदा पूर्वनिरुक्ताभ्यां तद्धितार्थोत्तरपदद्विगुभ्यां भिन्नोद्विगुरेव समाहारद्विगुर्वाच्यः। एवञ्च द्विगोः कर्मधारयान्तर्गतत्वेऽपि न क्षतिरिति तु विभावनीयम्”।

**द्विगुण** त्रि॰ द्वाभ्यां गुण्यते गुण—कर्मणि अच्। द्वाभ्यां गुणिते “एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम्” “सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे” इति मनुः।

**द्विगुणाकृ** द्विगुण+कृ—क्षत्रर्थे डाच् द्विगुणकर्षणकरणे सक॰ उभ॰ अनिट्। द्विगुणाकरोति क्षेत्रकर्मकं द्विगुणकर्षणं करोतीत्यर्थः सि॰कौ॰

**द्विगुणाकर्ण** त्रि॰ द्विगुणौ कर्णौ लक्षणमस्य “कर्णे लक्षणस्य” पा॰ कर्णशब्दे परे पूर्वस्य दीर्घः। द्विगुणकर्णरूपलक्षणान्विते।

**द्विगुणित** त्रि॰ द्वाभ्यां गुणितः। द्वाभ्यां गुणिते। द्विगुणितसान्द्रतराक्षिपक्ष्ममाला” माघः “क्लेशस्य यस्य वदनं मदनारितुल्यं विश्वम्भरा द्विगुणिता” लीला॰

**द्विचरण** त्रि॰ द्वौ चरणौ यस्य। १द्विपादे मनुष्यादौ “गतः कालो यत्र द्विचरणपशूनां क्षितिभुजां पुरः स्थित्वोत्युक्ता विषयसुखमास्वादितमहो” शान्तिश॰ द्विचरणा अपि पशवः पशुतुल्याः पशूनां चतुश्चरणत्वे प्रसिद्धेऽपि नृपाणां द्विपदत्वेन पशुतुल्यत्वात् अपूर्वपशुत्वमिति गम्यते। २राशिभेदे द्विपदशब्दे दृश्यम्। ३पदद्वये न॰

**द्विज** पु॰ द्विर्जायते सुजर्थे वृत्तौ द्विशब्दः जन—ड। १संस्कृत ब्राह्मणे “जन्मना जायते शूद्रः संस्कारैर्द्विज उच्यते” स्मृतिः। २ब्राह्मणक्षत्रियवैश्येषु च “मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जीबन्धनात्। ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजाः स्मृताः” याज्ञ॰। ३दन्ते तस्योत्पन्नस्य पतने पुनर्जन्मनो लोकप्रसिद्धेः। ४अण्डजे च अमरः। प्रसवानन्तरं पुनरण्डात् तस्य पक्षाद्यवयवोत्पत्तेर्द्विजत्वम्। ५तुम्बुरुणि राजनि॰। ६द्विजातिमात्रे त्रि॰। तत्र दन्ते “द्विजावलीबालनिशाकरांशुभिः शुचिस्मितां वाचमवोचदच्युतः” माघः विप्रे अण्डजे च “हिमसुक्तचन्द्ररुचिरः सपद्मको मदयन् द्विजान् जनितमीनकेतनः” माघः।

**द्विजकुत्सित** पु॰ द्विजैः कुत्सितः। श्लेष्मातकवृक्षे (नोनाआता) राजनि॰। द्विजानान्तद्भक्षणनिषेधात् तथात्वम्।

**द्विजदास** पु॰ ६त॰। शूद्रे राजनि॰।

**द्विजन्मन्** पु॰ द्वे जन्मनी अस्य। द्विजशब्दार्थे “वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम्। कार्य्यः शरीरसंस्कारः पावनः प्रेत्य चेह च” मनुः

**द्विजपति** पु॰ ६त॰। १चन्द्रे त्रिका॰। “द्विजानामौषधीनाञ्च सोमं राज्येऽभ्यषेचयत्” हरिवं॰२२७अ॰। २कर्पूरे च अमरः। ३द्विजश्रेष्ठे “प्रशान्तोपद्रवं परिपूर्णं द्विजमण्डलमनाथम्” काद॰। ४पक्षिश्रेष्ठे ५गरुडे च [त्रिका॰।

**द्विजप्रपा** स्त्री द्विजार्थं पक्षिणमुद्दिश्य प्रपा। आलवाले

**द्विजप्रिया** स्त्री ६त॰। १सोमलतायां राजनि॰ तस्याश्च द्विजानां सोमयागाङ्गसाधनत्वात् तथात्वम्। २द्विजप्रियमात्रे त्रि॰।

**द्विजबन्धु** पु॰ द्विजस्य बन्धुरिव। अब्राह्मणे भट्टदेवशादौ अपकृष्टद्विजे। “स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा” स्मृतिः।

**द्विजब्रुव** पु॰ द्विजमात्मानं जात्या ब्रूते ब्रू—क। जातिमात्रेण द्विजातिमानिनि द्विजविहितकर्म्माकारके द्विजे

ब्राह्मणब्रुवोऽप्यत्र। "सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे। अधीते शतसाहस्रमनन्तं वेदपारगे" मनुः

**द्विजराज** पु० ६त० टच् समा०। १चन्द्रे अमरः। द्विजपतिशब्दे दृश्यम्। "इत्थं द्विजेन द्विजराजकान्तिः" रघुः। २कर्पूरे ३द्विजश्रेष्ठे ४द्विजोत्तमे विप्रे ५पक्षीन्द्रे गरुडे च।

**द्विजलिङ्गिन्** पु० द्विजस्य लिङ्गमस्त्यस्य इनि। १क्षत्रिये त्रिका०। २विप्रवेशधारिणि च। "तान् सर्वान् घातयेद्राजा शूद्रांस्तु द्विजलिङ्गिनः" मनुः।

**द्विजवाहन** पु० द्विजः गरुडो वाहनमस्य। नारायणे "एवं त्वमसि देवानां भक्तानां द्विजवाहनः। तच्छरीरगतं कृष्ण! जगत्प्रकरणं त्विदम्" हरिवं ७६अ०

**द्विजव्रण** पु०न० ६त०। दन्तार्बुदे दन्तरोगभेदे राजनि०।

**द्विजशप्त** पु० ३त०। राजमाषे (वरवटि) शब्दच०। तस्य द्विजैर्भोजनस्य निषिद्धत्वात् तथात्वम्।

**द्विजसेवक** पु०६त०। १शूद्रे शब्दक०। २द्विजसेविमात्रे त्रि०।

**द्विजा** स्त्री द्विर्जायते जन–ड। १रेणुकानामगन्धद्रव्ये अमरः २भार्ग्यां मेदि०। ३पालङ्क्यां (पालङ्) शाकभेदे शब्दच०। तासां कर्त्तनेऽपि पुनर्जायमानत्वात् तथात्वम्। ४द्विजजातिस्त्रियां ४तत्पत्न्यां च स्त्री ङीप्।

**द्विजाग्र** पु० द्विजेषु अग्र्यः। विप्रे "अद्भिरेव द्विजाग्र्याणां कन्यादानं विशिष्यते"। "ब्राह्मं कृतं द्विजाग्र्याणां प्राशितं पितृतर्पणम्" मनुः। [कटुकायां राजनि०।

**द्विजाङ्गी** स्त्री द्विजस्य दन्तस्याङ्गमिव मूलमस्याः ङीप्।

**द्विजाति** पु० द्विः जातिर्जन्म यस्य। १अण्डजे अमरः। २ब्राह्मणक्षत्रियवैश्येषु। "शूद्राद्विजातिभिर्जातो न भूमेर्भागमर्हति" स्मृतिः "ब्राह्मणः क्षत्रियविशस्त्रयोवर्णा द्विजातयः। चतुर्थ एकजातिस्तु शूद्रो, नास्ति तु पञ्चमः" मनुः। तेषां द्विर्जन्मवत्त्वं द्विजशब्दे दृश्यम्। ३अण्डजे मेदि०। ४दन्ते च

**द्विजानि** पु०द्वे जाया यस्य निङ्। द्विभार्यके "अन्तर्योनेव चरति द्विजानिः" ऋ०१०।१०१।११

**द्विजायनी** स्त्री द्विजः अय्यते ज्ञायतेऽनया अय–गतौ गत्यर्थस्य ज्ञानार्थत्वात् ल्युट् ङीप्। यज्ञोपवीते त्रिका०।

**द्विजालय** पु० ६त०। १वृक्षस्थे खगालये कोटरे शब्दच० २नीडे। ३द्विजानां गृहे च।

**द्विजिह्व** पुंस्त्री० द्वे जिह्वे यस्य। सर्पे स्त्रियां जातित्वात् ङीष्। तेषां द्विजिह्वत्वकथा भा० आ० ३४अ० यथा "अथ सर्पानुवाचेदं सर्वान् परमहृष्टवत्। इदेमानीतममृतं निक्षेप्स्यामि कुशेषु वः। स्नाता मङ्गलसंयुक्तास्ततः प्राश्नीत पन्नगाः!। भवद्भिरिदमासीनैर्यदुक्तं तद्वचस्तदा। अदासी चैव मातेयमद्यप्रभृति चास्तु मे। यथोक्तं भवतामेतद्वचो मे प्रतिपादितम्। ततः स्नातुं गताः सर्पाः प्रत्युक्त्वा तं तथेत्युत। शक्रोऽप्यमृतमाक्षिप्य जगाम त्रिदिवं पुनः। अथागतास्तमुद्देशं सर्पाः सुधार्थिनस्तदा। स्नाताश्च कृतजप्याश्च प्रहृष्टाः कृतमङ्गलाः। यत्रैतदमृतं चापि स्थापितं कुशसंस्तरे। तद्विज्ञाय हृतं सर्पाः प्रतिमायाकृतञ्च तत्। सोमस्थानमिदं चेति दर्भांस्ते लिलिहुस्तदा। ततो द्विधाकृता जिह्वा सर्पाणां तेन कर्मणा। अभवंश्चामृतस्पर्शाद्दर्भास्तेऽथ पवित्रिणः। एवं तदमृतं तेन हृतमाहृतमेव च। द्विजिह्वाश्च कृताः सर्पा गरुडेन महात्मना"। २सूचके च त्रि० अमरः। ३खले मेदि०। ४चौरे ५दुःसाध्ये च शब्दर०। तेषां सर्पतुल्यमर्माविधत्वात्तथात्वम्। "परस्य मर्माविधमुज्झतां निजम् द्विजिह्वतादोषमजिह्मगामिभिः"। "तमिद्धमाराधयितुं सकर्णकैः कुलैर्न भेजे फणिनां भुजङ्गता" माघः।

**द्विजेन्द्र** पु० द्विज इन्द्र इव उपमितसमा०। १द्विजश्रेष्ठे ६त०। २चन्द्रे ३कर्पूरे च "द्विजेन्द्रकान्तं श्रितवक्षसं श्रिया" माघः।

**द्विजेश** पु० ६त०। १गरुडे २चन्द्रे हेमच० ३कर्पूरे च। द्विजेश्वरादयोऽप्यत्र। "तस्य योगानुगतं शिशिरांशुं द्विजेश्वरम्" हरिवं० ४५अ०।

**द्विजोपासक** पु० द्विजमुपास्ते उप+आस–ण्वुल्। द्विजसेवके शूद्रे पारस्करनिघ०।

**द्विजोत्तम** पु० द्विजेषु उत्तमः। विप्रे।

**द्विठ** पु० द्वौ ठकारौ लेखनाकारे यस्य। १विसर्गे तस्य लेखनाकारस्य द्विठकाराकारत्वात्तथात्वम् शारदातिलकव्याख्याने राघवभट्टः। लक्षितलक्षणया २स्वाहायाम् तस्याः विसर्गशब्दवाच्यत्यागार्थकत्वात् तथात्वम् समा० द्विगुः। ३ठकारद्वये न०। [दृश्यम्।

**द्वित** पु० १देवभेदे २ऋषिभेदे च एकतशब्दे १४६५।६६पृ०

**द्वितय** न० द्वयोरवयवः संख्याया अवयवे तयप्। द्वित्वसंख्यायां "प्रणाय्य स्वलद्वितयं तयोर्न युतिर्भवेत्। "इष्यन्ते पञ्चदशभिराषाढाद्वितयं तथा"। "कटाहद्वितयस्येव संपुटं गोलकाकृति" सू०सि० द्वावयवावस्य।

२द्वित्वसंख्याविशिष्टे त्रि॰ अस्य जसि वा सर्वनामता द्वितये द्वितयाः। "द्रुमसानुमतोः किमन्तरं यदि वायौ द्वितयेऽपि तेऽचलाः" किरा॰ "अधिकं शुशुभे शुभंयुना द्वितयेन द्वयमेव सङ्गतम्। पदमृद्धमजेन पैतृकं विनयेनास्य नवञ्च यौवनम्" रघुः। अस्य स्त्रीत्वमपि उभयत्र ङीप्।

**द्वितीय** त्रि॰ द्वयोः पूरणः तीय। द्वित्वसंख्यापूरणे तस्याः ङित्सु वा सर्वनामकार्य्यं। "एकमेवाद्वितीयं ब्रह्म" श्रुतिः। "द्वितीयगामी न हि शब्द एष नः" रघुः "मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धनात्" मनुः २पुत्रे पु॰ त्रिका॰। ३भार्य्यायां स्त्री टाप् अमरः। चन्द्रस्य द्वितीयकलायाः सूर्यकिरणप्रवेशनिर्गमयोग्ये क्रियारूपे तदुपलक्षिते कालभेदे वा ४तिथिभेदे स्त्री तस्याः व्रताद्यङ्गकालनिर्णयः कालमा॰ दर्शितो यथा

"प्रथमद्वितीयादीनां पञ्चदशकलानां क्रमेण चन्द्रमण्डलप्रवेशनिर्गमनाभ्यां शुक्लकृष्णपक्षयोः प्रतिपद्द्वितीयादिनामधेयास्तिथयो भवन्ति। तत्र प्रतिपदि योनिर्णयः पूर्वप्रकरणेऽभिहितः स एवोत्तरासु सर्वासु तिथिषु साम्येन सञ्चारयितव्यः। विशेषांस्तु तत्र तत्राभिधास्ये। प्रतिपदि दैवं पित्र्यं च व्यवस्थापितम्। दैवं षड्विधम् उपवासैकभक्तनक्तायाचित दानव्रतभेदेन, तीर्थस्नानजपहोमादयस्तु व्रतशब्देनैव संगृहीताः। पित्र्यं द्विविधम्। एकोद्दिष्टं पार्वणं चेति। तत्र सर्वत्र कर्मकालव्याप्तियुक्ताया एव तिथेरनुष्ठानाङ्गत्वं स्मृतिष्वभिप्रेतम्। कर्मकालश्च द्विविधः मुख्यो गौणश्चेति। तद्यथा एकभक्ते मध्याह्नो-मुख्यः। आसायमवशिष्टो गौणः। तिथिव्याप्तिर्द्विविधा स्वाभाविकतिथिव्याप्तिः साकल्यापादिततिथिव्याप्तिश्चेति। यदा सङ्गवपर्यन्तामावास्या तदानीमुपरितनो मध्याह्नोमुख्ययैव प्रतिपदा व्याप्तो भवति। यदा त्वपराह्णादिमारभ्य तिथिक्षयवशात्परेद्युः सङ्गवान्ता प्रतिपद्भवति। तदा पूर्वेद्युर्गौणकालव्याप्तिमुपजीव्यैकभक्तानुष्ठानस्वीकारे सति मध्याह्ने तथैवानुष्ठेयत्वात्तत्र स्वाभाविकप्रतिपद्व्याप्त्यभावेऽपि साकल्यवचनापादितप्रतिपद्व्याप्तिः स्वीकृता। एवं च सति कर्मकालव्याप्तौ सर्वस्मृतीनामत्यन्तनिर्बन्धदर्शनात् कर्मकालव्याप्तिशास्त्रमितरेभ्यः प्रबलमिति निश्चीयते। तदनुसारेण द्वितीयाद्या अपि तिथय उपवासादौ दैवे, एकोद्दिष्टादौ पैत्र्ये च कर्मकालव्याप्तियुक्ताः स्वीकर्त्तव्याः। उपवासस्तु सर्वतिथिषु नारदीये दर्शितः। "शुक्लान् वा यदि वा कृष्णान् प्रतिपत्प्रभृतींस्तिथीन्। उपोष्यैव बलिं दत्त्वा विधिनेत्यपरे दिने। ब्राह्मणान् भोजयित्वा तु सर्वपापैः प्रमुच्यते" इति। उपवासस्याहोरात्रः कर्मकालः। तस्मात्तद्व्यापिनी तिथिर्ग्राह्या। तदसम्भवे खण्डतिथिर्ग्राह्येति निरूप्यते। तत्र च सूर्य्योदये त्रिमुहूर्त्ता ततोऽधिका वा प्रतिपद्भवति। उत्तरदिने चास्तमयादर्वाक् त्रिमुहूर्त्ता ततोऽधिका वा तृतीया भवति सेयमुभयविद्धा द्वितीया। तत्र वेधकतिथेरुदयेऽस्तमये वा त्रिमुहूर्त्तत्वं वेधप्रयोजकं न तु ततोन्यूनत्वं तदेव पैठीनसिवाक्येन पूर्वमुदाहृतम्। वेध्यतिथेस्त्रिमुहूर्त्तसद्भावोऽपेक्षित इति "द्विमुहूर्त्तं त्रिरह्नश्चेत्यनेन सुमन्तुवचनेन दर्शितम्। उदयास्तमययोरेव वेध इत्ययमर्थः "उदये सा तिथिर्ग्राह्या विपरीता तु पैतृके" इत्यादिभिः कात्यायनवचनैरवगन्तव्यः। एवञ्च सति यथोदाहृते पूर्वविद्धोत्तरविद्धे ये द्वितीये तयोरुत्तरविद्धा द्वितीयोपोष्या युग्माग्निवाक्येनान्वयव्यतिरेकाभ्यामुत्तरविद्धायाः प्राशस्त्याभिधानात्। यद्यप्युपोष्यत्वं साक्षान्नाभिहितं तथापि कर्मान्तरविशेषस्यानुपादानात् उपवासविषयत्वं परिशिष्यते। तथाहि। न तावत्पित्र्यविषयत्वं सम्भवति व्यासेन युग्मादिशास्त्रस्य खर्वादिशास्त्रस्य च दैवपित्र्यविषयत्वेन व्यवस्थापितत्वात्। नाप्येकभक्तनक्तविषयत्वं तयोर्मध्याह्नप्रदोषव्याप्त्यधीनत्वेन युग्मादिशास्त्रानधीनत्वात्। अयाचितस्य तूपवासवदनुष्ठेयत्वेन न पृथग्विषयत्वं नच दानादिविषयत्वम् दानादेः पौर्वाह्णिकतिथौ कर्त्तव्यतया निर्णेयत्वात्। अत उपवासविषयत्वं परिशिष्यते। कदाचिदेकभक्तादितिथौ युग्मादिशास्त्रस्य संवादो भवति। तदा तच्छास्त्रमुपोद्बलकं भवतु। न वयं वारयामः। वचनान्तरे तु युग्मादितिथेरुपोष्यत्वं साक्षात् प्रतीयते। तथा च प्रतिपत्प्रकरणे प्रतिपदमावास्यायुग्मस्योपोष्यत्ववचनमुदाहृतम्। तत्रापि युग्माभिप्रायेणैव द्वितीयायाः परविद्धायाः उपोष्यत्वं भृगुस्मृतिविष्णुधर्मोत्तराभ्यां दर्शितम्। "एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी। त्रयोदशी चतुर्थी च उपोष्याः स्युः परान्विताः" इति। यदा पूर्वेद्युरुदयमारभ्य परेद्युरुदयस्योपरि त्रिमुहूर्त्तं वर्धते। तदा

पूर्व्वेद्युरेवोपवासः। न चोदाहृतेन परान्विता इति वचनेन विरोधः शङ्कनीयः परान्वितापूर्व्वान्वितयोः प्रसक्तयोः सत्योरस्य वचनस्य नियामकत्वात्। नचात्र परान्वितत्वं प्रसक्तमस्ति। पूर्व्वस्य दिनस्य सम्पूर्णतिथित्वात् सम्पूर्णखण्डयोः सम्पूर्णस्यासन्देहत्वेन प्रबलत्वात्। असञ्जातविरोधित्वकृतस्य कर्म्मकालव्याप्तिभ्यां पूर्व्वदिनस्यैव प्राबल्यम्। तस्मात्तत्रैवोपवासः। ननु पूर्व्वोपवासं प्रतिषेधति व्यासः "तृतीयया युता कार्य्या द्वितीया न तु पूर्व्वयेति" नैवम् अस्य वचनस्य खण्डतिथिविषयत्वेन संपूर्णतिथावप्रवृत्तेः। खण्डतिथिविषयत्वञ्च पूर्व्वया युता नैव कार्य्येत्यभिधानादवगम्यते। ननु खण्डतिथावपि द्वितीया पूर्व्वविद्धैवोपोष्या "प्रतिपत्सद्वितीया स्याद्द्वितीया प्रतिपद्युता" इत्यापस्तम्बेन प्रतिपद्द्वितीययोर्युग्मत्वाभिधानात्। एतदेव वचनमुपजीव्य कृष्णप्रतिपत्परविद्धैवोपोष्येति पूर्व्वं निर्णीतं तर्हि द्वितीयापि क्वचित्पूर्व्वविद्धा भवतु तदुक्तं स्कन्दपुराणे "प्रतिपत्सम्मुखी कार्य्या या भवेदापराह्णिकी। पूर्व्वाह्णिकी च कर्त्तव्या द्वितीया तादृशी विभो!" इति। तादृशी सम्मुखी पूर्व्वयुतेत्यर्थः। पूर्व्वेद्युरुदये मुहूर्त्तं परित्यज्यावशिष्टपूर्व्वाह्णमव्याप्नी यदा भवति तदा वेधकारिण्याः पूर्व्वतिथेः मुहूर्त्तत्रयाभावेन वेद्धुमसामर्थ्यात् स्वयंखण्डापि सती सम्पूर्णवत् पूर्व्वत्रोपवासे युज्यते। अत्र द्वितीया नवधा भिद्यते पूर्व्वेद्युरुदयमारभ्य प्रवृत्ता १ प्रातरुदयं परित्यज्य प्रवृत्ता २ पूर्व्वाह्णं सर्व्वं परित्यज्य प्रवृत्तेति ३ त्रयोभेदास्तेष्वेकैकस्य परेद्युस्त्रिमुहूर्त्तत्वतन्न्यूनत्वतच्छून्यत्वैस्त्रैविध्ये इति मिलित्वा नवविधत्वं सम्पद्यते। अथ पूर्व्वेद्युरुदयमारभ्य प्रवृत्तायाः सम्पूर्णत्वेन परेद्युर्मुहूर्त्तत्रयत्वतन्न्यूनत्वान्यूनत्वेषु त्रिष्वपि पक्षेषु विवादाविषयत्वात् पूर्व्वत्रैवोपवासो युक्तः। उदयं परित्यज्य कियत्पूर्व्वाह्णभागं प्रक्रम्य प्रवृत्तायाः परेद्युस्त्रिमुहूर्त्ततायां सत्यपि परयुतोपवाससम्भवे तां परित्यज्य पौर्व्वाह्णिकवचनेन पूर्व्वेद्युरेवोपवासो विधीयते। परेद्युस्त्रिमुहूर्त्तन्यूनत्वे तु वेधकारिण्यास्तृतीयायाः सत्यपि वेद्धुं सामर्थ्ये वेध्याया द्वितीयायास्त्रिमुहूर्त्तत्वाभावेन वेधयोग्यत्वाभावात् तत्रोपवासो न प्रसक्तः। अतः परिशेषात् पूर्व्वाह्णवाक्याच्च पूर्व्वत्रैवोपवासः। पूर्व्वेद्युः पूर्व्वाह्णं सर्व्वं परित्यज्य प्रवृत्तायाः परेद्युस्त्रिमुहूर्त्ततयोभयत्र तिथिसत्त्वात् कुत्रोपवास इति सन्देहे सति व्यासेनोत्तरविधानात् पूर्व्वदिननिषेधाच्चोत्तरत्रोपवासः। न चात्र शुक्लकृष्णव्यवस्था शङ्कनीया। युग्मवाक्ये शुक्लकृष्णपक्षसाधारण्येन परदिनविधानात् कृष्णपक्षेऽपि तत्प्रवृत्तौ बाधाभावाच्च। अन्ययोस्तु पक्षयोः पूर्व्ववद्वेधानर्हत्वेन पूर्व्वेद्युः पौर्व्वाह्णिकत्वाभावेऽपि परिशेषादापस्तम्बोक्तयुग्मवाक्याच्च पूर्व्वत्रोपवास इति स्थितम्। एकभक्तादिपार्व्वणश्राद्धान्तेषु कर्म्मसु द्वितीयाप्रयुक्तस्य विशेषस्य कस्यचिदप्यश्रवणात् पूर्व्वोक्तन्यायो योजनीयः"।

सा च अश्विनीकुमारयोर्जन्मतिथिः। यथाह वराहपु० तयोर्जन्मोपक्रमे "एतत् सर्व्वं द्वितीयायामश्विभ्यां ब्रह्मणा पुरा। दत्तं यस्मात्ततस्तेषां तिथीनामुत्तमा तिथिः। एतस्यां रूपकामस्तु पुष्पाहारो भवेन्नरः। संवत्सरं शुचिर्नित्यं सुरूपो भवेन्नरः। अश्विभ्यां ये गुणाः प्रोक्तास्ते तस्यापि भवन्ति च"। मनोरथद्वितीया तु श्रावणशुक्लद्वितीया। "मनोरथद्वितीयायां दिवा वासुदेवार्च्चनम् रात्रौ चन्द्रोदयेऽर्घ्यदानं नक्तं भोजनादिकमुक्तम् ति०त० विष्णुधर्म्मोत्तरे "देवमभ्यर्च्य पुष्पैस्तु धूपदीपानुलेपनैः। उद्गच्छतश्च बालेन्दोर्द्दद्यादर्घ्यं समाहितः। नक्तं भुञ्जीत च नरो यावत्तिष्ठति चन्द्रमाः। अस्तं गते न भुञ्जीत व्रतभङ्गभयान्नरः"। स्कन्दपु० "आषाढस्य सिते पक्षे द्वितीया पुष्यसंयुता। तस्यां रथे समारोप्य रामं मां भद्रया सह। यात्रोत्सवं प्रकुर्व्वीत प्रीणयेच्च द्विजान् बहून्। ऋक्षाभावे तिथौ कार्य्या सदा सा प्रीतये मम" रथद्वितीया।

भ्रातृद्वितीया लिङ्गपुराणे "कार्त्तिके तु द्वितीयायां शुक्लायां भ्रातृपूजनम्। या न कुर्य्याद्विनश्यन्ति भ्रातरः सप्तजन्मनि"। तस्या इति शेषः। महाभारते "कार्त्तिके शुक्लपक्षे तु द्वितीयायां युधिष्ठिर!। यमो यमुनया पूर्व्वं भोजितः स्वगृहे स्वयम्। तस्यां निजगृहे पार्थ! न भोक्तव्यमतो बुधैः। यत्नेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्द्धनम्। दानानि च प्रदेयानि भगिनीभ्यो विशेषतः"। तथा "यमञ्च चित्रगुप्तञ्च यमदूतांश्च पूजयेत्। अर्घश्चात्र प्रदातव्यो यमाय सहजद्वयैः"। "अत्र भोक्तव्यं पुष्टिवर्द्धनमिति समभिव्याहृतफलश्रुत्या भोजननियमस्य प्राधान्यात् तस्य मुख्यकालोऽष्टधाविभक्तदिनस्य पञ्चमांशोपाद्यः "पञ्चमे च तथा भागे संविभागो यथार्हतः पितृदेवमनुष्याणामित्यादि" इत्योक्तेः अत्र

भोजनस्य रागप्राप्तत्वेऽपि तत्कालस्य "अहनि च तथा तमस्विन्यां सार्द्धप्रहरयामान्तः" इति कात्यायनीयेन नियमितत्वात् वैधत्वेन शास्त्रीयत्वेन सामान्यशास्त्रप्राप्त्युपजीविपर्य्युदासासङ्गतिरिति। व॰त॰ (तेन नातिप्रगे नातिसायमित्यत्र नञर्थः पर्य्युदासः) "तथा यमद्वितीयायां यात्रायां मरणं भवेत्"। अनध्यायद्वितीया यथा "प्रेकोचैत्रा द्वितीयास्ताः प्रेतपक्षे गते तु या। या च कोजागरे जाते चैत्रावल्याः परेऽपि या। चातुर्मास्ये समाप्ते च द्वितीया या भवेत् तिथिः। परास्त्वेतास्त्वनध्यायः पुराणैः परिकीर्त्तितः ति॰ त॰। "मार्गे च फाल्गुने चैव आषाढे कार्त्तिके तथा। पक्षयोर्मासयोरुभयोः द्वितीयां परिवर्जयेत्" मल॰त॰ अयमुपनयनविषयः। पक्षयोरित्यस्योत्तरत्व श्रुतस्य सर्वत्रान्वयः। "द्वितीया मीनधनुषोः" ज्योति॰त॰उक्तेः रविचन्द्रयोर्मीनधनुषोः स्थितयोस्तस्या दग्धत्वम्। चन्द्रमात्रस्थितत्वे चन्द्रदग्धत्वं केचिदिच्छन्ति "द्वितीया द्वादशी पक्षे" ज्यो॰त॰ उक्तेस्तस्यामुत्तरस्यां दिशि योगिनी।

**द्वितीयक** न॰ द्वितीयेन रूपेण ग्रहणम् "तावतिथं ग्रहणमिति लुग्वा" पा॰ कन् पूरणप्रत्ययस्य वा लुक्। १चैत्रादेर्द्वितीयरूपेण ग्रहणे। पक्षे तीयभागस्य लुकि द्विकमप्यत्र। द्वितीयेऽह्नि भवः कन्। २द्वितीयदिनभवे रोगे पु॰

**द्वितीयत्रिफला** स्त्री द्वितीया त्रिफला। गाम्भार्य्यां (गाम्भार) शब्दच॰।

**द्वितीयाकृत** त्रि॰ द्वितीयं कृतम् द्वितीय+डाच् कृ—क्त। द्वितीयवारकर्षणकर्मणि क्षेत्रादौ।

**द्वितीयाभा** स्त्री द्वितीयेन रूपेण हरिद्रायाः आभाति आ+भा—क। दारुहरिद्रायां शब्दच॰।

**द्वितीयाश्रम** पु॰ कर्म॰। द्वितीये गार्हस्थ्ये आश्रमे "द्वितीयमायुषो भागं कृतदारो गृहे वसेत्" मनुः "कालोह्ययं सङ्क्रमितुं द्वितीयं सर्वोपकारक्षममाश्रमं ते" रघुः।

**द्वितीयिक** त्रि॰ द्वितीयः इच्छावशुल्कोपपदारूपः पदार्थो दीयते "पूरणार्थाद्दा ठ।" पा॰ ठन् इच्छादिरूपेण दीयते द्वितीयो यस्मिन् तस्मिन् पदार्थे

**द्वितीयिन्** त्रि॰ द्वितीयो भागो ग्राह्यतयाऽस्त्यस्य इनि। अर्द्धभागग्राहके ऋत्विजि ऋत्विक्शब्दे १७८पृ॰दृश्यम्। "षोडश षोडश द्वितीयिभ्यः" आश्व॰श्रौ॰ ८।४।४ "द्वितीयिभ्यः ऋत्विग्भ्यः अर्द्धमेवाल्प्तोऽर्द्धिनस्तेभ्यः" नारा॰

**द्वित्र** त्रि॰ ब॰व॰। द्वौ वा त्रयो वा विकल्पार्थे बहु॰ सङ्ख्येयार्थत्वे ड। द्वौ त्रयोवेत्यर्थे। "द्वित्राण्यहान्यर्हसि सोढुमर्हन्!" रघुः "दैवेनाप्रतिपत्तिमूढमनसा द्वित्राः स्थितं नाडिकाः" सा॰द॰

**द्वित्व** न॰ द्वयोर्भावः। अयमेकः अयमेक इत्यनेकैकत्वबोधरूपापेक्षाबोधजन्ये द्रव्यनिष्ठे गुणभेदे। तच्च समवायेन वस्तुद्वये प्रत्येकं तिष्ठति, पर्य्याप्तिसम्बन्धेन तु द्वयोरेव तिष्ठति न प्रत्येकम्। तदेवापेक्षाबुद्धिजन्यम् तेनैव इमौ द्वावित्यादि व्यवहारः। समवायेन प्रत्येकं द्वित्वसत्त्वेऽपि न तेन तथा व्यवहारः। औलुक्यशब्दे १५८७पृ॰तदुत्पत्तिविनाशप्रकारश्च दृश्यः।

"द्वित्वादयः परार्द्धान्ता अपेक्षाबुद्धिजा मताः। अनेकाश्रयपर्य्याप्ता एते तु परिकीर्त्तिताः। अपेक्षाबुद्धिनाशाच्च नाशस्तेषां निरूपितः। अनेकैकत्वबुद्धिर्या साऽपेक्षाबुद्धिरुच्यते" भाषा॰ "द्वित्वादयो व्यासज्यवृत्तिसंख्या अपेक्षाबुद्धिजन्या"। "अनेकेति। यद्यपि द्वित्वादिसमवायः प्रत्येकं घटादावपि वर्त्तते तथाप्येको द्वाविति प्रत्ययाभावात् एको न द्वाविति प्रत्ययसत्त्वाच्च द्वित्वादीनां पर्य्याप्तिलक्षणः कश्चन सम्बन्धोऽनेकाश्रयोऽभ्युपगम्यते। अपेक्षाबुद्धिनाशादिति। प्रथममपेक्षाबुद्धिस्ततो द्वित्वोत्पत्तिः। ततो विशेषणज्ञानं द्वित्वत्वनिर्विकल्पकरूपम्। ततो द्वित्वविशिष्टप्रत्यक्षम्। अपेक्षाबुद्धिनाशे ततो द्वित्वनाश इति। यद्यपि ज्ञानान्तरं न किमपि लिङ्गमस्थायि योग्यविभुविशेषगुणानां स्वोत्तरवर्त्तिगुणनाश्यत्वात् तथाप्यपेक्षाबुद्धेस्त्रिक्षणस्थायित्वं कल्प्यते अन्यथा निर्विकल्पकाले अपेक्षाबुद्धिनाशात् अनन्तरं द्वित्वस्यैव नाशः स्यात् न तु द्वित्वप्रत्यक्षं तदानीं विषयाभावात् विद्यमानस्यैव चक्षुरादिना ज्ञानजननोपगमात्। तस्माद् द्वित्वप्रत्यक्षादिकमपेक्षाबुद्धेर्नाशकं कल्प्यते। न चापेक्षाबुद्धिनाशात् कथं द्वित्वनाश इति वाच्यम्। कालान्तरे द्वित्वप्रत्यक्षाभावात्। अपेक्षाबुद्धिस्तदुत्पादिका तन्नाशस्तन्नाशक इति कल्पनात्। अतएव तत्पुरुषीयापेक्षाबुद्धिजन्यद्वित्वादिकं तेनैव गृह्यत इति कल्प्यते। न चापेक्षाबुद्धेर्द्वित्वप्रत्यक्षकारणत्वमस्त्विति वाच्यम्। लाघवेन द्वित्वं प्रति कारणत्वस्यैवोचितत्वात्। अतीन्द्रिये द्व्यणुकादावपेक्षाबुद्धिर्योगिनाम्। सर्गादिकालीनपरमाण्वादावीश्वरीयापेक्षाबुद्धिर्ब्रह्माण्डान्तरवर्त्तियोगिनामपेक्षाबुद्धिर्वा द्वित्वादिकारणमिति"। "अपेक्षाबुद्धिः

कोत्पत्त आह। अनेकेति। अयमेकः अयमेकः। इत्याकारिका इत्यर्थः। इदन्तु बोध्यं यत्रानियतैकत्वज्ञानं तत्र द्वित्वादिभिन्ना बहुत्वसंख्योत्पद्यते। यथा सेनावनादाविति कन्दलीकारः। आचार्य्यास्तु त्रित्वादिकमेव बहुत्वं मन्यन्ते। तथा च त्रित्वत्वादिव्यापिका बहुत्वत्वजातिः। सेनादौ चोत्पन्ने त्रित्वादौ त्रित्वत्वाद्यग्रहो दोषात्। इत्यञ्च इतरतो बहुलेयं सेनेति प्रतीतिरुपपद्यते बहुत्वस्य संख्यान्तरत्वे तत्तारतस्याभावादित्यवधेयम्” मुक्ता०।

उप० वृत्तौ विशेषः कश्चिदुक्तो यथा
“तदयं द्वित्वाद्युत्पादविनाशक्रमः। समानजातीययोरसमानजातीययोर्द्रव्ययोश्चक्षुःसन्निकर्षे सति तन्निष्ठैकत्वसंख्ययोर्यत्सामान्यमेकत्वत्वं तयोर्निर्विकल्पकानन्तरं तद्विशिष्टगुणबुद्धिरुत्पद्यते सैव चापेक्षाबुद्धिस्तया तयोर्द्रव्ययोर्द्वित्वमुत्पद्यते, उत्पन्नस्य च द्वित्वस्य यत्सामान्यं द्वित्वत्वं तदालोचनेनापेक्षाबुद्धेर्नाशो द्वित्वत्वविशिष्टद्वित्वगुणविषया विशिष्टबुद्धिश्चैकदा भवति, तदग्रिमक्षणे च द्वित्वगुणस्यापेक्षाबुद्धिविनाशः द्वे द्रव्ये इति द्वित्वविशिष्टद्रव्यज्ञानञ्च युगपदुत्पद्यते, ततस्तस्माद् द्वित्वविशिष्टद्रव्यज्ञानात् संस्कारः। तदयं संक्षेपः उत्पत्स्यमानद्वित्वाधारेणेन्द्रियसन्निकर्षस्तत एकत्वगुणगतसामान्यज्ञानं तत एकत्वत्वसामान्यविशिष्टैकत्वगुणसमूहालम्बनरूपाऽपेक्षाबुद्धिस्ततो द्वित्वगुणोत्पत्तिस्ततस्तद्गतसामान्यस्य ज्ञानं ततस्तत्सामान्यविशिष्टद्वित्वगुणज्ञानं ततो द्वित्वगुणविशिष्टद्रव्यज्ञानं ततः संस्कार इतीन्द्रियसन्निकर्षमारभ्य संस्कारपर्य्यन्तमष्टौ क्षणाः। विनाशक्रमस्तु एकत्वत्वसामान्यज्ञानस्यापेक्षाबुद्धितो विनाशः द्वित्वत्वसामान्यज्ञानादपेक्षाबुद्धेर्विनाशः द्वित्वत्वसामान्यज्ञानस्य च द्वित्वगुणबुद्धितो विनाशः द्वित्वगुणबुद्धेश्च द्वित्वविशिष्टद्रव्यज्ञानात् तस्य च संस्कारात् विषयान्तरज्ञानाद्वेति। नन्वेकत्वज्ञानात्तद्विशिष्टद्रव्यज्ञानमेव कथं नोत्पद्यते तत्सामग्रीसत्त्वात् न हि गुणज्ञाने सति द्रव्यज्ञाने विलम्बोऽस्ति तथा च तत एवापेक्षाबुद्धेर्विनाशे तन्नाशाच्च तदग्रिमक्षण एव द्वित्वनाश इति द्वे द्रव्ये इति विशिष्टज्ञानपूर्वक्षण एव द्वित्वविनाशापत्त्या द्वित्वविशिष्टद्रव्यज्ञानस्यानुत्पत्तिरेवेति चेन्न द्वित्वाद्युत्पत्तिसामग्र्यनभिभूताया एवापेक्षाबुद्धेर्द्रव्यविशिष्टज्ञानजनकत्वनियमात् फलबलेन कथाकल्पनात्। ननु तथापि स्वजनितसंस्कारेणैवापेक्षाबुद्धिविनाशे पुनः स दोषस्तदवस्थ एव, द्वित्वविशिष्टज्ञानपूर्वक्षण एव द्वित्वनाशस्य सम्भवादिति चेन्न केवलगुणज्ञानस्य संस्काराजनकत्वात् न हि केवलोगुणः क्वापि स्मर्य्यते, सर्वत्र द्रव्योपरागेणैव गुणस्मरणात्. ननु भवत्वेवं तथापि विशिष्टबुद्धिकालेऽपि द्वित्वनाशे विशिष्टप्रतीत्यनुदयस्तदवस्थ एव न हि वर्त्तमानावभासिनी विशिष्टप्रतीतिर्विशेषणनाशकाले सम्भवति तथाऽदर्शनादिति चेन्न विशेषणज्ञानविशेष्येन्द्रियसन्निकर्षतदुभयासंसर्गाग्रहस्य विशिष्टज्ञानसामग्र्याः प्रकृतेऽपि सम्भवात्। यदि तु विशेष्येन्द्रियसन्निकर्षोऽपि कल्प्यते तदा पूर्वक्षणे तस्यापि सत्त्वात् पूर्वक्षणवर्त्तिन एव सन्निकर्षस्य कारणत्वेनाभ्युपगमात्, विशेषणं विशिष्टज्ञानागोचरेऽपि सम्भवति, विशिष्टज्ञानजनकज्ञानविषयत्वमात्रमेव हि विशेषणत्वे तन्त्रं नतु विशिष्टज्ञानविषयत्वमपि। उपलक्षणस्याप्येवं विशेषणत्वापत्तिरिति चेन्नाप्रत्याय्यव्यावृत्तिसामानाधिकरण्यस्य विशेषणत्वे तन्त्रत्वात् उपलक्षणन्तु तद्व्यधिकरणम्, एवं यदा देवदत्तस्य गृहे काकसत्ता तदा काकोविशेषणं, यदा तु उपरिभ्रमन् असन् तदोपलक्षणम्। एवं सति रूपवति रस इत्यादौ रूपादेरपि विशेषणत्वापत्तिरिति चेन्न इष्टत्वात्, तर्हि तत्रापि रसोवर्त्ततेति चेन्न विशिष्टवृत्तेर्विशेषणवृत्तित्वानावश्यकत्वात् न हि विशेषणं विशिष्टमतावेकं तन्त्रम्। द्वित्वनाशकाले विशेषणसम्बन्धो नास्ति कुतोविशिष्टप्रत्यय इति चेन्न अतद्व्यावृत्तेरेव वैशिष्ट्यपदार्थत्वात्, तज्ज्ञानन्तु तत्रापीति न किञ्चिदनुपपन्नमित्याचार्य्याः। एवं द्वित्वोत्पत्तिविनाशवत् त्रित्वोत्पत्तिविनाशावप्यूहनीयौ। द्वित्वमपेक्षाबुद्धिनाशनाश्यम्, आश्रयनाशविरोधिगुणान्तराभावे गुणस्य सतोऽविनाशित्वात् चरमज्ञानवत् चरमज्ञानस्यादृष्टनाशनाश्यत्वात्। क्वचिदाश्रयनाशादपि नश्यति यत्र द्वित्वाधारावयवकर्मसमकालैकत्वसामान्यज्ञानम्, तद्यथा अवयवकर्मसामान्यज्ञाने विभागापेक्षाबुद्धौ संयोगनाशगुणोत्पत्तौ द्रव्यनाशद्वित्वसामान्यज्ञाने तत्र द्रव्यनाशाद्द्वित्वनाशः, सामान्यज्ञानादपेक्षाबुद्धिनाशः, अपेक्षाबुद्धिनाशस्य द्वित्वनाशसमानकालत्वात् कार्य्यकारणसमानभावात्। यदा तु द्वित्वाधारावयवकर्मापेक्षाबुद्ध्योर्यौगपद्यं तदा द्वाभ्यामाश्रयनाशापे-

क्षाबुद्धिनाशाभ्यां द्वित्वनाशः, तद्यथा अवयवकर्मा-पेक्षाबुद्धौ विभागोत्पत्तौ संयोगनाशद्वित्वसामान्यज्ञाने द्रव्यनाशापेक्षाबुद्धिनाशौ ताभ्यां द्वित्वनाशः प्रत्येकं सामर्थ्यग्रहात्। एवञ्च प्रक्रिया ज्ञानयोर्वध्यघातकत्वपक्षे परमुपपद्यते स एव च पक्षः प्रामाणिकः। ननु द्वित्वत्रित्वादीनां सामग्रीसाम्ये कथं कार्य्यवैलक्षण्यं, द्वाभ्यामेकत्वाभ्यां द्वित्वं, त्रिभिरेकत्वैस्त्रित्वमिति चेन्न एकत्वे द्वित्वाद्यभावात्, समवायिकारणगतमेव द्वित्वत्रित्वादिकं तन्त्रमिति चेन्न द्वित्वाद्युत्पत्तेः पूर्वं तत्र द्वित्वाद्यभावात् तत्रापि कारणचिन्ताया अनिवारणात् अपेक्षाबुद्धावेकत्वेषु च तादृशविशेषस्यानुपलम्भबाधितत्वात् फलबलेन तत्कल्पने वा द्वित्वादिव्यवहारोऽपि तत एवास्तु किं द्वित्वादिना, अदृष्ट॰ विशेषादिरेव इति चेदेवं सति द्वित्वारम्भिकयाऽपि सामग्र्या कदाचित्त्रित्वं चतुष्ट्वोत्पद्येतेत्यनियमप्रसङ्गः इति चेत् अत्रोच्यते प्रागभावविशेषादेवेति नियमोपपत्तेः। तुल्यया सामग्र्या पाकजानां रूपरसगन्धस्पर्शानामिव। प्रागभावोऽपि साधारण एवेति चेन्न स्वस्वप्रागभावस्यैव कार्य्यं प्रति कारणत्वावधारणात्। यदा एकयाऽपेक्षाबुद्ध्या द्वित्वं द्वित्वसहितया त्रित्वमिति नैवम्, (अव्यवस्था) शतं पिपीलिकानां मया हतमित्यादौ, समवायिकारणाभावे द्वित्वं तावन्नोत्पद्यते तथा च लोकस्य संख्याव्यवहारो दूरतः। सेनावनादौ नियतापेक्षाबुद्ध्यभावाद्बहुत्वमात्रमुत्पद्यते न तु शतसहस्रादिसंख्येति श्रीधराचार्य्याः। एवं सति शतसहस्रादिकोटिकस्य संशयो न स्यात् न स्याच्च महती महत्तरा सेनेति नैवमित्युदयनाचार्य्याः। अत्रैवमालोचनीयं त्रित्वादिपरार्द्धपर्य्यन्ता संख्यैव बहुत्वम्, तद्भिन्नं वा संख्यान्तरम्, नाद्यः सेनादावपि शतसहस्रादिसंख्योत्पत्तिनियमात्, न द्वितीयः त्रित्वादिविलक्षणस्य बहुत्वस्याननुभवात् तथा च प्रतिनियतैकत्वानाकलनापेक्षाबुद्धिजनितशतादिसंख्यैव बहुत्वं शताद्यभिव्यक्तिस्तु तत्र न भवति तादृशव्यञ्जकाभावात्। वयन्तु ब्रूमः त्रित्वादिसमानाधिकरणं संख्यान्तरमेव बहुत्वं त्रित्वादिजनकापेक्षाबुद्धिजन्यं प्रागभावभेदादेव भिद्यते कथमन्यथा बहवस्तावत् सन्ति शतं वा सहस्रं वेति विशिष्य न जानीम इति। यथैकद्रव्ये महत्त्वं दीर्घत्वञ्च तथैकसमानाधिकरणे त्रित्वादिकं बहुत्वञ्च, भवति हि शतं वा सहस्रं वा चूतफलान्यानयानीति प्रश्ने बहवस्तावदानीयन्तां किं विशेषजिज्ञासयेति। एवञ्च द्वित्वसहितापेक्षाबुद्ध्या त्रित्वं त्रित्वसहितापेक्षाबुद्ध्या चतुष्ट्वमेवमुत्तरोत्तरम्। बहुत्वोत्पत्तौ तु नापेक्षाबुद्धौ पूर्वपूर्वसंख्याविशिष्टत्वनियमः, अतएव सेनावनादिषु बहुत्वमात्रमुत्पद्यते न तु संख्यान्तरं संशयस्तु सत्कोटिकोऽपि भवत्येवेति"।

**द्विदण्डि** अव्य॰ द्वौ दण्डौ यस्मिन् प्रहरणे इच् समा॰। दण्डद्वययुक्ते प्रहरणे। तिष्ठद्गवे इच् प्रत्ययः समासान्त इत्युक्तेः बहुव्रीह्यर्थे अव्ययीभावात् अव्ययत्वम् तेन न द्विदण्डा प्रकृतिरिति। न वा प्रहरणे इत्युक्तेः शालादौ वाच्येऽपि अव्ययीभावः।

**द्विदण्ड्यादि** पु॰ प्रहरणार्थे इच्समासान्तनिमित्ते पा॰ ग॰ उक्ते शब्दगणभेदे स च तत्रोक्तो यथा "द्विदण्डि द्विमुसलि उभाञ्जलि उभयाञ्जलि उभादन्ति उभयादन्ति उभाहस्ति उभयाहस्ति उभाकर्णि उभयाकर्णि उभापाणि उभयापाणि उभाबाहु उभयाबाहु एकपदि प्रोष्ठपदि आढ्यपदि सपदि निकुच्यकर्णि संहतपुच्छि अन्तेवासि"।

**द्विदत्** त्रि॰ द्वौ दन्तावस्य वयसि दन्तस्य दत्रादेशः। द्विदन्तो-[पलक्षितवयस्के वृषादौ स्त्रियां ङीप्।

**द्विदल** त्रि॰ द्वे दले यस्य। द्विशाखायुक्ते १दर्भपवित्रादौ "म-कयश्च द्वारवं पात्रं द्विदलान् रेणुकान् बहून्" हरिवं॰ २द्विपत्रयुक्ते कमले तत्र सुषुम्णानाडीमध्ये भ्रूमध्यस्थितं (हक्ष) वर्णयुक्तं हक्षकमलम् आज्ञाख्यं चक्रम्। द्विःपत्रादयोऽप्यत्र "द्विःपत्रे षोडशारे द्विदशदशदले द्वादशार्द्धे चतुष्के" तन्त्रम् आज्ञाचक्रशब्दे ६४२ पृ॰ दृश्यम्। द्विधा दल्यते दल-घञर्थे क। (डाल) ख्याते ३पदार्थे पु॰।

**द्विदश** त्रि॰ द्व्यधिका द्विरावृत्ता वा दशसंख्या येषाम् "संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये" पा॰ संख्येयार्थत्वात् डच् समा॰। "द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः" पा॰ अबहुव्रीहौ इत्युक्तेर्न आत्। द्विरावृत्त दशसंख्यायुते। "द्विःपत्रे षोडशारे द्विदशदशदले" तन्त्रम्

**द्विदाम्नी** स्त्री द्वे दामनी बन्धनसाधने यस्याः मन्नन्तत्वात् ङीपो-निषेधे पक्षे डापः प्राप्तौ "दामहायनान्ताच्च" पा॰ ङीबेव। द्विरज्जुबन्धनयोग्यायां दुष्टायां स्त्रियां गवि।

**द्विदिव** पु॰ द्वाभ्यां दिवा दिनाभ्यां निर्वृत्तादि तद्धितार्थे द्विगुः "कालाट् ठञ्" तस्य लुक् ह्रस्वः। द्विदिनसाध्ये द्विरात्रयागभेदे "द्वितीये द्विदिवास्योद्यूः" कात्या॰

श्रौ० २२।७।६। "द्वितीये पर्वस्थाने यो होता भवति द्विदिव इत्याख्या तस्य" कर्कः।

**द्विदेवत** त्रि० द्वे देवते यस्य ६ब०। द्विदेवताके चर्वादौ "द्विदेवतोऽपि नियमसामर्थ्यात्" कात्या०श्रौ०५।११८।१० "द्विदेवतोऽपि पौष्णचरुः प्रपिष्टानामेव भवति तत्र स्त्रीन्द्रसहितस्य पूष्णो देवतात्वम् तत्र पूष्णो नियमेन पिष्टम् प्राप्नोति (अदन्तत्वात्) इतरस्येन्द्रस्यानियमः" कर्कः इति पूर्वपक्षे "सर्वं पिष्टं चोभयसामर्थ्यात्" ११सू० "पूष्णः पिष्टम् इतरस्यापिष्टमिति विकल्पप्रायेषु तन्त्रेषु पिष्टानामावापः करिष्यते अतः पाकद्वैधं नायुक्तम्" कर्कः। इन्द्राग्निदेवताके २विशाखानक्षत्रे च द्विदैवादयोऽप्यत्र। "त्रिकोत्तरावारुणपर्वपैत्र्यैन्द्रपूर्वात्रयमूलभयुग्मदैव। यज्ञादि नेष्टान्यनकानिवैद्विदैवचित्राह्निमघात्मकानि" वसिष्ठः

**द्विदेह** पु० द्वाभ्यां देहोऽस्य। गजानने गणेशे त्रिका०। इभाननशब्दे ९८१ पृ० दृश्यम्। चराचरद्यात्मकेषु २मिथुनकन्याधनुर्मीनाख्यराशिषु। राशिविशेषाणां द्व्यात्मकत्वं द्व्यात्मकशब्दे दृश्यम्। द्वितन्वादयोऽप्यत्र।

**द्विद्वादश** पु० द्वितीयः द्वादशश्च वरकन्ययोः राशिभेदः दोषसाधनमत्र इतौ संख्यायास्तस्य पूरणार्थत्वं त्रिभागभेनादिवत् ज्ञेयम्। वरकन्याराश्योर्द्वितीयद्वादशान्यतररूपे वैवाहिके अशुभसूचकदोषभेदे उपयमशब्दे १२४१पृ० दृश्यम्। "अनपत्यता त्रिकोणे द्विद्वादशे च दारिद्र्यमिति" दीपिका तत्र वरराश्यपेक्षया कन्याया द्वादशराशिकत्वे तु न दोषः। "कन्यायाः द्वादशे भर्त्ता भर्त्तुः कन्या द्वितीयगा। द्विद्वादशं विजानीयात् वर्जितं त्रिदशैरपि" विशिष्य निषेधात् "द्विद्वादशे धनस्थे धनदा च कन्या रिष्फे स्थिता धनवती पतिवल्लभा च" ज्यो०त० प्रतिप्रसवाच्च। समाहारद्विगुः। २द्वितीये धनस्थाने द्वादशे व्ययस्थाने च न०। "द्विद्वादशे ग्रहा हानिम्" नी० ता०।

**द्विधा** अव्य०द्वि+प्रकारे धाच्। द्विप्रकारे "मङ्गलसंवादिनीः केका द्विधा भिन्नाः शिखण्डिभिः"। "द्विधेव भिन्नं सलिले विवस्वतः" रघुः। [क्षीरे पु० हेमच०।

**द्विधागति** त्रि०द्विधा गतिरस्य। १द्विप्रकारगतियुक्ते। २कु-

**द्विधातु** त्रि० द्वौ धातू यत्र। १धातुद्वयघटिते कांस्यादौ २गणेशे शब्दरत्ना०। तस्य देवगजदेहद्वयघटितत्वात् तथात्वम्। [शब्दच० २द्विस्वभावेषु मिथुनादिराशिषु पु०।

**द्विधात्मक** पु०न० द्विधा आत्मा यस्य कप्। १जातीकोषे

**द्विधालेख्य** त्रि० द्विधा लेख्यम्। १द्विप्रकारे लेखनीये २हिन्तालवृक्षे पु० राजनि०। [रोमयुते हेमच०।

**द्विनग्नक** पु० द्विः नग्नकः। स्वाभाविकागन्तुकभेदे द्वयुर्ण-

**द्वि(द्वा)नवति** स्त्री द्व्यधिका नवतिः वा आत्। १अधिकनवतिसंख्यायां २तद्युक्ते च। ततः पूरणे डट् द्वि(द्वा)नवत, तमप्, द्वि(द्वा)नवतितम १तत्संख्यापूरणे त्रि० डटि स्त्रियां ङीप्।

**द्विनिष्क** त्रि० द्वाभ्यां निष्काभ्यां क्रीतम् तद्धितार्थद्विगुः ततः ठञ् तस्य नित्यं लुकि प्राप्ते" "द्वित्रिपूर्वान्निष्कात्" पा० तस्य वा लुक्। द्वाभ्यां निष्काभ्यां क्रीते पक्षे ठञः अलुके "परिमाणान्तस्यासंज्ञाशाणयोः" पा० उत्तरपदवृद्धिः। द्वैनिष्किक तत्रार्थे, द्वौ निष्कौ परिमाणमस्य अण् तस्य लुक्। २द्विनिष्क तत्परिमाणयुते त्रि०।

**द्विप** पुंस्त्री० द्वाभ्यां मुखशुण्डाभ्यां पिबति पा—क। १गजे अमरः। "विपूर्णमाणश्रवणोदरं द्विपाः" माघः। "स्वल्पनावैः समे युध्येदनूपे नौद्विपैस्तथा" मनुः २नागकेशरे पु०।

**द्विपक्ष** पुंस्त्री द्वौ पक्षौ यस्य। १खगमात्रे २मासे पु०

**द्विपक्षमूली** स्त्री द्विधा पक्षमूली। दशमूले "द्विपञ्चमूली घोरतरसकृद्दाहमरिचमधुविषकृत्वाकादिशाखाविषम्" सुश्रु०। दशमूलं च दशमूलशब्दे ३४९२ पृ० दृश्यम्।

**द्वि(द्वा)पञ्चाशत्** स्त्री द्व्यधिका पञ्चाशत् वा आत्। १अधिकपञ्चाशत्संख्यायां २तदन्विते च। ततः पूरणे डट् द्वि(द्वा) पञ्चाश, तमप् द्वि(द्वा) पञ्चाशत्तम तत्संख्यापूरणे त्रि० स्त्रियां डटि ङीप्।

**द्विपण्य** त्रि० द्वाभ्यां पणाभ्यां क्रीतं "पणपादमाषशताद्यत्" पा० यत्। द्वाभ्यां पणाभ्यां क्रीते

**द्विपत्रक** पु० द्वे पत्रे यस्य संज्ञायां कन्। १मल्लातकवृन्दे पारस्करनिघण्टुः २द्विदलकमले वा कप्।

**द्विपथ** न० द्वयोः पथोः समाहारः समा०द्वि० अच्समा०। (दोमाथापथ) १द्वयोः पथोः समाहारे। द्वौ पन्थानौ यत्र। २मार्गद्वययुक्ते देशादौ त्रि०।

**द्विपद** पु० द्वे पदे यस्य। "द्विपदे च चतुर्भेदा नरदेवपक्षिराक्षसाः" १प्रमथारोक्ते मनुष्यादौ। २द्विपद्घटिते समासे पु०। ३राशिभेदे च "मिथुनतुलाघटकन्या द्विपदाख्याश्चापपूर्वभागश्च" ज्यो०त० "द्विपदवशगाः सर्वे सिंहं विहाय चतुष्पदाः" ज्यो०त०। समा०द्वि०। ४पदद्वये न०। ५पदद्वयात्मके वास्तुमण्डलस्थे कोष्ठभेदे।

**द्विपदा** स्त्री द्वौ पादावस्य "संख्यासुपूर्वस्येति" पा०पादस्यान्त्यलोपः "टाबृचि" टापि पादः पद्भावः। द्विपादयुक्तायामृचि

**द्विपदिका** स्त्री द्वौ पादौ दण्डौ यत्र वुन् ख्वीत्वम्। द्वौ पादौ यत्र दण्डः १तत्रार्थे "द्वौ पादौ दण्डितो द्विपदिकां व्यवहरति द्विगुणं ददातीत्यर्थः" सि०कौ० अत्र पादशब्दस्य गुणवाचित्वाभिप्रायेण द्विगुणमित्युक्तमिति बोध्यम्। द्विपदी स्वार्थे क स्रुस्वः। २गीतिभेदे "शुद्धा द्विपदिका गीतिर्जम्भलेत्यभिधीयते" भरतः। "द्विपदिकया दियोऽवलोक्य निःश्वस्य मालम्" विक्रमो०।

**द्विपदी** स्त्री द्वौ पादौ यस्याः पादः अन्त्यलोपे कुम्भपद्या० ङीप् पद्भावः। स्वर्गभित्र १द्विपदयुक्तगीतिभेदे २मात्राछन्दोभेदे च "आदौ षट्कलमथ चतुष्कलमेतत् तदनु पञ्चचतुष्कलम् गुर्वन्तं द्विपदी भवतीह विंशत्यष्टकलं दलम्" तल्लक्षणम्। "गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि न हि पद्यसे" शत०ब्रा० १४।८।१५।१० त्रैलोक्याख्यकपादेनैकपदी भवसि त्रैविद्यरूपपादेन त्वं द्विपदी" भा०। तेन अवयवरूपपरत्ववाचित्वाभावात् टाबचौत्वस्य न प्रवृत्तिर्न यतन्त्रापिपादत्वात् इति बोध्यम्।

**द्विपर्णी** स्त्री द्वे पर्णे यस्याः जातित्वात् ङीप्। १वनकोल्यां रत्नमा० १पर्णद्वययुक्ते त्रि० स्त्रियां टाप्।

**द्विपमद** पु० ६त०। १हस्तिमदे २गन्धद्रव्यभेदे च राजनि०।

**द्विपाद** न० द्वयोः पादयोः समाहारः समा० द्वि० पात्रा० न ङीप्। पादद्वये। तद् हरति आवहति वा "द्विगोष्ठंश्च"पा० ठन् यत्ते च द्विपादिक द्विपाद्यीच स्वपक्षे ठञ् तस्य अध्यर्द्धेति लुकि द्विगोरिति ङीपि प्राप्ते पात्रादित्वात् न ङीप्। द्विपदहारके तद्वाहके च।

**द्विपाद्** पु० द्वौ पादौ यस्य वेदे नान्त्यलोपः। वानरादौ पशुभेदे "ततो द्विपादाः पश्चवस्तैरेवैनदेतदश्वरति" शत०ब्रा० ६।८।२।५। २यक्षभेदे "एकपादा द्विपादाश्च तथा द्विशिरसोऽपरे" हरिवं० १६८अ० नानायक्षोक्तौ। लोके तु अन्त्यलोपः द्विपाद् इत्येव। पादद्वययुक्ते मनुष्यादौ।

**द्विपाद्य** त्रि० द्वौ पादौ परिमाणमस्य "पणमाषपादशतात् यत्"पा० यत् पादः पद्विति न, अल्लोपस्य स्थानिवत्त्वात् "पद्यत्यतदर्थे" पा० इत्यपि न प्राग्यक्तस्यैव तत्र ग्रहणात्। १द्विपादपरिमाणयुते दण्डप्रायश्चित्तादौ २द्विगुणदण्डे अमरः। तत्र पादशब्दस्य गुणवाचित्वात् द्विगुणपरतेति बोध्यम्।

**द्विपाधिप** पु० ६त०। १ऐरावते २गजश्रेष्ठे च "तत्पूर्वमंसद्वयसं द्विपाधिपाः" माघः गजाधिपादयोऽप्यत्र।

**द्विपायिन्** पु० द्वाभ्यां मुखशुण्डाभ्यां पिबति पा–णिनि। गजे हारा० स्त्रियां ङीप्।

**द्विपास्य** पु० द्विपस्यास्यमेवास्यमस्य। गणेशे। [शब्दरत्ना०।

**द्विपुट** पु० द्वे पुटे यस्य। सुगन्धिमूलतृणके तृणभेदे पार०

**द्विपुरुष** त्रि० द्वौ पुरुषौ प्रमाणमस्य तद्धितार्थे द्विगुः "प्रमाणे लोऽद्विगोर्नित्यम्" पा० मात्रचो लुक्। पुरुषद्वयप्रमाणयुक्ते स्त्रियां वा ङीप् द्विपुरुषी (षा) वा परिखा।

**द्विपृष्ठ** पु० अद्भुतमाने राजभेदे हेमच०।

**द्विबन्धु** पु० द्वयोर्लोकयोर्बन्धुः। द्वयोर्लोकयोर्बन्धौ वह्नौ। "स द्विबन्धुर्वैतरणः" ऋ०१०।६१।१७

**द्विभाव** त्रि० द्वौ भावौ यस्य। द्विस्वभावयुक्ते ततः ब्राह्मणा० भावे कर्मणि च ष्यञ्। द्वैभाव्य द्वित्वे न०।

**द्विभूम** त्रि० द्वे भूमी यत्र अच्समा०। भूमिद्वययुक्ते प्रासादादौ (दोतालघर)

**द्विमातृ** पु० द्वे मातरौ यस्य बहुव्रीहावन्तविशेरनित्यत्वात् न कप्। १गणेशे हेमच०। कप् द्विमातृकोऽप्यत्र। २जरासन्धे च

**द्विमातृज** पु० द्वाभ्यां मातृभ्यां जायते जन–ड। १गणेशे हेमालरशब्दे दृश्यम्। २जरासन्धनृपे च जरासन्धशब्दे १०६० पृ० दृश्यम्।

**द्विमात्र** पु० द्वे मात्रे उच्चारणकालभेदोऽस्य। दीर्घस्वरे आ ई इत्यादौ "एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते" शिक्षा। [युक्ते।

**द्विमास्य** त्रि० द्वौ मासौ प्रमाणमस्य यप्। मासद्वयपरिमाण

**द्विमास्य** त्रि० द्वौ मासौ भूतः "द्विगोर्यप्" पा० यप्। मासद्वयं व्याप्य १भूते २तथाभूतवयस्के च।

**द्विमीढ** पु० हस्तिनापुरकारकहस्तिनृपसुतभेदे "तेनेदं निर्मितं पूर्वं हस्तिनापुरमुत्तमम्। हस्तिनश्चापि दायादास्त्रयः परमधार्मिकाः। अजमीढो द्विमीढश्च पुरुमीढस्तथैव च" हरिवं० २०अ०

**द्विमुख** पुंस्त्री० द्वे मुखे यस्य। १मुखद्वययुक्ते राजसर्पे हारा०। २मुखद्वययुक्ते त्रि० स्त्रियां स्वाङ्गत्वात् वा ङीप्। ३कृमिरोगभेदे पु० "चुरवो द्विमुखाश्चैव चतुर्वेते पुरीषजाः" सुश्रुतः। द्वे मुखाः अवयवाः मुखे यस्याः ङीप्। ४उभयतोमुख्यामर्द्धप्रसूतायां धेन्वां स्त्री। उभयतोमुखशब्दे १२६२ पृ० दृश्यम् "द्विमुखीगोप्रदातारः कपिलादानतत्पराः" काशीख० ५जलौकायां स्त्री टाप्।

**द्विमुनि** अव्य० द्वौ मुनी पाणिनिकात्यायनौ वंश्यौ । "संख्या-वंश्येन" पा० अव्ययी० । तुल्यविद्यायुक्तसन्निदर्शे । "द्विमुनि व्याकरणस्य, विद्याविद्यावतारभेदात् द्विमुनि व्याकरण मित्यपि साधु" सि०कौ०

**द्विमूर्षलि** अव्य० द्वे मूषले यत्र प्रहरणे अव्ययी० द्विदण्ड्या० इच् समा० । मूषलद्वययुक्ते प्रहरणे ।

**द्विमूर्द्ध** त्रि० द्वौ मूर्द्धानावस्य षच् समा० । शीर्षद्वययुक्ते "अकुमूर्द्धा द्विमूर्द्धाच त्रिमूर्द्धाचाहृतां वधे" भट्टिः अयोन्योदात्तत्वम् स्त्रियां ङीप् । संज्ञात्वात्तु कचित् न समा० । द्विमूर्द्धन् दनुपुत्रभेदे "अभवन् दनुपुत्राश्च द-न्युपक्रमे "द्विमूर्द्धा शकुनिश्चैव तथा शङ्कुशिराः प्रभुः" हरिवं० ३अ० ।

**द्वियजुस्** स्त्री० द्वे यजुषी उपधाने यस्याः ।१इष्टकाभेदे द्वे य जुषी इव शरीरे यस्य । २यजमाने च यथोक्तं शत०ब्रा० "अथ द्वियजुषमुपदधाति । इन्द्राग्नी अकामयेतां स्वर्गं लोकमियावेति तावेतामिष्टकामपश्यतां द्वियजुषमिमामेव तामुपादधातां तामुपधायास्मै प्रतिष्ठायै स्वर्गं लोकमैतां तथैवैतद्यजमानो यद्द्वियजुषमुपदधाति तेन रूपेण यत् कर्म कृत्वेन्द्राग्नी स्वर्गं लोकमैतां तेन रूपेण तत्कर्म कृत्वा स्वर्गं लोकमयानीति वा यद्द्वियजुर्नाम द्वे ह्येतां देवते अपश्यतां यद्वेव द्वियजुषमुपदधाति यजमानो वै द्वियजुः तदाहुः । यदसावेव यजमानो योऽसौ हिरण्मयः पुरु-षोऽथ कतमदस्येदं रूपमिति दैवो वा अस्य स आत्मा मानुषोऽयं तद्यत् हिरण्मयो भवत्यमृतं वा अस्य तद्रूपं देवरूपममृतं हिरण्मयमथ यदिदं यदः कृता भवति मानुषं हास्येदं रूपम् । स यदमूमेवोपदध्यात् । नेमामप-विन्द्यात्क्षिप्रे हास्माल्लोकाद्यजमानः प्रेयादथ यदि मा-मपविन्दति यदेवास्येदं मानुषं रूपं तदस्यैतदपविन्दति तस्येतानेनात्मना सर्वमायुरेति" शत०ब्रा० ७।४।२।१६ "यतो द्वे देवते एतामपश्यतामत एव द्वाभ्यां यजुर्भ्यामु-पधीयते । स हिरण्मयः पुरुषोऽस्य यजमानस्य दैवात्मयुक्त आत्मा शरीरम् । द्वियजुरिष्टका मनुष्यत्वप्रयुक्त आत्मेत्यर्थः हिरण्मयत्वात् पुरुषस्य देवशरीरत्वं अभ्य-मयत्वाद् द्वियजुषो मानुषशरीरात्मत्वम्" भा० । ते च यजुषी शत०ब्रा० ७।४।२।२१ उक्ते "वास्तो अग्ने ! सर्वे ववः"१। "याव देवाः ! सर्वे ववः"२। इति ।

**द्वियमुन** अव्य० द्वयोर्यमुनयोः समाहारः "नदीभिश्च" पा० "नदीभिः संख्या प्राग्वत् समाहारे चायमिष्यते" सि०कौ० "समाहारे चेति" पा०सूत्रे चकार एवकारार्थकः समा-हारान्यत्रस्य च्छेदकस्तेन द्विगोरयमपवादोऽव्ययीभावः" मनो०। द्वयोर्यमुनयोः समाहारे ।

**द्विर** पु० द्वौ रौ रेफौ वाचकशब्देऽस्य । रेफद्वयघटितभ्र-मरशब्दवाच्ये १मधुकरे २वर्वरे च ।

**द्विरद** पु० द्वौ रदौ प्रधानतया यस्य । १गजे अमरः २नाग-केशरे च "सम्मेव समाक्रान्तं द्वयं द्विरदगामिना" रघुः "दुर्व्वारैव चिन्तिनानां द्विरदैर्दरम्" माघः ।

**द्विरदान्तक** पुंस्त्री० हत० । सिंहे राजनि० स्त्रियां जाति-त्वात् ङीष् । [१सिंहे च ।

**द्विरदाराति** पु० हत०। १शरभे अष्टापदे जन्तुभेदे पार०नि०

**द्विरदाशन** पुंस्त्री० द्विरदमश्नाति अश—भोजने ल्यु । सिंहे पार० नि० स्त्रियां जातित्वात् ङीष् ।

**द्विरभ्यस्त** त्रि० द्विवारमभ्यस्तः । द्विरावृत्ते द्विरुक्ते ।

**द्विरशन** न० द्विवारमशनम् । द्विवारभोजने "मुनिभिर्द्वि र-शनं प्रोक्तं विप्राणां मर्त्यवासिनां नित्यम् । अहनि च तथा तमस्विन्यां सार्द्धप्रहरयामान्तः" कात्यायनः०

**द्विरसन** पुंस्त्री० द्वे रसने जिह्वे यस्य । द्विजिह्वे सर्पे हारा० स्त्रियां जातित्वात् ङीष् ।

**द्विरागमन** न० द्विर्द्विवारमागमनम् । विवाहात् परतो पितृगेहात् पतिगृहे वध्वाः पुनरागमने । तत्र नक्षत्रादि तत्कालश्च ज्यो०त० उक्तं यथा

"श्रीपतिसंहितायां प्रचेताः "पुष्यादित्यसमीरणा-दितिमघास्वात्युत्तरारेवतीताराणामसरोहिणीषु शुभदा-मेमालिकुम्भे रवौ । वारेविज्यसितेन्दुवित्सु शुभदे तारे प्रशस्ते विधौ कन्यामन्मथमीनतौलिमृगभे स्याद्-द्विरागमः" । नारायणपद्धतौ "हस्ते पाणिमत्ते गेहात् पितुः पतिगृहं प्रति । पुनरागमनं वध्वास्तद् द्विरागमनं विदुः" ज्योतिःसारसंग्रहे "विवाहमादि प्रथमं वध्वा नागमनं यदि । तदा सर्व्वविदं चिन्त्यं यु-ग्माद्यब्दं विचक्षणैः" तत्वचिन्तामणौ "ग्रन्थं च्युन्दष्टमे वर्षे वधुरस्य दशाब्दके । संप्राप्ते द्वादशे वर्षे पतिं हन्ति द्विरागमे" मलमासतत्त्वे "भुङ्क्ता पितृगृहे कन्या भुङ्क्ते स्वामिगृहे यदि । दौर्भाग्यं जायते तस्याः शर्यान्ति कुलनायिकाः"

अत विहितनक्षत्रादि मुहू०पी० उक्तं यथा

"चरेद्दयोजक्रायने घटालिमेषगे रवौ रवीज्यशुद्धियोगतः शुभग्रहस्य वासरे । नृयुग्ममीनकन्यकातुलावृषे विल-

न्यके द्विरागमं लघुध्रुवे चरेऽस्रपे मृदूडुनि। दैत्येज्योऽप्यभिमुखदक्षिणे यदि स्यात्तदा शिशुगर्भिणी नवोढाः। बालश्चेत् व्रजति विपद्यते नवोढा चेद्वन्ध्या भवति च गर्भिणी त्यक्तगर्भा। नगरप्रवेशविषयाद्युपद्रवे करपीडने विबुधतीर्थयात्रयोः। नृपपीडने नववधूप्रवेशने प्रतिभार्गवो भवति दोषकृन्नहि। पितृगृहे स्थिते चेत् कुचपुष्पसम्भवः स्त्रीणां न दोषः प्रतिशुक्रसम्भवः। भृग्वङ्गिरोवत्सवशिष्ठकश्यपात्रीणां भरद्वाजमुनेः कुले तथा” मु० चि० “पूर्वं नववधूप्रवेशे जाते तदनन्तरं परावृत्यापि पितृगृहप्राप्तायामपि वध्वा यथेष्टवर्षाणि स्थितायाः पुनर्भर्तृगृहप्रवेशो द्विरागमशब्दवाच्यः। अयंचाचारः प्राच्योदीच्यपाश्चात्यानामेवेति। चरेदिति। अथ वधूप्रवेशकथनानन्तरं पुनर्वधूप्रवेशं द्विरागमनं वक्ष्यमाणनक्षत्रादिषु चरेत् कुर्यात्कदा? ओजहायने विषमवर्षे प्रथमे तृतीये पञ्चमे वा वर्षे सति। तथा घटालिमेषगे कुम्भवृश्चिकमेषस्थिते रवौ। तथा वरस्य रवीज्यशुद्धिः रवेः सूर्यस्य इज्यस्य गुरोः शुद्धिस्तयोर्बलतः। शुभग्रहस्य सोमबुधगुरुशुक्राणामन्यतमस्य वासरे सति। मिथुनमीनकन्यातुलावृषाणामन्यतमे लग्ने शुभग्रहावलोकिते शुभयुक्ते वा सति। लघून्यश्विनीपुष्यहस्ताः ध्रुवाणि प्रसिद्धानि चराणि श्रवणादित्रयपुनर्वसुस्वात्यः अस्रपो राक्षसस्तद्भं मूलं मृदूनि प्रसिद्धानि एषु भेषु द्विरागमः प्रशस्त इत्यर्थः। यदाह ज्योतिषः “तिथ्यादित्यसमीरणादितिवसुश्रीवत्सुत्तराश्विनीरोहिण्यः शुभदाश्च वर्षमसमं मेषालिकुम्भे रविः। कन्यामन्मथमीनभे नववधूयानं शुभे तौलिके देवाचार्यसितेन्दुसौम्यदिवसे शुद्धे गुरौ भास्करे”इति। ग्रन्थकर्त्रैव कानिचिद्भान्यधिकानि उक्तानि तानि राजमार्तण्डोक्तानि। “नौकारांशुभनोत्तराटितिगुरुब्राह्म्यानुराधाश्विनीमूलाद्दस्करवारुणानिलहरित्वाष्ट्रेषु यस्ते तिथौ। कुम्भाजालिगते रवौ शुभकरे प्राप्तोदये भार्गवे सूर्ये कीटघटाजगे शुभदिने पक्षे च कृष्णेतरे। हित्वा दिक्प्रतिलोमगौ बुधसितौ वाचाटगं दिक्पतिं चानीता गुणशालिनी नववधूर्नित्योत्सवैर्मन्दिरम्”। वाचाटगान् यात्रायां वक्ष्यति। शुक्रास्तनिषेधस्तु सामान्यतो बाल्यावासमेत्यादिनोक्त एवेति न पुनरुक्तः। यद्यपि प्राक् सामान्येन कालशुद्धिरुक्ता तथाप्यावश्यकत्वे। “चैत्रे पौषे हरिस्वप्ने गुरोरस्ते मलिम्लुचे। नवोढागमनं नैव कृते पञ्च-

त्वमाप्नुयादिति” बादरायणवाक्याच्चैव वधूप्रवेशः कार्यः। दैत्येज्य इति। यदि दैत्येज्यः शुक्रोऽभिमुखदक्षिणे गन्तव्यदिगभिमुखे गन्तुर्दक्षिणदिग्भागे वा स्थितः स्यात्तदा शिशुर्बालः गर्भिणी गर्भवती नवोढा नूतनपरिणीता व्रजेत्तदा बालः विपद्यते म्रियते। गर्भिणी त्यक्तगर्भा गर्भरहिता स्यात् गर्भस्राववती भवेत्। नूतनपरिणीता नवोढा वन्ध्या अपत्यसम्भवरहिता स्यात्। यदाह बादरायणः “अस्तङ्गते भृगोः पुत्रे तथा सम्मुखमागते। नष्टे जीवे निरंशे वा नैव सञ्चालयेद्वधूः। गर्भिण्या बालकेनापि नववध्वा द्विरागमे। पदमेकं न गन्तव्यं शुक्रे सम्मुखदक्षिणे। गुर्विणी स्रवते गर्भं बालो वा मरणं व्रजेत्। नवा वधूर्भवेद्वन्ध्या शुक्रे सम्मुखदक्षिणे”। यदि शुक्रः पूर्वस्यामुदितस्तदा पूर्वदिशि गन्तुः सम्मुख एव पश्चिमां गन्तुः पृष्ठे, दक्षिणां गन्तुर्वामे, उत्तरां गन्तुर्दक्षिणे स्यात्। तदा पूर्वोत्तरे दिशौ न गच्छेत् किन्तु पश्चिमदक्षिणे दिशौ गच्छेत्। यदि पश्चिमायामुदितः शुक्रः तदा पश्चिमां गन्तुः सम्मुख एव दक्षिणां गन्तुः दक्षिणः। पूर्वां गन्तुः पृष्ठे उत्तरां गन्तुर्वामः। तदा पश्चिमदक्षिणे दिशौ न यायात्। किन्तु पूर्वोत्तरे दिशौ गच्छेत्। “पृष्ठे भृगौ पुत्रवतीं प्रयाणे कान्तां कुलीनां सुभगां करोति। अग्रे स्थितो वै विदधाति शुक्रो वैधव्यशोकौ खलु चात्र शुक्रः” इति। केचिद्दीपोत्सवप्रतिपदि नक्षत्रादिनियमं विनैव वधूप्रवेशं वाञ्छन्ति। उक्तञ्च “अस्तङ्गते गुरौ शुक्रे सिंहस्थे वा बृहस्पतौ। दीपोत्सवबलेनैव कन्या भर्तृगृहं विशेत्” इति तद्देशाचारतो ज्ञेयम्। अत्र लग्नशुद्धिमाह बादरायणः “उपचयगते जीवे भृगौ केन्द्रमुपागते। शुभे लग्ने शुभाक्रान्ते गन्तव्यं भर्तृमन्दिरम्” नगरप्रवेशे, विषयोदेशः आदिशब्देन ग्रामः। तस्योपद्रवे अन्यराजकृतोपद्रवे सति दुर्भिक्षादिना वोपद्रवे सति। गन्तव्यदिशि प्रतिशुक्रकदोषो नास्ति। करपीडने विवाहोद्देशेन यात्रायां सत्यां विबुधा देवास्तेषां यात्रा नगरकोटयात्रा देवयात्रा तीर्थयात्रा प्रयागादियात्रा तयोः। नृपपीडने नृपाद्राज्ञः सकाशात्पीडायां दण्डादिकृतायां सत्याम् नववधूप्रवेशने नूतनपरिणीतायाः कन्यायाः भर्तृगृहप्रवेशे एतेषामन्यतमभावे सति भार्गवः सम्मुखदोषकृन्नहि। यथाह बादरायणः “स्वभवनपुरप्रवेशे देशानां विभ्रमे तथोद्वाहे।

नूतनवध्वागमने प्रतिशुक्रो न दुष्यतीति"। नूतनवधूनां स्वामिगृहगमनं प्रतिशुक्रयात्रायां महान्दोषः। तद्वाक्यं प्रागुक्तम्। अथ प्रौढस्त्रीणां द्विरागमने तथा गोत्रभेदपरत्वेन प्रतिशुक्रापवादान्तरमाह पित्र्ये इति। पितुरिदं पित्र्यम्। तस्मिन् पित्र्ये गृहे कुचौ स्तनौ पुष्पमृतुः तत्सम्भवः स्यात्तदा स्त्रीणां प्रतिशुक्रसम्भवो दोषो नास्ति। उपलक्षणत्वाद्गुरुः स्वयंगुरुशुद्धिराहित्यसम्भवेऽपि दोषो नास्तीति। तदुक्तं चण्डेश्वरेण "पित्र्यागारे कुचकुसुमयोः सम्भवो वा यदि स्यात्तत्तुः शुद्धिर्न भवति रवेः सम्मुखो वाथ शुक्रः। हृते लग्ने गुणवति तिथौ चन्द्रताराविशुद्धौ स्त्रीणां यात्रा भवति सफला सेवितुं स्वामिसद्म" इति। वाशब्दाद्गुरुशुद्धिरपि चेन्न भवतीत्यर्थः। अथ भृग्वङ्गिरोवत्सवसिष्ठकश्यपात्रिभरद्वाजवंशोत्पन्नानामपि प्रतिशुक्रसम्भवो दोषो नास्ति। यदाह बादरायणः "कश्यपेषु वसिष्ठेषु चात्रिभृग्वङ्गिरःसु च। भारद्वाजेषु वात्स्येषु प्रतिशुक्रो न दुष्यति" इति। अयं चापवादो यात्रामात्रसाधारणः" न द्विरागमने, सम्मतिवाक्ये विशेषानुक्तेः। एवं प्राक्पद्योक्तोऽप्यपवादोऽत्र ज्ञेयः। केचिच्छुभं तेषामाहुः। यदाह महेश्वरः "नो तेषां प्रतिशुक्रपातमशुभं ये वत्सभृग्वङ्गिरोभारद्वाजवसिष्ठकश्यपकुलोत्पन्नास्तथाऽत्रेः कुले। देशानां विषयप्लवे च नियतं न स्याद्विवाहे तथा तीर्थानां गमने तथैकनगरे ग्रामे च सौम्ये तथेति"। सोमस्यापत्यं सौम्यो बुधः। बुधसांमुख्येऽपि भृग्वादिगोत्रोत्पन्नानामपि तथा यानमशुभं नास्ति चकारात् दुर्भिक्षाद्युपद्रवसङ्गावेऽन्येषामपि यानमशुभं नास्तीत्यर्थः तच्चिन्त्यं मूलवाक्यस्यापवादकपस्यानुपलम्भात्। किं च यथा साधारण्येन यस्यां कस्यांचिदपि यात्रायां शुक्राधिष्ठितादिनिषिद्धा सा च बादरायणादिवाक्यैरपोह्यते। तथा बुधसाम्मुख्ये गमननिषेधानुक्तेरपवादस्यानुक्तत्वदर्शनात्। ननु "प्रतिशुक्रं प्रतिबुधं प्रतिभौमं गतो नृपः। बलेन शक्रतुल्योऽपि हतसैन्यो निवर्त्तते" इति वसिष्ठोक्तिरेव बुधसाम्मुख्यदोषनिषेधबोधिकास्तीति। किं च "कुजाय वृषभं दद्यात् स्वर्णं दद्याद्बुधाय च। तत्तत् साम्मुख्यजो दोषस्तद्दानादेव नश्यति" इति बुधसाम्मुख्यदोषनिराकरणार्थमपि तदुक्तिरेवास्ति प्रमाणमिति चेत्। सत्यम्। प्रतिशुक्रं प्रतिबुधं इत्यादिवाक्यैर्बुधसाम्मुख्यमपि दोषावहमेवेति प्रतीयते। अत्राह वादोऽप्यभाणि श्रीपतिना "प्रतीन्दुजं भूमिपतेर्गतस्य नान्येपहाशास्त्रविधौ समर्थाः" इति। तस्यार्थं रक्षणम्। नारदेनापि "प्रतीन्दुजकृतं दोषं हन्तुं शक्ता ग्रहा न हि" इति। तत्र गोत्रादिविषयत्वेन परिहारो योऽभिहितः स शुक्रसाम्मुख्ये एव न तु बुधसाम्मुख्ये गोत्रपरिहारस्तु दोषकरवाक्यान्ते प्रतिशुक्रं न विद्यते इत्युक्तम्। ननु प्रतिशुक्रमित्यादिवाक्योपात्तस्य प्रतिबुधस्याप्ययं परिहारोऽस्तु दोषकथनानन्तरमेव तस्याभिधानात् प्रतिशुक्रपदं तु मुख्यतां सूचयितुम् उपात्तं तदभिप्रायेण सौम्ये तथेति महेश्वरोक्तिः साधीयसीति चेन्न यद्येषोऽभिमतः स्यात् सौम्ये तथेतिवद्भौमे तथेति वक्तव्यं स्यात्। तच्च नोक्तम्। किं च प्रतिशुक्रपदं मुख्यतां सूचयितुम् उपात्तमित्युक्तं तदप्ययुक्तम्। कुतः "शुक्रास्तदोषस्य महत्त्वोक्तेस्तद्विषयकोऽयं गोत्रादिपरिहारः। "कामं व्रजेद्वा प्रतिशुक्रमस्तङ्गते च यायाज्जिगीषुरत्रेति" श्रीपत्युक्तेः शुक्रास्तदोषस्यापवादो बुधानुकूल्यमपि तेनैव "अस्तङ्गतेऽप्यास्फुजिति प्रयायाद्बुधो यदि स्यादनुकूलवर्तीति"। अनुकूलवर्त्ती यातव्यदर्शीष्टवर्त्ती। बुधप्रातिकूल्यं तु महादोषावहमेतद्वाक्यं तैरपि प्रागभिहितम्। परन्तु बुधास्तः समीचीनो न वेति न वचनं युक्तिपदवी वा काचिदभ्यधायि। तस्माद्वाचनिकेऽर्थे न युक्तिः प्रभवेदिति। बुधसाम्मुख्ये गोत्रादिपरिहारो न शिरोमणिपदवीमारोहति। आदिशब्दात् "स्वभवनपुरप्रवेशे देशानां विभ्रमे तथोद्वाहे। नूतनवध्वागमने प्रतिशुक्रविचारणा नास्ति" "एकग्रामे पुरे वापि दुर्भिक्षे राष्ट्रविप्लवे। विवाहे तीर्थयात्रायां प्रतिशुक्रो न दुष्यति" इति। तुल्यन्यायत्वाद्भौमसाम्मुख्येऽपि विशिष्यद्विवचनाभावात्। किन्तु शुक्रसाम्मुख्य एव स परिहारः। सोऽपि सर्वेषां यात्रामात्रसाधारणः। परन्तु शिशुगर्भिणीनववधूनां "अस्तङ्गते भृगोः पुत्रे" इत्यादिना बादरायणादिवाक्यात्तु विशेषफलावगतिमात्रे तत्रैषां शिश्वादीनां बुधसाम्मुख्यविचारस्तु दुरापास्त एवेत्यलमतिप्रसङ्गेनेति शिवम्" पी॰धा॰

द्व्यागमद्विरागमादयोऽप्यत्र।

**द्विरात्र** त्रि॰ द्वाभ्यां रात्रिभ्यां निर्वृत्तः तद्धितार्थद्वि॰ ठञ् तस्य लुक् अच् समा॰। १रात्रिद्वयसाध्ये २यागभेदे पु॰ "एकरात्रो द्विरात्रः :" अथ॰११।८।१॰ "व्युष्टि

द्विरात्रः” कात्या० १५।८।२२। २व्रतभेदे न०। समा० द्विगुः अच् समा०। ३रात्रिद्वये न०।

**द्विरात्रीण** त्रि० द्वाभ्यां रात्रिभ्यां निर्वृत्तादि ख तस्य न लुक्। रात्रिद्वयसाध्ये पक्षे ठञ्। द्वैरात्रिक तत्रार्थे

**द्विराप** पुंस्त्री० द्विः द्विवारमापिबति आ+पा-क। हस्तिनि शब्दचा० तस्य शुण्डेन प्रथमपानोत्तरं मुखेन पानात् द्विवारपायित्वात् तथात्वम् स्त्रियां ङीप्।

**द्विराषाढ** पु० “आषाढादिषु षट्केषु मासि दर्शद्वयं यदा। द्विराषाढः स विज्ञेयः शेते तु श्रावणेऽच्युतः” मितिद्वोक्ते मिथुनस्थरव्यारब्धशुक्लप्रतिपदादिदर्शान्तमासद्वये। स चाषाढमलमासे भवति यथा “मिथुनस्थो यदा भानुरमावस्याद्वयं स्पृशेत्। द्विराषाढः स विज्ञेयो विष्णुः स्वपिति कर्कटे। पौर्णमास्यद्वयं यत्र पूर्वाषाढाद्वयं स्पृशेत्। द्विराषाढः स विज्ञेयो विष्णुः स्वपिति कर्कटे” मावड्ढोक्ते मासभेदे च।

**द्विरुक्त** त्रि०द्विः द्विवारमुक्तः। १अभ्यस्ते द्वित्वप्राप्ते धात्वादौ २द्विवारं कथिते च।

**द्विरूढा** स्त्री द्विवारमूढा वह—कर्मणि क्त। द्विवारविवाहयुतायां पुनर्भूस्त्रियाम् हेमच०।

**द्विरेतस्** पु० द्वे रेतसी कारणमस्य। द्वाभ्यां पशुभ्यां रासभाश्वाभ्यां जाते १अश्वतरे मोऽजाभ्यां २जाते गर्दभे च “तत्तमेकं पशुं द्वाभ्यां पशुभ्यां प्रत्यपश्यन् रासभं गोश्चाश्वेभ्यश्चैतमेकं पशुं द्वाभ्यां पशुभ्यां प्रत्यपश्यन्नजाश्वादेत-एकः सन्द्विरेताः” शत०ब्रा० ६।३।१।२३। अत्र गर्दभस्य तथात्वमश्वतरस्य तथात्वं च लोकप्रसिद्धम्।

**द्विरेफ** पु० द्वौ रेफौ वाचकशब्देऽस्य। द्विरेफयुक्तभ्रमरशब्दवाच्ये १मधुकरे अमरः २वर्वरे हेमच० “मधु द्विरेफः कुसुमैकपात्रे” द्विरेफमालाः सविशेषसङ्गाः” कुमा०।

**द्विर्वचन** न० द्विरुच्यते वच–कर्मणि ल्युट्। १द्विरुक्ते द्विःकथिते अभ्यस्ते धात्वादौ च “द्विर्वचनेऽचि” पा० “न पदान्तद्विर्वचनेत्यादि” पा०।

**द्विलक्षण** त्रि० द्वे लक्षणे प्रकारौ यस्य। प्रकारद्वययुते द्विधाभिन्ने “समानयानकर्मा च विपरीतस्तथैव च। तदात्वायतिसंयुक्तः सन्धिर्ज्ञेयो द्विलक्षणः” मनुः। द्विलक्षणः द्विप्रकारः” कुल्लू०।

**द्विवक्त्र** पु० द्वे वक्त्रे अस्य। १मुखद्वययुते राजसर्पे २दानवभेदे “एकवक्त्रो महावक्त्रो द्विवक्त्रः कालसन्निभः” हरिवं० २६३अ० नानादानवनामकथायुक्तौ।

**द्विवचन** न० द्वौ द्वित्वमुच्येते अनेन वच–करणे ल्युट्, कर्मषष्ठ्या समासः। द्वित्वबोधके पा० परिभाषिते औआदि-त्यादौ तसुथस प्रभृतौ च। “द्व्येकयोर्द्विवचनैकवचने बहुषु बहुवचनमिति” पा०।

**द्विवज्रक** पु० द्विगुणितः वज्रः संज्ञायां कन्। षोडशकोणे स्तम्भभेदे “वज्रोऽष्टास्रिर्द्विवज्रको द्विगुणः” ह०सं० ५३अ०।

**द्विवर्ष** त्रि० द्वे वर्षे वयोमानमस्य ठञ् तस्य लुक्। १द्विवर्षवयस्के गवादौ स्त्रियां टाप्। द्वे वर्षे अधीष्टो भृतो भूतो भावी वा ठञ् तस्य चित्तवति नित्यं लुक्। द्विवर्षं २सत्कृत्य नियोजिते ३भृते कर्मकरे ४स्वसत्ताव्याप्ते ५भाविनि च। अचेतने तु “वर्षाल्लुक् च” पा० लुक् पक्षे ख ठञ् च। द्विवर्षं द्विवर्षीणं अचेतने व्याध्यादौ भविष्यति तु “वर्षस्याभविष्यतीति” पा० उत्तरपदवृद्धिः। द्विवार्षिक द्विवर्षभूते धान्यादौ यागादौ च भविष्यति तु नोत्तरपदवृद्धिः। द्वैवार्षिक इत्येव। “अनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा बहिः” मनुवाक्ये चित्तवत्त्वेपि न लुक् आर्षत्वात् बोध्यम्। आर्षे क। द्विवर्षवयस्के त्रि० स्त्रियां टापि अतइत्त्वं द्विवर्षिका तत्रार्थे हेमच०

**द्विवाहिका** स्त्री द्विप्रकारं वाहयति वाहि–ण्वुल्। दोलायां शब्दमा० तस्या उभयपार्श्वयोः स्वाह्वत्व वाहकत्वात्तथात्वम्।

**द्विविंशतिकीन** न० द्वाविंशतिकमर्हति तत्परिमाणमस्य वा ख। द्वाविंशतिकार्हे तत्संख्यापरिमिते

**द्विविद** पु० १वानरभेदे स च रामसेनान्तर्गतः। “मैन्दश्च द्विविधश्चापि कूर्मावानिलात्मजः। जाम्बवान्ऋक्षराजश्च सुग्रीवसचिवाः स्थिताः” भा०व० २७६अ०। द्वापरयुगीये सौभद्रारण्ये २वानरभेदे च “सौभद्रे वानरेन्द्रो द्विविदो नाम नामतः” भा०उ० १२६अ०। “वानरौ द्वौ महावीर्यौ मैन्दोद्विविद एव च। विजितौ युद्धदुर्धर्षौ जाम्बवांश्चापराजितः” हरिवं० १७४अ०। “वसुदेवोत्तरे तीरे द्विविदो नाम वानरः। ऐकाह्निकज्वरं हन्ति तस्य नामानुकीर्तनात्”।

**द्विविध** त्रि० द्वे विधे यस्य। द्विप्रकारे “निष्कामतप्ता द्विविधेन वह्निना नभश्चरेणेन्धनसम्भृतेन च” कुमा०

**द्विविन्दु** पु० द्वौ विन्दू लेखनाकारेऽस्य। विसर्गे वर्णभेदे।

**द्विविस्त** त्रि० द्वे विस्ते अर्हति परिमाणमस्य वा आर्हीयः ठक् तस्य वा लुक्। विस्तद्वयार्हे तत्परिमिते पक्षे ठको-ऽलुक्। द्वैविस्तिक तत्रार्थे। [ध्यायिनि

**द्विवेद्** त्रि० द्वौ वेदावधीते वेद वा अण् तस्य लुक्। द्विवेदा-

**द्विवेशरा** स्त्री द्वौ वेशौ यानस्थानरूपौ राति ददाति रा-क। लघुरथे नरवाह्यायां गन्त्र्यां हारा०।

**द्विव्रण** पु० द्विविधो व्रणः शाक०त०। सुश्रुतोक्ते शारीरे आगन्तुके च द्विविधे व्रणे। तच्छेदस्तु। द्विव्रणीय तदधिकारेण चिकित्सितादौ। द्विविधव्रणतद्भेदनिदानादि सुश्रुते दर्शितं यथा "अथातो द्विव्रणीयचिकित्सितं व्याख्यास्यामः। द्वौ व्रणौ भवतः शारीर आगन्तुश्चेति। तयोः शारीरः पवनपित्तकफशोणितसन्निपातनिमित्तः। आगन्तुरपि पुरुषपशुपक्षिव्यालसरीसृपप्रपतनपीडनप्रहाराग्निक्षारविषतीक्ष्णौषधशकलकपालशृङ्गचक्रेषुपरशुशक्तिकुन्ताद्यायुधाभिघातनिमित्तः। तत्र तुल्ये व्रणसामान्ये द्विकारणोत्थानप्रयोजनसामर्थ्याद्द्विव्रणीय इत्युच्यते। सर्वस्मिन्नेवागन्तुव्रणे तत्कालमेव क्षतोष्मणः प्रशमार्थं पित्तवच्छीतक्रियावधारणविधिर्विशेषः सन्धानार्थञ्च मधुघृतप्रयोग इत्येतद्द्विकारणोत्थानप्रयोजनमुत्तरकालन्तु दोषोपप्लवविशेषाच्छारीरवत् प्रतीकारः। दोषोपप्लवविशेषः पुनः समासतः पञ्चदशप्रकारः प्रसरणसामर्थ्याद्यथोक्तो व्रणप्रश्नाधिकारे शुद्धत्वात् षोडशप्रकार इत्येके। तस्य लक्षणं द्विविधं सामान्यं वैशेषिकञ्च। तत्र सामान्यं रुक्, व्रण गात्रविचूर्णने व्रणयतीति व्रणः। विशेषलक्षणं पुनर्वातादिलिङ्गविशेषः। तत्र श्यावारुणाभस्तनुः शीतपिच्छिलाल्पस्रावी रूक्षश्चटचटायनशीलः स्फुरणायामतोदभेदवेदनाबहुलो निर्मांसश्चेति वातात्। क्षिप्रजः पीतनीलाभः किंशुकोदकाभोष्णस्रावी दाहपाकरागविकारो पीतपिडकाजुष्टश्चेति पित्तात्। प्रततकण्डूबहुलः स्थूलौष्ठः स्तब्धसिरास्नायुजालावततः कठिनः पाण्डववभासो मन्दवेदनः शुक्लशीतसान्द्रपिच्छिलास्रावी गुरुश्चेति कफात्। प्रवालदलनिचयप्रकाशः कृष्णस्फोटपिडकाजालोपचितस्तुरङ्गस्थानगन्धः सवेदनो धूमायनशीलो रक्तस्रावी पित्तलिङ्गश्चेति रक्तात्। तोददाहधूमायनप्रायः पीतारुणाभासस्तद्वर्णस्रावी चेति वातपित्ताभ्याम्। कण्डूयनशीलः सनिस्तोदो रूक्षो गुरुर्दारुणः शीतपिच्छिलस्रावी चेति वातश्लेष्मभ्याम्। गुरुः सदाहः उष्णः पीतः पाण्डुस्रावी चेति पित्तश्लेष्मभ्याम्। रूक्षस्तनुस्तोदबहुलः सुप्त इव च रक्तारुणाभस्तद्वर्णस्रावी चेति वातशोणिताभ्याम्। घृतमण्डाभो मीनधावनतोयगन्धिर्मृदुर्विसर्पी कृष्णस्रावी चेति पित्तशोणिताभ्याम्। रक्तो गुरुः पिच्छिलः कण्डूप्रायः स्थिरः सरक्तपाण्डुस्रावी चेति श्लेष्मशोणिताभ्याम्। स्फुरणतोददाहधूमायनप्रायः पीततनुरक्तस्रावी चेति वातपित्तशोणितेभ्यः। कण्डूस्फुरणचुमचुमायनप्रायः पाण्डुघनरक्तस्रावी चेति वातश्लेष्मशोणितेभ्यः। दाहपाकरागकण्डूप्रायः पाण्डुघनरक्तस्रावी चेति श्लेष्मपित्तशोणितेभ्यः। त्रिविधवर्णवेदनास्रावविशेषोपेतः पवनपित्तकफेभ्यः। निर्दहननिर्मथनस्फुरणतोददाहपाकरागकण्डूस्वापबहुलो नानावर्णवेदनास्रावविशेषोपेतः पवनपित्तकफशोणितेभ्यः। जिह्वातलाभो मृदुः स्निग्धः श्लक्ष्णो विगतवेदनः सुव्यवस्थितो निरास्रावश्चेति शुद्धो व्रण इति।"

**द्विशत** न० द्विगुणं शतम्। १शतद्वये। पूरणे ड। २तत्संख्यापूरणे त्रि०। ततस्तमप् द्विशततम तत्संख्यापूरणे त्रि०। द्विशतेन क्रीतम् कन्। "शताच्च ठन्यतावशते" पा० असमास इति विशेषणात् न ठन्यतौ द्विशतक। तत्क्रीते त्रि० द्वयोः शतयोः समाहारः ङीप्। ३द्विशती शतद्वयसमाहारे स्त्री।

**द्विशतिका** द्वे द्वे शते ददाति "पादशतस्य संख्यादेर्वीप्सायां वुन्" पा० वुन् वुल्लन् स्त्रियामेव। द्विद्विशतदाने

**द्विशत्य** त्रि० द्विशतेन क्रीतम् "प्रणपादमाषशताद्यत्" पा० यत्। द्विशतेन क्रीते।

**द्विशफ** पुंस्त्री द्वौ शफौ यस्य। छिन्नखुरे द्विखुरे पशुभेदे "गौरजो महिषः कृष्णः शूकरो गवयो रुरुः। द्विशफाः पशवश्चेमे अविरुष्ट्रश्च सप्तमः" भाग०३।१०।२ "कार्पासकीटजोर्णानां द्विशफैकशफस्य च" मनुः।

**द्विशरीर** पु० द्वे चरस्थिरात्मके शरीरे अवयवे अस्य। चरस्थिरात्मके मिथुनकन्याधनुर्मीनरूपे राशिभेदे तेषां च प्रथमार्द्धस्य स्थिरराशिध्यात् स्थिरात्मकत्वं चरमार्द्धस्य चरराशिध्याच्चरत्वम्। द्वितनुद्विदेहादयोऽप्यत्र।

**द्विशस्** अव्य० द्वौ द्वौ ददाति करोति वा शस्। एकक्रियया द्वयोर्व्याप्तौ। "द्विशः पात्राणि संसादयति" कात्या०श्रौ० २।३।६

**द्विशाण** त्रि० द्वाभ्यां शाणाभ्यां क्रीतम्। "द्वित्रिपूर्वादण् च" पा० ठञ् तस्यैव "अध्यर्द्धपूर्वेति" पा० लुक्। शाणद्वय क्रीते पक्षे अण् "परिमाणान्तस्यासंज्ञाशाणयोरिति" पा० पर्युदासादादिवृद्धिः। द्वैशाण पक्षे यत्। द्विशाण्य तत्रार्थे

**द्विशीर्ष** पु० द्वे शीर्षे अस्य। वह्नौ शब्दच०।

**द्विशूर्प** त्रि॰ द्वाभ्यां शूर्पाभ्यां क्रीतम् "शूर्पादञन्यतरस्याम्" पा॰अञठञौ वा "अध्यर्द्धपूर्वद्विगोर्लुक्" पा॰तयोः लुक्। द्वाभ्यां शूर्पाभ्यां क्रीते, द्वयोः शूर्पयोः समाहारः। द्विशूर्पी तया क्रीतमिति विग्रहे ठञेव न अञ् शूर्पान्तत्वेऽपि प्रत्ययविधौ तदन्तग्रहणनिषेधात्। ठञश्च न लुक् तस्य द्विगुनिमित्तत्वाभावात् "परिमाणान्तस्येति" पा॰ उत्तरपदवृद्धिः। द्विशौर्पिक तत्रार्थे त्रि॰ स्त्रियां ङीप्।

**द्विशृङ्गिका** स्त्री द्वे शृङ्गे इव फले अस्याः कप् अतइत्त्वम्। मेढ्वशृङ्ग्यां पारस्करनिघ॰।

**द्विष** वैरे अदा॰ उभ॰ सक॰ अनिट्। द्वेष्टि द्विष्टे—अद्विषन्—अद्विषुः। अद्विक्षत् त दिद्वेष दिद्विषे। "यः सर्वत्रानभिस्नेहस्तत्तत् प्राप्य शुभाशुभम्। नाभिनन्दति न द्वेष्टि" "न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते" गीता "ततोऽद्विषु र्निरालोके खेभ्योऽन्येभ्यश्च राक्षसाः" भट्टिः "संवत्सरं प्रतीक्षेत द्विषन्तीं योषितं पतिम्" मनुः आर्षत्वात् नुम्।

**द्विष्** त्रि॰ द्वेष्टि द्विष—क्विप्। शत्रौ अमरः। "रघूणामन्वयं वक्ष्ये..." "रक्षाम्... दयायां द्विषामामिषतां ययौ" रघुः।

**द्विष** त्रि॰ द्विष—कर्त्तरि क। द्वेषकारके शत्रौ "तन्निमित्तपूजा तदरिद्विषत्वम्" ह॰सं॰७८अ॰।

**द्विषत्** त्रि॰ "द्विषोऽमित्रे" पा॰ प्रथमासामानाधिकरण्येऽपि द्विष—शतृ। द्वेषकारके शत्रौ अमरः "पार्थेनाव द्विषन्तृतरम्" माघः।

**द्विषन्तप** त्रि॰ द्विषन्तं तापयति "द्विषत्परयोस्तापेः खच्" पा॰ खचि मुमः "अरुर्द्विषदजन्तस्य" पा॰ मुम् संयोगान्त्यतकारस्य लोपः। शत्रुतापके। घटघटीग्रहणाल्लिङ्गविशिष्टपरिभाषा अनित्या तेन द्विषतीं तापयतीत्यादौ न खच् किन्तु अण्। द्विषतीताप इत्येव सि॰ कौ॰

**द्विषष्** त्रि॰ व॰व॰। द्विगुणिताः षट्। द्वादश "तुष्टायां तोषमापन्नोऽजनयद्द्वादशात्मजान्। इत्युपक्रमे सुदेवोरोचनो द्विषट्" भाग॰ ४।१।७

**द्विषाष्टिक** त्रि॰ द्वे षष्टी अधीष्टो भृतो भूतो भावी वा टञ् उत्तरपदवृद्धिः। द्वे षष्टी दिनानि व्याप्य १भृते २भूते ३भाविनि च। [ उदा॰ दृश्यम्।

**द्विषेण्य** त्रि॰ द्विष—एण्यन् किच्च। द्वेषशीले अद्विषेण्यशब्दे

**द्विष्ट** त्रि॰ द्विष—कर्मणि क्त। द्वेषविषये "निवृत्तिस्तु भवेद्द्वेषात् द्विष्टसाधनताधियः" भाषा॰ द्वेषशब्दे दृश्यम्। ताम्र+पृषो॰। २ताम्रे न॰ सारसुन्दरी।

**द्विष्ठ** त्रि॰ द्वयोस्तिष्ठति स्था—क "अम्बाम्बेति" पा॰ षत्वम्। १द्वयोः स्थिते संयोगविभागादौ २स्थानद्वयस्थिते "द्विष्ठास्तिथिक्षयाभ्यस्तास्तान्द्रवासरभाजिताः" सू॰सि॰। द्विः द्विवारं स्थितम् वा विसर्गलोपे न षत्वम। द्विस्थ द्विवारस्थिते त्रि॰ "त्रिभुजे भुजयोर्योगस्तदन्तरगुणो भुवा हृतो लब्ध्या द्विस्था भूहृनयुता दलिता बाधे तयोः स्याताम्" लीला॰।

**द्विस्** अव्य॰ क्रियागणने द्वि+सुच्। द्विवारक्रियादौ "द्विः शरं नाभिसन्धत्ते द्विः स्थापयति नाश्रितान्। द्विर्ददाति न चार्थिभ्यो रामो द्विर्नैव भाषते"। "त्रिःप्राश्यापो द्विरुन्मृज्य मुखमेतान्युपस्पृशेत्" ति॰त॰ "द्विःप्रक्षाल्यास्तोक्षणम्" मनुः।

**द्विसम** त्रि॰ द्वे समे परिमाणमस्य ठञ् तस्य लुक्। १द्विवर्षपरिमाणे। द्विसममधीष्ट इत्यादौ ठञ् "परिमाणान्तस्यासंज्ञाशाणयोः" पा॰सू॰कालपरिमाणस्याग्रहणम् "संख्यायाः संवत्संख्यस्य च" पा॰ संवत्सरस्य पृथगुपादानात् नोत्तरपदवृद्धिः, अध्यर्द्धेत्यादिना न लुक् अस्य ठञो द्विगुनिमित्तत्वाभावात्। द्वैसमिक द्विसमव्यापके ज्वरादौ।

**द्वि(सा)हस्र** त्रि॰ द्वाभ्यां सहस्राभ्यां क्रीतम् द्वे सहस्रे परिमाणमस्य वा अण्। ठञादेरपवादः तस्य वा लुक्। १द्विसहस्रक्रीते २द्विसहस्रपरिमिते च। द्विसहस्रपरोदायः स्त्रियै देयो धनस्य तु" दायभा॰। २द्विगुणितसहस्रे च

**द्विसहस्राक्ष** पु॰ द्विराहतं सहस्रं शाक॰ त॰ द्विसहस्रं द्विगुणसहस्रमक्षीणि यस्य षच् समा॰। अनन्ते शेष॰ तस्य सहस्रवक्त्रत्वेन प्रतिमुखं द्विद्विनेत्रत्वात् तथात्वम्।

**द्विसांवत्सरिक** त्रि॰ द्विवत्सरं भूतादि ठञ्। "संख्यायाः संवत्सरसंख्यस्य च" पा॰ उत्तरपदवृद्धिः। द्विवर्षं व्याप्य भूतादौ। [ द्विसप्ततिं व्याप्य भूतादौ।

**द्विसाप्ततिक** त्रि॰ द्विसप्ततिं भूतादि ठञ् उत्तरपदवृद्धिः

**द्विसीत्य** त्रि॰द्विवारं सीतया हलेन समितं "नौवयोधर्मेत्यादिना" पा॰ यत्। द्विवारं कृष्टक्षेत्रे।

**द्विसुवर्ण** त्रि॰ द्वाभ्यां सुवर्णाभ्यां क्रीतं ठक् अध्यर्द्धेति लुक् १द्वाभ्यां सुवर्णाभ्यां क्रीते। द्विसुवर्णेन क्रीतमिति विग्रहे तु न लुक् ठको द्विगुनिमित्तत्वाभावात् परिमाणान्तत्वादुत्तरपदवृद्धिः। द्विसौवर्णिक द्विसुवर्णेन क्रीते। समाहारद्विगुः। २सुवर्णद्वये स्त्री ङीप्।

**द्विस्तना** स्त्री द्वौ स्तनाविव स्तदवयवौ यस्याः अस्वाङ्गत्वात् ङीष्। इष्टकाकृतिभेदे सा च कात्या॰ श्रौ॰ १६।४ सूत्रे दर्शिता। इष्टकाशब्दे ९९२ पृ॰ दृश्यम्। "स्तनाविवापेक्षयति द्विस्तनामष्टस्तनामेके" कात्या॰श्रौ॰१६।४।१,२।

**द्विस्तावा** स्त्री द्विर्द्विगुणिता तावती । "द्विस्तावा त्रिस्तावा वेदिः" पा० नि० । प्रकृतौ यावती वेदिः ततो द्विगुणायां वेद्यां सि० कौ० ।

**द्वि(द्विः)खिन्न** न० द्विवारं खिन्नं कृत्तौ सुजर्थे द्विशब्दः विसर्गयुक्तो तु सुजन्तः । द्विवारपक्वे तण्डुले (उथना चाउल) एकवारं धान्यावस्थायां तस्य खिन्नता द्वितीयवारं तण्डुलावस्थायामिति द्विःखिन्नत्वम् । द्वि(द्विः)खिन्नमन्नं पृथुकं शुद्धं देशविशेषके । नात्यन्नमस्तं विप्राणां भोजने च निवेदने । न भक्ष्यं मद्भक्तैनाश्च विष्णवाश्रमचारिणाम् । ताम्बूलञ्च यथा ब्रह्मन् ! तथैते वस्तुनी ध्रुवम्" ब्रह्मवै० पु० ब्रह्मख० । पर्य्युषितं शब्दे० ।

**द्विघ्नन्** पु० द्विर्हन्ति हन-क्विप् कृत्तौ सुजर्थे द्विशब्दः ।

**द्विहल्य** त्रि० हलस्य कर्षं यत् द्विवारं हल्यः । द्विवारं हलकर्षिते (दोचसा भूमि) अमरः ।

**द्विहायन** त्रि० द्वौ हायनौ वयःकालो यस्य । १द्विवर्षे वत्सादौ स्त्रियां हायनान्तत्वात् ङीप् । "द्विहायनी द्विवर्षा गौः" अमरः । अकारान्तादि० । २वर्णवृत्ते न० पाठा० न ङीप् । "एकं द्विहायनं वत्सं क्रीतं कृत्वा त्रिहायनम्" मनुः । द्विहायनं व्याप्य व्रतं कुर्यात् इत्यर्थः ।

**द्विहीन** त्रि० द्वाभ्यां स्त्रीपुंसाभ्यां हीनम् । क्लीवलिङ्गशब्दे "द्विहीनं प्रसवे सर्वं हरीतक्यादयः स्त्रियाम्" अमरः ।

**द्विहृदया** स्त्री द्वे हृदये यस्याः । गर्भिण्याम् दोहदशब्दे ३७६८ पृ० दृश्यम् ।

**द्वीन्द्रियग्राह्य** त्रि० द्वाभ्यामिन्द्रियाभ्यां चक्षुषा त्वचा च ग्राह्यः उत्तरपदद्विगुः । "संख्यादिरपरत्वान्तो द्रवत्वं स्नेह एव च । एते तु द्वीन्द्रियग्राह्याः" भाषा० उक्ते त्वक्चक्षुर्योग्यग्राह्ययोग्ये पदार्थे ।

**द्वीप** पु० न० अर्द्ध० द्विर्गता आपो यत्र द्वयोर्वा दिशोर्गता आपोऽत्र वा समा० "द्व्यन्तरुपसर्गेभ्योऽप ईत्" पा० ईत् । जलमध्यस्थस्थलभेदे वारिवेष्टिते तटभेदे अन्तरीपे अमरः । भूम्यां प्रधानद्वीपाश्च नवैव तेषां नाम स्थानभेदाश्च सि० शि० उक्ता यथा "भूमेरर्द्धं क्षारसिन्धो रुदक्स्थं जम्बूद्वीपं प्राहुराचार्य्यवर्य्याः । अर्द्धेऽन्यस्मिन् द्वीपषट्कस्य याम्ये क्षारक्षीराद्यम्बुधीनां निवेशः । शाकं ततः शाल्मलमत्र कौशं क्रौञ्चञ्च गोमेदक पुष्करे च" । जम्बुद्वीपशब्दे ३०४१ पृ० दृश्यम् । "द्वीपान्तरानीतलवङ्गपुष्पम्" अन्येऽपि उपद्वीपा रमणकादयः सन्ति तेऽपि नव मिलिता अष्टादश । "अष्टादशद्वीपनिखातयूपः" रघुः "नवद्वयद्वीपपृथग्जयश्रियाम्" नैष० तोयोत्थिते २पुलिनमात्रे च द्वैपायनशब्दे दृश्यम् । "कूर्म्मग्राहझषाकीर्णां विपुलद्वीपशोभिताम्" भा० व० ६४अ० । अवष्टम्भनस्थाने ३आश्रयस्थाने च । "वृकोदरः सव्यसाची यमौ च कोऽस्य द्वीपः स्यात् सुखे वसतामीषु" भा० व० ६१अ० । "यत्रैवाममवत् द्वीपः कुन्तीपुत्रो वृकोदरः" भा० उ० ८८अ० । द्वौ वर्णौ ईयते ई-बा० पक् । ४व्याघ्रचर्म्मणि न० भरतः । तद्वस्त्यस्य अच् । ५व्याघ्रे पु० । [ राजनि० ।

**द्वीपकर्पूर** पु० द्वीपस्य द्वीपान्तरस्य कर्पूरः । चीनकर्पूरे

**द्वीपखर्जूर** न० द्वीपस्य द्वीपान्तरस्य खर्जूरम् । वक्षापारे राजनि० । [ राजनि० ।

**द्वीपज** न० द्वीपे द्वीपान्तरे जायते जन ड । कक्षापारे

**द्वीपवती** स्त्री द्वीपोऽस्त्यस्याः मतुप् मस्य वः ङीप् । १भूमौ २नद्याञ्च "अथकूलं द्वीपवत्या वाहिन्या रक्ततोयया" भा० आ० १६७ अ० । [ राजनि० ।

**द्वीप(पि)शत्रु** द्वी(पिनः)पस्य व्याघ्रस्य शत्रुरिव । शतावर्य्याम्

**द्वीपिका** स्त्री द्वीपः व्याघ्रः तदाकृतकाऽस्त्यस्याः ठन् । शतावर्य्याम् राजनि० ।

**द्वीपिन्** पु० द्वौ वर्णौ ईयते ईङ् गतौ बा० पक् द्वीपं चर्म तदस्यास्ति इनि । १व्याघ्रे (चिता बाघ) ०चित्रके "सिंहद्वीपिद्वयव्याघ्रमहिषैश्च समैर्वृतम्" भा० व० ६४ अ० । व्याघ्रे "द्वीपिचर्मोत्तरकटीम्" तन्त्रम् ।

**द्वीपिनख** पु० द्वीपिनो नख इव । व्याघ्रनखे ।

**द्वीप्य** त्रि० द्वीपे जलान्तर्वर्त्तिनि स्थलभूमौ भवः यत् । १द्वीपभवे २वृद्धे पु० "नादेयाय च द्वीप्याय च" यजु० १६।३१।

**द्वीश** त्रि० द्वौ ईशौ यस्य । १द्विदैवत्ये चर्व्वादौ २विशाखानक्षत्रे च तस्य इन्द्राग्निदेवताकत्वात् तथात्वम् ।

**द्वृ(द्वा)च** पु० द्वे ऋचौ यत्र वा समा० । बा० शा० सम्प्रदारणम् । ऋग्द्वययुतसूक्तात्मकमन्त्रभेदे "कुण्डपकस्तदभीत् व्यार्द्दं ऋ प्रकृते ! भक्त्यावद्, रूपान्त समदाभिला धामन्ते विश्वम्भुवनमधिश्रितं, गन्ता नो यज्ञं यज्ञियाः, सुशमियो नक्तो करवः प्रकल्प किचन्त्वान्ते वा प्रि मरुत् भुवायते राजकृत्तं हविरिति द्वृचाः" आश्व० श्रौ० ३।६।७ "एते नव द्वृचाः" नारा० "पतङ्गमक्तमसुरस्य मायया को नः स तुल्यो अभिदासदन्ने अवानो अग्ने सुमना उपेतविति द्वृचाः" आश्व० श्रौ० ४।६।३ ।

**द्वेष** पु॰ द्विष—भावे घञ्। न्यायनये आत्मवृत्तौ गुणभेदे स च "इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम्" गौ॰सू॰ दर्शितः "यज्जातीयस्यार्थस्य सन्निकर्षात् दुःखमात्मोपलब्धवान् तज्जातीयमेवार्थं पश्यन् हातुमिच्छति सेयं हातुमिच्छा द्वेषः। एकस्यानेकार्थदर्शिनो दर्शनप्रतिसन्धानात् दुःखहेतौ द्वेषः इति भाष्यस्यार्थोऽर्थः। तत्र दुःखं प्रतिकूलवेदनीयतया स्वतोद्वेषविषयः तत्साधनन्तु द्विष्टसाधनताज्ञानात्। "अधर्मजन्यं दुःखं स्यात् प्रतिकूलं सचेतसाम्" भाषा॰ "प्रतिकूलमिति दुःखत्वज्ञानादेव सर्वेषां स्वभावतो द्विषय इत्यर्थः" मुक्ता॰ "द्विष्टसाधनताबुद्धिर्भवेत् द्वेषस्य कारणम्" भाषा॰।

"द्वेषं प्रति द्विष्टसाधनताज्ञानं कारणम्। बलवदिष्टसाधनताज्ञानञ्च प्रतिबन्धकं तेन नान्तरीयदुःखजनके पाकादौ न द्वेषः" मुक्ता॰। द्वेषो द्विष्टसाधनज्ञानञ्च निवृत्तिकारणम् "निवृत्तिस्तु भवेत् द्वेषात् द्विष्टसाधनताधियः" भाषो॰: "अयमर्थः दुःखे निवृत्तिर्द्वेषात् तदुपाये निवृत्तिस्तु द्विष्टसाधनत्वज्ञानात् द्विष्टसाधनताज्ञानस्य दुःखसाधनविषयकनिवृत्तिं प्रति जनकत्वमन्वयव्यतिरेकाभ्यां सिद्धम्" इति मुक्तावली।

"प्रवृत्तीच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योः" गौ॰ सू॰। "अयं खलु जानीते तावत् इदं मे सुखसाधनमिदं मे दुःखसाधनमिति ज्ञातं सुखसाधनमाप्तुमिच्छति दुःखसाधनं हातुमिच्छति। प्राप्तुमिच्छाप्रयुक्तस्यास्य सुखसाधनावाप्तये समीहाविशेष आरम्भः। जिहासाप्रयुक्तस्य दुःखसाधनपरिवर्जनं निवृत्तिरेवं ज्ञानेच्छाप्रयुक्तसुख दुःखानामेवैनाभिसम्बन्धः एककर्तृकत्वं ज्ञानेच्छा प्रवृत्तीनां समानाश्रयत्वञ्च तस्माज्जज्ञेच्छा द्वेषप्रयत्नसुखदुःखानि धर्माः नाचेतनस्येति आरम्भनिवृत्त्योश्च प्रत्यगात्मनि दृष्टत्वात् परत्रानुमानं वेदितव्यमिति" भा॰। सांख्यादिमते २ बुद्धिधर्मभेदे। सांख्यादिनतसिद्धस्तु द्वेषः अष्टादशविधः तामिस्रशब्दे ३२७२पृ॰ दर्शितः स च बुद्धिधर्मः क्लेशविशेषः अस्मिताजन्यश्च। तल्लक्षणादिकं पात॰सू॰ भाष्यादावुक्तम् यथा "अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः" इत्युद्दिश्य "दुःखानुशयी द्वेषः" इति लक्षितम्। "दुःखाभिज्ञस्य दुःखानुस्मृतिपूर्वो दुःखे तत्साधने वा प्रतिघो मन्युर्जिघांसा क्रोधः स द्वेष इति" भाष्यम्। दुःखमनुशेते कश्चिदन्तःकरणवृत्तिभेदः तस्योऽनुगतपरिणामः ईदृशं सर्वदा मे मा भूदित्येकं बदयं दुःखानुशयीति भाष्यार्थः। "अनभिज्ञस्य स्मृतेरभावात् दुःखाभिज्ञस्येत्युक्तं स्मर्यमाणे दुःखे द्वेषः दुःखानुस्मृतिपूर्वकः, अनुभूयमाने तु दुःखे नानुस्मृतिमपेक्षते। तत्साधने तु स्मर्यमाणे अनुभूयमाने वा दुःखानुस्मृतिपूर्वक एव द्वेषः अनुभूयमानं हि दुःखसाधनं तज्जातीयस्य दुःखहेतुत्वं स्मृत्वा तज्जातीयतया चास्य दुःखहेतुत्वमनुमाय द्वेष्टि। प्रतिहन्तीति प्रतिघः द्वेषस्य प्रवृत्तेः प्रतिहननात् प्रतिघत्वम्" विव॰। तत्र खलु व्याघ्रादिषु सत्सु न निवारयितुं शक्यम्। न च सर्वे ते दुःखहेतवो हन्तुं शक्यन्ते अतः स द्वेषः सदा हृदयं दहति। यदा तु स्वस्येव परेषां सर्वेषामपि दुःखं मा भूदिति करुणां दुःखिषु भावयेत् तदा वैर्यादिद्वेषनिवृत्तौ चित्तं प्रसीदति। यद्यसौ पुण्यपुरुषेषु मुदितां भावयेत् तदा तद्वासनाभावात् स्वयमेवाप्रमत्तोऽशुक्लाख्ये पुण्ये प्रवर्त्तते। तथा पापपुरुषेषूपेक्षां भावयन् स्वयमपि तद्वासनाभावात् पापान्निवर्त्तते। ततश्च पुण्याकरणपापकरणनिमित्तस्य पश्चात्तापस्याभावे चित्तं प्रसीदति। एवं सुखिषु मैत्रीं भावयतो न केवलं रागो निवर्त्तते। किन्त्वसूयेर्ष्यादयोऽपि निवर्त्तन्ते। तथा दुःखिषु करुणां भावयतः शत्रुवधादिकरो द्वेषो यदा निवर्त्तते तदा दुःखिप्रतिलोमिकःसुखित्वप्रयुक्तो दर्पोऽपि निवर्त्तते। एवं दोषान्तरनिवृत्तिरप्यूहनीया। दुःखे तत्साधने च इदं मे मा भूदिति स्पृहाविरोधिनी चित्तवृत्तिः क्रोध इति ईर्ष्येति चोच्यते। "इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ" गीता।

**द्वेषण** त्रि॰ द्विष—युच्। शत्रौ अमरः "पानपो द्वेषणः क्रोधी निर्दयः परुषस्तथा" भा॰ शा॰ १६८अ॰।

**द्वेषपक्ष** पु॰ ६त॰। द्वेषावान्तरभेदेषु "द्वेषपक्षाः क्रोध ईर्ष्या द्रोहोऽमर्ष इति" न्यायभाष्यम्।

**द्वेष्** न॰ द्विष—कर्त्तरि विच्। द्वेष्टरि। "बाधतां द्वेषो अभयं कृणोतु" ऋ॰ ६।४७।१२। "द्वेषो द्वेष्टॄन्" भा॰

**द्वेषस्** न॰ द्विष—कर्मणि असुन्। द्वेष्ये पापादौ "द्वेषो-युतमाविवासन्ति" ऋ॰ ४।११।५ द्वेषो पापस्य युतं पृथक्कृतम्" भा॰।

**द्वेषिन्** त्रि॰ द्विष—णिनि। द्वेषकारके। "तथापि वक्ष्ये मम तत्कारि द्वेषिणो वधः" रघुः। "मद्भक्तो मद्द्वेषी मद्भक्तो मद्रप्रियः। उभौ तौ नरकं यातश्छिन्नरज्ज्वू घटाविव" पुरा॰ सारः।

भावे असुन् । २द्वेषे ३अप्रीतौ च पु० । "द्वेषोयुतो न दुरिता" ऋ०५।०१।६। द्वेषोयुतः अप्रीतियुतः भा० ।

**द्वेष्य** त्रि० द्वेषमर्हति यत् कर्मणि यत् वा । १द्वेषविषये २द्वेषार्हे च । "द्वेष्योऽपि सम्मतः शिष्टस्तस्यार्त्तस्य यथौषधम्" रघुः । "यथा यमः प्रियद्वेष्यौ प्राप्ते काले नियच्छति" मनुः । स्वकृतापकारमपेक्ष्यापकारकर्त्तरि अपह्नवे ३शत्रौ च ।

**द्वै** अ० द्व-बा० डै । वितर्के चादिगणः ।

**द्वैगुणिक** त्रि० द्विगुणार्थं द्विगुणं "तत् प्रयच्छति गर्ह्यम्" पा० ठक् । द्विगुणलाभाय धनप्रयोक्तरि वृद्ध्याजीवे वार्द्धुषौ ।

**द्वैत** न० द्विधा इतं द्वीतं तस्य भावः स्वार्थे वा अण् । द्वैधीभावे २द्वये युगले च । द्वैताद्वैतयोरुभयोरपि प्रमाणकत्वात् न्यायादिमते द्वैतम् वेदान्तिमते अद्वैतं रामानुजमते विशिष्टाद्वैतमित्येव स्थितम् । अन्ये शुद्धाद्वैतमिच्छन्ति । तत्राचार्या एवमाहुः । "अद्वैतमेव सत्यं तस्मिन् द्वैतं न सत्यमध्यस्तम् । रजतमिव शुक्तिकायां मृगतृष्णायामिवोदकस्फुरणम् । आरोपितं यदि स्याददद्वैतं वस्त्ववस्तुनि द्वैते । युक्तं नैव तदा स्यात् सत्येऽध्यासो भवत्यसत्यानाम् । यद्यारोपणमुभयोस्तद्व्यतिरिक्तस्य कस्यचिद्भावः । आरोपणं न शून्ये तस्माद्द्वैतसत्यता ग्राह्या । प्रत्यक्षाद्यनवगतं श्रुत्या प्रतिपादनीयमद्वैतम् । द्वैतं न प्रतिपाद्यं तस्य स्वयमेव लोकसिद्धत्वादिति । प्रपञ्चो यदि विद्येत निवर्त्तेत न संशयः । मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ।"

**द्वैतवन** न० द्वे शोकमोहादिके इते यस्मात् द्वीतं स्वार्थे अण् कर्म० । १तपोवनभेदे "युधिष्ठिरं द्वैतवने वनेचरः" किरा० । २तादृशवनोपलक्षिते सरोवरभेदे च । "इदं द्वैतवनं नाम सरः पुण्यजलोषितम् ।" "गच्छामः पुण्यं विख्यातं महद्द्वैतवनं सरः" भा० व० २४ अ० । "तेन हैतेन ध्वसा द्वैतवन ईजे मात्स्यो राजा यत्रैतद्द्वैतवनं सरस्तदेतद्गाथयाभिगीतं चतुर्दश द्वैतवने राजा संग्रामजिद्धयान् इन्द्राय वृत्रघ्नेऽबध्नात् तस्माद्द्वैतवनं सरः" शत० ब्रा० १३।५।४।६ ।

**द्वैतवाद** पु० द्वैतमधिकृत्य वादः । गौतमादिप्रणीते जीवेश्वरविभेदनिर्णायके १कथारूपग्रन्थभेदे कपिलादिप्रणीते नानाजीवनिर्णायके २कथाभेदे च । तत्र सांख्यमते यथा जीवानां परस्परभेदस्तथा सां० का० तत्त्वकौ० उक्तो यथा "जन्ममरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च । पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव" सां० का० । "पुरुषबहुत्वं सिद्धं कस्माज्जन्ममरणकरणानां प्रतिनियमात् निकायविशिष्टाभिरपूर्वाभिर्देहेन्द्रियमनोऽहङ्कारबुद्धिवेदनाभिः पुरुषस्याभिसम्बन्धोजन्म न तु पुरुषस्य परिणामस्तस्यापरिणामित्वात् तेषामेव च देहादीनामुपात्तानां परित्यागो मरणं न त्वात्मनोविनाशः तस्य कूटस्थनित्यत्वात् । करणानि बुद्ध्यादीनि त्रयोदश तेषां जन्ममरणकरणानां प्रतिनियमोव्यवस्था सा खल्वियं सर्वशरीरेष्वेकस्मिन् पुरुषे नोपपद्यते तदा खल्वेकस्मिन् जायमाने सर्वे जायेरन् म्रियमाणे च म्रियेरन् अन्धादौ चैकस्मिन् सर्वे एवान्धादयः विक्षिप्ते चैकस्मिन् सर्वे एव विक्षिप्ताः स्युरित्यव्यवस्था स्यात् प्रतिक्षेत्रं पुरुषभेदे तु भवति व्यवस्था । नचैकस्यापि पुरुषस्य देहोपाधानभेदाद्व्यवस्थेति युक्तं पाणिस्तनाद्युपाधिभेदेनापि जन्ममरणादिव्यवस्थाप्रसङ्गात् । न हि पाणौ छिन्ने, जाते वा स्तनादौ महत्त्ववयवे, युवतिर्जाता मृता वा भवतीति । इतश्च प्रतिक्षेत्रं पुरुषभेद इत्याह अयुगपत्प्रवृत्तेश्च प्रवृत्तिः प्रयत्नलक्षणा यद्यप्यन्तःकरणवर्त्तिनी तथापि पुरुषे उपचर्यते तथा च तस्मिन्नेकत्र शरीरे प्रयतमाने स एव सर्वशरीरेष्वेक इति सर्वत्र प्रयतेत सर्वाण्येव शरीराणि युगपच्चालयेत् नानात्वे तु नायं दोष इति । इतश्च पुरुषभेद इत्याह त्रैगुण्यविपर्ययाच्चैव एवकारोभिन्नक्रमः सिद्धमित्यस्यानन्तरं द्रष्टव्यः सिद्धमेव नासिद्धम् । त्रयोगुणास्त्रैगुण्यं तस्य विपर्ययोऽन्यथाभावः, केचित् खलु सत्त्वनिकायाः सत्त्वबहुला यथोर्द्ध्वस्रोतसः केचिद्रजोबहुलाः यथा मनुष्याः । केचित्तमोबहुलाः यथा तिर्य्यग्योनयः । सोऽयमीदृशस्त्रैगुण्यविपर्ययोऽन्यथाभावस्तेषु सत्त्वनिकायेषु न भवेत् यद्येकः पुरुषः स्यान्नाने त्वयम् दोष इति" तत्त्वकौ० । "जन्मादिव्यवस्थातः पुरुषबहुत्वम्" नाद्वैत श्रुतिविरोधः जातिपरत्वात्" सां० सू० ।

**द्वैतवादिन्** त्रि० द्वैतं जीवभेदं जीवेश्वरयोर्भेदं वा वदति वद-णिनि । जीवभेदवादिनि जीवेश्वरयोर्भेदवादिनि च नैयायिकादौ ।

**द्वैताद्वैत** न० द्वैतञ्चाद्वैतञ्च । जीवेश्वरयोर्भेदाभेदयोः । "अद्वैतञ्च तथाऽद्वैतं द्वैताद्वैतं तथैव च । न द्वैतं नापि चाद्वैतमित्येतत् पारमार्थिकम् । न हि नैवान्यसम्बन्धो भूमभावेन भावितः । इदन्त्वावामवस्थादामवाप्य परमं पदम् । द्वैतपक्षाः समाख्याता येऽद्वैते तु व्यवस्थिताः" ।

**द्वैतिन्** त्रि० द्वैतं भेदः सत्यततयाऽस्त्यस्य इनि। द्वैतवादिनि नैयायिकादौ। "स्वसिद्धान्तव्यवस्थासु द्वैतिनो निश्चिता दृढम्। परस्परं विरुध्यन्ते तैरियं न विरुध्यते"। "अद्वैतं परमार्थो हि द्वैतं तद्भेद उच्यते। तेषामुभयथाद्वैतं तेनायं न विरुध्यते"।

**द्वैतीयीक** त्रि० द्वितीय+स्वार्थे ईकक्। द्वितीये "द्वैतीयीकतया मितोऽयमगमत् तस्य प्रबन्धे महा" इत्यादि नैष०।

**द्वैधम्** अव्य० द्वि+प्रकारे धमुञ्। प्रकारद्वये एकेन सन्धिरपरेण विग्रह इत्येवं प्रकारद्वयमित्यादि। "श्रुतिद्वैधं यत्र तु स्यात्तत्र धर्मावुभौ स्मृतौ" मनुः। "बलस्य स्वामिनश्चैव स्थितिः कार्य्यार्थसिद्धये। द्विविधं कीर्त्त्यते द्वैधं षाड्गुण्यगुणवेदिभिः" मनुः।

**द्वैध** त्रि० धमुञन्तात् स्वार्थे वार्त्ति० स्वार्थे ड। १द्विप्रकारे। "बहुलं परिच्छिन्द्यात् बालिद्वैधे नराधिपः" मनुः। "ततः साचिवलं साधु द्वैधवादकृतं भवेत्" भा०शा० ८१ अ०। राज्ञां सन्ध्यादिषु षट्सु गुणेषु २गुणभेदे "सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः" अमरः।

**द्वैधीभाव** पु० अद्वैधस्य द्वैधस्य भावः। द्वैध—च्वि भूप्रयोगे भावे घञ्। १द्विधाभावे षाड्गुण्यान्तर्गते २द्वैधरूपे भावे च। स च बाह्ये एकप्रकारः आभ्यन्तरे अन्यप्रकार इत्येवं द्विप्रकाररूपः यथोक्तं वह्निपु० षाड्गुण्योक्तौ "बलिनोर्द्विषतोर्मध्ये वाचात्मानं समर्पयन्। द्वैधीभावेन तिष्ठेत्तु काकाक्षिवदलक्षितः"। २द्विधा भवने "अपरस्त्वपरश्चैव द्वैधीभावोऽयमात्मनः" भा० आश्व० २८ अ०।

**द्वैप** त्रि० द्वीपिनो विकारः "प्राणिरजतादिभ्योऽञ्" पा० अञ्। १व्याघ्रविकारे २तच्चर्मणि न०। द्वैपेन चर्मणा परिवृतो रथः "द्वैपवैयाघ्रादञ्" पा० पुनरञ्। २द्वीपिचर्मपरिवृते रथे पु० द्वीपिन इदम् अण्। ३तत्सम्बन्धिनि त्रि०।

**द्वैपक** पु० द्वीपे भवः धूमा० वुञ्। द्वीपान्तरभवे।

**द्वैपदिक** पु० द्विपदाख्यं वेद अधीते वा उक्था० ठक्। १द्विपदाध्यायिनि २तद्वेत्तरि च।

**द्वैपायन** पु०स्त्री द्वीपस्य गोत्रापत्यम् नडा० फक्। १द्वीपर्षेः गोत्रापत्ये। द्वीपः अयनं जन्मभूमिर्यस्य स्वार्थे प्रज्ञा० वा अण्। २व्यासे "इति सत्यवती हृष्टा लब्ध्वा वरमनुत्तमम्। पराशरेण संयुक्ता सद्यो गर्भं सुषाव सा। जज्ञे च यमुनाद्वीपे पाराशर्य्यः स वीर्य्यवान्। स मातरमनुज्ञाप्य तपस्येव मनो दधे। स्मृतोऽहं दर्शयिष्यामि कृत्येष्विति च सोऽब्रवीत्। एवं द्वैपायनो जज्ञे सत्यवत्यां पराशरात्। न्यस्तो द्वीपे स यद्बालस्तस्माद् द्वैपायनः स्मृतः" भा० आ० ६० अ०। "द्वैपायनो विरहकातर आजुहाव" भाग० १।१ "तमहमरागमतृष्णं कृष्णद्वैपायनं वन्दे" वेणीसं०।

**द्वैपारायणिक** पु० द्वयोः पारायणयोः समाहारः द्विपारायणं वर्त्तयति ठञ् प्रत्ययविधौ तदन्तग्रहणप्रतिषेधेऽपि "इतः ऊर्द्ध्वन्तु संख्यापूर्वपदानां तदन्तग्रहणं प्राग्वतेरिष्यते तच्चालुकि" सि० कौ० उक्तेः संख्यापूर्वस्य तदन्तग्रहणम्। पारायणद्वयावर्तिनि।

**द्वैमातुर** पु० द्वयोर्मात्रोरपत्यं "मातुरुत् संख्यासम्पूर्वेति" पा० अण् रपरत्वम्। १द्विमातृजे गणेशे २जरासन्धे नृपे च। वरेण्यन्दपजायापुष्पकागर्भजातत्वात् दीपवत्सलापालितत्वाच्च गणेशस्य द्विमातृकत्वं तत्कथा स्क० पु० गणेशखण्डे यथा। "आविर्भविष्ये सदने वरेण्यस्य महीपतेः। त्रैलोक्यरक्षणार्थाय विघ्नस्यास्य प्रशान्तये। पालनाय स्वभक्तानां साधुत्राणाय भूसुराः। शिव उवाच। इत्युक्त्वा पुष्पकागर्भं प्रविवेश तदैव सः। आगते नवमे मासि प्रासूत पुष्पका शिशुम्। चतुर्बाहुमिभास्यं च दन्तुरं सुन्दरेक्षणम्। आयुधानि च चत्वारि बिभ्रतं तेजसान्वितम्। दृष्ट्वा सा क्रन्दनं चक्रेऽरिष्टमेतत् किमागतम्। श्रुत्वा चाक्रन्दनं तस्याः वरेण्यः सगणो ययौ। ददर्श बालकं सोऽपि विस्मितः सह तैर्गणैः। उवाच सेवकान् राजा त्यजतैनं सरोवरे। शिशुमादाय ते याताः पार्श्वस्यैवाश्रमे शुभे। कासारे तं शिशुं त्यक्त्वा ययुः सर्वे निजं पुरम्। अपरस्मिन् दिने पार्श्वमुनिः स्नानाय चागतः। तदैव ददृशे तेन बालकोऽद्भुतदर्शनः। आश्चर्यमकरोत्तत्र भयभीतस्तथाऽभवत्। आश्रमे केन मे त्यक्तमरिष्टसुखदायिनीम्। तपसा तु फलं दातुमीदृशो धृतवांस्तनुम्। रक्षितुं सर्वलोकानां परमात्मा निजेच्छया। सुन्दरो बालकः केन त्यक्तोऽसमीदृशो बहिः। नीत्वा स्वमाश्रमं चैनं पालयिष्ये प्रयत्नतः। इत्युक्त्वा जग्रहे बालमालिलिङ्ग मुदा मुनिः। तमानीतं मुनेः पत्नी ददर्श दीपवत्सला। उवाच निजभर्त्तारं सुप्रसन्नाननाम्बुजा। दीपवत्सलोवाच। किमानीतं महत् स्वामिन्! स्मयमाश्चर्यकारकम्। इदं वैनायकं रूपं ममाभाति द्विजर्षभ!। इदमेव शिवः स्यान्मे इदमेव तपःफलम्। इदमेव परं ब्रह्म योगिध्येयं सनातनम्। इदमेव परं तेज आ-

दिव्यं यदभिवञ्छितम्। इदमेव हि वेदान्ता नेतिनेति प्रचक्षते। शिव उवाच। इत्युक्त्वा कर्णमस्पृश्य भर्तुरादाय बालकम्। अन्नपानं ददौ तस्मै ततः सा दीपवत्सला। द्वितीयाचन्द्रवद्बालो वृद्धिं यातो दिने दिने"। जरासन्धशब्दे तस्य द्वैमातुरत्वं दृश्यम्। "हते हिडिम्बरिपुणा राज्ञि द्वैमातुरे युधि" माघः।

**द्वैमातृक** पु० द्वे मातराविव पालिके यस्य द्विमातृक ततः स्वार्थे अण्। नदीवृष्टिजलजनितशस्यपालिते देशे राजनि०।

**द्वैयह्नकाल्य** त्रि० द्व्यहरूपः कालो यस्य तस्य भावः ष्यञ्। ष्यञन्ताच्च स्वार्थे पूर्ववच्च। द्व्यह्नकालजातस्य भावे। "द्वैयह्नकाल्ये तु यथाम्नायम्" जै० सू० "द्वैयह्नकाल्ये क्रियमाणे यथाम्नायं कृतं भवति यस्मात् द्वैयह्नकाल्यं स्यात्। चोदकः तथा अनुगृहीतो भवति प्रकृतौ हि श्रूयते। "पूर्वेद्युः अग्निं गृह्णाति उत्तरमहर्देवतां यजेत्" इति। यस्मात् द्व्यह्नकालम् यज्ञमभिनिर्वर्त्य तदहरेवोपक्रम्या-ऽपरेद्युः परिसमापयेत् भा० "वचनाद्वैयह्नकाल्यं स्यात्" सू० "नैतदेवं द्व्यह्नकाला विकृतयो भवेयुः इति द्व्यहकालाः स्युः" शवरभा०।

**द्वैयङ्गिक** त्रि० द्वयोरङ्गोर्भवः "द्विगोर्वा रात्र्यहःसंवत्सराच्च" पा० पक्षे ठञ् समासान्तविधेरनित्यत्वात् न टच् अत एव रात्र्यहरिति तान्तवया निर्देशात् सि० कौ०। अङ्गादेशः। द्वयोरङ्गोर्भवे। [ठिच्। द्वयोराह्नावयोर्भवे।

**द्वैयाह्नाविक** त्रि० द्वयोराह्नावयोर्निधानयोर्भवः धूमा० वुञ्।

**द्वैरथ** न० द्वौ रथौ यत्र युद्धे स्वार्थे अण्। ताभ्यामेव रथाभ्यामुपलक्षिते युद्धे। "द्वैरथेनास्तु वै शान्तिस्तव च मम वा नृप!" भा० व० ७८ अ०। "चिकीर्षन् द्वैरथं युद्धमभ्ययान्मधुसूदनम्" हरिवं० ११८ अ०।

**द्वैरात्रिक** त्रि० द्वयो रात्र्योर्भवः "द्विगोर्वा रात्र्यहः-संवत्सराच्च" पक्षे ठञ्। द्वयोरात्र्योर्भवे। अत्रापि समासान्तविधेरनित्यत्वात् न समासान्तः अत एव रात्रीति निर्देशात् पक्षे च द्विरात्रीण तत्रार्थे त्रि०।

**द्वैराज्य** न० द्वौ राजानौ यस्य तस्य भावः ष्यञ्। द्विविध-राजयुक्तत्वे।

**द्वैविध्य** न० द्विविधस्य भावः ष्यञ्। प्रकारद्वये "द्वैविध्यं तु भवेद्व्याप्तेरन्वयव्यतिरेकतः" भाषा०।

**द्वैपणीया** स्त्री द्वैपणमेव स्वार्थे अण् द्वैपणं तदर्हति छ। मानवल्लीभेदे राजनि०।

**द्वैसमिक** त्रि० द्वयोः समयोर्वर्षयोर्भवः समायाः यत् "द्वि-गोर्ष्ठंश्च" पा० पक्षे ठञ्। वर्षद्वयभवे।

**द्वैहायन** न० द्विहायनस्य भावः युवा० अण्। द्विवर्षवयस्कभावे

**द्व्यंश** न० द्वयोरंशयोः समाहारः पात्रा० न ङीप्। भागद्वये "वैश्यापुत्रो हरेद्द्व्यंशम्" मनुः। "द्व्यंशहरो ऽर्द्धहरो वा पुत्रवित्तार्जनात् पिता" दायभा०।

**द्व्यक्ष** त्रि० द्वे अक्षिणी यस्य ब स० षच्। नेत्रद्वययुते स्त्रियां ङीप्। "द्व्यक्षीं त्र्यक्षीं ललाटाक्षीम्" भा०व०२७९ अ०। नानाराक्षसस्त्री।

**द्व्यक्षर** न० द्वे अक्षरे यत्र। १वर्णद्वयात्मके शब्दभेदे मन्त्रिमन्त्र-रूपायां २विद्यायां स्त्री गौरा० ङीष्। "रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः"। "कुर्वेति द्व्यक्षरं द्व्यक्षरो वषट्कारः" तैत्ति० सं० १।६।१२।

**द्व्यङ्गुल** त्रि० द्वे अङ्गुली प्रमाणमस्य तद्धितार्थद्विगुः प्रमा-णार्थकमात्रचः "प्रमाणे लोद्विगोर्नित्यम्" वा० लुक् अच् समा०। १अङ्गुलीद्वयमिते। द्वयोरङ्गुल्योः समाहारः अच् समा०। २अङ्गुलीद्वये न०। "फलके द्व्यङ्गुलान्तरे" कात्या० श्रौ०८।५।२५। "षडङ्गुला तु सम्पूर्णा काली द्व्यङ्गुल-सूचिका" ज्यो० त०।

**द्व्यञ्जल** त्रि० द्वयोरञ्जल्योः समाहारः अच् समा०। १अञ्जलिद्वये। ताभ्यामञ्जलिभ्यां क्रीतः ठञ् तस्य अध्यर्द्धपूर्वेत्यादिना लुकि न च लुक्। प्रमाणे लोद्विगोर्नित्यम् वार्त्ति० लुकि तु मा अच्। २अञ्जलि-द्वयमिते त्रि० "न्यस्तं चकं द्व्यञ्जलमग्निबेऽपास्" भट्टिः।

**द्व्यणुक** न० द्वौ अणू कारणे यस्य कप्। परमाणुद्वयारब्धे कार्यद्रव्यभेदे "त्रिगुणोऽद्व्यणुकादिस्तु प्रत्यक्षेणा अनु-भूतः" भाषा० आरम्भवादशब्दे ७९७ पृ० दृश्यम्।

**द्व्यर्थ** त्रि० द्वौ अर्थौ यस्य। १अर्थद्वययुते शब्दादौ "द्व्यर्थैः पदैः" महाभाष्यम्। २द्विप्रयोजनके कार्यभेदे च "आयव नित्तः पितरश्च दृष्टा एका क्रिया द्व्यर्थकरीह लोके" वायुपु०। समाहारद्वि० पात्रा०। अर्थद्वये न०।

**द्व्यशीति** स्त्री द्व्यधिका अशीतिः अशीतिसंख्यात् दापात् वा आत्। १द्व्यधिकाशीतिसंख्यायां २तद्युक्ते च एकव० ततः पूरणे डट् द्व्यशीत तमप् द्व्यशीतितम तत्पूरणे त्रि०। डटि स्त्रियां ङीप्। द्व्यशीतियुतं शतादि ड। द्व्यशीत द्व्यशीतियुते शतादौ त्रि०।

**द्व्यष्ट** न० द्वे हेमरूपे अश्नुते कारणतया व्याप्नोति अश-क्त। ताम्रे अमरः। [द्व्यंसम्। द्विगद्वये।

तत्पुरुषाभिधा सा स्यात् दुर्लभा सर्वकामदा” इति तत्पुरुषलक्षणम् । “द्विलिङ्गो वा त्रिलिङ्गो वा चतुष्पञ्चादिलिङ्गवान् । तापिञ्छकरकाकारो देवदेवः सदाशिवः” इति सदाशिवलक्षणम् । इत्यघोरादिपञ्चकलक्षणम् । प्रयोगपारिजाते वराहपु० “हिनाभिश्चक्ररूपा या भवेद्धरिहरात्मिका । नाभौ लिङ्गेन युक्ता वा श्वेतभागे खुरान्विता । शिवनाभिरिति ख्याता भुक्तिमुक्तिफलप्रदा । वासुदेवमयं क्षेत्रं लिङ्गं शिवमयं स्मृतम् । तस्माद्धरिहरक्षेत्रे पूजयेत् शङ्कराच्युतम् । भवेच्छिलाशतैः शस्ता चतुर्वर्गफलप्रदा” । तस्या माहात्म्यम् स्कन्दपुराणे “द्वाराचक्रशिला देवि ! भद्राचास समन्विता । तत् पापबहितं यत् स्यात् तीर्थं द्वादशयोजनम् । म्लेच्छदेशे शुचौ वापि चक्राङ्को यत्र तिष्ठति । योजनानि तथा त्रीणि मम क्षेत्रं वसुन्धरे ! । तन्मध्ये म्रियते यस्तु पूजकः सुसमाहितः । शतबाधाविनिर्मुक्तो न पुनः सोऽपि जायते । चक्राङ्कितस्य सान्निध्ये यत्कर्म क्रियते नरैः । स्नानं दानं तपो होमः सर्वं भवति चाक्षयम् । संवत्सरन्तु यत् पापं मनसा कर्मणा कृतम् । तत्सर्वं नश्यते पुंसां सकृच्चक्राङ्कदर्शनात् । ज्वरदाहौ विषञ्चैव अग्निचौरभयं तथा । सर्वे ते प्रशमं यान्ति सकृच्चक्राङ्कमार्जनात् । भूतप्रेतपिशाचाश्च डाकिन्यश्च वसुन्धरे ! । सर्वे ते प्रलयं यान्ति पञ्चचक्रान्वितं न्यसेत् । भक्त्या वा यदि वाऽभक्त्या चक्राङ्कं पूजयेन्नरः । अपि चेत् सुदुराचारो मुच्यते नात्र संशयः । संवत्सरन्तु यः कुर्यात् पूजास्पर्शनदर्शनम् । विना साङ्ख्येन योगेन मुच्यते नात्र संशयः” । द्वारकाशिलावर्णविशेषफलम् पद्मपुराणे “कृष्णा मृत्युप्रदा नित्यं कपिला तु भयावहा । सौभ्रान्त्यं कर्वुरा दद्यात् पीता धनविनाशिनी । धूम्राभा पुत्रनाशाय भग्ना भार्य्याविनाशिका । श्वेताश्शिलाः सुसंपूर्णाः सर्वकामार्थदायिकाः । अच्छिद्रचक्रा सा पूज्या दुःखदारिद्र्यनाशिनी । वर्त्तुला चतुरस्रा च पूजिता सिद्धिदायिका । सुखदा समचक्रा च विषमा दुःखदा भवेत् । निषिद्धशिलापि तत्रैव “छिद्रा भग्ना त्रिकोणा च तथा विषमचक्रिका । अर्द्धचन्द्राकृतिर्या च पूज्यास्ता न भवन्ति हि” । प्रयोगपारिजाते तु विशेषः “भिन्नश्चैवार्थनाशाय स्थूलो बुद्धिविनाशकः । दीर्घश्चायुर्हरो ज्ञेयो ह्रस्व ऋद्धिविनाशकृत् । शुक्लवर्णा शुभा ज्ञेया दन्तचक्रा तथैव च” । चक्रभेदे मूर्त्तिभेदोऽग्निपुराणे उक्तो यथा “सुदर्शनस्त्वेकचक्रे लक्ष्मीनारायणो द्वये । अच्युतः स्यात्त्रिकेण युतो देवस्त्रिविक्रमः” । जनार्दनश्चतुश्चक्रो वासुदेवश्च पञ्चभिः । षट्चक्रश्चैव प्रद्युम्नः संकर्षणश्च सप्तभिः । पुरुषोत्तमश्चाष्टचक्रो नवव्यूहो नवात्मकः । दशावतारो दशभिर्दशैकेनानिरुद्धकः । द्वादशात्मा द्वादशभिरत ऊर्द्ध्वमनन्तकः” । गरुड़पुराणे तु चतुश्चक्रश्चतुर्भुज इति विशेषः । चक्रभेदेन विशेषोऽपि तत्रैव । “एकचक्रशिला पूज्या भुक्तिमुक्तिफलप्रदा । द्विचक्रश्चाच्युतो देवो देवेन्द्रत्वफलप्रदः । श्रीप्रदो रिपुहन्ता च चतुश्चक्रो जनार्दनः । पूजयेद्भक्तिसंयुक्तः सुगन्धैः कुसुमादिभिः । पञ्चभिर्वासुदेवः स्यात् प्रभुश्चक्रैः सदार्चितः । जन्ममृत्युभयात्त्राता भवेच्चैवात्र संशयः । षड्भिश्चक्रैश्च प्रद्युम्नो लक्ष्मीकीर्त्तिप्रदो भवेत् । पूजितो भक्तिभावेन चक्रतीर्थशिलोद्भवः । बलभद्रशिला ज्ञेया सप्तचक्राङ्किता खग ! । पूजितस्तुष्यते देवः पुत्त्रपौत्त्रप्रदो भवेत् । वाञ्छितं वसुभिश्चक्रैर्ददाति पुरुषोत्तमः । नवव्यूहो नवचक्रो दुर्लभं यत् सुरैरपि । पूजितः केशवस्तस्य ददाति स्थानमुत्तमम् । राज्यदो दशभिश्चक्रैर्दशावतारसंज्ञकः । दशावतारपूजा स्याच्चक्राङ्कस्यास्य पूजनात् । एकादशभिरैश्वर्य्यमधिकञ्च प्रयच्छति । पूजितो भक्तिभावेन चक्रतीर्थशिलोद्भवः । तत्रैव प्राप्यते देवश्चक्रैर्द्वादशभिश्चितः । पूजितः सर्वकामानामनन्तफलदायकः । द्वादशात्मा स विज्ञेयो भुक्तिमुक्तिप्रदोऽर्च्चितः । अत ऊर्द्ध्वं परात्मासौ सदा प्रीतिविवर्द्धनः । पूजितः सर्वलोकात्मा विष्णुलोकप्रदायकः इति चक्राङ्कितशिलाः कथिताः कुलनामतः” । एकचक्रविषये विशेषस्तु प्रयोगपारिजाते “एकचक्रे विशेषोऽस्ति सविशेषस्तथोच्यते । शुक्लं रक्तं तथा रक्तं द्विवर्णं बहुवर्णकम् । यद्येकचक्रिणः स्युश्च तेषां संज्ञा भवेत् क्रमात् । पुण्डरीकः प्रलम्बघ्नो रामो वैकुण्ठ एव च । विश्वेश्वर इति ब्रह्मन् तेषां पूजाफलं शृणु । मोक्षं मृत्युं विवादञ्च दारिद्र्यं परतन्त्रताम् । ददाति पूजकस्यासौ तस्मात्तां परिवर्जयेत्” ।

6 Vol III



## ध

**धकारः** तवर्गीयः पञ्चमः व्यञ्जनवर्णभेदः। तस्योच्चारणस्थानं दन्तमूलं "दन्त्या लृतुलसाः स्मृताः" इति तवर्गस्य दन्त्यत्वोक्तिः दन्तमूलपरत्वेन, अन्यथा भग्नदन्तस्य तवर्गोच्चारणानुपपत्तेः। व्यञ्जनवर्णत्वादर्द्धमात्रत्वम् तस्य। तस्योच्चारणे आभ्यन्तरप्रयत्नः स्पृष्टता जिह्वाग्रेण दन्तमूलस्य सम्यक्स्पर्शेन तस्योच्चारणात् तथात्वम्। वाह्यप्रयत्नाश्च संवारनादघोषा महाप्राणश्च, सि॰ कौ॰ मूलं दृश्यम्। अस्य वाचकशब्दा वर्णाभिधानतन्त्रोक्ता यथा "धो धनार्थो रुचिः स्थाणुः सात्वतो योगिनीप्रियः। मीनेशः शङ्खिनी तोयं नागेशो विश्वपावनी। धिषणा धारणा चिन्ता नेत्रयुग्मं प्रियो मतिः। पीतवासाश्विवर्णा च धात्री धर्मः सुजङ्गमः। सन्द्यौ मोहनो लज्जा वज्रतुण्डः सुकन्धरा। वामपादाङ्गुलीमूलं ज्येष्ठा सुरपुरं भवः। स्वर्णात्मा दीर्घजङ्घा च धनेशो धनसञ्चयः" अस्य मातृकान्यासे वामपादाङ्गुलिमूले न्यास्यता। अस्याधिष्ठातृदेवताया ध्येयरूपम्। "षड्भुजां मेघवर्णाञ्च रक्ताम्बरधरां पराम्। वरदां शोभनां रम्यां चतुर्वर्गप्रदायिनीम्। एवं ध्यात्वा धकारन्तु तन्मन्त्रं दशधा जपेत्" अस्य स्वरूपञ्च। "धकारं परमेशानि! कुण्डली मोक्षरूपिणी। आत्मादितत्त्वसंयुक्तं पञ्चदेवमयं सदा। पञ्चप्राणमयं देवि! त्रिशक्तिसहितं सदा। त्रिविन्दुसहितं वर्णं धकारं यदि भावयेत्। पीतविद्युल्लताकारं चतुर्वर्गप्रदायकम्" कामधेनु॰। अस्य काव्यादौ प्रथमन्यासफलं वृ॰ र॰ टीकायामुक्तं यथा "दोधः सौख्यं खरं नः"।

**ध** पु॰ दधाति धा—ड। १धर्मे २कुबेरे ३ब्रह्मणि च। ४धने न॰ मेदि॰। ५धकारवर्णे "धोधनार्थो रुचिः स्थाणुः" वर्णाभिधानम्।

**धक्क** नाशने चुरा॰उभ॰सक॰सेट्। धक्कयति-ते अदधक्कत्-त।

**धट** पु॰ धन-शब्दे "पुंसि घः" पा॰ नस्य टः। १तुलायाम् उन्मानार्थं मानदण्डभेदे अमरः। तदुपलक्षिते २तुलाराशौ "सिंहो वृषश्च मेषश्च कन्या धन्वी धटो घटः। अर्कादीनां त्रिकोणानि मूलानि राशयः क्रमात्" ज्यो॰ त॰। ३परीक्षाभेदे तन्निरुक्तिः पितामहेन दर्शिता यथा धकाराद्धर्ममुद्दिष्टं टकारात् कुटिलं नरम्। धृतं धारयते यस्मात् धटस्तेनाभिधीयते"। तुलाशब्दे ३३३१ पृष्ठादौ दृश्यम्। "धटोऽग्निरुदकञ्चैव विषं कोशस्तु पञ्चमः। षष्ठन्तु तण्डुलाः प्रोक्ताः सप्तमं तप्तमाषकम्। अष्टमं फालमित्युक्तं नवमं धर्मजं तथा। दिव्यान्येतानि सर्वाणि निर्दिष्टानि स्वयम्भुवेति" वृहस्पतिः। परीक्षायां नक्षत्रादिपरीक्षाशब्दे दृश्यम्। धटपरीक्षायां कालविशेषनिषेधौ "तुला स्यात् सर्वकालिकी" इति "वाते वाति विवर्जयेत्" च पितामहेनोक्तौ।

**धटक** पु॰ "तुल्या यवाभ्यां कथितात्र गुञ्जा वल्लस्त्रिगुञ्जो धरणञ्च तेऽष्टौ। गद्याणकस्तद्द्वयमिन्द्रतुल्यैर्वल्लैस्तथैको धटकः प्रदिष्टः" लीला॰ उक्ते द्वाचत्वारिंशद्गुञ्जापरिमाणे

**धटकर्कट** पु॰ द्व॰त॰। तुलायाः शिक्याधारे ईषद्वक्रे कर्कटपदाङ्गुनिभे आयसकीलकभेदे दिव्यत॰ रघु॰। "कक्षच्छेदे तुलाभङ्गे धटकर्कटयोस्तथा" वृहस्पतिः।

**धटिका** स्त्री "द्व्यक्षेन्दुसंख्यैर्धटकैस्तु सेरस्तैः पञ्चभिः स्याद् धटिका च ताभिः" लीला॰ उक्ते पञ्चसेरात्मके (धाडा पशरी) इति प्रसिद्धे परिमाणे। धटी स्वार्थे क। १चीरवस्त्रे २कौपीने (धड़ा)।

**धटी** स्त्री धन॰ रवे अच् नस्य टः गौरा॰ ङीष्। १कौपीने २चीरवस्त्रे मेदि॰ गर्भाधानोत्तरं स्त्रियै देये ३वस्त्रभेदे तद्दाने नक्षत्रादि यथा "मूलश्रवणहस्तेषु पुष्याश्वि- त्र्युत्तरासु च। मृगपौष्णे धटी देया सौम्यवारे शुभे तिथौ" ज्यो॰ सा॰।

**धटिन्** त्रि॰ धटोऽस्त्यस्य इनि। १तुलाधारके २तुलाराशौ ३शिवे च पु॰ "घण्टोऽघण्टो धटी घण्टी चरुचेली मिलीमिली" भा॰शा॰२८६अ॰। नीलकण्ठेन तु घटीति तत्र पठित्वा व्याख्यातम् "घटयति कर्मफलैर्योजयति नरानिति घटी इति" मुद्रादोषात् धटीत्यपपाठः। [दधाण।

**धण** शब्दे भ्वा॰प॰अक॰सेट्। धणति अधाणीत् अधणीत्।

**धत्तूर** पु॰ धयति धातून् धा—जर पृषो॰। धुस्तूरे। हेमच॰

**धन** धान्योत्पादने जुहो॰ पर॰ सेट्। दधन्ति अधानीत् अधनीत् दधान। अ॑हीतकर्मकत्वात् अकर्मकत्वम्। तेन दधन्ति भूमिः धान्यमुत्पादयतीत्यर्थः, वैदिकोऽयम्।

**धन** शब्दे भ्वा॰पर॰ अक॰सेट्। धनति अधानीत् अधनीत्।

**धन** न॰धन—अच्। १गोधने २वित्ते च मेदि॰। ३स्नेहपात्रे शब्दर॰ ४धनिष्ठानक्षत्रे ज्योतिषम्। अर्थशब्दे ३६७पृ॰ धनभेदादिकमुक्तं विशेषस्तु कश्चित् शुद्धित॰ उक्तो यथा "धनं तु त्रिविधं ज्ञेयं शुक्लं शबलमेव च। कृष्णञ्च तस्य विज्ञेयो विभागः सप्तधा पृथक्। क्रमायातं प्रीतिदायं

प्राप्तञ्च सह भार्य्यया । अविशेषेण सर्वेषां वर्णानां त्रिविधं धनम् । वैशेषिकं धनं दृष्टं ब्राह्मणस्य त्रिलक्षणम् । याजनाध्यापने नित्यं विशुद्धाच्च प्रतिग्रहः । त्रिविधं क्षत्रियस्यापि प्राहुर्वैशेषिकं धनम् । युद्धार्थलब्धं करजं दण्डश्चव्यापहारतः । वैशेषिकं धनं दृष्टं वैश्यस्यापि त्रिलक्षणम् । कृषिगोरक्षवाणिज्यं शूद्रस्यैभ्यस्त्वनुग्रहात् । कुसीदकृषिवाणिज्यं प्रकुर्वीत स्वयङ्कृतम् । आपत्काले स्वयं कुर्वन्नैनसा युज्यते द्विजः"। तामसादिभेदेन तस्य त्रैविध्यं नारदेन उक्तं यथा "पार्श्विकद्यूतचौर्य्यार्त्तिप्रतिरूपकसाहसैः । व्याजेनोपार्जितं यत्तु तत् कृष्णं समुदाहृतम्" । पार्श्विकः पार्श्वतया योऽर्जयति । आर्त्त्या परपीड़या प्रतिरूपकेण कृत्रिमरत्नादिना । साहसेन समुद्रयानगिर्य्यारोहणादिना । व्याजेन ब्राह्मणवेशेन शूद्रादिना । कृष्णं तामसम् । राजसधनं यथा "कुसीदकृषिवाणिज्यशुल्कगानानुवृत्तिभिः । कृतोपकारादाप्तञ्च राजसं समुदाहृतम्" । अनुवृत्त्या सेवया । सात्त्विकधनं यथा । "श्रुतशौर्य्यतपःकन्याशिष्ययाज्यान्वयागतम् । धनं सप्तविधं शुक्लं मुनिभिः समुदाहृतम्" । श्रुतेनाध्ययनेन शौर्य्येण जयादिना । तपसा जपहोमदेवार्चादिना । कन्यागतं कन्यया सहागतं श्वशुरादेर्लब्धम् । शिष्यागतं गुरुदक्षिणादिना । याज्यागतं आर्त्विज्यलब्धम । शुक्लं सात्त्विकम्" शुद्धित०दायम् । ५युक्ते ह्योर्व्वे च "स्वोच्चापकृष्टा भगणैः प्राङ्मुखं यान्ति यद्ग्रहाः । तत् तेषु धनमित्युक्तमृणं पश्चान्मुखेषु तु" सू०सि० । "स्वोच्चजीवाकर्षिता ग्रहाः पूर्वाभिमुखं भगणैः राशिभिर्भगोलस्य क्रान्तिवृत्तानुकृतस्याकाशगोलान्तर्गतक्रान्तिवृत्ते द्वादशराश्यङ्किते यद्राशिविभागैरित्यर्थः । यद्यत्सङ्ख्यामितं गच्छन्ति तत्तत्सङ्ख्यामितं भागादिकं फलरूपं तेषु पूर्वांवगतग्रहराश्याादिभोगेषु धनं योज्यम्" रङ्ग०। ७लग्नात् द्वितीयस्थाने तत्र जन्मलग्नात् द्वितीयस्थाने चिन्त्यपदार्थां ग्रहयोगभेदेन शुभाशुभं च जातकपद्धतावुक्तं यथा "सुवर्णरत्नविक्रयक्रयाश्च कोशसंग्रहः । धनाभिधानमन्दिरे बुधैर्विचिन्त्य आदरात् । समस्तपापखेचरैर्युतेक्षितं धनाभिधम् । दरिद्रताविधायकं विशेषतः क्षपाकृता । शुक्रः शनिर्धनगतो धनिनं करोति दृष्टो बुधेन रविजान्यखगप्रदृष्टः । सूर्य्योऽपि, सौम्यखचरा धनगा धनानि नानाविधानि न यदा खलदृष्टदेहाः । बुधगुरुकवयश्चेद्वित्तगा वित्तलाभं विदधति यदि दृष्टाः सोमसौम्येन्दुपुत्रैः । क्रमश, इह कविश्चेत् सौम्यगेहे धनाप्त्यै भवति शुभखगानां दृष्टितो मानवस्य । क्षीणः शशी खेन विलोकितोऽर्थे पूर्वार्जितार्थस्य विनाशदः स्यात् । नवीनवित्तागमरोधकौ च धने कुजेन्दू त्वथ दोषदौ वा । रविर्धनेऽल्पार्थमिते कुजोऽङ्के षड्विंशके च धननाशदः स्यात् । भावदे विधुः पीड़नमङ्गिराश्च भूपेऽल्पतायाश्च कविः षडब्दे । द्वितीयस्य पतिर्मन्दखामी शुक्रमतादिह । सेन्दुशुक्रोऽष्टषष्ठान्त्यस्थितो रात्रा व्ययकृच्च यः । सहार्य्यः शुक्रलग्नेशो जातस्यायकल्पते । एभिः पित्रादिभावेशैर्युक्तश्चेत्तत्तदाप्यकृत् । सशुक्रलग्नपश्चेत् स्यात्तेषां वैपरीत्यकृत् । भावाधीशः शुभैर्युक्तः केन्द्रकोणे शुभप्रदः" ।

वर्षलग्नात् द्वितीयस्थग्रहयोगादिफलम् नी०ता०उक्तं यथा "वित्ताधिपो जन्मनि वित्तगोऽब्दे जीवो यदा लग्नपतीत्थशाली । तदा धनाप्तिः सकलेऽपि वर्षे क्रूरेशरामे धनधान्यहानिः । जन्मन्यथावलोकीव्योऽब्देऽब्देशो बलवान् यदा । तदा धनाप्तिर्बहुधा विनायासेन जायते । एवं यद्भावगोजन्मन्यब्दे तद्भावगो गुरुः । लग्नपेनेत्थशाली चेत्तद्भावजसुखं भवेत् । यदा जनुषि यं पश्येत् भावमब्देऽब्दपो गुरुः । तदा तद्भावजं सौख्यमुक्तं ताजकवेदिभिः । जन्मलग्नाधिपः सौम्यः षष्ठोऽब्दे स्वल्पलाभदः । पापार्दिते गुरौ रक्षेऽपवाद उपजायते । गुरुर्वित्ते शुभैर्दृष्टयुतो राज्यार्थसौख्यदः । जन्मन्यब्दे च सुधहाराशिं पश्यन् विशेषतः । एवं सितेऽब्दपे भूरिधनं धान्यं च जायते । वित्तलग्नेशसंयोगो वित्तसौख्यफलप्रदः । एवं बुधे सवीर्य्येऽस्माल्लिपिशास्त्रोद्यमैर्धनम् । जन्मलग्नगताः सौम्या वर्षेऽर्थे धनलाभदाः । लाभसद्मनि वित्ते वा बुधेक्षितसंयुते । तैश्च दृष्टे धनं भूरि स्वकुले राज्यमाप्नुयात् । अर्थायसद्मेशौ चेत् शुभैर्मित्रदृशेक्षितौ । बलिनौ सुखतो लाभप्रदौ यत्नादरेण वा । मित्रदृष्ट्या सुखशिखेऽङ्गार्थयोः सुखतो धनम् । तयोर्मूशरिफे वित्तनाशदुर्जनभीतयः । जन्मनीव्योऽस्ति यद्राशौ तद्राशिवर्षलग्नगः । शुभस्वामीक्षितयुतो नैरुज्यस्वाम्यवित्तदः । सूतौ लग्ने रविर्वर्षे धनस्थो धनसौख्यदः । शनौ वित्ते कार्य्यनाशो लाभोऽल्पोऽथ धनव्ययः । भ्रातृसौख्यं गुरुयुते भूमयः स्युः शुभेक्षणात् । क्रूरयोगेक्षणात् सर्वं विपरीतं फलं वदेत् । वित्तेशो

जन्मनि गुरुर्वेदे वर्षैर्गतां दृषत्। यद्भावगस्तमाश्रित्य लाभदो लग्नमात्मनः। वित्ते सुवर्णरौप्यादेः श्यालादेः सहजर्क्षगः। पितृमातृक्षमादिभ्यो वित्तं सुहृदि पञ्चमे। सुहृत्तनयषष्ठेऽरिवर्गोद्धानिप्रभीतिदः। स्त्रीभ्यो द्युनेऽष्टमे मृत्युरर्थहेतुर्यशोऽङ्कगे। खे नृपादेर्व्यपकुलादायेऽन्त्ये व्ययदो भवेत्। इत्थं विकल्पयत्र सुधिया वाच्यमित्यपरे जगुः"। तद्भावानयनं द्वादशभावशब्दोक्तदिशावसेयम्। बीजगणितोक्ते ऋणभिन्ने च। तत्र धनर्णसङ्कलनादिप्रकारस्तत्रोक्तो यथा

"धनर्णसङ्कलने करणसूत्रं वृत्तार्द्धम् योगे युतिः स्यात्क्षययोः स्वयोर्वा धनर्णयोरन्तरमेव योगः। उदाहरणम्। रूपत्रयं रूपचतुष्टयं च क्षयं धनं वा सहितं वदाशु। स्वर्णं क्षयं स्वं च पृथक् पृथङ्मे धनर्णयोः सङ्कलनामवैषि। अत्र रूपाणामव्यक्तानां चाद्याक्षराण्युपलक्षणार्थं लेख्यानि यानि ऋणगतानि तानूर्द्धबिन्दूनि च।

न्यासः रू ३˙ रू ४˙ योगे जातं रू ७˙

न्यासः रू ३ रू ४ योगे जातं रू ७

न्यासः रू ३ रू ४˙ योगे जातं रू १˙

न्यासः रू ३˙ रू ४ योगे जातं रू १

एवं विभिन्नेष्वपि। धनर्णव्यवकलने करणसूत्रं वृत्तार्द्धम् संशोध्यमानं स्वमृणत्वमेति स्वत्वं क्षयस्तद्युतिरुक्तवच्च। उदाहरणम्। त्रयाद्द्वयं स्वात् स्वमृणादृणं च व्यस्तं च संशोध्य वदाशु शेषम्।

न्यासः रू ३ रू २ अन्तरे जातं रू १

न्यासः रू ३˙ रू २˙ अन्तरे जातं रू १˙

न्यासः रू ३ रू २˙ अन्तरे जातं रू १˙

न्यासः रू ३˙ रू २ अन्तरे जातं रू १˙

। इति धनर्णसङ्कलनव्यवकलने।

गुणने करणसूत्रं वृत्तार्द्धम् स्वयोरस्वयोः स्वं धनर्णघाते क्षयोभागहारेऽपि चैवं निरुक्तम्। उदाहरणम्। धनं धनेनर्णमृणेन निघ्नं द्वयं त्रयेण स्वमृणेन किं स्यात्"।

न्यासः रू ३ रू २ धनं धनघ्नं धनं स्यादिति जातं रू ६ न्यासः रू ३˙ रू २˙ ऋणमृणघ्नं धनं स्यादिति जातं रू ६ न्यासः रू ३ रू २˙ धनमृणगुणमृणं स्यादिति जातं रू ६˙ न्यासः रू ३˙ रू ३ ऋणं धनगुणमृणं स्यादिति जातं रू ६˙। इति धनर्णगुणनम्। भागहारेऽपि चैवं निरुक्तमिति। उदाहरणम्। रूपाष्टकं रूपचतुष्टयेन धनं धनेनर्णमृणेन भक्तम्। ऋणं धनेन स्वमृणेन किं स्याद् द्रुतं वदेदं यदि बोबुधीषि। न्यासः रू ८ रू ४ धनं धनहृतं धनं स्यादिति जातं रू २। न्यासः रू ८˙ रू ४˙ ऋणमृणहृतं धनं स्यादिति जातं रू २ न्यासः रू ८˙ रू ४ ऋणं धनहृतं ऋणं स्यादिति जातं रू २˙। न्यासः रू ८ रू ४˙ धनमृणहृतमृणं स्यादिति जातं रू २˙। इति धनर्णभागहारः। वर्गे करणसूत्रं वृत्तार्द्धम्। "कृतिः स्वर्णयोः स्वं स्वमूले धनर्णे, न मूलं क्षयस्यास्ति तस्याकृतित्वात्। उदाहरणम्। धनस्य रूपत्रितयस्य वर्गं क्षयस्य च ब्रूहि सखे! ममाशु। न्यासः रू ३ रू ३˙ जातौ वर्गौ रू ९ रू ९ मूलोदाहरणम्। धनात्मकानामधनात्मकानां मूलं नवानां च पृथग्वदाशु। ८। न्यासः रू ९ मूलं रू ३ वा रू ३˙ न्यासः रू ९˙ एषामवर्गत्वान्मूलं नास्ति। धन—रवे अच्। ८ शब्दे च।

**धनक** पु० धनस्य कामः इच्छा धन+कन्। १धनेच्छायाम्। २कृतवीर्य्यजनके नृपभेदे "धनकः कृतवीर्य्यस्य" भाग०९।२३।७

**धनकेलि** पु० धनेन केलिरस्य। कुबेरे त्रिका०।

**धनच्छू** स्त्री धनं छ्यति नाशयति छो—क। करेटुखगे। त्रिका०।

**धनञ्जय** धनं जयति लम्भयति जि—खच् मुम्। १वह्नौ "धनमिच्छेत् हुताशनात्" इत्युक्तेस्तस्य धनदत्वात्तथात्वम् २चित्रकवृक्षे च अमरः। "सर्वान् जनपदान् जित्वा वित्तमादाय केवलम्। मध्ये धनस्य तिष्ठामि तेनाहुर्मां धनञ्जयम्" भा० विरा० ४४ अ० उत्तरं प्रति अर्जुनेन स्वनामनिर्वचनयुक्ते ३अर्जुने "पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः" गीता। "विजित्य यः प्राज्यमयच्छदुत्तरान् कुरूनकुप्यं वसु वासवोपमः। स वल्कवासांसि तवाधुना हरन् करोति मन्युं न कथं धनञ्जयः" किरा०। ४तन्नामनामके अर्जुनवृक्षे रत्नमा०। ५विष्णौ च। "अनिर्देश्यवपुर्विष्णुर्वीरोऽनन्तो धनञ्जयः" विष्णुसं०। धन—रवे अच् धनस्य शब्दस्य जयनात् शब्दावाच्यत्वात् तस्य तथात्वम् "धनञ्जयस्तथा घोषे महाराजतवर्धकः। ललाटे चोरसि स्कन्धे हृदि नाभौ त्वगादिषु" योगार्णवोक्ते ६देहस्थे वायुभेदे। ७नागभेदे च "शेषः प्रथमतो जातः वासुकिस्तदनन्तरम्। ऐरावतस्तक्षकश्च कर्कोटकधनञ्जयौ" भा०आ० ३५ अ०।

**धनद** पु० धनं दयते देङ्—पालने धनं ददाति दा—दाने वा क। १कुबेरे अमरः। २धनदातरि त्रि० मेदि० ३देवीभेदे स्त्री स्वुल् धनदायिकाऽपि तत्र। "ध्यायेत् कल्पतरोर्मूले देवीं तां धनदायिकाम्"। तन्त्रसारे तन्मन्त्रध्यानादिकं दृश्यम्। कुवेरस्य पुलस्त्यपुत्रस्य विश्रवसः पुत्रः तत्कथा रामा० उ० ३अ० उक्ता। "अथ पुत्रः पुलस्त्यस्य विश्रवा मुनिपुङ्गवः। अचिरेणैव कालेन पितेव तपसि स्थितः। सत्यवान् शीलवान् दान्तः स्वाध्यायनिरतः शुचिः। सर्वभोगेष्वसंसक्तो नित्यं धर्मपरायणः। ज्ञात्वा तस्य तु तद्वृत्तं भारद्वाजो महामुनिः। ददौ विश्रवसे भार्य्यां स्वसुतां देववर्णिनीम्। प्रतिगृह्य तु धर्मेण भरद्वाजसुतां तदा। मुदा परमया युक्तो विश्रवा मुनिपुङ्गवः। स तस्यां वीर्य्यसम्पन्नमपत्यं परमाद्भुतम्। जनयामास धर्मज्ञः सर्वैर्ब्रह्मगुणैर्वृतम्। तस्मिन् जाते तु संहृष्टः संबभूव पितामहः। दृष्ट्वा श्रेयस्करीं बुद्धिं धनाध्यक्षो भविष्यति। नाम चास्याकरोत् प्रीतः सार्धं देवर्षिभिस्तदा। यस्माद्विश्रवसोऽपत्यं सादृश्याद्विश्रवा इव। तस्माद्वैश्रवणो नाम भविष्यत्येष विश्रुतः" "स तु वैश्रवणस्तत्र तपोवनगतस्तदा। अवर्धताहुतिहुतो महातेजा यथाऽनलः। तस्याश्रमपदस्थस्य बुद्धिर्जज्ञे महात्मनः। चरिष्ये परमं धर्मं धर्मो हि परमा गतिः। स तु वर्षसहस्राणि तपस्तप्त्वा महावने। यन्त्रितो नियमैरुग्रैश्चकार सुमहत्तपः। पूर्णे वर्षसहस्रान्ते तं तं विधिमकल्पयत्। जलाशी मारुताहारो निराहारस्तथैव च। एवं वर्षसहस्राणि जग्मुस्तान्येकवर्षवत्। अथ प्रीतो महातेजाः सेन्द्रैः सुरगणैः सह। गत्वा तस्याश्रमपदं ब्रह्मेदं वाक्यमब्रवीत्। परितुष्टोऽस्मि ते वत्स! कर्मणानेन सुव्रत!। वरं वृणीष्व भद्रन्ते वरार्हस्त्वं महामते!। अथाब्रवीद्वैश्रवणः पितामहमुपस्थितम्। भगवन्! लोकपालत्वमिच्छेयं लोकरक्षणम्। अथाब्रवीद्वैश्रवणं बाढमित्येव हृष्टवत्। अहं वै लोकपालानां चतुर्थं स्रष्टुमुद्यतः। यमेन्द्रवरुणानां च पदं यत्तव चेप्सितम्। तद्गच्छ वत्स! धर्मज्ञ! निधीशत्वमवाप्नुहि। शक्राम्बुपयमानां च चतुर्थस्त्वं भविष्यसि। एतच्च पुष्पकं नाम विमानं सूर्य्यसन्निभम्। प्रतिगृह्णीष्व यानार्थं त्रिदशैः समतां व्रज। स्वस्ति तेऽस्तु गमिष्यामः सर्व एव यथागतम्। कृतकृत्या वयं तात! दत्त्वा तव वरद्वयम्। इत्युक्त्वा स गतो ब्रह्मा स्वस्थानं त्रिदशैः सह। गतेषु ब्रह्मपूर्वेषु देवेष्वथ नभस्तलम्। धनेशः पितरं प्राह प्राञ्जलिः प्रयतात्मवान्। भगवन्! लब्धवानस्मि वरमिष्टं पितामहात्। निवासनं न मे देवो विदधे स प्रजापतिः। तं पश्य भगवन्! कञ्चिन्निवासं साधु मे प्रभो!। न च पीड़ा भवेद्यत्र प्राणिनो यस्य कस्यचित्। एवमुक्तस्तु पुत्रेण विश्रवा मुनिपुङ्गवः। वचनं प्राह धर्मज्ञ! श्रूयतामिति सत्तम!। दक्षिणस्योदधेस्तीरे त्रिकूटो नाम पर्वतः। तस्याग्रे तु विशाला सा महेन्द्रस्य पुरी यथा। लङ्का नाम पुरी रम्या निर्मिता विश्वकर्मणा। राक्षसानां निवासार्थं यथेन्द्रस्यामरावती। तत्र त्वं वस भद्रन्ते लङ्कायां नात्र संशयः"। तस्य धनाध्यक्षत्वात् धनदत्वम्। "यथा सार्धारणीभूतं नामास्य धनदस्य च" रघुः। ४धनञ्जयरूपे वायौ पु० धनपतिशब्दे दृश्यम्। ५वह्नौ ६चित्रकवृक्षे च पु०।

**धनदण्ड** पु० धनेन दण्डः। मनूक्ते धनग्रहणदण्डे "वाग्दण्डं प्रथमं कुर्य्यात् धिग्दण्डं तदनन्तरम्। तृतीयं धनदण्डं तु वधदण्डमतःपरम्"।

**धनदाक्षी** स्त्री धनदस्य कुबेरस्याक्षीव पिङ्गलं पुष्पमस्याः षच्समा० ङीष्। कुबेराक्षीलतायां लताकरञ्जे राजनि०।

**धनदानुज** पु० ६त०। १रावणे शब्द च० २कुम्भकर्णादौ च तेषां विश्रवसः कैकसीतो जातत्वात् तथात्वं तत्कथा। "सा त्वं मुनिवरं श्रेष्ठं प्रजापतिकुलोद्भवम्। भज विश्रवसं पुत्रि पौलस्त्यं वरय स्वयम्। ईदृशास्ते भविष्यन्ति पुत्राः पुत्रि! न संशयः। तेजसा भास्करसमो यादृशोऽयं धनेश्वरः। सा तु तद्वचनं श्रुत्वा कन्यका पितृगौरवात्। तत्र गत्वा च सा तस्थौ विश्रवा यत्र तप्यते"। "कन्यया त्वेवमुक्तस्तु विश्रवा मुनिपुङ्गवः। उवाच कैकसीं भूयः पूर्णेन्दुरिव रोहिणीम्। पश्चिमो यस्तव सुतो भविष्यति शुभानने!। मम वंशानुरूपः स धर्मात्मा च न संशयः। एवमुक्ता तु सा कन्या राम! कालेन केनचित्। जनयामास बीभत्सं रक्षोरूपं सुदारुणम्। दशग्रीवं महादंष्ट्रं नीलाञ्जनचयोपमम्। ताम्रोष्ठं विंशतिभुजं महास्यं दीप्तमूर्धजम्" "तस्य त्वनन्तरं जातः कुम्भकर्णो महाबलः। प्रमाणाद्यस्य विपुलं प्रमाणं नेह विद्यते। ततः शूर्पणखा नाम संजज्ञे विकृतानना। विभीषणश्च धर्मात्मा कैकस्याः पश्चिमः सुतः" "भुजमूर्द्धोरुबाहुल्यात् एकोऽपि धनदानुजः" रघुः।

**धनदायिन्** त्रि॰ धनं ददाति दा–णिनि ६त॰। १धनदातरि २वह्नौ पु॰ शब्दरत्ना॰ "धनमिच्छेत् हुताशनात्" इत्युक्तेस्तस्य तथात्वम्।

**धनदेश्वर** पु॰ काशीस्थे कुबेरस्थापिते शिवलिङ्गभेदे।

**धनन्ददा** स्त्री धनं ददते दद–बा॰ खच् मुम्। बुद्धशक्तिभेदे त्रिका॰।

**धनपति** पु॰ ६त॰। १कुबेरे "सन्देशं मे हर धनपतिक्रोधविश्लेषितस्य" "नत्वा देवं धनपतिसखं यत्र साक्षाद्वसन्तम्" मेघ॰। २धनञ्जयाख्ये देहस्थे वायुभेदे च तस्य धनपतित्वकथा "शृणु चान्यां वसुपतेरुत्पत्तिं पापनाशिनीम्। यथा वायुः शरीरस्थो धनदः संबभूव ह। आद्यं शरीरं यस्मिन् वायुरन्तःस्थितोऽभवत्। प्रयोजनात् मूर्त्तिमत्त्वमादिशन् चैव देवताः। तत्रामूर्त्तस्य वायोस्तु उत्पत्तिः कीर्त्त्यते मया। तां शृणुष्व महाभाग! कथ्यमाना मयाऽनघ!। ब्रह्मणः सृजतः सृष्टिं मुखाद्वायुर्विनिर्ययौ। प्रचण्डशर्करावर्षी तं ब्रह्मा प्रत्यषेधयत्। मूर्त्तो भवस्व शान्तश्च तत्रोक्तो मूर्त्तिमान् भवन्। सर्वेषाञ्चैव देवानां यद्वित्तं फलमेव च। तत् सर्वं पाहि येनोक्तं तस्माद्धनपतिर्भव। तस्य ब्रह्मा ददौ तुष्टस्तिथिमेकादशीं प्रभुः। तस्यामनग्निपक्वाशी यो भवेन्नियतः शुचिः। तस्मै तु धनदो देवस्तुष्टः सर्वं प्रयच्छति। एषा धनपतेर्मूर्त्तिः सर्वकिल्बिषनाशिनी" वराह पु॰। (खाजाञ्चि) २धनाध्यक्षे त्रि॰।

**धनपाल** त्रि॰ धनं पालयति पालि–अण्। १धनरक्षके २कुबेरे पु॰।

**धनपिशाची** स्त्री धने पिशाचीव। अतिशयधनतृष्णायां स्वार्थे क। धनपिशाचिकाऽप्यत्र हारा॰।

**धनप्रयोग** पु॰ धनस्य वृद्ध्यर्थं प्रयोगः। ऋणरूपेण अधमर्णाय धनस्य दानरूपे प्रयोगे। तन्नक्षत्रादि मुहूर्त्तचिन्तामणौ पीयूषधारायाञ्चोक्तं यथा

"स्वात्यादित्यमृदुद्विदैवगुरुभे कर्णत्रयाश्वे चरे लग्ने धर्मसुताष्टशुद्धिसहिते द्रव्यप्रयोगः शुभः। नारे ग्राह्यमृणं तु संक्रमदिने वृद्धौ करेऽर्केऽह्नि यत् तद्वंशेषु भवेदृणं न च बुधे देयं कदाचिद्धनम्"। "स्वात्यादित्येति। स्वातीपुनर्वसुचित्रानुराधामृगरेवतीविशाखापुष्यश्रवणधनिष्ठाशततारकाश्विनीष्वेकादशसु नक्षत्रेषु द्रव्यप्रयोगः शुभः द्रव्यं परस्मै ऋणत्वेन देयं यदाह भीमपराक्रमः "मृदुपुष्याश्विनी चैव विशाखाश्रवणत्रयम्। पुनर्वसौ च शंसन्ति धनादिनिधिवर्त्तनम्। वर्त्तनमृणादिरूपेण दानं मिश्रनक्षत्रत्वाद्विशाखानिषेधे प्राप्ते ऋणदाने एव न निषेध इति विशेषः। हृतनष्टादौ तु निषिद्धैव। अथ लग्ने चरे मेषकर्कतुलामकराणामन्यतमे धर्मो नवमं सुतः पञ्चमम् अष्टशब्देन लक्षणयाष्टमस्थानमुच्यते तेषां शुद्धिः नवमपञ्चमस्थानयोः शुभग्रहसत्त्वं पापग्रहराहित्यञ्च अष्टमे तूभयराहित्यमित्यर्थः। एवंरूपया शुद्ध्या सहिते लग्ने ऋणं देयम्। उक्तञ्च रत्नमालायां "शुद्धेषु धर्मात्मजनैधनेषु चरे विलग्ने द्रविणप्रयोगः" इति। अथाऽऽरे मङ्गलवारे ऋणं न ग्राह्यं यदुक्तं ज्योतिःप्रकाशे "ऋणं भौमे न गृह्णीयान्न देयं बुधवासरे। ऋणच्छेदं कुजे कुर्यात् सञ्चयं सोमनन्दने"। अत्र तु विशेषे संक्रमः संक्रान्तिः तद्दिवसे, वृद्धौ वृद्धियोगे करेऽर्केऽह्नि हस्तनक्षत्रसहिते रविवारे हस्तार्के इति यावत्तत्रापि ऋणं न ग्राह्यमिति प्रत्येकं सम्बन्धः। ननु कुतो न ग्राह्यमित्यत आह यदिति यद्यस्मादेतेषूक्तेषु तद्वंशेषु ऋणग्रहीतृकुलेषु भवेत् तदृणं तत्पुत्रपौत्रादिभिरपि परिहर्त्तुमशक्यमित्यर्थः अर्थादेषु भौमसंक्रान्त्यादिदिनेषु ऋणमवश्यं परिहर्त्तव्यमिति निष्कृष्टोऽर्थः। "हस्तेऽर्कवारे संक्रान्तौ यदृणं स्यात् कुलेषु तत्। वृद्धियोगे तथा ज्ञेयमृणच्छेदं तु कारयेदिति" ज्योतिःप्रकाशकारोक्तेश्च। अथ बुधे बुधवारे कदाचिदप्यृणं न देयम्। "न देयं बुधवासरे" इत्यधुनैवोक्तत्वात्। पी॰धा॰ तत्र निषिद्धनक्षत्रादि तत्रैवोक्तं यथा

"तीक्ष्णमिश्रध्रुवोग्रैर्यद्द्रव्यं दत्तं निवेशितम्। प्रयुक्तञ्च विनष्टञ्च विष्ट्यां पाते न चाप्यते" मु॰ चि॰ "तीक्ष्णेति तीक्ष्णमिश्रध्रुवोग्रसंज्ञकैर्नक्षत्रैर्यद्द्रव्यं सुवर्णादि दत्तं कालान्तरं विनैव दत्तं न तु स्वत्वपरित्यागेन, तद्दत्तमित्युच्यते निवेशितं स्वेष्टसमीपे प्रत्ययार्थं स्थापितं प्रयुक्तं कलान्तरीतिपुरःसरोत्तमर्णाधमर्णव्यवहारेण कस्मैचिद्दत्तं, विनष्टं चौरादिना हृतं स्वयमेव वा क्वचित्त्यक्तं तद्द्रव्यं निश्चयेन कदाचिदपि नाप्यते तथा विष्ट्यां भद्रायां पाते व्यतीपाते महापाते वा हृतं द्रव्यं न प्राप्यते चकारादुपहरणेऽपि न देयमिति व्याख्येयं वसिष्ठवाक्यस्वरसात् उक्तञ्च वसिष्ठेन "ध्रुवोग्रसाधारणदारुणर्क्षैर्निक्षिप्तमर्थं त्वथ वा प्रनष्टम्। चौरैर्हृतं दत्तमुपप्लवे वा विष्ट्याञ्च पाते न च लभ्यते तत्"। उपप्लवे ग्रहणे। यत्तु केचिद्व्याकुर्वते "निश्चयेन चौरहृतस्य द्रव्यस्य

प्राप्यप्राप्तिविचारोऽश्वकादिनवसैरेव साक्षाभोऽस्यके निकट एव हृतस्य चौरैरित्युक्तत्वात्। चौरानिर्णये-त्वनेनैव विचारः" तच्चिन्त्यं वसिष्ठवाक्येऽपि चौरैर्हृ-तमिति साक्षाच्चौरपदोपादानादेव केनापि विचारः कर्त्तव्य इति युक्तमुत्पश्यामः। एवं चौरानिर्णयेऽपि स्वेच्छया विचारः तल्लोभश्चैक्ये प्राप्यप्राप्तिनिश्चय एव उभयैक्याभावे तु प्रयत्नेनेति"।

**धनप्रिया** स्त्री काकजम्बूवृक्षे राजनि०।

**धनर्च** पु० धनार्थमर्चा यस्य वेदे यजु०। धनार्थार्चायुक्ते यज्ञे "नार्चेयं धनर्चम्" ऋ० १०।४६।५।

**धनवत्** त्रि० धन+अस्त्यर्थे मतुप् मस्य वः। धनस्वामिनि "रूपसत्त्वगुणोपेता धनवन्तो यशस्विनः" "धनवन्तं प्रजा-वन्तं सात्त्विकं धार्मिकं तथा" मनुः स्त्रियां ङीप्। सा च २धनिष्ठानक्षत्रे जटा०। तस्य च धनदेवताकत्वात् तथात्वम्।

**धनसनि** त्रि० धन-सम्भक्तौ इन् ६त०। धनलाभयुक्ते "तस्य इमे वीणायां गायन्त्येनं ते गायन्ति। तस्मात्ते धनसनयः" छा० उ०। "धनसनयो धनलाभयुक्ता धन-वन्तः" भा०। [स्थाने।

**धनस्थान** न० धनचिन्तनार्थं स्थानम्। लग्नात् द्वितीय-

**धनस्य** नामधातुः लालसया धनमिच्छति धन+क्यच् लाल-सायां सुक् अक० प० सेट्। धनस्यति अधनस्यीत्। पक्षे असुक् धनायति इति भेदस्तत्रार्थे।

**धनस्यक** त्रि० धनस्य नामधातुः ण्वुल्। १लालसया धनेच्छौ २गोक्षुरे पु० शब्दच०।

**धनहर** त्रि० धनं हरति हृ-ताच्छील्यादौ ट। १धनहरणशीले चोरे स्त्रियां ङीप् सा च २चोरनामग-न्धद्रव्ये स्त्री अमरः तस्या धनहरचोरनामतुल्यनामक-त्वात्तथात्वम्। [२यवक्षारकन्दे पु० पारस्करनि०।

**धनहृत्** त्रि० धनं हरति हृ-क्विप् तुक्। १धनहारिणि

**धनाधिकारिन्** त्रि० धनमधिकरोति अधि+कृ-णिनि ६त०। धनाध्यक्षे (तहविलदार) ख्याते कोषाध्यक्षे। अधि+कृ-क्विप् तुक्। धनाधिकृदप्यत्र।

**धनाधिगोप्तृ** त्रि० धनमधिगोपायति अधि-गुप-वा आयाभावे तृच्। १धनपालके (खाजाञ्चि) ख्याते कोषा-ध्यक्षे स्त्रियां ङीप्। २कुबेरे पु०। "स तदुत्कृष्टस्यो-परि वर्त्तमान आलोकयामास धनाधिगोप्ता" भा० उ० १९२ अ०।

**धनाधिप** त्रि० धनमधिपाति अधि+पा-रक्षणे क ६त०। १धन-रक्षके (खाजाञ्चि) कोषाध्यक्षे २कुबेरे पु० अमरः। "धना-धिपेन वित्तस्य अनुह्रादस्य संयुगे" हरिवं० २५१ अ०।

**धनाधिपति** पु० ६त०। १कुबेरे "अनुचरेण धनाधिपतेरथो-नगविलोकनविस्मितमानसः" किरा०। "कौबेरं प्रययौ तीर्थं यत्र तप्त्वा महत्तपः। धनाधिपत्यं संप्राप्तो राज-न्नैलविलः प्रभुः" भा० शा० १८ अ०। अधिपतेर्भावः ष्यञ् आधिपत्यम् धनस्याधिपत्यमित्यर्थः।

**धनाध्यक्ष** त्रि० ६त०। (खाजाञ्चि) १कोषाध्यक्षे "कोष-वस्त्राजिनादीनां रत्नानाञ्च विधानवित्। विज्ञाता फल्गु-साराणामनाहार्य्यः शुचिः सदा। निपुणश्चाप्रमत्तश्च धनाध्यक्षः प्रकीर्त्तितः। आयद्वारेषु सर्वेषु धनाध्यक्ष-समा नराः। व्ययद्वारेषु च तथा कर्त्तव्याः पृथिवी-क्षिता" इति मत्स्यपु० २१५ अ० तल्लक्षणमुक्तं २कुबेरे पु०

**धनाय** नामधातुः आत्मनो धनमिच्छति क्यच् गर्द्धार्थे नि०। गर्द्धेन धनेच्छायाम्। पर० अक० सेट्। धनायति अधनायीत्। "शूद्रा यदर्य्यजारा न पोषाय धना-यति" यजु० २३।३०। "आनन्त्यं ह्यारभते न प्राणानां धनायते" भा० शा० १२२ अ०। आर्षस्तङ्। अगर्द्धे तु धनीयतीत्येव।

**धनायु** पु० नृपभेदे विष्णुपु०।

**धनार्थिन्** त्रि० धनमर्थयते अर्थ+णिनि ६त०। धनप्रार्थके "न तादृशं भवत्येनो मृगहन्तुर्धनार्थिनः" मनुः।

**धनाशा** स्त्री ६त०। धनलोभे "जीर्य्यन्ति जीर्य्यतः केशा दन्ता जीर्य्यन्ति जीर्य्यतः। धनाशा जीविताशा च जीर्य्यतोऽपि न जीर्य्यति" हरिवं० ३० अ०।

**धनाश्री** स्त्री रागिणीभेदे (धानसी) सा च हनुमन्मते श्री-रागस्य तृतीया भार्य्या। कल्लिनाथमते मेघरागस्य चतुर्थी भार्य्या।

**धनिक** त्रि० धनमादेयत्वेनाऽस्त्यस्य ठन्। उत्तमर्णे अधमर्ण-सकाशात् स्वप्रयुक्तधनग्राहके। "एकच्छायाश्रितेष्वेषु धनिकस्य यथारुचि" याज्ञ०। २साधौ वणिजि। धन-बा० इक। ३धन्याके पु० मेदि० राजनि० क्लीवत्वम्। ४धवे स्वामिनि पु० हेमच०। धनी स्वार्थे क। धनिका ५धनिकभार्य्यायां वणिक् स्त्रियां स्त्री मेदि०। ६वध्वाम् हेमच० ७युवत्यां शब्दरत्ना० ८प्रियङ्गुवृक्षे स्त्री शब्दच०। दशरूपकग्रन्थव्याख्यातरि ९विष्णुसूनौ विद्वद्भेदे पु०

**धनिन्** त्रि० धनमस्त्यस्य धन+इनि। धनवति "धनिनः श्रो-

स्त्रियो राजा नदी वैद्यश्च पञ्चमः” चाणक्यः। “अङ्गापण्ये धनिन्यार्थं निःक्षेपं निःक्षिपेद्बुधः” मनुः।

**धनिष्ठ** त्रि० अतिशयेन धनी इष्ठन् इनो लोपः। १अतिशय-धनयुक्ते स्त्रियां टाप् सा च अश्विन्यादिमध्ये २त्रयोविंशे नक्षत्रे स्त्री तस्या वसुदेवताकत्वात् तथात्वम्। श्रवणा शब्दे तत्स्वरूपादिकं दृश्यम्। तत्र धनिष्ठा पञ्चतारा इत्येव पाठः मुद्रादोषात् पञ्चतारेति त्रुटितम्। “मक-रोपरिसमागते धने मर्दलाकृतिनि पञ्चतारके। यान्ति कान्तिमति मेघवन्नतः शारदाम्बरसवल्लविभ्रिकाः” कालिदासः।

**धनी** स्त्री धनमस्त्यस्याः अच् गौरा० ङीष्। १युवत्यां स्वार्थे कापि वा न ह्रस्वः। धनीकापि तत्रार्थे शब्दच०।

**धनीय** नामधातुः आत्मनोऽर्थेन धनमिच्छति क्यच् प० सक० सेट्। धनीयति अधनयीत्। गर्द्धे तु धनायतीत्येव

**धनीयक** न० धनाय हितः छ संज्ञायां कन्। धन्याके रत्नमा०।

**धनु** पु० धन–उन्। १प्रियालवृक्षे २धनुर्द्धरे त्रि० मेदि०। ३शौण्डगन्तरि च “शब्याहरी धनुतरी” ऋ० ४।२५।५। “धनुतरी शीघ्रगन्तरौ” भा०। ४धनुषि च धन्वन्तरिः।

**धनुःपट** पु० धनुष इव पटो विस्तारोदले यस्य। (पियाशाल) वृक्षे वा सत्वे धनुष्पटोऽप्यत्र अमरः।

**धनुःशाखा** स्त्री धनुषः शाखा यस्याः। १मूर्वायाम् शब्दच०। धनुरवयव इव शाखा यस्याः। २पियालतरौ शब्दच०

**धनुःश्रेणी** स्त्री धनुषः श्रेणीव। १महेन्द्रवारुण्यां २मूर्वायाञ्च। राजनि०।

**धनुर्गुण** पु०६त०। १मौर्व्यां जीवायां शब्दच०। धनुषो गुणो यस्याः सकाशात् ५ब०। २ मूर्वायां स्त्री शब्दर०।

**धनुर्ग्रह** पु० धनुस्+उद्यमने ग्रह–अच्। धनुर्द्धरे तद्-ग्राहके तु अण् धनुर्ग्राह इत्येव। २धृतराष्ट्रपुत्रभेदे। “कवची निषङ्गी दण्डी दण्डधारो धनुर्ग्रहः” भा० आ० ६७अ० तत्पुत्रोक्तौ। ग्रह–भावे अप् ६त०। धनु-र्विद्यायाम् “गान्धर्वं नारदो वेदं भरद्वाजो धनुर्ग्रहम्” भा० शा० २१० अ०। ग्रहणार्थत्वात् तथात्वम्।

**धनुर्द्रुम** पु० धनुषः साधनं द्रुमः। वंशवृक्षे राजनि०। तस्य धनुःसाधनत्वात् तथात्वम्।

**धनुर्द्धर** पु० धनुर्धरति धृञ् अच् ६त०। धानुष्के धन्विनि अमरः “धनुर्द्धरः केशरिणं ददर्श” “सितावभूदेकधनु-र्द्धरोऽपि सः” रघुः। २धृतराष्ट्रपुत्रभेदे “कवची क्रथनः कुण्डी कुण्डधारी धनुर्द्धरः” भा० आ० ११७ तत्पुत्रोक्तौ। ३विष्णौ पु०। “धनुर्द्धरो धनुर्वेदः” विष्णुसं०।

**धनुर्द्धारिन्** त्रि० धरति धृ–णिनि ६त०। धानुष्के। “शूरश्च रथदक्षश्च गजाश्वरथकोविदः। धनुर्द्धारी भवे-द्राजा सर्वक्लेशसहः शुचिः” मत्स्यपु० २१४ अ० तस्य लक्षणमुक्तम्।

**धनुर्भृत्** पु० बिभर्त्ति भृ–कर्त्तरि क्विप् तुक् ६त०। धनुर्द्धरे धानुष्के। “धनुर्भृतोऽप्यस्य दयार्द्रभावम्” धनुर्भृता-मग्रत एव रक्षिणाम्” रघुः।

**धनुर्मख** पु० धनुरुपलक्षितो मखः। कृष्णाह्वानार्थं कंसेन कृतः क्रते यज्ञभेदे। “राजा धनुर्मखं नाम कारयिष्यति वै तयोः” हरिवं० ७६ अ०। धनुर्यागादयोऽप्यत्र। “आरभ्यतां धनुर्यागश्चतुर्दश्यां यथाविधि। विशसन्तु पशून् मेध्यान् भूतराजाय मीढुषे” भाग०१०।३६।२२। “उत्सवस्तत्र कंसस्य भविष्यति धनुर्महः” हरिवं०८अ०।

**धनुर्मध्य** न० ६त०। धनुषो मध्यमाने हस्तके धन्विभिर्वन धनुर्मध्यते तस्मिन् स्थाने अमरः।

**धनुर्माला** स्त्री धनुषो मालः सम्बन्धो यस्याः। मूर्वा-लतायाम् शब्दच०।

**धनुर्यास** पु० धनुरिव यासः। दुरालभायां सारसुन्दरी।

**धनुर्लता** स्त्री धनुरवयवयोग्या लता। सोमवल्ल्यां राजनि०।

**धनुर्वक्त्र** पु० धनुरिव वक्त्रमस्य। कुमारानुचरभेदे। “विद्यु-ताक्षो धनुर्वक्त्रो जाठरो मारुताशनः” भा० श० ४६ अ० तदनुचरोक्तौ।

**धनुर्विद्या** स्त्री धनुषो विद्या। धनुरादीनां प्रयोगसंहार-ज्ञापके विद्याभेदे तदारम्भनक्षत्रादि दीपिकायामुक्तं यथा “अदितिगुरुयमार्कस्वातिचित्राश्विपित्र्यध्रुवहरि-वसुमूलाश्वीन्दुभाग्यान्त्यभेषु। विशनिशशिबुधाह्वे विष्णु-बोधे विपौषे शुभसमयतिथियोगे चापविद्याप्रदानमिति”।

**धनुर्वृक्ष** पु० धनुः साधनं धनुरिव वा वृक्षः। १वंशे २धन्वन-वृक्षे ३भल्लातकवृक्षे ४अश्वत्थवृक्षे च राजनि०।

**धनुर्वेद** पु० धनूंषि तदादीन्यस्त्राणि विद्यन्ते ज्ञायन्तेऽनेन विद–ज्ञाने करणे घञ्। यजुर्वेदस्योपवेदभेदे स च चतुष्-पादः अग्निपु० तत्र प्रतिपद्यविषयादिकमुक्तं यथा “अग्निरुवाच। चतुष्पादं धनुर्वेदं वदे पञ्चविधं द्विज!। रथनागाश्वपत्तीनां योधांश्चाश्रित्य कीर्त्तितम्। यन्त्र-मुक्तं१ पाणिमुक्तं२ मुक्तसन्धारितं३ तथा। अमुक्तं४ बाहुयुद्धञ्च५ पञ्चधा तत् प्रकीर्त्तितम्। तत्र शस्त्रास्त्र-

सम्पत्त्या द्विविधं परिकीर्त्तितम्। ऋजुमायाविभेदेन भूयो द्विविधमुच्यते। क्षेपणीचापयन्त्राद्यैर्यन्त्रमुक्तं, प्रकीर्त्तितम्। शिलातोमरयन्त्राद्यं पाणिमुक्तं २ प्रकीर्त्तितम्। मुक्तसन्धारितं ज्ञेयं प्रासाद्यमपि यद्भवेत्। खड्गादिकममुक्तञ्च नियुद्धं विगतायुधम्। कुर्य्याद्योग्यानि पात्राणि योद्धुमिच्छुर्जितश्रमः। धनुःश्रेष्ठानि युद्धानि प्रासमध्यानि तानि च। तानि खड्गजघन्यानि बाहुप्रत्यवरानि च। धनुर्वेदे गुरुर्विप्रः प्रोक्तो वर्णद्वयस्य च। युद्धाधिकारः शूद्रस्य स्वयं व्यापदि शिक्षया। देशस्थैः सङ्करै राज्ञः कार्य्या युद्धे सहायता। अङ्गुष्ठगुल्फपाण्यङ्घ्रि श्लिष्टाः स्युः सहिता यदि। दृष्टं समपदं स्थानमेतल्लक्षणतस्तथा। बाह्याङ्गुलिस्थितौ पादौ स्तब्धजानुबलावुभौ। त्रिवितस्त्यन्तरास्थानमेतद्वैशाखमुच्यते। हंसपङ्क्त्याकृतिसमे दृश्येते यत्र जानुनी। चतुर्वितस्तिविच्छिन्ने तदेतन्मण्डलं स्मृतम्। हलाकृतिसमं यत्र स्तब्धजान्वृद्दक्षिणम्। वितस्त्यः पञ्च विस्तारे तदालीढं प्रकीर्त्तितम्। एतदेव विपर्य्यस्तं प्रत्यालीढमिति स्मृतम्। तिर्य्यग्भूतो भवेद्वामो दक्षिणोऽपि भवेदृजुः। गुल्फौ पार्ष्णिग्रहौ चैव स्थितौ पञ्चाङ्गुलान्तरौ। स्थानं जातं भवेदेतद्द्वादशाङ्गुलमायतम्। ऋजुजानुर्भवेद्वामो दक्षिणः सुप्रसारितः। अथ वा दक्षिणं जानु कुब्जं भवति निश्चलम्। दण्डायतो भवेदेष चरणः सह जानुना। एवं विकटमुद्दिष्टं द्विहस्तान्तरमायतम्। जानुनी द्विगुणे स्यातामुत्तानौ चरणावुभौ। अनेन विधियोगेन सम्पुटं परिकीर्त्तितम्। किञ्चिद्विवर्त्तितौ पादौ समदण्डायतौ स्थिरौ। दृष्टमेव यथान्यायं षोड़शाङ्गुलमायतम्। स्वस्तिकेनात्र कुर्वीत प्रणामं प्रथमं द्विज!। कार्म्मुकं गृह्य वामेन वाणं दक्षिणकेन तु। वैशाखे यदि वा जाते स्थितौ वाप्यथ वायतौ। गुणान्तन्तु ततः कृत्वा कार्म्मुके प्रियकार्म्मुकः। अधःकटिन्तु धनुषः फलदेशन्तु पत्रिणः। धरण्यां स्थापयित्वा तु तोलयित्वा तथैव च। भुजाभ्यामत्र कुब्जाभ्यां प्रकोष्ठाभ्यां शुभव्रत!। यस्य वाणं धनुःश्रेष्ठं पुङ्खदेशे च पत्रिणः। विन्यासो धनुषश्चैव द्वादशाङ्गुलमन्तरम्। ज्यया विशिष्टः कर्त्तव्यो नातिहीनो न चाधिकः। निवेश्य कार्म्मुकं नाभ्यां नितम्बे शरसङ्ग्रयम्। उत्क्षिपेदुत्थितं हस्तमन्तरेणाक्षकर्णयोः। पूर्व्वेण मुष्टिना ग्राह्यं स्तनाग्रे दक्षिणे शरः।

हरणन्तु ततः कृत्वा शीघ्रं पूर्व्वं प्रसारयेत्। नाभ्यन्तरा नैव वाह्या नोर्द्ध्वका नाधरा तथा। न च कुब्जा न चोत्ताना न चला नातिवेष्टिता। समा स्थैर्य्यगुणोपेता पूर्व्वा दण्डमिव स्थिता। छादयित्वा ततो लक्ष्यं पूर्व्वेणानेन मुष्टिना। उरसा तूत्थितो यन्ता त्रिकोणविनतस्थितः। स्तब्धाङ्गो विनतग्रीवो मयूराञ्चितमस्तकः। ललाटनासावक्त्रांसाः कुर्य्युरंसमसमं भवेत्। अन्तरं त्र्यङ्गुलं ज्ञेयं चिबुकस्यांसकस्य च। प्रथमन्त्र्यङ्गुलं ज्ञेयं द्वितीये द्व्यङ्गुलं स्मृतम्। तृतीयेऽङ्गुलमुद्दिष्टमायतं चिबुकांसयोः। गृहीत्वा सायकं पुङ्खात्तर्ज्जन्याङ्गुष्ठकेन तु। अनामया पुनर्गृह्य तथा मध्यमयापि च। तावदाकर्षयेद्वेगाद्यावद्वाणः सुपूरितः। एवंविधमुपक्रम्य मोक्तव्यं विधिवत् खगम्। दृष्टिमुष्टिहतं लक्ष्यं भिन्द्याद्वाणेन सुव्रत!। मुक्त्वा तु पश्चिमं हस्तं क्षिपेद्वेगेन पृष्ठतः। एतदुच्छेदमिच्छन्ति ज्ञातव्यं हि त्वया द्विज!। कूर्परन्तदधः कार्य्यमाकृष्य तु धनुष्मता। ऊर्द्ध्वं विमुक्तके कार्य्यमक्लिष्टन्तु मध्यमम्। श्रेष्ठं प्रकृष्टं विज्ञेयं धनुःशास्त्रविशारदैः। ज्येष्ठस्तु सायको ज्ञेयो भवेद्द्वादशमुष्टयः। एकादश तथा मध्यः कनीयान्दश मुष्टयः। चतुर्हस्तं धनुःश्रेष्ठं त्रयः सार्द्धास्तु मध्यमम्। कनीयस्तु त्रयं प्रोक्तं नित्यमेव पदातिनः। अश्वे रथे गजे श्रेष्ठं तदेव परिकीर्त्तितम्” २४८अ०। अग्निरुवाच। “पूर्णायतं द्विजः कृत्वा ततो मांसैर्गदायुधान्। सुनिर्धौतं धनुः कृत्वा रङ्गभूमौ निधापयेत्। ततो वाणं समादद्याद्दंशितः सुसमाहितः। तूणमासाद्य बध्नीयाद्दृढां कक्षाञ्च दक्षिणाम्। विलक्ष्यमपि तद्वाणं तत्र चैव सुसंस्थितम्। ततः समुद्धरेद्वाणं तूणाद्दक्षिणपाणिना। तेनैव सहितं मध्ये शरं सङ्गृह्य धारयेत्। वामहस्तेन वै कक्षां धनुस्तस्मात्समुद्धरेत्। अविषण्णमतिर्भूत्वा गुणे पुङ्खं निवेशयेत्। सम्पीड्य सिंहकर्णेन पुङ्खेनापि समे दृढ़ः। वामकर्णोपविष्टञ्च फलं वामस्य धारयेत्। वर्णान् मध्यमया तत्र वामाङ्गुल्या च धारयेत्। मनो लक्ष्यगतं कृत्वा मुष्टिना च विधानवित्। दक्षिणे गात्रभागे तु कृत्वा वाणं विमोक्षयेत्। ललाटपुटसंस्थानं दण्डं लक्ष्ये निवेशयेत्। आकृष्य ताड़येत्तत्र चन्द्रकं षोड़शाङ्गुलम्। मुक्त्वा वाणं ततः पश्चादुत्काक्षिणस्तदा तथा। निगृह्णीयान्मध्यमया ततोऽङ्गुल्या पुनः पुनः। अक्षिलक्ष्यं क्षिपेत्तूणाच्छरमञ्च दक्षिणम्। चतुरस्र-

मतं वेध्यमध्यसेद्वादितः स्थितः। तस्मादनन्तरं तीक्ष्णं पराहत्तं गतञ्च यत्। निम्नमुन्नतवेधञ्च अभ्यसेत् क्षिप्रकन्ततः। वेध्यस्थानेष्वथैतेषु सत्वस्य पुटकं धनुः। हस्तावापशतैश्चित्रैस्तर्जयेद्दुस्तरैरपि। तस्मिन् वेध्यगते विप्र! द्वे वेध्ये दृढसञ्ज्ञके। द्वे वेध्ये दुष्करे वेध्ये द्वे तथा चित्रदुष्करे। नतनिम्नञ्च तीक्ष्णञ्च दृढवेध्ये प्रकीर्त्तिते। निम्नं दुष्करमुद्दिष्टं वेध्यमूर्द्ध्वगतञ्च यत्। मस्तकायनमध्ये तु चित्रदुष्करसञ्ज्ञके। एवं वेध्यगुणङ्कृत्वा दक्षिणेनेतरेण च। आरोहेत् प्रथमं वीरो जितलक्ष्यस्ततो नरः। एष एवंविधः प्रोक्तस्तत्र दृष्टः प्रयोक्तृभिः। अधिकं भ्रमणं तस्य तस्माद्वेध्यात् प्रकीर्त्तितम्। लक्ष्यं संयोजयेत्तत्र पत्रिपत्रगतं दृढम्। भ्रान्तं प्रचलितञ्चैव स्थिरं यच्च भवेदिति। समन्तात्ताडयेद्भिन्द्याच्छेदयेद्व्यथयेदपि। कर्म्मणां संविधानज्ञो ज्ञात्वैवं विधिमाचरेत्। मनसा चक्षुषा दृष्ट्या योगशिक्षुः यमं जयेत्" २४९अ० "अग्निरुवाच। जितहस्तो जितमतिर्जितदृग् लक्ष्यसाधकः। नियतां सिद्धिमासाद्य ततो वाहनमारुहेत्। दशहस्तो भवेत् पाशो वृत्तः करमुखस्तथा। गुणकार्पाससुञ्जानां भङ्गार्क्कस्नायुवर्म्मिणाम्। अन्येषां सुदृढानाञ्च सुकृतं परिवेष्टितम्। तथा त्रिंशत्समं पाशं बुधः कुर्य्यात् सुवर्त्तितम्। कर्त्तव्यं शिक्षकैस्तस्य स्थानं कक्षासु वै तदा। वामहस्तेन सङ्गृह्य दक्षिणेनोद्धरेत्ततः। कुण्डलस्याकृतिं कृत्वा भ्राम्यैकं मस्तकोपरि। क्षिपेत् तृणमये तूर्णं पुरुषे चर्म्मवेष्टिते। वल्गिते च प्लुते चैव तथा प्रव्रजितेषु च। सम्यग्योगविधिं कृत्वा प्रयुञ्जीत सुशिक्षितम्। विजित्य तु यथान्यायं ततो बन्धं समाचरेत्। कट्यां बद्ध्वा ततः खड्गं वामपार्श्वावलम्बितम्। दृढं निगृह्य वामेन निष्कर्षेद्दक्षिणेन तु। षडङ्गुलपरीणाहं सप्तहस्तसमुच्छ्रितम्। अयोमय्यः शलाकाश्च वर्म्माणि विविधानि च। ऊर्द्ध्वहस्ते समे चैव तिर्य्यगूर्द्ध्वगतं तथा। योजयेद्विधिना येन तथा त्वङ्कुदतः शृणु। तृणचर्म्मावनद्धाङ्गं स्थापयित्वा नरं दृढम्। करेणादाय लगुडं दक्षिणाङ्गुलकं नवम्। उद्यम्य घातयेद्यस्तु नाशयेन रिपोर्दृढम्। उभाभ्यामथ हस्ताभ्यां कुर्य्यात्तस्य निपातनम्। अक्लेशेन ततः कुर्व्वन् वधे सिद्धिः प्रकीर्त्तिता। वाहानां श्रमकरणं प्रचारार्थं पुरा तव" २५० "अग्निरुवाच। भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं विप्लुतं सृतम्। सम्पातं समुदीर्णञ्च श्येनपातमथाकुलम्। उद्धूतमवधूतञ्च सव्यं दक्षिणमेव च। अनालक्षितविस्फोटौ करालेन्द्रमहासखौ। विकरालनिपातौ च विभीषणभयानकौ। समग्रार्द्धतृतीयांशपादपादार्द्धवारिजाः। प्रत्यालीढमथालीढं वराहं लुलितन्तथा। इति द्वात्रिंशतो ज्ञेयाः खड्गचर्म्मविधौ रणे। परावृत्तमपावृत्तं गृहीतं लघुसञ्ज्ञितम्। ऊर्द्ध्वक्षिप्तमधःक्षिप्तं सन्धारितविधारितम्। श्येनपातं गजपातं ग्राहग्राह्यन्तथैव च। एवमेकादशविधा ज्ञेयाः पाशविधा रणाः। ऋज्वायतं विशालञ्च तिर्य्यग्भ्रामितमेव च। पञ्चकर्म्म विनिर्द्दिष्टं व्यस्ते पाशे महात्मभिः। छेदनं भेदनं पातो भ्रमणं शमनं तथा। विकर्त्तनं कर्त्तनञ्च चक्रकर्म्मेदमेव च। आस्फोटः क्ष्वेडनं भेदस्त्रासान्दोलितकौ तथा। शूलकर्म्माणि जानीहि पञ्चाघातसञ्ज्ञितम्। दृष्टिघातं भुजाघातं पार्श्वघातं द्विजोत्तम!। ऋजुपक्षेषणाघातं तोमरस्य प्रकीर्त्तितम्। आहतं विप्लुतं चैव प्रभूतकमलासनम्। ततोऽर्द्धनामं नमितं वामदक्षिणमेव च। आवृत्तञ्च परावृत्तं पादोद्धूतमवप्लुतम्। हंसमार्गं विमर्द्दञ्च गदाकर्म्म प्रकीर्त्तितम्। करालमवघातञ्च दंशोपप्लुतमेव च। क्षिप्तहस्तं स्थितं शून्यं परशोस्तु विनिर्द्दिशेत्। ताड़नं छेदनं विप्र! तथा चूर्णनमेव च। मुद्गरस्य तु कर्म्माणि तथा मुषलघातनम्। संभ्रान्तमथ विश्रान्तं गोविसर्गं सुदुर्द्धरम्। भिन्दिपालस्य कर्म्माणि लगुडस्य च तान्यपि। अन्त्यं मध्यं परावृत्तं निदेशान्तं द्विजोत्तम!। वज्रस्यैतानि कर्म्माणि पट्टिशस्य च तान्यपि। हरणं छेदनं घातो बलोद्धारणमायतम्। कृपाणकर्म्म निर्द्दिष्टं पातनं स्फोटनं तथा। त्रासनं रक्षणं घातो बलोद्धरणमायतम्। क्षेपणीकर्म्म निर्द्दिष्टं यन्त्रकर्म्मैतदेव तु। सन्त्यागमवदंशश्च वराहोद्धूतकं तथा। हस्तावहस्तमालीनमेकहस्तावहस्तके। द्विहस्तबाहुपाशे च कटिरेचितकोद्गते। उरोललाटघाते च भुजाविधमनन्तथा। करोद्धूतं विमानञ्च पादाहति विपादिकम्। गात्रसंश्लेषणं शान्तं तथा गात्रविपर्य्ययः। ऊर्द्ध्वप्रहारं घातञ्च गोमूत्रं सव्यदक्षिणे। पारकन्तारकं गण्डं कवचं विधमाकुलम्। तिर्य्यग्बन्धमपामार्गं भीमवेगं सुदर्शनम्। सिंहाक्रान्तं गजाक्रान्तं गर्द्दभाक्रान्तमेव च। गदाकर्म्माणि जानीयान्नियुद्धस्याथ कर्म्म च। आकर्षणं विकर्षञ्च बाहूनां

मूलमेव च। ग्रीवाविपरिवर्त्तञ्च पृष्ठभङ्ग मुदाहृतम्। पर्य्यासनविपर्य्यासौ पशुमारमजाविकम्। पादप्रहारमास्फोटं कटिरेचितकन्तथा। गात्रासंश्लेषं स्कन्धगतं मही्व्याजनमेव च। उरोललाटघातञ्च विसृष्टकरणन्तथा। उद्धूतमवधूतञ्च तिर्य्यङ्मार्गगतं यथा। गजस्कन्धमवक्षेपमपराङ्मुखमेव च। देवमार्गमधोमार्गममार्गगमनाकुलम्। यष्टिघातमवक्षेपो वसुधादारणन्तथा। जानुबन्धं भुजाबन्धं गात्रबन्धं मुदाहृतम्। विपृष्ठं सोदकं सभ्रं भुजावेष्टितमेव च। सन्नद्धैः संयुगे भाव्यं सशस्त्रैस्तैर्गजादिभिः। वराङ्कुशधरौ चोभौ एको ग्रीवागतोऽपरः। स्कन्धगौ द्वौ च धानुष्कौ द्वौ च खड्गधरौ गजे। रथे रथे गजे चैव तुरङ्गाणां त्रयं त्रयम्। धानुष्काणान्त्रयं प्रोक्तं रक्षार्थं तुरगस्य च। धन्विनो रक्षणार्थाय चर्म्मिणन्तु नियोजयेत्। स्वमन्त्रैः शस्त्रमभ्यर्च्य शास्त्रन्त्रैलोक्यमोहनम्। यो युद्धे याति स जयेदरीन् सम्पालयेद्भुवम्"।

धनूंषि धनुषः प्रयोगोपसंहारान् वेत्ति जानाति विद्–अण् उप० स०। २धानुष्के त्रि० ३विष्णौ पु०। "धनुर्द्धरो धनुर्वेदः" विष्णुस०। भावे घञ्। ४विद्याभेदे अष्टादशविद्याशब्दे ५४२ पृ० दृश्यम्।

**धनुष** पु० धन–बा० उषन्। ऋषिभेदे "धनुषाक्षोऽथ रैभ्यश्च अर्वावसुपरावसू" भा० शा० ३३८ अ०।

**धनुषाक्ष** पु० ऋषिभेदे "आससाद महावीर्य्यं धनुषाक्षं मनीषिणम्" भा० व० १२५ अ०।

**धनुष्कपाल** पु० धनुषः कपालमिव इस्तुसोः सामर्थ्यं सत्वम्। धनुरवयवे। कस्कादिषु पाठस्तु असामर्थ्यार्थः।

**धनुष्कर** त्रि० धनुः करोऽस्य इसुसोः सामर्थ्यं सत्वम्। धनुर्हस्ते १धानुष्के। धनुः करोति कृ–ट। २चापकारके शिल्पिभेदे त्रि०। अहेत्वादौ तु अण् धनुष्कार। तत्कर्मार्थे त्रि०। "इषुकारं हेत्यै धनुष्कारं कर्मणे ज्याकारं दिष्टाय" यजु० ३०।७।

**धनुष्पाणि** त्रि० धनुः पाणौ यस्य इसुसोः सामर्थ्यं सत्वम्। धनुर्हस्ते "युवजानिर्धनुष्पाणिः" भट्टिः।

**धनुष्मत्** त्रि०धनुः धार्य्यत्वेनास्त्यस्य मतुप्। धनुर्द्धरे अमरः। "भीष्मो धनुष्मानुपजान्वरत्निः। (जामदग्न्यः) भट्टिः।

**धनुस्** न० धन–शब्दे उसि। १चापे शरनिक्षेपयन्त्रभेदे अमरः। ज्याकर्षणोत्थशब्दयोगात्तस्य तथात्वम्। तल्लक्षणम्। "धनुस्तु द्विविधं प्रोक्तं शार्ङ्गं वांशं तथैव च। कोमलं वर्णदृढता तयोर्गुण उदाहृतः। सुखसम्पत्तिकरणं समसुष्ट्यायतं धनुः। विपदो मुष्टिवैषम्ये तदङ्गे भङ्गभावहेतुः मुक्तिकल्पतरुः। धनुर्वेदशब्दे तल्लक्षणादि दृश्यम्। २पियालवृक्षे पु० मेषावधिके ९नवमे राशौ "नास्वर्णभाः शैवसमोदयोऽतिशब्दोदिनं प्राक् द्रढस्त्वप्रीतः। रक्तोष्णपित्तो धनुरल्पसूतिरङ्गो हिमर्त्तिर्द्विपदोन्भिरूपः" नी० ता०। अयञ्च राशिः २१६०० कलात्मकस्य राशिचक्रस्य १४४०० कलोत्तरं १८०० कलात्मकः मूलपूर्वाषाढोत्तराषाढा प्रथमचरणात्मकः। "मूलं पूर्वाषाढा प्रथमश्चाप्यतारांशको धन्वी" ज्यो०त०। अस्य स्वरूपं "चापी नरोऽश्वजघनः" इत्युक्ता०। "अश्वतुल्यजघनः नरस्तेन चतुष्पादित्यर्थः। यथाह यवनेश्वरः। "धन्वी मनुष्यो हयपश्चिमार्द्धस्तमाङ्कः" भट्टोत्पलः। ४चतुर्हस्तमाने क्रोशशब्दे २३४०पृ० दृश्यम्। ५धनुर्द्धरे त्रि० शब्दार्थचि०। गोलक्षेत्रस्य व्यासार्द्धात् न्यूने वृत्तांशभेदे चापशब्दे क्षेत्रशब्दे च दृश्यम्। "ज्यां प्रोज्झ्य शेषं तत्त्वाश्वि-हृतं तद्विवरोद्धृतम्। सङ्ख्यातत्त्वाश्विसंवर्गे संयोज्य धनुरुच्यते" स्र० सि०। "यस्य धनुः कर्त्तुमिष्टं तस्मिञ्च शुद्धपूर्व ज्यापिण्डं न्यूनीकृत्य शेषं पञ्चाकृतिगुणं तद्विवरोद्धृतं तयोः शुद्धाशुद्धपिण्डयोरन्तरेण भक्तं फलं शुद्धज्या यतमा ततमसङ्ख्यातत्त्वाश्विनोः संवर्गे याते संयोज्य सिद्धं धनुः कथ्यते। अत्रोपपत्तिः। ज्या यतमा शुद्धाति ततमायाश्चापकलायास्ततमसङ्ख्यागुणिततत्त्वाश्विनः ज्यान्तरेण तत्त्वाश्विकलास्तदा शेषज्यायाः कैत्यनुपातागतफलयुता इति वैपरीत्येन सुगमतरा" रङ्ग०। बहु० अनङ्। धृतधन्वा इत्यादि धन्वना शब्देनैव तत्प्रयोगोपपत्तौ धृतधनुरित्यादिप्रयोगनिरासार्थमनङ्विधानम्।

**धनुस्तम्भ** पु० सुश्रुतोक्ते विकृते वायुभेदे। "धनुस्तुल्यं नमेद्यस्तु स धनुस्तम्भसंज्ञकः" तत्र लक्षितम्।

**धनू** स्त्री धन–ऊ। धनुषि उज्ज्व०।

**धनेयक** न० धन्याक+पृषो०। धन्याके भरतः।

**धनेश** पु० ६त०। १कुवेरे "इमे चैवाष्टकलशाः निधीनामंशसम्भवाः। कलया राजराजस्य धनेशस्य महात्मनः" हरिवं० १०८। २लग्नात् द्वितीयस्थानपतौ च। धनेश्वरादयोऽप्यत्र। "धनेश्वरस्यानुचरो वरदोऽस्मि नृपात्मजे" भा०उ० १९२अ०। "भाग्येश्वराख्ये शधनेश्वराणामेकोऽपि चन्द्रादादि केन्द्रवर्त्ती। स्वपुत्रलाभाधिपतिर्यदि स्याद्दृश्यमानसामाज्यपति-

त्वमेति” ज्यो॰त॰। ३विष्णौ “रत्नगर्भो धनेश्वरः” विष्णुस॰।

**धन्ध** न॰ धन–बा–ध। अल्पाकारे त्रिका॰। स्वार्थे ष्यञ् धान्ध्यमप्यत्रार्थे त्रिका॰।

**धन्य** त्रि॰ धनं लब्धा “धनगणं लब्धा” पा॰यत्। धनस्य निमित्तं संयोग उत्पातो वा “गोद्व्यच” पा॰यत्। धनाय हितं वा यत्। १धनस्य लब्धरि २धननिमित्ते संयोगादौ ३धन-प्रयोजनके ४धनाय हिते ५श्लाघ्ये च। ६अश्वकर्णवृक्षे पु॰ राजनि॰ ७सुखवति ८सुकृतिनि त्रि॰ अमरः। “धन्यासि वैदर्भि! गुणैरुदारैः” नैष॰। “धन्यास्ता गुणरत्न-रोहणभुवो धन्या मृदन्यैव सा” सा॰ द॰। “धन्योऽसि यस्य हरिरेष समक्ष एव” माघः। “धन्यं यशस्यमा-युष्यं स्वर्ग्यं चातिथिपूजनम्” मनुः। ९कृतार्थे त्रि॰। १०विष्णौ पु॰ “सुमेधा मेधजो धन्यः” विष्णुस॰। “धन्यः कृतार्थः” भा॰। ११आमलक्यां धात्र्याम् १२उपमातरि मेदि॰ १३पिण्डारकवनदेवताभेदे च स्त्री १४धन्याके स्त्री हेमच॰। [ व्रतभेदे।

**धन्यव्रत** न॰ धनाय हितं यत् धन्यं कर्म॰। वराहपु॰ उक्ते

**धन्याक** पु॰ धन्यते भक्षार्थिभिः पिन्याकादि॰ नि॰। (धनिया) ख्याते पदार्थे “शिलायां साधुसम्पिष्टं धन्याकं वस्त्रगालितम्। शर्करोदकसम्मिश्रं कर्पूरादिसुसंस्कृतम्। नवीने मृण्मये पात्रे स्थितं पित्तहरं परम्” भावप्र॰।

**धन्व** गतौ भ्वा॰ भ्वा॰प॰सक॰ सेट्। धन्वति अधन्वीत् दधन्व। “राजाय धन्याय धन्वसि” ऋ॰ ९।८६।३१ “परिषिच्य-मानाः क्षयं सुवीरं धन्वन्तु सोमाः” ९।९७।२६।

**धन्व** न॰ धन्व–अच्। १चापे भरतः। “धनुर्द्धराय देवाय प्रियधन्वाय धन्विने” भा॰ द्रो॰ १०१ अ॰। २धन्वन्तरि-पितरि राजभेदे “काश्यस्य काश्यपः पुत्रो राजा दीर्घतपास्तथा। धन्वस्तु दीर्घतपसो धन्वात् धन्वन्तरिः सुतः” हरिवं॰ २९ अ॰।

**धन्वङ्ग** पु॰ धन्वोः धनुषोऽङ्गमिवाङ्गमस्य। (धामनि) ख्याते वृक्षभेदे “धन्वङ्गः कफपित्तास्रकासहृत् तुवरो मधुः। वृंहणो बलकृद्रूक्षः सन्धिकृद् व्रणरोपणः” भावप्र॰।

**धन्वचर** त्रि॰ धन्वना धनुषा सह चरति चर–ट। १धानुष्के। “धन्वचरो न वंसगः” ऋ॰ ५।३६।१।

**धन्वज** धन्वनि मरुदेशे जायते जन–ड। १मरुभवे “जङ्ग-लानां धन्वजानाञ्च पिप्पल्यासवम्” सुश्रुतः।

**धन्वदुर्ग** न॰ धन्वना कृतं दुर्गम्। चतुर्दिशं पञ्चयोजनमरु-वेष्टिते दुर्गभेदे दुर्गशब्दे दृश्यम्।

**धन्वन्** पु॰ धवि–कनिन्। १अल्पोदकदेशे मरुदेशे अमरः। धन्वति शरोऽस्मात् अपादाने कनिन्। २चापे ३स्थलमात्रे च मेदि॰। ४आकाशे माधवः “धन्वच्युत इषां न यामनि” ऋ॰१।१६८।५। धन्वच्युतः आकाशच्युतः धन्वन्शब्दो-ऽन्तरीक्षस्य वचनः तेन तत्स्थमुदकं लक्ष्यते” भा॰।

**धन्वन** पु॰ धन्व–सौ॰ ल्यु। (धामनि) इति ख्याते धन्वङ्ग-वृक्षे रत्नमाला। “चन्दनैः स्यन्दनैः शालैः सरलै-र्देवदारुभिः। वेतसैर्धन्वनैश्चापि ये चान्ये वनवत्तराः” भा॰ शा॰ ११५ अ॰।

**धन्वन्तर** न॰ चतुर्हस्तमिते दण्डरूपे परिमाणभेदे। “वि-तस्तिः स्याद्ततो द्वाभ्यां हस्तः स्यात्तच्चतुष्टयम्। दण्डो धन्वन्तरं तस्य सहस्रद्वितयेन तु” (क्रोशः) त्रिका॰।

**धन्वन्तरि** पु॰ धनोः तन्निमित्तशल्यस्यान्तं पारमृच्छति ऋ-गतौ इन् किच्च। १समुद्रोत्थिते देववैद्यभेदे। धन्वन्तरि-स्ततो देवोवपुष्मानुदतिष्ठत” भा॰ आ॰ १८ अ॰। द्वापरे तस्योत्पत्तिकथा हरिवं॰ १९ अ॰ यथा।

“धन्वन्तरेः सम्भवोऽयं श्रूयतां भरतर्षभ!। स सम्भूतः समुद्रात्तु मथ्यमानेऽमृते पुरा। उत्पन्नः कलशात् पूर्वं सर्वतस्तु श्रिया वृतः। अभ्यसन् सिद्धिकार्य्यं हि विष्णुं दृष्ट्वा हि तस्थिवान्। अब्जस्त्वमिति होवाच तस्माद-ब्जस्तु स स्मृतः। अब्जः प्रोवाच विष्णुं वै तनयोऽस्मि तव प्रभो!। विधत्स्व भागं स्थानञ्च मम लोकेश्वरेश्वर!। एवमुक्ता स दृष्ट्वा वै तथ्यं प्रोवाच तं प्रभुः। कृतो यज्ञ विभागो हि यज्ञियैर्हि सुरैः पुरा। देवेषु विनियुक्तञ्च विधिहोत्रं महर्षिभिः। न शक्यमपहोमो वै तुभ्यं कर्तुं कदाचन। अर्वाग्भूतोऽसि देवानां पुत्रस्त्वं हि महीश्वरः। द्वितीयायान्तु संभूत्यां लोके ख्यातिं गमि-ष्यसि। अणिमादिश्च ते सिद्धिर्गर्भस्थस्य भविष्यति। तेनैव त्वं शरीरेण देवत्वं प्राप्स्यसे प्रभो!। चरुमन्त्रै-र्व्रतैर्जप्यैर्यक्ष्यन्ति त्वां द्विजातयः। अष्टधा त्वं पुनश्चैव-मायुर्वेदं विधास्यसि। अवश्यभावी ह्यर्थोऽयं प्राग्-दृष्टस्त्वब्जयोनिना। द्वितीयं द्वापरं प्राप्य भविता त्वं न संशयः। इमं तस्मै वरं दत्त्वा विष्णुरन्तर्दधे पुनः। द्वितीये द्वापरे प्राप्ते शौनहोत्रिः स काशिराट्। पुत्रका-मस्तपस्तेपे धन्वो दीर्घं महत्तदा। प्रपद्ये देवतां तान्तु या मे पुत्रं प्रदास्यति। अब्जं देवं स पुत्रार्थे तदाराधि-तवान्नृपः। ततस्तुष्टः स भगवानब्जः प्रोवाच तं नृपम्। यदिच्छसि वरं ब्रूहि तत्ते दास्यामि सुव्रत!। नृप

उवाच। भगवन्! यदि तुष्टस्त्वं पुत्रो मे ख्यातिमान् भव। तथेति समनुज्ञाय तत्रैवान्तरधीयत। तस्य गेहे समुत्पन्नो देवो धन्वन्तरिस्तदा। काशिराजो महाराजः सर्वरोगप्रणाशनः। आयुर्वेदं भरद्वाजात् प्राप्येह स भिषक्क्रियम्। तमष्टधा पुनर्व्यस्य शिष्येभ्यः प्रत्यपादयत्। धन्वन्तरेस्तु तनयः केतुमानिति विश्रुतः। अथ केतुमतः पुत्रो वीरो भीमरथः स्मृतः। पुत्रो भीमरथस्यापि दिवोदासः प्रजेश्वरः। दिवोदासस्तु धर्मात्मा वाराणस्यधिपोऽभवत्" आयुर्वेदशब्ददर्शित वाक्ये काशिराजस्य दिवोदासस्य धन्वन्तरितोक्तिः तदपत्ये उपचारात् अतो न विरोधः। "धन्वन्तरिश्च भगवान् स्वयमेव कीर्त्तिर्नाम्ना नृणाम् पुरुरुजां रुज आशु हन्ति। यज्ञे च भागममृतायुरवावरुन्ध आयुष्यवेदमनुशास्त्यवतीर्य्य लोके" भाग०२।७।२१। "स वै भगवतः साक्षात् विष्णोरंशांशसम्भवः। धन्वन्तरिरिति ख्यात आयुर्वेददृगिज्यभाक्"। "नारायणांशो भगवान् स्वयं धन्वन्तरिर्महान्। पुरा समुद्रमथने समुत्तस्थौ महोदधेः। सर्ववेदेषु निष्णातो मन्त्रतन्त्रविशारदः। शिष्यो हि वैनतेयस्य शङ्करस्योपशिष्यकः" ब्रह्म० वै० श्रीकृष्ण जन्मखण्डे ५१ अ०।

२दिवोदासे त्रिका०। विक्रमादित्यसभास्थनवरत्नान्तर्गते कविभेदे ज्योतिर्वि०। "धन्वन्तरिक्षपणकामरसिंहशङ्कु-वेतालभट्टघटकर्परकालिदासाः। ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य"। अत्र वराहमिहिरौ इति शब्दकल्पद्रुमे द्विवचनान्ततया पाठः प्रामादिक एव द्विवचनान्तत्वे नवसंख्यानुपपत्तेः वराहो मिहिर इति विग्रहः बृहज्जातकटीकायां भट्टोत्पलेनोक्तः। अतएव "वराहमिहिरात्मजेन पृथुयशसा" तत्पुत्रकृतषट्पञ्चाशिकायामुक्तं वराहमिहिरात्मजत्वमात्मनो विशेषणमुपपद्यते वराहमिहिरयोर्भिन्नत्वे तदनुपपत्तेः इति सुधीभिर्विभावनीयम्।

**धन्वन्तरिग्रस्ता** स्त्री ६त०। कटुक्यां राजनि०।

**धन्वन्य** त्रि० धन्वनि मरुदेशे भवः यत्। मरुदेशभवे "शंनो आपो धन्वन्याः शमनः सन्त्वनूप्याः" अथ०१।६।४।

**धन्वपति** पु० ६त०। मरुदेशपतौ। तत इदमर्थादौ अश्वपत्या० अण्। धान्वपत तत्सम्बन्धिनि त्रि०।

**धन्वयवास** पु० ६त०। मरुभवे यवासभेदे दुरालभाभेदे भरतः स्वार्थे क। धन्वयवासक तत्रार्थे राजनि०। धन्वयास तत्रार्थे अमरः। ["धन्वसहा मीयते" ऋ०१।१२७।१।

**धन्वसह** पु० धन्व धनुर्यः सहते सह—अच्। धनुर्द्धरे

**धन्वायन** त्रि० धन्वा मरुदेशोऽयत्यनेन करणे ल्युट्। मरुदेशगमनसाधने स्त्रियां ङीप्। "भीमधन्वायनी सेना धृष्टद्युम्नेन पालिता" भा० उ० १६७ अ०।

**धन्वायिन्** त्रि० धन्वना सह एति गच्छति इ—णिनि ६त०। १धनुर्द्धरे २रुद्रभेदे पु० "इषुमद्भ्यो धन्वायिभ्यश्च वो नमो नमः" यजु० १६।२२।

**धन्विन्** त्रि० धन्व चापोऽस्त्यस्य व्रीह्या० इनि। धनुर्द्धरे अमरः। "आकर्णकृष्टमपि कामितया स धन्वी" रघुः। "पुंभिर्न केचदपि धन्विभिरन्वबन्धि" माघः। २विदग्धे ३अर्जुने पु० विश्वः ४अर्जुनवृक्षे ५दुरालभायां ६बकुलवृक्षे च पु०राजनि०। ७विष्णौ पु० "ईश्वरो विक्रमी धन्वी" विष्णुस०तालवमनोःपुत्रभेदे पु० "तपोरतिरकल्माषश्चान्वो धन्वी परन्तपः। तामसस्य मनोरेते दश पुत्रा महाबलाः" हरिवं० ७ अ०। ९धनूराशौ च धनुश्शब्दे दृश्यम्।

**धन्विन** पुंस्त्री धन्व—बा० इनन्। शूकरे "द्विमो धन्विन उक्तो कोलः स्यात् शूकरो कोलकाः" हह० ८८ अ०।

**धन्विस्थान** न० ६त०। "वैष्णवं समपादस्य वैशाखं मण्डलं तथा। प्रत्यालीढं तथालीढं स्थानान्येतानि धन्विनाम्" इत्युक्तेषु धानुष्कस्थितिभेदेषु। धनुर्वेदशब्दे दृश्यम्।

**धम** ध्माने भ्वा० पर० सक० सेट्। धमति अधमीत् दधाम। "वायुना धम्यमानोऽत्र दृश्यतेऽग्निः क्वचित् क्वचित्" भा० व० २८५ अ०। "ते बाहुभ्यां धमितमग्निमात्मनि" ऋ० १।२४।७ "अयं वधेऽपि वह्नयोऽधमत्" ताण्ड्यब्रा०। "विक्रम्य विधमिष्यामि निवर्त्तध्वं महासुराः" हरिवं० २५१ अ०। [कर्त्तरि च।

**धम** त्रि० धम—ध्माने अच्। १शब्दकर्त्तरि २अग्निसंयोग-

**धमक** त्रि० ध्मा—क्वुन् धमादेशश्च। ध्मानकरे उज्ज्वल०।

**धमधम** पु० धम+प्रकारे द्वित्वम्। पार्वत्याः क्रोधसंभूते कुमारानुचरगणभेदे। "उल्काभाली धमधमो ज्वालाजिह्वः प्रमर्द्दनः" हरिवं० १६८ अ०। कुमारानुचरमातृभेदे स्त्री "ख्याता दहदहा चैव तथा धमधमा नृप!" भा०श०४७अ०।

**धमन** त्रि० धम—ध्माने भ्वा० ल्युच्। १भस्त्राध्मायके २क्रूरे च मेदि० ३नले तृणभेदे अमरः।

**धमनि(नी)** स्त्री धम—भ्वा० करणे अनि वा ङीप्। नाडीभेदे शिराभेदे। २हट्टविलासिन्याम् अमरः। ३हरिद्रायां ४ग्रीवायाम् हेमच० ५पृश्निपर्ण्यां राजनि०।

६माड़िकायां शाकभेदे भावप्र०। ७शाके निरु०। सुश्रुते धमनीभेदकार्य्यादिकमुक्तं तच्च कायशब्दे १९१६ पृष्ठादौ दृश्यम्। ततः सिध्मा० लच्। धमनील तद्युक्ते त्रि०।

**धम्मिल्ल** पु० सौ० धम-विच् मिल-क पृषो० कर्म०। संयतेषु केशेषु (खोँपा)। कुसुमगर्भमौक्तिकादिना बहिर्बद्धे केशकलापे भरतः। "धम्मिल्ले नवमल्लिका समुदयो हस्ते सिताम्भोरुहम्" "धम्मिल्लमध्ये सतं कलयति तिलकं तथा सकलम्" सा० द०। पृषो० धम्मल धम्मिलावप्यत्र शब्दच०।

**धय** त्रि० धेट-श। पानकर्त्तरि षेटष्टित्त्वात् स्त्रियां ङीपि-प्राप्ते खशोऽन्यत्र नेष्यते इति हरदत्तोक्तेः न ङीप्।

**धर** त्रि० धृ-अच्। १धारके "रथचरणधराङ्गनाकराब्जैः" माघः गदाधरः चक्रधरः। २पर्वते ३कार्पासतूलके ४कूर्मराजे ५वसुभेदे च मेदि०। "उतूकं धरं द्रष्टुमवेक्ष्य शौरिम्" माघः। कूर्मराजस्य भूमिधारकत्वात् तथात्वम्। "धरो ध्रुवश्च सोमश्च अहश्चैवानिलोऽनलः। प्रत्यूषश्च प्रभासश्च वसवोऽष्टाविति स्मृताः" भा० आ० ६६ अ०।

**धरण** त्रि० धृ-युच्। १धारके २अद्रिपतौ ३लोके ४स्तने ४धान्ये ५सूर्य्ये च पु० हेमच०। ७अर्कतक्षे ८सेतौ त्रिका०। "तुल्या यवाभ्यां कथिताऽत्र गुञ्जा वल्लस्त्रिगुञ्जो धरणं च तेऽष्टौ" लीला० उक्ते ९चतुर्विंशतिरक्तिकामिते मानभेदे न०। "पलं सुवर्णाश्चत्वारः पलानि धरणं दशेति" मनूक्ते १०दशपलमितते ११पलस्य दशमांशे वैद्यकपरिभाषा "माषैश्चतुर्भिः शाणः स्यात् धरणः स निगद्यते। सुश्रुतोक्ते १२चतुर्माषकपरिमाणे पु०। भावे ल्युट्। १३धारणे न०। "सारं धरित्रीधरणक्षमञ्च" कुमा०।

**धरणप्रिया** स्त्री जिनानां शासनदेवताभेदे हेमच०।

**धरणि(णी)** स्त्री धृ-अनि। १पृथिव्याम् अमरः वा ङीप्। ङीबन्तः २शाल्मलिवृक्षे शब्दच०। ३कन्दभेदे राजनि०।

**धरणि(णी)ज** धरणितो जायते जन-ड। १मङ्गले २नरकासुरे च ३धरणिजातमात्रे त्रि० "धरणिजे चतुर्थगे ज्वरजठराग्निशुद्भवः" ह०स० १०४ अ०। ४सीतायां स्त्री।

**धरणि(णी)धर** पु० धरणिं(णीं) धरति धृ-अच् ६त०। १पर्वते २कच्छपे च राजनि०। ३विष्णौ हला० गोवर्द्धनधारित्वात्तस्य तथात्वं "स हि संवर्त्तको वह्निरनिलो धरणीधरः" विष्णु स०। "शेषदिग्गजादिरूपेण धरणीं धरतीति" भा०। "परमर्षिजनभुवनपतिः धरणिधरः श्रुतिविनयविधिः" भा०आ०२४८अ०। पर्वते "धरणीधरदुहितुर्भयादक्रौ" माघः। ६शिवे "प्रभवं सर्वभूतानां धारणं धरणीधरम्" भा० आनु० ८ अ० शिवस्तवे

**धरणि(णी)रुह** पु० धरण्यां रोहति रुह-क ७त०। वृक्षे "धरणिरुहाधिरुहो वधूर्लतायाः" माघः।

**धरणीकन्द** पु० धरणीनामकः कन्दः। १कन्दभेदे कन्दाख्ये धाराकन्दे राजनि०।

**धरणीकीलक** पु० धरण्याः कीलक इव। पर्वते शब्दर०।

**धरणि(णी)धृत्** पु० धरणिं(णीं) धरति धृ-क्विप् तुक्। १पर्वते २अनन्ते देवे च "माहात्म्यं श्रोतुमिच्छामि। शेषस्य धरणीधृतः" हरिवं० १२० अ०।

**धरणीपुर** पु० धरण्याकारं पुरम्। धराकारे चतुरस्रे मण्डले न०। धरणीसदनादयोऽप्यत्र।

**धरणीप्लव** पु० धरण्याः प्लवो यस्मात्। समुद्रे त्रि०।

**धरणीभृत्** पु० धरणीं बिभर्त्ति भृ-क्विप् तुक् च। १पर्वते २विष्णौ ३अनन्ते च। "प्रादुर्भावातिरष्टानि शृङ्गाणि धरणीभृताम्" हरिवं० २४६ अ०।

**धरणीश्वर** पु० ६त०।१शिवे शब्दरत्ना०२भूमिपतौ ३विष्णौ च

**धरणीसुत** पु० ६त०।१मङ्गले अवनेयशब्दे दृश्यम्।२नरकासुरे कुजशब्दे दृश्यम्। ३सीतायां स्त्री कालिकापु०२७ अ० तत्कथा दृश्या।

**धरा** स्त्री धरति विश्वं धृ-अच्।१पृथिव्याम् अमरः २मर्भाशये ३मेदसि च मेदि० ४नाड्यां राजनि०। "धरायां तस्य संरम्भं सीताप्रत्यर्पणैषिणः" रघुः।

दानार्थकल्पितायां सुवर्णमयधरायां तद्विधानादि मत्स्यपुराणोक्तं हेमाद्रिदानखण्डे दर्शितं यथा

"मत्स्य उवाच। अथातः सम्प्रवक्ष्यामि धरादानमनुत्तमम्। पापक्षयकरं नृणाममङ्गल्यविनाशनम्। कारयेत् पृथिवीं हैमीं जम्बुद्वीपानुकारिणीम्। मर्य्यादापर्वतवतीं मध्ये मेरुसमन्विताम्। लोकपालाष्टकोपेतां नववर्षसमन्विताम्। नदीनदशतोपेतामन्ते सागरवेष्टिताम्" "अनुकारिणीम् सदृशीमित्यर्थः। इह हि जम्बुद्वीपसदृशीं कुर्य्यादित्युक्तेः निखिलनगनगरसरोवरवनाद्यन्वितसदृशीसादृश्यप्राप्तौ मर्य्यादापर्वतवतीमित्यादिना तावन्मात्रान्वितधरण्यनुकार इति गम्यते। इतरथा सामान्येनैव तदवगतेर्विशेषानर्थक्यप्रसङ्गात्, तदयमर्थः हैमीं पृथ्वीं कुर्य्यादित्युक्ते सप्तद्वीपवत्याः प्रसङ्गे जम्बुद्वीपानुकारिणीमित्युच्यते तत्रापि नानापर्वतानुकारप्रसङ्गे मर्य्यादापर्वतवतीमिति" तथा सति मेरोरनुकरणप्राप्तौ मध्ये मेरुसमन्वितामिति

नानादेवगणस्याहृत्यर्थं लोकपालाष्टकोपेतामिति। एवं च असंख्येयपञ्चाशयणे पुराणान्तरोपदर्शितवर्षचतुष्टयादिप्रपरिग्रहशङ्कानिवृत्त्यर्थं नववर्षसमन्वितामित्युच्यते। तत्र जम्बुद्वीपस्तुपवर्णितं विष्णुपुराणे" हेमा०दा०। "नववर्षन्तु मैत्रेय! जम्बुद्वीपमिदं मया। लक्षयोजनविस्तारं संक्षेपात् कथितं तव। जम्बुद्वीपं समावृत्य लक्षयोजनविस्तरः। मैत्रेय! वलयाकारः स्थितः क्षारोदधिर्बहिः। जम्बुद्वीपः समस्तानां द्वीपानां मध्यतः स्थितः। तस्यापि मेरुर्मैत्रेय! मध्ये कनकपर्वतः। चतुरशीतिसाहस्रयोजनैरस्य चोच्छ्रयः। प्रविष्टः षोडशाधस्ताद्द्वात्रिंशन्मूर्ध्नि विस्तृतः। मूले षोडशसाहस्रो विस्तारस्तस्य सर्वतः" पुराणान्तरे तु, अष्टषष्टियोजनोच्छ्रय इत्युक्तम्। तथा "मेरोश्चतुर्दिशं तत्र नवसाहस्रविस्तृतम्। इलावृतं महाभाग! चत्वारश्चात्र पर्वताः। विष्कम्भा रचिता मेरोर्योजनायुतमुच्छ्रिताः। पूर्वेण मन्दरो नाम दक्षिणे गन्धमादनः। वैभ्राजः पश्चिमे पार्श्वे सुपार्श्वश्चोत्तरे स्मृतः" मर्य्यादापर्वतास्तु, ब्रह्माण्डपुराणे दर्शिताः" "जाठरो देवकूटश्च पूर्वस्यान्दिशि पर्वतौ। तौ दक्षिणोत्तरायामावानीलनिषधायतौ। कैलासो हिमवांश्चैव दक्षिणे वर्षपर्वतौ। पूर्वपश्चायतावेतावर्णवान्तव्यवस्थितौ। शृङ्गो जारुधिश्चैव उत्तरौ वर्षपर्वतौ। पूर्वपश्चायतावेतावर्णवान्तव्यवस्थितौ। निषधः पारिया(पा)त्रश्च पश्चिमौ वर्षपर्वतौ। तौ दक्षिणोत्तरायायामावानीलनिषधायतौ"। नीलनिषधपर्वतौ तु, अग्रे वक्ष्येते। "लोकपालाष्टकोपेतामिति, लोकपाला इन्द्रादयोऽष्टौ, तेषां लक्षणं पूर्वमुक्तं ब्रह्माण्डदाने" तत्सन्निवेशाश्च मेरोरुपरि प्रदक्षिणक्रमेण पूर्वादिदिक्षु कर्त्तव्याः। नववर्षसमन्वितामिति। वर्षोपवर्णनञ्च, ब्रह्माण्डपुराणे "उत्तरं तत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम्। एतद्वै भारतं नाम भारती यत्र सन्ततिः। भारतं प्रथमं वर्षं ततः किंपुरुषं स्मृतम्। हरिवर्षं तथैवान्यं मेरोर्दक्षिणतो द्विज!। रम्यकं चोत्तरे वर्षं तस्यैवानु हिरण्मयम्। उत्तराः कुरवश्चैव यथा वै भारतं तथा। मेरोः पूर्वेण भद्राश्वं केतुमालं च पश्चिमे। वर्षे द्वे तु समाख्याते तयोर्मध्यमिलावृतम्। नवसाहस्रमेतेषामेकैकं द्विजसत्तम!" तथा। "हिमवान् हेमकूटश्च निषधश्चैव दक्षिणे। नीलः श्वेतश्च शृङ्गी च उत्तरे वर्षपर्वताः। सहस्रद्वितयोच्छ्रायास्तावद्विस्तारिणश्च ते। लक्षप्रमाणौ द्वौ मध्ये दशहीनास्तथापरे" "लक्षप्रमाणावित्यादि इलावृतस्योभयपार्श्ववर्त्तिनौ नीलनिषधौ द्वौ पर्वतौ दैर्घ्येण लक्षगुणौ विज्ञेयौ, तद्बाह्यवर्त्तिनौ श्वेतहेमकूटौ नवतिसहस्रयोजनप्रमाणौ विज्ञेयौ, तथा तद्बाह्यस्थितौ शृङ्गीहिमवन्तौ अशीतिसहस्रयोजनप्रमाणावित्यर्थः। अत्र युक्तिरुक्ता मत्स्यपुराणे, "द्वीपस्य मण्डलीभावात् ह्रासवृद्धिः प्रकीर्त्तितेति"। ब्रह्माण्डपुराणे "मेरोस्तु पश्चिमे भागे नवसाहस्रसम्मिते। चतुस्त्रिंशत्सहस्राणि गन्धमादनपर्वतः। चत्वारिंशत्सहस्राणि परिहृद्यो महीतलात्। सहस्रमवगाढे तु तति द्विगुणविस्तरः। पूर्वेण माल्यवान् शैलस्तत्प्रमाणः प्रकीर्त्तितः" "अत्र शतसहस्रादियोजनपरिमाणानां पृथिव्यादीनां कर्त्तुमशक्यत्वात् योजनसहस्रस्थाने अङ्गुलादिमानं परिकल्प्य यथाशक्त्यातारतम्यमनुष्ठेयम्। नदीनदयुतोपेतामिति, नद्यो भागीरथीप्रभृतिकाः, नदाः शोणादयः, तेषां साकल्येन विधातुमशक्यत्वात् तावत्कृत्यमनुकारः कर्त्तव्यः। अन्ते सागरवेष्टितामिति, यद्यपि यावत्परिमाणा पृथ्वी तावानेव सागरः तथाप्यनुकारमात्रोपदेशात् शक्त्यानुकारमात्रमाचरणीयम्" हेमा० "महारत्नसमाकीर्णां वसुरुद्रार्कसंयुताम्। हेम्नः पलसहस्रेण तदर्द्धेनाथ शक्तितः। शतत्रयेण वा कुर्यात् द्विशतेन शतेन वा। कुर्यात्पञ्चपलादूर्द्ध्वमशक्तोऽपि विचक्षणः। तुलापुरुषवत् कुर्यात् लोकेशावाहनन्बुधः। ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादिकम्। वेद्यां कृष्णाजिनं कृत्वा तिलानामुपरि न्यसेत्। तथाष्टादश धान्यानि रसांश्च लवणादिकान्। तथाष्टौ पूर्णकलशान् समन्तात् परिकल्पयेत्। वितानकञ्च कौशेयं फलानि विविधानि च। तथांशुकानि रम्याणि श्रीखण्डशकलानि च। इत्येवं रचयित्वा तामधिवासनपूर्वकम्। शुक्लमाल्याम्बरधरः शुक्लाभरणभूषितः। प्रदक्षिणं ततः कृत्वा गृहीतकुसुमाञ्जलिः" मत्स्यपु० "महारत्नेत्यादि, महारत्नानि, माणिक्यप्रभृतीनि परिभाषायां, दर्शितानि, वसुरुद्रार्करूपमुक्तं ब्रह्माण्डदाने, आच्छादनादिकमित्यादिशब्देन देशकालदक्षिणाश्राद्धदेवादिपूजाब्राह्मणवाचनाधिवासनादि सर्वं तुलापुरुषोक्तमनुष्ठेयं, पूर्णकलशान् स्रग्गन्धपञ्चरत्नदूर्वाङ्कुरचूतपल्लवान्वितानित्यवधेयं, वितानं पञ्चवर्णमिति। प्रदक्षिणं कृत्वेति, त्रिःप्रदक्षिणमावृत्येत्यर्थः, प्रदक्षिणादिकं च द्वितीयदिवसे पूर्वाह्णकृत्यकर्म-

शेषसमाप्तौ सर्वौषधिस्नानानन्तरमनुष्ठेयम्” हेमा० “नमस्ते सर्वदेवानां त्वमेकं भवनं यतः। धात्री च सर्वभूतानामतः पाहि वसुन्धरे!। वसून् धारयसे यस्मात् वसु चातीव निर्म्मलम्। वसुन्धरा ततोजाता तस्मात्पाहि भयाद्‌लम्। चतुर्मुखोऽपि गोमच्छेद्यत्वादन्तं तवाचले। अनन्तायै नमस्तस्मात् पाहि संसारकर्दमात्। त्वमेव लक्ष्मीर्गोविन्दे शिवे गौरीति संस्थिता। गायत्री ब्रह्मणः पार्श्वे ज्योत्स्ना चन्द्रे रवौ प्रभा। बुद्धिर्बृहस्पतौ ख्याता मेधा मुनिषु संस्थिता। विश्वं व्याप्य स्थिता यस्मात्ततोविश्वम्भरा मता। धृतिः क्षितिः क्षमा क्षौणी पृथ्वी वसुमती रसा। एताभिर्मूर्त्तिभिः पाहि देवि! संसारसागरात्। एवमुच्चार्य्य तां देवीं ब्राह्मणेभ्यो निवेदयेत्। धरार्द्धं वा षड्भागं गुरवे प्रतिपादयेत्। शेषञ्चैवाथ ऋत्विग्भ्यः प्रणिपत्य विसर्जयेत्” मत्स्यपु० अत्रापि पूर्व्ववद्दानवाक्यमुच्चार्य्य जलपूर्व्वं दानमाचार्य्यानुज्ञया अन्येभ्योपि दानं दीनानाथादिभ्यः। खल्पे त्वेकाग्निविधानं, भूमिपतिकर्त्तव्ये कर्म्मणि ग्रामादिदक्षिणादानम् अशक्तकर्त्तृके यथाशक्ति सुवर्णदक्षिणादानमित्यनुसन्धेयम्। अथ ब्राह्मणवाचनानन्तरं देवतापूजनविसर्जनानि कुर्य्यात्”। हेमा० आथर्व्वणगोपथब्राह्मणे, “अथ रोहिण्यां संकल्पोषितो ब्रह्मा यथाबीजरसरत्नगन्धावकीर्णतीर्थोदकपूर्णकलशमभिमन्त्राभिषेकमन्त्रैर्यथोक्तैर्दातारमभिषिञ्चति। “अनेन त्वं व्रतपते” इति व्रतमुपेत्यायाचिताशनावधःशायिनौ भवतो, व्रतोपचरं यथाशक्त्येकरात्रं पञ्चरात्रं वा द्वादशरात्रं व्रतञ्चरित्वा श्वोभूते तन्त्रमाज्यभागान्तं कृत्वान्वारभ्याथाज्यं जुहुयात् कामसूक्तं कालसूक्तं पुरुषसूक्तमित्यथ सुवर्णमयीं भूमिं भूमेः प्रकृतिं गोचर्म्ममात्रां कृत्वानीय वेद्युत्तरां वेदिमित्युपस्थाप्य “गिरयस्ते पर्व्वता” इति पर्व्वतानवस्थाप्य हिरण्यरजतमणिमुक्ताप्रवालकादिभिरुपशोभयेद्यदहः संप्रयतीरिति (सामछन्दसा नेति नदीः कल्पयित्वा रसैश्च परिपूरयेत् “अपरमयमसि समुद्रन्त्वाभ्यवसृजामीति समुद्रान्)वनस्पतिः सह देवैर्नआपयच्छिति “बृहस्पतिर्नेति” वनस्पतीनन्यांश्च यज्ञे त्वा मनसा सङ्कल्पयेन्मनसा सङ्कल्पयतोह भवति निधीन् बिभ्रतीति नमस्कारयित्वा सत्यं बृहस्पत्यनुवाकीये देवासोदिव्येकादशस्थेति, पुण्याहं वाचयेत् संस्थापयेन च दिवो देवस्रातेनेत्यभिमन्त्र्य ब्राह्मणेभ्यो दद्याद्दातुरेषा वै रोहिणीकामं निकामं वा दुःख” इति। “यथा रोहन्ति बीजानि हलाकृष्टे महीतले। एवं कामाः प्ररोहन्ति प्रेत्येह मनसा सदा। सर्व्वेषामेव दानानां यत्फलं समुदाहृतम्। तत् प्राप्नोति च विप्रेभ्यो दत्त्वा भूमिं यथाविधि”। मत्स्यपुराणे “अनेन विधिना यस्तु दद्याद्धेमधरां शुभाम्। पुण्यकालेऽभिसंप्राप्ते स पदं याति वैष्णवम्। विमानेनार्कवर्णेन किङ्किणीजालमालिना। नारायणपुरङ्गत्वा कल्पत्रयमथो वसेत्। पुत्रपौत्रप्रपौत्रांश्च तारयेदेकविंशतिम्। इति पठति य इत्थं यः शृणोति प्रसङ्गादपि कलुषवितानैर्मुक्तदेहः समन्तात्। दिवममरवधूभिर्याति संप्रार्थ्यमानः पदममरसहस्रैः सेवितं चन्द्रमौलेः” लिङ्गपु० उक्तविधिस्तु तत्र खण्डे दृश्यः।

**धराकदम्ब** पु० धराजातः कदम्बः। धाराकदम्बे हारा०।

**धराङ्कुर** पु० धराया अङ्कुर इव। वायुफले शीकरे हारा०।

**धरात्मज** पु० ६त०। १मङ्गलग्रहे २नरकासुरे च ३सीतायां स्त्री तत्कथा कालिकापु० ३७ अ० दृश्या। धरापुत्रादयोऽप्यत्र।

**धराधर** पु० धरां धरति धृ—अच्। १पर्व्वते २अनन्ते ३विष्णौ च। “सत्यमेधो। धराधरः” विष्णुस०। “अ-शेषशेषैः शेषाद्यैरशेषां धारयन् धराम्” भाष्यकृतवाक्ये तद्व्युत्पत्तिः।

**धराधिप** पु० ६त०। नृपे “माहेश्वरीमथ सभां समासाद्य धराधिपः” भा० व० ४८अ०। धराधिनाथधराधीशादयोऽप्यत्र।

**धरामर** पु० धरायाममर इव। १भूदेवे ब्राह्मणे धरासुरादयोऽप्यत्र।

**धरित्री** स्त्री धृ—इत्र गौरा० ङीष्। भूमौ अमरः “सारं धरित्रीधरणक्षमञ्च” कुमा०। “गुरुर्धरित्री क्रियतेतरां त्वया” माघः।

**धरिमन्** पु० धृ—इमनिच्। तुलापरिमाणे निरु०। “तथाधरिममेयानां शतादभ्यधिके वधः” मनुः।

**धरीमन्** पु० धरिमन्+छान्दसो दीर्घः। १सारभूते वेदिरूपे स्थाने। “अयं जातो मनुषो धरीमणि” ऋ० १।१२८।१ “धरीमणि सारभूते वेदिरूपे स्थाने” भा० २धारके त्रि०। “अस्तृणन् पयसा धरीमणि” ऋ० ९।८६।४ “धरीमणि धारके” भा०।

**धरुण** त्रि० धृ—उनन्। धारके “धरुणोऽस्य पानाय” ताण्ड्य ब्रा० ९।१।६। “धरुणोऽसि सर्व्वधारकोऽसि अपानेन प्राणवायोः शरीरे धारणात् धारयिता अपानः” भा०। स्त्रियां गौरा० ङीष् वा। “धरुण्यसि शाले! बृहच्छन्दा पूतिधान्या:” अथ० ३।१२।३ पक्षे टाप् च। “धरासि धरुणा०

स्तृता विश्वकर्मणो" यजु० १३।१६ २उदके निघण्टुः ३यज्ञे च "उपसृजन् धरुणं मात्रे धरुणो मातरं धयन्" यजु०८।५१ "धारयतीति धरुणोऽग्निः" वेददी० ४धारायाञ्च "अपामतिष्ठद्धरुणह्वरम्" ऋ० १।५४।१० धरुणशब्दो धारावचनः धरुणह्वरम् धारानिरोधकम्" भा० ५एकविंशतौ ६आदित्ये च तयोस्तथात्वं च शतब्रा० ८।४।१।१२ उक्तं यथा "धरुण एकविंशतिः" इति। स एवैकविंशस्तोमस्तं तदुपदधाति। तद्यत्तमाह धरुण इति प्रतिष्ठा वै धरुणः प्रतिष्ठैकविंशोऽथो असौ वा आदित्यो धरुण एकविंशस्तस्य द्वादश मासाः पञ्चर्त्तवस्त्रय इमे लोका असावेवादित्यो धरुण एकविंशस्तस्मादाह धरुण इति यदाह्येवैषोऽस्तमेत्यथेदं सर्वं ध्रियते आदित्योहभूत्वा पश्चात्तस्थौ तदेव तद्रूपमुपदधात्यथ संवत्सरस्य रूपाण्युपदधाति" "धरुणमधिरह" यजु०।१।१८ ७ब्रह्मणि ८स्वर्गे पु० ९नीरे १०वक्षते त्रि० मेदि०।

**धर्णसि** पु० धृ—बा० असि। १बले निघण्टुः। २धर्त्तव्ये वज्रादौ च "नि शुष्ण इन्द्र धर्णसिं वज्रम्" ऋ०८।६।१४। "धर्णसिं धर्त्तव्यम्" ३धारके च "पृथ्वादि धर्णसिम्" ऋ०१।११।११

**धर्णि** त्रि० धृ—नि। "धारके "अग्निरीशे वसूनां शुचिर्धर्णिरेषाम्" १।१२७।७ "धर्णिः धारणकुशलः" भा०।

**धत्तूर** पु० धुस्तुर+पृषो०। धुस्तुरे पारस्करनि०।

**धर्त्र** न० धृ—त्र। १गृहे २यज्ञे ३धर्मे च उणादिको० ४धारके त्रि० "पशूनां त्वां व्रातानां यन्त्राय धर्त्राय गृह्णामि" तैत्ति० सं० १।६।१।२ "धर्त्रमसि दिवं दृंह ब्रह्मवनि बधाय" यजु० १।१८। धर्त्रं धारकम्" वेददी०।

**धर्म** पु०न० अर्द्धर्चा० ध्रियते लोकोऽनेन धरति लोकं वा धृ—मन्। "चोदनालक्षणोऽर्थो धर्मः" जै० सूत्रलक्षिते पदार्थे तत्र धर्मशब्दस्य यागादिपरत्वम् भाष्यसम्मतमन्यमते स्वर्गसाधनादृष्टभेदपरत्वं तथाहि "अथातो धर्मजिज्ञासेति" सूत्रभाष्ये "धर्माय जिज्ञासा धर्मजिज्ञासा, सा हि तस्य ज्ञातुमिच्छा। स कथं जिज्ञासितव्यः? को धर्मः, कथंलक्षणः, कान्यस्य साधनानि कानि साधनाभासानि, किंपरश्चेति। तत्र को धर्मः, कथंलक्षणः—इति एकेनैव सूत्रेण व्याख्यातं—'चोदनालक्षणोऽर्थो धर्मः'—इति। कानि अस्य साधनानि, कानि साधनाभासानि, किंपरश्चेति शेषलक्षणेन व्याख्यातं, क्व पुरुषपरत्वं क्व वा पुरुषो गुणभूतः?—इत्येतासां प्रतिज्ञानां पिण्डस्यैतत् सूत्रम् 'अथातोधर्मजिज्ञासा'—इति। धर्मः प्रसिद्धो वा स्यात्, अप्रसिद्धो वा? स चेत् प्रसिद्धः, न जिज्ञासितव्यः; अथाप्रसिद्धः, नतराम्; तदेतदनर्थकं धर्मजिज्ञासाप्रकरणं, अथवाऽर्थवत्?"। धर्मं प्रति हि विप्रतिपन्ना बहुविदः,—केचिदन्यं धर्ममाहुः, केचिदन्यं, सोऽयमविचार्य प्रवर्त्तमानः कञ्चिदेवोपाददानो विहन्येत, अनर्थं च ऋच्छेत्, तस्माद्धर्मो जिज्ञासितव्य इति, स हि निःश्रेयसेन पुरुषं संयुनक्तीति प्रतिजानीमहे" भा० "तदभिधीयते चोदनालक्षणोऽर्थो धर्मः। २ सू० 'चोदना'—इति क्रियायाः प्रवर्त्तकं वचनमाहुः, आचार्यचोदितः करोतीति हि दृश्यते। लक्ष्यते येन तल्लक्षणं धूमो लक्षणमग्नेरिति हि वदन्ति। तया यो लक्ष्यते, सोऽर्थः पुरुषं निःश्रेयसेन संयुनक्तीति प्रतिजानीमहे। चोदना हि भूतं, भवन्तं, भविष्यन्तं, सूक्ष्मं, व्यवहितं, विप्रकृष्टमित्येवंजातीयकमर्थं शक्नोत्यवगमयितुं, नान्यत् किञ्चनेन्द्रियम्," य एव श्रेयस्करः, स एव धर्मशब्देनोच्यते। कथमवगम्यतां?। यो हि यागमनुतिष्ठति, तं 'धार्मिकः'—इति समाचक्षते, यश्च यस्य कर्त्ता स तेन व्यपदिश्यते, यथा पाचकः, लावक इति। तेन यः पुरुषं निःश्रेयसेन संयुनक्ति, स धर्मशब्देनोच्यते। न केवलं लोके, वेदेऽपि 'यज्ञेन यज्ञमयजन्त देवाः, तानि धर्माणि प्रथमान्यासन्'—इति यजतिशब्दवाच्यमेव धर्मं समामनन्ति। उभयमिह चोदनया लक्ष्यते, अर्थोऽनर्थश्च इति, कोऽर्थः? यो निःश्रेयसाय, ज्योतिष्टोमादिः। कोऽनर्थः? यः प्रत्यवायाय, श्येनो, वज्रः, इषुरित्येवमादिः। कथं पुनरसावनर्थः?। हिंसा हि सा, सा मा भूत् इति अर्थपदेशम्।" शावरभाष्यम् एतन्मतानुसारेण लौगाक्षिभास्करेणोक्तं यथा "अथ को धर्मः किं तस्य लक्षणमिति चेदुच्यते। यागादिरेव धर्मः। तल्लक्षणन्तु वेदप्रतिपाद्यप्रयोजनवदर्थो धर्मः। प्रयोजनेऽतिव्याप्तिवारणाय प्रयोजनवदिति। भोजनादावतिव्याप्तिवारणाय वेदप्रतिपाद्येति। अनर्थफलकत्वादनर्थभूते श्येनयागादावतिव्याप्तिवारणायार्थ इति। न च चोदनालक्षणोऽर्थो धर्म इति सौत्रधर्मलक्षणविरोधः चोदनाशब्दस्य तत्र विधिरूपवेदैकदेशपरत्वादिति वाच्यम्। सर्ववेदस्य तात्पर्येण धर्मप्रतिपादकत्वात्। स च यागादिः। "यजेत स्वर्गकामः" इत्यादि वाक्येन स्वर्गमुद्दिश्य पुरुषं प्रति विधीयते"।

अन्यमते तु अदृष्टविशेषस्यैव धर्मत्वं तत्त्वबोधिन्यां तदुभयमतं संक्षिप्य दर्शितं यथा

"चोदनालक्षणोऽर्थो धर्मः" इति। चोदनैव लक्षणं प्रमाणं यस्य तादृशो योऽर्थः स धर्मः चोदना प्रवर्त्तको वेदो विधिरूपः। चुद् प्रेरणे इत्यस्माच्चौरादिकधातोः वेदमात्रस्यैवेयं परिभाषेत्यपरे। तथा च वेदैकप्रमाणगम्योऽर्थः पुण्यनामाऽदृष्टविशेषः धर्मः कार्य्यापूर्वापरनामा तथा च तार्किकाः "विहितक्रियया साध्यो धर्मः पुंसो गुणो मतः। प्रतिषिद्धक्रियासाध्यः स गुणोऽधर्म उच्यते"। भविष्ये "धर्मः श्रेयः समुद्दिष्टं श्रेयोऽभ्युदयसाधनम्"। तैत्तिरीयश्रुतिरपि "धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति धर्मेण पापमपनुदतीति" प्रशंसामभिदधती अभ्युदयसाधनं धर्म इति प्रतिपादयति। भाष्यमपि "कोऽर्थो योऽभ्युदयाय"। गुरुमते विधेरपूर्वे शक्त्याऽपूर्वस्य विधिवाच्यत्वात् वेदगम्यत्वं सुपपन्नमेव। अगृहीतग्राहित्वस्य प्रामाण्यरूपत्वाद्वेदमात्रलभ्यत्वमपूर्वस्य। अन्येषां मते तु यागादेरिष्टसाधनत्वान्यथानुपपत्त्या कल्प्यत्वेऽप्यपूर्वस्य, वेदस्य प्रवर्त्तकत्वान्यथानुपपत्त्या कल्पनीयत्वेन वेदमूलकत्वात् वेदप्रमाणकत्वम्। भट्टमते तु चोदना प्रेरणा फलभावना लिङाद्यर्थाभिधारूपा तया च केन कथमित्याकाङ्क्षाकृत्याय लक्ष्यते चाम्नीयते कर्त्तव्यत्वेन बोध्यते यः करणीभूतो धात्वर्थयागादिः स धर्म इत्यर्थः तथाच विश्वामित्रः "यमार्य्याः क्रियमाणं हि शंसन्त्यागमवेदिनः। स धर्मो यं विगर्हन्ति तमधर्मं प्रचक्षते" इति। अतएव "चोदनागम्योऽग्निहोत्रादिधर्मो नातल्लक्षणश्चैत्यवन्दनादिरिति" शास्त्रदीपिका। तत्र चोदनागम्यो वेदबोधितकर्त्तव्यताक इत्यर्थः। अत्र मते धर्मशब्दो निरूढ़लाक्षणिकः अदृष्ट एव तस्य शक्तेः "स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः" इत्युक्त्वा "धर्मस्त्वाथ त्रिषु द्रव्ये पापं पुण्यं सुखादि च" इत्यमरोक्तेः द्रव्ये तज्जनके धर्मिणि त्रिषु वाच्यलिङ्गमित्यर्थः। अतएव भट्टवार्त्तिकं "द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते। तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता श्रेयःसाधनता ह्येषां नित्यं वेदात् प्रतीयते। ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः" इति। यद्यपि पुण्यनामादृष्टविशेष एव धर्मस्तदर्थस्तथापि द्रव्यक्रियादीनामपि धर्मत्वं व्यवस्थापयिष्यते तेषां धर्मजनकतया कारणे कार्य्यत्वोपचारात् तेषु धर्मव्यपदेश इति भावः। न ताद्रूप्येण न स्वरूपतः, अपि तु धर्मजनकतयेति शेषः। धर्मजनकत्वे मानमाह श्रेय इति "श्रेयोऽभ्युदयसाधनम्" उक्तभविष्यवचनात् तत्र साक्षात् स्वर्गादिसाधनमदृष्टं तत्साधनता यागादेरित्यर्थः ताद्रूप्येण स्वरूपतः। अत्र च वेदमात्रप्रमाणकत्वसत्ताकार्थत्वं लक्षणं गुणविशेषस्य स्वरूपं, द्वितीयमते वेदैकप्रमितकर्त्तव्यताकार्थत्वं लक्षणं द्रव्यक्रियागुणादयः स्वरूपम् उभयत्र वेदप्रामाण्यादेव प्रामाण्यम्"।

तद्भेदादिकं हेमाद्रिव्रतखण्डे उक्तं यथा भविष्यपु० "वर्णधर्मः स्मृतस्त्वेक आश्रमाणामतः परम्। वर्णाश्रमस्तृतीयस्तु गौणो नैमित्तिकस्तथा। वर्णत्वमेकमाश्रित्य यो धर्मः सम्प्रवर्त्तते। वर्णधर्मः१ स उक्तस्तु यथोपनयनं नृप। आश्रमन्तु समाश्रित्य यो धर्मः सम्प्रवर्त्तते। स खल्वाश्रमधर्मस्तु२ भिक्षादण्डादिको यथा। वर्णत्वमाश्रमत्वञ्च योऽधिकृत्य प्रवर्त्तते। स वर्णाश्रमधर्मस्तु३ मौञ्जी मेखला यथा। यो गुणेन प्रवर्त्तेत गुणधर्मः ४ स उच्यते। यथा मूर्द्धाभिषिक्तस्य प्रजानां परिपालनम्। निमित्तमेकमाश्रित्य यो धर्मः सम्प्रवर्त्तते। नैमित्तिकः ५ स विज्ञेयः प्रायश्चित्तविधिर्यथा" "वर्णत्वमेकमाश्रित्येति एकशब्दो वक्ष्यमाणोभयनिमित्तव्यावृत्तिपरः, वक्ष्यमाणधर्मभिन्नत्वात् अयं त्वाश्रमत्वमनपेक्ष्य वर्णत्वनिमित्तकोऽतः सत्यामप्युपनयनस्याष्टवर्षत्वाद्यपेक्षायां नैकशब्दविरोध इति। अथवा वीप्सायामेकशब्दः तत्रैकैकं वर्णत्वमुद्दिश्य यो विधीयते स वर्णधर्म इति अतएवाष्टवर्षादिवाक्यैरनेकवर्णत्वोद्देशेन विधीयमानमुपनयनं दृष्टान्तीकृतम्। निमित्तमेकमाश्रित्येत्यत्र प्रायश्चित्तस्य नित्यकाम्यवैधर्म्यमात्रेण नैमित्तिकत्वं न तु राहुदर्शननिमित्तस्नानादिवदकरणजनितदोषपरिहारार्थतया, निषिद्धकर्मकृताधर्मपरिहारार्थतयैव तद्विधानोपपत्तेः। न च जातेष्टिवदुभयार्थत्वं, तत्र फलनिमित्तयोरुभयोरुपात्तत्वान्न त्विह तथेति। साधारणधर्मस्तु महाभारते। "श्राद्धकर्म तपश्चैव सत्यमक्रोध एव च। स्वेषु दारेषु सन्तोषः शौचं विद्यानसूयिता। आत्मज्ञानं तितिक्षा च धर्मः साधारणो६ नृप!" चातुर्वर्ण्यस्येति शेषः। "तपश्चान्द्रायणादि। यदाह देवलः "व्रतोपवासनियमैः शरीरोत्तापनं तपः"। व्रतशब्दोऽत्र स्नानदानजपहोमपूजादिपरः। एतेन व्रतखण्डप्रतिपाद्यानां धर्माणामपि साधारणत्वं सूचितम्। आत्म-

ध्यानमित्यनेन मोक्षस्वरूपप्रतिपाद्यानामपि धर्माणां साधारणत्वम्। न च शूद्राधिकरणन्यायेन शूद्राणां विद्यायामनधिकार इति कथं मोक्षधर्माणां साधारणत्वमिति वाच्यम् तेषामुपनयनाभावेनाध्ययनासम्भवाद्वेदवाक्यविचार एवानधिकारः न पुनरवैदिके "श्रावयेच्चतुरो वर्णानिति" शूद्राणामपि मन्त्रयज्ञादिवत् पुराणस्मृतिप्रतिपाद्यविद्योपदेशदर्शनात्। ननु तथापि कथं वेदान्तवाक्यविचारजनितज्ञानाभावे शूद्राणां मोक्षधर्माधिकार इति चेत् नैवम् मोक्षसाधनस्य ज्ञानस्य तदेकसाध्यत्वासिद्धेः, तथा च श्रुतिः "तरति शोकमात्मवित् ब्रह्म वेद ब्रह्मैव भवति ब्रह्मविदाप्नोति परं विद्ययामृतत्वमश्नुते" इति, मोक्षस्यात्मज्ञानसाध्यतां वदति। आत्मज्ञानस्य च पुराणादिवचननिचयविचारपरिचयादप्युपपत्तेः श्रोतव्य इत्यादिवाक्यानां तु विचारनियमविधित्वानङ्गीकारात् अङ्गीकारे वा तस्य द्विजातिनियततया "श्रावयेच्चतुरो वर्णानित्यादिपुराणवचनविषयविधेरध्ययनविधिवद्विचारपर्य्यन्ततास्तु ततश्च यथा द्रव्यसाध्यत्वाविशेषेऽपि क्रतुनान्तरदर्शविहितोपायनियमार्जितद्रव्यसाध्यत्वम् एवमात्मज्ञानसाध्यत्वाविशेषेऽपि मोक्षस्य तदुपायविशेषजनितज्ञानसाध्यत्वमिति सर्व्वमनवद्यम्" तथा चोक्तं भागवते "स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरः। इति भारतमाख्यानं मुनिना कृपया कृतम्"। महाभारतेऽपि "मामुपाश्रित्य तु कौन्तेय! येऽपि स्युः पापयोनयः। स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्"। विष्णुः। "क्षमा सत्यं दमः शौचं दानमिन्द्रियसंयमः। अहिंसा गुरुशुश्रूषा तीर्थानुसरणं दया। आर्ज्जवं लोभशून्यत्वं देव, ब्राह्मणपूजनम्। अनभ्यसूया च तथा धर्मः सामान्य उच्यते इति"। ब्रह्मवैवर्त्ते "विद्या, दया, दमः, शौचं, सत्यमस्तेयता तपः। जितेन्द्रियत्वमक्रोधो लज्जा धर्मः इति स्मृतिः"। विष्णुधर्मोत्तरे "तस्य द्वाराणि यजनं तपोदानं दया क्षमा। ब्रह्मचर्य्यं तथा सत्यं तीर्थानुसरणं शुभम्। स्वाध्यायसेवा साधूनां सहवासः सुरार्च्चनम्। गुरूणां चैव शुश्रूषा ब्राह्मणानाञ्च पूजनम्। इन्द्रियाणां शमश्चैव ब्रह्मचर्य्यममत्सरम्। गङ्गास्नानं शिवो देवो विप्रपूजात्मचिन्तनम्। ध्यानं नारायणस्यैतत् संक्षेपाद्धर्मलक्षणम्" "दानमित्यनेन दानस्वरूपप्रतिपाद्यानाम्, तीर्थानुसरणमित्यनेनापि तीर्थस्वरूपप्रतिपाद्यानाम् देवब्राह्मणपूजनमित्यनेनापि परिशेषस्वरूपप्रतिपाद्यानाम् देवतापूजनादिधर्माणां साधारणत्वम्"। बृहस्पतिः "दया, क्षमाऽनसूया, च शौचानायासमङ्गलम्। अकार्पण्यमस्पृहत्वं सर्व्वसाधारणानि च। परे वा बन्धुवर्गे वा मित्रे द्वेष्टरि वा सदा। आपन्ने रक्षितव्यं तु दयैषा परिकीर्त्तिता। बाह्ये वाऽऽध्यात्मिके चैव दुःखे चोत्पादिते क्वचित्। न कुप्यति न वा हन्ति सा क्षमा परिकीर्त्तिता। न गुणान् गुणिनो हन्ति स्तौति चान्यगुणानपि। नान्यदोषेषु रमते साऽनसूया प्रकीर्त्तिता। अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः। स्वधर्मे च व्यवस्थानं शौचमेतत् प्रकीर्त्तितम्। शरीरं पीड्यते येन शुभेनापि कर्म्मणा। अत्यन्तं तन्न कुर्व्वीत अनायासः स उच्यते। प्रशस्ताचरणं नित्यमप्रशस्तविवर्ज्जनम्। एतद्धि मङ्गलं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः। स्तोकादप्युपकर्त्तव्यमदीनेनान्तरात्मना। अहन्यहनि यत्किञ्चित् अकार्पण्यं हि तत् स्मृतम्। यथोपपन्ने सन्तोषः कर्त्तव्योऽप्यल्पवस्तुनि। परस्य चिन्तयत्यर्थं साऽस्पृहा परिकीर्त्तिता"। तदेवं निरूपिताः षट्प्रकारा धर्माः। अन्यथाऽपि तद्भेदस्तत्रैवोक्तो यथा

विश्वामित्रः "यमार्य्याः क्रियमाणं हि शंसन्त्यागमवेदिनः। स धर्मो यं विगर्हन्ति तमधर्मं प्रचक्षते"। मनुः "प्रवृत्तञ्च निवृत्तञ्च द्विविधं कर्म्म वैदिकम्। स्वर्गादौ सृजता सृष्टं ब्रह्मणा वेदरूपिणा। प्रवृत्तसंज्ञको धर्मो गुणतस्त्रिविधो भवेत्। सात्त्विको राजसश्चैव तामसश्चेति भेदतः। काम्यबुद्ध्या च यत् कर्म्म मोक्षेऽपि फलवर्जितम्। क्रियते द्विज! कर्म्मेह तत् सात्त्विकमुदाहृतम्। मोक्षायेदं करोमीति सङ्कल्प्य क्रियते तु यत्। तत् कर्म्म राजसं ज्ञेयं न साक्षान्मोक्षदं भवेत्। कार्य्यं बुद्ध्यानपेक्षं यत् कर्म्मविध्यनपेक्षया। क्रियते द्विजवर्य्येह तत्तामसमुदाहृतम्"।

धर्म्माधिष्ठातृदेवस्योत्पत्तिः तत्र स्वरूपे वराहपु॰ दर्शिता यथा "अथोत्पत्तिं प्रवक्ष्यामि धर्म्मस्य महतीं नृप!। माहात्म्येन समायुक्तं विस्तरेण नराधिप!। पूर्व्वं ब्रह्माव्ययः शुद्धः परात्परसंज्ञितः। स सिसृक्षुः प्रजास्त्वादौ पालनं तास्वचिन्तयत्। तस्य चिन्तयतस्त्वङ्गाद्दक्षिणाच्छ्रोत्रात् सकुण्डलः। प्रादुर्बभूव पुरुषः श्वेतमाल्यानुलेपनः। तं दृष्ट्वोवाच भगवांश्चतुष्पादं वृषाकृ-

तिम्। पालयेमाः प्रजाः पुत्र ! त्वं ज्येष्ठो जगतो भव। इत्युक्तः स समुत्तस्थौ चतुष्पादः कृते युगे। त्रेतायां च त्रिभिः पादैर्द्वाभ्यां वै द्वापरेऽभवत्। कलावेकेन पादेन प्रजाः पालयते विभुः। षड्भेदो ब्राह्मणानां स त्रेधा क्षत्रे व्यवस्थितः। द्वेधा वैश्येषु शूद्रेषु त्वेकधा जगतः प्रभुः। रसातलेषु सर्वेषु द्वापरेषु स्वयम्भुवः। चतुःशृङ्गस्त्रिपाच्चैव द्विशिराः सप्तहस्तवान्। त्रिधैव बद्धो विप्राणां सुखगः पालयन् प्रजाः"।

भाग॰ ४।१ अ॰। तत्पत्नीपुत्रादिभेदा दर्शिता यथा "त्रयोदशाऽदाद्धर्माय तथैकामग्नये विभुः। पितृभ्य एकां युक्तेभ्यो भवायैकां भवच्छिदे। श्रद्धा मैत्री दया शान्तिस्तुष्टिः पुष्टिः क्रियोन्नतिः। बुद्धिर्मेधा तितिक्षा ह्रीर्मूर्त्तिर्धर्मस्य पत्नयः। श्रद्धाऽसूत शुभम् मैत्री प्रसादमभयं दया। शान्तिः सुखं मुदं तुष्टिः स्मयं पुष्टिरसूयत। योगं क्रियोन्नतिर्दर्पमर्थं बुद्धिरसूयत। मेधा स्मृतिं तितिक्षा तु क्षेमं ह्रीः प्रश्रयं सुतम्। मूर्त्तिः सर्वगुणोपेतौ नरनारायणावृषी। ययोर्जन्मन्यदो विश्वमभ्यनन्दत् सुनिर्वृतम्"।

वामनपुरा॰ अन्येऽपि तस्य भार्य्यापुत्रा उक्ता यथा "धर्मस्य भार्य्याऽहिंसाख्या तस्यां पुत्रचतुष्टयम्। सम्प्राप्तं मुनिशार्दूल ! योगशास्त्रविचारकम्। ज्येष्ठः सनत्कुमारोऽभूत् द्वितीयश्च सनातनः। तृतीयः सनको नाम चतुर्थश्च सनन्दनः। सांख्यवेत्तारमपरं कपिलं वोढुमासुरिम्। दृष्ट्वा पञ्चशिखं श्रेष्ठं योगयुक्तं तपोनिधिम्। ज्ञानयोगं न ते दद्युर्ज्यायां सोऽपि कनीयसाम्"। देवादिभेदेन धर्मभेदा वामनपु॰ ११ अ॰ उक्ता यथा "किंलक्षणो भवेद्धर्मः किमाचरणसत्क्रियः। यमाश्रित्य न सीदन्ति देवाद्यास्तु तदुच्यताम्। ऋषय ऊचुः। देवानां परमो धर्मः सदा यज्ञादिकाः क्रियाः। स्वाध्यायवेदवेत्तृत्वं विष्णुपूजारतिः स्मृतिः १। दैत्यानां बाहुशालित्वं मात्सर्यं युद्धसत्क्रिया। वेदनं नीतिशास्त्राणां हरभक्तिरुदाहृता २। सिद्धानामुदितो धर्मो योगयुक्तिरनुत्तमा। स्वाध्यायो ब्रह्मविज्ञानं भक्तिर्द्वाभ्यामपि स्थिरा ३। उत्कृष्टोपासनं ज्ञेयं नृत्यवाद्येषु वादिता। सरस्वत्यां स्थिरा भक्तिर्गान्धर्वो धर्म उच्यते ४। विद्याधरत्वमतुलं विज्ञानं पौरुषे मतिः। विद्याधराणां धर्मोऽयं भवान्यां भक्तिरेव च ५। गान्धर्वविद्यावेदित्वं भक्तिः सूर्ये तथा स्थिरा। कौशल्यं सर्वशिल्पेषु धर्मः किम्पुरुषः स्मृतः ६। ब्रह्मचर्य्यममानित्वं योगाभ्यासरतिर्दृढा। सर्वत्र कामचारित्वं धर्मोऽयं पैतृकः स्मृतः ७। ब्रह्मचर्य्यं यताशित्वं जप्यं ज्ञानञ्च राक्षस !। नियमोधर्मवेदित्वमार्षं धर्मं प्रचक्षते ८। स्वाध्यायो ब्रह्मचर्य्यञ्च दानं यजनमेव च। अकार्पण्यमनायासं दयाहिंसाक्षमादयः। जितेन्द्रियत्वं शौचञ्च माङ्गल्यं भक्तिरच्युते। शङ्करे भास्करे देव्यां धर्मोऽयं मानवः स्मृतः ९। धनाधिपत्यं भोगाश्च स्वाध्यायः शङ्करार्च्चनम्। अहङ्कारमशौचञ्च धर्मोऽयं गुह्यकेष्विति १०। परदाराभिमर्षित्वं परार्थेऽपि च लोलुपा। स्वाध्यायस्त्र्यम्बके भक्तिर्धर्मोऽयं राक्षसः स्मृतः ११। अविवेकतायाऽज्ञानं शौचहानिरसत्यता। पिशाचानामयं धर्मः सदा चामिषगृध्नुता १२। योनयस्तु द्वादशैताः सहधर्मा राक्षस !। ब्रह्मणा कथिताः पुण्या द्वादशैव गतिप्रदाः"। २धनुषि ३यमे ४सोमपे च पु॰ मेदि॰ ५सत्सङ्गे ६अर्हति जिने च पु॰ हेमच॰। ७न्याये ८स्वभावे ९आचारे १०उपमायां ११क्रतौ १२अहिंसायाम्। १३उपनिषदि मेदि॰पु॰न॰।१४आत्मनि तस्य सर्वस्य स्वस्मिन् धारणात् १५जीवे देहप्राणादेर्धारणात् १६षट्कलप्रस्तारे प्रथमगुरुकेऽन्त्यलघुचतुष्टयके द्वादशभेदे।

१७भाग्याख्ये लग्नेन्दुभ्यां नवमस्थाने तद्भावानयनं द्वादशभावशब्दोक्तदिशा बोध्यम्। तत्र चिन्त्यपदार्था जन्मकाले तद्भावस्थग्रहयोगादिकफलं जातकपद्धत्युक्तं यथा "विहाय भावान् सकलान् प्रयत्नाद्भाग्याभिधं दैवविदा विचिन्त्यम्। भाग्यान्वितो ना यदि शीलविद्याः कुलं तदायुश्च भवेत् सुधन्यम्। लग्नाच्चन्द्रात् यन्नवेदङ्कसंख्यं भाग्यस्थानं प्राज्ञैः कीर्त्तितं तत्। चिन्त्यो वीर्य्याढ्यात्तयोस्तत्पतिः कः कस्मिन् भावे कीदृशः कारको वा। भाग्यालयं स्वामियुतेक्षितं चेत् स्वदेशतो भाग्यविवृद्धिदं तत्। अन्येन दृष्टं स्वय वा युतं चेदन्यत्र देशे फलदानदक्षम्। भाग्यभे शुभखगा निरीक्षिताः स्यू राज्यदा न रिपुनीचगृहे चेत्। धर्मधाम्न्युडुपतिः शुभवृद्धिकराश्च स्वायुषः स्थिरधनस्य च दद्यै। नीचारिसंस्थाश्च न सौम्यदृष्टाः पापाश्च भाग्ये न शुभप्रदाः स्युः। क्रूरा अपि स्वे भवने शुभाः स्युर्विशेषतः सद्ग्रहैश्च वीक्षिताश्चेत्। पूर्णचन्द्रसहितं शुभदृष्टं चेत् स्यात् प्रधानपुरुषः पुरुषोऽसौ। खेचरेश्वरसमागमयुक्तं सद्गुरोस्तु मुदितोऽतिविशेषात्। स्वोच्चस्थिताः सर्वनभश्च

रेन्द्राः शुभाः शुभस्थानगता विदध्युः। नरं समृद्धं शुभदृष्टदेहा भूपं हतारिं सुशरीरकीर्त्तिम्। लग्नादि खेचरयुतिश्च भाग्यभे भूपतिं हि जनयेत् बुधोन्विता। शौरिभूसुतगुरून्विता नरं कामकीर्त्तिधनसौख्यवर्जितम्। धर्मे तु तीर्थं दिनकृच्छनाव्दे चन्द्रो नखे१० वातमहृक् च शक्रे१४। मातृर्क्षतिर्शौऽङ्कयुगे२६ कविर्मा तिथ्यब्दके १५ तातमृतिं गुरुश्च"।

वर्षलग्नात् धर्मभावफलं नी० ता० उक्तं यथा "भौमेऽब्दपे त्रिनवगे क्रूरायुक्ते बलान्विते। शुभाव्रहस्तदा मार्गश्चिरं कार्य्यं स्थिरं तनु। त्रिधर्मस्थोऽब्दपः सूर्य्यः कन्दलीमार्गसौख्यदः। अन्यप्रेषणयानं स्यात् स चेन्नाधिकृतो भवेत्। शुक्रेऽब्पे त्रिनवगे मार्गसौख्यं विलोमगे। अस्ते वा कुगतिः सौम्ये देवयात्रा तथाविधे। क्रूरार्दिते कुयानं स्यात् गुरावेवं विचिन्तयेत्। इत्यशाके लग्नधर्मपत्योर्यात्राऽस्त्यचिन्तिता। लग्नेशो धर्मपे यच्छन् स्वं महचिन्तिताध्वगः। एवं लग्नाब्दयोर्योगे सुथहाङ्कपयोरपि। गुरुस्थाने कुजे धर्मे सद्यात्रा भृत्यवित्तदा। स्वस्थाने लग्नपो भौमो दृष्टः सद्यानसौख्यदः। स्वस्थानगो हि बलवान् लग्नदर्शी सुयानदः। जन्माधिकारी ज्ञो मन्दस्थाने क्रूरयुतो यदा। पन्था रिपोः स्वकटकाद्रुरशुक्रेन्दुजीवयोः। धर्मे शनिर्नाधिकारी पन्थानमशुभं वदेत्। इत्थं गुरौ दूरयात्रा न्तपसङ्गस्ततो शुभः। कुजेऽब्दपे नष्टबले स्वजनाद्दूरतो गतिः। द्यूनेन्थिशा धर्म इन्दौ सबलेऽध्वा विदेशजः। वर्षेशो बलवान् पापायुतः केन्द्रेऽधिकारवान्। अधिकारे गतिः सह्ये सेनापत्येऽपि वा वदेत्। एवंविधे कुजे जीवे युतेऽर्कांशगते पुनः। परसैन्योपरिमतिजयख्यातिसुखावहा। जीवात्स्वमगे भौमे शुभां यात्रां न्टपां वदेत्"। १८ आधेये स्वहत्तिपदार्थे "धर्मादनिच् केवलात्" पा०बहु०अनिच्। विधर्मा सुधर्मा केवलादित्युक्तेः परमः स्वोधर्मो यस्येति बहुब्रीहौ न। सन्दिग्धसाध्यधर्मा इत्यादौ तु कर्मधारयपूर्वपदो बहुब्रीहिः समानविभक्तिकपदपूर्वकेतरत्वस्यैव केवलशब्दार्थत्वात् निवृत्तिधर्मा अनुच्छित्तिधर्मा इत्यादौ अनिच्।

**धर्मकर्म्मन्** न० धर्मस्य धर्मार्थं कर्म। धर्मप्रतिपादककर्मभेदे "वेदप्रणिहितं धर्मकर्म तन्मङ्गलं परम्" ब्रह्मवै० पु०। धर्मकार्य्यधर्मक्रियादयोऽप्यत्र।

**धर्मकथादरिद्र** पु० धर्मार्थकथायां दरिद्रः। कलिकाले जातमानवे कलौ नृणां धर्मकथाशून्यत्वात् तथात्वम्।

**धर्मकाम** पु० धर्मं कामयते फलानभिसन्धानेन कम–अण् उप०स०। कर्त्तव्यबुद्ध्या धर्मकारके "अथ ते (तव) यदि धर्मविचिकित्सा वृत्तिविचिकित्सा वा स्यात्। ते तत्र ब्राह्मणा सम्यग्दर्शनयुक्ता आयुक्ता अलूक्षा धर्मकामाः स्युः" एका० धृता तैत्तिरीयश्रुतिः। "धर्मकामाः जीवन्मुक्तवत् कर्मण्यौदासीन्यमकुर्वाणाः" एका०रघु०।

**धर्मकाय** पु० धर्मस्य धर्मार्थं कायोऽस्य। बुद्धे त्रिका०।

**धर्मकील** पु० धर्मस्य कील इव। राजशासने त्रिका०। संज्ञायां कन्। धर्मकीलक ब्रह्मशासने शब्दरत्ना०।

**धर्मकृत्** त्रि० धर्मं धर्मसाधनं कर्म करोति कृ–क्विप् तुक्। १धर्मसाधनकर्मकरे। "ज्येष्ठासु च न बहुमित्रः सन्तुष्टो धर्मकृत् प्रचुरकोपः" वृ० सं०। २विष्णौ पु० धर्मगुप् "धर्मकृद्धर्मी" विष्णुस०। "धर्माधर्मविहीनोऽपि धर्ममर्य्यादास्थापनार्थं धर्ममेव करोतीति धर्मकृत्" भा०।

**धर्मकेतु** पु० धर्मः अहिंसारूपकर्म केतुर्यस्य। १बुद्धे शब्दा० तस्याहिंसारूपपरमधर्मकत्वात् तथात्वम्। काश्यपवंश्ये २सुकेतुन्टपपुत्रभेदे। "सुकेतुतनयश्चापि धर्मकेतुरिति श्रुतः" हरिवं० २९ अ०। "अलर्कात् सन्ततिस्तस्मात् सुनीतोऽथ निकेतनः। धर्मकेतुःसुतस्तस्मात् सत्यकेतुरजायत" भाग० ९।१७।६ ३निकेतनपुत्रे न्टपभेदे च। धर्मः केतुरिवास्य। ४धर्मध्वजे त्रि०।

**धर्मकोष** पु० धर्मः कोष इव धर्मस्य कोषः समूहो वा। धर्मरूपे रक्षणीये १वस्तुनि २धर्मसमूहे च "ब्राह्मणो जायमानो हि पृथिव्यामधिजायते। ईश्वरः सर्वभूतानां धर्मकोषस्य गुप्तये" मनुः।

**धर्मक्षेत्र** न० तद्०। धर्मार्जनार्थक्षेत्रे कर्मभूमौ भारतवर्षे। धर्मस्य पूर्वमविद्यमानस्योत्पत्तेः विद्यमानस्य च हद्धेर्निमित्ते शस्यस्येव २स्थानभेदे च "धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः" गीता। कुरुक्षेत्रस्य श्रुतिस्मृतिप्रसिद्धं देवयजनस्थानमविमुक्तं वा कुरुक्षेत्रशब्दे दर्शितं तद्व्याहत्तये धर्मक्षेत्रमिति विशेषणम्। "तस्मिन् याताः पाण्डवाः पूर्वोक्तविधधार्मिका यदि पक्षहयहिंसानिमित्तादधर्माद्भीता निवर्त्तेरन् ततः प्राप्तराज्या एव मम सुताः अथ वा धर्मक्षेत्रमाहात्म्येन पापिनामपि मत्पुत्राणां कदाचित् चित्तप्रसादः स्यात्तदा च तेऽनुतप्ताः कपटोपात्तं राज्यं पाण्डवेभ्यो यदि दद्युस्तर्हि विनापि युद्धं हता एवेति स्वपुत्रराज्यालाभे पाण्डवराज्यलाभे च

इष्टतरसुपायमपश्यतो महानुद्वेग एव प्रश्नबीजम्" मधुसू०

**धर्मगुप्** त्रि० धर्मं गोपायति गुप—आयाभावपक्षे क्विप् ६त०। १धर्मरक्षके २विष्णौ पु० "धर्मगुप् धर्मकृत् धर्मी" विष्णुस०। "धर्मसंरक्षणार्थाय सम्भवामि युगे युगे" गीतायां तस्य धर्मरक्षार्थमाविर्भावस्योक्तेः तस्य तथात्वम्।

**धर्मघट** पु० धर्मार्थं देयो घटः। सौरवैशाखे प्रत्यहं धर्मार्थं दीयमाने गन्धोदकभोज्यादिसहिते घटे। तद्विधानादि भविष्यपु० उक्तं यथा "विनिष्क्रान्ते ततश्चैत्रे यदा मेषगतो रविः। दोषादिरहिते काले चतुर्वर्णं समाचरेत्। तत्र नित्यं घटं दद्यात् षाण्मासिकं सभोज्यकम्। चन्दनेन समालिप्तं दक्षिणादिभिरन्वितम्। व्रतमेतत् समाकुर्य्यात् यावत् वर्षचतुष्टयम्"। इदन्तु व्रतरूपं दानम्। हेमाद्रिदानखण्डे तु अन्यविधं धर्माख्यघटस्य दानमुक्तं यथा "अथ धर्मघटदानमाह विष्णुः "शीतलेन सुगन्धेन वारिणा पूरितं घटम्। शुक्लचन्दनदिग्धाङ्गं पुष्पदामापशोभितम्। दध्योदनयुतं कुर्य्यात्करावं तस्य चोपरि। उपानच्छत्रसंयुक्तं धर्माख्यं कल्पयेद्घटम्। पुष्पाक्षतं स्पृष्ट्वा तु इमं मन्त्रमुदीरयेत्। ओं नमो विष्णुरूपाय नमः सागरसम्भव!। अपांपूर्णोद्धराऽस्मांस्त्वं दुःखसंसारसागरात्। उदकुम्भो मया दत्तो ग्रीष्मे काले दिने दिने। उदकुम्भप्रदानेन प्रीयतां मधुसूदनः"। भविष्योत्तरे "प्रत्यहं धर्मघटको वस्त्रसंवेष्टिताननः। ब्राह्मणस्य गृहे नेयः शीतामलजलः शुचिः। वसन्तग्रीष्मयोर्मध्ये यः पानीयं प्रयच्छति। पले पले सुवर्णस्य फलमाप्नोति मानवः। मार्गशीर्षात् समारभ्य उदकुम्भन्तु यः क्षिपेत्। दिने दिने सहस्रस्य गवां पुण्यफलं लभेत्। तस्यैवोद्यापनं कार्य्यं मासि मासि नरोत्तम। मण्डकावेष्टकाभिश्च पक्वान्नैः सार्वकामिकैः। उद्दिश्य शङ्करं विष्णुं ब्रह्माणमथ वा पितॄन्। सतिलं मोचयित्वा तु मन्त्रेणानेन मानवः। एष धर्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः। अस्य प्रदानात् सततं मम सन्तु मनोरथाः। अनेन विधिना यस्तु धर्मकुम्भं प्रयच्छति। वसन्ते ग्रीष्मसमये प्रपादानफलं लभेत्। प्रपादानफलं सोऽपि प्राप्नोतीह न संशयः"। एतत् परमेव "दद्युर्धर्मघटांश्चापि सुगन्धोदकपूरितान्" काशीख० १२ अ० वचनम्। धर्मकुम्भादयोऽप्यत्र।

**धर्मचक्र** न० ६त०। धर्मसमूहे। "भीष्मेण विहितं राष्ट्रे धर्मचक्रमवर्त्तत" भा० आ० १०८ अ०। "यत्र पूर्वाभिसर्गे वै धर्मचक्रं प्रवर्त्तितम्" भा० शा० ३५७ अ०। धर्मस्य चक्रं यत्र। २बुद्धे पु० त्रिका०।

**धर्मचक्रभृत्** पु० धर्मचक्रं बिभर्त्ति भृ—क्विप् तुक्। १जिने धर्मार्थः २धर्मसमूहधारके त्रि०।

**धर्मचारिन्** त्रि० धर्मं तत्साधनकर्म चरति चर—णिनि ६त०। १धर्मसाधनकर्मकारके। "स चेत् स्वयं कर्मसु धर्मचारिणां त्वमन्तरायो भवसि च्युतो विधिः" रघुः। स्त्रियां ङीप्। सा च २सहधर्मकारिण्यां जायायां सहधर्मचारिण्यां। "ज्येष्ठायां धर्मचारिण्यां महिष्यां गर्भमादधे" भा० व० २८ अ०। [हेमच०।

**धर्मचिन्तन** न० चिन्ति—भावे ल्युट् ६त०। धर्मस्य चिन्तायां

**धर्मचिन्ता** स्त्री चिन्ति—भावे अ ६त०। धर्मस्य चिन्तने अध्याधौ अमरः।

**धर्मज** पु० धर्मार्थं जायते जन—ड। १औरसे प्रथमे पुत्रे "अपितृणं सन्नयति येन चानन्त्यमश्नुते। स एव धर्मजः पुत्रः कामजानितरान् विदुः" मनुः। धर्मात् जायते जन—ड। २धर्मपुत्रे युधिष्ठिरे। "एवं सञ्चिन्त्य भगवान् स्वराज्ये स्थाप्य धर्मजम्। नन्दयामास सुहृदः साधूनां वर्त्म दर्शयन्" भाग० १।१। १७। युधिष्ठिरस्य धर्मतो जन्मकथा भा० आ० १२२अ०। "संवत्सरधृते गर्भे गान्धार्या जनमेजय!। आह्वयामास वै कुन्ती गर्भार्थं धर्ममच्युतम्। सा बलिं त्वरिता देवी धर्मायोपजहार ह। जजाप विधिवज्जप्यं दत्तं दुर्वाससा पुरा। आजगाम ततो देवो धर्मो मन्त्रबलात्ततः। विमाने सूर्यसङ्काशे कुन्ती यत्र जपस्थिता। विहस्य तां ततो ब्रूयाः कुन्ति! किन्ते ददाम्यहम्। सा तं विहस्यमानाऽपि पुत्रं देह्यब्रवीदिदम्। संयुक्ता सा हि धर्मेण योगमूर्त्तिधरेण ह। लेभे पुत्रं वरारोहा सर्वप्राणभृतां हितम्। ऐन्द्रे १८ चन्द्रसमायुक्ते मुहूर्त्तेऽभिजितेऽष्टमे। दिवामध्यगते सूर्य्ये तिथौ पूर्णेऽतिपूजिते। समृद्धयशसं कुन्ती सुषाव प्रवरं सुतम्। जातमात्रे सुते तस्मिन् वागुवाचाशरीरिणी। एष धर्मभृतां श्रेष्ठो भविष्यति नरोत्तमः। विक्रान्तः सत्यवाक् चैव राजा पृथ्व्यां भविष्यति। युधिष्ठिर इति ख्यातः पाण्डोः प्रथमजः सुतः"। ३बुद्धभेदे ४दिव्यभेदे न० धटशब्दे दृश्यम्। ५धर्मतो जातमात्रे त्रि०। ६नरनारायणयोः पु० द्वि० व०। धर्मशब्दे तयोर्मूर्त्तिरूपधर्मपत्नीजन्मकथा दृश्या।

**धर्मजन्मन्** पु॰ धर्मतो जन्म यस्य। युधिष्ठिरे "वीक्ष्य धर्ममथ धर्मजन्मना" माघः।

**धर्मजन्य** त्रि॰ धर्मेण जन्यः। धर्मतो जाते सुखे "सुखं तु जगतामेव काम्यं धर्मेण जन्यते" भाषायां तस्य तथोक्तेस्तथात्वम्।

**धर्मजिज्ञासा** स्त्री धर्मार्थं धर्माचरणाय जिज्ञासा। वेदवाक्यविचारे धर्मसन्देहे वेदवाक्यानां विषयेत्याद्यङ्गपञ्चकयुक्ते विचारभेदे धर्ममीमांसायाम् "अथातोधर्मजिज्ञासा" जै॰ सू॰ धर्ममीमांसाकर्ममीमांसायज्ञयोश्च समानार्थतया धर्मस्योपक्रमे तल्लक्षणनिर्देशाय प्रवृत्ते "चोदनालक्षणोऽर्थो धर्म"इति जै॰२२ सूत्रे धर्मशब्दस्य कर्मपरत्वं भाष्यसम्मतं युक्तम् न तु पुण्यपरत्वमिति।

**धर्मजीवन** पु॰ याजनप्रतिग्रहादिना परस्य धर्ममुत्पाद्य जीवति जीव–ल्यु। याजनादिना परस्य धर्मोत्पादनेन जीवनोपाययुते ब्राह्मणभेदे। "यथापि धर्मसमयात् प्रच्युतो धर्मजीवनः" मनुव्याख्याने कुल्लू॰।

**धर्मज्ञ** त्रि॰ धर्मं जानाति ज्ञा–क। अयं धर्म इति ज्ञानयुते। "धर्मज्ञः सत्यवादी च" "अमात्यमुख्यं धर्मज्ञं प्राज्ञं दक्षं कुलोद्गतम्" मनुः।

**धर्मण** पु॰ धर्माय नम्यते नम–बा॰ कर्मणि ड। (धामनि) ख्याते १वृक्षभेदे। (ढेमना) ख्याते २सर्पभेदे च मेदि॰।

**धर्मतीर्थ** न॰धर्मकृतं तीर्थम्। तीर्थभेदे"ततो गच्छेन्महाराज! धर्मतीर्थमनुत्तमम्। यत्र धर्मो महाभागस्तप्तवानुत्तमं तपः। तेन तीर्थं कृतं पुण्यं स्वेन नाम्ना च विश्रुतम्। तत्र स्नात्वा नरो राजन्! धर्मशीलः प्रजायते। आसप्तमं कुलञ्चैव पुनीते नात्र संशयः" भा॰ व॰ ८४ अ॰।

**धर्मद** पु॰ धर्मं स्वधर्मफलं ददाति अन्यस्मै संक्रामयति दा–क। १स्वधर्मफलस्य अन्यस्मिन् संक्रामके २धर्मोत्पादके च "एतदेव मगाधानं धर्मिष्ठे धर्मदं तथा" हरिवं॰१२४अ॰। ३कुमारानुचरभेदे पु॰। "धर्मदोमन्मथभवः सुषेनश्च वीर्यवान्" भा॰ शा॰ ४६अ॰ तदनुचरोक्तौ।

**धर्मदान** न॰ "पात्रेभ्यो दीयते नित्यमनपेक्ष्य प्रयोजनम्। केवलं धर्मबुद्ध्या यत् धर्मदानं प्रचक्षते" देवलोक्ते प्रयोजनान्तरानुद्देशेन दाने

**धर्मदार** पु॰ ब॰व॰ धर्मार्थमग्न्याधानाद्यर्थम् दाराः। धर्मार्थदारेषु। "धर्मदारान् वने त्यक्त्वा परकर्माकरोत् प्रभुः" कामन्दकीय नीतिशास्त्रम्।

**धर्मदीपिका** स्त्री गौडप्रसिद्धे मीमांसाग्रन्थभेदे।

**धर्मदुघा** स्त्री धर्मान् दोग्धि आधारस्य कर्तृत्वविवक्षया कर्त्तरि दुह–क घश्चान्तादेशः। धर्मदानस्थाने बहिर्वेद्याम् शब्दार्थचि॰।

**धर्मदेश** पु॰ धर्मसाधनं देशः। "स्वभावात् यत्र चरति कृष्णसारः सदा मृगः। धर्मदेश स विज्ञेयो द्विजानां धर्मसाधनम्" संवर्त्तोक्ते देशभेदे। हेमाद्रिव्र॰ विस्तारः।

**धर्मद्रवी** स्त्री धर्मजनको द्रवो यस्याः गौरा॰ ङीष्। "विष्णुपादाग्रसम्भूते! गङ्गे त्रिपथगामिनि!। धर्मद्रवीति विख्याते! पापं मे हर जाह्नवि!। इत्युक्तायां गङ्गायाम् प्रा॰ त॰ दृश्यम्।

**धर्मद्रोहिन्** पु॰ धर्माय परस्य धर्माचरणाय द्रुह्यति द्रुह–णिनि ४त॰। राक्षसे। [बुद्धे हेमच॰।

**धर्मधातु** पु॰ धर्ममहिंसारूपं परमं धर्मं दधाति धा–तुन्।

**धर्मध्वजिन्** पु॰ धर्मो ध्वजं चिह्नमिवास्यस्य इनि। लोके निजधार्मिकत्वख्यापनार्थं धर्मकारके धर्मचारिचिह्नवृत्तौ "धर्मध्वजी लिङ्गवृत्तिः" अमरः। "धर्मध्वजी सदालुब्धश्छाद्मिको लोकदम्भकः" मनुः।

**धर्मन्** पु॰ धृ–मनिन्। १धर्मे पुण्ये शुभादृष्टभेदे "प्रैविरचिधर्मणे त्वा धर्म जिन्व" ताण्ड्यब्रा॰ १।८।२। "धर्मणे धर्माय"भा॰। "निर्गुणत्वान्न चिद्धर्मा"सां॰सू॰। आत्मनो निर्गुणत्वान्न तस्य चित् धर्मो धर्म इत्यर्थः। "ज्ञानं नैवात्मनो धर्मः"इति सां॰प्र॰धृतवाक्यात् तथात्वम्। धर्मिन्शब्दे दृश्यम्। २धारके त्रि॰। "प्रितं तु सोमं मह्रो धर्माणं नविप्रीमं" ऋ॰ १।१८७।१ "मह्रो महान्तं धर्माणं सर्वस्य धारकम्"भा॰। अनेनैवोपपत्तौ बहुव्रीहौ "धर्मादनिच् केवलात्" पा॰ अनिच्करणं चित्स्वरार्थं धर्मशब्दान्ततया प्रयोगनिरासार्थञ्च। [धर्मसुतादयोऽप्यत्र।

**धर्मनन्दन** पु॰ ६त॰। युधिष्ठिरे धर्मजशब्दे दृश्यम्।

**धर्मनाभ** पु॰ धर्मः नाभिरिवास्य अच् समा॰। विष्णौ हेमच॰

**धर्मनेत्र** पु॰१यदुवंश्ये हैहयस्य पुत्रे। यदुवंशोपक्रमे "हैहयस्याभवत् पुत्रो धर्मनेत्र इति श्रुतः" हरिवं॰ ३३ अ॰। २पुरुवंश्ये नृपभेदे। "धार्त्तराष्ट्रसुतान् आहुस्तोनेतान् प्रसृतान् भुवि। प्रतीपं धर्मनेत्रं च सुनेत्रं चापि भारत!" भा॰ आ॰ ६४ अ॰। अयञ्च प्रसिद्धात् धृतराष्ट्राद् भिन्नः धृतराष्ट्रस्य पितुः शान्तनोः प्रतीपपुत्र तया तत्र कीर्तनात्। "प्रतीपस्य त्रयः पुत्रा जज्ञिरे भरतर्षभ। देवापिः शान्तनुश्चैव वाह्लीकश्च महारथ"। ३पौरवंश्यतंसुन्वपुत्रभेदे च "तंसोः सुबोधो राजर्षिर्धर्मनेत्रः प्रतापवान्" हरिवं॰३२अ॰

**धर्मनैपुण्यकाम** पु० धर्मस्य नैपुण्यमतिशयं कामयते कम–अण्। पूर्वं गृहीतवेदप्राये पश्चाद् अध्ययनजन्यादृष्टविशेषेच्छौ। “नित्यानध्याय एव स्याद् ग्रामेषु नगरेषु च। धर्मनैपुण्यकामानां पूतिगन्धे च सर्वदा” मनुः। “नैपुण्यमतिशयः धर्मातिशयार्थिनो ग्रामनगरयोः सर्वदानध्यायः स्यात्। कुत्सितगन्धे च सर्वस्मिन्नपि गम्यमाने। धर्मनैपुण्यकामं प्रत्ययं नित्यानध्यायोपदेशो, विद्यानैपुण्यकामस्य कदाचिदध्ययनमनुजानाति। ये शिष्याः केचिद् गृहीतवेदप्राया अध्ययननियमजन्यादृष्टेच्छवस्ते धर्मनैपुण्यकामाः। केचित् प्रथमाध्येतारो विद्यातिशयमात्रार्थिनस्ते विद्यानैपुण्यकामाः” कुल्लू०।

**धर्मप(ट्ट)त्तन** न० ६० त० १४ अ० कूर्मविभागे दक्षिणस्यामुक्ते देशभेदे “वैदूर्य्यशङ्खमुक्तात्रिवारिचरधर्मपट्टनद्वीपाः” २आवन्त्यां धर्मपुर्य्याम्। त्रिका०। तत् कारणतयाऽस्त्यस्य अच्। ३मरिचे न० अमरः।

**धर्मपति** पु० धर्मस्य पतिर्वरुणात्। १धर्माधिपत्यसाधने वरुणे “अथ वरुणाय धर्मपतये। वारुणं यवमयं चरुं निर्वपति तदेनं वरुण एव धर्मपतिर्धर्मस्य पतिं करोति परमता वै सा यो धर्मस्य पतिरसद्यो हि परमतां गच्छति तं हि धर्म उपयन्ति तस्माद् वरुणाय धर्मपतये” शतब्रा० ५।३।३।६। धर्मः पतिरिव यस्य। २धर्मशीले च “वरुणो धर्मपतीनाम्” यजु० ९।३९। “वरुणो धर्मपतीनां धर्मेश्वराणां धर्मशीलानामाधिपत्ये त्वां सुवताम्” वेददी०।

**धर्मपत्नी** स्त्री धर्मार्थं पत्नी। निर्दोषायां पत्न्याम्। “प्रथमा धर्मपत्नी च द्वितीया रतिवर्द्धिनी। दृष्टमेव फलं तत्र नादृष्टमुपजायते। धर्मपत्नी समाख्याता निर्दोषा यदि सा भवेत्” दक्षसं०। “पतिव्रता धर्मपत्नी पितृपूजनतत्परा। मध्यमन्तु ततः पिण्डमद्यात् सम्यक् सुतार्थिनी” मनुः। “औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः” याज्ञ०। १धर्मदेवस्य पत्नीषु दक्षकन्यारूपासु। “नामतो धर्मपत्न्यस्ताः कीर्त्यमाना निबोध मे। कीर्त्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया तथा। बुद्धिर्लज्जा मतिश्चैव पत्न्यो धर्मस्य ता दश” भा० आ० ६६ अ०।

**धर्मपत्र** न० धर्मसाधनं पत्रमस्य। यज्ञोडुम्बरे शब्दच०।

**धर्मपर** त्रि० धर्मः परो यस्य। धर्मप्रधानके धर्मासक्ते “जितेन्द्रियो धर्मपरः” भा० व० २०५ अ०। धर्मपरायणोऽप्यत्र।

**धर्मपरिणाम** पु० धर्मरूपः परिणामः। पातञ्जलोक्ते चित्तस्य धर्मिणः व्युत्थाननिरोधयोर्धर्मयोरभिभवप्रादुर्भावरूपे परिणामभेदे यथाह तत्र

“एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः” पात० सू०।

“एतेन पूर्वोक्तेन चित्तपरिणामेन धर्मलक्षणावस्थारूपेण भूतेन्द्रियेषु धर्मपरिणामो लक्षणपरिणामश्चाऽवस्थापरिणामश्चोक्तोवेदितव्यः तत्र व्युत्थाननिरोधयोर्धर्मयोरभिभवप्रादुर्भावौ धर्मिणि धर्मपरिणामः। लक्षणपरिणामश्च निरोधस्त्रिलक्षणः त्रिभिरध्वभिर्युक्तः स खल्वनागतलक्षणमध्वानं प्रथमं हित्वा धर्मत्वमनतिक्रान्तो वर्त्तमानं लक्षणं प्रतिपन्नः। यत्रास्य स्वरूपेणाभिव्यक्तिरेषोऽस्य द्वितीयोऽध्वा न चातीतानागताभ्यां वियुक्तः। तथा व्युत्थानं त्रिलक्षणं त्रिभिरध्वभिर्युक्तं वर्त्तमानं लक्षणं हित्वा धर्मत्वमनतिक्रान्तमतीतलक्षणं प्रतिपन्नमेषोऽस्य तृतीयोऽध्वा न चानागतवर्त्तमानाभ्यां लक्षणाभ्यां वियुक्तः। एवं पुनर्व्युत्थानमुपसम्पद्यमानमनागतलक्षणं हित्वा धर्मत्वमनतिक्रान्तं वर्त्तमानं लक्षणं प्रतिपन्नं यत्रास्य स्वरूपाभिव्यक्तौ सत्यां व्यापार एषोऽस्य द्वितीयोऽध्वा न चातीतानागताभ्यां लक्षणाभ्यां वियुक्तमित्येवं पुनर्निरोध एवं पुनर्व्युत्थानमिति। तथाऽवस्थापरिणामो निरोधक्षणेषु निरोधसंस्कारा बलवन्तो भवन्ति दुर्बला व्युत्थानसंस्कारा इत्येष धर्माणामवस्थापरिणामः तत्र धर्मिणोधर्मैः परिणामो धर्माणाम् अध्वनां लक्षणैः परिणामो लक्षणानामप्यवस्थाभिः परिणाम इत्येवं धर्मलक्षणावस्थापरिणामैः शून्यं न क्षणमपि गुणवृत्तमवतिष्ठते। चलञ्च गुणवृत्तं गुणस्वाभाव्यन्तु प्रवृत्तिकारणमुक्तं गुणानामिति। एतेन भूतेन्द्रियेषु धर्मधर्मिभेदात् त्रिविधपरिणामो वेदितव्यः। परमार्थतस्त्वेक एव परिणामो धर्मिस्वरूपमात्रो हि धर्मोधर्मिविक्रियैवैष धर्मद्वारा प्रपञ्च्यते इति तत्र धर्मस्य धर्मिणि वर्त्तमानस्यैवाध्वस्वतीतानागतवर्त्तमानेषु भावान्यथात्वं भवति न द्रव्यान्यथात्वं यथा सुवर्णभाजनस्य भित्त्वाऽन्यथा क्रियमाणस्य भावान्यथात्वमिति।” भा०

“ननु चित्तपरिणतिमात्रमुक्तं न तु तत्प्रकारा धर्मलक्षणावस्थापरिणामास्तत् कथं तेषामतिदेश इत्यत आह। तत्र व्युत्थाननिरुद्धयोरिति। धर्मलक्षणावस्थाशब्दाः परं नोच्चारिताः न तु धर्मलक्षणावस्था

परिणामा नोक्ता इति संक्षेपार्थः। तथा हि व्युत्थान निरोधसंस्कारयोरित्यत्रैव सूत्रे धर्मपरिणाम उक्तः इमञ्च धर्मपरिणामं दर्शयता तेनैव धर्माधिकारिणो लक्षणपरिणामोऽपि तेन सूचित एवेत्याह लक्षणपरिणाम इति लक्ष्यते अनेनेति लक्षणं कालभेदः लक्षितवस्तु वस्त्वन्तरेभ्यः कालान्तरयुक्तेभ्योऽवच्छिद्यत इति। निरोधस्त्रिलक्षणः अस्यैव व्याख्यानं त्रिभिरध्वभिर्युक्तः अध्वशब्दः कालवचनः स खल्वनागतलक्षणमध्वानं हित्वा तत् किमत्यजत् धर्मनिरोधत्वमत्यतिपतति नेत्याह धर्मत्वमनतिक्रान्तो वर्त्तमानं लक्षणं प्रतिपन्नं यत्र निरोधोऽनागत आसीत् स एव सम्प्रति वर्त्तमानो ननु निरोधोऽनिरोध इत्यर्थः। वर्त्तमानतास्वरूपव्याख्यानं यत्रास्य स्वरूपेण स्वोचितार्थक्रियाकारिणाऽभिव्यक्तिः सद्व्यापारः एषोऽस्य प्रथममनागतमध्वानमपेक्ष्य द्वितीयोऽध्वा। स्यादेतत् अनागतमध्वानं हित्वा चेद्वर्त्तमानतामापन्नस्ताञ्च हित्वा अतीततामापत्स्यते हन्त भोः अध्वनाशुत्पादविनाशौ स्यातां न चेष्यते नह्यसत उत्पादो नापि सतो विनाश इत्यत आह नचातीतानागताभ्यां सामान्यात्मनावस्थिताभ्यां वियुक्त इति। अनागतस्य निरोधस्य वर्त्तमानतालक्षणं दर्शयित्वा वर्त्तमानव्युत्थानस्यातीततां तृतीयमध्वानमाह तथा व्युत्थानमिति तत् किं निरोध एवानागतो न व्युत्थानं नेत्याह। एवं पुनर्व्युत्थानमिति व्युत्थान जात्यपेक्षया पुनर्भावः न व्यक्त्यपेक्षया न ह्यतीतं पुनर्भवतीति। स्वरूपाभिव्यक्तिरर्थक्रियाक्षमस्याविर्भावः अचैवं लक्षणपरिणाम उक्तः तज्जातीयेषु पौनःपुन्येन वर्त्तत इत्याह। एवं पुनरिति धर्मपरिणामसूचितमेवावस्थापरिणाममाह तथेति धर्माणां वर्त्तमानाध्वनां बलवत्त्वाबलवत्ताऽवस्था तस्याः प्रतिक्षणं तारतम्येन परिणामः। उपसंहरति एष इति परिणामभेदानां सम्बन्धिभेदान्निर्धारयति तन्त्रानुभवानुसारात् धर्मिण इति। तत् किमेष परिणामो गुणानां कादाचित्को नेत्याह। एवमिति कस्मात्? पुनरयं परिणामः सदातन इत्यत आह। चलञ्चेति चोदेत्यर्थः वृत्तं प्रचारः एतदेव कुत इत्यत आह। गुणस्वाभाव्यमिति उक्तमत्रैव पुरस्तात्। सोऽयं त्रिविधोऽपि चित्तपरिणामः भूतेन्द्रियेषु स्वतकारेण निर्दिष्ट इत्याह एतेनेति। एष धर्मधर्मिभेदो धर्मधर्मिणोर्भेदमाश्रित्य तत्र भूतानां पृथिव्यादीनां धर्मिणां गवादिर्घटादि र्वा धर्मपरिणामः। धर्माणां चातीतानागतवर्त्तमानरूपता लक्षणपरिणामः वर्त्तमानलक्षणापन्नस्य गवादेर्बाल्यकौमारयौवनवार्द्धक्यमवस्थापरिणामः। घटादीनामपि नवपुरातनतावस्थापरिणाम एवमिन्द्रियाणामपि धर्मिणां तत्तन्नीलाद्यालोचनं धर्मपरिणामो धर्मस्य वर्त्तमानादिलक्षणपरिणामो वर्त्तमानलक्षणस्य रत्नाद्यालोचनस्फुटत्वास्फुटत्वादिरवस्थापरिणामः। स चायमेवंविधो भूतेन्द्रियपरिणामो धर्मिणो धर्मलक्षणावस्थानां भेदमाश्रित्य वेदितव्यः। अभेदमाश्रित्याह परमार्थतस्त्विति तुयन्दोभेदपक्षाद्विशिनष्टि पारमार्थिकत्वमस्य ख्याप्यते नत्वन्यस्य परिणामस्य निषिध्यते। कस्मात्? धर्मिस्वरूपमात्रो हीति ननु यदि धर्मिविक्रियैव धर्मः कथमयमङ्कुरप्रत्ययो लोके परिणामैस्त्रित्यत आह। धर्मद्वारेति धर्मशब्देन धर्मलक्षणावस्थाः परिगृह्यन्ते तद्द्वारेण धर्मिण एव विक्रियेत्येका चाशङ्कीषां च द्वाराणामभेदोऽपि धर्मिणः परस्पराशङ्करात्। ननु धर्माणामभिन्नत्वे धर्मिणोऽध्वनाञ्च भेदे धर्मिणोऽनन्यत्वेन धर्मस्यापि इह धर्मिवद्भवितव्यमित्यत आह तत्र धर्मस्येति भावः संस्थानभेदः सुवर्णादेर्यथा भाजनस्य रुचकस्वस्तिक व्यपदेशभेदो भवति तन्मात्रमन्यथा भवति। न तु द्रव्यं सुवर्णभेदमुपैति अत्यन्तभेदाभावादिति वक्ष्यमाणोऽभिसन्धिः।” विवृतिः

**धर्मपाठक** पु॰ धर्मं धर्मशास्त्रं पठति पठ—ण्वुल्। मन्वादिधर्मशास्त्राध्येतरि। “त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठकः” मनुः।

**धर्मपाल** त्रि॰ धर्मं पालयति पालि—अण् उप॰स॰। वर्णाश्रमधर्मरक्षके २दण्डे पु॰ तद्भीत्या लोकैर्धर्मस्य चरणात् तस्य तथात्वम्। “दण्ड एव च सर्वात्मा लोके चरति मूर्त्तिमान्। भिन्दन् छिन्दन् रुजन् कृन्तन् दारयन् पाटयंस्तथा। घातयन्नभिधावंश्च दण्ड एव चरत्युत। असिर्विशसनो धर्मस्तीक्ष्णधर्मा दुराधरः। श्रीगर्भो विजयः शास्ता व्यवहारः सनातनः। शास्त्रं ब्राह्मणमन्त्राश्च शास्ता प्राग्वदतां वर!। धर्मपालोऽक्षरो देवः सत्यगो नित्यगोऽग्रजः। असङ्गो रुद्रतनयो मनुज्येष्ठः शिवङ्करः। नामान्येतानि दण्डस्य कीर्त्तितानि युधिष्ठिर!” भा॰ शा॰ १२१ अ॰।

**धर्मपुत्र** पु॰ ६त॰। युधिष्ठिरे हेमच॰। १नरनारायणयो-

षट्शब्दे द्वि०व० धर्मशब्दे दृश्यम् । धर्मतः कृतः पुत्रः । २धर्मतः कृते पुत्रे । “यावद्भृगुजटिधर्मपुत्र (परशुराम) परशुकुठाखिन्नक्षत्रियदत्तशोणितपिच्छिला वसुमती कोऽस्यामधाद्यत् पदम्” महाना० । धर्मसुतादयोऽप्यत्र । धर्मजः पुत्रः । १युधिष्ठिरे २औरसे धर्मपत्नीजे पुत्रे च । धर्मजशब्दे मनुवाक्यं दृश्यम् ।

**धर्मप्रतिरूपक** पु० धर्मस्य प्रतिरूपमिव कायति कै–क । “शक्तः परजने दाता स्वजने दुःखदायिनि । मध्वापातो विषास्वादः स धर्मप्रतिरूपकः” मनूक्तलक्षणयुक्ते धर्माभासे “यो बहुधनत्वाद्दानशक्तः सन् अवश्यभरणीये पितृमातृदासादिजने दौर्गत्यात् दुःखोपेते सति यशोऽर्थमन्येभ्यो ददाति स तस्य दानविशेषो धर्मप्रतिरूपको न तु धर्म एव मध्वापातो मधुरोपक्रमः प्रथमं चमत्कारत्वात् विषास्वादवान्ते नरकफलत्वात् तस्मादेतन्न कार्यम्” कुल्लू० ।

**धर्मप्रवक्तृ** पु० धर्मं सन्दिग्धार्थे अयं धर्म इति प्रवक्ति प्र+वच–तृच् । धर्मनिर्णायके राज्ञां व्यवहारस्थानस्थे सभ्यभेदे । स च ब्राह्मण एव तदभावे क्षत्रियवैश्यौ न शूद्रः यथाह मनुः ‘जातिमात्रोपजीवी वा कामं स्याद्ब्राह्मणब्रुवः । धर्मप्रवक्ता नृपतेर्न तु शूद्रः कथञ्चन । यस्य शूद्रस्तु कुरुते राज्ञो धर्मविवेचनम् । तस्य सीदति तद्राष्ट्रं पङ्के गौरिव पश्यतः” “ब्राह्मणो धर्मप्रवक्तेति विधानादेव शूद्रनिवृत्तिः सिद्धा पुनर्न तु शूद्र इति शूद्रनिषेधो योग्यब्राह्मणाभावे क्षत्रियवैश्ययोरभ्यनुज्ञानार्थः । अत एव कात्यायनः “यत्र विप्रो न विद्वान् स्यात् क्षत्रियं तत्र योजयेत् । वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत्” कुल्लू० ।

**धर्मप्रवचन** न० धर्मं प्रवक्ति प्र+वच–ल्यु । शाक्यमुनौ शब्दार्थचि० ।

**धर्मप्रस्थ** पु० तीर्थभेदे “ततो गच्छेत राजेन्द्र ! धर्मप्रस्थं समाहितः । तत्र धर्मो महाराज ! नित्यमास्ते युधिष्ठिर ! । तत्र कूपोदकं कृत्वा ततः स्नातः शुचिस्तथा । पितॄन् देवांस्तु सन्तर्प्य मुक्तपापो दिवं व्रजेत्” भा०व०८४अ० ।

**धर्मवाणिजिक** त्रि० धर्मे वाणिजिक इव । फलकामनया कर्मकरे तस्य फलकामनया कृतत्वेन धर्मं दत्त्वा फलस्य ग्रहणात् वाणिजिकतुल्यत्वम् “धर्मवाणिजिका मूढाः फलकामाः नराधमाः । अर्चयन्ति जगन्नाथं ते कामान्नाप्नुवन्त्युत” शब्द० त० विष्णुधर्मोत्तरपु० ।

**धर्मभगिनी** स्त्री धर्मतः कृता भगिनी । १धर्मतः कृतायां भगिन्यां २गुरुकन्यायाञ्च । [पाठके शब्दच० ।

**धर्मभाणक** पु० धर्मं धर्मार्थं भणति पठति । भारतादि-

**धर्मभिक्षुक** पु० धर्मार्थं भिक्षते भिक्ष–उक । मनूक्ते नवविधे धर्मार्थभिक्षाशीले । “सान्तानिकं यक्ष्यमाणमध्वगं सर्ववेदसम् । गुर्वर्थपितृमात्रर्थं स्वाध्यायार्थ्युपतापिनः । नवैतान् स्नातकान् विद्याद्ब्राह्मणान् धर्मभिक्षुकान् निःस्वेभ्यो देयमेतेभ्यो दानं विद्याविशेषतः” मनुः । “सन्तानप्रयोजनत्वाद्विवाहस्य, सान्तानिको विवाहार्थी यक्ष्यमाणो अवश्यकर्त्तव्यज्योतिष्टोमादियागं चिकीर्षुः अध्वगः पान्थः सर्ववेदसः कृतसर्वस्वदक्षिणविश्वजिद्यागः, विद्यागुरोर्गोग्रासाच्छादनादिरर्थः प्रयोजनं यस्य स गुर्वर्थः एवं पितृमात्रर्थोऽपि स्वाध्यायार्थी स्वाध्यायाध्ययनकालीनाच्छादनाद्यर्थी ब्रह्मचारी, उपतापी रोगी एतानेव ब्राह्मणान् धर्मभिक्षाशीलान् स्नातकान् जानीयात् । एतेभ्यो निर्धनेभ्यो गोहिरण्यादि दीयत इति दानविद्याविशेषानुरूपेण दद्यात्” कुल्लू० ।

**धर्मभृत्** त्रि० धर्मं बिभर्त्ति भृ–क्विप् तुक् । धर्मधारके “एष धर्मभृतां श्रेष्ठो मशिष्यति नरोत्तमः” भा० व० १२१ अ० ।

**धर्मभृत** त्रि० धर्मो भृतो येन । १रक्षितधर्मके २भयोदयस्य मनोः पुत्रभेदे पु० । “भयोदयस्य पुत्रास्ते विख्यातास्तु ऋषेः सुताः । चित्रसेनो विचित्रश्च नयो धर्मभृतो धृतः” हरिवं० ७ अ० ।

**धर्मभ्रातृ** पु० धर्मतः कृतो भ्राता । १गुरुपुत्रादौ २भ्रातृत्वेन प्रतिपन्ने एकाश्रमिणि च “वानप्रस्थयतिब्रह्मचारिणामृक्थभागिनः । क्रमेणाचार्य्यसच्छिष्यधर्मभ्रात्रेकतीर्थिनः” याज्ञ० । “धर्मभ्राता प्रतिपन्नो भ्राता तीर्थशब्दस्याश्रमवाचित्वादेकतीर्थ्य आश्रमी । धर्मभ्राता चासावेकतीर्थी चेत्यर्थः” वीर०मि० ।

**धर्ममूल** न० ६त० । धर्मस्य प्रमाणे, तानि च मन्वादिभिर्दर्शितानि । तत्र मनुः “वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् । आचारश्चैव साधूनामात्मनस्तुष्टिरेव च” । विधिर्विधेयस्तर्कश्च वेदाङ्गानि षडेव चेति” विधिरज्ञातज्ञापको वेदभागः विधेयो मन्त्रः तर्को मीमांसा । षडङ्गान्याह देवलः “शिक्षाव्याकरणनिरुक्तच्छन्दःकल्पज्योतींषीति वेदाङ्गानि” “शुचौ तु चरिते शीलमित्याचारश्चैव

शीलत्वाभिधानात् कथं पृथगुपादनम्। न आचार्य्यानुष्ठानलक्षणक्रियारूपत्वादाचारस्य स्वरूपविशेषत्वाच्छीलस्य व्यक्त एव भेदः। "शुचौ तु चरिते शीलमिति" शीलस्य चरितविशेषहेतुत्वादुपचारेण चरितत्वाभिधानम्। अथ शीलं कस्य धर्मतां प्रमापयति। आत्मन एव पुरुषविशेषस्वभावोऽन्यथानुपपद्यमानः स्वस्य श्रेयःसाधनतां बोधयति। तथा च ब्राह्मण्यतेत्यादिहारीतवचने भावप्रत्ययान्ततयाभिधानं शीलस्य क्रियाव्यतिरेकितां बोधयत् स्वभावतामेव ज्ञापयति यदाह हारीतः "ब्राह्मण्यता१ देवपितृभक्तता२ सौम्यता३ अपरोपतापिता४ अनसूयता५ मृदुता६ अपारुष्यं७ मित्रता८ प्रियवादित्वम्९ कारुण्यं१० कृतज्ञता११ शरण्यता१२ प्रशान्तिः१३ चेति त्रयोदशविधं शीलम्"। आचारो विवाहादौ कङ्कणबन्धनाद्यनुष्ठानम्। आत्मतुष्टिरत्र धर्मसन्देहे वैदिकसंस्कारवासितान्तःकरणानां साधूनामेकतरपक्षे मनःपरितोषः। याज्ञवल्क्यः "श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः। सम्यक् सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम्। पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः। वेदाः स्थानानि विद्यानाम् धर्मस्य च चतुर्दश"।

**धर्ममेघ** पु० धर्मान् मेहति वर्षति मिह—अच् घश्चान्तादेशः। पातञ्जलोक्ते असंप्रज्ञातसमाधौ। तल्लक्षणादि पात० सूत्रभाष्यविवृतिषूक्तं यथा "प्रसङ्ख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः" सू०।

"यदायं ब्राह्मणः प्रसङ्ख्यानेऽप्यकुसीदस्ततोऽपि न किञ्चित् प्रार्थयते तत्रापि विरक्तस्य सर्वथा विवेकख्यातिरेव भवतीति संस्कारबीजक्षयान्नास्य प्रत्ययान्तराण्युत्पद्यन्ते तदास्य धर्ममेघोनाम समाधिर्भवति" भा०

"ततः प्रसङ्ख्यानान्न किञ्चित् सर्वभावाधिष्ठातृत्वादि प्रार्थयते प्रत्युत तत्रापि क्लिश्नाति परिणामित्वदोषदर्शनेन विरक्तः सर्वथा विवेकख्यातेरेव भवति एतदेव विवृणोति तत्रापीति यदा व्युत्थानप्रत्यया भवेयुः तदा नायं ब्राह्मणः सर्वथा विवेकख्यातिः यतस्तस्य प्रत्ययान्तराणि न भवन्ति ततः सर्वथा यदा विवेकख्यातिरिति तदास्य धर्ममेघः समाधिर्भवति। एतदुक्तं भवति प्रसङ्ख्याने विरक्तस्तन्निरोधमिच्छन् धर्ममेघं समाधिमुपासीत तदुपासने च सर्वथा विवेकख्यातिर्भवति" विवृतिः।

"ततः क्लेशकर्मनिवृत्तिः" सू०।

"तल्लाभादविद्यादयः क्लेशाः समूलकाषं कषिता भवन्ति कुशलाकुशलाश्च कर्माशयाः समूलघातं हता भवन्ति क्लेशकर्मनिवृत्तौ जीवन्नेव विद्वान् विमुक्तो भवति कस्मात् यस्माद्विपर्ययो भवस्य कारणं, न हि क्षीणविपर्ययः कश्चित् केनचित् क्वचिज्जातो दृश्यते इति" भा०।

"तन्निरोधं पारयतीति तस्य च प्रयोजनमाह। ततः। कस्मात् पुनर्जीवन्नेव विद्वान् विमुक्तोभवति उत्तरं यस्मादिति क्लेशकर्मवासनेद्धः किल कर्माशयो जात्यादिनिदानं, न चासति निदाने निदानी भवितुमर्हति यथाहात्र भगवानक्षपादः "वीतरागजन्मादर्शनादिति" विवृतिः।

"तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्यात् ज्ञेयमल्पम्।" सू०

"सर्वैः क्लेशकर्मावरणैर्विमुक्तस्य ज्ञानस्यानन्त्यं भवति तमसाभिभूतमावृतं ज्ञानसत्त्वं क्वचिदेव रजसा प्रवर्त्तितम् उद्घाटितं ग्रहणसमर्थं भवति तत्र यदा सर्वैरावरणमलैरपगतमलं भवति तदा भवत्यस्यानन्त्यं ज्ञानस्यानन्त्यात् ज्ञेयमल्पं सम्पद्यते यथाकाशे खद्योतः, यत्रेदमुक्तम् 'अन्धो मणिमविध्यत्तमनङ्गुलिरावयत्। अग्रीवस्तं प्रत्यमुञ्चत्तमजिह्वोऽभ्यपूजयदिति" भा०।

"अथैवं धर्ममेघे सति कीदृशं चित्तमित्याह। तदेति आव्रियते चित्तसत्त्वमेभिरिति आवरणानि मलाः क्लेशकर्माणि सर्वे च ते आवरणमलाश्चेति सर्वावरणमलाः तेभ्योऽपेतस्य ज्ञानस्य चित्तसत्त्वस्य ज्ञायतेऽनेनेति अनया व्युत्पत्त्या, आनन्त्यादपरिमेयत्वात् ज्ञेयमल्पम्। यथा हि शरदि घनपटलमुक्तस्य चन्द्रार्चिषः सर्वतः प्रद्योतमानस्य प्रकाशानन्त्यात् प्रकाश्याः घटादयोऽल्पाः प्रकाशन्ते एवमपगतरजस्तमसश्चित्तसत्त्वस्य प्रकाशानन्त्यादल्पं प्रकाश्यमिति तदेतदाह सर्वैरिति एतदेव व्यतिरेकमुखेन स्फोरयति आवरकेण तमसाभिभूतमिति क्रियाशीलेन रजसा प्रवर्त्तितमतएवोद्घाटितं तमइत्यर्थः। अतएव सर्वान् धर्मान् ज्ञेयान् मेहति वर्षति प्रकाशनेनेति धर्ममेघ इत्युच्यते। नन्वयमस्तु धर्ममेघः समाधिः सवासनक्लेशकर्माशयप्रशमहेतुः अथ सत्यस्मिन् कस्मात् न जायते पुनर्जन्तुः इत्यत आह। यत्रेदमुक्तमिति कारणसमुच्छेदेऽपि चेत् कार्यं क्रियते हन्त भोः मणिवेधादयोऽन्धादिभ्यो भवेयुः प्रत्यक्षाः, तथा चानुपपन्नार्थतायामाभाणको लौकिक उपपन्नार्थः स्यात्। अविध्यदन्धो मणिमिति आवयत् प्रथितवान्, प्रत्य-

सुञ्जत् पिनद्धवान्, अभ्यपूजयत् स्तुतवानिति" विवृतिः।

"ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम्।" सू०

"तस्य धर्ममेघस्योदयात् कृतार्थानां गुणानां परिणामक्रमः परिसमाप्यते नहि कृतभोगापवर्गाः परिसमाप्तक्रमाः क्षणमप्यवस्थातुमुत्सहन्ते।" भा०

"ननु धर्ममेघस्य परा काष्ठा ज्ञानप्रसादमात्रं परं वैराग्यं धर्ममेघापातमपहन्तु व्युत्थानसमाधिः संस्कारान् सक्लेशकर्माशयान्, गुणास्तु स्वतएव विकारकरणशीलाः कस्मात्तादृशमपि पुरुषं प्रति देहेन्द्रियादि नारभन्ते इत्यत आह। ततो—गुणानाम्। शीलमिदं गुणानां यं प्रति कृतार्थास्तं प्रति न प्रवर्त्तन्ते इति भावः" विवृतिः। [शब्दच०।

**धर्म्मयु** त्रि० धर्म+अस्त्यर्थे वा०यु। धर्मविशिष्टे धार्म्मिके

**धर्म्मयुग** न० धर्मप्रधानं युगं शाक० त०। सत्ययुगे "नात्यर्थं धार्म्मिकस्तस्य स हि धर्मयुगेऽभवत्" हरिवं० १२अ०। (स: ककुत्स्थो बाहुः)।

**धर्म्मयुज्** त्रि० धर्मेण युज्यते युज—कर्म्मणि क्विप्। १धर्मयुक्ते २न्यायार्जितद्रव्ये न०। "दाता प्रतिग्रहीता च श्रद्धा देयञ्च धर्मयुक्। देशकालौ च दानानामङ्गान्येतानि षड्विदुः" देवलः। "धर्मयुक् न्यायार्जितद्रव्यम्" शुद्धित०रघु० तथाच विष्णुध० "देशे काले तथा पात्रे धनं न्यायागतं तथा। यद्दत्तं ब्राह्मणश्रेष्ठास्तदनन्तं तत् प्रकीर्त्तितम्"

**धर्म्मयूप** पु० धर्मस्य यूप इव। विष्णौ। "धर्मयूपो महामखः" विष्णुस०। "यूपे पशुवत् भगवत्समाराधनात्मका धर्मास्तत्र बध्यन्तेऽतो धर्माणां यूपः" भा० यथा यूपः पशूनां नियोजनस्थानमेवं विष्णुः स्वसमाराधनात्मकानां धर्माणां स्थानमित्यर्थः।

**धर्म्मरत्न** न० जीमूतवाहनकृते स्मृतिनिबन्धभेदे।

**धर्म्मरथ** पु० सगरस्यपुत्रभेदे स श्च कपिलमुनिनेत्राग्निदग्धावशेषितानां वंशकराणां चतुर्णां मध्ये एकतमः। यथाह हरिवं० १४ अ०। "स धर्मविजयी राजा विजित्येमां वसुन्धराम्। अश्वं प्रचारयामास वाजिमेधाय दीक्षितः। तस्य चारयतः सोऽश्वः समुद्रे पूर्वदक्षिणे। वेलासमीपेऽपहृतो भूमिञ्चैव प्रवेशितः। स तं देशं तदा पुत्रैः खानयामास पार्थिवः। आसेदुस्ते तदा तत्र खन्यमाने महार्णवे। तमादिदेवं पुरुषं हरिं कृष्णं प्रजापतिम्। विष्णुं कपिलरूपेण स्वपन्तं पुरुषोत्तमम्। तस्य चक्षुः समुत्थेन तेजसा प्रतिबुध्यतः। दग्धास्ते वै महाराज चत्वारस्त्ववशेषिताः। बर्हिकेतुः सुकेतुश्च तथा धर्मरथो नृपः। शूरः पञ्चजनो नाम तस्य वंशकरा नृप। प्रादाच्च तस्मै भगवान् हरिर्नारायणो वरम्। अक्षयं वंशमिक्ष्वाकोः कीर्त्तिञ्चाप्यनिवर्त्तिनीम्। पुत्रं समुद्रञ्च विभुः स्वर्गे वासन्तथाऽक्षयम्। पुत्राणां चाक्षयान् लोकान् तस्य ये चक्षुषा हताः। समुद्रश्चार्घमादाय ववन्दे तं महीपतिम्। सागरत्वञ्च लेभे स कर्मणा तेन तस्य वै। तञ्चाश्वमेधिकं सोऽश्वं समुद्रादुपलब्धवान्। आजहाराश्वमेधानां शतं स सुमहायशाः। पुत्राणाञ्च सहस्राणि षष्टिस्तस्येति नः श्रुतम्।"

२अनुवंश्यस्य दिविरथस्य पुत्रभेदे च। "खनपानोऽङ्गदो जज्ञे तस्माद्दिविरथस्ततः। सुतो धर्मरथो यस्य जज्ञे चित्ररथोऽप्रजः" रोमपाद इति ख्यातः भाग० ९।२३।२

**धर्म्मराज्** पु० धर्मेण राजते राज—क्विप्। १यमे "सोऽग्निर्भवति वायुश्च सोऽर्कः सोमश्च धर्मराट्" मनुः। २धर्मेण राजमाने धार्म्मिके त्रि०। "अथोपविष्टं शयने गौतमं धर्मराट् तदा" भा० शा० १७०अ०। धर्मराट् इति नाडीजङ्घस्य विशेषणम्।

**धर्म्मराज** पु० धर्मेण राजते राज—अच् ३त०। धर्माणां राजा ईश्वरो वा टच्समा०। १जिने २यमे च अमरः। ३नृपे ४युधिष्ठिरे च शब्दरत्ना०। तत्र जिनस्य अहिंसारूपपरमधर्मेण राजनात् तथात्वं यमस्य च तथात्वमुक्तम् भा० व० २९६ अ०। "विवस्वतस्त्वं तनयः प्रतापवांस्ततो हि वैवस्वत उच्यसे बुधैः। समेन धर्मेण चरन्ति ताः प्रजास्ततस्तवेहेश्वर धर्मराजता" "तथेत्युक्त्वा स तं पाशं मुक्त्वा वैवस्वतो यमः। धर्मराजः प्रहृष्टात्मा सावित्रीमिदमब्रवीत्" नृपाणां तथात्वञ्च "इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च। चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः। यस्मादेषां सुरेन्द्राणां मात्राभ्यो निर्मिता नृपाः" मनुना यममात्रातो निर्माणस्योक्तेः धर्मराजवद् अधर्मरतानां नराणां नियमनाद्वा तथात्वम् बोध्यम्। युधिष्ठिरस्य धर्मप्रधानत्वात् तथात्वम्। "सहायमध्वरधुरां धर्मराजो विवक्षते" माघः। समासान्तविधेरनित्यत्वात् क्वचिदार्षे न टच्समा०। "जयाशीर्भिश्च तं विप्रो धर्मराजानमार्च्चयत्" भा० स० ५ अ०।

**धर्म्मरातृ** त्रि० धर्मं राति ददाति रा—तृच्। १धर्मदातरि स्त्रियां ङीप्। सा च २चण्ड्याम् "आपो देव्य ऋषीणां विश्वरात्र्यो

दिव्यामदन्तीयाः शङ्कराः धर्मराशयः” हरिवं० १२८ अ०

**धर्म्मलक्षण** न० धर्मो लक्ष्यते ज्ञायतेऽनेन लक्ष–करणे ल्युट्। १धर्मप्रमापके वेदादौ। धर्ममूलशब्दे दृश्यम्। २मीमांसायां स्त्री ङीप्। भावे ल्युट् ६त०। चोदनालक्षणोऽर्थो धर्मः” जै० सूत्रोक्ते ३धर्मस्य लक्षणे इतरभेदानुमापके धर्मस्वरूपादौ च धर्मशब्दे दृश्यम्। “धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः। धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्” इति मनूक्ते। “पात्रे दानं मतिः कृष्णे मातापित्रोश्च पूजनम्। श्रद्धा बलिर्गवां ग्रासः षड्विधं धर्मलक्षणम्” इत्युक्ते च ४धर्मस्य साधने च।

**धर्म्मवत्** त्रि० धर्म्म+अस्त्यर्थे मतुप् मस्य वः। धर्मयुक्ते धार्मिके। “मित्रावरुणवन्त उत धर्मवन्तः” ऋ० ५।२५।१२

**धर्म्मवर्म्मन्** त्रि० धर्म्म वर्म्म इव यस्य। १धर्मेणात्मन एव आवरकत्वेन धारके २धर्मे कवचत्वेनाभिमन्यमाने। धर्मस्य वर्मेव। ३धर्मरक्षके न०। “ब्रूहि योगेश्वरे कृष्णे ब्रह्मण्ये धर्मवर्मणि” भाग० १।१।२ [त्रिका०।

**धर्म्मवासर** पु० धर्मस्य तत्साधनस्य वासरः। पौर्णमास्यां

**धर्म्मवाहन** पु० धर्मं वाहयति प्रापयति नरान् वाहि–ल्यु। १शिवे त्रिका०। भावे ल्युट्। धर्मस्य २प्रापणे न०। ६त०। धर्मस्य धर्मराजस्य याने ३महिषे।

**धर्म्मविद्** त्रि० धर्मं वेत्ति विद–क्विप्। धर्मज्ञे। “स्त्रीक्षीर्येण धर्मवित्” मनुः। [विष्णुस०।

**धर्म्मविदुत्तम** पु० ६त०। विष्णौ “धर्मो धर्मविदुत्तमः”

**धर्म्मविद्या** स्त्री ६त०। १मीमांसादिविद्यायां २तदुपलक्षित शास्त्रे च। ततः क्रत्वा० ठक्। धार्मविद्यिक तद्वेत्तरि तद्ग्रन्थाध्येतरि च।

**धर्म्मविप्लव** पु० ६त०। धर्मस्य व्यतिक्रमे।

**धर्म्मविवेक** धर्मस्य विवेकोऽत्र। हलायुधकृते धर्मनिबन्धभेदे

**धर्म्मवीर** पु० वीरभेदे “स च दानधर्मयुद्धैर्दयया च समन्वित चतुर्धा स्यात्” सा० द० उक्ते १वीररसभेदे २तद्युक्ते च “धर्मवीरो युधिष्ठिरादिः” सा० द०।

**धर्म्मवृद्ध** त्रि० धर्मेण वृद्धः। धर्मेण वृद्धे श्रेष्ठे अतिशयधर्मयुक्ते “न धर्मवृद्धेषु वयः समीक्ष्यते” कुमा०। २यादवे अक्रूरभ्रातृभेदे पु०। “श्वफल्कश्चित्रकश्चैव गान्दिन्यान्तु श्वफल्कतः। अक्रूरप्रमुखा आसन् पुत्रा द्वादश विश्रुताः। धर्मवृद्धः सुकर्मा च क्षेत्रोपेक्षोऽरिमर्दनः” भाग० ९।२४।६।

**धर्मवैतंसिक** पु० धर्मे वैतंसिक इव आत्मनो धार्मिकत्वख्यापनाय दातरि। “धर्मवैतंसिको यस्तु पापात्मा पुरुषस्तथा। ददाति दानं विप्रेभ्यो लोकविश्वासकारणम्। पापेन कर्मणा विप्रो धनं लब्ध्वा निरङ्कुशः। रागमोहान्वितोऽशान्तः कलुषीं योनिमाप्नुयात्” वह्निपु०।

**धर्मव्याध** पु० धर्मप्रधानो व्याधः शाक०। धार्मिके व्याधभेदे तत्कथा भा० व० २१४ अध्यायादौ दृश्या। तस्य व्याधस्य ब्राह्मणं प्रति स्वकर्मविपाकस्तत्रोक्तो यथा “शृणु सर्वमिदं वृत्तं पूर्वदेहे ममानघ!। अहं हि ब्राह्मणः पूर्वमासं द्विजवरात्मजः। वेदाध्यायी सुकुशलो वेदाङ्गानाञ्च पारगः। आत्मदोषकृतैर्ब्रह्मन्नवस्थामाप्तवानिमाम्। कश्चिद्राजा मम सखा धनुर्वेदपरायणः। संसर्गाद्धनुषि श्रेष्ठस्ततोऽहमभवं द्विज!। एतस्मिन्नेव काले तु मृगयां निर्गतो नृपः। सहितो योधमुख्यैश्च मन्त्रिभिश्च सुसंवृतः। ततोऽभ्यहनृषिं तत्राश्रमं प्रति। अथ क्षिप्तः शरो घोरो मयाऽपि द्विजसत्तम!। ताडितश्च ऋषिस्तेन शरेणानतपर्वणा। भूमौ निपतितो ब्रह्मन्नुवाच प्रतिनादयन्। नापराध्याम्यहं किञ्चित् केन पापमिदं कृतम्। मन्वानस्तं मृगञ्चाहं सम्प्राप्तः सहसा विभो!। अपश्यं तमृषिं विद्धं शरेणानतपर्वणा। अकार्यकरणाच्चापि भृशं मे व्यथितं मनः। तमुग्रतपसं विप्रं निष्टनन्तं महीतले। अजानता कृतमिदं मयेत्यहमथाब्रुवम्। क्षन्तुमर्हसि मे सर्वमिति प्रोक्तो मया मुनिः। ततः प्रत्यब्रवीद्वाक्यमृषिर्मां क्रोधमूर्च्छितः। व्याधस्त्वं भविता क्रूरः शूद्रयोनाविति द्विज!। २१४ अ०। व्याध उवाच। एवं शप्तोऽहमृषिणा तदा द्विजवरोत्तम। अभिप्रासादयमृषिं गिरा त्राहीति मां तदा। अजानता मयाऽकार्यमिदमद्य कृतं मुने!। क्षन्तुमर्हसि तत्सर्वं प्रसीद भगवन्निति। ऋषिरुवाच। नान्यथा भविता शाप एवमेतदसंशयम्। आनृशंस्यात्त्वहं किञ्चित्कर्त्ताऽनुग्रहमद्य ते। शूद्रयोन्यां वर्त्तमानो धर्मज्ञो हि भविष्यसि। मातापित्रोश्च शुश्रूषां करिष्यसि न संशयः। तया शुश्रूषया सिद्धिं महत्त्वं समवाप्स्यसि। जातिस्मरश्च भविता स्वर्गञ्चैव गमिष्यसि। शापक्षये निवृत्ते तु भविताऽसि पुनर्द्विजः। एवं शप्तः पुरा तेन ऋषिणाऽस्म्युग्रतेजसा। प्रसादश्च कृतस्तेन ममैव द्विपदांवर!। २१५ अ०।”

**धर्मव्रत** त्रि० धर्मे व्रतं संकल्पविशेषोऽस्य । १धर्मरते । २धर्मस्य विश्वरूपाख्यपत्न्यां जातायां कन्यायां मरीचिकलत्रे स्त्री तत्कथा वायुपु० "आसीद्धर्मो महातेजाः सर्वविद्यानपारगः । विश्वरूपा च तत्पत्नी भर्तृव्रतपरायणा । तस्यां धर्मात् समुत्पन्ना कन्या धर्मव्रता सती । सर्वलक्षणसम्पन्ना लक्ष्मीरिव कुलाधिका" इत्युपक्रमे "मरीचेर्वचनं श्रुत्वा कन्या प्रोवाच तं मुनिम् । अहं धर्मव्रतानाम धर्मपुत्री तपोन्विता । पतिव्रतार्थं विप्रेन्द्र! चरामि परमं तपः । धर्मव्रतां मरीचिस्तामुवाच प्रीतिपूर्वकम् । पतिव्रता दर्शनान्मे भविष्यसि शुभव्रते ! । पतिव्रतेच्छया पृथ्वीं विचरामि ह्यहर्निशम् । त्वञ्चेत् पतिव्रता जाता भजे त्वां भज मां वरम् । लोके न त्वादृशी कन्या मम तुल्यो न ते वरः । धर्मव्रते ! धर्मपुत्रि ! तस्मात् त्वं भज माधुना । धर्मव्रता मुनिं प्राह धर्मं याचय सुव्रत ! तत् श्रुत्वा धर्ममगमन्मुनिं धर्मोऽददर्श ह । तेजः पुञ्जवरं नत्वा ह्यासनार्घ्यादिनार्चयत् । किमर्थमागतः पृष्टो मरीचिर्धर्ममब्रवीत् । कन्यार्थं भ्रमता पृथ्वीं दृष्टा ते कन्यका वरा । मह्यं कन्यामिमां देहि श्रेयस्तव भविष्यति । अर्घ्यादिना समभ्यर्च्य धर्मः प्राचेतसेरितम् । धर्मव्रतां समानीय दत्तवांस्तां मरीचये" । धर्मस्य व्रतम् । हेमाद्रिव्र० उक्ते व्रतभेदे न० व्रतशब्दे दृश्यम् ।

**धर्मशाला** स्त्री धर्मार्थं शाला । धर्मार्थमन्नादिदानाधिकरणशालायाम् । धर्मसत्रादयोऽप्यत्र ।

**धर्मशासन** न० शास—भावे ल्युट् ६त० । १धर्मस्यानुशासने । करणे ल्युट् । २धर्मशास्त्रे च "शरीरकृत् प्राणदाता यस्य चान्नानि भुञ्जते । क्रमेणैते त्रयोऽप्युक्ताः पितरो धर्मशासने" भा० आ० ७२ अ० ।

**धर्मशास्त्र** न० शिष्यतेऽनेन शास—करणे ष्ट्रन् ६त० । धर्मशासने मन्वादिप्रणीते धर्मप्रतिपादके ग्रन्थभेदे स्मृतिशास्त्रे तस्य कर्त्तारश्च हेमाद्रिव्रतखण्डे दर्शिता यथा "शङ्खलिखितौ ऋतयो धर्मशास्त्राणि तेषां प्रणेतारो मनुविष्णुयमदक्षाङ्गिरोऽत्रिबृहस्पत्युशनआपस्तम्बवसिष्ठकात्यायनपराशरव्यासशङ्खलिखितसंवर्त्तगौतमशातातपहारीतयाज्ञवल्क्यप्राचेतसादयः" । यमः "मनुर्यमो वसिष्ठोऽत्रिः दक्षो विष्णुस्तथाङ्गिराः । उशना वाक्पतिर्व्यास आपस्तम्बोऽथ गौतमः । कात्यायनो नारदश्च याज्ञवल्क्यः पराशरः । संवर्त्तश्चैव शङ्खश्च हारीतो लिखितस्तथा । एतैर्यानि प्रणीतानि धर्मशास्त्राणि वै पुरा । तान्येवाति प्रमाणानि न हन्तव्यानि हेतुभिः" "आदित्यव्यास हरीतलसोमजमदग्निप्रजापतिविश्वामित्रवृद्धशातातपपैठीनसिपितामहबौधायनच्छागलेयजाबालिच्यवनमरीचिकश्यपाः" तथा हि भविष्यपुराणे "अष्टादशपुराणेषु यानि वाक्यानि पुत्रक ! । तान्यालोच्य महाबाहो ! तथा स्मृत्यन्तरेषु च । मन्वादिस्मृतयो याश्च षड्विंशत् परिकीर्त्तिताः । तासां वाक्यानि क्रमशः समालोक्य ब्रवीमि ते" इति । मन्वादिस्मृतीनां षड्विंशत्त्वमुक्तम्, तच्चानन्तरोक्ताभिरेव पूर्य्यते । यानि पुनर्महाभारतरामायणविष्णुधर्मशिवधर्मप्रभृतीनि स्वल्पपरिशिष्टानि च तानि च स्मृत्यन्तरेषु चेत्यनेनैवोक्तानि तथा चोक्तं भविष्यपुराणे "अष्टादश पुराणानि रामस्य चरितं तथा । विष्णुधर्मादि शास्त्राणि शिवधर्माश्च भारत ! । कार्ष्णञ्च पञ्चमोवेदो यन्महाभारतं स्मृतम् । सौराश्च धर्मा राजेन्द्र ! मानवोक्ता महीपते ! । जयेति नाम चैतेषां प्रवदन्ति मनीषिण इति" "तदपि स्मृत्यन्तरेषु चेत्यनेनैव परिगृहीतं वेदितव्यम्" हेमाद्रि० व्र० ।

**धर्मशील** त्रि० धर्मः धर्मसाधनं शीलमस्य धर्मं शीलयति शील—अण् वा । १धर्मस्वभावे २धर्मतत्परे । "तत्र जाता नरो राजन् ! धर्मशीलः समाहितः" भा० व० ८४अ० ।

**धर्मसंहिता** स्त्री धर्मज्ञापिका संहिता, धर्मः संहितो निरूपितो यत्र वा । धर्मशास्त्रे अमरः ।

**धर्मसहाय** पु० धर्मे सहायः । सहाया इत्युपक्रमे "ऋत्विक्पुरोधसः सुधर्मविद्द्विजतापसास्तथा धर्मे" सा० द० उक्ते ऋत्विगादौ ।

**धर्मसार** पु० धर्मेषु सारः । १श्रेष्ठपुण्यकर्मणि २तत्साधने च स च गरुड़पु० २२५ अ० विस्तरेणोक्तः ।

**धर्मसारथि** पु० धर्मः सारथिरिवास्य । धर्मसंचयसहायके "शुद्धस्ततः शुचिस्तस्मात् चित्रकृद्धर्मसारथिः ! भाग० ६।१७.८

**धर्मसावर्णि** पु० एकादशे मनुभेदे । "मनुर्वै धर्मसावर्णिरेकादशम आत्मवान् । अनागतस्तत्सुताश्च सत्यधर्मादयोदश" भा०८।१३।१२

**धर्मसू** स्त्री धर्मं सुनोति सू—क्विप् । १धूम्याटखगे शब्दरत्ना० । २धर्मप्रेरके त्रि० "सोमो राजा वरुणः देवा धर्मसुवः" तैत्ति० ब्रा० १।७।८।२ ।

**धर्मसूत्र** न० धर्मः सूत्र्यतेऽनेन करणे अच् ६त० । धर्म-

निर्णयार्थं जैमिनिप्रणीते धर्ममीमांसारूपे ग्रन्थभेदे ।

**धर्मसेतु** पु० धर्मस्य सेतुरिव धारकत्वात् । धर्मरक्षके "राजा दशरथो नाम धर्मसेतुरिवाचलः" रामा०आर०६२अ० । एकादशमन्वन्तरे आर्य्यकस्य सुते २हरेरंशभेदे च । तदुपक्रमे "आर्य्यकस्य सुतस्तत्र धर्मसेतुरिति स्मृतः । वैधृतायां हरेरंशस्त्रिलोकीं धारयिष्यति" भाग० ८।१३।१२

**धर्मस्कन्ध** पु० आर्हतमतसिद्धे धर्मास्तिकायपदार्थे अर्हत्शब्दे दृश्यम् । [ङीष् ।

**धर्माङ्ग** पुंस्त्री धर्म इव शुद्धमङ्गमस्य । बके त्रिकाण्ड० । स्त्रियां

**धर्माचार्य्य** पु० धर्मे आचार्य्यः । १धर्मशिक्षके गुरुभेदे कृष्णादीनां तर्पणीये २ऋषिभेदे च "सुमन्तुजैमिनिवैशम्पायनपैलसूत्रभाष्यभारतमहाभारतधर्माचार्य्या इत्युपक्रमे ये चान्ये आचार्य्यास्ते सर्वे तृप्यन्त्विति" आश्व० गृ० ३।४।४ । धर्माचार्य्याश्च नैमित्तिकादिप्रलयोत्तरं वैदिकधर्माचारयोः शिक्षार्थं बीजीभूता धर्मप्रवर्त्तका ऋषिभेदाः यथाह मिता० प्रा० अध्याये "ननु नैमित्तिकादिप्रतिसञ्चरेऽखिलाध्यापकप्रलयादविदितवेदास्तस्योपरितनाजनाः कथमग्निहोत्रादिकं कर्म करिष्यन्ति । कथन्तराञ्चाकृतकर्माणः स्वर्गमार्गमधिरोक्ष्यन्तीत्यत आह "तत्राष्टाशीतिसाहस्रा मुनयो गृहमेधिनः । पुनरावर्त्तिनो वीजभूता धर्मप्रवर्त्तकाः" याज्ञ० । तत्र पितृयाने अष्टाशीतिसहस्रसंख्या मुनयो गृहस्थाश्रमिणः पुनरावृत्तिधर्माणः सर्गादौ वेदस्योपदेशकतया धर्मतत्त्वप्रादुर्भावे वीजभूताः सन्तोऽग्निहोत्रादिधर्मप्रवर्त्तका अतो न प्रागुदितदोषसमागमः । किञ्च । "सप्तर्षिनागवीथ्यन्तर्देवलोकं समाश्रिताः । तावन्त एव मुनयः सर्वारम्भविवर्जिताः । तपसा ब्रह्मचर्य्येण सङ्गत्यागेन मेधया । तत्र गत्वावतिष्ठन्ते यावदाहूतसंप्लवम्" याज्ञ० । सप्तर्षयः प्रसिद्धा नागवीथ्यैरावतपथः तदन्तराले तावन्त एवाष्टाशीतिसहस्रसंख्या मुनयः सर्वारम्भविवर्जिताः केवलज्ञाननिष्ठास्तपोब्रह्मचर्य्ययुक्तास्तथासङ्गत्यागिनो देवलोकं समाश्रिताः । आहूतसंप्लवमाकृतप्रलयपर्य्यन्तमवतिष्ठन्ते । तत्र च स्थिताः सृष्ट्यादावाध्यात्मिकधर्माणां प्रवर्त्तकाः । कथम्भूतास्ते मुनय इत्यत आह "यतो वेदाः पुराणानि विद्योपनिषदस्तथा । श्लोकाः सूत्राणि भाष्याणि यच्च किञ्चन वाङ्मयम्" याज्ञ० । यतो द्विविधादपि मुनिसमूहाच्चत्वारो वेदाः पुराणाङ्गविद्योपनिषदश्च नित्यभूता एवाश्रुतपरम्परायाताः प्रवृत्तास्तथा श्लोका इतिहासात्मकाः सूत्राणि च शब्दानुशासनमीमांसागोचराणि । भाष्याणि च सूत्रव्याख्यारूपाणि यदन्यदायुर्विद्यादिकं वाङ्मयं तदपि यत् सकाशात् प्रवृत्तं तथाविधास्ते मुनयो धर्मप्रवर्त्तकाः । एवं सति वेदस्यापि नानित्यतादोषप्रसङ्गः" ।

**धर्मात्मन्** पु० धर्म आत्मा स्वभावो यस्य । धर्मशीले "स तानुवाच धर्मात्मा महर्षीन् मानवो मनुः" मनुः ।

**धर्माधर्म** पु० द्वि० व० धर्मश्चाधर्मश्च द्व० । १पुण्यपापयोः "धर्माधर्मौ गुणा एते आत्मनः स्युश्चतुर्दश" भाषा० । धर्माधर्मौ परीक्षणीयतयाऽत्र स्तः अच् । धर्मजरूपे दिव्यभेदे तद्विधानं वीरमित्रोदये यथा "तत्र पितामहः "अधुना सम्प्रवक्ष्यामि धर्माधर्मपरीक्षणम् । हन्तॄणां याचमानानां प्रायश्चित्तार्थिनां नृणामिति" । हन्तॄणां साहसाभियोगेषु, याचमानानामित्यर्थाभियोगेषु, प्रायश्चित्तार्थिनां नृणामिति पातकाभियोगेषु एतद्दिव्यं भवतीति सूचितम् । धर्माधर्मदिव्यप्रकारमाह स एव "राजतं कारयेद्धर्ममधर्मं सीसकायसम् । लिखेद्भूर्जे पटे वापि धर्माधर्मौ सितासितौ । अभ्युक्ष्य पञ्चगव्येन गन्धमाल्यैः समर्च्चयेत् । सितपुष्पस्तु धर्मः स्यादधर्मोऽसितपुष्पकः । एवंविधायोपलिप्य पिण्डयोस्तौ निधापयेत् । गोमयेन मृदा वापि पिण्डौ कार्य्यौ समन्ततः । मृद्भाण्डके चप्रहृते स्थाप्यौ चानुपलक्षितौ । उपलिप्ते शुचौ देशे देवब्राह्मणसन्निधौ । आवाहयेत्ततो देवान् लोकपालांश्च पूर्ववत् । धर्मावाहनपूर्वन्तु प्रतिज्ञापत्रकं लिखेत् । यदि पापविमुक्तोऽहं धर्मस्त्वायातु मे करे" इति मन्त्रं विशोध्यो ब्रूयात् । अहमिति मन्त्रलिङ्गात् । बृहस्पतिरपि "पत्रद्वये लेखनीयौ धर्माधर्मौ सितासितौ । जीवदानादिकैर्मन्त्रैर्गायत्र्याद्यैश्च सामभिः । आमन्त्र्य पूजयेद्गन्धैः कुसुमैश्च सितासितैः । अभ्युक्ष्य पञ्चगव्येन मृत्पिण्डान्तरितौ ततः । समौ कृत्वा नवे कुम्भे स्थाप्यौ चानुपलक्षितौ । ततः कुम्भात्पिण्डमेकं प्राड्गृह्णीतानुयाचितः । धर्मे गृहीते शुद्धः स्यात् सम्पूज्यश्च परीक्षकैरिति" जीवदानादिकैर्मन्त्रैः, मा प्र गामपथोवयमित्यादि" ऋ० १०।५७।१ सूक्तपठितऋङ्मन्त्रैः अन्यैर्वा आगमोक्तैः प्राणप्रतिष्ठामन्त्रैरित्यर्थः । ते च शारदातिलके उक्ताः" ।

**धर्माधर्मविद्** पु० धर्माधर्मौ वेत्ति विद–क्विप् तद्० । १मीमांसके स हि विधिनिषेधगम्यौ धर्माधर्मौ तत्त्वतो

जानातीति तस्य तथात्वम् । २तद्धेतुभूतविहितकर्माग्नि-
होमादिनिषिद्धकर्महिंसादिवेत्तरि च ।

**धर्माधिकरण** न० धर्मोऽधिक्रियतेऽत्र अधि+कृ—आधारे ल्युट् । नृपाणां तन्नियुक्तानाञ्च व्यवहारदर्शनयोग्ये १स्थानभेदे । तत्स्वरूपभेदादिकं वीरमि० उक्तं यथा बृहस्पतिः "दुर्गमध्ये गृहं कुर्याज्जलवृक्षान्वितं पृथक् । प्राग्दिशि प्राङ्मुखीन्तस्य लक्षण्यां कल्पयेत्सभाम् । माल्यधूपासनोपेतां बीजरत्नसमन्विताम्" । लक्षण्या वास्तुशास्त्रोक्तलक्षणेन तु वर्जिताम् । सभायां धर्माधिकरणत्वं च "धर्मशास्त्रानुसारेण अर्थशास्त्रविवेचनम् । यत्राधिक्रियते स्थाने धर्माधिकरणं हि तदिति" उक्तेः । तत्र सभ्योपवेशनमाह मनुः "यस्मिन्देशे निषीदन्ति विप्रा वेदविदस्त्रयः । राज्ञश्चाधिकृतोविद्वान् ब्राह्मणस्तां सभां विदुरिति" तत्र इत्युपलक्षणम् "अधिकानामपि कृतत्वात् । तच्च वक्ष्यते । अधिकृतो विद्वान् प्राड्विवेकः । अत्र "सभामेव प्रविशेत्" इत्यादिवचनात् सभा मुख्यं व्यवहारदर्शनस्थानम् । अन्यान्यमुख्यानि नानावचनादवगन्तव्यानि "देशस्थानानि वादानां पञ्च चैवाब्रवीद्भृगुः । निर्णयं येन गच्छन्ति विवादं प्राप्य वादिनः । आरण्यास्तु स्वकैः कुर्युः सार्थिकाः सार्थिकैस्तथा । सैनिकाः सैनिकैरेव ग्रामेऽप्युभयवासिभिः । उभयानुमतश्चैव स्मृतं स्थानमीप्सितम् । कुलिकाः सार्थमुख्याश्च पुरग्रामनिवासिनः । ग्रामपौरगणश्रेण्यश्चातुर्विद्याश्च वर्गिणः । कुलानि कुलिकाश्चैव नियुक्ता नृपतिस्तथेति" स्वकैरारण्यकैः ग्रामेऽप्येत्यपिशब्दाद्ग्रामेऽरण्यादौ च निवसन्ति ते उभयवासिभिर्निर्णयं कुर्युरुभयव्यवहाराभिज्ञत्वात्तेषाम् । कुलिकाः कुलश्रेष्ठाः । सार्थो ग्रामदेशयात्रादौ मिलितो जनसङ्घः तन्मुख्याः सार्थवाहादयः । पुरं मुख्यनगरम् । तस्मादर्वाचीनो ग्राम इति पुरग्रामनिवासिनोर्भेदः । कुलिकादीनि पञ्च स्थानानि तानि चारण्यकादीनामेव ग्रामादीनि दश स्थानानि साधारणानि । ग्रामो ग्रामाकारेणावस्थितोजनः । पौरः पुरवासिनां समूहः । श्रेण्यो रजकाद्या हीनजातयः । चातुर्विद्यः आन्वीक्षिक्यादिविद्याचतुष्टयोपेतः । वर्गिणो गणप्रभृतयः" । तत् अर्हत्येनाख्यस्य च । २तत्र नियुक्ते प्राड्विवेकादौ पु० "समः शत्रौ च मित्रे च सर्वशास्त्रविशारदः । विप्रमुख्यः कुलीनश्च धर्माधिकरणो भवेत्" मत्स्यपु० "पुरुषान्तरतत्त्वज्ञाः प्रांशवश्चाप्यलोलुपाः । धर्माधिकरणे कार्या जनाह्वानकरानराः इति मत्स्यपु० ।

**धर्माधिकरणिन्** पु० धर्माधिकरणं नियोगस्थानतयाऽस्त्यस्य इनि । विचारके प्राड्विवेकादौ धर्माध्यक्षे हेमच० ।

**धर्माधिकारिन्** पु० धर्मं व्यवहारे तन्निर्णयमधिकरोति अधि+कृ—णिनि ६त० । प्राड्विवेकादौ ।

**धर्माध्यक्ष** पु० धर्मे व्यवहारे धर्मनिर्णये अध्यक्षः । १प्राड्विवेकादौ । "कुलशीलगुणोपेतः सर्वकर्मपरायणः । प्रवीणः प्रेषणाध्यक्षो धर्माध्यक्षोऽभिधीयते" शब्दकल्पः । २विष्णौ च "लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः कृताकृतः" विष्णुस० । "धर्माधर्मौ साक्षादीक्षते तदनुरूपं फलं दातुं तस्माद्धर्माध्यक्षः" भा० । अत्र धर्मपदं लक्षणया धर्माधर्मपदं तदभिप्रायेण धर्माधर्मौ इत्युक्तम् ।

**धर्मान्धु** पु० धर्मकृतोऽन्धुः कूपः । तीर्थभेदे स्कन्दपु० ।

**धर्माभास** पु० धर्म इवाभासते आ+भास—अच् । स्मृतिकृन्नीतरशास्त्रोक्ते अधर्मे । "स्मृतिकृतिभ्यामुदितोयः स धर्मः प्रकीर्त्तितः । अन्यशास्त्रेषु यः प्रोक्तो धर्माभासः स उच्यते" देवीभागवतम् ।

**धर्मारण्य** न० तीर्थभेदे तदाविर्भावकथा वराहपु० यथा "स धर्मः पीडितः सर्वैः लोभैर्माङ्गुलकर्मभिः । तारां जिह्वता पत्नीं श्वाशुरांश्चिरवस्य च । लोऽप्यवाङ्मोघितस्तेन वज्रिणा क्रूरकर्मणा । अरण्यं गहनं घोरं प्रविवेश तदा प्रभुः" ब्रह्मोवाच । "यस्मादरण्यमिदं धर्म ! त्वयाव्याप्तं चिरं विभो !। नाम्ना भविष्यति ह्येतद्धर्मारण्यमिति प्रभो !" गयास्थे २तीर्थभेदे "प्रथमेऽह्नि विधिः प्रोक्तो द्वितीयदिवसे व्रजेत् । धर्मारण्यं तत्र धर्मो यस्मात् यज्ञमकारयत्" वायुपु० गयामाहात्म्ये "गया च फल्गुतीर्थञ्च धर्मारण्यं सुरैर्वृतम् । तथा देवनदीपुण्या सरश्च ब्रह्म निर्मितम्" भा० आनु० १६५अ० । ३धर्मसाधने अरण्यमात्रे च "तैरुक्तो वसियान् देशान् धर्मारण्यं तथैवच" भा० आश्व० ८२ अ० । ह०स०१४अ० कूर्मविभागोक्ते मध्यभागस्थे देशभेदे न० ४आसुरकोषज्योतिषधर्मारण्यानि शूरसेनाश्च" इत्युपक्रमे मध्यमिदमित्युक्तम् ।

**धर्मासन** न० धर्मार्थं धर्मविचारार्थमासनम् । विचारनिर्णयार्थे आसनभेदे । "धर्मासनमधिष्ठाय संवीताङ्गः समाहितः" मनुः ।

**धर्मास्तिकाय** पु० आर्हतमतसिद्धे जीवाजीवधर्माधर्म०

पुद्गलास्तिकायमध्ये पदार्थभेदे अर्हत्शब्दे दृश्यम् ।

**धर्मिक** त्रि॰ धर्मोऽस्त्यस्य ठन् । धर्मयुक्ते । ततः पुरोहिता॰ तस्य कर्मभावादौ यक् । धार्मिक्य तद्भावे न॰ ।

**धर्मिन्** त्रि॰ धर्मोऽस्त्यस्य इनि । १धर्मविशिष्टे स्त्रियां ङीप् । सा च २जायायाम् । “त्रिगुणमचेतनं प्रसवधर्मि” सां॰का॰ । ३आधारे च सुखदुःखमोहधर्मिणी बुद्धिः सुखदुःखमोहधर्मकद्रव्यजन्या” सां॰ प्र॰ भा॰ । “नित्यत्वाच्च चित्धर्मा” सा॰ सू॰ भाष्ये पुरुषस्य प्रकाशरूपत्वे सिद्धे तत्सम्बन्धमात्रेणान्यव्यवहारोपपत्तौ प्रकाशात्मकधर्मकल्पना गौरवमित्यपि बोध्यम् । तेजसश्च प्रकाशाख्यरूपविशेषाश्रयत्वेऽपि सर्वपुरस्कारेण महात् प्रकाशतेजसोर्भेदः सिद्ध्यति । आत्मनस्तु ज्ञानाख्यप्रकाशाश्रयत्वकाले ग्रहणं नास्तीत्यतो लाघवात् धर्मधर्मिभावशून्यं प्रकाशरूपमेवात्मद्रव्यं कल्प्यते” “धर्म्यंशे सर्वमभ्रान्तं प्रकारे च विपर्य्ययः” न्यायका॰ । धर्माः श्रौतस्मार्त्ताः कर्त्तव्यत्वेन सन्त्यस्य । ४धार्मिके त्रि॰ स्त्रियां ङीप् । धर्मः पाल्यत्वेनास्त्यस्य इनि ५विष्णौ पु॰ । “धर्मगुप् धर्मकृत् धर्मी” विष्णु स॰ ।

**धर्मिष्ठ** त्रि॰ अतिशयेन धर्मवान् इष्ठन् मतुपो लोपः । १अतिशयेन धार्मिके । २विष्णौ पु॰ ।

**धर्मेन्द्र** पु॰ धर्मे इन्द्र इव रक्षकत्वात् । धर्मराजे यमे “पितॄणामिव धर्मेन्द्रो यादसामिव चाम्बुराट्” भा॰द्रो॰ ६अ॰ । धर्मेशधर्मेश्वरादयोऽप्यत्र ।

**धर्मेयु** पु॰ पौरववंश्यस्य रौद्राश्वस्य पुत्रभेदे । “धर्मेयुः सन्नतेयुश्च दशमो देवविक्रमः” भा॰ आ॰ ९४ अ॰ । तत्पुत्रोक्तौ

**धर्मोत्तर** त्रि॰ धर्म उत्तरः प्रधानमस्य । धर्मप्रधाने ।

**धर्मोपदेश** पु॰ धर्म उपदिश्यतेऽनेन उप+दिश–करणे घञ् ६त॰ । १धर्मशास्त्रे मन्वादिशास्त्रे “आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः” मनुः । भावे घञ् । २धर्मस्य उपदेशे “धर्मोपदेशं दर्पेण विप्राणामस्य कुर्वतः । तप्तमासेचयेत् तैलं वक्त्रे श्रोत्रे च पार्थिवः” मनुः ।

**धर्मोपदेशक** त्रि॰ धर्ममुपदिशति उप–दिश ण्वुल् ६त॰ । १धर्मस्योपदेशकर्त्तरि २गुरौ पु॰ ।

**धर्म्य** त्रि॰ धर्मादनपेतः “धर्मपथ्यर्थन्यायादनपेते” पा॰ यत् । धर्मेण प्राप्यः “नौवयोधर्मेत्यादिना” पा॰यत् वा । १धर्मयुक्ते धर्मादबहिर्भूते २धर्मेण प्राप्ये च “न दृष्ट्वाणामविज्ञाय विधिं धर्म्यं प्रतिग्रहे” मनुः । ब्राह्माद्यष्टविवाहोपक्रमे “यो यस्य धर्म्यो वर्णस्य गुणदोषौ च यस्य यौ । तद्वः सर्वं प्रवक्ष्यामि प्रसवे च गुणागुणान् । षडानुपूर्व्या विप्रस्य क्षत्रस्य चतुरोऽवरान् । विट्शूद्रयोस्तु तानेव विद्याद्धर्म्यान् राक्षसान् । चतुरो ब्राह्मणस्याद्यान् प्रशस्तान् कवयो विदुः । राक्षसं क्षत्रियस्यैकमासुरं वैश्यशूद्रयोः । पञ्चानान्तु त्रयोधर्म्या द्वावधर्म्यौ स्मृताविह । पैशाचश्चासुरश्चैव न कर्त्तव्यौ कदाचन । पृथक् पृथग्वा मिश्रौ वा विवाहौ पूर्वचोदितौ । गान्धर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ” ।

**धर्ष** पु॰ धृष–भावे घञ् । १प्रागल्भ्ये २अमर्षे ३शक्तिबन्धने ४संहतौ ५हिंसायाञ्च शब्दच॰ ।

**धर्षक** त्रि॰ धृष–ण्वुल् । १परिभवकारके २प्रसभे ३असहने च ४नटे पु॰ शब्दरत्ना॰ ।

**धर्षकारिन्** त्रि॰ धर्षं करोति कृ–णिनि ६त॰ । १परिभवकर्त्तरि २प्रागल्भ्यकारके च ३दूषितायाम् असत्यां स्त्री स्त्रियां ङीप् शब्दर॰ ।

**धर्षण** न॰ धृष–भावे ल्युट् । १परिभवे २असहने ३धर्षशब्दार्थे च । कर्मणि ल्युट् । ४अभिसारिकायां स्त्रियाम् स्त्री ङीप् । मेदि॰ । कर्त्तरि ल्यु । ५धर्षकारके त्रि॰ । ६शिवे पु॰ । “अधर्षणो धर्षणात्मा यज्ञहा कामनाशकः” भा॰ अनु॰ १७ अ॰ शिवसहस्रनामोक्तौ स्त्री॰ धृष–भावे युच् । ७धर्षणे स्त्री “कृतेयं धर्षणा तात ! तव तेन दुरात्मना” भा॰ आ॰ ४१ अ॰ ।

**धर्षणि(णी)** स्त्री धृष्यतेऽसौ धृष–कर्मणि अनि । असत्यां बन्धक्याम् उणादिवृत्तिः वा ङीप् तन्नार्थे भरतः ।

**धर्षित** त्रि॰ धृष–कर्मणि क्त इट् गुणश्च । १परिभूते असत्यां २कुलटायां स्त्री शब्दरत्न॰ । भावे क्त । ३असहने ४मैथुने च न॰ त्रिका॰ । ५परिभवे च ।

**धलण्ड** पु॰ दधाति धा–ड तं लण्डयति उत्क्षिपति लडि–उत्क्षेपे अण् । (धला आकड़) इति ख्याते शब्दच॰ । स्वार्थे कन् । धलण्डक तत्रार्थे तस्य कण्टकाढ्यत्वेन धारकस्योत्क्षेपणात्तथात्वम् ।

**धव** गतौ भ्वा॰ प॰ सक॰ सेट् इदित् । धन्वति अधन्वीत् । इदित्त्वात् कर्मणि धन्व्यते धन्वधातोस्तु धन्यते इति भेदः ।

**धव** त्रि॰ धवति धुवति धुनोति धूनाति वा कर्त्तरि अच् । १कम्पनकारके २पत्यौ स्वामिनि ३नरे पु॰अमरः ४धूर्त्ते त्रि॰ मेदि॰ । (धला आकुड़ा) ख्याते वृक्षे पु॰ रत्नमा॰ । “धवः शीतः प्रमेहार्शःपाण्डुपित्तकफापहः । मधुरस्तु-

वरत्वस्य फलञ्च मधुरं मनाक्” भावप्र०। “बिल्वार्क-खदिरापामार्गा कपित्थधवयज्ञुवम्” भा० आ० ६९ अ०। “या विद्या च हरेः प्रोक्ता तस्या देवो यतो भवान्। तस्मात्माधवनामासि धवः स्वामीति शब्दितः” हरिवं० २७९ अ०। भावे अप्। ६कम्पने ७विधूनने च पु०।

**धवनि** स्त्री धू–करणे अनि। धूनने शब्दरत्नाव०।

**धवल** पु० धाव–वृषा० कल वा०ह्रस्वः धवं कम्पं लाति ला–क वा। “धवलः १विन्दूरे २सिते। ३मङ्गोक्षे चाथ धवली ४गौरप्यां समुदाहृता” विश्वः। गौरप्यामेव गौरा०ङीष्। श्वेतवर्णयुक्ते त्रि० अमरः तत्रार्थे स्त्रियां टाप्। “गौता वेम निशा मयाङ्कधवला” उद्भटः०। ५निर्मले त्रि० त्रिका०। “क्रियते धवलः खलूच्चैर्धवलैरेव सितेतरैरधः” माघः। ६धवदृश्चे ७चीनकर्पूरे स्त्री। ८श्वेतमरिचे न० राजनि०। ९रागभेदे स च भरतमते हिन्दोलरागस्य अष्टमः पुत्रः सङ्गीतशास्त्रम्। १०वृक्षभेदे “धवलः पाण्डुरोहिणो रक्तपित्तहरो हिमः। रसे पाके च मधुरः संग्राही वातशान्तिकृत्” भावप्र०। ११छन्दोभेदे तल्लक्षणं यथा “द्विजवर! मनयुगलनगण मनयुगलकं विमलकलमपि च कलय सकलजन-सुभगम्। “फणिपतिवरभणितमनवधि हितं विमल-कविकुलहृदि ललितमिति भुवि विदितम्”।

**धवलगिरि** पु० कर्म०। स्वनामख्याते पर्वतभेदे।

**धवलपक्ष** पुंस्त्री धवलौ पक्षौ यस्य। हंसे राजनि० स्त्रियां जातित्वात् ङीष्। “धवलपक्षविहङ्गमकूजितैः” माघः। कर्मधा०। १चान्द्रमासघटके प्रतिपदादिपूर्णिमान्तके २शुक्ले पक्षे पु०

**धवलपट्टिनी** स्त्री कर्म०। श्वेतपाटलिकायाम् राजनि०।

**धवलमृत्तिका** स्त्री कर्म०। (खड़ि) खटिन्यां राजनि०।

**धवलयावानल** पु० कर्म०। श्वेतयावनाले यावनालभेदे राजनि०।

**धवला** स्त्री अनुदात्तत्वात् ङीष्। शुभ्रवर्णायां स्त्रियाम्। अमरः। [धवलिमभिः “धूलिपाण्डुरभिख्याम्” माघः।

**धवलिमन्** पु० धवलस्य भावः इमनिच्। श्वेतत्वे “अधिगत-

**धवलोत्पल** न० कर्म०। कुमुदे राजनि०।

**धवाएक** पु० धुनोति इत्यादिवत् धू–बाहु०। वायौ उज्ज्वल०।

**धवित्र** न० धू–करणे इत्र। मृगचर्मनिर्मितव्यजने अमरः। “शुल्बवेद धवित्राणि करोति” कात्या० श्रौ० २६।२।१०। “धुनोत्येभिरिति धवित्राणि कृष्णाजिनचर्मनिर्मितानि व्यजनानि” देवनाथः।

**धस्** त्रि० धा–असुन्। १धारके रेतोधाः पुरोधाः। २मन्मथे पु० मेदि०। ३हृष्टमतौ उज्ज्वल०।

**धा** धारणे पोषणे दाने च जुहो० उभ० सक० अनिट्। दधाति धत्ते धत्से दध्यात् दधातु धेहि अदधात् अधत्त। अधात् अधित। दधौ दधे। दधिथ दधाथ। दधिव धाता धास्यति। धीयते अधायि अधायिषाताम् अधिषाताम्। हितः हित्वा हितिः। “त्वं सुग्धाक्षि! विनैव कञ्चुलिकया धत्से मनोहारिणीम्” सा० द०। “इमं नो यज्ञममृतेषु धेहि” ऋ० ३।२१।१ “तत्र त्वा देवा सविता दधातु” ऋ० १०।१७।४ “धर्मे दध्यात् सदा मनः” मनुः। “निवेशाय मनो दधुः” भा० व० ६५ अ०। “न चाहमधिगच्छामि तुरिति मे धीयते मतिः” भा० विरा० २८ अ०। “हिंसाहिंसे मृदुक्रूरे धर्माधर्मावृतानृते। यद् यस्य सोऽदधात् सर्गे तत्तस्य स्वयमाविशत्” मनुः। “यत्रापचाप्नुमनसां दैव मनोऽप्यदुर्लभम्” भट्टिः। “गामधास्यत् कथं नागो मृणालमृदुभिः फणैः” कुमा० धापयति धित्सति। “त्वं वह्निं कुरु धित्सवः” ऋ० १।४६।९

अति+अतिक्रम्य धारणे अतिशयधारणे च “आयुर्वक्ते अति-हितं पराचैः” अथ० ७।५३।२।

अधि+आधिक्येन धारणे “यत्रार्थदाय नवेऽध्यधत्तम्” ऋ० १।११७।८।

अनु+पश्चाद्धारणे। “अधान्याम् (तण्डुलान्) कृतान्नान्यन्त्रीणु समिन्धु अनुदधीरन्” आश्व० ४।९।१४।

अन्तर्+आच्छादने वस्त्वन्तरेण व्यवधाने। “उदुम्बरशाखा-मन्तर्धायाभिषिञ्चति” ऐ० ब्रा० ८।७। तिरोधाने “ते चान्तर्दधिरे नागाः” भा० आ० १२९ अ०।

अपि+तिरोधाने आच्छादने। “धनेनाधर्मलब्धेन यच्छिद्र-मपिधीयते” भा० उ० ३४अ०। वा अतो लोपः “पिधान-मपिधानम्” अमरः।

अभि+कथने “साक्षात् सङ्केतितं योऽर्थमभिधत्ते स वा-चकः” का० प्र०। “गणनव्यवहारे तु हेतुः संख्याभि-धीयते” भाषा०।

प्रति+अभि+प्रत्युत्तरकथने। “मया च प्रत्यभिहितं देवका-र्यार्थदर्शनात्” भा० उ० १९ अ०।

अव+मनःसंयोगविशेषे अभिनिवेशे “अवधानपरे चकार सा” कुमा०। अधःस्थापने पातने च “यां ते कृत्यां कूपे अवदधुः” अथ० ५।३१।७। “त्रितः कूपेऽवहितः” ऋ० १।१०५।१७

वि+अव+आच्छादने (ढाका) अपवारणे। "प्रेक्ष्य स्थितां सहचरीं व्यवधाय देहम्" रघुः। "व्यवदधाति दर्भपिञ्जूलानि" सांख्यब्रा० १८।८। "अन्तर्धा व्यवधा पुंसि अन्तर्द्धिरपवारणम्" अमरः। "उदयाचलव्यवहितेन्दुवपुः" माघः।

आ+आरोहे आरोपणे स्थापने च। स्वद्रव्यस्य ऋणशोधनकालपर्य्यन्तं धनिकसमीपे स्थापने आधिः आहितः। अग्न्यादेः संस्कारभेदे अग्न्याधानम्। "जनपदे न गदः पदमादधौ" रघुः। "आदध्यात् संभारान् दर्भान् दीर्घान् गर्भांश्च" छ० स० ४८। "गर्भमाधत्त राज्ञी" रघुः। "ज्येष्ठायां धर्म्मचारिण्यां महिष्यां गर्भमादधे" भा० व० २६२ अ०।

अति+आ+मर्य्यादातिक्रमेण धारणे। "कार्य्यमत्याहितं भविष्यति" प्रबोधच०। "यदि स्यादिह गोविन्दो नैतदत्याहितं भवेत्" हरिवं० १७१ अ०।

अनु+आ+पश्चादाधाने। यदेकस्य निहितं द्रव्यं तेनापि अनु पश्चादन्यस्य हस्ते स्वामिने देहीति वचनेन समर्पणे च। अन्वाहितशब्दे दृश्यम्।

अभि+आ+साम्मुख्येन स्थापने "अभ्यादध्युश्च काष्ठानि तत्र दद्येन पापकृत्" मनुः।

उप+आ+धर्म्मचिन्तायाम् "उपाधिना धर्म्मचिन्ता" अम०। सामीप्येनाधाने अग्न्युत्पाते मेदि०। "अग्न्युत्पात उपाहितः" अमरः। संयोजने च अमरः। "तस्य निष्क उपाहित आस" शत० ब्रा० ११।४।१।१

निर्+आ+निराकरणे "यः क्रव्यादं निरादधत्" अथ० १२।२।२६।

परि+आ०परितः स्थापने। "कृत्वा कुम्भीमध्यग्नौ प्रयाम्या सिञ्चोदकमवधेह्येनम्। पर्य्याधत्ताग्निना" अथ० ६।५।५

वि+आ+विशेषेणाधौ पीड़ायाम्। व्याधिः "ब्रह्मात्मना प्रजया वा व्याधीयेत" स्मृतिः "एतद्वै परमं तपो यद्व्याहितस्तप्यते" शत०ब्रा०१४।८।११।१

सम्+आ+पूर्व्वमाक्षिप्तस्य दोषस्य निराकरणे "समाहितः समाधिस्थेऽप्युक्तसिद्धान्त आहिते" मेदि० उक्तेः च सिद्धान्तोक्त्या दोषसमाधाने। समस्तचित्तस्य ईश्वरादौ संस्थापने समाधिः। "अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम्" गीता। सम्यगारोपणे "सोऽहं भारं समाधास्ये त्वयि त्वं वोढुमर्हसि" भा० द्रो० ११ अ०। "महाकुलमिव राज्ञे मन्त्रिवृद्धाः समादधुः" रघुः।

आविस्+आविर्भवने प्रकाशने "आविर्हितस्त्वनुयुगं स हि सत्यवत्याम्" भाग० २।७।२।

उप+सामीप्येन स्थापने उपलक्षणतया स्थापने च। "क्रिया हि वस्तूपहिता प्रसीदति" रघुः। "एतदुपहितचैतन्यम्" वेदा०सा०। "यदिन्द्रियैरुपहितं पुरस्तात् प्राप्नान् सुखान् न स्मरते चिराय" भा० शा० ७४१७ श्लो०। कुलने स्वरूपप्रच्छादने उपधर्म्मस्तु कैतवमित्यमरोक्तेः।

तिरस्+अन्तर्द्धाने प्रच्छादने। "इति वाचमुक्त्वा विबुधान् विसृज्यैनि तिरोदधे" कुमा०।

नि+स्थापने अज्ञातस्वामिकतया द्रव्यस्य स्थितौ स्थापने च "अभिधायैव तद्द्रव्यमात्मनः शुचिताभियात्" मनुः। "चिरविनिदधानोऽञ्जलिपुटम्" सा०द०। "अतं प्रयत्नेन या तत्र सा निधाः पदं पदव्यां सगरस्य सन्ततेः" रघुः। "यस्तु पश्येन्निधिं राजा पुराणं निहितं क्षितौ" मनुः।

प्र+नि+ऐकाग्र्येण मनसः स्थापने। "ईश्वरप्रणिधानाद्वा" पात०सू०। "प्रणिधानं भक्तिविशेषः" भा०। प्रेरणे च "नीविं प्रति प्रणिहिते तु करे प्रियेण" सा० द०। मनोऽभिवेशने च "किञ्चिन्न्याहृदुत्यां मनुं मनः प्रणिदधे कृतम्" भट्टिः।

प्रति+नि+तुल्यरूपतया करणादौ प्रतिनिधिः। "द्रव्येऽविद्यमाने यत् सामान्यतमं मन्येत तत्प्रतिनिदध्यात्" का० श्रौ० १।२०।६ प्रतिनिधिशब्दे दृश्यम्।

सम्+नि+सम्यग्निधाने। "मेघेषु संनिधत्ते प्राणानां पवनः पतिः। तस्य मेघगतं वारि शक्रो वर्षति भारत।" भा० अनु० ६ ग०। "दूरादाहृत्य समिधः संनिदध्याद्विहायसि" मनुः। नैकट्येन सम्बन्धे "समवेतं न कुर्वीत नीचैः सन्निहितो वसेत्" भा० वि० ४ अ०। "गुरोर्गुरौ सन्निहिते गुरुवद्वृत्तिमाचरेत्" मनुः। "अस्मिन् लतामण्डपे संनिहितया तया भाव्यम्" शकु०। "भगवान् हरिरद्यापि तत्रत्यानां निजजनानां वात्सल्येन सन्निधाप्यत इच्छारूपेण" भाग० ५।७।८। नैकट्येन स्थापने तु शकु०। "स चाहं बहुवस्त्रा धनमिवेष तत्र संन्यधिषि" दशकुमा०।

परि+वेष्टने आच्छादने। "यं परिधिं पर्य्यधात्" यजु० २।१७। "येनेन्द्रस्य दृहस्पतिर्वासः पर्य्यधात्" पञ्चमी० २।२ "वासश्च परिधावैकम्" भा० वि० ६ अ०। "परिहिते प्रातरनुवाके" आ० श्रौ० ६।६।१। "दृष्टिं परिदधे कृष्णो रौहिणेये च दारुणाम्" हरिवं० ७१ अ०।

वि+परि+परिवर्त्तनेन आच्छादने । "आचान्तः पुनराचामेत् वासो विपरिधाय च" याज्ञ० ।

पुरस्+अग्रतः स्थापने । पुरोहितः । "तुराषाहं पुरोधाय धाम स्वायम्भुवं ययुः" कुमा० ।

प्र+प्रकर्षेण धारणे । "दिग्भ्रमतत्त्वः सहसा प्रधापिताः" भाग० २० अ० । प्रधानम् ।

प्रति+प्रक्षेपे "तदग्ने चक्षुः प्रतिधेहि रेभे" ऋ०१०।८७।१२। प्रतीकारार्थे विधाने "दुष्टदैवतनाशाय यज्ञो ध्यान समाधिना । सर्वत्रागतविक्षेपात् शान्तिकं प्रतिधास्यति" प्रपञ्च० प्रतिविधाने ।

वि+करणे "तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्" गीता । "विदधाति विभज्येह फलं पूर्वकृतं नृणाम्" भा० व० यत्नाच्चदपि कर्त्तव्यं तद्विधत्स्व महामते" व० ७६ अ०। कर्त्तव्यतयोपदेशे "यत्रविष्टायनं ह्यो तत् यतात्मा विधीयते" मनुः । "चिकीर्षाकृतिसाध्यत्वहेतुधीविषयो विधिः" भट्ट०प्र० विधिपदे दृश्यम् । "न पैतृयाज्ञियो होमो लौकिकेऽग्नौ विधीयते" मनुः ।

अनु+वि+तुल्यरूपाचरणे पश्चात्करणे च । "आनुपूर्व्येण ह विद्यां देवत उच्चैरुपांशुतायां चाध्वर्युमनुविदधीत" शांख०श्रौ० १२।१।२ "वृत्तिं च तेभ्योऽनुविधाय काञ्चित्" भा०उ०२६अ०। "उपतिष्ठति तिष्ठन्तं गच्छन्तमनुगच्छति । करोति कुर्वतः कर्म छायेवानुविधीयते" भा० शा० १८१ । "इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते" गीता ।

प्रति+वि+प्रतिकूलाचरणे "क्षिप्रमभिसरणाय चारः प्रतिविधीयताम्" राजा०सुन्द० प्रतीकारे च "क्षिप्रमेव कस्माद् प्रतिविहितमार्येण" मुद्राराः० चन्द्रगुप्तोक्तिः "न पारितं प्रतिविधातुम्" तत्रैव चाणक्योक्तिः ।

श्रद्+आदरे विश्वासे च । "श्रद्दधाति क इमे न साध्वात्" नैष०।

सम्+सन्निधाने योजने लक्ष्ये अभिसन्धौ । "मनस्येतानि सन्धाय मनसा सम्प्रधारयेत्" भा० आश्व० ४२ अ० । "यथा सूच्या वासः संदध्यात्" ऐ० ब्रा० ८।४८ । "धनुष्यमोघं समधत्त सायकम्" कुमा० । "संदधे धनुषि वायुदैवतम्" रघुः । "भवति कृतसन्धानमिव तत्" शकु० । मेलने "सकृद्दुष्टं यो हि मित्रं पुनः सन्धातुमिच्छति" चाणक्यः ।

अति+सम्+अतिशयेन मन्त्राद्विना अयने संयोजने । "त्वया चन्द्रमसा च विश्वसनीयाभ्यामतिसन्धीयते कामिजनसार्थः" शकु० ।

अनु+सम्+अनुसन्धाने विचारजन्यज्ञानभेदे अनुचिन्तने "आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः" मनुः । अन्वेषणे च "दुर्जनमनुसन्धेहि" हितो० ।

अभि+सम्+तात्पर्ये अभिलाषभेदे । "अभिसन्धाय तु फलं दम्भार्थमपि चैव यत्" गीता । "भवन्तमभिसन्धाय जिघांसन्ति भवत् प्रियम्" भा०शा०११०५ श्लो० "आत्मानि चैव कुर्वन्ति फलकामाः सदा नराः । अभिसन्धाय पितरं पितुश्च पितरं तथा" हरिवं०१६अ० "कूटाभिसन्धिः प्रयुङ्क्ते" जगदीशः । "अभिसन्ध्यादिषु चैवम्" सा० द०।

प्रति+सम्+प्रतिरूपसन्धाने । "प्रतिसन्धाय चास्त्राणि तेऽन्योन्यस्य विमानते ॥ सुमुचुः पाण्डवाश्चैव कौरवाश्च महाहवे" भा० भी० ७५ अ० । "पश्यतः प्रतिसन्धाय विध्यतः सव्यसाचिनः" भा० वि० ६१ अ० ।

**धाक** त्रि० धा—उणा० क तस्य नेत्त्वम् । १धारके २सहानि पु० मेदि० । ३वृषे ४आहारे च ५स्तम्भे ६कम्बे च संक्षिप्त सा० उणादिवृत्तिः ।

**धा(घा)टी** स्त्री धट्यते हिंस्यतेऽत्र धट—हिंसायां आधारे घञ् गौरा० ङीष् पृषो० धस्य घः घाटी वा तत्र पाठः । अभ्यवस्कन्दने शत्रुसम्मुखगमने हेमच० ।

**धाणक** पु० धा—आणक । दीनारभागे परिमाणभेदे । उज्ज्वलद० ।

**धातक** पु० धातुं करोति णिच् टिलोपः ण्वुल् । पुष्करद्वीपस्थापतेः वीतहोत्रस्य १पुत्रभेदे "तद्द्वीपस्याधिपतिः प्रैयव्रतो वीतिहोत्रो नाम तस्यात्मजौ रमणधातकनामानौ वर्षपती नियुज्य" भाग० ५।२०।२२ । गौरा० ङीष् । (धाइफुल) २धातुपुष्प्याम् राजनि० । "धातकी कटुका शीता मदकृत् तुवरा लघुः । तृष्णातीसारपित्तास्रविषकृमिविसर्पजित्" भावप्र०तत्तु च्याः । ३तीर्थभेदे शिवपु०।

**धातक्यादिलेह** चक्रदत्तोक्ते लेहभेदे "धातकीविल्वधन्याकलोध्रेन्द्रयवबालकैः । लेहः क्षौद्रेण बालानां ज्वरातीसारवान्तिजित्" चक्र० ।

**धातु** पु०धीयते सर्वं निःक्षिप्यते सुषुप्त्यादावस्मिन् धा—आधारे तुन् । १परमात्मनि । "स एष चिद्धातुः" श्रुतिः । दधाति धर्त्तार् । २सर्वेषां नाम्नां प्रकृतिभूते भ्वादौ तत्र लक्षणविभागादिकं शब्दार्थरत्नेऽस्माभिर्दर्शितं यथा

"धातुर्नाम क्रियावाचकोगणादिपठितः शब्दविशेषः क्रिया च पूर्वोक्तफलानुकूलो व्यापार एव सर्वेषाञ्च धात्-

संख्यामन्वयोपपत्तये कालान्वयोपपत्तये च धातूनां क्रियावाचकत्वाङ्गीकारात्। तथाहि। "क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिकेति" वाक्यपदीये कालानां क्रियाभेदकत्वमुक्तमुक्तञ्च तेनैव "क्रिया नियतसाधना" इत्यादिना साधनानां क्रियाकाङ्क्षत्वं तत्र यदि धातुभिः क्रिया न बोध्येत क्व तदा तेषामन्वयो विशेषणत्वं वा भवेदतोऽवश्यं सर्वेषां क्रियावाचकत्वं स्वीकार्यं धातूनां फलमात्रवाचकत्वे आख्यातानां व्यापारार्थकत्वे कृदादिस्थले आख्याताभावेन कारकाद्यन्वयानुपपत्तेः नापि क्रियामात्रवाचकत्वं त्यजिगम्योः पर्य्यायतापत्तेः। तथाच फलवाचकत्वस्य तेषां प्रायशोगणपाठे एव उक्तत्वात् न तदंशे विवादः। किन्तु फलावच्छिन्नक्रियायाः पृथक्शक्त्या विशिष्टशक्त्या वा धात्वर्थत्वाभावे सकर्मकाकर्मकविभागोच्छेदः स्यात् स्याच्च फलमात्रधात्वर्थत्वे सर्वेषां कारकाणां तत्रानन्वयः तत्रैव कालान्वयोपगमे च व्यापारविगमकालेऽपि फलसत्त्वेन वर्त्तमानत्वादिप्रयोगापत्तिः। अतोऽवश्यं क्रियावाचकत्वं स्वीकार्य्यमतएव "धातोरर्थः क्रियोच्यते" इत्यनेन धात्वर्थत्वेनैव क्रियात्वस्वीकारः। अतएव च "भूवादयोधातवः" इतिपाणिनीयसूत्रमपि क्रियावाचकत्वं धातुमात्राणां प्रतिपादयति। तथाहि भूश्च वा च भूवौ आदिश्चादिश्चादी भूवौ आदी येषां ते धातवइति तथा चात्र प्रथम आदिशब्दोव्यवस्थावाची भुवा सह तदन्वयात् भूप्रभृतयइत्यर्थलाभः द्वितीयआदिशब्दः सादृश्यवाची वाधातुना तदन्वयस्तेन वासदृशा इत्यर्थलाभः तत्सादृश्यञ्च क्रियावाचित्वेन वाधातोर्गत्यर्थतया क्रियावाचित्वप्रसिद्धेस्तथा च भूप्रभृतयः क्रियावाचित्वेन वासदृशा धातव इत्येव फलितम्। भुवश्चादित्वं गणपाठापेक्षया तस्य च क्रियावाचकत्वं पूर्वोक्तयुक्तेरिति संक्षेपः। अत्र क्रियावाचित्वानुक्तौ गणपठितत्वेन सर्वनामाव्ययादीनामपि धातुत्वापत्तिः तन्मात्रोक्तौ च हिरुगाद्यव्ययानां क्रियावाचित्वेन धातुत्वापत्तिरत उभयमुक्तम्। उक्तञ्च "किन्तु क्रियावाचकतां विना धातुत्वमेव नो। सर्वनामाव्ययादीनां वावादीनां प्रसङ्गतः। न हि तत्पाठमात्रेण युक्तमित्याकरे स्फुटमिति"। तत्पाठः गणपाठः। विदि अवयवे गडि वदनैकदेशे इत्यादिद्रव्यवाचिनामपि तत्साधनक्रियावाचित्वमस्त्येव कालकारकाद्यन्वयानुरोधात् तत्फलस्य द्रव्यरूपत्वेऽपि न क्षतिः। सत्यादीन्यादिपदेन सनाद्यन्तसंग्रहश्च तेन सौत्राणां स्तम्भुप्रभृतीनां सनाद्यन्ताधातव इत्यादीनाञ्च प्रत्ययान्तानां धातुत्वमव्याहतमेव दर्शितयुक्तेः तत्रापि क्रियावाचित्वादेरवश्यं स्वीकाराच्च नाप्रसङ्गइति दिक्।

ते च सर्वेऽपि धातवः सकर्मकाकर्मकभेदेन द्विविधाः। तत्र व्यापाराधिकरणमात्रावृत्तिफलवाचकः सकर्मकः पच्यादेः व्यापाराधिकरणावृत्तिविक्लित्तिरूपफलस्य बोधकतया सकर्मकत्वं कर्तृकर्मोभयनिष्ठफलबोधकस्यापि गम्यादेः व्यापाराधिकरणमात्रावृत्तिफलबोधकतया सकर्मकत्वम्। भूप्रभृतीनां तु व्यापाराधिकरणमात्रवृत्तिफलबोधकतया न सकर्मकत्वं फलस्य सत्तारूपस्याव्यापाररूपव्यापारस्यैकस्मिन्नेव धर्मिणि घटादौ सत्त्वात्। उक्तञ्च वाक्यपदीये "आत्मानमात्मना बिभ्रदस्तीति व्यपदिश्यते। अन्तर्भावाच्च तेनासौ कर्मणा न सकर्मकः" इति। अस्यायमर्थः आत्मानं स्वरूपं बिभ्रत् आत्मधारणानुकूलव्यापाराश्रयः अस्तीतिपदेन समानाधिकरणतया व्यपदिश्यते तद्भेदबोधनाय तिङादिकं प्रयुज्यतेइति यावत् तेनात्मनात्मरूपेण कर्मणा धारणकर्मणा धातुः न सकर्मकः। अत्र हेतुरन्तर्भावात् धात्वर्थ एव तस्य कर्मणः प्रवेशात् आत्मधारणानुकूलव्यापाररूपधात्वर्थेनात्मनउपसंग्रहादित्यर्थः। अथ वा अन्तरेव व्यापाराधिकरण एव भावात् फलस्य सत्त्वात् व्यापारसामानाधिकरण्यादित्यर्थः तेन भुवादेरत्यन्ताननुकूलव्यापारवाचितया धात्वर्थोपसंगृहीतकर्मकत्वाभावेऽपि फलसमानाधिकरणव्यापारवाचित्वादकर्मकत्वम्। अतएव "फलव्यापारयोरेकनिष्ठतायामकर्मकः। धातुस्तयोर्धर्मिभेदे सकर्मकउदाहृत" इति फलसामानाधिकरण्यादिकृताकर्मकसकर्मकविभागोऽभिहितः। एकनिष्ठतायामेकमात्रवृत्तितायामित्यर्थः तेन गम्यादेर्व्यापाराधिकरणवृत्तिफलवाचित्वेऽपि नाकर्मकत्वमिति धर्मिभेदेऽधिकरणान्यत्वे इत्यर्थः। एवमेव शब्दकौस्तुभकारादयः। एतन्मते सकर्मकाकर्मकशब्दौ पारिभाषिकाविति द्रष्टव्यम्। मञ्जूषाकृतस्तु "कर्मणा सहेति नास्ति कर्म यस्येति व्युत्पत्त्या सकर्मकाकर्मकशब्दौ यौगिकौ तत्र साहित्यं तदन्वितस्वार्थबोधकत्वम् अन्वयश्च पृथक्पदोपस्थाप्ययोः सम्बन्धरूपोऽस्त्यस्तेन जीवत्यादीनां प्राणधारणानुकूलव्यापारार्थकतया तत्कर्मणः प्राणादेर्धात्वर्थमध्यपातात् न सकर्मकत्वं धात्वर्थोपसंगृहीतकर्मकत्वेनाकर्मकत्वात्। कर्म च व्याकरणमा-

स्त्रीयपारिभाषिककर्मसंज्ञाविशिष्टमुच्यते तेनाधिशय्यते ग्रामादित्यादौ कर्मणि लकारोपपत्तिः अधिशेतेः कर्मसंज्ञाविशिष्टान्वितस्वार्थबोधकत्वात् अन्यथा पूर्वमते तस्य फलसमानाधिकरणव्यापारबोधकतयाऽकर्मकत्वेन "भावे चाकर्मकेभ्यः" इति भाव एव लकारापत्तेः। भवति च ग्रामं गच्छतीत्यादौ गम्यादिः ईप्सिततमत्वेन कर्मसंज्ञाविशिष्टेन पृथग्भूतेन ग्रामेणान्वितं स्वार्थं बोधयन् सकर्मकः, अधिशयतिस्तु अधिकरणत्वेन कर्मसंज्ञाविशिष्टेनेति विवेकः" इति प्राहुः। युक्तञ्चैतत् धात्वर्थोपसङ्गृहीतकर्मकाणां व्यापारव्यधिकरणफलवाचितया पूर्वकल्पे सकर्मकत्वापत्तेः तत्तद्भिन्नत्वेन निवेशे गौरवं तत्र कर्मणोऽविवक्षायां गम्यादेरपि अकर्मकत्वस्वीकारेण अविवक्षाविशिष्टत्वेन निवेशे गौरवञ्च। एतन्मते तु कर्माभावादेव तदन्वितस्वार्थबोधकत्वाभावाच्चाकर्मकत्वमुपपत्तिरिति सूक्ष्मधीभिर्बोध्यम्। अत्र पक्षे सकर्मकस्तु तदन्वितस्वार्थबोधक इति बोध्यम्।

सकर्मकाश्च द्विविधाः एककर्मका द्विकर्मकाश्च। एककर्मान्वितस्वार्थबोधकाः गम्यादयः एककर्मकाः। द्विकर्मकास्वपि द्विविधाः द्विकर्मान्वितैकव्यापारार्थकाः द्विकर्मान्वितद्विव्यापारार्थकाश्च। तत्राद्या दुह्यादयः। न च ते सिद्धान्ते द्विव्यापारार्थकाः तथात्वे ईप्सिततमाभ्यामेव कर्मभ्यां व्यापारद्वयेऽन्वयसम्भवेन द्वितीयाद्युत्पत्तौ "अकथितञ्चेति" सूत्रेण दुह्यादीनां कारकान्तरसंज्ञानापन्नस्याकथितस्य कर्मसंज्ञाविधानानौचित्यात्। दर्शयिष्यते च दुह्यादीनामेकव्यापारार्थकता। यदा पुनस्तेषां द्विव्यापारार्थकता विवक्षिता तदा ईप्सिततमत्वेनैव कर्मसंज्ञायां जातायां द्विकर्मान्वितद्विव्यापारार्थका एव ते णिजन्तादिवदिति बोध्यम्। द्विकर्मान्वितद्विव्यापारार्थकाश्च णिजन्ताः तत्र च धातुना एकव्यापारोऽभिधीयते द्वितीयस्तु णिचा, तद्व्यापारद्वये च ईप्सितकर्मणः प्रयोज्यकर्तृरूपकर्मणश्च यथाक्रममन्वयः। अस्मात्त्वञ्च गम्यादीनामपीति बोध्यम्। पाच्यादीनां तु नैवं, तद्योगे प्रयोज्यकर्तुः कर्मसंज्ञाभावेन व्यापारद्वये कर्मद्वयान्वयाभावात्। न च पाच्यादेः क्रियाफलाश्रयत्वेनोद्देश्यतया प्रयोज्यकर्तुः कर्मसंज्ञा भविष्यतीति गत्यादिसूत्रयोगे एव तन्नियमात्। उक्तञ्च हरिणा "गुणक्रियायां स्वातन्त्र्यं प्रकामे कर्मतां गतम्। नियमात् कर्मसंज्ञायाः स्वधर्मेणाभिधीयते" इति भिन्नमात्र मतिगत्यादिसूत्रेण तदितरेषां निषेधात् स्वातन्त्र्यं कर्तृत्वमेव स्वधर्मेण तृतीययाऽभिधीयते इति तदर्थः। वस्तुतस्तु प्रयोज्यकर्तुरीप्सिततमत्वेऽपि परत्वात् कर्तृसंज्ञया तस्य बाधात् कर्मत्वाप्रसक्तौ गत्यादिसूत्रेण अप्राप्तप्रापकत्वरूपविधित्वाश्रयेण गम्यादेः कर्मत्वं विहितं न पाच्यादेरिति द्रष्टव्यम्। उक्तञ्च हरिणा "परत्वादन्तरङ्गत्वादुपजीव्यतयाऽपि च। प्रयोज्यस्यास्तु कर्तृत्वं गत्यादेर्विधिरोचितेति"। परत्वात् "विप्रतिषेधे परं कार्यम्" इत्युक्तेः "अपादानसम्प्रदानकरणाधारकर्मणाम्। कर्तुश्चोभयसम्प्राप्तौ परमेव प्रवर्त्तते" इति चोक्तेः "अन्तरङ्गत्वात् षष्ठ्यादिरूपप्रत्ययानाकाङ्क्षिककर्तृसंज्ञारूपकार्यस्य "अन्तरङ्गं बलीय" इति न्यायात् पाच्याद्याकाङ्क्षितकर्मसंज्ञायाः प्रत्ययान्वितत्वेन दुर्बलत्वादिति भावः। उपजीव्यतया उपजीव्यजातीयतया सर्वेषामेव कारकाणां कर्तृप्रयोज्यत्वेन कर्तुरुपजीव्यजातीयत्वादिति फलितोऽर्थः तेन पाच्याद्यापेक्षया तस्योपजीव्यत्वाभावेऽपि न क्षतिः। एवं पाच्यादियोगे प्रयोज्यस्य कर्मसंज्ञाया अप्रवृत्तेः न द्विकर्मकत्वं तेषामित्यन्यत्र विस्तरः।

अकर्मका अपि धातवः हेतुचतुष्टयाधीनाकर्मकक्रियार्थत्वात् चतुर्विधाः। अकर्मकक्रियात्वे हेतवश्च चत्वारो हरिणा प्रदर्शिता यथा "धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात्। प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रियेति"। धातोः स्वबोधकधातोरर्थान्तरे स्वसजातीयभिन्ने वृत्तेः सामर्थ्यात् स्वविजातीयार्थबोधकत्वादित्येकः। यथा जानातिः ज्ञानं वदन् सकर्मकः प्रवृत्त्यादिकं बोधयन्नकर्मकः ननु गतिवाची गम्यादिः ज्ञानाद्यर्थेऽप्यकर्मकः तयोर्द्वयोरप्यर्थयोः सकर्मकत्वेन स्वसजातीयत्वात्। धात्वर्थेनोपसंग्रहादिति द्वितीयः। कर्मणो धात्वर्थेन उपसंग्रहात् स्वशरीरे प्रवेशनात् यथा जीवत्यादीनां प्राणधारणानुकूलव्यापाररूपक्रियार्थतया तत्कर्मणः प्राणादेर्धात्वर्थ एव प्रवेशः। प्रसिद्धेः वृत्ताच्चादिरूपाणामकर्मकत्वेन प्रसिद्धेः। सत्तादिकञ्चानुपदं प्रदर्श्यते तेषां फलसमानाधिकरणव्यापारबोधकत्वादित्यर्थः। इति तृतीयो हेतुः। कर्मणोऽविवक्षातः अकर्मकः ४। अत्र च कर्मपदं व्यपदेशिवद्भावेन फलस्याप्युपलक्षणं तेन फलस्याविवक्षायामेव गम्यादेरकर्मकत्वमिति कौस्तुभानुसारिणः तेषाञ्च व्यापारमात्रबोधकतया फलावाचित्वान्नाकर्मकत्वमिति द्रष्टव्यम्। अत्र चाविवक्षा नाम येन

रूपेणान्वयविवक्षया यस्य कर्मसंज्ञा तेन रूपेणान्वयविवक्षाभावः। तत्र क्वचित् कर्मणोऽविवक्षया यथा पच्यते इत्यादौ, क्वचिच्च कर्मत्वाविवक्षया यथा मातुः स्मर्यते इत्यादौ। अत्र मातुः कर्मत्वेनैव स्मरणान्वये कर्मसंज्ञा न पुनः सम्बन्धत्वेन, तथा विवक्षायामेव कर्मणि षष्ठीविधानात् स्मरणादेः कर्मान्वयसत्त्वेऽपि कर्मत्वेन तदन्वयाभावादकर्मकत्वं तेन भावे लकारादय इति बोध्यम्। क्वचित्तु कार्यप्रवृत्तिवेलायामविवक्षा पश्चाद्विवक्षा। यथा कृतपूर्वी कटम् भुक्तपूर्वी ओदनमित्यादौ। तथाहि कृतं पूर्वमनेनेति विग्रहे तद्भुक्तमनेनेति पूर्वस्थत्वादिनिमयनुस्त्य सपूर्वाच्चेति सूत्रेण विद्यमानपूर्वात् पूर्वशब्दादपि इनिर्विहितः तत्र यदि कृतमिति कर्मणि क्तः स्यात्तदा तस्य कटादिरूपकर्मविशेषणतया सापेक्षत्वेन समासादिवृत्तिर्न स्यात् एकत्र विशेषणत्वेनोपस्थितस्यान्यत्र विशेषणतयान्वयायोगात् इनिश्च न जायते भाष्यादिषु तथाप्रयोगादतोऽवश्यं प्रथमं कर्माविवक्षयाऽकर्मकत्वेन भावे क्तप्रत्यये विहिते तदन्तेन पूर्वादिभिः सुप्सुपेति समासे च कृते कृतपूर्वकात् पूर्वशब्दात् कर्त्तरि इनिप्रत्ययो भवति। पश्चाच्च कर्त्तृकृतक्रियायाः कर्मविशेषाकाङ्क्षायां कटादिकर्मणोऽन्वयः। उक्तञ्च हरिणा “अकर्मत्वे सत्येव क्तान्ते भावाभिधायिनि। पश्चात् क्रियावता कर्त्रा योगो भवति कर्मणाम्। अविग्रहा गतादिस्था यथा ग्रामादिकर्मभिः। क्रिया सम्बध्यते तद्वत् कृतपूर्व्यादिषु स्थितेति”। क्रियावतेत्यनेन क्रियाद्वारैव कर्मणोऽन्वय इति द्योतितम् क्रियायाश्च वृत्तिमध्यैकदेशतयाऽनन्वयशङ्कायामाहाविग्रहेति। नास्ति विग्रहेण पृथग्भानं यस्याः सा पृथगुपस्थित्यभावेन ज्ञातुमशक्येत्यर्थः गतादिस्था कर्त्तृबोधकनिष्ठान्तगतपदोपस्थाप्यगमनकर्त्तृरूपार्थप्रविष्टापि यथा ग्रामं गत इत्यादौ विभिन्नपदोपात्तैरपि ग्रामादिकर्मभिः क्रिया सम्बध्यते तथेत्यर्थः समुदायशक्तिस्वीकारे एकदेशान्वयाभ्युपगमादवयवशक्तिस्वीकारे तु तदनुपगमे फलाभावादिति भावः। कृतपूर्व्यादिष्वित्यादिपदेनाध्वरेष्विष्टीत्याद्योग्रहणं तत्रापि इष्टादिभ्यश्चेत्यनेन कर्त्तरि इनिविधानात्। अतएव बोध्यं “निष्पत्तिमात्रे कर्त्तृत्वं सर्वत्रैवास्ति कारके” इत्युक्तेः कर्मणोऽपि स्वव्यापारद्वारा क्रियानिष्पत्तिहेतुत्वेन कर्त्तृत्वे स्थिते तद्व्यापारस्य धात्वर्थत्वविवक्षायां धात्वर्थक्रियाश्रयत्वेन तस्य कर्त्तृत्वं

समानानुपूर्वीकमुख्यार्थबोधकधातूपात्तफलाश्रयत्वेन च कर्मत्वमित्येकस्यैव कर्मकर्त्तृता एवञ्च तत्र धातोरर्थान्तरे वृत्तेरेवाकर्मकत्वम्। तथाहि अन्नं पच्यते स्वयमेवेत्यादौ विक्लित्तिमदन्नकर्त्तृको ऽवस्थाल्यादिसंयोगरूपो व्यापारस्तद्विशिष्टो वा पच्यर्थः तयोः फलव्यापारयोरेकनिष्ठतया तद्बोधकधातोरकर्मकत्वं तेन अन्नेन पच्यते स्वयमेवेत्यादौ भावे लकारोपपत्तिः। द्विकर्मकाणान्तु एककर्मणः कर्त्तृत्वविवक्षया ऽपरस्याविवक्षयैवाकर्मकत्वं पचिदुह्योस्तु कर्मान्तरसत्त्वेऽपि कर्मवद्भावविधानात् सकर्मकत्वं तेन तयोर्न भावे लकारादयः किन्तु कर्मण्येव तेन दुह्यते गौः दुग्धं स्वयमेवेत्यादि। एवञ्च सर्वेषामेव धातूनां कर्मणः कर्त्तृत्वविवक्षायां कर्मवद्भावे प्राप्ते धातुविशेषयोग एव कर्मवत्कार्यातिदेशो न सर्वधातुयोगे तेन गम्यादियोगे कर्त्तरि वाच्ये न कर्मवद्भावः किन्तु कर्त्तृवत्कार्यं भावे तु इष्यते एव कर्मवत्कार्यम्। पच्यादियोगे तु कर्त्तरि भावे च वाच्ये कर्मवद्भाव इति विवेकः। उक्तञ्च “कर्मस्थेऽपि च धात्वर्थे कर्मकर्त्ता च कर्मवत्। कर्त्तृस्थेऽपि च धात्वर्थे कर्म कर्त्ता च कर्त्तृवदिति”। कर्मवत् कर्मवत्कार्यभागित्यर्थः अतएव ‘‘कर्मवत् कर्मणा तुल्यक्रिये” इति सूत्रे कर्मपदेन कर्मस्थक्रिया लक्षिता भाष्यकारैस्तेन कर्मस्थक्रियातुल्यक्रियावति कर्त्तरि कर्मवत् कार्यमित्यर्थः क्रिययोस्तुल्यत्वञ्च एकाधिकरणमात्रवृत्तित्वेन तथाच कर्मस्थक्रियया फलेन व्यापारस्य सामानाधिकरण्ये एव कर्मवद्भावविधानात् पच्यादेस्तथाभूतार्थकतया तत्कर्त्तरि कर्मवत्कार्यं, गम्यादेस्तु व्यापारस्योक्तफलसामानाधिकरण्याभावात् कर्त्तृस्वभावकत्वमिति विवेकः। तथा तुल्यक्रिये कर्त्तरीत्यभिधानेन गम्यादीनामपि भावे कर्मवत्कार्यं यागादि भवत्येव। यद्यपि सर्वेषामेवाकर्मकाणां फलव्यापारयोः सामानाधिकरण्यबोधकतया कर्मवद्भावापत्तिस्तथापि सूत्रे कर्मणा तुल्येति निर्देशात् येषां धातूनां मुख्यार्थवाचिनां सकर्मकत्वं तेषामेव कर्मवद्भाव इति गम्यते अस्यादेः सत्तादिरूपमुख्यार्थे सकर्मकत्वाभावात् न तत्प्रसङ्गः। भवतेस्तु प्राप्त्यर्थकानुभवार्थे वर्त्तमानस्य सकर्मकत्वेऽपि सत्तारूपमुख्यार्थे तथात्वाभावान्न प्रसङ्गः। एवञ्च सर्वेषामेव सकर्मकाणां कर्त्तृकर्मोभयस्थभावकत्वेनाव्यवस्थायां हरिणा क्रियाकृतविशेषेण व्यवस्था दर्शिता यथा “विशेष-

दर्शनं यत्र क्रिया तत्र व्यवस्थिता । शब्दप्रवृत्तिरन्येषां शब्दैरेव प्रकल्पितेति” । यत्र कर्मणि कर्त्तरि वा विशेषः क्रियाकृतोऽसाधारणधर्मो दृश्यते तत्रैव क्रिया व्यवस्थितेत्यर्थः धात्वर्थयोः फलव्यापाररूपयोः क्रिययोरुभयनिष्ठत्वेऽपि तत्तद्विशेषादेव तन्निष्ठत्वव्यवहार इति भावः । विशेषस्य द्विविधः धातूपस्थाप्यः तदनुपस्थाप्यश्च तत्राभ्यर्हितत्वेन उपस्थितत्वेन च धातूपात्तविशेषस्यैव प्रथमं ग्रहणं तदप्राप्तौ तु अपरस्येति विवेकः । तेन पच्यादयः स्वोपस्थाप्यस्य कर्म्मापेक्षयाऽसाधारणधर्मस्य व्यापाररूपक्रियाकृतस्य विक्लित्तिरूपफलस्य बोधकाः कर्मस्थभावका एव गम्यादयस्तु नैवं तदुपस्थाप्यफलस्य संयोगस्योभयनिष्ठतया साधारण्यात् धातूपस्थाप्यविशेषासत्त्वात् धात्वनुपस्थाप्यस्य क्रियाकृतस्य श्रमादिरूपासाधारणधर्मस्य ग्रहणं तस्य च कर्त्तरि दर्शनात् कर्त्तृस्थत्वम् । एवञ्च कर्त्तृस्थादिविभाग एतन्मते न्यायमूल एव । अन्येषां मते पुनः शब्दप्रवृत्तिः कर्मवत्कार्य्यप्रवृत्तिः शब्दैरेव नियामकशास्त्रैरेव प्रकल्पितेति द्रष्टव्यम् । तच्च शास्त्रं यथा “कर्मस्थः पचतेर्भावः कर्मस्थाश्च भिदादयः । कर्त्तृस्थो बुध्यतेर्भावः कर्त्तृस्थाश्च गमादयः” इति कर्मस्थाः कर्मस्थक्रियार्थका इत्यर्थः एवमग्रेऽपि । सम्प्रदायविदस्तु एतच्छास्त्रमपि न्यायमूलकं पूर्व्वोक्तरीत्या एतेषां कर्मस्थत्वादिव्यवस्थापनात् अन्यथा प्रातिस्विकरूपेण तद्ग्रहणस्य कर्त्तुमशक्यतयाऽव्यवस्थापत्तेरित्याहुः । एवञ्च क्रियाकृतविशेषेणैव क्रियाव्यवस्थेति पक्षमवलम्ब्य “निर्वर्त्त्ये च विकार्य्ये च कर्मवद्भाव इष्यते । नतु प्राप्ये कर्मणि तु सिद्धान्तोऽयं व्यवस्थितः” इत्यभियुक्तैर्व्यवस्था भङ्ग्यन्तरेण दर्शिता । तथा च निवर्त्त्यविकार्य्ययोरेव क्रियाकृतस्य उत्पत्त्यादिरूपस्य विशेषस्य सत्त्वात्, प्राप्ये तदसत्त्वाच्च तेषु कर्मवद्भावाभावौ बोध्यौ । “क्रियाकृतविशेषाणां सिद्धिर्यत्र न तिष्ठति” इत्यग्रिमप्राप्यकर्मलक्षणे प्राप्यस्य क्रियाकृतविशेषाभावकथनात् व्यतिरेकेण निर्वर्त्त्यविकार्य्ययोस्तत्सत्त्वमर्थाद्यातमित्यलं विस्तरेण । अनन्तधातूनां धात्वर्थैक्यार्थकत्वेन कर्त्तृस्थत्वेऽपि तत्प्रकृतीभूतधात्वोरेव कर्मस्थकर्त्तृस्थभावकतया व्यवस्था तत्प्रकृतेरात्मनेपदादिना तदन्तस्यात्मनेपदादिवदिति द्रष्टव्यम् कोषस्तु कर्मकर्तरि कर्तरीव यथा ओदनः पच्यते स्वयमेवेत्यादौ ओदनाभिन्नैकाश्रयकविक्लित्त्यनुकूलस्थाल्यादिसंयोगरूपो व्यापारः ।

अपरे तु कर्त्तुराख्यातांशे विशेषणत्ववत् व्युत्पत्तिवैचित्र्येण फलेऽपि विशेषणत्वमङ्गीचक्रुरङ्गीचक्रुश्चात्र नामार्थधात्वर्थयोरपि साक्षादन्वयम् । वस्तुतस्तु तिङर्थाश्रयस्यैव व्युत्पत्तिवैचित्र्येणोभयत्रान्वय इति द्रष्टव्यम्, अकर्मकत्वेन प्रसिद्धाः सत्ताद्यर्थका अभियुक्तैरन्यत्र संगृहीता यथा “सत्ताजीवनदर्पभीतिशयनक्रीड़ानिवासद्युतिव्यक्तिध्याननभोगतिस्थितिजरालज्जाप्रमादोद्भवे । मोहे खेटनवेगयुद्धदहनख्यातिज्वरोन्मादके शुद्धिखेदपलायनभ्रमणकेशान्तौ स्तुतौ मज्जने । हृष्टौ जागरशोषवक्रगमनोत्साहे क्षतौ संशये ग्लानौ मन्दमतौ च नृत्यपतने चेष्टाक्रुधौ रोदने । हृतौ क्षावक्रतौ च सिद्धिविरतौ हर्षोपवेशे बले कम्पोद्वेगनिमेषभङ्गयतनार्थे धातवोऽकर्मकाः । दौर्बल्यादिषु चार्थेषु वर्त्तमानास्तु धातवः । वाचका भावमात्रस्य यतस्तस्मादकर्म्मकाः । कौटिल्यादिषु चार्थेषु प्रोक्ता ये ते तु धातवः । तद्भावेऽकर्मकाः स्युस्तद्वत्कर्त्र्यां सकर्मकाः । क्रियावाचित्वमाख्यातुं प्रसिद्धोऽर्थः प्रदर्शितः । प्रयोगतोऽन्ये मन्तव्या अनेकार्था हि धातवः” इति । ३आकाशादिमहाभूतेषु । ४इन्द्रियेषु ५शब्दाद्याकाशादिगुणेषु । देहस्थेषु “रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातव इत्युक्तेषु रसादिषु । ७मनःशिलाद्यश्मविकारे । टकफादौ अमरः । यथाह सुश्रुतः । “ते धातवोऽपि विद्वद्भिर्गदिता देहधारणात् । विसर्गादानविक्षेपैः सोमसूर्य्यानिला यथा । धारयन्ति जगद् देहं कफपित्तानिलास्तथेति” । ८अस्थि । १०स्वर्णादौ तत्राष्टधातवो यथा “हिरण्यं रजतं कांस्यं ताम्रं सीसकमेव च । रङ्गमायसरैत्यञ्च धातवोऽष्टौ प्रकीर्त्तिताः” इति दानसागरः । “सुवर्णं रजतं ताम्रं लौहं कुप्यञ्च पारदम् । रङ्गञ्च सीसकञ्चैव इत्यष्टौ देवसम्भवाः” इति वैद्यकम् । सप्त धातवो यथा । “स्वर्णं रूप्यञ्च ताम्रञ्च रङ्गं यशदमेव च । सीसं लोहञ्च सप्तैते धातवो गिरिसम्भवाः” इति भावप्र० । “वलीपलितखालित्यकार्श्यवैल्यजरामयान् । निवार्य देहं दधति नृणां तद्धातवो यथा । “सुवर्णरूप्यताम्राणि हरितालमनःशिला । गैरिकाञ्जनकासीससीसलोहाः सहिङ्गुलाः । गन्धकोऽभ्रकमित्याद्या धातवो गिरिसम्भवाः” । नव धातवो यथा “हेमताराश्नागाश्च ताम्ररङ्गे च तीक्ष्णकम् । कांस्यकं कान्तलौहञ्च धातवो नव कीर्त्तिताः” । माक्षिकं तुत्थिकाभ्रे च नीलाञ्जनशिलाऽलकाः । रसकश्चेति

विज्ञेया एते सप्तोपधातवः। शरीरस्थसप्तधातुभवस-प्तोपधातवो यथा। "स्तन्यं रजश्च नारीणां काले भ-वति गच्छति। शुद्धमांसभवस्नेहो यः सा वसोच्यते वसा। स्वेदोदन्तास्तथा केशास्तथैवौजश्च सप्तमम्। इति धातुभवाज्ज्ञेया एते सप्तोपधातवः" इति सुख-बोधः। ११लोकेषु १२वस्तुनि शब्दार्थचि०।

रसादेर्धातुवाच्यतायां निरुक्तिस्तत्कर्माणि च भावप्र० उ-क्तानि यथा "एते सप्तस्वयं स्थित्वा देहं दधति यन्नृणाम्। रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः। प्रीणनं जीवनं लेपः स्नेहो धारणपूरणे। गर्भोत्पादश्च कर्माणि धातूनां कथितानि च। रसादीनां धातूनां क्रमेण प्रीण-नादिकर्माणीति बोध्यम्। एतेषाञ्च पूर्वपूर्वस्योत्तरोत्तर-हेतुत्वं तच्च कायशब्दे १९०८ पृ० दर्शितम्। उपधातवः तद्गुणाश्च भावप्र० अन्यथोक्ताः यथा

"सप्तोपधातवः स्वर्णमाक्षिकं तारमाक्षिकम्। तुत्थं कांस्यञ्च रीतिश्च सिन्दूरं च शिलाजतु। उपधातुषु सर्वेषु तत्तद्धातुगुणा अपि। सन्ति किन्त्वेषु तेऽल्पोनास्तत्त-दंशाल्पभावतः"। तत्र स्वर्णादिधातौ "दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः" मनुः। उपधातवश्च गौण-धातवस्तेन तत्रापि धातुशब्दप्रवृत्तिः। अतएव उप-धात्वभिप्रायेण गैरिकादीनां धातुशब्दवाच्यता दृश्यते यथा "न्यस्ताक्षरा धातुरसेन यत्र" "अकालसन्ध्यामिव धातु-मत्ताम्" कुमा०। "वर्द्धयन्निव तत्कूटान् उद्धूतै-र्धातुरेणुभिः" रघुः। "त्वामालिख्य प्रणयकुपितां धातु-रागैः शिलायाम्" मेघ०। "अट्टीणामिव कूटानि धातु-रक्तानि शेरते" भा० आ० १९ अ०। १३देहादिधारके आत्मनि "स्त्रीपुंसयोस्तु संयोगे विशुद्धे शुक्रशोणिते। पञ्च धातून् स्वयं षष्ठः आदत्ते युगपत् प्रभुः" याज्ञ०। "पञ्च धातून् पृथिव्यादिपञ्चभूतानि शरीरारम्भक-तया षष्ठस्त्विद्धातुरात्मा प्रभुः शरीरारम्भकादृष्टकर्मयोगि-तया समर्थः युगपदादत्ते भोगायतनत्वेन स्वीकरोति" मिता० आकाशादौ "तदव्ययमनुद्रिक्तं सर्वव्यापि ध्रुवं स्थिरम्। नवद्वारं पुरं विद्यात् त्रिगुणं पञ्चधातुकम्" भा० आश्व० २६ अ०। "भूतेषु धातवः पञ्च ब्रह्मा तान-सृजत् पुरा। आवृता यैरिमे लोकाः महाभूताभि-संज्ञिताः" भा० शा० १८४ अ०। "अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत् पुरीषम्" छा०उप०। शब्दतौ "धातोः स्थाने इवादेशं सुग्रीवं संन्यवेशयत्"। "अवेक्ष्य धातोर्गमनार्थमर्थवित्" रघुः। रसादौ "शरीर-धातवो ह्यस्य मांसं रुधिरमेव च। नेपुर्ण्णास्तनि-र्दग्धाः न च भस्माप्यदृश्यत" भा० व० २८९ अ०। परमेश्वरे "अनादिनिधनो धाता विधाता धातुरुत्तमः" विष्णुस०। "धातुर्विरिञ्चे दनुलक्ष्यः इति वा नामद्वयं कार्य्यकरणात् प्रपञ्चधारणात् वा चिद्धातुः" भा०। "वायुं पूर्वतो सृष्टा यो धातुर्धातुसत्तमः। धारणाद्धातुशब्दञ्च लभते लोकसंज्ञितम्" हरिवं० २० अ०। कोशाण्डुप-धातौ "लाक्षपदमक्षिका कोशधातुयुक्तानि शर्कराविद्धम्" सु० सं० ८० अ०। १४धारके। "अत्र हविः सचते सच धातु चारिष्टगातुः" ऋ० ५।४४।२। "धातु सर्वधातु-कम्" भा०। १५प्रकारे "त्रिधात्वः परमा अस्य गावः" ऋ० ५।४०।८ "त्रिधातुः प्रथयद्विभूत" "त्रिधातुः त्रिप्रकारः" भा०

**धातुकासीस** न० धातुरूपं कासीसम्। कासीसे उपधातुभेदे हेमच०। [२देशभेदे च। २कुम्भ विभागशब्दे दृश्यम्।

**धातुकुशल** त्रि० धातुषु कुशलः। १धातुक्रियायां कुशले।

**धातुक्षय** पु० धातूनां क्षयो यत्र। कासरोगभेदे।

**धातुघ्न** त्रि० धातुं स्वर्णादि हन्ति हन–टक्। १धातुनाशन शीले २काञ्जिके न० हेमच०। तस्य पारदादिधातुमारक-त्वात् तथात्वम्।

**धातुद्रावक** पु० धातुं द्रावयति द्रु–णिच्–ण्वुल्। धातु-द्रुतिकारके (सोहागा) ख्याते पदार्थे पारस्करनि०।

**धातुनाशन** त्रि० धातुं नाशयति नश–णिच् ल्यु। स्वर्णादि धातुमारके २काञ्जिके न० त्रिका०।

**धातुप** पु० धातुं पाति रक्षति पा–क। रसरूपे प्रथमधातौ शब्दच०। "आहृत्य धमनीर्गत्वा धातून् सर्वानयं रसः। पुष्णाति, तदनु स्वीयैर्व्याप्नोति च तनुं गुणैः" भावप्र० तस्य सर्वधातुपोषकत्वोक्तेस्तथात्वम्। "रसस्तु हृदयं याति समानमरुतेरितः। स तु व्यानेन विक्षिप्तः सर्वान् धातून् विवर्द्धयेत्। केदारेषु यथा कुल्याः पुष्णन्ति विविधौषधीः। तथा कलेवरे धातून् सर्वान् वर्द्धयते रसः" भावप्र०।

**धातुपाठ** पु० धातूनां पाठो यत्र धातवः पठ्यन्तेऽत्र आधारे घञ् वा। पाणिन्यादिप्रणीते धातूनामर्थाव-बोधकग्रन्थभेदे। "धातुपाठे स्वरादिक्रमादन्तर्भेदक्रमः "धातवः पठिताः पाठस्त्रलोकानमस्थिताः" इति च कविकल्पद्रुमः। एवं पाणिनीयः भूसत्तायामित्यादिधातु-पाठोज्ञेयः।

**धातुपारायण** पु० धातूनां पारायणं यत्र । धातुप्रतिपादकग्रन्थभेदे ।

**धातुपुष्पी** स्त्री धातुरिव पुष्पं यस्याः जातित्वात् ङीष् । (धाइफुल) ख्याते धातुपुष्प्यां भावप्र० । स्वार्थे वा कप् अत इत्त्वम् । धातुपुष्पिकाऽप्यत्र शब्दरत्ना० । धातकीशब्दे तद्गुणा दृश्याः । [ ६त० । पर्वते त्रिका० ।

**धातुभृत्** पु० धातुं गैरिकादिरूपधातुं बिभर्त्ति भृ—क्विप् तुक्

**धातुमल** पु० ६त० । धातूनां रसादीनां पाकतो जायमाने केशादौ कफपित्तमलाः केशः प्रस्वेदो नखरोम च । नेत्रविट् चक्षुषः स्नेहो धातूनां क्रमशोमलाः” सुश्रुतः । शुक्रस्य तु मलोनास्ति यथाह भावप्र० । “स्वाग्निभिः पच्यमानेषु मलः षट्सु रसादिषु । षट्सु धातुषु जायन्ते मलानि मुनयो जगुः । यथा वह्निसंध्माते न मलं किल काञ्चने । तथा रसे सुश्रुः पक्वे न मलं शुक्रताङ्गते” । “आहारस्य रसः सारः सारहीनो मलद्रवः । शिराभिस्तज्जलं नीतं वस्तौ मूत्रत्वमाप्नुयात्” भावप्र० । आहारशब्दे ५५८ पृ० तत्पाकप्रकारो दृश्यः ।

**धातुमाक्षिक** न० धातुरूपधातुरूपं माक्षिकम् । माक्षिके उपधातुभेदे राजनि० ।

**धातुमारिणी** धातुं मारयति मृ—णिच्—णिनि ६त० ङीप् । (सोहागा) सर्जिकायां शब्दच० ।

**धातुराजक** न० धातुषु राजते राज—ण्वुल् धातूनां राजा टच्समा० स्वार्थे क वा । शुक्रे तस्य च सर्वधातूनां चरमत्वात् तथात्वम् ।

**धातुवल्लभ** न० ६त० । टङ्कणे राजवल्लभः ।

**धातुवादिन्** धातुं वदति उपायान्तरेण कर्त्तुम् । कारस्थमे कौशलभेदेन रसायनादिना स्वर्णरौप्यादिकरे हारा०

**धातुवैरिन्** पु० ६त० । गन्धके शब्दच० ।

**धातुशेखर** न० धातूनामुपधातूनां शेखरमिव । कासीसे उपधातुभेदे हेमच० । [(खड़ि) हारा०

**धातूपल** पु० धातुरूपधातुरूप उपलः । कठिनिकायां

**धातृ** त्रि० धा—तृच् । १धारके २पोषके ३ब्रह्मणि पु० अमरः “सूर्य्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्” सन्ध्यामन्त्रः ४विष्णौ । “अनादिनिधनो धाता” विष्णुस० । धातुशब्दे उदा० दृश्यम् । ५आत्मनि ६वायुभेदेऽनिलशब्दे १६६पृ० दृश्यम् । ७आदित्यभेदे आदित्यशब्दे ६८५ पृ० दृश्यम् । तत्रादित्यभेदे “कौशल्या सुषुवे रामं धातारमदितिर्यथा” रामा० बाल०८२ अ० । ८ब्रह्मणः पुत्रभेदे “द्वौ पुत्रौ ब्रह्मणस्त्वन्यौ ययोस्तिष्ठति लक्षणम् । लोके धाता विधाता च यौ स्थितौ मनुना सह” भा० आ० ६६अ० । ९भृगुसुतभेदे “भृगुः ख्यात्यां महाभागः पत्न्यां पुत्रानजीजनत् । धातारञ्च विधातारं श्रियञ्च भगवत्परराम्” भाग०४।१।२५ १०प्रजासर्गकारकेषु सप्तर्षिषु “सर्गशेषप्रणयनाद्विश्वयोनेरनन्तरम् । पुरातनाः पुराविद्भिः धातार इति कीर्त्तिताः” कुमा० ।

**धातृपुत्र** पु० ६त० । ब्रह्मणः पुत्रे सनत्कुमारे शब्दर० ।

**धातृपुष्पी** स्त्री धातृ पुष्टिकर्त्तृ पुष्पमस्याः ङीप् । (धाइफुल) धातक्याम् अमरः । वा कप् अत इत्त्वम् । धातृपुष्पिका तत्रार्थे अमरः ।

**धात्र** न० धीयतेऽन्नादिकमत्र धा—आधारे ष्ट्रन् । १भाजने उणादिवृत्तिः । धाता ब्रह्मा आदित्यो वा देवताऽस्य अण् २आदित्यदेवताके ३ब्रह्मदेवताके च द्वादशकपालसंस्कृते पुरोडाशादौ त्रि० । “स यः स धाताऽसौ स आदित्यः । अथ यत्तद्दिशां परमं क्रान्तमेतत्तद्यास्त्वेव एतत् प्रतिष्ठित तपति । स यः स धातायमेव स धात्रः द्वादशकपालः पुरोडाशो द्वादशकपालो द्वादश मासाः संवत्सरः संवत्सरः प्रजापतिः प्रजापतिर्धाता” शतब्रा०६।५।१। १८ । “अनुमतिराकाशिनीवालीकुह्र्य्यश्चरवो धात्रो द्वादशकपालः सर्वहुतः” कात्या० श्रौ० १८।६।२१ ।

**धात्री** स्त्री धीयते पीयते धेट—कर्मणि ष्ट्रन् धीयन्ते पुरुषार्था अनया वा धा—करणे ष्ट्रन्, विश्वं वा दधाति ष्ट्रन् षित्त्वात् ङीष् तृच् ङीप् वा । १उपमातरि (धाइमा) । भावप्र० धात्रीलक्षणादि “धीताय (पानाय) यदि बालस्य विदध्यादुपमातरम् । सुविचार्य्य गुणान् दोषान् कुर्य्याद्धात्रीं तदेदृशीम् । सवर्णां मध्यवयसां सच्छीलां मुदितां सदा । शुद्धदुग्धामलुब्धोरां वत्सलामतिवत्सलाम् । स्वाधीनामल्पसन्तुष्टां कुलीनां सज्जनात्मजाम् । कैतवेनापरित्यक्तां निजपुत्रदृशं शिशौ । अथ निषिद्धां धात्रीमाह । शोकाकुला क्षुधार्त्ता च श्रान्ता व्याधिमती सदा । अत्युच्चानितरां नीचा स्थूलातीव कृशाङ्गका । गर्भिणी ज्वरिणी चापि लम्बोन्नतपयोधरा । अजीर्णभोजिनी चापि तथा पथ्यविवर्जिता । आसक्ता क्षुद्रकार्य्येषु दुःखार्त्ता चञ्चलापि च । एतासां स्तन्यपानेन शिशुर्भवति सामयः । अथ बालस्य स्तन्यपानविधिः । तत्र माता प्रशस्ताङ्गी चारुवस्त्रा पुरोमुखी । उपविश्या-

स्तने सम्यग्दक्षिणं स्तनमम्बुना। प्रक्षाल्येषत् परिस्राव्य मन्त्राभ्यामभिमन्त्रितम्। उदङ्मुखं शिशुं क्रोडे शनैः सन्धार्य्य पाययेत्। मातैतल्लुपलक्षणं धात्री च ईषत् परिस्राव्य। अन्यथा वैगुण्यमाह सुश्रुतः। अस्राविते स्तनं बालः पिबन् स्तन्येन भूयसा। पूर्णस्रोता वमीकासश्वासैर्भवति पीड़ितः। अभिमन्त्रणमाह। क्षीरनीरनिधिस्तेऽस्तु स्तनयोः क्षीरपूरकः। सदैव सुभगो बालो भवत्वेष महाबलः। पयोऽमृतसमं पीत्वा कुमारस्ते शुभानने। दीर्घमायुरवाप्नोतु देवाः प्राश्यामृतं यथा। मन्त्रौ च पितृस्थानेन ब्राह्मणेन पठनीयौ। यावत् मन्त्रपाठस्तावन्माता धात्र्या वा दक्षिणहस्तेन स्पर्शः कार्य्यः" "उवाच धात्र्या प्रथमोदितं वचः" रघुः। "धात्र्यङ्गुलीभिः प्रतिसार्य्यमाणः" कुमा०। २क्षितौ च तस्या विश्वधारणात्। "मेरुणेव स्थिता धात्र्या देवासुरविभागकृत्" सू॰ सि०। ३धारणकर्त्र्यां स्त्रियां। ४आमलक्यां च मेदि०। तस्याः धारणादेः पुरुषार्थसाधनत्वात् तथात्वम्। आमलकीशब्दे ७६४पृ॰ तद्गुणा उक्ताः। तस्या उत्पत्तिर्माहात्म्यञ्च पाद्मोत्तरख॰ १२७ अ०उक्तं यथा "अथ विप्रेभ्यो बीजेभ्यो वनस्पत्यः स्त्रियोऽभवन्। धात्री च मालती चैव तुलसी च नृपोत्तम!। स्वधाभवा स्मृता धात्री माभवा मालती तथा। गौरीभवा च तुलसी तमःसत्त्वरजोगुणा"

स्थानान्तरे तत्रैवतन्माहात्म्यं यथा

"शृणुष्व धात्रीमाहात्म्यं सर्वपापहरं शुभम्। यत् पुरा हरिणा प्रोक्तं वशिष्ठं प्रति नारद!। धात्री वत्स! नृणां धात्री मातृवत् कुरुते कृपाम्। दद्यादायुः पयःपानात् स्नानाद्वै धर्मसञ्चयम्। अलक्ष्मीनाशनं सद्योऽप्यन्ते निर्वाणमेव च। विघ्नानि नैव जायन्ते धात्रीस्नानेन वै नृणाम्। तस्मात् त्वं कुरु विप्रेन्द्र! धात्रीस्नानं हि यत्नतः। प्रयास्यसि हरेर्धाम देवत्वं प्राप्य नारद!। यत्र यत्र मुनिश्रेष्ठ! धात्रीस्नानं समाचरेत्। तीर्थे वापि गृहे वापि तत्र तत्र श्रियः स्थिताः। धात्रीस्नातानि दिवसे यस्यास्थीनि कलेवरे। प्रक्षालितानि विप्रेन्द्र! न स स्याद्गर्भसम्भवः। धात्रीफलेन विप्रेन्द्र! येषां केशाश्च रञ्जिताः। ते नराः केशवं यान्ति नाशयित्वा कलेर्मलम्। धात्रीफलं महापुण्यं स्नाने पुण्यतरं स्मृतम्। पुण्यात् पुण्यतरं वत्स! भक्षणे मुनिपुङ्गव!। न गङ्गा न गया पुण्या न काशी न च पुष्करम्। एकैव च यथा पुण्या धात्री माधववासरे। कार्त्तिके मासि विप्रेन्द्र! धात्रीस्नानं समाचरेत्। यस्तु तज्जलमश्नीयात् सोऽश्वमेधमवाप्नुयात्। धात्रीफलं स्मरेद्यस्तु सदैव मुनिसत्तम!। प्राग्जन्मनि कृतात् पापात् मुच्यते नात्र संशयः। संस्मरेद्यस्तु धात्रीं तामहन्यहनि मानवः। मुच्यते पातकैः सर्वैर्मनोवाक्कायसम्भवैः। धात्रीफलान्यमावास्यामष्टमीनवमीषु च। रविवारे च संक्रान्तौ संत्यजेत् मुनिपुङ्गव!। यस्य गेहे मुनिश्रेष्ठ! धात्री तिष्ठति सर्वदा। तस्य गेहं न गच्छन्ति प्रेतकुष्माण्डराक्षसाः। धात्रीस्नाने हरेर्नाम्ना जागरे हरिवासरे। अश्वमेधो विनश्येत हयमेधायुतं फलम्। छायादामलकैर्यस्तु कार्त्तिके हरिवल्लभ!। परितोषं समायाति तस्य वै माधवः स्वयम्। धात्रीछायां समासाद्य कुर्यात् श्राद्धन्तु यो मुने!। मुक्तिं प्रयान्ति पितरः प्रसादात्तस्य वै हरेः। मूर्ध्नि पाणौ मुखे कण्ठे देहे च मुनिसत्तम!। धत्ते धात्रीफलं यस्तु स महात्मा स पुण्यभाक्। धात्रीफलविलिप्ताङ्गो धात्रीफलविभूषितः। धात्रीफलकृताहारो नरो नारायणो भवेत्। यः कश्चिद्वैष्णवो लोके धत्ते धात्रीफलं मुने!। प्रियो भवति विष्णोः स मनुष्याणाञ्च का कथा। धात्रीफलानि यो नित्यं वहते करसंपुटे। तस्य नारायणो देवो वरमेकं प्रयच्छति। धात्रीफलं न मोक्तव्यं कदाचित् करसंपुटात्। य इच्छेद्विपुलान् भोगानन्ते यो मुक्तिमिच्छति। धात्रीफलकृतां मालां कण्ठस्थां यो वहेत हि। स वैष्णवो न विज्ञेयो विष्णुभक्तिपरोऽपि च। न त्याज्या तुलसीमाला धात्रीमाला विशेषतः। यथा रुद्राक्षमालापि धर्मकामार्थमिच्छता। यावत्तिष्ठति कण्ठस्था धात्रीमाला नरस्य हि। तावन्मनसि हृत्स्थोऽपि सदा लुठति केशवः। यावद्दिनानि वहते धात्रीमालां करे नरः। तावद्युगसहस्राणि वैकुण्ठे वसतिर्भवेत्। सर्वदेवमयी धात्री वासुदेवमनःप्रिया। आरोपणीया सेव्या च सेचनीया सदा बुधैः। एतत्ते सर्वमाख्यातं धात्र्या माहात्म्यमुत्तमम्। श्रोतव्यञ्च सदा सद्भिश्चतुर्वर्गफलप्रदम्" अधिकमामलकीशब्दे दृश्यम्। २जनन्यां विश्वः। "पुनर्धात्रीं पुनर्गर्भमोजस्तस्य प्रधावति" याज्ञ०। [इत०। आमलक्याः पत्रे।

**धात्रीपत्र** न० धात्र्या इव पत्रमस्य। तालीशपत्रे राजनि०।

**धात्रीपुत्र** पु० इत०। उपमातुः सुते हेमच०।

**धात्रीफल** न॰ ६त॰। आमलकीफले तस्य पाकविशेषगुणाः। "अङ्गारपाकमृदुयत्नसुपाचितानि सिन्धूत्थहिङ्गुमरिचादिसमन्वितानि। तप्ते घृते पुनरपि प्रतिभर्जितानि धात्रीफलानि जनयन्ति हि जाठराग्निम्" वैद्यके उक्ताः।

**धात्रेयी** स्त्री धात्र्या अपत्यम् स्त्री स्वार्थे वा ढक् ङीप्। १धात्र्याः स्त्र्यपत्ये २धात्र्याञ्च। "दूत्यः सखी नटी दासी धात्रेयी प्रतिवेशिनी" सा॰द॰। स्वार्थे क तत्रार्थे। "अतश्चतुर्थ्यां चन्द्रन्तु प्रमादाद्वीक्षते यदि। पठेद्धात्रेयिकावाक्यं प्राङ्मुखो वाप्युदङ्मुखः" ति॰ त॰। धात्रेयिकावाक्यञ्च "सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः। सुकुमारक! मा रोदीस्तव ह्येष स्यमन्तकः" विष्णुपु॰ "अन्धं दृष्ट्वा च तं मत्वा न सा देवी जगाम ह। सा तु धात्रेयिकां तस्मै हन्ताय प्राहिणोत् तदा"। "अवमत्य ढष्टै मूढा यदूनां धात्रेयिका मम" भा॰ आ॰ १०५ अ॰।

**धात्र्यरिष्ट** पु॰ "धात्रीफलसहस्रे द्वे पीडयित्वा रसं भिषक्। क्षौद्राष्टभागं पिप्पल्याश्चार्द्धं कुडवान्वितम्। शर्करार्द्धतुलोन्मिश्रं पक्वं स्निग्धघटे स्थितम्। प्रपिबेत् पाण्डुरोगार्त्तो जीर्णे हितमिताशनः। कामलापाण्डुहृद्रोगवातासृग्विषमज्वरान्। कासहिक्काऽरुचिश्वासानेषोऽरिष्टः प्रणाशयेत्" चक्रदत्तोक्ते धात्र्यारिष्टनामके पदार्थे।

**धान** न॰ धा—भावे ल्युट्। १धारणे २पोषणे च आधारे ल्युट्। १धारणाधारे स्त्रियां ङीप् राजधानी मत्स्यधानी

**धानक** न॰ धन्याक+पृषो॰। १धन्याके राजनि॰ २मानभेदे पु॰ भावप्र॰। "षड्भिस्तु रक्तिकाभिः स्यात् माषको हेमधानकौ"। अत्र हेमधान्यकौ पाठान्तरम्।

**धाना** स्त्री ब॰ व॰। धा—न टाप्। (बहुरी) ख्याते १भृष्टयवे अमरः। २धन्याके ३अभिनवोद्भिन्ने अङ्कुरे ४चूर्णसक्तुषु च मेदि॰। "यवास्तु निस्तुषा भृष्टाः स्मृता धाना इति स्त्रियाम्। धानाः स्युर्दुर्जरा रूक्षास्तृट्प्रदा गुरवश्च ताः। तथा मेदःकफच्छर्दिनाशिन्यः सम्प्रकीर्त्तिताः" राजनि॰। "धाना मत्स्यान् पयोमांसं शाकञ्चैव न निर्वपेत्" मनुः। स्वार्थे क धानाका तत्रार्थे व॰व॰ शब्दर॰।

**धानाचूर्ण** न॰ ६त॰। सक्तुषु।

**धानी** स्त्री धा—आधारे ल्युट् ङीप्। १आधारे राजधानी २पीलुवृक्षे स्त्री राजनि॰। स्वार्थे क धानिका तत्रार्थे "अङ्गारधानिका" अमरः।

**धानुर्दण्डिक** पु॰ धनुर्दण्ड इव तेन जीवति वेतना॰ ठक्। धनुरुपजीविनि धानुष्के।

**धानुष्क** पु॰ धनुःप्रहरणमस्य धनुषा जीवति वा वेतना॰ ठक् इसुसुक्तान्तात् ठस्य कः। १धनुषा युध्यमाने २धनुषा जीविनि च अमरः। "पारश्वधिकधानुष्कशाक्तीकप्रासिकान्वितौ" भट्टिः। धनुरिवावयवोऽस्य वा॰ठक्। ३अपामार्गे स्त्री शब्दच॰।

**धानुष्य** व॰ धनुषि साधुः वा॰ ष्यञ्। वंशे राजनि॰।

**धानेय** न॰ धानेव स्वार्थे ढक्। धन्याके राजनि॰ स्वार्थे क धानेयक तत्रार्थे न॰ जटाधरः।

**धान्धा** स्त्री (एलाइच) एलायां शब्दच॰।

**धान्य** न॰ धाने पोषणे साधु यत्। १सतुषे (धान) ख्याते व्रीह्यादौ "सस्यं क्षेत्रगतं प्रोक्तं सतुषं धान्यमुच्यते" स्मृतिः। धान्यवर्गः सगुणोऽभिहितो भावप्र॰ यथा "शालिधान्यं व्रीहिधान्यं शूकधान्यं तृतीयकम्। शिम्बीधान्यं क्षुद्रधान्यमित्युक्तं धान्यपञ्चकम्। शालयो रक्तशाल्याद्या व्रीहयः षष्टिकादयः। यवादिकं शूकधान्यं मुद्गाद्यं शिम्बिधान्यकम्। कङ्ग्वादिकं क्षुद्रधान्यं तृणधान्यञ्च तत् स्मृतम्"।

तत्र शालिधान्यस्य लक्षणं गुणाश्च "कण्डनेन विना शुक्ला हैमन्ताः शालयः स्मृताः"। अथ शालीनां नामानि। "रक्तशालिः सकलमः पाण्डुकः शकुनाहृतः। सुगन्धकः कर्द्दमको महाशालिश्च दूषकः। पुष्पाण्डकः पुण्डरीकस्तथा महिषमस्तकः। दीर्घशूकः काञ्चनको हायनो लोध्रपुष्पकः। इत्याद्याः शालयः सन्ति बहवो बहुदेशजाः। ग्रन्थविस्तरभीतेस्ते समस्ता नात्र भाषिताः"।

अथ तेषां गुणाः "शालयो मधुराः स्निग्धा बल्या बद्धाल्पवर्च्चसः। कषाया लघवो रुच्याः स्वर्य्या वृष्याश्च बृंहणाः। अल्पानिलकफाः शीताः पित्तघ्ना मूत्रलास्तथा। शालयो दग्धमृज्जाताः कषाया लघुपाकिनः। सृष्टमूत्रपुरीषाश्च रूक्षाः श्लेष्मापकर्षणाः। कैदारा वातपित्तघ्ना गुरवः कफशुक्रलाः। कषाया अल्पवर्च्चस्का मेध्याश्चैते बलावहाः"। कैदाराः कृष्टक्षेत्रजाः उक्ताः। "स्थलजाः स्वादवः पित्तकफघ्ना वातपित्तदाः। किञ्चित्तिक्ताः कषायाश्च विपाके कटुका अपि। स्थलजाः अकृष्टभूमिजाताः स्वयंजाता। वापिता मधुरा वृष्या बल्याः पित्तप्रणाशनाः। श्लेष्मलाश्चाल्पवर्च्चस्काः कषाया गुरवो हिमाः"। वापिताः कृष्टक्षेत्रे अकृष्टक्षेत्रे

च। "वार्षिकेभ्यो गुणैः किञ्चित् हीनाः प्रोक्ता अवापिताः"। लष्टक्षेत्रे अलष्टक्षेत्रे वा। 'रोपितास्तु नवा वृष्याः पुराणा लघवः स्मृताः। तेभ्यस्तु रोपिता भूयः शीघ्रपाका गुणाधिकाः। छिन्नरूढाः हिमा रूक्षा बल्याः पित्तकफापहाः। बद्धविट्काः कषायाश्च लघवश्चाल्पतिक्तकाः"।

अथ रक्तशालेर्गुणाः "रक्तशालिर्वरस्तेषु बल्यो वर्ण्यस्त्रिदोषजित्। चक्षुष्यो मूत्रलः स्वर्य्यः शुक्रलस्तृड्ज्वरापहः। विषव्रणश्वासकासदाहनुद्वह्निपुष्टिदः। तस्मादल्पान्तरगुणाः शालयो महदादयः"। रक्तशालिः (दाउदखानी) इति लोके मगधदेशे प्रसिद्धः।

अथ व्रीहिधान्यस्य लक्षणं गुणाश्च। "वार्षिकाः कण्डिताः शुक्ला व्रीहयश्चिरपाकिनः। कृष्णव्रीहिः पाटलश्च कुक्कुटाण्डक इत्यपि। शालामुखो जतुमुख इत्याद्याः व्रीहयः स्मृताः। कृष्णव्रीहिः स विज्ञेयो यः कृष्णतुषतण्डुलः। पाटलः पाटलापुष्पवर्णको व्रीहिरुच्यते। कुक्कुटाण्डाकृतिर्व्रीहिः कुक्कुटाण्डक उच्यते। शालामुखः कृष्णशूकः कृष्णतण्डुल उच्यते। लाक्षावर्णं मुखं यस्य ज्ञेयो जतुमुखस्तु सः। व्रीहयः कथिताः पाके मधुरा वीर्य्यतो हिमाः। अल्पाभिष्यन्दिनो बद्धवर्च्चस्काः षष्टिकैः समाः। कृष्णव्रीहिर्वरस्तेषां तस्मादल्पगुणाः परे"।

अथ षष्टिकानां लक्षणं गुणाश्च। "गर्भस्था एव ये पाकं यान्ति ते षष्टिका मताः"। अथ षष्टिकानां नामानि। "षष्टिका शतपुष्पश्च प्रमोदकसकुन्दकौ। महाषष्टिक इत्याद्याः षष्टिकाः समुदाहृताः। एतेऽपि व्रीहयः प्रोक्ता व्रीहिलक्षणदर्शनात्। षष्टिका मधुराः शीता लघवो बद्धवर्च्चसः। वातपित्तप्रशमनाः शालिभिः सदृशाः गुणैः"।

तत्र षष्टिकाया गुणाः। "षष्टिका प्रवरा तेषां लघ्वी स्निग्धा त्रिदोषजित्। स्वाद्वी मृद्वी ग्राहिणी च बलदा ज्वरहारिणी। रक्तशालिगुणैस्तुल्या ततः स्वल्पगुणाः परे। षष्टिका (साठी) इति लोके।

अथ शूकधान्यानि। तेषु यवाः प्रसिद्धाः। अतियवः पीतशूकः कृष्णारुणवर्णो यवः। तोक्यो हरितो निःशूकः स्वल्पो यवः यवेति प्रसिद्धः। तेषां नामानि गुणाश्च। "यवस्तु पीतशूकः स्यान्निःशूकोऽतियवः स्मृतः। तोक्यस्तद्वच्च हरितस्ततः स्वल्पश्च कीर्त्तितः। यवः कषायो मधुरः शीतलो लेखनो मृदुः। व्रणेषु तिलवत् पथ्यो रूक्षो मेधाग्निवर्द्धनः। कटुपाकोऽनभिष्यन्दी स्वर्य्यो बलकरो गुरुः। बहुवातमलो वर्णस्थैर्य्यकारी च पिच्छिलः। कण्ठत्वगामयश्लेष्मपित्तमेदःप्रणाशनः। पीनसश्वासकासोरुस्तम्भलोहिततृट्प्रणुत्। अस्मादतियवो न्यूनस्तोक्यो न्यूनतरस्ततः।

अथ गोधूमस्य नामानि लक्षणं गुणाश्च। "गोधूमः सुमनोऽपि स्यात् त्रिविधः स च कीर्त्तितः। महागोधूम इत्याख्यः पश्चाद्देशात् समागतः। महागोधूमः। (बड़गोहुम) इति लोके। "मधूली तु ततः किञ्चिदल्पा सा मध्यदेशजा। निःशूको दीर्घगोधूमः क्वचिन्नन्दीमुखाभिधः। गोधूमो मधुरः शीतो वातपित्तहरो गुरुः। कफशुक्रप्रदो बल्यः स्निग्धः सन्धानकृत् सरः। जीवनो बृंहणो वर्ण्यो व्रण्यो रुच्यः स्थिरत्वकृत्। कफप्रदो नवीनो न तु पुराणः। पुराणयवगोधूमक्षौद्रजाङ्गलशूल्यभागिति" वाग्भटेन वचने स्फुटीकृतत्वात्। "मधूली शीतला स्निग्धा पित्तघ्नी मधुरा लघुः। शुक्रला बृंहणी पथ्या तद्वन्नन्दीमुखः स्मृतः"।

अथ शिम्बीधान्यानि तत्पर्य्यायानाह। "शमीजाः शिम्बिजाः शिम्बीभवाः सूप्याश्च वैदलाः। तेषां गुणाः। "वैदला मधुरा रूक्षाः कषायाः कटुपाकिनः। वातलाः कफपित्तघ्ना बद्धमूत्रमला हिमाः। ऋते मुद्गमसूराभ्यामन्ये त्वाध्मानकारिणः। मुद्गमसूरयोरनाध्मानकारित्वमन्यवैदलापेक्षया न तु सर्व्वथा एतयोरपि किञ्चिदाध्मानकारित्वात्।

तत्र मुद्गस्य गुणाः। "मुद्गो रूक्षो लघुर्ग्राही कफपित्तहरो हिमः। स्वादुरल्पानिलो नेत्र्यो ज्वरघ्नो वनजस्तथा। मुद्गो बहुविधः श्यामो हरितः पीतकस्तथा। श्वेतो रक्तश्च तेषान्तु पूर्व्वः पूर्व्वो लघुः स्मृतः। सुश्रुतेन पुनः प्रोक्तो हरितः प्रवरो गुणैः। चरकादिभिरप्युक्त एष एव गुणाधिकः।

अथ माषः (उरद)। माषो गुरुः स्वादुपाकः स्निग्धो रुच्योऽनिलापहः। स्रंसनस्तर्पणो बल्यः शुक्रलो बृंहणः परः। भिन्नमूत्रमलस्तन्यो मेदःपित्तकफप्रदः। गुदकीलार्द्दितश्वासपङ्क्तिशूलानि नाशयेत्। कफपित्तकरा माषा इत्याकं कफपित्तकृत्"।

अथ राजमाषस्य (बरबटी) राजमाषो महामाषश्चपलः स्मृतः। राजमाषो गुरुःस्वादुस्तुवरस्तर्पणः

चरः। रूक्षो वातकरो रुच्यः स्तन्यो भरिबलप्रदः। श्वेतो रक्तस्तथा कृष्णस्त्रिविधः स प्रकीर्त्तितः। यो महांस्तेषु भवति स एवोक्तो गुणाधिकः"।

अथ निष्पावः। स तु राजशिम्बीबीजं (भटवास) इति लोके। "निष्पावो राजशिम्बिः स्याद् वल्लकः श्वेतशिम्बिकः। निष्पावो मधुरो रूक्षो विपाकेऽम्लो गुरुः सरः। कषायः स्तन्यपित्तास्रमूत्रवातविबन्धकृत्। विदाह्युष्णो विषश्लेष्मशोथहृच्छुक्रनाशनः"।

अथ मकुष्ठः। मकुष्ठो वनमुद्गः स्यान्मकुष्ठकमकुष्ठकौ। मकुष्ठो वातलो ग्राही कफपित्तहरो लघुः। वह्निजिन् मधुरः पाके कृमिकृज्ज्वरनाशनः"।

अथ मसूरः। "मङ्गल्यको मसूरः स्यान्मङ्गल्या च मसूरिका। मसूरो मधुरः पाके संग्राही शीतलो लघुः। कफपित्तास्रजिद्रूक्षो वातलो ज्वरनाशनः।

अथ आढकी (रहरी)। "आढकी तुवरी चापि सा प्रोक्ता शणपुष्पिका। आढकी तुवरा रूक्षा मधुरा शीतला लघुः। ग्राहिणी वातजननी वर्ण्या पित्तकफास्रजित्"।

अथ चणकः (छोला)। "चणको हरिमन्थः स्यात् सकलप्रिय इत्यपि। चणकः शीतलो रूक्षः पित्तरक्तकफापहः। लघुः कषायो विष्टम्भी वातलो ज्वरनाशनः। स चाङ्गारेण सम्भृष्टस्तैलभृष्टश्च तद्गुणः। आर्द्रभृष्टो बलकरो रोचनश्च प्रकीर्त्तितः। शुष्कभृष्टोऽतिरूक्षश्च वातकुष्ठप्रकोपणः। स्विन्नः पित्तकफं हन्यात् सूपः क्षोभकरो मतः। आर्द्रोऽतिकोमलो रुच्यः पित्तशुक्रहरो हिमः। कषायो वातलो ग्राही कफपित्तहरो लघुः।

कलायः (केराव)। कलायो वर्त्तुलः प्रोक्तः सतीनश्च हरेणुकः। कलायो मधुरः स्वादुः पाके रूक्षश्च शीतलः।

अथ त्रिपुटः (खेसारी)। त्रिपुटः खण्डिकोऽपि स्यात् कथ्यन्ते तद्गुणा अथ। त्रिपुटो मधुरस्तिक्तस्तुवरो रूक्षणो भृशम्। कफपित्तहरो रुच्यो ग्राहकः शीतलस्तथा। किन्तु खञ्जत्वपङ्गुत्वकारी वातातिकोपनः।

अथ कुलत्थी। कुलत्थिका कुलत्थश्च कथ्यन्ते तद्गुणा अथ। कुलत्थः कटुकः पाके कषायः पित्तरक्तकृत्। लघुर्विदाही वीर्योष्णः श्वासकासकफानिलान्। हन्ति हिक्काश्मरीशुक्रदाहानाहान् सपीनसान्। स्वेदसंग्राहको मेदोज्वरकृमिहरः परः।

अथ तिलः। तिलः कृष्णः सितो रक्तः स वर्ण्योऽल्पतिलः स्मृतः। तिलो रसे कटुस्तिक्तो मधुरस्तुवरो गुरुः। विपाके कटुकः स्वादुः स्निग्धोष्णः कफपित्तनुत्। बल्यः केश्यो हिमस्पर्शस्त्वच्यः स्तन्यो व्रणे हितः। दन्त्योऽल्पमूत्रकृद् ग्राही वातघ्नोऽग्निमतिप्रदः। कृष्णः श्रेष्ठतमस्तेषु शुक्लो मध्यमः सितः। अन्ये हीनतराः प्रोक्तास्तज्ज्ञै रक्तादयस्तिलाः।

अथ अतसी (तिसि)। अतसी नीलपुष्पी च पार्वती स्यादुमा क्षुमा। अतसी मधुरा तिक्ता स्निग्धा पाके कटुर्गुरुः। उष्णा दृक्शुक्रवातघ्नी कफपित्तविनाशिनी।

अथ तुवरी (तोरी तोड़ीति) लोके। तुवरी ग्राहिणी प्रोक्ता लघ्वी कफविषास्रजित्। तीक्ष्णोष्णा वह्निदा कण्डूकुष्ठकोष्ठकृमिप्रणुत्।

अथ सर्षप (रक्तसरीसो पिअरी सरीसो)। सर्षपः कटुकः स्नेहस्तुन्तुभश्च कदम्बकः। गौरस्तु सर्षपः प्राज्ञैः सिद्धार्थ इति कथ्यते। सर्षपस्तु रसे पाके कटुः स्निग्धः सतिक्तकः। तीक्ष्णोष्णः कफवातघ्नो रक्तपित्ताग्निवर्द्धनः। रक्षोहरो जयेत् कण्डूं कुष्ठकोष्ठकृमिग्रहान्। यथा रक्तस्तथा गौरः किन्तु गौरो वरो मतः।

अथ राजी (कृष्णा राइ)। राजी तु राजिका तीक्ष्णगन्धा कुञ्जनिकासुरी। क्षवः क्षवाभिजनकः कृमिकृत् कृष्णसर्षपः। राजिका कफपित्तघ्नी तीक्ष्णोष्णा रक्तपित्तकृत्। किञ्चिद्रूक्षाग्निदा कण्डूकुष्ठकोष्ठकृमीन् हरेत्। अतितीक्ष्णा विशेषेण तद्वत् कृष्णापि राजिका।

अथ क्षुद्रधान्यम्। क्षुद्रधान्यं कुधान्यञ्च तृणधान्यमिति स्मृतम्। क्षुद्रधान्यमनुष्णं स्यात् कषायं लघु लेखनम्। मधुरं कटुकं पाके रूक्षञ्च क्लेदशोषकम्। वातकृत् बद्धविट्कञ्च पित्तरक्तकफापहम्।

तत्र कङ्गुः (काङ्नी)। स्त्रियां कङ्गुप्रियङ्गू द्वे कृष्णा रक्ता सिता तथा। पीता चतुर्विधा कङ्गुस्तासां पीता वरा स्मृता। कङ्गुस्तु भग्नसन्धानवातकृद् बृंहणी गुरुः। रूक्षा श्लेष्महरातीव वाजिनां गुणकृद् भृशम्।

अथ चीना। चीनाकः कङ्गुभेदोऽस्ति स ज्ञेयः कङ्गुवद्गुणैः। [पित्तहृत्।

अथ श्यामा। श्यामाकः शोषणो रूक्षो वातलः कफ-

अथ कोद्रवः। कोद्रवः कोरदूषः स्यादुद्दालो वनकोद्रवः। कोद्रवो वातलो ग्राही हिमपित्तकफापहः। उद्दालस्तु भवेदुष्णो ग्राही वातकरो भृशम्।

अथ चारुकः (सरवीज)। चारुकः सरवीजः स्यात्

कथ्यन्ते तद्गुणा अथ। चाटको मधुरो रूक्षो रक्तपित्त-कफापहः। शीतलो लघुरुष्णश्च कषायो वातकोपनः।

अथ वंशबीजम्। यवा वंशभवा रूक्षाः कषायाः कटुपाकिनः। बद्धमूत्राः कफघ्नाश्च वातपित्तकराः सराः।

अथ कुसुम्भबीजम्। कुसुम्भबीजं वरटा सैव प्रोक्ता वरट्टिका। वरटा मधुरा स्निग्धा रक्तपित्तकफापहा। कषाया शीतला गुर्वी स्वादुरुष्णाऽनिलापहा।

अथ गवेधुका (गरहेडुआ)। गवेधुका तु विद्वद्भिर्गवेधुः कथिता स्त्रियाम्। गवेधुः कटुका स्वाद्वी कार्श्यकृत् कफनाशिनी।

अथ नीवारः। प्रसाधिका तु नीवारस्तृणधान्यमिति स्मृतम्। नीवारः शीतलो ग्राही पित्तघ्नः कफवातकृत्।

अथ (पुनेरा)। पवनाद्वोहितः स्वादुर्लोहितः श्लेष्मपित्तजित्। कदम्बस्तुवरो रूक्षः क्लेदकृत् कथितो लघुः। धान्यं सर्वं नवं स्वादु गुरु श्लेष्मकरं स्मृतम्। तत्तु वर्षोषितं पथ्यं यतो लघुतरं हितम्। वर्षोषितं सर्वधान्यं गौरवं परिमुञ्चति। न तु त्यजति वीर्यं स्वं क्रमान्मुञ्चत्यतः परम्। शतेषु यवगोधूमतिलमाषा नवा हिताः। पुराणा विरसा रूक्षा न तथा गुणकारिणः। पुराणा वर्षद्वयादुपरिस्थिताः। यवादयो नवाः वर्षान् प्रति हिताः। षष्ट्यादिभिन्नास्तु पुराणा हिताः। "पुराणयवगोधूमक्षौद्रजाङ्गलमूलभुगिति वचनात् वागभटेनोक्तत्वात्"।

श्राद्धादिकर्मोपयोगिधान्यभेदाश्च हेमा० द्वा० उक्ता यथा मार्कण्डेयपुराणे "जज्ञिरे तानि बीजानि ग्राम्यारण्याभिधानि च। ओषध्यः फलपाकान्ताः सर्वे सप्तदश स्मृताः। व्रीहयश्च यवाश्चैव गोधूमाः कङ्गवस्तिलाः। प्रियङ्गवः कोविदाराः कोरदूषाः सतीनकाः। माषमुद्गामसूराश्च निष्पावाः सकुलत्थकाः। आढक्यश्चणकाश्चैव चीनाः सप्तदश स्मृताः। इत्येता ओषधीनान्तु ग्राम्याणां जातयः स्मृताः। ओषध्यो यज्ञिया ज्ञेया ग्राम्यारण्याश्चतुर्दश। व्रीहयश्च यवाश्चैव गोधूमाः कङ्गुसर्षपाः। माषामुद्गाः सप्तमाश्च अष्टमाश्च कुलत्थकाः। श्यामाकाश्चैव नीवारा जर्तिलाः सगवेधुकाः। कोविदारसमायुक्तास्तथा वेणुयवाश्च ये। ग्राम्यारण्याः स्मृता ह्येता ओषध्यश्च चतुर्दश" स्कन्दपुराणे "यवगोधूमधान्यानि तिलाः कङ्गुकुलत्थकाः। माषामुद्गामसूराश्च निष्पावाः श्यामसर्षपाः। गवेधुकाश्च नीवारा आढक्योऽथ सतीनकाः। चणकाश्चीनकाश्चैव धान्यान्यष्टादशैव तु" धान्यानि व्रीहयः। नीवाराः, आरण्यव्रीहयः। सतीनका वर्त्तुलकलायाः। चीनकाः कङ्गुविशेषाः। भट्टलिङ्गधृतात् "यवा गोधूमधान्यानि तिलाः कङ्गुस्तथैव च। श्यामाकाश्चीनकश्चैव सप्तधान्यमुदाहृतम्"।

"एकादश्यां विशेषेण स्नानमात्रं परित्यजेत्। फलं मूलं जलादीनि किञ्चिद्भक्ष्यं प्रकल्पयेत्। अन्नं तु धान्यसम्भूतं गिरिजे! भुवि जायते। धान्यानि विविधानीह जगत्यां शृणु तान्यथ। श्यामाकाश्च मसूराश्च धान्यकोद्रवसर्षपाः। मकुष्ठी राजमाषाश्च तुवरो जूर्णकास्तथा। यव गोधूममुद्गाश्च तिलकङ्गुकुलत्थकाः। गवेधुकाश्च नीवारा आढकश्च कलायकाः। चाटको वल्लको रङ्कः कीचको वेड़कस्तथा। तिलकाश्चणकाश्चाश्च धान्यानि कथितानि वै। एतद्धान्यसमुद्भूतमन्नं भवति शोभने!। एकादशी व्रते भक्ष्यमेतदेव विवर्जयेत्" पाद्मोत्तरखण्डम्।

धान्यमानन्तु हेमा० द्वा० उक्तं यथा

भविष्यपुराणे "पलद्वयन्तु प्रसृतं द्विगुणं कुडवं मतम्। चतुर्भिः कुडवैः प्रस्थः प्रस्थाश्चत्वार आढकः। आढकैस्तैश्चतुर्भिश्च द्रोणस्तु कथितो बुधैः। कुम्भो द्रोणद्वयं शूर्पः खारी द्रोणास्तु षोडश"। विष्णुधर्मोत्तरे "पलञ्च कुडवः प्रस्थ आढको द्रोण एव च। धान्यमानेषु बोद्धव्याः क्रमशोऽमी चतुर्गुणाः। द्रोणैः षोड़शभिः खारी विंशत्या कुम्भ उच्यते। कुम्भैस्तु दशभिर्वाहो धान्यसंख्या प्रकीर्त्तिता"। वाराहपुराणे "पलद्वयन्तु प्रसृतम् मुष्टिरेकं पलं स्मृतम्। अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ तु पुष्कलम्। पुष्कलानि च चत्वारि आढकः परिकीर्त्तितः। चतुराढ़को भवेत् द्रोण इत्येतन्मानलक्षणम्। चतुर्भिः शेतिकाभिस्तु प्रस्थ एकः प्रकीर्तितः" मुष्टिर्यस्मानस्त्येति केचित्। पाद्मे "चतुर्भिः कुड़वैः प्रस्थः प्रस्थैश्चतुर्भिराढ़कः। चतुराढ़को भवेद्द्रोण इत्येतन्मानलक्षणम्"। अथ गोपथब्राह्मणे। "पञ्चकृष्णलको माषस्ते चतुःषष्टिभिः पलम्। पलैर्द्वात्रिंशद्भिःप्रस्थो मागधेषु प्रकीर्त्तितः। आढ़कस्तैः चतुर्भिश्च द्रोणः स्याच्चतुराढ़कः"।

धान्यच्छेदनादिविहितनक्षत्रादि ज्यो०त०उक्तं दीपिकायां "याम्याजपादर्द्दहनानलतोयशक्रचित्रेतरेषु च कुजार्कजवारवर्ज्जम्। शस्तेन्दुयोगकरणेषु तिथौ विरिक्ते धा-

न्यच्छिदिः स्थिरनरचरलग्नोदयेषु । वलभद्रः "रेवतीहस्तमूलेषु श्रवणे नागयाम्ययोः । पितृदैवे तथा सौम्ये धान्यच्छेदं लग्नोदये" अथ धान्यच्छेदनप्रकारः । "सपत्नौ माषमुद्गौ च यवधान्ये सकाण्डके । छिन्द्यात्तिलञ्च निष्पन्नमेतत् पाराशरं मतम्" पराशरः । "न मुष्टिग्रहणं कुर्यात् कदाचिद्वटपौष्णयोः । ऐशाने लवनं कुर्यात् मार्द्दमुष्टिद्वयं शुचिः । पौष्णे पुष्ये शुभाहे वा पूजयित्वेष्टदेवताम् । सस्यविघ्नप्रशान्त्यर्थं खले वा हव्यभोजनम्" । बौधायनः "रथाश्वगजधान्यानां गवां चैव रजः शुभम् । अप्रशस्तं समूहिन्याः श्वाजाविखरवायसाम्" । समूहिनी संमार्जनी । कृत्यचिन्तामणौ मेधिरुक्ता यथा । "वटश्च सप्तपर्णश्च गाम्भारी शाल्मली तथा औदुम्बरी तथा धात्री या चान्या क्षीरधारिणी । खीनाम्नी कर्षकैर्नित्यं मेधिः कार्या फलप्रदा" । अधिकं कृषिशब्दे दृश्यम् ।

**धान्यकोष्ठक** न॰ ६त॰। धान्यस्थापनार्थे कोष्ठे (गोला) हला॰

**धान्यचमस** पु॰ चम्यते चम-कर्मणि असच् । धान्यविकारभेद एव चमसः । चिपिटके त्रिका॰ ।

**धान्यत्वच्** स्त्री ६त॰ । तुषे अमरः ।

**धान्यधेनु** स्त्री दानार्थे धान्यकल्पितायां गव्याम् । तद्विधिः "विषुवे चायने वापि कार्त्तिक्यान्तु विशेषतः । तमिदानीं प्रवक्ष्यामि धान्यधेनुविधिं परम् । यां दत्त्वा सर्वपापेभ्यः प्रमाद इव राक्षसा"(मुच्यते इति शेषः)। दशधेनुप्रदानेन यत्फलं राजसत्तम ! । तत्सर्वमेव प्राप्नोति व्रीहिधेनुप्रदो नरः । कृष्णाजिनं ततः कृत्वा प्राग्वदत्र संन्यसेद्बुधः । गोमयेनानुलिप्ताङ्गीं शोभनां वस्त्रसंयुताम् । पूजयेद्व्रीहिमध्ये स्याद्द्रोणेनापि चतुर्थैः । अध्यया च तदर्द्धेन वित्तशाठ्यं न कारयेत् । चतुर्थांशेन धेन्वा वै वत्सन्तु परिकल्पयेत् । कर्त्तव्यो रुक्मशृङ्गो तु राजतखुरसंयुता । गोऽक्षुधः पूर्ववद्ध्राणमगुरुचन्दनन्तथा । मुक्ताफलमया दन्ता घृतक्षीद्रमयं मुखम् । प्रशस्तपत्रश्रवणा कांस्यदोहनकान्विता । इक्षुयष्टिमयाः पादाः क्षौमपुच्छसमन्विता । नानाफलसमोपेता रत्नगर्भसमन्विता । पादुकोपानहौ छत्रे भाजनं दर्पणं तथा । इत्येवं रचयित्वा तां कृत्वा दीपार्चनादिकम् । पुण्यकालञ्च संप्राप्य स्नातः शुक्लाम्बरो गृही । त्रिःप्रदक्षिणमावृत्य मन्त्रेणानेन कीर्त्तयेत् । तत्र विप्र ! महाभाग ! वेदवेदाङ्गपारग ! । यामिताञ्च मया दत्तां गृह्णीष्व त्वं द्विजोत्तम ! प्रीयतां मम देवेशो भगवान् मधुसूदनः । त्वमेवा लक्ष्मीर्गोविन्दे स्वाहा चासि विभावसोः । शक्रे शचीतु विख्याता मेधा मुनिषु सत्तमा । तस्मात् सर्वमयी देवी धान्यरूपेण संस्थिता । एवमुच्चार्य्य तां धेनुं ब्राह्मणाय निवेदयेत् । दत्त्वा प्रदक्षिणं कृत्वा तं क्षमाप्य द्विजोत्तमम् । यावच्च पृथिवी सर्वा वसुरत्नानि भूपते ! । तावत् पुण्यमयाधिक्यं व्रीहिधेनोश्च तत्फलम् । तस्मान्नरेन्द्र ! दातव्या भुक्तिमुक्तिफलप्रदा । इह लोके च सौभाग्यमायुरारोग्यवर्द्धनम् । विमानेनार्कवर्णेन किङ्किणीरत्नमालिना । स्तूयमानोऽप्सरोभिश्च प्रयाति शिवमन्दिरम् । यावच्च चरते जन्म तावत् स्वर्गे महीयते । ततः स्वर्गात् परिभ्रष्टो जम्बुद्वीपपतिर्भवेत् । एवं हरेश्च प्रोद्गीर्णं श्रुत्वा वाक्यं नरोत्तमः । सर्वपापविशुद्धात्मा रुद्रलोके महीयते" । वराहपुराणोक्तः ।

**धान्यपञ्चक** न॰ ६त॰ । भावप्र॰ उक्ते धान्यविशेषाणां पञ्चके । धान्यशब्दे भावप्र॰ वाक्यं दृश्यम् । २अतिसारे पाचनविशेषे यथा "धान्यपञ्चकविल्वाभ्यं नागरैः पाचितं जलम् । आमशूलविबन्धघ्नं पाचनं नित्यसेवितमिति" भावमिश्रः ।

**धान्यमात** त्रि॰ धान्यं माति मा—टच् । धान्यमापके "मातृवत् संख्यासंभद्रपूर्वायाः पा॰ सूत्रे पूर्वाया इति स्त्रीत्वनिर्देशात् स्त्रीत्वविशिष्टमातृशब्दस्यैव उत् नेतरस्येति सि॰कौ॰। तेन धान्यमातुरपत्यम् धान्यमात्र इत्येव

**धान्यमाय** त्रि॰धान्यं माति मा—क्वच् युक् । १धान्यमानकारके २तद्विक्रेतरि च तस्य धान्यमानेनैव विक्रेतृत्वात् ।

**धान्यराज** पु॰ धान्यानां राजा—टच् समा॰ । यवे राजनि॰

**धान्यवनि** पु॰ धान्यस्य वनिः राशिः । धान्यराशौ उज्ज्वल॰

**धान्यवर्द्धन** न॰ धान्यस्य कृत्यायुक्ततया वर्द्धनं यत्र ।(वाड़ी) हद्धिभेदे त्रिका॰ ।

**धान्यवीर** पु॰धान्येषु वीर इव बलहेतुत्वात् । माषे (कलाइ)।

**धान्यशीर्षक** न॰ ६त॰ । धान्यस्य मञ्जर्याम् धान्याग्रादयोऽप्यत्र । जटाधरः ।

**धान्यशैल** पु॰ दानार्थकल्पिते धान्यमये पर्वते तद्विधानादि हेमा॰ दा॰ पद्मपु॰ उक्तं यथा ।

"तस्माद्विधानं वक्ष्यामि पर्वतानामनुत्तमम् । प्रथमो धान्यशैलः स्यात् द्वितीयो लवणाचलः । गुड़ाचलस्तृतीयस्तु चतुर्थो हेमपर्वतः । पञ्चमस्तिलशैलः स्यात् षष्ठः कार्पासपर्वतः । सप्तमो घृतशैलश्च रत्नशैलस्तथाऽष्टमः ।

राजतो नवमस्तद्वदृशमः शर्कराचलः । वक्ष्ये विधानमेतेषां यथावदनुपूर्वशः । अयने विषुवे चैव व्यतीपाते दिनक्षये । शुक्लपक्षे तृतीयायामुपरागे शशिक्षये । विवाहोत्सवयज्ञे वा द्वादश्यामथ वा पुनः । शुक्लायां पञ्चदश्यां वा पुण्यर्क्षे च विधानतः । धान्यशैलादयो देया यथाशास्त्रं विधानतः । तीर्थे वायतने वापि गोष्ठे वापि भवाङ्गणे । मण्डपं कारयेद्भक्त्या चतुरस्रमुदङ्मुखम् । प्रागुदक्प्रवणं तद्वत्प्राङ्मुखं वा विधानतः" । मण्डपलक्षणन्तु, परिभाषायां प्रतिपादितम् । अत्र चायं विधानक्रमः दानदिवसात् पूर्वेद्युः पूर्वाह्णे कृतस्नानादिक्रियो यजमानः अमुकपर्वतदानमहं श्वः करिष्ये इति कृतसंकल्पो वृद्धिश्राद्धमाभ्युदयिकं विधाय पूर्ववत् पुण्याहवाचनं कुर्यात्, तदनन्तरम् अद्य अमुकस्मिन् देशे अमुकस्मिन् काले अमुकपर्वतदानेनाहं यक्ष्ये तत्र तदङ्गभूतहोमादिके अमुकशर्माणं अमुकवेदाध्यायिनम् ऋत्विजं त्वामहं वृणे इति । पुराणवेदविदाञ्चतसॄणामृत्विजां वरणं, तथा ओम् अद्य अमुकस्मिन् देशे अमुकस्मिन् काले अमुकपर्वतदानेनाहं यक्ष्ये तत्र तदङ्गभूतानि कर्माणि कर्त्तुं कारयितुं च अमुकगोत्रं अमुकशर्माणं अमुकवेदाध्यायिनं गुरुं त्वामहं वृणे इत्याचार्यं वृणुयात् वृतोऽस्मीति सर्वत्र प्रतिवचनं तत्र तावत् मधुपर्कश्चाद्यैर्देदिति सर्वपर्वतदानसाधारणोऽयं विधिः । "गोमयेनोपलिप्तायां भूमावास्तीर्य वै कुशान् । तन्मध्ये पर्वतं कुर्यात् विष्कम्भपर्वतान्वितम् । धान्यद्रोणसहस्रेण भवेद्गिरिरिहोत्तमः । मध्यमः पञ्चशतिकः कनिष्ठः स्यात् त्रिभिः शतैः" । द्रोणलक्षणमुक्तं परिभाषायाम् । प्रमाणस्यकरचरणस्य पुंसो द्वादशभिः प्रसृतिभिः कुडवो भवति अनेन कुडवेन चतुर्गुणोत्तरं प्रस्थाढकद्रोणा भवन्ति अतः चतुःषष्ट्या कुडवैर्द्रोणो भवतीति कल्पतरुणा व्याख्यातम् । "मेरुर्महाव्रीहिमयस्तु मध्ये सुवर्णवृक्षत्रयसंयुतः स्यात् । पूर्वेण मुक्ताफलवज्रयुक्तो याम्येन गोमेदकपुष्परागैः । पश्चाच्च गारुत्मतनीलरत्नैः सौम्येन वैदूर्यसरोजरागैः । श्रीखण्डखण्डैरभितः प्रवालजतान्वितः शुक्तिशिलातलः स्यात् । ब्रह्माऽथ विष्णुर्भगवान् पुरारिर्दिवाकरोऽप्यत्र हिरण्मयः स्यात् । मूर्द्ध्न्यवस्था मत्सरेण कार्याः सुवर्णेन तथा द्विजौघाः । चत्वारि शृङ्गाणि च राजतानि नितम्बभागेष्वपि राजतः स्यात् । आर्द्रेक्षुवंशावृतकन्दरस्तु घृतोदकः प्रस्रवणश्च दिक्षु । शुक्लाम्बराण्यम्बुधरावली स्यात् पूर्वेण पीतानि च दक्षिणेन । वासांसि पश्चादथ कर्वुराणि रक्तानि चैवोत्तरतोघनाली । रौप्यान्महेन्द्रप्रमुखानथाष्टौ संस्थाप्य लोकाधिपतीन् क्रमेण । नानाफलाली च समन्ततः स्यात् मनोरमं माल्यविलेपनं च । वितानकं चोपरि पञ्चवर्णमम्लानपुष्पाभरणं सितञ्च" । मेरुरित्यादि, महाव्रीहयो, राजान्नशालयः, वृक्षत्रयसंयुत, इति दक्षिणे मन्दारः, उत्तरे पारिजातो, मध्ये कल्पतरुरिति वृक्षत्रयं, तथा पूर्वतो हरिचन्दनं, पश्चिमे सन्तान इति तरुद्वयं च कुर्यात्, एते सर्वपर्वतेषु कर्त्तव्या इति शर्कराचले वक्ष्यमाणत्वात् सर्वेषाञ्च पञ्चशाखत्वमवधेयमिति । वज्रं, हीरकं । गारुत्मतं, मरकतं । सरोजरागः, पद्मरागः । मुक्ताफलादीनि च यथादिशं वक्ष्यमाणराजतशृङ्गेषु निवेशनीयानि । पुरारिः, महेश्वरः । ब्रह्मादिलक्षणमुक्तं ब्रह्माण्डदाने । मूर्द्ध्न्यवस्था उपरिदेशस्थिताः । मत्सरेण, विस्तशाठ्यरहितेन । द्विजौघाः, पक्षिसमूहाः । दिवौघा इति क्वचित्पाठः । तत्र आदित्यावस्वोरुद्रा दिवौघाः । तेषु, वस्वादिलक्षणमुक्तं ब्रह्माण्डदाने, रुद्रलक्षणं विश्वचक्रे । इक्षुरेव वंशः, घृतमेवोदकं, वस्त्राण्येव मेघसमूहाः कर्वुराणि, चित्राणि । लोकपाललक्षणमुक्तं ब्रह्माण्डदाने । "इत्थं निवेश्यामरशैलमग्र्यं मेरोश्च विष्कम्भगिरीन् क्रमेण । तुरीयभागेण चतुर्द्दिशन्तु संस्थापयेत् पुष्पविलेपनाढ्यान् । पूर्वेण मन्दरमनेकफलैश्च युक्तं युक्तं गणैः कनकभद्रकदम्बचिह्नम् । कामेन काञ्चनमयेन विराजमानमाकारयेत् कुसुमवस्त्रविलेपनाढ्यम् । क्षीरारुणोदसरसाऽथ वनेन चैव रौप्येण शक्तिघटितेन विराजमानम् । याम्येन गन्धमदनश्च निवेशनीयो गोधूमसञ्चयमयः कलधौतजम्बा । हैमेन यक्षपतिना घृतमानसेन वस्त्रैश्च राजतवनेन च संयुतः स्यात् । पश्चात्तिलाचलमनेकसुगन्धिपुष्पसौवर्णपिप्पल-हिरण्मयहंसयुक्तम् । आकारयेद्रजतपुष्पवनेन तद्वद्वस्त्रान्वितं दधिसितोदसरस्तथाग्रे । संस्थाप्य तं विपुलशैलमथोत्तरेण शैलं सुपार्श्वमपि माषमयं सवस्त्रम् । पुष्पैश्च हेमवटपादपशेखरन्तमाकारयेत्कनकधेनुविराजमानम् । माक्षीकभद्रसरसा च वनेन तद्वद्रौप्येण भास्करवता च युतं विधाय" । इत्यभिवेश्येत्यादि, एवं मेरुं निवेश्य तच्चतुर्थभागपरिमितेन पृथक्पृथक्त्वेन एकैकं विष्कम्भगिरिं कुर्यात् न तु

चतुर्थभागेन चतुरोऽपीति, तथाच वयमाचले वक्ष्यति "चतुर्थांशेन विष्कम्भपर्वतान् कारयेत्, पृथगिति"। पूर्वेण मन्दरमिति, सन्निधानान्मन्दरोऽपि व्रीहिमय एव, गणेयुक्तमिति, पुरुषाकृतिगणपयान्वितमित्यर्थः। अनेकफलालीयुक्तं यवैरिति क्वचित्पाठः। तस्य समलत्वे यवानुष्ठानमपि कार्यम्। कनकघटितेन भद्रकदम्बाख्येन वृक्षेण लक्षितम्। कामलक्षणमाह विश्वकर्मा "चापबाणधरः कामो रतिप्रियान् सुमध्यमः। आलीढो नन्दनो वाजी चापवान् विश्वमादकः" इति। क्षीरपूरितेन, अरुणोदसंज्ञितेन रूप्यघटितेन, सरसा वनेनापि रूप्यघटितेन विराजमानमिति सम्बन्धः। याम्येनेत्यादि, गन्धमदनो, गन्धमादनः, कलधौतजं वेति, सुवर्णजम्बुवृक्षेण। यक्षपतिरूपमुक्तं श्रीप्रश्ने "सुखमापिङ्गाक्षञ्च गदिनं पीतविग्रहम्। पुष्पकस्थञ्चनाध्यक्षं ध्यायेत् शिवसखं सदेति"। वृतमानसेनेति वृतपूरितेन मानसाभिधानेन राजतेन सरसा। पश्चादिति, पश्चिमदेशे दधिपूरितशितोदं नाम रजतनिर्मितं सर इति, विपुलशैलं, विपुलं नाम पर्वतं माक्षीकभद्रसरसेति, माक्षीकं, मधु तत्पूरितेन रजतमयेन भद्राभिधानेन सरसा युतमित्यर्थः। अत्र च कामदेवस्य प्रत्यङ्मुखत्वं हंसस्य प्राङ्मुखत्वं कनकधेनोर्दक्षिणामुखत्वं यक्षपतेरुदङ्मुखत्वं च शर्कराचलस्थितदिग्विशेषामेक्ष्यं देवतेषु सर्वशैलेषु वेदितव्यं,चरमव्यवस्था कुतोऽपि शास्त्रादनवस्थितिरिति। एते च कामदेवादयः कदम्बादीनां निजपर्वतवृक्षाणामधस्तात्कर्त्तव्याः। "होमैश्चतुर्भिरथ वेदपुराणविद्भिर्दान्तैरनिन्द्यचरिताकृतिभिर्द्विजेन्द्रैः। पूर्वेण हस्तमितमत्र विधाय कुण्डं कार्यस्तिलैर्यवघृतेन समित्कुशैश्च। रात्रौ च जागरमनुव्रतगीततूर्यैरावाहनञ्च कथयामि शिलोच्चयानाम्"। पूर्वेणेत्यादि मण्डपस्य पूर्वभागे हस्तमात्रं कुण्डं विधाय तस्य पूर्वोत्तरदिग्विभागे तुलापुरुषोक्तलक्षणां देवतावेदिं कृत्वा तत्र विनायकादिदेवताभ्यः पूर्ववत् पूजां विदध्यात् अनन्तरमृत्विजोऽग्निस्थापनान्ते ग्रहाणां लोकपालानामित्यादिवक्ष्यमाण देवताभ्यस्तत्तल्लिङ्गमन्त्रैस्तिलादिद्रव्येण होमं कुर्युः। "ग्रहस्ते तथ होतव्ये कुर्यात् कुण्डं करात्मकम्" इत्युक्तेरत्र हस्तपरिमितकुण्डोपदेशादाहुतिसहस्रं होतव्यमिति दानविवेककारः। अत्र विनायकादयो 'द्वात्रिंशद्देवा, द्वादशादित्याः, एकादशरुद्राः, दश लोकपालाः, अष्टौ वसवः, ब्रह्म-विष्णु-शिव-

सूर्याश्चत्वारः काम धनद-हंस-कामधेनव श्चत्वारः इत्येवमेकाशीतिसंख्यकेभ्यो देवेभ्यः ग्रहादीनां प्रतिदैवतं त्रयोदशाहुतिहोमे त्रिपञ्चाशदधिकमाहुतिसहस्रं सम्पद्यते। अष्टशतन्तु होतव्यमिति ब्रह्माण्डपुराणे वक्ष्यति। तिलादीनि चत्वार्येव हविर्द्रव्याणि घृताक्तानीत्यवगन्तव्यम्। समिधः, साधारण्यादुदुम्बरस्य। होमादनन्तरं पुष्पोपहारानादाय वक्ष्यमाणमन्त्रैर्यथाक्रमं पर्वतानावाहयेत्, तत्र मेरोरावाहनमन्त्रः। "त्वं सर्वदेवगणधामनिधे! विरुद्धमस्मदुष्टदेऽध्यमरपर्वत! नाशयाशु। क्षेमं विधत्स्व कुरु शान्तिमनुत्तमां नः सम्पूजितः परमभक्तिमता मया हि। त्वमेव भगवानीशो ब्रह्मा विष्णुर्दिवाकरः। मूर्त्तामूर्त्तपरं वीजमतः पाहि सनातनः। यस्मात्त्वं लोकपालानां विश्वमूर्त्तेश्च मन्दिरम्। रुद्रादित्यवसूनाञ्च तस्माच्छान्तिं प्रयच्छ मे। यस्मादशून्यममरैर्नारीभिश्च सम तथा। तस्मान्मामुद्धराशेषदुःखसंसारसागरात्। एवमभ्यर्च्य तं मेरुं मन्दरञ्चाभिपूजयेत्। अथ मन्दरस्य। यस्माच्चैत्ररथेन त्वं भद्राश्ववर्षेण च। शोभसे मन्दर! क्षिप्रमतः पुष्टिकरो भव। अथ गन्धमादनस्य। यस्माच्चूडामणिर्जम्बुद्वीपे त्वं गन्धमादन!। गन्धर्ववनशोभावानतः कीर्त्तिर्दृढास्तु मे। अथ विपुलपर्वतस्य। यस्मात्त्वं केतुमालेन वैभ्राजेन वनेन च। हिरण्मयाश्वत्थशिखरस्तस्मात् पुष्टिर्ध्रुवास्तु मे। अथ सुपार्श्वस्य। उत्तरैः कुरुभिर्यस्मात् सावित्रेण वनेन च। सुपार्श्व! राजसे नित्यमतः श्रीरक्षयास्तु मे। एवमामन्त्र्य तान् सर्वान् प्रभाते विमले पुनः। स्नात्वाथ गुरवे दद्यात् मध्यमं पर्वतोत्तमम्। विष्कम्भपर्वतान् दद्यादृत्विग्भ्यः क्रमशो नृप। गावो दद्याच्चतुर्विंशाद्य वा दश पार्थिव!। शक्तितः सप्त वाष्टौ वा पञ्च दद्यादशक्तिमान्। एकां वा गुरवे दद्यात् कपिलाञ्च पयस्विनीम्"। एवमामन्त्र्येति, दानदिनात् पूर्वदिवसे सर्वमिदमामन्त्रणादि विधाय गीतवादित्रादिभिर्निशामतिवाह्य ततः प्रभाते गुरुप्रभृतयो विहितस्नानादिक्रियाः पूर्णाहुतिपर्यन्तं सकलकर्मशेषं समाप्य कुण्डसमीपस्थापितकलसजलेन पूर्ववद्यजमानं स्नपयेयुः। यजमानोऽपि शुक्लाम्बरपरिधानः प्रदक्षिणीकृत्य वक्ष्यमाणमन्त्रेण यथाक्रमं पर्वतान् प्रतिपादयेत्।

"पर्वतानामशेषाणामेष एव विधिः स्मृतः। त एव पूजने मन्त्रास्त एवोपस्कराः स्मृताः। ग्रहाणां लोकपालानां ब्रह्मादीनाञ्च सर्वशः। स्वमन्त्रेणैव सर्वेषु होमः इ-

लेषु पठ्यते। उपवासो भवेदित्यमशक्तौ नक्तमिष्यते" सर्वत्राक्षारलवणमश्नीयादिति वक्ष्यमाणत्वादक्षारलवणं नक्तं वेदितव्यम्" "विधानं सर्वशैलानां क्रमशः शृणु पार्थिव! दानकालेषु ये मन्त्रा पर्वतेषु च यत्फलम्" अथ मन्त्रः "अन्नं ब्रह्म यतः प्रोक्तमन्ने प्राणाः प्रतिष्ठिताः। अन्नाद्भवन्ति भूतानि जगदन्नेन वर्त्तते। अन्नमेव यतोलक्ष्मीरन्नमेव जनार्दनः। धान्यपर्वतरूपेण पाहि तस्मान्नमोनमः"। एवमाचार्यादीन्, सम्पूज्य तदनुज्ञया अन्येभ्योऽपि दद्यात् ततोयजमानो वेद्यां पूर्ववद्देवताः सम्पूज्य नमस्कुर्यात्। गुरुस्तान्विसर्जयेत्, ततो यथाशक्ति ब्राह्मणभोजनम् कृतोपवासस्य यजमानस्य दानदिने क्षारलवणवर्जनं सर्वपर्वतोपस्करार्थाञ्च ब्राह्मणद्रव्यप्रापणं शर्कराचलोक्तं सर्वत्र द्रष्टव्यम्। "अनेन विधिना यस्तु दद्याद्धान्यमयङ्गिरिम्। मन्वन्तरशतं साग्रं देवलोके महीयते। अप्सरोगणगन्धर्वैराकीर्णेन विराजितः। विमानेन दिवः पृष्ठमायाति सुरसेवितः। कर्मक्षयाद्राजराज्यं प्राप्नोतीह न संशयः"। इत्यमेव मत्स्यपु०। धान्यपर्वतादयोऽपरत। ब्रह्माण्डभविष्यपुराणोक्तो विधिश्च ततःपरं तत्र दृश्यः।

**धान्या** स्त्री धन्याक+पृषो०। (धनिया)ख्याते पदार्थे हेमच०।

**धान्याक** न० धन्याक+स्वार्थे अण्। धान्यमकति अक–कुटिलायां गतौ अण् उप०स०वा। (धनिया) ख्याते पदार्थे "धान्याकं तुवरं स्निग्धमवृष्यं मूत्रलं लघु। तिक्तं कटूष्णवीर्यञ्च दीपनं पाचनं स्मृतम्। ज्वरघ्नं रोचनं ग्राहि स्वादु पाके, त्रिदोषनुत्। तृष्णादाहवमिश्वासकासाकार्श्यःक्रमिप्रणुत्। आर्द्रन्तु तद्गुणं स्वादु विशेषात् पित्तनाशनम्" भावप्र०।

**धान्याकृत्** त्रि० धान्यं कर्षणादिना करोति कृ–क्विप् वेदे पूर्वपददीर्घः। कर्षके "वपन्तु वीजमिव धान्याकृतः" ऋ० १०।९४।१३।

**धान्याभ्र** न० "पादांशशालिसंयुक्तमभ्रं बद्धाथ कम्बले। त्रिरात्रं स्थापयेन्नीरे तत् क्लिन्नं मर्दयेत् करैः। कम्बलाद्गालितं सूक्ष्मं वालुकारहितञ्च यत्। तद्धान्याभ्रमिति प्रोक्तमभ्रमारणसिद्धये" भावप्र० उक्ते अभ्रमारणोपयोगिवस्तुभेदे।

**धान्याम्ल** न० धान्यैरभिषुतमम्लम्। काञ्जिके (कामानि)। "धान्याम्लं शालिचूर्णोत्थं कोद्रवादिकृतं भवेत्। धान्याम्लं धान्ययोनित्वात् प्रीणनं लघु दीपनम्। अरुचौ वातरोगेषु सर्वेष्वास्थापने हितम्" भावप्र०।

**धान्यायन** पुंस्त्री धन्यस्य गोत्रापत्यम् अश्वा० फञ्। धन्यगोत्रापत्ये।

**धान्यारि** पु० ६त०। धान्यशत्रौ मूषिकार्थे शब्दकल्पद्रुमे लिखितोक्तिः प्रामादिकी अरिशब्दस्य पुंलिङ्गत्वेन "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" पा० सूत्रेण तत्पुरुषे परवल्लिङ्गस्यैवानुशासनात्।

**धान्यार्थिन्** त्रि० "अर्थाच्चासन्निहिते" पा० "तदन्ताच्च" वार्त्ति० उक्तेः पुष्करा० अस्त्यर्थे इनि। धान्यरूपार्थविशिष्टे स्त्रियां ङीप्। "कालत इत्याद्यसन्निधिनं देशतः" तथात्वे अस्तीत्यधिकरणान्वयाभावात् न इनिप्रसक्तिः।

**धान्यास्थि** न० ६त०। तुषे।

**धान्योत्तम** पु० धान्येषूत्तमः। शालिधान्ये राजनि०।

**धान्व** पु० धन्वदेशे भवः अण् वोपधत्वेऽपि वेदे नि० टिलोपः। धन्वदेशोद्भवे। "असितो धान्वो राजेत्याह" शत० ब्रा० १३।४।३।११। लोके तु धान्वन इत्येव "उदकं पार्वतं वार्क्षमैरिणं धान्वनं तथा" कामन्दकी०।

**धान्वन्तर्य** त्रि० धन्वन्तरिर्देवताऽस्य वा० यत्। धन्वन्तरिदेवताके होमादौ "अग्नीषोमं वैश्वदेवं धान्वन्तर्यमनन्तरम्। प्रजानां पतये चैव पृथक् होमो विधीयते" भा० आनु० ९७ अ०।

**धाम** पु० धा–बा० मन्। गणदेवभेदे "देवाः साध्यास्तथा विश्वे तथैव च महर्षयः। यामा धामाश्च मौद्गल्या गन्धर्वाप्सरोगणाः" भा० व० २६ अ०। "पितरो जगतः श्रेष्ठा देवानामपि देवताः। तेऽपि तत्र समाजग्मुर्यामा धामाश्च सर्वशः" भा० स० ४५ अ०।

**धामक** पु० धानक+पृषो०। माषपरिमाणे भावप्र० हेमधानकौ इत्यत्र हेमधामकौ इति पाठान्तरम् धानकशब्दे दृश्यम्।

**धामकेशिन्** पु० धाम ज्योतीरूपः केशोऽस्त्यस्य इनि। ज्योतिर्मयकिरणयुक्ते सूर्य्ये "दिवाकरः सप्तसप्तिर्धामकेशी विरोचनः" भा० व० ३ अ०।

**धामच्छद्** पु० धामानि छादयति छादि–क्विप् ह्रस्वः। न्यूनानां पूरके अतिरिक्तानां समीकारके। "धामच्छदग्निरिन्द्रः" यजु० १८।७६। "वाग् वा अनुष्टुव् वाग् धामच्छद्वाचैवास्य तदाप्नोति" शत०ब्रा०१०।१।१।१०।

**धामन्** न० धा–मनिन्। १गेहे २देहे ३त्विषि ४प्रभावे अमरः। ५रश्मौ ६स्थाने ७जन्मनि मेदि०। "आ ये धामानि दिव्यानि तस्थुः" ऋ० १०।१३। १"पुत्रं जनय धर्म्मोपि धाम क्षत्रियतेजसाम्" भा० आ० १२२ अ०।

८तेजसि "कार्शानवं धाम पतङ्गकान्तेः"। "पतत्यधो धाम विसारि सर्वतः" माघः। तत्र स्थाने "योगधारणयाऽऽग्नेय्या दग्ध्वा धामाविशत् स्वकम्" भाग० ११।३१।६। ९दामोपलक्षिते च "धाम्नो धाम्नो राजंस्ततो वरुण ! नो मुञ्च" यजु० ६।२२। १०परमेश्वरे न०। "गुह्यो गुह्यतमो धाम" विष्णु स०। "धाम ज्योतिः "नारायणः परं ज्योतिरिति" मन्त्रवर्णात्" भा० ११धने च "धामसाचमभिषाचं स्वर्विदम्" ऋ०३।५१।२। "धाम धनं तदर्थिभिः सह योजयितारम्" भा०।

**धामनिका** स्त्री धामन्येव स्वार्थे क। धमन्याम् रत्नमाला। धमनी स्वार्थे अण् ङीप्। धामनी धमन्यां शब्दच०।

**धामनिधि** पु० धामानि निधीयन्तेऽस्मिन् नि+धा—आधारे कि इत०। सूर्ये जटाधरः।

**धामभाज्** पु० धाम यज्ञस्थानं भजते भज–ण्वि इत०। यज्ञस्थानभागिनि देवे। "धामभाजो देवाः पाथोभाग् वनस्पतिः। धाम वै देवा यज्ञस्याभजन्त पाथः पितरः" शांख्यब्रा०१०।६।

**धामशस्** अव्य० धाम्नि धाम्नि इत्यर्थे शस्। स्थाने स्थाने इत्यर्थे "तेषामिष्टानि विहितानि धामशः" ऋ०१।१६४।१५

**धामार्गव** पु० धाम्नोऽर्गं वाति–वा क। १अपामार्गे अमरः २पीतघोषायाम्, मेदि०३घोषके च रत्नमा०। "धामार्गवस्यापि मदनफलमज्जवदुपयोगो विशेषतस्तु परं गुल्मोदरकासश्वासश्लेष्मामयेषु" सुश्रुतः।

**धाय** त्रि० धा–ण। धारके "ददैर्दुःखस्य मातृभ्यो धार्यैरामोदमुत्तमम्" भट्टिः। "अनित्यत्वात् न तद्योगे षष्ठी दुःखस्य धायैः पोषकैरित्यन्वयो वा" जयमङ्गलः।

**धायस्** त्रि० वर्वर्षित तोऽनुदात्तौ "वहिहाधाअभ्यश्छन्दसि" उणा० असुन् युक् माधवः १धारके "भूरसि भूमिरस्यदितिरसि विश्वधायाः विश्वस्य भुवनस्य धर्त्री" यजु० १३।१८। धेट–भावे असुन् ।२पाने च "तुविष्टमाय धायसे" ऋ०१।१३०।२ "तुविष्टमाय प्रभूताय पानाय धायसे" भा०। [ १।३०।७।

**धायु** त्रि० धा–उण् युक्। धारके "यस्मै धायुरदधाः" ऋ०

**धाय्य** पु० धा–कर्मणि ण्यत् युक्। १पुरोहिते धीयते समिदनया करणे नि० ण्यत्। २सामिधेन्यामृचि स्त्री ततो दिगा० भवादौ यत् यलोपालोपौ। ३धाय्य तत्र भवे त्रि० "यजेति धाय्यारूपं प्रगाथा यजामहाः" यजु०१९।२४।

**धार** न० धाराया इदम् अण्। १वर्षोद्भवजले दिव्यपानीयप्रभेदे। तद्गुणभेदादि भावप्र० उक्तं यथा "धाराभिः पतितं तोयं गृहीतं स्फीतवाससा। शिलायां वसुधायां वा धौतायां पतितञ्च यत्। सौवर्णे राजते ताम्रे स्फाटिके काचनिर्मिते। भाजने मृण्मये वापि स्थापितं धारमुच्यते। धारं नीरं त्रिदोषघ्नमनिर्देश्यरसं लघु। सौम्यं रसायनं बल्यं तर्पणं ह्लादि जीवनम्। पाचनं मतिकृन्मूर्च्छातन्द्रादाहश्रमक्लमान्। तृष्णां हरति तत् पथ्यं विशेषात् प्रावृषि स्मृतम्"। राजनि० तु अन्यथोक्तं यथा "यदा स्यादाश्विने मासि सूर्यः स्वातीविशाखयोः। तदाम्बुजलदैर्मुक्तं गाङ्गमुक्तं मनीषिभिः। अन्यदा कृत्तिकादिनक्षत्रेषु यदम्बुदैः। अभिवृष्टमिदं तोयं सामुद्रमिति संज्ञितम्। तयोर्गुणाः। "गाङ्गं जलं स्वादु सुशीतलञ्च रुचिप्रदं पित्तकफापहञ्च। निर्दोषमिष्टं लघु तच्च नित्यं गुणाधिकं व्योम्नि गृहीतमात्रः। सामुद्रं सलिलं शीतं कफवातकरं गुरु। चित्रायामाश्विने तच्च गुणाढ्यं गाङ्गवद्भवेत्। पतितं भुवि तत्तोयं गाङ्गं सामुद्रमेव वा। स्वस्थानवशयाद्गुणमेदन्यदन्यरसादिकम्"। धृ–णिच् अण्। २पापान्तरे ३ऋणे च मेदि० भावे अच्। ४जलधारावर्षणे हेमच०। ५खड्गादेरन्तभागे ६गम्भीरे पु० शब्दा०।

**धारक** त्रि० धारयति धारि–ण्वुल्। १अधमर्णे २धारणकर्त्तरि च। ३कलसे तस्य नामनिरुक्तिः देवीपु० "ब्रह्मान् धारयते यस्मात् मातराविविधास्तथा। दुरितानि च निघ्नन्ति तेन ते धारकाः स्मृताः" ४योनौ स्त्री कापि वेदे अत इत्त्वं न। "निगल्गलीति धारका" यजु०२३।२२ "धरति लिङ्गं धारका योनिः" वेददी०।

**धारण** न० धारि–ल्युट्। १धरणे २विधारणे भावे युच्। ३बुद्धिभेदे ४राज्ञां न्यायपथस्थितौ च स्त्री अमरः। ५योगाङ्गभेदे स्त्री तल्लक्षणादिकं पात०सू०भा० उक्तं यथा "योगाङ्गानुष्ठानन्तु द्विधैव कारणत्वं लभते इति योगाङ्गान्यवधार्यन्ते" भा० "यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि" पा०सू०। "यथाक्रमं एतेषाम् अनुष्ठानं स्वरूपञ्च वक्ष्यामः" भा० इति उद्देशात् तेषां मध्ये पञ्चानां लक्षणानि पात० सू० समाधिपादे दर्शयित्वा धारणादेर्लक्षणानि विभूतिपादे उक्तानि तत्र धारणायाः लक्षणं दर्शितं यथा "उक्तानि पञ्च बहिरङ्गानि साधनानि धारणा वक्तव्या" भा० आभासः।

"देशबन्धश्चित्तस्य धारणा" पा० सू०।

"नाभिचक्रे हृदयपुण्डरीके मूर्द्ध्नि ज्योतिषि नासिकाग्रे जिह्वाग्रे इत्येवमादिषु देशेषु बाह्ये वा विषये

चित्तस्य वृत्तिमात्रेण बन्ध इति बन्धोधारणा” भा० । “प्रथमद्वितीयपादाभ्यां समाधिस्तत्साधनं चोक्तम् तृतीयपादे तत्प्रवृत्त्यनुगुणाः श्रद्धोत्पादहेतवो विभूतयो वक्तव्याः ताश्च संयमसाध्याः संयमश्च धारणाध्यान समाधिसमुदाय इति विभूतिसाधनतया पञ्चभ्यश्च योगाङ्गेभ्यो बहिरङ्गेभ्योऽस्याङ्गत्रयस्यान्तरङ्गतया विशेषज्ञापनार्थमत्र त्रयस्योपन्यासः तत्रापि च धारणाध्यानसमाधीनां कार्यकारणभावेन नियतपौर्वापर्यत्वात्तदनुरोधेनोपन्यासक्रम इति प्रथमं धारणा लक्षणीयेत्याह उक्तानीति देशेति” आध्यात्मिकदेशमाह । नाभिचक्र इति । आदिशब्देन तात्वादयो ग्राह्याः बन्धः सम्बन्धः । बाह्यदेशमाह बाह्यइति । बाह्ये च न स्वरूपेण चित्तस्य सम्बन्धः सम्भवतीत्युक्तं वृत्तिमात्रेण इति अत्रापि पुराणम् “प्राणायामेन पवनं प्रत्याहारेण चेन्द्रियम् । वशीकृत्य ततः कुर्यांच्चित्तस्थानं शुभाश्रये” शुभाश्रया बाह्या हिरण्यगर्भवासवप्रजापति प्रभृतयः इदञ्च तत्रोक्तम् । “मूर्त्तं भगवतोरूपं सर्वापाश्रयनिस्पृहम् । एषा वै धारणा ज्ञेया यच्चित्तं तत्र धार्यते । तच्च मूर्त्तं हरेरूपं तद्विचिन्त्य नराधिप ! । तत् श्रूयतामनाधारा धारणा नोपपद्यते । प्रसन्नवदनं चारु पद्मपत्रनिभेक्षणम् । सुकपोलं सुविस्तीर्णललाट फलकोज्ज्वलम् । समकर्णान्तविन्यस्तचारुकुण्डलभूषणम् । कम्बुग्रीवं सुविस्तीर्णं श्रीवत्साङ्कितवक्षसम् । वलीविभङ्गिना मग्ननाभिना चोदरेण च । प्रलम्बाष्टभुजं विष्णु मथ वापि चतुर्भुजम् । समस्थितोरुजङ्घञ्च सुस्थिताङ्घ्रि कराम्बुजम् । चिन्तयेद् ब्रह्मभूतं तं पीतनिर्मलवाससम् । किरीटहारकेयूरकटकादिविभूषितम् । शार्ङ्गचक्रगदाखड्गशङ्खाक्षवलयान्वितम् । चिन्तयेत्तन्मयो योगी समाधायात्ममानसम् । तावत् यावत् दृढीभूता तत्रैव नृप ! धारणा । एतदातिष्ठतोऽन्यद्वा स्वेच्छया कर्म सर्वतः । नापयाति यदा चित्तं सिद्धां मन्येत तां तदेति” विवृतिः ।

सां०सूत्रोक्ते पूरणरेचककुम्भकाख्यप्राणनिरोधरूपे चित्तवशीकरणे ५ प्राणायामभेदे च । यथा “ध्यानस्यापि साधनान्याह”भा० “धारणासनस्वकर्मणा तत्सिद्धिः”सां०सू० “वक्ष्यमाणेन धारणादित्रयेण ध्यानं भवतीत्यर्थः । धारणादित्रयं क्रमात् सूत्रत्रयेण लक्षयति । “निरोधश्छर्दिविधारणाभ्याम्” सू० “प्राणस्येति प्रसिद्ध्या लभ्यते । प्रच्छर्दनविधारणाभ्यां वा प्राणस्येति योगसूत्रे भाष्यकारेण प्राणायामस्य व्याख्यातत्वात् । छर्दिश्च वमनम् । विधारणं त्याग इति यावत् । तेन पूरणरेचन योर्लाभः । धारणञ्च कुम्भकम् । तथा च प्राणस्य पूरकरेचककुम्भकैर्यो निरोधो वशीकरणं सा धारणेत्यर्थः । आसनादेः स्वशब्देन पश्चाल्लक्षणीयतया सूत्रे परिशेषत एव धारणायालक्ष्यत्वलाभाद्धारणापदं नोपात्तम् । चित्तस्य धारणा तु समाधिवद्ध्यानशब्देनैव सङ्गृहीतेत्युक्तम्” प्र० भा० ।

“धारयेत्तत्र चात्मानं धारणां धारयन् बुधः” याज्ञ०” प्राणायमविशेषरूपस्य धारणात्मकत्वमुक्तम् व्याख्यातञ्चैतत् “तत्र च हृद्यात्मानं मनोगोचरतया धारयेत् । तथा धारणाञ्च धारयेद्धारणास्वरूपञ्च जान्वभ्रमणेन छोटिकादानकालोमात्रा ताभिः पञ्चदशमात्राभिरधमः प्राणायामस्त्रिंशद्भिर्मध्यमः । पञ्चचत्वारिंशद्भिरुत्तम इत्येवम्प्राणायामत्रयात्मिकैका धारणा । तास्तिस्रो योगशब्दवाच्यास्तांश्च धारयेत् । यथोक्तमन्यत्र “संभ्राम्य छोटिकान्द्द्यात्करागञ्जानुमण्डले । मात्राभिः पञ्चदशभिः प्राणायामोऽधमः स्मृतः । मध्यमोद्विगुणः श्रेष्ठस्त्रिगुणो धारणा तथा । त्रिभिस्त्रिभिः स्मृतैका ताभिर्योगस्तथैव चेति” । धारणात्मकयोगाभ्यासे प्रयोजनमाह “अन्तर्द्धानं स्मृतिः कान्तिर्दृष्टिः श्रोत्रज्ञता तथा । निजं शरीरमुत्सृज्य परकायप्रवेशनम् । अर्थानाञ्छन्दतः सृष्टिर्योगसिद्धेश्च लक्षणम् । सिद्धे योगे त्यजन्देहममृतत्वाय कल्पते” मिताक्षरा कृता ।

वह्निपु० धारणास्वरूपभेदादिकमन्ययोक्तं यथा अग्निरुवाच “धारणा मनसोध्येये संस्थितिर्ध्यानवद्द्विधा । मूर्त्तामूर्त्तहरिध्यानं मनोधारणतो हरौ । यद्बाह्यावस्थितं लक्ष्यं तस्मान्न चलते मनः । तावत् कालं प्रदेशेषु धारणा मनसि स्थितिः । कालावधि परिच्छिन्नं देहे संस्थापितं मनः । न प्रच्यवति यल्लक्ष्याद्धारणा साऽभिधीयते । धारणा द्वादशायामा ध्यानं द्वादश धारणाः । ध्यानं द्वादशकं यावत्समाधिरभिधीयते । धारणाभ्यासयुक्तात्मा यदि प्राणैर्विमुच्यते । कुलैकविंशमुत्तार्य्य स्वर्याति परमं पदम् । यस्मिन् यस्मिन् भवेदङ्गे योगिनां व्याधिसम्भवः । तत्तदङ्गं धिया व्याप्य धारयेत्तत्त्वधारणम् । आग्नेयी वारुणी चैव ऐशानी चामृतात्मिका । साग्निः शिखा फडन्ता च विष्णोः

क्तायां द्विजोत्तम!। नाडीभिर्विकटं दिव्यं शूलाग्रं वेधयेच्छुभम्। पादाङ्गुष्ठात् कपालान्तं रश्मिमण्डलमावृतम्। तिर्य्यक् चाधोर्द्ध्वभागेभ्यः प्रयान्त्योऽतीव तेजसा। चिन्तयेत् साधकेन्द्रस्तं यावत् सर्वं महामुने!। भस्मीभूतं शरीरं स्वन्तथैवोपसंहरेत्। शीतश्लेष्मादयस्तापा विनश्यन्ति द्विजाऽशुभाः। शिरोग्रीवाकरे चैव कण्ठे चोरोमुखे धरेत्। ध्यायेदच्छिन्नचित्तात्मा पयोभृतेन चात्मना। स्फुरच्छीकरसंस्पर्शप्रभूते हिमगाम्बुभिः। धाराभिरखिलं विश्वमापूर्य्य भुवि चिन्तयेत्। ब्रह्मरन्ध्राच्च संक्षोभाद्यावदाधारमण्डलम्। सुषुम्णान्तर्गतो भूत्वा संपूर्णेन्दुकृताश्रयम्। संप्लाव्य हिमसंस्पर्शतोयेनामृतमूर्त्तिना। क्षुत्पिपासाक्लमप्रायसन्तापपरिपीडितः। धारयेद्वारुणीं मन्त्री तुष्ट्यर्थं चाप्यतन्द्रितः। वारुणी धारणा प्रोक्ता ऐशानीं धारणां शृणु। व्योम्नि ब्रह्ममये पद्मे प्राणापाने क्षयङ्गते। प्रसादं चिन्तयेद्विष्णोर्यावच्चिन्ता क्षयं गता। महातारञ्जपेत् सर्वं ततो व्यापक ईश्वरः। अर्द्धेन्दुं परमं शान्तं निराभासं निरञ्जनम्। असत्यं सत्यमाभाति तावत्सर्वं चराचरम्। यावत् स्वस्वरूपन्तु न दृष्टं गुरुवक्त्रतः। दृष्टे तस्मिन् परे तत्त्वे आब्रह्म सचराचरम्। प्रमातृमानमेयञ्च ध्यानहृत्पद्मकल्पनम्। मातृमोदकवत् सर्वं जपहोमार्चनादिकम्। विष्णुमन्त्रेण वा कुर्य्यादमृतां धारणां धरेत्। संपूर्णेन्दुनिभं ध्यायेत् कमलं तन्त्रिमूर्त्तिकम्। शिरःस्थं चिन्तयेद्यत्नाच्छशाङ्कायुतवर्चसम्। सम्पूर्णमण्डलं व्योम्नि शिवकल्लोलपूरितम्। तथा हृत्कमले ध्यायेत्तन्मध्ये स्वतनुं स्मरेत्। साधको विगतक्लेशो जायते धारणादिभिः"। १७४अ०।

काशीख० ४२ अ० विशेषोऽप्युक्तो यथा

"प्राणायामद्विषट्केन प्रत्याहार उदाहृतः। प्रत्याहारैर्द्वादशभिर्धारणा परिकीर्त्तिता। भवेदीश्वरसङ्गत्यै ध्यानं द्वादशधारणम्" "प्रत्याहारेण सम्पन्नो धारणाञ्च समभ्यसेत्। हृदये पञ्चभूतानां धारणं यत् पृथक् पृथक्। मनसो निश्चलत्वेन धारणा साऽभिधीयते। हरितालनिभां भूमिं लकाराढ्यां समेधसम्। चतुष्कोणां हृदि ध्यायेदेषा स्यात् क्षितिधारणा। कण्ठेऽम्बु तत्त्वमर्द्धेन्दुनिभं विष्णुसमन्वितम्। वकारबीजं कुन्दाभं ध्यायेदम्बु जयेदिति। तालुस्थमिन्द्रगोपाभं त्रिकोणं रेफसंयुतम्। रुद्रेणाधिष्ठितं तेजोध्यात्वा वह्निं जयेदिति। वायुतत्त्वं भ्रुवोर्मध्ये वृत्तमञ्जनसन्निभम्। यं बीजमीशदैवत्यं ध्यायेद्वायुं जयेदिति। आकाशञ्च मरीचिधारसदृशं यद्ब्रह्मरन्ध्रस्थितं यन्नाथेन सदाशिवेन सहितं शान्तं हकाराक्षरम्। प्राणं तत्र विलीय पञ्चघटिकं चित्तान्वितं धारयेदेषा मोक्षकपाटपाटनपटुः प्रोक्ता नभोधारणा। स्तम्भनी प्लावनी चैव शोषणी भ्रामणी तथा। शमनी च भवन्त्येता भूतानां पञ्च धारणाः" ह०सं०उक्ते जयद्रथके वायुविशेषधारणाद्यात्मके ३योगभेदे च "ज्यैष्ठसितेऽष्टम्याद्याश्चत्वारो वायुधारणादिवसाः। मृदुशुभपवनाः शस्ताः स्निग्धघनस्थगितगगनाश्च। तत्रैव स्वात्याद्ये दृष्टे भचतुष्टये क्रमान्मासाः। श्रावणपूर्वा ज्ञेयाः परिस्रुता धारणास्ताः स्युः। यदि ताः स्युरेकरूपाः शुभास्ततः सान्तरास्तु न शिवाय। तस्करभयदाः प्रोक्ताः श्लोकाश्चात्र वासिष्ठाः। सविद्युतः सपृषतः सपांशूत्करमारुताः। सार्कचन्द्रपरिच्छन्ना धारणाः शुभधारणाः। यदा तु विद्युतः श्रेष्ठाः शुभाशाप्रत्युपस्थिताः। तदापि सर्वसस्यानां वृद्धिं ब्रूयाद्विचक्षणः। सपांशुवर्षाः साशाश्च शुभा बालक्रिया अपि। पक्षिणां सुस्वरा वाचः क्रीडा पांशुजलादिषु। रविचन्द्रपरिवेषाः स्निग्धा नात्यन्तदूषिताः। वृष्टिस्तदापि विज्ञेया सर्वसस्याभिवृद्धये। मेघाः स्निग्धाः संहताश्च प्रदक्षिणमतिक्रियाः। तदा स्यान्महती वृष्टिः सर्वसस्यार्थसाधिका" २२अ०।

**धारणी** स्त्री धारि—ल्युट्। १स्थैर्य्ये "शारीरिकधारणी शिथिलात्" दशकु०। २नाडिकायां ३सुतानां मन्त्रभेदे मेदि० ४श्रेण्याम् हेमच०। [पु० राजनि०।

**धारणीय** त्रि० धारि—कर्म्मणि अनीयर्। १धार्य्ये २धरणीकन्दे

**धारणीयन्त्र** न० धार्य्यते धारि—कर्म्मणि अनीयर् कर्म०। धार्य्ये देवताभेदानां यन्त्रभेदे तच्च पूजायन्त्राद्विलक्षणं सारदायां २४ पटले दृश्यम्। तल्लेखनद्रव्यादि तत्रोक्तं यथा "काश्मीररोचनालाक्षामृगमदचन्दनैः। विलिखेद्धेमलेखन्या यन्त्राण्येतानि देशिकः"। निषिद्धयन्त्रमुक्तम् "भूमिस्पृष्टं शवस्पृष्टं दग्धं निर्माल्यसङ्कुलम्। विशीर्णं वह्निक्षतं मन्त्री यन्त्रं जातु न धारयेत्" मन्त्रमहोदधौ १८ तरङ्गे। लेखनप्रकारद्रव्यादिकमुक्तं तत्रैव दृश्यम्। विस्तरभयात् न लिखितं, कर्म्मभेदे सामान्यतो लेखनद्रव्यादिकं २५ तरङ्गे तत्रोक्तं यथा "चन्दनं रोचना रात्रिष्टङ्कधूमश्चितामसः। अङ्गारोऽष्टविधाणीति शान्त्यादौ यन्त्रलेखने। पूर्वोक्तलेखनद्रव्यं स्पृहीयांस्तदपि ध्रुवम्।

पिप्पलं मरिचं शुण्ठी अनेनविहाय चित्रकः। स्वह धूमोन्मत्तरसौ लवणञ्च विमाष्टकम्। शान्तौ वश्ये लिखेद्भूर्जे सम्माने द्वीपिचर्मणि। खरचर्मणि विद्वेषे उच्चाटे ध्वजवाससि। नरास्थनि लिखेद्यन्त्रं मारणे मन्त्रवित्तमः। ये त्वाधाराः स्मृता यन्त्रतन्त्रे तेऽपि सम्मताः"।

**धारय** त्रि० धारि—अच्। धारके "धारयैः कुसुमोर्म्मीणाम्" भट्टिः।

**धारयितृ** त्रि० धारि—तृच्। १धारणकर्त्तरि "त्वं हि धारयिता श्रेष्ठ! कुरूणां कुरुसत्तम!" भा० उ०८४अ०। स्त्रियां ङीप्। सा च २पृथिव्यां स्त्री शब्दरत्ना०।

**धारयिष्णु** त्रि० धृ—णिच् वेदे नि० इष्णुच्। धारणशीले "दृषदः धारयिष्णवः" सि०कौ० लोकेऽपि क्वचित् इष्णुच्। "शास्त्रं प्रज्ञा धृतिर्दाक्ष्यं प्रागल्भ्यं धारयिष्णुता। उत्साहो वाग्मिता दार्ढ्यमापत्क्लेशसहिष्णुता। प्रभावः शुचिता मैत्री त्यागः सत्यं कृतज्ञता। कुलं शीलं दमश्चेति गुणाः सम्पत्तिहेतवः" काम०।

**धारयु** त्रि० धारमभिवर्षमिच्छति क्यच् वेदे० नि० न दीर्घः "क्याच्छन्दसि" पा०उ। १अभिवर्षणकामे "त्वं सोमासि धारयुर्मन्द्रः" ऋ० ६।६७।१ "धारयुरभिवर्षणकामः" भा० धारयुर्धारावान् मत्वर्थीयोयुरिति भाष्ये पक्षान्तरे व्याख्यानात् २धारावति च।

**धारवाक** त्रि० धार्य्यते धारि—कर्मणि अच् धारो धार्य्यो वाकः स्तोत्रं येन। स्तोत्रधारके ऋत्विगादौ "धारवाकेष्वृजुगाथ" ऋ०५।४४।५।

**धारा** स्त्री धार्य्यन्ते अश्वा अत्र अनया वा धारि—अङ्। अश्वानां १गतिभेदे अमरः। अश्वशब्दे दृश्यम् उक्तञ्च "अश्वानान्तु गतिर्धारा विभिन्ना सा च पञ्चधा। आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम्। धौरितं वल्गितं धाराप्लुतमुत्तेजितं क्रमात्। उत्तारितं चेति पञ्च शिक्षयेत् तुरगं गतीः। उत्तेरितोऽतिवेगाख्यो न शृणोति न पश्यति। धौरितं गतिमात्रं वदुयोजितं वल्गितं पुरः। अग्रकायसमुल्लासात् कुञ्चितास्यं नतत्रिकम्। उत्तेजितं मध्यवेगं योजनं श्लथवल्गया। पूर्वापरोन्नमनतः क्रमादुत्तारणं प्लुतम्" अश्वशास्त्रे तु संज्ञान्तरेणोक्ताः। "गतिः पुला चतुष्का च तद्वन्मध्य जवा परा। पूर्णवेगा तथा चान्या पञ्च धाराः प्रकीर्त्तिताः। एकैका त्रिविधा धारा ह्रस्वदीर्घाविधौ मता। ह्रस्वा मध्या तथा दीर्घा मात्रैता योजयेत् क्रमादिति" "धाराः प्रसाधयितुमव्यतिकीर्णरूपाः" माघः। २सैन्याग्रिमस्कन्धे ४अविच्छिन्नसन्तत्या द्रवद्रव्यस्य प्रपाते ५खड्गादेर्निशितमुखे ६पात्राग्रभेदे ७उत्कर्षे च पु० मेदि०। ८यशसि ९अतिवृष्टौ १०समूहे च शब्दरत्ना० ११प्रान्ते १२उत्कर्षे १३रथचक्रे स्त्री हेम०। १४दाक्षिणात्यपुरभेदे स्त्री "विश्वा उत त्वया वयं धारा उदन्या इव" ऋ०२।७।३। "इतश्च धारा उपयन्ति विद्युतः" ऋ० १।१२५।४। "धारां शितां रामपरश्वधस्य" रघुः। "ध्रुवं स नीलोत्पलपत्रधारया शमीलतां छेत्तुमृषिर्व्यवस्यति" शकु०। "धारा जलेन पतिता जलदोदरेभ्यः" सुश्रु०। "तौ कृष्यमाणौ नाराचैर्धाराभिरिव पर्वतौ" रामा० ६।१८अ०। "अथ माहेश्वरीं धारां समाराध्य धराधिपः" भा० व० ८५अ०। "वसोः पवित्रमसि शतधारम्" यजु० १।२ धाराधरशब्दे दृश्यम्। १५जनप्रवादे १६वाचि निरु० इत्या० आद्युदात्तता १७वर्णभेदे पु० धारयुः।

**धाराकदम्ब** पु० धाराकालोपलक्षितः कदम्बः। प्रावृट्काले पुष्पवति कदम्बभेदे हेमच०।

**धारागृह** न० जलधारायुक्तं गृहम्। (फोयारा) जलयन्त्रयुक्ते गृहे "धारागृहेष्वातपदह्निमन्तः" रघुः। "धारागृहे प्रगलितोदकदुर्दिनाभे श्रान्तः शयीत सलिलानिलशीतकुक्षौ" सुश्रुतः।

**धाराङ्कुर** पु० धाराया अङ्कुर इव। १शीकरे २करकाख्ये जलोपले ३नासीरे च मेदि०। [हेमच०

**धाराङ्ग** पु० धारा अङ्गमिवास्य। १खड्गे २तीर्थभेदे च

**धाराट** पुंस्त्री धारायै अटति धारया वा अटति अट—अच्। १चातकखगे २अश्वे च स्त्रियां जातित्वात् ङीष्। ३मेघे पु० च शब्दरत्ना०।

**धाराधर** पु० धारां धरति धृ—अच्। १मेघे २खड्गे च मेदि०। "धाराधर! धरा वारिधारया परिपूर्य्यते। खगचञ्चुपुटद्रोणीपूरणे तव कः श्रमः" चातकाष्टकम्। "प्रत्यग्रहात् प्रहृष्टात्मा धाराधरमिवाचलः" भा० वि० ६४अ० [कमलान्यभ्यवर्षन् मुखानि" मेघ०।

**धारापात** पु० ६त०। जलधारायाः पतने। "धारापातैस्त्वमिव

**धारापूप** न० धाराख्यम् अपूपम्। अपूपभेदे "घृतमिश्रा कणिक्या या दुग्धेनालोडिता तु सा। धाराख्यापूपकं स्थाल्यां पक्वं यत्नेन योजयेत्। धारापूपं सुमधुरं वृष्यं पित्तहरं परम्। स्निग्धं रोचनं हृद्यमत्यर्थं वातनाशनम्" भावप्र०।

**धाराफल** पु॰ धारा इवासिधारेव फलेऽस्य। मदनवृक्षे राजनि॰

**धारायन्त्र** न॰ धारया जलधारायाः प्रस्रवार्थं यन्त्रम्। (फोयारा) इति ख्याते जलप्रस्रवयन्त्रभेदे "धारायन्त्र-जलाभिषेककलुषे धौताञ्जने लोचने" अमरुशतकम्।

**धाराल** त्रि॰ धारा अस्त्यस्य सिध्मा॰ लच्। धारायुक्ते खड्गादौ

**धारावनि** स्त्री धाराया अवनिरिव। वायौ त्रिका॰। पर-वल्लिङ्गत्वात् स्त्रीत्वमेव युक्तं पुंस्त्वोक्तिः प्रामादिकी।

**धाराधर** पु॰ धारया जलधारया आढ्योऽस्याकाशस्य इ-अच् ३त॰। मेघे "धाराधरा भक्तौ च्युत्योजसः" ऋ॰ २।२४।१।

**धारावर्ष** पु॰ धारया सन्तत्या अविच्छेदेन वर्षः। अविच्छेदेन वर्षणे। "सधारावर्षदुर्दिनम्" रघुः।

**धारावाहिन्** त्रि॰ धारया सन्तत्या वहति वह—णिनि। १सन्तत्या पातुके क्रमेणाविच्छेदेन २जायमाने च। स्वार्थे क। धारावाहिकोऽप्यत्रार्थे "किन्तु सिद्धान्ते धारावा-हिकबुद्धिस्थले न ज्ञानभेदः" वेदान्तप॰।

**धाराविष** पु॰ धारायां विषमस्य धारेव विषमस्य प्राणहारक-त्वात् वा। खड्गे त्रिका॰। [ च्छिन्नवर्षणे अमरः।

**धारासम्पात** पु॰ धारायाः सम्यक् पातः। मुहावृष्टौ अवि-

**धारास्नुही** स्त्री धारायुता स्नुही शाकत॰। त्रिधारायां स्नुह्याम् (तेकाँटा सिजु)। राजनि॰।

**धारिन्** पु॰ धृ-णिनि। १पीलुवृक्षे। २धारणकर्त्तरि। जटाधरः। ३प्रन्थार्थधारणायुक्ते च त्रि॰ "अज्ञेभ्यो ग्र-न्थिनः श्रेष्ठाग्रन्थिभ्यो धारिणो वराः" मनुः। स्त्रियां ङीप्। सा च ४धरण्यां शब्दर॰। ५मानभेदे स्त्री शब्दच॰। धार वृणमस्त्यस्य गोत्वातेन इनि। ६ऋण-वति त्रि॰ स्त्रियां ङीप्।

**धारु** त्रि॰ धेट—रु। पानशीले जटाधरः।

**धारेश्वरी** स्त्री धाराख्यपुर्य्यां ईश्वरी। धारापुरीस्थे देवीभेदे

**धारोष्ण** न॰ धारायां दोहनेन निर्गमकाले उष्णम्। "दो-हनेनोष्णधारया सद्यः पतिते दुग्धे। "धारोष्णन्त्वमृतं पयो भ्रमहरं निद्राकरं कान्तिदं वृष्यं बृंहणमग्नि-वर्द्धनमतिस्वादु त्रिदोषापहमिति" राजनि॰।

**धार्त्तराज्ञ** पुंस्त्री धृतराज्ञोऽपत्यम् अण् उपधालोपः। धृतराज्ञापत्ये स्त्रियां ङीप्।

**धार्त्तराष्ट्र** पुंस्त्री धृतराष्ट्रस्यापत्यम् अण्। १दुर्य्योधनादौ २दुःशलायां स्त्री ङीप्। ३धृतराष्ट्रसर्पवंशोद्भवे नागभेदे पु॰ स्त्री। धृतराष्ट्रे सुराजदेशे भवः अण्। ४कृष्णवर्णचञ्चुचरण-युते श्वेतवर्णे हंसभेदे पु॰स्त्री (गँड़ोहाँस) अमरः सर्व्वतः स्त्रियां ङीप्। "सम्पृक्ता मधुरगिरः प्रसाधिताशा मदोद्धता-रब्धाः। निपतन्ति धार्त्तराष्ट्राः कालवशान्मेदिनीपृष्ठे" वेण्याम्। अत्र "शरत्समयवर्णनाशंसया हंसा धार्त्तराष्ट्रा इति व्यपदिश्यन्ते" वेणी॰ दुर्य्योधनादयस्तत्र व्यङ्ग्यार्थाः। "धृतराष्ट्रस्य पुत्राणामानुपूर्व्येण कीर्त्तय" इति जनमेजयप्रश्ने "दुर्य्योधनो युयुत्सुश्च व्याद्युपक्रमे" "वैश्यापुत्रो युयुत्सुश्च धार्त्तराष्ट्रः शताधिकः। एतदेकशतं राजन्! कन्या चैका प्रकीर्त्तिता" भा॰आ॰६७अ॰। उक्तेस्तेषां तत्त्वमत्वम्।

**धार्त्तराष्ट्रपदी** स्त्री धार्त्तराष्ट्रस्य हंसभेदस्य पाद इव मूल-मस्याः अन्तलोपे कुम्भप॰ ङीषि पद्भावः। हंसपदी-लतायां राजनि॰।

**धार्त्तेय** पुंस्त्री धृताया अपत्यम् "इतश्च" पा॰ ढक्। धृताया अपत्ये स्त्रियां ङीप्। ततः यौधेयादि॰ स्वार्थे अञ्। तत्रार्थे

**धार्म्म** त्रि॰ धर्मस्येदम् अण्। १धर्मसम्बन्धिनि स्त्रियां ङीप् "धार्म्मीं तनुरविश्वसिनी" भा॰ आ॰ ६॰ अ॰। प्राज्ञत्वे अण्। २धर्ममये च। "यश्चायमस्मिन् धर्मे तेजो-मयोऽमृतमयः पुरुषो यश्चायमध्यात्मं धार्म्मस्तेजोमयो-ऽमृतमयः पुरुषः" शत॰ ब्रा॰ १४।५।५।११।

**धार्म्मपत** त्रि॰ धर्मपतेरपत्यादि अश्वपत्या॰ अण्। १धर्मपति-सम्बन्धिनि स्त्रियां ङीप्। [गन्धद्रव्ये न॰ हेमच॰।

**धार्म्मपत्तन** त्रि॰ तत्र भवः अण्। १धर्मपत्तनभवे २मरीचे

**धार्म्मिक** त्रि॰ धर्मं वेद तच्छास्त्रमधीते वा धर्मं चरति आ-सेवते वा ठक्। १धर्मशीले २धर्मसेवके। "चरणनिकायसेवा तेन दैवयोगात् धर्मे प्रवृत्तोऽपि दुष्टो न धार्मिक इति" श्रि॰को॰। "विभागशीलो यो नित्यं क्षमायुक्तो दया-परः। देवतातिथिभक्तश्च स्वगृहस्थः स तु धार्मिकः" इति दर्शोक्तलक्षणयुक्तस्यैव धार्मिकपदवाच्यत्वनिर्णयः। "आ-चार्य्यपुत्रः १शुश्रूषुः २ज्ञानदो३धार्मिकः४ शुचिः ५आप्तः ६शक्तो७ऽर्थदः ८साधुः स्वो१॰ऽध्याप्या दश धर्मतः" मनुः। ततः पुरोहिता॰ भावे यक्। धार्मिक्य धर्मानुशीलने न॰।

**धार्म्मिण** न॰ धर्मिणां समूहः भिक्षादिगणे धर्मन् धर्मिन् इति पाठान्तरस्य सत्त्वात् अण् "इनण्यनपत्ये" पा॰ इनः प्रकृतिभावे न नलोपः। धर्मवतां समूहे।

**धार्म्मिणेय** पुंस्त्री धर्मिण्याः अपत्यम् शुभ्रा॰ ढक्। धर्मिण्याः अपत्ये स्त्रियां ङीप्।

**धार्म्यायण** पुंस्त्री धर्म्यस्य गोत्रापत्यम् अश्वा॰ फञ्। धर्म्यस्य गोत्रापत्ये स्त्रियां गोत्रत्वेन जातित्वात् ङीष्।

**धार्य्य** त्रि० धारि–ण्यत् । धारणीये "धार्य्यः कथङ्कारमहं भवत्या वियद्विहारी वसुधैकगत्या" नैष० । "कार्य्यञ्च तस्य दशधा ह्यार्य्यं धार्य्यं प्रकाश्यञ्च" सा० का० "एवं धार्य्यम् अभ्यन्तःकरणादित्रिकस्य प्राणादिलक्षणया वृत्त्या शरीरं तच्च पार्थिवादि पाञ्चभौतिकं शब्दादीनां पञ्चानां समूहः पृथिवीति ते च पञ्च दिव्यादिव्यतया दशेति धार्य्यमपि दशधा" सा० कौ० ।

**धार्ष्ट्य** न० धृष्टस्य भावः कर्म वा ष्यञ् । प्रागल्भ्ये निर्लज्जत्वे । "धार्ष्ट्यमेतत्तयोर्विप्र ! मत्तो यत्तु करग्रहः । अहो धार्ष्ट्यमहो धार्ष्ट्यं तयोः क्षत्रियवीरयोः" हरिवं० १०६ अ० ।

**धार्ष्टक** न० धृष्णोरपत्यस्य पुत्रभेदे "धृष्णोस्तु धार्ष्टकं क्षत्रं रणे धृष्टं बभूव ह" हरिवं० ११ अ० ।

**धाव** जवे शुद्धौ अक० शुद्धीकरणे संमार्जने च सक० भ्वा० उभ० सेट् । स्वरितेत् पा० । धावति धावते अधावीत् अधाविष्ट दधाव–वे । सार्वधातुके परतः वेगगतौ ऋच्छादेशस्तु पर० । अनेनैवोपपत्तौ तदादेशविधानं वेगगतौ सरतेः सार्वधातुके प्रयोगवारणार्थं शब्दस्तोमे आत्मनेपदत्वोक्तिः कुद्रादोषात् । "गच्छति पुरःशरीरं धावति पश्चादसंस्थितं चेतः" शकु० । "रेतः सिक्तमधावत्" ऐ०ब्रा० । "अधावीच्चारिसंसदम्" भट्टिः । "यथा पराञ्चं धावन्तमनुविपसेत" शत०ब्रा०१।२।१।२६ । "दिवस्पृष्ठे धावमानं सुपर्णम्" अथ०१३।२।३७ "सततं धावमानस्य चिन्तमानो विश्राम्यते !" भा० व० १८८ अ० । जवे अस्य न उदित्त्वम् तेन धावित्वा धावित इत्यादि "दिशश्चतस्रः सहसा प्रधाविताः" भा० श० २० अ० । "वनान्तरे तोयमिति प्रधाविताः" । ऋतुसं० अन्यत्वार्थे उदित् धावित्वा धौत्वा धौत इत्यादि । "बाह्योद्यानस्थित-हरशिरश्चन्द्रिकाधौतहर्म्या" "धौतापाङ्गं हरशशि-रुचा" मेघ० । "तुषारस्रुतिधौतरक्तम्" कुमा० । प्राद्युपसर्गपूर्वकस्तु तत्तदुपसर्गद्योतार्थयुक्ते धावने ।

**धावक** पु० धावति वस्त्रादिकं मार्ष्टि धाव–ण्वुल् । १रजके २वस्त्रादिप्रक्षालके ३शीघ्रगामिनि (धावड़िया) च त्रि० ४नागानन्दरत्नावलीकारके कविभेदे पु० "श्रीहर्षादेर्धावकादीनामिव धनम्" काव्यप्र० । "प्रथितयशसां धावकसौमिल्ल कविपुत्रादीनां प्रबन्धानतिक्रम्येति" मालविकाग्निमित्रम् ।

**धावन** न० धाव–भावे ल्युट् । १शीघ्रगमने २प्रक्षालने च । "शरणादिहितस्तत्र धावने पूरणे तथा" सुश्रुतः । "उच्छिष्टेनैव मुञ्जीयां न कुर्य्यात् पादधावनम्" भा० व० ६५ अ० ।

**धावनि** स्त्री धाव–अनि । १पृश्निपर्ण्याम् अमरः । २कण्टकार्य्यां राजनि० । स्वार्थे क धावनिका तत्रार्थे रत्नमा० वा ङीप् । धावनी तयोरर्थयोः मेदि० २धातक्यां राजनि०

**धासस्** पु० धा–"वहिहाधाञ्भ्यश्छन्दसि" उणा० असुन् "पचिवचिभ्यां सुट् च" उणा० सुटोऽनुवृत्तिः उज्ज्वलदत्तः माधवस्तु "वसेर्णित्" उणा० इत्यतो णितोऽनुवृत्तिमाह न सुट् इति भेदः तेन तन्मते धासाः इत्येव । धायसुशब्दे दृश्यम् । पर्वते उज्ज्वलदत्तः ।

**धासि** पु० धारयति प्राण्यान् धा–वा असि । अन्ने निघ० "उद्भिदा दुदुहे भूरि धासेः" ऋ०२।५।७।१ "धासेरन्नस्य" भा० "मह्नी मित्रस्य वरुणस्य धासिम्" १०।१०।१ ।

**धि** धृतौ तु०पर०सक०अनिट् । धियति अधैषीत् । दिधाय ।

**धिक्** अव्य० धक्क–नाशने धा–धारणे वा बा० डिकन् । १अपकारशब्दे भर्त्सनोत्पादने २निर्भर्त्सने ३निन्दायाञ्च । एतद्योगे निन्दाविषयवाचकशब्दात् द्वितीया । "धिक् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा" सा० द० । "धिगस्तु तृष्णातरलं भवन्मनः" नैष० । निन्दनीयपरत्वे न द्वितीया किन्तु प्रथमैव । "धिङ्माता मम कैकेयी यया पापमिदं कृतम्" रामा० अयो० ८२ स० ।

**धिक्कृ** धिक्+निन्दने कृ–करणे भादिस० उभ० सक०अनिट् । धिक्करोति धिगकार्षीत् धिक्चकार । धिक्कृतः (तिरस्कृतः) धिक्कारः धिक्क्रिया इत्यादि ।

**धिक्ष** सन्दीपने सक० क्लेशे जीवने अक० भ्वा० आत्म० सेट् । धिक्षते अधिक्षिष्ट दिधिक्षे ।

**धिग्दण्ड** पु० धिगिति दण्डः । निर्भर्त्सनरूपे दण्डे "वाग्दण्डं प्रथमं कुर्य्यात् धिग्दण्डं तदनन्तरम्" मनुः ।

**धिग्वण** पुंस्त्री मनूक्ते सङ्कीर्णजातिभेदे "ब्राह्मणादुग्रकन्यायामावृतो नाम जायते । आभीरोऽम्बष्ठकन्यायामायोगव्यान्तु धिग्वणः" मनुः । "शूद्रेण वैश्यायामुत्पन्ना आयोगवी तस्यां ब्राह्मणाद्धिग्वणो जायते" कुल्लू० । "धिग्वणानां चर्म कार्य्यं वेणानां भाण्डवादनम्" मनुना तद्वृत्तिरुक्ता ।

**धित** त्रि० धा–क्त छान्दसो न हिः । हिते निहिते । "सुष्टीवानं धितावानम्" ऋ० ३।२७। २धृते च ।

**धिति** स्त्री धि–धृतौ क्तिन् । धारणे

**धिप्सु** त्रि०दन्भ–सन् इडभावपक्षे "दम्भ इच्च अभ्यासलोपः" ततः उ । दम्भितुमिच्छौ वञ्चयितुमिच्छौ "भूयस्तं धिप्सुमाहूय राजपुत्रं दिदम्भिषुः" भट्टिः ।

**धियसान** त्रि० धि—धारणे वेदे बा० असानच् किच्च । धारके "स त्वं न इन्द्र धियसानः" ऋ०५।३३।२ "धियसानः धारयन्" भा० ।

**धियाम्पति** पु० ६त० अलुक्समा० । बृहस्पतौ त्रिका० ।

**धियायत्** त्रि० ई—कान्तौ (इच्छायाम्) शतृ यम् ३त० छान्दसः अलुक्समा० । कर्मेच्छ इच्छति "एव पुरू धियायते बृहते देवतातये" ऋ० ८।९५।२ "धियायते कर्म इच्छते द्वितीयार्थे तृतीयायाः छान्दसोऽलुक्" भा० ।

**धियायु** त्रि० धि—धारणे धीयते ज्ञायते अनया धि—बा० करणे क्विप् धिया तां प्रज्ञामात्मनः इच्छति क्यच् "क्याच्छन्दसि" पा० उ । आत्मनः प्रज्ञाकामयीके । "विप्रासो वा धियायवः" ऋ० १।८।६ ।

**धियावसु** त्रि० धिया कर्मणा वसु यस्मात् वेदे अलुक्स० । कर्मणा वसुनिमित्ते देवभेदे सरस्वतीरूपा देवतैव धियावसुः । "यज्ञं वष्टु धियावसुः" ऋ०१।३।१० "कर्महेतुधननिमित्तम् तावा वाग्देवतायास्तथाविधं धननिमित्तत्वमारण्यकाण्डे "वाग्वै धियावसुः" स्तुत्या आम्नातम्" भा० ।

**धिव** प्रीणने गतौ च सक० स्वा० पर० सेट् इदित् । सार्वधातुके धिः आदेशः । धिनोति अधिन्वीत् दिधिन्व । इदित् धिन्व्यते । "धान्यमसि धिनुहि देवान्" यजु०१।२० "भगीरथस्य रुधिरैर्धिनोमि" प्रबोधच० । "धिनोति नाचान् जलजैन पूजा" नैष० ।

**धिष** रवे जु० पर० सक० सेट् । दिधेष्टि अधेषीत् दिधेष । वैदिकोऽयम् । "स्तरीभिरिद्धि धिषा वेत्ति जनान्" ऋ० १।१७३।८ "धिषा यदि धिषण्यन्तः सरण्यान्सदन्तो अद्रिमौशिजस्य गोहे" ऋ० ४।२१।६ ।

**धिषण** पु० धृष्णोति धृष—"धृषेधिष च संज्ञायाम्" उणा० क्यु । १बृहस्पतौ । धृष्णोत्यनया करणे ल्यु । २बुद्धौ स्त्री अमरः "पराय धिषणाय्यः" ऋ० ८।५६।२ । "आर्य्यपुत्रार्य्यधिषण ! प्राणनाथ ! शुभव्रत" काशीख० १० अ० । ३स्तुतौ ४वाचि ५पृथिव्याञ्च निघ० ६स्थाने च "तदा विकुण्ठधिषणास्तयोर्निपतमानयोः" भाग० ३।१६।३१ । "ये पारमेष्ठ्यं धिषणमधितिष्ठन्न कञ्चन प्रत्युत्तिष्ठेदिति ब्रूयुर्धर्मं ते न परं विदुः" भाग०६।७।१२ ।

**धिषणाधिप** पु० ६त० । १वाक्पतौ सुराचार्य्ये मत्स्यपु० ।

**धिषण्य** धिषणामिच्छति क्यच् छान्दसदीर्घाभावेऽल्लोपः आत्मनःस्तुतीच्छौ अक०प०सेट् । धिषण्यति अधिषण्यीत् "धिषा यदि धिषण्यन्तः" ऋ०४।२१।६

**धिष्ण्य** न० धिष—अघ्न्या० नि० । धिष्ण्यशब्दार्थे शब्दर० ।

**धिष्ण्य** न० धिष—"सानसिधर्णसीत्यादि" उणा० नि० । १स्थाने २गृहे ३नक्षत्रे च अमरः ४अग्नौ ५शक्तौ च पु० मेदि० । ६शुक्राचार्य्ये । तत्र स्थाने "न भौमान्येव धिष्ण्यानि हित्वा ज्योतिर्मयान्यपि" रघुः । "स्वर्गे लोके स्वतां नास्ति धिष्ण्यम्" भा० मह्रा० २ अ० । नक्षत्रे "भवन्त्यतीतधिष्ण्यानां भोगलिप्तायुता ध्रुवाः" सू०सि० । ७प्राणाभिमानिदेवे च "देवा जघिरे धिष्ण्या ये" ऋ०१।२२।१ "धिष्ण्यं बहुप्रकृतं देवस्थानि उपाकुर्वन्ति धिषणाः प्राणाभिमानिनो देवाः धृष—टाहे "सानसिधर्णसीत्यादि" उणा० नि० यत् णुडागमः धात्वादिलोपोपपदस्तत्वाः" भा० धिष्ण्यं स्थानमर्हति यत् यलोपाल्लोपौ । तत्स्थानार्हे तुल्ये त्रि० । "को धिष्ण्यां प्रति वाचं पपाद" ऋ०१०।११४।८ "धिषणार्हे स्तुत्यर्हे" भा० तुल्यस्य स्थानार्हत्वात् तथात्वम् । "आविवासन् रोदसी धिष्ण्ये मे" ऋ० ७।७२।३ । "रोदसी धिष्ण्ये धिषणार्हे स्तुत्ये" भा० । धृष—टाहे इति धात्वर्थानुगमात् । १०उल्काभेदे स्त्री वृ० स० ३२अ० "दिवि भुक्तशुभफलानां पततां रूपाणि यानि तान्युल्काः । धिष्ण्योल्काशनिविद्युत्तारा इति पञ्चधा भिन्नाः" । "उल्का पक्षेण फलं तद्वद्धिष्ण्याशनिस्त्रिभिः पक्षैः" । "तारा फलपादकरी फलार्धदात्री प्रकीर्त्तिता धिष्ण्या" सा च "धिष्ण्या कृशाल्पपुच्छा धनूंषि दश दृश्यतेऽन्तराभ्यधिकम् । ज्वलिताङ्गारनिकाशा द्वौ हस्तौ सा प्रमाणेन" कथिता ।

**धी** अनादरे आराधने च दिवा० आत्म० सक० अनिट् । धीयते अधेष्ट । दिध्ये ओदित् धीनः । "सत्यं परं धीमहि" भाग०१।१।१ कातन्त्रमतेऽस्य ओदित्त्वं नास्ति धीत इति । वेदे तु न ओदित् "धीतः विश्वान्यश्विना युवं प्रधीतान्यमच्छम्" ऋ०८।८।१० "सन्धीयते संधीतमनुतम्" ८।४०।३ आधारे अक०इत्यन्ये ।

**धी** स्त्री ध्यै सम्प० भावे—क्विप् संप्रसारणञ्च । १बुद्धौ ज्ञाने अमरः । "प्रसीद कथयात्मानं न धियां पथि । वर्त्तसे" कुमा० । २मानसवृत्तिभेदे "तत्राज्ञानं धिया नश्येदाभासात्तु घटः स्फुरेत्" वेदान्त० "धियो योनः प्रचोदयात्" गायत्री सा च न्यायनये आत्मवृत्तिः । "बुद्ध्यादि षट्कं संख्यादिपञ्चकं भावना तथा । धर्माधर्मौ गुणा एते आत्मनः स्युश्चतुर्दश" भाषा० । वेदान्तमते

मनोवृत्तिः । "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" श्रुतिः । ४कर्मणि च "उषः स धियावसुदश्वनः" ऋ० ५।११।१६। "धियां कर्मणाम्" भा० "धीभिश्च न मनसा स्वेभिरक्षभिः" ऋ० १।१२९।२ ५मनसि च "धीजवनोऽसि सोम !" ऋ० ९।८८।३ "धीजवनः मनोवेगः" भा० धीगुणशब्दे दृश्यम् ।

**धीक्ष** दीप्त्यर्थे भ्वा०आत्म०सक०सेट् । धीक्षते अधीक्षिष्ट दिधीक्षे "स वै धीक्षते वाचे हि धीक्षते यज्ञाय हि धीक्षते यज्ञो हि वाग् धीक्षितो ह वै नामैतद्यद्दीक्षते" शत०३।२।२३। अयञ्च वैदिकः दीक्षसमानार्थकः । लोके तु दीक्षतेइत्यादि

**धीगुण** पु० ६त० । "शुश्रूषा श्रवणञ्चैव ग्रहणं धारणं तथा । ऊहापोहार्थविज्ञानं तत्त्वज्ञानं च धीगुणाः" कामन्दकोक्तेषु अष्टसु बुद्धिधर्मेषु "धियां समस्तैः स गुणैरुदारधीः" रघुः ।

**धीत** त्रि० धे—क्त । १पीते धी—क्त । धीमः लोके । वेदे तु धीतः । २अनादृते ३आराधिते च त्रि० ।

**धीति** स्त्री धे—क्तिन् । १पाने २पिपासायां हेमच० । ३अनादरे ४आराधने च ५अङ्गुलौ निघ० । "तमीं हिन्वन्ति धीतयो दश व्रिशः" ऋ०१।१४४।५ "धीतयो दशसंख्यका अङ्गुलयः" भा० । "धीतिरुक्थाय शस्यते" ऋ० १।११०।१

**धीदा** स्त्री धियं ददाति दा—क । १मनीषायां २कन्यायां हेम० ३बुद्धिदायके त्रि० । [२१५१ पृ० दृश्यम् ।

**धीन्द्रिय** न० धीजनकमिन्द्रियम् । श्रोत्रादौ ज्ञानेन्द्रियशब्दे

**धीमत्** पु० धीः प्रज्ञाऽस्त्यस्य मतुप् । १वृहस्पतौ २बुद्धिमति पण्डितादौ त्रि० । "स्वायम्भुवो मनुर्धीमानिदं शास्त्रमकल्पयत्" मनुः स्त्रियां ङीप् । [पृ०दृश्यम् ।

**धीर** अवज्ञायाम् नित्यमवपूर्वकोऽयम् अवधीरवत् तच्छब्दे ४२७

**धीर** त्रि० धियं राति रा—क । धियमीरयति ईर—अण् वा उप०स० । १पण्डिते २धैर्य्यान्विते अचञ्चले ३स्वैरे मेदि० । ४बलयुते शब्दर० । ५मन्द्रे त्रिका० ६विनीते संक्षिप्त० । ७कुङ्कुमे न०मेदि० । ८ऋषभौषधौ पु० राजनि० । ९बलिराजे पु०शब्दच० । १०चिदाभासद्वारा बुद्धिवृत्तिप्रेरके चिदात्मनि पु० । ११मनोहरे त्रि० "धीरसमीरे यमुनातीरे वसति वने वनमाली" गीतगो० "प्रत्यग्रमन्द्राम्बुदधीरनादः" माघः । "मृदङ्गधीरध्वनिमन्वगच्छत्" रघुः । "अवोचदेनं गगनस्पृशा रघुः स्वरेण धीरेण निवर्तयन्निव" रघुः । तत्र पण्डिते "धीरैर्धीरोद्धतः कथितः" सा० द० । "सोपधानाम्धियं धीराः स्थेयसीं खट्टयन्ति ये" माघः । १२काकोल्यां १३महाज्योतिष्मत्यां स्त्री राजनि० १४मानयुतायां मध्यायां प्रगल्भायां च नायिकायां स्त्री । तल्लक्षणभेदादिकं रसमञ्जर्य्यामुक्तं यथा

"मध्याप्रगल्भे मानावस्थायां प्रत्येकं त्रिविधे धीरा अधीरा धीराधीरा च व्यङ्ग्यकोपप्रकाशिका धीरा । अव्यङ्ग्यकोपप्रकाशिका अधीरा । व्यङ्ग्याव्यङ्ग्यकोपप्रकाशिका धीराधीरा । इयांस्तु विशेषः । मध्याया-धीरायाः कोपस्य गीर्व्यञ्जिका । अधीरायाः परुषवाक् । धीराधीरायास्तु वदनरुदिते कोपप्रकाशके । प्रौढाया धीरायास्तु रत्यौदास्यम् । अधीरायास्तु तर्जनताडनादिः । धीराधीरायास्तु रत्यौदास्यतर्जनताडनादि च कोपस्य प्रकाशकम् । अयं धीराभेदः स्वीयायामेव न तु परकीयायामिति प्राचीनलिखनम् तदाज्ञानात् धीरत्वमधीरत्वं तदुभयं वा माननियतं परकीयाया अपि मानश्चेत्तस्यावश्यकम् । मानस्तु स्वीयायामेव न तु परकीयाया इति वक्तुं न शक्यते" ।

साहित्यदर्पणे तु अन्यथोक्तम् यथा

"ते धीरा चाप्यधीरा च धीराधीरेति षड्विधे" ते मध्याप्रगल्भे तत्र । "प्रियं सोत्प्रासवक्रोक्त्या मध्या धीरा दहेद्रुषा । धीराधीरा तु रुदितैरधीरा परुषोक्तिभिः । तत्र मध्याधीरा यथा "तदवितथमवादीर्यन्मम त्वं प्रियेति प्रियजनपरिभुक्तं यद्दुकूलं दधानः । मदधिवसतिमागाः, कामिनां मण्डनश्रीर्व्रजति हि सफलत्वं वल्लभालोकनेन" । प्रगल्भा यदि धीरा छन्नकोपाकृतिस्तदा । उदास्ते सुरते तत्र दर्शयन्त्यादरान् बहिः । तत्र प्रिये । "एकत्रासनसंस्थितिः परिहृता प्रत्युद्गमाद्दूरतस्ताम्बूलानयनच्छलेन रभसाऽऽश्लेषो संविघ्नितः । आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्यान्तिके कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः" । प्रत्येकं ता अपि द्विधा । कनिष्ठाज्येष्ठारूपत्वान्नायकप्रणयं प्रति" ।

**धीरता** स्त्री धीरस्य भावः । १अचाञ्चल्ये २धैर्य्ये ३पाण्डित्ये च "सहजामप्यपहाय धीरताम्" रघुः । "प्रत्यादेशान्न खलु भवतो धीरतां तर्कयामि" मेघ० । त्वधीरत्व तत्रार्थे न० तत्र नायकयोर्गुणभेदे । "प्रागल्भ्यौदार्य्यमाधुर्य्यं शोभा धीरत्वकान्तयः । दीप्तिश्चायत्नजाभावहावहेलाः स्त्रियोऽङ्गजाः । अलङ्काराश्च तत्र भावहावहेलास्त्रयोऽङ्गजाः ।

शोभा कान्तिश्च दीप्तिश्च माधुर्यञ्च प्रगल्भता। औदार्यं धैर्यमित्येते सप्तैव स्युरयत्नजाः। पूर्वं भावादयो धैर्यान्ता इव नायकानामपि सम्भवन्ति किन्तु सर्वेऽप्यमी नायिकाश्रिता एव विच्छित्तिविशेषं पुष्णन्ति" तल्लक्षणमुदाहरणं च तत्रैव। "मुक्तात्मश्लाघना धैर्यं मनोवृत्तिरचञ्चला। यथा "ज्वलतु गगने रात्रौ रात्राव खण्डकलः शशी दहतु मदनः किं वा मृत्योः परेण विधास्यति। मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया कुलममलिनं न त्वेवायं जनो न च जीवितम्"

**धीरपत्री** स्त्री धीरं मनोहरं पत्रमस्याः ङीप्। १धरणीकन्दे राजनि॰ २मनोहरपत्रयुक्ते त्रि॰ स्त्रियां टाप्।

**धीरप्रशान्त** पु॰ "सामान्यगुणैर्भूयान् द्विजादिको धीरप्रशान्तः स्यात्" सा॰ द॰ लक्षिते नायकभेदे यथा मालतीमाधवादौ माधवादिः।

**धीरललित** पु॰ "निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यात्" सा॰ द॰ १लक्षिते नायकभेदे यथा रत्नावल्यादौ वत्सराजादि। २षोडशाक्षरपादके छन्दोभेदे स्त्री "संकथिता भरौ नरनगाश्च धीरललिता" इ॰ र॰ टी॰।

**धीरस्कन्ध** पुंस्त्री धीरः अचञ्चलः स्कन्धोऽवयवोऽस्य। महिषे हेमच॰।

**धीराधीरा** स्त्री "धीराधीरा (मध्या) तु रुदितैरधीरा परुषोक्तिभिः" "धीराधीरा (प्रगल्भा) तु सोल्लुण्ठभाषितैः खेदयेदमुम्" सा॰ द॰ उक्ते नायिकाभेदे अमुं नायकम् यथा "अनलङ्कृतोऽपि सुन्दर! हरसि मनो मे यतः प्रसभम्। किं पुनरलङ्कृतस्त्वं संप्रति नखरक्षतैस्तस्याः"। [ यथाहुस्ते नैवष्टुपार॰।

**धीरावी** स्त्री धीरमवति अव–प्रीणने अण् ङीप्। शिं-

**धीरोदात्त** पु॰ "अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः। स्थेयान् निगूढमानो धीरोदात्तो दृढव्रतः कथितः" सा॰ द॰ लक्षिते नायकभेदे "अविकत्थनोऽनात्मश्लाघाकरः महासत्त्वो हर्षशोकाद्यनभिभूतस्वभावः। निगूढमानो विनयच्छन्नगर्वः। दृढव्रतोऽङ्गीकृतनिर्वाहकः" सा॰ द॰ यथा रामयुधिष्ठिरादि।

**धीरोद्धत** पु॰ "मायापरः प्रचण्डश्चपलोऽहङ्कारदर्पभूयिष्ठः। आत्मश्लाघानिरतो धीरैर्धीरोद्धतः कथितः" सा॰ द॰ लक्षिते १नायकभेदे यथा भीमसेनादिः। कर्म॰ २धैर्यान्वितोद्धते च "धीरोद्धतः पापकारी व्यसनी प्रतिनायकः" सा॰ द॰

**धीरोष्णिन्** विश्वदेवभेदे। "मैत्रामः प्रमत्तक्रोधी धीरोष्णी भूपतिस्तथा" भा॰ अनु॰ ८१ अ॰। विश्वदेवनामोक्तौ

**धीर्य** त्रि॰ धीरे भवः "भवे छन्दसीति" पा॰ यत्। कातरे माधवः "शाक्या चिदसवो धीर्याः" ऋ॰ २।२७।११। "धीर्याः कातराः" इति भाष्यम्।

**धीलटि** स्त्री लट–बाल्योक्तौ इन् धिया कर्मणा लटिः। कर्मणा बाल्योक्तियुतायाम्। दुहितरि हारा॰।

**धीवत्** त्रि॰ धीरस्त्यस्य मतुप् वेदे मस्य वः। बुद्धियुक्ते "धीवतो धीवतः सखा" ऋ॰ ६।४५।२ "धिया धीवन्तो असपन्त तृत्सवः" ऋ॰ ७।८३।८।

**धीवन्** त्रि॰ ध्यै–कनिप् संप्रसारणम्। १ध्यानयुक्ते २कर्मयुते उणादिकोषः। स्त्रियां "वनो र च" पा॰ ङीप् रश्चान्तादेशः। धीवरी बहुव्रीहौ ङीप् रश्च वा। बहुधीवरी बहुधीवा।

**धीवर** पुंस्त्री दधाति मत्स्यान् छित्वरेत्यादिना नि॰। १कैवर्ते २तज्जात्यां स्त्री ङीप्। सा च बुद्धिकर्मभ्यां युतस्त्रियाम् धीवरशब्दे दृश्यम्।

**धीशक्ति** स्त्री ६त॰ बुद्धेर्गुणे अमरः धीगुणशब्दे दृश्यम्।

**धीसचिव** पु॰ धियि बुद्धौ मन्त्रणादौ सचिवः धीप्रधानः सचीवो वा शाक॰। मन्त्रणानिपुणे मन्त्रिणि धीसखा धीसहायादयोऽप्यत्र।

**धु** कम्पने सक॰ चालने सक॰ स्वादि॰ उभ॰ अनिट्। धुनोति धुनुते परस्मैपदिनि इट् लग्न॰। अधावीत् पा॰ निट् दुधाव दुधुविव दुधोथ दुधुविव दुधुवे। धोष्यति "धूनोति चम्पकवनानि धुनोत्यशोकम्" कविरहस्यम्। अयं दीर्घान्तोऽपि च वेट् प॰ सिचि नित्येट् पा॰ अधावीत् अधविष्ट अधोष्ट क्रादिनियमात् लिति किति नित्यमिट् दुधुविव। थलि तु दुधविथ दुधोथ। धविष्यति ते धोष्यति ते। उभयोः प्र(धु)तः। "धुन्वन् सर्वपथीनं खे वितानं पक्षयोरसौ" "तानधावीत् समाक्रुद्धान्" भट्टिः। "व्यघं धुन्वन्ति कार्ट्स्न्येन" भाग॰ ६।१।१५। णिचि धावयति दीर्घान्तस्य धूनयति "आ धेनवो धुनयन्तामशिश्वीः" ऋ॰ ३।५५।१६। "तुलस्थान्तरः" भा॰ "नितम्बनारीपरिधानधूननस्फुटावसाद्य दृश्य कोकनस्थुः" माघः। दोधूयते तत्र कम्पने चलने "दोधूयमानाश्च महापताकाः" भा॰ भी॰ ६॰ अ॰।

उपसर्गपूर्वकस्तु तत्तदुपसर्गद्योत्यार्थयुते कम्पने चालने च

**धु** स्त्री धु–कम्पने वा॰ भावे डु। कम्पने एकाक्षरकोषः।

**धुच** सन्दीप्तौ क्लेशे जीवने च अक॰ आत्म॰। धुचते अधु-

क्लिष्ट दुधुक्षे । णिचि धुक्षयति ते "निर्वाणभूयिष्ठमथास्य वीर्य्यं संधुक्षयन्तीव वपुर्गुणेन" "अरेच मानोर्बकुलावसाने संधुक्षमाणेव शशाङ्करेखा" कुमा० "सत्वं समदुधुक्षच्च" भट्टिः ।

**धुङ्क्षा** पु० धुक्ष–अच् पृषो० । पक्षिभेदे अजादेराकृतिगणत्वात् स्त्रियां टाप् । "दिशां कङ्को धुङ्क्षाग्नेयी" यजु०२४।३१

**धुत** त्रि० धु–क्त । १त्यक्ते २विधूते च मेदि० ।

**धुन** त्रि० धूनयति धूनि अच् पृषो०। कम्पके । "धुनेतयः सुप्रकेतम्" ऋ० ४।५०।२

**धुनि(नी)** स्त्री धुनोति वेतसादीन् धु-निक् धूनयति वेतसान् धूनि–इन् पृषो० ह्रस्वो वा ङीप् वा । १नदीमात्रे अमरः । "दिवे दिवे धुनयो यन्त्यर्थम्" ऋ०२।३०।२ "धुनयोनद्यः" भा० । "स्वर्धुन्यमूद्भवि सा पतती निमार्ष्टि" भाग० ८।२१।६ २असुरभेदे पु० "स्वप्नेनाभ्युप्य चुमुरिं धुनिञ्च" २।१५।६ । "चुमुरिं धुनिम् एतन्नामासुरौ" भा० ३कम्पके त्रि० ४जलप्रतिरोधके असुरभेदे पु०"त्वं धुनिरिन्द्र ! धुनिमतीः" ऋ०१।१७४।६ "हे इन्द्र ! त्वं धुनिः कम्पयिता शत्रूणामसि अतो धुनिमतीः कम्पनोपेततरङ्गवती । अथ वा धुनिर्नाम जलप्रतिरोधकार्य्यसुरः स एव प्रतिरोधकतयास्ति यासां तादृशीरपः" भा०तरङ्गस्य कम्पनवत्त्वात् धुनित्वम् । धूनयति धू-णिच्–नुक् इन् पृषो०ह्रस्वः । ५मरुतां मध्ये ५मरुद्भेदे । ते च मरुतः "उग्रश्च भीमश्च ध्वान्तश्च धुनिश्च । सासह्वांश्चाभियुग्वा च विक्षिपः७ स्वाहा" यजु० ३९।७ उक्ताः ।

**धुनीनाथ** ६त० समुद्रे राजनि० । धुनीपत्यादयोऽप्यत्र ।

**धुन्धु** पु० मधुराक्षसस्यापत्ये "उतङ्क उवाच । भवता रक्षणं कार्य्यं तत्तावत् कर्त्तुमर्हसि । निरुद्विग्नस्तपश्चर्त्तुं न हि शक्नोमि पार्थिव ! । ममाश्रमसमीपे वै समेषु मरुधन्वसु । समुद्रो वालुकापूर्ण उज्जानक इति श्रुतः । देवतानामवध्यस्य महाकायो महाबलः । अन्तर्भूमिगतस्तत्र वालुकान्तर्हितो महान् । राक्षसस्य मधोः पुत्रो धुन्धुर्नाम महासुरः । शेते लोकविनाशाय तप आस्थाय दारुणम् । संवत्सरस्य पर्य्यन्ते स निश्वासं विमुञ्चति । यदा तदा भूश्चलति सशैलवनकानना । तस्य निश्वासवातेन रज उद्धूयते महत् । आदित्यपथमावृत्य सप्ताहं भूमिकम्पनम् । सविस्फुलिङ्गं साङ्गारं सधूममतिदारुणम् । तेन तात ! न शक्नोमि तस्मिन् स्थातुं स्व आश्रमे । तं मारय महाबाहो लोकानां हितकाम्यया । लोकाः सुस्था भवन्त्वद्य तस्मिन् विनिहते त्वया । त्वं हि तस्य वधायैकः समर्थः पृथिवीपते ! । विष्णुना च वरो दत्तो मह्यं पूर्वयुगेऽनघ ! । यस्तं महासुरं रौद्रं हनिष्यति महाबलम् । तस्य त्वं वरदानेन तेज आप्याययिष्यसि । न हि धुन्धुर्महातेजास्तेजसाऽल्पेन शक्यते । निर्दग्धुं पृथिवीपाल ! दिव्यवर्षशतैरपि । वीर्य्यं हि सुमहत्तस्य देवैरपि दुरासदम् । स एवमुक्तो राजर्षिरुतङ्केन महात्मना । कुवलाश्वं सुतं प्रादात्तस्मिन् धुन्धुविवर्हणे" हरिवं०११अ०

**धुन्धुमार** पु० धुन्धुं मारयति मारि–अण् उप०स० । राजभेदे "राजा हि वीर्य्यवांस्तात ! इक्ष्वाकुरपराजितः । बृहदश्व इति ख्यातो भविष्यति महीपतिः । तस्य पुत्रः शुचिर्दान्तः कुवलाश्व इति श्रुतः । स योगबलमास्थाय मामकम् पार्थिवोत्तमः । शासनात्तव विप्रर्षे ! धुन्धुमारो भविष्यति"भा०व०२००अ० । "बृहदश्व उवाच । भगवन् ! न्यस्तशस्त्रोऽहमयन्तु तनयो मम । भविष्यति द्विजश्रेष्ठ ! धुन्धुमारो न संशयः । स तं व्यादिश्य तनयं राजर्षिर्धुन्धुमारणे । जगाम पर्वतायैव तपसे संशितव्रतः । कुवलाश्वस्तु पुत्राणां शतेन सह पार्थिवः । प्रायादुतङ्कसहितो धुन्धोस्तस्य निवर्हणे । तमाविशत्तदा विष्णुस्तेजसा भगवान् प्रभुः । उतङ्कस्य नियोगाद्वै लोकानां हितकाम्यया । तस्मिन् प्रयाते दुर्द्धर्षे दिवि शब्दो महानभूत् । एष श्रीमानवध्योऽद्य धुन्धुमारो भविष्यति । दिव्यैर्माल्यैश्च तं देवाः समन्तात् समवाकिरन् । देवदुन्दुभयश्चैव प्रणेदुर्भरतर्षभ ! । स गत्वा जयतां श्रेष्ठस्तनयैः सह वीर्य्यवान् । समुद्रं खानयामास वालुकापूर्णमव्ययम् । नारायणेन कौरव्य ! तेजसाऽऽप्यायितस्तदा । स बभूव महातेजा भूयो बलसमन्वितः । तस्य पुत्रैः खनद्भिश्च वालुकान्तर्हितस्तदा । धुन्धुरासादितो राजन् ! दिशमावृत्य पश्चिमाम् । मुखजेनाग्निना क्रोधाल्लोकानुद्वर्त्तयन्निव । वारि सुस्राव वेगेन महोदधिरिवोदये । सोमस्य, भरतश्रेष्ठ ! धारोर्मिकलिलं महत् । तस्य पुत्रशतं दग्धं त्रिभिरूनन्तु रक्षसा । ततः स राजा कौरव्य ! राक्षसं तं महाबलम् । आससाद महातेजा धुन्धुं धुन्धुनिवर्हणः । तस्य वारिमयं वेगमपिबत् स नराधिपः । योगी योगेन वह्निं स शमयामास वारिणा । निहत्य तं महा-

कार्यं बलेनोद्कराद्यसम् । उतङ्क दर्यवामाष क्रतकर्मा नराधिपः" हरिवं० ११ अ० २१४१छठे कुवलाश्वशब्दे च्व चरितानीति यत् लिखितं तत् प्रमादात् किन्तु धुन्धुमारशब्दे तच्चरितानि इत्येव तत्र पाठो बोध्यः। एतच्छब्दे च हरिवं० तच्चरिताद्विकथाऽभोक्ता २यक्षगोमे ३रटाकूधूमे ४पदातिके च मेदि० ।

धुर् स्त्री धुर्व–क्विप् वा टाप् । १चिन्तायाम्, २रथाद्यग्रभागे, ३यानमुखे ४भारे च अमरः "धुर्य्यां च धुरो मोघम्" रघुः । ५अग्रे न० "अपांशुलानां धुरि कीर्तनीया" रघुः । "गौरिव गुरुया नित्यं धूषु नियोज्यमानः" भा० आ० २२अ० "तेन धूर्जगतो गुर्वी सचिवेषु निचिक्षिपे" रघुः । समासे अ समा० "न गर्दभा वाजिधुरां वहन्ति" सुश्रु०। "अवन्धुभिर्युक्तधुरं तुरङ्गैः" रघुः । नञ्समा० न अ समा०। "न मामधुरि राजेन्द्र ! नियोक्तुं त्वमिहा-र्हसि" भा०व०२२अ०। अवस्य तु न अ समा०। अधूः। "प्रतिष्ठन्त्याद्धुरावनन्ति" का०श्रौ०१८।२।१२ । ५हिंसके त्रि०। "दश धुरो दशयुक्तम् वहद्भ्याम्" ऋ० १०।६४।७ "धुरोधूर्भिर्हिं विलभिः तृतीयार्थे प्रथमा" भा० असंज्ञाया-अपि ढावन्तस्य क्वचित् तत्पुरुषे ङ्याप्योरिति सूत्रः। "ताभ्यां वाहत रक्षोभिर्वाजिभि धुरर्वाहिभिः" भा०द्रो० ८६अ० भावे क्विप् । ६पीड़ायां च ।

धुरन्धर त्रि० धुरां धारयति खच् खचि सूत्रः । १भार-वाहके इत्यादौ "अन्नाहेवगणाः सर्वे स्थावराणि चराणि च । धुरन्धराङ्गे तिष्ठन्ति तस्मात् भक्तिः शिवेऽस्तु मे" हेमा०दा०। २धवढक्षे पु० मेदि० । ३तत्तत्कर्मनिर्वाहकेच भारवाहे च। "वन्त एव सतां नित्यमापदुद्धरण-क्षमाः । गजानां पङ्कमग्नानां गजा एव धुरन्धराः" हितो० । ४श्रेष्ठे च । "धुरन्धरः पुण्यकृदेव तापसः" भा० उ० २७अ० ।

धुरीण त्रि० धुरं वहति सर्वधुरादित्वात् पा० योगविभा-गात् ख । १भारवाहके अमरः । २श्रेष्ठे शब्दच० ।

धुरीय त्रि० धुरमर्हति छ । छवे राजनि० ।

धुर्य्य त्रि० धुरं वहति "धुरो यड्ढकौ" पा० यत् । तद्धितयपरत्वान्न दीर्घः । १धुर्वहे इत्यादौ २कार्य्य निर्वाहके "प्रागल्भमात्मा धुरि धुर्य्यवाम्मिनम्" किरा० । "धुर्य्यः कर्मनिर्वाहकः" मल्लि० । "समस्तकार्य्येषु गतेन धु-र्य्यताम्" माघः । ३भारवाहके अमरः । ४श्रेष्ठे शब्दार्थचि० । ५ऋषभे ६ऋषभौषधौ च पु० राजनि०

इत्यादौ "नाविनीतैर्व्रजेद्धुर्य्यैः" मनुः । "येनेदं ध्रियते विश्वं धुर्य्यैर्यानमिवाध्वनि" कुमा० । "रात्रिर्गता मतिमतां वर ! मुञ्च शय्यां धात्रा द्विधैव ननु धूर्ज-गतो विभक्ता । तामेकतस्तव विभर्त्ति गुरुर्विनिद्रो यस्या भवानपरधुर्य्य पदावलम्बी" रघुः । ७विष्णौ पु० । "स्कन्दः स्कन्दधरो धुर्य्यः" विष्णु० । समस्तजन्तुजन्मा-दिलक्षणकार्य्यनिर्वाहकत्वात्तस्य तथात्वम् भाष्ये उक्तम् ।

धुर्व हिंसे भ्वा० पर० सक० सेट् । धूर्वति अधूर्वीत् । दुधूर्व । ईदित् धूर्त्तः । "अधूर्वन् भूधरैर्व्रजम्" भट्टिः ।

धुवक त्रि० धू–कुन् । १गर्भमोचके उज्ज्वल० । (धुया) ख्यातायां २गीतिभेदे स्त्री । क्षिपका० पाठान्तरे न टापि अत इत्त्वम् । ततः चतुरर्थ्यां प्रेक्षादि० इनि धुवकिन् । तन्निर्वृत्तिहितदेशादौ त्रि० । ततः पिच्छा० अस्त्यर्थे इलच् । धुवकिल धुवकयुक्ते त्रि० ।

धुवन पु० धु–धू–वा क्युन् । १वह्नौ उज्ज्वलद०"ये यत्र धुवनं तन्वते" शत० ब्रा० ११।२।८।५ । २चालकमात्रे त्रि० । "अवमर्धति पश्चिमराजचरो नवनीपवनीधुवनः पवनः" सा० द० टी० ।

धुवित न० धूयते अनेन कुटा० धु–विधूनने क्त । वह्नि-संधुक्षणाय मृगचर्मादिरचिते याज्ञिकानां १व्यजने २तालवृन्तके अमरः ।

धुस्तु(स्तू)र पु० धू+स्तूर+पृषो० । (धुतरा) ख्याते वृक्षे अमरः

धू कम्पने भ्वा०उभ०सक० वेट् । धवति ते अधावीत् अधौषीत् अधविष्ट अधोष्ट। स्वत्व०पा०मते प०सिचि नित्येट्कृतिभेदः अधवविष्ट अधोष्ट। दुधाव । "यत् कानने धवति चन्दनमञ्जरीव" कविर० ।

धू कम्पने वा० चुरा० उभ० पक्षे तुदा० कु० पर० सक० सेट् । धूनयति ते धुवति अदूधुनत् अधुवीत् । धूनयाम् बभूव आस चकार, दुधाव । दुधुविथ "चूतं धुनाति धुवति स्फुरितातिसक्तम् । वायुर्विधूनयति केसरपुष्परेणून्" कविरहस्यम् ।

धू कम्पने स्वा० क्र्यादि० प्वादिश्च उभ० सक० वेट् । धूनोति धूनुते धुनाति धुनीते । अधावीत् अधौषीत् अधविष्ट अधोष्ट "धूनोति चम्पकवनानि धुनोत्यशोकं चूतं धुनाति धुवति स्फुरितातिसक्तम्" कविरहस्यम् ।

धू स्त्री धू–क्विप् । विधूनने मेदि० ।

धूःपति पु० धुरः पतिः अहरादित्वात् पत्यादौ परत्वो-पाधानीया वा । भारपतौ भारवहे पक्षे धुष्पति धूर्पति धूःपति तत्रार्थे

**धूक** पु० धुनोति वृक्षादीन् धु—कन् दीर्घश्च । १वायौ उज्ज्वलद० । २धूर्त्ते ३काले संक्षिप्तसा० ।

**धूत** त्रि० धू—क्त । १त्यक्ते २कम्पिते ३भर्त्सिते मेदि०।४तर्किते धरणिः "पवनस्य धूतनवनीपवनः" माघः । "पादानतः कोपनयाऽवधूतः" कुमा० ।

**धूतपाप** त्रि० धूतं त्यक्तं पापं येन । १त्यक्तपापे २वेदशिरसो मुनेः शुचिनामाप्सरोजातायां कन्यायां स्त्री तस्या एव धर्मशापेन चन्द्रशिलात्मकतया नदीरूपेण प्रादुर्भावात् तद्रूपायां काशीस्थायां ३नद्याञ्च स्त्री तत्कथा । काशीखण्ड ५९ अ० यथा

"पुरा वेदशिरा नाम मुनिरासीन्महातपाः । भृगुवंशसमुत्पन्नो मूर्त्तो वेद इवापरः । तपस्यतस्तस्य मुनेः पुरोदृग्गोचरं गता । शुचिरप्सरसां श्रेष्ठा रूपलावण्यशालिनी । तस्यादर्शनमात्रेण परिक्षुब्धं मुनेर्मनः । चस्कन्द स मुनिस्तूर्णं शापभीता वराप्सराः" इत्युपक्रमे "इदानीं शृणु कल्याणि! कर्त्तव्यं यत् त्वया शुचे! । अमोघवीर्या हि वयं तद्बीजमुररीकुरु । एतस्मिन् रक्षिते वीर्ये परिस्कन्ने त्वदीक्षणात् । त्वमावह भवित्री त्वं कन्यारत्नं महाशुभे! । इत्युक्ता तेन मुनिना पुनर्जातेव साप्सराः । महाप्रसाद इत्युक्त्वा मुनेः शुक्रमजीगिलत् । अथ कालेन दिव्यस्त्री कन्यारत्नमजीजनत् । अतीव नयनानन्दि निधानं रूपश्रेयसाम् । शुचिरप्सरसां श्रेष्ठा जगाम त्रिदशालयम् । ताञ्च वेदशिराः कन्यां स्नेहेन समवर्द्धयत् । क्षीरेण, स्वाश्रमस्थाया हरिण्या हरिणीक्षणाम् । मुनिर्नाम ददौ तस्यै धूतपापेति चार्थवत्" । ततः पितुरुपदेशेन तपश्चरणे तस्या ब्रह्मतो वरप्राप्तिः धर्मशापेन नदीभावप्राप्तिरित्यादि कथा तत्रैवाध्याये यथा

"धूतपापोवाच । पितामह! वरो मह्यं यदि देयो वरप्रद! । सर्वेभ्यः पावनेभ्योऽपि कुरु मामतिपावनीम् । स्रष्टा तदिष्टमाकर्ण्य नितरां तुष्टमानसः । प्रत्युवाच च तां बालां विमलां विमलेक्षणाम् । ब्रह्मोवाच धूतपापे! पवित्राणि यानि सन्त्यत्र सर्वतः । तेभ्यः परिगतलं त्वमेधि वरतो मम । तिस्रः कोट्यर्द्धकोटी च सन्ति तीर्थान्यनेकशः । दिवि भुव्यन्तरीक्षे च पावनान्युत्तरोत्तरम् । तानि सर्वाणि तीर्थानि त्वत्तनौ प्रतिलोम वै । वसन्तु मम वाक्येन भव सर्वातिपावनी । इत्युक्त्वान्तर्दधे वेधाः सापि निर्धूतकल्मषा । धूतपापोटजं प्राप्ताऽपोवेदशिरसः पितुः । कदाचित्तां समालोक्य खेलन्तीमुटजाजिरे । धर्मस्तत्तपसा हृष्टः प्रार्थयामास कन्यकाम् । धर्म उवाच । पृथुश्रोणि! विशालाक्षि! चामोदरि! शुभानने! । क्रीतः स्वरूपसम्पत्त्या त्वयाहं देहि मे रतिम् । नितरां बाधते कामस्त्वत्कृते मां सुलोचने! । इत्थं सुधाम्ना सा तेन प्रार्थितेत्यसकृद्रहः । उवाच सा पिता दाता तं प्रार्थय सुदुर्मते! । पितृप्रदेया यत् कन्या श्रुतिरेषा सनातनी । निशम्येति वचो धर्मो भाविनोऽर्थस्य गौरवात् । पुनर्निर्बन्धयाञ्चक्रेऽपश्यन्निष्टं तिशालिनीम् । धर्म उवाच । न प्रार्थयेऽहं सुभगे! पितरं तव सुन्दरि! । गान्धर्वेण विवाहेन कुरु मे त्वं समीहितम् । इति निर्बन्धवद्वाक्यं सा निशम्य कुमारिका । पितुः कथ्या फलं दित्सुः पुनराहेति तं द्विजम् । अरे जडमते! मा त्वं पुनर्ब्रूहीति याचितः । इत्युक्तोऽपि कुमार्या स नातिष्ठन्मदनातुरः । ततः शशाप तं बाला प्रबला तपसो बलात् । जडोऽस्यतितरां यस्माज्जलाधारो नदो भव । इति शप्तस्तया सोऽथ तां शशाप क्रुधान्वितः । कठोरहृदये! त्वं तु शिला भव सुदुर्मते! । स्कन्द उवाच । इत्यन्योऽन्यस्य शापेन मुने! धर्मनदोऽभवत् । अविमुक्ते महाक्षेत्रे ख्यातो धर्मनदो महान् । साप्याप पितरं त्वस्ता स्वशिलात्वस्य कारणम् । ध्यानेन धर्मं विज्ञाय मुनिः कन्यामथाब्रवीत् । मा भैः पुत्रि! करिष्यामि तव सर्वं शुभोदयम् । तच्छापो नान्यथा भूयाच्चन्द्रकान्तशिला भव । चन्द्रोदयमनुप्राप्य द्रवीभूता तनुस्रव । नदी भव सुते! साध्वि! धूतपापेति विश्रुता । स च धर्मो नदः कन्ये! तव भर्त्ता सुशोभनः । तैर्गुणैः परिपूर्णाङ्गो ये गुणाः प्रार्थितास्त्वया । अन्यच्च शृणु सद्बुद्धे! ममापि तपसो बलात् । द्वैरूप्यं भवतोभावि प्राकृतञ्च द्रवस्वरम् । इत्याश्वास्य पिता तां तु धूतपापां परन्तपः । चन्द्रकान्तशिलाभूतामनुजग्राह बुद्धिमान् । तदारभ्य मुने! काश्यां ख्यातो धर्मनदो ह्रदः । धर्मोद्रवस्वरूपेण महापातकनाशनः । धुनी च धूतपापा सा सर्वतीर्थमयी शुभा" । "किरणा धूतपापा च तस्मिन् धर्मनदे शुभे । अवन्त्यौ पापसंहन्त्र्यौ वाराणस्यां शुभद्रवे । ततो भागीरथी प्राप्ता तेन दैलीपिना सह । भागीरथ्या सहायाता यमुना च सरस्वती । किरणा धूतपापा च पुण्यतीर्थे सरस्वती । गङ्गा च यमुना चैव पञ्च नद्यः प्रकीर्त्तिताः" । "करीषिणीं चित्रवहां चित्रसेनाञ्च

निम्नगाम्। गोमतीं धूतपापाञ्च गण्डकीञ्च महानदीम्” भा० भी० ६ अ०। [ दृश्यम्।

**धूति** स्त्री धू–क्तिन् १विधूनने २हठयोगाङ्गभेदे हठयोगशब्दे

**धून** त्रि० धू–क्त ल्वादि० तस्य नः। कम्पिते

**धूनक** पु० धूनयति संधुक्षयति वह्निम् चु० धू–ण्वुल् नुगागमः। (धुना) ख्याते यक्षधूपे त्रिका० २चालके त्रि०।

**धूनन** न० धू–णिच् भावे ल्युट्। चालने विधूनने।

**धूनि** स्त्री धू–भावे क्तिन् ल्वादि० तस्य नः। कम्पने।

**धूप** दीप्तौ चुरा० उभ० अक० दीपने सक० सेट्। धूपयति-ते अदूधुपत्-त। धूपयाम् बभूव आस चकार। धूपितः। “वसवस्त्वा धूपयन्ति” यजु० ११।६ धूपशब्दे उदा०

**धूप** तापे अक० तापने सक० भ्वा० पर० सेट्। धूपायति अधूपायीत् अधूपीत्। धूपायाम् बभूव आस चकार दुधूप। धूपायितः धूपितः। “धूपायतीव पटवैर्नवनीरदानाम्” माघः।

**धूप** पु० धूपयति रोगान् दोषान् वा धूप-अच्। १गुग्गुलुप्रभृति सुगन्धद्रव्योत्थे धूमे, २तत्साधनद्रव्ये च तन्निरुक्तिर्यथा “धूताशेषमहादोषपूतिगन्धः प्रभावतः। परमानन्दजननाद्धूप इत्यभिधीयते” धूपद्रव्यभेदः प्रपञ्चसारे “गुग्गुल्वगुरुकोशीरसिताज्यमधुचन्दनैः। साराङ्गारे विनिक्षिप्तैर्मन्त्री पीठैः प्रधूपयेत्”। योगिनीतन्त्रे “कृष्णागुरु सकर्पूरं चन्दनं सिह्लकं तथा। भगवत्यै नरो यस्तु इदं दत्त्वा महेश्वरः। इह काममवाप्नोति दुर्गालोके महीयते”। आह्नि०त० वामनपुराणे “वृहिकाख्यं कनं दारु सिह्लकं सागुरुं सितम्। शङ्खो जातीफलं श्रीशे धूपानि स्युः प्रियाणि वै। वृहिका मांसी कनो महिषाख्यगुग्गुलुः सितं कर्पूरं सितेति पाठे सिता शर्करा। शङ्खो नखी। श्रीशे विष्णौ। विष्णुधर्मोत्तरे “धूपदः सर्वमाप्नोति धूपदः सर्वमश्नुते” वामनपुराणेऽस्य क्लीवतापि।

तन्त्रसारे विशेषः शारदायां “गुग्गुल्वगुरुकोशीरशर्करा मधुचन्दनैः। धूपयेदाज्यसंमिश्रैर्नीचैर्देवस्य देशिकः”। विशेषस्तु तन्त्रान्तरे “सिताज्यमधुसंमिश्रं गुग्गुल्वगुरुचन्दनम्। षडङ्गं धूपमेतत्तु सर्वदेवप्रियं सदा”। तथा “गुग्गुलुं सरलं दारु पत्रं मलयसम्भवम्। ह्रीवेरमगुरुं कुष्ठं गुडं सर्जरसं घनम्। हरीतकीं नखीं लाक्षां जटामांसीञ्च शैलजम्। षोड़शाङ्गं विदुर्धूपं दैवे पैत्रे च कर्मणि”। “मधु मुस्तं घृतं गन्धो गुग्गुल्वगुरुशैलजम्। सरलं सिह्लं सिद्धार्थं दशाङ्गो धूप इष्यते”। रोग१रोगहर२रोगद३केशाः४ दारु५जातु६लघु७पत्रविशेषाः८ वक्रविवर्जित९वारिजमुद्रा१०धूपवर्त्तिरिह सुन्दरिः भद्रा” अस्यार्थः कुष्ठ१ हरीतकी२ गुड़३जटामांसी४ देवदारु५ लाक्षा६ अगुरु७ तेजपत्र८ सरल९ नखी१०”

“यथा गन्धं तथा देवि धूपं दद्याद्विचक्षणः। मध्यमानामिकाभ्यान्तु मध्यपर्वणि देशिकः अङ्गुष्ठाग्रेण देवेशि! धृत्वा धूपं निवेदयेत्। तथा समर्पयेद्धूपं घण्टावाद्यजयस्वनैः”। तथा “धूपभाजनमस्त्रेण(फट्)प्रोक्ष्याभ्यर्च्य हृदाणुना(नमः)। अस्त्रेण पूजितां घण्टां वादयन् गुग्गुलुं दहेत्। शाक्तादौ तु भुवनेश्वरी बीजं पूर्वं दत्त्वा इमं मन्त्रं पठित्वार्पयेत्। “तथा जयध्वनिमन्त्रमातः! स्वाहेत्युदीर्य च। अभ्यर्च्य वादयेद्घण्टां धूपैर्धूपयेत्ततः”। तन्त्रान्तरे“धूपस्थानं समभ्यर्च्य तर्जन्या वामया स्पृशन्। धूपभाजनमस्त्रेण प्रोक्ष्याभ्यर्च्य हृदाणुना। एवं दीपदानेऽपि घण्टावादनमिति। तथाच गौतमीये “उत्तार्य हस्तिपर्य्यन्तं घण्टां वामदिशि स्थिताम्। वादयन् वामहस्तेन दक्षहस्तेन चार्चयेत्”। यामले “निवेदयेत् पुरोभागे गन्धं पुष्पं च भूषणम्। दीपं दक्षिणतो दद्यात् पुरतो वा न वामतः। वामतस्तु तथा धूपमग्रे वा न तु दक्षिणे। नैवेद्यं दक्षिणे भागे पुरतो वा न पृष्ठतः”। वामदक्षिणभागस्तु देवताया एव न तु साधकस्य। “धूपदीपौ तुभोज्यञ्च देवताग्रे निवेदयेदिति” दर्शनात् तिथितत्त्वे स्मृतिः “मधु मुस्तं घृतं गन्धो गुग्गुल्वगुरु शैलजम्। सरलं सिह्लसिद्धार्थौ दशाङ्गो धूप इष्यते। दशाङ्गो दशघटितः शैलजं स्वनामख्यातं सिद्धार्थः श्वेतसर्षपः। “तुरुष्कं ग्रन्थिकर्पूरनागरागुरुकुङ्कुमैः। सुरामांसीसितामिश्रं धूपं दद्यान् मधुप्लुतम्”। तुरुष्कं सिह्लकं” ग्रन्थिः (गाँठीयालीति) ख्याता। सिता शर्करा नागरः शुण्ठी। भविष्ये “जलहीने तु दुर्भिक्षं गन्धहीने त्वभाग्यताम्। धूपहीने तयोर्हेमं वस्त्रहीने धनक्षयम्” प्राप्नुयादिति शेषः कालिकापुराणे ६८अ० यथा “एवं वां कथितो दीपो धूपञ्च शृणुतं सुतौ!। नासाभिरम्यसुखदः सुगन्धोऽतिमनोहरः। दह्यमानस्य काष्ठस्य प्रयतस्येतरस्य वा। परागस्याथ वा धूमो निस्तापो यस्य जायते। स धूप इति विज्ञेयो देवानां तुष्टिदायकः। राशीकृतैर्नैकत्र तैर्द्रव्यैः परिधूपयेत्। तथान्वितस्तथा

ज्ञात्वा न तत् फलमवाप्नुयात्। श्रीचन्दनञ्च सरलः सालः कालागुरुस्तथा। उदयः सुरथः कन्दो रक्तविद्रुम एव च। पीतसालः परिमलो विमर्दीकोऽसनस्तथा। नमेरुर्देवदारुश्च बिल्वसारोऽथ खादिरः। सन्तानः पारिजातश्च हरिचन्दनवल्लभौ। इत्येषु धूपाः सर्वेषां प्रीतिदाः परिकीर्त्तिताः। अरालः सह खलेषु श्रीवासः पटवासकः। कर्पूरः श्रीकरश्चैव परागः श्रीहरामलौ। सर्वौषधिरजोजातो वाराहचूर्ण उत्कलः। जातीकोषस्य चूर्णञ्च गन्धः कस्तूरिका तथा। चोरे हस्ते च गदिता धूपा एते उदाहृताः। यक्षधूपो हकधूपः श्रीपिष्टोऽगुरु कर्करः। पलिवाहः पिण्डधूपः सुगोलकरठ एव च। अन्योन्ययोगनिर्यासा धूपा एते प्रकीर्त्तिताः। एतैर्विधूपयेद्देवान् धूमिभिः कृष्णवर्त्मना। येषां धूपोद्भवैर्घ्राणैस्तुष्टिं गच्छन्ति जन्तवः। निर्यासश्च परागश्च काष्ठं गन्धस्तथैव च। कृत्रिमश्चेति पञ्चैते धूपाः प्रीतिकरा मताः। न यक्षधूपं वितरेत् माधवाय कदाचन। न रक्तविद्रुमं मद्यं सुरथः स्यन्दने तथा। यक्षधूपः पलिवाहः पिण्डधूपः सुगोलकः। कृष्णागुरुः सकर्पूरो महामायाप्रियः स्मृतः। यक्षधूपेन वा देवीं महामायां प्रपूजयेत्। मेदोमज्जासमायुक्तान् न धूपान् विनिवेदयेत्। परकीयांस्तथा घ्रातान् स्तेनीकृत्याभिमर्दितान्। पुष्पं धूपञ्च गन्धञ्च उपचारांस्तथा परान्। घ्रातान्निवेद्य देवेभ्यो नरो नरकमाप्नुयात्। न भूमौ वितरेत् धूपं नासने न घटे तथा। यथातथाधारगतं कृत्वा तद्विनिवेदयेत्। रक्तविद्रुमसालौ च सुरथः सरलस्तथा। सन्तानको नमेरुश्च कालागुरुसमन्वितः। जातीकोषाद्यसंयुक्तो धूपः कामेश्वरीप्रियः। त्रिपुरा वास्तथैवायं मातृणामपि नित्यशः। सर्वेषां पीठदेवानां कान्त्यादीनाञ्च पुत्रकौ। एष वां कथितो धूपः शृणु तं मेलरञ्जनम्”

केशवाचार्य्यां षोड़शाङ्गादिधूपा यथा

“मुस्तकं गुग्गुलुः कुष्ठं कर्पूरं मलयोद्भवम्। देवदारु जटामांसी जातीकोषञ्च वालकम्। मुरा मांसी त्वगुरुकं त्वगुशीरञ्च केशरम्। एला तथा तेजपत्रं सर्वमेतद् घृताक्तकम्। धूपोऽयं षोड़शाङ्गः स्याद्गोविन्दप्रीतिकारकः”।

द्वादशाङ्गो यथा “गुग्गुलुश्चन्दनं पत्रं कुष्ठञ्चागुरु कुङ्कुमम्। जातीकोषञ्च कर्पूरं जटामांसी च वालकम्। त्वगुशीरञ्च धूपोऽसौ द्वादशाङ्गः प्रकीर्त्तितः।

दशाङ्गो यथा “कर्पूरं कुष्ठमगुरु गुग्गुलुर्मलयोद्भवम्। केशरं वालकं पत्रं त्वग्जातीकोषमुत्तमम्। सर्वमेतद् घृताभ्यक्तं दशाङ्गो धूप ईरितः”।

अष्टाङ्गो यथा “गुग्गुल्वगुरुकं तेजपत्रं मलयसम्भवम्। कर्पूरं वालकं कुष्ठं नूतनं कुङ्कुमं तथा। अष्टाङ्गः कथितो धूपो गोविन्दप्रीतिदः शुभः”।

पञ्चाङ्गो यथा “चन्दनं कुङ्कुमं नूतं कर्पूरं गुग्गुलोऽगुरु। धूपोऽयं घृतसंयुक्तः पञ्चाङ्गः समुदाहृतः”।

विष्णुधूपे वर्ज्जनीयद्रव्यम् यथा “ऐक्षवं सालनिर्यासं पद्मकं सरलं जतु। वचा मधुरिका तैलं गन्धकाष्ठं कलम्बकम्। गन्धकं टङ्कणं तालं हिङ्गुलञ्च मनःशिला। कक्कोलमूषरं दार्व्वी गन्धमाद्री रसाञ्जनम्। अश्वगन्धः शठी मेथी शिलाजित् गन्धचन्दनम्। कुन्दुरु रेणुकं रास्नाऽजमोदा शतपुष्पिका। हरिद्रा जीरकं दग्धजीरञ्च रक्तचन्दनम्। कर्चूरकं मरुवकं यवानी धन्यिका तथा। शैलजं धातकीपुष्पं नखी गोचरसादिकम्। मुकुन्दधूपे देवर्षे! सर्वमेतद्विवर्ज्जयेत्” पाद्मोत्तरखण्डे

आहरेयो धूपो यथा ब्राह्मे “चन्दनागुरुणी चोभे तथैवोशीरपद्मकम्। तुरुष्कं गुग्गुलुश्चैव घृताक्तं युगपद् दहेत्”। “उशीरं वीरणमूलं तुरुष्कं सिह्लकम्” आह्नि०त०विष्णुधर्मे “धूपस्तु गुग्गुलुर्देयस्तथा चन्दनसारजः। अगुरुश्च सकर्पूरस्तुरुष्कास्तक् तथैव च। विष्णुः “घृतमधुयुक्तं गुग्गुलुं श्रीखण्ड देवदारु सरलादि दद्यादिति”। देवलः “ये हि प्राण्यङ्गजा धूपा ह्यस्त्रघाताहताश्च ये। न ते श्राद्धे नियोक्तव्या ये च के चोग्रगन्धयः। घृतं न केवलं दद्याद्दुष्टं वा तृणगुग्गुलुम्” निर्णयसि०।

“अदत्त्वा गन्धमाल्यानि यो मे धूपं प्रयच्छति। कुणपो जायते भूमे! यातुधानो न संशयः। वर्णाश्च चैकविंशानि नमस्कारनिरासकः। तिष्ठतेऽत्र महाभागे! एवमेतत् न संशयः” वराहपुराणम्।

विषघ्नधूपो यथा “सक्तुः सार्ज्जरसोपेतः सर्षपा एलवालुकैः। सुवर्णातस्करतरोः कुसुमैरर्जुनस्य तु। धूपो वासगृहे हन्ति विषं स्थावरजङ्गमम्। न तत्र कीटा न विषं न दर्दुरसरीसृपाः। न कृत्याकर्म्मणस्तत्र धूपोऽयं यत्र दह्यते” मत्स्यपु०।

धूपान्तरं तत्रैव “कार्पासास्थि भुजङ्गस्य तथा निर्म्मोचनं भवेत्। सर्पनिर्मोचनो धूपः प्रशस्तः सततं गृहे”

रोगनाशकधूपो यथा "कूर्म्मतुल्याखुमहिषगोश्टगाखाश्वचामराः। विड़ालबर्हिकाकाश्च वराहोलूककुक्कुटाः। हंस एषाञ्च विण्मूत्रं मांसं वा रोमशोणितम्। धूपं दद्याज्ज्वरार्त्तस्य उन्मत्तस्य च शान्तये। एतान्यौषधजातानि धूपितानि महेश्वर!। निघ्नन्ति रोगजातानि दृष्टमिन्द्राशनिर्यथा" गारुड़पु०।

"धूपोष्मणा त्याजितमार्द्रभावम्" कुमा० "दोहदधूपिनि द्रुमे" नैष० ३सन्तापके त्रि० "सुहृचः सधूपान्" भट्टिः

**धूपन** पु० धूप–ल्यु। १यक्षधूपे (धुना) शब्दमाला २धूपे च "धूपनाङ्गैश्च धूपयेत्" सुश्रु० भावे ल्युट्। २सन्तापने ३धूपकरणे च "परीक्षिताः स्त्रियश्चैनं व्यजनोदकधूपनैः" मनुः।

**धूपपात्र** न० ६त०। (धुनची) ख्याते धूपाधारे पात्रभेदे धूपभाजनादयोऽप्यत्र। "धूपभाजनमस्त्रेण प्रोक्ष्याभ्यच्य फट्दाणुना" तन्त्रसारः।

**धूपमुद्रा** स्त्री धूपप्रदानार्थं मुद्रा। देवपूजाङ्गे धूपदानार्थं दर्शनीये मुद्राभेदे स च धूपशब्दोक्ते "मध्यमानामिकाभ्यान्तु" इत्यादि तन्त्रवाक्ये दर्शितः।

**धूपवास** पु० धूपेन वासः सुगन्धिकरणम्। स्नानोत्तरं धूपोष्मणा आर्द्रीभावमोचनेन सुगन्धीकरणे "स्नानार्द्रमुक्तेष्वनुधूपवासम्" रघुः।

**धूपवृक्ष** पु० धूपसाधनं वृक्षः शा०त०। सरलवृक्षे त्रिका० स्वार्थे क। धूपवृक्षक तत्रार्थे शब्दर०।

**धूपागुरु** न० धूपाय तदर्थं दारुम् अगुरु शा०त०। दारुअगुरुभेदे राजनि०। [२धूपवृक्षे न०।

**धूपाङ्ग** पु० धूपसाधनमङ्गमस्य। १सरलवृक्षे राजनि०। ६त०।

**धूपार्ह** न० धूपाय अर्ह्यते पूज्यते अर्ह–कर्मणि घञ्। १कृष्णागुरुणि राजनि०। धूपमर्हति अर्ह–अण्। उप०स०। धूपदानयोग्ये त्रि०।

**धूपित** त्रि० धूप–आयाभावपक्षे क्त। १सन्तप्ते २अध्वादिश्रान्ते अमरः। "यवादिना दोहदधूपितो द्रुमः" इत्यायुर्वेदः। आयपक्षे धूपायित तत्रार्थे। "प्रदीपपरिदीपिते विविधधूपधूपायिते" तन्त्रम्। धूप+तार०। इतच्। ३दत्तधूपे वस्त्रादौ त्रि०।

**धूम** पु० धूनोति धू–कम्पे मक्। आर्द्रेन्धनवह्निजाते मेघाञ्जनयोर्जनके (धूँया) ख्याते पदार्थे "सहजमलिनवक्रभावभाजां भवति भवः प्रभवात्मनाशहेतुः। जलधरपदवीमवाप्य धूमो ज्वलनविनाशमनु प्रयाति नाशम्" प्रबो० "सधूमदीप्ताग्निरुचीनि रेजुः" भट्टिः "धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघः" मेघ० "पुनानं पवनोद्धुतैर्धूमैराहुतिगन्धिभिः" रघुः। भीमो भीमसेनवत् धूमकेतुशब्दस्योत्तरपदलोपः। २धूमकेतौ ३उल्कापाते च "त्रिदिनं धूमे पञ्च दिनानि गर्गः"।४अग्निमान्द्यसूचके वायुभेदे (चोंआंया ढेकुर) "धूमोद्गारे तथा वान्ते क्षुरकर्म्मणि मैथुने" आह्निकत०। जाठराग्निमान्द्ये हि अन्नपाकस्यासम्भवात् जठरानलस्य दीप्त्यभावेन ततो धूम इवोद्गीर्यते इति लोकप्रसिद्धिः। सुश्रुतोक्ते ५धूमपाने च धूमपानशब्दे दृश्यम्। ६ऋषिभेदे ततः गर्गा० गोत्रे यञ्। धौम्य धूमर्षिगोत्रापत्ये पुंस्त्री। स च युधिष्ठिरस्य पुरोहितः धौम्यशब्दे दृश्यम्। अश्वा० फञ्। धौमायन तद्गोत्रापत्ये पुंस्त्री०। ७देशभेदे। देशवाचिनत्वात् धूमा० भवार्थे वुञ्। धौमक तत्र भवे त्रि०।

**धूमकेतन** पु० धूमः केतनं चिह्नमस्यानुमाने। १वह्नौ वह्नेर्धूमलिङ्गेनानुमानात् तथात्वम्। २धूमकेतौ च मेदि० "निष्प्रभश्च रिपुरास भूभृतां धूमशेष इव धूमकेतनः" रघुः

**धूमकेतु** पु० धूमः केतुर्लिङ्गमस्य। १वह्नौ अमरः २धूमाभतारकाभेदे उत्पातविशेषे केतुशब्दे दृश्यम्। "उपप्लवाय लोकानां धूमकेतुरिवोत्थितः" कुमा०। ३ग्रहभेदे विश्वः केतुशब्दे २२१० पृष्ठादौ दृश्यम्। "केतुना धूमकेतोस्तु नक्षत्राणि क्रमोदश। भरण्यादीनि भिन्नानि नानुयान्ति निशाकरम्" हरिवं० ८०अ०।

**धूमगन्धि** न० धूमस्येव गन्धोऽस्य इत् समा०। १रोहिषतृणे धूमेन गन्ध्यते गम्यतेऽसौ गन्ध–इन् ३त०। २धूमेनानुमीयमाने वह्नौ "माग्निर्ध्वनयीद्धूमगन्धिः" ऋ०१।१६२।१५

**धूमज** पु० धूमाज्जायते जन–ड। १मेघे २मुस्तके च।

**धूमजाङ्गज** न० धूमजस्य मेघस्य अङ्गात् अङ्गरूपात् वज्रात् जायते जन–ड। वज्रक्षारे राजनि०।

**धूमदर्शिन्** त्रि० धूमं धूमाकृतिं पश्यति दृश–णिनि। सुश्रुतोक्ते पित्तेन कफेन च विदग्धदर्शने मानवे। "तथा नरः पित्तविदग्धदृष्टिः कफेन चान्यस्तथ धूमदर्शी"

**धूमध्वज** पु० धूमः ध्वज इव यस्य। वह्नौ हेमच०।

**धूमप** त्रि० धूमं धूममात्रं पिबति पा–क। तपस्यार्थं धूममात्रपायिनि तपस्विभेदे "पृष्टनामान्वयो राज्ञा स किलाचष्ट धूमपः" रघुः। "पिबन्ति मुनयो यत्र हविर्धूमस्य धूमपाः" भा०उ०१०७अ० "ऊष्मपाः सोमपाश्चैव धूमपा आज्यपास्तथा" भा०शा० २८अ०

**धूमपथ** पु॰ धूमोपलक्षितः पन्थाः ष समा॰ । १पितृयाने कर्म्मप्राप्यमार्गे "जगर्ह सामर्षविपन्नया गिरा शिवद्विषं धूमपथश्रमस्मयम् (दक्षम्)" भाग॰ ४।४।११। पितृयानशब्दे दृश्यम् । धूममार्गादयोऽप्यत्र । २धूमप्रचारमार्गे गवाक्षादौ च ।

**धूमपान** न॰ ६त॰। सुश्रुतोक्ते नेत्ररोगादिरोगहरे धूमविशेषस्य पाने तद्विधिस्तत्रोक्तो यथा "अथातो धूमनस्यकवलग्रहचिकित्सितं व्याख्यास्यामः । धूमः पञ्चविधो भवति । तद्यथा प्रायोगिकः स्नेहनो वैरेचनः कासघ्नो वामनीयश्चेति । तत्रैलादिना कुष्ठतगरवर्ज्येन सुश्लक्ष्णपिष्टेन द्वादशाङ्गुलं शरकाण्डं क्षौमेणाष्टाङ्गुलं वेष्टयित्वा लेपयेदेषा वर्त्तिः प्रायोगिके । स्नेहफलसारमधूच्छिष्टसर्जरसगुग्गुलुप्रभृतिभिः स्नेहमिश्रैः स्नेहने । शिरोविरेचनद्रव्यैर्वैरेचने । बृहतीकण्टकारिकात्रिकटुकासमर्द्दहिङ्ग्विङ्गुदीत्वङ्मनःशिलाच्छिन्नरुहाकर्कटशृङ्गीप्रभृतिभिः कासहरैश्च कासघ्ने । स्नायुचर्मखुरशृङ्गकर्कटकास्थिशुष्कमत्स्यवल्लूरकृमिप्रभृतिभिर्वामनीयैश्च वामनीये । तत्र वस्तिनेत्रद्रव्यैर्धूमनेत्रद्रव्याणि व्याख्यातानि भवन्ति । धूमनेत्रन्तु कनिष्ठिकापरिणाहमग्रे कलायमात्रं स्रोतोमूलेऽङ्गुष्ठपरिणाहं धूमवर्त्तिप्रवेशस्रोतोऽङ्गुलान्यष्टचत्वारिंशत् प्रायोगिके । द्वात्रिंशत् स्नेहने । चतुर्विंशतिर्वैरेचने । षोडशाङ्गुलं कासघ्ने वामनीये च । एते अपि कोलास्थिमात्रच्छिद्रे भवतः । व्रणनेत्रमष्टाङ्गुलं व्रणधूपनार्थं कलायपरिमण्डलं कुलत्थवाहिस्रोत इति । अथ सुखोपविष्टः सुमना ऋज्वधोदृष्टिरतन्द्रितः स्नेहाक्तां प्रदीप्तां वर्त्तिं (प्रदीप्य) नेत्रस्रोतसि धूमं पिबेत् । मुखेन तं पिबेत्पूर्वं नासिकाभ्यां ततः पिबेत् । मुखपीतं मुखेनैव वमेत्पीतञ्च नासया । मुखेन धूममादाय नासिकाभ्यां न निर्हरेत् । तेन हि प्रतिलोमेन दृष्टिश्च विहन्यते । विशेषतस्तु प्रायोगिकं घ्राणेनाददीत, स्नेहनं मुखनासाभ्यां नासिकया वैरेचनं, मुखेनैवेतरे । तत्र प्रायोगिके वर्त्तिं व्यपगतशरकाण्डां निवातातपशुष्कामङ्गारेष्वादीप्य नेत्रमूलस्रोतसि प्रयुज्य धूममाहरेति ब्रूयात् । एवं स्नेहनं वैरेचनिकञ्च कुर्य्यादिति । इतरयोर्व्यपेतधूमाङ्गारस्थिरे समाहिते शरावे प्रक्षिप्य वर्त्तिं मूलच्छिद्रेणान्येन शरावेण पिधाय तस्मिन् छिद्रे नेत्रमूलं संयोज्य धूममासेवेत । प्रशान्ते धूमे वर्त्तिमवशिष्टां प्रक्षिप्य पुनरपि धूमं पाययेदादोषविशुद्धेरेष धूमपानोपायविधिः । तत्र शोकश्रमभयामर्षौष्ण्यविषरक्तपित्तमदमूर्च्छादाहपिपासापाण्डुरोगतालुशोषच्छर्द्दिशिरोऽभिघातोद्गारापतर्पिततिमिरप्रमेहोदराध्मानोर्द्ध्ववातार्त्ता बालवृद्धदुर्बलविरिक्तास्थापितजागरितगर्भिणीरूक्षक्षीणक्षतोरस्कमधुघृतदधिदुग्धमत्स्यमद्ययवागूपीताल्पकफाश्च न धूममासेवेरन् । अकालपीतः कुरुते भ्रममूर्च्छाशिरोरुजः । घ्राणश्रोत्राक्षिजिह्वानामुपघातञ्च दारुणम् । आद्यास्तु त्रयो धूमा द्वादशसु कालेषूपादेयाः । तद्यथा क्षुतदन्तप्रक्षालननस्यस्नानभोजनदिवास्वप्नमैथुनच्छर्दिमूत्रोच्चारहसितरुषितशस्त्रकर्मान्तेष्विति । तत्र मूत्रोच्चारक्षवथुहसितमैथुनान्तेषु स्नैहिकः स्नानच्छर्दनदिवास्वप्नान्तेषु वैरेचनः । दन्तप्रक्षालननस्यस्नानभोजनशस्त्रकर्मान्तेषु प्रायोगिक इति । तत्र स्नेहनो वातं शमयति स्नेहादुपलेपाच्च वैरेचनः श्लेष्माणमुत्क्लेश्यापकर्षति रौक्ष्यात्तैक्ष्ण्यादौष्ण्याद्वैशद्याच्च । प्रायोगिकः श्लेष्माणमुत्क्लेशयत्युत्क्लिष्टं चापकर्षति साधारणत्वात् पूर्वाभ्यामिति । भवति चात्र नरो धूमोपयोगाच्च प्रसन्नेन्द्रियवाङ्मनाः । दृढकेशद्विजश्मश्रुः सुगन्धिविशदाननः । कासश्वासारोचकास्योपलेपस्वरभेदमुखास्रावक्षवथुतन्द्रानिद्राहनुमन्यास्तम्भपीनसशिरोरोगकर्णाक्षिशूलवातकफनिमित्ताश्चास्य मुखरोगा न भवन्ति । तस्य योगातियोगौ विज्ञातव्यौ तत्र योगो रोगप्रशमनोऽतियोगो रोगाप्रशमनस्तालुगलशोषपरिदाहपिपासामूर्च्छाभ्रममदकर्णक्ष्वेडदृष्टिनासारोगदौर्बल्यानीत्यतियोगो जनयति । प्रायोगिकं त्रींस्त्रीनुच्छ्वासानाददीत । मुखनासिकाभ्याञ्च पर्य्यायांस्त्रींश्चतुरो वेति । स्नैहिकं यावदश्रुप्रवृत्तिः । वैरेचनिकमादोषदर्शनात् । तिलतण्डुलयवागूपीतेन पातव्यो वामनीयः । ग्रासान्तरेषु कासघ्न इति । व्रणधूमं शरावसम्पुटोपनीतेन नेत्रेण व्रणमानयेत् धूमनाद्वेदनोपशमो व्रणवैशद्यमास्रावोपशमश्च भवति" । "शोफहावहजायुक्तान् धूमपानैर्विशोधयेत्" सुश्रुतः ।

**धूमप्रभा** पुंस्त्री धूमस्य प्रभेव प्रभा यस्याः । धूमान्धकारयुक्तायां नरकभेदभूमौ हेमच॰ । "घनोदधिघनवाततनुवातनभःस्थिताः । रत्नशर्करावालुकापङ्कधूमतमःप्रभाः । महातमःप्रभा चेत्यधोधो नरकभूमयः" हेमच॰ । २धूमवर्णे त्रि॰ ।

**धूमप्राश** त्रि॰ धूमं प्राश्नोति प्र+अश—अण् । धूमभक्षके

नपस्विभेदे । "धूमप्राशैरूष्मपैः क्षीरपैश्च सम्भृत्य ब्राह्मणेन्द्रैः समन्तात्" भा० अनु० १४ अ० ।

**धूममहिषी** स्त्री धूमस्य महिषीव । कुज्झटिकायाम् त्रिका० ।

**धूमयोनि** पु० धूमो योनिरुत्पत्तिस्थानं यस्य । १मेघे २मुस्तके च तत्र धूमविशेषजमेघफलं पुराणान्तरे उक्तं यथा "यज्ञधूमोद्भवं तस्मं द्विजानाञ्च हितं सदा । दावाग्निधूमसम्भूतमभ्रं वनहितं स्मृतम् । मृतधूमोद्भवं त्वभ्रमशुभाय भविष्यति । अभिचाराग्निधूमोत्थं भूतनाशाय वै द्विजाः !" । [ वर्षे २तद्वति त्रि० अमरः ।

**धूमल** पु० धूमं धूमवर्णं लाति ला—क । १कृष्णलोहितमे

**धूमसी** स्त्री निस्तुषमाषायां चूर्णे "माषाणां दालय तोये स्थापितास्त्यक्तकञ्चुकाः । आतपे शोषिताः पात्रे ऽघ्टाता धूमसी स्मृता । धूमसी रचिता सैव प्रोक्ता भर्भुरिका बुधैः । भर्भुरी कफपित्तघ्नी किञ्चिद्वातकरी स्मृता" भावप्र० ।

**धूमाक्ष** पु० धूम इव अक्षि अस्य षच् समा० । धूमतुल्यनेत्रयुक्ते त्रि० स्त्रियां षित्त्वात् ङीष् । "धूमाक्षी संयतस्तु कर्णौ च क्रोधनः" अथ० ११।१०।७

**धूमाङ्ग** पु० धूम इवाङ्गमस्य । १शिंशपावृक्षे वैद्यक० पार० । २धूमतुल्याङ्गयुक्ते त्रि० स्त्रियां ङीष् ।

**धूमाग्नि** पु० धूमप्रधानोऽग्निः शाक० त० । "विज्वालो यो धूमशिखो धूमाग्निः स उदाहृतः" इत्युक्ते वह्निभेदे

**धूमादि** "धूमादिभ्यश्च" पा० वुञ् प्रत्ययनिमित्ते पा० ग० सूत्रोक्ते देशवाचकशब्दगणे स च गणः "धूम खण्डक शशादन अर्जुनाव माहकस्थली आनकस्थली माहिषस्थली मानस्थली अट्टस्थली मद्रकस्थली समुद्रस्थली दाण्डायनस्थली राजस्थली विदेह राजगृह सात्रासाह शष्प मित्रवर्द्ध भक्षाली मद्रकूल आजीकूल द्व्याहाव त्र्याहाव संस्फीय वर्बर वर्ण्य गर्त्त आनर्त्त माठर पाथेय घोष पल्लीआराज्ञी धार्त्तराज्ञी आवय तीर्थ (कूलात् सौवीरेषु) (समुद्रान्नावि मनुष्ये च) । कुक्षि अन्तरीप द्वीप अरुण उज्जयनी पट्टार दक्षिणापथ साकेत" । धौमकः

**धूमाभ** पु० धूम इव आभाति आ+भा—क । १धूमवर्णे शब्दमाला २तद्वति त्रि० ।

**धूमाय** अधूमो धूमो भवति भृशा० च्व्यर्थे क्यङ् नामधातुः आत्म० अक० सेट् । धूमायते "अकस्मात् नगरोपान्ते कथं धूमायते चिता" हास्यार्णवः । ल्युट् । धूमायनम् "उषाचोषपरिदाहधूमायनानि पित्तस्य" सुश्रुतः । अत्र धूमशब्दः अग्निमान्द्यसूचकवायुभेदः तदुद्वमनं धूमायनम् । (चोंओं या ढेकुर)

**धूमावती** धूम इव वर्णोऽस्त्यस्याः मतुप् मस्य वः शरा० पूर्वपददीर्घः संज्ञायाम् । दशमहाविद्यान्तर्गते देवीभेदे महाविद्याशब्दे दृश्यम् । "विद्या धूमावती तथा" तन्त्रसारः । तद्ध्यानं यथा "विवर्णा चञ्चला दुष्टा दीर्घा च मलिनाम्बरा । विमुक्तकुन्तला रूक्षा विधवा विरलद्विजा । काकध्वजरथारूढा विलम्बितपयोधरा । सूर्पहस्तातिरूक्षाक्षी धूतहस्ता वरान्विता । प्रवृद्धघोणा तु भृशं कुटिला कुटिलेक्षणा । क्षुत्पिपासार्दिता नित्यं भयदा कलहास्पदा । जपेत् कृष्णचतुर्दश्यां पुरश्चरणसिद्धये" तन्त्रसारः । तन्मन्त्रादिकं तन्त्रसारे दृश्यम् ।

**धूमिका** स्त्री धूमोऽस्त्यस्याः ठन् । कुज्झटिकायां त्रिका० ।

**धूमित** त्रि० धूम—जातोऽस्य तार० इतच् । १संजातधूमे "अविस्पष्टाक्षरेण धूमिताम्" कुमा० २दीक्षणीयमन्त्रभेदे पु० "सदस्तरोजीवहीनः सार्द्धप्राक्षरो मनुः । सार्द्धद्वादशवर्णो वा धूमितः स तु निन्दितः" तन्त्रसा० ३सुवर्णस्य दिग्भेदे स्त्री प्रधूमितशब्दे दृश्यम् ।

**धूमिन्** त्रि० धूमोऽस्त्यस्य बाहुल्येन "नैकाचरात् कृतो जातेः सप्तम्याञ्च न तौ स्मृतौ" इत्युक्तेः इनिठनोर्जाति वाचकात् निषेधेऽपि भूम्नि तस्यानिषेधात् इनि । १बाहुल्येन धूमवति अबाहुल्ये तु मतुबेव धूमवान् इत्येव । स्त्रियां ङीप् । सा च अजमीढस्य १पत्नीभेदे "अजमीढस्य पत्न्यस्तु तिस्रो वै यशसान्विताः । नीली च केशिनी चैव धूमिनी च वराङ्गनाः" हरिवं० ३२अ० । २वह्नेर्जिह्वाभेदे स्त्री धूम्रवर्णशब्दे दृश्यम् ।

**धूमोत्थ** न० धूमादुत्तिष्ठति परम्परया उद्—स्था—क । १वज्ञारे राजनि० तस्य धूमयोनिमेघाज्जातजलात् उत्पन्नत्वात् परम्परया तज्जातत्वम् । २धूमजातमात्रे त्रि० ।

**धूमोद्गार** पु० ६त० । १धूमनिर्गमे "धूमोद्गारानुकृतिनिपुणा जर्जरा निष्पतन्ति" मेघ० । २धूमस्य जाठराग्निमान्द्यसूचकपदार्थस्य उद्गारे ( चोंओं याढेकुर ) "धूमोद्गारे तथा वान्ते क्षुरकर्मणि मैथुने" आह्नि० त०

**धूमोपहत** पु० ३त० । सुश्रुतोक्ते धूमकृतोपद्रवरूपरोगभेदे तल्लक्षणादि तत्रोक्तं यथा "अत ऊर्द्ध्वं प्रवक्ष्यामि धूमोपहतलक्षणम् । श्वसिति क्षौति चात्यर्थमत्याध्मति कासते । चक्षुषोः परिदाहश्च रागश्चैवोपजायते सधूमकं निःश्वसिति घ्रेयमन्यन्न वेत्ति च । तथैव च

रसान् सर्वान् स्तुतिशास्त्रोपहन्यते। तृष्णादाहज्वर-युतः सीदत्यथ च मूर्च्छति। धूमोपहत इत्येवं शृणु तस्य चिकित्सितम्”।

**धूमोर्णा** स्त्री यमपत्न्याम् त्रिका०। “शक्रः शचीपतिर्देवो यमो धूमोर्णया सह। वरुणः सह गौर्य्या च सहर्द्धा च धनेश्वरः” भा०अनु० १६५ अ०। २मार्कण्डेयपत्न्याञ्च “मार्कण्डेयस्य धूमोर्णा ऋद्धिर्वैश्रवणस्य च” १४५ अ० अत्र मार्त्तण्डेयस्येत्येव युक्तः पाठः। मार्त्तण्डपत्न्या अपत्यम् ढक्। मार्त्तण्डेयो यमः पूर्वोक्तकथाक्यात्।

**धूमोर्णापति** पु० ६त०। यमे हारा०।

**धूम्या** स्त्री धूमानां समूहः पाशादि० य। १धूमसमूहे धूमाय हितं यत्। २धूमसाधने त्रि०

**धूम्याट** पु० धूम्या इव अटति अट–अच्। (फिङ्गा) पक्षि-भेदे अमरः स्त्रियां जातित्वात् ङीष्। धूम्राट इति पाठान्तरं तत्रार्थे

**धूम्र** पु० धूमं तद्वर्णं राति रा–क पृष्टो०। १सिह्लके शरलो-मवर्णाभे २कृष्णलोहिते वर्णे च ३तद्वति त्रि० “धूम्रधूम्रो वसागन्धिर्ज्वालावभ्रुशिरोरुहः” रघुः। कृष्णलोहितश्च कृष्णवर्णमिश्रो लोहितवर्णः “धूम्रा बभ्रुनीकाशाः पितृ-णाम्” यजु०२४।१८ “धूम्राः कृष्णवर्णमिश्रा लोहित-वर्णाः” वेददी० “भूरेणवो नभसि नद्धपयोदचक्राश्चक्रो-वदङ्गरुहधूम्ररुचो विसस्रुः” माघः। ५शिवे “विलो-हिताय धूम्राय नीलग्रीवाय वै नमः” भा०शा० २८६अ० ६मेषे “अजो धूम्रो न गोधूमैः” यजु० २१।२९ “धूम्रः मेषः” वेददी० ७कुमारानुचरभेदे “धूम्रः श्वेतः कलिन्दश्च सिद्धार्थो वरदस्तथा” भा०श० ४६अ० तदनु-चरोक्तौ। ८बलिराजसेनाधिपासुरभेदे “सद्रूो रभस-श्चण्डो धूम्रश्चैव प्रियङ्करः” हरिवं२४०अ० बलिसेनाधि-पोक्तौ। एतेषां धूम्रवर्णत्वात् तथात्वम्। मुहूर्तचि०उक्ते आनन्दादिषु रव्यादिवारे ९नक्षत्रविशेषेण योगभेदे यथा “आनन्दाख्यः१ कालदण्डश्च२ धूम्रो३ धाता४ सौम्यो५ ध्वाङ्क्ष६ केतू७ क्रमेण। श्रीवत्साख्यो८ वज्रकं९ मुद्-गरश्च१० छत्रं११ मित्रं १२ मानसं१३ पद्म१४ लुम्बौ१५। उत्पात१६ मृत्यू१७ किल काण१८ सिद्धी१९ शुभो२० ऽमृताख्यो२१ मुसलं२२ गदश्च२३। मातङ्ग२४ रक्ष२५ चर२६ सुस्थिराख्य२७ प्रवर्द्धमानाः२८ फलदाः स्वनाम्ना। दास्रादर्के, मृगादिन्दौ, सार्पाद्भौमे, करात्बुधे। मैत्राद् गुरौ, भृगौ वैश्वाद्गण्या मन्दे च वारुणात्” अस्यार्थः साभि-जित्कैः अष्टाविंशतिनक्षत्रैरष्टाविंशतियोगाः इष्टनक्षत्रं रविवारे अश्विनीतो गणने यत्संख्यकं ततमोयोगोभवति एवं सोमे रोहिणीतोऽयतमसंख्यकं ततमोयोग इति एव-मन्यत्राप्यूह्यम्। तत्र वर्ज्यनाडीः तत्रैवाह। “ध्वाङ्क्षे वज्रे मुद्गरे चेषु५नाड्यो, वर्ज्या, वेदाः४ पद्मलुम्बे, गरेऽश्वाः७ धूम्रे काणे मौसले भू१र्द्वयं, द्वे, रक्षोमृत्यूत्पातकालाश्च सर्वे”। १०भुवनामकवसोर्मातरि स्त्री “धूम्रायाश्च धरापुत्रो ब्रह्मविद्यो ध्रुवस्तथा” भा० आ० ६६अ० वसुवंशोक्तौ। शार० उक्ते आदित्यस्य द्वादशकलामध्ये ११कलाभेदे स्त्री “तपिनी१ तापिनी२ धूम्रा३ मरीचि४र्ज्वालिनी५ रुचिः६। सुषुम्णा७ भोगदा८ विश्वा९ बोधिनी१०धा-रिणी ११ क्षमा १२”। १२ शशाण्डुल्यां स्त्री राजनि०।

**धूम्रक** पु० धूम्र इव कायति कै–क। उष्ट्रे जटाधरः स्त्रियां ङीष्।

**धूम्रकेतु** पु० भरतनृपस्यात्मजभेदे “भरतस्तु महाभागवतो यदा भगवताऽवनितलपरिपालनाय संचिन्तितः तदनु-शासनपरः पञ्चजनीं विश्वरूपदुहितरमुपयेमे। तस्या-मुहात्मजान् कार्त्स्न्येनानुरूपानात्मनः पञ्च जनयामास भूतादिरिव भूतसूक्ष्माणि। सुमतिं राष्ट्रभृतं सुदर्शनमा-वरणं धूम्रकेतुमिति” भाग० ५।७।२।२ २तृणविन्दोः पुत्रभेदे “विशालः शून्यविन्दुश्च धूम्रकेतुश्च तत्सुताः” भा० ९।२।२ तत्सुताः तृणविन्दोः सुताः। ३धूम्रवर्ण-ध्वजयुक्ते त्रि०।

**धूम्रकेश** पु० पृथुराजस्य पुत्रभेदे “वैन्यस्तु धुर्य्यो जगतामित्युप-क्रमे “पुत्रानुत्पादयामास पञ्चार्चिष्यात्मसंमितान्। विजिताश्वं हर्य्यक्षं धूम्रकेशं वृकं द्रविणं तथा”भाग०४।२२ ५०“विजिताश्वोधिराजासीत् पृथुपुत्रः पृथुश्रवाः। यवीयोभ्योऽददात् काष्ठा भ्रातृभ्यो भ्रातृवत्सलः। हर्य्य-क्षायादिशत् प्राचीं धूम्रकेशाय दक्षिणाम्। प्रतीचीं वृकसंज्ञाय तुर्य्यां द्रविणसे विभुः” २४।२।२ कृशाश्वस्या-र्चिषि भार्य्यायां जातपुत्रे च। “कृशाश्वोऽर्चिषि भार्य्यायां धूम्रकेशमजीजनत्”भाग० ६।६।१८।४ २धूम्रवर्णकेशयुक्ते त्रि० स्वाङ्गत्वात् वा स्त्रियां ङीष्।

**धूम्रपत्रा** स्त्री धूम्रं पत्रमस्याः जातित्वेऽपि अजादेराकृति गणत्वात् टाप्। स्वयम्भुवायां क्षुपभेदे राजनि० १धूम्र-वर्णपत्रयुक्ते त्रि०। [ स्थूलोत्पले राजनि०।

**धूम्रमूलिका** स्त्री धूम्रं मूलं यस्याः कप् अत इत्त्वम्।

**धूम्ररोहित** पु० “वर्णो वर्णेन” पा० कर्म०। १धूम्रवर्ण-

मिश्रितरक्तवर्णे तद्वति त्रि॰ । "रोहितो धूम्रो रोहितः कर्कन्धुरोहितस्ते सौम्याः" यजु॰ २४।२ ।

**धूम्रलोचन** त्रि॰ धूम्रं लोचनमस्य । १धूम्रवर्णनेत्रयुक्ते स्त्रियां स्वाङ्गत्वेऽपि बह्वच्कत्वात् टाप् । २शुम्भासुरसेनापतिभेदे पु॰ । "हे धूम्रलोचनाशु त्वं स्वसैन्यपरिवारितः । तामानय बलाद्दुष्टां केशाकर्षणविह्वलाम्" देवीमा॰ ।

**धूम्रलोहित** पु॰ "वर्णो वर्णेन" पा॰ कर्म॰ । १कृष्णवर्णमिश्रितरक्तवर्णे २तद्वति त्रि॰ ३शिवे पु॰ । "गौरः श्यामस्तथा कृष्णः पाण्डुरो धूम्रलोहितः" भा॰ अनु॰ १४ अ॰ शिवनामोक्तौ ।

**धूम्रवर्ण** पु॰ कर्म॰ । १कृष्णलोहितवर्णे २तद्वति त्रि॰ । ३तुरुष्के सिह्लके न॰ राजनि॰ । ४अग्नेः सप्तजिह्वान्तर्गतजिह्वाभेदे स्त्री जटा॰ शा॰ति॰ ५पटले "विन्यसेदात्मनो देहे मन्त्रैर्जिह्वा हविर्भुजः" इत्युपक्रमे "जिह्वास्तास्त्रिविधाः प्रोक्ता गुणभेदेन कर्मसु । हिरण्या१ गगना२ रक्ता३ कृष्णा४ऽन्या सुप्रभा५ मता । बहुरूपा६ऽतिरक्ता च सात्त्विक्यो यागकर्मसु" । "पद्मरागा१ सुवर्णा२ऽन्या तृतीया भद्रलोहिता३ । लोहिता४ऽनन्तरं श्वेता५ धूमिनी६ च करालिनी७ । राजस्यो रसनाद्वह्नेर्विहिताः काम्यकर्मसु" । "विश्वमूर्त्ति१ स्फुलिङ्गिन्यौ२ धूम्रवर्णा३ मनोजवा४ । लोहिता५ऽन्या करालाख्या६ काली७ तामस्य ईरिताः" जिह्वाशब्दे ३१२१पृ॰ दर्शिते काली करालीत्यादिश्रुतिवाक्ये सामान्यतोऽग्निजिह्वाभिहितेति इति बोध्यम् । ६धूमिन्यां जाते अजमीढस्य ४पुत्रभेदे पु॰ "धूमिन्या स तया देव्या अजमीढः समीयिवान् । ऋक्षं सञ्जनयामास धूम्रवर्णं सुदर्शनम्" हरिवं॰ ३२ अ॰ ।

**धूम्रशूक** पुंस्त्री॰ धूम्रः शूक इव रोमास्य । उष्ट्रे हारा॰ । स्त्रियां जातित्वात् ङीष् ।

**धूम्राक्ष** त्रि॰ धूम्रमक्षि यस्य षच्समा॰ । १धूम्रवर्णनेत्रयुक्ते स्त्रियां षित्वात् ङीष् । २तृणबिन्दुवंश्ये हेमचन्द्रनृपसुते पु॰ । "हेमचन्द्रः सुतस्तस्य धूम्राक्षस्तस्य चात्मजः" भाग॰ ९।२।२२ । ३रावणसैन्यान्तर्गते राक्षसभेदे । "तं दृष्ट्वा निहतं सङ्ख्ये प्रहस्तं क्षणदाचरम् । अभिदुद्राव धूम्राक्षो वेगेन महता कपीन्" "ततस्तमतिकोपेन सार्द्धं सरथसारथिम् । धूम्राक्षमवधीत् क्रुद्धो हनूमान् मारुतात्मजः" भा॰व॰ २८५ अ॰ ।

**धूम्रानीक** पु॰ शाकद्वीपाधिपमेधातिथेः १पुत्रभेदे तन्नामके २तत्कृतवर्षे च । चित्ररेफशब्दे भाग॰ ५।२०।२६ वाक्यं दृश्यम् तच्छब्दे ५।१ भाग॰ वाक्ये भागवतादुक्तवृत्तः ।

**धूम्रायण** पु॰ गोत्रप्रवर्षिभेदे प्रवराध्यायः

**धूम्रार्चिस्** स्त्री शा॰ति॰ उक्ते वह्नेर्दशकलान्तर्गते कलाभेदे "धूम्रार्चि१रुष्मा२ ज्वलिनी३ ज्वालिनी४ विस्फुलिङ्गिनी५ । सुश्री६ सुरूपा७ कपिला८ हव्यकव्यवहे (९।१०) अपि । यादीनां दशवर्णानां कला धर्मप्रदा इमाः ।

**धूम्राह्वा** स्त्री धूम्रं वर्णमाह्वयते स्पर्द्धते आ+ह्वे—क" । धूम्रपत्रायां स्वयम्भुवायां क्षुपभेदे राजनि॰ ।

**धूर** वधे गतौ च दि॰आ॰सक॰ सेट् । धूर्य्यते अधूरिष्ट । दुधूरे । ईदित् धूर्त्तः ।

**धूर्जटि** पु॰ जट—संघाते इन् धुरस्त्रैलोक्यचिन्ताया जटिः सङ्घातोऽस्य । शिवे अमरः भा॰द्रो॰ २०२ अ॰ तु अन्यथा तन्निरुक्तिर्यथा "धूम्ररूपञ्च यत्तस्य धूर्जटिस्तेन चोच्यते" अस्मिन् पक्षे धूम्रवर्णस्य जटिः सङ्घातोऽस्य पृषो॰ ।

**धूर्त्त** पु॰ धूर्व—धूर—वा क्त उणा॰ तन् वा । १धुस्तूरवृक्षे (धुतुरा) अमरः २चोरकद्रव्ये राजनि॰ । ३लौहकिट्टे न॰ हेमच॰ । ४बिड्लवणे न॰ राजनि॰ भावे क्त । ५हिंसने तदस्यास्ति अर्श॰ अच् उणा॰ तन् वा । ६वञ्चके ७मायाविनि ८द्यूतकरे त्रि॰ हेमच॰ । ९शठनायके शठशब्दे तल्लक्षणं दृश्यम् "शाठ्यं मनोरथशतैस्तव धूर्त्त ! कान्ता सैव स्थिता मनसि कृत्रिमभावरम्या" । "दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादराद् एकस्या नयने पिधाय विहितक्रीडानुबन्धच्छलः । ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसाम् अन्तर्हासलसत्कपोलफलकां धूर्त्तोऽपरां चुम्बति" सा॰ द॰ । द्यूतकरे "प्राप्ते नृपतिना भागे प्रसिद्धे धूर्त्तमण्डले" "गृह्णीयाद्धूर्त्तकितवादितराद्दशकं शतम्" याज्ञ॰ । वञ्चके "नराणां नापितो धूर्त्तः पक्षिणां चैव वायसः । दंष्ट्रिणां च शृगालस्तु श्वेतभिक्षुस्तपस्विनाम्" पञ्चत॰ "स्वर्णकारः स्वर्णवणिक् कायस्थश्च व्रजेश्वर ! । नरेषु मध्ये ते धूर्त्ताः कृपाहीना महीतले । हृदयं क्षुरधाराभं तेषां च नास्ति सादरम् । शतेषु सज्जनः कोऽपि कायस्थो नेतरौ च तौ । सुबुद्धिः शिवभक्तश्च शास्त्रज्ञो धर्ममानसः । न विश्वसेत् तेषु तात । स्वात्मकल्याणहेतवे" ब्रह्मवैवर्त्त जन्मख॰ ८५ अ॰ । "प्रियाश्च धूर्त्ता मम सेविनः सदा" भा॰वि॰ ७ अ॰ । धूर्त्तशब्देन जातिवाचकस्य समासे पोटायुवतीत्यादि पा॰ परनिपाते वकधूर्त्तः शृगालधूर्त्तः कठधूर्त्तः इत्यादि शौण्डादि॰ ७तत॰ । अक्षधूर्त्तः । धुर्व कर्मणि क्त । १०हिंसिते त्रि॰ ।

धूर्त्तक पु० धूर्त्त इव वञ्चक इव इवार्थे कन् । १शृगाले शब्दर० स्त्रियां जातित्वात् ङीष् । कौरव्यकुलजे २नागभेदे । तदुपक्रमे "वाहुकः शृङ्गवेरश्च धूर्त्तक प्रति वातकौ" भा० आ० ५७ अ० । स्वार्थे क । धूर्त्तशब्दार्थे । "स्त्री-धूर्त्ते कितवे भीरौ चपले पुरुषमानिनि । चौरे कृतघ्ने विश्वासो न कार्य्यो न च नास्तिके" भा० उ० ३८ अ० ।

धूर्त्तकृत् पु० धुर्व–भावे क्त धूर्त्तं हिंसनं करोति कृ+क्विप् ६त० । १धुस्तूरे शब्दमा० २हिंसके त्रि० ।

धूर्त्तचरित न० धूर्त्तस्य चरितं वर्ण्यत्वेनास्त्यत्र अच् । सङ्कीर्णाख्ये १नाटकग्रन्थभेदे सा० द० । ६त० । २धूर्त्तानां चरिते च । [तासाः चोरचित्तत्वात् ।

धूर्त्तजन्तु पु० नित्यक० । मानुषे शब्दच० तज्जन्तोर्धूर्त्त-

धूर्त्तमानुषा स्त्री धूर्त्तो हिंसितोमानुषो यया । १रास्नायां शब्दच० २हिंसितमानुषके त्रि० ।

धूर्त्ति पु० धुर्वी हिंसायां क्तिच् । १हिंसके "नीनः शंदेव अररुषो धूर्त्तिः" ऋ० ।१।१८।२ "धूर्त्तिर्हिंसकः" भा० भावे क्तिन् । २हिंसायां स्त्री

धूर्द्धर त्रि० धुरोधरः । धुरन्धरे रथादौ रथाभावः

धूर्वह त्रि० धुरं वहति वह–अच् । धुरन्धरशब्दार्थे

धूर्वी स्त्री धुरमजति अज–क्विप् अजोवीभावः रथाग्र-भागे हेमच० ।

धूलक न० धू–वा० लक धूलिराकारतस्याऽस्त्यस्य अच् संज्ञायां कन् वा । विषे शब्दच० ।

धूलि स्त्री धू–लिक् वा ङीष् । धू–सं० क्विप् धुवा लीयते ली–कि वाहेये आल्लोपः । १रजसि परागे अमरः । रेणूनां पवनचालनेन लीयमानत्वात्तथात्वम् । "गोपैर्यष्ट्या हतानां खुरपुटदलिता या तु धूलिर्दिनान्ते" ज्यो०सं० ३०२अ० । गोधूलिशब्दे दृश्यम् । "अनीला पद्भ्यां धूली-सदकं नावतिष्ठते" "वधूरिव धूलीसदृशिवत्" माघः "धूलिः परस्त्वहार्दपि" नीतिसारः "धूलीपटले धूम-त्वभ्रमात् तत्रासता धूमत्वेनेत्यादि" अनुमानदीधितिः । २व्याकुलीभावे अव्य० उर्य्या०उप०स० । "धूलीकृत्य व्याकु-लीकृत्य" गणरत्न०टी० । [शब्दर० ।

धूलिका स्त्री धूलिरिव कायति कै–क । कुज्झटिकायाम्

धूलिकुट्टिम न० धूलीनां कुट्टिममिव । केदारे शब्दचि० शब्दार्थकल्प० । तस्य कर्षणादिजातधूलिमत्त्वात्तथात्वम्

धूलिकेदार पु० धूलिप्रधानः केदारः शा०त० । शब्दचि० केदारे त्रिका० तस्य कर्षणजातधूलिमत्त्वात्तथात्वम् ।

धूलिगुच्छक पु० धूलीनां गुच्छ इव इवार्थे कन् । फल्गु-चूर्णे (फाग) त्रिका० ।

धूलिध्वज पु० धूलिरेव ध्वजोऽस्य । वायौ त्रिका०

धूलिपुष्पी स्त्री धूलिप्रचुरं पुष्पमस्याः ङीष् । केतक्याम् । स्वार्थे क स्वल्पः । धूलिपुष्पिका तत्रार्थे राजनि० ।

धूलीकदम्ब पु० धूलीनां कदम्बं यत्र । १कदम्बवृक्षे २वरण-वृक्षे ३तिनिशवृक्षे च मेदि० । ६त० । ४धूलीसमूहे न०

धूश(ष)(स) शोभने चुरा०उभ० सक०सेट् । धूश(ष)(स)यति ते अदूधुश (ष)(स)त् त ।

धूसर पुं स्त्री धू–सर किच्च न षत्वम् । १गर्दभे २उष्ट्रे ३कपोते राजनि० स्त्रियां ङीष् । ४तैलकारे पु० हेम० धूस–रक् । ५ईषत्पाण्डुवर्णे कृष्णमिश्रितवर्णे शुक्लपीतवर्णे च पु० ६तद्वति त्रि० अमरः । "क्रान्तं रजोधूसरकेतुसैन्यम्" "अवक्रान्त-वर्त्मकधूसराणाम्" रघुः । "किरणपरिचयधूसरप्रदो-षाम्" । "वसाटिकाचन्द्रनधूसराङ्का" कुमा० । ७पा-ण्डुरफलीक्षुपे स्त्री राजनिः टाप् । ८किन्नरीभेदे स्त्री मेदि० गौरा० ङीष् ।

धूसरच्छदा स्त्री धूसरः छदो यस्याः । श्वेतबुह्नायां रत्नमा०

धूसरपत्रिका स्त्री धूसरं पत्रमस्याः कप् कापि अत इत्त्वम् । हस्तिशुण्डीक्षुपे (हातशुँडा) राजनि० ।

धूसी अव्य० धूस–वा० ई । विस्तारे गणरत्नम् । ऊर्य्यादि० धूसीकृत्य विस्तार्येत्यर्थः ।

धूस्तरा(मा) स्त्री अतिशयेन धूः तरप् तमप् च । "सुषा-मादौ तद्धिते" पा० सुषामादेव षत्वविधानात् न षत्वम् । अतिशयभारे । [(धूतरा) ख्याते वृक्षे अमरः ।

धूस्तुर पु० धूस–क्विप् ततोर्णि तुर–त्वरणे क कर्म० ।

धूस्तूर पु० धूस–क्विप् तूरी गतिहिंसयोः क कर्म-धारयः स० । (धूतरा) ख्याते वृक्षे अमरे पाठान्तरम् । "धूस्तूर ! धूर्त्त ! तवचेन्दुनिवासयोग्यस्थाने पिनाकप-तिना विनिवेशितोऽसि । किं कैरवाणि विकसन्ति तव प्रयाति किं वारिधिः स्तनयति किं द्रवदः स्रवन्ति" उद्भटः । "धूस्तूरो मदवर्णाग्निवातकृज्ज्वरकुष्ठहृत् । कषायो मधुरस्तिक्तो यूकालिक्षाविनाशकः । उष्णो गुरुर्व्रण-श्लेष्मकण्डूकृमिविषापहः" भावप्र० ।

धृ स्थितौ अक०धृतौ सक०उभ०भ्वा०अनिट् । धरति ते अधार्षीत् अधृत । दधार दध्रे । धृतः धृतिः । "ततो दधार सा देवी गर्भम्" भा० उ० ७३६९ श्लो० धर्त्ता धरिष्यति ते [धरिष्यते ।

धृ पतने भ्वा०आत्म०अक०अनिट् । धरते अधृत । दध्रे धर्त्ता

**धृ** स्थितौ अक० धारणे सक० तुदा० आत्म० अनिट् । ध्रियते अधृत । दध्रे धर्त्ता धरिष्यते । स्थितौ "ध्रियते याव-देकोऽपि रिपुस्तावत् कुतः सुखम्" माघः "प्राणेषूत्-क्रान्तेषु शरीरं मर्यितुमध्रियत" इ०उप०धारणे "ध्रियते कुसुमप्रसाधनम्" कुमा० "धाम्नु देशान्तरस्थेन ध्रियमाणेन मूर्द्धनि" भा० अ० १८६ अ० ।

उद्+उत्तोलने धारणे "चरणं त्वदुद्धृतम्" नैषध० । "पदमुद्धृतमुद्वहन्ती" कुमा० । "प्रसभोद्धृतारि" रघुः ।

**धृ** धारणे चुरा० उभ० सक० सेट् । धारयति ते अदीधरत्-त । धारयाम् बभूव आस चकार । "वैणवीं धारयेद्यष्टिं सोदकं च कमण्डलुम्" मनुः "समकार्य्यविरोधीनं धारय-न्नचलः स्थिरः" गीता । धर्ष्यं धार्य्यः पूर्वेषां मते एतस्य ण्यो यत् इति भेदः धार्य्यमर्थे उदा० "धारेरुत्तमर्णः" पा० एतद्योगे उत्तमर्णस्य सम्प्रदानता । चैत्राय शतं धारयति ।

**ध्रज** गतौ भ्वा० पर० सक० सेट् इदित् । ध्रजति अध्रजीत् । दध्रज इदित् ध्रज्यते । अस्य क्वचिदित्त्वमपि ध्रजति । धर्जति अधर्जीत् दधर्ज । "हरो महेश्वरश्चैव शूलपाणिः पिनाकधृक्" शिवपूजायां तन्नामविशेषोक्तौ ।

**धृत** न० धृ-स्थितौ पतने च भावे क्त । १पतने २स्थितौ च । धृ-धारणे कर्म्मणि क्त । ३धारणे ३स्वीकृते त्रि० भावे क्त । ४धारणे ग्रहणे न० । "धृतरदाच-मधुव्रतं जगः" "रूपमदर्शि धृतोऽपि यदर्थम्" नैष० । ५त्रयोदशमनोः पुत्रभेदे पु० । "त्रयोदशस्य पुत्रास्ते विज्ञेयास्तु रुचेः सुताः । चित्रसेनो विचित्रश्च नयो धर्मभृतो धृतः" हरिवं० ७अ० । ६द्रुह्युवंश्ये धर्म्मसुते राजभेदे "द्रुह्योश्च तनयो बभ्रुः सेतुस्तस्यात्मजस्ततः । आरब्धस्तस्य गान्धारस्तस्य धर्म्मस्ततो धृतः" भा० ९।२३।४ अत्र द्युत इति पाठान्तरम् ।

**धृतदेवा** स्त्री "चत्वारो देवकात्मजाः । देववानुपदेवश्च सुदेवो देववर्द्धनः । तेषां स्वसारः सप्तासन् धृतदेवादयो नृप !" भाग० ९।२४।१२ उक्ते देवकात्मजाभेदे "त्रिपृष्ठो धृतदे-वायामेक आनकदुन्दुभेः" २५श्लो० ।

**धृतराजन्** पु० धृतो राजा प्राशस्त्येन येन । सुराज्ञि देशे तत्र भवः अण् उपधालोपः । धार्त्तराज्ञ तत्र भवे त्रि० ।

**धृतराष्ट्र** पु० धृतं राष्ट्रं सुपाल्यतया येन । १सुराज्ञि देशे २नागभेदे च मेदि० । "कौरव्यो धृतराष्ट्रश्च शङ्खपिण्डश्च वीर्य्यवान्" भा० आ० ३५ अ० । नागनामोक्तौ "धृत-राष्ट्रकुले जातान् शृणु नागान् यथातथम्" ५७अ० । ३गन्धर्वराजभेदे "गन्धर्वराजो यो धीमान् धृतराष्ट्र इति श्रुतः । स एव मानुषो लोके धृतराष्ट्रः पतिस्तव" भा० आश्र० ३१ अ० । विचित्रवीर्य्यक्षेत्रे सत्यवत्या नियोगेन व्यासेनोत्पादिते स्वनामख्याते कौरवे ४नृपभेदे
"शान्तनुः खलु गङ्गां भागीरथीमुपयेमे तस्यामस्य जज्ञे देवव्रतो नाम यमाहुर्भीष्ममिति । भीष्मः खलु पितुः प्रियचिकीर्षया सत्यवतीं मातरमुदवाहयत् यामाहुर्गन्ध-कालीमिति । तस्यां पूर्वं कानीनो गर्भः पराशराद्द्वै-पायनोऽभवत् । तस्यामेव शान्तनोरन्यौ द्वौ पुत्रौ बभू-वतुः । विचित्रवीर्य्यश्चित्राङ्गदश्च तयोरप्राप्तयौवन एव चित्राङ्गदो गन्धर्वेण हतः विचित्रवीर्य्यस्तु राजासीत् । विचित्रवीर्य्यः खलु कौसल्यात्मजे अम्बिकाम्बालिके काशिराजदुहितरावुपयेमे । विचित्रवीर्य्यस्त्वनपत्य एव विदेहत्वं प्राप्तः । ततः सत्यवत्यचिन्तयन्मा दौष्मन्तो वंश उच्छेदं व्रजेदिति । सा द्वैपायनमृषिं मनसा चिन्तया-मास । स तस्याः पुरतः स्थितः किं करवाणीति । सा तमुवाच भ्राता तवानपत्य एव स्वर्यातो विचित्रवीर्य्यः साध्वपत्यं तस्योत्पादयेति । स तथेत्युक्त्वा त्रीन् पुत्रा-नुत्पादयामास । धृतराष्ट्रं पाण्डुं विदुरञ्चेति" भा० आ० ९५ अ० । अस्य जन्मादिकथा भा० आ० ११ अ० दृश्या । ५पक्षिभेदे हंसे पुंस्त्री हेमच० तस्य धृतराष्ट्री-जातत्वात् तथात्वम् स्त्रियां ङीप् । सा च कश्यपस्य ताम्रायां पत्न्यां जाते ६कन्याभेदे
"काकीं श्येनीं तथा भासीं धृतराष्ट्रीं तथा शुकीम् । ताम्रा तु सुषुवे देवी पञ्चैता लोकविश्रुताः" "धृतराष्ट्री तु हंसांश्च कलहंसांश्च सर्वशः" भा० आ० ६६ अ० । ताम्रा तु दक्षकन्या कश्यपपत्नी ताम्रशब्दोक्तेः यतोऽच्यते "सुरभिर्विनता चैव ताम्रा क्रोधवशा इरा । कद्रुर्मुनिश्च राजेन्द्र ! तास्वपत्यानि मे शृणु" हरिवं० ३अ० ।

**धृतवर्म्मन्** पु० धृतं वर्म्म येन । १स्वीकृतकवचे २भारतप्रसिद्धे त्रिगर्त्तराजकेतुवर्म्मानुजे नृपभेदे "केतुवर्म्मा तु तेजस्वी तस्यैवावरजो युवा । युयुधे भ्रातुरर्थाय पाण्डवेन यश-स्विना । तमापतन्तं सम्प्रेक्ष्य केतुवर्म्मा महाहवे । अभ्यघ्नन्निशितैर्बाणैर्बीभत्सुः परवीरहा । केतुवर्म्मण्यभि-हते धृतवर्म्मा महारथः । रथेनाशु समुत्पत्य शरै-र्जिष्णुमवाकिरत्" भा० आ० ७४ अ० ।

**धृतव्रत** त्रि० धृतं व्रतं येन । १स्वीकृतव्रते "संवर्त्तश्च धृतव्रतः" भा० आ० ६६ अ० । २पुरुवंश्ये जयद्रथपुत्रविजयसुत-

पौत्रे नृपभेदे। "विजयस्य धृतिः पुत्रस्तस्य पुत्रो धृतव्रतः" हरिवं०३१अ०। धृतिशब्दे दृश्यम्।

**धृतात्मन्** त्रि० धृत आत्मा येन। १धैर्य्यान्वितचित्ते २विष्णौ पु०। "धृतात्मा नियमो यमः" विष्णुस०। "एकरूपेण जन्मादिरहिततया स्थित आत्मास्येति" भा०।

**धृति** स्त्री धृ–क्तिन्। १धारणे २तुष्टौ ३धैर्य्ये "धृतिरस्तमिता रतिश्च्युता" रघुः "धृतिर्धैर्यं प्रीतिर्वा" मल्लि०। विष्कम्भादिमध्ये ४अष्टमे योगभेदे मेदि०। "अतिगण्डः सुकर्मा च धृतिः शूलं तथैव" ज्यो०। ५सुखे हेमच०। गौर्य्यादिषोडशमातृमध्ये ६मातृकाभेदे। मातृकाशब्दे दृश्यम्। अष्टादशाक्षरपादकच्छन्दोभाले छन्दोऽत्युक्त्युपक्रमे "धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिराकृतिः" वृ० र०। ७मानसधारणाभेदे "धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव" श्रुतिः। सा च सात्त्विकादिभेदेन त्रिधा यथाह गीतायाम् "धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः। योगेनाव्यभिचारिण्या धृतिः सा पार्थ! सात्त्विकी। यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन!। प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ! राजसी। यया स्वप्नं भयं शोकं विषादं मदमेव च। न विमुञ्चति दुर्मेधा धृतिः सा पार्थ! तामसी"। ८दक्षसुताधर्मपत्नीभेदे "ददौ स दश धर्माय" इत्युपक्रमे धर्मपत्नीशब्दे उक्ते वाक्ये ३८५७पृ०दृश्यम्। ९जयद्रथनृपस्य पौत्रे पु०"जयद्रथस्तु राजेन्द्र! यशोदेव्यां व्यजायत। ब्रह्मक्षत्रोत्तरः सत्यां विजयो नाम विश्रुतः। विजयस्य धृतिः पुत्रः" हरिवं० ३१अ०। १०मैथिले राजभेदे पु० तदुपक्रमे "शुनकस्तत्सुतो जज्ञे वीतिहव्यो धृतिस्ततः" भाग० ९।१३।१६। ११विश्वदेवभेदे पु० तन्नामोपक्रमे "वत्सः धृतिर्विपाप्मा च पुण्यकृत् पावनस्तथा" भा०अनु०९१अ०। सा०द० उक्ते १२व्यभिचारिभावभेदे। सा च "स्याद्धृतिश्चपलताग्लानिश्चिन्तावितर्काः" इत्युद्दिश्य तत्र लक्षिता यथा "ज्ञानाभीष्टागमाद्यैस्तु संपूर्णस्पृहता धृतिः। सौहित्यवचनोल्लाससहासप्रतिभादिकृत्" उदाहृतं च "कृत्वा दीननिपीडनां निजजने बद्ध्वा वचोविग्रहम् नैवालोच्य गरीयसीरपि चिरादामुष्मिकीर्यातनाः। द्रव्यौघाः परिसञ्चिताः खलु मया यस्याः कृते साम्प्रतं नीवाराञ्जलिनापि केवलमहो सेयं कृतार्था तनुः" सा०द०। "ता धृतिरस्मि गताश्च सन्ततीयम्" माघः। "स्थिता कथं शैलजनायुते धृतिः" किरा० "अम्बरान्तधृतेः" शा०सू०। १४गुरुत्ववतां पतनाभावे हरिदासः "कार्य्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः। वाक्यात् सङ्ख्याविशेषाच्च साध्यो विश्वविदव्ययः" कुसुमा०। "धृतीति ब्रह्माण्डादिपतनप्रतिबन्धको भूतप्रयत्नवदधिष्ठितं धृतिमत्त्वात् वियति विहङ्गमधृतकाष्ठवत् धृतिश्च गुरुत्ववतां पतनाभावः" हरिदासः। मनसो भूतपञ्चकारब्धत्वात् चित्तं प्रधारणवत्त्वात् धृतिमत्त्वं बोध्यम्। धृतेर्भूमिगुणत्वञ्च भा० शा० २५५ अ० उक्तं यथा "भूमेः स्थैर्य्यं गुरुत्वं च काठिन्यं प्रसवार्थता। गन्धोगुरुत्वं शक्तिश्च संघातः स्थापना धृतिः"। "स्थैर्य्यमचाञ्चल्यं गुरुत्वं पतनप्रतियोगी गुणः प्रसवो धान्याद्युत्पत्तिसमर्थता, गुरुत्वं प्रथिमा पिण्डपुष्टिः शक्तिर्गन्धग्रहणसामर्थ्यं संघातः छिन्नावयवत्वम् स्थापना मनुष्याद्याश्रयत्वं धृतिः पाञ्चभौतिके मनसि यो धृत्यंशः स पार्थिवः स्थैर्य्यशब्देनैवोक्त इति धृतिशब्देनात्र भूतान्तरप्रवेशस्यानवकाशत्वमुच्यते" नीलकण्ठव्याख्या। तच्छन्दसोऽष्टादशसंख्यकत्वात्तत्तुल्यसंख्यायुते अष्टादशसंख्यायुक्ते च। १६ विपुलाख्यविष्णुपर्वतस्य वनभेदे विष्णुपर्वतोपक्रमे "वनं तथा चैत्ररथं विचित्रं तेऽभ्यन्तरे नन्दनमन्दनञ्च। धृत्याह्वयं यद्धृतिकृत् सुराणां भ्राजिष्णु वैभ्राजमिति प्रदिष्टम्" सि०शि०। "विपुलशैलमस्तके केतुवृक्षो वटो धृतिवनं महाह्रदः सरः" प्रमिता०।

**धृतिमत्** त्रि० धृतिरस्त्यस्य मतुप्। धैर्य्यान्विते "कृतज्ञं धृतिमन्तञ्च कङ्कमाहुर्दरिं बुधाः" मनुः स्त्रियां ङीप्। "प्रत्युवृतां धृतिमतीं भरतो ववन्दे" "धृतिमतीरुपकान्तमपि स्त्रियः" पञ्चममनोः २रैवतस्य पुत्रभेदे पु० "अथ पुत्रानिमांस्तस्य निबोध गदतो मम। धृतिमानव्ययो युक्तस्तत्त्वदर्शी निरुत्सुकः" हरिवं० ७अ०। अजमीढनृपस्य पौत्रे ३नृपभेदे पु०"अजमीढस्य दायादो विद्वान् राजा जवी नरः। धृतिमांस्तस्य पुत्रस्तु," हरिवं०२०अ०। ४कुशद्वीपस्थे वर्षभेदे न० कुशद्वीपोपक्रमे "धृतिमत् पञ्चमं वर्षं षष्ठं वर्षं प्रभाकरम्" भा०भी० १२०अ०। ५अग्निभेदे पु० "विष्णुर्नामेह योऽग्निस्तु धृतिमान् नाम सोऽङ्गिराः" भा०व०२२०अ० स च अग्निधृतिहोमाङ्गम् धृतिहोमशब्दे दृश्यम्। ६त्रयोदशमन्वन्तरे सप्तर्षिमध्ये आङ्गिरोऽपत्यभेदे। "त्रयो-

इह तु पर्य्याये भाव्ये मन्वन्तरे मनोः। अङ्गिराश्चैव धृतिमान् पौलहो व्यापकस्तथा"।

**धृतिहोम** पु० धृत्याद्युद्देशको होमः। विवाहाङ्गे होमभेदे "उत्थाप्य कुमारं प्रगुग आज्याहुतीर्जुहोति" गोभिलः "अष्टाविह धृतिहोमाः ध्रुवा आवश्यकाः। कथञ्चिद् भर्त्तृगृहगमनाभावेऽपि श्वशुरस्य गृहे निवासेऽपि अवश्यं होतव्याः इति। अत्र "इह धृतिः स्वाहा" इत्यादिप्रयोगः। न तु स्वाहायोगे चतुर्थी "धृतिहोमे न प्रयुञ्ज्यात् गोनामसु तथाष्टसु। चतुर्थीमत्र इत्येतद्धोनामसु हि श्रूयते" इति छन्दोगपरिशिष्टात्। धृतिहोमे धृत्यष्टकहोमे" सं०त० रघु०। स च तत्पद्धतौ भवदेवोक्तो यथा "ततः पतिः कुमारमुत्थाप्य पूर्ववत् कुशण्डिकोक्तविधाने धृतिनामानमग्निं संस्थाप्य समित्प्रक्षेपान्तं व्यस्तसमस्तमहाव्याहृतिहोमं कृत्वा अष्टाहुतीर्जुहुयात्। अष्टानां मन्त्राणाम् ऋष्यादयः साधारणाः। प्रजापति ऋषिर्बृहती छन्दो वधूर्देवता धृतिहोमे विनियोगः। ओं इह धृतिः स्वाहा१। ओं इह स्वधृतिः स्वाहा२। ओं इह रतिः स्वाहा३। ओं इह रमस्व स्वाहा४। ओं मयि धृतिः स्वाहा५। ओं मयि स्वधृतिः स्वाहा६। ओं मयि रतिः स्वाहा७। ओं मयि रमस्व स्वाहा८"।

**धृत्वन्** पु० धृ—क्वनिप् तुक्। १विष्णौ उज्ज्वल०। २धर्मे ३गगने ४समुद्रे ५मेधाविनि ६विप्रे संक्षिप्तसारे उणा०। ७धारके त्रि० स्त्रियां "वनो र च" ङीप् रश्चान्तादेशः। धृत्वरी सा च ८भूमौ संक्षिप्तसारे उणा०।

**धृष** संहतौ अक० हिंसे सक० भ्वा० पर० सेट्। धर्षति अधर्षीत्। दधर्ष उदित् धर्षित्वा धृष्ट्वा। "धृषिशसी वैयात्ये" पा० वैयात्ये एव अनिटोविधानात् क्तो वेट्कत्वेऽपि संहत्यर्थे बधार्थे च नित्यमिट्। धर्षितः

**धृष** प्रागल्भ्ये स्वा० पर० अक० सेट्। धृष्णोति अधर्षीत्। दधर्ष। "धृषिशसी वैयात्ये" पा० निष्ठायामनिट्। धृष्टः अस्य आरम्भं चिन्त्यप्रयोजनमिति च। भावादि कर्मणोर्वैयात्ये धृषिनोक्ति अतएव नियमार्थमिदं सूत्रमितीत्याह वृत्तिकारः" "विभाषा भावकर्मणोरिति विकल्पे प्राप्ते सूत्रमिदं नित्यतार्थमित्याशङ्क्याह धृषिनोक्तीति" तदर्थः" तत्त्व०। "आलोकयत् स काकुत्स्थमधृष्णोत् घोरमध्वनत्" भट्टिः। "तान् दृढातिदृढान् धृष्टान् प्राप्तान् परिदृढाप्नया" भट्टिः।

**धृष** सामर्थ्यबन्धने चुरा० आत्म० अक० सेट्। धर्षयते अदीधृषत अदधर्षत। धर्षयाम् बभूव आस चक्रे "कस्त्वा धर्षयितुं शक्तः" हरिवं० २१५३ श्लो०।

**धृष** क्रोधे अभिभवे च वा चु०उभ०पक्षे भ्वा०प०सक० सेट्। धर्षयति ते धर्षति अदीधृषत् त अदधर्षत् त अधर्षीत्। धर्षयाम् बभूव आस चकार दधर्ष। "महतस्य पुरोऽमात्यान् जिहिंसुर्दधृषुस्तथा" भट्टिः। दधृषुरभिभूतवन्तः।

**धृषज्** त्रि० धृष—अभिभवे वा० कजिन्। १धर्षके २अभिभवे च। "ता अस्य संधृषजो न तिग्माः" ऋ०५।१९।५

**धृषद्** त्रि०धृष—अभिभवे वा०कर्त्तरि अदिक्। धर्षके "धृषद्वर्णं दिवे दिवे" ऋ०१।८७।२ "धृषद्वर्णं धर्षकरूपम्" भा० "सभूत्योजा अयसि धृषन्मनः" ऋ०१।१५२।५.२ धृषन्मनः धर्षकमनाः"भा०। भावे अदिक्। २धर्षणायाम्"ते यामन्ना धृषद्विनः" ऋ०१।५२।२ "धृषद्विनः धर्षणावन्तः" भाष्यम्

**धृषु** त्रि० धृष—कु। १प्रगल्भे २दक्षे ३सङ्घाते पु० संक्षिप्तसारोणा०।

**धृष्ट** त्रि०धृष—वैयात्ये क्त। १निर्लज्जे २प्रगल्भे ३निर्दये च। ४नायकभेदे पु० तल्लक्षणोदाहरणे सा०द० उक्ते यथा "कृतागा अपि निःशङ्कस्तर्जितोऽपि न लज्जितः। दृष्टदोषोऽपि मिथ्यावाक् कथितो धृष्टनायकः" "शोणं वीक्ष्य मुखं विचुम्बितुमहं यातः समीपं ततः पादेन प्रहृतं तया सपदि तं धृत्वा सहासे मयि। किञ्चित् तत्र विधातुमक्षमतया वाष्पं त्यजन्त्याः सखे! ध्यातश्चेतसि कौतुकं वितनुते कोपोऽपि वामभ्रुवः"। "भूयोनिःशङ्कः कृतदोषोऽपि भूयोनिवारितोऽपि प्रश्रयपराश्रयः" रसमञ्जर्यां तल्लक्षणमुक्तम्। विदर्भराजसुतकुन्तेः ५पुत्रभेदे पु० "भीमो विदर्भस्य सुतः कुन्तिस्तस्यात्मजोऽभवत्। कुन्तेर्धृष्टः सुतो जज्ञे" हरिवं० ३७अ०। ६चन्द्रकायाम् असत्यां स्त्री शब्दरत्ना०। तस्य भावः तल् धृष्टता स्त्री त्व धृष्टत्व न० ष्यञ् धार्ष्ट्य न०। निर्लज्जत्वे प्रागल्भ्ये च "गुरुस्तवैवागमएव धृष्टताम्" माघः।

**धृष्टकेतु** पु० ययातिराजवंश्ये सुकुमारस्य १पुत्रभेदे "सुकुमारस्य दायादो धृष्टकेतुः सुधार्मिकः" हरिवं० २९अ०। नवम मनोः रोहितस्य २पुत्रभेदे च "दक्षपुत्रस्य पुत्रास्ते रोहितस्य प्रजापतेः। मनोः पुत्रो धृष्टकेतुः पञ्चहोत्रो-निराकृतिः" हरिवं०७अ०। ३जनकवंश्ये धृतिसुते पु०। "सुधृतेर्धृष्टकेतुर्वै हर्य्यश्वोऽथ मरुस्ततः" भाग० ९।१३।१२ ४कैकये नृपभेदे च "कैकयो धृष्टकेतुश्च स्तकीर्त्तिम-

विन्दत” भाग० ९।२४।२१। काशेय ५ सत्यकेतुसुते धर्मकेतुः सुतस्तस्मात् सत्यकेतुरजायत। धृष्टकेतुः सुतस्तस्मात्” भाग० ९।१७। धृष्टद्युम्नस्य ६ पुत्रभेदे च “धृष्टद्युम्नःसुतस्तस्य (द्रुपदस्य) धृष्टकेतुश्च तत्सुतः” हरिवं० ३२ अ० “धृष्टकेतुश्चेकितानः काशिराजश्च वीर्य्यवान्” गीता।

**धृष्टद्युम्न** पु० द्रुपदनृपस्य पुत्रभेदे तदुत्पत्तिकथा “तथैव धृष्टद्युम्नोऽपि साक्षादग्निसमद्युतिः। वैताने कर्म्मणि तात! पावकात् समजायत। वीरो द्रोणविनाशाय धनुरादाय वीर्य्यवान्” भा० आ० ६३ अ०। “द्रोणान्तकमहं पुत्रं लभेयं युधि दुर्जयम्। तत्कर्म कुरु मे याज! वितराम्यर्बुदं गवाम्। तथेत्युक्त्वा तु तं याजो याज्यार्थमुपकल्पयत्। गुर्व्वर्थं इति चाकाममुपयाजमचोदयत्। याजो द्रोणविनाशाय प्रतिजज्ञे तथा च सः। ततस्तस्य नरेन्द्रस्य उपयाजो महातपाः। आचख्यौ कर्म्म वैतानं तदा पुत्रफलाय वै। स च पुत्रो महावीर्य्यो महातेजा महाबलः। इष्यते यद्विधो राजन्! भविता ते तथाविधः। भरद्वाजस्य हन्तारं सोऽभिसन्धाय भूपतिः। आजह्रे तत्तथा सर्वं द्रुपदः कर्म्मसिद्धये। याजस्तु हवनस्यान्ते देवीमाह्वापयत्तदा। प्रैहि मां राज्ञि! पृषति! मिथुनं त्वामुपस्थितम्। राज्ञ्युवाच। अवलिप्तं मुखं ब्रह्मन्! दिव्यान् गन्धान् बिभर्मि च। सुतार्थेनोपरुद्धाऽस्मि तिष्ठ याज! मम प्रिय!। याज उवाच। याजेन श्रपितं हव्यमुपयाजाभिमन्त्रितम्। कथं कामं न सन्दध्यात्सा त्वं विप्रैहि तिष्ठ वा। ब्राह्मण उवाच। एवमुक्त्वा तु याजेन हुते हविषि संस्कृते। उत्तस्थौ पावकात्तस्मात् कुमारो देवसन्निभः। ज्वालावर्णो घोररूपः किरीटी वर्म्म चोत्तमम्। बिभ्रत् सखड्गः सशरो धनुष्मान्विनदन्मुहुः। तथेत्युवाच तं याजो राज्ञः प्रियचिकीर्षया। तयोश्च नामनी चक्रुर्द्विजाः संपूर्णमानसाः। धृष्टत्वादतिधृष्णुत्वाद्द्युम्नाद्युत्सम्भवादपि। धृष्टद्युम्नः कुमारोऽयं द्रुपदस्य भवत्विति”

**धृष्टरथ** पु० नृपभेदे “च्यवनो जनकश्चैव तथा धृष्टरथो नृपः” भा० अनु० १६९ अ० नानानृपोक्तौ।

**धृष्टि** पु० धृष–क्तिच्। हिरण्यकशिपोर्ज्येष्ठस्य हिरण्याक्षासुरस्य पुत्रभेदे “हिरण्यकशिपुर्भ्रातुः संपरेतस्य दुःखितः। कत्वा कटोदकादीनि भ्रातृपुत्रानसान्त्वयत्। शकुनिं शम्बरं धृष्टिं भूतसन्तापनं वृकम्” भा० ७।२।१६ २प्रगल्भे त्रि०। “धृष्टिरसि” यजु० १।१७ “हे उपवेष! त्वं धृष्टिरसि प्रगल्भोऽसि। तीव्राङ्गाराणामितस्ततश्चालनप्रापकत्वादस्य प्रागल्भ्यम्” वेददी० ३यज्ञिये उपवेषरूपे पात्रभेदे पु० उपवेषशब्दे १६१०पृष्ठे दृश्यम्। यज्ञपात्रोपक्रमे “धृष्टी शतमाने” कात्या० श्रौ० २६।२।१० “धृष्टी उपवेषौ औदुम्बरौ तत्र एकं रजतशतमानं द्वितीयं सुवर्णशतमानमिति” कर्कः “धृष्टिरसीत्युपवेषमादाय” कात्या० श्रौ० २।४।२६ “पलाशशाखायाः मूलदेशे च्छिन्नः काष्ठमात्र उपवेषः” कर्कः। पलाशशाखाया इति यज्ञविशेषे “सामान्यतस्तु औदुम्बर इति पूर्व्वमीमांसा। धृष्टिरसीति मन्त्रेणोपादीयमानत्वात् उपवेषस्य धृष्टित्वमिच्छायवेन “धृष्टी शतमाने” इत्युक्तम्। “धृष्टिभ्यां महावीरं परिगृह्णीयात्” कात्या० श्रौ० २६।१।१९ [दृश्यम्।

**धृष्ण** पु० वैवस्वतवंश्ये मनुपुत्रभेदे कारूषशब्दे २२०४पृ०

**धृष्णज्** त्रि० धृष–नजिङ्। १धृष्टे २प्रगल्भे ३निर्लज्जे अमरः।

**धृष्णि** पु० धृष–बा० नि। किरणे अमरः।

**धृष्णु** त्रि० धृष–क्नु। १धृष्टे २प्रगल्भे त्रिका० ३वसुकायां पु० शब्दच०। ४रुद्रभेदे पु० “नमस्त आयुधायानातताय धृष्णवे” यजु० १६।१४ “धृष्णवे धर्षणशीलाय हन्तुं प्रगल्भाय” वेददी०। सावर्णिमनोः ५पुत्रभेदे पु० “सावर्णस्य मनोः पुत्राः” इत्युपक्रमे “चरिष्णुराद्यो धृष्णुश्च राजन्! सुमतिरेव च” हरिवं० ७अ०। वैवस्वतमनोः ६पुत्रभेदे पु० तद्वंशोपक्रमे “इक्ष्वाकुश्चैव नाभागो धृष्णुः शर्यातिरेव च” हरिवं० १० अ०। सात्वतवंश्ये कुकुरसुते ७नृपभेदे “कुकुरस्य सुतो धृष्णुर्धृष्णोस्तु तनयस्तथा” हरिवं० ३८ अ०। ८पितामहपुत्रकविसुतभेदे “पितामहस्त्वपत्यं वै कविं जग्राह तत्त्ववित्। तदा स वारुणः ख्यातो भृगुः प्रसवकर्मकृत्। अष्टौ प्रसवजैर्युक्ता गुणैर्ब्रह्मविदः शुभाः। कविः काव्यश्च धृष्णुश्च बुद्धिमानुशनास्तथा। भृगुश्च विरजाश्चैव काशी चोग्रश्च धर्मवित्। अष्टौ कविसुता ह्येते सर्वमेभिर्जगत्ततम्” भा० अनु० ८५ अ०। वेदे सुपां स्थाने याच् “प्रधृष्णुया सभति वह्नो अन्त” ऋ० ४।२१।४ “धृष्णुया धृष्णुः” भा० “भ्राजन्तो यन्ति धृष्णुया” ऋ० ५।१०।५। “धृष्णुया धृष्णवः” भा०।

**धृष्णुक** पु० वैवस्वतमनुवंश्ये नृपभेदे “धृष्णुकश्चाम्बरीषश्च दण्डकश्चेति ते नव:” हरिवं० १अ० तद्वंशोक्तौ

**धृष्णोजस्** पु० कार्त्तवीर्य्यनृपपुत्रभेदे “शूरसेनश्च शूरश्च धृष्णोजाः

श्च एव च। जयध्वजस्तु नाम्नासीदावन्त्यो नृपतिर्महान्। कार्त्तवीर्य्यस्य तनया वीर्य्यवन्तो महाबलाः" हरिवं॰ ३४अ॰।

**धृष्य** त्रि॰ धृष–कर्मणि ऋदुपधत्वात् क्यप्। धर्षणीये "भूतानामिह यो वै त्वां मया विनिहितां सतीम्। उपाहन्यात् स मे धृष्यः" भा॰ शा॰ २२९अ॰ "पद्मायदूरात् अनसाप्यधृष्यम्" कुमा॰।

**धे** पाने भ्वा॰ प॰ सक॰ अनिट् टित्। धयति अदधत् अधासीत्। दधौ धास्यति। अच् स्तनन्धयः स्त्रियां टित्त्वात् अपि ङीप् हरदत्तोक्तेः अच्येव ङीप्। स्तनन्धयी अन्यत्र टाप्।

**धेन** पु॰ धयन्ति धे–नन् इत्। १समुद्रे २नदे च ३नद्यां स्त्री टित्त्वेऽपि अच्येव ङीप् इति हरदत्तोक्तेः न ङीप्। ४वाचि स्त्री निघण्टु "वाचो अव प्रङ्गुतो धेनाभिमातिदाघने" ऋ॰१।२।२ "धेना वाक्" भा॰। ५धन्याके स्त्री गौरा॰ ङीष्। स्वार्थे क तत्रार्थे भावप्र॰।

**धेनु** स्त्री धयति सुतान्, धीयते पीयते वत्सैर्वा धेट्–नु इत्। १गोमात्रे वत्सस्य धयनात् तस्यास्तथात्वम्। २नवप्रसूतिकायाम् नवप्रसूतायां गवि स्त्री अमरः वत्सैः पीयमानक्षीरत्वात् तस्यास्तथात्वम्।

गोमातृभेदाः दशविधा यथा ह॰पु॰उत्तरखण्डे १५०अ॰ "गवां जातीस्तु वक्ष्यामि शृणुष्वैकमना द्विज!। प्रथमा गौरकपिला द्वितीया गौरपिङ्गला। तृतीया रक्तकपिला चतुर्थी नीलपिङ्गला। पञ्चमी शुक्लपिङ्गाक्षी षष्ठी च शुक्लपिङ्गला। सप्तमी चित्रपिङ्गाक्षी अष्टमी बभ्रुरोहिणी। नवमी श्वेतपिङ्गाक्षी दशमी श्वेतपिङ्गला। तावत्यास्तेऽप्यनड्वाहः कपिलास्तु प्रकीर्त्तिताः"। ३दानार्थकल्पिते धेन्वाकारे गुडादिपदार्थे यथाह हेमा॰दा॰ "अत्र यद्यपि धेनुशब्देन स्वरूपतो गौरेवाभिधीयते तथापि धेनुशब्दसाधारण्यादिह प्रकरणे गुडधेन्वादीनामपि सन्निवेशो युक्तः तासु च क्रमेण निरूप्यमाणासु "दशमी स्यात् स्वरूपतः" इति स्वरूपधेनोरन्ते स्थितत्वात् गुडधेन्वादय एव प्रथमतो निरूप्यन्ते। तदुक्तं मत्स्यपुराणे "यास्तु पापविनाशिन्यः पठ्यन्ते दश धेनवः। तासां स्वरूपं वक्ष्यामि नामानि च नराधिप!। प्रथमा गुडधेनुः१ स्यात् घृतधेनुः२ तथापरा। तिलधेनुः३ तृतीया च चतुर्थी ४जलसंज्ञिका। क्षीरधेनु५श्च विख्याता मधुधेनु६स्तथापि च। सप्तमी शर्कराधेनु७र्दधिधेनु८स्तथाष्टमी। रसधेनुश्च९ नवमी दशमी स्यात् स्वरूपतः"। "कुम्भाः स्युर्द्रवधेनूनामितरासान्तु राशयः"। "सुवर्णधेनुमप्यत्र केचिदिच्छन्ति मानवाः" तत्तच्छब्दे दृश्यम्। यशोधनो धेनुमृषेर्मुमोच। "अनिन्द्या नन्दिनी नाम धेनुराववृते वनात्" रघुः।

**धेनुक** पु॰ धेनुरिव "इवे प्रतिकृतौ" पा॰ कन्। १असुरभेदे "खर इत्युच्यते दैत्यो धेनुकः सोऽसुरोत्तमः" हरिवं॰ ५५अ॰। "दारुणो धेनुको नाम दैत्यो गर्द्दभरूपवान्। खरयूथेन महता वृतो बलवतां वरः। स तु तालवनं घोरं गर्द्दभः परिरक्षति। नृपक्षिश्वापदगणांस्त्रासयन्नतिदर्पितः" हरिवं॰ ७०अ॰। २रतिबन्धभेदे तल्लक्षणं रतिमञ्जर्य्यामुक्तं यथा "हस्तद्वययुगला निजे पदे योषिदेति कटिलग्नमुन्नमा। चुम्बतो यदि शनैरधोमुखी धेनुकं तदवदन्मते प्रिये!।" "सुप्तां स्त्रियं समालिङ्ग्य अथ कुर्य्याद्रमेत् पुनः। बहु लिङ्गं चालयेद्यो बन्धोऽयं धेनुकः स्मृतः"। ३हस्तिन्यां स्त्री। संज्ञायां कन्। ४धन्याके स्त्री मेदि॰।

**धेनुकसूदन** पु॰ धेनुकमसुरं सूदयति सूदि–ल्यु। बलभद्रे तन्निसूदनकथा हरिवं॰ ७०अ॰ यथा "रौहिणेयं खरो दुष्टः सोऽदशद्दशनायुधः। पद्भ्यामुभाभ्यां च पुनः पश्चिमाभ्यां पराङ्मुखः। जघानोरसि दैत्योऽसौ रौहिणेयं निरायुधम्। ताभ्यामेव स जग्राह पद्भ्यां तं दैत्यगर्द्दभम्। आवर्ज्जितमुखस्कन्धं प्रैरयंस्तालमूर्द्धनि। स भग्नोरुकटीग्रीवो भग्नपृष्ठोदराकृतिः। खरस्तालफलैः सार्द्धं पपात धरणीतले। तं गतासुं गतश्रीकं पतितं वीक्ष्य गर्द्दभम्। ज्ञातींस्ततोऽपरांस्तस्य तृणराजनि सोऽक्षिपत्" हरिवं॰ ७०अ॰ "पूतनाधेनुकारिष्टकेशिचाणूरसूदनः" त्रिकाण्डशेषे विष्णुनामपर्य्याये धेनुसूदनोक्तिः रामस्य विष्ण्वंशावतारत्वात् इति बोध्यम् रामद्वारा तस्य हननात् तस्य तथात्वम्। भाग॰ १०।१५ अ॰ अपि बलरामेणैव तस्य हननकथान्ते "नैतच्चित्रं भगवति ह्यनन्ते जगदीश्वरे" इत्यनेन परमेश्वरकर्त्तृकस्य तद्धननस्य न चित्रत्वमित्युक्तम्। बलरामेण तद्धननेऽपि तस्य तद्द्वारा तद्धन्तृत्वमस्त्येवेति बोध्यम् धेनुकारिप्रभृतयोऽपि बलरामे।

**धेनुदुग्ध** न॰ धेनोर्दुग्धमिव स्वादु फलमस्य। १चिर्भटे राजनि॰ ६त॰। २धेन्वाः क्षीरे च।

**धेनुदुग्धकर** पु॰ धेनोर्दुग्धमिव किरति कॄ–अच् धेनो दुग्धं,

करोति वर्द्धयति क–अच् वा। गर्जरे (गाँजर) राजनि०। तत्पाने धेनोर्दुग्धस्य वर्द्धनात्तस्य तथात्वम्।

**धेनुमत्** त्रि० धेनुरस्त्यस्य मतुप्। १धेनुस्वामिनि स्त्रियां ङीप्। सा च भरतवंश्यदेवद्युम्नस्य २भार्य्यायाम् "देवद्युम्नस्ततो धेनुमत्यां सुतः परमेष्ठी" भाग०५।१५।२

**धेनुमूल्य** न० ६त०। प्रायश्चित्तरूपधेनुदानस्य निष्क्रयरूपे मूल्यभेदे तच्च प्रायश्चित्ततत्त्वे व्यवस्थापितं यथा "अथ धेनुमूल्यव्यवस्था। संवर्त्तः "प्राजापत्यव्रताशक्तौ धेनुं दद्यात् पयस्विनीम्। धेनोरभावे दातव्यं तुल्यं मूल्यं न संशयः"। पयस्विनीमिति विशेषणं दुग्धोपयोगाय सा च वत्सं विना न सम्भवति। अतः सवत्साया एव दानं मुख्यं तदभावे यथोचितं तन्मूल्यं तदभावे पुराणत्रयम्। "द्वात्रिंशत्पणिका गावो वत्सः पौराणिको भवेत्" कात्यायनवचनात्। षट्त्रिंशत्पणमिति कृत्वा पठन्ति "धेनुः पञ्चभिराढ्यानां मध्यानां त्रिपुराणिकी। कार्षापणैकमूल्या हि दरिद्राणां प्रकीर्त्तिता"। अत्र पुराणत्रयवत्त्वं गौतमोक्तं हिरण्यादिकमेव देयं तद् यथा "हिरण्यं गौर्वासोऽश्वो भूमिस्तिला घृतमन्नमिति देयानि"। एतान्येवामादेशे विकल्पेन क्रियेरन्निति अन्यथा इदमनर्थकं स्यात् इति" प्रायश्चित्तविवेकः। तन्निन्त्यं हिरण्यं गौरित्यादिना गोविकल्पकत्वेन हिरण्यादिकमुक्तं न तु गोमूल्यत्वेन ततश्च। "द्वात्रिंशत्पणिका गावः" इत्यादिवचनात् कार्षापणत्रयदानमेव युक्तम्। तत्र "ताम्रिकः कार्षिकः पणः" इति याज्ञवल्क्यवचनेन "गुञ्जाः पञ्चाद्यमाषकः। ते षोडशाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टय" इत्यमरसिंहोक्तेन अशीतिरत्तिकापरिमितताम्रे पणशब्दः सङ्केतितः। स च तावत्संख्यकवराटकैर्लभ्यत इति वराटकेष्वपि तथा व्यवहारः। एतन्मूलकं भविष्यत्पुराणयोर्वचनम्। "अशीतिभिर्वराटकैः पण इत्यभिधीयते। पुराणं ते षोडशभिः राजतं सप्तभिस्तु तैः"। गौतमोक्तपरिगणनीयनियमस्तु अनादिष्टे प्राथमिककल्पाय आदिष्टे तत्तद्द्रव्यप्राधान्यं हिरण्यादेरानुकल्पिकत्वमिति विशेषः। अतएव यमेन सामान्यतो दानमुक्तं यथा "शोषणेन शरीरस्य तपसाऽध्ययनेन च। पापकृन्मुच्यते पापात् दानेन च दमेन च"। अतः कार्षापणत्रयवत्त्वं रजतादि दीयते। यत्तु मिताक्षरायाम् "यवाद्यभावे निष्कः स्यात्तदर्द्धं पादएव च" इति स्वर्णनिष्कादिकमुक्तं तच्चान्तमाद्यपेक्षया तथापि "चतुःसौवर्णिको निष्कः" इति मनूक्तनिष्कस्य न ग्रहणम् अत्यन्तविसदृशमूल्यत्वात् साष्टशतसुवर्णनिष्कवत्। किन्तु दीनारनिष्कस्य ग्रहणं तथा चामरः। "साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले" दीनारेऽपि च निष्कोऽस्त्री" इति। दीनार उक्तो विष्णुगुप्तेन "दीनारोरोपकैरष्टाविंशत्या परिकीर्त्तितः। सुवर्णसप्ततितमो भागो रोपक उच्यते"। सुवर्णस्त्वशीतिरत्तिकापरिमितं हेम। तथा च मनुः। "पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोडश" इति अत्र काञ्चनं व्यक्ताह्वामरसिंहः। "सुवर्णबिस्तौ हेम्नोऽक्षः" इति। एवञ्च सप्तमांशाधिकहेमरत्तिका रोपकः तदष्टाविंशत्या द्वात्रिंशद्रत्तिकापरिमितोदीनारो निष्कः" प्रा०त० रघु०।

**धेनुभव्या** स्त्री भव्या धेनुः "धेनोर्भव्यायाम्" गणसूत्रनिर्देशात् परनिपातः सम् च। भवनार्हायां धेन्वाम्

**धेनुष्टरी** स्त्री अतिशयेन धेनुः तरप् ङीप् पारस्करादेराकृतिगणत्वात् सुट् षत्वञ्च। प्रशस्तधेन्वाम्। "सारस्वतीं धेनुष्टरीमालभेत" कठशाखाश्रुतिः।

**धेनुष्या** स्त्री धेनु–संज्ञायां यत् सुक् च। ऋणशोधनार्थमुत्तमर्णाय बन्धकत्वेन दीयमानायां धेनौ अमरः। "गौर्महिषी वा या दुग्धबन्धके स्थिता सा धेनुष्येति" रुद्रः। सा संजातास्य तार०इतच्। धेनुष्यित उत्तमर्णे

**धेय** त्रि० धा–कर्म्मणि यत् १धार्य्ये २पोष्ये च। "स आदिः स मध्यः स चान्तः प्रजानां स धाता स धेयः स कर्त्ता स कार्य्यम्" भा० शा० २४२अ० ईश्वरस्यैव सर्व्वरूपत्वात् तथात्वम्। धे–यत्। ३पेये त्रि०। भावे यत्। ४धारणे ५पोषणे ६पाने च।

**धेष्ठ** त्रि० अतिशयेन धाता इष्ठन् तृचो लोपे गुणः। धारकतमे "मित्राणां मित्रपते धेष्ठः" ऋ०१।१७०।५ "धेष्ठः अतिशयेन धारकः" भा०। नामधेयादौ स्वार्थे धेयप्रत्ययः।

**धैनव** पुंस्त्री धेनोरपत्यम् उत्सा० विदा० वा अञ्। धेन्वपत्ये स्त्रियां ङीप्।

**धैनुक** न० धेनूनां समूहः "अचित्तहस्तिधेनोष्ठक्" पा० ठक् "इसुसुक्तान्तात् कः" पा० ठस्य कः। १धेनुसमुदाये स्त्रीणां २करणभेदे च मेदि०।

**धैर्य्य** न० धीरस्य भावः कर्म्म वा ष्यञ्। १धृतौ "स्थिरा चित्तोन्नतिर्या तु तद्धैर्य्यमिति संज्ञितमिति" भूपालकोषः। २अप्रमादे ३अव्याकुलत्वे ४विघ्नाद्युपस्थितावपि प्रारब्ध-

परित्यागहेतावन्तःकरणवृत्तिविशेषे । ५निर्विकारचित्तत्वे । "मनसो निर्विकारत्वं धैर्य्यं सत्स्वपि हेतुषु" एतदभिप्रायेण "विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः" इति कुमा० उक्तम् । "कुर्य्यां हरस्यापि पिनाकपाणेर्धैर्य्यच्युतिं के मम धन्विनोऽन्ये" कुमा० । "अवधीर्य धैर्यकलिता दयितम्" माघः । ६नायकयोर्गुणभेदे धीरताशब्दे दृश्यम् । ७पुरुषगुणभेदे यथा "शोभा विलासो माधुर्य्यं गाम्भीर्य्यं धैर्य्यतेजसी । ललितौदार्य्यमित्यष्टौ सत्वजाः पौरुषा गुणाः" इत्युद्दिश्य "व्यवसायादचलनं धैर्य्यं विघ्ने महत्यपि" सा० द० लक्षितम् उदाहृतञ्च "श्रुताप्सरोगीतिरपि क्षणेऽस्मिन् हरः प्रसंख्यानपरो बभूव। आत्मेश्वराणां न हि जातु विघ्नाः समाधिभेदप्रभवो भवन्ति"। स्वार्थे ष्यञ्। पुरुषमेधयज्ञे दहौत्यदेवभेदे पु० । तदुपक्रमे "मेधायै रथकारं धैर्य्याय तक्षाणम्" यजु० ३०।७

**धैवत** पु० धीमतामयम् अण् पृषो० । तन्त्रीकण्ठोत्थित सप्तस्वरेषु षष्ठे स्वरे तल्लक्षणं यथा "गत्वा नाभेरधोभागं वस्तिं प्राप्योर्द्ध्वगः पुनः । धावन्निव च यो याति कण्ठदेशं स धैवतः" सङ्गीतदामो "अश्वस्तु धैवतं रौति" सङ्गीतशास्त्रोक्तेरश्वस्वरतुल्यत्वम् । अस्य च वायुभवत्वेऽपि आकाशगुणत्वम् भा० शा० १८४ अ० उक्तं यथा "तस्यैकगुणमाकाशं शब्द इत्येव तत् स्मृतम् । तस्य शब्दस्य वक्ष्यामि विस्तरं विविधात्मकम् । षड्जऋषभगान्धारौ मध्यमो धैवतस्तथा । पञ्चमश्चापि विज्ञेयस्तथा चापि निषादवान् । एष सप्तविधः प्रोक्तो गुण आकाशसम्भवः । ऐश्वर्य्येण तु सर्वत्र स्थितोऽपि पटहादिषु । मृदङ्गभेरीशङ्खानां स्तनयित्नो रथस्य च । यः कश्चिच्छ्रूयते शब्दः प्राणिनोऽप्राणिनोऽपि वा । एतेषामेव सर्वेषां विषये संप्रकीर्त्तितः । एवं बहुविधाकारः शब्द आकाशसम्भवः । आकाशजं शब्दमाहुरेभिर्वायुगुणैः सह । अव्याहतैश्चेतयते न वेत्ति विषमस्थितैः" । [तः । धीवोभावे ।

**धैवत्य** न० धीवोभावः ष्यञ् दाक्षिणायनेत्यादि० नि० सम

**धैवर** पुंस्त्री धीवरस्यापत्यं वा० अत इञ् बाधित्वा वेदे अण् । धीवरापत्ये "सरोभ्यो धैवरम्" यजु० ३०।१६ लोके तु इञ् धैवरिरित्येव ।

**धोयी** पु० कविभेदे "धोयी कविः क्ष्मापतिः" गीतगो०

**धोड** पुंस्त्री धुर–वधे अच् रस्य लत्वम् डः । (ढोँड़ा) सर्पभेदे डुण्डुभे शब्दर० स्त्रियां जातित्वात् ङीष् ।

**धोर** गतौ सक०चातुर्य्ये अक०भ्वा० पर०सेट् । धोरति अधोरीत् । दुधोर ऋदित् णिच् चङि अदुधोरत् त ।

**धोरण** न० धोर–गतौ करणे ल्युट् । १यानमात्रे हस्त्यश्वरथादौ त्रिका० । भावे ल्युट् । २गतौ ।

**धोरणि(णी)** स्त्री धोर–अनि वा ङीप् । परम्परायाम् जटाधरः । "येषांकन्दवने मनोज्ञपवने सद्यःस्खलन्माधुरीधाराधोरणिधौतधामनि धराधीशत्वमालम्ब्यते । तेषां नित्यविनोदिनां सुकृतिनां माध्वीकपानां पुनः काकः किन्न करोति केतकि ! यतस्त्वय्यापि केलीस्थली" उद्भटः ।

**धोरित** न० धुर–धोर–वा भावे क्त । १वधे २गतौ ३अश्वगतिभेदे हेमच० । स्वार्थे क । तत्रार्थे अमरः ।

**धौत** त्रि० धाव–क्त ऊठ् । १प्रक्षालिते २मार्जिते ३शोधिते हेम० "ईषद्धौतं स्त्रिया धौतं यद्धौतं रजकेन च । अधौतं तत् विजानीयात् दृषा दक्षिणपश्चिमे" कर्मलोचनम् । "धौतोत्तरीयप्रतिमच्छवीनि" "परितश्च धौतमसृदक्वविलसद्धिमांशुमयूखाः" माघः । ४रौप्ये न० राजनि० । भावे क्त । ५प्रक्षालने न० ।

**धौतकट** पु० नित्यकर्म० । शणनिर्मितपात्रभेदे (धोकडा)जटा०

**धौतकोषज** न० धौतं प्रक्षालितं कोषजं नित्यक० । कृमिकोषजाते वस्त्रभेदे शब्दर० । [वस्त्रे अमरः ।

**धौतकौषेय** न० नित्यकर्म० । प्रक्षालिते कृमिकोषजाते

**धौतवल्ली** स्त्री धौताञ्जन्यां मरुहट्टे शिक्यभेदे हारा० ।

**धौतमूलक** पु० १चीनराजभेदे "अर्कजश्च बलीहानां चीनानां धौतमूलकः" भा० उ० ७३अ० । धौतं मूलं यस्य कप् । २प्रक्षालितमूलयुक्ते त्रि० ।

**धौतय** न० धौतमिव वर्णं याति या–क । सैन्धवे मेघदूतप्रका०

**धौतरि** त्रि० धूतमेव धौतं कम्पनमृच्छति ऋ–कि । कम्पनकारके स्त्रियां ङीप् । "स सवानुतस्तोकाभिर्धौतरीभिः" ऋ० ६।४४।७ "धौतरीभिः कम्पनकारीभिः" भा० ।

**धौतशिल** न० धौता शिला यस्य । स्फटिके त्रिका० ।

**धौताञ्जनी** स्त्री मरुहट्टे शिक्यभेदे मेदि० ।

**धौती** स्त्री धू–कर्त्तरि क्तिच् स्वार्थे अण् ङीप् । कम्पनकर्त्तरि "योधौतीनामहिहन्नारिणक् पथः" ऋ० २।१३।५ "धौतीनां कम्पन्तीनाम्" भा० । धूति–स्वार्थे अण् ङीप् । २हठयोगाङ्गभेदे हठयोगशब्दे दृश्यम् ।

**धौन्धुमार** न० धुन्धुमारमधिकृत्य कृतो ग्रन्थः अण् । भारत वनपर्वान्तर्गतोपाख्यानभेदे "ऐन्द्रद्युम्नमुपाख्यानं धौन्धु-

भारं तथैव च भा०आ०१अ०। तच्च वनपर्वणि २००अध्यायावधौ २०२ अध्यायान्ते दृश्यम्। [हेमचं०।

**धौमक** पु० धूमे तत्प्रधानदेशे भवः धूमा० वुञ्। धूमप्रधान-

**धौमतायन** पु० राजभेदे। तेन निर्वृत्तादि अरीहणादि० चतुरर्थ्यां वुञ्। धौमतायनक तन्निर्वृत्ते नगरादौ

**धौमायनक** त्रि० धौमायनेन निर्वृत्तादि अरीहणादि० चतुरर्थ्यां वुञ्। धौमायननिर्वृत्तादौ।

**धौमीय** त्रि० धूमेन निर्वृत्तादि० चतुरर्थ्याम् कृशाश्वा०छण्। धूमनिर्वृत्तादौ।

**धौम्य** त्रि० धूमस्यापत्यं गर्गा० यञ्। १धूमर्षेरपत्ये स च युधिष्ठिरपुरोहितः यथा "गन्धर्व उवाच यवीयान् देवलस्यैष वने भ्राता तपस्यति। धौम्य उत्कोचके तीर्थे तं वृणुध्वं यदीच्छथ"। "तत उत्कोचकं तीर्थं गत्वा धौम्याश्रमन्तु ते। तं वव्रुः पाण्डवा धौम्यं पौरोहित्याय भारत!। तान् धौम्यः प्रतिजग्राह सर्ववेदविदांवरः। वन्येन फलमूलेन पौरहित्येन चैव ह" भा०आ० १८३अ०। व्याघ्रपादमुनेः पुत्रभेदे २उपमन्योरनुजे च। "पुरा कृतयुगे तात! ऋषिरासीन्महातपाः। व्याघ्रपाद इति ख्यातो वेदवेदाङ्गपारगः। तस्याहमभवं पुत्रो धौम्यश्चापि ममानुजः। कस्यचित्त्वथ कालस्य धौम्येन सह माधव!" भा०आनु०१४अ०। पश्चिमदिगाश्रिते ३ऋषिभेदे च "उन्मुचुः कवषो धौम्यः परिव्याधश्च वीर्यवान्। एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः। अत्रेः पुत्रश्च भगवांस्तथा सारस्वतः प्रभुः। एते चैव महात्मानः पश्चिमामाश्रिता दिशम्" भा०शा० २०८अ०

**धौम्र** पु० धूम्रएव स्वार्थे अण्। ऋषिभेदे "धौम्यो विभाण्डो माण्डव्यो धौम्रः कृष्णानुभौतिकः" भा०शा० ४७अ०। स्वार्थे अण्। २धूम्रवर्णे ३तद्वति त्रि० भावे अण्। ४धूम्रवर्णत्वे धूम्रोदेवताऽस्य अण्। ५वास्तुस्थानभेदे पु०

**धौम्रायण** पुंस्त्री० धूम्रस्य गोत्रापत्यं अश्वा० फञ्। धूम्रर्षेः गोत्रापत्ये।

**धौरादित्य** पु० तीर्थभेदे शिवपु०।

**धौरित** न० धोरितमेव अण्। "धौरितं गतिमात्रं स्यादुत्तेजितं वल्गितं पुनः। अग्रकायसमुल्लासात् कुञ्चितास्यं नतत्रिकम्" इत्युक्ते अश्वगतिभेदे। स्वार्थे क धौरितक तत्रार्थे अमरः। [अमरः। २घुर्ये वृषे पु० राजनि०।

**धौरेय** त्रि० धुरं वहति "धुरो यड्ढकौ" पा० ढक्। १धूर्वहे

**धौर्त्तक** न० धूर्त्तस्य भावः मनोज्ञा० वुञ्। धूर्त्तत्वे शाठ्ये

**धौर्त्तेय** पुंस्त्री धूर्त्ताया अपत्यं "स्त्रीभ्यो ढक्" पा० ढक्। धूर्त्ताया अपत्ये बहुवचने योधेयादि० ततः प्रत्ययस्य न लुक्।

**धौर्त्य** न० धूर्त्तस्य भावः कर्म वा ब्राह्मणा० ष्यञ्। १धूर्त्तत्वे २धूर्त्तकर्मणि च। "वेद्र सोद धौर्त्यं पूर्वभावे" कुक्कुटादिग्रन्थस्थलम्।

**धौर्य्य** न०धोर–धुर–वा ष्यत्। १अश्वगतिभेदे धौरत्ये हेम०।

**धौवकि** पुंस्त्री धुवकाया अपत्यं स्त्रीभ्यो ढकं बाधित्वा बाह्वादि० इञ्। धुवकाया अपत्ये।

**ध्मा** अग्निसंयुतौ दीर्घश्वासहेतुके शब्दभेदे सक० तादृशशब्देन वादने सक०भ्वा०पर० अनिट्। धमति अध्मासीत्। दध्मौ ध्मातः। ध्मापयति "सुखेनैव धमेदग्निं मुखादग्निः प्रजायते" संस्कारतत्त्वम् "शङ्खान् दध्मुः पृथक् पृथक्" गीता। ध्मायते। अध्मायि। "दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः" मनुः। "वायग्निर्यथा लौहं ध्मातं त्यजति वै मलम्" भाग० ३।२८।१०। आ–स्फीततायाम् आध्मानशब्दे दृश्यम्।

**ध्माकार** पु० ध्मा–इत्यव्यक्तशब्दस्य कारः। १(ध्मा) इति शब्दकरणे। कृ–कर्त्तरि अण्। २लौहकारके पु० मेदिन्या०प्र०

**ध्मा(ध्वा)क्ष** आकाङ्क्षे सक० घोररवे अक० भ्वा० पर० सेट् इदित्। ध्मा(ध्वा)ङ्क्षति। अध्मा(ध्वा)ङ्क्षीत्। दध्मा(ध्वा)ङ्क्ष। पा० मते षोपधः।

**ध्मा(ध्वा)ङ्क्ष** पुंस्त्री ध्मा(ध्वा)ङ्क्ष–अच्। १काके २तत्सदृशवर्णके पक्षिभेदे अमरः। ३भिक्षुके ४तक्षके च मेदि० ५काकोलिकायां स्त्री गौ०ङीष्।

**ध्मा(ध्वा)ङ्क्षजङ्घा** ध्मा(ध्वा)ङ्क्षस्येव जङ्घा अस्याः। काकजङ्घायाम् राजनि०। [राजनि०।

**ध्मा(ध्वा)ङ्क्षजम्बू** स्त्री ध्मा(ध्वा)ङ्क्षप्रिया जम्बुः। काकजम्ब्वां

**ध्मा(ध्वा)ङ्क्षतुण्डी** ध्मा(ध्वा)ङ्क्षस्येव तुण्डमस्याः ङीष्। काकनासालतायां राजनि०।

**ध्मा(ध्वा)ङ्क्षदन्ती** स्त्री ध्मा(ध्वा)ङ्क्षस्येव दन्ता अवयवोऽस्याः ङीष्। काकतुण्डीलतायां राजनि०।

**ध्मा(ध्वा)ङ्क्षनखी** स्त्री ध्मा(ध्वा)ङ्क्षस्येव नखा अस्या ङीष्। काकतुण्ड्यां राजनि०।

**ध्मा(ध्वा)ङ्क्षनाम्नी** स्त्री ध्मा(ध्वा)ङ्क्षं नामयति प्रियत्वात् नामि णि० मनि। काकोदुम्बरिकायां राजनि०।

**ध्मा(ध्वा)ङ्क्षनाशिनी** स्त्री हृत०। हपुषायां भावप्र०

**ध्मा(ध्वा)ङ्क्षनासा** स्त्री ध्मा(ध्वा)ङ्क्षस्येव नासा यस्याः। काकनासिकायाम् राजनि०। वा कप् अत इत्त्वम् ध्मा(ध्वा)ङ्क्षनासिकाऽपि तत्रार्थे। [जातित्वात् ङीष्।

**ध्मा(ध्वा)ङ्क्षपुष्ट** त्रि० ३त०। कोकिले हारा० स्त्रियां

**ध्मा(ध्वा)ङ्क्षमाची** ध्मा(ध्वा)ङ्क्षमचते मच-अण् काकमाचीवत् साध्यम्। काकमाच्यां राजनि०। [राजनि०।

**ध्मा(ध्वा)ङ्क्षवल्ली** स्त्री तन्नामा वल्ली। काकनासायाम्

**ध्मा(ध्वा)ङ्क्षादनी** स्त्री काकादनीवत् साध्यम्। काकतुण्ड्यां राजनि०। [प्रभृतयोऽपि तत्रार्थे।

**ध्मा(ध्वा)ङ्क्षाराति** पु० ६त०। पेचके हारा०। तदरि-

**ध्मा(ध्वा)ङ्क्षी** स्त्री जातौ ङीष्। १काक्यां २काकोलिकायां च मेदि०। [राजनि०।

**ध्मा(ध्वा)ङ्क्षोली** स्त्री काकोलीवत् साध्यम्। काकोल्यां

**ध्मात** त्रि० ध्मा-क्त। १संधुक्षिते श्वासभूयिष्ठतया दीर्घभावेन २उच्चमाणे वर्णे च। ३शब्दिते ४शब्दिते च।

**ध्मापन** न० ध्मा-णिच् भावे ल्युट्। इंहणे शब्दार्थचि०।

**ध्मापित** त्रि० ध्मापि-क्त। इंहिते वह्नीकृते शब्दार्थचि०।

**ध्यात** त्रि० ध्यै-क्त। चिन्तिते ध्यानविषयीभूते "तदात्मना ध्यातधवा रते च का" नैष०।

**ध्यान** न० ध्यै-भावे ल्युट्। १चिन्तने २अद्वितीयवस्तुनि विच्छिद्यविच्छिद्यान्तरिन्द्रियवृत्तिप्रवाहे। "शास्त्रोक्तदेवताद्यालम्बनेष्वचलो भिन्नजातीयैरनन्तरितः प्रत्ययसन्तान एकाग्रतेति समाङ्करिति" भाष्योक्तेः ३ध्येयप्रत्ययैकतानत्वे। एकत्र धृतस्य चित्तस्य भगवदाकारवृत्तिप्रवाहोत्तरोत्तराऽन्याकारप्रत्ययाव्यवहिते ४निदिध्यासनसंज्ञे चित्तस्यात्माकाराद्यावृत्तौ। "ब्रह्मैवास्मीति सद्वृत्त्या निरालम्बतया स्थितिः। ध्यानशब्देन विख्याता परमानन्ददायिनी" इत्युक्तेः ५परमात्मचिन्तने। धारणा निरुद्धस्य त्रिनेत्रपञ्चवक्त्राद्याकारविषयायां ६चिन्तायाम्। "चिन्ता तद्विषया ध्यान"मित्युक्तेः। "तत्र प्रत्ययैकतानता ध्यानम्" पा०सू० तत्र तस्मिन् देशे यत्र चित्तं धृतं तत्र प्रत्ययस्य ज्ञानस्य यैकतानता विसदृशपरिणामपरिहारेण यदेव धारणयावलम्बनीकृतम् तदालम्बनतयैव निरन्तरमुत्पत्तिः सा ध्यानमुच्यते। ध्यानपदनिरुक्त्यादिकमुक्तं महानिर्वाणतन्त्रे यथा "ध्यै चिन्तायां स्मृतो धातुः चिन्ता तत्त्वेन निश्चला। एतद्ध्यानमिह प्रोक्तं सगुणं निर्गुणं द्विधा। सगुणं मन्त्रभेदेन निर्गुणं केवलं मतम्" इति। अपि च "ध्यानं तु द्विविधं प्रोक्तं सरूपारूपभेदतः। अरूपं तत्र यद्ध्यानमवाङ्मनसगोचरम्। अव्यक्तं सर्वतो व्याप्तमिदमित्थविवर्जितम्। अगम्यं योगिभिर्गम्यं कृच्छ्रैर्बहुसमाधिभिः। मनसो धारणार्थाय शीघ्रं स्वाभीष्टसिद्धये। सूक्ष्मध्यानप्रबोधाय स्थूलध्यानं वदामि ते। अरूपायाः कालिकायाः कालमातुर्महाद्युतेः। गुणक्रियानुसारेण क्रियते रूपकल्पना" ब्रह्मचिन्तायां यथा

"ब्रह्मात्मचिन्ता ध्यानं स्यात् धारणा मनसो धृतिः। अहं ब्रह्मेत्यवस्थानं समाधिर्ब्रह्मणः स्थितिः" इति गारुडे ४८अ०। तत्कालभेदश्च "प्राणायामैर्द्वादशभिर्यावत् कालं कृतो भवेत्। यस्तावत्कालपर्यन्तं मनो ब्रह्मणि धारयेत्। तस्यैव ब्रह्मणा प्रोक्तं ध्यानं द्वादश धारणाः। द्वादशध्यानपर्यन्तं मनो ब्रह्मणि यो नरः। तिष्ठेत स यतो युक्तः समाधिः सोऽभिधीयते। ध्येयात्र चलते यस्य मनोऽभिध्यायतो ध्रुवम्। प्राणावधिकृतं कालं यावत् सा धारणा स्मृता। ध्येयसक्तं मनो यस्य ध्येयमेवानुपश्यति। नान्यं पदार्थं जानाति ध्यानमेतत् प्रकीर्तितम्। ध्येये मनो निश्चलतां याति ध्येयं विचिन्तयन्। यत्तद्ध्यानं परं प्रोक्तं मुनिभिर्ध्यानचिन्तकैः। ध्येयमेव हि सर्वत्र ध्याता तन्मयतां गतः। पश्यति द्वैतरहितं समाधिः सोऽभिधीयते" इति गारुडे २४०अ० अग्निपुराणे च तन्निरुक्त्यादिकमुक्तं यथा

"अग्निरुवाच। ध्यै चिन्तायां स्मृतो धातुर्विष्णुचिन्ता मुहुर्मुहुः। अनाक्षिप्तेन मनसा ध्यानमित्यभिधीयते। आत्मनः समनस्कस्य मुक्ताशेषोपधस्य च। ब्रह्मचिन्ता समासक्तिर्ध्यानं नाम तदुच्यते। ध्येयालम्बनसंस्थस्य सदृशप्रत्ययस्य च। प्रत्ययान्तरनिर्मुक्तः प्रत्ययो ध्यानमुच्यते। ध्येयावस्थितचित्तस्य प्रदेशे यत्र कुत्रचित्। ध्यानमेतत्समुद्दिष्टं प्रत्ययस्यैकतानता। एवं ध्यानसमायुक्तः स्वदेहं यः परित्यजेत्। कुलं स्वजनमित्राणि समुद्धृत्य हरिर्भवेत्। एवं मुहूर्त्तमर्धं वा ध्यायेद्यः श्रद्धया हरिम्। सोऽपि यां गतिमाप्नोति न तां सर्वैर्महामखैः। ध्याता ध्यानं तथा ध्येयं यच्च ध्यानप्रयोजनम्। एतच्चतुष्टयं ज्ञात्वा योगं युञ्जीत तत्त्ववित्। योगाभ्यासाद्भवेन्मुक्तिरैश्वर्यं चाष्टधा महत्। ज्ञानवैराग्यसम्पन्नः श्रद्दधानः क्षमान्वितः। विष्णुभक्तः सदोत्साही ध्यातेत्थं पुरुषः स्मृतः। मूर्तामूर्तं परं ब्रह्म हरेर्ध्यानं हि चिन्तनम्। सकलो निष्कलो ज्ञेयः सर्वज्ञः परमो हरिः। अणिमादिगुणैश्वर्यं मुक्ति-

ध्यानप्रयोजनम् । फलेन योजको विष्णुरतो ध्यायेत् परेश्वरम् । गच्छंस्तिष्ठन् स्वपन् जाग्रदुन्मिषन् निमिषन्नपि । शुचिर्वाप्यशुचिर्वापि ध्यायेत् सततमीश्वरम् । स्वदेहायतनस्यान्ते मनसि स्थाप्य केशवम् । हृत्पद्मपीठिकामध्ये ध्यानयोगेन पूजयेत् । ध्यानयज्ञः परः शुद्धः सर्व्वदोषविवर्जितः । तेनेष्ट्वा मुक्तिमाप्नोति बाह्यशुद्धैश्च नाध्वरैः । हिंसादोषविमुक्तत्वाद्विशुद्धिश्चित्तसाधनः । ध्यानयज्ञः परस्तस्मादपवर्गफलप्रदः । तस्मादशुद्धं सन्त्यज्य ह्यनित्यं बाह्यसाधनम् । यज्ञाद्यं कर्म सन्त्यज्य योगमत्यर्थमभ्यसेत् । विकारमुक्तमव्यक्तं भोग्यभोगसमन्वितम् । चिन्तयेद्धृदये पूर्वं क्रमादादौ गुणत्रयम् । तमः प्रच्छाद्य रजसा सत्त्वेन छादयेद्रजः । ध्यायेत्त्रिमण्डलं पूर्वं कृष्णं रक्तं सितं क्रमात् । सत्त्वोपाधिगुणातीतः पुरुषः पञ्चविंशकः । ध्येयमेतदशुद्धञ्च त्यक्त्वा शुद्धं विचिन्तयेत् । ऐश्वर्य्यं पङ्कजं दिव्यं पुरुषोपरि संस्थितम् । द्वादशाङ्गुलविस्तीर्णं शुद्धं विकसितं सितम् । नालमष्टाङ्गुलं तस्य नाभिकन्दसमुद्भवम् । पद्मपत्राष्टकं ज्ञेयमणिमादिगुणाष्टकम् । कर्णिकाकेसरं नालं ज्ञानवैराग्यमुत्तमम् । विष्णुधर्म्मश्च तत्कन्दमिति पद्मं विचिन्तयेत् । तद्धर्म्मज्ञानवैराग्यं शिवैश्वर्य्यमयं परम् । ज्ञात्वा पद्मासनं सर्व्वं सर्व्वदुःखान्तमाप्नुयात् । तत्पद्मकर्णिकामध्ये शुद्धदीपशिखाकृतिम् । अङ्गुष्ठमात्रममलं ध्यायेदोङ्कारमीश्वरम् । कदम्बगोलकाकारं तारं रूपमिव स्थितम् । ध्यायेद्वा रश्मिजालेन दीप्यमानं समन्ततः । प्रधानं पुरुषातीतं स्थितं पद्मस्थमीश्वरम् । ध्यायेज्जपेच्च सततमोङ्कारं परमक्षरम् । मनःस्थित्यर्थमिच्छन्ति स्थूलध्यानमनुक्रमात् । तद्भूतं निश्चलीभूतं लभेत् सूक्ष्मेऽपि संस्थितिम् । नाभिकन्दे स्थितं नालं दशाङ्गुलसमायतम् । नालेनाष्टदलं पद्मं द्वादशाङ्गुलविस्तृतम् । सकर्णिके केसराले सूर्य्यसोमाग्निमण्डलम् । अग्निमण्डलमध्यस्थः शङ्खचक्रगदाधरः । पद्मी चतुर्भुजो विष्णुरथ वाष्टभुजो हरिः । शार्ङ्गाक्षवलयधरः पाशाङ्कुशधरः परः । स्वर्णवर्णः श्वेतवर्णः सश्रीवत्सः सकौस्तुभः । वनमाली स्वर्णहारी स्फुरन्मकरकुण्डलः । रत्नोज्ज्वलकिरीटश्च पीताम्बरधरो महान् । सर्व्वाभरणभूषाढ्यो वितस्तिर्वा यथेच्छया । अहं ब्रह्म ज्योतिरात्मा वासुदेवो विमुक्त ओम् । ध्यानाच्छ्रान्तो जपेन्मन्त्रं जपाच्छ्रान्तश्च चिन्तयेत् । जपध्यानादियुक्तस्य विष्णुः शीघ्रं प्रसीदति । जपयज्ञस्य वै यज्ञाः कलां नार्हन्ति षोडशीम् । जपिनं नोपसर्पन्ति व्याधयश्चाधयो ग्रहाः । भुक्तिर्मुक्तिर्मृत्युजयो जपेन प्राप्नुयात् फलम्” २७२ अ० ।

ध्यानप्रकारादिकमुक्तं मिताक्षरायां यथा

“ऊरुस्थोत्तानचरणः सव्ये न्यस्येतरं करम् । उत्तानं किञ्चिदुन्नाम्य मुखं विष्टभ्य चोरसा । निमीलिताक्षः सत्त्वस्थो दन्तैर्दन्तानसंस्पृशन् । तालुस्थाचलजिह्वश्च संवृतास्यः सुनिश्चलः । संनिरुध्येन्द्रियग्रामं नातिनीचोच्छ्रितासनः । द्विगुणं त्रिगुणं वापि प्राणायाममुपक्रमेत् । ततो ध्येयः स्थितो योऽसौ हृदये दीपवत् प्रभुः । धारयेत्तत्र चात्मानं धारणां धारयन् बुधः” याज्ञ० । “ऊरुस्थावुत्तानचरणौ यस्य स तथोक्तो बद्धपद्मासनः । तथोत्ताने सव्यकरे दक्षिणमुत्तानं न्यस्य मुखञ्च किञ्चिदुन्नाम्योरसा च विष्टभ्य स्थापयित्वा तथा निमीलिताक्षः सत्त्वस्थः कामक्रोधादिरहितो दन्तैर्दन्तानसंस्पृशन् । तथा तालुनि स्थिता अचला जिह्वा यस्य स तथोक्तः संवृतास्यः पिहिताननः सुनिश्चलो निष्प्रकम्पस्तथा सर्व्वमिन्द्रियसमूहं विषयेभ्यः प्रत्याहृत्य नातिनीचासनो नात्युच्छ्रितासनो यथा चित्तविक्षेपो न भवति तथोपविष्टः सन् द्विगुणं त्रिगुणं वा प्राणायामाभ्यासमुपक्रमेत् । ततो वशीकृतपवनेन योगिना योऽसौ हृदये दीपवत्प्रकाशः प्रभुः स्थितोऽसौ ध्यातव्यः तत्र च हृद्यात्मानं मनोगोचरतया धारयेत् । तथा धारणाञ्च धारयेत् । धारणास्वरूपञ्च जानुप्रभ्रमणेन छोटिकादानकालो मात्रा । ताभिः पञ्चदशमात्राभिरधमः प्राणायामस्त्रिंशद्भिर्मध्यमः । पञ्चचत्वारिंशद्भिरुत्तम इत्येवं प्राणायामत्रयात्मिकैका धारणा । तास्तिस्रो योगस्तद्वाभ्यासांश्च धारयेत् । यथोक्तमन्यत्र “संभ्राम्य छोटिकां दद्यात् कराग्रजानुमण्डले । मात्राभिः पञ्चदशभिः प्राणायामोऽधमः स्मृतः । मध्यमो द्विगुणः श्रेष्ठस्त्रिगुणो धारणा तथा । त्रिभिस्त्रिभिः स्मृतैकैका ताभिर्योगस्तथैव चेति” मिता० । “हृदयस्थस्य योगेन देवदेवस्य दर्शनम् । ध्यानं प्रोक्तं प्रवक्ष्यामि सर्व्वस्मात् योगतः शुभम्” हृदिस्था देवताः सर्व्वा हृदि प्राणाः प्रतिष्ठिताः । हृदि ज्योतींषि भूयश्च हृदि सर्व्वं प्रतिष्ठितम् । स्वदेहमरणिं कृत्वा प्रणवञ्चोत्तरारणिम् । ध्याननिर्म्मथनाभ्यासाद्विष्णुं पश्येद्धृदि स्थितम् । हृद्यन्तश्चन्द्रमाः सूर्य्यः सोममध्ये हुताशनः । तेजोमध्ये स्थितं तत्त्वं तत्त्वमध्ये स्थितो-

परित्यागहेतावन्तःकरणवृत्तिविशेषे । ५निर्विकारचित्तत्वे । "मनसो निर्विकारत्वं धैर्यं सत्स्वपि हेतुषु" एतदभिप्रायेण "विकारहेतौ सति विक्रियन्ते येषां न चेतांसि तएव धीराः" इति कुमा० उक्तम् । "कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये" कुमा० । "अवधीर्य धैर्यकलिता दयितम्" माघः । ६नायकयोर्गुणभेदे धीरताशब्दे दृश्यम् । ७पुरुषगुणभेदे यथा "शोभा विलासो माधुर्यं गाम्भीर्यं धैर्य्यं तेजसी । ललितौदार्य्यमित्यष्टौ सत्वजाः पौरुषा गुणाः" इत्युद्दिश्य "व्यवसायादचलनं धैर्यं विघ्ने महत्यपि" सा० द० लक्षितम् उदाहृतञ्च "श्रुताप्सरोगीतिरपि क्षणेऽस्मिन् हरः प्रसंख्यानपरो बभूव । आत्मेश्वराणां न हि जातु विघ्नाः समाधिभेदप्रभवो भवन्ति" । स्वार्थे घञ् । पुरुषमेधयज्ञे दन्तौत्यदेवभेदे पु० । तदुपक्रमे "मेधायै रथकारं धैर्याय तक्षाणम्" यजु० ३०।७

**धैवत** पु० धीमतामयम् अण् पृषो० । तन्त्रीकण्ठोत्थितसप्तस्वरेषु षष्ठे स्वरे तल्लक्षणं यथा "गत्वा नाभेरधोभागं वस्तिं प्राप्योर्द्ध्वगः पुनः । धावन्निव च यो याति कण्ठदेशं स धैवतः" सङ्गीतदामो "अश्वस्तु धैवतं रौति" सङ्गीतशास्त्रोक्ते स्थानस्वरतल्लक्षणम् । अस्य च वायुभवत्वेऽपि आकाशगुणत्वम् भा० शा० १८४ अ० उक्तं यथा "तत्रैकगुणमाकाशं शब्द इत्येव तत् स्मृतम् । तस्य शब्दस्य वक्ष्यामि विस्तरं विविधात्मकम् । षड्जऋषभगान्धारौ मध्यमो धैवतस्तथा । पञ्चमश्चापि विज्ञेयस्तथा चापि निषादवान् । एष सप्तविधः प्रोक्तो गुण आकाशसम्भवः । ऐश्वर्येण तु सर्वत्र स्थितोऽपि पटहादिषु । मृदङ्गभेरीशङ्खानां स्तनयित्नोरथस्य च । यः कश्चिच्छ्रूयते शब्दः प्राणिनोऽप्राणिनोऽपि वा । एतेषामेव सर्वेषां विषये संप्रकीर्त्तितः । एवं बहुविधाकारः शब्द आकाशसम्भवः । आकाशजं शब्दमाहुरेभिर्वायुगुणैः सह । अव्याहतैश्चेतयते न वेत्ति विषमस्थितैः" । [तः । धीवभावे ।

**धैवत्य** न० धीवभावः ष्यञ् दाक्षिणायनेत्यादि० नि० मस्य

**धैवर** पुंस्त्री धीवरस्यापत्यं वा० अत इञ् बाधित्वा वेदे अण् । धीवरापत्ये "सरोभ्यो धैवरम्" यजु० ३०।१६ लोके तु इञ् धैवरिरित्येव ।

**धोयी** पु० कविभेदे "धोयी कविः क्ष्मापतिः" गीतगो०

**धोड** पुंस्त्री धुर–वधे अच् रस्य डत्वम् डः । (ढोँड़ा) सर्पभेदे डुण्डुभे शब्दर० स्त्रियां जातित्वात् ङीष् ।

**धोर** गतौ सक०चातुर्य्ये अक०भ्वा० पर०सेट् । धोरति अधोरीत् । दुधोर ऋदित् णिच् चङि अदुधोरत् त ।

**धोरण** न० धोर–गतौ करणे ल्युट् । १यानमात्रे हस्त्यश्वरथादौ त्रिका० । भावे ल्युट् । २गतौ ।

**धोरणि(णी)** स्त्री धोर–अनि वा ङीप् । परम्परायाम् जटाधरः । "शैवालकन्दलवने मनोज्ञपवने सद्यःस्खलत्साधुरीधाराधोरणिधौतधामनि सराधीशत्वमालम्बते । तेषां नित्यविनोदिनां सुकृतिनां माधीकपानां पुनः काकः किन्न करोति केतकि ! यतस्त्वय्यपि केलीरसौ" उद्भटः ।

**धोरित** न० धुर–धोर–वा भावे क्त । १वधे २गतौ ३अश्वगतिभेदे हेमच० । स्वार्थे क । तत्रार्थे अमरः ।

**धौत** त्रि० धाव–क्त ऊठ् । १प्रक्षालिते २मार्जिते ३शोधिते हेम० "ईषद्धौतं स्त्रिया धौतं यद्धौतं रजकेन च । अधौतं तत् विजानीयात् दृष्टा दक्षिणपश्चिमे" कर्मलोचनम् । "धौतोत्तरीयप्रतिमच्छवीनि" "परितश्च धौतमणिवलभिविलसद्दूहिर्म्यांशुमण्डलाः" माघः । ४रौप्ये न० राजनि० । भावे क्त । ५प्रक्षालने न० ।

**धौतकट** पु० नित्यकर्म० । शणनिर्मितपात्रभेदे (धोकड़ा) जटा०

**धौतकोषज** न०धौतं प्रक्षालितं कोषजं नित्यक० । कृमिकोषजाते वस्त्रभेदे शब्दर० । [वस्त्रे अमरः ।

**धौतकौषेय** न० नित्यकर्म० । प्रक्षालिते कृमिकोषजाते

**धौतवल्ली** स्त्री धौताञ्जन्यां मरुद्देशे शिलाभेदे हारा० ।

**धौतमूलक** पु०१चीनराजभेदे "अर्कजश्च बलीहानां चीनानां धौतमूलकः" भा०उ० ७३अ० । धौतं मूलं यस्य कप् । २प्रक्षालितमूलयुक्ते त्रि० ।

**धौतय** न०धौतमिव वर्णं याति या–क । सैन्धवे नैघण्टुप्रका०

**धौतरि** त्रि० धूतमेव धौतं कम्पनमृच्छति ऋ–कि । कम्पनकारके स्त्रियां ङीप् । "स नवान्नूतनोभिर्धौतरीभिः" ऋ०६।४४।७ "धौतरीभिः कम्पनकारीभिः" भा० ।

**धौतशिल** न० धौता शिला यस्य । स्फटिके त्रिका० ।

**धौताञ्जनी** स्त्री मरुदेशे शिलाभेदे मेदि० ।

**धौती** स्त्री धू–कर्त्तरि क्तिच् स्वार्थे अण् ङीप् । कम्पनकर्त्तरि "योधौतीनामहिहन्नारिणक् पथः" ऋ०२।१३।५ "धौतीनां कम्पन्तीनाम्" भा० । धूति–स्वार्थे अण् ङीप् । २हठयोगाङ्गभेदे हठयोगशब्दे दृश्यम् ।

**धौन्धुमार** न० धुन्धुमारमधिकृत्य कृतो ग्रन्थः अण् । भारत वनपर्वान्तर्गतोपाख्यानभेदे "ऐन्द्रद्युम्नमुपाख्यानं धौन्धु-

मारं तथैव च" भा०आ०१अ०। तत्र वनपर्वणि २००अध्यायावधौ २०२ अध्यायान्ते दृश्यम् । [देशभवे ।

**धौमक** पु० धूमे तत्प्रधानदेशे भवः धूमा० वुञ् । धूमप्रधान-

**धौमतायन** पु० राजभेदे। तेन निर्वृत्तादि अरीहणादि० चतुरर्थ्यां वुञ् । धौमतायनक तन्निर्वृत्ते नगरादौ

**धौमायनक** त्रि० धौमायनेन निर्वृत्तादि अरीहणादि० चतुरर्थ्यां वुञ्। धौमायननिर्वृत्तादौ ।

**धौमीय** त्रि० धूमेन निर्वृत्तादि० चतुरर्थ्याम् कृशाश्वा०छण् । धूमनिर्वृत्तादौ ।

**धौम्य** त्रि० धूमस्यापत्यं गर्गा० यञ् । १धूमर्षेरपत्ये स च युधिष्ठिरपुरोहितः यथा
"गन्धर्व उवाच यवीयान् देवलस्यैष वने भ्राता तपस्यति। धौम्य उत्कोचके तीर्थे तं वृणुध्वं यदीच्छथ"। "तत उत्कोचकं तीर्थं गत्वा धौम्याश्रमन्तु ते। तं वव्रुः पाण्डवा धौम्यं पौरोहित्याय भारत ! । तान् धौम्यः प्रतिजग्राह सर्ववेदविदांवरः। वन्येन फलमूलेन पौरहित्येन चैव ह" भा०आ० १८२अ० । व्याघ्रपादस्यर्षेः पुत्रभेदे २उपमन्योरनुजे च ।
"पुरा कृतयुगे तात ! ऋषिरासीन्महातपाः । व्याघ्रपाद इति ख्यातो वेदवेदाङ्गपारगः । तस्याहमभवं पुत्रो धौम्यश्चापि ममानुजः । कस्यचित्त्वथ कालस्य धौम्येन सह माधवः" भा०आनु०१४अ०। पश्चिमदिगाश्रिते ३ऋषिभेदे च "उन्मुः कवषो धौम्यः परिव्याधश्च वीर्यवान् । एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः । अत्रेः पुत्रश्च भगवांस्तथा सारस्वतः प्रभुः। एते चैव महात्मानः पश्चिमामाश्रिता दिशम्" भा०शा० २०८अ०

**धौम्र** पु० धूम्रएव स्वार्थे अण् । ऋषिभेदे "धौम्यो विभाण्डो माण्डव्यो धौम्रः कृष्णानुभौतिकः" भा०शा० ४७अ० । स्वार्थे अण् । २धूम्रवर्णे ३तद्वति त्रि० भावे अण् । ४धूम्रवर्णत्वे धूम्रोदेवताऽस्य अण् । ५वास्तुस्थानभेदे पु०

**धौम्रायण** पुंस्त्री० धूम्रस्य गोत्रापत्यं अश्वा० फञ् । धूम्रर्षेः गोत्रापत्ये ।

**धौरादित्य** पु० तीर्थभेदे शिवपु० ।

**धौरित** न० धोरितमेव अण् । "धोरितं गतिमात्रं यद्वोल्गितं वल्गितं पुनः । अग्रकायसमुन्नामात् कुञ्चितास्यं नतत्रिकम्" इत्युक्ते अश्वगतिभेदे । स्वार्थे क धौरितक तत्रार्थे अमरः । [अमरः । २धुर्ये वृषे पु० राजनि०।

**धौरेय** त्रि० धुरं वहति "धुरो यड्ढकौ"पा० ढक् । १धूर्वहे

**धौर्त्तक** न० धूर्त्तस्य भावः मनोज्ञा० वुञ् । धूर्त्तत्वे भावे

**धौर्त्तेय** पुंस्त्री धूर्त्ताया अपत्यं "स्त्रीभ्यो ढक्" पा० ढक् । धूर्त्ताया अपत्ये बहुवचने योधेयादि० ततः प्रत्ययस्य न लुक् ।

**धौर्त्य** न० धूर्त्तस्य भावः कर्म वा ब्राह्मणा० ष्यञ् । १धूर्त्तत्वे २धूर्त्तकर्मणि च । "बेट बोट धौर्त्ये" पूर्वभावे" कृष्णादिग्रन्थस्थम् ।

**धौर्य** न०धोर–धुर–वा ष्यत् । १अश्वगतिभेदे धोरणे हेम०।

**धौवकि** पुंस्त्री धुवकाया अपत्यं स्त्रीभ्यो ढकं बाधित्वा बाह्वादि० इञ् । धुवकाया अपत्ये ।

**ध्मा** अग्निसंयुतौ दीर्घश्वासहेतुके शब्दभेदे अक० ताहशशब्देन वादने सक०भ्वा०पर० अनिट् । धमति अध्मासीत् । दध्मौ ध्मातः । ध्मापयति "मुखेनैव धमेदग्निं मुखादग्निः प्रजायते" संस्कारतत्त्वम् "शङ्खान् दध्मुः पृथक् पृथक्" गीता । ध्मायते । अध्मायि । "दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः" मनुः । "वाय्वग्निभ्यां यथा लौहं ध्मातं त्यजति वै मलम्" भाग० ३।२८।४० । आ–स्फीततायाम् आध्मानशब्दे दृश्यम् ।

**ध्माकार** पु० ध्मा–इत्यव्यक्तशब्दस्य कारः । १(ध्मा) इति शब्दकरणे । कृ–कर्त्तरि अण् । २लोहकारके पु० मेघदूत प्र०

**ध्मा(ध्वा)क्ष** आकाङ्क्षे सक० घोररवे अक० भ्वा० पर० सेट् इदित् । ध्मा(ध्वा)ङ्क्षति । अध्मा(ध्वा)ङ्क्षीत् । दध्मा(ध्वा)ङ्क्ष । पा० मते वोपधः ।

**ध्मा(ध्वा)ङ्क्ष** पुंस्त्री ध्मा(ध्वा)ङ्क्ष–अच् । १काके २तत्सदृशके पक्षिभेदे अमरः । ३भिक्षुके ४तक्षके च मेदि० ५काकोलिकायां स्त्री गौ०ङीष् ।

**ध्मा(ध्वा)ङ्क्षजङ्घा** ध्मा(ध्वा)ङ्क्षस्येव जङ्घा अस्याः । काकजङ्घायाम् राजनि० । [राजनि० ।

**ध्मा(ध्वा)ङ्क्षजम्बु** स्त्री ध्मा(ध्वा)ङ्क्षप्रिया जम्बुः । काकजम्ब्वां

**ध्मा(ध्वा)ङ्क्षतुण्डी** ध्मा(ध्वा)ङ्क्षस्येव तुण्डमस्याः ङीष् । काकनासालतायां राजनि० ।

**ध्मा(ध्वा)ङ्क्षदन्ती** स्त्री ध्मा(ध्वा)ङ्क्षस्येव दन्ता अवयवोऽस्याः ङीष् । काकतुण्डीलतायां राजनि० ।

**ध्मा(ध्वा)ङ्क्षनखी** स्त्री ध्मा(ध्वा)ङ्क्षस्येव नखा अस्या ङीष् । काकतुण्ड्यां राजनि० ।

**ध्मा(ध्वा)ङ्क्षनाम्नी** स्त्री ध्मा(ध्वा)ङ्क्षं नामयति प्रियत्वात् नामि बा० मनि । काकोदुम्बरिकायां राजनि० ।

**ध्मा(ध्वा)ङ्क्षनाशिनी** स्त्री हृत० । हपुषायां भावप्र०

**ध्मा(ध्वा)ङ्क्षनासा** स्त्री ध्मा(ध्वा)ङ्क्षस्येव नासा यस्याः । काकनासिकायाम् राजनि० । वा कप् अत इत्त्वम् ध्मा(ध्वा)ङ्क्षनासिकाऽपि तत्रार्थे । [जातित्वात् ङीष् ।

**ध्मा(ध्वा)ङ्क्षपुष्ट** त्रि० ३त० । कोकिले हारा० स्त्रियां

**ध्मा(ध्वा)ङ्क्षमाची** ध्मा(ध्वा)ङ्क्षमचते मच–अण् काकमाचीवत् साध्यम् । काकमाच्यां राजनि० । [राजनि० ।

**ध्मा(ध्वा)ङ्क्षवल्ली** स्त्री तन्नामा वल्ली । काकनासायाम्

**ध्मा(ध्वा)ङ्क्षादनी** स्त्री काकादनीवत् साध्यम् । काकतुण्ड्यां राजनि० । [प्रध्वतयोऽपि तत्रार्थे ।

**ध्मा(ध्वा)ङ्क्षाराति** पु० ६त० । मेचके हारा० । तदरि-

**ध्मा(ध्वा)ङ्क्षी** स्त्री जातौ ङीष् । १काक्यां २काकोलिकायां च मेदि० । [ राजनि० ।

**ध्मा(ध्वा)ङ्क्षोली** स्त्री काकोलीवत् साध्यम् । काकोल्यां

**ध्मात** त्रि० ध्मा–क्त । १संधुक्षिते श्वासभूयिष्ठतया दीर्घभावेन २वक्तव्यमाणे वर्णे च । ३शब्दिते ४वादिते च ।

**ध्मापन** न० ध्मा–णिच् भावे ल्युट् । इन्धने शब्दार्थचि० ।

**ध्मापित** त्रि० ध्मापि–क्त । इन्धिते भस्मीकृते शब्दार्थचि० ।

**ध्यात** त्रि० ध्यै–क्त । चिन्तिते ध्यानविषयीभूते "तदात्मना ध्यातधवा रते च का" नैष० ।

**ध्यान** न० ध्यै–भावे ल्युट् । १चिन्तने २अद्वितीयवस्तुनि विच्छिद्यविच्छिद्यान्तरिन्द्रियवृत्तिप्रवाहे । "शास्त्रोक्तदेवताद्यालम्बनेष्वचलो भिन्नजातीयैरनन्तरितः प्रत्ययसन्तान एकाग्रतेति वमाश्वरिति" भाष्योक्तेः ३ध्येयप्रत्ययैकतानत्वे । एकत्र धृतस्य चित्तस्य भगवदाकारवृत्तिप्रवाहोत्तरोत्तराऽन्याकारप्रत्ययाव्यवहिते ४निदिध्यासनसंज्ञे चित्तस्यात्माकाराद्ययावृत्तौ । "ब्रह्मैवास्मीति सद्वृत्त्या निरालम्बतया स्थितिः । ध्यानशब्देन विख्याता परमानन्ददायिनी" इत्युक्तेः ५परमात्मचिन्तने । धारणा निरुद्धस्य त्रिनेत्रपञ्चवक्त्राद्याकारविषयायां ६चिन्तायाम् । "चिन्ता तद्विषया ध्यान"मित्युक्तेः । "तत्र प्रत्ययैकतानता ध्यानम्" पा० सू० तत्र तस्मिन् देशे यत्र चित्तं धृतं तत्र प्रत्ययस्य ज्ञानस्य यैकतानता विसदृशपरिणामपरिहारेण यदेव धारणयावलम्बनीकृतम् तदालम्बनतयैव निरन्तरमुत्पत्तिः सा ध्यानमुच्यते । ध्यानपदनिरुक्त्यादिकमुक्तं महानिर्वाणतन्त्रे यथा "ध्यै चिन्तायां स्मृतो धातुः चिन्ता तत्त्वेन निश्चला । एतद् ध्यानमिह प्रोक्तं सगुणं निर्गुणं द्विधा । सगुणं मन्त्रभेदेन निर्गुणं केवलं मतम्" इति । अपि च "ध्यानं तु द्विविधं प्रोक्तं सरूपारूपभेदतः । अरूपं तत्र यद् ध्यानमवाङ्मनसगोचरम् । अव्यक्तं सर्वतो व्याप्तमिदमित्थविवर्जितम् । अगम्यं योगिभिर्गम्यं कृच्छ्रैर्बहुसमाधिभिः । मनसो धारणार्थाय शीघ्रं स्वाभीष्टसिद्धये । सूक्ष्मध्यानप्रबोधाय स्थूलध्यानं वदामि ते । अरूपायाः कालिकायाः कालमातुर्महाद्युतेः । गुणक्रियानुसारेण क्रियते रूपकल्पना" ब्रह्मचिन्तायां यथा

"ब्रह्मात्मचिन्ता ध्यानं स्यात् धारणा मनसो धृतिः । अहं ब्रह्मेत्यवस्थानं समाधिर्ब्रह्मणः स्थितिः" इति गारुडे ४९अ० । तत्कालभेदश्च "प्राणायामैर्द्वादशभिर्यावत् कालं कृतो भवेत् । यस्तावत्कालपर्यन्तं मनो ब्रह्मणि धारयेत् । तस्यैव ब्रह्मणा प्रोक्तं ध्यानं द्वादश धारणाः । द्वादशध्यानपर्यन्तं मनो ब्रह्मणि यो नरः । तिष्ठेत स यतो युक्तः समाधिः सोऽभिधीयते । ध्येयान्न चलते यस्य मनोऽभिध्यायतो ध्रुवम् । प्राप्यावधिकृतं कालं यावत् सा धारणा स्मृता । ध्येयसक्तं मनो यस्य ध्येयमेवानुपश्यति । नान्यं पदार्थं जानाति ध्यानमेतत् प्रकीर्तितम् । ध्येये मनो निश्चलतां याति ध्येयं विचिन्तयन् । यत्तद्ध्यानं परं प्रोक्तं मुनिभिर्ध्यानचिन्तकैः । ध्येयमेव हि सर्वत्र ध्याता तन्मयतां गतः । पश्यति द्वैतरहितं समाधिः सोऽभिधीयते" इति गारुडे २४०अ० अग्निपुराणे च तन्निरुक्त्यादिकमुक्तं यथा

"अग्निरुवाच । ध्यै चिन्तायां स्मृतो धातुर्विष्णुचिन्ता मुहुर्मुहुः । अनाक्षिप्तेन मनसा ध्यानमित्यभिधीयते । आत्मनः समनस्कस्य मुक्ताशेषोपधस्य च । ब्रह्मचिन्ता समासक्तिर्ध्यानं नाम तदुच्यते । ध्येयालम्बनसंस्थस्य सदृशप्रत्ययस्य च । प्रत्ययान्तरनिर्मुक्तः प्रत्ययो ध्यानमुच्यते । ध्येयावस्थितचित्तस्य प्रदेशे यत्र कुत्रचित् । ध्यानमेतत्समुद्दिष्टं प्रत्ययस्यैकतानता । एवं ध्यानसमायुक्तः स्वदेहं यः परित्यजेत् । कुलं स्वजनमित्राणि समुद्धृत्य हरिर्भवेत् । एवं मुहूर्तमर्धं वा ध्यायेद् यः श्रद्धया हरिम् । सोऽपि यां गतिमाप्नोति न तां सर्वैर्महामखैः । ध्याता ध्यानं तथा ध्येयं यच्च ध्यानप्रयोजनम् । एतच्चतुष्टयं ज्ञात्वा योगं युञ्जीत तत्त्ववित् । योगाभ्यासाद्भवेन्मुक्तिरैश्वर्यं चाष्टधा महत् । ज्ञानवैराग्यसम्पन्नः श्रद्दधानः क्षमान्वितः । विष्णुभक्तः सदोत्साही ध्यातेत्थं पुरुषः स्मृतः । मूर्तामूर्तं परं ब्रह्म हरेर्ध्यानं हि चिन्तनम् । सकलो निष्कलो ज्ञेयः सर्वज्ञः परमो हरिः । अणिमादिगुणैश्वर्यं मुक्ति-

ध्यानप्रयोजनम् । फलेन योजको विष्णुरतो ध्यायेत् परेश्वरम् । गच्छंस्तिष्ठन् स्वपन् जाग्रदुन्मिषन् निमिषन्नपि । शुचिर्वाप्यशुचिर्वापि ध्यायेत् सततमीश्वरम् । स्वदेहायतनस्यान्ते मनसि स्थाप्य केशवम् । हृत्पद्मपीठिकामध्ये ध्यानयोगेन पूजयेत् । ध्यानयज्ञः परः शुद्धः सर्वदोषविवर्जितः । तेनेष्ट्वा मुक्तिमाप्नोति बाह्यशुद्धैश्च नाध्वरैः । हिंसादोषविमुक्तित्वाद्विशुद्धिश्चित्तसाधनः । ध्यानयज्ञः परस्तस्मादपवर्गफलप्रदः । तस्मादशुद्धं सन्त्यज्य ह्यनित्यं बाह्यसाधनम् । यज्ञाद्यं कर्म सन्त्यज्य योगमत्यर्थमभ्यसेत् । विकारमुक्तमव्यक्तं भोग्यभोगसमन्वितम् । चिन्तयेद्धृदये पूर्वं क्रमादादौ गुणत्रयम् । तमः प्रच्छाद्य रजसा सत्त्वेन छादयेद्रजः । ध्यायेत्त्रिमण्डलं पूर्वं कृष्णं रक्तं सितं क्रमात् । सत्त्वोपाधिगुणातीतः पुरुषः पञ्चविंशकः । ध्येयमेतदशुद्धञ्च त्यक्त्वा शुद्धं विचिन्तयेत् । ऐश्वर्यं पङ्कजं दिव्यं पुरुषोपरि संस्थितम् । द्वादशाङ्गुलविस्तीर्णं शुद्धं विकसितं सितम् । नालमष्टाङ्गुलं तस्य नाभिकन्दसमुद्भवम् । पद्मपत्राष्टकं ज्ञेयमणिमादिगुणाष्टकम् । कर्णिकाकेसरं नालं ज्ञानवैराग्यमुत्तमम् । विष्णुधर्मश्च तत्कन्दमिति पद्मं विचिन्तयेत् । तद्धर्मज्ञानवैराग्यं शिवैश्वर्यमयं परम् । ज्ञात्वा पद्मासनं सर्वं सर्वदुःखान्तमाप्नुयात् । तत्पद्मकर्णिकामध्ये शुद्धदीपशिखाकृतिम् । अङ्गुष्ठमात्रममलं ध्यायेदोङ्कारमीश्वरम् । कदम्बगोलकाकारं तारं रूपमिव स्थितम् । ध्यायेद्वा रश्मिजालेन दीप्यमानं समन्ततः । प्रधानं पुरुषातीतं स्थितं पद्मस्थमीश्वरम् । ध्यायेज्जपेच्च सततमोङ्कारं परमक्षरम् । मनःस्थित्यर्थमिच्छन्ति स्थूलध्यानमनुक्रमात् । तद्भूतं निश्चलीभूतं लभेत् सूक्ष्मेऽपि संस्थितिम् । नाभिकन्दे स्थितं नालं दशाङ्गुलसमायतम् । नालेनाष्टदलं पद्मं द्वादशाङ्गुलविस्तृतम् । सकर्णिके केसराले सूर्यसोमाग्निमण्डलम् । अग्निमण्डलमध्यस्थः शङ्खचक्रगदाधरः । पद्मी चतुर्भुजो विष्णुरथ वाष्टभुजो हरिः । शार्ङ्गाक्षवलयधरः पाशाङ्कुशधरः परः । स्वर्णवर्णः श्वेतवर्णः सश्रीवत्सः सकौस्तुभः । वनमाली स्वर्णहारी स्फुरन्मकरकुण्डलः । रत्नोज्ज्वलकिरीटश्च पीताम्बरधरो महान् । सर्वाभरणभूषाढ्यो वितस्तिर्वा यथेच्छया । अहं ब्रह्म ज्योतिरात्मा वासुदेवो विमुक्त ओम् । ध्यानाच्छ्रान्तो जपेन्मन्त्रं जपाच्छ्रान्तश्च चिन्तयेत् । जपध्यानादियुक्तस्य विष्णुः शीघ्रं प्रसीदति । जपयज्ञस्य वै यज्ञाः कलां नार्हन्ति षोडशीम् । जपिनं नोपसर्पन्ति व्याधयश्चाधयो ग्रहाः । भुक्तिर्मुक्तिर्मृत्युजयो जपेन प्राप्नुयात् फलम्" २७२ अ० ।

ध्यानप्रकारादिकमुक्तं मिताक्षरायां यथा "ऊरुस्थोत्तानचरणः सव्ये न्यस्येतरं करम् । उत्तानं किञ्चिदुन्नाम्य मुखं विष्टभ्य चोरसा । निमीलिताक्षः सत्त्वस्थो दन्तैर्दन्तानसंस्पृशन् । तालुस्थाचलजिह्वश्च संवृतास्यः सुनिश्चलः । संनिरुध्येन्द्रियग्रामं नातिनीचोच्छ्रितासनः । द्विगुणं त्रिगुणं वापि प्राणायाममुपक्रमेत् । ततो ध्येयः स्थितो योऽसौ हृदये दीपवत् प्रभुः । धारयेत्तत्र चात्मानं धारणां धारयन् बुधः" याज्ञ० । "ऊर्वोरुत्तानचरणौ यस्य स तथोक्तो बद्धपद्मासनः । तथोत्ताने सव्यकरे दक्षिणमुत्तानं न्यस्य मुखञ्च किञ्चिदुन्नाम्योरसा च विष्टभ्य स्तम्भयित्वा तथा निमीलिताक्षः सत्त्वस्थः कामक्रोधादिरहितो दन्तैर्दन्तानसंस्पृशन् । तथा तालुनि स्थिता अचला जिह्वा यस्य स तथोक्तः संवृतास्यः पिहिताननः सुनिश्चलो निष्कम्पस्तथा सम्यगिन्द्रियसमूहं विषयेभ्यः प्रत्याहृत्य नातिनीचासनो नात्युच्छ्रितासनो यथा चित्तविक्षेपो न भवति तथोपविष्टः सन् द्विगुणं त्रिगुणं वा प्राणायामाभ्यासमुपक्रमेत् । ततो वशीकृतपवनेन योगिना योऽसौ हृदये दीपवत्प्रकाशः प्रभुः स्थितोऽसौ ध्यातव्यः तत्र च हृद्यात्मानं मनोगोचरतया धारयेत् । तथा धारणाञ्च धारयेत् । धारणास्वरूपञ्च जान्वग्रभ्रमणेन छोटिकादानकालो मात्रा । ताभिः पञ्चदशमात्राभिरधमः प्राणायामस्त्रिंशद्भिर्मध्यमः । पञ्चचत्वारिंशद्भिरुत्तम इत्येवं प्राणायामत्रयात्मिकैका धारणा । तास्तिस्रो योगसत्त्वाभ्यासाच्च धारयेत् । यथोक्तमन्यत्र "जान्वस्य छोटिकां दद्यात् कराग्रजानुमण्डले । मात्राभिः पञ्चदशभिः प्राणायामोऽधमः स्मृतः । मध्यमो द्विगुणः श्रेष्ठस्त्रिगुणो धारणा तथा । त्रिभिस्त्रिभिः स्मृतैकैका ताभिर्योगस्तथैव चेति" मिता० । "हृदयस्थस्य योगेन देवदेवस्य दर्शनम् । ध्यानं प्रोक्तं प्रवक्ष्यामि सर्वस्मात् योगतः शुभम्" हृदिस्था देवताः सर्वा हृदि प्राणाः प्रतिष्ठिताः । हृदि ज्योतींषि सूर्यश्च हृदि सर्वं प्रतिष्ठितम् । स्वदेहमरणिं कृत्वा प्रणवञ्चोत्तरारणिम् । ध्याननिर्मथनाभ्यासात्तु विष्णुं पश्येद्धृदि स्थितम् । हृद्यन्तश्चन्द्रमाः सूर्यः सोममध्ये हुताशनः । तेजोमध्ये स्थितं तत्त्वं तत्त्वमध्ये स्थितो-

ऽच्युतः। अणोरणीयान् महतो महीयानात्मास्य जन्तोर्निहितो गुहायाम्। तेजोमयं पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः" यजुः। "प्राणायामद्विषट्केन प्रत्याहार उदाहृतः। प्रत्याहारैर्द्वादशभिर्धारणा परिकीर्त्तिता। भवेदीश्वरसङ्गत्यै ध्यानं द्वादशधारणम्" काशीख० ४१अ०। "समाहितेन मनसा चैतन्यान्तरवर्त्तिना। आत्मनोऽभीष्टदेवानां ध्यानं ध्यानमिहोच्यते" शा०ति०। ध्यायतेऽनेन ध्यै—करणे ल्युट्। देवानां ७ध्येयस्वरूपभेदे "ध्यानमस्याः प्रवक्ष्यामि यथा ध्यात्वार्चयेदिमाम्" तन्त्रसारः। "तस्य (बटुकस्य) ध्यानं त्रिधा प्रोक्तं सात्त्विकादिप्रभेदतः" तत्र सात्त्विकं यथा "वन्दे बालं स्फटिकसदृशं कुन्तलोल्लासिवक्त्रं दिव्याकल्पैर्नवमणिमयैः किङ्किणीनूपुराद्यैः। दीप्ताकारं विशदवदनं सुप्रसन्नं त्रिनेत्रं हस्ताब्जाभ्यां बटुकमनिशं शूलदण्डौ दधानम्"। राजसं यथा "उद्यद्भास्कररुचिरं त्रिनयनं रक्ताङ्गरागस्रजम् स्मेरास्यं वरदं कपालमभयं शूलं दधानं करैः। नीलग्रीवमुदारभूषणशतं शीतांशुचूडोज्ज्वलं बन्धूकारुणवाससं भयहरं देवं सदा भावये" तन्त्रसा०। तामसध्यानं तु तामसशब्दे उक्तम्। देवानां स्वरूपभेदेनैव ध्येयत्वात् स्वरूपस्य ध्यानत्वम्। देवताप्रतिमाशब्दे च २६८५ पृ० येषां मूर्त्तिभेदा यथा दर्शिताः तथैव तेषां ध्येयता। अन्यदेवताध्यानं तु तन्त्रसारकालिकापुराणादौ दृश्यम् विस्तरभयात् न लिखितम्। "ज्ञानात् ध्यानं विशिष्यते। ध्यानात् कर्मफलत्यागः" गीता। "आगमेनानुमानेन ध्यानाभ्यासरसेन च। त्रिधा प्रकल्पयेत् प्रज्ञां लभते योगमुत्तमम्" स्मृतिः। "इति विज्ञापितो राज्ञा ध्यानस्तिमितलोचनः" रघुः "सर्वदेवाः प्राकृतिका यावन्तो मूर्त्तिधारिणः। अहमात्मा नित्यदेही भक्तध्यानानुरूपतः" ब्रह्मवै० जन्मख०। ८उपनिषद्भेदे उपनिषच्छब्दे १२२२ पृ० दृश्यम्।

**ध्यानजप्य** पु० विश्वामित्रवंश्ये ऋषिभेदे "पाणिनो बभ्रवश्चैव ध्यानजप्यास्तथैव च" हरिवं० २७अ० विश्वामित्रवंश्यर्षिकथने।

**ध्यानयोग** पु० ध्यानमेव योगः। ध्यानरूपे योगे योगाङ्गभेदे "ते ध्यानयोगानुगता अपश्यन्" श्वेताश्वतरोप० "ध्यानं नाम चित्तैकाग्र्यं तदेव योगो युज्यतेऽनेन इति ध्यानयोगस्तमनुगताः समाहिता अपश्यन्" भा० "ध्यानयोगेन संपश्येद् गतिमस्यान्तरात्मनः" मनुः।

**ध्यानाभ्यास** पु० ध्यानानामभ्यासः। समाधौ "ध्यानद्वादशकेनैव समाधिरभिधीयते" काशीख० ४२अ० उक्तेः समाधेर्ध्यानाभ्यासरूपत्वम्। "आगमेनानुमानेन ध्यानाभ्यासरसेन च। त्रिधा प्रकल्पयेत् प्रज्ञां लभते योगमुत्तमम्" स्मृतिः।

**ध्यानिक** त्रि० ध्यानेन निर्वृत्तं ठक्। ध्यानसाध्ये "ध्यानिकं सर्वमेवैतत् यदेतदभिशब्दितम्" मनुः।

**ध्याम** न० ध्यायते पशुभिः ध्यै—कर्मणि मन्। १गन्धतृणे २मदनवृक्षे च संज्ञायां कन्। ध्यामक। रोहिषतृणे राजनि०।

**ध्यामन्** पु० ध्यै—मनिन्। १परिमाणे २तेजसि च उज्ज्वलद०। भावे मनिन्। चिन्तायां न० उणादिकोषः।

**ध्येय** त्रि० ध्यै—कर्मणि यत्। ध्यातव्ये "ध्येयः सदा सवितृमण्डलमध्यवर्त्ती" विष्णुध्यानम् "वेद्यश्च वेदिता चासि ध्याता ध्येयश्च यत्परम्" कुमा० ध्यानशब्दे उदा०।

**ध्यै** चिन्तने भ्वा० पर० सक० अनिट्। ध्यायति अध्यासीत्। दध्यौ "ध्यायतीव लेलायतीव" श्रुतिः। ध्यानशब्दे उदा०। "ध्यायेत् नित्यं महेशम्" शिवध्यानम्।

**ध्र** त्रि० कस्मिंश्चिदुपपदे धृ—मूलविभुजा० क। धारके महीध्रः कुध्र इत्यादि।

**ध्रज** गतौ भ्वा० पर० सक० सेट्। ध्रजति अध्राजीत् अध्रजीत् अयमिदित् ध्रञ्जति अध्रञ्जीत्। दध्राज दध्रञ्ज। ध्रज्यते ध्रञ्ज्यते। "उपध्रजन्तमद्रयो विधन्नित्" ऋ०१।१४९।१ "इषा न यो ध्रजसा पत्मना" ऋ०६।२।७ ध्रज—असुन्। "ध्रजसा गतिवेगेन" भा०।

**ध्रजि** स्त्री० ध्रज—गतौ इन्। गतौ ततः अस्त्यर्थे मतुप् ध्रजिमत् गतियुक्ते त्रि०। "धुनिव्रत इव ध्रजीमान्" ऋ०१।७९।१ दीर्घश्छान्दसः। अस्य यवादिगणे पाठश्चिन्त्यप्रयोजनः मादुपधत्वाभावेन वत्वाप्रसक्तेः।

**ध्रण** शब्दे भ्वा० पर० अक० सेट्। ध्रणति अध्रणीत् अध्राणीत् दध्राण।

**ध्रस** कणश आदाने क्र्या० पर० सक० सेट्। ध्रस्नाति अध्रसीत् अध्रासीत् दध्रास। उदित् ध्रसित्वा ध्रस्त्वा। ध्रस्तः।

**ध्र(ध्रा)** गतौ निघण्टुः। भ्वा० पर० सक० सेट् ध्रा अनिट्। ध्रति ध्राति अध्रीत् अध्रासीत्। दध्र दध्रौ "ध्रयति ध्रायति" इति तत्र निर्देशात् ध्रे ध्रै इत्यपि धातू गतौ भ्वा० पर० अनिटौ। तत्र ध्रे ध्रयति ध्रै ध्रायति इति आर्द्धधातुके ध्रावत्।

**ध्राक्ष** काङ्क्षे घोररवे च भ्वा० पर० सक० सेट् इदित्। ध्राङ्क्षति अध्राङ्क्षीत्। दध्राङ्क्ष इदित् ध्राङ्क्ष्यते।

**ध्राचा** स्त्री ध्राक्ष भावे अङ् पृषोदरादित्वात् ध्राचेति निर्देशात् उपधालोपः। १गतौ ततोऽस्त्यर्थे मतुप् मस्य वः। ध्राचावत् गतियुक्ते त्रि॰ स्त्रियां ङीप्

**ध्राख** शोषणे अलमर्थे च भ्वा॰ पर॰ सक॰ सेट्। ध्राखति अध्राखीत् दध्राख। ऋदित् चङि अदध्राखत् त। अलमर्थः पर्य्याप्तिः वारणं च तत्र अक॰।

**ध्राघ** शक्तौ भ्वा॰ आत्म॰ अक॰ सेट्। ध्राघते अध्राघिष्ट। दध्राघे। ऋदित् चङि अदध्राघत् त।

**ध्राजि** स्त्री॰ ध्रज–गतौ वा॰ भावे इञ्। गतौ "ध्राजिरेकस्य ददृशे न रूपम्" ऋ॰ १।१६४।४४ "ध्राजिर्गतिः" भा॰ णिच् कर्त्तरि इन्। १दुर्वारैकगतिकारके २वातभेदे (घुरणा वातास) उणादिकोषः।

**ध्राड** विभेदे भ्वा॰ आत्म॰ सक॰ सेट्। ध्राडते अध्राडिष्ट। दध्राडे। ऋदित् चङि अदध्राडत् त।

**ध्राडि** पु॰ ध्राड–इन्। पुष्पचये उणादिकोषः।

**ध्रिज** गतौ भ्वा॰पर॰सक॰ सेट्। ध्रेजति अध्रेजीत् दिध्रेज

**ध्रु** स्थैर्य्ये अक॰ सर्पणे सक॰ तु॰कु॰ पर॰ अनिट्। ध्रुवति अध्रुवीत् दुध्राव। अधंजीत् ध्रुतो वर्त्तते। "बुद्धिपूर्वं ध्रुवन्न त्वा राजहत्या पिता खलम्" भट्टिः गतौ "ततोऽ गदया वारिं तं दुध्रावाद्रिणा कपिः" भट्टिः "न स स्तो दस्यो वरुण ! ध्रुतिः" ऋ॰ ७,८६।६ "ध्रुतिः दैवगतिः" भा॰

**ध्रु** गतौ भ्वा॰ प॰ अनिट् निवरुद्धः। ध्रवति अध्रौषीत् दुध्राव।

**ध्रुव** त्रि॰ कु॰ ध्रु–अच्। १स्थिरे २निश्चिते हेमच॰ ३सन्तते ४शाश्वते ५तर्के न॰ मेदि॰। ६गगने न॰ हेम॰। ७शङ्खौ ८विष्णौ ९हरे १०वटे ११उत्तानपादनृपसुतभेदे पु॰मेदि॰ १२वसुभेदे विष्णुस्मादिषु १३द्वादशे योगे पु॰ मेदि॰। १४स्थाणौ पु॰ अमरः १५शरारिखगे पुंस्त्री॰ त्रिका॰। १६ध्रुवके (धुवा)ख्याते पदार्थे पु॰ संगीतदा॰। १७आकाशस्थिते ताराद्वये च पु॰। ते च सर्वेषां नक्षत्रादीनामाधारभूते उत्तरदक्षिणयोः स्थिते सू॰सि॰ उक्ते यथा "मेरोरुभयतो मध्ये ध्रुवतारे नभःस्थिते। निरक्षदेशसंस्थानामुभये क्षितिजाश्रये" सू॰। "मेरोरुभयतो दक्षिणोत्तराग्रयोराकाशस्थिते ध्रुवतारे दक्षिणोत्तरे क्रमेण मध्याकाशमध्ये भवतः। निरक्षदेशसंस्थानां प्रागुक्तनगरस्थितमनुष्याणामुभये दक्षिणोत्तरे ध्रुवतारे क्षितिजाश्रये तद्गर्भक्षितिजवृत्तस्थे भवेत इत्यर्थः।" रङ्गना॰ अतएव देशांशाभावव्यांशपरमत्वमिति वदन् मेरावक्षांशपरमत्वमित्याह "अतो नाक्षोच्छ्रयस्तासु ध्रुवयोः क्षितिजस्थयोः। नवतिर्लम्बकांशास्तु मेरावक्षांशकास्तथा" सू॰। "तासूक्तनगरीषु। अत उभये क्षितिजाश्रये इति कारणात् अक्षोच्छ्रयो ध्रुवोच्चं न। तथाच क्षितिजाद् ध्रुवोच्चत्वमक्षांशा इति तदभावात् तदभाव इति भावः। तत्कारात् तन्नगरीषु ध्रुवयोः क्षितिजस्थयोः सतोर्लम्बांशा नवतिः शून्याक्षांशोननवतेर्लम्बांशत्वात्। खमध्याद् ध्रुवयोः क्षितिजस्य लम्बांशस्वरूपत्वाच्च मेरावक्षांशास्तथा नवतिः, ध्रुवस्य परमोच्चत्वात्। यथा निरक्षदेशेऽक्षांशाभावाल्लम्बांशाः परमास्तथा मेरावक्षांशपरमत्वाल्लम्बांशाभाव इत्यर्थसिद्धम्।" रङ्गनाथः।

"निरक्षदेशक्षितिमण्डलोपगौ ध्रुवौ नरः पश्यति दक्षिणोत्तरौ। तदाश्रितं खे जलयन्त्रवत् तथा भ्रमद्भचक्रं निजमस्तकोपरि। उदग्दिशं याति यथा यथा नरस्तथा तथा स्वान्नतमृक्षमण्डलम्। उदग् ध्रुवं पश्यति चोन्नतं क्षितेस्तदन्तरे योजनजाः पलांशकाः। योजनसंख्याभांशैर्गुणिता स्वपरिधिहृता भवन्त्यंशाः। भूमौ कक्षायां वा भागेभ्यो योजनानि च व्यस्तम्। सौम्यं ध्रुवं मेरुगताः खमध्ये याम्यं च दैत्या निजमस्तकोर्ध्वे। सव्यापसव्यं भ्रमदृक्षचक्रं विलोकयन्ति क्षितिजप्रसक्तम्" सि॰शि॰। विष्णुवरेण उत्तानपादनृपपुत्रस्यैव तदधिष्ठातृत्वं तथाभूतपदलाभकथा च काशीख॰

"विष्णुरुवाच अयि! बाल! विशालाक्ष! ध्रुव! ध्रुवमतेऽनघ!। परिज्ञातो मया सम्यक् तव हृत्स्थो मनोरथः। यस्माद् भवन्ति भूतानि हृष्टेरचलचक्षुषः। तदृष्टेः कारणं सूर्यः सूर्य्याधारो ध्रुवो विभो!। ज्योतिश्चक्रस्य सर्वस्य ग्रहर्क्षादेः समन्ततः। भगणे भ्रमतो नित्यं त्वमाधारो भविष्यसि। मेधीभूतः स वै सर्वान् वायुपाशैर्नियन्त्रितान्। आकल्पं तत्पदे तिष्ठन् भ्रामयन् ज्योतिषाङ्गणान्। आराध्य श्रीमहादेवं पुरा पदमिदं मया। आसादि यत्तदेतत्ते तपसा प्रतिपादितम्। केचिच्चतुर्युगं यावत् केचिन्मन्वन्तरं ध्रुव!। तिष्ठन्ति त्वन्तु वै कल्पं पदमेतत् प्रयास्यसि। मनुनापि न यत् प्रापि किमन्यैर्मानवैर्ध्रुव!। तत्पदं विहितं वत्स! शक्राद्यैरपि दुर्लभम्। अन्यान् वरान् प्रयच्छामि स्तवेनानेन तोषितः। सुनीतिरपि ते माता त्वत्समीपे भविष्यति" भाग॰ ५।२२ अ॰ शनिलोकपर्य्यन्तवर्णनान्ते

"अथ तस्मात् परतस्त्रयोदश लक्षयोजनान्तरतो यत्तद्विष्णोः

धनत्वात् तथा हि समिष्टयजुर्हूयते "तिष्ठन् ध्रुवया समिष्टयजुर्जुहोतीति" शाखान्तरश्रुतेः अतएव मैत्रकठापस्तम्बसूत्रेषु "वैकङ्कती ध्रुवेति" पठ्यते तेषां हि वैकङ्कतानि पत्राणीति सामान्यवचनं नास्ति" कर्क०। अतः कोषान्तरे अस्य जुहूधर्मकताकथनं प्रामादिकमेव। ३मूर्वायां ४आढक्यां ५शालपर्ण्यां (धुया) ख्याते ६गीतिभेदे च मेदि०। ७साध्व्यां स्त्रियां शब्दर०।

**ध्रुवावर्त्त** पु० ध्रुव संज्ञक आवर्त्तः रोमसंस्थानभेदः। ध्रुवमध्योऽश्वः। अश्वानां रोमसंस्थानभेदे तस्य स्थानविशेषेण फलं वृ०सं० ६६अ० उक्तं यथा

"अश्रुपात हनुगण्ड हृदय गल प्रोथ शङ्खकटिवस्ति जानुनि। मुष्कनाभिककुदे तथा गुदे सव्यकुक्षिचरणेषु चाशुभाः। ये प्रपाणगलकर्णसंस्थिताः पृष्ठमध्यनयनोपरिस्थिताः। ओष्ठसक्थिभुजकुक्षिपार्श्वगास्ते ललाटसहिताः सुशोभनाः। तेषां प्रपाण एको ललाटकेशेषु च ध्रुवावर्त्तः। रन्ध्रोपरन्ध्रमूर्धनि वक्षसि चेति स्मृतौ द्वौ द्वौ"।

**ध्रुवाश्व** पु० इन्द्रदवभेदे मत्स्यपु०। [भवन्तु" ऋ०।२१।८

**ध्रुवि** त्रि० कु० ध्रु—क्रिन्। १ध्रुवे स्थिरे "शं नः पर्वताः ध्रुवयो

**ध्रेक** उत्साहे शब्दे च भ्वा०आत्म०अक०सेट्। ध्रेकते अध्रेकिष्ट। दिध्रेके ऋदित् चङि अदिध्रेकत् त।

**ध्रै** तृप्तौ भ्वा०पर० अक०अनिट्। ध्रायति अध्रासीत्। दध्रौ मतौ तु ध्राधातौ इत्यन्ये।

**ध्रौव** त्रि०ध्रुवायां गृहीतम् अण्। ध्रुवया गृहीते आज्यादौ "तस्मात् साधारणं ध्रौवमाज्यमिति "यस्माद गृह्यते यत् ध्रुवायामाज्यम्" श्रुतेः कै० ३।५। ६सू० भाष्यम्। "न भूतलं न च ध्रौवं स्थानं यत् प्राप्तवान् ध्रुवः" मार्क०पु०। २आह्नायाम् ३ध्रुवतारायां स्त्री शब्दार्थचि०।

**ध्रौव्य** न०ध्रुवस्य भावः ष्यञ्। १स्थिरत्वे "ध्रौव्यमतथेत्यादि" सुश्रु०। "तत्कारणयोरविद्याकामयोश्चलत्वात् कृतक्षयध्रौव्योपपत्तिः" वृ०उ०भा०। स्वार्थे ब्राह्म०ष्यञ्। २स्थिरे त्रि० "ध्रौव्ये दयरात्रावराहे" शांख्यश्रौ० २।१६।१। ध्रुवाय हितम् ष्यञ्। ३ध्रुवस्थानप्रापके त्रि० "स्वर्ग्यं ध्रौव्यं सौमनस्यं प्रशस्यमघमर्षणम्। ख्यातं तत् (ध्रुवचरितम्) श्रयतोऽभीक्ष्णमच्युतप्रियचेष्टितम्" भा० ४।१२।२७।

**ध्वंस** पु०ध्वन्स–भावे घञ्। विनाशे अभावभेदे। "जन्याभावत्वं ध्वंसत्वमिति" मुक्तावली। जन्यत्वस्य प्रायेण दुर्ज्ञेयत्वात् अभावत्वव्याप्यः अखण्डोपाधिरिति नव्यनैयायिकाः। सत्कार्यवादिमते तिरोभाव एव ध्वंस इति भेदः। "ध्रुवं ध्वंसो भावी जलनिधिमहीशैलसरिताम्" "तन्नूनां पञ्चानां कोष्ठं स्यात् ध्वंसश्च विनाशनात्" कामन्दकी०

**ध्वंसकला** अव्य० ध्वंसं कलयति कलि–डा ऊर्या०। हिंसायां गणर०ठो०। ध्वंसकलाकृत्य हिंसित्वेत्यर्थः।

**ध्वंसन** न० ध्वन्स–भावे ल्युट्। १नाशे ध्वन्स–णिच्–ल्यु। २ध्वंसकारके त्रि० "माहेन्द्रमिव शत्रूणां ध्वंसनं शरदृष्टिभिः" भा० उ० ११६ भावे ल्युट्। ३ध्वंसकरणे "कंसध्वंसनधूमकेतुरवतु त्वां देवकीनन्दनः" गीतगो०। ध्वन्स–भावे ल्युट्। ४ध्वंसे ५अधःपतने च।

**ध्वंसिन्** त्रि०ध्वन्स–णिनि। नाशप्रतियोगिनि "जालान्तरगते सूर्यकरे ध्वंसी विलोक्यते। त्रसरेणुः स विज्ञेयः" वैद्यकप० ध्वंसीति त्रसरेणुविशेषणम् अतः शब्दकल्प० अस्य त्रसरेणुपरिमाणार्थतोक्तिः प्रामादिकी। ध्वन्स–णिच्–णिनि। नाशकारके त्रि०। "क्रतुध्वंसी वृषध्वजः" अमरः।

**ध्वज** गतौ भ्वा०पर०सक०सेट्। ध्वजति अध्वजीत् अध्वाजीत् दध्वाज अयमिदिदपि। ध्वञ्जति अध्वञ्जीत् दध्वञ्ज ध्वञ्ज्यते।

**ध्वज** पु० ध्वज–अच्। १शौण्डिके (शुण्डिकोपकरणभेदे) २मेढ्रे ३चिह्ने ४खट्वाङ्गे मेदि०। ५गर्वे ६दर्पे च शब्दर०। ७पूर्वदिक्स्थे गृहे हेमच०। ८चतुष्कोणाकारे वंशदण्डोपरिस्थे वस्त्रखण्डभेदे च विधानपा० ९पताकायां पु०न० अमरः। उक्तोभयवस्त्रयुक्ते १०दण्डभेदे च सामान्यतोऽस्य निर्माणप्रकारः युक्तिकल्पतरावुक्तो यथा "सेनाचिह्नं क्षितीशानां दण्डो ध्वज इति स्मृतः। सपताको निष्पताकः स ज्ञेयो द्विविधो बुधैः। पताका सार्द्धदैर्घ्ये च सर्वा तु पृथिवीभुजाम्। सपताकध्वजस्थाने तदा हस्तं परित्यजेत्। अथहस्तोध्वजोनाम नैनं सामान्यमर्हति। वंशोऽथ आह्वयः शालः पालाशश्चाप्यकस्तथा। नैपो नैम्बोऽथ वा दण्डस्तथा वै राजधारणः। ब्रह्मादिकसंज्ञानां वर्णरूपप्रकाशितः। सर्वेषाञ्चैव वंशस्तु दण्डः सम्पत्तिकारकः। अ क च ट त प वर्गाः। प्रतापाय पताकास्तु अष्टावेव प्रकाशिताः। पञ्चहस्तायता हस्तपरिणाहा जयाभिधा। जया५ च विजया६ भीमा७ चपला८ वैजयन्तिका९। दीर्घा१० विशाला११ लोला१२ च ज्ञेया हस्तैकवर्द्धितः। परिणाहे पादवृद्धिरथ वर्णस्य निर्णयः। रक्तः श्वेतोऽरुणः पीतश्चित्रो नीलोऽथ कर्बुरः। कृष्णश्चेति पताकानां वर्णरूपः

प्रकाशितः । ध्वजादिवस्त्रानामष्टानामष्टकमयम् । कलशोदर्पणश्चन्द्रः पद्मं कोणो यथाक्रमम् । ब्राह्मणादि विट्शूद्रजातीनां संप्रकाशितः । गजादियुक्ता सा प्रोक्ता जयन्ती सर्वमङ्गला । गजो हंसादिसंयुक्तो राज्ञां सैवाष्टमङ्गला । हंसः केकी शुकश्चाथो ब्रह्मादीनां यथाक्रमम् । चामरादिसमायुक्ता सा ज्ञेया सर्वबुद्धिदा । चामरञ्चाथपत्राणि चित्रवस्त्रं तथा चितम् । चतुर्णां वेदनयनपक्षेन्दुर्गार्धितक्रमात् । तदधो यदि विन्यस्तं पताका द्वितीया भवेत् । इयं हि सर्वभोगदा पताका चक्रवर्त्तिनः । तदर्थः पूर्ववत्प्रोक्तः प्रमाणं विधिबोधितम् । कनकं रजतं ताम्रं नानाधातुमयं क्रमात् । कुम्भादिकं प्रशंसन्ति पताकाग्रे महीभुजाम् । तत्रापि रत्नविन्यासो विधेयो राजतक्रमः । चतुर्भिर्मकराद्यैर्युक्ता चेत् सर्वसिद्धिदा । तदा चेवञ्चरीनाम सा पताका विजायते । मकरोऽथ गजः सिंहो व्याघ्रो वाजी मृगः शुकः । शुकस्तेति वसुहिन्दादित्यादिदशभुजाम् । इति प्रोक्तः पताकानां निर्णयः पृथिवीभुजाम्" ।

देवादिप्रतिष्ठाक्रमवस्तुपान्तर्गतध्वजमहाध्वजयोर्लक्षणादिकं कुण्डार्के उक्तं यथा "ध्वजान् द्विहस्तायतिकांश्च पञ्चहस्तान् सपीतारक्तकृष्णनीलान् । श्वेतासितश्वेतसितान् दिगीशवाहान् सचेत् दिक्करसंयमीर्वे" मू०। "ध्वजान् द्विहस्तमितायामान् पञ्चहस्तदीर्घान् पीतारक्तकृष्णनीलश्वेतकृष्णश्वेतश्वेतान् गैरिकादिलिखितदिक्पालवाहनान् दशहस्तवंशमस्तके योजितान् "हस्तद्वयनिखातांश्च ध्वजांस्ता अपि पूर्वतः" इति वक्ष्यमाणत्वात् । प्राच्यादितः सचेन्नारयेदिति" व्याख्या । प्रतिष्ठासारसंग्रहे "पीतरक्तादिवर्णाश्च पञ्चहस्ताध्वजाः स्मृताः । द्विपञ्चहस्तैर्दण्डैस्ते वंशजैः संयुता मताः" इति । क्रियासारे "मातङ्गवसमहिषान् सिंहमत्स्यैश्च वाजिनः । वृषभं च यथान्यायं ध्वजमध्ये क्रमाल्लिखेत्" पञ्चमांशं निखनेदिति । अकरणे दोषः मत्स्यपुराणे "चिन्तयन्त्यसुरास्तेषां ध्वजहीनं सुरालयम् । ध्वजेन रहितं यज्ञाद्यन्वरूपं तु वृथा भवेत् । पूजायागादिकं सर्वं जपाद्यं यत्कृतं बुधैरिति" ध्वजारोपणफलं तत्रैव "यं कृत्वा पुरुषः सम्यक् समस्तफलमाप्नुयादिति" । अथ पताकानिवेशनं महाध्वजानिवेशनं च नवमकुण्डपताका निवेशनं तत्रोक्तं यथा "लोकेशवर्णास्युताः पताकाः शैलेन्दुदैर्घ्यार्पितकाश्च मध्ये । चित्रं ध्वजं दिक्करदैर्घ्यवंशमिदोत्ततं प्रान्तगकिङ्किणीकम् । श्वेतां च नवमीं पूर्वशानयोर्मध्यतो बुधः । विन्यसेत्तु पताकां च ध्वजांस्ता अपि पूर्वतः" मू० "लोकेशानां लोकपालानां ये वर्णाः पीतादयः पूर्वमुक्तास्तैः गैरिकादिलिखितवज्रशक्तिदण्डखड्गपाशाङ्कुशगदात्रिशूलानि तैर्युताः सप्तहस्तदीर्घा एकहस्तविस्तृताः पताका दशहस्तवंशयष्टीर्गताः । चित्रं ध्वजं त्रिहस्तविस्तृतं प्रान्ते वर्त्तमानकिङ्किणीकं मौर्वे सचामरं दशहस्तदैर्घ्यं वंशस्य तादृशं तं मध्ये विन्यसेत् । पूर्वादितः पताकाश्च विन्यसेदित्युत्तरश्लोकेनान्वयः । नवमीं पताकां पूर्वशानयोर्मध्ये श्वेतां तादृशीमेवाचार्यकुण्डे विन्यसेत् ध्वजांस्ता अपि पताकाश्च पूर्वादिक्रमेण मूलोक्तप्रकारेणापि विन्यसेदिति" । "इयशीर्षपञ्चरात्रम् । "ध्वजवंशः प्रकर्त्तव्यो निर्व्रणः सरलो दृढः । सदृशं तामलं चक्रं ख्यातं कुर्यात्सुशिल्पोत्तमः । प्रासादस्य च विस्तारो मानं दण्डस्य कीर्त्तितम् । ध्वजयष्टिर्देवगृहे ऐशान्यां दिशि दैशिकैः । स्थापनीयाथ वायव्ये स्थानं ध्वजस्तथोच्यते । पट्टकापौतकौमाद्यैर्ध्वजं कुर्यात् सुशोभनम् । एकवर्णं विचित्रं वा घण्टाचामरभूषितम् । किङ्किणीजालकोपेतं बर्हिपत्रविभूषितम् । शुक्लादिवर्णैर्विप्रादिक्रमादा कारयेत् ध्वजम् । दण्डाग्रावधारणौ यावत् हस्तैकं विस्तरेण तु । महाध्वजस्तु विख्यातं सर्वकामदं शुभम् । ध्वजेन रहितो विप्र ! प्रासादस्तु वृथा भवेत् । पूजाहोमादिकं सर्वं जपाद्यं यत् कृतं नरैः" । शिवसर्वस्वे "देवेभ्यश्च ध्वजं दद्यात् ह्वजैर्यशोभितम् । गरुडेनैव सूर्याय, हरस्य वृषचिह्नितम् । विष्णवे गरुडाङ्कन्तु, दुर्गायै सिंहचिह्नितम् । कार्य्यं ध्वजपताकाश्च अन्यथा न कथञ्चन" । वह्नि० पु० ५८अ०। "प्रासादस्य तु विस्तारो मानं दण्डस्य कीर्त्तितम् । विस्तारार्द्धेन वा कुर्यात् तृतीयार्द्धेन वा पुनः । शालाशालादियुक्तिं दण्डं वा परिकल्पयेत् । ध्वजयष्टिर्देवगृहे ऐशान्यां वायवेऽथवा । नानावर्णं ध्वजं कुर्यात् चित्रं चैकवर्णकम् । घण्टाचामरकिङ्किण्या भूषितं पापनाशनम् । दण्डाग्राद्धरणीं यावत् हस्तैकं विस्तरेण तु" । इन्द्रध्वजशब्दे तल्लक्षणं द्रष्टव्यम् । हेमचन्द्रे पूर्वदिग्दण्डे इत्यादौक्तिः ध्वजसम्बन्धकत्वात्स्य पूर्वदिक्स्थितत्वाभिप्रायेण" लक्ष्मणशब्दे २६३५ पृ० "ध्वजो धूमो हरिः श्वा

नोः खरेशौ वायसोऽष्टमः। पूर्वादीनान्तु काष्ठानां ध्वजादीनामवस्थितिः इत्युक्तेः ध्वजरूपायस्य पूर्वदिक्स्थतस्य कीर्त्तनात्। वस्तुतः ध्वजशब्द आयविशेषार्थ एव परिभाषितो न तु पूर्वदिक्शब्दे। तत्र शौण्डिकोपकरणे "दशसूनासमं चक्रं दशचक्रसमो ध्वजः" मनुः। "सूनादिशब्दैस्तद्धातुपलक्ष्यते दशसूनावतस्तु यावान् दोषस्तावानेकस्मिन् चक्रवति तैलिके। यावान् दशसु तैलिकेषु दोषः तावानेकध्वजवति शौण्डिके" कुल्लू०। चिह्ने "तं वन्दे वाहनं विष्णोर्गरुत्मन्तं महाबलम्। ध्वजं चक्रे च भगवानुपरि स्थास्यतीति तम्" भा०आ०३२अ०। "श्येनो वज्रं मृगश्छागो नन्द्यावर्त्तो घटोऽपि च। कूर्मो नीलोत्पलं शङ्खःफणी सिंहोऽर्हतां ध्वजाः" हेमच०। "शरेण शक्रस्य महाशनिध्वजम्" रघुः "ब्रह्महा द्वादशसमाः कुटीं कृत्वा वने वसेत्। भैक्षाश्यात्मविशुद्ध्यर्थं कृत्वा शवशिरो ध्वजम्" मनुः। वृषध्वजः मकरध्वजः धूमध्वज इत्यादि ततो मत्वा० इन्। ध्वजि तद्युक्तमात्रिणि त्रि०।

**ध्वजगृह** पु० ध्वजाश्रययुक्तं गृहं शा०त०। ध्वजरूपायुक्ते गृहे "ययौ स्वमेव भवनं यत्र ध्वजगृहं महत्" हरिवं०१७५अ०।

**ध्वजग्रीव** पु०ध्वज इव ग्रीवास्य। राक्षसभेदे रामा०सु०१२३स०।

**ध्वजद्रुम** पु० ध्वज इव दीर्घकायको द्रुमः। तालवृक्षे राजनि० ध्वजवृक्षादयोऽप्यत्र।

**ध्वजप्रहरण** पु० ध्वजं प्रहरति प्र+हृ—ल्यु। वायौ शब्दर०।

**ध्वजभङ्ग** पु० ध्वजस्य मेढ्रस्य भङ्गः। चरकोक्ते क्लीवताप्रयोजके रोगभेदे यथा "अत्यम्ललवणक्षारविरुद्धाशनभोजनात्। तथाम्बुपानाद्विषमात् पिष्टान्नगुरुभोजनात्। दधिक्षीरानूपमांससेवनाद्व्याधिकर्षणात्। कन्यागमनाच्चापि वियोनिगमनादपि। दीर्घरोम्णीं चिरोत्सृष्टां तथैव च परिस्रुताम्। ईदृशीं प्रमदां मोहात् यदि गच्छति मानवः। चतुःपदाभिगमनाच्छेफसश्चाभिघाततः। अधावनाच्च मेढ्रस्य शस्त्रदन्तनखक्षतात्। काष्ठप्रहारनिष्पेषशूकानाञ्च निषेवणात्। रेतसश्च प्रतीघातात् ध्वजभङ्गः प्रवर्त्तते। चरकः। तस्य चिह्नं यथा "शुक्रेऽचिरात् प्रसिच्येत शुक्रं शोणितमेव वा। तोदोऽत्यर्थं वृषणयोर्मेढ्रं धूपायतीव च" इति वाभटः।

**ध्वजवत्** त्रि० ध्वजश्चिह्नमस्त्यस्य मतुप् मस्य वः। चिह्नयुक्ते "शिरःकपाली ध्वजवान् भिक्षाशी कर्म वेदयन्" "कृत्वा शवशिरो ध्वजमिति" मनूक्तेः "हतब्राह्मणकपालरूपचिह्नवान् इत्यर्थः" मिता०। स्त्रियां ङीप्। सा च २हविर्मेधसः कन्यायाम् "अत्र ध्वजवती नाम कुमारी हविर्मेधसः" भा०उ०१०६अ०। ध्वजः शौण्डिकोपकरणभेदः अस्त्यस्य मतुप् मस्य वः। २शौण्डिके "सूनावतां ध्वजवतां वेशेनैव च जीवताम्" मनुः

**ध्वजारोपण** न० ६त०। ध्वजस्य देवप्रासादादौ आरोपणे तद्विधिः अग्निपु० १०२अ० यथा

"चूडके ध्वजदण्डे च ध्वजे देवकुले तथा। प्रतिष्ठा च यथोद्दिष्टा तथा स्कन्द! वदामि ते। यस्मात् प्रवेशाद्धा वद्धा मर्यादेवेशनात्। ऐष्टके दारुजः शूलः शैलजे धाम्नि शैलजः। वैष्णवादौ च चक्राद्यः कुम्भः स्यान्मूर्त्तिमानतः। स च त्रिशूलयुक्तस्तु अपवक्त्राभिधो मतः। ईशशूलः समाख्यातो मूर्ध्नि बिल्वसमन्वितः। बीजपूरकयुक्तो वा शिवशास्त्रेषु तद्विधः। चिह्नो ध्वजस्य जङ्घातो यथा जङ्घार्द्धतो भवेत्। भवेद्वा दण्डमानस्तु यदि वा तद्यदृच्छया। महाध्वजः समाख्यातो यस्तु पीठस्य वेष्टकः। शक्रे १४पर्णैरष्टाभिर्वापि कृतैर्दण्डस्तु सम्मितः। उत्तमादिक्रमेणैव विज्ञेयः सूरिसत्तमः। वंशजः शालजादिर्वा स दण्डः सर्वकामदः" इत्युपक्रमे तत्र दर्शितः

**ध्वजाहृत** पु० ध्वजेन तदुपलक्षितसंग्रामेणाहृतः। दासभेदे "ध्वजाहृतो भक्तदासो गृहजः क्रीतदत्त्रिमौ। पैतृकोदण्डदासश्च सप्तैते दासयोनयः" मनुः। "ध्वजाहृतः ध्वजे संग्रामे स्वामिपराभवात् जितः" कुल्लू०। २अविभाज्यधनभेदे न० "संग्रामादाहृतं यत्तु विजित्य द्विषतां कुलम्। स्वाम्यर्थं जीवितं त्यक्त्वा तद्ध्वजाहृतमुच्यते" दायभा० कात्यायनः। "ध्वजाहृतं भवेद्यत्तु विभाज्यं नैव तद्भवेत्" स्मृतिः।

**ध्वजिन्** त्रि० ध्वजोऽस्त्यस्य इनि। १ध्वजयुक्ते "सुरापाना पनुत्त्यर्थं बालवासा जटी ध्वजी" मनुः "उलूकपक्षिध्वजिभिर्दैवतायतनैर्वृतम्" भा०शा० १४१अ० स्त्रियां ङीप् सा च २सेनायाम् अमरः। "तस्यैः प्रवृद्धध्वजिनी रजांसि" रघुः। ३पर्वते ४रथे ५सर्पे ६अश्वे ७ब्राह्मणे पु० मेदि०। ८मयूरे राजनि०। १०शौण्डिके हेमच०। "प्रतिपद्ये शूनी चक्री ध्वजी वेश्या नराधिपः" मनुः।

**ध्वजोत्थान** न० इन्द्रध्वजस्य उत्थानम्। १शक्रध्वजोत्थाने तदुपलक्षिते २उत्सवे च त्रिका०। इन्द्रध्वजशब्दे ९४७पृ० दृश्यम्।

**ध्वण** ध्वाने भ्वा० अक० पर० सेट्। ध्वणति अध्वाणीत् अध्वणीत् दध्वाण।

**ध्वन** रवे भ्वा० पर० अक० सेट्। ध्वनति अध्वानीत् अध्वनीत् दध्वान। मित् वा घटादि ध्वनयति ध्वानयति।

**ध्वन** शब्दे अद० चु० उभ० सक० सेट्। ध्वनयति अदिध्वनत् अध्वनयीत्। शब्द इह अव्यक्तध्वनिरूपः। "मृदङ्गः ध्वनयति" इत्यादि।

**ध्वन** पु० चु० "ध्वन" धा० एरच् भावे अच्। अव्यक्तशब्दे

**ध्वनन** न०ध्वन्यते व्यज्यतेऽर्थोऽनेन चुरा०ध्वनि–करणे ल्युट्। १अलङ्कारोक्ते वाच्यलक्ष्यभिन्नार्थस्य बोधनात्मके व्यञ्जनावृत्तिरूपे शब्दनिष्ठे व्यापारभेदे "विरतास्वभिधाद्यासु ययार्थो बोध्यतेऽपरः। सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च"। "वृत्तिर्व्यञ्जनध्वननगमनप्रत्यायनादिव्यपदेशविषया व्यञ्जना नाम" सा०द०। भावे ल्युट्। २अव्यक्तशब्दकरणे "पापकं गन्धमाघ्रायाविस्पन्दने कथं ध्वनने च" आश्व० श्रौ० २।६।८

**ध्वनमोदिन्** पु० ध्वनेन ध्वानेन मोदयति मुद–णिच्–णिनि। १भ्रमरे शब्दरत्ना०। २मधुकर्यां स्त्री ङीप्

**ध्वनि** पु० ध्वन–इन्। १मृदङ्गादिशब्दे "शब्दो ध्वनिश्च वर्णश्च मृदङ्गादिभवो ध्वनिः। कण्ठसंयोगजन्मानो वर्णास्ते कादयो मताः" भाषा०। शब्दविशेषस्य ध्वन्यात्मकता शब्दार्थरत्नेऽस्माभिर्व्यवस्थापिता यथा "स च शब्दः द्विविधः बुद्धिहेतुरबुद्धिहेतुश्च। तत्राबुद्धिहेतुर्मेघादिशब्दः बुद्धिहेतुश्च द्विविधः। स्वाभाविकः काल्पनिकश्च उभयत्रापि ध्वनेरुपकारकत्वात् ध्वन्यात्मकता। तत्र स्वाभाविको वर्णविशेषानभिव्यञ्जको रुदितहसितादिरूपः प्राणिमात्रसाधारणः। काल्पनिकोऽपि त्रिविधः वाद्यादिशब्दः गीतिरूपः वर्णात्मकश्च। तत्र भेरीशब्दादिरूपो वाद्यरूपः षड्जादिरागाभिव्यञ्जकनिषादादिस्वररूपो गीतिरूपः ध्वनिविशेषरूपतत्कण्ठताल्वाद्यभिघातजन्यश्च वर्णात्मकः। "ध्वनिर्नाम यो दूरादाकर्णयतो वर्णविशेषमनधिगच्छतः कर्णपथमवतरति प्रत्यासीदतश्च तारत्वादिविशेषमवगमयतीति" शारीरकभाष्योक्ते तारत्वादिधर्महेतुर्ध्वनिरित्यवसेयम्। जिह्वाया ईषदन्तरपाते वर्णानामनुत्पत्तेर्ध्वन्युपलम्भात् रुदितहसितादौ वर्णोत्पत्तिमन्तरेणैव तत्प्रतीतेश्च सर्वशब्दजनकता ध्वनेरवसीयते।"

तद्भेदस्वरूपादिकं तत्रैव स्थानान्तरेऽस्माभिर्निर्णीतं यथा "तस्य स्फोटस्याभिव्यक्तौ प्राकृतस्य ध्वनेः कारणत्वं चिरचिरतरस्थितौ तु प्राकृतध्वनिजातवैकृतध्वनेरिति विवेकः। तथा च वाक्यपदीये "स्फोटस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते" इति। "स्थितिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते" इति च। स्थितिभेदे चिरचिरतरकालावस्थितौ ध्वनिस्तु पूर्वकथितः। तस्य च स्फोटस्य नित्यतया ध्वनिगतह्रस्वदीर्घादिकालस्य तत्रोपचारः। प्रतिपादितञ्च तथैव वाक्यपदीये "स्फोटस्याभिन्नकालस्य ध्वनिकालानुपातिनः। स्वभावतस्तु नित्यत्वात् ह्रस्वदीर्घप्लुतादिषु। प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्यते"। शब्दस्य स्फोटस्य नित्यतया अभिन्नकालस्य ह्रस्वदीर्घादिषु प्राकृतध्वनेः कालः तारत्वादिधर्महेतुरुपचर्यते इति तदर्थः। एवञ्च विलम्बितोच्चारणस्थले तच्छब्दानां तद्बोधजनितसंस्काराणां वा बहुक्षणपर्यन्तस्थायित्वकल्पनामपेक्ष्य एकस्यैव शब्दस्याभिव्यक्त्यनन्तरं जायमानेन वैकृतेन ध्वनिना बहुकालस्थितिकल्पने लाघवमित्यपि द्रष्टव्यम्। भेरीशब्दादौ च ध्वन्यभिव्यक्त्यनन्तरं जायमानप्राकृतध्वनेर्बहुकालस्थायित्वदर्शनेन अत्रापि तथाकल्पनौचित्यात्। अतएव महाभाष्ये "एवं तर्हि स्फोटः शब्दो ध्वनिः शब्दगुण इत्यादिना"ऽभिव्यङ्ग्योपकारकत्वेन ध्वनेः स्फोटरूपशब्दगुणत्वमभिहितमभिहितञ्च ध्वनेर्ह्रस्वदीर्घत्वेनापि मानम्। यथा "ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते। ह्रस्वो महांश्च केषाञ्चित् स्वयं नैव स्वभावत" इति। न स्वभावतस्तद्रूपेण स्फोटो लक्ष्यत इत्यर्थः। ध्वनिविकारे च वायुसंयोगविशेषस्य हेतुत्वं तस्य बहुकालस्थायित्वे विलम्बितत्वम् अल्पकालस्थायित्वे द्रुतत्वमिति विवेकः।

२उत्तमकाव्ये "इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः" काव्यप्रका० "इदं काव्यं बुधैर्वैयाकरणैः प्रधानभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः ततस्तन्मतानुसारिभिरन्यैरपि न्यग्भावितवाच्यव्यङ्ग्यव्यञ्जनक्षमस्य शब्दार्थयुगलस्य" वृत्तिः। "इदमिति वाच्यादतिशयिनि वाच्यादधिकचमत्कारे व्यङ्ग्ये सति इदं काव्यमुत्तमं तदेव च बुधैर्ध्वनिः कथित इत्यर्थः। ननु ध्वनिपरिभाषा क्वापि केनापि न कृता तत्कथमलङ्कारशास्त्रे सा कृतेति आकाङ्क्षायां वैयाकरणरूपबुधसंवादं दर्शयन् व्याचष्टे बुधैः वैयाकरणैरिति एवञ्च सेयं

कारिकास्वनुपपद्यमानत्वेनावधेयम्। अत्रायमर्थः अनेकवर्णात्मकस्य कलसादिपदस्य प्रत्यक्षं न सम्भवति आशुविनाशिनां क्रमिकाणां वर्णानां मेलकाभावेन तदात्मनः पदस्य प्रत्यक्षाशक्यत्वात्। न च प्रत्येकवर्णानुभवजन्यसंस्कारैः सकलवर्णात्मनः पदस्य समूहालम्बनस्मृतिरेव नैयायिकमतसिद्धास्त्विति वाच्यं वर्णपदयोरेकदेशैकदेशिभावेन भिन्नत्वात् वर्णविषयसंस्कारैः पदस्मरणजननस्याशक्यत्वादित्यभिप्रायवद्भिर्वैयाकरणैः पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितेनानुभूयमानचरमवर्णेन श्रोत्रे व्यञ्जनाख्यो व्यापारोजन्यते तेनैव व्यापारेण नष्टवर्णघटितमपि पदं स्फोटपरिभाषितं श्रोत्रेण साक्षात् क्रियते इत्युच्यते। तदाह बुधैः वैयाकरणैरिति अर्थप्रत्यायकत्वादेकदेशित्वाच्च पदं वर्णापेक्षया प्रधानभूतं स्फोटसंज्ञकम्। तद्व्यञ्जकस्य शब्दस्य चान्त्यवर्णात्मन इत्यर्थः। अतस्तन्मतेऽपि चरमवर्णात्मनि शब्दे तेषां ध्वनिव्यवहारः आलङ्कारिकाणामपि काव्यात्मनि शब्दे ध्वनिव्यवहार इति शब्दे व्यवहारसाम्यात्तन्मतानुसरणम्" महेश्वरः।

ध्वनिभेदाश्च काव्यशब्दे २० २४।२५ पृ० दृश्याः।

शब्दभेदध्वन्याद्युत्पत्तिप्रकारादिकं शारदाति० उक्तं यथा "सा प्रसूते कुण्डलिनी शब्दब्रह्ममयी विभुः। शक्तिं ततो ध्वनिस्तस्मान्नादस्तस्मान्निरोधिका। ततोऽर्द्धेन्दुस्ततो बिन्दुस्तस्मादासीत् परा ततः। पश्यन्ती मध्यमा वाचां वैखरी शब्दजन्मभूः"। सा कुण्डलिनी शक्तिं प्रसूते। ततः शक्तेर्ध्वनिरासीत् ततस्तस्माद्ध्वनेर्नाद इत्यादि ज्ञेयम्। सत्त्वप्रविष्टा चित् शक्तिशब्दवाच्या परमाकाशावस्था सैव सत्त्वप्रविष्टा रजोऽनुविद्धा सती ध्वनिशब्दवाच्या अक्षरावस्था, सैव तमोऽनुविद्धा नादशब्दवाच्या अव्यक्तावस्था सैव तमःप्राचुर्यात् निरोधिकाशब्दवाच्या सैव सत्त्वप्राचुर्यात् अर्द्धेन्दुशब्दवाच्या तदुभयसंयोगाद्बिन्दुशब्दवाच्यः स एव बिन्दुः स्थानान्तरगतः पराख्यो भवति। तत्र परा मूलाधारे, पश्यन्ती स्वाधिष्ठाने, मध्यमा हृदये, वैखरी मुखे। तदुक्तं "स्वच्छा कुण्डलिनी मध्ये ज्योतिर्मात्रस्वरूपिणी। स्वयंप्रकाशा पश्यन्ती सुषुम्णामाश्रिता भवेत्। अत्रोक्तविषया तस्मादुद्गच्छन्त्यूर्द्ध्वगामिनी। ततः संक्रममाणात् स्याद्देवि! तत्रोर्द्ध्वगामिनी। सैव हृत्पङ्कजं प्राप्य मध्यमा नादरूपिणी। सैवोरःकण्ठतालुस्था शिरोघ्राणरदादिगा। जिह्वामूलोष्ठनिष्पाता सैव वर्णपरिग्रहा। शब्दप्रपञ्चजननी श्रोत्रग्राह्या तु वैखरी" पदार्था० राघवभट्टः।

"ध्वनिभृता निभृताक्षरमुज्झिते" माघः।

**ध्वनिकाव्य** न० कर्म०। उत्तमकाव्ये काव्यशब्दे २०२४पृ० दृश्यम्

**ध्वनिकृत्** पु० ध्वनिं तत्प्रतिपादकं ग्रन्थं करोति कृ—क्विप् तुक् ६त०। अलङ्कारग्रन्थभेदकारके पण्डितभेदे "तदुक्तं ध्वनिकृता" सा० द०।

**ध्वनिग्रह** पु० ध्वनिं ध्वन्यात्मकं शब्दं गृह्णात्यनेन ग्रह—करणे अप्। कर्णे श्रोत्रेन्द्रिये त्रिका०।

**ध्वनिनाला** स्त्री ध्वनेः ध्वन्यात्मकशब्दस्य नालेव। वेणौ १वंशीभेदे २काहलवाद्ये च मेदि०।

**ध्वनिबोधक** पु० ध्वनिं बोधयति बुध—णिच्—ण्वुल्। रोहिषतृणे नैघण्टुप्रकाशिका।

**ध्वनिविकार** पु० ६त०। शोकभयादिना ध्वनेरन्यथाभावे १काकौ हेमच०। २विकृतध्वनौ च।

**ध्वन्य** त्रि० घटादि० ध्वन—कर्मणि यत्। १ध्वननीये व्यङ्ग्यार्थे ऋग्वेदप्रसिद्धे २लक्ष्मणपुत्रात्मजे पु० "उत त्ये मा ध्वन्यस्य जुष्टा लक्ष्मण्यस्य सुरुचो यतानाः" ऋ० ५।३३।१० "ध्वन्यस्य तन्नामकस्य लक्ष्मण्यस्य लक्ष्मणपुत्रस्य" भा०

**ध्वन्स** गतौ सक० भ्रंशे नाशे अधःपतने च अक० भ्वा० आत्म० सेट्। ध्वंसते दध्वंसे—दध्वंसे। ऌदित् अध्वसत्। उदित् ध्वंसित्वा ध्वस्त्वा। ध्वस्तः। ध्वंसस्यातीतत्वाऽभावेऽपि तदुत्पत्त्यनुकूलव्यापारस्य कारणविशेषसंयोगस्य अतीतत्वात् तथा व्यवहारः। वैयाकरणमते सर्वत्र "फलव्यापारयोर्धातुः" इत्युक्तेः फलव्यापारयोर्धात्वर्थत्वात् तयोश्च सामानाधिकरण्ये धातोरकर्मकत्वम् नाशस्य प्रतियोगितया कारणसमवधानस्य एकत्र घटादौ सत्त्वादकर्मकत्वम् "फलव्यापारयोरेकनिष्ठतायामकर्मकः" इति एतन्मते "आश्रये तु तिङः स्मृताः" इत्युक्तेः आश्रयरूपार्थस्य कर्त्तृत्वं तच्च निरुक्तव्यापाराश्रयत्वेन घटादावव्याहतमेव तिङर्थवर्त्तमानत्वादेः कारणसमवधानरूपव्यापारेऽन्वयसम्भवाच्च काचिदनुपपत्तिः। नैयायिकमते नाशमात्रस्यैव धात्वर्थत्वेऽपि तदुत्पत्तौ लक्षणा उत्पत्तिश्च आद्यक्षणसम्बन्धस्तस्य चातीतत्वादिनैव ध्वस्तः ध्वंसते इत्यादि प्रयोगः। अस्य कर्त्तृत्वं प्रतियोगित्वं तच्च नाशान्वयि तथा च वर्त्तमानाद्युत्पत्तिकनाशप्रतियोगी घटादिरिति बोधः। व्युत्पत्तिवैचित्र्याच्च उत्पत्तेर्नाश एवान्वयः न प्रतियोगिनि इति बोध्यम्। सां

ध्वसादिवत्कार्यवादे नाशः तिरोहितावस्थेति भेदः। "तदप्यध्वसदाशाद्य माहेन्द्रं खड्गयोरितम्" प्राणाद्ध्वंसिरे गात्रं तस्तम्भे च प्रिये हृते" भट्टिः। आर्षे कचित् प० "भूतो देवानामस्नोदुग्ररूपो ध्वंसेत्युच्चैस्त्रिःप्लुतेन स्वरेण" भा०आ० ७६अ०। मालिन्यादिभावे च "कृशा विवर्णा मलिना पांशुध्वस्तशिरोरुहा" भा० व० ६४अ० "रविजेन बुधे ध्वस्ते" वृ०सं० १७अ०

**ध्वसन्** त्रि० अन्तर्भूतण्यर्थे ध्वन्स–कनिन्। ध्वंसकारके। "तेन हैतेन ध्वसा द्वैतवनईजे" शत०ब्रा० १३।५।४।६ "ध्वसा पापध्वंसनः" भा०

**ध्वसन** न० ध्वंसतेऽत्र ध्वन्स वा० आधारे क्यु। ध्वंसनस्थाने "मायुं ध्वसनावधिश्रिताः" ऋ० १।१६४।२९

**ध्वसन्ति** पु० ध्वन्स–झिच् किच्च। ऋग्वेदप्रसिद्धे ऋषिभेदे "याभिर्ध्वसन्तिं पुरुषन्तिमावतम्" ऋ०१।११२।१६ "ध्वसन्तिमेतत्संज्ञं पुरुषन्तिमेतन्नामानं च ऋषिमावतम्" भा०

**ध्वसिर** त्रि० ध्वन्स–किरच्। नाशप्रतियोगिनि "संभृत्या अन्ता ध्वसिरा अदृश्रत" ऋ०७।८३।२ "ध्वसिराः सैनिकैर्ध्वस्ताः" भा०।

**ध्वस्त** त्रि० ध्वन्स–कर्त्तरि क्त। १नाशप्रतियोगिनि अधः-२पतिते ३च्युते गलिते च अमरः। "येन ध्वस्तमनोभुवा" सा०द०। ध्वन्सधातौ उदा०।

**ध्वस्ति** स्त्री ध्वन्स–भावे क्तिन्। ध्वंसे नाशे। कर्माणि ध्वंसन्तेऽत्र आधारे क्तिन्। कर्मक्षयाधारे विद्याभेदे। "कर्मणां शुभदुष्टानां जायते फलसंक्षयः। ध्वंसोऽपकषायत्वं यत्र सा ध्वस्तिरुच्यते" मार्कण्डेयपु०

**ध्वस्मन्** त्रि०अन्तर्भूतण्यर्थे ध्वन्स–वा०मनिन् किच्च। ध्वंसके "न ध्वस्मानस्तन्वी रेप आधुः" ऋ०४।६।६ "ध्वस्मानो ध्वंसकाः" भा० भावे मनिन् कित्। २ध्वंसे ध्वस्मन्वत्।

**ध्वस्मन्वत्** त्रि० ध्वस्मा ध्वंसोऽस्त्यस्य मतुप्। १ध्वंसवति "स त्वा ध्वस्मन्वदभ्येतु" ऋ०७।४।६। २उदके निघ०।

**ध्वस्र** त्रि० ध्वन्स–रक्। १नष्टे अन्तर्भूतण्यर्थे ध्वन्स–रक्। ध्वंसके "कस्य ध्वस्रा भवथः कस्य वा नरा:" ऋ०१०।४०। २। "ध्वस्रा ध्वंसकौ भवथः" भा० स्त्रीस्थाने आच्। "ध्वस्रा अपिबन् युवतीर्ऋतज्ञाः" ऋ०४।१९।७ "ध्वस्राः कूलध्वंसिका युवतीः" भा०। ३राजभेदे पु० "ध्वस्रयोः पुरुषन्त्यो वा सहस्राणि" ऋ० ९।५८।३ "ध्वस्रः कश्चिद्राजा पुरुषन्तिश्च कश्चित्, तयोः। अत्र तरेतयोगविवक्षया द्विवचनम्" भा०।

**ध्वान** पु० ध्वन–भावे घञ्। १शब्दे अमरः। "ध्वानेन चोपांशु वा पत्नीः संयाजयन्ति" आपस्तम्बसू०। पत्नीसंयाजप्रकारश्च कात्या० श्रौ० २।७।१ कण्डिकादौ दृश्यः।

**ध्वानायन** पुंस्त्री ध्वनस्यर्षेर्गोत्रापत्यम् अश्वा० फञ्। ध्वनर्षिगोत्रापत्ये स्त्रियां ङीप्।

**ध्वान्त** न० ध्वन–क्त। क्षुब्धस्वान्तेत्यादिना पा०अन्धकारे नि०। १तमसि अमरः। अन्यत्र ध्वनित इत्येव शब्दयुक्ते। ध्वान्तमस्त्यस्य अच्। २तमःप्रधाने नरकभेदे च शब्दार्थचि० ३मरुद्भेदे पुनिशब्दे यजु०वाक्यं दृश्यम् "ध्वान्तारिं सर्वपापघ्नं प्रणतोऽस्मि दिवाकरम्" सूर्यनतिः।

**ध्वान्तवित्त** पु० ध्वान्ते वित्तः प्रथितः। खद्योते शब्दरत्ना०

**ध्वान्तशात्रव** पु०ध्वान्तस्यान्धकारस्य शात्रवः। १सूर्ये शब्दार्थ० २अग्नौ ३चन्द्रे च शब्दार्थचि०। तद्रूपवर्णे ४श्वेतवर्णे पु० शब्दच०। ध्वान्ताराातिप्रभृतयोऽपि सूर्यादौ। "ध्वान्तारिं सर्वपापघ्नम्" सूर्यनतिः। [हारा०।

**ध्वान्तोन्मेष** पु० ध्वान्ते उन्मिषति उद्–मिष अच्। खद्योते

**ध्वृ** कौटिल्ये भ्वा०पर०सक०अनिट्। ध्वरति अध्वार्षीत् दध्वार दध्वर्थ। "ध्वृषीष्ठा युधि मायाभिः" भट्टिः "कुटिलीकरणे सक० 'भ्रातृव्यमेवैतया ध्वरति' तैत्ति०स०२।५।८।६

**ध्वृण** शब्दे घृणवत् सर्वम्।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्य सङ्कलिते वाचस्पत्ये धकारादिशब्दार्थसङ्कलनम्।

---

## न

नकारः व्यञ्जनवर्णभेदः तवर्गीयपञ्चमवर्णः अस्योच्चारणस्थानं दन्तमूलं नासिका च । "दन्त्यास्तुलसाः स्मृताः" "अमोऽनुनासिका नह्रौ" इति च शिक्षोक्तेः । तस्योच्चारणे आभ्यन्तरप्रयत्नः जिह्वाग्रेण दन्तमूलस्य सम्यक्स्पर्शः । अत एव व्यञ्जनानां स्पर्शवर्णत्वव्यवहारः । बाह्यप्रयत्नास्तु संवारनादघोषा अल्पप्राणश्च "खयां यमाः खयः+क ̮पौ विसर्गः शर एव च । एते श्वासानुप्रदाना अघोषाश्च विवृण्वते । कण्ठम्, अन्ये तु घोषाः स्युः संवारा नादभागिनः । अयुग्मा वर्गयमगा यणश्चाल्पासवः स्मृताः" शिक्षा अस्य वाचकशब्दा वर्णाभिधानतन्त्रे उक्ता यथा "नो गर्जिनी क्षमा सौरिर्वारुणी विश्वपावनी । मेषश्च सविता नेत्रं दन्तुरो नारदोऽञ्जनः । ऊर्द्ध्वगामी द्विरण्डश्च वामपादाङ्गुलेर्नखः । वैनतेयः स्तुतिर्वर्त्मभवाऽनवा निरामयः । वामनो ज्वालिनी दीर्घो निरीहः सुगतिर्वियत् । शब्दात्मा दीर्घघोणा च हस्तिनापुरमेचकौ । गिरिनायकनीलौ च शिवोऽनादिर्महामतिः" ।

अस्य ध्यानं यथा "ध्यानमस्य नकारस्य वक्ष्यते शृणु भाविनि ! । दलिताञ्जनवर्णाभां ललज्जिह्वां सुलोचनाम् । चतुर्भुजां कोटराक्षीं चारुचन्दनचर्चिताम् । कृष्णाम्बरपरीधानामीषद्धास्यमुखीं सदा । एवं ध्यात्वा नकारन्तु तन्मन्त्रं दशधा जपेत्" तत्स्वरूपं यथा "नकारं शृणु चार्वङ्गि ! कोटिविद्युल्लताकृतिम् । पञ्चदेवमयं वर्णं स्वयं परमकुण्डली । पञ्चप्राणात्मकं वर्णं हृदि भावय पार्वति !" कामधेनुतन्त्रम् । मातृकावर्णन्यासे अस्य वामपादाङ्गुलिनखे न्यास्यता । काव्यादौ प्रथमप्रयोगे फलं यथा "दोषः सौख्यं सुदं नः" वृ०र० टीकोक्तम् ।

धातुपाठे ये णादितया पठितास्ते प्रयोगकाले नादिपूर्वका भवन्ति, सति निमित्ते पुनर्णत्वमापद्यन्ते । ये च नादितया पठितास्ते न णत्वमापद्यन्ते इति विवेकः ।

**न** अव्य०नह–बन्धने नश नाशे–वा ड । १निषेधे २उपमायां च मेदि० ३नञर्थे च । अस्य समासे नलोपः नुडागमश्च न भवति । "संग्रामे नातिकोविदम्" भा० वि०४अ० । नञा समासे तु अनतिकोविदमिति स्यात् । एकयोनाविंशतिरित्यादिवाक्ये एकान्नविंशतिः एकाद्नविंशतिरित्यादि । नासत्यौ नाकइत्यादौ च नञ्शब्दसमासेऽपि प्रकृतिवद्भावविधानात् न नलोपादि । नैकधानाराचनान्तरीयकादयस्तु नशब्देन "सह सुपेति" पा० समासात् सिद्धा सि०कौ० । गणरत्ने अयं चादिषु पठितः । "किंस्वित् प्रत्युत यच्च कच्चन न कं स्मा समंसाकमः" इति तट्टीकायां "नेति निषेधोपमानयोरित्युक्त्वा उदाहृतम् "नैकः सुप्तेषु जागृयात्" । "तिष्ठ देवो न सविता" इति न सविता सवितेवेत्यर्थः" इति । ४नकारस्वरूपवर्णे पु० । "दोषः सौख्यं सुदं" न इति वृ०र०टीका "नो गर्जिनी क्षमा" इत्यादिवर्णाभिधानम् । नञर्थश्च नञ्शब्दे वक्ष्यते । भावे बा० ड । ५बन्धे पु० । नम–कर्त्तरि कर्म्मणि वा ड । ६सुगते ७हिरण्ये च पु० दन्तुरे त्रि० मेदि० । ८रत्ने पु० । एकाक्षरकोषः ।

**नंशुक** त्रि० "पचिनश्योर्णुकन् कनुमौ च" उणा० णुकन् नुमागमश्च । अणौ उज्ज्वलद० । यावत्पर्यन्तं गत्वाभावो विनश्यति तावत्परिमाणे ।

**नंष्टृ** त्रि०नश–तृच् नुम् च । नाशप्रतियोगिनि पक्षे नष्टृ तत्रार्थे स्त्रियां ङीप् ।

**नःक्षुद्र** त्रि० नसा क्षुद्रः । क्षुद्रनासिके हेम० ।

**नक्** अव्य० नश–क्विप् बा० कुत्वम् । रात्रौ "अपस्वसुरुषसो नग्जिहीते" ऋ०७।७१।१। स्वरादिगणे ज्योक् योक् नक् कमिति क्वचित् पाठो दृश्यते । सि०कौ० गणरत्ने च योक् नक् च न दृश्यते ।

**नकिञ्चन** त्रि० नास्ति किञ्चन यस्य नञर्थस्य नशब्दस्य "सह सुपेति" पा० समासः । अकिञ्चने दरिद्रे "सर्वकामरसैर्हीनाः स्थानभ्रष्टा नकिञ्चनाः" भा०उ०१३२अ० । नञा बहु० समासे नञो नलोपे अकिञ्चन इत्येव । "स्थाने भवानेकनराधिपः सन्नकिञ्चनत्वं मखजं व्यनक्ति" रघुः । "अकिञ्चने किञ्चन नायिकाङ्के किमारकूटाभरणेन न श्रियः" नैष० ।

**नकिम्** अव्य० न किम् च चादिपाठात् अव्ययत्वं नशब्देन समासः । वर्जनार्थे मनोरमा । एवं दुर्गो० नकिम् नकिर् नकीम् एतेऽपि वर्जने मनोरमा

**नकुच** पु० न कुचति कुच–सङ्कोचे नशब्देन समासः । (मान्दार) वृक्षवृक्षे अमरः । [शब्दमा० ।

**नकुट** न० न कुटति कुट–क नशब्देन समासः । नासिकायां

**नकुल** पुंस्त्री नास्ति कुलमस्य "नभ्राड्नपान्नवेदानासत्यनमुचिनकुलनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या" पा० नञो न नलोपादि । (बेजी) ख्याते १जन्तुभेदे स्त्रियां

ङीष्। "नकुली पिच्छिला वातनाशी श्लेष्मकफपित्तजित्" राजनि॰ तन्मांसगुणा उक्ताः। २पाण्डोः क्षेत्रे माद्र्यामश्विनीकुमाराभ्यां जाते पुत्रभेदे "ततो माद्री विचार्य्यैवं जगाम मनसाऽश्विनौ। तावागम्य सुतौ तस्यां जनयामासतुर्यमौ। नकुलं सहदेवञ्च रूपेणाप्रतिमौ भुवि" "पूर्वजं नकुलेत्येवं सहदेवेति चापरम्। माद्रीपुत्रावकथयंस्ते विप्राः प्रीतमानसाः" भा॰ आ॰ १२४अ॰। ३पुत्रे पु॰शब्दमाला। ४शिवे च "युधिष्ठिरस्य या कन्या नकुलेन विवाहिता" विद्वन्मो॰। ५कुलरहित-मात्रे त्रि॰ गौरा॰ ङीष् नकुली ६कुक्कुट्यां ७जटामांस्यां स्त्री मेदि॰। ८शङ्खिन्यां स्त्री ९कुहूवे हेमच॰ जातौ ङीष्। १०नकुलजातिस्त्रियाञ्च।

**नकुलाढ्या** स्त्री न कुलाढ्या। गन्धनाकुल्यां राजनि॰।

**नकुलान्धता** स्त्री नकुलस्येवान्धता। सुश्रुतोक्ते नेत्रवि-कारकपरोगभेदे "यो सुखजाक्षो नकुलान्धता च गम्भीरसंज्ञा च तथैव दृष्टिः" इत्युद्दिश्य "विद्योतते या तु नरस्य दृष्टिर्दोषाभिपन्ना नकुलस्य यद्वत्। चित्राणि रूपाणि दिवा स पश्येत् स वै विकारो नकुलान्ध्यसंज्ञः" इति लक्षिता नकुलान्ध्यमप्यत्र।

**नकुलीश** पु॰ कालीपीठस्थे भैरवभेदे "नकुलीशः कालिपीठे दक्षपादाङ्गुली मता" पीठमाला २हकारे वर्णाभिधानम्। "नकुलीशोऽग्निमारूढो वामनेत्रार्द्धचन्द्रभृत्" तन्त्रसारे (ह्रौं) वीजोद्धारः। नकुलेश्वरादयोऽप्यत्र। [त्रि॰।

**नकुलेष्टा** स्त्री ६त॰। १रास्नायां अमरः। २नकुलस्य प्रिये

**नक्क** नाशने चुरा॰उभ॰सक॰ सेट्। नक्कयति ते अननक्कत् त। षोपदेशत्वाभावात् प्रनक्कति इत्यादौ न णत्वम्।

**नक्त** न॰ नज-क्त। रात्रौ "रुशद्दृशे ददृशे नक्तया चित्" ऋ॰४।११।१ "नक्तया चिद् रात्रावपि" भा॰सप्तमीस्थाने याच्। तत् अङ्गत्वेनास्त्यस्य अच्। २व्रतभेदे तद्-व्रतकालादि कालमाधवीये निर्णीतं यथा "अथ नक्तं निर्णीयते। तत्र वाराहपुराणे धान्यव्रते पठ्यते "मार्गशीर्षे सिते पक्षे प्रतिपद्या तिथिर्भवेत्। तस्यां नक्तं प्रकुर्वीत रात्रौ विष्णुं प्रपूजयेदिति"। अत्र नक्तशब्दो भोजनपरः कालपरत्वे प्रकुर्वीतेत्यस्या-नन्वयात्। न हि कालः केनचित्कर्त्तुं शक्यते। तस्य भोजनस्य रात्राविति कालविधिः। अतो दिवाभोजन-रहितत्वे सति रात्रिभोजनं व्रतस्य स्वरूपम्। अन्यथा स्वतःप्राप्तस्य रात्रिभोजनस्य विधानवैयर्थ्यात्। तस्य च नक्तभोजनस्य विष्णुपूजनमङ्गम् तत्सन्निधौ पठित-त्वात्। तथा होमोऽपि तदङ्गम् "होमं च तत्र कुर्वीत" इत्यभिधानात्। एवं च सति प्रधानाविरोधेन पूजा होमयोरङ्गयोर्दिवानुष्ठानमुक्तं भवति। प्रधानस्य च नक्तस्य कालद्वयं भविष्यत्पुराणे दर्शितम् "मुहूर्त्तोनं दिनं नक्तं प्रवदन्ति मनीषिणः। नक्षत्रदर्शनान्नक्तमहं मन्ये गणाधिप!" इति। अस्य च कालद्वयस्याधिकारिभेदेन व्यवस्थामाह देवलः "नक्षत्रदर्शनान्नक्तं गृहस्थस्य बुधैः स्मृतम्। यतेर्दिनाष्टमे भागे तस्य रात्रौ निषिध्यते" इति। स्मृत्यन्तरेऽपि "नक्तं निशायां कुर्वीत गृहस्थो विधिसंयुतः। यतिश्च विधवा चैव कुर्यात्तु सदिवा-करम्। सदिवाकरं तु तत्प्रोक्तमन्तिमे घटिकाद्वये। निशानक्तं तु विज्ञेयं यामार्द्धे प्रथमे सदेति" रात्रि-नक्तभोजने व्यासः "त्रिमुहूर्त्तः प्रदोषः स्याद्भानावस्तं गते सति। नक्तं तु तत्र कर्त्तव्यमिति शास्त्रविनिश्चयः" इति तदेवं नक्तव्रतकालौ व्यवस्थितौ। तत्र नक्तं प्रदोषव्या-पिन्यां तिथौ कार्य्यम् तदाह वत्सः "प्रदोषव्यापिनी ग्राह्या तिथिर्नक्तव्रते सदा। एकादशीं विना सर्वा शुक्ले कृष्णे तथा स्मृता" इति। एकादश्यां तु यन्नक्तं तत्रो-दयव्यापिनी तिथिर्ग्राह्या तदुक्तं स्कन्दपुराणे "प्रदोष-व्यापिनी ग्राह्या सदा नक्तव्रते तिथिः। उदयस्था सदा पूज्या हरिनक्तव्रते तिथिः" इति। अत्राप्येकभक्त-न्यायेन षोढ़ाविधभेदा उत्प्रेक्षणीयाः। मध्याह्नप्रदोष-योरेव भिन्नत्वात्। पूर्वेद्युरेव प्रदोषव्याप्तौ पूर्वतिथि-र्ग्राह्या। परेद्युरेव प्रदोषव्याप्तौ परतिथिः। उभयत्र प्रदोषव्याप्तौ परतिथिरेव तदाह जावालिः "सदैव तिथ्योरुभयोः प्रदोषव्यापिनी तिथिः। तत्रोत्तरत्र नक्तं स्यादुभयत्रापि सा यतः" इति। उभयत्रापि दिवा-रात्रौ च सा तिथिर्विद्यते यत इत्यर्थः। उभयत्र प्रदोष-व्याप्त्यभावेऽपि परैव तदाह जावालिः "अतथात्वे-परत्र स्यादस्तादर्वाक् यतो हि सेति"। प्रदोषे तदभावे-ऽप्यस्तमयादर्वाग्यतः सा विद्यते ततः सा ग्राह्येत्यर्थः। अस्य च दिवारात्रव्रतत्वेन प्रदोषव्याप्तिवत्सायङ्काल-व्याप्तिरपि निर्णयहेतुर्भवतीत्यनेनाभिप्रायेणार्वागस्तमया-दित्युक्तम्। दिवारात्रिव्रतत्वं च कूर्मपुराणेऽभिहितम् "प्रदोषव्यापिनी यत्र त्रिमुहूर्त्ता यदा दिवा। तदा नक्तव्रतं कुर्य्यात् स्वाध्यायस्य निषेधवत्" इति। यद्य-प्यत्र प्रदोषकालसायङ्कालौ द्वावेव प्रयोजकौ प्रतिभासेते

तथापि प्रदोषव्याप्तिर्मुख्यः कल्पः । सायङ्कालव्याप्तिरनुकल्प इति जाबालिवचनादवगम्यते । तत्र ह्यतथात्व इति प्रदोषव्याप्त्यभावमनूद्य तादृक्षास्तिथेर्ग्राह्यत्वे चार्वागस्तादुयत इति हेतूपन्यासात् । ईदृशे विषये गृहस्थोऽपि यतिवद्दिवा नक्तमाचरेत् तदुक्तं स्कन्दपुराणे "प्रदोषव्यापिनी न स्याद्दिवा नक्तं विधीयते । आत्मनो द्विगुणच्छायामतिक्रामति भास्करे । तन्नक्तं नक्तमित्याहुर्न नक्तं निशि भोजनम् । एवं ज्ञात्वा ततो विद्वान् सायाह्ने तु भुजिक्रियाम् । कुर्य्यान्नक्तव्रती नक्तफलं भवति निश्चितमिति" । यत्तु सप्तमीभानुवासरादौ सौरनक्तं विहितं तत्र पूर्वोक्तविपर्य्यासेन सायङ्कालव्याप्तिर्मुख्यः कल्पः । प्रदोषव्याप्तिरनुकल्पः । एतदेवाभिप्रेत्य सुमन्तुः "त्रिमुहूर्त्तस्पृगेवाह्नि निशि वै तावती तिथिः । तस्यां सौरं भवेन्नक्तमहन्येव तु भोजनमिति" अत्र सायंव्याप्तेर्मुख्यकालत्वात् प्रथमतो निर्द्देशः । प्रदोषव्याप्तेरनुकल्पत्वात् पश्चान्निर्द्देशः । इतरनक्तेषु तु प्रदोषव्याप्तेरनुकल्पत्वादुदाहृतकूर्म्मपुराणवचने सैव प्रथमं निर्द्दिष्टा सायंकालव्याप्तिः पश्चान्निर्द्दिष्टेति विवेकः । तेष्वितरनक्तेषु प्रदोषव्यापितिथिग्रहणेऽपि भानुवासरसंक्रान्त्यादिना गृहस्थस्यापि यदा रात्रिभोजननिषेधः तदा दिवैव नक्तं कुर्य्यात् तथा च भविष्योत्तरपुराणे "ये त्वादित्यदिने सक्तनक्तं कुर्वन्ति मानवाः । दिनान्ते तेऽपि भुञ्जीरन् निषेधाद्रात्रिभोजने" इति । तस्मिंश्च दिवाभोजने उत्तमोऽन्तिमो मुहूर्त्तो, मध्यम उपान्त्यः, ततः प्राचीनो जघन्यः । एवं च सत्यन्तिमभागत्रिमुहूर्त्तवचनान्युपपद्यन्ते रात्रिभोजनेऽपि घटिकात्रयमुत्तमः कालः । घटिकाषट्कं मध्यमः कालः एतदेवाभिप्रेत्य वचनं स्मर्य्यते "प्रदोषोऽस्तमयादूर्द्ध्वं घटिकात्रयमिष्यत" इति । "त्रिमुहूर्त्तः प्रदोषः स्याद्रवावस्तं गते सतीति" । निशीथपर्य्यन्तो जघन्यः कालः । "नक्तं प्रकुर्वीत रात्राविति" सामान्येनाभिधानात् । असौरनक्तेषु साम्येन वैषम्येण वा दिनद्वये प्रदोषैकदेशव्याप्तौ परेद्युरेव नक्तं कार्य्यम् सायंकालस्य गौणस्य तत्तिथिव्याप्तत्वात् । अत्राप्येकभक्तवदन्याङ्ग नक्तोपवासस्थानीयनक्तयोर्निर्णयो द्रष्टव्यः । यथोक्तलक्षणलक्षितयोरेकभक्तनक्तयोरेकस्मिन् दिने यदा प्रसक्तिस्तदा कथं कर्त्तव्यम् । न चैतादृशी प्रसक्तिरेव नास्तीति शङ्कनीयम् । भविष्योत्तरपुराणोक्ते रथसप्तमीव्रते कदाचित्तत्प्रसक्तेः । तथाहि तत्र तृतीयादिषु सप्तम्यन्तेषु पञ्चसु दिनेषु क्रमेणैकभक्तनक्तायाचितोपवासपारणानि विहितानि । तत्र यदा तृतीया यामत्रयपरिमिता तत ऊर्द्ध्वं चतुर्थी तदा मध्याह्नव्यापित्वात् तृतीयैकभक्तं तत्र प्राप्तं प्रदोषव्यापित्वाच्चतुर्थीनक्तमपि तत्रैव तथा सति परस्परविरोधो दुःपरिहरः । अत्रोच्यते । एकभक्तस्य प्राथम्यात् प्रबलत्वेन तस्मिन्मुख्यकल्प एवानुष्ठेये तद्विरोधिनि तु नक्तेऽनुकल्पः । स च द्विविधः दिनान्तरानुष्ठानात् कर्त्रन्तरानुष्ठानाच्च । यदा चतुर्थी परेद्युर्वा सायंकालं व्याप्नोति तदा तस्य गौणकालव्यापित्वादेक एव कर्त्ता दिनभेदेन व्रतद्वयमनुतिष्ठेत् । यदा चतुर्थी समा क्षीणा च । तदा गौणकालव्याप्त्यसम्भवेन पूर्वेद्युरेव भार्य्यापुत्रादिना कर्त्रन्तरेण तन्नक्तं करणीयम् ।" "अहःसु तिथयः पुण्याः कर्म्मानुष्ठानतो दिवा । नक्तादिव्रतयोगे तु रात्रियोगो विशिष्यते" ति॰त॰ सामान्योक्तिः उक्तविषयपरिहारेण प्रवर्त्तनीया । अस्य प्रशंसा देवीपु॰ यथा

"उपवासात् परं भैक्ष्यं भिक्षापरमयाचितम् । अयाचितात् परं नक्तं तस्मान्नक्तेन वर्त्तयेत् । देवैस्तु भुक्तं पूर्व्वाह्णे मध्याह्ने ऋषिभिस्तथा । पराह्णे पितृभिर्भुक्तं सन्ध्यायां गुह्यकादिभिः । सर्व्ववेलामतिक्रम्य नक्तं भुक्तमभोजनम् । वामाचारे महादेव ! नक्तं नैवोद्धरेच्चरम्" ३विभुनृपस्य ३पुत्रभेदे "विभोरत्याञ्च पृथुषेणः तस्य नक्त आकूत्यां जज्ञे नक्ताद्द्युतिपुत्रो गयो राजर्षिप्रवरः" भाग॰ ५।१५। ४लज्जिते त्रि॰ । [टीकायां भरतः

**नक्तक** पु॰ नक्त इव कायति कै—क । (नेकड़ा) कर्पटे अमर-

**नक्तचारिन्** पु॰ नक्तं रात्रौ चरति चर—णिनि ७त॰ । १विड़ाले २पेचके त्रिका॰ रात्रिचारिमात्रे त्रि॰ । नक्तञ्चरादयोऽप्यत्र "जयेन्नक्तचरान् सर्व्वान् सपुरोहितधूर्त्तः" भा॰आ॰ १०अ॰ ।

**नक्तञ्चर** पुंस्त्री नक्तं रात्रौ चरति चर—ट ७त॰ । १राक्षसे हला॰ स्त्रियां ङीप् । २गुग्गुलौ जटा॰ । ३चौरे ४पेचके शब्दार्थचि॰ । ५रात्रिचरमात्रे त्रि॰

**नक्तञ्चर्य्या** स्त्री नक्तं चर्य्या चरणम् । रात्रौ चरणादौ "नक्तञ्चर्य्यां दिवास्वप्नमालस्यं पैशुनं मदम् । अतियोगमयोगञ्च श्रेयसोऽर्थी परित्यजेत्" भा॰आ॰२८६अ॰ ।

**नक्तञ्चारिन्** त्रि॰ नक्तं चरति चर—णिनि । रात्रिचारिमात्रे "दिवाचरेभ्यो भूतेभ्यो नक्तञ्चारिभ्य एव च" मनुः ।

**नक्तञ्जात** त्रि॰नक्तं रात्रौ जातः। १रात्रिजाते २ओषधिभेदे स्त्री “नक्तञ्जातया ओषधे! रामे कृष्णे असिक्नि च” अथ॰ १।२३।४। नक्तप्रभवादयोऽप्यत्र

**नक्तन्** न॰ नज—वा॰ तनिन्। रात्रौ “वयो ये भूत्वी पतयन्ति नक्तभिः” ऋ॰७।१०४।१८ “नक्तभिः रात्रिभिः” भा॰

**नक्तन्तन** त्रि॰ नक्तम् रात्रौ भवः ट्युल् तुट् च। रात्रिभवे “इदं नक्तन्तनं दाम पौष्पमेतद्दिवातनम्” भट्टिः। स्त्रियां ङीप्।

**नक्तन्दिव** न॰ नक्तं रात्रौ च दिवा दिने च सप्तम्यर्थवृत्त्योः द्वन्द्वः अचतुरेत्यादिना नि॰ अच्। रात्रौ दिने चेत्यर्थे। “विभज्य नक्तन्दिवमस्ततन्द्रिणा” किरा॰

**नक्तभोजिन्** त्रि॰ नक्तं रात्रौ भुङ्क्ते भुज—णिनि। व्रतार्थं दिवाऽभोजनेन रात्रिभोजिनि दिवाभोजनाभावविशिष्टरात्रिभोजनकर्त्तरि “हविष्यभोजनं स्नानं सत्यमाहारलाघवम्। अग्निकार्यमधः शय्यां नक्तभोजी षडाचरेत्” भविष्यपु॰।

**नक्तम्** अव्य॰नज—व्रीडे वा॰ तम। रात्रौ अमरः। “तुषारमूर्त्तेरिव नक्तमंशवः” माघः। “महौषधीर्नक्तमिवात्मभासः” कुमा॰।

**नक्तमाल** पु॰ नक्तम् रात्रौ आ अलति अल—अच्। करञ्जवृक्षे अमरः। “मरुद्भिरानर्त्तितनक्तमाले” रघुः।

**नक्तमुखा** स्त्री नक्तं नक्तव्रताङ्गं मुखमाद्यभागोऽस्याः। रात्रौ हला॰ यथा रात्रिप्रथमभागस्य नक्तव्रताङ्गं तथा नक्तशब्दे उक्तं दृश्यम्।

**नक्तव्रत** न॰ “नक्तं निशायां कुर्वीत गृहस्थो विधिसंयुतः। निशि व्रतं तु विज्ञेयं यामार्द्धे प्रथमे सदा” इत्युक्तलक्षणे दिवाभोजनाभावविशिष्टे रात्रौ प्रथमयामार्द्धे भोजनरूपे व्रते नक्तशब्दे दृश्यम्। [कलिकाख्यां राजनि॰।

**नक्ता** स्त्री नज—व्रीडे क्त वा॰ तस्य नः। (रैयकाकुली)

**नक्तान्ध्य** न॰नक्तं आन्ध्यम्। भावप्र॰उक्ते रात्रौ दृष्टिराहित्यापादके नेत्ररोगभेदे “स एव श्लेष्मा दृष्टौ पटलत्रयगतो नक्तान्ध्यं करोतीत्याह त्रिषु स्थितोऽयः पटलेषु दोषो नक्तान्ध्यमापादयति प्रसह्य। दिवा स सूर्यानुगृहीतदृष्टिः पश्येत्तु रूपाणि कफाल्पभावात्”। दोषोऽत्र कफजः कफस्योपक्रान्तत्वात्। नक्तान्ध्यस्य श्लेष्मविदग्धदृष्टावन्तर्भावात् न पृथग् गणना। “रोम्णं हन्यादक्ष्णं नक्तान्ध्यकाचाक्षिरोगं तैमिरं चाञ्जनेन” सुश्रुतः। तद्युक्तमानवे नक्तान्ध इत्येव “आगस्त्यं नाविशीतेषां नक्तान्धानां प्रशस्यते” सुश्रुतः। नेत्ररोगशब्दे दृश्यम्।

**नक्र** पुंस्त्री न क्रामति दूरस्थलम् क्रम—ड नभ्राडित्यादिना नञःप्रकृतिभावः। १कुम्भीरे अमरः स्त्रियां जातित्वात् ङीष्। (कपाट) २द्वारशाखाधःस्थदारुणि ३नासिकायाञ्च न॰ मेदि॰। “ह्रदा प्रसन्ना इव गूढनक्राः” “आनायिभिस्तामपकृष्टनक्राम्” रघुः। “अण्डजाः पक्षिणः सर्पा नक्राः मत्स्याश्च कच्छपाः” मनुः नासिकायां स्त्री शब्दमाला। ४जलजन्तुभेदे मकरादौ च “तथा चेन्नाचरेयं नयेत नक्रकेतनः स्वयमेकेनाकीर्त्तनीयां दशां जनमेनम्” काद॰। “नक्रकेतनः मकरध्वजः” इत्यर्थः।

**नक्रराज** पु॰ ६त॰ टच् समा॰। जलजन्तुप्रधाने (हाङ्गर) ख्याते जलजन्तुभेदे हारा॰।

**नक्रहारक** पु॰ नक्रमपि हरति हृ—ण्वुल् ६त॰। (हाङ्गर) ख्याते जलजन्तुभेदे हारा॰।

**नक्ष** गतौ भ्वा॰ पर॰ सक॰ सेट् निघण्टुः। नक्षति अनक्षीत् ननक्ष। “नक्षद्दाभं ततुरिं पर्वतेष्ठा” ऋ॰ ६।२२। “नि त्वा नक्ष्य! विश्पते! द्युमन्तम्” ७।१५।७ “हे नक्ष्य उपगम्य नक्षतिर्गतिकर्मा” भा॰

**नक्षत्र** न॰नक्ष—अत्रन् न क्षीयते क्षरते वा—वा॰ नि॰नभ्राडित्यादि॰निपा॰ नञः प्रकृतिभावः। अश्विन्यादिषु सप्तविंशतितारासु नक्षत्राभिमानिदेवतासु अश्विन्यादयः दक्षसुताः चन्द्रकलत्राणि च तत्कथा कालिकापु॰२०अ॰ कालिकापु॰ शब्दे २०१४ पृ॰ दृश्यम्। तासु “अश्विनी भरणी चैव कृत्तिका रोहिणी तथा। मृगशीर्षं तथैवार्द्रा तथा चैव पुनर्वसुः। पुष्याऽश्लेषा मघा पूर्वफल्गुन्युत्तरफल्गुनी। हस्ताचित्रास्वातयश्च विशाखा अनुराधिका। ज्येष्ठा मूला तथा पूर्वोत्तराषाढे ततःपरम्। श्रवणा च धनिष्ठा च तथा शतभिषाह्वया। पूर्वोत्तरे भाद्रपदे रेवती च भसंज्ञकाः” ज्यो॰ उक्तानि अधिकृत्यशब्दे पृ॰ दृश्यम्। २मुक्तामयहारभेदे स च नक्षत्रसंख्यया सप्तविंशत्यारचितः। “नक्षत्रमालाभरणमिव मदनद्विपस्य” कादम्ब॰। नक्षत्रं च २१६००कलात्मकस्य राशिचक्रस्य अष्टशतकलात्मकम् “भभोगोऽष्टशतीलिप्ता” सू॰सि॰ उक्तेः युक्तञ्चैतत् २१६०० कलात्मकस्य तस्य २७ विंशत्या भागे ८०० शतान्येन कला लभ्यन्ते। तेषां योगतारास्वरूपादिकमश्लेषाशब्दे ४९७पृ॰ उक्तम् विक्षेपादयश्च खगोलशब्दे २४२४।२५ पृ॰ उक्ताः। तेषां प्रयोगे लिङ्गभेदश्च यथा “हस्तास्वातिश्रवणा

अक्लीबे मृगशिरा न पुंसि स्यात्। पुंसि पुनर्वसुपुष्यौ मूलन्त्वस्त्रियां शेषाः स्त्रियां बोध्याः” इदं प्रायिकम्।

**नक्षत्रकान्तिविस्तार** पु० नक्षत्रकान्तीनां विस्तारो यत्र। धवलयावनाले राजनि०।

**नक्षत्रगण** पु० नक्षत्रघटितो गणः समुदायभेदः। ६त०। उक्ते नक्षत्रविशेषाणां समूहात्मके गणभेदे। तत्र गणभेदस्य संज्ञाभेदाः कार्यविशेषोपयोगित्वं च वृ०सं०९८अ० उक्तं यथा “त्रीण्युत्तराणि तेभ्यः रोहिण्यश्च ध्रुवाणि१ तैः कुर्यात्। अभिषेकशान्तितरुनगरधर्मबीजध्रुवारम्भान्। मूलशिवशक्रभुजगाधिपानि तीक्ष्णानि२ तेषु सिद्ध्यन्ति। अभिघातमन्त्रवेतालबन्धवधभेदसम्बन्धाः। उग्राणि३ पूर्वभरणीपित्र्याण्युत्सादनाशघातेषु। योज्यानि बन्धविषदहनशस्त्रघातादिषु च सिद्ध्यै। लघु४ हस्ताश्विनपुष्याः पण्यरतिज्ञानभूषणकलासु। शिल्पौषधयानादिषु सिद्धिकराणि प्रदिष्टानि। मृदुवर्ग५स्त्वनुराधाचित्रापौष्णैन्दवानि मित्रार्थे। सुरतविधिवस्त्रभूषणमङ्गलगीतेषु च हितानि। हौतभुजं सविशाखं मृदुतीक्ष्णं६ तद्विमिश्रफलकारि”। ६त०। २ताराकृते च।

**नक्षत्रचक्र** न० नक्षत्राणां चक्रं यत्र। १राशिचक्रे २तन्त्रोक्ते दीक्षोपयोगिचक्रभेदे चक्रशब्दे २८०९पृ० दृश्यम्।

**नक्षत्रजात** न० नक्षत्रे तद्विशेषे जातं जन्म। वृ०सं० उक्ते नक्षत्रविशेषे जन्मनि। तत्सूचितफलं तत्रोक्तं यथा “प्रियभूषणः सुरूपः सुभगो दक्षोऽश्विनीषु मतिमांश्च। कृतनिश्चयसत्यारुग्दक्षः सुखितश्च भरणीषु। बहुभुक् परदाररतस्तेजस्वी कृत्तिकासु विख्यातः। रोहिण्यां सत्यशुचिः प्रियंवदः स्थिरमतिः सुरूपश्च। चपलश्चतुरो भीरुः पटुरुत्साही धनी मृगे भोगी। शठगर्वितचण्डकृतघ्नहिंस्रपापश्च रौद्रर्क्षे६। दान्तः सुखी सुशीलो दुर्मेधा रोगभाक् पिपासुश्च। अल्पेन च सन्तुष्टः पुनर्वसौ जायते मनुजः। शान्तात्मा सुभगः पण्डितो धनी धर्मसंश्रितः पुष्ये। शठसर्वभक्ष्यपापः कृतघ्नधूर्तश्च भौजङ्गे९। बहुभृत्यधनो भोगी सुरपितृभक्तो महोद्यमः पित्र्ये१०। प्रियवाग्दाता द्युतिमान् अटनो नृपसेवको भाग्ये११। सुभगो विद्याप्तधनो भोगी सुखभाग् द्वितीयफल्गुन्याम्। उत्साही धृष्टः पानपोऽघृणी तस्करो हस्ते। चित्राम्बरमाल्यधरः सुलोचनाङ्गश्च भवति चित्रायाम्। दान्तो वणिक् कृपालुः प्रियवाग् धर्माश्रितः स्वातौ। ईर्ष्युर्लुब्धो द्युतिमान् वचनपटुः कलहकृद्विशाखासु। आढ्यो विदेशवासी क्षुधालुरटनोऽनुराधासु। ज्येष्ठासु न बहुमित्रः सन्तुष्टो धर्मकृत् प्रचुरकोपः। मूले मानी धनवान् सुखी न हिंस्रः स्थिरो भोगी। इष्टानन्दकलत्रो वीरो दृढसौहृदश्च जलदैवे २०। वैश्वे २१ विनीतधार्मिको बहुमित्रकृतज्ञसुभगश्च। श्रीमाञ्छ्रवणे श्रुतवान् उदारदारो धनान्वितः ख्यातः। दाताढ्यः शूरगीतप्रियो धनिष्ठासु धनलुब्धः। स्फुटवाग्व्यसनी रिपुहा साहसिकः शतभिषासु दुर्ग्राह्यः। भद्रपदासूद्विग्नः स्त्रीजितधनपटुर्दाता च। वक्ता सुखी प्रजावान् जितशत्रुर्धार्मिको द्वितीयासु२६। सम्पूर्णाङ्गः सुभगः शूरः शुचिरर्थवान् पौष्णे २७”।

**नक्षत्रदर्श** त्रि० नक्षत्रं पश्यति दृश–अण् उप०स०। १नक्षत्रवीक्षके। नक्षत्रं तत्फलं दर्शयति सूचयति दृश–णिच्–अण्। २गणके ज्योतिर्विदि “प्रज्ञानाय नक्षत्रदर्शम्” यजु० ३०।१०पुरुषमेधे प्रज्ञानोद्देशकमेध्यपशुकथने

**नक्षत्रदान** न० नक्षत्रभेदे दानम्। नक्षत्रभेदे द्रव्यभेदस्य दाने तच्च हेमा० दा० उक्तं यथा भारते

“नारद उवाच कृत्तिकासु महाभाग! पायसेन ससर्पिषा। सन्तर्प्य ब्राह्मणान् साधून् लोकान् प्राप्नोत्यनुत्तमान्। रोहिण्यां पाण्डवश्रेष्ठ! माषैरन्नेन सर्पिषा। पयोनुपानाद्दातव्यमानृण्यार्थं द्विजातये। दोग्ध्रीं सवत्सान्तु नरो नक्षत्रे सोमदैवते ५। दत्त्वादित्यविमानस्थः स्वर्गं प्राप्नोत्यनुत्तमम्” सोमदैवतं नक्षत्रं, मृगशीर्षम्। “आर्द्रायां कृशरं दत्त्वा तिलमिश्रं समाहितः। नरस्तरति दुर्गाणि क्षुरधारांश्च पर्वतान्। पूपं पुनर्वसौ दत्त्वा घृतपूर्णं सुपाचितम्। यशस्वी रूपसम्पन्नो बह्वन्ने जायते कुले। पुष्ये तु काञ्चनं दत्त्वा कृतं चाकृतमेव च। अनालोकेषु लोकेषु सोमवत् स विराजते”। कृतं घटितम् अकृतमघटितम्। “अश्लेषासु तथा रौप्यं वृषभं यः प्रयच्छति। स सर्वभयनिर्मुक्तः शास्त्रवानभिजायते। मघासु तिलपूर्णानि वर्द्धमानानि मानवः। प्रदाय पशुमांश्चैव पुत्रवांश्च प्रजायते। फाल्गुनीपूर्वसमये ब्राह्मणानामुपोषितः। भक्ष्यान् फाणितसंयुक्तान् दत्त्वा सौभाग्यमृच्छति। घृतक्षीरसमायुक्तं विधिवत् षष्टिकौदनम्। उत्तराविषये दत्त्वा स्वर्गलोके महीयते। यद्यत् प्रदीयते दानमुत्तराविषये नरैः। महाफलमनन्तञ्च भवतीह विनिश्चयः”। फाल्गुनीपूर्वसमये, पूर्वफल्गुनीसमय इत्यर्थः। फाणितं गुड़विकारः उत्तरा-

विषये उत्तरफाल्गुनीसमय इत्यर्थः। “हस्ते हस्तिरथं दत्त्वा चतुर्युक्तमुपोषितः। नरस्तरति दुर्गाणि क्षुरधारांश्च पर्वतान्”। चतुर्युक्तं, चतुर्भिर्हस्तिभिर्युक्तम्। “चित्रायां वृषभं दत्त्वा पुण्याङ्काङ्कां च भारत!। चरत्यप्सरसां लोके रमते नन्दने वने”। पुण्याङ्काङ्कामिति शुभलक्षणलक्षितशरीरां धेनुमित्यर्थः। “स्वातीष्वथ धनं दत्त्वा यदिष्टतममात्मनः। प्राप्नोति लोकान् सुशुभानिह चैव महद्यशः। विशाखायामनड्वाहं धेनुं दत्त्वाथ दुग्धदाम्। सप्रासङ्गञ्च शकटं सधान्यं वस्त्रसंयुतम्”। प्रासङ्गो युगान्तरकाष्ठम्। “पितॄन् देवांश्च प्रीणाति प्रेत्य चानन्त्यमश्नुते। न च दुर्गाण्यवाप्नोति स्वर्गलोकं च गच्छति। दत्त्वा यथोक्तं विप्रेभ्यो वृत्तिमिष्टां स विन्दति। नारकीयांश्च स क्लेशान्नाप्नोतीति विनिश्चयः। अनुराधासु प्रावारवस्त्रोत्तरमुपोषितः। दत्त्वा युगशतं चापि नरः स्वर्गे महीयते”। प्रावारः प्रवारपटः, वस्त्रोत्तरं परिधानवस्त्रादिकम्। “कालशाकन्तु विप्रेभ्यो दत्त्वा मर्त्यः समूलकम्। ज्येष्ठायां ऋद्धिमृद्धिं चाप्य गतिमिष्टाञ्च गच्छति। मूले मूलफलं दत्त्वा ब्राह्मणेभ्यः समाहितः। स्वपितॄन् प्रीणयेदेव गतिमिष्टाञ्च गच्छति। अथ पूर्वास्वाषाढासु दधिपात्राण्युपोषितः। कुलवृत्तोपसम्पन्ने ब्राह्मणे वेदपारगे। प्रदाय जायते श्रेष्ठकुले बहुगुणाकुले। पुत्रपौत्रैः परिवृतः पशुमान् धनवांस्तथा। उदमन्थं ससर्पिष्कं प्रभूतमधुफाणितम्। दत्त्वोत्तरास्वाषाढासु सर्वलोकानवाप्नुयात्”। उदमन्थः उदकमिश्राः सक्तवः। फाणितं दुग्धखण्डविकारः। “दुग्धन्त्वभिजितो योगे दत्त्वा मधुघृतप्लुतम्। धर्मनिष्ठो मनीषिभ्यः स्वर्गलोके महीयते”। अयमर्थः। उत्तराषाढानक्षत्रचतुर्थपादः श्रवणस्याद्यघटिकाचतुष्टयमभिजिद्योगः। “श्रवणे कम्बलं दत्त्वा वस्त्रान्तरितमेव च। श्वेतेन याति यानेन स्वर्गलोकानसंवृतान्। गोप्रयुक्तं धनिष्ठासु यानं दत्त्वा समाहितः। वस्त्ररश्मिधरं दत्त्वा प्रेत्य राज्यं प्रपद्यते। गन्धं शतभिषायोगे दत्त्वा सागुरुचन्दनम्। प्राप्नोत्यप्सरसां लोकं प्रेत्य गन्धांश्च शाश्वतान्। पूर्वभाद्रपदायोगे राजमाषान् प्रदाय वै। सर्वभक्ष्यफलोपेतः स वै प्रेत्य सुखी भवेत्। औरभ्रमुत्तरायोगे यस्तु मांसं प्रयच्छति। पितॄन् प्रीणाति सकलान् प्रेत्यानन्त्यं समश्नुते”। उरभ्रो, मेषस्तस्य मांसमौरभ्रम्। “कांस्योपदोहनीं धेनुं रेवत्यां यः प्रयच्छति। स प्रेत्य कामानादाय दातारमुपतिष्ठति। रथमश्वसमायुक्तं दत्त्वाश्विन्यां नरोत्तमः। हस्त्यश्वरथसम्पन्ने वर्चस्वी जायते कुले। भरणीषु द्विजातिभ्यस्तिलधेनुं प्रदाय वै। गाः प्रभूताश्च प्राप्नोति नरः प्रेत्य यशस्तथा। भीष्म उवाच। इत्येष लक्षणोद्देशः प्रोक्तो नक्षत्रयोगतः। देवक्या नारदेनेह स्नुषाभ्यः साऽब्रवीदिदम्”। विष्णुधर्मोत्तरे “कृत्तिकासु सुवर्णस्य दानं बहुफलं स्मृतम्। रत्नवस्त्रस्य रोहिण्यां सौम्ये५ भे लवणस्य च। क्षीरस्य तथार्द्रायामादित्ये७ रजतस्य च। घृतस्य तु तथा पुष्ये गन्धानामथ सार्पभे ६। तिलानाञ्च तथा पैत्ये१० प्रियगोभगदैवते११। आर्यम्णे १२ चाज्यपूपानां साविले१३ पायसस्य तु। चित्रायां चित्रवस्त्राणां सक्तूनां वायुदैवते १५। ऐन्द्राग्न्ये१६ चैव लोहानां मैत्रे१७माल्यफलस्य च। छत्रस्य च तथा शाक्रे१८ मूले मूलफलस्य च। हेम्नश्च मधुयुक्तस्य दानमाप्ये२० महाफलम्। विश्वेश्वरे२२ ऽन्नपानस्य श्रवणे वसनस्य च। धान्यस्य वासवे२३ विप्रा वारुणे२४ चौषधस्य च। आजे२५ पुराणबीजानां सस्यानां तदनन्तरे २६। गोरसानां तथा पौष्णे२७ यानानामथ चाश्विने। तिलानाञ्च सदा दानं भरणीषु महाफलम्”।

**नक्षत्रनाथ** पु० ६त०। १चन्द्रे “नक्षत्रनाथः समुपाजगाम” हरिवं० २१७ अ० “नक्षत्रनाथांशुरिवारविन्दे” रघुः। तस्य नक्षत्राधिष्ठातृदेवतास्वश्विन्यादि नाथत्वात् तथात्वम्।

**नक्षत्रनेमि** पु० नक्षत्रस्य तच्चक्रस्य नेमिरिव। १ध्रुवतारके २चन्द्रे ३रेवत्यां च हेमच०। ४विष्णौ “नक्षत्रनेमिर्नक्षत्री क्षमः क्षामः समीहनः” विष्णुस०। “शिशुमारस्य ज्योतिश्चक्रस्य नेमिवत् प्रवर्त्तको हृदयस्थिता”विष्णुरिति कथितो नक्षत्रनेमिः शिशुमारवर्णने “विष्णुर्हृदयमिति श्रुतेः”भा०

**नक्षत्रपति** पु० नक्षत्रं पाति पा–डति। चन्द्रे शब्दार्थचि०। नक्षत्रपत्यादयोऽप्यत्र।

**नक्षत्रपथ** पु० नक्षत्रोपलक्षितः पन्थाः अच् समा०। नक्षत्रचक्रस्य भ्रमणमार्गे। नक्षत्रमार्गादयोऽप्यत्र “अतीतनक्षत्रपथानि यत्र” माघः। खगोलशब्दे दृश्यम्।

**नक्षत्रपदयोग** पु० “मेषगे भास्करे षष्ठे शीतगौ स्वोच्चगे यमे। नक्षत्रपदयोगोऽयं शत्रुमेघानिलोपमा” ज्यो०उक्ते राज्ञां युद्धयात्राङ्गयोगभेदे।

**नक्षत्रपुरुष** पु० नक्षत्रैरेवाङ्गविशेषैः पुरुष इव। नक्षत्रविशेषैरङ्गविशेषात्मकैः तन्नामव्रताङ्गे पुरुषे अस्य व्रताङ्गता व्रतनिमित्तकालश्च वृ०सं०१०५अ० उक्तो यथा

"पादौ मूलं, जङ्घे च रोहिणी तथाश्विन्यः। अष्ट-
षाषाढाद्वयमथ गुह्यं फाल्गुनीयुग्मम्। कटिरपि च
कृत्तिकाः,पार्श्वयोश्च समस्ता भवन्ति भाद्रपदाः। कुक्षिस्था
रेवत्यो, विद्ध्युरसुरोऽनुराधा च। पृष्ठं विद्धि धनिष्ठा,
भुजौ विशाखा, स्मृतौ करौ हस्तः। अङ्गुल्यश्च पुनर्वसु,-
रश्लेषासंस्थिताश्च नखाः। ग्रीवा ज्येष्ठा, श्रवणौ श्रवणः,
पुष्यो मुखं, द्विजाः(दन्ताः)स्वातिः। हसितं शतभिषगथ
नासिका मघा, मृगशिरा नेत्रे। चित्रा ललाटसंस्था,
शिरो भरण्यः, शिरोरुहाश्चार्द्रा। नक्षत्रपुरुषकोऽयं
कर्तव्यो रूपमिच्छद्भिः। चैत्रस्य बहुलपक्षे ह्यष्टम्यां मूल-
संयुते चन्द्रे। उपवासः कर्तव्यो विष्णुं सम्पूज्य
धिष्ण्यं च। दद्याद्वृते समाप्ते घृतपूर्णं भाजनं सुवर्णयु-
तम्। विप्राय कालविदुषे सरत्नवस्त्रं स्वशक्त्या वा"।
वामनपु० ७७अ० विस्तारो दृश्यः।

**नक्षत्रभोग** पु० राशिचक्रस्थनक्षत्राणामेकैकदिने भोगः।
२१६०० कलात्मकस्य सप्तविंशत्या समं विभक्तस्य ८००शत-
कलारूपे भोगे "भभोगोऽष्टशती लिप्ताः" सू०सि०।

**नक्षत्रमान** न० सू०सि० उक्ते दिनादिमानभेदे अहर्गणशब्दे
५७६पृ० मासमानशब्दे च दृश्यम्।

**नक्षत्रमाला** स्त्री नक्षत्रसंख्यिका माला। १सप्तविंशतिमौ-
क्तिकादिरचितमालायाम् अमरः। ६त०। २नक्षत्रश्रेण्यां
च "यावन्नक्षत्रमाला विचरति गगने भूषयन्तीव भासा"
ह०सं०१०५अ०। ३हस्तिनां मालाभेदे च "निशाद्यसमग्रेणैव
परिस्फुरद्भिश्चन्द्रनक्षत्रमालेन" काद० (गन्धहस्तिना)

**नक्षत्रयाजक** पु० नक्षत्रनिमित्तं हव्यार्थं याजयति
यज–णिच्–ण्वुल्। नक्षत्रनिमित्तदोषोद्भावनेन शान्ति-
कारके अपकृष्टब्राह्मणे "आह्वायका देवलका नक्षत्र-
ग्रामयाजकाः। एते ब्राह्मणचाण्डाला महापथिक-
पञ्चमाः" भा०शा० ७६अ० तस्य निन्दोक्ता

**नक्षत्रयोग** पु०नक्षत्रभेदे योगः क्रूरग्रहादिभिर्योगः। नक्ष-
त्रव्यूहशब्दे वक्ष्ये नक्षत्रेषु क्रूरादिग्रहयोगे "सांव-
त्सरा ज्योतिषि चाभियुक्ताः नक्षत्रयोगेषु च नित्य-
युक्ताः" भा०उ०४७ अ०।

**नक्षत्रयोगिनी** स्त्री नक्षत्रैरभिमानितया युज्यते युज–
घिनुण्। दाक्षायणीषु अश्विन्यादिषु "तस्मै नक्षत्रयो-
गिन्यः सप्तविंशतिरुत्तमाः। रोहिणीप्रमुखाः कन्या दक्षः
प्राचेतसो ददौ" हरिवं० २२६अ०। रोहिण्याश्चन्द्रस्या-
तिप्रियत्वात् तत्प्रमुखत्वमुक्तमिति बोध्यम्।

**नक्षत्रयोनि** स्त्री ६त०। विवाहादौ योनिकूटे उपयमशब्दे
१२५०पृ०दृश्यम्। [व्यम्बे ज्योतिर्गणा इव"भा०शा०२८अ०

**नक्षत्रराज** पु० ६त० टच् समा०। चन्द्रे "नक्षत्रराजे वर्षान्ते

**नक्षत्रलोक** पु० ६त०। नक्षत्राधिष्ठितलोकभेदे "कस्मिन्नु
चन्द्रलोका ओताश्च प्रोताश्च नक्षत्रलोकेषु गार्गीति
कस्मिन्नु नक्षत्रलोका ओताश्च प्रोताश्च देवलोकेषु"शत०ब्रा०
१४।६।६।१। तल्लोकस्थानादिकं च काशीख०अ०उक्तं यथा
"दक्षः प्रजाविनिर्माणे दक्षो जातः प्रजा-
पतिः। षष्टिर्दुहितरस्तस्य रूपलावण्यभूषणाः। सर्वा
लावण्यवाहिन्यो रोहिणीप्रमुखाः सुताः। ताभिस्तप्तं
तपस्तीव्रं प्राप्य वैश्वेश्वरीं पुरीम्। आराधितो महादेवः
सोमः(उमया सहितः)सोमविभूषणः। भवतोऽपि महा-
देव! भव! तापहरो हि यः। रूपेण भवता तुल्यः स
नोभर्त्ता भवत्विति। लिङ्गं संस्थाप्य शुभदं नक्षत्रेश्वर-
संज्ञितम्। वरणायास्तटे रम्ये सङ्गमेश्वरसन्निधौ। दिव्यं
वर्षसहस्रन्तु पुरुषायितसंज्ञितम्। तपस्तप्तं महत्ताभिः
पुरुषैरपि दुष्करम्। ततस्तुष्टो हि विश्वेशोऽव्यतरद्धर-
मुत्तमम्। सर्वासामेकवृत्तीनामेकार्थस्थिरचेतसाम्।
श्रीविश्वेश्वर उवाच। न ख्यातं हि तपोऽल्पमेतदन्या-
भिरीदृशम्। पुराऽबलाभिस्तस्माद्धोनाम नक्षत्रमत्र वै।
पुरुषायितसंज्ञेन तप्तं यत्तपसाऽधुना। भवतीभिस्ततः
पुंस्त्वमिच्छया वो भविष्यति। ज्योतिश्चक्रे समस्तेऽस्मि-
न्प्रमुख्या भविष्यथ। मेषादीनाञ्च राशीनां योनयो
यूयमुत्तमाः। ओषधीनां सुधायाश्च ब्राह्मणानाञ्च यः
पतिः। पतिमन्तो भवत्योऽपि तेन पत्या शुभाननाः!।
भवतीनामिदं लिङ्गं नक्षत्रेश्वरसंज्ञितम्। पूजयित्वा
नरो गत्वा नक्षत्रलोकमुत्तमम्। उपरिष्टान्मृगाङ्कस्य
लोको वस्तु भविष्यति। सर्वासां तारकाणाञ्च मध्ये
मान्या भविष्यथ। नक्षत्रपूजका ये च नक्षत्रव्रतचारिणः।
ते वो लोके वसिष्यन्ति नक्षत्रसदृशप्रभाः। नक्षत्रग्रह-
राशीनां बाधा तेषां कदाचन। न भविष्यति ये काश्यां
नक्षत्रेश्वरवीक्षकाः"।

**नक्षत्रविद्या** स्त्री नक्षत्राणां तत्स्थितग्रहादीनां चारज्ञा-
नाय विद्या। ज्योतिषविद्यायाम् "न चोत्पातनिमित्ताभ्यां
न नक्षत्राङ्गविद्यया। नानुशासनवादाभ्यां भिक्षां
लिप्सेत कर्हिचित्" मनुः। "विज्ञानेन वा ऋग्वेदं
विजानाति" इत्युपक्रमे "ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां
नक्षत्रविद्याम्" छा०उ०।

**नक्षत्रवीथि** स्त्री नक्षत्रैस्तद्भेदैः कृता वीथिः शा०त०। गगनस्थाने नक्षत्रविशेषकृतायां वीथ्यां तद्भेदादिकं वृ०सं० ९अ० उक्तं यथा

"नागगजैरावतवृषभगोजरद्गवमृगाजदहनाख्याः। अश्विन्याद्याः कैश्चित् त्रिभाः क्रमाद्वीथयः कथिताः। नागा तु पवनयाम्याग्नेयानि, पैतामहात्त्रिभास्तिस्रः। गोवीथ्यामश्विन्यः पौष्णं द्वे चापि भाद्रपदे। जारद्गव्यां श्रवणात् त्रिभं मृगाख्या त्रिभं च मैत्राद्यम्। हस्तविशाखात्वाष्ट्राण्यजेत्यषाढाद्वयं दहना। तिस्रस्तिस्रस्तासां क्रमादुदङ्मध्ययाम्यमार्गस्थाः। तासामप्युत्तरमध्यदक्षिणस्थितैकैका। वीथीमार्गानपरे कथयन्ति यथा स्थिता भमार्गस्य। नक्षत्राणां तारा याम्योत्तरमध्यमार्गस्थत्। उत्तरमार्गो याम्यादिर्निगदितो मध्यमस्तु भाग्याद्यः१०। दक्षिणमार्गोऽषाढादिः कैश्चिदेवं कृता मार्गाः। ज्योतिषमागमशास्त्रं विप्रतिपत्तौ न योग्यमस्माकम्। स्वयमेव विकल्पयितुं किन्तु बहूनां मतं वक्ष्ये। उत्तरवीथिषु शुक्रः सुभिक्षशिवकृत्ततोऽस्तमुदयं वा। मध्यासु मध्यफलदः कष्टफलो दक्षिणस्थासु। अत्युत्तमोत्तमोनं सममध्यन्यूनमधमकष्टफलम्। कष्टतमं सौम्याद्यासु वीथिषु यथाक्रमं ब्रूयात्"।

**नक्षत्रव्यूह** पु० वृ० सं० १५ उक्ते नक्षत्रविशेषस्य क्रूरादिवेधेन पुरुषविशेषाणां द्रव्यभेदानां च शुभाशुभसूचके नक्षत्रसमूहे यथा "आग्नेये३सितकुसुमाहिताग्निमन्त्रज्ञसूत्रभाष्यज्ञाः। आकरिकनापितद्विजघटकारपुरोहिताब्दज्ञाः। रोहिण्यां सुव्रतपण्यभूपधनियोगयुक्तशाकटिकाः। गोवृषजलचरकर्षकशिलोच्चयैश्वर्यसम्पन्नाः। मृगशिरसि सुरभिवस्त्राब्जकुसुमफलरत्नवनचरविहङ्गाः। मृगसोमपीथिगान्धर्वकामुका लेखहाराश्च। रौद्रे६ वधबन्धनानृतपरदारस्तेयशाठ्यभेदरताः। तुषधान्यतीक्ष्णमन्त्राभिचारवेतालकर्मज्ञाः। आदित्ये७सत्यौदार्यशौचकुलरूपधीयशोऽर्थयुताः। उत्तमधान्यं वणिजः सेवाभिरताः सशिल्पिजनाः। पुष्ये यवगोधूमाः शालीक्षुवनानि मन्त्रिणो भूपाः। सलिलोपजीविनः साधवश्च यज्ञेष्टिसक्ताश्च। अहिदेवे९ कृत्रिमकन्दमूलफलकीटपन्नगविषाणि। परधनहरणाभिरतास्तुषधान्यं सर्वभिषजश्च। पित्र्ये१०धनधान्याढ्यं कोष्ठागाराणि पर्वताश्रयिणः। पितृभक्तवणिक्शूराः क्रव्यादाः स्त्रीद्विषो मनुजाः। प्राक्फल्गुनीषु नटयुवतिसुभगगान्धर्वशिल्पिपण्यानि। कर्पासलवणमाक्षिकतैलानि कुमारकाश्चापि। आर्यम्णे१२ मार्दवशौचविनयपाषण्डिदानशास्त्ररताः। शोभनधान्यमहाधनकर्मानुरताः समनुजेन्द्राः। हस्ते तस्करकुञ्जररथिकमहामात्रशिल्पिपण्यानि। तुषधान्यं श्रुतयुक्ता वणिजस्तेजोयुताश्चात्र। त्वाष्ट्रे१४ भूषणमणिरागलेख्यगान्धर्वगन्धयुक्तिज्ञाः। गणितपटुतन्तुवायाः शालाक्याराजधान्यानि। स्वातौ खगमृगतुरगा वणिजो धान्यानि वातबहुलानि। अस्थिरसौहृदलघुसत्त्वतापसाः पण्यकुशलाश्च। इन्द्राग्निदैवते१६ रक्तपुष्पफलशाखिनः सतिलमुद्गाः। कर्पासमाषचणकाः पुरन्दरहुताशभक्ताश्च। मैत्रे१७ शौर्यसमेता गणनायकसाधुगोष्ठियानरताः। ये साधवश्च लोके सर्वं च शरत्समुत्पन्नम्। पौरन्दरे१८ऽतिशूराः कुलवित्तयशोऽन्विताः परस्वहृतः। विजिगीषवो नरेन्द्राः सेनानां चापि नेतारः। मूले भेषजभिषजो गणमुख्याः कुसुममूलफलवार्त्ताः। बीजान्यतिधनयुक्ताः फलमूलैर्ये च वर्त्तन्ते। आप्ये२० मृदवो जलमार्गगामिनः सत्यशौचधनयुक्ताः। सेतुकरवारिजीवकफलकुसुमान्यम्बुजातानि। विश्वेश्वरे२१ महामात्रमल्लकरितुरगदेवताभक्ताः। स्थावरयोधा भोगान्विताश्च ये चौजसा युक्ताः। श्रवणे मायापटवो नित्योद्युक्ताश्च कर्मसु समर्थाः। उत्साहिनः सधर्मा भागवताः सत्यवचनाश्च। वसुभे२३मानोन्मुक्ताः क्लीबाश्चलसौहृदाः स्त्रियां द्वेष्याः। दानाभिरता बहुवित्तसंयुताः शमपराश्च नराः। वरुणेशे२४ पाशिकमत्स्यबन्धजलजानि जलचरा जीवाः। सौकरिकरजकशौण्डिकशाकुनिकाश्चापि वर्गेऽस्मिन्। आजे२५ तस्करपशुपालहिंस्रकीनाशनीचशठचेष्टाः। धर्मव्रतैर्विरहिता नियुद्धकुशलाश्च ये मनुजाः। आहिर्बुध्न्ये२६ विप्राः क्रतुदानतपोयुता महाविभवाः। आश्रमिणः पाषण्डा नरेश्वराः सारधान्यं च। पौष्णे२७ सलिलजफलकुसुमलवणमणिशङ्खमौक्तिकाब्जानि। सुरभिकुसुमानि गन्धा वणिजो नौकर्णधाराश्च। अश्विन्यामश्वहराः सेनापतिवैद्यसेवकास्तुरगाः। तुरगारोहाश्च वणिग्रूपोपेतास्तुरगरक्षाः। याम्ये२ऽसृक्पिशितभुजः क्रूरा वधबन्धताडनासक्ताः। तुषधान्यं नीचकुलोद्भवा विहीनाश्च सत्त्वेन। पूर्वात्रयं सानल३मग्रजानां राज्ञां तु पुष्येण सहोत्तराणि। सपौष्ण२७मैत्रं१७ पितृदैवतं१०च प्रजापतेर्भं४ च कृषीवलानाम्। आदित्य७हस्ताभिजिदाश्विनानि वणिग्-

जनानां प्रयच्छन्ति भानि । मूलशिवेन्द्रा ६ निल १५ वारुणानि२४ भान्युग्रजातेः प्रभविष्णुतायाम् । सौम्यै५न्द्र१८चित्रावसु२२दैवतानि सेवाजनस्वाम्यमुपागतानि । सार्पं९ विशाखा श्रवणो भरण्यश्चण्डान्त्यजातेरिति निर्दिशन्ति । रविरविसुतयोगमागतं क्षितिसुतभेदनवक्रदूषितम् । ग्रहणगतमथोल्कया हतं नियतमुपाकरपीड़ितं च यत् । तदुपहतमिति प्रचक्षते प्रकृतिविपर्यययातमेव वा । निगदितपरिवर्गदूषणं कथितविपर्ययगं समृद्धये" ।

**नक्षत्रव्रत** न० नक्षत्रनिमित्तं व्रतम् शा०त० । नक्षत्रनिमित्ते व्रतभेदे तत्र सामान्यतः कालनिर्णयः ति०त० उक्तो यथा "नक्षत्रदैवे तु बौधायनमार्कण्डेयौ "तन्नक्षत्रमहोरात्रं यस्मिन्नस्तं गतोरविः । यस्मिन्नुदेति सविता तन्नक्षत्रं दिनं स्मृतम्" पूर्वार्द्धमहोरात्रसाध्योपवासनक्तैकभक्तेषु "तत्रैवोपवसेद्धक्ते यस्मिन्शीयादधोभवेत् । उपवासे यदुक्तं स्यात् तद्धि नक्तैकभक्तयोः" इति स्कन्दपुराणात् निशीथादध इत्यनेन अहोरात्रपूर्वकालत्वेन सूर्य्यास्तमयकालस्यापि लाभात् । "उपोषितव्यं नक्षत्रं येनास्तं याति भास्करः । यत्र वा युज्यते राम ! निशीथे शशिना सह" इति विष्णुधर्मोत्तराच्च उपवासस्नानव्रतादीनामहोरात्रसाध्यता अहोरात्रसाध्यभोजनद्वयस्यैकतरपरित्यागसहितकालविशेषनियामकत्वात् । यस्मिन्नुदेतीति तु दिवसकर्त्तव्यस्नानदानादाविति बोध्यं, पितृकार्य्येऽपि शुक्लकृष्णपक्षाभ्यां व्यवस्थामाह बौधायनः "सा तिथिस्तच्च नक्षत्रं यस्मिन्नभ्युदितो रविः । वर्द्धमानस्य पक्षस्य हीनेऽस्तमयं प्रति" हीने चन्द्रस्य हीनत्वात् कृष्णपक्षे वर्द्धमानस्य चन्द्रस्य वर्द्धमानत्वेन शुक्लपक्षस्य । कालमाधवीयोऽप्येवम्" ति०त० रघु० ।

तद्व्रतानि च हेमा० व्र० भविष्यपु० उक्तानि यथा "इत्येते कथिताः कृष्ण ! तिथियोगा मया तव । नक्षत्रदेवताः सर्वाः नक्षत्रेषु व्यवस्थिताः । इष्टान् कामान् प्रयच्छन्ति यथास्थानं सुरेश्वर ! । चन्द्रमा यत्र नक्षत्रे यदा समधितिष्ठति । उक्तास्तु देवयज्ञस्तु तदा स सफलो भवेत् । देवतास्तु प्रवक्ष्यामि नक्षत्राणां यथातथम् । नक्षत्राणि च सर्वाणि यज्ञश्चैव पृथक् पृथक् । अश्विन्यामश्विनाविष्ट्वा दीर्घायुर्जायते नरः । व्याधिभिर्मुच्यते क्षिप्रं योऽत्यर्थं व्याधिपीड़ितः । भरण्यां यमराड़िष्टः कुसुमैरसितैः शुभैः । तथा गन्धादिभिः शुभ्रैरपमृत्युं विमोचयेत् । अनलः कृत्तिकायान्तु वह्निं संपूजितः पराम् । रक्तमाल्यादिभिर्दद्याद्घृतहोमेन च ध्रुवम् । प्रजाः प्रजापतिः प्रीत इष्टो दद्यात्पशूंस्तथा । रोहिण्यां देवयादृश ! गोजन्महा जगत्पते ! । मृगशीर्षे तथा सोमं ज्ञातिमारोग्यमेव च । आर्द्रायान्तु शिवं पूज्य पश्चात् विजयमेव च । सितैः पद्मादिभिर्दिव्यैर्दैवत्वं पयसा च वै । पुत्रान् पुनर्वसौ दद्याच्चरुणा तर्पिताऽदितिः । तिष्ये बृहस्पतिर्बुद्धिं विपुलं सुखमेव तु । भोगान् गन्धादिभिर्नागा अश्लेषायां प्रपूजिताः । तर्पितास्च प्रयच्छन्ति भक्ष्याद्यैर्मधुरैः शुभैः । मघासु पितरः पुष्टिं घृतपायसतर्पिताः । पूर्वायां ११ विजयं दद्याद्भगो देवः सुतर्पितः । भक्त्या प्रपूजितो दद्यादुत्तरायां१२ तथार्यमा । भर्त्तारमीप्सितं नार्य्याः पुंसश्च वरयोषितम् । नीरोगत्वं तथायुष्यं सम्पदं चारुरूपताम् । पुष्पवस्त्रार्चितो हस्ते दद्यात्तेजोनिधिस्तथा । चित्रासु पूजितस्त्वष्टा दद्याद्दारोग्यमेव च । स्वात्यां संपूजितो वायुः पुत्रानिष्टान् प्रयच्छति । इन्द्राग्नी तु विशाखायां पीतरक्तैः प्रपूज्य च । धनं राज्यञ्च लब्ध्वेह तेजस्वी निवसेत्सदा । रक्तैर्मित्रमनूराधास्वेवं संपूज्य भक्तितः । प्रियो जनानां सर्वेषां चिरञ्जीवति सर्वदा । ज्येष्ठायां पूर्ववत्त्विन्द्रमिष्ट्वा पुष्टिमवाप्नुयात् । गुणैः सर्वैस्तु संपूर्णः कर्मणा वचनेन च । मूले निर्ऋतिमिष्ट्वा च भक्ष्यैस्तु फलादिभिः । पूर्ववत् फलमाप्नोति स्वस्थाने च ध्रुवो भवेत् । अप इष्ट्वा जले २० चैतैर्हुत्वा तत्रैव पूर्ववत् । सन्तापान्मुच्यते क्षिप्रं शारीरान्मानसात्तथा । आषाढ़ासु तथा विश्वं विरिञ्चिमुत्तरयोगतः । संपूज्य श्रियमाप्नोति परं विजयमेव तु । श्रवणे पूजितो विष्णुः सर्वान् कामान् प्रयच्छति । धनिष्ठासु वसूनिष्ट्वा न भयं प्राप्नुयात् क्वचित् । महतोऽपि भयात्तीर्णो गन्धपुष्पादिभिः शुभैः । वरुणं शतभिषास्वर्च्य व्याधिभिर्मुच्यते नरः । अजं भाद्रपदायान्तु२५ शुद्धस्फटिकसन्निभम् । संपूज्य भक्तिमाप्नोति नात्र कार्य्या विचारणा । उत्तराया२६महिर्बुध्नं परां शान्तिमवाप्नुयात् । रेवत्यां पूजितः पूषा ददाति त्रिविधान् पशून् । सितैः पुष्पैस्तथा दीपैर्धूपैर्विजयवर्द्धनैः । य एते वै समाख्याता यज्ञाः संक्षेपतो मया । नक्षत्रदेवतानां हि साधकानां हिताय वै । नक्षत्रादित्तानुसारेण भवन्ति फलदायकाः । गन्तुमिच्छेद्यदान्यत्र क्रियाप्रारम्भ एव च । नक्षत्रदेवतायज्ञं कृत्वादौ

र्व्वमाचरेत्। एवं कृते हि नक्षत्रं यात्राफलमवाप्नु-यात्। क्रियाफलन्तु संपूर्णमित्युक्तं भानुना स्वयम्।”

**नक्षत्रशूल** पु० “ज्येष्ठा पूर्वा भाद्रपदा रोहिण्युत्तरफाल्गुनी। पूर्वादिषु क्रमाच्छूलाः यात्रायां मरणप्रदाः” ज्योति० उक्ते यात्रायां निषिद्धे पूर्वादिदिक्षु नक्षत्रभेदे तस्य शूलतुल्यमरणप्रदत्वात् शूलत्वम्।

**नक्षत्रसत्र** न० नक्षत्रनिमित्तं सत्रम्। नक्षत्रनिमित्ते सत्र-भेदे। तत्र नाक्षत्रमासग्रहणम् विष्णु ध० उक्तं यथा “नक्षत्रसत्राण्ययनादि चान्द्रोमासेन कुर्य्यादुगणात्मकेन” “नक्षत्रसत्राणि नाक्षत्रमासस्याध्ययागभेदाः याज्ञिकप-सिद्धाः” समयप्रदीपः।

**नक्षत्रसन्धि** पु० नक्षत्रयोः सन्धिः। पूर्वनक्षत्रादुत्तरनक्षत्रे चन्द्रादेर्य्यात्रायां वा गतिरूपसंक्रान्तौ। तिथिसन्धिशब्दे दृश्यम्।

**नक्षत्रसाधन** न० नक्षत्रं साध्यते ज्ञायतेऽनेन साधि—करणे ल्युट्। सि०शि० उक्ते ग्रहाणां नक्षत्रमानसाधने गणन भेदे तच्च वाक्यं तिथिशब्दे ३२८७ पृ० दर्शितम्।

**नक्षत्रसूचक** पु० नक्षत्राणि शुभाशुभतया सूचयति ण्वुल् इत०। “अविदित्वैव यः शास्त्रं दैवज्ञत्वं प्रपद्यते। स पङ्क्तिदूषकः पापो ज्ञेयो नक्षत्रसूचकः” इति इ०सं०१अ० “तिथ्युत्पत्तिं न जानन्ति ग्रहाणां नैव साधनम्। पर-वाक्येन वर्त्तन्ते ते वै नक्षत्रसूचकाः” इत्युक्ते च विज्ञा-नानभिज्ञे ज्योतिर्विदि। स्त्रियां नक्षत्रसूचीत्यप्यत्र।

**नक्षत्रामृत** न० वारभेदे नक्षत्रयोगकृते अमृतयोगे अमृत-शब्दे ३३४ पृ० दृश्यम्।

**नक्षत्रिन्** पु० नक्षत्रमस्त्यस्य स्वाम्येन नियन्तृतया वा इनि। १चन्द्रे २विष्णौ च “नक्षत्रनेमिर्नक्षत्री क्षमः क्षामः समी-हनः” विष्णु स०। “नक्षत्राणामहं शशीति” गीतोक्ते र्नक्षत्रेशरूपेण स्थितत्वात् तस्य तथात्वम्।

**नक्षत्रिय** पु० नक्षत्राय हितः घ। नक्षत्राधिष्ठातृदेवभेदे। “नक्षत्रेभ्यः स्वाहा नक्षत्रियेभ्यः स्वाहा” यजु०२२।२८। नगन्त्रेन “घच् सुपा” पा० स०। २क्षत्रियभिन्ने च।

**नक्षत्रेश** पु०इत०। चन्द्रे अमरः। “नक्षत्रेशकृतेक्षणो गिरि-गुरौ गाढां रुचिं धारयन्” (उमावल्लभः) सा०द०।

**नक्षत्रेश्वर** पु० इत०। १चन्द्रे नक्षत्राधिष्ठातृदेवताभिः काशीस्थापिते २शिवलिङ्गभेदे न० नक्षत्रलोकशब्दे दृश्यम्। [इष्टिभेदे

**नक्षत्रेष्टि** स्त्री नक्षत्रनिमित्ता इष्टिः शा०त०। नक्षत्रनिमित्तके

**नक्षत्रेष्टका** स्त्री इष्टकाभेदे तैत्तिरीयसंहिता ५।४।१।२

**नख** सर्पणे भ्वा०पर०सक०सेट्। नखति अनखीत् अनाखीत् ननाख नेखतुः। अपोपदेशत्वात् न णत्वं प्रनखति।

**नख** पु०न०। न खं “छिद्रमस्य नभ्राडित्यादि” पा० नञो न नलोपः नख्यते खन—ड वा नह बन्धने “नहेर्लोपश्च” ख वा उणा०। १करजे कराङ्गुल्यग्रस्थे कण्टके अमरः। “कामिनामनिभृतान्यपि रम्यास्तस्य कोमलतलेषु नखानि” माघः “न छिन्द्यान्नखलोमानि दन्तैर्नोत्पाटयेन्नखान्” मनुः “नखक्षतानीव वनस्थलीनाम्” कुमा० “ऐन्द्रः किल नखैस्तस्य विददार स्तनौ द्विजः” रघुः “न नखैर्विलिखेद्भू-मिम्” कूर्मपु०। स्वाङ्गत्वेऽपि उपसर्जने क्रोडा० स्त्रियां ङीषोनिषेधे संज्ञायां “नखमुखात् संज्ञायाम्” नियमात् ङीप्। शूर्पणखा गौरनखा असंज्ञायान्तु ताम्रनखी कन्या सि०कौ०। नखस्य मूलं अपो० जाहच्। नख-जाह तन्मूले न० “कोद्रवश्री हवच्छेदी नखखादी च यो नरः” मनुना तस्य दन्तेन खादनं निषिद्धम्। २खण्डे पु० हेम० ३शुक्तिकायां गन्धद्रव्यभेदे न०स्त्री० स्त्रियां बह्वा० ङीप्। “द्विधा मधुनखाख्यान्या शुक्राख्या बदरीच्छदा” रत्नमा० “स्वल्पनखसी शुक्ति-र्वैखरी बदरच्छदा। महांस्तसौ मधुनखः मद्वाख्यो गन्धवारणः” शब्दार्थचि० “नखद्वयं वह्निसमानोष्ण-ज्वरकुष्ठहृत्। वधूनां शुक्रलं वर्ण्यं स्वादु लवविषा-पहम्। अलक्ष्मीमुखदौर्गन्ध्यहृत् पाकरसयोः कटु” भाव० तद्गुणा उक्ताः। [शिका०।

**नखकुट्ट** पु० नखं कुट्टति कुट्ट—छेदे अण् उप०स०। नापिते

**नखगुच्छफला** स्त्री नख इव गुच्छः फलं च यस्याः। नि-ष्पावभेदे राजनि०।

**नखदारण** न० नखं दार्य्यतेऽनेन दारि—करणे ल्युट्। नख-निकृन्तने नापितास्त्रभेदे (नरुन)।

**नखनिकृन्तन** न० निकृत्यतेऽनेन कृत—ल्युट् बा० मुम् इत०। नखच्छेदनार्थे नापितास्त्रभेदे (नरुन) तस्या-यसत्वात् २लोहमात्रेऽपि “यथा सोम्यैकेन नखनिकृन्तनेन विज्ञातेन सर्वं कार्ष्णायसं विज्ञातं स्यात् वाचारम्भणं विकारो नामधेयं कार्ष्णायसमित्येव सत्यम्” छा०उ०।

**नखनिष्पाव** पु० नखं तत्तुल्यफलतया निष्पुनाति निष्को-षाति निस्+पु—अच्। नखफलिन्याम् राजनि०।

**नखपर्णी** स्त्री नख इव पर्णमस्याः ङीप्। वृश्चिकालिक्षुप-भेदे राजनि०।

**नखपुष्पी** स्त्री नख इव पुष्पमस्याः ङीप्। पृक्कायां राजनि०

**नखप्रच** न० नखस्य प्रचितञ्च मयू०नि०। नखप्रचितयोः।

**नखफलिनी** स्त्री नख इव फलमस्त्यस्य बाहुल्येन भूम्नि इनि ङीप्। नखनिष्पाववृक्षे राजनि०।

**नखमुच** त्रि० नखं मुञ्चति मुच—मूलविभु० क। नखमोचके धनुषि संचिप्तसार०।

**नखम्पच** त्रि०नखं पचति तापयति नख+पच—खश् मुम् च। १नखतापके "कथमप्यभवत् खारानलोष्णः स्तनभारो न नखम्पचः प्रियस्य" माघः। २यवाग्वां स्त्री शब्दार्थचि०।

**नखर** पु०न० नखं राति रा—क नख—बा० उणा० अर वा १नखे अमरः। "सकम्पनष्टैर्नखरा मृणालानि परश्वधाः" भा०द्रो० १३१८श्लो०"किं पुनरलङ्कृतस्य सम्प्रति नखरक्षतैस्तस्याः" सा०द०। नशब्देन "सह सुपा" पा० स०। २खरभिन्ने त्रि०।

**नखरजनी** स्त्री नखो रज्यतेऽनया रन्ज—करणे ल्युट् नलोपः ङीप्। (मेहदी) प्रसिद्धे वृक्षे तस्याः फलम् अण् हरीतक्या० अणो लुप् प्रकृतिलिङ्गत्वात् तत्फलेऽपि स्त्री

**नखरञ्जनी** स्त्री नखं रञ्जयति रन्ज—णिच्—ल्यु गौरा० ङीष्। नखनिकृन्तने नापितास्त्रभेदे (नरुन) "अनन्तचर्म्मोपान्तधारिणी मलहारिणी। पुनर्भवच्छेदकरी गङ्गेव नखरञ्जनी" उद्भटः।

**नखरायुध** पुंस्त्री नखर एवायुधं यस्य। १सिंहे २व्याघ्रे ३कुक्कुरे च राजनि०। स्त्रियां जातित्वात् ङीष्।

**नखराह्व** पु० नखरमाह्वयते स्पर्द्धते आकारेण आ+ह्वे—क। करवीरे राजनि०।

**नखरी** स्त्री नखरः पुष्पाकारेणास्त्यस्य अच् गौरा०ङीष्। १नखीनामगन्धद्रव्ये शब्दमाला। २क्षुद्रनख्यां रत्नमा०।

**नखलेखक** त्रि० नखं लिखति जीविकार्थं "शिल्पिसंज्ञयोरपूर्वस्यापि" उणा० लिख—क्वुन् नित्यक०। जीविकार्थं दन्तलेखनशिल्पकारके। अस्य "नित्यं क्रीडाजीविकयोः" पा०समासे "अके जीविकार्थे" पा० आद्युदात्तता

**नखविष** पुंस्त्री नखे विषमस्य। नरादौ हेमच० "नागाः स्युर्दृग्विषा लूनविषास्तु वृश्चिकादयः। व्याघ्रादयो मोमविषा नखविषा नरादयः। लालाविषास्तु लूताद्याः कालान्तरविषाः पुनः। मूषिकाद्याः" हेमच०। जङ्गमविषशब्दे ३०१२ पृ० आदिपद्याद्यं दृश्यम्।

**नखविष्किर** पुंस्त्री० नखैर्विकिरति वि+कॄ—क "विष्किरः शकुनिर्विकिरो वा" पा० सुट् षत्वञ्च। नखैर्विकीर्य्य भक्षके श्येनादौ "क्रव्यादान् जालपादांश्च कोयष्टिनखविष्किरान्" अभक्ष्यमांसोक्तौ मनुः "नखविष्किरान् नखैर्विकीर्य्य ये भक्षयन्ति तानभ्यनुज्ञातारण्यकुक्कुटादिव्यतिरिक्तान् श्येनादीन्" कुल्लू०। [राजनि०।

**नखवृक्ष** पु० नखति नख—सर्पणे अच् नित्यक०। नीलवृक्षे

**नखशङ्ख** पु० नख इव शङ्खः। क्षुद्रशङ्खे शब्दर०।

**नखाघात** पु० नखैराघातः। नर्म्मार्थं सुरते नायकेन नायिकाङ्गे तद्विपर्य्ययेण वा नखैराघाते तत्स्थानानि कामशास्त्रे उक्तानि यथा "नखाघातः प्रदातव्यो यथा स्थानानि नर्मसु। पार्श्वयोः स्तनयोश्चैव उरौ चैव नितम्बके। कक्षस्थले च कक्षान्ते कपाले बाहुमूलके। ग्रीवायां कण्ठदेशे च नखाघातं समाचरेत्। तथा सर्व्वशरीरेषु नखं दद्याच्छनैः शनैः" इति। नखपदनखक्षतादयोऽप्यत्र "नवनखपदमङ्गं गोपयस्यंशुकेन" सा०द० "नखक्षतानीव वनस्थलीनाम्" कुमा० २युद्धार्थं नखैराघाते च। [स्याङ्कः। २नखाघातचिह्ने च पु०।

**नखाङ्क** पु०नखमङ्क इव यस्य। १व्याघ्रनख्याम् शब्दर०नख-

**नखाङ्ग** न० नख इवाङ्गमस्य। नख्यां रत्नमाला।

**नखानखि** अव्य० नखैश्च नखैश्च प्रहृत्य इत्तं युद्धम् "इच् कर्म्मव्यतिहारे" पा०इच् समा०। परस्परनखाघातेन प्रवृत्ते युद्धे "कचाकचि युद्धमासीत् दन्तादन्ति नखानखि" भा०क० ४९अ०। [३कुक्कुरे च राजनि०।

**नखायुध** पुंस्त्री नख आयुधमिव यस्य। १व्याघ्रे २सिंहे

**नखालि** पु० नखानामालिरत्र। १क्षुद्रशङ्खे शब्दच० इत०। २नखपङ्क्तौ च। [नीलवृक्षे राजनि०।

**नखालु** पु० नख इव आलुः नख—सर्पणे बा०आलुच् वा।

**नखाशिन्** पु० नखमश्नाति अश—णिनि इत०। १पेचके त्रिका०। २नखखादिनि त्रि०।

**नखि** पु० नखति सर्पति नख—इन्। १सर्पके। उज्ज्वलदत्तस्तु नखेनातिक्रामति नख+णि—नखयति "अच इः" उणा० इ। २नखेनातिक्रामके इत्याह स्म। इदं चिन्त्यं हस्तिनातिक्रामतीत्यादौ अतिहस्तयतीतिवत् नखेनातिक्रामतीति वाक्ये अतिनखयतीत्येव स्यात् न नखयतीति

**नखिन्** पु० नखः अस्त्यस्य, प्राशस्त्येन वा इनि। १सिंहे राजनि०। २व्याघ्रे ३महानखयुक्तमात्रे त्रि०। "नखिनाञ्च नदीनाञ्च शृङ्गिणां शस्त्रपाणिनाम्। विश्वासो नैव कर्त्तव्यः स्त्रीषु राजकुलेषु च" चाणक्यः। "भूत्वा केशरिणां सिंहा व्याघ्राश्च नखिनां वराः" हरिवं०७२अ०।

**नखी** स्त्री नख आकारत्वेनास्त्यस्य अच् गौरा० ङीष् नख+ बह्वा० ङीप् वा । स्वनामख्याते गन्धद्रव्ये अमरः धूपशब्दे उदा० दृश्यम् ।

**नग** पु० न गच्छति गम–ड "नगोऽप्राणिषु" पा० नञो न नलोपः । १पर्वते २वृक्षे च अमरः । "नगजा नगजा दयिता दयिताः" भट्टिः "नगाह्वयो नाम नगारिरुन्नतः" भा०वि० ११४अ०। अप्राणिष्वित्युक्तेः अगो वृषलः शीतेनेत्यादौ नलोपः इति बोध्यम् ।

**नगज** त्रि० नगाज्जायते जन–ड ५त० । १पर्वतजातमात्रे "नगजा नगजाः" भट्टिः २हस्तिनि च । हिमाद्रिकन्याया ३पार्वत्यां ४क्षुद्रपाषाणभेदाख्यलतायां स्त्री राजनि० ।

**नगनदी** स्त्री नगजाता नदी शा०त०। पर्वतनिःसृतनद्याम् । "विश्रान्तः सन् व्रज नगनदीतीरजातानि सिञ्चन्" मेघ०

**नगनन्दिनी** स्त्री ६त०। हिमालयजातायां दुर्गायां शब्द०।

**नगपति** पु० ६त०। १हिमालये त्रिका० यथोक्तं ब्रह्माण्डपु० "शैलानाम् हिमवन्तञ्च नदीनाञ्चैव सागरम् । गन्धर्वाणामधिपतिश्चक्रे चित्ररथम् विधिः" नगानां वृक्षाणां पत्यौ २चन्द्रे च तस्य वनस्पतीशत्वम् ओषधीशशब्दे दृश्यम् ।

**नगभिद्** पु० नगं भिनत्ति भिद–क्विप् ६त० । १पाषाणभेदनास्त्रभेदे राजनि० । २इन्द्रे च तस्य तथात्वं गोत्रभिद्शब्दे २६९८ पृ० दृश्यम् ।

**नगभू** पु० नगे भवति भू–क्विप् ७त० । १क्षुद्रपाषाणभेदायां राजनि०। २पर्वतजातमात्रे त्रि० ६त०। ३पर्वतभूमौ स्त्री

**नगर** न० नगा इव प्रासादाः सन्त्यत्र पा० र । "पण्यक्रियादिनिपुणैश्चातुर्वर्ण्यजनैर्युतम् । अनेकजातिसम्बद्धं नैकशिल्पिसमाकुलम् । सर्वदैवतसम्बद्धं नगरं त्वभिधीयते" इत्युक्तलक्षणे १पुरभेदे। गौरा० ङीष् । नगरीत्यप्यत्र अमरः। तस्य लक्षणं भविष्योत्तरे "दीर्घं वा चतुरस्रं वा नगरं कारयेन्नृपः । तत्र्यस्रं वर्त्तुलं वापि कदाचिदपि कारयेत् । दीर्घं पादैकप्रसरं चतुरस्रं समोचितम् । त्रिभिः पादैः समं त्र्यस्रं वर्त्तुलं वलयाकृति । दीर्घं व्याह्रीचकुशलसुखसम्पत्तिहेतवे । चतुरस्रं चतुर्वर्गफलाय पृथिवीभुजः । त्र्यस्रं त्रिवर्गनाशाय वर्त्तुलं बहुरोगकृत् । राज्ञः स्वहस्तैर्दशभी राजहस्त उदाहृतः । राजहस्तैश्च दशभी राजदण्ड उदाहृतः । राजदण्डैश्च दशभी राजच्छत्रमुदाहृतम् । राजच्छत्रैश्च दशभी राजकाण्ड उदाहृतः । राजकाण्डैश्च दशभी राजपुरुष उच्यते । राजधानी तु कथिता दशभी राजपुरुषैः । राजधानी दशगुणा राजक्षेत्रमुदाहृतम् । सर्वत्रैव परिमाणानि प्रोक्तानि पुरपत्तने । भयस्त्रीभोगसम्पत्तिधर्मकीर्त्तिसुखार्थिनाम् । राजक्षेत्रे नरपतिः पुरपत्तनमारभेत् । लक्ष्मीर्जयः सुखा सौख्यं पञ्चत्वं भङ्ग एकता । सवृद्धिर्वित्तनाशश्च भङ्गश्च सर्वं भयम् । साम्राज्यं भोगसम्पत्तिरिति षोडश कीर्त्तिताः । यथार्थसंज्ञा नगरे मुनिना तत्त्ववेदिना" इति युक्तिकल्पतरुः । "ध्वजवासपुरी प्रोक्ता विप्राच्युरमपीष्यते । एकतो यत्र तु ग्रामो नगरस्यैकतः स्थितम् । मिश्रन्तु खर्वटं नाम नदीगिरिसमाश्रयम् । विप्राश्च विप्रभृत्याश्च यत्र चैव वसन्ति हि । स तु ग्राम इति प्रोक्तः शूद्राणां वास एव च । पण्यक्रियादिनिपुणैश्चातुर्वर्ण्यजनैर्युतम् । अनेकजातिसम्बद्धं नैकशिल्पिसमाकुलम् । सर्वदैवतसम्बद्धं नगरन्त्वभिधीयते" इति विष्णु० पु० टीकायां श्रीधरस्वामिधृतवचनम् । "नगरं सर्वतो भद्रं कर्त्तव्यं रोचकं हि वा । स्वस्तिकं मध्यमं कार्यं कुमारीपुरमेव वा । चतुरस्रचतुर्युक्तं सर्वकामफलप्रदम् । छिन्नकर्णं दिग्भ्रष्टञ्च दुःस्थितं लम्बदुर्बलम् । नगरं न प्रशंसन्ति गर्त्तविद्धं विभेदितम् । अग्रतः स्वल्पप्रासादं छिन्नकर्णं विदुर्बुधाः । द्विगुणं कर्णहीनन्तु कथमध्यं कृशं विदुः । दुःस्थितं निम्नयाम्यन्तु नैर्ऋतं घनदुर्बलम् । सौम्यं सर्वसुखाह्लादपूरितं शारदं बलम् । प्राच्यमायुःप्रदं पूर्वनगरं प्रीतिवर्द्धनम् । ईशवायवसंपूर्णं सर्वारोग्यसुखप्रदम् । मध्यस्तुव्यथोपेतं न च तत् पीडयेत् क्वचित् । ब्रह्मस्थानं हितं विप्र ! शिवस्तत्र सदा स्थितः । चतुर्विंशतिनाडीस्तु हस्तान्यष्टशतं परम् । अत्र मध्यं प्रशंसन्ति शुक्लोत्कृष्टविवर्ज्जितम् । अथ किष्कुशताष्टौ प्राङ्गर्ह्यं निवेशनम् । नगरार्द्धञ्च विष्कम्भं खेटं ग्रामं ततोऽर्द्धतः । नगरार्द्धमितं खेटं खेटाद्ग्रामोऽर्द्धयोजनः । द्विक्रोशं परमा सीमा क्षेत्रसीमा चतुर्धनुः । त्रिंशद्धनूंषि विस्तीर्णो देशमार्गस्तु तैः कृतः । विंशद्धनुर्ग्राममार्गः सीमामार्गो दशैव तु । धनूंषि दश विस्तीर्णः श्रीमान्राजपथः कृतः । नृवाजिरथनागानामसम्बाधं सुसञ्चरः । धनूंषि चैव चत्वारि शाखा रथ्याश्च निर्मिताः । त्रिकराश्चोपरथ्यास्तु द्विकराप्युपरथ्यिका । जङ्घापथाश्चतुष्पादास्त्रिपादश्च गृहान्तरम् । वृतीपादस्त्वर्द्धपादः प्राग्वंशपादकः स्मृतः" देवी पु० । नगरसन्निवेशशब्दे दृश्यम् । नगरनिर्माणकालश्च "स्थिरराशिगते भानौ

चन्द्रे च स्थिरभोदये। शुभे काले दिने चैव नगरं कारयेन्नृपः” ज्यो० “सनगरं नगररन्ध्रकरौजसः” रघुः। नगरे काकः पात्रे समि० ७त० स०। नगरकाक नगरस्थिते काकतुल्याचारवति एवं ७त०। नगरवायस तत्रार्थे युक्तारोह्या० तयोराद्युदात्तता।

**नगरकीर्त्तन** न० नगरे हरेर्नामकीर्त्तनम्। नगरे भ्रमणेन हरिनामकीर्त्तने “नाचारो नाधिकारो वा न स्थाननियमस्तथा। ग्रामे वा नगरे साधुर्वने वा कीर्त्तयेद्धरिम्” हरिनाममाहात्म्ये।

**नगरघात** पु० नगरं हन्ति अमनुष्यकर्त्तृकत्वेन टकं बाधित्वा अण् उपस०। १हस्तिनि गजे सि०कौ०। हन–भावे घञ् ६त०। २नगरस्थलोकस्य हनने च।

**नगरमर्द्दिन्** त्रि० नगरं मृद्नाति मृद–णिनि ३त०। १नगरावमर्दके २मत्तगजे पु०। ततः बाह्वा० अपत्यादौ इञ्। नागरमर्द्दिनि तदपत्यादौ।

**नगरमार्ग** पु० ६त०। राजमार्गे तत्करणप्रकारादि कौशनसनीतिपरिशिष्टे उक्तं यथा “राजमार्गास्तु कर्त्तव्याश्चतुर्दिक्षु नृपालयात्। उत्तमो राजमार्गस्तु त्रिंशद्धस्तमितो भवेत्। मध्यमो विंशतिकरो दशपञ्चकरोऽधमः। पण्यमार्गास्तथा चैते पुरग्रामादिषु स्थिताः। करत्रयात्मिका पद्या वीथिः पञ्चकरात्मिका। मार्गो दशकरः प्रोक्तो ग्रामेषु नगरेषु च। प्राक्पश्चाद्दक्षिणोदक्स्थान् ग्राममध्यात् प्रकल्पयेत्। पुरं दृष्ट्वा राजमार्गान् सुबहून् कल्पयेन्नृपः। न वीथिं न च पद्यां हि राजधान्यां प्रकल्पयेत्। पञ्चयोजनान्तरेऽरण्ये राजमार्गन्तथोत्तमम्। कल्पयेद्मध्यमं मध्ये तयोर्मध्ये तथाऽधमम्। दशहस्तात्मकं नित्यं ग्रामे ग्रामे नियोजयेत्। कूर्मपृष्ठा मार्गभूमिः कार्य्या मार्गैः सुसेतुका। कुर्य्यान्मार्गान् पार्श्वखातान् निर्गमार्थं जलस्य च। राजमार्गमुखानि स्युर्गृहाणि सकलान्यपि। गृहपृष्ठे सदा वीथिं मलनिर्हरणस्थलम्। पङ्क्तिद्वयगतानीह गृहाणि कारयेत् तथा। मार्गान् सुधाकर्करैर्वा घटितान् प्रतिवत्सरम्। अभियुक्तनिरुद्धैर्वा कुर्य्याद्ग्रामजनैर्नृपः। ग्रामद्वयान्तरे चैव पान्थशालां प्रकल्पयेत्। नित्यं सम्मार्जितां चैव पालपैश्च सुगोपिताम्। तत्रागतं तु संपृच्छेत् पान्थं शालाधिपः सदा। प्रयातोऽसि कुतः स्थानात् क्व गमिष्यसि तत् वद। ससहायोऽसहायो वा सशस्त्रः किंवाहनः। का जातिः किं कुलं नाम स्थितिः कुत्रास्ति ते चिरम्। इति पृष्ट्वा लिखेद् सायं शस्त्रं तस्य प्रगृह्य च। सावधानमना भूत्वा स्वापं कुर्वीत स्वापयेत्। ततस्तान् गणयित्वा तु शालाद्वारं पिधाय च। संरक्षयेद् यामिकैस्तु प्रभाते तान् प्रबोधयेत्। अज्ञानरक्षणात्सोऽपि गजेभ्यः क्रमतो हरेत्। भृतिं पञ्चार्द्धवक्रा तु रक्षार्थं मार्गशालयोः। शस्त्रं दद्याच्च गणयेत् द्वारसद्माच्च मोचयेत्। कुर्य्यात् सहायं सीमान्तं तेषां ग्रामजनं सदा”।

**नगररन्ध्रकर** पु० नगरस्य क्रौञ्चस्य रन्ध्रं करोति कृ–ट ६त०। कार्त्तिकेये क्रौञ्चदारणशब्दे दृश्यम्। “सनगरं नगररन्ध्रकरौजसः” रघुः।

**नगरादिसन्निवेश** पु० १०६अ० अग्निपु० उक्तप्रकारे नगरादिस्थापने यथा
“ईश्वर उवाच नगरादिकवास्तुञ्च राज्यादिकविवृद्धये। योजनं योजनार्द्धं वा तदर्द्धं स्थानमाश्रयेत्। अभ्यर्च्य वास्तुनगरं प्राकाराद्यन्तु कारयेत्। ईशादित्रिंशत्पदके पूर्वद्वारं च सूर्य्यके। गन्धर्व्यां दक्षिणे स्याद्वारुणे पश्चिमे तथा। सौम्यद्वारं सौम्यपदे कार्य्या हट्टाः सुविस्तराः। येनेभादि सुखं गच्छेत् कुर्य्याद्द्वारं तु षट्करम्। छिन्नकर्णं विभिन्नञ्च चन्द्रार्द्धाभं पुरं न हि। वज्रसूचीमुखं नेष्टं सकृद् द्वित्रिसमागमम्। चापाभं वज्रनागाभं पुरारम्भे हि शान्तिकृत्। प्राच्य विष्णुहरार्कादीन् नत्वा दद्याद् बलिं बली। आग्नेये स्वर्णकारान् पुरस्य विनिवेशयेत्। दक्षिणे नृत्यवृत्तीनां वेश्यास्त्रीणां गृहाणि च। नटानामिक्षुकादीनां कैवर्त्तादेश्च नैर्ऋते। रथानामायुधानाञ्च कृपाणानाञ्च वारुणे। शौण्डिकाः कर्माधिकृता वायव्ये परिकर्मिणः। ब्राह्मणा यतयः सिद्धाः पुण्यवन्तश्च चोत्तरे। फलाद्यादिविक्रयिण ईशाने च वणिग्जनाः। पूर्वतश्च बलाध्यक्षा आग्नेये विविधं बलम्। स्त्रीणामादेशिनो दक्षे काण्डारांश्चैर्नैर्ऋते न्यसेत्। पश्चिमे च महामात्यान् कोषपालांश्च कारुकान्। उत्तरे दण्डनाथांश्च नायकद्विजसङ्कुलान्। पूर्वतः क्षत्रियान् दक्षे वैश्यान् शूद्रांश्च पश्चिमे। दिक्षु वैद्यान् वाजिनश्च बलानि च चतुर्दिशम्। पूर्वेण चरलिङ्गादीन् श्मशानादीनि दक्षिणे। पश्चिमे गोधनाद्यञ्च कृषिकर्त्तॄंस्तथोत्तरे। न्यसेत् म्लेच्छांश्च कोणेषु ग्रामादिषु तथा स्थितिम्। श्रियं वैश्रवणं द्वारि पूर्वे तौ पश्यतां श्रियम्। देवादीनां पश्चिमतः पूर्वा-

स्थानि गृहाणि हि । पूर्वतः पश्चिमास्थानि दक्षिणे चोत्तराननान् । नाकेशविष्णवादिधाम रक्षार्थं नगरस्य च । निर्द्दैवतन्तु नगरग्रामदुर्गगृहादिकम् । भुज्यते तत् पिशाचाद्यै रोगाद्यैः परिभूयते । नगरादि सदैवं हि जयदं भुक्तिमुक्तिदम् । पूर्वायां श्रीगृहं प्रोक्तमाग्नेय्यां वै महानसम् । शयनं दक्षिणस्यान्तु नैर्ऋत्यामायुधाश्रयम् । भोजनं पश्चिमायान्तु वायव्यां धान्यसङ्ग्रहः । उत्तरे द्रव्यसंस्थानमैशान्यां देवतागृहम् । चतुःशालं त्रिशालं वा द्विशालं चैकशालकम् । चतुःशालगृहाणान्तु शालालिन्दकभेदतः । शतद्वयन्तु जायन्ते पञ्चाशत् पञ्च तेष्वपि । त्रिशालानि तु चत्वारि द्विशालानि तु पञ्चधा । एकशालानि चत्वारि एकालिन्दानि वच्मि च । अष्टाविंशदलिन्दानि गृहाणि नगराणि च । चतुर्भिः सप्तभिश्चैव पञ्चपञ्चाशदेव तु । षडलिन्दानि विंशच्च अष्टाभिर्विंशदेव हि । अष्टालिन्दं भवेदेवं नगरादौ गृहादिषु" गृहशब्दे दृश्यम् ।

**नगराध्यक्ष** पु० नगरे राज्ञा नियोजितः अध्यक्षः । राज्ञा नियोजिते नगररक्षार्थम् अधिकारिभेदे "नगरे नगरे वा स्यादेकः सर्वार्थचिन्तकः । उच्चैः स्थाने घोररूपो नक्षत्राणामिव ग्रहः । भवेत्, स तान् परिक्रामेत् सर्वानेव सभासदः" भा०शा० ८७अ० । २नगररक्षके च "उग्रसेनो नरपतिर्वसुदेवश्च भारत ! । निक्षिप्तौ नगराध्यक्षौ शेषाः सर्वे विनिर्गताः" हरिवं० १४७अ० ।

**नगरीकाक** पुंस्त्री नगर्य्याः काक इव । बके त्रिका० । स्त्रियां जातित्वात् ङीष् ।

**नगरोत्थ** त्रि० नगरादुत्तिष्ठति उद्+स्था—क ५त० । १नगरोत्पन्ने २नागरमुस्तकतृणे स्त्री राजनि० । [वा ङीप् ।

**नगरौषधि(धी)** स्त्री नगरजाता औषधिः । कदल्यां शब्दच० ।

**नगाटन** पुंस्त्री नगे वृक्षे अटनमस्य । १वानरे त्रिका० स्त्रियां जातित्वात् ङीष् । ७त० । २पर्वतवृक्षयोरटने गतौ च ।

**नगाधिप** पु० नगानामधिपः । १हिमालयपर्वते जटाधरः । तस्य तथात्वम् नगपतिशब्दे दृश्यम् । २सुमेरौ च नगाधिराजादयोऽप्यत्र । "हिमालयो नाम नगाधिराजः" कुमा० ।

**नगानिका** स्त्री "द्वितुर्य्यके गुरुर्यदा नगानिका भवेत्तदा" इत्युक्तलक्षणे चतुरक्षरपादके छन्दोभेदे ।

**नगारि** पु० ६त० । पर्वतपक्षच्छेदकत्वात् तदरौ इन्द्रे "नगाह्वयो नाम नगारिसूनुः" मा०वि० ३९अ० ।

**नगाश्रय** पु० नगः पर्वतः आश्रयोऽस्य । १हस्तिकन्दवृक्षे राजनि० । २पर्वतवृक्षयोर्वासिनि त्रि० ।

**नगेन्द्र** पु०नग इन्द्र इव श्रेष्ठत्वात् । १हिमालये २पर्वतश्रेष्ठे च "रश्मिष्विवादाय नगेन्द्रसक्ताम्" रघुः "नानाचेष्टैर्जलदललितैर्निर्विशेस्तं नगेन्द्रम्" (कैलासम्) मेघ० ।

**नगौकस्** पु० नगो वृक्षः पर्वतो वा ओकः निवासस्थानमस्य । १खगमात्रे अमरः । २शरभे ३सिंहे च मेदि० । ४काके शब्दच० । ५वृक्षपर्वतयोर्वासिनि त्रि० ।

**नग्न** त्रि०ओनजी व्रीडे कर्त्तरि क्त तस्य नः । १विवस्त्रे २कक्षायवस्त्रधारिणि कौपीनावृते मुक्तकच्छे दिगम्बरे जैनभेदे पु० नग्नभेदमाह भृगुः "विकच्छोऽनुत्तरीयश्च नग्नश्चावस्त्र एव वा । श्रौतं स्मार्त्तं तथा कर्म न नग्नश्चिन्तयेदपि" । "विकच्छः परिधानासंवृतकच्छः" तथा च योगियाज्ञवल्क्यः "परिधानाद्बहिः कक्षा निबद्धा ह्यासुरी भवेत्" स्मृतिः "वामे पृष्ठे तथा नाभौ कच्छत्रयमुदाहृतम् । एभिः कच्छैः परीधत्ते यो विप्रः स शुचिः स्मृतः" बौधायनः "नाभौ धृतञ्च यद्वस्त्रमाच्छादयति जानुनी । अन्तरीयं प्रशस्तं तदाच्छन्नमुभयोस्तयोः" आचारचन्द्रिकायाम् । "द्विकच्छः कच्छशेषश्च मुक्तकच्छस्तथैव च । एकवासा अवासाश्च नग्नः पञ्चविधः स्मृतः" आह्निकत० "न नग्नां स्त्रियमीक्षेत पुरुषं वा कदाचन । न च मूत्रं पुरीषं वा न वै संसृष्टमैथुनम् । नोच्छिष्टं संविशेत् नित्यं न नग्नः स्नानमाचरेत् । न गच्छेन्न पठेद्वापि न चैव स्वशिरः स्पृशेत्" इति कूर्मपु०१५अ० । २पारिभाषिकनग्ने च "येषां कुले न वेदोऽस्ति न शास्त्रं नैव च व्रतम् । ते नग्नाः कीर्त्तिताः सद्भिस्तेषामन्नं विगर्हितम्" इति मार्कण्डपु० सदाचाराध्यायः "ऋग्यजुःसामसंज्ञेयं त्रयी वर्णावृतिर्द्विजः । एतामुज्झति यो मोहात् स नग्नः पातकी स्मृतः । यस्तु संत्यज्य गार्हस्थ्यं वानप्रस्थो न जायते । परिव्राडपि मैत्रेय ! स नग्नः पापकृत्तरः" इति विष्णुपु० ३।१८अ० इत्यादिना परिभाषिताः "नग्नो मुण्डः कपालेन भिक्षार्थं क्षुत्पिपासितः । अन्धः शत्रुकुलं गच्छेत् यः साक्ष्यमनृतं वदेत्" मनुना अनृतसाक्ष्योक्तेः फलं नग्नतादिकमुक्तम् ।

**नग्नङ्करण** न० अनग्नः नग्नः क्रियतेऽनेन कृ—ख्युन् मुम् च । अनग्नस्य नग्नतया करणसाधने ।

**नग्नजित्** पु०राजभेदे "नग्नजिन्नाम कौशल्य आसीद्राजातिधार्मिकः । तस्य सत्याऽभवत् कन्या नाम्ना नाग्नजिती

र्हप !" भाग १०।५८।२१श्लो॰ "प्रीतिमनुभवसि नग्नजितः" माघः २वास्तुग्रन्थकारके विहङ्गे्दे च "नग्नजिता तु चतुर्दशदैर्घ्ये्ण द्राविडं कथितम्" "आद्यं सर्वेशविषयं षोड़शदैर्घ्येण नग्नजित् प्रोक्तम्" वृ॰सं॰५८अ॰। नग्नजितोऽपि राजभेदे "वैदेहाम्बष्ठकम्बोजास्तथा नग्नजितास्तु ये" भा॰क॰७९अ॰। तदपत्ये ब॰व॰। पुंयोगे कैकयीतिवत् तदपत्येऽपि स्त्रियां ङीप्। ३सत्यभामायां कृष्णकलत्रभेदे स्त्री "कालिन्दीं मित्रविन्दाञ्च सत्यां नाग्नजितीं तथा" हरिवं॰१४८अ॰। अपत्ये अण् ङीप्। नाग्नजितीत्यपि सत्यभामायां दर्शितभागवतश्लोके उदा॰।

**नग्नमुषित** त्रि॰ मुषितो नग्नः राजद॰। धनाद्यपहरणेन नग्नतापन्ने "को नग्नमुषितप्रख्यं बन्धु मन्येत राघवम्" भट्टिः।

**नग्नम्भविष्णु** पु॰ अनग्नोनग्नो भवति भू—च्व्यर्थे खिष्णुच् मुम् च। अनग्ने नग्ने भविष्णौ। तत्रार्थे खुकञ् नग्नम्भावुक तत्रार्थे त्रि॰।

**नग्नहु(हू)** पु॰नग्नं ह्वयति करोत्यनेन सेवनात् ह्वे—बा॰कु कू वा। षड्विंशतिद्रव्यकृते सुराबीजे किण्वे अमरमाला "आतिथ्यरूपं मासरं महावीरस्य नग्नहुः" यजु॰१९।१४ "सर्जत्वगादिषड्विंशतिवस्तून्येकीकृतानि नग्नहुः" कर्कः सर्जादीनि च "सर्ज१त्वक्२ त्रिफला५ शुण्ठी६ पुनर्नवा७ चतुर्जातक११पिप्पली१२ गजपिप्पली१३वंशा१४वका१५ इन्द्रवल्ली१६चित्रक१७इन्द्रवारुणी१८अश्वगन्धा१९धान्यक२० यवानी२१जीरकद्वय२३ हरिद्राद्वय२५विल्वद्रयवनीद्वय२६ एकीकृता नग्नहुः" "शष्पतोक्मलाजनग्नहूं दक्षिणद्वारेणाग्निमच्छं नीत्वा" यजु॰ १९।१ मन्त्रे वेददी॰।

**नग्नाट** पु॰ नग्न एवाटति अट—अच् "सह सुपा" स॰। दिगम्बरे मुक्तकच्छे जैनभेदे हलायुधः। स्वार्थे क अट—ण्वुल् वा। नग्नाटक तत्रार्थे हारा॰।

**नग्निका** स्त्री नग्ना+संज्ञायां कन्। अनागतार्त्तवायाम् अजातरजस्कायां स्त्रियाम् अमरः "त्रिंशद्वर्षो दशवर्षां भार्य्यां विन्देत नग्निकाम्" भा॰अनु॰ ४५अ॰।

**नघमार** पु॰ नह—क बा॰ हस्य घः नघं मारयति मृ—णिच—अण्। कुष्ठरोगे "त्रीणि ते कुष्ठ! नामानि नघमारो नघारिषो नघायं पुरुषः" अथ॰१९। ३९।२। एवं नघारिष नघाय इत्यपि तत्रार्थे

**नघुष** पु॰ नहुष+पृषो॰। नहुषशब्दार्थे मेत्रोप॰। [उपपतौ जटा॰

**नङ्ग** पु॰ नं बन्धं गच्छति गम—ड बा॰ मुम् च। जारे

**नचिकेतस्** पु॰ वाजश्रवसः पुत्रे १ऋषिभेदे २अग्नौ च। "उशन् ह वै वाजश्रवसः सर्ववेदसं ददौ तस्य ह नचिकेतानाम पुत्र आस" कठोप॰ "सर्वे सान्ता अदन्ताः स्युः" इत्युक्तेर्नचितोऽप्यत्रार्थे "मृत्युप्रोक्तां नचितोऽथ लब्ध्वा विद्यामेतां योगविधिञ्च कृत्स्नम्" कठोप॰ उपसंहारे। "तवैव नाम्ना प्रथितोऽयमग्निं सृङ्काञ्चेमामनेकरूपां गृहाण"। "एतमग्निं तवैव नाम्ना प्रवक्ष्यन्ति जनासः" इति च कठोप॰ तस्मै मृत्युदत्तद्वितीयवरकथने। "यएवं विद्वांश्चिनुते नचिकेतस्" कठोप॰। स्वार्थे अण् नाचिकेतोऽप्युक्तार्थे "त्रिणाचिकेतस्त्रयमेतद् विदित्वा" कठोप॰ "त्रिणाचिकेतस्त्रिभिरेत्य सन्धिम्" कठोप॰ "छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः" शा॰भा॰ धृतिश्रुतिः। सर्वत्र "पूर्वपदात् संज्ञायामिति" पा॰ णत्वम्। नाचिकेतश्च उद्दालकर्षेः पुत्रः स च पित्रा कारणान्तरात् शप्तो यमलोकं गत्वा पुनरागतः इत्यादिः तत्कथा भा॰आ॰ ७१अ॰ नाचिकेतोपाख्याने दृश्या। तेन वाजश्रवसोनामान्तरमुद्दालक इति गम्यते।

**नचिर** न॰ नशब्देन "सह सुपा" पा॰स॰। शीघ्रकाले "यथा नचिरकालं नो निर्वृतिः स्याच्छ्रिलोकगे" भा॰आ॰९६अ॰ "योगयुक्तो मुनिर्ब्रह्म नचिरेणाधिगच्छति"। "भवामि नचिरात् पार्थ! मय्यावेशितचेतसाम्" गीता। नञा समासे अचिरइत्येव स्यात्। अचिरशब्दे ८२पृ॰दृश्यम्।

**नच्युत** त्रि॰ नशब्देन "सह सुपा" पा॰स॰। च्युतभिन्ने मुग्धबोधकारस्तु "रात्रेः कृति विभाषा" पा॰ ६।३।७२ सूत्रात् विभाषानुवृत्तिं मन्यमानः "नञो नलोपः" ७३ "तस्मात् नुडचि" ७४ इत्यादि सूत्राण्यपि विभाषापराणीति अभिसन्धाय "नञोऽनौ वाऽक्रसौ" सूत्रेण विभाषया अचि अनादेशं क्रसि च अदित्यादेशं विदधौ नभ्राडित्यादि पा॰७५ सूत्रञ्च नञः प्रकृतिवद्भावविधायकं ननलोपादिनियमपरमिति तस्याशयः। पाणिनीयास्तु न विभाषामनुवर्त्तयन्ति नान्तरीयकादौ तु नशब्देनैव समास इति प्रतिपेदिरे।

**नज** व्रीडायां भ्वा॰ आ॰ अक॰ सेट्। नजते अनजिष्ट। ननाज नेजतुः। ईदित् ओदिच्च नग्नः। अषोपदेशत्वात् निमित्ते सति न षत्वं प्रनजति।

**नञ्** अव्य॰न+बा॰अञ् न ञित् ञिदनुबन्धो नञो नलोपनुडर्थः अञितस्तु ननलोपादि नान्तरीयकनैकधेत्यादि" सि॰कौ॰ "नञभावे १निषेधेन स्वरूपार्थे२ऽप्यतिक्रमे३। ईषदर्थे४

च सादृश्ये तद्विरुद्धतदन्ययोः" ।६।७ इति मेदिनी निषेधेन काक्वा निषेधेन स्वरूपार्थे प्रकृतार्थे इत्येकम् तेनाभावेन न पौनरुक्त्यम् । "मध्नामि कौरवशतं समरे न कोपात्" वेणी० । "द्वौ नञौ प्रकृतमर्थं गमयतः" यथा "नाविष्णुः कीर्त्तयेद्विष्णुं नाविष्णुर्विष्णुमर्चयेत् । नाविष्णुः संस्मरेद्विष्णुं नाविष्णुर्विष्णुमाप्नुयात्" इति महाभारतम् । असन्देहार्थं "नञ्" पा० "तत्पुरुषो-नञ्कर्मधारयः" पा० निर्देशाद्वा पदत्वेऽपि न कुत्वम् । "तिङि क्षेपे" पा०अ पचसि जाल्म इत्यादौ असमासेऽपि नञो नलोपः ।

सर्वस्मादिनञर्थनिर्णयादिकं वैयाकरणभूषणसारे यथा "नञ्समासे चापरस्य प्राधान्यात्सर्वनामता । आरोपितत्वं नञ्द्योत्यं नह्यसोऽप्यतिसर्ववत्" । नञ्समासे चापरस्य उत्तरपदार्थस्य प्रधान्यात्सर्वनामता सिध्यतीति शेषः । अत एव आरोपितत्वमेव नञ्द्योत्यमित्यभ्युपेयमिति शेषः । असर्व इत्यादावारोपितः सर्व इत्यर्थे सर्वशब्दस्य प्रधान्याऽबाधात्सर्वनामता सिद्ध्यति । अन्यथा अतिसर्व इत्यत्रेव सा न स्यात् । घटोनास्तीत्यादावभावविषयकबोधे तस्य विशेष्यतायाएव दर्शनात् । अस्मद्रीत्या च स आर्थोबोधो मानसः । तथा चान्यथाऽसर्वकै इत्यादावसिद्धिप्रसङ्गइति । अत्र चारोपितत्वमारोपविषयत्वम् आरोपमात्रं वार्थो विषयत्वं संसर्गइति निष्कर्षः । द्योत्यत्वोक्तिर्निपातानां द्योतकत्वमभिप्रेत्य । घटोनास्ति अब्राह्मण इत्यादावारोपबोधस्य सर्वानुभवविरुद्धत्वात्पक्षान्तरमाह ।"अभावो वा तदर्थोऽस्तु भाष्यस्य हि तदाशयात् । विशेषणं विशेष्योवा न्यायतस्त्ववधार्यताम्" । तदर्थोनञर्थः अर्थपदं द्योत्यवाच्यत्वपक्षयोः साधारण्येन कीर्त्तनाय । भाष्यस्येति । तथाच नञ्सूत्रे महाभाष्यम् । "निवृत्तपदार्थकः" इति । निवृत्तं पदार्थो यस्य "नपुंसके भावे क्तः" पा० इति क्त अभावार्थकइत्यर्थः । यत्तु निवृत्तः पदार्थोयस्मिन्नित्यर्थः सादृश्यादिनाध्यारोपितब्राह्मणत्वाः क्षत्रियादयोऽर्था यस्येत्यर्थः इति कैयटः तन्न आरोपितब्राह्मणत्वस्य क्षत्रियादेरनञ्वाच्यत्वात् । अन्यथा सादृश्यादेरपि वाच्यतापत्तेः । यत्तूक्तं "तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः" इति पठित्वा अब्राह्मणः अपापम् अनश्वः अनुदरा कन्या अपशवोवा अन्ये गोऽश्वेभ्यः अधर्म इत्युदाहरन्ति तत्त्वार्थिकार्थमभिप्रेत्येति स्पष्टमन्यत्र । विशेषणमिति प्रतियोगिनीति शेषः । तथा च सर्वपदे सर्वनामसंज्ञा । "अनेकमन्यपदार्थे" पा० "सेव्यतेऽनेकया सन्ततामाङ्गया" इत्यादावेकशब्दार्थप्राधान्यादेकवचननियमः । अब्राह्मण इत्यादावुत्तरपदार्थप्राधान्यात्तत्पुरुषत्वम्, अत्वं भवसि अनहं भवामीत्यादौ पुरुषवचनाद्विव्यवस्था चोपपद्यते अन्यथा त्वदभावोमदभावइतिवदभावांशे युष्मदस्मदोरन्वयेन युष्मत्सामानाधिकरण्यस्य तिङस्वसत्त्वात्पुरुषव्यवस्था न स्यात् । अस्मन्मते च भेदप्रतियोगित्वदभिन्नाश्रयिका भवनक्रियेत्यन्वयात्सामानाधिकरण्यं नानुपपन्नमिति भावः । विशेष्योवेति प्रतियोगिन इति शेषः । अयं भावः । गौणत्वेऽपि नञ्समासे "एतत्तदोः सुलोपोऽकोरनञ्समासे हलि" पा० ज्ञापकात्सर्वनामसंज्ञा नानुपपन्ना । अतः शिव इत्यत्र सुलोपवारणायानञ्समास इति हि विशेषणम् । नच तत्र तच्छब्दस्य सर्वनामतास्ति गौणत्वात् । अकोरित्यकच्व्यावृत्त्या सर्वनाम्नोरेव तत्र प्रसक्तत्वाभावात्तथाचानञ्समास इति ज्ञापकं सुवचम् । "अनेकमन्यपदार्थे" पा० इत्यादावेकवचनं विशेष्यानुरोधात् । "सुबामन्त्रिते पराङ्गवत् स्वरे" पा० इत्यतोऽनुवर्त्तमानसुब्ग्रहणात् विशेष्यमेकवचनान्तमेव । किञ्चानेकशब्दात् द्विवचनोपादाने बहूनां, बहुवचनोपादाने द्वयोः बहुव्रीहिर्न सिध्येदित्युभयसंग्रहायैकवचनं जात्यभिप्रायमौत्सर्गिकं वा । सेव्यतेऽनेकयेत्यत्रापि योषयेति विशेष्यानुरोधात्त्वेकं सेवनान्वयबोधनाय चैकवचनं न तूत्तरपदार्थप्राधान्यप्रयुक्तम् । अतएव "पतन्त्यनेके जलधेरिवोर्मय" इत्यादिकमपि सूपपादम् । अत्वं भवसीत्यादौ युष्मदस्मदोर्लक्षणा नञ्द्योतकः तथा च भिन्नेन युष्मदर्थेन तिङः सामानाधिकरण्यात्पुरुषव्यवस्था । त्वद्भिन्नाभिन्नाश्रयिका भवनक्रियेति शाब्दबोधः । एवं न त्वं पचसि इत्यत्र त्वदभिन्नाश्रयकपाकानुकूलभावनाभावः घटोनास्तीत्यत्र घटाभिन्नाश्रयकास्तित्वाभाव इति रीत्या बोधः असमस्तनञः क्रियायामेवान्वयात् । स चाभावोऽत्यन्ताभावत्वान्योन्याभावत्वरूपेण शक्यः तत्तद्रूपेण बोधादित्याद्यन्यत्र विस्तरः" ।

शब्दचिन्तामणौ तु अभावएव नञो मुख्यार्थ इति समर्थितम् यथा

"नञ्समासेऽब्राह्मणमानयेत्यत्र पर्युदासे पूर्वपदे नञ्उत्तरपदार्थसम्बन्धिनि क्षत्रिये लक्षणा अघटः पट इत्यादौ प्रसज्यप्रतिषेधार्थे नञि सामानाधिकरण्यादभावस्य लक्षणा न्यासेऽपि न घटः पटइत्यादौ यथा शुक्लपटः इत्यत्र

गुणवल्लक्षणा। न पचतीत्यादौ क्रियासम्बन्धे, भूतले न घटइत्यादौ प्रसज्यप्रतिषेधे नञो मुख्यार्थता, सुबन्तसम्बन्धेऽपि न समासः विभाषाधिकाराद्विकल्पेन समासानुशासनात्। यजतिषु येयजामहं करोति नानुयाजेष्वित्यत्र पर्युदासे नञ्, तेनायमर्थः यजतिषु नानुयाजेषु अनुयाजव्यतिरिक्तेषु येजामहे इति मन्त्रं करोति।

अथ नानुयाजेष्वित्यत्र न पर्युदासे नञ् तदा हि पदद्वयस्यान्यपरत्वं स्यात् समासापत्तिश्च तस्मादनुषङ्गात् करोतिना नञोऽन्वयात् प्रसज्यप्रतिषेधः तेनानुयाजेषु ये यजामहे इति मन्त्रं न करोतीत्यर्थः एवञ्च नानुयाजेष्विति पदद्वयस्य नान्यपरता न वा नञो मुख्यार्थत्यागः। समासाभावे न साधुता चेति चेत् न समासस्यानित्यत्वात् नानुयाजेष्विति वाक्ये पर्युदासे नञ्। न चैवं वाक्यवृत्तिपदस्य नञोऽन्यपरत्वाभावः गौर्वाहिक इत्यादौ वाक्येऽपि गवादिपदस्यान्यपरत्वात्। यदि च प्रसज्यप्रतिषेधे नञ् तदा मन्त्रविधायकतन्निषेधयोर्विरुद्धार्थत्वेन वाक्यभेदापत्तिः तस्मात् प्रतीतैकवाक्यत्वबलात् एकवाक्यत्वे सम्भवति वाक्यभेदस्यान्याय्यत्वात् नञ्पदे लक्षणा कल्प्यते न तु नञ्पदमुख्यार्थानुरोधादेकवाक्यत्वत्यागः न हि पदार्थाऽनुरोधेन वाक्यार्थकल्पना किन्तु वाक्यार्थाऽनुरोधात् पदार्थकल्पना नपदञ्च केवलं नास्त्येव नञ्पदादेव सर्वत्र समासानित्यत्वेन प्रयोगोपपत्तेः अन्यथा प्रसज्यप्रतिषेधे नञ् न स्यादेव नपदेनैव चरितार्थत्वात् समानोना तुल्यपदमेव निषेधवाचकं समासवाक्यभेदेन नञो द्वैविध्यात्तु तथाभिधानम्"।

अभावमात्रं नञोऽर्थः इति नञ्वादे शिरोमणिनोक्तं यथा

(१) "संसर्गाभावोऽन्योऽन्याभावश्च नञोऽर्थः। [त्तिवशम्

(२) तत्र चान्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वं व्युत्पत्ति-

(३) नीलघटवति घटो नास्तीति नीलो घटो न घट इत्याद्यव्यवहारात् इह पीतघटवति न नीलः घटः, पीतो घटो न नीलघट इत्यादि व्यवहाराच्च।

(४) प्रतियोग्यभावान्वयौ च तुल्ययोगक्षेमौ तेन यत्पदोपस्थापितस्य प्रतियोगिनोऽनुयोगिन्याधाराधेयसम्बन्धेनैवान्वयबोधः तत्र तत्संसर्गाभावस्यापि। यथा पचति चैत्रो न पचति चैत्रः। चैत्रस्येदं नेदं चैत्रस्य इत्यादि।

(५) तिङाद्यर्थस्य कृत्यादेः प्रथमान्तपदोपस्थापिते एव तत्र यथैव, तदभावस्यापि तथा।

(६) षष्ठ्यादेश्च चैत्रादिनिरूपितं स्वत्वादिकमर्थो न तन्निष्ठं स्वामित्वादि तस्य धनाद्यवृत्तित्वेन मैत्रीयेऽपि धने नेदं चैत्रस्येति प्रसङ्गात् निरूपकत्वादेः सम्बन्धस्य प्रतियोगितानवच्छेदकत्वादेषा दिक्।

(७) यत्र चाधाराधेयभावो न सम्बन्धमर्यादालभ्यस्तत्रानुयोगिनि सप्तम्यपेक्षा। यथा भूतले घटो न भूतले घट इत्यादि तत्र च तात्पर्यवशात् क्वचित् भूतलादौ घटाभावः क्वचिच्च घटादौ भूतलवृत्तित्वाभावः प्रतीयते।

(८) अतएव पृथिव्यां गन्धो न जले इत्यादौ प्रतीतेरेकविशेष्यकत्वानुभवः।

(९) केचित्तु सर्वत्र विशेष्ये विशेषणस्याभावो नञा प्रत्याय्यते अतएव भूतले घटो नास्तीत्यादौ वचनैक्यनियमः इति प्राहुः।

(१०) तेन जातौ सत्तेत्यत्र गतिश्चिन्तनीया जातिसमवेतत्वस्याप्रसिद्धत्वात् सम्बन्धान्तरेण जातिवृत्तित्वस्य सत्तायामपि सत्त्वात्। [इत्यपि कश्चित्।

(११) सप्तम्यर्थान्विताभावस्य विशेषणतया प्रतियोगिन्यन्वयः यत्र विशेषणविशेष्ययोरभेदेनान्वयो व्युत्पन्नस्तत्रान्योन्याभावो नञा बोध्यते। यथायं घटो नीलो नायं घटो नील इति। तत्र च विशेषणविशेष्ययोः समानविभक्तिकत्वं निरुद्धविभक्तिकत्वविरहो वा तन्त्रम्।

(१२) अतएव यजतिषु ये यजामहं कुर्य्यान्नानुयाजेष्वित्यादौ एकवाक्यत्वानुरोधात् [भेदो बोध्यते।

(१३) ये यजामहमित्यादेरनुषङ्गगौरवाच्च यजतिष्वनुयाज-

(१४) विशेषणविभक्तिस्तु प्रयोगसाधुत्वार्था।

(१५) नामार्थयोर्भेदेनान्वयबोध एव प्रकारीभूतविभक्त्यर्थोपस्थितेस्तन्त्रत्वात् लाघवेन तयोरन्वयमात्र एव तन्त्रत्वम्।

(१६) विशेषणविभक्तिस्त्वभेदार्थिका। [मिति मते—

(१७) नीलोत्पलं चित्रगुरित्यादौ लुप्ताया विभक्तेरनुसन्धान-

(१८) न राम इत्यत्र षष्ठ्यर्थस्य स्वत्वस्यैवात्रापि सप्तम्यर्थस्य तयोरभेदस्याभावो बोध्यताम्।

(१९) यत्तु करणनिषेधेविकल्पापत्तेः भेदपरतेति तदसत्

(२०) विशेषनिषेधे सामान्यविधेस्तदितरपरतायाः ब्राह्मणेभ्यो दधि दातव्यं न कौण्डिन्याय दातव्यमित्यादौ व्युत्पत्तिसिद्धत्वेन विकल्पानवकाशात्।

(२१) न च तत्रापि कौण्डिन्यभेदो बोध्यः कौण्डिन्यपदस्य विरुद्धैकवचनावरुद्धत्वात्।

(२२) न खलु महतो राज्ञो न महतो राज्ञ इत्यत्रेव महतां राज्ञो न महतां राज्ञ इत्यत्रापि राजनि महद-

भेदाभेदौ प्रतीयेते एकोनत्रिंशदित्यादिवत् कथञ्चित् तत्समर्थनेऽपि द्वितीयस्य दातव्यमित्यस्यानन्वयप्रसङ्गात् ।

(२३) अतएव रात्रौ श्राद्धं न कुर्वीतेत्यादौ करणनिषेधेऽपि न विकल्पावकाशः ।

(२४) न हि तत्रापि रात्रीतरपरता,

(२५) रात्रिभिन्ने श्राद्धविधावपि अमावस्यायां पितृभ्यो दद्यादित्यादौ रात्रौ श्राद्धप्रसक्तेर्दुर्वारत्वात् ।

(२६) न खलु क्रियारहितमपि श्राद्धविधायकं वाक्यान्तरमपि येनेदं तेन सममेकवाक्यतामासादयेत् ।

(२७) नापीदं नानुयाजेष्विति वत् पृथक् क्रियारहितम् ।

(२८) अथ रात्रौ श्राद्धस्य प्रसक्तौ विकल्पापत्तिः अप्रसक्तौ कथं निषेधः प्रसक्तं हि प्रतिषिध्यत इति चेत् साधीयानयं मन्त्रपाठः ह्रदे दहनो नास्तीत्यादौ शाब्दबोधेऽपि परप्रयत्नेन तत्र दहनप्रसक्तिरुपादीयेत ।

(२९) निषेधविधेर्वैयर्थ्यमिति चेत् तात्पर्य्यानवबोधात् रात्रिश्राद्धकरणवारणस्य तदर्थत्वात् । [विकल्पः ।

(३०) एकविषयतया पुनरनन्यमत्या षोड़शिग्रहणाग्रहणयो-

(३१) तत्र च षोड़शिग्रहणं नेष्टसाधनमित्यादिकं नार्थः ग्रहणविधिविरोधात् अपि तु षोडशिग्रहणाभाव इष्टसाधनमित्यादि । [भक्त्यर्थान्वयः ।

(३२) व्युत्पन्नस्य नञ्समभिव्याहृतधात्वर्थस्याभावेऽपि वि-

(३३) अतएव प्राभाकराः न कलञ्जं भक्षयेदिति श्रुतेः कलञ्जभक्षणाभावविषयकं कार्य्यमर्थमाहुः ।

(३४) नियमस्तु तात्पर्य्यवशात् । [समविरहम् ।

(३५) तुल्यफलाजनकत्वेऽपि चाङ्गस्य परमापूर्वरूपेष्टसाधन-

(३६) ग्रहणविध्यन्यथानुपपत्त्या च षोड़शिग्रहणादतिशयितं परमापूर्वं तस्माच्चातिशयितं तुल्यं फलं कल्प्यते इति सर्वसमञ्जसम् ।

(३७) प्रतियोग्यनुयोगिभावः प्रतियोग्यनुयोगिरूपाभावाधिकरणयो राधाराधेयभावस्य सम्बन्धविधया भासते ।

(३८) "निपातातिरिक्तस्थल एव प्रातिपदिकार्थयोर्भेदेनान्वये प्रकारीभूतविभक्त्यर्थोपस्थितेस्तन्त्रत्वात् ।

(३९) अतएव इवाद्यर्थान्वये न षष्ठ्याद्यपेक्षा

(४०) अघटं भूतलम् असमोदेश इत्यादौ समासे सामानाधिकरण्याद्यनुरोधात् नञोऽभाववत्परता ।

(४१) केचित्तु प्रतियोगिपदोत्तरस्य सुपः प्रतियोगित्वम्

(४२) अनुयोगित्वं वा नञुत्तरस्य चाधिकरत्वं वार्थः

(४३) नञो वाऽभाववति लक्षणा ।

(४४) विभक्त्यर्थानुयोगिसमानविभक्तिकार्थयोरन्योन्याभावसंसर्गाभावबोधने नञोऽसामर्थ्यम् ।

(४५) तेन न पचति न राम इत्यादौ कृत्यादेरन्योऽन्याभावो भूतलं न घट इत्यादौ घटादेः संसर्गाभावो न प्रतीयते इत्याहुः" ।

अस्य गदाधरादिव्याख्यातस्सम्मतोऽयमर्थः । अभावत्वम् अन्योन्याभावत्वञ्च नञ्पदशक्यतावच्छेदकम् । अभावत्वं च ध्वंसादिसाधारणमखण्डोपाधिः एवमन्योन्याभावत्वमपि तदेतत् गदाधरादिभिः समर्थितं यथा

(१) अथ घटो नास्तीत्यादिवाक्याद् घटत्वादिरूपसामान्यधर्मावच्छिन्नप्रतियोगिताकत्वबोधने तच्छून्ययोर्ध्वंसप्रागभावयोरन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वविरहेणाप्रत्ययाद् ध्वंसप्रागभावसाधारण्यं नञ्पदशक्तेर्न सम्भवतीति चेत् न ध्वंसप्रागभावयोरत्यन्ताभावविरोधितामते अन्तरा व्यामेरक्तं रूपं नास्तीत्यादिव्यवहारानुरोधेन ध्वंसप्रागभावयोरपि समयविशेषावच्छेदेन सामान्यावच्छिन्नप्रतियोगिकत्वोपगमस्यावश्यकत्वात् तयोरपि नञा प्रतिपादनात् व्युत्पत्तिविरोधेन तयोस्तेनाप्रतिपादनेऽपि सदातनत्वघटितात्यन्ताभावत्वापेक्षया ध्वंसादिसाधारणाभावत्वस्य लाघवेन सदातनभावरूपाभावाभावसाधारण्यानुरोधेन प्रवृत्तिनिमित्ततया तयोरपि नञ्पदवाच्यत्वानपायात् । न चात्यन्ताभावत्वमखण्डधर्मान्तरं अनुयोगिताविशेषरूपं वा न सदातनत्वघटितमिति न गौरवादिकमिति वाच्यं तादृशधर्मान्तरे मानाभावात् तद्व्यक्तिर्नास्तीत्यादि वाक्यात्तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकयोर्ध्वंसप्रागभावयोर्बोधनाच्च ध्वंसप्रागभावसाधारणशक्तेरावश्यकत्वात् । न च ध्वंसप्रागभावयोरत्यन्ताभावविरोधस्याप्रामाणिकतया तद्व्यक्तित्वावच्छिन्नध्वंसाद्यधिकरणे तादृशात्यन्ताभावसत्त्वात् स एव उक्तवाक्यात् प्रतीयत इति वाच्यं ध्वंसाद्यधिकरणे तादृशात्यन्ताभावस्याप्रामाणिकत्वात्" गदाधरः ।

"एवम् अन्योन्याभावत्वमप्यखण्डोपाधिः । न तु तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभाववत्त्वम् । तत्तत्संयोगितादात्म्यस्य संयोगरूपतया संयोगिनोऽत्यन्ताभावेऽतिव्याप्तेः । सम्बन्धविधया तादात्म्यनिष्ठावच्छेदकतायानिवेशेऽपि संयोगसम्बन्धावच्छिन्नसंयोगावच्छिन्नप्रतियोगिताकाभावेऽतिव्याप्तेर्दुष्परिहरणादिति वस्तुतस्तु अन्योन्याभावस्य प्रतियोगितावच्छेदकसम्बन्धे मानाभावे-

न तादात्म्यस्य तत्प्रतियोगितावच्छेदकसम्बन्धत्वाभावात्तादृशलक्षणमसम्भवदुक्तिकमेव। न चैवमभावमात्रस्यैव प्रतियोगितावच्छेदकसम्बन्धसद्भावे प्रमाणाभाव इति वाच्यम्। अत्यन्ताभावस्य प्रतियोगितावच्छेदकसम्बन्धानङ्गीकारे बाधबुद्धिप्रतिबध्यतावच्छेदकनिर्वचनानुपपत्तेः। तथाहि घटाभावप्रकारकज्ञानस्य प्रतिबध्यतावच्छेदकं हि न घटप्रकारकज्ञानत्वम्। घटाभाववत्ताज्ञानकाले कदाचित् केनचित् सम्बन्धेन घटप्रकारकज्ञानमुत्पद्यते केनचित् सम्बन्धेन तन्नेति नियमानुपपत्तेस्तथा च तादृशनियमानुरोधेन तेन सम्बन्धेन तत्प्रकारकबुद्धिं प्रति तत्सम्बन्धावच्छिन्नतन्निष्ठप्रतियोगिताकाभाववत्तानिर्णयस्य प्रतिबन्धकताया अवश्यवक्तव्यत्वेनात्यन्ताभावप्रतियोगितावच्छेदकसम्बन्धसिद्धिः। न चैवमन्योन्याभावस्यापि तत्सिद्धौ युक्तिस्तुल्येति वाच्यम्। घटत्वप्रकारकबुद्धिं प्रति घटान्योन्याभाववत्तानिर्णयस्यैव विरोधित्वकल्पनेन सामञ्जस्ये विनान्योन्याभावप्रतियोगितावच्छेदकसम्बन्धं प्रतिबध्यप्रतिबन्धकभावानुपपत्तिरूपबाधकाभावेन युक्तेरतौल्यात्। ननूभयधर्मस्य नञ्शक्यतावच्छेदकत्वे गौरवेण लाघवादभावत्वरूपैकधर्मस्यैव तदवच्छेदकत्वस्वीकार उचित इति अन्योन्याभावत्वादि धर्मोऽखण्डक इति चेन्न। घटो नास्तीत्यादौ संसर्गाभावत्वप्रकारकबोधानुभवानुरोधेन घटः पटो नेत्यादौ त्वन्योन्याभावत्वप्रकारकबोधानुभवानुरोधेन च तथोक्तत्वात्" रघुदेवः।

(२) तत्र चेति तत्र नञर्थे संसर्गाभावे भेदे च अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वमिति येन रूपेण प्रतियोगिनोऽभावांशे विशेषणता तद्धर्मपर्याप्तप्रयोगितावच्छेदकताकत्वम्। व्युत्पत्तिबललभ्यमिति अपदार्थोऽपि तद्रूपावच्छिन्नोपस्थापकशब्दविशेषसमभिव्याहाररूपाकाङ्क्षाबलात् प्रतियोगिसंसर्गविधया लभ्यमित्यर्थः। घटत्वाद्यवच्छिन्नप्रतियोगिताकत्वञ्च घटत्वाद्यवच्छिन्नप्रतियोगितानिरूपितत्वविशेषिता अनुयोगिता सा च घटादिरूपविशेषणप्रतियोगिकेति तत्सम्बन्धतया भासते नञ्पदार्थतावच्छेदकानुयोगितायां घटादेरन्वयोपगमे तु तत्र तादृशप्रतियोगितानिरूपितत्वमेव सम्बन्धः घटादिनिष्ठप्रतियोगिताप्रतियोगिकनिरूप्यत्वं घटादिरूपप्रतियोगिप्रतियोगिकमपि इति तस्य घटादिसम्बन्धता" गदाधरः।

(३) "अन्वयितावच्छेदकावच्छिन्नत्वाविशेषितायाः प्रतियोगितायाः नञ्पदार्थे संसर्गाभावे प्रतियोगिसम्बन्धत्वोपगमे बाधकं दर्शयति नीलघटवतीति न घट इति इत्याद्यव्यवहारात् इत्यनेन सम्बध्यते। तादृश्याः प्रतियोगिताया नञर्थे भेदे प्रतियोगिसम्बन्धत्वे बाधकमाह नीलो घट इति अव्यवहारादिति व्यवहारस्य प्रमाणत्वाभावादित्यर्थः शुद्धप्रतियोगितायाश्च सम्बन्धत्वे अबाधितविशेषान्तराभावबोधकतया तत्तद्वाक्यानां प्रामाण्यस्य दुर्वारतया व्युत्पन्नैरपि तथा प्रयुज्येतेति भावः। तद्रूपविशिष्टप्रतियोगिविशेषिते धर्मिणि शुद्धतद्रूपविशिष्टप्रतियोगिविशेषितधर्मिणि शुद्धतद्रूपविशिष्टप्रतियोगिविशेषितसंसर्गाभावस्य तद्रूपविशिष्टे प्रतियोगिनि शुद्धतद्रूपावच्छिन्नप्रतियोगिविशेषितभेदस्य च बोधने नञोऽसामर्थ्योपगमेन दर्शितप्रयोगवारणसम्भवेऽपि वस्तुगत्या नीलघटवति नीलघटादौ "अत्र न घटः इत्यादिप्रयोगस्य प्रामाण्यप्रसङ्गो दुर्वार इति बोध्यम्" गदाधरः।

(४) "एवं भूतले न घट इत्यादौ भूतलादौ घटसंसर्गाभावाधिकरणतावद् घटभेदाधिकरणता कुतो न प्रतीयते इत्यत आह प्रतियोग्यभावान्वयौ चेति अधिकरणे इत्यादिः अभावपदं संसर्गाभावपरं तथा चाधिकरणे यादृशपदोपस्थाप्यस्य प्रतियोगिनः प्रतियोगितावच्छेदकसम्बन्धस्य भानं यादृशस्य अधिकरणबोधकं यादृशपदसमभिव्याहारसापेक्षं च तादृशपदोपस्थाप्यप्रतियोग्यन्विताभावस्यापि आधाराधेयभावरूपसम्बन्धस्य भानं तादृशम् अधिकरणबोधकं तादृशबोधकपदसापेक्षञ्चेत्यर्थः। अनुयोगिनि यादृशपदोपस्थाप्ये इत्यादिः आधाराधेयभावसम्बन्धेनान्वय इति आधाराधेयभावनियामकप्रतियोगितावच्छेदकसम्बन्धस्य संयोगादेः संसर्गमर्यादया भानमित्यर्थः तत्संसर्गाभावस्यापि तथेति। तत्पदोपस्थाप्यप्रतियोगिविशेषिततत्सम्बन्धावच्छिन्नाभावस्यापि आधारतासम्बन्धोऽपि तादृशपदोपस्थाप्ये अनुयोगिनि सम्बन्धमर्यादया भासते इत्यर्थः" गदाधरः।

(५) "तिङाद्यर्थस्येति नञोऽसत्त्व इत्यादिः आदिपदात् सुपपरिग्रहः कृत्यादेरित्यादिना तिङर्थाश्रयत्वादेः सुबर्थस्वत्वादेश्च परिग्रहः। प्रथमान्तपदोपस्थाप्यस्य विशेष्यतानियामकत्वाभिधानं तिङ्प्रत्यये चैत्रस्य धनं पश्यतीत्यादौ द्वितीयाद्यन्तपदोपस्थाप्येनापि धनादिना षष्ठ्याद्यर्थस्वत्वान्वयात् सुबर्थविशेष्यतयाऽन्वये प्रथमान्तपदोपस्थाप्यत्वस्यानियामकत्वात् सुपश्च कारकपदोत्तरस्य योऽर्थस्तद्विशे-

प्रत्वे धातूपस्थाप्यत्वं नियामकं शेषषष्ठ्यर्थस्य विशेष्यत्वे च प्रातिपदिकोपस्थाप्यत्वं प्रत्ययान्योपस्थाप्यत्वं वा, "गुरु विप्रतपस्विदुर्गतानां प्रतिकुर्वीत" इत्यादौ प्रतीकारादिक्रियायामपि तदन्वयात् । उपपदविभक्तयश्च यद्यत्पदयोगे याया विहितास्तत्तदर्थविशेषणत्वे तत्तत्पदोपस्थाप्यत्वं, यथा चैत्रादन्य इत्यादावन्यादिपदप्रयोगेऽनुशिष्टानां पञ्चम्यादीनामर्थस्य प्रतियोगित्वादेर्विशेष्यत्वे अन्यत्वादिनिष्ठे अन्यादिपदोपस्थाप्यत्वं, (तन्नम्) तत्रेत्यनुयोगिनीत्यर्थः तथा आधाराधेयतासम्बन्धेनान्वयः इत्यर्थः । तदभावस्यापि तिङाद्युपस्थापितकृत्याद्यभावस्यापि तत्र तथा प्रथमाद्यन्तपदोपस्थाप्ये आधाराधेयभावसम्बन्धेनान्वय इत्यर्थः । न पचति चैत्रेत्यादितश्चैत्रादौ नञर्थस्याभावस्य विशेषणत्वेनानन्वयात् चैत्रेण पाककृतिरित्यत्रेव चैत्रेण पचतीत्यादितश्चैत्रादिवृत्तित्वप्रकारेण पाककृत्याद्यभावस्याबोधाच्चेति भावः" गदाधरः ।

(६) "चैत्रस्य धनमित्यादौ षष्ठ्याद्यर्थः स्वामित्वादिकं तत्र प्रकृत्यर्थचैत्रादिविशेषणतया भासते स्वामित्वप्रकारेण चैत्रादेरेव धनादौ स्वत्वादिसम्बन्धेनान्वयः विभक्त्यर्थविशेष्यतापन्नप्रातिपदिकार्थस्य प्रातिपदिकार्थे साक्षादपि भेदान्वयबोधोपगमात् नामार्थयोर्भेदेनान्वये प्रकारीभूतविभक्त्यर्थोपस्थितेस्तन्त्रत्वात् । अथ वा षष्ठ्याद्यर्थः स्वामित्वादिकं प्रकृत्यर्थविशेषणतयैव भासते धनादेस्तदनाश्रयत्वेऽपि तन्निरूपकतया निरूपकतासम्बन्धेन तत्र तदन्वय इति प्राचाम्मतं दूषयति षष्ठ्यादेश्चेति आदिपदात् द्वितीयातृतीयापरिग्रहः । चैत्रादिनिरूपितमिति । स्वामित्वादिकमित्यादिना कर्मत्वक्रियाजन्यत्वादिपरिग्रहः निरूपितत्वसम्बन्धेन चैत्रादिरूपप्रकृत्यर्थान्वयीत्यर्थः । तन्निष्ठमिति आश्रयतासम्बन्धेन विशेषणतया चैत्राद्यन्वयि आधेयतासम्बन्धेन चैत्रादिरूपविशेषणेनान्वयि वेत्यर्थः । स्वामित्वमित्यादिना कर्तृत्वकर्मत्वादिपरिग्रहः । तस्येति चैत्रस्य चैत्रनिष्ठस्वामित्वादेश्चेत्यर्थः । धनाद्यवृत्तित्वेनेति । वृत्त्यनियामकस्वत्वनिरूपकत्वादिसम्बन्धेन धनादिसम्बन्धत्वेऽपि धनाद्यवृत्तितयेत्यर्थः । धनादौ आश्रयतासम्बन्धेन चैत्रादेस्तन्निष्ठस्वामित्वादेश्चाभावसत्त्वेनेति शेषः इति प्रसङ्गात् भवन्मते अबाधिततादृशचैत्राद्यभावबोधकस्य इत्यादिप्रयोगस्य प्रामाण्यप्रसङ्गात् । ननु स्वामित्वादेः प्रकृत्यर्थविशेषणतापत्ते स्वामित्वादेर्निरूपकतासम्बन्धावच्छिन्नाभावस्यैव प्रकृत्यर्थविशेषणतापक्षे तद्विशिष्टप्रकृत्यर्थचैत्रादेः स्वत्वादिसम्बन्धावच्छिन्नाभावस्य नञा प्रत्यायनोपगमात् तत्रातिप्रसङ्गावकाशः तादृशाभावस्य धनादौ बाधात् इत्यत आह निरूपकत्वादेरिति आदिपदात् स्वत्वादिपरिग्रहः । प्रतियोगितानवच्छेदकत्वादिति वृत्त्यनियामकतयेत्यादिः । वृत्त्यनियामकसम्बन्धावच्छिन्नसंसर्गाभावस्याप्रामाणिकत्वात् येन सम्बन्धेनायमिह इतिप्रत्ययस्तत्सम्बन्धमादायैव नायमिति प्रत्ययः, निरूपकतासम्बन्धेनात्र स्वामित्वमिति प्रत्ययाभावात् तेन सम्बन्धेन नात्र स्वामित्वमितिप्रत्ययस्याभावः । अतएव धनमात्रे स्वामित्वमात्रस्याश्रयतासम्बन्धावच्छिन्नाभावसत्त्वेन चैत्रीयधने चैत्रनिष्ठस्वामित्वमिति धनेषु चैत्रीयत्वस्य स्वामित्वे च चैत्रनिष्ठत्वस्य व्यावर्त्तकतया न व्यवह्रियते अपि तु धने न स्वामित्वमित्येवम् अन्यथा निरूपकतासम्बन्धावच्छिन्नस्वामित्वाभावतात्पर्येण तथा व्यवहारस्य दुर्वारतापत्तेः । अतएव कृतिमत्त्वरूपकर्तृत्वसम्बन्धस्य वृत्त्यनियामकतया न पचतीत्यत्र तत्सम्बन्धावच्छिन्नक्रियाभावबोधासम्भवेन पचतीत्यादौ कृतिमत्त्वसम्बन्धेन पाकादेः कर्त्रर्थान्वयबोधे नोपजगाम । उपजगाम तु जानातीत्यादावाश्रयतासम्बन्धेन ज्ञानादेरिति भावः" गदाधरः ।

(७) "यत्र चेति ययोरित्यर्थः । न संसर्गमर्यादया अन्य इति भेदान्वये निराकृतवेत्यादिः तादृशौ च प्रातिपदिकाद्यर्थौ तत्रेति तत्पदार्थे तत्पदार्थसंसर्गाभावबोधे अनुयोगिनि अनुयोगिवाचकपदोत्तरं सप्तम्यपेक्षेति । तत्राभावसम्बन्धस्याधारतारूपस्य संसर्गत्वासम्भवेन तदर्थकविभक्तिं विना तद्भानासम्भवादिति भावः । ननु सप्तम्यन्तभूतलादिपदेन नञर्थाभावे आश्रयतासम्बन्धेन भूतलादिवृत्तित्वबोधवत् तादृशपदेनेदं चैत्रस्येत्यादौ षष्ठ्याद्यन्तपदेनेव प्रथमान्तार्थविशेषणक नञर्थाभावेऽपि कदाचित् प्रतियोगितया स्वार्थान्वयबोधस्य जननात् घटाद्यभावो भूतले, भूतलवृत्तित्वाभाववान् घट इति द्विविध एव भूतले न घट इत्यादिवाक्यजन्यबोधः । एवञ्च तादृशवाक्यात् कदाचित् प्रथमबोधः कदाचिच्च द्वितीय इत्यत्र किं नियामकमित्याकाङ्क्षायां तात्पर्यभेदस्य तन्नियमकत्वमित्याह तत्र चेति तत्र भूतले न घट इत्यादिस्थले" गदा० ।

(८) "ननु सर्वत्र सप्तम्यन्तार्थस्याभावनिष्ठतयैवान्वयोऽस्तु न तु कदाचिदपि तत्प्रतियोगितया विनिगमकस्याप्रतीभविषयतीत्यत आह अतएवेति कदाचित् सप्त-

स्वन्तार्थप्रतियोगिकाभावस्यापि नञा बोधनादेवेत्यर्थः । पृथिव्यां गन्धो न जले इत्यादौ इत्यादिद्विविधवाक्ये प्रतीतेरेकविशेष्यकत्वानुभवः गन्धाद्येकविशेष्यकप्रतीतिजनकत्वानुभवः न जले इत्यतो गन्धाभावस्यैव जलवृत्तित्वबोधोपगमे तत्प्रतीतावभावस्यैव विशेष्यतया पृथिव्यां गन्ध इत्यतश्च तद्विशेष्यकबोधानुत्पत्त्या तयोरेकविशेष्यक बोधजनकत्वानुभवो विरुध्यतेति भावः" गदा०।

(९) "नञर्थाभावनिष्ठाधेयताबोधकत्वं सप्तम्याः खण्डयतां मतमुपन्यस्यति केचित्त्विति विशेष्ये विशेषणस्याभाव इति नञोऽसत्त्वे यत्पदार्थे यत्पदार्थो विशेषणतया यत्र भासते तत्र नञा तत्पदार्थे तत्पदार्थाभावो विशेषणतया प्रतीयते इत्यर्थः । तथा च भूतले घट इत्यतो घटे भूतलवृत्तित्वस्य विशेषणतया बोधात् भूतले न घट इत्यतोऽपि घटे भूतलवृत्तित्वाभाव एव विशेषणतया प्रतीयते न तु घटाभावे भूतलवृत्तित्वम् एकाकारवाक्यस्य द्विविधबोधजनकत्वोपगमे नञ्पदे सप्तम्यन्तभूतलादिपदसमभिव्याहारज्ञानस्य द्विविधकारणत्वकल्पनापत्तेः । उभयसाधारणतत्कार्यतावच्छेदकैक्यस्य सम्भवेऽपि तादृशवाक्यधर्मिकद्विविधवाक्यार्थतात्पर्यज्ञानस्य पृथक्कारणतया तत्कारणताधिक्यस्य दुर्वारत्वादिति भावः । एतन्मते युक्त्यन्तरमाह अतएवेति घटो नास्तीत्यादावित्येत्यादिना घटौ न स्तः घटा न सन्तीत्यादिपरिग्रहः वचनैक्यनियम इति विशेष्यविशेषणपदयोः समानवचनत्वनियमेन सुप्तिङोर्वचनसाम्ये नियम इत्यर्थः भूतले घटोऽस्तीत्यादौ भूतलाद्यस्तित्वविशेष्यत्वे तदैक्येन तद्घटोऽस्तीत्यादौ भावस्य भूतलाद्यस्तित्वविशेष्यत्वे घटौ न स्त इत्यादौ द्विवचनाद्यनुपपत्तेरिति भावः" गदाधरः ।

(१०) "गतिश्चिन्तनीया सत्ताशब्दस्य सत्तासमवाये सत्ताप्रतियोगिकत्वविशिष्टसमवायानुयोगित्वे वा लक्षणया उपपत्तिप्रकारश्चिन्तनीयः । यथाश्रुतार्थेऽनुपपत्तिं दर्शयति जातीति अप्रसिद्धेरिति तदभावस्य सत्तायां नञा बोधयितुमशक्यत्वादिति शेषः । इदञ्चात्र समवायेन वृत्तेः सप्तम्यन्तार्थत्वे बोध्यम् । वृत्तिसामान्यस्य सप्तम्यर्थतोपगमेऽप्रसिद्धिविरहेण तदुपपत्तेः बाधमाह सम्बन्धान्तरेणेति एकार्थसमवायेनेत्यर्थः" गदाधरः ।

(११) "मतान्तरमाह सप्तम्यर्थेति भूतले घटो नास्ति, जातौ न सत्तास्तीत्यादौ भूतलजात्याद्यस्तित्वरूपसप्तमीसमभिव्याहृतक्रियापदपर्यन्तार्थस्याश्रयतयान्वयी योऽभावः प्रतियोगितासम्बन्धेन प्रकारीभवतस्तस्य विशेष्यतया प्रतियोगी भासत इत्यर्थः एवञ्च परम्परया क्रियाविशेष्यप्रतियोगिवाचकघटादिसमानवचनत्वं क्रियापदस्य निर्वहतीति द्रष्टव्यम् । येन रूपेण प्रतियोगिनो विशेषणत्वं तद्रूपावच्छिन्नविशेषितैव प्रतियोगिता सम्बन्धतया भासते अतो घटादिमति विशेषाभावमादायात्र घटो नास्तीत्यादयो व्यवहाराः" गदाधरः ।

(१२) "यजति ये यजामहे नानुयाजेष्वित्यादौ अनुयाजाख्ययागविशेषभिन्नयागेषु ये यजामहे पदवन्तं मन्त्रं करोति उच्चारयतीत्याकारकबोध उत्पद्यत इत्यर्थः कारणसत्त्वे कार्य्योत्पादस्यावश्यं भावादिति भावः । अत्र नञा निषेधबोधने बाधकमाह एकवाक्यत्वेति एकविधेयार्थकत्वानुरोधादित्यर्थः । अत्र नञाऽन्योन्याभावबोधनेऽनुयाजभिन्नेषु यागेषु ये यजामहेपदवन्मन्त्रकरणरूपैकार्थविधानसम्भवेनैकविधेयार्थकत्वरूपैकवाक्यत्वं सम्भवति तत्र नञा निषेधबोधने च नैवं यागेषु ये यजामहेपदवन्मन्त्रविधानं अनुयाजेषु तन्निषेधविधानमिति विधेयीभूतार्थद्वैविध्यात् एकविधेयीभूतैकार्थत्वस्य अभावे नानाविधेयार्थकत्वरूपविभिन्नवाक्यत्वकल्पनाया अन्याय्यत्वेन तत्रेष्टापत्तिकरणस्याशक्यत्वादिति भावः" रघुदेवः ।

(१३) "तत्र च नञा निषेधबोधने दूषणान्तरमाह ये यजामहमित्यादेरित्यादि । तत्रादिना करोतेः क्रियात्वेन कारकबोधानुरोधात् करोतिपदस्य ये यजामहमिति पदस्य चानुषङ्गकल्पने गौरवाच्चेति । तथा चात्र नञा निषेधबोधने यागेषु ये यजामहं करोति, नानुयाजेषु येयजामहं करोतीत्यर्थः । अनुषङ्गकल्पनं विना तु तादृशबोधो न सम्भवति । सकृदुच्चरितेत्यादि व्युत्पत्तिभङ्गप्रसङ्गादिति भावः" रघुदेवः ।

(१४) "नन्वत्र नञा निषेधबोधने नानुयाजेष्वित्यत्र सप्तम्यर्थान्वयो भवति अनुयाजाधिकरणतादृशनिषेधस्य बोधात् । अन्योन्याभावबोधने च न तथेति सप्तम्यर्थानन्वयभयेन पूर्वोक्तदोषद्वयमभ्युपेत्यात्र नञा निषेधबोधकत्वमवश्यमभ्युपेयमित्यत आह विशेषणविभक्तिस्त्विति तथा चात्र नञान्योन्यभावबोधनेऽपि विशेषणविभक्तेः प्रयोगसाधुत्वरूपप्रयोजनसम्भवेन न नैरर्थक्यमिति भावः" रघुदेवः ।

(१५) "नतु सर्वत्र विशेषणविभक्तेः प्रयोगसाधुत्वे नीलो घट इत्यादावभेदसम्बन्धेनैव घटे नीलस्यान्वयबोधः स च न

सम्भवति नामार्थयोः साक्षादन्वयस्याव्युत्पन्नत्वादित्यत आह नामार्थयोरित्यादि भेदेन अभेदादितिरिक्त सम्बन्धेन तन्त्रत्वात् हेतुत्वात् तथा चाभेदातिरिक्तसम्बन्धावच्छिन्ननामार्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धिं प्रति विषयतासम्बन्धेन विभक्तिपदज्ञानजन्योपस्थितेर्हेतुत्वस्य कल्पनाच्चोक्तानुपपत्तिः। तत्राभेदसम्बन्धेनैकनामार्थोपर्य्यपरनामार्थस्य प्रकारतया तादृशशाब्दबोधस्योक्तकार्यतावच्छेदकसम्बन्धेन तत्रोत्पत्त्यभावात्। मतान्तरमाह लाघवेनेत्यादि लाघवञ्च तत्र जनकतावच्छेदककोटावभेदातिरिक्तसम्बन्धावच्छिन्नत्वानिवेशेन तयोः नामार्थयोः तथात्वम् विभक्तिजन्योपस्थितेस्तन्त्रत्वम्” रघुदेवः।

(१६) “नन्वेवं सति नीलो घट इत्यादौ कथं विशेषणविभक्तिजन्योपस्थितिं विनाप्यभेदान्वयबोधस्तत्राह विशेषणविभक्तिस्त्विति अभेदार्थिका सर्वत्राभेदार्थिका तथा च तत्र विभक्तिजन्याभेदोपस्थितिं विनाऽभेदानङ्गीकार इति भावः” रघुदेवः।

(१७) “ननु यत्र विशेषणविभक्तेरभावस्तत्र का गतिरित्यत आह नीलोत्पलमित्यादि तथा च तत्रापि यावत् लुप्तविभक्तेरनुसन्धानं नास्ति तत्र तावत् नाङ्गीक्रियत एव शाब्दबोध इति भावः। मतेत्वित्यनेनास्वरसः सूचितः स च तन्मतेऽपि नीलोत्पलमित्यादौ लुप्तविभक्तेरनुसन्धानं विनाप्यनुभवसिद्धस्य शाब्दबोधस्यापलापो द्रष्टव्यः” रघुदेवः

(१८) “न राज्ञ इत्यादि। न राज्ञः पुरुष इत्यादौ यथा पुरुषे षष्ठ्यर्थस्वत्वस्याभावः प्रतीयते तथात्रापि(नानुयाजेष्वित्यत्र) प्रयोगे सप्तम्यर्थस्याभेदाभावः प्रतीयत इत्यर्थः। न चैवं सति एतन्मते नञोऽन्योन्याभावत्वेन शक्तिकल्पनमनर्थकम् सर्वत्र संसर्गाभावशक्तित एव नञ्जन्यशाब्दबोधनिर्वाहात् भूतलं न घट इत्यादौ विशेषणविभक्त्यर्थाभेदस्य संसर्गाभाव एव नञा प्रत्याय्यत इत्यभ्युपगमादिति वाच्यम्। तत्र भेदत्वप्रकारकशाब्दबोधस्यानुभवसिद्धतयाऽपलापमात्रेण निराकरणासम्भवेन तेन रूपेणापि नञः शक्तिकल्पनस्यावश्यकत्वादिति” रघुदेवः।

(१९) “केचित्तु यजतिषु ये यजामहं करोति नानुयाजेष्वित्यादौ नञो निषेधबोधकत्वेऽनुयाजेषु येयजामहेवन्मन्त्रविकल्पापत्तिः यजतिषु येयजामहं करोतीत्यनेन यागसामान्ये तत्प्राप्त्या, तदन्तर्गतानुयाजेष्वपि प्राप्तत्वात् नानुयाजेष्वित्यनेन तत्र तस्य प्रतिषिद्धत्वाच्चेति, तत्र नञ न प्रतिषेधबोधकत्वं किन्तु भेदबोधकत्वमिति नानुयाजेष्वित्यादौ नञो भेदबोधकत्वे युक्तिमाहुः तन्मतं दूषयितुमुपन्यस्यति यच्चिति करणनिषेध इति। नानुयाजेष्वित्यादौ नञा येयजामहेपदवन्मन्त्रकरणनिषेधबोधने इत्यर्थः विकल्पापत्तेरिति अनुयाजेषु तादृशमन्त्रकरणाकरणापत्तेरित्यर्थः उपदर्शितरीत्या तादृशमन्त्रकरणस्य विहितनिषिद्धत्वादिति भावः” रघुदेवः।

(२०) “विशेषनिषेध इत्यादि ब्राह्मणेभ्यो दधि दातव्यं न कौण्डिन्याय दातव्यमित्यादौ विशेषनिषेधस्थलीयस्य ब्राह्मणेभ्यो दधि दातव्यमितिसामान्यविधेः कौण्डिन्यातिरिक्तब्राह्मणसम्प्रदानकदधिदानबोधकत्वव्यवस्थावत् प्रकृतेऽपि यजतिषु येयजामहं करोतीति सामान्यविधेरप्यनुयागातिरिक्तयागे ये यजामहेपदवन्मन्त्रकरणप्रतिपादकत्वेनानुयाजे तथाविधमन्त्रकरणस्याप्राप्त्या विकल्पासम्भवादिति भावः” रघुदेवः।

(२१) “ननु ब्राह्मणेभ्यो दधि दातव्यं न कौण्डिन्याय दातव्यमित्यादावपि सामान्यविधेर्न विशेषेतरपरत्वम्। न च तथा सति कौण्डिन्यस्य दधिदानप्रसक्त्या विकल्पापत्तिरिति वाच्यं तत्र नञोभेदबोधकत्वमभ्युपेत्य वाक्यैकवाक्यतया कौण्डिन्यान्यब्राह्मणसंप्रदानकदधिदानप्रतिपादनाभ्युपगमेन कौण्डिन्यस्य तदप्राप्त्या तन्निषेधाप्राप्त्या च विकल्पानवकाशात् तत्र सामान्यविधेर्विशेषेतरपरत्वकल्पनस्य निर्युक्तिकत्वात् प्रकृतस्थले नञोनिषेधबोधकत्वेन विकल्पापत्तिर्दुर्वारैवेत्यत आह न चेति। विरुद्धैकवचनत्वादिति। यथैकनामार्थेऽपरनामार्थान्योन्याभावबोधकनञ्स्थले विशेषणविशेष्यवाचकपदयोः समानविभक्तिकत्वं तन्त्रम्। तथा समानवचनत्वस्यापि तन्त्रत्वेन प्रकृते तदभावात्तथा बोधासम्भवादिति भावः” रघुदेवः।

(२२) “नन्वेकनामार्थेऽपरनामार्थस्यान्योन्याभावबोधे विशेषणवाचकपदविशेष्यवाचकपदयोः समानवचनस्य तन्त्रत्वे प्रमाणाभाव इत्यत आह न हि खल्वित्यादि। नामार्थयोरभेदान्वयबोधे विशेषणबोधकपदविशेष्यबोधकपदयोः समानवचनत्वस्य तन्त्रत्व एव नञ्जन्यान्योन्याभावबोधे तयोस्तदायाति नञ्जन्यान्योन्याभावविषयकशाब्दबोधं प्रत्येकपदार्थेऽपरपदार्थस्याभेदान्वयबोधकैकपदसमभिव्याहृतापरपदे नञ्समभिव्याहारज्ञानस्य हेतुत्वादित्यतस्तत्प्रदर्शितं महतो राज्ञ इत्यनेन। नन्वेकपदार्थेऽपरपदार्थान्योन्याभावविषयकशाब्दबुद्धिं प्रति वि-

शेषबोधकपदविशेष्यबोधकपदयोः समानवचनत्वनियामकत्वकल्पने एकोनद्वावित्यादौ नञोऽन्योन्याभावविषयकशाब्दबोधानुदयप्रसङ्ग इति तत्र तदनभ्युपगमस्यावश्यकत्वात्तथा च ब्राह्मणेभ्यो दधि दातव्यं न कौण्डिन्याय दातव्यमित्यादौ नञान्योन्याभावबोधने बाधकाभाव इत्यतः पूर्वोक्तदोषोद्धारपुरःसरं दोषान्तरमाह एको न द्वावित्यादिवदित्यादिना। अत्र च नित्यद्विवचनाद्यन्तशब्दातिरिक्तस्थले तथाविधनियमस्वीकारे तु पूर्वोक्तदोषस्यैव दुरुद्धरतेति सूचनार्थमुक्तं कथञ्चिदिति। ब्राह्मणेभ्यो दधि दातव्यं न कौण्डिन्यायेत्यादिनैव कौण्डिन्यभिन्नब्राह्मणसम्प्रदानकदधिदानबोधसम्भवात् द्वितीयदातव्यपदं निरर्थकमिति भावः" रघुदेवः।

(२३) "अतएवेति। यतएव विशेषनिषेधस्थले सामान्यविधेर्विशेषेतरपरत्वम् अतएवेत्यर्थः। अन्यथाऽमावास्यायां पितृभ्यो दद्यादित्यनेन रात्रौ श्राद्धकरणप्राप्त्या रात्रौ श्राद्धं न कुर्वीतेत्यनेन तत्र श्राद्धकरणनिषेधस्य च प्राप्त्या तत्र तत्करणस्य विहितप्रतिषिद्धत्वाभ्यां विकल्पापत्तेर्दुर्वारत्वादिति भावः" रघुदेवः।

(२४) "नन्वत्राप्यन्योन्याभावार्थकतया रात्रीतरकाले श्राद्धकरणस्य विधानसम्भवेन सर्वसामञ्जस्ये व्यर्थं तत्र नञो निषेधार्थकत्वकल्पनमित्यत आह न हीति तत्रापि रात्रौ श्राद्धं न कुर्वीतेत्यत्रापि रात्रीतरपरता नञोन्यान्याभावार्थकतया रात्रीतरकाले श्राद्धकरणस्य बोधकतेत्यर्थः। तथा च व्यर्थं प्रतिषेधार्थकत्वकल्पनमिति भावः" रघुदेवः।

(२५) "रात्रिभिन्न इत्यादि। रात्रौ श्राद्धं न कुर्वीतेत्यादौ नञोन्योन्याभावार्थकतया रात्रीतरकाले श्राद्धकरणविधानाभ्युपगमेऽमावास्यायां पितृभ्यो दद्यादित्यनेन रात्रौ श्राद्धप्रसक्तेस्तत्करणापत्तेर्दुर्वारत्वादित्यर्थः" रघुदेवः।

(२६) "नन्वु तथाविधवाक्ययोर्वाक्यैकवाक्यतया रात्रीतरामावास्यायां कुर्वीतेत्यर्थकत्वाभ्युपगमे न पूर्वोक्तकल्पोक्तदोष इत्यत आह न चास्त्वित्यादि। रात्रौ श्राद्धं न कुर्वीतेत्यतो भिन्नं वाक्यान्तरमस्ति। तेन क्रियारहितश्राद्धविधायकवाक्येन" रघुदेवः।

(२७) "नापीदम्। इदं रात्रौ श्राद्धं न कुर्वीतेति वाक्यम्। पृथक्क्रियारहितम्। आनुषङ्गिकक्रियातिरिक्तक्रियारहितम्। केवलं क्रियारहितमित्युक्तौ नानुयाजेष्विति वाक्यमपि तथा, तत्रानुषङ्गिककरोतिक्रियासत्त्वादतः पृथगित्युक्तम्। तथा च तयोरेकवाक्यतासम्भवे रात्रीतरवाक्यं क्रियारहितं भवति अन्यथा तयोरेकतरवाक्ये क्रियापदस्य वैयर्थ्यापत्तेः। श्राद्धकरणप्रापकवाक्यान्तरस्याभावेन प्रकृतवाक्यद्वयस्यैव क्रियापदवत्त्वैकवाक्यत्वाभावेन पूर्वोक्तदोषो दुर्वार एवेति भावः" रघुदेवः।

(२८) "ननु रात्रौ श्राद्धं न कुर्वीतेत्यादौ नञो निषेधबोधकत्वं न सम्भवति त्वन्मते विशेषनिषेधस्थले सामान्यविधेर्विशेषेतरपरत्वनियमेनामावास्यायां पितृभ्यो दद्यादित्यादि सामान्यविधेः रात्रीतरामावास्याकाले श्राद्धकरणस्य विधायकत्वेन तत्र श्राद्धकरणप्रापकवाक्यान्तरस्य चाभावेन तत्र तस्याप्रसक्तत्वाद्दर्शितसामान्यविधेर्विशेषान्तरपरत्वं नाभ्युपगम्यते चेत्तदा तत्र तत्प्राप्तौ तु विकल्पापत्तिरित्याशङ्कते अथ रात्रावित्यादिना। उपहासपूर्वकं समाधानमाह साधीयानिति। तथा च प्रसक्तं हि प्रतिषिध्यत इति नियमे प्रमाणाभावेनाप्रसक्तस्यापि निषेधे बाधकाभावेन रात्रौ श्राद्धं न कुर्वीतेत्यादौ नञो निषेधबोधकत्वाभ्युपगमे क्षतिविरह इति भावः" रघुदेवः।

(२९) "निषेधविधेरिति। तादृशनियमस्वीकृत्याप्रसक्तस्यापि निषेधाभ्युपगमे इत्यादि पूरणीयम्। वैयर्थ्यमिति प्रसक्तस्यैव प्रतिषिद्धत्वमिति नियमे तु तत्र तदकरणस्यैव निषेधविधेः प्रयोजनत्वसम्भव इति तादृशनियमाभ्युपगमोऽत्यावश्यकस्तस्य च विशेषविशेषनियन्त्रितत्वान्न दोष इति भावः। तात्पर्यानवबोधादिति। रात्रीतरामावास्याकालाधिकरणश्राद्धकरणबोधतात्पर्याऽनिर्णयप्रसक्तं यद् रात्रिश्राद्धकरणं तद्वारणस्य तत्प्रयोजनत्वादित्यर्थः। रात्रौ श्राद्धकरणनिषेधबोधकवाक्याभावेऽमावास्यायां पितृभ्यो दद्यादित्यादिवाक्यतो रात्रीतरामावास्याकाले श्राद्धकरणस्य बोधासम्भवः तथाविधतात्पर्यनिर्णयाभावात् तथा च रात्रावपि श्राद्धकरणं प्रसज्येत रात्रौ श्राद्धकरणस्य निषेधविधौ तु तथाविधवाक्याधिपर्यालोचनक्रमेण तथाविधविधेरुपदर्शितार्थे तात्पर्यनिर्णयसम्भवेन तस्मात् तादृशबोधसम्भावेन रात्रौ तदप्राप्तौ तत्र तत्करणाप्रसक्तिरिति भावः" रघुदेवः।

(३०) "एवं सति विकल्पस्थलस्य दुर्लभत्वापत्तिरित्यत आह एकविषयतयेत्यादि। अनन्यगतिकतया विकल्पं विना गत्यन्तराभावतया तथा च तत्र विकल्पं विना प्रकारान्तरासम्भवेनावश्यं तत्र विकल्पस्वीकारेण न विकल्पस्थलदुर्लभत्वापत्तिरिति भावः" रघुदेवः।

(३१) "ननु नातिरात्रे षोडशिनं गृह्णातीत्यत्र नञा इष्टसाधनत्वस्यैवाभावः प्रतीयते प्रकारान्तरस्याभावात् तच्च न सम्भवति षोडशिग्रहणविधिविरोधादित्याशङ्क्य उपपादयति अत्र चेति न षोडशिनं गृह्णातीत्यत्र चेत्यर्थः" रघुदेवः ।

(३२) "ननु धात्वर्थान्विते एव विभक्त्यर्थे नञर्थाभावस्यैवान्वयो व्युत्पन्न इत्यत आह व्युत्पन्नस्येति तथा च तादृशव्युत्पत्तिकल्पने प्रमाणाभाव इति भावः" रघुदेवः ।

(३३) "अतएव तादृशव्युत्पत्तेरभावादेव" रघुदेवः ।

(३४) "ननु क्वचिद्धात्वर्थेऽपि विभक्त्यर्थप्रतियोगिकस्याभावस्य क्वचिच्च धात्वर्थाभावे विभक्त्यर्थान्वये नियामकाभाव इत्यत आह नियमस्त्वित्यादि तथा च यत्र धात्वर्थे विभक्त्यर्थाभावबोधे तात्पर्यं तिष्ठति विरोधेऽपि नास्ति तत्र तथा बोधः । यत्र तु धात्वर्थाभावे विभक्त्यर्थान्वयबोधे तात्पर्यं तत्र तथैवान्वयबोध इति नियम इति भावः" रघुदेवः ।

(३५) "ननु षोडशिग्रहणस्याङ्गत्वेन इष्टसाधनत्वाभावात् नातिरात्रे षोडशिनं गृह्णातीत्यादौ षोडशिग्रहणे इष्टसाधनत्वाभावबोधनेऽपि न ग्रहणविरोधः किन्तु बाधेन तत्रेष्टसाधनत्वस्यान्वयबोधासम्भवः तथा च कथं तत्र ग्रहणविधिविरोधेन धात्वर्थाभावे इष्टसाधनत्वान्वयबोधाङ्गीकार इत्यत आह तुल्यफलजनकत्वेऽपि चेत्यादि तथा च तत्रेष्टसाधनत्वाभावान्वयबोधस्य स्वीकारे ग्रहणनिषेधविरोधोद्धारपञ्चव इति भावः" रघुदेवः ।

(३६) "ननु ग्रहणाग्रहणयोस्तुल्यफलजनकत्वे कथं बहुदुःखसाध्ये षोडशिग्रहणे प्रवृत्तिरित्यत आह ग्रहणविध्यन्यथानुपपत्त्या चेति । तथा च तयोस्तुल्यफलाभावेन नोक्ताशङ्काया अवकाश इति भावः" रघुदेवः ।

(३७) 'प्रतियोग्यनुयोगिभावः प्रतियोगित्वमनुयोगित्वम् आधाराधेयभावः आधारत्वमाधेयत्वम् उभयत्रोभयोत्कीर्त्तनं तुल्यवित्तिवेद्यत्वाभिप्रायेण" रघुदेवः ।

(३८) "ननु नञोऽभावार्थकत्वे कथं भूतले न घटः भूतलं न घट इत्यादौ भूतलेऽधिकरणतासम्बन्धेन नञर्थाभावस्यान्वयोऽन्योन्याभावे च प्रतियोगितासम्बन्धेन घटादेर्वान्वयो नामार्थयोर्भेदेनान्वयबोधानङ्गीकारादित्यत आह निपातेति । अव्ययनिपातातिरिक्तेत्यर्थः । तथा च फलबलान्निपाताव्ययजन्यशाब्दबोधं प्रति प्रकारीभूतविभक्त्यर्थोपस्थितेर्हेतुत्वस्याकल्पनेनानुपपत्त्यभाव इति भावः" रघुदेवः ।

(३९) "अतएवेति यतएव फलबलान्निपाताव्ययजन्यशाब्दबोधं प्रति प्रकारीभूतविभक्त्यर्थोपस्थितेर्न हेतुत्वमतएवेत्यर्थः । इवाद्यर्थान्वयबोधे चन्द्र इव मुखमित्यादाविवाद्यर्थान्वयबोधे आदिना नञतिरिक्तनिपातमात्रपरिग्रहः" रघुदेवः ।

(४०) "ननु नञोऽभावार्थकत्वेऽघटं भूतलमित्यादौ कथं नानाधर्माभ्यामेकधर्मिबोधकत्वरूपसामानाधिकरण्योपपत्तिरित्यत आह अघटं भूतलमित्यादि । संसर्गाभावाऽन्योन्याभावार्थकनञ्भेदेनोदाहरणद्वयम् । अघटमित्यत्र नपुंसकलिङ्गनिर्देशस्तु न विद्यते घटो यत्रेति बहुव्रीहिसमासस्पष्टीकरणाय अन्यथाऽघट इत्युक्ते न घटोऽघट इति नञ्तत्पुरुषेऽपि तथा प्रयोगसम्भवे तत्र च नञोऽन्योन्याभाववत्परतया घटसंसर्गाभाववल्लाक्षणिकनञ उदाहरणासम्भव इति ध्येयम् । तत्र अभाववत्परता भाववद्बोधकता" रघुदेवः ।

(४१) "यैस्तु निपातजन्यशाब्दबुद्धिं प्रत्यपि प्रकारीभूतविभक्त्यर्थोपस्थितेर्हेतुत्वमुपेयते तन्मतमाह केचित्त्विति प्रतियोगिपदोत्तरस्य सुप इति भूतले न घट इत्यादौ घटादिबोधकपदोत्तरसुप इत्यर्थः" रघुदेवः ।

(४२) "ननु सर्वत्र प्रतियोगित्वस्य नञ्समभिव्याहृतप्रतियोगिबोधकपदोत्तरसुबर्थत्वे घटीयोऽभावो न घटस्येति प्रयोगापत्तिः तत्रापि घटनिष्ठप्रतियोगित्वस्य स्वरूपसम्बन्धेनाभावस्य घटाभावे विद्यमानत्वात् न च न घटस्येत्यत्र निरूपकत्वसम्बन्धावच्छिन्नघटनिष्ठप्रतियोगितानिष्ठप्रतियोगिताकाभावबोधाभ्युपगमान्न तथा प्रयोगः घटनिष्ठप्रतियोगिताया निरूपकतासम्बन्धेन घटाभावे विद्यमानत्वादिति वाच्यम् । इत्थंनियामकसंसर्गस्याभावप्रतियोगितावच्छेदकत्वाभावेन तयोक्तेरघटकत्वादित्यत आह अनुयोगित्वं वेति वाकारो व्यवस्थितविकल्पसम्पादकः तथा च क्वचित् प्रतियोगित्वं तथाविधसुबर्थः क्वचिदनुयोगित्वं वेति लब्धम् । अतएव पटो न घटाभावस्येत्यादौ पटे घटाभावप्रतियोगित्वाभावबोधस्यानुभवोऽपि स्पपाद इति ध्येयम्" रघुदेवः ।

(४३) "नञुत्तरसुपोऽधिकरणत्वार्थकत्वे सर्वत्र नञुत्तरसुपोऽनुशासनकल्पनं तत्र लक्षणाकल्पनं चेत्युभयकल्पने गौरवम् तदपेक्षया नञ एवाभाववति लक्षणाकरणकल्पनमुचितमित्याशयेनाह नञो वेति" रघुदेवः ।

(४४) "ननु नञोऽन्योन्याभावबोधने विशेषणवाचकपदविशेष्य-

वाचकपदयोर्विरुद्धविभक्तिराहित्यं तन्त्रमिति पूर्वमुक्तम् तत्र च विरुद्धविभक्तिकत्वं विरुद्धार्थप्रतिपादकविभक्तिकत्वम् अन्यथा व्यत्ययानुशासनस्थले कर्मत्वाद्यर्थकप्रथमान्तपदार्थसाम्याभावेऽपि एकत्वाद्यर्थप्रथमान्तत्वसाम्येनान्वयबोधापत्तेः। तथा च प्रतियोगिवाचकपदोत्तरसुपः प्रतियोगित्वाद्यर्थकत्वे न न घट इत्यादौ नञोऽन्योन्याभावबोधकत्वासम्भवः तस्य विशेष्यवाचकपदात् भिन्नत्वेन तत्प्रतिपादकविभक्तेर्विशेष्यवाचकपदोत्तरविभक्त्यर्थप्रतियोगित्वादिति भवतास्वीकारात् एवं नञर्थसंसर्गाभावे भेदेनेतरपदार्थान्वयानुभवेऽनुयोगिवाचकपदोत्तरं सप्तम्यपेक्षेति यत्पूर्वमुक्तं तदपि न नञुत्तरसुपोऽधिकरणत्वे लक्षणयां भवति। एवं नञोऽभावसामान्यवाचकत्वे त्वत्कल्पे तथाविधभेदान्वयबोधापत्तौ तथाविधाभेदान्वयबोधे तु तादृशसप्तम्यन्तापेक्षा न सम्भवति अघटं भूतलमित्यादौ तदभावात् एवञ्च क्वचिन्नञान्योन्याभावः प्रतिपाद्यते क्वचित् संसर्गाभावः प्रतिपाद्यते इत्यत्र नियामकाभावः सर्वत्र तदुभयबोधप्रसङ्गात् इत्यत आह विभक्त्यर्थेति विभक्त्यर्थस्यान्योन्याभावबोधने अनुयोगिवाचकपदसमानविभक्तिकपदार्थस्य, संसर्गाभावबोधने च नञोऽसामर्थ्यमित्यर्थः तथा च फलानुरोधेन तत्र तत्तदानुपूर्वीज्ञानस्य हेतुत्वकल्पनायामनियमप्रसक्त इति भावः" रघुदेवः।

(४५) "तथाविधकार्य्यकारणभावकल्पनं पूर्वमतेऽप्यावश्यकमित्याह तेनेति। तथाविधासामर्थ्यकल्पनेनेत्यर्थः। संसर्गाभावः संसर्गाभाववदभेदो न प्रतीयते। तथा च तादृशकार्य्यकारणभावाकल्पने पूर्वमतेऽप्येतेषु स्थलेषु तत्तदन्वयबोधस्यापत्तिर्दुर्वारेति तादृशकार्य्यकारणभावकल्पनावश्यकत्वमिति भावः" रघुदेवः।

इदमत्रावधेयम् प्राप्तिपूर्वकत्वान्निषेधस्येति मीमांसकैर्मन्यते तेषामाशयः ह्रदे दहनो नास्तीत्यादौ प्रत्यक्षे अभावज्ञानस्य प्रतियोगिज्ञानसापेक्षतया प्रतियोगिनस्तु ज्ञानलक्षणादिना पूर्वं ज्ञायमानत्वेन तस्याभावो ह्रदे बोधनेऽपि प्राप्तस्य ज्ञातस्य दहनस्य अन्यत्र प्रसक्तावपि ह्रदे वायोरूपवत् निषेधो न विरुध्यते। शास्त्रीये तु निषेधे विधीयमानो निषेधः प्राप्तिमुपजीवति प्राप्तिश्च रागतोऽतिदेशशास्त्रतो वा। तत्र न कलञ्जं भक्षयेदित्यादौ रागप्राप्तस्य निषेधः। अतिदेशतः प्राप्तयोः "न तौ पशौ करोति" इत्यादौ आघाराज्यभागयोः पशुयागे निषेधः। अतिदेशशास्त्रस्यान्यत्र चरितार्थत्वेन अनुल्लङ्घ्यत्वात् नात्र विकल्पः। किन्तु एकविषयतयाऽन्यत्र षोडशिग्रहणाग्रहणयोर्विकल्पः इति भेदः। अप्राप्तस्य विधीयमाननिषेधस्य प्राप्तिश्च प्रतियोगिप्राप्तिरित्येव तत्र प्राप्तिपूर्वकत्वम्। तत्र च पर्युदासः यथा "न तौ पशौ करोति" इत्यादौ करोतीत्यादेरनुवादत्वेन नानर्थक्यम् "सम्भवे नान्यतरवैयर्थ्यमिति" न्यायात् तेन आघाराज्यभागकरणानुवादेन पशुयागभिन्नत्वमात्रं विधेयम् एवं रात्रौ श्राद्धं न कुर्वीतेति वाक्येऽपि क्रियापदस्यानुवादत्वेन तस्य वैयर्थ्याभावात् तत्र श्राद्धकरणानुवादेन रात्रिभिन्नकालत्वं विधेयम्। यथा वा दध्ना जुहोत्यादौ होममनूद्य दधिद्रव्यकरणकत्वमात्रं विधीयते एवं श्राद्धकरणमनूद्य रात्रीतरकालरूपद्रव्यविधाने न्यत्वभावः। अन्यथा कुत्र रात्रीतरकालो विधीयेत। अतः न रात्रौ श्राद्धं कुर्वीतेत्यादि वाक्यस्य श्राद्धकरणनिषेधपरताव्यवस्थापनं न युक्तिसहं "न कलञ्जं भक्षयेदित्यादाविव पर्युदासपूर्वकल्पनाया तदतिक्रमे दुरदृष्टसाधनत्वकल्पनायाश्चापत्तेर्दुर्वारत्वात् सकलशिष्टाचारसम्मतस्य रात्रौ श्राद्धकरणेऽनिष्टाभावस्य विरोधापत्तेश्च। किन्तु इदं वाक्यं न केवलश्राद्धानुवादेन रात्रीतरकालविधानं किन्तु यावच्छ्राद्धानुवादेन रात्रीतरकालविधानपरमित्यपि मन्तव्यम्। यद्यपि अष्टकासु मघासु चेति बहुवचने अष्टकादिपदस्य बहुवचनान्ततया निर्देशेन तद्विरुद्धैकवचनावरुद्धत्वात् भेदपरता सम्भवति पूर्वोक्तव्युत्पत्तिविरोधात् तथापि सामान्ये न औत्सर्गिकमेकवचनं जात्यभिप्रायमिति न विरोध इत्यवधेयम्।

क्रियायामिव विभक्त्यर्थेऽपि नञर्थाभावान्वय इति यदुक्तं तत्र न कलञ्जं भक्षयेदित्यादौ धात्वर्थे बलवदनिष्टाननुबन्धित्वरूपविध्यर्थस्य" एकादश्यां न भुञ्जीत्यादौ भोजनाभाव एव विध्यर्थेष्टसाधनत्वस्य च बोध इति विषयभेदेन व्यवस्था। अतएव न कलञ्जं भक्षयेदित्यादि निषेधवाक्यम् एकादश्यां न भुञ्जीतेत्यादि निषेधविधिवाक्यमिति भेदः। तदेतत् शब्दशक्तिप्रकाशिकायां समर्थितम्। "पङ्गुः समुद्रं न तरेदित्यादौ नञादिना समुत्तरणादेः, पङ्गुप्रभृतिकृतिसाध्यत्वनिषेधबोधानुरोधादवश्यं कृतिसाध्यत्वं लिङर्थः तथा तृप्तिकामो जलं न ताडयेदित्यादौ तृप्तिकामेष्टसाधनत्वस्य, न कलञ्जं भुञ्जीतेत्यादौ च कलञ्जभक्षणादेः बलवदनिष्टाजनकत्वेऽपीष्टसाधनत्वस्य निषेधा-

मुपपत्त्या इष्टसाधनत्वादिकमपि (यथायथम्)। न चाह्नो रात्रावच्छेद्यभोजननिवृत्तिरूपस्योपवासस्य कृतिसाध्यत्वादृष्ट्यामुपवसेदिति विधेर्बाधः कृत्यधीनसमयसम्बन्धरूपस्य नैमित्तिककृतिसाध्यत्वस्य नित्येऽप्यनपायात्, तादृशप्रयोगे भोजनादिप्रतिकूलव्यापारस्यैव वा धात्वर्थत्वात्" इति। मीमांसकमतानुसारेण कलञ्जाधिकरणशब्दे १७७७ पृ॰ नञर्थादिको दर्शितः। आम्नायस्य क्रियार्थत्वमित्येकान्ताश्रयणे दोषकथनावसरे शा॰भा॰रत्नप्रभयोश्च अत्यन्ताभाव एव नञः शक्तिर्भेदादौ लक्षणेत्युक्तं यथा "अपि च ब्राह्मणो न हन्तव्यः इति चैवमाद्या निवृत्तिरुपदिश्यते। न च सा क्रिया नापि क्रियासाधनम् इत्यतो निवृत्त्युपदेशानामानर्थक्यं प्राप्तं तच्चानिष्टम्। न च स्वभावप्राप्तहन्त्यर्थानुरागेण नञः शक्यमप्राप्तक्रियार्थत्वं कल्पयितुं हननक्रियानिवृत्त्यौदासीन्यव्यतिरेकेण। नञश्चैष स्वभावो यत् स्वसम्बन्धिनोऽभावं बोधयति अभावबुद्धिश्चौदासीन्यकारणं सा च दग्धेन्धनाग्निवत् स्वयमेवोपशाम्यति तस्मात् प्रसक्तक्रियानिवृत्त्यौदासीन्यमेव ब्राह्मणो न हन्तव्य इत्यादिषु प्रतिषेधार्थं मन्यामहे अन्यत्र प्रजापतिव्रतादिभ्यः" शा॰भा॰।

"नञः प्रकृत्यर्थेन सम्बन्धात् हननाभावो नञर्थः इष्टसाधनत्वं तव्यादिप्रत्ययार्थः इष्टश्च नरकदुःखाभावः तत्परिपालको हननाभाव इति निषेधवाक्यार्थः। हननाभावो दुःखाभावहेतुरित्युक्तावर्थाद्धननस्य दुःखसाधनत्वधिया पुरुषो निवर्त्तते। नात्र नियोगः कश्चिदस्ति तस्य (नियोगस्य) क्रियातत्साधनदध्यादिविषयत्वात्। न च हननाभावरूपा नञ्वाच्या निवृत्तिः क्रिया अभावत्वान्नापि क्रियासाधनम् अभावस्य भावाहेतुत्वाद्तस्य सत्त्वरूपत्वाभावाच्चेत्यर्थः। अतो निषेधशास्त्रस्य सिद्धार्थे प्रामाण्यमिति भावः। विपक्षे दण्डमाह न च सा क्रियेति। ननु स्वभावतो रागतः प्राप्तेन हन्त्यर्थेनानुरागेण नञ्सम्बन्धेन हेतुना हननविरोधिनी सङ्कल्पक्रिया बोध्यते। सा च नञर्थरूपा तस्याप्राप्तत्वाद्विधीयते अहननं कुर्य्यात् इति। तथाच कार्य्यार्थमिदं वाक्यमित्याशङ्क्य निषेधति न चेति औदासीन्यं हननाभाव इति यावत् तद्व्यतिरेकेण नञः क्रियार्थत्वं कल्पयितुं न च शक्यमिति योजना मुख्यार्थस्याभावस्य नञर्थत्वसम्भवे तद्विरोधक्रियालक्षणाया अन्याय्यत्वात् निषेधवाक्यस्यापि कार्य्यार्थत्वे विधिनिषेधभेदविप्लवापत्तेश्चेति भावः। ननु तदभाववत्तदन्यतद्विरुद्धयोरपि नञः शक्तिः किं न स्यात् अब्राह्मणः अधर्म इति प्रयोगदर्शनादिति चेत् न अनेकार्थत्वस्यान्याय्यत्वादित्याह नञश्चेति गवादिशब्दानान्तु अनन्यानानार्थत्वं स्वर्गपशुवाग्वज्रादीनां शक्यपशुसम्बन्धाभावेन लक्षणानवतारात्। अन्यविरुद्धयोस्तु लक्ष्यत्वं युक्तं शक्यसम्बन्धात् ब्राह्मणादन्यस्मिन् क्षत्रियादौ धर्मविरुद्धे वा पापे ब्राह्मणाद्यभावस्य नञ्शक्यस्य सम्बन्धात् प्रकृते च आख्यातयोगात् नञ्प्रसज्यप्रतिषेध एव न पर्य्युदासलक्षकमिति मन्तव्यम्। यद्वा नञः प्रकृत्या न सम्बन्धः प्रकृतेः प्रत्ययार्थोपसर्जनत्वात् प्रधानसम्बन्धाच्चाप्रधानानां, किन्तु प्रकृत्यर्थनिष्ठेन प्रत्ययार्थेनेष्टसाधनत्वेन सम्बन्धो नञः। इष्टञ्च स्वापेक्षया बलवदनिष्टाननुबन्धि यत्तदेव न तात्कालिकसुखमात्रं विषसम्पृक्तं निषिद्धान्नभोगस्यापि इष्टत्वापत्तेः तथाच न हन्तव्यः हननं बलवदनिष्टासाधनत्वे सति इष्टसाधनं न भवतीत्यर्थः। अत्र हन्तव्यः इति हनने विशिष्टेष्टसाधनत्वं भ्रान्तिप्राप्तमनूद्य नेत्यभावबोधने बलवदनिष्टसाधनं हननमिति बुद्धिर्भवति हनने तात्कालिकेष्टसाधनत्वरूपविशेष्यसत्त्वेऽपि विशिष्टाभावबुद्धेर्विशेषणाभावपर्य्यवसानात् विशेषणं बलवदनिष्टासाधनत्वमिति तदभावो बलवदनिष्टसाधनत्वं नञर्थ इति पर्य्यवसन्नम्। तद्बुद्धिरौदासीन्यपरिपालिकेत्याह। अभावेति। योऽयमर्थः पक्षान्तरद्योती प्रकृत्यर्थाभावबुद्धिवत् प्रत्ययार्थाभावबुद्धिरपीत्यर्थः बुद्धेः क्षणिकत्वात्तदभावे सत्यौदासीन्यात् प्रच्युतिरूपा हननादौ प्रवृत्तिः स्यात् इति तत्राह सा चेति। यथाग्निरिन्धनं दग्ध्वा शाम्यति एवं सा नञर्थाभावबुद्धिः हननादाविष्टसाधनत्वभ्रान्तिमूलं रागेन्धनं दग्ध्वैव शाम्यतीत्यक्षरार्थः। रागनाशे कृते प्रच्युतिरिति भावः। यद्वा रागतः प्राप्ता सा क्रिया रागनाशे स्वयमेव शाम्यतीत्यर्थः। परपक्षे तु हननविरोधिक्रिया कार्य्येत्युक्तोऽपि, हननस्येष्टसाधनत्वभ्रान्त्यनिरासात् प्रच्युतिर्दुर्वारा। तस्मात्तदभाव एव नञर्थ इत्युपसंहरति तस्मादिति। भावार्थाभावेन तद्विषयकृत्यभावात् कार्य्याभावस्तच्छब्दार्थः। यद्येत्युक्तपक्षे निवृत्त्युपलक्षितमौदासीन्यं यत्तद्विशिष्टभावापन्नमेवेति व्याख्येयं स्वतः सिद्धस्यौदासीन्यस्य नञर्थसाध्यत्वोपपादानार्थं निवृत्त्युपलक्षितत्वमिति ध्येयम्।" तस्य

षटोर्व्रतमित्यनुष्ठेयक्रियावाचिना व्रतशब्देन कार्य्यमुपक्रम्य "नेक्षेतोद्यन्तमादित्यम्" इति प्रजापतिव्रतमुक्तम् अत उपक्रमबलात्तत्र नञर्द्दर्शनविरोधिसङ्कल्पक्रियालक्षणाऽङ्गीकृता। एवमगौरसुरा अधर्म्म इत्यादीनामधात्वर्थयुक्तस्य नञः प्रतिषेधवाचित्वायोगात् अन्यविरुद्धलक्षकत्वम्। एतेभ्यः प्रजापतिव्रतादिभ्योऽन्यत्वाभावस्यैव नञर्थता इत्यर्थः" रत्नप्रभा०।

नञः प्रसज्यप्रतिषेधाद्यर्थाभिधाने नियमविशेषकारणपूर्वकं सा०द० नञर्थौ निर्णीतौ यथा

"अमुक्ता भवता नाथ! मुहूर्त्तमपि सा पुरा"। अत्रामुक्तेत्यत्र नञः प्रसज्यप्रतिषेधार्थत्वमिति विधेयत्वमेवोचितम्। यदाहुः "अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता। प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ्"। तथा "नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः"। अत्रोदाहरणे तत्पुरुषसमासे गुणीभावे नञः पर्य्युदासतया निषेधस्य विधेयतानवगमः। यदाहुः। "प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता। पर्य्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्"। तेन "जुगोपात्मानमत्रस्तो भेजे धर्म्ममनातुरः। अगृध्नुराददे सोऽर्थानसक्तः सुखमन्वभूत्"। अत्रात्रस्तादितामनूद्यात्मगोपनादीव विधेयमिति नञः पर्य्युदासतया गुणभावो युक्तः। नन्वश्राद्धभोजी ब्राह्मणः, असूर्य्यम्पश्या राजदारा इत्यादिवदत्रस्तेत्यत्रापि प्रसज्यप्रतिषेधो भविष्यतीति चेन्न अत्रापि यदि भोजनादिरूपक्रियांशेन नञः सम्बन्धः स्यात्तदैव तत्र प्रसज्यप्रतिषेधत्वं वक्तुं शक्यं न च तथा, विशेष्यतया प्रधानेन तद्भोजिनार्थेन कर्त्रंशेनैव नञः सम्बन्धात्। यदाहुः "श्राद्धभोजनशीलो हि यतः कर्त्ता प्रतीयते। न तद्भोजनमात्रं तु कर्त्तरीनेर्विधानतः" इति। अत्रस्तेत्यत्र तु क्रिययैव सह सम्बन्ध इति दोष एव"।

अश्राद्धभोजीत्यादौ असमर्थसमासं वैयाकरणा मन्यन्ते "सुडनपुंसकस्य" पा०सूत्रे नपुंसकस्य नेत्यर्थस्य भाष्यादावुक्तत्वात् सामर्थ्याभावेऽपि समास इति हि तेषां राद्धान्तः

वाचस्पत्यनञर्थनिर्णयः शब्दशक्तिप्रकाशिकायां यथा "अतएवाघटः पट इत्यादावन्यत्वस्य, असुरोदैत्य इत्यादौ विरोधिनः, अनिक्षुः शरः इत्यादौ सदृशस्य, अब्राह्मणो वार्द्धुषिक इत्यादावप्रशस्तस्य, अनुदरसुदरन्तरुण्या इत्यादौ स्वल्पस्य बोधकेन नञ्निपातेन स्वार्थे प्रतियोगित्वादिसम्बन्धेनैव घटादेरनुभावनेऽपि तत्रत्यतत्पुरुषे नाव्याप्तिः। पटस्याभाव इत्यर्थे प्रसज्यनञा अव्ययीभाव एव समासः प्रमाणं, तेनापटं वर्त्तते इत्याद्येव तत्र प्रयोगस्तत्पुरुषस्योत्तरपदलिङ्गकत्वनियमात् इति वृद्धाः। प्रसज्यनञाप्यपट इत्यादिस्तत्पुरुष एव साधुर्नाव्ययीभावः नञ्तत्पुरुषविधेस्तदपवादकत्वात् अतएव वादिनामविवाद इत्यादिकः किरणावल्यादौ पुंसि प्रयोग इति तु पक्षधरमिश्राः"।

अत्रायं विशेषः प्रसज्यनञा तत्पुरुषः भावकृदन्तपदयोग एव न घटादिपदयोगे वादिनामविवाद इत्याद्युदाहरणेषु भावकृदन्तस्यैवोत्तरपदत्वादिति सम्प्रदायविदः।

नञर्थे तिङर्थान्वयश्च शब्दश० प्र० दर्शितो यथा "न च पचत्यपि चैत्रे नायं पचतीति प्रयोगः स्याद्वर्त्तमानायाः पाककृतेरभावस्य समयान्तरावच्छेदेन चैत्रे सत्त्वादिति वाच्यं तत्र नञर्थ एव लडर्थवर्त्तमानत्वस्यान्वयेन वर्त्तमानकालावच्छेद्यस्य पाककृत्यभावस्य चैत्रे बाधेन तदप्रसक्तेः गुरुमते न कलञ्जं भक्षयेदित्यादौ, अत्यन्ताऽतिरात्रे षोडशिनं न गृह्णाति इत्यादौ नञर्थेऽपि तिङर्थान्वयस्य व्युत्पन्नत्वात्। एतेन भाविदिने चैत्रो मापाक्षीदतीतदिने चैत्रो न पक्ष्यतीत्यपि स्याद्भाविदिनादौ चैत्रेऽतीतपाककृत्यादेरभावसत्त्वादित्यपि समाहितं तत्राप्यतीतादिकालस्य नञर्थ एवान्वयेनातीतादिकालावच्छेद्यत्वविशिष्टस्य पापकृत्यभावस्य भाव्यादिदिनावच्छेदेन चैत्रादावसत्त्वादेव तादृशाप्रयोगात्। अतएव च निष्पन्नान्नं न पक्ष्यतीत्यादौ निष्पन्नान्नकर्मकभाविकृतेरप्रसिद्धावपि न क्षतिः भविष्यत्कालावच्छेदेन तादृशान्नकर्मकपाककृतेरभावस्य तत्र बोध्यत्वादिति युक्तमुत्पश्यामः"। किलशब्दोत्तरत्वेऽस्यानुष्टार्थता किलशब्दमुपक्रम्य "न ननु इत्येताभ्यां संप्रयुज्यतेऽनुष्टे न किलैवं ननु किलैवमिति" निरुक्तकारोक्तेः

नट णट धातुवत् सर्वं विशेषस्तु णटधातौ ३१९ पृ० दृश्यः। नट अवस्कन्दने (नटकृत्ये) णिचि नाटयति अनुकरोतीत्यर्थः "नवनगवनलेखाश्याममध्याभिराभिः स्फटिककटकभूमीर्नाटयत्येष शैलः" माघः। [नटत् त न णत्वम्।

नट भ्रंशे त्विषि चु० उभ० अक० सेट्। नाटयति ते अनीन-

नट पुंस्त्री नम—उणा०डट—नट—अच् वा। १शैलूषे स्त्रियां गौरा० ङीष्। "नटी विदूषको वापि पारिपार्श्विक एव वा" सा०द०। २नलीनामगन्धद्रव्ये स्त्री ङीष्।

३वेशग्रायां च शब्दर०। ४दृश्यकाव्यार्थाभिनयकर्त्तरि नर्त्तके त्रि० "प्रकृतेर्विभुत्वयोगाच्चटवद् व्यवतिष्ठते लिङ्गम्" सां०का० "यथा नटस्तां तां भूमिकां विधाय रामो वा अजातशत्रुर्वा वत्सराजो वा भवति एवं तत्तत्स्थूल-शरीरग्रहणात् देवो वा मनुष्यो पशुर्वा वनस्पतिर्वा भवति सूक्ष्मशरीरम्" तत्त्वकौ०। ५शोनाकवृक्षे पु० अमरः। "शौचिक्यां शौण्डिकाज्जातो नटो द्रविड एव च" पराशरपद्धत्युक्ते ६वर्णसङ्करजातिभेदे पुंस्त्री स्त्रियां जातित्वात् ङीष्। "नटी कपिलिनी वेशग्रा कुलटा नापिताङ्गना" तन्त्रसा०। "झल्लो मल्लश्च राजन्यात् व्रात्यात् निच्छिविरेव च। नटश्च करणश्चैव खसो द्रविड एव च" मनूक्ते व्रात्यक्षत्रियजाते ७व्रात्यक्षत्रियभेदे पुंस्त्री०। ८अशोकवृक्षे पु० मेदि०। ९किष्कुपर्वणि नलाख्ये तृणे पु० जटा०। दीपकरागस्य १०रागिणीभेदे स्त्री।

**नटकमेलक** न० हास्यरसप्रधाने दृश्यकाव्यभेदे तच्च सङ्कीर्णाख्यम् "वृत्तं बहूनां धूर्त्तानां सङ्कीर्णं केचिदूचिरे। तत्पुनर्भवति द्व्यङ्कमथ वैकाङ्कनिर्मितम्" तल्लक्षणम्। "तच्च नटकमेलकादि" सा०द०।

**नटचर्य्या** स्त्री ६त०। नटस्य नृत्ये वाक्यार्थाभिनये अभि-नेयपदार्थानुकारे "नामानि रूपाणि मनोवचोभिः संत-न्वतो नटचर्य्यामिवास्य" भाग० १।१।२८

**नटन** न० नट–भावे ल्युट्। अङ्गविक्षेपरूपे नृत्ये अमरः।

**नटनारायण** पु० रागभेदे सङ्गीतशास्त्रम्।

**नटभूषण** पु०नटान् भूषयति भूषि–ल्यु। हरिताले रत्नमा०।

**नटमण्डन** पु०नटं मण्डयति मण्डि–ल्यु। हरिताले अमरः

**नटसंज्ञक** न० नटस्य संज्ञा सम्यक् ज्ञानं यस्मात् कप् "केऽणः" पा० ह्रस्वः। १गोदन्ताख्यहरिताले त्रिका०। नटे तिशब्दः संज्ञा यस्य कप्। २नटे।

**नटसूत्र** न० नटस्य तत्कृत्यस्य ज्ञापकं सूत्रम् शा०त०। शि-लालिना रचिते नटकृत्यज्ञापके ग्रन्थभेदे "पाराशर्य्य-शिलालिभ्यां भिक्षुनटसूत्रयोः" पा०।

**नटान्तिका** स्त्री नटस्य नटकृत्यस्यान्तोयस्याः कप् कापि अत इत्त्वम्। लज्जायां मेदि०। लज्जायां सत्यां नटकृ-त्यस्यासम्भवात् तत्त्वाशएव च तत्सम्भवात् तस्यास्तथात्वम्।

**नटेश्वर** पु० ६त०। शिवे हेमच० तस्य नृत्यप्रियत्वात् तत्-क्रियायां तस्य निपुणत्वाच्च तथात्वम्।

**नट्या** स्त्री नटानां समूहः पाशा० य। नटसमूहे।

**नड** भ्रंशे चुरा०उभ०अक०सेट्। नाडयति ते अनीनडत् त। अस्योपदेशत्वात् सति निमित्ते न णत्वम् प्रनाडयति।

**नड(ल)** पु०नल–बन्धे अच् वा डस्य लः। १गोत्रप्रवर्त्तक-र्षिभेदे पु० तस्य गोत्रापत्यम् नडादि० फक्। नाडायन तद्गोत्रापत्ये पुंस्त्री०। २नलतृणे च।

**नडक** न० नल बन्धे अच् संज्ञायां कन्। अंसयोर्मध्ये वर्त्त-माने नलाकारे अस्थिभेदे "हृदयं जिह्वा क्रोडं सव्य सक्थि पूर्वनडकम्" "दक्षिणसक्थि पूर्वनडकम्" कात्या० श्रौ० ६।७।३।४। [कुक् च। बहुलनडयुक्ते।

**नडकीय** त्रि० नडाः सन्त्यत्र "नडादीनां कुक् च" पा० छ

**नडप्राय** पु० नडः प्रायेण यत्र। नडबहुले देशे अमरः।

**नडभक्त** न० नडस्य विषयो देशः ऐषुका० भक्तल्। नडविषये

**नड(ल)मीन** पु० नड(ल) स्थितो मीनः। नलमध्यस्थिते (चिङ्गिडी) मत्स्ये अमरः।

**नडश** त्रि० नड+अस्त्यर्थे तृणा० श। नडयुक्ते

**नडागिरि** पु० नडप्रधानो गिरिः किंशुका० संज्ञायां पूर्वस्य दीर्घः। नडप्रधाने गिरिभेदे असंज्ञायां तु नडगिरिरित्येव

**नडादि** पु० "नडादिभ्यः फक्" पा० गोत्रे फक्प्रत्ययनि-मित्ते पा०ग० उक्ते १शब्दसमूहे स च गणः नड चर बक मुञ्ज इतिक इतिश उपक एक लमक शलङ्कु शलङ्कुश सप्तल वाजप्य तिक अग्निशर्मन् वृष(गणे) प्राण नर सायक दास मित्र द्वीप पिङ्गर पिङ्गल किङ्कर किङ्कल कातर कातल काश्यप काव्य काव्य अज अमुष्य कृष्णरणौ (ब्राह्मण वाशिष्ठे) अमित्र लिगु चित्र कुमार क्रोष्टु क्रोष्टम् लोह दुर्ग स्तम्भ शिंशपा अग्र तृण शकट सुमनस् सुमत मिमत ऋच् जलन्धर अध्वर युग-न्धर हंसक दण्डिन् हस्तिन् पिञ्ज पञ्चाल चमसिन् सुकृत्य स्थिरक ब्राह्मण चटक वदर अश्वल खरप लङ्क इन्ध अस्त्र कामुक ब्रह्मदत्त उदुम्बर शोण अलोह दण्डप"। नाडायनः चारायणः इत्यादि।

"नडादीनां कुक् च" पा० उक्ते छप्रत्ययकुगागमनिमित्ते २शब्दगणे च। स च गणः पा०ग०सू० उक्तो यथा नड प्लक्ष बिल्व वेणु वेत्र वेतस इक्षु काष्ठ कपोत तृण कुञ्चा (क्रुञ्चत्व) तक्षन्" नडकीयः।

**नडिनी** स्त्री नडाः सन्त्यस्यां "पुष्करादिभ्यो देशे" पा० इनि। नडयुक्तनद्याम् देशत्वाभ "देशो नदीभूधरकन्दरादिः" इत्युक्तः तेन भूधरे नडिन् पु० देशभिन्ने तु नड्वान् भूमिभागः इत्यादि। स्त्रादौ।

**नडिल** त्रि० नडस्यादूरदेशादि काश्या० इल। नडसमीप-

**नड्या** स्त्री नडानां समूहः पाशा० य । नडसमूहे अमरः । तत्र गणे नटेत्यत्र नडेति पाठान्तरम् ।

**नड्वत्** त्रि० नडाः सन्ति प्रायेणात्र "कुमुदनडवेतसेभ्यो ड्मतुप्" पा० ड्मतुप् । बहुलनडयुक्ते

**नड्वल** त्रि० नडाः प्रायेण सन्त्यत्र "नडशादाड् ड्वलच्" पा० ड्वलच् । बहुलनडयुते देशे "यो नड्वलानीव वनानि गजः परेषाम्" रघुः । वैराजस्य मनोः २पत्नीभेदे स्त्री "मनोरजायन्त दश नड्वलायां महौजसः । कन्यायां भरतश्रेष्ठ ! वैराजस्य प्रजापतेः" हरिवं०२अ० । नड्वलः स्थानत्वेन अभिमतत्वे नास्त्यस्या अच् । ३नड्वलस्थे ४तदभिमानिनि च देवताभेदे स्त्री "नड्वलाभ्यः शौल्कासम् पाराय मार्गारम्" यजु०३०।१६ पुरुषमेधीयपश्वुक्तौ

**नत** त्रि० नम–कर्त्तरि क्त । १नम्रीभूते २कुटिले च मेदि० । "नतभ्रुवो नव्यजनापनेयः" उद्भटः । सि० शि० प्रमिता० उक्ते येन कालेन मध्याह्नात्ततोरविस्तादृशे ३काल-भेदे उन्नतशब्दे १८८०८९ पृ० दृश्यम् "पूर्वं नतं स्यादि-नरात्रिखण्डं दिवानिशोरिष्टघटीविहीनम् । दिवानिशो-रिष्टघटीषु शुद्धं द्युरात्रिखण्डं त्वपरं नतं स्यात्" नी०ता० उक्ते ३इष्टघटीहीने दिवारात्रार्द्धकाले इष्टघटीतो वा हीने ४तथाभूते काले च छायया दिनज्ञानार्थे ५धनुः-कलाभेदे च सच सू० सि० रङ्गनाथाभ्यां दर्शितो यथा

"मध्यच्छाया भुजस्तेन गुणिता त्रिभमौर्विका । स्व-कर्णाप्ता धनुर्लिप्ता नतास्ता दक्षिणे भुजे । उत्तराश्चो-त्तरे याम्यास्ताः सूर्यक्रान्तिलिप्तिकाः । दिग्भेदे मि-श्रिताः साम्ये विश्लिष्टाश्चाक्षलिप्तिकाः" सू०सि० "अभीष्ट-दिने माध्याह्निकी छाया भुजसंज्ञा ज्ञेया । तेन भुजेन त्रिज्या गुणिता मध्याह्नच्छायाकर्णेन भक्ता फलस्य धनुःकला नता नतसंज्ञास्ताः नतकला दक्षिणे भुजे मध्याह्नच्छायारूपभुजे प्राच्यापरसूत्रमध्याहृक्षिण-दिक्स्थे सति उत्तरदिक्का, उत्तरे भुजे दक्षिणाः । चो विपर्ययव्यवस्थार्थकः । ता नतकलाः सूर्यक्रान्तिनत-कलाः प्रागुक्ताः, दिग्भेदस्वदिशोर्भिन्नत्वे मिश्रिताः संयुक्ताः साम्येऽभिन्नदिक्त्वे विश्लिष्टा अन्तरिताः । द्वाद-शाङ्गुलशङ्कुकोटौ मध्याह्नच्छायाकर्णे वा मध्यच्छाया भुजस्तथा स्वस्वस्तिकान्मध्याह्नकाले सूर्यस्य याम्यो-त्तरवृत्ते यदन्तरेण नतत्वं ता नतकलास्तज्ज्या नतां-शज्या मध्याह्नोन्नतांशज्यारूपशङ्कौ त्रिज्याकर्णे वा भुज इति मध्याह्नच्छायाकर्णे मध्याह्नच्छाया भुजस्तदा त्रिज्याकर्णे को भुज इत्यनुपातेन नतज्या तद्नुरत्व कलात्मकत्वान्नतकलास्ता यद्दसम्बद्धा इति छायादिग्-विपरीतदिक्काः । अथ क्रान्त्यंशाक्षांशयोरेकदिक्त्वे यो-गेन नतांशा इति दक्षिणा नतकला दक्षिणक्रान्ति कलाभिर्हीना अक्षांशा भवन्ति । क्रान्त्यंशाक्षांशयोर्भि-न्नदिक्त्वेऽन्तरेण नतांशा यदि दक्षिणास्तदा क्रान्त्यू-नाक्षांशस्य नतत्वादुत्तरक्रान्तियुता अक्षांशाः यदि तूत्तरास्तदाक्षोनक्रान्तेर्नतत्वान्नतोनोत्तरक्रान्तिरक्ष इति सम्यगुपपन्नम्" रङ्ग० । अधिकं नतिशब्दे दृश्यम् ।

**नतद्रुम** पु० नित्यक० । लताशाले रत्नमा० । [अमरः ।

**नतनासिक** त्रि०नता नासिकाऽस्य । (खाँदा) नतनासायुक्ते

**नतराम्** अव्य० न+आमु तरप् । १कतिपयवनजर्थे प्रतियो-ग्यसमानाधिकरणे अभावे २नितरामित्यर्थे च "तस्मा-देतयोः सतोर्नतरां चन्द्रमा भाति" शत०ब्रा०११।८।३।१

**नताङ्गी** स्त्री नतमङ्गमस्या ङीप् । नार्यां राजनि० ।

**नति** स्त्री नम–भावे क्तिन् । नमने स्वापकर्षबोधकव्यापा-रभेदे करशिरःसंयोगादौ । नमस्कारभेदाश्च कालीपु०यथा "त्रिकोण१मथ षट्कोण२मर्द्धचन्द्रं३ प्रदक्षिणम्४ । द-ण्ड५मष्टाङ्ग६मुग्रञ्च७ सप्तधा नतिलक्षणम् । ऐशानी वाथ कौवेरी दिक् कामाख्याप्रपूजने । प्रयत्ना स्थण्डिलादौ च सर्वमूर्त्तेस्तु सर्वतः । त्रिकोणादिव्यवस्थाश्च यदि पूर्वमुखो भवेत् । पश्चिमाच्चायवीं गत्वा व्यवस्थां नि-र्दिशेत् तदा । यदोत्तरामुखः कुर्यात् साधको देवपूज-नम् । तदा याम्यात्तु वायव्यां गत्वा कुर्यात्तु संस्थि-तिम् । दक्षिणाद्यायवीं गत्वा दिशं तस्माच्च याम्यवीम् । ततोऽपि दक्षिणं गत्वा नमस्कारस्त्रिकोणवत् । त्रि-कोणो यो नमस्कारस्त्रिपुराप्रीतिदायकः१ । दक्षिणाद्वा-यवीं गत्वा तां त्यक्त्वाग्नौ प्रविश्य च । अग्नितो राक्षसीं गत्वा ततश्चाप्युत्तरां दिशम् । उत्तराच्च तथाग्नेयीं भ्रमणं द्वित्रिकोण(६)वत् । षट्कोणो यो नमस्कारः प्रीतिदः शिवदुर्गयोः२ । दक्षिणाद्वायवीं गत्वा तस्मा-व्यावृत्य दक्षिणाम् । गत्वा योऽसौ नमस्कारः सोऽर्द्ध-चन्द्रः प्रकीर्त्तितः३ । सकृत् प्रदक्षिणं कृत्वा वर्तुला-कृति साधकः । नमस्कारः कथ्यतेऽसौ प्रदक्षिण इति द्विजैः४ । त्यक्त्वा स्वमासनस्थानं पश्चाद् गत्वा नम-स्कृतिः । प्रदक्षिणं विना या तु निपत्य भुवि दण्डवत् । दण्ड इत्युच्यते दैवैः सर्वदेवौघमोददः५ । पूर्ववद् दण्ड-वद् भूमौ निपत्य हृदयेन तु । चिवुकेन मुखेनाथ

नासया हनुकेन च। ब्रह्मरन्ध्रेण कर्णाभ्यां यद्भूमिस्पर्शनं क्रमात्। तदष्टाङ्ग इति प्रोक्तो नमस्कारो मनोषिभिः॥ ६ ॥ प्रदक्षिणत्रयं कृत्वा साधको वर्त्तुलाकृति। ब्रह्मरन्ध्रेण संस्पर्शः क्षितेर्यः स्यान्नमस्कृतौ। स उग्र इति देवौघैरुच्यते विष्णुतुष्टिदः॥ ७ ॥ नदानां सागरो यादृग् द्विपदां ब्राह्मणो यथा। नदीनां जाह्नवी यादृग् देवानामिव चक्रभृत्। नमस्कारेषु सर्व्वेषु तथैवोग्रः प्रशस्यते। त्रिकोणाद्यैर्नमस्कारैः कृतैरेव तु भक्तितः। चतुर्व्वर्गं लभेद्भक्तो नचिरादेव साधकः। नमस्कारो महायज्ञः प्रीतिदः सर्व्वतः सदा। सर्व्वेषामपि देवानामन्येषामपि भैरव!। योऽसावुग्रो नमस्कारः प्रीतिदः सततं हरेः। महामायाप्रीतिकरः स नमस्कारपोत्तमः"। नतिविशेषस्तु यामले "त्रिकोणाकारा सर्व्वत्र नतिः शक्तेः समीरिता। दक्षिणाद्वायवीं गत्वा दिशं तस्माच्च शाम्भवीम्। ततश्च दक्षिणं गत्वा नमस्कारस्त्रिकोणवत्। अर्द्धचन्द्रं महेशस्य पृष्ठतश्च समीरितम्। शिवप्रदक्षिणे मन्त्री अर्द्धचन्द्रं क्रमेण तु। सव्यासव्यक्रमेणैव सोमसूत्रं न लङ्घयेत्। (सोमसूत्रं जलनिःसरणस्थानम्) "प्रसार्य्य दक्षिणं हस्तं स्वयं नम्रशिराः पुनः। दर्शयेद्दक्षिणं पार्श्वं मनसापि च दक्षिणः। त्रिधा च वेष्टयेत् सम्यक् देवतायाः प्रदक्षिणम्। एकहस्तप्रमाणश्च एकशोऽपि प्रदक्षिणम्"।

"गन्धर्व्वतन्त्रे देवमानुषगन्धर्व्वा यक्षराक्षसपन्नगाः। नमस्कारेण तुष्यन्ति महात्मानः समन्ततः। नमस्कारेण लभते चतुर्व्वर्गं महोदयम्। सर्व्वत्र सर्व्वसिद्ध्यर्थं नतिरेका प्रवर्त्तते। नत्या विजयते लोकान् नत्या धर्म्मः प्रवर्त्तते। नमस्कारेण दीर्घायुरच्छिन्ना लभते प्रजाः। चतुर्व्वर्गं लभेद्भक्तो नचिरादेव साधकः। नमस्कारो महायज्ञः प्रीतिदः सर्व्वतः सदा। नमस्कुरु महादेवीं प्रदक्षिणञ्च भक्तितः"। योगिनीतन्त्रे पूर्व्वखण्डेऽष्टमपटले "प्रदक्षिणत्रयं कुर्य्यात् पद्माकारं नमेत्ततः। दक्षिणादुत्तरं गत्वा देवस्य च महेश्वरि!" प्रदक्षिणत्रयम् आदिमध्यावसाने ज्ञेयम्। तथाच कुमारीपूजामधिकृत्य रुद्रयामले उत्तरखण्डे षष्ठपटले "प्रदक्षिणत्रयं कुर्य्यादादौ मध्ये तथान्ततः। पश्चात्तु दक्षिणां कुर्य्यात् रजतैः स्वर्णमौक्तिकैः"। "कृताञ्जलिं ततो बद्ध्वा भ्रामयित्वा नमेत्ततः। प्रत्येकस्मिन् देवि! दण्डवत् प्रणिपातयेत्। योनौ नमेद्भ्रमित्वा तु अपराधो भवेत्तदा। अवद्धाञ्जलिना यस्तु नमस्कारं करोति सः। मोहान्धकारे नरके पच्यते नात्र संशयः। यातान्तरे न प्रणमेन्मूर्द्धा न च क्षितिं स्पृशेत्। शपन्ति देवतास्तस्य विफलं तत् प्रकीर्त्तितम्। प्रणामे देवदेवस्य यावत्यो मृत्तिकाः प्रिये!। शरीरे वा महेशानि! तस्य पुण्यफलं शृणु। यावन्तो रेणवस्तस्य यावत् कालञ्च तिष्ठति। तावद्वर्षसहस्राणि ब्रह्मलोके महीयते"। योगिनी॰गन्धर्व्वतन्त्रे "कायिको वाग्भवश्चैव मानसस्त्रिविधः स्मृतः। नमस्कारास्तु विज्ञेया उत्तमाधममध्यमाः। कायिकैस्तु नमस्कारैर्देवास्तुष्यन्ति सर्व्वदा। नमस्कारेषु सर्व्वेषु कायिकः प्रथमः स्मृतः। जानुभ्यामवनीं गत्वा संस्पृश्य शिरसा क्षितिम्। क्रियते यो नमस्कारः प्रोच्यते कायिकस्तु सः। पुटीकृत्य करौ शीर्षे सर्व्वधर्म्मार्थसाधनम्। प्रसार्य्य दक्षिणं हस्तं स्वयं नम्रशिराः पुनः। दर्शयन् दक्षिणं पार्श्वं भक्तिश्रद्धासमन्वितः। सकृत् प्रदक्षिणं कृत्वा वर्त्तुलाकृति साधकः। स तु प्रदक्षिणो ज्ञेयः सर्व्वदेवैकतुष्टिदः। अष्टोत्तरशतं यस्तु देव्याः कुर्य्यात् प्रदक्षिणम्। स सर्व्वकामसम्प्राप्य पश्चान्मोक्षमवाप्नुयात्। त्रिकोणमथ षट्कोणमर्द्धचन्द्रं प्रदक्षिणम्। दण्डमष्टाङ्गमुग्रञ्च सप्तधा नतिलक्षणम्। दक्षिणाद्वायवीं गत्वा तस्मादाहृत्य दक्षिणम्। गत्वा योऽसौ नमस्कारः सोऽर्द्धचन्द्रो मम प्रियः। नमस्कारेषु जानीयादाद्यं प्राकृतमद्रिजे!। त्यक्त्वा स्वमासनस्थानं पश्चाद्गत्वा नमस्कृतौ। निपत्य दण्डवद्भूमौ दण्ड इत्युच्यते बुधैः। तथैव दण्डवद्भूमौ निपत्य हृदयेन च। चिबुकेन मुखेनाथ नासया हनुकेन च। चक्षुषा चाथ कर्णाभ्यां ब्रह्मरन्ध्रेण चैव हि। तदष्टाङ्गमिति प्रोक्तं यद्भूमिं स्पृशते क्रमात्"। मेरुतन्त्रे "हस्ताभ्यां चरणाभ्याञ्च जानुभ्यां वक्षसा तथा। मूर्द्ध्ना दृष्ट्या तथा वाचा चित्तेनाष्टाङ्ग ईरितः। हस्तजानुशिरोवाक्यधीभिः पञ्चाङ्ग ईरितः"। गन्धर्व्वतन्त्रे ब्रह्मरन्ध्रेण संस्पर्शः क्षितेर्यः स्यात् नमस्कृतौ। स उग्र इति विज्ञेयो विष्णोस्तुष्टिप्रदायकः। यः स्वयं गद्यपद्याभ्यां घटिताभ्यां नमस्कृतिः। क्रियते भक्तियुक्तेन वाचिकस्तूत्तमः स्मृतः। पौराणिकैर्व्वैदिकैर्वा तान्त्रिकैः क्रियते नतिः। स मध्यमो नमस्कारो भवेद्वाचारतः सदा। परेषां गद्यपद्याभ्यां नमस्कारो यस्य भवेत्। स वाचिकोऽधमो ज्ञेयो नमस्कारेषु सर्व्वतः। इष्टमध्यानिष्टगतैर्मनोभिस्त्रिविधं भवेत्। नमनं मानसं प्रोक्तमुत्तमाधममध्यमम्॥

त्रिविधे च नमस्कारे कायिकश्चोत्तमः स्मृतः"। अन्यत्र विस्तरः २ऊर्द्ध्वस्थितस्याधःपतनानुकूलक्रियाभेदे(नोचोया) ३चन्द्रार्कग्रहयोर्याम्योत्तरयोरन्तरे यथोक्तं सि॰ शि॰ प्रमिता॰ "यत् पूर्वापरभावेन लम्बनाख्यं तदन्तरम्। यद् याम्योत्तरभावेन नतिसंज्ञं तदुच्यते" सि॰शि॰ "अथ याम्योत्तरायां तु भित्तौ पूर्वोक्तमालिखेत्। ये कक्षामण्डले तत्र भवेदृक्क्षेपमण्डले। भिन्नोन्नतस्य दृग्ज्या वा च दृक्क्षेपो द्वयोरपि। तच्चापांशैर्नतौ विन्दू कृत्वा वित्रिभसंज्ञकौ। तल्लम्बनकलाः प्राग्वज्ज्ञेया याम्या नतिलिप्तिकाः। ग्रहयोरन्तरं यत् स्याद् वित्रिभे सर्वतोऽपि तत्। याम्योत्तरं नतिः काल दृक्क्षेपात् साध्यते ततः" सि॰ शि॰। "तयोर्ग्रहयोः स्वाधोत् स्वस्वदृक्क्षेप चापांशैर्नतौ विन्दू कार्यौ। तौ च वित्रिभसंज्ञौ। ततः प्राग्वद् भूमध्याद् भूपृष्ठाच्च सूत्रे प्रसार्य लम्बनलिप्तिका ज्ञेया याम्या नतिलिप्तिकाः। नतिर्नाम चन्द्रार्कग्रहयोर्याम्योत्तरमन्तरम् तद्वित्रिभलग्नस्थाने यावत् सर्वतोऽपि तावदेव भवति। अतो दृक्क्षेपात् साधिता नतिः" प्रमिता॰

**नद** अर्चायाम् निघण्टुः स्तुतौ निरु॰। भ्वा॰पर॰सक॰ सेट्। नदति अन(ना)दीत् ननाद। णद शब्द इत्यस्य वोपदेशत्वात् सति निमित्ते णत्वं नास्येति भेदः। प्रणिनदति

**नद** सन्तोषे भ्वा॰पर॰ सक॰ सेट् इदित्। नन्दति अनन्दीत् ह्वित्। नन्दथुः "यस्यासौ तस्य नन्दथुः" भट्टिः। अणोपदेशत्वात् न णत्वम् प्रनिन्दति।

**नद** पु॰ नदति शब्दायते पचा॰ अच्। भिदो शोणसिन्धुभैरवदामोदरब्रह्मपुत्रादौ जलप्रवाहभेदे २समुद्रे च। नदश्च अकृत्रिमखाताच्छिन्नजलप्रवाहः पुंस्त्वान्वितः। "अन्यपदिस्तु तीर्थानि नदाश्च तत्र कोटयः" पद्मपु॰। नद—स्तुतौ कर्मणि अच्। ३ऋषौ पु॰ "ऋषिर्नदो भवति नदतेः स्तुतिकर्मणः" निरु॰।

**नदथु** पु॰ नद—अव्यक्तशब्दे बा॰ अथुच्। वृषभकूजिते। "निनदमिव नदथुमिवाम्नेर्ज्वलन उपशृणोति" छा॰उ॰ "नदथुमिव वृषभकूजितमिव" भा॰।

**नदनु** पु॰ नद—अनु। १मेघे उणादिकोषः। २सिंहे शब्दार्थचि॰ भावे अनु। ३शब्दे "तविष्यो नदनुमां ऋजीषी" ऋ॰ ६।१८।२ "नदनुमान् शब्दवान्" भा॰

**नदर** त्रि॰ नदस्यादूरदेशादि अश्मा॰ र। १नदसन्निकृष्टदेशादौ नास्ति दरो भयं यस्य। २भयशून्ये त्रि॰।

**नदराज** पु॰ ६त॰ टच् समा॰। समुद्रे "प्रथमं प्रभुं नदराजमुतावदनेन्दुनेव तुहिनद्युतिना" माघः। नदपत्यादयोऽप्यत्र

**नदाल** त्रि॰ नद वा॰ आल। भाग्ययुक्ते। अस्य भगालवादित्वात् तत्पुरुषे प्रकृतिस्वरः तेन कुम्भीनदालमित्यत्र मध्योदात्तताऽस्य सि॰ कौ॰

**नदी** स्त्री नद—अच् पचादिगणे नदट् इति निर्देशात् टित्त्वेन ङीप्। अष्टसहस्रधनुरन्यूनदेशव्यापिजलायामकृत्रिमायां जलप्रवाहरूपायां गङ्गाप्रभृतौ। "धनुः सहस्राण्यष्टौ च गतिर्यासां न विद्यते। न ता नदीशब्दवहा गर्त्तास्ते परिकीर्त्तिताः" छन्दोगप॰ उक्तपरिमाणवतीष्वेव नदीशब्दो रूढः। द्वीपभेदे नदीभेदास्तत्तद्द्वीपशब्दे दृश्याः। जम्बूद्वीपस्था नदीभेदाश्च विस्तरेण जम्बूद्वीपशब्दे ३०४६पृ॰ भा॰भी॰ पर्वोक्ता दर्शिताः। कासाञ्चिन्नदीनामुत्पत्तिस्थानादिकं मत्स्यपुराणोक्तं प्रदर्श्यते।

"प्रागुत्तरेण कैलासाद्दिव्यं सौगन्धिकं गिरिम्। सर्वधातुमयं दिव्यं सुवेलं पर्वतं प्रति। चन्द्रप्रभो नाम गिरिः स शुभ्रो रत्नसन्निभः। तत्समीपे सरो दिव्यमच्छोदं नाम विश्रुतम्। तस्मात् प्रभवते दिव्या नदी ह्यच्छोदिका शुभा। तस्यास्तीरे वनं दिव्यं महच्चैत्ररथं शुभम्"। "कैलासाद्दक्षिणप्राच्यां शिवं सर्वौषधिं गिरिम्। मनःशिलामयं दिव्यं शवलं पर्वतं प्रति। लोहितो हेमशृङ्गस्तु गिरिः सूर्यप्रभो महान्। तस्य पादे महद्दिव्यं लोहितं सुमहत्सरः। तस्मात् प्रभवते पुण्यो लौहित्यश्च नदो महान्। दिव्यारण्यं विशोकञ्च तस्य तीरे महद्वनम्"। "कैलासात् पश्चिमोदीच्यां ककुद्मानौषधीगिरिः। ककुद्मति च रुद्रस्य उत्पत्तिश्च ककुद्मिनः। तदञ्जनं त्रैककुदं शैलन्त्रिककुदं प्रति। सर्वधातुमयस्तत्र सुमहान् वैद्युतो गिरिः। तस्य पादे महद्दिव्यं मानसं सिद्धसेवितम्। तस्मात् प्रभवते पुण्या सरयूर्लोकपावनी। तस्यास्तीरे वनं दिव्यं वैभ्राजं नाम विश्रुतम्" "कैलासात् पश्चिमायां तु दिव्यः सर्वौषधिगिरिः। अरुणः पर्वतश्रेष्ठो रुक्मधातुविभूषितः। भवस्य दयितः श्रीमान् पर्वतो हेमसन्निभः। शातकौम्भमयैर्दिव्यैः शिलाजालैः समाचितः। शतसंख्यैस्तापनीयैः शृङ्गैर्दिवमिवोल्लिखन्। शृङ्गवान् सुमहादिव्यो दुर्गः शैलो महाचितः। तस्मिन् गिरौ निवसति गिरिशो धूम्रलोचनः। तस्य पादात् प्रभवति शैलोदं नाम तत्सरः। तस्मात् प्रभवते पुण्या नदी शैलोदका शुभा। सा चक्षुःसीतयोर्मध्ये प्रविष्टा पश्चिमोदधिम्। अस्त्यु-

त्तरेण कैलासाच्छिवः सर्वौषधिर्गिरिः। गौरन्तु पर्वतश्रेष्ठं हरितालमयं प्रति। हिरण्यशृङ्गः सुमहान् दिव्यौषधिमयो गिरिः। तस्य पादे महद्दिव्यं सरः काञ्चनवालुकम्। रम्यं विन्दुसरो नाम यत्र राजा भगीरथः। गङ्गार्थं स तु राजर्षिरुवास बहुलाः समाः" "दृश्यते भासुरा रात्रौ देवी त्रिपथगा तु सा। अन्तरिक्षं दिवं चैव भावयित्वा भुवङ्गता। भवोत्तमाङ्गे पतिता संरुद्धा योगमायया। तस्या ये विन्दवः केचित् क्रुद्धायाः पतिता भुवि। कृतन्तु तैर्विन्दुसरस्ततो विन्दुसरः स्मृतः"। "त्रीणि प्राचीमभिमुखं प्रतीचीन्त्रीण्यथैव तु। स्रोतांसि त्रिपथायास्तु प्रत्यपद्यन्त सप्तधा। नलिनी ह्लादिनी चैव पावनी चैव प्राच्यगा। सीता चक्षुश्च सिन्धुश्च तिस्रस्ता वै प्रतीच्यगाः। सप्तमी त्वनुगा तासां दक्षिणेन भगीरथम्। तस्मात् भागीरथी सा वै प्रविष्टा दक्षिणोदधिम्। सप्त चैताः प्लावयन्ति वर्षन्तु हिमसाह्वयम्। प्रसूताः सप्त नद्यस्तु शुभा विन्दुसरोद्भवाः। तान् देशान् प्लावयन्ति स्म म्लेच्छप्रायांश्च सर्वशः। सशैलान् कुकुरान् रौध्रान् वर्वरान् यवनान् खसान्। पुलिकांश्च कुलत्यांश्च अङ्गलोक्यान्वरांश्च यान्। कृत्वा द्विधा हिमवन्तं प्रविष्टा दक्षिणोदधिम्। अथ वीरमरूंश्चैव कालिकांश्चैव शूलिकान्। तुषारान् वर्वरानङ्गानतुष्णान् पारदान् शकान्। एतान् जनपदांश्चक्षुः प्लावयित्वोदधिङ्गता। दरदोर्जगुडांश्चैव गान्धारानौरसान् कुहून्। शिवपौरानिन्द्रमरून् वसतीन् समतेजसा। सैन्धवानुर्वसान् वर्बान् कुपथान् भीमरोमकान्। शुनामुखांश्चोर्द्ध्वमरून् सिन्धुर्देशान्निषेवते। गन्धर्वान् किन्नरान् यक्षान् रक्षोविद्याधरोरगान्। कलापग्रामकांश्चैव तथा किंपुरुषान्नरान्। किरातांश्च पुलिन्दांश्च कुरून् वै भारतानपि। पाञ्चालान् कौशिकान् मत्स्यान् मागधाङ्गांस्तथैव च। ब्रह्मोत्तरांश्च वङ्गांश्च ताम्रलिप्तांस्तथैव च। एतान् जनपदानार्यान् गङ्गा भावयते शुभा। ततः प्रतिहता विन्ध्ये प्रविष्टा दक्षिणोदधिम्। ततस्तु ह्लादिनी पुण्या प्राचीनाभिमुखा ययौ। प्लावयन्त्युपकांश्चैव निषादानपि सर्वशः। धीवरानृषिकांश्चैव तथा नीलमुखानपि। केकरानेककर्णांश्च किरातानपि चैव हि। कालिन्दगतिकांश्चैव कुशिकान् स्वर्गभौमकान्। सा मण्डले समुद्रस्य तीरे भूत्वा तु सर्वशः। ततस्तु नलिनी चापि प्राचीमेव दिशं ययौ। कुपथान् प्लावयन्ती सा इन्द्रद्युम्नसरांस्यपि। तथा खरपथान् देशान् वेत्रशङ्कुपथानपि। मध्येनोज्जानकमरून् कुथप्रावरणान् ययौ। इन्द्रद्वीपसमीपे तु प्रविष्टा लवणोदधिम्। ततस्तु पावनी प्रायात् प्राचीमाशाञ्जवेन तु। तोमरान् प्लावयन्ती च हंसमार्गान् समूहकान्। पूर्वान्देशांश्च सेवन्ती भित्त्वा सा बहुधा गिरिम्। कर्णप्रावरणान् प्राप्य गता चाश्वमुखानपि। सिक्ता पर्वतमेरुं सा गत्वा विद्याधरानपि। शैलिमण्डलकोष्ठन्तु सा प्रविष्टा महत्सरः। तासां नद्युपनद्योऽन्याः शतशोऽथ सहस्रशः। उपगच्छन्ति ता नद्यो यतो वर्षति वासवः" "हेमकूटस्य पृष्ठे तु सर्पाणां तत् सरः स्मृतम्। सरस्वती प्रभवति तस्माज्ज्योतिष्मती तु या। अवगाढे ह्युभयतः समुद्रौ पूर्वपश्चिमौ। सरो विष्णुपदं नाम निषधे पर्वतोत्तमे। यस्माद्द्वे प्रभवति गन्धर्वानुकूले च ते। मेरोः पार्श्वात् प्रभवति ह्रदश्चन्द्रप्रभो महान्। जम्बूश्चैव नदी पुण्या यस्यां जाम्बूनदं स्मृतम्। पयोदस्तु ह्रदो नीलः स शुभः पुण्डरीकवान्। पुण्डरीकात् पयोदाश्च तस्माद्द्वे संप्रसूयतः। सरसस्तु सरस्वेतत् स्मृतमुत्तरमानसम्। मृग्या च मृगकान्ता च तस्माद्द्वे सम्प्रसूयतः। ह्रदाः कुरुषु विख्याताः पद्ममीनकुलाकुलाः। नाम्ना ते वै जया नाम द्वादशोदधिसन्निभाः। तेभ्यः शान्ता च माध्वी च द्वे नद्यौ सम्प्रसूयतः। किंपुरुषाद्यानि यान्यष्टौ तेषु देवो न वर्षति। उद्भिदान्युदकान्यत्र प्रवहन्ति सरिद्वराः। बलाहकश्च ऋषभो वज्रो मैनाक एव च। विनिविष्टाः प्रतिदिशं निमग्ना लवणाम्बुधिम्"

भारतवर्षे नदीभेदाः वराहपु० उक्ता यथा "गङ्गा सिन्धुः सरस्वती शतद्रुः वितस्ता विपाशा चन्द्रभागा सरयूः यमुना इरावती देविका कुहूः गोमती धूतपापा बाहुदा दृषद्वती कौशिकी निःचीरा गण्डकी चक्षुष्मती लोहिता च इत्येता हिमवत्पादनिर्गताः। वेदस्मृती वेदवती सिन्धुः अपर्णा चन्दना सदाचरा रोहिपारा चर्मन्वती विदिशा वेदवती वयन्ती च इत्येताः पारियात्रोद्भवाः। शोणा ज्योतीरथा नर्मदा सुरसा मन्दाकिनी दशार्णा चित्रकूटा तमसा पिप्पला करतोया पिशाचिका चित्रोत्पला विशला वञ्जुला वालुकावाहिनी शुक्तिमती विरजा पङ्किनीरिषी च इत्येता ऋक्षपर्वतप्रसूताः। मणिजाला शुभा तापी पयोष्णी

शीघ्रोदा रेवा विपाशा वैतरणी वेदीपाला कुमुद्वती तोया दुर्गा चान्त्यगिरा च एता विन्ध्यपादोद्भवाः। गोदावरी भीमरथी कृष्णा वेणा वञ्जुला तुङ्गभद्रा सुप्रयोगा ब्रह्मकावेरी शतमाला ताम्रपर्णी पुष्पावती उत्पलावती च इत्येता मलयभवाः। त्रियामा ऋषिकुल्या वङ्क्षुरा त्रिदिवा लोकमूलिनी वंशधरा महेन्द्रतनया ऋषिकाऽनुमती मन्दगामिनी पलाशिनी च इत्येताः शुक्तिमत्प्रभवाः। एताः प्राधान्येन कुलाचलनद्यः। शेषाः क्षुद्रनद्यः” वराहपुराणे कूर्मं दृश्यम्।

“कैलासपादसम्भूतं पुण्यं शीतजलं शुभम्। मन्दोदकं नाम सरः पयस्तु दधिसन्निभम्। तस्मात् प्रभवते दिव्या नदी मन्दाकिनी शुभा। दिव्यञ्च चन्दनवनं तस्यास्तीरे महद्वनम्” कालिकापु०।

तत्रैव स्थानान्तरे प्रधानसप्तनदीप्रादुर्भावकथा यथा

“एवं विवाह्य विधिवत् शौवर्णे मानसाचले। अरुन्धतीं वशिष्ठस्तु मोदमाप तया सह। तत्र यत् पतितं तोयं मानसाचलकन्दरे। विवाहावभृथार्थाय शान्त्यर्थं बहुधा कृतम्। ब्रह्मविष्णुमहादेवपाणिभिः समुदीरितम्। तत्तोयं सप्तधा भूत्वा पतितं मानसाचलात्। हेमाद्रेः कन्दरे सानौ सरस्यास्तु पृथक् पृथक्। तत्तोयं पतितं शिप्रे देवभोग्ये सरोवरे। तेन शिप्रा१ नदी जाता विष्णुना प्रेरिता क्षितिम्। महाकोशीप्रपाते च यद्वारि पतितन्तु तैः। कोशिकी२ नाम सा जाता विश्वामित्रावतारिता। उमाचले यत् पतितं तोयं तेन महानदी। कावेरी३ नाम सा जाता तदा कौवेरसंस्तुता। महाकाले सरःश्रेष्ठे पतितं तज्जलं गिरेः। हिमाद्रेः पार्श्वभागे तु दक्षिणे शम्भुसन्निधौ। गोमतिर्नाम तैर्जाता नदी गोमत्युदीरिता४। मैनाको नाम यः पुत्रः शैलराजस्य च प्रियः। यस्तु तस्मिन् समुत्पन्नो मेनकोदरतः पुरा। यत्तत्र पतितं तोयं तस्माज्जाता महानदी। देविकाख्या५ महादेवप्रेरिता सागरं प्रति। तत्तोयं सङ्गतं हंसैरितं बाडवसन्निधौ। तेनाभूत् सरयूर्नाम्ना नदी पुण्यतमा शुभा। यान्यम्भांसि महापार्श्वे खाण्डवारण्यसन्निधौ। हिमवत्कन्दरे याम्ये इरावद्व्यूहमध्यतः। इरावती७ नाम नदी तैस्तु जाता सरिद्वरा। एताः सर्वाः स्नानपानात् सर्वैर्जाह्नवी यथा। फलं ददति मर्त्यानां दक्षिणोदधिगाः सदा। धर्मार्थकाममोक्षाणां बीजभूताः सदा च ताः। महानद्यस्तु सप्तैताः सर्वदा देवभोगदाः। एवं नद्यः सप्त जाताः सदा पुण्यतमोदकाः। अरुन्धत्या वशिष्ठस्य विवाहे देवसन्निधौ” इति

नद्यादीनां रूपद्वयं यथा “नद्यश्च पर्वताः सर्वे द्विरूपाश्च स्वभावतः। तोयं नदीनां रूपन्तु शरीरमपरन्तथा। स्थावरं पर्वतानान्तु रूपं कायस्तथाऽपरः। शुक्तीनामथ कम्बूनां तथैवान्तर्गता तनुः। बहिरस्थिस्वरूपन्तु सर्वदैव प्रवर्तते। एवं जलं स्थावरत्वं नदीपर्वतयोस्तथा। अन्तर्वसति कायस्तु सततं नोपलभ्यते। आप्याय्यते स्थावरेण शरीरं पर्वतस्य तु। तथा नदीनां कायस्तु तोयेनाप्याय्यते सदा। नदीनां कामरूपित्वं पर्वतानां तथैव च। जगत्स्थित्यै पुरा विष्णुः कल्पयामास यत्नतः। तोयहानौ नदीदुःखं जायते सततं द्विजाः!। विशीर्णे स्थावरे दुःखं जायते गिरिकायगम्” कालिकापु० २२अ०।

नदीभेदे जलगुणा राजनिघण्टौ उक्ता यथा

“सर्वा गुर्वी प्राङ्मुखी वाहिनी स्याल्लघ्वी पश्चाद्वाहिनी निश्चयेन। देशे देशे तद्गुणा सा विशेषात्सैषा धत्ते गौरवं लाघवञ्च। प्रायो मृदुवहा गुर्व्यो लघ्व्यः शीघ्रवहाः स्मृताः। नद्यः पाषाणसिकतावाहिन्यो विमलोदकाः। हिमवत्प्रभवा याश्च जलं तास्वमृतोपमम्। विन्ध्यात् प्राची प्राच्यवाची प्रतीची या चोदीची स्यान्नदी सा क्रमेण। वातारोधं श्लेष्मपित्तार्त्तिकोपं पित्तोद्रेकं पथ्यपाकञ्च धत्ते। पारिपात्रभवा याश्च विन्ध्यसह्यप्रभवाश्च याः। शिरोहृद्रोगकुष्ठानां ता हेतुः श्लीपदस्य च”। “वनस्पतीनां सरितां नदीनाम्” भट्टिः।

**नदीकदम्ब** पु० नद्या इव कदम्बो जलसमूहोऽत्र। १महाश्रावणिकायां राजनि० ६त०। २नदीसमूहे न०।

**नदीकान्त** पु० ६त०। १समुद्रे नदी कान्ता यस्य। २हिज्जलवृक्षे तस्य तत्समीपजातत्वेन तत्प्रियत्वात् तथात्वम्। ३सिन्धुवारे च मेदि०४जम्बूवृक्षे ५काकजम्बूवृक्षे च स्त्री मेदि० ६लतायां स्त्री हेमच०।

**नदीकूलप्रिय** पु० नदीकूलं प्रियमस्य। जलवेतसे जटाध०।

**नदीज** पु० नद्याः तत्समीपे जायते जन–ड ७त०। १अर्जुनवृक्षे रत्नमा०। २यावनालशरे ३हिज्जलवृक्षे राजनि०। ४स्रोतोऽञ्जने न० हेमच०। ५नदीजातमात्रे त्रि० ६भीष्मे पु० “नदीज! लङ्केशवनारिकेतुः” भा०वि० २८अ०। “विदतुर्यमुत्तममशेषपरिषदि नदीजधर्मजौ” माघः। ७अग्निमन्थवृक्षे स्त्री राजनि०८निष्पावभेदे पु० राजनि०।

**नदीदोह** पु॰ नदीतरणार्थं दोहः शाक॰त॰। नदीतरणाय खातरक्षेपेण देये दोहे दोहकर्म्मणि दुग्धे।

**नदीधर** पु॰ नदीं धरति धृ—अच् ६त॰। गङ्गाधरे शिवे।

**नदीन** पु॰ ६त॰। १समुद्रे त्रिका॰ "कवितास्रुतनदीनदीनः पर्य्यन्ते परमपदलीनः प्रभवति" कर्पूरस्तव। २वरुणे च नञ्शब्देन "सह सुपा" पा॰स॰। ३दीनभिन्ने त्रि॰ "रत्नैरलङ्करणभावमितैर्नदीनः" उभयार्थे नैषधम्।

**नदीनिष्पाव** पु॰ नद्यां तत्समीपे जातः निष्पावः। नदीजे निष्पावरूपे धान्यभेदे राजनि॰।

**नदपति** पु॰ ६त॰। १समुद्रे २वरुणे च अप्पतिशब्दे दृश्यम् "अथ नदीपतिं व्याह्वाति अपां पतिरसीति" शत॰ब्रा॰ ५।३।४।१० समुद्रोदकपरुणोक्तौ "मृवो मद्गुर्मत्स्यस्ते नदीपतये" यजु॰ २४।२४ अश्वमेधे षोडशावकाशे आलभ्यपशुदेवोक्तौ। नदीशनदीनाथादयोऽप्यत्र

**नदीभव** न॰नद्यां भवति भू—अच् ७त॰। १सैन्धवे लवणभेदे हेमच॰। २नदीजातमात्रे त्रि॰।

**नदीमातृक** त्रि॰ नदी मातेव पोषिकाऽस्य। नदीजलसम्पन्नव्रीहिपालिते देशे अमरः।

**नदीमुख** न॰नदी मुखमिव निःसरणमार्गः। १नदीरूपे समुद्रस्य इष्टजलनिःसरणमार्गे "हृष्टो नदीमुखेनैव प्रस्थानं लवणाम्भसः" रघुः। २नदीनां जलनिर्गमद्वारे (वाहा) ख्याते पदार्थे च "इन्द्रसृष्टैर्वर्त्तयन्ति धान्यैर्ये तु नदीमुखैः" भा॰स॰ ५॰अ॰। [गङ्गमाला।

**नदीवङ्क** पु॰ ६त॰। नद्या वक्रभागे (वाँक) ख्याते पदार्थे

**नदीवट** पु॰नद्यां तत्समीपे जातो वटः। वटीवृक्षे राजनि॰

**नदीष्ण** त्रि॰ नद्यां स्नातुं जानाति स्ना—क "निनदीभ्यां स्नातेः कौशले" पा॰ षत्वम्। नदीस्नानकुशले यस्यां यस्यां नद्यां यथावतरणीयं तज्ज्ञानयुक्ते पुरुषोत्तमः। "ततो नदीष्णान् पथिकान् गिरिज्ञान्" भट्टिः "आनायिनस्तद्विषये नदीष्णान्" रघुः। [नद्धे अमरः।

**नदीसर्ज्ज** पु॰ नद्या सृज्यतेऽसौ सृज—कर्मणि अप्। अर्जुन-

**नद्ध** त्रि॰ नह—बन्धने कर्मणि क्त। बद्धे "खर्जूरीस्कन्धनद्धानाम्" रघुः। [रज्ज्वाम् अमरः।

**नद्री** स्त्री नह्यतेऽनया नह—करणे ष्ट्रन् ङीप्। चर्म्मनिर्मित-

**नद्यादि** पु॰ जाताद्यर्थे ढक्प्रत्ययनिमित्ते शब्दगणे स च गणः पा॰ ग॰ सू॰ उक्तो यथा

"नदी मही वाराणसी श्रावस्ती कौशाम्बी वनकौशाम्बी काशपरी काशफरी खादिरी पूर्वनगरी पाठा माया शाल्वा दार्वा सेतकी(वडवाया वृषे)"। "नद्यादिभ्यो ढक्" पा॰ नादेयः इत्यादि।

**नद्याम्र** पु॰ नद्या आम्र इव। समष्टिलाख्ये राजनि॰।

**नद्या(न्द्या)वर्त्तक** पु॰ ज्योतिषोक्ते यात्रायोगभेदे

"खराशिगे बुधे लग्ने सिते वा सुरवन्दिते। नद्या(न्द्या)वर्त्तकयोगोऽयं यातुरिष्टार्थसिद्धिदः"। अन्योऽपि "भृगुते खोच्चगे लाभे मृगकुम्भगते यमे। नद्या(न्द्या)वर्त्तकयोगोऽयं रणे रिपुदवानलः"। ज्योतिषम्

**नद्युत्सृष्ट** त्रि॰ नद्या उत्सृष्टं स्थानम्। (चडा) इति ख्याते नदीजलत्यक्तभूभागे। तत्र स्वामित्वं निरूपितं विवादचिन्तामणिरत्नाकरादौ यथा

"नद्युत्सृष्टा राजदत्ता यस्य तस्यैव सा मही। अन्यथा न भवेल्लाभो नराणां राजदैविकः। जयोदयौ जीवनञ्च दैवराजवशान्नृणाम्। तस्मात् सर्वेषु कार्येषु तत्कृतं न विचालयेत्" तेन यस्य भूमिसन्निकृष्टं तस्यैव तत्र स्वामित्वं नान्यस्येति बोध्यम्।

**ननन्दृ** स्त्री न नन्दति कृतायामपि सेवायां न तुष्यति नन्द—ऋन् "सह सुपा" पा॰स॰। भर्त्तृभगिन्याम् (ननद) "पिता माता ननन्दा वा श्वश्रूश्वशुरदेवरः। जामाता दुहिता देवा न दण्ड्यास्तिमे दश" इत्युक्तेः अस्य सर्वनामस्थाने परे तृजन्ततुल्यत्वाभावात् न वृद्धिः किन्तु गुणः। तेन ननन्दरौ ननन्दर इत्यादि। पृषो॰ दीर्घे ननान्द्राप्यत्रार्थे "सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्र्वां भव। ननान्दरि सम्राज्ञी भव सम्राज्ञी अधिदेवेषु" ऋ॰१०।८५।४६

**नना** स्त्री न नमति नम—ड "सह सुपा" पा॰स॰। १वाक्ये निघण्टुः। नम—बा॰ डु। २मातरि ३दुहितरि च स्त्री "उपल प्रक्षिणी नना" ऋ॰ ९।११२।३ "नना माता दुहिता वा नमनक्रियायोग्यत्वात्। माता खल्वपत्यं प्रति स्तनपानादिना नमनशीला भवति। दुहिता वा शुश्रूषार्थम्" भा॰।

**ननु** अव्य॰नुद—डु। १प्रश्ने २अवधारणे ३अनुज्ञायाम् ४विनये ५आमन्त्रणे च अमरः। ६अनुनये विश्वः। ७विनिग्रहे ८परकृतौ ९अधिकारे १०सम्भ्रमे च मेदि॰। ११आक्षेपे प्रत्युक्तौ १२वाक्यारम्भे च हेमच॰। तत्र प्रश्ने "ननु गमिष्यो इत्यादि। अवधारणे "उपपन्नं ननु शिवम्" रघुः उपपन्नमेव। "त्वया नियम्या ननु दिव्यचक्षुषा" रघुः "आमन्त्रणे (सम्बोधने) ननु मां प्रापय पत्युरन्तिकम्"

कुमा॰ (ननु हे वसन्त !) आक्षेपे "ननु प्रात्यहिकभोजनस्य कुञ्जरशौचवत् दुःखानिवर्त्तकत्वे कथं तत्र प्रवृत्तिस्तत्राह" सा॰प्र॰भा॰।

**ननुच** अव्य॰ ननु+च+समा॰ द्व॰। विरोधोक्तौ अमरः।

**नन्त्व** त्रि॰ नम–बा॰ कर्मणि त्व। नमनीये "यो नन्त्वान्यनमन्न्योजसोत" ऋ॰ २।२४।२ "नन्त्वानि नमनयीनि" भा॰

**नन्द** पु॰ नन्द–भावे घञ्। १हर्षे आनन्दे २तदात्मके परमेश्वरे च "आनन्दो नन्दनो नन्दः" विष्णुसं॰। "सर्वाभिरुपपत्तिभिः समृद्धो नन्दः" भा॰। नन्दति मेघवर्षणात् नन्द–अच्। ३भेके शब्दरत्ना॰। ४क्षत्रियभेदे "नव नन्दा भविष्यन्ति चाणक्यो यान् हनिष्यति" स्कन्दपु॰। "महानन्दिसुतो राजन्। शूद्रागर्भोद्भवो बली। महापद्मपतिः कश्चित् नन्दः क्षत्रविनाशकृत्। ततो नृपा भविष्यन्ति शूद्रप्राया ह्यधार्मिकाः। स एकच्छत्रां पृथिवीमनुल्लङ्घितशासनः। शासिष्यति महापद्मो द्वितीय इव भार्गवः। तस्य चाष्टौ भविष्यन्ति सुमाल्यप्रमुखाः सुताः। य इमां भोक्ष्यन्ति महीं राजानस्च शतं समाः। नव नन्दान् द्विजः कश्चित् प्रपन्नानुद्धरिष्यति। तेषामभावे जगतीं मौर्य्या भोक्ष्यन्ति वै कलौ। स एव चन्द्रगुप्तं वै द्विजो राज्येऽभिषेक्ष्यति" भाग॰ १२।१।४ "नव नन्दान् नन्दं तत्पुत्रांश्चाष्टौ इत्येवं नव, प्रपन्नान् विश्रब्धान् विख्यातान् वा द्विजः कौटिल्यवात्स्यायनादिपर्य्यायः चाणक्य उद्धरिष्यति उन्मूलयिष्यति" श्रीधरस्वामी विस्तरेण तत्कथा वृहत्कथायां दृश्या। तेषां सपुत्राणां नवसंख्यत्वेन तत्तुल्यसंख्याके ५नवसंख्यायुक्ते च "नन्दत्रिषड्लग्नभवर्क्षपुत्रव्यया इमाश्चैपदं स्वभोज्यम्" नी॰ता॰ ६कुमारानुचरभेदे "हसो मेघवाहस्य तथा नन्दोपनन्दकौ" भा॰ श॰ ४६ अ॰। ७सर्पभेदे "सर्पौ चात्र विपुलौ दिव्यौ नन्दोपनन्दकौ" भा॰ द्रो॰ २१ अ॰। ८धृतराष्ट्रपुत्रभेदे "ऊर्णनाभः पद्मनाभस्तथा नन्दोपनन्दकौ" भा॰ आ॰ ६७ अ॰। ९वसुदेवस्य मदिरायां जाते पुत्रभेदे "पौरवी रोहिणी भद्रा मदिरा रोचना इला। देवकीप्रमुखाश्चासन् पत्न्य आनकदुन्दुभेः। "वसुदेवस्तु रोहिण्यां कृतादीनुदपादयत्। सुभद्रो भद्रवाहुश्च दुर्मदो भद्र एव च। पौरव्यास्तनया ह्येते भूताद्या द्वादशाभवन्। नन्दोपनन्दकृतकशूराद्या मदिरात्मजाः" भाग॰ ९।२४।२४। १०क्रौञ्चद्वीपस्थ वर्षपर्वतभेदे "तेषां वर्षगिरयः सप्त सप्तैव नद्यश्चाभिख्याताः। शुक्लो वर्द्धमानो भोजन उपवर्हणो नन्दो नन्दनः सर्वतो भद्र इति" भाग॰५।२०।१५। तद्वर्षवर्णने ११वेणुभेदे सङ्गीतदामोदरः यथा "महानन्दस्तथा नन्दो विजयोऽथ जयस्तथा। चत्वार उत्तमा वंशा मातङ्गमुनिसम्मताः। दशाङ्गुलो महानन्दो नन्द एकादशाङ्गुलः"। वसुनामक द्रोणावतारे व्रजस्थिते १२गोपभेदे "द्रोणो वसूनां प्रवरो धरया सह भार्य्यया। करिष्यमाण आदेशान् ब्रह्मणस्तमुवाच ह। जातयोर्नौ महादेवे भुवि विश्वेश्वरे हरौ। भक्तिः स्यात् परमा लोके ययाञ्जोदुस्तरं तरेत्। अस्त्वित्युक्तः स एवेह व्रजे द्रोणो महायशाः। जज्ञे नन्द इति ख्यातो यशोदा सा धरा भवत्" भाग॰१०।८अ॰ १३यक्षेश्वरानुचरभेदे "ददर्श नन्दोपनन्दाद्युत्तमं यक्षेश्वरं विश्वसृजां परं गुरुम्। सुनन्दनन्दाद्यनुगैर्वृतं तं मुदा ... प्रपेदे प्रयतः कृताञ्जलिः" भाग॰ ४।७।२२।

**नन्दक** पु॰नन्दयति नन्द–ण्वुल्। १विद्यामये विष्णोः खड्गे अमरः "नाम्नापि तस्यैव स नन्दकोऽभूत्" माघः। २भेके त्रिका॰। ४सन्तोषकारके ५कुलपालके च त्रि॰ स्वार्थे क। ६नन्दगोपे पु॰ ७नागभेदे "आर्य्यको नन्दकश्चैव तथा कलशपोतकौ" भा॰उ॰ १०२अ॰। नागोक्तौ ८असिमाले च "गान्धर्वमस्त्रं दयितमसिरत्नं च नन्दकम्" हरिवं॰ २१४अ॰। १०कुमारानुचभेदे "रणोत्कटः प्रहासश्च श्वेतसिद्धश्च नन्दकः" भा॰श॰ ४६अ॰। ११धार्त्तराष्ट्रपुत्रभेदे "नन्दको वाहुशाली च कुण्डजो विकटस्तथा" भा॰आ॰ १८६अ॰ तत्पुत्रोक्तौ।

**नन्दकि** नन्द–इन् वा॰ कुक्। पिप्पल्यां शब्दच॰।

**नन्दकिन्** पु॰ नन्दको विद्यामयोऽसिरस्यास्य इनि। विष्णौ "शङ्खभृत् नन्दकी चक्री शार्ङ्गधन्वा गदाधरः" विष्णुसं॰ "विद्यामयो नन्दकाख्योऽसिरस्यास्य" भा॰। [ब्दच॰।

**नन्दगोपिता** स्त्री नन्दाय हर्षाय गोपिता। रास्नायां श-

**नन्दथु** पु॰ नन्द–अथुच्। आनन्दे अमरः। "यस्यासौ तस्य नन्दथुः" भट्टिः।

**नन्दन** पु॰ नन्दयति नन्दि–ल्यु। १सुते २दुहितरि स्त्री ३भेके पुंस्त्री शब्दरत्ना॰। ४इन्द्रस्योद्याने न॰ "अभिज्ञाश्छेदपातानां क्रियन्ते नन्दनद्रुमाः" कुमा॰। ५हर्षके त्रि॰। ६विष्णौ पु॰ "आनन्दोनन्दनोनन्दः" विष्णुसं॰। "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति" श्रुतेस्तस्य नन्दहेतुत्वान्नन्दनत्वम् "शिवतुरगैस्तु नन्दनमिदं नजौ मजौ रहयम्" वृ॰टी॰ उक्ते ७अष्टादशाक्षरपादके

छन्दोभेदे । "बभूव भावेषु दिलीपनन्दनः" रघुः रघुनन्दनः यदुनन्दन इत्यादि "पुरीमवस्कन्द लुनीहि नन्दनम्" माघः ८महादेवे "नन्दीश्वरश्च नन्दी च नन्दनो नन्दिवर्द्धनः" भा०अनु०१७अ० शिवसहस्रनामोक्तौ । ८कुमारानुचरभेदे "वर्द्धनं नन्दनञ्चैव सर्वविद्याविशारदौ । स्कन्दाय ददतुः प्रीतावाश्विनौ भिषजां वरौ" भा०श०४५अ० । १०पर्वतभेदे "तीरे तु चन्द्रकुण्डस्य नन्दनो नाम वै गिरिः । तस्मिन् वसति शक्रस्तु कामाख्यासेवने रतः । व्यक्तभावं समापेदे सर्वदेवेश्वरो हरिः । सेवितुं त्रिदशेशानीं सततं वर्त्तते नतः । चन्द्रकूटस्य तु गिरेर्नन्दनस्य तथा गिरेः । प्रतिदर्शं तथा चन्द्रं प्रदक्षिणयति त्रिधा । चन्द्रकुण्डजले स्नात्वा समारुह्य च नन्दनम् । आराध्य शक्रं लोकेशं महाफलमवाप्नुयात्" कालिकापु० ८१अ० । ११षष्टिवर्षमध्ये षड्विंशतितमे वत्सरे । "सुभिक्षं क्षेममारोग्यं शस्यं भवति शोभनम् । बहुक्षीराश्च गावो नन्दन्ते नन्दने प्रिये !" भविष्यपु० ।

**नन्दनज** न० नन्दनवने जायते जन–ड । १हरिचन्दने राजनि० । २हर्षजातमात्रे त्रि० ३श्रीकृष्णे पु० ।

**नन्दनन्दन** पु० नन्दस्य नन्दनः आनन्दजनकः । श्रीकृष्णे वासुदेवे तस्य वासुदेवत्वेऽपि कंसभीत्या नन्दसुतां योगमायामानीय तत्स्थले रात्रौ निगूढतया कृष्णस्य स्थापनेन तस्य तत्पुत्राभिमानात् तन्नन्दनत्वम् । तत्कथा भाग० १०।३ अ० यथा "ततश्च शौरिर्भगवत्प्रचोदितः सुतं समादाय स सूतिकागृहात् । यदा बहिर्गन्तुमियेष तर्ह्यजा या योगमायाऽजनि नन्दजायया । तया हृतप्रत्ययसर्ववृत्तिषु द्वाःस्थेषु पौरेषु च शायितेष्वथ । द्वारश्च सर्वाः पिहिता दुरत्यया बृहत्कपाटायसकीलशृङ्खलैः । कृष्णवाहे वसुदेव आगते स्वयं व्यशीर्यन्त यथा तमो रवेः । ववर्ष पर्जन्य उपांशुगर्जितः शेषोऽन्वगाद्वारि निवारयन् फणैः । मघोनि वर्षत्यसकृद् यमानुजा गम्भीरतोयौघजवोर्मिफेनिला । भयानकावर्त्तशताकुला नदी मार्गं ददौ सिन्धुरिव श्रियः पतेः । नन्दव्रजं शौरिरुपेत्य तत्र तान् गोपान् प्रसुप्तानुपलभ्य निद्रया । शिशुं यशोदाशयने निधाय तत्–सुतां समादाय पुनर्गृहानगात् । देवक्याः शयने न्यस्य वसुदेवोऽथ दारिकाम् । प्रतिमुच्य पदोर्लौहमास्ते पूर्ववदावृतः । यशोदा नन्दपत्नी च जातं पुत्रमबुध्यत । न तल्लिङ्गं परिश्रान्ता निद्रयापगतस्मृतिः" नन्दपुत्रनन्दसुतादयोऽप्यत्र । २योगमायायां स्त्री ।

**नन्दनन्दिनी** स्त्री ६त० । दुर्गायां योगमायायां तस्यास्ततः उत्पत्तिकथा हरिवं०५८अ० "तांश्चोवाच ततो निद्रां विष्णुः सत्यपराक्रमः । गच्छ निद्रे ! मयोत्सृष्टा देवकीभवनान्तिकम् । इमान् प्राणेश्वरान् गत्वा षड्गर्भान्नाम देहिनः । षट्सु गर्भेषु देवक्या योजयस्व यथाक्रमम् । जातेष्वेतेषु गर्भेषु नीतेषु च यमक्षयम् । कंसस्य विफले यत्ने देवक्याः सफले श्रमे । प्रसादं ते करिष्यामि मत्प्रभावसमं भुवि । येन सर्वस्य लोकस्य देवि ! देवी भविष्यसि । सप्तमो देवकीगर्भो योऽंशः सौम्यो ममाग्रजः । स संक्रामयितव्यस्ते सप्तमे मासि रोहिणीम् । सङ्कर्षणात्तु गर्भस्य स तु सङ्कर्षणो युवा । भविष्यत्यग्रजो भ्राता मम शीतांशुदर्शनः । पतितो देवकीगर्भः सप्तमोऽयं भयादिति । अष्टमे मयि गर्भस्थे कंसो यत्नं करिष्यति । या तु सा नन्दगोपस्य वसुदेवानुगस्य वै । यशोदा नाम भद्रन्ते भार्य्या गोपकुलोद्वहा । तस्यास्त्वं नवमो गर्भः कुलेऽस्माकं भविष्यसि । नवम्यामेव संजाता कृष्णपक्षस्य वै तिथौ । अहन्त्वभिजिते योगे निशाया यौवने स्थिते । अर्द्धरात्रे करिष्यामि गर्भमोक्षं यथासुखम् । अष्टमस्य तु मासस्य जातावावां ततः समम् । प्राप्स्यावो गर्भव्यत्यासं प्राप्ते कंसस्य शासने । अहं यशोदां यास्यामि त्वं देवि ! भज देवकीम् । आवयोर्गर्भव्यत्यासात् कंसो गच्छतु मूढताम् । ततस्त्वां गृह्य चरणे शिलायां निरसिष्यति । निरस्यमाना गगने स्थानं प्राप्स्यसि शाश्वतम्" ।

**नन्दनमाला** स्त्री नित्यकर्म० । मालाभेदे "भूप ! नन्दनमालान्तु कुरुते कृष्णवेश्मनि । देवकन्यावृतैर्लक्षैः सेव्यते सुरनायकैः" ।

**नन्दन्त** पु० नन्दत्यनेन नन्द–झच् । पुत्रे उज्ज्वद० ।

**नन्दपाल** पु० नन्दं हर्षं पालयति पालि–अण् उपस० । वरुणे शब्दरत्ना० ।

**नन्दयन्त** पु० नन्दि–झच् णिलोपे अन्तपर्युदासान्न णिलोपः । पुत्रे उणा० ।

**नन्दा** स्त्री नन्दयति नन्दि–अच् । १दुर्गामूर्त्तिभेदे "यस्मात्ताम्तथा जम्मुर्देवीं स्थाप्य हिमे गिरौ । संस्थाप्य नन्दिता यस्मात्तस्मान्नन्दा तु या भवेत्" वराहपु० "नन्दते सुरलोकेषु नन्दने वसतेऽथ वा । हिमाचले महापुण्ये नन्दा देवी ततः स्मृता" देवीपु० २अलिञ्जरे (नाँदा) ख्याते पदार्थे पक्षयोः प्रतिपदेकादशीषष्ठीरूपे ३तिथिभेदे च मेदि० । "नन्दा भद्रा जया रिक्ता पूर्णा च प्रतिपत्

क्रमात्” ज्यो०त० “नन्दामन्दमहीजकाव्यदिवसे” ज्यो०त० नवान्ने कालवर्जने। “आदित्यभौमयोर्नन्दा” ज्यो०त० पापयोगोक्तौ। ४ननान्दरि शब्दर०। ५सम्पदि शब्दार्थचि० ६संक्रान्तिभेदे “स्थिरे जीववारे तु नन्देति संज्ञा तदा विप्रवर्गः सुखी मासमेकम्” सु०चि०। रोहिण्यु,त्तरात्रयं स्थिरं तत्र गुरुवारयोगे रविसंक्रान्तिः सा विप्राणां सुखाय। अत्र वारनक्षत्रोभययोगे घोरादिसंक्रान्तीनां फलं सम्पूर्णं केवलवारवशेन केवलनक्षत्रवशेनापि घोरा दिसंज्ञाः भिद्यन्ति तत्र फलं न सम्पूर्णम्। उक्तञ्च निर्णयामृते रत्नमालायाञ्च “घोरा रवौ ध्वाङ्क्षयुतेन्दु,तौ च संक्रान्तिरारे च महोदरी स्यात्। मन्दाकिनी ज्ञे च गुरौ च नन्दा मिश्रा कवौ राक्षसिकाऽर्कपुत्रे” “उग्रक्षिप्रचरैर्मैत्र ध्रुवमिश्रर्क्षदारुणैः। क्रमैः संक्रान्तिरर्कस्य घोराद्याः क्रमशो मता” इति।

७नन्दाश्रमतीर्थे धर्मपुत्त्रहर्षस्य च पत्न्याञ्च “नन्दा तु भार्या हर्षस्य यासु लोकाः प्रतिष्ठिताः” भा० आ० ६६अ०। [२योगमायायां स्त्री।

**नन्दात्मज** पु०६त०। १श्रीकृष्णे वासुदेवे यशोदागर्भजातायां

**नन्दापुराण** नन्दां देवीमधिकृत्य पुराणम्। नान्दे उपपुराणभेदे “तृतीयं नान्दमुद्दिष्टं कुमारेण तु भाषितम्” कूर्मपु० उपपुराणोक्तौ। नन्दामधिकृत्य कृतो ग्रन्थः। अण्। नान्दम् “नन्दाया यत्र माहात्म्यं कार्त्तिकेन तु भाषितम्। नन्दापुराणं तल्लोके नन्दाख्यमिति कीर्त्त्यते” मत्स्यपु०। [तथोत्तुकाश्रमे शुभे” भा०व० १८७अ०।

**नन्दाश्रम** न०न० ६त०। तीर्थभेदे “नन्दाश्रमे महाराज !

**नन्दि** पु०नन्द–इन्। १विष्णौ परमेश्वरे “स्कन्दः स्कन्दधरो धुर्यो वरदो वायुवाहनः” “नन्दो नन्दिर्ज्योतिर्गणेश्वरः” विष्णुसं० परमानन्दविग्रहत्वात्तस्य नन्दित्वम् भाष्ये स्थितम्। २नन्दिकेश्वरे महादेवपार्श्वचरे च। ३द्यूताङ्गे पु०न० मेदि०। ४गन्धर्वभेदे “युगपस्तृणपः कार्ष्णिर्नन्दिश्चित्ररथस्तथा” भा०आ०१२२ अ०गन्धर्वोक्तौ। ५महादेवे “नन्दिर्नन्दिधरो हरः” भा० अनु०१७अ० शिवसहस्रनामोक्तौ। भावे इन्। ६आनन्दे “कौशल्यानन्दिवर्द्धनो रामः” महानाटकम्। आनन्दे स्त्रीत्वमपि। “अतो मे भूयसी नन्दिर्यदेवमनुपश्यसि” भा०उ०१३४अ०। तत्र वा ङीप्। नन्दीत्यप्युक्तः

**नन्दिक** पु०नन्दो हेतुतयाऽस्त्यस्य ठन्। १नन्दीवृक्षे शब्दर० नन्दि+स्वार्थे क। २आनन्दे। ३इन्द्रक्रीडास्थाने ४अलिञ्जरे च (नाँदा) शब्दर० नन्दा+स्वार्थे क अत इत्वम्। प्रतिपदादिनन्दातिथौ स्त्री “कन्यासिंहस्थे रवौ शुक्ल शुक्लकामारभ्य नन्दिकाम्” ति०त०

**नन्दिकावर्त्त** पु० मणिभेदे। “कुरुवकरुद्राक्ष वज्रं वैदूर्यं नन्दिकावर्त्तं” वृ०सं०२८अ० सहार्थे तृतीया।

**नन्दिकुण्ड** न० नन्दिकृतं कुण्डम्। तीर्थभेदे “कालोदकं नन्दिकुण्डं तथा चोत्तरमानसम्। अभ्येत्य योजनशताद् भ्रूणहा विप्रमुच्यते” भा०अनु० २५अ०।

**नन्दिकेश्वर** पु०नन्दि+स्वार्थे क नन्दिक ईश्वर इव। १शिवपार्श्वचरे नन्दिनि २तेन प्रोक्ते शिवधर्माख्ये उपपुराणभेदे “चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम्” कूर्मपु०। उपपुराणोक्तौ “नन्दिकेश्वरयुग्मञ्च नन्दिकेश्वरभाषितम्” इति तत्र पाठान्तरम्।

**नन्दिग्राम** पु० ग्रामभेदे रामस्य वनवासे यत्र भरतेन तत्पादुके गृहीत्वा राज्यं कृतं यथाह भा०व० २७६ अ० “विसर्जित सः (भरतः) रामेण पितुर्वचनकारिणा। नन्दिग्रामेऽकरोद्राज्यं पुरःकृत्वास्य पादुके” स च इदानीं (दौलताबाद)इति प्रसिद्धः। “नन्दिग्राममतस्तस्य राज्यं न्यासमिवाभुनक्” रघुः।

**नन्दिघोष** पु० नन्दिः हर्षजनको घोषोऽस्य। १अर्जुनरथे कर्म०। २आनन्दयुक्तघोषे च मेदि०। बहु०। ३हर्षजनकघोषयुक्तमात्रे त्रि०। “अष्टादशे यो दिवसे प्राश्नीयादेकभोजनम्। सदा द्वादश मासान् वै सप्त लोकान् स पश्यति। रथैः स नन्दिघोषैश्च पृष्ठतः सोऽनुगम्यते” भा० अनु० १०७ अ०।

**नन्दितरु** पु० नित्यक०। धवरृक्षे भावप्र०।

**नन्दितूर्य्य** न० नन्दिप्रियं तूर्य्यम्। वाद्यभेदे “नन्दितूर्य्यनिनादेन तुष्टुवुश्च जनार्दनम्” हरिवं० ८० अ०।

**नन्दिन्** त्रि० नन्दते नन्द–णिनि। १हर्षयुक्ते २शालङ्कायने शिलादिपुत्त्रे च शिवद्वारपाले पु० ३मुनिभेदे नन्दीश्वरशब्दे दृश्यम्। स च शालङ्कायनमुनिपुत्त्रः यथा “अन्यच्च ते प्रवक्ष्यामि परं गुह्यं वसुन्धरे!। तप्यतस्तस्य तु मुनेरीश्वरेण समं सुतम्। तं प्राप्स्यामि परं भावं ज्ञात्वा देवो महेश्वरः। सुन्दरन्तु परं रूपं कृत्वा दृष्टिसुखावहम्। शालङ्कायनपुत्त्रत्वं योगमायासुपाश्रितः। प्राप्तोऽपि तं न जानाति दक्षिणं पार्श्वमास्थितम्। मायायोगबलोपेतस्त्र्यक्षो वै शूलपाणिधृक्। रूपवान् गुणवांश्चैव वपुषादित्यसन्निभः। सत्यं न ज्ञायते जातं तस्यैवाराधने स्थितः। अथ नन्दी प्रहस्याह महादेवा०

मया मुनिम्। उत्तिष्ठ मुनिशार्दूल! सफलस्ते मनोरथः। त्वद्दक्षिणाङ्गाज्जातोऽस्मि पुत्रस्ते शाधि मां प्रभो!। त्वया तपः समारब्धमीश्वरेण मया कृतम्। प्राप्स्यामीति ततो मत्तः सदृशोऽन्यो न कश्चन। विचार्येति तवाहं वै जातोऽस्मि स्वयमेव हि" वराहपु०। स एव कल्पान्तरे शिवांशजः शिलादमुनेः पुत्रः। यथा "जजाप रुद्रमनिशं यत्र नन्दी महागणः। प्रीतस्तस्य महादेवो देव्या सह पिनाकधृक्। दत्त्वा चात्मसमानत्वं मृत्युवञ्चनमेव च। अभूदृषिः स धर्मात्मा शिलादो नाम धर्मवित्। आराधयन् महादेवं पुत्रार्थं वृषभध्वजम्। तस्य वर्षसहस्रान्ते तप्यमानस्य विश्वकृत्। शर्वः सोमोऽथ विवृतो वरदोऽस्मीत्यभाषत। स वव्रे वरमीशानं वरेण्यं गिरिजापतिम्। अयोनिजं मृत्युहीनं त्वया चैवोमया समम्। तथास्त्वित्याह भगवान् देव्या सह महेश्वरः। पश्यतस्तस्य विप्रर्षेरन्तर्धानं गतो विभुः। ततो विचख्नुः स्वां भूमिं शिलादो धर्मवित्तमः। चकर्ष लाङ्गलेनोर्वीं भित्त्वाऽदृश्यत शोभनः। संवर्त्तानलप्रख्यः कुमारः प्रहसन्निव। रूपलावण्यसम्पन्नस्तेजसा भासयन् दिशम्। कुमारस्तुल्योऽप्रतिमो मेघगम्भीरया गिरा। शिलाद तात तातेति प्राह नन्दी पुनःपुनः। तं दृष्ट्वा नन्दिनं जातं शिलादः परिषस्वजे। मुनिभ्यो दर्शयामास ये तदाश्रमवासिनः" कूर्मपु० ४०अ०। "लतागृहद्वारगतोऽथ नन्दी" कुमा०। ३शिवगणविशेषे। स च त्रिविधः यथा "आद्यः कनकनन्दी च गिरिकाख्यो द्वितीयकः। सोमनन्दी तृतीयस्तु विज्ञेया नन्दिनस्त्रयः" वह्निपु०। ४गर्दभाण्डवृक्षे ५धववृक्षे च मेदि०। ६विष्णौ च "भगवान् भगहा नन्दी वनमाली हलायुधः" विष्णुस० आनन्दीति पाठान्तरम्।

**नन्दिनी** स्त्री नन्द–णिनि ङीप्। १दुर्गायां २गङ्गायां ३ननान्दरि ४वसिष्ठधेन्वाञ्च मेदि०। ५रेणुकागन्धद्रव्ये राजनि०। ६कन्यायां च "नन्दगोपस्य नन्दिनी" हरिवं०। वसिष्ठधेनुश्च सुरभिकन्या। "सुतां तदीयां सुरभेः कृत्वा प्रतिनिधिं शुचिः। आराधय सपत्नीकः प्रीता कामदुघा हि सा। इति वादिन एवास्य होतुराहुतिसाधनम्। अनिन्द्या नन्दिनी नाम धेनुराववृते वनात्" रघुः। "इह नन्दिनीवजसैर्गुरुयुक्तैः" वृ०र०टी० उक्ते ७त्रयोदशाक्षरपादके वर्णवृत्तभेदे

वसिष्ठधेन्वा प्रभावो रामा० बालका० उक्तो यथा "युक्तःपरमहर्षेण वसिष्ठमिदमब्रवीत्। गवां शतसहस्रेण दीयतां शबला मम। एवमुक्तस्तु भगवान् वसिष्ठो मुनिसत्तमः। विश्वामित्रेण धर्मात्मा प्रत्युवाच महीपतिम्। कारणैर्बहुभी राजन्न दास्ये नन्दिनीं तव। कामधेनुं वसिष्ठोऽसौ न तत्याज यदा मुनिः। ततोऽस्य शबलां राजा विश्वामित्रस्तदाहरत्। तस्या हुम्भारवाज्जाताः काम्बोजा रविसन्निभाः। ऊधसश्चाभिसंजाताः पह्लवाः शस्त्रपाणयः। योनिदेशाच्च यवनाः शकृद्देशाच्छकास्तथा। रोमकूपेषु म्लेच्छाश्च तथा राम! किरातकाः। तैस्तन्निषूदितं सैन्यं विश्वामित्रस्य तत्क्षणात्"। ८व्याडिमातरि च।

**नन्दिनीतनय** पु० ६त०। व्याडिमुनौ हेमा०। व्याडिश्च उपवर्षमुनेः शिष्यभेदः तत्कथा बृहत्कथायां दृश्या। ततो दिङ्मात्रमत्र प्रदर्श्यते। "नन्दराजराज्यकाले उपवर्षपण्डितस्य कात्यायनापरपर्य्यायो वररुचिर्व्याडिः पाणिनिश्चेति त्रयो मुख्याश्छात्रा बभूवुः। तेषु पाणिनिरल्पबुद्धितया सब्रह्मचारिभिर्वादे पराजितो निर्वेदमापन्नो महादेवमाराध्य तत्सकाशादधीत्य च कृतविद्यस्तत्प्रसादात् सूत्रपाठगणपाठधातुपाठलिङ्गानुशासनात्मकं चतुर्धा विभक्तं व्याकरणागमम् विदधे। अथ तद्ग्रन्थकौशलमुपलभ्य वररुचिना तदवशिष्टांशपरिपूरणेन संक्षेपार्थविवरणरूपं वार्त्तिकं चक्रे। व्याडिना च तत्तदुक्तार्थेषु न्यायप्रदर्शनार्थं लक्षश्लोकात्मकः संग्रहाभिधो ग्रन्थो निरमायि"। स च कोषविशेषकर्त्ता। नन्दिनीसुतादयोऽप्यत्र।

**नन्दिपुराण** न० नन्दिना प्रोक्तं पुराणम्। उपपुराणभेदे नन्दिकेश्वरशब्दे दृश्यम्।

**नन्दि(न्दी)मुख** पुंस्त्री पक्षिभेदे स्त्रियां ङीष्। तल्लक्षणं "सूक्ष्मा कठोरा वृत्ता च यस्यास्तूपरि स्थिता। गुटिका चञ्चुसदृशी ज्ञेया नन्दि(न्दी)मुखीति सा" पुंसोऽपि तथा लक्षणम्। "नन्दिमुखसुखानि मधुराकृतिभिः कौलेरवक्त्राणि" सुश्रुतः। नन्द्याम् आनन्दे मुखमस्याः ङीष् दीर्घमध्यः। २तन्द्रायां हेमच० ३महादेवे पु० "नन्दीमुखः भीममुखः सुमुखो दुर्मुखोऽमुखः" भा०आ० २८६ अ०।

**नन्दिवर्द्धन** पु० नन्दिमानन्दं वर्द्धयति वृध–णिच–ल्यु। १शिवे पु० २पक्षान्ते च मेदि०। ३मित्रे शब्दर०। आनन्दवर्द्धकमात्रे पुत्रादौ त्रि०।

**नन्दिवारलक** पुंस्त्री साम्रुद्रे मत्स्यभेदे स्त्रियां ङीष्। "तिमितिमिङ्गिलकुलिशपाकमत्स्यनिवारक नन्दिवारलकमकरगर्गरकचन्द्रकमहामीनराजीवप्रभृतयः सामुद्राः" सुश्रुतः।

**नन्दि(न्दी)वृक्ष** पु० ६त०। सन्तोषहेतौ कोङ्कणदेशप्रसिद्धे सुगन्धिवृक्षभेदे। "नन्दीवृक्षो लघुः स्वादुस्तिक्तस्तुवरउष्णकः। कटुपाकरसो ग्राही विषपित्तकफास्रनुत्" राजनि०। २अश्वत्थाकारे चीरयुक्ते (तुँद)ख्याते वृक्षभेदे ३गाम्भीराख्यवृक्षे शब्दार्थ०। ४मेषशृङ्गीवृक्षे रत्नमा० ५स्थालीवृक्षे भावप्र०

**नन्दिवेग** पु० कलियुगीये पुरुषाधमरूपभेदे "समस्त नन्दिवेगानामित्येते कुलपांसनाः। युगान्ते कृष्ण! संभूताः कुलेषु पुरुषाधमाः" भा०उ० ७२ अ०।

**नन्दिषेण** पु० ब्रह्मदत्ते कुमारानुचरभेदे। "तस्मै ब्रह्मा ददौ प्रीतो बलिनो वातरंहसः। कामवीर्य्यधरान् सिद्धान् महापारिषदान् प्रभुः। नन्दिषेणं लोहिताक्षं घण्टाकर्णञ्च सम्मतम्। चतुर्थमस्यानुचरं ख्यातं कुमुदमालिनम्" भा०श० ४६ अ०।

**नन्दीश** पु० ६त०। १शिवे हेमच०। नन्दी ईश इव। २शिवपार्श्वचराधिपभेदे। ३तालभेदे स च "सिंहनन्दननन्दीशचन्द्रबिम्बद्वितीयकाः" इत्युद्दिष्ट सङ्गीत० लक्षितो यथा "गोलघुर्गौलघुः प्लुतस्ताले नन्दीश्वरे मताः"।

**नन्दीश्वर** पु० ६त०। १शिवे २तालभेदे सङ्गीतदा०। ३शिवगणाधिपभेदे पु० तस्य तथात्वकथा च वराहपु० उक्ता यथा "ततस्त्रेतायुगे काले नन्दी नाम महामुनिः। आरिराधयिषुः शर्वं तपस्तेपे सुदारुणम्। ततस्तु भगवान् प्रीतस्तस्मै विप्राय शङ्करः। उवाच च वचः साक्षात्तस्मिं वरदः प्रभुः। वरान् वृणीष्व विप्रेन्द्र! यानिच्छसि महामुने!। तांस्ते सर्वान् प्रयच्छामि दुर्लभानपि मारिष!। इत्युक्तोऽसौ भगवता शर्वेण मुनिपुङ्गवः। प्रोवाच वरदं देवं प्रहृष्टेनान्तरात्मना। यदि प्रीतोऽसि भगवन्! अनुक्रोशतया मम। अनुग्राह्यो ह्यहं देव! त्वयावश्यं सुराधिप!। यथाऽनन्या भवेद्भक्तिस्त्वयि नित्यं महेश्वर!। तथाहं भक्तिमिच्छामि सर्वभूताशये त्वयि। एतत्तु वचनं श्रुत्वा नन्दिनः स महेश्वरः। प्रहस्योवाच तं प्रीत्या ततो मधुरया गिरा। मद्रूपधारी मत्तेजास्त्र्यक्षः सर्वगुणोत्तमः। भविष्यसि न सन्देहो देवदानवपूजितः। अनेनैव शरीरेण जरामरणवर्जितः। दुष्प्राप्यं वमवाप्या ते दैवैर्गाणेश्वरी गतिः। पार्श्वदानां वरिष्ठश्च मामकानां द्विजोत्तम!। नन्दीश्वर इति ख्यातो भविष्यसि न संशयः। अद्य प्रभृति देवाग्र्य! देवकार्य्येषु सर्वतः। त्वं प्रभुर्भविता लोके मत्प्रसादान्मुनीश्वर!। त्वामेवाभ्यर्चयिष्यन्ति सर्वभूतानि सर्वतः। मत्तः समभिवाञ्छन्तः प्रसादं पार्श्वदाधिप!। यस्त्वां द्वेष्टि स मां द्वेष्टि यस्त्वामनु स मामनु। नावयोरन्तरं किञ्चिदम्बरानिलयोरिव। द्वारे तु दक्षिणे नित्यं त्वया स्थेयं गणाधिप!। वामेन विभुना चापि महाकालेन सर्वदा" वराहपु०।

**नन्दीसरस्** न० इन्द्रसरोवरे शब्दमा०।

**नन्द्य** नन्द आनन्दे कण्ड्वादेराकृतिगणत्वात् यक् भ्वा०पर० सेट्। नन्द्यति अनन्द्यी(न्दी)त्।

**नन्द्यादि** पु० ल्युप्रत्ययान्ततया पा०ग०सू०पठिते शब्दगणे यथा "नन्दनः वाशनः मदनः दूषणः साधनः वर्द्धनः शोभनः रोचनः (सहितपिदमः संज्ञायाम्)। सहनः तपनः दमनः जल्पनः रमणः दर्पणः संक्रन्दनः सङ्कर्षणः संहर्षणः जनार्दनः यवनः मधुसूदनः विभीषणः लवणः चित्तविनाशनः कुलदमनः शत्रुदमनः।

**नन्द्यावर्त्त** पु० नन्दी आवर्त्तो यत्र। "नन्द्यावर्त्तमलिन्दैः शालाकुड्यां प्रदक्षिणान्तगतैः। द्वारं पश्चिममस्मिन् विहाय शेषाणि कार्य्याणि" वृ०सं०५३अ०उक्ते १गृहभेदे भरतधृतसाङ्गवाक्ये तु तस्यान्यथा लक्षणमुक्तं यथा "दक्षिणानुगतालिन्दत्रयं यत् पश्चिमामुखम्। पूजनीयोत्तरोच्छ्रायं नन्द्यावर्त्तं वदन्ति तत्"। तेन पश्चिमद्वारस्यान्यत्वे विकल्पः। २तगरवृक्षे विश्वः। ३मत्स्यभेदे राजवल्लभः। ४यात्रायोगभेदे नद्यावर्त्तकशब्दे दृश्यम्। "स्वस्तिकान् वर्द्धमानांश्च नन्द्यावर्त्तांश्च काञ्चनान्" भा०द्रो०८२अ० हस्तिदन्तस्य ५तदाकारच्छेदे च "दन्तस्य मूलपरिधिं द्विरायतं प्रोज्झ्य कल्पयेच्छेषम्" इत्युपक्रमे "श्रीवत्सवर्द्धमानच्छत्रध्वजचामरानुरूपेषु। छेदे दृष्टेष्वारोग्यविजयधनवृद्धिसौख्यानि। प्रहरणसदृशेषु जयो नन्द्यावर्त्ते प्रनष्टदेशाप्तिः" वृ०सं० ९४अ०

**नपराजित्** पु० न पराजीयते परा+जि—कर्मणि क्विप् नशब्देन "सह सुपा" पा०स०। महादेवे "विलोहिताय धूम्राय व्याध्याय नपराजिते" भा०द्रो० ८०अ०।

**नपात्** त्रि० न। पाति पा—रक्षणे शतृ नभ्राडित्यादिना पा० नञः प्रकृतिभावः। १अरक्षके "नपातो दुर्गहस्य मे"

ऋ० ८।६५।१२ "नपातो अरवकस्य" भा०। नपात् शतन्तः इति सि० कौ० तेन स्वादौ नपात् नपातौ इत्यादि रूपम्। न पातयति पाति—क्विप्। २अपातके च अस्य नपात् नपातौ नपातः इति भेदः। तनूनपात् तनूरक्षकः। ३पुत्रे अपत्ये निरु०। तस्य पुन्नामनरकनिरासकत्वेन पातनाभावहेतुत्वात् तथात्वम्। "मनोर्नपातो अपसो दधन्विरे" ऋ०१।६०।२ "मनोः नपातः पुत्राः" माधवः "ऊर्जोनां नपाद्भद्रशोचाय यजमानः" यजु० २१।६१ "हे ऊर्जोनां नपात् पुत्रः" वेददी०।

**नपात** पु० नास्ति पातो यत्र। देवयाने पथि "अवित्तुषि नपातं विक्रमणं च विष्णोः" यजु० १९।५६ "वेवेषि विष्णुः तस्य विष्णोः व्यापनशीलस्य यज्ञस्य "यज्ञो वै विष्णुरिति" श्रुतेः तस्य नपातं विक्रमणं च अवित्सि वेत्सि। नास्ति पातो यत्र स नपातो देवयानपथः यत्र गतानां पातो नास्ति, विविधं क्रमणं गमनागमनं यत्र स विक्रमणः पितृयानपथः यत्र गतानां पुनर्भोगान्ते पतनम्। यज्ञस्याभिनौ देवयानपितृयानौ पन्थानौ वेत्सीत्यर्थः" वेददी०

**नपुंसक** पु०न० न स्त्रीपुंसौ नभ्राडित्यादि पा० स्त्रीपुंसयोः पुंसकभावः नि० नञः प्रकृतिभावश्च। क्लीवे क्लीवशब्दे २३४५पृ० दृश्यम्। "नपुंसको भवतीति" महाभाष्यप्रयोगात् अस्य पुंस्त्वमपि। लिङ्गस्य शब्दगतत्वेऽपि शब्दार्थे तद्व्यवहारस्तु अभेदारोपात् तदेतत् शब्दार्थरत्नेऽस्माभिः समर्थितं यथा

"लिङ्गत्वञ्च प्राकृतगुणगतावस्थात्मकोधर्म एव तद्विशेषश्च पुंनपुंसकत्वादिः। तथा हि सर्वेषां त्रिगुणप्रकृतिकार्यतया शब्दानामपि तथात्वेन गुणगतविशेषाच्छब्देषु विशेष इति कल्प्यते। स च विशेषः शास्त्रे इत्थमभ्यधायि। विकृतसत्वादीनां तुल्यरूपेणावस्थानात् नपुंसकत्वं, सत्वस्याधिक्ये पुंस्त्वम्, रज आधिक्ये स्त्रीत्वमिति। एवञ्च लिङ्गस्य शब्दधर्मत्वेऽपि शब्देन सहार्थाभेदारोपात् असति बाधके अर्थेऽपि साक्षात् तत्पारतन्त्र्येण वा सर्वत्र तस्य विशेषणत्वम् शाब्दबोधे शब्दभानस्येष्टत्वाच्च शब्दस्य नामार्थतावत् तद्गतलिङ्गस्यापि नामार्थतौचित्यात् "न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते" इति हर्युक्तेः "शब्दोऽपि यदि भेदेन विवक्षा स्यात्तदा तथा। नोचेत् श्रोत्रादिभिः सिद्धोऽप्यसावर्थेऽवभासते" इति हर्युक्तेश्च शब्दानां तदर्थतावगतेः। तथा प्रातिपदिकार्थः। अभेदविवक्षायां तु श्रोत्रादिभिरेव सिद्धः शातः सन् अर्थे प्रकारतया भासते इति तदर्थः। युक्तञ्चैतत् पुंलिङ्गः शब्द इति व्यवहारात् "स्वमोर्नपुंसकादिति" पा० सूत्रे शब्दस्यैव नपुंसकत्वव्यपदेशात् दारानित्यादौ पुंस्त्वान्वयबाधाच्च लिङ्गस्य शब्दधर्मत्वमन्यथैतेषु लिङ्गानन्वयापत्तेर्व्यवहारसूत्रनिर्देशासङ्गत्यापत्तेश्च। तथा अर्थभेदाच्छब्दभेदवत् लिङ्गभेदादपि शब्दभेद इति कल्प्यते प्रागुक्तधर्मविशेषरूपभेदकसद्भावात्। उक्तञ्च भाष्ये "एकार्थे शब्दान्यत्वाद्दृष्टं लिङ्गान्यत्वमिति"। एवञ्च तटादिशब्दानामनेकलिङ्गत्वव्यवहारः समानानुपूर्वीकत्वेनैव। वस्तुतस्तेषां भिन्नानामेव भिन्नलिङ्गत्वमिति दिक्। अर्थरूपनपुंसकस्योत्पत्तौ कारणं शा०ति०उक्तं यथा "विन्दुरेको विशेषु गर्भमुभयात्मा क्रमाद्यतौ। रजोऽधिको भवेन्नारी भवेद्रेतोऽधिकः पुमान्। उभयोः समतायां तु नपुंसकमिति स्मृतम्"। "ह्रस्वो नपुंसके प्रातिपदिकस्य" पा० "नपुंसकमनपुंसकेने०त्यादि" पा०। तत्र पुंसि "नैव स्त्री न पुमानेष न चैवायं नपुंसकः" श्वेताश्व०। क्लीवे "न वामनाः कुब्जकुणा न षण्ढाः नाम्बो जडः स्त्री न नपुंसकञ्च" भा०शा०८१अ०।

**नपुंसस्** पु०न० पुमान् आर्षे न नपुंसकभावः। क्लीवे "हताश्वहं कृतार्थेन नपुंसा वीरमानिना" भाग० ८।१४।२०

**नप्तृ** न० न पतत्यनेन न+पत—तृच् नप्तृनेष्ट्रित्यादि०पा०नि०। १पौत्रे २दौहित्रे च (नाति) हेमच०। "पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते" इति "दौहित्रोऽपि ह्यमुत्रैनं सन्तारयति पौत्रवत्" मनूक्तेश्च तयोः उद्धारकत्वात् नप्तृत्वम्। "यदि नात्मनि पुत्रेषु न चेत् पुत्रेषु नप्तृषु। नत्वेव तु कृतोऽधर्मः कर्त्तुर्भवति निष्फलः" मनुः। ३कन्यापुत्रयोः कन्यायां स्त्री अमरः ङीप्।

**नप्तृका** स्त्री नप्तृ—संज्ञायां कन्। विष्किरे भुङ्गारकारिणोति प्रसिद्धे पक्षिभेदे "लावतित्तिरिकपिञ्जलवर्त्तीरवर्त्तिकावर्त्तकनप्तृकावातीक" इत्याद्युपक्रमे विष्किरा लघवः शीतमधुराः कषाया दोषशमनाश्च" सुश्रु०।

**नभ** हिंसायां निघण्टुः भ्वा०आत्म० सक० सेट्। नभते अनभिष्ट नेभे। णभ हिंसे इत्यस्य णोपदेशत्वात् षतिनिमित्ते णत्वम् नास्येति भेदः। तत्र धातौ आर्षलङ् इत्ययुक्तम् तस्य अनुदात्तेत्त्वेन आत्मनेपदित्वात्।

**नभ** त्रि०नभ—हिंसायां पचा०अच्। १हिंसके २आवणे माधि पु० शब्दर०। तस्य उष्णा कीटादिहिंसकत्वात् तथात्वम्। ३आकाशे न० नभोकसशब्दे दृश्यम्। हिंसितसर्वप्राणिनां तेनैव गमनात्तस्य तथात्वम्। चाक्षुषमन्वन्तरे ४सप्तर्षिभेदे

"भृगुर्नभो विवस्वांश्च" हरिवं० ७अ०चाक्षुषमन्वन्तरोक्तौ । स्वारोचिषमनोः ५पुत्रभेदे "प्रथितश्च नभस्यश्च नभ ऊर्जस्तथैव च" हरिवं० ७अ० स्वारोचिषमन्वन्तरोक्तौ । रामवंश्ये राजभेदे "निषधस्य नलः पुत्रो नभः पुत्रो नलस्य तु" हरिवं० रामवंश्योक्तौ ।

**नभःक्रान्तिन्** पु० नभः क्रान्तमनेन इनि । सिंहे शब्दमा०

**नभःप्राण** पु० नभसः प्राण इव । पवने त्रिका० ।

**नभःसद्** पु० नभसि सीदति सद्–क्विप् ७त० । १देवे २खगादौ च । वा विसर्गस्य सत्वे नभस्सदप्यत्र ।

**नभःसरित्** स्त्री ६त० । गङ्गायां त्रिका० वा विसर्गस्य सत्वे नभस्सरिदप्यत्र ।

**नभःस्थल** पु० नभःस्थलमिव यस्य । महादेवे "ऊर्द्ध्वरेता ऊर्द्ध्वलिङ्ग ऊर्द्ध्वशायी नभःस्थलः" भा०अनु०१७अ० शिवनामोक्तौ । खर्परे खरि वा विसर्गलोपे नभस्थलोऽप्यत्र ।

**नभःस्थित** त्रि०७त०। १गगनस्थिते तारामहादौ २नरकभेदे हेमच० । वा विसर्गलोपे नभस्थितोऽप्यत्र ।

**नभःस्पृश्** त्रि० नभःस्पृशति स्पृश–क्विन् । गगनस्पर्शिनि । वा विसर्गलोपे नभस्पृगप्यत्रार्थे । क्विन्नन्तत्वात् पदत्वे कुत्वम् । नभःस्पृक् । "भवन्ति ज्वलिता वक्त्राः कीर्त्तयश्च नभस्पृशः" कामन्द०। क । नभःस्पृशोऽप्यत्र । "नभःस्पृशैर्महाघोरैः परिच्छिन्नं महावनम्" भा० द्रो०५अ०

**नभग** पु०वैवस्वतमनोः १पुत्रभेदे "इक्ष्वाकोर्नभगस्यैव धृष्टः शर्य्यातिरेव च"भा०८।१५२ वैवस्वतवंश्योक्तौ । २गमनगे त्रि० नास्तिभमो यस्य । ३भाग्यहीने त्रि० ।

**नभनु** त्रि०नभ–हिंसायां बा०अनु । १हिंसके वेदे स्त्रियामूङ् "नभनू प्राप्नुवो नभन्वः"ऋ०४।१९।२। नभन्वः हिंसिकाः नभ–बा० अनु पृषो०। २शब्दकारके उदके पु० निघण्टुः "पर्वतस्य नभनूँरचुच्यवुः" ऋ० ६।५९।७ "नभनून् नभते शब्दकर्मणः नभ्राडितिवत् नभनवः उदकानि" भा० दीर्घान्तः ३नद्यां स्त्री निघण्टुः नभन्वा इति तत्र पाठान्तरं "प्राप्नुवो नभन्वः" ऋ०४।१९।७ बहुवचनान्तः ।

**नभन्य** त्रि० नभ–हिंसायां कनिन् नभ्नि हिंसायां साधु यत्, नभसि हितो वा यत् पृषो०। १आकाशभवे २हिंसके च । "गायत् साम नभन्यं यथा वेरर्चाम तद्वावृधानं स्वर्वत्" ऋ० १।१७३।१ "हे इन्द्र ! नभन्यं नभस्यं नभसि भवं नभोव्यापिनं हिंसकं वा राक्षसादिकस्य । नभतिर्वधकर्मा "नभति अर्दतीति वधकर्मसु गणनात्" भा०।

**नभश्चक्षुस्** न० नभसश्चक्षुरिव प्रकाशकत्वात् । सूर्ये शब्दमा०।

**नभश्चमस** पु० नभसश्चमस इव । १चन्द्रे २पिष्टकापूपे ३इन्द्रजाले च मेदि० ।

**नभश्चर** त्रि० नभसि चरति चर–ट । गगनचारिणि १खगे-२देव गन्धर्वग्रहादौ । ३नभःस्थायिमात्रे च "निकामतप्ता द्विविधेन वह्निना नभश्चरेणेन्धनसम्भृतेन च" कुमा० "नभश्चरैर्गीतयशाः स लेभे" "व्ययेऽष्टमे वा द्युतमे विलग्ने चैकोऽपि पापश्च नभश्चराणाम्" ज्योतिषम् ।

**नभस्** न० नह्यते मेघैः नह–बन्धने "नहेर्भश्च" उणा०असुन् भश्चान्तादेशः । १गगने "ओमित्युक्तवतोऽथ शार्ङ्गिण इति व्याहृत्य वाचं नभस्यस्मिन्नुत्पतिते" माघः । २श्रावणे मासि पु०अमरः । बाहुल्येन मेघसम्बन्धात्तस्य तथात्वम् । "नभोनभस्यत्वमबाप्सि तद्दृशो" नैष० "नभाय नभस्याय वार्षिकावृतू" यजु० १४।१५। "नभोनभस्ययोर्वृष्टिमवग्रह इवान्तरे" रघुः। ३मेघे अमरः नभश्शब्दे दृश्यम् । ४उदके निघण्टुः । ५प्राणे ६वर्षे ७पतद्ग्रहे पु० मेदि० ८पार्श्वितधीर्षे शब्दर० ९लग्नतोदशमस्थाने ज्यो०

**नभस** पु० नभ–शब्दे असच् । १शब्दाश्रये गगने । दशममन्वन्तरीये २सप्तर्षिभेदे "अङ्गिरा नभसः सत्यः सप्तैव परमर्षयः" हरिवं० ७अ० दशममन्वन्तरोक्तौ ।

**नभसङ्गम** पुंस्त्री नभसं गगनं गच्छति गम–खच् मुम् च । खगे अमरः । स्त्रियां जातित्वात् ङीष् ।

**नभस्मय** पु० नभो मयते मय–गतौ अच् वेदे अयस्मयादि० न पदत्वम् । आदित्ये "ततोपस्तरणं नभस्मयम्" ऋ०८।६९।५ "नभस्मयमादित्यम्" भा०। लोके तु नभोमय इत्येव नभोगे त्रि० ।

**नभस्य** पु० नभसे मेघाय उदकाय वा साधु यत् । १भाद्रपदमासे नभःशब्दे उदा०। "प्रथमा च द्वितीया च नभस्ये मासि निन्दिता" वशिष्ठः । "अथ नभस्य इव त्रिदशायुधम्" रघुः । २स्वारोचिषमनोः पुत्रभेदे "प्रथितश्च नभस्यश्च नभ ऊर्जस्तथैव च" हरिवं०७अ० तत्पुत्रोक्तौ नभसि गगने भवः यत् । ३गगनभवे त्रि० ।

**नभस्वत्** पु० नभः साधनत्वेनास्त्यस्य मतुप् मस्य वः । पवने अमरः । "आकाशाद्वायुः" इति श्रुतेः वायोराकाशहेतुकत्वात् तथात्वम् । "मिलद्भिमीलं विदधुर्विलोकिता नभस्वतस्तं कुसुमेषु केलयः"नैष० "नभस्वानिव दक्षिणः" रघुः । २अन्तर्द्धानस्य पत्न्यां स्त्री ङीप् । "अन्तर्द्धानो नभस्वत्यां हविर्द्धानमविन्दत" भाग०४।२४।६

**नभाक** पु०न० भाति भा–पिनाका० आक । १तमसि उक्त-

रुद्र० । २राहौ च तस्यच्छायारूपत्वेन तथात्वम् । ततः शिवा० अपत्ये अण् । नाभाक तदपत्ये पुंस्त्री० ।

**नभोग** त्रि० नभोगच्छति गम–ड । १नभश्चरे खगदेवपक्ष्यादौ २लग्नतोदशमगे ३दशममन्वन्तरीये सप्तर्षिभेदे नभसशब्दे दृश्यम् ।

**नभोगज** पु० नभसि गज इव । मेघे त्रिका० ।

**नभोगति** स्त्री ७त० । १गगनगतौ नभसि गतिरस्य । २खगादौ त्रि० [तद्गयोक्तौ ।

**नभोद** पु० विश्वदेवभेदे "उष्णीनाभो नभोदश्च" हरिवं०७अ०

**नभोदुह** पु० नभसि दुहति दुह–क । १मेघे शब्दमाला । तस्य नभसि पयोनिःसारकत्वेन तथात्वम् ।

**नभोद्वीप** पु० नभसि द्वीप इव । मेघे शब्दमा० ।

**नभोधूम** पु० नभसि धूम इव । मेघे शब्दमाला ।

**नभोनदी** स्त्री ६त० । स्वर्गगङ्गायाम् । [हर्षे हेमच० ।

**नभोमणि** पु० नभसि मणिरिव प्रकाशकत्वात् । द्युमणौ

**नभोमण्डल** न० नभोमण्डलमिव । गगनमण्डले "नैतन्नभोमण्डलमम्बुराशेः" सा०द० "अथ च यावन्नभोमण्डलं सह द्यावापृथिव्योर्मण्डलाभ्यां कात्स्न्र्येन सह मुञ्जीतम्" भाग० ५।२२।८।

**नभोमण्डलदीप** पु० नभोमण्डले दीप इव रात्रौ प्रकाशकत्वात् । चन्द्रे "नभोमण्डलदीपाय शिरोरत्नाय धूर्जटेः । कलाभिर्वर्द्धमानाय नमश्चन्द्राय चारवे" ति०त०

**नभोऽम्बुप** पुंस्त्री नभसि अम्बु पिबति पा–क । चातकखगे हेमच० । स्त्रियां जातित्वात् ङीष् ।

**नभोरजस्** न० नभसि रज इव दृष्ट्यावरकत्वात् । अन्धकारे

**नभोरूप** त्रि० नभसो रूपमारोपितं रूपमिव रूपमस्य । नीलवर्णयुक्ते पश्वादौ "अप्रत्यक्षेऽपि ह्याकाशे बालास्तलमलिनताद्यध्यस्यन्ति" शा०भा० "सनीलनीलिमा" नैष० उक्तेः गगनस्यारोपितरूपवत्त्वेन तत्तुल्यरूपत्वात् श्याममालिन्यवर्णयुक्तस्य तथात्वम् । "नभोरूपाः पार्जन्याः" यजु०२४।६०। "नभोवर्णा नीलवर्णाः" वेददी०। [त्रिका०

**नभोरेणु** स्त्री नभसि रेणुरिव आवरकत्वात् । कुज्झटिकायां

**नभोलय** पु०नभसि लीयते ली–अच् ७त०। १धूमे शब्दरत्ना० २गगनलीनमात्रे त्रि० ।

**नभोवीथी** स्त्री नभसि वीथीव । आकाशस्थे वीथीरूपे पथि । "अथ च यावतार्द्धेन नभोवीथ्याः प्रचरति तं कालमयनमाचक्षते" भाग० ५।२२।८।

**नभौकस्** त्रि०नभ आकाशम् ओकः स्थानमस्य । अन्तरिक्षचरे खगादौ "अन्ये च विविधा जीवा जलस्थलनभौकसः । यहर्चकेतवस्ताराास्तडितःस्तनयित्नवः" भाग० २।६।१५

**नभ्य** त्रि० नाभये रथचक्रावयवभेदायहितम् तामर्हति वा गवादि० यत् "नाभिर्नभञ्च" पा० ग० नभादेशः । रथादिचक्रावयवहिते १तैलादौ २तदर्हे च "तदेतन्नभ्यं यदयमात्मा" शत० ब्रा० १४।४।२।२२ "तदेव रथचक्रदृष्टान्तेन स्पष्टयति नाभिश्चक्रपिण्डिका नाभ्यै हितं नाभिमर्हतीति वा नभ्यम् तदेतल्लोके प्रसिद्धं चक्रपिण्डिकास्थानीयम्, किं तत् यदयमात्मा योऽयं शरीरम्" भा० । ३अक्षे ४रथचक्रानुगुणे अञ्जने च । "नभ्योऽक्षः नभ्यमञ्जनं रथचक्रनाभावेवेदम्" सि०कौ०। "नभ्योऽक्ष इति सच्छिद्रो रथाङ्गावयवो नाभिस्तदनुप्रविष्टः काष्ठविशेषोऽक्षः स च तदनुगुणत्वात् नाभये हितः । अञ्जनं तैलाभ्यङ्गः तदपि स्नेहमयत्वात् नाभये हितम्" मनो० । शब्दकल्पद्रुमे नभ्यशब्दस्य नभःप्रकृतिकत्वेन साधनमन्यार्थपरत्वकथनञ्च निर्मूलम् । "पश्चादुत्तरवेदेस्त्रिषु पक्षेषु मत्वा वा नभ्यस्थे अभिमन्त्रयतेऽत्र रमेथामिति" कात्या०श्रौ०८।४।५ "नभ्यम् चक्रस्य फलकं नभ्यम् "नाभिर्नभं चेति" प्रत्ययसंनियोगेन नाभेर्नभभावः नभ्ये तिस्रो नभ्यस्थे मध्यमे च फलके स्थापयेदित्यर्थः" कर्कः ।

**नभ्राज्** पु० न भ्राजति भ्राज–क्विप् नभ्राड्नपात्" इत्यादिना पा०नञः प्रकृतिभावः । मेघे हेमच०पदत्वे षत्वडत्वे

**नमत** त्रि० नम–अतच् । प्रह्वे १नम्रे २नटे च ३धूमे उणा० । कर्मणि अतच् । ४प्रभौ उणादिकोषः ।

**नमयिष्णु** त्रि० नम–स्वार्थे णिच् वा० इष्णुच् । नमनशीले "स्थिरा चिन्नमयिष्णवः" ऋ०८।२०।१ "नमयिष्णवः नमनशीलाः" भा० ।

**नमस्** अव्य० नम–भावे असुन् स्वरादि०। नमने १स्वापकर्षबोधकव्यापारे २त्यागे स्वस्वत्वध्वंसानुकूलव्यापारभेदे । पुष्पं विष्णवे नम इत्यादौ विष्णूद्देश्यकमन्त्रकरणकत्यागविषयः पुष्पमित्येवं बोधः यथाह शब्दशक्तिप्रकाशिकायाम्

"पुष्पमिदं विष्णवे नम इत्यस्य विष्णूद्देश्यक मन्त्रकरणत्यागस्य कर्मेदं पुष्पमित्यर्थस्तत्र चतुर्थ्या प्रीत्युद्देश्यत्वं तदिच्छाधीनत्वरूपं नमःपदार्थे मन्त्रकरणत्यागे बोध्यते प्रकृत्यर्थस्य च विष्ण्वादेः प्रीतौ तदिच्छायां वान्वयः । ब्राह्मणाद्युद्देश्यकस्य गवादित्यागस्य मन्त्रकरणत्वे प्रमाणाभावात् गौर्ब्राह्मणाय नम इत्यादिकोन प्रयोगः ।

ब्राह्मणेभ्यो नमोनित्यमित्यादौ तु नमःपदार्थो नतिरेवेति तत्र विषयत्वं चतुर्थ्या बोध्यते। पुष्पमिदं परमात्मने नम इत्यादौ परमात्मनः प्रीत्यसत्त्वेऽपि तत्प्रीतित्वप्रकारकेच्छासम्भवान्न तत्प्रीत्युद्देश्यकत्वाप्रसिद्धिः”। नम्यते कर्मणि असुन्। २अन्ने ४वज्रे च निघण्टुः नमोवृधशब्दे दृश्यम्। साध्वादा० उप०स०। नमस्करोति नमस्कृत्य। अत्र कृधातोरेव नमनार्थता नमःशब्दस्तु तदर्थद्योतकः तेन नारायणं नमस्कृत्येत्यादौ द्वितीया उपपदविभक्तेः कारकविभक्तिर्गरीयसी” इति न्यायात् नमसोवाचकत्वे नमस्कृत्य ब्राह्मणेभ्य इत्यादौ नमःशब्दयोगे चतुर्थी। “नमः स्वस्तीत्यादि” पा० सूत्रे त्यागार्थकनमनार्थकयोरुभयोर्ग्रहणम्। ५यज्ञे च न० “यज्ञो वै नमः” इति श्रुतेः।

**नमस** त्रि० नम—असच्। अनुकूले उज्ज्वद०।

**नमसान** त्रि० नामधा० नमस्य—बा० आनच् अल्लोपयलोपौ। नमस्कारणशीले “यथाक्षिमं नमसाना विधेम” ऋच०६।२८।२

**नमसि(स्यि)त** नामधा० नमस्य—कर्मणि क्त वा यलोपः। कृतनमस्कारे अमरः।

**नमस्कार** पु० नमस्+कृ—घञ्। १स्वापकर्षबोधकव्यापारे करशिरःसंयोगादौ २विषभेदे शब्दच०। नमस्कारे अधिकारिविशेषादिकं नानास्थानात् प्रदश्यते। अभिवादयेदित्यनुवृत्तौ शङ्खः “नाप्रयतायाप्रयतश्च” इति शु०त०। “स्त्रियो नमस्या वृद्धाश्च वयसा पत्युरेव ताः” इति स्मृत्यर्थसारः। “देवं विप्रं गुरुं दृष्ट्वा न नमेद्यस्तु सम्भ्रमात्। स कालसूत्रं व्रजति यावच्चन्द्रदिवाकरौ। ब्राह्मणञ्च गुरुं दृष्ट्वा न नमेद्यो नराधमः। यावज्जीवनपर्यन्तमशुचिर्यवनो भवेत्” इति ब्रह्मवै० जन्मख० “देवतायतनं दृष्ट्वा दृष्ट्वा तु दक्षिणमन्यथा। नमस्कारं न कुर्य्याद्यः प्रायश्चित्ती भवेन्नरः। सभायां यज्ञशालायां देवतायतनेषु च। प्रत्येकन्तु नमस्कारो हन्ति पुण्यं पुराकृतम्। उपविश्य नमेत् शूद्रो दीर्घायुर्ब्राह्मणो वदेत्। स शूद्रो नरकं याति ब्राह्मणो यात्यधोगतिम्। दूरस्थं जलमध्यस्थं धावन्तं मदगर्वितम्। क्रोधवन्तं विजानीयात् नमस्कारञ्च वर्जयेत्। पुष्पहस्तो वारिहस्तस्तैलाभ्यङ्गी जलस्थितः। आशीःकर्त्ता नमस्कर्त्ता उभयोर्नरकं भवेत्” कर्मलोचनम्। “मातुः पितुः कनीयांसं न नमेद्वयसाधिकः। नमस्कुर्य्याद् गुरोः पत्नीं भ्रातृजायां विमातरम्” यमः। “अभिवादयतः पूर्वमाशिषं न प्रयच्छति। यद्दुष्कृतं भवेत्तस्य तस्माद्भागं प्रपद्यते। स्वस्तीति ब्राह्मणे ब्रूयात् आयुष्मानिति राजनि। वर्द्धतामिति वैश्येषु शूद्रे त्वारोग्यमेव च” म०त० “गुरुपत्नी तु युवती नाभिवाद्येह पादयोः। पूर्णषोड़शवर्षेण गुणदोषौ विजानता” मनुः। “कुर्वीत वन्दनं भूयो भगोवोऽहमिति ब्रुवन्। विप्रोष्य पादग्रहणमन्वहञ्चाभिवादनम्। गुरुदारेषु कुर्वीत सतां धर्ममनुस्मरन्। अभिवादनशीलः स्यान्नित्यं वृद्धेषु धर्मतः। असावहम्भो नामेति सम्यक् प्रणतिपूर्वकम्। आयुरारोग्यसिद्ध्यर्थं तन्द्रादिपरिवर्जितः। आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने। अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरप्लुतः। यो न वेत्त्यभिवादस्य द्विजः प्रत्यभिवादनम्। नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः। व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः। सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः। लौकिकं वैदिकञ्चापि तथाध्यात्मिकमेव वा। आददीत यतो ज्ञानं तं पूर्वमभिवादयेत्। ब्राह्मणान् कुशलं पृच्छेत् क्षत्रबन्धूननामयम्। वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव तु” मनुः। अभिवादनीयाश्च “उपाध्यायः पिता ज्येष्ठो भ्राता चैव महीपतिः। मातुलः श्वशुरस्त्राता मातामहपितामहौ। बन्धुर्ज्येष्ठः पितृव्यश्च पुंस्येते गुरवः स्मृताः। माता मातामही गुर्वी पितुर्मातुश्च सोदरा। श्वश्रूः पितामही ज्येष्ठा धात्री च गुरवः स्त्रियाम्। इत्युक्तो गुरुवर्गोऽयं पितृतो मातृतो द्विजाः। अनुवर्त्तनमेतेषां मनोवाक्कायकर्मभिः। गुरून् दृष्ट्वा समुत्तिष्ठेदभिवाद्य कृताञ्जलिः” इति कूर्मपु० ११अ०। अधिकं नतिशब्दे दृश्यम्। “अयमेव नमस्कारो भूम्यादिप्रतिपत्तिभिः। प्रणाम इति विज्ञेयः स पूर्वं प्रतिपादितः” कालिकापु०७०अ०। रात्रौ तन्निषेधो यथा “रात्रौ नैव नमस्कुर्यात्तेनाशीरभिचारिका। अतः प्रातः पदं दत्त्वा प्रयोक्तव्ये च ते उभे” महाभारते।

**नमस्कारी** स्त्री नमस्कारः तदङ्गाञ्जलिरिव पत्रम् अस्त्यस्याः अच् गौरा० ङीष्। लज्जालुवृक्षे अमरः। तस्याः नमस्काराङ्गाञ्जलिरूपपत्रकत्वात् तथात्वम्।

**नमस्य** नामधा०नमस्करोति “नमस्तपोवरिवः” इत्यादि क्यच् पूजायाम् भ्वा० पर० सक० सेट्। नमस्यति अनमसी(स्यी)त्। कर्मणि नमस्यते “द्विजैः कश्चिन्नमस्यसे” “तेऽनमस्यंश्च शङ्करम्” “नो नमस्यन्ति ते बन्धून्” भट्टिः।

**नमस्य** त्रि० नामधातुः नमस्य–कर्मणि यत् अल्लोपयलोपौ। पूज्ये। “ब्रह्मन्नतिथिर्नमस्यः” कठोप०।

**नमस्या** स्त्री नमस्य–भावे अ। पूजायाम्

**नमस्यु** त्रि० क्यजन्तनमस्य–“क्याच्छन्दसि” पा० उ। १नमस्कारशीले “स इदने नमस्युभिर्वचस्यते” ऋ०१।५५।४। पुरुवंश्ये २नृपभेदे “जनमेजयोऽभूत् पूरोः प्रचिन्वांस्तत्सुतस्ततः। प्रवीरोऽथ” नमस्युर्वै भाग०९।२०।२ तत्र नभस्युरिति पाठान्तरं हरिवंशे ३१अ० “प्रचिन्वतः प्रवीरोऽभून्नमस्युस्तस्य चात्मजः” इत्युक्तेः।

**नमित** त्रि० नम–णिच् क्त वा ह्रस्वः। नामिते नतीकृते “सुधीः को वा कौपीरपि नमितमूर्द्धा न पिबति” विदग्धमाधवः।

**नमी** पु० नम–बा० ई वातप्रमीवत्। ऋषिभेदे “प्रकृष्टनमीं साप्यं सचन्तम्” ऋ० ६।२०“नमीं तत्संज्ञकमृषिम्”भा० “प्र मे नमीं साप्यम् इषे भुजे” ऋ० १०।४८।९“एतेन वै नमी साप्यो वैदेहो राजाञ्जसा स्वर्गं लोकमैत्” पञ्चवि० ब्रा० २५।१०।१७

**नमुचि** पु० न मुञ्चति मुच–इन् नभ्राडित्या पा०नञः प्रकृतिभावः। १कन्दर्पे दनोः पुत्रे २असुरभेदे मेदि०। चत्वारिंशद्दनोः पुत्रा इत्युपक्रमे “शंवरो नमुचिश्चैव पुलोमा चेति विश्रुतः”भा०आ०६०अ०। “कश्यपस्य दनुर्नाम भार्य्यासीद्द्विजसत्तम!। तस्यास्तु द्वौ सुतावास्तां सहस्राक्षाद् बलाधिकौ। ज्येष्ठः शुम्भः इति ख्यातो निशुम्भश्चापरोऽसुरः। तृतीयो नमुचिर्नाम महाबलसमन्वितः” वामनपु० ५२अ०।

**नमुचिद्विष्** पु०नमुचिं द्विष्टवान् द्विष–भूते क्विप् ६त०। इन्द्रे नमुचिसूदनशब्दे दृश्यम्। “विस्मयं चक्रे नमुचिद्विषा बली” माघः।

**नमुचिसूदन** पु० नमुचिं सूदयति हिनस्ति सूदि–ल्यु। इन्द्रे अमरः। तेन तस्य सूदनकथा भा० श० ४७अ०। “नमुचिर्वासवाद्भीतः सूर्य्यरश्मिं समाविशत्। तेनेन्द्रः सख्यमकरोत् समयञ्चेदमब्रवीत्। न चार्द्रेण च शुष्केण न रात्रौ नापि चाहनि। वधिष्याम्यसुरश्रेष्ठ! सखे! सत्येन ते शपे। एवं स कृत्वा समयं दृष्ट्वा नीहारमीश्वरः। चिच्छेदास्य शिरो राजन्नपां फेनेन वासवः। तच्छिरो नमुचेश्छिन्नं पृष्ठतः शक्रमन्वियात्। भो मित्रहन्! पापेति ब्रुवाणं शक्रमन्तिकात्” नमुचियत्न नमुचिहन् प्रभृतयोऽत्र।

**नमुर** पु० नम–बा० उर। नमुचौ असुरे “भूयाविन्द्रो नमुरात् भूयानिन्द्रासि मृत्युभ्यः” अथ० १३।४।४६

**नमेरु** पु० नम–बा०एरु। १सुरपुन्नागे विश्वः २रुद्राक्षे इति केचित् “गणा नमेरुप्रसवावतंसाः” “प्रान्तेषु संसक्तनमेरुशाखम्” कुमा० “विसृष्टस्तुर्नमेरूणां छायास्वध्यास्य सैनिकाः” रघुः।

**नमोगुरु** पु० नमः नमस्कारविषये गुरुः। ब्राह्मणे शब्दर०। ब्राह्मणानां सर्ववर्णनमस्यतया गुरुत्वात् तथात्वम्।

**नमोवाक** पु० वच–भावे घञ् ६त०, नमस्काराय उच्यते कर्मणि घञ् वा। २नमोवचने नमस्कारार्थं कथनीये त्रि० “इदं कविभ्यो पूर्वेभ्यो नमोवाकं प्रशास्महे” उत्तरच०। “नमोवाके प्रशस्ते अध्वरे” ऋ० ८।३५।२३ “नमस्काराय प्रोच्यते स नमोवाकः तस्मिन्नध्वरे” भा०

**नमोवृध्** पु० वृध–भावे सम्प० क्विप नमसोऽन्नस्य वृध् वर्द्धनं यस्मात् ५त०। यज्ञे “अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः” गीतायां यज्ञस्यान्नहेतुत्वोक्तेस्तस्य तथात्वम्। “अग्ने यज्ञं नमोवृधम्” ऋ० ३।४३।२ “नमोवृधम् नमसोऽन्नस्य वर्द्धकं यज्ञम्”

**नम्ब** गतौ भ्वा० पर० सक० सेट्। नम्बति अनम्बीत् ननम्ब अणोपदेशत्वात् सति निमित्ते न णत्वम्। प्रनम्बति।

**नम्य** त्रि० नम–पवर्गान्तत्वात् कर्मणि यत् न ण्यत्। नमनीये

**नम्र** त्रि० नम–र। १नते निम्नताप्राप्ते २विनयान्विते च शब्दार्थचि०। “स्तोकनम्रा स्तनाभ्याम्” मेघ०। “अभूच्च नम्रः प्रणिपातशिक्षया” रघुः।

**नम्रक** पु० नम्र इव कायति कै–क। १वेतसवृक्षे भावप्र०। स्वार्थे क। २नमनकर्त्तरि त्रि०स्त्रियां कापि अत इत्त्वम्

**नय** गतौ भ्वा० आत्म० सक० सेट्। नयते अनयिष्ट। नेये

**नय** पु० नी–भावे अच्। १नीतौ अमरः। “विषमोऽपि विगाह्यते नयः कृततीर्थः पयसामिवाशयः”किरा०।२द्यूतभेदे मेदि०। ३नैगमादौ हेमच०। नयति संसारपारं भक्तान् नी–कर्त्तरि अच्। ४विष्णौ “रामोविरामोविरजा मार्गो नेयो नयोऽनयः” विष्णुसं०। नैगमादिश्च सिद्धान्तादिः “एवं न्यायनयज्ञैस्तृतीयमुक्तं निमित्तहेतुत्वम्” “तत्रापि परमाणौ स्यात् पाको वैशेषिके नये” भाषा०। ५न्याय्ये ६नेतरि च त्रि० शब्दच० ततः आकर्षा० कुशलाद्यर्थे वुन्। नयक नीतिकुशले त्रि०।

**नयन** न०नीयते बुद्धिवृत्तिः स्वसंयुक्तविषयान् अनेन नी–करणे

ल्युट्। १नेत्रे अमरः। तस्य बुद्धिवृत्तेः स्वसंयोगिविषयप्रापकत्वात् तथात्वम्। “सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः” मेघ०। “अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः” रघुः अस्य स्वाङ्गत्वेऽपि बह्वच्कत्वात् उपसर्जनत्वे स्त्रियां न ङीष्। “दयिता दयिताननाम्बुजं दरमीलन्नयना निरीक्षते” रसगङ्गा० भावे ल्युट्। २प्रापणे ३यापने च “नयनं पारिजातस्य द्वारकां मम रोचते” हरिवं०१२९ “कालस्य नयने युक्ताः सोमपत्न्यः शुचिव्रताः” भा०आ०६६अ० “कालस्य नयने युक्ता यमस्य पुरुषाश्च ये” भा०स० ८अ०।

**नयनाभिघात** पु० ६त०। सुश्रुतोक्ते नयनाभिहननरूपे रोगभेदे यथोक्तम् “अथातो नयनाभिघातप्रतिषेधं व्याख्यास्यामः। अभ्याहते तु नयने बहुधा नराणां संरम्भरागतुमुलास्तु रुजास्तु धीमान्। सद्यप्रलेपपरिषेचनतर्पणाद्यमुक्तं पुनः क्षतजपित्तजमुक्तपथ्यम्। दृष्टिप्रसादजननं विधिमाशु कुर्यात् स्निग्धैर्हिमैश्च मधुरैश्च तथा प्रयोगैः। स्वेदाग्निधूमभयशोकरुजाभिघातैरभ्याहतावपि तथैव भिषक् चिकित्सेत्। सद्योहते नयन एष विधिस्त्वदुष्टं स्यन्देरितो भवति दोषमवेक्ष्य कार्यः। अभ्याहतं नयनमीषदथास्य वाष्पसंस्वेदितं भवति तत्सरुजं क्षणेन। साध्यं क्षतं पटलमेकमुभे तु कष्टे त्रीणि क्षतानि पटलानि विवर्जयेत्तु। स्यात्पिच्चिटस्य नयनं स्रुति चावसन्नं स्रस्तं च्युतञ्च हतदृक् च भवेत्तु याप्यम्। विस्तीर्णदृष्टितनुरागमसत्प्रदर्शि साध्यं यथास्थितमनाविलदर्शनञ्च। प्राणोपरोधवमनक्षवकण्ठरोधैरुन्मथ्यमाशु नयनं बहतिप्रविष्टम्। नेत्रे विलम्बिनि विधिर्विहितः पुरस्तादुच्छिङ्घनं शिरसि वार्य्यवसेचनञ्च। षट्सप्रतिर्नयनजा य इमे प्रदिष्टा रोगा भवन्त्यमहतां महताञ्च तेभ्यः। स्तन्यप्रकोपकफमारुतपित्तरक्तैर्बालाक्षिवर्त्म भव एव कुकूणकोऽन्यः। मद्नाति नेत्रमतिकण्डुमथाक्षिकूटनासाललाटमपि तेन शिशुः स नित्यम्। सूर्य्यप्रभां न सहते स्रवति प्रभूतं तस्याहरेद्रुधिरमाशु विनिर्लिखेच्च। क्षौद्रायुतैश्च कटुभिः प्रतिसारयेत्तु मातुः शिशोरभिहितञ्च विधिं विदध्यात्”।

**नयनाभिराम** पु० नयनमभिरमयति अभि+रम–णिच्–अच् नयनयोरभिरामो यस्मात् वा। १चन्द्रे “आयुः क्षयञ्च कुरुते नयनाभिरामः” वैवाहिकलग्नफलोक्तौ ज्योतिर्विदः। २नेत्रानुरागकारके प्रियमात्रे त्रि०।

**नयनी** स्त्री नी–करणे ल्युट् ङीप्। नेत्रकनिकायां शब्दचि०

**नयनोत्सव** पु० नयनयोरुत्सवो यस्मात्। १दीपे शब्दर०। तस्यालोकेन हि नेत्रस्य दर्शनयोग्यत्वम् “स्फुरति चक्षुःसम्बन्धादालोकोद्भूतरूपयोः” भाषा० आलोकसम्बन्धेन नयनस्य विषयग्राहित्वोक्तेः। २नेत्रोत्सवकारिमात्रे त्रि०।

**नयनोपान्त** पु० ६त०। अपाङ्गे राजनि०।

**नयनौषध** न० ६त०। पुष्पकासीसे हेमच०। [त्रिका०।

**नयपीठी** स्त्री नयस्य पीठीव। (छक्) द्यूताङ्गे अष्टकोष्ठे

**नयवर्त्म** ६त०। नीतेर्मार्गे षाड्गुण्यप्रयोगे षट् गुणाश्च “सन्धिविग्रहयानानि संस्थाप्यास्य द्वैधमेव च। द्वैधीभावश्च विज्ञेयाः षड्गुणा नीतिवेदिनाम्” नीतिशा०।

**नयविशारद** त्रि० ७त०। नीतिशास्त्रानुसारेण षाड्गुण्यप्रयोगाभिज्ञे “षाड्गुण्यविधितत्त्वज्ञो देशभाषाविशारदः। सान्धिविग्रहिकः कार्य्यो राज्ञा नयविशारदः” मात्स्ये ८९अ०।

**नर** पुंस्त्री० नृ–नये अच्। १मनुष्ये जातित्वात् स्त्रियां नारीत्येव “पुत्रे यशसि तोये च नराणां पुण्यलक्षणम्”। “नराणाञ्च नराधिपः” गीता “नरतीति नरः प्रोक्तः परमात्मा सनातनः” व्यासोक्तेः २परमात्मनि “नराज्जातानि तत्त्वानि नाराणीति विदुर्बुधाः” वेदमन्त्रम् “आपो नारा इति प्रोक्ता आपो वै नरसूनवः” मनुः। “जह्नुर्नारायणो नरः” विष्णु सं०। ३पुंसि राजनि०। ४देवभेदे “ततस्तदमृतं देवो विष्णुरादाय वीर्य्यवान्। जहार दानवेन्द्रेभ्यो नरेण सहितः प्रभुः। एवं सुतुमुले युद्धे वर्त्तमाने महाभये। नरनारायणौ देवौ समाजग्मतुराहवम्” भा० आ०१९अ०। ५अश्वे ५शङ्कौ निघण्टुः ६नरदेवस्यावतारे अर्जुने मेदि०।

“नरनारायणौ यौ तौ पुराणावृषिसत्तमौ। ताविमावनुजानीहि हृषीकेशधनञ्जयौ। विख्यातौ त्रिषु लोकेषु नरनारायणावृषी। कार्य्यार्थमवतीर्णौ तौ पृथ्वीं पुण्यप्रतिश्रयाम्। यत्र शक्यं सुरैर्द्रष्टुमृषिभिर्वा महात्मभिः। तदाश्रमपदं पुण्यं बदरीनाम विश्रुतम्। स निवासोऽभवद्विप्र ! विष्णोर्जिष्णोस्तथैव च। यतः प्रववृते गङ्गा सिद्धचारणसेविता। तौ मन्नियोगाद्ब्रह्मर्षे ! क्षितौ जातौ महाद्युती। भूमेर्भारावतरणं महावीर्य्यौ करिष्यतः” भा०व० ४७अ० “तेषां मनश्च तेजश्चाप्याददाना विवौजसा। पूर्वदेवौ व्यतिक्रान्तौ नरनारायणावृषी।

वृहस्पतिस्तु पप्रच्छ ब्रह्माणं क्वाविमाविति । भवन्तं नोपतिष्ठेते तौ नः शंस पितामह !" ब्रह्मोवाच "यावेतौ पृथिवीं द्याञ्च भासयन्तौ तपस्विनौ । ज्वलन्तौ रोचमानौ च व्याप्यातीतौ महाबलौ । नरनारायणावेतौ लोकाल्लोकं समास्थितौ । ऊर्जितौ स्वेन तपसा महासत्त्वपराक्रमौ । एतौ हि कर्मणा लोकं नन्दयामासतुर्ध्रुवम् । द्विधा भूतौ महाप्राज्ञौ विद्धि ब्रह्मन् परन्तपौ । असुराणां विनाशाय देवगन्धर्वपूजितौ" वैशम्पायन उवाच "जगाम शक्रस्तच्छ्रुत्वा यत्र तौ तेपतुस्तपः । सार्द्धं देवगणैः सर्वैर्बृहस्पतिपुरोगमैः । तदा देवासुरे युद्धे भये जाते दिवौकसाम् । अयाचत महात्मानौ नरनारायणौ वरम् । तावब्रूतां वृणीष्वेति तदा भरतसत्तम ! । अथ तावब्रवीच्छक्रः साह्यं नः क्रियतामिति । ततस्तौ शक्रमब्रूतां करिष्यावो यदिच्छसि । ताभ्याञ्च सहितः शक्रो विजिग्ये दैत्यदानवान् । नर इन्द्रस्य संग्रामे हत्वा शत्रून् परन्तपः । पौलोमान् कालकञ्जांश्च सहस्राणि शतानि च । एवमेतौ महावीर्यौ तौ पश्यत समागतौ । वासुदेवार्जुनौ वीरौ समवेतौ महारथौ । नरनारायणौ देवौ पूर्वदेवाविति श्रुतिः । अजेयौ मानुषे लोके सेन्द्रैरपि सुरासुरैः । एष नारायणः कृष्णः फाल्गुनश्च नरः स्मृतः । नारायणो नरश्चैव सत्त्वमेकं द्विधा कृतम् । एतौ हि कर्मणा लोकानश्नुवातेऽक्षयान् ध्रुवान्" भा० उ० ४८अ०। ७धान्यकपूररत्ने मेदि०। ८षड्जौ छायाव्यवहारोपयोगिकीलकभेदे "छायाकृते तु नरदीपतलान्तरघ्ने षड्जौ भवेन्नरयुते खलु दीपकोच्चम्" लीला० । छायाव्यवहारग्रन्थे दृश्यम् लीला० उक्ते रत्नमिश्रव्यवहारे ९रत्नमिश्रणकारिनरसङ्ख्यायाञ्च "नरघ्नदानोनितरत्नशेषैरिष्टे हृते स्युः खलु मौल्यसङ्ख्याः" लीला०। नरत्वस्य दुर्लभता विष्णु पु० उक्ता नरकभोगोत्तरं तत्तद्योनिभ्रमणानन्तरं ब्रह्मपञ्च पुराणस० दर्शिता यथा

"पापेन हि ध्रुवं यान्ति नरकेषु नराः स्वयम् । यः करोति नरः पापं तस्यात्मा ध्रुवमप्रियः । पापस्य हि फलं दुःखं तद्भोक्तव्यमिहात्मना । कथं ते पापनिरता नरा रात्रिषु शेरते । मरणान्तरिते येषां नरके तीव्रयातनाः । एवं क्लिष्टा विशुद्धाश्च यावशेषेण कर्मणा । ततः क्षितिं समासाद्य पुनर्जायन्ति देहिनः । स्थावरा विविधाकारास्तृणगुल्मादिभेदतः । तत्रानुभूय दुःखानि जायन्ते कीटयोनिषु । निष्क्रान्ताः कीटयोनिभ्यस्ततो जायन्ति पक्षिणः । संक्लिष्टा, पक्षिभावेन भवन्ति मृगजातिषु । मार्गदुःखमतिक्रम्य जायन्ते पशुयोनिषु । क्रमाद् गोयोनिमासाद्य पुनर्जायन्ति मानुषाः । एवं योनिषु सर्वासु परिभ्रम्य क्रमेण तु । कालान्तरवशाद्यान्ति मानुष्यमतिदुर्लभम् । व्युत्क्रमेणापि मानुष्यं प्राप्यते पुण्यगौरवात् । विचित्रा गतयः प्रोक्ताः कर्मणां गुरुलाघवात् । मानुष्यं यः समासाद्य स्वर्गमोक्षप्रसाधकम् । द्वयोर्न साधयत्येकं स मृतस्तप्यते चिरम् । देवासुराणां सर्वेषां मानुष्यमतिदुर्लभम् । तत् संप्राप्य तथा कुर्यात् न गच्छेन्नरकं यथा । स्वर्गापवर्गलाभाय यदि नास्ति समुद्यमः । सर्वस्य मूलं मानुष्यं तद्यत्नादनुपालय । धर्ममूलेन मानुष्यं लब्ध्वा सर्वार्थसाधकम् । मानुषत्वे च विप्रत्वं यदि प्राप्नोति दुर्लभम् । न करोत्यात्मनः श्रेयः कोऽन्योऽस्मादस्त्यचेतनः" ।

"नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा" सा०द०अग्निपु०

**नरक** पु० नरति नयति पापिलोकं यातनानुभवभोगायाऽत्र न—नये आधारे बा०वुन् । पापभोगस्थाने तस्य तथात्वञ्च विस्तरेण विष्णु पु०शिवधर्मोत्तरे च वर्णितं तदेव पुराणस० प्रदर्शितं तच्च कर्मविपाकशब्दे १७३५ पृष्ठादौ दर्शितम् । पापभेदेन नरकभेदप्राप्तिश्च पाद्मे उत्त०ख० ४८अ० यथा "कूटसाक्षी तथाऽसम्यक् पक्षपातेन यो वदेत् । यश्चान्यदसत्यं वक्ति स नरो याति रौरवम् । भ्रूणहा पुरहन्ता च गोघ्नश्च मुनिसत्तम ! । यान्ति ते नरके रोधे यश्चोच्छ्वासनिरोधकः । सुरापो ब्रह्महा हर्त्ता सुवर्णस्य च शूकरे । प्रयाति नरके यश्च तैः संसर्गमुपैति वै । राजन्यवैश्यहा तात ! तथैव गुरुतल्पगः । तप्तकुम्भे स्वसृगामी हन्ति राजभटांश्च यः । साध्वीविक्रयकृद्बन्धपालः केसरिविक्रयी । तप्तलौहे तु पच्यन्ते यश्च भक्तं परित्यजेत्" । (केशरी अश्वः) "स्नुषां सुताञ्चापि गत्वा महाज्वाले निपात्यते । अवमन्ता गुरूणां यो यश्चाक्रोष्टा नराधमः । वेददूषयिता यश्च वेदविक्रायकश्च यः । अगम्यागामी यश्च स्यात्ते यान्त्यशिवनं द्विज । चौरो विमोहे पतति मर्य्यादादूषकस्तथा । देवद्विजपितृन् द्वेष्टा रत्नदूषयिता च यः । स याति कृमिभक्ष्ये वै कृमीशे च दुरिष्टकृत् । पितृदेवातिथीन् यस्तु पर्य्यश्नाति नराधमः । लालाभक्ष्ये स यात्युग्रे शरकर्त्ता च रोधके । (पर्य्यश्नाति परित्यज्य आदौ भुङ्क्ते) "करोति कर्णिनो

यस्तु यस्तु खड्गादिकृन्नरः । प्रयान्ति ते विशसने नरके भृशदारुणे । असत्प्रतिग्रहीतारो नरके यान्त्यधोमुखे । अयाज्ययाजकस्तत्र तथा नक्षत्रसूचकः । वेगी पूयवहश्चैको याति मिष्टान्नभुङ्नरः । ( वेगी साहसकारी ) (पुत्रादीन् वर्जयित्वा एक एव मिष्टान्नभुक) “लाक्षामांसरसानाञ्च तिलानां लवणस्य च । विक्रेता ब्राह्मणो याति तमेव नरकं द्विज ! । मार्जारकुक्कुटच्छागान् श्ववराहविहङ्गमान् । पालयन्नरकं याति तमेव द्विजसत्तम ! । रङ्गोपजीवी कैवर्त्तः कुण्डाशी गरदस्तथा । सूची माहिषिकश्चैव पर्वकारी च यो द्विजः” । (पत्यौ जीवति जाराज्जातः कुण्डः तदन्नभोजी कुण्डाशी माहिषिको महिषोपजीवी “यद्वा महिषीत्युच्यते भार्य्या भगेनोपार्जितं धनम् । उपजीवति यस्तस्याः स वै माहिषिकः स्मृतः” इति स्मृतिः । पर्वकारी धनादिलोभेन पर्वसु अमावस्यादिक्रियाप्रवर्त्तकः) “अगारदाही मित्रघ्नः शाकुनिर्ग्रामयाजकः । रुधिरान्धे पतन्त्येते सोमं विक्रीणते च ये । मधुहा ग्रामहन्ता च याति वैतरणीं नरः । रेतःपानादिकर्त्तारो मर्य्यादाभेदिनश्च ये । ते कृष्णे यान्त्यशौचाश्च कुहकाजीविनश्च ये । असिपत्रवनं याति वनच्छेदी वृथैव यः । औरभ्रिको मृगव्याधो वह्निज्वाले पतन्ति वै । यान्त्येते द्विज ! तत्रैव ये चापाकेषु वह्निदः । व्रतेषु लोपको यश्च स्वाश्रमाद्विच्युतश्च यः । सन्दंशयातनामध्ये पततस्तावुभावपि । दिवास्वप्नेषु स्कन्दन्ति ये नरा ब्रह्मचारिणः । पुत्रैरध्यापिता ये च ते पतन्ति श्वभोजने । एते चान्ये च नरकाः शतशोऽथ सहस्रशः । येषु दुष्कृतकर्म्माणः पच्यन्ते यातनागताः । यथैव पापान्येतानि तथान्यानि सहस्रशः । भुज्यन्ते यानि पुरुषैर्नरकान्तरगोचरैः । वर्णाश्रमविरुद्धञ्च कर्म्म कुर्व्वन्ति ये नराः । कर्म्मणा मनसा वाचा निरयेषु पतन्ति ते । अधःशिरोभिर्दृश्यन्ते नारकैर्दिवि देवताः । देवाश्चाधोमुखान् सर्व्वानधः पश्यन्ति नारकान् । स्थावराः कृमयोऽब्जाश्च पक्षिणः पशवो नराः । धार्म्मिकास्त्रिदशास्तद्वन्मोक्षिणश्च यथाक्रमम् । सहस्रभागप्रथमा द्वितीयानुक्रमास्तथा । सर्व्वे ह्येते महाभाग ! यावन्मुक्तिसमाश्रयाः । यावन्तो जन्तवः स्वर्गे तावन्तो नरकौकसः । पापकृद्याति नरकं प्रायश्चित्तपराङ्मुखः” इति विष्णुपु० द्वितीयांशे ६ अ० । तत्रैव “कथयामि विचित्राणां कर्म्मणां विविधा गतीः । ताः शृणुष्व महाराज ! याः श्रुत्वा मोक्षमाप्नुयात् । परवित्तं परापत्यं कलत्रं पारकञ्च यः । हरते बुद्धिमोहेन सोऽन्ते मृत्युवशङ्गतः । कालपाशेन सम्बद्धो यमदूतैर्महाबलैः । तामिस्रे पात्यते तावत् यावत् वर्षसहस्रकम् । तत्र ताडनमुद्गराः कुर्व्वन्ति यमकिङ्कराः । पापभोगेन सम्मुक्तस्ततो योनिन्तु शौकरीम् । तत्र भुक्त्वा महादुःखं मानुषत्वं गमिष्यति । रोगादिचिह्नितं तत्र दुर्यशोज्ञापकं स्वकम् । भूतद्रोहं विधायैवं केवलं स्वकुटुम्बकम् । पुष्णाति पापनिरतः सोऽन्धतामिस्रके पतेत् । ये नरा इह जन्तूनां वधं कुर्व्वन्ति वै मृषा । ते रौरवे निपात्यन्ते खाद्यन्ते रुरुभिर्व्वृतः । यः स्वोदरार्थं भूतानां वधमाचरति स्फुटम् । महारौरवसंज्ञे तु पात्यते स यमाज्ञया । यो वै निजन्तु जनकं ब्राह्मणं द्वेष्टि पापकृत् । कालसूत्रे महादुष्टे योजनायतविस्तृते । यावन्ति पशुरोमाणि मर्त्यो ह्येवं करोति यः । तावद्वर्षसहस्राणि पच्यते यमकिङ्करैः । यो भूमौ भूपतिर्भूत्वा दण्डायोग्यन्तु दण्डयेत् । करोति ब्राह्मणस्यापि देहदण्डं विलोलुपः । स शूकरमुखैर्दुष्टैः पीड्यते यमकिङ्करैः । पश्चाद्दुष्टासु योनीषु जायते पापभुक्तये । ब्राह्मणानां नृणां ये तु द्रव्यं वित्तं तथात्मकम् । वृत्तिं वा गृह्णते मोहाल्लुम्पन्ति स्वबलान्नराः । ते परत्रान्धकूपे च पात्यन्ते च महार्द्दिताः । योऽर्थं स्वयमुपाहृत्य मधुकश्चाति लोलुपः । न देवाय न सुहृदे ददाति रसनातुरः । स पतत्येव नरके कृमिभोजनसंज्ञके । अनापदि नरो यस्तु हिरण्यादीनपाहरेत् । ब्रह्मस्वं वा महादुष्टः सन्दंशे नरके पचेत् । यः स्वदेहं प्रपुष्णाति नान्यं जानाति मूढधीः । मनसा कल्पितं द्रव्यं विदुषे यो ददाति न । स पुमान्नरकं याति यावदिन्द्राश्चतुर्दश । पश्चाद्दुष्टासु योनीषु जायते वर्णसङ्करः । दानानि बाडवे दत्त्वा पुनः शुद्धो भविष्यति । वचोदत्तं मनोदत्तमिति साहं वदेत् यदि । कल्पन्ते पितरस्तस्य नरकाय ससुहृत्सुकाः । वचोदत्तं मनोदत्तं दत्तं पाणिकुशोदकम् । एतद्दत्तमदत्तं चेत् जिह्वामुत्पाटयेद् यमः । स पात्यते तैलतप्ते कुम्भीपाकेऽतिदारुणे । ये नगम्यां स्त्रियं मोहाद्योषिद्वाञ्च कामयेत् । तं तया किङ्कराः शूर्म्याः परिरब्धञ्च कुर्व्वते । ये बलाद्वेदमर्य्यादां लुम्पन्ति स्वबलोद्धताः । ते वैतरण्यां पतिता मांसशोणितभक्षकाः । वृषलीं यः स्त्रियं कृत्वा तया गार्हस्थ्यमाचरेत् । पूयोदे निप-

तत्रैव महादुःखसमन्वितः। ये दम्भानाश्रयन्ते वै धूर्त्ता लोकस्य वञ्चने। वैशसे नरके मूढाः पतन्ति यमताडिताः। ये सवर्णां स्त्रियं मूढाः पाययन्ति स्मरेतसम्। रेतःकुल्यासु ते यान्ति रेतःपानेषु तत्पराः। ये चौरा वह्निदा दुष्टा गरदा ग्रामलुण्ठकाः। सारमेयादने ते वै यान्त्यन्ते पातकान्विताः। कूटसाक्ष्यं वदत्यद्धा पुरुषः पापसम्भृतः। परकीयन्तु द्रव्यं यो हरति प्रसभं बली। सोऽवीचिनरके पापे ह्यवाक्शिराः पतत्यधः। तत्र दुःखं महद्भुक्त्वा पापिनां योनिमाप्नुयात्। यो नरो रसनास्वादात् सुरां पिवति मूढधीः। तस्यापाययन्ति लोहस्य रसं धर्मस्य किङ्कराः। यो गुरुनवमन्येत स्वविद्याचारदर्पितः। स मृतः पात्यते क्षारसंज्ञकेऽधोमुखः पुमान्। विश्वासघातं कुर्वन्ति ये नरा धर्मनिष्कृताः। शूलप्रोते तु नरके पात्यन्ते बहुयातनाः। यैर्न श्रुता रामकथा न परोपकृतिः कृता। तेषां सर्वाणि दुःखानि भवन्ति नरकान्तरे। अपि यत्र सुखं भूयस्तत् स्वर्गं इतीर्यते। ये दुःखिनो रोगयुता नरकादागतास्तु ते" २असुरभेदे पु० स च वराहेण रजस्वलायां पृथ्व्यामुत्पादितः स एव च वशिष्ठशापेन द्वापरयुगे कपिलमैनैव कृष्णेन निसूदितः। कालिकापुराणे ३६ अध्यायावधि ४१अध्याये तत्कथा विस्तरेण दृश्या। कालिकापुराणस्य १०२०।५पृ० संक्षेपतस्तत्कथा दर्शिता।

नरककुण्ड न० यातनास्थानभेदे "यम उवाच नरकाणाञ्च कुण्डानि सन्ति नानाविधानि च। नानापुराणभेदेन नामभेदानि तानि च। भयङ्कराणि घोराणि हे वत्स! कुत्सितानि च। षडशीतिश्च कुण्डानि संयमन्याञ्च सन्ति च। निबोध तेषां नामानि प्रसिद्धानि श्रुतौ स्मृतौ" इति ब्रह्मवैवर्त्ते प्रकृतिख० २७।२८ अ०।

नरकभेदकुण्डानि पापभेदात् तत्र गामिनः

१ वह्निकुण्डम्—कटुवाचा बान्धवोत्पीडकः।

२ तप्तकुण्डम्—ब्राह्मणातिथिभोजनाप्रदायी।

३ क्षारकुण्डम्—निषिद्धदिने वस्त्रे क्षारसंयोजकः।

४ विट्कुण्डम्—ब्रह्मस्वत्वापहारकः।

५ मूत्रकुण्डम्—परतडागं खनित्वोत्सर्जकः।

६ श्लेष्मकुण्डम्—एकाकी मिष्टभोजी।

७ गरकुण्डम्—पितृमातृगुरुभार्य्यादापोषकः।

८ दूषिकाकुण्डम्—अतिथिं दृष्ट्वा वक्रचक्षुःकारी।

९ वसाकुण्डम्—विप्राय प्रतिश्रुत्य तद्द्रव्यमन्यस्मै दाता।

१० शुक्रकुण्डम्—परस्त्रीगामी वा परपुंगामिनी च स्त्री।

११ असृक्कुण्डम्—गुर्वादिताडकस्तद्रक्तस्रावकश्च।

१२ अश्रुकुण्डम्—हरिसङ्कीर्त्तनद्रावकद्गद्गदभक्तोपहासकृत्।

१३ गात्रमलकुण्डम्—यावदशुद्धचित्तः खलताकारी च।

१४ कर्णविट्कुण्डम्—बधिरोपहासकृत्।

१५ मज्जकुण्डम्—लोभात् स्वभोजनार्थं जीवहन्ता।

१६ मांसकुण्डम्—अर्थलोभात् कन्याविक्रेता।

१७ नखकुण्डम्, १८ लोमकुण्डम्—व्रतोपवासादिषु संयमत्यागी।

१९ केशकुण्डम्—सकेशपार्थिवशिवलिङ्गार्चकः।

२० अस्थिकुण्डम्—विष्णुपदे पितृपिण्डादायी।

२१ ताम्रकुण्डम्—गुर्विणीगामी।

२२ लौहकुण्डम्—स्वदत्ताताऽवीरयोरन्नभोजी।

२३ तीक्ष्णकण्टककुण्डम्—कटुवाचा स्वामितर्जिका स्त्री।

२४ विषकुण्डम्—विषेण जीवहन्ता।

२५ घर्मकुण्डम्—घर्महस्तेन देवद्रव्यस्पर्शी।

२६ तप्तसुराकुण्डम्—शूद्रानुमतः शूद्रान्नभोजी।

२७ प्रतप्ततैलकुण्डम्—दण्डेन वृषताडकः।

२८ कुन्तकुण्डम्—कुन्तलौहवड़िशैर्जीवहन्ता।

२९ कृमिकुण्डम्—छागमांसमत्स्यभुग्विप्रो हरेरनैवेद्यभुक् च।

३० पूयकुण्डम्—शूद्रयाजी तस्य श्राद्धभुक् तच्छवदाही च।

३१ सर्पकुण्डम्—श्रीकृष्णपदचिह्नमस्तकस्य सर्पस्य हन्ता।

३२ मशककुण्डम्—विधिं हित्वा क्षुद्रजन्तुहन्ता।

३३ दंशकुण्डम्—विधिं हित्वा जीवहन्ता।

३४ गरलकुण्डम्—मक्षिकां हत्वा मधुग्राही।

३५ वज्रदंष्ट्रकुण्डम्—अदण्ड्यविप्रयोर्दण्डकृत् नृपः।

३६ वृश्चिककुण्डम्—अर्थलोभात् प्रजादण्डकृत् नृपः।

३७ शरकुण्डम्, ३८ शूलकुण्डम्, ३९ खड्गकुण्डम्—शस्त्रधारी धावकः सन्ध्याहरिभक्तिहीनश्च ब्राह्मणः।

४० गोलकुण्डम्—अल्पदोषेण कारायां प्रजाबन्धनकृत् नृपः।

४१ नक्रकुण्डम—जलादुत्थितनक्रादिहन्ता।

४२ काककुण्डम्—कामेन परस्त्रीवक्षःश्रोणीमुखद्रष्टा।

४३ सञ्चानकुण्डम्—स्वर्णचौरः।

४४ वाजकुण्डम्—ताम्रलौहचौरः।

४५ वज्रकुण्डम्—भूदेवदेवद्रव्ययोश्चौरः।

४६ तप्तपाषाणकुण्डम्—देवद्विजयोरौप्यगोवस्त्राणां चौरः।

४७ तीक्ष्णपाषाणकुण्डम्—देवद्विजयोःपित्तलकांस्यपात्रचौरः।

४८ लालाकुण्डम्—वेश्यान्नभुक् तद्वृत्तिजीवी च ।

४९ मसीकुण्डम्—म्लेच्छसेवी मसीजीवी च ब्राह्मणः ।

५० चूर्णकुण्डम्—देवद्विजयोः शस्यताम्रबासनचौरः ।

५१ चक्रकुण्डम्—विप्रद्रव्यं हृत्वा चक्रकारी ।

५२ वक्रकुण्डम्—विप्रबान्धवयोर्वक्रताचारी ।

५३ कूर्मकुण्डम्—हरिशयने कूर्ममांसभुक् ब्राह्मणः ।

५४ ज्वालाकुण्डम् } देवद्विजयोर्घृततैलादिहृत् ।
५५ भस्मकुण्डम् }

५६ दग्धकुण्डम्—देवद्विजयोर्द्वात्रीगन्धतैलद्रव्याणामपहर्त्ता

५७ तप्तशूर्मीकुण्डम्—बलच्छलत्वादिना परभूमिहरः ।

५८ असिपत्रकुण्डम्—अर्थलोभात् खड्गेन नरघाती ।

५९ क्षुरधारकुण्डम्—ग्रामनगरादिदाहकारी ।

६० सूचीमुखकुण्डम्—परकर्णे मुखं दत्त्वा परनिन्दकः परदोषोद्घोषी वेदब्राह्मणनिन्दकश्च ।

६१ गोधामुखकुण्डम्—गृहं भित्त्वा वस्तुगोष्ठानमेषचौरः ।

६२ नक्रमुखकुण्डम्—सामान्यद्रव्यचौरः ।

६३ गजदंशकुण्डम्—गजतुरगनरचौरः ।

६४ गोमुखकुण्डम्—गोजलपानवारकः ।

कुम्भीपाककुण्डम्—गोस्त्रीभिक्षुभ्रूणब्रह्महाऽगम्यागामी दीक्षाबन्ध्याहीनस्तीर्थप्रतिग्राही ग्रामयाजी देवलः शूद्रसूपकारी वृषलीपतिश्च ।

६६ कालसूत्रकुण्डम्—नेश्यान्नभुक् तत्संसर्गी च ।

६७ अवटोदकुण्डम्—कुलटादिषड्वेश्यागामी द्विजः ।

६८ अरुन्तुदकुण्डम्—चन्द्रसूर्यग्रहणे निषिद्धकाले भोजी ।

६९ पांशुभोजकुण्डम्—एकस्मै वाक्प्रदत्तकन्याया दोषं विना अन्यस्मै दाता ।

७० पाशवेष्टकुण्डम्—दत्तापहारी ।

७१ शूलप्रोतकुण्डम्—अभक्त्या शिवलिङ्गपूजकः ।

७२ प्रकम्पनकुण्डम्—विप्रदण्डकृत् तत्कम्पकभयदायी च ।

७३ उल्कामुखकुण्डम्—सकोपवदना स्वामिनि कटुवादिनी ।

७४ अन्धकूपकुण्डम्—शूद्रभोग्या ब्राह्मणी ।

७५ वेधनकुण्डम्—पञ्चभटपुंगमनात् वेश्या ।

७६ दण्डताडनकुण्डम्—सप्ताष्टपुंगमनात् रण्डा ।

७७ जालबन्धकुण्डम्—अष्टाधिकपुंगमनात् महावेश्या ।

७८ देहचूर्णकुण्डम्—पुंद्वयगमनात् कुलटा ।

७९ दलनकुण्डम्—चतुःपुंगमनात् स्वैरिणी वृषली च ।

८० शोषणकुण्डम्—त्रिपुंगमनात् धृष्टा पुंश्चली ।

८१ कषकुण्डम्—सवर्णपरदारगामी ।

८२ शूर्पकुण्डम्—ब्राह्मणीगमनकारको क्षत्रियो वैश्यश्च ।

८३ ज्वालामुखकुण्डम्—करे तुलसीगङ्गाजलदेवशिलाश्च धृत्वा प्रतिज्ञाकृतदपालको मिथ्याशपथी मित्रद्रोही विश्वासघाती मिथ्यासाक्ष्यदश्च ।

८४ जिह्मकुण्डम्—नित्यक्रियाहीनो देवयजनेऽनास्तिकोमन्त्रोपहासी च ।

८५ धूमान्धकुण्डम्—देवविप्रयोर्धनहारी ।

८६ नागवेष्टनकुण्डम्—वैद्यदैवज्ञवृत्तिहारी लाक्षालोहव्यापारी रसादिविक्रयी च ब्राह्मणः” ।

**नरकजित्** पु० नरकम् असुरभेदं जयति जि—भूते क्विप् ६त० । वासुदेवे श्रीकृष्णे “नैर्ऋतो नरको नाम ब्रह्मणो वरदर्पितः । अदित्याः कुण्डले मोहाज्जहार दितिनन्दनः । देवानां विप्रिये नित्यमभीषाश्च स वर्त्तते । तव चैशान्तरप्रेष्यो जहि तं पापपूरुषम् । अयं त्वां गरुडस्तत्र प्रापयिष्यति कामगः । कामवीर्योऽतितेजस्वी वैनतेयोऽन्तरीक्षगः । अवध्यः सर्वभूतानां भौमः स नरकोऽसुरः । निषूदयित्वा तं पापं क्षिप्रमागन्तुमर्हसि । इत्युक्तः पुण्डरीकाक्षो देवराजेन केशवः । प्रतिजज्ञे महाबाहुर्नरकस्य निबर्हणम्” इत्युपक्रमे तयोर्युद्धवर्णनानन्तरम् “मुहूर्त्तं योधयामास नरकं मधुसूदनः । अथोग्रचक्रं चक्रे च प्रदीप्तं नाकरोद्द्विधा । चक्रद्विधाकृतं तस्य शरीरमपतद्भुवि । विभक्तं क्रकचेनेव गिरेः शृङ्गं द्विधाकृतम् । तच्छमासाद्य देवेशं जगामास्तमिवांशुमान् । चक्रोत्क्षिप्तनिकृत्ताङ्गमुत्तमं पतितं रणे । वज्रेणेव विनिर्भिन्नं यथा गैरिकपर्वतम् । भूमिस्तु पतितं पुत्रं गिरेर्गृह्यादाय कुण्डले । उपातिष्ठत गोविन्दं वचनञ्चेदमब्रवीत् । दत्तस्त्वयैव गोविन्द ! त्वयैव विनिपातितः । यथेच्छसि तथा क्रीड बालक्रीडनकैरिव । इमे ते कुण्डले देव ! प्रजां तस्यानुपालय” हरिवं० १२२अ० तद्वधकथा

**नरकदेवता** स्त्री नरकस्याधिष्ठात्री देवता । निर्ऋतौ शब्दर०

**नरकपाल** न० ६त० । मृतनरस्य शीर्षस्थे अस्थिभेदे “नरकपालं शुचि प्राण्यङ्गत्वात् शङ्खवत् तस्य शुचित्वानुमानं बलवदागमविरोधात् अप्रमाणम् इति” मथुरानाथः । स च आगमः “नारमूलं पूरीषास्थि निर्गतं ह्यशुचि स्मृतम् । नारं स्पृष्ट्वा तु सस्नेहं सचेलोजलमाविशेत्” मनुवचनम्

**नरकभूमि** स्त्री नरकस्य दुःखभेदस्य भोगयोग्या भूमिः । यमालयस्थायां दुष्कर्मिणां दुःखभोगार्थं भूमौ । ताश्च जैमच० अधोऽधोवर्त्तमानाः दर्शिताः “घनोदधिघनवात

तनुवातनभःस्थिताः। रत्नशर्कराबालुकापङ्कधूमतमः प्रभाः। महातमःप्रभा वेत्यधोधोनरकभूमयः"।

**नरकमुक्त** पु० नरकान्मुक्तः। नरकान्मुक्ते "कपूयचरणाः कपूयां योनिमापद्येरन्" श्रुतिः अनुशयशब्दे १८८पृ० दृश्यम्। गारुड़े २२८अ० ततो मुक्तानां पापविशेषात् योनिभेदप्राप्तिरुक्ता यथा

"नरकात् प्रतिमुक्तस्तु पापयोनिषु जायते। पतितात् प्रतिगृह्याथ खरयोनिं व्रजेद्बुधः। नरकात् प्रतिमुक्तस्तु कृमिर्भवति पातकी। उपाध्याये व्यलीकन्तु कृत्वा श्वा भवति द्विजः। तज्जायां मनसा वाञ्छंस्तद्द्रव्यं वाप्यसंशयम्। गर्दभो जायते जन्तुर्मित्रस्यैवापमानकृत्। मातापितरमाक्रुश्य शारिका संप्रजायते। पितरौ पीडयित्वा तु कच्छपत्वञ्च जायते। भर्त्तुः पिण्डमुपाश्नन् यो हित्वा ऽन्यानि च सेवयेत्। सोऽपि मोहसमापन्नो जायते वानरो मृतः। न्यासापहर्त्ता नरकात् विमुक्तो जायते कृमिः। असूयकश्च नरकान्मुक्तो भवति राक्षसः। विश्वासहर्त्ता च नरो मीनयोनौ प्रजायते। यवधान्यानि हृत्वा तु जायते मूषिको मृतः। परदाराभिमर्षात्तु वृको घोरोऽभिजायते। भ्रातृभार्य्याप्रसङ्गात्ते कोकिलो जायते नरः। गुर्वादिभार्य्यागमनाच्छूकरो जायते नरः। यज्ञदानविवाहानां विघ्नकर्त्ता भवेत् कृमिः। देवतापितृविप्राणामदत्त्वा योऽन्नमश्नुते। प्रमुक्तो नरकादापि वायसः स प्रजायते। ज्येष्ठभ्रातृवमानाच्च क्रौञ्चयोनौ प्रजायते। शूद्रश्च ब्राह्मणीं गत्वा कृमियोनौ प्रजायते। तस्यामपत्यमुत्पाद्य काष्ठान्तः कीटको भवेत्। कृतघ्नः कृमिकः कीटः पतङ्गो वृश्चिकस्तथा। अशस्त्रं पुरुषं हत्वा नरः संजायते खरः। कृमिः स्त्रीवधकर्त्ता च बालहन्ता प्रजायते। भोजनं चोरयित्वा तु मक्षिका जायते नरः। हृत्वाप्यन्नञ्च मार्ज्जारस्तिलहृच्चैव मूषिकः। घृतं हृत्वा च नकुलः काको मद्गुरमामिषम्। मधु हृत्वा नरो दंशः पूपं हृत्वा पिपीलकः। अपो हृत्वा तु पापात्मा वायसः संप्रजायते। हृते कांस्ये च हारीतः कपोतो वा प्रजायते। हृत्वा तु काञ्चनं भाण्डं कृमियोनौ प्रजायते। कार्पासिके हृते क्रौञ्चो वह्निहर्त्ता बकस्तथा। मयूरो वर्णकं हृत्वा शाकं पत्रञ्च जायते। जीवञ्जीवकतां याति रक्तवस्त्रापहृन्नरः। छुच्छुन्दरिः शुभान् गन्धान् वंशं हृत्वा शशो भवेत्। षण्ढः कलापहरणे काष्ठहृत् काष्ठकीटकः। पुष्पापहृद्दरिद्रस्तु पङ्गुर्यानापहृन्नरः। शाकहर्त्ता च हारीतस्तोयहर्त्ता च चातकः। भूहृत्हृत् नरकान् गत्वा रौरवादीन् सुदारुणान्। तृणगुल्मलतावल्लीत्वक्सार तरुतां व्रजेत्। एष एव क्रमो दृष्टो गोसुवर्णादिहारिणाम्। विद्यापहारी मूकश्च गत्वा च नरकान् बहून्। असमिद्धेऽग्नौ च हुते मन्दाग्निः संप्रजायते। परनिन्दाकृतघ्नत्वं परमर्म्मविघातनम्। नैष्ठुर्य्यं निर्घृणत्वञ्च परदारोपसेवनम्। परस्वहरणाऽशौचं देवतानाञ्च कुत्सनम्। निकृत्या वञ्चनं नृणां कार्पण्यञ्च नृणां वधः। उपलक्षणादिजानीयात् मुक्तानां नकरादनु" प्रसङ्गात् स्वर्गादागतलक्षणं तत्रैव यथा "दयाभूतेषु संवादः परलोकं प्रति क्रिया। सत्यं भूतहिता चोक्तिर्वेदप्रामाण्यदर्शनम्। गुरुदेवर्षिपूजा च कीर्त्तनं साधुसङ्गमः। सत्क्रियाभ्यसनं मैत्री स्वर्गिणां लक्षणं विदुः। अष्टाङ्गयोगविज्ञानात् प्राप्नोत्यात्यन्तिकं लयम्"। अधिकं कर्मविपाक शब्दे १७४२पृ० दृश्यम्।

**नरकस्थ** त्रि० नरके तद्भूमौ तिष्ठति स्था—क ७त०। १नरकभूमौ स्थिते २वैतरणीनद्यां स्त्री हेमच०।

**नरकान्तक** पु० ६त०। विष्णौ नरकजिच्छब्दे दृश्यम्।

**नरकामय** पु० नरक आमय इव यस्य। १प्रेते शब्दरत्ना०। नरक आमय इव कर्म०। २नरकरूपे रोगे च।

**नरकीलक** पु०नरेषु कीलक इव मर्द्दितत्वात्। गुरुघ्ने हेमच०

**नरकेशरिन्** पु० नर एव केशरी। १नरसिंहे नरसिंहशब्दे दृश्यम्। नरः केशरीव शूरत्वात्। २मानवश्रेष्ठे च।

**नरगण** पु०१नक्षत्रभेदे उपयमशब्दे १२५०पृ० दृश्यम्। ६त० २नरसमूहे च। [२मेढ़्रे न० उणादि०।

**नरङ्ग** पु० नृ—अङ्गच्। वरण्डे (नारङ्गा) प्रसिद्धे १व्रणभेदे

**नरद** न०नलद+लस्य रः। नलदे ततः किशरा० तदस्य पण्यमित्यर्थे ष्ठन्। नरदिक नद्दिक्रेतरि त्रि०।

**नरदेव** पु० नरो देव इव। नृपे। "तदेव देवं नरदेवसम्भवः" रघुः। "भूमिदेवनरदेवसङ्गमे" माघः।

**नरद्विष्** पु० नरान् द्वेष्टि द्विष—क्विप्। राक्षसे "ब्रह्मास्त्रं तेन मूर्द्धानमदध्वंसन्नरद्विषः" भट्टिः।

**नरनगर** न० नरप्रधानं नगरम् पूर्वपदात् संज्ञायां णत्वे प्राप्ते क्षुभ्नादि० न णत्वम्। नगरभेदे

**नरनारायणौ** द्वि० व०। नरश्च नारायणश्च। ऋषिभेदयोः तयोः सम्भवकथा "तदा दंष्ट्राग्रघातेन नरसिंहं महाबलम्। सरभो भगवान् धर्मौ द्विधा मध्ये चकार ह।

नरसिंहे द्विधा भूते नरभागेण तस्य तु । नर एव समुत्पन्नो दिव्यरूपी महानृषिः । तस्य पश्चार्द्धभागेन नारायण इति श्रुतः । अभवत् स महातेजा मुनिरूपी जनार्दनः । नरो नारायणश्चोभौ सृष्टिहेतू महामती । ययोः प्रभावो दुर्द्धर्षः शास्त्रे वेदतपःसु च" कालिकापु० २९अ० ।

एतच्च वाराहकल्पे । अन्यकल्पे तु तौ धर्मस्य पुत्रौ यथोक्तं भाग०२।६अ०"धर्मस्य दक्षदुहितर्य्यजनिष्ट मूर्त्त्यां नारायणो नर इति स्वतपःप्रभावौ" । स्वायम्भुवे मन्वन्तरे धर्मस्य चतुर्षु पुत्रेषु तौ च द्वौ यथा "नारायणो हि विश्वात्मा चतुर्मूर्त्तिः सनातनः । धर्मात्मजः सम्बभूव पितैवं मेऽभ्यभाषत । कृते युगे महाराज ! पुरा स्वायम्भुवेऽन्तरे । नरो१नारायणश्चैव२ हरिः३ कृष्णः४ स्वयम्भुवः । तेषां नारायणनरौ तपस्तेपतुरव्ययौ । बदर्य्याश्रममासाद्य शकटे कनकामये" भा०शा०३३६अ० ।

**नरन्धि** पु० नरो धीयन्ते आरोप्यन्ते अस्मिन् धा—आधारे कि उपस० पृषो० मुम् । संसारे महीधरः नरन्धिषशब्दे दृश्यम् ।

**नरन्धिष** पु० विष्णौ "विष्णुर्नरन्धिषः प्रोह्यमानः"यजु०८।५५ "विष्णुर्नरन्धिषो भवति नरो धीयन्ते आरोप्यन्ते यस्मिन् स नरन्धिः संसारः तं स्यति नाशयति नरन्धिषः संसारसंहर्त्ता विष्णुः यद्वा रिष—हिंसायाम् रिष्यति हिनस्ति रन्धिषः हन्ता नरन्धिषो जगत्पालकः" महीधरः । उभयत्र पृषो० ।

**नरपति** पु० ६त० । नृपे शब्दर० । "नरपतिकुलभूत्यै गर्भमाधत्त राज्ञी" रघुः । नरेश्वरनरनाथनरनायकनरेशादयोऽप्यत्र । "नरनाथ ! न जानीमस्त्वत्प्रिया यद्व्यवस्यति" भाग०४।२६।१५।

**नरपतिजयचर्य्या** स्त्री नरपतीनां राज्ञां जयस्य चर्य्या । स्वरोदयमूलके ग्रन्थभेदे चक्रशब्दे तद्वाक्यं भूरि दर्शितम् ।

**नरपशु** पु०नरः पशुरिव उपमितस०।१मानवाधमे २पुंरूपे पशौ च "विषयदृशोनरपशवोय उपासते विभूतीर्न परं त्वाम् । तेषामाशिष ईश ! तदनु विनश्यन्ति यथा राजकुलम्" भाग० ६।१६।३६ नृपश्वादयोऽप्यत्र । "याश्च स्त्रियो नृपशून् खादन्ति" भाग० ५।२६।३९ [नृपे ।

**नरपाल** पु० नरान् पालयति पालि—ण्वुल् । मानवरक्षके

**नरपुङ्गव** पु० नरः पुङ्गवो वृष इव शूरत्वात् । नरश्रेष्ठे "शैब्यश्च नरपुङ्गवः" गीता ।

**नरप्रिय** त्रि० ६त० । १मनुष्यहृद्ये वस्तुमात्रे २नीलवृक्षे पु० राजनि० । [भूमिरप्यत्र शब्दर० ।

**नरभू** स्त्री ६त० । १भारतवर्षे २नराणामुत्पत्तौ च । नर-

**नरमानिनी** स्त्री नरं मन्यते मन—णिनि ङीप् । श्मश्रुयुक्तमुख्यां नार्य्यां त्रिका०ण्वुल् । नरमानिका तत्रार्थे शब्दर०

**नरमाला** स्त्री नराणां तन्मुण्डानां माला । नरमुण्डरचितमालायां "विचित्रखट्वाङ्गधरा नरमालाविभूषणा" देवीमा०

**नरमालिनी** स्त्री नरस्येव माला केशमाला मुखेऽस्त्यस्याः इनि ङीप् । श्मश्रुयुक्तवदनायां १नार्य्याम् हेमच०।२नरमुण्डमालावत्यां स्त्रियां च ।

**नरमेध** पु० नरा मिध्यन्ते हिंस्यन्ते यत्र मिध—आधारे घञ् ६त० । पुरुषमेधाख्ये यज्ञभेदे स च यज्ञः यजु० ३०।३१ अध्याययोर्दर्शितः तत्राधिकार्य्यादिकम् ३०अध्याये वेददीपे उक्तं यथा "ब्राह्मणराजन्ययोरतिष्ठाकामयोः पुरुषमेधसंज्ञको यज्ञो भवति । सर्वभूतान्यतिक्रम्यस्थानमतिष्ठा । चैत्रशुक्लदशम्यामारम्भः । अत्र त्रयोविंशतिर्दीक्षा भवन्ति द्वादशोपसदः पञ्चसुत्या इति चत्वारिंशदहैः सिध्यति । अत्र यूपैकादशिनी भवति एकादशाग्नीषोमीयाः पशवो भवन्ति तेषां च प्रतियूपं मध्यमे वा यूपे यथेच्छं नियोजनम् । आज्येन सकृद्गृहीतेन देव सवितरिति प्रत्यृचं तिस्र आहुतीराहवनीये जुहोति" । देवताभेदेन तत्रालभ्यपशुभेदास्तत्र "ब्रह्मणे ब्राह्मणमित्यादिना" अध्यायसमाप्तिपर्य्यन्तेनोक्ताः अष्टाचत्वारिंशत्संख्याकाश्च ब्राह्मणादयो ब्रह्माद्यष्टाचत्वारिंशद्देवदेवत्याः पशवः "स एतं पुरुषमेधं पञ्चरात्रं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत तेनेष्ट्वात्यतिष्ठत् सर्वाणि भूतानीदं सर्वमभवदतितिष्ठति सर्वाणि भूतानीदं सर्वं भवति य एवं विद्वान् पुरुषमेधेन यजते यो वैतदेवं वेद । तस्य त्रयोविंशतिर्दीक्षाः । द्वादशोपसदः पञ्चसुत्याः स एष चत्वारिंशद्रात्रः सदीक्षोपसत्कः" शत० ब्रा० १३।६।१।२। अत्र पञ्चरात्रत्वोक्तिः पञ्चसुत्याभिप्रायेणेति न विरोधः । "त्रिंशदग्नीनहं ब्रह्मन्नयजं यच्च नित्यदा । अष्टाभिः सर्वमेधैश्च नरमेधैश्च सप्तभिः" भा०अनु०१०३अ० "राजसूयाश्वमेधौ च सर्वमेधञ्च भारत ! । नरमेधञ्च नृपते ! त्वमाहर युधिष्ठिर !" भा०आश्व० ३अ०। १८०३पृ० कलिशब्दे दर्शितेन बृहन्नारदीयवचनेन नरमेधस्य कलौ "दीर्घकालं ब्रह्मचर्य्यं नरमेधाश्वमेधकाविष्यनेन" निषेधेऽपि कलियुगोत्पन्न

युधिष्ठिरं प्रति नरमेधाहरणे नियोजनं तु न विरुध्यते हरेःस्वर्गारोहणानन्तरमेव कलेः प्रकर्षेण प्रवृत्त्यवगमात् ततः प्राक्काले यथाविधानं सर्वे धर्मा व्यवस्थिता इत्यवगमाच्च तदूर्द्ध्वमेव कलेः प्रबलत्वात् बृहन्नारदीयाद्युक्तकलिवर्ज्यस्यावकाश इत्यवधेयम्। भूमौ श्रीकृष्णस्थितिपर्य्यन्तं कलेः प्रादुर्भावाभावश्च भागवते उक्तः तच्च वाक्यं कलिशब्दे १७८५पृ० दर्शितम्। अतो युधिष्ठिरादीनां नरमेधाश्वमेधमहाप्रस्थानादिकं न विरुध्यते

**नरम्मन्य** पु० आत्मानं नरं मन्यते नर+मन—खश् मुम् एकाचोऽमन्तवत् कार्य्यम्। आत्मानं नरतया मन्यमाने।

**नरयन्त्र** न०छायाद्वारा कालसाधके द्वादशाङ्गुलकीलरूप शङ्कुयन्त्रे "नरयन्त्रं तथा साधु दिने च विमले रवौ। छायासंसाधनैः प्रोक्तं कालसाधकमुत्तमम्" सू०सि० "विमले मेघादिव्यवधानरूपमलेन रहिते सूर्ये एतद्रूपे दिने। चकार एवकारार्थकत्वेन साभ्रदिनव्यवच्छेदः। नरयन्त्रं द्वादशाङ्गुलशङ्कुयन्त्रं तथा घटीयन्त्रवत् कालसाधकं साधु सूक्ष्मं रात्रौ नेत्यर्थसिद्धम्। ननु शङ्कोश्छायासाधकत्वं न कालसाधकत्वं तेन तस्य कथं यन्त्रत्वं कालसाधकवस्तुनो यन्त्रत्वप्रतिपादनादित्यत आह। छायासंसाधनैरिति। इदं शङ्कुरूपनरयन्त्रं छायायाः सम्यक्प्रकारेण साधनैरवगमैः कृत्वा कालसाधनं दिनगतादिकालस्य कारकमुत्तमम्। अन्ययन्त्रेभ्योऽव्यभिचरिततयातिश्रेष्ठम्। तथा च छायासाधकत्वेनैव छायाद्वारा शङ्कोः कालसाधकत्वमिति न यन्त्रत्वव्याघातः। अतएव साभ्रदिने रात्रौ चेदमनुपयुक्तम्। नरस्य छायायन्त्रोपलक्षणत्वात् यष्टिधनुश्चक्राण्यपि तथेति बोध्यम्" रङ्ग०। "समतलमस्तकपरिधिर्भ्रमसिद्धो दन्तिदन्तजः शङ्कुः। तच्छायातः प्रोक्तं ज्ञानं दिग्देशकालानाम्" सि०शि०। शङ्कोः कालज्ञानसाधनत्वमुक्तम्।

**नरयान** न० नरवाह्यं यानम् (सओयारि) प्रभृतौ यानभेदे "नरयानेन तु ज्येष्ठः पिता पार्थस्य भारत!। अग्रतो धर्मराजस्य गान्धारीसहितो ययौ" भा० आ० ३७अ०। नरवाहन,नररथादयोऽप्यत्र।

**नरलोक** पु० नराधिष्ठितो लोकः भुवनम्। १पृथिवीलोके नर एव लोकः। २मानवरूपे जने च "आक्रष्टलोकान् नरलोकपालान्" रघुः "तथा तवामी नरलोकवीरा विशन्ति वक्त्राण्यभितो ज्वलन्ति" गीता।

**नरवाहन** पु०नरो वाहनं यस्य। १कुबेरे २नरयानवाह्ये त्रि० "अनरता नरवाहनसम्पदः" रघुः "भविष्यामोत्तम वपुः कुबेरो नरवाहनः" हरिवं०४५अ०। ३नरवाह्ये याने न०।

**नरविष्वण** त्रि० नरं विष्वणति हिनस्ति वि+स्वन—अच् षत्वम्।१नरहिंसके २राक्षसे पुंस्त्री लिङ्गा०। स्त्रियां ङीष्।

**नरव्याघ्र** पु० नरो व्याघ्र इव उपमितस०। श्रेष्ठमानवे।

**नरशृङ्ग** न० ६त०। अलीके पदार्थे शशशृङ्गादिवत् शृङ्गे षष्ठीयत्वस्येव नरीयत्वस्याप्यभावाद्योग्यत्वेन अस्यालीकार्थत्वम् योग्यताभ्रमादेवास्य शाब्दबोध इति बोध्यम्।

**नरसिंह** पु० नरएव सिंहः नरश्च सिंहश्चाकारेऽस्यस्य अच् वा। अर्द्धनराकारे अर्द्धसिंहाकारे १भगवच्छरीरभेदे तादृशशरीरग्रहणे कारणञ्च हरिवं०२४१अ० उक्तं यथा "हिरण्यकशिपुरुवाच "न देवासुरगन्धर्वा न यक्षोरगराक्षसाः। न मानुषाः पिशाचा वा निहन्युर्मां कथञ्चन। ऋषयोनैव मां क्रुद्धाः सर्वलोकपितामह!। शपेयुस्तपसा युक्ता वर एष वृतो मया। न शस्त्रेण न चास्त्रेण गिरिणा पादपेन वा। न शुष्केण न चार्द्रेण स्यान्न चान्येन मे वधः। न स्वर्गेऽप्यथ पाताले नाकाशे नावनिस्थले। न चाभ्यन्तररात्र्योर्न चाप्यन्यत्र मे वधः। पाणिप्रहारेणैकेन सभृत्यबलवाहनम्। यो मां नाशयितुं शक्तः स मे मृत्युर्भविष्यति" तथा वरप्राप्तौ हिरण्यकशिपुना जगतां निष्पीडने कृते तद्वधाय देवैः प्रार्थितो भगवान् नरसिंहरूपेणावततार यथाह तत्रैवाध्याये

"एवमुक्ता स भगवान् विसृज्य त्रिदिवौकसः। बधं संकल्पयामास हिरण्यकशिपोः प्रभुः। सोऽचिरेणैव कालेन हिमवत्पार्श्वमागतः। किं नु रूपं समास्थाय निहन्म्येनं महासुरम्। यत् सिद्धिकरमाशु स्याद्वधस्य विबुधद्विषः। अनुत्पन्नस्ततश्चक्रे सोत्पन्नो रूपमीदृशम्। नारसिंहमनाधृष्यं दैत्यदानवरक्षसाम्। सहायन्तु महाबाहुर्जग्राहोङ्कारमेव च। अथोङ्कारसहायो वै भगवान् विष्णुरच्युतः। हिरण्यकशिपोः स्थानं जगाम प्रभुरीश्वरः। तेजसा भास्कराकारः कान्त्या चन्द्र इवापरः। नरस्य कृत्वाऽर्द्धतनुं सिंहस्यार्द्धतनुं तथा। नारसिंहेन वपुषा पाणिं संस्पृश्य पाणिना। ततोऽपश्यत विस्तीर्णां दिव्यां रम्यां मनोरमाम्"। ततस्तद्वधकथा "यदि दास्यस्यभिमतान् वरान् मे वरदोत्तम!। भूतेभ्यस्त्वद्विसृष्टेभ्यो मृत्युर्मा भून्मम प्रभो!। नान्तर्बहिर्दिवा नक्तमन्यस्मादपि चायुधैः। न भूमौ नाम्बरे मृत्युर्न

नरैर्न मृगैरपि । न असुभिर्वाऽसुमद्भिर्वा सुरासुरमहोरगैः । अप्रतिद्वन्द्वतां युद्धे ऐकपत्यञ्च देहिनाम्" भाग०७।३।३४ एवं प्रार्थितवरप्राप्तौ स्वभ्रातृहिरण्याक्षहन्तरि विष्णौ द्वेषात् तद्भक्तेऽपि प्रह्लादेऽतीव द्वेषेण तेन विरुद्धमाचरितम्। अनन्तरं च तेनोक्तः प्रह्लादः सर्वत्र विष्णोः स्थायित्वं प्रतिजज्ञे तेन स्तम्भेऽपि तत्सत्त्वमुक्तवान् । तच्छ्रुत्वा तेन स्तम्भताडने कृते तत्र प्रह्लादकथां सत्यां चिकीर्षुः भगवान् नरसिंहरूपेण प्रादुर्बभूव यथाह

"सत्यं विधातुं निजभृत्यभाषितं व्याप्तिञ्च भूतेष्वखिलेषु चात्मनः । अदृश्यतात्यद्भुतरूपमुद्वहन् स्तम्भे सभायां न मृगं न मानुषम् । स सत्त्वमेनं परितोविपश्यन् स्तम्भस्य मध्यादनुनिर्जिहानम् । नायं मृगो नापि नरोविचित्रमहो किमेतन्नृमृगेन्द्ररूपम्। मीमांसमानस्य समुत्थितोऽग्रतो नृसिंहरूपं तदलं भयानकम् । प्रतप्तचामीकरचण्डलोचनं स्फुरत्सटाकेशरजृम्भिताननम् । करालदंष्ट्रं करवालचञ्चलक्षुरान्तजिह्वं भ्रुकुटीमुखोल्वणम् । स्तब्धोर्द्ध्वकर्णं गिरिकन्दराद्भुतव्यात्तास्यनासं हनुभेदभीषणम् । दिविस्पृशत्कायमदीर्घपीवरग्रीवोरुवक्षःस्थलमल्पमध्यमम् । चन्द्रांशुगौरैश्छुरितं तनूरुहैर्विष्वग्भुजानीकशतं नखायुधम्" तं श्येनवेगं शतचन्द्रवर्त्मभिश्चरन्तमच्छिद्रमुपर्यधो हरिः । कृत्वाट्टहासं खरमुत्स्वनोल्वणं निमीलिताक्षं जगृहे महाजवः । विष्वक् स्फुरन्तं ग्रहणातुरं हरिर्व्यालो यथाखुं कुलिशाक्षतत्वचम् । द्वार्य्यूरुमापात्य ददार लीलया नखैर्यथाहिं गरुड़ो महाविषम्" भाग० ७।८अ० । "द्वारि सभायां नान्तर्न बहिः" अङ्के ऊरौ निपात्य न भूमौ नचाम्बरे । नखैर्नैव असुभिरसुमद्भिर्वा । एवं दिवानक्तं परिहाराय सायमिति द्रष्टव्यम्" श्रीधरस्वामी । नरसिंहत्वं च तदीयदेहवृत्तिजातिभेदः यथोक्तं सि०मु० "अथवा चेष्टावदन्त्यावयविमात्रवृत्तिद्रव्यत्वव्याप्यव्याप्यजातिमत्त्वं तत् (शरीरत्वम्) मानुषत्वचैत्रत्वजातिमादाय लक्षणसमन्वयः । न च नृसिंहशरीरे कथं लक्षणसमन्वयः तत्र नृसिंहत्वस्यैकव्यक्तिवृत्तितया देवत्वस्येव जातित्वाभावात् जलीयतैजसशरीरवृत्तितया देवत्वस्य जातित्वाभावादिति वाच्यं कल्पभेदेन नृसिंहशरीरस्य नानात्वेन नृसिंहत्वजात्या लक्षणसमन्वयात्" । नरः सिंह इव । २मानवश्रेष्ठे नरहरिर्नृसिंहादयोऽप्यत्र ।

**नरसिंहपुराणम्** न० नरसिंहोपवर्णनात्मकं पुराणम् । उपपुराणभेदे "पाद्मे पुराणे यत्प्रोक्तं नरसिंहोपवर्णनम् । तच्चाष्टादशसाहस्रं नारसिंहमिहोच्यते" मत्स्यपु० नरसिंहमधिकृत्य कृतो ग्रन्थः अण् नारसिंहमित्यर्थः । "आद्यं सनत्कुमारोक्तं नारसिंहमतःपरम्" कूर्मपुरा० उपपुराणोक्तौ ।

**नरसिंहमूर्त्तिदान** न० ६त० । कालिकापुराणोक्ते स्वर्णादिरचिततन्मूर्त्तिदाने तद्विधानं हेमा०दा०कालिपु०यथा "नृसिंहं चाथ रौक्मन्तु कृत्वा चतुर्भुजं विभुम् । ताम्रपात्रे प्रतिष्ठाप्य रौप्यदंष्ट्रे प्रकल्पयेत् । चक्षुषी पद्मरागेण नखानां विद्रुमास्तथा । पुष्परागं भ्रुवोर्देशे कर्णयोर्हीरकावुभौ" नृसिंहरूपन्तु विष्णुधर्मोत्तरे "कार्य्यस्तु भगवान् विष्णुर्नरसिंहवपुर्द्धरः । पीनस्कन्धकटिग्रीवकृशमध्यः कृशोदरः । सिंहाननो (सिंहास्यः) नरदेहश्च नीलवासाः प्रभान्वितः । आलीढस्थानसंस्थानः सर्वाभरणभूषणः । ज्वालमालाकुलस्तूज्ज्वलत्केशरवरोद्धवः । हिरण्यकशिपोर्वक्षःपाटयन्नखरैः खरैः । देवस्यानुगतः कार्य्यो हिरण्यकशिपुस्तथा । देवस्य पश्चात्कार्याः भूषितोद्धूतकरद्वयः" इति । "राजवर्त्तं च वैदूर्यं इन्द्रनीलं समस्तके । कृत्वा रूपमिदं रम्यं तत्पात्रं मधुना बुधः । पूरयेत् खण्डमिश्रेण तत्र देवं पुनर्न्यसेत् । वस्त्रयुग्मेन संछन्नं आसने विनिवेशयेत् । नैवेद्यं कल्पयेदग्रे भक्ष्यैर्नानाविधैर्बुधः । वितानोपरिसंयुक्तं पुष्पदामभिरर्चयेत् । गन्धपुष्पैस्तथा धूपैश्चामरं चातपत्रं कारयेत् । कृत्वा समस्तमेतत्तु हरये पूर्ववद्धरेत् । यत्किञ्चित् प्राग्विनिर्दिष्टं कुर्यात् सर्वमिहापि तत्" । प्राग्विनिर्दिष्टमिति वैष्णवमन्त्रेण पूजनं मूलमन्त्रेण अष्टोत्तरशतं तिलाज्यहोमः द्वादशभ्यो ब्राह्मणेभ्यः सदक्षिणपायसदानमिति । "कार्त्तिक्यां वाथ वैशाख्यामाश्वित्य द्वादशीमथ । कृत्वा विधिमिमं सम्यक् नूनं तत्फलमश्नुते । अरण्ये वाथ संग्रामे तस्करैर्दंष्ट्रिभिर्हते । न भयं जायते तस्य संकट्यन्तेतदाचरेत् । विदार्य्य चापदोघोराः धनमायुः प्रयच्छति । सन्ततिं चैव रूपञ्च सौभाग्यञ्च मनोरथान् । एवं भवति यत्पुण्यं नृसिंहाकृतिदानतः । तेन विष्णोः पदं प्राप्य तत्र क्रीडन्ति देहिनः । एतत् श्रुत्वा महत् पुण्यं सर्वपापैः प्रमुच्यते । धनमायुर्विवर्द्धेत श्रावकस्य विशेषतः । श्रावके दक्षिणां दद्याद्भक्त्या चात्मविभूतये"

**नरस्कन्ध** पु०नर+समूहे स्कन्ध । नरसमूहे एवं मनुष्यस्कन्धादयोऽप्यत्रार्थे ।

**नराङ्ग** पु० नरमङ्गयति च० अङ्ग–अण् । १मेढ्रे २वराङ्के (नारङ्गा) व्रणभेदे मेदि० ।

**नराची** स्त्री नरमिवाचिनोति रोमभिरिव कण्टकैः आ+चि–ड गौरा०ङीष् । १अमलायां कण्टकिन्यां (फणीमनसा) वृक्षभेदे “यां ते चक्रुरमूलायां वलगं वा नराच्याम्” अथ०५।३१।४। ततः शर्करा०स्वार्थे अण् । नाराच तत्रार्थे । २गौरेर्भार्याभेदे च “सुतनुश्च नराची च शौरे रास्तां परिग्रहौ । पौण्ड्रश्च कपिलश्चैव वसुदेवस्य तौ सुतौ । नराच्यां कपिलो जज्ञे पौण्ड्रश्च सुतनूसुतः । तयोर्न्वपोऽभवत् पौण्ड्रः कपिलश्च वनं ययौ” हरिवं० १६२अ० ।

**नरा(च)ज** पु० षोडशाक्षरपादके वृत्तभेदे “भुजङ्गराजभाषितं प्रकीर्णशास्त्रसागरे लघौ गुरौ निरन्तरे सतीह षोडशाक्षरे । प्रतापतापनिर्जितप्रभाकरप्रकाश ! हे प्रवृत्तवृत्तराजकं नराज(च)मेव मन्महे” ।

**नराधम** पु० नरेषु अधमः । विवेकादिशून्यतयापकृष्टे मानवे “अज्ञानोपहितो बाल्ये यौवने वनिताहृतः । शेषे कलत्रचिन्तार्त्तः किं करोति नराधमः” ।

**नराधिप** पु० ६त० । नृपे “नराणाञ्च नराधिपः” गीता । नराधिपत्यादयोऽप्यत्र ।

**नरान्तक** पु० अन्तयति अन्ति–ण्वुल् ६त० । मानुषनाशके रावणात्मजे १राक्षसभेदे “रक्षःपतिस्तदवलोक्य निकुम्भकुम्भधूम्राक्षदुर्मुखसुरान्तनरान्तकादीन्” भाग० ९।१०। १८। २नरनाशकमात्रे त्रि० ।

**नरायण** पु०नरा अयनमस्य । विष्णौ “नराणामयनं यस्मात् तेन नारायणः स्मृतः”ब्रह्मवै०पु०। नरस्य परमात्मनोऽपत्यं नडा० फक् संज्ञापूर्वकविधेरनित्यत्वान्न वृद्धिः । तत्रार्थे

**नराश** पु० नरमश्नाति अश–भोजने अण् उप०स०। राक्षसे “यावन्नराशैर्न रिपुः प्रवाशान्” भट्टिः ।

**नराशंस** पु० १यज्ञे २अग्नौ च । “नराशंस महिमानमित्यृचमधिकृत्य निरु० ८।३ उक्तं यथा “नराशंसो यज्ञ इति कात्थक्यः । नरा अस्मिन्नासीनाः शंसन्ति, अग्निरिति शाकपूणिर्नरैः प्रशस्यो भवति”। तेनोभयनिरुक्तेः उभयार्थता “देव इन्द्रो नराशंसस्त्रिवरूथः” यजु० २१।५५ “नराशंसो देवोऽनुयाजरूपो यज्ञः” वेददी० “नराशंसो अग्ने” यजु०२७।१३ “नराशंसः नरैर्ऋत्विग्भिराशंस्यते स्तूयते नराशंसः अग्निः” वेददी० ।

आ+शन्स–भावे घञ् ६त०। २नराणामाशंसने पु०“जुष्टां नराशंसाय प्रजा वै नराः” शत०ब्रा०।१।५।१।२०“यथा सर्वेऽपि नराः शंसन्ति तथाविधशंसनाय प्रियामिति” भाष्यम् अस्य वनस्पत्या० युगपत् उभयपदे प्रकृतिस्वरः ।

**नरासन** नराकारे आसनभेदे तल्लक्षणभेदादिकं रुद्रयामलोक्तं यथा “अथ नरासनं वक्ष्ये षोडशादिप्रकारकम् । येन साधनमात्रेण योगी भवति साधकः । प्रकाराः षोडश प्रोक्ताः सत्कुलज्ञैर्महीतले । एकमासात् भवेत् कल्पो द्विमासे द्रुतकल्पकम् । त्रिमासे योगकल्पः स्यात् चतुर्मासे स्थिराशयः । पञ्चमासे सूक्ष्मकल्पः षष्ठमासे विवेकधीः । सप्तमासे ज्ञानयुक्तो भावको भवति ध्रुवम् । अष्टमे मन्त्रसंयुक्तो जितेन्द्रियकलेवरः । नवमे सिद्धिमिलनो दशमे चक्रभेदवान् । एकादशे महावीरो द्वादशे खेचरो भवेत् । इति योगासनद्वन्द्वे योगी भवति साधकः । नरासनं यः करोति स सिद्धो नात्र संशयः । अधोमुखं महादेव ! नरासनस्य साधने । करणीयं साधकाद्यैः योगशास्त्रार्थसम्मतैः” रुद्रया० ।

**नरिष्ठा** स्त्री पुरुषमेधे भयङ्करपशूपालम्भनोद्देश्ये देवताभेदे “नरिष्ठायै भीमलम्” यजु० ३०।६

**नरिष्यन्त** पु० वैवस्वतमनोः पुत्रभेदे “वेनं धृष्णुं नरिष्यन्तं नाभागेक्ष्वाकुमेव च” भा०आ० ७५अ०। “इक्ष्वाकुर्नभगश्चैव धृष्णुः शर्यातिरेव च । नरिष्यन्तोऽथ नाभागः सप्तमोऽरिष्ट उच्यते” भाग० ८।१३।१

**नरी** स्त्री नरस्य पत्नी ङीष् । मानवपत्न्यां जटा०। तज्जाति स्त्रियां तु नारीत्येव ।

**नरेन्द्र** पु०नर इन्द्र इव । १नृपे २विषवैद्ये च मेदि०। “नरेन्द्रकन्यास्तमवाप्य सत्पतिम्” रघुः “सुनियता नरेन्द्रेण फणीन्द्रा इव शत्रवः”माघः ३सर्पादिनिवारकवैद्यभेदे“तेषु कश्चिन्नरेन्द्राभिमानी मां निवर्त्य क्षुद्रातन्त्रमन्त्रध्यानादिभिस्तोपक्रम्याकृतार्थः” दशकुमा०। “सा च द्वारिका यक्षेण केनचिदधिष्ठिता न तिष्ठत्यपि नरान्तरस्य आयास्यति च नरेन्द्रसार्थसंग्रहणेन तन्निराकरिष्यन्नरेन्द्रो नचास्ति सिद्धिरिति” दशकुमा०। ४एकविंशत्यक्षरपादके वृत्तभेदे “चामररत्नरज्जुवरपरिगतविप्रगणाह्वितशोभः पाणिविराजिपुष्पयुगविरचितकङ्कणसङ्गतगन्धः । चारु सुवर्णकुण्डलयुगलकृतिरोचिरलङ्कृतवर्णः पिङ्गलपन्नगेश इति निगदति राजति वृत्तनरेन्द्रः” । नरेशनरेश्वरादयोऽपि नृपे । [गुरुणि नैषधटुप्रकाशिका ।

**नरेन्द्राभ** पु० नरेन्द्र इवाभाति काष्ठेषु आ+भा–क । काष्ठ

**नरोत्तम** पु॰ नरेषूत्तमः। १पुरुषोत्तमे नारायणे २नरश्रेष्ठे च "सभाद्यो भङ्गकारास्तु नागेयश्च नरोत्तमौ। अज्ञाते गुणसम्पन्नौ विश्रुतौ रूपसम्पदा" हरिवं॰ २६ अ॰ ३ज्ञाततत्त्वे ज्ञाततत्त्वे पुरुषे यथा "यः स्वकात् परतो वेह जातनिर्वेद आत्मवान्। हृदि कृत्वा हरिं गेहात् प्रव्रजेत् स नरोत्तमः"। स्वकात् स्वतएव, परतः परोपदेशाज्जातवैराग्यः" शब्दार्थचि॰।

**नकुटक** पु॰ नरस्य कुटकमिव पृषो॰। नासायां हेमच॰।

**नर्त्त** त्रि॰ नृत्यति नृत-पचा॰ अच्। १नृत्यकर्त्तरि "नृत्यप्रियो नित्यनर्त्ती नर्त्तकः सर्वलालसः" भा॰अनु॰१७अ॰। नृत-भावे घञ्। २नर्त्तने पु॰ ततः छेदा॰ नित्यार्हार्थे ठञ्। नार्त्तिक अभीक्ष्णनर्त्तनार्हे त्रि॰।

**नर्त्तक** त्रि॰ नृत्यति नृत—गात्रविक्षेपे "शिल्पिनि ष्वुन्" पा॰ कर्त्तरि ष्वुन्। जीविकार्थं गात्रविक्षेपभेदनृत्यकारके "भ्रु-कुंसश्च भ्रुकुंसश्च भ्रुकुंसश्चेति नर्त्तकः" अमरः। स्त्रियां षित्त्वात् ङीष्। "रङ्गस्य दर्शयित्वा निवर्त्तते नर्त्तकी यथा नृत्यात्" सां॰का॰ "नर्त्तकीयत् प्रवृत्तस्य निवृत्तिश्चारितार्थ्यात्" सा॰सू॰। २शिवे पु॰नर्त्त शब्दे दृश्यम्। ३सङ्कीर्णजातिभेदे पुंस्त्री॰ "वैश्यायां रजकाज्जातो नर्त्तको गायको भवेत्" उशनाः। नर्त्तयति नृत-णिच् ण्वुल्। ४अङ्कुल्यादेश्चालके। "तर्कोविचारः सन्देहात् भ्रूशिरोऽङ्कुलिनर्त्तकः" सा॰द॰। नृत-पचा॰अच् संज्ञायां कन्। ५नलतृणे पोटगले ६चारणे ७शैलूषे च शब्दरत्ना॰ ८गजे ९नृत्ये हेम॰। १०करेण्वौ हस्तिन्यां स्त्री मेदि॰ ११नलिकानामगन्धद्रव्ये स्त्री राजनि॰। नृत्यकर्त्तुर्लक्षणं सङ्गीतशास्त्रोक्तं यथा "यादृशं नृत्यपात्रं स्यात्तत् प्रोच्यते तादृशम्। नृत्यस्य धारणात् पात्रं नर्त्तकः परिकीर्त्तितः" "असम्बद्धप्रलापी च सदा भ्रुकुटितस्वरः। हावभावप्रचतुरो वाचालो नृत्यकोविदः"।

**नर्त्तन** न॰ नृत-भावे ल्युट्। १अङ्गविक्षेपभेदे नृत्ये पूर्वपदस्थे निमित्ते सति उत्तरपदस्थस्यास्य सुज्ञा॰ न णत्वम् परिनर्त्तनम्। वर्जयेदित्यनुवृत्तौ "कामं क्रोधञ्च लोभञ्च नर्त्तनं गीतवादनम्" स्नातकव्रतोक्तौ मनुः। णिच्—भावे ल्युट्। २अङ्कुल्यादेश्चालने च

**नर्त्तनप्रिय** पु॰नर्त्तनं प्रियमस्य। १शिवे २नृत्यप्रियमात्रे त्रि॰

**नर्त्तनशाला** स्त्री ६त॰। (नाचघर) नृत्यस्थाने "येषा नर्त्तनशालेह मत्स्यराजाय कारिता" भा॰वि॰ २२अ॰ नर्त्तनगृहादयोऽप्यत्र।

**नर्त्तित** त्रि॰ नृत—णिच् कर्मणि क्त। ललताङ्गवे चालिते "सललितनर्त्तितवामपादपद्मा" माघः।

**नर्त्तु** पु॰ नृत—उण्। खड्गधारायां स्थित्वा नर्त्तके त्रिका॰

**नर्द** शब्दे अक॰ गतौ सक॰ भ्वा॰ पर॰ सेट्। नर्दति अननर्दीत् ननर्द। "उदपानाश्च नर्दन्ति यथा गोवृषभास्तथा" भा॰उ॰ १४२अ॰। "ते नर्दमाना इव कालमेघाः" भा॰ आ॰ १६२ अ॰ ताच्छील्ये चानश्। "अनर्दिषुः कपिव्याघ्राः"। "विदाञ्चकार धौताश्वः स रिपुं खे ननर्द च" भट्टिः प्राद्युपसर्गपूर्वकस्तु तत्तदुपसर्गोद्योत्यार्थयुक्ते शब्दे अणोपदेशत्वात् सति निमित्ते न णत्वम् प्रनर्दति।

**नर्दटक** न॰ "यदि भवतो नजौ भजजलागुरुनर्दटकम्" छन्दोम॰ उक्तलक्षणे सप्तदशाक्षरपादके छन्दोभेदे।

**नर्दन** न॰ नर्द-भावे ल्युट्। शब्दे "नर्दनं मृगपक्षिणाम्" ह॰सं॰ ४६अ॰।

**नर्दिन्** त्रि॰ नर्दति शब्दायते नर्द-णिनि। १शब्दकारके विकत्थके। पाणिसमिता॰ सप्तम्यान लुक गेहेनर्दी।

**नर्व** गतौ भ्वा॰पर॰सक॰ सेट्। नर्वति अनर्वीत् ननर्व। अणोपदेशत्वात् सति निमित्ते न णत्वम्। प्रनर्वति।

**नर्म्म** पु॰ नृ—मन्। पुरुषमेधीयालभ्यपशूद्देश्ये देवभेदे "नर्माय रेभम्" यजु॰ ३०।६ "नर्माय पुंश्चलूम्" ३०।२

**नर्म्मकील** पु॰ नर्मणः परिहासस्य कील इव बन्धनस्थानत्वात्। पत्यौ भर्त्तरि त्रिका॰।

**नर्म्मट** पु॰ नर्म—अटन् पृषो॰। १खर्परे २सूर्ये च हारा॰।

**नर्म्मठ** पु॰नर्मणि कुशलः नर्मन्+अठन्। १नर्मकुशले २विड्गे जारे ३परिहासके शब्दर॰ ४चिवुके चुचूके च शब्दार्थ॰

**नर्म्मद** त्रि॰ नर्म ददाति दा—क ६त॰। १केलिसचिवे मेदि॰। २पृक्कायां हेमच॰। ३नदीभेदे स्त्री मेदि॰। सा च नदी कलिङ्गदेशस्य पश्चाद्देशे स्थिता अमरकण्टकपर्वतसन्निकृष्टा यथाह मत्स्यपु॰ १८५ अध्यायावधि १९०अ॰ पर्यन्ते तत्कथा दिङ्मात्रमत्र दर्श्यते।

"मार्कण्डेय उवाच नर्मदा सरितां श्रेष्ठा सर्वपापप्रणाशिनी। तारयेत् सर्वभूतानि स्थावराणि चराणि च। नर्मदायास्तु माहात्म्यं पुराणे यन्मया श्रुतम्। तदितद्धि महाराज! तत्सर्वं कथयामि ते। पुण्या कनखले गङ्गा कुरुक्षेत्रे सरस्वती। ग्रामे वा यदि वाऽरण्ये पुण्या सर्वत्र नर्मदा। त्रिभिः सारस्वतं तोयं सप्ताहेन तु यामुनम्। सद्यः पुनाति गाङ्गेयं दर्शनादेव नार्मदम्। कलिङ्गदेशे पश्चार्द्धे पर्वतेऽमरकण्टके। पुण्या

च त्रिषु लोकेषु रमणीया मनोरमा। सदेवासुरगन्धर्वा ऋषयश्च तपोधनाः। तपस्तप्त्वा महाराज! सिद्धिञ्च परमाङ्गताः। तत्र स्नात्वा नरो राजन्नियमस्थो जितेन्द्रियः। उपोष्य रजनीमेकां कुलानां तारयेच्छतम्। जलेश्वरे नरः स्नात्वा पिण्डं दत्त्वा यथाविधि। पितरस्तस्य तृप्यन्ति यावदाभूतसंप्लवम्। पर्वतस्य समन्तात्तु रुद्रकोटिः प्रतिष्ठिता। स्नात्वा यः कुरुते चार्चां गन्धमाल्यानुलेपनैः। प्रीतस्तस्य भवेच्छर्वो रुद्रकोटिर्न संशयः। पश्चिमे पर्वतस्यान्ते स्वयं देवो महेश्वरः। तत्र स्नात्वा शुचिर्भूत्वा ब्रह्मचारी जितेन्द्रियः। पितृकार्यञ्च कुर्वीत विधिवन्नियतेन्द्रियः। तिलोदकेन तत्रैव तर्पयेत् पितृदेवताः। आसप्तमं कुलं तस्य स्वर्गे मोदेत पाण्डव!। षष्टिर्वर्षसहस्राणि स्वर्गलोके महीयते। अप्सरोगणसंकीर्णे सिद्धचारणसेविते। दिव्यगन्धानुलिप्तश्च दिव्यालङ्कारभूषितः। ततः स्वर्गात्परिभ्रष्टो जायते विपुले कुले। धनवान् दानशीलश्च धार्मिकश्चैव जायते। पुनः स्मरति तत्तीर्थं गमनं तत्र रोचते। कुलानि तारयेत् सप्त रुद्रलोकं स गच्छति। योजनानां शतं साग्रं श्रूयते सरिदुत्तमा। विस्तारेण तु राजेन्द्र! योजनद्वयमायता। षष्टिस्तीर्थसहस्राणि षष्टिः कोट्यस्तथैव च। पर्वतं तस्य समन्तात्तु तिष्ठतेऽमरकण्टके"।

**नर्मदासम्भव** न॰ नर्मदायां सम्भवति सम्–भू–अच्। नार्मदे वाणलिङ्गभेदे तल्लक्षणादिकन्तु याज्ञवल्क्यसंहितायां देवीं प्रति शिववाक्ये "प्रशस्तं नार्मदं लिङ्गं पक्वजम्बुफलाकृति। मधुवर्णं तथा शुक्लं नीलं मरकतप्रभम्। हंसडिम्बाकृति पुनः स्थापनार्थं प्रशस्यते। स्वयं संभवते लिङ्गं गिरितो नर्मदाजले। पुरा वाणासुरेणाहं प्रार्थितो नर्मदातटे। अध्यवात्सं गिरौ तत्र लिङ्गरूपी महेश्वरः। वाणलिङ्गमपि ख्यातमतोऽर्थाज्जगतीतले। अन्येषां कोटिलिङ्गानां पूजने यत् फलं लभेत्। तत् फलं लभते मर्त्यो वाणलिङ्गैकपूजनात्"। तथा "ताम्री वा स्फाटिकी स्वार्णी पाषाणी राजती तथा। वेदिका च प्रकर्त्तव्या तत्र संस्थाप्य पूजयेत्। प्रत्यहं योऽर्चयेल्लिङ्गं नार्मदं भक्तिभावतः। ऐहिकं किं फलं तस्य मुक्तिस्तस्य करे स्थिता" नर्मदेश्वरशब्दे तत्तीरस्थपाषाणमात्रस्य शिवलिङ्गरूपित्वं वक्ष्यते। प्रसङ्गात्तस्य लक्षणपरीक्षादिकमुच्यते वीरमित्रोदयधृतकालोत्तरे "वाणलिङ्गं तथा ज्ञेयं भुक्तिमुक्तिप्रदायकम्। उत्पत्तिं वाणलिङ्गस्य लक्षणं वदतः शृणु। नर्मदादेविकयोश्च गङ्गायमुनयोस्तथा। सन्ति पुण्यप्रनदीनाञ्च वाणलिङ्गानि षण्मुख!। इन्द्रादिपूजितान्यत्र नक्षिके विहितानि च। सदा सन्निहितस्तत्र शिवः सर्वार्थदायकः। इन्द्रलिङ्गानि तान्याहुः साम्राज्यार्थप्रदानि च"

आग्नेयं तच्चाग्निनिभमथवा शक्तिलाञ्छितम्। इदं लिङ्गवरं स्थाप्य तेजसाधिपतिर्भवेत्" "दण्डाकारं भवेद् याम्यमथवा रसनाकृति। यदुक्तं सह तेनैव निर्मितं जायते तदा। मिषिक्तं निखनन्तेन क्रियते स्थापितेन तु" "राक्षसं खड्गसदृशं ज्ञानयोगफलप्रदम्। कर्कराटिप्रलिप्तन्तु कुण्ठकुक्षियुतं तथा। राक्षसं निरृतेलिङ्गं गार्हस्थ्ये न सुखप्रदम्" "वारुणं वर्त्तुलाकारं पाशाङ्कं चाखिवर्चसम्। इन्द्रिःसुखादेः स्वत्वस्य संभोगाप्तन्तु मध्यमे" "कृष्णं धूम्रं च वायव्यं ध्वजगं ध्वजमूषणम्। मस्तकेस्थापितं यस्य न्यूनन्यूनमितस्ततः"

"चतुर्वर्णमर्जं वापि वैष्णवं जायतेऽप्यतः। वैष्णवं शङ्खचक्राङ्कगदाब्जादिविभूषितम्। श्रीवत्सं कौस्तुभाङ्कञ्च सर्वसिंहासनाङ्कितम्। वैनतेयसमाङ्कं वा तथा विष्णुपदाङ्कितम्। वैष्णवं नाम तत्प्रोक्तं सर्वैश्वर्यफलप्रदम्" "शालग्रामादिसंस्थन्तु शशाङ्कं श्रीविवर्द्धनम्। पद्माङ्कं स्वस्तिकाङ्कं वा श्रीवत्साङ्कं विभूतये" हेमाद्रिधृतलक्षणकाण्डे नारद उवाच "अथ वक्ष्यामि ते विप्र चिह्नमेकादशं (पूर्वोक्तदशापेक्षया एकादशम्) परम्। श्रवणाद्यस्य पापानि नाशमायान्ति तत् क्षणात्। मधुपिङ्गलवर्णाभं कृष्णकुण्डलिकायुतम्। स्वयम्भु१लिङ्गमाख्यातं सर्वसिद्धैर्निषेवितम्। नानावर्णसमाकीर्णं जटाशूलसमन्वितम्। मृत्युञ्जयाह्वयं२ लिङ्गं सुरासुरनमस्कृतम्। दीर्घाकारं शुभ्रवर्णं कृष्णबिन्दुसमन्वितम्। नीलकण्ठं३ समाख्यातं लिङ्गं पूज्यं सुरासुरैः। शुक्लाभं शुक्लकेशञ्च नेत्रत्रयसमन्वितम्। त्रिलोचनं४ महादेवं सर्वपापप्रमोदनम्। ज्वलल्लिङ्गं जटाजूटं कृष्णाभं स्थूलविग्रहम्। कालाग्निरुद्र५माख्यातं सर्वसत्त्वैर्निषेवितम्। मधुपिङ्गलवर्णाभं श्वेतयज्ञोपवीतिनम्। श्वेतपद्मसमासीनं चन्द्ररेखाविभूषितम्। प्रत्ययास्त्रसमायुक्तं त्रिपुरारि६ समाह्वयम्। शुभ्राभं पिङ्गलजटं मुण्डमालाधरं परम्। त्रिशूलधरमीशानं७ लिङ्गं सर्वार्थसाधनम्। त्रिशूलडमरुधरं शुभ्ररक्तार्द्धभागतः। अर्द्धनारीश्वराह्वानं८सर्वदेवैरभीष्टदम्। ईषद्रक्तमयं कान्तं स्थूलदीर्घं समुज्ज्वलम्। महाकालं९ समाख्यातं

धर्मकामार्थमोक्षदम् । एतत्तु कथितं तुभ्यं लिङ्गचिह्नं महेशितुः । एकेनैव कृतार्थः स्यात् बहुभिः किन्तु सुव्रत !” वीरमित्रोदयधृतकालोत्तरे “उन्ताङ्गं श्रेयसे योज्यं शीर्षमन्यं विवर्जयेत् । यमवर्णन्तु यल्लिङ्गं यमाङ्कं वा कमण्डलुम् । दण्डाङ्कं छत्रचिह्नं वा ब्रह्मस्थानान्वितं मतम् । शशिवर्णं महाकालं नन्दीशं पद्मरागवत् । पद्मरागनिभं सर्वं महाभं सिद्धिपूजितम् । मौक्तिकाभं नीलनिभं रुद्रादित्यैः प्रपूजितम् । वसुदैः सेन्द्रयक्षेशं शुद्धकैर्यातुधानकैः । नानावर्णमयं नीलं शशाङ्कमण्डलप्रभम्” “इत्येतल्लक्षणं प्रोक्तं परीक्षा तत्त्वकोविदैः । त्रिःसप्तपञ्चवारं वा तुलासाम्यं न जायते । तदा बाणं समाख्यातं शेषं पाषाणसम्भवम्” । तुलाकरणन्तु तण्डुलेन अपरतुलादिषु तण्डुला यद्यधिकाः स्युस्तदा तल्लिङ्गं गृहिणां पूज्यम् लिङ्गञ्चेदधिकं तदोदासीनैः पूज्यमिति किंवदन्ती । हेमाद्रिधृतलक्षणकाण्डे सूतसंहितायान्तु “सप्तकृत्वस्तुलारूढं हृद्धिमेति न हीयते । बाणलिङ्गमिति ख्यातं शेषं नार्मदमुच्यते । त्रिपञ्चवारं यस्यैव तुलासाम्यं न जायते । तदा बाणं समाख्यातं शेषं पाषाणसम्भवम्” । वीरमित्रोदये “नद्यां वा प्रक्षिपेल्लिङ्गं यो यदा तदुपलभ्यते । बाणलिङ्गं तदा विद्धि न्यूनं सुखविवर्द्धनम्” । बाणशब्दव्युत्पत्तिरपि तत्रैव “अथ बाणं समाख्यातं यथा वक्ष्ये तथादितः । बाणः सदा शिवो देवो बाणोबाणासुरोऽपि च । तेन यस्मात् कृतं तस्माद्बाणलिङ्गमुदाहृतम् । सदा सन्निहितस्तत्र शिवः सर्वार्थदायकः । कृतप्रतिष्ठं तल्लिङ्गं बाणाख्येन शिवेन च । पङ्कजस्य फलाकारं कुक्कुटस्य समाकृति” पङ्कजफलं पद्मबीजम् “पङ्कजम्बुफलाकारं कुक्कुटाण्डसमाकृति” इति हेमाद्रिधृतलक्षणकाण्डे पाठः । “भुक्तिमुक्तिप्रदश्चैव बाणलिङ्गमुदाहृतम्” ।

सूतसंहितायाम् “संस्थाप्य श्रीबाणलिङ्गं रत्नकोटिगुणं भवेत् । रसलिङ्गे ततो बाणात् फलं कोटिगुणं स्मृतम् । गुणांस्तु रसलिङ्गस्य वक्तुं शक्नोति शङ्करी । सिद्धयो रसलिङ्गे स्युरणिमाद्याः सुसंस्थिताः” । केदारखण्डे “रत्नधातुमयान्येव लिङ्गानि कथितान्यपि । पवित्राण्येव पूज्यानि सर्वकामप्रदानि च । एतेषामपि सर्वेषां काश्मीरं हि विशिष्यते । काश्मीरादपि लिङ्गाच्च बाणलिङ्गं विशिष्यते । बाणलिङ्गात् परं नान्यत् पवित्रमिह दृश्यते । ऐहिकामुष्मिकं सर्वं पूजाकर्त्तुः प्रयच्छति” । निन्द्यलिङ्गमाह तत्रैव “कर्कशे बाणलिङ्गे तु पुत्रदारक्षयो भवेत् । चिपिटे पूजिते तस्मिन् गृहभङ्गो भवेद्ध्रुवम् । एकपार्श्वस्थिते धेनुपुत्रदारधनक्षयः । शिरसि स्फुटिते बाणे व्याधिर्मरणमेव च । छिद्रलिङ्गेऽर्चिते बाणे विदेशगमनं भवेत् । लिङ्गे च कर्णिकां दृष्ट्वा व्याधिमान् जायते पुमान् । त्र्यस्रतबिलाग्रे तु गोधनानां क्षयो भवेत्” । हेमाद्रिधृतम् “तीक्ष्णाग्रं वक्रशीर्षञ्च त्र्यस्रलिङ्गं विवर्जयेत् । अतिस्थूलं चातिकृशं स्वल्पं वा भूषणान्वितम् । गृही विवर्जयेत्तादृक् तद्धि मोक्षार्थमीहितम्” वीरमित्रोदये “अर्थदं कपिलं लिङ्गं घनाभं मोक्षकाङ्क्षिणाम् । मधुवत् कपिलं स्थूलं गृही नैवार्चयेत् क्वचित् । पूजितव्यं गृहस्थेन वर्णेन भ्रमरोपमम् । तत्पीठमपीठं वा मन्त्रसंस्कारवर्जितम् । सिद्धिमुक्तिप्रदं लिङ्गं सर्वप्रसादपीठगम्” सूतसंहितायां भैरववाक्यम् “बाणासुरः पुरा भद्रे ! शिवस्यातीव वल्लभः । जितक्रोधोऽसुरस्तत्र शिवपूजाविधौ रतः । विधिज्ञो निपुणश्चैव शिल्पज्ञो लक्षणान्वितः । दिने दिने स्वयं कृत्वा लिङ्गं स्थाप्याप्यपूजयत् । एवं वर्षशतं देवि ! दिव्यमानेनापूजयत् । तदा तद्भक्तिसुलभः प्रत्यक्षः शङ्करोऽभवत्” शङ्कर उवाच तुष्टोऽहं तव हे बाण ! वरं ब्रूहि किमिच्छसि । शङ्करस्य वचः श्रुत्वा बाणोवचनमब्रवीत् । यदि तुष्टोऽसि हे नाथ ! मह्यं त्वं मन्दभागिने । क्लिष्टोऽहं तव देवेश ! लिङ्गं कृत्वा दिने दिने । तत्तल्लक्षणसंसिद्धलक्षणं शास्त्रनिर्मितम् । शास्त्रार्थो दुर्लभो देव ! सिद्धस्यार्थस्य दुर्लभः । तस्मात्त्वं यदि मे तुष्टो लिङ्गं देहि सुलक्षणम् । सर्वकामकृतार्थञ्च सर्वसत्त्वानुकम्पनम् । सर्वेषाञ्च हितार्थाय प्रसादं कुरु शङ्कर ! । इत्येवं वचनं तस्य शिवः परमकारणम् । श्रुत्वा कैलासमूर्द्ध्न्यः शङ्करेण विनिर्मिताः । लिङ्गानां कोटिसंख्याश्च तथा चैव चतुर्दश । सिद्धलिङ्गं तदा तत्तत्सर्वं सदोदयं स्वयम् । ध्यायोच्यैवं सुसम्पूर्णं बाणस्य च समर्पितम् । अक्षयफलदं बाणः स्थाप्यमानञ्च नित्यशः । संपूज्य बाणः सद्भावं कृत्वा प्रणयनन्तदा । तद्भावं सपुरं नीत्वा नूनं चिन्तयते शुचिः । अक्षयां यदि संसिद्धिं स्थाप्यमानं दिने दिने । सत्त्वानां सिद्धिहेत्वर्थं बाणस्थाने सुसंस्तवे । लिङ्गानां कालिकागर्त्ते सञ्चितास्तु त्रिकोटयः । श्रीशैले कोटयस्तिस्रः कोट्येका कन्यकाश्रमे । माहेश्वरे च कोटिस्तु कन्यातीर्थे तु को-

टिका । माहेन्द्रे चैव नेपाले एकैका कोटिरेव च । बाणार्थं कृतं लिङ्गं बाणलिङ्गमतः स्मृतम् । बाणो वा शिव इत्युक्तस्तत्कृतं बाणमुच्यते । तथान्येषु प्रदेशेषु पुण्यस्थानेषु तेषु वा । स्थितं तच्छिवसद्भावं शिवस्याकृति विग्रहे" । हेमाद्रौ तदाकृतिलक्षणसमुच्चयेऽपि "स्वयम्भुलिङ्गवत् बाणलिङ्गं भुक्त्यै स्मृतये "सहस्रफलमन्यस्माद् यथास्थापनपूजने । श्रीशैले कालिकागर्त्ते लिङ्गाद्रौ कन्यकाश्रमे । कन्यातीर्थे वने शैले माहेन्द्रे वा सुरेश्वरे । स्थितानि बाणलिङ्गानि शिवेनैव कृतानि तु" सिद्धान्तशेखरे बाणलिङ्गान्यधिकृत्य "तदानेकप्रकारं स्यादव्यवर्णमपीठकम् । लक्ष्ममूर्त्तिविहीनस्तु बाणं तत् पुण्यदायकम्" बाणलिङ्गेष्वावाहनादि न कर्त्तव्यं तदुक्तं भविष्ये "बाणलिङ्गानि राजेन्द्र ! स्थितानि भुवनत्रये । न प्रतिष्ठा न संस्कारस्तेषामावाहनं न चेति" । रौद्रलिङ्गलक्षणं वीरमित्रोदयधृते "नदीसमुद्भवं रौद्रमन्योन्यस्य विघर्षणात् । नदीवेगात् समं स्निग्धं सञ्जातं रौद्रमुच्यते" लक्षणसमुच्चयेऽपि "सरित्प्रवाहसंस्थानं बाणलिङ्गसमाकृति । तदन्यदपि बोद्धव्यं रौद्रलिङ्गं सुखावहम् । नदीसारनर्मदाया बाणलिङ्गसमाकृति । तदन्यदपि बोद्धव्यं लिङ्गं रौद्रं भविष्यति" । रौद्रलिङ्गं तथा ख्यातं बाणलिङ्गसमाकृति । श्वेतं रक्तं तथा पीतं कृष्णं विप्रादिपूजितम् । स्वभावात् कृष्णवर्णं वा सर्वजातिषु सिद्धिदम् । नर्मदासम्भवं रौद्रं बाणलिङ्गवदीरितमिति" । अधिकं नर्मदेशशब्दे दृश्यम् ।

**नर्मदेश** न० नर्मदया स्थापित ईशो यत्र । काशीस्थे शिवलिङ्गभेदे तदाविर्भावकथा काशीख० ९२ अ० यथा "निशम्येति विधेर्वाक्यं नर्मदा सरिदुत्तमा । धातुर्वरं परित्यज्य प्राप्ता वाराणसीं पुरीम् । सर्वेभ्योऽपि हि पुण्येभ्यः काश्यां लिङ्गे प्रतिष्ठिते । अपरा न समुद्दिष्टा कैश्चित् श्रेयस्करी क्रिया । अथ सा नर्मदा पुण्या विधिपूर्वं प्रतिष्ठितम् । व्यधात् पिलिप्पिलातीर्थे त्रिविष्टपसमीपतः । ततः शम्भुः प्रसन्नोऽभूत् तस्यै नद्यै शुभात्मने । वरं वृणीष्व सुभगे ! यत्तुभ्यं रोचतेऽनघे !। सरिद्वरा निशम्येति रेवा प्राह महेश्वरम् । किं वरेणेह देवेश ! भृशं तुच्छेन धूर्जटे !। निर्द्वन्द्वा त्वत्पदद्वन्द्वे भक्तिरस्तु महेश्वर !। श्रुत्वेति नितरान्तुष्टो रेवागिरमनुत्तमाम् । प्रोवाच च सरित्श्रेष्ठे ! त्वयोक्तं यत्तथास्तु तत् । महाय पुण्यनिचये वितरामि वरान्तरम् । यावन्तो दृषदः सन्ति तव रोधसि नर्मदे । तावन्तो लिङ्गरूपिण्यो भविष्यन्ति वरान्मम । अन्यच्च ते वरं दद्यां तमप्याकर्णयोत्तमम् । दुष्प्राप्यं यच्च तपसां राशिभिः परमार्थतः । सद्यः पापहरा गङ्गा सप्ताहेन कलिन्दजा । त्र्यहात् सरस्वती रेवे ! त्वन्तु दर्शनमात्रतः । अपरं च वरं दद्यां नर्मदे ! दर्शनाघहे । भवत्या स्थापितं लिङ्गं नर्मदेश्वरसंज्ञितम् । एतल्लिङ्गं महापुण्यं मुक्तिं दास्यति शाश्वतीम् । अस्य लिङ्गस्य ये भक्तास्तान् दृष्ट्वा सूर्यनन्दनः । प्रणमिष्यति यत्नेन महाश्रेयोभिवृद्धये । सन्ति लिङ्गान्यनेकानि काश्यां देवि ! पदेपदे । परं हि नर्मदेशस्य महिमा कोऽपि चाद्भुतः । इत्युक्त्वा देवदेवेश तस्मिन् लिङ्गे लयं ययौ । नर्मदापि प्रहृष्टाऽऽसीत् पावित्र्यं प्राप्य चाद्भुतम् । स्वदेशं च परिप्राप्ता दृष्टिमात्राघहारिणी" ।

**नर्मन्** न० नृ—मनिन् । परिहासे अमरः । "न नर्मयुक्तं वचनं हिनस्ति" भा०आ० १८२अ० "नर्मपूर्वमनुपृष्ठसंस्थितः" रघुः । "सुहृत्प्रयुक्ता इव नर्मवादाः" काम० "त्रिदिनमिह न भिन्द्याद्ब्रह्मचर्यं न बाला । हृदयमनुरुध्य स्वेच्छया नर्म कुर्य्यात्" मल्लिनाथधृतकामशास्त्रम् "माधुर्यं नर्मविज्ञानं वाग्मिता चेति तद्गुणाः" दूतीलक्षणे सा०द० ।

**नर्मरा** स्त्री नर्मन्+अस्त्यर्थे रः । १दर्य्यां २मञ्जायां ३स्वरवायां ४निष्फलाख्यायाञ्च मेदि० ।

**नर्मवत्** त्रि० नर्म अस्त्यस्य मतुप् मस्य वः । नर्मयुक्ते स्त्रियां ङीप् । सा च १नायिकाभेदे तदाख्यायिकारूपे २रासकनाटकभेदे सा०द० "तत्र सन्धिद्वयवती यथा नर्मवती" ।

**नर्मसचिव** पु० नर्मणः सचिवः । परीहाससहाये "न नर्मसचिवैः सार्द्धं किञ्चिदप्यप्रियं वदेत्" कामन्दक० "न नर्मसाचिव्यमकारि नेन्दुना" माघः ।

**नर्य** त्रि० नृभ्यो हितं यत् । १मनुष्यहिते "नर्या नर्य्यौ न्द्रतमः सपावान्" ऋ०१०।२९।१ "नर्य्यौ नृभ्यो हितः" भा० "चतुष्पदे नर्याय द्विपदे" ऋ०१।१२१।२ नरस्यापत्यम् वा० यत् । २मनुष्यमात्रे च "अपो नर्यः सुजातः" निरु० ११।२६ धृतामृचमधिकृत्योक्तं "मनुष्यः नृभ्यो हितो नर्यः" "होता यक्षत् सुरेतसमृषभं नर्यापसम्" यजु० २१।२८ "नर्यं नरहितमपः कर्म यस्येति" वेददी० ।

**नल** पु० नल—बन्धे अच् । १तृणभेदे पोटगले अमरः । "नलस्तु मधुरस्तिक्तः कषायः कफरक्तजित् । उष्णो

हृद्रोगहिक्कायोन्यर्त्तिदाहपित्तविसर्पजित्” भावप्र० तद्गुणाः । “जरठच्छेदा नलग्रन्थयः” माघ० । २सूर्यवंश्ये नृपभेदे “रामस्य तनयो जज्ञे कुश इत्यभिविश्रुतः” इत्युपक्रमे “निषधस्य नलः पुत्रो नभः पुत्रो नलस्य तु” इति “सुधन्वनः सुतश्चैव ततो जज्ञे नलो नृपः । उक्थो नाम स धर्मात्मा नलपुत्रो बभूव तु” । “नलौ द्वावेव विख्यातौ पुराणे भरतर्षभ ! । वीरसेनात्मजश्चैकः यश्चेक्ष्वाकुकुलोद्भवः” हरिवं० १५अ० “नलौ द्वावेव विख्यातौ वंशे कश्यपसम्भवे । वीरसेनसुतस्तद्वन्नैषधश्च नराधिपः । एते वैवस्वते वंशे राजानो भूरिदक्षिणाः” मत्स्यपु० १२अ० । एवं वीरसेनस्य सूर्यवंश्यत्वे स्थितेऽपि नैषधचरिते “हिमांशुवंशस्य करीरमेव मामिति” उक्तेः चन्द्रवंश्यत्वम् तेन “आसीद्राजा नलोनाम वीरसेनसुतो नृप !” इति भा०व०५२अ० उक्तो वीरसेनः सूर्यवंश्यात् भिन्नएव भा०व० ६०अ० तत्पुत्र नलस्य इन्द्रसेनाख्यपुत्र इत्युक्तं सूर्यवंश्ययोर्नलयोस्तु पुत्रनामनी भिन्ने हरिवं०१५अ० इति नास्य सूर्यवंश्यता

भा०व०५२अध्यायावधि ७९अ० पर्य्यन्तं नलोपाख्यानं दृश्यम् । ततः संक्षिप्य दिङ्मात्रमत्र तच्चरितं प्रदर्श्यते । पुरा किल वीरसेनसुतः निषधदेशाधिपो नलनामा आसीत् । स च कुण्डिनेश्वरभीमनृपसुतां दमयन्तीं स्वयंवरविधिना समुपयेमे तस्य इन्द्रसेनः पुत्रो बभूव । स च कलिप्रवेशात् पाशाक्षद्युतनितया पुष्करेण भ्रात्रा सह द्यूतदेवनात् सर्वस्वमहारयत् । अथ स हृतराज्यो दमयन्त्या सह वनं जगाम । तत्र महाकष्टमनुभवन् दमयन्तीं व्यसनासहिष्णुं मन्यमानश्च रात्रौ सुप्तां तां परित्यज्य पलायाञ्चक्रे । दमयन्ती तु प्रबुध्य बहु विलप्य पथिकसार्थेन सह मातृस्वसृगृहं गताऽपि लुप्तचिह्नतया मातृस्वस्राऽप्रत्यभिज्ञातेव तत्सदनमुवास । अथ भीमादेशेन तदन्वेषणाय प्रेरिता द्विजाश्चिह्नभेदेन तां दमयन्तीं ज्ञात्वा भीमाय न्यवेदयन् । ततस्तां ततः स्वगृहमानाय्य भीमो नलान्वेषणाय दूतान् प्रजिघाय । नलोऽपि तत्समये अरण्ये सङ्कटापन्नं कर्कोटनागं सङ्कटादुज्जहार । अथ प्रत्युपकाराशया नागस्तद्देहस्थं कलिं तापयितुं तस्य पदे ददंश तेन तस्य विषज्वालया तद्देहस्थः कलिरेव नितान्तसन्तापितः । नलस्तु तेन रूपान्तरमात्ममाप । स्वेच्छया पुनः स्वदेहप्राप्तिर्भविष्यतीति नागेन तस्मै वरे दत्ते तदुपदेशेन ऋतुपर्णस्य नृपस्य वाहुकतया प्रसिद्ध आश्वसारथ्यं चकार । अथ भैमीदूतेन तस्य वचनविशेषेण नलत्वं सम्भाव्य दमयन्तीं प्रति निवेदिते सा तेन स्वस्य पुनः स्वयंवरमिषेण दूतेन ऋतुपर्णमाजुहाव । तस्याश्वचालननैपुण्यं पथि दृष्ट्वा तन्नैपुण्यं शिक्षितुमिच्छुः तस्मै स्वकीयाक्षहृदयज्ञानदानविनिमयं चक्रे । अथ नलस्य तस्मादक्षज्ञानमात्रादेव देहात् कर्कोटकविषदग्धः कलिर्निर्जगाम । अथ कुण्डिनपुरे आगते दमयन्ती परिवर्त्तितरूपमपि नलं पाकादिकौशलेन तं नलं निश्चिकाय । अथ तेन रूपान्तरपरिवर्त्तनेन स्वरूपे गृहीते भैम्याः सह मेलने जाते नितान्तं भीमस्तुतोष नलं च प्रेषयामास निषधदेशम् । स च स्वदेशमागत्य स्वभ्रातारं पुष्करं देवनायाजुहाव । विदिताक्षज्ञानतया तं जिगाय च । इत्थं द्यूतहारितराज्योऽपि पुनर्लब्धराज्योऽभूदिति । “नलः सितच्छत्रितकीर्त्तिमण्डलः” “इयेऽपि तन्व्या नलनामनि श्रुते” नैष० “कर्कोटस्य नागस्य दमयन्त्या नलस्य च । ऋतुपर्णस्य राजर्षेः कीर्त्तनं कलिनाशनम्” भा०व० नलोपाख्याने । “पुण्यश्लोको नलोराजा पुण्यश्लोको युधिष्ठिरः” प्रातःस्मरणीयकीर्त्तने । ३पितृदेवभेदे कव्यवालशब्दे १८२४ पृ० दृश्यम् । विश्वकर्मणः पुत्रे रामायणप्रसिद्धे ४वानरभेदे

“रामस्य वरदानाच्च शिवः पन्था बभूव ह । तस्मिन् दत्ते तदा कुक्षौ समुद्रः सरितां पतिः । राघवं सर्वशास्त्रज्ञमिदं वचनमब्रवीत् । अयं सौम्य ! नलोनाम तनयो विश्वकर्मणः । पित्रा दत्तवरः श्रीमान् प्रीतिमान् विश्वकर्मणः । एष सेतुं महोत्साहो करोतु मयि वानरः । तमहं धारयिष्यामि यथा ह्येष पिता तथा । एवमुक्त्वो दधिर्नष्टः समुत्थाय नलस्ततः । अब्रवीद्वानरश्रेष्ठो वाक्यं रामो महाबलम् । अहं सेतुं करिष्यामि विस्तीर्णं मकरालये । पितुः सामर्थ्यमासाद्य तत्त्वमाह महोदधिः” । “मम मातुर्वरो दत्तो मन्दरे विश्वकर्मणा । मया तु सदृशः पुत्रस्तव देवि ! भविष्यति । औरसस्तस्य पुत्रोऽहं सदृशो विश्वकर्मणा । न चाप्यहमनुक्तोवः प्रब्रूयामात्मनो गुणान् । समर्थश्चाप्यहं सेतुं कर्त्तुं वै वरुणालये । तस्मादद्यैव बध्नन्तु सेतुं वानरपुङ्गवाः” रामा०लङ्का०२२अ० । नलसेतुशब्देऽधिकं दृश्यम् । ५पद्मे न० राजनि० । [शब्दार्थे हेमच० ।

**नलक** न० नल इव कायति कै–क । शाखास्थि नडक-

**नलकानन** पु० नलप्रधानं काननमत्र । १देशभेदे “भि-

ल्लिकाः कुन्तलाश्चैव सौहृदाः नलकाननाः" भा०भी० ९अ० जनपदोक्तौ। ६त०। नलानां २वने च न०।

**नलकिनी** स्त्री नलकं नलाकारमस्थि विद्यतेऽस्य इनि ङीप्। जङ्घायां हेमच०।

**नलकील** पु० नल एव कीलोऽत्र। जानुनि हेमच०।

**नलकूवर** पु० कुवेरपुत्रे "यक्षराज्ञा कुवेरेण वरा लब्धास्तु पुष्कलाः। धनाधिपत्यं सख्यञ्च रुद्रेणामिततेजसा। सुरत्वं लोकपालत्वं पुत्रञ्च नलकूवरम्" भा०स० ४८अ०। स च नारदशापेन व्रजे स्थावरतां प्राप्तः कृष्णेन पुनर्देवत्वमापादितः। तत्कथा भाग० १०स्कन्धे यथा "कृष्णस्तु गृहकृत्येषु व्यग्रायां मातरि प्रभुः। अद्राक्षीदर्जुनौ पूर्वं गुह्यकौ धनदात्मजौ"। "पुरा नारदशापेन वृक्षतां प्रापितौ मदात्। नलकूवरमणिग्रीवाविति ख्यातौ श्रियान्वितौ" १०अ० "रुद्रस्यानुचरौ भूत्वा सुदृप्तौ धनदात्मजौ। कैलासोपवने रम्ये मन्दाकिन्यां मदोत्कटौ। वारुणीं मदिरां पीत्वा मदाघूर्णितलोचनौ। स्त्रीजनैरनुगायद्भिश्चेरतुः पुष्पिते वने। अन्तः प्रविश्य गङ्गायामम्भोजवनराजिनि। चिक्रीडतुर्युवतिभिर्गजाविव करेणुभिः। यदृच्छया च देवर्षिर्भगवांस्तत्र कौरव!। अपश्यन्नारदो देवौ क्षीवाणौ समबुध्यत। तं दृष्ट्वा व्रीडिता देव्यो विवस्त्राः शापशङ्किताः। वासांसि पर्यधुः शीघ्रं विवस्त्रौ नैव गुह्यकौ" "यदिमौ लोकपालस्य सुतौ भूत्वा तमःप्लुतौ। न विवाससमात्मानं विजानीतः सुदुर्मदौ। अत एतः स्थावरतां स्यातां नैवं यथा पुनः। स्मृतिः स्यात् मत्प्रसादेन तत्रापि मदनुग्रहात्। वासुदेवस्य सान्निध्यं लब्ध्वा दिव्यशरच्छते। वृत्ते स्वर्लोकतां भूयो लब्धभक्ती भविष्यतः" १०अ०

**नलद** न० नलं गन्धमब्धं ददाति दो—खण्डने क। १उशीरे (वेणारमूल) उशीरशब्दे १२७६पृ० तद्गुणा दृश्याः २पुष्परसे ३जटामांस्याञ्च मेदि० "करिणां मुदे सनलदाऽनलदाः" किरा० "नलदेनानुलिम्पन्ति" "नलदमालां प्रतिमुञ्चन्ति" आश्व०श्रौ०६।१०।३।४। तत्पत्यस्य किरा० ३न्। ४नलदिक तद्विक्रेतरि त्रि० स्त्रियां ङीप्। नलं ददाति दा—क। ५नलदातरि त्रि० "सादृशा नलदं विना न दवने तापस्य कोऽपि क्षमः" नैषध०। रुद्राश्वनृपस्य घृताच्यां जाते ६कन्याभेदे स्त्री "नलदा चैव राजेन्द्र! नलदा सुरसाऽपि च" हरिवं० ३१अ० तत्कन्योक्तौ।

**नलपट्टिका** स्त्री नलनिर्मिता पट्टिकेव। (दरमा) ख्याते पदार्थे हारा०। [अमरः।

**नलमीन** पु० नलः नलाश्रयः मीनः। (चिङ्गडी) मत्स्यभेदे

**नलसेतु** पु० नलवानरकृतः सेतुः शा०त०। समुद्रोपरि नलवानरकृते सेतौ "अस्ति तत्र नलो नाम वानरः शिल्पिसम्मतः। त्वष्टुर्देवस्य तनयो बलवान् विश्वकर्मणः। स यत् काष्ठं तृणं वापि शिलां वा क्षेप्स्यते मयि। सर्वं तद्धारयिष्यामि स ते सेतुर्भविष्यति। इत्युक्त्वान्तर्हिते तस्मिन् रामो नलमुवाच ह। कुरु सेतुं समुद्रे त्वं शक्तो ह्यसि मतो मम। तेनोपायेन काकुत्स्थः सेतुबन्धमकारयत्। दशयोजनविस्तारमायतं शतयोजनम्। नलसेतुरिति ख्यातो योऽद्यापि प्रथितो भुवि" भा०व० २८३अ०।

**नलिका** स्त्री नलः तद्रूपाकारोऽस्त्यस्याः ठन्। १नाड्यां(नली) इति ख्याते सुगन्धिद्रव्यभेदे अन्तरपत्रप्रसिद्धे (पँठारी) प्रसिद्धे प्रवालाकृतौ २द्रव्यभेदे च "नलिका विद्रुमलता कपोतचरणा नटी। धमन्यञ्जनकेशी च निर्मध्या शुषिरा नली। नलिका शीतला लघ्वी चक्षुष्या कफपित्तहृत्। कृच्छ्राश्मरीवाततृष्णाक्षकुष्ठकण्डूज्वरापहा" भावप्र०। "काशाः कुशा वा नलिका नलो वा" इ०सं० ५४अ०। इकारान्तशब्दे दृश्यम्। तन्तुवायानां वयनसाधने ३द्रव्यभेदे (नली) ४तदाकारे अस्त्रे च।

**नलित** पु०नल—क्त। (नालता)शाकभेदे द्रव्यगुणाभिधानम्। "मधुरो नलितः पित्तनाशकः शुक्रवर्द्धकः" तद्गुणोक्तिः

**नलिन** न० नल—बन्धे इनन्। १पद्मे २जले ३नीलिकायां हेमच०४सारसखगे पुंस्त्री०अमरः। ५कण्टपाकफले प्राचीनामलके (पानि आमला) पु० शब्दच० "नलिनं नलिनं विदधती स्मृतीमस्मृतीं तदीक्षणे" नैष० "नलिनाभवक्त्रः" रघुः।

**नलिनी** स्त्री नडाः (नालाः) सन्त्यत्र पुष्करा० इनि ङीप् डस्य लः। १पद्मिन्यां "व्याकोशकोकनदतां दधते नलिन्यः" माघः। २पद्मयुक्तदेशे ३कमलाकरे ४नदीमात्रे मेदि०। नलानां नलयुक्तानां समूहः खला० इनि। पद्मसमूहे ५नलिकायां राजनि० ६नारिकेले त्रिका० "नलिनीवाम्बुसम्पत्त्या वृद्ध्या श्रीः परिपाल्यते" कामन्द० "ततोऽविदूरे नलिनीं प्रभूतकमलोत्पलाम्। सीताहरणदुःखार्त्तः पम्पां रामः समासदत्" भा०व०२७९अ०। "एषा सा दृश्यते पम्पा नलिनी चित्रकानना" रामा०

६।१०८अ० "प्रयाता नन्दनश्चैव नलिनी सरितां वरा" हरिवं० ६५अ० "नलिनी क्षतसेतुबन्धना" कुमा०। ७व्योमनद्याम् सा च "ब्रह्मलोकादपक्रान्ता सप्तधा प्रतिपद्यते। वस्वोकसारा नलिनी पावनी च सरस्वती। जम्बूनदी च सीता च गङ्गा सिन्धुश्च सप्तमी" भा०भी० ६अ० उक्ता पञ्चदशाक्षरपादके ८छन्दोभेदे "सगणैः शिवसङ्ख्यमितैर्गदिता नलिनी" इ०र०टी० तल्लक्षणमुक्तम्।

**नलिनीखण्ड** न० नलिनीनां समूहः कमला० समूहे खण्डच्। पद्मिनीसमूहे।

**नलिनीनन्दन** न० नलिन्या नन्दयति नन्दि—ल्यु ६त०। देवोद्यानभेदे "वनं चैत्ररथं दिव्यं नलिनीनन्दनं वनम्। यो विनाशितवान् क्रोधात् देवोद्यानानि वीर्यवान्" रामा० आरण्य० ३६

**नलिनीरुह** न०नलिन्यां रोहति रुह—क। मृणाले राजनि०

**नलिनेशय** पु० नलिने ब्रह्मनाभिकमले शेते-शी—अच् अलुक्स०। विष्णौ।

**नली** स्त्री नल—अच् गौरा० ङीष्। १मनःशिलायां त्रिक० २नलिकायां भावप्र०। [शिवलिङ्गभेदे शिवपु०।

**नलेश्वर** पु०न० नलेन स्थापित ईश्वरो यत्र। नलकर्त्तृकस्थापिते

**नलोत्तम** पु० नलेषु उत्तमः। देवनले राजनि०।

**नलोदय** पु० कालिदासकृते काव्यभेदे

**नलोपाख्यान** न० नलस्योपाख्यानं यत्र। भारतवनपर्वान्तर्गते अवान्तरपर्वभेदे "नलोपाख्यानमत्रैव" भा०आ०१अ०। तत्र नलशब्दे दृश्यम्।

**नल्य** त्रि० नलस्यादूरदेशादि० कृशा० य। नलस्यादूरदेशादौ

**नल्व** पु०नल—बा०व। चतुःशतहस्तमिते अमरः शतहस्तमिते कात्यः "रावणस्य शरीरन्तु पञ्चनल्वानुविस्तृतम्" रामा०लङ्का०८२/६२ श्लो० "नल्वमात्रपरीणाहो घनच्छायो वनस्पतिः" भा०शा० १६४अ०।

**नल्ववर्त्मगा** स्त्री नल्वमितं वर्त्म गच्छति गम—ड। १काकाचीलतायां शब्दच० २तन्मितपथगामिनि त्रि०।

**नव** पु०नु—स्तवे भावे अप्। १स्तवे मेदि०कर्मणि अप्। २नूतने त्रि० अमरः ३रक्तपुनर्नवायाम् पु० राजनि० "नवाम्बुभिर्भूरिविलम्बिभिर्घनाः" शकु० "नवं नवं प्रीतिरहो करोति" "नवानधोऽधोबृहतः पयोधरान्" माघः ४उशीनरनृपस्य पुत्रभेदे पु० ५तत्पत्न्यां स्त्री "उशीनरस्य पत्न्यस्तु पञ्च राजर्षिसंभवाः। नृगा कृमिर्नवा दर्वा पञ्चमी च दृषद्वती। उशीनरस्य पुत्रास्तु पञ्च तासु कुलोद्वहाः। तपसा चैव महता जाता वृद्धस्य चात्मजाः। नृगायास्तु नृगः पुत्रः कृम्या कृमिरजायत। नवायास्तु नवः पुत्रो दर्वायाः सुव्रतोऽभवत्। दृषद्वत्यास्तु संजज्ञे शिविरौशीनरो नृपः" हरिवं० ३१अ०।

**नवक** न० नवानामवयवः सङ्ख्यायाः कन्। १नवसंख्यायाम् नवपरिमाणमस्य। २नवसंख्यान्विते त्रि० नवनवकशब्दे वक्ष्यमाणपद्योक्तानीव नवनवकान्युक्ता काशी०ख० ४०अ० दृश्यं नवकमुक्तं यथा

"एतन्नवानान्नवकं ज्ञात्वा शिवमवाप्नुयात्। अन्यच्च नवकं वच्मि सर्वेषां स्वर्गमार्गदम्। सत्यं शौचमहिंसा च क्षान्तिश्चार्जवं दया दमः। अस्तेय इन्द्रियाक्षोभः सर्वेषां धर्मसाधनम्। अस्य स नवकं ज्ञेयं स्वर्गमार्गप्रदीपिकाम्। सतामभिमतां पुण्यां स्त्रुहस्यो नावसीदति"। "इति वीराष्टकः प्रोक्तः स्वस्वभावगणोद्भवः। आगवह्निना सहितो नवकः परिकीर्त्यते" भा०व०२२७अ० कानिचित् नवकानि शा०ति० उक्तानि यथा

"गुणिता नवधा नित्या ब्रूते मन्त्रं नवार्णकम्। नवकं शक्तितत्त्वानां तत्त्वरूपा महेश्वरी। नवकं पीठशक्तीनां शृङ्गारादीन् रसानपि। माणिक्यादीनि रत्नानि नववर्गयुतानि च। नवकं प्राणदूतीनां मण्डलं नवकं शुभम्। यद्‌यन्नवात्मकं लोके सर्वमस्या उदस्थिति"। तत्र शक्तितत्त्वनवकं तत्रैव प्रथमपटले "सच्चिदानन्दविभवात् सकलात् परमेश्वरात्। आसीच्छक्तिस्ततो नादो नादाद्विन्दुसमुद्भवः। परशक्तिमयः साक्षात् त्रिधासौ भिद्यते पुनः" नादविन्दूनां प्रत्येकं त्रिधाभेदात् नवसंख्या। तेषां भेदाश्च तत्रैवोक्ता यथा "विन्दुर्नादो वीजमिति तस्य भेदाः समीरिताः। विन्दुः शिवात्मको वीजं शक्तिर्नादस्तयोर्मिथः। समवायः समाख्यातः सर्वागमविशारदैः। रौद्री विन्दोस्ततो नादात् ज्येष्ठा वीजादजायत। वामा ताभ्यः समुत्पन्ना रुद्रब्रह्मरमाधिपाः। विज्ञानेच्छाक्रियात्मानो वह्नीन्द्वर्कस्वरूपिणः। भिद्यमानात् पराद्बिन्दोरव्यक्तात्मा रवोऽभवत्"। पीठशक्तीनां नवकं तत्तन्मन्त्रभेदे तत्तत्प्रकरणे तत्रोक्तम्। शृङ्गारादिरस नवकमलङ्कारे प्रसिद्धं नवरसशब्दे दृश्यम्। रत्ननवकं नवरत्नशब्दे दृश्यम् तच्च ६पटले तत्रैवोक्तम्। वर्गाणां नवकम् अकचट तप यशहानां नवकं ७पटले तत्रोक्तम्। मण्डलनवकं तत्रैव ८पटले "चतुरस्रां भुवं भित्त्वा कोष्ठानां नवकं लिखेत्। पूर्वकोष्ठादिषु लिखेत् सप्तवर्गा

नहुक्रमात् । लक्ष्मीशे मध्यकोष्ठे स्वरयुग्मक्रमाल्लिखेत्” इत्युक्तम् । मातृदूतीनां नवकं २३५८ पृष्ठे तन्त्रोक्तं दृश्यम् ।

**नवकारिका** स्त्री नवं करोति कृ–ण्वुल् । १नवोढायां स्त्रियां शब्दमा० कर्म० । २नूतनायां कारिकायां च । कारिका क्रिया कर्म० । ३नूतनत्वे च ।

**नवकालिका** स्त्री नवकं नूतनमलति अल–भूषणे ण्वुल् । नवीने हारा० अभिधानात् स्त्रीत्वम् ।

**नवग्रह** पु० कर्म० संज्ञात्वात् न द्विगुः । “सूर्यचन्द्रौ मङ्गलश्च बुधश्चापि बृहस्पतिः । शुक्रः शनैश्चरो राहुः केतुश्च नव ग्रहा” इत्युक्तेषु नवसु १ग्रहेषु खगोलशब्दे तत्कक्षादिमानमुक्तं तद्रथादिमानमत्रोच्यते ।

रवेः “योजनानां सहस्राणि भास्करस्य रथो नव । ईषादण्डस्तथैवास्य द्विगुणो मुनिसत्तम ! । सार्द्धकोटिस्तथा सप्त नियुतान्यधिकानि वै । योजनानान्तु तस्याक्षस्तत्र चक्रं प्रतिष्ठितम् । चत्वारिंशत् सहस्राणि द्वितीयोऽक्षो व्यवस्थितः । पञ्चान्यानि तु सार्द्धानि स्यन्दनस्य महामते ! । अक्षप्रमाणमुभयोः प्रमाणं तद्युगार्द्धयोः । ह्रस्वोऽक्षस्तद्युगार्द्धेन ध्रुवाधारो रथस्य वै । द्वितीयेऽक्षे तु तच्चक्रं संस्थितं मानसाचले । हयाश्च सप्त छन्दांसि तेषां नामानि मे शृणु । गायत्री च बृहत्युष्णिग्जगती त्रिष्टुबेव च । अनुष्टुप् पङ्क्तिरित्युक्ताश्छन्दांसि हरयो रवेः । स रथोऽधिष्ठितो देवैरादित्यैर्ऋषिभिस्तथा । गन्धर्वैरप्सरोभिश्च ग्रामणीसर्पराक्षसैः । स्तुवन्ति मुनयः सूर्यं गन्धर्वैर्गीयते पुरः । नृत्यन्त्योऽप्सरसो यान्ति सूर्यस्यानु निशाचराः । वहन्ति पन्नगा यक्षैः क्रियतेऽभीषुसंग्रहः । वालखिल्यास्तथैवैनं परिवार्य्य समासते । सोऽयं सप्तगणः सूर्यमण्डले मुनिसत्तम । हिमोष्णवारिवृष्टीनां हेतुत्वं समुपागतः” ।

इन्दोः “त्रिचक्रोभयतोऽश्वस्तु विज्ञेयः शशिनो रथः । वामदक्षिणतो युक्ता दश तेन चरत्यसौ” ।

बुधस्य “वाय्वग्निद्रव्यसम्भूतो रथश्चन्द्रसुतस्य च । पिशङ्गैस्तुरगैर्युक्तः सोऽष्टाभिर्वायुवेगिभिः । सवरूथः सानुकर्षो युक्तोऽभूसम्भवैर्हयैः” ।

शुक्रस्य “सोपासङ्गपताकस्तु शुक्रस्यापि रथो महान् । अष्टाश्वः काञ्चनः श्रीमान्” । [भूमिसम्भवैः” ।

कुजस्य “भौमस्यापि रथो महान् । पद्मरागारुणैरश्वैः संयुक्तो

गुरोः “अष्टाभिः काञ्चनैर्वाजिभिः काञ्चने रथे । तिष्ठत्यब्दं वै वर्षं राशौ राशौ बृहस्पतिः” ।

शनेः “आकाशसम्भवैरश्वैः शबलैः स्यन्दनं युतम् । समारुह्य शनैर्याति मन्दगामी शनैश्चरः” ।

राहोः “स्वर्भानोस्तुरगाश्चाष्टौ भृङ्गाभा धूसरं रथम् । सकृद्युक्तास्तु मैत्रेय ! वहन्त्यविरतं सदा । आदित्यान्निःसृतो राहुः सोमं गच्छति पर्वसु । आदित्यमेति सोमाच्च पुनः सौरेषु पर्वसु” ।

केतोः “तथा केतुरथस्याश्वा अष्टौ ते वातरंहसः । पलालधूमवर्णाभा लाक्षारसनिभारुणाः । एते मया ग्रहाणां वै तवाख्याता रथा नव” विष्णुपु० ।

सुश्रुतोक्ते नवविधे स्कन्दाद्यभिधे २नवग्रहभेदे ग्रहशब्दे २७४५ पृ० दृश्यम् । तेषामुत्पत्त्यादिकं उत्तरतन्त्रे तत्रोक्तं यथा

“अथातो ग्रहोत्पत्तिमध्यायं व्याख्यास्यामः । नव स्कन्दादयः प्रोक्ता बालानां य इमे ग्रहाः । श्रीमन्तो दिव्यवपुषो नारीपुरुषविग्रहाः । एते गुहस्य रक्षार्थं कृत्तिकोमाग्निशूलिभिः । सृष्टाः शरवणस्थस्य रक्षितस्वाततेजसा । स्त्रीविग्रहा ग्रहा ये तु नानारूपा सवेरिताः । गङ्गोमाकृत्तिकानाञ्च ते भागा राजसा मताः । नैगमेयस्तु पार्वत्या सृष्टो मेषाननो ग्रहः । कुमारधारी देवस्य गुहस्यात्मसमः सखा । स्कन्दापस्मारसंज्ञो यः सोऽग्निनाग्निसमद्युतिः । स च स्कन्दसखो नाम विशाख इति चोच्यते । स्कन्दः सृष्टो भगवता देवेन त्रिपुरारिणा । बिभर्त्ति चापरां संज्ञां कुमार इति स ग्रहः । बालक्रीडाधरो योऽयं देवो रुद्राग्निसम्भवः । मिथ्याचारेषु भगवान् स्वयं नैव प्रवर्त्तते । कुमारः स्कन्दसामान्यादत्र केचिदपण्डिताः । अङ्गुलीयत्वविज्ञाना ब्रुवते देहचिन्तकाः । ततो भगवति स्कन्दे सुरसेनापतौ कृते । उपतस्थुर्ग्रहाः सर्वे दीप्तशक्तिधरं गुहम् । ऊचुः प्राञ्जलयश्चैनं वृत्तिं नः संविधत्स्व वै । तेषामर्थे ततः स्कन्दः शिवं देवमचोदयत् । ततो ग्रहांस्तानुवाच भगवान् भगनेत्रहा । तिर्य्यग्योनिं मानुषञ्च दैवञ्च त्रितयं जगत् । परस्परोपकारेण वर्त्तते धार्य्यतेऽपि च । देवा मनुष्यान् प्रीणन्ति तैर्य्यग्योनींस्तथैव च । वर्त्तमानैर्यथाकालं शीतवर्षोष्णमारुतैः । इज्याञ्जलिनमस्कारजपहोमव्रतादिभिः । नराः सम्यक् प्रयुक्तैश्च प्रीणन्ति त्रिदिवेश्वरान् । भागधेयं विभक्तञ्च शेषं किञ्चिन्न विद्यते । तद्युष्माकं शुभा वृत्तिर्बालेष्वेव भविष्यति । कुलेषु येषु नेज्यन्ते

देवाः पितर एव च। ब्राह्मणाः साधवश्चैव गुरवोऽतिथयस्तथा। निवृत्ताचारशौचेषु परपाकोपभोजिषु। उच्छन्नबलिभिक्षेषु भिन्नकांस्योपभोजिषु। स्पृष्टेषु तेषु ये बालास्तान् स्पृष्ट्वौध्यमशङ्किताः। तत्र वो विपुला हृत्तिः पूजा चैव भविष्यति। एवं ग्रहाः समुत्पन्ना बालान् स्पृष्ट्वन्ति चाप्यतः। ग्रहोपसृष्टा बालास्तु दुश्चिकित्स्यतमा मताः। वैकल्यं मरणं चापि ध्रुवं स्कन्दग्रहे मतम्। स्कन्दग्रहोऽल्पयतमः सर्वेष्वेव यतः स्मृतः। अन्यो वा सर्वरूपस्तु न साध्यो ग्रह उच्यते"।

अथ सूर्यादिग्रहाणां स्वरूपादि हृहज्जातकोक्तं प्रदर्श्यते "कालात्मा दिनकृन्मनस्तुहिनगुः सत्त्वं कुजो ज्ञो वचो जीवो ज्ञानसुखे सितश्च मदनो दुःखं दिनेशात्मजः। राजानौ रविशीतगू क्षितिसुतो नेता कुमारो बुधः सूरिर्दानवपूजितश्च सचिवौ प्रेष्यः सहस्रांशुजः" हृहज्जा०। "कालस्यात्मा कालात्मा दिनकृत् सूर्यः। अस्यैव तुहिनगुश्चन्द्रोमनः तुहिनेन हिमेन सदृशाः शीतलागावोरश्मयो यस्य स तुहिनगुः। सत्त्वं कुजो भौमः सत्त्वस्य लक्षणं "अधिकारकरं सत्त्वं व्यसनाभ्युदयागमे" सत्त्वशब्दोऽत्र शौर्यपर्य्यायः तच्च सिंहादीनामस्ति तथा च एकाकिनि वनवासिन्यराजलक्षणमतीतशास्त्रे। सत्त्वस्थिते स्मगपतौ राजेति गिरः परिणमन्ति। उत्तृष्टतरस्वभाव इत्यर्थः। ज्ञो बुधो वचो गोः जीवो हृहस्पतिः ज्ञानसुखे ज्ञानञ्च सुखञ्च ज्ञानसुखे। सितः शुक्रो मदनः कामः। दिनस्येशो दिनेशः सूर्यः तस्यात्मजः पुत्रः शनैश्चरो दुःखम्। अत्र कालपुरुषं कालस्य सर्वगतस्य प्रदर्शनार्थम्। अत्र न केवलं कालपुरुषस्य मेषाद्याराशयः शिरःप्रभृत्यङ्गविभागेन स्थिताः यावदादित्यादयश्चास्य विभागेन सर्वस्य जगतः स्थिताः। प्रयोजनम् पीडितैर्ग्रहैर्दृश्यतोऽपि तदङ्गभवात्मगुणपीडनं कर्तव्यम् पुष्टैः पुष्टिरिति। न केवलं यावत् जन्मनि बलवद्भिर्ग्रहैरेत एव भावा आत्मादयः शुभा भवन्ति दुर्बलैर्दुर्बलाः किन्तु शौरस्य विपरीतम् तथा च सारावल्याम् "आत्मादयो गगनगैर्बलिभिर्बलवत्तराः। दुर्बलैर्दुर्बला ज्ञेया विपरीतं शनेः स्मृतमिति" राजानावित्यादि रविरादित्यः शीतगुश्चन्द्रः एतौ राजानौ नृपौ। क्षितिर्भूमिरस्याः सुतः पुत्रोऽङ्गारकः स नेता सेनापतिः। बुधः कुमारो युवराजः राजपुत्र इति केचित्। सूरिर्हृहस्पतिः दानवपूजितः शुक्रः च एतौ सचिवौ मन्त्रिणौ। सहस्रांशुः सूर्यस्तस्माज्जातः शनैश्चरः स प्रेष्यो दासः। ननु जगत्पालनकरणे शनैश्चरः प्रेष्यः किमर्थोच्यते प्रेष्योऽपि स्वकर्मणां पालक एव। प्रयोजनम् जन्मनि प्रश्नकाले बलवान् यश्चयस्तो यद्ग्रहो भवति तदुक्तो राजादिकस्तस्य कार्यसाधनको भवति अन्यथा हानिकरः" "रक्तश्यामो भास्करो गौर इन्दुर्नात्युच्चाङ्गोरक्तगौरश्च वक्रः। दूर्वाश्यामोज्ञो गुरुर्गौरगात्रः श्यामः शुक्रो भास्करिः कृष्णदेहः। वर्णास्ताम्रसिताऽतिरक्तहरीतव्यापीतचित्रासितावह्न्यम्बुशिखिजकेशवेन्द्रशचिकाः सूर्यादिनाथाः क्रमात्। प्रागाद्यारविशुक्रलोहिततमःसौरेन्दुवित्सूरयः क्षीणेन्द्वर्कमहीसुतार्कतनयाःपापा बुधस्तैर्युतः। बुधसूर्यसुतौ नपुंसकाख्यौ शशिशुक्रौ युवती नराश्च शेषाः" शिखिभूखपयोमरुद्गणानां वशिनो भूमिसुतादयः क्रमेण:"

**नवग्व** त्रि० नवभिर्मासैर्गच्छति गम—उणा० ड्व। नवभिर्मासैरवाप्तफलतया चलिते। "सैनामयातयन्त क्षितयो नवग्वाः" ऋ० १।३३।६ "सत्रमासीनानां मध्ये ये नवभिर्मासैरवाप्तफला चलितास्तेषां नवग्वा इति संज्ञा" भा० २नवीनगतियुते च "अङ्गिरसो न पितरो नवग्वाः" इमाम्हचमधिकृत्य निरु० ११।१९। उक्तं "नवग्वा नवीन गतयः"।

**नवचत्वारिंशत्** स्त्री नवाधिका चत्वारिंशत्। १तत्संख्यायां २तदन्विते च। ततःपूरणे डट्। नवचत्वारिंश तत्पूरणे त्रि०। स्त्रियां ङीप्। तदर्थे तमप्। नवचत्वारिंशत्तम तत्पूरणे त्रि०।

**नवच्छात** पु० कर्म०। प्रथमाध्ययनप्रवृत्ते शिष्ये०।

**नवच्छिद्र** न० नव छिद्राणि यत्र। देहे देहस्य नवद्वारवत्त्वात् तथात्वम्। नवद्वारशब्दे दृश्यम्।

**नवज्वर** पु० कर्म०। तरुणज्वरे "तरुणं तु ज्वरं पूर्वं लङ्घनेन क्षयं नयेत्। आमदोषप्रवृद्धत्वाद्वा लङ्घयेत् यथा विधि" भावप्र०। २नवतिसङ्ख्यापूरणे त्रि०नवतिशब्दे दृश्यम्

**नवत** पु० नू—अतच्। १कुथे करिभूषणार्थे कम्बले हेमच०।

**नवतन्तु** पु० कर्म०। १नवीने तन्तौ। बहु०। २तद्युक्ते पटे च ३विश्वामित्रपुत्रभेदे "नवतन्तुर्बकनकः शमनोयतिरेव च" भा०आनु० ४अ० तत्पुत्रोक्तौ।

**नवति(ती)** स्त्री नव दशतः परिमाणमस्य "पङ्क्तिविंशती-त्यादिना" पा० नि० वा ङीप्। ( नव्वुइ ) १संख्यायां २तत्सङ्ख्यान्विते च "इत्थं क्षितीशो नवतिं नवाधिकाम्" रघुः "वीक्ष्यात्मो नवतेः काष्ठः मदेः स्थिती शतस्य तु"

मनुः। ततः पूरणे डट्। नवत तत्सङ्ख्यापूरणे त्रि० स्त्रियां ङीप्। पूरणे तमप्। नवतितम तत्सङ्ख्यापूरणे त्रि०।

**नवतिका** स्त्री नवाय नूतनत्वाय तेकति तिक—गतौ क। १तूलिकायां हारा०। स्वार्थे क। २नवतिसंख्यायाञ्च।

**नवदण्डक** न० नवो दण्डोऽत्र कप्। राज्ञां छत्रभेदे "मनोहरं च कनकदण्डं च नवदण्डकम्। छत्रं तु त्रिविधं ज्ञेयं त्रिविधानां महीभुजाम्" युक्तिकल्पतरुः।

**नवदश** पु० नव च दश च संख्याऽस्य डट्। ऊनविंशतिसंख्यायुक्ते "प्रभूतिरष्टादशस्तपो नवदशः" यजु०१४।२३ "तपोऽग्नो नवदशः स्तोमः यद्वा संवत्सरस्तपः शीतोष्णवर्षैस्तपतीति स नवदशः द्वादश मासाः षडृतवः संवत्सर इति तद्रूपोऽसि" वेददी०। "स एव नवदशस्तोमस्तदुपदधात्यथो संवत्सरोवाव तपो नवदशस्तस्य द्वादश मासाःषडृतवः संवत्सर एव तपो नवदशस्तद्यत्तमाह तपति तदेव तद्रूपम्" शत०ब्रा० ८।४।१।१४

**नवदशन्** त्रि० नवाधिका दश। (ऊनिश) १संख्यायां २तत्संख्यायुक्ते च। च अमरः।

**नवदल** न० कर्म०। १नवीने पत्रे पद्मकेशराग्निकस्थे २पत्रे

**नवदीधिति** पु० नव दीधितयेऽस्य। मङ्गलग्रहे जटा०।

**नवदुर्गा** स्त्री नवगुणिता दुर्गा कर्म० संज्ञात्वात् न द्विगुः। देवीनवके "प्रथमं शैलपुत्री च द्वितीयं ब्रह्मचारिणी। तृतीयं चन्द्रघण्टेति कुष्माण्डेति चतुर्थकम्। पञ्चमं स्कन्दमातेति षष्ठं कात्यायनीति च। सप्तमं कालरात्रिश्च महागौरीति चाष्टमम्। नवमं सिद्धिदा प्रोक्ता नव दुर्गाः प्रकीर्त्तिताः। उक्तान्येतानि नामानि ब्रह्मणैव महात्मना" ब्रह्मवै०पु०। "नवदुर्गे हराचिंते" दुर्गोत्सवपद्धतिः। "पवित्रे नवदुर्गे त्वं महादेवि! मनोरमे!" नन्दिकेश्वरपुरा०।

**नवदोला** स्त्री कर्म०। नवीनदोलायाम्। प्रथमं तदारोहण दिनादि समयप्रदीपे उक्तं यथा "उपेन्दुमखाह्वियिवाग्निवर्जं शस्तेन्दुताराति थिलग्नयोगे। विष्टित्यजापुत्र यमाह्ववर्जं दोलाधिकारोहणमाद्यमिष्टम्"।

**नवद्वार** न० नव द्वाराणीव चित्तवृत्त्यादेर्बहिर्गमनसाधनत्वात् यत्र। देहे तत्र नवभिर्द्वारैश्चित्तादेर्बहिर्गमनात्तस्य तथात्वम्। तथा हि द्वे श्रोत्रे द्वे चक्षुषी द्वे नासिके च मुखमेकमिति शीर्षस्थानि सप्त, द्वे पायूपस्थे अधःस्थे इति नवच्छिद्ररूपाणि द्वाराणि देहे सन्ति। "नवद्वारे पुरे देही हंसो लेलायते बहिः" श्वेताश्वो० ३।१८। "नवद्वारे शिरसि सप्त द्वाराणि द्वे अवाचो यस्य तत्र पुरे देही विज्ञानात्मा भूत्वा कार्यकारणोपाधिः सन् हंसः परमात्मा हन्त्यविद्यात्मकं कार्यमिति। लेलायते चलति बहिर्विषयग्रहणाय" भा०। देहरूपार्थां नवसंख्यकत्वात् रन्ध्रयुक्तस्य लक्षितलक्षणया नवसंख्याबोधकत्वम्।

**नवधा** अव्य० नवन्+प्रकारे धाच्। नवप्रकारे "तुष्टिर्नवधाऽष्टधा सिद्धिः" सा०का०। "नवधा गुणिता नित्या" शा०ति०

**नवधातु** पु० नवगुणिता धातवः। नवप्रकारे धातुभेदे "हेमतारारनागाश्च ताम्ररङ्गे च तीक्ष्णकम्। कांस्यकं कान्तलौहञ्च धातवो नव कीर्त्तिताः" शब्दार्थचि०।

**नवन्** त्रि० ब०व०। नु—कनिन् सा० गुणः। १संख्याभेदे (नय) संख्यायां २तद्युक्ते च।

**नवनवक** न० नवगुणितं नवकम्। दक्षसंहितोक्ते ज्ञातव्ये एकाशीतिपदार्थे "सुधा नव स्वकस्थस्य शुभान्येव नवैव तु। तथैव नवकर्माणि विकर्माणि तथा नव। प्रच्छन्नानि नवान्यानि प्रकाश्यानि तथा नव। सफलानि नवान्यानि निष्फलानि नवैव तु। अदेयानि नवान्यानि वस्तुजातानि सर्वदा। नवका नव निर्दिष्टा स्वक्स्योन्नतिकारकाः। सुधा वस्तूनि वक्ष्यामि विशिष्टे स्वहमागते। मनश्चक्षुर्मुखं वाचं सौम्यं दद्याच्चतुष्टयम्। अभ्युत्थानमिहागच्छ पृच्छालापप्रियान्वितः। उपासनमनुव्रज्या कार्याण्येतानि यत्नतः। ईषद्दानानि चान्यानि भूमिरापस्तृणानि च। पादशौचं तथाभ्यङ्ग आश्रयः शयनन्तथा। किञ्चिच्चान्नं यथाशक्ति नास्यानश्नन् स्वहे वसेत्। मृज्जलं चार्थिने देयमेतान्यपि सदा स्वहे। सन्ध्या स्नानं जपो होमः स्वाध्यायो देवतार्चनम्। वैश्वदेवं तथातिथ्यमुद्धृतञ्चापि शक्तितः। पितृदेवमनुष्याणां दीनानाथतपस्विनाम्। मातापितृगुरूणाञ्च संविभागो यथार्हतः। एतानि नव कर्माणि विकर्माणि तथा पुनः। अनृतं पारदार्यञ्च तथाऽभक्ष्यस्य भक्षणम्। अगम्यागमनापेयपानं स्तेयञ्च हिंसनम्। अश्रौतकर्माचरणं आर्त्तधर्मबहिष्कृतम्। नवैतानि विकर्माणि तानि सर्वाणि वर्जयेत्। आयुर्वित्तं स्वगृहच्छिद्रं मन्त्रमैथुनभेषजम्। तपोदानावमानौ च नव गोप्यानि यत्नतः। प्रायोम्यक्षणशुद्धिश्च दानाध्ययनविक्रयाः। कन्यादानं वृषोत्सर्गो रहःपापप्रकृत्तनम्। प्रकाश्यानि नवैतानि स्वगृहस्याश्रमिणस्तथा। माता-

पित्रोर्गुरौ मित्रे विनीते चोपकारिणि । दीनानाथविशिष्टेभ्यो दत्तन्तु सफलं भवेत् । धूर्त्ते वन्दिनि मल्ले च कुवैद्ये कितवे शठे । चाटुचारणचौरेभ्यो दत्तं भवति निष्फलम् । सामान्यं याचितं न्यास आधिर्दाराश्च तद्धनम् । क्रमायातञ्च निक्षेपः सर्वस्वञ्चान्वये सति । आपत्स्वपि न देयानि नव वस्तूनि सर्वदा । यो ददाति स मूढात्मा प्रायश्चित्तीयते नरः । नवनवकवेत्तारमनुष्ठानपरं नरम् । इह लोके परे च श्रीः स्वर्गस्थञ्च न मुञ्चति" ।

**नवनवति** स्त्री नवाधिका नवतिः । १एकोनशतसंख्यायां २तद्युते च ।

**नवनाडीचक्र** न० २८१६पृ० चक्रशब्दोक्ते चक्रभेदे ।

**नवनी** स्त्री नवं नीयते नी-ड गौरा० ङीष् । नवनीते "हैयङ्गवीनानां नवनीनां परतरं सदा । सद्भुकानां शर्कराणां स्वस्तिकानाञ्च यत्नतः" ब्रह्मवै०जन्मख० ४५ अ० ।

**नवनीत** न० नवं नीयते स्म नी-क्त । (माखन) पयःसारभेदे तद्गुणादि सुश्रुते "नवनीतं पुनः सद्यस्कं लघु सुकुमारं मधुरं कषायमीषदम्लं शीतलं मेध्यं दीपनं हृद्यं संग्राहि पित्तानिलहरं वृष्यमविदाहि क्षयकासव्रणशोषार्शोऽर्दितापहं गुरुकफमेदोविवर्द्धनं बलकरं वृंहणं शोषघ्नं विशेषतो बालानां प्रशस्यते । क्षीरोत्थं पुनर्नवनीतमुत्कृष्टस्नेहं माधुर्ययुक्तमतिशीतं सौकुमार्यकरं चक्षुष्यं संग्राहि रक्तपित्तनेत्ररोगहरं प्रसादनञ्च" ।

तत्र नवनीतस्य नामानि गुणाश्च भावप्र०उक्ता यथा "नवोद्धृतं सरजं हैयङ्गवीनं नवनीतकम् । नवनीतं हितं गव्यं वृष्यं वर्णबलाग्निकृत् । संग्राहि वातपित्तासृक्क्षयार्शोऽर्दितकासहृत् । तद्धितं बालके वृद्धे विशेषादमृतं शिशोः । माहिषस्य गुणाः "नवनीतं माहिषन्तु वातश्लेष्मकरं गुरु । दाहपित्तश्रमहरं मेदःशुक्रविवर्द्धनम्" । पयसो नवनीतस्य गुणाः "दुग्धोत्थं नवनीतं तु चक्षुष्यं रक्तपित्तनुत् । वृष्यं बल्यमतिस्निग्धं मधुरं ग्राहि शीतलम्" । सद्यः समुद्धृतनवनीतगुणाः "नवनीतन्तु सद्यस्कं स्वादु ग्राहि हिमं लघु । मेध्यं किञ्चित् कषायाम्लमीषत्तक्रांशसंक्रमात्" । चिरन्तननवनीतगुणाः "क्षारकट्वम्लत्वाच्छर्द्यर्शःकुष्ठकारकम् । श्लेष्मलं गुरु मेदस्यं नवनीतं चिरन्तनम्" ।

राजनि० छाग्यादिनवनीतगुणा उक्ता यथा "छागन्तु नवनीतं स्यात् क्षयकासादिरोगहृत् । कफनाशि च बल्यञ्च दीपनं परिकीर्त्तितम् । आविकं नवनीतन्तु हिमं लघु समीरितम् । योनिशूले कफे वाते गुदशूले हितञ्च तत् । ऐडकं नवनीतन्तु क्लिष्टगन्धं सुशीतलम् । पुष्टिस्थौल्यकरं मेधाविनाशि गुरु सम्मतम् । मन्दाग्निदीपनं तत्तु भिषग्भिः परिकीर्त्तितम्" । हस्तिनीनवनीतन्तु कषायं शीतलं लघु । तिक्तं विष्टम्भि तत् हन्ति जन्तुपित्तकफक्रमीन् । घोटकीनवनीतन्तु कषायं कफवातहृत् । चक्षुष्यमुष्णकटुकमीषद्वातापहारकम् । गर्दभीनवनीतञ्च कषायं कफवातहृत् । पाके लघु दीपनञ्च बल्यं मूत्रस्य दोषहृत् । औष्ट्रं तु नवनीतं च पाके शीतं प्रकीर्त्तितम् । व्रणक्रिमिकफार्त्तीनां वातस्य च विनाशनम् । मानवीनवनीतञ्च पाके लघु रुचिप्रदम् । चक्षुष्यं दीपनं ज्ञेयं सर्वरोगविनाशनम्" । "शीतं वर्ण्यं नवोद्धृतं सुमधुरं श्लक्ष्णञ्च वातापहं कासघ्नं क्रमिनाशनं कफहरं संग्राहि शूलापहम् । बल्यं पुष्टिकरं तृषार्त्तिशमनं सन्तापविच्छेदनम् चक्षुष्यं श्रमहारि तर्पणकरं दध्युद्भवं पित्तजित्" ।

**नवनीतक** न० नवनीतात् जायते वा० वुन् । १घृते राजनि० स्वार्थे क । २नवनीते नवनीतशब्दे उदा० दृश्यम् ।

**नवनीतधेनु** स्त्री दानार्थकल्पितायां नवनीतमय्यां धेन्वां तद्दानविधिः वराहपु० उक्तो यथा

"नवनीतमयीं धेनुं शृणु राजन् प्रयत्नतः । यां श्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः । गोमयेनानुलिप्तायां भूमौ गोचर्ममात्रतः । कृष्णचर्म तृणञ्चैव तस्योपरि च धारयेत् । कुम्भन्तु नवनीतस्य प्रस्थमात्रस्य धारयेत् । वत्सं चतुर्थभागस्य तस्या उत्तरतो न्यसेत् । कृत्वा विधानेन च राजसिंह ! सुवर्णशृङ्गी सुमुखी च कार्या । नेत्रे च तस्या मणिमौक्तिकैस्तु कृत्वा तथास्यञ्च गुडेन जिह्वाम् । ओष्ठौ च पुष्पैश्च फलैश्च दन्ताः प्रकल्प्य सास्नाञ्च सितैश्च सूत्रैः । नवनीतस्तनीं राजन्निक्षुपादां प्रकल्पयेत् । ताम्रपृष्ठीं कांस्यदोहां दर्भरोमवतीं शुभाम् । स्वर्णशृङ्गीं रौप्यखुरां पञ्चरत्नसमन्विताम् । चतुर्भिस्तिलपात्रैस्तु संयुतां सर्वतोदिशम् । आच्छाद्य वस्त्रयुग्मेन गन्धपुष्पैरलङ्कृताम् । दिक्षु दीपांश्च प्रज्वाल्य ब्राह्मणाय निवेदयेत् । वेदवेदाङ्गविदुषे आहिताग्निजितात्मने । मन्त्रास्त एव जप्तव्याः सर्वधेनुषु ये स्मृताः । पुरा देवासुरैः सर्वैः सागरस्य तु मन्थने । उत्पन्नं दिव्यममृतं नवनीतमिदं शुभम् । आप्यायनञ्च भूतानां नवनीत !

नमोऽस्तु ते। एवमुच्चार्य्य तां दद्याद्ब्राह्मणाय कुटुम्बिने। धेनुञ्च दत्त्वा सुसदा सोपधानां नयेद्गृहान्तम् विप्रवर्य्यस्य भूयः। हविष्यमेवं परमन्नोपभुक्त्वा तिष्ठेच्च्यहं धेनुदस्तत्र विप्रः। यः प्रपश्यति तां धेनुं दीयमानां नरोत्तम!। सर्वपापविनिर्मुक्तः शिवसायुज्यतां व्रजेत्। पितृभिः पूर्वजैः सार्द्धं भविष्यद्भिश्च मानवः। विष्णुलोकं व्रजत्याशु यावदाहूतसंप्लवम्। य इदं शृणुयाद्भक्त्या श्रावयेद्वापि मानवः। सर्वपापविशुद्धात्मा विष्णुलोके महीयते"।

**नवपञ्चम** पु० नव च नवमं च पञ्चमञ्च यत्र योगे। वरकन्ययोः विवाहाङ्गे राशिकूटभेदे। वरराशेः कन्याराश्यपेक्षया कन्याराशेश्च वरराश्यपेक्षया नवमत्वे पञ्चमत्वे वाऽयं योगः। उपयमशब्दे १२५१पृ० दृश्यम्। "पाणिग्रहोयदि भवेन्नवपञ्चमर्क्षे सन्तानहानिमसुखां सुतयो वदन्ति" ज्योति०त०।

**नवपत्रिका** स्त्री नवमिता पत्रिका। नवसु कदल्यादिषु "कदली दाडिमी धान्यं हरिद्रा मानकं कचुः। बिल्वाशोकौ जयन्ती च विज्ञेया नवपत्रिकाः" दुर्गोत्सवपूजापद्धतिः। तत्प्रवेशः ति०त० निर्णीतो यथा ज्योतिषे "पूर्वाह्णे नवपत्रिका शुभकरी सर्वार्थसिद्धिप्रदा आरोग्यं धनदा करोति विजयं चण्डी प्रवेशे शुभा। मध्याह्ने जनपीडनक्षयकरी संग्रामघोरावहा सायाह्ने वधबन्धनादिकलहं सर्वक्षतं सर्वदा। सम्प्राप्यास्तमितां यदि विशति गृहं पत्रिका श्रीफलाढ्या राज्ञः सप्ताङ्गराज्यं जनसुखमखिलं हन्ति भूतानुरोधात्। तस्मात् सूर्य्योदयस्थां नरपतिशुभदां सप्तमीं प्राप्य देवीम् भूपालो वेशयेत्तां सकलजनहितां रात्रिसर्गं विहाय"। रात्रिसर्गं मूला। "पत्रीप्रवेशनं रात्रौ विसर्गं वा करोति यः। तस्य राज्यविनाशः स्याद्राज्ञाऽऽयविकलो भवेत्"।

**नवपद** न० मात्रावृत्तवृत्तभेदे "प्रथममुपनयरामकलक्षितय कङ्गिणेन सह दण्डमिति पदानि विषमाणि सच्चितु। समपदे च षट्पञ्चसप्तषष्टिकलमेतदातनु एवं पञ्चपदानि कुरु दोहासम्ये देहि। भुजगराजपिङ्गलभणित नवपदमेतद्वेहि"।

**नवपाठक** पु० पूर्वकालैकेति पा० कर्म० उभयोरपि विशेषणत्वेऽपि एकस्य विशेष्यत्वे प्राप्ते पाठकस्यैव विशेष्यत्वनियमेन परनिपातः। नवीनाध्यापके सि०कौ०।

**नवप्राशन** न० नवस्य नवान्नस्य प्राशनम्। नवान्नभोजने पारस्करगृह्यम् नवान्नशब्दे दृश्यम्।

**नवफलिका** स्त्री नवं फलं यस्याः कप् कापि अत इत्वम्। १दृष्टरजस्कायां नार्य्यां २नव्यमात्रे च मेदि०।

**नवव(ब)धू** स्त्री कर्म०। नूतनपरिणीतायां स्त्रियां तस्याः पितृगृहात् भर्त्तृगृहगमनं नववध्वागमनं तत्र विहित नक्षत्रादि ज्यो०त० उक्तं यथा

दीपिकायां "सौम्यध्रुवाश्विघटाजसंयुग्मरवौ काले विशुद्धे भृगुं संत्यज्य प्रतिलोमगं शुभदिने यात्राप्रवेशोचिते। लग्नाद्वस्तु निरंशकं नववधूयात्राप्रवेशौ पतिः कुर्य्यादैकपुरादिषु प्रतिभृगोर्नैव हन्ति दोषं बुधाः। वैवाहे कुचकुम्भयोः सम्भवो वा यदि स्यात् कालः शुद्धो न भवति यदा सम्मुखो वापि शुक्रः। मेषे कुम्भेऽलिनि च न भवेत् भास्करश्चेत्तथापि स्वामी भद्रेऽहनि नववधूं वेशयेन्मन्दिरं स्वम्। भर्तुर्गोचरशोभने दिनपतौ नास्तं गते भार्गवे सूर्य्ये कीटघटाजगे शुभदिने पक्षे च कृष्णेतरे। हित्वा च प्रतिलोमगौ बुधसितौ जीवस्य शुद्धौ तथा चानीता गुणशालिनी नववधूर्नित्योत्सवा मोदते। एकग्रामे चतुःशाले दुर्भिक्षे राष्ट्रविप्लवे। पतिना नीयमानायाः पुरः शुक्रो न दुष्यति"। तथा "काश्यपेषु वशिष्ठेषु भग्वादित्वाङ्गिरःसु च। भरद्वाजेषु वात्स्येषु प्रतिशुक्रो न दोषभाक्"। द्विरागमनशब्देऽधिकं दृश्यम्। अत्र विशेषः मु० पी० धा० उक्तो यथा

"समाद्रिपञ्चाङ्कदिने विवाहाद्वधूप्रवेशोऽष्टिदिनान्तराले। शुभः परस्ताद्विषमाब्दमासदिनेऽक्षवर्षात्परतो यथेष्टम्"। "ध्रुवक्षिप्रमृदुश्रोत्रवसुमूलमघानिले। वधूप्रवेशः सन्नेष्टो रिक्तारार्के बुधे परैः" मु० चि०।

"तत्र वधूप्रवेशोनाम नूतनपरिणीतायाः कन्यायाः प्रथमतः क्रियमाणो भर्तृगृहप्रवेशो वधूप्रवेशशब्दवाच्यः। समाद्रीति विवाहाद्विवाहदिवसादारभ्याष्टिदिनानि षोडशदिनानि तेषामन्तराले समाद्रिपञ्चाङ्कदिने समदिनानि द्वितीयचतुर्थषष्ठाष्टमदशमद्वादशचतुर्दशषोडशसंख्यकानि विषममध्ये सप्तमपञ्चमनवमदिनानि तेषु वधूप्रवेशः वध्वा नूतनपरिणीतायाः कन्याया भर्तृगृहप्रवेशः शुभः शुभफलप्रदः। यदाह नारदः "आरभ्योद्वाहदिवसात् षष्ठे वाप्यष्टमे दिने। वधूप्रवेशः सम्पत्त्यै दशमेऽथ समे दिने"। षष्ठादीनां समत्वादेव ग्रहणे पुनरुक्तिरतिप्राशस्त्यसूचनार्थम्। ज्योतिर्निबन्धे तु विशेषः "वधूप्रवेशनं कार्य्यं

पञ्चमे सप्तमे दिने। नवमे च शुभे वारे सुलग्ने शशिनोबले” इति। परस्तात् प्रतिबन्धकवशात् षोडशदिनाभ्यन्तरे यदि वधूप्रवेशो न जातस्तदा तदनन्तरं विषमाब्दमासदिने विषमवर्षे प्रथमतृतीयपञ्चमवर्षे विषममासे विवाहमासात् प्रथमतृतीयपञ्चमसप्तमनवमैकादशमासेषु विषमदिनानि सप्तदशादीनि तेषु वधूप्रवेशः शुभः। तत्रापि यदि प्रतिबन्धकवशात्कालातिक्रमः पञ्चवर्षात्मको जातस्तदा पञ्चवर्षादनन्तरं यथेष्टं वर्षादिनियमो नास्ति किन्तु दोषरहिते काले वधूप्रवेशो विधेयः। तदुक्तं संग्रहे “विवाहमारभ्य वधूप्रवेशो युग्मे दिने षोडशवासरान्तः। ऊर्द्ध्वं ततोऽब्देऽयुजि पञ्चमान्तं पुनः परस्तान्नियमो न चास्ति”। अत्राब्देऽयुजीति पदच्छेदो द्रष्टव्यः। तदुक्तं विवाहपटले “वधूप्रवेशः प्रथमेऽत्र वर्षे तथा तृतीयेऽप्यथ पञ्चमे वा। सूर्य्येन्दुदेवेज्यबलेन कुर्य्यात् पुंसो सुनिर्णीतम आह सत्यमिति”। समवर्षे दोषस्मरणाच्च यदाह धर्मशास्त्रे नारदः “समे वर्षे समे मासे यदि नारीस्वहं व्रजेत्। आयुष्यं हरते भर्त्तुः सा नारी मरणं व्रजेदिति”। युग्मवत्सरनिषेधः पञ्चवर्षात् प्राग्ज्ञेयो न पश्चात्तदावाक्यस्य प्रागभिधानात्। अथ वधूप्रवेशे नक्षत्रादि ध्रुवेति। ध्रुवाणि रोहिण्युत्तरात्रयं च क्षिप्राणि अश्विनीपुष्यहस्ताः मृदूनि चित्रानुराधारेवती मृगः। श्रोत्रं श्रवणः वसुर्धनिष्ठा मूलं प्रसिद्धम्। अनिलः स्वाती एषु भेषु वधूप्रवेशः सन् शुभफलदः। रिक्तादिषु नेष्टः न शुभः अर्थात् रिक्तान्यासु तिथिषु अर्काराभ्यामन्यवारेषु च वधूप्रवेशः प्रशस्त इत्यर्थः। उक्तञ्च व्यवहारतत्त्वे “पौष्णात् कभाच्च श्रवणाच्च युग्मे हस्तत्रये मूलमघोत्तरासु। पुष्ये च मैत्रे च वधूप्रवेशो रिक्तेतरे व्यर्कवुजे च शस्तः” इति। कभं रोहिणी। बुधे परैरिति अन्यैः शिष्टैर्बुधवारे वधूप्रवेशो नेष्यते। कस्मिंश्चिद्देशे शिष्टाचारो यद्बुधवारे वधूप्रवेशो न विधीयते इति। केचिदत्र हेतुमपि वर्णयन्ति यद्बुधो नपुंसक इति तच्चिन्त्यं शनेरपि नपुंसकत्वात्तत्रापि निषेधो वाच्यः स्यात्” पी० धा०। विवाहानन्तरं केषु चिन्मासेषु प्रथमं भर्त्रादिगृहे निवासे फलम् तत्रैवोक्तं यथा

“ज्यैष्ठे पतिज्येष्ठमथाधिके पतिं हन्त्यादिमे भर्त्तृगृहे वधूः शुचौ। श्वश्रूं सहस्ये श्वशुरं क्षये तनुं तातं मधौ तातगृहे विवाहतः” मु० चि०।

“विवाहतो विवाहादनन्तरं भर्त्तृगृहे स्थिता आदिमे प्रथमे ज्यैष्ठे मासि तिष्ठन्ती वधूः पतिज्येष्ठं भर्त्तृज्येष्ठभ्रातरं हन्ति। एवमादिमेऽधिके मासि स्थिता वधूः पतिं भर्त्तारं हन्ति। आदिमे शुचावाषाढ़े श्वश्रूं भर्त्तुः जननीं हन्ति। आदिमे पौषे श्वशुरं भर्त्तुः पितरं हन्ति आदिमे क्षये क्षयमासे भर्त्तृगृहे तिष्ठन्ती तनुं निजशरीरं हन्ति म्रियत इत्यर्थः। तथादिमे मधौ चैत्रे तातगृहे पितृगृहे तिष्ठन्ती तातं पितरं हन्तीत्यर्थः। यदि कन्यायाः पित्राद्यभावस्तदा तत्तन्मासे तत्तद्गेहावस्थितौ सत्यामपि न कोऽपि दोष इत्यर्थः। उक्तञ्च मुहूर्त्तमार्त्तण्डे “उद्वाहात् प्रथमे शुचौ यदि वसेत् भर्त्तुर्गृहे कन्यका हन्यात्तज्जननीं क्षये निजतनुं ज्यैष्ठे पतिज्येष्ठकम्। पौषे च श्वशुरं पतिं च मलिने चैत्रे च पित्रालये तिष्ठन्ती पितरं निहन्ति न भयं तेषामभावे भवेदिति”। मलिनेऽधिकमासे तत्राप्यवबध्वा विवाहानन्तरं ज्यैष्ठाषाढ़पौषाधिकमासक्षयमासेषु भर्त्तृगृहे न स्थातव्यम्। चैत्रे मासि पितृगृहे न स्थातव्यं किन्तु भर्त्तृगृहे एव स्थातव्यमिति फलितोऽर्थः। तदुक्तं ज्योतिर्निबन्धे “विवाहात् प्रथमे पौषे आषाढ़े चाधिमासके। न सा भर्त्तृगृहे तिष्ठेच्चैत्रे पितृगृहे तथा”। आषाढो ज्यैष्ठोपलक्षकः। अधिमासः क्षयमासोपलक्षकः अत्र प्रमाणं प्रागुक्तमिति” पी० धा०।

**नवभाग** पु० राशेर्नवमो भागः। १त्रिंशांशकात्मकस्य राशेः नवमे भागे ३।२० विंशतिकलाधिकभागत्रयरूपे भागे नवांशशब्दे विवृतिः। २नवमे भागमात्रे च।

**नवम** त्रि० नवानां पूरणः नान्तत्वात् डटि मः। नवसंख्यापूरणे। १लग्नावधिनवमराशौ २तद्भावे च तद्भावश्च तन्वादिद्वादशभावोक्तदिशावसेयः। स्त्रियां ङीप्। “नवमी तुहिनप्रभा” पताकासन्निवेशे कुम्भोद्योतः। “अर्यम्णो नवमी” “पुष्णो नवमी” यजु० २५।४।५ नवमी पश्चतिरर्यमदेवत्या पूषदेवत्या च तदर्थः। चन्द्रस्य यस्मिन् सूर्यकिरणप्रवेशयोग्यायां नवमकलाक्रियारूपायां तदुपलक्षितकालरूपायां वा ४तिथौ। उभयदिने तत्प्राप्तौ कस्याः कर्मयोग्यतेति सन्देहे तन्निर्णय उक्तः कालमा० यथा

“अथ नवमी निर्णीयते। सा च विधिनिषेधरूपाभ्यामन्वयव्यतिरेकाभ्यां पूर्वविद्धैव ग्राह्या। तत्र विधिस्तु युग्मादिवाक्ये “वस्वरन्ध्रयोरिति” पठ्यते। पद्मपुराणेऽपि “अष्टम्या नवमी विद्धा नवम्या चाष्टमी युता। अर्द्ध-

नारीश्वरप्राया उमामाहेश्वरी तिथिः"। भविष्यत्पुराणे द्वादशीकल्पेऽपि "नवम्या सह कार्य्या स्यादष्टमी नवमी तथेति"। निषेधस्तु पद्मपुराणेऽभिहितः "न कार्य्या नवमी तात ! दशम्या तु कदाचनेति"। सेयं नवमी भविष्यत्पुराणोक्तव्रतादौ द्रष्टव्या। "ननु कृष्णनवम्याः पूर्वविद्धत्वेऽपि शुक्लनवमी परविद्धाऽस्तु। "शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविरिति" वचनात् नैवम् पूर्वोक्तेषु वचनेषु दशमीविद्धायाः सामान्येन निषेधात्। ननु तस्य निषेधस्य सामान्यरूपत्वात् कृष्णपक्षे सङ्कोचोऽस्त्विति चेत् न सङ्कोचहेतोर्भवतोदाहृतस्यापि सामान्यरूपत्वात्। पक्षयोरुभयोरपि पूर्वविद्धैव ग्राह्या। रामनवमी तु "चैत्रशुद्धा तु नवमी पुनर्वसुयुता यदि। सैव मध्याह्नयोगेन महापुण्यतमा भवेत्। नवमी चाष्टमीविद्धा त्याज्या विष्णुपरायणैः। उपोषणं नवम्यां वै दशम्यां पारणं भवेदिति" वचनाद्दशमीविद्धा नक्षत्रालाभेऽपि नोपोष्या" इति भेदः। "या चाष्टमीयुता ग्राह्या शुक्लात्। भविष्ये "माषैर्वल्लभिर्यत्तु पुष्पं विधिनाऽऽपूज्य चण्डिकाम्। तत्फलं लभते वीर ! नवम्यां कार्त्तिकस्य च। तथा "नवम्यां नव वर्षाणि राजन् पिष्टाशनो भवेत्। तस्य तुष्टा भवेद्गौरी सर्वकामप्रदा शुभा" "माघे मासि तु या शुक्ला नवमी लोकपूजिता। महानन्देति सा प्रोक्ता सदानन्दकरी नृणाम्। स्नानं दानं तपो होमो देवार्चनमुपोषणम्। सर्वं तदक्षयं याति यदस्यां क्रियते नरैः" ति० त०।

**नवमल्लिका** स्त्री नवा स्तुत्या मल्लिका कर्म०। नवमालिकायाम् पुष्पप्रधाने वृक्षभेदे (नोयालि) शब्दरत्ना० तस्याः पुष्पेऽपि "पुष्पे जातिप्रभृतयः स्वलिङ्गाः" इत्युक्तेः स्त्रीत्वम्। "उपययौ विदधन्नवमल्लिकाः" माघः नवमल्लीत्यप्यत्र

**नवमालिका** स्त्री नवा स्तुत्या मालिका। (नेयालि) ख्याते १नवमल्लिकावृक्षे अमरः। "वासन्ती" नेवारी इति लोके तन्नाम। तद्गुणाः "नेपाली कथिता तज्ज्ञैः सप्तला नवमालिका। वासन्ती शीतला लघ्वी तिक्ता दोषत्रयाजित्" भावप्र०। २द्वादशाक्षरपादके छन्दोभेदे च "इह नवमालिका नजभयैः स्यात्" वृ०र०।

**नवयज्ञ** पु० नवधान्यनिमित्तो यज्ञः। नवान्ननिमित्ते यज्ञे आग्रायणशब्दे ६२२पृ० दृश्यम् "शरदवसन्तयोः केचिन्नवयज्ञं प्रचक्षते। धान्यपाकवशादन्ये श्यामाको वनिनः स्मृतः" कर्मप्रदीपे कात्या०। वनिनः वानप्रस्थस्य।

**नवयोनिन्यास** पु० तन्त्रसारे निबन्धोक्ते न्यासभेदे "नवयोन्यात्मकं न्यासं कुर्य्यादेभिस्त्रिभिः क्रमात्। कर्णयोश्चिबुके भूयो गण्डयोर्वदने पुनः। नेत्रयोर्नसि विन्यसेदंसयोर्जठरे पुनः। ततः कूर्परयोः कुक्षौ जानुनोर्लिङ्गमूर्द्धनि। पादयोर्गुह्यदेशे च पार्श्वयोर्हृदयाम्बुजे। स्तनयोः कण्ठदेशे च त्रीणि बीजानि विन्यसेत्"।

**नवयौवन** न० नवं यौवनम्। १अभिनवे यौवने "नवयौवनसम्पन्नां सर्वाभरणभूषिताम्" दुर्गाध्यानम्। नवं यौवनं यस्याः। २अभिनवयौवनवत्यां स्त्रियां स्त्री टाप्।

**नवरत्न** न० नवगुणितं रत्नम्। नवविधे माणिक्यादिरत्ने तानि च कर्मभेदे भिन्नानि यथा "मुक्तामाणिक्यवैदूर्य्यगोमेदान् वज्रविद्रुमौ। पद्मरागं मरकतं नीलञ्चेति यथाक्रमम्" इति तन्त्रसारः। नवग्रहदोषशान्त्यै धार्य्याणि नव रत्नानि यथा "वैदूर्यं धारयेत् सूर्ये स्फटिकं शशलाञ्छने। आवनेयेऽपि माणिक्यं पद्मरागं सुधाङ्गजे। गुरौ मुक्तां भृगौ वज्रं शनौ नीलं विदुर्बुधाः। राहौ गोमेदकं धार्यं केतौ मरकतन्तथा।" दीपिका। २विक्रमादित्यराजसभास्थनवसंख्यकपण्डिते च यथा "धन्वन्तरिक्षपणकामरसिंहशङ्कुवेतालभट्टघटकर्परकालिदासाः। ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य" ज्योतिर्विदा०।

**नवरस** पु० नवगुणितो रसः। अलङ्कारोक्ते शृङ्गारादिके रत्यादिस्थायिभावके नवविधे रसे "रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा। जुगुप्सा विस्मयश्चेत्यष्टौ प्रोक्ताः शमोऽपि च" स्थायिभावास्तूक्ता "शृङ्गारहास्यकरुणरौद्रवीरभयानकाः। बीभत्सोऽद्भुत इत्यष्टौ रसाः शान्तस्तथा मतः" सा०द०। पृथक्करणम् "अष्टौ नाट्ये रसाः स्मृताः" इत्युक्तेः नाट्ये अष्टविधत्वम् "निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमोरसः" इत्युक्तेः काव्ये नवविधत्वमिति सूचनाय। प्रबोधचन्द्रोदयनाटके शान्तरसवर्णनं भारतादिग्रन्थविरुद्धम्। "नवरसरुचिरा भारती कवेर्जयति" काव्यप्र०।

**नवरात्र** न० नवभिः रात्रिभिर्निर्वृत्तं तद्धितार्थे द्विगुः "द्विगोर्लुगनपत्ये" तद्धितस्य ठञो लुक् अच्समा०। नवभी रात्रिभिस्तदुपलक्षितैर्दिनैर्वा निर्वृत्ते यागादौ "नवरात्रावतारः" कात्या०श्रौ० ४।३।१४ "नवरात्रे त्रिककुत्काः" कात्या०श्रौ० २५।१३। नवरात्रसाध्ये २व्रतभेदे तद्विधानकालनिर्णयादि ति० ति० उक्तं यथा

"अथाश्विनशुक्लप्रतिपदि नवरात्रारम्भः। तन्निर्णयः भार्गवार्चनदीपिकायां देवीपुराणे सुमेधा उवाच "शृणु राजन्! प्रवक्ष्यामि चण्डिकापूजनक्रमम्। आश्विनस्य सिते पक्षे प्रतिपत्सुशुभे दिने" इत्युपक्रम्योक्तम्। "शुद्धे तिथौ प्रकर्त्तव्यं प्रतिपच्चोर्द्ध्वगामिनी। आद्यास्तु नाडिकास्त्यक्त्वा षोडश द्वादशापि वा। अपराह्णे च कर्त्तव्यं शुभसन्ततिकाङ्क्षिभिः"। इदं चापराह्णयोगिन्याः प्राशस्त्यं द्वितीयदिने प्रतिपदोऽभावे ज्ञेयम्। तथा च तत्रैव देवीपुराणे डामरतन्त्रे च देवीवचः "अमायुक्ता न कर्त्तव्या प्रतिपत् पूजने मम। मुहूर्त्तमात्रा कर्त्तव्या द्वितीयादिगुणान्विता। आद्याः षोडश नाडीस्तु लब्ध्वा यः कुरुते नरः। कलशस्थापने तत्र ह्यरिष्टं जायते ध्रुवम्"। मार्कण्डेयदेवीपुराणयोः "पूर्वविद्धा तु या शुक्ला भवेत् प्रतिपदाश्विनी। नवरात्रव्रतं तस्यां न कार्यं शुभमिच्छता। देशभङ्गो भवेत्तत्र दुर्भिक्षं चोपजायते। नन्दायां दर्शयुक्तायां यत्र स्यान्मम पूजनमिति"। स्कान्देऽपि "प्रतिपद्याश्विने मासि या शुक्ला शुभदा भवेत्। आद्यपक्षद्वयीलभ्या तथा युक्ता न शस्यते। विरुद्धफलदा सा हि पुत्रदारभयावहेति"। तथा "वर्जनीया प्रयत्नेन अमायुक्ता तु पार्थिव!। द्वितीयादिगुणैर्युक्ता प्रतिपत् सर्वकामदा"। तथा देवीपुराणे "यो मां पूजयते नित्यं द्वितीयादिगुणान्विताम्। प्रतिपच्छारदीं प्राप्य सोऽश्नुते सुखमव्ययम्। क्रियते चेदमायुक्ता प्रतिपत् स्थापने मम। तस्य पापायुतं दत्त्वा भक्षणेनं करोम्यहम्। अपहात् कुरुते यस्तु कलशस्थापनं मम। तस्य सम्पद्विनाशः स्याच्छत्रोः पुत्रो विनश्यति। अमायुक्ता न कर्त्तव्या प्रतिपच्चण्डिकार्चने। धनार्थिभिर्विशेषेण वंशहानिश्च जायते। न दर्शकलया युक्ता प्रतिपच्चण्डिकार्चने। उदये द्विमुहूर्त्तापि ग्राह्या सोदयगामिनी" इति देवीपुराणे "या चाश्वयुजि मासि स्यात् प्रतिपद्भद्रयान्विता। शुद्धा समार्चनं तस्यां शतयज्ञफलप्रदम्"। रुद्रयामले "अमायुक्ता सदा चैव प्रतिपन्निन्दिता मता। तत्र चेत् स्थापयेत्कुम्भं दुर्भिक्षं जायते ध्रुवम्। प्रतिपत् सद्वितीया तु कुम्भारोपणकर्म्मणि" इति। यद्यपि रुद्रयामलं डामरं च निर्मूलं तथाप्यविरोधात् प्रचाराच्च तद्वचनानि लिख्यन्ते। तिथितत्त्वे देवीपुराणेऽपि "प्रातरावाहयेद्देवीं प्रातरेव प्रवेशयेत्। प्रातःप्रातश्च संपूज्य प्रातरेव विसर्जयेत्"। तत्रैव "शरत्काले महापूजा क्रियते या च वार्षिकी। सा कार्य्योदयगामिन्यां न तत्र तिथियुग्मता"। तथा "कुहूकाष्ठोपसंयुक्तां वर्जयेत् प्रतिपत्तिथिम्। राज्यनाशाय सा प्रोक्ता निन्दिता चाश्वपूजने" इति। एषु वचनेषु कलशस्थापनग्रहणात् तदेव प्रथमदिने निषिद्धं न तूपवासादि तस्य "प्रतिपदाद्यमावास्येति युग्मवाक्यात्। "शुक्ला स्यात् प्रतिपत्तिथिः प्रथमतः" इति दीपिकोक्तेः "शुक्लपक्षे दर्शविद्धेति" माधवोक्तेश्च पूर्वदिने प्राप्तस्य बाधे मानाभावादिति केचित्। वस्तुतस्तु पूर्वोक्तवाक्येषु चण्डिकार्चनपूजाग्रहणादुपवासादेश्चाङ्गत्वात् प्रधानदेवीपूजादावपि परेति युक्तम्। कलशस्थापनग्रहणं तूपलक्षणम्। अतएव देवलः "व्रतोपवासनियमे घटिकैकापि या भवेत्। सा तिथिस्तद्दिने पूज्या विपरीता तु पैतृके" इति। अत्र घटिका मुहूर्त्त इति गौडाः। यदा तु पूर्वदिने सम्पूर्णा शुद्धा च भूत्वा परदिने वर्द्धते तदा सम्पूर्णत्वाद्दर्शयोगाभावाच्च पूर्वैव यानि च द्वितीयायोगनिषेधकानि वचनानि केचित् पठन्ति तान्यपि शुद्धाधिकनिषेधपराणि परदिने प्रतिपदोऽत्यन्ताभावे तु दर्शयुतापि पूर्वैव ग्राह्या तदाह लल्लः "तिथिः शरीरं तिथिरेव कारणं तिथिः प्रमाणं तिथिरेव साधनमिति" यानि त्वमायुक्ता प्रकर्त्तव्येत्यादीनि नृसिंहप्रसादे वचनानि तानि समूलत्वे सत्येतद्विषयाणि। अत्रेदं तत्त्वम्। पूर्वोक्तवाक्यानां सर्वेषां हेमाद्र्याद्यलिखितत्वेन निर्मूलत्वात्तैर्वाक्यनिर्णयस्यानुक्तेः सामान्यनिर्णयात् पूर्वस्याप्राप्तावपि गौडनिबन्धेषु विशेषेण निर्णयादौदयिकी ग्राह्या तत्रापि घटिकैकेत्यस्य द्विमुहूर्त्तस्तुतित्वोक्तेर्द्विमुहूर्त्ता ग्राह्या "उदिते दैवतं भानौ" इत्यत्र "द्विमुहूर्त्ता त्रिरह्नश्चेति" चौदयिक्या द्विमुहूर्त्तत्वनियमात् तेन उदये द्विमुहूर्त्तापीत्याद्युदाहारोऽपि "मुहूर्त्तमात्रा कर्त्तव्येति" द्विमुहूर्त्तस्तुतिः। अन्यथा द्विमुहूर्त्तविधिर्वैयर्थ्यात्। केचित्तु मुहूर्त्तमात्रेति वचनात्ततो न्यूनत्वे परा नेत्याहुः गौडा अप्येवम्। अत्र देवीपूजैव प्रधानम् उपवासादि त्वङ्गम् "अष्टम्यां च नवम्यां च जगन्मातरमम्बिकाम्। पूजयित्वाश्विने मासि विशोको जायते नरः" इति हेमाद्रौ भविष्ये तस्या एव फलसम्बन्धात् "नवमीतिथिपर्य्यन्तं वृद्ध्या पूजाजपादिकमिति" तत्रैव देवीपुराणात्। "शरत्काले महापूजा क्रियते या च वार्षिकी" इति मार्कण्डेयपुरा-

यात्र पूर्ववचनादष्टमीपूजैव प्रधानमन्यत् सर्वमङ्गमिति गौड़ाः। एकाङ्पक्षोऽपि कालिकापुराणे "यस्त्वेकस्यामथाष्टम्यां नवम्यामथ साधकः। पूजयेद्वरदां देवीं महाविभवविस्तरैः" इति। तत्त्वं तु राजसूयेऽश्वमेधे सम-प्रधानायाः सहितायाः अप्येकैकरैतयाद्याद्याकामं आजयेदित्येकत्वान्मध्ये विधानाद्व यथा फलार्थोबहिः प्रयोगस्तथा नवरात्रमध्यस्थाया अष्टम्या नवम्या वा फलार्थः पृथक्प्रयोगः। रूपनारायणधृतदेवीपुराणे "महानवम्यां पूजेयं सर्वकामप्रदायिका। सर्वेषु सर्ववर्णेषु तव भक्त्या प्रकीर्त्तिता। कृत्वाप्नोति यशो राज्यं पुत्रायुर्धनसम्पदः"। सा च काम्या नित्या च "एवमन्यैरपि तथा देव्याः कार्यं प्रपूजनम्। विभूतिमतुलां लब्ध्वं चतुर्वर्गप्रदायकम्" इति "यो मोहादथ वाऽऽलस्याद्देवीं दुर्गां महोत्सवे। न पूजयति दम्भाद्वा द्वेषाद्वाप्यथ भैरव!। क्रुद्धा भगवती तस्य कामानिष्टान्निहन्ति वै" इति कालिकापुराणेऽकरणे निन्दाश्रुतेः "वर्षे वर्षे विधातव्यं स्थापनञ्च विसर्जनम्" इति तिथितत्त्वे देवीपुराणाच्च। अत्रोपवासादिकमुक्तं हेमाद्रौ भविष्ये "एवं च विन्ध्यवासिन्या नवरात्रोपवासतः। एकभक्तेन नक्तेन तथैवायाचितेन च। पूजनीया जनैर्देवी स्थाने स्थाने पुरे पुरे। गृहे गृहे शक्तिपरैर्ग्रामेग्रामे वने वने। स्नातैः प्रहृष्टैर्हृष्टैश्च ब्राह्मणैः क्षत्रियैर्नृपैः। वैश्यैः शूद्रैर्भक्तियुक्तैर्म्लेच्छैरन्यैश्च मानवैः" इति यत्तु रूपनारायणीये भविष्ये "एवं नानाम्लेच्छगणैः पूज्यते सर्वदस्युभिरिति" तत्तामसपूजापरम्। "विना मन्त्रैस्तामसी स्यात् किरातानान्तु सम्मतेति" तत्रैवोक्तेः। मदनरत्ने देवीपुराणेऽपि "कन्यासंस्थे रवौ शक्र! शुक्लामारभ्य नन्दिकाम्। अयाची ह्यथ वैकाशी नक्ताशी वाथ वायुभुक्। प्रभौ शयीत चाम्भाञ्च कुमारीर्भोजयेन्मुदा। वस्त्रालङ्कारदानैश्च सन्तोष्याः प्रतिवासरम्। बलिञ्च मत्यकं दद्यादोदनं मांसमाषवत्। त्रिकालं पूजयेद्देवीं जपस्तोत्रपरायणः" इति नन्दिका प्रतिपत्तिथिरिति मैथिलाः। षष्ठीति गौड़ाः। तत्र पूजनं रात्रौ कार्यम् "आश्विने मासि मेघान्ते महिषासुरमर्दिनीम्। निशासु पूजयेद्भक्त्या सोपवासादिकः क्रमात्" इति देवीपुराणात् संग्रहेऽपि "आश्विने मासि मेघान्ते प्रतिपद्या तिथिर्भवेत्। तस्यां नक्तं प्रकुर्वीत रात्रौ देवीं च पूजयेत्। रात्रिरूपा यतो देवी दिवारूपो महेश्वरः। रात्रिव्रतमिदं देवि! सर्वपापप्रणाशनम्। सर्वकामप्रदं नृणां सर्वशत्रुनिबर्हणम्। रात्रिव्रतमिदं तस्य रात्रौ कर्त्तव्यतेष्यते। नक्तव्रतमिदं यस्मादन्यथा नरके गतिः" इत्यादिवचनाच्च रात्रिव्रतत्वमेवाभिप्रेत्य माधवेनोक्तम् तस्य नक्तव्रतत्वादिति। न तु रात्रिभोजनात्। "ननु मासि चाश्वयुजे शुक्ले नवरात्रे विशेषवत्। संपूज्य नवदुर्गाञ्च नक्तं कुर्यात् समाहितः। नवरात्राभिधं कर्म नक्तव्रतमिदं स्मृतम्"। आरम्भे नवरात्रस्येत्यादि स्कान्दात् माधवोक्तेव नक्तमेव प्रधानमिति चेत् नवरात्रोपवासत इत्यादेरनुपपत्तेः तेन पाक्षिकनक्तानुवादोऽयं नित्यानित्यसंयोगविरोधात् नह्यग्निहोत्रे दध्नः पक्षे प्राप्तस्य दध्नाजुहोतीत्यस्येन्द्रियकामहोमेऽनुवादो घटते नित्यवदनुवादायोगादित्युक्तं वार्त्तिके, तथात्राऽपि। तेनात्र तद्दैव गुणात् फलमिति ध्येयम्। ननु रात्रेः कर्मकालत्वे तद्व्यापिनी पूर्वैव प्रतिपत् प्राप्नुयात् नैवम् व्यापतः प्राप्तावपि पूर्वोक्तवचनैर्बाधात् यथा पूर्वेद्युः कर्मकालव्यापिनीमपि त्यक्त्वा सत्यापि परैव रामनवमीति प्रागुक्तम् यथा वा निशीथे सतीमपि पूर्वां जन्माष्टमीं त्यक्त्वा रोहिणीयुक्ता परैवेति माधवेनोक्तम् तथात्रापि। वस्तुतस्तु रात्रेः कर्मकालत्ववचनं हेमाद्र्याद्यलिखनात् समूलत्वं विमृश्यमेव त्रिकालं पूजयेदित्यादिपूर्वविरोधाच्च। माधवोक्तिस्तु पाक्षिकनक्तानुवाद इत्युक्तम्। तस्मात् सर्वपक्षेषु परैव प्रतिपदिति सिद्धम्। अत्र केचिन्नवरात्रशब्दो नवाहोरात्रपरः "इतौ समाप्तिरष्टम्याम्" सप्ताहेन प्रतिपत्तिथिं। प्रारम्भो नवचन्द्राख्ये नवरात्रमतोऽर्थवत्" इति देवीपुराणादित्याहुः। तन्न ह्रासवृद्ध्योर्न्यूनाधिकत्वापत्तेः अत्र मूलाभावाच्च तेन तिथिवाच्येवायं तदुक्तम् "तिथिवृद्धौ तिथिह्रासे नवरात्रमपार्थकम्। अष्टरात्रे न दोषोऽयं नवरात्रं तिथिक्षये" इति। स च नवरात्रशब्दः कचित्लक्षणया कर्मवाची यथा। प्रारम्भो नवरात्रस्येत्यत्रेति दिक्"

**नवराष्ट्र** न० औशीनरवंश्यस्य देशभेदे "नवस्य नवराष्ट्रन्तु कृमेस्तु कृमिला पुरी" हरिवं० ३१अ०। तच्च दक्षिणदिकस्थं "नवराष्ट्रञ्च निर्जित्य कुन्तिभोजमुपाद्रवत्" भा०स० ३०अ० सहदेवदक्षिणदिग्विजये।

**नवर्च** न० नव+ऋचो यत्र अच् समा०। नवभिर्ऋग्भिर्युते सूक्तभेदे। नव च ता ऋचश्चेति अच् समा०। नवसु ऋग्भेदेषु "नवर्चेभ्यः स्वाहा" अथ० १९।२३।६

**नवलक्षण** न० नवमितं लक्षणम्। विश्वसर्गस्थितिप्रलया

णामन्यतमस्य तत्तदुपादानगोचरापरोक्षज्ञानचिकीर्षा-कृतिमत्त्वानामन्यतमरूपेषु नवसु पारमेश्वरेषु लक्षणेषु तदेतत् वेदा॰प॰ समर्थितं यथा
"प्रकृते च जगज्जन्मादिकारणत्वम् (तटस्थ लक्षणम्) अत्र जगत्पदेन कार्यजातं विवक्षितम्। कारणत्वञ्च कर्त्तृत्वम् अतोऽविद्यादौ नातिव्याप्तिः। कर्त्तृत्वञ्च तत्तदुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वम्। ईश्वरस्य तावदुपादानगोचरापरोक्षज्ञानसद्भावे च "यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः। तस्मादेतद् ब्रह्म नाम रूपमन्नञ्च जायते" इत्यादि श्रुतिर्मानम्। तादृगचिकीर्षासद्भावे च "सोऽकामयत बहु स्यां प्रजायेति" श्रुतिर्मानम्। तादृशकृतौ च "तन्मनोऽकुरुतेत्यादि" वाक्यम्। ज्ञानेच्छाकृतीनामन्यतमगर्भं लक्षणत्रितयं विवक्षितम् अन्यथा व्यर्थविशेषणापत्तेः। अतएव जन्मस्थितिध्वंसानामन्यतमस्यैव लक्षणे प्रवेशः। एवञ्च लक्षणानि नव सम्पद्यन्ते ब्रह्मणो जगज्जन्मादिकारणत्वे च "यतोवा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्तीत्यादि" श्रुतिर्मानम्। "जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट् तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत् सूरयः" भाग॰।१।१।१ श्लोकस्य प्रतिपाद्यार्थसंग्राहकः श्रीधरस्वामिकृतः श्लोको यथा "विश्वसर्गविसर्गादिनवलक्षणलक्षितम्। श्रीकृष्णाख्यं परं धाम जगद्धाम नमामि तत्"।

**नववरिका** स्त्री नवो वरोऽस्याः ठन्। नवोढायां हारा॰

**नववर्ष** पु॰न॰ नवमितं वर्षम्। १भारतादिषु नवसु वर्षेषु। द्वन्द्व—भावे वञ् कर्म॰। २नूतनवर्षे पु॰।

**नववल्लभ** न॰ नवानां नवीनानां वल्लभम्। १दाहागुरुणि शब्दार्थचि॰। २नव्यजनप्रिये त्रि॰

**नववस्त्र** न॰ कर्म॰। अनाहते नूतने वस्त्रे

**नववास्तु** पु॰नवं वास्तु यस्य। राजर्षिभेदे "अभिनेय नवास्त्वं बृहद्रथं तुर्वीतिम्" ऋ॰ १।३६।१८ "नवं वास्तु यस्यासौ नववास्तुः"वा छन्दसीत्यनुवृत्तेः अभि पूर्वरूपत्वाभावे यण्। नववास्तुनामकं बृहद्रथनामकं तुर्वीतिनामकं च राजर्षीन् नय इहानय" भा॰।

**नवविंशति** स्त्री नवाधिका विंशतिः। १नवाधिकविंशतिसंख्यायां २तद्युते च "नवविंशत्याऽस्तुवत" यजु॰ १४।३१ "करपादाङ्गुलयोविंशतिः नव छिद्ररूपाः प्राणास्तैरस्तुवत" वेददी॰ "दश हस्त्याङ्गुलयो दश पाद्या नव प्राणाः" शत॰ ब्रा॰ ८।४।३।१७। ततः पूरणे डट्। नवविंश तत्संख्यापूरणे त्रि॰ स्त्रियां ङीप्।

**नवविध** त्रि॰ नव विधा यस्य। नवप्रकारे नवविधपापानि च विष्णुना दर्शितानि यथा "अतिपातक१ महापातका२ऽनुपातको३पपातकेषु४ प्रवर्त्तते। जातिभ्रंशकरेषु५ सङ्करीकरणेषु६ अपात्रीकरणेषु७ मलावहेषु८ प्रकीर्णकेषु"९। प्राय॰वि॰ तद्विवरणं दृश्यम्।

**नवव्यूह** पु॰ नव व्यूहा यस्य। विष्णौ तस्य अष्टसु पद्मदलेषु प्रद्युम्नादिरूपतया केसरस्थाने मध्ये वासुदेवरूपतया च नवव्यूहवत्त्वात् तथात्वम्। तदर्चनप्रकारः वह्निपु॰ उक्तो यथा "नवव्यूहार्चनं वक्ष्ये नारदाय हरीरितम्। मण्डलेऽब्जेऽर्चयेन्मध्ये अं वीजं वासुदेवकम्। आं सङ्कर्षणं तथा वह्नौ अं प्रद्युम्नं च दक्षिणे। अनिरुद्धं नैर्ऋते तु नारायणन्तु पश्चिमे। तद्ब्रह्माणमनिले कुं विष्णुं क्षौं नृसिंहकम्। उत्तरे तु वराहञ्च ईशे वामनमेव च"

**नवशक्ति** स्त्री नवगुणिता शक्तिः। शा॰ति॰ उक्ते शक्तिनवके नवकपद्मे इशाग्रम् काचित् नवविधा शक्तिः तन्मतारे उक्ता यथा "प्रभा माया जया सूक्ष्मा विशुद्धानन्दिनी पुनः। सुप्रभा विजया सर्वसिद्धिदा नव शक्तयः"।

**नवशस्य** न॰ कर्म॰। नूतने शस्ये।

**नवशस्येष्टि** स्त्री नवशस्यनिमित्ता इष्टिः। आग्निककर्त्तव्ये नवशस्यनिमित्तके इष्टिभेदे "शस्यान्ते नवशस्येष्ट्या"। "नानिष्ट्वा नवशस्येष्ट्या पशुना चाग्निमान् द्विजः" मनुः

**नवशायक** पु॰ नवविधः शायक इव। पराशरसंहितोक्ते नवविधे (नवशाक) ख्याते सङ्कीर्णजातिभेदे "गोपो मालो तथा तैली तन्त्री मोदकबारुजी। कुलालः कर्मकारश्च नापितो नवशायकः"।

**नवश्राद्ध** न॰ प्रेतोद्देश्यके मरणाहाद्विषमदिवसे कर्त्तव्ये श्राद्धभेदे तद्विधानादि निर्णयसिन्धौ यथा
"अथ नवश्राद्धं पृथ्वीचन्द्रोदयेऽङ्गिराः "प्रथमेऽह्नि तृतीये च पञ्चमे सप्तमे तथा। नवमैकादशे चैव तन्नवश्राद्धमुच्यते" शिवस्वामी "नव श्राद्धानि पञ्चाहुराश्वलायनशाखिनः। आपस्तम्बाः षडित्याहुर्विभाषा त्वितरेषु हि" पञ्च ऐकादशाहिकं विना "मरणाहाद्विषमेषु दिनेष्वेकैकं नवश्राद्धं कुर्य्यादानवमाद्यदि नवमे विच्छिद्येतैकादशे तत्कुर्य्यादिति" मदनरत्ने बौधायनोक्तेः। भविष्ये "नव सप्त विशां राज्ञां नवश्राद्धान्यनुक्रमात्। आद्यन्तयोर्वर्णयोस्तु षडित्याहुर्महर्षयः" हेमाद्रौ वृद्धवसिष्ठः "अत्यन्ता

द्वादशाहस्य लब्ध्वा तरति दुस्तरम्” अतः षडेव । एतान्येव विषमश्राद्धानीत्युच्यते नागरखण्डे तु “पञ्चमे सप्तमे तदष्टमे नवमे तथा । दशमैकादशे चैव नवश्राद्धानि तानि च” इत्युक्तं कात्यायनस्तु “चतुर्थे पञ्चमे चैव नवमैकादशे तथा । यदत्र दीयते जन्तोस्तन्नवश्राद्धमुच्यते” । प्रथमे सप्तमे चैवेत्याद्यपादे व्यासे पाठः । बहूनां मतानान्तु “नवश्राद्धं दशाहानि नवमिश्रन्तु षड्ऋतून्” इत्युक्तं नारायणवृत्तौ दीपिकायां “अथ तत्तुयादादौ चतुर्थे दिने श्राद्धं पञ्चमसप्तमाष्टनवदिगुद्रेषु । युग्मे द्विजः प्रथमेऽह्नि तृतीयेऽह्नि पञ्चसप्तनवस्वपि द्वौ द्वौ पिण्डौ प्रदातव्यौ येष्वेकैकन्तु विन्यसेत् । एको विषमश्राद्धेऽवयवपिण्डस्यैक इति तौ द्वावित्यर्थः । अत्र शाखाभेदात् व्यवस्था । अपरार्के भविष्ये “नवश्राद्धं त्रिपक्षञ्च षण्मासं मासिकानि च । न करोति सुतोयस्तु तस्याधः पितरोगताः” “नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश । पृथक् नैव तु कार्याणि संविभक्तधनेष्वपि” इति मिताक्षराधृत दक्षः । व्यासः “जातकर्मान्त्यकर्माणि नवश्राद्धं तथैव च” इत्युपक्रमे । “मलमासेऽपि कार्याणि नित्यं नैमित्तिकं तथा” “नवश्राद्धे यदुच्छिष्टं गृहे पर्युषितञ्च यत् । दम्पत्योर्भुक्तशिष्टं च न भुञ्जीत कदाचन” मिताक्षराधृतव्यासः । नवश्राद्धञ्च आहिताग्निविषयं षडाह यमः “चतुर्थे पञ्चमे चैव नवमैकादशे तथा । यदत्र दीयते जन्तोस्तन्नवश्राद्धमिष्यते । अस्थिसञ्चयनादर्वागाहिताग्नेर्द्विजन्मनः । अयुग्मान् भोजयेद्विप्रांस्तन्नवश्राद्धमिष्यते । नवमे पञ्चमे श्राद्धं प्रेतोपकारार्थं नावश्यकम् नवश्राद्धसंज्ञा एतद्द्रव्यग्रहणे प्रायश्चित्तविशेषविधानार्थम् आहिताग्नेरस्थिसञ्चयनादर्वाक् श्राद्धान्तरमस्तीति च दर्शितम्” प्रा० वि० ।

**नवषष्टि** स्त्री नवाधिका षष्टिः शा०त० । १ऊनसप्ततिसंख्यायां २तत्संख्यान्विते च ततः पूरणे डट् नवषष्ट तत्पूरणे त्रि० । एवं स्त्रियां ङीप् । तत्पूरणे तमप् नवषष्टितम त्रि० । नवसप्तति नवाशीतिप्रभृतयो नवाधिकतत्तत्संख्यायां तत्पूरणे तद्युते च । तत्पूरणे डट् तमप् च नवाधिकतत्तत्संख्यापूरणे त्रि० ।

**नवसप्तदश** पु० नव च सप्तदश च स्तोमायस्य ड समा० । अतिरात्रयागभेदे “अभिप्लवं सर्वस्तोमनवसप्तदशावतिरात्रौ” कात्या० श्रौ० २४।३।२९ “प्रजातिकामस्य नवसप्तदशः” ताण्ड्य ब्रा २१।२।१४ नवसप्तदशः प्रजातिकामस्य” आश्व०श्रौ० १०।११।२ “नवसप्तदशोनाम एकाहः तेन प्रजातिकामो प्रजातिः प्रजासम्पत्तिस्तां कामयमानः यजेत” नारा०वृ० ।

**नवसार** पु० “नवसारो भवेत्क्षुद्रचूर्णतोयैर्विपाचितः । दोलायन्त्रेण यत्नेन भिषग्भिर्योगसिद्धये” इति वैद्यचन्द्रिकोक्ते चूर्णतोयाभ्यां दोलायन्त्रेण पाचिते क्षारभेदे नवसादरमयम् । “प्रतिश्यायेषु शिरसः पीडने नवसादरम्” वैद्यचन्द्रिका ।

**नवसू** स्त्री नवं सूते सू–क्विप् । अभिनवप्रसवायां स्त्रियां गोप्रभृतौ “वत्सं नवस्व इव मातृ” ऋ० ४।१४।५ “नवस्वः नवप्रसवा गाव इव” भा० ।

**नवसूति(का)** स्त्री नवा सूतिः प्रसवो यस्या वा कप् । १धेन्वाम् अमरः २नवप्रसवायां स्त्रियाञ्च । नवप्रसूतिरप्यत्र “नवप्रसूतिर्वरटा तपस्विनी” नैष० ।

**नवांश** पु० नवमोऽंशः । त्रिंशांशकरूपराशेर्नवमे भागे स च एकैकराशौ ३।२० विंशतिकलाधिकांशत्रयरूपः । राशि० भेदे राशिभेदस्यैकैकांशादिकं ज्यो० उक्तं यथा “मेषाद्यामकराद्याश्च तुलाद्याः कर्कटादयः । एषान्नवांशा राशीनां स्वांशाः वर्गोत्तमा स्मृताः” तथा मेषे प्रथमनवांशो मेषस्य, द्वितीयांशो वृषस्य, तृतीयांशो मिथुनस्य, चतुर्थांशः कर्कटस्य, पञ्चमांशः सिंहस्य, षष्ठांशः कन्यायाः सप्तमांशस्तुलायाः, अष्टमांशो वृश्चिकस्य, नवमांशो धनुषः । एवं वृषे प्रथमांशो मकरस्य१ कुम्भस्य२ मीनस्य३ मेषस्य४ वृषस्य५ मिथुनस्य६ कर्कटस्य७ सिंहस्य८ कन्यायाः९ । तथा मिथुने तुलायाः१ वृश्चिकस्य२ धनुषः३ मकरस्य४ कुम्भस्य५ मीनस्य६ मेषस्य७ वृषस्य८ मिथुनस्य९ । एवं कर्के कर्कस्य१ सिंहस्य२ कन्यायाः३ तुलायाः४ वृश्चिकस्य५ धनुषः६ मकरस्य७ कुम्भस्य८ मीनस्य९ । एवं सिंहे मेषाद्याः९ । कन्यायां मकराद्याः९ । तुलायां तुलाद्याः९ । वृश्चिके कर्कटाद्याः९ । एवमेव धनुषि मेषाद्याः९ । मकरे मकराद्याः९ । कुम्भे तुलाद्याः९ । मीने कर्काद्याः९ । क्रमान्नवांशा ज्ञेयाः उक्तञ्च “मेषे नवांशा मेषाद्याः वृषे च मकरादिकाः । मिथुने च तुलाद्यास्तु कर्कटे कर्कटादिकाः” इति ।

**नवाङ्ग** त्रि० नवविधमङ्गं यस्य । नवविधाङ्गयुक्ते चक्रदत्तोक्ते कषायभेदे पु० “संसृष्टदोषेषु हितं संसृष्टमथ पाचनम् । विश्वामृताब्दभूनिम्बैः पञ्चमूलीसमन्वितैः । कृतःकषायो हन्त्याशु वातपित्तोद्भवं ज्वरम्” । २कर्कटशृङ्ग्यां स्त्री टाप् राजनि० । ३गुडूच्यां स्त्री ङीप् ।

"नवाङ्गी कुरङ्गीदृगङ्गी करोतु" जगन्नाथपण्डितः ॥

**नवान्न** न० कर्म० । नूतनान्ने तत् प्राप्यतयाऽस्त्यस्य अच् । नवान्नागमकाले तन्निमित्तकश्राद्धादिकं श्राद्धविवेके उक्तं यथा विष्णुधर्मोत्तरे "व्रीहिपाके च कर्त्तव्यं यवपाके च पार्थिव ! । नतावाद्यौ महाराज ! विना श्राद्धं कथञ्चन । पौर्णमासी तथा माघी श्रावणी च नरोत्तम ! । प्रौष्ठपद्यामतीतायां तथा कृष्णा त्रयोदशी । एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः" । व्रीहिः शरत्पक्वधान्यं तत्रैव व्रीहिशब्दस्य मुख्यत्वात् । अन्यथा व्रीह्युपचारे शालिप्रतिनिधिविधानदर्शनं पृथगुपादानञ्च नोपपद्येत यथा छन्दोगपरिशिष्टे कात्यायनः "यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत् । यवानामिव गोधूमा व्रीहीणामिव शालयः" । "व्रीहयः शालयो मुद्गा गोधूमाः सर्षपास्तिलाः" । यवाश्चौषधयः सप्त विपदो घ्नन्ति धारिताः" । वामनपुराणे "हविषा संस्कृता ये तु यवगोधूमशालयः । तिलमुद्गादयो माषा व्रीहयश्च प्रिया हरेः" अतएव कामधेनुकृता आश्विनमासीयतिथिकृत्ये नवान्नश्राद्धविषयं ब्रह्मपुराणवचनं लिखितं यथा "शुक्लपक्षे नवं धान्यं पक्वं ज्ञात्वा सुशोभनम् । गच्छेत् क्षेत्रं विधानेन गीतवाद्यपुरःसरम्" इत्यभिधाय "तेन देवान् पितॄंश्चैव तर्पयेदर्चयेत्तथा" इत्यन्तादेव वचनात् शुक्लपक्ष एवैतत् श्राद्धम् । वृश्चिके व्रीहिपाकनिमित्तं श्राद्धं न स्यादिति चेन्न स्यादेव नवान्नागमनिमित्तन्तु तत् स्यादेवेति ब्रूमः"

श्रा०त० रघु० उक्तं यथा

अथ नवान्नश्राद्धम् । शातातपः "नवोदके नवान्ने च गृहप्रच्छादने तथा । पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च" । नवोदके वर्षोपक्रमे । आर्द्रास्थरवाविति यावत् "आर्द्रादितो विशाखान्तं रविचारेण वर्षति" इति ज्योतिर्वचनात् रविचारेण रविगत्या । "प्रावृट्काले समायाते रौद्रऋक्षगते रवौ । नाडीवेधसमायोगे जलयोगं वदाम्यहम्" इति रुद्रयामलाच्च । रौद्रमार्द्रा । नवान्ने नवान्नागमे अत्र "नक्षत्रग्रहपीडासु दुष्टस्वप्नावलोकने । इच्छाश्राद्धानि कुर्वीत नवशस्यागमे तथा" इति विष्णुपुराणादन्यसाधकतरवचनेषु नवान्नश्रुतेर्नवान्नागमत्वेनैव निमित्तत्वं लाघवात् । अमावास्यास्तिस्रोऽष्टका माघी प्रौष्ठपद्यूर्द्ध्वं कृष्णत्रयोदशी व्रीहियवपाकौ च "एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः । श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते" इति विष्णुवचनं नवान्नागमश्राद्धस्यैव व्रीहियवोभयप्राप्तिविषयकत्वेन विधायकं ग्रैष्मादिधान्यव्युदासाय । शालिधान्यस्य तु प्राप्तिः । "शरद्वसन्तयोः केचिन्नवयज्ञं प्रचक्षते । धान्यपाकवशादन्ये श्यामाको वनिनः स्मृतः" इति छन्दोगपरिशिष्टे व्रीह्युपलब्ध्या नवशस्येष्टौ शालिविधानादुपजतुल्यन्यायात् श्राद्धेऽपि तथा कल्पनात् । "वृश्चिके शुक्लपक्षे तु नवान्नं शस्यते बुधैः । अपरे क्रियमाणं हि धनुष्येव कृतं भवेत् । धनुषि यत् कृतं श्राद्धं मृगनेत्रासु रात्रिषु । पितरस्तस्य नेच्छन्ति नवान्नामिषकाङ्क्षिणः" इति वराहवचनाच्च । श्यामाको व्रीहिविशेषः । वनी वानप्रस्थः । अपरे कृष्णपक्षे धनुषि धनुःस्थार्के । "पौषे चैत्रे कृष्णपक्षे नवान्नं नाचरेद्बुधः । भवेज्जन्मान्तरे रोगी पितॄणां नोपतिष्ठते" इति भोजराजवचनैकवाक्यत्वात् । एवञ्च सौरपौषवत् चैत्रोऽपि सौर एव सामञ्जस्यात् । अत्र धनुर्मीनपर्युदासात् यवश्राद्धमुख्यकालपर्य्यन्तं माघफाल्गुनवैशाखेष्वपि नवान्नश्राद्धं कार्यम् "एवमागामियागीयमुख्यकालादधस्तनः । स्वकालादुत्तरो गौणः कालः पूर्वस्य कर्मणः । यदागामिक्रियामुख्यकालस्याप्यन्तरालवत् । 'गौणकालत्वमिच्छन्ति केचित् प्राक्तनकर्मणि" हरिहरपद्धतौ तथादर्शनात् । अधस्तनः इत्यवच्छायां व्यवहारः । अन्तरालवत् मध्यकालस्येव । वस्तुतस्तु उत्तरक्रियामुख्यकालं विना उत्तरक्रियाकरणपूर्वकाल एव पूर्वक्रिया कर्त्तव्या । "संस्कारा अतिपद्येरन् स्वकालाच्चेत् कथञ्चन । हुत्वैतदेव कुर्वीत ये तूपनयनादधः" इति छन्दोगपरिशिष्टात् संस्कारातिपाते तथा व्यवहारात् । अतएव श्राद्धविवेकेऽपि धनुषः पर्युदासान्माघादिरिति सामान्यत उक्तम् । एवं यवश्राद्धमपि हरिशयनात् पूर्वं कर्त्तव्यम् "नवान्नं नैव नन्दायां न च सुप्ते जनार्दने । न कृष्णपक्षे धनुषि तुलायां नैव कारयेत्" इति ज्योतिर्वचनात् "न च सुप्ते जनार्दने" इति आश्विनशुक्लपक्षेतरपरम् आश्विनाधिकारे "शुक्लपक्षे नवं धान्यं पक्वं ज्ञात्वा सुशोभनम् । गच्छेत् क्षेत्रं विधानेन गीतवाद्यपुरःसरम्" इत्यभिधाय "तेन देवान् पितॄंश्चैव तर्पयेदर्चयेत्तथा" इति ब्रह्मपुराणात् । मृगो नेता प्रापकोयासां रात्रीणामिति व्युत्पत्त्या नक्षत्राच्चतुरित्यनेनाज्विधानात् तत्पदं सिद्धम् । ततश्च मृगशिरः-

पूर्व्वार्द्धेन वृश्चिकस्थे रवावारभ्य चत्वारिंशद्दण्डाधिकावधिदण्डधारात्मको मृगनेला इति। यथोक्तं ज्योतिषे "ज्येष्ठाश्लेषार्द्धगे सूर्य्ये मृगनेलानिशात्मके। नवान्नभोजनं श्राद्धं जन्मचन्द्रे तिथौ न च" अत्र जन्मतिथिनिषेधात् तथा "जन्मर्क्षतारं सितवासरञ्च" इति जन्मर्क्षनिषेधाच्च "नन्दायां भार्गवदिने त्रयोदश्यां त्रिजन्मनि" इत्यत्र त्रिजन्मपदं जन्मचन्द्रतिथिनक्षत्रत्रिकपरं परवचने त्रिजन्मान्वित इत्यत्रापि तथा "सूर्य्ये चैव विशाखगे खरतिथौ पापे त्रिजन्मान्विते। नन्दामन्दमहीजकाव्यदिवसे पौषे मघौ कार्त्तिके। भेषूयाहिशिवेषु विष्णुशयने कृष्णे शशिन्यष्टमे श्राद्धं भोजनकं नवान्नविहितं पुत्रार्थनाशप्रदम्"। सूर्य्ये चैव विशाखगे मार्गशीर्षस्य विंशतिदण्डाधिकप्रथमदिनत्रयावस्थिते सूर्य्ये। खरतिथौ त्रयोदश्यां पापे पञ्चमताराश्रये नन्दा प्रतिपत् षष्ठी एकादशी मन्दः शनिः महीजो मङ्गलः काव्यः शुक्रः। उग्रमघः पूर्व्वात्रयमघाभरण्यः अहिरश्लेषा शिव आर्द्रा। भोजराजः "ब्राह्मे विष्णुहरिस्वतौ शशधरे मार्त्तण्डपौष्णादितौ मैत्रे चित्रविशाखवायुधनभे मूलाश्विवह्नौ तथा। शक्रे वारुण उत्तरे शुभदिने श्राद्धं नवं शस्यते नन्दाभार्गवभूमिजेषु न भवेत् श्राद्धं नवान्नोद्भवम्"। ब्राह्मादयः रोहिणीश्रवणपुष्य मृगशिरो हस्त रेवती पुनर्वसु अनुराधा चित्रा विशाखा स्वाती धनिष्ठा मूलाश्विनी कृत्तिका ज्येष्ठा शतभिषाः। नवान्नश्राद्धे मूलाकृत्तिकाज्येष्ठाविधानात् श्लेषमघपग्रामे "अश्लेषा कृत्तिका ज्येष्ठा मूलाजपदकेषु च। भृगुभौमदिने रिक्तातिथौ नाद्यान्नवौदनम्" इति श्राद्धशेषभोजिमात्रपरम् अजपदः पूर्व्वभाद्रपदः। चन्द्रताराद्यशुद्धौ प्रतीकारमाह देवलः "कर्म कुर्य्यात् कलावाप्तं चन्द्रादिशोभने बुधः। दुस्थकाले स्थितं सर्व्वं नार्त्तः कालमपेक्षते। चन्द्रे च शङ्खं लवणञ्च तारे तिथावभद्रे सिततण्डुलांश्च। धान्यञ्च दद्यात् करणर्क्षवारे योगे तिलान् हेममथिच्छ लग्ने"। चन्द्रमविहितमनत्वं राजमार्त्तण्डे ताराभेदात् लवणपरिमाणमाह "एकत्रिपञ्चसप्त द्विजाय दद्यात् पलानि लवणस्य क्रमशो जन्मनि विपद्प्रत्यरिमरणाख्यतारकासु"। पलन्तु लौकिकमानैः साष्टरत्तिद्विमाषकम्। तोलकत्रितयं ज्ञेयं ज्योतिर्ज्ञैः स्मृतिसम्मतम्" वामनपुराणाच्च "विष्टयो व्यतिपाताश्च येऽन्ये दुर्नीतिसम्भवाः। ते नामस्मरणा-

द्विष्णोर्नाशं यान्ति महात्मनः" विष्णुधर्म्मोत्तरे "सर्व्वाशुभानां परिमोक्षकारि संपूजनं देववरस्य विष्णोः" इति ब्रह्मपुराणे "प्राश्नीयात् दधिसंयुक्तं नवं विप्राभिमन्त्रितम्" अभिमन्त्रितम् "मन्त्रानादेशे गायत्री" इति वचनाद्गायत्र्या। स्मृतिः "गृहीत्वा ब्राह्मणानुज्ञां सदधिप्राशयेन्नवम्" अत्र ब्रीह्यभावे शालिना, नूतनाभावे पुरातनेनापि श्राद्धादिकमाह भट्टभाष्ये स्मृतिः "गृहमेधी ब्रीहियवाभ्यां शरद्वसन्तयोर्यजेत। श्यामाकैर्व्वनी वर्षासु आपत्कल्पे अन्येन पुरातनैर्व्वेति"। गृहमेधीति मेधृ-मेधाहिंसयोः मेधृ सङ्गमे चेत्यत्र चकारेण पूर्व्वगणस्य मेधाहिंसयोरनुवृत्तेः तेन मेधृ हिंसार्थः तेन गृहनिमित्तेन जातायाः "पञ्चसूना गृहस्थस्य चुल्लीपेषण्युपस्करः। कण्डनी चोदकुम्भश्च बध्यते याश्च वाहयन्" इति मनूक्तायाः पञ्चसूनारूपहिंसायाः कारी गृहमेधी गृहस्थ इत्यर्थः। सूदयन्ति प्राणैर्वियोजयन्तीति सूनाः प्राणिवधस्थानानि चुल्ली पाकस्थानं पेषणी दृषदुपलादिः उपस्करः गृहसम्मार्ज्जन्यादि कण्डनी मुषलोदूखलादि याश्च एताः सूनाः वाहयन् स्वस्वकार्य्ये योजयन् बध्यते पापेन सम्बध्यते इत्यर्थः। श्राद्धचिन्तामणावप्येवम्। प्रेतमातापितृकस्य पुरातनधान्यालाभे नवेनैव वैश्वदेवं कृत्वा नवस्य ब्राह्मणेभ्यो दत्त्वा ब्राह्मणानुज्ञां गृहीत्वा भोजनादिकं कर्त्तव्यमाह रेणुकाचार्य्यनव्यवर्द्धमानधृता स्मृतिः "दत्त्वैवं ब्राह्मणेभ्यश्च हुत्वा वा वैश्वदेविकम्। अन्योनवान्नमश्नीयादिति बौधायनोऽब्रवीत्"। अन्यः श्राद्धकरणासमर्थः श्राद्धानधिकारी च। अतएव विधवया नवमेकोद्दिष्टे दीयते भुज्यते चेति"।

**नवायस** न॰ नवभागा आयसा यत्र। सुश्रुतोक्ते लौहचूर्णभेदे "त्रिफला चित्रकत्रिकटुविडङ्गमुस्तानां नवभागस्तावन्तश्च कृष्णायश्चूर्णस्य तत्सर्व्वमैकध्यं कृत्वा यथायोगं मात्रां सर्पिर्मधुभ्यां संयुज्योपयुञ्जीत। एतन्नवायसमेतेन जाठर्य्यं न भवति सद्योऽग्निराप्यायते दुर्नामशोफपाण्डुकुष्ठरोगाविपाककासश्वासप्रमेहाश्च न भवन्ति"

**नवार्च्चिस्** पु॰ नव अर्च्चींषि यस्य। मङ्गले हारा॰ कर्म॰। नवायां शेखायाञ्च।

**नवासिका** स्त्री॰ मात्रावृत्तभेदे "जौलनायचाम्बुधेर्विश्लोकः" "तद्युगलाद्वा नवासिका स्यात्" वृ॰र॰ "तद्युगलात् अम्बुधिद्वयात् अष्टमात्रात परीत्यर्थः। यदि जगणो मध्यगुरुः नगणलघू स्यातां तदा नवासिका स्यात्" तदर्थः।

**नवाह** पु० कर्म० टच् समा० । १अभिनवे दिने प्रतिपत्तिथौ । नवभिरहोभिर्निर्वृत्तः ठञ् तस्य लुक् अच् समा०। नवदिवससाध्ये २यागादौ । ३गवामयनाङ्गे नवरात्रसाध्ये यागभेदे च पु०। "अभिजित्१ त्रयः स्वरसामानः४ दिवाकीर्त्यमहः५ (विषुवान्) त्रयः स्वरसामानो८ विश्वजित्९ इति नवरात्रः इति नवरात्रो विधातव्यः । षडेमासितानभिप्लवान् एकं पृष्ठं च कृत्वा अभिचिदनुष्ठेयः ततस्त्रयः स्वरसामानः ततो विषुवानिति" ताण्ड्य० ४।५।१ भाष्ये स्थितम् ।

**नविष्टि** स्त्री कर्म० नवा इष्टिः वेदे पृष० । अभिनवे इष्टिभेदे यागे "वज्रिन्नपसो नविष्टौ" ऋ० ८।२।१७ "नविष्टौ अभिनवे यागे" भा० ।

**नविष्ठ** त्रि० अतिशयेन नविता स्तोता इष्ठन् तृणोलोपः । १अतिशयस्तोतृतमे "विप्रा नविष्ठया" ऋ०१।८२।२ "नविष्ठया नवितृतमया मती मत्या स्तुत्या" भा० करणभूताया अपि स्तुत्याः कर्त्तृत्वविवक्षया कर्त्तरि इष्ठन् । अतिशयेन नवः नूतनः इष्ठन् । २नव्यतमे त्रि० ।

**नवीन** त्रि० नव+स्वार्थे ख नवस्य नू: आगुं वा । नव्ये "गदाधरविनिर्मिता विविधदुर्गतकीटवीनवीनपदवी मुदं वितनुतां सतां धीमताम्" वाधे गदाधरः ।

**नवीयस्** त्रि० नव+अतिशये—ईयसुन् । नवतमे "प्रतरं नवीयः" ऋ०१०।८९।१ "नवीयो नवतरम्" भा० स्त्रियां ङीप् नवशब्दस्य स्तुत्याद्यर्थत्वे २अतिशयेन स्तुत्ये च "नू नव्यसे नवीयसे सूक्ताय" ऋ०९।९।८ "नवीयसेऽतिस्तुत्याय" भा० ।

**नवेदस्** त्रि० न विपरीतं वेत्ति विद—असुन् नभ्राडित्यादिना नञः प्रकृतिभावः । विपरीतज्ञानशून्ये मेधाविनि यथा श्रुतं तथैव ज्ञानवति "नवेदसा विमुवाम्" ऋ०१।२४।१

**नवोढा** स्त्री नवमूढा । १नूतनपरिणीतायां स्त्रियां २नायिकाभेदे "लज्जाभरपराधीनरतिर्नवोढा" इति लक्षयित्वा "बलान्नीता पार्श्वं सुखमनुसुखं नैव कुरुते धुनाना मूर्द्धानं क्षिपति वदनं चुम्बनविधौ । हृदि न्यस्तं हस्तं क्षिपति गमनारोपितमना नवोढा वोढारं रमयति च सन्तापयति च" रसमञ्जर्यामुदाहृतम् ।

**नवोदक** न० नवं पतितमुत्थितं वा उदकम् । १नवखाते उत्थिते उदके २गगनादभिनवपतिते जले च तस्यापेयत्वादिकं प्रा०त० निरूपितं यथा

हारीतः "मनुष्यकण्टकाम्बूकमङ्गुलिक्तिकपर्दकान् । पीत्वा नवोदकञ्चैव पञ्चगव्येन शुध्यति" । नवोदकं नवखातजलं वर्षोदकञ्च तथा ब्रह्मपुराणम् "नवखातजलं गावो महिष्यश्छागयोनयः । शुध्यन्ति दिवसैरेव दशभिर्नात्र संशयः" मिताक्षराधृता स्मृतिः "काले नवोदकं शुद्धं न पातव्यन्तु तत् त्र्यहम् । अकाले तु दशाहं स्यात् पीत्वा नाद्यादहर्निशम्" काले वर्षाकाले । शङ्खः "स्नानमाचमनं दानं देवतापितृतर्पणम् । शूद्रोदकैर्न कुर्वीत तथा मेघाद्विनिःसृतैः" । पानादीतरत्र स्नानादौ च हरिवंशः । "अभीममम्भोविसृजन्ति मेघाः पूतं पवित्रं पवनैः सुगन्धि" । नवोदकनिमित्तं च पार्वणं श्राद्धं नित्यं, तद्विधानादि ति० त० उक्तं यथा

शातातपः "नवोदके नवान्ने च गृहप्रच्छादने सदा । पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च । तस्माद्दद्यात् सदोद्युक्तो विद्वत्सु ब्राह्मणेषु च" अत्र सदेति श्रवणात् अस्य नित्यत्वम् । नवोदके वर्षोपक्रमे आर्द्रागते रवाविति यावत् । "आर्द्रादितो विशाखान्तं रविचारेण वर्षति" इति नव्यवर्द्धमानधृतात् "प्रावृट्काले समायाते रौद्रं ऋक्षगते रवौ । नाडीवेधसमायोगे जलयोगं वदाम्यहम्" इति रुद्रयामलाच्च । रौद्रमार्द्रा नवोदकश्राद्धस्य यावकाधत्वात् त्रयोदश्यादिषु निषेधमाह दीपिकायाम् "त्रयोदशीं जन्मदिनञ्च नन्दां जन्मर्क्षतारां सितवासरञ्च । त्यक्त्वा हरीज्येन्दुकरान्त्यमैत्र ध्रुवेषु च श्राद्धविधानमिष्टम्" । सितवासरं शुक्रवारं ऋक्षं राशिः हर्य्यादयः श्रवणपुष्यमृगशिरोहस्तारेवत्यनुराधा उत्तरात्रितयरोहिण्यः । कृष्णपक्षे चेन्नवोदकश्राद्धकालस्तदोभयोः श्राद्धयोस्तन्त्रात् सिद्धिः" । [त्रि०

**नवोद्धृत** न०नवमुद्धृतम् ।१नवनीते अमरः। २भूतलोद्धृतमात्रे

**नव्य** त्रि० नु—स्तुतौ यत् । १स्तुत्ये नव+स्वार्थे यत् नूरादेश आगुं वा: २नवीने अमरः। ३रक्तपुनर्नवायां पु०राजनि०। भावे यत् । ४स्तुतौ न० । [गङ्गेशोपाध्यायसुतः ।

**नव्यवर्द्धमान** पु० स्मृतिनिबन्धकारकभेदे वर्द्धमानस पुराणः

**नश्** त्रि० नश—क्विप् । १नाशप्रतियोगिनि । भावे क्विप् २नाशे स्त्री । सुहा० झलि पदान्ते च वा ष पक्षे षडगकाः यथाविधानम् । नक् नट् ड् ।

**नशाक** पुंस्त्री नश—आक । काकभेदे उणादिकोषः ।

**नश्यत्प्रसूतिका** स्त्री नश्यन्ती प्रसूतिर्यस्याः कप् । मृतवत्सायां स्त्रियां हेमच० ।

**नश्वर** त्रि० नश—क्वरप् । नाशप्रतियोगिनि अवश्यनाश-

गीते यथाश्वते "वदन्ति विश्वं कवयः स नश्वरम्" भाग० ५।१८५ स्त्रियां ङीप्।

**नष्ट** त्रि० नश–क्त। १नाशप्रतियोगिनि २तिरोहिते अदर्शनं गते ३दुष्टाशये च। भावे क्त। ४नाशे ५अदर्शने च न० "नष्टं वर्षरवैरेतदृश्यगमनाभावादपास्य स्पृशम्" वा०ट० "भुवापि तस्य नश्यन्ति सधुवं नष्टमेव च" हितो०

**नष्टचन्द्र** पु० नष्टः दुष्टश्चन्द्रः। सौरभाद्रमासे उभयपक्षीय चतुर्थ्यामुदिते चन्द्रे तस्य दर्शने दुष्टत्वकारणं ब्रह्म-वै०पु० ८० अ० उक्तं यथा

"नष्टचन्द्रो न दृष्टव्य भाद्रे मासि सितासिते। चतुर्थ्यामुदितोऽप्युग्रः प्रतिषिद्धो मनीषिभिः। चन्द्रस्तारापहरणं कलङ्कमतिदुष्करम्। तस्मै ददाति हे नन्द! कामतो यदि पश्यति। अकामतो नरो दृष्ट्वा मन्त्रपूतं जलं पिबेत्। तदशुद्धो भवेत् सद्यो निष्कलङ्की महीतले। सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः। सुकुमारक! मा रोदीस्तव ह्येष स्यमन्तकः। इति मन्त्रेण पूतस्य जलं साधु पिबेद्बुधः" इत्युपक्रमे "दृष्ट्वा तस्याश्च (तारायाः) सर्वाङ्गमनङ्गवाणपीडितः। भाद्रे चतुर्थ्याञ्चन्द्रश्च जहाराचेतनां व्रजन्। स्नानं कृत्वैव संप्राप्य रथस्थो रसिको बली। रथमारोहयामास करे धृत्वा च तारकाम्। कामोन्मत्तः कामिनीनां समालिङ्ग्य चुचुम्ब सः" "यस्मात्तस्मिन् दिने वत्स! पापदृष्टो युगे युगे। मा भुक्तं क्षीयते कर्म कल्पकोटिशतैरपि। अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्। देहत्यागेन हे वत्स! कर्मभोगो न नश्यति। प्रायश्चित्तात्स चन्द्रो हि ह्रासमेव भविष्यति। तारापहरणं वत्स! कलङ्कश्चन्द्रमण्डले। कलङ्कं विलसत्स भविष्यति युगे युगे"।

**नष्टचेष्टता** स्त्री नष्टा चेष्टा यस्य तस्य भावः तल्। १हर्षशोकादिभिः सकलचेष्टानाशे २प्रलये अमरः ३सात्त्विकभावभेदे मूर्च्छायामित्यन्ये।

**नष्टजातक** न० नष्टं न ज्ञातं जातं जन्म जन्माधानकालो यत्र कप्। जन्माधानकालयोरपरिज्ञाने प्रश्नलग्नादिना जन्मकालज्ञानार्थं उपायभेदे स च बृहज्जातके २५अ० उक्तो यथा

"अथ नष्टजातकाध्यायप्रारम्भः "आधानजन्मापरिबोधकाले संपृच्छतो जन्म वदेद्विलग्नात्। पूर्वापरार्द्धे भवनस्य विद्यान्नानावुदग्दक्षिणगे प्रसूतिम्" १ इ० जा० "प्रश्नाधानजन्मकालयोरपरिबोधे अज्ञाने सति संपृच्छतः

प्रष्टुः विलग्नात् प्रश्नलग्नाज्जन्म वदेद्ब्रूयात् येन लग्नेन प्रष्टा पृच्छति तस्य यदि पूर्वार्द्धं प्रथमहोरा भवति तदा प्रष्टुः भानावादित्ये उदग्गते उत्तरायणस्थे जन्म वक्तव्यम्। मकरादिराशिषट्कस्थे जात इत्यर्थः। अथ लग्नस्यापरार्द्धं द्वितीया होरा भवति तदा भानौ दक्षिणगते दक्षिणायनस्थे जन्म वक्तव्यम्। कर्कटादिराशिषट्कस्थे जात इत्यर्थः। तथा च "आधानजन्मनी यस्य न विज्ञायेत देहिनः। जन्म संपृच्छतस्तस्य प्रश्नलग्नात् विनिर्दिशेत्"। अथ वर्षज्ञानमाह लग्नत्रिकोणेष्विति भट्टो०। "लग्नत्रिकोणेषु गुरुस्त्रिभागैर्विकल्प्य वर्षाणि वयोनुमानात्। ग्रीष्मोऽर्कलग्ने कथितास्तु शेषैरन्यायनर्त्तौ हतरर्कचारात्" २मू० "त्रिभागैः द्रेक्काणैः लग्नत्रिकोणेषु प्रथमपञ्चमनवमस्थानेषु गुरुः जीवो ज्ञेयः तद्यथा प्रश्नलग्नस्य यदि प्रथमद्रेक्काणो भवति तदा यस्य लग्नराशिः तत्रस्थे गुरौ जन्म वक्तव्यम्। अथ लग्नस्य द्वितीयोद्रेक्काणस्तदा लग्नाद्यः पञ्चमो राशिस्तत्रस्थे गुरौ जन्म वक्तव्यम्। अथ यदि लग्नस्य तृतीय द्रेक्काणस्तदा लग्नाद्यो नवमोराशिस्तत्रस्थे गुरौ जन्म वक्तव्यम्। एवं केचाञ्चिन्मतम्। अथान्येषां मतम्। यथा प्रश्नलग्नस्य यदा प्रथमोद्रेक्काणोदयो भवति तदा लग्नराशितो यावत्संख्ये राशौ बृहस्पतिस्तिष्ठति तावत्संख्यानि प्रष्टुः वर्षाणि वक्तव्यानि। अथ लग्ने द्वितीयोद्रेक्काणस्तदा लग्नात् पञ्चमराशितो यावत्संख्ये राशौ बृहस्पतिर्भवति तावत्संख्यानि प्रष्टुः वर्षाणि वक्तव्यानि अथ लग्नस्य तृतीयोद्रेक्काणो भवति तदा लग्नान्नवमराशितो यावत्संख्ये राशौ बृहस्पतिर्भवति तावत्संख्यानि प्रष्टुः वर्षाणि वक्तव्यानि। एतद्व्याख्यानं न शोभनं पूर्वमेव व्याख्यानं श्रेयः यस्मादवनेश्वरः "द्रेक्काणलग्ने क्रमशस्तु राशौ गुरुर्विलग्नाद्यदि कोणगोऽभूत्। सञ्चिन्त्येत् तद्भवनक्रमेण श्यागारमादव्दगति प्रगल्भा" यद्यप्यत्र यावान्येनोक्तं बृहस्पतेरवस्थानं तथा च द्वादशभागक्रमेण प्रतिराशौ प्रकार्यः। तद्यथा यदि प्रश्नलग्नस्य प्रथमद्वादशभागोदयो भवति तदा लग्नस्थे जीवे जातः द्वितीयद्वादशभागश्चेत्तदा लग्नाद् द्वितीये गुरौ जातः एवं तृतीयादिद्वादशभागोदये तृतीयादिषु स्थानेषु ऊह्यम्। विकल्प्य वर्षाणि वयोनुमानादेवं बृहस्पतेरवस्थानं ज्ञात्वा तस्य एवं वयोनुमानात्तस्याकृतिं शरीरमवेक्ष्य वर्षाणि विकल्प्य वयःप्रमाणं बुद्ध्वा द्वादश

द्वादशसु वर्षेषु विकल्पना कार्य्या । किमर्थमेव समयपरिवर्त्ते ज्ञातराशेः बृहस्पतेरवस्थानमभूदुत द्वितीय उत तृतीयादिषु एवं तस्याकृतिमवेक्ष्य वयोऽनुमानं वक्तव्यम् । यत्र द्वादशसु वर्षेषु भ्रान्तिर्भवति तत्र पुरुषलक्षणोक्तेन दशाविभागेन द्वादशवार्षिकीं दशां चाङ्गेषु परिकल्प्य तत्तदृष्वेलाङ्गसंस्पर्शाद्दर्शनं तथा च पुरुषलक्षणे पठ्यते "पादौ सगुल्फौ प्रथमं प्रदिष्टं जङ्घे द्वितीयं तु सजानुचक्रे । मेढ्रोरुमुष्कास्य ततस्तृतीयं नाभिं कटिं चेति चतुर्थमाहुः । उदरं कथयन्ति पञ्चमं हृदयं षष्ठमथ स्तनान्वितम् । अथ सप्तममंसजत्रुणी कथयन्त्यष्टममोष्ठकन्धरे । नवमं नयने च सभ्रुणी सललाटं दशमं शिरस्तथा । अशुभेष्वशुभं दशाफलं चरणाद्येषु शुभेषु शोभनमिति" किं त्वत्र विंशत्यधिकं वर्षशतं यस्य जन्मनोऽतीतं तस्य नष्टजातकवर्षज्ञानोपाय एव नास्ति । एवं वर्षेषु ज्ञातेषु ऋतुज्ञानमाह ग्रीष्मेऽर्कलग्ने इति येन लग्नेन प्रष्टा पृच्छति तत्र चेदर्कः सूर्य्यः स्थितस्तद्द्रेक्काणो वा लग्ने तदा ग्रीष्मे जात इति वक्तव्यम् । कथितास्तु शेषैरिति शेषैरन्यैश्चन्द्रादिभिर्ग्रहैर्लग्नस्थैः ऋतुः पूर्व्वमेव कथित उक्तः द्रेक्काणैः शिशिराद्य इत्यादिना ग्रन्थेनोक्तः । तत्र यदा शनैश्चरो लग्ने भवति तद्द्रेक्काणो वा तदा शिशिरे जात इति वक्तव्यम् । एवं शुक्रे लग्नगते तद्द्रेक्काणे वा तदा वसन्ते जातः एवं भौमे ग्रीष्मे । एवमेव चन्द्रे लग्नगते तद्द्रेक्काणे वा वर्षासु, बुधे शरदि, जीवे हेमन्त इति । यदा बहवो लग्नगताः भवन्ति तदा तेषां मध्ये यो बलवान् तदुक्तर्त्तौ जात इति वक्तव्यम् । अथ न कश्चिद् यदि लग्नगतो भवति तदा तस्य सम्बन्धी द्रेक्काणोदयो भवति तदा तदुक्तर्त्तौ जात इत्येवं वक्तव्यम् । अन्यायनर्त्ताविन्दुरर्कचारादिति अन्यस्मिन्नयनेऽस्मिन्वाऽर्कचारादृतुः अन्यस्मिन्नयने तदयनासम्भवे ऋतुरन्यो भवति तदृतुरर्कचारवशेन वक्तव्यम् एतदुक्तं भवति सौरेण मानेन ऋतुर्वक्तव्यः न तु चान्द्रेण यथा शिशिरे ज्ञाते मकरकुम्भयोरन्यतमे राशौ सूर्य्यस्यावस्थानं ज्ञेयम् एवं शेषराशिष्वप्यूह्यम् अनेन लौकिकचान्द्रमासो निराकृतो भवतीति" भट्टो० ।

"चन्द्रज्ञजीवाः परिवर्त्तनीयाः शुक्रारमन्दैरयने विलोमे । द्रेक्काणभागे प्रथमे तु पूर्व्वो मासोऽनुपाताच्च तिथिर्विकल्प्यः" ९म० ।

"अथायने विलोमे यदृतुपरिज्ञानात्तदृतुपरिज्ञानं मासपरिज्ञानं चेन्द्रवज्रयाह चन्द्रज्ञेति । अयने विलोमे सति चन्द्रज्ञजीवाः शुक्रारमन्दैः परिवर्त्तनीयाः शशिबुधगुरवः सितभौमशनैश्चरैः अयनव्यत्यये प्राप्ते सति परिवर्त्तनीयाः व्यत्ययेन व्यवस्थाप्याः एतदुक्तं भवति यद्युत्तरायणे ज्ञाते प्रावृट्कालो ज्ञातस्तदा वसन्ते जात इति वक्तव्यम् चन्द्राच्छुक्रे चात्र परिवर्तितः । अथोत्तरायणे शरदि प्राप्तायां ग्रीष्मे जातः । दक्षिणायने ग्रीष्मे ज्ञाते शरदि जातः । अत्र बुधो रविभौमयोरपवर्त्तितौ । रविभौमौ बुधेन च । उत्तरायणे हेमन्ते ज्ञाते शिशिरे जातः दक्षिणायने शिशिरे प्राप्ते हेमन्ते जातः इति वक्तव्यम् अत्र जीवमन्दौ परस्परमपवर्त्तितौ एवमृतौ ज्ञाते मासज्ञानमाह द्रेक्काणभाग इति प्रश्नलग्ने यो द्रेक्काणो वर्त्तते तस्य च द्रेक्काणस्य यदि प्रथमभागो वर्त्तते तदा ज्ञातर्त्तौ प्रथमे मासि जातः इति वक्तव्यम् अथ लग्ने द्रेक्काणस्य द्वितीयो भागो वर्त्तते तदा ज्ञातर्त्तौ द्वितीये मासि जातः तृतीयद्रेक्काणे द्वौ विभागौ पूर्व्वापरौ अत्रापि अर्कावस्थानतएव मासज्ञानम् । तिथिज्ञानार्थमाह । अनुपाताच्च तिथिर्विकल्प्यः अनुपातात् त्रैराशिकात् तिथिर्विकल्प्यो विकल्पनीयः लग्नस्य षट्लिप्ताः शतानि द्रेक्काणः द्रेक्काणेन च ज्ञातर्त्तुः ऋतुज्ञानं तदर्द्धलिप्ताः शतत्रयं लिप्ताशतत्रयेण मासज्ञानम् अत्रानुपातात् तिथिर्लिप्तादशकेनैकैको ज्ञेयः एवं च तिथिरादित्यभागा एवमादित्यराशयो भागा ज्ञेयाः मासा राशयस्तिथयो भागाः यस्मिंश्च तिथौ ज्ञातवर्षे यथाप्रदर्शितादित्यो भवति तस्मिन् तिथौ तस्य जन्म इति वक्तव्यम्" भट्टो० ।

अथ चन्द्रमानतिथिज्ञानोपायमिन्द्रवज्रयाह ।

"अत्रापि होरापटवो द्विजेन्द्राः सूर्य्यांशतुल्यां तिथिमुद्दिशन्ति । रात्रिद्युसंज्ञेषु विलोमजन्म भागैश्च वेलाः क्रमशो विकल्प्याः" ९म० ।

"अत्रापीति अत्रापि तिथिज्ञाने द्विजेन्द्रा मुनयो होराशास्त्रज्ञाः सूर्य्यांशतुल्याम् अंशस्थाने स्फुटार्कभागसमां तिथिमुद्दिशन्ति कथयन्ति प्रश्नकाले तात्कालिकेनादित्येन यावन्तो भागा भुक्तास्तावन्तः शुक्लप्रतिपत्प्रभृतिज्ञातमासस्य तिथयो व्यतीताः । अत्र चान्द्रमाने मकरमासे ज्ञाते माघमासो ज्ञेयः एवमन्यत्र्वपि मासकल्पना कार्य्या । तथा च भविष्यः "पृच्छाकाले रविणा यावन्तोंऽशाः स्फुटेन सम्भुक्ताः । राशेस्तात्तिथयः स्युः शुक्लादारब्ध-

मासस्य” एवं दिने ज्ञाते किमयं रात्रौ जातो दिवा वेति तदर्थमाह रात्रिद्युसंज्ञेष्विति रात्रिद्युसंज्ञा पूर्वं व्याख्याताः गोजाश्विकर्किमिथुना इत्यादिना । तत्र प्रश्नकाले यदि रात्रिसंज्ञो लग्नो भवति तदा तस्य विलोमतो दिवाजन्म वक्तव्यम् अथ द्युसंज्ञो लग्नो भवति तदा रात्रौ जन्म वक्तव्यम् । एवं दिनरात्रिविभागे ज्ञाते वेलाज्ञानमाह भागैश्च वेलाः क्रमशो विकल्प्याः यस्मिन् दिने पुरुषस्य जन्मज्ञानं तस्मिन् दिने अंशादित्योऽपि ज्ञातः ततस्तस्य पुरुषस्य यदि दिवाजन्म तदा तस्मादादित्याद्दिनप्रमाणं कार्य्यम् अथ रात्रौ जन्म तदा रात्रिप्रमाणं तत्र प्रश्नलग्नस्य तस्मिन् काले यावन्त्यंशका भुक्तास्तैरनुपातः कार्य्यः यदि पुरुषस्य दिवाजन्म तदा दिनप्रमाणेन यदा रात्रौ रात्रिप्रमाणेन तत्काललग्नभुक्तांशकानां गणनां कृत्वा तस्यैव लग्नस्य स्वदेशराश्युदयप्रमाणेन भागमपहृत्याप्तां वेलां तावता कालेन गतेन दिनस्य रात्रेर्वा जन्म वक्तव्यम् । एवं लग्नभागैः क्रमशः परिपाट्या वेलाः समयाः विकल्प्या विकल्पनीयाः” भट्टो० ।

“केचिच्छशांकाध्युषितान्नवांशाच्छुक्लान्तसंज्ञं कथयन्ति मासम् । लग्नत्रिकोणोत्तमवीर्य्ययुक्तं प्रश्नोच्यतेऽङ्गालभनादिभिर्वा” बृजा० ।

“अथान्तरेण मासज्ञानमिन्द्रवज्रयाह केचिदिति केचिदाचार्य्याः शशाङ्काध्युषिताच्चन्द्रयुक्तान्नवांशाच्छुक्लान्तसंज्ञं मासं कथयन्ति प्रश्नकाले यस्मिन्नवांशके नवमेऽंशे चन्द्रमा भवति तमपि नवांशकं त्रिधा परिकल्प्य तस्मिन्नवांशके नवमेंऽशे चन्द्रमा व्यवस्थित इति चन्द्रनवांशकगतं नक्षत्रमन्वेष्यम् । तन्नक्षत्रशुक्लान्तसंज्ञके मासि तस्य जन्म वक्तव्यम् अत्र यस्य नक्षत्रस्य शुक्लान्तसंज्ञो मासो नास्ति तस्य बृहस्पतिचारोक्तविधिना शुक्लान्तसंज्ञो मासः परिकल्प्यः तत्रोक्तम् “नक्षत्रेण सहोदयमस्तं वा येन याति सुरमन्त्री । तत्संज्ञं वक्तव्यम् वर्षं मासं क्रमेणैव । वर्षाणि कार्त्तिकादीन्याग्नेयाद्भद्वयानुयोज्यानि क्रमशस्त्रिभन्तु पञ्चममुपान्त्यमन्त्यं च यद्वर्षमिति” तत्र चन्द्रमा यदि वृषनवांशके तन्नवांशकसप्तकस्यार्वाग्भवति तदा कार्त्तिके मासि जात इति वक्तव्यम् । अथ वृषनवांशकस्योर्द्ध्वं भवति मिथुननवांशके तन्नवांशकषट्कस्यार्वाग्यदा चन्द्रमा भवति तदा मार्गशीर्षे मासि जात इति वक्तव्यम् । अथ मिथुननवांशके तन्नवांशषट्कस्योर्द्ध्वं कर्कटनवांशके तन्नवांशकपञ्चकस्यार्वाग्यदा चन्द्रमा भवति तदा पौषे मासि जात इति वक्तव्यम् अथ कर्कटे तन्नवांशकपञ्चकस्योर्द्ध्वं सिंहनवांशके तन्नवांशकचतुष्टयस्यार्वाग्यदा चन्द्रमा भवति तदा माघे मासि जन्म इति वक्तव्यम् । अथ सिंहनवांशके तन्नवांशकचतुष्टयस्योर्द्ध्वं कन्यानवांशके तन्नवांशकसप्तकस्यार्वाग्यदा चन्द्रमा भवति तदा फाल्गुने मासि जात इति वक्तव्यम् । अथ कन्यानवांशकसप्तकस्योर्द्ध्वं तुलानवांशके तन्नवांशकषट्कस्यार्वाग्यदा चन्द्रमा भवति तदा चैत्रे मासि जात इति वक्तव्यम् अथ तुलानवांशके तन्नवांशकषट्कस्योर्द्ध्वं वृश्चिकनवांशके तन्नवांशकपञ्चकस्यार्वाग्यदा चन्द्रमा भवति तदा वैशाखे मासि जात इति वक्तव्यम् अथ वृश्चिके तन्नवांशकपञ्चकस्योर्द्ध्वं धन्विनवांशके तन्नवांशकचतुष्टयस्यार्वाग्यदा चन्द्रमा भवति तदा ज्यैष्ठे मासि जात इत्यवगन्तव्यम् । अथ धन्विनवांशके तन्नवांशकचतुष्टयस्योर्द्ध्वं मकरनवांशकत्रयस्यार्वाग्यदा चन्द्रमा भवति तदा आषाढे मासि जात इति वक्तव्यम् । अथ मकरनवांशके तन्नवांशकत्रयस्योर्द्ध्वं कुम्भनवांशके तन्नवांशकद्वयस्यार्वाग्यदा चन्द्रमा भवति तदा श्रावणे मासि जात इति वक्तव्यम् । अथ कुम्भनवांशके तन्नवांशकद्वयस्योर्द्ध्वं मीननवांशे तन्नवांशपञ्चकस्यार्वाग्यदा चन्द्रमा भवति तदा भाद्रपदे मासि जात इति वक्तव्यम् अथ मीननवांशके तन्नवांशकपञ्चकस्योर्द्ध्वं मेषनवांशे तन्नवांशषट्कत्रयस्यार्वाग्यदा चन्द्रमा भवति तदाश्वयुजि मासि जात इति वक्तव्यम् । अथ मेषनवांशके तन्नवांशाष्टकस्योर्द्ध्वं यदि चन्द्रमा भवति तदा कार्त्तिके मासि जात इत्यवगन्तव्यम् । यस्मिन् कृत्तिका रोहिणी च कार्त्तिकः मृगशिरार्द्रा च मार्गशीर्षः पुनर्वसुः पुष्यश्च पौषः” अश्लेषा मघा च माघः । पूर्व्वफाल्गुन्युत्तरफाल्गुनी हस्तश्च फाल्गुनः । चित्रा स्वाती च चैत्रः । विशाखानुराधा च वैशाखः । ज्येष्ठामूले ज्यैष्ठः । पूर्व्वाषाढोत्तराषाढा चाषाढः । श्रवणं धनिष्ठा च श्रावणः । शतभिषक्पूर्व्वभाद्रपदोत्तरभाद्रपदाश्च भाद्रपदः । रेवत्यश्विनीभरण्य आश्वयुजः । यस्मादुक्तम् “त्रिभन्तु पञ्चममुपान्त्यमन्त्यं च यद्वर्षमिति । एवं शुक्लान्तस्य मासस्य शुक्लान्तग्रहणेनैतत् प्रतिपादयति यत्तथा शुक्लपक्षान्ते येन नक्षत्रेण युक्तस्तदुपलक्षितो मासो वक्तव्यः यथा कार्त्तिकशुक्लपक्षान्ते कृत्तिकारोहिण्योरन्यतमेन युतश्चन्द्रमा भवति तेन कार्त्तिकोमास उच्यते एवमन्येषामपि योज्यते । तदेतदनुवर्त्ते

एतदुक्तं भवति न शुक्लान्तो मासः कृष्णान्त एव तथा च यवनेश्वरः "मासे तु शुक्लप्रतिपत्प्रवृत्ते पूर्वे शशीमध्यवलोदयस्थः"। तथा च "यद्राशिसंस्थे शीतांशुः प्रश्नकाले नवांशके। स्थितस्तद्राशिगः पूर्णो यस्मिन् भवति चन्द्रमाः। जन्ममासः स निर्दिष्टः पुरुषस्य तु पृच्छतः। कृष्णपक्षान्तिको मासो ज्ञेयोऽत्र तु विपश्चिता"। लग्नत्रिकोणेत्यादि लग्नस्य प्रश्नलग्नस्य त्रिकोणयोश्च नवमपञ्चमयोर्मध्याद्यस्तत्कालमुत्तमेन प्रधानवीर्येण बलेन युक्तस्तद्राशिः प्रोच्यते कथ्यते तस्मिन् राशौ गते चन्द्रमसि जात इति वक्तव्यम्। तथा च "यवनेश्वरः होरादितीर्याधिकलग्नभाजि स्थानं त्रिकोणे शशिनो विधाय"। अङ्गालभनादिभिर्वा कालाङ्गानीत्यनेन प्रदर्शितोयः कालपुरुषस्याङ्गविभागस्तदालभनाह्वानेन विधिना स्पृष्टः स्पृशतः यदेव कालपुरुषस्याङ्गं स्पृशति तत्स्थे चन्द्रमसि जात इति वक्तव्यम् आदिग्रहणात् प्रागुक्तमुत्पदर्शनश्रवणे गृह्येते" भट्टो०। "यावान् गतः शीतकरो विलग्नाच्चन्द्रादवेत्तावति जन्मराशिः। मीनोदये मीनयुगं प्रदिष्टं भक्ष्याहृताकाररुतैश्च चिन्त्यम्" ६सू०। "अथ प्रकारान्तरेण जन्मस्थराशिज्ञानमिन्द्रवज्रयाह यावानिति विलग्नात् पृच्छालग्नाच्छीतकरश्चन्द्रो यावान् गतो यावति राशौ व्यवस्थितस्तस्माद्यस्तावति राशिः तत्स्थे चन्द्रमसि जात इति वक्तव्यम्। मीनोदये यदि मीनलग्नगतो भवति तदा मीनयुगमेव प्रदिष्टमुक्तम् मीनस्थचन्द्रमा इति वक्तव्यम् ननु दर्शितविधिना राशेरनेकप्रकारो यत्र प्राप्तो भिन्नरूपस्तत्र को वक्तव्य इत्याशङ्क्याह भक्ष्याहृताकाररुतैरिति यस्य राशेः सम्बन्धि भक्ष्यद्रव्यं तस्मिन् काले कश्चिदानीयते तदाकारश्च कश्चिद्दृश्यते यथा मार्जारादिदर्शने सिंहो महिषादिदर्शने वृष इत्यादि अथ वा राश्युक्तरूपपुरुषस्य शब्दाय वा रुतेन यस्य राशिसदृशप्राणिनो रुतं शब्दः क्रियते तत्स्थे चन्द्रमसि जात इति वक्तव्यम्" भट्टो०। "होरानवांशप्रतिमं विलग्नं लग्नाद्रविर्यावति च दृक्काणे। तस्माद्वदेत्तावति वा विलग्नं प्रष्टुः प्रसूताविति शास्त्रमाह" ७सू०। "एवं जन्मराशौ ज्ञाते लग्नज्ञानमिन्द्रवज्रयाह होरेति होरायां प्रश्नलग्ने यस्य राशेर्नवांशकस्तत्कालं वर्त्तते तस्मात्तावति तत्प्रतिमन्तमेवांशकराशिं तस्य जन्मलग्नं वक्तव्यम्। अथवा लग्नाल्लग्नद्रेष्काणादारभ्य रविः सूर्य्यो यावति यावत्संख्ये द्रेष्काणे व्यवस्थितस्तस्माल्लग्नादारभ्य तावति राशौ लग्नगते तस्य जन्म वक्तव्यम्। अत्र च द्वादशभ्योऽधिके द्रेष्काणे द्वादशकमपास्य संख्यानिर्देशः चतुर्विंशतेरधिके चतुर्विंशतिमपास्य शेषं वदेत् एवं शास्त्रमाह शास्त्रं कथयति न स्वमनीषयोक्तमित्येतत्प्रतिपादयति शास्त्रग्रहणेनैतत्प्रतिपाद्यते। उक्तञ्च "पृच्छालग्ननवांशस्य यो राशिः संज्ञया समः। तस्मिन् लग्नगते राशौ प्रष्टुर्जन्म विनिर्दिशेत्"। पृच्छतस्तावत्संख्योपगते लग्नाद्दृक्काणे दिनकृत् ततः प्रश्नलग्नात्तावत्संख्ये गते लग्नराशौ जन्म वक्तव्यम्" भट्टो०। "जन्मादिशेल्लग्नगे वीर्यगे वा छायाङ्गुलघ्नोऽर्कहतेऽवशिष्टम्। आसीनसुप्तोत्थितनिष्ठतां लग्नायाम्बुखास्तोदयगं प्रदिष्टम्" ८सू०। "अथ प्रकारान्तरेण लग्नानयनमिन्द्रवज्रयाह जन्मादिशेदिति लग्नगे ग्रहे जन्मादिशेत् प्रश्नलग्ने यो ग्रहो व्यवस्थितस्तं तात्कालिकं कृत्वा लिप्तापिण्डीकार्यम् अथ बहवो लग्नगता भवन्ति तदा तेषां यो बलवान् तं तात्कालिकं कृत्वा लिप्तापिण्डीकार्यं ततः सलिलसमायामवनौ द्वादशाङ्गुलेन शङ्कुना तात्कालिकानि छायाङ्गुलानि गृहीत्वा तैरङ्गुलैरेकैकं ग्रहं दर्शितकाले लिप्तापिण्डीकृतं गुणयेत् अथ वा सर्वग्रहेभ्यो यो बलवान् ग्रहस्तं तात्कालिकं कृत्वा लिप्तापिण्डं कृत्वा छायाङ्गुलाहतं चार्कशुद्धं कारयेत् द्वादशभिर्विभजेत्तत्र यावत्तत्रावशिष्टं तावत्संख्यो मेषादेरारभ्य यो राशिर्भवति तस्मिन् राशौ लग्नगते तस्य जन्म वक्तव्यम्। अथ प्रकारान्तरेणाह आसीनेत्यादि आसीन उपविष्टो यदा प्रष्टा पृच्छति तदा लग्नाद्यज्जायास्थानं सप्तमराशिस्तस्मिन् लग्नगते तस्य जन्म वक्तव्यम्। अथ सुप्तः सुप्तोऽत्र शयनपतितोऽभिहितः जातनिद्रस्य प्रश्नाभावात्। तत्र पतितो यदा पृच्छति तदा लग्नाद्यत् सुखस्थानं चतुर्थराशिस्तस्मिन् लग्नगते तस्य जन्म वक्तव्यम्। अथोत्थितः पृच्छति तदा तस्माल्लग्नाद्यदाज्ञा दशमोराशिस्तस्मिन् लग्नगते तस्य जन्म वक्तव्यम्। अथ शयनादासनाच्च नोत्थितः किन्तु व्रजन् पृच्छति तदोदयलग्नराशौ तस्मिन्नेव जन्म वक्तव्यम्। उक्तञ्च "उत्तिष्ठतो विलग्नात् प्रष्टुः सुप्तस्य बन्धुलग्नाच्च। उपविष्टस्यास्तमये व्रजतो मेषूरणस्थानादिति" भट्टो०। "गोसिंहौ जितुमाष्टमौ क्रियतुले कन्यामृगौ च क्रमात् संवर्ग्या दशकाष्टसप्तविषयैः शेषाः स्वसंख्यागुणाः। जीवारास्फुजिदैन्द्रवाः प्रथमवच्छेषाग्रहाः सौम्यवत् राशीनां नियतो विधिर्ग्रहयुतैः कार्या च तद्वर्गणाः"

९सू०। “अथ प्रकारान्तरेण सर्व्वमेव नष्टजातकं वक्ति ततः प्रश्नकाले तात्कालिकं लग्नं कृत्वा लिप्तापिण्डीकार्य्यम् ततस्तस्य लिप्तापिण्डीकृतस्य गुणकारविज्ञानार्थं शार्द्दूलविक्रीडितेनाह गोसिंहाविति गोसिंहादयो राशयो यथाक्रमं दशादिभिर्गुणकारैः संवर्ग्या गुणनीयाः तद्यथा गोसिंहौ वृषसिंहौ दशभि१०र्गुणयेत् वृषलग्नं लिप्तापिण्डीकृतं दशभिर्गुणयेत्। एवं सिंहं दशभिरेव। जितुमाख्यौ मिथुनवृश्चिकौ लग्नगतावष्टभि८र्गुणयेत्। क्रियतुले मेषतुले एतौ सप्तभिर्गुणयेत्। कन्यामृगौ कन्यामकरौ एतौ लग्नगतौ विषयैः पञ्चभिर्गुणयेत्। एवमेते यथाक्रमं संवर्ग्या गुणनीयाः शेषा अनुक्ता राशयः स्वसंख्यागुणा आत्मीयसंख्यया गुणनीयाः तत्र मेषादिगणनया चतुर्थं कर्कटमिति चतुर्भिर्गुणयेत् एवं धन्विन नवभिः९ कुम्भमेकादशभिः११ एवं मीनं द्वादशभिः१२। एवं तावल्लग्नं स्वगुणकारेणावश्यमेव गुणयेत् दशकाष्टसप्तविषयैः ततस्तत्र यदि ग्रहो भवति तदा ग्रहगुणकारेणावश्यमेव गुणयेत् तत्र ग्रहगुणकारविधिः जीवारास्फुजिदैन्दवाः प्रथमवद्दशकाष्टसप्तविषयैरिति जीवे गुरौ लग्नगते तमेव लग्नं स्वगुणकारैराहतं दशभिर्गुणयेत् आरे भौमे लग्नगते अष्टभिः, आस्फुजिच्छुक्रः तस्मिन् लग्नगते सप्तभिः, ऐन्दवे बुधे पञ्चभिः, शेषा रविशशिसौरास्ते च सौम्यवत् बुधवत् पञ्चभिर्गुणनीया इत्यर्थः। एवं तात्कालिकं लग्नम् अवश्यं राशिगुणकारेण गुणयेत् ततः स ग्रहोक्तगुणकारैरपि तत्र च यदा ग्रहो भवति तदा ग्रहगुणकारेण गुणयेत्। यदा बहवो ग्रहा भवन्ति तदा सर्व्वेषां गुणकारैर्गुणयेत् एवं च तद्गुणितमेकान्ते स्थापयेत्” भट्टो०।

“सप्ताहतं त्रिघनभाजितशेषमृक्षं दत्त्वाथ वा नव विशोध्य नवाथ वा स्यात्। एवं कलत्रसहजात्मजशत्रुभेभ्यः प्रष्टुर्व्वदेदुदयराशिवशेन तेषाम्” १०सू०। “अथ नक्षत्रानयनं वसन्ततिलकेनाह सप्ताहतमिति सप्ताहतं सप्तभिर्गुणयेत् दत्त्वाथ वेति ततस्तत्र नव देयाः शोध्या वा न किञ्चिद्वा देया इत्युच्यते यदि स चरराशिर्लग्नगतो भवति तदा नव देयाः स्थिरे न देया नापि शोध्याः, द्विःस्वभावे विलग्ने नव शोध्याः एवं केचिद्व्याचक्षते वयं पुनर्ब्रूमः यदि प्रश्नलग्ने प्रथमोद्रेष्काणो भवति तदा न देयाः, द्वितीये न देया नापि शोध्याः, तृतीये नव शोध्याः एवं कृत्वा तस्य राशेस्त्रिघनेन सप्तविंशत्या भागमपहृत्यावाप्तं त्याज्यं तत्र यावत्संख्योऽङ्कोऽवशेषो भवति तावत्संख्यमश्विन्यादितो यन्नक्षत्रं तन्नक्षत्रं तस्य प्रष्टुर्व्वक्तव्यम्। केचित् वदन्ति तथास्थितस्य राशेः सप्तविंशत्याभागमपहृत्यावशेषाङ्कनवकदानेन विशोधनेन वा यथास्थितेनाङ्केन संवाद उत्पद्यते तथा नक्षत्रं वक्तव्यम् एवमित्यादि कलत्रसहजात्मजशत्रुभेभ्य इति भार्य्याभर्त्तृपुत्ररिपुव नष्टजातकं यदा पृच्छति तदा तद्भेभ्यस्तद्भावेभ्यः एवं प्रष्टुः पृच्छकस्य वदेद्ब्रूयात् तमेवोदयराशिं परिकल्पयेदित्यर्थः। एतदुक्तं भवति यदि पुरुषः स्वपत्न्या नक्षत्रं पृच्छति तदा तात्कालिके लग्ने राशिषट्कं देयम्। अथ भ्रातुः पृच्छति तदा राशित्रयं देयमथ पुत्रस्य पृच्छति तदा राशिचतुष्कं देयमथ शत्रोः पृच्छति तदा राशिपञ्चकं देयम्। एवं कृत्वा यद्भवति तदेवोदयराशिं प्रकल्प्य तद्गुणकारेण गुणयेत् तत्स्थग्रहगुणकारेण च ततस्तत्र प्राग्वन्नवकदानविशोधने कृत्वा सप्तविंशत्याभागमपहृत्यावशेषाङ्कवशं यस्य प्रष्टा पृच्छति तस्य नक्षत्रं वक्तव्यम्। एतदप्युपलक्षणमेव, त्रिराशिसहितात्तात्कालिकाल्लग्नात् पितुश्च वक्तव्यम्। एतस्माच्चक्रानयनमप्युपलक्षणमेवं सकलमपि नष्टजातकं वक्तव्यम्” भट्टो०।

“वर्षर्त्तुमासतिथयो द्युनिशं ह्युडूनि वेलोदयर्क्षनवभागविकल्पनाः स्युः। भूयो दशादिगुणितात् स्वविकल्पभक्ताद्वर्षादयो नवकदानविशोधनाभ्याम्” ११सू०।

“अथ वर्षाद्यानयनं वसन्ततिलकेनाह वर्षर्त्तुमासेति वर्षादीनि सर्व्वाणि स्वविकल्पेन भागे हृते यथा पाठक्रमेणानयितव्यानि तद्यथा तात्कालिकं लग्नं लिप्तापिण्डीकृतं राशिगुणकाराहतं ग्रहसंयुक्तं चेद्ग्रहगुणकाराहतमपि यदेकान्ते स्थापितं तत्पुनरपि दशादिगुणं कार्य्यम्। एतदुक्तं भवति स राशिः स्थानचतुष्टये धार्य्यः एकत्र दशगुणोऽन्यत्र द्वितीयेऽष्टगुणोऽन्यत्र तृतीये सप्तगुणः चतुर्थे पञ्चगुणः कार्य्यः यत उक्तम्। भूयो दशादिगुणितात् भूयः पुनरपि दशकाष्टसप्तविषयैर्गुणनीयाः ततस्तस्मिन् राशिचतुष्टये प्राग्वन्नवकदानविशोधने कृत्वा स्वविकल्पैर्भागमपहृत्यावाप्तं वर्षादयो ज्ञेयाः” भट्टो०।

“विज्ञेया दशकेष्वब्दा ऋतुमासास्तथैव च। अष्टकेष्वपि मासार्द्धास्तिथयश्च तथा स्मृताः” १२सू०। “अथ न ज्ञायते कस्माद्राशेः कस्यानयनं कार्य्यं तदनुद्दुपलयेणाह विज्ञेया दशकेष्वब्दा इति अत्र बहुवचनं बहुधोपयोगि-

त्वात् कृतम्। यदुक्तं स्वविकल्पभङ्गाद्दशोदयस्तद्व्याख्यायते एते चत्वारो राशयः स्थापितास्तेषां नवकदानविशोधनं कृत्वा कर्मयोग्याः सर्वे भवन्ति ततो दशगुणस्य पृथक्स्थस्य परमायुषा विंशत्यधिकेन वर्षशतेन भागमपहृत्य योऽङ्कोऽवशिष्यते तदङ्कसमं तस्य वर्षसंख्याङ्कं वर्त्तते तस्यैव षड्भिर्भागमपहृत्य ऋतुसंख्यया तत्र योऽङ्कोऽवशिष्यते तदङ्कसमे शिशिरादारभ्यर्त्तौ जात इति वक्तव्यम्। तस्यैव तु मासरंख्यया द्वाभ्यां भागमपहृत्य यद्येकोऽवशिष्यते तदा ऋतत्तौ प्रथमे मासि जात इति वक्तव्यम्। अथ शून्यमवशिष्यते तदा द्वितीये मासि जातः। एवं कृत्वा दशगुणः कर्मयोग्यो राशिरपास्यः यस्य विंशत्यधिकाद्वर्षशतादप्यधिकं जन्मनोऽतीतं तस्य नष्टजातकज्ञानोपाय एव नास्ति। अष्टेत्यादि योऽसावष्टहतो राशिस्तस्य पृथक्स्थस्य कर्मयोग्यस्य पक्षसंख्यया द्वाभ्यां भागमपहृत्य यद्येकोऽवशिष्यते तदा शुक्लपक्षे जात इति वक्तव्यम्। न किञ्चिदवशिष्यते तदा कृष्णपक्षे। तस्यैव तिथिसंख्यया पञ्चदशभिर्भागमपहृत्य योऽङ्कोऽवशिष्यते तदङ्कसमाने तिथौ जात इति वक्तव्यम् एवं कृत्वाष्टगुणः कर्मयोग्यो राशिरपास्यः” भट्टो०।

“दिवारात्रिप्रसूतिञ्च नक्षत्रानयनं तथा। सप्तकेष्वपि वर्गेषु नित्यमेवोपलक्षयेत्” १३मू०। “दिवेत्यादि योऽसौ सप्तहतो राशिस्तत्र प्राग्वदेव नवकदानविशोधने कृत्वा तत्कर्मयोग्यं राशिं स्थापयेत् तस्य दिवारात्रिसंख्यया द्वाभ्यां भागमपहृत्य यद्येकोऽवशिष्यते तदा दिवसे जातोऽथ न किञ्चिदवशिष्यते तदा रात्रौ जात इति वक्तव्यम्। योऽसौ सप्तहतो राशिस्तस्य नक्षत्रसंख्यया सप्तविंशत्या भागमपहृत्य योऽङ्कोऽवशिष्यते तदङ्कसंख्ये नक्षत्रेऽश्विन्यादित आरभ्य जातनक्षत्रमिति वक्तव्यम्। अस्य कर्मणः पुनरभिधानं नक्षत्रानयनस्य बाहुल्योपयोगित्वात्” भट्टो०।

“वेलामथ विलग्नञ्च होरामंशकमेव च। पञ्चकेषु विजानीयान्नष्टजातकसिद्धये” १४मू०। “वेलेत्यादि यस्मिन् दिने पुरुषस्य जन्मज्ञानं तद्दिनप्रमाणं घटिकादिकं कर्त्तव्यं रात्रौ चेत्तदा रात्रिप्रमाणं ततः पञ्चगुणस्य राशेस्तेन दिनप्रमाणेन रात्रिप्रमाणेन भागमपहृत्य योऽङ्कोऽवशिष्यते तस्मिन् काले दिनगते रात्रिगते वा तस्य जन्म वक्तव्यम्। अथ विलग्नमित्यादि अथ शब्दः पादपूरणार्थं काले ज्ञाते राश्यादिलग्नं कर्त्तव्यं ततस्तस्य होराद्रेष्काणनवांशद्वादशांशत्रिंशांशभागाः कर्त्तव्याः तात्कालिका ग्रहाश्च कर्त्तव्याः ततो यथाभिहितेन विधिना दशान्तर्दशाष्टकवर्गादेरभिहितस्य फलस्य निर्देशः कार्य्यः एवं नष्टजातकं साधयेत्” भट्टो०।

“संस्कारनाममात्राद्द्विगुणाच्छायाङ्गुलैः समायुक्ता। शेषं त्रिनवकभक्ता नक्षत्रं तद्धनिष्ठादि” १५मू० “अथ प्रकारान्तरेण नक्षत्रानयनमार्य्ययाह संस्कारनामेति संस्कारेण नाम संस्कारनाम तस्य मात्राः संस्कारेणामतस्य नाम्नो मात्राः संस्कारनाममात्राः संस्कारग्रहणेनैतत्प्रतिपादितं भवति संस्कारेण यत्पुरुषस्य नामकृतं तस्य मात्रा ग्राह्याः नान्यस्य कस्यचित् कुनामादेः मात्राश्चेह गृह्यन्ते। हल् अर्द्धमात्रिकः अच् मात्रिकः इत्यनया स्थित्या ताः संस्कारनाममात्राः संख्याय द्विगुणीकार्य्याः ततस्तात्कालिकानि षट्च्छायाङ्गुलानि गृहीत्वा ताद्द्विगुणमात्रास्तैरङ्गुलैः संयुक्ताः कार्य्याः एवं कृते यद्भवति तस्य त्रिनवकेन सप्तविंशत्याभागमपहृत्य यः शेषो भवति तदङ्कसमं तस्य धनिष्ठादित आरभ्य नक्षत्रं वक्तव्यम्” भट्टो०।

“द्वित्रिचतुर्दशदशतिथि सप्तत्रिगुणानवाष्टचैन्द्राद्याः। पञ्चदशघ्नास्तद्दिङ्मुखान्वितामं धनिष्ठादि” १६मू०। “अथ नक्षत्रानयनं प्रकारान्तरेणार्य्ययाह। द्वित्रिचतुर्दशेति पूर्वाभिमुखो यदा प्रष्टा पृच्छति तदा द्वयोरङ्काः स्थाप्याः अथाग्नेयाभिमुखस्तदा त्रयाणाम्। अथ दक्षिणाभिमुखस्तदा चतुर्दशानाम् अथ नैर्ऋत्यभिमुखस्तदा दशानाम् अथ पश्चिमाभिमुखस्तदा तिथिसंख्यानां पञ्चदशानाम् अथ वायव्याभिमुखस्तदा सप्तत्रिगुणायाः एकविंशतेः। उत्तराभिमुखस्तदा नवानाम् ऐशान्याभिमुखस्तदाष्टानां तद्यथा एवं दिगभिमुखप्रष्टृवशेनाङ्कं गृहीत्वा ततः पञ्चदशगुणः कार्य्यः ततस्तस्मिन् प्रदेशे यावन्तः पुरुषास्तदभिमुखाः स्थितास्तत्संख्ययान्वितो युक्तः कार्य्यः एवं कृते यद्भवति तस्य सप्तविंशत्या भागमपहृत्य योऽङ्कोऽवशिष्यते तदङ्कसमं तस्य धनिष्ठाद्यारभ्य नक्षत्रं वक्तव्यम्” भट्टो०।

“इति नष्टजातकमिदं बहुप्रकारं मया विनिर्दिष्टम्। ग्राह्यमतः सच्छिष्यैः परीक्ष्य यत्नाद्यथा भवति” १७मू० “इतिशब्दः उपसंहारे मया वराहमिहिराचार्य्येण नष्टजातकं बहुप्रकारं बहुभेदं विनिर्दिष्टमुक्तमिदम्। अतोऽस्माद्धेतोः सच्छिष्यैः शोभनशिष्यैः ग्राह्यं यत्नात्परीक्ष्य विचार्य यथा येन प्रकारेण संवदति सत्यरूपं तथा ग्राह्यमिति येन प्रकारेण संवदति तथा गृहीतव्यमित्यर्थः बहुभिरागमैर्धिया विचार्य पराशर-

वशिष्ठयवनसत्यमणित्थादीनां मतानि आलोक्य ज्ञानं तदेव भूयो निर्मलगुणनिपुणबुद्ध्या विचार्य संवादेन कार्यं येन स्फुटसिद्धोऽसौ संपद्यते” भट्टो॰ ।

**नष्टमार्गण** न॰ नष्टस्यादर्शनं गतस्य मार्गणम् । अदर्शनगतस्यान्वेषणे । [भावस्मृत्ये शाख्यादौ ।

**नष्टवीज** त्रि॰ नष्टं वीजं वीजभावो यस्य । निष्फले वीज-

**नष्टाग्नि** पु॰ नष्टो लुप्तः प्रमादालस्यादिना अग्निः वैतानिकोऽग्निर्यस्य । प्रमादादिना लुप्ताग्निके द्विजे ।

**नष्टाप्तिसूत्र** न॰ नष्टस्य चोरेणापहृतस्याप्तेः साधनं सूत्रं चिह्नम् । अपहृतद्रव्यस्य लाभसाधने चिह्नभेदे लोप्त्रे । (वामाल) । [कुहूशब्दे २१६२ पृ॰ दृश्यम् ।

**नष्टेन्दुकला** स्त्री नष्टा इन्दुकला यस्याम् कुहूमाममरः ।

**नस** नतौ भ्वा॰आत्म॰सक॰सेट् वेदनिघण्टुः । नसते अनसिष्ट कौटिल्येऽयं धोपदेशः स च नति निमित्ते वार्थ भजते । संश्लेषे च “स मोदते नसते साधते गिरा” ऋ॰ ८।७१।२ “नसते गृहादिषु संश्लिष्टो भवति” भा॰ ।

**नस** व्याप्तौ भ्वा॰ पर॰ सक॰ सेट् निघण्टुः नशदित्यत्र नसदिति माधवसम्मतः पाठः । नसति अना(न)सीत् । ननास नेसतुः “सुरभिष्टमं नरां नसन्त” ऋ॰१।१८६।७ “नसन्त व्याप्नुवन्ति नसतिर्व्याप्तिकर्मेति” माधवः “दुर्मंषो नसीमहि” ऋ॰२।१६।८ नसीमहि व्याप्यामेति छान्दसः प्रयोगः ।

**नस्** स्त्री नस–क्विप् । नासिकायाम् “अश्विनौ मेषो नसि वीर्याय” यजु॰ १९।१० “नसि नासिकायाम्” वेददी॰ नासिकाशब्दस्य सप्तम्येकवचनरूपमित्यन्ये ।

**नसत्त** न॰न+सद–क्त नसत्तनिषत्तेत्यादिना नत्वाभावः नि॰। सन्नभिन्ने “नसत्तमञ्जसा” सि॰कौ॰ धृता श्रुतिः ।

**नसा** स्त्री नस्–हलन्तत्वात् वा टाप् । नासिकायां सिका॰ “विनसा हतवान्धवा” भट्टिः ।

**नस्त** पु॰ नस–संज्ञायां त । १नासिकायां शब्दमाला । नासिकायै हितः बा॰त नसादेशश्च । नासिकायां हिते २वैद्यकोक्ते पञ्चविधे नस्ये न॰ । नस्यशब्दे सुश्रुतवाक्ये तेषां लक्षणानि दृश्यानि । नासिकायाः ३छिद्रे स्त्री “नस्ताभेदनदाहाभ्यां कर्णदाहास्थिभेदनैः । अतिदाहाति वाहाभ्यां वधे चान्द्रायणं चरेत्” स्मृतिः ।

**नस्तस्** अव्य॰ नासिका+विभक्त्यर्थे तसिल् “नस् नासिकाया यत्तसक्षुद्रेषु” नसादेशः । नासिकायामित्याद्यर्थे “नस्तः कर्माणि शस्यन्ते पानाभ्यञ्जाञ्जनेषु च” सुश्रुतः “स यत् नस्तोऽभवत् ततः सिंहः समभवत्” शत॰ब्रा॰५।५।४ “नस्तः प्राणा दिशं श्रोत्रात्” याज्ञ॰

**नस्तित** त्रि॰ नस्ता नासाच्छिद्रं जाताऽस्य तार॰ इतच् । कृतनासाच्छिद्रे रज्ज्वाद्यूतनासिके बलीवर्दे अमरः । (नाकफोडा) । [वर्हे रमानाथः ।

**नस्तोत** पु॰ नस्तया नासास्थरज्ज्वा उतः । नस्योते बली-

**नस्य** त्रि॰नासिकायै हितं तत्र भवो वा यत् नसादेशः । १नासिकाभवे २तद्धिते च ३सुश्रुतोक्ते नासिकाहिते क्रियाभेदे यथा “नस्यस्यातः प्रवक्ष्यामि विधिं निरवशेषतः । औषधमौषधसिद्धो वा स्नेहो नासिकाभ्यां दीयत इति नस्यं तद्द्विविधं शिरोविरेचनं स्नेहनञ्च तद्द्विविधमपि पञ्चधा । तद्यथा नस्यं शिरोविरेचनं प्रतिमर्षोऽवपीडः प्रधमनञ्च तेषु नस्यं प्रधानं शिरोविरेचनञ्च नस्यविकल्पः प्रतिमर्षः शिरोविरेचनविकल्पोऽवपीडः प्रधमनञ्च । ततो नस्यशब्दः पञ्चधा निपातितः । तत्र यः स्नेहनार्थं शून्यशिरसां ग्रीवास्कन्धोरसां बलजननार्थं दृष्टिप्रसादजननार्थं वा स्नेहो विधीयते तस्मिन् वैशेषिको नस्यशब्दः । तत्तु नस्यं देयं वाताभिभूते शिरसि दन्तकेशश्मश्रुप्रपातदारुणकर्णशूलकर्णक्ष्वेडतिमिरस्वरोपघातनासारोगास्यशोषावबाहुकाकालजवलीपलितप्रादुर्भावदारुणप्रबोधेषु वातपैत्तिकेषु मुखरोगेष्वन्येषु च वातपित्तहरद्रव्यसिद्धेन स्नेहेनेति । शिरोविरेचनं श्लेष्माभिव्याप्ततालुकण्ठशिरसामरोचकशिरोगौरवशूलपीनसार्द्धावभेदककृमिप्रतिश्यायापस्मारगन्धाज्ञानेष्वन्येषु चोर्द्ध्वजत्रुगतेषु कफजेषु विकारेषु शिरोविरेचनद्रव्यैस्तत्सिद्धेन वा स्नेहेनेति । तदेतद्द्विविधमभुक्तवतोऽन्नकाले पूर्वाह्णे श्लेष्मरोगिणां मध्याह्ने पित्तरोगिणामपराह्णे वातरोगिणाम् । अथ पुरुषाय शिरोविरेचनीयाय दन्तकाष्ठधूमपानाभ्यां विशुद्धवक्त्रस्रोतसे पाणितापपरिस्विन्नमृदितगलकपोलललाटप्रदेशाय वातातपरजोहीनवेश्मन्युत्तानशायिने प्रसारितकरचरणाय किञ्चित् प्रविलम्बितशिरसे वस्त्राच्छादितनेत्राय वामहस्तप्रदेशिन्यग्रोन्नामितनासाग्राय विशुद्धस्रोतसि दक्षिणहस्तेन स्नेहमुष्णाम्बुतप्तं रजतसुवर्णताम्रमणिपात्रशुक्तीनामन्यतमस्थं शुक्त्या पिचुना वा सुखोष्णं स्नेहमद्रुतमासिञ्चेदव्यवच्छिन्नधारं यथा नेत्रे न प्राप्नोति । स्नेहेऽवसिच्यमाने तु शिरो नैव प्रकम्पयेत् । न कुप्येन्न प्रभाषेत न क्षुयान्न हसेत्तथा । एतैर्हि विहतः स्नेहो न सम्यक्प्रतिपद्यते । ततः कासप्रतिश्या-

यशिरोऽक्षिगदसम्भवः" तस्य प्रमाणमष्टौ बिन्दवः प्रदेशिनीपर्वद्वयनिःसृताः प्रथममात्रा, द्वितीया शुक्तिः, तृतीया पाणिशुक्तिरित्येतास्तिस्रो मात्रा यथाबलं प्रयोज्याः। स्नेहनस्यं नचोपगिलेत् किञ्चिदपि। "शृङ्गाटकमभिप्लाव्य निरेति वदनाद्यथा। कफोत्क्लेशभयाच्चैव निष्ठीवेदविधारयन्" दत्ते च पुनरपि संस्वेद्य गलकपोलादीन् धूममासेवेत भोजयेच्चैनमभिष्यन्दि ततोऽस्याचारिकमादिशेत्। रजोधूमस्नेहातपमद्यद्रवपानशिरःस्नानातियानक्रोधादीनि च परिहरेत्। तस्य योगायोगानां विज्ञानं भवति। "लाघवं शिरसो योगे सुखस्वप्नप्रबोधनम्। विकारोपशमः शुद्धिरिन्द्रियाणां मनःसुखम्। कफप्रसेकः शिरसो गुरुतेन्द्रियविभ्रमः। लक्षणं मूर्ध्न्यतिस्निग्धे रूक्षं तत्रावचारयेत्। अयोगे चैव वैगुण्यमिन्द्रियाणाञ्च रूक्षता। रोगाशान्तिश्च तत्रेष्टं भूयो नस्यं प्रयोजयेत्। चत्वारो बिन्दवः षड्वा तथाष्टौ वा यथाबलम्। शिरोविरेकस्नेहस्य प्रमाणमभिनिर्दिशेत्। नस्ये त्रीण्युपदिष्टानि लक्षणानि प्रयोगतः। शुद्धहीनातिसंज्ञानि विशेषाच्छास्त्रचिन्तकैः। लाघवं शिरसः शुद्धिः स्रोतसां व्याधिनिर्जयः। चित्तेन्द्रियप्रसादश्च शिरसः शुद्धिलक्षणम्। कण्डूपदेहौ गुरुता स्रोतसां कफसंस्रवः। मूर्ध्नि हीनविशुद्धे तु लक्षणं परिकीर्त्तितम्। मस्तुलुङ्गागमो वातवृद्धिरिन्द्रियविभ्रमः। शून्यता शिरसश्चापि मूर्ध्नि गाढविरेचिते। हीनातिशुद्धे शिरसि कफवातघ्नमाचरेत्। सम्यग्विशुद्धे शिरसि सर्पिर्नस्यं निषेचयेत्। एकान्तरं द्व्यन्तरं वा सप्ताहं वा पुनः पुनः। एकविंशतिरात्रं वा यावद्वा साधु मन्यते। मारुतेनाभिभूतस्य वातघ्नं यस्य देहिनः। द्विकालञ्चापि दातव्यं नस्यं तत्र विजानता"। अवपीडस्तु शिरोविरेचनवद् अभिष्यन्दसर्पदष्टविसंज्ञेभ्यो दद्याच्छिरोविरेचनद्रव्याणामन्यतममवपीड्यावसिच्य चेतोविकारकृमिविषाभिपन्नानां चूर्णं विदध्यात्। शर्करेक्षुरसक्षीरघृतमांसरसानामन्यतमं क्षीणानां शोणितपित्ते च विदध्यात्। "कृशदुर्बलभीरूणां सुकुमारस्य योषिताम्। स्मृताः स्नेहाः शिरःशुद्ध्यै कल्कस्तेभ्यो यथाहितः"। नस्यदाने परिहर्त्तव्यो भुक्तवानपतर्पितोऽत्यर्थतरुणप्रतिश्यायी गर्भिणी पीतस्नेहोदकमद्यद्रवोऽजीर्णी दत्तवस्तिः क्रुद्धो गरार्त्तस्तृषितः शोकाभिभूतः श्रान्तो बालो वृद्धो वेगावरोधितः शिरःस्नातुकामश्चेति। अनार्त्तवे चाभ्रे नस्यधूमौ परिहरेत्। तत्र हीनातिमात्रातिशीतोष्णसहसाप्रदानातिप्रविलम्बितशिरस उच्छिङ्घतो विचलतोऽभ्यवहरतो वा प्रतिषिद्धप्रदानाच्च व्यापदो भवन्ति तृष्णोद्गारादयो दोषनिमित्ताः क्षयजाश्च। भवतश्चात्र "नस्ये शिरोविरेके च व्यापदो द्विविधाः स्मृताः। दोषोत्क्लेशनिमित्तांस्तु जयेच्छमनशोधनैः। अथ क्षयनिमित्तांस्तु यथास्वं बृंहणं हितम्"। प्रतिमर्शश्चतुर्दशसु कालेषूपादेयः। तद्यथा तल्पोत्थितेन प्रक्षालितदन्तेन गृहान्निर्गच्छता व्यायामव्यवायाध्वपरिश्रान्तेन मूत्रोच्चारकवलाञ्जनान्तेऽभुक्तवता छर्दितवता दिवास्वप्नोत्थितेन सायञ्चेति। तत्र तल्पोत्थितेनासेवितः१ प्रतिमर्शो रात्रावुपचितनासास्रोतोगतं मलमुपहन्ति मनःप्रसादञ्च करोति। प्रक्षालितदन्तेनासेवितो२ दन्तानां दृढतां वदनसौगन्ध्यं चापादयति। गृहान्निर्गच्छतासेवितो३ नासास्रोतसः क्लिन्नतया रजो धूमो वा नाबाधते। व्यायाममैथुनाध्वपरिश्रान्तेनासेवितः४।५।६ श्रममुपहन्ति। मूत्रोच्चारान्ते७।८ चासेवितो दृष्टेर्गुरुत्वमपनयति। कवलाञ्जनान्ते९।१० सेवितो दृष्टिं प्रसादयति। अभुक्तवता सेवितः११ स्रोतसां विशुद्धिं लघुतां चापादयति। वान्तेनासेवितः१२ स्रोतोविलग्नं श्लेष्माणमपोह्य भक्ताकाङ्क्षामापादयति। दिवास्वप्नोत्थितेनासेवितो१२ निद्राशेषं गुरुत्वं मलं चापोह्य चित्तैकाग्र्यं जनयति। सायं चासेवितः१४ सुखनिद्राप्रबोधं चेति। "ईषदुच्छिङ्घतः स्नेहो यावद्वक्त्रं प्रपद्यते। नस्ये निषिक्तं तं विद्यात् प्रतिमर्शं प्रमाणतः। नस्येन रोगाः शाम्यन्ति नराणामूर्द्ध्वजत्रुजाः। इन्द्रियाणां च वैमल्यं कुर्य्यादास्यं सुगन्धि च। हनुदन्तशिरोग्रीवात्रिकबाहूरसां बलम्। वलीपलितखालित्यव्यङ्गानां चाप्यसम्भवः। तैलं१ कफे सवाते स्यात् केवलं पवने वसाम्२। दद्यात्सर्पिः३ सदा पित्ते मज्जानं४ च समारुते। चतुर्विधस्य स्नेहस्य विधिरेष प्रकीर्त्तितः। श्लेष्मस्थानाविरोधित्वात्तेषु तैलं विधीयते"।

**नस्योत** त्रि॰ आ+वे–क्त ओतः नसि ओतः अलुक्स॰। नासिकायां कृतच्छिद्रायां रज्ज्वा बद्धे बलीवर्द्दे "मणिः सूत्र इव प्रोतो नस्योत इव गोवृषः" भा॰व॰ ३०अ॰।

**नह** अव्य॰। न च ह च। प्रत्यारम्भे।

**नहि** अव्य॰ न च हि च चादि॰। निषेधे "नह्यस्मिन् युज्यते कर्म किञ्चिदामौञ्जिबन्धनात्" मनुः।

**नहुष** पु॰ नह–उष। १मरुद्गणभेदे "नहुषश्चाङ्कृतिश्चैव

चारित्रं ब्रह्मपन्नगम्” हरिवं० २०४अ० । २चन्द्रवंश्ये नृपभेदे “आयोः पुत्रास्तथा पञ्च सर्वे वीरा महारथाः । स्वर्भानुतनयायाञ्च प्रभायां जज्ञिरे नृप ! । नहुषः प्रथमं जज्ञे वृद्धशर्मा ततःपरम्” २८अ०। स चागस्त्यशापात् सर्पतामाप्तः युधिष्ठिरेण तस्मान्मोचितः तत्कथा भा०व० १८१अ० “अहं हि दिवि दिव्येन विमानेन चरन् पुरा । अभिमानेन मत्तः सन् कञ्चिन्नान्यमचिन्तयम् । ब्रह्मर्षिदेवगन्धर्वयक्षराक्षसपन्नगाः । करान्मम प्रयच्छन्ति सर्वे त्रैलोक्यवासिनः । चक्षुषा यं प्रपश्यामि प्राणिनं पृथिवीपते ! । तस्य तेजो हराम्याशु तद्धि दृष्टेर्बलं मम । ब्रह्मर्षीणां सहस्रं हि उवाह शिबिकां मम । स मामपनयो राजन् ! भ्रंशयामास वै श्रियः । तत्र ह्यगस्त्यः पादेन वहन् स्पृष्टो मया मुनिः । अगस्त्येन ततोऽस्म्युक्तो ध्वंस सर्पेति वै रुषा । ततस्तस्मादहिमानात्प्रात् प्रच्युतश्चुतलक्षणः । प्रपतन् बुबुधे त्मानं व्यालीभूतमधोमुखम् । अयाचन्तमहं विप्रं शापस्यान्तो भवेदिति । प्रमादात् संप्रमूढस्य भगवन् ! क्षन्तुमर्हसि । ततः स मामुवाचेदं प्रपतन्तं कृपान्वितः । युधिष्ठिरो धर्मराजः शापात्त्वां मोचयिष्यति । अभिमानस्य घोरस्य पापस्य च नराधिप ! । फले क्षीणे महाराज ! फलं पुण्यमवाप्स्यसि” “नहुषो नाम राजाऽहमासं पूर्वस्तवानघ ! । प्रथितः पञ्चमः सोमादायोः पुत्रो नराधिप ! । क्रतुभिस्तपसा चैव स्वाध्यायेन दमेन च । त्रैलोक्यैश्वर्यमतुलं प्राप्तोऽहं विक्रमेण च । तदैश्वर्यं समासाद्य दर्पो मामगमत्तदा । सहस्रं हि द्विजातीनामुवाह शिबिकां मम । ऐश्वर्यमदमत्तोऽहमवमत्य ततो द्विजान् । इमामगस्त्येन दशामानीतः पृथिवीपते ! । न तु मामजहात् प्रज्ञा यावदद्येति पाण्डव ! । तस्यैवानुग्रहाद्राजन्नगस्त्यस्य महात्मनः” १८०अ० । नह्यति सर्वाणि भूतानि मायया कर्त्तरि उष । ३परमेश्वरे “मिश्रघ्नो नहुषो वृषः” विष्णु स०। नह्यते मायया कर्मणि उष । ४मनुष्ये बा० उषि नहुष इति मनुष्ये निघण्टुः । “आर्द्रौ विश्वा नहुष्याणि जाता” ऋ०६।८८।२ “नहुष्या मनुष्याणयन्वीनि” भा०। “नहुषः खररोमा च शेषवासुकितक्षकाः” इति विक्रमादित्यकोषोक्ते ५नागराजभेदे च ।

**नहुषाख्य** पु०न० नहुषं शेषसर्पवर्णमाख्याति स्ववर्णेन आ+ख्या–क । तगरपुष्पे राजनि० ।

**नहुषात्मज** पु० ६त० । ययातिनृपे “ययातिर्नहुषात्मजः” भारते भूरिप्रयोगः । [चकाः” ।

**ना** अव्य० नह–बा०डा । निषेधे “अमानोना निषेधवा-

**नाक** पु० न कमकं दुःखं तन्नास्ति यत्र नभ्राडित्या० नि० प्रकृतिभावः । १स्वर्गे अमरः । “यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत् सुखं स्वःपदास्पदम्” श्रुतौ हि स्वर्गस्य दुःखशून्यत्वमुक्तम् । दुःखराहित्येन २सुखकरे त्रि०। “वैश्वानरः प्रत्नथा नाकमारुह दिवः पृष्ठे” ताण्ड्यब्रा० १।७।६ “नाकं दुःखराहित्येन सुखकरं रथम्” भा०। ३नभसि निघण्टुः स्वर्गान्तरिक्षसाधारणनामसु तस्य कीर्त्तनात् । ४राजभेदे पु० “नव नाकास्तु भोक्ष्यन्ति पुरीं चम्पावतीं नृपाः । मथुरां च पुरीं रम्यां नागाः भोक्ष्यन्ति सप्त वै” वायुपु० ।

**नाकचर** पु०नाके स्वर्गे नभसि वा चरति चर–ट । १गगनचरे देवे ग्रहादौ च २पितृदेवभेदे । “गार्हपत्या नाकचराः पितरो लोकविश्रुताः” भा० स०११अ०

**नाकनाथ** पु० ६त० । इन्द्रे त्रिका० नाकनायकादयोऽप्यत्र “नाकनायकपुरोहितो यदा” ज्योति० “नाकनायकनिकेतनमाप” नैष० ।

**नाकवनिता** स्त्री ६त० । अप्सरःसु ।

**नाकसद्** पु० नाके सीदति–सद क्विप् । १देवे “सन्तर्पणो नाकसदां वरेण्यः” भट्टिः ।

**नाकिन्** पु० नाकः वासस्थानत्वेनास्त्यस्य इनि । देवे हेमच०। “सदनान्युदसायत नाकिनामपि” “मन्यसेऽरिवधः श्रेयान् प्रीतये नाकिनामिति” माघः । [२मुनिभेदे मेदि० ।

**नाकु** पु०नम–उ नाकादेशः । १वल्मीके २पर्वते च अमरः

**नाकुल** पु०नकुलस्य गोत्रापत्यम् “ऋष्यन्धकवृष्णिकुरुभ्यः” पा० गोत्रे अण् न तु इञ् । १नकुलस्य गोत्रापत्ये । नकुल इव शर्करा०इवार्थे अण् । २नकुलसदृशे च । नकुलेन दृष्टा तेन पीता वा अण् ङीप् । ३कुक्कुटीकन्दे ४रास्नायां ५चविकायाञ्च स्त्री मेदि० । ६यवतिक्तायां ७श्वेतकण्टकार्य्यां ८कन्दभेदे च स्त्री राजनि० । “नाकुली तुवरा तिक्ता कटुकोष्णा विनाशयेत् । भोगिलूताहृश्चिकाखुविषज्वरकृमिव्रणान्” शब्दार्थचि० धृतवाक्यम् ।

**नाकुलक** त्रि० नकुलो भक्तिरस्य “गोत्रक्षत्रियेभ्यो बहुलमिति” पा० वुञ् । नकुलभक्तिके मनुष्यादौ ।

**नाकुलि** पु० नकुलस्येदम् अपत्यं वा अत इञ् गोत्रे

तु अपेव । १नकुलसम्बन्धिनि २तदपत्ये च "शतानीकस्तु नाकुलिः" भा०आ० ६३ अ० ।

**नाक्षत्र** न०नक्षत्राणामिदम् अण् । तद्घटितचक्रस्य परिवर्त्तनात्मके कालरूपे १दिनभेदे तच्चिंशद्दिनात्मके सर्वनक्षत्र परिवर्त्तनात्मके च २मासभेदे च "नाडीषष्ट्या तु नाक्षत्र महोरात्रं प्रकीर्त्तितम्" सू०सि०। "घटीनां षष्ट्याहोरात्रं नाक्षत्रमुक्तम्। तुकारादहोरात्रस्य नाक्षत्रत्वोक्त्योक्तषष्ट्या अपि नाक्षत्रत्वमुक्तम् । एतत् षष्टिघटीभिर्भचक्रपरिवर्त्तनात्" रङ्ग०।"भचक्रभ्रमणं नित्यं नाक्षत्रं दिनमुच्यते" सू०सि०। "नित्यं प्रत्यहं भचक्रभ्रमणं नाक्षत्रसमूहस्य प्रवाहवायुकृतं परिभ्रमः । नाक्षत्रं नक्षत्रसम्बन्धि नाक्षत्रमासदिनं मानज्ञैः कथ्यते" रङ्ग०। स च मासो द्विविधः। सप्तविंशतिनक्षत्रपरिवर्त्तनात्मक एकः यथा "सर्वर्क्षपरिवर्त्तैस्तु नाक्षत्र इह चोच्यते" इति "सर्वनक्षत्रभुक्त्या तु नाक्षत्रमास इष्यते" इति च अस्य प्रयोजनम् । "नक्षत्रसत्राण्ययनानि चेन्दोर्मासेन कुर्याद्भगणात्मकेन" । सप्तविंशतिनक्षत्रात्मकेन जन्मनक्षत्रे शनिभौमवारयोगे मनोदुःखदानम् यथोक्तं दीपिकायाम् "जन्मर्क्षे यदि स्यातां वारौ भौमशनैश्चरौ । स मासः कलमषो नाम मनोदुःखप्रदायकः" इति । द्वितीयः षष्टिदण्डात्मकनक्षत्रभोगकालरूपदिनत्रिंशदात्मकः यथोक्तं सूर्यसिद्धान्ते "नाडीषष्ट्या तु नाक्षत्रमहोरात्रं प्रचक्षते । तत्त्रिंशता भवेन्मासः सावनोऽर्कोदयैस्तथा" अस्य प्रयोजनमायुर्गणनादाम् यथा "आयुर्दाये स्मृतं प्राज्ञैर्नाक्षत्रं षष्टिनाडिकमिति" मल०त० ।

**नाक्षत्रिक** त्रि० नक्षत्रादागतः ठञ् । १नक्षत्रतःप्राप्ते नक्षत्रनिमित्ते स्त्रियां ङीप् । सा च यद्वार्ष्या २दशाभेदे "सत्ये सम्मदशा चैव त्रेतायां हरगौरिका । द्वापरे योगिनी चैव कलौ नाक्षत्रिकी दशा" भट्टोत्पलधृतवाक्यम् सा च दशा "षट्सूर्यस्य दशा ज्ञेया इत्यादिका उक्ता दशाशब्दे अष्टोत्तरदशाप्रकरणे ३४८५पृ० दृश्या ।

**नाग** न० नगे पर्वते भवः अण् न गच्छति अगः न अगो वा । १रङ्गे २सीसके ३तिथ्यर्द्धरूपकरणभेदे च मेदि० करणशब्दे १६८० पृष्ठे दृश्यम् । सीसके पुंस्त्वमपीति वैद्यकम् । अस्योत्पत्तिर्भावप्र० दर्शिता यथा "दृष्ट्वा भोगिसुतां रम्यां वासुकिस्तु समोच यत् । वीर्यं जातस्ततो नागः सर्वरोगापहो नृणाम् । सीसं वङ्गगुणं ज्ञेयं विशेषान्मेहनाशनम्" । "नागस्तु नागशततुल्यबलं ददाति व्याधिं विनाशयति जीवनमातनोति । वह्निं प्रदीपयति कामबलं करोति मृत्युञ्च नाशयति सन्ततसेवितः सः" । भावप्र० पाकहीनयोर्वङ्गसीसयोर्दोषो यथा "पाकेन हीनौ किल वङ्गनागौ कुष्ठानि गुल्मांश्च तथातिकष्टान् । कण्डूप्रमेहानलसान्द्यशोथभगन्दरादीन् कुरुतः प्रभुक्तौ" । नागभस्मप्रकारो यथा "ताम्बूलरससंपिष्टं शिलालेपात् पुनःपुनः । द्वात्रिंशद्भिः पुटैर्नागो निरुत्थं भस्म जायते" । प्रकारान्तरेण यथा "अश्वत्थचिञ्चात्वक्चूर्णं चतुर्थांशेन निःक्षिपेत् । मृत्पात्रे विद्रुतो नागो लौहदर्व्या च चालितः । यामैकेन भवेद्भस्म तत्तुल्या स्यान्मनःशिला । काञ्जिकेन समं पिष्ट्वा पचेद् दृढपुटेन च । स्वाङ्गशीतं पुनः पिष्ट्वा शिलायां काञ्जिकेन च । पुनः पुटशरावाभ्यामेवं षष्टिभिः पुटैः मृतिः । नागः सिन्दूरवर्णाभो म्रियते सर्वकार्यकृत् । अतिक्रमधुरो नागो मृतो भवति भस्मवान् । आयुः कीर्त्तिं वीर्यवृद्धिं करोति सेवनात् सदा । रोगान् हन्ति मृतो नागो वङ्गवद्गुणकारकः" ४सर्पे ५हस्तिनि ६मेघे ७नागकेशरे ८पुन्नागे ९नागदन्तिके १०मुस्तके ११देहस्थे वायुभेदे च पु० १२कृराकारे त्रि० मेदि० "दन्तारे नाम दत्युक्तो नीलजीमूतसन्निभः" सा० ति० टीका पदार्थादर्शे । अत्र नागशब्दस्य सर्पगजजातिवाचकत्वे द्विलिङ्गत्वम् । तत्र जातिवाचकत्वात् स्त्रियां ङीष् । जानपदादिसूत्रे स्थौल्यगुणयोगादन्यत्र प्रयोगे स्त्रियां ङीष् । दीर्घगुणयोगादन्यत्र प्रयोगे स्त्रियां टाप् इति भेदः । १३देशभेदे १४ताम्बूल्यां च पु० भरतः । मनुष्याकारः फणालाङ्गूलयुक्तः कर्कोटादिर्नागः देवयोनिभेदः । तेषामुत्पत्त्यादिकं वराहपु० उक्तं यथा "सृजता ब्रह्मणा सृष्टिं मरीचिः सूतिकारणम् । प्रथमं मनसा ध्यातस्तस्य पुत्रस्तु कश्यपः । तस्य दाक्षायणी भार्या कद्रूर्नाम शुचिस्मिता । मारीचो जनयामास तस्यां पुत्रान् महाबलान् । अनन्तं वासुकिञ्चैव कम्बलञ्च महाबलम् । कर्कोटकञ्च राजेन्द्र ! पद्मं चान्यं सरीसृपम् । महापद्मं तथा शङ्खं कुलिकञ्चापराजितम् । एते कश्यपदायादाः प्रधानाः परिकीर्त्तिताः । एतेषान्तु प्रसूत्या तु इदमापूरितं जगत् । कुटिला हीनकर्माणस्तीक्ष्णास्योत्वविषोल्बणाः । दृष्ट्वा संदशन् मनुजान् भस्म कुर्युः क्षणाद्ध्रुवम्" एवं प्रजानाशे ब्रह्मण आदेशात् ते पातालस्थानं जग्मुः यथाह तत्रैव

"अहं करोमि वो नागाः समयं मनुजैः सह। तदेकमनसः सर्वे शृणुध्वं मम शासनम्। पातालं वितलञ्चैव सुतलाख्यं तृतीयकम्। दत्तं वै वसुकामानां अहं तत्र गमिष्यथ। तत्र भोगान् बहुविधान् भुङ्क्ष्वं मम शासनात्। तिष्ठध्वं सप्तमं यावद्रात्र्यन्ततः पुनःपुनः। ततो वैवस्वतस्यादौ काश्यपेया भविष्यथ। दायादाः सर्वदेवानां सुपर्णस्य च धीमतः। तदा प्रसूतिर्वः सर्वा भोक्ष्यते चित्रभानुना। भवतां नैव दोषोऽयं भविष्यति न संशयः। ये वै क्रूरा भोगिनो दुर्विनीतास्तेषामन्तो भविता नान्यथैतत्। कालं प्राप्तं भक्षयध्वं दशध्वं तथा परान् चापकृतोमनुष्यान्। मन्त्रौषधैर्गारुडमण्डलैश्च बुद्धैर्दष्टा मानवा ये चरन्ति। तेषां भीतैर्वर्त्तितव्यं न चान्या चिन्ता कार्या चान्यथा वो विनाशः। इतीरिते ब्रह्मणा ते भुजङ्गा जग्मुःस्थानं स्वातलाख्यं हि सर्वे। तस्थुर्भोगान् भुञ्जमानाः समस्तान् रसातले लीलया संस्थितास्ते। एवं शापं ते तु लब्ध्वा प्रसादञ्च चतुर्मुखात्। तस्थुः पातालनिलये मुदितेनान्तरात्मना। एतत् सर्वञ्च पञ्चम्यां तेषां जातं महात्मनाम्। अतस्त्वियं तिथिर्धन्या सर्वपापहरी शुभा। एतस्यां संयतो यस्तु अम्लन्तु परिवर्जयेत्। क्षीरेण स्नापयेन्नागांस्तस्य यास्यन्ति मित्रताम्"। नागाश्च प्राधान्येन भा॰आ॰३५अ॰ दर्शिता ततएवावसेयाः। तेषां केषाञ्चित् जनमेजयस्य सर्पसत्रे नाशो भविष्यतीति मातृशापकथा भा॰आ॰ २०अ॰ "ततः पुत्रसहस्रन्तु कद्रूर्जिह्मं चिकीर्षती। आज्ञापयामास च तदा बाला भूत्वाऽञ्जनप्रभाः। आविशध्वं हयं क्षिप्रं दासी न स्यामहं यथा। नाभ्यपद्यन्त ये वाक्यं तान् शशाप भुजङ्गमान्। सर्पसत्रे वर्त्तमाने पावको वः प्रधक्ष्यति। जनमेजयस्य राजर्षेः पाण्डवेयस्य धीमतः। शापमेनन्तु शुश्राव स्वयमेव पितामहः। अतिक्रूरं समुत्सृष्टं कद्र्वा दैवादतीव हि। सार्द्धं देवगणैः सर्वैर्वाचं तामन्वमोदत। बहुत्वं प्रेक्ष्य सर्पाणां प्रजानां हितकाम्यया। तिग्मवीर्यविषा ह्येते दन्दशूकाः महाबलाः। तेषां तीक्ष्णविषत्वाद्धि प्रजानाञ्च हिताय च। युक्तं मातृकृतं तेषां परपीडोपसर्पिणाम्। अन्येषामपि सत्त्वानां नित्यं दोषपरास्तु ये। तेषां प्राणान्तिको दण्डो दैवेन विनिपात्यते। एवं सम्भाष्य देवैस्तु पूज्य कद्रूञ्च तां तदा। आहूय कश्यपं देव इदं वचनमब्रवीत्। यदेते दन्दशूकाश्च सर्पा जातास्त्वयाऽनघ। विषोल्बणा महाभोगा मात्रा शप्ताः परन्तप। तत्र मन्युस्त्वया तात न कर्त्तव्यः कथञ्चन। दृष्टं पुरातनं ह्येतद्यज्ञे सर्पविनाशनम्। इत्युक्त्वा सृष्टिकृद्देवस्तं प्रसाद्य प्रजापतिम्। प्रादाद्विषहरीं विद्यां कश्यपाय महात्मने।" कम्बलाश्वतरनागयोः सरस्वत्या गानवरप्राप्तिर्यथा "एवं स्तुता तदा देवी विष्णोर्जिह्वा सरस्वती। प्रत्युवाच महात्मानं नागमश्वतरं ततः" सरस्वत्युवाच "वरन्ते कम्बलं भ्रातः प्रयच्छाम्युरगाधिप!। तदुच्यतां प्रदास्यामि यत्ते मनसि वर्त्तते"। अश्वतर उवाच 'सहायं देहि देवि! त्वं पूर्वं कम्बलमेव मे। समस्तस्वरसम्बन्धमुभयोः संप्रयच्छ च" सरस्वत्युवाच "सप्तस्वरा ग्रामरागाः सप्त पन्नगसत्तम! गीतकानि च सप्तैव तावतीश्चापि मूर्च्छनाः। तानाश्चैकोनपञ्चाशत्तथा ग्रामत्रयञ्च यत्। एतत् सर्वं भवान् गाता कम्बलश्चैव ते सखा। ज्ञास्यते मत्प्रसादेन भुजङ्गेन्द्र! परन्तथा। चतुर्विधं पदं तालं त्रिःप्रकारं लयत्रयम्। यतित्रयं तथातोद्यं मया दत्तं चतुर्विधम्। एतद्भवान् मत्प्रसादात् पन्नगेन्द्रापरञ्च यत्। अस्यान्तर्गतमायत्तं स्वरव्यञ्जनयोश्च यत्। तदशेषं मया दत्तं भवतः कम्बलस्य च। यथा नान्यस्य भूर्लोके पाताले वापि पन्नग!। प्रणेतारौ भवन्तौ च सर्वस्यास्य भविष्यतः। पाताले देवलोके च भूर्लोके चैव पन्नगौ। इत्युक्त्वा सा तदा देवी सर्वजिह्वा सरस्वती। जगामादर्शनं सद्यो नागस्य कमलेक्षणा" मार्कण्डेयपुराणम्। "नागैरिवालूनसटं मृगेन्द्रम्" किरा॰ "अधिनागं प्रजविनोविकसत्पिच्छचारवः" "नागं पूर्णदुकूलनिमीलिताक्षम्" माघः। १६अश्लेषानक्षत्रे

**नागकन्द** पु॰ हस्तिकन्दे राजनि॰। [त्रिका॰।

**नागकन्यका** स्त्री ६त॰। सर्पजातिस्त्रियां भोगिन्यां

**नागकर्ण** पु॰ नागस्य गजस्य कर्णः तदाकारः पर्णोऽस्य। १एरण्डे राजनि॰ ६त॰। २हस्तिकर्णे च। [भावप्र॰।

**नागकिञ्जल्क** पु॰ नागस्येव किञ्जल्कोऽस्य। नागकेसरे

**नागकुमारिका** स्त्री नागस्य कुमारीव कन्। १गुडूच्यां २मञ्जिष्ठायां च राजनि॰।

**नागकेसर** पु॰ नागस्येव केसरोऽस्य। स्वनामख्याते पुष्पप्रधाने वृक्षभेदे अमरः (नागेश्वरचाँपा) भावप्र॰ तद्गुणा उक्ता यथा "नागपुष्पः स्मृतो नागः केसरो नागकेसरः। चाम्पेयो नागकिञ्जल्कः कथितः काञ्चना-

द्रुमः। नागपुष्पं कषायोष्णं रूक्षं लघ्वामपाचनम्। ज्वरकण्डूतृषास्वेदच्छर्दिहृल्लासनाशनम्। दौर्गन्ध्यकुष्ठवीसर्पकफपित्तविषापहम्" । त्रिजातकं नागकेसरसंयुक्तं चतुर्जातकं भवति यथा "त्वगेलापत्रकैस्तुल्यैस्त्रिसुगन्धि त्रिजातकम्। नागकेसरसंयुक्तं चतुर्जातकमुच्यते। तद्द्वयं रोचकं रूक्षं तीक्ष्णोष्णं मुखगन्धहृत्। लघुपित्ताग्निकृद्वर्ण्यं कफवातविषापहम्" भावप्र०।

**नागगन्धा** स्त्री नागस्य गन्ध इव गन्धोऽस्याः वा न इत्समा०। नाकुलीकन्दे राजनि०। [राजनि०।

**नागगर्भ** न० नागः सीसकं गर्भो उत्पत्तिहेतुर्यस्य। सिन्दूरे

**नागचूड़** पु० नागः सर्पः चूडायां यस्य। शिवे महादेवे

**नागच्छत्रा** स्त्री नागस्य फणेव छत्रं छादनं पत्रे यस्य। नागदन्तीवृक्षे राजनि०।

**नागज** न० नागात् सीसकात् जायते जन—ड। १सिन्दूरे २वङ्गे हेमच०। ३सर्पजजातमात्रे त्रि०।

**नागजिह्वा** स्त्री नागस्य सर्पस्य जिह्वेवाकारोऽस्य। १अनन्तमूले। २शारिवौषधौ च रत्नमाला।

**नागजिह्विका** स्त्री नागस्य हस्तिनो जिह्वेव रक्तता यस्याः कप्। मनःशिलायाम् अमरः। [भेदे।

**नागजीवन** न० नागेन सीसकेन जीवनं यस्य। वङ्गे धातु-

**नागदत्त** पु० धृतराष्ट्रपुत्रभेदे "आदित्यकेतुर्बह्वाशी नागदत्तानुयायिनौ" भा० आ० ६७अ०।

**नागदन्त** पु० नागस्य हस्तिनो दन्त इवाकारोऽस्त्यस्य अच्। गृहभित्तिनिर्मिते काष्ठादिमये हस्तिदन्ताकारे (दायडा) (दाँतिया) ख्याते १पदार्थभेदे अमरः ६त०। २गजदन्ते च मेदि०। स्वार्थे क तत्रार्थे अमरः। "शबरवसतिरिव अवलम्बितचारुचामरनागदन्तधवलच्छदाः" काद०। "द्वीपिचर्माम्बरस्य नागदन्तकृतवृत्तः" भा०शा० ६७अ०।

**नागदन्तिका** स्त्री नागस्य सर्पस्य दन्त इव विषाधारः पत्रं यस्याः कप् कापि अत इत्वम्। (विछाति) वृश्चिकाल्यां रत्नमाला।

**नागदन्ती** स्त्री नागस्य गजस्य दन्त इव फलाद्याकारे यस्याः ङीष्। (हातिशुँडा) ख्याते १श्रीहस्तिन्याम्। २कुम्भाख्यौषधौ च मेदि०। "अर्कालर्ककरञ्जद्वय नागदन्तीत्यादि" अर्कादिगणोक्तौ सुश्रुतः।

**नागदमनी** स्त्री नागो दम्यतेऽनया दम—ल्युट् ङीप्। १क्षुपभेदे "विज्ञेया नागदमनी बलामोटा विषापहा। नागपुष्पी नागपत्रा महायोगेश्वरीति च। बलामोटा कटुस्तिक्ता लघुः पित्तकफापहा। मूत्रकृच्छ्रव्रणान्रक्षो नाशयेज्जालगर्दभम्। सर्वग्रहप्रशमनी निःशेषविषनाशिनी। जयं सर्वत्र कुरुते धनदा सुमतिप्रदा" भावप्र०

**नागदलोपम** पु० नागस्य ताम्बूल्याः दलस्योपमा यत्र। पद्मफले रत्नमाला। [शब्दच०।

**नागद्रु** पु० नागाकारः द्रुः (सिज्) वृक्षे स्नुहीवृक्षायाम्

**नागद्वीप** पु० नागप्रधानो द्वीपः शा०त०। द्वीपभेदे "शाल्मं शशस्य द्वे वर्षे उक्ते ये दक्षिणोत्तरे। कर्णौ तु नागद्वीपश्च कश्यपद्वीपएव च। ताम्रपर्णी शिला राजन् श्रीमान् मलयपर्वतः" भा०भी० ६अ०।

**नागनक्षत्र** न० नागाधिष्ठितं नक्षत्रम्। अश्लेषानक्षत्रे नागदैवतादयोऽप्यत्र "नागदैवतमस्तके" ति०त०

**नागनामन्** पु० नागान् नामयति नामि—कनिन्। तुलस्यां वैद्यकप्रकाशिका।

**नागनायक** त्रि० ६त०। १प्रधाननागे "अनन्तो वासुकिः पद्मो महापद्मोऽपि तक्षकः। कर्कोटः कुलिकः शङ्ख इत्यष्टौ नागनायकाः" तिथ्या० नागवर्यादयोऽप्यत्र। नागशब्दे उदा०। नागः नायकोऽस्य। २अश्लेषानक्षत्रे न०।

**नागनिर्यूह** पु०नाग इव निर्यूहः। नागदन्तशब्दार्थे जटा०

**नागपञ्चमी** स्त्री नागपूजाङ्गं पञ्चमी। आषाढ़कृष्णपञ्चम्यां तत्र नागाङ्गानां पूजाविधानात् तस्यास्तथात्वम्। देवीपुराणे "सुप्ते जनार्दने कृष्णे पञ्चम्यां भवनाङ्गने। पूजयेत् मनसादेवीं स्नुहीविटपसंस्थिताम्। पद्मनाभे गते यस्यां देवैः सर्वैरनन्तरम्। पञ्चम्यामसिते पक्षे समुत्तिष्ठति पञ्चमी"। मनसादेवीं विषहरीम्। स्नुही सिजवृक्षः। देवैरिति सहार्थे तृतीया। "देवीं संपूज्य नत्वा च न सर्पभयमाप्नुयात्। पञ्चम्यां पूजयेन्नागानन्ताद्यान् महोरगान्। क्षीरं सर्पिस्तु नैवेद्यं देयं सर्पविषापहम्"। गारुडे "अनन्तं वासुकिं शङ्खं पद्मं कम्बलमेव च। तथा कर्कोटकं नागं धृतराष्ट्रञ्च शङ्खकम्। कालियं तक्षकञ्चापि पिङ्गलं मणिभद्रकम्। यजेत्तानसितासागान् दष्टमुक्तो दिवं व्रजेत्"।

**नागपति** पु० ६त०। शेषाद्येषु अष्टसु १नागेषु २गजपतौ ऐरावते च। [भावप्र०। २लक्ष्मणाकन्दे राजनि०।

**नागपत्रा** स्त्री नागस्तत्फण इव पत्रं यस्याः। १नागदमन्यां

**नागपद** पु० "पादौ स्कन्धे तथा हस्ते क्षिपेल्लिङ्गं भगे लघु। कामयेत् कामुको नारीं बन्धो नागपदो मतः" रतिमञ्जर्युक्ते १रतिबन्धभेदे। ६त०। २हस्तिपदे न०

**नागपाश** पु० नागः पाश इव । १वरुणस्यायुधभेदे "वारुणं द्व्यावर्त्तनात्तु नागपाश इति स्मृतः । ब्रह्मग्रन्थिमथो दद्यात् नागपाशमथापि वा" आगमोक्ते २बन्धभेदे "वेष्टितं नागपाशेन भ्रुकुटीभीषणाननम्" इति दुर्गाध्यानम् ।

**नागपाशक** पु० "स्वजङ्घाद्वयमध्यस्थां हस्ताभ्यां धारयन् कुचौ । रमेन्निःशङ्कितः कामी बन्धोऽयं नागपाशकः" रतिमञ्जर्युक्ते १रतिबन्धभेदे । स्वार्थे क । २नागपाशे च

**नागपुर** न० ६त० । १पाताले हस्तिनानामके २पुरभेदे तन्नामकारणं यथा "जटाजूटात् पपातोर्द्ध्वं मेरोस्तस्मात्ततोऽगमत् । देवैः परिवृता गङ्गा हेमकूटस्य पर्वतम् । मन्दरस्यैव कैलासं हिमवन्तञ्च पर्वतम् । तामायान्तीन्तु रोधाय खलीलो नाम दानवः । पार्वतं रूपमास्थाय वर्षाणान्तु शतैर्द्विज ! । ततो भगीरथो राजा धारयामास कौशिकम् । स तुष्टः प्रददौ नागं वाहनं तं भगीरथः । समारुह्यागमत्तत्र यत्र रुद्धा भगीरथी । तेन नागेन तं दैत्यं संविदार्य्य सुसङ्कृतः । शतधा तं समाधाय मूर्द्ध्न्यैरावतो गजः । महीतलं समापेदे स यावन्नागसाह्वयम्" वह्निपुराणे तत्र हस्तिनापुरस्य नामान्तरं "तत्सर्वं प्रतिजग्राह राजा नागपुराधिपः" (पाण्डुः) भा० आ० ११२अ० ।

**नागपुष्प** पु० नागः तद्दानगन्धयुक्तं पुष्पं यस्य । १पुन्नागवृक्षे २नागकेसरे ३चम्पके च मेदि० । ४नागदमन्यां स्त्री भावप्र० ङीष् । [फलं यस्याः । कुष्माण्ड्यां राजनि० ।

**नागपुष्पफला** स्त्री नागस्य नागकेसरस्य पुष्पमिव शुभ्रं

**नागपुष्पिका** स्त्री नागस्य पुष्पमिव पुष्पं यस्याः कप् कापि अत इत्वम् । स्वर्णयूथिकायां राजनि० ।

**नागफल** पु० नागः सर्प इव दीर्घं फलमस्य । पटोलभेदे (धुन्दुल) राजनि० । [अश्वत्थवृक्षे हेमच० ।

**नागबन्धु** पु० नागस्य हस्तिनो बन्धुरिव तत्पोषकत्वात् ।

**नागबल** पु० नागानां हस्तिनामयुतस्य बलं यस्य । १भीमे त्रिका० । २हस्तितुल्यबलयुक्ते त्रि० । भीमस्य तथा बलप्राप्तिकथा भा० आ० १२८ अ० । "यदि नागेन्द्र ! तुष्टोऽसि किमस्य धनसञ्चयैः । रसम्पिबेत् कुमारोऽयं त्वयि प्रीते महाबलः । बलं नागसहस्रस्य यस्मिन् कुण्डे प्रतिष्ठितम् । यावत् पिबति बालोऽयं तावदस्मै प्रदीयताम् । एवमस्त्विति तं नागं वासुकिः प्रत्यभाषत । ततो भीमस्तदा नागैः कृतस्वस्त्ययनः शुचिः । प्राङ्मुखश्चोपविष्टः स रसं पिबति पाण्डवः । एकोच्छ्वासात्ततः कुण्डं पिबति स्म महाबलः । एवमष्टौ स कुण्डानि ह्यपिबत् पाण्डुनन्दनः । ततस्तु शयने दिव्ये नागदत्ते महाभुजः । अशेत भीमसेनस्तु यथासुखमरिन्दम !" "ततोऽष्टमे तु दिवसे प्रत्यबुध्यत पाण्डवः । तस्मिंस्तदा रसे जीर्णे सोऽप्रमेयबलो बली । तं दृष्ट्वा प्रत्यबुध्यन्त पाण्डवं ते भुजङ्गमाः । सान्त्वयामासुरव्यग्रा वचनं चेदमब्रुवन् । यत्ते पीतो महाबाहो ! रसोऽयं वीर्यसम्भृतः । तस्मान्नागायुतबलो रणेऽधृष्यो भविष्यसि" भा० आ० १२९अ० । नागस्येव बलं यस्याः । (गोरक्षचाकुलिया) २लताभेदे स्त्री "नागबलाफलतिन्दुकमदनफलमधूकमञ्जिष्ठाः" सु० सं० ५७अ०

**नागबलाघृत** न० चक्रदत्तोक्ते घृतभेदे "पादशेषे जलद्रोणे पचेन्नागबलातुलाम् । तेन क्वाथेन तुल्यांशं घृतं क्षीरञ्च साधयेत् । पलार्द्धिकैश्चातिबलाबलायष्टिपुनर्नवा । प्रपौण्डरीककाश्मर्य्यप्रियालकपिकच्छुभिः । अश्वगन्धासिताभीरुमेदायुग्मत्रिकण्टकैः । खर्जूरबिसशालूकशृङ्गाटककशेरुकैः । एतन्नागबलासर्पीरक्तपित्तक्षतक्षयम् । हन्ति दाहं भ्रमं तृष्णां बलपुष्टिकरं परम् । बल्यमोजस्यमायुष्यं वलीपलितनाशनम् । उपयुञ्जीत षण्मासान् वृद्धोऽपि तरुणायते" । [२०५७पृ० दृश्यम् ।

**नागभगिनी** स्त्री ६त० । वासुकेर्भगिन्यां जरत्कारौ तच्छब्दे

**नागभूषण** पु० नागा भूषणमस्य । महादेवे

**नागमल्ल** पु० नागेषु मल्लः । ऐरावते शब्दच० ।

**नागमातृ** स्त्री नागस्य हस्तिनां मातेव पोषकत्वात् । १मनःशिलायां शब्दर० । २मनसादेव्याञ्च त्रिका० तस्याः स्वपुत्रद्वारा नागरक्षकत्वात् तथात्वम् । जरत्कारुशब्दे ३५०७पृ० दृश्यम् । [१हस्तिमारके २केशराजे पु० त्रिका० ।

**नागमार** त्रि० नागं मारयति मृ–णिच्–अण् उप० स० ।

**नागयष्टि** स्त्री नागाधिष्ठानं यष्टिः । तडागादौ आरोप्ये वारुणादिकाष्ठमये नागविशेषस्याधिष्ठानरूपे स्तम्भभेदे (दरकाठ) तद्विधानं तदधिष्ठातृनागनामस्थापनं च जलाशयोत्सर्गे उक्तं यथा कापिले "नागानामथ नामानि लिखितानि पृथक् पृथक् । ततः कुम्भे च निःक्षिप्य गायत्र्या च विलोड्य वै । उद्धरेत् पत्रिकामेकां तत्र वै नाममीक्षयेत् । यस्य नामोद्धरेद्वत्स ! स वै जलाधिपः स्मृतः । तं वै संपूज्य गन्धाद्यैर्दद्यात् क्षीरञ्च पायसम्" । पक्षान्तराण्यस्य । योगीश्वरघृतवचनात् । "यथाऽऽदौ नागनाम्नाञ्च पत्रे कृत्वा तु

यक्षतः" तानि च गारुडे । "अनन्तो वासुकिः पद्मो महापद्मोऽथ तक्षकः । कुलीरः कर्कटः शङ्खो ह्यष्टौ नागाः प्रकीर्त्तिताः" ततश्च अनन्तवासुकिकर्कोटकपद्म-महापद्मतक्षकशङ्खकुलीराणां नामान्याश्वपत्रे विलिख्य कुम्भमध्ये निक्षिप्य गायत्र्या गोमूत्रेण वा "कन्दस्या-मश्नामीति" रघुनाथधृतमन्त्रेणालोड्य यस्य नामोत्तिष्ठति तं यष्ट्यां समावाह्यानेन नागेन अस्य जलाशयस्य रक्षा कर्त्तव्येति ब्राह्मणान् श्रावयेत् । हयशीर्षे "वैल्वकं वारुणञ्चैव पुन्नागं नागकेशरम् । बकुलं चम्पकञ्चैव विल्वञ्चैवाथ खादिरम् । एतेषामेव दारूणां नागयष्टिः प्रकीर्त्तिता । सवक्रकोटरं त्यक्त्वा तस्मात् कुर्य्यात् यथे-प्सितम्" । तथा च वृहस्पतिः "मूलचक्राङ्कितं कृत्वा स्थापयित्वा जलाशये । द्वादशाङ्गुलमानन्तु वाप्यां चक्रं प्रकल्पयेत् । षोडशं पुष्करिण्यान्तु विंशतिस्तु सरो-वरे । सागरे हस्तमानन्तु लौहं ताम्रञ्च पैत्तलम् । चक्रञ्च विविधं प्रोक्तं कुर्यात्तेषां यथेप्सितम्" । स्वार्थे क तत्रार्थे त्रिका० ।

**नागर** त्रि० नगरे भवः अण् । १विदग्धे २नगरोद्भवे च मेदि० स्त्रियां ङीप् । अगं राति रा—क न अगः नग-ब्देन(सह सुपा)पा०स० । ३देवरे पु० त्रिका०। ४नागरङ्गे (नारेङ्गा नेवु) जम्बीरभेदे पु०शब्दरत्ना०। ५मुस्तायां न० अमरः। ६तृणभेदे ( नागरस्वा ) न० ७रतिवन्धभेदे विश्वः। १०देशभेदे तद्देशीये ब्राह्मणभेदे नागरब्रा-ह्मणाः सि०कौ० नागरखण्डशब्दे दृश्यम् तद्देशे प्रथम प्रचलिते ११अक्षरभेदे न० "वयस्था नागराक्षरादक्षराणां हन्ति वेदनाम्"वैद्यकम् नगराय हितम् अण् । १२नगर हिते च "धनुर्वेदस्य सूत्रं वै यन्त्रसूत्रञ्च नागरम्" भा० स० ५अ० "यन्त्राण्याग्नेयौषधवलेन सीसकगोलकप्रक्षेप-प्रक्षेपकाणि लोहमयानि भाषायां नालशब्दाभिधेयानि तेषां सूत्रं सूचकं शास्त्रं नागरं नगरहितम्" नीलक० "यः पण्यस्त्रीरतिपरिमलोद्गारिभिर्नागराणाम्" मेघ० १४पौराख्ये ग्रहयुद्धभेदे ग्रहयुद्धशब्दे २१२७पृ०दृश्यम् ।

**नागरक** त्रि० नगरे भवः कुत्सितः प्रवीणो वा "नगरात् कुत्सनप्रावीण्ययोः" पा० वुञ् । कुत्सने १चौरे प्रवीणे २शिल्पिनि च "अकुत्सनादौ तु अणेव नागरा ब्राह्मणाः" सि०कौ० ३रतिवन्धभेदे "अरुमूलोपरि स्थित्वा योषिदूरुद्वयं रमेत् । ग्रीवां धृत्वा कराभ्याञ्च बन्धो नाग-रकोमतः" तन्नलक्षणम् नागर+स्वार्थे क । ४नागरशब्दार्थे

**नागरक्त** न० नागकृतं रक्तम् शोणितवर्णचूर्णम् । सिन्दूरे हेमच० । तस्य सीसकेन रञ्जितचूर्णरक्तवर्णत्वात् तथात्वम्

**नागरखण्ड** न० स्कन्दपुराणान्तर्गते स्वनामख्याते खण्डभेदे तत्प्रतिपाद्यविषयाश्च वृहन्नारदीये उक्ता यथा "अतः परं नागराख्यः खण्डः षष्ठोऽभिधीयते । लिङ्गोत्-पत्तिसमाख्यानं हरिश्चन्द्रकथा शुभा । विश्वामित्रस्य माहात्म्यं त्रिशङ्कुस्वर्गतिस्तथा । हाटकेश्वरमाहात्म्यं वृत्रासुरवधस्तथा । नागबिलं शङ्खतीर्थं अचलेश्वरवर्ण-नम् । चमत्कारपुराख्यानं चमत्कारकरं परम् । गयशीर्षं बालशाख्यं बालमण्डं मृगाह्वयम् । विष्णुपादञ्च गोकर्णं युगरूपं समाश्रयः । सिद्धेश्वरं नागसरः सप्तार्षेयं ह्यगस्त्यकम् । भ्रूणगर्त्तं नलेशञ्च भैष्मं दुर्वैरमर्ककम् । शार्मिष्ठं सोमनाथञ्च दौर्गमानर्जके-श्वरम् । जमदग्निवधाख्यानं नैःक्षत्रियकथानकम् । रामह्रदं नागपुरं जडलिङ्गञ्च यज्ञभूः । मुण्डीरादि-त्रिकाकञ्च सतीपरिणयस्तथा । बालखिल्यञ्च यागेशं बालखिल्यञ्च गारुडम् । लक्ष्मीशापः सप्तविंशः सोम-प्रासादमेव च । अम्बाद्वं पादुकाख्यम् आग्नेयं ब्रह्म-कुण्डकम् । गोमुखं लोहयष्ट्याख्यं अजापालेश्वरी तथा । शानैश्चरं राजवापी रामेशो लक्ष्मणेश्वरः । कुशेशाख्यं लवेशाख्यं लिङ्गं सर्वोत्तमोत्तमम् । अष्टषष्टिसमाख्यानं दमयन्त्या स्त्रीजातकम् । ततोऽम्बा रेवती चाथ भर्तृ-कातीर्थसम्भवम् । क्षेमङ्करी च केदारं शुक्लतीर्थं मुखा-रकम् । सत्यसन्धेश्वराख्यानं तथा कर्णोत्पला कथा । जटेश्वरं याज्ञवल्क्यं गौर्य्यं गाणेशमेव च । ततो वास्तुपदाख्यानम् अजागृहकथानकम् । सौभाग्यान्धुक शूलेशं धर्मराजकथानकम् । मिष्टान्नदेश्वराख्यानं गाण-पत्यत्रयं ततः । जावालिचरितञ्चैव मकरेशकथा ततः । कालेश्वर्य्यन्धकाख्यानं कुण्डमाप्सरसन्तथा । पुष्पादित्यं रौहिताश्वं नागरोत्पत्तिकीर्त्तनम् । भार्गवं चरितं चैव विश्वामित्रं ततः परम् । सारस्वतं पैप्पलादं कंसा-रीशञ्च पैण्डकम् । ब्रह्मणो यज्ञचरितं सावित्र्याख्यान-संयुतम् । रैवतं भर्तृयज्ञाख्यं मुख्यतीर्थनिरीक्षणम् । कौरवं हाटकेशाख्यं प्रभासक्षेत्रकत्रयम् । पौष्करं नैमिषं धार्म्मरण्यत्रितयं स्मृतम् । वाराणसी द्वारकाख्याऽवन्त्याख्येति पुरीत्रयम् । वृन्दावनं खाण्ड-वाख्यं अद्वैताख्यं वनत्रयम् । कल्पः शालस्तथा नन्दो ग्रामत्रयमनुत्तमम् । असिशुक्लपितसंज्ञतीर्थत्रयमुदा-

कृतम्। अर्बुदौ रैवतश्चैव पर्वतत्रयमुत्तमम्। नदीनां त्रितयं गङ्गा नर्मदा च सरस्वती। सार्द्धकोटि त्रयफलमेकैकस्याश्च कीर्त्तितम्। कूपिका शङ्कुतीर्थस्था-मरकं वालमण्डनम्। हाटकेशं क्षेत्रफलप्रदं प्रोक्तं चतुष्टयम्। शाम्बादित्यं श्राद्धकल्पं यौधिष्ठिरमथान्धकम्। जलशायिचतुर्मास्यं अमून्धयवनं व्रतम्। मङ्कणेशं शिवरात्रिस्तुलापुरुषदानकम्। पृथ्वीदानं बालकेशं कपालमोचनेश्वरम्। पापपिण्डं मासवैद्यं युगमानादिकीर्त्तनम्। दानमाहात्म्यकथनं द्वादशादित्यकीर्त्तनम्। इत्येष नागरः खण्डः प्रभासाख्योऽधुनोच्यते"

**नागरघन** पु॰ नागरमेव घनः कर्पूरवाधनम्। (नागरमुथा) मुस्ताभेदे राजनि॰।

**नागरङ्ग** पु॰ नागस्य नागभवस्य सिन्दूरस्येव रङ्गोऽस्य कवे। (नारेङ्गा) जम्बीरभेदे अमरः। तत् फलगुणा यथा "नागरङ्गन्तु सुरभि विपाके गुरु दुर्जरम्। अम्लमुष्णमधुरं हृद्यं वातविनाशनम्। तत्केसरन्तु रुक्षं स्यात् वातहारि निगद्यते"।

**नागरमर्दिन्** त्रि॰ नागरं मृद्नाति मृद—णिनि। नागरमर्दक ततः बाह्वा॰ अपत्यादौ ठञ्। नागरमर्दिनि तदपत्यादौ।

**नागरमुस्ता** स्त्री नगरे भवा अण् ङीप् नागरी कर्म॰। (नागरमुथा) मुस्ताभेदे राजनि॰। "तिक्ता नागरमुस्ता स्यात् कषाया शीतला कटुः। कफपित्तज्वरहरी तृष्णा-दाहादचि प्रणुत्। अतिसारामयहरी भिषग्भिः परिकीर्त्तिता" राजनि॰।

**नागराज** पु॰ ६त॰ टच् समा॰। १शेषे नागे "अपसाङ्गनागराजाय सोमायोर्द्धं दिवं ददौ" हरिवं॰ २६५अ॰। २छन्दोग्रन्थकारके पिङ्गलनागे च।

**नागराद्यचूर्ण** न॰ चक्रोदत्तोक्ते चूर्णभेदे "श्रीफलशलाटुकल्को नागरचूर्णेन मिश्रितः सगुडः। ग्रहणीगदमत्युग्रं तक्रभुजा शीलितो जयति। सम्यूटाडिमरसाद्रकपाठाकल्कटपल्लवैः। पक्वं पर्युषितं चाक्रविल्वं सगुडनागरम्। हन्ति सर्वानतीसारान् ग्रहणीमतिदुस्तराम्। नागरातिविषामुस्तकाथः स्यादामपाचनः। चूर्णं हिङ्ग्वष्टकं वातग्रहण्यान्तु एतानि च। नागरातिविषामुस्तं धातकी सरसाञ्जनम्। वत्सकत्वक्फलं विल्वं पाठां कटुकरोहिणीम्। पिबेत् समांशं तच्चूर्णं सक्षौद्रं तण्डुलाम्बुना। पैत्तिके ग्रहणीदोषे रक्तं यच्चोपवेश्यते। अर्शांस्यथ गुदे शूलं जयेच्चैव प्रवाहिकाम्। नागराद्यमिदं चूर्णं कृष्णात्रेयेण भाषितम्। शीतकषायमानेन तण्डुलोदककल्पना। केऽप्यष्टगुणतोयेन प्राहुस्तण्डुलभावनाम्"।

**नागराह्व** न॰ नागरेति आह्वा यस्य। शुण्ठ्याम् राजनि॰।

**नागरी** स्त्री नागेभ्यो राति ददाति अत रा—घञर्थे क गौरा॰ ङीप्। १स्नुहीवृक्षे शब्दच॰ तस्यां नागपञ्चमी-शब्दे नागपूजनस्योक्तत्वात्तथात्वम्। नगरे भवः अण् ङीप्। २विदग्धायां नार्याञ्च "हन्ताभीरौं सरलसु कथं संवृतो नागरीभिः" उद्धवदूतम्।

**नागरीट** पु॰ नागरीमेटति इट—गतौ क। १भिड्गे २जारे ३नागरीकृतमङ्गलध्वनौ च शब्दार्थ॰।

**नागरुक** पु॰ नागरङ्गे जम्बीरभेदे शब्दरत्ना॰। [राजनि॰।

**नागरेणु** पु॰ नागस्य सीसकस्य रेणुः। सीसकजाते सिन्दूरे

**नागरेयक** त्रि॰ नगर्यां भवः कत्त्र्या॰ ढकञ्। नगर्यां भवे

**नागरोत्था** स्त्री नागरादुत्तिष्ठति उद्+स्था—क। (नागरमुथा) स्याते मुस्ताभेदे राजनि॰।

**नागर्य्य** न॰ नागरस्य भावः पुरो॰ यक्। नागरभावे विदग्धत्वे

**नागलक्षण** ६त॰। नागानां भेदादिज्ञापके चिह्नभेदे अहि-शब्दे ५८१ पृ॰ तल्लक्षणादिकं सुश्रुतोक्तं दर्शितम्। अग्निपुराणोक्तं शेषवासुकितक्षकलक्षणादिकमत्र प्रदर्श्यते तत्र तत्र २९३अ॰ उक्तं यथा "अग्निरुवाच नागादयोऽथ भावादि दंशस्थानानि कर्म च। सूतकं दष्टचेष्टेति सप्तलक्षणमुच्यते। शेषवासुकितक्षाख्याः कर्कटोऽब्जो महाम्बुजः। शङ्खपालश्च कुलिक इत्यष्टौ नागवर्य्यकाः। दशाष्टपञ्चत्रिगुणशतमूर्द्धान्वितौ क्रमात्। विप्रौ नृपौ विशौ शूद्रौ द्वौ द्वौ नागेषु कीर्त्तितौ। तदन्वयाः पञ्चशतं तेभ्यो जाता असंख्यकाः। अणिमण्डलिराजीलवातपित्तकफात्मकाः। व्यन्तरा दोषमिश्रास्ते सर्पा दर्वीकराः स्मृताः। रथाङ्गलाङ्गलच्छत्रस्वस्तिकाङ्कुशधारिणः। गोनसा मन्दगा दीर्घा मण्डलैर्विविधैश्चिताः। राजिलाश्चित्रिताः स्निग्धास्तिर्य्यगूर्द्ध्वं च राजिभिः। व्यन्तरा मिश्रचिह्नाश्च भूवर्षाग्नेयवायकः। चतुर्विधास्ते षड्विंशभेदाः षोडश गोनसाः। त्रयोदश च राजीला व्यन्तरा एकविंशतिः। येऽन्यतूत्कालजे जायन्ते सर्पास्ते व्यन्तराः स्मृताः। आषाढादिविमासैः स्याद्गर्भो मासचतुष्टये। अण्डकानां शते द्वे च चत्वारिंशत् प्रसूयते। सर्पा ग्रसन्ति सूतौ तान् विना

स्त्रीपुन्नपुंसकान्। उन्मीलतेऽक्षि सप्ताहात् कुचे-र्मांसाद्रवेद्वहिः। द्वादशाहात् सुरोषः स्यात् दन्ताः स्युः सूर्यदर्शनात्। द्वात्रिंशत्, दिनविंशत्या चतस्रस्तेषु दंष्ट्रिकाः। कराली मकरी कालरात्री च यमदूतिका। एतास्ताः सविषा दंष्ट्रा वामदक्षिणपार्श्वगाः। षण्मासा-न्मुच्यते कृत्या जीवेत् षष्टिसमाद्वयम्॥२०॥ नागाः सूर्या-दिवारेशाः सप्त उक्ता दिवा निशि। स्वेषां षट् प्रति-वारेषु कुलिकः सर्वसन्धिषु। शङ्खेन वा महाब्जेन सह तस्योदयोऽथ वा। द्वयोर्वा नाडिकामन्त्रमन्त्रकं कुलिकोदयः। दुष्टः स कालः सर्वत्र सर्पदंशे विशेषतः। कृत्तिका भरणी स्वाती मूलं पूर्वत्रयाश्विनी। विशाखार्द्रा मघाश्लेषा चित्रा श्रवणरोहिणी। हस्ता मन्दकुजौ वारौ पञ्चमी चाष्टमी तिथिः। षष्ठी रिक्ता शिवा निन्द्या पञ्चदशी चतुर्दशी। सन्ध्याचतुष्टयं दुष्टं दग्ध-योगाश्च राशयः। एकद्विबहवो दंशा दष्टविद्धञ्च खण्डि-तम्। अदंशमवगुप्तं स्याद्दंशमेवं चतुर्विधम्। त्रयो द्व्येकक्षता दंशा वेदना रुधिरोल्वणा। नक्रन्त्वेका-ङ्घ्रिकूर्माभा दंशाश्च यमचोदिताः। दाहो पिपीलिका-स्पर्शौ कण्ठशोथरुजान्वितः। सतोदो ग्रन्थितो दंशः सविषो न्यस्तनिर्विषः। देवालये शून्यगृहे वल्मीकोद्या-नकोटरे। रथ्यासन्धौ श्मशाने च नद्याञ्च सिन्धुसङ्गमे। द्वीपे चतुष्पथे सौधे गृहेऽब्जे पर्वताग्रतः। बिलद्वारे जीर्णकूपे जीर्णवेश्मनि कुड्यके। शिग्रुश्लेष्मातकाक्षेषु जम्बूडुम्बरकेषु च। वटे च जीर्णप्राकारे खास्यहृत्-कक्षजत्रुणि। तालौ शङ्खे गले मूर्ध्नि चिबुके नाभि-पादयोः। दंशोऽशुभः शुभो दूतः पुष्पहस्तः सुवाक् सुधीः। लिङ्गवर्णसमानश्च शुक्लवस्त्रोऽमलः शुचिः। अपद्वारगतः शस्त्री प्रमादी भूगतेक्षणः। विवर्णवासाः पाशादिहस्तो गद्गदवर्णभाक्। शुष्ककाष्ठाश्रितः खिन्न-स्तिलाक्तककरांशुकः। आर्द्रवासाः कृष्णरक्तपुष्पयुक्त-शिरोरुहः। कुचमर्दी नखच्छेदी गुदस्पृक् पादलेखकः। केशमुञ्ची तृणच्छेदी दुष्टा दूतास्तथैकशः। इडान्या वा वहेद्द्वेधा यदि दूतस्य चात्मनः। आभ्यां द्वाभ्यां पुष्टयाभ्यान् विद्यात्स्त्रीपुन्नपुंसकान्। दूतः स्पृशति यद्गात्रं तस्मिन् दंशमुदाहरेत्। दूताङ्घ्रिचलनं दुष्टं सुस्थितिर्निश्चला शुभा। जीवपार्श्वे शुभो दूतो दुष्टोऽ-न्यत्र समागतः। जीवो गतागतैर्दुष्टः शुभो दूतनिवेदने। दूतस्य वाक् प्रदुष्टा सा पूर्वार्द्धजार्द्ध निन्दिता। विभक्तै-स्तस्य वाक्यान्तैर्विषनिर्विषकालता। आद्यैः स्वरैश्च काद्यैश्च वर्गैर्भिन्नलिपिर्द्विधा। स्वरजो वसुमान्वर्गी इति ज्ञेया च मातृका। वातान्नीन्द्रजलात्मानो वर्गेषु च चतुष्टयम्। नपुंसकाः पञ्चमाः स्युः स्वराः शक्राम्बुयो नयः। दुष्टौ दूतस्य वाक्पादौ वाताम्नो मध्यमो हरिः। प्रशस्ता वारुणा वर्णा अतिदुष्टा नपुंसकाः। प्रस्थाने मङ्गलं वाक्यं गर्जितं मेघहस्तिनोः। प्रदक्षिणं फले वृक्षे वामस्य च रुतं जितम्। शुभा गीतादिशब्दाः स्युरीदृशं स्यादसिद्धये। अनर्थगीरथाक्रन्दो दक्षिणे वि-रुतं क्षुतम्। वेश्या सुतो नृपः कन्या गौर्दन्ती मुर-जध्वजौ। क्षीराज्यदधिशङ्खाम्बु छत्रं भेरी फलं सुराः। तण्डुला हेम रूप्यञ्च सिद्धयेऽभिमुखा अमी। सकाष्ठः सानलः कारुर्मलिनाम्बरभाण्डभृत्। गलस्थटङ्को गोमायुगृध्रोलूककपर्दिकाः। तैलं कपालकार्पासा निषेधा भस्म नष्टये। विषरोगाश्च सप्त स्युर्धातोर्धात्वन्तराप्तितः। विषदंशो ललाटं यात्यतोनेत्रं ततो मुखम्। आस्याञ्च चरणौ नाडौ धातून् प्राप्नोति हि क्रमात्"।

**नागलता** स्त्री नाग इव लता। १पुंश्चिह्ने लिङ्गे लिका॰नागा-कारा लता। २नागदौर्घायां ३ताम्बूल्याञ्च।

**नागलोक** पु॰ ६त॰। नागाधिष्ठिते लोके पाताले नाग-शब्दे तेषां पातालस्थितिकारणं दर्शितम्। पातालाव-स्थानभेदादि पुराणसर्वस्वे विष्णुपुराणाद्युक्तं यथा "पराशर उवाच विस्तार एष कथितः पृथिव्या भवतो मया। सप्ततिस्तु सहस्राणि द्विजोच्छ्रायोऽपि कथ्यते। दशसाहस्रमेकैकं पातालं मुनिसत्तम!। सुतलं वितलञ्चैव नितलञ्च गभस्तिमत्। महाख्यमतलञ्चापि पातालञ्चापि सत्तम!। भूमयो यत्र मैत्रेय! वरप्रासादशोभिताः। तेषु दानवदैतेयजातयः शतसंघशः। निवसन्ति महा-नागजातयश्च महामुने!" ब्रह्माण्डे "प्रथमेऽस्मिं स्तले ख्यातमसुरेन्द्रस्य मन्दिरम्। नमुचेर्वृषपर्वणश्च महाना-दस्य चानघ!। पुरञ्च शङ्कुकर्णस्य कबन्धस्य च मन्दि-रम्। किंनिषस्य च पुरं प्रहृष्टजनसङ्कुलम्। राक्ष-सस्य च भीमस्य शूलदन्तस्य चालयः। लोहिताक्ष-कुलिन्दानां नगरं श्वापदस्य च। धनञ्जयस्य सदनं नागेन्द्रस्य महात्मनः। कालियस्य च नागस्य नगरं कलशस्य च। एवं पुरसहस्राणि नागदानवरक्षसाम्। ज्ञेयानि प्रथमे चैव कृष्णभौमे तले द्विज!। द्वितीयेऽस्मिं स्तले ज्ञेयं दैत्येन्द्रस्य सुरक्षसः। महाजम्भस्य च तथा

नगरं प्रघसस्य च । हयग्रीवस्य कृष्णस्य निजं तस्य च मन्दिरम् । शङ्खाख्यस्य च दैत्यस्य नगरं गोमुखस्य च । राक्षसस्य च नीलस्य मेघस्य क्रथकस्य च । पुरञ्च कृष्णपादस्य महोष्णीषस्य चालयः । कम्बलस्य च नागस्य पुरमश्वतरस्य च । कद्रूपुत्रस्य च पुरं तक्षकस्य महात्मनः । एवं पुरसहस्राणि नागदानवरक्षसाम् । द्वितीयेऽस्मिंस्तले विप्राः पाण्डुभौमे न संशयः । तृतीये तु तले ख्यातं प्रह्लादस्य महात्मनः । अनुह्लादस्य च पुरं पुरमग्निमुखस्य च । तारकाख्यस्य च पुरं पुरं त्रिशिरसस्तथा । शिशुमारस्य च पुरं हृष्टपुष्टजनाकुलम् । च्यवनस्य च विज्ञेयं राक्षसस्य च मन्दिरम् । मन्द्रस्योरगपतेर्विशालस्य च मन्दिरम् । एवं पुरसहस्राणि नागदानवरक्षसाम् । तृतीयेऽस्मिंस्तले ज्ञेयं रक्तभौमे न संशयः । तत्रापि दैत्यसिंहस्य कालनेमेः पुरं महत् । तथा लम्बस्य च पुरं नगरं कुञ्जरस्य च । राक्षसेन्द्रस्य च पुरं सुमालेर्बहुविस्तरम् । मुञ्जस्य लोकनागस्य वृकवक्त्रस्य चालयः । बहुयोजनसाहस्रं बहुपक्षिगणाकुलम् । नगरं वैनतेयस्य चतुर्थेऽस्मिन्रसातले । पञ्चमे शर्कराभौमे बहुयोजनविस्तृतम् । विरोचनस्य नगरं दैत्यसिंहस्य धीमतः । व्यायताक्षाग्निजिह्वस्य हिरण्याक्षस्य चालयः । पुरञ्च विद्युज्जिह्वस्य राक्षसेन्द्रस्य धीमतः । महामेघस्य च पुरं राक्षसो देवविद्विषः । किर्मीरस्य च नागस्य स्वस्तिकस्य जयस्य च । एवं पुरसहस्राणि नागदानवरक्षसाम् । पञ्चमेऽस्मिंस्तले ज्ञेयं शर्करानिलये तथा । षष्ठे तले केशरिणो दैत्येन्द्रस्य पुरं स्मृतम् । सुपर्वणः पुलोम्नश्च नगरं महिषस्य च । राक्षसेन्द्रस्य च पुरं चुक्रोशस्य महात्मनः । तत्रास्ते सुरसापुत्रः शतशीर्षैर्मुदा युतः । महेन्द्रस्य सखा श्रीमान् वासुकिर्नाम नागराट् । एवं पुरसहस्राणि नागदानवरक्षसाम् । षष्ठे तलेऽस्मिन् ख्यातानि शिलाभौमे रसातले । सप्तमे तु तले ज्ञेयं पाताले पूर्वपश्चिमे । पुरं बलेः प्रमुदितं नरनारीगणायुतम् । असुराशीविषैः पूर्णं सुहृद्भिर्देवशत्रुभिः । मुचुकुन्दस्य दैत्यस्य तत्रैव नगरं महत् । अनेकैर्दितिपुत्राणां समुदीर्णैर्महापुरैः । तथैव नागनगरैश्च विमर्द्दिर्महात्मभिः । दैत्यानां दानवानाञ्च समुदीर्णैर्महापुरैः । उदीर्णं राक्षसावासैरनेकैश्च समाकुलम् । स्वर्लोकादपि रम्याणि पातालानीति नारदः । प्राह स्वर्गसभामध्ये पातालेभ्यो गतो दिवि ।

आह्लादकारिणः शुभ्रा मणयो यत्र सुप्रभाः । नागाभरणभूषासु पातालं केन तत्समम् । दैन्यदारिद्र्यरहितैरितश्चेतश्च शोभिते । पाताले कस्य न प्रीतिर्विमुक्तस्यापि जायते । दिवार्करश्मयो यत्र प्रभां तन्वन्ति नातपम् । शशिनश्च न शीताय निशि द्योताय केवलम् । भक्ष्यभोज्यमहापानमुदितैरतिभोगिभिः । यत्र न ज्ञायते कालो गतोऽपि दनुजादिभिः । वनानि नद्यो रम्याणि सरांसि कमलानि च । पुंस्कोकिलाभिलापाश्च मनोज्ञान्यम्बराणि च । भूषणान्यतिरम्याणि गन्धाढ्यञ्चानुलेपनम् । वेणुवीणामृदङ्गानां स्वनैर्नादितानि च । एतान्यन्यानि चोदारभाग्यभोग्यानि दानवैः । दैत्योरगैश्च भुज्यन्ते पातालान्तरगोचरैः । पातालानामधश्चास्ते विष्णोर्या तामसी तनुः । शेषाख्या यद्गुणान् वक्तुं न शक्ता दैत्यदानवाः । योऽनन्तः पठ्यते सिद्धैर्देवदेवर्षिपूजितः । सहस्रशिरसा व्यक्तः स्वस्तिकामलभूषणः । फणामणिसहस्रेण यः स विद्योतयन् दिशः । सर्वान् करोति निर्वीर्यान् हिताय जगतोऽसुरान् । मदाघूर्णितनेत्रोऽसौ यः सदैवैककुण्डलः । किरीटी स्रग्धरो भाति साग्निः श्वेत इवर्क्षराट् । नीलवासा मदोत्सिक्तः श्वेतहारोपशोभितः । साभ्रगङ्गाप्रपातोऽसौ कैलासाद्रिरिवोन्नतः । लाङ्गलासक्तहस्ताग्रो बिभ्रन्मुषलमुत्तमम् । उपास्यते स्वयं कान्त्या यो वारुण्या च मूर्त्तया । कल्पान्ते यस्य वक्त्रेभ्यो विषानलशिखोज्ज्वलः । सङ्कर्षणात्मको रुद्रो निर्गत्यात्ति जगत्त्रयम् । समस्तपृथिवीभूतमशेषक्षितिमण्डलम् । आस्ते पातालमूलस्थः शेषोऽशेषसुरार्चितः । तस्य वीर्यं प्रभावश्च स्वरूपं रूपमेव च । न हि वर्णयितुं शक्यं ज्ञातुं वा त्रिदशैरपि । यस्यैषा सकला पृथ्वी फणामणिशिखारुणा । आस्ते कुसुममालेव कस्तद्वीर्यं वदिष्यति । यदा विजृम्भतेऽनन्तो मदाघूर्णितलोचनः । तदा चलति भूरेषा साद्रितोयाब्धिकानना । यदा तु पर्वणि गजः खेदाच्चालयते शिरः । सपर्वतवना नाम तदेयं चलति क्षितिः । गन्धर्व्वाप्सरसः सिद्धाः किन्नरोरगचारणाः । नान्तं गुणानां गच्छन्ति तेनानन्तोऽयमुच्यते । यस्य नागवधूहस्तैर्लेपितं हरिचन्दनम् । स्वनिश्वासानिलापास्तं याति दिक्पटवासताम् । यमाभनति देवर्षिर्गर्गो ज्योतींषि तत्त्वतः । भगवान् सकलञ्चैव निमित्तं पठितं फलम् । तेनेयं नागवर्य्येण शिरसा विधृता मही । बिभर्त्ति मालां

लोकानां सदेवासुरमानुषाम्" नागभुवनादयोऽप्यत्र ।

**नागवर्म्मन्** पु॰तीर्थभेदे "ततः प्रायाद्बलो राजन् ! दक्षिणेन सरस्वतीम् । गत्वा चैवं महाबाहुर्नातिदूरे महायशाः । धर्मात्मा नागधन्वानं तीर्थमागमदच्युतः । यत्र पन्नग राजस्य वासुकेः सन्निवेशनम् । महाद्युतेर्महाराज ! बहुभिः पन्नगैर्वृतम् । ऋषीणां हि सहस्राणि तत्र नित्यं चतुर्दश । यत्र देवाः समागम्य वासुकिं पन्नगोत्तमम् । सर्वे पन्नगराजानमभ्यषिञ्चन् यथाविधि । पन्नगेभ्यो भयं तत्र विद्यते न स्म पौरव ! । तत्रापि विधिवद्दत्त्वा विप्रेभ्यो रत्नसञ्चयान्" भा॰श॰ ३८अ॰।

**नागवल्लरी** स्त्री नाग इव दीर्घा वल्लरी । ताम्बूलीलतायां भावप्र॰ ।

**नागवल्ली** स्त्री नाग इव दीर्घा वल्ली । ताम्बूलवल्ल्याम् अमरः । सा च देशभेदात् कृत्तिकाभेदेन नामाकारगुणा यथोक्तं राजनि॰ "एकाप्येवा देशकृत्तद्विशेषाद्नानाकारं याति काले गुणे च" इत्युपक्रमे "श्रीवाटी मधुरा तीक्ष्णा वातपित्तकफापहा । रसाढ्या सुरसा रुच्या विपाके शिशिरा स्मृता । अादर्श्वाटी कटुकाम्लतिक्ता तीक्ष्णा तथोष्णा सुखपाककर्त्री । विदाह पित्तास्रविकोपनी च विष्टम्भदा वातनिवर्हणी च । सप्तमी मधुरा तीक्ष्णा कटुरुष्णा च पाचनी । गुल्मोदराध्मानहरी रुचिसन्दीपनी परा" अन्यच्च "गुहागरे सप्तशिरा प्रसिद्धा तत्पर्णचूर्णातिरसातिरुच्या । सुगन्धि तीक्ष्णा मधुरातिहृद्या सन्दीपनी पुंस्त्वकरी च बल्या" "नाम्ना याम्लसरा सुतीक्ष्णमधुरा रुच्या हिमा दाहनुत् पित्तोद्रेकहरी सुदीपनकरी बल्या सुखामोदिनी । स्त्रीसौभाग्यविवर्द्धिनी मदकरी ज्ञेया सदा वल्लभा गुल्माध्मानविबन्धजिच्च कथिता सा मालवे दुर्लभा । अम्लपुष्कलिका नाम कषायोष्णा कटुस्तथा । मलापकर्षी कण्ठस्य पित्तकृद्वातनाशिनी । हैसणीया कटुस्तीक्ष्णा हृद्या दीर्घदला च सा । कफवातहरी रुच्या कटुर्दीपन पाचनी" स्वार्थे क । नागवल्लिकाऽप्यत्र "पर्णमूले भवेद्व्याधिः पर्णाग्रे पापसम्भवः । जीर्णपर्णं हरेदायुः शिरा बुद्धिप्रणाशिनी" आह्नि॰त॰ ।

**नागवारिक** पु॰ नागस्य गजस्य सर्पस्य वा वारो वारणं प्रयोजनमस्य ठक् । १हस्तिपालके २गरुडे ३मयूरे ४राजकुञ्जरे ५यूथस्यगजराजे च मेदि॰ ।

**नागवि(बि)ल** न॰ तीर्थभेदे नागरखण्डशब्दे दृश्यम् ।

**नागवीट** पु॰नाग इव अटति वि+इट–क । टाङ्करे(दाकरा) त्रिका॰ ।

**नागवीथी** स्त्री आकाशमण्डलस्थे उत्तरदिक्स्थे अश्विन्यादित्रयघटितग्रहस्थानत्रयान्तर्गते मार्गभेदे वियति हि मध्यमोत्तरदक्षिणमार्गत्रयमस्ति तत्र प्रत्येकं वीथीत्रयेण त्रिधा भिद्यते । तथा हि त्रिभिस्त्रिभिरश्विन्यादिनक्षत्रैर्नागवीथी गजवीथी ऐरावती चेत्युत्तरमार्गे वीथीत्रयम् "सर्वग्रहाणां भान्येव स्थानानि द्विजसत्तमाः । स्थानं जारद्गवं मध्ये तथैरावतमुत्तरम्" "वैश्वानरं दक्षिणतो निर्द्दिष्टमिह तत्त्वतः । अश्विनी कृत्तिका याम्या नागवीथीति शब्दिता" विष्णुपु॰ जरद्गवशब्दे ३०५८पृ॰ दृश्यम् । २कश्यपपत्नीभेदे च "नागवीथी च यामिन्याम्" ब्रह्म॰पु॰ २अ॰ ।

**नागवृक्ष** पु॰ नामाख्यो वृक्षः । नागकेशरवृक्षे शब्दार्थचि॰ ।

**नागशत** पु॰ नागानां शतमत्र । पर्वतभेदे "जगाम सह पत्नीभ्यां ततो नागशतं गिरिम्" भा॰आ॰११८अ॰ ।

**नागशुण्डी** स्त्री नागस्य शुण्डसदाकारोऽस्त्यस्य शिखायाम् अच् गौरा॰ ङीष् । डङ्करीफलनामके वृक्षे राजनि॰।

**नागसम्भव** न॰ नागात् सीसकात् सम्भवति सम्+भू–अच् ५त॰। सिन्दूरे अमरः ।

**नागसम्भूत** न॰नागात् सीसात् वासुक्यादितो वा सम्भूतम् ५त॰ सीससम्भवे १सिन्दूरे वासुक्यादिशिरस्थे वर्षधःपतिते २मुक्ताफलभेदे च "तक्षकवासुकिकुलजाः कामगमा ये च पन्नगास्तेषाम् । स्निग्धानीलद्युतयो भवन्ति मुक्ताः फणप्रान्ते । शस्तेऽवनिप्रदेशे रजतमये भाजने स्थिते च यदि । वर्षति देवोऽकस्मात् तज्ज्ञेयं नागसम्भूतम् । अपहरति विषमलक्ष्मीं क्षपयति शत्रून्यशो विकाशयति । भौजङ्गं नृपतीनां धृतमकृतार्घं विजयदं च"वृ॰सं॰८१अ॰

**नागसरस्** न॰ तीर्थभेदे नागरखण्डशब्दे दृश्यम् ।

**नागसाह्वय** न॰ नागेन हस्तिना समानः आह्वयो यस्य । हस्तिनापुरे "जगाम तक्षकस्तूर्णं नगरं नागसाह्वयम्" भा॰आ॰४२अ॰। [क्षीरलतायां क्षीरस्वामी ।

**नागसुगन्धा** स्त्री नागस्य सर्पस्येव सुगन्धोऽस्याः । भुजङ्गा-

**नागस्तोक** न॰ नागस्य तद्विषस्य स्तोकमत्र अप् । वत्स नामविषे राजनि॰ । [वृक्षे च राजनि॰ ।

**नागस्फोता** स्त्री नाग इव स्फोता । १नागदन्तीवृक्षे २दन्ती-

**नागहनु** पु॰नागस्य हस्तिनो हनुरिव । नखीनामगन्धद्रव्ये राजनि॰ ।

**नागहन्त्री** स्त्री नागान् सर्पान् हन्ति हन् ङीप् । १वन्ध्याकर्कट्याम् राजनि० । २सर्पगजयोर्हन्तरि त्रि० ।

**नागाख्य** पु० नागेति आख्या यस्य । नागकेसरे शिका० ।

**नागाञ्चला** स्त्री नागस्याञ्चलमिवाग्र । नागयष्टौ जटाधरः ।

**नागाञ्जना** स्त्री नागस्याञ्जनं यत्र । १नागयष्ट्यां २हस्तिन्याञ्च मेदि० । [रथिपमाते च । नागाधिराजादयोऽप्यत्र ।

**नागाधिप** पु० ६त० । १अनन्ते नागे हेमच० । २गजसर्पयो-

**नागानन** पु० नागस्येवाननमस्य । गजानने गणेशे ।

**नागान्तक** ६त० । १गरुडे क्रमेण सर्पगजयोरन्तके २मयूरे ३सिंहे च । [नाटकभेदे ।

**नागानन्द** पु० नागानामानन्दो यस्मिन् यत्र । श्रीहर्षप्रणीते

**नागाराति** पु०नागस्य सर्पस्यारातिः १वन्ध्याकर्कट्याम् राजनि० २सिंहे ३गरुडे ४मयूरे च । नागारिप्रभृतयोऽप्येषु ।

**नागार्जुनीय** पु० नागश्च अर्जुनश्च तौ अधिकृत्य कृतोग्रन्थः "द्वन्द्वाच्छः" पा० छ । नागार्जुनाधिकारेण कृते काव्यभेदे कथाख्यायिकात्वात् वा लुक् । नागार्जुन तत्रार्थे ।

**नागालाबू** स्त्री नागः नागकुम्भ इवालाबूः । गजकुम्भाकारायां लम्बाम् राजनि० । [२मयूरे ३सिंहे च ।

**नागाशन** न० नागान् अश्नाति अश–ल्यु । गरुडे हारा०।

**नागाह्व** पु० नागेन युक्ताह्वा यस्य । हस्तिनापुरे । नागाह्वयादयोऽप्यत्र त्रिका० । [वन्ध्यायाम् राजनि० ।

**नागाह्वा** स्त्री नाग नागकेसरमाह्वयते आह्वते आ+ह्वे–क ।

**नागिन्** पु० नागो भूषणत्वेनास्त्यस्य इनि । सर्पभूषणे शिवे "नागोपवीतिनं नम्नं नागिनमजिनवसम्" हरिवं० २७६ अ० ।

**नागेन्द्र** पु० नाग इन्द्र इव श्रेष्ठत्वात् उपमितस० । १ऐरावते २श्रेष्ठादिनागे च । "नागेन्द्रहस्तास्त्वचि कर्कशत्वात्" कुमा० । "कुथेन नागेन्द्रमिवेन्द्रवाहनम्" माघः ।

**नागेश** पु० ६त० । १अनन्ते शेषनागे । पाणिनिव्याकरणभाष्यविवरणादिग्रन्थकारके २विद्वद्भेदे "नागेशभट्टस्तनुते लघुशब्देन्दुशेखरम्" । ३शिवलिङ्गभेदे न० नागेश्वरोऽप्यत्र विष्णुपु० उक्ते तन्निकटस्थे ४तीर्थभेदे न० ।

**नागोद(र)** न०नाग इवोदरं यस्मात् पृषो०वा रस्य लोपः । उदरत्राणे हेमच० । रात्नं तत्रार्थे हारा० । सुश्रुतोक्ते २गर्भिण्या गर्भोपद्रवभेदे च "शुक्रशोणितं वायुनाभिप्रपन्नमवक्रान्तजीवमाध्मापयत्युदरं तत्कदाचिद्‌दैवाद्‌व्यपयान्तं नैगमेषापहृतमिति भाषन्ते । तमेव कदाचित् प्रलीयमानं नागोदरमित्याहुस्तत्रापि लीनवत् प्रतीकारः"

**नागोद्भेद** न०सरस्वतीनद्याःप्रकाशस्थानभेदरूपे तीर्थभेदे "गच्छन्त्यन्तर्हिता यत्र मेरुपृष्ठे सरस्वती । चमसे च शिवोद्भेदे नागोद्भेदे च दृश्यते । नागोद्भेदे नरः स्नात्वा नागलोकमवाप्नुयात्" भा० व० ८२अ० ।

**नाचिक** पु० विश्वामित्रपुत्रभेदे "गराचिनाचिकश्चैव" भा० अनु० ४अ० विश्वामित्रपुत्रोक्तौ ।

**नाचिकेत** पु० नचिकेतशब्दार्थे १अनले २ऋषिभेदे तदुपाख्याने च । त्रिकाण्डे नाचिकेतुरिति पाठः लिपिकरप्रमादकृतः नाचिकेत इत्येव पाठः श्रुत्यादिसंवादी । नाचिकेतोपाख्यानञ्च भा०अनु० ७१अ० आदौ दृश्यम् ।

**नाचीन** पु० दक्षिणस्थे १देशभेदे २तन्नृपे च "नाचीनानर्बुदांश्चैव" भा०स०३०अ० सहदेवदक्षिणदिग्विजये ।

**नाट** पु० नट–घञ् । १नृत्ये २कर्णाटदेशे च शब्दरत्ना०

**नाटक** त्रि०नट–ण्वुल् । १नर्त्तके स्त्रियां टाप् । काशाख्यापर्वतान्तिकस्थे २पर्वतभेदे । "ऐशान्यां नाटके शैले शङ्करस्य महाश्रमम् । नित्यं वसति तत्रैव तदधीना तु पार्वती" कालिकापु० । ३दृश्यकाव्यरूपे रूपकभेदे न० । तद्भेदलक्षणादिकं सा०द० उक्तं यथा

"नाटकमथ प्रकरणम् भाणव्यायोगसमवकारडिमाः । ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश । किञ्च "नाटिका त्रोटकं गोष्ठी सट्टकं नाट्यरासकम् । प्रस्थानोल्लाप्यकाव्यानि प्रेङ्खणं रासकं तथा । संलापकं श्रीगदितं शिल्पकञ्च विलासिका । दुर्मल्लिका प्रकरणी हल्लीशो भाणिकेति च । अष्टादश प्राहुरुपरूपकाणि मनीषिणः । विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम्" । सर्वेषां प्रकरणादिरूपकाणां नाटिकाद्युपरूपकाणाञ्च । तत्र । "नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम् । विलासर्द्ध्यादिगुणवद्युक्तं नानाविभूतिभिः । सुखदुःखसमुद्भूति नानारसनिरन्तरम् । पञ्चादिका दशपरास्तत्राङ्काः परिकीर्त्तिताः । प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् । दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः । एक एव भवेदङ्गी शृङ्गारो वीर एव वा । अङ्गमन्ये रसाः सर्वे कार्य्यो निर्वहणेऽद्भुतम् । चत्वारः पञ्च वा मुख्याः कार्य्यव्यापृतपूरुषाः । गोपुच्छाग्रसमाग्रन्तु बन्धनं तस्य कीर्त्तितम्" । "देवतानां मनुष्याणां राज्ञां लोके महात्मनाम् । पूर्ववृत्तानुचरितं प्रख्यातोदात्तनायकम् । प्रवेशकविष्कम्भादिभिः सन्धिभिरन्वितम् । इतिहासकथोद्भूतं सुखदुःखदैः

र्युतम्। षट्पञ्चदशसप्ताष्टनवाङ्कै रलङ्कृतम्। नानाविलासलीलाभिः सर्वसिद्धिभिरन्वितम्। नानाभावरसैराढ्यं नाटकं सूरयो विदुः। किञ्चिदङ्गविहीनन्तु न त्याज्यं नाटकं क्वचित्। आरम्भश्च प्रयत्नश्च प्राप्तिः सम्भव एव च। नियता च फलप्राप्तिः फलयोगस्तथा परः। इत्यवस्थापञ्चकं स्यात् नाटके कार्य्यवस्तुनः। संस्कृतं प्राकृतं भूतभाषापभ्रंशिका गिरः। नाटके नियताः शस्ता एता भाषा रसावहा। भाषाविभाषाभेदेन प्राकृतन्तु चतुर्दश। मागध्यावन्तिका प्राच्या शौरसेन्यर्द्धमागधी। वाह्लीका दाक्षिणात्याश्च भाषाः सप्त च प्राकृते। शकाराभीरचाण्डालशबरद्राविडौड्रजाः। वानौकसी विजातीनां विभाषाः सप्त कीर्त्तिताः। कैकेयी शौरसेनी च काञ्ची पाञ्चालमागधी। द्राविडी पाण्डुदेशी च भूतभाषाः प्रकीर्त्तिताः। वैदर्भी मागधी नाटी काम्बोजी चोपनागरी। पाञ्चाली षडपभ्रंशभाषाः स्युर्देशभेदतः। देवतादर्शनान्तञ्च कर्त्तव्यं नाटकं बुधैः। राजर्षिदर्शनान्तं वा तेऽपि देवैः समा मताः"। उदाहरणम् "मुरारिकवेरनर्घराघवं भवभूतेरुत्तरचरितं कालिदासस्याभिज्ञानशकुन्तलञ्च" सङ्गीतदा०।

तच्च यथा कर्त्तव्यं नाटकादिविभागसज्ञा अग्निपु० ३३७अ० तथा निरूपितं यथा

"सामान्यञ्च विशेषश्च लक्षणस्य द्वयी गतिः। सामान्यं सर्वविषयं शेषः क्वापि प्रवर्त्तते। पूर्वरङ्गे निवृत्ते द्वौ देशकालावुभावपि। रसभावविभावानुभावा अभिनयस्तथा। अङ्कः स्थितिश्च सामान्यं सर्वत्रैवोपसर्पणात्। विशेषोऽवसरे वाच्यः सामान्यं पूर्वमुच्यते। त्रिवर्गसाधनन्नाट्यमित्याहुः करणञ्च यत्। इतिकर्त्तव्यता तस्य पूर्वरङ्गो यथाविधि। नान्दीमुखानि द्वात्रिंशदङ्गानि पूर्वरङ्गके। देवतानां नमस्कारो गुरूणामपि च स्तुतिः। गोब्राह्मणन्रपादीनामाशीर्वादादि गीयते। नान्द्यन्ते सूत्रधारोऽसौ रूपकेषु निबध्यते। गुरुपूर्वक्रमं वंशप्रशंसा पौरुषं कवेः। सम्बन्धार्थौ च काव्यस्य पञ्चैतानेष निर्दिशेत्। नटी विदूषको वापि पारिपार्श्विक एव वा। सहिताः सूत्रधारेण संलापं यत्र कुर्वते। चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः। आमुखं तत्तु विज्ञेयं बुधैः प्रस्तावनापि सा। प्रवृत्तकं कथोद्घातः प्रयोगातिशयस्तथा। आमुखस्य त्रयो भेदा वीजांशेषूपजायते। कालं प्रवृत्तमाश्रित्य सूत्रधृग्यत्र वर्णयेत्। तदाश्रयश्च पात्रस्य प्रवेशस्तत् प्रवृत्तकम्। सूत्रधारस्य वाक्यं वा यत्र वाक्यार्थमेव वा। गृहीत्वा प्रविशेत् पात्रं कथोद्घातः स उच्यते। प्रयोगेषु प्रयोगन्तु सूत्रधृग्यत्र वर्णयेत्। ततश्च प्रविशेत् पात्रं प्रयोगातिशयो हि सः। शरीरं नाटकादीनामितिवृत्तं प्रचक्षते। सिद्धमुत्प्रेक्षितञ्चेति तस्य भेदावुभौ स्मृतौ। सिद्धमागमदृष्टञ्च सृष्टमुत्प्रेक्षितं कवेः। वीजं विन्दुः पताका च प्रकरी कार्य्यमेव च। अर्थप्रकृतयः पञ्च पञ्च चेष्टा अपि क्रमात्। प्रारम्भश्च प्रयत्नश्च प्राप्तिः सद्भाव एव च। नियता च फलप्राप्तिः फलयोगश्च पञ्चमः। मुखं प्रतिमुखं गर्भो विमर्शश्च तथैव च। तथा निर्वहणञ्चेति क्रमात् पञ्चैव सन्धयः। अल्पमात्रं समुद्दिष्टं बहुधा यत् प्रसर्पति। फलावसानं यच्चैव वीजं तदभिधीयते। यत्र वीजसमुत्पत्तिर्नानार्थरससम्भवा। काव्ये शरीरानुगतं तन्मुखं परिकीर्त्तितम्। इष्टस्यार्थस्य रचना वृत्तान्तस्यानुपक्षयः। रागप्राप्तिः प्रयोगस्य गुह्यानाञ्चैव गूहनम्। आश्चर्य्यवदभिख्यातं प्रकाश्यानां प्रकाशनम्। अङ्गहीनं नरो यद्वन्नैवं काव्यमेव च। देशकालौ विना किञ्चिन्नेतिवृत्तं प्रवर्त्तते। अतस्तयोरुपादाननियमात् पदमुच्यते। देशेषु भारतं वर्षं काले कृतयुगत्रयम्। मर्त्त्ये ताभ्यां प्राणभृतां सुखदुःखोदयः क्वचित्। सर्गे सर्गादिवार्त्तां च प्रसज्जन्ती न दुष्यति"।

**नाटकलक्षण** न० नाटकस्य दशविधरूपकस्य लक्षणम्। सा०द० उक्ते षट्त्रिंशन्मिते नाटकस्य लक्षणे यथा

"षट्त्रिंशल्लक्षणान्यत्र नाट्यालङ्कृतयस्तथा३६। त्रयस्त्रिंशत् प्रयोज्यानि वीथ्यङ्गानि त्रयोदश। लास्याङ्गानि दश यथालाभं रसव्यपेक्षया" इत्युद्दिश्य "भूषणाक्षरसंघातौ शोभोदाहरणं तथा। हेतुसंशयदृष्टान्तास्तुल्यतर्कः पदोच्चयः। निदर्शनाभिप्रायौ च प्राप्तिर्विचार एव च। दिष्टोपदिष्टे च गुणातिपातातिशयौ तथा। विशेषणनिरुक्ती च सिद्धिर्भ्रंशविपर्य्ययौ। दाक्षिण्यानुनयौ मालाऽर्थापत्तिगर्हणे तथा। पृच्छा प्रसिद्धिः सारूप्यं संक्षेपो गुणकीर्त्तनम्। लेशो मनोरथोऽनुक्तसिद्धिः प्रियवचस्तथा। लक्षणानि" इति विभज्य क्रमेण लक्षितानि यथा

"गुणैः सालङ्कारैर्योगस्तु भूषणम्१। वर्णनाऽक्षरसंघातश्चित्रार्थैरक्षरैर्मितैः। सिद्धैरर्थैः समं यत्र प्रसिद्धोऽर्थः प्रकाशते। श्लिष्टलक्षणचित्रार्था सा शोभेत्यभिधीयते२। यत्र तुल्यार्थयुक्तेन वाक्येनाभिप्रदर्शनात्।

साध्यतेऽभिमतश्चार्थस्तदुदाहरणं४ मतम्। हेतु५र्वाक्यं समासोक्तमिष्टकृद्धेतुदर्शनात्। संशयो६ ऽज्ञाततत्त्वस्य वाक्ये स्याद्यदनिश्चयः। दृष्टान्तो७ यस्तु पक्षार्थसाधनाय निदर्शनम्। तुल्यतर्को८ यदर्थेन तर्कः प्रकृतगामिना। सञ्चयोऽर्थानुरूपो यः पदानां स पदोच्चयः९। यत्रार्थानां प्रसिद्धानां क्रियते परिकीर्त्तनम्। परपक्षव्युदासार्थं तन्निदर्शन१०मुच्यते। अभिप्राय११स्तु सादृश्यादभूतार्थस्य कल्पना। प्राप्तिः१२ केनचिदंशेन किञ्चिद्यत्रानुमीयते। विचारो१३ युक्तवाक्यैर्यदप्रत्यक्षार्थसाधनम्। देशकालस्वरूपेण वर्णना दिष्ट१४मुच्यते। उपदिष्टं१५ मनोहारि वाक्यं शास्त्रानुसारतः। गुणातिपातः१६ कार्यं यद्विपरीतं गुणान् प्रति। यः सामान्यगुणोद्रेकः स गुणातिशयो१७ मतः। अर्थान् सिद्धान् बहूनुक्त्वा विशेषोक्तिर्विशेषणम्१८। पूर्वसिद्धार्थकथनं निरुक्ति१९रिति कीर्त्तितम्। बहूनां कीर्त्तनं सिद्धि२०रभिप्रेतार्थसिद्धये। दृप्तादीनां भवेद्भ्रंशो२१ वाच्यादन्यतरद्वचः। विचारस्यान्यथाभावः सन्देहात्तु विपर्ययः२२। दाक्षिण्यं२३ चेष्टया वाचा परचित्तानुवर्त्तनम्। वाक्यैः स्निग्धैरनुनयो२४ भवेदर्थस्य साधनम्। माला२५ स्याद्यदभीष्टार्थं नैकार्थप्रतिपादनम्। अर्थापत्ति२६र्यदन्यार्थोऽर्थान्तरोक्तेः प्रतीयते। दूषणोद्घोषणायां तु भर्त्सना गर्हणं२७ तु तत्। अभ्यर्थनापरैर्वाक्यैः पृच्छा२८ऽर्थान्वेषणं२९ मतम्। प्रसिद्धि३०र्लोकसिद्धार्थैरुत्कृष्टैरर्थसाधनम्। सारूप्य३१मभिभूतस्य सारूप्यात् क्षोभवर्त्तनम्। संक्षेपो३२ यत्तु संक्षेपादात्मन्यर्थे प्रयुज्यते। गुणानां कीर्त्तनं यत्तु तदेव गुणकीर्त्तनम्३३। स लेशो३४भण्यते वाक्यं यत् सादृश्यपुरःसरम्। मनोरथ३५स्त्वभिप्रायस्योक्तिर्भङ्ग्यन्तरेण यत्। विशेषार्थोऽतिप्रस्तावेऽनुक्तसिद्धि३६रुदीर्य्यते। स्यात् प्रमाणयितुं पूज्यं प्रियोक्ति३७र्हर्षभाषणम्”।

**नाटकीय** त्रि॰ नाटके भवः तत्र वर्ण्यः “वृद्धाच्छः” पा॰छ। नाटके वर्ण्ये पदार्थे “पूर्वरङ्गः प्रसङ्गाय नाटकीयस्य वस्तुनः” माघः। [ऽस्य। (तरसज) ख्याते ब्रतापनसे त्रिका॰।

**नाटाम्र(म्ल)** पु॰ नटानां प्रियः अण् नाटः आम्रो(म्लो)रसो-

**नाटार** पुंस्त्री नट्या अपत्यम् वा आरक्। नट्या अपत्ये

**नाटिका** स्त्री दृश्यकाव्यभेदे तल्लक्षणं यथा “नाटिका क्लृप्तवृत्ता स्यात् स्त्रीप्राया चतुरङ्किका। प्रख्यातो धीरललितस्तत्र स्यान्नायको नृपः। स्यादन्तःपुरसम्बन्धा सङ्गीतव्यापृताऽथ वा। नवानुरागा कन्यात्र नायिका नृपवंशजा। सम्प्रवर्त्तेत नेताऽस्यां देव्यास्त्रासेन शङ्कितः। देवी पुनर्भवेज्ज्येष्ठा प्रगल्भा नृपवंशजा। पदे पदे मानवती तद्वशः सङ्गमो द्वयोः। वृत्तिः स्यात् कैशिकी स्वल्पविमर्शाः सन्धयः पुनः”। द्वयोर्नायकनायिकयोः। यथा रत्नावली विद्धशालभञ्जिकादि” सा॰द॰। सङ्गीतदामोदरेऽन्य कश्चिद्विशेष उक्तस्तत्रैव दृश्यः।

**नाटित** त्रि॰ चु॰ नट—क्त। १कृताभिनये भावे क्त २अभिनये स्वार्थे क। नाटितक नटकृत्ये।

**नाटेय** पुंस्त्री नट्या अपत्यम् “शुभ्रत्वेऽपि द्व्यचोऽभावपक्षे स्त्रीभ्योढक्” पा॰ ढक्। नट्या अपत्ये

**नाटेर** पुंस्त्री नट्या अपत्यं क्षुद्राभ्यो वा ढ्रक्। नट्या अपत्ये

**नाट्य** न॰ नटस्य इदं लक्षण् “छन्दोगौक्थिकेत्यादिना” पा॰ ञ्य। १नटकृत्ये नृत्यगीतवाद्यात्मके २नाट्ये वाक्यार्थाभिनये च तत्फलादिकं सङ्गीतदा॰ उक्तं यथा “देवर्षिक्षितिपालपूर्वचरितान्यालोक्य धर्मादयस्तत्तावाश्रितभूमिकाभिनयने स्यादर्थसिद्धिः परा। सङ्गीतायुतचित्तवृत्तिहरणावस्था भवन्त्यङ्गना ध्यानं ब्रह्मरसेवयेति कथितं नाट्यं चतुर्वर्गदम्। यो यस्य दयितो भावः स तं नाट्ये निरीक्षते। अतः सर्वमनोहारि नाट्यं कस्य न रञ्जकम्”। नाट्योत्पत्तिर्यथा “इन्द्रानुभूयते ब्रह्मा शक्रेणाभ्यर्थितः पुरा। चकाराकृष्य वेदेभ्यो नाट्यवेदन्तु पञ्चमम्। उपवेदोऽथ वेदाश्च चत्वारः कथिताः श्रुतौ। तत्रोपवेदो गान्धर्वः शिवेनोक्तः स्वयम्भुवे। तेनापि भरतायोक्तस्तेन मर्त्त्ये प्रचारितः। शिवाब्जयोनिभरतास्तस्मादस्य प्रयोजकाः”। नाट्यारम्भसङ्क्रान्तिदिनिरूपणाय पी॰धा॰ वशिष्ठ आह “त्रिकोत्तराश्विमृगुरुत्रविशाखहस्तेन्द्वारीश्वरपौष्णभेषु। सङ्गीतनृत्यादिसमस्तकर्म कार्यं विभौमार्कजवासरेषु”। श्रीपतिरपि “हस्तः पुष्यो वासवं चानुराधा ज्येष्ठा पौष्णं वारुणं चोत्तराश्च। पूर्वाचार्यैः कीर्त्तितश्चन्द्रवर्त्ती नृत्यारम्भे शोभनोऽयं भवर्गः”। काश्यपः “लग्नसंस्थे बुधे चन्द्रे कुम्भराशौ तु वीक्षिते। शुभग्रहैः सतर्कस्यै नाट्यारम्भः प्रशस्यते”। अतएव रत्नमालायाम् “बुधे विलग्ने शशिनि स्वराशौ शुभवीक्षिते। हिबुकस्थैः शुभैर्नाट्यप्रारम्भः सद्भिरिष्यते”।

**नाट्यधर्मिका** स्त्री नाट्यस्य धर्मोऽस्यत्र क्रियायाम् ठन्। “सङ्गीतं प्रेक्षणार्थेऽस्मिन् शास्त्रोक्ते नाट्यधर्मिका” हेमचन्द्रोक्ते दर्शनार्थे शास्त्रोक्ते तौर्य्यत्रिकरूपे नटकृत्ये

**नाट्यप्रिय** पु० नाट्यं प्रियमस्य । शिवे महादेवे हेमच० ।

**नाट्यभाषा** स्त्री नाट्ये प्रयोक्तव्या पात्रभेदेन भाषा । नाटके प्रयोक्तव्ये पात्रभेदेन भाषाभेदे सा च सङ्क्षेपत उक्ता नाटकशब्दे दर्शिता विशेषस्तु सा०द० उक्तो यथा “पुरुषाणामनीचानां संस्कृतं स्यात् कृतात्मनाम् । शौरसेनी प्रयोक्तव्या तादृशीनाञ्च योषिताम् । आसामेव तु गाथासु महाराष्ट्रीं प्रयोजयेत् । अत्रोक्ता मागधी भाषा राजान्तःपुरचारिणाम् । चेटानां राजपुत्राणां श्रेष्ठिनां चार्द्धमागधी । प्राच्या विदूषकादीनां धूर्त्तानां स्यादवन्तिका । योधनागरिकादीनां दाक्षिणात्या हि दीव्यताम् । शकाराणां शकादीनां शाकारीं सम्प्रयोजयेत् । वाह्लीकभाषा दिव्यानां द्राविडी द्रविडादिषु । आभीरेषु तथाऽऽभीरी चाण्डाली पुक्कशादिषु । आभीरी शावरी चापि काष्ठपत्रोपजीविषु । तथैवाङ्गारकारादौ पैशाची स्यात् पिशाचवाक् । चेटीनामप्यनीचानामपि स्यात् शौरसेनिका । बालानां षण्डकानाञ्च नीचग्रहविचारिणाम् । उन्मत्तानामातुराणां सैव स्यात् संस्कृतं क्वचित् । ऐश्वर्य्येण प्रमत्तस्य दारिद्र्योपद्रुतस्य च । भिक्षुबन्धधरादीनां प्राकृतं सम्प्रयोजयेत् । संस्कृतं सम्प्रयोक्तव्यं लिङ्गिनीषूत्तमासु च । देवीमन्त्रिसुतावेश्यास्वपि कैश्चित्तथोदितम् । यद्देशं नीचपात्रन्तु तद्देशं तस्य भाषितम् । कार्य्यतश्चोत्तमादीनां कार्य्यो भाषाविपर्य्ययः । योषित्सखीबालवेश्याकितवाप्सरसां तथा । वैदग्ध्यार्थं प्रदातव्यं संस्कृतं चान्तरान्तरा” । नाटकभाषाऽप्यत्र ।

**नाट्यरासक** न० दृश्यकाव्यरूपरूपकभेदे तल्लक्षणं सा०द० उक्तं यथा “नाट्यरासकमेकाङ्कं बहुतालयलस्थिति । उदात्तनायकं तद्वत् पीठमर्दोपनायकम् । हास्योऽङ्ग्यत्र सशृङ्गारो नारी वासकसज्जिका । मुखनिर्वहणे सन्धी लास्याङ्गानि दशापि च । केचित् प्रतिमुखं सन्धिमिह नेच्छन्ति केवलम्” । “तत्र सन्धिद्वयवती यथा नर्मवती । सन्धिचतुष्टयवती यथा विलासवती” ।

**नाट्यशाला** स्त्री ६त० । नाट्यस्य नाट्यार्थं शाला । (नाटमन्दिर) देवप्रासादसम्मुखस्थे गृहे “नाट्यशाला च कर्त्तव्या द्वारदेशसमाश्रया” गरुडपु० ।

**नाट्याङ्ग** न० ६त० । सा०द०उक्ते दशविधे नाट्यस्याङ्गे यथा “गेयपदं स्थितपाठ्यमासीनं पुष्पगण्डिका । प्रच्छेदकस्त्रिगूढञ्च सैन्धवाख्यं द्विगूढकम् । उत्तमोत्तमकञ्चान्यदुक्तप्रत्युक्तमेव च । लास्ये दशविधं ह्येतदङ्गमुक्तं मनीषिभिः । तन्त्रीभाण्डं पुरस्कृत्योपविष्टस्यासने पुरः । शुष्कं गानं गेयपदं१ स्थितपाठ्यं२ तदुच्यते । मदनोत्तापिता यत्र पठति प्राकृतं स्थिता । निखिलातोद्यरहितं शोकचिन्तान्विताऽबला । प्रसारितगात्रं यदासीदासीनं३मेव तु । आतोद्यमिश्रितं गेयं छन्दांसि विविधानि च । स्त्रीपुंसयोर्विपर्य्यासचेष्टितं पुष्पगण्डिका४। अन्यासक्तं पतिं मत्वा प्रेमविच्छेदमन्युना । वीणापुरःसरं गानं स्त्रियाः प्रच्छेदको५ मतः । स्त्रीवेशधारिणां पुंसां नाट्यं श्लक्ष्णं त्रिगूढकम्६ । कश्चन भ्रष्टसङ्केतः सुव्यक्तकरणान्वितः । प्राकृतं वचनं वक्ति यत्र तत् सैन्धवं७ विदुः । चतुरस्रपदं गीतं मुखप्रतिमुखान्वितम् । द्विगूढं८ रसभावाढ्यमुत्तमोत्तमकं९ पुनः । कोपप्रसादजमधिक्षेपयुक्तं रसोत्तरम् । हावहेलान्वितं चित्रश्लोकबन्धमनोहरम् । उक्तिप्रत्युक्तिसंयुक्तं सोपालम्भमलीकवत् । विलासान्वितगीतार्थमुक्तप्रत्युक्त१०मुच्यते” ।

**नाट्यालङ्कार** पु० सा० द० उक्ते षट्त्रिंशद्विधे नाट्यस्यालङ्कारभेदे यथा “आशीराक्रन्दकपटाक्षमागर्वोद्यमाश्रयाः । उत्प्रासनं स्पृहाक्षोभपश्चात्तापोपपत्तयः । आशंसाध्यवसायौ च विसर्पोल्लेखसंज्ञितौ । उत्तेजनं परीवादो नीतिरर्थविशेषणम् । प्रोत्साहनञ्च साहाय्यमभिमानोऽनुवर्त्तनम् । उत्कीर्त्तनं तथा याच्ञा परीहारो निवेदनम् । प्रवर्त्तनाख्यानयुक्तिप्रहर्षाश्चोपदेशनम् । इति नाट्यालङ्कृतयो नाट्यभूषणहेतवः” इत्युद्दिश्य । आशी१रिष्टजनाशंसाऽऽक्रन्दः२ प्रलपितं शुचा । कपटं३ मायया यत्र रूपमन्यद्विभाव्यते । अक्षमा४ सा परिभवः स्वल्पोऽपि नाभिसह्यते । गर्वो५ऽवलेपजं वाक्यं कार्य्यस्यारम्भ उद्यमः६ । ग्रहणं गुणवत्कार्य्यहेतोराश्रय७ उच्यते । उत्प्रासनन्तूपहासो योऽसाधौ साधुमानिनि । आकाङ्क्षा रमणीयत्वाद्वस्तुनो या स्पृहा९ तु सा । अधिक्षेपवचःकारी क्षोभः१० प्रोक्तः स एव तु । मोहावधीरितार्थस्य पश्चात्तापः११ स एव तु । उपपत्ति१२र्मता हेतोरुपन्यासोऽर्थसिद्धये । आशंसनं स्यादाशंसा१३ प्रतिज्ञाध्यवसायकः१४ । विसर्पो१५ यत्समारब्धं कर्मानिष्टफलप्रदम् । कार्यदर्शनमुल्लेखः१६ उत्तेजन१७मितीष्यते । स्वकार्यसिद्धयेऽन्यस्य प्रेरणाय कठोरवाक् । भर्त्सना तु परीवादः१८ नीतिः१९ शास्त्रेण वर्त्तनम् । उक्तस्यार्थस्य

यत्तु स्यादुत्कीर्त्तनमनेकधा। उपालम्भस्वरूपेण तत् स्यादर्थविशेषणम्२०। प्रोत्साहनं२१ स्यादुत्साहगिरा कस्यापि योजनम्। साहाय्यं२२ सङ्कटे यत् स्यात् सानुकूल्यं परस्य च। अभिमानः२३ स एव स्यात् प्रश्रयादनुवर्त्तनम्२७। अनुवृत्तिः भूतकार्याख्यानसत्कीर्त्तनं२८ मतम्। याच्ञा२९ तु क्वापि याच्ञा या स्वयं दूतमुखेन वा। परीहार३० इति प्रोक्तः कृतानुचितमार्जनम्। अवधीरितकर्त्तव्यकथनन्तु निवेदनम्३१ प्रवर्त्तनं३२न्तु कार्यस्य यत् स्यात् साधुप्रवर्त्तनम्। आख्यानं३३ पूर्ववृत्तोक्तिर्युक्ति३४रर्थावधारणम्। प्रहर्षः३५ प्रमदाधिक्यं शिक्षा स्यादुपदेशनम्३६" लक्षितानि।

**नाट्योक्ति** स्त्री नाट्ये उक्तिविशेषोक्तिः। लौकिकप्रसिद्धार्थकशब्दान्तरेण नाट्ये पदार्थान्तराभिधानोक्तौ तथा च केषाञ्चित् शब्दानामन्यार्थे पारिभाषिकत्वं नाट्ये ज्ञेयम् सा च सा०द० निर्णीता यथा

"अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम्। सर्वश्राव्यं प्रकाशं२ स्यात्तद्भवेदपवारितम्३। रहस्यन्तु यदन्यस्य परावृत्य प्रकाश्यते। त्रिपताककरेणान्यानपवार्यान्तरा कथा। अन्योन्यामन्त्रणं यत् स्याज्जनान्ते तज्जनान्तिकम्४। किं ब्रवीषीति यन्नाट्ये विना पात्रं प्रयुज्यते। श्रुत्वेवानुक्तमप्यर्थं तत् स्यादाकाशभाषितम्५। दृक्षां सिद्धाञ्च सेनाञ्च वेश्यानां नाम दर्शयेत्। दत्तप्रायाणि वणिजां चेटचेट्योस्तथा पुनः। वसन्तादिषु वर्ण्यस्य वस्तुनो नाम यद्भवेत्। नाम कार्यं नाटकस्य गर्भितार्थप्रकाशकम्। नायिकानायकाख्यानां संज्ञा प्रकरणादिषु। नाटिकासट्टकादीनां नायिकाभिविशेषणम्। प्रायेण ण्यन्तकः साधिर्गमैः स्थाने प्रयुज्यते। राजा स्वामीति देवेति भृत्यैर्भट्टेति चाधमैः। राजर्षिभिर्वयस्येति तथा विदूषकेण च। राजन्नित्यृषिभिर्वाच्यः सोऽपत्यप्रत्ययेन च। स्वेच्छया नामभिर्विप्रैर्विप्र आर्येति चेतरैः। वयस्येत्यथ वा नाम्ना वाच्यो राज्ञा विदूषकः। वाच्यौ नटीसूत्रधारावार्यनाम्ना परस्परम्। सूत्रधारो भवेद्भाव इति वै पारिपार्श्विकः। सूत्रधारो मारिषेति हण्डे इत्यधमैः समाः। वयस्येत्युत्तमैर्हंहो मध्यैरार्येति चाग्रजः। भगवन्निति वक्तव्याः सर्वैर्देवर्षिलिङ्गिनः। वदेद्राज्ञीञ्च चेटीञ्च भवतीति विदूषकः। आयुष्मन् रथिनं सूतो वदेत् तातेति चेतरः। वत्स पुत्रक तातेति नाम्ना गोत्रेण वा सुतः। शिष्योऽनुजश्च वक्तव्योऽमात्य आर्येति चाधमैः। विप्रैरयममात्येति सचिवेति च भण्यते। साधो इति तपस्वी च प्रशान्तश्चोच्यते बुधैः। स्वस्तीनामभिधः पूज्यः शिष्याद्यैर्विनिगद्यते। उपाध्यायेति चाचार्यो महाराजेति भूपतिः। स्वामीति युवराजस्तु कुमारो भर्तृदारकः। सौम्य भद्रमुखेत्येवमधमैस्तु कुमारकः। वाच्या प्रकृतिभी राज्ञः कुमारी भर्तृदारिका। पतिर्यथा तथा वाच्या ज्येष्ठमध्याधमैः स्त्रियः। हलेति सदृशी प्रेष्या हञ्जे वेश्याऽज्जुका तथा। कुट्टिन्यम्बेत्यनुगतैः पूज्या च जरतीजनैः। आमन्त्रणैश्च पाषण्डा वाच्याः स्वसमयागतैः। शकादयश्च सम्भाष्या भद्रदत्तादिनामभिः। यस्य यत्कर्म शिल्पं वा विद्या वा जातिरेव वा। तेनैव नाम्ना वाच्योऽसौ ज्ञेयाश्चान्ये यथोचितम्"। "अमरे तु वाग्राचार्यस्तु मारिषः" वासुरधिकः पठितः।

**नाड** पु० नाल+लस्य डः। नालशब्दार्थे अमरः।

**नाडपित्** न० कण्वाश्रमे "शकुन्तला नाडपित्यप्सरा भरतं दधे" शत०ब्रा० १३।५।४।१३ "नाडपिति स्थाने कण्वाश्रमे" भा०।

[सा०ति० नाडीशब्दे दृश्यम्।

**नाडि** स्त्री नल-इञ्। नाड्याम् "कुहः स्युः सप्त नाडयः"

**नाडिक** न० नाड्यां स्थितं ठक्। कालशाके भावप्र०तत्र स्त्री त्वमपि "कलम्बं नाडिकाशाकं वार्त्ताकुं पूतिकां तथा। भक्षयन् पतितस्तु स्यादपि वेदान्तगो द्विजः" ति०त०। अत्र नाडिकाशाकमिति पाठान्तरम् श्वेतकलम्बीति तदर्थं इति कल्पतरुः।

**नाडिका** स्त्री नाडी+स्वार्थे क। नाडीशब्दार्थे

**नाडिकेल** पु० नारिकेल+लस्य डः। नारिकेले भरतः।

**नाडिचीर** न० नाडी चीरमिव। १नल्यां २निर्वेष्टने हारा०।

**नाडिन्धम** त्रि० नाडीं नलीं धमति ध्मा-खश् मुम् च। १स्वर्णकारे अमरः। उष्णीषाधिरोहणात् हृद्गर्त्तनिःश्वासैर्नाडीं धमनं धमति ध्मा-खश्। उष्णीषाधिरोहणेन २श्वासकारके त्रि० "कथं नाडिन्धमान् मार्गान्" भट्टिः।

[पानकर्त्तरि।

**नाडिन्धय** त्रि० नाडीं धयति धे-खश् मुम् च। नाडी-

**नाडिपत्र** न० नाडिप्रधानं पत्रमस्य। नाडीचे शाकभेदे

**नाडी** स्त्री चु० नल-गन्धे अच् लस्य डः। चु० नड-भ्रंशे अच् वा गौरा० ङीष्। शिरायां कायस्थशिरास्वरूपभेदादिकं भावप्र० उक्तं यथा

"अथ शिरामाह सन्धिबन्धनकारिण्यो दोषधातु-

वहाः शिराः । नाभ्यां सर्व्वा निबद्धास्ताःप्रतन्वन्ति समन्ततः । शरीरं सकलञ्चैतत् शिराभिः पोष्यते सदा । प्रणालीभिरिवारामाः कुल्याभिः क्षेत्रधान्यवत्” । अत्र प्रणालीभिः कुल्याभिरिति दृष्टान्तद्वयं स्थूलसूक्ष्मशिराभेदात् । “प्रसारणाकुञ्चनादिक्रियाभिः सततं तनौ । शिरा एवोपकुर्व्वन्ति ताः स्युः सप्त शतानि तु । यथा कुमुद्दले साक्षात् दृश्यन्ते प्रतताः शिराः” । तथैव “नाभिस्थाः प्राणिनां प्राणाः प्राणान्नाभिरुपाश्रिता । शिराभिरावृता नाभिश्चक्रनाभिरिवारकैः” । तद्यथा तासां खलु स्थूलशिराः चत्वारिंशत् तासां दश वातवहाः दश पित्तवहाः दश श्लेष्मवहाः दश रक्तवहाः । तासां खलु वातवहानां वातस्थानगतानां सपञ्चसप्ततिशतानि१७५ भवन्ति । तावत्य१७५ एव पित्तवहाः पित्तस्थानगताः । श्लेष्मवहाः तावत्यः१७५ श्लेष्मस्थानगता रक्तवहास्तावत्यः१७५ यकृत्प्लीहगता एवं शिराः सप्तशतानि भवन्ति । तत्र वातवहाः एकस्मिन् सक्थ्नि पञ्च विंशतिः एतेनेतरसक्थि२५ बाहू च व्याख्यातौ (५०) । विशेषतः कोष्ठे चतुस्त्रिंशत् तासां श्रोण्यां गुदमेढ्राश्रिता अष्टौ । द्वे द्वे पार्श्वयोः४ । षट् पृष्ठे तावत्य ६ एवोदरे दश वक्षसि एवं (३४) । एकचत्वारिंशत्तु जत्रुण ऊर्द्ध्वम् तासां चतुर्द्दश १४ ग्रीवायां ४ चतस्रः कर्णयोः ८ नव जिह्वायां ६ षट् नासिकायां ८ अष्टौ नेत्रयोः (४१) । एवं वातवहानां सपञ्चसप्ततिशतं१७५ भवन्ति । एवं विभागः पित्तवहानामपि विशेषतस्तु पित्तवहा नेत्रयोर्दश १० कर्णयोर्द्वे २ एवं रक्तवहा श्लेष्मवहास्तु षोडश १६ ग्रीवायां कर्णयो द्वे” एवं शिराणां सप्तशतानि व्याख्यातानि । “क्रियाणामप्रतीघातममोहं बुद्धिकर्म्मणाम् । करोत्यन्यान् गुणांश्चापि स्वाः शिराः पवनश्चरन्” । क्रियाणां प्रसारणाकुञ्चनादीनाम् । अमोहं बुद्धिकर्म्मणाम् बुद्धीन्द्रियाणां मनसो बुद्धेश्च स्वे स्वे विषये ज्ञानं न करोतीत्यर्थः । अन्यान् गुणान् रसादिव्यापनद्वारा शरीरपोषणादीन् । “यदा तु कुपितो वायुः स्वाः शिराः प्रतिपद्यते । तदास्य विविधा रोगा जायन्ते वातसम्भवाः । भ्राजिष्णुतामन्नरुचिमग्निदीप्तिमरोगताम् । करोत्यन्यान् गुणांश्चापि पित्तमात्मशिराश्चरन्” अरोगतां पैत्तिकरोगानुत्पत्तिं करोति । अन्यान् गुणान् मेधाबुद्धिदर्शनशक्त्यादीन् । “यदा तु कुपितं पित्तं सेवते स्ववहाः शिराः । तदास्य विविधा रोगा जायन्ते पित्तसम्भवाः । स्नेहमङ्गेषु सन्धीनां स्थैर्यं बलमरोगताम् । करोत्यन्यान् गुणांश्चापि बलासः स्वाः शिराश्चरन्” । अरोगतां श्लैष्मिकरोगानुत्पत्तिम् अन्यान् गुणान् बलपुष्ट्यादीन् । “यदा तु कुपितः श्लेष्मा स्वाः शिराः प्रतिपद्यते । तदास्य विविधा रोगा जायन्ते श्लेष्मसम्भवाः । धातूनां पूरणं सम्यक् स्पर्शज्ञानमसंशयम् । स्वशिरासु चरद्रक्तं कुर्य्याच्चान्यान् गुणानपि” अन्यान् गुणान् बलपुष्ट्यादीन् । “यदा तु कुपितं रक्तं सेवते स्ववहाः शिराः । तदास्य विविधा रोगा जायन्ते रक्तसम्भवाः । तत्रारुणा वातवहाः पूर्य्यन्ते वायुना शिराः । पित्तदुष्टाश्च नीलाश्च शीता गौर्य्यः स्थिराः कफात् । असृग्वहास्तु ता रक्ताः स्युर्नात्युष्णशीतलाः” । याज्ञव० नाडीसंख्या अन्यथैवोक्ता । कायशब्दे १८१०पृ० द्रष्टा । पदार्थादर्शे च “पूर्व्वोक्तायाः सुषुम्णाया मध्यस्थायाः सुलोचने । नाभिहृत्कण्ठतालुभ्रूमध्यपर्व्व सहस्रशः । अधोमुख्यः शिराः काश्चित् काश्चिदूर्द्ध्वमुखास्तथा । शिरास्तिर्य्यग्गताश्चाश्च तत्र शतत्रयाधिकाः । नाड्योऽर्द्धलक्षसङ्ख्याताः प्रधानाः समुदीरिताः । तासु सर्व्वासु बलवान् प्राणो नादः समन्ततः” । संस्थितः सर्व्वदेहान्तः” इति तत्रापि दशनाडीनां प्राधान्येनोत्कीर्त्तनं सा०ति० यथा “नाडीर्दश विदुस्तासु मुख्यास्तिस्रः प्रकीर्त्तिताः । ईडा वामे तयोर्मध्ये सुषुम्णा पिङ्गलाऽपरे । मध्ये तास्वपि नाडी स्यादग्निसोमस्वरूपिणी । गान्धारी हस्तिजिह्वा च सप्तलालम्बुषा तथा । यशस्विनी शङ्खिनी च कुहूः स्युः सप्त नाडयः । नाड्योऽनन्ताः समुत्पन्नाः सुषुम्णापञ्चपर्व्वसु” । रोगविशेषज्ञानार्थं नाडीपरीक्षा भावप्र०उक्ता यथा अथ नाडीपरीक्षामाह । “पुंसो दक्षिणहस्तस्य स्त्रियो वामकरस्य तु । अङ्गुष्ठमूलगां नाडीं परीक्षेत भिषग्वरः । अङ्गुलीभिस्तु तिसृभिर्नाडीमवहितः स्पृशेत् । तच्चेष्टया सुखं दुःखं जानीयात्कुशलोऽखिलम् । सद्यःस्नातस्य सुप्तस्य क्षुत्तृष्णातपशीलिनः । व्यायामश्रान्तदेहस्य सम्यक् नाडी न बुध्यते । वातेऽधिके भवेन्नाडी प्रव्यक्ता तर्ज्जनीतले । पित्ते व्यक्ता मध्यमायां तृतीयाङ्गुलिगा कफे । तर्ज्जनीमध्यमामध्ये वातपित्ताधिके स्फुटा । अनामिकायां तर्ज्जन्यां व्यक्ता वातकफे भवेत् । मध्यमानामिकामध्ये स्फुटा पित्तकफेऽधिके । अङ्गुलि

त्रितयेऽपि स्यात्प्रव्यक्ता सन्निपाततः। वाताद्वक्रगतिश्चत्ते पित्तादुत्प्लुत्य गामिनी। कफान्मन्दगतिर्ज्ञेया सन्निपातादतिद्रुता। वक्रमुत्प्लुत्य चलति धमनी वातपित्ततः। वहेद्वक्रञ्च मन्दञ्च वातश्लेष्माधिकत्वतः। उत्प्लुत्य मन्दञ्चलति नाडी पित्तकफेऽधिके। कामात् क्रोधाद्वेगवहा क्षीणा चिन्ताभयप्लुता। स्थित्वा स्थित्वा च लेह्या सा हन्ति स्थानच्युता तथा। अतिक्षीणा च शीता च प्राणान् हन्ति न संशयः। ज्वरकोपेन धमनी सोष्णा वेगवती भवेत्। मन्दाग्नेः क्षीणधातोश्च सैव मन्दतरा मता। चपला क्षुधितस्य स्यात् तृप्तस्य भवति स्थिरा। सुखिनोऽपि स्थिरा ज्ञेया तथा बलवती मता"। अत्र विशेषो नाडीप्रकाशे

"सार्द्धत्रिकोट्यो नाड्यो हि स्थूलाः सूक्ष्माश्च देहिनाम्। नाभिकन्दनिबद्धास्तास्तिर्य्यगूर्द्ध्वमधः स्थिताः। द्विसप्ततिः सहस्रन्तु तासां स्थूलाः प्रकीर्त्तिताः। देहे धमन्यो धन्यास्ताः पञ्चेन्द्रियगुणावहाः। तासाञ्च सूक्ष्मसुषिराणि शतानि सप्त स्युस्तानि यैरसकृदन्नरसं वहद्भिः। आप्याय्यते वपुरिदं हि नृणाममीषामम्भः स्रवद्भिरिव सिन्धुशतैः समुद्रः। आपादतः प्रततगात्रमशेषमेषामा मस्तकादपि च नाभिपुरःस्थितेन। एतत् समग्रमुरगेण यथा सशिरशतसप्तकेन। सप्तशतानां मध्ये चतुरधिका विंशतिः स्फुटास्तासाम्। एका परीक्षणीया दक्षिणकरचरणविन्यस्ता। "तिर्य्यक्कूर्म्मो देहिनां नाभिदेशे वामे वक्त्रं तस्य पुच्छञ्च याम्ये। ऊर्द्ध्वे भागे हस्तपादौ च वामौ तस्याधस्तात् संस्थितौ दक्षिणौ तौ। वक्त्रे नाडीद्वयं तस्य पुच्छे नाडीद्वयं तथा। पञ्च पञ्च करे पादे वामदक्षिणभागयोः। वामे भागे स्त्रिया योज्या नाडी पुंसस्तु दक्षिणे। इति प्रोक्तो मया देवि! सर्वदेहेषु देहिनाम्"। नपुंसकस्य तु स्त्रीपुंसयोरन्यतराकारप्रकटतामपेक्ष्य परीक्षा। साम्यन्तु न स्यादेव। कूर्म्मस्य तु प्रकृतिस्थता। "अङ्गुष्ठस्य तु या मूले धमनी जीवसाक्षिणी। तस्या गतिवशाद्विद्यात् सुखं दुःखञ्च देहिनाम्। वातं पित्तं कफं द्वन्द्वं सन्निपातन्तथैव च। साध्यासाध्यविवेकञ्च सर्वं नाडी प्रकाशयेत्। प्रातः-कृतसमाचारः कृताचारपरिग्रहम्। सुखासीनः सुखासीनं परीक्षार्थमुपाचरेत्। सद्यः स्नातस्य भुक्तस्य क्षुत्तृष्णातपसेविनः। व्यायामाक्रान्तदेहस्य सम्यङ् नाडी न बुध्यते। तैलाभ्यङ्गे च सुप्ते च तथा च भोजनान्तरे। तथा न ज्ञायते नाडी यथा दुर्गतरा नदी। आदौ च वहते वातो मध्ये पित्तं तथैव च। अन्ते च वहते श्लेष्मा नाडिकात्रयलक्षणम्। भूलता भमनप्राया स्वच्छा स्वास्थ्यमयी सिरा। प्रातःस्निग्धमयी नाडी मध्याह्ने चोष्णतान्विता। सायाह्ने धावमाना च चिराद्रोगविवर्जिता। वाताद्वक्रगता नाडी चपला पित्तवाहिनी। स्थिरा श्लेष्मवती ज्ञेया मिश्रिते मिश्रिता भवेत्। सर्पजलौकादिगतिं वदन्ति विबुधाः प्रभञ्जनेन नाडीम्। पित्ते च काकलावकभेकादिगतिं विदुः सुधियः। राजहंसमयूराणां पारावतकपोतयोः। कुक्कुटादिगतिं धत्ते धमनी कफसंवृता। मुहुः सर्पगतिं नाडीं मुहुः भेकगतिं तथा। वातपित्तद्वयोद्भूतां प्रवदन्ति विचक्षणाः। भुजगादिगतिञ्चैव राजहंसगतिं सिराम्। वातश्लेष्मसमुद्भूतां भाषन्ते तद्विदो जनाः। मण्डूकादिगतिं नाडीं मयूरादिगतिं तथा। पित्तश्लेष्मसमुद्भूतां प्रवदन्ति महाधियः"।

"लावतित्तिरिवर्त्तीकगमनं सन्निपाततः। कदाचिन्मन्दगा नाडी कदाचिच्छीघ्रगा भवेत्। त्रिदोषप्रभवे रोगे विज्ञेया हि भिषग्वरैः। यदा यं धातुमाप्नोति तदा नाडी तथा गतिः। तथाहि सुखसाध्यत्वं नाडीज्ञानेन बुध्यते"। "नाडी तथा कालगतिस्तयाणां प्रकोपशान्त्यादिभिरेव भूयः"। "मन्दं मन्दं शिथिलशिथिलं व्याकुलाव्याकुलं वा स्थित्वा स्थित्वा वहति धमनी याति नाशञ्च सूक्ष्मा। नित्यं स्थानात् स्खलति पुनरप्यङ्गुलिं संस्पृशेद्वा भावैरेवं बहुविधविधैः सन्निपातादसाध्या। महातापेऽपि शीतत्वं शीतत्वे तापिता सिरा। नानाविधगतिर्यस्य तस्य मृत्युर्न संशयः। त्रिदोषे स्पन्दते नाडी मृत्युकालेऽपि निश्चला। पूर्वं पित्तगतिं प्रभञ्जनगतिं श्लेष्माणमाबिभ्रतीम् स्वस्थानभ्रमणं मुहुर्विदधतीं चक्राधिरूढामिव। तीव्रत्वं दधतीं कलापिगतिकां सूक्ष्मत्वमातन्वतीं न साध्यां धमनीं वदन्ति सुधियो नाडीगतिज्ञानिनः। यात्युच्चा च स्थिरात्यन्ता या चेयं मांसवाहिनी। या च सूक्ष्मा च वक्रा च तामसाध्यां विदुर्बुधाः। भारप्रवाहमूर्च्छाभयशोकप्रमुखकारणान्नाडी। संमूर्च्छितापि गाढं पुनरपि सा जीवितं धत्ते। पातितः काञ्चितो भेदी नष्टशुक्रश्च यो नरः। ज्ञायते विस्मयस्तस्य न किञ्चिन्मृत्युकाः

रणम्"। अन्यत्रापि। "तथा भूताभिषङ्गेऽपि त्रिदोषवदुपस्थिता। समं वा वहते नाडी तथा च न क्रमं गता। अपमृत्युर्न रोगाक्ता नाडी तत्सन्निपातवत्। स्वस्थानहीने शोके च हिमाक्रान्ते च निर्गदाः। भवन्ति निश्चला नाड्यो न किञ्चित् तत्र दूषणमिति"। अन्ये त्वाहुः "लोकवातकफैर्दुष्टं पित्तं वहति दारुणम्। पित्तस्थानं विजानीयात् भेषजं तस्य कारयेदिति"। अत्र कश्चित् "स्वस्थानच्यवनं यावन्नाड्या नोपजायते। तावच्चिकित्सासत्त्वेऽपि नासाध्यत्वमिति स्थितिरिति"। प्रसङ्गात् कालनिर्णयमाह "भूलताभुजगाकारा नाडी देहस्य संक्रमात्। विशीर्णा क्षीणतां याति मासान्ते मरणं भवेत्। क्षणाद्गच्छति वेगेन शान्ततां लभते क्षणात्। सप्ताहान्मरणं तस्य यद्यङ्गं शोथवर्जितम्। हिमवद्विशदा नाडी ज्वरदाहेन तापिनाम्। त्रिदोषस्पर्शभजतां तदा मृत्युर्दिनत्रयात्। निरीक्ष्य दक्षिणे पादे तदा चैषा विशेषतः। मुखे नाडी वहेन्नित्यं ततस्तु दिनतुर्यकम्। गतिन्तु भ्रमरस्येव वहेदेकदिनेन तु। क्रमेण स्पन्दते नित्यं पुनर्लगति चाङ्गुलौ। मध्ये द्वादशयामानां मृत्युर्भवति निश्चितम्"। दक्षिण इति पुंसः। स्त्रियास्तु वाम एव तथेति। "स्थित्वा नाडी मुखे यस्य विद्युद्द्योतिरिवेक्ष्यते। दिनैकं जीवितं तस्य द्वितीये म्रियते ध्रुवम्। स्वस्थानविच्युता नाडी यदा वहति वा न वा। ज्वाला च हृदये तीव्रा तदा ज्वालावधि स्थितिः। अङ्गग्रहणे नाडीनां सान्निपातिकरूपेण भवन्ति सर्ववेदनाः"। ज्वररूपमाह। "ज्वरकोपे च धमनी सोष्णा वेगवती भवेत्। उष्मा पित्तादृते नास्ति ज्वरो नास्त्यूष्मणा विना। उष्णा वेगधरा नाडी ज्वरकोपे प्रजायते"। अन्यत्र च "ज्वरे च वक्रा धावन्ती तथाच मरुतः प्लवे। रमणान्ते निशि प्रातः तप्ता दीपशिखा यथा"। तत्रापि विशेषमाह "सौम्या सूक्ष्मा स्थिरा मन्दा नाडी सहजवातजा। स्थूला च कठिना शीघ्रा स्पन्दते तीव्रमारुते। द्रुता च सरला शीघ्रा दीर्घा पित्तज्वरे भवेत्। शीघ्रमाहननं नाड्याः काठिन्याच्च चला तथा। महाजीर्णेनातितरां सस्पन्दश्च प्रकीर्त्तितम्। नाडी तन्तुसमा मन्दा शीतला श्लेष्मदोषजा"। द्वन्द्वजामाह "चञ्चला तरला स्थूलकठिना वातपित्तजा। ईषच्च दृश्यते उष्णा मन्दा स्यात् श्लेष्मवातजा। निरन्तरं गुरुः स्वच्छं मन्दश्लेष्माति

वातजम्। द्रववातभवे तस्य नाडी स्यात् पित्तसन्निभा। सूक्ष्मा शीता स्थिरा नाडी पित्तश्लेष्मसमुद्भवा"। "मध्ये करे वहेन्नाडी यदि सन्तर्पिता ध्रुवम्। तदा नूनं मनुष्यस्य रुधिरा पूरिता मलाः"। आगन्तुकरूपभेदमाह "भूतज्वरे सेक इवातिवेगा धावन्ति नाड्यो हि यथाम्बुवेगाः"। तथा "ऐकाहिके न क्वचन प्रदूरे क्षणान्तगा सा विषमज्वरेण। द्वितीयके वापि तृतीयतुर्ये गच्छन्ति तप्ता भ्रमिवत् क्रमेण"। अन्यत्रापि "उष्णा वेगधरा नाडी ज्वरकोपे प्रजायते। उद्वेगक्रोधकामेषु भयचिन्ताश्रमेषु च। भवेत् क्षीणगतिर्नाडी ज्ञातव्या वैद्यसत्तमैः"। "व्यायामे भ्रमणे चैव चिन्तायां भ्रमशोकतः। नानाप्रभावगमना शिरा गच्छति विज्वरे"। अजीर्णरूपमाह "अजीर्णे तु भवेन्नाडी कठिना परितो जडा। प्रसन्ना च द्रुता शुद्धा त्वरिता च प्रवर्त्तते"। तत्र विशेषमाह "पक्वाजीर्णे पुष्टिहीना मन्दं मन्दं वहेज्जडा। असृक्पूर्णा भवेत् कोष्णा गुर्वी सामा गरीयसी। नाड्या भक्षितद्रव्यज्ञानम् यथा "पुष्टिस्तैलगुडाहारे मांसे च लगुडाकृतिः। क्षीरे च स्तिमितावेगा मधुरे भेकवद्गतिः। रम्भागुडवटाहारे रूक्षशुष्कादिभोजने। वातपित्तार्त्तिरूपेण नाडी वहति निष्क्रमम्"। नाड्या पीतरसज्ञानम् "मधुरे बर्हिगमना तिक्ते स्याद्भूलता गतिः। अम्ले कोष्णा प्लवगतिः कटुके भृङ्गसन्निभा। कषाये कठिना म्लाना लवणे सरला द्रुता। एवं द्वित्रिचतुर्योगे नानाधर्मवती शिरा"। तथा "द्रवेऽतिकठिना नाडी कोमला कठिनाशने। द्रवद्रव्यस्य काठिन्ये कोमला कठिनापि च। चौर्ये पृथग्ग्रन्थिरिवेव पिष्टे पुष्टेव जायते"। अग्निमान्द्यधातुक्षयचिह्नम् "मन्दाग्नेः क्षीणधातोश्च नाडी मन्दतरा भवेत्" तदुक्तम् "क्षीणधातौ च मन्दाग्नौ नाडी क्षीणतमा ध्रुवम्"। तथा "मन्देऽग्नौ क्षीणतां याति नाडी हंसाकृतिस्तथेति"। अन्ये तु "आमाशये पुष्टिविवर्द्धनेन भवन्ति नाड्योऽप्यभुजाभिवृत्ताः। आहारमान्द्यादुपवासतो वा तथैव नाड्यो भुजगायमानाः"। प्रसङ्गाद्दीप्ताग्निज्ञानमाह "लघ्वी भवति दीप्ताग्नेः करे मण्डूकसंप्लवा। तस्याग्नेर्मन्दता देहे तथ वा ग्रहणीगदे"। तथा "भेदेन शान्ता ग्रहणीगदेन निर्वीर्यरूपा त्वतिसारभेदे। विलम्बिकायां प्लवगा कदाचिदामातिसारे पृथुला जडा च"।

अथ विसूचिकाज्ञानम् । "निरोधो मूत्रशकृतोर्विड्-वद्धे त्वितराश्रिताः । विसूचिकाभिभूते च भवन्ति भेकवत्क्रमाः" । प्रसङ्गादानाहमूत्रकृच्छ्रज्ञानमाह "आनाहे मूत्रकृच्छ्रे च भवेन्नाडीगरिष्ठता" । शूलज्ञान-माह "वातेन शूलेन मरुत्प्लवेन सदैव वक्रा हि शिरा वहन्ति । ज्वालामयी पित्तविचेष्टितेन साध्या न शूले न च दुष्टरूपा" । अथ प्रमेहज्ञानम् । "प्रमेहे ग्रन्थि-रूपा सा सुतप्ता स्यामदूषणे" । विषविष्टम्भगुल्म-ज्ञानमाह "उत्पित्सुरूपा विषरीष्टिकायां विष्टम्भ गुल्मेन च वक्ररूपा । अत्यर्धवातेन अधःस्फुरन्ती उत्तानभेदिन्यसमाप्तिकाले" । गुल्मे विशेषमाह कश्चित् "गुल्मेन कम्पोऽथ पराक्रमेण पारावतस्येव गतिं करोति" अथ भगन्दरज्ञानम् "व्रणार्थं कठिने देहे प्रयाति पै-त्तिकं क्रमम् । भगन्दरानुरूपेण नाडीव्रणनिवेदने । प्रयाति वातिकं रूपं नाडी पावकरूपिणी" । अथ वान्तादिज्ञानम् "वान्तस्य शल्याभिहतस्य जन्तोर्वेगाव-रोधाद्विजितस्य भूयः । गतिं विधत्ते धमनी गजेन्द्र-मरालमानेव कपोलयेन । रोगादिकमपि रक्तादि-ज्ञानक्रमेण ज्ञातव्यम् । "क्वचित् प्रकरणोक्तत्वात् क्वचि-दौचित्यमात्रतः । क्वचित् देशात् क्वचित् कालात् शब्दार्थं गतिनिर्णयः" । नाडीपरिचयज्ञानं प्रायशो नैव दृश्यते । तेन धार्ष्ट्यात् मयोक्तं यत्तत् समाधेयमुत्तमैः" ।

"मातुस्तु खलु रसरहायां नाड्यां गर्भनाभिनाड़ी प्रतिबद्धा" सुश्रु० "प्राग् नाड़ीच्छेदनात् पुंसो जातकर्म विधीयते" इति स्मृतिः "शतं चैका च हृदयस्य नाड्यः" श्रुतिः "प्रवृत्ता हृदयात् सर्वाः तिर्य्यगूर्द्धमधस्तथा । वहन्त्यन्नरसान् नाड्यो दशप्राणप्रचोदिताः" भा०व० २१२अ० । २व्रणान्तरे ३गण्डदूर्वायाम् ४कुहकचर्य्यायाञ्च घटीरूपे दण्डात्मके ४समयभेदे च मेदि० । "दशगुर्वक्षरः प्राणः षड्भिः प्राणैर्विनाड़िका । तत्षष्ट्या तु भवे-न्नाड़ी" सू०सि० । तत्कालज्ञाने यन्त्रादिकं घटीशब्दे दर्शितम् । "त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टयम् । नाड़ीनां तदुभे सन्ध्ये दिवसाद्यन्तसञ्ज्ञिते" ति०त० । नक्षत्रविशेषज्ञापके ५नाड्याकारे रेखाभेदे उपयमशब्दे नाड़ीकूटनिरूपणे १२५४पृ० दृश्यम् । "एकराशा-दियोगे च नाड़ीदोषो न विद्यते" ज्यो०त० "अश्वि-न्यादित्रिकेशक्रं सर्पाकारं त्रिनाड़िकम्" ज्यो०त० । चक्रशब्दे सप्तनाड़ीनिर्णये २८१६ पृ० दृश्यम् "आर्द्रा-दिकं त्रिकेशक्रं सगानञ्च त्रिनाड़िकम्" "एकना-ड़ीस्थधिष्ण्यानि शत सुवरकन्ययोः" तत्रैव । स्वरोदये षड्नाड़ीचक्रसप्तनाड़ीचक्रयोस्तु चक्रशब्दे दर्शितयो-रपि रेखाविशेषस्यैव नाड़ीशब्दार्थत्वम् । शिराबोध-कस्य नाड़ीशब्दस्य स्वाङ्गवाचकत्वात् "नीडीतन्व्योः स्वाङ्गे" पा० बहु० न कप् । बहुनाड़िः कायः । अस्वाङ्गत्वे तु कप् । षष्टिनाड़ीको दिवसः । ६प्रणा-ल्याञ्च "सौरीभिरिव नाड़ीभिरमृताख्याभिरम्मयः" रघुः नाले शाकादीनां (डाटा) ख्याते ७अवयवभेदे च ।

**नाडीक** पु० नाड्या कायति प्रकाशते कै—क । (पाटशाक) शाकप्रधाने शाकभेदे पट्टशाके "नाड़ीको रक्तपित्तघ्नो विष्टम्भी वातकोपनः" भावप्र० ।

**नाडीकलापक** पु० नाड़ीनां नालानां कलापः संघोऽत्र कप् । सर्पाक्षीलतायां भावप्रका० ।

**नाडीकूट** न० नाड्या रेखाभेदेन कूटं नक्षत्रकूटं ज्ञाप्यं यत्र । उपयमशब्ददर्शिते १२५४ पृ० विवाहाद्यङ्गे नाड़ीचक्रस्थ चितनक्षत्रसमूहे ।

**नाडीकेल** पु० नारिकेल+पृषो० । नारिकेले शब्दर० ।

**नाडीच** पु० नाड्या चीयते चि—बा० कर्मणि ड ३त० । (नालिता) शाकभेदे चुचुके "नाड़ीचशाकं द्विविधं तिक्तं मधुरमेव च । रक्तपित्तहरं तिक्तं कृमिकुष्ठवि-नाशनम् । मधुरं पिच्छिलं शीतं विष्टम्भि कफवातकृत्" राजवल्लभः ।

**नाडीचक्र** न० नाड़ीनां चक्रमिव बन्धनस्थानम् । नाभिम-ण्डलस्थे १चक्रभेदे "नाभिमण्डलमासाद्य कुक्कुटाण्ड-मिव स्थितम् । नाडीचक्रमिह प्राहुस्तस्मान्नाड्यः समु-द्भूताः" रेखाविशेषेण नक्षत्रभेदज्ञापके २चक्रभेदे उपयम-शब्दे १२५४ पृ० दृश्यम् ।

**नाडीचरण** पुंस्त्री नाड़ी नालमिव चरणो यस्य । खग-माले त्रिका० स्त्रियां जातित्वात् ङीष् ।

**नाडीजङ्घ** पुंस्त्री नाडीव नालमिव जङ्घास्य । १काके त्रिका० २बकभेदे । स च द्विविधस्तत्र इन्द्रद्युम्नसरसि स्थितश्चिर-जीवी एकः । यथोक्तं भा०व० १९८अ० "अस्ति खल्वि-न्द्रद्युम्नं नाम सरस्तस्मिन्नाडीजङ्घोनाम बकः प्रतिवसति सोऽस्मत्तश्चिरजाततरस्तं पृच्छेति" अन्यः कश्यपात्मजः राजधर्माख्यः । तत्कथा "ततोऽस्तं भास्करे याते सन्ध्या-काल उपस्थिते । आजगाम स्वभवनं ब्रह्मलोकात् खगोत्तमः । नाड़ीजङ्घ इति ख्यातो दयितो ब्रह्मणः

सखा। वकराजो महाप्राज्ञः कश्यपस्यात्मसम्भवः। राजधर्मेति विख्यातो बभूवाप्रतिमो भुवि। देवकन्यासुतः श्रीमान् विद्वान् देवसमप्रभः। मृष्टाभरणसम्पन्नो भूषणैरर्कसन्निभैः। भूषितः सर्वगात्रेषु देवगर्भः श्रिया ज्वलन्" भा॰शा॰ १६८अ॰। ३मुनिभेदे "नाडीजङ्घः सुरगुरुसुनिर्वक्ति हृष्टेरकालौ मासवेतौ न शुभफलदौ पौषमासौ न शेषान्" मलमा॰त॰।

**नाडीतरङ्ग** पु॰ नाडी नाला तरङ्ग इव यत्र। १काकोले २हिण्डके ३रताहिण्डके च मेदि॰।

**नाडीतिक्त** पु॰ नाड्या तिक्तः। नेपालनिम्बे राजनि॰।

**नाडीदेह** पु॰ नाडीसारो देहोऽस्य। अतिकृशे भृङ्गिणि शिवस्य द्वारपालभेदे।

**नाडीनक्षत्र** नाड्यां षड्नाडीचक्रनवनाड़ीचक्रयोः स्थितं नक्षत्रम्। नाडीज्ञापकरेखास्थनक्षत्रभेदे। २८१६पृ॰ चक्रशब्दे षड्नड्यादिचक्रनिरूपणे दृश्यम्।

**नाडीयन्त्र** न॰ नाड़ीव नालीव यन्त्रम्। सुश्रुतोक्ते शल्योद्धारणार्थे विंशतिविधे यन्त्रभेदे "तत्र मनःशरीरबाधाकराणि शल्यानि तेषामाहरणोपाया यन्त्राणि। तानि षट्प्रकाराणि तद्यथा स्वस्तिकयन्त्राणि, सन्दंशयन्त्राणि तालयन्त्राणि, नाड़ीयन्त्राणि, शलकायन्त्राणि, उपयन्त्राणि चेति" इत्युपक्रमे "विंशतिर्नाड्यः"। "नाड़ीयन्त्राण्यनेकप्रकाराण्यनेकप्रयोजनान्येकतोमुखान्युभयतोमुखानि च तानि स्रोतोगतशल्योद्धरणार्थं रोगदर्शनार्थमाचूषणार्थं क्रियासौकार्य्यार्थञ्चेति तानि स्रोतो द्वारपरिणाहानि यथायोगपरिणाहदीर्घाणि च" सुश्रु॰

**नाडीवलय** न॰ नाड्या घटिकायाः ज्ञानार्थं वलयं वलयाकारं यन्त्रम्। सि॰शि॰ उक्ते लग्नादिज्ञानार्थे नाडीरूपकालज्ञानोपाये यन्त्रभेदे

"अपवृत्ते कुजलग्ने लग्नं चाथो खगोलनलिकान्तः। भूत्वं ध्रुवयष्टिस्थं चक्रं षष्ट्या निजोदयैस्ताड्यम्। व्यस्तैर्यष्टीभायामुदयेऽर्कं न्यस्य नाडिका ज्ञेयाः। इष्टच्छायासूर्यान्तरेऽथ लग्नं प्रभायां च। केनचिदाधारेण ध्रुवाभिमुखकीलकेऽत्र धृते। अथ वा कीलच्छायातत्रमध्ये स्युर्नता नाड्यः" मू॰। "अत्र सारदारुमयमिष्टप्रमाणं चक्राकारं समं नेम्यां षष्टिघटिकाङ्कं यन्त्रं खगोलमध्यस्थायां ध्रुवयष्टौ पृथ्वीमध्यस्थाने प्रोतं कार्यम्। तथा स्वोदयप्रमाणैर्मेषादिराशिभिरसमैरुभयपार्श्वयोः षड्वर्गेण च बुद्धिमताङ्कनीयम्। तैस्वोदयैर्विलोमैरङ्ग्यम्। मेषात् पश्चिमतो वृषो वृषात् पश्चिमतो मिथुनम् इत्यादि। स चाङ्कनप्रकारः सर्वतोभद्रयन्त्रे मया पठितः। "इतौ चक्रभागैस्तदन्वघटीभिः स्वदेशोदयैश्चाङ्कयेदस्य पार्श्वम्। प्रतिस्वोदयं त्र्यग्निभिः३० र्गृहभागैस्त्रिभागाभिधैर्द्वादशांशैः२।३०र्नवांशैः३।२०। त्रिभागैः१०र्द्विभागैः१५स्तथा सप्तनांशैः प्रयत्नेन षड्वर्गमेवं विभज्य"। एवं यन्त्रं कृत्वा यस्मिन् दिने तेन कालज्ञानं तस्मिन् दिने यावानौदयिको रविस्तद्भुक्तान् राशीन् मेषादेर्दत्त्वा भुज्यमानराशेर्भागान् क्षेत्रभागेषु दत्त्वाग्रे रविचिह्नं कार्यम्। तस्मिन् दिन उदयकाले यष्टिच्छाया या पश्चिमतो गता तस्यां छायायां रविचिह्नं यथा भवति तथा यन्त्रं स्थिरं कार्यम्। ततोऽनन्तरं रविर्यथा यथोपरि याति तथा तथा छायाऽधो गच्छति। छायार्कचिह्नयोर्मध्ये या घटिकास्ता दिनगता ज्ञेयाः। तथा यष्टिच्छायायां यो राशिर्ये च क्षेत्रांशास्तल्लग्नं ज्ञेयम्। स च षड्वर्गः। अथ वा किं खगोलान्तःस्थेन यष्टिप्रोतेन, चक्रान्तरिष्टप्रमाणं कीलकं प्रोतं कृत्वा स कीलको ध्रुवाभिमुखो यथा भवति तथा केनचिदाधारेण चक्रं स्थिरं कार्यम्। तथा कृते इष्टकाले कीलच्छाया यत्र लगति तस्य यन्त्राधश्चिह्नस्य च मध्ये नतनाड़िका ज्ञेयाः" प्रमिता॰।

**नाडीविग्रह** पु॰ नाड़ीमात्रसारः विग्रहो देहोऽस्य। शिवानुचरभेदे अतिकृशे भृङ्गिणि हेमच॰।

**नाडीव्रण** पु॰न॰ नाड़ीव व्रणम्। माधवकरोक्ते व्रणभेदे (नालीघा) "यः शोथमामभिति पक्वमुपेक्षतेऽज्ञो यो वा व्रणं प्रचूरपूयमसाधुवृत्तः। अभ्यन्तरं प्रविशति प्रविदार्य तस्य स्थानानि पूर्वविहितानि ततः सपूयः। तस्यातिमात्रगमनाद्गतिरिष्यते तु नाडीव यद्वहति तेन मता तु नाडी"। वातादिदोषभेदेन तस्य रूपाणि यथा "दोषैस्त्रिभिर्भवति सा पृथगेकशश्च संमूर्च्छितैरपि च शल्यनिमित्ततोऽन्या। तत्रानिलात् परुषसूक्ष्ममुखी सशूला फेनानुविद्धमधिकं स्रवति क्षपासु। पित्तात्तृषाज्वरकरी परिदाहयुक्ता पीतं स्रवत्यधिकमुष्णमहःसु तापि। ज्ञेया कफाद्बहुघनार्जुनपिच्छिलास्रा स्तब्धा सकण्डूररुजा रजनीप्रवृद्धा। दाहज्वरश्वसनमूर्च्छनवक्त्रशोषा यस्यां भवन्त्यभिहितानि च लक्षणानि। तामादिशेत् पवनपित्तकफप्रकोपाद् घोरामसुक्षयकरीमिव कालरात्रिम्। दोषद्वयाभिहितलक्षणदर्शनेन तिस्रो गतीर्व्यतिकरप्रभवास्तु विद्यात्"। शल्यनिमित्तलक्षणं यथा

"नष्टं कथञ्चिदनुमार्गमुदीरितेषु स्थानेषु शल्यमचिरेण गतिं करोति। सा फेनिलं मथितमच्छमसृग्विमिश्रमुष्णं करोति सहसा सरुजञ्च नित्यम्"। असाध्यकृच्छ्रसाध्ययोर्लक्षणं यथा "नाडी त्रिदोषप्रभवा न सिध्येत् शेषास्त्रयः खलु यत्नसाध्याः"।

**नाडीशाक** पुं० नाडीप्रधानः शाकः। नाडीके (पाटशाक)

**नाडीशोषणतैल** न० चक्रदत्तोक्ते तैलभेदे "पुटपाकविधिस्विन्नहस्तिविड्जातगोलकः। रसः सतैलसिन्धूत्थः कर्णस्रावहरः परः। जम्बूकस्य तु मांसेन कटुतैलं विपाचयेत्। तस्य पूरणमात्रेण कर्णनाडी प्रशाम्यति। निशागन्धपले पक्वं कटुतैलं पलाष्टकम्। धुस्तूरपत्रजरसे कर्णनाडीजिदुत्तमम्"।

**नाडीस्वरसञ्चार** पु०७त०। नाडीभेदे वायोः वहनरूपे गतिभेदे। देहमध्ये वामभागस्थायाम् ईडायां श्वासादिधिक्येन सञ्चारे चन्द्रोदयः, दक्षस्थायां पिङ्गलायां तथा वहने सूर्य्योदयः इत्येतत् स्वरोदयग्रन्थे प्रसिद्धम्। तस्य शुभाशुभफलादिकं कालविशेषनियमश्च प्रदर्श्यते पवनविजये "आदौ चन्द्रः सिते पक्षे भास्करस्तु सितेतरे। प्रतिपत्क्रमतोऽहानि त्रीणि तत्त्वोदयत्रयम्"। त्रिपुरासारसमुच्चये तु अमावास्यावध्युदयमाह यथा "आरभ्य दर्शं प्रथमामुदेति वामे पुटे त्रीणि दिनानि देवः। वामेतरे त्रीणि ततो दिनानि पूर्णां तिथिं यावदथैवमेवम्। एकस्य पक्षस्य विपर्ययेण रोगाभिभूतिर्भवतीह पुंसाम्। पक्षद्वये बन्धुसुहृद्विपत्तिः पक्षत्रये व्यत्ययतो क्षतिः स्यात्" ब्रह्मयामले "चन्द्रोदये यदा सूर्यश्चन्द्रः सूर्य्योदये यदा। अशुभं हानिरुद्वेगः, शुभं सर्वं निवारयेत्"। चन्द्रोदये वामनाड्यां वायुगमननिरूपितसमये एवं सूर्य्योदये दक्षिणनाड्यां वायुगमननिरूपितसमये। कर्मविशेषे नासिकयोर्वायोः प्रवेशनिर्गमाभ्याञ्च शुभत्वमपि तत्रैव "यात्राकाले विवाहे च वस्त्रालङ्कारधारणे। शुभकर्मसु सर्वेषु प्रवेशे च शशी शुभः। विग्रहद्यूतयुद्धेषु स्नानभोजनमैथुने। व्यवहारे भये भङ्गे भानुनाडी प्रशस्यते। मोहनं शान्तिकञ्चैव दिव्यौषधिरसायनम्। विद्यारम्भः स्थिरं कार्यं कर्तव्यञ्च निशाकरे। दूरयुद्धे जयी चन्द्रः समासन्ने दिवाकरः। वहन्नाडीपदे चैव यात्रा भवति सिद्धिदा"। यस्यां नासिकायां प्राणवायोर्गतिर्भवति तद्देशीयपादप्रसारणपूर्विका यात्रा सिद्धिदा भवतीत्यर्थः "शयने च प्रसङ्गे वा युवत्यालिङ्गनेऽपि वा। यः सूर्य्येण पिबेच्चन्द्रं स भवेन्मकरध्वजः"। सूर्य्येण दक्षिणनासिकास्थप्राणवायुना, चन्द्रं वामनासिकागतप्राणवायुं पिबति तत्सङ्गकाले स्त्रीयनिःश्वासमतिनिविष्टः सन्नाकर्षयति तत्फलं तत्रैव "चन्द्रचारो विषं हन्ति सूर्य्यो बालावशं नयेत्। सुषुम्णायां भवेन्मोक्ष एको देवस्त्रिधा मतः। भुक्तमात्रेण मन्दाग्नौ स्त्रीणां वश्येऽथ कर्मणि। शयनं सूर्यवाहेन कर्त्तव्यं सर्वदा बुधैः। शान्ते शोके विवादे च ज्वरिते मूर्च्छिते तथा। स्वजनस्यापि बोधार्थं चन्द्रचारं प्रवाहयेत्"। भुक्तमात्रादौ वामपार्श्वेण, शान्तादिषु दक्षिणपार्श्वेण शयनं कार्यमिति तात्पर्य्यम्। चतुर्दिक्षूर्द्धमधस्तादन्यतरस्थानमाश्रित्य यदि दूतः पृच्छति तदा कस्यां नाड्यां वायुगतिः शुभेत्याह "ऊर्द्ध्ववामागतो दूतो ज्ञेयो वामपथस्थितः। पृष्ठे दक्षे तथाधस्तात् सूर्य्यवाहगतो मतः। पूर्णनाडीगतो दूतो यत् पृच्छति शुभाशुभम्। तत्सर्वं सिद्धिमाप्नोति शून्ये शून्यं न संशयः। आदौ शून्यगतः पृच्छेत् पश्चात् पूर्णो विशेद् यदि। तदा सर्वार्थसिद्धिः स्यादिति जानीहि निश्चितम्"। इदानीं प्राणवायोः प्रवेशनिर्गमाभ्यां विशेषमाह "प्रवेशकाले यद्दूतो वाञ्छति स्वप्रयोजनम्। तत्सर्वं सिद्धिमाप्नोति निर्गमे नास्ति सुन्दरम्"। कर्मविशेषे नाडीविशेषमतिमाह "मारणं मोहनं स्तम्भं विद्वेषोच्चाटनं तथा। प्रेरणाकर्षणक्षोभं भानुनाड्युदये कुरु। शान्तिकं पौष्टिकं क्षेमं दिव्यौषधिरसायनम्। योगाभ्यासादिकर्माणि कर्तव्यानि निशाकरे"। त्रिपुरासारसमुच्चये "भूतानामुदयं द्वयोरपि बुधः संलक्षयेत् पक्षयोस्तत्रादौ वसुधोदयं निहितधीर्मध्यस्य दक्षस्पृशि। देवेऽधस्स्पृशि वारिणोऽग्नितवहस्योर्द्धं गतिश्चोदयं तिर्यक्संस्पृशि मारुतस्य परितः पृष्ठे नभस्वान्नः" देवे प्राणवायौ। फलं ब्रह्मयामले "पृथ्वीजले शुभे तत्त्वे तेजोमिश्रफलोदयम्। हानिमृत्युकरौ पुंसामुभयौ व्योममारुतौ" कर्मविशेषे भूतोदयफलं त्रिपुरासारे "वश्यस्तम्भनयोः प्रशस्त उदयो भूमेर्जलस्योदयः शस्तः शान्तिकपौष्टिकादिषु शुभो वश्याय वह्नेः पुनः। शत्रोर्मारणदारणादिकरणे उच्चाटनोच्छेदयोर्वायोः शान्तिकनिर्विषीकरणयोर्व्योम्नो हितस्योदयः"। कियत्कालमेकनाडीगतो वायुर्भवति तत्रापि पञ्चभूतोदयः केन क्रमेण इत्यपेक्षायां नाडीगतिकालं स्थानक्रमेण भूतोदयञ्चाह ब्रह्मयामले "एकैकस्य कलाः पञ्च क्रमेणैवोदयन्ति ताः। पृथि-

व्यापस्तथा तेजो वायुराकाशमेव च । मध्ये पृथ्वी त्वधश्चाप ऊर्द्ध्वं वहति चानलः । तिर्य्यग्वायुप्रवाहश्च नभो वहति संक्रमे"। प्रपञ्चसारेऽपि "पुटयोरुभयोश्च दण्डसंस्था पृथिवी तोयमधःक्रमात्तदूर्द्ध्वम् । पवनस्त्वथ पार्श्वगोऽपि मध्ये गगनं भूतगतिस्तनूद्भवेयम्" तत्रापि बाल्याद्यवस्थाभेदमाह रुद्रयामले उत्तरखण्डे एकादशपटले "स्वकीयनासिकाग्रन्तु पद्मं परिकीर्त्तितम् । यन्नासापुटमध्ये तु वायुर्भ्रमति भैरव ! ॥ तन्नासापद्ममध्ये तु भावाभावं विचारयेत् । आकाशं वायुरूपं हि तैजसं वारुणं प्रभो ! ॥ पार्थिवं क्रमशोज्ज्ञेयं बाल्यात्तादि क्रमेण तु । वामोदये शुभा वामा दक्षिणे पुरुषः शुभः । वायूनां गमनं ज्ञेयं नग्रमावधिरेव च । केवलं मध्यदेशे तु गमनं पवनस्य च । तदाकाशं विजानीयाद्बाल्यभावं प्रकीर्त्तितम् । तिर्य्यग्गतिस्तु नासाग्रे वायोरुदयमेव च । केवलं भ्रमणं ज्ञेयं सर्व्वमङ्गलमेव च । किशोरं तद्विजानीयाद्वायौ तिर्य्यग्गतौ विभो ! ॥ केवलोर्द्ध्वं नासिकाग्रे वायुर्गच्छति दण्डवत् । तत्तैजसं विजानीयात्तेजसा बलवान् भवेत् । यौवनं तद्विजानीयात् कर्म्मसिद्धिर्भवेद्ध्रुवम् । यदा व्याप्य गच्छतीह नासापुटमनाकुलम् । जलोदयं विजानीयात् तदाव्यामोहमेव च । तद्वृद्धभावश्च विलम्बोऽधिकचेष्टया । प्राप्नोति परमां प्रीतिं वारुणाख्योदयोऽरुणम् । यद्यधोगच्छति क्षिप्रं किञ्चिद्दुर्लभगोचरम् । यदा करोति प्राग् बालं तदारोगाद्बलोदयः । पृथिव्या उन्नतं भागं रोगार्त्तं परिपीड़ितम् । अस्तमितं महादेव । अनुलोमविलोमतः । पवनोगच्छति क्षिप्रं वामदक्षिणभेदतः । वामनासापुटं याति पृथिवी जलमेव च । यदा फलाफलं दातुमुदिताकुलमण्डले । तयोर्वै वायवी शक्तिः फलभागं तदा लभेत्" । अवस्थाभेदे तत्फलकथनं तत्रैव "यद्येव वामभागे तु बालायाः प्रश्नकर्म्मणि । यदि तत्र पुमान् प्रश्नं करोति वामगामिनी । तदा रोगमवाप्नोति कर्म्मार्थौ न भवेद्ध्रुवम् । यदि वायूदयो वामे दक्षिणे पुरुषः स्थितः । तदा कुफलमाप्नोति द्रव्यागमनदुर्लभम् । अकस्माद्द्रव्यहानिः स्यान्मनोगतफलापहम् । सुहृद्भङ्गं विवादश्च मित्रे भिन्नोदयात् शुभम् । केवलं वरुणस्यैव पुरुषो दक्षिणे शुभः । अशुभं पृथिवीदक्षे भेदोऽयं परदुर्लभः । सदोदयं दक्षिणे च वायोस्तेजस एव च । आकाशस्य विजानीयात् शुभाशुभफलं प्रभो ! ॥ यदि भाग्यवशादेव वायोर्मन्दा गतिर्भवेत् । दक्षनासा मध्यदेशे तदा वामोदयं शुभम् । तदा वामे विचारश्च वायुतेजःस्वरस्य च । ज्वालोदयं विजानीयान्मित्रे हानिः स्वरे भयम् । एवं स्वभुवनागारे यदि गच्छति वायवी । तस्मिन् काले पुमान् वामदक्षभागस्थसम्मुखः । तदा कन्यादानफलं यथा प्राप्नोति मानवः । तदा वायुप्रसादेन प्राप्नोति धनमुत्तमम् । देशान्तरात् शुभा वार्त्ता आयाति पुत्रसम्पदः" इति स्त्रीपुंसभेदेन फलकथनं सूक्ष्मस्वरोदये "गुरुशुक्रबुधेन्दूनां वासरे वामनाड़िकाः । सिद्ध्यन्ति सर्व्वकार्य्येषु कृष्णपक्षे विशेषतः । अर्काङ्गारकसौरीणां वासरे दक्षनाड़िका । स्यात्तथा चिरकालेन शुक्ले नैवोदयःस्थितः । क्रमादेकैकनाड्यास्तु तत्त्वानां पृथगुद्भवः । अहोरात्रस्य मध्ये तु ज्ञेया द्वादश संक्रमाः । वृषकर्कटकन्यालिमृगमीननिशाकरे । मेषे सिंहे च धनुषि तुलायां मिथुने घटे । उदयो दक्षिणे ज्ञेयः शुभाशुभविनिर्णयः" । वारादिभेदेन नाड़ीविशेषफलकथनम् । "तिष्ठेत् पूर्व्वोत्तरे चन्द्रो भानुः पश्चिमदक्षिणे । दक्षनाड्याः प्रवाहे तु न गच्छेद्दक्षपश्चिमे" इति नाड़ीविशेषेण दिग्गतिः । "वामचारप्रवाहे तु न गच्छेत् पूर्व्व उत्तरे । परिपन्थी भवेत्तस्य गतोऽसौ न निवर्त्तते । तस्मादत्र न गन्तव्यं बुधैः सर्व्वहितैषुभिः । तदा तत्र तु सङ्घाते मृत्युरेव न संशयः" इति वहन्नाड़ीकस्य दिग्विशेषगमननिन्दा । "शुक्लपक्षे द्वितीयायामर्के वहति चन्द्रमाः । प्रदृश्यते महाँल्लाभः पुंसः सौख्यं प्रजायते । सूर्य्योदये यदा सूर्य्यश्चन्द्रे चन्द्रोदयो भवेत् । सिध्यन्ति सर्व्वकार्य्याणि दिवारात्रिगतान्यपि" स्वस्वनाड़ीफलकथनम् "चन्द्रकाले यदा सूर्य्यः सूर्य्यश्चन्द्रोदये भवेत् । उद्वेगः कलहो हानिः शुभं सर्व्वं निवारयेत्" इति विपरीतनिन्दा "सूर्य्यस्य वाहे प्रवदन्ति लाभं प्रकाशने युक्तमनःस्थिरस्य । श्वासेन युक्तस्य तु शीतरश्मेः प्रवाहकाले फलमन्यदस्मात् । यदा प्रत्यूषकाले तु विपरीतोदयो भवेत् । चन्द्रस्थाने स्थिते चार्क्के रविस्थाने च चन्द्रमाः । प्रथमे मानसोद्वेगं धनहानिं द्वितीयके । तृतीये गमनं विद्यादिष्टनाशं चतुर्थके । पञ्चमे राज्यविभ्रंशं षष्ठे सर्व्वार्थनाशनम् । सप्तमे व्याधिदुःखानि अष्टमे मृत्युमृच्छति" इति दिनभेदेन विपरीतफलम् "कालत्रयं विनाऽनिष्टो विपरीतः यदा भवेत् । तदा दुष्टफलं प्रोक्तं किञ्चिन्न्यूनेऽतिशोभनम् । प्रातर्मध्याह्नयोश्चन्द्रः साय-

काले दिवाकरः। तदा नित्यं जयं लाभं विपरीतन्तु दुःखदम्” इति कालभेदेन फलम् “वामे वा दक्षिणे वापि यत्राप्याक्रम्यते स्वरः। कृत्वा तत्पदमाद्यञ्च यात्रा भवति सिद्धिदा” इति वहन्नाडीकस्य यात्राफलम्।

**नाडीस्नेह** पु॰ नाड्यामेव स्नेहोऽस्य। नाडीमात्रसारे स्वति कृशे शिवद्वारपाले भृङ्गिणि शब्दर॰।

**नाडीहिङ्गु** पु॰ नाडीप्रधानो हिङ्गुः। हिङ्गुभेदे राजनि॰।

**नाणक** त्रि॰ न अणकः कुत्सितः नञ्शब्देन “सह सुपा” स॰। १कुत्सितभिन्ने २मुद्राचिह्नितनिष्कादौ “तुलाशास-नमानानां कूटकृन्नाणकस्य च। एभिश्च व्यवहर्त्ता यः स दाप्योदण्डमुत्तमम्” याज्ञ॰।

**नाथ** दवे (उपतापे) प॰ आशिषि आत्म॰ ऐश्वर्ये ऽर्थने च पर॰ भ्वा॰सक॰ सेट् नाथति दुनोति ईष्टे याचते इत्यर्थः नाथते आशंसते इत्यर्थः। अनाथीत् अनाथिष्ट। ननाथ-थे ऋदित् अननाथत्। नाथः। अणोपदेशत्वात् षति निमित्ते न णत्वम् प्रनाथति। याचने “सन्तुष्टमिष्टानि तमिष्टदेवं नाथन्ति के नाम न लोकनाथम्” नैष॰ “आ-शिषि नाथः” पा॰ आशीर्वादे एवात्मनेपदविधानात् उपतापयाचनादौ परस्मैपदित्वम् अतएव काव्यप्र॰ “दीनं त्वामनुनाथते कुचयुगम्” इति च्युतसंस्कृतिदोषे उदाहृत्योक्तं यथा अत्र अनुनाथते इति। सर्पिषो नाथते इत्यादावाशिष्येव नाथतेरात्मनेपदं विहितम्। “आशिषि नाथः” इति सू॰ अत्र तु याचनमर्थः तस्मात् “दीनं त्वामनुनाथति स्तनयुगमिति” पठनीयम्।

**नाथ** पु॰नाथ ऐश्वर्ये अच्। स्वामिनि ईश्वरे हेमच॰। “अन-र्घ्यमर्घ्येण तमद्रिनाथः” कुमा॰ “त्रिलोकनाथेन सतां मखद्विषः” रघुः।

**नाथवत्** त्रि॰ नाथ+अस्त्यर्थे मतुप् मस्य वः। पराधीने अमरः स्त्रियां ङीप्। “विष्णुना श्रीरिवेन्द्रेण भर्त्रा नाथवती सती” रामा॰ सुन्द॰ ३७अ॰ “याः स्म ता लोकनाथेन नाथवत्यः पुराऽभवन्” भा॰मौ॰५अ॰

**नाथहरि** पु॰ नाथं हरति स्थानान्तरं नयति हृ–इन्। पशौ सि॰कौ॰।

**नाद** पु॰ नद–घञ्। १शब्दे अमरः। २अनुस्वारवदुच्चार्य्ये अर्द्धचन्द्राकृतिवर्णभेदे ३ब्रह्मस्वरूपघोषभेदे वर्णविशेष-व्यञ्जके बाह्यप्रयत्नभेदे “कण्ठमन्ये तु घोषाः स्युः संवृता नादभागिनः” पाणिशिक्षा “सच्चिदानन्दविभवात् सकलात् परमेश्वरात्। आसीच्छक्तिस्ततो नादस्तस्माद्विन्दुसमु-द्भवः। नादो विन्दुश्च वीजञ्च स एव त्रिविधो मतः। भिद्यमानात् पराद्विन्दोरुभयात्मा रवोऽभवत्। स रवः श्रुतिसम्पन्नः शब्दब्रह्माऽभवत् परम्” शार॰ति॰। “तत्र सत्त्वप्रविष्टा चित् शक्तिशब्दवाच्या परमाकाशावस्था सैव सत्त्वप्रविष्टा रजोऽनुविद्धा नादशब्दवाच्या अव्यक्तावस्था” पदार्थादर्शः। “नाभेरूर्द्ध्वं हृदि स्थानात् मारुतः प्राण-संज्ञकः। नदति ब्रह्मरन्ध्रान्ते तेन नादः प्रकीर्त्तितः” “आकाशाग्निमरुज्जातो नाभेरूर्द्ध्वं समुच्चरन्। मुखेऽ-भिव्यक्तिमायाति यः स नाद इतीरितः। स च प्राणि-भवोऽप्राणिभवश्चोभयसम्भवः। आद्यः कायभवो वीणा-दिभवस्तु द्वितीयकः। तृतीयोऽपि च वंशादिभव इत्यं त्रिधा मतः। यदुक्तं ब्रह्मणः स्थानं ब्रह्मग्रन्थिश्च यो मतः। तन्मध्ये संस्थितः प्राणः प्राणाद्वह्निसमुद्भवः। वह्निमारुतसंयोगान्नादः समुपजायते। न नादेन विना गीतं न नादेन विना स्वरः। न नादेन विना रागस्त-स्मान्नादात्मकं जगत्। न नादेन विना ज्ञानं न नादेन विना शिवः। नादं रूपं परं ज्योतिर्नादरूपी परं हरिः” सङ्गीतदा॰ ५स्तोतरि निघण्टुः। ६शब्दाभि-व्यञ्जके कर्णशष्कुलीसंयोगविभागे शवरस्वामी “नाद-वृद्धिपरा” जै॰१।१।१७सू॰ “यच्चैतत् बहुभिर्भेरीमाध-यद्भिः शब्दमुच्चारयद्भिर्महान् शब्दः उपलभ्यते। तेन प्रतिपुरुषं शब्दावयवप्रचय इति मन्यते नैवं निरवयवो-हि शब्दः अवयवभेदानवगमात् निरवयवत्वाच्च मह-त्त्वानुपपत्तिः अतो न वर्द्धते शब्दः। कर्णशष्कुली-मण्डलस्य सर्वां नेमिं व्याप्नुवद्भिः संयोगविभागैर्नैरन्त-र्येण अनेकशोग्रहणात् महान् इव अवयववान् इवोपलभ्यते, संयोगविभागाः नैरन्तर्य्येण क्रियमाणाः शब्दमभिव्यञ्जयन्तो नादशब्दवाच्याः। तेन नादस्यैषा वृद्धिः न शब्दस्येति” शवरभा॰।

**नादमुद्रा** स्त्री “सुपिरुद्धीलिताङ्गुष्ठा दक्षिणा नादमुद्रिका:” तन्त्रसारोक्ते मुद्राभेदे।

**नादवत्** पु॰ नादो बाह्यप्रयत्नभेद उच्चारणे साधनतयाऽ-स्त्यस्य मतुप् मस्य वः। १नादरूपबाह्यप्रयत्नोच्चार्य्ये वर्ग्य-द्वितीयवर्णादौ “घोषवतो नादवतो महाप्राणस्य” सि॰कौ॰ २शब्दयुक्ते च। [२वर्णभेदे च।

**नादविन्दु** पु॰ उपनिषद्भेदे १उपनिषच्छब्दे दृ॰ दृश्यम्।

**नादिन्** त्रि॰ नद–णिनि। १शब्दकारिणि स्त्रियां ङीप्। “प्रमथ्यमानार्णवधीरनादिनी” रघुः कालञ्जरे गिरौ

जातेषु जातिस्मरेषु सप्तसु खगेषु सप्तमे २खगे पु०। गुरोर्गां हत्वा पितृश्राद्धं कृतवतां गर्गशिष्याणां व्याधादि जन्मप्राप्ति कथा हरिवं० २१अ० दृश्या। तेषां दशार्णे व्याधजन्मानन्तरं कालञ्जरे गिरौ मृगजन्मप्राप्तानां संज्ञा यथा "उन्मुखो नित्यवित्रस्तः स्तब्धकर्णो विलोचनः। पण्डितो घस्मरो नादी नामतस्तेऽभवन् मृगाः"। ३नादयुक्ते त्रि०

**नादेय** त्रि० नद्या इदं तत्र भवो वा नद्याः नदस्य वा ढक्। १नद्याः सम्बन्धिनि २तत्र भवे च "नद्या नदस्य वा नीरं नादेयमिति कीर्त्तितम्। नादेयमुदकं रूक्षं वातलं लघु दीपनम्। अनभिष्यन्दि विशदं कटुकं कफपित्तनुत्" भावप्र०। ३सैन्धवलवणे न० रत्नमा०। ४सौवीराञ्जने न० राजनि०। ५काशतृणे ६वानीरवृक्षे पु० राजनि०। ७अम्बुवेतसे ८भूमिजम्बूकायां ९वैजयन्तिकायां स्त्री ङीप् अमरः। १०नागरङ्गजम्ब्वां ११व्यकुडे स्त्री ङीप् मेदिनी। १२अग्निमन्थवृक्षे १३काकजम्बूवृक्षे च स्त्री राजनि०। न आदेयम् अदेयं वा १४अग्राह्ये १५देये च त्रि० "नादेयं नादेयं शरदि वसन्ते च नादेयम्" वैद्यकम् शरदि नादेयं न ग्राह्यमित्यर्थः। वसन्ते तु न अदेयं देयमित्यर्थः।

**नादेश्वर** न० काशीस्थे शिवलिङ्गभेदे "नादेश्वरं समभ्यर्च्य कैः केनापि सुचिन्तितम्। तस्मात् काश्यां प्रयत्नेन सेव्यो नादेश्वरो नृभिः" काशीख० १२अ०।

**नाद्य** त्रि० नद्यां भवः "नद्यादिभ्योढक्" बाधित्वा "पाथो नदीभ्यां ड्यण्" पा० वेदे ड्यण्। नदीभवे "यतोदधीत नाद्यो गिरोमे" ऋ०२।३५।१ "याश्च कूप्या याश्च नाद्याः समुद्रिया आपः" तैत्ति०३।१।२।४

**नाध** नाथार्थे भ्वा० आ०सक० सेट्। नाधते अनाधिष्ट ननाधे ऋदित् चङि अननाधत् त। अयं वोपदेवोऽपीत्यन्ये तेन सति निमित्ते अत्वम्। कविकल्पद्रुमेऽस्योभयथा कीर्त्तनादस्य उभयविधत्वम् "रोदसी नाधसी हतो" ऋ० १०।६५।५ "आष्ट याच्ञोतापैश्वर्योदौ नाधसी याचमाने" भा०।

**नाना** अव्य०न+नाञ्। १विनार्थे "नाना नारीं निष्फला लोकयात्रा" "न नाना शम्भुना रामात्" मुग्धबोधम्। २अनेकार्थे "नानाविधं देहभृतां समाजम्" "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" श्रुतिः "बह्वीषु चैकजातानां नानास्त्रीषु निबोधत"। "प्रकाशवञ्चकांस्तेषां नानापण्योपजीविनाम्" मनुः।

**नानाकन्द** पु० नाना कन्दोऽस्य। १पिण्डालौ राजनि०। २बहुमूलयुक्ते त्रि०।

**नानाध्वनि** पु० ६त०। काहलवीणादिशब्दे हारा०।

**नानान्द्र** पु०ननान्दुरपत्यम् विदा० अञ्। ननान्दुरपत्ये ततः यूनि हरिता० फक्। नानान्द्रायण ननान्दुर्यून्यपत्ये।

**नानारूप** न० कर्म०। १बहुविधे रूपे "नानारूपवती मता" भाषा० नाना रूपाणि यस्य। २बहुप्रकारे त्रि० "नानारूपाणि जायन्ते वीजानीह स्वभावतः" मनुः।

**नानार्थ** त्रि० नाना अर्थो यस्य। १अनेकार्थे अक्षादिशब्दे "नानार्थाः केऽपि कान्तादिवर्गेष्वेवात्र कीर्त्तिताः" अमरः नानार्थशब्दानाञ्च यत्र शक्यतावच्छेदकतायां लाघवं तत्र शक्तिः बहूनां लाघवे नियमनाविरहेण सर्वत्रैव शक्तिः अन्यत्र लक्षणा। तत्रापि अनेकार्थस्य शब्दस्य सर्वत्र वृत्तिसाम्येन सर्वेषां पदार्थानां युगपदुपस्थितावपि संयोगादिना कस्यचिदर्थस्य शाब्दबोध इत्येकेषान्मतम् अन्यार्थोपस्थितावेव संयोगादेः प्रतिबन्धकत्वमित्यन्ये। तदेतत् रवगङ्गाधरे व्यवस्थापितम्। अधिकं अनेकार्थशब्दे १८९ पृ० दृश्यम्। २नानाप्रयोजनयुक्ते त्रि० कर्म०। ३बहुप्रयोजने पु०।

**नानावर्ण** त्रि० नानावर्णा रूपाणि यस्य। चित्रवर्णयुक्ते "उल्का मन्त्रिविनाशं नानावर्णघनाश्च भयमतुलम्" वृह०सं०५अ०। कर्म०। २ब्राह्मणादिवर्णचतुष्टये च।

**नानाविध** त्रि० नाना विधाः प्रकारा अस्य। बहुप्रकारे "नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः" सां०का० "नानाविधानां द्रव्याणां शुद्धेः शृणुत निर्णयम्" मनुः

**नान्तरीयक** न० न अन्तरा विना भवः अन्तरा+छ अव्ययस्य टिलोपः ततः स्वार्थे क। अविनाभूते तदभावे तदभावरूपव्याप्तियुते "अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते" कारिकाव्या० "अविनाभावः सम्बन्धमात्रं न तु नान्तरीयकत्वम्" काव्यप्र०। व्याकृतञ्चेदं महेश्वरेण "नान्तरीयकत्वं तदभावे तदभावरूपा व्याप्तिः"। "प्रतिबन्धकाभावे नान्तरीयका चार्थोत्पत्तिः" नव्यन्यायवादार्थः।

**नान्त्र** न० नम–ष्ट्रन् वृद्धिश्च। स्तोत्रे उणादिकोषः। संक्षिप्तसारे नान्त्रमित्येव पाठः शब्दकल्पद्रुमे नान्तेति पाठकल्पनम् लिपिकरप्रमादपाठमालोक्येति बोध्यम्।

**नान्दिकर** पु० नान्दीं करोति कृ–ट ६त० "ङ्यापोः संज्ञाछन्दसोः" पा० ह्रस्वः। नाटके नान्दीपाठकरे सूत्रधारे

**नान्दी** स्त्री नन्दन्ति देवा अत्र नन्द–घञ् पृषो०वृद्धिः ङीप्।

१सम्बुद्धौ २नाटकस्यादौ मङ्गलार्थे पाठ्ये श्लोकादौ "आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रवर्त्तते। देवद्विजनृपादीनां तस्मान्नान्दीति सा स्मृता"। नाटके विघ्नविघातायादौ नान्दी कार्य्या यदाह भरतः "यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके। तथाप्यवश्यं कर्त्तव्या नान्दी विघ्नोपशान्तये। देवद्विजनृपादीनामाशीर्वादपरायणा। नन्दन्ति देवता यस्मात्तस्मान्नान्दी प्रकीर्त्तिता" अन्यच्च "देवद्विजनृपादीनामाशीर्वचनपूर्विका। नान्दी कार्य्या बुधैर्यत्नान्नमस्कारेण संयुता। गङ्गा नागपतिः सोमः सुधानन्दो जयाशिषः। एभिर्नामपदैःकार्य्या नान्दी धाराभिरङ्किता। प्रशस्तपदविन्यासा चन्द्रसङ्कीर्त्तनान्विता। आशीर्वादपरा नान्दी योज्येयं मङ्गलात्मिका। काचिद्द्वादशपदा नान्दी काचिदष्टपदा तथा। सूत्रधारः पठेन्नान्दीं मध्यमस्वरमाश्रितः"। सा०द० अन्यथा उक्तं यथा "यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये। कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते। प्रत्याहारादिकान्यङ्गान्यस्य भूयांसि यद्यपि। तथाप्यवश्यं कर्त्तव्या नान्दी विघ्नोपशान्तये" "आशीर्वचनसंयुक्ता नित्यं यस्मात् प्रयुज्यते। देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता। मङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी। पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत"। अष्टपदा यथा। अनर्घराघवे "निष्प्रत्यूहमित्यादि" द्वादशपदा यथा मम तातपादानां पुष्पमालायाम्। "शिरसिधृतसुरापगे स्मरारावरुणमुखेन्दुरुचिर्गिरीन्द्रपुत्री। अथ चरणयुगानते स्वकान्ते स्मितसरसा भवतोऽस्तु भूतिहेतुः"। एवमन्यत्र। "एतन्नान्दीति" कस्यचिन्मतानुसारेणोक्तम्। वस्तुतस्तु "पूर्वरङ्गस्य रङ्गद्वाराभिधानमङ्गमिति" उच्यते। यदुक्तम्। "यस्मादभिनयो ह्यत्र प्राथम्यादवतार्य्यते। रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकमिति" उक्तप्रकारायाश्च नान्द्या रङ्गद्वारात् प्रथमं नटैरेव कर्त्तव्यतया न महर्षिणा निर्देशः कृतः। कालिदासादिमहाकविप्रबन्धेषु च "वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः। अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः" एवमादिषु नान्दीलक्षणायोगात्। उक्तञ्च "रङ्गद्वारमारभ्य कविः कुर्य्यादिति"। अतएव प्राक्तनपुस्तकेषु "नान्द्यन्ते सूत्रधार" इत्यनन्तरमेव "वेदान्तेष्वित्यादि" श्लोकलिखनं दृश्यते। यच्च पश्चात् "नान्द्यन्ते सूत्रधार" इति लिखनं तस्यायमभिप्रायः "नान्द्यन्ते सूत्रधार इदं प्रयोजितवान् इतः प्रभृति मया नाटकमुपादीयते इति कवेरभिप्रायः सूचितः इति"। ३वृद्धौ "ते तु नान्दीमुखा नान्दी समृद्धिरिति कथ्यते" इति ब्रह्मपुराणम् "नान्दीमुखे विवाहे च प्रपितामहपूर्वकम्" इति सम्बन्धविवेकपरिशिष्टधृतवचनम्। "नान्दीमुखे पुत्रादिसमृद्धिसाधनरूपे विवाहे विशेषणं तु विवाहादेः पुत्रादिलाभविशेषज्ञापनाय नान्दीमुखपदस्य श्राद्धपरत्वे अनेकवचनप्राप्तपितृपूर्वकाभिलापस्य बाधापत्तेः" सं०त० रघुनन्दनः।

**नान्दीक** पु० नान्दीं कायति कै–क। १तोरणस्तम्भे त्रिका०। २नान्दीमुखश्राद्धे नान्दीमुखशब्दे दृश्यम्।

**नान्दीकर** त्रि० ६त०। १नान्दीश्लोकादिपाठकरे २नान्दीवादिनि च अमरः।

**नान्दी(न्दि)घोष** पु० नान्द्यै घोषः वा ह्रस्वः। भेर्य्यादिशब्दे

**नान्दीपट** पु० नान्द्याः हृद्यः पटः। कूपादिमुखबन्धनवस्त्रे वीनाहे हेमच०।

**नान्दीपुर** न० नान्द्यै पूः अच्समा०। अप्राकस्थे पुरभेदे ततः पुरान्तत्वात् भवाद्यर्थे वुञ्। नान्दीपुरक तत्र भवे त्रि०।

**नान्दीमुख** न० नान्द्या हर्षेण मुखम्। १वृद्धिश्राद्धे श्राद्धभेदे नान्दी मुखं यस्य। २पित्रादौ ३मात्रादौ स्त्री ङीप्। जीवत्पित्रादित्रिकस्य ४वृद्धप्रपितामहादौ च ६त०। ५समृद्धेः साधने विवाहादौ "नान्दीमुखे विवाहे च" नान्दीशब्ददर्शितवाक्ये सं०त० लिखनं दृश्यम्। अथ नान्दीश्राद्धाधिकारस्वरूपादि निर्ण०सि० दर्शितं यथा अथ वृद्धिश्राद्धम् तन्निमित्तं पृथ्वीचन्द्रोदये ब्राह्मे "जन्मन्यथोपनयने विवाहे पुत्रकन्ययोः। पितॄन्नान्दीमुखान्नाम तर्पयेद्विधिपूर्वकम्। देवव्रतेषु चाधानयज्ञपुंसवनेषु च। नवान्नभोजने स्नाने ऊढायाः प्रथमार्त्तवे। देवारामतडागादिप्रतिष्ठोत्सवेषु च। राजाभिषेके बालान्नभोजने वृद्धिसंज्ञकान्। वनस्थाद्याश्रमं गच्छन् पूर्वेद्युः सद्य एव वा। पितॄन् पूर्वोक्तविधिना तर्पयेत् कर्मसिद्धये" विष्णुपुराणे "यज्ञोद्वाहप्रतिष्ठासु मेखलाबन्धमोक्षयोः। पुत्रजन्मवृषोत्सर्गे वृद्धिश्राद्धं समाचरेत्" तत्रैव "नामकर्म्मणि बालानां चूडाकर्म्मादिके तथा" इत्युक्तेर्निष्क्रमान्नप्राशनयोर्न श्राद्धमिति मैथिलाः तन्न पूर्वोक्तविरोधात् नानिष्ट इति विरोधात् "सुतोत्पत्तौ तथा श्राद्धे अन्नप्राशनिके तथा" इति राजमार्त्तण्डाच्च

बह्वृचकारिकायाम् "आद्याभ्युदयिकं श्राद्धं वृद्धिपूर्त्तेषु कर्म्मसु । पुंसःसवनसीमन्तजोकोपनयनेष्विह । विवाहे चानलाधेयप्रभृतिश्रौतकर्म्मणि । इदं श्राद्धं प्रकुर्व्वन्ति द्विजा वृद्धिनिमित्तकम् । अन्यैः षोडशसंस्कारश्रावणयादिष्वपीष्यते । वाप्याद्युद्यापनादौ तु कुर्युः पूर्त्तनिमित्तकम्" । बोपदेवकालादर्शौ "सीमन्तव्रतचौलनामकरणान्नप्राशनोपायनस्नानाधानविवाहयज्ञतनयोत्पत्तिप्रतिष्ठासु च । पुंस्त्वावसथप्रवेशनसुताद्यास्यावलोकाश्रमस्वीकारचितिपाभिषेकदयिताद्यर्त्तौ च नान्दीमुखम्" यत्तु कामधेनौ "जलाशयप्रतिष्ठायां वृषोत्सर्गादिकर्म्मसु । वत्सराभ्यन्तरे पित्रोर्मृतोत्सर्गकर्म्मणि । वृद्धिश्राद्धं न कुर्व्वीत तदन्यत्र समाचरेत्" इति तत्र जलाशये वृद्धिश्राद्धस्य निषेधो न तु कर्म्माङ्गस्येति केचित् । अन्ये तस्य निर्म्मूलतामाहुः । श्राद्धकौमुद्यां निर्णयामृते च मात्स्ये "अन्नप्राशे च सीमन्ते पुत्रोत्पत्तिनिमित्तके । पुंसवे च निषेके च नववेश्मप्रवेशने । देववृक्षजलादीनां प्रतिष्ठायां विशेषतः । तीर्थयात्रावृषोत्सर्गे वृद्धिश्राद्धं प्रकीर्त्तितम्" । इदं चावश्यकं "वृद्धौ न तर्पिता ये वै पितरो गृहमेधिभिः । तद्धीनमफलं ज्ञेयमासुरो विधिरेव सः" इति शातातपोक्तेः । अत्र श्राद्धत्रयं पराशर आह "मातृश्राद्धं तु पूर्व्वं स्यात् पितॄणां तदनन्तरम् । ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम्" । तत्कालमाह पृथ्वीचन्द्रोदये गार्ग्यः 'मातृश्राद्धं तु पूर्व्वेद्युः कर्म्माहनि तु पैतृकम् । मातामहं चोत्तरेद्युर्वृद्धौ श्राद्धत्रयं स्मृतम्" । अत्राप्यशक्तौ स एव "पृथक् दिनेष्वशक्तश्चेदेकस्मिन् पूर्व्ववासरे । श्राद्धत्रयं प्रकुर्व्वीत वैश्वदेवं तु तान्त्रिकमिति" वृद्धमनुरपि "अलाभे भिन्नकालानां नान्दीश्राद्धत्रयं बुधः । पूर्व्वेद्युर्वै प्रकुर्व्वीत पूर्व्वाह्णे मातृपूर्व्वकम्" । अत्र "षष्ठतस्तु पूर्व्वेद्युस्तदहरन्येष्विति" गृह्यपरिशिष्टाद्व्यवस्था ज्ञेया । तच्च प्रातरेव "पार्व्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकमिति" शातातपोक्तेः अत्र प्रातः शब्दः सार्द्धप्रहरपरः "प्रहरोऽप्यर्द्धसंयुक्तः प्रातरित्यभिधीयते" इति गार्ग्योक्तेरिति पृथ्वीचन्द्रः । इदं च पुत्रजन्मातिरिक्तविषयम् । तदाहात्रिः "पूर्व्वाह्णे वै भवेद्वृद्धिर्विना जन्मनिमित्तकम् । पुत्रजन्मनि कुर्व्वीत श्राद्धं तात्कालिकं बुधः" इति एतदनियतनिमित्तपरम् "नियतेषु निमित्तेषु प्रातर्वृद्धिनिमित्तकम् । तेषामनियतत्वे तु तदानन्तर्य्यमिष्यते" इति लौगाक्षि-

स्मृतेः । आमाङ्गं नान्दीश्राद्धं त्वपराह्ण एव "आमश्राद्धं तु पूर्व्वाह्णे पिण्डान्तेन तु मध्यतः । पार्व्वणं वाऽपराह्णे तु वृद्धिश्राद्धं तथाग्निकम्" इति निर्णयामृते गालवोक्तेः "नान्दीमुखाह्वयं प्रातरावृदिकं त्वपराह्णतः" इति विष्णूक्तेश्च । इदं च मातृपितृमातामहादिक्रमेण नवदैवत्यं कार्य्यम् । तत्र मातामहाः सपत्नीकाः "वृद्धप्रमातामहप्रमातामहमातामहानां सपत्नीकानामिति" पृथ्वीचन्द्रोदये गारुडे मत्स्यरूपेण पाठात् । हेमाद्रौ मनुः "नान्दीमुखे सत्यवसू संकीर्त्यौ वैश्वदेविके" वृद्धपराशरः "नान्दीमुखेभ्यो देवेभ्यः प्रदक्षिणकुशासनम् । पितृभ्यस्तन्मुखेभ्यश्च प्रदक्षिणमिति स्मृतिः" यत्तु वृद्धवसिष्ठः "नान्दीमुखे विवाहे च प्रपितामहपूर्व्वकम् । नामसंकीर्त्तयेद्विद्वानन्यत्र पितृपूर्व्वकम्" । यच्च स्मृत्यर्थसारे "वृद्धत्रयास्तु पितरो वृद्धिश्राद्धेषु भुञ्जते" । इति यच्च गारुडे व्युत्क्रमप्रतिपादनं तच्च शाखान्तरविषयम् । "पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यः" इति बह्वृचपरिशिष्टे कात्यायनेन चानुलोम्याम्नानात् पृथ्वीचन्द्रोदयेऽप्येवम् । यत्तु केचित् वृद्धिपदं पित्रादिषु प्रयुञ्जते तच्च "अनस्मद्वृषब्दानामरूपाणामगोत्रिणाम् । अनाम्नामतिलाद्यैश्च नान्दीश्राद्धं तु सव्यवदिति" पृथ्वीचन्द्रोदये संपङ्कोक्तेः न च निषेधादेव विधिः कल्प्यत इति वाच्यं प्रोष्ठपदीश्राद्धे प्रपितामहात् परेषां वृद्धपित्रादीनां देवतात्वान्नान्दीश्राद्धत्वसाम्येनेहापि तत्प्राप्तौ निषेधात् गोत्रनामादिनिषेधस्तु "शुभार्थी प्रथमान्तेन वृद्धौ संकल्पमाचरेत्" इत्युपक्रम्यानस्मद्वृषब्दानामित्युक्तेः संकल्पश्राद्धपरः सपिण्डके तु सर्व्वं भवतीति प्रयोगपारिजातः । "गोत्रनामभिरामन्त्र्य पितृभ्योऽर्घ्यं प्रदापयेदिति" छन्दोगपरिशिष्टे तद्विधानात् यत्तु ब्राह्मे "पिता पितामहश्चैव तथैव प्रपितामहः । त्रयो ह्यश्रुमुखा ह्येते पितरः परिकीर्त्तिताः । तेभ्यः पूर्व्वतरा ये च प्रजावन्तः सुखैधिताः । ते तु नान्दीमुखा नान्दी समृद्धिरिति कथ्यते" इति यच्च मार्कण्डेयपुराणे "ये प्रपितामहादूर्द्ध्वं ते तु नान्दीमुखाः स्मृताः" इति तज्जीवत्पित्रादित्रिककर्त्तृकवृद्धिश्राद्धविषयम् । तेन तस्येदमावश्यकम् । यत्तु विष्णुः "पितरि पितामहे प्रपितामहे च जीवति नैव कुर्य्यादिति" तद्दर्शादिविषयमिति कल्पतरुः । मदनपारिजातोऽप्येवम् । हेमाद्रिस्तु "नान्दीमुखानां श्राद्धं तु कन्याराशिगते रवौ । पौर्णमास्यां तु कर्त्तव्यं वराह-

वचनं यथेति" प्रोष्ठपदीश्राद्धैकवाक्यत्वात् तत्रैव पूर्वेषां देवतात्वमित्याह। अत्र सत्यवसू विश्वे देवा इत्युक्तं प्राग्वत्। यत्तु शातातपः "मातुः श्राद्धं तु युग्मैः स्याद्दैवं प्राङ्मुखैः पृथगिति" तद्भिन्नप्रयोगमातृश्राद्धपरम्। यच्च मार्कण्डेयपुराणे "विश्वदेवविहीनं तु केचिदिच्छन्ति मानवाः" इति तद्भिन्नप्रयोगमातृश्राद्धे विश्वदेवविकल्पार्थं प्रयोगैक्ये तु देवनियम इति हेमाद्रिः। एतच्च मातृपूजापूर्वकं कार्य्यम्। "अकृत्वा मातृयागं तु यः श्राद्धं परिवेषयेत्। तस्य क्रोधसमाविष्टा हिंसामिच्छन्ति मातरः" इति शातातपोक्तेः कौर्म्मेऽपि "पुष्पैर्धूपैः सनैवेद्यैर्गन्धाद्यैर्भूषणैरपि। पूजयित्वा मातृगणं कुर्य्याच्छ्राद्धत्रयं बुधः" इति छन्दोगपरिशिष्टे "कर्मादिषु तु सर्वेषु मातरः सगणाधिपाः। पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः" प्रतिमासु च शुभ्रासु लिखिता वा पटादिषु अपि वाऽक्षतपुञ्जेषु नैवेद्यैश्च पृथग्विधैः। कुड्यलग्नां वसोर्धारां सप्तधारां घृतेन तु। कारयेत् पञ्चधारां वा नातिनीचां न चोच्छ्रिताम्। आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः। षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत्"। अत्र सर्वेष्विति ग्रहणात् गृहयज्ञतद्विकारेष्वपि नित्यं श्राद्धम्। "नानिष्ट्वा तु पितॄन् श्राद्धे कर्म किञ्चित् समाचरेदिति" शातातपोक्तेः। इयं च वसोर्धारा तच्छाखीयानां नियतान्येषां त्वनियता। बहुत्वं वा स्वगृह्योक्तमित्युक्तेः करणे त्वभ्युदयः "यथाम्नातं स्वशाखायाम्" इत्युक्तेः आयुष्याणि "आनो भद्रा इत्यादीनि। षड्भ्य इति मात्रादित्रिकोपलक्षणमिति पृथ्वीचन्द्रोदयः। छन्दोगानां षड्दैवत्यमन्येषां नवदैवत्यमित्याशार्कः। मम तु मतं कोकिलमतानुसारिणां मातृमातामहीप्रमातामही इति मात्रा सहैव मातामहश्राद्धकरणात् तद्विषयमिदं षड्भ्य इति। मातरस्तु तत्रैवोक्ताः "गौरी पद्मा शची मेधा सावित्री विजया जया। देवसेना स्वधा स्वाहा मातरो लोकमातरः।"

चन्द्रिकायां चतुर्विंशतिमते त्वन्या उक्ताः "तिस्रः पूज्याः पितुः पक्षे तिस्रो मातामहे तथा। इत्येता मातरः प्रोक्ताः पितुर्मातुः स्वसाऽष्टमी" आसां जीवने प्रत्यक्षपूजनम्। मृतानां त्वक्षतपुञ्जेष्विति हेमाद्रिः "ब्रह्मण्याद्यास्तथा सप्त दुर्गाक्षेत्रगणाधिपान्। वृद्धादौ पूजयित्वा तु पश्चान्नान्दीमुखान् पितॄन्। मातृपूर्वान् पितॄन् पूज्य ततो मातामहानपि। मातामह्यस्ततः केचिदुम्मा भोज्यादिजातयः" इति। अत्र द्वादशदैवतस्य देशाचाराद्व्यवस्था। ब्रह्मण्याद्यास्तु "ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा। वाराही च तथेन्द्राणी चामुण्डा सप्त मातरः" इत्यपरार्के उक्ताः। अत्र गौर्य्यादीनां यौगपद्ये तन्त्रतोक्ता छन्दोगपरिशिष्टे "गणशः क्रियमाणानां मातृभ्यः पूजनं सकृत्। सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु" मातृभ्य इति षष्ठ्यर्थे चतुर्थी। गणशः एकानेकपुत्राणां संस्कारेष्वेकदिने एकदेशकालकर्त्रैक्यादित्यर्थः। तथा "असकृद्यानि कर्माणि क्रियेरन् कर्मकारिभिः। प्रतिप्रयोगं नैव स्युर्मातरः सगणाधिपाः" कर्मावृत्तावपि कुत्र श्राद्धं कार्यं कुत्र नेत्युक्तं तत्रैव "आधाने होमयोश्चैव वैश्वदेवे तथैव च। बलिकर्मणि दर्शे च पूर्णमासे तथैव च। नवयज्ञे च यज्ञज्ञा वदन्त्येवं मनीषिणः। एकमेव भवेच्छ्राद्धमेतेषु न पृथक् पृथक्" एतेषु प्रतिप्रयोगं नावर्त्तते किन्त्वादौ, एतद्भिन्ने सोमयागादौ प्रतिप्रयोगमावर्त्तते एव श्राद्धमित्यर्थः। क्वचिदादावपि निषेधमाह स एव "नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते। न सोष्यन्तीजातकर्मप्रोषितागतकर्मसु"। "विवाहादिः कर्मगणो य उक्तो गर्भाधानं शुश्रुम यस्य चान्ते। विवाहादावेकमेवात्र कुर्य्याच्छ्राद्धं नादौ कर्मणः कर्मणः स्यात्"। सोष्यन्त्या आसन्नप्रसवायाः "सोष्यन्तीमभ्युक्षेत्युक्तं कर्म। कात्यायनोक्तस्य श्राद्धस्य पाकस्य प्राधान्यात्तस्य च "जातश्राद्धे न दद्यात्तु पक्वान्नं ब्राह्मणेष्वपीति" निषेधात्र जातकर्मणि नान्दीश्राद्धमित्याशार्कः "आमान्नेन वा कार्यमित्यपि" तेनैवोक्तम्। गौडास्तु जातकर्मण्येव निषेधः पुत्रजन्मनिमित्तकं तु कार्यमेव "जन्मन्यथोपनयने" इत्युक्तेः "नैमित्तिकमथो वक्ष्ये श्राद्धमभ्युदयात्मकम्। पुत्रजन्मनि तत्कार्यं जातकर्मसमं नरैरिति" मार्कण्डेयपुराणादित्याहुः। हारलतायां श्राद्धविवेके चैवम्। एतेन जातकर्मणि कालान्तरे श्राद्धनिषेधो न पुत्रजन्मदिने इति वाचस्पतिमतं परास्तम्। अत्र निषेककाले इति वचनात् गर्भाधाने न निषेधः "निषेककाले सोमे च सीमन्तोन्नयने तथा। ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं विधिवत्कृतम्" इति पारस्करः। प्रोषितेति "प्रोष्यैत्य गृहानुपतिष्ठते पुत्रं दृष्ट्वा जपतीति" विहितं कर्म विवाहादिगर्भाधानान्तो यो गृहप्रवेशचतुर्थीकर्मादिकर्मसमूह उक्तः सूत्रकारेण तत्रापि प्रतिकर्म नेत्यर्थः। कन्येऽपि हलाभियोगादयोऽपवादविषयास्तत्रैव

इत्यास्ते अपचारात्मोच्यन्ते । अत्राधिकारिणः विष्णुपुराणे "जातस्य जातकर्मादि क्रियाकाण्डमशेषतः । पिता पुत्रस्य कुर्वीत श्राद्धं चाभ्युदयात्मकम्"। अत्र केचित् जीवत्पितृक साग्नेरेव वृद्धिश्राद्धेऽधिकारः न तु निरग्नेः "न जीवत्पितृकः कुर्याच्छ्राद्धमग्निमृते द्विजः । येभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निकः । पितामहेऽप्येवमेव कुर्याज्जीवति साग्निकः । साग्निकोऽपि न कुर्वीत जीवति प्रपितामहे" इति चन्द्रिकायां सुमन्तूक्तेरित्याहुः प्रयोगपरिजातेऽप्यनाहिताग्निर्न कुर्यादितीदं व्याख्यातम् । तत्र "अनग्निकोऽपि कुर्वीत जन्मादौ वृद्धिकर्मणि । येभ्यएव पिता दद्यात्तानेवोद्दिश्य तर्पयेत्" इति हारीतोक्तेः सीमन्तवन्तु न वृद्धिश्राद्धपरमित्युक्तं मदनरत्ने श्राद्धपदं पिण्डपितृयज्ञपरमिति पृथ्वीचन्द्रोदयः । निर्णयामृते तु हारीतीयेऽनग्निको नाहिताग्निरभिप्रेतः पूर्ववचने तु साग्निः श्रौताग्निः स्मार्त्ताग्निश्चोच्यते तेनोभयाग्निहीनस्य नेत्युक्तं तत्र पूर्वोक्तदिशा गतिसम्भवेऽनग्निपदस्य स्मार्त्ताग्निपरत्वे मानाभावात् वक्ष्यमाणनित्यानित्यसंयोगविरोधात् "पितरो जनकस्येष्टा यावद्व्रतमनाहितम् । समाहितव्रतः पश्चात्तान् यजेत पितामहान्" इति पृथ्वीचन्द्रोदये यमवचनविरोधाच्च अपरार्केऽपि समावर्त्तने ब्रह्मचारी स्वयमेव नान्दीश्राद्धं कुर्यादित्याह अतः पूर्वमेव साधु वोपदेशोऽप्येवमाह । यत्तु मतं जीवत्पितुः पुत्रनामकर्मादौ न वृद्धिश्राद्धम् । हारीतीये जन्मादावित्यादिग्रहणेन तत्प्राप्तावपि "उद्वाहे पुत्रजनने पित्रेष्ट्यां सौमिके मखे । तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुरिति" मैत्रपरिशिष्टे उद्वाह एव तस्योपसंहारात् एवं यत्र तु संस्कारादिपदं तदप्युद्वाहादिपरमेवेति, तन्न उद्वाहपदस्य स्वविवाहपरत्वस्यापि संभवात् पुत्रविवाहपरत्वे मानाभावात् "नामकर्मणि बालानां चूडाकर्मादिके तथा" इत्यादिभिर्नित्यश्राद्धस्य चौलाद्यङ्गत्वावगतौ नित्यानित्यसंयोगविरोधाच्च अतो जन्मादाविति सर्वसंस्कारसंग्रहः तथा च कात्यायनः "स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्मसु । पिण्डानोद्वाहनात्तेषां तस्याभावे तु तत्क्रमात्" । सुतानां चौलादिसंस्कारेषु पिता स्वपितृभ्यः पिण्डान् श्राद्धम् "पिण्डदोऽंशहरश्चैषामिति" दर्शनात् ओद्वहनादिवाहपर्यन्तं दद्यात् विवाहस्य प्रथमः "नान्दीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे बुधः । अत ऊर्द्ध्वं प्रकुर्वीत स्वयमेव तु नान्दिकम्" इति स्मृतेः तस्य पितुरभावे तत्क्रमात् "असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः" इति यः कर्त्तृक्रमः तेन क्रमेण ज्येष्ठभ्रात्रादिर्दद्यादिति चन्द्रिकादयः हेमाद्रिस्तु "तस्य पितुरभावे यः पितृव्यमातुलादिः संस्कुर्यात् तत्क्रमात् संस्कार्यपितृक्रमाद्दद्यात् न तु स्वपितृभ्य इति" व्याचख्यौ । समावर्त्तनस्यापि विवाहप्राचीनसुतसंस्कारत्वात्पितैव नान्दीश्राद्धं कुर्यात् तदभावे ज्येष्ठभ्रात्रादि तदभावे स्वयमेव कुर्यात् उपनयनेन कर्माधिकारस्य जातत्वात् एवमाद्यविवाहेऽपीति पृथ्वीचन्द्रोदयचन्द्रिकादयः मदनरत्नेऽप्येवम् । यदा तु पितरि सन्यस्ते प्रोषिते पतिते वा धर्मार्थं तत्पुत्रमन्यः संस्कुर्यात्तदा संस्कार्यपितुः पित्रादिभ्यो दद्यात् "पितरो जनकस्येष्टा यावद्व्रतमनाहितम् । समाहितव्रतः पश्चात् तान् यजेत पितामहान्" इति पृथ्वीचन्द्रोदये यमोक्तेः । जीवत्पितृकस्य विशेषमाह कात्यायनः "वृद्धौ तीर्थे च सन्यस्ते ताते च पतिते सति । येभ्यएव पिता दद्यात्तेभ्यो दद्यात् स्वयं सुतः" इति । यत्तु बह्वृचपरिशिष्टे जीवत्पिता सुतसंस्कारेषु मातृमातामहयोः कुर्यात् तस्यां जीवन्त्यां मातामहस्यैवेति" तत्तच्छाखीयानामेवेति दिक् । स्मृतितत्त्वादिगौडग्रन्थेषु जीवन्मातृकः पितामह्यादिभ्यो दद्यात् "जीवन्तमति दद्याद्वा प्रेतायान्नोदके द्विजः" इति कात्यायनोक्तेः "जीवे तस्मिन् सुताः कुर्युः पितामह्या सहैव तु । तस्यां चैव तु जीवन्त्यां तस्याः श्वश्र्वेति निश्चयः" इति हारीतोक्तेश्चेत्युक्तम् । तस्मिन् म[illegible]रि । दाक्षिणात्यास्तु पूर्वोक्तं सपिण्डीकरणादिविषयम् "जीवेत्तु यदि वर्गाद्यस्तं वर्गन्तु परित्यजेत्" इति वचनात्तद्वर्गस्य लोप एवेत्याहुः । यत्तु चन्द्रिकायां पारस्करः "निषेककाले सोमे च सीमन्तोन्नयने तथा । ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवच्च तत्" इति तत्र गर्भाधानादौ कर्माङ्गम् जातकर्मादावुक्तन्तु वृद्धिश्राद्धं पृथगेव विधिवत्त्वयधेयम् । गौडनिबन्धे मात्स्ये "अन्नप्राशे च सीमन्ते पुत्रोत्पत्तिनिमित्तके । पुंसवे च निषेके च नववेश्मप्रवेशने । देवव्रतजलादीनां प्रतिष्ठायां तथैव च । तीर्थयात्रावृषोत्सर्गे वृद्धिश्राद्धं प्रकीर्त्तितम्" मात्विनिमित्तानामङ्गत्वे वृद्धिशब्दस्तद्धर्मातिदेशार्थ इति गौडाः "अन्ये तु निषेकादौ कर्माङ्गवृद्धिश्राद्धयोः समुच्चयमाहुः नान्दीश्राद्धेतु भयाहुगता । अस्येतिकर्त्तव्यता पृथ्वीचन्द्रोदये हरपराशरः "मालत्याः शतपत्राया मल्लिकाकुब्जयोरपि ।

कीतकाः पाटलाया वा देया माला न लोहिता" प्राद्धे मालानिषेधस्यायमपवादः। तथा "सुवेषभूषणैस्तत्र चालङ्कारैस्तथा नरैः। कुङ्कुमाद्यनुलिप्तैश्च भाव्यन्तु ब्राह्मणैः सह। स्त्रियोऽपि च तथा भूता गीतनृत्यादिहर्षिताः"। हेमाद्रौ ब्रह्माण्डे "कुशस्थाने च दूर्वाः स्युर्मङ्गलस्याभिवृद्धये"। कुशा अपि वक्ष्यन्ते। छन्दोगपरिशिष्टे "प्रातरामन्त्रितान् विप्रान् युग्मानुभयतस्तथा"। उभयतः दैवे पित्र्ये च वैश्वदेवे द्वौ विप्रौ पित्रादीनामेकैकस्य द्वौ द्वाविति विंशतिः। त्रिके वा द्वौ द्वावित्यष्टौ विप्राः। अत्र विप्रालाभे स्त्रियोऽपि भोज्या इत्याहाचार्कें वृद्धवशिष्ठः "मातृश्राद्धे तु विप्राणामलाभे पूजयेदपि। पतिपुत्रान्विताभव्या योषितोऽष्टौ कुलोद्भवाः। मातृत्रिके चतस्रः मातामहीत्रिके चेत्यष्टौ" इति हेमाद्रिः। "अत्र पित्र्ये प्राङ्मुखा विप्राः प्राच्यो पित्र्ये चतुरस्त्रं मण्डलमिति, जयन्तः" हेमाद्रौ ब्राह्मे "विप्रान् प्रदक्षिणावर्त्तं प्राङ्मुखानुपवेशयेत्"। छन्दोगपरिशिष्टे "गोत्रनामभिरामन्त्र्य पितृभ्योऽर्घ्यं प्रदापयेत्। नात्रापसव्यकरणं न पित्र्यं तीर्थमिष्यते। ज्येष्ठोत्तरकरान् युग्मान् कराग्राग्रपवित्रकान्। कृत्वार्घ्यं सम्प्रदातव्यं नैकैकस्यात्र दीयते" पित्रादेर्द्वौ द्वौ विप्रौ तयोर्दक्षिणहस्तौ संयोज्य प्रथमोपवेशितविप्रकरोपरि तन्त्रेण द्वयोरर्घ्यं दद्यादित्यर्थः। श्राद्धप्रकारिकायां तु "दत्त्वार्घ्यादिकदेशः स्यादर्घ्यदानं प्रतिद्विजम्। आवृत्तिरपि मन्त्रस्य प्रतिब्राह्मणमिष्यते। प्रतिद्विजं पृथक्कुर्यान्निरीत्यर्घ्यानुमन्त्रणम्" इत्युक्तम् "मधु मध्विति यस्तत्र त्रिर्जपोऽशितुमिच्छताम्। गायत्र्यनन्तरं सोऽत्र मधुमन्त्रविवर्जितम्। न चाश्नंस्तु जपेदत्र कदाचित् पितृसूक्तकम्" तथा "सम्पन्नमिति तृप्ताः स्थ प्रश्नस्थाने विधीयते। सुसम्पन्नमिति प्रोक्ते शेषमन्नं निवेदयेत्। अक्षय्योदकदानञ्च अर्घ्यदानवदिष्यते। षष्ठ्यैव नियतं कुर्य्यान्न चतुर्थ्या कदाचन"। चन्द्रोदये ब्राह्मे "पठेच्छकुनिसूक्तं तु स्वस्तिसूक्तं शुभं तथा। नान्दीमुखान् पितॄन् भक्त्या प्राञ्जलिश्च समाह्वयेत्" तथा "शाल्यन्नं दधि मध्वन्नं बदराणि यवांस्तथा। मिश्रीकृत्य तु चतुरः पिण्डान् श्रीफलसन्निभान्। दद्यान्नान्दीमुखेभ्यश्च पितृभ्यो विधिपूर्वकम्। द्राक्षामलकमूलानि यवांश्च विनियोजयेत्। नान्द्येव दक्षिणार्धन्तु दद्याद्विप्रेषु सर्वदा"। तत्रैव चतुर्विंशतिमते "द्वौ द्वौ चाभ्युदये प्रत्येकमेकैकस्मै विनिःक्षिपेत्। एकं नाम्ना परं तूष्णीं दद्यात्पिण्डान् पृथक् पृथक्"। वसिष्ठः "प्राङ्मुखो दैवतीर्थेन प्राक्कूलेषु कुशेषु च। दत्त्वा पिण्डांस्तु कुर्वीत पिण्डपात्रमधोमुखम्"। "नान्दीमुखेभ्यः पितृभ्यः स्वाहेति वा पिण्डदानमन्त्रः"। इति वृत्तिः। अत्र पिण्डाः कृताकृता इत्युक्तम्। तत्रैव भविष्ये "पिण्डनिर्वपणं कुर्य्यान्न वा कुर्य्याद्विचक्षणः। वृद्धिश्राद्धे महाबाहो! कुलधर्मानवेक्ष्य तु" छागलेयः "अग्नौ करणमर्घ्यं च आवाहनं चावनेजनम्। पिण्डश्राद्धे प्रकुर्वीत पिण्डहीने निवर्त्तते" तेनात्र भोजनस्यैव प्रधानत्वाद्यदि विप्रस्य वमनं तदा तस्यैव पार्वणस्य पुनरावृत्तिरिति सिद्धम्। वृद्धिश्राद्धञ्च भूतनिमित्तं यथा पुत्रजन्मनिमित्तं भाविनिमित्तं च यथा विवाहादिनिमित्तमिति भेदः इति श्रा०त० रघु० समर्थितम्। तद्विधानञ्च छन्दोगपरिशिष्टादौ दृश्यम्। ६चतुर्दशाक्षरपादके छन्दोभेदे स्त्री "सरभिह यदि भौ तौ च नान्दीमुखी गौ" छन्दोम० तल्लक्षणोक्तम्।

**नान्दीवादिन्** पु० नान्दीं वदति वद–णिनि। १नान्दीश्लोकपाठके रूपकार्थं २भेर्य्यादिवादके च।

**नान्दीश्राद्ध** पु० नान्दीनिमित्तं नान्द्यर्थं वा श्राद्धम्। वृद्धिश्राद्धे नान्दीमुखशब्दे उदा०।

**नापित** पुंस्त्री शूद्रायां क्षत्रियात् जाते १सङ्कीर्णजातिभेदे पट्टिकार्य्यां कुवेरिणो जाते २सङ्कीर्णजातिभेदे च। "आर्द्धिकं कुलमित्रं च गोपालो दासनापितौ। एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत्" मनुः। "तक्षकौ गोपनापितौ" "नराणां नापितो धूर्त्तः"। "ग्रामकामस्तु गोपालं धनकामस्तु नापितम्" मा०उ०११अ०। "नटी कापालिनी वेश्या कुलटा नापिताङ्गना" कुलनायिकोक्तौ तन्त्रम्। तस्य वृत्तिः क्षुरकर्म। "उपोषितस्य व्रतिनः कृत्तकेशस्य नापितैः। श्रीस्तावत्तिष्ठति स्कन्धे यावत् तैलं न संस्पृशेत्" स्मृतिः। शिल्पित्वात् अपत्ये फिञ्। नापितायनि तदपत्ये पुंस्त्री० पक्षे ष्यञ् नापित्य तत्रार्थे पुंस्त्री०।

**नापितशाला** स्त्री ६त०। क्षौरगृहे त्रिका०।

**नाभ्** स्त्री नभ–णिच्–क्विप्। नभसो बाधिकायां सोमस्य दीप्तौ "चतस्रो नाभो निहिताः" ऋ०८।७४।६। "नाभो नभसो बाधिकाः सोमस्य दीप्तयः चतस्रः" भा०।

**नाभ** पु० "सुतात् भगीरथो जज्ञे तस्य नाभोऽभवत् सुतः" भाग०९।९।२ उक्ते सूर्य्यवंश्ये नृपभेदे;

**नाभक** त्रि० नभ—ण्वुल्। वर्त्तिके डवे शब्दार्थचि०।

**नाभस** पु० १२व०व०ह्ज्जातकोक्ते लग्नतः तत्तत्स्थानभेदस्थित ग्रहभेदेन योगभेदे ते च तत्र तद्व्याख्यायाञ्च दृश्याः। जातकपद्धतौ तु ततः संक्षिप्योक्तास्तेऽत्र दर्श्यन्ते यथा "चरादिसंस्थैर्निखिलैर्ग्रहैः स्यात् योगस्तु रज्जुः१र्मुशलं२ नलश्च३। मालाः४ शुभैः पापखगैश्च सर्पः५ केन्द्रस्थितैः सत्यमते दलौ तौ। समीपकेन्द्रद्वयगैर्गदाख्य६स्तन्वस्तगैः स्याच्छकटो७ऽथ पक्षी८। खाम्बुस्थितैः, पञ्चमनन्दन-स्थितैस्तु ग्रहृङ्गाट९क्रमामनन्ति। धनारिकर्मसंस्थि-तैस्तृतीयसप्तलाभगैः। तुरीयरन्ध्ररिष्फगैस्त्रिधा हलः१० प्रकीर्त्तितः। लग्नास्तगाः सौम्यखगाः खबन्धोः पापा यदा स्यात् कुलिशं११ विलोमात्। यवो१२ऽथ मिश्राः कमलं१३ यदा ते केन्द्रात् परे तत्परतोऽथ वापी१४। लग्नादिकेन्द्रात् सकलग्रहेषु चतुर्षु भेषु प्रवदन्ति योगान्। यूपेषुशक्ती१५।१६।१७रपि दण्ड१८मन्ये: स्थानेषु नौकूटकच्छत्रचापान्१९।२०।२१।२२।अर्द्धचन्द्रा-ह्वयं२३ केन्द्रबाह्यतः सप्तकैर्ग्रहैः। लग्नादेकान्तरे चक्रं२४ मधोदधिर्निधिः२५। आश्रयाकृतिजा योगा चक्राः संख्याभवा अथ। गोल१ युग्म२शिशूलानि३ के-दारः४ पाश५दामकौ६। वीणा७ऽसेकचयस्थानस्थितैः खेटैर्विहाय तान्। यवक्रो न योगो स्तः पूर्वोक्त-त्वादिहोदितौ। क्रूरो रूपाढ्योऽटनो दुःखभावो रज्जौ१ प्राप्नोमवेदन्यदेशे। मानाज्ञानैः संयुतः कर्म-युक्तो राजेष्टः स्यान्मौसले२ भूरिपुत्रः। नले३ऽतिनैपुण्य-युतो धनी स्याद्बुनाधिकाङ्गश्च धनी खबन्धोः। स्रजि४ प्रसक्तो बहुभोगभोगे सर्पे५ऽतिदुःखी विषमोऽति-दीनः। यज्वा नानाशास्त्रयोगातिविज्ञो नित्योद्युक्तो द्रव्ययुक्र स्याद्दायाम६। रोगार्त्तः स्यात् स्यन्दनेनो-पजीवी निःस्वो मूर्खो मित्रहीनो रथाख्ये७। योगे विहङ्गे८ मनुजोऽतिसौख्यो दूतोऽटनः स्यात् कलिसम्प-निःस्वः। शृङ्गाटके९ साहसवान् प्रेष्टः सुखी सुभार्य्यः कलहप्रियश्च। हले१० दरिद्रः कृषिकारकः स्यात् प्रेष्यः सुदुःखी बहुभोजनश्च। वज्रे११ऽतिदुःखी वयसस्तु मध्ये शूरः सुरूपः सुभगः खलद्विट्। यवे१२व्रती१२मङ्ग-लतत्परश्च दाता च मध्ये वयसः सुखाढ्यः। पद्मे१३ चिरायुर्नृपतिर्यशस्वी गुणी धनी कीर्त्तिसमन्वितः। वाप्यां१४ स्थिरार्थसुखभाक् निधिकृत् सुतप्तो नेत्रोत्सवैस्तु रहितो मनुजो न दाता। यूपे१५ व्रती नियमकृत् बहुसत्वशीलस्त्यागात्मवान् नरवरोऽपि च यायजूकः। वाणे१६ऽतिगुप्त्यधिकृतः शरकृच्च हिंस्रो मांसाशनश्च मृगयाधनयुक्कुशिल्पः। शक्त्यां१७ धनेन रहितो विकलोऽतिदुःखी नीचोऽलसो स्वधपरः पुरुषश्चिरायुः। दण्ड१८जातः पुत्रदारधनहीनो जनोज्झितः। निर्घृणो दुःखितो नीचः प्रेष्यश्च मनुजो भवेत्। नौयोग१९जश्च-लसुखः कृपणोऽतिकीर्त्तिर्लुब्धो धनाश्रयधनो मलिनोऽ-तिलुब्धः। कूटे२० शठः कृपणबन्धनपोऽतिपापो निःस्वो वनाचलगढेषु कृताधिकारः। छत्रे२१ दयाधीस्वज-नाश्रयः स्याद्दीर्घायुराद्यन्तसुखी नृपेष्टः। धनुःकार्मुके२२ शूरनरः सुखी स्यादाद्यन्तयोर्युग्धपश्च चोरः। चन्द्रार्द्ध२३जश्चतुरः सुभगः सुकान्ताभोगी नराधि-पश्च बली धनाढ्यः। चक्राह्वये२४ नृपतिचक्रकिरी-टरत्नभाभासुराङ्घ्रियुगलो मनुजाधिनाथः। बहुरत्नार्थ-युक्तः स्याद्भोगी पुत्रजनान्वितः। सागरोदधियोगे२५ऽथ स्थिरवैभवसंयुतः। योगे गोले१ सत्वसामर्थ्यविद्याहीनो नीतिः सर्वकालं प्रवासी। युग्मे२ निःस्वोऽतीवपाप-ग्रहयुक्तो युक्तायुक्तज्ञानहीनान्तरः स्यात्। योगे त्रिशूले३ विघ्नश्च शूरः क्रूरः सतो घातरुचिर्नरः स्यात्। के-दार४जातः कृषिकर्मकर्त्ता बहूपयोज्यः सुखितश्चलश्च। पाशे५ विशीलो बहुभृत्यबन्धुर्बहुप्रपञ्चो बहुभाषकश्च। दाम्नि६ स्वयुक्तः पशुनायकः स्यात् सेवोपकारी च वदान्य-धीरः। वीणायोगे७ गीतनृत्यप्रियः स्यात् कीर्त्त्या युक्तः पोषकः स्याद्बहूनाम्। एते योगाः सर्वकालं विचिन्त्या वीर्य्यात् खेटानां प्रपूर्णा अपूर्णाः"।

**नाभाक** पु० ऋषौ "ऋषिर्नाभाको बभूव" निरु०१०।५ "नाभा-कस्य प्रशस्तिभिः" ऋ० ८।४१।२ "नाभाकस्य ऋषेः" भा०।

**नाभाग** पु० वैवस्वतमनोः १पुत्रभेदे "ऐक्ष्वाकुश्चैव नाभागः" हरिवं० १० अ०। वैवस्वतमनोःपुत्रोक्तौ। भगीरथसुत-सुतरूपात्मजे २नृपभेदे "भगीरथसुतो राजा श्रुत इत्य-भिविश्रुतः। नाभागस्तु श्रुतस्यासीत् पुत्रः परमधा-र्मिकः। अम्बरीषस्तु नाभागिः सिन्धुद्वीपपिताऽभवत्" हरिवं० १५ अ०।

**नाभागारिष्ट** पु० वैवस्वतमनोः पुत्रभेदे "नारिष्यांशुप्रणाश नाभागारिष्टसप्तमाः" हरिवं० १०अ० तत्पुत्रोक्तौ

**नाभि** पु० नह—इञ् भश्चान्तादेशः। १क्षत्रिये २मुख्यनृपे ३चक्रमध्यांशे रथचक्रस्यपिण्डिकाम्। ४आग्नीध्रनृपपुत्रभेदे ५तन्नामके वर्षभेदे च "तस्यात्र ह वा आत्मजान् च-

राजवर आग्नीध्रो नाभिकिंपुरुषहरिवर्षेलावृतरम्यकहिरण्मयकुरुभद्राश्वकेतुमालसंज्ञानव पुत्रानजनयत्। आग्नीध्रसुतास्ते मातुरनुग्रहादौत्पत्तिकेनैव संहननबलोपेताः पित्रा विभक्ता आत्मतुल्यनामानि यथाभागं जम्बुद्वीपवर्षाणि बुभुजुः" भाग०५।२।२१ "नाभिरपत्यकामोऽप्रजया मेरुदेव्या भगवन्तं यज्ञपुरुषमवहितात्माऽयजत्" ५।३।१ भारतवर्षस्यैव जम्बुद्वीपवर्षमध्यस्थितत्वात् नाभिसंज्ञा नाभिवर्षशब्दे वक्तव्यकारणान्तराच्च तथा वा। ६प्राण्यङ्गे (नाइ) पुंस्त्री मेदि० स्त्रियां ङीप् वा। ७उदरावर्त्ते (गोँड) राजनि०। [illegible]मते नाभिस्थाने च मणिपूरं चक्रं यथाह तन्त्रसारे "तदूर्द्ध्वे नाभिदेशे तु मणिपूरं महाप्रभम्। मेघाभं विद्युदाभञ्च बहुतेजोमयं ततः। मणिवद्भिन्नं तत् पद्मं मणिपूरं तथोच्यते। दशभिश्च दलैर्युक्तं डादिफान्ताक्षरान्वितम्। शिवेनाधिष्ठितं पद्मं विश्वालोकनकारणम्" इति। ८मृगनाभिजाते कस्तूरीमृगमदे मेदि०। "प्राप्तनाभिह्रदमज्जनमाशु" माघः "प्राप्तनाभिह्रदेति" पाठः छन्दोमञ्जरीसम्मतः। पुंस्त्वे "मधुकरपङ्कजकोषकोमलैरुपाहितश्रीण्युपनीवि नाभिभिः" किरा०। ९चक्रमध्ये "उपगतोऽपि हि मण्डलनाभिताम्" रघुः सोमधारास्रावणार्थं दशापवित्रस्य मध्ये आबध्यमानायां १०ऊर्णुवि च। "अवधूय पवित्रमुद्गृह्णन्वाङ् नाभिं वितनुयुः" ताण्ड्य० ब्रा०१।२।७ भाष्यधृतब्राह्मणवचनम्। संज्ञायामेतदन्तस्य अच् समा०। पद्मनाभः हिरण्यनाभ इत्यादि।

**नाभिकण्टक** पु० नाभेः कण्टक इव। (गोँड) नाभेरावर्त्तभेदे शब्दर०।

**नाभिका** स्त्री नाभिरिव कायति कै–क। कटभीवृक्षे राजनि०।

**नाभिगुलक** पु० नाभौ गुलक इव। (गोँड) इति ख्याते नाभेरावर्त्तभेदे त्रिका०।

**नाभिगोलक** पु० नाभौ गोलक इव। (गोँड) नाभेरावर्त्तभेदे जटाधरः।

**नाभिज** पु० नाभौ विष्णोर्नाभौ जायते जन–ड। चतुर्मुखे ब्रह्मणि त्रिका०। तस्य विष्णोर्नाभिकमलजातत्वात्तथात्वम्। नाभिजन्मादयोऽप्यत्र हेमच०।

**नाभिनाडी** स्त्री नाभेर्नाड़ी। नाभौ स्थितायां नाड्यां शिरायां नाडीभेदे "मातुस्तु रसवहायां नाड्यां गर्भनाभिनाड़ी प्रतिबद्धा" सुश्रु०।

**नाभिनाल** न० स्त्री नाभस्थितं नालम्। नाभिस्थिते नाले "नाभिनालमृणालिनी" दुर्गाध्यानम् "तदङ्गमध्याच्युत नाभिनाला" रघुः।

**नाभिभू** पु० नाभौ विष्णुनाभौ भवति भू–क्विप् ७त०। चतुर्मुखे ब्रह्मणि नाभिभवादयोऽप्यत्र।

**नाभिवर्द्धन** न० नाभेस्तत्रस्थनाड्या वर्द्धनं छेदनम्। नाड़ीछेदने "प्राङ्नाभिवर्द्धनात् पुंसो जातकर्म विधीयते" संस्कारतत्त्वे धृतमनुवचनम्। संहितायान्तु नाडीवर्द्धनादित्येव पाठः।

**नाभिवर्ष** पु० नाभेराग्नीध्रनृपपुत्रस्य वर्षः। जम्बुद्वीपस्थे नववर्षमध्ये वर्षभेदे नाभियज्ञे दृश्यम् तस्य नाभिसंज्ञकत्वेऽपि पश्चात् तत्कुलजभरतनाम्ना तत् ख्यातं तथाहि नृसिंहपु० ३०अ० नाभिपुत्रस्य ऋषभस्य पुत्रो भरतकेन चिरं पालितत्वादस्य भारतवर्षेति संज्ञोक्ता। नाभिवर्षस्य भारतवर्षनामता दर्शिता ऋषभशब्दे १४५१पृ० दृश्या। अतएव विष्णुपु० "नाभिश्च प्रथमं वर्षमित्युपक्रमे नव वर्षाण्युक्त्वा "भारतस्यास्य वर्षस्य नव भेदान्निशामय" इति। नाभिवर्षस्यैव भारतवर्षत्वेन उक्तिः।

**नाभिल** त्रि० नाभिरस्त्यस्य सिध्मा० लच्। दीर्घनाभियुक्ते

**नाभिसम्बन्ध** पु० नाभेरेकस्य गर्भजातनाड्याः सम्बन्धः। सनाभितायां गोत्रसम्बन्धे सपिण्डानां एकस्य गर्भे जायमानतया नाडीसम्बद्धत्वम्। "अच्युते च ततः शोको नाभिसम्बन्धसम्भवः" भट्टिः।

**नाभ्य** त्रि० नाभये हितः शरीरावयवत्वात् यत् "नाभेर्नभञ्चेति" पा०ग० नभादेशस्तु इह न तस्य यदादियता सन्नियोगशिष्टत्वात् रथचक्रावयवार्थत्वे एव नभादेशो नेह। १नाभये हिते २नाभिसम्बन्धिनि च ३महादेवे पु० "नमो नाभाय नाभ्याय नमः कटकटाय च" भा०शा०२८६अ०

**नाम** अव्य० नाम्यते नामि–ड। १कोपे २उपगमे ३प्राकाश्ये ४सम्भावनायां ५कुत्सने च अमरः।

तत्र कोपे "ममापि नाम दशाननस्य परैरभिभवः"। उपगमः स्वाङ्गयोऽङ्गीकारः "एवं नामास्तु"। प्राकाश्ये "हिमालयो नाम नगाधिराजः"। हिमालयः प्रकाश्येनातिप्रसिद्ध इत्यर्थः। सम्भावनायां "इह नाम सीता भविष्यति"। कुत्सने "कोनामायं सवितृहृदये स्वापमेवं विधत्ते"। तट्टीकायां भरतः। ५विस्मये ६स्मरणे ७विकल्पे च मेदि०। विस्मये "अन्धोनाम गिरिमारोहति"। दशवीके च "अहस्य गीतोनामावप्लुतः" दशकु०। मिथ्याभीत इत्यर्थः।

**नामकरण** न० नाम्नः करणं यत्र । संस्कारभेदे तत्र तत्कालादिनिरूपणं ज्यो० त० यथा "एकादशे द्वादशे वाऽहनि पिता नाम कुर्य्यादिति" स्मृतिः । एकादश इति मुख्यः कल्पः "समर्थस्य क्षेपायोगादिति" न्यायात् एतच्च परपरप्रशस्ततरतमकालोदितकर्मेतरकर्मपरम् । गोभिलः "जननाद्दशरात्रे व्युष्टे शतरात्रे संवत्सरे वा नामधेयकरणमिति" । व्युष्टे गते । गर्गः "आदौ घोषवदक्षरं यवरलान्मध्ये पुनः स्थापयेदन्ते दीर्घविसर्जनीयरहितं नाम प्रयत्नात् कृतम्" । "हस्ते तिष्यकराश्विपौष्ण्यशुभे चित्रानुराधोत्तरे पौष्णे चादितिरोहिणीषु शुभकृत् पुंसां स्वसंज्ञाक्षरैः" दीपिकास्मरणात् स्वातीशतभिषाश्रवणा अत्र ग्राह्याः । गोभिलसम्मतं पूर्वोक्तम् देवनामकम्" तेन नारायणजनार्द्दनादि नाम कुर्य्यात् । यत्तु नामकरणम् कुलदेवतानक्षत्राभिसम्बद्धं पिता नाम कुर्य्यादन्यो वा कुलवृद्धः" इति कल्पतरुधृतशङ्खलिखितवचनेनाभिवादनीयं नामधेयं कल्पयित्वा "देवताश्रयं नक्षत्राश्रयं गोत्राश्रयमथ्यं वम्" इति गोभिलसूत्रेणोपनयनकाले च नक्षत्राभिसम्बन्धेन नामाभिधानं तत् शतपदचक्रानुसारात् स्वस्वशाखापदानुसाराद् ज्ञेयम् । पाश्चात्त्यानां तथैव व्यवहारः । यत्र तु न तथा कृतम् । तत्र नामाक्षरानुसारनक्षत्रादपि फलं ज्ञेयम् । अत्र कुलवृद्ध इति दर्शनात् संस्कारान्तरे तथैव व्यवहारः । मनुः "स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोहरम् । मङ्गल्यं दीर्घवर्णान्तमाशीर्वादाभिधानवत्" । गोभिलः "अयुग्दान्तं स्त्रीणामिति" । यथा यशोदा वसुदेवादि । नारायणपद्धतौ । "नामकरणं स्थिरलग्ने केन्द्रपञ्चनवमस्थितसौम्ये । नष्टायषष्ठसमधिष्ठित पापे जीवशुक्रशशिसौम्यदिनेषु" ज्यो० त० । विष्णु पु० "ततश्च नाम कुर्वीत पितैव दशमेऽहनि । देवपूर्वं नराख्यं हि शर्मवर्मादिसंयुतम्" इति । नराख्यं इति नराख्यं नरनाम देवात् पूर्वं तच्च विशिष्ट शर्मसुतम् । "शर्मा देवश्च विप्रस्य वर्मा त्राता च भूभुजः । भूतिर्गुप्तश्च वैश्यस्य दासः शूद्रस्य कारयेत्" इति यमवचने मध्यमयोपलब्धेः "शर्मान्तं ब्राह्मणस्य स्यात्" इति शातातपीयेन शर्मान्तता च । गोभिलः "अयुग्दान्तं स्त्रीणाम् । अयुग्माक्षरं दान्तं यथा यशोदा इत्यादि । "देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिदेवताम् सिद्धं सिद्धाधिकारांश्च श्रीपूर्वं समुदीरयेत्" इति राघवभट्टधृतप्रयोगसारदर्शनात् स्वर्गगामित्यादिना सिद्धः अधिकारो येषां नराणामित्यनेन जीवतां श्रीशब्दादित्वं नाम्नो न मृतानां तथेति शिष्टाचारः" संस्कारत० । अत्र महाभाष्यं यथा दशम्यां याज्ञिकाः पठन्ति । "दशम्युत्तरकालं पुत्रस्य जातस्य नाम विदध्यात् घोषवदाद्यन्तरन्तस्थमवृद्धं त्रिपुरुषानूकमनरिप्रतिष्ठितं तद्धि प्रतिष्ठितमं भवति द्व्यक्षरं चतुरक्षरं वा नाम "कृतं कुर्य्यान्न तद्धितमिति" । न चान्तरेण व्याकरणं कृतस्तद्धिता वा शक्या विज्ञातुमिति" । "दशम्या उत्तर इति पञ्चमीति योगविभागात् समासः । ततः कालशब्देन बहुव्रीहिः क्रियाविशेषणं चैतत् । दशदिनान्याशौचं भवतीति दशम्युत्तरकालमित्युक्तम् । यदपि स्मृतिकाराः पठन्ति दशम्यां पुत्रस्येति तैरपि दशम्यामिति सामीपिकमधिकरणं व्याख्येयम् । घोषवन्तो ये वर्णाः शिक्षायां प्रदर्शितास्तदादि । अन्तरन्तस्थमिति । मध्ये यरलवा यस्य तदित्यर्थः । त्रिपुरुषानूकमिति । नामकरणे योऽधिकारी पिता तस्य ये त्रयः पुरुषास्तामनूकायत्तभिधत्त इति त्रिपुरुषानूकम् अन्येषामपि दृश्यत इति दीर्घ" इति कैयटः ।

**नामग्राह** त्रि० नाम—गृह्णाति ग्रह—अण् उप० स० । १नामग्राहके । भावे घञ् । २नामग्रहणे पु० "देवेनसात् पित्र्यात् नामग्राहात्" ऋ० १० ।१।१२।

**नामग्राहम्** अव्य० नाम+ग्रह—"नाम्न्यादिशिग्रहोः" पा० णमुल् । नाम गृहीत्वेत्यर्थे "नामग्राहमरोदीत् सा भ्रातरौ रावणान्तिके" भट्टिः "नामग्रहणविशिष्टस्य रोदनक्रियाया व्याप्तुमिष्टत्वाद् द्विरिह सकर्मकः" जयम० ।

**नामद्वादशी** स्त्री द्वयोर्दशानां समाहारः द्वादशी द्वत० । १गौर्य्यादिनाम्नां २द्वादशके तन्नाम्ना देव्युद्देश्यकव्रतभेदे च तानि नामानि च "गौरी काली उमा भद्रा दुर्गा कान्तिः सरस्वती । मङ्गला वैष्णवी लक्ष्मीः शिवा नारायणी क्रमात् । मार्गतृतीयामारभ्य पूर्वोक्तं लभते फलम्" देवीपु० । पूर्वोक्तं फलं मार्गादिद्वादशमासेषु कृष्णाष्टमीव्रतफलम् ।

**नामधातु** पु० नामपूर्वको धातुः । सुबन्तनामप्रकृतिके प्रत्ययान्तधातुभेदे पुत्रकाम्यादौ धातौ आत्मनः पुत्रमिच्छतीति वाक्ये द्वितीयान्तपुत्रनाम्नः काम्यच् तत्परे विभक्तिलोपे तदन्तस्य प्रत्ययान्तत्वात् धातुसंज्ञा ।

**नामधारक** त्रि० नाममात्रं धरति न तदर्थं करोति धृ—ण्वुल् । नाममात्रधारके विहितक्रियावर्जिते विप्रादौ "अत ऊर्द्ध्वन्तु ये विप्राः केवलं नामधारकाः । परिवत्त्व

न तेषां वै सहस्रगुणितेष्वपि। यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः। ब्राह्मणास्त्वनधीयानास्त्रयस्ते नामधारकाः" पराशरः। "यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः। यश्च विप्रोऽनधीयानस्त्रयस्ते नाम बिभ्रति" मनुः।

**नामधेय** न० नामन्+स्वार्थे धेय। नामशब्दार्थे "नामधेयानि पृच्छन्तौ वन्यानां मार्गशाखिनाम्"। नामधेयं गुरुश्चक्रे जगत्प्रथममङ्गलम्" रघुः "नामधेयं दशम्यान्तु द्वादश्यां वाथ कारयेत्" मनुः "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" छा०उप०

**नामन्** न० म्नायते अभ्यस्यते नम्यतेऽभिधीयतेऽर्थोऽनेन वा म्ना—नम—वा। "नामन्सीमन्नित्यादिना" नि०। १वाचकशब्दे २संज्ञाशब्दे च। नमति आख्यातार्थं प्रति स्वार्थविशेषणत्वेन नम—नि०। क्रियां प्रति विशेषणतापन्नार्थके प्रातिपदिकरूपे ३शब्दभेदे "चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च तानीमानि भवन्ति तत्रैतन्नामाख्यातयोर्लक्षणं प्रदिशन्ति भावप्रधानमाख्यातं सत्वप्रधानानि नामानि" निरु० १।१

एतल्लक्षणभेदादिकं शब्दश०प्र० उक्तं यथा "निरुक्ता प्रकृतिर्द्वेधा नामधातुप्रभेदतः। यत् प्रातिपदिकं प्रोक्तं तन्नाम्नो नातिरिच्यते" "रूढञ्च लक्षकञ्चैव योगरूढञ्च यौगिकम्। तच्चतुर्धा परे रूढयौगिकं मन्यतेऽधिकम्। रूढं सङ्केतवन्नाम सैव संज्ञेति कीर्त्यते। नैमित्तिकी पारिभाषिक्यौपाधिक्यपि तद्भिदा। जातिद्रव्यगुणस्पन्दैर्हि सङ्केतवत्तया। जातिशब्दादिभेदेन चातुर्विध्यं परे जगुः। जात्यवच्छिन्नसङ्केतवती नैमित्तिकी मता। जातिमात्रे हि सङ्केताद्व्यक्तौ भानं सुदुष्करम्। उभयावृत्तिधर्मेण संज्ञा स्यात् पारिभाषिकी। औपाधिकी त्वनुगतोपाधिना या प्रवर्त्तते। यद्वाऽऽधुनिकसङ्केतशालित्वात् पारिभाषिकम्। जात्या नैमित्तिकं शक्तमौपाधिकमुपाधिना"। प्रकारान्तरेण तच्च पञ्चविधं यथा "उणाद्यन्तं कृदन्तञ्च तद्धितान्तं समासजम्। शब्दानुकरणञ्चैव नाम पञ्चविधं स्मृतम्"। "सर्वाण्येतानि नामानि परस्य ब्रह्मणोऽनघ!। सर्वान् कामानवाप्नोति समाराध्य जगद्गुरुम्। तन्मयत्वेन गोविन्दमित्येतद्वालभ्य! नान्यथा। तन्मयो वाञ्छितान् कामान् यदवाप्नोति मानवः" विष्णुधर्मवचनम्। कलौ परमेश्वरनामकीर्त्तनादेव श्रेयःप्राप्तिः "हरेर्नाम हरेर्नामैव केवलम्। कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा" अधिकं कलिशब्दे १७६७पृ० उक्तम्। हरेरित्युपलक्षणं देवीभागवते ह्स्कन्धे ११अ० देव्यानाम्नः कीर्त्तनस्यापि कलौ श्रेयस्करत्वाभिधानात् यथा "न सन्त्यघानि तावन्ति यावती शक्तिरस्ति हि। नाम्नि देव्याः पापदाहे तस्माद्भीतिः कुतो नृप!। अवशेनापि यन्नाम लीलयोच्चारितं यदि। किं किं ददाति तज्ज्ञातं समर्था न हरादयः। प्रायश्चित्तन्तु पापानां श्रीदेवीनामसंस्मृतिः। तस्मात् कलिभयाद्राजन् पुण्यक्षेत्रे वसन्नरः। निरन्तरं पराम्बाया नामसंस्मरणं चरेत्"। "उपस्थितेयं कल्याणी नाम्नि कीर्त्तित एव यत्" रघुः। ४उदके निघण्टुः। चैत्रमैत्रादिसंज्ञायाः सर्वत्र शतपदचक्रानुसारेण क्रतायाः जन्मनामता प्रसिद्धनाम तु ततोऽन्यदेव तत्र जन्मनक्षत्रादौ नाम्नो यथा ग्रहणं तन्निरूपितं तन्त्रसारे यथा

नामग्रहणप्रकारमाह पिङ्गलामते "प्रसिद्धं यद्भवेन्नाम किं वास्य जन्म नामयत्। यतीनां पुष्पपातेन गुरुणा यत् क्रतं भवेत्। लोकप्रसिद्धमथ वा माता पिता च यत् क्रतम्" यामले। "सुप्तो जागर्त्ति येनासौ दूरस्थश्च प्रभाषते। वदत्यन्यमनस्कोऽपि तन्नाम प्राधमल तु"। सनत्कुमारीये "पितृमातृक्रतं नाम त्यक्त्वा शर्मादिदैवकान्। श्रीवर्णञ्च ततो विद्वान् चक्रे तु योजयेत् क्रमात्"।

**नामनामिक** पु० नाम्नि नामः नमनं प्रह्वता अस्त्यस्य ठन्। परमेश्वरे "जितमानसिक! नामनामिक!" भा०शा०१ ४०अ० विष्णुनामोक्तौ।

**नाममात्र** त्रि० नाम संज्ञैव मात्रा यस्य। स्ववीर्यहीने संज्ञाधारिमात्रे "यथा काकयवाः प्रोक्ता यथाऽरण्यभवास्तिलाः। नाममात्रा न सिद्धौ हि धनहीनास्तथा नराः" पञ्चत०।

**नाममाला** स्त्री ६त०। कोषभेदे

**नाममुद्रा** स्त्री नामाक्षरस्य मुद्रा यत्र। अङ्गुलीयकभेदे यत्र नामाक्षराणि अङ्कितानि सन्ति तादृशे मुद्राभेदे

**नामयज्ञ** पु० नाममात्रेण यज्ञः नामप्रसिद्धये वा यज्ञः। दम्भकृते आत्मख्यातिलाभाय वा क्रते यज्ञे यथोक्तं "आत्मसम्भाविताःस्तब्धा धनमानमदान्विताः। यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम्" गीता "नाममात्रेण ये यज्ञास्ते नामयज्ञा यद्वा दीक्षितः सोमयाजीत्येवमादिनाममात्रप्रसिद्धये ये यज्ञास्ते नामयज्ञास्तैः" श्रीधरः।

**नामलिङ्ग** न० नाम च लिङ्गं च ते नाम्नो वा लिङ्गम् । १शब्दलिङ्गयोः २शब्दभेदस्य लिङ्गभेदे च "नामलिङ्गानुशासनम्" अमरः । लिङ्गञ्च शब्दश०प्र० निरूपितं यथा "स्त्रीलिङ्गमपि पुंलिङ्गं क्लीवलिङ्गमिति त्रिधा । शब्दसंस्कारसिद्ध्यर्थं भाषया नाम भिद्यते" स्त्रीलिङ्गं पुंलिङ्गं नपुंसकलिङ्गमित्यपि त्रिधा नाम भिद्यते तत्र स्त्रीलिङ्गत्वादिकं न स्त्रीत्वादिवाचकत्वं तटः तटी तटमित्यादौ प्रकृत्यर्थस्य तटादेः स्त्रीत्वाद्यवगतावयोग्यतापत्तेः । परन्तु स्त्रीलिङ्गत्वादिना परिभाषितत्वमात्रं परिभाषायाः प्रयोजनञ्चेह पदसंस्कारः सोऽपि तट इत्यादौ पुंस्त्वेन सुवादिसद्भावः । तटीत्यादौ स्त्रीत्वेन ङीबादिप्रत्ययः तटमित्यादौ क्लीवत्वेन सुवादेर्लुगादिरिति दुन्दुभी सुवर्णं इत्यादौ तु शब्दसंस्कारस्यैव फलमर्थविशेषस्य लाभो न ह्ययं दुन्दुभिरिदं सुवर्णमित्यादितोऽपशीतिरत्तिकापरिमितस्वर्णादेरवगमः । यत्र च सम्पदादिशब्दे स्त्रीलिङ्गत्वादिप्रयुक्तो नास्ति संस्कारस्य विशेषस्तत्राप्यभेदेन तत्साकाङ्क्षे शोभनादिपदे एवास्ति विशेषणपदानां विशेष्यपदलिङ्गसाहित्यस्य विना बाधकं नियमात् । यत्तु तटादिकं द्रव्यमिव तद्गतं स्त्रीत्वादिकं पदार्थान्तरमपि तटादिपदस्यार्थः प्रत्ययानान्तु तद्द्योतकतामात्रमिति वैयाकरणैरुक्तं तन्न युक्तं तटादिपदेभ्यस्तटत्वादिनेव धर्मान्तरेण स्त्रीत्वादिना तटादेरननुभवेन तादृशपदार्थान्तरे प्रमाणाभावात् न विप्रा वेदसुन्दरेदित्यादौ च टाबादिना प्रत्ययेनैव स्वार्थस्य योन्यादिमत्त्वलक्षणस्त्रीत्वस्य प्रकृत्यर्थेऽनुभावनात् न प्राणि प्राप्नुयाद्वायं न विप्रोऽध्ययनं त्यजेत्" इत्यादावपि लुप्तालुप्ताभ्यां सुब्भ्यामेवोपस्थितं विलक्षणसंस्थानरूपं नपुंसकत्वं प्राणिनि पुंस्त्वञ्च विप्रेऽनुभूयते" । [स्मृते हेमच० ।

**नामशेष** त्रि० नाममात्रं शेषोऽस्य । कथामात्रशेषे देहशून्ये

**नामसंग्रह** पु० नाम्नां शब्दभेदानां संग्रहः । नाम्नामर्थवत्तया पर्यायशब्देन १एकत्र कीर्त्तने ७त० । २तदाधारे अभिधाने च

**नामाख्यातिक** पु० नाम च आख्यातञ्च (तत्प्रतिपादके) तयोर्व्याख्यानो ग्रन्थः नामाख्यात+ठञ् । नामाख्यातप्रतिपादकग्रन्थयोर्व्याख्याने ग्रन्थे

**नामाङ्क** त्रि० नाम नामाक्षरमेवाङ्को यत्र । नामाक्षरेणाङ्किते "नामाङ्कवाणाङ्कितकेतुयष्टिम्" रघुः ।

**नामादेशम्** अव्य० नाम आदिश्य नामन्+आ+दिश–णमुल् । नाम आदिश्येत्यर्थे ।

**नामानुशासन** न० अनुशिष्यते अर्थविशेषवत्तया ज्ञाप्यतेऽनेन अनु+शास–करणे ल्युट् ६त० । शब्दानामर्थविशेषज्ञापके अभिधाने कोषे । तेन हि इमे शब्दा एतदर्थे वृत्तिमन्तः इति प्रतिपाद्यते इति तस्य तथात्वम् ।

**नामापराध** पु० नाम्नि तद्विषये अपराधः । भगवदादिनामादिषु अवज्ञादिरूपे अपराधे नामापराधाश्च केचित् पाद्मोत्तरख० १०२ अ० दर्शिता यथा

"सतां निन्दा नाम्नां परममपराधं वितनुते यतः ख्यातिं यातस्तदुपहसते गर्हयति च । तथा विष्णोरिष्टं य इह गुणनामादि सकलं धिया भिन्नं पश्येत् स खलु हरिनामाऽहितकरः । गुरोरवज्ञा श्रुतिशास्त्रनिन्दनं तथार्थवादो हरिनाम्नि कल्प्यते । नाम्नां बलाद्यस्य हि पापबुद्धिर्न विद्यते तस्य शठस्य शुद्धिः । दिवौकसां गुरोः पित्रोर्भूसुराणाञ्च गर्हणम् । नामापराधं यत्तत् स्याद्वैष्णवानां तथा स्तुषाम् । गोऽश्वत्थतुलसीधात्रीन्द्वपान्निन्दन्ति नारद ! । नामापराधो स भवेन्नामगोविन्द वैष्णवान्" ।

**नाम्ब** पु० नास्ति अम्बः कर्षणादिजन्यप्राणिहिंसा यत्र नञ्शब्देन समासः । अकृष्टपच्ये स्वयंजाते व्रीहौ

"अथ मित्राय सत्याय नाम्बानां चरुं निर्वपति तदेनं मित्र एव सत्यो ब्रह्मणे सुवत्यथ यन्नाम्बानां भवति वरुण्या वा एता ओषधयो याः कृष्टे जायन्ते अथैते मैत्रा यन्नाम्बास्तन्नाम्बानां भवति" शत०ब्रा०५।३।३।८

"नाम्बा नाम अकृष्टपच्याः स्वयंजाता व्रीहयः कृष्टक्षेत्रोत्पन्ना ओषधयो वरुण्याः कर्षणादिलक्षणहिंसासत्त्वात्" भा० ।

**नाय** त्रि० नी–कर्त्तरि ण । १नेतरि २उपाये "नायः कोऽत्र स येन स्यां वनाहं विगतज्वरः" भट्टिः । भावे घञ् । ३नीतौ नयने पु० "यात यूयं यमस्थायं दिशं नायेन दक्षिणाम्" भट्टिः ।

**नायक** त्रि० नी–ण्वुल् । १प्रापके २प्रभौ ३श्रेष्ठे ४प्रधाने हारमध्यमणौ च पु० मेदि० ५आयसरिके सेनापतौ त्रिका० ६शृङ्गारालम्बने च । "स च त्रिविधः पतिरुपपतिर्वैशिकश्चेति । तत्र विधिवत् पाणिग्राहकः पतिः । अनुकूलदक्षिणधृष्टशठभेदात् पतिश्चतुर्धा । सार्वकालिकपराङ्गनापराङ्मुखत्वे सति सर्वकालमनुरक्तोऽनुकूलः । सकलनायिकाविषयसमसहजानुरागो दक्षिणः । भूयो निःशङ्कः कृतदोषोऽपि भूयो निवारितोऽपि भूयः प्रणयपरायणो

धृष्टः। कामिनीविषयकपटपटुः शठः। आचारहानिहेतुः पतिरुपपतिः। बहुलवेश्याभोगोपरसिको वैशिकः। त्रिविधोऽपि उत्तममध्यमाधमभेदात् पुनस्त्रिविधः। दयिताभूयःप्रकोपेऽपि उपचारपरायण उत्तमः। प्रियायाः यः प्रकोपमनुरागं वा न प्रकटयति चेष्टया मनोभावं स्तृणाति स मध्यमः। भयलज्जाशून्यः कामक्रीड़ायामकृत्याकृत्यविचारोऽधमः। मानी चतुरश्च शठ एवान्तर्भवति। वाक्चेष्टाव्यङ्ग्यसमागमश्चतुरः। प्रोषितश्च पतिरुपपतिर्वैशिकश्च भवति। अनभिज्ञनायकोऽनायकाभास एव। तेषाञ्च नर्मसचिवपीठमर्द्दविटचेटकविदूषकभेदाश्चतुर्धा सहायाः। कुपितस्त्रीप्रसादकः पीठमर्द्दः। नर्मसचिवोऽप्ययमेव। कामतन्त्रकलाकोविदो विटः। सन्धानचतुरश्चेटकः। अङ्गादिवैकृत्यैर्हास्यकारी विदूषकः। तेषामष्ट सात्त्विकागुणा यथा। स्वेदस्तम्भोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः। वैवर्ण्यमश्रु प्रलयावित्यष्टौ सात्त्विका गुणाः। तेषां दशावस्था यथा "अभिलाषस्तथा चिन्ता स्मृतिश्च गुणकीर्त्तनम्। उद्वेगश्च प्रलापश्च उन्मादो व्याधिरेव च। जड़ता निधनञ्चेव दशावस्थाः प्रकीर्त्तिताः" इति रसमञ्जरी। सा०द० अन्यथाभेदा दर्शिता यथा। "आलम्बनं नायकादिस्तमालम्ब्य रसोद्गमात्" तत्र नायकः। "त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही। दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान् नेता। धीरोदात्तो धीरोद्धतस्तथा धीरललितश्च। धीरप्रशान्त इत्ययमुक्तः प्रथमं चतुर्भेदः। अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः। स्थेयान् निगूढ़मानो धीरोदात्तो दृढ़व्रतः कथितः। मायापरः प्रचण्डश्चपलोऽहङ्कारदर्पभूयिष्ठः। आत्मश्लाघानिरतो धीरैर्धीरोद्धतः कथितः। निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यात्। सामान्यगुणैर्भूयान् द्विजादिको धीरप्रशान्तः स्यात्। एभिर्दक्षिणधृष्टानुकूलशठरूपिभिस्तु षोड़शधा। एषु त्वनेकमहिलासु समरागो दक्षिणः कथितः। कृतागा अपि निःशङ्कस्तर्ज्जितोऽपि न लज्जितः। दृष्टदोषोऽपि मिथ्यावाक् कथितो धृष्टनायकः। अनुकूल एकनिरतः शठोऽयमेकत्र बद्धभावो यः। दर्शितबहिरनुरागो विप्रियमन्यत्र गूढ़माचरति। एषाञ्च त्रैविध्यात् सर्वेषामुत्तममध्याधमत्वेन। उक्ता नायकभेदाश्चत्वारिंशत्तथाऽष्टौ च" तत्र प्रभौ "तव वरद! करोतु उपातमह्रामयं नायकः" माघः मन्त्रिसम्पर्के श्रेष्ठे ६ हारमध्यमणौ च "यातस्यपार्श्विपाहादिमाबाबामधिकद्युतिः। एकार्थतन्तुप्रोतायां नायको नायकायते" माघः "रामोहरिः करी भृङ्गः भानुः कर्त्ता च चन्द्रमाः। तस्विवान् भगवानात्मा दृश्यते पुंसि नायकाः"।

**नायकाधिप** पु० ६त०। नृपे शब्दरत्ना०।

**नायिका** स्त्री नी-ण्वुल् कापि अत इत्वम्। १प्रापिकायां स्त्रियां २शृङ्गाररसालम्बनभूतायां स्त्रियां च तद्भेदादि सा०द० उक्तं यथा

"अथ नायिका त्रिविधा स्वाऽन्या साधारणस्त्रीति। नायकसामान्यगुणैर्भवति यथासम्भवैर्युक्ता। विनयार्जवादियुक्ता गृहकर्मपरा पतिव्रता स्वीया। साऽपि कथिता त्रिविधा मुग्धा मध्या प्रगल्भेति। प्रथमावतीर्णयौवनमदनविकारा रतौ वामा। कथिता मृदुश्च माने समधिकलज्जावती मुग्धा। मध्या विचित्रसुरता प्ररूढ़स्मरयौवना। ईषत्प्रगल्भवचना मध्यमव्रीडिता मता। स्मरान्धा गाढ़तारुण्या समस्तरतकोविदा। भावोन्नता दरव्रीड़ा प्रगल्भाऽऽक्रान्तनायका। ते धीरा चाप्यधीरा च धीराधीरेति षड्विधे। प्रियं सोत्प्रासवक्रोक्त्या मध्या धीरा दहेद्रुषा। धीराधीरा तु रुदितैरधीरा परुषोक्तिभिः। प्रगल्भा यदि धीरा स्याच्छन्नकोपाकृतिस्तदा। उदास्ते सुरते तत्र दर्शयन्त्यादरान् बहिः। धीराधीरा तु सोल्लुण्ठभाषितैः खेदयेदमुम्। तर्जयेत्ताड़येदन्या प्रत्येकं ता अपि द्विधा। कनिष्ठज्येष्ठरूपत्वान्नायकप्रणयं प्रति। मध्याप्रगल्भयोर्भेदास्तस्माद्द्वादश कीर्त्तिताः। मुग्धा त्वेकैव तेन स्युः स्वीयाभेदास्त्रयोदश। परकीया द्विधा प्रोक्ता परोढा कन्यका तथा। यात्रादिनिरताऽन्योढ़ा कुलटा गलितत्रपा। कन्या त्वजातोपयमा सलज्जा नवयौवना। धीरा कलाप्रगल्भा स्याद्वेश्या सामान्यनायिका। निर्गुणानपि न द्वेष्टि न रज्यति गुणिष्वपि। वित्तमात्रं समालोक्य सा रागं दर्शयेद् बहिः। काममङ्गीकृतमपि परिक्षीणधनं नरम्। मात्रा निष्कासयेदेषा पुनःसन्धानकाङ्क्षया। तस्कराः पण्डकामूर्खाः सुखप्राप्तधनास्तथा। लिङ्गिनश्छन्नकामाद्या आसां प्रायेण वल्लभाः। एषापि मदनायत्ता क्वापि सत्यानुरागिणी। रक्तायां वा विरक्तायां रतमस्यां सुदुर्लभम्। अवस्थाभिर्भवन्त्यष्टावेताः षोड़शभेदिताः। स्वाधीनभर्तृका तद्वत् खण्डिताऽथाभिसारिका। कल-

ह्रान्तरिता विप्रलब्धा प्रोषितभर्त्तृका। अन्या वासकसज्जा स्याद्विरहोत्कण्ठिता तथा। कान्तो रतिगुणाकृष्टो न जहाति यदन्तिकम्। विचित्रविभ्रमासक्ता सा स्यात् स्वाधीनभर्त्तृका। पार्श्वमेति प्रियो यस्या अन्यसम्भोगचिह्नितः। सा खण्डितेति कथिता धीरैरीर्ष्याकषायिता। अभिसारयते कान्तं या मन्मथवशंवदा। स्वयं वाऽभिसरत्येषा धीरैरुक्ताऽभिसारिका। चाटुकारमपि प्राणनाथं रोषादपास्य या। पश्चात्तापमवाप्नोति कलहान्तरिता तु सा। प्रियः कृत्वापि सङ्केतं यस्या नायाति सन्निधिम्। विप्रलब्धा तु सा ज्ञेया नितान्तमवमानिता। नानाकार्य्यवशाद्यस्या दूरदेशं गतः पतिः। सा मनोभवदुःखार्त्ता भवेत् प्रोषितभर्त्तृका। कुरुते मण्डनं यस्याः सज्जिते वासवेश्मनि। सा तु वासकसज्जा स्याद्विदितप्रियसङ्गमा। आगन्तुं कृतचित्तोऽपि दैवान्नायाति यत्प्रियः। तदनागमदुःखार्त्ता विरहोत्कण्ठिता तु सा। इति साष्टाविंशतिशतमुत्तममध्यमाधमस्वरूपतः। चतुरधिकाशीतियुतं शतत्रयं नायिकाभेदानां स्यात्”। २देव्याः शक्तिभेदे “ततोऽष्ट नायिका देव्याः यत्नतः परिपूजयेत्। उग्रचण्डां प्रचण्डां च चण्डोग्रां चण्डनायिकाम्। अतिचण्डां च चामुण्डां चण्डां चण्डवतीं तथा” ब्रह्मवै॰प्रकृतिख॰ ६॰अ॰। ३कस्तूरीभेदे “चूर्णाकृतिस्तु खरिका तिलका तिलाभा कौलत्थवीजसदृशी च कुलत्थिकाख्या। स्थूला ततः किमपि या किल पिण्डिका स्यात्तस्याश्च किञ्चिदधिकापि च नायिकैषा” राजनि॰।

**नार** त्रि॰ नरस्येदम् अण्। १नरसम्बन्धिनि २परमात्मसम्बन्धिनि च “नारं स्पृष्ट्वा तु सस्नेहं सचेलं जलमाविशेत्” स्मृतिः नरशब्दे उदा॰ दृश्यम्। ३जले “आपो नारा इति प्रोक्ता आपो वै नरसूनवः” मनुः। आर्षत्वात् ङीपोऽभावः। लोके स्त्रियां ङीब नारी इत्येव। ४तर्णके वालके च मेदि॰। नराणां समूहः अण्। ५नरसमूहे न॰।

**नारक** पु॰ नरक एव प्रज्ञा॰ अण्। १नरके। नरको भोग्यतयाऽस्त्यस्य अण्। २नरकस्थे प्राणिनि त्रि॰ अमरः।

**नारकिन्** त्रि॰नरको भोग्यतयाऽस्त्यस्य इनि। नरकभोगिनि “परेण विहितं कर्म स्वकर्मेति वदेत्तु यः। स उच्यते ब्रह्मघाती महानारकिनारकी” वृहद्धर्मपु॰।

**नारकीट** पु॰ नारकीव एटति इट—गतौ क। १अश्मकीटे नारे मनुष्यसमूहे कीट इव। २स्वदत्ताशाहन्तरि च मेदि॰

**नारङ्ग** न॰ नारं गच्छति गम॰ ड मुम् नारमिवाङ्गं यस्य वा शक॰। २गर्जरे (गाँजर) राजनि॰। ३पिप्पलीरसे ४यमजप्राणिनि ४विटे। न आरङ्गो यस्य। ५फलप्रधानवृक्षविशेषे पु॰ मेदि॰ (नारङ्गी) ६नागरङ्गे जम्बीरभेदे “नारङ्गं मधुराम्लं स्यात् रोचनं वातनाशनम्। अपरं त्वम्लमत्युष्णं दुर्जरं वातपित्तकृत्” राजवल्लभः। “नारङ्गकेसरमपाकृतवीजपूरं योऽश्नाति खण्डमरिचोरुकचूर्णमिश्रम्। अस्वं गले विशति तस्य नरस्य जीर्णं संरुह्यमाण इव राहुगलेन चन्द्रः”।

**नारङ्गक्षीरिणी** स्त्री नारङ्गमिश्रिता क्षीरिणी। क्षीरिकाभेदे “छित्वा नारङ्गमज्जां वै पचेत् सर्पिषि तापिते। तत्र खण्डं विनिःक्षिप्य पक्वं मत्वाऽवतारयेत्। शीतीभूते विनिःक्षिप्य मात्रयार्द्धश्रृतं पयः। नारङ्गक्षीरिण्येषा सुगन्धिसुरभीकृता। विह्निर्गो हरेद्वातं पित्तञ्च गुरुपाचिका” शब्दार्थचि॰धृतवाक्यम्। [ शब्दार्थचि॰।

**नारङ्गवर्णक** न॰ नारङ्गस्येव वर्णोऽस्य फले कप्। गृञ्जने

**नारद** पु॰ नरस्य धर्म्यम् “नराच्चेति वक्तव्यम्” इत्यञ् नारं ददाति दा—क। १देवर्षिवरे मुनिभेदे तन्नामनिरुक्तिर्बहुधा दर्शिता यथा “नारं पानीयमित्युक्तं तत्पितृभ्यः सदा भवान्। ददाति तेन ते नाम नारदेति भविष्यति” इत्यागमः। नारदेन पुराकल्पीयनिजजन्मवृत्तान्तो व्यासं प्रति भाग॰१।५।६ अ॰ उक्तो यथा

“अहं पुराऽतीतभवेऽभवं मुने! दास्यास्तु कस्याश्चन वेदवादिनाम्। निरूपितो बालक एव योगिनां शुश्रूषणे प्रावृषि निर्विविक्षताम्। ते मय्यपेताखिलचापलेऽर्भके दान्तेऽधृतक्रीडनकेऽनुवर्त्तिनि। चक्रुः कृपां यद्यपि तुल्यदर्शनाः शुश्रूषमाणे मुनयोऽल्पभाषिणि” इत्युपक्रमे तेभ्यो मुनिभ्यो विमलज्ञानस्य आत्मनो लाभमुक्त्वा अनन्यभक्त्या परमेश्वरोपासने कृते भगवतः पार्श्वेन जन्मान्तरे तव पारमेश्वररूपदर्शनं भविष्यतीति आत्मानं प्रति उपदेशं वर्णयित्वाऽन्ते स्वस्य जन्मान्तरं वर्णितं यथा “एवं कृष्णमतेर्ब्रह्मन्नासक्तस्यामलात्मनः। कालः प्रादुरभूत् काले तडित् सौदामनी यथा। प्रयुज्यमाने मयि तां शुद्धां भागवतीं तनुम्। आरब्धकर्मनिर्वाणो न्यपतत् पाञ्चभौतिकः। कल्पान्त इदमादाय शयानेऽम्भस्युदन्वतः। शिशयिषोरनुप्राणं विविशेऽन्तरहं विभोः। सहस्रयुगपर्य्यन्त उत्थायेदं सिसृक्षतः। मरीचिमिश्रा ऋषयः प्राणेभ्योऽहञ्च जज्ञिरे। अन्तर्व-

हिश्च लोकांस्त्रीन् पर्य्येम्यस्कन्दितव्रतः। अनुग्रहान्महाविष्णोरविघातगतिः क्वचित्। देवदत्तामिमां वीणां स्वरब्रह्मविभूषिताम्। मूर्च्छयित्वा हरिकथां गायमानश्चराम्यहम्"। कश्यपापत्यनारदवीर्य्येण तस्य कल्पभेदे शूद्रागर्भजातकथा ब्रह्मवै॰प्र॰ख॰ २१।२२अ॰ यथा "कान्यकुब्जे च देशे च द्रुमिलो गोपराजकः। कलावती तस्य पत्नी वन्ध्या चापि पतिव्रता। स्वामिदोषेण, सा सन्ध्याकाले च भर्त्तुराज्ञया। उपस्थितं वने घोरे नारदं काश्यपं मुनिम्। क्रोधमानञ्च योगेण ज्वलन्तं ब्रह्मवर्च्चसा। तस्थौ सुवेशं कृत्वा सा ध्यानान्तञ्च मुनेः पुरः। उवाच विनयेनैव कृत्वा च श्रीहरिं हृदि। गोपिकाहं द्विजश्रेष्ठ! द्रुमिलस्य च कामिनी। पुत्रार्थिनी चागताहं त्वन्मूलं भर्त्तुराज्ञया। वीर्य्याधानं कुरु मयि त्वां नोपेक्ष्या ह्युपस्थिता। तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा। इत्यलीवचनं श्रुत्वा चुकोप मुनिपुङ्गवः। इत्यली तत् पुरस्तस्थौ शुष्ककण्ठोष्ठतालुका। एतस्मिन्नन्तरे तेन पथा गच्छति मेनका। तस्या जरस्थलं दृष्ट्वा मुनेर्वीर्य्यं पपात ह। ऋतुस्नाता च सा ह्यली कृत्वा तद्भक्षणं मुदा। सा विप्रगेहे साध्वी च सुषाव तनयं वरम्। तप्तकाञ्चनवर्णाभं ज्वलन्तं ब्रह्मतेजसा। अनावृष्ट्यावशेषे च काले बालो बभूव ह। नारं ददौ जन्मकाले तेनायं नारदाभिधः। ददाति नारं ज्ञानञ्च बालकेभ्यश्च बालकः। जातिस्मरो महाज्ञानी तेनायं नारदाभिधः। वीर्य्येण नारदस्यैव बभूव बालको मुने!। मुनीन्द्रस्य वरेणैव तेनायं नारदाभिधः। कल्पान्तरे ब्रह्मकण्ठाद्बभूवुर्विविधा नराः। नरान्ददौ तत्कण्ठश्च तेन तन्नारदः स्मृतः। ततो बभूव बालश्च नारदात् कण्ठदेशतः। ततो ब्रह्मा नाम चक्रे नारद इति मङ्गलम्" आदिनारदश्च ब्रह्मणो ललाटाज्जातः यथोक्तं हरिवं॰ २१॰अ॰ "ललाटमध्याद्धृष्टज्ञारदं प्रियविग्रहम्। सनत्कुमारं मूर्द्धश्च महायोगी पितामहः"। तस्य दक्षशापकथा "नष्टेषु शबलाश्वेषु दक्षः क्रुद्धोऽब्रवीद्वचः। नारद नाशमेहीति गर्भवासं वसेति च" हरिवं॰३अ॰। तस्याहर्निशं च भ्रमणं दक्षशापात् यथा "तांश्चापि नष्टान् विज्ञाय पुत्रान् दक्षः प्रजापतिः। क्रोधं चक्रे महाभाग! नारदं स शशाप च" स च शापः "तस्माल्लोकेषु ते मूढ! न भवेद्भ्रमतः पदम्" भाग॰ ६।५।४१ स च भगवदवतारभेदः यथाह भाग॰ १।३।८ "तृतीयमृषिसर्गं वै देवर्षित्वमुपेत्य सः। तन्त्रं सात्वतमाचष्ट नैष्कर्म्यं कर्म्मणां यतः"। तस्य स्वरूपं यथा "ज्वलिताग्निप्रतीकाशो बालार्कसदृशेक्षणः। सव्यापसव्यं विपुलं जटामण्डलमुद्वहन्। चन्द्रांशुशुक्ले वसने वसानो रुक्मभूषणः। वीणां गृहीत्वा महतीं कक्षासक्तां सखीमिव। कृष्णाजिनोत्तरासङ्गो हेमयज्ञोपवीतवान्। दण्डी कमण्डलुधरः साक्षाच्छक्र इवापरः। भेत्ता जगति गुह्यानां विग्रहाणां गुहोपमः। महर्षिर्विग्रहहर्षिविद्वान् गान्धर्ववेदवित्। वैरकेलिकिलो विप्रो ब्राह्मः कलिरिवापरः। देवगन्धर्वलोकानामादिवक्ता मुनिः परः। गाता चतुर्णां वेदानामुद्गाता प्रथमर्त्विजाम्। स नारदोऽथ विप्रर्षिर्ब्रह्मलोकचरोऽव्ययः" हरिवं॰ ५५अ॰। २विश्वामित्रपुत्रभेदे "लोलाक्षो नारदश्चैव तथा कूर्चामुखः कृतः" भा॰अनु॰४अ॰। विश्वामित्रपुत्रोक्तौ। स्वायम्भुवमनुसृष्टे ३प्रजापतिभेदे "अहं प्रजाः सिसृक्षुस्तु तपस्तप्त्वा सुदुश्चरम्। पतीन् प्रजानामसृजं महर्षीनादितो दश। मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम्। प्रचेतसं वशिष्ठञ्च भृगुं नारदमेव च" स्वायम्भुवमनूक्तौ। कश्यपस्य मुनिपत्न्यां जाते ४गन्धर्वभेदे "कलिः पञ्चदशस्तेषां नारदश्चैव षोडशः। इत्येते देवगन्धर्वा मौनेयाः परिकीर्त्तिताः" भा॰आ॰ ६५अ॰।

**नारदपञ्चरात्र** न॰ नारदकृते पञ्चरात्रे तन्त्रभेदे तत्र प्रतिपाद्यविषयाश्च दिङ्मात्रमत्रोच्यन्ते। अभिगमनमुपादानमिज्या स्वाध्यायो योग इति पञ्चविधमुपासनं तत्राभिगमनं नाम देवतास्थानमार्गस्य संमार्जनोपलेपनादि। उपादानं नाम गन्धपुष्पादिपूजासाधनसम्पादनम्। इज्या नाम देवता पूजनम्। स्वाध्यायो नाम अर्थानुसन्धानपूर्वको मन्त्रजपो वैष्णवसूक्तस्तोत्रपाठो नामसंकीर्त्तनं तत्त्वप्रतिपादकशास्त्राभ्यासश्च। योगो नाम देवतानुसन्धानम्। अन्यत् तत्र दृश्यम्।

**नारदशिक्षा** स्त्री नारदकृते वर्णोच्चारणशिक्षाभेदे

**नारदीय** न॰ नारदस्येदम् "वृद्धाच्छः" पा॰ वेदव्यासकृते नारदं प्रति सनकाद्युपदेशात्मके महापुराणभेदे तत्प्रतिपाद्यविषयाश्च वृहन्नारदीये ८६अ॰ उक्ता यथा श्रीब्रह्मोवाच। "शृणु विप्र! प्रवक्ष्यामि पुराणं नारदीयकम्। पञ्चविंशतिसाहस्रं वृहत् चित्रकथाश्रयम्। सूतशौनकसंवादः सृष्टिसंक्षेपवर्णनम्। नानाधर्मकथाः पुण्याः प्रवृत्ते समुदाहृताः। प्राग्भागे प्रथमे पादे सन-

केन महात्मना । द्वितीये मोक्षधर्माख्ये मोक्षोपायनिरूपणम् । वेदाङ्गानाञ्च कथनं शुकोत्पत्तिश्च विस्तरात् । सनन्दनेन गदिता नारदाय महात्मने । महातन्त्रे समुद्दिष्टं पशुपाशविमोक्षणम् । मन्त्राणां शोधनं दीक्षा मन्त्रोद्धारश्च पूजनम् । प्रयोगाः कवचं नामसहस्रं स्तोत्रमेव च । गणेशसूर्य्यविष्णूनां शिवशक्त्योरनुक्रमात् । सनत्कुमारमुनिना नारदाय तृतीयके । पुराणलक्षणञ्चैव प्रमाणं दानमेव च । पृथक् पृथक् समुद्दिष्टं दानकालपुरःसरम् । चैत्रादिसर्व्वमासेषु तिथीनाञ्च पृथक् पृथक् । प्रोक्तं प्रतिपदादीनां व्रतं सर्व्वाघनाशनम् । सनातनेन मुनिना नारदाय चतुर्थके । पूर्व्वभागोऽयमुदितो बृहदाख्यानसंज्ञितः । अस्योत्तरे विभागे तु प्रश्न एकादशीव्रते । वशिष्ठेनाथ संवादो मान्धातुः परिकीर्त्तितः । रुक्माङ्गदकथा पुण्या मोहिन्युत्पत्तिकर्म्म च । वसुशापश्च मोहिन्यै पश्चादुद्धरणक्रिया । गङ्गाकथा पुण्यतमा गयायात्रानुकीर्त्तनम् । काश्या माहात्म्यमतुलं पुरुषोत्तमवर्णनम् । यात्राविधानं क्षेत्रस्य बह्वाख्यानसमन्वितम् । प्रयागस्यापि माहात्म्यं कुरुक्षेत्रस्य तत्परम् । हरिद्वारस्य चाख्यानं कामोदाख्यानकं तथा । बदरीतीर्थमाहात्म्यं कामाख्यायास्तथैव च । प्रभासस्य च माहात्म्यं पुराणाख्यानकं ततः । गौतमाख्यानकं पश्चाद् वेदपादस्तवस्ततः । गोकर्णक्षेत्रमाहात्म्यं लक्ष्मणाख्यानकं तथा । सेतुमाहात्म्यकथनं नर्म्मदातीर्थवर्णनम् । अवन्त्याश्चैव माहात्म्यं मथुरायास्ततःपरम् । वृन्दावनस्य महिमा वसोर्ब्रह्मान्तिके गतिः । मोहिनीचरितं पश्चादेवं वै नारदीयकम् । यः शृणोति नरो भक्त्या श्रावयेद्वा समाहितः । स याति ब्रह्मणो धाम नात्र कार्य्या विचारणा । यस्त्वेतदिष पूर्णायां धेनूनां सप्तकान्वितम् । प्रदद्याद्द्विजवर्य्याय स लभेन्मोक्षमेव च । यश्चानुक्रमणीमेतां नारदीयस्य वर्णयेत् । शृणुयाद्वैकचित्तेन सोऽपि स्वर्गगतिं लभेत्" । [चरिताख्याने उपपुराणभेदे

**नारसिंह** न॰ नरसिंहमधिकृत्य कृतो ग्रन्थः अण् । नरसिंहनारा स्त्री नरस्येयमण् बा॰ ङीबोऽभावः । जले शब्दर॰ । "आपो नारा इति प्रोक्ता आपो वै नरसूनवः" मनुः ।

**नाराच** पु॰ नरान् आचामति आ+चम–ड स्वार्थे अण्, नारं नरसमूहमाचामति आ+चम–ड वा । सर्वलौहमये वाणे अमरः । "तत्र नाराचदुर्दिनम्" रघुः नालीकशब्दे दृश्यम् "कुपित मदनमुक्तोत्तप्तनाराचलोलाम्" माघः "दृष्टनरचतुष्कदृष्टन्तु नाराचमाचक्षते" उक्ते छन्दोभेदे न॰

**नाराचिका** स्त्री नाराचस्तदाकारोऽस्त्यस्याः ठन् । नाराचाकृतियुक्ते स्वर्णकारादीनां तोलनार्थे यन्त्रभेदे (निक्ति) शब्दर॰ स्वार्थे अण् ङीप् । नाराचीत्यपि तत्रार्थे । स्वल्पार्थे ङीपि तु स्वल्पे नाराचे स्त्री ।

**नारायण** पु॰ नानाविधा निरुक्तिः अनुपदं वक्ष्यते तदनुसारेण व्युत्पत्तिः । १विष्णौ परमात्मनि "जह्नुर्नारायणो नरः" विष्णुस॰ । भाष्ये अस्य व्युत्पत्तिर्दर्शिता यथा "नर आत्मा ततो जातान्याकाशादीनि नाराणि तानि कार्य्याणि अयते कारणात्मना व्याप्नुते नारायणः "यच्च किञ्चिज्जगत् सर्वं दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" इति मन्त्रवर्णात् "नराज्जातानि तत्त्वानि नाराणीति विदुर्बुधाः । तान्येवायनं यस्य तेन नारायणः स्मृतः" इति महाभारते । अयनत्वात् प्रलय इति वा "यत् प्रयन्त्यभिसंविशन्तीति" श्रुतेः "आपो नारा इति प्रोक्ता आपो वै नरसूनवः । ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः" मनुः । ब्रह्मवै॰ ज॰ख॰ १०६अ॰ अन्यथा निरुक्तिर्दर्शिता यथा "सारूप्यमुक्तिवचनो नारेति च विदुर्बुधाः । यो देवोऽयनं तस्य स च नारायणः स्मृतः । नाराश्च कृतपापाश्चाप्ययनं गमनं स्मृतम् । यतो हि गमनं तेषां सोऽयं नारायणः स्मृतः । नारश्च मोक्षणं पुण्यमयनं ज्ञानमीप्सितम् । तयोर्ज्ञानं भवेद् यस्मात् सोऽयं नारायणः स्मृतः" । "नारायणेति शब्दोऽस्ति वागस्ति वशवर्त्तिनी । तथापि नरके मूढाः पतन्तीह किमद्भुतम्" । महाभारतम् । नरस्यापत्यम् नडा॰फक् । २नरस्यापत्ये पु॰ स्त्री॰ ३अजामिलपुत्रभेदे "कान्यकुब्जे द्विजः कश्चिद्दासीपतिरजामिलः । नाम्ना नष्टसदाचारो दास्याः संसर्गदूषितः । तस्य प्रवयसः पुत्रा दश तेषान्तु योऽवरः । बालो नारायणो नाम्ना पित्रोश्च दयितो भृशम् । दूरे क्रीडनकासक्तं पुत्रं नारायणाह्वयम् । प्लावितेन स्वरेणोच्चै राजुहावाकुलेन्द्रियः" । "निशम्य म्रियमाणस्य मुखतो हरिकीर्त्तनम् । भर्त्तुर्नाम महाराज ! पार्षदाः सहसाऽपतन् । विकर्षतोऽन्तर्हृदयाद्दासीपतिमजामिलम्" भाग॰ ६।१अ॰ । नारायणस्येदम् अण् । ४नारायणसम्बन्धिनि सैन्यभेदे "मत्संहननतुल्यानां गोपानामर्बुदं महत् । नारायणा इति ख्याताः सर्वसंग्रामयोधिनः" भा॰उ॰ ७अ॰

१धर्मपुत्रविशेषे नरसन्दे दशग्रम्। सुखबोधोक्ते १तैलभेदे न० तच्च त्रिविधं स्वल्पं हृहन्महच्चेतिभेदात्। तेषां पाकद्रव्यादि क्रमेण तत्रोक्तं तत्र

स्वल्पम् "विल्वाग्निमन्थश्योनाकपाटलापारिभद्रकाः। प्रसारण्यश्वगन्धा च वृहती कण्टकारिका। बला चातिबला चैव श्वदंष्ट्रा सपुनर्णवा। एषां दश पलान् भागान् चतुर्द्रोणेऽम्भसः पचेत्। पादशेषं परिस्राव्य तैलपात्रे प्रदापयेत्। शतपुष्पा देवदारु मांसी शैलेयकं वचा। चन्दनं तगरं कुष्ठमेलापर्णीचतुष्टयम्। रास्ना तुरगगन्धा च सैन्धवं सपुनर्णवम्। एषां द्विपलिकान् भागान् पेषयित्वा विनिःक्षिपेत्। शतावरीरसञ्चैव तैलतुल्यं प्रदापयेत्। आजं वा यदि वा गव्यं क्षीरं दत्त्वा चतुर्गुणम्। पाने वस्तौ तथाभ्यङ्गे भोज्ये चैव प्रशस्यते। अश्वो वा वातसम्भग्नो गजो वा यदि वा नरः। पङ्गुकः पीठसर्पी च तैलेनानेन सिध्यति। अधोभागे च ये वाताः शिरोमध्यगताश्च ये। दन्तशूले हनुस्तम्भे मन्यास्तम्भे गलग्रहे। यस्तु शुष्यति चैकाङ्गं गतिर्यस्य च विह्वला। क्षीणेन्द्रिया नष्टशुक्रा ज्वरक्षीणाश्च ये नराः। बधिराः सुप्तजिह्वाश्च मन्दमेधस एव च। अल्पप्रजा च या नारी या च गर्भं न विन्दति। वातार्त्तौ वृषणौ येषामन्त्रवृद्धिश्च दारुणा। एतत् तैलवरं तेषां स्वल्पं नारायणं स्मृतमिति"

वृहत् "शतावरी चांशुमती पृश्निपर्णी शठी बला। एरण्डस्य च मूलानि वृहत्याः पूतिकस्य च। गवेधुकस्य मूलानि तथा सहचरस्य च। एषां दशपलान् भागान् जलद्रोणे विपाचयेत्। पादशेषं रसे पूते तत्र तैलं समावपेत्। पुनर्णवावचादारुशताह्वाचन्दनागुरु। शैलेयं तगरं कुष्ठमेलामांसीस्थिरावला। अश्वाह्वासैन्धवं रास्नापलाशानि च पेषयेत्। गव्याजपयसः प्रस्थौ द्वौ द्वावत्र प्रदापयेत्। शतावरीरसप्रस्थं तैलप्रस्थं विपाचयेत्। अस्य तैलस्य सिद्धस्य शृणु वीर्यमतः परम्। अश्वानां वातभग्नानां कुञ्जराणां तथा नृणाम्। तैलमेतत् प्रयोक्तव्यं सर्ववातनिवारणम्। आयुष्मांश्च नरः पीत्वा निश्चयेन दृढो भवेत्। गर्भमश्वतरी विन्देत् किम्पुनर्मानुषी तथा। हृच्छूलं पार्श्वशूलञ्च तथैवार्द्धावभेदकम्। अपचिं गण्डमालाञ्च वातरक्तं हनुग्रहम्। कामलां पाण्डुरोगञ्च अश्मरीञ्चापि नाशयेत्। तैलमेतद् भगवता विष्णुना परिकीर्त्तितम्। नारायणमिति ख्यातं वातान्तकरणं शुभमिति"। इह्मारीयणतैलम्।

महत् "विल्वाश्वगन्धा वृहती श्वदंष्ट्रा श्योनाकवाट्यालकपारिभद्रम्। क्षुद्रा कठिल्लातिबलाग्निमन्थं मूलानि चैषां सरलायुतानाम्। मूलं विदध्याच्च पाटलीयं प्रस्थे कमेषां प्रवदन्ति तज्ज्ञाः। सपादप्रस्थं विधिनोद्धृतञ्च द्रोणैश्चतुर्भिरेव पक्वा। पादावशेषेण रसेन तेन तैलाढकाभ्यां सममेव दुग्धम्। छागस्य मांसद्रवमेव तुल्यमेकत्र सम्यक् विपचेत् सुबुद्धिः। दद्याद्रसञ्चैव शतावरीणां तैलेन तुल्यं पुनरेव तत्र। रास्नाश्वगन्धामरदारुकाष्ठं वर्षी बलव्का गुरुदेवराणि। सिन्धूत्थमांसीरजनीद्वयञ्च शैलेयकं चन्दनपुष्कराणि। एला चवटी तगराब्दपत्रं भृङ्गाह्वपर्णीसु वचापलाशम्। स्थौणेयवृश्चीरकचोरकाख्यमेभिः समस्तैर्द्विपलप्रमाणैः। कर्पूरकाश्मीरमृगाह्वजानां दद्यात् सुगन्धाय वदन्ति केचित्। प्रस्वेददौर्गन्ध्यनिवारणार्थं चूर्णीकृतानाम् द्विपलप्रमाणम्। आलोड्य सम्यक् त्रिविधविदग्धं नारायणं नाम महच्च तैलम्। सर्वैः प्रकारैर्विधिवत् प्रयोज्यमनस्य पुंसां पवनार्द्दितानाम्। ये पङ्गवः पीठविसर्पणाश्च एकाङ्गहीनाद्हितवेपमानाः। बाधिर्यशुक्रक्षयपीड़िताश्च मन्याहनुस्तम्भशिरोगदार्त्ताः। मुक्ता नरास्ते बलवीर्ययुक्ताः संसेव्य तैलं सहसा भवन्ति। बन्ध्या च नारी लभते च पुत्रं वीरोपमं सर्वगुणोपपन्नम्। शाखाश्रिते कोष्ठगते च वाते हन्नौ विधेयं पवनार्द्दितानाम्। जिह्वानिले दन्तगते च शूले क्षौम्यादकोऽज्वर कर्षितानाम्। प्राप्नोति लक्ष्मीं प्रमदाप्रियत्वं जीवेच्चिरं चापि भवेद्युवेव। देवासुरे युद्धवरे वणीघ्न कार्य्यस्य भग्नानसुरैः सुरांश्च। नारायणेनापि सुरार्थकार्थं स्वनामतैलं विहितन्तु तेषाम्"।

**नारायणक्षेत्र** न० ६त०। नारायणस्वामिके गङ्गातटक्षेत्रभेदे "प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम्। तत्र नारायणः स्वामी नान्यः स्वामी कथञ्चन" ब्रह्मपु०। अत्र च वर्ज्यमुक्तं ब्रह्मवै पु० ४५अ०।

"अत्र किञ्चिन्न दद्याच्च स्वात्मपालाय बुधान्। अत्र प्रतिग्रहे राजन्! विक्रीता जाह्नवी भवेत्। विक्रीतायाञ्च जाह्नव्यां विक्रीतः स्याज्जनार्द्दनः। जनार्द्दने च विक्रीते विक्रीतं भुवनत्रयम्। कोऽपि न स्यात्कर्त्तास्य निःसत्त्वत्वप्रसङ्गतः"। तत्र कर्त्तव्यानि यथा "दीक्षाञ्च देवपूजाञ्च जपं गङ्गातटे चरेत्। सुप्रवासः पिधायात्र सावित्रीजपमाचरेत्। श्राद्धञ्च तर्पणञ्चैव परोपकारकर्म

च। परोद्देशश्च मनसा त्यक्तद्रव्यस्य दापनम्। स्तवपाठश्च मौनञ्च नीचालापविवर्ज्जनम्। केवलं वारिपानञ्च कर्त्तव्यं ब्रह्मभावतः। एतानि किल कर्माणि चैवं नारायणे चरेत्”।

**नारायणतीर्थ** न० तीर्थभेदे शिवपु०।

**नारायणप्रिय** पु० ६त०। १शिवे २पीतचन्दने नैघण्टुप्रका०।

**नारायणबलि** पु० नारायणमुद्दिश्य देयो बलिः। दुर्मरणमृतानामौर्द्ध्वदैहिकक्रियासम्प्रदानतायोग्यत्वार्थं नारायणादिपञ्चदेवतोद्देशेन देये बलिभेदे तस्य निमित्तञ्च आत्मघातिनृशब्दे ६६०पृ० उक्तं तद्विधानं निर्णयसिन्धावुक्तं यथा

“नारायणबलिस्तु हेमाद्र्याद्युक्तप्रकारेणोच्यते मत्स्यादौ क्रियानिबन्धे गारुड़े तर्पणमुक्तम् ‘कार्य्यं’ पुरुषसूक्तेन मन्त्रैर्वा वैष्णवैरपि। दक्षिणाभिमुखो भूत्वा प्रेतं विष्णुर्मिति स्मरन्। अनादिनिधनो देवः शङ्खचक्रगदाधरः। अक्षय्यः पुण्डरीकाक्षः प्रेतमोक्षप्रदो भवेति”। शुक्लैकादश्यां देशकालौ संकीर्त्त्यामुकगोत्रस्यामुकस्य दुर्मरणात्मघातजदोषनाशार्थम् और्द्ध्वदैहिकसम्प्रदानत्वयोग्यतासिद्ध्यर्थं नारायणबलिं करिष्ये इति सङ्कल्प्य ब्रह्माणं विष्णुं शिवं यमं प्रेतञ्च पञ्चकुम्भेषु स्थापयेत् “विष्णुः स्वर्णमयः कार्य्यो रुद्रस्ताम्रमयस्तथा। ब्रह्मा रौप्यमयस्तत्र यमो लोहमयो भवेत्। प्रेतोदर्भमयः कार्य्य इति देवप्रकल्पनेति” गारुड़ोक्तासु सर्वासु हैमीषु वा प्रतिमासु षोडशोपचारैः पुरुषसूक्तेनाभ्यर्च्याग्निं प्रतिष्ठाप्य चरुं पुरुषसूक्तेन प्रत्यृचं नारायणायेदमिति हुत्वा देवानामग्रे दक्षिणाग्रदर्भेषु विष्णुरूपं प्रेतं स्मरन् नामगोत्राभ्यां मधुघृततिलयुतान् दश पिण्डान् यज्ञोपवीत्येवामुकगोत्रामुकशर्मन्! प्रेत। विष्णुरूपाय ते पिण्ड उपतिष्ठतामिति दत्त्वा पुरुषसूक्तेनाभिमन्त्र्य तेनैव शङ्खोदकेनाभिषिच्याभ्यर्च्यामुकशर्माणममुकगोत्रं विष्णुरूपं प्रेतं तर्पयामीति पुरुषसूक्तेन प्रत्यृचं तर्पयित्वा एवमामासं ब्रह्मादिपञ्चभ्यो दद्यात् मन्त्रस्तु “ब्रह्मविष्णुमहादेवा यमश्चैव सकिङ्करः। बलिं गृहीत्वा कुर्वन्तु प्रेतस्य च शुभां गतिम्”। मिताक्षरायान्तु होमबल्यादि नोक्तम्। ततः प्रतिदैवतं त्रिविधं फलं शर्करामधुगुडघृतानि च निवेद्य पिण्डानभ्यर्च्य नद्यां क्षिप्त्वा रात्रौ नव सप्त पञ्च वा विप्रान्निमन्त्र्योपोषितो जागरं कृत्वा श्वोभूते पुनर्विष्णुं ब्रह्माणं रुद्रं यमं संपूज्यैकोद्दिष्टविधिना श्राद्धपञ्चकं करिष्ये इत्युक्त्वा विष्णुयमब्रह्मरुद्रप्रेतान् स्मरन् विप्रानुपवेश्य प्रेतस्थाने चैकं विष्णुं स्मरन् पाद्यावाहनार्घ्ययुतं तृप्तिप्रश्नान्तं कृत्वोल्लेखनादि कृत्वाग्रशेषेण विष्णवे ब्रह्मणे शिवाय यमाय सपरिवाराय चतुरः पिण्डान् दत्त्वा प्रेतनामगोत्रे स्मृत्वा विष्णुनाम्ना पञ्चमं दत्त्वाभ्यर्च्याचान्तेभ्यो दक्षिणां दत्त्वैकं प्रेतं स्मृत्वा विशेषतः सन्तोष्य विप्रैः प्रेतायेदं तिलोदकमुपतिष्ठतामिति सतिलमुदकं दापयित्वा भुञ्जीतेति। अत्र विशेषान्तरं च अनन्तभट्टकृतान्त्येष्टिपद्धतौ ज्ञेयम्”।

**नारायणसरस्** न० ६त०।तीर्थभेदे। “तेऽपि (शवलाश्वाः) पित्रा समादिष्टाः प्रजासर्गे धृतव्रताः। नारायणसरो जग्मुर्यत्र सिद्धाः स्वपूर्वजाः” भाग० ६।५।२१

**नारायणाश्रम** न० ६त०। तीर्थभेदे “वाराणसी मधुपुरी पम्पा बिन्दुसरस्तथा। नारायणाश्रमो नन्दा सीतारामाश्रमादयः” भाग० ७।१४।२६

**नारायणी** स्त्री नारायणस्येयम् अण् ङीप्। नारायणस्य १शक्तौ २लक्ष्म्यां ३दुर्गायाञ्च तन्निरुक्तिः “यशसा तेजसा रूपैर्नारायणसमा गुणैः। शक्तिर्नारायणस्येयं तेन नारायणी स्मृता” ब्रह्मवै० प्र०ख० ४५अ०। “नारायणार्द्धाङ्गभूता तेन तुल्या च तेजसा। तथा तस्य शरीरस्था तेन नारायणी स्मृता” जन्मख० २७अ०। नारस्य जीवसंघस्य जलस्य वा अयनी स्थानभूता। “जलायना नराधारा समुद्रशयनाऽपि वा। नारायणी समाख्याता नरनारीप्रवर्त्तिका। वसत्यदृष्टा सर्वेषु भूतेष्वन्तर्हिता यतः। देव्या व्याप्तमिदं सर्वं जगत् स्थावरजङ्गमम्” देवीपु०। ४शतावर्य्यां हेमच०। ५सुङ्गलसुनिपत्न्यां च। “सर्वस्यार्त्तिहरे देवि! नारायणि! नमोऽस्तु ते” देवीमा०

**नारायणीय** त्रि० नारायणस्येदम् “वृद्धाच्छः” पा० छ। १नारायणसम्बन्धिनि २तदुपाख्याने। तच्चोपाख्यानं नारदनारायणर्षिसंवादरूपं भा०शा०३३६अ० अध्यायावधि “नारदस्य च संवादमृषेर्नारायणस्य च” इत्युपक्रमे “नारायणीयमाख्यानमेतत्ते कथितं तव” इत्यन्तेन ३४८ अध्यायान्तेन दर्शितम्। ३तत्प्रतिपादकोपनिषद्भेदे च उपनिषच्छब्दे दृश्यम्। [१२२२ पृ०दृश्यम्।

**नारायणोपनिषद्** स्त्री ६त०। उपनिषद्भेदे उपनिषच्छब्दे

**नाराशंस** पु० नरैराशंस्यते आ+शन्स–कर्मणि घञ् नराशंसाः पितरः तेषामयम् अण्। नाराशंसानां पितॄणां सोमपानसाधने १चमसे “ते नाराशंसा

आवैश्वदेवात्” कात्या०श्रौ० ६।१२।८ “ते चमसा नाराशंससंज्ञा भवन्ति” कर्कः “आप्यायितांश्चमसान् सादयन्ति ते नाराशंसा भवन्ति” आश्व०श्रौ० ५।६।१०। नाराशंसा भवन्ति इत्यर्थः अन्वर्थसंज्ञेयं नाराशंसा नाम तथ! पितृगणा ऊमाः ऊर्वाः काव्याश्चेति तेषामनुसवनं यथासङ्ख्येनाप्यायितानां चमसानां देवता भवन्तीति नाराशंसाश्चमसा भवन्ति” नारायण०। २तद्देवतासु पितृषु “अथ यदि नाराशंसेषु सन्नः किञ्चिदापद्यते पितृभ्यः नाराशंसेभ्यः इति जुहुयात् पितरोहि तर्हि नाराशंसाः” शत०ब्रा०१२।६।२१। ३पितृचमसस्थसोमे च “मनो न्वा हुवामहे नाराशंसेन सोमेन” ऋ०१०।५७।३ “नाराशंसेन चमसगतेन सोमेन। नरैः शस्यन्ते इति नराशंसाः पितरः तेषां चमसानां कम्पनमेव होमः। तथाविधेन सोमेन” भा०। ४मन्त्रभेदे “येन नराः प्रशस्यन्ते स नाराशंसोमन्त्रः” निरु० ९।९ स च रुद्रदैवत्यः यथाह “वाकोवाक्यं पुराणञ्च नाराशंसाश्च गाथिकाः” याज्ञ० व्याख्याने “नाराशंसान् रुद्रदैवत्यामन्त्रान्” मिता०।

**नारिकेल** पु० नल-इण् नालिः तेन वायुना जलेन वा इलति चलति इल-क कर्म० रलयोरैक्यम्। स्वनामख्याते वृक्षे अमरः। नालिकेरोऽपि तत्रार्थे शब्दरत्ना०। “नारिकेलफलं शीतं दुर्जरं वस्तिशोधनम्। विष्टम्भि बृंहणं बल्यं वातपित्तास्रदाहनुत्। विशेषतः कोमलं नारिकेलं निहन्ति पित्तज्वरपित्तदोषान्। तदेव जीर्णं गुरुपित्तकारि विदाहि विष्टम्भि मतं भिषग्भिः” तस्य जलगुणाः। “तस्याम्भः शीतलं हृद्यं दीपनं शुक्रलं लघु। पिपासा पित्तजित् स्वादु वस्तिशुद्धिकरं परम्”। तस्य मस्तिष्कगुणाः “नारिकेलस्य तालस्य खार्जूरस्य शिरांसि तु। कषायस्निग्धमधुरबृंहणानि गुरूणि च” भावप्र० “बालस्य नारिकेलस्य जलं प्रायो विरेचनम्” इति राजवल्लभः। कांस्यपात्रे तत् जलं मद्यतुल्यं यथाह “नारिकेलोदकं कांस्ये ताम्रपात्रे स्थितं मधु। गव्यञ्च ताम्रपात्रस्थं मद्यतुल्यं घृतं विना” इति कर्मलोचनम्। तस्येदमण्। २तदीये त्रि० “नारिकेलासवं तत्र शात्रवं च यशः पपुः” रघुः। अष्टम्यां तद्भक्षणनिषेधः “नारिकेले च मूर्खता” ति०त० तिथिभेदेऽभक्ष्योक्तौ “कोजागररात्रौ तदुदकपानं कार्यं” यथाह “नारिकेलोदकं पीत्वा कोजागर्त्ति महीतले” ति०त० कोजागरशब्दे दृश्यम्।

**नारिकेलक्षीरी** स्त्री क्षीरिकाभेदे “नारिकेलं समुद्धृत्य छिन्नं पयसि गोः क्षिपेत्। सितागव्याज्यसंयुक्तं तत् पचेन्मृदुनाग्निना। नारिकेलोद्भवा क्षीरी स्निग्धा शीतातिपुष्टिदा। गुर्वी सुमधुरा वृष्या रक्तपित्तानिलापहा” भावप्र०।

**नारी** स्त्री नरजातिः स्त्री नृ+नर+वा जातौ ङीष् नि०। १नरजातिस्त्रियां तद्भेदा रतिमञ्जर्यामुक्ता यथा “पद्मिनी चित्रिणी चैव शङ्खिनी हस्तिनी तथा। चतस्रो जातयो नार्य्यां रतौ ज्ञेया विशेषतः” अन्यथाऽपि त्रिधा “योषितस्त्रिविधा ब्रह्मन् सर्वेषां मूढचेतसाम्। साध्वी भोग्या च कुलटा ताः सर्वाः स्वार्थतत्पराः। परलोकभयात् साध्वी तथेह यशसेऽर्थतः। कामस्नेहाच्च कुरुते भर्त्तुः सेवाञ्च सन्ततम्। भोग्या भोगार्थिनी शश्वत् कामस्नेहेऽथ केवलम्। कुरुते पतिसेवाञ्च न च भोगाहृते धनम्। वस्त्रालङ्कारसम्भोगं सुस्निग्धाहारसुत्तमम्। यावत् प्राप्नोति सा भोग्या तावत्स्य वशगा प्रिया। कुलाङ्गारसमा नारी कुलटा कुलनाशिनी। कपटात् कुरुते सेवां स्वामिनो न च भक्तितः। सदा पुंयोगमाशंसुर्मनसा मदनातुरा। आहाराद्धिकं जारं प्रार्थयन्ती नवं नवम्। जारार्थे स्वपतिं तात! हन्तुमिच्छति पुंश्चली। तस्यां यो विश्वसेन्मूढो जीवनं तस्य निष्फलम्। कथिता योषितः सर्वा उत्तमाधममध्यमाः। स्वात्मारामा विजानन्ति सर्वथा ता न पण्डिताः” ब्रह्मवै०ब्रह्म०ख० २३अ०। गुरुत्रयपादके छन्दोभेदे “मो नारी” वृ०र०

**नारीकवच** पु० सूर्यवंश्ये अश्मकस्य पुत्रे मूलकापरपर्याये नृपभेदे “अश्मकान्मूलको जज्ञे यः स्त्रीभिः परिरक्षितः। नारीकवच इत्युक्तो निःक्षत्रे मूलकोऽभवत्” भाग० ९।९।४२ “स्त्रीभिः संवेष्ट्य परशुरामतः परिरक्षितः। अतो नारीकवच इत्युक्तः निःक्षत्रे सति क्षत्रवंशस्य मूलमभवत् अतो मूलक इति प्रोक्तः” श्रीधरः।

**नारीकेल** पु० नारिकेल+पृषो०। नारिकेलशब्दार्थे शब्दरत्ना० गौरा० ङीष्। नारीकेलीत्यप्यत्र स्त्री शब्दरत्ना०।

**नारीच** न० नाडीच+पृषो०। (नालिता) शाकभेदे राजवल्ल०

**नारीतरङ्गक** पु० नारीं तरङ्गयति तरङ्ग+णिच् ण्वुल्। नाडीचित्तचञ्चलकारके जारे षिड्गे शब्दमा०

**नारीतीर्थ** न० तीर्थभेदे भा०आ० २२६।२७अ० तदाविर्भवकथा दृश्या “मीषि पुण्यानि तीर्थानि ततः प्रभृति

श्चैव ह। नारीतीर्थानि नाम्नेह ख्यातिं यास्यन्ति सर्वतः। पुण्यानि च भविष्यन्ति पावनानि मनीषिणाम्” यत्र सप्तापस्नतिपञ्चाप्सरसः विप्रशापेन ग्राहतां प्राप्ता अर्जुनेन मोचिताः अतस्तत्तीर्थनारीतीर्थत्वेन ख्यातम्।

**नारीदूषण** न० ६त०। “पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम्। स्वप्नोऽन्यगेहवासश्च नारीणां दूषणानि षट्” मनूक्ते स्त्रीणां दोषभेदे। पानं सुरापानम्।

**नारीमुख** पु० नाडी मुखं प्रधानं यत्र। हृ०सं० १४अ० कूर्मविभागे नैर्ऋत्यामुक्ते देशभेदे “बडवामुखपारशवाम्बष्ठ कपिलनारीमुखानर्त्ताः”।

**नारीष्ट** त्रि० ६त०। १नारीप्रिये २मल्लिकायां स्त्री राजनि०।

**नारीष्ठ** त्रि० नार्य्यां तदानुकूल्ये तिष्ठति स्था–क षत्वम्। गन्धर्वभेदे “गन्धर्वाभ्यां नारीष्ठाभ्यां महाहाहाहूहूभ्यां स्वाहा” सां० श्रौ० ४।१०।७

**नारेय** पु० सत्राजित्पुत्रभङ्गकारस्य पुत्रभेदे “सभाक्षो भङ्गकारात्तु नारेयश्च नरोत्तमौ। जज्ञाते गुणसम्पन्नौ” हरिवं० ३९ अ०।

**नार्य्य** पु०नृ–ण्यत् नरहिते त्रि० अर्यं नयेदं अत् वा। नरहितसम्बन्धिनि यज्ञे निघण्टुः “नार्य्यस्य दक्षिणा” ऋ०८।४।२९। स्त्रियाम् च। नारङ्गे जम्बीरभेदे हेमच०।

**नार्य्यङ्ग** पु० नार्य्यं नरहितसम्बन्धिनं गच्छति गम–ड

**नार्य्यतिक्त** पु० नित्यकर्म०। किराततिक्ते नैघण्टुप्रकाशिका तस्य नरहितत्वात् तिक्तत्वाच्च तथात्वम्।

**नाल** स्त्री न०नल–बन्धे ज्वला० ण। १काण्डे २पद्मादिदण्डे हेमच० “नालाग्रचारणचाणभुजो मरालः” नैष० “कश्चित् कराभ्यामुपगूढनालम्” रघुः “तपोदपर्य्यायतनालदण्डः” कुमा०। नल–घञ्। ३जलनिर्गमे जलादेः प्रवाहे पु० “यथा तोयार्थिनस्तोयं यन्त्रनालादिभिः शनैः” मार्कण्डेयपु०।

**नालम्बी** स्त्री शिवस्य वीणायाम् हेमच०।

**नालवंश** पु० नालं वंश इव। नले तृणभेदे राजनि०।

**नालि(ली)** स्त्री नल–णिच् इन् वा ङीप्। १नाड्यां दण्डे २शिरायां ३पद्मादिदण्डे ४शाकभेदे च द्विरूपकोषः।

**नालिक** पु० नालमेव नालमस्त्यस्य ठन्। १पद्मे शब्दरत्ना०। २महिषे पुंस्त्री० त्रिका० नाला+स्वार्थे क। नालिका नालायां स्त्री नालिताशाके शब्दच०। चर्मकायां स्त्री जटाध०। हस्तिकर्णवेधनिकायां स्त्री हारा०। “गजाः सस्तकरतल लोलनालिका” माघः। श्वेतकलम्बां कल्पतरुः “कुसुम्भं नालिकाशाकमिति” ति०त० पाठान्तरम्।

**नालिकेर** पु० नल–बा० इण् केन वायुना ईर्य्यते ईर–घञ् कर्म०। नारिकेले तच्छब्दे दृश्यम्। तस्य खण्डपाकविधिगुणादि वैद्यके उक्तं यथा “कुडवं नालिकेरस्य सूक्ष्मं दृषदि पेषितम्। गुडखण्डस्य कुडवं गव्यक्षीरे चतुर्गुणे। आलोड्य नालिकेरस्य जले मृद्वग्निना पचेत्। धान्यकं पिप्पलीं शुण्ठीं चातुर्जातं सुचूर्णितम्। शाण प्रमाणं प्रत्येकं शीतीभूते क्षिपेद्बुधः। नालिकेरस्य खण्डोऽयं पुंस्त्वनिद्राबलप्रदः। अम्लपित्तं क्षयं कासं शूलं च परिणामजम्। नाशयेद्रक्तपित्तञ्च शुष्कं दावानलो यथा”। अत्र घृतपलेन कुष्माण्डवन्नालिकेरस्य भर्जनं विधेयमिति सम्प्रदायः। हृ०सं० १४अ० कूर्मविभागे आग्नेय्यामुक्ते २देशभेदे “वृषनालिकेरचर्मद्वीपेत्यादि” तद्वाक्यम्। पृषो० रस्य लः। नालिकेलोऽप्यत्र।

**नालिता** स्त्री नल–णिच्–क्त। नारीचशब्दोक्तगुणके पट्टशाके स्वनामख्याते शाकभेदे शब्दर०।

**नाली** स्त्री नालि+वा ङीप्। १शाककडम्बे (डाँटा) ख्याते पदार्थे मेदि०। “नालेन रहिता नाली सुखिता सुपिपीडिता। हते तप्ते परिक्षिप्ता चिक्किणीपलसंयुता। नाली सरा लघुः शीता पित्तनुत् कफवातला। शुक्रशोककरी ज्ञेया क्षिप्रा शोषघ्निका मता” शब्दार्थचि०। २हस्तिकर्णवेधन्याम् ३दण्डात्मककाले घट्याम् त्रिका०। ४पद्मे शब्दर०५पद्मदण्डे ६प्रणाल्याम् ७वाद्यविशेषे शब्दार्थचि०।

**नालीक** पु०नाल्या कायति कै–क। मुखमात्रे लौहसंयुक्ते अन्तश्छिद्रे १शरभेदे २शल्याङ्गे ३पद्मसमूहे च न०मेदि० ४शल्ये विश्वः “कर्णिनालीकनाराचानुत्सृजन्तो महारथाः” भा०व० ६१अ० ५नारिकेलकमण्डलौ “तल्पे न शयीत नग्नो नालीकं बिभृयादुव्रती” स्मृतिः “कामुकानिव नालीकांस्त्रिणताः सहसाऽमुचन्” माघः। ततः पुष्करा० देशे इनि। नालीकिनी तत्समूहे स्त्री।

**नालीघटी** स्त्री नाल्या दण्डकालस्य बोधनार्थं घटी डस्य लः। घटीवादनवाद्यभेदे स्त्री शब्दार्थचि०।

**नालीप** पु० कदम्बके नैघण्टुप्रकाशिका। [शब्दार्थ

**नालीव्रण** पु०न० नाडी तत्र व्रणः+डस्य लः। नाडीव्रण-

**नाल्व** त्रि०नलस्यादूरदेशादि सङ्काशा०ण्य। नलस्यादूरदेशादौ

**नावयज्ञिक** पु० नवयज्ञस्य तत्प्रतिपादकग्रन्थस्य व्याख्यानो

ग्रन्थः ठञ्। नवयज्ञप्रतिपादकग्रन्थव्याख्याने १ग्रन्थे नवयज्ञो वर्त्ततेऽस्मिन् काले तत्र इति वा ठञ्। २नवयज्ञविधानयोग्ये काले च।

**नाविक** पु॰ नावा तरति "नौद्व्यचष्ठन्" पा॰ ठन्। १नावा तारिणि। नौरस्त्यस्य वाह्यतया व्रीह्या॰ पक्षे ठन्। नौपृष्ठस्थदण्डचालनेन नौकाचालके २कर्णधारे "महावातसमुद्भूतामपरीक्षितनाविकाम्। अस्थनौप्रतिबद्धां वानोपेयान्नावमातुराम्" काम॰नी॰ "नाविकपुरुषे न विश्वासः"। "अख्यातिरिति ते कृष्ण! मग्ना नौर्नाविके त्वयि" इति च उद्भटः।

**नाविन्** त्रि॰नौरस्त्यस्य व्रीह्या॰ पक्षे इनि। नाविके स्वामी।

**नावोपजीवन** पु॰ नावा उपजीवनमस्य व्यार्थे अलुक्स॰। १नौचालनोपजीविजातिभेदे "निषादो मद्गुरं सूते दासं नावोपजीवनम्" मा॰आनु॰ ४८अ॰सङ्करजात्युक्तौ।

**नाव्य** त्रि॰नावा तार्य्यं यत् "वान्तोयि प्रत्यये" पा॰आवादेशः। १नौकयातार्य्ये देशे २नौतार्य्ये नद्यादौ च "नाव्याः सुप्रतराः नदीः" रघुः। नवस्य भावः ष्यञ्। ३नूतनत्वे न॰

**नाव्युदक** न॰ नावि स्थितमुदकं नावि अग्निहोत्रसमाप्तिं यावदुदकम्। १नौकास्थिते जले अग्निहोत्रार्थमग्निप्रणयने कृते जलमात्रे च "तयोर्जलयोराहिताग्निना पाननिषेधः कात्या॰श्रौ॰ ४।१०।१५ उक्तो यथा "अन्तातिथ्यपनोदपूतिदारौधानवीर्षपक्वनाव्युदकानि वर्जयेत्" सू॰ नाव्युदकम् नौशब्देन "नौर्ह वा एषा स्वर्ग्या यदग्निहोत्रमिति" श्रुतेरग्निहोत्रमुच्यते तेन अग्निहोत्रार्थमुद्धरणे कृते तत्समाप्तिं यावत् उदकपानं न कुर्य्यादित्यर्थः। अथ वा नावि नौकायां यदुदकम् तस्य पानं न कुर्य्यादिति मानवे "या अन्तर्नाव्याप: स्युर्न तासामाचामेन्न क्रियं दावौदध्यादिति"। यजमान आधानानन्तरमेतानि यावज्जीवं वर्जयेत्" कर्क॰।

**नाश** पु॰ नश–भावे घञ्। १ध्वंसे निधने २अदर्शने ३पलायने ४अनुपलम्भे च मेदि॰। ध्वंसश्च जन्याभावः इति नैयायिकाः अतीतावस्थेति सांख्याः "नाशः कारणलयः" सां॰सू॰ "लीङ् श्लेषणे इत्यनुशासनात् लयः सूक्ष्मतया कारणेष्वविभागः स एवातीतावस्थाख्यो नाश इत्युच्यते" प्र॰भ॰भा॰। आत्यन्तिकनाशश्च कारणेन सह नाशः इति भेदः "विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते" संक्षेप॰ "अधिष्ठानावशेषो हि नाशः कल्पितवस्तुनः" वेदा॰प॰ "स्मृतिभ्रंशात् बुद्धिनाशो बुद्धिनाशात् प्रणश्यति" गीता।

**नाशन** त्रि॰ नाशयति नश–णिच् ल्यु। नाशके "त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः" गीता। ण्वुल् नाशकोऽप्यत्र "ये परस्वापहर्त्तारः परस्वानाञ्च नाशकाः" भा॰ अनु॰ २३अ॰।

**नाष्टिक** त्रि॰नष्टं द्रव्यं स्वामित्वेनार्हति वा॰ ठञ्। १नष्टद्रव्यार्हे तत्स्वामिनि। "अथ मूलमनाहार्य्यं प्रकाशक्रयशोधितः। अदण्ड्यो मुच्यते राज्ञा नाष्टिको लभते धनम्" इति मनुः "यदि स्वं नैव कुरुते प्रमाणैर्नाष्टिको धनम्। प्रसङ्गविनिवृत्त्यर्थं चौरवद्दण्डमर्हति" वी॰मि॰ व्यासः। प्रसङ्गः चौरत्वसंशयः।

**नाष्ट्र** त्रि॰ नश+णिच्–ष्ट्रन्। नाशके स्त्रियां टाप् गौरादिगणे मातामहीशब्दस्यपठनात् षितां ङीष् अनित्य इति षित्त्वेऽपि स्त्रियां न ङीष्। "सूर्य्यो मा दिवाभ्यो नाष्ट्राभ्यः पातु" ताण्ड्य॰ ब्रा॰ १।४।२ "विश्वाभ्यो मा नाष्ट्राभ्यःपाहि" यजु॰ २।१२

**नासत्य** पु॰ द्वि॰व॰। नास्ति असत्यं यस्य नभ्राडित्यादिना पा॰ नञः प्रकृतिभावः। अश्विनीकुमारयोः अमरः। "नासत्याभ्यां वयति वपुः" यजु॰ १९।८२ अश्विनीकुमारौ च द्वौ नासत्यदस्रनामानौ यथाह "देवौ तस्यामजायेतामश्विनौ भिषजां वरौ। नासत्यश्चैव दस्रश्च स्मृतौ द्वावश्विनाविति" हरिवं॰ ९अ॰। तेनास्य प्रत्येकाभिप्रायत्वे-एकवचनान्ततापि हरिवंशे तथाप्रयोगात्। निरुक्तकारस्तु ६।१३ "ताँ अध्वर उशतो यक्ष्यग्ने श्रुष्टी भगं नासत्या पुरन्धिम्" इमामृचमधिकृत्य नासत्यशब्दस्य निरुक्तिभेदानाह। सत्यावेव नासत्यावित्यौर्णवाभः। सत्यस्य प्रणेतारावित्याग्रायणः, नासिकाप्रभवौ बभूवतुरिति वा"। तयोर्नासाभवत्वं च अरुणात्मजशब्दे ३५९पृ॰ दृश्यम्।

**नासमौजस्** पु॰ भजमानवंश्यस्य कम्बलवर्हिषः पुत्रभेदे "असमौजाः सुतस्तस्य नासमौजाश्च तावुभौ" हरिवं॰३९अ॰ तत्पुत्रोक्तौ।

**नासा** स्त्री नास–शब्दे भावे अ। १शब्दे वा॰ करणे अ। २नासिकायां ३गन्धग्राहकेन्द्रियभेदे च। द्वारोपस्थित काष्ठे (ञ्ञनकाठ) (कपालि) ख्याते ४पदार्थे अमरः ५वासकवृक्षे राजनि॰ तत्पुष्पस्य नासाकृतित्वात्तस्य तथात्वम्। नासायाः शुभाशुभलक्षणं गारुडे उक्तं यथा "शुकनासः सुखी स्याच्च शुष्कनासेऽतिजीवनम्। छिन्नाग्रकूपनासः स्यादगम्यागमने रतः। दीर्घनासे च सौभाग्यं चौर आकुञ्चितेन्द्रियः। स्त्रीमृत्युश्चिपिटनास

चर्ज्जुभोग्यतां भवेत् । अल्पच्छिद्रा सुपुटा च अवक्रा च न्दपेश्वरे । क्रूरे दक्षिणवक्रा स्यादृनिनां च च्युतं भवत्" इति गरुडपु० ।

**नासागतरोग** पु० सुश्रुतोक्ते नासागतव्याधिभेदे यथा "अथातो नासागतरोगविज्ञानीयमध्यायं व्याख्यास्यामः। अपीनसः१ पूतिनस्यं२ नासापाकस्तथैव च। तथा-शोणितपित्त४ञ्च पूयशोणित५मेव च । क्षवथुर्भ्रं शथु७-र्दीप्तो८ नासानाहः९ परिस्रवः१० । नासाशोषेण११ सहिता दशैकश्चेरिता गदाः। चत्वार्य्यर्शांसि चत्वारः शोफाः सप्तार्बुदानि च। प्रतिश्यायाश्च ये पञ्च वक्ष्यन्ते सचिकित्सिताः। एकत्रिंशन्मितास्ते तु नासा-रोगाः प्रकीर्त्तिताः। आनह्यते यस्य विधूप्यते च प्रपच्यते क्लिद्यति चापि नासा। न वेत्ति यो गन्ध-रसांश्च जन्तुर्जुष्टं व्यवस्येत्तमपीनसेन१। तस्यानिलश्ले-ष्मभवं विकारं ब्रूयात्प्रतिश्यायसमानलिङ्गम्। दोषै-र्विदग्धैर्गलतालुमूले संवासितो यस्य समीरणस्तु। निरेति पूतिर्मुखनासिकाभ्यान्तं पूतिनस्यं२ प्रवदन्ति रोगम्। घ्राणाश्रितं पित्तमरूंषि कुर्य्याद्यस्मिन्विकारे बलवांश्च पाकः। तं नासिकापाक३मिति व्यवस्येद्विक्लेद-कोथावपि यत्र दृष्टौ। चतुर्विधं दिप्रभवं द्विमार्गं वक्ष्यामि भूयः खलु रक्तपित्तम्४। दोषैर्विदग्धैरथ वापि जन्तोर्ललाटदेशेऽभिहतस्य तैस्तु। नासा स्रवेत् पूयमसृ-ङ्विमिश्रं तं पूयरक्तं५ प्रवदन्ति रोगम्। घ्राणाश्रिते मर्म्मणि सम्प्रदुष्टे यस्यानिलो नासिकया निरेति। कफानुयातो बहुशः सशब्दस्तं रोगमाहुः क्षवथुं६ वि-धिज्ञाः। तीक्ष्णोपयोगादतिजिघ्रतो वा भावान् क-टूनर्कनिरीक्षणाद्वा। सूत्रादिभिर्वा तरुणास्थिमर्म्मण्यु-द्घाटिते यः क्षवथुर्निरेति। प्रभ्रश्यते नासिकयैव यश्च सान्द्रो विदग्धो लवणः कफस्तु। प्राक्सञ्चितो मूर्द्धि च पित्ततप्तं तं भ्रंशथुं७ व्याधिमुदाहरन्ति। घ्राणे भृश-दाहसमन्विते तु विनिःसरेद्धूम इवेह वायुः। नासा प्रदीप्तेव च यस्य जन्तोर्व्याधिन्तु तं दीप्त८मुदाहरन्ति। कफावृतो वायुरुदानसंज्ञो यदा स्वमार्गे विगुणः स्थितः स्यात्। घ्राणं वृणोतीव तदा स रोगो नासाप्रतीनाह९ इति प्रदिष्टः। अजस्रमच्छं सलिलप्रकाशं यस्याविवर्णं स्रवतीह १० नासा। रात्रौ विशेषेण हि तं नासापरि स्रावमिति व्यवस्येत्। घ्राणाश्रिते श्लेष्मणि मारुतेन पित्तेन गाढं परिशोषिते च। समुच्छ्वसित्यूर्द्ध्वमधश्च कृच्छ्रादयस्य नासापरिशोष ११ उक्तः। दोषैस्त्रिभिस्तैः पृथगेकशश्च ब्रूयात्तथार्शांसि तथैव शोफान्। शास्त्राक्य सिद्धान्तमवेक्ष्य वापि सर्वात्मकं सप्तकमर्बुदं तु। रोगः प्रतिश्याय इह प्रदिष्टः स वक्ष्यते पञ्चविधः पुरस्तात्। शोफाश्च शोफविज्ञाने नासास्रोतोव्यवस्थिताः। निदाने-ऽर्शांसि निर्दिष्टान्येवं तानि विभावयेत्"। [त्रिका० ।

**नासाच्छिन्नी** स्त्री नासा छिन्ना यस्याः ङीप्। पुर्णिकाखगे

**नासादारु** न० नासार्थं दारु। द्वारोर्द्ध्वस्थे काष्ठे (भन-काठ) (कपालि) अमरः।

**नासालु** पु०नासायै नासिकाशब्दाय अलति पर्य्याप्नोति अल-उण्। कट्फलवृक्षे शब्दच० नासायां तत्फलचूर्णयोगे हि नासिकाशब्दो भवतीति तस्य तथात्वम्।

**नासावंश** पु० नासा तन्मध्यभागोवंश इव उच्चत्वात्। नासा-पृष्ठस्थमध्यभागे। [काण्डीरलतायां राजनि०।

**नासासंवेदन** पु० नासा संविद्यतेऽनेन सम्+विद-ल्युट्।

**नासिकन्धम** त्रि० नासिकां धमति नासिका+ध्मा-खश् मुम् ह्रस्वश्च। नासिकां शब्दायमानां कुर्वति नासिकया शब्दकारके।

**नासिन्धय** त्रि० नासिकां तत्स्थजलं धयति नासिका+धे-खश् मुम् ह्रस्वश्च। नासिकास्थजलपायके नासिकया जलपायके।

**नासिका** स्त्री नास-शब्दे ण्वुल्। १घ्राणेन्द्रिये २तदाधार-गोलके नासाशब्दार्थे। अस्य शसादौ नसादेशः। नसः नसा नोभ्याम् नस्यमित्यादि। [हारा०।

**नासिकामल** पु०६त०। नासास्थिते मले सिङ्घाणे (सिकनी)

**नासिक्य** त्रि०नासिका+चतुरर्थ्यां सङ्काशा०ण्य। १नासिका-समीपादौ। स्वार्थे ष्यञ्। २नासिकायाम्। भवार्थे शरी-रावयवत्वात् यत्। ३नासिकाभवे त्रि०४अश्विनीकुमारयोः पु० द्वि०व० हेमच०। ५दक्षिणदेशभेदे "कर्णाटमहाटवि-चित्रकूटनासिक्यकोल्लगिरिः" वृ०सं० १४अ० दक्षिणस्यदे-शोक्तौ। स्वार्थे क। नासिक्यक नासायां शब्दमा०।

**नासीर** न० नासाय शब्दाय ईर्त्ते ईर-क। १अग्रेसरसैन्ये त्रिका० २अग्रेसरमात्रे त्रि० शब्दर० "नवस्य नासीर-गते वितेनतुः" नैष०।

**नास्ति** अव्य० अस्तीति विभक्तिप्रतिरूपमव्ययं "सह सुपा" पा० नशब्देन स०। अविद्यमानतायां सत्त्वाभावे यथा नास्तिक्षीरा "अस्ति नास्ति न जानाति" इति चाणक्यः

**नास्तिक** त्रि० नास्ति परलोकस्तत्साधनमदृष्टं तत्साक्षीश्वरो

वा इति मतिरस्य ठन्। १परलोकाभाववादिनि २तत्साधनादृष्टाभाववादिनि ३तत्साक्षिण ईश्वरस्यासत्त्ववादिनि च चार्वाकादौ चार्वाकादिश्च चार्वाकः माध्यमिकः योगाचारः सौत्रान्तिकः वैभाषिकः दिगम्बरश्चेति षड्विधः। "अतिमात्रोज्झितभीरनास्तिकः" माघः।

**नास्तिकता** स्त्री नास्तिकस्य भावः तल्। मिथ्यादृष्टौ परलोकाद्यभावज्ञानस्य मिथ्यात्वात् "प्रज्ञानाशात्मको मोहस्तथा धर्मार्थनाशकः। तस्मान्नास्तिकता चैव दुराचारश्च जायते" भा॰शा॰ १२३अ॰।

**नास्तिक्य** न॰ नास्तिकस्य भावः ष्यञ्। नास्तिकतायाम् "नास्तिक्यं वेदनिन्दाञ्च देवतानाञ्च कुत्सनम्" मनुः।

**नास्तिद** पु॰ आम्रवृक्षे शब्दच॰।

**नास्तिवाद** पु॰नास्ति परलोकादिरिति वादः। नास्तिकतायाम् "नास्तिवादार्थशास्त्रं हि धर्मविद्वेषणं परम्" हरिवं॰ २८अ॰।

**नास्य** न॰ नासायां भवम् शरीरावयवत्वात् यत्। १बलीवर्द्दनासाबन्धनरज्ज्वाम् "छिन्ननास्ये भग्नयुगे तिर्य्यक्प्रतिमुखागते" मनुः। नासा+चतुरर्थ्यां ण्य। २नासासन्निकृष्टादौ त्रि॰ "मनुष्यान् स्वपुरो दृष्ट्वा नास्यप्रायं चकार यः" हरिवं॰ २१७अ॰ नासासन्निकृष्टस्थानमित्यर्थः।

**नाह** पु॰ नह-बन्धने भावे घञ्। १बन्धने २कूटे च मेदि॰।

**नाहल** पु॰ म्लेच्छजातिभेदे हेमच॰।

**नाहुष(षि)** पु॰ नहुषस्यापत्यं वा॰ अण् अत इञ् वा। नहुषस्यापत्ये ययातौ। "ययातिर्नाहुषः सम्राडासीत् सत्यपराक्रमः" भा॰आ॰ ७५अ॰।

**नि** अव्य॰ नी-वा॰ डि प्रादिः उपसर्गः। १संघे २अधोभावे न्यग्भावे ३अर्थे ४आदेशे ५नित्ये ६कौशले ७बन्धने ८अन्तर्भावे ९समीपे १०दर्शने ११उपरमे १२आश्रये च गणरत्नमहोदधिः उदाहृतं च तत्रैव क्रमशस्तेष्वर्थेषु १निकरो मणीनां, २निपतितः। ३निगृहीतं ४निदेशितं, ५निविशते ६निपुणः ७निबद्धः ८निपीतमुदकम्। ९निकटः १०निदर्शनं ११निवृत्तः १२निलयः। १३संशये १४क्षेपे १५दाने १६मोक्षे १७विन्यासे च मेदि॰। १८निषेधे १९निश्चये दुर्गादासः।

**निः(नि)क्षेप** पु॰ निर्-(नि)वा क्षिप-भावे घञ्। १अर्पणे (गच्छितराखा) अष्टादशविवादान्तर्गते २विवादभेदे। स च वीर॰मि॰ विस्तरेण दर्शितो यथा "अथ निः(नि)क्षेपाख्यव्यवहारपदम्। तत्र निः(नि)क्षेपो नाम स्वद्रव्यस्य विश्वासेन पुरुषान्तरे स्थापनम्। तथा च नारदः "स्वद्रव्यं यत्र विश्रम्भान्निः(नि)क्षिपत्यविशङ्कितः। निः(नि)क्षेपो नाम तत्प्रोक्तं व्यवहारपदं बुधैरिति" अत्र न्यासोपनिध्योरतिव्याप्तिस्तयोर्लक्ष्यत्वान्निः(नि)क्षेप एव। ग्राहकस्यासमक्षं समर्पितो न्यास इत्युच्यते। अतएव वृहस्पतिः "राजचौरादिकभयाद्दायादानां च वञ्चनात्। स्थाप्यतेऽन्यगृहे द्रव्यं न्यासः स परिकीर्त्तितः" इति। अयमेवागणितद्रव्यस्थापने उपनिधिरित्युच्यते। तथा च नारदः "असङ्ख्यातमविज्ञातं समुद्रं यन्निधीयते। तज्जानीयादुपनिधिं निः(नि)क्षेपं गणितं विदुरिति"। असङ्ख्यातम् अनाख्यातम् अविज्ञातम् अदर्शितम्। अतएव वृहस्पतिः "असमक्षं व्यवहितमसङ्ख्यातमदर्शितम्। मुद्राङ्कितञ्च यद्द्रव्यं तदौपनिधिकं स्मृतमिति" व्यवहितं करण्डकादौ प्रक्षिप्य पिहितम्। अतएव याज्ञवल्क्यः "वासनस्थमविज्ञातं हस्तेऽन्यस्य यदर्प्यते। द्रव्यन्तदौपनिधिकं प्रतिदेयन्तथैव तदिति" वासनं द्रव्याधारकरण्डकादि तत्स्थं वासनस्थम्। हस्तग्रहणमुपलक्षणम्। अतएव नारदः "निः(नि)क्षिप्यते परगृहे तदौपनिधिकं स्मृतमिति"। तथा चायमेतेषां भेदः। ग्राहकस्य समक्षं गणयित्वा स्थापितं निः(नि)क्षेपः। गृहस्वामिनोऽसमक्षं गणितं वा तत्सिन्नाभते एतद्दातव्यमित्युक्त्वाऽन्यस्य तत्पुत्रादेर्हस्ते दत्तं न्यासः। मुद्राङ्कितमसमक्षमगणितं स्थापितमुपनिधिरिति। निः(नि)क्षेपादीनां स्थापनप्रकारमाह मनुः "कुलजे वृत्तसम्पन्ने धर्मज्ञे सत्यवादिनि। महापक्षे धनिन्यार्य्ये निः(नि)क्षेपं निः(नि)क्षिपेद्बुधः" इति। महापक्षे बहुतरबन्धुयुक्ते। निः(नि)क्षेपग्रहणमुपलक्षणम्। वृहस्पतिः "स्थानं दृष्ट्वा तदर्थं विधानस्य गुणांस्तथा। सत्यं शौचं बन्धुजनं परीक्ष्य स्थापयेन्निधिमिति" निधिरुपनिधिः। एतदप्युपलक्षणम्। निः(नि)क्षेपादीनां रक्षणं कथं कर्त्तव्यं ग्राहकेणेत्याह वृहस्पतिः "सयाचितं रक्षोदत्तं द्विविधं समुदाहृतम्। पुत्रवत्परिपाल्यं तद्विनश्यत्यनवेक्षणे" इति। पालयितुः फलमपालयितुर्दोषञ्चाह "ददतो यद्भवेत् पुण्यं हेमकुप्याम्बरादिकम्। तत् स्यात्फलमतो न्यासो यथैव शरणागतः। भर्तृद्रोहे यथा नार्य्याः पुंसः पुत्रसुहृद्वधे। दोषो भवेत्तथा न्यासे भक्षितोपेक्षिते तथा। न्यास-

द्रव्यं न गृह्णीयात्तद्यायस्त्वयंस्कारः। गृहीतं पालयेद्‌यत्नात् सवृद्ध्यार्पितमर्पयेदिति" व्यासबृहस्पतिवचनमुपलक्षणम्। तेन फलरक्षणादिकं निः(नि)क्षेपादिविषयसाधारणमिति मन्तव्यम्। दैवराजोपघाते याहकस्य न दोष इत्याह बृहस्पतिः "दैवराजोपघातेन यदि तन्नाशमाप्नुयात्। गृहीतद्रव्यसहितं न तद्दोषोऽत्र विद्यते" इति। ग्रहीतुरिति शेषः उपेक्षादिद्रव्यदोषाभावादिति भावः। गृहीतद्रव्यसहितमित्युपेक्षाभावनिश्चयायोक्तम्। तेन कश्चिन्निः(नि)क्षिप्तमात्रस्य विनाशे प्रमाणान्तरादुपेक्षाभावे निश्चिते ग्रहीतुर्दोषो न विद्यते इति मन्तव्यम्। दैवराजग्रहणमसमाधेयनिमित्तोपलक्षणार्थम्। अतएव कात्यायनः "राजदैविकचौरैर्वा निः(नि)क्षिप्तं यत्र नाशितम्। गृहीतुः सह भाण्डेन दातुर्नष्टन्तदुच्यते" इति। भाण्डेन अर्थेन। नारदोऽपि "ग्रहीतुः सह योऽर्थेन नष्ट एव स दायिनः। दैवराजकृते तद्वच्चेतज्जिह्मकारितमिति" तद्वदितिपदेनैकसुपमेयमन्यदुपमानमित्यवगम्यते। तेनैवं योजना ग्रहीतुरर्थेन सह यो नष्टः स दायिन एव एवन्दैवराजकृते यो नष्टः सोऽपि दायिन एव नष्ट इति दैवग्रहणमन्यस्करोपलक्षणम्। अतएव याज्ञवल्क्यः "न दाप्योपहृतन्तु राजदैविकतस्करैरिति" दैविकपदस्यार्थो विवृतो मनुना "चौरैर्हृतञ्जलेनोढमग्निना दग्धमेव वा। न दद्याद्यदि तस्मात्स न संहरति किञ्चनेति"। यदि तस्मान्निः(नि)क्षेपादल्पमपि धनस्य संहरति न गृह्णाति तर्हि न दद्यादित्यर्थः। तथा च स एव "ससद्रे नाप्नुयात्किञ्चिद्यदि तस्मान्न संहरेदिति" क्वचित् केनचिद्धेतुना नष्टमपि ग्रहीता मूल्यहारेण न दाप्य इत्याह कात्यायनः "ज्ञाता द्रव्यवियोगन्तु दाता यत्र विनिः(नि)क्षिपेत्। सर्वोपायविनाशेऽपि ग्रहीता नैव दाप्यते" इति। निः(नि)क्षेपग्रहीतारं प्रत्याह कात्यायनः। "निः(नि)क्षिप्तं यस्य यत्किञ्चित् तत्प्रयत्नेन पालयेत्। दैवराजकृतादन्यो विनाशस्तस्य कीर्त्यते" इति। यस्य पार्श्वे यत् स्थापितन्तत्तेनावहितेन रक्षणीयम्। यतो दैवराजकृतादन्यो विनाशस्तस्य याहकस्य दोषेण कृतत्वेन कीर्त्यते इत्यर्थः। न केवलन्दुष्कीर्त्तिरेव तस्य किन्तु विनाशे जाते वस्तुगत्या दोषो वहुर्थहानिश्चेत्याह स एव "यस्य दोषेण यत्किञ्चिद्विनश्येत ह्रियेत वा। तद्द्रव्यं सोदयन्दाप्यो दैवराजकृताद्विनेति"। दोषः उपेक्षादिरूपः। बृहस्पतिरपि "भेदेनोपेक्षया न्यासं गृहीता यदि नाशयेत्। याच्यमानो न दद्याद्वा दाप्यस्तत्सोदयम्भवेदिति" कात्यायनोऽपि "न्यासादिकं परद्रव्यं प्रभक्षितमुपेक्षितम्। अज्ञाननाशितञ्चैव येन दाप्यः स एव तदिति" अत्र विशेषमाहतुर्व्यासकात्यायनौ "भक्षिते सोदयन्दाप्यः समन्दाप्य उपेक्षिते। किञ्चिदूनं प्रदाप्यः स्याद्द्रव्यमज्ञाननाशितमिति" किञ्चिदूनञ्चतुर्थांशन्यूनमिति मिताक्षरायाम्। याचनानन्तरमदत्तस्य पश्चाद्दैवराजकृतेऽपि विनाशे तन्मूल्यमात्रं दातव्यमित्याह व्यासः "याचनानन्तरं नाशे दैवराजकृतेऽपि सः। गृहीता प्रतिदाप्यः स्यान्मूल्यमात्रन्न संशयः" इति। प्रत्यर्पणविलम्बमात्रापराधे सवृद्धिकदानस्यान्याय्यत्वात्। राज्ञे च तत्समो दण्डो देय इत्याह नारदः "याच्यमानस्तु यो दातुर्निः(नि)क्षेपन्न प्रयच्छति। दण्ड्यः स राज्ञो भवति नष्टे दाप्यश्च तत्सममिति" नष्टे दैवतो राजतो वेति शेषः। याज्ञवल्क्योऽपि "भ्रंशश्चेन्मार्गितेऽदत्ते दाप्यो दण्डश्च तत्सममिति"। मार्गिते याचितेऽदत्ते सति यदि भ्रंशो दैवराजकृतो नाशो भवति तथापि तद्द्रव्यं मूल्यपरिकल्पनेन। "धनिने याहको दाप्यो दण्डो राज्ञे च तत्समम्"। तत्समं दण्डमित्यर्थः। यः पुनःस्थापकाननुज्ञया निः(नि)क्षेपमुपभुङ्क्ते तस्य दण्डमाह नारदः "यत्नार्थं साधयेत्तेन निः(नि)क्षेपे त्वननुज्ञया। तत्रापि दण्ड्यः स भवेत्तच्च सोदयमावहेदिति" दण्डश्च साधितद्रव्यानुसारेण। याज्ञवल्क्योऽपि "आजीवन् स्वेच्छया दण्ड्यो दाप्यस्तच्चापि सोदयमिति" आजीवन् भोगवस्त्रार्थप्रयोगादिना उपजीवन् स्वेच्छया स्वाम्यननुज्ञया। वृद्धिप्रमाणमाह कात्यायनः। "निः(नि)क्षेपं वृद्धिशेषञ्च क्रयविक्रयमेव च। याच्यमानं न चेद्दद्याद्वर्द्धते पञ्चकं शतमिति"। निः(नि)क्षेपहर्त्तारं प्रत्याह विष्णुः "निः(नि)क्षेपापहारी वृद्धिसहितन्धनं धनिकस्य दाप्यः"। तस्य दण्डमाह मनुः "निः(नि)क्षेपस्यापहर्त्तारं तत्समन्दापयेद्दमम्। तथोपनिधिहर्त्तारमविशेषेण पार्थिवः" निः(नि)क्षेपापह्नवे कर्त्तव्यमाह व्यासः "निः(नि)क्षेपनिह्नुते यस्तु नरो वञ्चनयान्वितः। साक्षिभिर्वाथ द्रव्येण विभाव्य प्रतिदाप्यते" दण्डमाह बृहस्पतिः "गृहीत्वापह्नुते यत्र साक्षिभिः शपथेन वा। विभाव्य दापयेद्राजा तत्समं विनयन्तथेति" विनयं दण्डम्। सर्वाधिकनिः(नि)क्षेपादौ स्थापकस्या-

अपव्ययादित्वे साक्षिभ्यो यथास्थितमर्थमवगम्य दण्डनीयः स राज्ञेत्याह मनुः "निः(नि)क्षेपो यः कृतो येन यावांश्च कुलसन्निधौ । तावानेव स विज्ञेयो विब्रुवन् दण्डमर्हतीति" कुलं साक्षिवृन्दम् । असाक्षिके त्वाह बृहस्पतिः "रहोदत्ते निधौ यत्र विसंवादः प्रजायते । विभावकस्तत्र दिव्यमुभयोरपि च स्मृतमिति" उभयोर्मध्ये एकस्येत्यर्थः उभयग्रहणं "इच्छया वान्यतरः कुर्यादित्ययमेव पक्षो यथा स्यादिति । ग्रहीतस्थापकयोरपव्ययादित्वे दण्डमाह मनुः "निः(नि)क्षेपस्यापहर्त्तारमनिः(नि)क्षेप्तारमेव च । सर्वैरुपायैरन्विच्छेच्छपथैश्चैव वैदिकैः । यो निः(नि)क्षेपं नार्पयति यश्चानिः(नि)क्षिप्य याचते । उभौ तौ चौरवच्छास्यौ दाप्यौ वा तत्समं दममिति" चौरवच्छास्यौ चौरवद्दण्ड्यौ चौरवद्दण्डेन दण्ड्यावितियावत् । दण्डस्य प्रमाणमाह सममिति । मत्स्यपुराणे । यस्तु "यो निः(नि)क्षेपं नार्पयति यश्चानिः(नि)क्षिप्य याचते । तावुभौ चौरवच्छास्यौ दाप्यौ च द्विगुणं दममिति" द्विगुणो दण्ड उक्तः स दुष्टत्वविषयो बाहुल्यातिरिक्तविषयो वा अन्यथा समदण्डप्रतिपादकमनुवचनविरोधः स्यादिति । निः(नि)क्षिप्तं द्रव्यमकाले ददतो द्विगुणो दण्ड इत्याह कात्यायनः "याच्यमानस्तूपनिधिः काले कालहीनन्तु वर्जयेत् । कालहीने ददद्दण्डं द्विगुणञ्च प्रदापयेदिति" पाद्यः निः(नि)क्षेपकारिस्थेति शेषः यद्वयादुपनिधिरस्यस्य हस्ते न्यस्तस्तद्वयातीते काले न याच्य इत्यर्थः । अयातीते काले स्वयमेव नायाचितमर्पयेदयम् "सन्न्याचितमर्पयेदिति" बृहस्पतिस्मरणात् । तद्भवे वर्त्तमाने स्वयमेवायाचितन्दीयमानं कालहीनत्वस्य दानन्दोषो-नैवेति तद्ददतोऽपि दण्डोयुक्तः । प्राड्विवाकं प्रत्याह मनुः "यो निः(नि)क्षेपं याच्यमानो निः(नि)क्षेप्तुर्न प्रयच्छति । स याच्यः प्राड्विवाकेन तन्निः(नि)क्षेप्तुरसन्निधौ । स यदि प्रतिपद्येत यथान्यस्तं यथाश्रितम् । न तत्र विद्यते किञ्चित् यत्परैरभियुज्यते" इति । यदा तु न प्रतिपद्येत तदा राजानं प्रत्याह स एव "तेषां न दद्याद्यदि तु तद्धिरण्यं यथाविधि । उभयन्निग्रह्य दाप्यः स्यादिति धर्मस्य धारणा । निःक्षिप्तस्य धनस्यैवं प्रीत्योपनिहितस्य च । राजा विनिर्णयं कुर्य्यादक्षिण्वन्न्यासधारिणमिति" तेषां अभियोक्तॄणाम् । इदं हिरण्यम् । निगृह्य दण्डयित्वा अक्षिण्वन् अताडयन् । निः(नि)क्षेप गृहीतारं प्रत्याह बृहस्पतिः "स्थापितं येन विधिना येन यच्च यथाविधि । तथैव तस्य तद्देयं न देयं प्रत्यनन्तरे" इति । स्थापितेतरस्य यस्य स्थापितद्रव्यस्वत्वमस्ति स इह प्रत्यनन्तर उच्यते इति स्मृतिचन्द्रिकायां, प्रत्यनन्तरे पुत्रादाविति कल्पतरौ । स्थापकं प्रत्याह मनुः "यो यथा निः(नि)क्षिपेद्धस्ते यमर्थं यस्य मानवः । स तथैव ग्रहीतव्यो यथा दायस्तथा ग्रहः । मिथोदायः कृतो येन गृहीतो मिथ एव वा । मिथ एव प्रदातव्यो यथा दायस्तथा ग्रहः । समुद्रे नाप्नुयात् किञ्चिद्यदि तस्मान्न संहरेदिति" दायो दानं स्थापनमिति यावत् । ग्रहोग्रहणं मिथः अन्योन्यमेव एतदुक्तम्भवति यथा साक्षिकं स्थापितम् साक्षिमच्च ग्रहीतव्यम् । रहसि स्थापितं रहस्येवेति । समुद्रे मुद्रासहिते निःक्षेपेऽस्य मुद्रादिनोपहृते निः(नि)क्षेपं स्थापयित्वा न किञ्चिद्ग्रहणमाप्नुयात् । यदि तस्मान्निः(नि)क्षेपात् प्रतिमुद्राकरणादिना न संहरेत्किञ्चिदित्यर्थः । स्थापयितुर्मरणे प्रत्यनन्तरे तद्देयमित्याह स एव "स्वयमेव तु यो दद्यान्मृतस्य प्रत्यनन्तरे । न स राज्ञाऽभियोक्तव्यो न निःक्षेप्तुश्च बन्धुभिरिति" अनेन वचनेन वचोभङ्ग्या स्थापके मृते प्रत्यनन्तरे प्रत्यर्पणं ग्राहकेण कार्यमित्युक्तम् । स्वयमेव याचनमन्तरेणेत्यर्थः । याचनमन्तरेण दानमयादिकालापाये मन्तव्यम् अन्यथा दोषापत्तेः । प्रत्यनन्तरबहुत्वे तु नैकस्मिन् प्रत्यनन्तरे देयं किन्तु सर्वप्रत्यनन्तरसन्निधाविति न निःक्षेप्तुर्बन्धुभिरभियोक्तव्य इत्यनेन सूचयाम्बभूव । यदा तु ग्राहकः स्वयमेव न ददाति तदा प्रत्यनन्तरकर्त्तव्यमाह स एव । "अच्छलेनैव चान्विच्छेत् तमर्थं प्रीतिपूर्वकम् । विचार्य्य तस्य वा वृत्तं साम्नैव परिसाधयेदिति" अन्विच्छेत् अवधारयेत्परिसाधनं ग्राहकसकाशाद्दानन्तद्ग्राहकवृत्तिं विचार्य्य स तद्वृत्तग्राहकविषये साम्नैव कार्य्यं न भयादिप्रदर्शनेन । दुर्वृत्तग्राहकविषये तु ऋणादानप्रकरणोक्तेन भयादिप्रदर्शनाद्युपायान्तरेण छलादिना कार्यमित्यस्मादेव वचनादवगम्यते । तथा सद्वृत्ते विप्रतिपन्ने भूतानुसारेण साधयितुमशक्ये साक्ष्याद्यभावे प्रत्यनन्तरादिना साधयेत् । दुर्वृत्ते तु विप्रतिपन्ने छलादिना परिहरेदिति सामादेव वचनादवगम्यते । सद्वृत्ते छलादिप्रयोगमवक्तव्येन शोधनस्याप्यनुचितत्वात् । ग्राहके तु मृते पश्चाद्यदीनं निःक्षेपादि जायते तेनैव स्थापके प्रत्यनन्तरे

वा प्रत्यर्पणीयमित्यतिस्पष्टत्वात् स्मृतिकारैरुपेक्षित-मित्यस्माद्दायादानप्रकारवदुन्नेयं यदि याचकोऽसौ स्वयं न ददाति तदा स्थापकः प्रत्यनन्तरो वा पूर्वोक्तमार्गेणा-न्विच्छेत् प्रत्यतिपन्नं पूर्वोक्तेन प्रकारेण परिग्रहं साध-येदित्येतदपि स्मृतिकारैरुपेक्षितं ज्ञातुं शक्यत्वादिति। "हयीषु निः(नि)क्षेप इवार्पितं हयम्" कुमा०।

**नि:प्रभ** त्रि० निर्गता प्रभा यस्य "प्रादिभ्यो धातुजस्य वाच्यो-त्तरपदलोपः" वार्त्ति०। गतशब्दलोपः वा विसर्गस्य षत्वम्, १प्रभाशून्ये पक्षे षत्वे निष्प्रभ इत्यपि तत्रार्थे

**नि:शम** पु० निर्गतः शमात् "निरादयः क्रान्ताद्यर्थे पञ्चम्या:" वार्त्ति० निरा० ५त०। १क्रोधे त्रिका० पक्षे षत्वम्।

**नि:शलाक** त्रि० निर्गतः शलाकायाः निर्गता शलाका यस्मात् वा। १निर्जने रहसि अमरः। "अरण्ये निःशलाके वा मन्त्रयेदविभावितः" मनुः वा षत्वम्।

**नि:शल्या** स्त्री निर्गतं शल्यं यस्याः ५ब०। १दन्तीवृक्षे राजनि० तत्सेवने हि शीघ्रं शल्यं निर्गच्छति। २शल्य-वत्प्रतिबन्धकरहिते त्रि० "निःशल्यमत्रहजेयं जीवितम्" दशकुमा०पक्षे षत्वम्। [३अपगूल्यमाने त्रि०। वा षत्वम्

**नि:शूक** पु० निर्गतः शूकोऽस्मात्। १शूकशालौ राजनि०

**नि:शेष** त्रि० निर्गतः शेषो यस्य। समस्ते सकले "निःशेष च्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरः" काव्यप्र० वा षत्वम्। निश्शेष तत्रार्थे [पक्षे षत्वम्।

**नि:शोध्य** त्रि० निर्गतं शोध्यमस्मात्। निर्मले शुद्धे अमरः।

**नि:श्रयणी** स्त्री निश्चितं श्रीयतेऽनया श्रि—करणे ल्युट् ङीप्। काष्ठमयसोपाने शब्दरत्ना० वा षत्वम्।

नि:श्रि—इनि ङीप्। निश्रयिण्यप्यत्र शब्दर०।

**नि:श्रेणि** स्त्री निश्चिता श्रेणिरत्र। काष्ठसोपाने अमरः। वा षत्वम्। "चक्रे त्रिदिवनिःश्रेणिः सरयूरनुया-यिनाम्" रघुः।

**नि:श्रेयस** न० नितराम् श्रेयः नि० अच् समा०। १मोक्षे २मङ्गले ३विज्ञाने ४भक्तौ ५अनुभावे च शब्दरत्ना०। "पण्डितो ह्यर्थकृच्छ्रेषु निःश्रेयसकरं वचः" भा०स० १६८श्लो० "तपो विद्या च विप्रस्य निःश्रेयसकरं परम्" मनुः। नितरां श्रेयो यस्मात् अच् समा०। ६शङ्करे पु० मेदि० वा षत्वम्। निश्श्रेयस तत्रार्थे

**नि:श्वास** पु० निर्+श्वस—भावे घञ्। प्राणवायोर्नासया बहिर्निःसरणे "हयलीफेनपीतस्य निःश्वासोपहतस्य च" मनुः। वा षत्वम्। निश्श्वास तत्रार्थे

**नि:षम** अव्य० निर् सम+तिष्ठद्गुवा०स० सुषामा० षत्वम्। निन्दायाम् अमरः।

**नि:षन्धि** त्रि० निष्क्रान्तः सन्धेः सुश्लिष्टत्वात् निरादिस० सु-षामा० षत्वम्। १सन्धिशून्ये २दृढे त्रिका० वा षत्वम्।

**नि:षामन्** त्रि० निष्क्रान्तः साम्नः निरा० सुषामा० षत्वम्। सामरहिते वा षत्वम्।

**नि:सम्पात** पु० निर्गतः सम्पातो यत्र प्रादि० बहु०। गमन-शून्ये १निशीथे त्रिका० वा षत्वम्। २गतिशून्ये च "आका-शमपि बाणौघैर्निःसम्पातं विधीयताम्" हरिवं० ९९अ०।

**नि:संशय** त्रि० निर्गतः संशयोऽस्मात् प्रा०ब०। सन्देहशून्ये "क्षते निःसंशये पापे न भुञ्जीतानुपस्थितः" प्रा०त०। पक्षे षत्वम्। निःसन्देहोऽप्यत्र।

**नि:सङ्ग** त्रि० निर्गतः सङ्गो यस्मात् प्रा० बहु०। सङ्गरहिते सङ्गस्य स्नेहः फलाभिसन्धिश्च "निःसङ्गता मुक्तिपदं यतीनाम्" विष्णुपु० "वेदोक्तमेव कुर्वाणो निःसङ्गोऽ-र्पितमीश्वरे" मल०त० धृत भाग०११ स्कन्धवचनम्।

**नि:सरण** न० निर्+सृ—भावे ल्युट्। १निर्गमे करणे ल्युट्। २गृहादिमुखे ३मरणे ४निर्वाणे ५उपाये च हेमच०। "दुःखनिःसरणं वेद सर्वज्ञः स सुखी भवेत्" भा०शा० २१५अ० वा षत्वम्।

**नि:सार** पु० निर्गतः सारो यस्मात्। १शाखोटकवृक्षे (सेओडा) २श्योनाकभेदे राजनि० ३साररहिते त्रि०। "मानुष्ये कदलीस्तम्भनिःसारे सारमार्गणम्" उ०त० "जगत् सर्वन्तु निःसारमनित्यं दुःखभाजनम्" का-लिकापु० २७अ०। ४कदल्यां स्त्री वा षत्वम्।

**नि:सारण** न० निर्+सृ—णिच् ल्युट्। १बहिष्करणे स्वार्थे णिच् करणे ल्युट् वा। २गृहादिमुखे ३निःसरणे च शब्दर० वा षत्वम्। [जटाधरः।

**नि:सारित** त्रि० निर्+सृ—णिच् कर्मणि क्त। बहिष्कृते

**नि:सीम(न्)** निर्गता सीमा यस्मात् निरादि०बहु०। सीमा-रहिते अवधिशून्ये "निःसीमानन्दमासीदुपनिषदुपमा तत्परीभूय भूयः" नैष० "अहह महतां निःसीमानश्च-रितविभूतयः" भार० र०अत्र डापोऽभावपक्षे नान्तत्वात् स्त्रियां वा टाप् मनन्तत्वात् न ङीप् इति भेदः। वा षत्वम्

**नि:स्नेह** त्रि० निर्गतः स्नेहो यस्य प्रादि० बहु०। स्नेहशून्ये स्नेहस्य तैलादिद्रव्यं पीतिश्च। "निःस्नेहं कीटखादि-तम्" स्मृतिः "ये प्रतिग्रहनिःस्नेहास्ते नराः स्वर्गगा-मिनः" भा०अनु० २३अ०। २अतस्यां स्त्री त्रिका० तस्य

निष्काशितस्नेहत्वात् तथात्वम्। वा विसर्गस्य सत्वम्।

**निःस्नेहफला** स्त्री निःस्नेहं फलं यस्याः। श्वेतकण्टकार्य्यां राजनि०। [स्वपि निःस्नेहोऽभवत्" रघुः।

**निःस्पृह** त्रि०निर्गता स्पृहाऽस्य। आशाशून्ये "विदितस्ने-

**निःस्रव** पु०निर्+स्रु–अप्। अवशेषे"राजनि स्थापितो योऽर्थः प्रत्यहं तेन विक्रयः। क्रयो वा, निःस्रवस्तस्मात् वणिजां लाभकृत् स्मृतः" याज्ञ० "निःस्रवः अवशेषः" मिता०।

**निःस्राव** पु०निःस्रवति निर्+स्रु–ण। (माड)(फेन) १भक्तरसे हेमच० भावे घञ्। २व्यये "बह्वादानोऽल्पनिःस्रावः ख्यातः पूजितदैवतः" कामन्द०।

**निःस्व** त्रि० निर्गतं स्वमस्य प्रा०ब०। १दरिद्रे "शूर्पाकारौ विरूक्षौ च वक्रौ पादौ सिरालकौ। संशुष्कौ पाण्डुरनखौ निःस्वस्य विरलाङ्गुली" गरुडपु०। २धनरहिते ३ज्ञातिरहिते च।

**निःस्वभाव** त्रि० निर्गतः स्वभावो यस्य प्रा०ब०। स्वभावशून्ये। बौद्धमते वस्तुमात्रस्य निःस्वभावत्वम् यथोक्तं लङ्कावतारे "बुद्ध्या विविच्यमानानां स्वभावो नावधार्य्यते। अतो निरभिलप्यास्ते निःस्वभावाश्च दर्शिताः" (ते पदार्थाः)

**निकच्च** अव्य० कक्षस्य समीपम् सामीप्येऽव्ययी०। पश्चिमापरकक्षिसमीपे "चित्रं परिविच्छुत्यमौहूर्त्तिके निकक्षं" कात्या०श्रौ०१८।२।१ "पश्चिमापरकक्षिः कक्षस्तस्य समीपं निकक्षम्" वेददी०। अव्ययीभावे अदन्तात् सप्तम्या वा न लुक्।

**निकट** त्रि० निकटम् निकटार्थात् नेः "सम्प्रोदश्च" पा० चात् कटच्। आसन्ने सन्निकृष्टे। "अदूरे गम्यतां किञ्चिन्निकटं सरः" पञ्चत०।

**निकर** पु० नि+कॄ+भावादौ अप्। १समूहे अमरः। २सारे ३न्यायदत्तधने ४निधौ च मेदि० "निर्यन्निशीरनिकरेण लताभिषेका" माघः।

**निकर्षण** न०निर्गतं कर्षणमस्मात् प्रा०ब०। १कर्षणरहिते भूभागे २स्थण्डिलादिपरिच्छिन्नदेशे सन्निवेशे ३पुरग्रामादुर्बहिर्भागस्थविहारभूमौ कर्षणशून्यत्वात् तयोस्तथात्वम्।

**निकष(स)** पु० नि+कष(स)–अच् निकष(स)त्यनेन करणे घो वा। १कषणे २कषपाषाणे च (कष्टीपाथर) अमरः। "निकषे हेमरेखेव श्रीराशीदनपायिनी" रघुः कर्म्मणि च। ३परीक्षार्थं कषणकर्म्महेमादौ त्रि० "यदा निर्गुण

भाप्नोति ध्यानं मनसि पूर्ब्बजम्। तदा प्रज्ञायते ब्रह्म निकषं निकषे यथा" भा०शा० २०५अ०। ४राक्षसे अक्षादितोऽस्त्रतावाधनास्ये अमरः।

**निकषा** अव्य० नि+कष–वा० आ। १निकटे अमरः। "विलङ्घ्य लङ्कां निकषा हनिष्यति" माघः निकषायोगे शेषार्थे द्वितीया २मध्ये च मेदि०। ३राक्षसमातरि स्त्री

**निकषात्मज** पु० ६त०। राक्षसे अमरः।

**निकषोपल** पु० कर्म०। १शाणे (कष्टी) २प्रस्तरभेदे च।

**निकाम** न० नि+कम–घञ् अभिधानात् क्लीवता। १इच्छानतिक्रमे २पर्य्याप्ते ३अतिशये च अमरः। "निकामतप्ता विविधेन वह्निना" कुमा० "नित्यं हरेः सन्निहिता निकामम्" माघः।

**निकामम्** त्रि० नि+कम वा० अनिन्। नितरां कामुके "विर्पाक्षि सूजमानानि कामभिः" ऋ०१०।८२।८।"निकामभिः नितरामभिलाषुकैः" भा०।

**निकाय** पु० नि+चि–घञ् कुत्वम्। १निवासे २सजातीयप्राणिसङ्घे ३लक्ष्ये ४परमात्मनि मेदि० "तथा देवनिकायानां श्रेष्ठत्वाच्च दिवौकसाम्" भा० आ० १२३अ०। "तस्य सर्व्वनिकायेषु निर्भरेषु गुहासु च" रामा०४।४४।२।

**निकाय्य** पु० नि+चि–ण्यत् कुत्वम्। गृहे अमरः। "न प्रवाय्यः जनः कश्चित् निकाय्यं तेऽधितिष्ठति" भट्टिः।

**निकार** पु० नि+कृ–क–वा भावे घञ्। १मारणे २परिभवे अमरः "राज्ञां निकारे बहुधा प्रवृत्तः" भा० आ० १८८अ०। "निकारोऽयं पवाक्षनकृत भोक्तसि निधनम्" शान्ति०म० ३भर्त्सने च ४धान्यादेरुत्क्षेपणे अमरः। ४खलीकारे शब्दमा०।

**निकारण** न० नि+कृ–णिच्–ल्युट्। १मारणे २वधे अमरः

**निकाल्य** त्रि० नि+कल–ण्यत्। चालनीये त्रिका०।

**निकाश** पु०नि+काश–घञ्। १प्रकाशे २समीपे च। तुल्यार्थे अस्य निभादित्वात् नित्यस० वा दीर्घश्च। "उवाच पूर्णेन्दुनिकाशवक्त्राम्" हरिवं १५४ अ० "काकर्णसङ्घचितमस्य विकाशिकाशनीकाशमाप समतां सितचामरस्य" माघः। शाब्दे ऽस्य न पृथक्प्रयोगः।

**निकाष** पु० नि+कष–भावे घञ्। वस्तुलिखने कषणे "तेजोभिः कनकनिकाषराजिगौरैः" किरा०।

**निकास** पु०नि+काश–घञ्। प्रकाशे नीकाशशब्दार्थे शाटस्ये भरतः निभादिवत् नास्य पृथक्प्रयोगः।

**निकुच्यकर्णि** अव्य० निकुच्यौ सङ्कुचौ कर्णौ यत्र द्वि-दण्ड्या० इच् समा० । सङ्कुच्यकर्णके

**निकुञ्चक** पु० नि+कुन्च–ण्वुल् । १कुडवपादे प्रसृतपरिमाणे अमरः २वानीरभेदे जलवेतसे भावप्र० ।

**निकुञ्ज** पु०न० नितरां कौ जायते जन–ड पृषो० । लतादिपिहितोदरे कुञ्जे "कपिकुलमुपयाति क्लान्तमद्रेर्निकुञ्जम्" ऋतुस० ।

**निकुञ्जिकाम्ला** स्त्री निकुञ्जमुत्पत्तिस्थानत्वेनास्त्यस्या ठन् कर्म० । कुञ्जवल्ल्यां श्रीफलतुल्यगुणायां लतायाम् राजनि० ।

**निकुम्भ** पु० नि+कुभि–अच् । १दन्तीवृक्षे २कुम्भकर्णराक्षसपुत्रभेदे च मेदि० । "स कुम्भश्च निकुम्भश्च कुम्भकर्णात्मजावुभौ" रामा० लङ्का० ७५।४६ श्लो० । ३दानवभेदे "निचन्द्रश्च निकुम्भश्च कुपटः कपटस्तथा" भा०आ० ७५ अ० । प्रह्लादस्य ४पुत्रभेदे "प्रह्लादस्य त्रयः पुत्राः ख्याताः सर्वत्र भारत ! । विरोचनश्च कुम्भश्च निकुम्भश्चेति भारत !" भा०आ० ६०अ० । ५हर्यश्वनृपपुत्रे "हर्यश्वस्य निकुम्भोऽभूत् क्षात्रधर्मरतः सदा" हरिवं० १२अ० । ६विश्वदेवभेदे "विश्वदेवाश्च विश्वायां धर्माज्जाता इति श्रुतिः" इत्युपक्रमे "विश्वावसुजयश्चैव निकुम्भश्च महायशाः" हरिवं० २०४ अ० । तत्र निकुम्भ इत्यत्र विषकुम्भ इति पाठान्तरम् । ७कुरुसेनाधिपान्तर्गते नृपभेदे "दुःशासनो निकुम्भश्च कुण्डभेदी पराक्रमी" भा०द्रो०१५६अ० । ८कुमारानुचरभेदे "शङ्कुकर्णौ निकुम्भश्च पद्मः कुमुद एव च" भा०श०७६अ० तत्सेनाध्यक्षोक्तौ । ९राक्षसेशे शिवानुचरभेदे "पार्श्वे तिष्ठन्तमाहूय निकुम्भमिदमब्रवीत् । राक्षसेश ! पुरीं गत्वा शून्यां वाराणसीं कुरु" हरिवं० २९अ० "अवेहि मां किङ्करमष्टमूर्त्तेः कुम्भोदरं नाम निकुम्भमित्रम्" रघुः १०दन्तीवृक्षे स्त्री गौरा० ङीष् वा राजनि० ।

**निकुम्भाख्यवीज** न० निकुम्भं दन्तिकावृक्षवीजमाख्याति स्ववीजेन आ+ख्या–क । जयपाले राजनि० ।

**निकुम्भित** न० नि+कुभि–क्त । नृत्यकरणभेदे "करणानान्तु सर्वेषां सामान्यं लक्षणन्त्विदम् । प्रायो वामकरो वक्षःस्थितोऽन्यः पुरतोऽनुगः । पादाभ्यां करणं ज्ञेयं शतमष्टोत्तरं मतम्" इत्युपक्रमे "निकुम्भितं पार्श्वक्रान्तमतिक्रान्तं विवर्त्तनम्" सङ्गीतदा० ।

**निकुम्भिला** स्त्री लङ्कायाः पश्चिमभागस्थायां १गुहायां २तत्स्थदेव्याञ्च "मानुषं मांसमाखाद्य प्रन्त्यामो निकुम्भिलाम्" रामा०सु०२४।४५ "निकुम्भिला नाम लङ्कायाः पश्चिमभागवर्त्तिनी भद्रकाली तां तत्समीपं गत्वा प्रन्त्यामः" इति तट्टीका । "तेन वीरेण तपसा वरदानात् स्वयम्भुवः । अस्त्रं ब्रह्मशिरः प्राप्तं कामगाश्च तुरङ्गमाः । स एष किल सैन्येन प्राप्तः किल निकुम्भिलाम् । यद्युत्तिष्ठेत् कृतं कर्म हतान् सर्वांश्च विद्धि नः । निकुम्भिलामसंप्राप्तमकृताग्निं च यो रिपुः" रामा०लङ्का०८५।११श्लो०

**निकुरम्ब** न०नि+कुर–शब्दे बा० अम्बच् । समूहे अमरः । "अनिलतरलकिशलयनिकरेण करेण लतानिकुरम्बम्" गीतगोविन्दम् ।

**निकुलीनिका** स्त्री निपाते "गतागतं प्रतिगतं चुल्लीच निकुलीनिकाः" भा०क० ४९अ० । "निकुलीनिकाः निपाताः" नीलकण्ठः ।

**निकूल** पु० नरमेधाङ्गे षष्ठयूपे पशुभेदालम्भोद्देश्ये देवभेदे "उतकूलनिकूलाभ्यन्त्विष्टिनम्" यजु० २०।१४।

**निकृत** त्रि०नि+कृ–क्त । १पराभूते २दूरीकृते ३शठे अमरः । ४पतिते ५नीचे च मेदि० ।

**निकृति** स्त्री नि+कृ–भावे क्तिन् । १भर्त्सने २क्षेपे ३शाठ्ये मेदि० ४दैन्ये शब्दरत्ना० "निकृतिपरेषु परेषु भूरिधाम्नः" किरा० "निकृत्या कामये नाहं सुखान्युत धनानि वा" भा०स० २०४ श्लो० । ५पृथिव्यां निघण्टुः । साध्यायां धर्मस्य पुत्रे ६वसुभेदे "वसुमस्तु ततो वायुमष्टमं निकृतिं वसुम् । धर्मस्यापत्यमित्येवं साध्यायां वै व्यजायत" हरिवं० २०४अ० । [अमरः ।

**निकृष्ट** त्रि० नि+कृष–क्त । अधमे जात्याचारादिनिन्दिते

**निकेचाय** पु० नि+चि–यङ् लुक्–घञ् "आदेश्च कः" इति सूत्रे च कः इति वक्तव्ये आदेरित्युक्तिर्यङ्लुक्यादेरेव सि०कौ०उक्तेः आदेः चस्य कः । गोमयादीनां पुनःपुनः राशीकरणे

**निकेत** पु० नि+कित–निवासे आधारे घञ् । १गृहे निकेतने भरतः । "निकेतः श्रूयते पुण्यो यत्र विश्रवसो मुनेः" भा०व० ८९अ० ।

**निकेतन** न० नि+कित–निवासे आधारे ल्युट् । १गृहे अमरः "शरणेष्वनियमश्चैव वृक्षमूलनिकेतनः" मनुः । कर्मणि ल्युट् । २पलाण्डौ पु० शब्दच० ।

**निकोचक** पु० नि+कुच–शब्दे वुन् । अङ्कोटे अमरः अच् निकोच-तत्रार्थे "निचुलपिचुनिकोचकोरमाणप्रभृतीनि

पित्तरोगहरागव्याश्च स्निग्धोष्णानि गुरूणि च" सुश्रुतः।

**निकोठक** पु॰ नि+कुठि–वुन् पृषो॰ नलोपः। अङ्कोठवृक्षे भरतः।

**निक्रमण** न॰ नितरां क्रमते यत्र नि+क्रम-आधारे ल्युट्। स्थाने "निक्रमणं निषदनं निवर्त्तनं यत्र पड्वीशमर्वतः" ऋ॰ १।१६२।१४ "निक्रमणं स्थानम्" भा॰।

**निक्वण** पु॰ नि+क्वण–शब्दे "क्वणो वीणायाम्" पा॰ पक्षे अप्। वीणायाः शब्दे अमरः।

**निक्वाण** पु॰ क्वण–शब्दे पक्षे घञ्। वीणादेः शब्दे अमरः

**निक्षा** स्त्री निक्ष–अच्। लिक्षायां (निकी) ख्याते क्षुद्रयूके उणादिकोषः।

**निक्षुभा** स्त्री नि+क्षुभ–क। १सूर्यपत्न्यां २ब्राह्मण्याञ्च हेमा॰ व्र॰ख॰ भविष्यपु॰ "निक्षुभार्कव्रतं भानोः सदा प्रीति विवर्द्धनम्" इत्युपक्रमे "निक्षुभा सूर्यपत्नी तया सहितोऽर्कः निक्षुभार्कः" तत्र व्याख्या, "निक्षुभा ब्राह्मणी सा वा वाचकोऽर्कः प्रकीर्त्तितः" तत्रैव भविष्यपु॰।

**निक्षिप्त** त्रि॰नि+क्षिप–क्त।१त्यक्ते जटा॰२कृतनिःक्षेपद्रव्ये च

**निक्षेप** पु॰ नि+क्षिप–घञ्। १निःक्षेपशब्दार्थे निःक्षेपशब्दे दृश्यम्। २शिल्पिहस्ते संस्कारार्थं द्रव्यादेरर्पणे च

**निखर्व** पु॰१अयुतकोटिसंख्यायां २तत्संख्येये च "अर्बुदमब्जं खर्वनिखर्वमहापद्मशङ्कवस्तस्मात्" लीला॰ नितरां खर्वः ३वामने त्रि॰ हेमच॰।

**निखर्वट** पु॰ रावणसैन्यगतराक्षसभेदे "विरूपाक्षेण सुग्रीवस्तारेण च निखर्वटः" भा॰व॰ २८४अ॰।

**निखात** त्रि॰ नि+खन–क्त। खनित्वाऽऽरोपिते "अष्टादशद्वीपनिखातयूपः" रघुः।

**निखिल** त्रि॰ निवृत्तं खिलं शेषो यस्मात्। सकले समग्रे अमरः। "सर्वं तु समवेक्ष्येदं निखिलं ज्ञानचक्षुषा" मनुः।

**निगड** पु॰न॰। नि+गल–अच् लस्य डः। १हस्तिपादबन्धनशृङ्खलायाम् (वेडी)। निवृत्तो गडः सेचनमस्मात् कठिनत्वात्।२लोहमये हस्तिपादबन्धने अन्दुके अमरः। "संसारे संनिबद्धानां निगडच्छेदकर्त्तरि"ब्रह्मवै॰पु॰"बद्धापराणि परितो निगडान्यलावीत्" माघः। ३बद्धे त्रि॰ "बद्धस्य निगडस्य च" मनुः "निगडः निगडितः" कुल्लू॰। लस्य नडः। निगलः तत्रार्थे हेमच॰।

**निगडित** त्रि॰निगडो जातोऽस्य तार॰ इतच्। १बद्धे संयते

**निगण** पु॰ निगरण+पृषो॰। १होमधूमे त्रिका॰।

**निगद** पु॰ नि+गद–अप्।१भाषणे २शब्दमात्रे च अमरः। "यद्गृहीतमविज्ञातं निगदेनैव शब्द्यते" ऋ॰ भाष्यधृतमन्त्रः। "निगदस्तु जनैर्वेद्यः" आगमोक्ते ३जपे च। कर्मणि घञ्। उच्चैर्जप्ये ४मन्त्रे च "स एवात्र मन्त्रो यो निगदः" शत॰ब्रा॰ ११।२।१६।

**निगम** पु॰ निगम्यतेऽत्र अनेन वा नि+गम–घञ्। १पुरभेदे तत्र भवः अण् न वृद्धिः। २वाणिज्ये ३कटभेदे ४वणिक्पथे हट्टे मेदि॰। ५निश्चये ६अध्वनि पर्य्यायकथनेन वेदार्थबोधके ७ग्रन्थभेदे हेमच॰ न्यायमतसिद्धे पञ्चावयवन्यायमध्ये चरमावयवे निगमनशब्दे दृश्यम्। ८न्यायशास्त्रे ९तन्त्रभेदे १०वेदे च। "निगमकल्पतरोर्गलितं फलम्" भाग॰१।१।३

"आद्यं नैघण्टुकं काण्डं द्वितीयं नैगमं तथा" ऋ॰अनुक्रमणिकायाम् "निगमशब्दो वेदवाची यास्केन तत्र तत्रापि निगमो भवतीत्येवं वेदवाक्यानामवतारितत्वात् तस्मिन् निगम एव प्रायेण वर्त्तमानानां शब्दानां चतुर्थाध्यायरूपे द्वितीयस्मिन् काण्डे उपदिष्टत्वात्तस्य काण्डस्य नैगमत्वम्" ऋग्वेदभाष्ये माधवः।

**निगमन** न॰ निगम्यतेऽनेन करणे ल्युट्। १न्यायस्य चरमावयवे। निगमनलक्षणं गौ॰सू॰ उक्तं यथा

"हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनम्" गौ॰सू॰ "साधर्म्योक्ते वैधर्म्योक्ते वा यथोदाहरणमुपसंह्रियते तस्मादुत्पत्तिधर्मकत्वादनित्यः शब्दः इति निगमनम् निगम्यन्तेऽनेनेति प्रतिज्ञाहेतूदाहरणोपनया एकत्रेति निगमनम् निगम्यन्ते समर्थ्यन्ते सम्बोध्यन्ते तत्र साधर्म्योक्ते तावद्वेतो वाक्यम् अनित्यः शब्दः इति प्रतिज्ञा, उत्पत्तिधर्मकत्वादिति हेतुः। उत्पत्तिधर्मकं स्थाल्यादिद्रव्यमनित्यमित्युदाहरणम्। तथा चोत्पत्तिधर्मकः शब्द इत्युपनयः तस्मादुत्पत्तिधर्मकत्वादनित्यः शब्द इति निगमनम् वैधर्म्योक्तेऽपि अनित्यः शब्द उत्पत्तिधर्मकत्वात् अनुत्पत्तिधर्मकमात्मादि द्रव्यं नित्यं दृष्टम् न च तथाऽनुत्पत्तिधर्मकः शब्दः तस्मादुत्पत्तिधर्मकत्वादनित्यः शब्द इति" भाष्यम्।

तत्सूत्रं वृत्तौ तु अन्यथा व्याख्यातम्।

"हेतोर्व्याप्तिविशिष्टपक्षधर्मस्य व्यपदेशः कथनं प्रतिज्ञायाः प्रतिज्ञार्थस्य साध्यविशिष्टपक्षस्य वचनं निगमनं तथा च व्याप्तिविशिष्टपक्षधर्महेतुकथनपूर्वकसाध्यविशिष्टपक्षप्रदर्शकः व्याप्तपक्षधर्महेतुज्ञाप्यसाध्यविशिष्ट-

पक्षबोधकस्तादृशबोधको वान्यायावयवो निगमनम् इति" अनु०चिन्ता० तल्लक्षणं यथा "उपनयानन्तरं निगमनं तच्चानुमितिहेतुलिङ्गपरामर्शप्रयोजकशब्दज्ञानकारणव्याप्तिपक्षताधीप्रयुक्तसाध्यधीजनकं वाक्यम्" ।

प्रतिकूलप्रमाणाभावसूचके २प्रतिज्ञोपसंहारवचने तस्मात् तथेति वचने यथा "अप्रकटदनुचिन्तितानामव्याकृततरनिजोपदेशानाम् । प्रामाण्यपरमसीम्नां निगमनमिदमेव निखिलनिगमानाम्" वेदान्तप्र० ।

**निगरण** न० नि+गॄ—ल्युट् । गरणस्य यमनस्य प्रतिकूल व्यापारे १भक्षणे मेदि० । निगीर्य्यतेऽनेन करणे ल्युट् । २गले पु०मेदि० । ३होमधूमे शब्दरत्ना० रस्य लः । निगलनमप्यत्र ।

**निगा(ग)ल** पु० नि+गॄ—घञ् अप् वा रस्य लः । १भक्षणे करणे घञ् । २अश्वगलदेशे अमरः "घण्टाबन्धसमीपस्थो निगालः कीर्त्तितो बुधैः" अश्वशास्त्रम् । [शब्दार्थचि०।

**निगालवत्** पु० निगाल+अस्त्यर्थे मतुप् मस्य वः । अश्वे

**निगीर्ण** त्रि० नि+गॄ—क्त । १भक्षिते २अन्तर्भाविते च "विषयिणाऽऽरोप्यमाणेनान्तःकृते–निगीर्णे अन्यस्मिन्नारोपविषये" काव्यप्र० ।

**निगु** पु० निगद्यते ज्ञायते पदार्थोऽनेन नि+गद वा० डु रलोपश्च । १मनसि त्रिका० । २मले ३मूले ४चित्रकर्मणि च संक्षिप्तसारोणादिवृत्तिः ।

**निगुत्** त्रि० नि+गु—शब्दे क्विप् तुक् । मर्यादिना अव्यक्तशब्दकारके "प्रतद्वोचेयम् निगुतः" ऋ०१०।१२८।६

**निगूढ** त्रि० नि+गुह—क्त । १गुप्ते २वनमुद्गे पु० हेमच० "गुराजेव निगूढमन्त्रसाधनकथितविग्रहः" काद०।

**निग्रन्थन** न० नि+ग्रन्थ—भावे ल्युट् । मारणे हेमच० ।

**निग्रह** पु० नि+ग्रह—अप् । १भर्त्सने २सीमायाम् ३बन्धने ४अनुग्रहाभावे ५चिकित्सायां निषिद्धे प्रवृत्तस्य ६तिरस्कारे ७मारणे प्रवृत्तिवारणाय ८रोधे च निरोधरूप योगेन अभ्यासवैराग्याभ्यां ९मनसोनिरोधे "निग्रहानुग्रहे शक्तः प्रभुरित्यभिधीयते" । "तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम्" गीता । १०परमेश्वरे पु० "प्रग्रहो निग्रहो व्यग्रः" विष्णुसं० । "सर्वं प्रलये निगृह्णातीति निग्रहः" भा० ।

**निग्रहस्थान** न० गौतमोक्ते वादिनोनिग्रहास्पदे वाक्यभेदे तल्लक्षणं यथा "विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्" गौ० सू० "क्रमप्राप्तं निग्रहस्थानम् लक्षयति । निग्रहस्य स्वीकारस्य स्थानं तच्च विप्रतिपत्तिरप्रतिपत्तिश्च विप्रतिपत्तिर्विरुद्धा प्रतिपत्तिरप्रतिपत्तिः प्रकृताज्ञानं यद्यप्येतदन्यतरत् परनिष्ठं नोद्भावयितुमर्हं प्रतिज्ञाहान्यादेर्निग्रहस्थानत्वानुपपत्तिश्च तथापि विप्रतिपत्त्यप्रतिपत्त्यन्यतरोन्नायकधर्मवत्त्वं तदर्थः उद्देश्यानुगुणस्वयत्नज्ञानाभावलिङ्गत्वं प्रतिज्ञाहान्याद्यन्यतमत्वं वा लक्षणमित्यपि वदन्ति" इत्तिः । निग्रहस्थानानि द्वाविंशतिः यथा "प्रतिज्ञाहानिः१ प्रतिज्ञान्तरम्२ प्रतिज्ञाविरोधः३ प्रतिज्ञासन्न्यासो४ हेत्वन्तरम्५अर्थान्तरं६ निरर्थकम्७अविज्ञातार्थम्८अपार्थकम्९अप्राप्तकालं१० न्यूनं११अधिकं१२ पुनरुक्तं१३अननुभाषणं१४अज्ञानम्१५अप्रतिभा१६विक्षेपो१७ मतानुज्ञा१८पर्य्यनुयोज्योपेक्षणं१९ निरनुयोज्यानुयोगो२०ऽपसिद्धान्तो२१ हेत्वाभासाश्च२२ गौ०सू०उक्तानि । [न्याये ।

**निग्राह** पु० नि+ग्रह—घञ् । अनिष्टं ते भूयादित्येवं रूपे

**निघ** पु० निर्विशेषेण हन्यते हन—क नि० । समविस्तारदैर्घ्ये तुल्यारोहपरिणाहे पदार्थे अमरः । निघा निवतरुक्त्राः"भट्टिः "निघो निमितम्"पा०निमितमिह समारोहपरिणाहाभ्यां मितं निमितमित्युच्यते" जयम०।

**निघण्टिका** स्त्री कन्दभेदे राजनि० ।

**निघण्टु** पु०नि+घटि—कु । पर्य्यायनाम्नामेकत्रार्थकथनाय संग्रहे कोषाभिधानादौ तच्च काण्वे दभाष्योपक्रमे उक्तं यथा "आद्यं नैघण्टुकं काण्डं द्वितीयं नैगमं तथा" अस्यार्थः एकार्थवाचिनां पर्य्यायशब्दानां सङ्घो यत्र प्रायेणोपदिश्यते तत्र निघण्टुशब्दः प्रसिद्धः । तादृशेष्वमरसिंहवैजयन्तीहलायुधादिषु दृष्ट निघण्टव इति व्यवहारात् । एवमत्रापि पर्य्यायशब्दसङ्घोपदेशादाद्यकाण्डस्य नैघण्टुकत्वम् । तस्मिन् काण्डे त्रयोऽध्यायाः । तेषु प्रथमे पृथिव्यादिलोकदिक्कालादिद्रव्यविषयाणि नामानि, द्वितीये मनुष्यतदवयवादिद्रव्यविषयाणि, तृतीये तदुभयद्रव्यगततनुबहुत्वह्रस्वत्वादिधर्मविषयाणि"।

**निघर्ष** पु० नि+घृष—भावे घञ् । घर्षणे (यथा) "तरुशाखान्तनिघर्षजोऽनलः"किरा०। ल्युट्। निघर्षणमप्यत्र न०। यथा "हि कनकं शुद्धं तावच्छेदनिघर्षणैः" भा०शा० १२२ ५७श्लो०।

**निघस** पु० नि+अद+अप् घसादेशः । भोजने अमरः ।

**निघात** पु० नि+हन–भावे घञ् । १आहनने अन्यस्वरेण २अन्यस्वरहनने उदात्तादिहननपूर्वकं अनुदात्तकरणे च कर्मणि घञ् । अनुदात्ते ३स्वरे "समानवाक्ये निघातयुष्मदस्मदादेशाः" वार्त्ति० । "उदात्तादिहननपूर्वकमनुदात्तकरणं निघातः" मनोरमा । "ज्यानिघातकठिनाङ्गुलित्वचौ" रघुः । [घातिन्याम् उणादिकोषः ।

**निघाति** पु० निहन्यतेऽनया निहन्–इञ् कुत्वञ्च । लोह-

**निघृष्व** त्रि० नि+घृष-क्वन् निपा० । १खुरे २तन्मार्जने च उज्ज्वल० कर्मणि क्वन् । ३क्षुद्रे निघण्टुः ।

**निघ्न** त्रि०निहन्यते नि+हन–घञर्थे क । १अधीने अमरः । नियम्यत्वात् तस्य तथात्वम् "निघ्नस्य मे भर्तृनिदेशरौक्ष्यम्" रघुः । २आहते ३पूरिते च "स्याप्योऽन्यवर्गौ द्विगुणात्यनिघ्नः" लीला० "पुनरुद्दिश्यनिघ्नाद्य लभते यत्फलं बुधैः" सूर्यसि० । सूर्यवंश्ये ४अनरण्यसुते नृपभेदे पु० । "अनरण्यसुतो निघ्नो निघ्नपुत्रौ बभूवतुः" हरिवं०१७अ०। अनमित्रपुत्रे ५नृपभेदे च "अनमित्रसुतो निघ्नो निघ्नस्य तु बभूवतुः" हरिवं० ३८अ० । [इत्यम् ।

**निचन्द्र** पु० दानवभेदे "निचन्द्रश्च निकुम्भश्च" निकुम्भशब्दे

**निचय** पु० नि+चि–भावे अच् । १समूहे २अवयवादीनां समुच्चये ३निश्चये च शब्दर० । "षण्मासनिचयो वा स्यात् समानिचय एव वा" मनुः कर्मणि अच् । ४निचीयमाने अवयवादिना वर्द्धमाने "सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः" भा०स्त्री० २अ० । च्वि अभूततद्भावे कृतादिना चार्थे त०स०। निचयकृत निचयीकृते त्रि० ।

**निचयक** त्रि० निचये कुशलः आकर्षा० कन् । निचये कुशले

**निचाय** पु० नि+चि–परिमाणाख्यायां घञ् । राशीकृते धान्यादौ "एकस्तण्डुलनिचायः अत्र राशेरेकत्वेन समुदायिनां परिच्छित्तिर्गम्यते" सि०कौ० ।

**निचि** पु० नि+चि– बा० डि । गोकर्णशिरोदेशे रत्नमा० ।

**निचिकी** स्त्री निचिना कायति शोभते कै–क गौरा० ङीष् । उत्तमायां गवि नैचिक्याम् शब्दार्थचि० ।

**निचित** त्रि० नि+चि–क्त । १व्याप्ते २पूरिते ३सङ्कीर्णे ४निर्मिते च हेमच० । ५नदीभेदे स्त्री "कौशिकीं निश्चितां कृत्यां निचितां लोहतारिणीम्" भा०भी० ९अ० ।

**निचिर** न० नितरां चिरः प्रा०स० । १अत्यन्तचिरकाले २तद्वर्त्तिनि त्रि० "प्रस्य ज्येष्ठां निचिराभ्याम्" ऋ०६।१२६।१

**निचुम्पण** पु० निचमनेन पूर्यते नीचैरस्मिन् क्वणन्ति दधतीति वा पृषो० । १समुद्रे २अवभृथे च "समुद्रोऽपि निचुम्पुण उच्यते निचमेन पूर्यते । अवभृथोऽपि निचुम्पुण उच्यते नीचैरस्मिन् क्वणन्ति नीचैर्दधतीति वा । नीचं क्वणोतीति वा" निरु०५।१८। "अवभृथो निचुम्पुणो भवति" तन्नेता श्रुतिः "अवभृथ! निचुम्पुण निचेरुरसि निचुम्पुणः" यजु० ३।४८ "निचुम्पुण चुप मन्दायां गतौ नितरां चोपति मन्दं गच्छति निचुम्पुणः । उणप्रत्ययो मुमागमश्च । यद्वा नीचैरस्मिन् क्वणन्ति नीचशब्देन कर्म कुर्वन्त्यवभृथो निचुम्पुणः । "नीचस्तूपत्रपण्ड्रु" इत्यादिना नीचैः शब्दोपपदात् क्वणतेः कप्रत्ययान्तो निपातः धातोः पुम्भाव उपपदस्य निचुम्भावश्च निपातितः । तथा विग्रावभृथ! यद्यपि त्वं निचेरुरसि नितरां चरतीति निचेरुः । नितरां गमनशीलोऽसि तथाप्यत्र निचुम्पुणो भव मन्दगमनो भव" वेददी० ।

**निचुल** पु० नि+चुल–क । १हिज्जलवृक्षे अमरः । २वेतसवृक्षे राजनि० । "स्थानादस्मात् सरसनिचुलादुत्पतोदङ्मुखः खम्" मेघ० ।

**निचुलक** न० नि+चुल–बा०कुन् । १चोलादेर्वोलाकृतिसन्नाहे निचोलके हारा०। २कुञ्चिकावृक्षे पुंस्त्री शब्दार्थचि०।

**निचेय** त्रि० नि+चि–यत् । आचीयमाने स्त्रियां टाप् । आङि तु स्त्रियां शार्ङ्गरवा० ङीन् । आनिचेयी

**निचेरु** पु० नि+चर–उन् बा० आदेरेत्त्व । नितरां चरणशीले "अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः" यजु०३।४८

**निचोल** पु०नि+चुल–अच् । १प्रच्छदपटे येन शय्यादि प्रच्छाद्यते तस्मिन् अमरः २दोलिकाद्यावरणवस्त्रे ३स्त्रीप्रिधानपटे च हेमच० । "शीलय नीलनिचोलम्" गीतगो०

**निचोलक** पु० निचोल इव कायति कै–क । चोलादेर्वोलाकृतिसन्नाहे कूर्पासे हेमच० । [त्रिका० ।

**निच्छवि** पु० निकृष्टा छविरस्य । (त्रिहोत्) तीरभुक्तदेशे

**निच्छिवि** पु० व्रात्यात् क्षत्रियात् सवर्णायामुत्पन्ने जातिभेदे "झल्लोमल्लश्च राजन्यात् व्रात्यात् निच्छिविरेव च" मनुः

**निज** त्रि० नितरां जायते नि+जन–ड । १स्वकीये २नित्ये च अमरः । "सेनागजेन मथितस्य निजप्रसूनैः" माघः । ३स्वाभाविके "स्वास्थ्यं यस्य निजम्" न्याय लीला०।

**निजघास** पु० पार्वत्या रोषसंभूते गणभेदे "निजघासो यस्यैव स्थूणाकर्णः प्रमोघनः" हरिवं० १६८अ० ।

**निजघ्नि** त्रि० नि+हन–कि द्वित्वम् । नितरां हननशीले "कया निजघ्निरोदसा" ऋ०८।५४।१२ ।

**निजधृति** स्त्री शाकद्वीपस्थे १नदीभेदे तदुपक्रमे "एतेषां

वर्षमर्य्यादागिरयो नद्यः सप्त सप्तैव” इत्युक्त्वा “अनघा आयुर्दा उभयस्पृष्टिरपराजिता पञ्चपदी सहस्रस्तुतिर्निजष्टतिरिति” भाग०५।२०।१८। उक्तम् । निजा धृतिरस्य । २स्वभावतो धैर्य्यान्विते त्रि० । [न वः । निजिमान् ।

**निजि** त्रि० निज–शुद्धौ कि । शुद्धिमति । उणादि०चतोयवा० मस्य

**निटल** पु० नि+टल–अच् । कपाले भालस्थले शब्दार्थकल्पतरुः “राजा निटलतले चुम्बितनिजचरणाम्बुजैः” दशकु० ।

**निटलाक्ष** पु० निटले भाले अक्षि अस्य षच्स० । शिवे शब्दार्थकल्प० “रोषरूक्षेण निटलाक्षेण दूरीकृतचेतने मकरकेतने” दशकुमा० ।

**निडीन** न० नीचैर्डीनम् । भक्ष्यमाश्रयं वा दृष्ट्वा अधःपतनरूपे खगगतिभेदे खगगतिशब्दे २४१४ पृ० दृश्यम् ।

**निण्डिका** स्त्री सतीलायां (तेओयाडा) कलायभेदे शब्दच०।

**निण्य** त्रि० अन्तर्हिते निघण्टुः “निण्यः संनह्यो मनसा चरामि” ऋ०१।१६४।३७

**नितत्नी** स्त्री ओषधिभेदे “देवी देव्यामधिजाता पृथिव्यामस्योषधे ! । तां त्वा नितत्नि ! केशेभ्यः” अथ० ६।१३६।१

**नितम्ब** पु० नि+तम्ब–अच्, निभृतं तम्यते काम्यते कामुकैः नितरां ताम्यति सुरतमर्दात् तम–बा० ब वा । स्त्रीणां पश्चात् १कटितटे अमरः २स्कन्धे ३कूले ४कट्या अधोभागे कटके (पर्वतवसतिस्थाने) ५कटिमात्रे च मेदि० । “तरुण्यालिङ्गितः कण्ठे नितम्बस्थानमाश्रितः । गुरूणां सन्निधानेऽपि कः कूजति मुहुर्मुहुः” विदग्ध० “नितम्बमिव मेदिन्याः स्रस्तांशुकमलङ्घयत्” रघुः “गिरेर्नितम्बे मरुता विभिन्नम्” भट्टिः “सेव्यो नितम्बः किमु भूधराणां किमु स्मरस्मेरविलासिनीनाम्” सा०द० ।

**नितम्बिन्** त्रि० नितम्ब+अस्त्यर्थे इनि । १नितम्बयुक्ते “मेखलागुणपदैर्नितम्बिभिः” रघुः । प्राशस्त्ये इनि । २प्रशस्तनितम्बयुक्तायां स्त्रियां स्त्री ङीप् । “नितम्बिनीमिच्छसि मुक्तलज्जाम्” कुमा० ।

**नितम्भू** पु० ऋषिभेदे “नितम्भूर्भवनो धौम्यः शतानन्दोऽकृतव्रणः” भा०अनु०२६अ० नामर्षिकथने

**नितराम्** अव्य०नि+तरप् आमु । १सुतरामित्यर्थे २अतिशये च “सुतरां तुदन्ति चेतो नितरां विवादिनाम्” कातन्त्र० “तेभ्यो नितरां विरतिः” वेदा० ।

**नितल** न० निकृष्टं तलमधोभागः प्रा०स० । पातालभेदे शब्दरत्ना० “अतलं वितलञ्चैव नितलञ्च गभस्तिमत् । महातलं सुतलञ्चापि पातालञ्चापि सप्तमम्” पुराणस० विष्णु० ।

**नितान्त** न० नितास्यति स्म नि+तम–क्त । १एकान्ते २अत्यन्ते अमरः । “निद्राविनोदितनितान्तरतिक्लमानाम्” किरा० “नितान्तदीर्घैर्जनिता तपोभिः” कुमा०।

**नित्य** त्रि० नियमेन नियतं वा भवं नि+त्यप् । १सतते अमरः । अहरहः क्रियमाणत्वेन २विधिबोधिते ३प्रत्यवायसाधनाभावप्रतियोगिनि कर्मणि यथा अहरहः सन्ध्यामुपासीतेति अत्र सन्ध्याभावे प्रत्यवायसाधनत्वबोधः । ४अविच्छिन्नपरम्पराके च यथा वर्णा नित्याः । ५उत्पत्तिविनाशरहिते ६शाश्वते कालत्रयस्थे वस्तुनि च त्रि० ७समुद्रे पु० राजनि० । शास्त्रबोधितसदातनकर्त्तव्यताकं च नित्यं तद्बोधकं ति०त० स्मार्त्तोक्तं यथा “नित्यं१ सदा२ यावदायुः३र्न कदाचिदतिक्रमेत्४ । उपेत्यातिक्रमे दोषश्रुतेरत्यागदर्शनात् । फलाश्रुतेर्वीप्सया च तन्नित्यमिह कीर्त्तितम्” । अत्र पूर्वार्द्धोक्तार्थकशब्दाः स्वान्वितपदार्थस्य नित्यत्वबोधकाः । उत्तरश्लोकबोध्यार्थास्तु परम्परया नित्यतासमर्पका इति भेदः “तस्मादस्मिन् सदायुक्तो नित्यं स्यादात्मवान् द्विजः” “विद्यागुरुष्वेतदेव नित्या वृत्तिः स्वयोनिषु” मनुः नित्यत्वञ्च ध्वंसाप्रतियोगित्वे सति प्रागभावाप्रतियोगित्वम् तेन उत्पत्तिविनाशशून्यत्वात् कालत्रयस्थत्वं गम्यते ।

**नित्यकर्मन्** न०कर्म०। विहिते कर्मभेदे “नित्यं नैमित्तिकञ्चैव नित्यनैमित्तिकन्तथा । गृहस्थस्य त्रिधा कर्म तन्निशामय पुत्रक ! । पञ्चयज्ञादिकं नित्यं यदेतत् कथितं तव । नैमित्तिकं तथा चान्यत् पुत्रजन्मक्रियादिकम् । नित्यनैमित्तिकं ज्ञेयं पर्वश्राद्धादि पण्डितैः” आ०त० मार्क०पु० तत्त्यागे दोषो यथा “नित्यानां कर्मणां विप्र ! तस्य हानिरहर्निशम् । अकुर्वन् विहितं कर्म शक्तः पतति तद्दिने । प्रायश्चित्तेन महता शुद्धिमाप्नोत्यनापदि । पक्षं नित्यक्रियाहानेः कर्त्ता मैत्रेय ! मानवः । संवत्सरं क्रियाहानिर्यस्य पुंसोऽभिजायते । तस्यावलोकनात् सूर्य्यो निरीक्ष्यः साधुभिः सदा । स्पृष्टे स्नानं सचेलस्य शुद्धिहेतुर्महामुने ! । पुंसो भवति तस्योक्ता न शुद्धिः पापकर्मणः” इति विष्णुपु० । अशौचादौ नित्यकर्मकरणनिषेधो यथा “जानूर्द्ध्वे क्षतजे जाते नित्यकर्म न चाचरेत् । सूतके च सकुल्यस्य क्षुरकर्मणि मैथुने । धूमोद्गारे तथा वान्तौ नित्यं कर्माणि संत्यजेत् । द्रव्ये भुक्ते त्वजीर्णे च नैव भुक्त्वा च किञ्चन । कर्म कुर्य्यान्नरो नित्यं सूतके

सूतके तथा । पत्रं पुष्पञ्च ताम्बूलं भेषजत्वेन कल्पितम् । कथादिपिप्पल्यनन्तञ्च फलं मुक्त्वा न चाचरेत् । जलञ्चापि नरश्रेष्ठ भोजनाङ्गे प्रजायते । नित्यक्रिया निवर्त्तेत सह नैमित्तिकैः सदा । जलौकागृह्नपादश्च क्रमिगण्डूपदादिकम् । कामाद्दृष्ट्वेन संस्पृश्य नित्यकर्म्माणि संत्यजेत् । विशेषतः शिवापूजां प्रमीतपितृको द्विजः । यावद्वत्सरपर्य्यन्तं मनसापि नचाचरेत् । महागुरुनिपाते तु काम्यं किञ्चिन्न चाचरेत् । आर्त्विज्यं ब्रह्मयज्ञञ्च श्राद्धं देवयुतञ्च यत् । गुरुमाचिम्य विप्रश्च प्रत्यक्षेव च पाणिना । न कुर्य्यान्नित्यकर्म्माणि रेतःपाते च भैरव !" कालि०पु० ५४ अ० ।

नित्यकर्म्मणि अथवंचाङ्गवैगुण्येऽपि फलनिष्पत्तिर्भवतीति कात्या० श्रौ० १।२।१८ सूत्रे याज्ञिकदेवकृतसंग्रहे च व्यवस्थापितं यथा

"अथेदं विचार्य्यते द्विप्रकारं कर्म्म नित्यं काम्यञ्च तत्र नित्यं प्रत्यदं विचार्य्यते । किं सर्वाङ्गोपेतं कर्त्तव्यम् उत यावन्त्यङ्गानि कर्त्तुं शक्नोति तावद्भिरङ्गैरुपेतमिति । किं तावत् प्राप्तम् सर्वाङ्गोपेतमेव कर्त्तव्यमिति कुतः भावनांशस्य कथंभावस्य सर्वैरङ्गैः परिपूरणेन सर्वाङ्गोपेतमेव कर्त्तव्यमित्येवं प्राप्ते आह" "विगुणे फलनिर्वृत्तिरङ्गप्रधानभेदात्" सू० । "नित्ये कर्म्मणि अग्निहोत्रदर्शपूर्णमासादिके प्रत्यवायपरिहाररूपस्य फलस्य निष्पत्तिर्भवत्येव । अङ्गप्रधानभेदात् यतोऽङ्गानि च प्रधानानि च भिन्नानि नित्येषु चेतिकर्त्तव्यता नास्ति अपूर्व्वाभावात् अपूर्वप्रयुक्ता हीतिकर्त्तव्यता सा च तस्मिन्नसति न भवितुमर्हति कथमपूर्व्वाभावः ? । फलाभावात् कालान्तरभाविफलसिद्ध्यर्थं ह्यपूर्वं कल्प्यम् । तस्मिन्नसति फले कल्पयितुं न शक्यते तस्मान्नित्येषु यागस्यैव भाव्यत्वम् न फलस्य । तस्मात् पौर्णमास्याममावास्यायां वाग्निमुद्दिश्य पुरोडाशस्यकल्प्य इत्येतावदुपदिश्यते तेन दृष्टार्थानि यान्यङ्गानि संनिपत्योपकारकाणि यैर्विना प्रधानभूतयागनिष्पत्तिर्न भवति अन्यथानुपपत्त्या तावद्भिरुपेतं प्रधानं कर्त्तव्यम् नाङ्गानि अङ्गाङ्गानं तु काम्यप्रयोगार्थम् अतोऽग्निकालपुरोडाशमात्रमादरणीयम् अन्यदङ्गजातमदृष्टार्थं नादरणीयमिति । कथं तर्हीदृशे निष्फले पुरुषस्य प्रवृत्तिरिति ? चेत् उच्यते प्रत्यवायानुत्पत्त्यर्थां प्रवृत्तिर्न तु फलार्थां विहिताकरणाद्धि प्रत्यवायः स्मर्य्यते "अकुर्व्वन्विहितं कर्म्म प्रायश्चित्तीयते नरः" इति (मनुना) । अतो नित्यकर्म्मणो निष्फलत्वादपूर्व्वाभावादितिकर्त्तव्यता नास्तीति हीनाङ्गस्यैव प्रयोग इति केचित् सिद्धान्तमाहुः । तदेतन्नोपपद्यते कथंभावमात्रो हि तत्र आकाङ्क्षा जायते किं, केन, कथमिति तत्र कथमितीतिकर्त्तव्यताकाङ्क्षा नित्येऽप्यस्ति तस्मादस्त्यस्तीतिकर्त्तव्यता । सत्यम् अस्त्येवेहाप्याकाङ्क्षायाः समानपदोपात्तेन यागेनैव पुरस्तान्निर्वृत्त्युपयोगिन्येनेतिकर्त्तव्यता कथमाकाङ्क्षया स्वह्यते न त्वदृष्टोपयोगि प्रयाजाद्यङ्गम् अदृष्टस्य साध्यस्याभावादिति चेत् न यागस्य अतोऽपुरुषार्थत्वेन प्रवृत्त्यन्यथानुपपत्त्या समानपदोपात्तं यागस्तत्स्वरूप्य सर्वेषामभिमतस्य प्रत्यवायपरिहारस्येह भाव्यतया कल्पनात् । ननु चेत् सर्व्वेषामभिमतः स्वर्गः किमिति न कल्प्यते, तस्य शरीरारम्भहेतुतया मोक्षविरोधित्वेन मुमुक्षूणामनभिप्रेतत्वात् प्रत्यवायपरिहारस्तु तैरपीष्यत एव कथं ? तस्मिन् पापे एतज्जन्मोपार्जिते भवान्तरोपार्जिते वा स्थिते सति तदुपभोगहेतुभूतशरीरारम्भावश्यम्भावेन मोक्षाभावात् अतो मोक्षार्थिनाप्यवश्यं पापक्षय एषितव्य एव समीहितफलाय, इतरथाऽप्रक्षीणे पापे फलाप्राप्तेः । तस्मान्नित्यानि कर्म्माणि पापक्षयस्योपायत्वेन चोद्यमानानीतिकर्त्तव्यतामपेक्षन्त एव । कर्म्मशास्त्रेषु च यथैवाकरणे प्रत्यवायः स्मृतः तथैव करणादपि पापक्षयः स्मर्य्यते "पूर्व्वां सन्ध्यां जपंस्तिष्ठन्नैशमेनो व्यपोहति (मनुः) इत्यादिभिः "नित्यनैमित्तिकैरेव कुर्व्वाणो दुरितक्षयमिति च" । तस्मान्नित्येऽप्यस्त्येव प्रत्यवायपरिहाररूपं फलम् । तस्मान्नित्यान्यपि कर्म्माणि सर्वाभिमतस्य तस्य पापक्षयस्योपायत्वेन चोद्यमानानीतिकर्त्तव्यतामपेक्षन्त एव । ततश्च सर्वाङ्गोपेतानामनुष्ठानं कश्चिदपि सर्वदा कर्त्तुं न शक्नोति जीवनादिनिमित्ते च तानि विधीयन्ते निमित्तस्य चैतदेव रूपं यत्तस्मिन् सति नैमित्तिकमवश्यं कर्त्तव्यम् । तेन यावज्जीवं कर्त्तव्यम् । तेन यथा शक्त्यादित्युपबोध्यते तस्मादवश्यमन्यतरस्मिन्हातव्ये निमित्ते सति नैमित्तिकस्य कर्त्तव्यत्वं प्रधानवाक्ये श्रूयते तद्यदि कस्यचिदङ्गस्यानुरोधेन सति निमित्ते नैमित्तिकं न क्रियते ततः प्रधानवाक्यविरोधः स्यात् प्रधानमात्रं श्रुत्या निमित्ते विधीयते अङ्गानि तु तदर्थतया प्रकरणेन गृह्यन्ते अतस्तानि प्रधानवाक्यगतावश्यकत्वानुरोधेन यथाशक्त्युपसंहर्त्तव्यानि इतरथा प्रधानस्यावश्यकर्त्तव्यत्वं श्रुतं

हीयेत तस्मात् प्रधानाविरोधेनाङ्गानि यथाशक्त्युपसंहर्त्तव्यानि। नन्वेवं हीनाङ्गादपि प्रधानात् फलसिद्धेरभ्युपगमात् समर्थोऽप्यङ्गानि परित्यक्ष्यतीति चेन्न। यत्नस्य कामतोऽङ्गे त्यज्यमाने वैगुण्यं स्यादेव अशक्तिपदेशं निमित्तं शास्त्रोपजीव्योभयानुरोधेन यावन्त्यङ्गानि कर्त्तुं शक्नोति तावद्भिरुपेतं प्रधानमेनः क्षपयतीति शास्त्रार्थोऽवधार्य्यते तावतैव शास्त्रवशात् फलनिष्पत्तिः इति भावः "विगुणे फलनिर्वृत्तिरङ्गप्रधानभेदादिति"। एतच्च प्रयोगविध्यनुजीव्येष्वङ्गेषूच्यते यदि कुर्य्यादित्युच्यते तत् यथाशक्तीत्युपबोध्यते। यानि तु स्वभावसिद्धानि विध्यन्तरसिद्धानि नोपजीव्यन्ते यथा लोके धनार्जनादि वेदेऽपि कालो विद्याग्न्यश्च तेषां स्वरूपेणैवाधिकारिविशेषणत्वम्। द्रव्यवान् विद्यावानग्निमानिति। एतदुक्तं भवति अङ्गं हि विधिबलादुपादीयते निमित्तानुरोधाद्वा त्यज्यते उभयानुग्रहार्थं वा यत्तं प्रत्युपादीयते अशक्तं प्रति त्यज्यत इति नान्या गतिरस्ति तत्रोभयानुग्रहो युक्तो यदि सम्भवति सम्भवत्युपादेयेष्वङ्गेषु यथाशक्ति व्रीहीन् सम्पादयेत् यथाशक्त्यवहन्यादिति आहवनीयादिस्वरूपं तु नानेन विधिनोपादीयते तस्मादग्निमान् विद्यावान् द्रव्यवान् जीवंश्च यजेतेत्येवमाम्नायते अतो विद्याग्निकालाद्यपरित्यागेनान्येषामङ्गानां यथाशक्त्यनुष्ठानं सिद्धम्। तथाचोक्तं तन्त्ररत्ने "यानि प्रयोगविधिना कर्त्तव्यत्वेनाङ्गानि चोद्यन्ते तेषामेव शक्तिपरिमितत्वम् यावन्ति शक्नुयात्तावन्ति कुर्य्यादिति यानि तु विध्यन्तरप्रयुक्तानि स्वयंसिद्धानि वाङ्गत्वेन दृश्यन्ते तानि स्वरूपत एवाधिकारिविशेषणम् यथाग्न्यादीनि तेषामुपादानस्य प्रयोगविधिनानुपादानाच्च यावच्छक्तीत्युपबन्धः सम्भवति किन्तु तदपेक्षो विधिस्तद्वन्तमेवाधिकरोति तेन सपत्नीकस्याधीतस्य (वेदस्य)व्याख्यानोपात्तसंस्कारविशिष्टस्याग्निमतो विद्यावतः प्रदोषादिकालसंयोगिनोऽधिकारो नान्यस्येति। एवं चाप्रतिसमाधेयाङ्गवैकल्येऽप्यग्न्यादिमानधिक्रियेतैव आधानं तु न कुर्य्यात्तस्यानैमित्तिकत्वादिति"। "प्रायश्चित्तविधानाच्च" सू०। "प्रायश्चित्तविधानादप्येवं कल्प्यते यद्विगुणेऽपि फलनिर्वृत्तिर्भवतीति। यदि च विगुणात् फलं न स्यात्तर्हि प्रायश्चित्तं न विदधीत नहि निष्फलस्याङ्गैः सत्यमस्ति अस्ति च विधानम् तस्माद्विगुणादपि फलं भवतीति। येषां मते नित्येषु फलाभावेनापूर्वाभावात्तदर्थं निकर्त्तव्यताभावेन निमित्तभेदने जाते वैगुण्यात्तत्परिहारायापरं होमाख्यमङ्गं भिन्ने जुहोतीत्यादिकमनुपपन्नं न क्रियत एव। पक्षान्तरे असत्यामितिकर्त्तव्यतायां भेदने जातेऽपि नास्ति वैगुण्यम् गुणहानिर्हि वैगुण्यम् असति गुणे कस्य हानिः स्यात् ततश्चासत्पक्ष एव प्रायश्चित्तविधानमुपपन्नमिति"। "तथा च दृष्टम्" सू०। "नित्यं कर्म यथा कथञ्चित् श्रुताङ्गपरित्यागेनापि यथाशक्त्यङ्गोपेतमनुष्ठातव्यत्वेन श्रुतौ दृष्टम्। तथा हि "यत्पयो न स्यात् केन जुहुयाः इति व्रीहियवाभ्यामित्यादि न वा इह तर्हि किं च नासीदथैतदङ्गत सत्यं श्रद्धायाम्" इत्यन्तेन ग्रन्थेन। तथा "तदेव यादृक्कीदृक् च होतव्यमिति" शाखान्तराच्च तस्माद्विगुणेऽपि नित्ये प्रत्यवायपरिहाररूपं फलं भवति अतएवोक्तं मक्राचार्य्यैः "उपात्तदुरितक्षयो वा उत्पत्स्यमानदुरितप्रतिबन्धो वा भवत्येवेति"। "नित्यकर्मण्यारब्धे अनारब्धे वा प्रतिनिधिर्भवति अवश्यकर्त्तव्यतया यथाशक्तिप्रयोगस्य व्यवस्थापितत्वात् इति" चान्यत्र तत्रोक्तम्। "काम्ये प्रतिनिधिर्नास्ति नित्ये नैमित्तिके हि सः" इत्युक्तेस्तत्र प्रतिनिधिरस्ति। "नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमिष्यते" मत्स्यपु०

**नित्यक्षौर** न० अवैधकेशादिच्छेदने "चूडोदिते तिथावृक्षे बुधेन्दोर्दिवसे नरः। नित्यक्षौरं प्रकुर्वीत जन्ममासे न तु क्वचित्" ज्योतिषसारः। अधिकं क्षुरकर्मन् शब्दे २२८६ पृ० दृश्यम्

**नित्यगति** पु० नित्यं गतिरस्य। सदागतौ वायौ हेमच०। "यथा वायुर्नित्यगतिर्जलदान् शतशोऽम्बरे" भा०स०४६ अ०। नित्यगमनादयोऽप्यत्र।

**नित्यदा** अव्य० नित्य+दाच् स्वरादि। सर्वदेत्यर्थे "त्वमग्निः सर्वभूतानामन्तश्चरसि नित्यदा" भा०आ० ६ अ०।

**नित्यदान** न० नित्यं प्रत्यहं कर्त्तव्यं दानम्। प्रत्यहकर्त्तव्ये दाने "नित्यं नैमित्तिकं काम्यं त्रिविधं दानमिष्यते। अहन्यहनि यत् विप्र! दीयतेऽनुपकारिणे। अनुद्दिश्य फलं तत् स्यात् ब्राह्मणस्य तु नित्यकम्" गरुडपु०।

**नित्यनैमित्तिक** न० कर्म०। नित्यत्वनैमित्तिकत्वयुक्ते कर्मभेदे पर्वश्राद्धादौ "नित्यनैमित्तिकं ज्ञेयं पर्वश्राद्धादि पण्डितैः" श्राद्धत० मार्कण्डेयपु०। प्रायश्चित्तेऽपि तथात्वम्। अवश्यकर्त्तव्यत्वेन नित्यत्वं पापनिश्चयवता कर्त्तव्यत्वेन नैमित्तिकत्वं यथाह प्रा०त० रघुनन्दनः "प्रायश्चित्तस्य नित्यत्वेनाङ्गवैकल्येऽपि फलसिद्धिः। तथा

च प्रायश्चित्तस्य नैमित्तिकत्वं नित्यत्वञ्च मिताक्षरायामाह "नैमित्तिकोऽयं प्रायश्चित्ताधिकारः। अत्र चार्थवादावगतपापक्षयोऽपि जातेष्टिन्यायेन साध्यतया स्वीक्रियते। न च दुरितपरिजिहीर्षयानुष्ठीयते एतावता काम्याधिकारमात्रशङ्का कार्य्या यस्मात् "चरितव्यमतो नित्यं प्रायश्चित्तं विशुद्धये। निन्द्यैर्हि लक्षणैर्युक्ता जायन्तेऽनिष्कृतैनसः" इति मनुवचनेऽकरणे दोषश्रवणेनावश्यकतावगमात्। तथा च याज्ञवल्क्यः "प्रायश्चित्तमकुर्वाणाः पापेषु निरता नराः। अपश्चात्तापिनः कष्टान्नरकान् यान्ति दारुणान्"। प्रायश्चित्तमकुर्वाणा दुःखदान्नरकान् प्राप्नुवन्ति"।

**नित्यप्रलय** पु० नित्यः प्रात्यहिकः प्रलयः। सुषुप्तौ "चतुर्विधस्तु प्रलयो नित्यो यः प्राणिनां लयः। सदा विनाशो जातानाम्" अग्निपु०३६७अ०। स च प्रलयचातुर्विध्यपक्षे वेदान्तपरिभाषायां विवृतो यथा

"स च चतुर्विधः नित्यः प्राकृतो नैमित्तिक आत्यन्तिकश्चेति। तत्र नित्यप्रलयः सुषुप्तिः तस्याः सकलकार्य्यप्रलयरूपत्वात् धर्माधर्मपूर्वसंस्काराणाञ्च तदा कारणात्मनावस्थानं, तेन सुप्तोत्थितस्य न सुखदुःखाद्यनुपपत्तिः न वा स्मरणानुपपत्तिः। न च सुषुप्तावन्तःकरणस्यापि विनाशे तदधीनप्राणनादिक्रियानुपपत्तिः, वस्तुतः श्वासाद्यभावेऽपि तदुपलब्धेः पुरुषान्तरविभ्रममात्रत्वात् सुप्तशरीरोपलम्भवत्। नचैवं सुषुप्तस्य परेतादविशेषः सुषुप्तस्य हि लिङ्गशरीरं संस्कारात्मना तत्रैव वर्त्तते परेतस्य तु लोकान्तरे इति वैलक्षण्यात्। यद्वा अन्तःकरणस्य द्वे शक्ती ज्ञानशक्तिः क्रियाशक्तिश्चेति तत्र ज्ञानशक्तिविशिष्टान्तःकरणस्य सुषुप्तौ विनाशः न तु क्रियाशक्तिविशिष्टस्येति प्राणनाद्यवस्थानमविरुद्धम्। "यदा सुप्तः स्वप्नं न कञ्चन पश्यति अथास्मिन् प्राण एवैकधा भवति अथैनं वाक् सर्वैर्नामभिः सहाप्येति सता सोम्य! तदा सम्पन्नो भवति स्वमपीतो भवतीत्यादि" श्रुतिस्तत्र सुषुप्तौ मानम्"।

**नित्यमुक्त** पु० नित्यं मुक्तः। कालत्रयेऽपि बन्धशून्ये परमात्मनि "अहं देवो नचान्योऽस्मि—इत्युपक्रमे नित्यमुक्तस्वभाववान्" आ०त०। "नित्यमुक्तत्वम्"। सां०सू०

**नित्ययज्ञ** पु० कर्म०। फलयोगं विना जीवनादिमात्रनिमित्तेन विहिते यथाकथञ्चित् प्रतिनिध्यादिना अवश्यकर्त्तव्यतया चानुष्ठेये अग्निहोत्रादौ यज्ञे। [स्त्री त्रिका०।

**नित्ययौवन** त्रि० नित्यं यौवनमस्य। १स्थिरयौवने २द्रौपद्यां

**नित्यवैकुण्ठ** पु० सत्यलोकस्थे विष्णोः स्थानभेदे "ऊर्द्ध्वं नमसि संविष्टो नित्यवैकुण्ठएव च। अस्त्याकाशवन्नित्यो विकृतचन्द्रविम्बवत्। इच्छाप्रत्यक्षतो नित्यश्च निराश्रयः। आकाशवत् सुविस्तारश्चामूल्यरत्ननिर्मितः। तत्र नारायणः श्रीमान् वनमाली चतुर्भुजः। लक्ष्मीः सरस्वती गङ्गा तुलसी पतिरीश्वरः। सुनन्दनन्दकुमुदपार्षदादिभिरन्वितः। सर्वेशः सर्वसिद्धीशो भक्तानुग्रहकारकः" ब्रह्मवै०पु० प्र०ख०।५अ०।

**नित्यसत्त्वस्थ** त्रि० नित्यमचलं यत् सत्त्वं धैर्य्यं गुणभेदो वा तत्र तिष्ठति स्था—क। १नित्यधैर्य्यावलम्बिनि २रजस्तमसी अभिभूय सदा सत्त्वगुणावलम्बिनि च। "नित्यसत्त्वस्थो निर्योगक्षेमः आत्मवान्" गीता।

**नित्यसम** पु० गौ० सूत्रोक्ते जात्युत्तरभेदे नित्यानित्यकार्य्यसमादीन् विभज्य "नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेः नित्यसमः" इति लक्षितम् जातिशब्दे ३१०४पृ० दृश्यम्

**नित्यसमास** पु० कर्म०। व्याकरणोक्ते स्वपदस्थानवाक्यपदरहितविग्रहवाक्यघटिते समासभेदे

**नित्यहोम** पु० नित्यं प्रत्यहं कर्त्तव्यो होमः। द्विजैः प्रत्यहं कर्त्तव्ये होमे। स च होमः "यावज्जीवमग्निहोत्रं जुहोति" इति श्रुत्युक्तः विष्णुसंहितोक्तोऽस्य विधो यथा "अथाग्निं परिसमुह्य पर्युक्ष्य परिस्तीर्य्य परिषिच्य सर्वतः पाकादग्रमुद्धृत्य जुहुयात्। वासुदेवाय सङ्कर्षणाय प्रद्युम्नायानिरुद्धाय पुरुषाय सत्यायाच्युताय वासुदेवाय। अथाग्नये सोमाय मित्राय वरुणाय इन्द्रायेन्द्राग्निभ्यां विश्वेभ्यो देवेभ्यः प्रजापतये अनुमत्यै धन्वन्तरये वास्तोष्पतये अग्नये स्विष्टकृते च"। "वैश्वदेवस्य सिद्धस्य गृह्येऽग्नौ विधिपूर्वकम्। होमं कुर्य्याद्देवताभ्यो ब्राह्मणो होममन्वहम्। अग्नेः सोमस्य चैवादौ तयोश्चैव समस्तयोः। विश्वेभ्यश्चैव देवेभ्यो धन्वन्तरय एव च। कुह्वै चैवानुमत्यै च प्रजापतय एव च। सह द्यावापृथिव्योश्च तथा स्विष्टकृतेऽन्ततः" मनुनोक्तविधिरन्यविधः शाखाभेदात् व्यवस्था।

**नित्या** स्त्री १देव्याः शक्तिभेदे तदधिकारेणैव नित्यातन्त्रं प्रवृत्तं तज्ज्ञानमन्त्रादिकं तन्त्रसारे दृश्यम्। २मनसादेव्यां शब्दरत्ना०।

**नित्यानध्याय** पु० सर्वथा वर्जनीयवेदपाठकालादौ "द्वावेव वर्जयेन्नित्यमनध्यायौ प्रयत्नतः। स्वाध्यायभूमिञ्चाशुद्धामात्मानं चाशुचिं द्विजः" इति "इमान्नित्यमनध्यायान-

घीयानो विवर्जयेत्" इति मनुना प्रदर्शितोऽनध्यायभेदः अनध्यायशब्दे १४६पृ० दृश्यम्।

**नित्यानित्यवस्तुविवेक** पु० नित्यञ्च अनित्यञ्च नित्याऽनित्ये ते च ते वस्तुनी च नित्यानित्यवस्तुनी नित्यानित्यवस्तुनोर्विवेकः पृथगात्मता। ब्रह्मैव नित्यं वस्तु ततोऽन्यदखिलमनित्यमिति विवेचने। "ब्रह्म सत्यं जगन्मिथ्येत्येवं रूपो विनिश्चयः। सोऽयं नित्यानित्यवस्तुविवेकः समुदाहृतः" शब्दार्थचि० धृतवाक्यम्। अयञ्च ब्रह्मविद्यायाम् अधिकारप्रयोजकः।

**नित्यानित्यसंयोगविरोध** पु० नित्यत्वस्यानित्यत्वस्य एकत्र संयोगे सम्बन्धे विरोधः। एकत्र धर्मिणि नित्यत्वस्यानित्यत्वस्य च सम्बन्धरूपे भावाभावयोरेकत्र योगरूपे विरोधे। संयोगपृथक्त्वन्यायविषयातिरिक्त एतस्य विरोधस्य दूषकतेरित्याकारे दृश्यम्।

**नित्याभियुक्त** त्रि० नित्यमभि समन्तात् युक्तः योगे व्यापृतः। देहयात्रामात्रार्थं प्रयतमाने इतरत्यागाशक्ते योगिनि

**निद** न० निदि—क वा० नलोपः। १विषे शब्दच० २निन्दके त्रि० "अश्वैन् निदाया विश्वेभिरग्निम्" ऋ० ६।१२।६ "निदाया निन्दित्याः" भा०। [पुंस्त्री० शब्दच०।

**निदद्रु** त्रि० निवृत्तो दद्रुरस्य प्रा०ब०। १दद्रुरहिते २मनुष्ये

**निदर्शन** न०नि+दृश—ल्युट्। १उदाहरणे दृष्टान्ते "आत्मा ह्याकाशवज्जीवैर्घटाकाशैरिवोदितम्। घटादिवच्च सङ्घातैर्जातावेतन्निदर्शनमिति"। यदा मन्दबुद्धिप्रतिपिपादयिषया श्रुत्यात्मनो जातिरुच्यते जीवादीनां तदा जातावुपगम्यमानायामेतन्निदर्शनं दृष्टान्तो यथोदितं आकाशवदित्यादीनि भाष्यम्" शब्दार्थचि०। २अर्थालङ्कारभेदे स्त्री टाप्। अर्थालङ्कारशब्दे ३८८पृ०दृश्यम्।

**निदाघ** पु० नितरां दह्यतेऽत्र नि+दह—आधारे घञ् न्यङ्क्वादि० कुत्वम्। १उष्णे २घर्मे ३घर्मकाले ज्यैष्ठाषाढ़मासयोः ४घर्मजले च मेदि०। ऋतुसंहारे १म सर्गे निदाघकाले वर्ण्याः पदार्था भङ्ग्या प्रदर्शितास्तत्रैव दृश्याः। पुलस्त्यपुत्रे ऋभुपत्नीजाते ५ऋषिभेदे पु०।

**निदाघकर** पु० निदाघ उष्णः करः यस्य। १सूर्ये हारा० निदाघधामादयोऽप्यत्र "निदाघधामानमिवाधिदीधितिम्" माघः। २अर्कवृक्षे च

**निदाघकाल** पु० निदाघस्य कालः। १ग्रीष्मर्त्तौ ज्यैष्ठाषाढ़मासयोः "दिनान्तरम्योऽभ्युपशान्तमन्मथो निदाघकालः समुपागतः प्रिये!" ऋतुसं०।

**निदातृ** त्रि० नि+दो—तृच्। निरोधके "परम्परसोदयचिह निदातारम्" ऋ० ८।७२।५ "निदातारं विरोधकम्" भा०।

**निदान** न०नितरामसाधारणतया दयते कार्य्यम् नि+दैङ् पालने ल्युट्। १आदिकारणे अमरः २कारणमात्रे ३वत्सदामनि निहृत्त दानम् प्रा०स० ४कारणक्षये च मेदि० नि+दै शुद्धौ भावे ल्युट्। ५शुद्धौ हेमच०। ६रोगनिर्णये विश्वः ७रोगहेतौ। "निदानं पूर्वरूपाणि रूपाण्युपशयस्तथा। सम्प्राप्तिश्चेति विज्ञानं रोगाणां पञ्चधा स्मृतम्। निमित्तहेत्वायतनप्रत्ययोत्थानकारणैः। निदानमाहुः पर्य्यायैः प्राग्रूपं येन लक्ष्यते" इति माधवकरः सुश्रुते निदानप्रकरणे तद्भेदादिकं दृश्यम्। "निदानमिक्ष्वाकुकुलस्य सन्ततेः" रघुः।

**निदिग्ध** त्रि० नि+दिह—क्त। १उपचिते २लेपनादिना वर्द्धिते च ३एलायां स्त्री शब्दच०। ततः संज्ञायां कन् कापि अत इत्त्वम्। निदिग्धिका कण्टकारिकायां स्त्री अमरः।

**निदिग्धिकादिक्वाथ** पु० चक्रदत्तोक्ते क्वाथभेदे "निदिग्धिकानागरकामृतानां क्वाथं पिबेन्मिश्रितपिप्पलीकम्। जीर्णज्वरारोचककासशूलश्वासाग्निमान्द्यार्दितपीनसेषु। हन्त्यूर्ध्वगामयं प्रायः सायन्तेनोपयुज्यते"

**निदिध्यास** पु० नि+ध्या—सन्—भावे घञ्। श्रवणमननज्ञातस्य एकताननाख्ये निरन्तरचिन्तने। भावे ल्युट् निदिध्यासन तत्रार्थे न०। तल्लक्षणादि यथा "निरन्तरं विचारो यः श्रुतार्थस्य गुरोर्मुखात्। तन्निदिध्यासनं प्रोक्तं तच्चैकाग्र्येण लभ्यते। यथात्मन्यर्पितचित्ते हर्षितात्मनि चेद्भवेत्। पुण्यपुञ्जेन शुद्धं तच्चित्तमैकाग्र्यमर्हति"। विजातीयदेहादिप्रत्ययरहिताद्वितीयवस्तुनि २सजातीयप्रत्ययप्रवाहे। विजातीयप्रत्ययानन्तरितेन सजातीयप्रत्ययप्रवाहेण ३श्रवणमननफलभूतेनात्मचिन्तने। निदिध्यासनं च विचारविशेषात्मकम्। स च विचारविशेषोध्यानात्मा तत्त्वज्ञानरूपं निदिध्यासनम्। "ताभ्यां निर्विचिकित्सेऽर्थे चेतसः स्थापितस्य यत्। एकतानत्वमेतद्धि निदिध्यासनमुच्यते"। ताभ्यां श्रवणमननाभ्याम्। ४अपरायत्तबोधे। "अपरायत्तबोधो हि निदिध्यासनमुच्यते" इति वार्त्तिकोक्तेः "तस्य वेदान्तवेद्यस्य निदिध्यासनतो विना" काशीख०१०अ०। "श्रुते शतगुणं विद्यात् मननं मननादपि। निदिध्यासं लक्षगुणमनन्तं निर्विकल्पकम्" विवेकचू०।

**निदेश** पु॰ नि+दिश–घञ् । १शासने २आज्ञायां ३कथने अमरः ४निकटे ५भाजने च मेदिनिः "शासस्य तु शयानस्य निदेशे चैव तिष्ठतः" मनुः "निदेशात् स्वर्गिणः पितुः" रघुः ।

**निदेशिन्** त्रि॰ नि+दिश–णिनि । १आज्ञाकारके स्त्रियां ङीप् । सा च २दिशि काष्ठायां राजनि॰ ।

**निद्रा** स्त्री नि+द्रा–भावे अ । १शयने स्वप्ने । निद्रा च कालाग्निरुद्रपत्नी यथा "कालाग्निरुद्रपत्नी च निद्रा सा सिद्धयोगिनी । सर्वलोकाः समाच्छन्ना यया योगेन रात्रिषु" इति । रात्रिषु योगेन सम्बन्धेन । २तन्द्रा-प्रतिबोधे । ३अभावप्रत्ययालम्बनायां वृत्तौ चेतसृणां वृत्तीनामभावस्य प्रत्ययः कारणं तमोगुणस्तदालम्बना-वृत्तिरेव निद्रा न तु ज्ञानाद्यभावमात्रम् । सत्त्वरज उभयविरोधिन्यां तमोगुणालम्बनायां ४वृत्तौ । "निद्रा-भिमानिनी काली तामसी शक्तिरिष्यते । यदा तु मनसि क्लान्ते कर्मात्मानः क्लमान्विताः । विषयेभ्यो निव-र्त्तन्ते तदा स्वपिति मानवः" । कर्मात्मानः उभयविधा-नीन्द्रियाणि "सुखं स्वपित्यनृणवान् व्याधिमुक्तश्च यो नरः । सावकाशस्तु यो भुङ्क्ते यस्तु दारैर्न सङ्गतः । कुतो निद्रा दरिद्रस्य परप्रेष्यकरस्य च । परनारीप्रस-क्तस्य परद्रव्यहरस्य च" निद्रा च मेध्या नाडीसंयोग-रूपेति नैयायिका चित्तवृत्तिभेद इति योगाचार्या यथा "वृत्तयः पञ्चतय्यः क्लिष्टाऽक्लिष्टाः" "प्रमाणविपर्ययविकल्प-निद्रास्मृतयः" पा॰सू॰ वृत्तीः पञ्चधा विभज्य "अभा-वप्रत्ययालम्बना वृत्तिर्निद्रा" सू॰ निद्रावृत्तिर्लक्षिता । सा च सम्प्रबोधे प्रत्यवमर्शात् प्रत्ययविशेषः कथं ? सुखमह-मस्वाप्सं प्रसन्नं मे मनः प्रज्ञां मे विशदीकरोति । दुःखमहमस्वाप्सं स्त्यानं मे मनोभ्रमत्यनवस्थितम् । गाढं मूढोऽहमस्वाप्सं गुरूणि मे गात्राणि क्लान्तं मे चित्तमलसं मुषितमिव तिष्ठतीति । स खल्वयं प्रबुद्धस्य प्रत्यवमर्शो न स्यात् असति प्रत्ययानुभवे तदाश्रिताः स्मृतयश्च तद्विषया न स्युः । तस्मात् प्रत्ययविशेषो निद्रा । सा च समाधावितरप्रत्ययवन्निरोद्धव्येति" भा॰ "अधिकृतं हि वृत्तिपदमनुवादकं प्रमाणविपर्ययविकल्पस्मृतीनां वृ-त्तित्वं प्रतिपरीक्षकाणामविप्रतिपत्तेरतस्तदनूद्यते विशेष-विधानाय निद्रायास्तु वृत्तित्वे परीक्षकाणां विप्रतिपत्ते-रिति वृत्तित्वं विधेयम् । न च प्रकृतमनुवादकं विधा-नाय कल्पत इति पुनर्वृत्तिपदग्रहणम् जाग्रत्स्वप्नवृत्ती-नामभावस्य प्रत्ययः कारणं बुद्धिसत्त्वाच्छादकं तमस्त-देवालम्बनं विषयो यस्याः सा तथोक्ता वृत्तिर्निद्रा । बुद्धिसत्त्वे हि त्रिगुणे यदा सत्त्वरजसी अभिभूय समस्त-करणावरकमाविरस्ति तमस्तदा बुद्धेर्विषयाकारपरिणा-माभावादुद्भूततमोमयीः बुद्धिमवबुध्यमानः पुरुषः सुषु-प्तोऽन्तःसंज्ञ इत्युच्यते । कस्मात् पुनर्निद्रा कैवल्ययो-रिव वृत्त्यभाव एव न निद्रेत्यत आह । सा च सम्प्रबोधे प्रत्यवमर्शान्यथानुपपत्तिकात् कारणात् प्रत्ययविशेषः । कथं ? यदा हि सत्त्वसचिवन्तम आविरस्ति तदेदृशः प्रत्यवमर्श सुप्तोत्थितस्य भवति । सुखमहमस्वाप्सम् प्रसन्नं मनः प्रज्ञां मे विशदीकरोति स्वच्छीकरोति इति यदा तु रजःसचिवन्तमः आविरस्ति तदेदृशः प्रत्यवमर्श इत्याह । दुःखमहमस्वाप्सं स्त्यानम् अकर्मण्यं मे मनः कस्मात् यतो भ्रमत्यनवस्थितम् । नितान्ताभिभूतरजः-सत्त्वे तमःसमुद्भवे स्वापे प्रबुद्धस्य प्रत्यवमर्शमाह । गाढं मूढोऽहमस्वाप्सं गुरूणि मे गात्राणि क्लान्तं मे चित्तमलसम्मुषितमिव तिष्ठतीति । साध्यव्यति-रेके हेतुव्यतिरेकमाह । स खल्वयमिति । प्रबुद्धस्य प्रबुद्धमात्रस्य तदाश्रिताश्चेति बोधकाले प्रत्ययानुवृत्त्य-भावे कारणानुभव इत्यर्थः । ननु प्रमाणादयो व्युत्थान-चित्ताधिकरणा निरुध्यन्तां समाधिप्रतिपक्षत्वान्निद्रा-यास्त्वेकाग्रवृत्तितुल्यायाः कथं समाधिप्रतिपक्षतेत्यत आह । सा च समाधाविति । एकाग्रतुल्यापि ताम-सत्वेन निद्रा सबीजनिर्बीजसमाधिप्रतिपक्ष इति सापि निरोद्धव्येत्यर्थः" विवरणम् । इयञ्च वेदान्तिभिः सुषुप्ति-रित्यभिधीयते ।

**निद्राण** त्रि॰ नि+द्रा–तस्य नः । निद्रायुक्ते अमरः ।

**निद्रालु** त्रि॰ नि+द्रा–शीलार्थे आलु । निद्राशीले अमरः । "अङ्गानि निद्रालसविभ्रमाणि" कुमा॰ । [ब्दमा॰ ।

**निद्रावृक्ष** पु॰ निद्राया वृक्ष इवाश्रयत्वात् । अन्धकारे श-

**निद्रासंजनन** न॰ निद्रां संजनयति सम्–जन णिच्–ल्यु । श्लेष्मणि धातौ शब्दमाला । कफधातोर्निद्राजनकत्वं वैद्यके प्रसिद्धम् ।

**निधन** पु॰न॰ । निधीयतेऽत्र नि+धा–क्यु । १मरणे अमरः लग्नतः २अष्टमस्थाने तत्र मरणस्य चिन्त्यत्वा-त्तस्य तथात्वम् । ३स्वजन्मनक्षत्रावधिकेषु सप्तमषोडश-योर्विंशेषु नक्षत्रेषु "निधने तिलकाञ्चनम्" ज्यो॰ त॰ । "क गन्तासि भ्रातः । कृतवसतयो यत्र धनिनः । किमर्थं

प्राणानां स्थितिमनुविधातुं कथमपि। धनैर्याच्ञालब्धैर्न तु परिभवोऽभ्यर्थनफलम् निकारोऽप्येवं पश्चाद्धनमहह भोक्तुं निधनमिति" शान्तिश०। पञ्चावयवस्य सप्तावयवस्य वा साम्नोऽन्तिमे ४अवयवे च तच्च यस्य कस्यचित्साम्नः अन्तिमभागरूपम् उद्गातृप्रस्तोतृप्रतिहर्तृभिः मिलितैर्गेयम्। "ऋतुषु पञ्चविधं सामोपासीत वसन्तो हिङ्कारः ग्रीष्मः प्रस्तावः वर्षा उद्गीथः शरत् प्रतिहारो हेमन्तो निधनम्" "वाचि सप्तविधं सामोपासीत यत्किञ्चित् वाचो हुमिति स हिङ्कारः यत्प्रेति स प्रस्तावो यदेति स आदिः यदुदिति स उद्गीथः यत्प्रतीति स प्रतिहारः यदुपेति स उपद्रवः यन्नीति तन्निधनम्" छा०उ०। निहतं धनं यस्मात्। ५दरिद्रे त्रि० "निधनता सर्वापदामास्पदम्" मृच्छकटिकम्

**निधनवत्** त्रि० निधन+अस्त्यर्थे मतुप् मस्य वः। १मरणयुक्ते निधनावयवयुक्ते २साम्नि न० "पङ्क्त्यै निधनवत्। निधनवत आग्रायणम्" यजु०१३।५८ "निधनवत्साम" वेददी०।

**निधा** स्त्री निधीयते धार्यते बन्धनेनानया नि+धा—अङ्। १पाशसमूहे "निधा पाश्या भवति यन्निधीयते" निरु० ४।२ "चतुर्दशगव्यूत्यान् निधयेव बद्धान्" ऋ० १०।७३।११ "निधा पाश्या पाशसमूहस्तया बद्धान्" भा० भावे अ। २निधाने ३अर्पणे च।

**निधान** न० नि+धा—भावे ल्युट्। १स्थापने निधीयतेऽत्र। २आधारे आश्रये "निधानभूतं सर्वं यद्यः समधिगच्छति" आगमः। ३लयस्थाने "एतन्नानावताराणां निधानं बीजमव्ययम्" भाग०१।३।६। ४निधिशब्दार्थे। ५अप्रकाशे सि०कौ० निमूलशब्दे दृश्यम्। "नेरनिधाने" पा० "निधानकुम्भस्य यथैव दुर्गतः" रघुः "कृत्वा निधानं पादेन सोऽर्थमिच्छति भिक्षया" काशीख०४६अ०। ततः ऋश्या० चतुरर्थ्यां क। निधानक तत्सन्निकृष्टदेशादौ।

**निधि** पु० नि+धा—आधारे कि। १वस्तुन आधारे "निधिः श्रुतीनां धनसम्पदामिव" माघः "तदित्यमेतस्य निधेः कलानाम्" नैष०। जलनिधिः गुणनिधिरित्यादि २नलिकानामगन्धद्रव्ये ३समुद्रे राजनि० ४विष्णौ परेश्वरे तस्य सर्वाधारत्वात् तथात्वम्। "सर्वः शर्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः" विष्णुस० "प्रलयेऽस्मिन् सर्वं निधीयते इति निधिः" भा०। ५भूखाताज्ञातस्वामिकधनादौ मिताक्ष० निधिविषये विधिभेदस्तत्रोक्तो यथा

"अधुना भूमौ चिरनिखातस्य सुवर्णादेर्निधिशब्दवाच्यस्याधिगमे विधिमाह "राजा लब्ध्वा निधिं दद्यात् द्विजेभ्योऽर्द्धं द्विजः पुनः। विद्वानशेषमादद्यात् सर्वस्यासौ प्रभुर्यतः। इतरेण निधौ लब्धे राजा षष्ठांशमाहरेत्। अनिवेदितविज्ञातो दाप्यस्तं दण्डमेव च" याज्ञ०। उक्तलक्षणं निधिं राजा लब्ध्वार्द्धं ब्राह्मणेभ्यो दत्त्वा शेषं कोषे निवेशयेत्। ब्राह्मणस्तु विद्वान् श्रुताध्ययनसम्पन्नः सदाचारो यदि निधिं लभेत तदा सर्वमेव गृह्णीयात्। यस्मादसौ सर्वस्य जगतः प्रभुः। इतरेण तु राजविद्वद्ब्राह्मणव्यतिरिक्तेनाविद्वद्ब्राह्मणक्षत्रियादिना निधौ लब्धे राजा षष्ठांशमधिगन्त्रे दत्त्वा शेषं निधिं स्वयमाहरेत्" यथाह वशिष्ठः "अप्रज्ञायमानं वित्तं योऽधिगच्छेत् राजा तद्धरेदधिगन्त्रे षष्ठमंशं प्रदद्यात्" इति। गौतमोऽपि "निध्यधिगमो राजधनं न ब्राह्मणस्याभिरूपस्याब्राह्मणोऽप्याख्याता षष्ठमंशं लभेतेत्येके" इति। अनिवेदित इति कर्त्तरि निष्ठा। अनिवेदितश्चासौ विज्ञातश्च राज्ञा" इत्यनिवेदितविज्ञातः। यः कश्चिन्निधिं लब्ध्वा राज्ञे न निवेदितवान् विज्ञातश्च राज्ञा, स सर्वं निधिं दाप्योदण्डञ्च शक्त्यपेक्षया। अथ निधेरपि स्वाम्यागत्य रूपसङ्ख्यादिभिः स्वत्वं भावयति तदा तस्मै राजा निधिं दत्त्वा षष्ठं द्वादशं वांशं स्वयमाहरेत्" यथाह मनुः "ममायमिति यो ब्रूयान्निधिं सत्येन मानवः। तस्याददीत षड्भागं राजा द्वादशमेव वेति"। अंशविकल्पस्तु वर्णकालाद्यपेक्षया वेदितव्यः"। ६महापद्मादिरत्नविशेषे शेवधौ स च नवविधः "महापद्मश्च पद्मश्च शङ्खो मकरकच्छपौ। मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नव" इति शब्दार्णवः खर्वभिन्नानामष्टानामेव निधित्वं तल्लक्षणञ्च मार्कण्डेयपु० ६०अ०उक्तं यथा

"मार्कण्डेय उवाच। पद्मिनी नाम या विद्या लक्ष्मीस्तस्याश्च देवता। तदाधाराश्च निधयस्तान् मे निगदतः शृणु। तत्र पद्ममहापद्मौ तथा मकरकच्छपौ। मुकुन्दकुन्दौ नीलश्च शङ्खश्चैवाष्टमो निधिः। सत्यां ऋद्धौ भवन्त्येते सिद्धिः सह भवन्त्यमी। एते ह्यष्टौ समाख्याता निधयस्तव क्रोष्टुके!। एभिरालोकितं चित्तं मानुषस्य महामुने!। यादृक् स्वरूपं भवति तन्मे निगदतः शृणु। पद्मो नाम निधिः पूर्वः स यस्य भवति द्विज!। स तस्य तत्सुतानां च तत्पुत्राणां च नान्यमः। दाक्षिण्यसारः पुरुषस्तेन चाधिष्ठितो भवेत्। सत्त्वाचारो

महाभागोयतोऽसौ सात्त्विको निधिः। सुवर्णरूप्यताम्रादिधातूनां च परिग्रहम्। करोत्यतितरां सोऽपि तेषां च क्रयविक्रयम्। करोति च तथा यज्ञान् दक्षिणाश्च प्रयच्छति। सभ्यादवति कामांश्च सर्वानेव यथाक्रमम्। सभादेवनिकेतांश्च स कारयति तन्मनाः १। सत्त्वाधारो निधिश्चान्यो महापद्म इति स्मृतः। सत्त्वप्रधानो भवति तेन चाधिष्ठितो नरः। करोति पद्मरागादिरत्नानाञ्च परिग्रहम्। स मौक्तिकप्रवालानां तेषां च क्रयविक्रयम्। ददाति योगशीलेभ्यस्तेषामावसथांस्तथा। स करोति च तच्छीलः स्वयमेव च जायते। तत्प्रसूतास्तथाशीलाः पुत्रपौत्रक्रमेण च। पर्य्यन्तिमात्रः सप्तासौ पुरुषांश्च न मुञ्चति। महापद्मस्तु विप्रार्थं यज्ञार्थमुपजायते २। तामसो मकरो नाम निधिस्तेनावलोकितः। पुरुषोऽथ तमःप्रायः सुशीलोऽपि हि जायते। बाणखड्गर्ष्टिधनुषां चर्मणाञ्च परिग्रहम्। दंशनानाञ्च कुरुते याति मैत्रीञ्च राजभिः। ददाति शौर्य्यवृत्तीनां भूभुजां ये च तत्प्रियाः। क्रयविक्रयशस्त्राणां नान्यत्र प्रीतिमेति च। एकस्यैव भवत्येष नरस्य न सुतानुगः। द्रव्यार्थं दस्युतो नाशं संग्रामे वापि स व्रजेत् ३। कच्छपाख्यो निधिर्योऽन्यो नरस्तेनाभिवीक्षितः। तमःप्रधानो भवति यतोऽसौ तामसो निधिः। व्यवहारान् न शिष्टैश्च पण्यजातं करोति च। क्रियाः सा निखिलाश्चैव न विश्वसिति कस्यचित्। समस्तानि यथाङ्गानि निरुद्धास्ते हि कच्छपः। तथावष्टभ्य वित्तानि तिष्ठत्याकुलमानसः। न ददाति न वा भुङ्क्ते तद्विनाशभयाकुलः। निधानमुर्व्यां कुरुते निधिः सोऽप्येकपूरुषः ४। रजोगुणमयश्चान्यो मुकुन्दो नाम यो निधिः। नरोऽवलोकितस्तेन तद्गुणो भवति द्विज!। वीणावेणुमृदङ्गादिगीतवाद्यपरिग्रहम्। करोति गायतां वित्तं नृत्यतां च प्रयच्छति। वन्दिमागधसूतानां विटानां लास्यपाठिनाम्। ददात्यहर्निशं भोगान् भुङ्क्ते तैस्तु समं द्विज!। कुलटासु रतिश्चास्य भवत्यन्यैश्च तद्विधैः। प्रयाति सङ्गमेकं च स निधिर्भजते नरम् ५। रजःसत्त्वमयश्चान्यः कुन्दोनाम महानिधिः। उपैति स्तम्भमधिकं नरस्तेनावलोकितः। समस्तधातुरत्नानां पण्यधान्यादिकस्य च। परिग्रहं करोत्येष तथैव क्रयविक्रयम्। आधारः स्वजनानां चाप्यागताभ्यागतस्य च। सहते नापमानोक्तिं स्वल्पामपि महामुने!। स्तूयमानश्च महतीं प्रीतिं बध्नाति यच्छति। यं यमिच्छति वै कामं मृदुतामुपयाति च। बह्व्यो भार्य्या भवन्त्यस्य सुतिमत्योऽतिशोभनाः। तदन्वये सप्त नरान् निधिः कुन्दोऽनुवर्त्तते। प्रवर्द्धमानोऽनुनरमष्टभागेन सत्तम!। दीर्घायुश्चैव सर्वेषां पुरुषाणां प्रयच्छति। बन्धूनामेव भरणं ये च दूरादुपागताः। तेषां करोति वै कुन्दः परलोकेन चादृतः। भवत्यस्य न च स्नेहः सहवासिषु जायते। पूर्वमित्रैश्च शैथिल्यं प्रीतिमन्यैः करोति च ६। तथैव सत्त्वतमसी यो बिभर्त्ति महानिधिः। निधिः स नीलसत्सङ्गी नरस्तच्छीलभाग्भवेत्। वस्त्रकार्पासधान्यादिफलपुष्पपरिग्रहम्। मुक्ताविद्रुमशङ्खानां शुक्त्यादीनां तथा मुने!। काष्ठादीनां करोत्येष यच्चान्यज्जलसम्भवम्। क्रयविक्रयमप्येषां नान्यत्र रमते मनः। तडागान् पुष्करिण्यादीन् तथाऽऽरामान् करोति च। बन्धञ्च सरितां वृक्षांस्तथारोपयते नरः। अनुलेपनपुष्पादिभोगभोक्ताऽपि जायते। त्रिपूरुषश्चापि निधिर्नीलो नामेह जायते ७। रजस्तमोमयश्चान्यः शङ्खसंज्ञो हि यो निधिः। तेनापि नीयते विप्र! तद्गुणत्वं निधीश्वरः। एकस्यैव भवत्येष नरं नान्यमुपैति च। यस्य शङ्खो निधिस्तस्य स्वरूपं क्रौष्टुके! शृणु। एक एवात्मना मिष्टान्नं भुङ्क्ते तथाऽम्बरम्। कदन्नभुक्परिजनो न च शोभनवस्त्रधृक्। न ददाति सुहृद्भार्य्यासुतपुत्रस्नुषादिषु। स्वपोषणपरः शङ्खी नरो भवति सर्वदा ८। इत्येते निधयः ख्याता नराणामर्थदेवताः। मिश्रावलोकिता मिश्रस्वभावफलदायिनः। यथाख्यातस्वभावस्तु भवत्येकविलोकनात्। सर्वेषामाधिपत्ये च श्रीरेषा द्विज! पद्मिनी”। ऋषीणामध्ययनभूतपाठयुते २वेदे च। निधिगोपशब्दे दृश्यम्।

**निधिगोप** पु० निधिमृषीणामध्ययनभूतपाठो वेदस्तं गोपायति गुप–अण् उप०। अनूचाने “अथ यदेवानुब्रुवीत तेन ऋषिभ्य ऋणं जायते। तद्ध्येभ्य एतत् करोति ऋषीणां निधिगोपं ह्यनूचानमाहुः” शत०ब्रा० १।७।२।२

**निधिनाथ** पु० ६त०। कुबेरे त्रिका० निधीशादयोऽप्यत्र।

**निधुवन** न० नितरां धुवनं हस्तपादादिचालनमत्र। मैथुने १सुरतलीलायाम् अमरः। “निधुवनविनोदेन च मलम्” कर्पूरस्तवः “नवनिधुवनलीलाः कौतुकेनाभिवीक्ष्य” माघः। नितरां धुवनम्। २अत्यन्तकम्पने च

**निधेय** त्रि० नि+धा–यत्। स्थाप्ये स्त्रियां टाप्। “शीघ

पद्माक्षया देवि ! निधेया वैष्णवीरपि" हरिवं० ६८अ० आङि तु शार्ङ्गरवा० स्त्रियां ङीप् । आनिधेयी

**निध्यान** न० नि+ध्यै–भावे ल्युट् । निर्वर्णने दर्शने अमरः

**निध्रुव** पु० गोत्रप्रवर्त्तकर्षिप्रवरर्षिभेदे "निध्रुवाणां काश्यपा वत्सारनैध्रुवेति" आश्व०श्रौ० १२।१४।७ गोत्रप्रवरोक्तौ

**निध्रुवि** त्रि० नितरां ध्रुवति ध्रु–स्थैर्ये कि । नितरां स्थैर्यान्विते । "यो मर्त्येषु निध्रुविर्ऋतावा" ऋ०७।४।१

**निध्वान** पु० नि+ध्वन–भावे घञ् । शब्दमात्रे शब्दरत्ना०।

**निनक्षु** त्रि० नष्टुमिच्छुः नश–सन्–उ नुम् । अदर्शनं प्राप्तुमिच्छौ "अविस्मयश्च वस्तूनां निनक्षुर्विक्रमं सुहृः" भट्टिः ।

**निनद** पु०नि+नद–भावे अप् । १शब्दे अमरः २रथतुल्य-शब्दे शब्दार्थचि०। "उच्चचार निनदोऽम्भसि तस्याः" रघुः।

**निनयन** न० नि+नी–ल्युट् । १निष्पादने "नाभिव्याहारयेद् ब्रह्म स्वधानिनयनादृते" मनुः "निनयनं निष्पादनम्" कुल्लू० । २परासेचने च निपूर्वकस्य नयतेः परिषेकार्थ-त्वात् तथात्वम् । "बर्हिषि पूर्णपात्रं निनयेत्" आश्व० गृ०सू० १।१०।२२ "निनयेत् सिञ्चेदित्यर्थः नारा० "एषो-ऽवभृथः" ४सू० "यदिदं पूर्णपात्रनिनयनं एषोऽस्य कर्मणोऽवभृथो भवति" नारा० "उदकं चमसं निनयेयुः" द्राह्या०सू० "निनयेयुः परासिञ्चेयुः" ताण्ड्य० ब्रा०भा०

**निनर्त्तयत्नु** त्रि० देवश्रवस उद्भवस्य पुत्रभेदे "निनर्त्तयत्नु यशुम्नं देवश्रवाव्यजायत" हरिवं० ३५अ०

**निनर्द** पु० नि+नर्द–भावे घञ् । वेदशब्दस्योच्चारणभेदे । तत्प्रकारः आश्व० श्रौ० ८।२।९ "तृतीये तु पादेष्वादितो यदक्षरं तदनुदात्तीकृत्य ब्रूयात् । एतदुक्तं भवति तृती-येषु प्रथमादित इत्यर्थः । आदितो ये द्वे अक्षरे तयोः पूर्वमनुदात्तं तस्मात् परं द्वितीयम् उदात्तं यथा भवेत् तथा निनर्द्देत् नितरां ब्रूयादित्यर्थः । तदेवमुच्चारणं निनर्दशब्देनोच्यत इत्यर्थः" नारा० "तस्योत्तमावर्जं तृतीयेषु न्यूङ्खो निनर्दश्च" ७।११।९ "तस्य सूक्तस्य याः पुरस्तात् प्रागुत्तमाया ऋचस्तासां तृतीयेषु पादेषु न्यूङ्खो निनर्दश्च कर्त्तव्यः । उत्तमापि न्यूङ्खनिनर्दर-हिता शंसव्यैव" नारा० "स्वरादिरन्त ओकारस्तन्नि-नर्दः" ११अ० तृतीयेषु पादेषु निनर्द उक्तः । तेषु कश्चित् प्रदेश इत्युच्यते । पादान्ते । स्वरादिः स्वरो वादिप्रदेश इत्यर्थः स चौकारस्तत्कृतो वक्तव्यः स निनर्दः इत्युच्यते" नारा० ।

**निनाद** नि+नद–पक्षे घञ् । शब्दमात्रे अमरः "व्यातिना-दमथ रक्षती तयोः" रघुः ।

**निनाह्य** पु० नीचैर्नाह्यः भूमौ निखननीयः नि+नह–कर्मणि ण्यत् । भूमौ नीचैः खननीये १मणिके २महा घटे च "अस्तमितश्चेत् निनाह्यात् पुरेजानश्चेत्" कात्या० श्रौ०८।९।५८ "निनाह्यात् मणिकात्" संग्रहः "यदि पुरेजानः स्यात् निनाह्यात् गृह्णीयात्" शत०ब्रा० ३।९।२।८ "निनाह्यात् खनदिस्थितप्रभूतघटादेः" भा० ।

**निनित्सु** पु० निन्दितुमिच्छुः निन्दि–सन–उ वेदे नि०। निन्दितुमिच्छौ "आरे तं शंसं कृणुहि निनित्सोः" ऋ० ७।२५।२ लोके तु निनिन्दिषु तत्रार्थे ।

**निन्दक** त्रि० निन्द–ण्वुल् । गर्हाकारके निन्दाकारके "परी-वादात् खरो भवति श्वा वै भवति निन्दकः" मनुः

**निन्दतल** पु० निन्द–कर्मणि घञ् निन्दः निन्द्यं तलमस्य । निन्दितहस्ते शब्दर०

**निन्दन** न० निन्दि–भावे ल्युट् । गर्हणे शब्दरत्ना०।

**निन्दा** स्त्री निन्दि–भावे अ । अविद्यमानदोषाभिधाने १गर्हणे "वेदनिन्दारतान् मर्त्यान् देवनिन्दारतांस्तथा । द्विज-निन्दारतांश्चैव मनसापि न चिन्तयेत् । न चात्मानं प्रशंसेद्वा परनिन्दाञ्च वर्जयेत् । वेदनिन्दां देवनिन्दां प्रयत्नेन विवर्जयेत्" कौर्मपु०१५अ०। २अनिष्टसाधनत्वबो-धनद्वारा विध्यर्थप्रशंसावचने च "न हि निन्दा निन्द्यं निन्दितुं प्रवर्त्तते अपि तु विधेयं स्तोतुम्" न्याय०।

**निन्दार्थवाद** पु० निन्दारूपोऽर्थवादः । मीमांसकोक्ते अर्थवादभेदे अर्थवादशब्दे ३६९ पृ० दृश्यम् उदाहर-णान्तरं लौगाक्षिभास्करेण दर्शितं यथा "तत्र निन्दार्थ-वादो यथा "असत्रं वा एतद् यदच्छन्दोमम् अश्रुजं हि रजतं यो बर्हिषि ददाति पुरास्य संवत्सराद्गृहे रुदन्ति"

**निन्दास्तुति** स्त्री निन्दया स्तुतिः । व्याजेन निन्दाद्वारा स्तुतौ अलङ्कारशब्दे व्याजस्तुत्यलङ्कारे ४०५पृ० दृश्यम् ।

**निन्दित** त्रि० निन्द–क्त । १गर्हिते २धिक्कृते जटा० "विहि-तस्याननुष्ठानात् निन्दितस्य च सेवनात्" याज्ञ०। निन्दि-तञ्च शास्त्रलोकयोर्गर्हितम् । तत्र शास्त्रे निन्दितं शूद्र-प्रतिग्रहादि लोकगर्हितमतिभोजनादि । "अस्वर्ग्यं लोकविद्विष्टं तस्मात् तत् परिवर्जयेत्" मनुः "यद्यपि शिष्टं लोकविरुद्धं नाचरणीयं नाचरणीयमिति" मिताक्षराधृतवचनम् । [वत्सायां हेमच० ।

**निन्दु** स्त्री निन्द्यतेऽप्रजस्त्वेनासौ निन्दि–कर्मणि उ । मृत-

**निप** पु॰न॰ नितरां पिबत्यनेन नि+पा—करणे घञर्थे क। १कलसे अमरः नीप+पृषो॰। २कदम्बवृक्षे शब्दच॰।

**निपक्षति** स्त्री नीचा पक्षतिः प्रा॰स॰। अश्वस्य दक्षिणपार्श्वस्थास्थ्नां त्रयोदशानां मध्ये द्वितीये अस्थ्नि वेददी॰ "अग्नेः पक्षतिर्वायोः निपक्षतिः" "इन्द्राग्न्योः पक्षतिः सरस्वत्यै निपक्षतिः" यजु॰ २५।४४।४५ "पक्षस्य पार्श्वस्य मूलभूतानि अस्थीनि वङ्क्रिशब्दवाच्यानि पक्षतिशब्देनोच्यन्ते तानि च प्रतिपार्श्वं त्रयोदश भवन्ति "षड्विंशतिरश्वस्य वङ्क्रयः" इति कौषीत॰ब्रा॰ १०।४ श्रुतेः तेषां क्रमेण देवता। अग्नेः पक्षतिः प्रथमं दक्षिणपार्श्वास्थि, वायोर्निपक्षतिः नीचा पक्षतिः निपक्षतिः द्वितीयं दक्षिणपार्श्वास्थि" "एवं द्वितीयं वामपार्श्वास्थि सरस्वत्या इति च" वेददी॰। [अमरः

**निप(पा)ठ** पु॰ नि+पठ—भावे अप् पक्षे घञ् वा। पाठे

**निपठितिन्** त्रि॰ निपठितमनेन इष्टा॰ कर्त्तरि इनि। कृतपाठे

**निपत्यरोहिणी** स्त्री निपत्य रोहिणी रोहितवर्णा स्त्री मयू॰। निपत्यरोहितवर्णायां स्त्रियाम्

**निपत्या** स्त्री निपतन्त्यस्याम् नि+पत—आधारे क्यप् नि॰। १पिच्छिलभूमौ २युद्धभूमौ च।

**निपरण** न॰ निषिद्धं परणं प्रीतिः नि+(निषेधे) पृ—प्रीतौ भावे ल्युट् वा। प्रीत्यभावे तन्निरुक्तिश्च "निपरणात् पुत् नरकं ततस्त्रायते" इति पुत्रशब्दे निरुक्तिः नितरां प्रीतौ २प्रीणने च "निपरणं पितृभ्यश्च तीर्थेन" आश्व॰श्रौ॰२।६।१५

**निपलाश** त्रि॰ निपतितं पलाशं यस्य प्रा॰ब॰। निपतितपत्रे वृक्षे "शाखायै निपलाशमिवोषाद" शत॰ब्रा॰ १।२।१।२०

**निपाक** पु॰ नितरां पाकः प्रा॰स॰। अतिशयपाके शब्दर॰।

**निपात** पु॰ नि+पत—भावे घञ्। १पतने २मृतौ त्रिका॰ ३अधःपतने च "पयोधरोत्सेधनिपातचूर्णिताः" कुमा॰ "क्व च निशितनिपाता वज्रसाराः शरास्ते" शकु॰। निपतन्ति अवयववर्णविनाशादिना अन्यथा निष्पद्यन्ते नि+पत—कर्त्तरि ज्वला॰ ण। वर्णागमादिना अन्यथोत्पद्यमाने पृषोदरादौ ४शब्दभेदे। वर्णागमादिप्रकारश्च स्मर्य्यते "वर्णागमो वर्णविपर्य्ययश्च द्वौ चापरौ वर्णविकारनाशौ। धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्"। "भवेद्वर्णागमात् हंसः सिंहो वर्णविपर्य्ययात्। गूढोत्मा वर्णविकृते वर्णलोपे पृषोदरम्" निपतन्त्यर्थेषु उच्चावचेषु नि+पत—कर्त्तरि ज्वला॰ण। नानाविधार्थेषु इत्था स्वार्थबोधकतया पतनशीले चादौ ५शब्दभेदे "तद्यान्येतानि चत्वारि पदजातानि नामाख्याते उपसर्गनिपाताश्चेति" विभज्य अथ निपाता उच्चावचेष्वर्थेषु निपतन्तीति उपमार्थे वा कर्मोपसंग्रहार्थे पदपूरणार्थे वा" निरुक्तकारः। ते च "प्राग्रीश्वरान्निपाताः" "चादयोऽसत्त्वे" "प्रादयश्च" इत्यादिषु पा॰ सूत्रेषु पठिताः निपातसंज्ञाः भवन्ति। उपसर्गातिरिक्तनिपातानां च द्योतकत्ववाचकत्वोभयस्वीकारः "अव्ययविभक्तीति" पा॰ सू॰ भाष्ये स्थितः। उपसर्गाणान्तु द्योतकत्वमेवेति "गतिर्गताविति" पा॰सू॰भाष्ये स्थितम्। उपसर्गशब्दे १२२५ पृ॰ वैयाकरणमतसिद्धार्थबोधकता उक्ता नैयायिकमते तल्लक्षणादि शब्दश॰प्र॰उक्तं यथा "निपातं लक्षयति। स्वार्थे शब्दान्तरार्थस्य तादात्म्येनान्वयाक्षमः। सुबाद्यन्यो निपातोऽसौ विविधश्चादिभेदतः। यः शब्दः केवले वाच्यस्वार्थे शब्दान्तरार्थस्य तादात्म्येनान्वयबोधं प्रत्यसमर्थः सुबादिप्रत्ययेभ्यः प्रत्येकं भिन्नः स तादृशार्थः भेदेनान्वयबोधं प्रति योग्यः। न हि स्तनमनुभूतस्त्वादितः कस्यापि स्तनः स्तनश्च इत्यादिरनुभवः किन्तु स्तनानुभूतयोः स्तनश्च इत्यादिरेव। स्तोकं पचति इत्यादौ धातुरपि स्वार्थे नामार्थस्य तादात्म्यं बोधयंस्तत्समर्थ एव प्रत्ययस्तु सुबादिरेव। चः शब्द इत्यादौ नामार्थस्याभेदस्याकाङ्क्षकारादिः स्वपरत्वात्र निपातः किन्तु नामैव। पुरन्दरप्रभृतौ तु नाम्नि निपातव्यपदेशः पृषोदराद्युत्वप्रयुक्तो भाक्तः। "कार्त्तिक्यादौ यत्र दानं तदत्यन्तविनिन्दितम्" इत्यादौ न केवले नञर्थे यदर्थस्य तादात्म्येनान्वयः किन्तु दानाद्यवच्छिन्ने। स्वर्दिवा नक्तमाद्यव्ययमपि नामैव न तु निपातः शोभनं स्वरित्यादौ तदर्थे नामार्थस्य तादात्म्येनान्वयात्। प्रादयस्तूपसर्गा न वाचकाः वाचकाश्चेत् निपाता अपि"।

**निपातन** न॰ नि+पत—णिच् ल्युट्। १मारणे "परिचयं चललक्ष्यनिपातने" रघुः। २अधोनयने ३पातने च "अवगुर्य्य चरेत् कृच्छ्रमतिकृच्छ्रं निपातने" मनुः निपातने दण्डपातने" प्रा॰त॰ निपात्यतेऽनेन करणे ल्युट्। ४लक्षणानुसारेणानुत्पद्यमानशब्दसाधनोपाये "यल्लक्षणेनानुत्पन्नं तत्सर्वं निपातनात् सिद्धम्" महाभाष्यम्। सर्वनामसंज्ञासू॰ "निपातनात् णत्वाभावः" "निपातनमप्येवं जातीयकमेव अविशेषेण अत्वमुक्त्वा विशेषेण निपातनं

क्रियते तत्र व्यक्तमाचार्य्यस्याभिप्रायो गम्यते इदं न भवतीति" महाभाष्यम् ।

**निपाद्** त्रि० निकृष्टो न्यग्भूतो वा पादो यत्र । निम्नप्रदेशे "भवन्त्युद्धतो निपादाः" ऋ० ५।८३।७ "उद्धत उन्नतप्रदेशाः निपादा न्यग्भूतदेशाः" भा० ।

**निपान** न० निपीयतेऽस्मिन् नि+पा--आधारे ल्युट् । कूपसमीपस्थे १जलाशये कूपोद्धृतजलाधारे कूपादिसमीपे पशूनां पानार्थमुदकाधारे अमरः। करणे ल्युट् । २गोदोहनपात्रे त्रिका० । ३खातादिषु च "परकीयनिपानेषु न स्नायाद्व कदाचन । निपानकर्त्तुः स्नात्वा च दुष्कृतांशेन लिप्यते" मनुः "गाहन्तां महिषा निपानसलिलम्" शकु० । भावे क्त । ४निःशेषपाने

**निपीडन** नि+पीड--भावे ल्युट् । नितरां पीडने पीडि--णिच् । तन्नार्थे स्त्री "कृत्वा दीननिपीडनां निजजने बद्धा वचोविग्रहम्" सा०द० । [कृतनिष्पीडने ।

**निपीडित** त्रि०नितरां पीडितः नि+पीड--क्त । (निंगडान)

**निपुण** त्रि० नि+पुण--क । १प्रवीणे क्रियासु दक्षे "शिल्पोपचारयुक्ताश्च निपुणाः पण्ययोषितः" मनुः । "शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात्" काव्यप्र० २सूक्ष्मे "दुष्यं वचो मम परं निपुणं विभाव्य" रघुनाथः । म्ने स्यादि० अभूततद्भावेऽर्थे कृतादिना स० । निपुणकृत निपुणीकृते "साधु निपुणाभ्यामर्च्चायां सप्तम्यप्रतेः" पा० एतद्योगे अर्च्चायां गम्यमानायां सप्तमी मातरि निपुणः । प्रत्यादियोगे तु न, मातरं प्रति निपुणः" सि०कौ० ।

**निपुर** पु०निकृष्टं पूर्व्वते पृ--कर्मणि क्विप् । लिङ्गदेहे सूक्ष्मशरीरे "परा पुरो निपुरो ये भवन्ति" यजु० २।३० "निपुरः सूक्ष्मदेहान्" वेददी०। तस्याभिमानाद्यादिना सूक्ष्मरूपेण पुरणेन तत्पूरकस्य निकृष्टत्वात् तथात्वम् 'अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः' छा०उ० इत्यादिश्रुत्या मनसः सूक्ष्मदेहान्तर्गतस्य सूक्ष्मभूतेनान्नप्रवेशेन उपचीयमानत्वात् निकृष्टपूरणमेवं प्राणादीनामपि तदन्तर्गतानां तथात्वं तल्लोकगतो लिङ्गदेहस्य तथात्वम् ।

**निफला** स्त्री निवृत्तं फलं यस्याः । ज्योतिष्मतीलतायाम् राजनि० ।

**निबन्ध** पु०नि+बन्ध -घञ् । १कालविशेषे देयत्वेन प्रतिश्रुते वस्तुनि "दद्यात् भूमिं निबन्धं वा कृत्वा लेख्यञ्च लेखयेत्" "निबन्धो द्रव्यमेव वा" याज्ञ० २संग्रहग्रन्थभेदे मूत्ररोधरूपे ३रोगभेदे ४बन्धने च हेमच० "निबन्धायाऽऽसुरी मता" गीता । निबध्नाति कोष्ठम् अच् । ५निम्बवृक्षे जटाध० । तत्सेवने हि कोष्ठरोधो भवति ।

**निबन्धन** न० निबध्यतेऽनेनाम वा ल्युट् । १हेतौ हेमच० । २वीणायास्तन्त्रीनिबन्धनोर्द्ध्वभागे च अमरः । भावे ल्युट् । ३बन्धने ४ग्रन्थे च "अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना" माघः । ततः प्रेक्षादि० चतुरर्थ्यां क । निबन्धनक तत्समीपस्थदेशादौ त्रि० । निबध्यते अनया करणे ल्युट् । ५निबन्धसाधने स्त्रियां ङीप् । "विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनी" पात०सू० ।

**निब(व)र्हण** न० नि+(व)बर्ह--ल्युट् । मारणे "निबर्हणं धर्म्मधनैर्विगर्हितं विधित्सु विश्वासजुषां द्विषामपि" नैष० । अन्तस्थवमध्यमित्येके

**निभ** त्रि०नि+भा--क । १नितरां भासमाने २सदृशे च वाक्यशेषे नित्यस० न पृथक् प्रयोगः । "प्रफुल्लतापिच्छनिभैरभीषुभिः" "मुखेन पूर्णेन्दुनिभेन लोचना" माघः "प्रकृत्यन्तो निभादाश्चः स वा प्रलय उच्यते" शब्दर०।

**निभालन** न० नि+चु--भल--निरूपणे भावे ल्युट् । दर्शने त्रिका० । [भयेन हि निश्चलं भवतीति तस्य तथात्वम् ।

**निभूत** त्रि० निश्चलं भूतः । अत्यन्तभीते राजनि० । अत्यन्त-

**निभूयप** पु० निभूय नितरां भूत्वा मत्स्यादिरूपेणावतीर्य्य पाति पा--क । विष्णौ "विष्णवे निभूयपाय स्वाहा" यजु० २२।२० ।

**निभृत** त्रि० नि+भृ--क्त । १धृते २विनीते ३निश्चले ४एकान्ते ५गुप्ते ६निर्ज्जने अस्तायोपस्थिते च शब्दार्थचि० "नभसा निभृतेन्दुना तुलाम्" रघु० "मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे" माघः ।

**निमग्न** त्रि० नितरां मग्नः नि+मस्ज--क्त । जलादौ नितरां निविष्टे "निमग्नेनाप्यन्तर्मननजलधेरन्तरुदरम्" रसगङ्गाधरः । निमग्नस्यादूरदेशादि० वराहा० क । नैमग्नक निमग्नस्यादूरदेशादौ त्रि०।

**निमज्जथु** पु० नि+मस्ज--भावे अथुच् । निमज्जने "तल्पे कान्तान्तरैः सार्द्धं मन्येऽहं धिङ्निमज्जथुम्" भट्टिः ।

**निमज्जन** न० नि+मस्ज--भावे ल्युट् । जलादावगाहने स्नाने "दृढनिमज्जनमप्येति सुधायाम्" नैष०।

**निमन्त्रण** न० नि+मन्त्र--भावे ल्युट् । आवश्यकश्राद्धभोजनादौ प्रवर्त्तने । "विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्" पा०"यस्याकरणे प्रत्यवायस्तन्निमन्त्रणम्".

वि०कौ० । तथा च प्रत्यवायप्रयोजकाभावप्रतियोगि निमन्त्रणम् । "ब्राह्मणप्रातिवेश्यानामेतदेवा निमन्त्रणे" याज्ञ० "निमन्त्रणार्थं दूतांश्च प्रेषयामास भीमगान्" भा०व० २५५अ० । श्राद्धनिमन्त्रणप्रकारादि निमन्त्रितस्य नियमादि च नि०सि० निरूपितं यथा चन्द्रिकायां मात्स्ये "पठन्निमन्त्र्य नियमान् श्रावयेत् पैतृकान् बुधः । अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः । भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा" यत्तु मनुः "सर्व्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः । भवितव्यं भवद्भिर्नः श्वोभूते श्राद्धकर्म्मणीति" तत्पूर्व्वेद्युर्निमन्त्रणपरं न तदहः । तत्रैव देवलः "अलाभे परेद्युर्वा ब्राह्मणांस्तान्निमन्त्रयेत् । अप्रातीनसमानार्षानयुग्मानात्मशक्तितः" । कात्यायनः "अनिन्द्येनामन्त्रितो नापक्रामेत् केतनं व्यतिक्रम्य" । अथ श्राद्धकर्तृभोक्तृनियमाः तत्र निमन्त्रितविप्रत्यागेऽपरार्के यमः "केतनं कारयित्वा तु योऽतिपातयति द्विजम् । ब्रह्महत्यामवाप्नोति शूद्रयोनौ च जायते । आमन्त्र्य ब्राह्मणं यस्तु यथान्यायं न पूजयेत् । अतिकृच्छ्रासु घोरासु तिर्य्यग्योनिषु जायते" । प्रमदात्त्यागे हारीतः "प्रमादाद्विस्मृतं ज्ञात्वा प्रसाद्यैनं प्रयत्नतः । तर्पयित्वा यथान्यायं सर्वं तत् फलमश्नुते" । प्रमदाभावे तु नारायणः "एकस्मिन्नन्नसि प्राप्ते ब्राह्मणो नियतः शुचिः । यतियान्द्रायणं कृत्वा तस्मात् पापात् प्रमुच्यते" यमः "आमन्त्रितस्तु यो विप्रो भोक्तुमन्यत्र गच्छति । नरकाणां शतं गत्वा चाण्डालेष्वभिजायते" । तत्रैव देवलः "पूर्वं निमन्त्रितोऽन्येन कुर्य्यादन्यप्रतिग्रहम् । भुक्ताहारोऽथ वा भुङ्क्ते सुकृतं तस्य नश्यति" । यदि विप्रो विलम्बेत तदोक्तमादित्यपुराणे "आमन्त्रितश्चिरं नैव कुर्य्याद्विप्रः कदाचन । देवतानां पितॄणाञ्च दातुरन्नस्य चैव हि । चिरकारी भवेद्द्रोही पच्यते नरकाग्निना" । पृथ्वीचन्द्रोदये यमः "निमन्त्रितस्तु यो विप्रो ह्यध्वानं याति दुर्मतिः । भवन्ति पितरस्तस्य तं मासं पांशुभोजनाः । आमन्त्रितस्तु यः श्राद्धे हिंसां वै कुरुते द्विजः । पितरस्तस्य तं मासं भवन्ति रुधिराशनाः । आमन्त्रितस्तु यो विप्रो भारमुद्वहते द्विजः । पितरस्तस्य तं मासं भवन्ति स्वेदभोजनाः । निमन्त्रितस्तु यो विप्रः प्रकुर्य्यात् कलहं यदि । पितरस्तस्य तं मासं भवन्ति मलभोजनाः" । मत्स्यः "निमन्त्रितस्तु यः श्राद्धे मैथुनं सेवते द्विजः । श्राद्धं दत्त्वा च भुक्त्वा च युक्तः स्यान्महतैनसा" । ऋतावपि मैथुनं निषिद्धम् "ऋतुकाले नियुक्तो वा नैव गच्छेत् स्त्रियं क्वचित् । तत्र गच्छन्नवाप्नोति ह्यनिष्टानि फलानि तु" इति तत्रैव माधवीये च वृद्धमनूक्तेः "श्राद्धं करिष्यन् कृत्वा वा भुक्त्वा वापि निमन्त्रितः । उपोष्य च तथा भुक्त्वा नोपेयाच्च ऋतावपि । भोक्ष्यन् करिष्यन् श्वः श्राद्धं पूर्वरात्रौ प्रयत्नतः । व्यवायं भोजनञ्चापि ऋतावपि विवर्जयेत्" इति तत्रैवाश्वलायनोक्तेश्च । विज्ञानेश्वरेण तु श्राद्धे ऋतौ गच्छतोऽपि न दोष इत्युक्तम् तत्त्वगतिकत्वे ज्ञेयम् । बृहस्पतिः "द्विनिशं ब्रह्मचारी स्याच्छ्राद्धकृद्ब्राह्मणैः सह । अन्यथा वर्त्तमानौ तु स्यातां निरयगामिनौ । पुनर्भोजनमध्वानं भारमायासमैथुनम् । श्राद्धकृच्छ्राद्धभुक् चैव सर्वमेतद्विवर्जयेत् । स्वाध्यायं कलहञ्चैव दिवास्वापं तथैव च" । यत्तु श्राद्धकाशिकायां पुराणसमुच्चये "कृत्वा तु रुधिरस्रावं न विद्वान् श्राद्धमाचरेत् । एकं द्वे त्रीणि वा विद्वान् दिनानि परिवर्जयेत्" इति तन्निर्मूलम् । पृथ्वीचन्द्रोदये यमः "पुनर्भोजनमध्वानं भाराध्ययनमैथुनम् । सन्ध्यां प्रतिग्रहं होमं श्राद्धभोक्ताऽष्ट वर्जयेत्" । सन्ध्यानिषेधः प्रायश्चित्तात् पूर्वं ज्ञेयः यथाहोशनाः "दशकृत्वः पिबेदापो गायत्र्या श्राद्धभुक् द्विजः । ततः सन्ध्यामुपासीत जपेच्च जुहुयादपि" । गौडास्तु "सायं सन्ध्यां पराशस्य छेदनञ्च वनस्पतेः । अमावस्यां न कुर्वीत रात्रिभोजनमेव च । द्यूतञ्च कलहञ्चैव सायंसन्ध्यां दिवाशयम् । श्राद्धकर्त्ता च भोक्ता च पुनर्भुक्तिञ्च वर्जयेत्" कामधेनौ वराहाद्युक्तेः श्राद्धकर्तुरपि सायंसन्ध्यानिषेधमाहुः शिष्टास्तु निर्मूलत्वमाहुः । होमनिषेधस्तु स्वयंहोमविषयः "सूतके च प्रवासे च अशक्तौ श्राद्धभोजने । एवमादिनिमित्तेषु हावयेन्न तु हापयेत्" इति छन्दोगपरिशिष्टात् । तत्रैवादित्यपुराणे "निमन्त्रितस्तु न श्राद्धे कुर्य्याद्भार्य्यादिताड़नम्" । चन्द्रिकायां प्रचेताः "श्राद्धभुक् प्रातरुत्थाय प्रकुर्य्याद्दन्तधावनम् । श्राद्धकर्त्ता न कुर्वीत दन्तानां धावनं बुधः" हेमाद्रौ जाबालिः "दन्तधावनताम्बूले तैलाभ्यङ्गमभोजनम् । रत्यौषधपराञ्च श्राद्धकृत् सप्त वर्जयेत्" । विष्णुरहस्ये "श्राद्धोपवासदिवसे खादित्वा दन्तधावनम् । गायत्र्या शतसम्पूतमम्बु प्राश्य विशुध्यति । पुनर्भोजनमध्वानं यानमायासमैथुनम् । दानप्रतिग्रहौ होमं श्राद्धभुक्

स्वप्न वर्जयेत्”। “निमन्त्रयेत पूर्वेद्युर्ब्राह्मणानात्मवान् शुचिः। तैश्चापि संयतैर्भाव्यम् मनोवाक्कायकर्मभिः” याज्ञ० “पूर्वेद्युरपरेद्युर्वा श्राद्धकर्मण्युपस्थिते। निमन्त्रयेत त्र्यवरान् सम्यक् विप्रान् यथोदितान्” मनुः। “पूर्वेद्युर्निवेदनम् वेदनं परेद्युर्द्वितीयं, तृतीयमामन्त्रणम्” आपस्तम्बः “निवेदनं श्वोमया श्राद्धं कर्त्तव्यं तत्र भवन्तो निमन्त्रणीया इत्येवंरूपं निवेदनम्। द्वितीयं वेदनं त्वामहं निमन्त्रये इत्यनेन निमन्त्रणम्। त्वयि श्राद्धमहं करिष्ये” इति तृतीयमनुज्ञाग्रहणरूपम्” श्रा०त० रघु०

**निमय** पु० नि+मि—अच्। परिवर्त्तने द्रव्यान्तरदानेन द्रव्यान्तरग्रहणरूपे विनिमये तत्र अविक्रेयद्रव्याणां विनिमयेनैव ग्रहणं कर्त्तव्यं यथा भा०शा० ७८अ० “रसा रसैर्निमातव्या नत्वेव लवणं रसैः। कृतान्नञ्चाकृतान्नेन तिलाधान्येन तत्समाः”। अविक्रेयाणि अपण्यशब्दे २२४पृ० दर्शितानि।

**निमान** न०निमीयतेऽनेन नि+मा—ल्युट्। मूल्ये “संख्यायागुणस्य निमाने मयट्” पा० “निमानं मूल्यम्” सि०कौ०।

**निमि** पु०अत्रिवंश्ये १दत्तात्रेयपुत्रे “स्वायम्भुवोऽत्रिः कौरव्य! परमर्षिः प्रतापवान्। तस्य वंशे महाराज! दत्तात्रेय इति स्मृतः। दत्तात्रेयस्य पुत्रोऽभून्निमिर्नाम तपोधनः” भा०अनु० ८१अ०। २कौरववंश्ये भाविनृपभेदे “दण्डपाणिर्निमिस्तस्य क्षेमको भविता ततः। क्षेमकं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ” भाग० ९।२२।९। द्वापरयुगीये असुरांशनृपभेदे “अश्वप्रपातने चैव निमिर्हंस च दानवौ” हरिवं० १९१अ०। ४इक्ष्वाकुवंश्ये नृपभेदे “आसीद्राजा निमिर्नाम इक्ष्वूणां महात्मनाम्। पुत्रो द्वादशमो वीर्य्ये धर्मे च परिनिष्ठितः” रामा०उ०५५ स० तस्य वशिष्ठशापेन विदेहप्राप्तिकथा “यस्मात्त्वमन्यं वृतवान् मामवज्ञाय पार्थिव!। चेतनेन विनाभूतो देहस्ते पार्थिवैष्यति”। तत्सर्गान्ते तस्य सर्वभूतानां नेत्रेषु निमेषरूपतया स्थितिकथा “सुप्रीताश्च सुराः सर्वे निमेश्चेतस्तदाऽब्रुवन्। वरं वरय राजर्षे! क्व ते चेतो निरूप्यताम्। एवमुक्तः सुरैः सर्वैर्निमेश्चेतस्तदाऽब्रवीत्। नेत्रेषु सर्वभूतानां वसेयं सुरसत्तमाः!। वाढमित्येव विबुधा निमेश्चेतस्तदाऽब्रुवन्। नेत्रेषु सर्वभूतानां वायुभूतश्चरिष्यसि। त्वत्कृते निमिषिष्यन्ति चक्षूंषि पृथिवीपते!। वायुभूतेन चरता विश्रमार्थं मुहुर्मुहुः”

**निमित** त्रि० नि+मि—क्त। समदीर्घविस्तारपरिमाणयुक्ते निघशब्दे दृश्यम्।

**निमित्त** न० नि+मिद्—क्त। “अनात्मनेपदनिमित्ते” पा सूत्रनिर्देशान्न न दस्य नः। १हेतौ २चिह्ने च अमरः “निमित्तेषु च सर्वेषु ह्यप्रमत्तो च भवेन्नरः” स्मृतिः “मयैव पूर्वं निहता धार्त्तराष्ट्राः निमित्तमात्रं भव सव्यसाचिन्!” गीता “अतः कालं प्रवक्ष्यामि निमित्तं कर्मणामिह” ति० त० भविष्यपु० “मासपक्षतिथीनाञ्च निमित्तानाञ्च सर्वशः। उल्लङ्घनमकुर्वाणो न तस्य फलभाग् भवेत्”ति०त० भविष्यपु०। ब्रह्माण्डे “निमित्तानि च शंसन्ति शुभाशुभफलोदयम्” “निमित्तं मनश्चक्षुरादिप्रवृत्तौ” हस्तामलकम्। शुभाशुभसूचके ३शकुने “निमित्तानि च पश्यामि विपरीतानि केशव!” गीता ४फले उद्देश्ये “निमित्तात् कर्मयोगे” वार्त्ति० निमित्तमिह फलम्। ५निमित्तनिश्चये नैमित्तिकं निमित्तनिश्चयादागतम्। ६शरव्ये च शब्दार्थचि० स्वार्थे क तत्रार्थे संज्ञायां कन्। निमित्तक चुम्बने शब्दमाला।

**निमित्तकारण** न० कर्म०। नैयायिकमते समवायिकारणाऽसमवायिकारणभिन्नकारणे तथाहि घटादौ मृत्तिकादि समवायि कारणम् कपालद्वयसंयोगोऽसमवायिकारणम्। कुलालचक्रदण्डसलिलसूत्रादि निमित्तकारणम्। एवमदृष्टादि कालादि च। एवन्यत्र यथायथमुन्नेयम्।

**निमित्तकृत्** त्रि० निमित्तं शकुनं रुतेन करोति कृ—क्विप् तुक्। रवेण दुष्टादुष्टशकुनकारके काके राजनि०। तस्य रवेण शकुनसूचकत्वात् तथात्वम्। काकरुतशब्दे १८४४ पृ० दृश्यम्।

**निमित्तवध** पु० निमित्तेन रोधादिहेतुना वधः। रोधादिनिमित्ते १गवादेर्वधे तत्र प्रायश्चित्तादि प्रा०त०उक्तं यथा “रोधादिनिमित्तकप्रायश्चित्तम्। तत्राङ्गिराः “रोधने बन्धने चापि योजने च गवां रुजः। उत्पाद्य मरणं वापि निमित्ती तत्र लिप्यते। पादञ्चरेद्रोधवधे द्वौ पादौ बन्धने चरेत्। योजने पादहीनं स्याच्चरेत् सर्वं निपातने”। निमित्ती लिप्यत इति यथाकथञ्चित् मरणनिमित्ततारतम्येन “यो भूय आरभते तस्मिन् फले विशेषः” इत्यापस्तम्बवचनात् पापविशेषेण लिप्यते तद्विशेषात् प्रायश्चित्तविशेषमाह पादञ्चरेदित्यादि। रोधः क्षोणायाः गोराहारप्रचारनिर्गमविरोधः। बन्धनमयथाबन्धनमकालबन्धनञ्च। योजनं हलशकटादौ

योजनं तत्रातिवाहादिनेति शेषः। अत्रैव विषये च्यवनः "प्राजापत्यद्वयं गोहत्याप्रायश्चित्तं रोधनबन्धनयोक्त्रबधे पादवृद्ध्या नखानि लोमानि शिखावर्जं सशिखं वपनं त्रिषवणं गवानुगमनं गोष्ठशयनं समकृत्तृणानि दद्यात् धारयेत् व्रतान्ते ब्राह्मणभोजनमिति"। रोधनबन्धनयोक्त्रबध इत्यादेरयमर्थः रोधनिमित्तकबधे प्राजापत्यस्य पादः प्रायश्चित्तं नखच्छेदनमात्रम्। बन्धननिमित्तबधे प्राजापत्यस्य द्वौ पादौ नखानां लोम्नाञ्च छेदनम्। योक्त्रनिमित्ते च बधे प्राजापत्यपादत्रयं नखलोमशिखावर्जकेशच्छेदनञ्च। दण्डादिप्रहारबधे सम्पूर्णं प्राजापत्यम् नखलोमकेशशिखाच्छेदनञ्च इति। एतद्विषय एव मिताक्षराधृतं संवर्त्तवचनं तदेकवाक्यत्वात् तद्यथा "पादेऽङ्गलोमवपनं द्विपादे श्मश्रुणोऽपि च। त्रिपादे च शिखावर्जं सशिखन्तु निपातने"। अत्र प्राजापत्यस्य पादादित्वे किं मानमिति चेत्। पराशरवचनम् "रोधने तु चरेत् पादं बन्धने चार्द्धमेव हि। योजने पादहीनं स्यात् प्राजापत्यं निपातने"। "कृच्छ्रमप्रमाणताडने" इति वार्हस्पत्यात्। दण्डोऽत्र हस्तप्रमाणो ग्राह्यः। तदधिके तु द्विगुणप्रायश्चित्तविधानात्। यथा अङ्गिराः "अङ्गुष्ठमात्रः स्थौल्येन बाहुमात्रः प्रमाणतः। सार्द्रश्च सपलाशश्च दण्ड इत्यभिधीयते"। "अप्रमाणप्रहारेण यदि गां विनिपातयेत्। द्विगुणन्तु भवेत्तत्र प्रायश्चित्तमिति स्थितिः"। सपलाशः सपत्रः। एतद्वचनविषय एव च्यवनोक्तप्राजापत्यद्वयमिति एतद्व्याख्यानतः यथा वृहस्पतिः "पादञ्चरेत् रोधबधे कृच्छ्रार्द्धं बन्धघातने। अतिवाहे च पादोनं कृच्छ्रमप्रमाणताडने"। अस्थानञ्च क्षोभायामक्षोभत्वभ्रमः। वैषम्यस्थाने तु प्रायिकमरणं ज्ञात्वा प्रवृत्तस्य चान्द्रायणपादादिकम्। यथा हारीतः "नासाच्छेदनदाहेषु कर्णच्छेदनबन्धने। अतिदोहातिवाहाभ्यां कृच्छ्रं चान्द्रायणं चरेत्" हत्वेति शेषः। कृच्छ्रं व्रतं तेन चान्द्रायणव्रतमित्यर्थः। इति शूलपाणिमहामहोपाध्यायाः। भवदेवभट्टैस्तु निपातने कूपावटादिषु इति व्याख्यातं तदपि युक्तं अन्यथा तत्र पातजनकभयादिदर्शकस्य प्रायश्चित्तस्यानभिधानापत्तेः। "यष्ट्यादिना तु हत्वा गां मानवं व्रतमाचरेत्। रोधादिना त्वाङ्गिरसमापस्तम्बोक्तमेव चेति" वृहस्पत्युक्तं तत्र प्रथमादिपदात् मृत्पिण्डलोष्ट्रगुडविषाग्न्यादीनां प्रायिकमृत्युफलानां ग्रहणम्। रोधादिनेति यथा कथञ्चिन्निमित्तमात्रस्य, बन्धादेरिति शूलपाणिव्याख्यानान्तराच्च। तस्मान्निपातनपरम् उभयपरम्। एतच्च रात्रौ रक्षणार्थं रोधबन्धनव्यतिरिक्तविषयम्। "सायं संयमनार्थन्तु न दुष्येद्रोधबन्धयोः" इति अङ्गिरोवचनात् बन्धने मिताक्षरायां विशेषमाह व्यासः "न नारिकेलैर्न च शाणवालैर्नापि मौञ्जैर्न च बन्धशृङ्खलैः। एतैस्तु गावो न हि बन्धनीया बद्धा तु तिष्ठेत् परशुं गृहीत्वा। कुशैः काशैश्च बध्नीयात् स्थाने दोषविवर्जिते"। निमित्तिनृपाद्ये वक्ष्यमाणे मन्यूत्पादनद्वारा २हनने च।

**निमित्तविद्** त्रि॰ निमित्तं शकुनं शुभाशुभसूचकं लक्षणं वेत्ति विद–क्विप्। निमित्तज्ञे दैवज्ञे हेमच॰ निमित्तज्ञादयोऽप्यत्र। "निमित्तज्ञस्तपोधनः" रघुः।

**निमित्तिन्** त्रि॰ निमित्तमस्त्यस्य इनि। निमित्तयुक्ते १कार्ये प्रा॰वि॰उक्ते २बधकर्त्तृभेदे च यथा "कर्त्ता च पञ्चविधः कर्त्ता प्रयोजकोऽनुमन्ता अनुग्राहकोनिमित्ती चेति"। निमित्तिनमाह विष्णुः "अन्यायेन गृहीतस्वो न्यायमर्थयते तु यः। यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम्" तल्लक्षणं प्रा॰वि॰ उक्तं "उद्देश्यत्वे सति हन्तुर्मन्यूत्पादको निमित्ती" इति मन्यूत्पादने निमित्तमाह तत्रैव वृद्धया॰ "गोभूहिरण्यहरणे स्त्रीसम्बन्धकृतेऽपि च। यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातकम्" वृहस्पतिः "ज्ञातिमित्रकलत्रार्थं सुहृत्क्षेत्रार्थमेव च। यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम्। गोभूहिरण्यहरणे स्त्रीणां क्षेत्रगृहस्य च। यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम्। गुर्वर्थं पितृमात्रर्थमाचार्य्यस्य वा पुनः। यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम्" षट्त्रिंशन्मतमिति कृत्वा पठितम् "आक्रोशितस्ताडितो वा धनैर्वा परिपीडितः। यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम्" यमुद्दिश्येति सर्वत्र कीर्त्तनात् उद्देशाभावे निमित्ततामात्रेण बधित्वं नास्ति अर्थादिहरणाक्रोशनताडनादीनां मन्युकारणानामुपात्तत्वादेतेषामभावे धनाद्यर्थं वृक्षारोहणादिना ये म्रियन्ते (यदि मह्यं धनं न दास्यसि तदा वृक्षारोहणेन मरिष्यामीति) तत्र कीर्त्तनमात्रेण निमित्तबधो नास्ति तथा च पठन्ति "अबन्धेन यः कश्चित् द्विजः प्राणान् परित्यजेत्। तस्यैव तद्भवेत् पापं न तु यं परिकीर्त्तयेत्" अबन्धेनेति वाक्कृतादिसकलापराधसम्बन्ध-

न्धाभावपरं यच्च "सम्बन्धेन विना देव ! शुष्कवादेन कोपितः" इति भविष्यपुराणवचनं वार्षिकप्रायश्चित्तविधायकं तत् वाक्कृतेतरापराधसम्बन्धाभावपरं "शुष्कवादेन कोपितः" इत्यभिधानात्। एवं यत्राक्रोशनादौ पश्चात्कृते नापराधः तत्रापि न बधः यथा बृहस्पतिः "आक्रुष्टस्तु यदाक्रोशंस्ताडितः प्रतिताडयन्। हत्वाततायिनञ्चैव नापराधी भवेन्नरः"। शास्त्रविहितताडनादौ कृते यत्र पुत्रशिष्यादिर्म्रियते तत्रापि बधो नास्त्येव यथा भविष्यपुराणे "पुत्रः शिष्यस्तथा भार्य्या शासितव्येहिनश्यति। न शास्ता तत्र दोषेण लिप्यते देवसत्तम !।। अशास्त्रीयताडनादौ भवत्येव यथा मनुः। "पुत्रः शिष्यस्तथा भार्य्या दासी दासस्तु पञ्चमः। प्राप्तापराधास्ताड्याः स्यूरज्ज्वा वेणुदलेन वा। अधस्तात्तु प्रहर्त्तव्यं नोत्तमाङ्गे कदाचन। अतोऽन्यथा तु प्रहरंश्चौरस्याप्नोति किल्विषम्"। एवञ्च विहितदण्डाचरणे शास्त्रीयकरणहणे क्रियमाणे यदि म्रियते तदापि बधो नास्त्येव दण्डादिशास्त्रविरोधान्निषेधाप्रवृत्तेः। बधनिमित्तिनस्तु प्रायश्चित्तं तत्रोक्तं यथा "निमित्तिनस्तु वचनात् त्रैवार्षिकं सम्बन्धे, असम्बन्धे वार्षिकं यथा भविष्ये "असम्बन्धं यदा विप्रो हत्वात्मानं मृतो गुह !। निर्गुणः सहसा क्रोधाद्गृहक्लेशादितो विभो !। त्रैवार्षिकं व्रतं कुर्य्यात् ब्रह्मचर्य्यं चरन् वने"। सम्बन्धशब्दोऽत्र धनसम्बन्धपरः। ताड़नादिना तिरस्कारेऽपि त्रैवार्षिकमाह सएव "तिरस्कृतो यदा विप्रो निर्गुणो म्रियतेऽनघ !। अनिमित्तं यदा विप्रस्तदेदं शुद्धये चरेत्। त्रैवार्षिकं ब्रह्मचर्य्यं कृत्वा शुध्येत विप्रहा"। धनताडनादिसम्बन्धाभावे वाक्कलहमात्रेण मृते वार्षिकमाह सएव "यस्तूद्दिश्य द्विजो हन्यात् आत्मानं स्वयमेव हि। आत्मानं सहसा क्रोधात्तस्य किन्नु भवेदिदम्। सम्बन्धेन विना देव ! शुष्कवादेन कोपितः। केशश्मश्रुनखादीनां कृत्वा वै वपनं गुह !। ब्रह्मचर्य्यं चरन् वीर ! वर्षेणैकेन शुध्यति" एतन्त्रितयकारणाभावेऽर्थलोभादिना मृते प्रायश्चित्ताभाव इति प्रागुक्तम्" प्रा०वि०।

**निमिष** पु० नि+कुटा० मिष–भावे घञ्। १चक्षुर्निमीलनरूपे व्यापारे तदुपलक्षिते "स्वस्थे नरे सुखासीने यावत् स्पन्दति लोचनम्" इति मनूक्ते २कालभेदे "सुरमत्स्यावनिमिषौ" अमरः। निमिषत्यस्मात् नि+मिष–अपादाने घञ्। ३परमेश्वरे "निमिषोऽनिमिषः स्रग्वी वाचस्पतिरुदारधीः" विष्णुस०। सुश्रुतोक्ते नेत्रवर्त्माश्रिते ४रोगभेदे "अर्बुदं निमिषश्चापि" इत्यादिना विभज्य स च तत्र लक्षितो यथा "निमेषणीः सिरा वायुः प्रविष्टो वर्त्मसंश्रयाः। चालयेदतिवर्त्मानि निमिषः स गदो मतः"।

**निमिषित** न० नि+मिष–क्त। नेत्रव्यापारभेदे पक्ष्माकुञ्चने

**निमीलन** न० नि+मील–भावे ल्युट्। १नेत्रनिमेषरूपव्यापारे २पक्ष्मसङ्कोचने आधारे ल्युट्। ३मरणे हेमच०। ४अविकाशे "अप्राप्य च भवेत् पश्चादेवं वापि निमीलनात्" सु०सि०।

**निमीला** स्त्री नि+मील–भावे अ। १नेत्रसङ्कोचे करणे अ। २निद्रायां प्रमीलायाम् स्वार्थे क। निमीलिका तत्रार्थे निमीलयति स्वरूपम् निमील–णिच् ण्वुल्। व्याजे स्त्री शब्दर०।

**निमीश्वर** पु०अतीतायामुत्सर्पिण्यां जाते जिनेश्वरभेदे हेमच०

**निमूल** त्रि० निवृत्तं मूलं यस्य प्रा०ब०। १मूलरहिते। तदुपपदे "निमूलसमूलयोः कषः" पा०णमुल्। निमूलकाषं कषति। नि+मूल–क। २प्रकाशने च तत्र "नेरनिधाने" पा० नेःपरस्य मूलस्यान्तोदात्तता "निधानमप्रकाशता ततोऽन्यदनिधानं प्रकाशनमित्यर्थः तदर्थे मूलान्तस्यान्तोदात्तत्वमित्युक्तेरस्य प्रकाशनार्थता। [२परिवर्त्ते न०।

**निमेय** त्रि०नि+माङ्–माने यत्। १परिवर्त्तनीये भावे यत्।

**निमेष** पु० नि+मिष–भावे घञ्। नेत्रस्य स्पन्दनरूपे व्यापारे नेत्रपक्ष्मणोः स्वाभाविकोन्मेषस्य विरोधिव्यापारे नराणामकृत्रिमविकाशानन्तरं १पक्ष्माकुञ्चने। तदुपलक्षिते २कालभेदे च "द्वौ निमेषौ त्रुटिर्नाम द्वे त्रुटी तु लवः स्मृतः" वह्निपु० "निमेषा दश चाष्टौ च काष्ठा त्रिंशत्तु ताः कला। त्रिंशत् कला मुहूर्त्तः स्यात्" मनुः। "योऽक्ष्णोर्निमेषस्य खराम१०भागः स तत्परस्तच्छतभाग उक्तः। त्रुटिर्निमेषैर्धृतिभि१८श्च काष्ठा तत्त्रिंशता सद्गणकैः कलोक्ता" सि०शि० "योऽक्ष्णोर्लोचनयोः पक्ष्मपातः स निमेषो स यावताकालेन निष्पाद्यते तावान् कालोऽपि निमेषशब्देनोच्यते उपचारात्" प्रमि०। "निमेषमात्रादवधूय तद्व्यथाम्" "पपौ निमेषालसपक्ष्मपङ्क्तिः" रघुः। स्वार्थे क निमेषक तत्रार्थे ४अविकाशे च

**निमेषकृत्** स्त्री निमेषं करोति कृ–क्विप् तुक् ६त०। तडिति शब्दमाला तस्याः निमेषकालेन (स्वल्पकालेन) निमीलन तुल्याधिकाशयुक्तत्व त् तथात्वम्।

**निमेषणी** स्त्री निमिषत्यनया नि+मिष–करणे ल्युट् ङीप्। नेत्रवर्त्माश्रिते निमेषसाधने शिराभेदे निमिषशब्दे दृश्यम्

**निमेषरुच्** पु० निमेषं तत्कालं व्याप्य रोचते रुच–क्विप्। खद्योते त्रिका० निमेषद्युदादयोऽप्यत्र तस्य तत्कालमात्रद्योतनात् तथात्वम्।

**निम्न** त्रि० नि+म्ना–क। १नीचे २गभीरे (नावाल)अमरः। "पयश्च निम्नाभिमुखं प्रतीपयेत्" कुमा० "आपो न निम्नैरुदभिर्जिगत्नवः" ऋ० १०।७८।५ "प्रयाति निम्नाभिमुखं नवोदकम्" ऋतुसं०। इत्यादिषु तत्रावेशनाश्याते २चिह्नभेदे शब्दार्थचि०।

**निम्नगा** स्त्री निम्नं गच्छति गम–ड। १नदीपात्रे २नीचगामिनि त्रि० "अनुरोदितीव करुणेन पत्रिणां विरुतेन वत्सलतयैव निम्नगाः" माघः "उदधेरिव निम्नगाशतेष्वभवन्नास्य विमानना क्वचित्" रघुः।

**निम्ब** पु० निबि–सेचने अच् बवयोरैक्यात् नः।(निम्) ख्याते वृक्षे अमरः "निम्बः शीतो लघुर्ग्राही कटुपाकोऽग्निवातनुत्। अहृद्यः श्रमतृट् कासज्वरारुचिकृमिप्रणुत्। निम्बपत्रं स्मृतं नेत्र्यं कृमिपित्तविषप्रणुत्। वातलं कटुपाकञ्च सर्वारोचककुष्ठनुत्। निम्बफलं रसे तिक्तं पाके तु कटु भेदनम्। स्निग्धं लघूष्णं कुष्ठघ्नं गुल्मार्शःकृमिमेहनुत्"। निम्बशाकगुणाः "निम्बस्य कोमलदलानि घृतप्रभृष्टान्याज्ये निमेषदृक् सैन्धवतक्रयुक्तान्। शालीवतस्य वर्तकानां सह रामठेन चाधारितान् ददति रोचनमेव देहात्"। "करञ्जनिम्बजफलं कृमिकुष्ठप्रमेहजित्। निम्बतैलन्तु कुष्ठघ्नं तिक्तं कृमिहरम् परमिति" राजवल्लभः। "मधुरं निम्बपत्रस्य योऽत्ति मेषगते रवौ। अतिरोषान्वितस्तस्य तक्षकः किं करिष्यति" ति०त०। षष्ठ्यां तिथौ तद्भक्षणनिषेधो यथा "कलङ्की जायते बिल्वे तिर्यग्योनिश्च निम्बके" ति०त०। तिथिभेदे वर्ज्यौक्ता। निम्बक इत्यत्र स्वार्थे क।

**निम्बतरु** पु० निम्ब इव तत्संज्ञको वा तरुः। १मन्दारवृक्षे अमरः। २निम्बसंज्ञके तरौ च। [राजनि०।

**निम्बवीज** पु०निम्बस्य वीजमिव वीजं यस्य। राजादनीवृक्षे

**निम्बू** स्त्री निबि–सेचने ऊ बवयोरैक्यात् मः। (कागजीनेबु) जम्बीरभेदे ततः स्वार्थे क, वा ह्रस्वः अभिधानात् पुंस्त्वम्। निम्बुक निम्बूक तदर्थे पु०। तस्य फलम् अण् तस्य लुपि। तत्फले न० "निम्बूकमम्लं वातघ्नं दीपनं पाचनं लघु। निम्बुकं कृमिसमूहनाशनं तीक्ष्णमम्लमुदरग्रहापहम्। वातपित्तकफशूलिने हितं कष्टनष्टरुचिरोचनम् परम्। त्रिदोषवह्निक्षयवातरोगनिपीडितानां विषविह्वलानाम्। अजस्रके बद्धगुदे प्रदेयं विसूचिकायां मुनयो वदन्ति" भावप्र०। "आर्द्रकं निम्बुकं तोयं षड्भागं शर्करोदकम्। लवङ्गमरिचोन्मिश्रं पानकं पानकोत्तमम्। निम्बूफलभवं पानमत्यम्लं वातनाशनम्। वह्निदीप्तिकरं रुच्यं समस्ताहारपाचकम्" राजनि०।

**निम्लोच** पु०नि+म्लुचु–भावे घञ्। अस्तगमने "अम्लद्युमणिनिम्लोचे" भाग०३।१।८। भावे ल्युट् निम्लोचन तत्रार्थे न० आधारे ल्युट् ङीप् वरुणस्थाने इन्द्रीभेदे स्त्री। "पश्चात् वारुणी निम्लोचनी नाम" भाग०५।२१।१५

**निम्लोचि** पु० यदुवंश्ये भजमानकपुत्र नृपभेदे "भजमानस्य निम्लोचिः किंकणो धृष्टिरेव च" भाग० ६।२४।५

**नियत** त्रि० नि+यम–क्त नितरां यतते यत–अच् वा। १संयते २नियमकारिणि ३निश्चयमुते "नियतो यमश्च नियतं गतिं यथा" माघः। कर्मणि क्त। ४कृतनियमे च। "प्रत्येकं नियतं कालमात्मनो ब्रह्मादिषु। प्रायश्चित्ततपःयोनो वाक्यतस्त्रिषवणं स्पृशेत्" प्रा०त० रघुविजितौ। "पाषाणप्रभृतिभिरन्या नियतं दारशलाकम्" उद्वा०त०अनुः। "अन्यथासिद्धिशून्यस्य नियता पूर्ववर्त्तिता" भाषा०।

**नियताप्ति** स्त्री नियता निश्चिता आप्तिः। सा० द० उक्ते नाट्ये प्रारब्धकार्यस्य अवस्थाभेदे अवस्था विभज्य "अपायाभावतः प्राप्तिर्नियताप्तिर्विनिश्चिता" अपायाभावान्निर्धारितैकान्तफलप्राप्तिर्नियताप्तिः। यथा रत्नावल्याम् "राजा देवीप्रसादनं त्यक्त्वा नान्यमत्रोपायं पश्यामीति" देवीलक्षणापायस्य प्रसादनेन निवारणान्नियतफलप्राप्तिः सूचिता" सा०द०।

**नियति** स्त्री नियम्यतेऽनया नि+यम–करणे क्तिन्। १भाग्ये दैवे अमरः "नियतिं लोक इवानुरुध्यते" किरा०। "आसादितस्य तमसा नियतेर्नियोगात्" माघः "नियतिकृतनियमरहिताम्" काव्यप्र०। २ईश्वरेच्छाभेदे अविद्यायाम्। "महामायेत्यविद्येति नियतिर्मोहनीति च। प्रकृतिर्वासनेत्येव तवेच्छाऽनन्त! चोच्यते" पुराणान्तरम्। करणे क्तिन् ङीप्। दुर्गायां देव्यां स्त्री "अतिः संहरणाद्देवी नियती च नियामतः" देवीपु०।

**नियन्तृ** त्रि० नि+यम–तृच्। १नियमकारिणि सारथौ स्त्रियां ङीप्। २अश्वनियमकारिणि सारथौ पु० अमरः

"रेखामात्रमपि क्षुण्णादामनोर्वर्त्मनः परम्। न व्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः" रघुः। २परमेश्वरे पु० "अपराजितः सर्वसहो नियन्ता नियमोऽयमः" विष्णुस०।

**नियन्त्रण** न० नि+यन्त्रि–ल्युट्। प्रतिबन्धदूरीकरणे एकत्वस्थापनार्थव्यापारभेदे "अनेकार्थस्य शब्दस्यैकार्थे नियन्त्रणरूपं विशेषम्" सा०द०। भावे युच्। नियन्त्रणापि तत्रार्थे स्त्री।

**नियन्त्रित** त्रि० नि+यन्त्रि–क्त। १कृतनियमने २प्रतिबन्धादिना एकत्वस्थापिते "अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते। एकत्रार्थेऽन्यधीहेतुः" सा०द०।

**नियम** पु० नि+यम–घञ् वा अप्। १प्रतिज्ञायाम् अङ्गीकारे अमरः। २निश्चये ३आगन्तुकसाधनकर्मरूपे व्रते ४नियन्त्रणायां ५निश्चये मेदि० पा०सू० उक्ते ६योगाङ्गभेदे "यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि" सूत्रे उद्दिष्ट "शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः" सू० विभज्योक्तं "तत्र शौचं मृज्जलादिजनितं मेध्याभ्यवहरणादि च बाह्यमाभ्यन्तरं चित्तमलानामाक्षालनम्। सन्तोषः सन्निहितसाधनादधिकस्यानुपादित्सा। तपो द्वन्द्वसहनं द्वन्द्वश्च जिघत्सापिपासे शीतोष्णे स्थानासने काष्ठमौनाकारमौने च व्रतानि चैवं यथायोगं कृच्छ्रचान्द्रायणसान्तपनादीनि। स्वाध्यायो मोक्षशास्त्राणामध्ययनं प्रणवजपो वा ईश्वरप्रणिधानं तस्मिन् परमगुरौ सर्वकर्मार्पणं "शय्यासनस्थोऽथ पथि व्रजन् वा स्वस्थः परिक्षीणवितर्कजालः। संसारबीजक्षयमीक्षमाणः स्यान्नित्ययुक्तोऽमृतभोगभागी" यमेदमुक्तं ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्चेति" भा० "शौचादिनियमान् आचष्टे शौचमिति। आदिशब्देन गोमयादयो गृह्यन्ते। गोमूत्रयावकादि मेध्यं तस्याभ्यवहरणादि आदिशब्दात् पात्रपरिमाणशुद्धानियमादयो ग्राह्या मेध्याभ्यवहरणादिजनितमिति वक्तव्ये मेध्याभ्यवहरणादि चेत्युक्तं कार्ये कारणत्वोपचारात्। चित्तमलाः मदमानासूयादयस्तदपनयो मनःशौचम् प्राणयात्रामात्रहेतोरभ्यधिकस्यानुपादित्सा सन्तोषः प्रागेव स्वीकरणपरित्यागादिति विशेषः। काष्ठमौनमिङ्गितेनापि स्वाभिप्रायाप्रकाशनम् अवचनमाकारमौनम्। परिक्षीणवितर्कजाल इति वितर्को वक्ष्यमाणः संशयविपर्ययौ चेति एतावता युक्ताभिसन्धिरुक्तः। एते च यमनियमाः विष्णुपुराणे उक्ताः "ब्रह्मचर्यमहिंसां च सत्यास्तेयापरिग्रहम्। सेवेत योगी निष्कामो योग्यतां स्वमनो नयन्। स्वाध्यायशौचसन्तोषं तपांसि नियतात्मवान्। कुर्वीत ब्रह्मणि तथा परस्मिन् प्रवणं मनः। एते यमाः सनियमाः पञ्च पञ्च प्रकीर्त्तिताः। विशिष्टफलदाः काम्या निष्कामाणां विमुक्तिदाः" विष्णु०। सर्वदर्शनसंग्रहे पातञ्जलदर्शनप्रसङ्गे स्वाध्यायशब्देन प्रणवजपवत् तान्त्रिकमन्त्रजपोऽप्युच्यते इत्युक्तम्।

"नियमाः पञ्च सत्याद्या बाह्यमाभ्यन्तरं द्विधा। शौचं, तुष्टिश्च सन्तोषस्तपश्चेन्द्रियनिग्रहः। स्नानमौनोपवासेज्यास्वाध्यायोपस्थनिग्रहः। तपोऽक्रोधो गुरौ भक्तिः शौचञ्च नियमाः स्मृताः। यमाः पञ्चाथ नियमाः शौचं द्विविधमीरितम्। सन्तोषस्तपसां जपं वासुदेवार्पणं दमः" गारुडपु० "तपः सन्तोष आस्तिक्यं दानं देवस्य पूजनम्। सिद्धान्तश्रवणञ्चैव ह्रीर्मतिश्च जपो हुतम्। दशैते नियमाः प्रोक्ता योगशास्त्रविशारदैः" तन्त्रसारः। ७विधिभेदे [illegible] लौगाक्षिभास्करेणोक्तं यथा

"विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते" अस्यार्थः। प्रमाणान्तरेणाप्राप्तस्य प्रापको विधिरपूर्वविधिः। यजेत स्वर्गकाम इत्यादि स्वर्गार्थकयागस्य प्रमाणान्तरेणाप्राप्तस्यानेन विधानात्। पक्षे अप्राप्तस्य प्रापको विधिर्नियमविधिः यथा व्रीहीनवहन्तीत्यादिः। कथमस्य पक्षेऽप्राप्तेः प्रापकत्वमिति चेत् इत्थम् अनेन हि अवघातस्य वैतुष्यार्थत्वं न प्रतिपाद्यते अन्वयव्यतिरेकसिद्धत्वात् किन्तु नियमः स चाप्राप्तांशपूरणं वैतुष्यस्य हि नानोपायसाध्यत्वादवघातं परित्यज्योपायान्तरं यदा गृहीतुमारभ्यते तदावघातस्याप्राप्तत्वेन तद्विधानात्मकमप्राप्तांशपूरणमेवानेन विधिना क्रियते। अतश्च नियमविधावप्राप्तांशपूरणात्मको नियम एव वाक्यार्थः पक्षेऽप्राप्तावघातविधानमिति यावत्"। मिताक्षरोक्तं विशेषोदाहरणादि अनुकल्पशब्दे १४२७पृ० दर्शितं तत्र दृश्यम्। नियमे च इतरसंवलने न दोषः। परिसंख्यायां दोष इति भेदः। पाक्षिके सतीत्यादिकारिकां व्याख्याय उदाहरणं परिसंख्यातो भेदश्च विधिरूपग्रन्थे दर्शितो यथा "नियमः पाक्षिके सतीति विधिं विना प्रवृत्तेः पाक्षिकत्वे सतीत्यर्थः प्रवृत्तिनियमे सतीति यावत् तथाच तद्गोचरप्रवृत्तिनियमनिर्वाहको विधिस्तन्नियमविधिरिति

